


पुष्पाशसताम् । कृष्णत्वं कोशकाकाहिपयोनिधिपयोमुचाम् । रक्तत्वं रत्नबन्धूकविद्याम्भोजविवस्वताम् ।
तथा वसन्त एवान्यपुष्टानां कलकूजितम् । वर्षास्वेव मयूराणां रुतं न्नत्यञ्च वर्णयेत् । नियमस्य विशेषोऽथ पुनः कश्चित् प्रकाश्यते । कमलासम्पटोः कृष्णहरितोर्नागसर्पयोः । पीतलोहितयोः स्वर्णपरागाग्निशिखादिषु । चन्द्रे शशैलयोः कामध्वजे मकरमत्स्ययोः । दानवासुरदैत्यानामैक्यमेवाभिसम्मतम् । बहुकालजन्मनोऽपि शिवचन्द्रस्य बालता । मानवा मौलिनो वर्ण्या देवाश्चरणतः पुनः" । नियमयति नि+यम–णिच्–अच् । ८सर्वनियामके परमेश्वरे "अतीन्द्रः संग्रहः सर्गो धृतात्मा नियमोऽयमः" विष्णुस० "स्वेषु स्वेष्वधिकारेषु प्रजा नियमयतीति नियमः" भा० ।

**नियमन** न० नि+यम–भावे ल्युट् । १नियमशब्दार्थे २निग्रहे ३बन्धे "नियमनादसतां च नराधिपः" रघुः इतरनिवारणरूपे ४परिसंख्यार्थे च "युग्माग्नियुगभूतानि षण्मुन्योर्वसुरन्ध्रयोः । रुद्रेण द्वादशी युक्ता चतुर्दश्या च पूर्णिमा । प्रतिपदाप्यमावास्या तिथ्योर्युग्मं महाफलम् । एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुराकृतम्" निगमवाक्यतात्पर्य्यकथने "एतत्प्रयोजनं तु तिथिविशेषविहिते कर्म्मणि तिथिखण्डविशेषनियमनम्" ति०त० रघु० । एतदुपदर्शितखण्डविशेषतिथावेव कुर्य्यान्नेतरत्रेति परिसंख्यातुल्यत्वं गम्यते । नियमपरत्वे विपरीतकरणे दोषाभावप्रसङ्गात् नियमे इतरसंवलनस्य शास्त्रार्थत्वात् नचैवमुक्तम् इतरत्र करणे निन्दाश्रवणात् । अतः परिसंख्याकार्य्यकारीह नियमनमिति स्थितम् ।

**नियमसेवा** स्त्री नियमेन सेवा विष्णोः । नियमपूर्वकम् आश्विनस्य शुक्लैकादश्यामारभ्य कार्त्तिकमासे विष्णोः सेवायाम् "आश्विनस्य तु मासस्य या शुक्लैकादशी भवेत् । कार्त्तिकस्य व्रतानीह तस्यां कुर्य्यादतन्द्रितः । अकृत्वा नियमं विष्णोः कार्त्तिकं यः क्षिपेन्नरः । जन्मार्जितस्य पुण्यस्य फलं नाप्नोति नारद !" । किञ्च "नियमेन विना चैव न नयेत् कार्त्तिकं मुने ।। चातुर्मास्यं तथा चैव ब्रह्महा स कुलाधमः" हरिभक्तिविलासः ।

**नियमस्थिति** स्त्री नियमेन स्थितिरत्र । तपस्यायाम् हेमच० ।

**नियमित** त्रि० नि+यम–णिच्–कर्म्मणि क्त । १कृतबन्धने "किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि" महाना० । २कृतनियमे च

**नियम्य** त्रि० नि+यम–यत् । १निरोद्धव्ये २निग्राह्ये च "त्वया नियम्या ननु दिव्यचक्षुषा" रघुः ।

**निययिन** पु० नी–भावे क्विप् निये नयनाय इनः प्रभुः बा० अलुक्स० । प्रापणाय स्वामिनि रथादौ "न्वेषं नियियिनं रथम्" ऋ०१०।७।२

**नियव** पु० नि+यु–मिश्रणे वेदे बा० अप् । मिश्रीभावे "गौषु युधो नियवं चरन्तीः" ऋ० १०।३०।१० लोके तु घञ् । नियाव तत्रार्थे ।

**नियातन** न० नितरां यात्यते याति–ल्युट् । १निपातने नितरां यातना यत्र प्रा०ब० । २भययुते नयनानन्दः ।

**नियान** न० नियमेन यान्ति गावोऽत्र या–आधारे ल्युट् । गोष्ठस्थाने । "यन्नियानं न्यासं संज्ञानम्" ऋ०१०।१६।४ "नियानं गोष्ठम्" भा० ।

**नियाम** पु० नि+यम–घञ् । नियमे

**नियामक** त्रि० नि+यम–णिच्–ण्वुल् । नियमकारके नियामकत्वम् अदृष्टकालादेः "कारणस्य कार्यं प्रति नियामकत्वम्" सर्वद० "कृत्तद्धितसमासानामभिधानं नियामकम्" अमरः । स्त्रियां टापि अत इत्त्वम् नियामिका । "विकल्पे आत्मप्रीतिर्नियामिका" मिता० २निरासके च "लोकप्रसिद्धमेवैतद्वारि वह्नेर्नियामकम्" कामन्द० ।

**नियुक्त** त्रि० नि+युज–क्त । १अधिकृते २नियोजिते ३प्रेरिते च "केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि" आ०त० प्रातःकृत्ये । "नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः" "स्त्रिया सम्यङ्नियुक्तया" "विधवायां नियुक्तस्तु" "नियुक्तो यो विधिं हित्वा" इति च मनुः ।

**नियुत्** पु० नि+यु–कर्म्मणि क्विप् तुक् । १वायोरश्वे निघ० "सहस्रेण नियुता नियुत्वते" ऋ०१।१३५।१ "जातावेकवचनम् । नियुत इति वायोरश्वानां नामधेयं "नियुतो वायोरिति निरुक्तौ उक्तत्वात्" भा० कर्म्मणि क्विप् । २नियोजिते ३नियते च नियुद्रथशब्दे दृश्यम् ।

**नियुत** न०। १लक्षसंख्यायां २दशलक्षसंख्यायां ३तत्संख्येयेषु च "शतं सहस्रमयुतं नियुतं प्रयुतं मतम् । स्त्री कोटिरर्बुदमिति क्रमाद्दशगुणोत्तरम्" इति रत्नकोषः । "एकं दश शतञ्चैव सहस्रमयुतं तथा । लक्षञ्च नियुतञ्चैव कोटिरर्बुद एव च । वृन्दः खर्वो निखर्वश्च शङ्खपद्मौ च सागरः । अन्त्यं मध्यं परार्द्धञ्च दशवृद्ध्या यथोत्तरम्" पुराणम् ।

**नियुत्वत्** पु० नियुतोऽश्वाः सन्त्यस्य मतुप् मस्य वः तान्तत्वा-त्स्वर्थे परे पदत्वाभावात् न तस्य दः। वायौ "नियुत्वान् सोमपीतये" यजु० २७।२२। तस्येदं छ। नियुत्वतीय वायुदेवताके हविरादौ "एष वा प्राजापत्य एष वा नियुत्वतीयः" शत० ब्रा० ६।२।२।१५।

**नियुत्सा** स्त्री भरतवंश्यस्य प्रस्तारन्टपस्य पत्न्याम् "प्रस्तारस्य नियुत्सायां हृदयज आसीत् विभुः" भाग० ५।१५।७ नियुत्सायामित्यत्र निरुत्सायामिति पाठान्तरं साऽपि तत्रार्थे।

**नियुद्ध** न० नि+युध–भावे क्त। बाहुयुद्धे अमरः। "नियुद्धं बहुटयुतम्" सा० द०। निपूर्वकस्य युध्यतेः बाहुयुद्धपरत्वम्। "तेन नियोद्धुकामे किम्न बहुवर्मणी" नैष०।

**नियुद्रथ** त्रि० नियुत्–नियोजितो नियतो वा रथोयस्य। गमनाय नियोजितरथे "स दस्मा नियुद्रथः" ऋ० १०।२६।१ "नियुद्रथो गमनाय सर्वदा नियतरथो नियुक्तरथो वा" भा०

**नियोग** पु० नि+युज–घञ् कुत्वम्। १प्रेरणे इष्टसाधनत्वादिबोधनेन २प्रवर्त्तने नियोज्यशब्दे दृश्यम्। ३आज्ञायाम् ४अवक्लृप्तौ अवधारणे तत्त्वावधारणम् अन्ययोगव्यवच्छेदार्थकम्। "एवानियोगे" मुग्ध०। अनियोगे अनवक्लृप्तावित्यर्थः "तस्मिन्नेवे नियोगेन स विकल्पपराङ्मुखः" रघुः। पुत्रोत्पादनाय विधवायाः ५नियोजने च। नियोगप्रकारश्च क्षेत्रजशब्दे २४०६पृ० दृश्यः। "उक्तो नियोगो मनुना निषिद्धः स्वयमेव हि" बृहस्पतिः।

**नियोग्य** त्रि० नियोक्तुमर्हति नि+युज–अर्हार्थे कर्त्तरि ण्यत् कुत्वम्। प्रभौ। शक्यार्थे कर्मणि तु न कुत्वम्।

**नियोजन** न० नि+युज–भावे ल्युट्। १प्रेरणे २प्रवर्त्तने भृत्यादेः कर्मकरणाय ३उपदेशात्मकव्यापारे "नियोजनकालेऽष्टाचत्वारिंशतमाद्यानग्निष्ठे" कात्या० श्रौ० २१।१।८। ४नितरां योजने च "पार्श्वं कृत्वा प्रतिष्ठन्त्यथातो नियोजनस्यैव" शत० ब्रा० ३।७।२।१२।

**नियोज्य** त्रि० नि+युज–शक्यार्थे कर्मणि ण्यत् "प्रयोज्यनियोज्यौ शक्यार्थे" पा० उक्तेः न कुत्वम्। १प्रवर्त्तनीये नियुज्यते: प्रवर्त्तनार्थकत्वात् कर्मणि ण्यता तत्कर्म उच्यते प्रवर्त्तनाकर्म च तज्जन्यप्रवृत्तिमान्। तथा च स्वर्गकामोयजेतेत्यादौ स्वर्गकामो यागे नियोज्यः स्वर्गकामादेश्च कामनाद्वारा यागे कृतिसाध्यताधीद्वारा प्रवृत्तिर्जायते इति तस्य तथात्वम्। तदेतत् शब्दशि० उक्तं यथा "स्वर्गकामो यजेतेत्यादौ इष्टसाधनत्वं कार्यत्वं वा यदि विधिः समभिव्याहृतक्रियान्वयी तदन्वान्वयी वा गुरुमते यागादिर्न कार्यतया लिङा बोधयितुं शक्यते स्वर्गकामनियोज्यान्वययोग्यताविरहात्। कामनाविशिष्टस्य हि ममेदं कर्त्तव्यमिति बोद्धृत्वं नियोज्यत्वं कामना च तद्बोधोपयोगे सति भवति स च कामनानन्तरं काम्यसाधनताबोधात् कार्यताबोधे सति स्यात् एवञ्च स्वर्गसाधनताबोधे सति स्वर्गकामनियोज्यान्वययोग्यता। न च कालान्तरे भाविस्वर्गे क्रिया साक्षात् परम्परया वा साधनमिति शब्दो बोधयितुमर्हति आशुविनाशित्वात् परम्पराघटकानुपस्थितेश्च तृतीय प्रकारस्याभावात् अन्यथा तमादाय साधनत्वसम्भवात् कल्पत्रयमप्यपूर्वं न स्यात् इष्टसाधनताविधिपक्षे तु स्फुटैवानुपपत्तिः। कार्यताविधिपक्षे अन्वयप्रकारतया साधनत्वमावश्यकमिति फलतो न विशेषः। अतः क्रियातोऽन्यत् स्वर्गसाधनतार्हं कार्यं क्रियाकार्यतानिर्वाहकमित्यार्थम्" गदाधरेणेदं नियोज्यान्वयपक्षे विवृतं दिङ्मात्रमत्रोच्यते "लिङोऽर्थः कार्यत्वं पाकादिक्रियायामेव प्रथमतोऽन्वेति न तु स्वर्गकामो यजेतेत्यादिवो यागादौ प्रथमतस्तदन्वयः किन्तु कार्यत्वेनैव वैदिकलिङ्वाच्येऽपूर्वे प्रथमतो विषयतया यागाद्यन्वयः प्रतीयते विषयत्वन्तु जन्यत्वम् तत्र च शक्यतावच्छेदककार्यत्वैकदेशे कृतौ स्वर्गकामान्वयः एवञ्च यागविषयकं स्वर्गकामकार्यमिति प्राथमिको बोधः तदनन्तरमपूर्वस्य कृतिसाध्यता यागद्वारैव, यागमकृत्वा अपूर्वस्य साधयितुमशक्यत्वादतो यागकार्यतां विनाऽपूर्वकार्यत्वमनुपपन्नमित्यनुपपत्तिप्रतिसन्धाने तत्सहकृतलोकस्वकृप्तक्रियाकार्यतान्वयगोचरयावद्सामग्रीतो यागे औपादानिकोबोधः। पुनरनुसन्धीयमानशब्दसहकृतानुपपत्तिज्ञानमेवोपादानमिति गीयते तद्सहकृतज्ञानस्यार्थापत्तिरिति। न च यागकार्यतायाः पूर्वमप्रतीतत्वेन यागकार्यताव्यतिरेकस्य दुर्ग्रहत्वात् उक्तानुपपत्तिधीरेव न घटते इति वाच्यं यागो यदि कार्य्यो न स्यात् तदाऽपूर्वमपि कार्यं न स्यात् इति तर्काकारानुपपत्ति प्रतिसन्धानस्य यागकार्यताविज्ञानधीनस्य यागकार्य्यता साधकत्वोपगमात्। न चाप्याद्यापादकयोर्वैयधिकरण्यान्नोक्तं तर्कसम्भव इति वाच्यं यागो यदि कृतिसाध्यो न स्यात् असाध्यकत्वसाध्यकृतिसाध्यव्यापारको न स्यादित्येतादृशतर्कोपगमेन सामञ्जस्यात्। कृतिसाध्यज्वलनादिरूपव्यापारके। [illegible] ारवारणायासाध्यत्वं व्यापारविशेष [illegible] कृतिसाध्यव्यापारके नित्ये

व्यभिचारवारणायाऽननुकूलत्वमपेक्ष्य असाध्यकत्वं कृतौ विशेषणं शब्दानुपपत्तिधीजन्यतावच्छेदकधर्मयोः सङ्करे न दोषो गुरुमतत्वात्यनभ्युपगमेन तयोर्ज्जातित्व विरहात्। अस्तु वा केवलशब्दादिप्रमाणजन्यबोधविजातीय एव औपादानिकबोधः अपूर्वविषयककामितस्तेरपूर्वसाधनक्रियाविषयकत्वं विनाऽपूर्वसाधनतानुपपत्तेः कृतौ क्रियाविषयकत्वोपपादकत्वं तथा: काम्यसाधनत्वमप्यपूर्वकार्यत्वोपपादकम् इति यागादेः काम्यसाधनताया औपादानिकी, अस्माकं काम्यसाधनत्वस्य विधिप्रत्ययावाच्यत्वेऽप्यध्याहारितस्यापवर्गस्य शाब्दधीगोचरतया यदाजन्याया अपि स्वर्गसाधनत्वोपस्थितेः यदजन्यक्रियादुपस्थितिसङ्कितायाः शाब्दसामग्रीत्वादिष्टसाधनत्वस्योपादानस्यता। वाजपेयेन यजेतेत्यादौ च तदाभिधानिकमेव स्वर्गादिपदोपस्थाप्ये इष्टे कथञ्चित् तृतीयार्थकरणत्वान्वय उपेयते इति गुरुमतं निराकृत्य आहत्यैव यागादौ विध्यर्थकृतिसाध्यत्वेष्टसाधनत्वयोरन्वयबोधं व्यवस्थापयितुकामो विचाराङ्गं विप्रतिपत्तिं दर्शयति स्वचेति स्वर्गकामोयजेतेत्यादाविति कालान्तरभाविफलकामबोधकघटितवेदवाक्ये इत्यर्थः प्रतिपाद्यत्वं विधावन्वेति विधित्वञ्च विदधाति प्रवर्त्तयतीति व्युत्पत्त्या प्रवृत्तिप्रयोजकत्वं प्रवृत्तिजनकतावच्छेदकप्रकारताश्रयत्वम्। कार्यत्वस्य विधित्वेन कथं न पक्षतोपेयते इत्याकाङ्क्षायाम् इष्टसाधनतासाधारणरूपावच्छिन्नःपक्षो, गुरूणाममतसाधने एव नैयायिकाभिमतस्याहत्यक्रियायामिष्टसाधनतान्वयस्यापि निराकरणं भवतीत्युक्तानुगतरूपेण पक्षकरणप्रयोजनमाविष्कर्त्तुं विधित्वेन संग्राह्यमर्थद्वयं दर्शयति इष्टसाधनत्वं कार्यत्वं वेति वाकारोऽनास्थायां न विकल्पे। इष्टसाधनत्वस्य विधित्वपक्षे कार्यत्वस्यातत्त्वात्। एवञ्चालौकिकक्रियागोचरकालान्तरभाविफलकामनाधीनप्रवृत्तिपरलिङ्पद तात्पर्यविषयप्रवर्त्तकधर्मत्वमेव पर्यवसितं पक्षतावच्छेदकम्" इत्युपक्रमे तु मध्ये

"स्वर्गकामेति काम्यस्वर्गसाधनतानिर्वाहकापूर्वरूपव्यापारे साधनत्वाप्रत्यायने स्वर्गकामकृतिसाध्यत्वान्वयबोधजनकधीविषयतदन्वयप्रयोजक स्वर्गकामनियोज्यकत्वरूपयोग्यताविषयकशाब्दज्ञानस्य जनकीभूतं स्वनियोज्यतया स्वर्गकामरूपनियोज्यस्यान्वयप्रयोजकस्वर्गसाधनतायाज्ञानं नदस्थाभावादित्यर्थः। कृतिविषयनिष्ठकाम्यसाधनतायाः कृतिविशेषप्रयोजकत्वेऽपि इष्टसाधनस्यापि कृत्यावच्छेनादेः कृतित उत्पत्तेः। कृतिसाध्यत्वसामान्ये यद्यपि साक्षादिष्टसाधनत्वं प्रयोजकं तथापि तत्र कर्त्तुः क्रियानियोज्यत्वं क्रियाविषयककृतिसाध्यताज्ञानवत्त्वरूपं प्रयोजकमिति कार्यतान्वयबोधसामान्ये कर्त्तुर्नियोज्यमात्रज्ञानमन्वयप्रयोजकरूपयोग्यताज्ञानविधया कारणम् तदपि ज्ञानं शाब्दात्मकमेवोपेयम् प्रमाणान्तराभावात्। एवञ्च काम्यस्थले कामिनियोज्यतया बोधे कामनाविशिष्टस्यैव तथाभानमङ्गीकार्यं कामनाया विशेषणत्वाव श्यकत्वात् कामनाया उपलक्षणत्वे आत्ममात्रस्यैवोपल क्ष्यतया निष्कामसाधारणनियोज्यताबोधो न, विधेरप्रामाण्यप्रसङ्गात्" "वस्तुतो वेदस्थले विशिष्टान्वयपरताया औत्सर्गिक्याः कथञ्चित्सम्भवे तत्त्यागायोगादपि कामनाया विशेषणत्वमावश्यकमेव"। स्थलान्तरे च

"यद्यपि नियोज्यत्वं विधिकर्तृकप्रवर्त्तनारूपनियोगकर्मत्वं धात्वर्थतावच्छेदकप्रवृत्तिरूपफलाश्रयत्वमेव प्रवर्त्तकज्ञानानुकूलव्यापारस्य नियोगत्वे च तादृशज्ञानाश्रयत्वमेव तथापि निरुक्तं पारिभाषिकमेव वा नियोज्यत्वम् अथवा प्रवर्त्तकज्ञानोपधायकतानिर्वाहकव्यापारो नियोग इति कामनासाधारणं तादृशज्ञानोपधायकत्वं नियोज्यत्वं कामनायास्तद्बोधोपयोगे कार्यताबोधजनकत्वे भवति निर्वहतीत्यर्थः। अन्यथा विशेषणांशे तद्बाधेन कामनाया विशेषणत्वायोगादिति भावः। स चेति कामनायास्तद्बोधोपयोगश्चेत्यर्थः। कामनानन्तरं काम्यसाधनताबोधात् कार्यत्वबोधे सतीति कामनाधीनकाम्यसाधनताबोधस्य कार्यताबोधोपयोगे सतीत्यर्थः साक्षात्तदनुपयोगादिति भावः। काम्यसाधनताबोधस्य कामनाधीनत्वं कामनाविषयकत्वेन बोध्यं तथा च कामनाविशिष्टस्य क्रियानियोज्यत्वं कामनायाः क्रियानिष्ठकाम्यसाधनताज्ञानोपयोगितानिर्वाह्यमिति अदृष्टकक्रियानिष्ठकाम्यसाधनत्वस्यापि नियोज्यतान्वयप्रयोजकमिति पर्यवसितम्। एवञ्च स्वर्गकामसाधनताया नियोज्यतया स्वर्गकामान्वयप्रयोजकत्वे च सति सत्येव नियोज्यान्वययोग्यता नियोज्यत्वान्वयप्रयोजकयोग्यताघटितनियोज्यान्वयबोधसामग्रीसम्पत्तिः। एवञ्च यागः स्वर्गसाधनीभूत स्वनियोज्य स्वर्गकामकार्यतान्वयधीरेतन्मते तत्र स्वर्गकामे नियोज्यताज्ञानं क्रियायां स्वर्गसाधनताज्ञानञ्च योग्यताज्ञानमेव औपादानिकरूपमनुपपत्तिज्ञानमूलकं वा अपेक्ष्यते इति तस्या अपि स्वर्गसाधनताविषयकतया तन्निर्वाहक-

फलसमयपर्य्यन्तस्थायिव्यापारजनकत्वज्ञानमध्यमेचितमिति नाहत्वक्रियाकार्य्यताधीरिति समुदायार्थः"।

एवं शुचित्वतत्कालादिरूपकर्त्तृविशेषणयुतस्यापि नियोज्यत्वम् अत्र को नियोज्यः इत्याकाङ्क्षोत्थापितस्य शुचित्वत् कालजीवित्वादेरधिकारिविशेषणस्य नियोज्यताप्रयोजकत्वात् इत्याकारे विस्तरः। [इकारिरिष्य लि०।

**नियोद्ध** पु० नि+युध–तृच्। १कुक्कुटे राजनि० २वाहुयु-

**निर्** अव्य० नॄ–क्विप् न दीर्घः। १वियोगे २व्यत्यये ३आदेशे ४अतिक्रमे ५भोगे ६निश्चिते च गणरत्नमहो०। तत्र यथाक्रममुदाहृतं च यथा १निःसङ्गः २निर्मेघम् ३निर्देशः। ४निष्क्रान्तः ५निर्वेशः। ६निश्चितम्। ७निषेधे मेदि० निर्मक्षिकम्। अयं शब्दः प्रादिः सान्तः रान्तश्च "निसस-पतावासेवने" पा० ८।२ १२० सूत्रे निस इति निर्देशात् निष्कृतं दुष्कृतमित्युदाहृत्य "इदुदुपधस्य सकारस्य यो विसर्जनीयः" इति भाष्यप्रोक्तेश्च सान्तत्वम्। "निरः कुषः" पा० ७।२।४६ सूत्रे निर इति निर्देशात् रान्तत्वम्। एवं दुस् दुर् सान्तोरान्तश्च दुष्कृतमित्यत्र भाष्यप्रोक्तेः सान्तत्वम् "सुदुरोरधिकरणे" वार्त्ति० सूत्रे सुदुरोरिति निर्देशात् रान्तत्वम्। उपसर्गगणसूत्रे तु तन्त्रोच्चारितः" मनोरमा।

**निरंश** त्रि० निर्गतोऽंशात् निरा०त०। सूर्य्यभुज्यमानराशेः प्रथमे राशेस्त्रिंशांशरूपे भागे तद्राशिभोगस्यांशशून्यत्वात् तथात्वम्। "राशेः प्रथमभागस्थः निरंशः सूर्य्यः उच्यते" ज्योतिषम्। २रवे राश्यन्तरसंक्रान्तिदिने रघु०। निर्गतो भागो यस्य प्रा० ब० वा कप्। ३भागरहिते च। "पतितस्तत्सुतः क्लीवः पङ्गुरुन्मत्तको जडः। अन्धोऽचिकित्स्यरोगार्त्तौ भर्त्तव्यास्ते निरंशकाः" याज्ञ० "निरंशौ क्लीवपतितौ जात्यन्धवधिरौ तथा"मनुः। अनंशौवेति पाठः

**निरक्ष** त्रि० निर्गतः अक्षस्तदुन्नतिर्यस्मात् प्रा०ब०। अक्षोन्नतिशून्यदेशे स च देशः सू०सि० उक्तो यथा

"समन्तान्मेरुमध्यात् तु तुल्यभागेषु तोयधेः। द्वीपेषु दिक्षु पूर्वादि नगर्य्यो देवनिर्मिताः। भूवृत्तपादे पूर्वस्यां यमकोटीति विश्रुता। भद्राश्ववर्षे नगरी स्वर्णप्राकारतोरणा। याम्यायां भारते वर्षे लङ्का२ तन्महती पुरी। पश्चिमे केतुमालाख्ये रोमकाख्या३ प्रकीर्त्तिता। उदक् सिद्धपुरी४ नाम्ना कुरुवर्षे प्रकीर्त्तिता। भूवृत्तपादविवराश्चान्योन्यं प्रतिष्ठिताः। तास्वथोत्तरगो मेरुस्तावानेव सुराश्रयः। तासामुपरिगो याति विषुवस्थो दिवाकरः। न तासु विषुवच्छाया नाक्षस्योन्नतिरिष्यते। मेरोरुभयतो मध्ये ध्रुवतारे नभःस्थिते। निरक्षदेशसंस्थानामुभये क्षितिजाश्रये। अतो नाक्षोच्छ्रयस्तासु ध्रुवयोः क्षितिजस्थयोः। नवतिर्लम्बकांशास्तु मेरावक्षांशकास्तथा"।

**निरग्नि** पु० निर्गतोऽग्निस्तत्साध्यकार्य्यं यस्मात् प्रा०ब०। श्रौतस्मार्त्ताग्निसाध्यकर्मरहिते द्विजे "एकोद्दिष्टं सदा कुर्य्यात् निरग्निः श्राद्धदः सुतः" उशनाः "वीरहा वा एष देवानां भवति योऽग्निमुद्वासयते" श्रुतौ अग्नित्यागस्य पुत्रहत्यातुल्यपापजनकत्वमुक्तम्। उपपातकशब्दे निरग्नितादोष उपपातकत्वेन मनुनोक्तो दर्शितः।

**निरङ्कुश** त्रि० निर्गतोऽङ्कुश इव प्रतिबन्धको यस्य प्रा०ब०। १प्रतिबन्धशून्ये २अनिवार्य्ये जटाध०"विक्रयार्थं हि यो हन्यात् भक्षयेद्वा निरङ्कुशः"भा०अनु०३६०८श्लो०। "निरङ्कुशाः कवयः"। "कुवलयदृशां वामः कामो निकामनिरङ्कुशः" गीतगो०।

**निरङ्ग** त्रि०निर्गतमङ्गं यस्य प्रा०ब०। १अङ्गहीने २रूपकालङ्कारभेदे न० सा०द० अलङ्कारशब्दे ४०२पृ०दृश्यम्।

**निरङ्गुल** त्रि० निर्गतमङ्गुलिभ्यः प्रा०त० अच् समा०। अङ्गुलितोनिर्गते। [निरुदकादि० अन्तोदात्तता च।

**निरजिन** न० निर्गतमजिनात् प्रा०त०। अजिनात् निर्गते

**निरञ्जन** न० शालाक्योपायाभ्यासरज्ज्वाः प्रथमे षष्ठे भागे कर्त्तव्ये लक्षणभेदे शालाक्यसूत्रं परिशिष्टे "विंशत्यरत्निः शाला स्यात्सदक्षेन तु विस्तृतेति" तत्साधनोपायश्च "प्रमाणार्द्धं वाभ्यस्याभ्यासमध्ये लक्षणं करोति तन्निरञ्जनमिति अत्र विंशत्यरत्निर्मूलरज्ज्वुः दशारत्निरभ्यासरज्ज्वुः तस्याः प्रथमे षष्ठे भागे निरञ्जनम् तस्या अर्द्धे पश्चार्द्धमिते श्रोण्यङ्कनार्थमिति" कात्या०श्रौ० ७।१।२४ कर्कः।

**निरञ्जन** त्रि० निर्गतमञ्जनं कज्जलं तदिव मलमज्ञानं वा यस्मात् प्रा०ब०। १कज्जलरहिते नेत्रे २दोषरहिते ३अज्ञानशून्ये परमात्मनि पु० "तदा विद्वान् पुण्यपापे विधूय निरञ्जनं परमं साम्यमुपैति" मुण्डकोप० "निरवद्यं निरञ्जनम्"श्वेता०। ४शिवे पु०"दीर्घरोमा दीर्घभुजो दीर्घबाहुर्निरञ्जनः" हरिवं० २२७अ० शिवनामोक्तौ।

**निरति** स्त्री नितरां रतिः, नि+रम–क्तिन् वा। अत्यन्तरतौ।

**निरतिशय** पु० निर्गतोऽतिशयो यस्मात् नितरामतिशयो वा। १अत्यन्तातिशये २स्वापेक्षयातिशयशून्ये ३परमेश्वरे

यदपेक्षया कस्याप्यतिशयाभावः ४तस्मिन् त्रि०। “तत्र निरतिशयं सार्वज्ञ्यबीजम्” पात०सू० “यदिदमतीतानागतप्रत्युत्पन्नप्रत्येकसमुच्चयातीन्द्रियग्रहणमल्पं बह्विति सार्वज्ञ्यबीजमेतद्विवर्द्धमानं यत्र निरतिशयं स सर्वज्ञः। अस्ति काष्ठाप्राप्तिः सार्वज्ञ्यबीजस्य सातिशयत्वात् परिमाणवदिति यत्र काष्ठाप्राप्तिर्ज्ञानस्य स सर्वज्ञः स च पुरुषविशेषः” भा० “व्याचष्टे यदिदमिति। बुद्धिसत्त्वावरकतमोऽपगमतारतम्येन यदिदमतीतानागतप्रत्युत्पन्नानां प्रत्येकस्य समुच्चयेन च वर्त्तमानानामतीन्द्रियाणां ग्रहणं तस्य विशेषणमल्पं बह्विति सार्वज्ञ्यबीजं कारणम्। कश्चित् किञ्चिदेवातीतादि गृह्णाति कश्चिद् बहुतरं कश्चिद्बहुतमम् एतद्विवर्द्धमानं यत्र निष्क्रान्तमतिशयात् स सर्वज्ञ इति तदनेन प्रमेयमात्रं कथितम्। अत्र प्रमाणयति अस्ति काष्ठा प्राप्तिः सार्वज्ञ्यबीजस्येति साध्यनिर्देशः निरतिशयकाष्ठा यतः परमतिशयवत्ता नास्तीति। तेन नावधिमात्रेण सिद्धसाधनं, सातिशयत्वादिति हेतुः। यत् सातिशयं तत् तत्सर्वं निरतिशयं यथा कुवलामलकबिल्वेषु सातिशयमिति। व्याप्तिं दर्शयति परिमाणवत्। न च गरिमादिगुणैर्व्यभिचार इति साम्प्रतम्, न खल्ववयवगरिमावयविनः किन्त्वा, परमाणुभ्य आन्त्यावयविभ्यो यावन्तः केचन तेषां प्रत्येकं वर्त्तिनं गरिमाणं समाहृत्य गरिमवर्द्धमानताभिमानः प्रमान्तु प्रतिस्वयं समाप्यते इत्येकद्विबहुविषयतया युक्तं सातिशयमिति न व्यभिचारः” विवरणम्।

**निरत्यय** त्रि० निर्गतोऽत्ययो यस्य प्रा०ब०। १अत्ययशून्ये “निरत्ययं साम न दान वर्जितम्” किरा०। अभावेऽव्ययी०। २अत्ययाभावे अव्य०।

**निरध्व** त्रि० निष्क्रान्तोऽध्वनः प्रा०त० अच् समा०। अध्वनो [निष्क्रान्ते।

**निरनुनासिक** त्रि० निर्गतमनुनासिकमनुनासिकत्वं यस्य। अनुनासिकभिन्ने वर्णभेदे “वर्गो द्विधाऽरो निरनुनासिकः सानुनासिकः” मुग्धबोधः।

**निरनुयोज्यानुयोग** पु० गौतमोक्ते निग्रहस्थानभेदे तल्लक्षणम् तत्रोक्तं यथा “निग्रहस्थानातियोगो निरनुयोज्यानुयोगः” सू० “निग्रहस्थानलक्षणस्य मिथ्याध्यवसायादनिग्रहस्थाने निगृहीतोऽसीति परं ब्रुवन् निरनुयोज्यानुयोगान्निगृहीतो वेदितव्यः” इति भा०। “अवसरे यथार्थनिग्रहस्थानोद्भावनातिरिक्तं यन्निग्रहस्थानोद्भावनं तदित्यर्थः एतेनावसरे निग्रहस्थानोद्भावने एकनिग्रहस्थाने निग्रहस्थानान्तरोद्भावने च नातिव्याप्तिः। सोऽयं चतुर्द्धा छलं जातिराभासोऽनवसरग्रहणञ्च। आभासो व्यभिचारादावसिद्ध्याद्युद्भावनम् अनवसरग्रहणञ्चाकाले एतोद्भावनं यथा त्वच्चेत् चेत् प्रतिज्ञाहानिः विशेषयसि चेत् हेत्वन्तरम्। एवमवसरमतीत्यकथनमपि, यथा उच्यमानग्राह्यस्थापयद्वारैः परिसमाप्तौ एवमनुक्तग्राह्याज्ञानाद्यननुभाषणावसरेऽनुज्ञाव्यबोधाविष्कारणानुभाषणप्रवृत्ते वादिनि तदुद्भावनमित्यादिकमुह्यम्” वृत्तिः।

**निरन्तर** त्रि० निर्गतमन्तरं यस्मात् प्रा०ब०। १सन्तते अविच्छिन्ने सन्ततियुक्ते सन्ततिश्च दैशिकी कालिकी च तत्र दैशिकविच्छेदशून्ये “कृतापराधानपि योषितः प्रियान् परिष्वजन्ते शयने निरन्तरम्” ऋतुस० “भूभर्त्तुरायतनिरन्तरसन्निविष्टाः” माघः “निरन्तरास्वन्तरवातवृष्टिषु” कुमा० कालिकविच्छेदशून्ये निरवधौ यथा “कपिलानां सहस्राणां वर्षमेकं निरन्तरम्” भा०व०८७अ० २अपरिधाने ३अनन्तर्हीने ४अभेदे ५ताादात्म्ये च। निरन्तराबादयोऽप्यत्र “निरन्तराबा करिणां कदम्बकैः” [त्रिका०

**निरन्तराभ्यास** पु० कर्म०। १सततावृत्तौ व०व०। २स्वाध्याये

**निरन्वय** त्रि० नास्ति अन्वयः सम्बन्धो यत्र। १सम्बन्धरहिते “का त्वमेकाकिनी भीरु! निरन्वयजने वने” भट्टिः। २स्वामिसमक्षतारूपसम्बन्धशून्ये स्तेयभेदे “स्यात् साहसं त्वन्वयवत् प्रसभं कर्म यत् कृतम्। निरन्वयं भवेत् स्तेयं हृत्वाऽपह्नूयते च यत्” मनुः (निरन्वयं) “स्वामिपरोक्षापहृतं स्तेयम्” कुल्लू०। ३स्वामिसम्बन्धशून्ये स्तेये च “परिपूतेषु धान्येषु शाकमूलफलेषु च। निरन्वये शतं दण्डः सान्वयेऽर्द्धशतं दमः” मनुः “निष्पुलाकीकृतेषु धान्येषु शाकादिषु चापहृतेषु अन्वयो द्रव्यस्वामिनां सम्बन्धः येन सह कश्चिदपि सम्बन्धो नास्ति” कुल्लू०। ४निर्वंशे च।

**निरपत्रप** त्रि० निष्क्रान्तः अपत्रपायाः प्रा०त०। निर्लज्जे धृष्टे जटा०। “अप्सरो मेनका ब्रह्मन् निर्दया निरपत्रपा” भा०आ० ८अ०।

**निरपेक्ष** त्रि० निर्गता अपेक्षा यस्य प्रा०ब०। १अपेक्षाशून्ये स्वार्थबोधनाय अन्यापेक्षाशून्ये “निरपेक्षो रवः श्रुतिः” भट्टवार्त्तिकम्। “तत्तत्कर्मसु विनियोगसाधकानां श्रुतिलिङ्गादीनां मध्ये श्रुतेः (श्रूयमाणविभक्तेः) इतरानपेक्षत्वेन विनियोगसाधकत्वात् तथात्वं लिङ्गादीनां तु द्वितो-

यादिस्तुतिं कल्पयित्वा तद्द्वारैव तथात्वमिति सापेक्षत्व-मिति भेदः । २आशाशून्ये "अध्यात्मरतिरासीनो निरपेक्षो निरामिषः" मनुः । ३अशक्तविषयके "उक्तानि प्रतिषिद्धानि पुनः सम्भावितानि च । सापेक्षनिरपेक्षाणि स्तुतिवाक्यानि कोविदैः" । "सापेक्षनिरपेक्षाणि शक्ताशक्तविषयाणि" ज्योति०त० रघु० ।

**निरमण** न० नियतं रमणम् । नियतरतौ अत्यन्तानुरागे "निर्वृतिनिरमणात्" निरु० २।७ नियतं रमत्यस्मिन् नि+रम+आधारे ल्युट् । २नियतरागाधारे "अमृतं निरष्टं निरमणम्" शत०ब्रा० १३।४।२।५

**निरमित्र** पु० पाण्डवनकुलस्य पुत्रभेदे "नकुलस्तु चैद्यां करेणुमतीं नाम भार्य्यामुदवहत् तस्यां पुत्रं निरमित्रं नामाजनयत्" भा०आ०९५अ० । निर्गतोऽमित्रो यस्य । २शत्रुरहिते त्रि० । ३त्रिगर्त्तराजपुत्रभेदे पु० "हाहाकारो महानासीत् त्रिगर्त्तानां जनेश्वर ! । राजपुत्रं हतं दृष्ट्वा निरमित्रं महारथम्" भा०द्रो० १५७अ० । ४बार्हद्रथवंश्ये भाविनि नृपभेदे पु० "ततो युतायुतस्यापि निरमित्रोऽथ तत्सुतः" भाग० ९।२२।१० भाविबार्हद्रथवंश्योक्तौ ।

**निरय** पु० निर्गतोऽयोऽस्मात् प्रा०ब० नीचैरेत्यत्र निर्+इ आधारे अच् वा । नरके अमरः "निरये चैव पतनं यातनाश्च यमक्षये" मनुः ।

**निरयण** न०निर्+अय—भावे ल्युट् । निर्गमने । करणे ल्युट् । निर्गमनोपाये "पश्चात् निरयणं कृतम्" ऋ०१०।१२१।६ "निरयणं निर्गमनोपायः" भा० ।

**निरर्गल** त्रि०निर्गतमर्गलमिव प्रतिबन्धो यस्य प्रा०ब०। प्रतिब-[न्धशून्ये अमरः ।

**निरर्थ** पु० निर्गतोऽर्थो यस्य प्रा०ब०। अर्थशून्ये १निष्फले २अभिधेयशून्ये च "निरर्थो बाध्यमूर्त्तत्वात् पुरुषस्य महीपते" मार्कण्डेयपु० ।

**निरर्थक** त्रि० निर्गतोऽर्थो यस्य प्रा०ब० वा कप् । १निष्फले "प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः" भा०उ० ३५अ० । "इत्थं जन्म निरर्थकं क्षितितलेऽरण्ये यथा मालती" सा०द० । २अभिधेयशून्ये ३काव्यदोषभेदे च "निरर्थकं तुहीत्यादि पूरणैकप्रयोजनम्" चन्द्रा० गौतमोक्ते ४निग्रहस्थानभेदे"वर्णक्रमनिर्देशवन्निरर्थकम्" सू० "यथा नित्यः शब्दः कचटतपा जबगडदश्त्वात् झभञघढधषवदिति एवम्प्रकारं निरर्थकम् अभिधानाभिधेयभावानुपपत्तौ अर्थगतेरभावाद् वर्णा एव क्रमेण निर्दिश्यन्त इति" भा० । "वर्णानां क्रमेण निर्देशो जबगडेत्यादिप्रयोगस्तत्तुल्यो निर्देशोनिरर्थकं निग्रहस्थानम् अवाचकपदप्रयोग इति फलितार्थः । अवाचकत्वं च शक्त्या निरूढलक्षणया शास्त्रपरिभाषया वा बोध्यं समयबन्धव्यतिरेकेणेति विशेषणीयं तेन यत्नापभ्रंशेन विचारः कर्तव्य इति समयबन्धस्तत्रापभ्रंशे न दोषः । झटिति संवरेण तु न दोष इत्युक्तप्रायम् । अस्य सम्भवः प्रमादादित्यवधेयम्" वृत्तिः । क्रमश्चेहाक्षरसमाम्नाये माहेश्वरे सूत्रे यथा पठितास्तथेत्यर्थः ।

**निरवकाश** त्रि० निर्गतोऽवकाशो यस्य प्रा०ब० । १असम्भवत्-कालान्तरकर्त्तव्यताके कार्य्ये २अवकाशशून्ये च ।

**निरवग्रह** त्रि० निर्गतोऽवग्रहः प्रतिबन्धो वृष्टिप्रतिबन्धो नियमनं वा यस्य प्रा०ब०। १स्वच्छन्दे स्वतन्त्रे अन्याधीनप्रवृत्तिशून्ये अमरः। "केचित् क्रोधसमाविष्टा महात्मा निरवग्रहाः" भा०भी०८४अ०। २वृष्टिप्रतिबन्धशून्ये च ।

**निरवद्य** त्रि० निर्गतमवद्यं दोषः अज्ञानं रागद्वेषादि वा यस्य । १निर्दोषे उत्कृष्टे "तस्य निरवद्यविद्योद्द्योतेन द्योतितस्तत्त्वतोऽयमर्थः" दायभा० । २अज्ञानशून्ये ३रागादिशून्ये परमात्मनि च "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" श्वेता०उ० ।

**निरवयव** त्रि०निर्गतोऽवयवो यस्य । न्यायमते १अवयवशून्ये परमाण्वाकाशादौ सर्वथावयवशून्ये २ब्रह्मणि च "नाशकारणाभावेन निरवयवद्रव्याणां नाशाभावः" सा०प्र०भा०

**निरवशेष** त्रि० निर्गतोऽवशेषो यस्य । अवशेषशून्ये समग्रे "यावत् निरवशेषं भवति तावत् दाहयित्वा" आश्व०श्रौ० २।११।५।

**निरवसित** त्रि० निर्+अव+सो—क्त । येन भुक्ते पात्रं संस्कारेणापि न शुध्यति तस्मिन् पात्रबहिष्कृते चण्डालादौ । [शब्दमाला ।

**निरवहानिका** स्त्री निर्+अव+हन—ण्वुल् । प्राचीरे

**निरविन्द** पु० पर्वतरूपे तीर्थभेदे "अश्मपृष्ठे गयायाञ्च निरविन्दे च पर्वते" भा०आनु० २५अ० ।

**निरशन** अव्य० अशनस्याभावः अव्ययी० । १भोजनाभावे । निर्गतमशनं यस्य प्रा०ब० । २भोजनरहिते त्रि० "अश्मकुट्टा निरशना वृक्षपर्णतपाश्च ये" हरिवं० ४६अ० ।

**निरष्ट** पु० निर्गतानि अष्टौ वयोव्यञ्जनानि यस्मात् अष्टसमा०। चतुर्विंशतिवर्षीये २अश्वे "अश्वमतं निरष्टं निरमणम्" शत०ब्रा० १३।४।२।५ "अश्वस्य दन्तगतानि वयोव्यञ्जनानि

भवन्ति तेषामेकैकं त्रीणि त्रीणि वर्णानि अनुवर्त्तते ता-न्यष्टौ व्यञ्जनानि निर्गतान्यस्मादिति निरष्टं चतुर्विंशति-वर्णीयम्" भा० । निर्+अश—क्त । २निराकृते त्रि० "इन्द्रायुधो न वध्रयो निरष्टाः" ऋ०१।३३।६ "निरष्टा निराकृताः" भा० ।

**निरस** त्रि० निवृत्तो रसो यस्मात् प्रा०ब० । १निवृत्तरसे रस-हीने २निःश्रेणिकाख्ये स्त्री राजनि० ।

**निरसन** न०निर्+अस—क्षेपे भावे ल्युट् । प्रत्याख्याने अमरः "स पितुर्विक्रियां दृष्ट्वा राज्यान्निरसनं तथा" भा०आश्व० ४अ० । आधारे ल्युट् । २वधे निष्क्रुष्य अशनम् क्षेप-णम् । ३निष्ठीवने च मेदि० । ष्ठिवु निरसने इत्युक्तेः ष्ठीवनस्य निष्क्रुष्य श्लेष्मादेः क्षेपरूपत्वात्तथात्वम् ।

**निरस्त** त्रि० निर्—अस—क्षेपे कर्मणि क्त । १प्रत्याख्याते नि-वारिते अमरः "निरस्तगाम्भीर्यमपास्तपुष्पकम्" माघः "निरस्तः परावसुः" क्रव्यादाग्निभागत्यागे मन्त्रः । २त्व-रितोदिते न० । ३त्यक्तशरे पु० अमरः । ४निष्क्रान्ते ५प्र-तिहते ६प्रेषिते त्रि० मेदि० । भावे क्त । ७निष्ठीवने ८निवारणे ९क्षेपणे च न० ।

**निरस्थि** न० निर्गतमस्थि यस्मात् प्रा०ब० । दूरीकृतास्थिके मांसे "मांसं निरस्थि स्विन्नं पुनर्दृषदि चूर्णितम्" सुश्रुतः ।

**निरहङ्कार** त्रि० निर्गतोऽहङ्कारो यस्य प्रा०ब० । १अभिमान-शून्ये देहेन्द्रियादावहमित्यभिमानशून्ये २धनविद्याव-त्त्वादिनिमित्तात्मोत्कर्षसम्भावनाहीने च "निर्वैरा निर-हङ्कारा विगतक्रोधमत्सराः" भा०आश्व० २२अ० ।

**निरहम्** त्रि० निर्गतमहमिति बुद्धिर्यस्य प्रा०ब० । अह-ङ्कारशून्ये "प्रत्यक् प्रशान्तं सुधियोपलम्भं ह्यनामरूपं निरहं प्रपद्ये" भाग० ५।१८।४ श्लो० ।

**निरह्न** पु० निर्गतमह्नः प्रा०स० टच्समा० "अह्नोऽह्न एतेभ्यः" पा० अह्नादेशः "अह्नोऽदन्तात्" पा० नियमात् न णत्वम् "अह्नाह्नान्ताः पुंसि" पा० पुंस्त्वम् । १निर्गते दिने निष्क्रान्तोऽह्नः निरा०त० साधनं प्राग्वत् । २दिनात् निर्गते त्रि० ।

**निराक** पु०निर्+अक—वक्रगतौ भावे घञ् । १पाके २स्वेदे च कर्मणि घञ् । अशुभकर्मफले हेमच० ।

**निराकरिष्णु** त्रि० निर्+आ+कृ—शीलार्थे इष्णुच् । निराकरणशीले निवारणशीले "निराकरिष्णू वर्त्तिष्णू वर्द्धिष्णू परितो रणम्" भट्टिः "निराकरिष्णोर्वृजिना-दृतेऽपि" रघुः "निराकरिष्णुता चैव विज्ञेयाः पापवा-गुणाः" सुश्रुतः ।

**निराकाङ्क्ष** त्रि० निर्गता आकाङ्क्षा अपेक्षा इच्छा वा यस्य प्रा०ब० । १शाब्दबोधोपयोग्यपेक्षाशून्ये २इच्छाशून्ये च "तेषां वाक्यं निराकाङ्क्षम्" कात्या०श्रौ० १।३।२ "यावत् पदवृन्दं निराकाङ्क्षं पूर्वापरपठितपदान्तराका-ङ्क्षारहितम्" संग्रहव्याख्या । आकाङ्क्षास्वरूपञ्च आका-ङ्क्षाशब्दे दृश्यम् ।

**निराकार** त्रि० निर्गतः आकारोऽवयवोऽस्य प्रा०ब० । १अव-यवहीने २देहाद्याकारवर्जिते ब्रह्मणि च "तेजःस्वरूपो भगवान् निराकारो निराश्रयः" ब्रह्मवै० जन्मख०७अ० । "निराकारज्ञानवादेऽपि योग्यतावशेन प्रतिकर्मव्यव-स्थायाः स्थितत्वात्" सर्वद० । आकार आह्वानम् । ३निर्गताह्वाने च "निराकारा निरानन्दा दीना प्रति-हतत्विषा" (अयोध्या) रामा०अयो० ११४स० ।

**निराकुल** नितरामाकुलः प्रा०ब० । अत्यन्ताकुले "अलि-कुलसङ्कुल कुसुमसमूहनिराकुलबकुलकलापे" गीतगो० । "सुपात्रनिक्षेपनिराकुलात्मना" माघः ।

**निराकृति** स्त्री निर्+आ+कृ—क्तिन् । १प्रत्यादेशे निराकरणे निवारणे अमरः । "प्रलयः सुखदुःखाभ्यां चेष्टाज्ञान-निराकृतिः" सा०द० । निर्गता आकृतिराकारोऽस्य प्रा०ब० । २निराकारे "योऽसौ विष्णुरगाधात्मा परमात्मा निरा-कृतिः" हरिवं० २१८अ० । निर्+आ+कृ—कर्त्तरि क्तिच् । ३पञ्चयज्ञत्यागिनि पु० "यश्चौ च पशुपालश्च परिवेत्ता निराकृतिः" मनुः "यस्तु पञ्च महायज्ञविहीनः स निराकृतिः" कुल्लू०धृतवचनम् । "निराकर्त्ता सुरादीनां स विज्ञेयो निराकृतिः" शब्दार्थचि० धृतवाक्यम् । तस्य देवयज्ञनिराकर्त्तृत्वात् तथात्वम् । ४रोहितमनुपुत्रभेदे पु० "दक्षपुत्रस्य पुत्रास्ते रोहितस्य प्रजापतेः । मनोः पुत्रो धृष्टकेतुः पञ्चहोत्रो निराकृतिः" हरिवं०७अ० ।

**निराकृतिन्** त्रि० निराकृतमनेन इष्टा० इनि । निराकरणकर्त्तरि "अलोलुपोऽव्यथोदान्तो न कृती न निराकृती" भा०शा० २३६अ० ।

**निरातङ्क** त्रि० निर्गता आतङ्का यस्य यस्माद्वा प्रा०ब० । १भयशून्ये २रोगरहिते राजनि० "पुरुषायुषजीविन्यो निरातङ्का निरीतयः" रघुः । ३शिवे पु० ।

**निरातप** त्रि० निर्गत आतपो यस्मात् प्रा०ब० । १आतपशून्ये २रात्रौ स्त्री शब्दच० ।

**निरावाध** त्रि० निर्गता आबाधा यस्य । १आबाधाशून्ये २व्यथाशून्ये ३प्रतिबन्धशून्ये च "दवीयान् महीधरो नेदीयान् दीर्घो बहुरिति व्यवहारस्य निराबाधं जागरूकत्वात्" सर्वदर्शनसं० । ४पक्षाभासभेदे पु० "अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम् । असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत्" मिता० धृतवचनम् । "निराबाधम् अबाधकम्प्रदीपप्रकाशेनायं खट्वे व्यवहरतीति" मिताक्षरा ।

**निरामय** त्रि० निर्गत आमयात् प्रा०स० । १आमयरहिते रोगशून्ये अमरः । २वनच्छागले पुंस्त्री० मेदि० ३शूकरे शब्दमाला उभयत्र स्त्रियां जातित्वात् ङीष् । [शब्दच०

**निरमालु** पु० नितरां रमतेऽत्र रम–आलु । कपित्थवृक्षे

**निरामिष** त्रि० निर्गतमामिषमभिलाषो मांसाद्यामिषं वा यस्मात् प्रा०ब० । १लोभशून्ये "अध्यात्मरतिरासीनो निरपेक्षो निरामिषः" मनुः २मांसाद्यामिषहीने च "सामिषं कुररं दृष्ट्वा बध्यमानं निरामिषैः । आमिषस्य परित्यागात् कुररः सुखमेधते" भा०शा० ११९अ० । ३आमिषरहिते अन्नादौ । "नैवेद्यैश्च निरामिषैः" ति०त० ।

**निरालक** पुंस्त्री निर्+अल–ण्वुल् । सामुद्रे मत्स्यभेदे "तिमितिमिङ्गिलकुलिशपाकमत्स्यनिरालकनन्दिवारलकमकरगर्गरकचन्द्रकमहामीनराजीवप्रभृतयः सामुद्राः" सुश्रु० ।

**निरालम्ब** त्रि० निर्गत आलम्बः अवलम्बनं यस्य प्रा०ब० । १अवलम्बनशून्ये "एवं मयि निरालम्बे मायात् शिथिलतां गते" हरिवं०१७अ० "निरालम्बो लम्बोदरजननि! कं यामि शरणम्" जगन्नाथः । २आकाशमांस्यां स्त्री राजनि० । तस्या मूलरूपावलम्बनशून्यत्वात्तथात्वम् ३ब्रह्मणि न० तदधिकारेण प्रवृत्ते ४उपनिषद्भेदे न० उपनिषच्छब्दे १२२२पृ० दृश्यम् ।

**निरालोक** त्रि० निर्गत आलोक उद्योतो दृष्टिर्वा यस्मात् प्रा०ब० । आलोकशून्ये १अन्धकारे २आलोकनरहिते च "कृत्वा लोकान् निरालोकान्" भा०आ० २२अ० ।

**निराश** त्रि० निर्गता आशा यस्य प्रा०ब० । आशारहिते "निराशाः पितरो यान्ति शापं दत्त्वा सुदारुणम्" ति०त० "मनो बभूवेन्दुमतीनिराशम्" रघुः । तस्य भावः ष्यञ् । नैराश्य आशाशून्यत्वे "आशा बलवती राजन्! नैराश्यं परमं सुखम् । आशां निराशां कृत्वा तु सुखं स्वपिति पिङ्गला" भा०शा० १७८अ० ।

**निराशिष्** त्रि० निर्गता आशीः प्रार्थनं यस्य प्रा०ब० । १प्रार्थनशून्ये "जगच्छरण्यस्य निराशिषः सतः" कुमा० "निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः" गीता । वैराग्यदार्ढ्येन २विगततृष्णे च ।

**निराश्रय** त्रि० निर्गत आश्रय आधारोऽवलम्बनं वा यस्य । १आश्रयरहिते २आलम्बनरहिते च "चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा छाया । तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम्" सां०का० "निराश्रयं मां जगदीश! रक्ष" उद्भटः "त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः" गीता "निराश्रयः योगक्षेमार्थमाश्रयणीयरहितः" श्रीधरः । ३अद्वैतदर्शनेन देहेन्द्रियाद्यभिमानशून्ये शब्दार्थचि० ।

**निरास** पु० निर्+अस–भावे घञ् । १प्रत्याख्याने निराकरणे "तथा विज्ञानपक्षनिरासहेतुर्बाह्यप्रतीत्यादि" सां०प्रभा० । निर्+आ+अस–अच् । २निरासके त्रि० "निरासैरवसैः श्रान्तैस्त्यज्यमानैः स्वकर्मभिः" भा०शा० २७०अ० ।

**निराहार** त्रि० निर्गत आहारो यस्य प्रा०ब० । १आहारशून्ये "निराहाराश्च ये जीवाः" तर्पणमन्त्रः । निवृत्त आहारः प्रा०स० । २निवृत्ते आहारे "पश्चात्तापो निराहारः सर्वेऽमी शुद्धिहेतवः" याज्ञ० अव्ययी० । ३आहाराभावे न० ।

**निरङ्गिणी** स्त्री निर्गतमङ्गं निरङ्गं तदस्त्यस्या आच्छादकत्वेन इनि ङीप् । तिरस्करिण्यां प्रच्छदपटे त्रिका० ।

**निरिन्द्रिय** त्रि० निर्गतं निवृत्तमिन्द्रियं यस्य प्रा०ब० । इन्द्रियशून्ये "ये च केचिन्निरिन्द्रियाः" मनुः ।

**निरीति** त्रि० निर्गता ईतिर्यत्र । अतिवृष्ट्याद्यीतिशून्ये "निरीतिभावं गमितेऽतिवृष्ट्याः" नैष० "निरातङ्का निरीतयः" रघुः ।

**निरीष** न० निर्गतमीषायाः निरा०त० । फाले अमरः ।

**निरीश्वर** त्रि० निष्क्रान्त ईश्वरो यत्र प्रा०ब० । १ईश्वररहिते वादे "निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम्" सां०प्र०भा०पद्मपु० । २तद्वादयुते नास्तिके । निरीशादयोऽप्यत्र ।

**निरीह** त्रि० निर्गता ईहा यस्य प्रा०ब० । चेष्टाशून्ये "निरीहस्य हतद्विषः" रघुः निवृत्ता ईहा प्रा०त० । चेष्टानिरोधिव्यापारे स्त्री "शमो निरीहावस्थायामात्मविश्रामजं सुखम्" सा०द० ।

**निरुक्त** न० निर्–वच–भावे क्त । १निर्वचने पदानामवयवार्थः प्रकाशिता निःशेषेण निश्चयेन उच्यन्ते यत्र आधारे वा० क्त । पदानामवयवार्थनिर्वचनप्रतिपादके

यास्कादिप्रणीते २ग्रन्थभेदे तदेतत् ऋग्वेदभाष्योपक्रमे उक्तं यथा

"पञ्चाध्यायरूपकाण्डत्रयात्मके एतस्मिन् ग्रन्थे परनिरपेक्षितया पदार्थस्योक्तत्वात्तस्य ग्रन्थस्य निरुक्तत्वम्। तद्व्याख्यानं च "समाम्नायः समाम्नातः" इत्यारभ्य "तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति" इत्यन्तैर्द्वादशभिरध्यायैर्यास्को निर्ममे। तदपि निरुक्तमित्युच्यते एकैकस्य पदस्य सम्भाविता अवयवार्थास्तत्र निःशेषेणोच्यन्त इति व्युत्पत्तेः। तथा हि "चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्चेति" प्रतिज्ञाय "उच्चावचेष्वर्थेषु निपतन्तीति" निपातस्वरूपं निरुच्यैवमुदाहृतम् "नेति प्रतिषेधार्थीयो भाषायामुभयमन्वध्यायम् "नेन्द्रं देवममंसतेति" प्रतिषेधार्थीय इति। "दुर्मदासो न सुरायाम्" इत्युपमार्थीयः इति च। तत्र लोके केवलप्रतिषेधार्थकस्यापि नकारस्य वेदे प्रतिषेधोपमावाचार्थोदाहरणमस्मिन् ग्रन्थेऽवगम्यते। एवं ग्रन्थकारेणोक्तास्तत्तत्पदनिर्वचनविशेषास्तत्तन्मन्त्रव्याख्यानावसरे एवास्माभिरुदाहरिष्यन्ते। न च निर्वचनानां निर्मूलत्वं शङ्कनीयम् एतद्व्युत्पत्त्यर्थमेव ब्राह्मणेषु पदनिर्वचनानां केषाञ्चिदुक्तत्वात्। "तदाहुतीनामाहुतित्वमिति" "तमिदन्द्रं सन्तमिन्द्रम् इत्याचक्षते" इति "यदप्रथयत्तत् पृथिव्याः पृथिवीत्वमिति च"। ग्रन्थकारोऽपि तत्र तत्र स्वोक्तनिर्वचनमूलभूतब्राह्मणान्युदाहरिष्यति केषाञ्चिन्निर्वचनानां व्याकरणबलेन सिद्धावपि न सर्वेषां सिद्धिरस्ति। अतएव ग्रन्थकार आह "तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकं चेति"। तस्माद्वेदार्थावबोधायोपयुक्तं निरुक्तम्"। तत्र निर्वचने पदसाधनप्रकारश्च "वर्णागमो वर्णविपर्ययश्चेत्यादिनोक्तो निपातशब्दे दृश्यः। "शिक्षाकल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति" मुण्डकोप० "छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते। ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते। शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्। तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते" तस्यैतत् निरुक्तं हृद्यमिति हृदयम्" छा०उप०। हेमचन्द्रे तु पदभञ्जनं निरुक्तमित्युक्तं तेनावयवार्थज्ञापनार्थं तत्तद्घटकपदस्य विभागकरणमेव निरुक्तमिति तदर्थः। ३नियोगेन उक्ते ४नियुक्ते च निरुक्तजशब्दे दृश्यम्।

**निरुक्तकार** पु० निरुक्तं ग्रन्थं करोति कृ—अण् उपस०। १यास्के मुनौ २शाकपूणिनामकमुनौ च। कृ—क्विप् निरुक्तकृदपि तयोरर्थयोः।

**निरुक्तज** पु० निरुक्तः नियुक्तः अस्यां पुत्रमुत्पादयेत्युक्तः अन्यस्तस्मात् जायते जन—ड। क्षेत्रजपुत्रे "आत्मा पुत्रश्च विज्ञेयस्तस्यानन्तरजश्च यः। निरुक्तजश्च विज्ञेयः सुतः प्रसृतजस्तथा" भा०अनु० ४९अ०। "निरुक्तजः स्वक्षेत्रेऽन्योरेतःसेकार्थमुक्तस्तज्जः" नीलक०।

**निरुक्ति** स्त्री निर्+वच—क्तिन्। १निर्वचने प्रकृतिप्रत्ययाद्यवयवार्थकथनद्वारा समुदितार्थबोधने "किं कारणं जरत्कारोर्नामैतत् प्रथितं भुवि। जरत्कारुनिरुक्तिं त्वं यथावत् वक्तुमर्हसि" सौतिरुवाच "जरेति क्षयमाहुर्वै दारुणं कारुसंज्ञितम्। शरीरं कारु तस्यासीत्तत्स धीमाञ्छनैः शनैः। क्षपयामास तीव्रेण तपसेत्यत उच्यते। जरत्कारुरिति ब्रह्मन्! वासुकेर्भगिनी तथा" भा०आ०४०अ०। २८९पृ०अलङ्कारशब्दोक्ते २अलङ्कारभेदे

**निरुत्सुक** लि० नितरामुत्सुकः प्रा०स०। १अत्यन्तोत्सुके निर्गतमुत्सुकम् उत्सुकता यस्य प्रा०ब०। २औत्सुक्यहीने च "ममापि कण्वसुतामनुस्मृत्य मृगयां प्रति निरुत्सुकं चेतः" रैवतकमनोः २पुत्रभेदे पु० "धृतिमानव्ययोयक्तस्तत्त्वदर्शी निरुत्सुकः" हरिवं० ७अ० रैवतपुत्रोक्तौ। त्रयोदशमन्वन्तरे सप्तर्षिमध्ये भार्गवे ऋषिभेदे "पौलहस्तत्त्वदर्शी तु भार्गवश्च निरुत्सुकः" तत्रैव त्रयोदशमन्वन्तरे सप्तर्षिकथने।

**निरुदकादि** पु० पा०ग० सू० उक्ते अन्तोदात्ततानिमित्ते शब्दगणभेदे स च "निरुदक निरुपल निर्मक्षिक निर्मशक निष्कालक निष्कालिक निष्पेष दुस्तरीप निस्तरीप निस्तरी निरजिन उदजिन उपाजिन (परेर्हस्तपादकेशकर्षाः)" "निरुदकादिराकृतिगणः" सि०कौ०।

**निरुद्ध** त्रि०नि+रुध—कर्मणि क्त। १संरुद्धे कृतगमनादिप्रतिरोधे "यत्रनिरुद्धवाहैः" माघः। पात०भा० उक्ते २चित्तस्यावस्थारूपभूमिभेदे तच्च तत्रोक्तं यथा

"क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तभूमयः। तत्र विक्षिप्ते चेतसि विक्षेपोपसर्जनीभूतः समाधिर्न योगपक्षे वर्त्तते यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति क्षिणोति च क्लेशान् कर्मबन्धनानि श्लथयति निरोधमभिमुखं करोति स सम्प्रज्ञातो योग इत्याख्यायते" भा० 'क्षिप्तं सदैव रजसा तेषु तेषु विषयेषु क्षिप्यमाणमत्यन्तमस्थिरम्। मूढन्तु तमःसमुद्रेकान्निद्रावृत्तिमत्। विक्षिप्तं

चिप्तादिभिष्ट' विशेषो हि क्षोभबहुलस्य कादाचित्कः क्षोभो वा चाञ्चल्यं क्षोभबहुलता सांसिद्धिकी वा वक्ष्यमाणव्याधिस्त्यानाद्यन्तरायजनिता वा। एकाग्रमेकतानम्। निरुद्धसकलवृत्तिकं संस्कारमात्रशेषं चित्तं निरुद्धम्। तत्र चिप्तमूढयोः सत्यपि परस्परापेक्षया वृत्तिनिरोधे पारम्पर्येणापि निःश्रेयसहेतुभावाऽभावात् तदुपघातकत्वाच्च योगपक्षाद्दूरोत्सारितत्वमिति न तयोर्योगत्वं निषिद्धम्। विचिप्तस्य तु कादाचित्क सद्भूतविषयस्थेमशालिनः समाध्येत योगत्वमिति निषेधति तत्र विक्षिप्ते चेतसि समाधिः कादाचित्कः सद्भूतविषयस्य चित्तस्य स्थेमा न योगपक्षे वर्त्तते। कस्मादुयतस्तद्विपक्षविक्षेपोपसर्जनीभूतः विपक्षवर्गान्तर्गतस्य हि स्वरूपमेव दुर्लभं प्रागेव कार्यकरत्वात्। न खलु दहनान्तर्गतं वीजं चिरतरचणावस्थितमुप्तमप्यङ्कुराय कल्पते इति भावः। यदि विक्षेपोपसर्जनीभूतः समाधिर्न योगः कस्तर्हि इत्यत आह यस्त्वेकाग्रे चेतसि इति। भूतमिति समारोपितमर्थं निवर्त्तयति। निद्रावृत्तिरपि ह्यालम्बने तमसि भूते भवत्येकाग्रेत्यत उक्तम् सदिति। द्योतनं नितान्तमाविर्भूततत्त्वं, ततः सवृत्त्येकाग्रयोगनस्य क्लेशहेतुत्वादिति। द्योतनं हि तत्त्वज्ञानमागमाद्वाऽनुमानाद्वा भवदपि परोक्षरूपतया न साक्षात्कारवतीमविद्यां छिनत्ति इत्यत्र दिक्मोहादिष्वनुच्छेदकत्वादत आह प्रेति प्रशब्दो हि प्रकर्षं द्योतयन् साक्षात्कारं सूचयति। अविद्यामूलत्वादस्मितादीनां क्लेशानां विद्यायाश्च अविद्योच्छेदरूपत्वात् विद्योदये चाविद्याक्लेशसमुच्छेदो विरोधित्वात् कारणविनाशाच्चेत्याह क्षिणोति चेति। अतएव कर्मरूपाणि बन्धनानि श्लथयति। कर्म चात्रापूर्वमभिमतं कार्ये कारणस्योपचारात्। श्लथयति स्वकार्यादवसादयति। वक्ष्यति हि "सति मूले तद्विपाकः"। इति किञ्च निरोधमभिमुखं करोत्यभिमुखीकरोति" विव०

**निरुद्धप्रकश(स)** न० सुश्रुतोक्ते क्षुद्ररोगभेदे "वातोपसृष्टमेवन्तु चर्म संश्रयते मणिम्। मणिश्चर्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च। निरुद्धप्रकशे(से) तस्मिन् मन्दधारे मवेदनम्। मूत्रं प्रवर्त्तते जन्तोर्मणिर्न च विदीर्य्यते। निरुद्धप्रकशं(सं) विद्यात् सुरुजां वातपाटिकाम्"।

**निरुपाख्य** त्रि० निर्गता उपाख्या यस्मात् प्रा०ब०। अयत्पदार्थे १वन्ध्यापुत्रादौ २अभावपदार्थे च वाचोगनस्य विषयतयोक्ते वनायोग्ये अस्फुटस्वरूपे ३ब्रह्मणि च। "ज्ञानविज्ञानयुक्तानां निरुपाख्या निरञ्जना। कैवल्या या गतिर्देव! परमा सा गतिर्भवान्" भा०अनु०१७अ०। ४निःस्वरूपे "त्वयमपि चैतदवस्तु अभावमात्रं निरुपाख्यमिति" शारी०भा० "निरुपाख्यं निःस्वरूपम्" रत्नप्र०।

**निरुपाय** त्रि० निर्गत उपायोयस्य प्रा०ब०। १उपायरहिते "उच्छिद्यमानोबलिना निरुपायप्रतिक्रियः" कामन्द०।

**निरुप्त** त्रि० निर्+वप–कर्मणि क्त। यज्ञादौ भागशः पृथक्कृत्य दत्ते "न च सुष्टिमात्रेण निरुप्तेन प्रयोजनम्" कात्या०श्रौ० १५।१८सू० कर्कः।

**निरूढ़** त्रि०निर्–रुह–क्त। १नितरां रूढे २शक्तितुल्यवत्त्रयाऽर्थबोधके शब्दे "पूर्वस्वामिसम्बन्धाधीनं तत्स्वाम्युपरमे यत्र द्रव्ये स्वत्वं तत्र निरूढोदायशब्दः" इति दायभागः। ३पशुयागभेदे "निर्मित ऐन्द्राग्नः" आश्व०श्रौ० ३।८।४ "ऐन्द्राग्नो निरूढो नाम पशुः कर्त्तव्यः। अयमपि पशूनां प्रकृतिः। तेनाङ्गभूतानामग्नीषोमीयः प्रकृतिः। स्वतन्त्राणां निरूढः प्रकृतिरिति तेष्वेव पश्विष्टिनीष्वङ्गभूतेष्विन्द्रेवमर्थं निरूढप्रकृतित्वान्नानम्" नारा०। "षाण्मासः सांवत्सरो वा" ५सू० "सोऽयं निरूढः पशुः षट्सु षट्सु मासेषु कर्त्तव्यः संवत्सरे संवत्सरे वा। अतोऽयं वीप्सावचनान् नित्योऽयं पशुरिति गम्यते" नारा०।

**निरूढलक्षणा** स्त्री निरूढा शक्तितुल्या लक्षणा। व्याकरणकोषादिहेतुतः प्रसिद्धार्थे शक्तितुल्यायां लक्षणायां लक्षणायामनादिपायां शब्दस्यार्थबोधनायत्तौ।

**निरूढि** स्त्री नि+रुह–क्तिन्। १प्रसिद्धौ "नृप! विद्यासु निरूढिमागता" किरा०। २निरूढलक्षणायाञ्च।

**निरूपक** त्रि० निरूपयति नि+रूप–ण्वुल्। निरूपणकर्त्तरि तस्य भावः तल्। निरूपकता स्वरूपसम्बन्धभेदे यथाऽऽधारतानिरूपकताऽऽधेयत्वे इत्यादि।

**निरूपण** न० नि+रूप–ल्युट्। तत्त्वज्ञानानुकूलशब्दप्रयोगे १विचारे २निदर्शने ३आलोके च "निरूपणं लक्षणादिप्रकारेण ज्ञानानुकूलवचनम्" दाय०भा० श्रीकृष्णः।

**निरूपित** त्रि० नि+रूप–क्त। निरूपणकर्मणि तस्य भावः त्व। निरूपितत्वं न्यायोक्ते स्वरूपसम्बन्धविशेषे।

**निरूह** पु० निर्+ऊह–करणे घञ्। सुश्रुतोक्ते दोषनिर्हरणोपाये वस्तिभेदे "तत्र द्विविधो वस्तिः नैरूहिकः स्नैहिकश्च। आस्थापनं निरूह इत्यनर्थान्तरम्। तस्य

विकल्पोमाधुतैलिकः । तस्य पर्य्यायशब्दो यापनोयुक्तरथः सिद्धवस्तिरिति । स दोषनिर्हरणाच्छरीररोगहरणाद्वा निरूहः वयःस्थापनादायुःस्थापनाद्वाऽऽस्थापनम् । माधुतैलिकविधानञ्च निरूहक्रमचिकित्सिते वक्ष्यामः” । “तत्र यथाप्रमाणगुणविहितः स्नेहवस्तिविकल्पोऽनुवासनः पादावकृष्टः । अनुवसन्नपि न दुष्यत्यनुदिवसं वा दीयते इत्यनुवासनः । तस्यापि विकल्पोऽर्द्धमात्रावकृष्टोऽपरिहार्य्यो मात्रावस्तिरिति”। “निरूहः शोधनो लेखो स्नेहनो वृंहणो मतः । निरूहशोधितान्मार्गान् सम्यक्स्नेहोऽनुगच्छति । अपेतसर्व्वदोषासु नाडीष्विव वहज्जलम् । सर्व्वदोषहरश्चासौ शरीरस्य च जीवनः । तस्माद्विशुद्धदेहस्य स्नेहवस्तिर्विधीयते । तत्रोन्मादभयशोकपिपासारोचकाजीर्णार्शःपाण्डुरोगभ्रममदमूर्च्छाच्छर्दिकुष्ठमेहोदरस्थौल्यश्वासकासकण्ठशोषशोफोपसृष्टक्षतक्षीणचतुस्त्रिमासगर्भिणीदुर्व्वलाग्न्यसहावालवृद्धौ च वातरोगादृते क्षीणा नानुवास्या नास्थापयितव्याः” । उदरी च प्रमेही च कुष्ठी स्थूलश्च मानवः । अवश्यं स्थापनीयास्तु नानुवास्याः कथञ्चन । असाध्यता विकाराणां स्यादेषामनुवासनात्” ।

तत्प्रयोगप्रकारश्च तत्रैवोक्तो यथा

“अथातो निरूहोपक्रमचिकित्सितं व्याख्यास्यामः । अथानुवासितमास्थापयेत्सम्यक्स्निग्धशरीरमुत्सृष्टवहिर्वेगमप्रवाते शुचौ वेश्मनि मध्याह्ने प्रततायां शय्यायामधःसुपरिग्रहायां श्रोणिप्रदेशव्यूढायामनुपधानायां वामपार्श्वशायिनमाकुञ्चितदक्षिणसक्थिमितरप्रसारितसक्थिं सुमनसं जीर्णान्नं वाग्यतं सुनिषण्णदेहं विदित्वा ततो वामपादस्योपरि नेत्रं कृत्वेतरपादाङ्गुष्ठाङ्गुलिभ्यां कर्णिकामुपरि निष्पीड्य सव्यपाणिकनिष्ठिकानामिकाभ्यां वस्तेर्मुखार्द्धं सङ्कोच्य मध्यमप्रदेशिन्यङ्गुष्ठैरर्द्धन्तु विस्तार्य्यं कृत्वा वस्तावौषधं प्रक्षिप्य दक्षिणहस्ताङ्गुष्ठप्रदेशिनीभ्यां चानुषिक्तमनायतमवुद्वुदमसङ्कुचितमवातमौषधासन्नमुपसंगृह्य पुनरितरेण गृहीत्वा दक्षिणेनावसिच्य ततः सूत्रेणैवशेषधान्ते द्विस्त्रिर्वावेष्ट्य बध्नीयात् । अथ दक्षिणेनोत्तानेन पाणिना वस्तिं गृहीत्वा वामहस्तमध्यमाङ्गुलिप्रदेशिनीभ्यां नेत्रमुपसंगृह्याङ्गुष्ठेन नेत्रद्वारं पिधाय घृताभ्यक्तापनेत्रं घृताक्तगुदाय प्रयच्छेदनुपृष्ठवंशं समसन्मुखमाकर्णिकं नेत्रं प्रविशत्वेति ब्रूयात् । वस्तिं सव्ये करे कृत्वा दक्षिणेनावपीडयेत् । एकेनैवापीडेन न द्रुतं न विलम्बितम्” ततो नेत्रमपनीय त्रिंशन्मात्राः पीडनकालादुपेक्ष्योत्तिष्ठेत्यातुरं ब्रूयात् । आतुरमुपवेशयेदुत्कटुकं वस्त्यागमनार्थम् । निरूहप्रत्यागमनकालस्तु मुहूर्त्तो भवति । “अनेन विधिना वस्तिं दद्याद्वस्तिविशारदः । द्वितीयं वा तृतीयं वा चतुर्थं वा यथार्हतः । सम्यगनिरूढलिङ्गे तु प्राप्ते वस्तिं निवारयेत् । अपि हीनक्रमं कुर्य्यान्न तु कुर्य्यादतिक्रमम् । विशेषात्सुकुमाराणां हीनएव क्रमो हितः । यस्य स्याद्वस्तिरत्यल्पवेगो हीनमलानिलः । दुर्निरूढः स विज्ञेयो मूत्रार्त्त्यरुचिजाड्यवान् । यान्येव प्राक्प्रयुक्तानि लिङ्गान्यतिविरेचिते । तान्येवातिनिरूढेऽपि विज्ञेयानि विपश्चिता । यस्य क्रमेण गच्छन्ति विट्पित्तकफवायवः । लाघवं चोपजायेत सुनिरूढं तमादिशेत् । सुनिरूढं ततोजन्तुं स्नातवन्तं तु भोजयेत् । पित्तश्लेष्मानिलाविष्टं क्षीरयूषरसैः क्रमात् । सर्व्वं वा जाङ्गलरसैर्भोजयेदविकारिभिः । त्रिभागहीनमर्द्धं वा हीनमात्रमथापि वा । यथाग्निदोषं मात्रेयं भोजनस्य विधीयते । अनन्तरं ततो युञ्ज्याद्यथास्वं स्नेहवस्तिना । विविक्तता मनस्तुष्टिः स्निग्धता व्याधिनिग्रहः । आस्थापनस्नेहवस्त्योः सम्यग्दाने तु लक्षणम् । अर्द्धहतस्य पवनाद्भयं बलवदिष्यते । रसोदनस्तेन सततदहश्चानुवासनम् । पश्चाद्बलं मत्वा पवनस्य च चेष्टितम् । अन्नोपस्तम्भिते कोष्ठे स्नेहवस्तिर्विधीयते । अनायान्तं मुहूर्त्तात्तु निरूहं शोधनैर्हरेत् । तीक्ष्णैर्निरूहैर्मतिमान् क्षारमूत्राम्लसंयुतैः । विगुणानिलविष्टब्धं चिरं तिष्ठन्निरूहणम् । शूलाऽरतिज्वरानाहं मरणं वा प्रवर्त्तयेत् । तत्तु भुक्तवते देयमास्थापनमिति स्थितिः । विसूचिका वा जनयेच्छर्दिं वापि सुदारुणम् । कोपयेत्सर्व्वदोषांश्च तस्माद्दद्यादभोजिने । जीर्णान्नस्याशये दोषाः पुंसः प्रव्यक्तिमागताः । निःशेषाः सुखमायान्ति भोजनेनाप्रपीडिताः । न चास्थापनविक्षिप्तमन्नमग्निः प्रधावति । तस्मादास्थापनं देयं निराहाराय जानता । आवस्थिकं क्रमञ्चापि मत्वा कार्य्यं निरूहणम् । मलेऽपकृष्टेऽदोषाणां बलवत्त्वं न विद्यते” । वस्तिभेदस्य (पिचकारी) ख्यातः “वस्तिर्द्विधानुवासाख्योनिरूहश्चेति संज्ञितः । यः स्नेहैर्दीयते स स्यादनुवासननामकः । कषायक्षीरतैलैर्यो निरूहः स निगद्यते” इति वैद्यकसारकौ० । क्लीट । निरूहणमप्यत्र न० ।

**निर्ऋ(र्ऋ)ति** पु० नियता ऋतिर्घृणा यत्र प्रा०ब०रमध्यो वा। १दक्षिणपश्चिमविदिक्पतौ। "रमणाधस्य सर्पस्य निर्ऋतिश्च महायशाः" भा०आ० ६६अ०। २अलक्ष्म्याम् स्त्री ३निरुपद्रवे त्रि०। ४अधर्मस्य भार्य्यायां स्त्री "अधर्मस्तत्र संजातः सर्वशुभविनाशकः। तस्यापि निर्ऋतिर्भार्य्या नैर्ऋता येन राक्षसाः" भा०आ०६६अ०। ५अधर्मस्य कन्यायाञ्च स्त्री "हिंसा भार्य्या त्वधर्मस्य तस्यां जज्ञे तथाऽनृतम्। कन्या च निर्ऋतिस्तस्यां सुतौ द्वौ नरकं भयम्" मार्कण्डेयपु०५अ०। ६मृत्युभार्य्यायाम्। "निर्ऋतिश्च तथा भार्य्या मृत्योर्भार्य्याऽभवन्मुने!" तत्रैवाध्याये। ७अलक्ष्मीश लक्ष्म्या ज्येष्ठा भगिनी अश्वत्थशब्दे ५०६पृ० दृश्यम्। ७मूलानक्षत्रे तस्य तद्देवताकत्वात् तथात्वम्। निर्ऋतिर्लोकपालश्च पिङ्गाक्षव्याधः कार्पटिकादीनां रक्षार्थं यत्नमाकारानेण ततृपिकव्येन घातितः मरणकाले तेषामाधिपत्यं लभेयमितीच्छया प्राणविमोचनात् तदीशतामाप तत्कथा काशीख०१२अ० यथा "अहं दयिष्यमेतांस्तदभविष्यं यदीश्वरः। अभिलष्योन्नतिं प्राणानत्याक्षीत् स परार्थतः। या मतिस्त्वन्तकाले स्यात् गतिस्तद्रूपतः। दिगीशत्वमतः प्राप्तो नैर्ऋत्यां नैर्ऋतेश्वरः" इति। एतल्लोकप्राप्तिकारणादिकं तत्रैव यथा "दिक्पतेर्नैर्ऋतस्यासौ पुण्यापुण्यजनोषिता। राक्षसा निवसन्त्यस्यामपरद्रोहिणः सदा। जातिमात्रेण रक्षांसि वृत्तैः पुण्यजना इमे। अत्यक्तश्रुतिवर्त्मानो जाता वर्णावरेष्वपि। नाद्रियन्तेऽल्पपानानामप्यल्पं क्वचित् कदाचन। परदारपरद्रव्यपरद्रोहपराङ्मुखाः। जाता जातौ निकृष्टायामपि पुण्यानुसारिणः। द्विजातिभक्त्या त्यक्त्वा च रात्मानं पोषयन्ति ये। सदा सन्तुष्टचितास्ताश्च द्विजसेवापरादिषु। आहूता हृष्टवदना वदन्ति द्विजसन्निधौ। जय जीव प्रभो नाथ स्वामिन्निति हि वादिनः। तीर्थस्नानपरा नित्यं नित्यदेवपरायणाः। द्विजेषु नित्यं प्रणताः स्वनामाख्यानपूर्वकम्। दमदानदयाक्षान्तिशौचेन्द्रियविनिग्रहाः। अस्तेयसत्याऽहिंसाश्च सर्वेषां धर्महेतवः। नवस्वेषु सदोद्युक्ता ये जातायत्र कुत्रचित्। सर्वभोगसमृद्धास्ते वसन्त्यत्र पुरोत्तमे। म्लेच्छा अपि सुतीर्थेषु ये मृता नात्मघातकाः। विहाय काशीं निर्वाणविश्राणान्तेऽत्र भोगिनः। अन्यत्र मो विशेषस्ते ये चैवाकहनो जनाः। भुक्त्वा निरयसाहस्रं ते च स्युरपि सूकराः। आत्मघातो न कर्त्तव्यस्तस्मात् क्वापि विपश्चिता। इहापि च परत्रापि न शुभान्यात्मघातिनाम्। यथेष्टमरणं केचिदाहुस्तत्त्वावबोधकाः। प्रयागे सर्वतीर्थानां राज्ञि सर्वाभिलाषदे। अन्त्यजा अपि ये केचिद्दयाधर्मानुसारिणः। परोपकृतिनिष्ठास्ते वसन्त्यत्र तु सत्तमाः। अस्य स्वरूपं वक्ष्यामि दिक्पतेः शृणुतः शृणु। मध्ये विन्ध्याटवि पुरा पल्लीपस्य जनाग्रणीः। पल्लीपतिरभूदुग्रः पिङ्गाक्ष इति विश्रुतः। निर्विन्ध्यायास्तटे शूरः क्रूरकर्मपराङ्मुखः"।

**निर्ऋथ** पु० निर+ऋ—थक्। सामभेदे उज्ज्वलद०।

**निरोद्धव्य** त्रि०नि+रुध—कर्मणि तव्य। १आवरणीये लोकानां यथेष्टप्रचारवारणाय रक्षणीये "आश्रयाश्चोदपानाश्च प्रभूतसलिलाकराः। निरोद्धव्याः सदा राज्ञा चौरिणश्च महीरुजाः" भा०शा०८६अ०। यथेष्टावगाहनादिभिर्जलमालिन्यसम्भवात् तन्निवारणार्थं तस्यावरणादिना रक्षणं कार्यम्। २प्रतिरोधनीये च

**निरोध** पु० नि+रुध—भावे घञ्। १नाशे २गत्यादिप्रतिरोधे मेदि० ३निग्रहे च तत्र नाशे (प्रलये) "न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता" सां०प्र०भा०धृता श्रुतिः। ४निरुद्धाख्यचित्तावस्थाभेदे निरुद्धशब्देऽस्य स्वरूपादिकमुक्तम्। "योगश्चित्तवृत्तिनिरोधः" पात०सू० "अनयोर्द्वयोरेकाग्रनिरुद्धयोर्भूम्योर्यश्चित्तस्यैकाग्रतारूपः परिणामः स योग इत्युक्तं भवति एकाग्रे बहिर्वृत्तिनिरोधः निरुद्धे च सर्वासां वृत्तीनां संस्कारशेषाणां प्रविलय इत्यनयोरेव भूम्योर्योगस्य सम्भवः" भोजवृत्तिः। तस्य कारणञ्च तत्र दर्शितं यथा "अभ्यासवैराग्याभ्यां तन्निरोधः" पात०सू० "आसां निरोधे क उपायः? इति चित्तनदी नामोभयतोवाहिनी वहति कल्याणाय वहति पापाय च। या तु कैवल्यप्राग्भारा विवेकविषयनिम्ना सा कल्याणवहा। संसारप्राग्भाराऽविवेकविषयनिम्ना पापवहा। तत्र वैराग्येण विषयस्रोतः खिलीक्रियते विवेकदर्शनाभ्यासेन विवेकस्रोत उद्घाट्यते इत्युभयाधीनश्चित्तवृत्तिनिरोधः" भा०। "अभ्यासवैराग्ये वक्ष्यमाणलक्षणे ताभ्यां प्रकाशप्रवृत्तिनियमरूपा या वृत्तयस्तासां निरोधो भवतीत्युक्तं भवति तासां विनिवृत्तबाह्याभिनिवेशानाम् अन्तर्मुखतया स्वकारण एव चित्ते शक्तिरूपतयाऽवस्थानम्। तत्र विषयदोषदर्शनजेन वैराग्येण तद्वैमुख्यमुत्पाद्यते। अभ्यासेन च सुखजनकं शान्तप्रवाहप्रदर्शनद्वारेण दृढस्थैर्यमुत्प-

ध्यते । इत्थं नाम्यां भवति चित्तवृत्तिनिरोधः" भोजवृत्तिः । "अथातो विपरीता । विवेकख्यातिरित्यतस्तस्यां विरक्तं चित्तं तामपि निरुणद्धि । तदवस्थं चित्तं संस्कारोपगं भवति । स निर्वीजः समाधिः, न तत्र किञ्चित् सम्प्रज्ञायत इत्यसम्प्रज्ञातः द्विविधः स योगश्चित्तवृत्तिनिरोध इति । तदवस्थे चेतसि विषयाभावात् बुद्धिबोधात्मा पुरुषः किं स्वभावः इति" पात०भा० "अतश्चितिशक्तेर्विपरीतेति । यदा च विवेकख्यातिरपि हेया तदा कैव कथा वृत्त्यन्तराणां दोषबहुलानामिति भावः । ततश्च हेतोर्निरोधसमाधेरवतारो युज्यते इत्याह अतस्तस्यामिति । ज्ञानप्रसादमात्रेण हि परेण वैराग्येण विवेकख्यातिमपि निरुणद्धीत्यर्थः । अथ अनिरुद्धाऽशेषवृत्तिचित्तं कीदृशमित्यत आह तदवस्थमित्यादि । स निरोधः अवस्था यस्य तत्तथोक्तम् । निरोधस्य स्वरूपमाह स निर्वीज इति । क्लेशसहितः कर्माशयो जात्यायुर्भोगबीजम् तस्मान्निर्गत इति निर्वीजः । अस्यैव योगिजनप्रसिद्धामन्वर्थसंज्ञामादर्शयति न तत्रेति । उपसंहरति । द्विविधः स योगश्चित्तवृत्तिनिरोध इति । सम्प्रत्युत्तरसूत्रमवतारयितुं चोदयति । तदवस्थे चेतसीति । विषयाभावे तत्तदाकारपरिणतबुद्धिबोधात्मा स्वयं पुरुषः सदानुभूयते नतु बुद्धिबोधरहितोऽतोऽस्य पुरुषस्य बुद्धिबोधस्वभावः सवितुरिव प्रकाशः न च संस्कारशेषे चेतसि सोऽस्ति न च स्वभावमपहाय भावो वर्त्तितुमर्हतीति इति भावः । स्यादेतत् संस्कारशेषामपि बुद्धिं कस्मात् पुरुषो न बुध्यते इत्यत आह विषयाभावादिति । न बुद्धिमात्रं पुरुषस्य विषयोऽपि तु पुरुषार्थवती बुद्धिः विवेकख्यातिविषयभोगौ च पुरुषार्थौ तौ च निरुद्धावस्थायां न स्त इति सिद्धो विषयाभाव इत्यर्थः" विव०। "तदा द्रष्टुः स्वरूपेऽवस्थानम्" पात०सू० "स्वरूपप्रतिष्ठा तदानीं चितिशक्तिर्यथा कैवल्ये, व्युत्थानचित्ते तु सति तथापि भवन्ती न तथा" भा० "सूत्रेण परिहरति तदा द्रष्टुः स्वरूपेऽवस्थानम् । स्वरूप इत्यारोपितम् शान्तघोरमूढस्वरूपं निवर्त्तयति । पुरुषस्य हि चैतन्यं स्वरूपमनौपाधिकम् । न तु बुद्धिबोधः शान्तादिरूपः । औपाधिका हि सः, स्फटिकस्येव स्वभावस्वच्छधवलस्य जपाकुसुमसन्निधानोपाधिररुणिमा, न चोपाधिनिवृत्तावुपहितनिवृत्तिरतिप्रसङ्गादिति भावः । स्वरूपस्य चाभेदेऽपि भेदं विकल्प्य अधिकरणभाव उक्त इति । अयमेवार्थो भाष्यकृता द्योत्यते स्वरूपप्रतिष्ठेति । तदानीं निरोधावस्थायां न व्युत्थानावस्थायामिति भावः । स्यादेतत् व्युत्थानावस्थायामप्रतिष्ठिता स्वरूपे, चितिशक्तिः निरोधावस्थायां प्रतितिष्ठन्ती परिणामिनी स्यात् व्युत्थाने वा स्वरूपप्रतिष्ठाने सति व्युत्थाननिरोधयोरविशेष इत्यत आह व्युत्थानचित्ते त्विति । न जातु कूटस्थनित्या चितिशक्तिः स्वरूपात् च्यवते । तेन यथा निरोधे तथैव व्युत्थानेऽपि । न खलु शुक्तिकायाः प्रमाणविपर्य्ययज्ञानगोचरत्वेऽपि स्वरूपोदयव्ययौ भवतः प्रतिपत्ता तु तथाभूतमप्यतथात्वेनाभिमन्यते । निरोधसमाधिमपेक्ष्य सम्प्रज्ञातोऽपि व्युत्थानमेवेति" विवरणम् २निरुध्यते यस्मै सम्प्रदाने घञ् । निरोधजनिते वशीकरणे च "निरोधश्छर्दिविधारणाभ्याम्" सां०सू० "प्राणस्येति प्रसिद्ध्या लभ्यते "प्रच्छर्द्दनविधारणाभ्यां प्राणस्येति" योगसूत्रे भाष्यकारेण प्राणायामस्य व्याख्यातत्वात् । छर्दिश्च वमनम्, विधारणं त्याग इति यावत् । तेन पूरणरेचनयोर्लाभः । विधारणं च कुम्भकम् । तथा च प्राणस्य पूरकरेचककुम्भकैर्यो निरोधो वशीकरणं वा धारणेत्यर्थः" सां०प्र०भा० ।

**निरोधक** त्रि० नितरां रुणद्धि नि+रुध–ण्वुल् । १निरोधकारके स्त्रियां टाप् अत इत्वम् । सा च सत्त्वप्रविष्टचित्तवृत्तेः तमःप्राचुर्य्यात् २निरोधकारिण्यां स्त्री राघभट्टः । ध्वनिशब्दे ३८२२पृ० दृश्यम् ।

**निरोधन** न० नि+रुध–ल्युट् । कारागारादौ प्रवेशनेन १प्रतिरोधने २विषयसंचाररहितकरणे च ।

**निर्ग** त्रि० नितरां गच्छत्यत्र "सुदुरोरधिकरणे" वार्त्ति० "अन्यत्रापि दृश्यते इति वक्तव्यम्" निर्+गम–अधिकरणे ड । देशे हेमच० । [निःसृते ।

**निर्गत** त्रि० निर्+गम–कर्त्तरि क्त । निष्क्रान्ते बहिर्भूते

**निर्गन्ध** त्रि० निर्गतो गन्धोऽस्य । गन्धशून्ये "निर्गन्धा इव किंशुकाः" चाणक्यः । [मारणे शब्दार्थचि०।

**निर्गन्धन** न० निर्+गन्ध–अर्दने–भावे ल्युट् । नितान्तार्दने

**निर्गन्धपुष्पी** स्त्री निर्गन्धं गन्धशून्यं पुष्पं यस्याः ङीप् । शाल्मलिवृक्षे शब्दच० ।

**निर्गमन** न० निर्+गम–करणे ल्युट् । १द्वारे २प्रतिहारिणि शब्दार्थचि० । भावे ल्युट् । ३निःसरणे

**निर्गुण** पु० निर्गतो गुणेभ्यः । सत्त्वरजस्तमोरूपगुणत्रयशून्ये निर्धर्मके १परमात्मनि । "साकारञ्च निराकारं सगुणं

निर्गुणं विभुम्” ब्रह्म०वै०पु० । “गुणवद्भिर्गुणी च महान्” विष्णुस० । निर्गताः गुणाः शौर्य्यादयोद्भवादयो वा यस्मात् प्रा०ब० । २गुणहीने त्रि० वैशेषिकमते ३गुणादौ “गुणादिर्निर्गुणक्रियः” भाषा० ।

**निर्गुण्ठी** स्त्री निर्गता गुण्ठात् गुण्ठनात् निरा०त० गौरा० ङीष् । (निसिन्दा) ख्याते अमरटीकायां मधुसूदनः ।

**निर्गुण्डी** स्त्री निर्गुण्डति गुड-रक्षायां क पृषो० । निर्गता गुडात् वेष्टनाद्वा ङीष् । नीलशेफालिकायां (निसिन्दा) ख्याते अमरः । “श्वेतनीलपुष्पभेदात् निर्गुण्डी द्विविधा मता” शब्दरत्ना० २शरकाण्डे ३पद्मकन्दे विश्वः । “समूलफलपत्रायाः निर्गुण्ड्याः स्वरसेन तम् । सिद्धं पीत्वा सयचोषो निर्व्याधिर्भाति देववत्” चक्रद० ।

**निर्गूढ़** त्रि० निर्+गुह-क्त । १संवृते २नितान्तगूढ़े ३वृक्षकोटरे पु० शब्दरत्ना० ।

**निर्ग्रन्थ** पु०निर्गतो ग्रन्थेभ्यः निरा०त० । १क्षपणके दिगम्बरे २बौद्धभेदे ३द्यूतकरे ४मुनिभेदे च मेदि० । ५निर्द्धने ६मूर्खे ७निःसहाये ८निर्विष्टे गते त्रि० हेमच० । तत्र क्षपणस्य वस्त्रग्रन्थिशून्यत्वात् मुनेर्हृदयग्रन्थिशून्यत्वात् च तथात्वम् “आत्मारामाश्च मुनयोनिर्ग्रन्था अप्युरुक्रमे” भाग० १।७।१० “शाक्योपाध्यायार्हतनिर्ग्रन्थनिमित्तनिकलकौपलैः” बृ०सं०५१अ० । स्वार्थे क । निर्ग्रन्थक क्षपणे पु० निष्फले वस्त्ररहिते त्रि० जटाधरः ।

**निर्ग्रन्थन** न० निर्+ग्रथि-कौटिल्ये ल्युट् । मारणे अमरः

**निर्ग्रन्थिक** पु० निर्गतो ग्रन्थिर्वस्त्रग्रन्थिर्यस्य कप् प्रा०ब० । १क्षपणके २निर्गुणे ३ग्रन्थिहीने च त्रि० शब्दरत्ना० “सोऽपि कदाचित् निर्ग्रन्थिकमहोपासिकारक्तवृद्धयष्टिप्रोद्भूतमदः स्वधर्ममेव प्रत्यपद्यत” दशकुमा० ४जैनसम्प्रदायिन्यां स्त्रियां स्त्री “वृद्धवाटिकायां गतो नितम्बवती निर्ग्रन्थिकाप्रयत्नेनोपनीतां पादे पराग्रशंसिव” दशकुमा० ।

**निर्ग्राह्य** त्रि० निर्+ग्रह-कर्मणि ण्यत् । निश्चयेन ग्रहीतुं शक्ये “अस्थूलमनण्वह्रस्वमदीर्घमनिर्ग्राह्यम्” बृ०उप० ।

**निर्घट** त्रि० निर्गतो घटो यस्मात् प्रा०ब० । १घटशून्यदेशे २राजकरशून्यहट्टे शब्दच० । ३बहुजनसंकीर्णहट्टे हारा० । अभावे अव्ययी० । ४घटाभावे अव्य० ।

**निर्घण्ट** निर्+घटि-अच् । १ग्रन्थानां सूचीपत्रे २निघण्टौ च शब्दार्थचि० ।

**निर्घात** पु० निर्+हन-घञ् । पवनाहतपवनस्य गगनाद्भूमौ पतनजन्ये शब्दभेदे तल्लक्षणादिकं बृ०सं०३९अ० उक्तं यथा “पवनः पवनाभिहतो गगनादवनौ यदा समापतति । भवति तदा निर्घातः स च पापो दीप्तविहगरुतः । अर्कोदयेऽधिकरणिकनृपधनियोधाङ्गनावणिग्वेश्याः । आ प्रहरात्सोऽजाविकमुपहन्याच्छूद्रपौरांश्च । आ मध्याह्नाद्राजोपसेविनो ब्राह्मणांश्च पीडयति । वैश्यजलदांस्तृतीये चौरान् प्रहरे चतुर्थे च । अस्तं याते नीचान् प्रथमे यामे निहन्ति सस्यानि । रात्रौ द्वितीययामे पिशाचसङ्घान्निपीडयति । तुरगकरिणस्तृतीये विनिहन्याद्यायिनश्चतुर्थे च । भैरवजर्जरशब्दो याति यतस्तां दिशं हन्ति” । “निर्घाते भूमिचलने ज्योतिषाञ्चोपसर्जने । एतानाकालिकान् विद्यादनध्यायानृतावपि” मनुः । “निर्घातोग्रैः कुञ्जलीनान् जिघांसुः” रघुः । “उल्कापाते च निर्घाते तथैवाकालवर्षणे । छिद्रे सर्वे विनिर्दिष्टे न कुर्यान्मङ्गलक्रियाम्” ज्योतिस्तत्त्वे गर्गः ।

**निर्घातन** न० निर्+हन-स्वार्थे णिच्-भावे ल्युट् । उक्तेषु मन्त्रनिष्पादौ क्रियाभेदे यन्त्रकर्मणि तु निर्घातनपूरणवन्नेत्यादिना चक्रियत्र निर्घातनस्य कर्म कार्यं तत्राह “उत्तुण्डितं छित्त्वा निर्घातयेत् छेदनीयवत्म् । छेदनीयवशाच्चापि कुण्ठिवशःकल्याकूपपङ्क्तं कालरपतितानि च हरनकं यथामांसं कृत्वैवापकृत्य प्रयतेत । अतुत्तुण्डितशल्यानि छेदनीयकानि च । अनिर्घात्यानि जानीयात् भूतच्छेदानुबन्धतः” ।

**निर्घृण** त्रि०निर्गता घृणा दया यस्मात् । निर्दये “अजीवान्यतिनिर्घृणः” मार्कण्डेयपु० ।

**निर्घोष** पु० निर्+घुष-घञ् । शब्दमात्रे अमरः “ज्यानिर्घोषैः क्षोभयामास सिंहान्” । “स्निग्धगम्भीरनिर्घोषम्” इति च रघुः । [विजने ।

**निर्जन** त्रि० निर्गतो जनो यस्मात् प्रा० ब० । जनैरनाकीर्णे

**निर्जर** पु० निर्गता जरा यस्मात् । १देवे २जराशून्ये त्रि० । ३ब० । ३अमृते न० । जराशब्दस्य गौणत्वेऽपि अजादौ प्रत्यये परे वा जरसादेशः निर्जरसौ निर्जरौ । आर्हतमतसिद्धे जीवाजीवादिषु सप्तसु पदार्थेषु ४पदार्थभेदे आर्हतशब्दे ११९१पृ० दृश्यम् । ५गुडूच्यां ६तालपर्ण्यां च स्त्री मेदि० । [राजनि० ।

**निर्जरसर्षप** पु० निर्जरप्रियः सर्षपः शा०त० । देवसर्षपे

**निर्जरायु** पु० निर्गतो जरायुतः निरा०त० । जरायुतो

निर्गते त्वगवादौ । निर्गतो जरायुर्यस्य । २जरायुहीने त्रि० । "अमूः पारे पृदाकस्त्रिषन्धा निर्जरायवः । तासां जरायुभिर्वयमक्ष्यावपि" अथ० १।२७।१

**निर्जर्जल्प** पु० नितरां जर्जरः पृषो० । अत्यन्तजर्जरीभूते "निर्ऋतिं निर्जर्जल्पेन शीर्ष्णा (ग्रीवाभि) यजु०२५।२ "नितरां जर्जरीभूतेन शिरोभागेन" वेददी० ।

**निर्जल** त्रि० निर्गतं जलं यस्मात् प्रा०ब० । जलशून्ये देशे "कोपस्त्र जनयेद्राजा निर्जलेभ्यो यथा जलम्" भा०आ० ११० अ० ।

**निर्जलैकादशी** स्त्री कर्म० ज्यैष्ठस्य शुक्लैकादश्याम् यस्याञ्च भीमसेनं प्रति व्यासः । "वृषस्थे मिथुनस्थेऽर्के शुक्ला ह्येकादशी हि या । ज्यैष्ठे मासि प्रयत्नेन सोपास्या जलवर्जिता । स्नाने चाचमने चैव वर्जयित्वोदकं बुधः । उपयुञ्जीत नैवान्यद् व्रतभङ्गोऽन्यथा भवेत् । उदयादुदयं यावद् वर्जयित्वा जलं बुधः । अप्रयत्नादवाप्नोति द्वादशद्वादशी फलमिति" ।

**निर्जित** त्रि० निर्+जि—क्त । १पराजिते २वशीकृते "निर्जितैरावता गजाः" कुमा० । निर्जितेन्द्रियग्रामः अमरः ।

**निर्जिह्व** त्रि० निर्गता मुखाद्बहिःकृता जिह्वा यस्य । १कथाद्युबहिर्गतरसने । "निर्जिह्वा व यथान्त्र कुर्वन्ति मताभिः । वचैर्मभो नरभेव !" भा०भी०६०अ० । २जिह्वाशून्ये भेके च अजिह्वशब्दे ८२पृ० दृश्यम् ।

**निर्जीव** त्रि० निर्गतो जीवो यस्मात् प्रा०ब० । जीवाशूरहिते देहे "वाजिभिश्चापि निर्जीवैः श्वसद्भिः शोणितोक्षितैः" भा०द्रो० ४८अ० । निर्जीवत्वमरित्यर्थः । "चिता दहति निर्जीवं चिन्ता दहति जीवितम्" प्राचीनगाथा ।

**निर्झर** पु०निर्+झॄ—अप् । १पर्वतादिःस्रुतजलप्रवाहे(झरणा) अमरः । २सूर्याश्वे ३तुषानले च मेदि० "भागीरथीनिर्झरशीकराणाम्" कुमा० । "भूतस्तुषारैर्गिरिनिर्झराणाम्" रघुः । स्वार्थे कन्नात्वस्वस्थां च गौरा० ङीष् । ४नद्याम् स्त्री शब्दर० । "जटाकटाहसम्भ्रमभ्रमन्निलिम्पनिर्झरी" इत्यादि रावणकृतशिवस्तवः ।

**निर्झरिणी** स्त्री निर्झरः पर्वतादिःस्रुतजलप्रवाहः कारणत्वेनास्त्यस्या इनि ङीप् । नद्याम् त्रिका० । "स्खलन्मुखरभूरिस्रोतसो निर्झरिण्यः" महावीरचरितम् ।

**निर्णय** पु० निर्+नी—भावे अच् । १निश्चये तदभावाव्याप्तिव्याप्ततद्रूपाधिकृत्य ज्ञाने । सन्देहे यथा भावाभावौ द्वावेव विषयतया भासेते नैवं निश्चये किन्तु तत्र एकविधैवाकारभासते । निश्चयत्वं च न जातिः प्रत्यक्षत्वादिना साङ्कर्यात् किन्तु विषयिताविशेष इत्याकरे स्थितम् । २विरोधपरिहारे मीमांसोक्ते पञ्चावयवन्यायमध्ये १चरमावयवे न्यायोक्ते सन्दिग्धे पक्षप्रतिपक्षयोः ४साधनबाधनाभ्यामर्थावधारणे स च गौतमोक्तेषु षोडशसु पदार्थेषु पदार्थभेदः तल्लक्षणादिकं गौ०सू०भा०योक्तं यथा "विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः" सू० "स्थापना साधनं, प्रतिषेध उपालम्भः, तौ साधनोपालम्भौ पक्षप्रतिपक्षाश्रितौ व्यतिषक्तावनुबन्धेन प्रवर्त्तमानौ पक्षप्रतिपक्षावित्युच्यते, तयोरन्यतरस्य निवृत्तिरेकतरस्यावस्थानम् अवश्यम्भावि, यस्यावस्थानं तस्यावधारणं निर्णयः । नेदं पक्षप्रतिपक्षाभ्यामर्थावधारणं सम्भवतीति एको हि प्रतिज्ञातमर्थं हेतुतः स्थापयति प्रतिषिद्धं चोद्धरतीति द्वितीयेन स्थापनाहेतुः प्रतिषिध्यते तस्यैव प्रतिषेधहेतुश्चोद्ध्रियते स निवर्त्तते तस्य निवृत्तौ योऽवतिष्ठते तेनार्थावधारणं निर्णय इति उभाभ्यामेवार्थावधारणमित्याह । यथा युक्त्या एकस्य सम्भवो द्वितीयस्यासम्भवः तावेतौ सम्भवासम्भवौ विमर्शं सह निवर्त्तयतः, उभयसम्भवे उभयासम्भवे त्वनिवृत्तो विमर्श इति । विमृश्येति विमर्शं कृत्वा, सोऽयं विमर्शः पक्षप्रतिपक्षावद्योत्य न्यायं प्रवर्त्तयतीत्युपादीयते इति । एतच्च विरुद्धयोरेकधर्मिस्थयोर्बोद्धव्यं यत्र तु धर्मिसामान्यगतौ विरुद्धौ धर्मौ हेतुतः सम्भवतः तत्र समुच्चयः हेतुतोऽर्थस्य तथाभावोपपत्तेः, यथा क्रियावद् द्रव्यमिति लक्षणवचने यस्य द्रव्यस्य क्रियायोगो हेतुतः सम्भवति तत् क्रियावत् यस्य न सम्भवति तदक्रियमिति, एकधर्मिस्थयोश्च विरुद्धयोर्युगपद्भाविनोः कालविकल्पः यथा तदेव द्रव्यं क्रियायुक्तं क्रियावत् अनुत्पन्नोपरतक्रियं पुनरक्रियमिति । न चायं निर्णये नियमो विमृश्यैव पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति किन्त्विन्द्रियार्थसन्निकर्षोत्पन्नप्रत्यक्षेऽर्थावधारणं निर्णय इति । परीक्षाविषये तु विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः शास्त्रे वादे च विमर्शवर्जम्" । मीमांसकोक्तन्यायाधिकरणावयवास्तु "विषयोऽविषयश्चैव पूर्वपक्षस्तथोत्तरम् । निर्णयश्चेति सिद्धान्तः शास्त्रेऽधिकरणं स्मृतम्" इत्युक्ताः । "तत्र निर्णयः सिद्धान्तसिद्धविचार्यवाक्यतात्पर्यावधारणम्" तत्त्वकौ० ।

**निर्णयपाद** पु॰ चतुष्पाद्व्यवहारस्य निर्णयात्मके सिद्धिपादापरपर्य्याये चतुर्थभेदे “भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवर्त्तिभिः। आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयते” मिता॰ धृतवचनम्। स च वीरमि॰ विस्तरतो दर्शितो यथा

“अथ निर्णयापरपर्य्यायः सिद्धिपादः। येषां प्रत्याकलितं व्यवहारपाद इत्यभिमतं तेषां सिद्धेः फलत्वाद्व्यवहारपृथग्भावोऽन्येषां प्रत्याकलितस्य चतुष्पात्त्वमेव तु सर्वमते व्यवहारस्य। याज्ञवल्क्यः “तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा” इति। तस्य प्रमाणस्य सिद्धौ निःसन्दिग्धप्रामाण्यव्यवस्थितौ सत्यां प्रमाणोपन्यासकर्त्ता सिद्धिं जयलक्षणामाप्नोति। अन्यथा प्रामाण्यासिद्धौ विपरीतमसिद्धिं पराजयलक्षणमाप्नोति। नारदः “सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता। तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत्”। तरंस्तीर्णवान्‌ उत्तरः उत्कृष्टो विजयीति यावत्। निर्णयप्रकारानाह व्यासः “प्रमाणैर्हेतुचरितैः शपथेन नृपाज्ञया। वादिसम्प्रतिपत्त्या वा निर्णयोऽष्टविधः स्मृतः। विवृतवानेतत्‌ स एव “लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम्। अनुमानं विदुर्हेतुस्तर्कश्चेति मनीषिणः। देशस्थितिः पूर्वकृताच्चरितं समुदाहृतम्। धर्म्मानुरूपाः शपथाः कृताः सत्यघटादयः। तेषामभावे राजाज्ञां निर्णयन्तु विदुर्बुधाः”। इति प्रमाणत्रयं सतर्कोपष्टब्धानुमानं चरितादिचतुष्टयमित्यष्टविधहेतुकत्वान्निर्णयस्याष्टविधत्वं यद्यपि भुक्तिरप्यनुमानमेव। तथापि प्रत्याकलितकालीनं सभ्यानामनुमानमिहानुमानपदेन विवक्षितम्। “धर्मेण व्यवहारेण चरित्रेण नृपाज्ञया। चतुःप्रकारोऽभिहितः सन्दिग्धेऽर्थे विनिर्णयः” इति बृहस्पत्युक्तानां धर्मादीनां निर्णयहेतुत्वं प्रागेव “तत्र सत्ये स्थितो धर्म” इत्यादिना तेनैव विवृतं प्रागेव निरूपितम्। स एव “एकैको द्विविधः प्रोक्तः क्रियाभेदान्मनीषिभिः”। क्रियाभेदात्‌ धर्मनिर्णयस्य द्वैधमाह। स एव “सम्यग्विचार्य्य कार्य्यन्तु युक्त्या संपरिकल्पितम्। परीक्षितन्तु शपथैः स ज्ञेयो धर्मनिर्णयः। प्रतिवादी प्रपद्येत यत्र धर्मः स निर्णयः। दिव्यैर्विशोधितः सम्यक्‌ द्वितीयः स उदाहृतः”। प्रतिवादी प्रपद्येतेत्यस्य काकाक्षिवदुभयत्र सम्बन्धः। यत्र प्रतिवादी युक्त्या सम्यग्विचार्य्य सम्परिकल्पितं, निर्धारितं पुनः शपथैः पुत्रशिरःस्पर्शादिभिः परीक्षितं कार्य्यं प्रपद्येताङ्गीकुर्य्यात्‌ स आद्यो धर्मनिर्णयः दिव्यैर्घटादिभिर्विशोधितः प्रतिवादी यत्र कार्य्यं प्रपद्येत स द्वितीयो धर्माख्यो निर्णय इत्यर्थः। व्यवहारनिर्णयस्यापि द्वैविध्यमाह स एव “प्रमाणैर्निश्चयो यस्तु व्यवहारः स उच्यते। वाक्छलानुत्तरत्वेन द्वितीयः परिकीर्त्तितः” प्रमाणपदेनात्र साक्षिणो लिखितञ्च व्यक्त्यभिप्रायेण च बहुवचनम्। भुक्तेरनुमानत्वाद्दिव्यस्य धर्मनिर्णयान्तर्भावात्। वाक्छलानुत्तरत्वेन वाक्छलेनानुत्तरत्वेन च यो निश्चयो द्वितीयो व्यवहारः स इत्यर्थः। चरित्रनिर्णयस्यापि भेदद्वयन्तेनैवाभिहितम्‌ “अनुमानेन निर्णीतं चरित्रमिति कीर्त्तितम्। देशस्थित्या द्वितीयन्तु शास्त्रविद्भिरुदाहृतम्” अनुमानेन भुक्तिस्वरूपेण यो निर्णयस्तदेकं चरित्रम्। देशस्थित्या यो निर्णयस्तद्द्वितीयं चरित्रमित्यर्थः। राजाज्ञानिर्णयस्यापि द्विभेदताभिहिता तेनैव “प्रमाणसहिताद्यस्तु राजाज्ञा निर्णयः स्मृतः। शास्त्रसभ्यविरोधे च तथान्यः परिकीर्त्तितः” प्रमाणसहिता राजाज्ञा आद्यो निर्णय इत्यन्वयः। शास्त्राणां सभ्यानाञ्च विरोधे परस्परं विप्रतिपत्तौ या राजाज्ञा स द्वितीयो राजाज्ञानुरूपो निर्णय इत्यर्थः। ननु शास्त्राणां सभ्यानाञ्च विरोध एवासम्भवी स्मृत्यमेतानामधिकारिणां सभ्यानां दण्ड्यत्वात्। न च शास्त्राणां परस्परविरोधे सभ्यानाञ्चेत्यर्थ इति वाच्यम्‌ सभ्यविरोधोपन्यासानर्थक्यात्। शास्त्रविरोधे न्यायोपष्टब्धशास्त्रानुसारेण निर्णयः कार्य्य इत्यस्यार्थस्य “स्मृत्योर्विरोधे न्यायस्तु बलवान्‌ व्यवहारतः। धर्मशास्त्रविरोधे तु युक्तियुक्तो विधिःस्मृतः। केवलं शास्त्रमाश्रित्य न कर्त्तव्यो हि निर्णयः। युक्तिहीनविचारे हि धर्महानिः प्रजायते” “न्यायाधिगमे तर्कोऽभ्युपायस्तेनाभ्यूह्य यथास्थानं गमयेदित्यादि” योगीश्वरनारदबृहस्पतिगौतमादिवचोभिर्निर्धारितत्वात्। तादृशि विषये राजाज्ञानवसरात्‌ अनीदृशराजाज्ञाया निषिद्धत्वाच्चेति चेत्‌ उच्यते यत्र शास्त्रविरोधे बलवान्न्यायोऽन्यतरार्थविनिर्णायकः सभ्यप्राड्विवाकस्य सभापतेर्न हृदयमारोहति चिरतरं मीमांसितोऽपि तादृशशास्त्रविरोधे तन्मूलके वा सन्देहे सभ्यविरोधे राजकृतव्यवस्था वादिप्रतिवादिभ्यां मन्तव्येत्येतदर्थकमिदं वचनम्। अतएव पितामहः “वचनं प्राड्विवाकस्य चेद्‌ येन शक्ताः स्युः” इत्यादि।

धर्मादीनां चतुर्णां पूर्वस्योत्तरोत्तरापेक्षया दुर्बलत्वमाह नारदः “धर्मश्च व्यवहारश्च चरित्रं राजशासनम्। चतुष्पाद्व्यवहारोऽयमुत्तरः पूर्वबाधकः” इति। व्यवहारस्य धर्मबाधकतामाह बृहस्पतिः “शास्त्रं केवलमाश्रित्य क्रियते यत्र निर्णयः। व्यवहारः स विज्ञेयो धर्मस्तेनावहीयते”। शास्त्रशब्देन शास्त्रोक्तं साक्ष्यादिप्रमाणं तेन यो निर्णयः क्रियते स व्यवहारः। तेन धर्मः शपथादिकृतो निर्णयोऽवहीयते बाध्यते मानुषप्रमाणे सति दिव्यानवसरात्। अतएवाह कात्यायनः “युक्तियुक्तन्तु कार्यं स्याद्दिव्यं यत्र विवर्जितम्। धर्मस्तु व्यवहारेण बाध्यते तत्र नान्यथा” चरित्रस्य व्यवहारबाधकतामाह बृहस्पतिः “देशस्थित्यानुमानेन नैगमानुमतेन वा। क्रियते निर्णयस्तत्र व्यवहारस्तु बाध्यते”। नैगमाः पौरवणिजः। नैगमानुमतेनानुमानेनेति सम्बन्धः सामानाधिकरण्येन शब्दाद्देशस्थित्यपेक्षः। अमुमेवार्थं स्फुटयति कात्यायनः “प्रतिलोमप्रसूतेषु तथा दुर्गनिवासिषु। विरुद्धन्नियतं प्राहुस्तं धर्मं न विचालयेत्। निर्णयन्तु यदा कुर्यात्तेन धर्मेण पार्थिवः। व्यवहारश्चरित्रेण तदा तेनैव बाध्यते” इति। स्मृतिविरुद्धमपि नियतत्वान्न विचालयेद्राजा। राजशासनस्य चरित्रबाधकतामाह बृहस्पतिः “विहाय चरिताचारं यत्र कुर्यात् पुनर्नृपः। निर्णयं सा तु राजाज्ञा चरित्रं बाध्यते तया” इति चरिताचारं पूर्वपूर्वाचरितमाचारम्। यद्यपि तं धर्मं न विचालयेदित्युक्तमत्र तु विहाय चरिताचारमित्युच्यते तेन विरोधः प्रतिभाति। तथापि यदि तद्विचालने पुरराष्ट्रादिक्षोभो न भवति तदा स्मृत्यादिविरुद्धत्वात्तं दूरीकृत्य स्मृत्याद्यविरोधी राजाज्ञया निर्णयः कार्य इति तात्पर्यम्। अतएव पुरराष्ट्रस्य विरुद्धस्य विवादस्थानादेयत्वमुक्तम् पुरराष्ट्रक्षोभापादकतया तदनापादकतया तु स्मृत्याद्यनुरोध एव कार्यो राज्ञेति। अतएवाह कात्यायनः “विरुद्धं न्यायतो यत्तु चरित्रं कल्प्यते बुधैः। एवन्तत्र निरस्येत चरित्रन्तु नृपाज्ञया” इति नृपैर्न्यायविरुद्धं चरित्रं न तद्ग्राह्यमिति कल्प्यते। तत्र नृपाज्ञया तच्चरित्रं निरस्यते बाध्यत इत्यर्थः। यथोक्तप्रकारातिरिक्तप्रकारेणैषां बाध्यबाधकताकल्पने दोषमाह कात्यायनः “अनेन विधिना युक्तं बाधकं यद्यदुत्तरम्। अन्यथा बाधनं यत्र तत्र धर्मो विहन्यते”।

**निर्णाम** पु० नितरां नामो नमनम् प्रा०स० णत्वम्। नितरां नमने “अथ निर्णामौ पक्षयोः करोति। निर्णामौ हि वयसः पक्षयोर्भवतो वितृतीये, वितृतीये हि वयसः पक्षयोर्निर्णामौ भवतोऽन्तरे वितृतीयेऽन्तरे वयसः पक्षयोर्निर्णामौ भवतः स चतुरङ्गुलमेव पुरस्तादुदूहति चतुरङ्गुलं पश्चादुपसमूहति तद्यावदेवोदूहति तावदुपसमूहति तन्नाह्नैवातिरेचयति नो कनीयः करोति। स तस्मिन्निर्णामे एकामिष्टकामुपदधाति तस्मादेष वयसः पततो निर्णामादेका नाड्युपशेते तां तत्करोति” शत०ब्रा०१०।१।२।५।

**निर्णायन** न० निर्+नी–णिच्–ल्युट्। १निर्णयकरणे २गजापाङ्गदेशे नियाणे शब्दरत्ना०।

**निर्णिक्त** त्रि० निर्+निज–क्त। १शोधिते २अपगतपापे च। “एनस्विभिरनिर्णिक्तैर्नार्थं किञ्चित् सहाचरेत्” मनुः।

**निर्णिज्** पु० निर+निज–शोचपोषणयोः क्विप्। १रूपे निघण्टुः “बिभ्रद्द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम्” ऋ०१।२५।१३। २शोधके त्रि०। क। निर्णिज तदर्थे त्रि०

**निर्णेक** पु० निर्+निज–घञ्। नितरां शुद्धौ “दानेन वधनिर्णेकं सर्पादीनामशक्नुवन्”। “अपामग्नेश्च संयोगात् हेम रूप्यञ्च संबभौ। तस्मात्तयोः स्वयोन्यैव निर्णेको गुणवत्तरः” मनुः।

**निर्णेजक** पु० निर्+निज–ण्वुल्। रजके (धोपा) अमरः। “श्ववतां शौण्डिकानाञ्च चैलनिर्णेजकस्य च”। “कारुकान्नं प्रजां हन्ति बलं निर्णेजकस्य च” मनुः।

**निर्णेजन** न० निर्+निज–भावे ल्युट्। १शुद्धौ करणे ल्युट्। २शोधहेतौ प्रायश्चित्ते “कृतनिर्णेजनांश्चैव न विगर्हेत कर्हिचित्” मनुः। [र्णायके च।

**निर्णेतृ** त्रि० निर्+नी–तृच्। निश्चयकर्त्तरि विवादपदनि-

**निर्द(दि)ग्धिका** स्त्री निर्+दह–दिह–वा क्त संज्ञायां कन् कापि अत इत्वम्। निदिग्धिकायाम् हेमच०।

**निर्दट** त्रि० निर्दय(र)+पृषो०। १दयाहीने २परापवादके ३निष्प्रयोजने च मेदि०। ४मत्ते ५तीव्रे च शब्दरत्ना०।

**निर्दण्ड** त्रि० निःशेषेण दण्डो यस्य प्रा०ब०। सर्वप्रकारदण्डार्हे १शूद्रे “वाचा दण्डो ब्राह्मणानां क्षत्रियाणां भुजार्पणम्। दानदण्डाः स्मृता वैश्या निर्दण्डः शूद्र उच्यते” भा०शा० १५अ०। २दण्डनार्हे च

**निर्दर** पु० निर्+दॄ–कर्मणि अप्। १निर्झरे २निर्भरे च “गिरिनिर्दरवासिनाम्” रामा० अयो० २८३०।

निर्गतोदरो यस्मात् प्रा॰ब॰ ३निर्भये त्रि॰ ४सारे न॰ ५कठिने ६अपत्रपे च त्रि॰ मेदि॰ ।

**निर्दश** त्रि॰ निर्गतानि दश दिनानि यस्य प्रा॰ब॰ । अति-क्रान्तदशाहे "निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च" मनुः "यथा वै पशुर्निर्दशो भवत्यथ स मेध्यो भवति" ऐत॰ब्रा॰७।१४।

**निर्दहस्** अव्य॰ निर्+दह—तुमर्थे "ईश्वरे तोसुन्कसुनौ" पा॰ कसुन् । निर्दग्धुमित्यर्थे "अपशव्येव तु वा ईश्वरा पशून्निर्दहः" ता॰ब्रा॰ २।७।२

**निर्दहन** पु॰ नितरां दहति निर्+दह—ल्यु । १भल्लातके शब्दर॰ । २मूर्वालतायां स्त्री राजनि॰। निर्गतोदहनो वह्निः दहनं वा यस्मात् प्रा॰ब॰ । ३वह्निशून्ये ४दाह-शून्ये च त्रि॰ ।

**निर्दातृ** त्रि॰निर्+दो—खण्डने दा—दाने दै—शोधने तृच् । नितरां १छेत्तरि २दातरि ३शोधके च "यथोद्धरति निर्दाता कक्षं धान्यञ्च रक्षति" मनुः ।

**निर्दिग्ध** त्रि॰ निर्+दिह—क्त । १बलवति मांसले हेमच॰ । २निर्लिप्ते च ।

**निर्दिष्ट** त्रि॰ निर्+दिश—क्त । १उपदिष्टे २प्रदर्शिते ३कथिते च "निर्दिष्टविषयं किञ्चित् उपात्तविषयं तथा" हरि॰

**निर्देश** पु॰निर्+दिश—भावे घञ् । १शासने आज्ञायां २कथने ३उपदेशे च । निर्दिश्यतेऽभिधीयतेऽनेन करणे घञ् । ४प्रतिपादकशब्दभेदे नाम्नि "ओँ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" गीता । ५वेतने च "कालमेव प्रतीक्षेत निर्देशं भृतको यथा" इति पुराणम् । निर्गतो देशात् निरा॰त॰। २देशान्निर्गते त्रि॰ ६उपान्ते च मेदि॰ ।

**निर्दोष** त्रि॰ निर्गतो दोषो यस्मात् प्रा॰ब॰ । दोषरहिते "निर्दोषे पितरि स्थिते" दायभा॰"निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति" मिता॰ धृतवचनम् ।

**निर्द्वन्द्व** त्रि॰निर्गतो द्वन्द्वात् निरा॰त॰ ।शीतोष्णादिद्वन्द्वरहिते "निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्" गीता

**निर्द्धन** त्रि॰ निर्गतं धनमस्य । १धनशून्ये दरिद्रे "शशिनस्तु-ल्यवंशोऽपि निर्द्धनः परिभूयते" चाणक्यः ।२जरद्गवे पु॰ शब्दच॰ ।

**निर्द्धर्म** त्रि॰ निर्गतो धर्मात् निरा॰त॰। धर्मबहिर्भूते "निर्द्ध-र्मार्थं कर्म कुर्युश्च पार्थाः" भा॰उ॰ २४अ॰।

**निर्द्धार** पु॰ निर्+धृ—णिच्—भावे घञ् । निश्चये ज्ञानभेदे ।

**निर्द्धारण** न॰ निर्+धृ—णिच्—ल्युट् । १निश्चये जातिगुणक्रि-याभिः समुदायादेकदेशस्य २पृथक्करणे "यतश्च निर्द्धार-णम्" पा॰ तदर्थे षष्ठी सप्तमी च भवति । तत्स्वरूपा-न्वयादिकं शब्दश॰प्र॰ उक्तं यथा

"विशेषस्य स्वेतरसामान्यव्यावृत्तधर्मवत्त्वं निर्धारणं तच्च समुदितं न षष्ठ्यर्थः सामान्यतद्विशेषधर्मयोः स्वपदो-पात्तत्वात् । किन्तु विशेषान्यत्वं व्यावृत्तं च । विशेषस्तत्स-मभिव्याहृतक्षत्रियादिर्विशेष्य ग्राह्यः । व्यावृत्तत्वञ्च भेद-प्रतियोगित्वं तथा च नराणां क्षत्रियः शूरतम इत्यत्र क्षत्रियस्य नरविशेषतया षष्ठ्यर्थेन क्षत्रियान्यत्वेन विशि-ष्टस्य तत्प्रकृत्यर्थस्य नरस्य तादृशनरत्वावच्छिन्नाधेयत्व-संसर्गेण भेदेऽन्वयस्तस्य क्षत्रियान्यनरत्वावच्छिन्नवृत्तिक-भेदप्रतियोगित्वस्य शूरतमे शूरतमस्य च क्षत्रिये तादा-त्म्येनान्वय इति क्षत्रियान्यनरत्वावच्छिन्नवृत्तिकभेदप्रति-योगित्ववच्छूरतमाभिन्नः क्षत्रिय इत्याकारकस्तत्र बोधः । क्षत्रियान्यनरत्वाधेयतामात्रेण भेदेऽन्वये नराणां क्षत्रियः सुन्दर इत्यपि प्रयोगापत्तेः क्षत्रियान्यकुरूपनरनिष्ठभेद-प्रतियोगित्वस्य सुन्दरे सत्त्वात् । एवञ्च नरत्वावच्छिन्न-वृत्तिकभेदप्रतियोगित्वस्य शूरतमे बाधादुक्तवाक्यस्यायोग्य-तापत्तिरतः षष्ठ्यर्थेन क्षत्रियान्यत्वेन तत्प्रकृत्यर्थो नरो विशेषितः । नच घटानां क्षत्रियः शूर इत्यपि स्यात् क्षत्रियान्यघटत्वावच्छेदेन शूरभेदस्य सत्त्वादिति वाच्यं राहोः शिर इत्यादाविव प्रकृते क्षत्रियान्वयिनः स्वप्रकृ-त्यर्थतादात्म्यस्य षष्ठ्या बोध्यत्वात् । न च षष्ठ्यान्यत्व-वर्थस्य प्रकृत्यर्थविशेष्यत्वनियमात् क्षत्रियान्यत्वरूपस्य षष्ठ्य-र्थस्य प्रकृत्यर्थनरे प्रकारत्वायोग इति वाच्यं मध्योष्य-त्वादौ व्यभिचारेण तादृशव्याप्तेः प्रायिकत्वस्य प्रागुक्त-त्वात् । न च नराणां क्षत्रियो द्रव्यमित्यपि स्यात् क्षत्रियान्यनरत्वावच्छेदेन द्वित्वाद्यवच्छिन्नद्रव्यप्रतियोगि-ताकभेदसत्त्वादिति वाच्यं द्रव्यत्वादिविशिष्टे धर्मिणि द्रव्यत्वाद्यवच्छिन्नस्यैव भेदप्रतियोगित्वस्य बोधने निर्द्धारण षष्ठ्याः समर्थत्वात् । यद्यपि भेदः प्रतियोगित्वञ्च द्वयमेव निर्द्धारणषष्ठ्यर्थः क्षत्रियशब्देनैवोपस्थापितस्य क्षत्रियस्य षष्ठ्यर्थभेदे तस्य च नरे नरस्य च पुनर्भेदे पुनर्भेदस्य प्रति-योगित्वेऽन्वयादेव क्षत्रियान्यनरत्वावच्छिन्नवृत्तिकभेदप्रति-योगित्वस्य शूरतमेऽन्वयसम्भवः । तथापि क्षत्रियादि-नामोपस्थाप्यस्य क्षत्रियादेस्तादृशनामोत्तरविभक्त्यर्थ एव भेदान्वयस्य व्युत्पन्नत्वात् नरपदोत्तरषष्ठ्यर्थे तदन्व-यासम्भवात् क्षत्रियान्यत्वं विशिष्टमेव षष्ठ्यर्थो नत्व-

न्यतमात्वम्; न च नरस्य क्षत्रियः शूर इत्यपि स्यात् पाणिपादस्य पाणिः पवित्र इत्यत्रेवान्यत्रापि एकवचनस्य निर्द्धारणार्थकत्वे मानाभावात्। अतएव द्वन्द्वः सामासिकस्य चेति गीतापि सङ्गच्छते। एकवचनभिन्नयोरेव षष्ठीसप्तम्यो-रुक्तनिर्द्धारणबोधकत्वव्युत्पत्तिस्वीकाराद्वा। ननु पाथः-पृथिव्योर्जलं स्वेहवदित्यादौ जलभिन्नयोः पाथःपृथिव्योरप्रसिद्ध्या पाथःपृथिव्युभयवृत्तिभेदप्रतियोगित्वस्य स्नेहवति बाधेन च जलान्यपाथःपृथिव्युभयत्वावच्छिन्न-वृत्तिकभेदप्रतियोगिनः स्नेहवतो बोधासम्भवः। न च द्विपदद्वन्द्वोत्तरनिर्द्धारणषष्ठ्या अन्यतरवृत्तिभेदप्रयोगि-त्वमेवार्थः तन्निविष्टे चान्यतरस्मिन्नेकपदोपात्तत्वेन जला-न्यत्वादेः षष्ठ्यर्थान्तरस्यान्वयः तथाच जलान्यो यः पाथ-पृथिव्योरन्यतरस्तन्निष्ठस्य भेदस्य प्रतियोगित्वं स्नेहवति वर्त्तत एवेति वाच्यं तावतापि पाथःपृथिव्युभयतादा-त्म्यस्य जले बाधादुक्तवाक्यस्यायोग्यतातादवस्थ्यात् पाथः-पृथिव्योस्तेन अयुक्तत्वाद्यप्रयोगेन निर्द्धारणषष्ठ्यास्तादा-त्म्यबाधिताप्रौढ्यात् घटतद्भिन्नयोर्घटः कम्बुग्रीवादि-मानित्यादौ घटतद्भिन्नान्यतरत्वायप्रसिद्ध्या तादृशान्य-तरवृत्तिभेदस्य बोधयितुमशक्यत्वाच्चेति चेन्न द्वन्द्वोत्तर निर्द्धारणषष्ठ्याः पर्याप्तसंख्यायामपि शक्तत्वेन तस्यै-वैकपदोपात्तत्वेन षष्ठ्यर्थस्य जलाद्यन्यत्वरूपविशेष्य-भेदस्यान्वयेन सर्वदामङ्गलात्। पाथःपृथिव्योर्जलं स्नेह-वदित्यादौ जलभिन्नो यः पाथःपृथिवीपर्याप्तसंख्याश्रय-स्तत्त्वावच्छिन्नवृत्तिकभेदप्रतियोगित्वस्य स्नेहाभिन्नं पाथः-पृथिवीपर्याप्तसंख्याश्रयो जलमित्यन्वये बाधकाभावात्। पटघटमठानां घटः कम्बुग्रीवादिमानित्यादावप्युक्तरीत्यै-वान्वयधीः। इदन्तु बोध्यं यत्रोद्देश्यविधेययोस्तादात्म्ये-नान्वयबोधसामग्री तत्रैव निर्द्धारणषष्ठ्या भेदप्रतियोगि-त्वमर्थः यत्र तु सम्बन्धान्तरेण, तत्रात्यन्ताभावप्रतियोगि-त्वमतो नराणां क्षत्रिये शौर्यमित्यादौ क्षत्रियान्यनरत्वा-वच्छिन्नवृत्तिकस्यात्यन्ताभावस्यैव प्रतियोगित्वं शौर्यादौ प्रतीयते न तु तादृशभेदस्य नराणां क्षत्रिये रूपमित्यपि प्रयोगापत्तेः। नराणां मध्ये क्षत्रियः शूर इत्यादौ तु निर्द्धारणवाचिनो मध्ये इत्यव्ययस्य तदर्थकषष्ठ्या सह सम्भेदे देहे चैत्र इत्यादाविव नान्यतरवैयर्थ्यम्। नरेषु क्षत्रियः शूर इत्यादौ निर्द्धारणसप्तम्यास्त्वेवंरीत्यैवान्वयो द्रष्टव्यः। यत्तु नराणां क्षत्रियः शूरतम इत्यादौ राज्ञोः शिर इत्यत्रेवाभेद एव षष्ठ्यर्थस्तादात्म्यं वा तथा च नराभिन्नक्षत्रियत्वावच्छेदेन शूरतमस्याभेदस्तत्र वाक्यार्थस्तेन नराणां चैत्रोऽर्जुन इत्यादिकोन प्रयोगः नरभिन्नक्षत्रियत्वावच्छेदेनार्जुनाभेदस्यासत्त्वात् न वा नराणां वानरः पशुरित्यादिकः, कोशे यत्नभेदसत्त्वेऽपि मानुषाभेदस्य विरहादिति तत्तुच्छं नराणां क्षत्रियः प्राज्ञो क्षत्रियाणां नरः शूर इत्यादिवाक्यस्य दुर्वार-तापत्तेः। केचित्तु नराणां क्षत्रियः शूर इत्यादौ क्षत्रि-यान्यो नरः शूरभिन्नो नराभिन्नः क्षत्रियश्च शूर इत्ये-वमन्वयितावच्छेदकधर्मावच्छेदेन धियहरीकुर्वन् भेदमभेदञ्च निर्द्धारणवाचिषष्ठीसप्तम्योरर्थमाहुस्तच्चिन्त्यं नामार्थस्य-विशेषकान्वयबोधे नाम्नः प्रथमान्तत्वापेक्षायाः परित्यागा-पत्तेः स्वप्रकृत्यर्थावच्छिन्नस्यैव संख्यान्वयस्वरसस्य शब्दान्त-रार्थेन सहान्वयस्य व्युत्पन्नत्वेन षष्ठ्यर्थे केवलभेदे शूरादेर-न्वयायोगाच्चेत्यास्तां विस्तरः"। "पञ्चमी विभक्ते" पा० यत्र निर्द्धार्यमाणस्य भेदएव प्रतीयते तत्र पञ्चमी स्यात् सि० कौ०। "पञ्चम्यास्तु भेदएवार्थः यथा माथुरा पाटलिपुत्रेभ्य आढ्यतर इति "यतश्च निर्द्धारणमित्यनुवर्त्तते विभागोऽत्र भेदः तत्र निर्द्धारणे सर्वत्र यथा कथञ्चित् भेदस्य सत्त्वेऽपि विभक्तपदस्य सामर्थ्यात् यत्र भेद एव न तु केना-प्युपाध्यादिरूपेणाभेदस्तत्रैवास्याः प्रवृत्तिरित्याह भेदए-वेति न तु शब्दान्तरोपात्ते सामान्याक्रान्ततेति भावः। अत्र पञ्चम्यर्थो निर्द्धारणविषयत्वरूपएव तत्र च स्वविषयत्व-सम्बन्धेन पाटलिपुत्रस्यान्वयः तेन पाटलिपुत्रावधिकनि-र्द्धारणविषया माथुरा आढ्यतरा इति बोधः। न ह्यत्र निर्द्धारणावधेर्निर्द्धार्यमाणस्य च गोषु कृष्णेत्यादाविव सामान्यविशेषभावोऽस्ति प्रत्युत शब्दोपात्तयोर्धर्मयोर्वि-रोध एव" मनोरमा।

**निर्द्धारित** त्रि० निर्+धारि—क्त। १निर्द्धारणविषये २निश्चिते च "निर्द्धारितेऽर्थे लेखेन खलूक्त्वा खलु वाचिकम्" माघः।

**निर्द्धार्य** त्रि० निर्+धारि—कर्मणि ण्यत्। १निर्द्धारणकर्मणि सामान्यतः पृथक्कार्ये विशेषे यथा नराणां क्षत्रियः शूरतमः इत्यत्र शूरत्वेन नरान्तरेभ्यः पृथक् कार्यरूपवि-शेषः क्षत्रियः। २निश्चेये च। भावे ण्यत्। ३अवश्यनि-र्द्धारणे न०। तद्विद्यतेऽस्य अच्। ४निःशङ्ककर्मकर्त्तरि रमानाथः। "निर्द्धार्यः कर्मकर्त्ता च संयतः सत्यव-चादा। अवनेऽप्युद्वेवापि द्वाविकारं यदा मनः। तत्तु क्षम्यं-इति प्रोक्तम्" शब्दार्थचि० धृतवाक्यम्।

**निर्द्धूत** त्रि॰ निर्+धू—कर्मणि क्त । निरस्ते "निर्धूतनीतमपि बालकमुन्नयन्तम्" माघः ।

**निर्ध्मापन** निर्+ध्मा—णिच्—भावे ल्युट् । सुश्रुतोक्ते शल्योद्धरणार्थे व्यापारभेदे "शल्योद्धारेष्वहेतूपक्रमे "प्रमार्जनं निर्ध्मापनं वमनम्" इत्यादिना विभज्य "आहारशेषशब्दद्वीनानुशल्यानि वमनोत्क्षेपणप्रधमनैर्निर्धमेत्" सुश्रु॰ ।

**निर्बन्ध** पु॰ निर्+बन्ध—भावे घञ् । आग्रहे अभिनिवेशभेदे "अवस्तुनिर्बन्धपरे कथं नु ते" कुमा॰ "निर्बन्धसंजातरुषार्थकार्श्यम्" रघुः । निरः वध्नातेश्चादर्थत्वम् "तथापि निर्बध्नाति । तेऽस्य वा स्पृहाम्" नैष॰ प्रयोगात् ।

**निर्ब(र्व)र्हण** न॰ निर्+ब(व)र्ह—भावे ल्युट् । निबर्हणे मारणे नीलकण्ठः ।

**निर्बाध** त्रि॰ निर्गता बाधा यस्मात् प्रा॰ब॰ । १अप्रतिबन्धे २निरुपद्रवे ३विविक्ते च शब्दार्थचि॰ । ४निष्कासे च "परिमण्डलो ह्येष एकविंशतिनिर्बाध एकविंशो ह्येष बहिष्टान्निर्बाधं बिभर्त्ति रश्मयो वा एतस्य निर्बाधा आह्रत एवा एतस्य रश्मयः" शत॰ब्रा॰ ६।७।१।२ "निर्बाधम् निर्बाध्यन्ते निःकास्यन्ते उन्नताः सन्तः पार्श्वयोर्निःसृता भवन्ति" यजु॰संप्रदव्याख्या । "परिमण्डल एकविंशतिनिर्बाधस्तस्योक्तो बन्धुरथस्तान्निर्बाधसम्पद्यानि रश्मयः" शत॰ब्रा॰७।४।१।१०"परिमण्डलोवर्त्तुलाकृतिः एकविंशतिसंख्याकैःपुत्तलैर्युक्तः । उपधानसमये यथा निर्बाधानामधोभागोऽवस्थानं भवति तथा कर्त्तव्यम्" भा॰ ५मज्जभागभेदे च पु॰"निर्बाधेनाग्निम्" यजु॰ २५।२"शिरसि बाध्यते शिरोऽस्थिमध्यसंलग्नो मज्जाभागः तेन"। वेददी॰।

**निर्बुष** त्रि॰ निर्गतं बुषं यस्मात् । बुष—( खागडा ) रहिते पूते धान्ये हेमच॰। निरुदकादि॰ अन्तोदात्तताऽस्य

**निर्भट** त्रि॰ निर्+भट—अच् । दृढे त्रिका॰ ।

**निर्भय** त्रि॰ निर्गतं भयमस्मात् प्रा॰ब॰ । १भयरहिते त्रिका॰ 'निर्भयन्तु भवेद्यस्य राष्ट्रं बाहुबलाश्रितम्' मनुः । रौच्यमनोः २पुत्रभेदे पु॰ "सुनेत्रः क्षत्रवृद्धिश्च सुतपा निर्भयो दृढः" हरिवं॰ ७अ॰ ।

**निर्भर** न॰ निःशेषेण भरो भरणं अतिशयोऽत्र प्रा॰ब॰ । १अतिमात्रे २तद्युक्ते त्रि॰ अमरः "द्रुतपीतमाधवरसौ सुनिर्भरैः सरजस्कमकरन्दनिर्भरासु" माघः । ३वेतनशून्ये भृत्ये च ।

**निर्भर्त्सन** न॰ नितरां भर्त्सनम् प्रा॰स॰ । १अलीकारे २अभिभवे । कर्मणि ल्युट् । ३अनर्थके न॰ मेदि॰ "निर्भर्त्सनापवादैश्च तथैवाप्रियया गिरा" भा॰व॰ २०२अ॰ ।

**निर्भाग्य** त्रि॰ निर्गतं भाग्यं यस्मात् प्रा॰ब॰ । भाग्यरहिते अमरः । (वेगार) हेमच॰ ।

**निर्भृति** त्रि॰ निर्गता भृतिरस्य । वेतनशून्ये कर्मकरे

**निर्मक्षिक** अव्य॰मक्षिकायाः अभावः अव्ययी॰। १मक्षिकाया अभावे । निर्गता मक्षिका यस्मात् प्रा॰ब॰। २मक्षिकाशून्ये देशे ३तदुपलक्षिते निर्जने देशे"कृतं भवतेदानीं निर्मक्षिकम्" शकु॰प्राकृतानुवादः । निरुदकादि॰अन्तोदात्तताऽस्य ।

**निर्मज्** त्रि॰ निर्—मृज—क्विप् वेदे पृषो॰ । नितान्तशुद्धे "यदि सहस्रान्तु निर्मजामजे" ऋ॰ ८।४।२॰ "निर्मजां निःशेषेण शुद्धानां गवाम्" भा॰ ।

**निर्मथ** पु॰ निर्मथ्यतेऽनेन निर्+मथ—करणे ल्युट् । अग्निमन्थनदारुणि अरणौ हेमच॰ । निर्मथननिर्मन्थनिर्मन्थन शब्दा अप्यत्र ।

**निर्मद** त्रि॰ निर्गतो मदो दानजलं हर्षो गर्वो वा यस्मात् । १निरभिमाने २हर्षशून्ये ३दानजलशून्ये च "निर्मदं दुःखितं दृष्ट्वा पितरो राममब्रुवन्" भा॰व॰ ९९अ॰ ।

**निर्मन्थ्य** न॰ निर्मन्थ्यते अग्न्युत्पादनार्थं दृह्यते निर्+मन्थ—कर्मणि ण्यत् । अग्न्युत्पादनार्थं दृह्यमाने दारुणि अमरः ।

**निर्मर्य्याद** त्रि॰ निर्गतो मर्य्यादायाः निरा॰त॰ । १मर्य्यादातीते २अविनीते "निर्मर्य्यादा म्लेच्छा ये पश्चिमदिक्संस्थास्ते च" वृ॰सं॰ १४अ॰ ।

**निर्मल** त्रि॰ निर्गतो मलो यस्य प्रा॰ब॰ । मलहीने "नितान्तनिर्मलस्वान्तः" वेदान्तसारः "निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा" मनुः । मलश्च रागादिदोषः कालुष्यञ्च ।

**निर्मलोपल** नित्यकर्म॰ । स्फटिकोपले राजनि॰ ।

**निर्मशक** त्रि॰ निर्गतो मशको यस्मात् प्रा॰ब॰। मशकरहिते देशे निरुदका॰ अन्तोदात्ततास्य । अभावे अव्ययी॰ । २मशकाभावे अव्य॰ ।

**निर्मांस** त्रि॰निर्गतं मांसमस्य प्रा॰ब॰। १मांसपिण्डहीने २आहाराभावेनातिकृशे तपस्विदरिद्रप्रभृतौ च "निर्मांसबाहवस्ताः क्लेशमायान्ति परदेशान्" वृ॰सं॰ ९अ॰ ।

**निर्मांसवक्त्र** पु॰ निर्मांसं वक्त्रमस्य । कुमारानुचरभेदे "कृष्णा निर्मांसवक्त्राश्च स्थूलपृष्ठास्तनूदराः" भा॰श॰ ४६अ॰।

**निर्माण** न॰ निर्+मि—भावे ल्युट् । १घटादेः २रचनायाम् । "निर्माणदक्षस्य समीहितेषु" भट्टिः "निर्माणस्य शरीरस्य

ततो धैर्य्यमवाप्नुहि" भा०व० २५१अ०। निर्मीयतेऽनेन करणे ल्युट्। निर्माणसाधने २कायादौ। "क्लेशकर्मविपाकाशयैरपरामृष्टो निर्माणकायमधिष्ठाय सम्प्रदाय प्रवर्त्तकः" कुसुमा०। कायस्य निर्माणसाधनत्वात् तथात्वम्। निर्माणार्थं कायं निर्माणकायमिति हरिदासः तत्तु न युक्तं कायाधिष्ठानस्यैव निर्माणार्थत्वेन कायस्य तथात्वाभावात्। निर्गतो मानात् निरा०त०। ३मानातीते। "पूर्वपदादिति" पा० असंज्ञायामपि आर्षं णत्वम्। "अनक्षत्रमणं व्योम निर्माणं घनगर्जितम्" रा०कि०४४अ०

**निर्माल्य** न० निर्+मल-ण्यत्। देवदत्ते तद्विसर्जनोत्तरमुच्छिष्टे द्रव्ये "अर्वाक् विसर्जनाद्द्रव्यं नैवेद्यं सर्वमुच्यते। विसर्जिते जगन्नाथे निर्माल्यं भवति क्षणात्" गारुडपु०। विद्यानन्दनिबन्धे "स्मृत्यं गणपतावुग्रे शाक्ते शैवेऽथ वैष्णवे। तेजश्चण्डमयोच्छिष्टोऽनुच्छिष्टपूर्विकाम्। चाण्डालीं शेषिकां चण्डं विष्वक्सेनं क्रमाद्यजेत्। ओजो गणेशः।" हृदये च वह्निर्देवीं समर्प्य विधिवत्ततः। निर्माल्यञ्च शुचौ देशे नैवेद्यं भक्षयेत् सुधीः" तन्त्रान्तरे आ०त० निर्माल्यस्य धारणप्रकारादिकं निरूपितं यथा "निर्माल्यं शिरसा धार्य्यं सर्वाङ्गे चानुलेपनम्। नैवेद्यञ्चोपभुञ्जीत दत्त्वा तच्छेषवासिने"। तच्छेषवासिने विष्वक्सेनादये "उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः। भक्त्यादात्मविशुद्ध्यर्थं सर्वकामसमृद्धये"। स्वे धाम्नि स्वीयहृदये उद्वास्य संस्थाप्य तथाच कालिकापुराणे "ध्यायंस्तु मन्त्रयानेन ततस्तं स्थापयेत् हृदि। तिष्ठ देवि! परे स्थाने स्वस्थाने परमेश्वरि। यत्र ब्रह्मादयः सर्वे सुरास्तिष्ठन्ति मे हृदि"। भविष्ये "निर्माल्यं नोपभोक्तव्यं रुद्रस्य तपनस्य च। भक्ष्यते यदि तन्मोहाच्चरके पच्यते ध्रुवम्"। निर्माल्यमात्रे तु "उदके तरुमूले वा निर्माल्यं तस्य संत्यजेत्" कालिकापुराणे "यो यद्देवार्चनरतः स तन्नैवेद्यभक्षकः" ब्रह्मपु० "अम्बरीष! नवं वस्त्रं फलमन्नं रसादिकम्। कृत्वा कृष्णोपभोग्यन्तु सदा सेव्यं हि वैष्णवैः" तत्रैककर्त्तरि श्राश्रवणात् स्वदत्तनैवेद्यभक्षणेऽप्यधिकार उक्तः "केवलं सौरशैवे तु वैष्णवो नैव भक्षयेत्"। विष्णुयामले "पीत्वा पादोदकं देवि! नैवेद्यं स्वयमुद्धरेत्। त्यजेत् पादोदकं यस्तु नैवेद्यं वा त्यजेन्नरः। षष्टिवर्षसहस्राणि रौरवे नरके पचेत्"। उद्धरेत् अभ्यवहरेत्। स्कन्दयामले "उद्वास्य देवं स्वे धाम्नि तन्निवेदितमात्मनः। भक्षयेत् पापशुद्ध्यर्थं सर्वदा साधकः प्रिये!" शिवधर्मोत्तरे रुद्रनैवेद्यभक्षणमुक्तं यथा "अथ भक्त्या शिवं पूज्य नैवेद्यमुपकल्पयेत्। तदन्नं स्वयमश्नीयात् तत् सर्वं विनिवेदयेत्"। "फलं पुष्पञ्च ताम्बूलम् अन्नपानादिकञ्च यत्। अदत्त्वा तन्महादेव्यै न भोक्तव्यं कदाचन"। एतेन यत् पठन्ति "अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणञ्चरेत्" इति तदेकान्तवैष्णवपरमिति भूषणः। यत्तु "शूद्रान्नं याजकान्नञ्च नैवेद्यञ्चापि वर्जयेत्" इति लैङ्गवचनम्। तन्नैवेद्यत्वेनोपकल्पितानिवेदितपरं लोभादिना भोजननिषेधकं वा यथोक्तं शास्त्रे "नोपभुक्त्वा च नैवेद्यं प्रयाति प्रेतयोनिषु।" द्रव्यविशेषस्य कालभेदे निर्माल्यतोक्ता तन्त्रसा० योगिनीतन्त्रे यथा "मणिमुक्तासुवर्णानि देवे दत्तानि यानि वै। न निर्माल्यं द्वादशाब्दं ताम्रपात्रं तथैव च। पट्टशाटी च षण्मासं नैवेद्यं दत्तमात्रतः। मोदकं लपरञ्चैव मासार्द्धेन महेश्वरि!। पट्टवस्त्रं त्रिमासाच्च यातयाममहः स्मृतम्। यावदुष्णं भवेदन्नं परमान्नं तथैव च। मस्तकं रुधिरञ्चैव अहोरात्रेण पार्वति!। सुहृत्तन्दधि-दुग्धञ्च आज्यं यामेन शङ्करि। करवीरमहोरात्रं विल्वपत्रं तथैव च। जवारक्तञ्च माध्यं च निर्माल्यं सार्द्धयामके। माल्यं वै करवीरस्य पत्रस्य विल्वजस्य च। यामार्द्धेन महेशानि! ताम्बूलं दत्तमात्रतः। अनिर्माल्यञ्च दाडिम्बं तथा विल्वफलं प्रिये!। सौगन्धिकञ्च कदलीं प्रयत्नेन नियोजयेत्। कदलीबीजपूरञ्च दुग्धपक्वं निवेदयेत्।" शिवनिर्माल्यधारणे विशेषः ति०त० उक्तो यथा स्कान्दे "निर्माल्यं यो हि मद्भक्त्या शिरसा धारयिष्यति। अशुचिर्भिन्नमर्यादो नरः पापसमन्वितः। नरके पच्यते घोरे तिर्य्यग्योनौ च जायते। ब्रह्महापि शुचिर्भूत्वा निर्माल्यं यस्तु धारयेत्। तस्य पापं महच्छीघ्रं नाशयिष्ये महाव्रते!।" शुचिःस्नानादिनेति शेषः। एवञ्च "स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा आप्लुतः शुचिः" इति कालिकापुराणीयमशुचिविषयम्। अनुपनीतविषयमिति श्रीदत्तः। बहुचम्पकपरिशिष्टम्। अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलम्। शालग्रामशिलास्पर्शात् सर्वं याति पवित्रताम्" उदके निर्माल्यत्यागश्च गङ्गेतरपरः। यथोक्तं ब्रह्मपु० "गङ्गां पुण्यजलां प्राप्य चतुर्दश विवर्जयेत्। शौचमाचमनं केशं निर्माल्यं मलघर्षणम्"। २टक्कायां स्त्री शब्दर०।

**निर्मित** त्रि॰ निर्+मा–क्त। कृतरचने "निजनिर्मितकारिकावलीम्" सि॰मु॰।

**निर्मिति** स्त्री निर्+मा–भावे क्तिन्। निर्माणे करणे। "नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति" काव्यप्र॰।

**निर्मुक्त** पु॰ निर्+मुच–क्त। १मुक्तकञ्चुके सर्पे (खोलसछाड़ा साप) निःशेषेण मुक्तः। निष्परिग्रहे २सङ्गरहिते ३बन्धशून्ये च अमरः। ४वियुक्ते मेदि॰ "हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव" रघुः।

**निर्मुट** न॰ निर्गतं मुटं यस्मात् प्रा॰ब॰। १करशून्यहट्टे (मुटिशून्यहाट) हारा॰। २वनस्पतौ पु॰ त्रिका॰ ३सूर्य्ये ४खर्परे पु॰ हारा॰।

**निर्मूल** त्रि॰ निर्गतं मूलमस्य प्रा॰ब॰। मूलरहिते "आरुह्य हृत्वान् निर्मूलान् गजः परितुदन्निव" भा॰उ॰ ७४अ॰।

**निर्मूलन** न॰ निर्मूल+कृतौ णिच–भावे ल्युट्। उत्पाटने

**निर्मृजस्** अव्य॰ निर्+मृज–"ईश्वरे तोसुन्कसुनौ" पा॰ तुमर्थे कसुन्। निर्माष्टुमित्यर्थे "स्त्रच्येव तु वा ईश्वराः पशुर्निर्मृजः" ताण्ड्यब्रा॰२।२।२। "निर्माष्टुमपगमयितुं विनाशयितुमीश्वराः समर्थाः" भा॰।

**निर्मृष्ट** त्रि॰ निर्+मृज–क्त। प्रोञ्छिते। "निर्मृष्टरागोऽधरः" सा॰ द॰।

**निर्मोक** पु॰ निर्+मुच्–घञ्। १सर्पकञ्चुके (खोलस) २मोचने ३सन्नाहे ४आकाशे च मेदि॰। "निर्मोकपट्टाः फणिभिर्विमुक्ताः" रघुः। ५सावर्णिमनोःपुत्रभेदे पु॰। "निर्मोकविरजस्काद्याः सावर्णेस्तनया नृप!" भाग॰८।१३।६ अत्र निर्मोहेति पाठान्तरं तत्रार्थे।

**निर्मोक्ष** पु॰ निःशेषेण मोक्षः प्रा॰ स॰। निःशेषेण मोक्षे "अनिर्मोक्षप्रसङ्गः" शा॰भा॰।

**निर्मोह** त्रि॰ निर्गतो मोहो यस्मात् प्रा॰ब॰। १मोहशून्ये रैवतमनोः २पुत्रभेदे पु॰ "अरण्यश्च प्रकाशश्च निर्मोहः सत्यवान् कृती। रैवतस्य मनोःपुत्राः" हरिवं॰ ७अ॰। ३सावर्णिमनोःपुत्रभेदे निर्मोकशब्दे दृश्यम्। त्रयोदशमन्वन्तरे काश्यपे ४सप्तर्षिभेदे "त्रयोदशेऽथ पर्य्याये भव्ये मन्वन्तरे मनोः" इत्युपक्रमे "निष्प्रकम्पस्तथात्रेयः निर्मोहः काश्यपस्तथा" हरिवं॰ ७ अ॰।

**निर्म्लेतुका** स्त्री निर्+म्ला–तुन् संज्ञायां कन् प्रयो॰। म्लानिशून्ये ओषधिभेदे "निर्म्लेतुकास्तत्र भवन्ति" पञ्च॰ब्रा॰१३।८।१६।

**निर्यन्त्रण** न॰ निर्+यन्त्र–ल्युट्। १निष्पीडने निर्गतं यन्त्रणं यस्मात् प्रा॰ब॰। २यन्त्रणाशून्ये बाधाशून्ये ३निरर्गले ४उच्छृङ्खले त्रि॰जटा॰।

**निर्याण** न॰ निर्यान्ति मदोऽनेन निर्+या करणे ल्युट्। १गजापाङ्गदेशे। भावे ल्युट्। २मोचने ३अध्वनिर्गमे च मेदि॰। ४निःसरणे ५प्राणवायोर्देहनिःसरणरूपमरणे च लग्नावधिकस्थानभेदस्थग्रहभेदैस्तज्ज्ञानं वृहज्जातके निरूपितं यथा "मृत्युर्मृत्युगृहेक्षणेन बलिभिस्तद्धातुकोपोद्भवस्तत्संयुक्तभगात्रजो बहुभवो वीर्य्यान्वितैर्भूरिभिः। अग्न्यम्ब्वायुधजो ज्वरामयकृतस्तृट्क्षुत्कृतश्चाष्टमे सूर्य्याद्यैर्निधने चरादिषु परस्वाध्वप्रदेशेष्वपि। शैलाग्राभिहतस्य सूर्य्यकुजयोर्मृत्युः खबन्धुस्थ१०४योः कूपे मन्दशशाङ्कभूमितनयैर्बन्ध्वस्तकर्म४।७।१०स्थितैः। कन्यायां स्वजनाद्धिमोष्णकरयोः पापग्रहैर्दृष्टयोः स्यातां यद्युभयोदयेऽर्कशशिनौ तोये तदा मज्जतः। मन्दे कर्कटगे जलोदरकृतो मृत्युर्मृगाङ्के मृगे शस्त्राग्निप्रभवः शशिन्यशुभयोर्मध्ये कुजर्क्षे स्थिते। कन्यायां रुधिरोत्थशोषजनितस्तद्वत् स्थिते शीतगौ सौरर्क्षे यदि तद्वदेव हिमगौ रज्ज्वग्निपातैः कृतः। बन्धाद्धी५नवमस्थयोरशुभयोः सौम्यग्रहादृष्टयोर्द्रेक्काणैश्च ससर्पपाशनिगडैः छिद्रस्थितैर्बन्धतः। कन्यायामशुभान्वितेऽस्तमयगे चन्द्रे सिते मेषगे सूर्य्ये लग्नगते च विद्धि मरणं स्त्रीहेतुकं मन्दिरे। शूलोद्भिन्नतनुः सुखेऽवनिसुते सूर्य्येऽपि वा खे१० यमे सप्रक्षीणहिमांशुभिश्च युगपत्पापैस्त्रिकोणाद्य५।८।१गैः। बन्धु४स्थे च रवौ१० वियत्यवनिजे क्षीणेन्दुसंवीक्षिते काष्ठेनाभिहतः प्रयाति मरणं सूर्य्यात्मजेनेक्षिते। रन्ध्रास्तदाङ्कहिबुकै८।१०।१।४र्लगुडाहताङ्गः प्रक्षीणचन्द्ररुधिराकिदिनेशयुक्तैः। तैरेव कर्म१०नवमोदय१पुत्र५संस्थैर्धूमाग्निबन्धनशरीरनिकुट्टनान्तः। बन्ध्वस्तकर्म४।७।१०सहितैः कुजसूर्य्यमन्दैर्निर्याणमायुधशिखिक्षितिपालकोपात्। सौरीन्दुभूमितनयैः स्वसुखास्पदस्थै२।४।१०र्ज्ञेयः क्षतकृमिकृतश्च शरीरपातः। ख१०स्थेऽर्केऽवनिजे रसातल४गते यानप्रपाताद्वधो यन्त्रोत्पीडनजः कुजेऽस्तमयगे सौरेन्दिनाभ्युद्गमे। विण्मध्ये रुधिराकिशीतकिरणैर्जूकाजसौरर्क्षगैर्यातैर्वा गलितेन्दुसूर्य्यरुधिरैर्व्योमास्तबन्ध्वा१०।७।४श्रयात्। वीर्य्यान्वितवक्रवीक्षिते क्षीणेन्दौ निधनस्थितेऽर्कजे। गुह्योद्भवरोगपीडया मृत्युः स्यात् कृमिशस्त्रदाहजः। अस्ते

रवौ सरुधिरे निधनेऽङ्कपुत्रे चीणे रसातलगते हिमगौ खगान्तः। लग्नात्तदष्टमतपः ।१।५।८।९स्थिन भौममन्दचन्द्रैस्तु शैलशिखराशनिकुड्यपातैः। द्वाविंशः कथितस्तु कारणं द्रेष्काणो निधनस्य सूरिभिः। तस्याधिपतिर्भवोऽपि वा निर्याणं स्वगुणैः प्रयच्छति। होरानवांशकप्रयुक्तसमानभूमौ योगेक्षणादभिरतः परिकल्प्यमेतत्। मोहस्तु मृत्युसमयेऽनुदितांशतुल्यः खेऽशकेचिते द्विगुणितस्त्रिगुणः शुभैश्च। दहनजलविमिश्रैर्भस्मसंक्लेदशोषैर्निधनभवनसंस्थैर्व्यालवर्गैर्विकृत्तः। इति शवपरिणामश्चिन्तनीयो यथोक्तः पृथुविरचितशास्त्राद्गत्यनूकादि चिन्त्यम्। गुरुरुडुपतिशुक्रौ सूर्यभौमौ यमज्ञौ विबुधपितृतिरश्चो नारकीयांश्च कुर्युः। दिनकरशशिवीर्याधिष्ठिता त्र्यंशनाथात् प्रवरसमनिकृष्टास्तुङ्गहासादनूके। गतिरपि रिपुरन्ध्रत्र्यंशपोऽस्तस्थितो वा गुरुरथ रिपुकेन्द्रच्छिद्रगः स्वोच्चसंस्थः। उदयति भवनेऽन्त्ये सौम्यभागे च मोक्षो भवति यदि बलेन प्रोज्झितास्तत्र शेषाः। इति नैर्याणिकाध्यायः"। "नेष्टा योगा जातकं कामिनीनां निर्याणं स्यादष्टजन्मद्रेक्काणैः" इत्युपसंहाराध्याये तत्रोक्तम्। निर्गतं यानमस्मात् प्रा०ब० "संज्ञायां पूर्वपदात्" पा० णत्वम्। पशूनां पादबन्धने हेमादि वैज० "निर्याणहस्तस्य पुरो दुधुक्षतः" माघः।

**निर्यातक** त्रि० निर्यातं निर्याणं बहिष्करणं तत् करोति णिच्–ण्वुल्। निर्हारके। "अनन्यजाश्च ये विप्राः प्रेतनिर्यातकास्तथा" भा० अनु० २३ अ०। "कृतनिर्यातकाश्चैव परदाररताश्च ये" मार्कण्डे १५ अ०।

**निर्यातन** न० निर्+यत–णिच् ल्युट्। १वैरशुद्धौ, २प्रतीकारे ३प्रतिदाने ४न्यासमर्पणे च अमरः। ५मारणे हेमच०। ६ऋणादेः शोधने च। "विगणनऋणनिर्यातनम्" सि० कौ०। "नह्यन्यस्य भवेच्छक्तिर्वैरनिर्यातनं प्रति" हरिवं०

**निर्यात्य** त्रि० निर्+याति–कर्मणि यत्। १शोधनीये २प्रतिदेये च "कन्या चैवं न चान्यस्य निर्यात्यानेन सङ्गता" हरिवं० १७७ अ०।

**निर्याम** पु० निर्+यम–घञ्। पोतवाहे हेमच०।

**निर्यास** पु०न० निर्–यस–घञ् अर्द्धर्चा०। १क्वाथे २काथे शब्दमा०। ३वृक्षादिक्षीरे वृक्षात् निर्गत्य कठिनतां याते वृक्षरसभेदे (आठा) रत्नमा० "शालनिर्यासगन्धिभिः" रघुः। "लोहितान् वृक्षनिर्यासान्" मनुः। ३निष्यन्दे जलादौ च कंसस्याथ सुखस्वेदो भूभेदान्तरगोचरः। अमवद्दोषनिर्यासः" हरिवं० ८७अ०। निर्यासस्यादूरदेशादिः कुमुदा०ठच्। निर्यासिक तत्सन्निकृष्टदेशादौ त्रि०।

**निर्यूष** पु० नितरां यूषः प्रा० स०। निर्यासशब्दार्थे शब्दमा०

**निर्यूह** पु० निर्+ऊह–क पृषो०। १मत्तवारणे वैजयन्ती तद्वृत्ताकारतया निर्मिते २नागदन्ते द्वारवेदिकायां काष्ठभेदे अमरः। ३शेखरे ४आपीडे ५द्वारे ६क्वाथे निर्यासे मेदि०। "वितर्दिनिर्यूहविटङ्कनीड़ः" माघः। द्वार० तोरणनिर्यूहैर्युक्तमभ्रचयोपमैः" भा०आ०१०८ अ० तत्र आपीडे "खड्गकार्त्तकनिर्यूहैः शरैश्च विविधैरपि" भा० व०१८ अ०। कार्त्तकस्य निर्यूहैः आपीड़ैरिव शरैरित्यर्थः। [२पाखण्डपृष्ठे हेम०।

**निर्लक्षण** त्रि० निर्गतं लक्षणमस्य प्रा०ब०। १शुभलक्षणशून्ये

**निर्लिप्त** त्रि० निर्+लिप–क्त। १लेपरहिते २सम्बन्धशून्ये निःसङ्गे। "निरुपाधिश्च निर्लिप्तो निरीहो निधनान्तकः" ब्रह्मवै०पु०।

**निर्लुञ्चन** न० निर्+लुञ्च–भावे ल्युट्। विलुप्तीकरणादौ "नखनिर्लुञ्चनादिभिरपि तत्कार्य्यसिद्धेः" कात्या०श्रौ० १।६।६ सू० कर्कः।

**निर्लुण्ठन** न० निर्+लुठि–भावे ल्युट्। अपहरणे (लोटा) "अङ्गानीव परस्परं विदधते निर्लुण्ठनं सुभ्रुवः" सा०द०।

**निर्लेखन** न० निर्+लिख–भावे ल्युट्। १मलादेरपसारणे (आँचड़ान) करणे ल्युट्। २तत्साधने "जिह्वानिर्लेखनं रौप्यं सौवर्णं वार्क्षमेव च" सुश्रुतः।

**निर्लेप** त्रि० निर्गतो लेपः सम्बन्धोऽनुलेपनं वा यस्य प्रा०ब०। १परिणामहेतुसंयोगादिशून्ये २अनुलेपनरहिते च "लोकवेदविरुद्धैरपि निर्लेपः स्वतन्त्रश्चेति महापाशुपताः" कुसुमा०। "निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति" मनुः।

**निर्लोमन्** त्रि० निर्गतं लोम यस्य। लोमरहिते (टाक) रोगयुक्ते। तद्रोगस्तु "पट्टसूत्रस्य हरणात् निर्लोमा जायते नरः" शाता० उक्तेः पट्टसूत्रहरणाज्जायते।

**निर्ल्वयनी** स्त्री नितरां लयति अहिरस्याम् त्वचि ल्युट् ङीप् पृषो०। सर्पत्वचि (खोलस) "तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत" वृह०उप०। "अहिनिर्ल्वयनी सर्पनिर्मोकः वल्मीके सर्पाश्रये वल्मीकादाविल्यर्थः प्रत्यस्ता प्रतिक्षिप्ता मृताऽनात्मभावेन सर्पेण परित्यक्ता मृता शयीत" भा०।

**निर्वक्तव्य** त्रि० निर्+वच–कर्मणि तव्य। अवयवार्थकथनेन प्रतिपाद्ये निर्वाच्यनिर्वचनीयावप्यत्र।

**निर्वचन** न० निर्+वच–भावे ल्युट् । १निरुक्तौ अवयवार्थकथने । २प्रसिद्धे च "न निर्मन्युः क्षत्रियोऽस्ति लोके निर्वचनं स्मृतम्" भा० व० २७ अ० । "बलं स्नेने बलं नार्य्यां राज्यं दुर्योधने तथा । इति लोके निर्वचनं लोके चरति भारत" भा० व० ३३अ० ।
निर्गतं वचनं यस्य प्रा० ब० । वचनशून्ये ३तूष्णीमित्यर्थे "मात्मेन तां निर्वचनं जघान" कुमा० । ४वचनरहिते वक्तव्यताशून्ये त्रि०"येषां तडागानि महोदकानि वाप्यश्च कूपाश्च प्रतिश्रयाश्च । अन्नस्य दानं मधुरा च वाणी यमस्य ते निर्वचना भवन्ति" भा० व० १९९ अ० ।

**निर्वण** त्रि० निर्गतो वनात् निरा०त० प्रक्षिरन्तरित्यादिना असंज्ञायामपि णत्वम् । वनाद्बिष्क्रान्ते "निर्वणो वध्यते व्याघ्रो निर्व्याघ्रं छिद्यते वनम्" भा०उ० २९अ० अस्य "वनं समासे" पा० समासमात्रे वनान्तत्वेनान्तोदात्तता ।

**निर्वपण** न० निर्+वप–भावे ल्युट् । १दाने २अन्नादीनां संविभागे च । "परिस्तरणपात्रसंसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणानि" कात्या० श्रौ० ८।२।१ । "अन्नेनाहृता कार्य्यं पितृनिर्वपणं सुतैः" मनुः ।

**निर्वर** त्रि० निर्गतो वरो वरणमस्य । १निर्लज्जे कठिने २निर्भये ३सारे च हेमच० । अत्र निर्दर इत्येव पाठः मुद्राटोषात् निर्वर इति पाठोऽसाधुः । अतएव मेदिनीकोषे निर्दरं निर्भये सारेऽन्यवत्तु कठिनेऽत्रपे" इत्युक्तम् ।

**निर्वर्णन** न० निर्+वर्ण "वर्णायेति" पा० णिच् भावे ल्युट् । दर्शने त्रिका० ।

**निर्वर्त्तित** त्रि०निर्+वृत–णिच्–कर्म्मणि क्त । निष्पादिते ।

**निर्वर्त्य** त्रि० निर्+वृत–णिच्-कर्म्मणि यत् । निष्पाद्ये व्याकरणपरिभाषिते कर्म्मभेदे न०"तन्निवर्त्त्यं विकार्य्यञ्च कर्म द्वेधा व्यवस्थितम्"हरि० कर्म्मशब्दे १७७१ पृ०दृश्यम् ।

**निर्वहण** न० निर्+वह-भावे ल्युट् । १नाशोक्तौ प्रस्तुतकथासमाप्तौ २प्रकृताभिनयस्य निर्वाहे, नाटकसन्ध्यादेरङ्गभेदे तदङ्गानि सन्ध्यादीनि यथोक्तं सा०द० "सन्धिर्विबोधो ग्रथनं निर्णयः परिभाषणम् । कृतिः प्रसाद आनन्दः समयोऽप्युपगूहनम् । भाषणं पूर्ववाक्यञ्च काव्यसंहार एव च । प्रशस्तिरिति संहारे ह्येतान्यङ्गानि नामतः" । युच् । निर्वहणा निशायाम् स्त्री ।

**निर्वाच्** त्रि० निर्+अव–अनुच–क्विप् अवोपसर्गस्य अल्लोपः । निर्गते "तस्मादिमे प्राणा विसृष्टोऽवाङ्गोऽनुनिर्वाङ्" शां०ब्रा० ७।६ ।

**निर्वाण** त्रि० निर्+वा–क्त । "निर्वाणोऽवाते" पा० तस्य नः । १शान्ते वह्निप्रभृत्यादौ २चरमाश्रमस्थे मुनौ ३निश्चले ४शून्ये शब्दर० । भावे क्त । ५अस्तगमने ६निर्वृतौ ७गजमज्जने ८सङ्गमे ९अपवर्गे मोक्षे मेदि० । १०विनाशे यादवः ११विश्रान्तौ हेमच० । "निर्वाणोत्थानशयनानि मौर्ष्टि गजकर्माणीति" पालकाव्योक्ते १२गजकर्म्मभेदे । "अवन्तुदमिवालानमनिर्वाणस्य दन्तिनः" रघुः ।"अनिर्वाणस्य मज्जनरहितस्येति" मल्लि० । "कुरुतेऽस्य मोक्षेऽपि निर्वाणालातलाघवम्" । "निर्वाणभूयिष्ठमथास्य वीर्य्यम्" कुमा० । निर्वृतौ "स्त्रीकामो नामनिर्वाणमल" माघः । "यतितव्यं प्रयत्नेन निर्वाणमपि चेच्छता" "समत्वन्तु निर्वाणं फलमुक्तं श्रुतौ स्मृतौ सर्वदुःखोपरमलक्षण ब्रह्मणि स्थितिः" "स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति" "स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति" गीता । सर्वदुःखोपरमात्मकत्वात् निरतिशयानन्दरूपत्वाच्च परमपुरुषार्थकैवल्यरूपं ब्रह्म निर्वाणमृच्छति इत्यर्थः । १३आदिबुद्धे (ऽ।) लिङ्गे मातागमभेदे १४विद्योपदेशपद्धतिभेदे यथा निर्वाणतन्त्रादि । नामिदेशे जप्ये १५प्रणवपुटितमातृका पुटितस्वाभीष्टमन्त्रे । "कुण्डलीं मूर्ध्नि संचिन्त्य हृदि पीठं विचिन्तयेत् । प्रसादैश्च निरुद्धं तु मोड्यारं समुच्चरेत् । मणिपूरे तु निर्वाणं महाकुण्डलिनीमयः । स्वाधिष्ठाने कामबीजं राकिणीवह्निसंस्थितम् । विचिन्त्य विधिवद्देवि ! मूलाधारान्तिकाञ्चिते ! । विद्युद्वान्तं जपेद्देवि ! विषतन्तुतनीयसीम् । देवीध्यानं द्विजिह्वान्तं मन्त्रमूलादतं सुधः" । तत्र निर्वाणं यथा "अथ वक्ष्यामि निर्वाणं शृणु चारुहितानघे । प्रणवं पूर्वमुच्चार्य्य मातृकाद्यं समुच्चरेत् । मातृकान्ते समस्ताद्य पुनः प्रणवमुच्चरेत् । एवं पुटितमूलन्तु प्रजपेन्मणिपूरके । एवं निर्वाणमीशानि ! यो न जानाति पामरः । कल्पकोटिशतेनापि तस्य सिद्धिर्न जायते"आगमविलासतन्त्रम् ।

**निर्वाणमण्डप** पु० काशीस्थे मुक्तिमण्डपाख्ये तीर्थभेदे ।

**निर्वाणमस्तक** पु० निर्वाणं निर्वृतिर्मस्तकमिव यत्र । मोक्षे त्रिका० ।

**निर्वाणरुचि** त्रि० निर्वाणे रुचिरस्य । १मोक्षसाधनासक्ते एकादशमन्वन्तरे २देवभेदे "महर्षिर्धर्मसावर्णिरेकादशम आत्मवान्" इत्युपक्रमे "विहङ्गमाः कामगमा निर्वा-

षड्वयः सुराः” भागवते ८।१३।१२ श्लोकः।

**निर्वाणी** स्त्री जैनानां १शासनदेवताभेदे हेम०। निर्गता वाणी यस्य बा० कप् न। २वाक्यरहिते तूष्णीम्भूते कपि निर्वाणीकोऽप्यत्र त्रि०।

**निर्वात** त्रि० निर्गतो वातो यस्मात् प्रा० ब०। वायुशून्य-देशे। निर्+वा—क्त निर्वाणोऽवाते पा० न तस्य नः। २निर्गते वाते हेमच०। “असूर्य्यमिव सूर्य्येण निर्वातं इव वायुना” भा० स० २५ अ०।

**निर्वाद** पु० निर्+वद—घञ्। निन्दावादे १लोकापवादे अमरः। “किमात्मनिर्वादकथामुपेक्षे” रघुः। नितरां वादः। २निश्चितवादे क्षीरस्वामी। अभावेऽव्ययी०। ३वादाभावे अव्य०।

**निर्वाप** पु० निर्+वप—भावे घञ्। १दाने, पितृपितृलोको-द्देशेन २दाने च। “अमावास्यां तु निर्वापात् सर्वकामा-नवाप्नुयात्” भा० अनु० ८७ अ०।

**निर्वापण** न० निर्+वप णिच्,—वा—वा णिच्—पुक् ल्युट्। १मारणे वधे अमरः। २दाने च हलायु०। (निवान) ३निर्वापितासम्पादने। “तृष्णायःपिण्डसिकतानां वा निर्वापणं प्रसाधनञ्च कर्त्तव्यम्” सुश्रुतः। “दाहपा-कज्वरवतां कार्य्यं निर्वापणं भवेत्” सुश्रुतः। “दीप-निर्वापणात् पुंसः कुष्माण्डच्छेदनात् स्त्रियः” ति०त०।

**निर्वार्य्य** न० निर्+वृ—ण्यत्। निःशङ्ककर्म्मकर्त्तरि सत्त्वस-म्पदा उद्यमेन कार्य्यकर्त्तरि अमरः। भयविक्लवव्यसना-भ्युदयादौ निर्विकारं मनः सत्त्वम् तत् सम्पदा सम्यतन् उद्यमं कुर्वन् योनिःशङ्को भूत्वा कर्म्म कुरुते स निर्वार्य्य इत्युच्यते।

**निर्वासन** पु० निर्+वस—णिच् भावे ल्युट्। पुरादितो बहिष्करणे १निःसारणे २मारणे हिंसने ३विसर्ज्जने च मेदि० “ततो दुर्य्योधनः क्रूरः कर्णश्च सहसौबलः। तेषां निग्रहनिर्वासान् विविधांस्ते समारभन्” भा०आ० ६१ अ० “निर्वासनञ्च नगरात् प्रव्रज्या च परन्तप!” भा० उ० ८६ अ०।

**निर्वास्य** त्रि० निर्+वस—णिच्—कर्म्मणि यत्। नगरादितो बहिष्कार्य्ये। “कन्यां भजन्ती निर्वास्यः स्त्रियश्च वा-ऽस्थावकर्त्तयेत्” मनुः। “निर्वास्या व्यभिचारिण्यः प्रति-कूलास्तथैव च” याज्ञ०।

**निर्वाह** पु० निर्+वह—घञ्। १कार्य्यसम्पादने २निष्पादने ३समाप्तौ च। “यावता स्यात् स्वनिर्वाहः स्वीकुर्य्यात्ताव-देव तु” नारदीयपु० “स्वतिथ्या कर्म्मनिर्वाहे” ति०त०।

**निर्विकल्प(क)** त्रि० निर्गतो विकल्पो ज्ञातृज्ञेयादिविभागो विशेष्यविशेषणतासम्बन्धो वा यस्मात् प्रा०ब० वा कप्। १वेदान्तोक्ते ज्ञातृज्ञेयादिविभागशून्ये ब्रह्मात्मैकात्म-विषये अखण्डाकारके एकविषयके विशेष्यविशेष-णतासम्बन्धरहिते ज्ञाने, “आत्मारामा विहितरतयो निर्विकल्पे समाधाविति वेणी०। “तत् प्रमा नाप्रमा नापि ज्ञानं यन्निर्विकल्पकम्। प्रकारतादिशून्यं हि सम्बन्धानवगाहि यत्” इति न्यायोक्ते अलौकिके आलो-चनात्मके २ज्ञानभेदे। “ज्ञानं यन्निर्विकल्पकाख्यं तद-तीन्द्रियमिष्यते” भाषा०। आलोचनशब्दे ८२६ पृ० दृश्यम्। बौद्धमते निर्विकल्पकज्ञानमेव प्रमाणं कल्प-नाशून्यत्वात् तद्भिन्नं सर्वमप्रमाणं यथोक्तं सर्वदर्शनसंग्रहे

“ततश्चार्थो द्विविधः ग्राह्योऽध्यवसेयश्च तत्र ग्रहणं निर्विकल्पकरूपं प्रमाणं कल्पनापोढत्वात् अध्यवसायः सविकल्पकरूपोऽप्रमाणं कल्पाज्ञानत्वात्। तदुक्तम् “कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम्। विकल्पो वस्तुनिर्भासादसंवादादुपप्लवः। ग्राह्यं वस्तु प्रमाणं हि ग्रहणं यदितोऽन्यथा। न तद्वस्तु न तन्मानं शब्द-लिङ्गेन्द्रियादिजमिति” च। ननु सविकल्पकस्याप्रामाण्ये कथं ततः प्रवृत्तस्यार्थप्राप्तिः संवादश्चोपपद्येयातामिति चेन्न तद्भद्रं मणिप्रभाविषयमणिविकल्पन्यायेन पारम्प-र्य्येणार्थप्रतिलम्भसम्भवेन तदुपपत्तेः”।

**निर्विकार** पु० प्रकृतेरन्यथाभावः विकारः स निर्गतो यस्मात् प्रा०ब०। जन्मादिषड्भावविकारहीने १परमात्मनि। २विकारशून्ये त्रि०। “त्वयेह भवने मह्यं वस्तव्यं नि-र्विकारया” हरिवं० ६अ०। “सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते” गीता।

**निर्विचार** त्रि० निर्गतो विचारो यतः प्रा०ब०। १विचार-रहिते “रे रे स्वैरिणि! निर्विचारकविते! मास्मत् प्रकाशीभव” चन्द्रालो०। पात० सूत्रोक्ते सूक्ष्मविषयके समापत्तिरूपे २समाधिभेदे च “एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता” पात० सू०। “तत्र भूतसूक्ष्मेष्वभिव्यक्तधर्म्मकेषु देशकालनिमित्ता-नुभवावच्छिन्नेषु या समापत्तिः सा सविचारेत्युच्यते। तत्राप्येकबुद्धिनिर्ग्राह्यमेवोदितधर्म्मविशिष्टं भूतसूक्ष्म-मालम्बनीभूतं समाधिप्रज्ञायामुपतिष्ठते। या पुनः सर्वथा सर्वतः शान्तोदिताव्यपदेश्यधर्म्मानवच्छिन्नेषु

सर्वधर्म्मानुपातिषु सर्वधर्मात्मकेषु समापत्तिः सा निर्विचारेत्युच्यते एवं स्वरूपं हि तत् भूतसूक्ष्मम् एतेनैव स्वरूपेणालम्बनीभूतमेव समाधिप्रज्ञास्वरूपमुपरञ्जयति। प्रज्ञा च स्वरूपशून्येव अर्थमात्रा यदा भवति तदा निर्विचारेत्युच्यते। तत्र महावस्तुविषया सवितर्का, निर्वितर्का च सूक्ष्मविषया सविचारा निर्विचारा च एवमुभयोरेतयैव निर्वितर्कया विकल्पहानिर्व्याख्यातेति” भा० “निर्विचारवैशारद्ये अध्यात्मप्रसादः” सू०। “अशुद्ध्यावरणमलापेतस्य प्रकाशात्मनो बुद्धिसत्त्वस्य रजस्तमोभ्यामनभिभूतः स्वच्छः स्थितिप्रवाहो वैशारद्यं यदा निर्विचारस्य समाधेर्वैशारद्यमिदं जायते तदा योगिनो भवति अध्यात्मप्रसादः भूतार्थविषयः क्रमाननुरोधी स्फुटप्रज्ञालोकः। तथाचोक्तं “प्रज्ञाप्रासादमारुह्य अशोच्यः शोचतो जनान्। भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञोऽनुपश्यति” भाष्यम्। [न्देहे।

**निर्विचित्स** त्रि० निर्गता विचिकित्सा यस्य प्रा०ब०। निःस-

**निर्वितर्क** त्रि० निर्गतो वितर्को यस्मात् प्रा० ब०। १वितर्कशून्ये पात०सू० उक्ते २समाधिभेदे तल्लक्षणादिकं तत्रोक्तं यथा “स्मृतिपरिशुद्धौ स्वरूपशून्येवाऽर्थमात्रनिर्भासा निर्वितर्का” सू० “शब्दार्थस्मृतिप्रविलये सति प्रत्युदितस्पष्टग्राह्याकारप्रतिभासितया न्यग्भूतज्ञानांशत्वेन स्वरूपशून्येव निर्वितर्का समापत्तिः” भा०।

**निर्विस** त्रि० निर्+विद्–क्त निर्विसस्योपसंख्यानात् दस्य नत्वे णत्वदुत्वे। १निर्वेदयुक्ते २खिन्ने ३प्राप्तवैराग्ये विरक्ते च। “निर्विस्रोऽहं दक्षिणेन मार्गेण गतागतलक्षणेन” ईशोप० भा०।

**निर्विन्ध्य** त्रि० निर्गतः विन्ध्यात् नि०त०। १विन्ध्यपर्वतनिःसृते। तथाभूते २नदीभेदे स्त्री “गोदावरी निर्विन्ध्या पयोष्णी इत्यादि” भाग० ५।२१।८ भारतवर्षनद्युक्तौ। “निर्विन्ध्यायाः पथि भवरसाभ्यन्तरः सन्निपत्य” मेघ०। “नर्म्मदा सुरसाद्याश्च नद्यो विन्ध्यविनिर्गताः। तापी पयोष्णी-निर्विन्ध्या -कावेरीप्रमुखा नदी” विष्णुपु०।

**निर्विशेष** न० निर्गतो विशेषो यस्य प्रा० ब०। सर्वदैकरूपे विशेषरहिते परब्रह्मणि। “निर्विशेषं परं ब्रह्म साक्षात्कर्त्तुमनीश्वराः। ये मन्दास्ते तु कल्प्यन्ते सविशेषनिरूपणैः” विशेषरहिते तुल्यरूपे त्रि०। “प्रवातनीलोत्पलनिर्विशेषम्” कुमा०।

**निर्विष** त्रि० निर्गतं विषं यस्मात् प्रा० ब०। १विषरहिते २अविषायां तृणभेदे स्त्री। “निर्विषा कटुका शीता कफवातास्रदोषनुत्। अनेकविषहन्त्री च व्रणनिर्मूलकारिणी” राजनि०। गौरा० ङीष् निर्विषी ३अश्मन्तकायां स्त्री। इयं चतुर्विधा भवति “रक्ता श्वेता भृशं कृष्णा पीतवर्णा तथैव च। यथापूर्वञ्च विज्ञेया वल्या श्रेष्ठा गुणोत्तमा। सर्वदोषहरी लेपाङ्गुन्मास्रयुनाशिनी। श्लेष्मजान् विंशतिरोगान् सद्यो हन्यात् निषेवणादिति” भावप्र०।

**निर्विष्ट** त्रि० निर्+विश–क्त। कृतनिर्वेशे १कृतभोगे २प्राप्तवेतने लब्धभृतौ ३कृतविवाहे ४कृताग्निहोत्रे च। “ज्येष्ठेऽनिर्विष्टे कनीयान् निर्वेशात् परिवेत्ता भवति” उद्वा० त० स्मृतिः। ५भोग्ये च। “स्वनिर्म्मितेषु निर्विष्टो भुङ्क्ते भूतेषु तद्गुणान्” भा० १।२ अ०। ६भुक्ते च “निर्विष्टविषयस्नेहः” रघुः। “निर्विष्टं वैश्यशूद्रयोः” गौतम०। निर्विष्टं वेतनलब्धम् निर्वेशो भृतिभोगयोरित्युक्तेः” मल्ला० त० रघु०। निर्वेशः भृतिर्वेतनं भोगश्च।

**निर्वीज** त्रि० निर्गतं वीजमस्य। १वीजशून्ये २कारणरहिते पात० उक्ते ३समाधिभेदे पु०।

“तस्यापि निरोधे सर्वनिरोधान्निर्वीजः समाधिः” पात० सू० “स न केवलं समाधिप्रज्ञाविरोधी प्रज्ञाकृतानां संस्काराणामपि प्रतिबन्धी भवति। कस्मात्? निरोधजः संस्कारः समाधिजान् संस्कारान् बाधते इति निरोधस्थितिकालक्रमानुभवेन निरोधचित्तकृतसंस्कारास्तित्वमनुमेयम्, व्युत्थाननिरोधसमाधिप्रभवैः सह कैवल्यभागीयैः संस्कारैश्चित्तं स्वस्यां प्रकृताववस्थितायां प्रविलीयते तस्मात्ते संस्काराश्चित्तस्याधिकारविरोधिनो न स्थितिहेतवो भवन्तीति यस्मादवसिताधिकारं सह कैवल्यभागीयैः संस्कारैश्चित्तं विनिवर्त्तते तस्मिन्निवृत्ते पुरुषः स्वरूपप्रतिष्ठः। अतः शुद्धो मुक्त इत्युच्यते” भा० “तस्यापि निरोधे सर्वनिरोधात् निर्वीजः समाधिः। परेण वैराग्येण ज्ञानप्रसादमात्रलक्षणेन सर्वसंस्कारोपजननद्वारा तस्यापि प्रज्ञाकृतस्य संस्कारस्य निरोधे न केवलं प्रज्ञाया इत्यपिशब्दार्थः सर्वस्योत्पद्यमानस्य संस्कारप्रज्ञाप्रवाहस्य निरोधात् कारणाभावेन कार्य्यानुत्पादनात् सोऽयं निर्वीजः समाधिः। व्याचष्टे स निर्वीजः समाधिः समाधिप्रज्ञाविरोधिनः परस्मात् वैराग्यात् उपजायमानसंस्कारद्वारेण न केवलं समाधिप्रज्ञाविरोधी प्रज्ञाकृता-

नामप्यसौ संस्काराणां परिपन्थी भवति। ननु वैराग्यजं विज्ञानं सद्विज्ञानं प्रज्ञामात्रं बाधतां संस्कारस्त्वविज्ञानं कथं बाधते दृष्टा हि स्वप्नदृष्टार्थस्मृतिरित्याशयवान् पृच्छति। कस्मादिति उत्तरं निरोधज इति निरुध्यतेऽनेन प्रज्ञेति निरोधः परं वैराग्यं ततो जातो निरोधजः संस्कारः, संस्कारादेव दीर्घकालनैरन्तर्य्यसत्कारासेवितपरवैराग्यजन्मनः प्रज्ञासंस्कारबाधो नतु विज्ञानादित्यर्थः। स्यादेतन्निरोधजसंस्कारसद्भावे किं प्रमाणं स हि प्रत्यक्षेण नानुभूयते स्मृत्या वा कार्य्येणानुमीयेत न च सर्ववृत्तिमात्रनिरोधे प्रत्यक्षमस्ति योगिनः, नापि स्मृतिः तस्य वृत्तिमात्रनिरोधितया स्मृतिजनकत्वासम्भवादित्यत आह निरोधेति। निरोधे स्थितिः चित्तस्य निरुद्धावस्थेत्यर्थः। तस्याः कालक्रमो मुहूर्त्तार्द्धयामयामाहोरात्रादिस्तदनुभवेन। एतदुक्तं भवति वैराग्याभ्यासप्रकर्षानुरोधी निरोधप्रकर्षो मुहूर्त्तार्द्धयामादिव्यापितयानुभूयते योगिना, न च वैराग्यस्याक्रमनियततया परस्परमसम्भवन्तस्तत्तत्कालव्यापितया सातिशयं निरोधं कर्त्तुमीशत इति तत्तद्वैराग्यक्षणप्रचयजन्यः स्थायी संस्कारः प्रचयएषितव्य इति भावः। ननु छिद्यन्तां प्रज्ञासंस्काराः, निरोधसंस्कारास्तु कुतः समुच्छिद्यन्ते अनुच्छेदे वा साधिकारत्वमेव इत्यत आह व्युत्थानेति। व्युत्थानञ्च तस्य निरोधसमाधिश्च सम्प्रज्ञातः तत्प्रभवाः संस्काराः कैवल्यभागीया निरोधजाः संस्कारा इत्यर्थः। व्युत्थानप्रज्ञासंस्काराश्चित्ते प्रलीना इति भवति चित्ते व्युत्थानप्रज्ञासंस्कारवत्, निरोधसंस्कारस्तु प्रत्युदित एवास्ते चित्ते। निरोधसंस्कारे सत्यपि चित्तमनधिकारवत्, पुरुषार्थजनकं हि चित्तं साधिकारं शब्दाद्युपभोगविवेकख्याती च पुरुषार्थौ संस्कारशेषतायां तु न बुद्धेः प्रतिसंवेदी पुरुष इति नासौ पुरुषार्था विदेहप्रकृतिलयानां न निरोधभागितया साधिकारं चित्तम् अपि तु क्लेशवासितमेत्याशयवानाह यस्मादिति। शेषं सुगमम्” विव०। २काकलीद्राक्षायां स्त्री राजनि०।

**निर्वीर** त्रि० निर्गतो वीरः शूरः पतिः पुत्रो वा यस्य यस्या वा प्रा०ब०। १वीरशून्ये “केनापीदमहो मदन्तुरतो निर्वीरमुर्वीतलम्” महाना०। २पतिपुत्रविहीनायामवीरायां स्त्रियां स्त्री हेमच०।

**निर्वृत** त्रि० निर्+वृ–क्त। सुस्थे।

**निर्वृति** स्त्री निर्+भावे क्तिन्। १स्वास्थ्ये सुखे २मोक्षे हेमच०। “न जातु कामो लभते स निर्वृतिम्”। “सर्व्वर्त्तुनिर्वृतिकरे निवसन्नुपैति” माघः।

**निर्वृत्त** त्रि० निर्+वृत–क्त। १निष्पन्ने अमरः। “विप्रे न्यूने त्रिभिर्वर्षैर्वर्त्तते शुद्धिस्तु नैशिकी। निर्वृत्तचूडके विप्रे त्रिरात्राच्छुद्धिरिष्यते” शु० त० अङ्गिराः।

**निर्वृत्तशत्रु** पु० द्वापरयुगीये यदुवंश्ये नृपभेदे। “कृष्णाग्र्यकेषु चान्येषु मुख्येषु मधुसूदनः। गुरुमासज्य तं भारं ययौ द्वारवतीं प्रति” “रामे भारं समासज्य युयुधाने च वीर्य्यवान्। अक्रूरे विपृथौ चापि” इत्युपक्रमे “निर्वृत्तशत्रौ विक्रान्ते भङ्गाकारे विदूरथे” इत्यभिहितम् हरिवं० ११७ अ०।

**निर्वृत्ति** स्त्री निर्+वृत–भावे क्तिन्। निष्पत्तौ “वाचि प्राणे च पश्यन्तो यज्ञनिर्वृत्तिमक्षयाम्” मनुः। “न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः” सां०का०। “यथा दुष्टेन दोषेण यथा चानुविसर्पता। निर्वृत्तिरामयस्यैव संप्राप्तिर्जातिरागमैः” माधवनिदानम्। निर्गता वृत्तिर्जीविका यस्य। २जीविकारहिते त्रि०।

**निर्वेद** पु० निर्+विद–भावे घञ्। १स्वावमाननायाम्। स च व्यभिचारिभावभेदः “निर्वेदो वेगदैन्यश्रममदजडतेत्यादिना व्यभिचारिभावान् विभज्य सा० द० लक्षितो यथा “तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमानना। दैन्यचिन्ताऽश्रुनिःश्वासवैवर्ण्योच्छ्वसितादिकृत्” अस्य व्यभिचारिभावत्वेऽपि क्वचित् स्थायिभावत्वद्योतनार्थं प्राग् निर्द्देशः अतएव “निर्वेदस्थायिभावोऽपि शान्तोऽस्ति नवमो रसः” काव्यप्र० उक्तम्। एतन्मते निर्वेद एव शान्तरसे स्थायिभाव इति भेदः। २परमवैराग्ये “ततः कदाचिन्निर्वेदात् निराकाराश्रितेन च। लोकतन्त्रं परित्यक्तं दुःखार्त्तेन भृशं मया” भा० शा० “तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च” गीता “जातनिर्वेदमुक्त्वा स कर्मनिर्वेदमब्रवीत्। कर्म्मनिर्वेदमुक्त्वा च धर्म्मनिर्वेदमब्रवीत्” भा०शा०२१८अ०। ३खेदे “अनिर्वेदः सदा कार्य्यो निर्वेदाद्धि कुतः सुखम्। प्रयत्नात् प्राप्यते ह्यर्थः कस्माद् गच्छत निर्द्दयाः” १५२ अ०। ४बहुकालेनाप्यसिद्धपदार्थेषु निष्प्रयोजनत्वज्ञानेनानुतापभेदे च। [शब्दे १७१२ पृ० दृश्यम्।

**निर्वेधिम** पु० सुश्रुतोक्ते कर्णवेधनाकारभेदे कर्णव्यधविधि-

**निर्वेश** पु० निर्+विश–घञ्। १भोगे, २वेतने, ३मूर्च्छने,

मेदि०। ४विवाहे च अमरः। "कालमेव प्रतीक्षेत निर्वे(र्वे)शं भृतको यथा" मनुः। "अर्थानुभूतनिर्वेशो जन्मकोट्यं हृषामपि" भाग० ६।२।७ श्लोकः।

**निर्वेष्टन** न० नितरां वेष्टनमत्र। १तन्तुवेष्टनशलाकायां नाडीकरे हारा० प्रा०ब०। वेष्टनरहिते त्रि०।

**निर्वेष्टुकाम** पु० निर्वेष्टुं कामो यस्य तुमोऽन्त्यलोपः। विवोढुकामे। "निर्वेष्टुकामो रोगार्त्तो यियक्षुर्व्यसने स्थितः। अभियुक्तस्तथाऽन्येन राजकर्मोद्यतस्तथा"। आधेयनिषेधे नारदः।

**निर्व्यथन** न० निर्+व्यथ—भावे ल्युट्। १नितरां व्यथने २छिद्रे अमरः। निर्गतं व्यथनं यतः प्रा०ब०। ३व्यथाशून्ये त्रि०।

**निर्व्यापार** त्रि० निर्गतो व्यापारो यस्मात् प्रा०ब०। व्यापारशून्ये तूष्णीं स्थितादौ। (तं मणिम्) "दधार मैथिलीकण्ठनिर्व्यापारेण बाहुना" रघुः।

**निर्व्यूढ़** त्रि०निर्+वि—वह—क्त। १निश्चये २समाप्ते ३उद्यमने अप्रतिबन्धे ४यथेष्टवियोगार्हे। यथा स्त्रीणां पतिपुत्रादिधने न निर्व्यूढ़ं स्वत्वं पुंसान्तु तन्निर्व्यूढ़ं स्वत्वम् अप्रतिबन्धकतया यथेष्टविनियोगार्हत्वात्। पुत्रिकाद्यपाया दुहितुश्च पुत्रोत्पत्त्यनन्तरं पितृधने निर्व्यूढं स्वत्वं पुत्रोत्पत्तेः पूर्वन्तु न निर्व्यूढमिति भेदः इति दायभागमतम्। मिताक्षरामते तु स्त्रीसंक्रान्तधनस्यापि स्त्रीधनतया यथेष्टविनियोगार्हत्वेन तत्र स्त्रीणां निर्व्यूढं स्वत्वम्।

**निर्व्यूह** पु० निर्व्यूह+पृषो०। १निर्व्यूहे नागदन्ताकारकाष्ठे हेमच०। "द्वारतोरणनिर्व्यूहध्वजसंवाहशोभिना" भा० व०१६०अ०। प्रा०ब०। २व्यूहरहिते सैन्यादौ त्रि०।

**निर्हरण** न० निःशेषेण हरणम्। १दाहार्थं शवादेर्बहिर्हरणे, निःसारणे च। तस्य निर्हरणादीनि सम्परेतस्य भार्गव!। युधिष्ठिरः कारयित्वा मुहूर्त्तं दुःखितोऽभवत्" पु० त० भागवतवाक्यम्। २नाशने च "तस्मात्त्वद्भिः कर्त्तव्यं कर्म्मणां त्रिगुणात्मनाम्। बीजनिर्हरणम्" भाग० ७।७।२८।

**निर्हा(र्ह्रा)द** पु० निर्+ह्रद (ह्राद) वा घञ्। शब्दभेदे यमादीनां शब्दे "सारसानाञ्च निर्ह्रादमनोदकसमंयमम्" भा० व० ३११०। "सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिता ननौ" रघुः।

**निर्हार** पु० निर्+हृ—घञ्। १निखातशल्यादेः उद्धरणे २मलमूत्रादित्यागे "आहारनिर्हारविहारयोगाः सुसंवृता धर्मविदा तु कार्य्याः" आ०त०। ३प्रेतदेहस्य दाहार्थं बहिर्नयने, ४यथेष्टविनियोगे च। "न निर्हारं स्त्रियः कुर्युः कुटुम्बात् बहुमध्यगात्। स्वकादपि च वित्ताद्धि स्वस्य भर्त्तुरनाज्ञया" मनुः।

**निर्हारक** त्रि० निर्हरति बहिर्गमयति निर्+हृ—ण्वुल्। शवादेर्दहनार्थं बहिष्कारके "प्रेतनिर्हारकाश्चैव वर्ज्जनीयाः प्रयत्नतः" मनुः प्रेतनिर्हारकस्य अपाङ्क्तेयत्वोक्तिर्धनग्रहणेन तन्निर्हारकविषया। धर्म्मार्थं तन्निर्हारे तु न दोषः "एतद्वै परमं तपो यत् प्रेतमरण्यं हरन्तीति" श्रुतेः भट्टभूतस्मृत्या तद्विधानात्।

**निर्हारिन्** पु० निर्हरति दूरं गच्छति निर्+हृ—णिनि। १दूरगामिगन्धे अमरः। २निर्हरणकर्त्तरि। ३शवादेर्बहिर्निष्कारके त्रि०च।

**निर्हिम** अव्य० हिमस्याभावः अव्ययी०। १हिमाभावे निर्गतं हिमं यतः प्रा० ब०। २हिमशून्ये त्रि०।

**निर्ह्रास** पु० निःशेषेण ह्रासः। नितान्तह्रासे "निर्ह्रास एवैकस्मिन्" आश्व० श्रौ० ६।६।६।

**निलय** पु० निलीयतेऽत्र ली—आधारे अच्। १गृहे २आवासस्थाने च अमरः। "निलयः श्रियः सततमेतदिति" माघः। ३निःशेषेण लये ४अदर्शने। उभयत्र "सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम्। प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः" रघुः।

**निलयन** न० निलीयतेऽत्र नि+ली आधारे ल्युट्। नीडादावाश्रये। "निलयनस्थानिलयनस्य" तैत्ति०उप० "निलयनं नीडमाश्रयो मूर्त्तस्यैव धर्मः" भा०। "विकृतं तत् समुद्राभं समयं भारतालरम्। वनमासीत् तदा सर्वस्ते द्रोणात्कुनाषुभौ। तावेवास्तां निलयनं तावात्तायनमेव च" भा०द्रो० १८८ अ०। भावे ल्युट्। २लये सम्बन्धे "उत्तमाङ्गे निलयनं कपोतकङ्कप्रभृतीनाम्" सुश्रु०।

**निलिम्प** पु० नि+लिप कर्त्तरि श। १देवे "जटाकटाहसम्भ्रमभ्रमन्निलिम्पनिर्झरी" रावणकृतशिवस्तोत्रम्। "वेश्यां स्म प्रभुवायां दिशि निलिम्पा नाम देवास्तेषाम्" अथ० ३।२६।५। २स्त्रीगव्यां स्त्री त्रिका०। स्वार्थे क। निलिम्पिका सौरभेय्यां स्त्रीगव्यां स्त्री हेम०।

**निलीन** त्रि० नितरां लीनः। अन्तर्लयसम्बन्धे तस्मादूरदेशादि कस्मादि० क। निलीनक तद्बाधिकष्टदेशादौ त्रि०

**निवचन** न० निरन्तरं वचनम् प्रा० स० । निरन्तरवचने । "तदेतन्निवचनमिवास्ति" शत०ब्रा०२।४।४।४ "निवचनं निरन्तरवचनम्" भा० । अभावे अव्ययी० । २वचनाभावे अव्य० ।

**निवचने** अव्य०निवचनं वचनाभावः एतदन्तत्वं निपातनात् । वचननियमे "मध्ये पदे निवचने च" पा०"अनत्याधाने (उपश्लेषणाभावे) एतैः सह कृञो विभाषया उप०स० । "निवचनेकृत्य निवचने कृत्वेति वा वाचं नियम्येत्यर्थः" सि० कौ० ।

**निवत्** त्रि० नि+ "उपसर्गाच्छन्दसि धात्वर्थे" पा० "धात्वर्थविशिष्टे साधने वर्त्तमानादुपसर्गादुत्तरे स्वार्थे वतिः स्यात्" सि० कौ० वेदे वति । निम्नगताद्यर्थे "निवतः निम्नगतानित्यर्थः" सि०कौ०। "त्वयां निवत्स्वपः स्वपस्यया नरः" ऋ०१।१६१।११। "निवत्सु प्रवणदेशेषु" भा० नीचैर्भाववति २निम्नदेशे च "स उद्वतो निवतो याति वेविषत्" ऋ० १।२।१० । "निवतः नीचैर्भाववतः प्रदेशान्" भा० "श्वघ्नीव निवता चरन्" ऋ०८।४५।३८ । "आपो रीयन्ते निवतेव सिन्धवः" ऋ० १०।४०।९ । "निवतेव प्रवणेनेव" भा० छान्दसः तस्य नः ।

**निवपन** न० नि+वप-भावे ल्युट् । पित्राद्युद्देशेन दाने "क्रमशो धर्मनित्यास्तु कृत्वा निवपनान्युत । तर्पयन्त्याप्नुवन्ति" भा० अनु० ९२ अ० । "धान वा निवपनम्" कात्या० ७।७।२ "अस्मिन् काले वा उत्तरदेशे सोमनिवपनं भवति" कर्कः ।

**निवर** त्रि० नि+अन्तर्भूतण्यर्थे वृ-कर्त्तरि अच् । १निवारके "आद् मे निवरो भुवत्" ऋ० ८।९३।१५ । "निवरो निवारयिता" भा० । नितरां व्रियते वृ-वरणे कर्मणि "ग्रहवृदृनिश्चिगमश्च" पा० अप् । "कुमार्य्यामविवाहितायां स्त्रियां स्त्री सि० कौ० ।

**निवर्त्तन** न० नि+वृत-णिच्-भावे ल्युट् । १निवारणे "सेतुश्च द्विविधो ज्ञेयः खेयो बन्ध्यस्तथैव च । तोयप्रवर्त्तनात् खेयो बन्ध्यः स्यात् तन्निवर्त्तनात्" मिताक्षरा । "तथा कराणां दशकेन वंशः । निवर्त्तनं विंशतिवंशसंख्यैः क्षेत्रं चतुर्भिश्च भुजैर्निबद्धम्" लीलावतीपरिभाषिते (२विघा) क्षेत्रभेदे "विष्णवे विषयं यस्तु ग्रामार्द्धमपि शक्तितः" इत्युपक्रमे "निवर्त्तनशतं वा यो विष्णवे विनिवेदयेत् । सर्वगीर्वाणनिलये स क्रीडति युगावधि । निवर्त्तनशतेनापि यः प्रीणयति केशवम् । शतयोजनविस्तीर्णे स राजा भूतले भवेत्" हेमा०दा० वराहपु० । अन्यथाऽपि निवर्त्तनमानम् यथाह बृहस्पतिः "दशहस्तेन दण्डेन त्रिंशद्दण्डो निवर्त्तनम्"। मत्स्यपु०"दण्डेन सप्तहस्तेन त्रिंशद्दण्डो निवर्त्तनम्" । देशभेदात् शक्त्यपेक्षया वा दाने फलतारतम्यद्योतनाय मानभेदोक्तिः ।

**निवसति** स्त्री नि+वस-आधारे अतिच् । गृहे शब्दरत्ना० ।

**निवसथ** पु० न्युष्यतेऽत्र नि+वस-आधारे अथच् । ग्रामे हेमच० ।

**निवसन** न० न्युष्यतेऽत्र नि+वस-निवासे आधारे ल्युट् । १गृहे शब्दर० । नि+वस-आच्छादने ल्युट् । २वस्त्रे हलायुधः । "प्राप्तनाभिह्रदमज्जनमाशु प्रस्थितं निवसनग्रहणाय" माघः । "हैमनैर्निवसनैः सुमध्यमा" रघुः ।

**निवह** पु० नितरामुह्यते वह-घ । १समूहे अमरः "भाग्ये(११स्थे) शवरपुलिन्दप्रध्वंसकरोऽम्बुनिवहमोक्षाय" वृ० स०९अ० । नि+वह-अच् । २सप्तवायुमध्ये वायुभेदे । अनिलशब्दे १६६ पृ० दृश्यम् । "निवहो यत्र वा वाति केषाञ्चिन्न सुखप्रदः । न प्रचण्डो न च मृदुः प्रमादी च प्रभञ्जनः" ज्यो०त० ।

**निवाकु** त्रि० नि+वच-बा० घुण् । निवचनशीले । ततः बाह्वा० अपत्यादौ इञ् । नैवाकवि तदपत्यादौ ।

**निवात** पु० निवृत्तो निरुद्धो वा वातोऽस्मात् प्रा०ब०। १दृढ़कवचे शस्त्राद्यभेद्यकवचे, २आश्रये च अमरः । निवा-(वा)त निष्कम्पमिव प्रदीपम्" कुमा० । "निवा(वा)तनिष्कम्पतया विभाति" रघुः ।

**निवातकवच** पु० हिरण्यकशिपोः पुत्रस्य संह्रादस्य दैत्यस्य पुत्रे १दैत्यभेदे अग्निपु० । निवातमभेद्यं कवचं येषाम् । २दानवभेदे ते च इन्द्रप्रेरितेनार्जुनेन निहतास्तत्कथा भा०व०१६८अध्यायादौ । "निवातकवचानाम दानवा मम शत्रवः । समुद्रकुक्षिमाश्रित्य दुर्गे प्रतिवसन्त्युत । तिस्रः कोट्यः समाख्यातास्तुल्यरूपबलप्रभाः । तांस्तत्र जहि कौन्तेय ! गुर्व्वर्थस्ते भविष्यति" १६८ इत्युपक्रमे ५ अध्यायैस्तद्वधो वर्णितः ।

**निवान्या** स्त्री नितरां वाति गच्छति पातृत्वेन नि+वा-क-निवः पाता अन्यः परकीयोवत्सो यस्याः । परकीयेण वत्सेन या स्नुतवत्सा गौर्दुह्यते तस्यां गवि । "अभिवान्यायाश्चापि हा निवान्या दुग्धे" कात्या०श्रौ० ५।८।१८।

**निवान्यवत्सा** स्त्री निवः पाता अन्यस्यावत्सः अन्यवत्सो यस्याः । स्वदुग्धपायिपरकीयवत्सयुक्तायां गवि "निवा-

न्यवत्साभिष्टवे ब्रूयात् तस्य पयसा जुहुयादार्त्तं वा एतत् पयो यन्निवान्यवत्साया आर्त्तमेतदग्निहोत्रं यन्मृतस्य तदार्त्तेनैव तदार्त्तं निष्कृत्य श्रेयान् भवति" शत०ब्रा० १२।५।१।४।

**निवाप** पु० न्युप्यते नि+वप–घञ्। १पित्राद्युद्देशेन दाने २दानमात्रे च अमरः। "भर्तृलोकप्रपन्नानां निवापान् विदधुः पृथक्"। "अनुष्टन्त्वोभ्य निवापदत्तिभिः" रघुः

**नि(नी)वार** पु० नि+वृ–"नौ वृ-धान्ये" कर्मणि घञ् वा दीर्घः। नीवाराख्ये धान्यभेदे। नीवाराञ्जलिनाऽपि केवलमहो सेयं कृतार्था तनुः" सा०द०। निवारयति पापानि नि+वारि अच् वा० दीर्घः। दीर्घयुक्तः नदीभेदे स्त्री "नीवारां सहितां चापि सुप्रयोगां जनाधिप!" भा० भी०९ अ०। ["कण्डूयनैर्दंशनिवारणैश्च" रघुः।

**निवारण** न० नि+वृ–णिच्–भावे ल्युट्। नितरां वारणे

**निवास** पु० नि+वस–आधारे घञ्। १गृहे २आश्रये च हेमच० "जगन्निवासो वसुदेवसद्मनि" माघः। भावे घञ्। ३वासे "कुम्भकारस्य शालायां निवासं चक्रिरे तदा" भा० आ० १८५ अ०। ततः चान्या० चतुरर्थ्यां क। निवासक तत्सन्निकृष्टदेशादौ त्रि०।

**निवासिन्** त्रि०नि+वस+णिनि। १निवासकारके "क्रव्यादान् शकुनीन् सर्वांस्तथा ग्रामनिवासिनः" मनुः। "अथानाथाः प्रकृतयो मातृबन्धुनिवासिनः" रघुः।

**निविड** त्रि०नितरां विडति संहन्यते नि+विड–क। १सान्द्रे घने २नीरन्ध्रे ३दृढे च "गुरुनिविडनितम्बबिम्बभारा" माघः। निनता नासा नि+नासायाः विडच्। ४नतनासिकायां स्त्री हेमच० निनतनासिकायुक्ते ५अवटीटे त्रि०।

**निविद्** स्त्री नि+विद–करणे क्विप्। १वाचि निघण्टुः। वैश्वदेवस्य शस्त्रे शंसनीये २मन्त्रपदभेदे च "कति देवा याज्ञवल्क्येति स हैतयैव निविदा प्रतिपेदे, यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा" वृ०उप०। "स याज्ञवल्क्योऽपि एतयैव वक्ष्यमाणया निविदा प्रतिपेदे, यां संख्यां पृष्टवान् शाकल्यो यावन्तो यावत्संख्याका देवा वैश्वदेवस्य शस्त्रस्य निविदि, निविन्नाम देवतासंख्यावाचकानि मन्त्रपदानि कानिचिद्वैश्वदेवे शस्त्रे शस्यन्ते तानि निवित्संज्ञकानि तस्यां निविदि यावन्तो देवाः श्रूयन्ते तावन्तो देवा इति। का पुनः सा निविदिति तानि निवित्पदानि प्रदर्शयन्ते। त्रयश्च त्री च शता त्रयश्च देवा देवानां त्रीणि च शतानि पुनरप्येवं त्रयश्च त्री च सहस्राण्ये तावन्तो देवाः" भा०। ३वक्ष्यमाणन्युङ्खशब्दार्थे "पदैराप्नोति निविदः" यजु०१९।२५ "पदैः निविदः न्युङ्खानाप्नोति" वेददी० "सावित्रं शस्त्रं काह्निके निविदं दधाति" "चतुर्थकं द्यावापृथिवीयं शस्त्रं काह्निके निविदं दधाति" "आर्भवं शस्त्रं काह्निके निविदं दधाति" वैश्वदेवं शस्त्रं काह्निके निविदं दधाति" इत्यादीनि शत० ब्रा० १३।५।१।११ पठितानि।

**निविद्धान** न० निविद् न्युङ्खो धीयतेऽस्मिन् धा–आधारे ल्युट्। ऐकाह्निके यज्ञादौ "तद्यदैकाह्निकानि निविद्धानानि भवन्ति" शत०ब्रा० १३।५।१।१२ यत्र यत्र निविद् धीयते तत् निविद्धानमिति शब्दे उक्तम् दृश्यम्।

**निविरीस** स्त्री निनता नासा "नेर्बिडज्बिरीसचौ" पा० बिरीसच् दन्त्योच्चारणसामर्थ्यात् न षत्वम्। १नतायां नासिकायां २तद्युक्तपुरुषादौ त्रि०। ३सान्द्रे घने जटा० "उरुनिविरीसनितम्बभारखेदि" माघः।

**निविष्ट** त्रि०नि+विश–क्त। १चित्ताभिनिवेशयुक्ते २एकाग्रे च "भवन्ति साम्येऽपि निविष्टचेतसाम्" कुमा०।

**निवीत** न० नि+व्यञ–क्त आदेशः। १कण्ठलम्बिते यज्ञसूत्रे। व्येञ् संवरणे क्त संप्रसारणादि। २प्रावृतवस्त्रे अमरः "उपवीतं भवेन्नित्यं निवीतं कण्ठसज्जनम्" कूर्मपु० "अधो वासः प्रतिसृच्योष्णीषं संवेष्ट्य निवीते" कात्या०श्रौ०५।५।१२ "निवीतञ्च कण्ठे सज्जनम्" कर्कः।

**निवीतिन्** त्रि० निवीतमस्त्यस्य इनि। कण्ठलम्बितयज्ञसूत्रयुक्ते "कृतोपवीतो देवेभ्यो निवीती च भवेत्ततः। मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा" आह्नि०त०ब्रह्मपु० "उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजैः। सव्ये तु प्राचीनावीती निवीती कण्ठसज्जने" मनुः। स्त्रियां ङीप् "त्वगुत्तरासङ्गवतीं निवीतिनीम्" कुमा०।

**निवृत्** स्त्री "ऊनाधिकेनैकेन निवृद्भुरिजौ" छन्दोऽनुक्रमणिकायां कात्यायनोक्तेषु गायत्र्याद्यष्टछन्दःसु एकाक्षरन्यूनपादके छन्दोभेदे। [२परिवृते त्रि०।

**निवृत** न० नि+वृ–क्त। (उड़नी) १उत्तरीये स्वामी।

**निवृत्त** न० नि+वृत–भावे क्त। १निवृत्तौ यज्ञभेदे चित्तस्य विषयेभ्य २उपरमे च। ३अभावे न०। नञर्थनिरूपणे "निवृत्तपदार्थक" इत्युक्तम्। "तस्यार्थः निवृत्तमभावः पदार्थो यस्येति नपुंसके भावे क्त इति" वैयाकरणभूषणे

उक्तं, हरिदत्ताप्युक्तं यथा "अभावो वा तदर्थस्तु भाष्यस्य हि तदाशयात्" । कर्त्तरि क्त । ४निवृत्तियुक्ते त्रि॰ "निवृत्ततर्षैरुपगीयमानात्" भाग॰ १।१अ॰। "निवृत्ते भरते धीमानत्रेरामस्तपोवनम्" भट्टिः । ५निवृत्तिपूर्वके कर्मणि न॰ "प्रवृत्तञ्च निवृत्तं च द्विविधं कर्म वैदिकम् । सर्गादौ सृजता सृष्टं ब्रह्मणा वेदरूपिणा" हेमा॰ व्रत॰ भृगुः । धर्मभेदस्य निवृत्तिपूर्वकत्वादुपचारादत्र निवृत्तपदव्यपदेश्यता ।

**निवृत्तसन्तापन** न॰ निवृत्तं सन्तापनं यस्य । सन्तापविहीने। तस्मै हितम् छ । निवृत्तसन्तापनीय रसायनभेदे यथोक्तं सुश्रुते "यथा निवृत्तसन्तापा मोदन्ते दिवि देवताः । तथौषधीरिमाः प्राप्य मोदन्ते भुवि मानवाः । अथ सप्त पुरुषा रसायनं नोपयुञ्जीरन् तद्यथा अनात्मवानलसो दरिद्रः प्रमादी व्यसनी पापकृद्भेषजापमानी चेति । सप्तभिरेव कारणैर्न सम्पद्यते । अज्ञानादनारम्भादस्थिरचित्तत्वाद्दारिद्र्यादनायत्तत्वादधर्मादौषधालाभाच्चेति" औषधशब्दे दृश्यम् ।

**निवृत्तात्मन्** त्रि॰ निवृत्तः विषयेभ्य उपरत आत्मा अन्तःकरणं यस्य । १विषयरागशून्यचेतस्के २विष्णौ॰पु॰"अनिवर्त्ती निवृत्तात्मा" विष्णुस॰ "स्वभावतो विषयेभ्यो निवृत्त आत्मायस्येति विग्रहः" भा॰ ।

**निवृत्ति** स्त्री नि+वृत भावे क्तिन् । न्यायमतसिद्धे १यत्नभेदे "प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् । एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिदर्शितम् । निवृत्तिश्च भवेद्द्वेषात् द्विष्टसाधनताधियः" भाषा॰ "द्विष्टसाधनताज्ञानस्य दुःखसाधनविषयकनिवृत्तिं प्रति जनकत्वमन्वयव्यतिरेकाभ्यामवधारितमिति" मुक्ता॰ मीमांसकमते अन्ञधिकरणशब्दे "प्रवृत्त्युपाधिना विनाशं प्राप्सन् प्रागभाव एव प्रवृत्तिनिराकरणस्य साध्यमानो निवृत्तिरित्युच्यते" इत्युक्ते २पदार्थे । अधिकं तच्छब्दे नञ्शब्दे च दृश्यम् "औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्त्तते लोकः" सां॰का॰ ।

**निवृत्त्यात्मन्** त्रि॰ निवृत्तिः आत्मा स्वरूपं यस्य । निषेधे "निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते" ति॰त॰ ।

**निवेश** पु॰ नि+विश—भावे घञ् । १प्रवेशे २उपवेशने आधारे घञ् । ३निवेशाधारे गृहादौ अस्य उत्सा॰ उत्तरपदस्थस्य संज्ञायामपि न णत्वम् शरनिवेशः । "श्रीमतां हरिसखवाहिनीनिवेशः" किरा॰ । आधारे घञ् । ४शिविरे भावे घञ् । ५उद्वाहे विवाहे मेदिनिकोषः ।

**निवेशन** न॰ नि+विश—आधारे ल्युट् । १गेहे २नगरे हेमच॰ । ३निवेशाधारे पृथिव्यां स्त्री ङीप् । "स्योना पृथिवि ! नो भवान्वृक्षरा निवेशनी" "निविशन्ति जना यस्यां साधुप्रतिष्ठाना पृथिवी" वेददी॰ । भावे ल्युट् । ४प्रवेशे ५स्थितौ च उटाघ॰नि+विश+णिच्—भावे ल्युट्। ६विन्यासे "सा गौरसिद्धार्थनिवेशवद्भिः" कुमा॰ ।

**निवेष्य** न॰ नि+विष—भावे ण्यत् । १व्याप्तौ । कर्मणि ण्यत् । २व्याप्ये त्रि॰ बा॰ कर्त्तरि ण्यत् । ३व्यापके देवभेदे पु॰ "निवेष्यं (देवभेदम्) सूर्यः" यजु॰ २५।२। ४आवर्त्ते ५नीहारजले पु॰ "अथ निवेष्यं व्यह्नाति" शत॰ब्रा॰ ५।३।४।११ "निवेष्य आवर्त्तः" भा॰ निवेष्ये भवः यत् । ६तत्र भवे त्रि॰। ७तत्र भवे रुद्रे पु॰"हृदय्याय च निवेष्याय च" यजु॰ १६।४४ "निवेष्य आवर्त्तः नीहारजलं वा तत्र भवो निवेष्यः" वेददी॰ ।

**निव्याधिन्** पु॰ नितरां विध्यति हन्ति शत्रून् नि+व्यध—णिनि । १रुद्रभेदे "नमः सहमानाय निव्याधिने" यजु॰ १६।२०। २नितान्तव्याधके त्रि॰ ।

**निश्** स्त्री नितरां श्यति तनूकरोति व्यापारान् शो—क पृषो॰ । १रात्रौ २हरिद्रायाञ्च निशाशब्दस्य शसादौ भत्वे च वा निश् आदेशः । "विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि" मनुः निशाशब्दे दृश्यम् ।

**निशठ** पु॰बलदेवपुत्रभेदे "रामाच्च निशठो जज्ञे रेवत्यां दयितः सुतः" हरिवं॰ ३६अ॰ ।

**निशमन** न॰नि+शम—णिच्—ल्युट् वा ह्रस्वः । १दर्शने दृष्टौ २श्रवणे च मेदि॰। निपूर्वकात् शमयतेः श्रवणार्थत्वं यथा "निशामय तदुत्पत्तिं विस्तरात् गदतो मम" देवीमा॰ । "अहिद्विषत्सद्धवता निशम्यताम्" । "निशम्य ताः शेषगवीरभिधातुमधोक्षजः" माघः

**निशा** स्त्री नितरां श्यति तनूकरोति व्यापारान् शो—क । १रात्रौ २हरिद्रायाम् "अजगोमितियुग्मञ्च कर्किधन्विमृगा निशा" इति ज्योतिषोक्तेषु ३मेषादिराशिषु च । शसादौ भत्वे च वा निश् आदेशः । "अग्निहोत्रं जुहुयात् आद्यन्ते द्युनिशोः सदा" मनुः "न स्नानमाचरेत् भुक्त्वा नातुरो न महानिशि" मनुः "संविष्य कुशशयने निशां निनाय" रघुः "त्रिभागशेषासु निशासु च क्षणम्" कुमा॰ "निशातुषारैर्नयनाम्बुकल्पैः"भट्टिः । तत्पुरुषेऽस्य "विभाषा सेनासुराच्छायाशालानिशानाम्"

क्लीवता "अनिशं अनिशा वा" सि० कौ०। समाहारद्वन्द्वेऽपि क्लीवता। "इन्द्रियाणां जये योगं स याति चेद् दिवानिशम्" मनुः।

**निशाकर** पु० निशां करोति "दिवाविभानिशेति" पा० क–ट उप०स०। १चन्द्रे २कर्पूरे च अमरः। "दिवावलीवालनिशाकरांशुभिः" माघः "बहुलेऽपि गते निशाकरः" कुमा०। ३कुक्कुटे शब्दरत्ना०।

**निशाख्या** स्त्री निशाया आख्या आख्या यस्याः। निशाह्वयायां हरिद्रायाम् अमरः।

**निशाचर** पुंस्त्री निशायां चरति चर–ट। १राक्षसे २शृगाले ३पेचके ४सर्पे च मेदि० "अर्जुनस्य वचः श्रुत्वा वित्रस्तोऽभून्निशाचरः" भा०अनु०१५२अ० "तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः" रघुः स्त्रियां जातित्वात् ङीष्। ५रात्रिचारिमात्रे त्रि० स्त्रियां टित्त्वात् ङीप्। सा च ६कुलटायां ७केशिनीनामगन्धद्रव्ये च जटाधरः। "राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी। गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा" रघुः। चपिशाचादौ त्रि०।

**निशाचरपति** निशाचराणां भूतानां पतिः। प्रमथपतौ १शिवे "ततो हरो जटी स्थाणुर्निशाचरपतिः शिवः" भा०द्रो०५२अ० २राक्षसेश्वरे रावणे च। [त्रिका०।

**निशाचर्मन्** पु० निशाया चर्मेव आवरकत्वात्। अन्धकारे

**निशाजल** न० निशाजातं जलम् शा०त०। हिमजले त्रिका०।

**निशाट** पुंस्त्री निशायामटति अट–अच्। १पेचके हेमच० स्त्रियां जातित्वात् ङीष्। २निशागतियुक्तमात्रे त्रि०

**निशाटक** पु० निशेव कृष्णत्वात् अटति निशायामटति वा अट–ण्वुल्। १गुग्गुलौ राजनि०। २रात्रिचरमात्रे त्रि०।

**निशाटन** पुंस्त्री निशायामटति अट–ल्यु। १पेचके हला० स्त्रियां जातित्वात् ङीष्। २रात्रिचरमात्रे त्रि० स्त्रियां टाप्।

**निशात** त्रि० नि+शो–क्त पक्षे इत्त्वाभावः। तेजिते तीक्ष्णीकृते "पुराणि दुर्गाणि निशातमायुधम्" माघः "तमद्यतनिशातासिं प्रत्युवाच जिजीविषुः" भट्टिः।

**निशात्यय** पु०६त०। १निशावसाने। ७ब०। २प्रभाते च हेमच०

**निशाद** पु० निशायामत्ति अद–अच्। १रात्रिभोजिनि २निषादे रमानाथः। [ब्दार्थकल्पतरुः।

**निशादर्शिन्** पु० निशायां पश्यति दृश–णिनि। पेचके श-

**निशादि** पु० ६त०। सायंसन्ध्यायां राजनि०।

**निशान** न० नि+शो–भावे ल्युट्। तीक्ष्णीकरणे तेजने "क्रमादेतेऽत्र सन्देहे चान्तिनिन्द्राविचारणे। निशानाजैवनिन्द्रासु दृगजयेऽपि कितोमतः" मुग्धबो०। "तेषां (वक्ष्याणां) निशानार्थं शाल्मलिशिलामापवर्णम्" सुश्रुतः

**निशानाथ** पु० ६त०। १चन्द्रे "अष्टमस्थे निशानाथे कण्टकैः पापवर्जितैः। प्रवासी सुखमायाति सौख्यैर्लाभसमन्वितः" षट्पञ्चाशिका। २कर्पूरे च अमरः।

**निशान्त** न० नितरां शाम्यते विश्राम्यतेऽत्र आधारे क्त। १भवने अमरः। "तस्याः स राजोपपदं निशान्तं कामीव कान्ताहृदयं विवेश" रघुः "निशान्तनारीपरिधानधूननेत्यादि" माघः ६त०। २निशायाः अन्ते। ७ब०। ३प्रभाते। "न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत्" मनुः। प्रा०त०। ४नितान्तशान्ते च मेदि०। ततः उत्करा० चतुरर्थ्यां छ। निशान्तीय तत्सन्निकृष्टदेशादौ त्रि०।

**निशान्ध** त्रि० निशायामन्धः ७त०। १रात्र्यन्धे नक्तान्धशब्दे दृश्यम्। २जतुकालतायां स्त्री रात्र्यन्धसूचकयोगभेदो वृहज्जातके उक्तो यथा "शूरःस्तब्धो विकलनयनो निर्द्धनोऽर्के तनुस्थे मेषे सस्वस्तिमिरनयनः सिंहसंस्थे निशान्धः"। "सिंहलग्ने तनस्थे चार्के निशान्धः रात्र्यन्धो भवति" भट्टोत्पलः।

**निशापति** पु० ६त०। १चन्द्रे २कर्पूरे च अमरः "सस्त्रिभुक्तिसंयुक्ता मध्यभुक्तिर्निशापतेः" सू०सि०।

**निशापुत्र** पु० निशायाः पुत्र इव। खेचरे नक्षत्रादौ तेषां रात्रौ प्रकाश्योतिष्कत्वात् रात्रिपुत्रतुल्यत्वम्। "खेचराश्च निशापुत्रास्तथा पातालवासिनः" हरिवं० २२६अ०।

**निशापुष्प** न० निशायां पुष्प्यति पुष्प–विकाशे अच्। कुमुदे उत्पले राजनि०।

**निशाबल** पु०निशायां बलं वीर्यमस्य। मेषवृषधनुःकर्कटमिथुनमकराख्येषु षट्सु राशिषु यथोक्तं वृहज्जातके"गोऽजाश्विकर्किमिथुना समृगा निशाख्याः पृष्ठोदया विमिथुनाः कथितास्तएव। शीर्षोदया दिनबलाश्च भवन्ति शेषा लग्नं समेत्युभयतः पृथुरोमयुग्मम्"। "निशाख्या निशाबलसंज्ञा उत्तरत्र दिनबला इत्युक्तेरत्रापि निशाबला इति, व्याख्यातं तत्प्रयोजनं, यात्रायां तन्नोक्तं यथा च "शस्तं दिवा दिनबले निशि नक्तवीर्ये रात्रौ विपर्ययमतो गमनं न शस्तम्"। नक्तवीर्यादयोऽप्यत्र।

**निशाभङ्गा** पु०निशाया हरिद्राया भङ्गः इव भङ्गः पल्लवोऽस्याः। दुग्धपुष्प्याम् (दुधमेया) शब्दच०।

**निशामणि** पु० निशायां मणिरिव प्रकाशकत्वात्। १चन्द्रे त्रिका० २कर्पूरे च।

**निशामन** पुंस्त्री नि+शम–णिच्–ल्युट्। १दर्शने २आलोचने च मेदि० ३श्रवणे हेमच०।

**निशामुख** न० ६त०। प्रदोषे "स चोपेन्द्रो हयं कृत्वा कालचन्द्रं निशामुखे" हरिवं० ७८अ० "व्रतं निशामुखे पाल्यम्" शा०त०।

**निशामृग** पुंस्त्री निशाचरः मृगः पशुः शा०त०। शृगाले शब्दर०। स्त्रियां जातित्वात् ङीष्।

**निशारण** न० नि+शॄ–हिंसायां स्वार्थे णिच्–भावे ल्युट्। १मारणे अमरः। स्वार्थे णिजभावे निशरणमप्यत्र।

**निशारत्न** न० निशायां रत्नमिव प्रकाशितत्वात्। १चन्द्रे हेमच० २कर्पूरे च।

**निशारुक** पु० १सङ्गीतशास्त्रप्रसिद्धे रूपकभेदे यथा "द्रुतः प्रौढोऽथ चचरो विभक्तस्तरकस्तथा। निशारुकः प्रतितालः कथिताः सप्त रूपकाः" तस्य लक्ष्म यथा "लघु द्वन्द्वं गुरुद्वन्द्वं तत्स्थानताललक्षकः स्मृतः। चतुर्भिर्गतिवर्णैस्तु रसे हास्ये निशारुकः" सङ्गीतदामोदरः। स च तालविशेषः। तथा हि "प्रविश्य नर्त्तको रङ्गं विकीर्य्य कुसुमादिकम्। निशारुकेण तालेन कोमलं लयमाचरेत्" सङ्गीतदा०। २नितान्तहिंसके त्रि०। [राजनि०।

**निशावन** पु० निशानां हरिद्राणामिव वनमत्र। शणवृक्षे

**निशाविहार** पुंस्त्री निशायां विहारोऽस्य। राक्षसे "इत्थं प्रगाढं युधि संहारं प्रचक्रतू रामनिशाविहारौ" भट्टिः। स्त्रियां जातित्वात् ङीष्।

**निशावृन्द** न० ६त०। रात्रिसमूहे शब्दरत्ना०।

**निशावेदिन्** पु० निशा तन्मानं तत्परिच्छेदं वेदयति इतीन विद्+णिच्–णिनि। कुक्कुटे हेमच०।

**निशाह्स** पु० निशायां हसति पुष्पविकाशेन हस–अच्। कुमुदे त्रिका०। [हरिद्रायाम् अमरः।

**निशाह्वा** स्त्री निशाया आह्वा आह्वाऽभिधानं यस्याः।

**निशित** त्रि० नि+शो–क्त पक्षे इत्वम्। १शाणिते तेजिते २लौहे न० राजनि०। आधारे क्त। ३निशीथे स्त्री "निशितायां निशेषेऽथ निशितायां हि रक्षांसि प्रेरते" तैत्ति० ब्रा०३।२।२।

**निशिति** स्त्री नि+शो–कर्मणि क्तिन्। तनूकृते "आकृतिं निशितिं मर्त्यो नशत्" ऋ०६।२।५ "निशितिं तनूकृताम्" भा०।

**निशिपालक** न० पञ्चदशाक्षरपादके १छन्दोभेदे "निशिपालकमिदं भजसनाश रः" छ०टीका०। २निशिपालके प्रहरिभेदे पु०।

**निशिपुष्पा** स्त्री निशि रात्रौ पुष्यति पुष्प–अच् अलुक्स०। शेफालिकायाम्। पाककर्णेति ङीष्। निशिपुष्पीत्यप्यत्र

**निशीथ** पु० निशेरतेऽत्र नि+शी–आधारे थक्। १अर्द्धरात्रे अमरः। "अर्द्धनिशीथादर्वी भवेत्" ति०त० २रात्रिमात्रे मेदिनिः। "निशीथदीपाः सहसा हतत्विषः" रघुः।

**निशीथिनी** स्त्री निशीथोऽस्त्यस्या इनि। रात्रौ अमरः।

**निशीथिनीश** पु० ६त०। १चन्द्रे हला०। २कर्पूरे च।

**निशुम्भ** पु० नि+शुम्भ–भावे घञ्। १वधे हेमच०। २हिंसने ३मर्दने "प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वेधाविधभङ्गोद्यतः" वीरच०। ४असुरभेदे "कश्यपस्य दनुर्नाम भार्य्यासीद्द्विजसत्तम!। तस्यास्तु द्वौ सुतावास्तां सहस्राबादुबलाधिकौ। ज्येष्ठः शुम्भ इति ख्यातो निशुम्भश्चापरोऽसुरः। तृतीयो नमुचिर्नाम महाबलसमन्वितः" वामनपु०५२अ०। "पुरा शुम्भनिशुम्भाभ्यामसुराभ्यां शचीपतेः। त्रैलोक्यं यज्ञभागाश्च हृता मदबलाश्रयात्" देवीमा०। देव्या तस्य वधकथा "शूलहस्तं समायान्तं निशुम्भममरार्दनम्। हृदि विव्याध शूलेन वेगाविद्धेन चण्डिका। भिन्नस्य तस्य शूलेन हृदयान्निःसृतोऽपरः। महाबलो महावीर्य्यस्तिष्ठेति पुरुषो वदन्। तस्य निष्क्रामतो देवी प्रहस्य स्वनवत्तदा। शिरश्चिच्छेद खड्गेन ततोऽसावपतद्भुवि" मार्कण्डपु० ८९अ०। अन्योऽपि निशुम्भासुर आसीत् यथाह देवीमाहा० "वैवस्वतेऽन्तरे प्राप्ते अष्टाविंशतिमे युगे। शुम्भो निशुम्भश्चैवान्यावुत्पत्स्येते महासुरौ। नन्दगोपगृहे जाता यशोदागर्भसम्भवा। ततस्तौ नाशयिष्यामि विन्ध्याचलनिवासिनी" मार्कं०९१अ०। "तत्रैव त्वां भगिन्यर्थे ग्रहीष्यति स वासवः। कुशिकस्य तु गोत्रेण कौशिकी त्वं भविष्यसि। स ते विन्ध्ये नगश्रेष्ठे स्थानं दास्यति शाश्वतम्। ततः स्थानसहस्रैस्त्वं पृथिवीं शोभयिष्यसि। तत्र शुम्भनिशुम्भौ द्वौ दानवौ नगचारिणौ। मांश्च कृत्वा मनसि तौ सानुगौ नाशयिष्यसि" हरिवं० ५९अ०।

**निशुम्भन** न० नि+शुम्भ–भावे ल्युट्। मारणे।

**निशुम्भमर्दिनी** स्त्री निशुम्भं मर्द्दयति मृद–णिच्–णिनि ६त०। दुर्गायाम् अमरः। तत्कथा निशुम्भशब्दे दृश्या। [त्रि०।

**निशुम्भिन्** पु० नि+शुम्भ–णिनि। १बुद्धभेदे त्रिका०, २नाशके

**निशुम्भ** पु० निशुम्भ्य सम्बध्य हरति नि+शुम्भ–वा० अक्–ना० सम्प्रसा० पृषो०। निशुम्भ्य सम्बध्य हर्त्तरि पूषभागभेदे "श्वाजाश्वः पूषणं रथे निशुम्भास्ते जनाश्रयम्" ऋ०६।५५।६ "निशृम्भा निशुम्भ्य सम्बध्य हर्त्तारः पूष्णो वाहनतया प्रसिद्धाः" भा०। इमामेव ऋचमधिकृत्य निरु० ६।४ "निशृम्भा निशुम्भ्य हारिणः" इत्युक्तम्।

**निश्चैत** पुंस्त्री निशायामितम् ईषद्गतं यस्य। बके त्रिका० स्त्रियां जातित्वात् ङीष्। [त्वारिंशतोनिर्गते।

**निश्चत्वारिंश** त्रि० निर्गतः चत्वारिंशतः अदन्तात् ड। च-

**निश्चप्रच** त्रि० निश्चितं च प्रचितञ्च मयूरव्यं० नि०। निश्चिते अथच प्रचिते वस्तुनि।

**निश्चय** पु० निर्+चि–अच्। १संशयाद्यन्यज्ञाने निर्णये २सिद्धान्ते इदमित्थमेवेति ३विश्वासपरिच्छेदे च"तदभावाप्रकारा धीः तत्प्रकारा तु निश्चयः"भाषा०। "तदभावाप्रकारकत्वे सति तत्प्रकारकज्ञानत्वं निश्चयत्वम्" मुक्ता० अनुमित्यादौ निश्चयत्वमेव न सन्देहत्वम् "परोक्षज्ञानमनाहार्यं निश्चयश्च" अनु०चि० उक्तेः। "संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च" भाग०३।२६।३० ४बुद्धेरसाधारणवृत्तिभेदे "मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम्। संशयो निश्चयो गर्वः स्मरणं विषया इमे" वेदान्तपरिभा०। "बुद्धिर्नाम निश्चयात्मकान्तःकरणवृत्तिः" वेदा०सा०। "अध्यवसायो बुद्धिः" सां०सू० "महत्तत्त्वस्य पर्यायो बुद्धिरिति अध्यवसायश्च निश्चयाख्यस्तस्यासाधारणी वृत्तिरित्यर्थः अभेदनिर्देशस्तु धर्मधर्म्यभेदात्" भा०। ५अर्थालङ्कारभेदे अलङ्कारशब्दे ३८८पृ० दृश्यम्।

**निश्चर** पु० एकादशमन्वन्तरीये सप्तर्षिभेदे तन्मन्वन्तरमुपक्रम्य "अङ्गिराचोदधिश्चैव पौलस्त्यो निश्चरस्तथा। पुलहश्चाग्नितेजाश्च भाव्याः सप्त महर्षयः" हरिवं०७अ०।

**निश्चल** त्रि० निर्+चल–अच्। १स्थिरे २अचले ३असम्भावनाविपरीतभावनारहिते च। ४भूमौ ५शालपर्ण्याञ्च स्त्री राजनि०। "तालुस्थाचलजिह्वश्च संवृतास्योऽथ निश्चलः" याज्ञ०। "श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला। समाधावचला बुद्धिस्तदा योगमवाप्स्यसि" गीता।

**निश्चलाङ्ग** पुंस्त्री निश्चलं मत्स्यधारणाय स्पन्दरहितमङ्गं यस्य। १बके राजनि०। स्त्रियां जातित्वात् ङीष्। २स्पन्दरहिते त्रि०। स्त्रियां स्वाङ्गत्वात् वा ङीष्।

**निश्चायक** त्रि० निर्+चि–ण्वुल्। निश्चयकर्त्तरि निर्णायके

**निश्चारक** त्रि० निर्+चर–ण्वुल्। १वायौ २पुरीषक्षये ३स्वच्छन्दे त्रि० मेदि०। निर्गतश्चारो यस्मात् प्रा०ब० कप्। ४चाररहिते त्रि० चारश्च गतिर्दूतभेदश्च।

**निश्चित** त्रि० निर्+चि–कर्मणि क्त। १निश्चयज्ञानविषये अवधारिते "वेदान्तविज्ञानसुनिश्चितार्थाः" वेदा०। २नदीभेदे स्त्री "कौशिकीं निश्चितां कृत्यां निचितां लोहतारिणीम्" भा०भी० ९अ० नानानद्युक्तौ।

**निश्चिन्त** त्रि० निर्गता चिन्ता यस्मात् प्रा०ब०। चिन्ताशून्ये "निश्चिन्तो मुद्गरनिशं कलापरोधीरललितः स्यात्"सा०द०

**निश्चि(श्ची)रा** स्त्री नदीभेदे विष्णुपु०। [(निचि) त्रिका०।

**निश्चुक्कण** न० निःशेषेण चुक्कणम्। दन्तशोधके चूर्णभेदे

**निश्चेष्टाकरण** निश्चेष्टा चेष्टारहितं क्रियतेऽनेन कृ–करणे ल्युट्। १कामबाणभेदे त्रिका०। २मनःशिलाघटितौषधभेदे वैद्यकम्।

**निश्च्यवन** पु०वैवस्वतमन्वन्तरे सप्तर्षिमध्ये १ऋषिभेदे तदुपक्रमे "प्राणो बृहस्पतिश्चैव दत्तो निश्च्यवनस्तथा" हरिवं० ७अ०। २अग्निभेदे "यस्तु न च्यवते नित्यं यशसा वर्चसा श्रिया। अग्निर्निश्च्यवनो नाम पृथिवीं स्तौति केवलम्" भा०व० ११८अ०। निर्गतं च्यवनमस्य प्रा०ब०। ३च्युतिहीने त्रि०।

**निश्छन्दस्** त्रि० निर्गतं छन्दो वेदोयस्य प्रा०ब०। वेदाध्ययनहीने "हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम्" (कुलम्) मनुः।

**निश्र** त्रि० निश–समाधौ बा० रक्। समाहिते ततः। प्रज्ञाद्या० भावे कर्मणि च ष्यञ्। नैश्र्य समाहितत्वे न०।

**निश्वास** पु० नि+श्वस–भावे घञ्। प्राणवायोर्बहिर्गमनरूपे व्यापारे हेमच०। "निश्वासधूमं सह रत्नभाभिः" माघः।

**निश्वाससंहिता** शिवप्रणीते पाशुपते शास्त्रभेदे "एवमभ्यर्थितस्तैस्तु पुराहं द्विजसत्तमाः। वेदक्रियासमायुक्तां कृतवानस्मि संहिताम्। निश्वासाख्यां ततस्तस्यां लीना बाभ्रव्यशाण्डिलाः। निश्वाससंहिता या हि लक्षमात्रप्रमाणतः। सैव पाशुपती दीक्षा योगः पाशुपतस्य हि। एतस्मादेवमार्गाद्धि यदन्यदिह जायते। तत् क्षुद्रकर्म विज्ञेयं रौद्रं शौचविवर्जितम्" वराहपु०।

**निषङ्ग** पु० नितरां सजन्ति शरा यत्र सञ्ज–आधारे घञ्। १तूणीरे अमरः। "जाताभिषङ्गो नृपतिर्निषङ्गात्" ततो निषङ्गादसमग्रमुद्धृतम्"रघुः। भावे घञ्। २नितान्तसङ्गे च"केन कार्यनिषङ्गेण त्वमास्याहि महाबल!"भा०आ० २०१अ०। ३खड्गे च वेददी०निषङ्गिशब्दे दृश्यम्।

**निषङ्गथि** पु० नि+सनुज—भावे मथिन् कुलम् । समालिङ्गे उज्ज्वद० ।

**निषङ्गधि** पु० निषङ्गः खड्गः धीयतेऽस्मिन् धा—आधारे कि १खड्गपिधाने कोषे ( खाप् ) "आतुरस्य निषङ्गधिः" यजु० १६।१० "निषङ्गः खड्गः स धीयतेऽस्मिन्निति निषङ्गधिः कोषः" वेददी० ।

**निषङ्गिन्** त्रि० निषङ्गोऽस्त्यस्य इनि । १धनुर्द्धरे अमरः । नि+सनुज—घिनुन् । २दृष्टीरे शब्दार्थचि० ३खड्गधारिणि च "नमो नमो निषङ्गिणे ककुभाय स्तेनानां पतये" यजु० १६।२० "निषङ्गिणे खड्गधारिणे" वेददी० । "निषङ्गयस्त्री धनुर्द्धरः" इत्यमरे पाठात् निषङ्गीन इति शब्दक० उक्तिः प्रामादिकी अन्नाथत्वस्य चिन्त्यम् । ५निज्ञानसङ्गयुक्ते च "स्वामी निषङ्गिण्यमनसि जयं पुरः" माघः "निषङ्गिण्यपि सक्ते मनसि" मल्लि० । ६दृष्टीरवति च "रथी निषङ्गी कवची धनुष्मान्" रघुः । ७धृतराष्ट्रपुत्रभेदे पु० "कवची निषङ्गी दण्डी दण्डधारो धनुर्ग्रहः" भा०आ० ६७अ० तत्पुत्रोक्तौ ।

**निषण्ण** त्रि० नि+सद—कर्त्तरि क्त । उपविष्टे "मुनिषण्णा सिताब्जे" सरस्वतीध्यानम् । "निषण्णा पङ्कजे पूज्या नमो देव्यै शिवा इति" ति०त० । स्वार्थे—क । तत्रार्थे त्रि० संज्ञायां कन् । २निषण्णके शाकभेदे शब्दरत्ना० ।

**निषत्स्नु** त्रि० नि+सद—वा०स्नु । निषण्णे "निषत्स्नु स यः सरीसृपम्" ऋ०१०।९६२।९

**निषद्** स्त्री निषीदत्यस्याम् नि+सद्—आधारे यञ् । १यज्ञदीक्षायाम् "या वै दीक्षा सा निषत् तत्सत्रं तदयनं तत्समायणम्" शत०ब्रा०४।६।७।२। निषीदति वेद्यत्वेन देवता यत्र आधारे क्विप् । २वेदवाक्यविशेषे "यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च । स्तुवन्ति सत्यकर्माणम्" भा० शा० ७७ अ० । "वाकेषु मन्त्रेषु सामान्यतः कर्मप्रकाशकेषु अनुवाकेषु मन्त्रार्थविवरणभूतेषु ब्राह्मणवाक्येषु निषत्सु कर्माङ्गावबद्धदेवताविज्ञानवाक्येषु उपनिषत्सु केवलात्मज्ञापकेषु स्तुवन्ति ध्यायन्ति" नीलक० । सम्प० भावे क्विप् । ३उपसदने स्त्री "अभिस्वरा निषदा गा अवस्यवः" ऋ० २।२१।५ "निषदा उपसदनेन" भा०। नि+सद—कर्त्तरि क्विप् । ४उपवेष्टरि निषद्वरशब्दे दृश्यम् ।

**निषदन** न०निषीदत्यत्र आधारे ल्युट् । १स्टृहे शब्दार्थचि० । २उपवेशनस्थाने च "निक्रमणं निषदनम्" यजु०२५।२८ "निषदनमुपवेशनस्थानम्" वेददी०। भावे ल्युट् । ३स्थितौ "अश्वत्थे वो निषदनम् पर्णे वो वसतिस्कृता" यजु० १२। ७९ "निषदनं स्थानम्" वेददी० । निषीदति पापकमत्र ल्युट् । ४निषादे पु० "निषादः कस्मान्निषदनो भवति निषण्णमस्मिन् पापकमिति" निरु० ३।८

**निषद्या** स्त्री निषीदन्त्यस्याम् जनाः नि+सद—आधारे क्यप् । १पण्यविक्रयशालायां ( हाटचाला ) २हट्टे अमरः ३क्षुद्रखट्वायाञ्च शब्दार्थचि० "केचित् गुर्वीमित्य संयन्निषद्याम् क्रीणन्ति स्म प्राग्यमूल्यैर्यशांसि" माघः ।

**निषद्वर** पु० नि+सद—क्विप् निषद् आसन्नं तां वृणोति वृ—अच् वरः आवरकः इत० । जम्बाले १कर्दमे अमरः । नि—सद आधारे वा० ष्वरच् । षित्त्वात् ङीष् । २निशायां स्त्री मेदि० । उभयत्र हि गतेर्निरुद्धत्वात् तथात्वम् । इत० । ३निषदामुपवेष्टॄणां वरे श्रेष्ठे वृषभेदे "निषद्वरं वृषभं नर्यापसम्" यजु० २८।४ "निषीदन्ति निषद उपवेष्टारस्तेषां वरम् श्रेष्ठम् वृषभम्" वेददी० ।

**निषध** पु० पर्वतभेदे स च त्रि०मि० उक्तो यथा

"लङ्कादेशाद्धिमगिरिरुदग्हेमकूटोऽथ तस्मात् तस्माच्चान्यो निषध इति ते सिन्धुपर्यन्तदैर्घ्याः" । एवं सिद्धाइदमपि पुरात् स्वक्रवन्मुक्तनीला वर्षाण्येषां जगुरिह बुधा अन्तरे द्रौणिदेशान् । भारतवर्षमिदं हुदमस्मात् किन्नरवर्षमतो हरिवर्षम्" मू० "अतो लङ्कायाः उत्तरतो हिमवान् नाम गिरिः पूर्वे सिन्धुपर्यन्तदैर्घ्योऽस्ति । तस्योत्तरे हेमकूटः, सोऽपि समुद्रपर्यन्तदैर्घ्यः । तथा तदुत्तरे निषधः" । तेषामन्तरे द्रौणिदेशा वर्षसंज्ञाः, तत्रादौ भारतवर्षम् । तदुत्तरं किन्नरवर्षम् । ततो हरिवर्षमिति" प्रमिता० । स च किंपुरुषवर्षस्य सीमापर्वतः यथाह भाग० ५।१६। १०श्लो०। "एवं दक्षिणेनेलावृतं निषधो हेमकूटो हिमालय इति प्रागायता यथा नीलादयः । अयुतयोजनोत्सेधा हरिवर्षकिम्पुरुषभारतानां यथासंख्यम्" । सूर्यवंश्ये रामात्मजकुशस्य पौत्रे २नृपभेदे "अतिथिस्तु कुशाज्जज्ञे निषधस्तस्य चात्मजः" हरिवं १५अ० । "स (अतिथिः) नैषधस्यार्थपतेः सुतायाम् उत्पादयामास निषिद्धशत्रुः । अनूनसारं निषधान्नगेन्द्रात् पुत्रं यमाहुर्निषधाख्यमेव" रघुः । चन्द्रवंश्ये ३जनमेजयात्मजस्यात्मजभेदे "जनमेजयस्य तनयाः भुवि ख्याता महाबलाः । धृतराष्ट्रः प्रथमजः पाण्डुर्वाह्लीक एव च । निषधश्च महातेजास्तथा जाम्बूनदो बली" भा०आ०६४अ० । ४देशभेदे पु० ब०व० । "प्रका

निषादा निषधास्तथैवानर्त्तनैर्ऋताः" भा॰ भी॰ ६अ॰ जनपदोक्तौ। "निषधेषु महीपालो वीरसेन इति श्रुतः" भा॰व॰५२अ॰। निषधानां राजा ते ऽभिजनोऽस्य वा अण्। नैषध तद्देशवासे पित्रादिक्रमेण तद्देशवासिनि च। "न नैषधे कार्य्यमिदं निगाद्यम्" नैष॰ बहुषु अणो लुक्। ५कठिने त्रि॰ मेदि॰ ६निषादस्वरे हेमच॰। ७कुरुनामकनृपपुत्रे च "तपत्यां सूर्य्यकन्यायां कुरुक्षेत्रपतिः कुरुः। परीक्षित् सुधनुर्जह्नुर्निषधश्च कुरोः सुताः" भाग॰ ९२२।२

**निषाद** पुंस्त्री निषीदति पापमत्र नि+सद—आधारे घञ्। १चण्डाले जातिभेदे अमरः तन्निरुक्तिः "निषादः कस्मान्निषदनो भवति निषण्णमस्मिन् पापकमिति" निरु॰ ३।८। वेनोरुमन्थनाज्जाते २जातिभेदे तत्कथा "दग्धस्थूणाप्रतीकाशो विकटाक्षोऽतिह्रस्वकः। किं करोमीति तान् सर्वान् विप्रानाह स चातुरः। निषीदेति तमूचुस्ते निषादस्तेन सोऽभवत्। ततस्तद्वंशजा जाता विन्ध्यशैलनिवासिनः। निषादा मुनिशार्दूल! पापकर्मोपलक्षणाः। तेन द्वारेण निष्क्रान्तं तत्पापं तस्य भूपतेः। निषादास्ते ततो जाता वेनकल्मषनाशनाः" स्त्रियां जातित्वात् ङीष्। "निषाद्याः पञ्चपुत्रायाः सुप्तायाः जतुवेश्मनि" भा॰आ॰ १अ॰। तन्त्रीकण्ठोत्थिते ३स्वरभेदे पु॰ अमरः। "षड्जादयः षडेतेऽत्र स्वराः सर्वे मनोहराः। निषीदन्ति यतो लोके निषादस्तेन कथ्यते। चतस्रः पञ्चमे षड्जे मध्यमे श्रुतयो मताः। ऋषभे धैवते तिस्रो द्वे गान्धारनिषादके" सङ्गीतदामोदरः "निषादं रौति कुञ्जरः" इत्युक्तेः तस्य हस्तितुल्यस्वरता। ४ब्राह्मणाच्छूद्रकन्यायामुत्पन्ने पारशवाख्ये जातिभेदे च "ब्राह्मणात् वैश्यकन्यायामम्बष्ठो नाम जायते निषादः। शूद्रकन्यायां यः पारशव उच्यते" मनुः। "मत्स्यघातो निषादानाम्" मनुना तद्वृत्तिरुक्ता ५देशभेदे स च देशः सरस्वती नद्यन्तर्धानस्थानं यथोक्तं भा॰व॰१३०अ॰ "एतद्विनशनं नाम सरस्वत्या विशाम्पते!। द्वारं निषादराष्ट्रस्य येषां दोषात् सरस्वती। प्रविष्टा पृथिवीं वीर मा निषादा हि मां विदुः"।

**निषादकर्ष** पु॰ देशभेदे ततः शौषिकः ठञ् "इसुसुक्तान्तात् कः" पा॰ ठस्य कः, "केऽणः" पा॰ ह्रस्वः। नैषादकर्षुक तत्पश्चात्यादौ त्रि॰।

**निषादवत्** पु॰ निषादोऽस्त्यस्य मतुप् मस्य वः। १निषादस्वरे "षड्ज ऋषभगान्धारौ मध्यमो धैवतस्तथा। पञ्चमश्चापि विज्ञेयस्तथा चापि निषादवान्" भा॰शा॰ १८४ अ॰। २निषादस्वरयुक्ते गानादौ त्रि॰ स्त्रियां ङीप्।

**निषादित** न॰नि+सद—णिच्—भावे क्त। १निषादने उपवेशनकरणे। निषादितमनेनेत्यर्थे इष्टा॰ इनि। निषादितिन् निषादनकर्त्तरि त्रि॰ स्त्रियां ङीप्। कर्मणि क्त। २उपवेशिते त्रि॰।

**निषादिन्** पु॰ निषादयति हस्तिनं नि+सद—णिच्—णिनि। हस्त्यादेरुपवेशनादिकारके १हस्तिपके अमरः "निर्धौतनिर्मदमुखं चलितं निषादी" माघः। नि+सद—णिनि। २उपविष्टे "आतपात्ययसंक्षिप्तनीवारासु निषादिभिः" रघुः। स्त्रियां ङीप्। "इक्षुच्छायानिषादिन्यः" रघुः।

**निषिक्त** त्रि॰ नि+सिच—क्त। १नितान्तसिक्ते आहिते २शुक्रादौ च ३तज्जे गर्भे च "योनेः शरीरम्" शा॰ सूत्रभाष्ये "योनौ निषिक्ते रेतसि" उक्तम् "विष्णुं निषिक्तपाम्भोभिः" ऋ॰ ७ २६।८ "निषिक्तपाम् निषिक्तस्य गर्भस्य रक्षितारम्" भा॰।

**निषिद्ध** त्रि॰ नि+षिध—कर्मणि क्त। १निषेधविषये २बाधिते "निषिद्धैरप्यभिर्लुलितमकरन्दैर्मधुकरैः" वेणीसं॰। ३अभावगतेष्टसाधनतानिवेधिनञ्पदयोगिवाक्यगम्ये ४अनिष्टसाधनताबोधकलिङादियुक्तनञ्पदयोगिवाक्यगम्ये च यथा "न कलञ्जं भक्षयेत्" इत्यत्र "कलञ्जभक्षणं निषिद्धम्" "काम्यनिषिद्धवर्जनपुरःसरम्" वेदान्तसा॰।

**निषेक** पु॰ नि+सिच—भावे घञ् कुत्वम्। १जलादेः नितान्तसेचने २गर्भाधाने च "निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः" मनुः "योषित्सु तद्वीर्य्यनिषेकभूमिः" कुमा॰। "वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्। कार्यः शरीरसंस्कारः" मनुः। "निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च" श्रा॰त॰ भविष्यपु॰। "निषेककाले गर्भार्थशुक्राधानदिने" रघु॰।

**निषेदिवस्** त्रि॰ नि+सद—क्वसु। निषण्णे उपविष्टे स्त्रियां ङीप् सेटोवस्य उः। "निषेदुषी स्थण्डिल एव केवले" कुमा॰

**निषेध** पु॰ नि+षिध—भावे घञ्। १वारणे २निवर्त्तने। निषिध्यतेऽनेन करणे घञ्। ३अनिष्टसाधनताबोधक वेदादिवाक्यभेदे "स च (वेदः) विधिमन्त्रनामधेयनिषेधार्थवादभेदात् पञ्चविधः" लौगाक्षिभास्करः। तत्र-वादि तत्र निरूपितं यथा

"पुरुषस्य निवर्त्तकं वाक्यं निषेधः निषेधवाक्यानामनर्थहेतुक्रियानिवृत्तिजनकत्वेनैवार्थवत्त्वात्। तथाहि यथा विधिः प्रवर्त्तनां प्रतिपादयन् स्वप्रवर्त्तकत्वनिर्वाहार्थं विधेयस्य यागादेरिष्टसाधनत्वमाक्षिपन् पुरुषं तत्र प्रवर्त्तयति। तथा "न कलञ्जं भक्षयेत्" इत्यादि निषेधोऽपि निवर्त्तयन् स्वनिवर्त्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणस्य बलवदनिष्टसाधनत्वमाक्षिपन् पुरुषं ततो निवर्त्तयति। ननु निषेधवाक्यस्य कथं निवर्त्तनाप्रतिपादकत्वमिति चेत्? उच्यते न तावदत्र धात्वर्थस्य नञर्थेनान्वयः अव्यवधानेऽपि तस्य प्रत्ययार्थभावनोपसर्जनत्वेनोपस्थितेः। न ह्यन्योपसर्जनत्वेनोपस्थितमन्यत्रान्वेति। अन्यथा राजपुरुषमानयेत्यादावपि राज्ञः क्रियान्वयापत्तेः। अतः प्रत्ययार्थस्यैव नञर्थेऽन्वयः। तत्रापि नाख्यातांशवाच्यार्थभावनायाः, तस्या लिङंशवाच्यप्रवर्त्तनोपसर्जनत्वेनोपस्थितेः। किन्तु लिङंशवाच्याया भावनायाः, तस्याः सर्वापेक्षया प्रधानत्वात्। नञश्चैष स्वभावो यत् स्वसमभिव्याहृतपदार्थविरोधिबोधकत्वम्। यथा "घटो नास्तीत्यादौ" अस्तीति पदसमभिव्याहृतो नञ् घटसत्ताविरोधिनिवर्त्तनामेव बोधयति विधिवाक्यन्त्वयं मां प्रवर्त्तयतीति प्रतीतेः। तस्मान्निषेधवाक्यस्थले निवर्त्तनैव वाक्यार्थः! यदा तु प्रत्ययार्थस्य तत्रान्वये बाधकं तदा धात्वर्थस्यैव तत्रान्वयः। तच्च बाधकं द्विविधम्। तत्र व्रतमित्युपक्रमो विकल्पप्रसक्तिश्च। तत्राद्यं "नेक्षेतोद्यन्तमादित्यम्" इत्यादौ तत्र व्रतमित्युपक्रम्य तद्वाक्यपाठात्। तथा चात्र पर्युदासाश्रयणम्। तथा हि व्रतशब्दस्य कर्त्तव्यार्थरूढत्वात्तस्य व्रतमित्यत्र स्नातकस्य व्रतानां कर्त्तव्यत्वेनोपक्रमात् किं तत् कर्त्तव्यमित्याकाङ्क्षायां "नेक्षेतोद्यन्तमादित्यम्" इत्यादिना कर्त्तव्यार्थ एव प्रतिपादनीयः। अन्यथा पूर्वोत्तरवाक्ययोरेकवाक्यत्वं न स्यात्। तथा च नञर्थेन प्रत्ययार्थान्वये कर्त्तव्यार्थानवबोधात् विध्यर्थप्रवर्त्तनाविरोधिनिवर्त्तनाया एव तादृशनञा बोधनात् तस्याश्च कर्त्तव्यार्थत्वाभावात्। तस्मान्नेक्षेतेत्यत्र नञा धात्वर्थविरोध्यनीक्षणसङ्कल्प एव लक्षणया प्रतिपाद्यते। तस्य कर्त्तव्यत्वसम्भवात्। आदित्यविषयकानीक्षणसङ्कल्पेन भावयेदिति वाक्यार्थस्तत्र भाव्याकाङ्क्षायाम् "एतावता हैनसा वियुक्तो भवतीति" वाक्यशेषावगतः पापक्षयो भाव्यतयान्वेति। एवञ्च पूर्वोत्तरयोरेकवाक्यत्वं निर्वहत्येव। न चात्र धात्वर्थविरोधिनः पदार्थान्तरस्यापि सम्भवात् कथमनीक्षणसङ्कल्पस्यैव भावनान्वय इति वाच्यम् तत्र कर्त्तव्यत्वाभावेन प्रकृते भावनान्वयायोग्यत्वात्। द्वितीयं "यजतिषु ये यजामहं करोति नानुयाजेषु" इत्यादौ। अत्र विकल्पप्रसक्त्यैव पर्युदासाश्रयणात्। तथाहि यद्यत्र वाक्ये नञर्थे प्रत्ययार्थान्वयः स्यात्तदा "अनुयाजेषु ये यजामहे" इति मन्त्रस्य प्रतिषेधः स्यात्। अनुयाजेषु ये यजामहे" न कुर्यादिति। स च प्राप्तिपूर्वक एव प्राप्तस्यैव प्रतिषेधात्। प्राप्तिश्च यजतिषु "ये यजामहं करोतीति" शास्त्रादेव वाच्या। शास्त्रप्राप्तस्य च प्रतिषेधे विकल्प एव न तु बाधः। प्राप्तिमूलरागस्यैव तन्मूलशास्त्रस्य शास्त्रान्तरेण बाधायोगात्। न च यदि जुहोतीत्यादौ हि विशेषशास्त्रे आहवनीये जुहोतीति शास्त्रस्येव नानुयाजेष्वित्यनेन यजतिषु ये यजामहं करोतीत्यस्य बाधः स्यादिति वाच्यम् परस्परनिरपेक्षयोरेव शास्त्रयोर्बाध्यबाधकभावात्। पदशास्त्रस्य हि स्वार्थविधानार्थमाहवनीयशास्त्रानपेक्षणान्निरपेक्षत्वम्। प्रकृते तु निषेधशास्त्रस्य निषेध्यप्रसक्त्यर्थं "यजतिषु ये यजामहम्" इत्यस्यापेक्षणान्न निरपेक्षत्वम्। तथाच शास्त्रविहितस्य शास्त्रान्तरेण प्रतिषेधे विकल्प एव, स च न युक्तः। विकल्पे शास्त्रस्य पाक्षिकाप्रामाण्यापातात्। न "अनुयाजेषु ये यजामहम्" इत्यस्यानुष्ठाने नानुयाजेष्वित्यस्य प्रामाण्यं सम्भवति, व्रीहियागानुष्ठाने यवशास्त्रस्येव। द्विरदृष्टकल्पना च स्यात्, विधिप्रतिषेधयोरपि पुरुषार्थत्वात्। अतोऽत्र न प्रतिषेधस्याश्रयणम्। किन्तु अनुयाजसम्बन्धाभिन्न पर्युदासस्यैव। इत्यञ्चानुयाजव्यतिरिक्तेषु "यजतिषु ये यजामहे" इति मन्त्रं कुर्यादिति वाक्यार्थबोधः नञोऽनुयाजव्यतिरिक्ते लाक्षणिकत्वात्। एवञ्च न विकल्पः। अत्र च वाक्ये "ये यजामहे" इति न विधीयते। "यजतिषु ये यजामहे" इत्यनेनैव प्राप्तत्वात्। किन्तु सामान्यशास्त्रप्राप्तये "ये यजामहे" इत्यनुवादेन तस्यानुयाजव्यतिरिक्तविषयत्वं विधीयते यत् यजतिषु ये यजामहं करोति तदनुयाजव्यतिरिक्तेष्वेवेति। नन्वेवं सामान्यतः प्राप्तस्य विशेषसङ्कोचरूपादुपसंहारात् पर्युदासस्य भेदो न स्यादिति चेन्न उपसंहारो हि तन्मात्रसङ्कोचार्थः। यथा पुरोडाशे "चतुर्द्धा करोतीति" सामान्यप्राप्तचतुर्द्धाकरणम् "आग्नेयं चतुर्द्धा करोतीति" विशेषादाग्नेयपुरोडाशमात्रे सङ्को-

च्यते पर्युदासस्तु तदन्यमात्रसङ्कोचार्थ इति ततो भेदात्। कुत्रचिद्विकल्पप्रसक्तावप्यनन्यगत्या प्रतिषेधाश्रयणम्। यथा "नातिरात्रे षोडशिनं गृह्णाति" इत्यादौ। अत्र "अतिरात्रे षोडशिनं गृह्णातीति" शास्त्रप्राप्तषोडशिग्रहणस्य निषेधाद्विकल्पप्रसक्तावपि न पर्युदासाश्रयणम्, असम्भवात्। तथाहि यद्यत्र षोडशिपदार्थे नञर्थान्वयस्तदातिरात्रे षोडशिव्यतिरिक्तं गृह्णातीति वाक्यार्थबोधः स्यात्। स च न सम्भवति "अतिरात्रे षोडशिनं गृह्णातीति" प्रत्यक्षविधिविरोधात्। यदि चातिरात्रपदार्थे नान्वयस्तदातिरात्रव्यतिरिक्ते षोडशिनं गृह्णातीति वाक्यार्थबोधः स्यात्। सोऽपि न सम्भवति, तद्विधिविरोधात्। अतोऽनन्यगत्या शास्त्रप्राप्तषोडशिग्रहणस्यैव निषेधः। न च विकल्पप्रसक्तिः तस्याप्याश्रयणीयत्वात्। इयांस्तु विशेषो यद्विकल्पादावेकप्रतिषिध्यमानस्य नानर्थहेतुत्वम्। यथा "न कलञ्जं भक्षयेत्" इत्यादौ कलञ्जभक्षणादेः, तत्र भक्षणनिषेधस्यैव पुरुषार्थत्वात्। न च "दीक्षितो न ददाति न जुहोति" इत्यादौ शास्त्रप्राप्तदानहोमादीनां निषेधाद्विकल्पापत्तिरिति वाच्यम्। अतः पुरुषार्थभूतदानहोमादीनां निषेधस्य पुरुषार्थत्वाऽभावेऽपि निषिध्यमानस्यानर्थहेतुत्वम् यथा क्रतौ स्त्रीगमनादेः। तन्निषेधस्य क्रत्वर्थत्वेन तस्य क्रतुवैगुण्यसम्पादकत्वात्"। [निषेधकाः" मार्कण्डपु॰।

**निषेधक** त्रि॰ नि+षिध–ण्वुल्। निवारके "ये चाह्लाद॰

**निषेधविधि** पु॰ निषेधे अभावे विधिरिष्टसाधनताधीहेतुः। अभावे इष्टसाधनताबोधकवाक्ये यथा "एकादश्यां न भुञ्जीतेत्यादौ" भोजनाभावे एव इष्टसाधनत्वं बोधयति न तु भोजने विध्यर्थेष्टसाधनत्वभावम्, अतो निषेधवाक्यादस्य भेदः। "अष्टम्यां मांसं नाश्नीयात्" इत्यादौ तु निषेधे मांसभोजने अनिष्टसाधनत्वं बोधयति "एकादश्यां न भुञ्जीत" इत्यादौ तु भोजनाभावे इष्टसाधनत्वमिति विधिस्वरूपे गदाधरः। एवं नेक्षेतोद्यन्तमादित्यमित्यादावपि निषेधविधित्वमित्याकरे स्थितम्। अतएव एकादशीभोजनाभावस्य अभोजनसंकल्परूपस्य व्रतत्वम् तिथिखण्डविशेषनियमनं, च। निषेधस्य कालमात्रापेक्षतया तत्कालमात्रेण निवृत्तिः स्यात् "निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते" इति भट्टोक्तेः।

**निष्क** माने चु॰ आत्म॰सक॰ सेट्। १निष्कयते अनिनिष्कत। अणोपदेशत्वात् सति निमित्ते न णत्वम्। प्रनिष्कयते।

**निष्क** पु॰न॰ निश्चयेन कायति निस्+कै–क निष्क–अच् वा। १शास्त्रीयषोडशमाषकपरिमितसुवर्णानामष्टाधिकशते, २व्यवहारिकरूपके (टाका) ३चतुःसुवर्णपरिमिते पलपरिमाणे मानभेदे, ४वक्षोभूषणे ५हेमपात्रे ६दीनारे च अमरः। दीनारशब्दे दीनारार्थः दृश्यः। ७पणे द्रम्मे (काहन) परिमाणे "वराटकानां दशकद्वयं यत् सा काकिणी ताश्च पणश्चतस्रः। ते षोडश द्रम्म इहावगम्यो द्रम्मैस्तथा षोडशभिश्च निष्कः" लीला॰। "हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम्" कुमा॰ "चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः" मनुः "गवामभावे निष्कः स्यात् तदर्द्धं पादमेव वा" मिता॰ धृता स्मृतिः।

**निष्कण्टक** त्रि॰ निर्गतः कण्टकोऽस्य प्रा॰ब॰। १उपसर्गहीने २बाधकरहिते "राज्यं निष्कण्टकं कृत्वा भोक्ष्यसे मेदिनीं पुनः" मा॰वि॰ ६अ॰।

**निष्कण्ठ** पु॰ निर्गतः कण्ठः स्कन्धोऽस्य। वरुणद्रुमे शब्दच॰

**निष्कम्प** त्रि॰ निर्गतः कम्पो यस्य प्रा॰ब॰। कम्पहीने "निवातनिष्कम्पमिव प्रदीपम्" "निष्कम्पचामरशिखं निभृतद्विरेफम्" कुमा॰ "दिशः पपात पत्त्रेण वेगनिष्कम्पकेतुना" रघुः।

**निष्कम्पु** पु॰ देवसेनाधिपभेदे "बलिना श्यपर्वा तु यत्र निष्कम्पुना रणे" हरिवं॰ २४४अ॰ देवासुरयुद्धोक्तौ।

**निष्कर्ष** पु॰ निस् कृष+भावे घञ्। १निश्चये २इयत्तादिना स्वरूपपरिच्छेदे "एतद्विदन्तो विद्वांसस्त्रयीनिष्कर्षमन्वहम्" मनुः। "स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते" भाषा॰। ३निःसारणे च

**निष्कर्षण** न॰निस्+कृष–भावे ल्युट्। १निष्कासने २निःसारणे "आह्वमव्यं प्रियाशोकशल्यनिष्कर्षणौषधम्" रघुः

**निष्कल** त्रि॰ निर्गता कला यस्य प्रा॰ब॰। १कलाशून्ये २निरवयवे सम्पूर्णे "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" श्वेता॰उ॰ "चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः" एका॰ जामदग्न्यवाक्यम्। ३कलादिव्यापारशून्ये च "दृश्यन्ते निष्कलाः शान्ताः प्रहीणाः स्वस्वकर्मभिः" भा॰व॰ २०८अ॰। ४गतार्त्तवायां वृद्धायां स्त्रियां स्त्री शब्दरत्ना॰ नीरकस्थायां स्त्रियां स्त्री ङीप् शब्दरत्ना॰।

**निष्कषाय** त्रि॰ निर्गतः कषायः चित्तमलभेदो यस्य प्रा॰ब॰। १चित्तदोषशून्ये निर्मलचित्ते सुधियो। उत्सर्पिण्यां २जिनभेदे पु॰ हेमच॰।

**निष्कादि** पु० "असमासे निष्कादिभ्यः" पा० तेन क्रीतमित्यर्थे असमासे ठगनिमित्ते शब्दगणे स च गणः पा०ग० सू० उक्तो यथा "निष्क पण पाद माष वाह द्रोण षष्टि" । निष्केण क्रीतं नैष्किक निष्केण क्रीते त्रि० स्त्रियां टाप् । समासे तु ठञ् स्त्रियां ङीप् इतिभेदः

**निष्काम** त्रि० निर्गतः कामोऽभिलाषो यस्य यत्र वा प्रा०ब०। विषयभोगेच्छाशून्ये १कामनयाऽकृते कर्मादौ च "निष्कामं ज्ञानपूर्वं च निवृत्तमुपदिश्यते" मनुः । "निष्कामात् अन्त्र्यग्निष्ठोमादिकर्मणो न दुःखं प्रत्युत मोक्षफलं प्राप्यते" सा०प्र०भा० "विशिष्टफलदाः पुंसां निष्कामाणां विमुक्तिदाः" मत्स्य०त० विष्णु पु० "निष्कामाणां मुक्तिप्रतिकूलकामनारहितानाम्" रघुनन्दनः ।

**निष्कालक** पु० निर्गतः कालकः केशादिः मुण्डनेन यस्य प्रा०ब०। २मुण्डितकेशलोमादौ "निष्कालको घृताभ्यक्तः सप्तां भूमीं परिव्रज्य मरणात् पूतो भवतीति विज्ञायते" वशिष्ठः । प्रा०ब०कप् । ३निर्गतसमयके अभावे अव्ययी०। ४कालकाभावे अव्य० । निरदकादि० अन्तोदात्तता

**निष्कालन** न०निर्+कल–भावे ल्युट् । १चालने २मारणे च

**निष्कालिक** अव्य० कालिकस्याभावः अव्ययी० । कालिकाभावे निरदकादि० अस्य अन्तोदात्तता । काले कालने साधु तदर्हति वा ठञ् कालिकः कालो कालयिता जेता वा स निर्गतो यस्य प्रा०ब० कप् वा । २कालवि-रहीने जेतृशून्ये अजय्ये च त्रि० । "तं सूतपूतं रथिनां वरिष्ठं निष्कालिकं कालवशं नयाद्य" भा०क० ७२अ० । निष्कालिक० निर्गतः कालो कालयिता जेता यस्येति विग्रहः" नीलकण्ठः ।

**निष्का(श)स** पु० निर्+काश(स)–भावे घञ् । निष्कासने बहिष्करणे १निःसारणे "सन्ध्ये रजनीदिनयोः प्रवेशनिष्काशौ(सौ)"हला० "न च पश्यामि निष्काश(स)म्" रामा०कि० ५२सर्गः । कर्त्तरि घञ् । प्रासादाद्युपरितो बहिर्गतभागे (छाजा) ख्याते पदार्थे च ।

**निष्काशि(सि)त** त्रि० निस्+क(श)स–मतौ णिच्–क्त । १निःसारिते द्रव्यमध्यस्थ दूरीकृते समपसारिते जटा०। २निर्गमिते ४आहिते अधिकृते च त्रि० मेदि० ।

**निष्काष** पु० निर्–कष घञ् । तापवशादधःस्थालीतलस्थे पयस्यावशेषे "वाद्यौनिष्काषेणावसथम्" कात्या०श्रौ० ५।५।२१। पक्वार्थएव कर्कोक्तः ।

**निष्किञ्चन** त्रि० निर्गतं किञ्चन मम धनं वा यस्य प्रा०ब०। १किञ्चनशून्ये विषयान्तरशून्ये "प्रज्ञानं शौचमेवात्र शरीरस्य विशेषतः । तथा निष्किञ्चनत्वं मनसश्च प्रसन्नता" भा०अनु०१०८अ० । २अकिञ्चने दरिद्रे च ।

**निष्कुट** पु० निस्+कुट–क । १गृहसमीपस्थे उपवने अमरः २केदारे क्षेत्रे ३राज्ञाम् अन्तःपुरे च मेदि० । "अवस्करे चिरं स्थानं निष्कुटेषु च वर्जयेत्" भा०व०२२२अ०। ४पर्वतभेदे "स विनिर्जित्य संग्रामे हिमवन्तं सनिष्कुटम्" भा०स० २६अ० । "सपर्वतवनाकार्यां ससमुद्रां सनिष्कुटाम्" भा० व० २५२अ० ।

**निष्कुटि(टी)** स्त्री कुट–इन् कौटिल्यम् निर्गता कुटिर्यस्याः बा० ङीप् । एलायाम् अमरः ।

**निष्कुटिका** स्त्री निष्कुटः अस्त्यस्याः वाहुल्येन ठन् । कुमारानुचरमातृभेदे "ब्रह्माऽम्बिका निष्कुटिका वामा चत्वरवासिनी" भा०श० ४७अ० स्कन्दमातृगणोक्तौ ।

**निष्कुम्भ** पु० नि+स्कुम्भ–अच् षत्वम् । १दन्तीवृक्षे रायमुकुटः । निर्गतः कुम्भोऽस्य प्रा०ब०। २कुम्भशून्ये च त्रि०।

**निष्कुल** त्रि०निर्गतं कुलमवयवानां समूहो यस्मात् प्रा०ब०। अवयवसमूहशून्ये । ततः निष्कोषणे कृञि डाच् । निष्कुलाकरोति दाडिमम् निष्कोषयतीत्यर्थः । निर्गतं कुलं सपिण्डादिर्यस्य प्रा०ब० । २सपिण्डादिकुलरहिते त्रि० "यथाऽपुत्रस्य चैवं स्यात् रक्षणं निष्कुलस्य च । पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च" मनुः "निष्कुलस्य सपिण्डरहितस्य" कुल्लू० ।

**निष्कुलीकृत** त्रि०निष्कुल+अभूततद्भावे च्वि–कृ–कर्मणि क्त। निष्कुषिते "दाडिमस्यावां निष्कुलीकृतानाम्" सुश्रुतः ।

**निष्कुषित** त्रि० निस्+कुष–निष्कर्षे क्त । १निस्त्वचीकृते खण्डिते "काकैर्निष्कुषितं श्वभिः कवलितं वीचिभिरान्दोलितम्" गङ्गास्तोत्रम् । "चिरकालोषितं जीर्णं कीटनिष्कुषितं धनुः" भट्टिः "उपान्तयोर्निष्कुषितं विहङ्गैः" रघुः । २सदृशमेदे पु० "अप्रसन्नं चिलरश्मिस्तु तथा निष्कुषितं न्टपम्" हरिवं० २०४अ० सदृशोक्तौ ।

**निष्कुह** पु० निःशेषेण कुहयते विस्मापयति कुह–अच् । वृक्षादिस्थे स्वयंजाते रन्ध्रे कोटरे अमरः ।

**निष्कृति** स्त्री निर्+कृ–क्तिन् । १निस्तारे २निस्तृतौ पापादिभ्य ३उद्धारे च अमरः"कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते" मनुः "कृतघ्ने नास्ति निष्कृतिः" स्मृतिः

**निष्कृष्ट** त्रि० निर्+कृष–क्त । १सारांशे २निश्चिते च

**निष्केवल्य** पु० यज्ञिये स्तोमकारितशंसनात्मके शस्त्रभेदे "माध्यन्दिने तु होतुर्निष्केवल्ये स्तोमकारितं शस्त्रम्" आश्व० श्रौ० ६।१।१४ "तत्र तु ऋग्भिरेव निष्केवल्यस्य स्तोमकारित शंसनं स्तस्तोमातिशंसनस्य कर्त्तव्यं न सूक्तेन । यदि स्तस्तोमाधिको निष्केवल्यस्तोमस्तदा तस्मादत्यतिशंसनस्य कर्त्तव्यं यदा हीनं तदास्मादतिशंसनमिति निष्केवल्ये स्तोमकारितमिति पाठः कर्त्तव्यो न निष्केवल्यस्तोमकारितमिति" नारा० । "निष्केवल्यमुक्थमव्यथायै" यजु० १५।१२ "प्रउगं शंसति निष्केवल्यं शंसतीति" श्रुतिः तच्छस्त्रे च पाद्ये २यज्ञपात्ररूपे ग्रहभेदे पु० "मरुत्वतीयाश्च मे निष्केवल्यश्च मे" यजु० १८।२० ।

**निष्कैवल्य** त्रि० केवलस्य भावः कैवल्यम् निश्चितकैवल्यमसहायत्वमस्य प्रा०ब० । निश्चितकेवलत्वे अन्यासहकारिणि "निष्कैवल्येन पापेन तिर्य्यग्योनिमवाप्नुयात् । पुण्यपापेन मानुष्यं पुण्येनैकेन देवताम्" भा०आ० २०४ अ० । २निवृत्तकैवल्ये ३मोक्षहीने च ।

**निष्कोषण** न० निर्+कुष–ल्युट् । अन्तरवयवानां बहिर्निःसारणे "शर्करासिकतामेहवातकुण्डलिकाष्ठीलादन्तशर्करोपकुशकण्ठशालूकनिष्कोषणदूषिताश्च दन्तवेष्टाः" सुश्रुतः

**निष्कौशाम्बि** त्रि० निर्गतः कौशाम्ब्या नगर्य्याः निरा०त० तत्पुरुषे गौणत्वेन ह्रस्वः । कौशाम्ब्या नगर्य्या निर्गते ।

**निष्क्रम** पु० निर्+क्रम–घञ् । १गृहादितो बहिर्गमने प्रथमनिष्क्रमनिमित्ते कर्त्तव्ये शिशोः २संस्कारभेदे च "अह्न्येकादशे नाम चतुर्थे मासि निष्क्रमः" याज्ञ० ।

**निष्क्रमण** न० निर्+क्रम–ल्युट् । १गृहादितो बहिर्गमने चतुर्थे मासि शिशोः कर्त्तव्ये प्रथमनिष्क्रमणनिमित्ते २संस्कारभेदे च । तन्मुहूर्त्तादिकं मुहू० ची० उक्तं यथा "दोलाधिरूढिरथ निष्क्रमणं चतुर्थमासे गमोत्क्रमणेऽर्कमितेऽह्नि वा स्यात्" पी० "अथ निष्क्रमणमुहूर्त्तः तत्र चतुर्थमासे गमोत्क्रमणे यात्राभिहितसमीचीनतिथिवारनक्षत्रादिसहिते काले शिशूनां निष्क्रमणम् । निष्क्रमाख्यसंस्कारपूर्वं गृहाद्बहिर्गमनं कुर्य्यात् । वा अथवाऽर्कमितेऽह्नि द्वादशे दिवसे निष्क्रमणं कुर्य्यात् । यदाह मनुः "चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात्" । गुरुरपि "गृहात् निष्क्रमणं कृतेश्चतुर्थे मासि कारयेत् । यात्रोक्ते समये मासि तृतीये द्वादशेऽहनि" अत्र तृतीयमासोऽप्युक्तः । राजमार्त्तण्डेऽपि "मासे तृतीये शशिदृष्टिपक्षे क्षपाकरे शोभनगोचरस्थे । उत्पातपापग्रहवर्जिते भे निष्क्रासनं सौख्यकरं शिशूनाम्" । तदेतयोः पक्षयोर्यथागृह्यं व्यवस्था । मुहूर्त्तसंग्रहे तु निष्क्रमणे विशिष्य तिथ्याद्युक्तं यथा "पूर्वः पक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना । रिक्ताषष्ठ्यष्टमीदर्शद्वादशीश्च विवर्जयेत् । चत्वार्यार्यमणतस्त्रीणि वैश्वात् त्रीणि च बुध्नभात्" । बुध्नभादुत्तराभाद्रपदातस्त्रीणि भानि । "मैत्रमादित्यपुष्यौ च रोहिणी च शुभावहाः । कर्षालिमेषा वर्ज्याः स्युस्तथैवाधोमुखानि च । सतां तु वारवर्गाश्च शुभदास्तद्युतास्तथा । केन्द्रत्रिकोणगाः सौम्याः पापाः षष्ठत्रिलाभगाः । उपनिष्क्रमणे यस्य मातुलो वाहयेच्छिशुमिति" । अधोमुखानि मूलाहिमिश्रोग्रमधोमुखं भवेदित्युक्तानि । उदयाः लग्नानि । एवंविधे सुलग्ने क्रियमाणस्य शिशुनिष्क्रमणस्य फलमाह बृहस्पतिः । "अथ निष्क्रमणं नाम गृहात् प्रथमनिर्गमः । अकृतायां क्रियायां स्यादायुःश्रीनाशनं शिशोः" । कृते संपदिष्टद्धिः स्यादायुर्वृद्धिर्नसंशय चेति" अत्र विशेषमाह यमः "तृतीये मासि कर्त्तव्यं शिशोः सूर्यस्य दर्शनम् । चतुर्थे मासि कर्त्तव्यमस्य चन्द्रस्य दर्शनम्" इति । वेदभेदेन व्यवस्था ज्यो०त० दर्शिता यथा "चतुर्थमासीति ऋग्वेदियजुर्वेदिनोः । यथाह विष्णुः "चतुर्थमासादित्यदर्शनमिति" । शौनकोऽपि "चतुर्थे मासि पुण्यर्क्षे शुक्ले निष्क्रमणं शिशोः" पारस्करः "चतुर्थे मासि निष्क्रमणिका सूर्यमुदीक्षयति तच्चक्षुरितीति" मासे तृतीय इति तु छन्दोगानां गोभिलेन जननान्तरं तृतीयशुक्लपक्षतृतीयायां चन्द्रदर्शनरूपनिष्क्रामणविधानात् यथा गोभिलः "जननाद्यस्तृतीयो ज्यौत्स्नस्तस्य तृतीयायामित्यादि" । ज्यौत्स्नः शुक्लपक्षः । अत्रैव कृत्यचिन्तामणिः "तस्मात् सूत्रविधानतोऽर्कशशिनोरर्घ्यं शिशुं दापयेत्" । ततः तारका० संजातार्थे इतच् । निष्क्रमणित संजातनिष्क्रमणे त्रि० ।

**निष्क्रय** पु० निष्क्रीयते प्रत्याह्रियतेऽनेन परगृहीतम् निर्+क्री–करणे अच् । १भृतौ वेतने २विनिमयद्रव्ये तुल्यमूल्यद्रव्येण विनिमिते द्रव्ये । भावे अच् । ३क्रये ४नुक्रियोगे ५सामर्थ्ये ६विनिर्गमने च वैजय० । ७प्रत्युपकारे ८विनिमये च शब्दार्थचि० "समुत्क्षिपन् यः पृथिवीभृतां वरम् वरप्रदानस्य चकार शूलिनः । त्रसत्तुषाराद्रिसुताससम्भ्रमस्वयंग्रहाश्लेषसुखेन निष्क्रयम्" माघः ।

९विक्रये "न निष्क्रयविसर्गाभ्यां भर्त्तुर्भार्या विमुच्यते" मनुः।

**निष्क्रिय** त्रि० निर्गता क्रिया यस्य प्रा०ब० सत्वम्। क्रियादिव्यापारशून्ये "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" श्रुतिः "निष्क्रियस्य तदसम्भवात्" सा०सू० "अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः" भाषा०। [काथे (क्वाथ) हेमच०।

**निष्क्राथ** पु० निःसृतः क्राथः प्रा० त० सत्वम्। मांसादि-

**निष्टक्वन्** त्रि० निर्+तक-सहने क्वनिप् वेदे सत्वटुत्वे। नितरां सहनशीले स्त्रियां "वनो र च" पा० ङीप् रश्चान्तादेशः। निष्टक्वरी। "दार्वी निष्टक्वरीमिच्छ" अथ० ५।२२।६

**निष्टानक** पु०नितान्तस्तानकः शब्दभेदः प्रा०त०वा०सत्वटुत्वे। अव्यक्तशब्दे "निष्टानकश्च सुमहांस्तव सैन्यस्य चाभवत्" भा०भी०४८अ०।

**निष्टि** स्त्री निस-समाधौ क्तिन्। अदितिसपत्न्यां १दितौ "निष्टिग्र्याः पुत्रमाच्यावयोतये" ऋ०१०।१०१।१२ "निष्टिं दितिं सपत्नीं निरतीति निष्टिग्रीरदितिः तस्याः पुत्रम्" भा०।

**निष्टुर्** त्रि०निस्+तॄ-क्विप् वेदे वा० उः रपरत्वम् सत्वटुत्वे। निस्तरते शत्रूणामभिभावके "प्र व ऊपाय निष्टुरे" ऋ० ८।२१।२७ "निष्टुरे शत्रून् निस्तरते" भा०।

**निष्ट्य** पु० निर्गत्य स्त्यायते स्त्यै-क निस्+गतार्थे त्यप् वा। विसर्गलोपसत्वटुत्वे १चण्डालादौ २म्लेच्छजातिभेदे हेमच० ३पुत्रादौ च। "यं मे निष्ट्यो यममानो जिघांसात्" यजु० ५।२३। "स्त्ये स्त्यै शब्दसङ्घातयोः नितरां स्त्यायति सङ्घातरूपेण सह वर्त्तते इति निष्ट्यः यद्वा निर्गत्य शरीरात् स्त्यायति विस्तीर्णो भवतीति निष्ट्यः पुत्रादिः। यद्वा निर्गतो वर्णाश्रमेभ्यो निष्ट्यः चण्डालादिः "निसो गते" इति पा० वार्त्तिकेन निस उपसर्गाद्गतार्थे त्यप् इति काशिकायाम्" वेददी०।

**निष्ठ** त्रि० नि+स्था-क सत्वटुत्वे। नितरां स्थितिशीले "अथ वा हेतुमन्निष्ठविरुद्धाप्रतियोगिना" भाषा०।

**निष्ठा** स्त्री नि+स्था-भावे अङ् सत्वटुत्वे। १निष्पत्तौ २नाशे ३अन्तसीमायां ४निर्वहणे च अमरः। ५याच्ञायां मेदि०। ६धर्मादौ श्रद्धायाम् "लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ!। ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्" गीता "तन्निष्ठस्य मोक्षोपदेशात्" शा० सू० "तस्मिन्नात्मनि चेतने निष्ठा यस्येति विग्रहः। "तेषां निष्ठा तु का कृष्ण! सत्वमाहो रजस्तमः" गीता। ७अवधारणे च "घ्राणं जिह्वा च चक्षुश्च त्वक्श्रोत्रं मनएव च। न निष्ठामधिगच्छन्ति बुद्धिस्तामधिगच्छति" भा० आश्व० ६६५ श्लो०। व्याकरणपरिभाषिते क्तक्तवतु-प्रत्यये "क्तक्तवतू निष्ठा" पा० "श्रीरनिङ्निष्ठः" धातुपाठः। नितरां तिष्ठन्ति भूतान्यत्र आधारे वा० अङ्। प्रलये सर्वभूतस्थित्याधारे ८विष्णौ स्त्री "निष्ठा शान्तिः परायणः" विष्णुस०।

**निः(नि)ष्ठा** त्रि० नि(निर्)+स्था-क्विप् सत्वटुत्वे वा विसर्गलोपः। नितरां यथा मतस्थितौ "जातो निःष्ठामदधुर्गोषु वीरान्" ऋ०२।११।१० "निष्ठां पूर्वं यथास्थितिमर्थाद्(?)ः तथा" भा० अस्य प्रथमाद्यजादौ निःष्ठः निःष्ठा निःष्ठे इत्यादिरूपमिति भेदः। [तेमने व्यञ्जने अमरः।

**निष्ठान** न० नि+स्था-करणे ल्युट् सत्वटुत्वे। भक्ताद्युपसेचने

**निष्ठानक** पु० नागभेदे "निष्ठानको हेमगुहो नहुषः पिङ्गलस्तथा" भा०आ० ३५अ०।

**निष्ठान्त** त्रि० निष्ठा नाशोऽन्ते यस्य। नाशान्ते वस्तुनि। "निष्ठान्तं यस्य चापि स्वं धान्यं धर्मश्च केवलम्" भा० स्त्री० ११अ०। २नितरांस्थितान्ते च "नानादिश निष्ठान्तो मातुश्च बहवो यथा" मनु० १०१अ०।

**निष्ठित** त्रि० नि+स्था-क्त सत्वटुत्वे। १नितरांस्थिते वस्तुनि २निष्ठायुक्ते च "बुद्धियोगसमायुक्ताः धर्मज्ञेषु च निष्ठिताः" भा०शा० १२२अ०।

**निष्ठी(ष्ठे)व** पु० नि+ष्ठिव-भावे घञ् वा दीर्घः। ष्ठीवने श्लेष्मादीनां मुखान्निरसने हेमच०।

**निष्ठी(ष्ठे)वन** न० नि+ष्ठिव-भावे ल्युट् वा दीर्घः। श्लेष्मादीनां मुखेन निरसने "वान्तं निष्ठीवनं चैव कुर्वते चास्य सन्निधौ" भा०शा० ५६अ० "क्षुतेऽवलीढे वान्ते च तथा निष्ठीवनादिषु। कुर्य्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम्" मार्कण्डपु० ३४अ०।

**निष्ठीवित** न० निष्ठीवं करोति क्तौ निष्ठीव+णिच्-भावे क्त। निष्ठीवनकरणे "वाचः परुषा निष्ठीवितं क्षुतं चाशुभं कथितम्" वृ०सं० ५२अ०।

**निष्ठुर** न० नि+स्था-उरच् मद्गुरादि०नि०सत्वटुत्वे। १परुषवाक्ये २कठोरे त्रि०। "गुह्याश्लीलामेध्यशब्दानां वचनं निष्ठुरं विदुः। यदन्यद्वा भवो गोत्रं स्त्रीपुंसमैथुनाश्रयम्"

इत्युक्ते २अश्लीलवाक्ये न० ४तत्तद्विशिष्टे त्रि० अमरः। "हिंसा भवतु ते बुद्धिरेताश्च कुरु निष्ठुरम्" भट्टिः। "संरब्ध हस्तिपकनिष्ठुर चोदनाभिः" माघः।

**निष्ठुरिक** पु० नागभेदे "आप्तः कोटरकश्चैव शिखी निष्ठुरिकस्तथा" भा०उ० १०२अ०।

**निष्ठ्यूत** त्रि० नि+ष्ठिव–क्त ऊठ्। १मुखेन निरस्ते श्लेष्मादौ "कक्कुष्ठनिष्ठ्यूतमिवोद्गतमुच्चैः" माघः "श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत्तु कामतः" मनुः भावे क्त। २निष्ठीवने न०।

**निष्ण** त्रि० नि+स्ना–क "निनदीभ्यां स्नातेः कौशले" पा० षत्वे टुत्वम्। कुशले "आतिथ्यनिष्णा वनवासिमुख्याः" भट्टिः।

**निष्णात** त्रि० नि+स्ना–कर्त्तरि क्त "निनदीभ्यां स्नातेः कौशले" पा०षत्वे टुत्वम्। १कुशले निपुणे अमरः। "निष्णातैरथ वरधा प्रियासमूहैः" माघः। २पारङ्गते च "वैशम्पायनएवैको निष्णातोयजुषामुत" भाग० १।४अ०।

**निष्पक्व** त्रि० नितान्तं पक्वम्। "इदुदुपधस्य चाप्रत्ययस्य" पा० षत्वम्। १अतिशयेन पक्वे व्यञ्जने २क्वाथिते दशमूलादौ च "पर्वणावनिष्पक्वा हताशापो भवन्ति" शत०ब्रा०६।५।१।५

**निष्पतिष्णु** त्रि० निस्+पत–बा० इष्णुच् षत्वम्। नितान्तपतनशीले "इन्द्रियाणि प्रमाथीनि बुद्ध्या संयम्य यत्नतः। सर्वतो निष्पतिष्णूनि" भा०शा० २५०अ०।

**निष्पतिसुता** स्त्री निर्गतो पतिः सुतश्च यस्याः प्रा०ब०षत्वम्। अवीरायां पतिपुत्रविहीनायां स्त्रियाम् अमरः।

**निष्पत्ति** स्त्री निर्+पद–क्तिन् षत्वम्। १समाप्तौ २सिद्धौ च "कथमप्यस्य सामन्तरा निष्पत्तेः प्रतीक्षते" कुमा० "निष्पत्तिः कर्मणो दैवे पौरुषे च व्यवस्थिता" मार्क०पु०४२अ०।

**निष्पत्र** त्रि० निर्गतमन्यपार्श्वेन निःसृतं पत्रं शरपुङ्खो यस्य प्रा०ब०षत्वम्। १एकपार्श्वनिक्षिप्तसपुङ्खशरस्यापरपार्श्वेन निर्गमयुक्ते मृगादौ ततः "सपत्रनिष्पत्रादतिव्यथने" पा० कृञोयोगे डाच्। निष्पत्राकरोति मृगं सपुङ्खस्य शरस्यापरपार्श्वेन निर्गमनात् निष्पत्रं करोतीत्यर्थः सि०कौ०। निर्गतं पत्रं यस्य। निर्गतपत्रके त्रि०। "विध्यन्त्यनिष्पत्रम्" कात्या० श्रौ० १२।२२।२ "अनिष्पत्र-मनिःसृतपत्रं विध्यन्ति क्षत्रियाः" कर्कः।

**निष्पत्रक** त्रि० निर्गतं पत्रं पर्णं यस्य कप्। १पत्रशून्ये स्त्रियां टाप् कापि अत इत्त्वम्। सा च २करीरवृक्षे राजनि०। [वने हेमच०।

**निष्पत्राकृति** स्त्री निष्पत्र+डाच् कृ–भावे क्तिन्। अतिव्य-

**निष्पद्** न० निर्गतं पदं पादोऽस्य प्रा०ब०षत्वम्। १पादहीने २तादृशयाने नौकादौ युक्तिकल्पतरुः।

निष्पद्यानस्य नौकादिरूपं तद्विवरणमुक्तं तत्र यथा "नौकाद्यं निष्पदं यानं तस्य लक्षणमुच्यते। अश्वादिकन्तु यद्यानं स्थले सर्वं प्रतिष्ठितम्। जले नौकैव यानं स्यात्तस्मात् यत्नतो वहेत्"। तद्घटनादिकालो यथा "बुधारवेला तिथिचन्द्रयोगे चरे विलग्ने मकरादिषट्के। कृत्वेऽन्त्यसप्तव्यतिरेकतोऽन्ये वदन्ति नौकाघटनादि कर्म। अश्विकरांशुसुधानिधिपूर्वामित्रधनाच्युतभे शुभलग्ने। तारकयोगतिथीन्दुविशुद्धौ नौगमनं शुभदं शुभवारे। वृक्षायुर्वेदगदिता वृक्षजातिचतुर्विधा। समासेनैव गदितं तेषां काष्ठं चतुर्विधम्"। तद्यथा "लघु यत् कोमलं काष्ठं सुघटं ब्रह्मजाति तत्। दृढाङ्गं लघु यत् काष्ठमघटं क्षत्रजाति तत्। कोमलं गुरु यत् काष्ठं वैश्यजाति तदुच्यते। दृढाङ्गं गुरु यत् काष्ठं शूद्रजाति तदुच्यते। लक्षणद्वययोगेन द्विजातिकाष्ठसंग्रहः। क्षत्रियकाष्ठैर्घटिता भोजमते सुखसम्पद्‌ नौका। अन्ये लघुभिः सुदृढैर्विदधति जलदुष्पदे नौकाम्। विभिन्नजातिद्वयकाष्ठजाता न श्रेयसे नापि सुखाय नौका। नैषा चिरं तिष्ठति मुच्यते च विभिद्यते वारिणि मज्जते च। न सिन्धुगाद्यार्हति लौहबन्धं तल्लोहकान्तैर्ह्रियते हि लौहम्। विपद्यते तेन जलेषु नौका गुणेन बन्धं निजगाद भोजः"। अथ लक्षणानि "सामान्यञ्च विशेषश्च नौकाया लक्षणद्वयम्"। तत्र सामान्यम्। "राजहस्तमितायामा तत्पादपरिणाहिनी। तावदेवोन्नता नौका क्षुद्रेति गदिता बुधैः। अतः सार्द्धमितायामा तदर्द्धपरिणाहिनी। त्रिभागेणोन्नता नौका मध्यमेति प्रचक्षते। क्षुद्राऽथ मध्यमा भीमा चपला पटला भया। दीर्घा पत्रपुटा चैव गर्भरा मन्थरा तथा। नौकादशकमित्युक्तं राजहस्तैरनुक्रमात्। एकैकवृद्धैः सार्द्धैश्च विजानीयाद्द्वयं द्वयम्। उन्नतिश्च प्रवीणा च हस्तादर्द्धं समन्विता। अत्र भीमा भया चैव गर्भराख्या शुभप्रदा। मन्थरा चरतोयास्तु तासामेवाप्लवो मतिः। तासां गुणस्तु संक्षेपात् दृढता च प्रकीर्त्तिता"। अथ विशेषः "दीर्घा चैवोन्नता चेति विशेषे द्विविधा भिदा। तत्र दीर्घा यथा "राजहस्तद्वयायामा अष्टांशपरिणाहिनी। नौकेयं दीर्घिका नाम दशांशेनोन्नतापि च। दीर्घिका तरणिर्लोला

मन्थरा गामिनी तरिः। जङ्घाला प्लाविनी चैव धारिणी वेगिनी तथा। राजहस्तैकैकवृद्ध्या नौकामानानि वै दश। उन्नतिः परिणाहश्च दशार्द्धप्रमितौ क्रमात्। अत्र लोला गामिनी च प्लाविनी दुःखदा भवेत्। लोलासमानामारभ्य यावत् भवति मन्थरा। लोलायाः फलमाधत्ते एवं सर्वासु निर्णयः। वेगिन्याः परतो या तु साखिलायोत्तरा तथा"। भोजोऽपि "नौकादीर्घे प्रवेश्यं स्यात् नवैतानि विवर्जयेत्। हस्तसंख्या परित्याज्या दश८वेद४पञ्चोत्तरैः। षड्गुत्तरमिता नौका कुलं हन्ति बलं धनम्। नवतीदत्तरे यापि या च सप्तारिंशतः परा"। यावदपरद्वयकं तावदेव तत् फलमिति। यथोक्तम्। "राजहस्तद्वयमिता तावदुं मघरणोन्नता। दमभूर्त्तीभिधा नौका क्षेमाय पृथिवीभुजाम्। ऊर्द्ध्वानूर्द्ध्वा सर्वमुखी गर्भिणी मन्थरा तथा। राजहस्तैकैकवृद्ध्या नाम पञ्च त्रयं भवेत्। अलानूर्द्ध्वा गर्भिणी च विन्द्रितं नाम कुम्भकम्। मन्थरायाः परा यास्तु ताः शुभाय यथोक्तवत्"। भोजोऽपि। "चाचान्न्युत्तरतो प्रानं नौका नाम शुभा वदेत्। पञ्चाघदूर्द्ध्वा दुःखार्थं धननाशं तयोर्वतः। इत्युक्ता "धात्वादी नाम्रतो वर्णे त्रिवर्णं तरिवर्णयम्। कनकं रजतं ताम्र त्रितयं वा यथाक्रमम्। अश्वादिभिः परिन्यस्य नौकाचित्रकर्मणि। चतुःशृङ्गा त्रिशृङ्गा वा द्विशृङ्गा चैक शृङ्गिणी। सितरक्तपीतनीलवर्णान्ताःकुर्य्यात्क्रमम्। केशरी महिषो नागो द्विरदो व्याघ्र एव च। पक्षी भेको मनुष्यश्च एतेषां वदनाष्टकम्। नावां सुखोपरिन्यस्य आदित्यादिदशाभुवाम्। कलशो दर्पणचन्द्रश्चैदयानां महीभुजाम्। हंसः केकी शुकः सिंहो गजोऽहिव्याघ्रषट्पदौ। आदित्यादिदशाजातनौकोपरि परिन्यसेत्। नौकासु मणिविन्यासो विज्ञेयो नवदण्डवत्। मुक्तामालावृतैर्युक्ता नौका स्यात् सर्वतो भद्रा। तत्संख्या वेदष रसवेद्दयवर्जिता क्रमशः। कनकादीनां माला जयमालेति गद्यते बुधैः। अङ्गश्च द्वितये एकैके वैश्यशूद्रयोर्मि। निर्द्दृहं सगृहं चाथ तत्सर्वं द्विविधं भवेत्। निर्दृहं पूर्वमुद्दिष्टं सगृहाणि यथा शृणु। सगृहा त्रिविधा प्रोक्ता सर्वमध्याग्रमन्दिरा। सर्वतो मन्दिरं यत्र सा ज्ञेया सर्वमन्दिरा। राज्ञां कोशाश्वनारीणां फलमत्र प्रशस्यते। मध्यतो मन्दिरं यत्र सा ज्ञेया मध्यमन्दिरा। राज्ञां विलासया-

नादिवर्षासु च प्रशस्यते। अग्रतो मन्दिरं यत्र सा ज्ञेया त्वग्रमन्दिरा। चिरप्रवासयात्रायां रणे काले घनात्यये। मन्दिरमानं नौकाप्रसरत एवार्द्धमानतो न्यूनम्"। भोजस्तु दीर्घहस्तकुण्ड दिशाकरानेकाद्रिकुनवमिता यथाक्रमम्। राजपञ्चभुजमितोन्नतिमन्दिरे तरिगते महीभुजाम्। भास्करादिकदशाभुवां पुनर्धातुनिर्णयमत्र पूर्ववत्। पताकाकलशादीनां निर्णयो नवदण्डकवत्। काष्ठजं धातुजं चेति मन्दिरं द्विविधं भवेत्। काष्ठजं सर्वसम्पत्त्यै विलासे धातुजं मतम्। अत्र अश्वासनादीनां मञ्चसोपानयोरपि। अन्येषाञ्च मुनिभिर्निर्णयः पूर्ववन्मतः। दिङ्मात्रमिदमुद्दिष्टं नौकालक्षणपञ्जम्। प्रधानेष्वेव नियमो अप्रधाने न निर्णयः। लघुता द्रुतता चैव गामिताऽच्छिद्रता तथा। समतेति गुणोद्देशो नौकानां समुदाहृतः। एवं विचिन्त्य यो राजा नौकायानं करोति च। स चिरं सुखमाप्नोति विजयं समरे श्रियम्। योऽज्ञानादन्यथा मार्गं नौकानां कुरुते नृपः। तस्यैतानि विनश्यन्ति यशोवीर्यं बलं धनम्"। जघन्ययानानि यथा "नौकान्यतो जवे यानं जघन्यमिति गद्यते। तद्दारुवर्गे तु पाचात्मकानां प्रकीर्त्तिताः। द्रोणीकृपन्तु यद्यानं द्रोणीयानं तदुच्यते। घटीभिर्घटितं यानं घटी नौकेति गद्यते। तुम्बादौस्तु कृतैर्यानं फलयानं प्रचक्षते। चर्मभिस्तु वपुर्वैर्यानं चर्मयानं तदुच्यते। यानं वहुभिः दृढैर्वैः मयानं तदुच्यते। जन्तुभिः वहिते यानं जन्तुयानं प्रचक्षते। बाहुभ्यां सन्तरेद्दु वारि जघन्येषु न निर्णयः"।

**निष्पदी** स्त्री निर्गतः पादोऽस्याः पादः अन्तलोपः समा॰ कुम्भपद्या॰ ङीप् पद्भावः विसर्गस्य षः। १पादहीनायां स्त्रियाम्। निर्+पद—क्विप्। २निर्गते "निष्पदो सूर्याणाम्" ऋ॰ १०।१०२।६ "निष्पदः निर्गच्छन्तः" भा॰।

**निष्पन्द** त्रि॰ निर्गतः स्पन्दो यस्य प्रा॰ ब॰। विसर्गलोपाभावे "इदुदुपधस्य चाप्रत्ययस्य" पा॰ षत्वणत्वे। स्पन्दनरहिते "व्यापच्यनिष्पन्दभुजेन यस्य"। "मैथिलीतनयोद्गीतनिष्पन्दमृगमाश्रमम्" रघुः। विसर्गलोपे न षत्वम्।

**निष्पन्न** त्रि॰ निर्+पद—क्त षत्वम्। १सिद्धे २समाप्ते च।

**निष्परिग्रह** त्रि॰ निर्गतः परिग्रहः यस्य प्रा॰ ब॰। १विषयादिषङ्गरहिते कन्थापादुकादिभिन्नद्रव्यरहिते २यत्यादौ च "आत्मन्यात्मानमाधाय निर्द्वन्द्वो निष्परिग्रहः" मार्क॰ पु॰ ३६ अ॰।

**निष्पवन** न० निर्+पू—भावे ल्युट् षत्वम् । धान्यादेर्निस्तुषी-करणे । निष्पावशब्दार्थे "निष्पवनादिफलीकरणानां भेदेन पाकसमयभिन्नत्वादिफलविधानानां कल्पनम्" कात्या० श्रौ० पद्धतौ कर्कः ।

**निष्पाद** पु० निर्गतौ पादौ यस्य प्रा०ब० अन्त्यलोपः समा-सान्तस्य षः । निर्गतपादके ततः विष्णा० अपत्ये वञ् । निष्पाद्य तद्युक्ते देशादौ त्रि० ।

**निष्पादक** त्रि० निर्+पद—णिच्-ण्वुल् विसर्गस्य षः । निर्माणकारके "न चार्थचिन्तने तस्य मन्त्री सहायः किन्तु स्वयमेव निष्पादकः" सा०द० ।

**निष्पाव** पु० निष्पूयते शूर्पाद्युत्पवनेन शोध्यतेऽनेन निर्+पू—करणे घञ् षत्वम् । १शूर्पादिवाते तेन हि कलम-धान्यादिकं कडङ्करादिशून्यं करोति । कर्मणि घञ् । २कडङ्करे (बाकडा) ३राजमाषे (वरवटी) ४श्वेतशि-म्बीधान्ये ५निर्विकल्पे त्रि० मेदि० । भावे घञ् । ६धान्यादीनां विशुद्धीकरणे अमरः । "शौरविका तु निष्पावान् आवते भद्रमोदकः" मार्क० पु० १५अ० । संज्ञायां कन् । श्वेतशिम्ब्यां राजनि० "निष्पावो मधुरो रूक्षो विपाकेऽम्लो गुरुः सरः । कषायस्तन्यपित्ता-सृङ्मूत्रवातविबन्धकृत् । विदाही दृष्टिशुक्रघ्नो श्लेष्महृत् मल-शोषणः" भावप्र० । ततः विष्णा० अपत्ये वञ् । निष्पावक्य विशुद्धीकरणयुक्ते धान्यादौ त्रि० गौरा० ङीष् । निष्पावी शिम्बीभेदे स्त्री राजनि० ।

**निष्पुलाक** त्रि० निर्गताः पुलाका यतः प्रा०ब० षत्वम् । १पुलाकरहिते धान्यादौ (आगडा) तत्स धान्यरहिते चतुर्दशांशे २जैनभेदे पु० हेम० ।

**निष्पेष** पु०निर्+पिष—घञ् । १निष्पीडने २निर्घर्षणे ३चूर्णने "नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम्" रघुः । तस्य प्रभवति सन्तापादि० ठञ् । नैष्पेषिक निष्पेषस-म्पादके । अभावे अव्य० ४पेषणाभावे अव्य० निरुदका० अन्तोदात्ततायां भावे ल्युट् । निष्पेषणमप्यत्र न० ।

**निष्प्रकम्प** त्रि० निर्गतः प्रकम्पो यस्य प्रा०ब० षत्वम् । १प्रक-म्पशून्ये त्रयोदशमन्वन्तरीये २सप्तर्षिभेदे पु० । तदुप क्रमे "निष्प्रकम्पस्तथात्रेयो निर्मोहः काश्यपस्तथा । सुतपाश्चैव वाशिष्ठः सप्तैते तु त्रयोदशे" हरिवं० ७अ० ।

**निष्प्रतिभ** त्रि० निर्गतः प्रतिभायाः निरा०त० षत्वम् । १जडे मूर्खे २प्रागल्भ्यरहिते च अटाच "चीवाकाराश्च साराश्च सुप्तनिष्प्रतिभाश्च च" हरिवं० ८१अ० ।

**निष्प्रत्यूह** त्रि० निर्गतः प्रत्यूहो यस्य प्रा०ब० षत्वम् । निर्विघ्ने निरुपद्रवे "निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः" मुरारिनाटकम् ।

**निष्प्रभ** त्रि० निर्गता प्रभाऽस्य प्रा०ब० षत्वम् । १दीप्तिशून्ये अमरः । "निष्प्रभश्च रिपुरास भूभृताम्" रघुः । २दा-नवभेदे पु० । "निष्प्रभः सुप्रभश्चैव तथैव च निरुद्दरः" हरिवं०२६२अ० दानवोक्तौ ।

**निष्प्रयोजन** त्रि० निर्गतं प्रयोजनमस्य प्रा०ब० षत्वम् । प्रयोजनशून्ये "गुरुत्वाद्युपदेशो हि निष्प्रयोजनतां व्रजेत्" माध०स० "निरानन्दं निराबादं निष्प्रयोजनमाहृतम्" हरिवं०अ० ।

**निष्प्रवाण** न० प्रकर्षेण वयति अनेन प्र+वे—स्यूतौ करणे ल्युट् प्रवाणं तन्तुवयनसाधनद्रव्यं निर्गतं प्रवाणात् निरा०त० । नवाम्बरे हारा० ।

**निष्प्रवाणि** त्रि० प्रोयन्तेऽस्यामनया वा प्र+वेञ्—करणे ल्युट् ङीप् प्रवाणी तन्तुवायशलाका निर्गतः प्रवाण्याः निरा० ब० गौणत्वे न ह्रस्वः षत्वम् । नवाम्बरे अभिनवे (ताँतकाटा) वस्त्रे अमरः ।

**निष्प्राण** त्रि० निर्गतः प्राणः तज्जन्योच्छ्वासादिर्यस्य प्रा०ब० षत्वम् । श्वासप्रश्वासादिशून्ये "ग्लानिर्निष्प्राणताकम्पका-र्श्यानुत्साहतादिकृत्" सा० द० "संस्तम्भितमिवाभाति निष्प्राणमवबाकृति" (वस्त्रम्) हरिवं० ४६अ० ।

**निष्फल** त्रि० निर्गतं फलं यस्मात् प्रा०ब०षत्वम् । १फलरहिते "अयमस्य यथोक्तं वपुः प्रियबन्धोस्तव निष्फलोदयः" कुमा० । फलशून्ये धान्यकाण्डे २पलाले (नाड़ा) पु० अमरः । ३विगतार्त्तवायां स्त्रियां स्त्री गौरा० ङीष् । निष्फली विगतरजस्कायां स्त्रियां स्त्री शब्दरत्ना० ।

**निष्फेन** त्रि० निर्गतं फेनं यस्य प्रा०ब० षत्वम् । फेनरहिते उपरतफेने "यत् क्वाथ्यमानं निर्फेनं निष्फेनं निर्मलं लघु" सुश्रुतः । पक्षे विसर्गोपध्मानीयौ

**निष्य(स्य)न्द** पु० नि+स्यन्द—भावे घञ् वा षत्वम् । क्षरणे अचादेः स्रवणे "हिमनिष्यन्दशीतलम् ।" अच् । २निष्यन्दयुक्ते त्रि० ।

**निष्यूत** त्रि० नि+सिव—क्त ऊठ् षत्वम् । नितान्तस्यूते

**निष्षन्धि** त्रि० निर्गतः सन्धिः सन्धानं यस्य प्रा०ब०सुषामा० षत्वम् ष्टुत्वञ्च । सन्धिरहिते ।

**निष्षम** अव्य० निर्गता समा यस्य तिष्ठद्गु प्र० अव्ययी० षत्वम् ष्टुत्वे । वत्सरातीते ।

**निष्षामन्** त्रि॰ निर्गतं साम यस्य प्रा॰ब॰ सुषामा॰ षत्वम् ष्टुत्वञ्च । सामशून्ये । [नितान्तसेधे ।

**निष्षेध** पु॰ निस्+सिध–भावे घञ् सुषामा॰ षत्वम् ष्टुत्वञ्च ।

**निस्** अव्य॰निस्–क्विप् उपसर्गभेदः । १निषेधे २निश्चये ३सा-कल्ये ४अतिक्रमे च शब्दार्थचि॰ । निर् शब्दे दृश्यम्

**निसम्पात** पु॰ निवृत्तः सम्पातः सञ्चारो यत्र । निशीथे अर्द्धरात्रे शब्दरत्ना॰ निरा समासे निःसम्पातोऽप्यत्र ।

**निसर** त्रि॰ निसरति नि+सृ–अच् । नितान्तसर्त्तरि नितान्त गामके "मन्त्रवेऽयशायं क्रोधाय निसरम्" यजु॰ ३०।१४ भा॰ ।

**निसर्ग** पु॰ नि+सृज–घञ् । १स्वभावे २स्वरूपे ३सृष्टौ च मेदि॰ "सर्गोनिसर्गोऽत्सवः" नैष॰ "मधुरालापनिस-र्गपण्डिताम्" कुमा॰ "निसर्गदुर्बोधमबोधविक्लवाः" किरा॰ "निसर्गजं तु तत्तस्य कस्मात्तदपोहति" मनुः । प-क्षाणां निसर्गलक्षणम् पक्षलक्षणशब्दे २७१४ पृ॰ दृश्यम् ।

**निसार** पु॰ नि+सृ–घञ् । समूहे त्रिका॰ ।

**निसिन्धु** पु॰ नितरां सिन्धुरिव बहुद्रवपत्रादिमत्त्वात् । सिन्धुवारे (निसिन्दा) शब्दच॰।

**निसुन्द(न्द)** पु॰ असुरभेदे "सादिका नौरवाः काशा नि-सुन्द(न्द) नरकौ हतौ" भा॰व॰ १२अ॰ "हयग्रीवो निसु(न्द)श्च नौरः पञ्चजनस्तथा" हरिवं॰ १२१अ॰ ।

**निसूदक** त्रि॰ निसूदयति नि+सूदि–ण्वुल् । हिंसके "तथान्तवीनिसूदकः" भाग॰।

**निसूदन** न॰ नि+सूद–भावे ल्युट् । १मारणे वधे अमरः । कर्त्तरि ल्यु । २मारके नाशके त्रि॰ "वनिन्द्रशस्त्राअंनि-सूदनं हरेः" माघः "बलनिसूदनमर्थपतिञ्च तम्" रघुः ।

**निसृता** स्त्री नितरां सृता नि+सृ–क्त । २निसृतायाम् (तेओडि) रत्नमा॰ । २नितान्तगते त्रि॰ ।

**निसृष्ट** त्रि॰ नि+सृज–कर्मणि क्त । १न्यस्ते अमरः २म-ध्यस्थे त्रिका॰ । "न स्वामिना निसृष्टोऽपि शूद्रो दास्याद्विमुच्यते" मनुः ।

**निसृष्टार्थ** पु॰ "उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् । सुश्लिष्टः कुरुते कार्यं निसृष्टार्थस्तु स स्मृतः" सा॰द॰ इत्युक्ते १दूतभेदे "निसृष्टार्थोमितार्थश्च तथा सन्देशहा-रकः । कार्यप्रेष्यस्त्रिधा दूतो दूत्यश्चापि तथाविधाः" सा॰द॰ "यः स्वामिना नियुक्तोऽपि धनायव्ययपालने । कुसीदकृषिवाणिज्ये निसृष्टार्थस्तु स स्मृतः" इत्युक्ते "धीरः स्थिरमतिः शूरः स्वामिकार्यविधायकः । व्ययोऽस्यप्रकाशी च निसृष्टार्थः स उच्यते" शब्दार्थचि॰ । च उक्ते २पुरुषे ।

**निसोढ** त्रि॰ नि+सह क्त ओत् ओष्ठ्यत्वात्र षः । नितान्त-सह्ये एवं निसोढवत् । निसोढि इत्यादावपि न षः ।

**निस्तत्त्व** त्रि॰ निर्गतं तत्त्वं वास्तवं रूपं स्वरूपं वा यस्य प्रा॰ब॰ । असत्पदार्थे ।

**निस्तनी** स्त्री नितरां स्तनसदृशाकारोऽस्त्यस्याः अच् गौरा॰ ङीष् वा रोर्लोपः । वटिकायां (वडि) अत्र निस्तनीत्येव पाठः शब्दच॰ । निर्गतौ स्तनौ यस्याः वा विसर्ग-लोपः । स्तनहीनायां स्त्रियाञ्च स्वाङ्गत्वात् वा ङीष् पक्षे टाप् इति भेदः ।

**निस्तन्द्र** त्रि॰ निष्क्रान्ता तन्द्रा यस्य प्रा॰ब॰ । १तन्द्रारहिते २आलस्यरहिते च "निस्तन्द्रो ह्यवितथसंस्कृतप्रभावी" सुश्रु॰

**निस्तन्द्रि** त्रि॰ निर्गता तन्द्रिरालस्यं यस्य प्रा॰। आलस्यर-हिते । निर्गता तन्द्र्याः निरा॰त॰। निस्तन्द्री इत्येव स्त्रीप्रत्ययान्तत्वाभावात् गौणत्वेऽपि न ह्रस्व इति भेदः ।

**निस्तरण** न॰निर्+तॄ–करणे ल्युट् । १उपाये । भावे ल्युट् । २निस्तारे ३पारगमने ४तरणे च मेदि॰ ५निर्गमे विश्वः ।

**निस्तरीक** अव्य॰ तरे देयः ईक तरीकः अभावे अव्ययी॰ । १तरपण्यदेयकराभवे निरुदका॰ अन्तोदात्तत्वञ्च । प्रा॰ब॰। २तरीकशून्ये त्रि॰ ।

**निस्तीप** त्रि॰ तरीं पाति पा+क निर्गतस्तरीपो यस्मात् प्रा॰ब॰ । १तरीपालकशून्ये अभावे अव्ययी॰ । २तरी-पाभावे अव्य॰। निरुदका॰ अन्तोदात्तता । [अमरः ।

**निस्तर्हण** न॰ नि+तृह–हिंसायां भावे ल्युट् । मारणे

**निस्तल** त्रि॰ निरस्तं तलं प्रतिष्ठा यस्य । १वर्त्तुले २तल-शून्ये अतले न॰ अमरः । ३चले मेदि॰ चलस्य प्रति-ष्ठाराहित्यात् तथात्वम् । नितान्तं तलं प्रा॰स॰ । ४तले क्षेमच॰ ५वटिकायां स्त्री शब्दच॰ गौरा॰ ङीष् ।

**निस्तार** पु॰ निःशेषेण तारः पारगमनम् । १उद्धारे २पार-गमने ३अभीष्टप्राप्तौ च "जीयात् हरिः चरित्रतीव्रगभीर नीरा बाला अयं सकलमित्यनर्थहेतुः । निस्तारवीजमिद-मेव कृशोदरीणां यन्माधव ! त्वमसि सम्प्रति कर्णधारः" उद्भटः । "कलौ पापयुगे घोरे तपोहीनेऽतिदुस्तरे । निस्तारवीजमेतद्धि यद्ब्रह्ममन्त्रस्य साधनम्" महानि॰त॰।

**निस्तुष** त्रि॰ निर्गतस्तुषा यतः प्रा॰ब॰। १वितुषीकृते धान्य-यवादौ "पूर्वेद्युर्दिवसान्ते निस्तुषाणामष्टयवानाम्" कात्या॰ श्रौ॰ ५।४।२। २निर्मले च ।

**निस्तुषक्षीर** पु॰ निस्तुषं निर्मलं क्षीरं यस्य । गोधूमे राजनि॰

**निस्तुषरत्न** न॰ निस्तुषं निर्मलं रत्नम् । स्फटिके राजनि॰ ।

**निस्तुषित** त्रि॰ निस्तुष+कृतौ णिच्–क्त । १त्वग्विहीने कृते तण्डुलादौ २लघूकृते ३त्यक्ते च मेदि॰ ।

**निस्तेजस्** त्रि॰ निर्गतं तेजोऽस्य प्रा॰ब॰ । तेजोहीने "न-मेतव्यं त्वयं चैते मत्वा निस्तेजसः कृताः" मार्कण्डपु॰ १८अ॰ ।

**निस्तोद** पु॰ निस्+तुद–भावे घञ् । नितान्तव्यथने "सू-चीभिरिव निस्तोदः" "तेषु कालेषु निस्तोदो मारुतेनो-पजायते" सुश्रुतः भावे ल्युट् । निस्तोदनमप्यत्र न॰ । "पार्श्वभङ्गो गुदवस्तिनिस्तोदनम्" सुश्रुतः ।

**निस्त्रिंश** पु॰ निर्गतस्त्रिंशतोऽङ्गुलिभ्यः डच् समा॰ । १खड्गे अमरः त्रिंशदङ्गुल्यधिकस्यैव खड्गत्वात् ततो न्यूनत्वे छुरिका । तत्तुल्यहिंसकत्वात् २निर्दये त्रि॰मेदि॰ "हे निस्त्रिंश (निर्दय) विमुक्तकण्ठकरुणं तावत् सखी रोदितु" अमरुशतकम् "सधनुर्बाणनिस्त्रिंशः पादचारीव पर्वतः" भा॰आ॰ १२६अ॰ । ३मन्त्रभेदे "नवाक्षरो ध्रुव युतो मनुर्निस्त्रिंश ईरितः" तन्त्रसा॰ ।

**निस्त्रिंशपत्रिका** स्त्री निस्त्रिंशः खड्ग इव पत्रमस्याः कप् कापि अत इत्वम् । स्नुहीवृक्षे राजनि॰ ।

**निस्त्रिंशिन्** त्रि॰ निस्त्रिंशः धार्यत्वेनास्त्यस्य इनि । खड्गधारिणि "सन्नद्धा लोहितोष्णीषा निस्त्रिंशिनो यात-वेयुः" आश्व॰श्रौ॰ ८।७।४ स्त्रियां ङीप् ।

**निस्त्रैगुण्य** त्रि॰ निष्क्रान्तः त्रैगुण्यात् त्रिगुणकार्यात् संसा-रात् तत्कार्येभ्यः कामादिभ्यो वा निरा॰त॰ । १कामा-मादिशून्ये २संसारातीते च "निस्त्रैगुण्यो भवार्जुन !" गीता ।

**निस्त्रैणपुष्पी** स्त्री निर्गतं स्त्रैणं स्त्रीरागादि यस्मात् प्रा॰ब॰ निस्त्रैणं पुष्पमस्याः ङीप् । राजधुस्तूरवृक्षे राजनि॰।

**निस्स्नेह** त्रि॰ निर्गतः स्नेहः प्रेम तैलादिकं वास्य प्रा॰ब॰। १प्रेमशून्ये २तैलशून्ये च ३मन्त्रभेदे पु॰ "शतद्वयं द्विन-वतिरेकहीना तथापि वा । यावच्छतत्रयं सङ्ख्या निस्-स्नेहास्ते प्रकीर्तिताः" तन्त्रसा॰पक्षे विसर्गः । निःस्नेहः

**निस्स्नेहफला** स्त्री निःस्नेहं फलमस्याः । श्वेतकण्टकार्य्यां राजनि॰ । पक्षे विसर्गः ।

**निस्पन्द** पु॰ निर्गतः स्पन्दो यस्य प्रा॰ब॰ वा विसर्गलोपः । १स्पन्दनरहिते "छन्ने वने श्रमघनेश्रपाये निपत्य नि-स्पन्दतरीभवद्भ्राम्" नैष॰ । २चेष्टाशून्ये पक्षे विसर्गः ।

**नि(ष्)स्पृह** त्रि॰ निर्गता स्पृहा यस्य वा विसर्गलोपाभावे विसर्गस्य इदुदुपधस्येन षत्वे ष्टुत्वम् शरोऽशरीति ष लोपे एकषः । १विषयादिषु इच्छाशून्ये "व्यासादीनां निस्पृहाणां पारार्थ्यमिह दृश्यते" "निस्पृहः सर्व-कामेभ्यो युक्तइत्युच्यते तदा" गीता । २अग्निशिखा-वृक्षे स्त्री शब्दर॰। अव्ययी॰ ३स्पृहाया अभावे अव्य॰। विसर्गलोपे न षः ।

**निस्यन्द** पु॰ नि+स्यन्द–घञ् वा षत्वम् । १स्पन्दने ईषत्क्ष-रणे । कर्त्तरि अच् । २स्रुते त्रि॰ । "शशाङ्ककिरणा-हतचन्द्रकान्ते निस्यन्दनीरनिकरेण कृताभिषेका" माघः "मदङ्कनिस्यन्दजलेन लोचने" रघुः ।

**निस्र(स्रा)व** पु॰नि+स्रु–अप्, संज्ञायां घञ् वा । १भक्त-मण्डे (माड) अमरः । भावे अप् घञ् वा । २अप-सरणे च ।

**निस्स्व** त्रि॰ निर्गतं स्वमस्य प्रा॰ब॰ । दरिद्रे पक्षे विसर्गः ।

**नि(स्व)स्वान** पु॰ नि+स्वन–अप् घञ् वा । शब्दे अमरः । "पुष्पत्रयी मङ्गलतूर्यनिस्वनाः" रघुः "वायुं कलाय वाजाभ्यां पृष्ठे वैवस्वतं यमम् । विद्युत् कलाय निस्वानं मेरुं कलाय वै ध्वजम्" मा॰पु॰ २०२अ॰ । आर्षे विद्युत्मित्यत्र अमो लोपः ।

**निस्सीम** त्रि॰ निष्क्रान्ता सीमा यस्मात् प्रा॰ब॰ विसर्गस्य वा सः । अवधिशून्ये अपर्यन्ते "निः(स)सीमानन्दवाधी-दुपनिषदुपमा तत्परीभूय भूयः" नैष॰ ।

**निह** त्रि॰ निहन्ति नि+हन–ड । निहन्तरि "अति निहो अति स्निधः" यजु॰ २७।६

**निहनन** न॰ नि+हन–ल्युट् । १वधे अमरः । उदात्तस्व-रेणानुदात्तादेरनुच्चारणरूपे निघाते च । निघातशब्दे दृश्यम् ।

**निहन्तृ** त्रि॰ नि+हन–तृच् । १नाशकर्त्तरि "निहन्ता वैर-काराणाम्" भट्टिः स्त्रियां ङीप् । २महादेवे पु॰ "भग-हारी निहन्ता च कालो ब्रह्मा पितामहः" भा॰अनु॰ १७अ॰ "अनुमन्ता विशसिता निहन्ता क्रयविक्रयी" मनुः एकपदे अन्यस्वरोच्चारणाप्रयोजके निघातकर्त्तरि ३उदात्ते स्वरभेदे च अतएव "निहन्त्यरीनेकपदे य उदात्तः स्वरानिव" माघे उदात्तस्वरस्य एकपदे अन्य-स्वराणां निहन्तृत्वक्षोपमानविधयोक्तम् "अनुदात्तं पद-मेकवर्जमिति" पा॰ परिभाषाबलेन तस्य तथात्वम् निघातशब्दे दृश्यम् ।

**निह्नव** पु० नि+ह्वे–अप् "ह्वः संप्रसारणञ्च" पा० सम्प्रसार णम् याऽधादि पा०सू० अस्य अन्तोदात्तता । आह्वाने "आदित्य अकारः निह्नव एकारः" छा०उ० "निह्नव इत्या ह्वानमेकारः स्तोभः । एह्नीति चाह्वयन्तीति तत्सामा न्यात्" भा० । "इन्द्र ! नेदीय एदिहीन्द्रो निह्नवः प्रयासः" आश्व०श्रौ० ५।१४।५

**निह्नाका** स्त्री नियतं जहाति भुवं हा–कन् ह्रस्वः । गो धिकायाम् अमरः "शाकं मत्स्य निहाकया" ऋ०१०।८७ ११ "नीहाराय स्वाहा निहाकायै स्वाहा" तैत्ति० सू० ५।५।११।१

**नि(नी)हार** न० निह्रियते नि+हृ–कर्मणि घञ् वा दीर्घः । ह्रस्वमध्यः । १हिमे शब्दरत्ना० । दीर्घमध्यः । तत्रार्थे अमरः २कुज्झटिकायां कुल्लू० "नीहारे बाणशब्दे च सन्ध्ययोरेव चोभयोः" मनुः । "नीहारः कुज्झटिका" कुल्लूकः स च घनीभूतं शिशिरं (वरफ) इति ख्यातं कुज्झटिका च "नीहारमग्नो दिनपूर्वभागः" रघुः "एवं तयोस्तो मनवाणीहारमभवत् प्रभुः" भा० आ० ६०अ० । अनूसगत्वयोक्तः पराशरः कुज्झटिकारूपं नीहारं सृष्टवानिति प्रसिद्धम् ।

**निर्हिंसन** न० नि+हिन्स–भावे ल्युट् । मारणे अमरः ।

**निहित** त्रि० नि+धा–क्त हिरादेशः । १आहिते २स्थापिते ३निक्षिप्ते च "धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः" भा०व० ३१२अ० ।

**निहीन** त्रि० नितरां हीनः प्रा०स० । १नीचे २पामरे अमरः । "निहीनैः परिक्लिश्यन्तीं समुपेक्षन्ति मां क थम्" भा०व०१२अ० । समुपेक्षन्तीत्यत्र आर्षः पदव्यत्ययः ।

**निह्नव** पु० नि+ह्नु–अप् । १शाठ्ये अन्यथा स्थितस्य वस्तुनो ऽन्यथात्वेन २कथने अपलापे । "निह्नवे साक्षिभावि तम्" मनुः "निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम्" याज्ञ० नि+ह्नु–क्तिन् । निह्नुतिरप्यत्र स्त्री अमरः ।

**नी** त्रि० नयति नी+कर्त्तरि–क्विप् । प्रापके । स्त्रौ न्याम्

**नीक** पु० नी–कक् । वृक्षभेदे [२अवहेलने शब्दार्थचि० ।

**नी(नि)कार** पु० नि+कृ–भावे घञ् वा दीर्घः । १न्यक्कारे

**नीकाश** पु०नि+काश–घञ् । उत्तरपदस्थः १उपमाने अमरः अस्य निभादित्वेन नित्यसमास एव पृथक्प्रयोगाभा वात् । २निश्चये पु० मेदि० "आकाशनीकाशतटां तीरवा नीरसङ्कुलाम्" भा०व० १८२अ० ।

**नीकुलक** पु० प्रवरभेदे हेमा०व्र० प्रवरोक्तौ दृश्यम् ।

**नीक्षण** न० नीक्ष्यतेऽनेन नि+ईक्ष–करणे ल्युट् । पाकादि परीक्षासाधने काष्ठभेदे "यन्नीक्षणं मांसपचन्याः" ऋ० १।१६२।१३ "नीक्षणं पाकपरीक्षासाधनं काष्ठम्" भा० ।

**नीच** त्रि० निकृष्टामीं शोभां चिनोति चि–ड । जातिगुण कर्मादिभिः निकृष्टे १अधमे अमरः । २वामने खर्वे च अमरः । ३चोरनामगन्धद्रव्ये पु० राजनि० । ४निम्ने च । नीचत्वकृद्दोषो यथा "न प्राप्नोति सुखं किञ्चिन्नीच त्वाज्ज्ञानहानिच । एतस्मात् महादेवो नान्यो भयविमु क्तिः । प्रविश्य नियतं नीचः स्तोत्रनादिकमिच्छति । स्वयं नेतुं न शक्नोति तदा नाशयति ध्रुवम् । स्थिते गुणेऽपि नीचस्य यत्नाहोषं प्रपद्यते । किञ्चित् सत्कुमा र्गाद्यं तद्दत्तं स्यात् सनातनम् । यथा श्रुत्वा गुणं नीचः चोदयत्यपि वस्तुवत् । ततः समयमासाद्य प्रकाशयति तद्ध्वम् । मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् । मनस्यन्यद्वचस्यन्यत् कर्मण्यन्यत् दुरात्मनाम्" पाद्मे क्रिया योगसारे ६अ० । "बुद्धिश्च हीयते पुंसां नीचैः सह स मागमात् । मध्यमे मध्यतां याति श्रेष्ठतां याति वि शिष्टे" भा० आ० । "प्रायो नीचानपि मेदिनीभृतः" माघः । "नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि" मनुः । ग्रहभेदानाम् उच्चशब्ददर्शितोच्चस्थानात् सप्त मस्थाने तत्र रव्यादीनां यद्यह भवति तत् नीचस्थान शब्दे दृश्यम् । स्वार्थे क । नीचक तत्रार्थे

**नीचकदम्ब** पु० नीचः कदम्बो यस्मात् ५त० । मुण्डीरे नैघण्टुप्रकाशिका ।

**नीचका** स्त्री निकृष्टामीं शोभां चकते प्रतिहन्ति चक– प्रतिघाते अच् । उत्तमायां गवि भरतः ।

**नीचकिन्** त्रि० निकृष्टामीं शोभां चकते चक–प्रतिघाते बा० इनि । उच्चे हेमा० ।

**नीचकैस्** अव्य० नीचैस् अव्ययस्य चैः पूर्वमकच् । नीचैरित्यर्थे

**नीचग** त्रि० नीचं निम्नं गच्छति गम–ड । १निम्नगामिनि २जले च । ३नीचवर्णगामिन्यां स्त्रियां स्त्री "नीचगासङ्गमां प्राप्य चन्द्रैनर्मस्तकं लिखेत्" तन्त्रम् । ४स्वस्थोच्चस्थानात् सप्तमं स्थानं नीचं तत्स्थानस्थिते ग्रहे "तत्सप्तमं भवेन्नीचम्" ज्यो०त० । "सुनीचगेऽस्तमेऽपि वा दशाफलं प्रकीर्त्तितम्" नील०ता० । उच्चशब्दे दृश्यम् । ५निम्न गायां नद्यां स्त्री "बहुमर्यादि विद्येव नीचगाऽपि नरं वरिष्ठ । वस्तुदर्शिव दुष्कर्मं रूपं भाग्यं यतः पृथक्" मिता० ।

**नीचग्रह** न॰ रव्यादीनां स्वोच्चस्थानात् सप्तमे राशौ यथा रवेस्तुला, चन्द्रस्य वृषः, कुजस्य कर्कः। बुधस्य मीनो गुरोर्मकरः शुक्रस्य कन्या शनेर्मेषः। "स्वोच्चात्तु शामितमृक्षमिति नीचम् यवनेश्वरोक्तैः। उच्चशब्दे दृश्यम्

**नीचभोज्य** पु॰ नीचैर्भोज्यः। १पलाण्डौ शब्दच॰। २नीच-भोज्यमात्रे त्रि॰।

**नीचयोनिन्** त्रि॰ नीचा योनिरस्यास्य ब्रीह्या॰ इनि। नीचजातिमति। "एतत् ब्रह्मयुगे हत्तं सर्वेषामेव भारत!। प्राणिनां धर्मबुद्धीनामपि चेन्नीचयोनिनाम्" हरिवं॰ १६८अ॰। इन्यभावे ब॰ब॰। नीचयोनिरप्यत्र।

**नीचवज्र** पु॰न॰ नीचप्रियं वज्रम्। वैक्रान्तमणौ राजनि॰।

**नीचा** अव्य॰ निम्नत्वार्थे चोचं चिनोति वा॰ डा। १नीचैरित्यर्थे २नीचे च "नीचा वलसुदनयः" ऋ॰ २।१२।१२ "नीचा नीचम्" भा॰ "नीचा वर्त्तन्त उपरि" ऋ॰१०।३४।९

**नीचात्** अव्य॰ निम्नत्वार्थे चिनोति वा॰ डाति। नीचैरित्यर्थे "नीचादुच्चा चक्रथुः पातवे वा" ऋ॰ १।११६।२२

**नीचायक** त्रि॰ नितरां निश्चयेन वा चिनोति नि+चि-ण्वुल् श्रव्यत्वनिर्देशात् दीर्घः। नितान्तचायके। ततः उत्करा॰ चातुरर्थ्यां छ। नीचायकीय तत्सम्बन्ध्यादौ

**नीचावया** त्रि॰ नीचा अनुभावमवयाति अव+या-क्विप्। न्यग्भावप्राप्ते "नीचावया अभवत् वृत्रपुत्रेन्द्रः" ऋ॰ १।३२।९ "नीचावयाः न्यग्भावं प्राप्तः पुत्रः" भा॰।

**नीचीन** त्रि॰ न्यचेर स्वार्थे ख अश्रुतेर्नलोपाल्लोपे पूर्वाणो दीर्घः। न्यग्भूते अधोमुखे "नीचीनाः स्थुरुपरि बुध्नः" ऋ॰ १।२४।७ "नीचीनवारं वरुणः कवन्धम्" ऋ॰५।८५।३ "नीचीनवारमधोमुखबिलम्" भा॰।

**नीचैर्गति** स्त्री कर्म॰। १मन्दगमने २निम्नगमने च।

**नीचैस्** अव्य॰ नि+चि-"नौ दीर्घश्च" डैसि दीर्घश्च। १नीचे २स्वरे ३अल्पे ४अनुच्चे च अमरः "नीचैर्गच्छत्युपरि च दशा चक्रनेमिः क्रमेण" मेघ॰। तथापि नीचैर्विनयाददृश्यत" "प्रविश्य चैनं पुरमग्रयायी नीचैस्तथोपचरदर्पितश्रीः" रघुः। ततः अद्रव्ये उत्कर्षे तरप् तमप् च आमु। नीचैस्तराम्(माम्)वा। द्रव्ये तु नीचैस्तरस्तमः। [दीर्घश्च। निम्नभवे न्यग्भूतभवे।

**नीच्य** त्रि॰ नीचि भवः न्यच्-यत् नलोपाल्लोपौ पूर्वाणो

**नीड** पु॰न॰ नितरामिलन्ति खगा अत्र नि+इल-क डस्य लः। खगानां १वासस्थाने (वासा) अमरः २स्थाने च "वितर्दिनिर्यूहविटङ्कनीडः" माघः "नीडारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः" मेघ॰। नितरामीड्यते नि+ईड-कर्मणि घञ्। ३रथावयवभेदे "प्रदक्षिणं रथनीडं परिहारः" कात्या॰ श्रौ॰ १८।५।१८ "भग्नचक्राक्षनीडाश्च निपातितमहाध्वजाः" भा॰भी॰ ७१अ॰। स्वार्थे क। तत्रार्थे "कुर्वाणो नीडकं तत्र जटासु इव तन्तुभिः" भा॰शा॰ २६२अ॰।

**नीडक** पुंस्त्री नीडे कायति प्रकाशते कै-क ७त॰। खगे शब्दार्थचि॰। स्त्रियां जातित्वात् ङीष्।

**नीडज** पुंस्त्री नीडे जायते जन-ड ७त॰। खगे हेमच॰। स्त्रियां जातित्वात् ङीष्।

**नीडि** पु॰ नितान्तमिलन्त्यत्र नि+इल-घञर्थे इन् डस्य लः। निवासे आवासस्थाने "स्योनास्ते सदनस्य नीडयः" ऋ॰ १०।८२।६

**नीडोद्भव** पुंस्त्री नीडे उद्भवति उद्+भू-अच्, उद्भवत्यस्मात् उद्-भू-अपादाने अप् नीड उद्भवो यस्य वा। खगे अमरः स्त्रियां जातित्वात् ङीष्।

**नीत** त्रि॰ नी-कर्मणि क्त। १प्रापिते २यापिते ३स्वीकृते च "नीतं जन्म नवीननीरजवने पीतं मधु स्वेच्छया" अमरा॰ "नीते चलामिन्दुचिते शरीरवद्वनजान्तकेवालकदम्बकर्मका" माघः।

**नीति** स्त्री नीयते उन्नीयन्तेऽर्था अनया वा नी-क्तिन्। १शुक्रादुक्तराजविद्यायां कार्याकार्ययोरमेदस्य २नयस्य च। भावे क्तिन्। ३प्रापणे ४स्वे च मेदिनि॰ ५तदधिष्ठातृदेवीभेदे "सिद्धाश्च देव्याः प्रवराः स्तुतः कीर्त्तिर्द्युतिरेव च। क्षमा धृतिः क्षमा भूतिर्नीतिर्विद्या दया मतिः" हरिवं॰२५६अ॰। "नीतिरापदि यद्गम्यः परस्तन्मानिनो ह्रिये" माघः नीतिश्च कामन्दकीयनामकादौ दृश्या।

"नीतिस्ते पुष्करोक्ता तु रामोक्ता लक्ष्मणाय या। अथाहं तां प्रवक्ष्यामि शृणु धर्मादिवर्द्धनीम्। न्यायेनार्जनमर्थस्य वर्द्धनं रक्षणं चरेत्। सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम्। नयस्य विनयो मूलं विनयः शास्त्रनिश्चयात्। विनयो हीन्द्रियजयस्तैर्युक्तः पालनेन्महीम्। शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्यं धारयिष्णुता। उत्साहो वाग्मितौदार्यमापत्कालसहिष्णुता। प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता। कुलं शीलं दमश्चेति गुणाः सम्पत्तिहेतवः। प्रकीर्णविषयारण्ये धावन्तं विप्रमाथिनम्। ज्ञानाङ्कुशेन कुर्वीत

षणामिन्द्रियदन्तिनम्। कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा। षड्वर्गमुत्सृजेदेनमस्मिंस्त्यक्ते सुखी नृपः। आन्वीक्षिकीं त्रयीं वार्त्तां दण्डनीतिं च पार्थिवः। तद्विद्यैस्तत्क्रियोपेतैश्चिन्तयेद्विनयान्वितः। आन्वीक्षिक्यार्थविज्ञानं धर्माधर्मौ च त्रयीस्थितौ। अर्थानर्थौ तु वार्त्तायां दण्डनीत्यां नयानयौ। अहिंसा सूनृता वाणी सत्यं शौचं दया क्षमा। वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते। प्रजाः समनुगृह्णीयात् कुर्य्यादाचारसंस्थितिम्। वाक् सूनृता दया दानं हीनोपगतरक्षणम्। इति वृत्तं सतां साधु हितं सत्पुरुषव्रतम्। आधिव्याधिपरीताय अद्य श्वो वा विनाशिने। को हि राजा शरीराय धर्मापेतं समाचरेत्। न हि स्वसुखमन्विच्छन् पीडयेत् कृपणं जनम्। कृपणः पीड्यमानो हि मन्युना हन्ति पार्थिवम्। क्रियतेऽभ्यर्हणीयाय स्वजनाय यथाञ्जलिः। ततः साधुतरः कार्य्यो दुर्जनाय शिवार्थिना। प्रियमेवाभिधातव्यं सत्सु नित्यं द्विषत्सु च। देवास्ते प्रियवक्तारः पशवः क्रूरवादिनः। शुचिरास्तिक्यपूतात्मा पूजयेद्देवताः सदा। देवतावद्गुरुजनमात्मवच्च सुहृज्जनम्। प्रणिपातेन हि गुरुं सतोऽनूचानचेष्टितैः। कुर्वीताभिमुखान् भृत्यैर्देवान् सुकृतकर्मणा। सद्भावेन हरेन्मित्रं सम्भ्रमेण च बान्धवान्। स्त्रीभृत्यान् प्रेमदानाभ्यां दाक्षिण्येनेतरं जनम्। अनिन्दा परकृत्येषु स्वधर्मपरिपालनम्। कृपणेषु दयालुत्वं सर्वत्र मधुरा गिरः। प्राणैरप्युपकारित्वं मित्रायाव्यभिचारिणे। गृहागते परिष्वङ्गः शक्त्या दानं सहिष्णुता। स्वसमृद्धिष्वनुत्सेकः परवृद्धिष्वमत्सरः। परोपतापि वचनं मौनव्रतचरिष्णुता। बन्धुभिर्बद्धसंयोगः स्वजने चतुरस्रता। उचितानुविधायित्वमिति वृत्तं महात्मनाम्" अग्निपु० २२७अ०।

**नीतिघोष** पु० नीत्यात्मकः घोषो यस्य। बृहस्पतिरथे त्रिका०

**नीतिज्ञ** त्रि० नीतिं जानाति ज्ञा—क। नीतिवेदिनि विदर्थिनि। नीतिवेदिन् तत्रार्थे "त्रिवर्गो नीतिवेदिनाम्"

**नीतिमत्** त्रि० प्राशस्त्येन नीतिर्विद्यतेऽस्य मतुप्। प्रशस्तनीतियुक्ते "कदाचिदथ गाङ्गेयः सर्वनीतिमतां वरः" भा०आ० १७६अ०। स्त्रियां ङीप्।

**नीतिशास्त्र** न० शिष्यतेऽनेन शास—ष्ट्रन् ६त०। नीतिज्ञापके औशनसबृहस्पतिकामन्दकपञ्चतन्त्रनीतिसारनीतिमालानीतिमयूखहितोपदेशचाणक्यसारसंग्रहाद्यात्मकशास्त्रे "भार्गवो नीतिशास्त्रं तु जगाद जगतोहितम्" भा० शा०२१०अ०।

**नीथ** त्रि०नी—क्थन्। १नेतरि प्रापके। करणे क्थन्। २स्तोत्रे ३नयनहेतौ च पु० "प्रति यत् स्या नीथादर्शि" ऋ०१।१०४।५ "नीथा नयनहेतुभूता" भा०। भावे क्थन्। ४प्रापणे पु० "सहस्रचेताः शतनीथ ऋभुः" ऋ १।१००। १२ "शतनीथः बहुस्तुतिः बाहुप्रापणो वा" भा० "नीथाविदो जरितारः" ऋ० ३।१२।५ "नीथाविदः स्तोत्राभिज्ञाः" भा०।

**नीध्र(व्र)** न० नितरां ध्रि(व्रि)यते धृ—वृ—वा मूलवि० क दीर्घः। १वलीके पटलप्रान्ते २वने ३नेमौ ४चन्द्रे ५रेवतीनक्षत्रे हेमच०। नीव्रमिति पाठान्तरं तत्रार्थे "गृहाणि नीध्रैरिव यत्र रेजुः" माघः।

**नीनाह** पु० नि+नह—भावे घञ् दीर्घः। निबन्धे नितरां बन्धने "अप्राय इव कक्ष्यामश्व इव नीनाहम्" अथ०।१८। ५७।४

**नीप** पु० नी—प किच्च। १कदम्बवृक्षे अमरः २धाराकदम्बे राजनि०। ३बन्धूकवृक्षे ४नीलाशोकवृक्षे च मेदि० "नवनीपवनीभुवनः पवनः" सा०द० टीका। "तस्य नीपरजसाङ्कुराणिव:" रघुः। ५देशभेदे स च देशः वृह०सं० १४अ० कूर्मविभागे मध्यदेशतयोक्तः यथा "भद्रारिमेदमाण्डव्यसाल्वनीपोज्जिहानसंख्याताः" इत्युपक्रमे "गजाह्वयाचेति मध्यमिदम्"इत्युक्तम्। जनपदवाचित्वात् अभिजने राजनि० च अण्। नैप तद्देशवासिनि तन्नृपे च बहुषु अणो लुक्। "शतं मत्स्या नृपतयः शतं नीपाः शतं हयान्" भा०स० ८अ०। निपतिता नीचैः पतिता आपो यत्र अच्समा० व्युपसर्गात्परस्याप आदेरत ईत्त्वम्। ६गिर्य्यधोभागे पु०तत्र भवः यत्। नीप्य तत्र भवे त्रि० रुद्रभेदे पु० "नमः काट्याय च नीप्याय च" यजु०१६। ३७। "नीपो गिर्य्यधोभागस्तत्र भवः" वेददी०।

**नीर** न० नी—रक् निर्गतं रादग्नेः निरा०त०। निर्गतो रोऽग्निर्यस्मात् प्रा०ब० वा। १जले अमरः। "आपोमयः प्राणः" छा०उ० उक्तेः जलस्य प्राणाग्निहेतुत्वात् "अग्नेरापः" श्रुत्या तस्य अग्नेर्जातत्वात् "अद्भ्योऽग्निः ब्रह्मणः क्षत्रमिति" श्रुतेश्च वज्राद्यग्नेर्जलजातत्वेन च तस्य तथात्वम्। "निषण्णनीरनिकरेण कृताभिषेका" माघः। तद्गुणादि अम्बुशब्दे उक्तं दृश्यम्। पूर्वमनुक्तत्वात् अस्मिति कश्चिद्विशेषोऽत्रोच्यते

बृहस्पतिः "भूमिस्थमुदकं मेध्यं यत्र गोर्वितृषीभवेत् । अव्याप्तं चेदमध्येन तद्देव शिलागतम् ॥ शिलागतमिति शिला नीहारस्तद्गतमित्यर्थः । उशनाः "नद्यः कूपं तड़ागानि सरांसि सरितस्तथा । असंस्पृष्टान्यदोषाणि मनुः स्वायम्भुवोऽब्रवीत्" । देवलः "अपि गन्धरसोपेता निर्मलाः पृथिवीगताः । अक्षोभ्याश्चैव सोपानादापः शुद्धिकराः स्मृताः । उद्धृतास्तु प्रशस्ताः स्युः शुद्धैः पात्रैर्यथाविधि । एकरात्रोषितास्तास्तु त्यजेदपः समुद्धृताः" इति । सर्वत्रात्र प्रक्षाल्य गोतृप्तिमात्रपर्य्याप्ता अल्पा भवेत्यर्थात् पराशरग्रन्थे अतो बहुकालात् तड़ागादेरुद्धृतानां रात्र्युषितानां च न दोषः । तड़ागोद्धृता अप्यापः रात्र्युषितोदकान्तराभावे अशुद्धा भवेति मदनपारिजाते । इदं गङ्गाव्यतिरिक्तविषयम् "त्यजेत् पर्युषितं पुष्पं त्यजेत् पर्युषितं जलम् । गङ्गातोयं च तुलसी पवित्रं सर्वदा स्मृतम्" इति विशेषोक्तेः । "अक्षोभ्याणि तड़ागानि नदी वापीसरांसि च । चण्डालाद्यशुचिस्पर्शैस्तीर्थं तत् परिवर्जयेत्" । चण्डालाद्यवतरणमार्गमित्यर्थः । हारीतः "वापीकूपतड़ागेषु मानुषो म्रियते यदि । अस्थिचर्मविनिर्मुक्तैर्दूषितं च खरादिभिः । उद्धृत्य तज्जलं सर्वं शोधनं परिकल्पयेत्" । "अस्थिचर्मविनिर्मुक्तैश्चिरकालवासेन विशीर्णैरित्यर्थः । बृहस्पतिः "हतपञ्चनखात् कूपादत्यन्तोपहतात्तथा । अपः समुद्धरेत् सर्वाः शेषं वस्त्रेण शोधयेत् । वह्निप्रज्वालितं कृत्वा कूपे पक्वेष्टकाचिते । पञ्चगव्यं न्यसेत् पश्चान्नवतोये समुद्भवे" । देवलः "उद्धरेदुदकं सर्वं पञ्चपिण्डान् मृदस्तथा" । अचिरकालोपघाते स्वल्पघाते च हारीतः "घटानां शतमुद्धृत्य पञ्चगव्यं क्षिपेत्ततः । श्वभिश्च काकचाण्डालैर्दूषितेषु विशोधनम्" । आपस्तम्बः "उपानत्स्नेहविण्मूत्रं स्त्रीरजो मद्यमेव च । एभिर्विदूषिते कूपे कुम्भानां षष्टिमुद्धरेत्" । विष्णुः "जलाशयेष्वथाल्पेषु स्थावरेषु महीतले । कूपवत् कथिता शुद्धिर्महत्सु न तु दूषणमिति" । स्थावरेषु महीतलेऽप्रवाहिषु । यमः "चाण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् । गोमूत्रयावकाहारस्त्रिरात्रेणैव शुध्यति" । तथा 'नदीवेगेन शुध्यति' कश्यपः "दृतीनां रञ्जनं शुद्धिः" । दृतिः चर्मकोषः रञ्जनं कषायद्रव्येण शोधनम् । यमः "प्रपास्वरण्येष्वथ वाप्यकूपे द्रोण्यां जलं कोषगता तथापः । ऋतेऽपि शूद्रं द्विजपेयमाहुरापद्गतः काङ्क्षितवत् पिबेत्" । अस्यार्थः यद्यपि शूद्रातिरिक्तविप्रादिवर्णसम्बन्धि प्रपादि तथापि तद्गतजलं धर्मार्थं दीयमानमनापदि न पेयम् । आपदि पेयं यद्यरण्यगतं प्रपादिर्भवति । द्रोणिः अश्वादिपयो जलपात्री सर्वसाधारणी । कोषो दृतिः तथा "अजागावो महिष्यश्च ब्राह्मणी च प्रसूतिका । दशरात्रेण शुद्ध्यन्ति भूमिस्थं च नवोदकम्" । योगीश्वरः "शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम्" । प्रकृतिस्थं रूपरसगन्धस्पर्शान्तरमनापन्नं महीगतमित्यशुचित्वनिवृत्त्यर्थं न तु अन्तरिक्षोदकस्य शुद्धत्वव्यावृत्त्यर्थं नाप्युद्धृतस्य । "उद्धृताश्चेति" प्रागुक्तदेवलवचनादिति विज्ञानेश्वरः । हेमाद्रौ पराशरः "वापीकूपतड़ागेभ्य आपो ग्राह्यास्तु सर्वतः । पश्चात्पञ्चोदमेध्यन्तु पञ्चगव्येन शुध्यति । अस्थिचर्मावसिक्तेन मार्जारैश्च समूषिकैः । दूषितं तद्भवेत्तोयं यथाधस्तात् सुशोधनम् । अस्थिचर्मावपतितं खरवानरसूकरैः । उद्धरेदुदकं सर्वं शोधनं परिमार्जनम्" । इदं चिरकालविषयमित्युक्तमेव । यमः "वापीकूपतड़ागेषु दूषितेषु कथञ्चन । उद्धृत्य शतकुम्भांश्च पञ्चगव्येन शुद्ध्यति । खनिकूपतड़ागेषु कन्दरेषु विशेषतः । अयोद्धृत्य पञ्चशतं पञ्चगव्येन शुद्ध्यति । पादुकोपानहं विण्मूत्रं कूपे यदि निमज्जति । षट्कुम्भान् समुद्धृत्य पञ्चगव्येन शुद्ध्यति" । मात्स्येऽपि "दूषितं च यदा श्वभिः क्लिन्नं यत्र विशानुवेशितम् । अद्भिः शुध्यति तत्सर्वमपां शुद्धिः कथं भवेत् । गवां मूत्रपुरीषेण शोधनञ्चाग्निरश्मिभिः । मारुतस्य च वेगेन त्वापः शुद्धिमवाप्नुयुरिति" स्मृत्यर्थसारेऽपि "वापीकूपतड़ागेष्वल्पजलेषु श्वमार्जारादिशवक्लिन्ने जीर्णरोधसि तज्जलं सर्वं निःसार्य्य मृत्तिकां परितस्योद्धृत्य पञ्चगव्यप्रोक्षणात् शुद्धिः । पाषाणैरिष्टकाभिर्वा बद्धे तत्तत्स्थाने दहनम् । यदा बद्धे प्रक्षालनमेव बहुजले तु तस्मिन् षष्टिकुम्भोद्धारः । मूषकादिक्षुद्रप्राणिघाते त्रिंशत्कुम्भोद्धारो गोमूत्रादिप्रक्षेपश्च । जले जलप्राणिशवोपघाते न दोषः । वापीकूपादिजले नरशवे स्थितेऽल्पोपघाते घटशतमुद्धृत्य पञ्चगव्यप्रक्षेपात् शुद्धिः । पशुशवपातेऽप्येवैव शुद्धिः कार्य्या । तत्र जलेन मरणे जलस्य त्रिरात्रमाशौचम् । अशौचान्ते पूर्वोक्ता शुद्धिः कार्य्या । वापीकूपजले उपानच्चर्मविण्मूत्ररक्तवसा[illegible]स्थि-

मांसदूषिते षट्कुम्भानुद्धृत्य पञ्चगव्येन शुद्धिः। जल आकुल्ये शतकुम्भोद्धारात् पञ्चगव्यप्रोक्षणाच्च शुद्धिः। कूपादिषु दूषितेषु दिवा सूर्य्यरश्मिवायुस्पर्शनात् शुद्धिः। रात्रौ वायुचन्द्रनक्षत्ररश्मिस्पर्शनात् शुद्धिः। सन्ध्यायां वायुस्पर्शनात् शुद्धिः। नद्यादौ चाण्डालादिभिर्दूषिते तत्स्थीकृतजलस्थानादन्यत्र जलं शुद्धमेवेति। एवं स्वबुद्ध्या शुद्धिर्विवेचनीया" विधा०पा०।

अथ प्रसङ्गादुपहतजलपाने प्रायश्चित्तमभिधीयते। तत्र विष्णुः "मृतपञ्चनखात् कूपादत्यन्तोपहताद्वोदकं पीत्वा ब्राह्मणस्त्र्यहमुपवसेद् द्व्यहं राजन्य एकाहं वैश्यः शूद्रो नक्तं सर्वे तेऽन्ते पञ्चगव्यं पिबेयुरिति"। अत्यन्तोपहतात् मूत्रपुरीषादिभिः। इदमकामविषयं कामतो मानुषशवोपहतकूपादिजलपाने हारीतः "क्लिन्नं भिन्नं शवं तोयं तत्रस्थं यदि तत् पिबेत्। शुद्ध्यै चान्द्रायणं कुर्य्यात्तप्तकृच्छ्रमथापि वा"। अशक्तौ तप्तकृच्छ्रमिति धर्मप्रदीपः। "यदि कश्चित्ततः स्नायात् प्रमादेन द्विजोत्तमः। जपंस्त्रिषवणस्नायी अहोरात्रेण शुद्ध्यति"। अकामतो देवलोक्तम् "क्लिन्नं भिन्नं शवं चैव कूपस्थं यदि दृश्यते। पयः पिबेत् त्रिरात्रेण मानुषे द्विगुणं स्मृतम्"। अङ्गिराः "कूपे विण्मूत्रसंसृष्टे पीत्वा तोये द्विजोत्तमः। त्रिरात्रेण विशुध्येत कृच्छ्रं सान्तपनं स्मृतम्"। स्नाने तु वृद्धविष्णुः "अपो मूत्रपुरीषाद्यैर्दूषिताः प्राशयेद्यदा। तदा सान्तपनं कृच्छ्रं व्रतं कार्य्यं विशुद्धये"। चाण्डालकूपादिजलपाने आपस्तम्बः "चाण्डालकूपभाण्डस्थं नरः कामात् जलं पिबेत्। प्रायश्चित्तं कथं तत्र वर्णे वर्णे विनिर्द्दिशेत्। चरेत् सान्तपनं विप्रः प्राजापत्यं तु भूमिपः। तदर्द्धं तु चरेत् वैश्यः शूद्रे पादं विनिर्द्दिशेत्। तथा "म्लेच्छादीनां जलं पीत्वा पुष्करिण्यां ह्रदेऽपि वा। जानुदघ्नं शुचि ज्ञेयमधस्तादशुचि स्मृतम्। तत्तोयं यः पिबेद् विप्रः कामतोऽकामतोऽपि वा। अकामान्नक्तभोजी स्यादहोरात्रं तु कामतः"। अत्र व्याख्याने प्राजापत्यम् "अन्त्यजैः खानिताः कूपाः तडागं वाप्य एव वा। तेषु स्नात्वा च पीत्वा च प्राजापत्येन शुद्ध्यति" इत्यापस्तम्बस्मरणात्। इदमनापद्विषयम्। यत्तु "अन्त्यजैः खानिताः कूपा तडागादि तथैव च। तेषु स्नात्वा च पीत्वा च पञ्चगव्येन शुद्ध्यति"। तदप्रज्ञानपाने वा आपदि तु शातातपः "अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके कृते। तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते"। इदमत्यन्तापद्विषयमिति शूलपाणिः। "ब्राह्मणक्षत्रियो वैश्यः शूद्रश्चैवान्यजातयः। एभिर्यत्कारिताः कूपाः स्नानं तेषु तु कारयेत्"। अन्यजातयो मूर्द्धावसिक्ताद्या अनुलोमाः। अन्यखानितचण्डालपरिगृहीतकूपादिजलपानेऽङ्गिराः "चाण्डालपरिगृहीतं योऽज्ञानादुदकं पिबेत्। तस्य शुद्धिं विजानीयात् प्राजापत्येन नित्यशः"। एतद्व्याख्याने व्यासापस्तम्बेन पञ्चगव्यप्रशमनमात्रमुक्तम् "प्रपास्वरण्ये घटके च तीरे द्रोण्यां जलं कोषविनिःसृतं च। श्वपाकचाण्डालपरिग्रहेषु पीत्वा जलं पञ्चगव्येन शुद्ध्येदिति" तदज्ञातविषयमापद्विषयं वा" विधा०पा०।

अथ प्रसङ्गात्तडागादिविक्रयप्रायश्चित्तम्। तत्र "देवस्वप्रतिमायोद्यानारामसभाप्रपातडागपुण्यसेतुसुतविक्रयं कृत्वा तप्तकृच्छ्रं समाचरेदिति" शङ्खवचनमकामतद्विषयम्। यत्तु पैठिनस्युक्तम् "आरामतडागोद्यानपुष्करिणीसुते विक्रीते त्रिषवणस्नाय्यधःशायी चतुर्थकालमश्नीयात्" तदप्युत्कृष्टविषयम् उत्कृष्टस्य तु सर्वस्वोद्देशेन त्यक्तत्वात् तत्साधारण्येन स्नानाभावादिक्रियासम्भवात्। सर्वानुमतेश्च कर्त्तुमशक्यत्वात् साधारणस्वामिकवस्तुन इवेति दिक्" विधा०पा०।

"तिलकल्कं जलं क्षीरं दधि क्षौद्रं घृतानि च। न त्यजेदर्द्धजग्धानि" विधा०पा० स्मृतवाक्यम्।

वर्ज्यजलमुक्तं हेमाद्रौ ब्रह्माण्डे "दुर्गन्धि फेनिलं क्षारं पङ्किलं पल्वलोदकम्। न लभेद् यत्र गोतृप्तिर्नक्तं यच्चाप्युपाहृतम्। यच्च सर्वार्थमुत्सृष्टं यच्चाभोज्यनिपानजम्। तद्वर्ज्यं सलिलं तात! सदैव श्राद्धकर्म्मणि। निपानं जलाशयः। शुद्धितत्त्वे शङ्खः "स्नानमाचमनं दानं देवतापितृतर्पणम्। शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः" हेमाद्रावादित्यपुराणे "चिरं पर्य्युषितं वापि शूद्रस्य दम्यथापि वा। आकृष्टाः स्नानदानादौ पुनात्येव सदा पयः"। कात्यायनः "अपो निशि न गृह्णीयाच्च पिबेच्च कदाचन। उद्धृत्याग्निसुपर्य्यन्ते धौम्यो धान्य इतीरयेत्"। रजोदोषे तु प्रागुक्तम् नारदीये "त्यजेत् पर्य्युषितं पुष्पं त्यजेत् पर्य्युषितं जलम्। न त्यजेत् जाह्नवीतोयं तुलसी बिल्वपङ्कजम्" नि०सि०।

"पानीयं पायसं सर्पिर्दधि क्षीरं घृतानि च। निरस्य श्रेयमेतेषां न प्रदेयन्तु कस्यचित्" आह्नि०त० महाभारतम्। जलपानप्रकारः विधानपारिजाते उक्तो यथा

"जलपानं तु निःश्विस्य भविष्यत्वे च दक्षिणे। विप्रो भोजनकाले तु पिबेद्वामेन पाणिना" अन्यकाले तु "धारया नोदकं पेयं पीत्वा दोषमवाप्नुयात्। जलपात्रेण तत् पेयमिति शातातपोऽब्रवीदिति"। आ०त० विशेष उक्तो यथा "करेण च पिबेत्तोयं यावन्मांसं न लेपयेत्। मांसलिप्तकरे तोयं सद्यो गोमांसभक्षणम्" अज्ञात्वे मांसलिप्तकरेण जलपाननिषेधयात् मांसलिप्तकरेण अपोयानं न कर्त्तव्यम्" रघु० षट्‌त्रिंशन्मतम् "पिबतो यत् पतेत् तोयं भोजने मुखनिःसृतम्। अभक्ष्यं तत् भवेदन्नं भुक्त्वा चान्द्रायणं चरेत्। वामपार्श्वे स्थिते तोये यो भुङ्क्ते ज्ञानदुर्बलः। तोयं पिबति यज्ञेन चासौ भवति नान्यथा। पात्रे पात्रे मलं भुक्त्वा पानीयं रुधिरं पिबेत्। विद्यमाने तु हस्ते तु ब्राह्मणो ज्ञानदुर्बलः। उद्धृत्य वामहस्तेन यत्तोयं पिबति द्विजः। सुरापानेन तुल्यं तदित्युवाच प्रजापतिः"। "वामहस्तेन केवलवामहस्तेनेति" रघु०। "अङ्गुष्ठ मलतावारेति" तु मुखार्थं न तु पेयतार्थम् "अभिषुषुः सरसो मधुसम्भृतां कमलिनीमलिनीरपतत्रिणः" माघः

**नीरज** न० नीरे जायते जन—ड। १पद्मे २कुष्ठौषधौ मेदि०। ३उत्पलफले राजनि०। ४उद्राख्ये जन्तौ(उद्विडाल) पुंस्त्री स्त्रियां जातित्वात् ङीष्। ५उशीरेऽपि च राजनि०। ६जलजातमात्रे त्रि० "नीतं जन्म नवीननीरजसमे पीतं मधु स्वेच्छया" अमराष्टकम् निर्गतं रजात् प्रा०ब० रलोपदीर्घौ "सर्वे बालाः अदन्ताश्च" इत्युक्तेः रजःशब्दोऽपि रजःसमानार्थकः। ७रजोगुणकार्यरागशून्ये महादेवे पु०। "उच्छित् विविक्तो वैद्यो विरजो नीरजोऽमरः" भा०अ०१७अ०।

**नीरजस्** त्रि० निर्गतं रजो धूलिः परागः स्त्रीरजः रजोगुणो वा यस्य प्रा०ब० वा कप् रलोपे दीर्घः। १निर्धूलिदेशे "नीरजीकारितक्ष्माम्" भट्टिः अभूततद्भावे च्वौ सलोपः। "स्रोत्तरीयैरकुर्वन्नीरजस्कं महीतलम्" ८अ०। २परागशून्ये ३पुष्पादौ रजोगुणकार्यरागादिशून्ये "नीरजस्तमसा सत्त्वयुक्तिनिस्पृहतागयः" याज्ञ० "नीरजस्को सदानन्दे पदे चाहं निवेशितः" प्रबोध०। "वेदवैवावतीर्णेन नीरजस्का महीकृता" मार्क०पु०१अ०। ४गतार्त्तवायां स्त्रियां स्त्री।

**नीरजात** त्रि०नीरात् जायते जन—ड ५त०। १जलजातमात्रे अब्जादौ "हरेरब्जं ततः प्रजाः" गीतायाम् "अन्नाऽन्नम्" इति श्रुतौ चान्नस्य जलाज्जातत्वात् तथात्वम्। "अन्नस्यापि प्रभवति पानीयात् कुरुसत्तम!। नीरजातेन (अन्नेन) रहितं न किञ्चित् सम्प्रवर्त्तते। नीरजातश्च भगवान् सोमो ग्रहगणेश्वरः। अमृतं च सुधा चैव सुधा चैवामृतं तथा। अन्नौषध्यो महाराज! वीरुधश्च जलोद्भवाः" भा० अनु० ६७अ०। २कमलादौ न०।

**नीरद** पु० नीरं ददाति—दा—क। १मेघे २मुस्तके च राजनि० "धूपायतीव पटलैर्नवनीरदानाम्" माघः "नवीननीरदश्यामं रामं राजीवलोचनम्" रामकवचम्। "आस्वाद्य निरवशेषं विरहिवधूनां मृदूनि मांसानि। करकानिभेन मन्ये निष्ठीवति नीरदोऽस्थीनीति" उद्भटः०।

**नीरधि** पु० नीराणि धीयन्तेऽत्र धा—कि उप०स०। समुद्रे अब्धि० नीरनिधिरप्यत्र। "पारे जलं नीरनिधेरपश्यत्" माघः।

**नीरन्ध्र** त्रि० निर्गतं रन्ध्रं छिद्रमस्य प्रा०ब० रलोपे दीर्घः। छिद्रशून्ये "नीरन्ध्रास्तनुमाशिलष्य जरठच्छेदा नवप्रत्ययः" मा०द० "नीरन्ध्रद्रुमशिशिरां भुवं व्रजन्ति" माघः

**नीरप्रिय** पु० नीरं प्रियमस्य प्रा०ब०। १जलवेतसे नैघण्टुप्रकाशिका। २जलप्रियमात्रे त्रि०।

**नीरस** पु० निःसार्यो रसो यस्य निर्गतो रसः शृङ्गारादिर्यस्मात् प्रा०ब० रलोपे दीर्घः। १दाडिमे हारा०। २शृङ्गारादिरसादिशून्ये त्रि०। "अलब्धफलनीरसं मम विधाय तस्मिन् जने समागममनोरथं भवतु पञ्चबाणः कृती" विक्रमोर्वशी। [हारा०।

**नीराज** पु०नीरमजति अज—अच् वभावः। जलबिडाले

**नीराजन(ना)** निर्—राज—भावे ल्युट् युच् वा रलोपे पूर्वस्य दीर्घः। दीपादिना प्रतिमादेरारात्रिके। युजन्तः स्त्री। "नीराजनां जनयतां निजबान्धवानाम्" नैष०। तत्प्रकारश्च ति० त० देवीपु० उक्तो यथा "यवपिष्टप्रदीपाद्यैश्च ताम्रपत्रादिपल्लवैः। औषधीभिश्च मेध्याभिः सर्व्वबीजैर्यवादिभिः। नवम्यां पर्व्वकाले तु यात्राकाले विशेषतः। यः कुर्य्यात् श्रद्धया वीर! देव्या नीराजनं नरः। शङ्खभेर्य्यादिनिनदैर्जयशब्दैश्च पुष्कलैः। यावतो दिवसान् वीर! देव्या नीराजनं कृतम्। तावत् कल्पसहस्राणि दुर्गालोके महीयते"। "यस्तु कुर्य्यात् प्रदीपेन सूर्य्यलोके महीयते"। पर्व्वकाले उत्सवकाले। देव्या इति स्त्रीत्वमविवक्षितं विष्ण्वादिप्रतिमायां तथाचारात्" रघु०। पञ्च नीराजनानि यथा "पञ्चनीराजनं कुर्य्यात् प्रथमं

दीपमालया । द्वितीयं सोदकाब्जेन तृतीयं धौतवाससा । चूताश्वत्थादिपत्रैश्च चतुर्थं परिकीर्त्तितम् । पञ्चमं प्रणिपातेन साष्टाङ्गेन यथाविधि" कार्त्तिकोत्तरतन्त्रम् । तस्य वर्त्तिकादिप्रमाणं यथा "कुङ्कुमागुरुकर्पूरघृतचन्दननिर्म्मिताः । वर्त्तिकाः सप्त वा पञ्च कृत्वा वन्दापनीयकम् । कुर्य्यात् सप्तप्रदीपेन शङ्खघण्टादिवाद्यकैः । हरेः पञ्चप्रदीपेन बहुशो भक्तितत्परः" पद्मोत्तरखण्डे १०७अ० । शान्तौ । २शान्तिभेदे तद्विधानादि अग्निपु०२६७अ० यथा "नीराजनविधिं वक्ष्ये ऐशान्यां मन्दिरे चरेत् । तोरणत्रितयं तत्र गृहे देवान् यजेत् सदा । चित्रां त्यक्त्वा यदा स्वातिं सविता प्रतिपद्यते । ततः प्रभृति कर्त्तव्यं यावत् स्वातौ रविः स्थितः । ब्रह्मा विष्णुश्च शम्भुश्च शक्रश्चैवानलानिलौ । विनायकः कुमारश्च वरुणो धनदो यमः । विश्वे देवा वैश्रवणो गजाश्चाष्टौ च तान् यजेत् । कुमुदैरावणौ पद्मः पुष्पदन्तश्च वामनः । सुप्रतीकोऽञ्जनो नीलः पूजा कार्य्या गृहादिके । पुरोधा जुहुयादग्नौ समित्सिद्धार्थकं तिलाः । कुम्भा अष्टौ पूजिताश्च तैः स्नाप्याश्च गजोत्तमाः । अश्वाः स्नाप्याः ददेत् पिण्डान् ततो हि प्रथमं गजात् । निष्क्रामयेत्तोरणैस्तु गोपुरादि न लङ्घयेत् । निष्क्रमय्य ततः सर्व्वे राजलिङ्गं गृहे यजेत् । वारुणं वरुणं प्राच्यं रात्रौ भूतबलिं ददेत् । विशाखायां गते सूर्य्ये आश्रमे निवसेन्नृपः । अलङ्कुर्य्यात् दिने तस्मिन् वाहनन्तु विशेषतः । पूजिता राजलिङ्गाश्च कर्त्तव्या नरहस्तगाः । हस्तिनं तुरगं छत्रं खड्गं चापञ्च दुन्दुभिम् । ध्वजं पताकां धर्म्मज्ञः कालज्ञस्त्वभिमन्त्रयेत् । अभिमन्त्र्य ततः सर्व्वान् कुर्य्यात् कुञ्जरमूर्द्धगतान् । कुञ्जरोपरिगौ स्यातां सांवत्सरपुरोहितौ । मन्त्रितांश्च समारुह्य तोरणेन विनिर्गमेत् । निष्क्रम्य नागमारुह्य तोरणेनाथ निर्गमेत् । बलिं विभज्य विधिवद्राजा कुञ्जरमूर्द्धगतः । उल्मुकानाञ्च निचयमादीप्तितदिगन्तरम् । राजा प्रदक्षिणं कुर्य्यात् त्रीन् वारान् सुसमाहितः । चतुरङ्गबलोपेतः सर्व्वसैन्येन नादयन् । एवं कृत्वा गृहं गच्छेद्विसर्जितजनाञ्जलिः । शान्तिर्नीराजनाख्येयं वृद्धये रिपुमर्द्दनी" ।

अन्योऽपि हेमाद्रिव्रतखण्डे विष्णुधर्म्मोत्तरोक्तो यथाः । "भगवति जलधरपक्ष्मजलपाकरार्कैर्जहते कमलनाभे । उन्मीलयति तुरङ्गमकरिनरनीराजनं कुर्य्यात् । द्वादश्यामष्टम्यां कार्त्तिकशुक्लस्य पञ्चदश्यां वा । आश्वयुजे वा कुर्य्यान्नीराजनसञ्ज्ञितां शान्तिम् । नगरोत्तरपूर्व्वादि प्रशस्तभूमौ प्रशस्तदारुमयम् । षोड़शहस्तोच्छ्रायं दशविपुलं तोरणं कार्य्यम् । सर्ज्जोदुम्बरशाखाककुभमयं शान्तिसद्म कुशबहुलम् । वंशविनिर्म्मितमत्स्यध्वजचक्रालङ्कृतद्वारम् । प्रतिसरणे तुरगाणां भल्लातकशालिकुष्ठसिद्धार्थान् । कण्ठेषु निबध्नीयात् पुष्ट्यर्थं शान्तिमिष्टहुमानाम् । रविवरुणविश्वदेवप्रजेशपुरुहूतवैष्णवैर्मन्त्रैः । सप्ताहं शान्तिगृहे कुर्य्याच्छान्तिं तुरङ्गाणाम् । अभ्यर्च्चिता न परुषं वक्तव्या नापि ताड़नीयास्ते । पुण्याहशङ्खतूर्य्यध्वनिगीतरवैर्विगतभयाः । प्राप्तेऽष्टमेऽह्नि कुर्य्यादुदङ्मुखं तोरणस्य दक्षिणतः । कुशचीरान्तरमाश्रममग्निं पुरतोऽस्य वेद्यां च । चन्दनकुष्ठसमङ्गाहरितालमनःशिलाप्रियङ्गुवचाः । दन्त्यमृताञ्जनरजनीसुवर्णपुष्पाग्निमन्थाश्च । श्वेतामपूर्णकोशां कटम्भरात्रायमाणसहदेवीः । नागकुसुमस्वगुप्ताः शतावरीं सोमराजीं च । कलशेष्वेतान् कृत्वा सम्भारानुपहरेद्बलिं सम्यक् । भक्ष्यैर्नानाकारैर्म्मधुपायससावकप्रचुरैः । खदिरपलाशोदुम्बरकाश्मर्य्यश्वत्थनिर्म्मिताः समिधः । स्रुक्कनकाद्रजताद्वा कर्त्तव्या भूतिकामेन । पूर्व्वाभिमुखः श्रीमान् वैयाघ्रे चर्म्मणि स्थितो राजा । तिष्ठेदनलसमीपे तुरगभिषग्दैववित्सहितः । यात्रायां यदभिहितं ग्रहयज्ञविधौ महेन्द्रकेतौ च । वेदीपुरोहितानललक्षणमखिलं तदवधार्य्यम् । लक्षणयुक्तं तुरगं द्विरदवरं चैव दीक्षितं स्नातम् । अहतसिताम्बरमत्यसत्यपूजार्च्चितं कृत्वा । आश्रमतोरणमूले सदुपनयेत् सान्त्वयन् शनैर्वाचा । वादित्रशङ्खपुण्याहनिःस्वनापूरितदिगन्तम् । यद्यानीतस्तिष्ठेद् दक्षिणचरणं हयः समुत्क्षिप्य । स जयति तदा नरेन्द्रः शत्रूनचिराद्विना यत्नात् । त्रस्यन्नेष्टो राज्ञः परिशेषं चेष्टितं द्विपहयानाम् । यात्रायां व्याख्यातं तदिह विचिन्त्यं यथायुक्ति । पिण्डमभिमन्त्र्य दद्यात् पुरोहितो वाजिने स यदि जिघ्रेत् । अश्नीयाद्वा जयकृद्विपरीतोऽतोऽन्यथाऽभिहितः । कलशोदकेषु शाखामाम्राम्यौदुम्बरीं समुद्धृत्य स्पृशेत्तुरगान् । शान्तिकपौष्टिकमन्त्रैरेवं सेनां समस्तनागाम् । शान्तिं राष्ट्रविवृद्ध्यै कृत्वा भूयोऽभिचारकैर्मन्त्रैः । मृण्मयमरिं विभिन्द्याच्छूलेनोरःस्थले विप्रः । सविनं हयाय दद्यादभिमन्त्र्य पुरोहितस्ततो राजा । आरुह्योदक्पूर्व्वां यायान्नीराजितः सबलः । मृदङ्गशङ्खध्वनिहृष्टकुञ्जरस्रवन्मदामोद-

सुगन्धिमारुतः। शिरोमणिव्रातचलत्प्रभाचयैर्ज्वलन् वि-वस्वानिव तोयदात्यये। हंसपङ्क्तिभिरिवस्ततोऽद्रिराट् सम्पतद्भिरिव शुक्लचामरैः। हृष्टगन्धपवनानुवाहि-भिर्धूयमानरुचिरस्रगम्बरः। नैकवर्णमणिवज्रभूषितै-र्भूषितो मुकुटकुण्डलाङ्गदैः। भूरिरत्नकिरणौघरञ्जितः शक्रकार्मुकरुचं समुद्वहन्। उत्पतद्भिरिव खं तुरङ्गमै-र्दारयद्भिरिव दन्तिभिर्धराम्। निर्जितारिभिरिवामरै-र्नरैः शक्रवत्परिवृतो व्रजेन्नृपः। सवज्रमुक्ताफलभूषणोऽ-थ वा सितस्रगुष्णीषविलेपनाम्बरः। छत्रातपत्रो गज-पृष्ठमाश्रितो घनोपरीवेन्दुतले भृगोः सुतः। समस्तहृष्ट-नरवाजिकुञ्जरं निर्मलग्रहरणांशुभासुरम्। निर्विकार-मरिपक्षभीषणं यस्य सैन्यमचिरात्स गां जयेत्!" वृ०सं० ४४अ०। "स्नाने धूपे च नैवेद्ये दीपे वस्त्रे च भूषणे। घण्टानादं प्रकुर्वीत तथा नीराजनेऽपि च" विधान-पारिजातधृतवाक्यम्।

**नीरिन्दु** पु० नि+ईर–क्विप् तथाविधः सन् इन्दति इन्द-उन्। अश्वशाखोटके वृक्षे (आसशेहोडा) शब्दच०।

**नीरुच्** त्रि०निश्चितं रोचते निर्+रुच–क्विप् रलोपे दीर्घः। नितान्तदीप्तिशीले।

**नीरुज्** अव्य० रुजोऽभावः अभावे अव्ययी० रलोपदीर्घौ। १रोगाभावे। २निर्गता रुग् प्रा०ब०। आरोग्ये। निर्गता रुग् रोगो यस्य प्रा०ब०। ३रोगशून्ये त्रि० "स्निग्धो मृदुः पाण्डुरनिष्टगन्धोमेदःकृतो नीरुगथातिकण्डुः" सुश्रुतः। ततः भावे ष्यञ्। नैरुज्य रोगाभावे स्वास्थ्ये न०

**नीरुज** त्रि० निर्गता रुजा रोगो यस्य यस्माद् वा प्रा०ब० रलोपदीर्घौ। १रोगरहिते "पूतात्मा नीरुजः श्रीमां-स्तस्माद्रोगाद्विमुक्तवान्" साम्बपु० २कुष्ठौषधौ जटा० रोग-भेदे (अजगल्लिकारोगे) स्त्री "स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा" सुश्रुतः।

**नीरूप** त्रि० निर्गतं रूपमस्य प्रा०ब०। रूपहीने "नीरूप-स्यापि कालस्य षडिन्द्रियवेद्यत्वाभ्युपगमेन" वेदा०परि०।

**नील** पु० नील–अच्। स्वनामख्याते वर्णे १श्यामवर्णे २तद्वति त्रि० अमरः। ३पर्वतभेदे ४वानरभेदे च मेदि०। ५नीत्यो-षधौ ६निधिभेदे ७लाञ्छने च पु० हेमच०। ८मङ्ग-लघोषे त्रिका० ९वटवृक्षे राजनि०। नीलपर्वतश्च रम्य-कवर्षस्य सीमापर्वतः यथोक्तं भाग० ५।१६। ८श्लो० "उत्तरोत्तरेणेलावृतं नीलः श्वेतः शृङ्गवानिति त्रयो रम्यकहिरण्मयकुरूणां वर्षाणां मर्यादागिरयः प्रा-गायता उभयतः क्षारोदावधयो द्विसाहस्रपृथव एकै-कशः पूर्वस्मात् पूर्वस्मादुत्तरोत्तरेण दशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति"। भारतवर्षदक्षिणस्थे स्वनामख्याते १०गिरौ च ११इन्द्रनीलमणौ शनितुष्ट्यर्थं धार्ये देये च मणिभेदे। तस्योत्पत्त्यादिपरीक्षा गरुडपु० उक्ता यथा "तत्रैव सिंहलवधूकरपल्लवाग्रव्यालूनबाललवलीकुसुम प्रवाले। देशे पपात दितिजस्य नितान्तकान्तं प्रोत्फुल्ल नीरजसमद्युति नेत्रयुग्मम्। तत्प्रत्ययादुभयशोभन वीचीभासा विस्तारिणी जलनिधेरुपकच्छभूमिः। प्रोद्-भिन्नकेतकवनप्रतिबद्धलेखा सान्द्रेन्द्रनीलमणिरत्नवती विभाति। तत्रासिताब्जहलभृद्वसनासिभृङ्गशाङ्गायु-धाभहरकण्ठकलापपुष्पैः। शुक्लेतरैश्च कुसुमैर्गिरि-कर्णिकायास्तस्मिन् भवन्ति मणयः सदृशावभासः। अन्ये प्रसन्नपयसः पयसां निधातुरम्बुत्विषः शिखिगल प्रतिभास्तथान्ये। नीलीरसप्रभवबुद्बुदभास केचित् केचित्तथा समदकोकिलकण्ठभासः। एकप्रकारा विस्पष्ट वर्णशोभावभासिनः। जायन्ते मणयस्तस्मिन्निन्द्रनीला महागुणाः। मृत्पाषाणशिलावज्रकर्कराभाससंयुताः। अभ्रिकापटलच्छाया वर्णदोषैश्च दूषिताः। तत एव हि जायन्ते मणयस्तत्र भूरयः। शास्त्रसम्बोधित धियस्तान् प्रशंसन्ति सूरयः। धार्यमाणस्य ये दृष्टाः पद्म-रागमणेर्गुणाः। धारणादिन्द्रनीलस्य तानेवाप्नोति मानवः। यथा च पद्मरागाणां जातु कर्षभयं भवेत्। इन्द्रनीलेष्वपि तथा द्रष्टव्यमविशेषतः। परीक्षाप्रत्यये-र्यैश्च पद्मरागः परीक्ष्यते। तएव प्रत्यया दृष्टा इन्द्र-नीलमणेरपि। यावन्तश्च क्रमेदग्निं पद्मरागः प्रयो-गतः। इन्द्रनीलमणिस्तस्मात् क्रमेत सुमहत्तरम्। तथापि न परीक्षार्थं गुणानामतिवृद्धये। मणिरग्नौ समाधेयः कथञ्चिदपि कश्चन। अग्निमात्राऽपरिज्ञाने दाहदोषैश्च दूषितः। सोऽनर्थाय भवेद्भर्तुः कर्तुः का-रयितुस्तथा। श्यामोत्पलकरवीरस्फटिकाद्या इह बुधैः सवैदूर्याः। कथिता विजातय इमे सदृशा मणि-नेन्द्रनीलेन। गुरुभावकठिनभावास्तेषां नित्यमेव विज्ञेयाः। काचाद्यायावदुत्तरविवर्द्धमाना विशेषेण। इन्द्रनीलो यदा कश्चिद् बिभर्त्ति ताम्रवर्णताम्। रक्ष-णीयौ तथा ताम्रौ करवीरोत्पलावुभौ। यस्य मध्यगता भाति नीलस्येन्द्रायुधप्रभा। तदिन्द्रनीलमित्याहुर्म-हार्घं भुवि दुर्लभम्। यस्य वर्णस्य भूयस्त्वात् क्षीरे शत

गुणे स्थितः । नीलतां तच्चयेत् सर्वं महानीलः स उच्यते । यत् पद्मरागस्य महागुणस्य मूल्यं भवेन्माष समुन्मितस्य । तदिन्द्रनीलस्य महागुणस्य सुवर्णसंख्यातुलितस्य मूल्यम्” १२नागभेदे पु० “नीलानीलौ तथा नागौ कल्माषशवलौ तथा” भा० आ० ३५अ० । क्रोधवशगणांशजाते द्वापरयुगीये १३नृपभेदे “गणः क्रोधवशो नाम यस्ते राजन् ! प्रकीर्त्तितः । ततः संजज्ञिरे वीराः क्षिताविह नराधिपाः” इत्युपक्रमे “क्षेमोविचित्रः सुरथः श्रीमान् नीलश्च भूमिपः” भा० आ० ६७० अध्यायम् । १४अजमीढस्य नील्यपरनाम्न्यां नीलिन्यां जाते पुत्रभेदे “अजमीढस्य नीलिनी नाम पत्नी तस्यां नीलसंज्ञः पुत्रोऽभवत्” विष्णुपु० ४अंशे १९अ० । अजमीढस्य १५पत्नीभेदे स्त्री ङीप् । “अजमीढस्य पत्न्यस्तु तिस्रो वै यशसान्विताः । नीली च केशिनी चैव धूमिनी च वराङ्गना” हरिवं० ३२अ० वानरभेदश्च रामसेनान्तर्गतः “नलनीलाङ्गदक्राथमैन्दद्विविदपालिता । ययौ सुमहती सेना राघवस्यार्थसिद्धये” भा० व० २८२अ० । नील+ओषधिजातौ ङीप् । १६नील्योषधौ स्त्री नीत्या रक्तम् अण् । नील १७नीलीरक्ते त्रि० १८यमभेदे पु० “वैवस्वताय कालाय नीलाय परमेष्ठिने” यमतर्पणमन्त्रः । १९कालिकाशक्तिभेदे स्त्री “नीला घना बलाका च मात्रा मुद्रा मिता च माम्” कालीकवचम् । २०काचलवणे २१तालीशपत्रे २२विषे शब्दार्थचि० । २३नृत्याङ्गाष्टोत्तरशतकरणान्तर्गतकरणे संगीतदा० । नीलवस्त्रधारणादिनिषेधः मिताक्षरायाम् यथा

“नीलीरक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत् । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति” “रोमकूपे यदा गच्छेद्रसो नील्यास्तु कस्यचित् । त्रिवर्णेषु च सामान्यन्तप्तकृच्छ्रं विशोधनम् । पालनं विक्रयश्चैव तद्वृत्त्या चोपजीवनम् । पातनञ्च भवेद्विप्रे त्रिभिः कृच्छ्रैर्व्यपोहति । नीलीदारु यदा भिन्द्याद्ब्राह्मणस्य शरीरतः । शोणितं दृश्यते यत्र द्विजश्चान्द्रायणञ्चरेत् । स्त्रीणां क्रीडार्थसम्भोगे शयनीये न दुष्यति” स्मृतिः अभ्युपगम्याप्युक्तम् “स्त्रीक्रीड़ाशयने नीली ब्राह्मणस्य न दुष्यति । नृपस्य वृद्धौ वैश्यस्य पर्ववर्जं विधारणम्” तथा वस्त्रविशेषपरत्वस्य प्रतिप्रसवः “कम्बले पट्टसूत्रे च नीलीरागो न दुष्यति” इति स्मरणात् । “नीलीरक्तं यदा वस्त्रं विप्रः स्वाङ्गेषु धारयेत् । तन्तुसन्ततिसंख्याके वसेत् स नरके ध्रुवम्” । स्कान्दे काशीखण्डे “नीलीरक्तं तु यद्वस्त्रं दूरतस्तद्विवर्जयेत् । स्त्रीणां क्रीडार्थसंयोगे शयनीये न दुष्यति । मृते भर्त्तरि या नारी नीलीवस्त्रं तु धारयेत् । भर्त्ता च नरकं याति सा नारी तदनन्तरम् । कम्बले पट्टसूत्रे च नीलीदोषो न विद्यते” । शूद्रे विशेषः “ब्राह्मणस्य सितं वस्त्रं नृपते रक्तमुल्वणम् । पीतं वैश्यस्य शूद्रस्य नीलं मलवदिष्यते । नीलं मलवत् कृष्णमिति” मिधा० पा० कतिचित् नीलवस्तूनि कविकल्पलतायां दर्शितानि यथा “शुकः शैवालं दूर्वा बालतृणं बुधग्रहः वंशाङ्कुरः मरकत इन्द्रनीलमणिः । २४मालाहृत्तभेदे न० “तालपयोधरनायकतोमरवज्रधरम् पाणियुतञ्च विधाय भामिनीहस्तवरम् । नीलमिदम् फणिनायकपिङ्गलसंलपितम् पण्डितमण्डलिकाहृदयं सखि ! कर्णगतम्” “परिशीलय नीलनिचोलम्” गीतगो० । “मुक्ताञ्जनीलोपलनिर्मितानाम्” माघः “कण्ठप्रभासङ्गविशेषनीलां कृष्णत्वचं ग्रन्थिमतीं दधानम्” कुमा० । नीलशब्दस्य बलाकाबलाभेदात् एकपर्य्यायता अमरे पर्य्यायतया तेषामुक्तेः । २५दिग्गजभेदे नीराजनशब्दे दृश्यम् ।

**नीलक** न० नील+स्वार्थे संज्ञायां कन् वा । १काचलवणे २वर्त्तलौहे ३असनवृक्षे राजनि० । नीलेन वर्णेन कायति कै–क । ४भ्रमरे कीटभेदे पु० । “यथा मधुकरीं ध्यायन् नीलकस्तन्मयो भवेत्” हह० सं० ७५अ० पाठान्तरम् । बीजगणितोक्ते ५अव्यक्तराशिसंज्ञाभेदे पु० “यावत्तावत् कालको नीलकोऽन्योवर्णः पीतो लोहितश्चैवमाद्याः” बीजग० ।

**नीलकण्ठ** पुंस्त्री नीलः कण्ठो यस्य । १मयूरे अमरः । २दात्यूहे कालकण्ठे ३ग्रामचटके ४खञ्जने च हेमच० स्त्रियां सर्वत्र ङीष् । ५पीतसारे पु० हेमच० विशेष कालकण्ठे ६शिवे पु० अमरः । “स्कन्धाधिरूढोज्ज्वल नीलकण्ठानुर्वीरुहः श्लिष्टतनूनहीन्द्रैः” “अवाप बाल्योचितनीलकण्ठ !” माघः “क्व नीलकण्ठ ! व्रजसीत्यलक्ष्यवाक्” कुमा० । ७मूलके न० राजनि० ८राक्षसभेदे पु० “घण्टाजालावसक्तास्तु नीलकण्ठा विभीषणाः” भा० सौ० ८अ० नानाराक्षसोक्तौ । शिवस्य नीलकण्ठनामनिर्वचनम् हरिवं० १३२अ० अन्यथोक्तं यथा “दत्तः प्रहारः कुलिशेन पूर्वं तवेशान ! सुरराजाऽतिवीर्य । कण्ठे नैल्यं तेन ते यत् प्रवृत्तं तस्मात् ख्यातस्त्वं नीलकण्ठेति कस्मात्” २२२अ० । अन्यथापि तस्य तथात्वमुक्तम्

"ततः प्रसभमाप्लुत्य रुद्रं विष्णुः सनातनः। जग्राह कण्ठे भगवान्नीलकण्ठस्ततोऽभवत्" । भागवते ५८अ० "तदिदं जगदारेभे प्रभावन्नानुमोदतः। ततः करतलीकृत्य व्यापि हालाहलं विषम्। अभक्षयत् महादेवः कृपया भूतभावनः। तस्यापि दर्शयामास स्ववीर्यं जलकल्मषः। यच्चकार गले नीलं तच्च साधोर्विभूषणम्" । नीलग्रीवादयोऽप्यत्रार्थे "नीलग्रीव! शुभग्रीव! सर्वकामफलप्रद" । "असौ यो अवसर्पति नीलग्रीवो विलोहितः" यजु०१६।७ रुद्राध्याये। खञ्जनस्य स्वनामख्यातः पक्षिभेदः खञ्जनशब्दे २४५६पृ० दृश्यम्।

**नीलकण्ठाक्ष** पु० नीलकण्ठप्रियः शिवप्रियोऽक्षो जपमाला यस्य। रुद्राक्षे राजनि०। नीलकण्ठस्य खञ्जनस्याक्षी वाक्षि यस्य बच् समा०। खञ्जनतुल्यनेत्रयुक्ते स्त्रियां जित्वात् ङीप्। [रक्तकन्दे च हले राजनि०।

**नीलकन्द** पु० नीलः कन्दो मूलमस्य। १विषकन्दे २चर्त्त्रि-

**नीलकमल** न० नीलं कमलम्। १नीलपद्मे नित्यक०। २नीलोत्पले राजनि "नमो नमाय नमोनीलकमलासनकान्तये" बोला०।

**नीलकुन्तला** स्त्री नीलाः कुन्तला यस्याः। दुर्गासखीभेदे "सखी रत्नसखी नाम जगाद्दैवं शुचिस्मिता। तां निमाद्योपरा प्राह सखी वा नीलकुन्तलाम्" हरकर्म०पु०।

**नीलकुरण्टक** पु० कर्म०। नीलझिण्ट्याम् रत्नमाला।

**नीलकुसुमा** स्त्री नीलं कुसुमं यस्याः। नीलझिण्ट्यां राजनि०

**नीलक्रान्ता** स्त्री नीलेन वर्णेन क्रान्ता। कृष्णापराजितायां राजनि०। [जातित्वात् ङीप्।

**नीलक्रौञ्च** पुंस्त्री (कोँचवक) कालवके राजनि० स्त्रियां

**नीलगङ्गा** स्त्री नदीभेदे शिवपु०।

**नीलगणेश** पु० नीलवर्णे गणक्रीडाख्ये गणेशे "कर्णिकायां चतुर्दिक्षु प्रथमं पूजयेदिमान्। गणाधिपं गणेशानं तृतीयं गणनायकम्। गणक्रीडं पीतगौररक्तनीलत्वचः क्रमात्" शा०ति०१३पटले "गणेशाय नमो नीलकमलासनकान्तये" लीला०।

**नीलगिरिकर्णिका** स्त्री कर्म०। गिरिकर्णिकाभेदे राजनि०

**नील(ला)ङ्गु** नि+लगि—कु उपसर्गदीर्घः धातोरपि दीर्घ इति केचित् १कृमिजातौ अमरादौ २कुसुमे च उज्ज्वलद०। ३देवभेदे पु० "शिप्रश्रो भाय वर्त्तिका नीलाङ्गोः कृमिः" यजु०२४।३०

**नीलचर्म्मन्** न० कर्म०। १नीलवर्णचर्म्मणि। ह्व०। २तद्वर्णचर्मयुक्ते त्रि०।

**नीलज** न० नीलात् पर्वतात् जायते जन—ड ५त०। १वर्त्तलोहे राजनि० २नीलजातमात्रे त्रि०।

**नीलझिण्टी** स्त्री कर्म०। नीलवर्णझिण्ट्यां राजनि०।

**नीलतन्त्र** न० चीनाचारादिप्रकाशके तन्त्रभेदे

**नीलतरु** पु० नित्यकर्म०। १नारिकेले राजनि०। २नीलवर्णवृक्षमात्रे च।

**नीलताल** पु० तलमेव तालं स्वरूपं नीलं तालमस्य। १हिन्ताले २तमालवृक्षे च राजनि०।

**नीलदूर्वा** स्त्री कर्म०। हरिद्वर्णदूर्वायां राजनि०।

**नीलद्रुम** पु० नित्यकर्म०। नीलवर्णे असनवृक्षे राजनि०।

**नीलध्वज** पु० नीलवर्णो ध्वज इव। १तालवृक्षे ह्व०। २नीलध्वजवति त्रि० राजनि० ३नृपभेदे पु० "अर्जुनस्य हयो राजन् पुरीं माहिष्मतीं ययौ। नीलध्वजेन वीरेण रक्षितां दुर्गमाकृताम्। नीलध्वजस्य महिषी ज्वालानाम्नी सुमध्यमा। स्वाहां कन्यां प्रसूतां वा सुन्दरीं धर्मतत्परा" जैमिनीभारते आश्वमेधिके १५अ०।

**नीलनिर्गुण्डी** स्त्री कर्म०। नीलसिन्धुवारे राजनि०।

**नीलनिर्यासक** पु० नीलवर्णो निर्यासो यस्य कप्। १नीलवर्णेऽसनवृक्षे राजनि०। ह्व०। २तद्वर्णनिर्यासयुक्ते त्रि०।

**नीलपङ्क** पु०न० नीलं पङ्क इव। अन्धकारे त्रिका०।

**नीलपत्र** न० नीलं पत्रं पर्णं पुष्पदलं वा (पापडि) यस्य। १नीलवर्णे उत्पले। २गुण्ड्रतृणे ३अश्मन्तकवृक्षे ४नीलासनवृक्षे ५दाडिमे च राजनि० कर्म०। ६नीलवर्णपर्णे न० ह्व०। अतदति नीलवर्णपत्रयुक्ते त्रि०। ८इन्दीवरे शब्दच०।

**नीलपद्म** न० कर्म०। नीलवर्णे पद्मे शब्दच०।

**नीलपिङ्गल** त्रि० "वर्णो वर्णेन" पा०कर्म०। १नीलवर्णयुक्ते अथ च पिङ्गलवर्णयुक्ते च २गोजातिभेदे पुंस्त्री० "गवां जातीस्तु वक्ष्यामि शृणुष्वैकमना द्विज!। प्रथमा गौरकपिला द्वितीया गौरपिङ्गला। तृतीया रक्तकपिला चतुर्थी नीलपिङ्गला। पञ्चमी शुक्लपिङ्गाख्या षष्ठी तु शुक्लपिङ्गला। सप्तमी चित्रपिङ्गाख्या अष्टमी बभ्रुरोहिणी। नवमी श्वेतपिङ्गाख्या दशमी श्वेतपिङ्गला। तादृशास्त्वन्यवाद्दः कपिलास्तु प्रकीर्त्तिताः" हरकर्म० पु० १५अ०।

**नीलपिच्छ** पुंस्त्री नीलं पिच्छं यस्य । श्येनपक्षे राजनि० । स्त्रियां जातित्वात् ङीष् ।

**नीलपिष्टोडी** स्त्री नीलाङ्गीदृष्टे (नलुयगुड) भाषा-प्रसिद्धे क्षुपभेदे राजनि० । [जनि० ।

**नीलपुनर्णवा** स्त्री कर्म० । कृष्णवर्णपुनर्णवाशाकभेदे रा-

**नीलपुष्प** पु० नीलं पुष्पमस्य । १नीलभृङ्गराजे २नीलाम्लाने च । ३ग्रन्थिपर्णे न० ४कृष्णापराजितायां स्त्री राजनि० ५ब्रततयां (नविना) स्त्री ङीप् । स्वार्थे क तत्रैव ।

**नीलपृष्ठ** पु० नीलं पृष्ठं धूमरूपेणास्य । वह्नौ "त्वा बोधसं नीलपृष्ठम् वृहन्तम्" ऋ०५।४३।१

**नीलपोरक** पु० इक्षुभेदे सुश्रुतः इक्षुशब्दे ९०६पृ० दृश्यम् "वंशोपमो नीलपोरो नैपालो दीर्घपत्रकः । वातलाः कफपित्तघ्नाः सकषाया विदाहिनः" सुश्रुते तद्गुणादि ।

**नीलफला** स्त्री नीलं फलं यस्याः । जम्बूवृक्षे राजनि० ।

**नीलभृङ्गराज** पु० कर्म० । नीलवर्णभृङ्गराजे (नीलकेश-रिया) राजनि० ।

**नीलमक्षिका** स्त्री कर्म० । नीलवर्णमक्षिकायाम् । "स्नातानुलिप्तं यद्यापि भजन्ते नीलमक्षिकाः । सुगन्धि-वांति वोऽकस्मात् व्रजन्ति ते गतायुषः" सुश्रुतः ।

**नीलमणि** पु० कर्म० । १इन्द्रनीलमणौ हारा० । नीलशब्दे दृश्यम् । तद्वर्णत्वात् २कृष्णे वासुदेवे च नीलरत्नमप्यत्र

**नीलमल्लिका** स्त्री नित्यकर्म० । विल्वे वैद्यकशब्दप्रकाशिका ।

**नीलमाधव** पु० कर्म० । जगन्नाथदेवे "प्रेषितोऽहं हरिं द्रष्टुं मनुजं नीलमाधवम्" स्क०पु० उत्क० ७अ० ।

**नीलमाष** पु० नित्यकर्म० । राजमाषे राजनि० । [शब्दमाला ।

**नीलमीलिक** पु० नीला मीलिका निमीलनं यस्य । खद्योते

**नीलमृत्तिका** स्त्री नीला मृत्तिकेव । १पुष्पकासीसे राजनि० कर्मधा० । २नीलवर्णमृत्तिकायाम् । नीला मृत्तिका यत्र । ३तद्युक्तदेशादौ त्रि० ।

**नीलमेहिन्** पु० नीलं तद्वर्णं शुक्रं मेहति मिह—णिनि । नीलवर्णमेहयुक्ते "पैत्तिकेषु नीलमेहिनम्" सुश्रुतः ।

**नीलराजि** पु० ६त० । तमस्ततौ "निशा शशाङ्कक्षतनील-राजयः" कुमारसं० ।

**नीललोचन** त्रि० नीलं लोचनं नेत्रं यस्य । नीलवर्णनेत्र-युक्ते "शाकहारी च पुरुषो जायते नीललोचनः" शाता० "शाकहरणपापेन तथात्वमस्य जायते" इत्युक्तम् ।

**नीललोहित** पु० "वर्णो वर्णेन" पा० कर्म० । कण्ठेन नीले केशेषु लोहितवर्णयुक्ते १शिवे अमरः । "कंसाहते नि-यितस्य नीललोहितरेतसः" कुमा० "हाये सम्प्रस्रुते दरिद्र ! नीललोहित !" यजु०१६।४७ "प्रजार्थं वरयामास नीललोहितसंज्ञितम्" भा०अनु० १६अ० । २मिश्रितनीललोहितवर्णे ३तद्युते त्रि० । ४भूमिजम्ब्वां स्त्री शब्दच० ।

**नीललोह** न० नित्यक० । वर्त्तलोहे राजनि० ।

**नीलवर्षाभू** पु० वर्षासु भवति भू—क्विप् कर्म० । १कृष्णवर्ण-पुनर्नवायां २कृष्णभेके च ।

**नीलवल्ली** स्त्री कर्म० । वन्दायाम् (परगाछा) रत्नमाला ।

**नीलवसन** त्रि० नील्या रक्तम् अण् नीलं वसनमस्य । १नीलवस्त्रयुक्ते २शनैश्चरे पु० हारा० । ३बलरामे च पु० कर्म० । ४नीलवर्णे वस्त्रे नीलवस्त्रादयोऽप्यत्रार्थेषु । "स्त्रीक्रीडाशयनीयादौ नीलवस्त्रं न दुष्यति" नीलशब्दे दृश्यम् । "परिधीलय नीलनिचोलम्" गीत०गो० "नीलवासा एककुण्डलो हलककुदि कृतशुभसुन्दरभुजः" (बलरामः) भाग० ५।२५।८।

**नीलवीज** पु० नीलं वीजमस्य । १नीलासने राजनि० २नील-वर्णवीजयुक्तमात्रे त्रि० ।

**नीलवृन्ता** स्त्री कर्म० । नीलवर्णे तृणभेदे राजनि० ।

**नीलवृक्ष** पु० कर्म० । अजान्त्र्यां नीलासने वृक्षभेदे राजनि० ।

**नीलवृन्त(क)** न० नीलं वृन्तमस्य वा कप् । तूले राजनि० ।

**नीलवृष** पु० नित्यकर्म० । विशेषलक्षणाक्रान्ते वृषभेदे तल्लक्षणमुक्तं शु०त० मत्स्ये "लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डरः । श्वेतः खुरविषाणाभ्यां स वृषो नील उच्यते" "स वृषो नील उच्यते" इत्युक्तेः नीलशब्दस्यैव तदर्थे पारिभाषिकत्वं तस्य सामानाधिकरण्यद्योतनायैव वृषशब्दप्रयोगः । अतएव "नीलं वा वृषमुत्सृजेत्" देवीपु० वाक्ये व्यासप्रयोगः । "नीलषण्डप्रमोक्षेण अमावास्यां तिलोदकैः" भा०अनु० १६५ अ० वृषार्थकषण्ड-शब्दप्रयोगश्च । "लोहितो यस्तु वर्णेन शङ्खवर्णखुरो वृषः । लाङ्गूलशिरसोश्चैव स वै नीलवृषः स्मृतः" इति वचनेऽपि न समुदाये पारिभाषिकत्वम् किन्तु नीलशब्दस्यैव सामान्याधिकरण्यद्योतनाय वृषशब्दप्रयोगः पूर्वोक्तहेतोः । एवं लोहितवृषशब्देऽपि लोहितशब्द-स्यैव पारिभाषिकत्वम् यथोक्तं विष्णुसं० "जीवत्पत्नाया: पयस्विन्याः पुत्रं सर्वलक्षणोपेतं नीलं लोहितं वा मुख-पुच्छपादश्वेतकपालं यूथस्याच्छादकम्" । नीलषण्डादयो-ऽप्यत्र ।

**नीलपुष्पा** स्त्री नीलवर्णं पत्रं पुष्पं फलं च वर्षति प्रसूते दृष-क । वार्त्ताकीभेदे राजनि० ।

**नीलव्रत** न० व्रतभेदे "यस्तु नीलोत्पलं हैमं शर्करापात्र-संयुतम् । एकान्तरितनक्ताशी समान्ते वृषभं ददेत् । स वैष्णवपदं याति नीलव्रतमिदं स्मृतम्" मत्स्यपु० ।

**नीलशिखण्ड** त्रि० नीलः शिखण्डोऽस्य । १नीलवर्णशिखण्डयुक्ते २रुद्रभेदे पु० "रुद्र ! जटील ! मेखल ! नील-शिखण्ड ! कर्मकृत् !" अथ० २।२७।६ । [राजनि० ।

**नीलशिग्रु** पु० कर्म० । नीलवर्णपुष्पयुक्ते शोभाञ्जनभेदे

**नीलसन्ध्या** स्त्री नीला सन्ध्येव । कृष्णापराजितायां राजनि०

**नीलसरस्वती** स्त्री द्वितीयविद्यायां तारायाम् "मातर्नील-सरस्वति ! प्रणमतां सौभाग्यसम्पत्प्रदे !" इति तत्स्तो-त्रम् । "नीला च वाक्प्रदा चेति तेन नीलसरस्वती" तन्त्रसारे तन्नामनिरुक्तिः । तन्मन्त्रस्तु तत्रैव "तारात्या मध्यवर्णं नीलनीलसरस्वती । सर्वभाषामयी शुभ्रा सर्वदेवैर्नमस्कृता" ("ओं ह्रीं हुं फट्") ११८।पु० तारिणीपदस्थे दर्शिते तारिणीजपे सरस्वतीपदं नील-सरस्वतीपरम् ।

**नीलसार** पु० नीलः सारोऽस्य । तिन्दुकवृक्षे (तेंद)राजनि०।

**नीलसिन्धुवार** पु० कर्म० । नीलनिर्गुण्ड्याम् राजनि० ।

**नीलस्कन्धा** स्त्री नीलः स्कन्धोऽस्याः । गोकर्णीलतायाम् नैघण्टुप्रकाशिका ।

**नीला** स्त्री १नीलिकायाम् अमरः । २नीलपुनर्नवायां ३नीलदोषधी च राजनि० स्त्र वा० न ङीप् । ४मल्लारागस्य स्त्रीभेदे हनुमन्मतं । अस्यान्योऽर्थो नीलशब्दे दृश्यः

**नीलाङ्कितदल** पु० नीलाङ्कितं दलमस्य । तैलकन्दे वैद्यक०।

**नीलाङ्ग** पुंस्त्री नीलमङ्गं यस्य । १सारसखगे राजनि० स्त्रियां जातित्वात् ङीष् । २नीलवर्णाङ्गयुक्तमात्रे त्रि० स्त्रियां स्वाङ्गत्वात् ङीष् ।

**नीलाञ्जन** न०कर्म०। १सौवीराञ्जने (तुंते)राजनि० "नीला-ञ्जनचयप्रख्याम्" तन्त्रसारः । नीलं मेचकमञ्जयति अनृजि-णिच्-ल्यु । २विद्युति जटा० कर्त्तरि ल्युट् ङीप् । ३काशाञ्जनीक्षुपे राजनि० ।

**नीलाञ्जसा** स्त्री नीलमञ्जति अनृजि-णिच् असच् । १अप्सरोभेदे २नदीभेदे ३विद्युति च मेदि० ।

**नीलाद्रिकर्णिका** स्त्री कर्म० । कृष्णापराजितायां राजनि० नीलापराजिताप्यत्र ।

**नीलाम्बर** पु० नीलमम्बरं यस्य । १बलदेवे २शनैश्चरे च कर्म० । ३नीलीरक्ते वस्त्रे न० । ४व०। ५तद्वति त्रि० । नीलमम्बति अवि-अरच् । ५तालीशपत्रे राजनि० ।

**नीलाम्बुज** न० कर्म० । नीलपद्मे रत्नमाला नीलाम्बुजातादयोऽप्यत्र ।

**नीलाम्बुजन्मन्** न० नीलवर्णमम्बुजन्म । नीलोत्पले अमरः

**नीलाम्ला** पु० ईषत्कालेन आम्लायति आ+म्ला-क कर्म०। १नीलझिण्ट्याम् । तस्या हि पुष्पमल्पकालेनैव म्लायति । २श्यामाम्लायां स्त्री गौरा० ङीष् । नीलाम्लानीत्यप्यत्र ।

**नीलालु** पु० कर्म० । श्यामवर्णकन्दे आलुभेदे राजनि०।

**नीलाशी** स्त्री नीलं वर्णमश्नुते व्याप्नोति अश-अच् उप०स० गौरा० ङीष् । नीलनिर्गुण्ड्यां नीलसिन्धुवारे राजनि०।

**नीलाशोक** पु० कर्म० । नीलवर्णे अशोके "शालेन बकुल-माली, रक्ताशोकेन रक्ताम्लानी च । पाण्डुकः श्वेतकरया नीलाशोकेन सूकरकः" इ०सं० २६अ० वनपङ्क्ति भेदकथा यवभेदद्वारुक्तौ ।

**नीलाश्मन्** पु० कर्म० । नीलमणौ "नीलाश्मद्युतिमालसाव्दयकां सेवे महाकालिकाम्" महाकालीध्यानम् । "नीलाश्मद्युतिभिदुराम्भसोऽपरत्र" माघः ।

**नीलासन** पु० कर्म० । (पियासाल) वृक्षभेदे राजनि० ।

**नीलि** पु० नील-इन् । जलजन्तुभेदे "मत्स्यं नीलिञ्च आचाश्च सर्वांश्चैकशफांस्तथा" अविज्ञेयोक्तौ बहुः । "नीलिर्जलजन्तुः" कुल्लू० ।

**नीलिका** स्त्री नीली स्वार्थे क नील-ण्वुल् क कापि अत इत्त्वं वा । १नीलसिन्धुवारे राजनि० २नीलिन्यां ३नील शेफालिकायां मेदि० । ४नेत्ररोगभेदे "स एव लिङ्ग-नामस्तु नीलिकाकाचसंज्ञितः" सुश्रुतः । ५क्षुद्ररोगभेदे "क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः । सहसा-मागत्य सहसा मण्डलं विसृजत्यतः । नीरुजं तनुकं श्यावं तं व्यङ्गमिति निर्दिशेत् । कृष्णमेवंगुणं गात्रे मुखे वा नीलिकां विदुः" माधवकरः । जलस्य इन्दरविशेषे "भूमेरुपरा वृक्षस्य कोटरः जलस्य नीलिका" इत्यादि ।

**नीलिन्** त्रि० नीलो भूम्ना प्राशस्त्येन वाऽस्त्यस्य इनि । प्रशस्तनीलवर्णयुक्ते स्त्रियां ङीप् । सा च २आजमी-ढन्पस्य पत्नीभेदे पु० नीलशब्दे दृश्यम् "आजमीढस्य नीलिन्यां प्रशान्तिरुदपद्यत" हरिवं० ३२अ० । ३नी-ल्यौषधौ च ।

**नीलिमन्** पु० नीलस्य भावः इमनिच् । नीलवर्णे "कज्जल-वमलिनविलोचनचुम्बनविरचितनीलिमरूपम्" गीतगो०

**नीलीराग** पु॰ "नचातिशोभते यन्नापैति प्रेम मनोगतम्। तन्नीलीरागमाख्यान्ति यथा श्रीरामसीतयोः" सा॰द॰ उक्ते १प्रेमभेदे। सोऽस्यास्ति अच्। २पूर्वोक्तप्रेमयुक्ते पुंसि ३तथाविधस्त्रियां स्त्री हेमच॰। नील्याराग इव। ४नीलवर्णे शब्दच॰। स्वार्थे क। नीलिकाऽप्यत्र नेत्ररोगभेदे च "नीलिकाकाचसंज्ञितः" सुश्रुतः।

**नीलीरोग** पु॰ अक्षिरोगभेदे "ऐन्द्रं हन्याद्दाव्यं नक्तान्ध्यकाचान् नीलीरोगं तैमिरं चाञ्जनेन" सुश्रुतः।

**नीलीवृक्षाकृति** पु॰ नीलीवृक्षस्याकृतिरिवाकृतिरस्य। शरपुङ्खे शब्दार्थचि॰।

**नीलोत्पल** न॰कर्म॰। नीलवर्णे उत्पले "विकचनीलोत्पलकर्णपूराः" माघ॰ "नीलोत्पलं बिभ्रती" ताराध्यानम्। इदञ्च अञ्जनादिगणे सुश्रुते पठित्वा तद्गुण उक्तो यथा "अञ्जनरसाञ्जननागपुष्पप्रियङ्गुनीलोत्पलनलदनलिनकेशराणि मधूकञ्चेति। अञ्जनादिर्गणो ह्येष रक्तपित्तनिबर्हणः"।

**नीलोत्पलाद्यघृत** न॰ चक्रपाणिदत्तोक्ते घृतभेदे "नीलोत्पलोशीरमधूकयष्टीद्राक्षाविदारीकुशपञ्चमूलैः। क्षाज्जीवनीयैश्च घृतं विपक्वं शतावरीकारसदुग्धमिश्रम्। तच्छर्करापादयुतं प्रशस्तम् असृग्दरे मारुतरक्तपित्ते। क्षीणे क्षते रेतसि संप्रनष्टे कृच्छ्रे च रक्तप्रभवे च गुल्मे"।

**नीलोत्पलिन्** पु॰ नीलोत्पलं धार्यत्वेन तद्वर्णो वाऽस्यास्तीति। मञ्जुघोषे जिनार्यभेदे त्रिका॰। [च मेदि॰।

**नीवर** पु॰ नी–ष्वरच् नि॰। १परिव्राजि २वणिजके ३वासव्ये

**नीवाक** पु॰ नियतं वाको वचनं नि–वच–घञ् दीर्घः। १शस्यार्थं हेतोर्धान्यस्य संप्रयोगकारके अमरः। निवृत्तौ भाष्यवी॰। २वचननिवृत्तौ अव्य॰।

**नीवार** पु॰ नि+वृ–घञ् दीर्घः। तृणधान्यभेदे "नीवारपाकादिकडङ्गरीयैः" "अपत्यैरिव नीवारभागधेयोचितैर्मृगैः" रघुः "नीवारफलमूलाशानृषीनप्यति शेरते" भट्टिः। स च कुधान्यं यथोक्तं सुश्रुते "कोरदूषकश्यामाकनीवारशान्तनुतुवरकोद्दालकप्रियङ्गुमधूलिकानान्दीमुखीकुरुविन्दगवेधुकावरुकतोदपर्णीमुकुन्दकवेणुयवप्रभृतयः कुधान्यविशेषाः। उष्णाः कषायमधुरारूक्षाः कटुविपाकिनः। श्लेष्मघ्ना बद्धनिष्यन्दा वातपित्तप्रकोपणाः। कषायमधुरास्तेषां शीतपित्तापहाः स्मृताः। नीवारः शीतलो ग्राही पित्तघ्नः कफवातकृत्" भावप्र॰। स्वार्थे क। तत्रार्थे "नीवारकादयो सत्रादयश्च समासेन कषायोवर्गः" सुश्रु॰।

**नीवि(वी)** स्त्री निव्ययति निवीयते वा नि+व्ये–इन् यलोपदीर्घौ ङिच्च वा ङीप्। १वणिजां मूलधने २स्त्रीकटीवस्त्रबन्धे अमरः "नीविं प्रति प्रणिहिते च करे प्रियेण" सा॰द॰ "नीवीरतिक्रम्य सितेतरस्य" कुमा॰ "आलोच्य प्रियतमसंयुते विनीवी" माघः "निवीप्रविष्टं स्तनकरः" भा॰ स्त्री॰ २४अ॰। ३वस्त्रमात्रे "अवनिज्य पूर्वस्यां नीविं विस्रस्य नमोऽव इत्यादि" कात्या॰ ४।१।१५। ४राजपुत्रादेर्बन्धके सुभूतिः तत्र मूलधने "निजाट्टहमिवानुप्रविश्य नीविं सारमहतीमादाय निरगाम्" दशकु॰।

**नीव्र** न॰ नीध्रशब्दार्थे पटले अमरे पाठान्तरम्।

**नीवृत्** पुंस्त्री नियतं वर्त्ततेऽत्र नि+वृत–आधारे क्विप् दीर्घः। देशे जनपदे अमरः "गमितकम्रीकृतनैकनीवृता" नैष॰।

**नीशार** पु॰ नितरां शीर्य्यते हिमानिलावत्नानेन वा नि+शॄ–करणे आधारे वा घञ् दीर्घः। हिमानिलनिवारणे १प्रावरणे २काण्डपटे च (कानात्) अमरः।

**नीहार** पु॰ निह्रियते नि+हृ–कर्मणि घञ् दीर्घः। घनीभूते १शिशिरे २हिमे च अमरः "नीहारजालमलिनाः पुनरुक्तचान्द्राः" माघः ह॰र॰टीकोक्ते त्रयोविंशतिगणात्मके ३दण्डकभेदे।

**नु** अव्य॰ नुदति नौति वा नुद–नु–वा मित॰ डु। १विकल्पे २अनुनये ३अतीते ४प्रश्ने ५हेतौ ६वितर्के ७अपमाने ८आदेशे ९अनुतापे च मेदि॰ "चालितं नु शमितं नु बधूनाम्" माघः अयञ्चाशेषुपेक्षाद्योतकः। क्वचित् संशयाहङ्कारद्योतकश्च। [अर्थापदेशत्वात् न चास्य प्रकृतिः।

**नुड** बधे तु॰ कु॰ पर॰ सक॰ सेट्। नुडति अनुडीत्। नुनोड

**नुति** स्त्री नु–क्तिन्। १स्तवे २प्रणामे च।

**नुत्त(न्न)** त्रि॰ नुद–क्त। १प्रेरिते २क्षिप्ते च अमरः "अरस्तया नुत्तमनुत्तमं तमः" माघः। पक्षे क्तस्य नः पूर्वदस्य नः। "न नोननुन्नो नुन्नोनेनाना नानानना ननु। नुन्नोऽनुन्नोननुन्नेनोनानेनानुन्ननुन्ननुत्" किरा॰।

**नूतन** त्रि॰ नव एव "नवस्य नूप्तनप्खाश्च" पा॰ स्वार्थे तनप् नूरादेशश्च। नवीने अमरः "नूतनजलधररुचये" माधा॰ "प्रथमपरिगतार्थस्तं रघुः प्रत्यपश्यत्" रघुः। "प्रथमस्थितपूर्वपार्थिवम् कुलमभ्युन्नतनूतनेश्वरम्" रघुः।

**नूत्न** त्रि॰ नव एव नव+नूतनवत् त्नप् नूरादेशश्च। नवीने अमरः "नूत्ना इन्द्र! ते रथम्हचितो भूवः" ऋ॰८।२१।७

**नूद** पु॰ नुदति पापं क पृषो॰ दीर्घः। अश्वत्थाकारे ब्रह्मदारुवृक्षे अमरः।

**नूनम्** अव्य॰ नु+ऊन–णि। १वितर्के २निश्चिते ३प्रारम्भे

अमरः ४वाक्यपूरणे ५उत्प्रेक्षाद्योतने च मेदि० “सुदूरेऽपि नूनं शरणं प्रपन्नः” “न वेत्सि नूनं यतएवमात्थ माम्” कुमा० “नूनं शङ्के प्रभुं प्रायोऽन्यूनमित्थं वमादयः” सा०द० उत्प्रेक्षाद्योतकोक्तौ ।

**नूपुर** न० नू—क्विप् नुवि पुरति पुर—अग्रगमने क । (नेपुर) पादाङ्गदे अमरः “अपसरोनूपुररवैः प्रवत्स्यद्दरवर्हिणः” भा०व० १४६ अ० ।

**नृ** नये भ्वा० प० सक० अनिट् । नरति अनारीत् ननार अषोपदेशत्वात् न णत्वं प्रनरति “षोपदेशास्तनर्द-नाटिनाथ्नाथ्नन्दनक्क् नॄनृतः” । “नर्द शब्दे नट अवस्यन्दने चुरादिः नाटीति दीर्घनिर्देशात् घट अवताविति घटादिर्नेह स्पृहाते नाथृ नाधृ याच्ञादौ टु नदि समृद्धौ नक्क नाशने नॄ नये नृती गात्रविक्षेपे एतद्भिन्ना षोपदेशाः” इति मनोरमा । नॄ नये सेट् इत्यन्ये

**नृ** पु०नी—ऋन् डिच्च । १मनुष्ये २पुरुषे च अमरः । ना नरौ नरः नॄन् नुः नॄणां नृणाम् । “नृणामेकोगम्यस्त्वमसि पयसामर्णव इव” पुष्पदन्तस्तोत्रम् । “अन्ये कृतयुगे नॄणां युगह्रासानुरूपतः” मनुः । ३नेतरि त्रि० ४शङ्कौ पु० । मनुष्यजातौ स्त्रियां ङीष् वृद्धौ नारी “नारीणामनुकूलमाचरसि चेज्जानासि” सा०द० । [टिकाप्यत स्त्री ।

**नृकपाल** न० ६त० । नरस्य कपाले शीर्षास्थ्नि नृकरो-

**नृकेसरिन्** पु०ना चासौ केसरी च । नरसिंहे विष्णोरवतारभेदे नरसिंहशब्दे दृश्यम् ।

**नृग** पु० ओषीनरे १नृपभेदे २तत्पत्न्यां स्त्री । इक्षुशब्दे १४७२ पृ० मूलं दृश्यम् । “राजर्षेस्तस्य च सरित् नृगस्य भरतर्षभ ! । रम्यतीर्था बहुजला पयोष्णी द्विजसेविता” भा०व० ८८अ० । स च अज्ञानात् स्वकीय धेनुबुद्ध्या अन्यस्य धेनुं विप्राय दत्त्वा कृकलासतां प्राप्त इत्येषा कथा भा० अनु० ७०अ० दृश्या ।

**नृगधूम** पु० तीर्थभेदे शब्दार्थ० ।

**नृचक्षस्** पु० नॄन् चष्टे पश्यति भक्ष्यत्वेन चक्ष—असुन् न ख्यादेशः । १राक्षसे हेमच० । २मनुष्यदर्शके च “श्येनो नृचक्षा अश्वेद्धा चक्षुषापश्यामि” तारड्य०ब्रा० ३देवे च “नृचक्षसां भागोऽसि” यजु० १४।२४ “नॄन् शुभाशुभकर्तॄन् चक्षते जानन्ति ये ते नृचक्षसो देवाः” वेददी०

**नृचक्षुस्** पु० कौरवे सुनीथपुत्रे भाविनि नृपभेदे “सुनीथस्य भविता नृचक्षुर्यत्सुखो नलः” भाग० ६।२२। ३८श्लो० ।

**नृजल** न० ६त० । १मनुष्यमेहनजे अनिःसृतं जलम्” शाब्दिक २मानवमूत्रे हेमच० ।

**नृत** नर्त्तने दिवा० प० अक० सेट् । नृत्यति अनर्तीत् ननर्त नर्तिष्यति नर्त्स्यति । नृत्तम् नृत्यम् । निनृत्सति नरीनृत्यते । नरीनर्त्ति नर्नर्त्ति नरीनरीति नर्नरीति । षोपदेशत्वात् णति निमित्ते न णत्वम् । प्रनृत्यति नर्त्तकः नर्त्तकी । “नृत्यति युवतिजनेन समं सखि ! विरहिजनस्य दुरन्ते” गीतगो० “नृत्यन्ति गौककबरीरभस्राः” चोरप० । [त्वम् । नर्त्तने शब्दच० ।

**नृति** स्त्री नृत—गात्रविक्षेपे इन् किच्च अभिधानात् स्त्री०

**नृतु** पु० नृत—कु । नर्त्तके “तेऽपरीतं नृतो शवः” ऋ०८।२४।९ “नृतू जनिमन् यज्ञियानाम्” ऋ०६।६२।५ “नृतू नर्त्तकावश्विनौ” भा० “वक्षेव दायुषे नृतो !” ऋ०१।१२०।७

**नृतू** त्रि०नृत-ऊ । १नर्त्तके । नॄन् तर्वति हिनस्ति तुर्व—क्विप् । २नरहिंसके च “नृतूरिवायोर्णुते” ऋ०१।९२।४

**नृत्त(त्य)** न० नृत—क्त क्यप् वा । तालमानयुक्ते सविलासाङ्गविक्षेपरूपे नर्त्तने “ताण्डवं नटनं नाट्यं लास्यं नृत्यञ्च नर्त्तने” अमरे हेमचन्द्रेऽपि पर्यायता । तल्लक्षणादि यथा “देवस्या प्रतीतो यस्तावमानरसाश्रयः । सविलासोऽङ्गविक्षेपो नृत्यमित्युच्यते बुधैः । ताण्डवञ्च तथा लास्यं द्विविधं नृत्यमुच्यते । अङ्गविक्षेपबाहुल्यं तथाभिनयशून्यता । यत्र वा पेरणिस्तस्याः संज्ञा देषीति बोधतः । छेदनं भेदनं यत्र बहुरूपा सुधावली । ताण्डवं बहुरूपत्वहावभावसमुद्धतम् । छुरितं यौवतञ्चेति लास्यं द्विविधमुच्यते । यत्राभिनयाद्यैर्भावैरसैराश्लेषचुम्बनैः । नायिकानायकौ रङ्गे नृत्यतश्छुरितं हि तत् । मधुरं बहुलीलाभिर्नटीभिर्यन्न नृत्यते । वशीकरणविद्याभं तल्लास्यं यौवतं मतम् । गेयादुत्तिष्ठते वाद्यं वाद्यादुत्तिष्ठते लयः । लयतालसमारब्धं ततो नृत्यं प्रवर्त्तते” सङ्गीतदा० । अपरूपस्य नृत्यं व्यर्थं यथा “नृत्येनापरूपेण विद्विनीयस्य रूपतः । चाधिष्ठानवत्त्वं नृत्यमप्यद्विरूपना” इति मार्क०पु० “रङ्गस्य दर्शयित्वा नर्त्तकी निवर्त्तते यथा नृत्यात्” सा०का० “गोपाङ्गना नृत्यमनन्दयत्तम्” भट्टिः ।

**नृत्यप्रिय** त्रि० नृत्यं प्रियमस्य । १नर्त्तनप्रिये २ताण्डवप्रिये शिवे पु० ३कुमारानुचरमातृभेदे स्त्री “नृत्यप्रिया च राजेन्द्र ! शतोलूखलमेखला” भा०श० ४७न० ।

**नृत्यशाला** स्त्री ६त० । (नाचघर) नाट्यमण्डपे

**नृत्यस्थान** न० ६त०। नृत्याधिकरणे रङ्गस्थाने अमरः।

**नृदुर्ग** न० नृभिर्वेष्टितं दुर्गम् शा०त०। मनुष्यरथादिवेष्टिते नृपस्थानरचनीये दुर्गभेदे (गड) भेदे "नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत् नृपः" मनुः "नृदुर्गं चतुर्दिगवस्थायिहस्त्यश्वरथयुक्तबहुपादातरचितम्" कुल्लू०।

**नृदेव** पु० ना देव इव। नरदेवे नृपे "अज्ञानमात्रां विपुलां च पत्नीं देवा नृदेवाश्च भिदां न भेजुः" नैष०।

**नृधर्मन्** पु० नरस्येव धर्मोऽस्य अनिच् समा०। १कुबेरे हेमच० २मनुष्यधर्मयुक्तमात्रे त्रि० स्त्रियां वा ङाप्।

**नृनमन** न० ६त०। नृभिर्नम्यते नम–कर्मणि ल्युट् पूर्वपदादिति णत्वे प्राप्ते क्षुभ्ना० न णत्वम्। २मनुष्यनमनीये देवादौ।

**नृप** पु० नॄन् पाति रक्षति पा–क। "चतुर्योजनपर्यन्तमधिकारी नृपो भवेत्" इत्युक्ते १राजविशेषे २राजमात्रे च अमरः। "नृपादिलक्षणं यथा "चतुर्योजनपर्यन्तमधिकारी नृपस्य च। यो राजा तत्कृतगुणः स एव मण्डलेश्वरः। तस्माद्दशगुणो राजा राजेन्द्रः परिकीर्त्तितः" ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८६अ०। तत्प्रशंसा यथा "अपुत्त्रस्य नृपः पुत्रो निर्धनस्य धनं नृपः। अमातुर्जननी राजा अतातस्य पिता नृपः। अनाथस्य नृपो नाथो ह्यभर्त्तुः पार्थिवः पतिः। अचक्षुषस्य नृपो चक्षुर्नृप एव अपां सखा। सर्वदेवमयो राजा तस्मात्त्वमर्चये नृप!" कालिकापु०८५अ०। "व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह" याज्ञ० "नृपेण वाणिज्यहतस्य हेति" नैष०। ३षोडशसंख्यायाम् भारते षोडशानामेव राज्ञां माहात्म्यविशेषकथनात् नृपशब्दस्य तत्संख्यावाचित्वम् षोडश नृपाश्च भा०द्रो० ५५अध्यायादौ षोडशराजिकपर्वण्युक्ताः तत्रैव दृश्याः। "भुवि नृपवितङ्कतो भक्तलम्ब तत्प्रमम्" लीला०। राज्ये एकनृपकरणस्यावश्यकता तत्र विशेषश्च शौक्रनीतिपरिशिष्टे १अ० उक्तो यथा

"सदैकनायकं राज्यं कुर्यान्न बहुनायकम्। नानायकं क्वचिदपि कर्त्तुरीप्सितमूतये। राजकुले तु बहवः पुरुषा यदि सन्ति हि। तेषु ज्येष्ठो भवेद्राजा शेषास्तत्कार्यसाधकाः। गरीयांसोवराः सर्वे सहायेभ्यो विवृद्धये। ज्येष्ठोऽपि बधिरः कुष्ठी मूकोऽन्धः षण्ड एव यः। स राज्यार्हो भवेन्नैव भ्राता तत्सुत एव वा। स कनिष्ठोऽपि, ज्येष्ठस्य भ्रातुः पुत्रस्तु राज्यभाक्। दायादानामैकमत्यं राज्ञः श्रेयस्करं परम्। पृथग्भावो विनाशाय राज्यस्य च कुलस्य च। अतः स्वभोग सदृशान् दायादान् कारयेन्नृपः। अव्याहताज्ञः संतुष्टः छत्रसिंहासनैरपि। राज्यविभजनाच्छ्रेयो न भूपानां भवेत् खलु। अल्पीकृतं विभागेन राज्यं शत्रुर्जिहीर्षति। राज्यतुर्यांशदानेन स्थापयेत्तान् समन्ततः। चतुर्दिक्षु वा देशाधिपान् कुर्यात् सदा नृपः। गोगजाश्वोष्ट्रकोषाणामाधिपत्ये नियोजयेत्। सेनाधिकारे संयोज्या बान्धवाः श्यालकादयः। स्वदोषदर्शकाः कार्या गुरवः सुहृदश्च ये। वस्त्रालङ्कारपात्राणां स्त्रियो योज्यास्तु दर्शने। स्वयं सर्वं च वित्तं ये पर्यावेक्ष्य च दूनयेत्। अन्वेषेऽमन्त्रिभिः सार्द्धं भावि कार्यं तु निर्जने। अन्तर्वेश्मनि रात्रौ वा दिवा वाऽन्यविबोधिते। सुहृद्भिर्भातृभिः सार्द्धं सभायां पुत्रबान्धवैः। राजकार्यं सैन्यपैश्च सभ्यादौ चिन्तयेन्नृपः"। [राजनि०।

**नृपकन्द** पु० कन्दानां नृपः श्रेष्ठः राजद०। राजपलाण्डौ

**नृपगृह** न० ६त०। राजमन्दिरे तल्लक्षणादि इ०सं० ५२अ० "उत्तममष्टाध्यधिकं हस्तशतं नृपगृहं पृथुत्वेन। अष्टांशोनान्येवं पञ्च प्रपादानि दैर्घ्येण" शौक्रनीतिपरिशिष्टे १अ० तद्विवृतिर्यथा

"राजगृहं सभामध्यं गवाश्वगजशालिकम्। प्रशस्तवापीकूपादिजलयन्त्रैः सुशोभितम्। सर्वतः स्यात् समभुजं दक्षिणोच्चसुदङ्गनतम्। शालां विना नैकभुजम् तथा विषमबाहुकम्। प्रायःशाला नैकभुजा चतुःशालं विना शुभा। मध्यशालधारिभिर्युक्तप्राकारं सुगुप्तकम्। सविकल्पचतुर्द्वारं चतुर्दिक्षु सुशोभनम्। दिवारात्रौ सशस्त्रास्त्रैः प्रतिकक्षासु गोपितम्। चतुर्भिः पञ्चभिः षड्भिर्यामिकैः परिवर्त्तकैः। नानाग्रहोपकार्याद्रिसंयुतं कल्पयेत् सदा। वस्त्रादिमार्जनार्थं च स्नानार्थं यजनार्थकम्। भोजनार्थं च पाकार्थं पूर्वस्यां कल्पयेत् गृहम्। निद्रार्थञ्च विहारार्थं पानार्थं रोदनार्थकम्। धान्यार्थं द्वारपालार्थं दासीदासार्थमेव च। उत्सर्गार्थं ग्रहान् कुर्यात् दक्षिणस्यामनुक्रमात्। गोमृगोष्ट्रगजाद्यर्थं ग्रहान् प्रत्यक् प्रकल्पयेत्। रथवाज्यर्थशस्त्रार्थव्यायामयामिकार्थकम्। वस्त्रार्थकं तदर्थं विद्याभ्यासार्थमेव च। उदक् ग्रहान् प्रकुर्वीत सुगुप्तान् सुमनोहरान्। यथासुखानि वा कुर्याद्गृहस्थानि वै नृपः। धर्माधिकरणं शिल्पशालां कुर्याद्दुदग् ग्रहान्। पञ्चांशाधिकोच्छ्रायां भित्तिं विस्तरतो गृहे।

कोष्ठविस्तारषष्ठांशस्थूला सा च प्रकीर्त्तिता। एकभूमे रिदं मानमूर्द्ध्वमूर्द्ध्वं समन्ततः। अस्यैव भित्तिभिर्वापि पृथक् कोष्ठानि कल्पयेत्। त्रिकोष्ठं पञ्चकोष्ठं वा सप्तकोष्ठं स्मृतं स्मृतम्। द्वारार्थमन्यथा भक्तं द्वारस्यांशौ तु मध्यगौ। द्वौ द्वौ ज्ञेयौ चतुर्दिक्षु चतुष्कपट्टौ स्मृताम्। तत्रैव कल्पयेत् द्वारं नान्यत्र तु कदाचन। वातायनं पृथक् कोष्ठे कुर्य्याद्वाटक् सुखावहम्। अन्य गेहद्वारविद्धं गृहद्वारं न कारयेत्। इत्यकोष्ठतश्चमार्गं पीठकूपैश्च वेधितम्। प्रासादमण्डपद्वारे मार्गवेधो न विद्यते। गृहपीठं चतुर्थांशमुच्छ्रायस्य प्रकल्पयेत्। प्रासादानां मण्डपानां चार्द्धांशं चापरे जगुः। पर वातायनैर्विद्धं नापि वातायनं स्मृतम्। हीना निम्ना छर्दिने स्यात्ताटक् कोष्ठस्य विस्तरः। सोच्छ्रायस्यार्द्धमूलैक प्राकारः समभूकः। तृतीयांशकमूलो वा सुखस्यार्द्ध प्रविस्तरः। उच्छ्रितस्तु तथा कार्य्यो दस्युभिर्न विलङ्घ्यते। यामिकैरक्षितो नित्यं नालिकास्त्रैश्च संयुतः। बहुसुदृढगुल्मश्च सुगवाक्षप्रणालिकः। अहीनमहाप्राकारो ह्यसमीपमहीधरः। परिखा तत्र कार्य्या च खातात् द्विगुणविस्तरा। नातिसमीपप्राकारा ह्यगाधसलिला शुभा। युद्धसाधनसम्भारैः सुयुद्धकुशलैर्विना। न चेयसे दुर्गवासे राज्ञः स्याद् बन्धनाय वै"।

**नृपञ्जय** पु॰ अन्यान् नृपान् जयति जि–खच्। पौरवे नृपभेदे "क्षेम्यात् सुवीरो नृपतिः सुवीरात्तु नृपञ्जयः। नृपञ्जयो बहुरथ इत्येते पौरवाः स्मृताः" हरिवं॰ २०अ॰।

**नृपति** पु॰ नॄन् पाति पा–डति ६त॰। १कुवेरे २नृपाले राजनि च शब्दरत्ना॰ "जाताभिषङ्गो नृपतिर्निषङ्गात्" रघुः। नृनाथादयोऽपि राजनि। ३क्षत्रिये "नृपतेर्वर्णयोर्द्वयोः" मनुः।

**नृपतिवल्लभ** पु॰ ६त॰। १वटिकात्मके औषधभेदे "जातीफलं लवङ्गाब्दत्वगेलाटङ्कणरामठम्। जीरकञ्च यवानी च त्रिक्षारैश्चवपञ्चकम्। तीक्ष्णभस्म रसं गन्धं ताम्रं भस्म कर्षः पलम्। मरिचं त्रिपलं दत्त्वा छागीदुग्धेन मेलयेत्। भार्ङ्गीरसेन वा पिष्ट्वा वटिकां कुरु यत्नतः। श्रीमद्गहननाथेन विचिन्त्य परिनिर्म्मितः। सर्वदर्शोजसा चायं रसो नृपतिवल्लभः। अष्टादशवटीं खादेत् पथिकः सर्वदर्पकः। हन्ति मन्दानलं सर्व्वमामदोषं विशूचिकाम्। प्लीहगुल्मोदराष्ठीला अकत् पाण्डु हली-मकम्। कूकूलं कटिशूलञ्च पक्षुःशूलञ्च कामलाम्। शिरःशूलं कटीशूलमानाहमोष्ठशूलकम्। कासश्वासामवातञ्च श्लीपदं शोथमर्बुदम्। गलगण्डं गण्डमालामम्लपित्तञ्च गर्दभीम्। क्रिमिकुष्ठानि दद्रूञ्च वातरक्तं भगन्दरम्। उपदंशमतीसारं सर्वश्वर्य्यःप्रमेहकम्। अश्मरीं मूत्रकृच्छ्रञ्च मूत्राघातमसृग्दरम्। ज्वरं जीर्णज्वरं कम्पं तन्द्रालस्यं वमिं भ्रमिम्। दाहविद्रधिहिक्काश्च जड़गद्गदमूकताः। बाधिर्य्यं स्वरभेदञ्च शुष्कहृद्विविसर्पकान्। उरस्तम्भं रक्तपित्तं गुदभ्रंशार्च्चिं तथा। कर्णनासाक्षिरोगांश्च दन्तरोगञ्च पीनसम्। स्थौल्यञ्च शीतपित्तञ्च स्थावराणि विषाणि च। वातपित्तकफोत्थांश्च द्वन्द्वजान् सान्निपातिकान्। सर्वरोगचयान् हन्ति पवमांगुरिव पापहा। बलवर्णकरो ह्येष आयुष्यो वीर्य्यवर्द्धनः। परं वाजीकरः श्रेष्ठः पटुतामन्त्रसिद्धिदः। अरोगी दीर्घजीवी स्यात् रोगी रोगं विमुञ्चति। रसस्यास्य प्रसादेन सुबुद्धिर्जायते नरः" भैषज्यरत्नावली। २राज्ञां प्रिये त्रि॰ ३राजपत्न्यां स्त्री नृपवल्लभादयोऽप्यत्र।

**नृपत्नी** स्त्री नृणां पतिः पत्युर्नित्यं "विभाषा सपूर्वस्य" पा॰ नान्तादेशः नान्तत्वात् स्त्रियां ङीप्। नृणां पालयित्र्यां स्त्रियां "अभि नो देवीरवसा महः शर्म्मणा नृपत्नीः" ऋ॰१।२२।११ "नृपत्नीः मनुष्याणां पालयित्र्यः" भा॰ छन्दसि जसः स्थाने सु।

**नृपद्रुम** पु॰ नृपसादनो द्रुमः शा॰त॰। राजादने आरग्वधे राजनि॰। नृपसादादयोऽप्यत्र "खादेदाम्यकुरान् भ्रष्टान् पूतीकनृपदन्तजान्" सुश्रुतः।

**नृपप्रिय** पु॰ ६त॰। (वेङ्गा) १वंशभेदे तस्य दुर्गवेष्टनकारित्वात्तत्प्रियत्वम्। २राजपलाण्डौ ३शालिधान्ये ४आम्रे च शब्दच॰। ५राजवल्लभे त्रि॰ ६केतक्यां ७राजखर्ज्जूर्य्यां च स्त्री राजनि॰। [राजनि॰।

**नृपप्रियफला** स्त्री नृपप्रियं फलं यस्याः। वार्त्ताक्यां

**नृपबदर** पु॰ बदराणां नृपः राजदन्ता॰ पूर्वनि॰। राजबदरे राजनि॰।

**नृपमन्दिर** न॰ ६त॰। राजगृहे सौधे हेमच॰।

**नृपमाङ्गल्यक** न॰ नृपस्य मङ्गल्यं यस्मात् कप्। आडक्यहक्षे राजनि॰।

**नृपमान** न॰ नृपस्य तद्भोजनस्य मानमावेदकं वाद्यम्। नृपस्य भोजनकालावेदके वाद्यभेदे त्रिका॰।

**नृपलक्ष्मन्** न० ६त० । नृपचिह्ने छत्रे चामरादौ च नृपचिह्नादयोऽप्यत्र "निजपाहोजसा वीरः कलिं दिग्विजये क्वचित् । नृपलिङ्गधरं शूद्रं घ्नन्तं गोमिथुनं पदा" भाग०

**नृपवल्लभ** न०चक्रपाणिदत्तोक्ते पक्के १तैलभेदे २घृतभेदे च । "गवां शकृत्क्वाथविपक्वमुत्तमं हितञ्च तैलं तिमिरेषु नस्यतः । घृतं हितं केवलमेव पैत्तिके तथानुतैलं पवनात्मकगुल्मयोः । जीवकर्षभकौ मेदाद्राक्षांशुमती निदिग्धिका बृहती । मधुकं बला विडङ्गं मञ्जिष्ठा शर्करा रास्ना । नीलोत्पलं श्वदंष्ट्रा प्रपौण्डरीकं पुनर्नवा लवणम् । पिप्पल्यः सर्वेषां भागैरक्षांशिकैः पिष्टैः । तैलं वा यदि वा सर्पिर्दत्त्वा क्षीरं चतुर्गुणं पक्वम् । तिमिरं पटलं काचं नक्ताान्ध्यं चार्बुदं तथाध्यषञ्च । श्वेतञ्च लिङ्गनाशं नाशयति नीलिकार्जुनम् । सुखनासादौर्गन्ध्यं पलितञ्चाकालजं कृष्णत्वम् । कासं श्वासं शोषं हिक्कां स्तम्भं तथा व्यथां नेत्रे । दशजैस्त्रयर्दभेदं रोगं वाक्यस्य विरसत्वम् । रोगानथोर्ध्वजत्रोः सर्वानचिरेण नाशयति । नस्यार्थं कुरुत तैलं पक्तव्यं नृपवल्लभे । क्वाथैः शाकिकैः कल्कैरन्ये भृङ्गादिकैश्चवत्" ।

**नृपशासन** न० ६त० । राजशासने तत्प्रकारः शौक्रनीतिपरिशिष्टे १अ० उक्तो यथा
"शासनं कीदृशं कार्यं राज्ञा नित्यं प्रजासु च । दासे भृत्येषु भार्य्यायां पुत्रे शिष्येऽपि वा क्वचित् । वाग्दण्डं परुषं नैव कार्यं तद्देशसंस्थिते । तुलाशासनमानानां नाशकस्यापि वा क्वचित् । निर्य्यासानां च धातूनां सजातीनां घृतस्य च । मधुदुग्धवसातैलपिष्टादीनाञ्च सर्वदा । कूटं नैव तु कार्यं स्यात् बलात् निर्मितं जनैः । उत्कोचग्रहणं नैव स्वामिकार्यविलोपनम् । दुष्टतस्करं चोरं जारं चद्दुर्वेषिणं द्विषम् । नरक्षन्त्वप्रकाशं हि तथान्यानपकारकान् । मातॄणां पितॄणां चैव पूज्यानां विदुषामपि । नावमानं नोपहासं न कुर्युः पितृपुत्रयोः । वापीकूपारामसीमाधर्मशालासुरालयान् । मार्गांश्चैव प्रबाधेयुर्दीनान्धविकलाङ्गकान् । द्यूतञ्च मद्यपानञ्च मृगयां शस्त्रधारणम् । गोगजाश्वोष्ट्रमहिषीनृणां च स्थावरस्य च । रजतस्वर्णरत्नानां मादकस्य विषस्य च । क्रयं वा विक्रयं वापि मद्यसन्धानमेव च । क्रयपत्रं दानपत्रमृणनिर्णयपत्रकम् । राजाज्ञया विना नैव जनैः कार्यं चिकित्सितम् । महापापाभिशपनं निधिग्रहणमेव च । न वा समाजनियमं निर्णयं जातिदूषणम् । अस्वामिनाष्टिकधनसंग्रहमन्यभेदतः । नृपतेर्गुणलोपञ्च नैव कुर्युः कदाचन । स्वधर्महानिमनृतं परदाराभिमर्षणम् । कूटसाक्ष्यं कूटलेख्यमप्रकाशप्रतिग्रहम् । निर्द्धारितकराधिक्यं स्तेयं साहसमेव च । मनसापि न कुर्वन्तु स्वामिद्रोहं तथैव च । भृत्या शुल्केन भागेन वृद्ध्या दर्पात् बलात् छलात् । साधर्षणं न कुर्वन्तु यस्य कस्यापि सर्वदा । परिमाणोन्मानमानं धार्यं नृपविमुद्रितम् । गुणसाधनसंदक्षा भवन्तु निखिला जनाः । साहसाधिकृतो न स्युर्विना चैवाततायिनम् । उत्सृष्टा वृषभाद्या यैस्तैस्ते धार्य्याः सुयन्त्रिताः । इति मच्छासनं श्रुत्वा येऽन्यथा वर्त्तयन्ति तान् । नाशयिष्यामि दण्डेन महता पापकारकान् । इति प्रबोधयेन्नित्यं प्रजाशासनडिण्डिमैः । विलिखेत् शासनं राजा धारयेच्च चतुष्पथे । सदा चोद्यतदण्डः स्यादसाधुषु च सत्सु च" ।

**नृपशु** पु० ना पशुरिव ना चासौ पशुश्चेति वा । १मूर्खे २पुरुषपशौ च "यस्य क्षिपो नृपशून् स्वादन्ति" भाग० ५।२६।१८ श्लो० ।

**नृपसभ(भा)** न०स्त्री नृपाणां सभा "राजामनुष्यपूर्व्वेति" पा० राजपर्य्यायपरत्वात् क्लीवत्वम् । बहूनां नृपाणां समाजाम् । एकस्य सभायां तु स्त्री । तत्सभाप्रकारश्च शौक्रनीतिपरिशिष्टे १अ० उक्तो यथा
"राज्ञा राजसभा कार्य्या सुगुप्ता च मनोरमा । त्रिकोष्ठैः पञ्चकोष्ठैर्वा सप्तकोष्ठैः सुविस्तृता । दक्षिणोदक् तथा दीर्घा प्राक् प्रत्यग् द्विगुणाऽथ वा । त्रिगुणा वा यथाकाममेकभूमिर्द्विभूमिका । त्रिभूमिका वा कर्त्तव्या सोपकार्य्याशिरोमध्हा । परितः परिकोष्ठेषु वातायनविराजिता । पार्श्वकोष्ठात्तु द्विगुणा मध्यकोष्ठेषु विस्तृता । पञ्चमांशाधिकं त्वौच्च्यं मध्यकोष्ठस्य विस्तरात् । विस्तारेण समं त्वौच्च्यं पञ्चमांशाधिकं तु वा । कोष्ठकानां च भूमिं च यदि वा तत्र कारयेत् । द्विभूमिके पार्श्वकोष्ठे मध्यमं त्वेकभूमिकम् । पृथक्स्तम्भा तु सदृक्कोष्ठा चतुर्मार्गागमा शुभा । जलोद्वारादियन्त्रैश्च युता सुस्वरयन्त्रकैः । वातप्रेरकयन्त्रैश्च यन्त्रैः कालप्रबोधकैः । प्रतिष्ठिता च शार्दूलैस्तथा च प्रतिरूपकैः । एवंविधा राजसभा यन्त्राद्या कार्यदर्शने । तथाविधामात्यलेख्यसभ्याधिकृतशालिकाः । कर्त्तव्याः प्रागुदक्शिरास्तद्यथार्थ पृथक् पृथक् । शतहस्तमितां भूमिं

त्यक्त्वा राजगृहात् सदा । उदक् स्थितहस्ता प्राक् सेना सन्निवेशनार्थिका । आराद्राजगृहस्यैव प्रजानां निलयानि च । सर्वनिश्चेष्टिकानतुक्रमतश्च सदा ततः । समन्ताच्च चतुर्दिक्षु विन्यसेच्च ततःपरम् । मन्त्र्यनुमन्त्रयो ह्याधिकारिगणस्ततः । सेनाधिपपदातीनां गणः स्यादि गणस्ततः । सामन्त समजस्यापि गजपालगणस्ततः । हृद्घात्रादिकयन्त्रापि ततः सत्वरगोमयः । ततः खगोलुमिकगणो ह्यारण्यकगणस्ततः । क्रमादेषां गृहाणि स्युः शोभनानि परे सदा । पान्थशाला ततः कार्या सुगुप्ता सजलाशया । सजातीयगृहाणां च समुदायेन पङ्क्तितः । निवेशने पुरे ग्रामे प्रागुदक् प्रक्रमेधते । सजातिपण्यनिवहैरापणे पण्यवेशनम् । धनिकादिक्रमेणैव राजमार्गस्य पार्श्वतः । एवं हि पत्तनं कुर्यात् ग्रामं चैव नराधिपः" । सदृधिवेशनप्रकारः तत्रैव "सभायां मत्रगर्भस्य मध्ये राजासनं भवेत् । दक्षसंस्था वामसंस्थाः विशेयुः पार्श्वपृष्ठगाः । पुत्राः पौत्राः भ्रातरश्च भागिनेयाश्च पृष्ठतः । दौहित्रा दक्षभागास्तु वामसंस्थाः क्रमादिमे । पितृव्याः स्वकुलश्रेष्ठाः सभ्याः सेनाधिपास्तथा । स्थाने दक्षिणभागे तु प्राक्संस्थाः पृथगासनाः । मातामहकुलश्रेष्ठा मन्त्रिणो बान्धवास्तथा । श्वशुराश्चैव श्यालाश्च वामाद्ये चाधिकारिणः । वामदक्षिणपार्श्वस्थो जामाता भगिनीपतिः । स्वसदृशसौधे वा स्वार्धासनगतः सुहृत् । दौहित्रभागिनेयानां स्थाने स्युर्दत्तकादयः । भागिनेयाश्च दौहित्राः पुत्रादिस्थानसंस्थिताः । यथा पिता तथाचार्यो सभः श्रेष्ठासने स्थितः । पार्श्वयोरग्रतः सर्वे सेवका मन्त्रिणस्तथा । परिवारगणाः सर्वैः सर्वेभ्यः पृष्ठसंस्थिताः । स्वर्णदण्डधरौ स्यातां प्रवेशननिवेदकौ । विशिष्टचिह्नचक्राजा स्वासने प्रविशेत् स्वके । सुभूषणः सुवसनः कवची मुकुटान्वितः । स्निग्धासत्कसभस्तु सावधानः मनाः सदा" ।

**नृपसुता** स्त्री ६त० । १राजकन्यायां २छुछुन्दर्यां स्त्री ट० सं०८८७५० "छुछुन्दरी नृपसुता वालेयोगर्दभः प्रोक्तः" ।

**नृपांश** ६त० । १नृपाय देये करे षडंशादौ २राजपुत्रे पु० ।

**नृपाकृष्ट** ३त० । चतुरङ्गशब्दे २८६४ पृ० दर्शिते क्रीडार्थराजाकृष्टे राजनि । "नृपाकृष्टो यदा राजा नश्यन्प्रति युधिष्ठिर ! । तदा राजा हि राजानं घातेऽपि तं हनिष्यति" ।

**नृपात्मज** पु० ६त० । १राजपुत्रे २राजकन्यायां स्त्री "स्वयंवरं भीमनृपात्मजायाः" नैष० । नृपपुत्रात्मजेव । ३कटुतुम्ब्यां स्त्री रत्नमाला ।

**नृपाध्वर** पु० नृपमात्रकर्त्तव्योऽध्वरः शाक०त० । राजमात्रकर्त्तव्ये राजसूययज्ञे "राजा राजसूयेन यजेत" श्रुत्या राजमात्रस्यैव तत्राधिकारस्य विधानात्तस्य तथात्वम् ।

**नृपान्न** न०नृपप्रियमन्नम् । १राजान्ननामके धान्यभेदे राजनि० ६त० । २राज्ञोऽन्ने च ।

**नृपाभीर** न० नृपं तद्भोजनकालमभीरयति अभि+ईर—अच् उप०स० । राज्ञो भोजनकालावेदके नृपमानाख्ये वाद्यभेदे त्रिका० ।

**नृपामय** पु० आमयानां नृपः राजदन्ता० पूर्वनि० । १राजयक्ष्मरोगे राजनि० ६त० । २राज्ञोरोगे च ।

**नृपाल** पु० नृन् पालयति पालि—अण् उप०स० । १नृपतौ राजनि । "अथो नृपालाः क्षितितल तत्र बलिं हरिष्यन्ति सलोकपालाः" भाग०४।१६।२०नरपालादयोऽप्यत्र

**नृपावर्त्त** न० नृप इवावर्त्तते आ—वृत—अच् । राजावर्त्ते मणिभेदे राजनि० । [आसनभेदे अमरः ।

**नृपासन** न० । राज्ञो भद्रासने सिंहासने मञ्चादिरचिते

**नृपाह्वय** पु० नृपमाह्वयति नाम्ना आ+ह्वे—श । राजपलाण्डौ राजनि० ।

**नृपीट** न० उदके निघण्टु कपीटमित्यत्र पाठान्तरम् ।

**नृपीति** स्त्री पा—रक्षणे भावे क्तिन् आत ईत्वम् ६त० । १मनुष्यरक्षणे । "अनाधृष्टो नृपीतये" ऋ० ७।१५।१४। कर्त्तरि क्तिच् । २मनुष्यरक्षके त्रि० "वद्ध्ये अमृतो नृपीतौ" ७।२०।८ "नृपीतौ नृणां रक्षके" भा० ।

**नृपोचित** पु० नृपेषु उचितः । १राजमाषे २राजयोग्ये त्रि० राजनि० ।

**नृभोजा** त्रि० नभसि जायते जन—विट् ङा । आकाशजाते "नभोजाः पृष्ठं हर्यतस्य दर्शि" ऋ० १०।१२३।२ नभोजस् शब्दकल्पनं प्रामादिकम् ।

**नृमणस्** त्रि० नृषु यजमानेषु मनो यस्य "छन्दस्युदवग्रहात्" पा० णत्वम् । रक्षितव्ययजमानेषु अनुग्राहकबुद्धियुक्ते इन्द्रादौ देवे "त्वं मित्रो नृमणाः प्रावनः पुरः" ऋ०१।५।१५ नृणां मनोयत्र णत्वम् । २धने नृम्णशब्दे दृश्यम् । ३प्लक्षद्वीपस्थे महानदीभेदे स्त्री भावनः"सरस्वा नृमणाङ्गिरसी सावित्री सुप्रभाता ऋतम्भरा सत्यम्भरेति महानद्यः" भाग० ५।२०।६

**नृमिथुन** न० ६त०। मनुष्यस्य स्त्रीपुरुषयुग्मे। "चतुष्टौ घटी नृमिथुनं सगदं सवीणम्" बृहज्जा० मिथुनराशिस्वरूपोक्तौ। नृयुग्मादयोऽप्यत्र। "उग्रं नृयुग्मं घटमं त्रिकोणम्" ज्योति०त०।

**नृमेध** पु० ना मिध्यतेऽत्र मिध–आधारे घञ्। पुरुषमेधे १यज्ञभेदे। तद्विधिः यजु० ३०अ० दृश्यः। २ऋषिभेदे "नृमेधं प्रजयावृतत्पृषम्" ऋ० १०।८०।१२ "नृमेधमेतन्नामानमृषिम्" भा०।

**नृम्ण** न० नृभिर्म्नायतेऽभ्यस्यते उपार्जयितुम् म्ना–घञर्थे–क "छन्दस्यृदवग्रहात्" पा० णत्वम्। धने निघण्टुः। "आसम्यं नृम्णमाभराम्यं नृमणस्यसे" ऋ० ५।३८।४। नृम्णं धनम्। नृमणस्यसे धनमिच्छसि" भा० नृमणस्+क्यच्।

**नृयज्ञ** पु० नृभिरर्थ्यो यज्ञः। प्रत्यहं कर्त्तव्यपञ्चमहायज्ञान्तर्गते अतिथिपूजनरूपे यज्ञे "अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्। पञ्चैतान् यो महायज्ञान् न हापयति शक्तितः" "ऋषियज्ञं देवयज्ञं भूतयज्ञञ्च सर्वदा। नृयज्ञं पितृयज्ञञ्च यथाशक्ति न हापयेत्" इति च मनुः।

**नृवत्** त्रि० ना–परिचारकादिरस्त्यस्य मतुप् वेदे मस्य वः लोके तु न वः नृमदित्येव। परिचारकनरयुक्ते "भरद्वाजे नृवत इन्द्र! सूरीन् दिवि" ऋ० ६।१७।१४

**नृवराह** पु०ना चासौ वराहश्च। अंशाभ्यां मनुष्यवराहाकृतौ भगवदवतारभेदे "दैत्यस्ततोऽसौ नृवराहमाहवे निपातयामास रुषा ज्वलन्तीम्। शक्तिं यथा विद्युतमाशु शुभ्रे प्रवर्षमाणोऽपि गिरिं सुमेरुः। स हन्यमानो गदयाऽप्रमेयः प्रोवाच दैत्यं नृवराहमूर्त्तिः। प्रजापतेः सेतुमिमं निहत्य प्रयास्य कः स्वस्ति यथा सुरेन्द्र!" अग्निपु०। "नृवराहस्य वसतिर्महर्लोके प्रतिष्ठिता। नृसिंहस्य तथा प्रोक्ता जनलोके महात्मनः"। अयच बलेर्द्वारी यथा "शौकरं रूपमास्थाय हार्यस्य च दुरात्मनः। भविष्यामि न सन्देहो व्रज यक्ष! त्वरान्वितः" पाद्मे सृष्टिखण्डे २८अ०।

**नृवाहन** पु० ना वाहनमस्य। १नरवाहने कुबेरे नुर्नेतुर्वाहनम् "छन्दस्यृदवग्रहात्" पा० वेदे णत्वम्। २नेतुर्वाहने "अर्वाञ्चमद्य यय्यं नृवाहणम्" ऋ० २।३७।५

**नृवाहस्** पु० नॄन् वहति वह–वेदे असुन् णिच्च। मनुष्यवाहके "शोणा धृष्णू नृवाहसा" ऋ०।१।६।२

**नृशंस** त्रि० नॄन् शंसति शन्सु–हिंसायाम् अण्। १घातुके क्रूरे अमरः २परद्रोहिणि च "भगो नृशंस! उर्वन्तरिक्षम्" ऋ० ०।५।१५ "इतरेषु ( विवाहेषु ) तु शिष्टेषु नृशंसानृतवादिनः" मनुः।

**नृशृङ्ग** न० ६त० शृङ्गम्। अलीकपदार्थे नरस्य शृङ्गाभावात् अयोग्यत्वेऽपि अलीकत्वविवक्षायामस्य साधुत्वम् "नासदुत्पादो नृशृङ्गवत्" सां०सू० "नरशृङ्गतुल्यस्यासत उत्पादो न सम्भवतीति" प्र०भा०।

**नृषद्** पु० नरि पुरुषे अन्तर्यामितया सीदति सद–क्विप् वेदे षत्वम्। १परमात्मनि २कण्वर्षेः पितरि ऋषिभेदे "उत कण्वं नृषदः पुत्रमाहुः" ऋ०१०।३१।११ ३मनुष्याश्रयिणि च "ध्रुवसदं त्वा नृषदं मनःसदम्" यजु०९।२।

**नृषदन** न० नरः नेतारः ऋत्विजः तेषाम् सदनम् वेदे षत्वम्। यज्ञगृहे "सन्ततो रण्वा नरो नृषदने" ऋ० ५।७।२ "नृषदने यागगृहे" भा०।

**नृसिंह** पु० ना चासौ सिंहश्च। अंशाभ्यां मनुष्यसिंहाकृतियुक्ते १भगवतोऽवतारभेदे "सिंहस्य कृत्वा वदनं मुरारिः सदा करालञ्च सुरक्तनेत्रम्। अर्द्धं वपुर्वै मनुजस्य कृत्वा ययौ सभां दैत्यपतेः पुरस्तात्" अग्निपु०। २रतिबन्धभेदे तस्य लक्षणं यथा "पादौ संपीड्य योनौ च हठाल्लिङ्गप्रवेशनम्। हस्तयोर्वेष्टयेद्गात्रं बन्धो नृसिंहसंज्ञकः" रतिम०। ना सिंह इव उपमितसमासः। ३पुरुषश्रेष्ठे च

**नृसिंहचतुर्दशी** स्त्री नृसिंहस्याविर्भावदिनं चतुर्दशी शा०त०। वैशाखशुक्लचतुर्दश्याम्। आगमे "वैशाखे शुक्लपक्षे च चतुर्दश्यां महातिथौ। सायं प्रह्लादधिक्कारसवहिष्णुः परो हरिः। सद्यः कटकटायन्त्विद्रापितसभाजनः। लीलया सम्भगर्भान्नादुद्भूतः शब्दभीषणः। नृहरेरवतारात्तां यत्नतः समुपोषयेत्। महापुण्यतमायाञ्च सायं विष्णुं प्रपूजयेत्"। इहन्नारसिंहे "वैशाखशुक्लपक्षस्य चतुर्दश्यां समाचरेत्। मज्जन्मसम्भवं पुण्यं व्रतं पापप्रणाशनम्" किञ्च "स्वातीनक्षत्रयोगे तु शनिवारे हि मद्व्रतम्। सिद्धियोगस्य योगे च लभ्यते दैवयोगतः। सर्वैरेतैस्तु संयुक्तं हत्याकोटिविनाशनम्। केवलञ्च प्रकर्त्तव्यं मद्दिनं फलकाङ्क्षिभिः। वैष्णवैर्न तु कर्त्तव्या परविद्धा चतुर्दशी"। तत्र व्रतनित्यत्वादि इहन्नरसिंहपुराणे "वर्षे वर्षे तु कर्त्तव्यं मम सन्तुष्टिकारणम्। महागुह्यमिदं श्रेष्ठं मानवैर्भवभीरुभिः" किञ्च "विज्ञाय मद्दिनं यस्तु लङ्घयेत् स तु पापभाक्। एवं ज्ञात्वा प्रक-

र्त्तव्यं मद्दिने व्रतमुत्तमम्। अन्यथा नरकं याति यावच्चन्द्रदिवाकरौ" तत्राधिकारिनिर्णयः तत्रैव "सर्वेषामेव लोकानामधिकारोऽस्ति मद्व्रते। मद्भक्तैस्तु विशेषेण प्रयोयं मत्परायणैः"।

**नृसिंहपुराण** न॰ उपपुराणभेदे उपपुराणशब्दे दृश्यम्।

**नृसिंहवन** न॰ वृ॰सं॰ १६अ॰ कूर्मविभागे उक्ते पश्चिमोत्तरदिक्स्थिते देशभेदे कूर्मविभागशब्दे दृश्यम्।

**नृसेन(ना)** न॰स्त्री नृणां सेना "विभाषा सेनेत्यादि" पा॰ वा क्लीवता। बहुमनुष्ययुक्तसेनायाम्।

**नृसोम** पु॰ ना सोम इव। १मनुजश्रेष्ठे २सोमोद्भवायाः चरितो नृसोमः" रघुः।

**नृहरि** पु॰ ना चासौ हरिश्च। नरसिंहे भगवदवतारभेदे "नृहरिवामनजामदग्न्यः" कृष्णचो॰।

**नॄ** नीतौ क्र्यादि॰ प्वादि॰ पर॰ सक॰ सेट्। नृणाति अनारीत् अणोपदेशत्वान्न णत्वम् कविकल्पद्रुमः पाणिनिमते नॄ नये इति क्र्यादिषु पाठः। तत्रैव वोपदेव मर्युदासता। [चिच् नरयति। न णत्वम्।

**नॄ** नये भ्वा॰ पर॰ सक॰ सेट्। नरति अनारीत्। घटा॰

**नेउ(ड)ली** स्त्री हठयोगभेदे तत्प्रकारस्तु रुद्रयामले "धौतीयोगानन्तरं हि ने(उ)डुलीकर्म समाचरेत्। ने(उ)डुलीयोगमात्रेण आसने ने(उ)डुलीपमः। नेउ(डु)लीसाधनादेव चिरजीवी निरामयः। तत्प्रकारं प्रवक्ष्यामि सावधानावधारय। मुक्त्वा सुखासनं कृत्वा वारैकं प्रतिचालयेत्। प्रतिचालयेत् स्वोदरस्य कठिनाशाविवर्जितः। पुनःपुनश्चालनञ्च कुर्यात् स्वोदरमध्यकम्। कुलालचक्रवत् कुर्यात् भ्रमणस्योदरस्य च। सर्वांकुञ्चालनादेव कुण्डलीशक्तिचालनम्। चालनात् कुण्डलीदेव्याश्चेतना सा भवेत् प्रभो!। एतस्मादन्तरं देव! चालनं परिकीर्त्तितम्। नाडीनां चालनादेव सर्वसिद्धीनिधिर्भवेत्। वायुसिद्धिर्भवेत्तस्य पञ्चभूतस्यसिद्धिभाक्। सुखासनं हि सर्वत्र सर्वदा कारयेद्बुधः। बद्धपद्मासनं कृत्वा अधोवक्त्रो जपं चरेत्। तदा त्रिदिनमाकर्तुं समर्थो सुस्थिरकासनम्। तदा हि सर्वनाडीश्च वशीभूता न संशयः। नाडीचालनयोगेन सिद्धिमाप्नोति साधकः। नेडु(उ)लीं यो न जानाति स कथं कर्त्तुमुद्यतः। स धीरो मानसवरोमतिमान् स जितेन्द्रियः। यो नेउ(डु)लीयोगसारं कर्त्तुमुद्यमपारगः। स चादौ चालनञ्च कुर्यान्नाड्यादिसाधनम्। नेउ(डु)लीयोगमार्गेण नाडीचालनतत्परः। भवत्येव महाकाल! राजराजेश्वरो यथा। केवलं प्राणवायोश्च धारणात् चालनं भवेत्। विना चालनयोगेन देहशुद्धिर्न जायते। चालनं नाडिकादीनां कफपित्तादिनाशनम्। करोति यतो योगी सुखासनानिलाशनात्। वायुमध्यमेव हि नेडु(उ)लीयोगकालके। न कुर्यात् केवलं नाथ! अन्यकाले सदाचरेत्। यावन्नेउ(ड)लीं न जानाति तावद्वायुं न संपिबेत्। बहुतरं न संग्राह्यं वायोरोगमवाप्नुयात्। केवलं श्वासगमनं यावन्नेउ(डु)ली न सिद्ध्यति। मन्त्रारामसाधनाञ्च पञ्चवायुवशो भवेत्"।

**नेजक** पु॰ निज—शुद्धौ ण्वुल्। १रजके "शाल्मलीफलके श्लक्ष्णे नेनिज्यात् नेजकः शनैः। न च वासांसि वासोभिर्निर्हरेन्न च वासयेत्" मनुना तत्कर्त्तव्यमुक्तम्। २शोधकमात्रे त्रि॰।

**नेजन** न॰ निज्यतेऽत्र निज—आधारे ल्युट्। १नेजकालये "राघवः प्रत्यहंप्रवृत्त वाससां नेजनेष्विव" भा॰द्रो॰ १८८अ॰। भावे ल्युट्। २शोधने

**नेतृ(द)** अव्य॰ नी—विच् वा॰ तुक् नेद—विच् वा चादि॰ १शङ्कायां २प्रतिषेधे ३समुच्चये च अनोरथा। न इव। ४नैरन्तर्ये। "अन्तो नेत् चरिरोदते" ऋ॰ ८।५।६। "नेत्त्वदपचेतयातै" यजु॰ २।१७

**नेतीयोग** पु॰ हठयोगभेदे स च रुद्रयामले उत्तरखण्डे उक्तो यथा "नेतीयोगविधानानि शृणुष्व वीरपूजित!। येन सर्वमस्तकसङ्कफानां दाहनं भवेत्। सूक्ष्मसूत्रं दृढतरं मृदद्याद्याधिकाधिके। सुतरज्जु समानीय यत्नेन समानयेत्। पुनःपुनः सदा योगी यातायातेन घर्षयेत्। क्रमेण वर्द्धनं कुर्यात् सूक्ष्मस्य परमेश्वर!। नेतीयोगेन नासाया रज्जुं निर्मलं भवेत्। वायोर्गमनकाले तु महायुप्राप्नोति प्रभो!"।

**नेतृ** त्रि॰ नी—तृच्। १प्रभौ अमरः २निर्वाहके ३नायके ४प्रवर्त्तके ५प्रापके च स्त्रियां ङीप्। ६निम्बवृक्षे पु॰ राजनि॰ "इतो नेता हि तत्र त्वं यथानुमोऽल्पसि मत्कृतात्" भा॰व॰६६अ॰ "स नेता शासिता च नः" मनुः। ७विष्णौ पु॰ "न्यायो नेता समीरणः" विष्णुस॰ "अमद्यन्तनिर्वाहकोनेता" भा॰। नञ्ञमवाच्यत्वात् परमेतत्वात् बहु॰ अचश्चा॰। अगोनेता यस्याः अगनेता रात्रिः। यस्यां रात्रौ आरभ्यावधियेषपर्यन्तं अगमयोग्यत्वस्य दर्शनं तस्याराते नेतृत्वान्नेतृत्वात् तथात्मम्।

**नेत्र** न० नयति नीयते वाऽनेन ष्ट्रन् । १मन्थनदामनि २वस्त्रभेदे ३वृक्षमूले ४रथे ५जटायाम् ६नाड्याम् मेदि० । ७चक्षुषि अमरः । ८प्रापयितरि ९नयनसाधने १०प्रवर्त्तके च त्रि० । ११वस्तिशलाकायां राजनि० । १२चक्षुर्गोलकावस्थिते वह्निदैवताके तैजसे इन्द्रियभेदे न० "विजित्य नेत्रप्रतिघातिनीं प्रभाम्" कुमा० तत्र अग्निमन्थनदामनि "व्यामप्रमाणं नेत्रं स्यात् प्रमथ्यस्तेन पावकः" कर्मप्रदीपे कात्या० "मन्थानं मन्दरं कृत्वा तथा नेत्रञ्च वासुकिम्" भा०आ० १८अ० । चक्षुषि "नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः" सा०द० । १३हैहयवंशपुत्रभेदे पु० "धर्मस्तु हैहयसुतो नेत्रः कुन्तिपिता ततः" भाग०९।२३।२२। १४द्विसंख्यायां न० "मुनिपक्षयमनेत्राक्षि (२२६७) स्य० सि० व्याख्यायां पित्तोल्लो । वस्तिशलाकामानादि सुश्रुते उक्तं यथा "अथातो नेत्रवस्तिप्रमाणप्रविभागचिकित्सितं व्याख्यास्यामः" इत्युपक्रमे सप्रपञ्चमुक्त्वा नेत्रप्रमाणादि उक्तं यथा "पञ्चविंशतेरब्दं द्वादशाङ्गुलं मूलेऽङ्गुष्ठोदरपरीणाहमग्रे कनिष्ठिकोदरपरीणाहमग्रे त्वङ्कुलचक्रिविटकर्णिकं स्त्रप्रवलनाडीतुल्यप्रवेशं कोलास्थिमात्रं छिद्रं छिद्रकलायमात्रं छिद्रमित्यन्ये । सर्वाणि मूले वस्तिनिबन्धनार्थं द्विकर्णिकानि । आस्थापनद्रव्यप्रमाणं तु विहिता द्वादशप्रसृतयः । सप्ततेस्तूर्द्धं नेत्रप्रमाणमेतदेव द्रव्यप्रमाणन्तु द्विरष्टवर्षवत् । तत्र नेत्राणि सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणितरुसारमयाणि श्लक्ष्णानि दृढानि गोपुच्छाकृतीन्यृजूनि गुटिकामुखानि । वस्तयश्चाद्रदानां वदशो नातिबहुला दृढाः प्रमाणवन्तो गोमहिषवराहाजोरणाणाम्" । "नेत्रालाभे हिता नाडी नलवंशास्थिसम्भवा । वस्त्यलाभे हितं चर्म सूक्ष्मं वा तान्तवं घनम्" । वस्तिशलाकारूपं च उत्तरवस्तिशब्दे १०९८० पृ० सुश्रुतोक्तं दृश्यम् । "चतुर्दशाङ्गुलं नेत्रमातुराङ्गुलमानतः" इत्यादिनोक्तं दृश्यम् । "कृत्वा सुखोष्णेन नेत्रे च चक्रतैलेन तर्पयेत्" सुश्रुतः ।

**नेत्रकोष** पु० ६त० । नेत्रपटले

**नेत्रच्छद** पु० नेत्रं छाद्यते अनेन छद+णिच्–क ह्रस्वः । नेत्रपिधायके चर्ममये नेत्रपुटे (चक्षेरपाता) अमरः ।

**नेत्रपर्य्यन्त** पु० नेत्रयोः पर्यन्तः कोणसीमा । १अपाङ्गे राजनि० । २नेत्रावधिके त्रि० ।

**नेत्रपाक** पु० नेत्ररोगभेदे तल्लक्षणं सुश्रुते उक्तं यथा "कण्डूपदेहाश्रुयुतः पक्वोदुम्बरसन्निभः । दाहसंहर्षताम्रत्वशोफनिस्तोदगौरवैः । जुष्टो मुहुः स्रवेदास्रमुष्णशीताम्बु पिच्छिलम् । संरम्भी पच्यते यस्य नेत्रपाकः स शोफजः । शोफहीनानि लिङ्गानि नेत्रपाके त्वशोफजे । अन्तःशिराणां श्वसनः स्थितो दृष्टिं प्रतिक्षिपन् । हताधिमन्थं जनयेत्तमसाध्यं विदुर्बुधाः" ।

**नेत्रपिण्ड** पुंस्त्री नेत्रं पिण्ड इव यस्य । विडाले हारा० स्त्रियां जातित्वात् ङीष् । ६त० । नेत्रगोलके न० ।

**नेत्रपुष्कर** न० नेत्रस्य पुष्करं जलं यस्याः ५ब० । रुद्रजटायां राजनि० । तत्सेवने हि नेत्रात् जलं स्रवतीति तस्यास्तथात्वम् ।

**नेत्रप्रबन्ध** पु० नेत्रे प्रबध्यते अनेन प्र+बन्ध–करणे ल्युट् । नेत्रपुटे "कर्णस्रोतः शुक्रधारकं च नेत्रप्रबन्धमयम्" ह०सं० ५८अ० ।

**नेत्रबन्ध** पु० ६त० । पृष्ठतोऽवस्थितेनागत्य करतलाभ्यां नेत्रयोः पिधानरूपे बालानां क्रीडाभेदे "बद्ध्यनेत्रबन्धाद्यैः क्वचिन्मृगयनेहया" भा० १०।१८।८ रामकृष्णयोर्बालक्रीडावर्णने ।

**नेत्रमल** न० ६त० । चक्षुर्मले दूषिकायाम् (पिँचुटि) अमरः ।

**नेत्रमीला(वा)** स्त्री नेत्रयोः मीला मुद्रणं यस्याः ५ब० पृषो० वा वस्य मः, वान्तपाठः साधुः । यवतिक्तायां राजनि० । तत्सेवने हि नेत्रयोर्मीलनं जायते इति तस्यास्तथात्वम् ।

**नेत्रमुष्** त्रि० नेत्रं तत्प्रचारं मुष्णाति मुष–क्विप् । दृष्टेरुपघातके दृष्टिप्रचारनाशके "वहन्ति ये नेत्रमुषं दिव्यं मायामयं रथम्" भा०व० ४२अ० ।

**नेत्रयोनि** पु० नेत्राणि योनय इवास्य । १इन्द्रे शक्रशापात् । नेत्रमत्रिनेत्रं योनिरुत्पत्तिस्थानं यस्य । २चन्द्रे च

**नेत्ररञ्जन** न० नेत्रं रज्यते अनेन रन्ज–करणे ल्युट् । कज्जले "घृत वा वर्त्तितो धूपः श्रुतं नेत्ररञ्जनम्" कालिकापु० ६९अ० ।

**नेत्ररुज्** स्त्री ६त० । नेत्ररोगे

**नेत्ररोग** पु० ६त० । नयनस्य रोगभेदे तन्निदानादि माधवकरेणोक्तं यथा "उष्णाभितप्तस्य जलप्रवेशाद्दूरेक्षणात् स्वप्नविपर्ययाच्च । स्वेदाद्रजोधूमनिषेवणाच्च छर्द्देर्विघातादमनातियोगात् । द्रवात्तथान्नाच्च निशि सेविताच्च विण्मूत्रवातक्रमनिग्रहाच्च । प्रसक्तसंरोदनशोककोपाच्छिरोऽभिघातादतिमद्यपानात् । तथा ऋतूनाञ्च विपर्ययेण

क्षेत्राभिघातादतिमैथुनाच्च। बाष्पग्रहात् सूक्ष्मनिरीक्षणाच्च नेत्रे विकारान् जनयन्ति दोषाः। वातात् पित्तात् कफाद्रक्तादभिष्यन्दश्चतुर्विधः। प्रायेण जायते घोरः सर्वनेत्रामयाकरः"। तस्य लक्षणानि यथा "निस्तोदनस्तम्भनरोमहर्षसंघर्षपारुष्यशिरोऽभितापाः। विशुष्कभावः शिशिराश्रुता च वाताभिपन्ने नयने भवन्ति। दाहप्रपाकौ शिशिराभिनन्दा धूमायनं बाष्पसमुच्छ्रयश्च। उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति। उष्णाभिनन्दो गुरुताक्षिशोथः कण्डूपदेहावतिशीतता च। स्रावो मुहुः पिच्छिल एव चापि कफाभिपन्ने नयने भवन्ति। ताम्राश्रुता लोहितनेत्रता च राज्यः समन्तादतिलोहिताश्च। पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति"।

नेत्ररोगहेतुदोष उक्तो वैद्यके

"नेत्रं स्यात् पवनाद्रूक्षं धूम्रवर्णं तथाऽरुणम्। कोटरान्तप्रविष्टञ्च तथास्य विलोकनम्। हरिद्राभस्त्ववर्णञ्च रक्तं वा हरितं तथा। दीपद्वेषि सदाहञ्च नेत्रं स्यात् पित्तकोपतः। श्लेष्मबाहुल्यात् स्निग्धं स्यात् सलिलप्लुतम्। तथा धवलवर्णञ्च ज्योतिर्हीनं बलान्वितम्। नेत्रं त्रिदोषबाहुल्यात् स्याद्दोषत्रयलक्षणम्। त्रिदोषलिङ्गं यन्नेत्रं तन्मारयति रोगिणम्। त्रिदोषदूषितं नेत्रमन्तर्मग्नं भवेद्यदि। त्रिलिङ्गं सलिलञ्चापि प्रायेणोन्मीलयत्यपि"। नेत्ररोगभेदाश्च सुश्रुते उत्तरतन्त्रे बहुभिरध्यायैः सलक्षणचिकित्सा-कास्तत्र दृश्याः। "मधुहारी च पुरुषो जायते नेत्ररोगवान्"। "मधुहारी च पुरुषो जायते नेत्ररोगवान्" शाता० मधुमधुहरणेन तद्रोगवान् जायते" इत्युक्तम्।

**नेत्ररोगहन्** पु० नेत्ररोगं हन्ति हन–क्विप्। वृश्चिकालीवृक्षे राजनि०तस्य हि नेत्ररोगनाशकत्वं वैद्यके प्रसिद्धम्।

**नेत्ररोमन्** न० ६त०। नेत्रपक्ष्मणि हेम०।

**नेत्रवस्त्र** न० नेत्रयोर्वस्त्रमिवाच्छादकम्। ( चक्षेरपाता ) नेत्रच्छदे।

**नेत्रविष्** स्त्री ६त०। नेत्रमले (पिंचुटि) "नेत्रविट् चक्षुःस्नेहो धातूनां क्रमशो मलाः" सुश्रुतः।

**नेत्रविष** पुंस्त्री नेत्रे विषं यस्य। दिव्ये सर्पभेदे "दृष्टिनिःश्वासविषा दिव्याः सर्पाः" सुश्रुतः। "आशीविषान् नेत्रविषान् कोपयेच्च पण्डितः" भा०स० ६२अ०।

**नेत्रस्तम्भ** पु० ६त०। नेत्रयोः स्तम्भे नयनोन्मीलनादिव्यापाररराहित्ये "नेत्रस्तम्भं निमेषञ्च तृष्णां श्वासं प्रजागरम्। लभते द्रव्यचारञ्च तांस्तानन्यानुपद्रवान्" सुश्रुतः।

**नेत्रान्त** पु० ६त०। अपाङ्गदेशे "नेत्रान्तपादकरतालधरोष्ठजिह्वाः रक्ता नखाश्च खलु सप्त सुखावहानि" इ०सं०६८अ०

**नेत्राभि(ष्य)ष्यन्द** पु० ६त०। नेत्रस्य रोगभेदे अभिष्यन्दशब्दे ३०४ पृ० दृश्यम्। "नेत्राभिष्यन्दपक्ष्मकयोगमल्ल दोषजाः" सुश्रुतः। स च संक्रामिरोगः यथाह सुश्रुते "प्रसङ्गाद्गात्रसंस्पर्शात् निःश्वासात् सह भोजनात्। सह शय्यासनाच्चापि वस्त्रमाल्यानुलेपनात्। कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च। औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम्"।

**नेत्रामय** पु० ६त०। नयनरोगे "वातात् पित्तात् कफाद्रक्तादभिष्यन्दश्चतुर्विधः। प्रायेण जायते घोरः सर्वनेत्रामयाकरः" माधवनि०।

**नेत्राम्बु** न० ६त०। चक्षुर्जले अश्रुणि अमरः।

**नेत्रारि** पु० ६त०। सेहुण्डवृक्षे राजनि०।

**नेत्री** स्त्री नी–तृन् ङीप्। १लक्ष्म्यां २नाड्यां च शब्दर०। ३नद्यां मेदि०। नी–तृन् स्त्रियां ङीप्। ४प्रापयित्र्यां स्त्रियां स्त्री।

**नेत्रोपमफल** पु०नेत्रे उपमा यस्य तादृशं फलमस्य। (बादाम) वृक्षभेदे भावप्र०। [माले च

**नेत्रौषध** न० ६त०। १पुष्पकासीसे राजनि० २नेत्रयोरौषध-

**नेत्रौष(धि)धी** स्त्री ६त० वा ङीप्। अजशृङ्ग्याम् (माड़रशिङ्गा) रत्नमाला।

**नेद्** गतौ भ्वा० प० सक० सेट्। गतिकर्मसु निघण्टुः। नेदति अनेदीत्। निनेद "या कृता उज्ज्वलन्ते या कृता अतिनेदन्ते" ह०उप०।

**नेदिष्ठ** त्रि० अतिशयेनान्तिकः इष्ठन् नेदादेशः। १अतिशयनिकटस्थे "नेदिष्ठे अस्मिन्नहन्यधि वोचा नु सुन्वते" ऋ० १।१२२।१। २निपुणे त्रि० राजनि०। ३अङ्कोटवृक्षे पु० जटाध०।

**नेदिष्ठिन्** पु० नेदिष्ठं जन्मतः सन्निकृष्टस्थानं विद्यतेऽस्य इनि। सोदरभ्रातरि "म्रियेत चेच्चिर्धन्व्रेन दग्ध्वा शामित्राद्दास्यौन्यु पनह्य नेदिष्ठिनमुपदीक्ष्य तेन सह यजेरन्" कात्या०श्रौ० २५।१४।२८। "मृतं यजमानं निर्मन्थ्येन शामित्रेण वा दग्ध्वास्थीन्युपनह्य तस्य यो नेदिष्ठी सोदर्भ्राता स्यात् तं दीक्षयित्वा तेन सह यजेरन्" कर्कः।

**नेदीयस्** त्रि॰ अतिशयेनान्तिकः ईयसुन् नेदादेशः । आसन्न-समीपस्थे स्त्रियां ङीप् ।

**नेप** पु॰ नी—प । १पुरोहिते उज्ज्वल॰ २उदके निघण्टुः

**नेपथ्य** न॰ नी—विच् नेः नेता तस्य पथ्यम् । १भूषणे अमरः २वेशे ३वेशस्थाने नाटकादेरभिनयार्थसज्जाभूमौ च मेदि॰ "न पथ्यं नेपथ्यं बहुतरमनङ्गोत्सवविधौ" सा॰द॰ "उदारनेपथ्यभृतां स मध्ये" रघुः "नेपथ्योक्तं स्रुतं यत्र नाकाशवचनं तथा" सा॰द॰ ।

**नेपाल** पु॰ देशभेदे "नेपालवर्द्धिनमथककुब्बराट्टवराम्" ह॰सं॰ ४अ॰ "नेपालादागतोऽयं नवकम्बलवत्त्वात्" इत्योदाहरणे विश्वनाथः "अष्टेश्वरं समारभ्य योगेशान्तं महेश्वरि ! । नेपालदेशो देवेशि ! साधकानां सुसिद्धिदः" शक्तिसङ्गमतं॰ "नेपाले वाहिर्ग वांयम्" अनाचारोक्तौ

**नेपालजा** स्त्री नेपाले देशे जायते जन—ड ७त॰ । नेपाल-जातायां मनःशिलायाम् "नेपालजातारिताकुरवा-न्नवानि" सुश्रुतः । जन—कर्त्तरि ड ७त॰ । नेपा-लजातायाम । "वरिष्ठं च शुक्लं नेपालजाता च मनः-शलाका" सुश्रुतः ।

**नेपालकम्बल** पु॰ ६त॰। कुमारले चित्रकम्बले शब्दार्थचि॰।

**नेपालनिम्ब** पु॰ ६त॰ । ज्वरान्तके कटुनिम्बे नेपाल-जाते निम्बभेदे राजनि॰ ।

**नेपालमूलक** न॰ हस्तिकन्दसदृशे मूलभेदे राजनि॰ ।

**नेपालिका** स्त्री नेपाल उत्पत्तिस्थानत्वेनास्त्यस्याः ठन् । मनःशिलायां राजनि॰ ।

**नेम** पु॰ नी—मन् । १काले २अवधौ ३खण्डे ४प्राकारे ५कैतवे च मेदि॰ । ६अर्द्धे ७गर्त्ते च हेमच॰ । ८मा-यादौ अन्यार्थे च शब्दरत्ना॰ । ९सायंकाले १०मूले च ११अर्द्धे च सुभूतिः । अर्द्धार्थेऽस्य सर्वनामता । नेमस्मै नेमस्मिन् इत्यादि । जसि वा, नेमे नेमाः । १२अन्ने १३दिश उत्तरवर्त्तिनि च निघण्टुः । "हितं जनिम नेमसद्यतम्" ऋ॰ ८।६८।१ "नेमन्नमः" भा॰ "आवम् पश्याति नेमो वहि पक्षदर्शः" ऋ॰ १०।२७।१८

**नेमधित** त्रि॰ नेमं हितः नेम+धा—क्त "सुधितनेम-धितेत्यादिना" पा॰ निपा॰ । अर्द्धहिते "त्वमोता वह-यामयि त्वा युध्यन्तो नेमधिता पृतस्य शूर !" ऋ॰६।३३।४ भावे क्तिन् । नेमधिति । अर्द्धधाने स्त्री । नेमं धीयतेऽत्र धा—क्तिन् निपा॰ संग्रामे निघण्टुः ।

**नेमन्** त्रि॰ नी—बा॰मनिन् । मापके "तं मूर्द्धो नेमन्निषः" ऋ॰१।५६।२ "इण गतौ बा॰ क्विप् नेमानः मापका इणो वेमासृ" भा॰ । बाहुल्यो नलोपाभावः ।

**नेमि** पु॰ नी—मि । १तिनिशवृक्षे । २कूपसमीपे रज्जुधार-णार्थे त्रिकाष्ठयन्त्रे ३चक्रान्ते च (रथचक्रस्य भूमि-संयोगयोग्ये भागे) ४कूपान्तिकस्थे-स्नानस्थलभागे स्त्री अमरः वा ङीप् । ५जिनभेदे पु॰ हेमच॰ । ६वज्रे पु॰ निघण्टुः "नियन्तुर्नेमिवृत्तयः" रघुः "आर्त्तेमिमग्नैः शितिकण्ठपक्षः" "अपतत् द्रुतमस्मितनेमिवृत्तयः" माघः

**नेमिचक्र** पु॰ परीक्षितवंशस्य वंश्ये भाविनृपभेदे "अधीन-कृष्णत्तस्यापि नेमिचक्रस्तु तत्सुतः । गजाह्वये हृते नद्या कौशाम्ब्यां च निवत्स्यति" भाग॰ ९।२२।२७

**नेमिन्** पु॰ नी—बा॰ मिनि । तिनिशवृक्षे भरतः ।

**नेयार्थता** स्त्री नेयः लक्षणयोक्तनामाभावादयमाप्नोति अन्यार्थो यत्र तस्य भावः । काव्यदोषभेदे "ग्राम्योऽप्रतीतसन्दिग्ध नेयार्थनिहतार्थता" सा॰द॰ "कमले चरणाघातं मुखं सुमुखि ! तेऽकरोत्" । अत्र चरणाघातेन निर्जितत्वं लक्ष्यते" सा॰द॰। तत्र रूढिप्रयोजनयोरभावात् असालम् !

**ने(नै)मिश** न॰ नेमिः शीर्य्यतेऽत्र शृ—बा॰ आधारे ड । नैमिशारण्ये ततः स्वार्थे अण् । नैमिशतमार्थे वायुपु॰ यथा "एतन्मनोमयं चक्रं मया सृष्टं विसृज्यते । यत्रास्य शीर्य्यते नेमिः स देशस्तपसः शुभः । इत्युक्त्वा सूर्य्यसङ्काशं चक्रं सृष्टा मनोमयम् । प्रणिपत्य महा-देवं विससर्ज पितामहः । तेऽपि हृष्टतरा विप्राः प्रणम्य जगतां प्रभुम् । प्रययुस्तस्य चक्रस्य यत्र नेमिर्व्यशी-र्य्यत । तद्वनं तेन विख्यातं नैमिशं भुवि पूजितम्" ।

**नेष्ट** त्रि॰ न इष्टम् नञर्थनशब्देन "सह सुपा" पा॰स॰ । १अनिष्टे २सत्याचने निषिद्धे च । "अतिकद्रुदाः कव-देशा नेष्टाः हीनाधिकाङ्गुल्य" ह॰सं॰ ६।अ॰ ।

**नेष्टु** पु॰ निष—तुन् । लोष्टे शब्दाम्बुधिः । "यथा महार्णवे क्षिप्रः क्षिप्रं नेष्टुर्विनश्यति" भा॰अनु॰ १२अ॰ "नेष्टुः पांशुपिण्डः" नीलकण्ठः ।

**नेष्टृ** पु॰ नी— तृन् नि॰ षुक् । ऋत्विग्भेदे उज्ज्वलद॰ । "अग्ने नेष्टः ! पिब ऋतुना" ऋ॰ १।१५।३ "समानत्रान् प्राणुपाकविशेषैर्नेष्ट्रकाव्याकानाम्" काव्या॰८।६।२१

**नेष्ट्र** त्रि॰ नेष्टुरिदम् सा॰ अन् । नेष्टृसम्बन्धिनि "नेष्ट्रात्-तुभिरिष्यते" ऋ॰ १।१५।९ [अव्यय न॰।

**नैःस्व** न॰ निः स्वस्य भावः ष्यञ् । निर्द्धनत्वे ष्यञ् नैःस्व्य

**नैक** त्रि॰ न एकः नञर्थनशब्देन "सह सुपा" पा॰स॰।

अनेके १एकभिन्ने २विष्णौ पु० "एकोनैकः सवः कः किम्" विष्णुस० "मायया बहुरूपत्वान्नैकः "इन्द्रोमायाभिः पुरुरूप ईयते इति श्रुतेः" भा० ।

**नैकचर** त्रि० नैकः संघीभूय चरति चर–ट । संघीभूयचारिणि शूकरादौ "अपि न वृकः शालावृकोऽन्यतमोनैकचरोह वा मन्यते" भाग० ५।८।२०

**नैकज** पु० नैकधा–जायते जन–ड पृषो० धालोपः । धर्मगुप्तये अनेकधा जायमाने परमेश्वरे "सुखदो नैकजोऽग्रजः" विष्णुस०। "धर्मसंरक्षणार्थाय संभवामि युगे युगे" भगवदुक्तेः भा० ।

**नैकटिक** त्रि० प्रयोजनाय निकटे वसति ठक् । भिक्षादिलाभहेतोः ग्रामादिनिकटवासिनि भिक्षुकादौ । भिक्षुणा हि ग्रामात् निकटे वस्तव्यमिति शास्त्रात् तथात्वम् "आट नैकटिकाश्रमात्" भट्टिः ।

**नैकती** स्त्री नैकं तावते ताय–ड गौरा० ङीष् । शौण्ड्यां तत्र भवः पचाद्या० अण् नैकत तत्रार्थे त्रि० ।

**नैकधा** अव्य० नैक+प्रकारे धाच् । अनेकप्रकारे "शीर्षयोः पतिता इवाविभिङ्नैकधा तयोः" भा०व० ११अ० ।

**नैकभेद** त्रि० नैकोभेदोऽस्य । उच्चावचे अनेकप्रकारे अमरः

**नैकमाय** त्रि० नैका माया यस्य । १अनेककपटे २परमेश्वरे पु० "नैकमायो महाशनः" विष्णुस० "इन्द्रोमायाभिः पुरुरूप ईयते" श्रुतेस्तस्यानेकमायत्वात्तथात्वम् ।

**नैकरूप** त्रि० नैकं रूपं यस्य । १नानारूपे २परमेश्वरे पु० "नैकरूपो वृहद्रूपः शिपिविष्टः प्रकाशनः" विष्णुस० । "इन्द्रो मायाभिः पुरुरूप ईयते" श्रुतेस्तस्य तथात्वम् । कर्म०। ३अनेकेषु रूपेषु "नैकरूपधरोऽव्ययः" विष्णुस्तुतिः ।

**नैकशृङ्ग** पु० नैकानि चत्वारि शृङ्गाण्यस्य । परमेश्वरे "नैकशृङ्गो गदाग्रजः" विष्णुस०। "चत्वारि शृङ्गास्त्रयो अस्य पादाः" इति मन्त्रवर्णात् तस्य तथात्वम् स्त्रियां ङीष् ।

**नैकषेय** पुंस्त्री निकषाया अपत्यम् ठक् । राक्षसे हला०

**नैकसानु** पु० नैके सानवोऽस्य । पर्वतभेदे तत्र चरतीति चर–ट । नैकसानुचर शिवे "नैकसानुचरश्चरः" भा०आनु० १७अ० ।

**नैकात्मन्** पु० नैक आत्मा स्वरूपमस्य । परमेश्वरे "नैकात्मा नैककर्मकृत्" विष्णुस०। "तदैक्षत बहु स्यामिति" श्रुतेस्तस्य तथात्वम् ।

**नैकृतिक** त्रि० निकृत्या परापकारेण जीवति निकृत्या निकृष्टतया चरति वा निकृति+ठक् । स्वार्थानुपकारित्वमसत्यादा परद्वत्तिच्छेदनेन १स्वार्थपरे २शाठ्येन चारिणि च "अधोदृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः" मनुः "न नास्तिको नैकृतिकोऽस्य वापि" हरिवं० १५४अ० ।

**नैगम** पु० निगम एव स्वार्थे–अण् । ब्रह्मप्रतिपादके उपनिषद्रूपे १वेदभागे २नये नीतौ हेमच० । निगमे भवः अण् । ३वणिग्जने अमरः । ४नागरे मेदि० तस्येदम् अण् । ५निगमसम्बन्धिनि त्रि० "तेषां प्रतिविधानार्थं प्रवक्ष्याम्यथ नैगमम् । काम्यानां सर्वसिद्ध्यर्थं तानुपायान् निबोध मे" भा०शा० १००अ० तत्र वणिजि "श्रेणीनैगमपाषण्डिगणानामप्ययं विधिः" याज्ञ० "मार्गे न मर्हति निगमे नैगमानाम्" दशकुमा० ६निघण्टुप्रन्थांशभेदे "आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा" निघण्टु भाष्यम् । "जहाद्युत्तमपर्यन्तं नैगमं संप्रचक्षते" इति च तद्भाष्यम् ।

**नैगमिक** त्रि० निगमे भवः तस्य व्याख्यानो वा ऋगयना० ठक् । १निगमभवे २तद्व्याख्यानग्रन्थे ३तदध्याये च ।

**नैगमेय(ष)** पु० १कुमारानुचरभेदे "तस्य ( कार्त्तिकेयस्य ) शाखो विशाखश्च नैगमेयश्च पृष्ठजः" भा०शा० ३६अ० इत्युक्ते २बालग्रहभेदे "स्कन्दग्रहस्तु प्रथमः" इत्युपक्रमे "नवमो नैगमेयश्च यः पितृग्रहसंज्ञितः" इत्युक्त्वा "यः फेनं वमति विनश्यते च मध्ये सोद्वेगं विलपति चोर्ध्वमीक्षमाणः । ज्वर्येत प्रततमथोवसाहगन्धिनिः सङ्गो भवति हि नैगमेयजुष्टः" इति वर्णितः । अत्र नैगमेष इत्यपपाठः ।

**नैघण्टुक** न० निघण्टुः पर्य्यायशब्दमधिकृत्य प्रवृत्तम् ठक् । "गोरादापारपर्य्यन्तमाद्यं नैघण्टुकं मतम्" भाष्योक्ते प्रथमाध्यायत्रयात्मके निघण्टुग्रन्थस्य प्रथमकाण्डे "नैघण्टुकमिदं देवतानामप्राधान्येनेदमिति तद्यदन्यदैवते मन्त्रे निपतति नैघण्टुकं ततः" निरुक्तकारः ११२०।

**नैचाशाख** न० नीचासु शूद्रयोनिषु शाखा पुत्रपौत्रादिपरम्परा यस्य नीचाशाखः पतितः "शूद्रावेदी पतत्यत्रेः" मनुस्मरणात् तस्येदमण् । शूद्रावेदिसम्बन्धिधने "नैचाशाखं मघवन् ! रन्धया नः" ऋ०३।५३।१४ तद्भाष्ये तु उक्तैव व्युत्पत्तिर्दर्शिता ।

**नैचिक** न० नीचा–भवत्यतीति ठक् । गोःशिरोभागे हेमच० ।

**नैचिकी** स्त्री नीचैश्चरति ठक् अव्ययस्य टिलोपः । प्रशस्ता निचि: गोकर्णशिरोदेशः । प्रायश्चोक्त निचिकाऽप्यस्याः

ज्योत्स्ना० अः वा । २उत्तमायां स्त्रीगव्याम् अमरः ।

**नैचित्य** त्रि० निचिते भवः भादित्वात् ण्यः । निचितदेशभवे

**नैचुल** न० निचुलस्येदमण् फलस्य पृथक्प्रयोगे अणो न लुप् । १निचुलसम्बन्धिनि दुग्ध्वफलादौ "पिप्पली सर्षपांश्चैव नागरं नैचुलं फलम्" सुश्रुतः । निचुलशब्दस्यैव फलपरत्वे तु लुप् निचुलमित्येव न० ।

**नैतोश** पुंस्त्री नितोशयतीति नितोशतिर्वधकर्मा निघण्टुः । ततः अच् नितोशः हिंसकः तस्यापत्यम् अण् । हन्तुरपत्ये "नैतोशेव तुर्फरी पर्फरीका" ऋ०१०।१०६।६

**नैत्य** त्रि० नित्यं दीयते नित्य+व्युष्टा० अण् । १नित्यं दीयमाने । नित्यं विहितः अण् स्वार्थे अण् वा । नित्यविहिते कर्मणि । १नित्ये कर्मणि च । ततः स्वार्थे क । नैत्यक तत्रार्थे "कर्पं समीपे नियतो नैत्यकं विधिमास्थितः" "वेदोपाकरणे चैव स्वाध्याये चैव नैत्यके" "नैत्यके नास्त्यनध्यायः" इति च मनुः ।

**नैत्यशब्दिक** त्रि० नित्यं शब्दमाह माथशब्दा०ठक् । नित्यशब्दादिनि शब्दं नित्यतया यो वदति मीमांसकप्रभृतिषु ।

**नैत्यिक** त्रि०नित्यं विहितः ठक् । नित्यविहिते "सन्ध्यां यस्य बहायमानु नैत्यिकं कृतिकर्म च" मनुः ।

**नैदाघ** त्रि० निदाघस्येदम् वेदे ग्रैष्मिकोऽण् । निदाघसम्बन्धिनि "जघन्ये नैदाघे समिवैव कोपयति" शत० ब्रा०१।४।१।१६ लोके तु निदाघस्यर्तुवाचित्वेन "कालात् ठञ्" पा० ठञ् । नैदाघिक ग्रीष्मर्तुसम्बन्धिनि त्रि० ।

**नैदान** त्रि०निदानं कारणं वेत्ति अण् । कारणवेत्तरि "स्नात्वाबन्धसंयोगेनेति नैदानाः" निरु० ६।८

**नैदानिक** त्रि० निदानं रोगकारणं वेत्ति तत्प्रतिपादकं ग्रन्थमधीते वा ठक् । १रोगनिदानाभिज्ञे २तत्प्रतिपादकग्रन्थाध्येतरि च "यथाऽऽहुर्नैदानिकाः" मल्लिनाथः ।

**नैदेशिक** त्रि० निदेशं करोति ठक् । १किङ्करे दासे "नैदेशिकैर्यस्य वशे जनोऽयम्" भाग० ६।८३।२

**नैधन** न० निधनमेव स्वार्थे अण् । १निधने मरणे २लग्नाष्टमस्थाने च "शुद्धैर्दोद्यकेन्द्रनैधनरन्ध्रैः पापैश्चिपष्ठायगैः" वृ०सं०८८८९० ।

**नैधान** त्रि०निधानेन निर्वृत्तं सङ्कला० चञ् । निधानसाध्ये

**नैधेय** पुं०त्रि० निधेरपत्यादि० बाह्वा०ठक् । १निधेरपत्ये तस्येदं ठक् । २तत्सम्बन्धिनि त्रि० ।

**नैध्रुव** पु० निध्रुवगोत्रप्रवरर्षिभेदे "निध्रुवायां काश्यपावत्सार नैध्रुवेति" आश्व० श्रौ० १२।१४।६

**नैध्रुवि** पु०समस्तयजुर्वेदाध्यापकपरम्परास्थे काश्यपे ऋषिभेदे "काश्यपान्नैध्रुवेः काश्यपो नैध्रुविः" शत०ब्रा०१४।८।४।२२

**नैप** त्रि० नीपस्य विकारः रजतादि० अञ् । नीपविकारे

**नैपात्य** न० निपातस्य भावः ब्राह्मणा० ष्यञ् । निपातस्य भावे

**नैपाल** पु० नेपाले भवः तस्येदम् वा अण् । १नेपालभवे निम्बे राजनि० । २नवमल्लिकायां स्त्री टाप् । ३मनःशिलायां ४शेफालिकायां स्त्री मेदि० ५नील्यां स्त्री ङीप् शब्दर०६नेपालदेशभवे ७तत्सम्बन्धिनि च त्रि०स्त्रियां ङीप्

**नैपालिक** न० नेपाले भवः बा० ठक् । ताम्रे राजनि० ।

**नैपुण** न० निपुणस्य भावः युवा० अण् । निपुणत्वे "अधवसमवरिष्टान्यर्ककेन्द्रादिसंस्थे शशिनि विनवविसमृानधीनैपुणानाम्" ज्योति०त०। "प्रकटान्यपि नैपुणं महत् परवाच्यानि चिराय गोपितुम्" माघः ।

**नैपुण्य** न० निपुणस्य भावः कर्म वा ब्राह्मणा० ष्यञ् । १निपुणत्वे २निपुणकर्मणि च । "धर्मनैपुण्यकामानां पूतिगन्धे च सर्वदा" मनुः । [समीपादौ ।

**नैबुक** त्रि० निबुकस्यादूरदेशादि वराहा० कक् । निबुक-

**नैभृत्य** न० निभृतस्य भावः ब्राह्मणा० ष्यञ् । निभृतत्वे अचाञ्चल्ये "कृत्वा च पुरुषव्याघ्रो नैभृत्येन च पाण्डवः । अकर्षद्वो वदान्यश्च श्रीमान् अमितपराक्रमः" भा०उ० ६२अ० । [स्यादूरदेशादौ ।

**नैमन्नक** त्रि० निमन्न+चतुरर्थ्यां वराहा० कक् । निमन्न-

**नैमित्त** त्रि० निमित्ते भवः निमित्तस्य शकुनशास्त्रस्य व्याख्यानो ग्रन्थो वा ऋगयनादि० अण् । १निमित्तभवे २शकुनरूपनिमित्तज्ञापकग्रन्थव्याख्याने च ।

**नैमित्तिक** त्रि० निमित्तं वेत्ति तत्प्रतिपादकग्रन्थमधीते वा उक्था० ठक् । १निमित्ताभिज्ञे २निमित्तरूपशकुनशास्त्राध्येतरि च । निमित्तादागतः ठक् । ३निमित्तमात्रमाश्रित्य कर्त्तव्ये कर्मणि तच्च पुत्रजन्माश्रित्य विहितं जातेष्ट्यादि ग्रहणादिनिमित्तमाश्रित्य स्नानादि च "नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते" ति०त० "नैमित्तिकत्वं तु निमित्तनिश्चयवदधिकारिकर्त्तव्यत्वम्" स्मार्त्तः । "यत्तु पापोपशान्त्यै च दीयते विदुषां करे । नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम्" इति गरुडपु० "निमित्तमात्रमाश्रित्य यो धर्मः सम्प्रवर्त्तते । नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा" । चण्डालशवपूयादि स्पृष्ट्वा स्नातां रजस्वलाम् । स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं तु तत्" । "नैमित्तिकानि काम्यानि निपतन्ति

यथा यथा” मल॰त॰ ५निमित्ताधीने च “युदेयो हि रघवती दयोर्नैमित्तिकोद्भवः” “सांसिद्धिकं द्रवत्वं स्यात् नैमित्तिकमथापरम्। नैमित्तिकं वह्नियोगात् तपनीयघृतादिषु” भाषा॰ “पुरुषार्थहेतुकमिदं निमित्त नैमित्तिकप्रसङ्गेन” सां॰का॰।

**नैमित्तिकलय** पु॰ “चतुर्युगसहस्रान्ते ब्राह्मो नैमित्तिको लयः” इत्युक्ते प्रलयभेदे “चतुर्दशयुगो ह्येष कालो ब्राह्ममहः स्मृतम्। तस्यान्ते प्रलयः प्रोक्तो ब्रह्मन्! नैमित्तिको बुधैः” मार्कण्डपु॰।

**नैमिश** न॰ निमिशमेव स्वार्थे अण्। निमिषारण्ये तीर्थभेदे निमिषशब्दे दृश्यम्। “पृथिव्यां नैमिशं क्षेत्रमन्तरीक्षे च पुष्करम्। त्रयाणामपि लोकानां कुरुक्षेत्रं विशिष्यते” भा॰व॰ ७५ अ॰ श्लो॰। नैमिषारण्यमप्यत्र।

**नैमिश्रि** पु॰ निमिश्रस्यापत्यम् इञ्। मितरां मिश्रस्यापत्ये ततः यूनि फक्। तस्य तौल्वल्या॰ न लुक्। नैमिश्रायण यूनि तदपत्ये

**नैमिष** न॰ अरण्यभेदे तीर्थभेदे यत्रारण्ये निमिषेण दानवबलं विष्णुना निहतमिति तस्य तथात्वं तन्निर्वचनं यथा वराहपु॰ “तेन चक्रेण तत् सैन्यमासुरं दुर्जयं चमात्। निमिषान्तरमात्रेण भस्मवद्दहनता कृतम्। एवं कृत्वा ततो देवो मुनिं गौरमुखं तदा। उवाच निमिषेणेदं निहतं दानवं बलम्। अरण्येऽस्मिंस्ततस्तेन नैमिषारण्यसंज्ञितम्। भविष्यति यथार्थं वै ब्राह्मणानां विशेषतः”। “नैमिषे तु महास्थाने देवी सा लिङ्गधारिणी” इति देवीगीता। तस्येदम् “इहाचः”पा॰ अ। नैमिषीय तत्सम्बन्धिनि “स ह नैमिषीयाणामुद्गाता बभूव” छा॰उ॰।

**नैमिषकुञ्ज** न॰ तीर्थभेदे नैमेषेयशब्दे दृश्यम्।

**नैमिषि** पुंस्त्री निमिषति नि+मिष–क निमिषस्यापत्यम् इञ्। निमेषमुनेरपत्ये ततः यूनि फक्। तस्य तौल्वल्या॰ न लुक्। नैमिषायण तदीये यूनपत्ये पुंस्त्री॰।

**नैमिषेय** त्रि॰ निमिषे भवः निमिषस्येदं वा वा॰ ढक्। १निमिषारण्यस्थे २नैमिषसम्बन्धिनि च “ततः नैमिषकुञ्जञ्च समासाद्य कुरूद्वह!। ऋषयः किल राजेन्द्र! नैमिषेयास्तपस्विनः” भा॰व॰ ८३अ॰।

**नैमेय** पु॰नि+मि–अत् स्वार्थेऽण्। विनिमये परीवर्त्ते अमरः

**नैयग्रोध** न॰ न्यग्रोधस्य विकारः फला॰ अण् तस्य न लुक् पदान्तयात् पूर्वमैच्। वटफलादौ अमरः। “नैयग्रोधं भवति स्वधामेवावरुन्धे” शत॰ब्रा॰१२।७।२।१४ [र्थादौ।

**नैयङ्कव** त्रि॰ न्यङ्कोरिदम् अण् यात्पूर्वमैच्। न्यङ्कुमृगस्य च-

**नैयमिक** त्रि॰ नियमादागतः ठक्। नियमविधिप्राप्ते कर्मणि कठभाष्यीयमनादौ। [न्यायव्याख्याने ग्रन्थे।

**नैयाय** त्रि॰ न्यायस्य व्याख्यानो ग्रन्थः ऋगयनादि॰ अण्।

**नैयायिक** त्रि॰ न्यायं वेत्त्यधीते वा उक्था॰ठक्। न्यायज्ञे “नैया- यिकानान्तु नये द्व्यणुकादावपीष्यते” भाषा॰।

**नैयासिक** त्रि॰ न्यासं वेत्ति अधीते उक्था॰ ठक्। १इरदत्तकृतपदमञ्जर्य्यपरनामकन्यासग्रन्थाभिज्ञे २वात्स्यायनादिन्यासवेत्तरि च।

**नैरन्तर्य्य** न॰ निरन्तरस्य भावः ष्यञ्। अविच्छेदे “स तु दीर्घकालनैरन्तर्य्यसत्कारासेवितो दृढभूमिः” पात॰ सू॰ “नैरन्तर्यात्तु संक्रान्तेर्ग्रे यं विष्णुपदोदयम्” सू॰सि॰

**नैरपेक्ष्य** न॰ निरपेक्षस्य भावः ष्यञ्। अपेक्षाशून्यत्वे “नैरपेक्ष्येऽपि प्रकृत्युपकारेऽविवेको निमित्तम्” सां॰सू॰

**नैरयिक** त्रि॰ निरये वसति ठक्। नरकवासिनि “पञ्चेन्द्रिया एव देवा नरा नैरयिका अपि” हेमच॰।

**नैराश्य** न॰ निराशस्य निष्कामस्य भावः ष्यञ्। आशाशून्यत्वे “आशा हि परमं दुःखं नैराश्यं परमं सुखम्। यथा संछिद्य कान्ताशां सुखं सुष्वाप पिङ्गला” सां॰प्र॰भाष्यधृत वाक्यम् नैराश्यस्य सुखरूपत्वं तत्र समर्थितं यथा “निराशः सुखी पिङ्गलावत्” सां॰सू॰ “नन्वाशानिवृत्त्या दुःखनिवृत्तिः स्यात् सुखं तु कुतः साधकाभावादिति”उच्यते। चित्तस्य सत्त्वप्राधान्येन स्वाभाविकं यत् सुखमाशया पिहितं तिष्ठति तदेवाशाविगमे उद्भूतवृत्तिकं भवति तेजःप्रतिबद्धजलस्यैत्यवदिति न तत्र साधकापेक्षा” सां॰प्र॰भा॰।

**नैरुक्त** त्रि॰ निरुक्तस्य व्याख्यानो ग्रन्थः तत्र भवो वा ऋगयनादि॰अण्। १निरुक्तव्याख्याने ग्रन्थे तत्र २भवे(यास्के) च “त्रैविद्योहैतुकस्तर्की नैरुक्तो धर्मपाठकः” मनुः।

**नैरुक्तिक** त्रि॰ निरुक्तं निर्वचनं वेत्ति तद्ग्रन्थं वाऽधीते उक्था॰ठक्। १निर्वचनाभिज्ञे २निरुक्तग्रन्थाध्येतरि च।

**नैरूहिक** पु॰ निरूहः प्रयोजनमस्य ठक्। सुश्रुतोक्ते वस्तिभेदे निरूहशब्दे ४०८८ पृ॰ दृश्यम्।

**नैऋ॑त** पुंस्त्री निरृ॑तेरपत्यम् अण्। १राक्षसे अमरः स्त्रियां ङीप्। “तस्यापि (अधर्मस्य) निरृ॑तिर्भार्य्या नैरृ॑ता येन राक्षसाः” मा॰ब्रा॰ ६६त॰। निरृ॑तिशब्दे दृश्यं तयोर्मार्य्यत्वोक्तं कल्पभेदादविरोधः। “प्रथमप्रव-

योऽवाहाचक्र्यं नैर्ऋतोदये" रघुः। निर्ऋतेरिदम् अण्। २निर्ऋतिसम्बन्धिनि स्त्रियां ङीप्। सा च ३दक्षिणपश्चिमदिशि ४राक्षसशक्तौ च "नैर्ऋतीं दिशमाश्रयेत्" आ०त०। ५मूलनक्षत्रे न०तस्य तद्दैवताकत्वात् तथात्वम्।

**नैर्ऋतेया** पुंस्त्री० निर्ऋत्याः अपत्यम् स्त्रीप्रत्ययान्तत्वात् ढक्। निर्ऋत्या अपत्ये "नैर्ऋतेया दुहितरस्तासां स प्रभवः स्मृतः" सुश्रु०।

**नैर्ऋत्य** त्रि० निर्ऋतिर्देवताऽस्य आर्षे वा० यत्। निर्ऋतिदेवताके पश्वादौ "गर्दभं पशुमालभ्य नैर्ऋत्यं स विशुध्यति" याज्ञ०। लोके तु अण्। नैर्ऋत इत्येव

**नैर्गुण्य** न०निर्गुणस्य भावः ष्यञ्। सत्वादिगुणसङ्गराहित्ये "नैर्गुण्यात् ब्रह्म चाप्नोति सगुणत्वान्निवर्त्तते" भा०शा० २०५अ०।

**नैर्मल्य** न० निर्मलस्य भावः ष्यञ्। निर्मलत्वे १स्वच्छत्वे। "विषयेष्वतिसंरागो मानसो मल उच्यते। तेष्वेव हि विरागस्तु नैर्मल्यं समुदाहृतम्" इत्युक्ते २विषयवैराग्ये च "यथाङ्कुशेव ते कोपं नैर्मल्यं प्रापयिष्यति" भा०द्रो० २०० अ० "वाक्यार्थः शब्दोच्चारणमात्रेण वेद्यः एव (व्यङ्ग्यार्थः) तु तथाविधप्रतिभानैर्मल्यादिनेति निमित्तभेदः" सा०द०।

**नैलायनि** पुंस्त्री नीलस्यापत्यं तिका० फिञ्। नीलवानरस्यापत्ये [उदा०।

**नैल्य** न० नीलस्य भावः ष्यञ्। नीलवर्णे नीलकण्ठशब्दे

**नैवकि(ति)** पुंस्त्री निवक(त)स्यार्षैरपत्यम् इञ्। निवक(त)र्षेरपत्ये ततः यूनि फक् तस्य नौत्वल्वा० न लुक्। नैवका(ता)यनि यूनि तदपत्ये

**नैवाकव** त्रि० निवाकोरिदम् अण्। निवचनशीलसम्बन्धिनि तस्यादूरदेशादि० उत्करा० छ। नैवाकवीय तस्यादूरदेशादौ। [वातगुल्मदेशसमीपादौ।

**नैवातायन** त्रि०निवातस्यादूरदेशादि पक्षा०चतुरर्थ्यां फक्।

**नैवासिक** त्रि० निवासे साधु गुडा० ठञ्। निवाससाधौ

**नैविड्य** न० निविडस्य भावः ष्यञ्। १घनत्वे अविच्छेदेन संयोगे २वंशीफुत्कारगुणभेदे च "नैविड्यं प्रौढ़ता चापि सुस्वरत्वञ्च शीतता। माधुर्य्यमिति पञ्चामी फुत्कारेषु गुणाः स्मृताः" संगी०।

**नैवेद्य** न० निवेदं निवेदनमर्हति ष्यञ् नि+विद्-णिच् कर्मणि यत् स्वार्थे अण् वा। "निवेदनीयं द्रव्यन्तु नैवेद्यमिति कथ्यते" इति स्मृत्युक्ते देवतोद्देशेन त्यक्तव्ये द्रव्ये तस्य व्युत्पत्तिर्यथा "चतुर्विधं कुलेशानि! द्रव्यं तु षड्रसान्वितम्। निवेदनात् भवेत् तृप्तिर्नैवेद्यं तदुदाहृतम्" कुलार्णवे १७उल्लासे। तद्द्रव्याणि यथा "सुसितेन सुयुक्तेन पायसेन ससर्पिषा। सितोटनं सकदलिकं दध्याद्येव निवेदयेत्" इति प्रपञ्चसारः। "निवेदनीयं यद्द्रव्यं प्रशस्तं प्रयतं तथा। तद्भक्ष्यादि पञ्चविधं नैवेद्यमिति कथ्यते। भक्ष्यं भोज्यञ्च लेह्यञ्च पेयं चोष्यञ्च पञ्चमम्। सर्वत्र चैतन्नैवेद्यमाराध्यस्य निवेदयेत्"। तत्पात्रं यथा "तैजसेषु च पात्रेषु सौवर्णे राजते तथा। ताम्रे वा प्रस्तरे वापि पद्मपत्रेऽथ वा पुनः। यज्ञदारुमये वापि नैवेद्यं स्थापयेद्बुधः। सर्वाभावे च माहेये स्वहस्तघटितं यदि" इति तन्त्रसारः। तद्दानफलं यथा "नैवेद्येन भवेत् स्वर्गो नैवेद्येनामृतं भवेत्। धर्मार्थकाममोक्षाश्च नैवेद्ये प्रतिष्ठिताः। सर्वयज्ञफलं नित्यं नैवेद्यं सर्वतुष्टिदम्। ज्ञानदं मानदं पुण्यं सर्वभोग्यमयं तथा। मनसापि महादेव्यै नैवेद्यं दातुमिच्छति। यो नरो भक्तियुक्तः सन् दीर्घायुः स सुखी भवेत्। महामायां कदा देवीमर्चयिष्यामि भक्तितः। नानाविधैस्तु नैवेद्यैरिति चिन्ताकुलस्तु यः। स सर्वकामान् संप्राप्य मम लोके महीयते" इति कालिकापु० ६९।७०अ०। तत्कालो यथा "सर्वांक विसर्जनाद्द्रव्यं नैवेद्यं सर्वमुच्यते। विसर्जिते जगन्नाथे निर्माल्यं भवति क्षणात्। पञ्चरात्रविदो मुख्या नैवेद्यं भुञ्जते सुखम्" गरुडपु०। तस्य स्थापनस्थानं यथा गौतमीये "वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे। नैवेद्यं दक्षिणे भागे पुरतो वा न पृष्ठतः"। दक्षिणभागस्तु देवताया एव न तु साधकस्य। "पक्वञ्च देवतावामे आमाद्यञ्चैव दक्षिणे" पुरश्चरणचन्द्रिका। "दक्षिणं तु परित्यज्य वामे चैव निधापयेत्। अभोज्यं तद्भवेदन्नं पानीयञ्च सुरोपमम्" इति तन्त्रसारः। तन्मुद्रा यथा "नैवेद्यमुद्रामङ्गुष्ठकनिष्ठाभ्यां प्रदर्शयेत्। कनिष्ठानामिकाङ्गुष्ठैर्मुद्रा प्राणस्य कीर्त्तिता। तर्जनीमध्यमाङ्गुष्ठैरपानस्य तु मुद्रिका। अनामामध्यमाङ्गुष्ठैरुदानस्य तु सा स्मृता। तर्जन्यऽनामामध्याभिः साङ्गुष्ठाभिस्तुर्थिका। सर्वाभिः सा समानस्य प्राणादस्येषु योजिता। तारपूर्वां जपेन्मुद्रां प्राणादीनां प्रदर्शयेत्" इति यामलः। ब्राह्मणाय तत्समर्पणं यथा "साक्षात् खादति नैवेद्यं विप्ररूपो जनार्दनः। ब्राह्मणे परितुष्टे च सन्तुष्टाः सर्वदेवताः।

देवाय दत्त्वा नैवेद्यं द्विजाय न प्रयच्छति । भस्मीभूतस्य नैवेद्यं पूजनं निष्फलं भवेत् । देवदत्तं न भोक्तव्यं नैवेद्यञ्च विना हरेः । प्रशस्तं सर्वदेवेषु विष्णोर्नैवेद्यभोजनम्” । शूद्रस्य तद्भक्षणविधिर्यथा “शूद्रस्तु हरिभक्तस्य नैवेद्यभोजनोत्सुकः । आमान्नं हरये दत्त्वा पाकं कृत्वा तु खादयेत्” श्रीकृष्णजन्मखण्डे ११अ० ।

नारसिंहे “मोचकं पनसं जम्बु तथाऽन्यत्कलकीफलम् । प्राचीनामलकं श्रेष्ठं मधुकोडुम्बरन्तथा । यत्नपक्कमपि ग्राह्यं कदलीफलमुत्तमम्” मोचकं कदलकम् । प्राचीनामलकं करमर्दकम् । वराहपुराणे “अपर्युषितपक्कानि दातव्यानि प्रयत्नतः । खण्डाज्यादिकृतं पक्कं नैव पर्युषितं भवेत्”। वामनपुराणम् “हविषा संस्कृता ये च यव गोधूमशालयः । तिलमुद्गादयो माषा व्रीहयश्च प्रियाः हरेः” विष्णुः “नाभक्ष्यं नैवेद्यार्थे भक्ष्येष्वजामहिषी क्षीरं वर्जयेत् । पञ्चनखस्य मत्स्यवराहमांसानि चेति” । अभक्ष्यमिति यद्यस्य यदभक्ष्यं लशुनपलाण्डुनादि तत् तेन न देयम् । न तु राजमाषादौ दध्यादि । पञ्चनखस्य शशातिरिक्तः । “मार्गं मांसं तथा छागं शार्ङ्गं मांसन्तथैव च । एतानि हि प्रियाणि स्युः प्रयोज्यानि वसुन्धरे !” इति वराहपुराणे भगवद्वाक्यात् तथा “माहिषञ्चाविकं मांसमयाज्ञिकमुदाहृतम् । माहिषं वर्जयेन्मांसं क्षीरं दधि घृतन्तथा” देवलः । “चाण्डालेन शुना वापि दृष्टं हविरयज्ञियम् । विडालादिभिरुच्छिष्टं दुष्टमन्नं विवर्जयेत्” । “अन्यत्र हिरण्योदकसमोक्षणादिति” । श्रीभागवते “यद्यदिष्टतमं लोके यच्चापि प्रियमात्मनः । तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते” मह्यं वासुदेवाय वाञ्छित०। नैवेद्यञ्च पञ्चोपचारादिपूजाङ्गम् । तद्दाने च घण्टावादनं कर्त्तव्यम् “धूपे दीपे च नैवेद्ये स्नपने वसने तथा । घण्टानादं प्रकुर्वीत तथा नीराजनेऽपि च” विधा०पा० धृतवाक्यात् । वृत्ते । निवेशो विवाहः ।

**नैवेश** त्रि० निवेशेन निर्वृत्तम् बह्वृजा० अण् । निवेशनि-

**नैवेशिक** त्रि० निवेशाय विवाहाय हितम् ठक् । विवाहार्थं दीयमाने द्रव्ये “नैवेशिकं सर्वगुणं दत्त्वा स्वर्गे महीयते” याज्ञ० “नैवेशिकं विवाहोचितं द्रव्यम्” मु०त० रघु० ।

**नैश** त्रि० निशाया इदम् चैविकोऽण् । निशासम्बन्धिनि “पूर्वां सन्ध्यां जपंस्तिष्ठन् नैशमेनो व्यपोहति” मनुः । “प्रविशमये ग्रामिनि रवेर्दीधितयस्तमोनैशम् । अपयान्ति” छ०सं०४अ० “जगति नैशमशीतकरः करैः” माघः

**नैशिक** त्रि० निशायां भवः निशाया व्यापको वा “कालाट्ठञ्” पा०ठञ् । १निशाभवे २रात्रिव्यापके स्त्रियां ङीप् । “त्र्यहमकृतचूडानां विशुद्धिर्नैशिकी स्मृता” मनुः । “आदन्तजन्मनः सद्य आचूडान्नैशिकी स्मृता” याज्ञ०

**नैःश्रेयस** त्रि० निःश्रेयसाय हितमण् । निःश्रेयससाधने “धर्म एव तु शूद्रस्य धर्मो नैःश्रेयसः परः” मनुः पक्षे विसर्गः नैःश्रेयस तत्रार्थे ।

**नैःश्रेयसिक** त्रि०निःश्रेयसं प्रयोजनमस्य ठक् । निःश्रेयससाधने “सुखाभ्युदयिकञ्चैव नैःश्रेयसिकमेव च” मनुः । पक्षे विसर्गः नैःश्रेयसिक तत्रार्थे ।

**नैषध** पु० निषधानां राजा अण् । १निषधदेशनृपे “स नैषधस्यार्थपतेः सुतायाम्” रघुः । २नलनृपे त्रिका० “न नैषधे कार्यमिदं निगाद्यम्” “देवः पतिर्विदुषि ! नैषधराजगत्या” नैषध०। निषधोऽभिजनोऽस्य अण् । ३पित्रादिक्रमेण निषधदेशवासिनि त्रि० बहुषु उभयत्र अणो लुक् । निषधाः तद्रूपा तद्देशवासिनश्च । नैषधं नलमधिकृत्य कृतो ग्रन्थः अण् । ४नलनृपचरितरूपे द्वाविंशतिसर्गात्मके श्रीहर्षकविकृते महाकाव्यभेदे महाकाव्योदाहरणे “यथा रघुवंशशिशुपालवधनैषधादिः” सा०द०

**नैषधीय** त्रि० नैषधस्येदम् “वृद्धाच्छः” पा० छ । तत्सम्बन्धिनि । “काव्ये चारुणि नैषधीयचरिते सर्गोऽयमादिर्गतः” नैषधम् ।

**नैषध्य** पुंस्त्री निषधस्य जनपदस्य तन्नृपस्यापत्यम् नादित्वात् ण्य । निषधनृपस्यापत्ये स्त्रियां टाप् ।

**नैषाद** पुंस्त्री निषादस्यापत्यम् विदा० अञ् । निषादस्यापत्ये ततः हरिता०यूनि फक् । नैषादायन यूनि तदपत्ये

**नैषादक** त्रि० निषादेन कृतम् कुलाला० संज्ञायां वुञ् । निषादकृते पदार्थभेदे ।

**नैषादकि** पुंस्त्री निषादस्यापत्यं विदा० अञ् । “व्यासवरुड निषादेत्यादि” वार्त्ति० अकङ् । निषादस्यापत्ये ।

**नैषादि** पुंस्त्री निषादस्यापत्यम् बाह्वा० इञ् । निषादापत्ये “न स तं प्रतिजग्राह नैषादिरिति चिन्तयन्” भा०आ० १३२अ० । लोके तु विदा० अञ् । नैषाद इत्येव ।

**नैषिध** पु० निषधः नलो वाचकतयाऽस्त्यस्य अण् पृषो० । तन्नामनामके नलरूपे दक्षिणाग्नौ “कव्यवाहो नलश्चैवेति” नलस्याग्निनामत्वात् लक्षितलक्षणया तस्य तथात्वम् “तस्मिन्नसन्नीन्द्रो यमो राजा नलो नैषिधोऽस्य

अन्तर्गमनोऽस्तु पांसवः” शत०ब्रा०२।३।२।१ “नलो नैषध इति निषधदेशाधिपतिर्नलः प्रसिद्धो राजा अन्वाहार्य्यपचनोऽग्निः एष एव नलो नैषध इति निर्दिष्टः। निषधराजस्य च नलस्य दक्षिणाग्नेश्च साम्यमाह तद्यदिति अग्निहोत्रहोमकाले एतमन्वाहार्य्यपचनं यत् यस्माद्दक्षिणत आहरन्ति तस्मादेव नैषधो नलोऽपि यमस्य राज्ञो दक्षिणत उपगच्छतीति लोकप्रसिद्धिः” भा०। “तत्र निष्क्रमणं कुर्वन् नडाय नैषधायान्वाहार्यपचनाय नम इति मनसा दक्षिणाग्निमुपचरेत्” कात्या०श्रौ० ४।१४ पद्धतिः।

**नैष्कर्म्य** न० निष्कर्मणो भावः ष्यञ्। विधिना सर्वकर्म्मत्यागे “न कर्मणामनारम्भात् नैष्कर्म्यम् पुरुषोऽश्नुते” गीता। “अलब्धमिच्छन् नैष्कर्म्यान्मूढबुद्धिरिहोच्यते” भा०शा० २२अ०।

**नैष्कशतिक** त्रि०निष्कशतमस्त्यस्य “शतसहस्रान्ताच्च निष्कात्” पा० मत्वर्थे ठञ्। निष्कशतमानयुक्ते एवं नैष्कसहस्रिक तन्मानयुक्ते।

**नैष्किक** पु० निष्के हेम्नि दीनारे तद्भारे नियुक्तः ठक्। १कोषाध्यक्षे टङ्कशालायां नियुक्ते अमरः। निष्केण क्रीतम् “असमासे निष्कादिभ्यः” पा० ठञ्। २निष्केण क्रीते समासे तु ठक्। परमनैष्किक स्वरे भेदः। निष्कस्य विकारः “क्रीतवत् परिमाणात्” पा० ठञ्। ३निष्कविकारे।

**नैष्क्रमण** त्रि०निष्क्रमणे शिशोर्गृहाद्बहिर्गमनकाले दीयते तत्र कार्य्यं वा व्युष्टा० अण्। शिशोर्निष्क्रमणकाले १दीयमाने २तत्र कार्य्ये पदार्थे च

**नैष्ठिक** त्रि० निष्ठा नाशपर्य्यन्तं ब्रह्मचर्य्येण तिष्ठति निष्ठायां मरणे वा विहितम् निष्ठायां भवः (आसक्तः) वा ठक्। उपनयनोत्तरं मरणपर्य्यन्तं ब्रह्मचर्य्येण गुरुकुले वासिनि १ब्रह्मचारिभेदे २मरणकाले विहिते कर्मणि ३व्रतविशेषासक्ते च “नैष्ठिको ब्रह्मचारी तु वसेदाऽऽचार्य्यसन्निधौ। तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा। अनेन विधिना देहं साधयन् विजितेन्द्रियः। ब्रह्मलोकमवाप्नोति नचेह जायते पुनः” याज्ञ० “निवेदितो नैष्ठिकसुन्दरस्तया” कुमा० “विदधे विधिमस्य नैष्ठिकम्” रघुः स्त्रियां ङीप्। “इमामवस्थां पश्यन्त्यः पश्चिमां तव नैष्ठिकीम्” हरिवं० ८८अ०।

**नैष्णिह्य** न०निष्णिहस्य भावः ष्यञ् आर्षे सत्वम्। रागाभावे “यः कामयेत नैष्णिह्यं पाप्मन इयामिति स ऋतपेयेन यजेत” आश्व०श्रौ०९।७।२५। निष्णिहस्य भावो नैष्णिह्यम्। पाप्मनो नैष्णिह्यं गच्छेयमिति यः कामयेत स ऋतपेयनामकेन एकाहेन यजेत” नारा०। लोके तु नैःस्निह्य इत्येव। पक्षे विसर्गः नैःस्निह्य तत्रार्थे

**नैसर्गिक** त्रि०निसर्गादागतः ठक्। स्वाभाविके “अज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः” शा०भा०। तदेव नैसर्गिकत्वम् “नैसर्गिकोऽप्युत्सृजे विरोधः” रघुः स्त्रियां ङीप्। “कृष्णमस्यामियं भक्तिः क लब्धा परमात्मनः। कस्य वा शिक्षिता राजन्! किं वा नैसर्गिकी तव” कल्किपु० २६अ०। [खड्गेन योद्धरि अमरः।

**नैस्त्रिंशिक** पु० निस्त्रिंशः खड्गः प्रहरणमस्य ठक्।

**नो** अव्य०नह–डो। नञर्थे अभावादौ। “भोग्याधिभोगे नो वृद्धिः सोपकारेऽथ हापिते”। “वैश्यवृत्त्या तु जीवन्नो विक्रीणीत कदाचन” याज्ञ०।

**नोचेत्** अव्य०नो च चेत् च। नयदीत्यर्थे [नोटी नटग्राम्।

**नोट** त्रि० नट–अच् पृषो०। नटे ततः गौरा० स्त्रियां ङीष्।

**नोत्** अव्य० न च उच्च। नैवेत्यर्थे “अतिमात्रमवर्धन्त नोदिव दिवमस्पृशन्” अथ० ५।१९।१ “प्रजाऽवाशकेन नोत्परा बभूवुः” शत०ब्रा० २।४।१।२

**नोदन** न० नुद–भावे ल्युट्। १खण्डने णिच्–भावे ल्युट्। २प्रेरणे ३संयोगभेदे च “अभिघातो नोदनञ्च शब्दहेतुरिहादिमः” भाषा० युच्। नोदना प्रेरणायां विधिरूपायां चोदनायां स्त्री।

**नोधस्** पु० नु–असि धुट् च। ऋषिभेदे। तेन दृष्टं साम अण्। नौधस सामभेदे न० तच्च माध्यन्दिनसवने गेयेषु सप्तसु सूक्तेषु षष्ठम् साम यथोक्तं सामसंहितासायणभाष्ये “एवमन्यस्मिन् सवने सप्त सूक्तानि तेषु गायत्रमाहीयवं चेति द्वे सामनी, द्वितीये रौरवं यौधाजयं च तृतीये औशनम्, चतुर्थे रथन्तरम्, पञ्चमे वामदेव्यम्, षष्ठे नौधसम्, सप्तमे कालेयम्”।

**नोधा** अव्य० नव–धाच्–पृषो०। नवप्रकारे नवधेत्यर्थे ‘नोधा विधाय रूपं स्वं सर्वसंकल्पविद्विभुः” भाग० ३।२३।४५।

**नोपस्थातृ** त्रि० न उपतिष्ठति उप+स्था–तृच्। १दूरस्थे “अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः” इति स्मृत्युक्ते हीने २प्रतिवादिनि च।

**नौ** स्त्री नुद–डौ। जलोपरिप्लवनसाधने १तरणौ “नोदके

शकटं याति न च नौर्गच्छति स्थले” हितो० “स्पन्दनाश्वैः समे युध्येदनूपे नौद्विपैस्तथा” मनुः “विप्रमस्तवविशस्तारन्ति च यया नावा तयैवेतरे” खच्छ० २यन्त्रचालनीये नौभेदे च“ततः प्रवासितो विद्वान् विदुरेण नरस्तदा। पार्थानां दर्शयामास मनोमारुतगामिनीम्। सर्ववातसहां नावं यन्त्रयुक्तां पताकिनीम्। शिवे भागीरथीतीरे नरैर्विस्रम्भिभिः कृताम्” भा०आ०१४६अ०। ततः तार्य्ये यत्। नाव्य नावा तार्य्ये ब्रीह्यादि यवखादि० इक। नाविक नौविशिष्टे त्रि०। नावा तरति “नौद्व्यचष्ठन्” ठन्। नाविक नावा तारियि त्रि० ‘नावोद्विगोः’ पा०। नौभ्यां ख्रीत्वात् द्विगोष्टच् नतु तद्धितलुकि। द्वाभ्यां नौभ्यामागतः द्विनावरूप्यः “द्विगोलु गनपत्ये” पा०सचोत्वस्यापकत्वात् अत्र वलादेर्न लुक्। पञ्चनावप्रियः उत्तरपदद्विगुः द्विनावं त्रिनावम् समा० द्वि०। अतद्धितलुकीति किं ? पञ्चभिर्नौभिः क्रीतः आर्हीयठक् अध्यर्द्धपूर्वेत्यादिना तस्य लुकि न, द्विनौः इत्येव। अर्द्धं नावः एकदेशितत्पु० टच्। अर्द्धनावम् क्लीवत्वं कोषात्।

**नौकर्णधार** पु० नावः कर्णं धारयति धारि—अण् उप०स०। नाविके नावः कर्णतुल्यस्य (हाल) पदार्थस्य धारके “सुरभिमधुकुसुमानि गन्धा वणिजो नौकर्णधाराश्च” हृ०सं० ५अ०।

**नौकर्णी** स्त्री नौरिव कर्णौ यस्याः ङीष्। कुमारानुचरमातृभेदे “नौकर्णी त्रिवकर्णी च वसुधा महिमा तथा” भा०ग० ४७च०।

**नौकर्म्मन्** न० नावि कर्म चालनादिव्यापारः नौकायां चालनादिव्यापारे “निषादोभार्गवं सूते दाशं नौकर्मजीविनम्” मनुः।

**नौका** स्त्री नौ+स्वार्थे क। नौशब्दार्थे अमरः निमज्जशब्दे ४१२०पृ०तल्लक्षणादि दृश्यम्। “क्षणमिह सज्जनसङ्गतिरेका भवति भवार्णवतरणे नौका” मोहमुद्गरः चतुरङ्गक्रीडाङ्गे पदार्थभेदे स्त्री तस्यास्तदाकारत्वात् तथात्वम्। चतुरङ्गशब्दे २८६२ पृ० दृश्यम्।

**नौकाकृष्ट** न० चतुरङ्गक्रीडाभेदे चतुरङ्गशब्दे २८६४पृ० दृश्यम् ‘काककाष्ठं द्रष्टनौका नौकाकृष्टप्रकारकम्”।

**नौकादण्ड** पु० ६त०। नौकायां चालनार्थं पार्श्वद्वयबद्धे काष्ठदण्डे (दाँड) अमरः।

**नौचर** त्रि० नावा चरति चर—ट। नावा चरणशीले “आदीनाग्यः शिरजनपथः कर्मणे नौचराणाम्” रघुः।

**नौजीविक** त्रि० नावा जीविका यस्य। नौचालनादिजीविकायुक्ते “पण्यभिषङ्नौजीविकसलिलजतुरगोपघातकरः” हृ०सं० ७अ०।

**नौतार्य्य** त्रि० नावा तार्य्यम्। नौकया तरणीयदेशादौ।

**नौयायिन्** त्रि० नावा याति या—णिनि। नौकया नद्यादेः पारगामिनि तेषां नदीतरणे पण्यादिनिरूपणम् मनूक्तं यथा “पणं यानं तरे दाप्यमित्यादितरशब्दे ३२४१पृ०दृश्यम् “तत्र भाण्डपूर्णानि यानानि तार्य्यं दाप्यानि सारतः। रिक्तभाण्डानि यत्किञ्चित् पुमांसश्चापरिच्छदाः। दीर्घो ध्वनि यथादेशं यथाकालं तरोभवेत्। नदीतीरेषु तद्विद्यात् समुद्रे नास्ति लक्षणम्। गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः। ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं तरे। यन्नावि किञ्चिद्दाशानां विशीर्य्येतापराधतः। तद्दाशैरेव दातव्यं समागम्य स्वतोऽंशतः। एष नौयायिनामुक्तो व्यवहारस्य निर्णयः। दाशापराधस्तोये च दैविके नास्ति निग्रहः”।

**नौवाह** त्रि० नावं वाहयति वाहि—अण् उप०स०। नौकावाहके (दाँडी) प्रसिद्धे नौकाचालके त्रिका०।

**नौषेचन** न० ६त० सुषामा० षत्वम्। नौकायाः सेचने

**न्यका** स्त्री नि+अकि—क वा०नलोपः। विट्कीटे शब्दाम्बु०

**न्यकारुका** स्त्री विट्कीटे क्रमिभेदे हारा०।

**न्यक्कार** पु० न्यक्+कृ—घञ्। १नीचकरणे च २तिरस्कारे च “न्यक्कारो ह्ययमेव मे यदरयः” वा०द० “न्यक्कारमासन्नतरं निशम्य” हरिवं०१७८अ०। क्तिन् न्यक्कृतिरप्यत्रार्थे स्त्री

**न्यक्त** त्रि० नि+अन्ज—क्त कुत्वम्। नितान्ताञ्जनयुक्तीकृते “अग्निन्यक्ताः पत्नीसंयाजानामृचः स्युः” तै०त्ति० ब्रा० १।२।१।४।

**न्यच** पुं स्त्री नियते निकृते वा अक्षिणी यस्य षसमा०। १महिषे मेदि० स्त्रियां ङीष्। २जामदग्न्ये परशुरामे हेमच०। ३२कार्त्स्न्ये ४महिषतये न० ५निकृष्टे अधमे त्रि०अमरः

**न्यग्भाव** पु० नीचो भावः। नीचत्वे।

**न्यग्रोध** पु० न्यक् रुणद्धि रुध—अच्। १वटवृक्षे अमरः २शमीवृक्षे बाहुद्वयविस्तारकृतव्यामरूपपरिमाणे(बाँऔ) ३राजे च न्यग्रोधपरिमण्डलशब्दे दृश्यम्। सर्वाणि न्यक्कृत्य स्थिते ४विष्णौ “न्यग्रोधोदुम्बरोऽश्वत्थः” विष्णुसं०। “सर्वाणि भूतानि न्यक्कृत्य निजमायया रुणद्धि इति न्यग्रोधः” भा० ५विषपर्ण्यां स्त्री ङीप्। मेदि०एवं ६मोहनौषधौ च ७मूषिकपर्ण्यां विश्वः उपसेन

न्यग्रस्य दपूभेदे पु० "नवोग्रसेनस्य सुतास्तेषां कंसस्तु पूर्वजः। न्यग्रोधश्च सुनामा च" हरिवं० ३८अ०। तस्मादूरदेशादि चतुरर्था० क। न्यग्रोधक तत्सन्निकृष्ट-देशादौ कुमुदा० ठन्। न्यग्रोधिक तत्सन्निकृष्टदेशादौ त्रि० तदर्थे प्रेक्षादि० इनि। न्यग्रोधिन् तदर्थे त्रि०।

**न्यग्रोधपरिमण्डल** पु० न्यग्रोधःव्यामः परिमण्डलं परिणाहो यस्य। १व्यामपरिमितोच्छ्रायपरिणाहे पुरुषे। तल्लक्षणं यथा "महाधनुर्द्धराश्चैव त्रेतायां चक्रवर्त्तिनः। सर्व-लक्षणसम्पन्ना न्यग्रोधपरिमण्डलाः। न्यग्रोधौ तु स्मृतौ बाहू व्यामो न्यग्रोध उच्यते। व्यामेन उच्छ्रयो यस्य अध ऊर्द्ध्वञ्च देहिनः। समोच्छ्रयपरिणाहो न्यग्रो-धपरिमण्डलः" मत्स्यपु० ११८अ०। २अङ्गनाविशेषे स्त्री "स्तनौ सुकठिनौ यस्या नितम्बे च विशालता। मध्ये क्षीणा भवेद्या सा न्यग्रोधपरिमण्डला" इति शब्दमा० "दूर्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला" भट्टिः।

**न्यङ्कु** पु० नितरामञ्चति नि+अन्च–उ न्यङ्क्वा० कुत्वम्। १मृगभेदे मेदिनिः। २वल्लङ्कमृगभेदे अमरः। ३नितरां मन्तरि त्रि० "उद्योऽन्तन्यङ्कु भिरङ्गदिव्यम्" रघुः "न्यङ्कुः स्वादुर्लघुर्बल्यो हृद्यो दोषत्रयापहः" भावप्र०। न्यङ्कोर्विकारः अण्। नैयङ्कव तदीयचर्मादौ

**न्यङ्कुभूरुह** पु० न्यङ्कुरिव भूरुहः। श्योनाकवृक्षे शब्दार्थचि० तस्य बहुशृङ्गाकारशाखत्वात्तथात्वम्।

**न्यङ्क्वादि** कुत्वनिमित्ते शब्दगणभेदे स च पा०ग०सू०उक्तो यथा "न्यङ्कु मद्गु भृगु दूरेपाक फलेपाक क्षणेपाक दूरेपाका फलेपाका दूरेपाकु फलेपाकु तक्र वक्र व्यतिषङ्ग अनुषङ्ग अवसर्ग उपसर्ग श्वपाक मांसपाक मूलपाक कपोतपाक उलूकपाक (संज्ञायां मेघनिदाघावदाघार्घाः)। न्यग्रोध वीरुत् न्यङ्क्वादिः।

**न्यङ्ग** पु० नि+अन्ज–घञ्। नितरामञ्जने "सोमस्य न्यङ्गो वदरुणपुष्पाणि फाल्गुनानि" शत०ब्रा०४।५।१०

**न्यच्छ** न०१सुश्रुतोक्ते क्षुद्ररोगभेदे "मण्डलं महदल्पं वा श्यामं वा यदि वा सितम्। सहजं नीरुजं गात्रे न्यच्छमित्य-भिधीयते" तल्लक्षणम् २नितरामच्छे त्रि०।

**न्यञ्च्** त्रि० निम्नतयाऽञ्चति अन्च–क्विप्। निम्ने क्विन् न्यच् तदर्थे त्रि०। यसादौ भत्वे च नीचः नीचा अन्यत्र कुत्वम्। न्यक् न्यग्भ्याम्।

**न्यञ्चन** न० नितरामञ्चनं गमनम्। १नितरां गमने "न्यञ्चने दुर्गे चिदायु शरणम्" ऋ०८।२७।१८। २नम्रभावे च।

**न्यञ्चित** त्रि० नि+अन्च–क्विप्–क्त। अधःक्षिप्ते हेमच०।

**न्यन्त** पु० नितरामन्तः। चरमभागे।

**न्यय** पु० नि+इण्–भावे अच्। १नाशे २अपचये च।

**न्यर्थ** पु० नि+ऋ–गतौ थन्। निकृष्टायां गतौ "न भोजा ममनुर्न न्यर्थमीयुः" ऋ० १०।१०७।८ "न्यर्थं निकृष्टां गतिम्" भा० समासे आद्यादिस्वरः। निकृष्टोऽर्थो यस्य। २निकृष्टार्थे त्रि०।

**न्यर्बुद** न० १दशगुणितार्बुदसंख्यायां २तत्सङ्ख्येये च "प्रयुत-ञ्चार्बुदञ्च न्यर्बुदञ्च समुद्रश्च" यजु०१७।२ "अर्बुदं दश-गुणं न्यर्बुदम्" वेददीपः।

**न्यर्बुदि** पु० निकृष्टः अर्बुदिर्देवो देवान्तरं यतः। रुद्रभेदे "अर्बुदिर्नाम यो देव ईशानश्च न्यर्बुदिः" अथ० ११।९।४

**न्यस्त** त्रि०नि+अस–कर्मणि क्त। १क्षिप्ते २त्यक्ते ३विसृष्टे ४निहिते च अमरः "न्यस्तशस्त्रं दिलीपञ्च तञ्च शुश्रु-वुषां प्रभुम्" रघुः।

**न्यस्तशस्त्र** पु० न्यस्तं शस्त्रं शस्त्रसाध्यं युद्धं येन। "न्यस्त-शस्त्रा महाभागाः पितरः पूर्वदेवताः" मनूक्ते १पितृ-लोके २त्यक्तायुधे च "न्यस्तशस्त्रं दिलीपञ्च" रघुः।

**न्यस्य** त्रि० नि–अस्–क्षेपे कर्मणि वा० आर्षे यत्। स्थापनीये त्यक्तव्ये "अर्जुनार्जुन! बीभत्सो! न न्यस्यं गाण्डिवं मया" भा०द्रो० २००अ० लोके तु ण्यत्।

**न्याक्य** न० नि+अकि–ण्यत् वा०नलोपः। भृष्टतण्डुले(मुड़ि) (भाजाचाल) शब्दच०।

**न्याद** पु० नि+अद–णः न घसादेशः। आहारे अमरः।

**न्याय** पु० नि+इण्–भावकरणादौ घञ्। १उचिते २गौतमप्र-णीतषोडशपदार्थनिरूपके शास्त्रभेदे प्रतिज्ञाहेतूदाहरणो-पनयननिगमनात्मके ३वाक्यभेदे "अनुमितिचरमकारण लिङ्गपरामर्शप्रयोजकशब्दज्ञानजनकवाक्यत्वम्" तल्लक्षण-मिति चिन्तामणिः। "उचितानुपूर्वीकप्रतिज्ञादिपञ्चकस-मुदायत्वमिति" शिरोमणिः। अवयवशब्दे ४३२पृ०दृश्यम्। यथा पर्वतो वह्निमान् (प्रतिज्ञा) धूमात् (हेतुः) यो यो धूमवान् स वह्निमान् यथा महानसम् (उदा०) वह्निव्या-प्यधूमवांश्चायम् ।(उपनयनम्) तस्माद्वह्निमान् (निगमनम्) एतद्दर्शनमतञ्च सर्वदर्शनसंग्रहे दर्शितं यथा

"तत्त्वज्ञानाद्दुःखात्यन्तोच्छेदलक्षणं निःश्रेयसम्भव-तीति समानतन्त्रेऽपि प्रतिपादितं तदाह सूत्रकारः प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णय-वादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानां तत्त्व-

ज्ञानान्निःश्रेयसाधिगमः” इति। इदं न्यायशास्त्र-
स्यादिमं सूत्रम्। न्यायशास्त्रञ्च पञ्चाध्यायात्मकं तत्र
प्रत्यध्यायस्याह्निकद्वयम्। तत्र प्रथमाध्यायस्य प्रथमा-
ह्निके भगवता गोतमेन प्रमाणादिपदार्थनवकलक्षण-
निरूपणं विधाय द्वितीये वादादिसप्तपदार्थलक्षणनि-
रूपणं कृतम्। द्वितीयस्य प्रथमे संशयपरीक्षणं प्रमा-
णचतुष्टयाप्रामाण्यशङ्कानिराकरणञ्च। द्वितीये अर्था-
पत्त्यादेरन्तर्भावनिरूपणम्। तृतीयस्य प्रथमे शरीरेन्द्रि-
यार्थपरीक्षणं द्वितीये बुद्धिमनःपरीक्षणम्। चतुर्थस्य
प्रथमे प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गपरीक्षणं द्वितीये
दोषनिमित्तकत्वनिरूपणम् अवयव्यादिनिरूपणञ्च। प-
ञ्चमस्य प्रथमे जातिभेदनिरूपणं द्वितीये निग्रहस्थान
भेदनिरूपणम्। "मानाधीना मेयसिद्धिरिति" न्यायेन
प्रमाणस्य प्रथमसुद्देशः तदनुसारेण लक्षणस्य कथनीयतया
प्रथमोद्दिष्टस्य प्रमाणस्य प्रथमं लक्षणं कथ्यते। साधना-
श्रयाव्यतिरिक्तत्वे सति प्रमाव्याप्तं प्रमाणम्१। एवञ्च
प्रतितन्त्रसिद्धान्तसिद्धं परमेश्वरप्रामाण्यं संगृहीतं
भवति यदचकथत् सूत्रकारः “मन्त्रायुर्वेदप्रामाण्यवच्च
तत्प्रामाण्यमाप्तप्रामाण्यादिति”। तथाच न्यायपारा-
वारं दृष्ट्वा विश्वविख्यातकीर्त्तिरुदयनाचार्य्योऽपि कुसुमा-
ञ्जलौ चतुर्थे स्तवके “मितिः सम्यक्परिच्छित्तिस्तद्वत्ता
च प्रमातृता। तदयोगव्यवच्छेदः प्रामाण्यं गौतमे
मते”इति।“साक्षात्कारिणि नित्ययोगिनि परद्वारानपे-
क्षस्थितौ भूतार्थानुभवे निविष्टनिखिलप्रस्ताविवस्तुक्रमः।
लेशादृष्टनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः शङ्कोन्मेष-
कलङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः” इति। तच्चतु-
र्विधं प्रत्यक्षानुमानोपमानशब्दभेदात्। २प्रमेयं द्वादश-
प्रकारकम् आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्य-
भावफलदुःखापवर्गभेदात्। अनवधारणात्मकं ज्ञानं
३संशयः स त्रिविधः साधारणधर्मासाधारणधर्मविप्रतिप-
त्तिलक्षणभेदात्। यमधिकृत्य प्रवर्त्तन्ते पुरुषास्तत्प्रयोजनं४
तद्द्विविधं दृष्टादृष्टभेदात्। व्याप्तिसंवेदनभूमिर्दृष्टान्तः५
स द्विविधः साधर्म्यवैधर्म्यभेदात्। प्रामाणिकत्वेना-
भ्युपगतोऽर्थः सिद्धान्तः६ स चतुर्विधः सर्वतन्त्रप्रतितन्त्रा-
धिकरणाभ्युपगमभेदात्। परार्थानुमानवाक्यैकदेशोऽव-
यवः७ स पञ्चविधः प्रतिज्ञाहेतूदाहरणोपनयननिगमनभे-
दात्। व्याप्यारोपे व्यापकारोपस्तर्कः८ स चैकादशविधः
व्याघातात्माश्रयेतरेतराश्रयचक्रकाश्रयानवस्थाप्रतिबन्दि-
कल्पनालाघवकल्पनागौरवोत्सर्गापवादवैजात्यभेदात्। य-
थार्थानुभवपर्य्याया प्रमितिर्निर्णयः९सा चतुर्विधा साक्षात्-
कृत्यनुमित्युपमितिशाब्दीभेदात्। तत्त्वनिर्णयफलः क-
थाविशेषो वादः१०। उभयसाधनवती विजिगीषुकथा
जल्पः११। स्वपक्षस्थापनाहीनः कथाविशेषो वितण्डा१२।
कथा नाम वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः।
असाधको हेतुत्वेनाभिमतो हेत्वाभासः१३ स च पञ्चविधः
सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालभेदात्।
शब्दवृत्तिव्यत्ययेन प्रतिषेधहेतुश्छलं१४ तत्त्रिविधं अभि-
धानतात्पर्य्योपचारव्यत्ययवृत्तिभेदात्। स्वव्याघातकमु-
त्तरं जातिः१५। सा चतुर्विंशतिविधा साधर्म्यवैधर्म्योत्-
कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृ-
ष्टान्तानुपपत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपल-
ब्ध्यनुपलब्धिनित्यानित्यकार्य्यसमभेदात्। पराजयनिमित्तं
निग्रहस्थानं१६ तद्द्वाविंशतिप्रकारं प्रतिज्ञाहानिप्रतिज्ञा-
न्तरप्रतिज्ञाविरोधप्रतिज्ञासन्न्यासहेत्वन्तरार्थान्तरनिरर्थका-
विज्ञातार्थापार्थकाप्राप्तकालन्यूनाधिकपुनरुक्ताननुभाषणा-
ज्ञानाप्रतिभाविक्षेपमतानुज्ञापर्य्यनुयोज्योपेक्षणनिरनुयो-
ज्यानुयोगापसिद्धान्तहेत्वाभासभेदात्। अत्र सर्वान्तर्भेद-
कस्तु विशेषस्तत्र शास्त्रे विस्पष्टो विस्तरभिया न
प्रस्तूयते। ननु प्रमाणादिपदार्थषोडशके प्रतिपाद्यमाने
कथमिदं न्यायशास्त्रमिति व्यवदिश्यते सत्यं तथापि “अ-
साधारण्येन व्यपदेशा भवन्तीति” न्यायेन न्यायस्य परा-
र्थानुमानापरपर्य्यायस्य सकलविद्यानुग्राहकतया सर्वक-
र्मानुष्ठानसाधनतया प्रधानत्वेन तथा व्यपदेशो युज्यते।
तथाऽभाषि सर्वज्ञेन, “सोऽयं परमो न्यायः विप्रतिपन्न-
पुरुषप्रतिपादकत्वात् तथा प्रवृत्तिहेतुत्वाच्चेति”। पक्षिल-
स्वामिना च“सेयमान्वीक्षिकी विद्या प्रमाणादिभिः पदार्थैः
प्रविभज्यमाना “प्रदीपः सर्वविद्यानामुपायः सर्वकर्म-
णाम्। आश्रयः सर्वधर्माणां विद्योद्देशे परीक्षितेति”।
ननु तत्त्वज्ञानान्निःश्रेयसम्भवतीत्युक्तं तत्र किं? तत्त्व-
ज्ञानादनन्तरमेव निःश्रेयसं सम्पद्यते नेत्युच्यते किन्तु
तत्त्वज्ञानाद्दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरा-
पाये तदनन्तराभाव इति। तत्र मिथ्याज्ञानं नामाना-
त्मनि देहादावात्मबुद्धिः तदनुकूलेषु रागः तत्प्रतिकूलेषु
द्वेषः वस्तुतस्त्वात्मनः प्रतिकूलमनुकूलं वा न किञ्चित्
समस्ति परस्परानुबन्धाच्च रागादीनां, मूढो रज्यति
रक्तो दुष्यति मूढः कुप्यति कुपितो मुह्यतीति ततस्तै-

दोषैः प्रेरितः प्राणी प्रतिषिद्धानि शरीरेण हिंसास्तेया-
दीन्याचरति, वाचा अनृतादीनि, मनसा परद्रोहादीनि,
सेयं पापरूपा प्रवृत्तिरधर्ममावहतीति । शरीरेण
प्रशस्तानि दानपरपरित्राणादीनि, वाचा हितसत्यादीनि,
मनसा अहिंसादीनि, सेयं पुण्यरूपा प्रवृत्तिर्धर्मः । सेय-
मुभयी प्रवृत्तिः । ततः स्वस्वानुरूपं प्रशस्तं निन्दितं वा
जन्म पुनः शरीरादेः प्रादुर्भावः । तस्मिन् सति प्रतिकूल-
वेदनीयतया बाधनात्मकं दुःखं भवति । त इमे मिथ्याज्ञा-
नादयो दुःखान्ता अविच्छेदेन प्रवर्त्तमानाः संसारशब्दार्थो
घटीयन्त्रवदनिशमनुवर्त्तन्ते । यदा कश्चित् पुरुषधौरेयः
पुराकृतसुकृतपरिपाकवशादाचार्योपदेशेन सर्वमिदं दुःखा-
यतनं दुःखानुषक्तञ्च पश्यति तदा तत्सर्वं हेयत्वेन
बुध्यते ततस्तन्निवर्त्तकमविद्यादि निवर्त्तयितुमिच्छति
तन्निवृत्त्युपायश्च तत्त्वज्ञानमिति कस्यचिच्चतसृभिर्वि-
धाभिर्विभक्तं प्रमेयं भावयतः सम्यग्दर्शनपदवेदनीय-
तया तत्त्वज्ञानं जायते तत्त्वज्ञानान्मिथ्याज्ञानमपैति
मिथ्याज्ञानापाये दोषाः अपयान्ति दोषापाये प्रवृत्तिर-
पैति प्रवृत्त्यपाये जन्मापैति जन्मापाये दुःखमत्यन्तं नि-
वर्त्तते सात्यन्तिकी निवृत्तिरपवर्गः । निवृत्तेरात्यन्ति-
कत्वं नाम निवर्त्त्यसजातीयस्य पुनस्तत्रानुत्पाद इति
तथा च पारमर्षं सूत्रं "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञा-
नानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति ।
ननु दुःखात्यन्तोच्छेदोऽपवर्ग इत्येतदद्यापि कर्णोपशु-
श्रावितं वर्त्तते तत्कथं सिद्धवत्कृत्य व्यवह्रियत इति
चेन्मैवं सर्वेषां मोक्षवादिनामपवर्गदशायामात्यन्तिकी
दुःखनिवृत्तिरस्तीत्यस्यार्थस्य सर्वतन्त्रसिद्धान्तसिद्धतया घ-
ण्टापथत्वात् न ह्यप्रवृत्तस्य दुःखं प्रत्यापद्यते इति क-
श्चित् प्रपद्यते तथा हि आत्मोच्छेदो मोक्ष इति माध्य-
मिकमते दुःखोच्छेदोऽस्तीत्येतावत्तावदविवादम् । अथ
मन्येथाः शरीरादिवदात्मापि दुःखहेतुत्वादुच्छेद्य इति
तन्न सङ्गच्छते विकल्पानुपपत्तेः किमात्मा ज्ञानसन्तानो
विवक्षितः तदतिरिक्तो वा । प्रथमे न विप्रतिपत्तिः कः
खल्वनुकूलमाचरति प्रतिकूलमाचरेत । द्वितीये तस्य
नित्यत्वे निवृत्तिरशक्यविधानैव प्रवृत्त्यनुपपत्तिश्चाधिकं
दूषणं, न खलु कश्चित् प्रेक्षावान् "आत्मनस्तु कामाय सर्वं
प्रियं भवतीति" सर्वतः प्रियतमस्यात्मनः समुच्छेदाय प्रय-
तते सर्वो हि प्राणी मुक्त इति व्यवहरति ।

धर्मिनिवृत्तौ निर्मलज्ञानोदयो महोदय इति विज्ञान-
वादिवादे सामग्र्यभावः सामानाधिकरण्यानुपपत्तिश्च ।
भावनाचतुष्टयं हि तस्य कारणमभीष्टं तच्च क्षणभङ्गपक्षे
स्थिरैकाधारासम्भवात् लङ्घनाभ्यासादिवदनासादितप्र-
कर्षं न स्फुटमभिज्ञानमभिजनयितुं प्रभवति सोपप्लवस्य
ज्ञानसन्तानस्य बद्धत्वे निरुपप्लवस्य च मुक्तत्वे यो बद्धः
स एव मुक्त इति सामानाधिकरण्यं न सङ्गच्छते ।

आवरणमुक्तिर्मुक्तिरिति जैनजनाभिमतोऽपि मार्गो
न निरर्गलः अङ्ग भवान् पृष्टो व्याचष्टां किमाव-
रणं ? धर्माधर्मभ्रान्तय इति चेत् इष्टमेव । अथ देह-
मेवावरणं तथा च तन्निवृत्तौ पञ्जरान्मुक्तस्य शुकस्येवा-
त्मनः सततोर्द्ध्वगमनं मुक्तिरिति चेत्तदा वक्तव्यं किमय-
मात्मा मूर्त्तोऽमूर्त्तो वा । प्रथमे निरवयवः सावयवो वा
निरवयवत्वे निरवयवो मूर्त्तः परमाणुरिति परमाणु-
लक्षणापत्त्या परमाणुधर्मवदात्मधर्माणामतीन्द्रियत्वं प्रस-
ज्येत् । सावयवत्वे यत्सावयवं तदनित्यमिति प्रतिबन्ध-
बलेनानित्यत्वापत्तौ कृतप्रणाशाकृताभ्यागमौ निष्प्रति-
बन्धौ प्रसरेताम् । अमूर्त्तत्वे गमनमनुपपन्नमेव चल-
नात्मिकायाः क्रियायाः मूर्त्तप्रतिबन्धात् ।

पारतन्त्र्यं बन्धः स्वातन्त्र्यं मोक्ष इति चार्वाकपक्षेऽपि
स्वातन्त्र्यं दुःखनिवृत्तिश्चेदविवादम् ऐश्वर्यं चेत् सातिश-
यतया सापेक्षतया च प्रेक्षावतां नाभिमतम् ।

प्रकृतिपुरुषान्यत्वख्यातौ प्रकृत्युपरमे पुरुषस्य स्वरूपेणाव-
स्थानं मुक्तिरिति साङ्ख्याख्यातेऽपि पक्षे दुःखोच्छेदोऽ-
भ्युपेयते विवेकज्ञानं पुरुषाश्रयं प्रकृत्याश्रयं वेति
एतावदवशिष्यते तत्र पुरुषाश्रयमिति न श्लिष्यते पुरुषस्य
कौटस्थ्यात् ज्ञाननिरोधापाताच्चापि प्रकृत्याश्रयः अचेत-
नत्वात् तस्याः । किञ्च प्रकृतिः प्रवृत्तिस्वभावा निवृत्ति-
स्वभावा वा आद्ये अनिर्मोक्षः स्वभावस्यानपायात् द्वितीये
सम्प्रति संसारोऽस्तमियात् ।

नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिरिति भट्टसर्वज्ञा-
द्यभिमतेऽपि दुःखनिवृत्तिरभिमतैव परन्तु नित्यसुखं
न प्रमाणपद्धतिमध्यास्ते । श्रुतिस्तत्र प्रमाणमिति चेन्न
योग्यानुपलब्धिबाधिते तदनवकाशादवकाशे वा ग्राव-
प्लवेऽपि तथा भावप्रसङ्गात् । ननु सुखाभिव्यक्तिर्मु-
क्तिरिति पक्षं परित्यज्य दुःखनिवृत्तिरेव मुक्तिरिति
स्वीकारः क्षीरं विहायारोचकग्रस्तस्य सौवीररुचि-
मनुहरतीति चेत्तदेतच्चाटकपक्षपतितं त्वहृदय इत्यु-
पेक्ष्यते । सुखस्य सातिशयत्वेन प्रत्यक्षतया बहुप्रत्य-

णीकाक्रान्ततया साधनप्रार्थनापरिक्लिष्टतया च दुःखाविनाभूतत्वेन विषानुषक्तमधुवत् दुःखपक्षनिःक्षेपात्। ननु "एकमनुसन्धित्सतोऽपरं प्रच्यवते" इति न्यायेन दुःखवत् सुखमप्युच्छिद्येत इति अकाम्योऽयं पक्ष इति चेन्मैवं मंस्थाः सुखसम्पादने दुःखसाधनबाहुल्यानुषङ्गनियमेन तप्तायःपिण्डे तपनीयबुद्ध्या प्रवर्त्तमानेन साम्यापातात् तथा हि न्यायोपार्जितेषु विषयेषु कियन्तः सुखखद्योताः कियन्ति दुःखदुर्दिनानि अन्यायोपार्जितेषु तु यद्भविष्यति तन्मनसापि चिन्तयितुं न शक्यमित्येतत् स्वानुभवमनाच्छादयन्तः सन्तोविदाङ्कुर्वन्तु विदांवरा भवन्तः। तस्मात् परिशेषात् परमेश्वरानुग्रहवशाच्छ्रवणादिक्रमेणात्मतत्त्वसाक्षात्कारवतः पुरुषधौरेयस्य दुःखनिवृत्तिरात्यन्तिकी निःश्रेयसमिति निरवद्यम्। नन्वीश्वरसद्भावे किं प्रमाणं प्रत्यक्षमनुमानमागमो वा न तावदत्र प्रत्यक्षं क्रमते, रूपादिरहितत्वेनातीन्द्रियत्वात् नाप्यनुमानं तद्व्याप्तिलिङ्गाभावात् नागमः विकल्पासहत्वात् किं नित्योऽवगमयत्यनित्यो वा। आद्ये अपसिद्धान्तापातः द्वितीये परस्पराश्रयापातः। उपमानादिकमशक्यशङ्कं नियतविषयत्वात्। तस्मादीश्वरः शशविषाणायते इति चेत्तदेतच्चतुरचेतसां चेतसि चमत्कारमाविष्करोति। विवादास्पदं नगसागरादिकं सकर्त्तृकं कार्य्यत्वात् कुम्भवत्। न चायमसिद्धो हेतुः सावयवत्वेन तस्य सुसाधनत्वात्। ननु किमिदं सावयवत्वम् अवयवसंयोगित्वम् अवयवसमवायित्वं वा नाद्यः गगनादौ व्यभिचारात् न द्वितीयः तन्तुत्वादावनैकान्त्यात्। तस्मादनुपपन्नमिति चेन्मैवं वादीः समवेतद्रव्यत्वं सावयवत्वमिति निरुक्तेस्तु शक्यत्वात्। नापि विरुद्धो हेतुः साध्यविपर्य्ययव्याप्तेरभावात् नाप्यनैकान्तिकः पक्षादन्यत्र वृत्तेरदर्शनात् नापि कालात्ययोपदिष्टः बाधकानुपलम्भात् नापि सत्प्रतिपक्षः प्रतिभटादर्शनात्। ननु नगादिकमकर्त्तृकं शरीराजन्यत्वात् गगनवदिति चेन्न तत् परीक्षाक्षममीक्षते नहि कठोरकण्ठीरवस्य कुरङ्गशावः प्रतिभटो भवति अजन्यत्वस्यैव समर्थतया शरीरविशेषणवैयर्थ्यात्। तर्हि जन्यत्वमेव साधनमिति चेन्नासिद्धेः। नापि सोपाधिकत्वशङ्काकलङ्काङ्कुरः सम्भवी अनुकूलतर्कसम्भवात् यद्ययमकर्त्तृकः स्यात् कार्य्यमपि न स्यादिह जगति नास्त्येव तत्कार्य्यं नाम यत्कारकचक्रमवधीर्य्यात्मानमासादयेदित्येतदविवादम्। तच्च सर्वं कर्त्तृविशेषोपहितमर्य्यादं कर्त्तृत्वं चेतरकारकाप्रयोज्यत्वे सति सकलकारकप्रयोक्तृत्वलक्षणं ज्ञानचिकीर्षाप्रयत्नाधारत्वम्। एवञ्च कर्त्तृव्यावृत्तेस्तदुपहितसमस्तकारकव्यावृत्तावकस्मात्कार्य्योत्पादप्रसङ्गः। इति स्थूलः प्रमादः। तथा निरटङ्कि शङ्करकिङ्करेण "अनुकूलेन तर्केण सनाथे सति साधने। साध्यव्यापकताभङ्गात् पक्षे नोपाधिसम्भवः" इति। यदीश्वरः कर्त्ता स्यात्तर्हि शरीरी स्यादित्यादिप्रतिकूलतर्कजातं जागर्त्तीति चेदीश्वरसिद्ध्यसिद्धिभ्यां व्याघातात् तदुदितमुदयनेन "आगमादेः प्रमाणत्वे बाधनादनिषेधनम्। आभासत्वे तु सैव स्यादाश्रयासिद्धिरुद्धृता" इति। न च विशेषविरोधः शक्यशङ्कः ज्ञातत्वाज्ञातत्वविकल्पपराहतत्वात्। तदेतत् परमेश्वरस्य जगन्निर्माणे प्रवृत्तिः किमर्था स्वार्था परार्था वा आद्येऽपीष्टप्राप्त्यर्था अनिष्टपरिहारार्था वा नाद्यः अवाप्तसकलकामस्य तदनुपपत्तेः अतएव न द्वितीयः। द्वितीये प्रवृत्त्यनुपपत्तिः कः खलु परार्थं प्रवर्त्तमानं प्रेक्षावानित्याचक्षीत। अथ करुणया प्रवृत्त्युपपत्तिरित्याचक्षीत कश्चित्तं प्रत्याचक्षीत तर्हि सर्वान् प्राणिनः सुखिन एव सृजेदीश्वरः न दुःखशबलान् करुणाविरोधात्। स्वार्थमनपेक्ष्य परदुःखप्रहरणेच्छा हि कारुण्यं तस्मादीश्वरस्य जगत्सर्जनं न युज्यते। तदुक्तं भट्टाचार्य्यैः "प्रयोजनमनुद्दिश्य न मन्दो हि प्रवर्त्तते। जगच्च सृजतस्तस्य किं नाम न कृतं भवेत्" इति। नास्तिकशिरोमणे! तावदीर्ष्याकषायिते चक्षुषी निमील्य परिभावयतु भवान् करुणया प्रवृत्तिरस्त्वेव, न च निसर्गतः सुखमयसर्गप्रसङ्गः सृज्यप्राणिकृतसुकृतदुष्कृतपरिपाकविशेषाद्वैषम्योपपत्तेः न च स्वातन्त्र्यभङ्गः शङ्कनीयः "स्वाङ्गं स्वव्यवधायकं न भवतीति, न्यायेन प्रत्युत तन्निर्वाहाच्च। "एक एव रुद्रो न द्वितीयोऽवतस्थे" इत्यादिरागमस्तत्र प्रमाणम्। यद्येवं तर्हि परस्पराश्रयबाधव्याधिं समाधत्स्वेति चेत् तस्यानुत्थानात् किमुत्पत्तौ परस्पराश्रयः शङ्क्यते ज्ञप्तौ वा। नाद्यः आगमस्येश्वराधीनोत्पत्तिकत्वेऽपि तस्यान्यतोऽवगमात् नापि तदनित्यत्वं ज्ञप्तौ, आगमानित्यत्वस्य तीव्रादिधर्मोपेतत्वादिना सुगमत्वात्। तस्मान्निवर्त्तकधर्मानुष्ठानवशादीश्वरप्रसादसिद्धावभिमतेष्टसिद्धिरिति सर्वमवदातम्"।

४नये नीतौ ५नीतिसाधने उपाये ६विष्णौ च "अग्रणीग्रामणीः श्रीमान् न्यायो नेता समीरणः" विष्णुस०

"प्रमाणानुग्राहकस्तर्को न्यायः" भा० तदनुगृहीतप्रमाणगम्यो भगवानपि न्यायशब्देन लक्षितलक्षणया प्रतिपाद्यते" आनन्दगिरिः। "न्यायप्रसूनाञ्जलिः" कुसुमाञ्जलिः "समस्तोपपत्तिलिङ्गप्रतिपादकं वाक्यं न्यायः" हरिदासः। निश्चितमीयते निर्णीयतेऽनेन करणे घञ्। ७वेदार्थनिर्णयसाधने अधिकरणात्मके पदार्थे अधिकरणशब्दे १२६पृ० दृश्यम्। स च न्यायः पूर्वोत्तरवेदसम्बन्धी जैमिनिवेदव्यासाभ्यां बहुप्रकारो दर्शितः। तत एव संक्षिप्य माधवाचार्य्येण जैमिनीयन्यायमालायां वैयासिकन्यायमालायाञ्च प्रायशः सर्वे न्याया दर्शितास्ते च तत एवावगन्तव्याः। लोकशास्त्रप्रसिद्धदृष्टान्तभेदेषु ते च लौकिकन्यायतया प्रथिताः। ते च नानास्थानात् संगृह्यात्र प्रदर्श्यन्ते

१ "अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्" इति न्यायः यत्राल्पायासेनाभीष्टसिद्धिर्जायते तत्र बह्वायाससाध्ये प्रेक्षावतां न प्रवृत्तिरिति प्रदर्शनायास्य न्यायस्य प्रवृत्तिः।

२ अजाकृपाणीयन्यायः अजाकृपाणपदे तत्स्थितक्रियाविशेषपरे अजागमनकालीनं कृपाणपतनं यथाकस्मिकम्। तथा चाकस्मिकागमनकालीनकृपाणपतनतुल्ये आकस्मिकानिष्टागमस्थलेऽस्य न्यायस्य प्रवृत्तिः। [प्रवृत्तिः।

३ अजातपुत्रनामोत्कीर्त्तनन्यायः भाविसंज्ञया निर्देशेऽस्य

४ अधिकं तु प्रविष्टं न च तद्धानिरिति न्यायः यत्राधिकप्रवेशेऽपि प्रकृतस्य न हानिस्तत्रायं प्रवर्त्तते।

५ अध्यारोपन्यायः अध्यारोपो नाम वस्तुन्यवस्त्वारोपः यथाऽरजतभूतायां शुक्तौ रजतारोप इति वेदान्तिनः। ननु कथमवस्तुनो निरात्मकस्य आरोपः क्वचिद्दृष्टपूर्वस्य यतः क्वचिदारोपदर्शनात् यथा जवायां दृष्टस्य लौहित्यस्य स्फटिके आरोपः इति चेत्सत्यं तद्विषयेऽनुभवमात्रमपेक्ष्यते न तु पूर्वमनुभूतस्य तात्त्विकत्वमपि व्यतिरेकाभावात् सन्दिग्धविपर्य्ययेऽपि अत्र स्थाणौ मे नरो वा राक्षसोवेति सन्देह आसीत् अस्यां रज्ज्वां सर्पोऽयमिति विपर्य्यय आसीत् इत्यादिसंस्कारकार्य्यस्मृतिदर्शनात्। न च सन्देहविपर्य्ययोरेवेयं स्मृतिर्न तदर्थयोरिति वाच्यम् अर्थविरहिणोस्तयोः स्मृतिगोचरत्वायोगात्। तस्मात्तु उक्तेतरस्य पूर्वपूर्वभ्रमानुभूतस्याप्युत्तरोत्तरारोपोपपत्तिः। भ्रमप्रवाहस्य च वीजाङ्कुरप्रवाहन्यायेनानादितयाऽन्योन्याश्रयानवस्थादिप्रसङ्गानवकाशात्। तथा च परमार्थसति सच्चिदानन्दब्रह्मणि वस्तुनि अवस्तुनोऽनिर्वचनीयस्याज्ञानतत्कार्य्यादेरध्यारोपः। ब्रह्मतत्त्वसाक्षात्कारेण चाध्यारोपिताज्ञानादेर्निवृत्तिः यथा शुक्तिकादिज्ञानेन रजतादिनिवृत्तिः। अतएवाज्ञानादीनां ज्ञाननिवर्त्त्यत्वान्यथानुपपत्त्या अध्यारोपितत्वं कल्प्यते इत्याकरे स्थितम्।

६ अन्धकूपपतनन्यायः अनेन पथा गन्तव्यमिति सत्पुरुषेणोपदिष्टस्तत्पथं परित्यजन्नन्धो यथा कूपे पतति एवं वेदाद्युपदिष्टमार्गं परित्यजन्नज्ञः नरकादौ पततीत्यस्य न्यायस्य तत्र प्रवृत्तिः"।

७ अन्धगजन्यायः अन्धैर्निर्धारितो गजः शा०त० अन्धगजः। तत्तुल्यन्यायः। यथा हि जन्मान्धा बहवः कञ्चिदनन्धं पुरुषमूचुरस्मान् गजं ज्ञापयेति। स च गजशालायां नीत्वा कञ्चित् कञ्चित् गजावयवं केनचित् केनचित् स्पर्शयित्वोवाच अयं गज इति ते चान्धास्तदुपदिष्टास्तत्तदवयवं गजत्वेन निश्चित्य स्वस्वगृहे आगताः परस्परं विवदन्ते। तत्र कर्णस्पर्शी शूर्पाकारो गज इति, शुण्डास्पर्शी महाजगरतुल्य इति जङ्घास्पर्शी स्तम्भतुल्य इति पुच्छग्राहकः स्थूलरज्जुसम इति पृष्ठग्राही चत्वरसमो गज इति। एवमुपदिष्टानुपुरुषबुद्धिवैचित्र्यात् ईश्वरस्य नानारूपकल्पनमित्यत्र न्यायावतारः। अन्धहस्तीत्यादिन्यायोऽप्यत्र प्रसरति।

८ अन्धगोलाङ्गूलन्यायः अन्धेन गृहीतं गोलाङ्गूलम् शा०त० अन्धगोलाङ्गूलं तत्तुल्यन्यायः "तन्निष्ठस्य मोक्षोपदेशात्" शा०सू० भाष्ये "यदि चाज्ञस्य सतो मुमुक्षोरचेतनमनात्मानमात्मेत्युपदिशेत् प्रमाणभूतं शास्त्रं स च श्रद्दधानतयाऽन्धगोलाङ्गूलन्यायेन तदात्मदृष्टिं न परित्यजेत् तद्व्यतिरिक्तं चात्मानं न प्रतिपद्येत तथा सति पुरुषार्थाद्विहन्येत अनर्थञ्च ऋच्छेत्" इत्युक्तम्। विवृतञ्चैतत् रत्नप्रभायां यथा "यथा कश्चित्किल दुष्टात्मा महारण्ये पतितमन्धं बन्धुनगरं जिगमिषुं बभाषे किमत्रायुष्मता दुःखितेन स्थीयते इति। स चान्धः सुखवाणीमाकर्ण्य तमाप्तं मत्वोवाच अहो मद्भागधेयं यदत्रभवान् दीनं मां स्वाभीष्टनगरं गन्तुमसमर्थं भाषते इति स च विप्रलिप्सुः दुष्टं गोयुवानमानीय तदीयलाङ्गूलमन्धेन ग्राहयामास उपदिदेश च एनमन्धम्, एष गोयुवा त्वामिष्टनगरं नेष्यति मा त्यजास्य लाङ्गूलमिति स चान्धः श्रद्धालुतया तदत्यजन् स्वाभीष्टमप्राप्यानर्थपरम्परां प्राप्तः तेन न्यायेनेति"। एवमन्यत्राप्येवं विषयेऽस्य प्रचारः।

९ अन्धचटकन्यायः अन्धस्य हस्ते पतितश्चटकः शा०त०। यथा दैवात् अन्धस्य हस्ते पतितश्चटकोऽन्धेन गृहीत इति लोकप्रसिद्धिः। एवं दैवादभीष्टलाभे कस्यचिदकारणस्यापि कारणत्वकल्पनं घुणाक्षरन्यायविषये इवास्य प्रवृत्तिः।

१० अन्धपरम्परान्यायः एकेनान्धेन यथोपदिष्टमन्धान्तरं पुनरन्यमन्धं तथैवोपदिशति इत्येवमज्ञस्याज्ञान्तरं प्रत्युपदेशपरम्परा न प्रामाणिकीति विवक्षायामस्य प्रवृत्तिः।

११ अपवादन्यायः अधिष्ठाने भ्रान्त्या प्रतीतस्य तदतिरेकेणाभावनिश्चयोऽपवादः, यथा स्थाण्वादौ भ्रान्त्या प्रतीतस्य पुरुषादेः स्थाण्वाद्यतिरेकेणाभावनिश्चयः। अयमेव बाधो विलापनमिति चोच्यते स चायं बाधस्त्रिविधः श्रौतो यौक्तिकः प्रत्यक्षश्चेति। "अथात आदेशो नेति नेति" "नेह नानास्ति किञ्चन" इत्यादिश्रुतेर्ब्रह्मातिरिक्ताभावनिश्चयः श्रौतो बाधः। कनकाद्यतिरेकेण कटकाद्यभावनिश्चयवन्निखिलकारणब्रह्मातिरेकेण निखिलप्रपञ्चाभावं निर्द्धार्य दृश्यमानस्य मिथ्यात्वनिर्द्धारणात् प्रपञ्चस्य ब्रह्ममात्रात्मकत्वनिश्चयो यौक्तिको बाधः। इयं रज्जुः न सर्पः इत्युपदेशसहकृतप्रत्यक्षेणेव तत्त्वमस्यादिवाक्यजनितेन चिन्मात्रोऽहमिति प्रत्यक्षेण ब्रह्मात्मनिश्चयः प्रत्यक्षबाधः।

१२ अर्द्धजरतीयन्यायः शब्दार्थे द्र। अयं च २७४पृ०दर्शितः।

१३ अशोकवनिकान्यायः अशोकवनिकागमने यथेष्टच्छायाशीतरसलाभेन अन्यत्र गमनाकाङ्क्षा यथा न भवेत् एवं यत्रेष्टलाभादन्यत्रेच्छाभावस्तत्रायं प्रवर्त्तते।

१४ अश्मलोष्टन्यायः लोष्टस्य तूलाद्यपेक्षया काठिन्येऽपि अश्माद्यपेक्षया मृदुत्वं यथा। तथा यस्य यदपेक्षया वैषम्याधिक्यं विवक्ष्यते तत्रास्य प्रवृत्तिः। अत्यान्तरत्वविवक्षायां तु पाषाणेष्टकान्यायोऽवतरति।

१५ असाधारण्येन व्यपदेशा भवन्तीति न्यायः यथा गौतमोक्तशास्त्रे प्रमाणादिषोडशपदार्थप्रतिपादनेऽपि तदेकदेशन्यायपदार्थस्य अन्यशास्त्रापेक्षयाप्राधान्येन प्रतिपादनात् न्यायशास्त्रमिति तस्य संज्ञा एवमन्यत्र प्राधान्यविवक्षया तत्तत्संज्ञेति तत्रास्य प्रवृत्तिः।

१६ अहिकुण्डलन्यायः अहेः सर्पस्य यथा कुण्डलाकृतिवेष्टनं स्वाभाविकं तथा यस्य स्वाभाविकधर्मो व्यपदिश्यते तत्रास्य प्रवृत्तिः। [प्रसिद्धाभाणकं तत्रास्य प्रवृत्तिः।

१७ आभाणकन्यायः लोकप्रसिद्धकथनमाभाणकं तद्वदस्य

१८ आम्रवणन्यायः वने इतरवृक्षसत्त्वेऽपि आम्राणां बाहुल्ये यथा आम्रवणव्यपदेशः एवमेकस्य प्राधान्ये "भूयस्त्वात्तद्वाद इति" न्यायेन तद्व्यपदेशो यत्र तत्रास्य प्रवृत्तिः।

१९ उदकनिमज्जनन्यायः सत्याभिसन्धस्य उदकनिमज्जनरूपे दिव्ये शोध्यस्य जलनिमज्जनसमये तत्स्थानान्निःक्षिप्तं शरमादाय तत्पतनस्थानादितोऽपरो नरो यद्यतिवेगेन शोध्यस्थानमागत्य तच्छिरोतिरिक्तं मुखनासिकाद्यवयवं न पश्यति तदा शुद्धिः मिथ्याभिसन्धस्य तद्दर्शनादशुद्धिरित्येवं दिव्ये प्रसिद्धिवत् यत्र सत्यासत्ययोर्ज्ञानं तत्रास्य प्रवृत्तिः।

२० उपयन्नपयन् धर्मो विकरोति हि धर्मिणमिति न्यायः यथा पूर्वस्य रूपरसादिरूपधर्मपरावृत्तौ रूपरसाद्यन्तरोत्पत्तौ च घटादेर्धर्मिणो विकृतिरेवं यस्य धर्मिणः पूर्वधर्मस्यापगमे अन्यधर्मस्योत्पत्तिस्तत्रायं न्यायोऽवतरति।

२१ उपवासाद्वरं भैक्ष्यमिति न्यायः भिक्षायाः क्लेशजनकत्वेऽपि उपवासस्याधिकदुःखप्रदत्वापेक्षया इष्टत्वेन यथा वरत्वं तथा क्लेशदायकतारतम्येन बहुदुःखदायकापेक्षया स्वल्पदुःखदायकस्य वरत्वं यत्रोपदिश्यते तत्रास्य प्रवृत्तिः।

२२ उभयतः पाशारज्जुन्यायः रज्ज्वां यथा उभयपार्श्वे पाशसत्त्वे उभयपार्श्वयोर्गमने बन्धनम् एवमुपन्यस्तयोः पक्षयोर्दुष्टत्वे दोषोद्धारणाभावेन बद्धवद्भावेऽस्य प्रवृत्तिः।

२३ उष्ट्रकण्टकभक्षणन्यायः उष्ट्रस्य शमीकण्टकवेधजातदुःखकालेऽपि शमीपत्रभक्षणजसुखलेशो यथा तथाभीष्टविषयोपार्जनदुःखकाले तदुपार्जितद्रव्यजसुखलेशो यत्रोपदिश्यते तत्रास्य प्रवृत्तिः।

२४ एकं सन्धित्सतोऽपरं प्रच्यवत इति न्यायः यथा एकं कांस्यपात्रावयवभेदं सन्धातुमिच्छतोऽपरं तदवयवमत्यन्ताबलसंयोगेन नष्टमिव प्रच्यवते एवमन्यत्र एकस्य सन्धानेच्छया कृतव्यापारभेदेऽन्यस्य यत्र प्रच्यवः, तत्रास्य प्रवृत्तिः। तथा एकामसिद्धिं परिहरतो द्वितीयासिद्धिप्रसङ्गः। यथोदाहृतं बौद्धाधिकारे उदयनेन यथा अङ्कुराद्यकर्तृकं शरीराजन्यत्वादित्यत्र शरीरीति विशेषणेन स्वरूपासिद्धिं परिहरतो बौद्धस्य व्याप्यत्वासिद्धिरापद्यते इत्यन्तेन।

२५ एकवाक्यतापन्नानां सम्भूयैकार्थप्रतिपादकत्वमिति न्यायः सम्भूय मिलित्वा इतरसाचिव्येनेत्यर्थः। यथा प्रयाजाद्यङ्गजातवाक्यसम्भूयानां दर्शपूर्वार्थकसाधकत्वेनैकवाक्यत्वमित्येवं यत्र विवक्ष्यते तत्रास्य प्रवृत्तिः।

२६ एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति न्यायः यथा हस्तिदर्शनात् तत्सम्बन्धिनो हस्तिपकादेः स्मरणमेव शब्दज्ञानात् वृत्तिसम्बन्धेन शब्दसम्बन्धिनोऽर्थस्य स्मरणमित्यादि यत्रोपदिश्यते तत्रास्य प्रवृत्तिः।

२७ एकाकिनी प्रतिज्ञा हि प्रतिज्ञातं न साधयेदिति न्यायः एकाकिनी हेत्वादिचतुष्कहीना परार्थानुमाने हि प्रतिज्ञादिपञ्चकेनैवार्थसिद्धिः न केवलप्रतिज्ञामात्रेणार्थसिद्धिः तथात्वे सर्वत्र सर्वसिद्धिप्रसङ्गात्। प्रतिज्ञादिपञ्चकञ्चानुपदमुक्तम्। न हि प्रतिज्ञामात्रेणार्थसिद्धिरिति न्यायोऽप्येतादृशएव शब्दमात्रे भेदः।

२८ औपाधिकाकाशभेदन्यायः यथा औपाधिकाकाशगोचरं ज्ञानं सविशेषणं हीति न्यायेनोपाधिभेदविषयं तथा जीवब्रह्मभेदविषयं प्रत्यक्षादिकं तदुपाधिभेदविषयमित्येवं यत्र विवक्ष्यते तत्रायं प्रवर्त्तते। "घटसंवृत आकाशे नीयमाने यथा पुनः। घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः" इति श्रुत्युक्तिस्तन्न्यायमूलिका।

२९ कण्ठचामीकरन्यायः चामीकरशब्दः चामीकरनिर्मितभूषणपरः। तद्धि यथा कण्ठगतमपि चिरप्राप्तमपि विस्मृतं सत् दुःखाकरोति भ्रान्तोदेशात् प्राप्तमिव भवत् सुखाकरोति न तु वस्तुतो ज्ञानातिरिक्ता तस्य प्राप्तिरस्ति प्राप्तत्वात्। एवं यस्य प्राप्तस्य नष्टभ्रान्त्या दुःखं तदुपदेशेन तज्ज्ञानाच्च सुखं यत्रोपदिश्यते तत्रास्य प्रवृत्तिः। तथा जीवस्य स्वतःसिद्धब्रह्मात्मकस्य अज्ञानादिदोषात् तद्विस्मरणं तत्त्वमस्यादिवाक्यजन्यसाक्षात्कारेण तत्प्राप्तस्य प्राप्तिरिव भवतीत्युपपद्यते।

३० कदम्बगोलकन्यायः कदम्बगोलकस्य गोलाकारकदम्बस्य सर्वावयवेषु यथा युगपत् पुष्पोद्गमः एवं सर्वप्रदेशेषु युगपत् यत्र प्रसरस्तत्रास्य न्यायस्य प्रवृत्तिः। "कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते" भाषा०।

३१ कफोणिगुडन्यायः कफोणौ गुडाभावेऽपि तदाशया यथा लेहनमेवं यत्र वस्त्वसद्भावेऽपि तत्प्रत्याशया व्यापारभेदस्तत्रास्य प्रवृत्तिः।

३२ करकङ्कणन्यायः कङ्कणं करभूषणमित्यमरोक्तेः कङ्कणशब्दस्यैव करभूषणवाचित्वेऽपि तत्पूर्वं करशब्दप्रयोगे यथा प्रयोगकाले तस्य करसम्बन्धिता द्योत्यते एवमन्यस्यापि तत्काले तत्सम्बन्धद्योतनार्थं यत्र प्रयोगस्तत्रास्य प्रवृत्तिः।

३३ काकतालीयन्यायः इवार्थे छ। काकतालीयशब्दे १८४१पृ० दृश्यः। अत्रायं विशेषः अतर्कितेष्टलाभे अतर्कितानिष्टलाभे चायमवतरति तथा हि अकस्मात्तालफलस्याधः पतनात् काकस्योपभोगलाभः। एवं तत्फलस्य शिरसि पतनात् मरणमपि सम्भवति। तत्रानिष्टलाभे "फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति" नैषधः०। इष्टावाप्तौ "यत्तया मेलनं तत्र लाभो मे यश्च सुभ्रुवः। तदेतत् काकतालीयमवितर्कितसम्भवम्" चन्द्रालोकः। "पततु तालफलं यथा काकेनोपभुक्तमेवं रहोदर्शनक्षुभितहृदया तन्वी मया भुक्तेति" कुवलयानन्दः।

३४ काकदध्युपघातकन्यायः यथा काकेभ्यो दधि रक्ष्यतामित्यादौ उपघातकमात्राभिप्रायत्वेन काकशब्दस्य दध्युपघातकमात्रे लक्षणा एवं यत्र तात्पर्यवशेनेतरार्थपरत्वं तत्रास्य प्रवृत्तिः। तदुक्तमभियुक्तैः "काकेभ्यो रक्ष्यतामन्नमिति बालोऽपि देशितः। उपघातप्रधानत्वात् न श्वादिभ्योऽपि रक्षति?"।

३५ काकदन्तगवेषणान्यायः काकस्य दन्ताः सन्ति नवा तेषां शौक्ल्यं नवेत्यन्वेषणं यथा निष्फलं तथा यस्यान्वेषणं निष्फलं तत्रास्य प्रवृत्तिः।

३६ काकमांसं शुनोच्छिष्टं स्वल्पं तदपि दुर्लभम् इति न्यायः अत्यन्तनिकृष्टस्यातितुच्छस्यापि दुर्लभत्वेऽयं न्यायः प्रवर्त्तते।

३७ काकाक्षिगोलकन्यायः एकस्य काकस्य चक्षुः प्रयोजनवशात् यथा उभयगोलके सञ्चारः तथा एकस्य पदार्थस्योभयत्र सम्बन्धविवक्षायामस्य प्रवृत्तिः।

३८ कारणगुणप्रक्रमन्यायः कारणगुणाः सजातीयगुणान् कार्ये आरभन्ते यथा तन्तुरूपादयः स्वकार्ये पटे सजातीयरूपादीनारभन्ते न विजातीयानेवं यत्र कारणगुणानुगमस्तत्रास्य प्रवृत्तिः।

३९ कारयितुः कर्त्तृत्वन्यायः यः कारयति स करोत्येव यथा राजा भटादिभिर्युद्धं कारयन् तत्कर्त्तेति व्यपदिश्यते युद्धफलविजयराज्यलाभादेस्तस्येत्यात्। तथा यत्र विवक्षा तत्रास्य प्रवृत्तिः।

४० कार्य्येण कारणसंप्रत्ययन्यायः कार्य्येण धूमादिना यथा वह्न्यादेरनुमानरूपः संप्रत्यय एवं यत्र कार्येण कारणसंप्रत्ययस्य विवक्षा तत्रास्य प्रवृत्तिः।

४१ कुशकाशावलम्बनन्यायः नद्यादौ पतितस्य सन्तरणानभिज्ञस्य यथा कुशकाशावलम्बनं निरर्थकमेवं प्रबलयुक्तिभिराक्रान्तस्य दुर्बलयुक्त्यवलम्बनं निरर्थकमित्येवमवलम्बनस्य निरर्थकत्वविवक्षायामस्य प्रवृत्तिः।

४२ कूपखानकन्यायः कूपखानकस्य कूपखननकाले गात्रे संलग्न

पङ्कं कूपोत्थितजलेन यथापयाति एवं विषयावच्छिन्ने-श्वरभेदबुद्धिजनग्रोदोषस्तदुपासनजन्यसत्त्वविशेषजेनाद्वै-तबोधेन समूलं निवर्त्त्यतेत्येवं विवक्षायामस्य प्रवृत्तिः ।

४३ कूपमण्डूकन्यायः समुद्रमण्डूकं कथञ्चित्तीरवनीपस्थकूपं गतं कूपस्थमण्डूकः पप्रच्छ कुत आगतोभवानिति स च समुद्रादिति प्रत्युक्तवान् । पुनः कूपमण्डूकः कीदृशः समुद्र इति पप्रच्छ तेन चातीव महानिति प्रत्युक्तं तत्किं कूपसदृश इत्युक्ते तेन प्रत्युक्तं नहि नहि नास्ति तत्तु-ल्योऽपरः सहि सरितां पतिरनवगाह्यगाम्भीर्योऽवस्थ-पारोऽतीव महत्तम इति । कूपमण्डूकस्तु कूपात् महान् नास्ति त्वं तु मिथ्यैव प्रलपसीत्युक्तवान् । समुद्रभेकस्तु तत् श्रुत्वा मनसा तमुपजहासेति लोके गाथा गीयते तथा च यथा समुद्रमज्ञात्वा तन्महिमानं निराकुर्वन् कूपमण्डूक उपहास्यतां प्राप्तस्तथा परसिद्धान्तानभि-ज्ञस्तद्दूषणाय प्रवर्त्तमान उपहास्यतां गच्छतीति विव-क्षायामस्य प्रवृत्तिः ।

४४ कूपयन्त्रघटिकान्यायः कूपात् गभीरादपि यन्त्रेण यथा घटिका उत्तोल्यते एवं अतिदुर्बोधत्वेन गम्भीरादपि शास्त्रात् उपदेशादिरूपयन्त्रेण सारोद्धारो यत्र विवक्ष्यते तत्रास्य प्रवृत्तिः ।

४५ कूर्माङ्गन्यायः कूर्मः स्वेच्छया यथा निजाङ्गस्य सङ्कोच-विकाशौ करोति एवं स्वेच्छावशात् कोपाद्युपाधानका-र्यजातस्य कोपादौ सङ्कोचविकाशकारित्वमित्येवं विव-क्षायामस्य प्रवृत्तिः "यदा संहरते चायं कूर्मोऽङ्गा-नीव सर्वशः" गीता ।

४६ कैमुतिकन्यायः यत्र दुर्बोधस्य दुःसाध्यस्य सुखेन बोध-साधनादि तत्र सुबोधस्य सुसाध्यस्य नितरां सिद्धिरित्येवं यत्र विवक्षा तत्रास्य प्रवृत्तिः ।

४७ कोषपानन्यायः कोषपानं दिव्यभेदः । तत्र यथा सर्व-दिव्यसाधारणधर्मपूर्वदिनोपवासवतोऽभियुक्तस्य मिथ्यावा-दिनः प्रथमतिलयजलपानकाले कश्चित् सुखविशेषो भवति शास्त्रनिर्दिष्टावधिकाले तु महद्दुःखं तथा हरिहरा-दिष्वेकस्मिन् भक्तिव्याजेनेतरनिन्दां कुर्वतो निन्दाव्यस-निनो यद्यपि तत्काले कश्चित् सुखविशेषः स्यात् तथापि निन्दाजन्यदुरितपरिपाककाले कुम्भीपाकादिजन्यं घोर-तमं दुःखं भवतीत्यस्य विवक्षायामस्य न्यायस्य प्रवृत्तिः ।

४८ क्रिया हि विकल्प्यते न वस्त्विति न्यायः क्रिया हि कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुं शक्यत्वात् विकल्प्यते न तु वस्तु एवं नैवं वेति विकल्प्यते । तदेतदुक्तं शा०भाष्ये "कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुं शक्यं लौकिकं वैदिकञ्च कर्म यथा अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोड-शिनं गृह्णाति उदिते जुहोति अनुदिते जुहोति" रथेन पद्भ्यामन्यथा वा गच्छति न गच्छति वेति । न तु वस्त्वेवं नैवमस्ति नास्तीति वा विकल्प्यते विकल्पना हि पुरुषबुद्ध्यपेक्षा न वस्तुयाथात्म्यज्ञानं पुरुषबु-द्ध्यपेक्षं किं तर्हि वस्तुतन्त्रमेव न हि स्थाणावेकस्मिन् स्थाणुर्वा पुरुषोऽन्यो वेति तत्त्वज्ञानं भवति तत्र पुरुषो वान्यो वेति मिथ्याज्ञानं स्थाणुरेवेति तत्त्वज्ञानम्" एव-मन्यमप्यूह्यम् ।

४९ खले कपोतन्यायः "वृद्धा युवानः शिशवः कपोताः खले यथाऽमी युगपत् पतन्ति । तथैव सर्वे युगपत् पदार्थाः परस्परेणान्वयिनो भवन्ति" इत्युक्तरीत्या यत्र पदार्थानां युगपदन्वयस्तत्रास्य प्रवृत्तिः ।

५० गड्डलिकाप्रवाहन्यायः गड्डलिकानामवीनां संघाटे का चेत् क्वापि पतति तदा तत्पश्चाद्गताः सर्वेऽपि कार्यबाधा अपि तत्र पतन्तीति लोकप्रसिद्ध्या यत्र कार्य-बाधायामपि अनिष्टमार्गे धावनं तत्रास्य प्रवृत्तिः ।

५१ गुडजिह्विकान्यायः यथा तिक्तताभिया निम्बपानम-कुर्वतः बालस्य जिह्वायां गुडलेपं दत्त्वा पित्रा-दिस्तं निम्बं पाययन्ति एवमर्थवादवाक्यानि बह्वा-यासाध्ये कर्मण्यप्रवर्त्तमानं पुरुषं स्वर्गाद्यर्थादिकं श्रावयित्वा प्रवर्त्तयन्ति । फलश्रुतिरपि रोचनार्था तदुक्तं भ० त० भाग० ११स्क० "वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे । नैष्कर्म्यां लभते सिद्धिं रोच-नार्था फलश्रुतिः" "फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् । श्रेयोविवक्षया प्रोक्ता यथा भैषज्य-रोचनम्" अस्य तात्पर्यमुक्तं तत्रैव "पिब निम्बं प्रदा-स्यामि खलु ते खण्डलड्डुकान् । पित्रैवमुक्तः पिबति तिक्तमप्यतिबालकः" । तत्र यथा निम्बादिपानस्य न खलु खण्डादिलाभएव प्रयोजनं किन्त्वारोग्यं तथा वेदो-ऽप्यवान्तरफलैः प्रलोभयन् मोक्षायैव कर्माणि विधत्ते" ।

५२ गोबलीवर्दन्यायः बलीवर्दस्य गोविशेषत्वेऽपि बलीवर्दस्य झटिति गोत्वेन बोधनार्थं यथा प्रयोगः तथाऽन्ययोः सामान्यविशेषरूपयोर्झटिति बोधनार्थं यत्र प्रयोगस्त-त्रास्य प्रवृत्तिः । एवं गोवृषन्यायोऽप्येतादृशार्थेऽवतरति ।

५३ घट्टकुटीप्रभातन्यायः तच्छब्दे २७८४पृ० अस्य विवरणम् ।

५४ घुणाक्षरन्यायः घुणः कीटभेदः तेन यथेष्टं वंशस्य खोदने कृते ततो रेखासन्निवेशभेदेन दैवात् यथाऽक्षराकारनिष्पत्तिः एवमन्यार्थप्रवृत्तस्य दैवादन्यार्थस्य यत्र निष्पत्तिर्विवक्ष्यते तत्रास्य प्रवृत्तिः ।

५५ चतुर्वेदविन्न्यायः यथा गोहिरण्यादिरूपं बहुधनं चतुर्वेदविदे मया देयमिति कस्यचित् दातुर्वचनं श्रुत्वा कश्चित् मूढः वेदाश्चत्वार इत्यहं जाने मह्यमिदं सर्वं धनं देयमिति वदन् तद्धनं न लभते प्रत्युत उपहसनीयश्च भवति एवं सच्चिदानन्दरूपं प्रत्यगभिन्नं ब्रह्मेति शब्दमात्राभिज्ञस्तदर्थशाब्दबोधमात्रशाली वा यस्तत्त्ववित्त्वाभिमानेन तत्त्वविदां गतिं वाञ्छति स न तां प्राप्नोति प्रत्युत उपहास्यश्च भवति । तथा च वेदसङ्ख्यामात्रज्ञाने तद्विशेषस्वरूपार्थयोरज्ञाने यथा तदभिज्ञयोग्यसम्मानपूजामानालाभः तथा सच्चिदानन्दादिशब्दमात्रज्ञाने तदर्थस्य साक्षात्काराभावे न ब्रह्मभावापत्तिलक्षणमुक्तिप्राप्तिरित्येवं यत्र विवक्ष्यते तत्रास्य प्रवृत्तिः ।

५६ चालनीयन्यायः चालनीमध्ये तत्स्थतण्डुलानां सच्छिद्रद्वारा सर्वेषां यथा पतनम् । एवं क्वचित्स्थितवस्तूनां सर्वेषां लक्षणादिबहिर्भावो यत्र सम्भाव्यते तत्रास्य प्रवृत्तिः । यथा व्यापकतालक्षणे साध्यप्रतियोगिकाभावप्रवेशे महानसीयवह्न्यधिकरणे पर्वतीयवह्न्यभावस्य एवं पर्वतीयवह्न्यधिकरणे महानसीयवह्न्यभावस्य च सत्त्वेन वह्निप्रतियोगिकाभावस्य तत्तदधिकरणे सत्त्वात् सर्वेषां वह्नीनां व्यापकतालक्षणबहिर्भावः ।

५७ चौरापराधेन माण्डव्यदण्डन्यायः चौरस्यापराधेन यथा माण्डव्यस्य शूलारोपणं पुराणप्रसिद्धम् । एवमेकस्यापराधेनान्यस्य दोषारोपणं यत्र विवक्ष्यते तत्रास्य प्रवृत्तिः ।

५८ जलतुम्बिकान्यायः यथा पङ्कलिप्ता तुम्बिका नद्यादौ निमज्जति पङ्कलेपापगमे च उन्मज्जति तद्गतिप्रतिरोधकविरहादेवं जीवः देहादिसम्बन्धहेतुमलादौ क्षीणे सति आलोकाकाशे स्वयमेव गत्वा तिष्ठति तादृशएव तस्य मोक्ष इति दिगम्बरमते स्थितम् ।

५९ जलानयनन्यायः यथा जलमानीयतामित्युक्ते अनुक्तमपि तत्पात्रानयनं नान्तरीयकतया प्रतिभाति एवमेकस्योक्तौ तदाधारादेरनुक्तस्यापि अन्यस्य यत्र प्रतीतिस्तत्रास्य प्रवृत्तिः ।

६० तण्डुलभक्षणन्यायः यथा चौरस्य तण्डुलभक्षणरूपदिव्ये शीघ्रमेव लोहितादिनिष्ठीवनं दृश्यते "लोहितं दृश्यते यस्य मुखे हनुश्च शीर्यते । गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत्" पितामहेन तस्य सद्योऽनिष्टस्योक्तेस्तथा यत्र सद्योऽनिष्टसम्भवस्तत्रास्य प्रवृत्तिः ।

६१ तप्तपरशुग्रहणन्यायः सत्याभिसन्धस्य मोक्षो मिथ्याभिसन्धस्य बन्ध इति विवक्षायामस्य न्यायस्य प्रवृत्तिः । तप्तपरशुग्रहणञ्च दिव्यभेदः । तथा हि चोरत्वसन्देहे निर्णयार्थं तादृशसन्देहविषयं पुरुषमुद्दिश्य पञ्चाशत्पलमितमच्छिद्रहितमष्टाङ्गुलायामं लौहं परशुमग्नौ प्रक्षिप्याग्निवर्णं कृत्वा अश्वत्थपत्रदधिपूर्वाद्यन्तरितयोः शोध्यस्य हस्तयोर्विधिना प्राड्विपाको निःक्षिपेत् स चेदनृतवादी नाहं चौर इति तदा तादृशपरशुग्रहणे दह्यते यस्तु नाहं चौर इति सत्यवादी स तादृशपरशुग्रहणेऽपि न दह्यते तत्र दाहाभावप्रयोजकं नाहं चौर इति विषयस्य सत्यत्वं दाहप्रयोजकं तु तद्विषयस्यानृतत्वम् । तथा मुक्तौ प्रयोजकमहं ब्रह्मेति वाक्यविषयस्य सत्यत्वं बन्धप्रयोजकं तु नाहं ब्रह्मेति वाक्यविषयस्यानृतत्वम् । अयमेव न्यायः छा॰उ॰ श्रुत्या प्रतिपादितो यथा "तद्यथा पुरुषं सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति स यदि तस्य कर्त्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते अथ यदि तस्याकर्त्ता भवति ततएव सत्यमात्मानं कुरुते सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते स यथा तत्र नादह्येतैतदात्म्यमिदं सर्वं स आत्मा तत्त्वमसि श्वेतकेतो" इति ।

६२ तप्तमाषकोद्धरणन्यायः तप्तपरशुग्रहणन्यायविषयेऽस्य प्रवृत्तिः तप्तमाषकग्रहणमपि दिव्यभेदः । तत्रापि अतितप्ततैलादितः सौवर्णमाषकोद्धरणे शोध्यस्य करे स्फोटाद्यभावे शुद्धिः अन्यथा त्वशुद्धिः ।

६३ तुष्यतु दुर्जन इति न्यायः यत्र प्रतिवाद्युक्तपक्षं दुष्टमपि वादिना प्रौढिवादेन अङ्गीकृत्यापि दूषणान्तरस्य दानं तत्रास्य प्रवृत्तिः ।

६४ तृणजलौकान्यायः यथा जलौका तृणान्तरमवलम्ब्यैव पूर्वाश्रितं तृणं त्यजति तथा जीवः स्वाविद्याकामकर्मवासनादिभिर्देहान्तरमुत्पाद्यैव पूर्वं देहं त्यजतीति विवक्षायामस्य प्रवृत्तिः ।

६५ तृणारणिमणिन्यायः तार्णवह्निं प्रति तृणस्य, आरणेयं

वह्निं प्रति अरणेः मणिजन्यवह्निं प्रति मणेश्च कारणत्वं न तु वह्नित्वावच्छिन्नं प्रति तृणादेः कारणत्वं परस्पर-व्यभिचारात्। एवं यत्र कार्यकारणभाववाहुल्यं कार्यतावच्छेदकं कारणतावच्छेदकञ्च नाना तत्रास्य प्रवृत्तिः।

६६ दग्धपत्रन्यायः पत्रस्य दग्धत्वेऽपि यथा पूर्वाकारेणावस्थानं दृश्यते एवं यत्र वस्तुनो दाहेऽपि तदाकारप्रतीतिस्तत्रास्य प्रवृत्तिः एवं दग्धपटन्यायोऽप्येवं विषयः।

६७ दग्धबीजन्यायः दग्धस्य बीजस्य यथा नाङ्कुरोत्पादकता एवमविवेकनाशे न संसारवृक्षप्ररोह इत्येवं यत्र विवक्षा तत्रास्य प्रवृत्तिः।

६८ दण्डचक्रन्यायः दण्डचक्रसूत्रसलिलादेर्यथा घटत्वाद्येकधर्मावच्छिन्नं प्रति कारणत्वमेवं विवक्षायामस्य प्रवृत्तिः।

६९ दण्डापूपन्यायः दण्डस्याखुना भक्षणे प्रतीते तत्संबद्धापूपस्य भक्षणमर्थात् यथा प्रतीयते एवं यत्र दुष्करे कस्मिंश्चिदर्थे कृतेऽन्यस्य सुकरस्य कृतत्वमर्थात् सिद्धं प्रतीयते इत्यस्य विवक्षायामस्य प्रवृत्तिः।

७० देवदत्तापुत्रन्यायः पुत्रस्य मातापितृसम्बन्धित्वेऽपि मातुः प्राधान्यविवक्षायां यथा देवदत्तापुत्र इत्युच्यते तथाऽन्यत्र यत्र मातुः प्राधान्यविवक्षा तत्रास्य प्रवृत्तिः। पितुः प्राधान्ये देवदत्तपुत्र इति व्यपदेशः। अतएव यजुर्वेदवंशकीर्त्तने स्त्रीप्राधान्येनैव निर्देशो यथा "अथ वंशः तदिदं वयं भारद्वाजीपुत्राद्भारद्वाजीपुत्रो वात्सीमाण्डवी पुत्राद्वात्सीमाण्डवीपुत्रः इत्यादि" शत०ब्रा०१४।९।४।३०।

७१ धटारोहणन्यायः धटारोहणं तुलारोहणं दिव्यभेदः। तत्र सत्याभिसन्धस्य शुद्धिः मिथ्याभिसन्धस्याशुद्धिः तथा हि "तुलितो यदि वर्द्धेत स शुद्धः स्यान्न संशयः। समो वा हीयमानो वा न विशुद्धो भवेन्नरः" इत्युक्तदिशा शुद्ध्यशुद्धी ज्ञेये। एवं यत्र विवक्षा तत्रास्य प्रवृत्तिः।

७२ धर्माधर्मग्रहणन्यायः धर्माधर्ममूर्त्तिग्रहणरूपदिव्ये सत्याभिसन्धस्य यथा धर्ममूर्त्तिग्रहणं मिथ्याभिसन्धस्याधर्ममूर्त्तिग्रहणम् ताभ्यां च जयपराजयौ यथा भवतः। एवं यत्र विवक्षा तत्रास्य प्रवृत्तिः। तच्च दिव्यं पितामहेनोक्तं यथा "राजतं कारयेत् धर्ममधर्मं सीसकायसम्। लिखेद्भूर्जे पटे वापि धर्माधर्मौ सितासितौ। अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत्। सितपुष्पस्तु धर्मः स्यादधर्मोऽसितपुष्पभृत्। एवंविधायवालेख्य पिण्डयोस्तौ निधापयेत्। गोमयेन मृदा वापि पिण्डौ कार्यौ समन्ततः। मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलक्षितौ। उपलिप्ते शुचौ देशे देवब्राह्मणसन्निधौ। आवाहयेत् ततो देवाल्लोकपालांश्च पूर्ववत्। धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं ततः। यदि पापविमुक्तोऽहं धर्मस्त्वायातु मे करे" "अभियुक्तस्तयोश्चैकं प्रगृह्णीतविलम्बितः। धर्मे गृहीते शुद्धिः स्यादधर्मे तु स हीयते"।

७३ नष्टाश्वदग्धरथन्यायः इत्थं लोकप्रसिद्धिः द्वौ हि रथिनौ कश्चिदुद्यानं प्रविश्य रथाभ्यामवतीर्याश्वांश्च मोचयित्वा वृक्षच्छायां निविष्टौ दैवेन तदानीं दन्दह्यमाने तस्मिन् ग्रामे तयोरेकः पश्चादश्वान्निःसारयिष्यामीति धिया रथमादौ निःसारितवान् अपरस्त्वश्वान्, तावता तस्मिन्नुद्याने दग्धे एकस्याश्वनष्टा द्वितीयस्य रथो दग्धः तौ चान्योन्यापेक्षया एकं रथं कृत्वा यथेष्टदेशं यथा प्रजग्मतुस्तथार्थवादविधिवाक्ये प्रधानाङ्गवाक्ये चेतरेतराकाङ्क्ष्यैकवाक्यतां प्राप्य प्रवृत्त्यादिकं जनयतः।

७४ न हि करकङ्कणदर्शनायादर्शापेक्षेति न्यायः यथा प्रत्यक्षयोग्ये करे स्थितं कङ्कणं प्रत्यक्षेणैव दृश्यते न तद्दर्शनायादर्शापेक्षा एवं प्रत्यक्षसामग्रीसत्त्वे तयैव पदार्थप्रतीतिर्नानुमित्यादिसामग्र्यपेक्षेति विवक्षायामस्य प्रवृत्तिः "न हि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातारः" वाचस्पत्युक्तमेतन्न्यायमूलकम्। अनुमित्सायां तु तदपेक्षा "प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः" इति वाचस्पत्युक्तेः।

७५ न हि त्रिपुत्रो द्विपुत्रः कथ्यते इति न्यायः त्रित्वस्य द्वित्वव्यापकत्वेऽपि वाक्यस्य सावधारणत्वात् पुत्रत्रयवतः पुत्रद्वयवत्त्वेऽपि न तस्य द्विपुत्रशब्दवाच्यता न्यूनसंख्याव्यवच्छेदकत्वेन त्रिशब्दस्य न यथा द्विपुत्रवाचकतेत्येवं यत्र विवक्षा तत्रास्य प्रवृत्तिः।

७६ न हि दृष्टेऽनुपपन्नं नामेति न्यायः न प्रत्यक्षविषये प्रमाणान्तरान्वेषणमिति यत्र विवक्षा तत्रास्य प्रवृत्तिः तथा हि प्रत्यक्षस्य सर्वप्रमाणबाधकत्वात् अनुपपत्तेरर्थापत्तिरूपतया व्यतिरेकानुमितिरूपतया वा प्रत्यक्षेण बाध्यत्वात् प्रत्यक्षविषये विरोधिन्या अनुपपत्तेर्न सम्भवः।

७७ नहि निन्दा निन्द्यं निन्दितुं प्रवर्त्तते किन्तु विधेयं स्तोतुमिति न्यायः निन्दार्थवादस्य तदितरत्र प्राशस्त्यविधानार्थमेव प्रवृत्तिर्न तु तस्य निन्दार्थं निन्दायां प्रयोजनाभावादित्येवं मीमांसायां लोके च प्रसिद्धम्।

७८ निम्नगाप्रवाहन्यायः नदीप्रवाहो हि यां दिशं स्वभावतो गच्छति ततोऽन्यत्र तस्य नयने महाप्रयासेऽपि न

बलम् । एवं जन्मान्तरीयसंस्कारवशाद्विशेषविषये ध्यानाद्यात्मकचित्तवृत्तिप्रवाहस्ततोऽन्यत्र नयने महायत्नस्यापि वैफल्यम् इत्येवं विवक्षायामस्य प्रवृत्तिः ।

७९ नृपनापितन्यायः इयं हि लौकिकी गाथा कस्यचिन्नृपस्य भृत्यो नापितः कश्चित्, नृपतः समस्तनगरस्थितप्राणिनामतिरमणीयतमो बालो मे दर्शनाय त्वयाऽऽनेतव्य इति, नृपेणाज्ञप्तः प्रातरुत्थाय सर्वं पुरमन्विष्य क्वापि च तत्र स्वातिरमणीयतमान्बालान् स्वपुत्रमल्पानमत्वा तमेव राजवेश्मनि नीत्वा निवेदयामास स्वामिन्नानीतोऽयं द्वितीय इव रतिपतिरतिमनोज्ञाकृतिर्बाल इति राजा च तद्वपन्यालानबालाङ्गारामं खल्वाटकायं स्थूललम्बोदरं क्षयहस्तबाहुजङ्घमालोक्य उपहासमयं मे खलु कृतवानिति मत्वा चुकोप उवाच च अरे आह्व किमिदमुपहसनं क्रियते इति । नापितश्च कुपितं नृपं ज्ञात्वा कृताञ्जलिर्भूत्वोवाच राजेन्द्रमौले ! तव चरणयुगलमे नायमुपहासः किन्तु मे नयनयोरयमेव निखिलो नाम्नेत्राद्यपि बालेभ्यः तव इयं तु का कथेति राजा च सत्यमेतादृश एव स्नेहातिशयप्रबन्धः पितुस्तु दयेति मत्वा कोपं तत्याजेति । तथा च यथाऽतिकुरूपेऽपि सुते रागातिशयवशान्नापितस्य सर्वोत्तमत्वधीस्तथा मन्दधियां केषाञ्चिज्जन्मान्तरीयसंस्कारप्रयुक्तरागातिशयवशात् कस्मिंश्चिदतिक्षुद्रेऽपि देवे सर्वोत्तमत्वधीः परित्यज्य च हरिहरादींस्तदुपासने प्रवृत्तिरित्येवं विषयेऽस्य प्रवृत्तिः

८० पङ्कप्रक्षालनन्यायः "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इत्युक्तदिशा पङ्कलेपने प्रक्षालनमपेक्ष्य पङ्कस्पर्शनमेव न कर्त्तव्यमिति लोकप्रसिद्धिवदन्यत्रापि अनिष्टसाधनस्य कारणान्तरेण निवारणमपेक्ष्य अनिष्टसाधनमेव न कर्त्तव्यमिति यत्र विवक्षा तत्रास्य प्रवृत्तिः ।

८१ पञ्जरचालनन्यायः यथा दशभिः पञ्जरस्थपक्षिभिः सम्भूयत्नैरेकां पञ्जरे क्रियामुत्पाद्य तस्य चालनं तिर्यङ्मूर्द्धनयनं च क्रियते तथा दशभिरिन्द्रियैरेकां प्राणनरूपां क्रियामुत्पाद्य देहचालनं क्रियते इति सांख्ये स्थितम् ।

८२ पञ्जरमुक्तपक्षिन्यायः पञ्जरस्था विहगास्तन्मुक्ता यथेष्टमुत्प्लुत्य यथा देशान्तरं गच्छन्ति तथा जीवः बन्धनान्मुक्त ऊर्द्ध्वाकाशे तिष्ठतीति जैनमते स्थितम् ।

८३ पाषाणेष्टकान्यायः यथा तृणादपेक्षया कठिनाया अपि इष्टकायाः पाषाणापेक्षयामृदुत्वम् एवं यत्र विवक्षा तत्रास्य प्रवृत्तिः ।

८४ पिष्टपेषणन्यायः पिष्टस्य पुनःपेषणं यथा निरर्थकम् एवं कृतस्य करणं इत्येति विवक्षायामस्य प्रवृत्तिः । तथा चोक्तं "कृतस्य करणं नास्तीति" ।

८५ पुत्रलिप्सया देवं भजन्त्या भर्त्तापि नष्ट इति न्यायः अभीष्टान्तराशया व्यापारवतः स्वं यत्र नश्यति तत्रास्य प्रवृत्तिः तथा च वृद्धिमिष्टवतो मूलं विनष्टमिति न्यायविषयेऽस्य प्रवृत्तिः ।

८६ प्रपाणकन्यायः सितादिनानाद्रव्यैर्मिलितैर्यथा एकोऽद्भुतरसो निष्पाद्यते तथा यत्र अनेकसाधनैर्विलक्षणः पदार्थो जायते तत्रास्य प्रवृत्तिः । यथा विभावानुभावादिभिः शृङ्गारादिरसाभिव्यक्तिः एवमन्यत्रापि ।

८७ प्रासादवासिन्यायः एक एव देवदत्तः प्रासादस्योपर्य्यधस्ताच्च कालभेदेन वसन्नपि प्रासादवासप्राधान्ये प्रासादवासीत्युच्यते तथाऽन्यस्य प्राधान्यधर्मेण व्यपदेशविवक्षायामस्य प्रवृत्तिः ।

८८ फलवत्सहकारन्यायः यथातिमधुरपक्वफलगर्भितशाखोऽतिसौरभ आम्रवृक्षः सहपवन्न छायार्थिनं जनं फलं परिमलं चाप्रार्थितमपि ददातीति तथा विवक्षायामस्य प्रवृत्तिः ।

८९ बहुराजपुरन्यायः एकस्मिन् पुरे यदा बहवो राजानस्तदा तेषामैकमत्याभावेन यथा प्रजानां कुशलता एकस्मिन् देहे नानेन्द्रियाणां कर्तृत्वे स्वीकृते मिथो विरोधान्नैकमपि सिध्येत् । तथा हि यदा चक्षुर्दर्शनाय प्रवर्त्तमानं भवति तदा अन्यानि च इन्द्रियाणि स्वस्वक्रियाभिर्वाहोद्यतानि भवन्ति चेत्तदा दर्शनादि नैकमपि न जायते एवं विवक्षायामस्य प्रचारः ।

९० बहुवृकाकृष्टमृगन्यायः यथा तुच्छवृकैः बहुभिर्वृकैराकृष्टस्य मृगस्य न नियतैकत्र स्थितिरेवं यत्र बहूनां परस्परविरोधस्तत्र नैकस्य स्थिरतेत्येवं विषयेऽस्य प्रवृत्तिः ।

९१ बहूनामनुग्रहो न्याय्य इति न्यायः अनुग्रहः साहाय्यं न्याय्यः न्यायादनपेतोऽर्थस्तद्युक्तः कार्यसाधक इति यावत् यथाहुः "बहूनामल्पसाराणां मेलनं कार्यसाधकम् । तृणैः संपाद्यते रज्जुस्तया नागोऽपि बध्यते" इति तथा विवक्षायामस्य प्रवृत्तिः ।

९२ बिलवर्त्तिगोधान्यायः बिले गर्त्ते वर्त्तमानायाः गोधाया विभजनं विभाजकधर्मेण निर्देशो यथा न सम्भवति तस्य अदृष्टत्वादेवमज्ञातपरसिद्धान्तस्य तद्दूषणाय प्रवृत्तिर्भवतीत्येवं विवक्षायामस्य प्रवृत्तिः ।

९३ ब्राह्मणग्रामन्यायः यथा ग्रामे अन्येषु वर्णेषु वसत्स्वपि ब्राह्मणानां बाहुल्ये ब्राह्मणग्राम इत्युच्यते एवं विवक्षायामस्य प्रवृत्तिः। एवं मल्लग्रामन्यायादयोऽपि प्राधान्यविवक्षायां "प्राधान्येन व्यपदेशा भवन्तीति" न्यायविषये प्रवर्त्तन्ते

९४ ब्राह्मणश्रमणन्यायः श्रमणो बौद्धयतिः तस्य शास्त्रीयविधिना त्यक्तशिखासूत्रकच्छादेस्त्यक्तनित्यादिकर्मणश्च तदानीं ब्राह्मणत्वाभावेऽपि यथाभूतपूर्वेण ब्राह्मणत्वेन निर्देशस्तथा यत्र भूतपूर्वगत्या निर्देशस्तत्रास्य प्रवृत्तिः।

९५ भिक्षुपादप्रसारणन्यायः यथा कश्चिद्भिक्षुर्यथेष्टभोजनाच्छादनवासगृहादिलाभार्थं कस्यचिद्धनिनो गृहे प्रविश्य युगपत् सर्वाभीष्टालाभं मन्यमानः प्रथमं धनिगृहे मे पादप्रसारणमस्तु पश्चादनेन परिचयसत्त्वात् सर्वं स्वाभीष्टं संपादयिष्यामीति धिया स्वल्पामपि भिक्षां बहु मन्यमानः पश्चात् क्रमेण स्वाभीष्टं सम्पादयति एवं यत्र विवक्षा तत्रास्य प्रवृत्तिः।

९६ मज्जनोन्मज्जनन्यायः यथा नद्यादौ पतितः सन्तरणानभिज्ञः कदाचिन्मज्जति कदाचिदुन्मज्जति। एवं दुष्टवादिना स्वपक्षसमर्थनाय यतमानेन प्रबलयुक्तिमनासाद्य क्लिश्यते इति यत्र विवक्षा तत्रास्य प्रवृत्तिः।

९७ मणिमन्त्रन्यायः मणिमन्त्रादीनां वह्निदाहं प्रति यथा स्वातन्त्र्येण प्रतिबन्धकत्वम् लोकसिद्धम् न च तत्र युक्त्यपेक्षा एवं कामिनीजिज्ञासाया अपि ज्ञानमात्रं प्रतिप्रतिबन्धकत्वमित्येवं यत्र पृथक् प्रतिबन्धकत्वं तत्रास्य प्रवृत्तिः।

९८ मण्डूकतोलनन्यायः केनचित् कापटिकवणिजा स्वाभीष्टमानपूरणार्थं मण्डूकेषु मेयद्रव्यसहकारेण तुलायामारोपितेषु मध्ये कतिचिदुत्प्लुत्य यदा पलायन्ते तदा तस्य यथा कपटव्यक्तिर्भवति एवं यत्र विवक्षा तत्रास्य प्रवृत्तिः।

९९ मरणाद्वरं व्याधिरितिन्यायः वरमिति सामान्येन क्लीवम्। अत्यन्तदुःखजनकविषयोपस्थितौ यथा तदपेक्षयाऽल्पदुःखजनकस्वीकारो तथा विवक्षायामस्य प्रवृत्तिः। अत्रैव विषये "मारणाय गृहीतोऽङ्कुशोटं स्वीकरोतीति, न्यायोऽपि प्रवर्त्तते "सर्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डितः" इति सर्वजनीनप्रसिद्धेः।

१०० मुञ्जादिषीकोद्धरणन्यायः मुञ्जादेतन्नामकतृणविशेषादिषीका गर्भस्थं कोमलं तृणम्। बहिरावरकतया स्थितानां स्थूलतृणानां मुञ्जाख्यानां विभजनेन यथेषीका समुद्ध्रियते तथा यत्र विवक्षा तत्रास्य प्रचारः।

१०१ यत्कृतकं तदनित्यमिति न्यायः कृतकं कार्यं जन्यभाव इति यावत् तथा च कार्यभावस्य उत्पत्तेः प्रागसत्त्वेन प्रागभावप्रतियोगित्वात् न प्रागभावाप्रतियोगित्वघटितनित्यत्वम्। ध्वंसस्य प्रागभावप्रतियोगित्वेऽपि भावत्वाभावात् न व्यभिचार इति तार्किकाः। वेदान्तिमते तु ध्वंसस्यापि नाशाभ्युपगमेन न भावत्वं विशेषणीयमिति भेदः।

१०२ यत्रोभयोः समोदोषो न तत्रैकोऽनुयोज्य इति न्यायः वादिप्रतिवादिभ्यां न्यस्तपक्षयोर्यत्र तुल्योदोषो न तत्र एकः पर्य्यनुयोज्यः स्वपक्षेऽपि तद्दोषसत्त्वात् इत्येवं यत्र विवक्षा तत्रास्य प्रवृत्तिः "यत्रोभयोः समोदोषः परिहारोऽपि वा समः। नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे" इति सां॰प्र॰भा॰ धृतवाक्यम्।

१०३ यद्विशेषयोः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपीति न्यायः यथा तार्किकाणां घटत्वकुलालकृतित्वादिना कार्यकारणभावे सिद्धे कार्यत्वेन कृतित्वेन च कार्यकारणभावः ननु कुलालकृतेर्जातित्वेन द्रव्यत्वेन घटादिकं प्रति कारणत्वं तथात्वे तयोरन्यथासिद्धत्वेनाकारणत्वं स्यात् कारणतां प्रति अन्यथासिद्धेर्बाधकत्वात् अतएव न द्रव्यत्वेन दण्डादेर्घटादिं प्रति, कारणत्वं नापीन्द्रियत्वेन प्रत्यक्षत्वावच्छिन्नं प्रति, इन्द्रियत्वस्यैकस्याभावदिति"।

१०४ यादृशं मुखं तादृशी चपेटेति न्यायः तुल्यरूपपरिहारविवक्षायामस्य प्रवृत्तिः। [विवक्षायामस्य प्रवृत्तिः।

१०५ यादृशो यक्षस्तादृशो बलिरिति न्यायः तुल्यरूपोपहार

१०६ येनोक्रम्यते येन चोपसंह्रियते स वाक्यार्थ इति न्यायः यथा गिरिरग्निमान् इति प्रतिज्ञावाक्येन पर्वतस्यैवोपक्रमः तस्माद्वह्निमानिति निगमनवाक्येऽपि गिरेरेव वह्निमत्त्वेन बोधात् स एव वाक्यार्थः एवमन्यत्रापि।

१०७ योजनप्राप्यायां कावेर्य्यां मल्लबन्धनमिति न्यायः कावेरी नदीविशेषः मल्लः कैवर्त्तभेदस्तद्देशः वस्त्रभेदस्य बन्धनं यद्वा मल्लो बाहुयुद्धकुशलस्तद्वद्बन्धोलम्बितवाससां कटौ बन्धनं मल्लबन्धनं तच्च नदीतारणाय कार्यमिति लोकप्रसिद्धम्। तद्यथा योजनमार्गेण प्राप्यायां तस्यामयुक्तं तथा यत्र विवक्षा तत्रास्य प्रचारः।

१०८ रक्तपटन्यायः यदा तु निराकाङ्क्षेऽपि वाक्ये आकाङ्क्षा-

सुत्थाप्यैकवाक्यता क्रियते तदा रक्तपटन्यायप्रवृत्तिः यथा पटोऽस्तीति वाक्यस्य निराकाङ्क्षस्यापि कीदृश इत्याकाङ्क्षामुत्थाप्य रक्त इत्यनेनैकवाक्यता क्रियते तथा प्रकृतीनां दर्शपूर्णमासादीनां स्वप्रकरणस्याङ्गैर्निवृत्तोपकाराकाङ्क्षाणामनारभ्याधीताङ्गैः, विकृतीनां चातिदिष्टाङ्गैः परिपूर्णानां शरमयादिभिः सहोत्थिताकाङ्क्षाविरहेऽप्युत्थापिताकाङ्क्षयान्वय इत्येवं विषयेऽस्य प्रचारः।

१०९ राजपुरप्रवेशन्यायः विशृङ्खलतया राजपुरप्रवेशे राजपुररक्षकैस्ताडनादिकं क्रियेतेतिभिया श्रेणीभूततया यथा तत्पुरप्रवेश एवं सुशृङ्खलतया यत्र कार्यकरणस्य विवक्षा तत्रास्य प्रवृत्तिः।

११० लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरिति न्यायः सजातीयविजातीयव्यावर्त्तको लक्ष्यवस्तुगतः कश्चिल्लोके वेदे वा प्रसिद्धो धर्मः लक्षणं तेन लक्ष्ये वस्तुनि सम्भावनायां जातायां प्रमातुरुद्युक्तः प्रमाणेन तदवगच्छति यथा ताभ्यां वस्तुसिद्धिस्तद्व्यवहारयोग्यतया ज्ञानं, तथा च यथा गन्धवत्त्वादिलक्षणेन प्रत्यक्षादिप्रमाणेन च पृथिव्यादिसिद्धिस्तथा यत्र विवक्षा तत्रास्य प्रवृत्तिः।

१११ लूतातन्तुन्यायः लूता कीटविशेषः सा यथा स्वदेहात् तन्तून् निर्माति संहरति च स्वदेहे, यथा च तस्याः स्वतः तन्तुनिर्माणे स्वतः निमित्तकारणत्वरूपकर्तृत्वं, स्वदेहापेक्षया उपादानकारणत्वम् एवं ब्रह्मणः जगतां स्वतः कर्तृत्वं, स्वशक्तिमायाद्वारा उपादानत्वं च एवञ्च जगत् स्वशक्त्या निर्माति स्वशक्तौ संहरति च इत्येवं विवक्षायामस्य प्रवृत्तिः।

११२ लोष्टलगुडन्यायः लोष्टस्य उपमर्दकः लगुडो यथा, तथा उपमर्द्योपमर्दकयोः साचिव्यविवक्षायामस्य प्रवृत्तिः।

११३ लोहचुम्बकन्यायः चुम्बकः मणिभेदः स यथा निष्क्रियोऽपि सन्निधिमात्रेण लोहस्याकर्षकः तत्क्रियाहेतुश्च भवति एवमसङ्गस्याकर्तुरपि पुरुषस्य प्रकृत्यादिक्रियाप्रवर्त्तकत्वमित्यादि यत्र विवक्षा तत्रास्य प्रवृत्तिः।

११४ वरगोष्ठीन्यायः गोष्ठी वधूवरपक्षयोः अन्योन्यवार्त्ता वरस्य वरलाभाय गोष्ठी वरगोष्ठी वरवधूबन्धूनामन्योन्यगोष्ठी तया ऐकमत्ये सति वरलाभरूपमेकं कार्यं यथा निष्पाद्यते एवं यत्र विवक्षा तत्रास्य प्रवृत्तिः।

११५ वरघाताय कन्यावरणमिति न्यायः विषकन्यायां वृतायां यत्र वरस्य घातः सम्भाव्यते तत्र तां नोद्वहेत् एवं विवक्षायामस्य प्रवृत्तिः। तथा च अनिष्टान्तरपातादिसम्भावनायाम् अभीष्टहेतुरपि वस्तु न वरणीयमित्येवं तन्न्यायतात्पर्यम्। अयमेव न्यायः क्वचित् "नहि वरघाताय कन्यामुद्वाहयतीति" न्यायतया पठ्यते।

११६ वह्निधूमन्यायः धूमरूपकार्यदर्शनात् यथा कारणरूपवह्नेरनुमानं तथा यत्र कार्यलिङ्गेन कारणानुमानं तत्रास्य प्रवृत्तिः।

११७ बिल्वखल्वाटन्यायः अयं न्यायः श्लोकेनाभियुक्तैर्निबद्धो यथा "खल्वाटो दिवसेश्वरस्य किरणैः सन्तापितो मस्तके वाञ्छन् देशमनातपं विधिवशाद्बिल्वस्य मूलं गतः। तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः प्रायो गच्छति यत्र भाग्यरहितस्तत्रापदां भाजनमिति"। तथा च दृष्टान्तरं समीहमानस्याभीष्टप्राप्तिर्दूरतःप्रत्युतानिष्टप्राप्तिरित्येवं यत्र विवक्षा तत्रास्य प्रवृत्तिः।

११८ विशेष्ये विशेषणं तत्रापि च विशेषणमिति न्यायः भूतलं जलवद्घटवदित्यादौ भूतले घटो विशेषणं स च भूतलांशे विशेषणमितिरीत्या यत्र भासते तत्रास्य प्रवृत्तिः।

११९ विषभक्षणन्यायः विषभक्षणं दिव्यभेदः। तस्य यथा सत्याभिसन्धस्यानिष्टानुत्पादकत्वम् मिथ्याभिसन्धस्यानिष्टहेतुत्वमेवं यत्र विवक्षा तत्रास्य प्रवृत्तिः। तत्प्रकारमाह नारदः "दद्याद्विषं सोपवासो देवब्राह्मणसन्निधौ। धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम्। द्विजानां सन्निधावेव दक्षिणाभिमुखे स्थिते। उदङ्मुखः प्राङ्मुखो वा विषं दद्यात् समाहितः" इति। विषञ्च वत्सनाभादि ग्राह्यम् "शृङ्गिणो वत्सनाभस्य हिमजस्य विषस्य च" इति पितामहस्मृतेः। शुद्धत्वाशुद्धत्वपरीक्षा तु याज्ञवल्क्येनोक्ता "यस्य वेगैर्विना जीर्येच्छुद्धिं तस्य विनिर्दिशेत्" इति। विषवेगो नाम धातोर्धात्वन्तरप्राप्तिः "धातोर्धात्वन्तरं प्राप्तिर्विषवेग इति स्मृतः" इति वचनात् तेषां लक्षणानि तु विषतन्त्रादवबोध्यानि। "पूर्वाह्णे शीतले देशे विषं देयं तु देहिनाम्। घृतेन योजितं श्लक्ष्णं पिष्टं त्रिंशद्गुणान्वितम्" इति पितामहोक्तमितं देयम्। तथा च एवं विषे पीते यावत्करतालिकाशतपञ्चकं तावत्कालः प्रतीक्षणीयः अनन्तरं चिकित्सनीयः "पञ्चतालशतं कालं निर्विकारो यदा भवेत्। तदा भवति संशुद्धस्ततः कुर्य्यात् चिकित्सितम्" इति वचनात् यदा तु सविकारस्तदाऽशुद्ध इत्यर्थात् सिद्धम्।

१२० विषवृक्षन्यायः अन्योऽत्यस्तावदास्तां विषस्य वृक्षोऽपि कुतश्चित्कारणात् सम्यग्वर्द्धयित्वा स्वयं छेत्तुमनर्हः

इति न्यायार्थः एवं स्वार्जितस्यानिष्टस्यापि स्वयं नाशन-मयुक्तमिति विवक्षायामस्य प्रवृत्तिः।

१२१ वीचितरङ्गन्यायः यथा वीच्यान्तरङ्गान्तरमुत्पद्यते तेन च पुनस्तरङ्गान्तरमित्येवं यत्र परम्परया उत्पत्तिस्तत्रास्य प्रवृत्तिः "वीचितरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता" भाषा॰ "प्रथमशब्देन बहिर्दिगवच्छिन्नोऽन्यः शब्दस्तेनैव चान्यः शब्दो जन्यते तेन चान्यस्तद्व्यापकः एवं क्रमेण श्रोत्रोत्पन्नो गृह्यते" सि॰ मुक्ता॰।

१२२ वीजाङ्कुरन्यायः वीजं विना नाङ्कुरो जायते अङ्कुरं विना च न वीजोत्पत्तिः इत्येवं यत्र परस्परकार्य्यकारणभावस्तत्रायं न्यायः प्रवर्त्तते तथा च वीजजातीयं प्रति अङ्कुरजातीयं, अङ्कुरजातीयं प्रति च वीजजातीयं कारणमतो वीजाङ्कुरप्रवाहोऽनादिः तथा च यद्वीजं प्रति यदङ्कुरस्य कारणत्वं तदङ्कुरं प्रति तद्वीजस्य न कारणत्वमतो नान्योन्याश्रयः एष च प्रामाणिकत्वात् गृह्यते यत्र च न प्रामाणिकत्वं तत्र नानादित्वकल्पनेति प्रामाणिकप्रवाहस्यैवानादित्वकल्पना नान्यस्येति सिद्धान्तात् सूचितं च तथा शा॰भा॰ यथा

"तत्कृतधर्माधर्मनिमित्तं सशरीरत्वमिति चेत् न शरीरसम्बन्धस्यासिद्धत्वाद्धर्माधर्मयोरात्मकृतत्वासिद्धेः। शरीरसम्बन्धस्य धर्माधर्मयोस्तत्कृतत्वस्य चेतरेतराश्रयत्वप्रसङ्गादन्धपरम्परैवैषा अनादित्वकल्पना" भा॰ "आत्मनः शरीरसम्बन्धे जाते धर्माधर्मोत्पत्तिः तस्यां च सत्यां सम्बन्धरूपजन्मेत्यन्योन्याश्रयादेकस्यासिद्ध्या द्वितीयस्यासिद्धिः स्यादिति परिहरति नेत्यादिना नन्वेतद्देहजन्यधर्माधर्मकर्म्मणः प्रतद्देहसम्बन्धहेतुत्वे स्यादन्योन्याश्रयः पूर्वदेहकर्म्मण एतद्देहसम्बन्धोत्पत्तिः, पूर्वदेहस्य तत्पूर्वदेहकर्म्मणः तद्देहसम्बन्धोत्पत्तिः, तत्पूर्वदेहस्य तत्पूर्वदेहकृतकर्म्मण इति वीजाङ्कुरवदनादित्वाच्चायं दोष इत्यत आह अन्धेति अप्रमाणिकेत्यर्थः। न हि वीजादङ्कुरः ततो वीजान्तरञ्च यथा प्रत्यक्षेण दृश्यते तथात्मनो देहसम्बन्धः पूर्वकर्म्मकृतः प्रत्यक्षः नाप्यस्ति कश्चिदागमः प्रत्युतासङ्गो हीत्यादि श्रुतिः सर्व्वकर्तृत्वं वारयतीति भावः" आनन्दगिरिव्या॰।

१२३ वृक्षप्रकम्पनन्यायः यथा वृक्षमारूढः अधःस्थेन केनचिद् नरेण प्रथममियं शाखा प्रकम्पयितव्या अन्येन च प्रथममियं शाखा प्रकम्पयितव्येति भिन्नभिन्नशाखाप्रकम्पने नियोजितस्तदधःस्थेनैव केनचित् सर्व्ववृक्षप्रकम्पने नियोजितः सन् सर्वैः प्रथमशाखाविशेषप्रकम्पनस्याप्रार्थितत्वेन यौगपद्यस्यासम्भवेन क्रमविकल्पोपगमेऽपि सर्वाविरोधासिद्धेः तच्चिकीर्षया सर्वं वृक्षं प्रकम्पयति तत्प्रकम्पनेन हि सर्वाः शाखा अपि प्रकम्पिताः स्युरिति भवति सर्वैरविरोधः एवं यत्र सर्वाविरोधेनाचरणं तत्रास्य प्रवृत्तिः।

१२४ वृद्धकुमारीवाक्यन्यायः अयं न्यायो महाभाष्ये व्याख्यातः "तद्यथा वृद्धकुमारी इन्द्रेणोक्ता वरं वृणीष्वेति सा च वरमवृणीत पुत्रा मे बहुक्षीरघृतमोदनं काञ्चनपात्र्यां भुञ्जीरन्निति न च तावदस्याः पतिर्भवति कुतः पुत्राः कुतो गावः कुतो धान्यादिकं तत्रानया एकेन वाक्येन पतिः पुत्रा गावो धान्यं हिरण्यञ्चेति सर्वं संगृहीतं भवतीति तथा तत्तदुपासनया मोक्षप्रतिपादकवाक्यैरपि चित्तशमादिश्रवणादिसाधनसहिततत्त्वज्ञानं च यदन्तरेण मोक्षासिद्धिस्तत्सर्वं संगृहीतं भवतीति एवमेकवाक्येन नानार्थप्रतिपादनं तत्रास्य प्रवृत्तिः अयं च वृद्धमारीवरन्यायः इति क्वचित् पठ्यते।

१२५ वृद्धिमिष्टवतो मूलमपि विनष्टमिति न्यायः वृद्धिर्धनप्रयोगे अधमर्णात् प्राप्यांशभेदलाभः तामिष्टवतः उत्तमर्णस्य अधमर्णदौष्ट्यात् यथा मूलं नश्यति एवं यत्र अभीष्टान्तरसम्पादनाय प्रयतमानस्य मूलं नश्यति तत्रास्य प्रवृत्तिः।

१२६ वृक्षवेलान्यायः वेलाविशेषे वृक्षध्वनिविशेषः यत्र नियमितः तत्र वृक्षध्वनिना वेलाविशेषज्ञानं यथा जायते तथा यत्र विवक्षा तत्रास्य प्रवृत्तिः। यथा वेलोत्तरं वैशाखः वैशाखोत्तरं ज्यैष्ठ इति क्रमविशेषज्ञानं वृक्षवेलान्यायादिति म॰त॰ रघु॰।

१२७ शतपत्रपत्रभेदनन्यायः यथा सूच्या शतपत्रभेदने कालयौगपद्यप्रतीतिर्भ्रमः तथा हि प्रथमक्षणे सूचीक्रियया तस्याः पत्रेण संयोगः द्वितीये पत्रावयवयोः क्रिया तृतीये तयोर्विभागः तुरीये आरम्भकसंयोगनाशः पञ्चमे पत्रनाश इति प्रतिपत्रभेदने बहुक्षणविलम्बस्य युक्तिसिद्धत्वात् तथा दीर्घशष्कुल्यादिभक्षणादौ रासनादिज्ञानानां यौगपद्यप्रतीतिर्भ्रम इति एवं क्रमेण जायमानानां यौगपद्यभ्रमो यत्र विवक्ष्यते तत्रास्य प्रवृत्तिः।

१२८ शते पञ्चाशदिति न्यायः व्यापकशतसंख्यायां यथा व्याप्यपञ्चाशत्संख्या निविष्टा एवं यत्र व्यापके व्याप्यस्य निवेशस्तत्रास्य प्रवृत्तिः।

१२९ शालिसम्पत्तौ कोद्रवाशनन्यायः शालिः उत्तमधान्यभेदः कोद्रवः अधमधान्यभेदः उत्तमवस्तुसद्भावे यत्राधमवस्तुसेवनं तत्रास्य प्रवृत्तिः ।

१३० श्यामरक्तन्यायः घटादौ श्यामगुणनाशे यथा रक्तगुणोत्पत्तिरेवं यत्र पूर्वगुणनाशे अपरगुणसमावेशस्तत्रास्य प्रवृत्तिः ।

१३१ श्यालशुनकन्यायः इयं लौकिकाख्यायिका कश्चित् पुरुषः स्वगृहे वर्त्तमाने शुनि श्यालनामसङ्केतं कृतवान् श्रुत्वा च तद्भार्या तं भ्रातरं मन्यते स्म स च यदा तस्याः कोपोत्पादनाय तं श्वानं प्रति गालीर्ददाति स्म तदा साति-कोपपरीतात्मीयतयाऽतिदुःखवती बभूवेति तथा च स्वाभ्यान्तरि शुनके भ्रातृताभ्रान्तिमत्या भार्यायाः कोपोत्पादनाय भर्त्रा शुनकनिन्दा क्रियते तथात्यन्ताभिन्नेऽपि तत्तद्विग्रहावच्छिन्ने परमेश्वरे भेदभ्रमवतां कोपोत्पादनाय शास्त्रेण तदिष्टविग्रहावच्छिन्नपरमेश्वरनिन्दाव्याजेनेतर-विग्रहावच्छिन्नस्तुतिः क्रियते इति केचित् । वस्तुतस्तु यथा श्यालगालिप्रदाने वक्तृतात्पर्याभावेऽपि श्यालैक्येन तात्पर्यभ्रमात्तस्याः कोपोत्पादस्तथा शास्त्रस्य ब्रह्मविष्ण्वाद्यपकर्षे तात्पर्याभावेऽपि तेषां रुद्रविराडादिनामसाम्येन तात्पर्यभ्रमवतां कोपादिः । इयांस्तु विशेषो यत्तस्य कुपितप्रियामुखावलोकनाय प्रवृत्तिः शास्त्रस्य तु मारणाय स्पृहीत इति न्यायेन कस्यचिद्वैराग्यबोधनायेति भेदः ।

१३२ सन्दंशपतितन्यायः संदंशः । ( साँडाशी ) इति यस्य प्रसिद्धिः तेन स्वावयवयोर्मध्यपातिनः पदार्थस्य यथा ग्रहणम् एवं पूर्वोत्तरयोः पदार्थयोर्ग्रहणेन तन्मध्यस्थपदार्थस्य ग्रहणं यत्र विवक्ष्यते तत्रास्य प्रवृत्तिः ।

१३३ सन्निहितादपि व्यवहितं साकाङ्क्षं बलीय इति न्यायः शाब्दबोधयोग्यतया साकाङ्क्षस्य स्वार्थान्वयबोधप्रयोजकतेति नियमेन तस्य चासत्तिक्रमणादत्य अन्वययोग्यपदार्थवाचकशब्दस्य व्यवहितत्वेऽपि आसत्तिं प्रकल्प्य यथा काव्यादावन्वयः एवं यत्र साकाङ्क्षत्वं तत्रैव तस्यान्वय इति यत्र विवक्षा तत्रास्य प्रवृत्तिः ।

१३४ सन्निहिते बुद्धिरन्तरङ्गमिति न्यायः सन्निकृष्टविप्रकृष्टयोर्यत्रोभयोरन्वयसम्भावना तत्र सन्निहितस्यैव आसत्तिबलादन्वयः न विप्रकृष्टस्येत्येवं विवक्षायामस्य प्रवृत्तिः ।

१३५ समूहालम्बनन्यायः यत्र उपस्थितपदार्थानां विशेषणविशेष्यभावेनान्वयासम्भवः तत्र उपस्थितपदार्थानां समूहमालम्ब्यैव बोधः यथा घटः पटश्च इत्यादौ घटपटयोरुभयोरेव विशेष्यता । समूहालम्बनबोधे च विशेष्यताद्वयम् संशये तु एका विशेष्यतेति भेदः ।

१३६ समासत्यैकवाक्यत्वे वाक्यभेदो न चेष्यते इति न्यायः पशुना यजेतेत्यादौ यागे एकत्वविशिष्टपशुकरणकत्वं विधेयं न तु पशौ एकत्वं यागे च पशुकरणकत्वमित्येवं विधेयद्वयम् । एवमन्यत्रापि ।

१३७ सर्वं विशेषणं सावधारणमिति न्यायः यथा श्वेतः शङ्ख इत्यादौ श्वेत एवेत्यर्थपरत्वमेवमन्यत्रापि ।

१३८ सर्वं वाक्यं सावधारणमिति न्यायः अवधारणवाचकस्याभावे यत्रावधारणं प्रतीयते तत्रास्य प्रवृत्तिः । एवकारादिसत्त्वे तु तस्यैवावधारणवाचकत्वम् न तत्रास्य प्रवृत्तिः ।

१३९ सर्वापेक्षान्यायः बहुषु निमन्त्रितेषु एकस्मिन् आगतेऽपि यथा न तस्मै भोजनं दीयते अपेक्ष्यते च सर्वान् एवं यत्र सर्वापेक्षा तत्रास्य प्रवृत्तिः ।

१४० सविशेषणे हि वर्त्तमानौ विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति न्यायः यथा घटाकाशमानय न मठाकाशमित्यानयनविषयौ विधिनिषेधौ विशेष्ये आकाशे बाधाद्घटादिरूपं विशेषणमुपसंक्रामतस्तथा यत्र विवक्षा तत्रास्य प्रचारः । न च निषेधस्य कथं बाधः तस्य प्रसक्तिपूर्वकतया तदभावेऽनुपपत्तेः किं चात्र विधिनिषेधशब्दौ भावाभावमात्रबोधकौ तथा च घटाकाशोऽस्तानीतो न मठाकाशः घटाकाश उत्पन्नः शरावाकाशो विनष्ट इत्यादौ भावाभावौ विशेष्ये बाधाद्विशेषणमुपसंक्रामतस्तथा विवक्षायामस्य प्रवृत्तिः । विशेष्ये बाधाद्विशेषणे तयोः पर्यवसानमित्यर्थः ।

१४१ साक्षात् प्रकृतौ विकारलय इति न्यायः यथा घटादीनां लयः स्वप्रकृतौ कपालादावेव न तु परमाणौ तथैवानुभवादित्येवं विकारस्य स्वप्रकृतिलयो यत्र विवक्ष्यते तत्रास्य प्रवृत्तिः ।

१४२ सावकाशनिरवकाशयोर्मध्ये निरवकाशो बलवान् इति न्यायः सम्भवद्विषयान्तरः सावकाशः अतथाभूतो निरवकाशः तेन निरवकाशेन सावकाशो विधिर्बाध्यते यथा मा हिंस्यात् सर्वा भूतानीति निषेधवाक्यं निरवकाशेन श्वेतमालभेतेति वाक्येन बाध्यते हिंसाया वैधेतरविषयकत्वसम्भवेन तत्र तस्य सावकाशत्वात् पश्वालम्भनस्य विषयान्तराभावात् न तस्य सङ्कोच एवमन्यत्रापि ।

१४३ सिंहावलोकनन्यायः सिंहो यथा कञ्चिन्मृगं हत्वापि

गच्छन्नन्योऽपि कश्चित् समागच्छेत् स्यात्तदा तमपि हन्यामिति बुद्ध्या पृष्ठदेशावलोकनं पुरोदेशावलोकनञ्च करोति हन्ति च दृष्टिपथमागतं सर्पादिकं इति प्रसिद्धम् तथा एकस्य शब्दस्य पुरतः पृष्ठे च यत्र उभयोरन्वयस्तत्रास्य प्रवृत्तिः।

१४४ सूचीकटाहन्यायः अल्पायाससाध्या सूची बह्वायाससाध्यः कटाहः यथा तयोर्निर्माणाय प्रयतमानस्य प्रथमं स्वल्पायाससाध्ये सूचीनिर्माणे प्रवृत्तिः ततो बह्वायाससाध्यकटाहनिर्माणे एवं यत्र बह्वायाससाध्यमुपेक्ष्य स्वल्पायाससाध्यस्य निर्देशादि तत्रास्य प्रवृत्तिः।

१४५ सूत्रशाटिकान्यायः सूत्रस्य शाटिकोपादानत्वेऽपि यथा भाविन्या शाटिकासंज्ञया निर्देशस्तथा यत्र भाविन्या संज्ञया उपादानस्य कार्यसंज्ञया निर्देशस्तत्रास्य प्रवृत्तिः।

१४६ सोपानारोहणन्यायः यथा प्रासादमारोढुकामः कश्चिद्युगपदारोढुमशक्नुवन् पूर्वां पूर्वां कक्षां परित्यजन्नुत्तरामुत्तरां च कक्षामारोहन् क्रमेण प्रासादमारोहति तथा स्वस्वरूपभूतमपि ब्रह्म अज्ञानेन व्यवहितमिवापच्छिन्नत्वेन ज्ञातुकामो मुमुक्षुः सहसा साक्षात्कर्तुमशक्नुवन् पुत्रादारास्थानन्दमयान्तेभ्यस्तरञ्चित्तरञ्चित्रात्मत्वबुद्ध्या पूर्वेषु पूर्वेष्वात्मत्वबुद्धित्यागे कृते सति क्रमेण प्रपञ्चोपशमं शिवमद्वैतं चतुर्थमात्मत्वेन जानातीति एवमादिषु तस्य प्रवृत्तिः।

१४७ सोपानावरोहणन्यायः यथा हि येन क्रमेण सोपानमारोहन्ति तद्विपरीतक्रमेण ततोऽवरोहन्तीति लोके प्रसिद्धं तथा पञ्चकोषावतरणक्रमेण अद्वैततत्त्वे बुद्धिमारोहयितुमशक्तो भोग्यभोगायतनतदाश्रयचतुर्दशभुवनतदाधारब्रह्माण्डानि पञ्चीकृतपञ्चभूतमात्राणि न तेभ्योऽतिरिच्यन्ते इति सम्भावयेत् पञ्चीकृतानि। भूतानि सूक्ष्मशरीराणि चापञ्चीकृतभूतेभ्यो नातिरिच्यन्ते इति जानीयात्। एवं गन्धतन्मात्रात्मिकां पृथिवीं रसतन्मात्रात्मकाप्मात्रत्वेन भावयेत् अपश्च रूपतन्मात्रात्मकतेजोमात्रत्वेन, तच्च तेजः स्पर्शतन्मात्रात्मकवायुमात्रत्वेन, तञ्च वायुं शब्दतन्मात्रात्मकाकाशमात्रत्वेन, तच्चाकाशं स्वकारणभूतमायोपहितमहेश्वरमात्रत्वेन भावयेदिति एवं च यथा पूर्वोक्तक्रमेणावरोहणात् सुखेन भूमिं प्राप्नोति तथैवानेन विपरीतक्रमेण भावनात् सुखेन भूमानमद्वितीयं शिवमाप्नोतीति। प्रलयोऽप्यनेनैव व्युत्क्रमेण भवतीति बोध्यं साक्षात् प्रकृतौ विकारलय इति न्यायात् तथा च स्मर्यते "जगत् प्रतिष्ठा देवर्षे! पृथिव्यप्सु प्रलीयते ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते। वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते। अव्यक्तं पुरुषे ब्रह्मन्निष्कले संप्रलीयत" इति।

१४८ स्थविरलगुडन्यायः वृद्धहस्तपातितलगुडस्य यथा यथास्थानं न पतनमेवं लक्ष्यस्थानेऽपातेऽस्य प्रवृत्तिः।

१४९ स्थूणानिखननन्यायः स्थूणा गृहस्तम्भभेदः तस्या निखननदार्ढ्यार्थमुत्तोल्य पुनःपुनः कराभ्यां चालयित्वा यथा निखननं क्रियते एवं समर्थितपक्षस्य दार्ढ्यार्थमुदाहरणयुक्त्यादिभि पुनःपुनर्यत्र समर्थनं तत्रास्य प्रवृत्तिः।

१५० स्थूलारुन्धतीन्यायः यथा हि ध्रुवमरुन्धतीञ्च दर्शयतीति विधिवशाद्वरवध्वोररुन्धतीदर्शने प्राप्ते सूक्ष्मतमायास्तस्याझटिति दर्शयितुमशक्यतया अरुन्धती दृश्यतामित्युक्ते चन्द्राद्यपेक्षयाऽरुन्धत्या अतिदूरस्थत्वेन नभस्तलस्यमेव किञ्चिदरुन्धतीत्वेन दृश्यं दृश्यतामित्यङ्गुलिनिर्देशेन तावच्चन्द्रमरुन्धतीत्वेन वदति ततश्चन्द्रेतरास्तत्समीपस्थास्तारकाः, तत इतरतारकाभिन्नाः सप्तर्षिसंज्ञिकाः समीपतराः, ततस्तन्मध्यवर्त्तिनीं वशिष्ठरूपां समीपतमां तारकामरुन्धतीयमित्युक्त्वा तत्पार्श्ववर्त्तिनीमरुन्धतीमेवारुन्धतीत्वेन बोधयति एवं यत्रातिसूक्ष्मदुर्विज्ञेयवस्तुविज्ञानाय क्रमेण तत्समीपसमीपतरसमीपतमं वस्तु शास्त्रेण तत्त्वयोच्यते तत्र स्थूलारुन्धतीन्यायोऽवतरति। अयमेव केनचिदरुन्धतीप्रदर्शनन्यायत्वेनोदाह्रियते।

१५१ स्वामिभृत्यन्यायः स्वामिन उपकारार्थं प्रवर्त्तमाना भृत्यास्तदुपकारकरणेन सन्तोषितात् स्वामिनः प्रसादलब्धामुपकृतिं यथा लभन्ते एवं यत्र परस्परोपकार्य्यकारकभावो विवक्ष्यते तत्रास्य प्रवृत्तिः।

सांख्यसूत्रे ४अ० कतिचित् प्रसिद्धदृष्टान्ता उक्तास्तेऽपि न्यायशब्देनानुक्ता अपि प्रसिद्धदृष्टान्तदर्शनप्रसङ्गादत्र अकारादिक्रममनादृत्य सूत्रक्रमेणैव प्रदर्श्यन्ते यथा "राजपुत्रवत् तत्त्वोपदेशात्" सां०प्र०४।१सू० "राजपुत्रस्येव तत्त्वोपदेशाद्विवेको जायत इत्यर्थः। अत्रेयमाख्यायिका कश्चिद्राजपुत्रो गण्डर्क्षजन्मना पुरान्निःसारितः शवरेण केनचित् पोषितोऽहं शवर इत्यभिमन्यमान आस्ते तं जीवन्तं ज्ञात्वा कश्चिदमात्यः प्रबोधयति न त्वं शवरो राजो-पुत्रऽसीति स यथा झटित्येव चाण्डालाभिमानं त्यक्त्वा तात्त्विकं राजभावमेवालम्बते राजाहमस्मीति। एवमे-

र्यादिपुरुषात् परिपूर्णचिन्मात्रेणाभिव्यक्तादुत्पन्नस्त्वं तदंश इति कारुणिकोपदेशात् प्रकृत्यभिमानं त्यक्त्वा ब्रह्मपुत्रत्वादहमपि ब्रह्मैव न तु तद्विलक्षणः संसारीत्येवं स्वस्वरूपमेवालम्बेत इत्यर्थः। तथा च गारुडे “यथैकहेमखनिना सर्वं हेममयं जगत्। तथैव जातमीशेन जातेनाप्यखिलं भवेत्। ग्रहाविष्टो द्विजः कश्चिच्छूद्रोऽहमिति मन्यते। ग्रहनाशात् पुनः स्वीयं ब्राह्मण्यं मन्यते यथा। मायाविष्टस्तथा जीवो देहोऽहमिति मन्यते। मायानाशात् पुनःस्वीयं रूपं ब्रह्मास्मि मन्यते” भा०। “पिशाचवदन्यार्थोपदेशेऽपि” ४।२स्रू० “अर्जुनार्थं श्रीकृष्णेन तत्त्वोपदेशे क्रियमाणेऽपि समीपस्थस्य पिशाचस्य यथा विवेकज्ञानं जातमेवमन्येषामपि भवेदित्यर्थः” भा०। “श्येनवत् सुखदुःखी त्यागवियोगाभ्याम्” ४।५स्रू० “परिग्रहो न कर्त्तव्यो यतो द्रव्याणां त्यागेन लोकः सुखी वियोगेन च दुःखी भवति श्येनवदित्यर्थः। श्येनो हि सामिषः केनाप्यपहृत्यामिषाद्वियोज्य दुःखी क्रियते स्वयं चेत् त्यजति तदा दुःखाद्विमुच्यते तदुक्तम् “सामिषं कुररं जघ्नुर्बलिनोऽन्ये निरामिषाः। तदामिषं परित्यज्य स सुखं समविन्दत” इति मनुनाप्युक्तम् “नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा। तथा त्यजन्निमं देहं कृच्छ्राद् ग्राहाद्विमुच्यते” भा०। “अहिनिर्ल्वयिनीवत्” ४।६स्रू० “यथाहिर्जीर्णां त्वचं परित्यजत्यनायासेन हेयबुद्ध्या तथैव मुमुक्षुः प्रकृतिं बहुकालोपभुक्तां जीर्णां हेयबुद्ध्या त्यजेदित्यर्थः। तदुक्तम् “जीर्णां त्वचमिवोरगः इति” भा०। “छिन्नहस्तवद्वा” ४।७स्रू० यथा “छिन्नहस्तं पुनः कोऽपि नादत्ते तथैवैतत् त्यक्तं पुनर्नाभिमन्येतेत्यर्थः” भा०। “असाधनानुचिन्तनं बन्धाय भरतवत्” ४।८स्रू० “विवेकस्य यदन्तरङ्गसाधनं न स चेद्धर्मोऽपि स्यात् तथापि तदनुचिन्तनं तदनुष्ठाने चित्तस्य तात्पर्यं न कर्त्तव्यं यतस्तद्बन्धाय भवति विवेकविस्मारकतया भरतवत् यथा भरतस्य राजर्षेर्धर्म्यमपि दीनानाथहरिणशावकस्य पोषणमित्यर्थः। तथा च जडभरतं प्रकृत्य विष्णुपुराणे “चपलं चपले तस्मिन् दूरगं दूरगामिनि। आसीच्चेतः समासक्तं तस्मिन् हरिणपोतके” भा०। “बहुभिर्योगे विरोधो रागादिभिः कुमारीशङ्खवत्” ४।९स्रू० “बहुभिःसङ्गो न कार्यः। बहुभिः सङ्गे हि रागाद्यभिव्यक्त्या कलहो भवति योगभ्रंशकः। यथा कुमारीहस्तशङ्खानामन्योऽन्यसङ्गेन झणत्कारो भवतीत्यर्थः” साङ्ख्यप्रवचनभाष्यम्।

“अनारम्भेऽपि परगृहे सुखी सर्पवत्” ४।१२स्रू० “सुखी भवेदिति शेषः शेषं सुगमम्। तदुक्तम् “गृहारम्भो हि दुःखाय न सुखाय कथञ्चन। सर्पः परकृतं वेश्म प्रविश्य सुखमेधते” भा०।

“बहुशास्त्रगुरूपासनेऽपि सारादानं षट्पदवत्” ४।१३स्रू० “कर्त्तव्यमिति शेषः। तदुक्तं “अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः। सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः”। “सारभूतमुपासीत ज्ञानं यत् स्वार्थसाधकम्। ज्ञानानां बहुता यैषा योगविघ्नकरी हि सा। इदं ज्ञेयमिदं ज्ञेयमिति यस्तृषितश्चरेत्। असौ कल्पसहस्रेषु नैव ज्ञानमवाप्नुयात्” मार्क०पु० भा०।

“इषुकारवन्नैकचित्तस्य समाधिहानिः” ४।१४स्रू० “यथा शरनिर्माणायैकचित्तस्येषुकारस्य पार्श्वे राज्ञो गमनेनापि न ह्यन्तरनिरोधो हीयत एवमेकाग्रचित्तस्य सर्वथापि न समाधिहानिर्वृत्त्यन्तरनिरोधक्षतिर्भवति। ततश्च विषयान्तरसञ्चाराभावे ध्येयसाक्षात्कारोऽप्यवश्यं भवतीत्यैकाग्र्यतां कुर्यादित्यर्थः। तदुक्तं “तदैवमात्मन्यवरुद्धचित्तो न वेद किञ्चिद् बहिरन्तरं वा। यथेषुकारो नृपतिं व्रजन्तमिषौ गतात्मा न ददर्श पार्श्वे” भा०।

“कृतनियमलङ्घनादानर्थक्यं लोकवत्” ४।१५स्रू० “यः शास्त्रेषु कृतो योगिनां नियमस्तल्लङ्घने ज्ञाननिष्पत्त्याख्योऽर्थो न भवति लोकवत्। यथा लोके भैषज्यादौ विहितपथ्यादीनां लङ्घने तत्तत्सिद्धिर्न भवति तद्वदित्यर्थः। अशक्त्या ज्ञानरक्षार्थं वा लङ्घने तु न ज्ञानप्रतिबन्धः। “अपेतव्रतकर्मा तु केवलं ब्रह्मणि स्थितः। ब्रह्मभूतश्चरन् लोके ब्रह्मचारीति कथ्यते” भा०।

“तद्विस्मरणेऽपि भेकीवत्” ४।१६स्रू० “सुगमम्। भेक्याश्चेयमाख्यायिका कश्चिद्राजा मृगयां गतो विपिने सुन्दरीं कन्यां ददर्श। सा च राज्ञा भार्य्याभावाय प्रार्थिता नियमं चक्रे यदा मह्यं त्वया जलं प्रदर्श्यते तदा मया गन्तव्यमिति। एकदा तु क्रीड़या परिश्रान्ता राजानं पप्रच्छ कुत्र जलमिति। राजापि समयं विस्मृत्य जलमदर्शयत्। ततः सा भेकराजदुहिता कामरूपिणी भेकी भूत्वा जलं विवेश ततश्च राजा जालादिभिरन्विष्यापि न तामविन्ददिति” भा०।

“नोपदेशश्रवणेऽपि कृतकृत्यता परामर्शादृते विरोचनवत्” ४।१७स्रू० परामर्शो गुरुवाक्यतात्पर्य्यनिर्णायक

विचारस्य विशेषोपदेशवाक्यश्रवणेऽपि तत्त्वज्ञाननियमो नास्ति प्रजापतेरुपदेशश्रवणेऽपीन्द्रविरोचनयोर्मध्ये विरोचनस्य परामर्शाभावेन भ्रान्तत्वश्रुतेः (छा॰उ॰)। अतो गुरूपदिष्टस्य मननमपि कार्य्यमिति। दृश्यते चेदानीमप्येकस्यैव तत्त्वमस्युपदेशस्य नानारूपैरर्थैः सम्भावना। अणुत्वमहत्त्ववैधर्म्यं लक्षणाभेदेऽविभागश्चेति" भा॰।

"न कालनियमो वामदेववत्" ४।२॰ सू॰ "ऐहिकसाधनादेव भवतीत्यादिर्ज्ञानोदये कालनियमो नास्ति वामदेववत्। वामदेवस्य जन्मान्तरीयसाधनेभ्यो गर्भेऽपि यथा ज्ञानोदयस्तथान्यस्यापीत्यर्थः। तथा च श्रुतिः "तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्य्यश्चेति तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं भवतीत्यादिरिति"। अहं मनुरभवमित्यादिकमवैधर्म्यलक्षणाभेदपरं सर्वव्यापकताख्यब्रह्मतापरं वा। "सर्वं समाप्नोषि ततोऽसि सर्वः" इत्यादि स्मरणात् भा॰।

"विरक्तस्यैव हेयहानमुपादेयोपादानं हंसक्षीरवत्" ४।२२सू॰ "विरक्तस्यैव हेयानां प्रकृत्यादीनां हानमुपादेयस्य चात्मन उपादानं भवति। यथा दुग्धजलयोरेकीभावापन्नयोर्मध्येऽसारजलत्यागेन सारभूतक्षीरोपादानं हंसस्यैव न तु काकादेरित्यर्थः" भा॰।

"न कामचारित्वं रागोपहते शुकवत्" ४।२४सू॰ "रागोपहते पुरुषे कामतः सङ्गो न कर्त्तव्यः शुकवत्। यथा शुकपक्षी प्रकृष्टरूप इति कृत्वा कामचारं न करोति रूपलोलुपैर्बन्धनभयात् तद्वदित्यर्थः" भा॰।

"गुणयोगाद्बद्धः शुकवत्" ४।२६ सू॰ "तेषां सङ्गे तु गुणयोगात् तदीयरागादियोगाद्बद्धः स्यात् शुकवदेव। यथा शुकपक्षी व्याधस्य गुणैरज्जुभिर्बद्धो भवति तद्वदित्यर्थः। अथ वा गुणितया गुणलोलुपैर्बद्धो भवति शुकवदित्यर्थः। तथैवोक्तं सौभरिणा "स मे समाधिर्जलवासमित्रमत्स्यस्य सङ्गात् सहसैव नष्टः। परिग्रहः सङ्गकृतो ममायं परिग्रहोत्थाश्च महाविधित्साः" भा॰।

"न भोगाद्रागशान्तिर्मुनिवत्" सां॰ ४।२७सू॰ "यथा मुनेः सौभरेर्भोगाच्च रागशान्तिरभूत् एवमन्येषामपि न भवतीत्यर्थः। तदुक्तं सौभरिणैव "आ मृत्युतो नैव मनोरथानामन्तोऽस्ति विज्ञातमिदं मयाद्य। मनोरथासक्तिपरस्य चित्तं नो जायते वै परमार्थसङ्गि" भा॰।

"न मलिनचेतस्युपदेशवीजप्ररोहोऽजवत्" ४।२९सू॰ "उपदेशरूपं यज्ज्ञानवृक्षस्य वीजं तस्याङ्कुरोऽपि रागादिमलिनचित्ते नोत्पद्यते अजवत्। यथाऽजनाम्नि नृपे भार्य्याशोकमलिनचित्ते वशिष्ठेनोक्तस्याप्युपदेशवीजस्याङ्कुर उत्पन्न इत्यर्थः" भा॰।

"नाभासमात्रमपि मलिनदर्पणवत्" ४।३॰ सू॰ "आपातज्ञानमपि मलिनचेतस्युपदेशान्न जायते विषयान्तरसञ्चारादिभिः प्रतिबन्धात् यथा मलैः प्रतिबन्धात् मलिनदर्पणेऽर्थो न प्रतिविम्बति तद्वदित्यर्थः" भा॰।

"न तज्जस्यापि तद्रूपता पङ्कजवत्" ४।३१सू॰ "तस्मादुपदेशाज्जातस्यापि ज्ञानस्योपादेशानुरूपता न भवति सामग्र्यभावात्। पङ्कजवत्। यथा वीजस्योत्तमत्वेऽपि पङ्कदोषाद्वीजानुरूपता पङ्कजस्य न भवति तद्वदित्यर्थः। पङ्कस्थानीयं शिष्यचित्तम्" भा॰।

**न्यायपथ** पु॰ न्यायोपेतः पन्थाः शा॰त॰ अच् समा॰। मीमांसाशास्त्रे [न॰त॰। २तद्वति त्रि॰।

**न्यायवृत्त** न॰ न्यायोपेतं वृत्तं शा॰त॰। १शास्त्रविहिताचारे

**न्यायसारिणी** स्त्री न्यायं सरति सृ—णिनि। युक्तिपूर्वककर्मानुसारिण्याम् रीतौ उज्ज्वलं तिका॰।

**न्याय्य** त्रि॰न्यायादागतः न्यायादनपेतो न्याये भवः वा दिगा॰ यत् वा। १न्यायसिद्धे २न्यायोपेते यौक्तिके ३न्यायभवे च "सर्वेषामपि तु न्याय्यं दायं सम्यङ् मनीषिणः"। "न्याय्यं यः प्रियकृन्नाम्" मनुः "इदमनोत्तरं न्याय्यमिति बुद्धा विमृश्य सः" कुमा॰। वर्ग्यादि॰आद्युदात्ततास्य।

**न्यास** पु॰ नि+अस—कर्मणि, भावे वा घञ्। १न्यासद्रव्ये (गच्छित) अमरः निःक्षेपशब्दे ४०५२पृ॰ तल्लक्षणादि दृश्यम्। "राज्यं न्यासमिवाभुनक्" रघुः २अर्पणे ३विन्यासे च हेमच॰। "अलक्तकाङ्कितैरङ्गुन्यासैः कृताङ्कितर्जनैः" शा॰द॰। "नमयन् सारगुरुभिः पादन्यासैर्वसुन्धराम्" कुमा॰। ४त्यागे "काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः" गीता। "वक्ष्ये विविदिषान्यासं विद्वन्न्यासं च भेदतः। हेतू विदेहमुक्तेश्च जीवन्मुक्तेश्च तौ क्रमात्" जीवन्मुक्तिविवेकः। ५हरदत्तप्रणीते पदमञ्जरीपरपर्य्याये व्याकरणग्रन्थभेदे "अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना। शब्दविद्येव नो भाति राजनीतिरपस्पशा" माघ॰"तन्त्रपुराणाद्युक्ते पूजाङ्गपाठे: प्राकृर्त्तव्ये देहावयवभेदेषु वर्णाद्युच्चारणरूपे ६व्यापारभेदे "अङ्गन्यासकरन्यासौ वीजन्यासं तथैव च" वटुकस्तोत्रम्। सामान्यपूजाङ्गन्यासास्तु "आदाद्यष्टादिकन्यासः करशुद्धिरतःपरम्। अङ्गुलीव्यापकन्यासौ हृदादिन्यास एव च"

तन्त्रसा०। तत्कालस्तु "प्रातःकालेऽथ वा पूजासमये होमकर्मणि। जपकाले समस्ते वा विनियोगः पृथक् पृथक्। पूजाकाले समस्तं वा कुर्य्यात् साधकसत्तमः" इति योगिनीहृदयम्। यामले "भूतशुद्धिन्यासौ विना यस्तु प्रपूजयेत्। विपरीतफलं दद्यादभक्त्या पूजनं यथा"। सामान्यन्यासेऽङ्गुलिनियमो गौतमीये "मनसा विन्यसेन्मन्त्रान् पुष्पेणैवाथ वा सुने!। अङ्गुष्ठानामिकाभ्यां वा चान्यथा निष्फलं भवेत्"। यामले "हृदयं मध्यमानामा तर्जनीभिः, स्मृतं शिरः। मध्यमातर्जनीभ्यां, स्यादङ्गुष्ठेन शिखा स्मृता। दशभिः कवचं प्रोक्तं, तिसृभिर्नेत्रमीरितम्। प्रोक्ताङ्गुलीभ्यामस्त्रं स्यादङ्गुलिरियं मता" इति। तिसृभिस्तर्जनीमध्यमानामाभिः। "तर्जनीमध्यमानामाः प्रोक्ता नेत्रत्रयक्रमात्। यदि नेत्रद्वयं प्रोक्तं तदा तर्जनिमध्यमे" इति भट्टधृतवचनात् "हृदयादिषु विन्यस्येदङ्गमन्त्रान् ततः सुधीः। हृदयाय नमः पूर्वं शिरसे वह्निवल्लभा (स्वाहा)। शिखायै वषडित्युक्तं कवचाय हुमीरितम्। नेत्रत्रयाय वौषट् स्यादस्त्राय फडिति क्रमात्। षडङ्गमन्त्रानित्युक्तान् षडङ्गेषु नियोजयेत्। पञ्चाङ्गानि मनोर्यत्र तत्र नेत्रमनुं त्यजेत्" इति शारदाति०। वैष्णवे तु "अनङ्गुष्ठा ऋजवो हस्तशाखा भवेन्मुद्रा हृदये शीर्षके च। अधोऽङ्गुष्ठा खलु मुष्टिः शिखायां करद्वयाङ्गुलयोर्वर्मणि स्युः। नाराचमुष्ट्युद्धृतबाहुयुग्मकाङ्गुष्ठतर्जन्युदितो ध्वनिस्तु। विष्वग्विमुक्ताः कथितास्तु मुद्रा नमामि यो तर्जनिमध्यमे च। अङ्गहीनस्य मन्त्रस्य स्वेनैवाङ्गानि कल्पयेत्" तन्त्रसारः।

**न्यासिक** त्रि० न्यासेन चरति पर्पा० ष्ठन्। न्यासकारिणि स्त्रियां षित्त्वात् ङीष्।

**न्यासिन्** त्रि० नि+अस—णिनि। १त्यागिनि २सन्न्यासिनि च

**न्यु(न्यू)ङ्ख** नि+उङ्ख-अच् पृषो० वा दीर्घः। १स्वरभेदे गीतिषु उदात्तानुदात्तरूपेषु षोडशसु ओकारेषु तत्र त्रयः प्लुताः त्रयोदश अर्द्धौकारा इत्येवं षोडश ओकाराः तत्प्रकारादिः आश्व० श्रौ० ७।११ प्रथमादिसूत्रेषूक्तो यथा "चतुर्थेऽहनि यत् प्रातरनुवाकं प्रतिपद्यर्धर्चाद्योर्न्युङ्खः" १सू० "पाष्ठिके चतुर्थेऽहनि यत् प्रातरनुवाकं तस्याद्याया ऋचोयावर्धर्चयोरादौ तयोर्न्युङ्खो भवति। अहरधिकारे पुनरहनीतिवचनम् अहर्धर्मोऽयं न्युङ्ख इति प्रदर्शनार्थम्। तेनात्र यान्युङ्खभाज ऋचस्तासामन्यत्र वचनादृते न्युङ्खो न भवति" नारा०वृ० "द्वितीयं स्वरमोकारं त्रिमात्रमुदात्तम्" २सू० "इदानीं न्युङ्खस्य स्वरूपमुच्यते तयोरर्धर्चयोर्यो द्वितीयः स्वरः संहितावस्थायां तमोकारं त्रिमात्रं कृत्वा त्रिः ब्रूयात् पच्छोऽर्धर्चशः ऋक्शश इति सर्वत्र शंसनविधानात्। संहितावस्थायामेव मन्त्राणां शंसनमुक्तं भवति। अत्र संहितावस्थायामेवेत्युक्तम्। पूर्वसूत्रेऽर्धर्चाद्योरित्याद्ययोरक्षरयोर्न्युङ्खो विहितः इह तु द्वितीययोर्विधीयते कथमनयोः सम्बन्ध इति पूर्वसूत्रस्यायमभिप्रायः ब्राह्मणोक्तो यो न्युङ्खविधिरेकाक्षरद्व्यक्षरत्र्यक्षरचतुरक्षरैरिति सोऽयमर्धर्चाद्योरित्यनेन सूचितो भवति। यस्तु खलु पञ्चस्वेव सिद्धान्तितः तस्मात् द्व्यक्षरेणैव न्युङ्खयेत् इति तमेव पक्षमङ्गीकृत्येदानीं न्युङ्खो विधीयते द्वितीयं स्वरम् इत्यादिना" नारा०वृ०। "तस्य तस्य चोपरिष्टादपरिमितान् पञ्च वार्धौकारानुदात्तान्" ३सू० "तस्य तस्यौकारस्योपरिष्टादर्धौकारानुदात्तानपरिमितान् त्रीन् चतुरः पञ्च वा ब्रूयात्। अत्र सङ्ख्याविशेषनिर्दिष्टस्यापरिमितशब्दं अधीते तत्र निर्दिष्टसङ्ख्याविशेषादुपरिष्टादपरिमितशब्दार्थो ग्रहीतव्यः। यत्र पुनरुपरिष्टात् संख्याविशेषेण निर्दिष्टस्तत्र प्रागेव संख्याविशेषात् बहुत्वे सत्येवानियतता ग्रहीतव्येति सिद्धम्। अर्धश्चासौ ओकारश्चार्धौकार इति कर्मधारयः" नारा०वृ०। "उत्तमस्य तु त्रीन्" ४सू० "उत्तमस्यौकारस्योपरिष्टात् त्रीनेवार्धौकारान् ब्रूयात्" नारा०वृ०। "पूर्वमक्षरं निहन्यते न्युङ्खमाने" ५सू० "निहन्यत इत्यनुदात्तीक्रियत इत्यर्थः। न्युङ्खाधिकारे पुनर्न्युङ्खमान इति वचनं प्रथमे द्वितीये तृतीये चतुर्थे वाक्षरे न्युङ्खमानेऽपि तस्मात् पूर्वमक्षरं न निहन्यत इत्येवमर्थम्" नारा०वृ०। "तदिष निदर्शनायोदाहरिष्यामः" ६सू० "उक्तलक्षणस्यापि न्युङ्खस्यार्धौकारस्वरूपस्यालौकिकत्वादन्यदप्येवं जातीयकं सन्देहं व्यवर्त्तयितुं निदर्शनं क्रियते" नारा०वृ०। "आपो३उउउउउओ३उउउउउओ३उउउउ स्वः स्वपस्य पत्नीः सरस्वती तद्गृणाते। वयोधो३मापो३" ७सू० "आपो३ प्लुतः रायो३प्लुतः वयोधो३ मापो३प्लुत इत्येवं न्युङ्खस्य पुनरावृत्तिप्रदर्शनं प्रत्यावृत्ति न्युङ्खप्रापणार्थम्। अयमेव पाठः अविच्छिन्नसम्प्रदायागतः। यस्तु पुनःसंहितानुरूपेण पाठः स प्रमादकृतत्वात् त्यक्तव्यः" नारा०वृ०। अत्र प्लुतस्य ओकारत्रयस्य उपरिमिष्टात् पञ्च पञ्च च अर्द्धौकारा एव बोध्या उकाराकारेण ये दर्शितास्ते अर्द्धौ-

कारा इति बोध्यम् "यज्ञकर्मण्यजपन्यूङ्खसामसु" पा० "यज्ञक्रियायां मन्त्र एकश्रुतिः स्याज्जपादीन्वर्ज्जयित्वा "अग्निर्मूर्द्धा दिवः ककुत्"। यज्ञेति किम्? स्वाध्यायकाले त्रैस्वर्य्यमेव। अजपेति किम्? ममाग्ने! वर्चो विहवेष्वस्तु। जपो नाम उपांशुप्रयोगः यथा जले निमग्नस्य। न्यूङ्खा नाम षोडश ओकाराः गीतिषु समाम्नाताः" सि०कौ०। कात्या०श्रौ० भाष्यादौ द्वादश ओकारा दीर्घमध्या न्यूङ्खतया उक्ता यथा

"एकश्रुतिर्दूरात् सम्बुद्धौ यज्ञकर्मणि सुब्रह्मण्यासामजपन्यूङ्खयाजमानवर्जम्" कात्या० श्रौ० १।८।१८ "एकश्रुतिर्दूरात्सम्बुद्धावित्यनुवर्त्तमाने यज्ञकर्मणि मन्त्राणामेकश्रुतिर्भवति न केनचित् स्वरेण प्रयोगः किं सर्वत्र सुब्रह्मण्यासामजपन्यूङ्खयाजमानवर्जम्। एतानि वर्जयित्वा अन्येषु मन्त्रेष्वेकश्रुतिर्भवति। सुब्रह्मण्योऽमिन्द्रागच्छेत्यादिर्निगदः सुब्रह्मण्या सामानि उद्गात्रभिर्यानि गीयमानानि। जपाश्च धूरसि इन्द्रस्य बाहुरसि मर्यादित्याद्या जपतीति शब्देन चोदिता मन्त्राः। न्यूङ्खास्तु षष्ठे अहहे होतृवेदे प्रसिद्धा ओकारा द्वादश पिबा सोममिन्द्र मन्दतु त्वा यं ते ओ ओ ओ३ ओ ओ ओ३ ओ ओ ओ ओ३सुषाव। हर्य्यश्वाद्रिरित्यादयः। याजमानं च सर्वं विष्णुक्रमादिकम्। तत्सम्बन्धिनो ये मन्त्रा दिवि विष्णुरित्याद्याः अथ वा यजमानस्येमे याजमानाः एषु सुब्रह्मण्यादिषु याजमानान्तेषु यथा शाखएव संहिता स्वरो भवति नैकश्रुतिः" कर्कः। अनयोः शाखयोः वेदभेदादविरोधः। २सातिशये ३मनोहरे त्रि०।

**न्युब्ज** न० नि+उब्ज–अच्। १कर्मरङ्गफले २दर्भमयस्रुचि पु० ३अधोमुखे त्रि० मेदि०। "प्रथमपात्रे संस्रवान् समवनीय पात्रं न्युब्जं कुर्य्यात् पितृभ्यः स्थानमसीति" गोभि० न्युब्जमधोमुखम् "पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः" याज्ञ०। "पितृपात्रे निधायाथ न्युब्जमुत्तरतोन्यसेत्" मत्स्यपु०। "न्युब्जानि च विमानानि" हरिवं० ४३अ०। ४कुशे स्रुग्भाण्डे च पु० हेमच०। वक्रीकृतपृष्ठाधोमुखे मानुषे ५कुब्जे त्रि०अमरः।

**न्युब्जखड्ग** पु० न्युब्जः कुब्ज इव खड्गः (तरकार) इति प्रसिद्धे खड्गभेदे त्रि०। [च अमरः।

**न्यून** त्रि०न्यूनयति नि+ऊन–परिहाणे अच्। १ऊने २गर्ह्ये

**न्यूनपञ्चाशद्भाव** पु० न्यूनपञ्चाशतः ऊनपञ्चाशतो वायूनां विकारो यत्र। वातुले (पागल) "उद्धीरितेन्द्रियो धाता वीक्षाञ्चक्रे यदाक्रजाम्। तदैव न्यूनपञ्चाशद्भावो जातः शरीरतः" कालिपु० २७अ०।

**न्योकस्** त्रि० नियतमोको यस्य। नियतस्थानयुक्ते "सुतेजसे न्योकसे" ऋ०१।६।१० "न्योकसे नियतस्थानाय इन्द्राय" भा०

**न्योचनी** स्त्री नि+उचतिः सेवाकर्मा निघ०ल्यु गौरा०ङीष्। दास्याम् "रैभ्यासीदनुदेयी नाराशंसी न्योचनी" ऋ० १०।८५।६ "न्योचनी वधूशुश्रूषार्थं दीयमाना दासी" भा०।

**न्योजस्** त्रि० नि+उब्ज–असि बलोपे गुणः। आर्ज्जवशून्ये कुटिले।

**नृस्थिमालिन्** त्रि० नृस्थिमाला अस्त्यस्य इनि। १नरास्थिमालाभूषणे स्त्रियां ङीप्। २शिवे पु० त्रिका०। शुभम्

## इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलिते वाचस्पत्ये नकारादिशब्दार्थसङ्कलनम्।

इतः परं ग्रन्थसंक्षेपाशया पकारादिशब्दावधि क्षकारादिशब्दान्तानां निरुदाहरणा अर्थाः सङ्कलयितव्याः। परिशिष्टे खण्डे च उदाहरणानि वक्तव्यानि।

## परिशिष्टम्।

२८२६पृष्ठस्थनकुलीशशब्दार्थपरिशिष्टम्। शिवे तत्प्रणीतस्य पाशुपतशास्त्रं तन्मतञ्च सर्वदर्शनसंग्रहे दर्शितं यथा "तदेतद्वैष्णवमतं दासत्वादिपदवेदनीयं परतन्त्रत्वदुःखावहत्वान्न दुःखं जिहीर्षवः आमोपचितासदमित्यरोचयमानाः पारमैश्वर्य्यं कामयमानाः पराभिमता मुक्ता न भवन्ति परतन्त्रत्वात् पारमैश्वर्य्यरहितत्वादस्मदादिवत् मुक्तात्मानश्च परमेश्वरगुणसम्बन्धिनः पुरुषत्वे सति समस्तदुःखबीजविधुरत्वात् परमेश्वरवदित्याद्यनुमानं प्रमाणं प्रतिपद्यमानाः केचन माहेश्वराः परमपुरुषार्थसाधनपञ्चार्थप्रपञ्चनपरं पाशुपतशास्त्रमाश्रयन्ते। तत्रेदमादिमं सूत्रम् "अथातः पशुपतेः पाशुपतयामविधिं व्याख्यास्यामः" इति। अस्यार्थः अत्राथशब्दः पूर्वप्रकृतापेक्षः। पूर्वप्रकृतश्च गुरुं प्रति शिष्यस्य प्रश्नः। गुरुस्वरूपं गणकारितायां निरूपितम् "पञ्चकास्त्वष्टविज्ञेया गणश्चैकत्रिकात्मकः। वेत्ता नवगणस्यास्य संस्कर्त्ता गुरुरुच्यते" इति। "लाभा मला उपायाश्च देशावस्थाविशुद्धयः। दीक्षाकारिबलान्यष्टौ पञ्चकास्त्रीणि वृत्तयः" इति। तिस्रो वृत्तय इति प्रयोक्तव्ये त्रीणि वृत्तय इति छान्दसः प्रयोगः। तत्र विशे-

समानमुपायफलं लाभः ज्ञानतपोदेवनित्यत्वस्थितिशुद्धिभेदात् पञ्चविधः। तदाह हरदत्ताचार्य्यः "ज्ञानं तपोऽथ नित्यत्वं स्थितिः शुद्धिश्च पञ्चमीति"। आत्माश्रितो दुष्टभावो मलः स मिथ्याज्ञानादिभेदात् पञ्चविधः। तदप्याह स एव "मिथ्याज्ञानमधर्मश्च सक्तिहेतुश्च्युतिस्तथा। पशुत्वमूलं पञ्चैते तन्त्रे हेया विविक्तितः" इति। साधकस्य शुद्धिहेतुरुपायः वासचर्य्यादिभेदात् पञ्चविधः। तदप्याह "वासचर्य्या जपो ध्यानं सदा रुद्रस्मृतिस्तथा। प्रतिपत्तिश्च लाभानामुपायाः पञ्च निश्चिताः"। येनार्थानुसन्धानपूर्वकं ज्ञानतपोवृद्धी प्राप्नोति स देशो गुरुजनादिः यदाह "गुरुजनो गुहा देशः श्मशानं रुद्र एव चेति" या लाभप्राप्तेरेकतमादौ यदवस्थानं साऽवस्था व्यक्तादिविशेषेण विशिष्टा, तदुक्तम् "व्यक्ताव्यक्तजयादानं निष्ठा चैव हि पञ्चमीति"। मिथ्याज्ञानादीनामत्यन्तव्यपोहो विशुद्धिः सा प्रतियोगिभेदात् पञ्चविधा। तदुक्तम् "अज्ञानस्याप्यसङ्गस्य हानिः सङ्गकरस्य च। च्युतिहानिः पशुत्वस्य शुद्धिः पञ्चविधा स्मृतेति" दीक्षाकारिपञ्चकं चोक्तम् "द्रव्यं कालः क्रिया मूर्त्तिर्गुरुश्चैव हि पञ्चमः" इति बलपञ्चकञ्च "गुरुभक्तिः प्रसादश्च मतेर्द्वन्द्वजयस्तथा। धर्म्मश्चैवाप्रमादश्च बलं पञ्चविधं स्मृतमिति" पञ्चमललघूकरणार्थं मानामानविरोधिनोऽर्थार्जनोपाया वृत्तयः भैक्ष्योत्सृष्टयथालब्धाभिधा इति। शेषमशेषमाकर एवावगन्तव्यम्। अत्राथशब्देन दुःखान्तस्य प्रतिपादनम् आध्यात्मिकादिदुःखव्यपोहनार्थत्वात्तस्य पशुशब्देन कार्यस्य, परतन्त्रत्ववचनत्वात्तस्य, पतिशब्देन कारणस्य, ईश्वरः पतिरीशितेति जगत्कारणीभूतेश्वरवचनत्वात्तस्य। योगविधी तु प्रसिद्धौ। तत्र दुःखान्तो द्विविधः अनात्मकः सात्मकश्चेति तत्रानात्मकः सर्वदुःखानामत्यन्तोच्छेदरूपः। सात्मकस्तु दृक्क्रियाशक्तिलक्षणमैश्वर्य्यम्। तत्र दृक्शक्तिरेकापि विषयभेदात् पञ्चविधा उपचर्यते" दर्शनं श्रवणं मननं विज्ञानं सर्वज्ञत्वञ्चेति। तत्र सूक्ष्मव्यवहितविप्रकृष्टाशेषचाक्षुषस्पर्शादिविषयं ज्ञानं दर्शनम्। अशेषशब्दविषयं सिद्धिज्ञानं श्रवणम्। समस्तचिन्ताविषयं सिद्धिज्ञानं मननम्। निरवशेषशास्त्रविषयं ग्रन्थतोऽर्थतश्च सिद्धिज्ञानं विज्ञानम्। उक्तानुक्ताशेषार्थेषु समासविस्तरविभागविशेषतश्च तत्त्वव्याप्तसदोदितसिद्धिज्ञानं सर्वज्ञत्वम् इत्येषा धीशक्तिः। क्रियाशक्तिरेकापि त्रिविधोपचर्य्यते मनोजवित्वं कामरूपित्वं विकरणधर्मित्वञ्चेति। तत्र निरतिशयशीघ्रकारित्वं मनोजवित्वम्। कर्मादिनिरपेक्षस्य स्वेच्छयैवानन्तलक्षणविलक्षणसरूपकरणाधिष्ठातृत्वं कामरूपित्वम्। उपसंहृतकरणस्यापि निरतिशयैश्वर्य्यसम्बन्धित्वं विकरणधर्मित्वमित्येषा क्रियाशक्तिः। यदस्वतन्त्रं सर्वं कार्य्यं त्रिविधं विद्या कला पशुश्चेति। तत्र पशुगुणो विद्या, सापि द्विविधा बोधाबोधस्वभावभेदात् बोधस्वभावा विवेकाविवेकप्रवृत्तिभेदात् द्विविधा तत्र या विवेकप्रवृत्तिः प्रमाणमात्रव्यङ्ग्या चित्तमित्युच्यते। चित्तेन हि सर्वः प्राणी बाह्याध्यात्मप्रकाशानुगृहीतं सामान्येन विवेचितमविवेचितञ्चार्थं चेतयते इति। पशुधर्माधर्मिका पुनरबोधात्मिका विद्या समासं येनोच्यते। चेतनपरतन्त्रत्वे सत्यचेतना कला सापि द्विविधा कार्य्याख्या कारणाख्या चेति। तत्र कार्य्याख्या दशविधा पृथिव्यादीनि पञ्च तत्त्वानि रूपादयः पञ्च गुणाश्चेति। कारणाख्या त्रयोदशविधा ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकम् अध्यवसायाभिमानसङ्कल्पाभिधवृत्तिभेदात् बुद्ध्यहङ्कारमनोलक्षणमन्तःकरणत्रयञ्चेति। पशुत्वसम्बन्धी पशुः सोऽपि द्विविधः साञ्जनो निरञ्जनश्चेति। तत्र साञ्जनः शरीरेन्द्रियसम्बन्धी निरञ्जनस्तु पञ्चार्थभाष्यदीपिकादौ द्रष्टव्यः। समस्तसृष्टिसंहारानुग्रहकारि कारणं तस्यैकस्यापि गुणकर्मभेदापेक्षया विभाग उक्तः पतिः साद्य इत्यादिना। तत्र पतित्वं निरतिशयदृक्क्रियाशक्तिमत्त्वं तेनैश्वर्य्येण नित्यसम्बन्धित्वम्। आद्यत्वमनागन्तुकैश्वर्य्यसम्बन्धित्वम् इत्यादर्शकारादिभिस्तीर्थकरैर्निरूपितम्। चित्तद्वारेणात्मेश्वरसम्बन्धो योगः स च द्विविधः क्रियालक्षणः क्रियोपरमलक्षणश्चेति तत्र जपध्यानादिरूपः क्रियालक्षणः क्रियोपरमलक्षणस्तु संविद्गत्या संज्ञितः। धर्मार्थसाधकव्यापारो विधिः। स च द्विविधः प्रधानभूतो गुणभूतश्च तत्र प्रधानभूतः साक्षाद्धर्महेतुः चर्य्या। सा द्विविधा व्रतं द्वाराणि चेति। तत्र भस्मस्नानशय्योपहारजपप्रदक्षिणादि व्रतम्। तदुक्तम् भगवता नकुलीशेन "भस्मना त्रिषवणं स्नायीत भस्मनि शयीतेति"। अत्रोपहारो नियमः स च षडङ्गः। तदुक्तम् सूत्रकारेण "हसितगीतनृत्यडुडुङ्कारनमस्कारजप्यषडङ्गोपहारेण उपतिष्ठेतेति"। तत्र हसितं नाम कण्ठोष्ठपुटविस्फूर्जनपुरःसरमहहहेत्यट्टहासः। गीतं गान्ध-

वैशास्त्रसमयानुसारेण महेश्वरसम्बन्धिगुणकर्मादिनिमित्तानां चिन्तनम्। नाट्यमपि नाट्यशास्त्रानुसारेण हस्तपादादीनामुत्क्षेपणादिकमङ्गप्रत्यङ्गोपाङ्गसहितं भावाभावसमेतञ्च प्रयोक्तव्यम्। हुडुक्कारो नाम जिह्वातालुसंयोगान्निष्पाद्यमानः पुण्यवृषनादसदृशो नादः। हुडुगिति शब्दानुकारो वषडितिवत्। यत्र लौकिका न भवन्ति तत्रैतत् सर्वं गूढं प्रयोक्तव्यम्। शिष्टं प्रसिद्धम्। द्वाराणि तु क्राथनस्पन्दनमन्दनशृङ्गारणावितत्करणावितद्भाषणानि। तत्रासुप्तस्यैव सुप्तलिङ्गप्रदर्शनं क्राथनम्। वाय्वभिभूतस्येव शरीरावयवानां कम्पनं स्पन्दनम्। उपहतपादेन्द्रियस्येव गमनं मन्दनम्। रूपयौवनसम्पन्नां कामिनीमवलोक्यात्मानं कामुकमिव यैर्विलासैः प्रदर्शयति तत् शृङ्गारणम्। कार्य्याकार्य्यविवेकविकलस्येव लोकनिन्दितकर्मकरणमवितत्करणम्। व्याहतापार्थकादिशब्दोच्चारणमवितद्भाषणमिति। गुणभूतस्तु चर्य्यानुग्राहकोऽनुस्नानादिः भैक्ष्योच्छिष्टादिर्निमित्ता योग्यताप्रत्ययनिवृत्त्यर्थः। तदप्युक्तं सूत्रकारेण "अनुस्नाननिर्माल्यलिङ्गधारीति"। तत्र समासो नाम धर्मिमात्राभिधानं तच्च प्रथमसूत्र एव विहितम्, पञ्चानां पदार्थानां प्रमाणतः प्रपञ्चाभिधानं विस्तरः। स खलु राशीकरभाष्ये द्रष्टव्यः। एतेषां यथासम्भवं लक्षणतोऽसङ्करेणाभिधानं विभागः स तु विहितशास्त्रान्तरेभ्योऽमीषां गुणातिशयेन कथनं विशेषः। तथा हि अन्यत्र दुःखनिवृत्तिरेव दुःखान्तः इह तु पारमैश्वर्य्यप्राप्तिश्च। अन्यत्राऽभूत्वा भावि कार्य्यमिह तु नित्यं पश्वादि। अन्यत्र सापेक्षः कारणम् इह तु निरपेक्षो भगवानेव। अन्यत्र कैवल्यादिफलको योगः इह तु पारमैश्वर्य्यदुःखान्तफलकः। अन्यत्र पुनरावृत्तिः स्वर्गादिः इह पुनरपुनरावृत्तिरूपः सामीप्यादिफलकः। ननु महदेतदिन्द्रजालं यन्निरपेक्षः परमेश्वरः कारणमिति तथात्वे कर्मवैफल्यं सर्वकार्य्याणां समसमयसमुत्पादश्चेति दोषद्वयं प्रादुःष्यात् मैवं मन्येथाः व्यधिकरणत्वात्। यदि निरपेक्षस्य भगवतः कारणत्वं स्यात्तर्हि कर्मणो वैफल्ये किमायातम्। प्रयोजनाभाव इति चेत् कस्य प्रयोजनाभावः कर्मवैफल्ये कारणं किं कर्मिणः? किं वा भगवतः। नाद्यः ईश्वरेच्छानुगृहीतस्य कर्मणः सफलत्वोपपत्तेः। तदननुगृहीतस्य ययातिप्रभृतिकर्मवत् कदाचित् निष्फलत्वसम्भवाच्च। न चैतावता कर्मस्वप्रवृत्तिः कर्षकादिवदुपपत्तेः ईश्वरेच्छायत्तत्वाच्च पशूनां प्रवृत्तेः। नापि द्वितीयः परमेश्वरस्य पर्य्याप्तकामत्वेन कर्मसाध्यप्रयोजनापेक्षाया अभावात्। यदुक्तं "समसमयसमुत्पाद" इति तदप्ययुक्तम् अचिन्त्यशक्तिकस्य परमेश्वरस्येच्छानुविधायिन्या अव्याहतक्रियाशक्त्याः कार्यकारित्वाभ्युपगमात्। तदुक्तं सम्प्रदायविद्भिः "कर्मादिनिरपेक्षस्तु स्वेच्छाचारी यतो ह्ययम्। ततः कारणतः शास्त्रे सर्वकारणकारणमिति"। ननु दर्शनान्तरेऽपीश्वरज्ञानान्मोक्षो लभ्यत एवेति कुतोऽस्य विशेष इति चेन्मैवं वादीः विकल्पानुपपत्तेः किमीश्वरविषयज्ञानमात्रं निर्वाणकारणं किं वा साक्षात्कारः अथ वा यथावत्तत्त्वनिश्चयः। नाद्यः शास्त्रमन्तरेणापि पामरजनवद्देवानामधिपो महादेव इति ज्ञानोत्पत्तिमात्रेण मोक्षसिद्धौ शास्त्राभ्यासवैफल्यप्रसङ्गात्। नापि द्वितीयः अनेकमलप्रचयोपचितानां पिशितलोचनानां पशूनां परमेश्वरसाक्षात्कारानुपपत्तेः। तृतीयेऽस्मन्मतापातः पाशुपतशास्त्रमन्तरेण यथावत्तत्त्वनिश्चयानुपपत्तेः। तदुक्तमाचार्य्यैः "ज्ञानमात्रे यथाशास्त्रं साक्षाद्दृष्टिस्तु दुर्लभा। पञ्चार्थादन्यतो नास्ति यथावत्तत्त्वनिश्चयः" इति। तस्मात् पुरुषार्थकामैः पुरुषधौरेयैः पञ्चार्थप्रतिपादनपरं पाशुपतशास्त्रमाश्रयणीयम्"। नकुलीश्वरोऽपि शिवे काशीस्थशिवलिङ्गभेदे च काशीख० १००अ०।

४०० पृष्ठस्थनष्टशब्दार्थपरिशिष्टम्। छन्दःशास्त्रसिद्धे प्रस्तारे इयत्सङ्ख्यकत्वमात्रज्ञाने तत्स्वरूपावधारणाय ४क्रियाभेदे "प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रिया" वृत्तर० उपक्रमे "नष्टस्य यो भवेदङ्कस्तस्यार्द्धेऽर्द्धे समे च लः। विषमे चैकमाधाय तस्यार्द्धेऽर्द्धे गुरुर्भवेत्"। नष्टस्य अज्ञातस्वरूपस्य योऽङ्कः प्रस्तारमध्यपातिसंख्याज्ञापकः अङ्कः तस्य तत्संख्यायाः समत्वे लोलघुर्लेख्यः तस्य अर्द्धे कृते तस्य समत्वे च सति लो लघुर्लेख्यः। पुनस्तस्याप्यर्द्धे समे लघुः एवं यावदक्षरसंख्या तावत्। नष्टस्य संख्याया विषमत्वे गुरुः, तत्रैकमाधाय संयोज्य तस्यार्द्धे कृते विषमत्वे गुरुः समत्वे लघुः विषमत्वे एकयोजिते पुनरर्द्धे कृते समत्वे लघुः विषमत्वे गुरुः, यथा त्र्यक्षरप्रस्तारे चतुर्थो भेदः कीदृशः इति प्रश्ने, तत्संख्यायाः समत्वात् प्रथमं लघुः तस्यार्द्धे कृते तस्य समत्वेन पुनर्लघुः शिष्टे द्व्यङ्केऽर्द्धीकृते तस्य विषमत्वात् गुरुः एवञ्च चतुर्थो भेदः अन्त्यगुरुः इत्युत्तरम् इत्यर्थः।

# प

**प:** पञ्चमवर्गस्य प्रथमोवर्णः व्यञ्जनवर्णेषु एकविंशतितमः। तस्योच्चारणस्थानमोष्ठः। तस्योच्चारणे आभ्यन्तरप्रयत्नः ओष्ठेन सह जिह्वाग्रस्य स्पर्शः। बाह्याः प्रयत्नाः विवारश्वासघोषाः अल्पप्राणश्च। क्वचित् परे विसर्गस्य स्थाने उपाध्मानीयः˛ वर्णाभिधाने अस्य वाचकशब्दाउक्ता यथा "पः सुरप्रियता तीक्ष्णा लोहितः पञ्चमो रमा। शुद्धकर्त्ता निधिः शेषः कालरात्रिः सुरारिहा। तपनः पावनः पाता देवदेवो निरञ्जनः। सावित्री पातिनी पानं वीरतन्त्रो धनुर्द्धरः। दक्षपार्श्वश्च सेनानीर्मरीचिः पवनः शनिः। उड्डीशं जयिनी कुम्भोऽनलरेखा च लोहकः। मूलं द्वितीयमिन्द्राणी लोलाक्षी मनश्चात्मकः" तदधीशदेवताध्यानं यथा "विचित्रवसनां देवीं द्विभुजां पङ्कजेक्षणाम्। रक्तचन्दनलिप्ताङ्गीं पद्ममालाविभूषिताम्। मणिरत्नादिकेयूरहारभूषितविग्रहाम्। चतुर्वर्गप्रदां नित्यां नित्यानन्दमयीं पराम्। एवं ध्यात्वा पकारन्तु तन्मन्त्रं दशधा जपेत्"। अस्य स्वरूपं यथा "अतः परं प्रवक्ष्यामि पकाराक्षरमव्ययम्। चतुर्वर्गप्रदं वर्णं शरच्चन्द्रसमप्रभम्। पञ्चदेवमयं वर्णं स्वयं परमकुण्डली। पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं तथा। त्रिगुणावस्थितं वर्णमात्मादितत्त्वसंयुतम्। महामोक्षप्रदं वर्णं हृदि भावय पार्वति!" इति कामधेनुतन्त्रे ५पटले। अस्य मातृकान्यासे दक्षपार्श्वे न्यास्यता। काव्यादौ अस्य प्रथमप्रयोगे सुखं फलम्। "सुखभयमरणक्लेशदुःखं पवर्गः" वृ०टी०। पवर्गस्थानां पञ्चानां वर्णानां क्रमेण फलपञ्चकोक्तेः। [एकाक्षरकोषः।

**प** पु० पत–पा–वा ड। १पवने २पर्णे ३पाने ४पातने चरित्रे

**पकार** पु० प+स्वरूपे कार। पवर्णे [अमरः।

**पक्कण** पु० पचति पच–क्विप् कण–अच् कर्म०। शबरालये

**पक्कपीड** पु० (पाखौड़ा) इति प्रसिद्धे वृक्षभेदे राजनि०।

**पक्तृ** त्रि०पच–तृच्। १पाककर्त्तरि २अग्नौ पु० अग्निपु०२जा०

**पक्ति** स्त्री पच–भावे क्तिन्। १पाके २गौरवे मेदि० ३परिणामे च। [काले जायमाने शूले रोगभेदे राजनि०।

**पक्तिशूल** न० पक्तौ अन्नपरिणामे शूलम्। अन्नादिपाक-

**पक्त्र** न० पच–त्र। गार्हपत्ये स्वगृह्यधर्मे उज्ज्वलदत्तः।

**पक्त्रिम** त्रि० पच–क्त्रि ततो–मप्। पाकनिर्वृत्ते

**पक्थ** पु० पच–बा० थक्। १राजभेदे ऋ०८।२२।१०भा० भावे थक् २पाके च। ततोऽस्त्यर्थे इनि पक्थिन्। पाकयुक्ते ऋ०६।२०।१२ भा०।

**पक्व** त्रि० पच–क्त तस्य वः। १परिणते २दृढे ३विनाशोन्मुखे ४कृतपाके च अमरः। भावे क्त ५पाके न०

**पक्वकृत्** पु० पक्वं करोति कृ–क्विप् ६त०। १निम्बवृक्षे शब्दच० २पाककर्त्तरि त्रि०।

**पक्वरस** पु० पक्वस्य अन्नगुडादेः रसः। मद्ये शब्दरत्ना०।

**पक्ववारि** न० पक्वस्यान्नादेर्वारि। काञ्जिके(आमानि)शब्दच०।

**पक्वश** पुंस्त्री पुक्कश+पृषो०। अन्त्यजातिभेदे हला०।

**पक्वशस्योपमोन्नति** पु० पक्वशस्यस्योपमा यत्र तादृशी उन्नतिरस्य। राजकदम्बे वैद्यक् प्र०।

**पक्वातीसार** पु० सुश्रुतोक्ते आमातिसारभिन्ने पञ्चप्रकारे अतिसारभेदे अतिसारशब्दे १०६पृ० दृश्यम्।

**पक्वाधान** न० पक्वस्य पाकस्याधानम् ६त०। नाभेरधोभागस्थे पाकाशये सुश्रुतः पक्वाशयोऽप्यत्र "पक्वाशयस्त्वधोनाभेरूर्द्धं मामाशयः स्थितः" वैद्यकम्।

**पक्वान्न** न० कर्म०। १कृतपाके अन्ने "आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते" स्मृतिपरिभाषिते शूद्रस्य २आमान्ने च। [चुर् त।

**पक्ष** परिग्रहे अद० चु० उभ० सक० सेट्। पक्षयति ते अपप-

**पक्ष** परिग्रहे चु० उभ० सक० सेट् अयं भ्वादिश्च पर० पक्षति पक्षयति ते अपपक्षत् त अपक्षीत्।

**पक्ष** पु० पक्ष–अच्। १शुक्लकृष्णप्रतिपदादिपञ्चदशान्तपञ्चदशतिथ्यात्मके काले २खगानां पतत्त्रे (पाखा) ३परस्य पुङ्खसे पक्षे। केशात् परः समूहार्थे पक्षप्रत्ययान्तः। ४केशसमूहार्थे यथा केशपक्ष इत्यादि। ५पार्श्वे ६मध्ये न्यायोक्ते ७सन्दिग्धसाध्यवति पदार्थे, पक्षताशब्दे दृश्यम् यथा पर्वतो वह्निमान्। ८विरोधे ९सहाये १०बले ११सख्यौ १२चुल्लीरन्ध्रे १३राजकुञ्जरे १५खगे. १६वलये १७समूहे १८पिक्षे १९देहार्द्धे च अमरमेदिन्यौ। २०विहगे २१शुद्धे शब्दरत्ना०। २२वर्गे २३देहे २४देहाङ्गभेदे वादिप्रतिवादिभ्यां दर्शितविप्रतिपत्तौ २५कोटिभेदे च।

**पक्षक** पु० पक्ष इव कायति कै–क। १पार्श्वद्वारे (खिड़की) अमरः। २पार्श्वमात्रे मेदि०। ३सहाये शब्दर०।

**पक्षग्रहण** न० आवग्राधान्ये ६त०। वाद्याश्रयहणे।

**पक्षचर** पु० पक्षे शुक्लादौ चरति चर–ट। १चन्द्रे २पृथक् चरे ३गजे च मेदि०।

**पक्षज** पु॰ पक्षे शुक्ले जायते जन–ड । १चन्द्रे त्रिका॰ २पक्षे जातमात्रे त्रि॰ । पक्षजन्माप्यत्र शब्दरत्ना॰

**पक्षता** स्त्री पक्षस्य भावः । न्यायोक्ते अनुमानेच्छाभाव-समानाधिकरणे १साध्यवत्तानिश्चयाभावे यत्र वह्न्यादिकं साध्यते तत्र धर्मिणि वह्निमत्त्वनिश्चयाभावे एव पक्षत्वं तत्र तन्निश्चयसत्त्वे तु अनुमानेच्छासत्त्वएव पक्षता नेतर-थेति न्याये स्थितम् ।“सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते । स पक्षस्तत्र वृत्तित्वं ज्ञानादनुमितिर्भवेत्” भाषा॰

**पक्षति** स्त्री पक्षस्य मूलम् ति । पक्षारम्भके १प्रतिपदि तिथौ खगानां २पक्षस्य मूले च (डाना) अमरः । [अमरः ।

**पक्षद्वार** न॰ पक्षे पार्श्वे द्वारम् । (खिडकी) पार्श्वस्थे द्वारे

**पक्षधर** पु॰ पक्षं धारयति धृ–अच् । १चन्द्रे जटाध॰ पक्षं पञ्चदशतिथ्यात्मककालम् तत्तिथिमानादिकं धारयति अच् तत्धारके २विद्वद्भेदे स हि चिन्तामण्यालोकं प्रसन्न-राघवनाटकं च चकार तस्य जयदेवेति नामान्तरम् पक्षस्थतिथिमानादिधारणशक्तिमत्त्वात्तस्य तथाप्रसिद्धिः ।

**पक्षपात** पु॰ पक्षे अन्याय्यसाहाय्ये पातः अभिनिवेशः। १अन्याय्यसाहाय्ये “पक्षपातः पतङ्गानामिति” विजयर-क्षितोक्ते खगानां २ज्वरभेदे च ।

**पक्षपातिता** स्त्री पक्षपात+अस्त्यर्थे इनि तस्य भावः तल् । १साहाय्यकरणायाभिनिवेशे २पक्षाभ्यां पतने च “न परं पथि पक्षपातिताऽनवलम्बे किमु मादृशेऽपि सा” नैषधम् ।

**पक्षपालि** स्त्री पक्षस्य द्वारभेदस्य पालिरिव ( खिड़की ) द्वारभेदे शब्दरत्ना॰ ।

**पक्षभाग** पु॰ पक्ष इव भागः । हस्तिपार्श्वभागे अमरः ।

**पक्षमूल** न॰ ६त॰। (पाकारमूल) पक्षस्य १मूले २प्रतिपत्तिथौ च अमरः । [स्त्रियां जातित्वात् ङीष् ।

**पक्षवाहन** पुंस्त्री पक्षौ वाहनमिवास्य । खगे शब्दच॰ ।

**पक्षस्** न॰ पच–असुन् सुट् च। पक्षशब्दार्थे “पक्षसी तु स्तुतौ पक्षौ” उत्तररत्नम् । यजु॰ २८।५ उदा॰दृश्यम् ।

**पक्षसन्धि** पु॰ पक्षयोः सन्धिः । पर्वसन्धिकाले

**पक्षसुन्दर** पु॰ पक्षे सुन्दरः । लोध्रे हारा॰ । [होमभेदे ।

**पक्षहोम** पु॰ पक्षव्यापको होमः । पक्षपर्य्यन्तं कर्त्तव्ये

**पक्षाघात** पु॰ वातरोगभेदे तल्लक्षणादि सुश्रुतोक्तं यथा “अधोगमाः सतिर्य्यग्गा धमनीरूर्द्ध्वदेहगाः । यदा प्रकु-पितोऽत्यर्थं मातरिश्वा प्रपद्यते । तदन्यतरपक्षस्य सन्धिबन्धान् विमोक्षयन् । हन्ति पक्षं तमाहुर्हि पक्षा-घातं भिषग्वराः । यस्य कृत्स्नं शरीरार्द्धमकर्म्मण्य-मचेतनम् । ततः पतत्यसून् वापि जह्यात्यनिलपीडितः । शुद्धवातहतं पक्षं कृच्छ्रसाध्यतमं विदुः । साध्यमन्येन संसृष्टमसाध्यं क्षयहेतुकम् । वायुरूर्द्ध्वं व्रजेत्स्थानात् कुपितो हृदयं शिरः । शङ्खौ च पीडयत्यङ्गान्याक्षिपेन्न-मयेच्च सः” । पक्षवधोऽप्यत्र ।

**पक्षान्त** पु॰ पक्षस्यान्तो यत्र काले । १अमावास्यायां २पूर्णि-मायाञ्च तिथौ “पक्षान्ते निष्फला यात्रा मासान्ते मरणं ध्रुवम्” ज्यो॰त॰ । ६त॰। ३पक्षस्यावसाने च ।

**पक्षादि** पु॰ ६त॰। पक्ष आदिर्यस्य चतुरर्थ्यां फक्-प्रत्ययनिमित्ते शब्दगणे स च गणः पा॰ ग॰ सू॰ उक्तो यथा पक्ष तक्ष तुष कुण्ड अण्ड कम्बलिका वलिक चित्र अस्ति पथिन् (पन्थ च) कुम्भ सीरक सरक सकल सरस समल अतिश्वन् रोमन् लोमन् हस्तिन् मकर लोमक शीर्ष निवात पाकसिंहक अङ्कुश सुवर्णक हंसक हिंसक कुत्स बिल खिल यमल हस्त कला-कर्णक” । पाक्षायण इत्यादि ।

**पक्षालिका** स्त्री कुमारानुचरमातृकाभेदे भा॰श॰ ४७अ॰

**पक्षालु** पु॰ पक्ष+अस्त्यर्थे आलुच् । विहगे शब्दच॰ ।

**पक्षावसर** पु॰ पक्षस्यावसरोऽपसरणं यत्र काले । पौर्ण-मास्याम् अमावास्यायाञ्च शब्दर॰ ।

**पक्षिणी** स्त्री पक्षतुल्यौ दिवसौ यस्या अस्ति इनि ङीप् । आगामिवर्त्तमानाहर्युक्तायां रात्रौ अमरः ।“द्वावह्नावेक-रात्रिश्च पक्षिणीत्यभिधीयते” शुद्धि॰त॰ । तत्र पूर्वदिन रात्रौ तन्निमित्ते जाते पूर्वदिवसीयदिनमादायैव पक्षिणी व्यवहारः” शु॰त॰ स्थितम् । “यापयेत् पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च” मनुः । २विहगजातिस्त्रियां स्त्री

**पक्षिन्** पु॰ पक्ष+अस्त्यर्थे इनि । १खगे तेषामुत्पत्तिर्यथा “अरुणस्य भार्य्या श्येनी वीर्य्यवन्तौ महाबलौ । सम्पा-तिञ्च जटायुञ्च प्रासोष्ट पक्षिसत्तमौ । सम्पातिर्जनयत् श्येनान् काकाः पुत्रा जटायुषः । भार्य्या गरुत्मतश्चापि भासी क्रौञ्ची शुनी शुकी । धृतराष्ट्री गरुत्मांस्तु शुन्यां जज्ञे च षट् सुतान् । त्रिशिरश्च सुनेत्रश्च सुमुखं सुन-मन्तथा । सुरूपन्तु सुपर्वाणं तेषां पुत्रा अनन्तकाः । चतुर्दश सहस्राणि क्रूराणां पन्नगाशिनाम् । सप्तद्वीपे-ष्विमे सन्ति गारुड़ास्ते महाबलाः । भासीपुत्रास्तथा भासा उलूकाः काककुक्कुटाः । मयूराः कलविङ्काश्च कपोता चैव तित्तिरी । क्रौञ्च्यां वाध्रीणसा श्येनान् कुररा सारसास्तकाः । धृतराष्ट्री कलहंसान् धार्त्त-

राष्ट्रांश्च भामिनी। चक्रवाकांश्च विहगान् यस्मै नानोद्कान् द्विजान्। अन्यानपि द्विजान् जज्ञे पुत्रपौत्राननन्तकान्" अग्निपु०। गुरुभक्षबहुभक्षलघुभक्षकायपक्षिणां पूर्वार्द्धस्य श्रेष्ठत्वं यथा "गुरुभक्षा बहुभुजो ये चोपचितमेदसः। एकदेशेऽपि पूर्वार्द्धं स्मृतायां पक्षिणां वरम्" पक्षिणामङ्गभेदानामुत्तरोत्तरं गुरुत्वं यथा "सर्वेषाञ्च शिरःस्कन्धग्रीवचर्ममयस्तदुद्रदम्। पादपुच्छान्तमस्थिच्च सक्थिक्रोड़ाः क्रमेद्गुनाः। धातवः शोणितादाश्च गुरवः स्युः परस्परम्"। तन्मांसगुणाः। "मयूरकुक्कुटमांसानि स्वादुवाजीकराणि च। कटुपाकानि तानि कुर्वीतश्लेष्मकराणि च" राजवल्लभः। तन्मांसगुणाः सुश्रुतोक्ता यथा

"लावतित्तिरिकपिञ्जलवर्त्तीरवर्त्तिकावर्त्तकनप्तृकावातीकचकोरकलविङ्कमयूरक्रकरोपचक्रकुक्कुटसारङ्गशतपत्रककुतित्तिरिकुररवाकुक्यवलकप्रभृतयस्त्र्याह्वा विष्किरा लघवः शीतमधुरा कषाया दोषशमनाश्च। "संग्राही दीपनश्चैव कषायमधुरो लघुः। लावः कटुविपाकश्च सन्निपाते च पूजितः। ईषद्गुरूष्णमधुरो वृष्यो मेधाग्निवर्द्धनः। तित्तिरिः सर्वदोषघ्नो ग्राही वर्णप्रसादनः। हिक्काश्वासानिलहरो विशेषाद्गौरतित्तिरिः। रक्तपित्तहरः शीतो लघुश्चापि कपिञ्जलः। कफोत्थेषु च रोगेषु मन्दवाते च शस्यते। वातपित्तहरा वृष्या मेधाग्निबलवर्द्धनाः। लघवः क्रकरा हृद्यास्तथा चैवोपचक्रकाः। कषायः स्वादुलवणस्त्वच्यः केश्यो रुचिप्रदः। मयूरः स्वरमेधाग्निदृक्श्रोत्रेन्द्रियदार्ढ्यकृत्। स्निग्धोष्णोऽनिलहा वृष्यः स्वेदस्वरबलावहः। वृंहणः कुक्कुटो वन्यस्तद्वद्ग्राम्यो गुरुस्तु सः। वातरोगक्षयवमीविषमज्वरनाशनः"। "कपोतपारावतभृङ्गराजपरभृतकोयष्टिककुलिङ्गगृहकुलिङ्गगोक्षोड़कडिण्डिमाणवकशतपत्रकमातृनिन्दकभेदाशिशुकसारिकावल्गुलीगिरिशालट्वालट्वकसुगृहीखञ्जरीटकहारीतदात्यूहप्रभृतयः प्रतुदाः। कषायमधुरा रूक्षाः फलाहारा मरुत्कराः। पित्तश्लेष्महराः शीता बद्धमूत्राल्पवर्चसः। सर्वदोषकरस्तेषां भेदाशी मलदूषकः। कषायस्वादुलवणो गुरुः काणकपोतकः। रक्तपित्तप्रशमनः कषायविशदोऽपि च। विपाके मधुरश्चापि गुरुः पारावतः स्मृतः। कुलिङ्गो मधुरः स्निग्धः कफशुक्रविवर्द्धनः। रक्तपित्तहरो वेश्मकुलिङ्गस्त्वतिशुक्रलः"।

**पक्षिराज** पु० ६त०। टच्समा०। गरुडे पक्षीन्द्रादयोऽप्यत्र।

**पक्षिल** पु० पक्ष–बा० इलच्। वात्स्यायने गौतमसूत्रभाष्यकारके मुनिभेदे त्रिका०। [२नीडे च त्रिका०।

**पक्षिशाला** स्त्री ६त०। (चिड़ियाखाना) १पक्षिवासस्थाने

**पक्षिसिंह** पु० पक्षी सिंह इव उपमितस०। गरुडे त्रिका०

**पक्षिस्वामिन्** पु० ६त०। गरुडे हेमच०।

**पक्त्रु** त्रि० पच–क्नु। पाकशीले

**पक्ष्मकोप** पु० सुश्रुतोक्ते नेत्ररोगभेदे "पक्ष्माशयगता दोषास्तीक्ष्णोग्राणि खराणि च। निर्वर्त्तयन्ति पक्ष्माणि तैर्घृष्टञ्चाक्षि दूयते। उत्पाटितैः पुनः शान्तिः पक्ष्मभिश्चोपजायते। वातातपानलद्वेषी पक्ष्मकोपः स उच्यते" पक्ष्मप्रकोपोऽप्यत्र पु०।

**पक्ष्मन्** न० पक्ष–मनिन्। १नेत्रावरके लोम्नि २पद्मादेः केसरे अमरः ३सूत्रादेरल्पभागे ४खगादेः पक्षे च अमरमाला।

**पक्ष्मल** त्रि० पक्ष्मन्+सिध्मा० मत्वर्थे लच्। पक्ष्मयुक्ते

**पङ्क** पु०न० पचि–विस्तारे कर्मणि करणे वा घञ् कुत्वम्। अर्द्धर्चा०। १कर्दमे २पापे च अमरः। [त्रिका०।

**पङ्ककर्वट** पु० पङ्केषु कर्वटः मनोहरः। जलयुक्तपङ्के

**पङ्ककीर** पुंस्त्री पङ्कप्रियः कीरः। (कादाखोंचा) पक्षिभेदे त्रिका० स्त्रियां जातित्वात् ङीष्।

**पङ्कक्रीड़** पु० पङ्केन क्रीड़ति क्रीड़–अच् ३त०। शूकरे त्रिका० ल्यु। पङ्कक्रीडनोऽप्यत्र। [त्रिका०।

**पङ्कगड़क** पु० पङ्के स्थितः गडकः। (पाँकाल) मत्स्यभेदे

**पङ्कगति** पु० पङ्के गतिरस्य। (पाँकाल) मत्स्यभेदे शब्दमा०

**पङ्कग्राह** पुंस्त्री पङ्के स्थितः ग्राहः। मकरे जलजन्तुभेदे हारा०।

**पङ्क(ङ्के)ज** न० पङ्के जायते जन–ड ७त० वा अलुक्समा०। १पद्मे २सारसपक्षिणि च राजनि० पङ्कजनिकर्तृत्वविशिष्टे अस्य शब्दस्य योगरूढता कुमुदादीनां पङ्कजातत्वेऽपि न तत्र रूढिः किन्तु लग्नकतैल्याकारे स्थितम्।

**पङ्कजन्मन्** न० पङ्के जन्म यस्य। १पद्मे राजनि० २सारसपक्षिणि च। २पद्मसमूहे च हेमच०।

**पङ्कजिनी** स्त्री पङ्कज+पुष्करा० इनि। १पद्मयुक्तदेशे पद्माकरे

**पङ्कण** पु० पक्कण+पृषो०। शवरालये शब्दमाला।

**पङ्कप्रभा** स्त्री पङ्कस्येव प्रभा यस्याः। कर्दमतुल्यप्रभान्वित नरकभेदभूमौ हेमच०।

**पङ्कमण्डूक** पुंस्त्री पङ्के मण्डूक इव। शम्बुके (शामुक) जलशुक्तिभेदे हारा०।

**पङ्क(ङ्के)रुह** न० रुह–क ७त० वा अलुक्। १पद्मे अमरः २सारसखगे च।

**पङ्कवास** पु० पङ्के वासोऽस्य। कर्कटे (काँकड़ा) जलजन्तुभेदे राजनि० स्त्रियां जातित्वात् ङीष्। हारा०।

**पङ्कशुक्ति** स्त्री पङ्के स्थिता शुक्तिः (झिनुक) जलशुक्तिभेदे

**पङ्कशूरण** पु० पङ्के शूरण इव। शालूके राजनि०

**पङ्कार** पु० पङ्कमृच्छति ऋ–अण् उप०स०। १शैवले २सेतौ च ३सोपाने ४जलकुब्जकपुष्पभेदे मेदि०।

**पङ्किल** त्रि० पङ्क+अस्त्यर्थे पिच्छा० इलच्। पङ्कयुक्ते

**पङ्केशय** त्रि० पङ्के शेते शी–अच् ७त० अलुक्स०। १पङ्कस्थायिनि २जलौकाभेदे स्त्री "न च सङ्कीर्णचारिण्यो न च पङ्केशयाश्च ताः" सुश्रु०।

**पङ्क्ति** स्त्री पचि–विस्तारे क्तिन्। १सजातीयपदार्थानां स्थितिभेदे (सारि पाँति) इति ख्याते पदार्थे "भौमिति पुङ्क्तिः" इ०र० उक्तलक्षणे पञ्चाक्षरपादके २छन्दोभेदे ३दशाक्षरपादके छन्दोजातिभेदे "गायत्र्युष्णिगनुष्टुप् च वृहती पङ्क्तिरेव च" इ०र०। ४दशसंख्यायाम् पङ्क्तिरथः (दशरथः)। ५पृथिव्यां शब्दमा०। ६गौरवे ७पाके च मेदि०। पतिताद्येकपङ्क्तौ भोजनादौ दोषः "न संवसेच्च पतितैर्न चाण्डालैर्न पुक्कशैः। न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः। एकशय्यासनपङ्क्तिभाण्डपक्वान्नमिश्रणम्। याजनाध्यापने योनिस्तथैव सहभोजनम्। सहाध्यायस्तु दशमः सह याजनमेव च। एकादश समुद्दिष्टा दोषाः साङ्कर्य्यसञ्ज्ञिताः। समीपे ह्यवस्थानात् पापं संक्रमते नृणाम्। तस्मात् सर्वप्रयत्नेन साङ्कर्य्यं परिवर्जयेत्"। पङ्क्तिसाङ्कर्य्यदोषनिवारणोपायः यथा। "एकपङ्क्त्युपविष्टा ये न स्पृशन्ति परस्परम्। भस्मना कृतमर्य्यादा न तेषां सङ्करो भवेत्। अग्निना भस्मना चैव षड्भिः पङ्क्तिर्विभिद्यते" कूर्मपु० १५अ०।

**पङ्क्तिकण्टक** पु०पङ्क्तौ एकपङ्क्तौ वेशनादौ कण्टक इव परिहार्य्यत्वात्। पङ्क्तिदूषके [शब्दर०।

**पङ्क्तिग्रीव** पु० पङ्क्तिसङ्ख्याका ग्रीवा यस्य। रावणे दश-

**पङ्क्तिदूष(क)** पु० पङ्क्तिम् एकपङ्क्तिं भोजने दूषयति दूषि–अण् ण्वुल् वा उप०स०। अपाङ्क्तेये अपकृष्टब्राह्मणे स च अपाङ्क्तेयशब्दे २४२पृ०उक्तः। अन्येऽपि केचित् पाद्मे १५अ० उक्ता यथा
"अपाङ्क्तेयास्तु ये राजन्! कीर्त्तयिष्यामि तान् शृणु। कितवो भ्रूणहा यक्ष्मी पशुपालो निराकृती। ग्रामप्रेष्यो वार्धुषिको गायनः सर्वविक्रयी। अगारदाही गरदः कुण्डाशी सोमविक्रयी। सामुद्रिको राजदूतस्तैलिकः कूटकारकः। पित्रा विवदमानश्च यस्य चोपपतिर्गृहे। अभिशस्तस्तथा स्तेनः शिल्पं यश्चोपजीवति। पर्वकारश्च सूची च मित्रध्रुक् पारदारिकः। अव्रतानामुपाध्यायः काण्डपृष्ठस्तथैव च। श्वभिश्च यः परिक्रामेद्यः शुना दष्ट एव च। परिवित्तिश्च यश्च स्याद् दुश्चर्मा गुरुतल्पगः। कुशीलवो देवलको नक्षत्रैर्यश्च जीवति। ईदृशा ब्राह्मणा ये च अपाङ्क्तेयास्तु ते मताः। रक्षांसि भुञ्जते हव्यं यदेषान्तु प्रदीयते। श्राद्धे भुक्त्वा महाराज! दुश्चर्मा गुरुतल्पगः। श्राद्धं नाशयते तस्य पितरोऽपि न भुञ्जते। सोमविक्रयिणे दत्तं विष्ठातुल्यं भवेन्नृप! भिषजे शोणितसमं नष्टं देवलके तथा। अप्रतिष्ठं वार्धुषिके निष्फलं परिकीर्त्तितम्। वाणिजके दत्तं नेह नामुत्र तद्भवेत्। भस्मनीव हुतं हव्यं तथा पौनर्भवे द्विजे। ये तु धर्मव्यपेतेषु चरित्रापगतेषु च। हव्यं कव्यं प्रयच्छन्ति तेषां तत्परिनश्यति। ज्ञानपूर्वन्तु ये तेभ्यः प्रयच्छन्त्यल्पबुद्धयः। पुरीषं भुञ्जते तस्य पितरः प्रेत्य निश्चितम्। एतान् विद्धि महाबाहो! अपाङ्क्तेयान् द्विजाधमान्। शूद्राणामुपदेशन्तु ये कुर्वन्त्यल्पबुद्धयः। षष्टिं काणः शतं षण्ढः श्वित्री यावत् प्रपश्यति। पङ्क्त्यां समुपविष्टानां तावद्दूषयते नृप!। यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते दक्षिणामुखः। सोपानत्कश्च यद्भुङ्क्ते सर्वं विद्यात्तदासुरम्। असूयया च यद्दत्तं यच्च श्रद्धाविवर्जितम्। सर्वं तदसुरेन्द्राय ब्रह्मा भागमकल्पयत्। श्वानश्च पङ्क्तिदूषश्च नावेक्षेरन् कथञ्चन। तस्मात् परिवृते दद्यात्तिलांश्चान्वे विकीरयेत्। तिलैर्विरहितं श्राद्धं कृतं क्रोधवशेन च। यातुधानाः पिशाचाश्च विप्रलुम्पन्ति तद्धविः। अपाङ्क्त्यान् यावतः पङ्क्त्यां भुञ्जानो ननु पश्यति। तावत् फलाद्भ्रंशयति दातारं तस्य वाऽनिशम्"।

**पङ्क्तिपावन** पु० पङ्क्तिं श्राद्धे भोजनार्थमुपविष्टानामावलिं पुनाति पू–णिच्–ल्यु। श्राद्धभोजनार्थमुपविष्टानां विप्राणां पङ्क्तिपवित्रताकारके विद्याविशिष्टादौ "अपाङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैः। तान्निबोधत कार्त्स्न्येन द्विजाग्र्यान् पङ्क्तिपावनान्। अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च। श्रो-

त्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः। त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित्। ब्राह्मदेयात्मसन्तानो ज्येष्ठसामग एव च। वेदार्थवित् प्रवक्ता च ब्रह्मचारी सहस्रदः। शतायुश्चैव विज्ञेया ब्राह्मणाः पङ्क्तिपावनाः” मनुः “इमे हि मनुजश्रेष्ठ! विज्ञेयाः पङ्क्तिपावनाः। विद्यावेदव्रतस्नाता ब्राह्मणाः सर्व एव हि। मातापित्रोर्यश्च वश्यः श्रोत्रियो दशपूरुषः। ऋतुकालाभिगामी च धर्मपत्नीषु यः सदा। वेदविद्याव्रतस्नातो विप्रः पङ्क्तिं पुनात्युत। अथर्वशिरसोऽध्येता ब्रह्मचारी यतव्रतः। सत्यवादी धर्मशीलः स्वकर्मनिरतश्च यः। ये च पुण्येषु तीर्थेषु अभिषेककृतश्रमाः। मखेषु च समस्तेषु भवन्त्यवभृथप्लुताः। अक्रोधना ह्यचपलाः क्षान्ता दान्ता जितेन्द्रियाः। सर्वभूतहिता ये च श्राद्धेष्वेतान्निमन्त्रयेत्। एतेषु दत्तमक्षय्यमेते वै पङ्क्तिपावनाः। यतयो मोक्षधर्मज्ञा ये वा सुचरितव्रताः। ये चेतिहासं प्रयताः श्रावयन्ति द्विजोत्तमान्। ये च भाष्यविदः केचिद्ये च व्याकरणे रताः। अधीयते पुराणं ये धर्मशास्त्राणि चाप्युत। अधीत्य च यथान्यायं विधिवत्तस्य कारिणः। उपपन्नो गुरुकुले सत्यवादी सहस्रदः। अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च। यावदेते प्रपश्यन्ति पङ्क्त्यां तावत् पुनन्ति च। ततो हि पावनात् पङ्क्त्या उच्यन्ते पङ्क्तिपावनाः। क्रन्त्विगनुपाध्यायः स चेदग्र्यासनं व्रजेत्। ऋत्विग्भिरननुज्ञातः पङ्क्त्या हरति दुष्कृतम्। अथ चेद्वेदवित् सर्वैः पङ्क्तिदोषैर्विवर्जितः। न च स्यात् पतितो राजन् पङ्क्तिपावन उच्यते” पाद्मे सर्गखण्डे ३५अ०।

**पङ्क्तिरथ** पु० पङ्क्तिषु दशसु दिक्षु गतो रथो यस्य। दशरथे शब्दरत्ना०। [राजनि०।

**पङ्क्तिवीज** पु० पङ्क्तिभूतानि वीजानि यस्य। वर्वुरवृक्षे

**पङ्गु** त्रि० खजि–कु–पन्आदेशः नुक् च। १गतिहीने स्त्रियां ऊङ्। २मन्दगतौ शनिग्रहे शब्दर० तत्कक्षाया अत्युच्चतया बहुकालेन राशिभागादिकस्य तेन भोगात् तस्य मन्दगतित्वम्। अश्वहरणकर्मविपाकेन पङ्गुता जायते इत्युक्तं मनुः। [ङीप्। शिशुडीक्षुपे राजनि०।

**पङ्गुत्वहारिणी** स्त्री पङ्गुत्वं हरति सेवनात् हृ–णिनि

**पङ्गुल** पु० सितकाचाभहयभेदे हेम०।

**पच** पाके भ्वा०उभ०सक०अनिट्। पचति ते। अपाक्षीत् अपक्त पपाच पेचे। पक्ता। पक्वम् पचेलिमम् पक्तिः पाकः। ड्विट् पक्त्रिमः। अनेन विक्लेदनाया उत्पत्त्यनुकूलव्यापारस्य चेति व्यापारद्वयस्य वचनात् द्विकर्मकत्वम् तण्डुलानोदनं पचतीत्यस्य तण्डुलान् विक्लेदयन् ओदनं निष्पादयतीत्यर्थः। दुहा० गौणे कर्मणि लकारादयः। तण्डुला ओदनं पच्यन्ते दुहादिशब्दे कर्मनृशब्दे च अधिकं दृश्यम्।

परि+परितः पाके परिणामे।

वि+विशेषेण पाके अन्यथाभूतस्य अन्यरूपेण परिणामे।

**पच** व्यक्तीकारे भ्वा०आत्म० अनिट्। पचते अपक्त पेचे।

**पच** विस्तारे चु० उ० सक० सेट् इदित्। पञ्चयति ते अपपञ्चत् त।

**पचत** पु० पच–अतच्। १अग्नौ २सूर्य्ये ३इन्द्रे च उणादि०।

**पचतभृज्जता** स्त्री पचत भृज्जत इत्युच्यते यस्यां क्रियायाम् मयू०स०। पाकभर्जनार्थं निदेशक्रियायाम्।

**पचत्पुट** पु० पचत् पुटमस्य। सूर्य्यमणिवृक्षे शब्दच०।

**पचत्य** त्रि० पचते पाके साधुः यत्। पाके साधौ ऋ०३।५२। २२भा०। [“कर्मस्थाः पचतेर्भावः” व्याक०का०।

**पचति** पु० पच–धातुस्वरूपे श्तिप्। पचधातुस्वरूपे

**पचतिकल्पम्** न० ईषदूनं पचति तिङन्तात् कल्पप्। ईषदून पाककर्त्तरि रूपप्। पचतिरूपमप्यत्र।

**पचतितरा(मा)म्** अव्य० अतिशयेन पचति तर(म)प् आम्। अतिशयेन पाककर्त्तरि।

**पचन** पु० पच–कर्त्तरि ल्यु। १अग्नौ शब्दच० २पाककर्त्तरि त्रि० भावे ल्युट्। ३पाके न०। करणे ल्युट्। ४पाकसाधने त्रि०स्त्रियां ङीप्। “मांसपचन्या उखायाः” इति महाभाष्यम्। सा च ५वनवीजपूरके राजनि०।

**पचपच** पु० पचप्रकारः पच–प्रकारे द्वित्वम् पचस्य पाककर्त्तुर्यमादेरपि पचो वा। महादेवे। भा०शा०२८६अ०। “यस्य ब्रह्म च क्षत्त्रञ्चोभे भवत ओदनो मृत्युर्यस्योपसेचनम्” श्रुतेः “अत्ता चराचरग्रहणात्” शा०सू०न्यायात् तस्य तथात्वम्।

**पचप्रकुटा** स्त्री पच प्रकुट (प्रकर्षेण छिन्धि) इत्युच्यते यस्यां क्रियायाम् मयू० स०। पाकक्लेदनार्थनियोगक्रियायाम्।

**पचम्पचा** स्त्री पचं पाचकं पचति पच–खा० खश् मुम्। दारुहरिद्रायाम् अमरः।

**पचलवणा** स्त्री पच लवणमित्युच्यते यस्यां क्रियायाम् मयू० स०। लवणपाकार्थनिदेशक्रियायाम्।

**पचा** स्त्री पच–भावे अङ्। १पाके अमरः। अच्। २पाककर्त्र्यां स्त्रियां स्त्री।

**पचादि** पु० "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" पा० कर्त्तरि अच्प्रत्ययनिमित्ते धातुगणे स च गणः पा०ग० उक्तो यथा "पच वच वप वद चल पत नदट् भषट् प्लवट् चरट् गरट् चोरट् गाहट् सुरट् देवट् दोषट् रज मद क्षप सेव मेष कोष मेध नर्त्त व्रण दर्श दम्भ दर्प जार भर श्वपच" । आकृतिगणः ।

**पचि** पु०पच–इन् । १वह्नौ उज्ज्वलदत्तः धातुनिर्देशे इक् । २पचधातौ "इगर्थः पचिरिति" महाभाष्यम् ।

**पचेलिम** त्रि० स्वयमेव पच्यते पच–कर्मकर्त्तरि केलिम । १स्वयं पक्वे नैष० ११६४श्लो० । कर्त्तरि केलिम । २वह्नौ ३सूर्य्ये च पु० उणादिकोषः ।

**पचेलुक** त्रि० पच–बा० एलुक । सूदे पाककर्त्तरि त्रिका० ।

**पच्छस्** अव्य० पादं पादं शस् पद्भावः । पादं पादमिति वीप्सार्थक्रियाकर्मणि ऋ०उ०५।२।२७। न्युङ्खशब्दे च उदा० ।

**पच्य** त्रि० पच–कर्मणि यत् । पाकार्हे अकृष्टपच्यः कृष्टपच्यः इत्यादि । [पपञ्ज ।

**पञ्ज** आवरणे भ्वा०पर०सक०सेट् इदित् । पञ्जति अपञ्जीत् ।

**पज्ज** पु०स्त्री पद्भ्यां जायते जन–ड । शूद्रे हेमच० तस्य "पद्भ्यां शूद्रो अजायत" यजु० ३१।११ श्रुत्याः पादात् जातत्वोक्तेस्तथात्वम् स्त्रियां जातित्वात् ङीष् ।

**पज्झटिका** स्त्री "प्रतिपद यमकितषोडशमात्रा नवमगुरुत्व विभूषितगात्रा । पज्झटिकाया एष विवेकः क्वापि न मध्यगुरुर्गणएकः" छ०र० उक्ते मात्रावृत्तभेदे ।

**पज्र** पु० पजि–वा०रक् पृषो०नलोपः । १अङ्गिरसि ऋषौ "पज्रा वाङ्गिरसः" सायणः । २पापेन जीर्णे ३इहविलेखनयुक्ते च त्रि० । ऋ०१।१४६।५भा० । ४प्रार्जिते प्रकर्षेण सम्पादिते च त्रि० ऋ०६।५८।४भा० "पज्रहोषः प्रार्जितघोषस्तुतिस्तोमः" इति स्थितम् । पज्रियायम् गैमिकः अण् । पज्रीय आङ्गिरसवंश्ये पु० स्त्री ।

**पञ्चक** त्रि० पञ्चभिः क्रीतः कन् । १पञ्चभिः क्रीते । पञ्चैव स्वार्थे क ।२पञ्चसंख्यान्विते ३शकुनि पञ्चकाभिलसिते शास्त्रे त्रि० कौ०। पञ्च अंशो भागो वेतनं मूल्यं वाऽस्य(सोऽस्यांशवस्नभृतयः) पा०कन् ।३पञ्चांशयुक्ते ४पञ्चभृतियुक्ते ५पञ्चमूल्यान्विते च त्रि०।पञ्चास्मिन् इत्यादिक्रमेण दीयन्ते "तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते" पा०कन् । वृद्ध्यादित्वेन दीयमानपञ्चसंख्यायुक्ते ६शतादौ । वृद्धिर्दीयत इत्यादिक्रमेण प्रत्येकं सम्बन्धादेकवचनम् । पञ्चास्मिन् वृद्धिः आयः लाभः शुल्कउपदा वा दीयते । पञ्चकः शतिकः शत्यः शाहस्रः । उत्तमर्णेन मूलातिरिक्तम् ग्राह्यं वृद्धिः । ग्रामादिषु स्वामिग्राह्यो भागः आयः विक्रेता मूल्याद्धिकग्राह्यो लाभः । रक्षानिर्वेशो राजभागः शुल्कः" सि०कौ० "वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा" याज्ञ० "चतुर्थ्यर्थे उपसंख्यानम्" वार्त्ति०पञ्च इत्यादिना दीयन्ते ऽस्मै । ७वृद्ध्यादिना दीयमानपञ्चसंख्यान्वितद्रव्यसम्प्रदाने त्रि० । पञ्चमेन रूपेण ग्रहणम् "तावतिथं ग्रहणमिति लुग्वा" पा० कन् । पूरणार्थस्य वा लुक् । पञ्चमेन रूपेण कश्चित् ग्रहणे । "तावतिथेन गृह्णातीति कन् वक्तव्यः नित्यञ्च लुक्" वार्त्ति० उक्तः कन् पूरणार्थस्य वा लुक् । पञ्चमेन रूपेण ग्रहणकर्त्तरि त्रि० । पञ्चानामवयवम् कन् ग्रहणार्थे पु०न० । १०पञ्चसंख्यायाम् "एकं द्विकं त्रिकं चैव चतुष्कं पञ्चकं तथा" हरिका० ।११धनिष्ठान्त्यार्द्धादिपञ्चतारके ज्योतिषम् । १२रोगाग्निराजचौरमृत्युसंज्ञके बाणपञ्चके च "भौमार्करिक्तामायूने घरोनेऽङ्के विपञ्चके" मुहू० व्याख्याने पी० धारायां पक्षान्तरे विपञ्चक इत्यस्य बाणपञ्चकार्थकत्वोक्तेः बाणाश्च उपयमशब्दे १२६८पृ०दर्शिताः । पञ्चमागेनानीतत्वा तेषां तथात्वम् । पञ्चके निषिद्धानि यथा वशिष्ठः "वस्वपरार्द्धादिपञ्चकधिष्ण्ये कार्यं गेहस्य गोपनं नैव । दक्षिणादिग्गमनं दाहं प्रेतस्य काष्ठसंग्रहणमिति" नारदः "वस्वन्त्यार्द्धादिपञ्चे संग्रहं तृणकाष्ठयोः । याम्यदिग्गमनं शय्या न कार्यं स्तम्भगोपनम्" इति श्रीपतिरपि "वासवोत्तरदलादिपञ्चके याम्यदिग्गमनगेहगोपनम् । प्रेतदाहतृणकाष्ठसंग्रहं शय्यकावितनं च वर्जयेत्" त्रिविक्रमोऽपि "शय्यावितानं प्रेतादिक्रियां काष्ठतृणार्जनम् । याम्यादिग्गमनं कुर्य्यान्न चन्द्रे कुम्भमीनगे" इति ननु प्रेतदाहे किं नक्षत्रान्तरे मृतस्य धनिष्ठोत्तरार्द्धादिके दाहो न कार्य इति उत पञ्चकएव मृतस्य पञ्चके दाहो न कार्य इति आहोस्विद्यस्मिन् कस्मिंश्चित्क्षणे पञ्चकातिरिक्ते पञ्चके वा मृतस्य पञ्चके दाहो न कार्य इति त्रयः पक्षाः सम्भवन्ति तत्र यदि विज्ञायते नक्षत्रान्तरे मृतस्य पञ्चके दाहो न कार्य इति तत्र पञ्चके मरणस्य दोषवत्ता न प्राप्नोति तच्चायुक्तं यस्मादुक्तं ब्रह्मपुराणे "कुम्भमीनस्थिते चन्द्रे मरणं यस्य जायते । न तस्योर्ध्वगतिर्दृष्टा सन्ततौ न शुभं भवेत्" इति । अथ विज्ञायते पञ्चकएव मृतस्य पञ्चके दाहो न कार्य इति तदपि न, यतः, धनिष्ठापूर्वार्द्धे च मृतस्य

पञ्चके दाहनिषेधो न प्राप्नोति किन्तु दाहः कर्त्तव्य इत्येव प्राप्नोति । अस्त्वेवमिति चेन्न प्राप्तस्य दाहं बाधेदिति दाहस्यैव क्रियाकारकसम्बन्धेन प्राधान्यतो निषेधात्, किञ्च "त्रिगुणफलदोऽब्दो नष्टे हृते च मृतेऽपि वेति" त्रिपुष्करयोगफलवत् पञ्चकमरणनिषेध एव वक्तव्ये दाहनिषेधस्य पृथगुपादानात् कर्त्तव्यतापत्तिः । तस्माद्यस्मिन् कस्मिंश्चित्काले मृतस्य पञ्चके दाहो न कार्य इति तृतीयः पक्षः साधीयान् । प्राधान्याद्दाहस्यैव निषेध इत्युक्तं प्राक् अतः पञ्चकात् प्राक् मरणदोषो नास्ति तथा तत्रैव दाहोऽपि न दोषाय । यदि क्रियाकरणवशात् कालातिक्रमे सति पञ्चकप्रवृत्तिस्तदा शान्तिं विधाय दाहः कार्यः पञ्चके तु द्वयमपि निषिद्धं मरणं दाहश्चेति । उक्तं च ब्रह्मपुराणे "कुम्भमीनस्थिते चन्द्रे मरणं यस्य जायते । न तस्योर्ध्वगतिर्दृष्टा सन्ततौ न शुभं भवेत् । न तस्य दाहः कर्त्तव्यो विनाशः स्वेषु जन्तुषु । पञ्चकानन्तरं कार्यं कार्यं दाहादिकं खलु । अथ वा तद्दिने कार्यो दाहस्तु विधिपूर्वकम्" । रेवतीप्रान्ते मृतस्य रेवतीमपहाय दाहः कार्य इत्यर्थः धनिष्ठोत्तरार्द्धादिमृतस्य दाहस्तु सद्यएव पञ्चकस्य सकलकालव्यापित्वात्पर्युषितदाहनिषेधाच्च । स च दाहः शान्तिविधिपूर्वकः कार्यः । स च विधिरुक्तो ब्रह्मपुराणे "दाहदेशे शवं नीत्वा स्नापयेच्च प्रयत्नतः । दर्भाणां प्रतिमाः कार्याः पञ्चोर्णासूत्रवेष्टिताः । यवपिष्टेनानुलिप्तास्ताभिः सह शवं दहेत् । प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः । प्रेतहर्त्ता पञ्चमश्च नामान्येतानि च क्रमात्" इति । विशेषस्त्वन्त्येष्टिपद्धत्यादौ द्रष्टव्यः । नन्वत्र "त्रिगुणफलदो ह्यब्दो नष्टे हृते च मृतेऽपि वेति" मरणनिषेधएव वक्तव्यो किं पुनर्दाहनिषेधेन । उच्यते दोषाधिक्यसूचनार्थं हि पुनर्दाहनिषेधः अतएव पञ्चके मृतस्य पुत्तलकविधानं कृत्वा दाहः कार्यः ततः सूतकान्ते पुत्रादिभिः शान्तिकं च विधेयम् । उक्तं च गरुडपुराणे "ततो दाहः प्रकर्त्तव्यस्तैश्च पुत्तलकैः सह । सूतकान्ते तदा पुत्रैः कार्यं शान्तिकपौष्टिकम् । पञ्चके तु मृतो योऽसौ न गतिं लभते नरः । तिलांश्चैव हिरण्यं च तमुद्दिश्य घृतं ददेत्" इति । अतो नक्षत्रान्तरे मृतस्य पञ्चके दाहप्राप्तौ पुत्तलकविधिरेव भवति ततः सूतकान्ते शान्तिकं च । एवं पञ्चकान्ते मृतस्याश्विन्यां दाहप्राप्तौ पुत्तलकविधिर्न किन्तु सूतकान्ते शान्तिकमेव विधेयम्" पी॰ धा॰ ।

**पञ्चकपाल** त्रि॰ पञ्चसु कपालेषु संस्कृतः अण् तस्य लुक् । पञ्चकपालेषु संस्कृते पुरोडाशादौ समा॰ द्वि॰ । समाहृत पञ्चकपालेषु स्त्री ङीप् ।

**पञ्चकर्ण** त्रि॰ पञ्च कर्णा अस्य लक्षणत्वेऽपि विष्टादित्वात् न पूर्वपददीर्घः । पञ्चकर्णलक्षणयुक्ते ।

**पञ्चकर्मन्** न॰ पञ्चानां कर्मणां समाहारः "अनो नलोपश्च वा द्विगुः स्त्रियाम्" वार्त्ति॰ पक्षे नलोपाभावः । पञ्चानां कर्मणां उत्क्षेपादीनां १समाहारे । तानि च कर्माणि कर्मन्शब्दे १७२६पृ॰ उक्तानि । २वैद्यकोक्ते कर्मपञ्चकभेदे "वमनं रेचनं नस्यं निरूहश्चानुवासनम् । पञ्चकर्मेदमन्यच्च ज्ञेयमुत्क्षेपणादिकम्" । पक्षे नलोपे ङीपि पञ्चकर्मीत्यप्यत्र स्त्री ।

**पञ्चकषाय** पु॰न॰पञ्चविधः कषायः "जम्बुशाल्मलिवाट्यालं बदरं बकुलं तथा । एतेषां वल्कलरसः कषायः परिकीर्त्तितः" इत्युक्ते पञ्चानां १कषाये वल्कलरसे । कर्मधा॰ संज्ञात्वात् न द्विगुः । २पञ्चसु कषायेषु ब॰व॰ । "जम्बु शाल्मलि वाट्यालं बदरं बकुलं तथा । कषायाः पञ्च विज्ञेयाः देव्याः प्रीतिकराः शुभाः" दुर्गोत्सवत॰ ।

**पञ्चकाम** पु॰ ब॰व॰ । कर्म॰ संज्ञात्वात् न द्विगुः । "पञ्चकामा इमे देवि! नामानि शृणु पार्वति । काममन्मथकन्दर्पमकरध्वजसंज्ञकाः । मीनकेतुर्महेशानि! पञ्चमः परिकीर्त्तितः" तन्त्रसा॰ उक्तेषु पञ्चसु कामभेदेषु ।

**पञ्चकृत्य** पु॰पञ्चं विस्तृतं कृत्यं यत्र । पक्कोडुम्बरे राजनि॰

**पञ्चकृष्ण** पु॰ पञ्चसु कृष्णः । कीटभेदे कीटशब्दे दृश्यम् ।

**पञ्चकोण** न॰ पञ्च कोणा यस्य । पञ्चकोणात्मके १क्षेत्रभेदे २तन्त्रोक्ते यन्त्रभेदे ३लग्नावधिनवमपञ्चमात्मके स्थाने च

**पञ्चकोल** न॰ "पञ्चकोलं कणामूलं कृष्णाचव्याग्निनागरैः" शब्दच॰ उक्ते पाचनविशेषे अस्य गुणाः "पञ्चकोलं रसे पाके कटुकं रुचिकृन्मतम् । तीक्ष्णोष्णं पाचनं श्रेष्ठं दीपनं कफवातनुत् । गुल्मप्लीहोदरानाहशूलघ्नं पित्तकोपनम्" भावप्र॰उक्ताः । "पिप्पलीपिप्पलीमूलं चव्यचित्रक नागरम् । दीपनीयः स्मृतो वर्गः कफानिलगदापहः" चक्रदत्तोक्ते २पाचनभेदे च ।

**पञ्चकोष** पु॰ संज्ञात्वात् कर्म॰ । वेदान्तिकसिद्धे अन्नमयादिषु पञ्चसु कोषवदाच्छादकेषु देहादिषु । तेषां स्वरूपादिकञ्च विवेकचूडामणौ दर्शितं यथा "कोषैरन्नमयाद्यैः पञ्चभिरात्मा न संवृतो भाति । निजशक्तिसमुत्पन्नैः शैवालपटलैरिवाम्बु वापीस्थम्" इत्युपक्रमे "देहोऽयमन्नभवनोऽन्नमयस्तु कोष-

प्राणेन जीवति विनश्यति तद्विहीनः। त्वक्चर्ममांसरुधिरास्थिपुरीषराशिर्नायं स्वयं भवितुमर्हति नित्यशुद्धः”। “कर्मेन्द्रियैः पञ्चभिरञ्चितोऽयं प्राणो भवेत् प्राणमयस्तु कोषः”। “ज्ञानेन्द्रियाणि च मनश्च मनोमयः स्यात् कोषो ममाहमिति वस्तुविकल्पहेतुः। संज्ञादिभेदकलनाकलितो बलीयांस्तत्पूर्वकोषमभिपूर्य विजृम्भते यः। पञ्चेन्द्रियैः पञ्चभिरेव होतृभिः प्रचीयमानो विषयाज्यधारया। जाज्वल्यमानो बहुवासनेन्धनैर्मनोमयाग्निर्दहति प्रपञ्चम्”। “बुद्धिर्बुद्धीन्द्रियैः सार्द्धं सवृत्तिः कर्तृलक्षणः। विज्ञानमयकोषः स्यात् पुंसः संसारकारणम्। अनुव्रजच्चित्प्रतिबिम्बशक्तिर्विज्ञानसंज्ञः प्रकृतेर्विकारः। ज्ञानक्रियावानहमित्यजस्रं देहेन्द्रियादिष्वभिमन्यते भृशम्” आनन्दमयकोषस्तु आनन्दमयकोषशब्दे ७२६ पृ० उक्तः।

**पञ्चक्रोशी** स्त्री पञ्चानां क्रोशानां समाहारः। काश्याः दैर्घ्यविस्ताराभ्यां पञ्चसु क्रोशेषु “वाराणस्यां कृतं पापं पञ्चक्रोश्यां विनश्यति। पञ्चक्रोश्यां कृतं पापमन्तर्गेहे विनश्यति” काशीख०। तदभेदात् पञ्चक्रोशीदैर्घ्यायामायां २काश्याञ्च।

**पञ्चक्षारगण** म० ह्रत०। पञ्चानां क्षाराणां गणः उत्तरद्विगुः। वैद्यकपञ्चके “क्षारैस्तु पञ्चभिः प्रोक्तः पञ्चक्षाराभिधो गणः। काचसैन्धवसामुद्रविट सौवर्चलैः समैः। स्यात् पञ्चलवणं तच्च वल्लीपितं महाफ्लम्” राजनि०।

**पञ्चगङ्ग** अव्य० पञ्चानां गङ्गानां नदीनां समाहारः “नदीभिश्च” पा० अव्ययी० “समाहारे चायमिष्यते” सि०कौ०। समाहृतासु पञ्चसु नदीषु भा०द्रो०५४अ०। तत्र पञ्चगङ्गेषु इत्यत्र सप्तम्या वा न लुक्। २काशीस्थे पञ्चनदतीर्थे पञ्चनदशब्दे दृश्यम्।

**पञ्चगण** पु० पञ्चानां गणो यत्र। ‘विदारी गन्धा बृहती पृश्निपर्णी निदिग्धिकाः’ राजनि० उक्ते विदार्यादीनां पञ्चानां गणे।

**पञ्चगव** न० पञ्चानां गवां समाहारः टच्समा० क्लीवता च। पञ्चानां गवां समाहारे। पञ्च गावो धनमस्य उत्तरपदद्विगौ टच् समा०। पञ्चसंख्यान्वितगवधनस्वामिनि त्रि०।

**पञ्चगव्य** न० गोविकारः यत् पञ्चगुणितं गव्यम्। गोमूत्रादि पञ्चके तस्य प्रमाणादि हेमा०व्र०ख० उक्तं यथा स्कन्दपुराणे विष्णुना “तथा वरुणेन्द्रवाय्वर्कदैवतानि यथाक्रमम्। विद्ध्यथाति कुशोदञ्च पितृराजाधिदैवतम्। प्रोक्ताभावे त्वथैतानि कपिलायाः प्रकल्पयेत्। गोमूत्रभागस्तस्यार्द्धं शकृत् क्षीरस्य च त्रयम्। द्वयं दध्नो घृतस्यैकमेकश्च कुशवारिजः। गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम्। आप्यायस्वेति च क्षीरं दधि क्राव्णेति वै दधि। तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम्। एभिस्तु पञ्चभिर्युक्तं पञ्चगव्यं प्रचक्षते। एतदेव महापुण्यं ब्रह्मकूर्चमिति स्मृतम्”। व्यासेन “गोमूत्रं ताम्रवर्णायास्त्वेकमाषकसङ्ख्यया। पुण्यं च वरुणदैवत्यं गायत्र्याचाभिमन्त्रितम्। गोमयं श्वेतवर्णायाश्चतुर्माषकमात्रया। गृह्णीयादग्निदैवत्यं गन्धद्वारेति वै शनैः। क्षीरं काञ्चनवर्णायाः सोमदैवत्यमेव च। आप्यायस्वेति मन्त्रेण माषद्वादशसम्मितम्। गृह्णीत वायुदैवत्यं कृष्णवर्णोद्भवं दधि। दशमाषमात्रकन्तु दधिक्राव्ण इति स्मरन्। घृतं तु नीलवर्णायाः पञ्चमाषकसंख्यया। गृह्णीत सूर्यदैवत्यं तेजोऽसीति जपन् क्रमात्। शतत्रयं माषमानं चत्वारिंशच्च पञ्च च। कुशोदकस्य गृह्णीयाद्देवस्य त्वेति कीर्त्तयन्। ताम्रपात्रे पलाशे वा पात्रे मिश्रीकृतञ्च तत्। आपो हि ष्ठेति चालोड्य प्रणवेन पिबेच्च तत्। उदङ्मुखश्चिराचम्य ततो गच्छेत् स्वकं गृहम्। तत्रापि होमे प्राणवश्च कृत्वा दद्याच्च दक्षिणाम्। ब्राह्मणस्य यथा शक्त्या शोभनं तु मनोहरम्। गवां वर्णास्तु शुक्लाद्याः सन्ति देशेषु यत्र न। तत्र वर्णविभागेन पञ्च गव्यानि चाहरेत्। वर्णालाभान्न दोषोऽस्ति मात्राहीनं विवर्जयेत्। व्याध्यार्त्त दूषितानां च दधिक्लृप्तपयांसि च। केशकीटास्थिभक्ष्याणामभक्ष्यैः संस्पृशां तथा। रोगार्त्तानां च चूकार्त्ति स्रुताण्डानाममङ्गलम्। (स्रुताण्डा स्रुतगर्भाः) निष्कृतत्वेन वन्ध्यानां कृशानां कृमिभिस्तथा। अमानप्रतिदत्तानि सन्धिनीप्रभवानि च। शुद्धभाण्डे मनोज्ञे च भूमावपतितानि च। ग्रहीतव्यानि विविधं खेदं तासां न कारयेत्”। ब्रह्मकूर्चव्रतमिदं सर्वपाप प्रणाशनम्। सर्वकामप्रदं पुंसां स्वर्गारोग्ययशःप्रदम्। महतामपि पापानां नाशनं जीववर्द्धनम्”।

**पञ्चगव्यघृत** सुश्रुतोक्ते पक्वघृतभेदे “त्रिफलां चित्रकं मुस्तं हरिद्रे द्वे विषां वचाम्। विडङ्गं त्र्यूषणं चव्यं च सुरदारु तथैव च। पञ्चगव्यमिदं पानाद्विषमज्वरनाशनम्। पञ्चगव्यघृते गर्भात् पाच्यमन्यद्घृतेषु च। वज्राय परं पाच्यं गुडूच्या तद्देव तु। जीर्णज्वरे च

शोफे च पाण्डुरोगे च पूजितम्" । [भिर्गोभिः क्रीते ।

**पञ्चगु** त्रि॰ पञ्चभिर्गोभिः क्रीतः ठक् तस्य लुक् ह्रस्वः । पञ्च-

**पञ्चगुण** पु॰ पञ्चगुणितो गुणः कर्म॰ । १शब्दस्पर्शरूपरसगन्ध-रूपेषु गुणेषु । पञ्च गुणा यस्याः । २पृथिव्यां स्त्री मेदि॰ "यो यो यावतिथस्तेषां स स तावद्गुणः स्मृतः" मनुना सामान्यत उक्तेः पृथिव्या पञ्चमत्वात् पञ्चगुणत्वम् । ३त॰ । ३पञ्चभिर्गुणिते ४पञ्चप्रकारे च संख्या॰ रघु॰ ।

**पञ्चगुप्त** पुंस्त्री करचरणयोश्चतुर्ष्वं शिरश्चेति पञ्च गुप्तान्यस्य । १कच्छपे त्रिका॰ स्त्रियां ङीप् । २चार्वाकदर्शने त्रिका॰ ।

**पञ्चगुप्तरसा** स्त्री पञ्चधा गुप्तो रसोऽस्याः । स्पृक्कायां राजनि॰ । [उक्ते षोडशाक्षरपादके छन्दोभेदे ।

**पञ्चचामर** न॰ "प्रमाणिकापदद्वयं वदन्ति पञ्चचामरम्" वृ॰र॰

**पञ्चचितिक** पु॰ पञ्च चितयः प्रस्तारा यस्मिन् । १अग्निभेदे "पञ्चकृत्वः सादयति पञ्चचितिकोऽग्निः" शत॰ ब्रा॰ ७।१। १।७२ "पञ्चकृत्व इति मध्ये उपधेयेष्टकाचतुष्टयस्यैकस्याः सादनायान्यासां चत्वारीति पञ्चचितयो भवन्ति" भा॰ ।

**पञ्चचोर** पु॰ पञ्च चोरा गणस्य । मञ्जुघोषे त्रिका॰ ।

**पञ्चचूडा** स्त्री अप्सरोभेदे भा॰व॰ १६६ श्लोके

**पञ्चजन** पु॰ पञ्चभिः भूतैर्जन्यते जन-घञ्, न वृद्धिः । १मनुष्ये अमरः । २मनुष्यसम्बन्धिनि प्राणादौ ३मनुष्यतुल्ये देवादौ ४मनुष्यभेदे ब्राह्मणादौ च शा॰सू॰ भाष्यम् तथाहि "यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठितः" तद्वृतवेदमन्त्रे "पञ्च पञ्च शब्दशब्देन पञ्चविंशतितत्त्वान्युच्यन्ते" इति सांख्यमतनिराकरणेन पञ्चजनशब्दस्य प्राणादिपरत्वं समर्थितं दिङ्मात्रमत्रोच्यते

"कथं तर्हि पञ्च पञ्चजना इति, उच्यते, "दिक्संख्ये संज्ञायामिति" पा॰ विशेषस्मरणात् संज्ञायामेव पञ्चशब्दस्य जनशब्देन समासः, ततश्च रूढत्वाभिप्रायेणैव केचित् पञ्चजना नाम विवक्ष्यन्ते, न साङ्ख्यतत्त्वाभिप्रायेण, ते कतीत्यस्यामाकाङ्क्षायां पुनः पञ्चेति प्रयुज्यते, पञ्चजना नाम केचित्, ते च पञ्चेत्यर्थः सप्तर्षयः सप्तेति यथा । के पुनस्ते पञ्चजना नामेति तदुच्यते । "प्राणादयो वाक्यशेषात्" शा॰सू॰ "यस्मिन् पञ्च पञ्चजना इत्यत उत्तर-स्मिन्मन्त्रे ब्रह्मस्वरूपनिरूपणाय प्राणादयः पञ्च निर्दिष्टाः "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः" इत्यत्र वाक्यशेषगताः सन्निधानात् पञ्चजना विवक्ष्यन्ते । कथं पुनः प्राणादिषु पञ्चजन-शब्दप्रयोगः तत्त्वेषु वा कथं जनशब्दप्रयोगः समाने तु प्रसिद्ध्यतिक्रमे वाक्यशेषवशात् प्राणादय एव ग्रही-तव्या भवन्ति जनसम्बन्धाच्च प्राणादयो जनशब्दभाजो भवन्ति । जनवचनश्च पुरुषशब्दः प्राणेषु प्रयुक्तः, "ते वा एते पञ्च ब्रह्मपुरुषाः" इति, अत्र "प्राणो ह पिता प्राणो ह माता" इत्यादि च ब्राह्मणम् । समासबलाच्च समुदायस्य रूढत्वमविरुद्धम् । कथं पुनरसति प्रथम-प्रयोगे रूढिः शक्याश्रयितुं शक्या, उद्भिदादिवदित्याह । प्रसिद्धार्थसन्निधानेन ह्यप्रसिद्धार्थः शब्दः प्रयुज्यमानः समभिव्याहारात् तद्विषयो नियम्यते यथोद्भिदा यजेत, यूपं छिनत्ति, वेदिं करोतीति । तथाऽयमपि पञ्चजन-शब्दः समासान्वाख्यानादवगतसंज्ञाभावः संज्ञ्याकाङ्क्षी वाक्यशेषसमभिव्याहृतेषु प्राणादिषु वर्त्तिष्यते । केचित्तु देवाः पितरो गन्धर्वा असुरा रक्षांसि च पञ्च पञ्च जना व्याख्याताः । अन्ये चत्वारो वर्णा निषादपञ्चमाः परि-गृहीताः" । तत्परिपक्षेऽपीह न कश्चिद्विरोधः । आचार्यस्तु न पञ्चविंशतेस्तत्त्वानामिह प्रतीतिरस्तीत्येवं-परतया प्राणादयो वाक्यशेषादिति जगाद" ।

५दैत्यभेदे च यस्यास्थ्ना कृष्णस्य पाञ्चजन्यः शङ्खोजातः । पाञ्चजन्यशब्दे दृश्यम् । ६सञ्जयन्त्यपुत्रे हरिवं॰२२अ॰ अंशुमतः पितरि सगरपुत्रस्य ७पुत्रभेदे १५॰अ॰ । ८प्रजापतिभेदे भाग॰ ६।४।४६ विश्वावसुदुहितरि भरतस्य ९पत्न्यां स्त्री ङीप् । भाग॰ ५।७।१

**पञ्चजनीन** पञ्चसु जनेषु व्यापृतः ख । भण्डे हला॰ ।

**पञ्चजीरकगुड** पु॰ चक्रदत्तोक्ते जीरकादिभिः पक्वे गुडभेदे "जीरकं हवुषा धान्यं शताह्वा सुरदारु च । यमानी त्र्यूषणो हिङ्गुपत्रिका कारवल्लकम् । पिप्पली पिप्पली-मूलमजमोदाश्च वाष्पिका । चित्रकस्य पलांशानि तथान्यच्च चतुःपलम् । कशेरुकं नागरञ्च कुष्ठं दीप्यकमेव च । गुडस्य च शतं दद्यात् घृतप्रस्थं तथैव च । क्षीरद्विप्रस्थ-संयुक्तं शनैर्मृद्वग्निना पचेत् । पञ्चजीरक इत्येष सूतिकानां प्रशस्यते । गर्भार्थिनीनां नारीणां बृंहणीये समाहृते । विंशतिं व्यापदो योनेः कासं श्वासं ज्वरं क्षयम् । हलीमकं पाण्डुरोगं दौर्गन्ध्यं बहुमूत्रताम् । हन्ति पीनोन्नतकुचाः पद्मपत्रायतेक्षणाः । उपयोगात् स्त्रियो नित्यमलक्ष्मीमलवर्जिताः" ।

**पञ्चज्ञान** पु॰ पञ्चानां पदार्थानां ज्ञानमस्य । १बुद्धे त्रिका॰ २पाशुपतदर्शनाभिज्ञे च नकुलीशशब्दे ४१७५ पृ॰ दृश्यम् ।

**पञ्चत्** पु० पञ्च परिमाणमस्य वर्गस्य, पञ्चन्+ति० । पञ्चसं-ख्यायुक्ते वर्गे

**पञ्चतक्षन्(क्षी)** न० पञ्चानां तक्ष्णां समाहारः अनन्तत्वात् नलोपे वा ङीप् । पञ्चानां तक्ष्णां समाहारे पक्षे वा ङीपि स्त्री ।

**पञ्चतत्त्व** पु०न० पञ्चानां तत्त्वानां समाहारः । पञ्चसु भूतेषु स्वरोदयः । "मद्यं मांसं तथा मत्स्यो मुद्रा मैथुनमेव च । पञ्चतत्त्वमिदं प्रोक्तं देवि ! निर्वाणहेतवे । मकार पञ्चकं देवि ! देवानामपि दुर्लभम्" "पञ्चतत्त्वविहीनानां कलौ सिद्धिर्न जायते" तन्त्रसा० । वैष्णवानान्तु "गुरु-तत्त्वं मन्त्रतत्त्वं मनस्तत्त्वं सुरेश्वरि ! । देवतत्त्वं ध्यानतत्त्वं पञ्चतत्त्वं प्रकीर्त्तितम्" निर्वाणतन्त्रे ।

**पञ्चतन्त्र** न० तन्त्रम् । नीतिशास्त्रभेदे ।

**पञ्चतन्मात्र** न० पञ्चगुणितं तन्मात्रम् । पञ्चगुणिते शब्दस्पर्शरूपरसगन्धात्मके १तन्मात्रे २सूक्ष्मपञ्चभूतरूपे आकाशादौ तन्मात्रशब्दे ३२२८ पृ० दृश्यम् ।

**पञ्चतप** पु० पञ्चभिस्तेजस्विभिः अग्निचतुष्टयसूर्यैस्तपति तप—अच् । पञ्चभिस्तपस्यति तपस्विभेदे "ग्रीष्मे पञ्च तपास्तथा" भा०अनु० १४२अ० अस्तन् । पञ्चतपस् तत्रार्थे भावः २।५।१ सौ०। पञ्चातप शब्दे दृश्यम् ।

**पञ्चतय** न० पञ्चानामवयवं पञ्च अवयवायस्य वा अवयवे तयप् । १पञ्चसंख्यायां २तदन्विते त्रि० स्त्रीत्वे ङीप् । "इत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः" पा० सू० ।

**पञ्चता** स्त्री पञ्चानां भूतानां भावः तद्भावापत्तिः । आरम्भक पञ्चभूतानां १तद्भावापत्तौ उपचारात् २मृत्यौ च ।

**पञ्चतिक्त** न० पञ्चगुणितं तिक्तम् । "निम्बामृता वृषपटोल निदिग्धिकाश्चेति" चक्रदत्तोक्ते पञ्चविधे तिक्तद्रव्यभेदे

**पञ्चतीर्थी** स्त्री पञ्चानां तीर्थानां समाहारः ङीप् । तीर्थपञ्चके सा च तीर्थभेदे भिन्नभिन्नरूपा तत्र काशीस्था यथा "ज्ञानवापीमुपस्पृश्य नन्दिकेशं ततोऽर्चयेत् । तारकेशं ततोऽभ्यर्च्य महाकालेश्वरं ततः । ततः पुनर्दण्डपाणि-रित्येषा पञ्चतीर्थिका" काशीख०१००अ० । पुरुषोत्तमस्था यथा "मार्कण्डेयवटे कृष्णे रौहिणेये महोदधौ । इन्द्रद्युम्नसरः स्नात्वा पुनर्जन्म न विद्यते" गयास्था यथा उत्तरमानसदक्षिणमानसकनखलधर्मवनफल्गु-तीर्थात्मिका । तत्र वायुपु० उदीच्यां प्रसिद्धमित्युक्तम् वह्निपु० "उदीच्यां मुण्डपृष्ठस्य देवर्षिगणसेवितम् । नाम्ना धर्मवनं तीर्थं त्रिषु लोकेषु विश्रुतम्" इत्युक्तं तेन धर्मवनस्यैव तत्र ग्राह्यता तेनैव पञ्चसंख्यायाः पूरणात् । नानास्थानस्थिता वराहपु० उक्ता यथा "पृथिव्यां यानि तीर्थानि सर्वाण्येवाभिषेचनात् । तत् पञ्चतीर्थीस्नानेन समं नास्त्यत्र संशयः । एकादश्यां च विश्रान्तौ १ द्वादश्यां शौकरे२ तथा । त्रयोदश्यां नैमिषे३ च प्रयागे४ च चतुर्दशी । कार्त्तिक्यां पुष्करे५ चैव कार्त्तिकस्य सितासिते । कालेष्वेषु नरः स्नात्वा सर्वं पापं व्यपोहति" ।

**पञ्चत्व** न० पञ्चानां भावः तद्भावापत्तिः । १पञ्चभूतानामारम्भकसंयोगनाशात् स्वभावप्राप्तौ २तदुपलक्षिते मरणे अमरः

**पञ्चथ** त्रि० पञ्चानां पूरणः । "थट् च छन्दसि" पा० वेदे पूरणे थट् । पञ्चसंख्यापूरणे लोके तु पञ्चम इत्येव

**पञ्चदक** पु० देशभेदे कोकङ्कणाः पञ्चदका वमना ह्यवरास्तथा" मार्कपु० ५८अ० । सोऽभिजनोऽस्य तस्य राजा वा अञ् । पाञ्चदक पित्रादिक्रमेण तद्देशवासिनि तन्नृपे च बहुषु तस्य लुकि । उक्तः प्रयोगः ।

**पञ्चदश** त्रि०पञ्चदशानां पूरणः डट् । १पञ्चदशसंख्यापूरणीके स्त्रियां ङीप् । सा च पञ्चदशपूरणतिथिभेदे २पौर्णमास्याम् ३अमावास्यायाम् विद्यारण्यप्रणीते वेदान्तप्रकरणभेदे च । एवं पञ्चविंशादयोऽपि पञ्चाधिकविंशतिसंख्यापूरणे त्रि० स्त्रियां ङीप् । इयांस्तु विशेषः विंशत्यादौ पूरणे तमप् वा । पञ्चविंशतितमादयोऽपि तत्रार्थे त्रि० । तैयुते शतादि "दृशादेर्डोयुते शतादौ" सम्ब० ड । तैर्युते शतादौ त्रि० स्त्रियां टाप् इति भेदः ।

**पञ्चदशन्** त्रि० ब०व० पञ्चाधिका दश । (पनेर) १पञ्चाधिकदशसंख्यायां २ततसंख्येये च ।

**पञ्चदशाह** पु० पञ्चदशगुणितमहः टच् समा० । अह्नान्तत्वात् पुंस्त्वम् । पञ्चदशगुणिते अह्नि । "वैश्ये पञ्चदशाहः स्यात्" मनुः ।

**पञ्चदशाहिक** त्रि० पञ्चदशाहः साधनकालतयाऽस्त्यस्य ठन् । पञ्चदशाहसाध्ये व्रतभेदे "पिण्याकदधिसक्तूनां प्रासश्च प्रतिवासरम् । एकैकमुपवासः स्यात् सौम्यकृच्छ्रः प्रकीर्त्तितः । एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् । तुलापुरुष इत्येषः ज्ञेयः पञ्चदशाहिकः" अत्रिसं० ।

**पञ्चदशिन्** त्रि० पञ्चदश परिमाणमस्य डिनि । पञ्चदश परिमाणयुक्ते शत०ब्रा०१३।२।५।१ उदा०स्त्रियां ङीप् । एवं पञ्चविंशत्यादि परिमाणमस्य डिनि । पञ्चविंशिन् प्रभृतयः पञ्चविंशत्यादि परिमानयुक्ते त्रि० स्त्रियां ।

**पञ्चदीर्घ** त्रि॰ पञ्चसु अवयवेषु दीर्घः। "बाहू नेत्रद्वयं कुचिदन्तु नासे तथैव च। स्तनयोरन्तरञ्चैव पञ्चदीर्घः प्रशस्यते" इत्युक्तेषु पञ्चदीर्घत्वप्रशस्तलक्षणयुक्ते पुरुषे

**पञ्चदेवता** स्त्री संज्ञात्वात् कर्म॰। "आदित्यं गणनाथं च देवीं रुद्रं च केशवम्। पञ्चदैवतमित्युक्तं सर्वकर्मसु पूजयेत्" इत्युक्तेषु पञ्चसु देवेषु। केचिद्गणादिविनायकादित्वमिच्छन्ति आर्यास्तु आदित्यादित्वं मन्यन्ते इति भेदः।

**पञ्चन्** त्रि॰ पचि—कनिन्। १पञ्चसंख्यायां २तत्संख्यायुक्ते च पञ्चसंख्यायुक्ताश्च कतिचित् पदार्था एकादिशब्दे १५॰६ पृ॰ दर्शिताः। पञ्चकशब्दे दृश्यम्।

**पञ्चनख** पुंस्त्री॰ पञ्च नखा यस्य। १गजे २कूर्मे च हेमच॰। ३व्याघ्रे राजनि॰। ४शशकादिषु च "शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चमः" भक्ष्यपञ्चनखोक्तौ स्मृतिः "श्वाविधं शल्लकं गोधां खड्गिकूर्मशशांस्तथा। भक्ष्यान् पञ्चनखेष्वाहुः" मनुः।

**पञ्चनद** पु॰ पञ्च नद्यः सन्त्यत्र अच्। (पञ्जाब) प्रसिद्धे १देशभेदे। स च देशः अपरस्यां दिशि कूर्मविभागशब्दे २१८८पृ॰ विवृतिः। "वितस्ता चन्द्रभागा च विपाशैरावती तथा। शतद्रुश्चेति विज्ञेयाः पञ्च नद्यः शुभावहाः"। सोऽभिजनोऽस्य तस्य राजा वा अण्। पाञ्चनद पित्रादिक्रमेण तद्वासिनि तन्नृपे च बहुषु अणो लुक्। भा॰आ॰ ७अ॰। पञ्चानां नदीनां समाहारः। "नदीभिश्च" अव्य॰तत्पुरुषः। २पञ्चनदीसमाहारे तत्र काशीस्थनदीपञ्चकरूपं तीर्थं "किरणाधूतपापे च तस्मिन् धर्मनदे शुभे। अवन्त्यौ पापसंहन्त्र्यौ वाराणस्यां शुभद्रवे। ततो भागीरथी प्राप्ता तेन देवेनापि सह। भागीरथी समायाता यमुना च सरस्वती। किरणा धूतपापा च पुण्यतीर्थे सरस्वती। गङ्गा च यमुना चैव पञ्च नद्यः प्रकीर्त्तिताः। अतः पञ्चनदं नाम तीर्थं त्रैलोक्यविश्रुतम्" काशीख॰५९अ॰।

**पञ्चनिम्ब** न॰ "पञ्चनिम्बन्तु तत्पुष्पमूलत्वक्फलच्छदैरिति" शब्दच॰ उक्ते निम्बस्य पुष्पादिपञ्चके। [शब्दरत्ना॰।

**पञ्चनी** स्त्री पचि—ल्युट्। शारिफलकायाम् (पाशारछक)

**पञ्चपक्षिन्** पु॰ शिवोक्ते पक्षिपञ्चकाधिकारेण प्रश्नादिज्ञानार्थे शाकुनशास्त्रभेदे "अक्षरं पक्षिभूतञ्च दिग्दैवतदिनानि च। कालं वर्णं बलं मित्रं धातुजिह्वादिकं क्रमात्। प्रश्नादिजातिवर्णञ्च देहसङ्कल्पनादिभिः। चिन्तितान्यपि सर्वाणि वक्ष्यन्ते वर्णकैः क्रमात्। शकुनस्य क्रमागत्या द्यूते युद्धे जयादिषु। आरूढप्रश्नेभ्यः प्रथमाक्षरतोऽपि वा। अकारादिस्वराणाञ्च पञ्चानाञ्च विचारयेत्। अस्य नामाक्षरस्यादौ स्वरारूढं समुत्सृजेत्। प्रच्छकस्य वचः श्रुत्वा पाद्योवर्णः स्वरस्तथा। स्वरेण कल्पयेद्वारं वारात् पक्षी प्रजायते। पक्षिणो जायते वाक्यं वाक्याच्च फलसम्भवः। अकाराद्या ओकारान्ताः स्वराः पञ्च प्रकीर्त्तिताः। भुक्त्यर्थं कल्पयेद्रूपं स्वरास्ते पक्षिरूपिणः। अकारः गृध्र्रेण आख्यात इकारः पिङ्गलस्तथा। उकारो वायसश्चैव एकारस्ताम्रशेखरः। ओकारो नीलकण्ठश्च स्वरास्ते पक्षिसंज्ञकाः। अकारः पूर्वदिग्भागे इकारश्चैव दक्षिणे। उकारः पश्चिमे ज्ञेय एकारश्चोत्तरे तथा। शेषस्थानेषु सर्वेषु ओकारः परिकीर्त्तितः। प्राक् गृध्रेणः, पिङ्गलो याम्ये, पश्चिमे काक उच्यते। उत्तरे ताम्रचूडश्च, कलापी मध्यगो मतः" इत्यादि अस्य कलादिकं तत्र दृश्यम् विस्तरभयान्नोक्तम्।

**पञ्चपञ्चिनी** स्त्री पञ्च पञ्च ऋचः परिमाणमस्याः डिनि। पञ्चदशस्तोमस्य विष्टुतिभेदे "अथ पञ्चदशस्तोमस्य तिस्रो विष्टुतयः। तत्र प्रथमं पञ्चपञ्चिन्याख्यां विष्टुतिं दर्शयति" भा॰। "पञ्चभ्यो हिङ्करोति स तिसृभिः स एकया स एकया, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिः स एकया, पञ्चभ्यो हिङ्करोति स एकया स एकया स तिसृभिः, पञ्चपञ्चिनी पञ्चपञ्चदशस्य विष्टुतिः" ताण्ड्य॰ब्रा॰ ४।१। "बहुत्वेषु स्तोत्रेष्वेकैकं तृचात्मकं सूक्तं तस्मिन् तृचे पञ्चदशसंख्या ऋचः सम्पादनीयाः। तत्र सम्पादनम् आवृत्तिमन्तरेण न सम्भवतीत्यावृत्तिप्रकार इहोपदिश्यते त्रिभिः पर्यायैः स्तोत्रमावर्त्तनीयम्। अत्र आयाहीत्येषा सूक्ते प्रथमा ऋक् "तन्त्वा समिद्भिरिति" द्वितीया "स नः पृथ्व्विति" तृतीया तासु प्रथमामृचं प्रथमे पर्याये त्रिरावर्त्तयेत् इतरे द्वे सकृत् सकृत्। द्वितीये पर्याये मध्यमां त्रिरभ्यसेत्, तृतीये पर्याये अन्तिमां त्रिरभ्यसेत्। एवं स्तोत्रैकैकस्य आवृत्तिः पञ्चधा सम्पद्यते। एषा पञ्चपञ्चिनी एकैकस्मिन् पर्याये पञ्चर्चो भवन्तीति। पञ्चपञ्चिन्येतत्संज्ञा पञ्चदशस्तोमस्यैषा विष्टुतिः"।

**पञ्चपत्र** पु॰पञ्च पत्राण्यस्य। (कान्दला) वृक्षभेदे राजनि॰

**पञ्चपदी** स्त्री पञ्च पादा अस्याः अन्त्यलोपे ङीपि पद्भावः। १ऋग्भेदे आश्व॰ श्र॰ १।७।१९ उदा॰। कुशद्वीपस्थे २नदीभेदे भाग॰५।२०।२९ उदा॰।

**पञ्चपर्णिका** स्त्री पञ्च पञ्च पर्णान्यस्याः कप् कापि अतइत्त्वम् । गोक्षुरक्षुपे राजनि० ।

**पञ्चपर्वन्** न० संज्ञात्वात् कर्म० । "चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा । पर्वाण्येतानि राजेन्द्र ! रविसंक्रान्तिरेव च" परिभाषितेषु अष्टम्यादिषु

**पञ्चपल्लव** न० पञ्चानां पल्लवानां समाहारः पात्रा० । वृक्षविशेषपञ्चकपल्लवे तत्र गन्धकर्मणि "आम्रजम्बूकपित्थानां बीजपूरकविल्वयोः । गन्धकर्मणि सर्वत्र पत्राणि पञ्चपल्लवम्" शब्दचन्द्रिकोक्तम् । वैदिककर्मणि स्थाप्यघटे देयन्तु "अश्वत्थोडुम्बरप्लक्षचूतन्यग्रोधपल्लवाः । पञ्चपल्लवमित्युक्तं सर्वकर्मणि शोभनम्" ब्रह्मपु० उक्तं ग्राह्यम् । तान्त्रिककर्मणि तु "पनसाम्रं तथाश्वत्थं वटं बकुलमेव च । पञ्चपल्लवमुक्तं च मुनिभिस्तन्त्रवेदिभिः" । तेषां फलविशेषस्तत्र दृश्यः । कर्म० । पञ्चभङ्गादयोऽप्यत्र न०व० ।

**पञ्चपात्र** न० पञ्चानां पात्राणां समाहारः पात्रा० न ङीप् । १समाहृतेषु पञ्चसु पात्रेषु । पञ्च पात्राणि दानोद्देश्यानि यत्र । वैश्वदेवपित्रादित्रयरूपपञ्चदैवते २श्राद्धे तच्च अमावास्याप्रेतपक्षकृतोद्देश्यकश्राद्धं सपिण्डीकरणञ्च एतेषु मातामहपक्षाभावात् पञ्चदैवतत्वम् । तथान्वष्टकाश्राद्धमपि तत्र पित्रादिस्थाने मात्रादित्रिकोद्देश्यत्वात् तथात्वम् ।

**पञ्चपाद्** त्रि० पञ्च पादा अस्य अन्तलोपः समा० । १पञ्चपादयुक्ते स्त्रियां ङीपि पद्भावः । पञ्चधऋतुरूपः पादोऽस्य । २संवत्सरे संवत्सरस्य पञ्चर्तुस्वरूपत्वात् हेमन्तशिशिरयोरेकत्वाभिप्रायेण ऋतूनां पञ्चत्वम् । ऋ० ३।६४। १२भा० दृश्यम् ।

**पञ्चपादी** स्त्री पञ्चानां पादानां समाहारः ङीप् । पादपञ्चके पादश्चेह ग्रन्थावयवभेदः संज्ञायां कन् । पञ्चपादिका शारीरकभाष्यव्याख्याने ग्रन्थभेदे

**पञ्चपितृ** पु० संज्ञात्वात् कर्म० । "जनकश्चोपनेता च यश्च कन्यां प्रयच्छति । अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः" प्रा०वि० धृतवचनोक्ते जनकादिपञ्चके

**पञ्चपित्त** न० पञ्चगुणितं पित्तं शा०त० । "वराहच्छागमहिषमत्स्यमायूरपित्तकम् । पञ्चपित्तमिदं प्रोक्तं सर्वेष्वेव हि कर्मसु" वैद्यकोक्ते वराहादिपञ्चकपित्ते ।

**पञ्चप्रदीप** न० पञ्च प्रदीपाः यत्र । नीराजनाङ्गे दीपभेदे "हरेः पञ्चप्रदीपेन बहुशो भक्तितत्परः" पद्मपु० ।

**पञ्चपुष्प** न० पञ्चगुणितं पुष्पम् । "चम्पकाम्रशमीपद्मकरवीरं च पञ्चकम्" देवीपु० १०७अ० उक्ते पुष्पपञ्चके ।

**पञ्चप्रस्थ** न०पञ्च विषयाः शब्दादयः प्रस्थाः सानव इव यस्य । संसारवने "स एकदा महेष्वासो रथं पञ्चाश्वमाशुगम् । द्वीषं द्विचक्रमेकाक्षं त्रिवेणुं पञ्चबन्धुरम् । एकरश्म्येकदमनमेकनीडं द्विकूबरम् । पञ्चप्रहरणं सप्तवरूथं पञ्चविक्रमम् । हैमोपस्करमारुह्य स्वर्णवर्माक्षयेषुधिः । एकादशचमूनाथः पञ्चप्रस्थमगाद्वनम्" भाग० ४।२६।४। "महाभिप्रायो घनुः कर्तृत्वभोक्तृत्वाद्यभिनिवेशोयस्य सः । रथमारुह्य पञ्चप्रस्थं वनमगादिति तृतीयेनान्वयः । रथम् इदानीमेव विवृतं स्वशरीरं जाग्रद्देहस्य शतसम्वत्सरोपभोग्यपुरत्वेनोक्तत्वात् । पञ्चज्ञानेन्द्रियाण्यश्वा यस्य । आशुगं शीघ्रगतिम् । द्वे अहन्ताममते ईषे दण्डिके यस्य । द्वे पुण्यपापे चक्रे यस्य । एकं प्रधानमक्षो यस्य त्रयोगुणावेणवोध्वजा यस्य पञ्च प्राणा बन्धुराणि बन्धनानि यस्य । एकं मनो रश्मिः प्रग्रहो यस्य एका बुद्धिर्दमनः सूतो यस्य कर्मधारयः । एकं हृदयं नीडं रथिनउपवेशस्थानं यस्मिन् । द्वौ शोकमोहौ कूबरौ युगबन्धनस्थाने यस्य । पञ्च शब्दादयो विषयाः प्राक्षिप्यन्ते प्रक्षिप्यन्ते यस्मिन् अस्य व्याख्यानं भविष्यति पञ्चेन्द्रियार्थप्रक्षेप इति । सप्त धातवोवरूथा रथरक्षार्थं चर्माद्यावरणानि यस्य पञ्च कर्मेन्द्रियाणि विक्रमा गतिप्रकारा यस्य । हैमोपस्करं सौवर्णाभरणं स्वर्णवर्मा वर्म च कवचं रजोगुणावृतं अक्षयेषुधिर्निषङ्गम् अनन्तवासनाहङ्कारोपाधिः । एकादशो मनोरूपः चमूनाथः सेनापतिर्यस्य । वासनामयस्य मनसः प्रमहत्तं सङ्कल्पविकल्पात्मकस्य इन्द्रियबलत्वेन वर्ध्यमानस्य चमूनाथत्वमिति भावः । पञ्च शब्दादयो विषयाः प्रस्थाः सानवो यस्मिन् तद्वनं भजनीयं देशमगात्" श्रीध० ।

**पञ्चप्राण** पु० कर्म० । देहस्थे प्राणनादिवृत्तियुते वायुपञ्चके पञ्चवृत्तिशब्दे दृश्यम् ।

**पञ्चप्रासाद** पु० पञ्चचूडायुक्तः प्रासादः शा०त० । (पञ्चरत्न) इति ख्याते देवगृहभेदे "पक्वेष्टकाचितं रम्यं पञ्चप्रासादसंयुतम् । कारयित्वा हरौ चाथ धूतपापो दिवं व्रजेत्" अग्निपु० ।

**पञ्चबन्ध** पु०पञ्च पञ्चमः बन्धो भागो यत्र । पञ्चमांशयुतेदमादौ "आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा । पञ्चबन्धोदमस्तत्र राज्ञे तेनाविभाविते" मिता०धृतवचनम् ।

**पञ्चबला** स्त्री पञ्चगुणिता बला । बलानागबलामहाबला॰

ऽतिबला राजबलाद्दयबलापञ्चके नैघण्ट्प्रकाशिकायाम् ।

**पञ्चबाण** पु० पञ्च बाणा यस्य । १कन्दर्पे तस्य बाणपञ्चकं च कालिकापुराणशब्दे २०१२पृ०दर्शितम् संज्ञात्वात् कर्म०। २कामस्य बाणेषु पञ्चविभागेनानीतेषु विवाहादौ वर्जनीयेषु पञ्चसु श्रोणादिषु उपयमशब्दे १२६८पृ० दृश्यम् ।

**पञ्चबाहु** पु० पञ्च बाहवोऽस्य । महादेवे हरिवं०२७७अ०।

**पञ्चब्रह्म** न० उपनिषद्भेदे

**पञ्चभद्र** पुंस्त्री पञ्चसु अङ्गभेदेषु भद्रः पुष्पितत्वात् । "पञ्चभद्रस्तु हृत्पृष्ठमुखपार्श्वेषु पुष्पितः" हेम० उक्ते १हयभेदे स्त्रियां जातित्वात् ङीष् । "छिन्नोद्भवापर्पटवारिवाहभूनिम्बशुण्ठीजनितः कषायः । समीरपित्तज्वरजर्जराणां करोति भद्रं खलु पञ्चभद्रम्" शार्ङ्गधरोक्ते २पाचनभेदे न०

**पञ्चभूत** न० ब०स०संज्ञात्वात् कर्म०। आकाशवायुतेजोजलभूमिरूपभूतेषु । "भूतादिकादहङ्कारात् पञ्चभूतानि जज्ञिरे" आर०ति०। अस्य पुंस्त्वमपि "शब्दाद्व्योम स्पर्शतस्तेन वायुस्ताभ्यां रूपाद्वह्निरेतैः रसाच्च । अम्भांस्येतैर्गन्धतो भूर्धराद्या भूताः पञ्च स्युर्गुणोनाः क्रमेण" तेषां च द्रव्यविशेषशब्दे २७८१ पृ० सुश्रुतोक्तं गुणादि दृश्यम् तेषामस्थ्यादिविशेषकार्यकारिता ब्रह्मज्ञानतन्त्रे प्रथमपटले उक्ता यथा "अस्थिमांसं नखश्चैव नाडी त्वक् चेति पञ्चमी । पृथ्वी पञ्चगुणा प्रोक्ता ब्रह्मज्ञानेन भाषितम् । मलं मूत्रं तथा शुक्रं श्लेष्मा शोणितमेव च । तोयं पञ्चगुणं प्रोक्तं ब्रह्मज्ञानेन भाषितम् । क्षुधा निद्रा तृषा चैव क्रान्तिरालस्यमेव च । तेजः पञ्चगुणं प्रोक्तं ब्रह्मज्ञानेन भाषितम् । धारणं चालनं क्षेपः सङ्कोचः प्रसरस्तथा । वायुः पञ्चगुणः प्रोक्तो ब्रह्मज्ञानेन भाषितम् । कामः क्रोधस्तथा लोभस्तथा मोहश्च पञ्चमः । नभःपञ्चगुणं प्रोक्तं ब्रह्मज्ञानेन भाषितम्" । भूतनक्षत्राणि यथा "धनिष्ठा रेवती ज्येष्ठानुराधा श्रवणा तथा । अभिजिच्चोत्तराषाढा पृथ्वीतत्त्वमुदाहृतम् । पूर्वाषाढा तथाऽऽश्लेषा मूलार्द्रा चैव रोहिणी । उत्तरभाद्रपदा तोयम् आपस्तत्त्वमभीष्टदम् । भरणी कृत्तिका पुष्या मघा पूर्वा च फाल्गुनी । पूर्वभाद्रपदा स्वाती तेजस्तत्त्वमिति प्रिये ! । विशाखोत्तरफल्गुन्यौ हस्ता चित्रा पुनर्वसुः । अश्विनी मृगशीर्षा च वायुस्तत्त्वमुदाहृतम्" स्वरोदयः । [पञ्चके नैघण्ट्प्र०।

**पञ्चभृङ्ग** न० देवदालीशमीभङ्गानिर्गुण्डीतमालात्मके द्रव्य-

**पञ्चम** त्रि०पञ्चानां पूरणः डट् मट् । पञ्चानां पूरणे स्त्रियां ङीप् । २दक्षे ३रुचिरे त्रि० हेमच० ४मैथुने न०। तन्त्रीकण्ठोत्थितस्वरमध्ये ५स्वरभेदे अमरः । "वायुः समुद्गतो नाभेरुरोहृत्कण्ठमूर्द्धसु । विचरन् पञ्चमस्थानप्राप्त्या पञ्चम उच्यते" । तन्निरुक्तिः । "प्राणोऽपानः समानश्च उदानो व्यान एव च । एतेषां समवायेन जायते पञ्चमः स्वरः" तत्कारणम् । ६रागभेदे मेदि० स च सोमेश्वरमते तृतीयो रागः अत्र गान्धारस्वरस्तीव्रः ऋषभपञ्चमौ लुप्तौ षड्जः स्टहांशः । भरतमते भैरवरागस्याष्टमः पुत्रः । अस्योच्चारणं पिकध्वनिवत् । उच्चारणस्थानं तत्र उरः शिरश्च ।

**पञ्चमकार** न०पञ्च मकारा यत्र । मकारादिपदवेद्यमद्यादिपञ्चके "मद्यं मांसं तथा मत्स्यो मुद्रा मैथुनमेव च । पञ्चतत्त्वमिदं देवि ! निर्वाणमुक्तिहेतवे । मकारपञ्चकं देवि ! देवानामपि दुर्लभम्" गुप्तसाधनतन्त्रे ७ पटले । तत्र मद्यादिकं प्रसिद्धम् । मुद्रा तु "पृथुकास्तण्डुला भृष्टा गोधूमचणकादयः । तेषां नाम भवेद्देवि ! मुद्रा मुक्तिप्रदायिनी" । तत्र परिभाषिता

**पञ्चमहिष** न० पञ्चगव्यवत् महिषस्य मूत्रादिपञ्चके । पञ्चगव्यशब्ददर्शितकल्पेन तस्य पाकविधिः "एतेनैव तु कल्पेन घृतं पञ्चाविकं पचेत् । पञ्चाजं पञ्चमहिषं चतुरङ्गमयापि वा" सुश्रुतः । पञ्चाजपञ्चाविकशब्दावपि क्रमेण अजाविसम्बन्धिमूत्रादिपञ्चके ।

**पञ्चमहापातक** न० पञ्चप्रकारं महापातकम् शा०त०। ब्रह्महत्यादिमहापातकपञ्चके "ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह" मनुः । स्तेयमत्र ब्राह्मणस्वामिकसुवर्णहरणं यथाह विष्णुः "ब्रह्महत्या सुरापानं ब्राह्मणसुवर्णहरणं गुरुदाराभिगमनं संयोगश्च तैः सहेति महापातकानि" । सुवर्णश्च कर्षमितस्वर्णम् ।

**पञ्चमहायज्ञ** पु० पञ्चगुणितो महायज्ञः कर्म० वा। गृहस्थैः प्रतिदिनं कर्त्तव्ये देवयज्ञादियज्ञपञ्चके । "पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः । कण्डनी चोदकुम्भश्च तस्य पापस्य शान्तये । पञ्चयज्ञविधानञ्च गृही नित्यं न हापयेत् । पञ्चयज्ञविधानेन तत् पापं तस्य नश्यति । देवयज्ञो भूतयज्ञः पितृयज्ञस्तथैव च । ब्रह्मयज्ञो नृयज्ञश्च पञ्चयज्ञाः प्रकीर्त्तिताः । होमो देवो बलिर्भौतः पित्र्यः पिण्डक्रिया स्मृतः । स्वाध्यायो ब्रह्मयज्ञश्च नृयज्ञोऽतिथिपूजनम्" मत्स्यसं० । पञ्चमहायज्ञादयोऽप्यत्र

"देवभूतपितृब्रह्ममनुष्याणामनुक्रमात् । महासत्राणि जानीयात् एते चेह महामखाः । अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् । श्राद्धं वा पितृयज्ञः स्यात् पित्र्यो बलिरथापि वा । यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञः स उच्यते । स चार्वाक् तर्पणात् कार्य्यः पश्चाद्वा प्रातराहुतेः । वैश्वदेवावसाने वा नान्यत्रस्तु निमित्तकात् । अप्येकमाशयेद्विप्रं पितृयज्ञार्थसिद्धये । अदैवं नास्ति चेदन्यो भोक्ता भोज्यमथापि वा । अप्युद्धृत्य यथाशक्त्या किञ्चिदन्नं यथाविधि । पितृभ्योऽथ मनुष्येभ्यो दद्यादहरहर्द्विजे । पितृभ्य इदमित्युक्त्वा स्वधाकारमुदीरयेत् । हन्तकारं मनुष्येभ्यस्तदूर्द्ध्वं निनयेदपः" कात्या०स०

**पञ्चमार** पु० १वङ्गदेवपुत्रे शब्दर० कर्म० । २पञ्चविधमारे च ।

**पञ्चमासिक** त्रि०पञ्च मासाः प्रमाणमस्य ठक् नपूर्वपदवृद्धिः । स्वर्णमाषपञ्चकमिते दण्डादौ मनुः ८।२९८

**पञ्चमास्य** पुंस्त्री० पञ्चमः स्वरभेदः आस्ये अस्य । १कोकिले शब्दर० स्त्रियां जातित्वेऽपि योपधत्वात् टाप् । पञ्चमं कोकिलो वदेत्"पञ्चसु मासेषु भवः यत् । २पञ्चमासभवे त्रि०

**पञ्चमी** स्त्री पञ्च पतीन् मिनोति बध्नाति प्रेम्णा मी—बन्धे ध्यक् । पञ्चपाण्डवपत्निकायां १द्रौपद्याम् २शारिस्फलकायाञ्च (पाशारक्क)पञ्चन्+पूरणे मट् । पञ्चानां पूरणायां स्त्री ङीप् । अस्य बहु० समासे समासवाच्यत्वे अप् समा० । कल्याणी पञ्चमी यासु रात्रिषु कल्याणपञ्चमा रात्रयः । मुख्यत्वाभावे कप् । कल्याणी पञ्चमी यत्र पक्षे कल्याणपञ्चमीकः पक्षः अत्र पूरण्या मुख्यत्वाभावात् न समासवाच्यत्वम् । चन्द्रमण्डलस्य प्रवेशनिर्गमाभ्यां सूर्य्यकिरणप्रतिबिम्बयोग्यत्वयोग्यत्वाभावयुक्तायां चन्द्रस्य ४पञ्चम्यां कलायां ५तदुपलक्षित तिथौ च स्त्री । विहितकर्मविषयविशेषे तस्याः कथं ग्राह्यतेति कालमा० निर्णीतं यथा

"युग्मशास्त्रेण पञ्चमी पूर्वविद्धा ग्राह्या । ननु "प्रायः प्रातरूपोष्या हि तिथिर्दैवे फलेप्सुभिरिति"शिवरहस्यसौरपुराणयोस्तिथ्यग्रभागस्योपवासाङ्गत्वाभिधानात् पञ्चम्युपवासः परेद्युः प्राप्नोति, तच्च हारीतेन परविद्धायाः प्रतिषिद्धत्वात् । "चतुर्थीसंयुता कार्य्या पञ्चमी परया न तु । दैवे कर्मणि पित्र्ये च शुक्लपक्षे तथाऽसिते" इति । नचैतावता प्रायः प्रातरिति वचनस्य निर्विषयत्वं शङ्कनीयम् । निर्णीतासु निर्णेष्यमाणासु च तिथिषु यत्र यत्र परविद्धोपवासः शास्त्रान्तरेण प्राप्तस्तस्य सर्वस्य तद्विषयोपपत्तेः । न च तेनैव शास्त्रेण तदुपवासविद्धेः कृतमनेन वचनेनेति शङ्कनीयम् । सामान्यविशेषरूपेण शास्त्रद्वयस्यापि चरितार्थत्वात् । तस्य सामान्यशास्त्ररूपस्य प्राप्नोपवासवचनस्य विरोधिना षष्ठीयुक्तपञ्चमीनिषेधकेन विशेषशास्त्ररूपेण हारीतवचनेन बाधो युज्यते । एतादृशं बाधमभिलक्ष्यैव प्रायः प्रातरूपोष्येति प्रायःशब्दः प्रयुक्तः । प्रतिपद्ध्यायेन पौर्वाह्णिकी इति वचनबलात् । पञ्चम्यामपि दानव्रतयोः परदिनानुष्ठानप्राप्तौ तद्व्यावृत्तये हारीतवचने दैवे कर्मणीत्युच्यते । न च दैवकर्मणि पूर्वाह्णस्य कर्मकालशास्त्रप्राबल्यस्य च वर्णितत्वात् तद्बाधो न युक्त इति शङ्कनीयम् । विधेर्निषेधस्य वा प्रतिपदोक्तस्य प्रबलतरत्वात् । न च पूर्वदिनपूर्वाह्णस्यात्यल्पकर्मकालत्वं, साकल्यवचनाप्पादितकर्मकालत्वस्य सद्भावात् । ईदृशमेव विषयमभिलक्ष्य साकल्यवचनस्य प्रवृत्तत्वात् । स्वाभाविकतिथिव्याप्तियुक्ते विषये साकल्यवचनस्य निरर्थकत्वात् । तथाहैव कर्मणि परविद्धायाः पञ्चम्याः निषेधो न विरुध्यते । नन्वेवमपि पित्र्ये निषेधो निरर्थकः । पित्र्यस्य स्वत एव परविद्धायामप्राप्तत्वात् । मैवं दृष्टान्ततयापि च तदुपन्यासोपपत्तेः । यथा पित्र्यकर्मणि उत्तरविद्धा न ग्राह्या तथा दैवेऽपीति विवक्षया दैवपित्र्ययोः सहोपन्यासः । ननु व्यासनिगमनतयुग्मशास्त्रस्तदाकृत्य पञ्चम्याः पूर्वविद्धत्वमभिधीयते । आपस्तम्बादयस्तु तद्विपर्य्ययेण युग्मान्युदाजह्रुः । "प्रतिपत् सद्वितीया स्याद् द्वितीया प्रतिपद्युता । चतुर्थीसंहिता या च सा तृतीया फलप्रदा । पञ्चमी च प्रकर्त्तव्या षष्ठ्या युक्ता च नारद!" इति । अतएवैतद्युग्मशास्त्रपर्य्यालोचने पञ्चम्याः परविद्धत्वं प्राप्नोति । बाढम् अतएवात्र शुक्लकृष्णशास्त्रेण व्यवस्था प्रसक्ता तां निषेद्धुं हारीतेन शुक्लपक्षे तथाऽसिते इत्युक्तम् । न च सा व्यवस्था वचनेन निषेद्धुमशक्या, किं हि वचनं न कुर्य्यान्नास्ति वचनस्यातिभार इति न्यायात् । तस्माद्धारीतवचनेन पञ्चमी पूर्वविद्धा ग्राह्या । स्कान्दपुराणेऽपि "पञ्चमी च तथा कार्य्या चतुर्थ्या संयुता विभो!" तथा पद्मपुराणभविष्यत्पुराणयोः पूर्वोत्तरविद्धाविषयौ विधिनिषेधौ स्मर्य्येते । "पञ्चमी च चतुर्थ्यां तु कार्य्या षष्ठ्या न संयुता" इति । यत्तु ब्रह्मवैवर्त्तेऽभिहितम्"पञ्चमी च प्रकर्त्तव्या षष्ठ्या युक्ता तु नारद!",

इति तद्वचनं स्कन्दोपवासविषयतया सङ्कोचनीयम्। वाक्यशेषे तथाभिधानात् "स्कन्दोपवासे सौकार्यां पञ्चमी परसंयुता" इति वाक्यशेषः। न चासञ्जातविरोधिनो वाक्योपक्रमस्य सञ्जातविरोधिना वाक्यशेषेण कथं सङ्कोच इति शङ्कनीयम्। असन्दिग्धोपक्रमस्य प्राबल्येऽपि सन्दिग्धोपक्रमस्य वाक्यशेषेण निर्णेतव्यत्वात्। अतएव जैमिनिनापि सूत्रितम्। "सन्दिग्धे तु वाक्यशेषादिति"। अतः स्कन्दोपवासे पञ्चमी परविद्धा। अन्यत्र पूर्वविद्धेति स्थितम्"।

**पञ्चमुख** त्रि॰पञ्च मुखान्यस्य। १पञ्चवदनयुक्ते स्त्रियां स्वाङ्गत्वात् ङीष्। २महादेवे पु॰ तस्य तन्नामादि देवीपु॰उक्तं यथा "शिवस्तत्र स्थितः साक्षात् सर्वपापहरः शुभः। स तु पञ्चमुखः ख्यातो लोकसर्वार्थसाधकः। पञ्चब्रह्मात्मको यस्मात्तेन पञ्चमुखः स्मृतः। पश्चिमे तु मुखे सद्यो, वामदेवस्तथोत्तरे। पूर्वे तत्पुरुषं विद्याद् घोरं चापि दक्षिणे। ईशानः पञ्चमो मध्ये सर्वेषामुपरि स्थितः। एते पञ्चमुखा यस्य पापघ्ना मङ्गलायनाः। सद्योजातो भवेच्छुक्लो वामदेवस्तु पीतकः। रक्तस्तत्पुरुषो ज्ञेयोऽघोरः कृष्णः स एव च। ईशानः पञ्चमस्तेषां सर्ववर्णसमन्वितः। कामदः कामरूपी स्यात् ज्ञानाधारः शिवात्मकः"। ३पञ्चवक्त्रे रुद्राक्षभेदे च "पञ्चवक्त्रः स्वयं रुद्रः कालाग्निर्नामनामतः। अगम्यागमनाच्चैव अभक्ष्यस्य च भक्षणात्। मुच्यते सर्वपापेभ्यः पञ्चवक्त्रस्य धारणात्" तिथि॰त॰ स्कान्दे। ४जवाभेदे स्त्री ङीष्। ५बाणकहस्ते च राजनि॰। पचि-विस्तारे अच् तादृशं मुखमस्य। ६सिंहे पुंस्त्री॰ स्त्रियां ङीष्। पञ्चवक्त्रादयोऽपि तेष्वर्थेषु।

**पञ्चमुद्रा** स्त्री पञ्चगुणिता मुद्रा। १आवाहन्यादिमुद्रापञ्चके तत्स्वरूपनामादि पूजाप्रदीपे उक्तं यथा "सम्यक् प्रपूरितः पुष्पैः कराभ्यां कल्पितोऽञ्जलिः। आवाहनी१ समाख्याता मुद्रा देशिकसत्तमैः। अधोमुखी त्वियं चेत् स्यात् स्थापनी२ मुद्रिका भवेत्। उच्छ्रिताङ्गुष्ठमुष्ट्योस्तु संयोगात् सन्निधापनी३। अन्तःप्रवेशिताङ्गुष्ठा सैव सम्बोधनी४मता। उत्तानमुष्टियुगला सम्मुखीकरणी५मता"। तन्त्रोक्ते देवभेदपूजाङ्गे २योन्यादिमुद्रापञ्चके च तन्त्रसारः।

**पञ्चमुष्टिक** पु॰चक्रदत्तोक्ते यवादिमुष्टिपञ्चककषायभेदे "यवकोल कुलत्थानां मुद्गमूलकशुष्ठयोः। एकैकमुष्टिमादाय पचेदष्टगुणे जले। पञ्चमुष्टिक इत्येष वातपित्तकफापहः। शस्यते गुल्मशूले च श्वासे कासे क्षये ज्वरे"।

**पञ्चमूत्र** न॰ पञ्चप्रकारं मूत्रम्। गवाजामेषीमहिषी गर्दभीनां पञ्चानां मूत्रे राजनि॰।

**पञ्चमूल** न॰पञ्चगुणितं मूलम् शा॰त॰। १वैद्यकोक्ते विल्वादिपञ्चमूले तच्च त्रिविधं लघुमहत्तृणाख्यभेदात् तत्र महत् "श्रीफलः सर्वतोभद्रा पाटला गणिकारिका। श्योनाकः पञ्चभिश्चैतैः पञ्चमूलं महन्मतम्। पञ्चमूलं महत् तिक्तं कषायं कफवातनुत्। मधुरं श्वासकासघ्नमुष्णं लघ्वग्निदीपनम्" अथ लघुपञ्चमूलस्य लक्षणगुणाः "शालपर्णी पृश्निपर्णी वार्त्ताकी कण्टकारिका। गोक्षुरं पञ्चभिश्चैतैः कनिष्ठं पञ्चमूलकम्। पञ्चमूलं लघु स्वादु बल्यं पित्तानिलापहम्। नात्युष्णं बृंहणं ग्राहि ज्वरश्वासाश्मरीप्रणुत्" भावप्र॰ "विल्वाग्निमन्थश्योनाककाश्मर्यः पाटला तथा। शेषं बृहत् पञ्चमूलं पञ्चमूलमिति स्मृतम्" मतान्तरम्। "शरेक्षुदर्भकाशानां नलस्य मूलमेव च। शोभनं चारकं चैव तृणाख्यं पञ्चमूलकम्" शब्दच॰। पञ्चमूल्यपि स्वल्पपञ्चमूलभेदे "शालपर्णी पृश्निपर्णी बृहती कण्टकारिका। तथा गोक्षुरकश्चैव पञ्चमूली कनीयसी" शब्दच॰। पञ्चानां मूलानां समाहारः ङीप्। २मूलपञ्चके

**पञ्चमूल्यादि** न॰ चक्रदत्तोक्ते पाचनभेदे यथा "पञ्चमूली बला विल्वगुडूचीमुस्तनागरैः। पाठा भूनिम्बह्रीवेरकुटजत्वक्फलैः शृतम्। हन्ति सर्वानतीसारान् ज्वरदोषं वमिं तथा। सशूलोपद्रवं श्वासं कासं हन्यात् सुदारुणम्"।

**पञ्चयाम** पु॰ पञ्च यामा यत्र। १दिवसे "त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टये। नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते" उक्तेः अहोरात्रस्य अष्टप्रहरात्मकत्वेन तन्मध्ये रात्रेस्त्रियामत्वात् परिशिष्टयामपञ्चकस्य दिवसत्वम्। २तदभिमानिदेवभेदे "विभावसोरसूतोषा व्युष्टं रोचिषमातपम्। पञ्चयामोऽथ भूतानि येन जाग्रति कर्मसु" भाग॰ ६।६।१५

**पञ्चयुग** न॰ पञ्चभिः पञ्चभिः युगम्। इदादिभिः पञ्चभिः पञ्चभिः वर्षैः द्वादशवर्षात्मकषष्टिसंवत्सरे "संवत्सराः पञ्चयुगं चाहोरात्रचतुर्विधः" भा॰स॰१२श्लो॰ "दैवपैत्रमानुषब्राह्मभेदात् अहोरात्रचतुर्विध इत्यर्थः" नीलक॰।

**पञ्चरक्षक** पु॰पञ्च रक्षका इव कण्टकादयोऽस्य। १पद्मपोड-

दृष्टे राजनि० । २इन्द्रियपञ्चकरूपरत्नकयुक्ते च ।

**पञ्चरत्न** न० पञ्चगुणितं रत्नम् । पञ्चविधे १रत्नभेदे तच्च नानाविधम् “नीलकं वज्रकं चेति पद्मरागश्च मौक्तिकम् । प्रवालं चेति विज्ञेयं पञ्चरत्नं मनीषिभिः” विधानपा० “सुवर्णं रजतं मुक्ता राजावर्त्तं प्रवालकम् । रत्नपञ्चकमाख्यातम्” हेमा०ब्र० “कनकं हीरकं नीलं पद्मरागश्च मौक्तिकम् । पञ्चरत्नमिदं प्रोक्तमृषिभिः पूर्वदर्शिभिः । अभावे सर्वरत्नानां हेम सर्वत्र योजयेत्” हेमा०दा०। पञ्च रत्नानीव उपदेशकत्वात् यत्र । २नीतिगर्भकवितापञ्चके “नागः पोतस्तथा वैद्यं कान्तिः शक्यो यथाक्रमम् । पञ्चरत्नमिदं प्रोक्तं विदुषामपि सुदुर्लभम्” काव्यसं०। नाग इत्यादिना एकैकपद्यस्य आद्यपदेन सूचितकवितापञ्चकं च ग्राह्यम् । तानि च पद्यानि प्रागेव काव्यसंग्रहे दृश्यानि । ३पञ्चचूडदेवस्तद्भेदे न० ।

**पञ्चरश्मि** पु० पञ्च पञ्चवर्णा रश्मयोऽस्य । पिङ्गलादिपञ्चवर्णरश्मिके सूर्ये तस्य तथात्वम् निर्णीतं छा०उ० यथा “अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः । तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः” उप० “अथ या एता वक्ष्यमाणा हृदयस्य पुण्डरीकाकारस्य ब्रह्मोपासनस्थानस्य सम्बन्धिन्यो नाड्यो हृदयमांसपिण्डात् सर्वतो विनिःसृता आदित्यमण्डलादिव रश्मयस्ताश्चैताः पिङ्गलस्य वर्णविशेषविशिष्टस्याणिम्नः सूक्ष्मरसस्य रसेन पूर्णास्तदाकारा एव तिष्ठन्ति वर्त्तन्त इत्यर्थः । तथा शुक्लस्य नीलस्य पीतस्य लोहितस्य च रसस्य पूर्णा इति सर्वत्राध्याहार्यम् । सौरेण तेजसा पित्ताख्येन पाकाभिनिर्वृत्तेन कफेनाल्पेन सम्पर्कात् पिङ्गलं भवति सौरं तेजः पित्ताख्यम् । तदेव वातभूयस्त्वान्नीलं भवति । तदेव च कफभूयस्त्वाच्छुक्लम् । कफेन समतायां पित्तम् शोणितबाहुल्येन लोहितम् । वैद्यकाद्वा वर्णविकारा अन्वेष्टव्याः । कथं भवन्तीति श्रुतिस्त्वाहादित्यसम्बन्धादेव तत्तेजसो नाडीष्वनुगतस्यैते वर्णविशेषा इति । असौ वा आदित्यः पिङ्गलो वर्णत एष आदित्यः शुक्लोऽप्येष नील एष पीत एष लोहित आदित्य एव । तस्याध्यात्मं नाडीभिः कथं सम्बन्ध इत्यत्र दृष्टान्तमाह तत्तत्र यथा लोके महान् विस्तीर्णः पन्था महापथ आततो व्याप्त उभौ ग्रामौ गच्छतीमं च सन्निहितममुं च विप्रकृष्टं दूरस्थमेवं यथा लोके दृष्टान्तो महापथ उभौ ग्रामौ प्रविष्टः । एवमेवैता आदित्याः महापथा यथा गच्छन्ति तथोभयत्रादित्यस्य रश्मयः उभौ लोकावमुं चादित्यमण्डलमिमं च पुरुषं गच्छन्त्युभयत्र प्रविष्टाः यथा महापथः । कथममुष्मादादित्यमण्डलात् प्रतायन्ते सन्तता भवन्ति । ता अध्यात्ममासु पिङ्गलादिवर्णासु यथोक्तासु नाडीषु सृप्ता गताः प्रविष्टा इत्यर्थः । आभ्यो नाडीभ्यः प्रतायन्ते प्रवृत्ताः सन्तानभूताः सन्तस्तेऽमुष्मिन् रश्मीनामुभयलिङ्गत्वात्ते इत्युच्यन्ते” भा०। “रसेनात्रस्येति शेषः तदाकारा इति तच्छब्दोऽन्नरसविषयः । शुक्लस्येत्यादिषु षष्ठी पूर्ववत् । श्रुताविति शब्दोऽध्याहारद्योतनार्थः । कथं पुनरन्नरसस्य पिङ्गलादिर्विचित्रो वर्णविशेषः सिध्यतीत्याशङ्क्याह सौरेणेति वातपित्ताख्यं सौरं तेजः । तेन पाकोऽशितस्य च जायते । तेनाभिनिर्वृत्तेनाल्पेन कफेन सम्पर्कात् तदेव पित्ताख्यं सौरं तेजो भवति पिङ्गलम् । तेन सम्पर्कादन्नरसस्य नाडीनां च जायते पिङ्गलत्वमित्यर्थः । तदेव च पित्ताख्यं सौरं तेजो यथोक्तपाकाभिनिर्वृत्तेन प्रभूतेन वातेन सम्बन्धात्तद्भूयस्त्वाद्भवति नीलं तेन च सम्पर्कादन्नरसस्य नाडीनां च जायते नैल्यमित्याह तदेवेति । प्रकृतमेव पित्ताख्यं सौरं तेजो यथोक्तपाकवशादभिनिर्वृत्तकफस्य सम्बन्धिनो भूयस्त्वाद्भवति शुक्लं तेन च सम्पर्कादन्नरसस्य नाडीनां च शौक्ल्यं भवतीत्याह तदेव चेति । उक्तपाकाभिनिर्वृत्तेन कफेन तदभिनिर्वृत्तस्यैव वातस्य समतायां तदेव तेजस्तत्सम्बन्धि पीतं जायते । तत्सम्बन्धादन्नरसस्य च नाडीनां च पीतत्वं भवतीत्याह कफेनेति । यदा तु यथोक्तपाकाभिनिष्पन्नं शोणितं बहुलं भवति तदा तस्य नाडीनां च लौहित्यं भवतीत्याह शोणितेति । पक्षान्तरमाह वैद्यकाद्वेति । अन्येषामप्रकारमाह कथमिति । नाभेरूर्द्धं हृदयादधस्तादामाशयमाचक्षते । तेजः सौरं पित्तमित्युच्यते । तच्चान्नरसस्य धात्वन्तरसहकारिवशाद्वर्णविशेषे कारणमाशयगतं पीतं रञ्जकं रसरञ्जनादित्यादिवचनादित्यर्थः । कथं तर्हि पिङ्गलस्येत्याद्या श्रुतिरित्याशङ्क्याह श्रुतिस्त्विति । उक्तमर्थ-

साकाङ्क्षाद्वारा स्फोरयति कथमित्यादिना आदित्यस्य पिङ्गलादयो वर्णविशेषाः शास्त्रप्रमाणादेव प्रत्येतव्याः। आदित्यस्य तेजसो नाड्योऽनुगतस्य पैङ्गल्यादयो वर्णविशेषा भवन्तीत्युक्तं तदेव प्रश्नद्वारा दृष्टान्तावष्टम्भेन स्फुटयति तस्येत्यादिना" आनन्दगिरिः।

**पञ्चरसा** स्त्री पञ्चो विस्तीर्णोरसोऽस्याम्। आमलक्यां हारा०।

**पञ्चरात्र** न० पञ्चानां रात्रीणां समाहारः अच्समा०। रात्रान्तत्वेऽपि संख्यापूर्वकत्वेन क्लीवता। १रात्रिपञ्चके पञ्च रात्राणि स्नानानि यत्र। नारदादिप्रणीते ज्ञानोपदेशके २ग्रन्थभेदे तद्विवरणादिकं ब्रह्मपु० जन्मखण्डे १२२अ० उक्तं यथा "रात्रञ्च ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतम्। तेनेदं पञ्चरात्रं च प्रवदन्ति मनीषिणः। प्रथमं सात्विकं ज्ञानं द्वितीयन्तु तदेव च। नैर्गुण्यं च तृतीयं च ज्ञानं च सर्वतत्परम्। चतुर्थं च राजसिकं भक्तसत्त्वाभिवाञ्छति। पञ्चमं तामसं ज्ञानं विद्वांसत्त्वाभिवाञ्छति। ज्ञानं पञ्चविधं प्रोक्तं पञ्चरात्रं विदुर्बुधाः" तच्च सप्तविधं यथा "पञ्चरात्रं सप्तविधं ज्ञानिनां ज्ञानदं परम्। ब्राह्मं शैवं च कौमारं वाशिष्ठं कापिलं परम्। गौतमीयं नारदीयमिदं सप्तविधं स्मृतम्" इति नारदपञ्चरात्रे प्रथमरात्रम्। "पञ्चकं पञ्चरात्राणां कृष्णमाहात्म्यपूर्वकम्। वाशिष्ठं नारदीयं च कापिलं गौतमीयकम्। परं सनत्कुमारीयं पञ्चरात्रं च पञ्चकम्"।

**पञ्चरात्रिक** पु० पञ्चरात्रमुपासनासाधनतयास्त्यस्य ठन्। विष्णौ भा० शा० १४अ०।

**पञ्चराशिक** पु० पञ्च राशयो यत्र कप्। लीलावत्युक्ते पञ्चराश्यधिकारेण गणितभेदे यथा "पञ्चसप्तनवराशिकादिकेऽन्योन्यपक्षनयनं फलच्छिदाम्। संविधाय बहुराशिजे वधे स्वल्पराशिवधभाजिते फलम्।

उदाहरणम्। मासे शतस्य यदि पञ्च कलान्तरं स्याद्वर्षे गते भवति किं वद षोडशानाम्। कालं तथा कथय मूलकलान्तराभ्यां मूलं धनं गणक! कालफले विदित्वा।

न्यासः १ १२ | अन्योऽन्यपक्षनयने कृते १ १२
१०० १६ | (फलस्य छेदोऽन्यपक्षे १०० १६
५ ० | न नेय इति बोध्यम्) ० ५

बहूनां राशीनां बधः। ९६०।

स्वल्पराशिवधः १०० अनेन भक्ते लब्धम्। ९।

शेषम् $\frac{६०}{१००}$ विंशत्यापवर्त्ये $\frac{३}{५}$ जातं कलान्तरम् ९ $\frac{३}{५}$

छेदगुणरूपेऽस्मिन् कृते जातम् $\frac{४८}{५}$

**पञ्चलक्षण** न० पञ्च सर्गादीनि लक्षणान्यस्य। १पुराणे अमरः। पुराणशब्दे दृश्यम्। पञ्चानां लक्षणानां समाहारः ङीप्। अनुमानचिन्तामणव्युक्तो व्याप्तिलक्षणपञ्चके साध्याभाववदवृत्तित्वमित्यादिकं व्याप्तिलक्षणपञ्चकं तत्रोक्तमिति तस्य ग्रन्थस्य तथात्वम्।

**पञ्चलवण** न० पञ्चगुणितं लवणम्। "काचकं सैन्धवं चैव सामुद्रं विडमेव च। सौवर्चलं तथा पञ्चलवणं परिकीर्त्तितम्" राजनि० उक्ते लवणपञ्चके।

**पञ्चलाङ्गलक** न० महादानभेदे तत्स्वरूपं मत्स्यपु० यथा "अथातः संप्रवक्ष्यामि महादानमनुत्तमम्। पञ्चलाङ्गलकं नाम महापातकनाशनम्। पुण्यां तिथिं समासाद्य युगादिग्रहणादिकम्। भूमिदानं ततो दद्यात् पञ्चलाङ्गलकान्वितम्। कर्वटं खेटकं वापि ग्रामं वा शस्यशालिनम्। निवर्त्तनशतं वापि तदर्द्धं वापि शक्तितः। दारवानवान् कृत्वा हलान् पञ्च विचक्षणः। सर्वोपकरणैर्युक्तानन्यान् पञ्च च काञ्चनान्। कुर्य्यात् पञ्चपलादूर्द्ध्वमासहस्रपलावधि। हलान् लक्षणसंयुक्तान् दश चैव धुरन्धरान्। सुवर्णशृङ्गाभरणान् मुक्तालाङ्गूलभूषणान्। रूप्यपादाग्रतिलकान् रक्तकौशेयभूषणान्। स्रग्दामचन्दनयुतान् शालायामधिवासयेत्" इतःपरं तत्राध्याये २८३अ० दृश्यम्।

**पञ्चलोकपाल** पु० संघातात् कर्म०। मत्स्यपुराणोक्ते विनायकादिदेवपञ्चके "विनायकं तथा दुर्गां वायुमाकाशमेव च। अश्विनौ क्रमतः पञ्चलोकपालान् प्रपूजयेत्" विधानपा०।

**पञ्चलोह** न० पञ्च विस्तीर्णं लोहम्। सौराष्ट्रदेशजे लोहे हेम०। पञ्चगुणितं लोहं संज्ञायां कन्। पञ्चलोहक सुवर्णरजतताम्रसीसनागरूपे धातुपञ्चके राजनि०।

**पञ्चवक्त्र** पु० पञ्च वक्त्राण्यस्य। १महादेवे २रुद्राक्षभेदे च पञ्चमुखशब्दे दृश्यम्। पञ्चवदनादयोऽप्यत्र [त्रिका०।

**पञ्चवट** पु० पञ्चो विस्तीर्णो वटः वेष्टनम्। यज्ञोपवीतके

**पञ्चवटी** स्त्री पञ्चानां वटानां वटप्रभृतीनां समाहारः

ङीप्। वटादिवृक्षपञ्चके "अश्वत्थं बिल्ववृक्षं च वटं धात्रीमशोककम्। वटीपञ्चकमित्युक्तं स्थापयेत् पञ्चदिक्षु च। अश्वत्थं स्थापयेत् प्राचि बिल्वमुत्तरभागतः। वटं पश्चिमभागे तु धात्रीं दक्षिणतस्तथा। अशोकं वह्निदिक् स्थाप्यं तपस्यार्थं सुरेश्वरि!। मध्ये वेदीं चतुर्हस्तां चतुरस्रां मनोहराम्। प्रतिष्ठां कारयेत्तस्याः पञ्चवर्षोत्तरं शिवे!। अनन्तफलदात्री सा तपस्याफलदायिनी। इयं पञ्चवटी प्रोक्ता बृहत्पञ्चवटीं शृणु। बिल्ववृक्षं मध्यभागे चतुर्दिक्षु चतुष्टयम्। वटवृक्षं चतुष्कोणे वेदसंख्यं प्ररोपयेत्। अशोकं वर्तुलाकारं पञ्चविंशतिसम्मितम्। दिग्विदिक्ष्वामलक्यौ च एकैकं परमेश्वरि!। अश्वत्थञ्च चतुर्दिक्षु बृहत्पञ्चवटी भवेत्। यः करोति महेशानि! साक्षादिन्द्रसमो भवेत्। इहलोके महासिद्धिः परे च परमा गतिः" हेमा०व्र० स्कान्दपु० वचनानि। २दक्षिणदिक्स्थे तीर्थभेदे "ततो पञ्चवटीं गत्वा ब्रह्मचारी जितेन्द्रियः। पुण्येन महता युक्तः सतां लोके महीयते। यत्र योगेश्वरः स्थाणुः स्वयमेव वृषध्वजः। तमर्चयित्वा देवेशं गमनादेव सिध्यति" भा०व० ८३अ०। रामा०अर० वने दृश्यम्।

**पञ्चवर्ग** पु० पञ्च वर्गाः प्रकारा यत्र। १पञ्चप्रकारान्विते यागभेदे "सर्वे पञ्चवर्गाः पशुकामस्य" कात्या०श्रौ० ८।४।१८ "पशुकामस्य यजमानस्य सर्वे त्रयोऽप्यभिप्लवाः पञ्चवर्गाः पञ्चप्रकाराः भवन्ति" कर्कः। पञ्चानां चाराणां वर्गः। २चारपञ्चके पु० "कृत्स्नं चाष्टविधं कर्म पञ्चवर्गञ्च तत्त्वतः। अनुरागापरागौ च प्रचारं मण्डलस्य च" मनुटीकायां कुल्लू० उक्तं यथा "कापटिकोदास्थितगृहपतिवैदेहिकतापसव्यञ्जनात्मकं पञ्चविधं चारवर्गं पञ्चवर्गशब्दवाच्यं तत्त्वतश्चिन्तयेत्। तत्र परमर्मज्ञः प्रगल्भश्छात्रः कपटव्यवहारित्वात् कापटिकस्तं द्रव्यार्थिनमर्थमानाभ्यामुपष्टभ्य रहसि राजा ब्रूयात् यस्य दुर्वृत्तं पश्यसि तत्तदानीमेव मयि वक्तव्यमिति। प्रव्रज्यावृद्धपतित उदास्थितः तं लोकेषु विदितदोषं प्रज्ञाशौचयुक्तं द्रव्यार्थिनं ज्ञात्वा रहसि राजा पूर्ववत् ब्रूयात्। वृत्त्यर्थिकमठे स्थापयेत् प्रचरस्योपात्तिकं मूल्यान्तरञ्च मठ्यर्थमुपकल्पयेत् स चान्येषामपि प्रव्रजितानां राजचारकर्मकारिणां ग्रासाच्छादनादिकं दद्यात्। कर्षकः क्षीणवृत्तिः प्रज्ञाशौचयुक्तो गृहपतिव्यञ्जनस्तमपि पूर्ववदुक्त्वा स्वभूमौ कृषिकर्म कारयेत्। वाणिजकः क्षीणवृत्तिः वैदेहिकव्यञ्जनस्तं पूर्ववदुक्त्वा धनमानाभ्यामात्मीकृत्य वाणिज्यं कारयेत्। मुण्डो जटिलो वा वृत्तिकामस्तापसव्यञ्जनः सोऽपि कश्चिदाश्रमे वसन् बहुमुण्डजटिलान्तरकपटशिष्यगण इतो गुप्तराजोपकल्पितवृत्तिः तपस्यां कुर्यात् मासद्विमासान्तरितं प्रकाशं बदरादिमुष्टिमश्नीयात् रहसि च राजोपकल्पितं यथेष्टमाहारं कल्पयेत् शिष्याश्चास्यातीतानागतज्ञानादिकं ख्यापयेयुः तेन बहुलोकवेष्टनमासाद्य सर्वेषां विश्वसनीयत्वात् सर्वे कार्यमकार्यं च पृच्छन्ति अन्यस्य च कृत्यादिकं कथयन्त्येवंरूपं पञ्चवर्गं यथावच्चिन्तयेत्। एवं प्रकल्प्य तेनैव पञ्चवर्गद्वारेण प्रतिराजस्यात्मीयानाञ्चामात्यादीनाम् अनुरागविरागौ ज्ञात्वा तदनुरूपं चिन्तयेत्" कुल्लू०। पञ्चानां वर्गाणां समाहारः ङीप्। नील०ता० उक्ते ३स्थलहोरादिपञ्चके स्त्री पञ्चवर्गीविज्ञानवने च रीतिः नील०ता० दृश्या यथा

"हद्यादिहृक्कर्षणजोषनक्रमन्नाकुलीरान्त्यतुलानि वैसुः। दिग्भिर्गुणैरष्टयमैः शरैकैर्भूतैर्भवह्नैर्नवसम्मितैश्च"। अथोच्चबलमाह "तत्सप्तमं नीचमनेन हीनोग्रहोऽधिकश्चेद्भमाद्विशोध्यः। चक्रात् तदंशाहवशो बलम् स्यात् क्रियैणतौलीन्दुभतो नवांशाः" अथ हद्देमानाह "मेषेऽङ्गतर्काष्टशरेषुभागा जीवास्फुजिज्ज्ञारशनैश्चराणाम्। वृषेऽष्टषण्णगशराग्निकांशाः शुक्रज्ञजीवार्किकुजेषु हद्दाः। युग्मे षडङ्गेषुनगाङ्गभागाः सौम्यास्फुजिज्जीवकुजार्किहद्दाः। कर्केऽद्रितर्काङ्गनगाब्धिभागाः कुजास्फुजिज्ज्ञेज्यशनैश्चराणाम्। सिंहेऽङ्गभूताद्रिरसाङ्गभागाः देवेज्यशुक्रार्किबुधारहद्दाः। स्त्रियां नगाशाब्धिनगाब्धिभागाः सौम्योशनोजीवकुजार्किनाथाः। तुले रसाष्टाद्रिनगद्विभागाः कोणज्ञजीवास्फुजिदारनाथाः। कीटे नगाब्ध्यष्टशराङ्गभागाः भौमास्फुजिज्ज्ञेज्यशनैश्चराणाम्। चापे रवीशाब्धिपञ्चवेदा जीवास्फुजिज्ज्ञारशनैश्चराणाम्। मृगे नगाद्र्यष्टयुगम्बुतीनां सौम्येज्यशुक्रार्किकुजेशहद्दाः। कुम्भे नगाङ्गाद्रिशरेषुभागा शुक्रज्ञजीवारशनैश्चराणाम्। मीनेऽर्कवेदानलनन्दपक्षाः सितेज्यसौम्यारशनैश्चराणाम्। त्रिंशत्स्वभे विंशतिरुच्चभे स्वे हद्देऽष्टचन्द्रादयकं दृकाणे। तुरङ्गे (नवांशे)पञ्च लवाः प्रदिष्टा विंशोपका वेदलवैः प्रकल्प्याः। स्वस्वाधिकारोक्तबलं सुहृद्भे पादोनमर्द्धं समभेऽरिभेऽङ्घ्रिः एवं समानीय बलं तदैक्ये वेदोद्धृते हीनबलः शरोनः"।

पञ्चशिखः स्मृतः। पुरुषावस्थमव्यक्तं परमार्थं न्यवेदयत्। इष्टसत्रेण संसृष्टो भूयश्च तपसासुरिः। क्षेत्रक्षेत्रज्ञयोर्व्यक्तिं बुबुधे देवदर्शनः। यत्तदेकाक्षरं ब्रह्म नानारूपं प्रदृश्यते। आसुरिर्मण्डले तस्मिन् प्रतिपेदे तदव्ययम्। तस्य पञ्चशिखः शिष्यो मानुष्या पयसा भृतः। ब्राह्मणी कपिला नाम काचिदासीत् कुटुम्बिनी। तस्याः पुत्रत्वमागम्य स्त्रियाः स पिबति स्तनौ। ततः स कापिलेयत्वं लेभे बुद्धिञ्च नैष्ठिकीम्। एतन्मे भगवानाह कापिलेयस्य सम्भवम्। तस्य तत्कापिलेयस्य सर्वविस्त्वमनुत्तमम्"।

**पञ्चशीर्ष** पु० पञ्च शीर्षाण्यस्य। सर्पभेदे। [ दृश्यम्।

**पञ्चशुक्ल** पु० पञ्चस्य कृष्णः। कीटभेदे सुश्रुतः कीटशब्दे

**पञ्चशूरण** पु० पञ्च शूरणा यत्र। "अल्पकाण्डीरमालाकन्दद्विशूरणैः। कॢप्तो भवति योगोऽयं पञ्चशूरणसंज्ञकः" राज० उक्ते मिलिते अत्यम्लादौ।

**पञ्चशैरीषक** न० पञ्चगुणितं शैरीषकम् शा०त०। शिरीषवृक्षस्य पुष्पमूलफलपत्रवल्कलेषु राजनि०।

**पञ्चशैल** पु० मेरोर्दक्षिणस्थे पर्वतभेदे "पञ्चशैलोऽथ कैलासो हिमवांश्चाचलोत्तमः। इत्येते दक्षिणे पार्श्वे मेरोः प्रोक्ता महाचलाः" मार्कण्डपु० ५५अ०।

**पञ्चष** त्रि० ब० पञ्च वा षट् वा वार्थे ब०स० ड समा०। पञ्च वा षट् वा परिमाणं येषां तेषु पदार्थेषु।

**पञ्चसिद्धान्ती** स्त्री समा० द्वि०। ब्रह्मसूर्यसोमाद्युक्तेषु पञ्चसु ज्योतिषसिद्धान्तेषु।

**पञ्चसिद्धौषधिक** पु० पञ्च सिद्धौषधयो यत्र कप्। "तैलकन्दं सुधाकन्दं क्रोडकन्दं रुदन्तिकाः। सर्पनेत्रयुताः पञ्चसिद्धौषधिकसंज्ञकः" राजनि० उक्ते तैलकन्दादिसिद्धौषधिपञ्चकयोगभेदे।

**पञ्चसुगन्धिक** "कर्पूरकक्कोललवङ्गपुष्पगुवाकजातीफलपञ्चकेन। समांशभागेन च योजितेन मनोहरं पञ्चसुगन्धिकं स्यात्" इत्युक्तेषु मिलितसुगन्धिकर्पूरादिद्रव्येषु राजनि०।

**पञ्चसूना** स्त्री पञ्च सूनाः प्राणिवधस्थानानि। "पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः। कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन्" मनुनोक्तेषु पञ्चसु कीटवधस्थाने-

**पञ्चस्रोतस्** न० पञ्च स्रोतांसि यत्र। तीर्थभेदे भा०आ० २१८ अ० दृश्यम्। २योगभेदे पञ्चशिखशब्दे दृश्यम्।

**पञ्चस्वरा** स्त्री पञ्च स्वराः प्रतिपाद्यतया यत्र। प्रजापतिदास दैवज्ञकृते ज्योतिषग्रन्थभेदे।

**पञ्चस्वरोदय** पु० ज्योतिषग्रन्थभेदे गरुडपु० मूलं दृश्यम्।

**पञ्चहारक** न० हेमचन्द्रोक्ते हारभेदे।

**पञ्चहोत** पु० वैवस्वतमनोः पुत्रभेदे हरिवं० ७अ०।

**पञ्चह्रद** पु० पञ्च ह्रदा—अत्र। तीर्थभेदे स्कान्दपु०।

**पञ्चांश** पु० वृत्तौ सङ्ख्यावचनस्य पूरणार्थत्वस्वीकारेण पञ्चशब्दः पञ्चमार्थे कर्म०। त्रिंशदंशात्मकराशेः पञ्चमेऽंशे तदंशपानयनरीतिः नीलकण्ठताजके उक्ता यथा "ओजर्क्षे पञ्चमांशेशाः कुजार्कीज्यज्ञभार्गवाः। समभे व्यत्ययाद् ज्ञेयाः"

**पञ्चाक्षर** त्रि० पञ्च अक्षराणि यत्र। १मन्त्रभेदे २प्रतिष्ठाख्यच्छन्दोभेदे च। "गुरु पञ्चाक्षरेण" यजु०९।३२ "पञ्चाक्षरेण छन्दसा" वेददी०। ३प्रणवे च पञ्चवर्णशब्दे दृश्यम्।

**पञ्चाग्नि** पु० संज्ञात्वात् कर्म०। १अन्वाहार्य्यपचनगार्हपत्याहवनीयसभ्यावसथ्यात्मकेषु पञ्चस्वग्निषु" "पचनः पावनस्त्रेता यस्य पञ्चाग्नयो गृहे" इति हारीतः तत्र पचनः आवसथ्योऽग्निः पावनः सभ्योऽग्निः" कुल्लू०। ते यस्य ब०। २तदग्निभिर्विहिततत्तत्कार्यकारके च। "कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निब्रह्मचारिणः" याज्ञ० व्याख्यायां सभ्यावसथ्यौ त्रेता चाग्नयश्च यस्य सन्ति स पञ्चाग्निः पञ्चाग्निविद्याध्यायी वा" मिता० छान्दो०उ० उक्तेषु च स्वर्गपर्जन्यपृथिवीपुरुषयोषात्मकेषु अग्निवदाहुत्याधारेषु ३पदार्थेषु "पञ्चाग्नयो ये च त्रिणाचिकेताः" श्रुतिः चतुर्दिक्षु च ऊर्द्धे च स्थितेषु पञ्चसु ४तेजःसु।

**पञ्चाङ्ग** पुं स्त्री० पञ्चाङ्गानि यस्य। १कमठे शब्दमाला। पञ्चभद्राख्ये २अश्वभेदे शब्दमा० "बाहुभ्यां चैव जानुभ्यां शिरसा वचसा दृशा"। पञ्चाङ्गोऽयं प्रणामः स्यात्" इति तन्त्रसारोक्ते ३प्रणामभेदे "त्वक्पत्रकुसुमं मूलं फलमेकस्य शाखिनः। एकत्र मिलितं चैतत् पञ्चाङ्गमिति संज्ञितम्" राजनि० उक्तेषु ४एकवृक्षत्वगादिषु पञ्चसु "जपहोमौ तर्पणञ्चाभिषेको विप्रभोजनम्। पञ्चाङ्गोपासनं लोके पुरश्चरणमिष्यते" तन्त्रसारोक्ते ५महापुरश्चरणे न०। "तिथिर्वारश्च नक्षत्रं योगः करणमेव च। पञ्चाङ्गमेतदुद्दिष्टम्" ज्यो०उक्तेषु ६तिथ्यादिषु। "आगमो दीर्घकालश्च निश्छिद्रोऽव्यभिचारतः। प्रत्यर्थिसन्निधानञ्च पञ्चाङ्गो भोग इष्यते" कात्या० उक्ते आगमादिपञ्चकयुक्ते ७भोगे च।

**पञ्चाङ्गगुप्त** पुंस्त्री पञ्चाङ्गानि गुप्तान्यस्य। कच्छपे त्रिका०। करपादचतुष्कशिरोरूपावयवपञ्चकस्य स्वेच्छया गोपनात् तस्य तथात्वम्। स्त्रियां जातित्वात् ङीष्।

**पञ्चाङ्गशुद्धि** स्त्री पञ्चाङ्गस्य शुद्धिः। तिथिवारादीनां शुद्धौ दोषराहित्ये विहिततिथ्यादौ "पञ्चाङ्गशुद्धिदिवसे शोदये शशितारयोः। शुभग्रहोदये शुद्धे लग्ने द्वादशशोधिते। चन्द्रताराबुकूल्ये च शस्यते सर्वकर्मणि"।

**पञ्चाङ्गी** स्त्री करिणां कटिबन्धनदामनि हेमच॰।

**पञ्चाङ्गुल** पु॰ पञ्च अङ्गुलय इव पत्राण्यस्य दारुणि कच्समा॰। एरण्डवृक्षे अमरः। २पञ्चाङ्गुल्याकारयुक्ते दर्वीभेदे च अदारुणि तु न अच्। पञ्चाङ्गुलि इत्येव।

**पञ्चाज** न॰गव्यगव्यवत् विग्रहः। अजायाः पुरीषादिपञ्चके तद्देव तद्घृतपाकविधिः सुश्रुतोक्तः पञ्चमहिषशब्दे दर्शितः।

**पञ्चातप** त्रि॰ पञ्चभिरग्न्यादिभिरातप्यते आ+तप—अच् ६त॰। अग्निचतुष्टयसूर्यरूपैः पञ्चभिस्तपस्यति। तत्स्थापनप्रकारस्तु "अग्निवेदीस्त्रिभिः शुष्कैश्चतुर्दिक्षु चतुष्कृतम्। वह्निसंस्थापनं ग्रीष्मे तीव्रांशुस्तत्र पञ्चमः। हस्तान्तरे चतुर्वह्नीन् कृत्वा वैश्वानरेष्टिका। तन्मध्यस्था सूर्यबिम्बं वीक्षन्ती बद्धलांशुका" कालिकापु॰ ४२अ॰। "ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः" स्मृतिः।

**पञ्चात्मक** त्रि॰ पञ्च आकाशादय आत्मा स्वरूपं वा यस्य। आकाशादिपञ्चभूतस्वरूपे "पञ्चात्मकं देहमिदं"मार्कण्डपु॰ ४५अ॰। पञ्चीकृतभूतजातत्वाद्देहस्य तथात्वं पाञ्चभौतिकशब्दे दृश्यम्।

**पञ्चानन** पुंस्त्री पञ्च विस्तीर्णमाननमस्य। १सिंहे स्त्रियां ङीष्। २सिंहराशौ पु॰ पञ्च आननान्यस्य। ३पञ्चमुखे शिवे च। "विभाव्य सुखपद्मं हि शिवस्य वरवर्णिनि!। सद्यो जातं वामदेवमघोरञ्च ततःपरम्। तत्पुरुषं तथेशानं पञ्चवक्त्रं प्रकीर्त्तितम्। सद्योजातं च वै शुक्लं शुद्धस्फटिकसन्निभम्। पीतवर्णं तथा सौम्यं वामदेवं मनोहरम्। कृष्णवर्णमघोरं च घनं भीमविवर्द्धनम्। रक्तं तत्पुरुषं देवि! दिव्यमूर्त्तिमनोहरम्। श्यामलं च तथेशानं सर्वदेवं शिवात्मकम्। चिन्तयेत् पश्चिमे चाद्यं द्वितीयं च तथोत्तरे। अघोरं दक्षिणे देवं पूर्वे तत्पुरुषं तथा। ईशानं मध्यतो ज्ञेयं चिन्तयेत् भक्तितत्परः" निर्वाणतन्त्रे ६पटले। ४रुद्राक्षभेदे।

**पञ्चाप्सरस्** शातकर्णिमुनेस्तपस्याभङ्गार्थमिन्द्रप्रेषित पञ्चाप्सरोभिस्तपस्याभङ्गे कृते यत्र सरोवरे तासां सर्वदास्थितिरासीत् तादृशे सरोभेदे रघु॰ १३सर्गे दृश्यम्।

**पञ्चाब्जमण्डलम्** न॰ सर्वतोभद्रमण्डलान्तर्गते पञ्चपद्मात्मके मण्डलभेदे "पञ्चाब्जमण्डलं प्रोक्तमेतत् कर्णिकावर्जितम्" राघवभट्टधृतवचनम्।

**पञ्चामरा** स्त्री संज्ञात्वात् कर्म॰। अमरलतापञ्चके "एका तु अमरा दूर्वा तस्या ग्रन्थिं समानयेत्। अन्या तु विजया देवी सिद्धिरूपा सरस्वती। अन्या तु वि[illegible]पत्राख्या शिवसन्तोषकारिणी। अन्या तु योगसिद्ध्यर्थं निर्गुण्डी चामरा लता। अन्या तु कालतुलसी श्रीविष्णोः प्रियतोषिणी। एताः पञ्चामरा ज्ञेया योगसाधनकर्मणि" इति रुद्रयामलोत्तरखण्डे २६पटले।

**पञ्चामृत** न॰ समा॰द्वि॰। "दुग्धं च शर्करा चैव घृतं दधि तथा मधु। पञ्चामृतमिदं प्रोक्त"मित्युक्तेषु पञ्चसु दुग्धादिषु।

**पञ्चामृतयोग** पु॰ "गुडूची गोक्षुरश्चैव मूषली मुण्डिका तथा। शतावरीति पञ्चानां योगः पञ्चामृताभिधः" राजनि॰ उक्तेषु युक्तगुडूच्यादिषु।

**पञ्चाम्नाय** पु॰ संज्ञात्वात् कर्म॰। शिवेन पञ्चभिर्वक्त्रैरुक्तेषु आम्नायतुल्यशास्त्रेषु यथोक्तं "पूर्वाम्नायः पूर्वमुखः पश्चिमः पश्चिमामुखः। दक्षिणो दक्षिणस्तद्वदुत्तरश्चोत्तरःपरः। निरुत्तरं तथा चोर्द्धं सिद्धान्तागमरूपिणम्। ऊर्द्धाम्नाय परिज्ञानं नाल्पस्य तपसः फलम्" इति "पूर्वाम्नायः शब्दरूपो दक्षिणः अर्थरूपकः। पश्चिमः प्रत्ररूपः स्यादुत्तरं चोत्तरस्तथा। ऊर्द्धाम्नायस्तत्त्वबोधः केवलानुभवात्मकः" इति भैरवतन्त्रम् "शिवपञ्चमुखेभ्यश्च पञ्चाम्नायाः समुद्गताः" इत्यादि कुलार्णवतन्त्रम्।

**पञ्चाम्र** न॰ "अश्वत्थमेकं पिचुमर्दमेकं न्यग्रोधमेकं दशपुष्पजातीः। द्वे द्वे तथा दाडिममातुलङ्गे पञ्चाम्रवापी नरकं न याति" इति वराहपु॰ १उक्ते "अश्वत्थ एकः पिचुमर्द एको द्वौ चम्पकौ त्रीणि च केसराणि। सप्त तालाः नव नारिकेलाः। पञ्चाम्रवापी नरकं न याति" तिथि॰त॰२उक्ते च अश्वत्थादौ। वस्तुतः पञ्चानामाम्राणां वापीत्युत्तरपदद्विगुः तात्पर्यवशात् अश्वत्थादीनां वापीत्यध्याहारेणान्वयः इति बोध्यम्।

**पञ्चाम्ल** न॰ अम्लपञ्चके "कोलदाडिमवृक्षाम्लैश्चाङ्गेरीसमायुतैः। चतुरम्लञ्च पञ्चाम्लं मातुलाङ्गसमन्वितम्" शब्दच॰ उक्ते अम्लपञ्चके

**पञ्चायतनी** स्त्री पञ्चानामुपास्यदेवरूपाणामायतनानां समाहारः। गणेशादिपञ्चदेवरूपोपास्यानां समाहारे। पञ्चदेवोपासकस्य यस्मिन् दिने यस्य पूज्यता तस्य तद्दिने मध्ये

स्थापनमन्येषां च दिग्भेदेषु स्थापनमुक्तं तन्त्रसा॰ यामले "भवानीन्तु यदा मध्ये ऐशान्यामच्युतं यजेत्। आग्नेय्यां पार्वतीमथ नैरृत्यां गणनायकम्। वायव्यां तपनं चैव पूजाक्रम उदाहृतः। यदा तु मध्ये गोविन्दमैशान्यां शङ्करं यजेत्। आग्नेय्यां गणनाथञ्च नैरृत्यां तपनन्तथा। वायव्यामम्बिकां चैव भोगमोक्षैकभूमिकाम्। शङ्करं च यदा मध्ये ऐशान्यामच्युतं यजेत्। आग्नेय्यां तपनं चैव नैरृत्यां गणनायकम्। वायव्यां पार्वतीं चैव स्वर्गमोक्षप्रदायिनीम्। आदित्यं च यदा मध्ये ऐशान्यां शङ्करं यजेत्। आग्नेय्यां गणनाथं च नैरृत्यां केशवं यजेत्। वायव्यामम्बिकां देवीं स्वर्गसाधनभूमिकाम्। गणनाथं यदा मध्ये ऐशान्यां केशवं यजेत्। आग्नेय्यामीश्वरं चैव नैरृत्यां तपनन्तथा। वायव्यां पार्वतीं चैव पूजयेन्मोक्षदायिनीम्। स्वस्थान वर्जिता देवा दुःखशोकभयप्रदाः"।

**पञ्चारी** स्त्री पञ्च पञ्च संख्यामृच्छति ऋ–अच् उप॰स॰। गौरा॰ ङीष्। शारीफलके (पाशारखेल) शब्दमाला। तस्य पञ्चञ्चकोष्ठात्मकत्वात्तथात्वम्।

**पञ्चार्चिस्** पु॰ पञ्च अर्चीँषि यस्य। बुधग्रहे त्रिका॰।

**पञ्चाल** पु॰ ब॰व॰। पचि–कालन्। १देशभेदे शब्दादिकोषः। विष्णुपु॰ ब्रह्म॰ १९अध्याये अस्यान्या निरुक्तिर्दर्शिता यथा "हर्य्यश्वानुद्गलस्सृञ्जयबृहदिषुयवीनरककाम्पिल्ल संज्ञाः। पञ्चानामेतेषां विषयाणां रक्षणायालमेते मत्पुत्रा इति पित्राभिहिता इति पञ्चालाः"। स्त्रीत्वेऽपीष्यते पाञ्चालोऽप्यत्र उक्त॰। "गच्छताद्यैव पाञ्चालान् द्रुपदस्य निवेशने" भा॰आ॰ १८४॰। सोऽभिजनोऽस्य तस्य राजा वा अण्। पाञ्चाल तद्देशवासिनि तन्नृपे च। बहुषु अणो लुक्। पञ्चाला इत्येव। पञ्चालस्यपस्य भारते द्रुपद इति ख्यातः। तस्यापत्यं कन्या पाञ्चाली द्रौपद्याम् २महादेवे भा॰ अनु॰ २८६ अ॰। ३बाभ्रव्यगोत्रे परमेश्वरात् क्रमप्राप्तरि ४ऋषिभेदे भा॰शा॰१४४अ॰।

**पञ्चालिका** स्त्री पञ्चाय प्रपञ्चाय अलति अल–ण्वुल् कापि अतइत्त्वम्। वस्त्रादिकृतपुत्तलिकायाम् अमरः।

**पञ्चाली** स्त्री पञ्चाय अलति अच् गौरा॰ ङीष्। १वस्त्रादिकृतपुत्तलिकायाम् (पाँचाली) ख्याते २गीतिभेदे च मेदि॰। पञ्चारी+रस्य लः। ३शारिफलकायाम् (पाशारखेल) त्रिका॰।

**पञ्चावट** उरस्कटे यज्ञोपवीते शब्दच॰।

**पञ्चावत्तिन्** त्रि॰ पञ्चधा अवत्तं अवदानमस्त्यस्य। पञ्चवत्त खण्डिते यजीसे कात्या॰श्रौ॰ १।१०।१९

**पञ्चावयव** पु॰ पञ्च प्रतिज्ञादयोऽवयवा यस्य। प्रतिज्ञाहेतूदाहरणोपनयनिगमनात्मकावयवपञ्चकयुक्ते न्यायवाक्ये

**पञ्चावस्थ** पु॰ पञ्चसु भूतेषु स्वकारणेषु अवस्था यस्य। शवे मृतदेहे त्रिका॰ तस्य देहारम्भकभूतानां स्वस्वकारणेष्वयोन्मुखत्वात् तथात्वम्।

**पञ्चावी** स्त्री पञ्च अवयः षण्मासात्मककाला वयोऽस्याः ङीप्। सार्द्धवर्षद्वयवयस्कायां स्त्रीगव्यां यजु॰१८।२६।

**पञ्चाशत्** स्त्री पञ्च दशतः परिमाणमस्याः नि॰। (पञ्चाश) १संख्याभेदे २तत्संख्यान्विते च ततः पूरणे डट्। पञ्चाश तत्संख्यापूरणे त्रि॰स्त्रियां ङीप्। तमप् पञ्चाशत्तम तदर्थे। तदधिकं यस्मिन् शतादौ ड। पञ्चाश पञ्चाशदधिके शते सहस्रे च डिनि। पञ्चाशिन् तत्परिमाणयुक्ते। स्त्रियां ङीप्। स्वार्थे क टाप्। पञ्चाशिका चौरपञ्चाशिका षट्पञ्चाशिका इत्यादि। [१संख्याभेदे २तत्संख्येये च।

**पञ्चाशीति** स्त्री पञ्चाधिका अशीतिः। शा॰ त॰। (पँचाशी)

**पञ्चास्य** पुंस्त्री॰ पञ्च विस्तीर्णमास्यं यस्य। १सिंहे स्त्रियां जातित्वेऽपि योपधत्वात् टाप्। २सिंहराशौ च पञ्च आस्यान्यस्य। ३पञ्चानने शिवे ४पञ्चवक्त्रे रुद्राक्षे च।

**पञ्चिन्** त्रि॰ पञ्च परिमाणमस्य डिनि। पञ्च परिमाणयुक्ते ऐत॰ब्रा॰ २।२१।८

**पञ्चीकरण** न॰ अपञ्च पञ्चात्मकानि क्रियन्ते अनेन पञ्चन्+च्वि–कृ–भावे ल्युट्। अपञ्चात्मकस्य पञ्चात्मकतासम्पादने व्यापारभेदे। पञ्चीकरणन्तु आकाशादिषु पञ्चस्वेकैकं द्विधा समं विभज्य तेषु दशसु भागेषु मध्ये प्राथमिकान् पञ्च भागान् प्रत्येकं चतुर्धा समं विभज्य तेषां चतुर्णां भागानां स्वस्वद्वितीयार्द्धभागं परित्यज्य भागान्तरेषु संयोजनम् तदुक्तं "द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः। स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते" वेदान्तसारः।

**पञ्चीकृत** त्रि॰ पञ्चीकृ–कर्मणि क्त। पञ्चात्मकताकरणेन उत्पादिते "अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्" वेदान्तपरिभाषा।

**पञ्चेध्मीय** पु॰ पञ्चभिरिध्मभिः निर्वृत्तः छ। पञ्चेध्माख्ये होमभेदे तैत्ति॰९४।७ "रात्रौ निशायां पञ्चेध्मीयेन च" आपस्तम्बः।

**पञ्चेन्द्र** त्रि॰ पञ्च इन्द्राख्यो देवता अस्य अण् तस्य "द्विगो-

शौर्य्ये२४ विषमतं मङ्गलयम् । मार्गशीर्ष भवं प्रवि-शेत्वं तत्परत२६ च भवेतद्गुतलब्धिः । रत्नयुतिं कथयन्ति च पौष्णे२७ योऽभिनवाम्बरमिच्छति भोक्तुम् । विप्रमतादथ भूपतिदत्तं यच्च विवाहविधावपि लब्धम् । तेषु गुणैः रहितेष्वपि भोक्तुं नूतनमम्बरमिष्टफलं स्यात् । भोक्तुं नवाम्बरं शस्तमृक्षेऽपि गुणवर्जिते । विवाहे राजसम्माने ब्राह्मणानां च सम्मते"। ३पिप्पलवृक्षे पु० मेदि० ४पुरस्कृते त्रि० विश्वः । ५छदिषि (चाल) भरतः

**पट्** न० पटवेष्टने—क्विप् । पादवस्त्रे पट्टीशब्दे दृश्यम् ।

**पटक** न० पट—वा० वुन् । शिबिरे शब्दमाला ।

**पटकार** त्रि० पटं करोति कृ—अण् । तन्तुवाये

**पटकुटी** स्त्री पटनिर्मिता कुटी शा०त०। पटमये गृहे (ताँबु) हेमच० । पटगृहादयोऽप्यत्र

**पटच्चर** न०पटत् इते आवेष्ट्यते पट—अति, भूतपूर्वं पटत् पटत्+चरट् । १जीर्णवस्त्रे । पटदिव वेष्टित इव चरति चर—अच् । २चौरे पु० अमरः ।

**पटत्** अव्य०। १अव्यक्तानुकरणशब्दभेदे ततः डाचि टिलोपे द्वित्वे पटपटाकरोति । इति भवद्मतृत्वे तु न डाच् पटदिति करोतीत्येव । २पटे पटच्चरशब्दे दृश्यम् ।

**पटत्क** पु० पटदिव वेष्टित इव कायति कै—क । चौरे तस्य कन्था त० नपुंसकता चिह्नणा० अस्य आद्युदात्तता ।

**पटमण्डप** पु० पटनिर्मितो मण्डपः (ताँबु) ख्याते वस्त्रगृहे

**पटमय** न० पट+प्राचुर्य्ये मयट् । १प्रचुरपटनिर्मिते गृहे (ताँबु) २शाट्यां त्रिका० ।

**पटर** त्रि० पट—वा० अरन् पटं राति रा—क वा । १गतिशीले २वस्त्रदायके च ततः गौरा० स्त्रियां ङीष् ।

**पटरक** पु० पटर+संज्ञायां कन् । गुन्द्रवृक्षे राजनि०

**पटल** न०पट—वेष्टने कलच् । १छदिषि (चाल) अमरः २नेत्ररोगभेदे च ३पिटके ४परिच्छदे ५तिलके ६समूहे च मेदि०। ७दृष्टेरावरके (चक्षेरपाता) । नेत्ररोगभेदश्च अक्षिपटलशब्दे ४२ पृ० उक्तः "तेजो जलाश्रितं बाह्यं तेष्वन्यत् पिशिताश्रितम् । मेदस्तृतीयं पटलमाश्रितं त्वस्थि चापरम् । पञ्चमांशसमं दृष्टेस्तेषां बाहुल्यमिष्यते" । एतन्नांशभेदे च । छदिषि अस्य स्त्रीत्वमपि गौरा० ङीष्। हेमच० ८वृक्षे (दन्ते) च शब्दरत्ना० ।

**पटलप्रान्त** पु० ६त० । गृहच्छदिषोऽन्तभागे (काँचि) इति प्रसिद्धे नीध्रे अमरः ।

**पटवाप** पु० पट उप्यतेऽत्र वप—आधारे घञ् । वस्त्रमयगृहे त्रिका०।

**पटवास** पु० पटनिर्मितः वासः । १वस्त्रमयगृहे (ताँबु) २शाट्याञ्च शब्दरत्ना० । पटं वासयति सुरभीकरोति वासि—अण् उप०स०। ३वस्त्रसुरभीकारके द्रव्यभेदे । तद्विधानं वृ०सं० १२०अ० यथा "त्वग्घोरपत्रभागैः सूक्ष्मैलार्धेन संयुतैश्चूर्णः । पटवासः प्रवरोऽयं मृगकर्पूरप्रबन्धेन"। स्वार्थे क वासि—ण्वुल् वा । पटवासकोऽप्यत्र अमरः ।

**पटवेश्मन्** न० पटनिर्मितं वेश्म । पटमण्डपे (ताँबु)

**पटह** पु०पु० अर्द्धर्चा० । पटेन हन्यते हन—ड, पट इत्येवं शब्दं जहाति वा हा—वा ड । १ढक्कावाद्ये अमरः २समारम्भे पु० पट—बा० अह । ३हिंसने शब्दरत्ना०

**पटाक** पुंस्त्री० पट—आक । १खगे उज्ज्वलद० स्त्रियां जातित्वात् ङीष् । २पताकायां स्त्री शब्दर० । [त्रिका०।

**पटालुका** स्त्री पट इवालति अल—बा० उक । जलौकायां

**पटि(टी)** स्त्री पट—इन् वा ङीप् । १पटभेदे २कुसुम्भिकावृक्षे च ३वारुणौ मेदि० स्वार्थे क । पटिका तत्रार्थे यवनिकायां (पर्दा) त्रिका० । [दृढत्वे ।

**पटिमन्** पु० पटोर्भावः पृथ्वा० इमनिच् टिलोपः । पटुत्वे

**पटिष्ठ** त्रि० अतिशयेन पटुः इष्ठन् । अतिशयेन पटौ ईयसुन् पटीयस् तत्रार्थे त्रि० स्त्रियां ङीप् ।

**पटीर** न० पट—ईरन् । १चालन्याम् २मूलके ३केदारे मेदि० ४वंशसारे ६खदिरे ७उदरे ८कन्दर्पे ९चन्दने च "परिपीतपटीररसैरलसः" सा०द०टी० १०उच्चे ११रम्यरीते च त्रि० शब्दरत्ना० ।

**पटु** न० पट—उन् । १छत्रायां २लवणे च मेदि० ३पांशुलवणे रत्नमा० । ४पटोले पु० अमरः ५पटोलपत्रे न० विश्वः । ६काचकोरवतायां ७कारवेल्ले ८चोरके पु० राजनि० । ९दक्षे १०नीरोगे ११चतुरे त्रि०मेदि०। १२तीक्ष्णे १३स्फुटे त्रि० हेमच० १४निष्ठुरे त्रि० जटा०। १५धूर्त्ते त्रिका० गुणवचनत्वात् स्त्रियां ङीप्। ततः भावे ष्यञ् पाटव न० त्व पटुत्व तल् पटुता स्त्री दक्षतायाम् ।

**पटुक** पु० पटु—संज्ञायां कन् । पटोले शब्दरत्ना० ।

**पटुकल्प** त्रि० ईषदूनः पटुः पटु+कल्पप् । ईषदूने पटौ

**पटुजातीय** त्रि० पटुप्रकारः पटु+प्रकारे जातीयर् । पटुप्रकारे ।

**पटुतृणक** न० पटु लवणं तदिव तृणमस्य कप् । लवणाढ्यतृणयुक्ते तृणद्रुमभेदे राजनि० ।

**पटुपत्रिका** स्त्री पटु पत्रमस्याः कप् अतइत्वम् । क्षुद्रचञ्चुपे राजनि० ।

**पटुपर्णी** स्त्री पटूनि पर्णान्यस्याः जातित्वात् ङीष् । स्वर्ण-

क्षीरिणीवृक्षे अमरः कप् कापि अतइत्त्वम् । पटुपर्णिकाप्यत्र क्षीरिणीवृक्षे [भयदर्भे राजनि०।

**पटुरूप** त्रि० प्रशस्तः पटुः पटु+प्राशस्त्ये रूपप् । अतिपटौ।

**पटुश्र** पु० राक्षसभेदे भा०व० २८४अ०।

**पटुस** पु० राजभेदे हरिवं० ११७अ० ।

**पटोटज** न० पट इव उटात् मूलात् जायते जन—ड । छत्राके शब्दरत्ना० तस्य मूलतएव वस्त्रतुल्यत्वात्तथात्वम् ।

**पटोल** पु० पट—ओलच् । स्वनामख्याते १लताभेदे २वस्त्रभेदे न० मेदि०। तल्लताया मूलादिगुणाः "पटोलस्य भवेन्मूलं विरेचनकरं सुखात् । नालं श्लेष्महरं, पत्रं पित्तहारि फलं पुनः । दोषत्रयहरं प्रोक्तं तद्वत्तिक्ता पटोलिका भावप्र०उक्ताः। "पटोलपत्रं पित्तघ्नं दीपनं पाचनं लघु । स्निग्धं वृष्यं तथोष्णञ्च ज्वरकासकृमिप्रणुत् । पटोलं कफपित्तास्रज्वरकुष्ठव्रणापहम् । विसर्पनयनव्याधिविदोषगरनाशनम् । पटोलफलकञ्चेति किञ्चिद्गुणान्तरा वुभौ" राजवल्लभः ।

**पटोलक** पु० पटोलमिव कायति कै—क । शुक्तौ शब्दमाला तस्याः पटोलफलाकारत्वात् तथात्वम् ।

**पटोलादि** पु० चक्रदत्तोक्ते कषायभेदे "पटोलं चन्दनं मूर्वा तिक्ता पाठाम्रतागणः। पित्तश्लेष्मारुचिच्छर्दिज्वरकण्डूविषापहः" ।

**पटोलाद्यघृत** पु० चक्रदत्तोक्ते घृतभेदे यथा "पटोलं कटुकां दार्वीं निम्बं वासां फलत्रिकम् । दुरालभां पर्पटकं त्रायन्तीञ्च पलोन्मिताम् । प्रस्थमामलकानाञ्च क्वाथयेन्नल्वणेऽम्भसि । पादशेषे रसे तस्मिन् घृतप्रस्थं विपाचयेत् । कल्कैर्भूनिम्बकुटजमुस्तयष्ट्याह्वचन्दनैः । सपिप्पलीकैस्तत्सिद्धं चक्षुषोः शुक्लयोर्हितम् । घ्राणकर्णाक्षिवक्त्रत्वग्गुह्यरोगव्रणापहम् । कामलाज्वरवीसर्पगण्डमालाहरं परम्" ।

**पटोली** स्त्री अपकृष्टः पटोलः ङीष् ( झिङ्गा ) ख्यातायां लतायाम् स्वार्थे क । तत्रैवार्थे मेदि० पटोलशब्दे तद्गुणादि दृश्यम् ।

**पट्ट** न० पट—क्त नेट् ट वा तस्य नेत्त्वम् । १नगरे २चतुष्पथे ३भूम्यादिकरप्रदानलेख्यपत्रे (पाट्टा) ४पीठे ५फलके (ढाल)६राजसिंहासने ७उत्तरीयवस्त्रे ८कौषेये (रेशम) ९पेषणपाषाणे पु० मेदि० १०व्रणादीनां प्रतिकारार्थं बन्धनवस्त्रे (पटी) स्वार्थे क । पट्टक तत्रार्थे सिंहासनरूपपट्टलक्षणं वृ०सं० ४८अ० उक्तं यथा

"विस्तरशो निर्दिष्टं पट्टानां लक्षणं यदाचार्यैः । तत्संक्षेपः क्रियते मयात्र सकलार्थसम्पदः । पट्टः शुभदो राज्ञां मध्येऽष्टावङ्गुलानि विस्तीर्णः । सप्त नरेन्द्रमहिष्याः षट् युवराजस्य निर्दिष्टः । चतुरङ्गुलविस्तारः पट्टः सेनापतेर्भवति मध्ये । द्वे च प्रसादपट्टः पञ्चैते कीर्त्तिताः पट्टाः । सर्वे द्विगुणायामा मध्यादर्धेन पार्श्वविस्तीर्णाः । सर्वे च शुद्धकाञ्चनविनिर्म्मिताः श्रेयसो वृद्ध्यै । पञ्चशिखो भूमिपतेस्त्रिशिखो युवराजपार्थिवमहिष्योः । एकशिखः सैन्यपतेः प्रसादपट्टो विना शिखया । क्रियमाणं यदि पत्रं सुखेन विस्तारमेति पट्टस्य । वृद्धिजयौ भूमिपतेस्तथा प्रजानां च सुखसम्पत् । जीवितराज्यविनाशं करोति मध्ये व्रणः समुत्पन्नः । मध्ये स्फुटितस्त्याज्यो विघ्नकरः पार्श्वयोः स्फुटितः । अशुभनिमित्तोत्पत्तौ शास्त्रज्ञः शान्तिकादिभिर्द्वाभ्यः । शुभनिमित्तः पट्टो नृपराष्ट्रविवृद्धये भवति" । अस्य पुंस्त्वमपि

**पट्टज** न०पट्टात् जायते जन—ड । (रेशमी)कौषेयवस्त्रे जटा०

**पट्टदेवी** स्त्री पट्टे सिंहासने स्थिता तदर्हा वा देवी । (पाटरागी) सिंहासनयोग्यायां कृताभिषेकायां राजपत्न्यां राजनि० पट्टराज्ञीत्यप्यत्र । [नेट्। प्रधाननगरे।

**पट्ट(त्त)न** न० पट(त्)न्ति जना यत्र पट—पत, वा तनन्

**पट्टरङ्ग** न० पट्टं रज्यतेऽनेन रन्ज—करणे घञ् । (बक्कम्) इति ख्याते पदार्थे ल्युट् । पट्टरञ्जनमप्यत्र राजनि०।

**पट्टशाक** पु० कर्म० । (नालिता) १शाकभेदे (पाटशाक) इति ख्याते २शाकभेदे च "पट्टशाकस्तु नाडीको नाडीशाकश्च सः स्मृतः । नाडीको रक्तपित्तघ्नो विष्टम्भी वातकोपनः" भावप्र० तद्गुणा उक्ताः ।

**पट्टार** पु० पट्टमृच्छति ऋ—अण् उप०स० । देशभेदे ततो भूमा० भवेऽर्थे वुन् । पट्टारक तद्देशभवे त्रि० ।

**पट्टार्हा** स्त्री पट्टे राजसिंहासने अर्हा यथार्हा । पट्टदेव्यां राजनि० ।

**पट्टिका** स्त्री क्षुद्रं पट्टं पट्टी ह्रस्वार्थे कन् कापि अतइत्त्वम् पट्टीव कायति कै—क वा । लोध्रभेदे वाचस्पतिः ।

**पट्टिकाख्य** पु० पट्टिकामाख्याति सरूपेण आ+ख्या—क । रक्तलोध्रे (पाटियालोध) अमरः ।

**पट्टिकालोध्र** पु० कर्म० । रक्तलोध्रे भावप्र०

**पट्टिल** पु० पट्ट+अस्त्यर्थे इलच् । पूतिकरञ्जे जटा०।

**पट्टिश(स)** पु० अस्त्रभेदे अमरः । तल्लक्षणं हेमा०परि० उशनसोक्तं यथा

**पण(न)स्य** अर्चने निघ० भ्वा० पर० सेट् । पण(न)स्यति अपण(न)स्यीत् ।

**पणाङ्गना** स्त्री पण–कर्मणि अप् कर्म० । पण्याङ्गनायां वेश्यायां हेमच० पणस्त्रीप्रभृतयोऽप्यत्र स्त्री ।

**पणाया** स्त्री पण–आय–भावे अ । १क्रयविक्रयव्यवहृतौ २स्तुतौ ३द्यूते च जटाध० ।

**पणायित** त्रि० पण–स्वार्थे आय–क्त । १स्तुते आयाभावपक्षे पणितमप्यत्र अमरः २क्रीते ३विक्रीते ४व्यवहृते च

**पणादि** न० द्वन्द्व० । वराटके कपर्दके त्रिका० ।

**पणि** स्त्री पण–आधारे इन् । १विपणौ पण्यवीथिकायाम् उज्ज्वलदत्तः । धातुनिर्देशे इक् । २पणधातौ पु०

**पणिन्** त्रि० व्यवहारो द्यूतं स्तुतिर्वा पणः अस्त्यर्थे इनि । १क्रयादिव्यवहारयुक्ते २स्तुतियुक्ते च ३ऋषिभेदे पु० । तस्यापत्यम् अण् "गाथिविदथीत्यादि" पा० न टिलोपः । पाणिन तस्यापत्ये यूनि ततः इञ् पाणिनिः ।

**पण्ड** पु०न० । पण–ड तस्य नेत्त्वम् । १क्लीबे २निष्फले त्रि० विश्वः ३वेदोज्ज्वलायां बुद्धौ स्त्री भागुरिः तस्याः स्तुत्यत्वात् तथात्वम् ।

**पण्डक** पु० सावर्णिमनोः पुत्रभेदे हरिवं० ७अ० ।

**पण्डापूर्व** न०पण्डं फलासाधकमपूर्वम् । वस्तुतः फलसाधनायोग्ये फलानुपहिते १धर्माधर्मान्यतरेऽदृष्टे यथा सन्ध्यावन्दनादेरभावे दुरदृष्टं जायते सन्ध्यादेर्वन्दने तु तस्यानुत्पत्त्या फलानुपहितं दुरदृष्टं नश्यतीति तत्पण्डापूर्वमिति मीमांसामतसिद्धम् २फलानामादके अदृष्टभेदे । गुरुभिः कार्यत्वेनापूर्वे एव विधेः शक्तिः स्वीकृता न स्वल्पं भक्षवेदित्यादिनिषेधे कलञ्जभक्षणाभावविषयकं कार्यमित्यन्वयबोधस्य स्वीकृतः । तच्चापूर्वं न किञ्चित् फलजनकमिति स्थितम् । न्यायनये तु पण्डापूर्वं नाङ्गीक्रियते विध्यर्थस्तु इष्टसाधनताज्ञानाधीनकृतिसाध्यत्वमेव इत्यस्तु विश्वजिता यजेत इत्यादौ यत्र फलं न श्रूयते तत्रापि स्वर्गः फलं कल्प्यते यथोक्तं सि०मुक्ता० "नन्वहरहः सन्ध्यामुपासीतेत्यादौ इष्टानुत्पत्तेः प्रवृत्तिः कथम् न चार्थवादिकं ब्रह्मलोकादि प्रत्यवायाभावो वा फलमिति वाच्यम् तथा सति काम्यत्वे नित्यत्वहान्यापत्तेः कामनाभावेऽकरणापत्तेश्च इत्यत्र फलश्रुतिस्तावार्थवादमात्रमिति चेन्न यदृच्छाश्राद्धादौ नित्यत्वकाम्यत्वयोरप्यविरोधात् । न च कामनाभावेऽकरणापत्तिः त्रिकालसन्ध्यपाठादौ किन्तु कामनासद्भावस्यैव कल्पनात् । ननु वेदबोधितकार्यताज्ञानात् प्रवृत्तिः सम्भवतीति चेन्न इष्टसाधनताज्ञानं विना स्वदृशकार्यताज्ञानसहस्रेणापि प्रवृत्तेरसम्भवात् । यदपि पण्डापूर्वं फलमिति तदपि न कामनाभावेऽकरणापत्तेस्तौल्यात् । कामनाकल्पने त्वार्थवादिकफलमेव रात्रिसत्रन्यायात् कल्प्यतामन्यथा प्रवृत्त्यनुपपत्तेः । तेन "सर्वं केचिदुपात्तस्य दुरितस्य प्रपद्यते । अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते" । एवम् "सन्ध्यामुपासते ये तु सततं शंसितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्" एवम् "दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्" इत्यादिकमेव फलमस्तु । न च पितृप्रीतिः कथं फलं व्यधिकरणत्वादिति वाच्यम् । गयाश्राद्धादाविव उद्देश्यत्वसम्बन्धेनैव फलजनकत्वस्य क्वचित् कल्पनात् । अतएवोक्तं "शास्त्रदर्शितफलमनुष्ठातरीत्युत्सर्गः" इति । पितॄणां मुक्तत्वे तु स्वस्य स्वर्गफलं आवश्यिकनैमित्तिकानुष्ठानस्य सामान्यतः स्वर्गफलकल्पनात् । पण्डापूर्वार्थप्रवृत्तिश्च न सम्भवति । न हि तत् सुखदुःखाभाववत् स्वतः पुरुषार्थः, न वा तत्साधनम् । प्रत्यवायानुत्पत्तौ कथं प्रवृत्तिरिति चेत् । इत्थम् यथा हि नित्यकृते प्रत्यवायाभावस्थितिः तदभावे तदभावः । एवं प्रत्यवायाभावस्य सत्त्वे दुःखाभावसत्त्वं तदभावे तदभाव इति योगक्षेमसाधारणकारणतया दुःखप्रागभावं प्रत्यपि सुखत्वात्" ।

**पण्डित** पु० पण्डा वेदोज्ज्वला बुद्धिर्जातास्य तार० इतच् । शास्त्रतात्पर्यज्ञे १विदुषि । तस्य गुणवत्त्वज्ञ कार्यभेदादनुमातव्यं तदेव तस्य लक्षणं यथा
"पठकाः पाठकाश्चैव ये चान्ये शास्त्रचिन्तकाः । सर्वे व्यसनिनो मूर्खा यः क्रियावान् स पण्डितः" भा०व० "विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः" गीता २सिह्लके पु० मेदि० । [ स्वार्थे क । २पण्डितशब्दार्थे च ।

**पण्डितक** पु० १धृतराष्ट्रपुत्रभेदे भा०आ० ६७अ० । पण्डित+

**पण्डितिमन्** पु०पण्डितस्य भावः दृढा० इमनिच् । पाण्डित्ये

**पण्डुक** पु० वातरोगयुते पक्षौ "विधर्मास्य पूर्वाह्णे सन्ध्याकाले च पण्डुकाः" मार्क०२१अ० । सायंकाले स्त्रीगमने पुत्रस्य पण्डुकता भवतीत्युक्तम् ।

**पण्य** त्रि० पण–कर्मणि यत् । १व्यवहर्त्तव्ये २विक्रेये च अमरः "मूल्यहेतु न यत् । किन्तु क्रयदेव पाणग्रम्" सि०कौ० । कम्बलेन समासेऽस्य आद्युदात्तता ।

**पण्ययोषित्** स्त्री कर्म० । वेश्यायाम् त्रिका० [हला० ।

**पण्यविक्रयशाला** स्त्री ६त० । (हाटचाला) हट्टशालायां

**पण्यवीथि** स्त्री ६त० । १विक्रेयद्रव्यविक्रयशालायां (हाट-
चाला) २हट्टे च । स्वार्थे क । पण्यवीथिका तत्रार्थे
अमरः ।

**पण्यशाला** स्त्री ६त० (हाटचाला) हट्टशालायाम् हेमच०।

**पण्या** स्त्री पिण्या+पृषो० । पिण्यायां हिरूपकोषः ।

**पण्याङ्गना** स्त्री वेश्यायाम् हेमच० पण्यस्त्रादयोऽप्यत्र ।

**पण्याजिर** न० पण्यस्याजिरमिव । पण्यस्याङ्गनतुल्यस्थाने
हट्टे । [क्रयविक्रयोपजीवके वणिग्जने अमरः ।

**पण्याजीव** त्रि० पण्यमाजीवति आ+जीव—अण् उप०स० ।

**पण्याजीवक** न० पण्याजीवेन वणिजा कायति कै—क,
आ+जीव—ण्वुल् ६त०वा । १हट्टे २वणिजि च त्रिका०।

**पण्यान्ध** स्त्री पण्यमन्धयति अच् । तृणभेदे राजनि०

**पत** गतौ अद० चु० उभ० सक०, ऐश्वर्ये अक० सेट् । पत-
यति-ते अपपतत्-त ।

**पत** ऐश्वर्ये दि० आ० अक० सेट् । पत्यते अपतिष्ट । पेते

**पत** गतौ भ्वा० पर०सक०, ऐश्वर्ये अक०ज्वला० सेट् । पतति
अपप्तत् । पपात पेततुः । ज्वला०पतः पातः । पतितः
पतयति पातयति । सनि पित्सति पापत्यते । अधःस्प-
न्दने अक०अधःसंयोगानुकूले सक० नरकं पतित इत्यादि

**पत** न० पत—अच् । १पुष्टे जटाधरः । २पतनकर्त्तरि त्रि०

**पतग** पुंस्त्री० पतन् उत्प्लवन् सन् गच्छति गम—ड
नि० । खगे अमरः स्त्रियां जातित्वात् ङीष् ।

**पतङ्ग** पुंस्त्री पतन् उत्प्लवन् गच्छति ड नि० । १खगे
अमरः स्त्रियां जातित्वात् ङीष् । २सूर्ये पु० ३शलभे
(फड़िङ्ग)कीटभेदे ४शालिभेदे पु० मेदि० ५जलमधूकवृक्षे
राजनि० । ६पारदे न०मेदि० ७चन्दनभेदे न० शब्दच० ।
प्लक्षद्वीपस्थे क्षत्रियस्थानीये दवर्णभेदे पु० "हंसपतङ्गोर्द्ध्व-
वनसत्याङ्गसंज्ञाश्चत्वारो वर्णाः" भाग० ५।२०।७ श्लो०।
उत्प्लवनेन १०पतने च पतङ्गशब्दे दृश्यम् ।

**पतङ्गम** पुंस्त्री० पतन् उत्प्लवन् सन् गच्छति गम—खच्
नि० । खगे स्त्रियां जातित्वात् ङीष् ।

**पतङ्गर** पु० पतङ्गं पतनेनोत्प्लवनेन गमनम् पतङ्गं ततः अ-
स्त्यर्थे र । उत्प्लवनेन गतियुक्ते अ०६।४।२ भा०।

**पतङ्गा** पु० अग्ने निरस्तुः । [मधुमक्षिकाभेदे अमरः

**पतङ्गिका** स्त्री पतङ्ग+संज्ञायां कन् अपि अतइत्वम् ।

**पतङ्गिन्** पु० पतङ्ग—उत्प्लवनेन गमनमस्त्यस्य इनि । खगे
स्त्रियां नान्तत्वात् ङीप् । हरिवं०२०अ० उदाहरणम् ।

**पतञ्चिका** स्त्री धनुर्ज्यायां शब्दच० ।

**पतञ्चल** पु० गोत्रप्रवर्त्तकर्षिभेदे स च काप्यः । "ते पतञ्च-
लस्य काप्यस्य" शत० ब्रा० १४।६।२ पतञ्जल इति तत्र
पाठान्तरम् । बहुत्वे उपका०द्वन्द्वे अद्वन्द्वे पतञ्चला इत्येव।

**पतञ्जलि** पु० पतन् अञ्जलिर्नमस्ततया यस्मिन् । १योगसूत्र-
कारके ऋषिभेदे गोनर्द्दतीरे तपस्यतः कस्यचिद्ऋषेरञ्ज-
लितः पतिते पाणिनिसूत्रस्य २भाष्यकारे तस्य तथो-
त्पत्तिकथा मञ्जूषा० वार्त्ति० शेखरादौ दृश्या । अस्य
च योगशास्त्रकारकात् भिन्न इति वरणायामस्माभिः ।
समर्थितम् । अनयोरभेद इति पाश्चात्यवैयाकरणाः ।
भेदाभेदयोर्युक्तायुक्तत्वे च सुधीभिर्विभाव्ये । योगमतञ्च
सर्वदर्शनसंग्रहे प्रदर्शितं यथा "सांख्यप्रवचनापरनामधेयं
मनुवर्त्तमानानां मतमुपन्यस्यते । तत्र योगशास्त्रं पत-
ञ्जलिप्रणीतं पादचतुष्टयात्मकम् । तत्र प्रथमे पादे "अथ
योगानुशासनमिति" योगशास्त्रारम्भप्रतिज्ञां विधाय
"योगश्चित्तवृत्तिनिरोधः" इत्यादिना योगलक्षणमभि-
धाय समाधिं सप्रपञ्चं निरदिक्षत् भगवान् पतञ्जलिः ।
द्वितीये "तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः"
इत्यादिना व्युत्थितचित्तस्य क्रियायोगं यमादीनि पञ्च
बहिरङ्गानि साधनानि । तृतीये "देशबन्धश्चित्तस्य
धारणा" इत्यादिना धारणाध्यानसमाधित्रयमन्तरङ्गं
संयमपदवाच्यं तत्रावान्तरफलं विभूतिजातञ्च । चतुर्थे
"जन्मौषधिमन्त्रतपःसमाधिजाःसिद्धयः" इत्यादिना सिद्धि-
पञ्चकप्रपञ्चनपुरःसरं परं प्रयोजनं कैवल्यम् । प्रधाना-
दीनि पञ्चविंशतितत्त्वानि प्राचीनान्येव सम्मतानि षड्-
विंशस्तु परमेश्वरः क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषः
स्वेच्छया निर्माणकायमधिष्ठाय लौकिकवैदिकसम्प्रदाय-
प्रवर्त्तकः संसाराङ्गारे तप्यमानानां प्राणभृतामनुग्राह-
कश्च । ननु पुष्करपलाशवन्निर्लेपस्य तस्य (पुरुषस्य) तापः
कथमुपपद्यते येन परमेश्वरोऽस्याऽनुग्राहकतया कक्षीक्रियते
इति चेदुच्यते तापकस्य रजसः सत्त्वमेव तप्यं बुद्ध्यात्मना
परिणमते इति सत्त्वे परितप्यमाने तदाकारेण तद्भेदाव-
गाही पुरुषोऽपि तप्यत इत्युच्यते । तदुक्तमाचार्यैः
"सत्त्वं तप्यं बुद्धिभावेन वृत्तं भावास्ते वा राजसास्ताप-
कास्ते । तप्याभेदग्राहिणी तामसी या वृत्तिस्तस्यां
तप्य इत्युक्त आत्मेति" । तद्भाष्ये व्यासेनाप्युक्तम्
"अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परि-

चाभिन्नायां प्रतिसंक्रान्ते च तद्वृत्तिमनुभवतीति"। भोक्तृशक्तिरिति चिच्छक्तिरुच्यते सा चात्मैव परिणामिन्यर्थे बुद्धितत्त्वे प्रतिसंक्रान्ते च प्रतिविम्बिते तद्वृत्तिमनुभवतीति बुद्धौ प्रतिविम्बिता सा चिच्छक्तिर्बुद्धिच्छायापत्त्या बुद्धिवृत्त्यनुकारवतीति" भावः। तथा शुद्धोऽपि पुरुषः प्रत्ययं बौद्धमनुपश्यति तमनुपश्यन्नतदात्मापि तदात्मक इव प्रतिभासत इति। इत्थं तप्यमानस्य पुरुषस्यादरनैरन्तर्य्यदीर्घकालानुबन्धियमनियमाद्यष्टाङ्गयोगानुष्ठानेन परमेश्वरप्रणिधानेन च सत्वपुरुषान्यताख्यातावनुपप्लवायां जातायामविद्यादयः पञ्च क्लेशाः समूलकाषं कषिता भवन्ति कुशलाकुशलाश्च कर्म्माशयाः समूलघातं हता भवन्ति। ततश्च पुरुषस्य निर्लेपस्य कैवल्येनावस्थानं कैवल्यमिति सिद्धम्। तत्र "अथ योगानुशासनमिति" प्रथमसूत्रेण प्रेक्षावत्प्रवृत्त्यङ्गं विषयप्रयोजनसम्बन्धाधिकारिरूपमनुबन्धचतुष्टयं प्रतिपाद्यते। अत्राथशब्दोऽधिकारार्थः स्वीक्रियते (इतःपरं तस्यारम्भार्थकता महता प्रबन्धेन समर्थिता तत्र दृश्या) तदुक्तमपि व्यासभाष्ये "अथेत्ययमधिकारार्थः प्रयुज्यते" इति योगसूत्रविवरणे च तद्व्याख्याता वाचस्पतिः "तस्मादयमथशब्दोऽधिकारद्योतको मङ्गलार्थश्चेति सिद्धमिति"। तदित्थमनुशासनस्याधिकारार्थत्वपक्षे शास्त्रेण प्रस्तूयमानस्य योगस्योपवर्णनात् समस्तशास्त्रतात्पर्य्यव्याख्यानेन शास्त्रस्य सुखतोबोधप्रवृत्तिरास्तामित्युपपन्नम्। ननु "हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः" इति याज्ञवल्क्यस्मृतेः पतञ्जलिः कथं योगस्य शासितेति चेदुच्यते अतएव तत्र तत्र पुराणादौ विभिन्नस्य योगस्य विप्रकीर्णतया दुर्ग्राह्यार्थत्वं मन्यमानेन भगवता कृपासिन्धुना फणिपतिना सारं सञ्जिघृक्षुणा अनुशासनमारब्धं न तु साक्षाच्छासनम्। यदायमथशब्दोऽधिकारार्थः तदैवं वाक्यार्थः सम्पद्यते योगानुशासनं शास्त्रमधिकृतं वेदितव्यमिति। तत्र शास्त्रे व्युत्पाद्यमानतया योगः ससाधनः सफलो विषयः तद्व्युत्पादनमवान्तरफलं व्युत्पादितस्य योगस्य कैवल्यं परमप्रयोजनम्। शास्त्रयोगयोः प्रतिपाद्यप्रतिपादकभावलक्षणः सम्बन्धः, योगस्य कैवल्यस्य च साध्यसाधनभावलक्षणः सम्बन्धः स च श्रुत्यादिप्रसिद्ध इति प्रागेवावादिषम्। मोक्षमपेक्षमाणाः अस्याधिकारिण इत्यर्थसिद्धम्। न चाथातो ब्रह्मजिज्ञासेत्यादावथाधिकारिणोऽर्थतः सिद्धिराशङ्कनीया तत्राथशब्देनानन्तर्य्याभिधाने प्रथमाङ्किकया अधिकारिसमर्पणसिद्धावार्थिकत्वशङ्कानुदयात्। अतएवोक्तं "न श्रुतिप्राप्ते प्रकरणादीनामवकाशः" इति। अस्यार्थः यत्र हि श्रुत्या अर्थो न लभ्यते तत्रैव प्रकरणादयोऽर्थं समर्पयन्ति नेतरत्र। यत्र तु शब्दादेवार्थस्योपलम्भः तत्र नेतरस्य सम्भवः शीघ्रबोधिन्या श्रुत्या बोधितेऽर्थे तद्विरुद्धार्थं प्रकरणादि समर्पयति अविरुद्धं वा। न प्रथमः विरुद्धार्थबोधकस्य तस्य बाधितत्वात्। न चरमः वैयर्थ्यात्तदाह "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति" "बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा। मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया" इति च तस्माद्विषयादिमत्त्वाद्ब्रह्मविचारकशास्त्रवद्योगानुशासनं शास्त्रमारम्भणीयमिति स्थितम्। ननु व्युत्पाद्यमानतया योग एवात्र प्रस्तुतो न शास्त्रमिति चेत् सत्यं प्रतिपाद्यतया योगः प्राधान्येन प्रस्तुतः स च तद्विषयेण शास्त्रेण प्रतिपाद्यत इति तत्प्रतिपादने करणं शास्त्रं करणगोचरश्च कर्तृव्यापारो न कर्म्मगोचरतामाचरति। यथा छेत्तुर्देवदत्तस्य व्यापारभूतमुद्यमननिपातनादि कर्म्म करणभूतपरशुगोचरं न कर्म्मभूतवृक्षादिगोचरं तथा च वक्तुः पतञ्जलेः प्रवचनव्यापारापेक्षया योगविषयस्याभिधानकरणस्य शास्त्रस्य, अभिधानव्यापारापेक्षया तु योगस्यैवेति विभागः। ततश्च योगशास्त्रस्यारम्भः सम्भावनां भजते अत्र चानुशासनीयो योगश्चित्तवृत्तिनिरोध इत्युच्यते। ननु युजियोग इति संयोगार्थतया परिपठितात् युजेर्निष्पन्नो योगशब्दः संयोगवचन एव स्यान्न तु निरोधवचनः। अतएवोक्तं याज्ञवल्क्येन "संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः" इति मदेतद्वाक्तं जीवपरयोः संयोगे कारणस्यान्यतरकर्म्मादेरसम्भवात् अजसंयोगस्य कणभक्षाक्षचरणादिभिः प्रतिक्षेपाच्च। मीमांसकमतानुसारेण तदङ्गीकारेऽपि नित्यसिद्धस्य तस्य साध्यत्वाभावेन शास्त्रवैफल्यापत्तेश्च धातूनामनेकार्थत्वेन युजेः समाध्यर्थत्वोपपत्तेश्च। तदुक्तम् "निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः। अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनमिति" अतएव केचन युजिं समाधावपि पठन्ति (युज समाधाविति)। नापि याज्ञवल्क्यवचनव्याकोपः तत्रत्यस्यापि योगशब्दस्य समाध्यर्थत्वात्। "समाधिः समतावस्था जीवात्मपरमात्मनोः। ब्रह्मण्येव

स्थितिर्या स समाधिः प्रत्यगात्मनः” इति तेनैवोक्तत्वाच्च । तदुक्तं भगवता व्यासेन “योगः समाधिरिति” । यद्येवमष्टाङ्गयोगे चरमस्याङ्गस्य समाधित्वमुक्तं पतञ्जलिना यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधयोऽष्टाङ्गानि योगस्येति । न चाङ्गस्याङ्गितां गन्तुमुत्सहते उपकार्य्योपकारकभावस्य दर्शपूर्णमासप्रयाजादौ भिन्नायतनत्वेनात्यन्तभेदादतः समाधिरपि न योगशब्दार्थो युज्यत इति चेत्तन्न युज्यते व्युत्पत्तिमात्राभिधित्सया तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिरिति निरूपितचरमाङ्गवाचकेन समाधिशब्देनाङ्गिनो योगस्याभेदविवक्षया व्यपदेशोपपत्तेः । न च व्युत्पत्तिबलादेव सर्वत्र शब्दः प्रवर्त्तते तथात्वे गच्छतीति गौरिति व्युत्पत्तेः तिष्ठन् गौर्न स्यात् गच्छतो देवदत्तस्यो स्यात् प्रवृत्तिनिमित्तञ्च प्रागुक्तमेव चित्तवृत्तिनिरोध इति तदुक्तं “योगश्चित्तवृत्तिनिरोधः” इति । ननु वृत्तीनां निरोधश्चेद्योगोऽभिमतस्तासां ज्ञानत्वेनात्माश्रयतया तन्निरोधोऽपि प्रध्वंसपदवेदनीयस्तदाश्रयो भवेत् प्रागभावप्रध्वंसयोः प्रतियोगिसमानाश्रयत्वनियमात् ततश्च “उपयन्नपयन् धर्म्मो विकरोति हि धर्म्मिणमिति” न्यायेनात्मनः कौटस्थ्यं विहन्येतेति चेत्तदपि न घटते निरोध्यानां प्रमाणविपर्य्ययविकल्पनिद्रास्मृतिस्वरूपाणां वृत्तीनामन्तःकरणाद्यपरपर्य्यायचित्तधर्म्मत्वाङ्गीकारात् कूटस्थनित्या चिच्छक्तिरपरिणामिनी विज्ञानधर्म्माश्रयो भवितुं नार्हत्येव । न च चितिशक्तेरपरिणामित्वमसिद्धमिति वाच्यं चितिशक्तिरपरिणामिनी सदा ज्ञातृत्वात् न सदैव न सदैव यथा चित्तादि इत्याद्यनुमानसम्भवात् तथा यद्यसौ पुरुषः परिणामी स्यात्तदा परिणामस्य कादाचित्कत्वात्तासां चित्तवृत्तीनां सदाज्ञातृत्वं नोपपद्येत चिद्रूपस्य सदैवाधिष्ठातृत्वेनावस्थितस्य यदन्तरङ्गनिर्मलं सत्त्वं तस्यापि सदैव स्थितत्वात् येन येनार्थेनोपरक्तं भवति तस्य दृश्यस्य सदैव चिच्छायापत्त्या भानोपपत्त्या पुरुषस्य निःसङ्गत्वं सम्भवति । ततश्च सिद्धं तस्य सदा ज्ञातृत्वमिति न काचित् परिणामित्वाशङ्कावतरति । चित्तं पुनर्येन विषयेणोपरक्तं भवति स विषयो ज्ञातः यदुपरक्तं न भवति तदज्ञातमिति वस्तुतोऽयस्कान्तमणिकल्पस्य ज्ञाताज्ञातकारणभूतोपरागानुपरागधर्म्मित्वादयःसधर्मकं चित्तं परिणामि इत्युच्यते । ननु चित्तस्येन्द्रियाणां चाहङ्कारिकाणां सर्वगतत्वात् सर्वविषयैरस्ति सदा सम्बन्धः तथाच सर्वेषां सर्वदा सर्वत्र ज्ञानं प्रसज्येत सर्वगतत्वेऽपि चित्तं यत्र शरीरे वृत्तिमत् तेन शरीरेण सह सम्बन्धो येषां विषयाणां तेष्वेवास्य ज्ञानं भवति नेतरेष्वित्यतिप्रसङ्गाभावादतएवायस्कान्तमणिकल्पा विषयाः अयःसधर्मकं चित्तमिन्द्रियप्रणालिकयाभिसम्बध्योपरञ्जयन्ति । तस्माच्चित्तस्य धर्मा वृत्तयो नात्मनः तथाच श्रुतिः “कामः सङ्कल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिरित्येतत् सर्वं मन एवेति” । चिच्छक्तेरपरिणामित्वं पञ्चशिखाचार्य्यैराख्यायि “अपरिणामिनी भोक्तृशक्तिरिति” पतञ्जलिनापि “सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वादिति” । चित्तपरिणामित्वेऽनुमानमुच्यते चित्तं परिणामि ज्ञाताज्ञातविषयत्वात् श्रोत्रादिवदिति । परिणामस्त्रिविधः प्रसिद्धः धर्म्मलक्षणावस्थाभेदात् धर्म्मिणश्चित्तस्य नीलाद्यालोचनं धर्म्मपरिणामः यथा कनकस्य कटकमुकुटकेयूरादि । धर्म्मस्य वर्त्तमानत्वादिर्लक्षणपरिणामः नीलाद्यालोचनस्य स्फुटत्वादिरवस्थापरिणामः कनकादेस्तु नवपुराणत्वादिरवस्थापरिणामः । एवमन्यत्रापि यथासम्भवं परिणामत्रितयमूहनीयं तथाच प्रमाणादिवृत्तीनां चित्तधर्म्मत्वात् तन्निरोधोऽपि तदाश्रय एवेति न किञ्चिदनुपपन्नम् । ननु वृत्तिनिरोधो योग इत्यङ्गीकारे सुषुप्त्यादौ विक्षिप्तमूढादिचित्तवृत्तीनां निरोधसम्भवाद्योगत्वप्रसङ्गः न चैतद्युज्यते क्षिप्ताद्यवस्थासु क्लेशप्रहाणादेरसम्भवान्निःश्रेयसपरिपन्थित्वाच्च । तथा हि क्षिप्तं तेषु तेषु विषयेषु क्षिप्यमाणमस्थिरं चित्तमुच्यते । तमःसमुद्रे मग्नं निद्रावृत्तिमच्चित्तं मूढमिति गीयते । क्षिप्ताद्विशिष्टं चित्तं विक्षिप्तमिति गीयते विशेषो नाम चञ्चलं हि मनः कृष्ण ! प्रमाथि बलवद्दृढमिति” न्यायेनास्थिरस्यापि मनसः कादाचित्कमस्तुतविषयस्थैर्य्यसम्भवेन स्थैर्य्यम् । अस्थिरत्वञ्च स्वाभाविकं व्याध्याद्युपचयजनितं वा तदाह “व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः” इति । तत्र दोषत्रयवैषम्यनिमित्तो ज्वरादिर्व्याधिः, चित्तस्याकर्म्मण्यत्वं स्त्यानं, विरुद्धकोटिद्वयावगाहि ज्ञानं संशयः, समाधिसाधनानामभावनं प्रमादः, शरीरवाक्चित्तगुरुत्वादप्रवृत्तिरालस्यं, विषयाभिलाषोऽविरतिः, अतस्मिंस्तद्बुद्धिर्भ्रान्तिदर्शनं कुतश्चिन्निमित्तात् समाधिभूमेरलाभोऽलब्धभूमिकत्वं, लब्धायामपि तस्यां चित्तस्याप्रतिष्ठा अनवस्थितत्वमित्यर्थः । तस्माद् वृत्तिनिरोधो

योगपदाभिधेयमर्हति इति चेन्मैवं दोषः क्षिप्तमूढविक्षिप्ता-द्यवस्थात्रये वृत्तिनिरोधस्य हेयत्वसत्त्वेऽप्युपादेययोरेकाग्रनिरुद्धावस्थयोर्वृत्तिनिरोधस्य योगत्वसत्त्वात् । एकतानं चित्तमेकाग्रमुच्यते निरुद्धसकलवृत्तिकं संस्कारमात्रशेषं चित्तं निरुद्धमिति कथ्यते । स च समाधिर्द्विविधः सम्प्रज्ञातासम्प्रज्ञातभेदात् तत्रैकाग्रचेतसि यः प्रमाणादिवृत्तीनां बाह्यविषयाणां निरोधः स सम्प्रज्ञातसमाधिः सम्यक् प्रज्ञायतेऽस्मिन् प्रकृतेर्विविक्ततया चित्तमिति व्युत्पत्तेः । स चतुर्विधः सवितर्कादिभेदात् समाधिर्नाम भावना सा च भाव्यस्य विषयान्तरपरिहारेण चेतसि पुनः पुनर्निवेशनं, भाव्यञ्च द्विविधम् ईश्वरस्तत्त्वानि च । तान्यपि द्विविधानि जडाजडभेदात् जडानि प्रकृतिमहदहङ्कारादीनि चतुर्विंशतिः अजडः पुरुषः । तत्र यदा पृथिव्यादीनि स्थूलानि विषयत्वेनादाय पूर्वापरानुसन्धानेन शब्दार्थोल्लेखसम्भेदेन च भावना प्रवर्त्तते स समाधिः सवितर्कः । यदा तन्मात्रान्तःकरणलक्षणं सूक्ष्मं विषयमालम्ब्य देशाद्यवच्छेदेन भावना प्रवर्त्तते तदा सविचारः । यदा रजस्तमोलेशानुविद्धं चित्तं भाव्यते तदा सुखप्रकाशमयस्य सत्त्वस्योद्रेकात् सानन्दः । यदा रजस्तमोलेशानभिभूतं शुद्धं सत्त्वमालम्बनीकृत्य या प्रवर्त्तते भावना तदा तस्यां सत्त्वस्य न्यग्भावाच्चितिशक्तेरुद्रेकात् सत्तामात्रावशेषत्वेन सास्मितः समाधिः । वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः इति । सर्ववृत्तिनिरोधे त्वसम्प्रज्ञातः समाधिः । ननु सर्ववृत्तिनिरोधो योग इत्युक्ते सम्प्रज्ञाते व्याप्तिर्न स्यात् तत्र सत्त्वप्रधानायाः सत्त्वपुरुषान्यताख्यातिलक्षणाया वृत्तेरनिरोधादिति चेत्तदेतदार्थं क्लेशकर्मविपाकाशयपरिपन्थिचित्तवृत्तिनिरोध योग इत्यङ्गीकारात् । क्लेशाः पुनः पञ्चधा प्रसिद्धाः अविद्यास्मितारागद्वेषाभिनिवेशाः । अत्राविद्येत्यत्र किमाश्रीयते पूर्वपदार्थप्राधान्यम् अमक्षिकं वर्त्तत इतिवत् उत्तरपदार्थप्राधान्यं वा राजपुरुष इतिवत् अन्यपदार्थप्राधान्यं वा अमक्षिको देश इतिवत् तत्र न पूर्वः, पूर्वपदार्थप्रधानत्वे विद्यायाः प्रसज्यप्रतिषेधोपपत्तौ क्लेशादिकारकत्वानुपपत्तेः अविद्याशब्दस्य स्त्रीलिङ्गत्वाभावापत्तेश्च । न द्वितीयः,कस्यचिदभावेन विशिष्टाया विद्यायाः क्लेशादिपरिपन्थित्वेन तद्बीजत्वानुपपत्तेः । न तृतीयः "नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपः" इति वृत्तिकारवचनानुसारेण अविद्यमाना विद्या यस्याः सा अविद्या बुद्धिरिति समाधिविहितौ तस्या अविद्यायाः क्लेशादिबीजत्वानुपपत्तेः विवेकख्यातिपूर्वकसर्ववृत्तिसम्पन्नायास्तस्यास्तथात्वाप्रसङ्गात् उक्तञ्च अस्मितादीनां क्लेशानामविद्याविद्यानत्वम् । "अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणामिति" । तत्र प्रसुप्तत्वं प्रबोधकसहकार्यभावेनानभिव्यक्तिः, तनुत्वं प्रतिपक्षभावनया शिथिलीकरणं, विच्छिन्नत्वं बलवता क्लेशेनाभिभवः,उदारत्वं सहकारिसन्निधानात् कार्यकारित्वम् । तदुक्तं वाचस्पतिमिश्रेण व्यासभाष्यव्याख्यायाम् "प्रसुप्तास्तत्त्वलीनानां तन्ववस्थाश्च योगिनाम् । विच्छिन्नोदाररूपाश्च क्लेशा विषयसङ्गिनाम्" इति इन्द्रवत् अतन्त्रपदार्थद्वयावगमादुत्तरपदार्थप्रधानत्वं नावकल्पितम् । तस्मात् पक्षत्रयेऽपि क्लेशादिनिदानत्वमविद्यायाः प्रसिद्धं हीयेतेति चेत् तदपि न शोभनं विभाति यतः पशुदासपङ्क्तिन्यायादविद्याशब्देन विद्याविरुद्धस्य विपर्ययज्ञानस्याभिधानमिति वृद्धैरङ्गीकारात् । तदाह "नामधात्वर्थयोगे तु नैव नञ् प्रतिषेधकः । वदत्यब्राह्मणाधर्मावन्यमात्रविरोधिनाविति । इडप्रयोगगम्या हि शब्दार्थाः सर्व एव नः । तेन यत्र प्रयुक्तो यो न तस्मादपनीयते" इति वाचस्पतिमिश्रैरप्युक्तं "लोकाधीनावधारणो हि शब्दार्थयोः सम्बन्धः लोके चोत्तरपदार्थप्रधानस्यापि नञ उत्तरपदाभिधेयोपमर्दकस्य तद्विरुद्धतया तत्र प्रयोगदर्शनादिहापि तद्विरुद्धे प्रवृत्तिरिति" । एतदेवाभिप्रेत्योक्तम् "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्येति" । अतस्मिंस्तद्बुद्धिर्विपर्ययः इत्युक्तं भवति तद्यथा अनित्ये घटादौ नित्यत्वाभिमानः, अशुचौ कायादौ शुचित्वप्रत्ययः । "स्थानाद्बीजादुपष्टम्भान्निस्यन्दान्निधनादपि । कायमाधेयशौचत्वात् पण्डिता ह्यशुचिं विदुः" इति "परिणामतापसंस्कारैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिन इति" न्यायेन दुःखे स्रक्चन्दनवनितादौ सुखत्वारोपः अनात्मनि देहादावात्मबुद्धिः । तदुक्तम् "अनात्मनि च देहादावात्मबुद्धिस्तु देहिनाम् । अविद्या तत्कृतो बन्धस्तन्नाशे मोक्ष उच्यते" इति एवमियमविद्या चतुष्प्रकारा भवति । नन्वेतेष्वविद्याविशेषेषु किञ्चिदनुगतं सामान्यलक्षणं वर्णनीयम् अन्यथा विशेषस्यासिद्धेः । तथाचोक्तं भट्टाचार्यैः "सामान्यलक्षणं त्यक्त्वा विशेषस्यैव लक्षणम् । न शक्यं केवलं वक्तुमतोऽप्यस्य न वाच्यता" इति तदपि न वाच्यमतस्मिंस्तद्बुद्धिरिति सामान्यलक्षणाभि-

धानेन दृशोरेकत्वात्। सत्त्वपुरुषयोरत्यन्तभिन्नयोरेकताभि-मानोऽस्मिता तदप्युक्तं "दृग्दर्शनशक्त्योरेकात्मताभिमा-नोऽस्मितेति"। सुखाभिज्ञस्य सुखानुस्मृतिपूर्वकः सुख-साधनेषु तृष्णारूपो गर्धो रागः। दुःखज्ञस्य तदनुस्मृतिपु-रःसरं तत्साधनेषु निन्दा द्वेषः तदुक्तं "सुखानुशयी रागः दुःखानुशयी द्वेषः" इति। किमत्रानुशयिशब्दे ताच्छी-ल्यार्थे णिनिरिनिर्वा मत्वर्थीयोऽभिमतः नाद्यः "सुप्य-जातौ णिनिस्ताच्छील्ये" इत्यत्र सुपीति वर्त्तमाने पुनःसुब्-ग्रहणस्य उपसर्गनिवृत्त्यर्थत्वेन सोपसर्गाद्धातोर्णिनेरनु-त्पत्तेः यथा कथञ्चिदङ्गीकारेऽपि "अचोञ्णितीति" वृद्धि-प्रसक्त्यापतिशाय्यादिपदवदनुशायिपदस्य प्रयोगप्रसङ्गात्। न द्वितीयः "एकाक्षरात् कृतो जातेः सप्तम्याश्च न तौ (इनि-ठनौ) स्मृताविति" तत्प्रतिषेधादत्र चानुशयशब्दस्याजन्तत्वेन कृदन्तत्वात्। तस्मादनुशयिशब्दो दुरुपपाद इति चेत् नैतद्भद्रं भावानवबोधात् प्रायिकाभिप्रायमिदं वचनम्। अतएवोक्तं वृत्तिकारेण "इतिकरणो विवक्षार्थः सर्व-त्राभिसम्बध्यते" इति तेन क्वचिद्भवति कार्यी कार्यि-कस्तण्डुली तण्डुलिक इति तथा च कृदन्तात् जातेश्च प्रतिषेधस्य प्रायिकत्वम् अनुशयशब्दस्य कृदन्ततया इनेरु-पपत्तिरिति सिद्धम्। पूर्वजन्मानुभूतमरणदुःखानुभववास-नाबलात् सर्वस्य प्राणभृन्मात्रस्याकृमेरा च विदुषः सञ्जाय-मानः शरीरविषयादेर्मम वियोगो मा भूदिति प्रत्यहं निमित्तं विना प्रवर्त्तमानो भयरूपोऽभिनिवेशः पञ्चमः क्लेशः मा न भूवं हि भूयासमिति प्रार्थनायाः प्रत्या-त्मनुभवसिद्धत्वात् तदाह "स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः" इति। ते चाविद्यादयः पञ्च सांसारि-कविविधदुःखोपहारहेतुत्वेन पुरुषं क्लिश्यन्तीति क्लेशाः प्रसिद्धाः। कर्माणि विहितप्रतिषिद्धरूपाणि ज्योति-ष्टोमब्रह्महत्यादीनि विपाकाः कर्मफलानि जात्यायु-र्भोगाः, आफलविपाकाच्चित्तभूमौ शेरते इत्याशयाः धर्मा-धर्मसंस्काराः। तत्परिपन्थिचित्तवृत्तिनिरोधो योगः। निरोधो, नाभावमात्रमभिमतं तस्य तुच्छत्वेन भावरूपसं-स्कारजननत्वमत्वासम्भवात् किन्तु तदाश्रयो मधुमतीमधु-प्रतीकाविशोकासंस्कारशेषताद्यपरपर्यायः चित्तस्यावस्थावि-शेषः निरुध्यन्तेऽस्मिन् प्रमाणाद्याश्चित्तवृत्तय इति व्यु-त्पत्तेरुपपत्तेः। अभ्यासवैराग्याभ्यां वृत्तिनिरोधः। तत्र स्थितौ भूयान् यत्नोऽभ्यासः। प्रकाशप्रवृत्तिरूपवृत्तिर-हितस्य चित्तस्य स्वरूपनिष्ठः परिणामविशेषः स्थितिः। तन्निमित्तीकृत्य यत्नः पुनः पुनस्तथात्वेन चेतसि निवेशन-मभ्यासः। अर्थित्वे दोषिनं हन्तीति विशिष्टार्थेन सम-योक्तं भवति "दृष्टानुश्रविकविषयवितृष्णस्य वशी-कारसंज्ञा वैराग्यम्"। ऐहिकपारलौकिकविषयादौ दोष-दर्शनाद्विरक्तिभाजः मयैते विषया वश्याः नाहमेतेषां वश्य इति विमर्शो वैराग्यमित्युक्तं भवति। समाधि-परिपन्थिक्लेशतनूकरणार्थं समाधिलाभार्थं च प्रथमं क्रियायोगविधानपरेण योगिना भवितव्यं क्रियायोगस-म्पादने अभ्यासवैराग्ययोः सम्भवात् तदुक्तं भगवता "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यते" इति। क्रियायोगश्चोपदिष्टः पतञ्जलिना "तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" इति। तपःस्वरूपं निरूपितं याज्ञवल्क्येन "विधि-नोक्तेन मार्गेण कृच्छ्रचान्द्रायणादिभिः। शरीरशोषणं प्राहुस्तापसास्तप उत्तमम्" इति। प्रणवगायत्र्यादिमन्त्र-प्रभृतीनामध्ययनं स्वाध्याय इति। तत्र मन्त्रा द्विविधाः वैदिकास्तान्त्रिकाश्च। वैदिकाश्च द्विविधाः प्रगीता अप्रगी-ताश्च। तत्र प्रगीताः सामानि अप्रगीताश्च द्विविधाः छन्दोबद्धास्तद्विलक्षणाश्च। तत्र प्रथमा ऋचो द्वितीया यजूंषि तदुक्तं जैमिनिना "तेषामृग् यत्रार्थवशेन पाद-व्यवस्था गीतिषु सामाख्या शेषे यजुःशब्दः" इति। तन्त्रेषु कामिककारणप्रपञ्चाद्यागमेषु ये ये वर्णितास्ते तान्त्रि-काः। ते पुनर्मन्त्रास्त्रिविधाः स्त्रीपुन्नपुंसकभेदात्तदाह "स्त्रीपुंनपुंसकत्वेन त्रिविधा मन्त्रजातयः। स्त्रीमन्त्रा वह्निजायान्ताः नमोऽन्ताः स्युर्नपुंसकाः। शेषाः पुमांस-स्ते प्रशस्ताः सिद्धा वश्यादिकर्मणि" इति। प्लावनादि-संस्काराभावेऽपि निरस्तसमस्तदोषत्वेन सिद्धिहेतुत्वात् सिद्धत्वम्। स च संस्कारो दशविधः कथितः शारदा-तिलके "मन्त्राणां दश कथ्यन्ते संस्काराः सिद्धिदायिनः। निर्दोषतां प्रयान्त्याशु ते मन्त्राः साधु संस्कृताः। जननं जीवनञ्चैव ताडनं बोधनं तथा। अथाभिषेकोऽथ विम-लीकरणाप्यायने पुनः। तर्पणं दीपनं गुप्तिर्दशैता मन्त्र-संस्क्रियाः। मन्त्राणां मातृकावर्णादुद्धारो जननं स्मृतम्। प्रणवान्तरितान् कृत्वा मन्त्रवर्णान् जपेत् सुधीः। मन्त्रार्णसंख्यया तद्धि जीवनं संप्रचक्षते। मन्त्रवर्णान् समालिख्य ताडयेच्चन्दनाम्भसा। प्रत्येकं वायुबीजेन ताडनं तदुदाहृतम्। विलिख्य मन्त्रवर्णांस्तु प्रसूनैः क-रवीरजैः। मन्त्राक्षरेण संख्यातैर्हन्यात्तद्बोधनं मतम्।

स्वतन्त्रोक्तविधानेन मन्त्री मन्त्रार्थतत्त्ववित्। अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेद्विशुद्धये। संचिन्त्य मनसा मन्त्रं ज्योतिर्मन्त्रेण निर्दहेत्। मन्त्रे मलत्रयं मन्त्री विमलीकरणं हि तत्। तारव्योमाग्निमनुयुक् ज्योतिर्मन्त्र उदाहृतः। कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मनोः। वारिबीजेन विधिवदेतदाप्यायनं मतम्। मन्त्रेण वारिणा मन्त्रे तर्पणं तर्पणं स्मृतम्। तारमायारमायोगो मनोर्दीपनमुच्यते। जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम्। संस्कारा दश मन्त्राणां सर्वतन्त्रेषु गोपिताः। यत्कृत्वा सम्प्रदायेन मन्त्री वाञ्छितमश्नुते। रुद्धकीलितविच्छिन्नसुप्तशप्तादयोऽपि च। मन्त्रदोषाः प्रणश्यन्ति संस्कारैरेभिरुत्तमैः" इति। तदनन्तकाण्डतात्पर्यकत्वेन मन्त्रशास्त्रस्योपयोगित्वेन। ईश्वरप्रणिधानं नामाभिसंहितानामनभिसंहितानाञ्च सर्वासां क्रियाणां परमेश्वरे परमगुरौ फलानपेक्षया समर्पणम्। फलेच्छुकम् "कामतोऽकामतो वापि यत्करोमि शुभाशुभम्। तत्सर्वं त्वयि विन्यस्तं त्वत्प्रयुक्तः करोम्यहम्" इति। क्रियाफलसन्न्यासोऽपि भक्तिविशेषापरपर्य्यायं प्रणिधानमेव फलानभिसन्धानेन कर्मकरणात् तथा च गीयते गीतासु भगवता "कर्मण्येवाधिकारस्ते मा फलेषु कदाचन। मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि" इति फलाभिसन्धेरुपघातकत्वमभिहितं भगवद्भिर्नीलकण्ठभारतीश्वरणैः "अपि प्रयत्नसम्पन्नं कामेनोपहतं तपः। न तुष्टये महेशस्य श्वलीढमिव पायसम्" इति त्रा च तपःस्वाध्यायेश्वरप्रणिधानात्मिका क्रिया योगसाधनत्वाद्योग इति। शुद्धसारोपलक्षणाश्रयणेन निरूप्यते यथायुर्घृतमिति। शुद्धसारोपलक्षणा नाम लक्षणाप्रभेदः। मुख्यार्थबाधतद्योगाभ्यामर्थान्तरप्रतिपादनं लक्षणा सा द्विविधा रूढिमूला प्रयोजनमूला च तदुक्तं काव्यप्रकाशे "मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्। अन्योऽर्थो लक्ष्यते यत् सा लक्षणाऽऽरोपिता क्रिया" इति। यच्छब्देन लक्ष्यत इत्याख्याते गुणीभूतं प्रतिपादनमात्रं परामृश्यते। सा लक्षणेति प्रतिनिर्दिश्यमानापेक्षया तच्छब्दस्य स्त्रीलिङ्गत्वोपपत्तिः। तदुक्तं कैयटैः "निर्दिश्यमानप्रतिनिर्दिश्यमानयोरैक्यमापादयन्ति सर्वनामानि पर्य्यायेण तत्तल्लिङ्गमुपाददते" इति तत्र कर्मणि कुशल इत्यादि रूढिलक्षणाया उदाहरणं कुशान् लातीति व्युत्पत्त्या दर्भादानकर्त्तरि यौगिकं कुशलपदं विवेचकत्वसादृश्यात् प्रवीणे प्रवर्त्तमानम् अनादिवृद्धव्यवहारपरम्परानुपातित्वेनाभिधानवत् प्रयोजनमनपेक्ष्य प्रवर्त्तते। तदाह "निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्" इति। तस्मात् रूढिलक्षणायाः प्रयोजनापेक्षा नास्ति। यद्यपि प्रयुक्तः शब्दः प्रथमं मुख्यार्थं प्रतिपादयति तेनार्थेनार्थान्तरं लक्ष्यते इति अर्थधर्मो लक्षणा तथापि तत्प्रतिपादके शब्दे समारोपितः सन् शब्दव्यापार इति व्यपदिश्यते" इति। स च योगो यमादिभेदेनाष्टाङ्ग इति निर्दिष्टः। तत्र यमा अहिंसादयः। तदाह पतञ्जलिः "अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहा यमाः" इति। नियमाः शौचादयः। तदप्याह "शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः" इति। एते च यमनियमा विष्णुपुराणे दर्शिताः "ब्रह्मचर्य्यमहिंसां च सत्यास्तेयापरिग्रहान्। सेवेत योगी निष्कामो योग्यतां स्वं मनो नयन्। स्वाध्यायशौचसन्तोषतपांसि नियतात्मवान्। कुर्वीत ब्रह्मणि परं परस्मिन् प्रवणं मनः। एते यमाः सनियमाः पञ्च पञ्च प्रकीर्त्तिताः। विशिष्टफलदाः काम्ये निष्कामाणां विमुक्तिदाः" इति। स्थिरसुखमासनं पद्मासनभद्रासनवीरासनस्वस्तिकासनदण्डकासनसोपाश्रयपर्य्यङ्कक्रौञ्चनिषदनोष्ट्रनिषदनसमसंस्थानभेदाद्दशविधम् "पादाङ्गुष्ठौ निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु। ऊर्वोरुपरि विप्रेन्द्र! कृत्वा पादतले उभे। पद्मासनं भवेदेतत् सर्वेषामभिपूजितम्" इत्यादिना याज्ञवल्क्यः पद्मासनादिस्वरूपं निरूपितवान् तत्सर्वं तत एवावगन्तव्यम्। तस्मिन्नासनस्थैर्ये सति प्राणायामः प्रतिष्ठितो भवति। स च श्वासप्रश्वासयोर्गतिविच्छेदस्वरूपः तत्र श्वासो नाम बाह्यस्य वायोरन्तरानयनम्। प्रश्वासः पुनः कौष्ठस्य बहिर्निःसारणम्। तयोरुभयोरपि सञ्चरणाभावः प्राणायामः। ननु नेदं प्राणायामसामान्यलक्षणं तद्विशेषेषु रेचकपूरककुम्भकप्रकारेषु तदनुगतेरयोगादिति चेन्नैष दोषः सर्वत्रापि श्वासप्रश्वासगतिविच्छेदसद्भावात् तथा हि कौष्ठस्य वायोर्बहिर्निःसरणं रेचकः प्राणायामः प्रश्वासत्वेन प्रयुक्तः। बाह्यवायोरन्तर्धारणं पूरकः स श्वासरूपः। अन्तस्तम्भवृत्तिः कुम्भकः यस्मिन् जलमिव कुम्भे निश्चलतया प्राणाख्यो वायुरवस्थाप्यते। तत्र सर्वत्र श्वासप्रश्वासद्वयगतिविच्छेदोऽस्त्येवेति नास्ति शङ्कावकाशः। तदुक्तं "तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः

प्राणायामः” इति । स च वायुः सूर्य्योदयमारभ्य सार्द्धघटिकाद्वयं घटीयन्त्रस्थितघटभ्रमणन्यायेन एकैकस्यां नाड्यां भवति एवं सत्यहर्निशं श्वासप्रश्वासयोः षट्शताधिकैकविंशतिसहस्राणि जायन्ते । अतएवोक्तं मन्त्रसमर्पणरहस्यवेदिभिरजपामन्त्रसमर्पणे “षट्शतानि गणेशाय षट्सहस्रं स्वयम्भुवे । विष्णवे षट्सहस्रञ्च षट्सहस्रं पिनाकिने । सहस्रमेकं गुरवे सहस्रं परमात्मने । सहस्रमात्मने चैवमर्पयामि कृतं जपम्” इति तथा नाडीसञ्चरणदशायां वायोः सञ्चरणे पृथिव्यादीनि तत्त्वानि वर्णविशेषवशात् पुरुषार्थाभिलाषुकैः पुरुषैरवगन्तव्यानि । तदुक्तमभियुक्तैः “सार्द्धं घटीद्वयं नाडी रेकैकार्कोदयात् वहेत् । अरघट्टघटीभ्रान्तिन्यायो नाड्योः पुनः पुनः । शतानि तत्र जायन्ते निश्वासोच्छ्वासयोर्नव । खखषट्कद्विकैः २१६०० सङ्ख्याहोरात्रे सकले पुनः । षट्त्रिंशद्गुरुवर्णानां या वेला भवने भवेत् । सा वेला मरुतो नाड्यन्तरे सञ्चरतो भवेत् । प्रत्येकं पञ्च तत्त्वानि नाड्योश्च वहमानयोः । वहन्त्यहर्निशं तानि ज्ञातव्यानि यतात्मभिः । ऊर्द्धं वह्निरधस्तोयं तिरश्चीनः समीरणः । भूमिरर्द्धपुटे व्योम सर्वगं प्रवहेत् पुनः । वायोर्वह्नेरपां पृथ्व्या व्योम्नस्तत्त्वं वहेत् क्रमात् । वहन्त्योरुभयोर्नाड्योर्ज्ञातव्योऽयं यथाक्रमम् । पृथ्व्याः पलानि पञ्चाशच्चत्वारिंशत्तथाम्भसः । अग्नेस्त्रिंशत् पुनर्वायोर्विंशतिर्नभसो दश । प्रवाहकालसंख्येयं हेतुर्विक्षुब्धयोरयं । पृथ्वी पञ्चगुणा तोयं चतुर्गुणमथानलः । त्रिगुणो द्विगुणो वायुर्वियदेकगुणं भवेत् । गुणं प्रति दश पलान्युर्व्यां पञ्चाशदित्यतः । एकैकहानिस्तोयादेस्तथा पञ्चगुणाः क्षितेः । तत्त्वाभ्यां भूजलाभ्यां स्यात् शान्तिकार्य्ये फलोन्नतिः । दीप्तास्थिरादिके कार्य्ये तेजोवाय्वम्बरेषु च । पृथ्व्यप्तेजोमरुद्व्योमतत्त्वानां चिह्नमुच्यते । आद्ये स्थैर्य्यं स्वचित्तस्य, शैत्ये कामोद्भवो भवेत् । तृतीये कोपसन्तापौ चतुर्थे चञ्चलात्मता । पञ्चमे शून्यतैव स्यादथ वा धर्मवासना । श्रुत्योरङ्गुष्ठकौ मध्याङ्गुल्यौ नासापुटद्वये । सृक्कणोः प्रान्त्यकोपान्त्याङ्गुली शेषे दृगन्तयोः । न्यस्यान्तर्भूपृथिव्यादितत्त्वज्ञानं भवेत् क्रमात् । पीतश्वेतारुणश्यामैर्विन्दुभिर्निरुपाधि खम्” इत्यादिना । यथावद्वायुतत्त्वमवगम्य तन्नियमने विधीयमाने विवेकज्ञानावरणकर्मक्षयो भवति । “तपो न परं प्राणायामादिति” । “दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः । प्राणायामैस्तु दह्यन्ते तद्वदिन्द्रियजा मलाः” इति च । तदेवं यमादिभिः संस्कृतमनस्कस्य योगिनः संयमप्रत्याहारः कर्त्तव्यः चक्षुरादीनामिन्द्रियाणां प्रतिनियतरञ्जनीयकोपनीयमोहनीयप्रवणत्वप्रहाणेनाविकृतस्वरूपप्रवणचित्तानुकारः प्रत्याहारः इन्द्रियाणि विषयेभ्यः प्रतीपमाह्रियन्तेऽस्मिन्निति व्युत्पत्तेः । ननु यदा चित्तमभिनिविशते नेन्द्रियाणि तेषां बाह्यविषयत्वेन तत्र सामर्थ्याभावादतः कथं चित्तानुकारः ? अद्धा अतएव वस्तुतस्तत्साम्याभावमभिसन्धाय सादृश्यार्थमिव शब्दञ्चकार सूत्रकारः “स्वविषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः” इति । सादृश्यञ्च चित्तानुकारनिमित्तं विषयासम्प्रयोगः यदा चित्तं निरुध्यते तदा चक्षुरादीनां निरोधे प्रयत्नान्तरं नापेक्षणीयं यथा मधुकरराजं मधुमक्षिका अनुवर्त्तन्ते तथेन्द्रियाणि चित्तमिति । तदुक्तं विष्णुपुराणे “शब्दादिष्वनुरक्तानि निगृह्याक्षाणि योगवित् । कुर्य्याच्चित्तानुकारीणि प्रत्याहारपरायणः” इति । “वश्यता परमा तेन जायतेऽतिचलात्मनः । इन्द्रियाणामवश्यैस्तैर्योगी योगस्य साधकः” इति । नाभिचक्रहृदयपुण्डरीकनासाग्रादावाध्यात्मिके हिरण्यगर्भप्रजापतिप्रभृतिके बाह्ये वा देशे चित्तस्य विषयान्तरपरिहारेण स्थिरीकरणं धारणा । तदाह “देशबन्धश्चित्तस्य धारणेति” । पौराणिकाश्च “प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम् । वशीकृत्य ततः कुर्य्याच्चित्तस्थानं शुभाश्रयम्” इति । तस्मिन् देशे ध्येयावलम्बनस्य प्रत्ययस्य विसदृशप्रत्ययप्रहाणेन प्रवाहो ध्यानं तदुक्तं “तत्र प्रत्ययैकतानता ध्यानमिति” । अन्यैरप्युक्तं “तद्रूपप्रत्ययैकाग्र्या सन्ततिश्चान्यनिस्पृहा । तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते तथा” इति । समस्ताङ्गसम्पन्नं प्रागेव प्रत्यपीपदाम । तदनेन योगाङ्गानुष्ठानेनादरनैरन्तर्य्यदीर्घकालसेवितेन समाधिप्रतिपक्षक्लेशप्रशयेऽभ्यासवैराग्यवशाच्च मधुमत्यादिसमाधिलाभो भवति । अथ किमेवमकाण्डादेवातिविकटाभिरत्यन्ताप्रसिद्धाभिः कर्णाटगौडलाटभाषाभिर्भीषयते भवान्, न हि वयं भवन्तं भीषयामहे किन्तु मधुमत्यादिपदार्थव्युत्पादनेन तोषयामः तत्त्वाकुतोभयेन भवता श्रूयतामवधानेन । तत्र मधुमती नामाभ्यासवैराग्यादिवशाद्गतरजस्तमोलेशसुखप्रकाशमयसत्त्वभावनयाऽनवद्यवैशारद्यविद्योतनरूपा ऋतम्भरप्रज्ञाख्या समाधिसिद्धिः । तदुक्तं

"ऋतम्भरा तत्र प्रज्ञेति"। ऋतं सत्यं बिभर्त्ति कदाचिदपि न विपर्य्ययेणाच्छाद्यते तत्र स्थितौ दार्ढ्ये सति द्वितीयस्य योगिनः सा प्रज्ञा भवतीत्यर्थः। चत्वारः खलु योगिनः प्रसिद्धाः प्रथमकल्पिको मधुभूमिकः प्रज्ञाज्योतिरतिक्रान्तभावनीयश्चेति। तत्राभ्यासे प्रवृत्तिमात्रज्योतिः प्रथमः न त्वनेन परचित्तादिगोचरज्ञानरूपं ज्योतिर्वशीकृतमित्युक्तं भवति। ऋतम्भरप्रज्ञो द्वितीयः, भूतेन्द्रियजयी तृतीयः परवैराग्यसम्पन्नश्चतुर्थः। मनोजवित्वादयो मधुप्रतीकसिद्धयः। तदुक्तं "मनोजवित्वं विकरणभावः प्रधानजयश्चेति"। मनोजवित्वं नाम कायस्य मनोवदुत्तमो गतिलाभः विकरणभावः कायनिरपेक्षाणामिन्द्रियाणामभिमतदेशकालविषयापेक्षवृत्तिलाभः, प्रधानजयः प्रकृतिविकारेषु सर्वेषु वशित्वम्। एताश्च सिद्धयः करणपञ्चकस्वरूपजयात् तृतीयस्य योगिनः प्रादुर्भवन्ति यथा मधुन एकदेशोऽपि स्वदते तथा प्रत्येकमेव ताः सिद्धयः स्वदन्त इति मधुप्रतीकाः। सर्वभावाद्यधिष्ठातृत्वादिरूपा विशोका सिद्धिः। तदाह "सत्त्वपुरुषान्यताख्यातिमात्रप्रतिष्ठस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञत्वं चेति"। सर्वेषां व्यवसायव्यवसायात्मकानां गुणपरिणामरूपाणां भावानां स्वामिवदाक्रमणं सर्वभावाधिष्ठातृत्वं तेषामेव शान्तोदिताव्यपदेश्यधर्मित्वेन स्थितानां विवेकज्ञानं सर्वज्ञातृत्वम्। तदुक्तं "विशोका वा ज्योतिष्मतीति"। सर्ववृत्तिप्रत्यस्तमये परं वैराग्यमाश्रितस्य जात्यादिबीजानां क्लेशानां निरोधसमर्थो निर्वीजः समाधिः असम्प्रज्ञातपदवेदनीयः संस्कारशेषताव्यपदेश्यः चित्तस्यावस्थाविशेषः। तदुक्तं "विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः इति। एवञ्च सर्वतो विरज्यमानस्य तस्य पुरुषधौरेयस्य क्लेशबीजानि च निर्दग्धशालिबीजकल्पानि प्रसवसामर्थ्यविधुराणि मनसा साकं प्रत्यस्तं गच्छन्ति। तदेतेषु प्रलीनेषु निरुपप्लवविवेकख्यातिपरिपाकवशात् कार्य्यकारणात्मकानां प्रधानेलयः चितिशक्तिस्वरूपप्रतिष्ठा पुनर्बुद्धिसत्त्वाभिसम्बन्धविधुरा कैवल्यं लभते इति। सिद्धिद्वयी च मुक्तिरुक्ता पतञ्जलिना "पुरुषार्थशून्यानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति"। न चास्मिन् सत्यपि कस्मान्न जायते जन्तुरिति वदितव्यं कारणाभावात् कार्य्याभाव इति प्रमाणसिद्धार्थे नियोगानुयोगयोरयोगात्। अपरथा कारणाभावेऽपि कार्य्यसम्भवे मणिवेधादयोऽन्धादिभ्यो भवेयुः। तथा चानुपपन्नार्थतायामाभाणको लौकिक उपपन्नार्थो भवेत्। तथा च श्रूयते "अन्धो मणिमविध्यत्तमनङ्गुलिरावयत् (ग्रथितवान्)। अग्रीवस्तं प्रत्यमुञ्चत् (पिनद्धवान्) तमजिह्वोऽभ्यपूजयत्" (स्तुतवानिति) यावत्। एवञ्च चिकित्साशास्त्रवद्योगशास्त्रं चतुर्व्यूहं यथा चिकित्साशास्त्रं रोगो रोगहेतुरारोग्यं भेषजमिति तथेदमपि संसारः संसारहेतुर्मोक्षो मोक्षोपाय इति। तत्र दुःखमयः संसारो हेयः, प्रधानपुरुषयोः संयोगो हेयभोगहेतुः, तस्यात्यन्तिकी निवृत्तिर्हानं तदुपायः सम्यग्दर्शनम्। एवमन्यदपि शास्त्रं यथासम्भवं चतुर्व्यूहमूहनीयमिति सर्वमवदातम्"।

**पतत्** त्रि० पत–शतृ वा० अति वा। १पतनकर्त्तरि २पक्षिणि पु० अमरः।

**पतत्र** न० पत–करणे अत्रन्। वाहने उज्ज्वलदत्तः।

**पतत्रि** पु० पत–अत्रिन्। खगे उज्ज्वल० पतत्री पतत्रयः।

**पतत्र** पु० पतन्तं त्रायते त्रै–क। पक्षिणां पक्षे (पाखा) अमरः। [हरिवं० १८४५ श्लो०।

**पतत्रिकेतन** पु० पतत्री केतनं यस्य। गरुड़ध्वजे विष्णौ

**पतत्रिन्** पु० पतत्र+अस्त्यर्थे इनि। खगे अमरः।

**पतद्ग्रह** पु० पतत् मुखादिभ्यः च्यवत् जलादि गृह्णाति ग्रह–अच्। (पिकदानी) पात्रभेदे अमरः। अच् उप०स०। पतद्ग्राह तत्रार्थे हेमच०। [शब्दरत्ना०

**पतद्भीरु** पु० पतत् पक्षी भीरुर्यस्मात्। श्येने खगभेदे

**पतन** न० पत–भावे ल्युट्। १अधःसंयोगानुकूलस्पन्दने २पातित्ये च "द्विजातिकर्मभ्यो हानिः पतनम्। परत्र चासिद्धिस्तमेके नरकम्" गौतमः। पतितशब्दे दृश्यम् "विहितस्याननुष्ठानात् निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" याज्ञ०।

**पतनीय** त्रि० पत–अनीयर् पतनमर्हति कर्त्तरि वा। १पात्ये २पतनार्हे च त्रि०। बा० करणे अनीयर्। ३पातके न०

**पतम** पु० पतत्यस्मात् कर्मक्षये पत–अम। चन्द्रे उणादिवृत्तिः क्षीणपुण्यानां चन्द्रलोकादेव पतनं शास्त्रे श्रूयते इति तस्य तथात्वम्। [नशीले।

**पतयालु** त्रि० पति–आलुच्–तत्पर्य्युदासेन न णिलोपः। पत-

**पतयिष्णु** पति–बा० इष्णुच् न णिलोपः। पतनशीले ऋ० १।१६२।११ उदा०।

**पतर** त्रि० पत–वा० अरन्। गन्तरि ऋ० २।२।४ उदा०

**पतरु** त्रि० पत–बा० अरु। पतनशीले ऋ० १।१८।७ उदा०

**पतस** त्रि० पत–असच्। १खगे २चन्द्रे ३पतङ्गे च उणादि०

**पताका** स्त्री पत्यते ज्ञायते योधोऽनया पत–णिच् आक । त्रिकोणाकारे ध्वजादिनिर्मिते वस्त्रखण्डभेदे । वास्तुपे देयपताकालक्षणं हेमा॰दा॰ मत्स्यपु॰ उक्तं यथा “चतु-र्हस्ताः पताकाः स्युर्विंशत्यङ्गुलविस्तृताः । दशहस्ताः पताकानां दण्डाः पञ्चांशवेष्टिताः । सिन्दूरा कर्बुरा धूम्रा धूसरा मेघसन्निभा । हरिता पाण्डुवर्णा च शुभ्रा पूर्वादितः क्रमात् । एवं वर्णाः शुभाः कार्य्याः पताकाः पापनाशन!”। “कोणेषु कर्णसंयुताः पताकाः शैलेन्द्रदृष्ट्या-यतिकाश्च मध्ये । चित्रं ध्वजं दिक्करदैर्घ्यवंशं त्रिदो-ल्लतप्रान्तसकिङ्किणीकम् । श्वेताश्च नवमीं पूर्वैशान-योर्मध्यतो बुधः । विन्यसेत् पताकाश्च ध्वजांश्चा अपि पूर्वतः” कुण्डोद्योतः । “कोणेषु नानां कोणपालानां ये वर्णाः पीतादयः पूर्वमोक्तास्, गैरिकादिभिस्तद्वर्ण-क्लिष्टवस्त्रखण्डरूपाः हस्तद्वादशदीर्घाणि (तेषामपि) तैर्युताः सप्तहस्तदीर्घा एकहस्तविस्तृताः पताका दश-हस्तवंशयोजिताः चित्रं ध्वजं त्रिहस्तविस्तृतं प्रान्ते वर्त्तमानकिङ्किणीकं शीर्षे चामरं दशहस्तदैर्घ्यवंशयुक्तं तादृशं तं मध्ये विन्यसेत् पूर्वादितः पताकाश्च विन्यसेदि-त्युत्तरश्लोकेनान्वयः नवमीं पताकां पूर्वैशानयोर्मध्ये श्वेतां तादृशीमेवाचार्य्यकुण्डे विन्यसेत् ध्वजांश्चा अपि पताकाश्च पूर्वादिक्रमेण भूमौ पञ्चांशरोपणेन विन्यसे-दिति” । अस्याः “त्रिकोणा वै पताकाः स्युश्चतुष्कोणा-ध्वजाः स्मृताः” विष्णु॰ उक्तेः त्रिकोणाकारता बोध्या । २सौभाग्ये ३नाटकाङ्गभेदे पताकास्थानकशब्दे दृश्यम् पिङ्गलोक्ते वक्ष्यमाणमेरुपङ्क्तिस्थतत्तत्कोष्ठस्थाङ्क-निर्धारितस्वरूपभेदानां प्रथमत्वद्वितीयत्वादिना प्राति-स्विकरूपनिर्द्धारणे ५निर्द्धारणाङ्कसमूहे वा यथोक्तं पिङ्गलतट्टीकयोः

“अमुकवर्णमात्राप्रस्तारयोरेतावद्गुरुलघुयुक्तो भेद एतावत्संख्याक इति मेरुपङ्क्तिवर्त्तितत्तत्कोष्ठस्थाङ्क-निर्धारितस्वरूपसंख्यानां भेदानां प्रथमत्वद्वितीयत्वादि-प्रातिस्विकरूपस्य निर्द्धारणं निर्द्धारकाङ्कसमूहो वा प-ताका सा च द्विधा वर्णमात्राभेदात् । तत्र प्रथमं वर्णपताकानिर्माणप्रकारमाह उद्दिष्टेति” टी॰ । “उद्दिष्टा सरि अङ्का दिज्जसु पुव्वङ्कं पर भरणे कविज्जसु । प्रा-णोत्र अङ्क पड़िहव पत्थरसुकव पताका करिज्जसु” पि॰सू॰ “उद्दिष्टसदृशानङ्कान् देहि पूर्वाङ्कस्य परस्मिन् भ-रणं कुरुष्व । प्रथमप्राप्तमङ्कं परित्यज प्रस्तारसंख्यं पताकां कुर्विति” संस्कृतम् । “उद्दिष्टाङ्कसदृशानङ्कान् देहीत्यर्थः पू-र्वमेकमङ्कं दत्त्वा उत्तरोत्तरं द्विगुणितान् द्विचतुरष्टादि-कानङ्कान् यथाप्रस्तारसङ्ख्यं स्थापयेत्यर्थः । ततः पूर्वाङ्कस्य परस्मिन्नुत्तरवर्त्तिन्यङ्के प्रस्तारसंख्यं प्रस्तारस्य संख्या यस्यां क्रियायां तद्यथा स्यात्तथा भरणं योजनं कुरुष्वेत्यर्थः । प्रस्तारसंख्याधिकस्य योजनकरणनिषेधश्च-र्णेन यदि कुत्रचित् पूर्वाङ्कस्य पराङ्कयोजने प्रस्तार-संख्यातोऽधिका संख्या भवेत् तत्र तत्र योजनिषायाः-तम् । एवं कृते प्रथमप्राप्तमङ्कं परित्यज तेन यत्र प्रथम-प्राप्ताङ्क एव कुत्रचित् पूर्वाङ्कस्य योजननिष्पन्नाङ्कस्तत्र स न पात्य इत्यायातम् । एवं प्रकारेण वर्णानां पताकां कुरुष्वेत्यर्थः । अत्र यः पूर्वाङ्कः यत्र पराङ्के प्रथमं योज्यते तेन योजननिष्पन्ना अङ्काः तत्पराङ्कादधोऽधः स्थाप्या इति नियमो गुरूपदेशतो बोध्यः । पूर्वप्रस्ता-रादेरपेक्षाबोधजनकत्वात् क्रमयोऽपेक्षातः पूर्वापरत्व मवतीत्यपि । एतदर्थं षड्वर्णमेरुप्रस्तारे प्रस्ता-रस्य प्रथमकोष्ठस्थिताङ्कसूचितः सर्वगुरुरेक एको भेदो द्वितीयकोष्ठस्थितषडङ्कसूचिताः त्रिगुरु-काः षट्प्रकारो भेदाः तृतीयकोष्ठस्थपञ्चदशाङ्कसूचिता द्विगुरुकाः षड्भेदाश्चतुर्थकोष्ठस्थविंशत्यङ्कसूचिता एकगुरुका प्रकारो भेदाः पञ्चमकोष्ठस्यैकाङ्कसूचितः सर्वलघुक एको भेदः । पञ्चकोष्ठस्थाङ्कयोजननिष्पन्नाङ्को चतुःसंख्या इति । तत्र तत्तत्संख्यगुरुलघुकाः भेदा यथानिर्दि-ष्टप्रस्तारकरणे कतमे कतमे इति प्रश्ने प्रथमम् एकं कोष्ठं कर्त्तव्यं ततस्तत्संलग्नमेकं कोष्ठं कृत्वा तदधः-कोष्ठद्वयं कार्य्यं ततो द्वितीयपङ्क्तिवत् तृतीयप-ङ्क्तौ कोष्ठचतुष्टयं कृत्वा तदधः कोष्ठद्वयं ततस्तृतीय-पङ्क्तिस्थितकोष्ठषट्कमध्यादुपरिस्थितकोष्ठचतुष्टयसंलग्नं कोष्ठचतुष्टयं कार्य्यं ततः चतुर्थपङ्क्तिस्थितकोष्ठ-चतुष्टयमध्योपरितनैकसंलग्नमेकं कोष्ठं कार्य्यमेवं षोडश कोष्ठानि सम्पद्यन्ते चतुरक्षरस्य तेषामेवापेक्ष-णात् ननु कथमेतेनैव क्रमेण कर्त्तव्यम् अन्यक्रमस्यापि सम्भवादिति चेन्न मेरुस्थितानां चतुरक्षरस्य पञ्चानां कोष्ठानां कोष्ठस्थाङ्कसूचितानाम् एकचतुःषट्चतुरेककोष्ठा-नां क्रमशः पङ्क्तिरूपेण विहितत्वेन तथास्थापनौ-चित्यात् ततः प्रथमकोष्ठादिक्रमेण एकद्विचतुरष्ट-षोडशाङ्कान् स्थापयेत् । ततः प्रथमकोष्ठस्थैकाङ्कस्य सर्वेभ्यः पूर्ववर्त्तित्वात् तेन सह तदुत्तरवर्त्तिद्व्यङ्के-

न योजितस्तदङ्को द्वाङ्कस्याधः स्थाप्यः ततः तेन सह चतुरङ्काङ्कयोजननिष्पन्नपञ्चाङ्कनवाङ्कौ तदङ्कादधोऽधः स्थाप्यौ। तेन सह षोडशाङ्कस्य योजने प्रस्तारसंख्याधिक्यात् तन्नकर्त्तव्यम्। तथा च तेन सह कस्यचित् पराङ्कस्य योजने प्रथमप्राप्ताङ्क एवायातीति प्रथमकोष्ठस्थमङ्कं त्यक्त्वा द्वितीयकोष्ठस्थं द्व्यङ्कं तदानीं सर्वेभ्यः पूर्वत्वेन गृह्णीयात्। तथाच तेन पूर्वोक्तेन द्व्यङ्केन तदुत्तरवर्त्ति तृतीयकोष्ठस्थचतुरङ्कस्य योजननिष्पन्नषडङ्कश्चतुरङ्कादधो विन्यास्यः ततो द्वितीयकोष्ठपङ्क्तिस्थद्व्यङ्काधःस्थितत्र्यङ्केन पूर्वेण चतुरङ्कस्य योजननिष्पन्नः सप्ताङ्कः तृतीयकोष्ठस्थषडङ्कादधः स्थाप्यस्ततः द्वितीयपङ्क्तितृतीयकोष्ठस्थपञ्चाङ्केन सह चतुरङ्कस्य योजने पूर्वप्राप्तनवाङ्कलाभात् तत्परित्यागेन तदधोनिष्ठनवाङ्केन चतुरङ्कस्य योजननिष्पन्नत्रयोदशाङ्कस्तृतीयपङ्क्तावधःकोष्ठे स्थाप्यः। ततो द्वितीयपङ्क्तिस्थकोष्ठचतुष्टयस्थद्व्याद्विनवान्तचतुरङ्कानामन्यतमेन सह चतुरङ्कस्य योजने कृते पूर्वप्राप्ताङ्कलाभापत्तेस्त्यागः। ततः तृतीयपङ्क्तिस्थतदुत्तरवर्त्ति चतुर्थपङ्क्तिप्रथमकोष्ठस्थाष्टाङ्कस्य योजननिष्पन्नो दशाङ्कः तृतीयपङ्क्तौ पञ्चमकोष्ठे स्थाप्यः द्वितीयपङ्क्तिद्वितीयकोष्ठस्थत्र्यङ्केनाष्टाङ्कस्य योजननिष्पन्न एकादशाङ्कस्तृतीयपङ्क्तौ षष्ठकोष्ठे स्थाप्यः। प्रथमप्राप्ताङ्कलाभापत्त्या द्वितीयपङ्क्तित्यागः। ततस्तृतीयपङ्क्तिस्थचतुःषट्सप्ताङ्कैस्तत्तरवर्त्त्यष्टाङ्कस्य क्रमशः योजननिष्पन्नद्वादशचतुर्दशपञ्चदशाङ्काः क्रमशश्चतुर्थपङ्क्तिद्वितीयादिकोष्ठेष्वधोऽधो लेख्याः"।

चतुरक्षरप्रस्तारे चास्याः स्वरूपदर्शनम्।

| सर्वगुरुः१ | ३गुरुः४ | २गुरुः६ | १गुरुः४ | सर्वलघुः१ | |
|---|---|---|---|---|---|
| १ | २ | ४ | ८ | १६ | तत्रत्य प्रस्तारः |
| | ३ | ६ | १२ | | ऽ ऽ ऽ ऽ १मः |
| | ५ | ७ | १४ | | । ऽ ऽ ऽ २यः |
| | ९ | १२ | १५ | | ऽ । ऽ ऽ ३यः |
| | | १० | | | । । ऽ ऽ ४र्थः |
| | | ११ | | | ऽ ऽ । ऽ ५मः |

स्पष्टत्वाच्चात्रतृष्टाचित — । ऽ । ऽ ६ष्ठः

संख्यापूरकार्थाः — ऽ । । ऽ ७मः

अस्याश्च पताकाकारत्वात् — । । । ऽ ८मः

पताकासंज्ञकत्वमेवं मात्रा — ऽ ऽ ऽ । ९मः

पताकाया अपि। — । ऽ ऽ । १०मः

ऽ । ऽ । ११शः

। । ऽ । १२शः

ऽ ऽ । । १३शः

। ऽ । । १४शः

ऽ । । । १५शः

। । । । १६शः

मात्रापताका तु तत्रैवोक्ता यथा "उद्दिष्टसममात्रामेरुस्थतत्संख्याकभेदानां प्रथमत्वद्वितीयत्वादिनिर्णयाय मात्रापताकानिर्माणमाह उद्दिट्ठेति" टी०। "उद्दिट्ठ सरि अङ्का ठापह वामावत्तें पर लइ सह लोपह। एकलोपे एकगुरु जाणह दुइतिण्णलोपे दुइतिण्णगुरु जाणह। मत्तापताकां पिङ्गलो गावइ जो पढमं पावइ स परं बोधइ" प्रा०। "उद्दिष्टसदृशानङ्कान् स्थापय वामावर्त्तेन परं नीत्वा लोपय। एकलोपे एकगुरुं जानीत द्वित्रिलोपे द्वित्रान् गुरून् जानीत। "मात्रापताकां पिङ्गलो गायति यः प्रथमं प्राप्नोति स परं बोधयतीति" तत्र०। "उद्दिष्टाङ्कसदृशान् उक्तप्रकारोद्दिष्टपूर्वाङ्कयुगलयुतपराङ्कान् प्रस्तारसंख्यं तत्सदृशान् एकद्वित्रिपञ्चाष्टत्रयोदशैकविंशचतुस्त्रिंशदित्येवंरूपान् स्थापय उत्तरोत्तरमिति शेषः। वामावर्त्तेन प्रतिलोमविधिना सर्वान्तिमाङ्काव्यवहितपूर्वाङ्कमारभ्येति यावत् नीत्वा गृहीत्वा परस्मिन् सर्वान्तिमाङ्के लोपय तथाकृतां नवत सर्वान्तिमाङ्के तदव्यवहितपूर्वाङ्कमारभ्य पूर्वपूर्वाङ्काः क्रमेण लोप्या इत्यर्थः। एकलोपे एकाङ्कलोपे एकगुरुं जानीत द्वित्रिलोपे द्वित्रान् गुरून् जानीत। एकैकपूर्वाङ्कलोपे येऽङ्का अवशिष्यन्ते ते एकगुरुयुक्तभेदज्ञापकाः पूर्वाङ्कद्वयलोपे येऽवशिष्यन्ते ते गुरुद्वययुक्तभेदज्ञापकाः पूर्वाङ्कत्रयलोपे येऽवशिष्यन्ते ते गुरुत्रययुक्तभेदज्ञापका इत्यर्थः। एवंप्रकारेण मात्रापताकां पिङ्गलो गायति कथयति यः प्रथमं प्राप्नोति गुरूपदेशाज्जानाति स परं बोधयतीत्यर्थः। अत्र च एकत्वद्वित्वसंख्याविशिष्टः प्रथमं सर्वान्तिमे लोप्यते तदव्यवहितपूर्वाङ्कमारभ्यावशिष्टाङ्काःक्रमेणाधोधः स्थाप्या इति यदङ्कद्वयलोपे शून्यमवशिष्यते पूर्वप्राप्ताङ्को वा लभ्यते तदङ्कद्वयलोपो न कार्य्य इति नियमत्रयं गुरूपदेशाद्बोध्यम्। अथ तन्निर्माणं षट्कलपताकास्वरूपम् वामदक्षिणयोरङ्गुलपञ्चकपरिमाणमूर्द्धाधोरेखाद्वयमृजु अष्टाङ्गुलान्तरितं कर्त्तव्यं तत ऋजुरेखया पार्श्वयोर्मेलनं विधेयमेवमेकं दीर्घकोष्ठं तत्रैकाङ्गुलपरिमितमन्तरं

त्यन्तोर्द्ध रेखामारभ्याऽन्त्यरेखापर्य्यन्तं ऋजुरेखाः क्रमेण दत्त्वा कोष्ठषट्कमुत्तरोत्तरपरस्परसंश्लिष्टं विधेयं ततो-द्दिष्टाङ्कसदृशाः षट्कलप्रस्तारे एकद्वित्रिपञ्चाष्टत्रयोदशेति पूर्वोक्ताः पूर्वयुगलैक्यक्रियानिष्पन्नोत्तरोत्तराः षडङ्काः क्रमेण स्थाप्यास्तदधः षट्कलमेरुस्थितकोष्ठचतुष्टयमु-त्तरोत्तरसंश्लिष्टं कार्य्यं ततो मेरुद्वितीयकोष्ठस्थित षडङ्कसूचितषड्भेदानां द्वितीयकोष्ठमेकं तदध ऊर्द्धाधः संश्लिष्टं कोष्ठपञ्चकमिति कोष्ठषट्कमेवं मेरुतृतीय-कोष्ठे पञ्चाङ्कसत्त्वात् तृतीयकोष्ठमेकं तदधः ऊर्द्धाधः संश्लिष्टकोष्ठचतुष्टयमितिकोष्ठपञ्चकमवशिष्टकोष्ठद्वयस्याधो मेरौ एकाङ्कसद्भावात् न कोष्ठान्तरं कार्य्यम्। ततः सर्वान्तिमस्योद्दिष्टशेषाङ्कस्यान्तिमकोष्ठे स्थापनं ततः सर्वान्तिमत्रयोदशाङ्कमध्ये तदव्यवहिताष्टाङ्कलोपे अवशिष्टं पञ्चाङ्कं वामावर्त्तेनोपान्तिमोपरिकोष्ठे स्थापयेत् ततोऽष्टाङ्कलोपे पूर्वप्राप्ताङ्कलाभापातान्न लोपः कार्य्यः। किन्तु अष्टाङ्कपूर्वस्थितपञ्चाङ्कस्य त्रयोदशाङ्के लोपं कृत्वा उपान्तिमकोष्ठोपरितनकोष्ठाधःकोष्ठे अवशिष्टमष्टाङ्कं स्थापयेत् ततस्त्र्यङ्कस्य त्रयोदशाङ्के लोपं कृत्वा अवशिष्टं दशाङ्कं तदधःकोष्ठे स्थापयेत् ततो द्व्यङ्कलोपे अवशिष्ट-मेकादशाङ्कं तदधःकोष्ठे संस्थाप्य एकाङ्कलोपे अवशिष्ट द्वादशाङ्कं तदधःस्थापयेत् ततस्त्रयोदशाङ्के लोपकरणे पूर्वाङ्कलाभापातात् न तत् कार्य्यम्। ततः अष्ट-पञ्चेत्यङ्कद्वयलोपे शून्यावशेषात् न तत्कार्य्यम्। अष्ट-त्र्यङ्कद्वयलोपे अवशिष्टं द्व्यङ्कं द्वितीयकोष्ठोपरितन-कोष्ठे स्थापयेत् ततो द्व्यष्टेत्यङ्कद्वयलोपे अवशिष्टत्र्यङ्क-स्तदधःस्थाप्यस्तत एकाष्टेत्यङ्कद्वयलोपे अवशिष्टचतुरङ्क-स्तदधःकोष्ठे स्थाप्यः। ततः अष्टाङ्कघटितद्व्यङ्कलोपाव-काशात् पञ्चाङ्कघटितद्व्यङ्कलोपः कार्य्यस्तत्र पञ्चत्रीत्यङ्क-द्वयलोपे पूर्वप्राप्तपञ्चाङ्क एवावशिष्टः स्यात् अतः द्विपञ्चेति द्व्यङ्कलोपे अवशिष्ट षडङ्कं तदधःकोष्ठे स्थापयेत्। एक-पञ्चेत्यङ्कद्वयलोपे अवशिष्ट सप्ताङ्कस्तदधःकोष्ठे स्थाप्य-स्ततः पञ्चाङ्कघटितद्व्यङ्कलोपे पूर्वप्राप्ताङ्कापातात् न तत्कार्य्यं किन्तु त्रिघटिताङ्कद्वयलोपस्तत्र त्रिद्वीति द्व्यङ्क लोपे पूर्वप्राप्ताङ्कापातात् न तत्कार्य्यं तत एकत्रीत्यङ्क द्वयलोपे अवशिष्टनवाङ्कं तदधःकोष्ठे स्थापयेत्। ततः कोष्ठाभावात् एकद्वीत्यङ्कद्वयलोपे अवशिष्टदशाङ्कस्य प्राप्त-त्वाच्च न द्व्यङ्कलोपः। तत एकत्र्यष्टेत्यङ्कत्रयलोपे अव-शिष्टमेकाङ्कं प्रथमे कोष्ठे स्थापयेदिति। तत्र मेरु-प्रथमकोष्ठस्यैकाङ्कसूचितषट्कलसर्वगुरुकभेदस्यात्र प्रथम कोष्ठस्यैकाङ्केन प्रथमत्वं सूचितं त्र्यङ्कलोपे त्रिगुरुक-त्वाभिधानात्। एवं मेरुद्वितीयकोष्ठस्थषडङ्कसूचितानां षट्कलप्रस्तारस्य द्विगुरुकभेदानां षण्णां द्वितीयतृतीय-त्वादिनिर्णयपताकाद्वितीयकोष्ठस्थाङ्कषट्केन सूचित-द्व्यङ्कलोपे द्विगुरुकत्वाभिधानात्। एवं मेरुपञ्चाङ्कसूचि-तानां पञ्चानां षट्कलैकगुरुकभेदानां पताकातृतीय-कोष्ठस्थाङ्कपञ्चकेन पञ्चमत्वाष्टमत्वत्वादि निर्णीतम् एकाङ्कलोपे एकगुरुकत्वाभिधानात्। सर्वान्तिमे त्रयोद-शाङ्के अङ्कलोपपूर्वकयोजनासम्भवात् मेरुशेषकोष्ठस्यैका-ङ्कसूचितषट्कलस्यैकस्य सर्वलघुकभेदस्य पताकान्त्यसप्तम-कोष्ठस्थत्रयोदशाङ्केन त्रयोदशत्वं निर्णीतमेवमन्यत्रापि।

षट्कलप्रस्तारे तत्स्वरूपदर्शनम्।

१ २ ३ ५ ८ १३ — षट्कलप्रस्तारः

| त्रिगुरुः१ | द्विगुरुः६ | एकगुरुः५ | सर्वलघुः१ | |
|---|---|---|---|---|
| | | | | ऽ ऽ ऽ १मः |
| १ | २ | ५ | १३ | । । ऽ ऽ २यः |
| | ३ | ८ | | । ऽ । ऽ ३यः |
| | ४ | १० | | ऽ । । ऽ ४र्थः |
| | ६ | ११ | | । । । । ऽ ५मः |
| | ७ | १२ | | । ऽ ऽ । ६ष्ठः |
| | ९ | | | ऽ । ऽ । ७मः |
| | अनयाङ्कास्तत्सूचित | | | । । । ऽ । ८मः |
| | संख्यापूरणार्थाः। | | | ऽ ऽ । । ९मः |
| | | | | । । ऽ । । १०मः |
| | | | | । ऽ । । । ११शः |
| | | | | ऽ । । । । १२शः |
| | | | | । । । । । । १३शः |

**पताकास्थानक** न० सा०द० उक्ते नाटकाङ्गभेदे तल्लक्षण-भेदादिकं तत्रोक्तं यथा

"यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते। आ-गन्तुकेन भावेन पताकास्थानकन्तु तत्" तद्भेदानाह सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः। पताकास्थानक-मिदं प्रथमं परिकीर्त्तितम्" यथा रत्नावल्यां "वासव दत्तेयमिति" राजा यदा तत्कण्ठपाशं मोचयति तदा तदुक्त्या "सागरिकेयमिति" प्रत्यभिज्ञाय "कथं प्रिया मे सागरिका अलमलमतिमात्रमित्यादि। फलरूपार्थ-सम्पत्तिः पूर्वापेक्षया उपचारातिशयाद् गुणवती उत्-कृष्टा। "वचः सातिशयश्लिष्टं नानाबन्धसमाश्रयम्।

पताकास्थानकमिदं द्वितीयं परिकीर्त्तितम्” । यथा वेण्यां भीमः । “रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः” । अत्र रक्तादीनां रुधिरशरीरार्थहेतुकश्लेषवशेन बीजार्थप्रतिपादनात् नेतृमङ्गलप्रतिपत्तौ सत्यां द्वितीयं पताकास्थानकम् । “अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत् । श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते” । लीनमव्यक्तार्थं श्लिष्टेन सम्बन्धयोग्येनाभिप्रायान्तरप्रयुक्तेन प्रत्युत्तरेणोपेतं सविनयं विशेषनिश्चयप्राप्त्या सहितं सम्पद्यते यत् तत् तृतीयं पताकास्थानकम् । यथा वेण्यां द्वितीयेऽङ्के । कञ्चुकी । देव ! भग्नं भग्नम् । राजा । केन । कञ्चु । भीमेन । राजा । कस्य । कञ्चु । भवतः । राजा । आः किं प्रलपसि । कञ्चु । अभयं देव ! ननु ब्रवीमि भग्नं भीमेन भवतः । राजा । धिक् वृद्धापसद ! कोऽयमद्य ते व्यामोहः । कञ्चु । देव न व्यामोहः सत्यमेव । “भग्नं भीमेन भवतो मरुता रथकेतनम् । पतितं किङ्किणीजालबद्धाक्रन्दमिव क्षितौ” । अत्र दुर्य्योधनोरुभङ्गरूपप्रस्तुतसंक्रान्तमर्थोपक्षेपणम् । “द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः । प्रधानार्थान्तराक्षेपी पताकास्थानकं परम्” । यथा रत्नावल्याम् “उद्दामोत्कलिकां विपाण्डुररुचिं प्रारब्धजृम्भां क्षणादायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः । अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम्” । अत्र भाव्यर्थः सूचितः । एतानि चत्वारि पताकास्थानकानि क्वचिन्मङ्गलार्थं क्वचिदमङ्गलार्थमपि सर्वसन्धिषु भवन्ति । काव्यकर्त्तुरिच्छावशाद् भूयोऽपि भवन्ति” ।

**पताकिक** त्रि० पताका अस्त्यस्य ब्रीह्या० वा ठन् । पताकायुक्ते ।

**पताकिन्** त्रि० पताका+अस्त्यर्थे ब्रीह्या० वा इनि । पताकायुक्ते जन्मलग्ने ग्रहविशेषवेधवशात् तदीयदशापाकादिजन्मतः फलविशेषसूचके चक्रभेदे तत्स्वरूपादिकं ज्यो०त० उक्तं यथा

“तिर्य्यगूर्द्ध्वगता रेखास्तिस्रो देयाः पताकया । युताः कार्य्या वेधविदा सर्वसङ्गतरेखया । दक्षस्योद्गतरेखातो वामं मेषादिराशयः । पञ्चाष्टयुग्मविंशाश्च षड्दशेन्द्राग्निसागराः । कर्कटान्मीनपर्य्यन्तमङ्का देया यथाक्रमम् । लग्नञ्च जन्मकालीनग्रहलग्नमजादिषु । विन्यस्य चिन्तयेत् प्राज्ञः शुभाशुभं यथाक्रमम् । शुभदण्डयोगवेधैर्लग्नादुबालस्य शोभनम् । पापदण्डयोगवेधैरायुर्नाशाद्विरिष्टिकालवित् । बलाधिके दिनं, मध्ये मासो, हीने च हायनम् । कर्कोमीनधनुर्भ्याञ्च हरिः कीटघटेन च । स्त्रियास्तौलिमृगाभ्याञ्च घटे मीनेन कन्यया । धनुषो मृगकर्किभ्यां मकरे धनुषा स्त्रिया । मीने कर्कितुलाभ्यां मीनस्त्रीधनुषा त्वजे । तुलाकर्किमृगैर्द्वन्द्वे कीटकुम्भझषेषु च । सिंहवद्वृषेऽथ एतेषु वामदक्षिणसम्मुखे । राहुकेत्वर्कसौरारैः पापैर्विद्धो युतोऽशुभः । तदन्यैर्युतविद्धस्तु लग्नराशिः शुभप्रदः । एकोनविंशतिः कर्कें सिंहे सप्तदशैव तु । षट्त्रिंशद्बलायाञ्च षड्विंशतिस्तुलाधरे । वृश्चिके सिंहवज्ज्ञेयमूनत्रिंशच्छरासने । षड्विंशं मकरे ज्ञेयं, कुम्भे सप्तदश स्मृताः । नवयुग्मे तथा मीने मेषे षड्दशभिस्तथा । वृषभे च यथा सिंहे युग्मेऽङ्कहरलोचने । त्रिनयाङ्कादियं संख्या दिनमासाब्दनिर्णये । एकाङ्कात् द्विस्थाङ्काद्वा कश्चिद्दिष्टेः सम्भवः । वारेशादर्द्धयामेषु रात्र्यह्नोः पञ्चषट्क्रमात् । अधिपाः सुर्य्यहास्तत्र यथाकाले भवन्ति हि । रवीज्येन्दुभृगुज्ञाजशनिस्वरव्यो निशि । रविशुक्रसुतामीशशनीज्यकुजभास्कराः । दिने, तुल्याः परेष्वेवं तथा रात्रावपि ग्रहाः । पापदण्डे भवेद्दृष्टिः शुभदण्डे शुभं भवेत् । शुभग्रहस्य दण्डे तु कर्मारम्भाच्छुभं भवेत् । आरम्भात् पापदण्डे तु कर्म निष्फलतां व्रजेत् । यस्यार्द्धयामस्तस्यैव प्रागदण्डः कृतदाहृतः । षट्षट्परीत्य दण्डाश्च तयो रात्रौ मतास्तथा । आदित्ये भृगुजो बुधोऽपि च शशी, सोमे शनीज्यौ कुजो, भौमेऽर्कः सितसोमजौ, च शशिजे सोमः शनिर्वाक्पतिः । जीवेऽङ्गाररवी भृगुश्च गुरुते सौम्येन्दुमार्त्तण्डजाः । काले जीवमहीजतिग्मकिरणा रात्रौ च दण्डाधिपाः । यामार्द्धाधिपसंख्यातो द्वितीयस्तु तदर्द्धतः । तदर्द्धात् तु तृतीयः स्यात्तदर्द्धात् तु तुरीयकः । अङ्काभावे तु राहुः स्यात्तदङ्को वसुसंख्यकः । लग्नाङ्कस्य परित्यागाद्दिवा दण्डाधिपा यथा । रविदनुजबुधग्लौचन्द्रसूरासुरज्ञाः कुजरविदनुजज्ञाः सेन्दुसूरासुराश्च । गुरुशशिरविदैत्याः शुक्रभौमार्कदैत्याः शनिकुजरविदैत्या दण्डपाश्चार्द्धयामे” । दनुजो राहुः । अर्द्धयामे दिनार्द्धप्रहरे । शुभदण्डमाह । “शेषावर्कस्य दण्डौ सततशुभकरावादिशेषौ तथेन्दोः, शेषो दण्डः कुजस्याप्यथ गुरुबुधयोराद्यमाद्यं

प्रशस्तम् । आदिर्दशस्तथैको भृगुकुजसुतयोः सर्वकार्य्ये हि शस्तो दशाश्चत्वार एव क्वचिदपि समये नैव सौरेः प्रशस्ताः । प्रतिदशं पताक्येषां ज्ञात्वा वाच्यं शुभाशुभम् । रवौ च वेदा, वसवः सुधांशौ, कुजे च बाणाः शशिजे तथाङ्काः । शनावहह,र्दिक् च बृहस्पतौ स्यात् शुक्रे तु रुद्राः भृगुजे च रुद्राः । अशुभे दशसंयोगे सर्वत्र पुण्यवर्जिते । बालस्य मरणं शीघ्रं यदि पापैः समन्वितम् । अशुभग्रहदशे तु सर्वत्र पापवर्जिते । बालस्य कुशलं सर्वं शुभैर्यदि समन्वितम् । अशुभो दशनाशो हि वेधश्चेत्तेन लभ्यते । मरणं तत्र वक्तव्यं बालस्य नान्यथा भवेत् । पापस्य दशमात्रे तु तद्योगवेधवर्जिते । बालस्य कुशलं तत्र शुभैर्यदि समन्वितम्" । वर्षपताकी तु केतुपताकाशब्दे २२२६ पृ॰ उक्तः तत्र दृश्यः

**पतापत** त्रि॰ पत–यङ्लुक्–अच् नि॰ । अतिशयपतनयुक्ते

**पति** पु॰ पा–डति । १भर्त्तरि २स्वामिनि च तत्र स्त्रियां "पत्युर्नो यज्ञसंयोगे" पा॰ न ङीप् च पत्नी । यज्ञकर्तृयज्ञफलभागिन्याम् स्त्रियां "विभाषा सपूर्वस्य" पा॰ दृढस्य पतिः दृढपतिः दृढपत्नी वा । बहुव्रीहावपि शूद्रः पतिर्यस्याः शूद्रपत्नी शूद्रपतिः । पतिशब्दस्य समास एव घिसंज्ञा श्रीपतये श्रीपतेः इत्यादि असमासे तु न घिसंज्ञा पत्या पत्ये इत्यादि आर्षे क्वचित् असमासेऽपि घित्वम् "क्लीबे वा पतीते पत्तौ" पराशरः "सीतायाः पतये नमः" इत्यादि पतिसेवनप्रकारादिकं यथा

"व्यर्थं व्रतादिकं तस्या या भर्त्तुश्चापकारिणी । तपश्चानशनञ्चैव व्रतं दानादिकञ्च यत् । भर्त्तुरप्रियकारिण्याः सर्वं भवति निष्फलम् । यया प्रियः पूजितश्च श्रीकृष्णः पूजितस्तया । पतिव्रताव्रतार्थञ्च पतिरूपी हरिः स्वयम् । सर्वदानं सर्वयज्ञः सर्वतीर्थनिषेवणम् । सर्वं व्रतं तपः सर्वमुपवासादिकञ्च यत् । सर्वधर्मश्च सत्यञ्च सर्वदेवप्रपूजनम् । तत्सर्वं स्वामिसेवायाः कलां नार्हन्ति षोडशीम् । सुपुण्ये भारते वर्षे पतिसेवां करोति या । वैकुण्ठं स्वामिना सार्द्धं सा याति ब्रह्मणः शतम् । विप्रियं कुरुते भर्त्तुर्विप्रियं वदति प्रियम् । असत्कुलप्रयाता या तत्फलं श्रूयतां सति ! । कुम्भीपाकं व्रजेत् सा च यावच्चन्द्रदिवाकरौ । ततो भवति चाण्डाली पतिपुत्रविवर्जिता" ब्रह्म॰ वै॰ प्र॰ ४२ अ॰ । पतिसेवाप्रकारस्तु भा॰ व॰ २३२ अ॰ द्रौपद्या सत्यभामां प्रति उक्तस्तत्र दृश्यः । अधिकम् उक्तं पतिव्रताशब्दे दृश्यम् ।

**पतिंवरा** स्त्री पतिं वृणोति वृ–खच् मुम् । १स्वयं पतिवरणकारिकायां कन्यायाम् स्वयंवरायाम् । २कृष्णजीरके शब्दच॰ ।

**पतिघातिनी** स्त्री पतिं हन्ति हन–णिनि ह॰त॰ । पतिनाशिकायां स्त्रियां तत्सूचकयोगश्च कर्कटे लग्ने कर्कटे चन्द्रे वा भौमत्रिंशांशजनुषेति वृ॰ जा॰ उक्तं यथा "स्वच्छन्दा पतिघातिनी बहुगुणा शिल्पिन्यसाध्वीन्दुभे" मू॰ "इन्दुभे कर्कटे लग्ने तद्गते वा चन्द्रे भौमत्रिंशांशकजाता स्वच्छन्दा स्वैरिणी यथेष्टव्यवहारिणी भवति सौरत्रिंशांशकजाता पतिघातिनी भवति" भट्टोत्पलः ।

**पतिघ्न** त्रि॰ पतिं हन्ति हन–"लक्षणे जायापत्योष्टक्" पा॰ टक् । पतिनाशसूचके लक्षणभेदे स्त्रियां ङीप् । पतिघ्नी पाणिरेखा । विवाहात् प्राक् क्षेत्रादिमृत्पिण्डाष्टकस्य कुमार्य्यै परीक्षार्थं दाने श्मशानजातमृत्पिण्डस्य कुमार्य्या ग्रहणे तस्याः पतिहननफलसूचकम् आश्व॰ गृ॰ १।५।६ "अष्टौ पिण्डान् कृत्वा पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति" इति नियोजिता कुमारी यदि श्मशानादाहृतं पिण्डं गृह्णाति तदा पतिघ्नीति विद्यात् तदुक्तं तत्रैव सू॰ "श्मशानात् पतिघ्नीति" ।

**पतित** त्रि॰ पत–गत्यर्थत्वात् कर्त्तरि क्त सनि वेट्कत्वेऽपि पतेः पृथग्ग्रहणात् इट् पतधातौ पित्सतीत्येकरूपविधानं प्रमादात् प्रत्ये पिपतिषतीति रूपान्तरं भवतीति बोध्यम् । १पतनकर्त्तरि २नरकगमनसूचककर्मविशेषकारके स च कर्मविशेषः पतितलक्षणविषया मा॰वि॰ निर्णीतो यथा

गौतमः "ब्रह्महा सुरापः गुरुतल्पगः मातृपितृयोनिसम्बन्धागस्तेननास्तिकनिन्दितकर्माभ्यासी पतितात्याग्यपतितत्यागिनश्च पतिताः पातकसंयोजकाश्च तैश्चाब्दं समाचरन्निति" । पातकसंयोजकाः सुरापानादौ परान् प्रयोजयन्ति । इत्युपक्रमे सामान्यशब्दस्यापि विशेषशक्तिर्भविष्यति यागादिपदस्येव यथा, हारीतेन विशेषणस्थाने पाठात् । तथा च्यवनः "अथ पातकोपपातकमहापातकानि व्याख्यास्यामः इति । तथा च पठन्ति "महापातकतुल्यानि पापान्युक्तानि यानि च । तानि पातकसंज्ञानि तदूनमुपपातकम्" । अतो महापातकतुल्यपापविशेषेऽस्य शक्तिः । पतनशब्दार्थमाह गौतमः "द्विजातिकर्मभ्यो हानिः पतनं परत्र चासिद्धिस्तमेके नर-

कम्"। द्विजातिकर्म श्रौतमग्निहोत्रादि स्मार्त्तमष्टकादि प्रायश्चित्ततदङ्गजपादिव्यतिरिक्तं तेभ्यो हानिरनधिकारः इति द्विजातिग्रहणं प्राधान्यार्थं शूद्रस्यापि वाक्यान्तरेण पातित्याभिधानात्। इह लोके तावत् पातित्यलक्षणमनिष्टं परलोके चासिद्धिः पातककर्मप्रतिबन्धात् उपात्तसुकृतफलानिष्पत्तिः नरकं वा सूतकादिव्याहत्यर्थमिदम्। द्विजातिकर्मानधिकारश्च महापातके श्रूयते यथा देवलः "पञ्चैतानि महापातकानि कृत्वा ब्राह्मणः सद्भिर्नानुभाष्यो नानुग्राह्योऽभिशस्तः सर्वकर्मवर्जितः पतिततमो भवति"। महापातक्यधिकारे मनुः "असम्भाष्याह्यसंभोज्या अविवाह्या ह्यपाठिनः। चरेयुः पृथिवीं दीनाः सर्वधर्मवहिष्कृताः"। अतो महापातकेषु द्विजातिकर्मानधिकारः तद्विहितद्वादशवार्षिकप्रायश्चित्तापनेयत्वादतिपातकानुपातकयोरपि। अतो द्वादशवार्षिकप्रायश्चित्तापनेयार्हं पापं पतनम्। अर्हता च सामान्यबोधितत्वं तत्र स्त्रीत्वादिनाऽसम्पूर्णानुष्ठानेऽप्यस्त्येव हन्तुरिवावघातस्य। अथ वा द्विजातिकर्मानधिकारापादकं पापं पतनम् अनधिकारश्च महापातके श्रुतएव अनुपातकेऽपि तत्समत्वात् उपपातकादौ च क्वचित् पततीति श्रुतेः अतिपातके ततो गुरुत्वात् लभ्यते। यद्वा महापातकानपकृष्टं पापं पतनम् अनुपातकस्य तत्समत्वात् उपपातकादेः क्वचित् पततीत्यभिधानात् अनपकर्षएव, अज्ञानब्राह्मणीगमने पतनपाताद्युत्पत्तिश्रवणादनपकर्षएव। अतएव "सद्यः पतति मांसेनेति" "शूद्रावेदी पतत्यत्रे"रित्यादिमनुवचनं निन्दार्थम्।

स्वधर्मच्युते "स्वधर्मं यः परित्यज्य परधर्मं समाश्रयेत्। अनापदि स विद्वद्भिः पतितः परिकीर्त्तितः" मार्कं०पु०। चाण्डालान्त्यादिस्त्रीगमनादिकमभ्यासकृतं पातित्यकारणम् "चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च। पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छति" मत्स्यपु०। अन्यान्यपि कतिचित् कर्माणि पतितानामिव दाहनिषेधप्रयोजकान्युक्तानि शु०त० ब्रह्मपु० "गराग्निविषदाश्चैव पाषण्डाः क्रूरबुद्धयः। क्रोधात् प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम्। गिरिवृक्षप्रपातञ्च ये कुर्वन्ति नराधमाः। कुशिल्पजीविनश्चैव सूनालङ्कारकारिणः" तथा "ब्रह्मदण्डहता ये च ये च वै ब्राह्मणैर्हताः। महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः। पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः। न चाश्रुपातः पिण्डो वा कार्यं श्राद्धादिकं क्वचित्" शु०त० ब्रह्मपु०। तेषां संसर्गनिषेधो यथा "आसनाच्छयनाद्यानाद्भोजनात् कथनादिषु। संवत्सरेण पतति पतितेन सहाचरन्" वराहपु० "पतितैः संप्रयुक्तानामिमां शृणुत निष्कृतिम्। संवत्सरेण पतति पतितेन सहाचरन्। याजनाध्यापनाद्यौनान्नयान पानाशनासनात्। यो येन पतितेनैव संसर्गं याति मानवः। स तस्यैव व्रतं कुर्य्यात् संसर्गस्य विशुद्धये" तत्र पादोनं प्रायश्चित्तमिति तत्र स्थितम्। "पतितस्योदकं कार्य्यं सपिण्डैर्ब्राह्मणैः सह। निन्दितेऽहनि सायाह्ने ज्ञातिभिर्गुरुसन्निधौ। दासी घटमपां पूर्णं पर्य्यस्येत् प्रेतवत् सदा। अहोरात्रमुपासीन नाशौचं ब्राह्मणैः सह। निवर्त्तयेरंस्तस्मात्तु सम्भाषणसहासनम्" मात्स्ये २०१अ०। "पतिता गुरवस्त्याज्या न तु माता कदाचन। गर्भधारणपोषाभ्यां तेन माता गरीयसी" मत्स्यपु०।

**पतित्वन** न० यौवने ऋ० १०।४०।९ भाष्ये दृश्यम्।

**पतिदेवता** स्त्री पतिरेव देवता यस्याः। पतिव्रतायाम् पतिदैवताऽप्यत्र। [रिण्याम्।

**प्रतिद्विष्** स्त्री पत्ये द्वेष्टि द्विष–क्विप् ६त०। पत्ये द्वेषका-

**पतिमती** स्त्री पति+अस्त्यर्थे मतुप् ङीप्। स्वामियुक्तायां भूम्यादौ।

**पतिलोक** पु० पतिभोग्यो लोकः स्वर्गादिः शा०त०। पत्या सहधर्माचरणेन प्राप्ये स्वर्गादिलोके मनुः ५।१५६

**पतिवत्नी** स्त्री पति+अस्त्यर्थे मतुप् नि० वधवायां मस्य वः नुक् च। समर्त्तृकायां स्त्रियाम् अमरः। तद्भिन्नायान्तु पतिमतीत्येव सि० कौ०।

**पतिवेदन** पु० पतिं वेदयति विद–लाभे णिच्–ल्यु। पतिप्रापके महादेवे "त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्" यजु० ३।६०

**पतिव्रता** स्त्री पतिर्व्रतमिव नियतोपास्यत्वात् यस्याः। साध्व्यां स्त्रियाम् अमरः तद्धर्माश्च काशी०ख० ४अ० उक्ता यथा

"पतिव्रतेयं कल्याणी लोपामुद्रा सधर्मिणी। तवानुच्छायया तुल्या यत्कथा पुण्यकारिणी। पतिव्रतास्वरुन्धत्या सावित्र्याप्यनसूयया। शाण्डिल्यया च सत्या च लक्ष्म्या च शतरूपया। मेनया च सुनीत्या च संज्ञया स्वाहया तथा। तथैषा वर्ण्यते श्रेष्ठा न

तथाग्न्येति निश्चितम् । भुङ्क्ते भुक्ते त्वयि सुते ! तिष्ठति त्वयि तिष्ठति । विनिद्रिते च निद्राति प्रथमं प्रतिबुध्यते । अनलङ्कृतमात्मानं तव नो दर्शयेत् क्वचित् । कार्य्यार्थं प्रोषिते क्वापि सर्वमण्डनवर्जिता । न च ते नाम गृह्णीयात्तवायुष्यविवृद्धये । पुरुषान्तरनामापि न गृह्णाति कदाचन । आक्रुष्टापि नचाक्रोशेत् ताड़ितापि प्रसीदति । इदं कुरु कृतं स्वामिन् ! मन्यतामिति वक्ति च । आहूता गृहकार्य्याणि त्यक्त्वा गच्छति सत्वरम् । किमर्थं व्याहृता नाथ ! सुप्रसादोऽभिधीयताम् । न चिरं तिष्ठते द्वारि न द्वारमुपसेवते । अदापितं त्वया किञ्चित् कस्मैचिन्न ददात्यपि । पूजोपकरणं सर्वमनुक्ता साधयेत् स्वयम् । नियमोदकबर्हींषि पत्रपुष्पाक्षतादिकम् । प्रतीक्षमाणावसरं यथाकालोचितं हि यत् । तदुपस्थापयेत् सर्वमनुद्विग्नाति हृष्टवत् । सेवते भर्त्तुरुच्छिष्टमिष्टमन्नफलादिकम् । मद्प्रसाद इत्युक्त्वा पतिदत्तं प्रतीच्छति । अविभज्य न चाश्नीयात् देवपितृतिथिष्वपि । परिचारकवर्गेषु गोषु भिक्षुकुलेषु च । संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी । कुर्य्यात् त्वयाऽननुज्ञाता नोपवासव्रतादिकम् । दूरतो वर्जयेदेषा समाजोत्सवदर्शनम् । न गच्छेत् तीर्थयात्रादिविवाहप्रेक्षणादिषु । सुखसुप्तं सुखासीनं रममाणं यदृच्छया । आन्तरेष्वपि कार्य्येषु पतिं नोत्थापयेत् क्वचित् । स्त्रीधर्म्मिणी त्रिरात्रन्तु स्वमुखं नैव दर्शयेत् । स्ववाक्यं श्रावयेन्नापि यावत् स्नाता न शुध्यति । सुस्नाता भर्त्तृवदनमीक्षतेऽन्यस्य न क्वचित् । अथ वा मनसि ध्यात्वा पतिं भानुं विलोकयेत् । हरिद्रां कुङ्कुमञ्चैव सिन्दूरं कज्जलं तथा । कूर्पासकञ्च ताम्बूलं माङ्गल्याभरणं तथा । केशसंस्कारकबरीकरकर्णविभूषणम् । भर्त्तुरायुष्यमिच्छन्ती दूरयेन्न पतिव्रता । न रजक्या न हैतुक्या तथा श्रमणया न च । न च दुर्भगया क्वापि सखित्वं कुरुते सती । भर्तृविद्वेषिणीं नारीं नैषा सम्भाषते क्वचित् । नैकाकिनी क्वचिद्भूयान्न नग्ना स्नाति च क्वचित् । नोदूखले न मुषले न वर्द्धन्यां दृषद्यपि । न यन्त्रके न देहल्यां सती चोपविशेत् क्वचित् । विना व्यवायसमयं प्रागल्भ्यं न क्वचिच्चरेत् । यत्र यत्र रुचिर्भर्त्तुस्तत्र प्रेमवती सदा । इदमेव व्रतं स्त्रीणामयमेको धर्मः परः । इयमेका देवपूजा भर्त्तुर्वाक्यं न लङ्घयेत् । क्लीवं वा दुरवस्थं वा व्याधितं वृद्धमेव वा । सुस्थितं दुःस्थितं वापि पतिमेकं न लङ्घयेत् । हृष्टा हृष्टे विषण्णास्या विषण्णास्ये प्रिये सदा । एकरूपा भवेत् पुण्या सम्पत्सु च विपत्सु च । सर्पिर्लवणतैलादिक्षयेऽपि च पतिव्रता । पतिं नास्तीति न ब्रूयादायासेषु न योजयेत् । तीर्थस्नानार्थिनी नारी पतिपादोदकं पिबेत् । शङ्करादपि विष्णोर्वा पतिरेकोऽधिकः स्त्रियाः । व्रतोपवासनियमं पतिमुल्लङ्घ्य नाचरेत् । आयुष्यं हरते भर्त्तुर्मृता निरयमृच्छति । भर्त्तुः प्रत्युत्तरं दद्यान्नारी या क्रोधतत्परा । कुक्कुरी जायते ग्रामे शृगाली निर्जने वने । स्त्रीणां हि परमश्चैको नियमः समुदाहृतः । अभ्यर्च्य चरणौ भर्त्तुर्भोक्तव्यं कृतनिश्चयम् । उच्चासनं न सेवेत न व्रजेत् परवेश्मसु । न त्रपाकरवाक्यानि वक्तव्यानि कदाचन । अपवादो न वक्तव्यः कलहं दूरतस्त्यजेत् । गुरूणां सन्निधौ चापि नोच्चैर्ब्रूयान्न वा हसेत् । या भर्त्तारं परित्यज्य रहश्चरति दुर्मतिः । उलूकी जायते क्रूरा वृक्षकोटरशायिनी । ताड़िता ताड़ितुं चेच्छेत् सा नारी व्याघ्रदंशिका । कटाक्षयति याऽन्यं वै केकराक्षी तु सा भवेत् । या भर्त्तारं परित्यज्य मिष्टमश्नाति केवलम् । ग्रामे सा सूकरी भूयाद्वल्गुलि वा स्वविड्भुजा । या तुङ्कृत्य प्रियं ब्रूते सा मूका जायते खलु । या सपत्नीं सदेर्ष्येत दुर्भगा सा पुनः पुनः । दृष्टिं विलुप्य भर्त्तुर्या कञ्चिदन्यं समीक्षते । काणा वा विमुखी वापि कुरूपापि च जायते । बाह्यादायान्तमालोक्य त्वरिता च जलासनैः । ताम्बूलैर्व्यजनैश्चैव पादसंवाहनादिभिः । तथैव चाटुवचनैः खेदसंनोदनैः परैः । या प्रियं प्रीणयेत् प्रीता त्रिलोकी प्रीणिता तया । मितं ददाति हि पिता मितं भ्राता मितं सुतः । अमितस्य हि दातारं भर्त्तारं पूजयेत् सदा । भर्त्ता देवो गुरुर्भर्त्ता धर्मतीर्थव्रतानि च । तस्मात् सर्वं परित्यज्य पतिमेकं समर्च्चयेत् । जीवहीनो यथा देहः क्षणादशुचितां व्रजेत् । भर्तृहीना तथा योषा सुस्नाताप्यशुचिः सदा । अमङ्गलेभ्यः सर्व्वेभ्यो विधवा ह्यमङ्गला । विधवादर्शनात् सिद्धिर्क्वापि जातु न जायते । विहाय मातरं चैकां सर्व्वामङ्गलवर्जिताम् । तदाशिषमपि प्राज्ञस्त्यजेदाशीविषोपमाम् । कन्याविवाहसमये वाचयेयुरिति द्विजाः । पत्युः सहचरी भूया जीवतोऽजीवतः सदा । भर्त्ता सदानुयातव्यो देहवत्

छायया स्त्रिया। चन्द्रमा ज्योत्स्नया यद्वद्विद्युत्वान् विद्युता यथा। अनुव्रजन्ती भर्त्तारं स्वगृहात् पितृवनं मुदा। पदे पदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयम्। व्यालग्राही यथा व्यालं बलादुद्धरते बिलात्। एवमुत्क्रम्य दूतेभ्यः पतिं स्वर्गं नयेत् सती। यमदूताः पलायन्ते सतीमालोक्य दूरतः। अपि दुष्कृतकर्माणं समुत्सृज्य च तत्पतिम्। न तथा बिभिमो वह्नेर्न तथा विद्युतो यथा। आयान्तीं समालोक्य वयं दूताः पतिव्रताम्। तपनस्तप्यतेऽत्यन्तं दहनोऽपि च दह्यते। कम्पन्ते सर्वतेजांसि दृष्ट्वा पातिव्रतं महः। यावत् स्वलोमसंख्यास्ति तावत् कोट्ययुतानि च। भर्त्रा स्वर्गसुखं भुङ्क्ते रममाणा पतिव्रता। धन्या सा जननी लोके धन्योऽसौ जनकः पुनः। धन्यः स च पतिः श्रीमान् येषां गेहे पतिव्रता। पितृवंश्या मातृवंश्याः पतिवंश्यास्त्रयस्त्रयः। पतिव्रतायाः पुण्येन स्वर्गसौख्यानि भुञ्जते। शीलभङ्गेन दुर्वृत्ताः पातयन्ति कुलत्रयम्। पितुर्मातुस्तथा पत्युरिहामुत्र च दुःखिता। पतिव्रतायाश्चरणो यत्र यत्र स्पृशेद् भुवम्। तत्रेति भूमिर्मन्येत नात्र भारोऽस्ति पावनी। बिभ्यत् पतिव्रतास्पर्शं कुरुते भानुमानपि। सोमो गन्धवहश्चापि स्वपवित्राय नान्यथा। आपः पतिव्रतास्पर्शमभिलिष्यन्ति सर्वदा। अद्य जाड्यविनाशो नो जातास्त्वद्यापि पावनाः। गृहे गृहे न किं नार्यो रूपलावण्यगर्विताः। परं विश्वेशभक्त्यैव लभ्यते स्त्री पतिव्रता। भार्य्या मूलं गृहस्थस्य भार्य्या मूलं सुखस्य च। भार्य्या धर्मफलावाप्त्यै भार्य्या सन्तानवृद्धये। परलोकस्त्वयं लोको जीयते भार्य्यया द्वयम्। देवपित्रतिथीज्यादि नाभार्य्यः कर्म चार्हति। गृहस्थः स हि विज्ञेयो यस्य गेहे पतिव्रता। ग्रस्यतेऽन्यः प्रतिपदं राक्षस्या जरयाऽथ वा। यथा गङ्गावगाहेन शरीरं पावनं भवेत्। तथा पतिव्रतादृष्ट्या शुभया पावनं भवेत्"।"आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा। मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता" शु०त०।

**पतिष्ठ** त्रि० अतिशयेन पतिता इष्ठन् तृणो लोपः अतिशयेन पतितरि ऋ०१०।१६५।५ उदा०। ईयसुन् पतीयस् तत्रार्थे त्रि० पञ्चभीष्म ब्रा०५।१।१२ उदा० स्त्रियां ङीप्।

**पतेर** पुंस्त्री पत-एर। १खगे उज्ज्वल० स्त्रियां जातित्वात् ङीष्। २गन्तरि त्रि० ३आढके ४गर्त्ते च पु० संक्षिप्तसा०

**पत्काषिन्** त्रि० पादेन कषति गच्छति कष-णिनि पदादेशः ३त०। पादेन गन्तरि। भट्टिः ३।४५उदाहरणं द्रष्टव्यम्।

**पत्तङ्ग** न० पतङ्ग+पृषो०। रक्तचन्दने (वक्रम) इत्यभेदे शब्दर०। "पत्तङ्गं मधुरं शीतं पित्तश्लेष्मव्रणास्रनुत्। हरिचन्दनवज्ज्ञेयं विशेषाद्दाहनाशनम्" भावप्र०।

**पत्त** पु० पतत्यनेन पत-बा०करणे तन् नेट्। पादे "निम्नीभूतो निपत्ततः" अथ० ६।१२१।१

**पत्तन** न० पतत्यत्र बा० आधारे तन। १नगरे मह्यपुर्य्याम् अमरः २मृदङ्गे हारा०।

**पत्तनाधिपति** पु० ६त०। राजभेदे भा०अ० १८६अ०।

**पत्तरङ्ग** पु० पट्टरङ्ग+पृषो०। (वक्रम्) इत्यर्थे

**पत्ति** पु०पद-तिन्। १सेनायाम्। २वीरे त्रिका० ज्ञिन्। ३गतौ (१रथः २गजः ३अश्वाः ५सेनाः) एतत् संख्यान्विते ४सेनाभेदे च स्त्री। "एको रथो गजश्चैको नराः पञ्च पदातयः। त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते" भा०आ०१अ०। ५पञ्चपञ्चाशदात्मकनरसैन्ये "नराणां पञ्चपञ्चाशदेषा पत्तिर्विधीयते" भा०उ०१५४अ०।

**पत्तिगणक** त्रि० पत्तिं गणयति गण-ण्वुल् अशान्तत्वेऽपि याजका० ६त०स०। पत्तीनां गणयितरि। ततः उद्गात्रा० भावे अञ्। पात्तिगणक तद्भावे।

**पत्तिन्** त्रि० पद्भ्यां तेजति तिज-गतौ बा० डिन्। पद्भ्यां गन्तरि। "पत्तिनो भुवि चैकस्य गोपस्यास्यबलीयसः" हरिवं० १००अ०।

**पत्तिसंहति** स्त्री ६त०। पदाते सेनाङ्गे अमरः।

**पत्तूर** पु० पत-बा० ऊर वृद्धि रा० निपा०। १शालिञ्चशाके त्रिका० २पत्तङ्गे रक्तचन्दने न० शब्दच०।

**पत्र(त्र)** न०पत-ष्ट्रन् "अटोऽटि सवर्णे" पा० वा तलोपः। १वाहनमात्रे २पर्णे ३पक्षिणां पक्षे अमरः। ४लेखनाधारे(पात) इति ख्याते पदार्थे ५धातुमयपत्राकारे द्रव्ये च "सुवर्णजलामरणा च कार्या सुलोहपार्श्वद्वयरत्नत्नाभिः" ६स्त्रियां स्त्री ङीप्। ७तेजपत्रे राजनि० "पत्रकं मधुरं किञ्चित्तीक्ष्णोष्णं पिच्छिलं लघु। निहन्ति कफवातार्शोहृल्लासारुचिपीनसान्" भावप्र०। तत्र लिखनाधारपत्रे "माषमाषिके तु सम्प्राप्ते भ्रान्तिः संजायते यतः। धात्राक्षराणि सृष्टानि पत्रारूढान्यतः पुरा" ज्यो०त०। तस्य रञ्जनं यथा "सुवर्णहरितालाद्यै रञ्जयेत् पत्रमुत्तमम्। सामान्योत्तममध्यानां पत्ररञ्जनमीरितम्" तत्प्रमाणम् "षड्ङ्गुलाधिकं हस्तं पत्रमुत्तममीरितम्। मध्यमं हस्तमात्रं स्यात् सामान्यं

सुश्लिष्टहस्तकम्" पत्रभङ्गप्रकारः "पत्रन्तु त्रिगुणीकृत्य ऊर्द्ध्वे तु द्विगुणं त्यजेत् । शेषभागे लिखेद्वर्णान् गद्यपद्यादिसंयुतान्" पत्रस्य रचनाक्रमः "राजलेखकमाहूय नृपो ब्रूयात् प्रयत्नतः । पत्रं कुरु यथायोग्यं गद्यपद्यादिसंयुतम् । पण्डितद्वयमानीय लेखको रहसि स्थितः । यथायोग्यानुसारेण पत्रं कुर्य्यान्मनोरमम् । दिनद्वयं त्रयं वापि विचार्य्य पण्डितैश्च वै । सम्भ्रान्तेर्दूषणं ज्ञात्वा विलिखेत् पत्रपुस्तके । सामान्यपत्रे संलिख्य रहसि श्रावयेन्नृपम् । नृपाज्ञया शुभे पत्रे विलिखेद्राजलेखकः" लेखनप्रकारः "वक्राङ्कुशं प्रथमं दद्यान्मङ्गलार्थं विचक्षणः । मध्ये विन्दुसमायुक्तमधः सप्ताङ्कसंयुतम् । तदधः स्वस्ति विन्यस्य ततो गद्यं सुशोभनम् । ततः श्रीशब्दरूपाणि पदन्यासक्रमं लिखेत् । भाषया संस्कृतेनापि कुशलं विलिखेत् सुधीः । ततः शुभाशुभां वार्त्तां संस्कृतैः प्राकृतैस्तथा । ततः प्रमाणसन्देशं ततो वार्त्तां नियोजयेत् । कीर्त्तिप्रीतियुतं पद्यं ततः तिथिवारादिकम् । पत्रप्रेषकलोकस्य अब्दमासादिसंयुतम् । सर्व्वेषामेव पत्रेषु लिखनं चैवमीरितम् । सर्व्वेषामेव पत्राणां विधिं ज्ञात्वा लिखेत्तु यः । स्वदेशे कीर्त्तिमाप्नोति तथा देशान्तरेष्वपि । एवं शास्त्रक्रमं ज्ञात्वा यो लिखेद्राजपत्रकम् । स राजमन्त्रिभिः सार्द्धं यशः प्राप्नोत्यनुत्तमम् । शास्त्रसन्दर्भमज्ञात्वा यो लिखेद्राजपत्रकम् । स राजमन्त्रिभिः सार्द्धं दुर्यशो महदाप्नुयात्" । पत्रनयनक्रमः । "राजपत्रं नयेन्मूर्द्ध्नि ललाटे पात्रमन्त्रिणाम् । गुरुपत्रं नयेन्मूर्द्ध्नि ब्राह्मणानां तथैव च । यतिसन्न्यासिनाञ्चैव स्वामिनश्च तथैव च । सादरेणैव यत्नेन तथा मूर्द्धनि धारयेत् । भार्य्यापुत्रस्य मित्रस्य हृदये धारयेत् सुधीः । शत्रोराज्ञां कण्ठदेशे पत्रधारणमीरितम् । एतेषाञ्चैव पत्राणां सत्कारधारणलक्षणम् । अन्येषामपि पत्राणां नियमो नात्र दर्शितः" । पत्रपठनप्रकारः "पत्रं हस्ते नमस्कृत्य पूर्वार्द्धं स्थापयेत् सुधीः । दक्षिणार्द्धं तु सदसि नृपाग्रे राजलेखकः । पत्रं वितत्य सदसि द्विवारं मनसा पठेत् । स्फुटं पश्चात् प्रवक्तव्यमक्षोभी राजलेखकः । रहसि श्रावयेत् पत्रं शुभं वा यदि वाऽशुभम् । पत्रं श्रुत्वा विदित्वार्थं सभायां श्रावयेत्ततः । रहस्यपत्रं रहसि नृपाग्रे श्रावयेद्द्विजः । अशुभं नैव सदसि शुभं पत्रं नृपाग्रतः । एवं क्रमेण पत्रार्थं श्रावयित्वा द्विजोत्तमः । नृपतेः सन्निधौ स्थित्वा नृपाज्ञामनुवर्त्तते" । पत्रचिह्नानि "ऊर्द्ध्वे षडङ्गुलं त्यक्त्वा वर्त्तुलं चन्द्रबिम्बवत् । कस्तूरीकुङ्कुमैः कुर्य्याद्राजपत्रं सुचिह्नितम् । मन्त्रिणां कुङ्कुमेनैव पण्डितस्यैव चन्दनैः । गुरूणां चन्दनेनैव सिन्दूरेणैव स्वामिनः । भार्य्यायाश्चाप्यलक्तेन चन्दनैः पितृपुत्रयोः । सन्न्यासिनां चन्दनेन यतीनां कुङ्कुमेन च । रक्तचन्दनपङ्केन भृत्यस्य समुदीरितम् । शोणितेनैव शत्रूणां पत्रचिह्नं प्रकल्पयेत् । एतेषाञ्चैव सर्व्वेषां यथायोग्यानुसारतः । पत्रस्योर्द्ध्वे तु मतिमान् कुर्य्यात् चिह्नं सुवर्त्तुलम्" । राजपत्रस्य कोणच्छेदनप्रकारः "दक्षिणे पत्रकोणस्य अधस्तात् छेदयेत् सुधीः । एकाङ्गुलप्रमाणेन राजपत्रस्य चैव हि" । राजपत्रादेः पदन्यासः "महाराजाधिराजस्य दानशौण्डं तथैव च । तथा सच्चरितं योग्यं कल्पद्रुमादिकं न्यसेत् । यथायोग्यानुसारेण तथैव गुणभेदतः । राजपत्रेषु सर्व्वेषु पदन्यासक्रमं विदुः" । मन्त्रिपत्रस्य "प्रवरं गुणभेदेन तथा सच्चरितादिकम् । विन्यस्य विलिखेत् प्राज्ञो मन्त्रिपत्रे पदक्रमम्" । पण्डितस्य "संख्यावद्वन्दितपदं शास्त्रार्थनिपुणादिकम् । पण्डितानाञ्च पत्रेषु विलिखेद्वै पदक्रमम्" । गुरुपत्रस्य "सांख्यसिद्धान्तनिपुणं सनमस्कारकं पदम् । विन्यस्य विलिखेत् प्राज्ञो गुरुपत्रे पदक्रमम्" । स्वामिपत्रस्य "प्रवर्य्यं सनमस्कारं प्राणप्रियादिकं पदम् । विन्यस्य विलिखेद्धीमान् स्वामिपत्रे पदक्रमम्" । भार्य्यायाः "प्राणप्रियापदं साध्वीपदं सच्चरितादिकम् । भार्य्यापत्रे लिखेद्विद्वान् पदक्रममनुत्तमम्" । पुत्रस्य "प्राणतुल्यपदं तद्वत्तथा सच्चरितादिकम् । आशीर्व्वचनसंयुक्तं पुत्रपत्रे पदक्रमम्" । पितृपत्रस्य "प्रभुवर्य्यं नमस्कारं तथा सच्चरितादिकम् । विन्यस्य विलिखेत् पुत्रः पितृपत्रे पदक्रमम्" । सन्न्यासिपत्रस्य "सर्व्वाकाङ्क्षाविनिर्मुक्तं सर्व्वशास्त्रार्थपारगम् । सन्न्यासियतिपत्रेषु विलिखेच्च पदक्रमम्" । सामान्यस्य "सामान्यभृत्यशत्रूणां विनियोज्यास्तवं प्रति । शस्त्रावधेयितपदं कागतुल्यादिकं तथा । एतेषामेव पत्रेषु यथायोग्यानुसारतः । विन्यस्य विलिखेत् प्राज्ञः पदक्रममनुत्तमम्" । श्रीशब्दविन्याससंख्या यथा "षड्गुरोः स्वामिनः पञ्च द्वे भृत्ये चतुरो रिपौ । श्रीशब्दानां त्रयं मित्रे एकैकं पुत्रभार्य्ययोः" पत्रकौ० ।

देवीभेदे तुलस्यपत्रविशेषाणां प्रीतिकरत्वमुक्तं यथा "पत्राण्यपि सपुष्पाणि हरेः प्रीतिकराणि च। प्रवक्ष्यामि क्रमश्चैव! शृणुष्व गदतो मम। अपामार्गकं प्रथमं तस्माद् भृङ्गारकं परम्। तस्मात्तु खादिरं श्रेष्ठं ततश्च शमीपत्रकम्। दुर्वापत्रं ततः श्रेष्ठं ततोऽपि कुशपत्रकम्। पत्रं तस्माद्दमनकं ततो विल्वस्य पत्रकम्। विल्वपत्रादपि हरेस्तुलसीपत्रमुत्तमम्। एतेषां च यथा लब्धैः पत्रैर्यो योऽर्च्चयेद्धरिम्। सर्वपापविनिर्मुक्तो विष्णुलोके महीयते" नरसिंहपु० ५२ अ०। देवीप्रीतिकरपत्राणि यथा "अपामार्गस्य पत्रन्तु ततो भृङ्गारपत्रकम्। ततोऽपि गन्धिनीपत्रं वलाहकमतः परम्। तस्मात् खदिरपत्रं तु वञ्जुलस्तवकस्तथा। आम्रन्तु वकगुच्छस्तु जम्बूपत्रं ततः परम्। वीजपूरस्य पत्रं तु ततोऽपि कुशपत्रकम्। दूर्वाङ्कुरं ततः प्रोक्तं शमीपत्रमतः परम्। पत्रमामलकं तस्माद्दामपत्रमतःपरम्। सर्वशो विल्वपत्रन्तु देव्याः प्रीतिकरं मतम्" कालिकापु०।

**पत्रक** न० पत्र+स्वार्थे क तदिव कायति कै—क वा। १छदस्य पत्रे २पत्रावल्यां शब्दर०। ३तेजपत्रे राजनि० ४शाकिशुशाके पु० रत्नमाला। ५पत्रभङ्गे न० शब्दच०।

**पत्रकाहला** स्त्री १पिच्छिकायां २पत्रशब्दे च हारा०।

**पत्रगुप्त** पु० पत्रं गुप्तमस्य परनि०। (तेकाटा सिजु) त्रिकण्टे शब्दच०।

**पत्रघना** ६त०श०। सातलावृक्षे राजनि०।

**पत्राङ्ग** न० पत्रमज्यते अनेन अनृज—करणे घञ् शक०। रक्तचन्दनाकारे (वक्कम) वृक्षे शब्दच०। [त्रिका०।

**पत्रभङ्कार** पु० पत्रे भङ्कारोऽस्य। पुरोटिवृक्षे (रायभटी)

**पत्रणा** स्त्री पत्रं नम्यतेऽत्र नम—वा० ड संज्ञात्वात् णत्वम्। पत्ररचनायाम् हारा०।

**पत्रतण्डुली** स्त्री पत्रे तण्डुलाः सन्त्यस्याः अच् गौरा० ङीष्। यवतिक्तायाम् राजनि०।

**पत्रतरु** पु० पत्रप्रधानस्तरुः शा० त०। दुर्व्खदिरे राजनि०

**पत्रदारक** पु० पत्रमिव दारयति दारि—ण्वुल्। क्रकचे (करात) त्रिका०।

**पत्रनाडिका** स्त्री ६त०। पर्णसिरायाम् जटा०।

**पत्रपरशु** पु० पत्रे धातुमयपत्रे परशुरिव। (केनी) ख्याते स्वर्णकारयन्त्रभेदे। पत्रपर्शुरप्यत्र शब्दर०।

**पत्रपाल** पु' असिपुत्रायां छुरिकायां हेमच०।

**पत्रपाली** स्त्री पत्राकारा पालिरग्रं यस्याः वा ङीप्। (काँचि) कर्त्तर्यां हलायु०तस्याः पत्रतुल्यामलान्तत्वात्तथात्वम्।

**पत्रपाश्या** स्त्री पत्रमिव पाश्या। स्वर्णादिरचितललाटालङ्कारभेदे (टीका) अमरः।

**पत्रपिशाचिका** स्त्री पत्रेण पिशाचीव इवार्थे कन्। जलवारणसाधने यन्त्रभेदे (टोका) त्रिका०।

**पत्रपुष्प** पु० पत्रं पुष्पमिवास्य। १रक्ततुलस्यां शब्द० २तुलस्यां स्त्री टाप् शब्दमाला। क्षुद्रपत्रतुलस्याम् स्त्री रत्नमाला ङीप्। कप्। पत्रपुष्पक भूर्जपत्रे शब्दमा०।

**पत्रबन्ध** पु० पत्राकारः बन्धः। पुष्परचनाभेदे शब्दरत्ना०।

**पत्रभङ्ग** पु० पत्राकारः भङ्गः रचना। स्तनकपोलादौ कस्तूरिकादिरचितपत्रन्यासे तिलकभेदे हेम० पत्रभङ्गि, पत्रभङ्गीत्यपि तत्र स्त्री शब्दर०।

**पत्रमञ्जरी** स्त्री ६त०। १पर्णस्याग्रभागे २पत्राकारमञ्जरीयुते तिलकभेदे हेमच०। [२तत्पत्तद्वावे स्त्री।

**पत्रमाल** पु० पत्राणां माला यत्र। १वेतसे जैवात्टु० ६त०।

**पत्रमूल** पु० ६त०। पर्णस्य मूले ततः प्रकारे स्थूला० कन्। पत्रमूलक तत्प्रकारे न०। तत्र गणे पत्रमूलेति व्यस्तसमस्तस्य तेन पत्रक मूलक तत्तत्प्रकारे न०

**पत्रयौवन** न० पत्रस्य यौवनमत्र। नवपल्लवे जटाध०

**पत्ररथ** स्त्री पत्रं पक्षो रथ इव यस्य। खगे अमरः जातित्वात् स्त्रियां ङीष्। [भेदे हेमच०।

**पत्र(रे)लेखा** स्त्री पत्राकारा(रे)लेखा। पत्रभङ्गे तिलक०

**पत्रल** न० पत्रमिवाकारोऽस्त्यस्य सिध्मा० लच्। दुग्धे (पातालादह) हेमच०।

**पत्रलता** स्त्री पत्राकारा लता यत्र। पत्राकारे १तिलकभेदे हेमच० शा०त०। २पत्रप्रधानलतायाम्।

**पत्रलवण** न० पत्रविशेषेण पक्वं लवणम् शा०त०। सुश्रुतोक्ते लवणभेदे "मुष्ककस्नुकसुष्ककनक्तमालाटरूषकपूतीकारमधुशिग्रुकादीनां पत्राण्याद्र्राणि लवणेन सहोदूखलेऽवक्षुद्य घृते घटे प्रक्षिप्यावलिप्य गोमयाग्निदाहयेदेतत् पत्रलवणमुपदिशन्ति वातरोगेषु"।

**पत्रवल्लरी** स्त्री पत्रयुक्ता वल्लरीव। तिलकभेदे पत्रभङ्गे हेमच० पत्रवल्लीत्यप्यत्र।

**पत्रवाह** पु० पत्रं पत्रं लिपिं वा वहति वह—अच् उप० स०। १पत्रवाहे खगे २शरे जटा० ३लिपिवाहके त्रि०।

**पत्रविशेषक** न० पत्रमिव विशेषो यत्र कप्। तिलकभेदे

**पत्रवृश्चिक** पु० पत्रमिव वृश्चिकः। पत्राकारे वृश्चिकभेदे सुश्रु० कीटशब्दे दृश्यम्।

**पत्रवेष्ट** पु॰ पत्त्रमिव वेष्ट्यते वेष्ट–कर्मणि घञ्। ताडङ्के रघुः १६।१७श्लो॰।

**पत्त्रशाक** पत्त्रात्मकं शाकम्। "पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा। शाकं षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम्" भावप्र॰उक्ते शाकवर्गमध्ये पत्रात्मकशाके। पत्रशाकानि च वास्तूकादीनि शर्षपान्तानि, पुष्पशाके कदली-पुष्पशाल्मलीपुष्पे, फलशाकानि कुष्माण्डादिकण्टकारी-फलान्तानि, नालशाकं सर्षपनालम्। कन्दशाकानि सूरणादिशालूकान्तानि, संस्वेदजशाकं शिलीन्ध्रादि" तत्र दृश्यम्।

**पत्त्र(त्रि)सिरा** स्त्री ६त॰। १पत्त्रनाड्यां २पत्त्रभङ्गे हारा॰

**पत्त्रशृङ्गी** स्त्री पत्त्रं शृङ्गमिवास्याः ङीष्। द्रवन्तीलतायाम् राजनि॰। [६त॰। २पर्णानां पङ्क्तौ च।

**पत्त्रश्रेणी** स्त्री पत्त्राणां श्रेणीव। १द्रवन्तीलतायां राजनि॰

**पत्त्रश्रेष्ठ** पु॰ पत्त्रं श्रेष्ठं यस्य। बिल्ववृक्षे राजनि॰।

**पत्त्रसुन्दर** पु॰ पत्त्रं सुन्दरमस्य। स्वनामख्याते वृक्षभेदे मेदि॰। [ङीप्।

**पत्त्रसूचि** स्त्री न॰ पत्त्राणां सूचिरिव। कण्टके त्रिका॰ वा

**पत्त्रहिम** न॰ पत्त्रेषु हिमं यतः। हिमदुर्द्दिने त्रिका॰

**पत्त्राख्य** न॰ पत्त्रेति आख्या यस्य। १तेजपत्रे शब्दच॰ २तालीशपत्रे राजनि॰।

**पत्त्राङ्ग** न॰ पत्त्रमिवाङ्गमस्य। १रक्तचन्दनाकारे काष्ठभेदे (बकम) अमरः। २भूर्जपत्रवृक्षे ३पद्मके च मेदि॰।

**पत्त्राङ्गुलि** स्त्री पत्त्रमिवाङ्गुलयो यत्र। पत्त्रभङ्गे तिलकभेदे अमरः। [शब्दर॰।

**पत्त्राञ्जन** न॰पत्त्रमज्यतेऽनेन अन्ज–करणे ल्युट्। मस्याम्।

**पत्त्राढ्य** त्रि॰ पत्त्रैराढ्यम्। १बहुपत्त्रयुक्ते २पिप्पली-मूले ३पर्वततृणे च न॰ राजनि॰।

**पत्त्रान्य** न॰ पत्राङ्ग+पृषो॰। (बकम) काष्ठभेदे राजनि॰।

**पत्त्राम्ला** स्त्री पत्त्रे अम्ला। (चुकोपालङ्)शाकभेदे वैद्यक॰

**पत्त्रालु** पु॰ पत्त्र+अस्त्यर्थे आलु। १कासालौ २इक्षुदर्भे च राजनि॰। [६त॰। २पत्त्रपङ्क्तौ च।

**पत्त्रावलि** न॰पत्त्राणामावलयो यस्मात्। १गैरिके शब्दाच॰

**पत्त्रावली** स्त्री पत्त्राणामावलीव। १पत्त्रभङ्गे तिलकभेदे शब्दच॰ ६त॰। २पत्त्रश्रेणौ च

**पत्त्रिका** स्त्री पत्त्री+स्वार्थे क कापि ह्रस्वः। १लिप्याम्। पत्त्रं विद्यतेऽस्याः ठन्। २प्रशस्तपत्त्रयुक्तासु नवसु कदल्या-दिषु नवपत्त्रिकाशब्दे २६६॰पृ॰ उदा॰ दृश्यम्। ३पत्त्रि-काख्ये कर्पूरभेदे (पातकपुर) त्रिकाण्डशेषः।

**पत्त्रिकाख्य** पत्त्रिका आख्या यस्य। कर्पूरभेदे राजनि॰।

**पत्त्रिन्** त्रि॰ पत्त्र+अस्त्यर्थे इनि। १पर्णयुक्ते २शरे पु॰ ३खगे अमरः ४श्येनखगे ५वृक्षे च पु॰ राजनि॰ ६पर्वते पु॰ मेदि॰ ६ताले ७श्वेतकिणिहीवृक्षे ८गङ्गपत्त्र्यां ९पाठायाञ्च राजनि॰ १०पल्लवे स्त्री शब्दच॰ ङीप्।

**पत्त्री** स्त्री पत–ष्ट्रन् ङीप्। लिपौ

**पत्त्रोपस्कार** पु॰ पत्त्रेणोपस्कारोऽस्य। कासमर्दे हारा॰

**पत्त्रोर्ण** न॰ पत्त्रजाता ऊर्णा साधनत्वेनास्त्यस्य अच्। धौत-कौषेये पट्टसूत्रमयवस्त्रे अमरः बदरादिपर्णजातकृ-मिजातोर्णाजातत्वात्तस्य तथात्वम्।

**पत्त्य** त्रि॰ पत्त्रस्य हितं यत्। श्योनाके वृक्षे पु॰ अमरः

**पत्नी** स्त्री पति+"पत्युर्नो यज्ञसंयोगे" पा॰ नः, ङीप् च। १पतिकृतयज्ञफलभोक्त्र्यां विवाहितायां स्त्रियाम् अमरः "पत्नीमूलं गृहं पुंसां यदि छन्दोऽनुवर्त्तिनी। गृहाश्रम-समं नास्ति यदि भार्य्या वशानुगा। तया धर्म्मार्थकामानां त्रिवर्गफलमश्नुते। प्राकाम्ये वर्त्तमाना तु स्नेहान्न तु निवारिता। अवश्या सा भवेत् पश्चाद् यथा व्याधि-रुपेक्षितः। अनुकूला न वाग्दुष्टा दक्षा साध्वी प्रियं-वदा। आत्मगुप्ता स्वामिभक्ता देवता सा न मानुषी। अनुकूलकलत्रो यस्तस्य स्वर्ग इहैव हि। प्रतिकूल-कलत्रस्य नरको नात्र संशयः। स्वर्गोऽपि दुर्लभं ह्येत-दनुरागः परस्परम्। रक्त एको विरक्तोऽन्यस्तस्मात् कष्टतरं नु किम्?। गृहवासः सुखार्थाय पत्नीमूलं गृहे सुखम्। सा पत्नी या विनीता स्याच्चित्तज्ञा वशवर्त्तिनी। दुःखदाऽन्या सदा खिन्ना चित्तभेदात् परस्परम्। प्रति-कूलकलत्रस्य द्विदारस्य विशेषतः। योषित् सर्वा जलौ-केव भूषणाच्छादनाशनैः। सुभृतापि कृता नित्यं पुरुषं ह्यपकर्षति। जलौका रक्तमादत्ते केवलं सा तपस्विनी। इतरा तु धनं वित्तं मांसं वीर्य्यं बलं सुखम्। स-शङ्का बालभावे तु यौवने विमुखी भवेत्। तृणवन्मन्यते पश्चाद्वृद्धभावे स्वकं पतिम्। अनुकूला न वाग्दुष्टा दक्षा साध्वी पतिव्रता। एभिरेव गुणैर्युक्ता श्रीरेव स्त्री न संशयः। या हृष्टमनसा नित्यं स्थानमान-विचक्षणा। भर्त्तुः प्रीतिकरी नित्यं सा भार्य्या ह्रीतरा स्मरा" दक्षसं॰। [शालायाम्।

**पत्नीशाला(ल)** न॰स्त्री ६त॰ वा क्लीवत्वम्। पत्न्यधिष्ठित-

**पत्नीसंनहन** न॰६त॰। मेखलया योक्त्रेण वा प्रतिमुच्याह॰

यज्ञदीयार्थे यजमानपत्न्या । कव्यभेदे कात्या० श्रौ० ७।४।६ ऋ० ८।१।७ सूक्ते च दृश्याम् ।

**पत्नीसंयाज** पु० वैदिके कर्मभेदे स च कात्या० श्रौ०३।७।७ सूत्रादौ उक्तस्तत्रैव दृश्यः । पत्नीसंयाजनमप्यत्र न० । "आचम्य पत्नीसंयाजनम्" कात्या० श्रौ० ६।८।१४

**पत्नाट** पु० पत्नी अटत्यत्र अट—आधारे घञ् । पत्न्यागारे त्रिका० ।

**पत्मन्** पु० पत—भावे मनिन् । १पतने करणे मनिन् । २पतनसाधने यजु० ८।४८ ऋ० ५।७।७

**पत्वन्** पु० पतत्यत्र+पत—आधारे वनिप् । मार्गे यजु०२२।२६ उज्ज्वलदत्तेन उणादिसूत्रे पदीति पठित्वा पद्वन् इत्युदाहृतम् वेददीपकारस्तु तत्र पतिं मत्वा तद्व्याख्याने पतेः वनिपमाह । [उज्ज्वद० ।

**पत्सल** पु० पतत्यत्र पत—आधारे सरन् रस्य लत्व । मार्गे

**पथ** गतौ भ्वा० पर०सक० सेट् । पथति इदित् अपथीत् । ज्वला० पथः पाथः प(पा)थयति । पपाथ मेघदः ।

**पथ** गतौ वा चु०उभ०पक्षे भ्वा०पर०सक०सेट् इदित् । पन्थयति ते पन्थति । अपपन्थत् त । अपन्थीत् इदित् पन्थ्यते

**पथ** पु० पथत्यत्र पथ—घञर्थे आधारे क । मार्गे त्रिका० ।

**पथक** त्रि०पथे कुशलः कन् । १मार्गकुशले २कपिलद्राक्षायां स्त्री

**पथिक** त्रि० पन्थानं गच्छति पथिन्+कन् । देशान्तरयानाय गृहाद्विःसृत्य पथिगन्तरि राजनि० । [संघातादयोऽप्यत्र ।

**पथिकसंहति** पु० ६त० । पान्थसमूहे हारा० । पथिक-

**पथिकार** त्रि० पन्थानं करोति कृ—अण् उप० स० । मार्गकारके, ततः कुर्वा० ण्य । पाथिकार्य्यः तदपत्ये पुंस्त्री० ।

**पथिदेय** न० पथि मार्गे देयम् अलुक् स० । रात्ते देये करभेदे हारा० । [खदिरे राजनि० ।

**पथिद्रुम** पु० पथ-इन् कर्म० । १खदिरवृक्षे जटाध० २श्वेत-

**पथिन्** पु०पथ—आधारे इनि । १मार्गे तद्भेदादयाश्विकं यथा "त्रिंशद्धनूंषि विस्तीर्णो देशमार्गस्तु तैः स्मृतः । विंशद्धनुर्ग्राममार्गः सीमामार्गो दशैव तु । धनूंषि दश विस्तीर्णः श्रीमान् राजपथः स्मृतः । नृवाजिरथनागानामसम्बाधः सुसञ्चरः । धनूंषि चैव चत्वारि शाखा रथ्यास्तु निर्मिताः । त्रिकराश्चोपरथ्यास्तु द्विकराप्युपरथ्यिका । जङ्घापथस्तु चत्वारः कलिपादस्तु गृहान्तरम् । वृतीपादस्त्वर्द्धपादः प्राग्वंशः पादकः स्मृतः । अवकरः परीवाहः पादमात्रः समन्ततः" देवीपु० । पथिगमनगुणाः "अध्वा मेदःकफस्थौल्यसौकुमार्यादिनाशनः । वस्तु चंक्रमणं नातिदेहपीडाकरं भवेत् । तदायुर्बलमेधाग्निप्रदमिन्द्रियबोधनम्" राजवल्लभः । २धर्माचारे च "महाजनो येन गतः स पन्थाः" भा०व० यक्षप्रश्ने ।

**पथिरक्षस्** पु० पन्थानं रक्षति रक्ष—असुन् ६त० । १रुद्रभेदे यजु० १६।८६ २मार्गरक्षके त्रि० । त्रिनि । पथिरक्षिन् तत्रार्थे ऋ० १०।१४।११ ।

**पथिल** पु० पथे—गतौ इलच् । पथिके उज्ज्वल० ।

**पथिवाहक** त्रि० पन्थानं वाहयति प्रापयति वाहि—ण्वुल् । १मार्गवाहके २शाकुनिके ३निष्ठुरे च शब्दमाला ।

**पथीन** नामधातुः पन्था इवाचरति पथिन्—क्विप् दीर्घः मा॰मलोपाचरणे पक्ष॰ सेट् । पथीनति अपथीनीत् । एवं पथीन शब्दयोः नामधातुः तत्तत्त्वाचरणे ।

**पथिष्ठा** त्रि०पथे मार्गे तिष्ठति स्था—क्विप् अलुक्स०वेदे षत्वम् । मार्गे वर्त्तमाने ऋ० ५।५०।३। लोके तु पथस्थ इत्येव ।

**पथ्य** त्रि० पथि साधु दिगा० यत् इनो लोपः । १मार्गसाधौ पथोऽनपेतः यत् । २हिते चिकित्सादौ ३हितकारकारकभोज्यद्रव्यभेदे । पथ्यश्च अपथ्यशब्दे २६६५पृ० सुश्रुतोक्तहिताहितीयाध्याये दर्शितम् । रोगभेदे पथ्यापथ्यश्च वैद्यके प्रसिद्धं विस्तरभयान्नोक्तम् । ४हरितकीवृक्षे पु० शब्दमाला अमरे स्त्री । ५स्वर्गेवारी ६चिर्भिटायां ७वन्ध्याकर्कोट्याञ्च स्त्री राजनि० । ८मात्रावृत्तभेदे स्त्री "त्रिषु गणेषु दलयोरादौ दृश्यते यस्याः । पथ्येति नाम तस्याः प्रकीर्त्तितं नागराजेन" वृ०र० ।

**पथ्यशाक** पु० पथ्यं शाकमस्य । तण्डुलीयशाके राजनि० ।

**पथ्यादिगुग्गुलु** पु०औषधिविशेषे यथा "पथ्या बिभीतामलकीफलानां शतं क्रमेण द्विगुणाभिवृद्धम् । प्रत्येक युक्तस्य पलंक्रमेण द्रोणे जले संस्थितमेकरात्रम् । अ-ष्टांशशेषं क्वथितं कषायं भाण्डे पचेत्तत् पुनरेव लोहे । अमूनि वह्नेरवतार्य्य दद्यात् चूर्णानि संचूर्ण्य पलार्द्धकानि । विडङ्गदन्तीत्रिफलागुडूचीकृष्णात्रिवृन्नागरकोषणानि । यथेष्टचेष्टस्य नरस्य शीघ्रं हिमाम्बुपानानि च भोजनानि । निषेव्यमाणो विनिहन्ति रोगान् सम्प्रशी नूतनखञ्जताश्च । प्लीहानमुग्रं जठरार्त्तिगुल्मं पाण्डुत्वकण्डूत्वविवातरक्तम् । पथ्यादिको गुग्गुलुरेष नाम्ना ख्यातः क्षितावप्रमितप्रभावः । बलेन नागेन समं मनुष्यं जवेन कुर्य्यात्तुरगेण तुल्यम् । आयुःप्रकर्षं विदधाति चक्षुर्बलं तथा पुष्टिकरो विपन्नः । अतस्य सम्यानकरो विशेषाद्रोगेषु शस्तः सकलेषु तज्ज्ञैः" भावप्र० ।

पथ्यावक्त्र न० "युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्त्तितम्" इ०र० उक्तलक्षणे मात्रावृत्तभेदे। [पपाद पेदतुः।

पद् स्थैर्ये भ्वा०पर०सक० सेट्। पदति अपादीत् अपदीत्।

पद् गतौ दि० आ०सक०अनिट्। पद्यते अपादि पेदे पन्नः आ+विपत्तौ आपत्तौ च णिच् आपादन व्यापकाभावेन व्याप्याभावकल्पने प्राप्तौ च।

उद्+उत्पत्तौ उद्भवे जनने अक०।

प्रति+उद् झटित्युद्भवे अक०।

वि+उद्—शब्दस्यावयवार्थबोधने व्युत्पत्तिः।

उप+युक्तियोगे उपपद्यते उपपत्तिः।

अभि+उपस्ररणे। कुमा० ४श्लोकः

निस्+निष्पत्तौ अवस्थान्तरप्राप्तौ अक०।

प्र+प्राप्तौ सक०। प्रपन्नः

प्रति+स्वीकारे अङ्गीकारे सक० प्रतिपत्तिः प्रतिपन्नः।

वि+प्रति+संशये सक० विप्रतिपन्नः।

वि+मरणे नाशे अक०। विपद्यते विपन्नः विपद्।

सम्+सम्यग् ह्रद्धौ अक० सम्पद्यते सम्पद्।

पद् गतौ अद० चु०आत्म०सक० सेट्। पदयते अपपदत।

पद् पु०पद्यते गच्छत्यनेन करणे क्विप्। पादे "पदादयः पृथक् शब्दा इत्युक्ते "पदङ्घ्रिश्चरणोऽस्त्रियाम्" अमरः।

पद न० पद—अच्। १व्यवसाये २त्राणे ३स्थाने ४चिह्ने ५पादे ६वस्तुनि च अमरः। ७विभक्त्यन्तशब्दभेदे "सुप्तिङन्तं पदम्" पा०। दवाक्यैकदेशे च "वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः" सा०द०। ६श्लोकचरणे १०किरणे पु० मेदि० ११अर्थबोधकशक्तिविशिष्टे नैयायिकाः "शक्तिमत्त्वं पदत्वमिति" तल्लक्षणात्।

पदक त्रि० पदं वेत्ति क्रमा०वुन्। १वेदमन्त्रपदविभाजकग्रन्थस्याध्येतरि २तद्वेत्तरि च ३गोत्रप्रवर्त्तकर्षिभेदे पु०ततः अपत्ये इञ् पादकि तदपत्ये पुंस्त्री०। यस्का० बहुत्वे लुक्। पदकास्तद्गोत्रापत्येषु।

पदकार पु० पदं पदविभागं करोति कृ—अण् उप०स०। वेदानां मन्त्रपदविभाजकग्रन्थकर्त्तरि।

पदक्रम पु० द्व०त०। वेदमन्त्राणां पदविभाजकक्रमे। तमधीते वेत्ति वा उक्था०ठक्। पादक्रमिक तदुपन्याध्येतरि तद्वेत्तरि च त्रि०।

पदक्रमक न० पदं क्रमश्च तौ वेत्त्यधीते वा वुन्। १पदक्रमयोर्वेत्तरि २तदुपन्याध्येतरि च। [पदातिके अमरः।

पदग त्रि० पादेन गच्छति गम—ड पादस्य पद इत्यादेशः।

पदगोत्र न०६त०। "भारद्वाजमाख्यातं भार्गवं नाम, काश्यप उपसर्गाः, निपातः काश्यपः" इत्येषु यजु० प्रातिशाख्योक्तेषु भारद्वाजादिषु पदानां गोत्रेषु। "चत्वारिपदजातानि आख्यातनामनिपातोपसर्गाः" इति निरुक्तोक्तानां च तेषां चतुर्णां भारद्वाजादिगोत्रत्वम्। [सम्मूहे निरुक्त०।

पदजात न० ६त०। आख्यातनामनिपातोपसर्गरूपे शब्द-

पदजल पु० ऋषिभेदे ततः उपका०गोत्रप्रत्ययस्य बहुत्वे लुक्।

पददेवता स्त्री पदानां आख्यातादीनां देवता। आख्यातादीनां सोमादिषु देवतासु "सौम्यमाख्यातं नाम वायव्यमाग्नेय उपसर्गः निपातोवारुण्यः" वाजपेयिप्रतिशाख्यम्। ६।६१ [सू०६।११।१

पदनिधन न०पदमधिकत्य निधनम्। सामभेदे लाट्यायनश्रौ०

पदन्यास पु० ६त०। १चरणार्पणे। पदस्येव न्यासोऽत्र। २गोक्षुरवृक्षे शब्दच० तन्त्रोक्ते अन्नपूर्णामन्त्रस्य पदानां तत्तदङ्गेषु न्यासे च यथाह तन्त्रसा० ज्ञानार्णवे "एकमेकं पुनरेकं पुनरेकं द्वयं ततः। चतुष्टतुस्तथा द्वाभ्यां पदान्येतानि पार्वति!। पदान्येतानि देवेशि। नवद्वारेषु विन्यसेत्। मूर्द्धादिगुह्यपर्य्यन्तं पुवत्त्वेषु वरानने!। गुह्यादिब्रह्मरन्ध्रान्तं पदानां नवकं न्यसेत्"। तदुक्तं तत्रैव "ब्रह्मरन्ध्राास्यहृदयमूलाधारेष्वनुक्रमात्। चतुर्थीन्तानि विन्यस्य परेष्वन्यांश्च विन्यसेत्। भ्रूमध्यनासिकाकण्ठनाभिलिङ्गेषु पञ्चसु। पूर्ववत् क्रमतो देवि! नमःप्रभृतिकं न्यसेत्"। [पाठवताञ्च वाक्याम्" देवीभा०।

पदपाठ पु० ६त०। वेदपदविभाजकग्रन्थभेदे "उद्गीथस्य

पदभञ्जन न० पदानि भज्यन्तेऽनेन भन्ज—करणे ल्युट्। १निरुक्तरूपे ग्रन्थे २गूढार्थव्याख्याने च [हेमच०।

पदभञ्जिका स्त्री पदानि भञ्जति भन्ज—ण्वुल्। टीकायाम्

पदमञ्जरी स्त्री पदानां मञ्जरीव। न्यासापरनामके हरदत्तप्रणीते व्याकरणग्रन्थभेदे। [देवीपु० ८अ०।

पदमाला स्त्री ६त०। १पदश्रेणौ २मोहननामविद्यायाम्

पदवि(वी) स्त्री पद—अवि वा ङीप्। १पथि। अमरः २धर्माचारे च। [२०२अ०।

पदविग्रह पु० पदेन विग्रहो यत्र। समासे हरिवं०

पदव्याख्यान न० ६त०। वेदमन्त्रस्य विभाजकग्रन्थभेदे तस्य व्याख्यानो ग्रन्थः तत्र भवो वा ऋगयना० अण्। पादव्याख्यान तस्य व्याख्याने तत्रभवे च त्रि०।

पदष्ठीव न० पादौ च अष्ठीवन्तौ च द्वन्द्व० नि०। पादजानुनोः समाहारे।

**पदस्तोभ** पु० पदस्थितः स्तोभः। पदमध्यपठिते निरर्थके शब्दभेदे गानशब्दे २५७२पृ०दृश्यम्। [लतायां राजनि०

**पदाङ्गी** स्त्री पदं हंसपदमिवाङ्गं यस्याः ङीष्। हंसपदी-

**पदाजि** पु० पादेन अजति गच्छति अज–इण्। "पादस्य पदाज्यतीति" निर्देशात् व्यभावः पादस्य पद इत्यादेशः। पादेन गन्तरि पदातौ अमरः।

**पदात** त्रि०पादेनातति अत–अच्। पदातौ शब्दरत्ना०।

**पदाति** पु० पादेन अतति गच्छति उपपदि अत–इण् पदादेशः। पादेन गन्तरि (पेयादा) अमरः। स्वार्थे क। पदातिक तत्रार्थे शब्दर०।

**पदाद्यविद्** पु० पदादिं न वेत्ति विद–क्विप् ६त०। पदाद्युच्चारणानभिज्ञे छात्रगणभेदे अपकृष्टच्छात्रे हारा०।

**पदानुशासन** न० पदान्यनुशिष्यन्तेऽनेन अनु+शास–करणे ल्युट्। शब्दानुशासने व्याकरणे मेदि०।

**पदानुस्वार** पु० सामभेदे लाट्यायन० ६।८।१

**पदान्त** पु० ६त०। पदावसाने

**पदान्तर** न० अन्यत् पदम् मयू० स०। एकपदभिन्ने अन्यस्मिन्। १पदे २स्थानान्तरे च। [विवेके मेदि०।

**पदार** पु० पदात् ऋच्छति ऋ–अच् ५त०। १पादधूलौ २पदा-

**पदार्थ** पु० ६त०। शब्दाभिधेये द्रव्यादौ। पदार्थाश्च दर्शनभेदेन नानाविधाः तत्तद्दर्शनमतप्रदर्शने उक्ता यथा वैशेषिकाणां द्रव्यादयः षट्, सप्त वा, नैयायिकमते प्रमाणादयः षोडश, सांख्यानां प्रकृत्यादयः पञ्चविंशतिः, पातञ्जलानां सेश्वराः प्रकृत्यादयः षड्विंशतिः। वेदान्तिनाम् चिदचिदात्मकौ द्वाविव्येवं बोध्यम्।

**पदालिक** पु० पदस्य चरणस्यालिकमिव। चरणोपरिभागे

**पदासन** ६त०। पादपीठे हेमच०।

**पदि** पु०पद्यते पद–कर्मणि इन्। गन्तव्ये निरु० "पदिर्गन्तुर्भवति यत् पद्यते" निरु० ५।१८। "पदिस्तदृत्सिनाति" ऋ०१।१२५।२। [चारिणि स्त्रियां धित्वात् ङीष्।

**पदिक** त्रि० पादेन चरति पर्पा० ष्ठन् पदादेशश्च। पाद-

**पदिन्याय** पु० जैमि० १।१।१८ सूत्रोक्ते न्यायभेदे।

**पदिहोम** पु० पदि पादस्थाने होमः अलुकस०। पदि जुहोति वर्त्मनि जुहोतीतिश्रुतिविहितहोमभेदे तत्र पादश्च हस्तिनएव ग्राह्यः "सर्वे पदो हस्तिपदे निमग्नाः" इत्युक्तेः। [पादेनोपहते।

**पदोपहत** त्रि० पादेन उपहतः पादस्य पद इत्यादेशः।

**पद्ग** त्रि० पद्भ्यां गच्छति गम–ड ३त०। पद्भ्यां गन्तरि पदातौ अमरः। पादशब्देन समासे तु अदन्तपदादेशे पदग इत्येव।

**पद्घोष** पु० ६त० वा पदादेशः। पादशब्दे। एवं शब्दमिश्रयोरपि वा पदादेशे पच्छब्दपन्मिश्रशब्दौ पादशब्दाद्यर्थे पक्षे पादघोष पादशब्द पादमिश्र तत्तदर्थे।

**पद्धति(ती)** स्त्री पादेन हन्यते गम्यते हन–गतौ आधारे क्तिन् पदादेशः वा ङीप्। १पथि २पङ्क्तौ च मेदि०। ३ग्रन्थस्य निरुक्त्यर्थबोधके ग्रन्थभेदे हेमच०। ४उपनामभेदे स च शूद्रस्य वसुघोषादिः। "शूद्राणां नामकरणे वसुघोषमित्यादिरूपपद्धतियुक्तनामत्वम्" उद्वा० रघु०।

**पद्धिम** न० पादस्य हिमं पदादेशः। पादशीतस्पर्शे।

**पद्म** न० पद–मन्। १कमले २गजमुखादिस्थे विन्दुसमुदाये कमलाकारेण सैन्यादेरभिनिवेशनरूपे ३व्यूहभेदे ४निधिभेदे "अर्बुदमब्जमिति पद्मपर्यायाब्जनाम्नोक्तायां ५दशार्बुदसंख्यायां ६तत्संख्यातेषु ७पुष्करमूले ८सीसके धातौ ९शरीरस्थे नाडीचक्रभेदे च मेदि०। १०पद्मकाष्ठौषधौ धरणिः। देहस्थपद्मानि च चक्रत्वेन प्रसिद्धानि तानि च चक्रशब्दे २८०८पृ० दर्शितानि। कमले पु०न० अमरे स्थितं तत्रास्य पुंस्त्वमप्रयुक्तदोषयुक्तमित्यालङ्कारिकाः। ११दाशरथौ १२नागभेदे पु० धरणिः। १३जिनचक्रवर्त्तिभेदे पु०हेम० १४रतिबन्धभेदे पु० "हस्ताभ्याञ्च समालिङ्ग्य नारी पद्मासनोपरि। रमेद्गाढं समाकृष्य बन्धोऽयं पद्मसंज्ञकः" रतिम०।

**पद्मक** न० पद्ममिव कायति कै–क। १गजमुखादिस्थे पुष्पाकारे विन्दुसमूहे अमरः। २पद्मकाष्ठे मेदि०। ३कुष्ठौषधौ राजनि० स्वार्थे क। ४पद्मशब्दार्थे च पद्मकाष्ठगुणाः भावप्र० उक्ता यथा "पद्मकं तुवरं तिक्तं शीतलं वातलं लघु। वीसर्पदाहविस्फोटकुष्ठश्लेष्मास्रपित्तहृत्। गर्भसंस्थापनं रुच्यं वमिव्रणतृषाप्रणुत्" [द्योऽस्यत्र।

**पद्मकर** पु० पद्मं करेऽस्य। पद्महस्ते विष्णौ पद्महस्ता-

**पद्मकन्द** पु० ६त०। कमलकन्दे शालूके "शालूकं शीतलं वृष्यं पित्तदाहास्रनुद् गुरु। दुर्जरं स्वादुपाकञ्च स्तन्यानिलकफप्रदम्। संग्राहि मधुरं रूक्षं भिस्साण्डमपि तद्गुणम्" भावप्र०।

**पद्मकाद्यघृत** न० "पद्मकामृतनिम्बानां धान्यचन्दनयोः पचेत्। कल्के काथे च हविषः प्रस्थं छर्दिनिवारणम्। तृष्णारुचिप्रशमनं दाहज्वरहरं परम्" चक्रदत्तोक्ते पक्वघृतभेदे

**पद्मकाष्ठ** न०पद्ममिव सुगन्धि काष्ठमस्य। औषधिभेदे राजनि०

**पद्मकिन्** पु० पद्मकं बिन्दुजालमस्त्यस्य त्वचि इनि । १भूर्जवृक्षे शब्दमा० । २हस्तिनि [२०५८पृ० दृश्यम् ।

**पद्मकीट** पु० पद्ममिव कीटः । कीटभेदे सुश्रुतः कीटशब्दे

**पद्मकेतन** पु०१गरुडात्मजभेदे भा०उ०१००अ० । ६त० । २पद्मनिवासे न०

**पद्मकेशर** पु०न० ६त० । किञ्जल्के राजनि० ।

**पद्मगन्ध(न्धि)** त्रि०पद्मस्येव गन्धोऽस्य वा इत् समा० । १पद्मतुल्यगन्धयुक्ते । इद्गन्धः । २पद्मकाष्ठे न० भावप्र० ।

**पद्मगर्भ** पु० पद्मं विष्णुनाभिकमलं गर्भ इव उत्पत्तिस्थानमस्य । चतुरानने ब्रह्मणि शब्दर० तस्य तथोत्पत्तिर्यथा "परावरेशां भूतानामात्मा यः पुरुषः परः । स एवासीदिदं विश्वं कल्पान्तेऽन्यन्न किञ्चन । तस्य नाभेः समभवत् पद्मकोशो हिरण्मयः । तस्मिन्जज्ञे महाराज ! स्वयम्भूश्चतुराननः" भाग०८।१।२। पद्मस्य हृदयपुण्डरीकस्य गर्भोमध्य उपासनास्थानतयाऽस्य । २परमेश्वरे "पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत्" विष्णुस० । ६त० । ३कमलमध्ये च । [भा०आ० ६६अ० । ४सरङ्गे च

**पद्मगुणा** स्त्री पद्मं गुणयति आसनत्वेन गुण—क । १लक्ष्म्यां

**पद्मचारिणी** स्त्री पद्ममिव चरति चर—णिनि । उत्तरापथप्रसिद्धे स्वनामख्याते लताभेदे अमरः ।

**पद्मज** पु० पद्मात् विष्णुनाभिकमलात् जायते जन—ड । ब्रह्मणि चतुर्मुखे पद्मगर्भशब्दे दृश्यम् । पद्मजातादयोऽप्यत्र ।

**पद्मतन्तु** पु० ६त० । मृणाले राजनि० ।

**पद्मदर्शन** त्रि० पद्मस्येव दर्शनमस्य । १पद्मतुल्यदर्शने (नोवा) इति ख्याते २वृक्षे पु० शब्दच० ।

**पद्मनाभ** पु० पद्मं नाभौ यस्य संज्ञायाम् अच् स० । १विष्णौ । "पद्मनाभोऽरविन्दाक्षः" विष्णुस० भाष्ये तु पद्मस्य नाभौ स्थित इत्येवं उक्तम् । तत्र अर्थ आद्यच् इति भेदः । २धृतराष्ट्रपुत्रभेदे भा० आ० ६७अ० । ३नागभेदे पु० शा०३५७अ० । [समा० । विष्णौ द्विरूपकोषः ।

**पद्मनाभि** पु० संज्ञात्वेऽपि समासान्तविधेरनित्यत्वात् न अच्

**पद्मनाल** न०स्त्री ६त० । मृणाले [पु० हेम० ।

**पद्मनेत्र** त्रि०पद्ममिव नेत्रमस्य । १पद्मतुल्यनेत्रयुक्ते २खगभेदे

**पद्मपत्र** न० पद्मस्य पत्रमिव । १पुष्करमूले अमरः ६त० । २कमलदले च पद्मपर्णादयोऽप्यत्र न० ।

**पद्मपाणि** पु० पद्मं पाणौ यस्य । ब्रह्मणि १चतुर्मुखे २बुद्धे जिना० । ३कमलहस्तके त्रि० ।

**पद्मपुराण** न० व्यासप्रणीते महापुराणभेदे तत्प्रतिपाद्यादि नारदीयपु० उक्तं यथा

प्रथमे सृष्टिखण्डे "पुलस्त्येन तु भीष्माय सृष्ट्यादिक्रमतो द्विज !। नानाख्यानेतिहासाद्यैर्यत्रोक्तो धर्मविस्तरः । पुष्करस्य च माहात्म्यं विस्तरेण प्रकीर्त्तितम् । ब्रह्मयज्ञविधानञ्च वेदपाठादिलक्षणम् । दानानां कीर्त्तनं यत्र व्रतानाञ्च पृथक् पृथक् । विवाहः शैलजायाश्च तारकाख्यानकं महत् । माहात्म्यञ्च गवादीनां कीर्त्तितं सर्वपुण्यदम् । कालकेयादिदैत्यानां वधो यत्र पृथक् पृथक् । ग्रहाणामर्चनं दानं यत्र प्रोक्तं द्विजोत्तम !। तत् सृष्टिखण्डमुद्दिष्टं व्यासेन सुमहात्मना" द्वितीये भूमिखण्डे "पितृमात्रादिपूज्यत्वे शिवशर्मकथा पुरः । सुव्रतस्य कथा पश्चात् वृत्रस्य च वधस्तथा । पृथोर्वैणस्य चाख्यानं धर्माख्यानं ततः परम् । पितृशुश्रूषणाख्यानं नहुषस्य कथा ततः । ययाति-चरितञ्चैव गुरुतीर्थनिरूपणम् । राज्ञा जैमिनिसंवादो बह्वाश्चर्यकथायुतः । कथा ह्यशोकसुन्दर्या हुण्डदैत्यवधाश्रिता । कामोदाख्यानकं तत्र विहुण्डवधसंयुतम् । कुञ्जलस्य च संवादश्च्यवनेन महात्मना । सिद्धाख्यानं ततः प्रोक्तं खण्डस्यास्य फलोद्भवम् । सूतशौनकसंवादं भूमिखण्डमिदं स्मृतम्" । तृतीये स्वर्गखण्डे "ब्रह्माण्डोत्पत्तिरुदिता यत्रर्षिभ्यश्च सौतिना । सभूमिलोकसंस्थानं तीर्थाख्यानं ततः परम् । नर्मदोत्पत्तिकथनं तत्तीर्थानां कथा पृथक् । कुरुक्षेत्रादितीर्थानां कथाः पुण्याः प्रकीर्त्तिताः । कालिन्दीपुण्यकथनं काशीमाहात्म्यवर्णनम् । गयायाश्चैव माहात्म्यं प्रयागस्य च पुण्यकम् । वर्णाश्रमानुरोधेन कर्मयोगनिरूपणम् । व्यासजैमिनिसंवादः पुण्यकर्मकथाश्रितः । समुद्रमथनाख्यानं व्रताख्यानं ततः परम् । ऊर्ज्जपञ्चाहमाहात्म्यं स्तोत्रं सर्वापराधनुत् । एतत् स्वर्गाभिधं विप्र ! सर्वपातकनाशनम्" । चतुर्थे पातालखण्डे "रामाश्वमेधे प्रथमं रामराज्याभिषेचनम् । अगस्त्याद्यागमश्चैव पौलस्त्यान्वयकीर्त्तनम् । अश्वमेधोपदेशश्च हयचर्या ततःपरम् । नाना राजकथाः पुण्या जगन्नाथानुवर्णनम् । वृन्दावनस्य माहात्म्यं सर्वपापप्रणाशनम् । नित्यलीलानुकथनं यत्र कृष्णावतारिणः । माधवस्नानमाहात्म्ये स्नानदानार्च्चने फलम् । धरावराहसंवादो यमब्राह्मणयोः कथा । संवादो राज-

द्रुतानां लक्षणोत्सवनिरूपणम्। शिवशम्भुसमायोगो दधीच्याख्यानकन्ततः। भस्ममाहात्म्यमतुलं शिवमाहात्म्यमुत्तमम्। देवरातसुताख्यानं पुराणज्ञप्रशंसनम्। गौतमाख्यानकञ्चैव शिवगीता ततः स्मृता। कल्पान्तरी रामकथा भारद्वाजाश्रमस्थितौ। पातालखण्डमेतद्धि शृण्वतां ज्ञानिनां सदा। सर्वपापप्रशमनं सर्वाभीष्टफलप्रदम्"। पञ्चमे उत्तरखण्डे "पर्वताख्यानकं पूर्वं गौर्य्यै प्रोक्तं शिवेन वै। जालन्धरकथा पश्चात् श्रीशैलाद्यनुकीर्त्तनम्। सागरस्य कथा पुण्या ततःपरमुदीरिता। गङ्गाप्रयागकाशीनां गयायाश्चाधिपुण्यकम्। आन्नादिदानमाहात्म्यं तन्महाद्वादशीव्रतम्। चतुर्विंशैकादशीनां माहात्म्यं पृथगीरितम्। विष्णुधर्मसमाख्यानं विष्णुनामसहस्रकम्। कार्त्तिकव्रतमाहात्म्यं माघस्नानफलन्ततः। जम्बुद्वीपस्य तीर्थानां माहात्म्यं पापनाशनम्। साभ्रमत्याश्च माहात्म्यं नृसिंहोत्पत्तिवर्णनम्। देवशर्मादिकाख्यानं गीतामाहात्म्यवर्णने। भक्त्याख्यानञ्च माहात्म्यं श्रीमद्भागवतस्य ह। इन्द्रप्रस्थस्य माहात्म्यं बहुतीर्थकथाचितम्। मन्त्ररत्नाभिधानञ्च त्रिपाद्भूत्यनुवर्णनम्। अवतारकथा पुण्या मत्स्यादीनामतःपरम्। रामनामशतं दिव्यं तन्माहात्म्यञ्च वाडव!। परीक्षणञ्च भृगुणा श्रीविष्णोर्वैभवस्य च। इत्येतदुत्तरं खण्डं पञ्चमं सर्वपुण्यदम्" तत्फलश्रुतिः "पञ्चखण्डयुतं पाद्मं यः शृणोति नरोत्तमः। स लभेद्वैष्णवं धाम भुक्त्वा भोगानिहेप्सितान्। एतद्वै पञ्चपञ्चाशत्सहस्रं पद्मसंज्ञकम्। पुराणं लेखयित्वा वै ज्यैष्ठ्यां स्वर्णाब्जसंयुतम्। यः प्रदद्यात् सुमतये पुराणज्ञाय मानदः। स याति वैष्णवं धाम सर्वदेवनमस्कृतः। पद्मानुक्रमणीमेतां यः पठेत् शृणुयात् तथा। सोऽपि पद्मपुराणस्य लभेत् श्रवणजं फलम्"।

**पद्मपुष्प** पु० पद्ममिव पुष्पमस्य। १कर्णिकारवृक्षे २पिकाङ्गपक्षिभेदे पुंस्त्री० शब्दच० स्त्रियां ङीष्।

**पद्मप्रभ** त्रि० पद्मस्येव प्रभा यस्य। १कमलसदृशप्रभान्विते २जैनभेदे पु० हेमच०। [मनसादेव्यां शब्दच०।

**पद्मप्रिया** स्त्री पद्मं प्रियं यस्याः। जरत्कारुमुनिपत्न्यां

**पद्मबन्ध** पु० चित्रालङ्कारभेदे अलङ्कारशब्दे ३८०पृ०दृश्यम्।

**पद्मबन्धु** पु० ६त०। १सूर्ये शब्दरत्ना० २अर्कवृक्षे च ३भ्रमरे शब्दच०।

**पद्मभू** पु० पद्मात् विष्णुनाभिकमलात् भवति भू—क्विप्। चतुर्मुखे ब्रह्मणि हला०। पद्मगर्भशब्दे दृश्यम्।

**पद्ममुख** त्रि० पद्ममिव मुखमस्य। १कमलसदृशमुखयुते स्त्रियां वा ङीप्। सा च २दूर्वालतायां शब्दच०।

**पद्ममुद्रा** स्त्री "हस्तौ तु सम्मुखौ कृत्वा तदधःप्रोथिताङ्गुली। तलान्तर्मिलिताङ्गुष्ठौ कृत्वैषा पद्ममुद्रिका" तन्त्रसारोक्ते मुद्राभेदे [चतुर्मुखे अमरः।

**पद्मयोनि** पु० पद्मं विष्णुनाभिकमलं योनिरस्य। ब्रह्मणि

**पद्मराग** न० पद्मस्येव रागोऽस्य। रक्तवर्णमणिभेदे तल्लक्षणादि वृ०सं० ४० उक्तं यथा

"सौगन्धिककुरुविन्दस्फटिकेभ्यः पद्मरागसम्भूतिः। सौगन्धिकजा भ्रमराञ्जनाब्जजम्बुरसद्युतयः। कुरुविन्दभवाः शबला मन्दद्युतयश्च धातुभिर्विद्धाः। स्फटिकभवा द्युतिमन्तो नानावर्णा विशुद्धाश्च। स्निग्धः प्रभानुलेपी स्वच्छोऽर्चिष्मान् गुरुः सुसंस्थानः। अन्तःप्रभोऽतिरागो मणिरत्नगुणाः समस्तानाम्। कलुषा मन्दद्युतयो लेखाकीर्णाः सधातवः खण्डाः। दुर्विद्धा न मनोज्ञाः सशर्कराश्चेति मणिदोषाः। भ्रमरशिखिकण्ठवर्णो दीपशिखासप्रभो भुजङ्गानाम्। भवति मणिः किल मूर्द्धनि योऽनर्घ्यो वै स विज्ञेयः। यस्तं बिभर्त्ति मनुजाधिपतिर्न तस्य दोषा भवन्ति विषरोगकृताः कदाचित्। राष्ट्रे च नित्यमभिवर्षति तस्य देवः शत्रूंश्च नाशयति तस्य मणेः प्रभावात्। षड्विंशतिः सहस्राण्येकस्य मणेः पलप्रमाणस्य। कर्षत्रयस्य विंशतिरुपदिष्टा पद्मरागस्य। अर्द्धपलस्य द्वादश कर्षस्यैकस्य षट् सहस्राणि। यच्चाष्टमाषकमितं तस्य सहस्रत्रयं मूल्यम्। माषकचतुष्टयं दशशतक्रयं द्वौ तु पञ्चशतमूल्यौ। परिकल्प्यमन्तराले मूल्यं हीनाधिकगुणानाम्। वर्णन्यूनं सार्द्धं तेजोहीनस्य मूल्यमष्टांशः। अल्पगुणो बहुदोषो मूल्यात् प्राप्नोति विंशांशम्। आधूम्रं व्रणबहुलं स्वल्पगुणं चाप्नुयाद्विंशभागम्। इति पद्मरागमूल्यं पूर्वाचार्यैः समुद्दिष्टम्"। युक्तिकल्पतरौ चान्यविशेषो यथा "सिंहले तु भवेद्रक्तं पद्मरागमनुत्तमम्। पीतं काश्यपुरोद्भूतं कुरुविन्दमिति स्मृतम्। अशोकपल्लवच्छायमस्य सौगन्धिकं विदुः। तुम्बुरे छायया नीलं नीलगन्धि प्रकीर्त्तितम्। उत्तमं सिंहलोद्भूतं निकृष्टं तु तुम्बुरोद्भवम्। मध्यमं मध्यजं ज्ञेयं माणिक्यं स्थलभेदतः" तथा "बन्धूकगुञ्जाशकलेन्द्रगोपजवाजनाक्त

समवर्णशोभाः । भ्राजिष्णवो दाड़िमवीजवर्णास्तथा परे किंशुकपुष्पभासः । सिन्दूरपद्मोत्पलकुङ्कुमानां लाक्षारसस्यापि समानवर्णाः । सान्द्रेऽपि रागे प्रभया स्वयैव भान्ति स्वलक्ष्याः स्फुटमध्यशोभाः । भानोश्च भासा मनुवेधयोगमासाद्य रश्मिप्रकरेण दूरम् । पार्श्वानि सर्वाण्यनुरञ्जयन्ति गुणोपपन्नाः स्फटिकप्रसूताः । कुसुम्भनीलीव्यतिमिश्ररागप्रत्यग्ररक्ताम्बरतुल्यभासः । तथा परेऽक्ष्करकण्टकारीपुष्पत्विषो हिङ्गुलकत्विषोऽन्ये । चकोरपुंस्कोकिलसारसानां नेत्रावभासश्च भवन्ति केचित् । अन्ये पुनर्नातिविपुष्पितानां तुल्यत्विषः कोकनदोदराणाम् । प्रभावकाठिन्यगुरुत्वयोगैः प्रायः समानाः स्फटिकोद्भवानाम् । कालीलरक्तोत्पलचारुभासः सौगन्धिकाख्या मणयो भवन्ति । यो मन्दरागः कुरुविन्दजेषु स एव जातः स्फटिकोद्भवेषु । निरर्च्चिषोऽन्तर्बहुलीभवन्ति प्रभावन्तोऽपि न तत्समानाः । ये तु रावणगङ्गायां जायन्ते कुरुविन्दकाः । पद्मरागा घनं रागं विभ्राणाः स्फुटार्च्चिषः । वर्णानुयायिनस्तेषामन्ध्रदेशे तथाऽपरे । न जायन्ते तु ते केचित् मूल्यलेशमवाप्नुयुः । तथैव स्फटिकोत्थानां देशे तुम्बुरसंज्ञके । सधर्माणः प्रजायन्ते स्वल्पमूल्या हि ते स्मृताः" । जात्यादि "माणिक्यस्य प्रवक्ष्यामि यथा जातिचतुष्टयम् । ब्राह्मणक्षत्रियवैश्याश्च शूद्रश्चाथ यथाक्रमम् । रक्तश्वेतो भवेद्विप्रस्त्वतिरक्तस्तु क्षत्रियः । रक्तपीतो भवेद्वैश्यो रक्तनीलस्तथाऽन्त्यजः । पद्मरागो भवेद्विप्रः कुरुविन्दस्तु बाहुजः । सौगन्धिको भवेद्वैश्यो मांसखण्डस्तथान्त्यजः । शोणपद्मसमाकारः खदिराङ्गारसप्रभः । पद्मरागो द्विजः प्रोक्तश्छायाभेदेन सर्वदा । गुञ्जासिन्दूरबन्धूकनागरङ्गसमप्रभः । दाड़िमीकुसुमाभासः कुरुविन्दस्तु बाहुजः । हिङ्गुलाभाशोकपुष्पाभमीषत्पीतञ्च लोहितम् । जवालाक्षारसप्रायं वैश्यं सौगन्धिकं विदुः । आरक्तः कान्तिहीनश्च चिक्कणश्च विशेषतः" । मांसखण्डसमाभासो ह्यन्त्यजः पापनाशनः" । तद्दोषादि "माणिक्यस्य समाख्याता अष्टौ दोषा मुनीश्वरैः । द्विच्छायश्च द्विरूपश्च सम्भेदः कर्करस्तथा । अशोभनं कोकिलञ्च जलं धूम्राभिधञ्च वै । गुणाश्चत्वार आख्यातास्छायाः षोड़श कीर्त्तिताः" । छायास्तु पूर्वोक्ता एव "छाया द्वितयसम्बन्धाद् द्विच्छायं बन्धुनाशनम् । द्विरूपं द्विपदं तेन माणिक्येन पराभवः । सम्भेदो भिन्नमित्युक्तः शस्त्रघातविधायकः । कर्करं कर्करायुक्तं पशुबन्धुविनाशकृत् । दुग्धेनेव समालिप्तं मणेः पुटकमुच्यते । अशोभनं समुद्दिष्टं माणिक्यं बहुदुःखकृत् । मधुबिन्दुसमच्छायं कोकिलं परिकीर्त्तितम् । आयुर्लक्ष्मीयशो हन्ति सदोषं तन्न धारयेत् । रागहीनं जलं प्रोक्तं धनधान्यापवादकृत् । धूम्रं धूमसमाकारं वैद्युतं भयमावहेत्" । तथा "शोभाद्वितयवन्तो ये मणयः क्षतिकारकाः । उभयत्र पदं येषां तेन च स्यात् पराभवः । भिन्नेन युद्धे मृत्युः स्यात् कर्करं धननाशकृत् । दुग्धेनेव समालिप्तः पुटके यस्तु सम्भवेत् । दुःखकृत् स समाख्यातो न नृपैरक्षणीयकः । मधुबिन्दुसमा शोभा कोकिलानां प्रकीर्त्तिता । तेषां च बहुभेदाः स्युर्न ते धार्य्याः कदाचन" । अथ गुणाः "गुरुत्वं स्निग्धता चैव वैमल्यमतिरक्तता । वर्णाधिकं गुरुत्वञ्च स्निग्धता समताऽच्छता । अर्च्चिष्मत्ता महत्ता च मणीनां गुणसंग्रहः" । फलम् "ये कर्कराच्छिद्रमलोपदिग्धाः प्रभाविमुक्ताः परुषा विवर्णाः । न ते प्रशस्ता मणयो भवन्ति समानतो जातिगुणैः समस्तैः । दोषोपसृष्टं मणिमप्रबोधाद्बिभर्त्ति यः कश्चन कञ्चिदेकम् । तं बन्धुदुःखायसबन्धवित्तनाशादयो दोषगुणाः भजन्ते । सपत्नमध्येऽपि कृताधिवासं प्रमादवृत्तावपि वर्त्तमानम् । न पद्मरागस्य महागुणस्य भर्त्तारमापत् समुपैति काचित् । दोषोपसर्गप्रभवाश्च ये ते नोपद्रवास्तं समभिद्रवन्ति । गुणैः स गुप्तैः सकलैरुपेतो यः पद्मरागं प्रयतो बिभर्त्ति" । परीक्षा यथा "बालार्ककरसंस्पर्शात् यः शिखां लोहितां वमेत् । रञ्जयेदाश्रयं वापि स महागुण उच्यते । दुग्धे शतगुणे क्षिप्तो रञ्जयेद्यः समन्ततः । वमेच्छिखां लोहितां वा पद्मरागः स उत्तमः । अन्धकारे महाघोरे यो न्यस्तः सनृमहामणिः । प्रकाशयति सूर्य्यांशः स श्रेष्ठः पद्मरागकः । पद्मकोषे तु यन्न्यस्तं विकाशयति तत्क्षणात् । पद्मरागवरो ह्येष देवानामपि दुर्लभः । सर्वारिष्टप्रशमनाः सर्वसम्पत्तिदायकाः । चत्वारस्तु मयोद्दिष्टा गुणिनश्च यथोत्तरम् । यो मणिर्दृश्यते दूराज्ज्वलदग्निसमच्छविः । वंशकान्तिः स विज्ञेयः सर्वसम्पत्तिकारकः । पञ्चसप्तनवविंशतिरागः क्षिप्त एव सकलः खलु वस्त्रे । वर्जयेद्गमति वा करजालमुत्तरोत्तरमहागुणिनस्ते । नीलं रसं दुग्धरसं जलं वा ये रञ्जयन्ति द्विशतप्रमाणम् । ते ते यथापूर्वमतिप्रशस्ताः सौभाग्यसम्पत्तिविधानदाश्च" । परि-

माणम् "गुञ्जाफलप्रमाणस्तु दशसप्ततिगुञ्जकान्। पद्मरागस्तुलयति यथापूर्वं महागुणः। क्रोष्टुकोलफलाकारो द्वादशाष्टाब्धिगुञ्जकान्। पद्मरागस्तुलयति यथापूर्वं महागुणः। बदरीफलतुल्यो यः स्वर्णादिग्वसुमाषकः। तथा धात्रीफलत्रिंशद्विंशतिद्व्यष्टमाषकः। तथाक्षफलतुल्यो यो वह्निपञ्चैकमाषकः। ताम्बूलफलमानो यश्चतुस्त्रिद्विकतोलकः। बिम्बीफलसमाकारो वसुषड्दशतोलकः। अतःपरं प्रमाणेन मानेन च न लभ्यते। यदि लभ्येत पुण्येन तदा सिद्धिमवाप्नुयात्। केचिद्बाह्यतराः सन्ति जातीनां प्रतिरूपकाः। विजातयः प्रयत्नेन विद्वांस्तानुपलक्षयेत्। कलसपुरोद्भवसिंहलतुम्बुरुदेशोत्थमुक्तमालीयाः। श्रीपर्णिकायाः सदृशा विजातयः पद्मरागाणाम्। तुषोपसर्गात् कलसाभिधानमाताम्रभावादपि तुम्बुरोत्थम्। काष्ण्यात्तथा सिंहलदेशजातं मुक्ताभिधानं नभसः स्वभावात्। श्रीपर्णकं दीप्तिनिराकृतित्वाद्विजातिलिङ्गाश्रय एष भेदः"। तथा "स्नेहप्रदेहो मृदुता लघुत्वं विजातिलिङ्गं खलु सर्वजन्यम्। यः श्यामिकां पुष्यति पद्मरागो यो वा तुषाणामिव चूर्णमध्यः। स्नेहप्रदिग्धो न च यो विभाति यो वा प्रमृष्टः प्रजहाति दीप्तिम्। आक्रान्तमूर्द्धा च तथाङ्गुलिभ्यां यः कालिकां पार्श्वगतां बिभर्त्ति। संस्थाप्य चोत्क्षेपणयानुवृत्तिं बिभर्त्ति यः सर्वगुणानतीव। तुल्यप्रमाणस्य च तुल्यजाते यो वा गुरुत्वेन भवेन्न तुल्यः। प्राप्यापि रत्नाकरजां स्वजातिं लभेत् गुरुत्वेन गुणेन विद्वान्। अप्रणश्यति सन्देहे शिलायां परिघर्षयेत्। दृष्टो योऽत्यन्तशोभावान् परिमाणं न मुञ्चति। स ज्ञेयः शुद्धजातिस्तु ज्ञेयाश्चान्ये विजातयः। स्वजातकसमत्वेन विलिखेद्वा परस्परम्। वज्रं वा कुरुविन्दं वा विमुच्यान्योन्यकेन चेत्। न शक्यं लेखनं कर्त्तुं पद्मरागेन्द्रनीलयोः। जात्यस्य सर्वेऽपि मणेर्न जातु विजातयः कान्तिसमानवर्णाः। तथापि नानाकरणार्थमेव भेदप्रकारः परयोः प्रदिष्टः। गुणोपपन्नेन सहावबद्धो मणिस्तु धार्य्यो विगुणेन जात्यः। न कौस्तुभेनापि सहावबद्धं विद्वान् विजातिं बिभृयात् कदाचित्। चण्डाल एकोऽपि यथा द्विजातीन् समेत्य भूरीनपहन्त्ययत्नात्। तथा मणीन् भूरिगुणोपपन्नान् शक्नोति विद्रावयितुं विजातः"। तस्य मूल्यम् "बालार्काभिमुखं कृत्वा दर्पणे धारयेन्मणिम्। तत्र कान्तिविभागेन छायाभागं विनिर्दिशेत्। वज्रस्य यत्तण्डुलसंख्ययोक्तं मूल्यं समुन्मेषितगौरवस्य। तत् पद्मरागस्य गुणान्वितस्य स्यान्माषकाख्यातुलितस्य मूल्यम्। यन्मूल्यं पद्मरागस्य सगुणस्य प्रकीर्त्तितम्। तावन्मूल्यं तथा शुद्धे कुरुविन्दे विधीयते। सगुणे कुरुविन्दे च यावन्मूल्यं प्रकीर्त्तितम्। तावन्मूल्यं चतुर्थांशहीनं स्याद्वै सुगन्धिके। यावन्मूल्यं समाख्यातं वैश्यवर्णे च सूरिभिः। तावन्मूल्यं चतुर्थांशात् हीयते शूद्रजन्मनि। पद्मरागः पलं यस्तु धत्ते लाक्षारसप्रभः। कार्षापणसहस्राणि त्रिंशन्मूल्यं लभेत सः। इन्द्रनीलकखण्डांशः कर्षत्रयधृतो मणिः। द्वाविंशतिसहस्राणां तस्य मूल्यं विनिर्दिशेत्। एको नोनूयते यस्तु जवाकुसुमसन्निभः। कार्षापणसहस्राणि तस्य मूल्यं चतुर्दश। बालादित्यद्युतिनिभः कर्षं यस्तु प्रतुल्यते। कार्षापणशतानान्तु मूल्यं सद्भिः प्रकीर्त्तितम्। यस्तु दाड़िमपुष्पाभः कर्षार्द्धेन तु सम्मितः। कार्षापणशतानान्तु विंशतिं मूल्यमादिशेत्। चत्वारो माषका यस्तु रक्तोत्पलदलप्रभः। मूल्यं तस्य विधातव्यं सूरिभिः शतपञ्चकम्। द्विमाषको यस्तु गुणैः सर्वैरेव समन्वितः। तस्य मूल्यं विधातव्यं द्विशतं तत्त्ववेदिभिः। माषकैकमितो यस्तु पद्मरागो गुणान्वितः। शतैकसम्मितं वाच्यं मूल्यं रत्नविचक्षणैः। अतो न्यूनप्रमाणास्तु पद्मरागा गुणोत्तराः। स्वर्णद्विगुणमूल्येन मूल्यं तेषां प्रकल्पयेत्। कार्षापणः समाख्यातः पुराणद्वयसम्मितः। अन्ये कुसुम्भपानीयमञ्जिष्ठोदकसन्निभाः। काषाया इति विख्याताः स्फटिकप्रभवाश्च ते। तेषां दोषान् गुणान् वापि पद्मरागवदादिशेत्। मूल्यमल्पन्तु विज्ञेयं धारणेऽल्पफलं तथा। ब्रह्मक्षत्रियवैश्यान्याश्चतुर्धा ये प्रकीर्त्तिताः। चतुर्विधैर्नृपतिभिर्धार्य्या सम्पत्तिहेतवे। अतोऽन्यथा धृतः कुर्य्याद्रोगशोकभयत्रयम्" अत्र तस्य क्लीवत्वमप्युक्तम्।

**पद्मरेखा** स्त्री पद्माकारा रेखा शा॰त॰। हस्तस्थितपद्माकाररेखायाम्।

**पद्मलाञ्छन** पु॰ पद्मं विष्णुकमलं वा लाञ्छनमस्य। १ब्रह्मणि २सूर्य्ये ३कुवेरे ४नृपे च मेदि॰ ५तारायां ६लक्ष्म्यां ७सरस्वत्यां च स्त्री मेदि॰ ८पद्मरेखायुक्ते त्रि॰।

**पद्मवर्णक** त्रि॰ पद्मस्येव वर्णोऽस्य कप्। १कमलतुल्यवर्णयुक्ते। पद्मं वर्णो वर्ण्यं यस्य कप्। २पुष्करमूले जटा॰।

**पद्मवासा** स्त्री पद्मं वासोऽस्याः। १पद्मालयायां २लक्ष्म्यां

हेमच० पद्मस्य वासः सौरभम् इत० । ३कमलसौरभे पु० ।

**पद्मवृक्ष** पु० पद्मतुल्यो वृक्षः । पद्मकाष्ठे राजनि० ।

**पद्म(बी)वीज** न० इत० । कमलवी(बी)जे पद्माक्षे राजनि० "पद्म(बी)वीजं हिमं स्वादु कषायं तिक्तकं गुरु । विष्टम्भि वृष्यं रूक्षञ्च गर्भसंस्थापकं परम्" भावप्र० ।

**पद्मवी(बी)जाभ** न० पद्मवी(बी)जमिवाभाति आ+भा—क । (माखना) ख्याते मखान्ने राजनि० ।

**पद्मा** स्त्री पद्मनाधारत्वेनास्त्यस्याः अच् । १लक्ष्म्यां २लवङ्गे ३पद्मचारिण्यां लतायां च अमरः । ४मनसादेव्यां पत्रम्यां ५फञ्जिकावृक्षे च मेदि० ६अर्हन्मातृभेदे हेमच० ७कुसुम्भपुष्पे रत्नमाला । कृष्णद्रूयराजदुहितरि दकल्किदेवपत्न्यां च कल्किपु० ।

**पद्माकर** पु० इत० । १जलाशयमात्रे अमरः यत्पद्मोऽत्राधनजलाशये २तद्योग्ये निरूढत्वे तदर्थे जलाशयोत्सर्गमयूखे दर्शितं ३तडागवृक्षे जलाधारे च ।

**पद्माक्ष** न० पद्मस्याक्षीव पत्ववा० । १पद्मवी(बी)जे हारा० "पद्माक्षैर्निर्मिता माला शत्रूणां नाशिनी मता" तन्त्रसारः । पद्ममिवाक्षि यस्य व्युत्पत्ता० । २पद्मतुल्यनेत्रे त्रि० स्त्रियां विषात् ङीष् ।

**पद्माट** पु० पद्ममिवाटति अट—अच् । चक्रमर्दक्षे (टादमर्दन) राजनि० । [अमरः इत० । २पद्मानां स्थाने पु० ।

**पद्मालया** स्त्री पद्ममालयो यस्याः । १लक्ष्म्यां २लवङ्गे च

**पद्मावती** पु०पद्म+अस्त्यर्थे मतुप् मस्य वः संज्ञायां दीर्घश्च । (पद्मा) १नदीभेदे २मनसादेव्यां शब्दच० ३पद्मचारिणी लतायां जटाध० । ४कुमारानुचरमातृभेदे भा०म०४७अ० । ५द्रुगालवरूपनृपमहिषीभेदे हरिवं० १०१अ० । असंज्ञायां तु न दीर्घः । पद्मवत् पद्मयुक्ते त्रि० स्त्रियां ङीप् ।

**पद्मावतीप्रिय** पु० इत० । १जरत्कारुमुनौ २कल्किदेवे ३द्रुगालरूपे च त्रि०

**पद्मासन** "ऊरूमूले वामपादं पुनस्तु दक्षिणं पदम् । वामोरौ स्थापयित्वा तु पद्मासनमिति स्मृतम्" जाम० उक्ते आसनभेदे अस्यैव प्रकारभेदः तन्त्रसारे योगाङ्गतया उक्तः तच्च ८८६पृ० दर्शितम् एवमन्यदपि तल्लक्षणं योगाङ्गतया ध्येयं बद्धपद्मासनमहापद्मासनेति च तस्यैव प्रकारभेदः । देवपूजार्थे पद्माकारे ३आसनभेदे पद्ममासनं यस्य । ३कमलासने ब्रह्मणि पु० ।

**पद्माह्वा** स्त्री पद्मं तद्गन्धमाह्वयते स्पर्द्धते स्वगन्धेन आ+ह्वे—क । १पद्मचारिण्यां लतायां राजनि० २लवङ्गे न०

**पद्मिनी** स्त्री पद्मं विद्यतेऽस्याः पुष्करा० इनि अभिधानात् स्त्रीत्वम् । १पद्मयुक्तदेशे २पद्मचारिणि विष्णौ पु० "पद्मी पद्मनिभेक्षणः" विष्णुसं० तस्य शङ्खचक्रगदापद्मधारित्वात् तथात्वम् । ३पद्मधारिमात्रे त्रि० स्त्रियां ङीप् । ४हस्तिनि पु० अमरः पद्मानां समूहः इनि । ६पद्मसमूहे ७पद्मलतायाञ्च अमरः "मूलनालदलोत्फुल्लफलैः सा लतिका पुनः । पद्मिनीत्युच्यते प्राज्ञैर्विसिन्यादिश्च सा स्मृता । पद्मिनी मधुरा तिक्ता कषाया शिशिरा परा । पित्तक्रिमिशोषवान्तिभ्रान्तिसन्तापदोषहृत्" राजनि० "भवति कमलनेत्रा नासिकाक्षुद्ररन्ध्रा अविरलकुचयुग्मा दीर्घकेशी कृशाङ्गी । मृदुवचनसुशीला गीतवाद्यानुरक्ता सकलतनुसुवेशा पद्मिनी पद्मगन्धा" रतिमञ्जर्युक्तलक्षणयुक्ते ८स्त्रीभेदे "पद्मिनी शयने लज्जा" इति च तन्त्रोक्तम् । १०सरोवरे ११पद्मे च विश्वः १२कृष्णाले शब्दमाला ।

**पद्मिनीकण्टक** पु० कमलिन्याः कण्टकाकारे सुश्रुतोक्ते क्षुद्ररोगभेदे २२८२ पृ० दृश्यम् ।

**पद्मिनीकान्त** पु० इत० । १सूर्ये जटाध० । २अर्कवृक्षे च पद्मिनीवल्लभादयोऽप्यत्र । [मा०या० १४०अ० उद्गा०

**पद्मेशय** पु० पद्मे शेते शी—अच् अलुक्स० । विष्णौ हेमच० ।

**पद्मोत्तर** पु० पद्माद्युत्तरः उत्कृष्टो वर्णेन । कुसुम्भे राजनि० ।

**पद्मोत्तरात्मज** पु० जिनचक्रवर्त्तिभेदे हेमच० [देव्यां स्त्री

**पद्मोद्भव** पु० पद्मादुद्भवोऽस्य । कमलयोनौ १ब्रह्मणि २मनसा-

**पद्य** न० पदं चरणमर्हति पद+यत् । कविकृते चतुश्चरणात्मके "पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा" इत्युक्ते १वाक्यभेदे २पदव्यां स्त्री । पद्भ्यां आतः यत् । ४शूद्रे पु० "पद्भ्यां शूद्रो अजायत" यजु०३१।११ पदं विध्यति यत् । ५शर्करायां स्त्री । पदमर्हति दृश्यते यत् । ६नातिशुष्के कर्दमे सि०कौ० । ६स्तुतौ विश्वः ७पथि स्त्री अमरः ।

**पद्र** पु० पद्यते गच्छत्यत्र पद—आधारे रक् । ग्रामे उज्ज्वल०

**पद्रथ** पु० पद् रथ इव यस्य । पदमार्गिणि भाग०३।१८।१२

**पद्व** पु० पद—स्थैर्ये आधारे करणे वा वन् । १भूलोके २रथे च संक्षिप्तसारः ।

**पद्वन्** पु० पद—करणे वनिप् । पथि उज्ज्वलद० ।

**पन** स्तुतौ भ्वा०आत्म०सक०सेट् स्वार्थे आय वा तत्र आत्म० । पनायते पनायति आर्द्धधातुके वा आय । अपनासीत् अपनायिष्ट अपनिष्ट । पनायां-बभूव आस चक्रे पेने इत्यादि ।

**पनस** पु० पन्यते स्तूयतेऽसौ इक्षेषु उत्तमफलत्वात् इत्युक्त

खल्वादा पन—कर्म्मणि अच् ।(काँटाल)द्रुमभेदे पनसादौ न० "पनसं शीतलं पक्वं स्निग्धं पित्तानिलापहम् । तर्पणं वृंहणं स्वादु मांसलं श्लेष्मलं भृशम् । बल्यं शुक्रप्रदं हन्ति रक्तपित्तक्षतक्षयान् । आममेव विष्टम्भि वातलं तुवरं गुरु । दाहकृन्मधुरं बल्यं कफमेदोविवर्द्धनम् । पनसोद्भूतबीजानि वृष्याणि मधुराणि च । गुरूणि बद्धवर्चांसि सृष्टमूत्राणि संवदेत्" अन्यत्र "मज्जा पनसजो वृष्यो वातपित्तकफापहः । विशेषात् पनसं वर्ज्यं गुल्मिभिर्मन्दवह्निभिः । अन्यं पनसपाकाय फलं कदलसम्भवम्" भावप्र० "कण्टाफलं सुमधुरं वृंहणं स्निग्धशीतलम् । दुर्जरं वातपित्तघ्नं श्लेष्मशुक्रबलप्रदम् । तदेव सर्पिषा युक्तं स्निग्धं हृद्यं बलप्रदम् । रुचिरं न च चक्षुष्यं वृष्यञ्च वातपित्तनुत् । कण्टाफलमपक्वन्तु कषायं स्वादु वातलम् । रक्तपित्तहरं स्वादु तत्फलास्थ्यपि तद्गुणम्" राजवल्लभः ।

**पनसतालिका** स्त्री पनसं स्तुत्यं तालं तत्तुल्यफलं विद्यतेऽस्याः ठन् । पनसे शब्दमा० पनतालिकेति तत्र पाठान्तरं तदर्थे ।

**पनसिका** स्त्री पनसः तदाकारोऽस्त्यस्याः ठन् । सुश्रुतोक्ते क्षुद्ररोगरोगभेदे २३८२ पृ० दृश्यम् ।

**पनस्य** नामधा० पनं स्तुतिमिच्छति क्यच् सुगागमः स्तोत्रेच्छायां पर०अक०सेट् । पनस्यति अपनस्यीत् ऋ०१।५५।२ उदा० तत्र तङ् आर्षः । निघण्टौ तु पनस्यधातुः अर्चतिकर्मसु पठितः तेन पूजायामपि । [१।२८।५

**पनस्यु** त्रि० पनस्य नामधातुः उ । आत्मनः स्तोत्रेच्छौ ऋ०

**पनिष्टम** त्रि० पन—कर्मणि इष्ठन् अतिशयेन पनिः तमप् । स्तुत्यतमे साम० १।२।२।४

**पनिष्ठ** त्रि० अतिशयेन पनिता इष्ठन् तृणोलोपः । स्तोतृतमे ऋ०६।५८।२ ईयसुन् । पनीयस् तदर्थे स्त्रियां ङीप्

**पनिस्यद्** त्रि० स्यन्द—यङ्लुक् अच् अभ्यासे निमागमः । भृशं स्यन्दमाने अथ० ५।२०।१६

**पनु** स्त्री पन—उ । स्तुतौ ऋ० १।६५।२ [जाते सि०कौ० ।

**पन्थक** त्रि०पथि जातः "पथः पन्थ च" पा० वुन् । पथि-

**पन्न** त्रि० पद—क्त । १च्युते २गलिते च अमरः । ३गते पद—नन् । ४नीचगमने न० उज्ज्वल० ।

**पन्नग** पु० पन्नमधोमुखं यथा तथा गच्छति, पद्भ्यां न गच्छति वा गम+ड । १सर्पे अमरः जातौ ङीष् सर्पाम् । २पद्मकाष्ठे मेदि० ३सीसके न०।

**पन्नगकेशर** पु० पन्नग इव केशरोऽस्य । नागकेशरे राजनि० तस्य सर्पफणातुल्यकेशरत्वात् तथात्वम् ।

**पन्नगारि** पु० ६त० । गरुड़े

**पन्नगाशन** पु० पन्नगः अशनमस्य । गरुड़े अमरः पन्नगभोजनादयोऽप्यत्र । तस्य तद्भोक्तृत्वकथा भा०आ० आस्तीकपर्वणि दृश्या । —ताहरणप० दृश्यम् ।

**पन्नद्धा** स्त्री पदि नद्धा । चर्मपादुकायां हेमच० ।

**पन्नद्धी** स्त्री पदः नद्धीव नह—क्त—ङीष् वा ६त०। चर्ममयपादुकायां त्रिका० ।

**पन्नागार** पु० प्राच्ये गोत्रप्रवर्त्तकर्षिभेदे तस्यापत्यम् इञ् । पान्नागारि तदपत्ये पुंस्त्री०। बहुत्वे इञोलुक् । पन्नागारा इत्येव ।

**पन्निष्क** पुंन० पादो निष्कस्य एकदेशिस० वा पदादेशः । निष्कस्य चतुर्थभागे पदादेशाभावे पादनिष्कोऽप्यत्र ।

**पन्य** त्रि० पन—स्तुतौ अघ्न्यादि० यत् । स्तुत्ये ऋ०२।२६।२

**पन्यस्** त्रि० पन—असुन् युगागमः । १स्तोतरि ऋ० ८।८।२ उदा० । २स्तुत्ये च ६।१८।८ उदा० ।

**पपि** पु० पा—कि द्वित्वम् । १चन्द्रे २पानकर्त्तरि च त्रि० ।

**पपी** पु० पा—ईक् द्वित्वम् । १चन्द्रे २सूर्य्ये च उज्ज्वल० ।

**पपु** त्रि० पा—कु द्वित्वम् । पालके उज्ज्वल० ।

**पपुरि** त्रि० पॄ—कि द्वित्वम् । पीपनशीले । ऋ०१।४६।४

**पपृक्षेण्य** त्रि० सम्पर्कार्हे । ऋ० ५।२२।६ भाष्ये स्थितम् ।

**पप्रि** त्रि० प्रा०पूरणे कि द्वित्वम् । पूरणशीले यजु० १।८ ।

**पफक** पु० गोत्रर्षिभेदे ततः तिका० गोत्रे फिञ् । पाफकायनि तद्गोत्रापत्ये । बहुत्वे निरवकेन सह फिञोलुक् । पफकनिरवकाः इत्येव

**पमरा** स्त्री (वल्की) ख्याते गन्धद्रव्यभेदे राजवल्लभः ।

**पम्पस्** दुःखे कण्ड्वादि० प०अक० सेट् । पम्पस्यति अपम्पस्यीत् ।

**पम्पा** स्त्री १दक्षिणस्थनदीभेदे भा०अनु०१६। ऋष्यमूकशैलसमीपस्थे २सरोभेदे च "एषा पम्पा शिवजला बहुतोया तड़ागिनी" भा०व० २७६अ० । ततः वरणादि० चातुरर्थिकस्य लुक् । पम्पानामदूरभवं नगरं पम्पा इत्येव ।

**पम्ब** गतौ भ्वा०प०सक०सेट् । पम्बति अपम्बीत् पपम्ब ।

**पय** गतौ भ्वा०आत्म०सक०सेट् । पयते अपयिष्ट ।

**पयःकन्दा** स्त्री पयः दुग्धमिव स्वादुत्वात् कन्दोऽस्याः । क्षीरविदार्य्याम् राजनि० । [भा०व० १२० अ० ।

**पयःपयोष्णी** स्त्री पयःप्रचुरा पयोष्णी शा०त० । नदीभेदे

**पयःफेनी** स्त्री पयः दुग्धमिव फेनमस्याः गौरा० ङीष्। दुग्धफेन्यां राजनि०।

**पयश्चय** पु० ६त० जलपूरे जटा०।

**पयस्** न० पा—पाने कर्मणि असुन् इकारस्यान्तादेशः। १दुग्धे २जले च मेदि० ३अन्ने ४रात्रौ च निघण्टुः।

**पयस्य** प्रकृतौ (परिमाणविशेषे) कण्ड्वा०अक०सेट्। पयस्यति अपयस्यीत्।

**पयस्य** त्रि० पयसो दुग्धस्य विकारः तत्र हितं वा यत्। १दुग्धविकारे दध्यादौ अमरः। २दुग्धहिते त्रि०३बिड़ाले पु० शब्दच०। ४दुग्धिकायां ५क्षीरकाकोल्यां ६स्वर्णक्षीरिकायां च स्त्री मेदि०। ७अर्कपुष्पिकायां रत्नमाला ८कुटुम्बिनीक्षुपे राजनि०। ९आमिक्षायाम् हेमच०।

**पयस्वत्** त्रि० पयस्+अस्त्यर्थे मतुप् मस्य वः सान्तत्वात् न पदकार्यम्। १जलविशिष्टे स्त्रियां ङीप्। २नद्यां स्त्री ब०व० निघण्टुः।

**पयस्वल** त्रि० पयोऽस्त्यस्य वलच् सान्तत्वात् न पदकार्यम्। १जलयुक्ते। २छागे पुंस्त्री राजनि० स्त्रियां जातित्वात् ङीष्।

**पयस्विन्** त्रि० पयोऽस्त्यस्य विनि न पदकार्यम्। १पयोविशिष्टे स्त्रियां ङीप्। २नद्यां ३धेन्वां ४रात्रौ च मेदि०। ५काकोल्यां ६क्षीरकाकोल्यां ७दुग्धफेन्यां ८क्षीरविदार्यां ९छाग्यां राजनि०। १०जीवन्त्यां भावप्र०।

**पयाय** आत्मनः पय इच्छति क्यङ् नामधातुः आ०अक०सेट् वा सलोपः। पयायते पयस्यते।

**पयोगल** पु० पयो गलति यस्मात् गल—अपादाने घ। १घनोपले (करका) २द्वीपे च शब्दमा०।

**पयोग्रह** पु० पयसो दुग्धस्य ग्रहः ग्रह आधारे अच्। यज्ञिये पात्रभेदे। कात्या० श्रौ०१०।२।१२।

**पयोघन** पु० पयसा घनो निविड़ः। वर्षोपले हारा०।

**पयोजन्मन्** पु० पयसो जन्म यस्मात्। १मेघे शब्दमा०। २मुस्तके च।

**पयोद** पु० पयो ददाति दा—क। १जलदे मेघे २मुस्तके च ३यदुवंश्यपुत्रभेदे हरिवं० ३०अ० ४कुमारानुचरमातृभेदे स्त्री भा०श०४७अ०।

**पयोधर** पु० पयो दुग्धं जलं वा धरति धृ—अच् ६त०। १मेघे २स्तने अमरः ३मुस्तके च ४कोषकारे ५नारिकेले ६कशेरुके च मेदि०। [त्रि० उज्ज्वा०।

**पयोधस्** पु० पयो दधाति धा—असुन्। १समुद्रे २जलाधारे

**पयोधारा** स्त्री ६त०। १जलानां धारायाम्। पयसां धारा यत्र। २नदीभेदे हरिवं० २२२ अ०।

**पयोधि** पु० पयो धीयतेऽस्मिन् धा—आधारे कि उप०स०। समुद्रे राजनि०। [राजनि०।

**पयोधिक** न० पयधौ तदुपरि कायति कै—क। समुद्रफेने

**पयोनिधि** पु०पयांसि निधीयन्ते यत्र नि+धा—आधारे कि उप०स०। समुद्रे। [२मुस्तके च।

**पयोमुच्** पु० पयोमुञ्चति मुच—क्विप्। १जलमुचि मेघे

**पयोर** पु० पयोजलं सेवने मुखनिस्रवजलं राति रा—क। १खदिरे शब्दार्थ०। २जलदायिनि त्रि०।

**पयोलता** स्त्री पयःप्रधाना लता। क्षीरविदार्यां राजनि०

**पयोवाह** पु० पयो जलं वहति वह—अण् उप०स०। १मेघे २मुस्तके च।

**पयोव्रत** न० पयः तत्पानमात्रं व्रतम्। १दुग्धपानमात्रे व्रतभेदे तच्च त्रिरात्रादिसाध्यं मत्स्यपु० उक्तं यथा "पुण्यां तिथिं समासाद्य युगमन्वादिकम्। पयोव्रतस्त्रिरात्रं स्यादेकरात्रमथापि वा" ५२अ० तद्विविधं प्रायश्चित्तात्मकं काम्यञ्च मनुः११।१४४। द्वादशाहसाध्यं तु विष्णुव्रतभेदः भाग०८।१६। पयस्तत्पानं व्रतमस्य। २यज्ञदीक्षितव्रतभेदे शत०ब्रा० ८।५।१।१

**पयोष्णिजाता** स्त्री। पयोष्णी जाता यस्याः प्रभो०। सरस्वत्यां नद्यां राजनि०।

**पयोष्णी** स्त्री विन्ध्याचलदक्षिणस्थे नदीभेदे "पयोष्णी सलिलं रुच्यं पवित्रं पापनाशनम्। बलीपलहरं सौख्यबलकान्तिप्रदं लघु" राजनि०। "एष विन्ध्यो महाशैलः पयोष्णीयं समुद्रगा। आश्रमाश्च महर्षीणां बहुमूलफलान्विताः। एष पन्था विदर्भाणामसौ गच्छति कोसलान्। अतः परश्च देशोऽयं दक्षिणे दक्षिणापथः" भा० व० ६१अ०।

**पर** त्रि० पृ—भावे अप्, कर्त्तरि अच् वा। १अन्यस्मिन् भिन्ने २उत्तरे ३दूरे ४सीमापरिच्छिन्ने ५श्रेष्ठे च ६मोक्षे ७केवले ब्रह्मणि च न० "द्वे ब्रह्मणी वेदितव्ये परञ्चापरमिति" श्रुतिः। ८शत्रौ पु०। अस्य व्यवस्थायां सर्वनामता ङिङस्योर्जसि च वा परस्मात् परात्। परे पराः वा। यत्तु परत्वेऽपि व्यवस्थाबोधनात् सर्वनामता। ८ब्रह्मण आयुःकाले च पु० "कालसंख्यां समासेन पूर्वं ब्रह्मकल्पिताम्। सएव स्यात् परः कालस्तदन्ते परिपूर्य्यते। निजेन तस्य मानेन आयुर्वर्षशतं स्मृतम्।

यत्पराख्यं तदर्द्धञ्च परार्द्धमभिधीयते”। “ब्राह्मि कल्पशतानि स्युस्तथा षष्टिर्द्विजोत्तमाः। ब्रह्मणः कथितं वर्षं पराख्यं तच्च यत्पदम्” कौर्मे ५अ०। व्यापमति १०व्यापकसामान्ये “सामान्यं द्विविधं प्रोक्तं परञ्चापरमेव च” भाषा० ११तथाजातौ स्त्री “व्यापकत्वात् परापि स्यात् व्याप्यत्वादपराऽपि च”। व्यवस्था च दिग्देशकालैरवधिनियमभेदरूपा। १२वक्ष्यमाणदैशिककालिकपरत्वरूपगुणाश्रये त्रि०। तस्य दिशि दृष्टत्वेन तद्योगे पञ्चमी। अयमस्मात् पर इत्यादिप्रयोगात्। परस्येदम् गहा०छ कुकच्। परकीय परसम्बन्धिनि त्रि०। सर्वनामत्वादस्य वृत्तौ पुंवत्। परस्याः धनं परधनम् परस्वामिन्यर्थे परत्र इत्यादि। १३श्रोपेक्ष्या उच्चरिते “यत्परः शब्दः स शब्दार्थ इति न्यायः तात्पर्य्यम्।

**पर:कृष्ण** त्रि० परः कृष्णात् पारस्करा० सुट्। कृष्णात् परे छान्दोग्यो० १।६।५ उद्गा०।

**पर:पुंस** पु० परः अन्यः पुमान् पारस्करा० सुट्। स्वपुरुषादन्यस्मिन् पुरुषे “यत् परपुंसा वा पत्नी स्यात्” शत० ब्रा० १।२।१।२१

**पर:शत** न० परं शतात् पारस्करा० सुट्। १शताधिकसंख्यायां २तत्सङ्ख्यातेषु च अमरः।

**पर:श्वस्** अव्य० श्वः परं दिनं नि० पारस्करा० सुट्। आगामिपरदिवसात् परस्मिन् दिने अमरः मुग्धो०। परश्व इत्यप्यत्र। [२तत्संख्यातेषु च शत०ब्रा० १०।२।६।८

**पर:षष्टि** स्त्री परःषष्टेः निपा० सुट्। १षष्टेरधिकसङ्ख्यायां

**पर:सहस्र** न० सहस्रात् परं नि० सुट्। १सहस्राधिकसंख्यायां २तत्संख्यान्वितेषु च अमरः।

**परउर्वी** स्त्री परउर्व्याः नि० पारस्करा० सुट्। १उपचक्रे “उपर्य्युपरि शकटव्यादिरुद्रा अतउर्वीस्वस्ति ताः परउर्व्यौरुपसद्यास्तैषनानुतिष्ठन्ति” शत०ब्रा० ३।४।४ २६ भाष्यम्।

**परकीय** त्रि०परस्येदम् गहादि०छ “कुक जनस्य परस्य च” वार्त्ति० कुक्। १परसम्बन्धिनि। २नायिकाभेदे स्त्री रसमञ्जर्यां तल्लक्षणादिकमुक्तं यथा

“अप्रकटितपरपुरुषानुरागा परकीया। सा च द्विविधा परोढा कन्यका चेति कन्यायाः पित्राद्यधीनत्वात् परकीयत्वम्। अस्या गुप्ता एव सर्वाः चेष्टाः। गुप्ता(रक्षिता) विदग्धाकुलटानुशयानामुदिताप्रभृतीनां परकीयायामेवान्तर्भावः। विदग्धा द्विविधा वाग्विदग्धा क्रियाविदग्धा। अनुशयाना दृष्टस्थानविघटनेन भाविस्थानाभावशङ्कया स्वानधिष्ठितसङ्केतस्थाने भर्त्तुर्गमनानुमानेन चानुशयाना भवति”। एतदुदाहरणानि तत्र दृश्यानि।

**परक्रान्तिज्या** स्त्री सू०सि० उक्तायां “परमापक्रमज्या तु सप्तरन्ध्रगुणेन्दवः” १३९७ योजनात्मिकायां ज्यायाम्। “क्रान्त्योर्ज्ये त्रिज्ययाभ्यस्ते परक्रान्तिज्ययोद्धृते” सू० सि०। “तत्र नं चक्रदृयगतं परमक्रान्तिज्येति रङ्गनाथः”।

**परक्षेत्र** न० ६त०। परकीये क्षेत्रे १कलत्रे २भूम्यादौ च। “कपुत्र वा परक्षेत्रे नियोगोत्पादितः सुतः” “आददानः परक्षेत्रात् दण्डं दातुमर्हति” इति च मनुः।

**परगामिन्** त्रि० परं वाच्यं गच्छति लिङ्गेन समत्वात्। वाच्यलिङ्गे शब्दे “गुणद्रव्यक्रियायोगोपाधिभिः परगामिनः” अमरः।

**परग्रन्थि** पु० परेण ग्रन्थिरत्र। अङ्गुलिपर्वणि हारा०।

**परचक्र** न० परस्य शत्रोश्चक्रम्। १शत्रोः राष्ट्रादौ भा० आ० १६अ०। ६०सं०३अ०। २तज्जे ईतिभेदे [भिचाये च।

**परच्छन्द** त्रि० परस्य छन्दो यत्र। १पराधीने ६त०। २परा-

**परच्छिद्र** न० ६त०। परस्य दोषादिच्छिद्रे

**परजात** त्रि० परेण जातः। औदासीन्येन पर्यैषिते १परपुष्टे अमरः। २अन्येनोत्पन्ने कुण्डगोलकादौ अन- च। परजातादयोऽप्यत्र।

**परजित** त्रि० परेण जितः। १परपुष्टे अमरः २पराजिते त्रि०

**परञ्ज** न० परञ्जयति जि-बा० ड सुम् च। १तैलयन्त्रे २क्षुरिकाफले च मेदि०।

**परञ्जन** पु० परां पश्चिमां दिशं जनयति स्वामित्वात् जन- अच् सर्वनाम्नो वृत्तौ पुंवत् सुम्। वरुणे हेमच०।

**परञ्जय** पु० परां पश्चिमां दिशं जयति स्वामित्वात् जि-बा० अच् सुम् पुंवद्भावः। १वरुणे त्रिका० २शत्रुजेतरि त्रि०

**परतङ्गण** पु० देशभेदे भा०स० ५१अ०।

**परतन्त्र** त्रि० परस्य तन्त्रमधीनता यत्र। पराधीने अमरः।

**परतर्क्कुक** त्रि० परः शत्रुः तर्क्कुरिवास्य कप्। शत्रुभययुते “कुनखविवर्णैः परतर्क्कुकाश्च तान्मैत्र पुरुषभूपतयः” ह०सं० ६१अ० नरलक्षणोक्तौ।

**परतस्** अव्य० पर+विभक्त्यर्थे तसिल्। १परस्मादित्याद्यर्थे २पराधीने च। ततोभावे त्वपरतस्त्व पराधीनत्वं परतोग्राह्यशब्दे दृश्यम्। [तापके च।

**परतापन** न० गरुत्मतः १पुत्रभेदे हरिवं० २०२अ०। २पर-

**परतोग्राह्य** अव्य०परस्मात् ग्राह्यः। स्वभिन्नसामग्रीबोध्ये

प्रमाणत्वाप्रमाणत्वादौ तयोः कस्य स्वतोग्राह्यता कस्य वा परतो ग्राह्यता तदेतन्मतभेदेन सर्वदर्शनसंग्रहे दर्शितम् "प्रमाणत्वाप्रमाणत्वे स्वतः साङ्ख्याः समाश्रिताः। नैयायिकास्ते परतः, सौगताश्चरमं स्वतः। प्रथमं परतः प्राहुः प्रामाण्यं, वेदवादिनः। प्रमाणत्वं स्वतः प्राहुः, परतश्चाप्रमाणताम्" इति। "वादिविवाददर्शनात् कस्य-चिदपि वेदानां धर्मे स्वतःप्रामाण्यमिति सिद्धवत्कृत्य स्वीक्रियते। किञ्च किमिदं स्वतः प्रामाण्यं नाम? किं स्वत एव प्रामाण्यस्य जन्म? आहोस्वित् स्वाश्रयज्ञानजन्यत्वम्? किमुत स्वाश्रयज्ञानसामग्रीजन्यत्वम्? उताहो ज्ञानसामग्रीजन्यज्ञानविशेषाश्रितत्वम्? किं वा ज्ञानसामग्रीमात्रजन्यज्ञानविशेषाश्रितत्वम्? तत्राद्यः सावद्यः-कार्यकारणभावस्य भेदसमानाधिकरणत्वेनैकस्मिन्नसम्भवात्, नापि द्वितीयः गुणस्य सतो ज्ञानस्य प्रामाण्यं प्रति समवायिकारणतया द्रव्यत्वापातात्। नापि तृतीयः प्रामाण्यस्योपाधित्वे जातित्वे वा जन्मायोगात्, स्मृतिज्ञानधिकरणस्य ज्ञानस्य बाधात्यन्ताभावः प्रामाण्योपाधिः न च तस्योत्पत्तिसम्भवः अत्यन्ताभावस्य नित्यत्वाभ्युपगमात् एव न जातेरपि जनिर्युज्यते। नापि चतुर्थः ज्ञानविशेषो ह्यप्रमा विशेषसामग्र्याश्च सामान्यसामग्री अनुप्रविशति शिंशपासामग्र्यामिव वृक्षसामग्री, अपरथा तस्याकस्मिकत्वं प्रसजेत् तस्मात् परतस्त्वेन स्वीकृतं प्रामाण्यं विज्ञानसामग्रीजन्याश्रितमित्यतिव्याप्तिरापद्येत। पञ्चमविकल्पं विकल्पयामः किं दोषाभावसहकृतज्ञानसामग्रीजन्यत्वमेव ज्ञानसामग्रीमात्रजन्यत्वं, किं दोषाभावासहकृतज्ञानसामग्रीजन्यत्वं, नाद्यः दोषाभावसहकृतज्ञानसामग्रीजन्यत्वमेव परतः प्रामाण्यमिति परतः प्रामाण्यवादिभिरङ्गीकरणात् नापि द्वितीयः, दोषाभावसहकृतत्वेन सामग्र्यां सहकृतत्वे सिद्धे अनन्यथासिद्धान्वयव्यतिरेकसिद्धतया दोषाभावस्य कारणताया वज्रलेपायमानत्वात्। अभावः कारणमेव न भवतीति चेत् तदा वक्तव्यम् अभावत्वे कार्यत्वमस्ति न वा यदि नास्ति तदा पटप्रध्वंसानुपपत्त्या नित्यताप्रसङ्गः। अथास्ति किमपराद्धं कारणत्वेनेति सेयमुभयतःपाशा रज्जुः। तदुदितमुदयनेन "भावो यथा तथाऽभावः कारणं कार्यवन्मतम्" इति। तथाच प्रयोगः विमता प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वात् अप्रमावत् प्रामाण्यं च परतो ज्ञायते अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यवत्। तस्मादुत्पत्तौ ज्ञप्तौ च परतस्त्वे प्रमाणसम्भवात् स्वतः सिद्धं प्रामाण्यमित्येतत् पूतिकूष्माण्डायत इति चेत् तदेतदाकाशमुष्टिहननायते। विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेत्वजन्यत्वं प्रमायाः स्वतस्त्वमिति निरुक्तिसम्भवात् अस्ति चात्रानुमानं विमता प्रमा विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तजन्या न भवति अप्रमात्वानधिकरणत्वात् घटादिवत् न चौदयनमनुमानं परतस्त्वसाधकमिति शङ्कनीयं प्रमा दोषव्यतिरिक्तज्ञानहेत्वतिरिक्तजन्या न भवति ज्ञानत्वादप्रमावदिति प्रतिसाधनग्रहग्रस्तत्वात् ज्ञानसामग्रीमात्रादेव प्रमोत्पत्तिसम्भवे तदतिरिक्तस्य गुणस्य दोषाभावस्य वा कारणत्वकल्पनायां कल्पनागौरवप्रसङ्गाच्च। ननु दोषस्याप्रमाहेतुत्वेन तदभावस्य प्रमां प्रति हेतुत्वं दुर्निवारमिति चेत् न दोषाभावस्याप्रमाप्रतिबन्धकत्वेनान्यथासिद्धत्वात्। "तस्माद्गुणेभ्यो दोषाणामभावस्तदभावतः। अप्रामाण्यद्वयासत्त्वं तेनोत्सर्गो नयोदितः" इति। तथा प्रमाज्ञप्तिरपि ज्ञानज्ञापकसामग्रीत एव जायते। न च संशयानुदयप्रसङ्गो बाधक इति युक्तं वक्तुं सत्यपि प्रतिभासपुष्कलकारणे प्रतिबन्धकदोषादिसमवधानात् तदुपपत्तेः। किञ्च तावकमनुमानं स्वतः प्रमाणं न वा आद्ये अनैकान्तिकता द्वितीये तस्यापि परतः प्रामाण्यमेवं तस्य तस्यापीत्यनवस्था दुरवस्था स्यात्। यदत्र कुसुमाञ्जलावुदयनेन झटिति प्रचुरप्रवृत्तेः प्रामाण्यनिश्चयाधीनत्वाभावमापादयता प्रवृत्तिमात्रे प्रवृत्तिहीच्छामपेक्षते तत्प्राचुर्यं चेच्छाप्राचुर्यम् इच्छा चेष्टसाधनताज्ञानं तच्चेष्टजातीयत्वलिङ्गानुभवं सोऽपीन्द्रियार्थसन्निकर्षं प्रामाण्यग्रहस्तु न क्वचिदुपयुज्यत इति तदपि तस्करस्य पुरस्तात् कक्षे सुवर्णमुपेक्ष्य सर्वाङ्गोद्घाटनमिव प्रतिभाति। अतः समीहितसाधनज्ञानमेव प्रमाणतयावगम्यमानमिच्छां जनयतीत्यत्रैव स्फुट एव प्रामाण्यग्रहणस्योपयोगः। किञ्च क्वचिदपि चेद्विचिकित्सा प्रवृत्तिः संशयादुपपद्येत तर्हि सर्वत्र तथाभावसम्भवात् प्रामाण्यनिश्चयो निरर्थकः स्यात्। अनिश्चितस्य सत्त्वमेव दुर्लभमिति प्रामाण्यं दत्तजलाञ्जलिकं भवेत्"।

**परत्र** अव्य॰ परस्मिन् काले पर+त्रल्। परकाले स्वर्गादिलोके।

**परत्रभीरु** त्रि॰ परलोकभीरौ धार्मिष्ठे कात्या॰ स्मृतिः।

**परत्व** न॰ परस्य भावः। वैशेषिकोक्ते द्रव्याश्रिते गुणभेदे तच्च द्विविधं दैशिकं कालिकञ्च तदेतत् कणादसूत्रोप-

स्फुटत्वयोर्निर्णीतं यथा "एकदिक्काभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरञ्च" सू०।

"इदानीमुद्देशक्रमप्राप्ते परत्वापरत्वे परस्परानुबद्धव्यवहारकारणतया शिष्यबुद्धिवैशद्यार्थं संक्षेपार्थञ्चैकग्रन्थेनाह परमपरञ्चेति भावप्रधानो निर्देशः, उत्पद्यत इति शेषः, यद्वा परमपरञ्चेति व्यवहार इति शेषः, इतिरध्याहार्यः। एका दिग् ययोस्तावेकदिक्कौ ताभ्यामेकदिक्काभ्यां पिण्डाभ्यामित्यर्थः तुल्यदेशावप्येकदिक्कौ भवतः न तु ताभ्यां परत्वापरत्वे उत्पद्येते व्यवह्रियेते वेत्यत उक्तं सन्निकृष्टविप्रकृष्टाभ्यामिति, सन्निकर्षः संयुक्तसंयोगाल्पत्वम्, विप्रकर्षस्तद्भूयस्त्वं, तद्वद्भ्यामित्यर्थः। एतेन समवायिकारणमुक्तं, दिक्पिण्डसंयोगस्त्वसमवायिकारणं, तथा हि प्राङ्मुखस्य पुरुषस्य प्राच्यवस्थितयोः पिण्डयोरेकस्मिन् संयुक्तसंयोगभूयस्त्वमपरस्मिन् संयुक्तसंयोगाल्पतरत्वञ्चापेक्ष्य परत्वमपरत्वञ्चोत्पद्यते, असमवायिकारणमुक्तम्, सन्निकृष्टविप्रकृष्टाभ्यामिति विषयेण विषयिणं प्रत्ययमुपलक्षयति तथा चापेक्षाबुद्धेर्निमित्तकारणत्वमुक्तम्, एकदिगवस्थितयोरेव परत्वापरत्वे उत्पद्येते इति न सर्वत्रोत्पत्तिः, एकस्यैव द्रष्टुरपेक्षाबुद्धिः समुत्पद्यते इति न सर्वथोत्पत्तिः, अपेक्षाबुद्धिनियमाच्च सर्वदोत्पत्तिः कारणशक्त्युत्पत्तयोः प्रत्यक्षसिद्धत्वान्न परस्पराश्रयत्वम्, अन्यथा हि नोत्पद्येयातां न वा प्रतीयेयातां परस्परापेक्षायां हि द्वयोरनुत्पत्तिरप्रतीतिश्च स्यात् प्रतीयेते च परत्वापरत्वे, प्रतीतिश्च तयोर्नोत्पत्तिमन्तरेणेति। एककालाभ्यामिति कालिकपरत्वापरत्वे अभिप्रेत्य तत्रैककालाभ्यामिति एको वर्त्तमानः कालो ययोर्युवस्थविरपिण्डयोः तावेककालौ ताभ्यामेककालाभ्यामित्यर्थः। सन्निकर्षोऽल्पतरतपनपरिस्पन्दान्तरितजन्मत्वं, विप्रकर्षश्च बहुतरतपनपरिस्पन्दान्तरितजन्मत्वम्, अत्रापि विषयेण विषयिणीं बुद्धिमुपलक्षयति तेन युवस्थविरपिण्डौ समवायिकारणे, कालपिण्डसंयोगश्चासमवायिकारणम्, अल्पतरतपनपरिस्पन्दान्तरितजन्मत्वबुद्धिरपरत्वे बहुतरतपनपरिस्पन्दान्तरितजन्मत्वबुद्धिः परत्वे निमित्तकारणम्। एते च परत्वापरत्वे अनियतदिग्देशयोरपि पिण्डयोरुत्पद्येते, तत्र दैशिकपरत्वापरत्वयोः सप्तधा विनाशः, उत्पादस्तु युगपदेव द्वयोरन्यथाऽन्योन्याश्रयः स्यात्, अपेक्षाबुद्धिनाशात्,१ संयोगस्यासमवायिकारणस्य नाशात्,२ द्रव्यस्य च समवायिकारणस्य नाशात्,३ निमित्तासमवायिकारणयोर्नाशात्,४ समवाय्यसमवायिकारणयोर्नाशात्५ निमित्तासमवायिकारणयोर्नाशात्,६ निमित्तनाशासमवायिकारणनाशसमवायिकारणनाशेभ्यः७। तत्रापेक्षाबुद्धिनाशात्१ तावत्, परत्वोत्पत्तिः परत्वसामान्यज्ञानं ततोऽपेक्षाबुद्धिविनाशस्तद्विनाशात् परत्वविशिष्टद्रव्यज्ञानकाले परत्वनाशः, द्वित्वनाशवदेव सर्वमूहनीयम्। असमवायिकारणनाशादपि २तद्यथा यदैवापेक्षाबुद्धिस्तदैव परत्वाधारे पिण्डे कर्म ततो यदैव परत्वोत्पत्तिस्तदैव दिक्पिण्डविभागस्ततो यदा परत्वसामान्यज्ञानं तदा दिक्पिण्डसंयोगनाशः ततः सामान्यज्ञानादपेक्षाबुद्धिनाशस्तदैव दिक्पिण्डसंयोगनाशात् परत्वापरत्वयोर्नाशः, तत्र चापेक्षाबुद्धिनाशस्य परत्वनाशसमकालत्वान्न तन्नाशकत्वम्। नन्वसमवायिकारणनाशाद्गुणनाशे आत्ममनःसंयोगनाशादपि संस्कारादृष्टादीनां विनाशे बहु व्याकुलं स्यादिति चेन्न विप्रकृष्टत्वेन परत्वस्य व्यापनात् परत्वाधारस्यान्यत्र गमने विप्रकर्षाभावात् परत्वनिवृत्तिरावश्यकी न च तदा नाशकान्तरमस्तीत्यन्यथाऽनुपपत्त्या संयोगनाश एव नाशकः कल्प्यते, संस्कारादृष्टादेः कार्य्यस्य स्मृतिसुखादेश्चिरेणापि दर्शनाच्च तन्नाशकल्पना। उपलक्षणञ्चैतत् अवधेर्द्रष्टुश्च तत्तद्देशसंयोगनाशादपि परत्वापरत्वे विनश्यतः युक्तेस्तुल्यत्वात्। समवायिकारणनाशादपि क्वचित् परत्वनाशः३ तथा हि यदा पिण्डावयवे समुत्पन्नेन कर्मणाऽवयवान्तराद्विभागस्तदैवापेक्षाबुद्धिः, विभागात् पिण्डारम्भकसंयोगनाशः परत्वोत्पत्तिः, अग्रिमक्षणे संयोगनाशाद्द्रव्यनाशः परत्वसामान्यज्ञानं, द्रव्यनाशात् परत्वनाशोऽपेक्षाबुद्धिनाशश्च सामान्यज्ञानात्, तथाच यौगपद्यान्नापेक्षाबुद्धिनाशात् परत्वनाश इति, क्वचिद्द्रव्यनाशापेक्षाबुद्धिनाशाभ्यां परत्वनाशः४ तद्यथा पिण्डावयवे कर्मापेक्षाबुद्धेरुत्पादस्ततोऽवयवान्तरविभागः परत्वोत्पत्तिः तत आरम्भकसंयोगनाशसामान्यज्ञाने ततो द्रव्यनाशापेक्षाबुद्धिनाशौ ततश्च परत्वनाशः। क्वचिद्द्रव्यस्य संयोगस्य च नाशाभ्यां परत्वनाशः ५तद्यथा यदा द्रव्यावयवविभागस्तदैव पिण्डकर्मापेक्षाबुद्ध्योरुत्पादस्तदनन्तरमवयवसंयोगनाशदिक्पिण्डविभागपरत्वोत्पत्तयः ततो द्रव्यनाशदिक्पिण्डसंयोगनाशपरत्वसामान्यबुद्धयः ततो द्रव्यनाशदिक्पिण्डसंयोगनाशाभ्यां परत्वनाशः सामान्यबुद्धेरपेक्षाबुद्धिनाश इति। क्वचित् संयोगनाशापेक्षाबुद्धिनाशाभ्यां परत्वनाशः६ तद्-

यथा परत्वोत्पत्तिपिण्डकर्मणो सामान्यज्ञानविभागौ अपेक्षाबुद्धिनाशदिक्पिण्डसंयोगनाशौ ततः परत्वनाशः। क्वचित् समवायसमवायिनिमित्तनाशेभ्यः७ तद्यथा परत्वोत्पत्तिपिण्डावयवविभागपिण्डकर्माणि युगपत्, तदनन्तरं परत्वसामान्यज्ञानावयवसंयोगनाशदिक्पिण्डविभागाः तदनन्तरमपेक्षाबुद्धिनाशद्रव्यनाशदिक्पिण्डसंयोगनाशेभ्यो युगपदुत्पन्नेभ्यः परत्वस्यापरत्वस्य वा दैशिकस्य नाशः। कालकृतयोस्तु परत्वापरत्वयोरसमवायिकारणनाशाधीनो नाशो नास्ति दैशिकयोर्दिक्पिण्डसंयोगनाशे सन्निकर्षविप्रकर्षनाशो यथा न तथा कालिकयोरिति तयोः समवायिकारणनाशात्१ अपेक्षाबुद्धिनाशात्२ द्वाभ्यामिति३ त्रयः पक्षाः पूर्ववदूहनीयाः"।

**परदार** पु॰ ब॰व॰ इत॰। परस्त्रियां मनुः ३।१७४ "परदाररताश्चैव परद्रव्यहरा च ये। अधोधो नरकं यान्ति पीड्यन्ते यमकिङ्करैः" कर्मलोचनम्। परयोषिदादयोऽप्यत्र "ब्राह्मणैः क्षत्रियो वैश्यो यो रतः परयोषिति" मनुः परदारान् गच्छति ठक्। पारदारिक तद्गन्तरि।

**परदेश** पु॰ कर्म॰। स्वाधिष्ठितदेशात् भिन्नदेशे हे॰सं॰ ३।१२

**परद्वेषिन्** त्रि॰ परेभ्यः द्वेष्टि द्विष-णिनि। परद्रूषके खले शब्दमाला।

**परधर्म** पु॰ इत॰। स्वोचितवर्णाश्रमादिधर्मभिन्ने धर्मे गीता २अ॰ मनुः १०।९७। कर्म॰। उत्कृष्टधर्मे च

**परध्यान** कर्म॰। ध्यानभेदे "ध्येये मनोनिश्चलतां याति ध्येयं विचिन्तयत्। यत्तत् ध्यानं परं प्रोक्तं मुनिभिर्ध्यानचिन्तकैः" गरुडपु॰।

**परनिपात** पु॰ परत्र निपातः उच्चारणम्। योग्यतया विग्रहवाक्ये पूर्वश्रुतस्यापि शब्दस्य समासे परत्रोच्चारणे यथा राजदन्तादिषु दन्तानां राजा इति विग्रहवाक्ये पूर्वश्रुतस्यापि दन्तशब्दस्य परत्रोच्चारणम्। एवं पूर्वं भूत इति वाक्ये भूतपूर्व इत्यादौ।

**परन्तप** त्रि॰ परान् शत्रून् तापयति "द्विषत्परयोस्तापेः" पा॰खच् "खचि ह्रस्वः" पा॰ह्रस्वः मुम्। १शत्रुतापके तामसमनोः २पुत्रभेदे हरिवं॰ ७अ॰।

**परपद** न॰ कर्म॰। १उत्कृष्टस्थाने "तद्विष्णोः परं पदम्" ऋ॰ वैष्णवीगायत्री। २मोक्षे च इत॰। ३परस्य स्थाने च

**परपाकनिवृत्त** पु॰ परार्थात् पाकान्निवृत्तः। परोद्देश्यकपाकान्निवृत्ते पञ्चयज्ञानुष्ठातरि "स्फटीत्वाग्निं समारोप्य प्रथमग्रासं निवेदयेत्। परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्त्तितः" मिता॰स्मृतिः। तदन्नभोजननिषेधः परपाकरतशब्दे दृश्यः।

**परपाकरत** त्रि॰ परस्य पाके रतः। परपाकरुचौ "पञ्च यज्ञान् स्वयं कृत्वा परान्नमुपजीवति। सततं प्रातरुत्थाय परपाकरतस्तु सः" मिता॰ स्मृतिः। "परपाकनिवृत्तस्य परपाकरतस्य च। अपचस्य च भुक्त्वान्नं द्विजश्चान्द्रायणं चरेत्" मिता॰ स्मृतिः।

**परपिण्डाद** परस्य पिण्डमन्नमत्ति अद-अण् उप॰स॰। पराचोपजीविनि अमरः।

**परपुरुष** पु॰ कर्म॰। १उत्कृष्टपुरुषे पुरुषोत्तमे विष्णौ त्रिका॰ पुरुषोत्तमशब्दे दृश्यम् स्वभर्तृभिन्ने पुरुषे २उपनायके च।

**परपुष्ट** पु॰ परया काकया पुष्टः पुष-क्त सर्वनाम्नः पुंवत्। १कोकिले। कोकिलया हि डिम्बस्फोटनाद्यक्षमया काकनीडस्थं काकडिम्बमपसार्य स्वडिम्बे तत्र स्थापिते काकया स्वडिम्बवज्ज्ञात्वाऽसौ पुष्यते इति लोकप्रसिद्धिः। परभृतादयोऽप्यत्र माघे १२।११६। २अन्यपालिते त्रि॰। ३वेश्यायाम् स्त्री मेदि॰।

**परपुष्टमहोत्सव** पु॰ परपुष्टानां महोत्सवो यत्र। आम्रे तस्य स्वपुष्पोद्गमद्वारा कोकिलानां महोत्सवजननात्तथात्वम्।

**परपूर्वा** स्त्री पर इतरः पूर्वो यस्याः। "पतिं हित्वापकृष्टं स्वमुत्कृष्टं या निषेवते। निन्द्यैव सा भवेल्लोके परपूर्वेति चोच्यते" मनूक्तायां पुनर्भुवि स्त्रियाम्। तद्भेदश्च नारदेन दर्शितः "परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम्। पुनर्भूस्त्रिविधा तासां स्वैरिणी च चतुर्विधा" अन्यपूर्वाशब्दे २१९पृ॰ विवृतिः।

**परपौरवतन्तव** पु॰ विश्वामित्रपुत्रभेदे भा॰अनु॰ ४अ॰।

**परप्रतिनप्तृ** पु॰ प्रतिनप्तुः परः अनन्तरः वा॰ परनि॰। वृद्धप्रपौत्रे हेमच॰। [वृद्धप्रपौत्रे हेमच॰।

**परप्रपौत्र** पु॰ प्रपौत्रात् परः अनन्तरः वा॰ परनिपातः।

**परप्रेष्या** स्त्री इत॰। १दास्यां २दास्यां स्त्री कात्यायन॰ ३७अ॰।

**परब्रह्मन्** न॰ कर्म॰। निर्गुणे निरुपाधिके १ब्रह्मणि तत्प्रतिपादके २उपनिषद्भेदे च।

**परभाग** पु॰ परस्य उत्कृष्टस्य भागः भावः। १गुणोत्कर्षे कर्म॰। २पश्चिमभागे च हेमच॰। उभयत्र माघः १०।८६ श्लोके उदा॰। ३सम्पदि त्रिका॰ इत॰। ४अन्यस्यांशे

**परभाषा** स्त्री कर्म॰। संस्कृतभिन्नायां भाषायामपशब्दे हारा॰

**परभुक्ता** त्रि॰ इत॰। १अन्येन भुक्ते २परभोगयुक्तायां स्त्रियां

स्त्री "परभुक्तां च कान्तां च यो भुङ्क्ते स नराधमः। स पच्यते कालसूत्रे यावच्चन्द्रदिवाकरौ" इत्यादिना तत्स्त्रीगमने दोषाः ब्रह्मवै०पु० जन्मख० ८२अ०उक्ताः।

**परभृत्** पु० परं स्वपुत्रबुद्ध्या कोकिलपुत्रं बिभर्त्ति भृ—क्विप् तुक् च। १काके अमरः २स्वेतरपोषकमात्रे त्रि०।

**परभृत** पुंस्त्री० परेण स्वजनकभिन्नेन काकेन भृतः। १कोकिले अमरः स्त्रियां जातित्वात् ङीष्। २अन्यपुष्टमात्रे त्रि०। [४पश्चादर्थे च।

**परम्** अव्य० पॄ—अमि। १नियोगे २क्षेपे ३केवले च मेदि०।

**परम** त्रि० परं परत्वं माति—क। १उत्कृष्टे २प्रधाने ३आद्ये मेदिनिः ४प्रणवे च विश्वः।

**परमक्रान्ति** स्त्री सू०सि० उक्तायां सूर्य्यस्य शेषक्रान्तौ।

**परमक्रोधिन्** पु० १विश्वदेवभेदे भा०अनु० ८१अ०। २अत्यन्तक्रोधान्विते त्रि०।

**परमपु(पू)रुष** पु० कर्म०। पुरुषोत्तमे विष्णौ [मेदिनिः।

**परमम्** अव्य० पर+मा—डमि। १अनुज्ञायाम् २स्वीकारे च

**परममहत्** त्रि० परमं सर्वोत्कृष्टं महत्। सर्वापेक्षया उत्कृष्टमहत्त्वगुणयुक्ते आकाशादौ "कालखात्मदिशां सर्वगतत्वं परमं महत्" भाषा०। भावप्रधानः निर्देशः परममहत्त्वमित्यर्थः। तस्य भावः परममहत्त्व सर्वोत्कृष्टमहत्त्वे "परमाणुपरममहत्त्वान्तोऽस्य वशीकारः" पात०सू० "सूक्ष्मे निविशमानस्य परमाण्वन्तं स्थितिपदं लभत इति स्थूले निविशमानस्य परममहत्त्वान्तं स्थितिपदं चित्तस्य एवं तामुभयीं कोटिमनुधावतो योऽस्याप्रतिघातः स परो वशीकारः तद्वशीकारात् परिपूर्णं योगिनश्चित्तं न पुनरभ्यासकृतं परिकर्मापेक्षते" भा०।

**परमर्षि** पु० कर्म०। वेदव्यासादिषु ऋषिषु तन्नामनिरुक्तिः मत्स्यपु० १२०अ० यथा
"ऋषिर्हिंसागतौ धातुर्विद्यासत्यतपःश्रुतैः। एष सन्निचयो यस्मात् ब्रह्मणस्ततस्त्वृषिः। निवृत्तिसमकालन्तु बुद्ध्या व्यक्तिमृषिस्त्वयम्। ऋषते परमं यस्मात् परमर्षिस्ततः स्मृतः। गत्यर्थादृषतेर्धातोर्नामानि वृत्तिकारणम्। यस्मादेष स्वयंभूतस्तस्माच्च ऋषिता मता"।

**परमहंस** परमः हंस आत्मा यस्य। सन्न्यासिभेदे "कुटीचको बहूदकः हंसश्चैव तृतीयकः। चतुर्थः परमो हंसो योयः पश्चात् स उत्तमः" हारीतः। परहंसोऽप्यत्र "परहंसस्त्रिदण्डं च रज्जुं गोबालनिर्मिताम्। शिखां यज्ञोपवीतं च नित्यं कर्म परित्यजेत्" स्कान्दपु०। "सशिखं वपनं कुर्य्यात् हंसश्च परहंसकः। पौर्णमास्यामृतुष्वेषां वपनं परिकीर्त्तितम्" पुराणसमुच्चये तद्धर्माः स्थिताः। दण्डधारणञ्चाविदुष एव विदुषस्तु तन्नास्ति "न दण्डं न शिखां नाच्छादनं न भैक्ष्यं चरति परमहंसः" महोपनिषदुक्तेः "ज्ञानमेवास्य दण्डः" इति तत्रत्यवाक्यशेषाच्च। अन्येऽपि तद्धर्माः मिता० नि० सि० च उक्ता द्रष्टव्याः। कर्म०। २परमात्मनि ३तत्प्रतिपादके उपनिषद्भेदे।

**परमाणु** पु० कर्म०। सर्वापकृष्टे परिमाणयुक्ते वैशेषिकमतप्रसिद्धे क्षित्यप्तेजोमरुतां १सूक्ष्मांशभेदे तस्य च नित्यत्वं तैरङ्गीकृतम् तन्नाशकाभावात्। ततो महाभूतारम्भप्रकारस्तु उत्पत्तिशब्दे ११५ पृ० कणादभाष्यन्यायकन्दल्योरुक्तो दर्शितः। "दोधूयमानास्तिष्ठन्ति प्रलये पवमाणवः" इत्युक्तिस्तु सर्जनोन्मुखवायुपरमाणुविषया उत्पत्तिशब्दर्शिते कणादभाष्यवाक्ये वायवीयपरमाणूनां प्रथमं क्रियोत्पत्त्यैव दोधूयमानत्वोक्तेः अन्येषां च तत्प्रेरणेनैव ततः परं क्रियोत्पत्तेः कथनात्। अन्यथा वायवीयपरमाणौ दोधूयमानत्वविशेषणासङ्गतेः इति विवेचनम्। २परमाण्ववच्छिन्ने कालभेदे "स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्। सतो विशेषभुग् यस्तु कालः स परमो महान्" भाग० ३।११।५ "सतः प्रपञ्चस्य परमाणुतां परमाण्ववस्थां यो भुङ्क्ते स कालः परमाणुः तस्यैव विशेषं साकल्यं यो भुङ्क्ते स परमोमहान्। अयमर्थः "ग्रहर्क्षताराचक्रस्थ" इत्यादिना यत् सूर्य्यपर्य्यटनं वक्ष्यति तत्र सूर्य्यो यावता परमाणुदेशमतिक्रामति तावान् कालः परमाणुः। यावता च द्वादशराश्यात्मकं सर्वं भुवनकोषमतिक्रामति स परमो महान् संवत्सरात्मकः तस्यैवावृत्त्या युगमन्वन्तरादिक्रमेण द्विपरार्द्धान्तत्वमिति" श्रीधरस्वामी।

**परमाण्वङ्गक** पु०परमाणुरङ्गं यस्य। १ईश्वरे विष्णौ शब्दमाला। कर्त्तुः शरीरावश्यकत्वाङ्गीकारे सर्वकर्त्तुरीश्वरस्य परमाणूनां तस्याङ्गत्वेनाङ्गीकारेण सामञ्जस्यमिति न्यायमते स्थितम्।

**परमात्मन्** पु० कर्म०। परमेश्वरे "स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः। यदुपास्तिमसावत्र परमात्मा निरूप्यते" कुसुमा०। "परमात्मा परं ब्रह्म निर्गुणं प्रकृतेः परः। कारणं कारणानाञ्च श्रीकृष्णो भगवान् स्वयम्" ब्रह्मवै०पु० प्रकृति० २२अ० गीता १५अ०। [विष्णौ।

**परमाद्वैत** पु० परममद्वैतं यत्र। सर्वभेदरहिते परमात्मनि

**परमानन्द** पु॰ परमः सर्वोत्कृष्ट आनन्दः । सकलानन्दोत्कृष्टानन्दात्मके परमात्मनि "परमानन्दमाधवम्" श्रीधरः । "एतस्यैव मात्रामुपजीवन्ति" इति श्रुतेः तैत्ति॰उ॰ ब्रह्मानन्दवल्ल्यां ८अनुवाके "सैषानन्दस्य मीमांसा" इत्युपक्रमे मानुषानन्दादिभ्यः प्राजापत्यानन्दान्तेभ्य ब्रह्मणः शतगुणानन्दत्वोक्तेश्च तथात्वम् । आनन्दशब्दे ७१८पृ॰ तद्वाक्यान्युक्तानि । २तथानन्दयुक्ते परमात्मनि इति नैयायिकाः । तन्मानन्दशब्दस्य दुःखाभावपरत्वम् । इदन्त्वत्र बोध्यम् "स एको ब्रह्मण आनन्द इत्यत्र अभेदे षष्ठी भेदषष्ठीग्रहणे आनन्दशब्दस्य दुःखाभावपरत्वकल्पने च अभावस्य निर्विशेषत्वात् तुल्यत्वस्य प्राजापत्यानन्दापेक्षया शतगुणत्वस्यासम्भवात् ब्रह्मण आनन्दे प्रजापतिशतगुणत्वोक्तिर्विरुध्यते ।

**परमान्न** न॰ कर्म॰ । पायसे दुग्धपक्वेऽन्ने अमरः देवपितृप्रियत्वात् परमत्वमस्य । क्षतान्नशब्दे २१८१५ तत्पाकप्रकारगुणाद्युक्तं दृश्यम् ।

**परमापक्रमज्या** स्त्री ज्यो॰सि॰ उक्तायां परमक्रान्तिज्यायां परक्रान्तिशब्दे दृश्यम् ।

**परमापूर्व** न॰ कर्म॰ । कलिकापूर्वजन्ये स्वर्गादिफलसाधने अपूर्वभेदे कलिकापूर्वशब्दे १८०८ पृ॰ दृश्यम् ।

**परमामुद्रा** स्त्री त्रिपुरायाः पूजाङ्गे मुद्राभेदे "मध्यमे कुटिले कृत्वा तर्जन्युपरिसंस्थिते । अनामिके मध्यगते तथैव हि कनिष्ठिके । सर्वा एकत्र संयोज्य अङ्गुष्ठपरिपीडिताः । एषा तु परमामुद्रा योनिमुद्रेयमीरिता । एतामुद्रा महेशानि । त्रिपुराया मयोदिताः । पूजाकाले प्रयोक्तव्या यथानुक्रमयोगतः" तन्त्रसारः ।

**परमायुष** पु॰ परममायुर्यस्य पृषो॰वा॰ अच् स॰ । असनवृक्षे शब्दच॰ ।

**परमायुस्** न॰ कर्म॰ । यस्य यावत्कालं जीवनकालः शास्त्रोक्तः तस्य तत्कालपर्यन्तजीवनकाले आयुर्दायशब्दे ७७२ पृ॰ तदानयनाद्युक्तं दृश्यम् । शब्दमालायां प्राणिभेदे परमजीवनकालभेदाश्च उक्ता यथा

"शतं वर्षाणि त्रिंशत्या निशाभिः पञ्चभिः सह । परमायुरिदं प्रोक्तं नराणां करिणामिह । अश्वानां द्वात्रिंशदश्वानां शुनां द्वादश वत्सराः । पञ्चविंशतिवर्षाणि खरस्य करभस्य च । चतुर्विंशतिरश्वानां वृषस्य महिषस्य च । छागमेषकरवत्सादिपशूनां षड्दशान्विताः" अधिकमायुस्शब्दे ७८५ पृ॰ दृश्यम् ।

**परमार्थ** पु॰ कर्म॰ । १उत्कृष्टवस्तुनि २यथार्थे च माण्डूक्यवार्त्तिकं तत्र अर्थस्य अबाधितत्वात् परमत्वम् ।

**परमार्हत** पु॰परम अर्हन् उपास्यतया अस्यस्य अच्, अर्हन् देवताऽस्य अण् कर्म॰ वा । जैनराजर्षिभेदे हेमचन्द्रः ।

**परमीकरणमुद्रा** स्त्री देवताह्वानाङ्गे मुद्राभेदे "अन्योन्यग्रथिताङ्गुष्ठप्रसारितकराङ्गुली । महामुद्रेयमुदिता परमीकरणे बुधैः । प्रयोजयेदिमा मुद्रा देवताह्वानकर्मणि" तन्त्रसा॰। इमाः आवाहन्यादिपरमीकरणान्ता इत्यर्थः । परमीकरणञ्च अस्या मुद्राया देवदर्शनपथे आनयनम् ।

**परमृत्यु** पु॰ परस्मात् मृत्युरस्य । काके त्रिका॰ तस्य रोगादिना स्वतो मृत्योरभावेन परहेतुकमृत्युत्वात्तथात्वम् ।

**परमेश** पु॰ कर्म॰ । परमेश्वरे

**परमेश्वर** पु॰ कर्म॰ । जगत्सृष्ट्यादिकारके सगुणे त्रिमूर्त्तिके १ब्रह्मणि २चक्रवर्त्तिनि नृपे च । ३शिवे हला॰ ४विष्णौ च ।

**परमेष्ठ** पु॰ परमे चिदाकाशे सत्यलोके वा तिष्ठति स्था—क अलुक्समा॰ अम्बाम्बेति षत्वम् । चतुर्मुखे ब्रह्मणि । क्विप् । परमेष्ठा अप्यत्र यजु॰ १४।२१ तत्र "स्थास्थिनृस्थूणामिति" षत्वम् ।

**परमेष्ठिन्** पु॰ परमे व्योमनि चिदाकाशे ब्रह्मणि सत्यलोके वा तिष्ठति "परमे कित्" उणा॰इनि अलुक्स॰ "स्थास्थिनृस्थूणाम्" षत्वम् । चतुर्मुखे ब्रह्मणि अमरः २आजमीढनृपपुत्रभेदे भा॰आ॰६४अ॰। ३जिने पु॰ हेमच॰ ४महादेवे भा॰व॰ ३७अ॰ ५शालग्राममूर्त्तिभेदे "परमेष्ठी च शुक्लस्तु पद्मचक्रसमन्वितः । चित्राकृतिस्तथा पृष्ठे शुषिरं चातिपुष्कलम्" पुराणसमुच्चये । ६गुरुभेदे "मन्त्रदाता गुरुः प्रोक्तो मन्त्रस्तु परमो गुरुः । परात्परो गुरुस्त्वं हि परमेष्ठी गुरुस्त्वहम्" तन्त्रम् परापरेति पाठान्तरम् । ७वाह्यां (वामनहाटि) स्त्री राजनि॰ ङीप् तस्येदं यत् टिलोपे । पारमेष्ठ्य तत्सम्बन्धिनि त्रि॰ ।

**परम्परा** स्त्री परम् अतिशयेन पृणाति पिपूर्त्ति वा पृ—वा अच् । १वंशे २सन्ततौ अविच्छिन्नधारायाम् हेमच॰ "एवं परम्पराप्राप्तो योगः प्रोक्तोमयाऽनघ!" गीता ३वधे ४अनुक्रमे च ५मृगभेदे मेदि॰ प्रपौत्रादौ ६अन्वये ७प्रपौत्रसुते पु॰ शब्दच॰ ।

**परम्पराक** न॰ परम् अतिशयेन परा श्रेष्ठा परम्परा तया धारया आकोहिंसनं यत्र अक—कुटिलगतौ घञ् प्रशस्ता परम्परा हिंसा अनिष्टाजनकत्वात् कन् वा, नपुंसकत्व

लोभात्। १यज्ञार्थे पशुहनने अमरः "या वेदविहिता हिंसा नियतास्मिंश्चराचरे। अहिंसामेव तां विद्यात्" इति मनूक्तेस्तस्या अहिंसात्वेन हि प्रामाण्यम्।

**परम्परीण** त्रि० परम्परया धारया आगतः ख। अविच्छेदेनलब्धागते भट्टिः ५सर्गः। [युगीन तत्र साधौ त्रि०।

**परयुग** न० कर्म०। उत्तरवर्त्तियुगे तत्र साधुः खञ्। पार-

**परर** पु० पृ-बा० अर। केशराजे त्रिका०।

**पररूप** त्रि० परस्य रूपमिव रूपमस्य। स्वोत्तरवर्त्तिपरस्यैव रूपवति "एङि पररूपम्" पा०।

**परलोक** पु० कर्म०। लोकान्तरे स्वर्गादौ। तत्र स्थितादि ठञ् अनुशतिका०द्विपदवृद्धिः। पारलौकिक तत्र स्थितादौ त्रि०

**परलोकगम** पु० परलोकं लोकान्तरं गमयति गम-णिच्-अच्। मृत्यौ हेमच०।

**परवत्** त्रि० परः नियोजकतयाऽस्त्यस्य मतुप् मस्य वः। पराधीने हेमच० स्त्रियां ङीप्।

**परवश** त्रि० परस्य वश आयत्तता यत्र। पराधीने हेमच०।

**परवाणि** पु० परं वाणयति वण-णिच्-इन्। १धर्माध्यक्षे २वत्सरे मेदि०। ३कुमारवाहने मयूरे शब्दमा०।

**परवाद** पु० ६त०। १परस्यापवादे कर्म०। २उत्तरवादे च।

**परवादिन्** पु०कर्म०। प्रत्यर्थिनि उत्तरवादिनि स्त्रियां ङीप्।

**परव्रत** पु० परं व्रतमस्य। धृतराष्ट्रे शब्दमाला।

**परश** पु० स्पर्श+पृषो०। स्पर्शमणौ यस्य स्पर्शात् इतरस्य धातोः स्वर्णता तादृशे रत्नभेदे ब्रह्मवै०जन्मख० ४अ०।

**परशव्य** त्रि० परशवे हितं यत्। परशुहिते

**परशु** पु० परं शृणाति शॄ-कु डिच्च। १परश्वधे (टाङ्गी) अस्त्रभेदे। स्पृश-कुन् पृ आदेशः। पर्शुरप्यत्र २अस्त्रमात्रे च। परशुलक्षणञ्च हेमा० कोशवनीतिप्रकाशोक्तं कुठारशब्दे २०७४ पृ० दर्शितम्।

**परशुराम** पु० परशुधारी रामः शा०त०। जमदग्निजे भगवदवतारभेदे येन परशुना त्रिःसप्तकृत्वो भूमिर्निःक्षत्रिया कृता। तल्लीलात्यादिकं यथा "अथ काले व्यतीते तु जमदग्निर्महातपाः। विदर्भराजस्य सुतां प्रयत्नेन जितां स्वयम्। भार्यार्थे प्रतिलभ्याह रेणुकां लक्षणान्विताम्। सा तस्मात् सुषुवे पुत्रान् चतुरो वेदसम्मतान्। रुमण्वन्तं सुषेणञ्च विश्वं विश्वावसुं तथा। पश्चात्तस्यां स्वयं जज्ञे भगवान् मधुसूदनः। कार्त्तवीर्यवधायाशु शक्राद्यैः सकलैः सुरैः। याचितः पञ्चमः सोऽभूत्तेषां रामाह्वयस्तु यः। भाराक्रान्तक्षोणीय जातः परशुना सह। सहजः परशुस्तस्य तं जहाति कदाच न। अयं निजपितामह्यास्वरभुक्तिविपर्ययात्। ब्राह्मणः क्षत्रियाचारो रामोऽभूत् क्रूरकर्मकृत्। स वेदानखिलान् ज्ञात्वा धनुर्वेदञ्च सर्वशः। स्वतातात् ततस्तस्मोऽभूद्वेदविद्याविशारदः" कालिकापु० ८५अ०।

**परशुधर** पु० परशुं धरति धृ-अच्। १गणेशे हला०। २परश्वधधारिमात्रे त्रि० ३जामदग्न्ये परशुरामे पु०।

**परशुमुद्रा** स्त्री मुद्राभेदे "तर्जनीमध्यमानामाकनिष्ठाङ्गुष्ठमुष्टिका। अधोमुखी दीर्घरूपा मध्यमा विन्यस्तमुद्रिका। परशुमुद्रा कथिता विज्ञिदा खड्गमुद्रिका" तन्त्रसारः।

**परशुवन** न० परशुवत्पत्रयुक्तं वनम् शा०त०। नरकभेदे भा०व० २२३अ०।

**परश्व(स्व)ध** पु० श्वि-ड श्वो वृद्धिः परस्य श्वं धयति, परस्य स्वं काष्ठं धयति वा धे-क। कुठारे अस्त्रभेदे अमरः।

**परश्वस्** अव्य० परः श्वस्+पृषो०। आगामिदिनात् परदिने अमरटीका।

**परस्** अव्य० परस्मात् परस्मिन् परो वा पर+पञ्चम्याद्यर्थे वा० असि। पञ्चम्याद्यर्थवृत्तौ परशब्दार्थे यजु० १।४२

**परसंज्ञक** पु० परः संज्ञाऽस्य कप्। देहादिभ्यः परस्मिन् आत्मनि शब्दच०।

**परसवर्ण** पु० समानवर्णः सवर्णः ६त०। परेण उत्तरवर्त्तिना वर्णेन समानवर्णे पा० ८।४भा०।

**परस्तर** त्रि० तरस्तरणीयः परः सातिशयस्तुतत्त्वं तरः पारस्करा०। अतिशयेन तरणीये ऋ० १०।१५५।२

**परस्तात्** अव्य० पर+पञ्चम्याद्यर्थे अस्ताति। पञ्चम्याद्यर्थवृत्तौ परशब्दार्थे परस्तात् ग्रामः ग्रामात् ग्रामे वा।

**परस्त्री** स्त्री ६त०। परकीयायां स्त्रियां तत्र भवादि अण् ननामम: अनुशतिका०द्विपदवृद्धिः। पारस्त्रैण परस्त्रियां भवादौ त्रि०।

**परस्पर** त्रि० "सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्" वार्त्ति० "समासवद्भावे पूर्वपदस्य सुर्वक्तव्यः" वार्त्ति० सुः। इतरेतरशब्दार्थे अत्र स्त्रीक्लीबयोस्तु "स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेरामभावो वक्तव्यः" वार्त्ति० आम् परस्परामित्येव। भट्टिः २सर्गे उदा०।

**परस्मैपद** न० परस्मै परोद्देशार्थफलकं पदम् "वैयाकरणाख्यायां चतुर्थ्याः" अलुक्समा०। पाणिनिपरिभाषितेषु लकारादेशानामष्टानां मध्ये प्रथमेषु तिप्तस्झीत्यादिषु नवसु। "शेषात् कर्त्तरि परस्मैपदम्" पा०

"आत्मनेपदनिमित्तहीनात् धातोः परस्मैपदं स्यात्" सि॰कौ॰ आत्मनेपदनिमित्तं च "कर्त्त्रभिप्राये क्रियाफले" इत्युक्तं कर्तृगामिक्रियाफलत्वं तच्छून्यत्वेन परगामिक्रियाफलबोधयोग्यत्वादस्य परस्मैपदत्वसंज्ञेति बोध्यम्। एवं परस्मैभाषाऽप्यत्र।

**परा** अव्य॰ पॄ—आ। १प्रातिलोम्ये २प्राधान्ये ३धर्षणे ४आभिमुख्ये ५त्याने ६विक्रमे ७भृशार्थे ८गतौ ९भङ्गे १०अनादरे ११तिरस्कारे १२प्रत्यावृत्तौ च मेदि॰ "परा वधगतिदर्शनविक्रमाभिमुख्यभृशाधीनमोक्षणप्रातिलोम्येषु" गणरत्नटीकोक्तार्थभेदे क्रमादुदाहृतं यथा पराहतः परागतः परादृष्टः पराक्रान्तः परावृत्तः पराजितः पराधीनः परासृतः पराङ्मुखः"। १३अन्याककोक्तां "परा वागनपायिनी"इत्युक्ते १४मूलाधारस्थे शब्दभेदे "सा परा ययाऽक्षरमधिगम्यते"इति श्रुत्युक्तायां १५ब्रह्मविद्यायाञ्च स्त्री।

**पराक** पु॰ प्रायश्चित्तरूपे व्रतभेदे यथाह प्राय॰वि॰ "यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम्। पराको नाम कृच्छ्रोऽयं सर्वपापापनोदनः" मनुः। "जपहोमरतः कुर्य्याद्द्वादशाहमभोजनम्। पराक एष विख्यातः सर्वपापप्रणाशनः"बृहस्पतिः।"पराके पञ्च धेनवः"इत्युक्तेः पराकस्य पञ्चधेनुतुल्यत्वम्। यथाह अङ्गिराः "षड्भिर्वर्षैः कृच्छ्रचारी ब्रह्महा तु विशुध्यति। मासि मासि पराकेण त्रिभिर्वर्षैर्व्यपोहति"। अत्र षड्भिर्वर्षैः साशीतिशतप्राजापत्यानि पूर्वोक्तानि तथा प्रतिमासेकैकपराकेण वर्षे द्वादश पराकाः वर्षत्रये षट्त्रिंशत्पराकाः। ततश्च षट्त्रिंशत्पराकाशीत्युत्तरप्राजापत्यशतयोः प्रत्येकं ब्रह्मवधपापक्षयैककार्य्यकरत्वात् तुल्यत्वम्। षट्त्रिंशतश्च पञ्चगुणमशीत्युत्तरशतं भवतीति"प्रा॰त॰।

**पराके** अव्य॰ परा+अक-बा॰ डे। दूरे निघण्टुः।

**पराकाश** पु॰ वाचा प्रतिज्ञातस्यार्थस्य कर्मणाऽकृतस्य परीक्षायाम् शत॰ब्रा॰ १४।८।४।११ भाष्यम्। [राजनि॰

**पराक्पुष्पी** स्त्री पराक् पुष्पं यस्याः ङीप्। अपामार्गे

**पराक्रम** पु॰ परा+क्रम—करणे घञ् न वृद्धिः। बले देहसामर्थ्ये अमरः।

**पराग** पु॰ परागच्छति परा+गम—ड। १धूलिमात्रे २पुष्परजसि माघः ६।१ ३स्नानीयद्रव्ये कुङ्कुमचूर्णादौ अमरः। ४उपरागे ५चन्दने च मेदि॰ ६स्वच्छन्दगतौ शब्दच॰।

**पराङ्ग** न॰ ६त॰। १अन्यस्याङ्गे "पराङ्गवत् स्वरे" पा॰ २श्रेष्ठाङ्गे। [१शिवे २छत्रकष्टाङ्गयुक्ते त्रि॰।

**पराङ्गद** पु॰ परमङ्गदमस्य छत्रकष्टाङ्गेन दायति दै—क वा।

**पराङ्गव** पु॰ पराङ्गम् छत्रकष्टाङ्गं जलहस्त्या वाति वाति वा—क। समुद्रे त्रिका॰।

**पराङ्मुख** त्रि॰ पराक् मुखमस्य। १विमुखे २क्रियादौ प्रतीपाचारिणि स्त्रियां ङीप्। ३निवृत्तमात्रे "कामवीजं मुखे माया शिरस्यङ्कुशमेव च। असौ पराङ्मुखः प्रोक्तो मध्ये तु विन्दुलाञ्छितः"तन्त्रसारोक्ते ४मन्त्रभेदे पु॰

**पराच्** त्रि॰परा—अञ्चति—क्विप्। १प्रतिलोमगामिनि २अर्द्ध्वगामिनि च "ये चामुष्मात् पराञ्चो लोकाः" छा॰उ॰। ३अप्रत्यगात्मनि परमात्मादौ पु॰। पुंसि सर्वनामस्थाने पराङ् पराञ्चौ इत्यादि स्त्रियां ङीप्। पराची। पराञ्चति क्विप्। ४परगामिनि बाह्यपदार्थबोधके ५प्रत्यगात्मभिन्ने च "पराञ्चि खानि व्यतृणत् स्वयम्भूः, तस्मात् पराङ् पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" कठोप॰। "पराञ्चि परागञ्चन्तीति खोपलक्षितानि श्रोत्रादीनीन्द्रियाणि खानीत्युच्यन्ते। तानि पराञ्च्येव शब्दादिविषयप्रकाशनाय प्रवर्त्तन्ते। यस्मादेवं स्वाभाविकानि तानि व्यतृणद्धिंसितवान् हननं कृतवानित्यर्थः। कोऽसौ स्वयम्भूर्यः परमेश्वरः स्वयमेव स्वतन्त्रो भवति सर्वदा न परतन्त्र इति। तस्मात् पराङ् प्रत्यग्रूपभिन्नानात्मभूतान् शब्दादीन् पश्यत्युपलभते नान्तरात्मन् नान्तरात्मानमित्यर्थः। एवं स्वभावेऽपि सति लोकस्य कश्चिन्नद्याः प्रतिस्रोतःप्रवर्त्तनमिव धीरो धीमान् विवेकी प्रत्यगात्मानं प्रत्यक् चासावात्मा चेति प्रत्यगात्मा प्रतीच्येवात्मशब्दो रूढो लोके नान्यस्मिन् व्युत्पत्तिपक्षेऽपि तत्रैवात्मशब्दो वर्त्तते "यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्यते" इत्यात्मशब्दव्युत्पत्तिस्मरणात्। तं प्रत्यगात्मानं स्वस्वभावमैक्षत् पश्यतीत्यर्थः छन्दसि कालानियमात्। कथं पश्यतीत्युच्यते। आवृत्तचक्षुरावृत्तं व्यावृत्तं चक्षुः श्रोत्रादिकमिन्द्रियजातमशेषविषयाद्यस्य स आवृत्तचक्षुः स एवं संस्कृतः प्रत्यगात्मानं पश्यति। न हि बाह्यविषयालोचनपरत्वं प्रत्यगात्मेक्षणञ्चैकस्य सम्भवतीति। किमिच्छन् पुनरित्थं महता प्रयासेन स्वभावप्रवृत्तिनिरोधं कृत्वा धीरः प्रत्यगात्मानं

पश्यतीत्युच्यते अमृतत्वममरणधर्मत्वं नित्यस्वभावता-मिच्छन्नात्मन इत्यर्थः” भा०।

**पराचित** त्रि० परेणाचितः। परपुष्टे अमरः।

**पराची** स्त्री परा–अन्च–क्विप् ङीप्। अनुलोमेनानावृत्तायां ऋचि “तिसृभ्यो हिङ्करोति स पराचीभिः” ताण्ड्य०ब्रा० २परिवर्त्तिन्यां दिक्‌तौ च “सैषा पराची” भा० परा-चीभिरनावृत्ताभिः ऋग्भिर्गीयते यथा प्रथमे पर्याये अनावृत्ताभिर्गानं तथोत्तरयोरपीति” भा०।

**पराचीन** त्रि० पराचि भवः ख। १उत्तरकालभवे २परा-ङ्मुखे अमरः।

**पराचैस्** अव्य० परा–चि डैसि। दूरे निघण्टुः ऋ०१।२४ ६

**पराजय** पु० परा+जि–अच्। पराभवे (हारि) अमरः।

**पराजित** त्रि० परा+जि–कर्मणि क्त। पराभूते कृतपराजये।

**पराञ्ज** पु० परतोऽज्यते अनुज–वा० अच्। १तैलयन्त्रफेने २छुरिकाफले च शब्दर०। ल्युट्। पराञ्जनमप्यत्र न०।

**पराण्** पु० परा+अन–क्विप् “अनः” पा०(प्रह्रान्तस्य निमित्तत्वं व्यादुपसर्गस्थात् निमित्तात् परस्येत्)णत्वम्। जीवन्मुक्ते एवं प्राण् इत्यादावपि णत्वम्।

**परात्पर** पु० परस्मात्परः अलुक्‌स०। १गुरुभेदे परमेष्ठिन्-शब्दे दृश्यम्। २परमेश्वरे तस्य सर्वेभ्यः परत्वात् तथा-त्वम्। “इन्द्रियेभ्यः परे ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः। महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः” कठवल्ली गीता च “परात्परं पुरुषमुपैति दिव्यम्” श्रुतिः।

**परात्प्रिय** त्रि० परेणाद्यते अद–भावे क्विप् तत्र परस्यादने प्रियम्। (उलु) तृणभेदे शब्दच०।

**परात्मन्** पु० कर्म०। १परमात्मनि हेत०। २परस्यात्मनि च।

**परादन** पुंस्त्री० परस्तत्कृष्टमदनं यस्य। पारस्यदेशोद्भवेऽश्वे (आरवीघोड़ा) त्रिका०।

**परादान** न० परस्मै आदानं सम्यग् दानम्। परोपकाराय दयादिना कृपणादिभ्यः सम्यग्दाने यजु० १८।६४ वेद-दीपे दृश्यम्।

**पराधि** पु०हेत०। १अन्यस्याधौ कर्म०। २परममानसव्यथायाम्।

**पराधीन** त्रि० पर+ङि अधि इति अलौकिकवाक्ये समासे अध्युत्तरपदात् ख, परस्याधीनो वा। परायत्ते अमरः।

**परान(ख)सा** स्त्री पराचिलनया परा+अन–करणे वा० अच। चिकित्सायां शब्दच०। अलमध्यस्तु साधुः।

**परान्तक** पु० परोऽन्तकः। सर्वनाशके महादेवे काशीख० दृश्य०। “मृत्युर्यस्योपसेचनम्” इति श्रुतेः तस्य मृत्योर्ना-शकत्वात् परान्तकत्वम्।

**परान्तकाल** पु० परः संसारोत्तरं अन्तकालः। मुमुक्षूणां संसारहानौ देहान्तकाले “ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे”मुण्ड०३।२।६ संसारिणां ये मरणकालास्ते अन्तकालास्तानपेक्ष्य मुमुक्षूणां संसार-हानौ देहपरित्यागकालः परान्तकालः”भा०। वस्तुतः कार्यब्रह्मणः आयुःकालरूपपरशब्दार्थस्यान्तकालः प-रान्तकालः “कार्यात्यये तदध्यक्षेण सहातः परमा-त्मानादिति” शा० सूत्रे तत्काले तेषां लयश्रोक्तेः ब्रह्मलोकेषु इति विशेषणाच्च तत्रैव तेषां मोक्ष इत्येव युक्तम्।

**परान्तिका** स्त्री “अस्य युक्तरचिता परान्तिका” इ०र०उक्ते गीतिरूपमात्रावृत्तभेदे अपरान्तिकेति तत्र पाठे तत्रार्थे

**परान्न** न० हेत०। १अन्यस्वामिकभक्तपिष्टकादौ। २परकृत-मन्नपाकजद्रव्यमात्रे ३परपक्वान्ने च।

व्रतादौ परान्नस्य त्याज्यत्वं यथा “परान्नं परवासश्च नित्यं धर्मरतस्त्यजेत्”इति स्मृतिः। संयमदिने तस्य त्या-ज्यत्वं यथा “कांस्यं मांसं मसूरञ्च चणकं कोरदूषकम्। शाकं मधु परान्नञ्च त्यजेदुपवसन् स्त्रियम्”। पारणदिने तस्य त्याज्यत्वं यथा “अभ्यङ्गञ्च परान्नञ्च तैलं निर्मा-ल्यलङ्घनम्। तुलसीचयनं द्यूतं पुनर्भोजनमेव च। वस्त्रपीड़ां तथा क्षारं द्वादश्यां वर्जयेद्बुधः” एका०त०। तद्भोक्तुर्यागादिविफलत्वं यथा “परपाकेण पुष्टस्य द्विजस्य गृहमेधिनः। इष्टं दत्तं तपोऽधीतं यस्यान्नं तस्य तद्भवेत्”। तद्भुक्त्वा पुत्रोत्पादने दोषो यथा “यस्यान्नेन तु भुक्तेन भार्य्यां समधिगच्छति। यस्यान्नं तस्य ते पुत्रा अन्नाद्रेतः प्रवर्त्तते” ब्राह्मणादिपरस्वा-मिकान्नभोजने दोषो यथा “ब्राह्मणान्नेन दारिद्र्यं क्ष-त्रियान्नेन प्रेष्यताम्। वैश्यान्नेन तु शूद्रत्वं शूद्रान्ने-र्नरकं व्रजेत्” इत्येकादशीत०। परान्नभोजनेन तीर्थगमने फलस्याल्पत्वं यथा “षोडशांशं स लभते यः परान्नेन गच्छति। अर्द्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति” प्राय०त०। महागुरुनिपाते तस्य त्याज्यत्वं यथा “अन्य-न्नाद्यं परान्नञ्च गन्धं माल्यञ्च मैथुनम्। वर्जयेद्गुरु पाते तु यावत् पूर्णो न वत्सरः” शुद्धित०। तद्भोक्तुर्न्य-स्निद्रिहानिर्यथा “जिह्वा दग्धा परान्नेन करौ दग्धौ

प्रतिषेधात्। मनो दग्धं परस्त्रीभिः कथं विद्भिरिनानने तन्न॰ तद्भोजने प्रतिप्रसवो यथा "गुर्वङ्गं मातुलाग्रं वा श्वशुराद्यं तथैव च। पितुः पुत्रस्य चैवान्नं न पराह्नमिति स्मृतिः" एकादशीत॰।

**पराप** त्रि॰ परामता आपोयतः अच्समा॰ वा अतदैत्वम्। परागतजलापादने। पक्षे दैत्वे परेप तत्रार्थे।

**परापर** न॰ परमापिपर्त्ति आ+पृ—अच्। १पक्षभक्षे भावप्र॰ २देवताकृपे गुरुभेदे परात्पर इत्यत्र पाठान्तरम्। परमेष्ठिनृपवदे दृश्यम्। परश्च अपरश्च द्वन्द्वः। ३परत्वापरत्वयुक्ते तस्य भावः त्व परापरत्व तद्भावे न॰ "परापरत्वधीर्हेतुरेका नित्या दिगुच्यते" भाषा॰।

**परापुर्** स्त्री परा स्थूलाः पुरः समासान्तविधेरनित्यत्वात् न समासान्तः। स्थूलदेहे यजु॰ २।१॰।

**पराभव** पु॰ परा+भू—अप्। १तिरस्कारे २अभिभवे ३विनाशे च मेदि॰। आर्षे तु ऋदोरप् बाधित्वा क्वचित् घञ्। पराभाव तत्रार्थे भा॰भी॰ ४२अ॰ उदा॰।

**पराभिक्ष** पु॰ परमाभिक्षते आ+भिक्ष—अच् उप॰स॰। परस्माद्धे भिक्षाया ईषत्कारके वानप्रस्थभेदे "अश्मकुट्टास्तथाः केचित् पराभिक्षास्तथापरे" हरिवं॰२६८अ॰।

**परामर्श** पु॰ परा+मृश—भावे घञ्। १युक्तौ २विवेचने ३न्यायोक्ते अनुमितिकारणे ज्ञानभेदे यथोक्तं "व्याप्तस्य पक्षधर्मत्वधीः परामर्श उच्यते" भाषा॰ "व्याप्तस्य पक्षधर्मत्वधीरिति। व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहिज्ञानमनुमितिजनकम्। तच्च व्याप्यः पक्ष इति ज्ञानम्। पक्षो व्याप्यवानिति वा। अनुमितिस्तु पक्षो व्याप्य इति ज्ञानात् पक्षे साध्यम् इत्याकारिका। पक्षो व्याप्यवानिति ज्ञानात् पक्षः साध्यवानित्याकारिका। द्विविधादपि परामर्शात् पक्षः साध्यवानित्येवानुमितिरित्यन्ये। ननु वह्निव्याप्यधूमवान् पर्वत इति ज्ञानं विनापि यत्र पर्वतो धूमवानिति प्रत्यक्षं ततो धूमो वह्निव्याप्य इति स्मरणं भवति तत्र ज्ञानद्वयादनुमितिदर्शनात् व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं सर्वत्र न कारणं किन्तु व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्वम् आवश्यकत्वात्। विशिष्टवैशिष्ट्यज्ञानकल्पने गौरवाच्चेति चेन्न व्याप्यतावच्छेदकाज्ञानेऽपि वह्निव्याप्यवानिति ज्ञानादनुमित्युत्पत्तेः। लाघवाच्च व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेनैव कारणत्वम्। किञ्च धूमवान् पर्वत इति ज्ञानादनुमित्यापत्तिः व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकधर्मताज्ञानस्य सत्त्वात्। न च तदानीं स्मृत्यभावव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य हेतुत्वमिति वाच्यम्। चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्मताज्ञानादनुमितिः स्यादिति। यदि तु तत्पुरुषीयस्मृत्यभावव्याप्यतावच्छेदकप्रकारकतत्पुरुषीयपक्षधर्मताज्ञानं तत्पुरुषीयानुमितौ हेतुरुच्यते तदा अनन्तकार्यकारणभावः। मन्मते तु समवायेन व्याप्तिप्रकारकपक्षधर्मताज्ञानं समवायेनानुमितिं जनयतीत्यतो नानन्तकार्यकारणभावः। यदि तु व्याप्तिप्रकारकं ज्ञानं पक्षधर्मताज्ञानञ्च स्वतन्त्रं कारणमित्युच्यते तदा कार्यकारणभावद्वयं वह्निव्याप्यो धूम आलोकवान् पर्वत इति ज्ञानादप्यनुमितिः स्यादिति। इत्यञ्च यत्र ज्ञानद्वयं तत्रापि विशिष्टज्ञानं कल्पनीयम् फलमुखगौरवस्यादोषत्वात्" सि॰मुक्ता॰। परामर्शस्तु अनुमितौ करणं व्याप्तिज्ञानरूपकरणजन्यत्वात् अनुमितिहेतुत्वाच्च यथोक्तं "व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत्" भाषा॰ "अनुमायाम् अनुमितौ व्याप्तिज्ञानं करणम् परामर्शो व्यापारः। तथा हि येन पुरुषेण महानसादौ धूमे वह्नेर्व्याप्तिर्गृहीता पश्चात् स एव पुरुषः क्वचित् पर्वतादौ अविच्छिन्नमूलां धूमलेखां पश्यति तदनन्तरं धूमो वह्निव्याप्य इत्येवं रूपं व्याप्तिस्मरणं भवति। पश्चाच्च वह्निव्याप्यधूमवानयमिति ज्ञानं भवति स एव परामर्श इत्युच्यते। तदनन्तरं पर्वतोऽयं वह्निमानिति ज्ञानं जायते। तदेवानुमितिः" सि॰मुक्ता॰। तत्र विवेचनं च युक्त्या सूतार्थावधारणम् "नोपदेशश्रवणेऽपि क्वतकृत्यता परामर्शादृते विरोचनवत्" सा॰सू॰ "परामर्शो गुरुवाक्यतात्पर्यनिर्णायको विचारः" भा॰।

**परामृत** न॰ परमस्मृतं यस्मात्। मेघादिवर्षणे त्रिका॰।

**परामृष्ट** त्रि॰ परा+मृश—क्त। १संबद्धे "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" पात॰सू॰। २कृतपरामर्शे यस्य वाक्यस्य तात्पर्यावधारणं कृतम् तस्मिन् वाक्ये। साध्यव्याप्यतया हेतुमत्त्वेन ज्ञाते ३पक्षे च।

**परायण** न॰ परमयनं स्थलम्। १अत्यन्तासक्तौ २तत्पराश्रये च हेम॰। ३अत्यासक्ते यथा धर्मपरायणः धर्मे अत्यन्तासक्तः। ४तत्परे ५अभीष्टे च त्रि॰ मेदि॰ परमश्रेष्ठं पुनरावृत्तिरहितं स्थानमस्य। ६विष्णौ पु॰ "निष्ठा शान्तिः परायणः" विष्णु स॰।

**परायति** स्त्री परा+अय—गतौ बा॰ क्तिन्। प्रत्यग् गन्तरि

ऋ०८।७।७भाष्ये दृश्यम्। आ+यम—क्तिन परस्यायतिः आयत्तता यत्र। २पराधीने त्रि० कर्म०। ३उत्कृष्टायामायतौ उत्तरकाले स्त्री। बहु० ४तद्युते त्रि०।

**परायत्त** त्रि०। पराधीने हेमच०।

**परारि** अव्य० पूर्वतरे वर्षे पूर्वतर+अरि नि० परादेशः। १पूर्वतरवत्सरे गतत्तृतीयवत्सरे। अस्य च सप्तम्यर्थमात्रवृत्तित्वम्। ततः भवार्थे त्न। परारित्न तत्र भवे त्रि०। परोऽरिः। २अत्यन्तशत्रौ पु० [हारा०।

**पराक्** पु०पराच्चति परा+अञ्च—उण्। कारवेल्लवृक्षे (उच्छा)

**पराक्क** पु० परा+अञ्च—उक। प्रस्तरे त्रिका०

**परार्थ** त्रि० परस्मै इदम् "अर्थेन सह नित्यसमासोविशेष्यनिघ्नता च" वार्त्ति० अर्थेन सह नित्यं चतुर्थीति०। १परनिमित्तके। परः अर्थो उद्देश्यो यस्य वा तत्रार्थे हेत०। २परप्रयोजनादौ पु।

**परार्द्ध** न० अद्ध—अच् कर्म०। १चरमसंख्यायां "पारे परार्द्धं गणितं यदि स्यात्" नैषधम्। "अवधिरन्त्यं मध्यं परार्द्धमिति दशगुणोत्तराः संख्याः" लीला० तस्य सर्वश्रेष्ठतया उत्कृष्टत्वात्। परस्य ब्रह्मणः आयुषोऽर्द्धं विद्यते। ब्रह्मण आयुषो २द्वितीयार्द्धे।

**परार्द्ध्य** त्रि० परार्द्धं चरमसंख्यामुपचारात् श्रेष्ठत्वमर्हति यत्। श्रेष्ठे "परार्द्ध्यवर्णास्तरणेति" रघुः।

**परावत्** अव्य० परा+अव—वा० अति। १दूरदेशे निघण्टुः २प्रकृष्टतमे च ऋ०१।३५।२। "परः परावतोऽयमस्ति" का०उ० भाष्ये तथा व्याख्यानात्।

**परावत** न० परा+अव—वा० अतच्। पद्मके राजनि०।

**परावरा** स्त्री परं चावरञ्च विषयत्वेनास्त्यस्या अच्। १विद्याभेदे "भारद्वाजोऽङ्गिरसे परावराम्" मुण्ड० "परावराम् परस्मात् परस्मादवरेण प्राप्तेति परावराम् परावरसर्वविद्याविषयव्याप्तेर्वा तां परावरामङ्गिरसे प्राहेत्यनुषङ्गः" भा०। परस्मादप्यवरः। २श्रेष्ठतमे त्रि०।

**परावर्त्त** पु० परा+वृत—घञ्। १परीवर्त्ते २विनिमये हेमच० ३प्रत्यावृत्तौ च।

**परावसु** पु० परागतं वस्वाख्यं वसु धनं यस्मात् प्रा०ब०। असुराणां होतृभेदे "निरस्तः परावसुरिति परावसुर्ह वै नामासुराणां होता स तमेवैतद्धोतृषदनान्निरस्यति" शत०ब्रा० १।५।१।२३। २रैभ्यमुनिपुत्रभेदे भा०व०१३५अ०। ३गन्धर्वभेदे भाग० ८।११।२४

**परावह** पु० परामहति परा+वह—अच्। सप्तवायुमध्ये परिवहवायोरूर्द्ध्वस्थे वायुभेदे अनिलशब्दे १६४ पृ० आवहशब्दे ८२८पृ० च दृश्यम्। [माले त्रि०।

**पराविद्ध** पु० परा+व्यध—क्त। १कुबेरे शब्दमा० २प्रत्याविद्ध-

**परावृज्** पु० परावृनक्ति तपसा पापं वर्जयति परा+वृजी वर्जने क्विप्। ऋषिभेदे ऋ०१।११२।८

**परावृत्ति** स्त्री परा+आ+वृत—क्तिन्। १प्रत्यावृत्तौ येन यथागतिस्तत्तथेन पुनरावृत्तौ हरिवं० ५६अ०। २परिवर्त्ते च परिवर्त्तिनुशब्दे दृश्यम्।

**परावेदी** स्त्री परमुत्कर्षमाविन्दति विद—लाभे अच् गौरा० ङीष्। बृहत्याम् शब्दकल्पद्रु०।

**पराशर** पु० परान् आ+शृणाति आ+शॄ हिंसायां अच्। १नागभेदे भा०आ० ५७अ०। २इन्द्रे यातूनां पराशरणात् तथात्वं "इन्द्रो यातूनामभवत् पराशरः" ऋ० ७।१०४।२१ इति श्रुतेः। "पराशरः पराशीर्णस्य वसिष्ठस्य वशिष्ठस्य (कुले) जज्ञे" निरुक्तोक्तेः पराशीर्णस्य स्थविरवसिष्ठस्य कुले जातत्वात् वसिष्ठपुत्रशक्तिपुत्रे अदृश्यन्तीगर्भजाते ३ऋषिभेदे तज्जन्मकथा भा०आ० १७८अ०। तन्नामनिरुक्तौ तत्राध्याये "पराशुः स यतस्तेन वसिष्ठः स्थापितो मुनिः। गर्भस्थेन ततो लोके पराशर इति स्मृतः" "पराशोरायासन मवस्थानं येन स पराशरः। आङ्पूर्वाच्छ्यतेः डरन् गोलकशब्दः" पृषो० सुबोधः। तासत्यवत्यां तस्य च कृष्णद्वैपायनस्य पिता द्वैपायनशब्दे दृश्यम्। तेन च कलिकर्त्तव्यधर्मसंहिता चक्रे सा च द्वादशाध्यायात्मिका तत्र १अ० युगभेदे धर्मभेदसंहिताभेदादिकथनम्। २अ० कलौ ब्रह्मस्वधर्मः। ३अ०अशौचम् आत्महत्यादिदोषाः। ४अ० प्रायश्चित्तविशेषान्तर्भिकर्त्तव्यतोक्तिः। ६अ० प्राणिहत्याप्रायश्चित्तादि। ७अ० द्रव्यशुद्ध्यादि। ८अ० गोवधादिप्रायश्चित्तम्। ९अ० गोवधापवादादि। १०अ० अगम्यागमनादि प्रायश्चित्तम्। ११अ० अमेध्यादिभक्षणप्रायश्चित्तम्। १२अ० प्रायश्चित्ताङ्गस्नानभेदादि। पराशरेण प्रोक्तम् अण्। पाराशर पराशरप्रोक्ते त्रि० चक्रदत्तप्रदर्शिते घृतभेदे न० "यष्टी बला गुडूच्यल्पपञ्चमूली तुलां पचेत्। शूर्पेऽष्टभागशेषे तत्र पात्रे पचेद् घृतम्। धात्रीविदारीक्षुरसे त्रिपात्रे पयसोऽर्मणे। सुपिष्टैर्जीवनीयैश्च पाराशरमिदं घृतम्। स यैत्यं राजयक्ष्माणमुन्मूलयति शोषितम्"। स्त्रियां ङीप्। "कलौ पाराशरी स्मृतिः" पराशरः।

**प(पा)राशरिन्** ब॰व॰ पराशरस्यापत्यम् गर्गा॰ यञ् पाराशर्य्येण व्यासेन प्रोक्तं भिक्षुसूत्रं शारीरकसूत्रमधीयते “पाराशर्य्यशिलालिभ्यां भिक्षुनटसूत्रयोः” पा॰ बहुत्वे णिनेर्वा लोपः। भिक्षुसूत्राध्येतृषु शुभो॰ लुक्‌ः इति भरतः तन्मूलम् मृग्यम्। तथाऽमरे एकवचनत्वोक्तिर्निर्मूला बहुत्वे एव तद्विधानात्।

**पराश्रय** त्रि॰ परः आश्रयो यस्य। १अन्याश्रिते वृक्षोपरिजातायां लतायां २वन्दायां स्त्री शब्दच॰। [अमरः।

**परासन** न॰ परा+अस-क्षेपे भावे ल्युट्। मारणे वधे

**परासु** त्रि॰ परागता असवोऽस्य। मृते गतप्राणे अमरः।

**परास्कन्दिन्** त्रि॰ परमास्कन्दति आ+स्कन्द–णिनि। चौरभेदे (डाकाइत) अमरः।

**पराह** पु॰ परश्चासौ अहः टच्‌समा॰। “अह्नाह्नाः पुंसि” पा॰ पुंस्त्वम्। परस्मिन् दिने।

**पराह्ण** पु॰ परः परभागोऽह्नः एकदेशिस॰ टच् अह्नादेशः णत्वञ्च। दिनस्य परभागे अपराह्णे।

**परि** अव्य॰ पृ–इन्। १समन्ततोभावे २व्याप्तौ ३दोषकथने ४भूषणे ५आश्लेषे ६पूजने ७वर्जने ८मर्य्यादायाम् ९आच्छादने शब्दरत्नावली। तत्र च क्रमेणोदाहृतं यथा “१परिभ्रमति २परिव्यतः ३परिवादः ४परिष्करोति। ५परिष्वजते ६परिचरति ७परि त्रिगर्त्तात् ८परिच्छिद्यते वासः ९परिदेवनम्” १०व्याधौ ११शेषे च मेदि॰। १२उपरमे १३शोके हेमच॰ १४सन्तोषभाषणे शब्दरत्ना॰ अस्य उपसर्गत्वमर्थभेदे कर्मप्रवचनीयत्वञ्च पा॰ उक्तं यथा “लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्य्यनवः” पा॰ “एष्वर्थेषु विषयभूतेषु प्रत्यादयः कर्मप्रवचनीयसंज्ञाः स्युः। लक्षणे वृक्षम्प्रति पर्य्यनु वा विद्योतते विद्युत्। इत्थम्भूताख्याने भक्तो विष्णुम्प्रति पर्य्यनु वा। भागे लक्ष्मीर्हरिम्प्रति पर्य्यनु वा हरेर्भाग इत्यर्थः। वीप्सायाम् वृक्षं वृक्षं प्रति पर्य्यनु वा सिञ्चति। अत्रोपसर्गत्वाभावान्न षत्वम्। एषु किम् परिषिञ्चति” सि॰कौ॰ “अधिपरी अनर्थकौ” पा॰ “उक्तसंज्ञौ स्तः। कुतोऽध्यागच्छति। कुतः पर्य्यागच्छति। गतिसंज्ञाबाधात् गतिर्गताविति निघातो न” सि॰कौ॰। “अपपरी वर्जने” पा॰ एतौ वर्जने कर्मप्रवचनीयौ स्तः “पञ्चम्यपाङ्परिभिः” पा॰ एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात्। अप हरेः परि हरेः संसारः। परिरत्र वर्जने लक्षणादौ तु द्वितीया हरिम्परि। उपरमे परिश्रान्तः शोके परिदेवनम्। “अक्षशलाकासंख्याः परिणा” पा॰ द्यूते व्यवहारे पराजये च अक्षादीनां परिणा समासः। न पूर्वनिपातः द्यूते अक्षं विपरीतं वृत्तम् अक्षपरि। एवं शलाकापरि एकपरि इत्यादि। सन्तोषे परितोषः। “परेश्च घाङ्कयोः” पा॰ रस्य वा लः। परिघः पलिघः पर्य्यङ्कः पल्यङ्कः।

**परिंश** पु॰ वेदे ऋ॰ १।१८७।८ भाष्यम्।

**परिकथा** स्त्री परितः कथा। कथाभेदे “अथ वाङ्मयभेदाः स्युः सम्पूः खण्डकथा कथा। आख्यायिका परिकथा कलापकविशेषकौ” त्रिका॰।

**परिकम्प** पु॰ परिकम्पते अनेन परि+कम्प–करणे घञ्। १भये। भावे घञ्। २परितः कम्पे च

**परिकर** पु॰ परि+कृ–अप्। १पर्य्यङ्के २परिवारे ३समारम्भे च अमरः ४समूहे ५प्रगाढगात्रबन्धे हेमच॰ ६विवेके मेदि॰ ७सहकारिणि च विश्वः।

**परिकर्त्तृ** पु॰ अनूढज्येष्ठे कनिष्ठस्य विवाहसंस्कारकर्त्तरि याजके परिवेत्तृशब्दे दृश्यम्।

**परिकर्मन्** न॰ परि+कृ–मनिन्। १कुङ्कुमादिनाऽङ्गादेः २संस्कारे अङ्कानां गुणभागादौ च। योगवियोगगुणभागवर्गवर्गमूलघनघनमूलात्मकं परिकर्माष्टकं तथाविधं भिन्नपरिकर्माष्टकं च लीला॰ उक्तं दृश्यम्। योगशास्त्रप्रसिद्धे चित्तस्य प्रसादनोपाये ३मैत्र्यादौ उभेषामङ्के दृश्यम् परितः कर्मास्य। ४परिचारके त्रि॰ रत्नमा॰ परिकर्म कार्यं तयाऽन्यस्य क्रीडा॰ इनि। परिकर्मिन् परिकर्मकारके आश्व॰ श्रौ॰ २।४

**परिकर्ष** पु॰ परि+कृष–भावे घञ्। समाकर्षणे कर्षस्य वर्जनम् अव्ययी॰। कर्षवर्जने अव्य॰ निरुक्त॰ तस्यान्तोदात्तता

**परिकलित** न॰ परि+कल–भावे क्त। आकलने तत्कृतमनेन इष्टादि॰ इनि परिकलितिन् तस्य कर्त्तरि। स्त्रियां ङीप्।

**परिकाङ्क्षित** पु॰ परित्यक्तं काङ्क्षितं स्रक्चन्दनाद्यभिलाषो येन प्रा॰ब॰। तपस्विनि शब्दच॰ [हेमच॰।

**परिकूट** न॰ परिभूषितं कूटम् प्रा॰त॰। पुरद्वारकूटके हस्तिनखे

**परिकूल** न॰ परितः कूलम्। उभयतःस्थितकूले निरुक्त॰ अस्यान्तोदात्तता। [त्वात्तत्वम्। परिकूलोऽपि तथात्वतः।

**परिकेश** अव्य॰ केशस्योपरि। केशोपरिभागे निरुक्त॰ अन्तोदा-

**परिक्रम** पु॰ परि+क्रम–भावे घञ् न वृद्धिः। १समन्तात् भ्रमणे २प्रदक्षिणीकरणे ३क्रीडार्थं पद्भ्यां गमने च। तत्र पृथिव्याः परिक्रमे फलादिकमुक्तं वराहपु॰ “स्पृष्टु

मन्ये ! महापुण्यं पृथिव्यां सर्वतो दिशम् । परिक्रम्य यथाध्यानं प्रमाणमथितं शुभम् । भूम्याः परिक्रमे सम्यक् प्रमाणं योजनानि च । षष्टिकोटिसहस्राणि षष्टिकोटीशतानि च । तीर्थान्येतानि देवाश्च तारकाश्च नभस्तले । गणितानि समस्तानि वायुना अमृतायुषा । ब्रह्मणा लोमशेनैव नारदेन ध्रुवेण च । जाम्बवता सपुत्रेण रावणेन हनूमता । एतैरनेकधा देवैः ससागरवना मही । भ्रमिता वालिना चैव वाहामक्षुरेखया । अन्तरे भ्रमणेनैव सुग्रीवेण महात्मना । तथा च पूर्वदैवेन्द्रैः पञ्चभिः पाण्डुनन्दनैः । योगसिद्धैस्तथा कैश्चिन्मार्कण्डेयमुखैरपि । भ्रमिता न भ्रमिष्यन्ति न पूर्वे नापरे जनाः । अल्पसत्त्वबलोपेतैः प्राणिभिरल्पबुद्धिभिः । मनसापि न शक्यन्ते गमनस्य च का कथा । सप्तद्वीपे तु तीर्थानि भ्रमणाद्यत् फलं भवेत् । प्राप्यते चाधिकं तस्मात् मथुरायाः परिक्रमे । मथुरां समनुप्राप्य यस्तु कुर्यात् प्रदक्षिणम् । प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा । तस्मात् सर्वप्रयत्नेन सर्वकामानभीप्सुभिः । कर्त्तव्या मथुरां प्राप्य नरैः सम्यक् प्रदक्षिणा"। ल्युट्। परिक्रमणं तत्रार्थे न० ।

**परिक्रमसह** पुंस्त्री परिक्रमं सहते सह—अच्। छागे त्रि० स्त्रियां जातित्वात् ङीष् ।

**परिक्रय** पु० परि+क्री—अच् । १विनिमये तुल्यरूपदानेन ग्रहणे "कोशात् रत्नार्द्धकोशेन सर्वकोशेन वा पुनः । शेष प्रकृतिरक्षार्थं परिक्रय उदाहृतः" कामन्द०। नियतकालं भृत्या २स्वीकरणे सि०कौ० तत्रार्थे करणस्य वा सम्प्रदानता शतेन शताय वा परिक्रीतः । ल्युट् । परिक्रयण तत्रार्थे न०"परिक्रयणे सम्प्रदानमन्यतरस्याम्" पा०

**परिक्रिया** स्त्री परितः क्रिया । १परिखादिना वेष्टने अमरः २एकाहयागभेदे"सद्यःक्रिया अनुक्रिया परिक्रिया वा स्वर्गकामः" आश्व०श्रौ० ८।५।१२ परिक्रियाख्य एकाहा भवति एषामन्यतमेन स्वर्गकामो यजेतेति" नारा०।

**परिक्षयन** पु० परि+क्षय—कर्त्तरि ल्यु। मेघे निरु० ६।१

**परिक्षय** पु० परि+क्षि—भावे अच् । नाशे मनुः ८।५८

**परिक्षाण** न० परि+क्षै—भावे ल्युट् । परीक्षायां "यानि परिक्षाणान्यासंस्ते कृष्णाः पशवोऽभवन्" ऐत०ब्रा० ३।३४

**परिक्षित्** पु०परिक्षीणे जयति वर्त्तते क्षि—क्विप्। १अभिमन्युपुत्रे नृपभेदे तन्नामनिरुक्तिः भा०सौ०१६अ० "विराटस्य सुतां पूर्वं स्नुषां गाण्डीवधन्वनः । उपप्लव्यगतां दृष्ट्वा बलवान् आप्नुयोऽब्रवीत् । परिक्षीणेषु कुरुषु पुत्रस्तव भविष्यति । एतदस्य परिक्षित्त्वं गर्भस्थस्य भविष्यति । तस्य तद्वचनं साधोः सत्यमेतद् भविष्यति । परिक्षिद् भविता ह्येषां पुनर्वंशकरः सुतः"। क्विपि उपसर्गदीर्घे परीक्षित् अप्यत्र । कर्त्तरि क्त परिक्षितोऽप्यत्र पद्र०। २कुरुपुत्रभेदे पु० हरिवं० ३२अ०। "द्वादश्यौ तव वंशेऽस्मिन् द्वावेव च परिक्षितौ" तत्रैवाध्याये। ३अविक्षितः पुत्रे नृपभेदे च "अविक्षितः परिक्षित्तु शबलाश्वश्च वीर्यवान्" भा०आ०९४अ० ।

**परिक्षेप** पु० परितः क्षिप्यते विषयशासनया जीवात्मा येन परि+क्षिप—करणे घञ् । १इन्द्रिये "एकादशपरिक्षेपं मनोव्याकरणात्मकम्" भा०आश्व० ३६अ० भावे घञ् । २परितस्त्यागने च ।

**परिक्षेपक** त्रि०परि+क्षिप—ताच्छील्ये वुञ्। परितस्त्यजनशीले

**परिक्षेपिन्** त्रि० परि+क्षिप—ताच्छीले घिनुण् । परितः क्षेपणशीले स्त्रियां ङीप् ।

**परिखा** स्त्री परितः खन्यते खन—ड । पुरादौ रिपुप्रभृतीनां दुष्प्रवेशतासिद्धये गर्त्तरूपायां जलाधारस्थाने वेष्टनाकारभूमौ अमरः । परिखामानञ्च मत्स्य०पु० अन्यत्र० २०२अ० उक्तं यथा "प्रस्थे च परिखामानं ममहस्तप्रमाणकम् । परितः शिबिराणाञ्च गम्भीरदशहस्तकम् । चक्रेतपूर्वकस्त्वैव परिखाद्वारमीरितम् । यत्नोरगम्यं चित्रस्य गम्यमेव सुखेन च"। ततः भवाद्यर्थे पथाद्या० अण् । पारिख तद्भवादौ त्रि०। तत्र भवे परिखात इति पाठान्तरे पारिखात इत्यपि तत्रार्थे

**परिखात** न० परितः खातम् । १परिखायाम् । २परिखन कर्म्मणि त्रि० ।

**परिगणन** न० परि+गण—भावे ल्युट् । १सर्वतोभावेन गणने २विधिनिषेधशास्त्रयोः विशेषतः कीर्त्तने च

**परिगणित** त्रि० परि+गण—क्त । १विधिनिषेधयोर्विशेषरूपेण कीर्त्तिते च । २संख्याते च

**परिगत** त्रि० परि+गम—क्त । १व्याप्ते २ख्याते ३ज्ञाते ४वेष्टिते च मेदि०। ५गते हेमच० ६वेष्टिते च। कर्त्तरि क्त । ७परितो गन्तरि त्रि० ।

**परिगदित** न० परि+गद—क्त । परिकथने तदुक्तमनेन इष्टा० इनि परिगदितिन् तत्कर्त्तरि स्त्रियां ङीप् ।

**परिगहन** न० परि+गह-भावे ल्युट् गुह्या० न णत्वम् । अत्यन्तगहने

**परिगूढ़** त्रि॰ परि+गुह क्त। अत्यन्तगुप्ते ततः चतुरर्थ्यां कुमुदादि॰ ठक्। पारिगूढिक तत्सन्निकृष्टदेशादौ त्रि॰।

**परिगृहीत** त्रि॰ परि+ग्रह–कर्मणि क्त। स्वीकृते आ-चिता॰ वाक्यान्तोदात्तता।

**परिगृहीति** स्त्री परि+ग्रह–क्तिन् इट्-इटो दीर्घः। परि-ग्रहे ऐत॰ब्रा॰ २।१५। [स्त्रियां शब्दच॰।

**परिगृह्या** स्त्री परि+ग्रह–कर्मणि क्यप्। पाणिगृहीतायां

**परिग्रह** पु॰ परि+ग्रह-अप्। १स्वीकारे। कर्मणि च। २सैन्यपश्चाद्भागे ३भार्य्यायां परिजने च। करणे च। ४मूले ५शपथे च अमरः। परितोः ग्रहः। ६राहुणा सूर्य्येन्द्वोर्ग्रहणे ७विष्णौ पु॰"परमेष्ठी परिग्रहः"विष्णुसं॰ "शरणार्थिभिः परितो गृह्यते सर्वगतत्वात् परितो ज्ञायते इति वा पत्रपुष्पादिकं भक्तैरर्पितं गृह्णातीति वा परिग्रहः" भा॰।

**परिग्राम** अव्य॰ ग्रामस्याभितस्त्। ग्रामसामुख्ये ततः भवाद्यर्थे ठञ्। पारिग्रामिक तद्भवादौ त्रि॰।

**परिग्राह** पु॰परि+ग्रह–"परौ यज्ञे" पा॰ घञ्। यज्ञार्थं स्फ्येन वेदेः स्वीकारे सि॰कौ॰।

**परि(लि)घ** पु॰परिहन्यतेऽनेन"परौ घः" पा॰परौ हन्तेरप् घत्वान्तादेशः रस्य वा लः। १लोहबद्धलगुड़े २लोहमयब-गुड़े च अमरः। विष्कम्भादिषु २ऊनविंशे योगे ४अर्गले द्वारावरोधिकाष्ठे मेदि॰। ५मुद्गरे ६शूले च अजयः। ७गृहे ८कुम्भे ९काचघटे शब्दरत्ना॰। १०कुमारानुचरगणभेदे भा॰शल्य॰ ४६अ॰। ११वन्यजनभेदे भा॰वा॰ ११८अ॰।

**परिघट्टन** न॰ परि+घट्ट–भावे ल्युट्। परिचालने "आवर्त्तुर्दर्व्वीपरिघट्टनेन" भा॰व॰ यज्ञप्रश्ने।

**परिघर्म** पु॰परि+घृ-मन्। यज्ञाङ्गमहावीरपात्रपतितफेनादेः क्षरणे परिघर्मस्येदम् यत्। परिघर्म्य महावीराङ्ग-घर्मसम्बन्धिपात्रे "परिघर्म्यमौदुम्बरम्" कात्या॰श्रौ॰ २६।२।६ "परिघर्म्य" घर्मसम्बन्धि यत् पात्रजातं का-ष्ठमयस्रुवादि तदौदुम्बरम्" देवनाथः।

**परिघात** पु॰ परिहन्यतेऽनेन घञ्। परिघातास्त्रे

**परिघातन** पु॰ परिघातयति परि+हन–स्वार्थे णिच् क-र्त्तरि ल्यु। १परिघातास्त्रे अमरः। २सर्वतोहननकर्त्तरि भावे ल्युट्। ३परितोहनने च शरणिः।

**परिघृ(घ)ष्टिक** पु॰ परितः घृ(घ)ष्टं घाणत्वेनास्त्यस्य ठन्। १वानप्रस्थभेदे भा॰आनु॰ ९२अ॰। नीलकण्ठेन तत्र "प-रिघृष्टिका वैधसिका इति पठित्वा "परिपृष्टमेव गृह्णन्ति नान्यथेति व्याख्यातम्"। तेन तत्र परिपृष्टिका इत्येव पाठः तत्र परिपृच्छिका इति पाठान्तरमुक्तं तेन तस्या-प्येतदर्थकता "परिघृष्टिका वैद्यसिका" इति "हरिवंशपु-स्तके पाठः" अनाकारः परिपृच्छया गृह्णातीति वाच्यम्।

**परिचर्चा** स्त्री परि+चर्च–भावे अ चार्चधातुकत्वात् न ख्यादेशः। १निन्दायां शत॰ब्रा॰ ३।२।५।१४ भाष्ये इत्युक्तम् परि+वर्जने च। २वर्जने स्त्री।

**परिचक्ष्य** त्रि॰परि+वर्जने चक्ष–ण्यत् वर्जनार्थत्वात् न ख्या-देशः। वर्जनीये

**परिचतुर्दश** त्रि॰ परिहीन चतुर्दश यतः प्रा॰ब॰ ड समा॰। एकाधिकचतुर्दशरूपपञ्चदशसंख्यान्विते आर्षे तु समासा-न्तविधेरनित्यत्वात् न ड। "इन्द्रसेनादयश्चैव भृत्याः परिचतुर्दश" भा॰व॰ १अ॰।

**परिचय** पु॰ परि+चि–अच्। १ज्ञातस्य पौनःपुन्येन ज्ञाने संस्तवे २प्रणये च अमरः। ३सर्वतश्चयने माघः २।७५।

**परिचर** त्रि॰परितः चरति चर–ट। १भृत्ये २परप्रहारात् रथरक्षके पु॰ अमरः। ३प्रजानामन्नादिव्यवस्थापनका-रिणि ४राजभृत्यभेदे च।

**परिचर्य्या** स्त्री परि+चर–क्यप्। सेवायाम् अमरः।

**परिचाय्य** पु॰ परिचीयते संस्क्रियतेऽसौ परि+चि–ण्यत्। यज्ञाग्नौ अमरः "परिचाय्यं चिन्वीत ग्रामकामः" शत॰ब्रा॰ ५।४।११।२

**परिचार** पु॰ परि+चर–भावे घञ्। सेवायां भा॰व॰९७अ॰ परिचारे प्रसृतः ठन्। परिचारिक दासे भा॰अनु॰७।८१॰

**परिचारक** त्रि॰ स्त्रि॰ परि+चर-ण्वुल्। सेवके अमरः।

**परिचित्** त्रि॰ परितश्चीयते चि–कर्मणि क्विप्। १परितः स्थापिते यजु॰ १२।४६ कर्त्तरि क्विप्। २परिचयक-र्त्तरि त्रि॰। [कर्मणि।

**परिचित** त्रि॰ परि+चि–कर्मणि क्त। १परिचययुक्ते २तत्-

**परिच्छद्** त्रि॰ परिच्छादयति परि+छद+णिच्–क्विप् ह्रस्वः। परिच्छदशब्दार्थे "सेनापरिच्छदस्तस्य" रघुः।

**परिच्छद** पु॰परि+छद–णिच्-घ ह्रस्वः। १उपकरणे २ह-स्त्यश्वरथपादाते ३वस्त्रादिभूषणे ४परिवारे च हेमच॰। ५आच्छादने च।

**परिच्छित्ति** स्त्री परि+छिद–भावे क्तिन्। १अवधारणे "द्वयोरेकतरस्य वाप्युभयस्य असन्निकृष्टार्थपरिच्छित्तिः प्रमा" सां॰सू॰ "अर्थस्य वस्तुनः परिच्छित्तिरवधारणं प्रमा" भा॰ २परिच्छेदशब्दार्थे च।

**परिच्छेद** पु० परि+छिद्-भावे करणादौ च घञ्। १अवधौ २सीमायां ३अवधारणे ग्रन्थस्य ४सन्धिभेदे। स च त्रिका० दर्शितो यथा “सर्गवर्गपरिच्छेदोद्घाताध्यायाङ्कसंग्रहाः। उच्छ्वासः परिवर्त्तश्च पटलं काण्डमस्त्रियाम्। स्थानं प्रकरणं पर्वाह्निकञ्च ग्रन्थसन्धयः”। तत्र काव्ये सर्गः, कोषे वर्गः, अलङ्कारे परिच्छेदोच्छ्वासौ कथायामुद्घातः नाटके अङ्कः, संहितापुराणादौ अध्यायः, तन्त्रे पटलं, ब्राह्मणे काण्डम्, इतिहासे पर्व, भाष्ये आह्निकम्। एवमन्येऽपि ग्रन्थसन्धयः ग्रन्थभेदे ज्ञेयाः यथा पादस्कन्धशतरङ्गस्तवकप्रपाठकादयोऽपि यथायथमूह्याः। ४परिमाणे।

**परिच्छेद्य** त्रि० परि+छिद्-कर्मणि ण्यत्। १परिमेये २अवधार्य्ये च। [अमरः।

**परिजन** पु० परिगतो जनः। १परिवारे २प्रतिपाल्ये जने

**परिजय्य** त्रि० परि+जि-शक्यार्थे यत् नि० यान्तादेशः। परितो जेतुं शक्ये।

**परिजल्पित** न० “प्रभोर्निर्दयताशाठ्यचापल्याद्युपपादनात्। स्वविचक्षणताव्यक्तिर्भङ्ग्या स्यात् परिजल्पितम्” उज्ज्वलमण्युक्ते कथनभेदे। [रङ्गनाथः।

**परिज्ञान** न० परि+ज्ञा ल्युट्। सूक्ष्मज्ञाने सू०सि०८।१

**परिज्रि** त्रि० परि+जृ-क्रि। परितोगन्तरि ऋ०१।६४।१ भा०

**परिज्वन्** पु० परि+ज्वु-बौल्वधातुः कनिन्। १चन्द्रे २अग्नौ च उज्ज्वलदत्तः। अत्र परिजवन् इति परिजन्वन् इति शब्दद्वयकल्पनं प्रामादिकं “श्वन्नुक्षन्नित्यादिके उणादिसूत्रे परिज्वन् इत्यस्यैव पाठात्। [शब्दे २४१४पृ० दृश्यम्।

**परिडीन** न० परि+डी-भावे क्त। खगगतिभेदे खगगति

**परिणत** त्रि० परि+णम-क्त। १परिपक्वे अमरः। २परिणामयुक्ते “तिर्य्यग्दन्तप्रहारस्तु गजः परिणतो मतः” हलायुधोक्ते ३गजभेदे माघः ४।२९ ११।२५ ४सर्व्वतोनते च ५प्रेमयुते च। [भावे ४परिपाके च माघः १।११।

**परिणति** स्त्री परि+नम-क्तिन्। १शेषे २अवसाने। ३परि-

**परिणय** पु० परि+नी-भावे अच्। १विवाहे अमरः भावे ल्युट्। २परिणयन तत्रार्थे न०। परिणयतेर्विवाहार्थत्वात् परिणीता इत्यादौ कृतविवाहाद्यर्थावगमः।

**परिणाम** पु० परि+नम-घञ्। १प्रकृतेरन्यथाभावे विकारे २शेषे “परिणामेऽमृतोपमम्” गीता। ३अर्थालङ्कारभेदे च। अन्यथाभावश्च प्रकृत्युच्छेदेन प्रकृतेर्गुणान्तराधानेन वा यथा मृदादेर्घटादिरूपेण, काष्ठादेर्भस्मादिना। “परिणामतापसंस्कारदुःखैः” पात०सू० “परिणामतः सलिलवत्” सां०का० “यथा हि वारिदविमुक्तमुदकमेकरसमपि तत्तद्भूमिविकारानासाद्य नारिकेलतालीविल्वचिरविल्वतिन्दुकामलकप्राचीनामलककपित्थफलरसतया परिणामान्मधुराम्लतिक्तकटुकषायतया विकल्प्यते एवमेकैकगुणसमुद्भवात् प्रधानं गुणमाश्रित्याप्रधानगुणाः परिणामभेदान् प्रवर्त्तयन्ति” सां०कौ०। ४परिपाके “भुक्तस्य परिणामहेतुरौदर्य्यः (वह्निः) तर्कसंग्रहः।

**परिणामदर्शिन्** त्रि० परिणामं शेषं पश्यति दृश-णिनि ६त०। शेषदर्शिनि यत्कर्मकरणे यत्फलं तस्य द्रष्टरि।

**परिणामशूल** न० परिणामे शूलम्। शूलरोगभेदे “स्वैर्निदानैः प्रकुपितो वायुः सन्निहितो यदा। कफपित्ते समावृत्य शूलकारी भवेद्बली”। तस्य लक्षणं यथा “भुक्ते जीर्य्यति यच्छूलं तदेव परिणामजम्। तस्य लक्षणमप्येतत् समासेनाभिधीयते” वातिकस्य तस्य लक्षणं यथा “आध्मानाटोपविण्मूत्रविबन्धारतिवेपनैः। स्निग्धोष्णोपशमप्रायं वातिकं तद्वदेद्भिषक्” पैत्तिकस्य तस्य लक्षणं यथा “तृष्णादाहारतिस्वेदकट्वम्ललवणोत्तरम्। शूलं शीतशमप्रायं पैत्तिकं लक्षयेद्भिषक्” श्लैष्मिकस्य तस्य लक्षणं यथा “छर्दिहृल्लाससम्मोहं स्वल्परुग्दीर्घसन्तति। कटुतिक्तोपशान्तौ च तद्विज्ञेयं कफात्मकम्” त्रिदोषजस्य तस्य लक्षणं यथा “संसृष्टलक्षणं बुद्ध्वा द्विदोषं परिकल्पयेत्। त्रिदोषजमसाध्यन्तु क्षीणमांसबलानलम्” माधवकरः।

**परिणामिन्** त्रि० परि+नम-णिनि। परिणामयुक्ते परिणामिकारणत्वञ्च प्रधानस्यैव न पुरुषस्येति निर्णीतं सां० सू० “पूर्व्वभावित्वे द्वयोरेकतरस्य हानेऽन्यतरयोगः” सू० “द्वयोरेव पुम्प्रकृत्योरखिलकार्य्यपूर्व्वभावित्वेऽप्येकतरस्य पुरुषस्यापरिणामित्वेन कारणताहान्यान्यतरस्य प्रकृतेः कारणत्वौचित्यमित्यर्थः। पुरुषस्यापरिणामित्वे चेदं बीजम्। पुरुषस्य संहत्यकारित्वे परार्थत्वापत्त्यानवस्था असंहत्यकारित्वे सर्व्वदा महदादिकार्य्यप्रसङ्गः। प्रकृतिद्वारा परिणामकल्पने च लाघवात् तस्या एव परिणामोऽस्तु पुरुषे तु स्वामित्वेन स्रष्टृत्वोपचारो यथा योधेषु वर्त्तमानौ जयपराजयौ राजन्युपचर्य्येते तत्फलसुखदुःखभोक्तृत्वेन तत्स्वामित्वादिति। किञ्च धर्म्मिग्राहकमानेन कारणतयैव प्रकृतेः सिद्धौ नान्यकारणाकाङ्क्षास्ति। यथा धर्म्मिग्राहकप्रमाणेन दृष्टं तथा

पुरुषसिद्धौ नान्यद्द्रष्ट्राकाङ्क्षति। अपि च पुरुषस्य परिणामित्वे कदाचिच्चक्षुर्मनआदिवदज्ञत्वमपि स्यात्। तथा च विद्यमानमपि सुखदुःखादिकं न ज्ञायेत ततश्चाहं सुखी न वेत्यादिसंशयापत्तिः। अतः सदा प्रकाशस्वरूपत्वानपायेन पुरुषस्यापरिणामित्वं सिद्ध्यति। तदुक्तं योगसूत्रेण “सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वादिति” तद्भाष्येण च “सदाज्ञानविषयत्वं तु पुरुषस्यापरिणामित्वं परिदीपयतीति” भा० उक्तम् संयोगश्च न परिणामः सामान्यगुणातिरिक्तधर्मोत्पत्त्यैव परिणामित्वव्यवहारात्” सा०प्र०भा०। तेन पुरुषस्य संयोगवत्त्वेऽपि विकारहेतुसंयोगाभावात् न परिणामित्वम्। स्त्रियां ङीप्। “सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी” हरिका०।

परि(री)णाय पु०न० परि+नी–द्यूते विषये घञ् उपसर्गस्य वा दीर्घः। शारीणां वामदक्षिणतो नयने अमरः घञन्तत्वेऽपि अभिधानात् क्लीबत्वम्।

परि(री)णाह पु० परि+नह–घञ् वा दीर्घः। विस्तारे (ओसार) “धनुः शतं परीणाहो ग्रामात् क्षेत्रान्तरं भवेत्” याज्ञ०।

परिणाहवत् त्रि० परिणाह+अस्त्य० वा मतुप्। विस्तारयुते स्त्रियां ङीप् पक्षे एकाचारादन्तत्वेऽपि अस्त्य० इनि। परिणाहिन् तत्रार्थे त्रि० स्त्रियां ङीप्।

परिणेतृ पु० परि+नी-तृच्। १विवाहकर्त्तरि भर्त्तरि राजनि० २परितो नेतरि च।

परिणेय त्रि० परि+नी–यत्। १परितोनयनीये आश्व०श्रौ० ३।६।१५। विवाहयोग्यायां २कन्यायां स्त्री।

परितक्मन् न० तक–हसने भावे मनिन्। परितोगमने तदर्हति यत्। परितक्म्य परितो गन्तव्ये ऋ०१।३१।६७ भा०दृश्यम्। “परित एनां रात्रिं तक्म” निरुक्तोक्तायां रात्रौ च रात्रेरुभयत उष्णतोपलम्भात् तथात्वम्।

परितस् अव्य० परि+तसिल्। सर्वतोभावे इत्यर्थे। एतद्योगे सम्बन्धार्थे द्वितीया परितः कृष्णं भक्ताः।

परिताप पु० परितप्यतेऽत्र परि+तप–आधारे घञ्। १नरके करणे घञ्। २दुःखे मेदि०। ३शोके शब्दच० ४भये ५कम्पे विश्वः ६अत्युष्णतायाञ्च “ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात्” पात०सू० “ते जन्मायुर्भोगाः पुण्यहेतुकाः सुखफलाः अपुण्यहेतुकाः दुःखफलाः” भा०।

परितोष पु० परि+तुष-भावे घञ्। सन्तोषे आनन्दभेदे

परित्याग पु० परि+त्यज-भावे घञ्। सर्वतो भावेन वर्जने

परित्राण न० परि+त्रै–ल्युट्। १रक्षणे अनिष्टे प्रवृत्तस्य २निवारणे च “परित्राणाय साधूनाम्” गीता।

परिदंशित त्रि० परिदंशो जातोऽस्य तार० इतच्। कृतसन्नाहे भा०आ० १३६अ०। [अमरः।

परिदान न० परि+दा-भावे ल्युट्। प्रतिरूपदाने विनिमये

परिदाय पु० परि+दा घञ्। आमोददायिनि सुगन्धौ हरिवं० २१८अ०।

परिदायिन् परिवत्त्यं शास्त्रदोषं ददाति दा–णिनि। अकृतविवाहस्य ज्येष्ठस्य कनिष्ठाय कन्यादातरि परिवेत्तृ-शब्दे हारीतवाक्यं दृश्यम्।

परिदेवन न० परि+दिव-ल्युट्। १अनुशोचने कृतस्य कर्मणोऽनुचितत्वधियानुतापे २विलापे च। णिच्–युच्। परिदेवनाप्यत्र स्त्री। “तत्र का परिदेवना” गीता २।२८

परिदेविन् त्रि० परि+दिव–ताच्छील्ये इनि। परिदेवनशीले स्त्रियां ङीप्।

परिद्वीप पु० गरुडपुत्रभेदे भा०आ० १००अ०।

परिधान न० परिधीयते परि+धा-कर्मणि ल्युट्। १परिहितवस्त्रे नाभेरधोधृतवसने अमरः भावे ल्युट्। २वस्त्रादेर्देहादौ धारणे च।

परिधानीया स्त्री परि+धा–कर्मणि अनीयर्। १शस्त्रादिस्थायामुत्तमायामृचि “सर्वोत्तमा परिधानीयेति विद्यात्” आश्व०श्रौ० २।६।८ “स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीया स्यात्” छान्दो०। २परिधेयवस्त्रादौ त्रि०।

परिधाय पु० परि+धा–कर्मणि घञ्। १परिच्छदे आधारे घञ्। २नितम्बदेशे ३जलस्थाने च मेदि० भावे घञ्। परिधाने।

परिधि पु० परि+धा-कि। चन्द्रसूर्यसमीपस्थे मेघादिसन्निकर्षात् जायमाने वेष्टनाकारे १मण्डले (सूर्यसभा) (चन्द्रसभा) परिवेषशब्दे दृश्यम्। यज्ञियपशुबन्धनार्थं निखातायां यज्ञियतरोः पलाशादेः २शाखायाम् ३गोलमण्डलस्य परितो वेष्टनवृत्तमाने क्षेत्रशब्दे २४०० पृ० दर्शितम्। यज्ञियपरिधिमानं च इध्मशब्दे ९२८ पृ० दृश्यम्। तत्रान्यशाखाविषयम् कर्मप्रदीपोक्तमानन्तु छन्दोगविषयम् यथा “बाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः। त्रयो भवन्ति शीर्णाग्रा एकेषान्तु चतुर्दिशम्। प्रागग्रावभितः पश्चादुदगग्रमथापरम्। न्यसेत् परिधिमन्यञ्चेदुदगः स च पूर्वतः”।

**परिधिस्थ** त्रि० परिधौ तिष्ठति स्था–क । १परिचारके युद्धादौ रथिनो रक्षार्थं परितः स्थिते २सैन्यादौ च ।

**परिधिपतिखेचर** पु० महादेवे भा० अनु० १७ अ० ।

**परिधूमन** सुश्रुतोक्ते तृषार्दितस्य उद्गारभेदरूपे उपद्रवभेदे (चोँया ढेकुर तोला) ।

**परिधूमायन** न० सुश्रुतोक्ते उद्गारभेदे (चोँयाढेकुरतोला)

**परिधेय** त्रि० परितो धेयः । परिधिभवे १विश्वदेवादौ यजु० १।१८। परि–धा यत् । २परिधातव्ये वस्त्रादौ त्रि० ।

**परिनन्दन** त्रि० परि+नन्द्–णिच्–ल्यु उणा० न णत्वम् । १सन्तोषकारके भावे ल्युट् । २सन्तोषकरणे न० ।

**परिनिष्ठा** परि+नि+स्था-भावे अ । पर्य्यवसाने "पारम्पर्य्यैऽप्येकत्र परिनिष्ठा" सां०सू० ।

**परिपक्व** त्रि० परि+पच–क्त । १परिपाकयुक्ते २परिणते च

**परिपन(ण)** न० परिपन्य(ण्य)ते व्यवह्रियतेऽनेन पन(ण)–घञ् । मूलधने अमरः ।

**परिपति** त्रि० परि+पत-इन् । १सर्वव्यापिनि यजु०५।५। २अधिपतौ पु० निरु० १२।१८ अ० ।

**परिपन्थ** पु० पन्थानं वर्जयित्वा व्याप्य वा तिष्ठति पथि–अच् । १पथिवर्जके २पथिव्यापके च "परिपन्थं गच्छति" पा०ठक् । पारिपन्थिक चौरे सि०कौ० ।

**परिपन्थक** पु० परिपन्थयति दोषाख्यानं गच्छति परि+पन्थ–ण्वुल् पन्थानं वर्जयित्वा गच्छति वा कन् पन्था० देयः । शत्रौ यजु० ४।३४ । हेमच० ।

**परिपन्थिन्** पु०परि+पन्थि-इनि । १शत्रौ २विपरीताचारिणि त्रि०स्त्रियां ङीप् । "छन्दसि परिपन्थिपरिपरिणौ पर्य्यवस्थातरि"पा० वेदे एवास्य प्रयोगः । लोके तूपचारात् ।

**परिपरिन्** पु० परिपन्थिन्शब्दोक्ते पा० नि० । शत्रौ वेदे एवास्य योगः । यजु० ४।३४ ।

**परिपवन** पु० परिपूयतेऽनेन परि+पू-करणे ल्युट् । चालन्यां निरु० ४।९ ।

**परिपशव्य** त्रि० व्याप्तौ परिः पशोरिदं यत् प्रा०स०। सर्वपशुसम्बन्धिनि कात्या० श्रौ० ८।८।२ [१नैपुण्ये च ।

**परिपाक** परि+पच घञ् । १उत्कृष्टपाके २परिणामे ।

**परिपाकिन्** स्त्री परिपाकोऽस्त्यस्याः एकाचरकदन्तत्वेऽपि संज्ञात्वात् इनि ङीप् । त्रिवृतायां शब्दच० ।

**परिपाटि(टी)** स्त्री परि+चु०पट-इन् । अनुक्रमे आनुपूर्व्याम् अमरः वा ङीप् । [अन्तोदात्ततास्य ।

**परिपाद** अव्य० पादं वर्जयित्वा । पादवर्जने निरुदका०

**परिपिष्टक** न० परि+पिष-क्त संज्ञायां कन् । सीसके राजनि० । [रङ्गे च

**परिपुटन** न० परि+कुटा० पुट-भावे ल्युट् १भेदने २सम्पुटीक-

**परिपुष्करा** स्त्री परितः पुष्करं मुखं यस्याः । (गोमुक) गोडुम्बायाम् शब्दच० ।

**परिपूत** त्रि० परि+पू-क्त । १अवलनयुक्ते माघः २।१६ । शूर्पादिवातेन तुषनिःसारणयुते २धान्यादौ च । "परिपूतेषु धान्येषु" मनुः ।

**परिपूर्ण** त्रि० परि-पूर-क्त नि० । आभोगयुते तस्य भावः तल् । परिपूर्णता आभोगे स्त्री अमरः ।

**परिपेल** न० परि+पेल-अच् । कैवर्त्तीमुस्तके शैवलमध्ये जायमाने मुस्ताकारे पदार्थे शब्दमाला ।

**परिपेलव** न० परितः पेलवं मृदुता यस्य । १कैवर्त्तीमुस्तके अमरः । २अत्यन्तमृदौ त्रि० ह०सं० ८४ अ० ।

**परिपोट** पु० सुश्रुतोक्ते कर्णपालीरोगभेदे "परिपोटस्तथोत्सात उन्मन्थो दुःखवर्द्धनः । पञ्चमः परिलेही च कर्णपाल्या गदाः स्मृताः" इत्युपक्रमे सौकुमार्य्याच्चिरोत्सृष्टवर्द्धनाभिप्रवर्द्धिते । कर्णशोफो भवेत् पाल्यां सरुजः परिपोटवात् । कृष्णारुणनिभः स्तब्धः स वातात् परिपोटकः" । परिपोटक इत्यप्यत्र पु० ।

**परिपोटन** न० प+पुट-भेदने ल्युट् । भेदने सुश्रुतः ।

**परिप्रश्न** पु० परितः प्रश्नः । युक्तायुक्तत्वप्रश्ने गीता ४।३४भा० ।

**परिप्लव** पु० परि+प्लु-अच् । १चपले अमरः । भावे अप् । २जलादेरुपरितरणे च ।

**परिप्लुत** स्त्री परि+प्लु-क्त । १जलादिभिरार्द्रीभूते । २मदिरायां स्त्री हेमच०। मैथुनवेदनायुक्ते ३नार्य्यङ्गभेदे स्त्री "परिप्लुतायां योनौ तु ग्राम्यधर्मे रुजा भवेत्" माधवकरः

**परिव(ब)र्ह** पु० परि+बर्ह-घञ् । नृपयोग्ये हस्त्यश्वादि परिच्छदे अमरः । अन्त्यस्थ मध्य एव न्याय्यः ।

**परिभ(भा)व** पु० परि+भू-अप् घञ् वा । १अनादरे २तिरस्कारे अमरः । [योगे स्त्रियां ङीप् ।

**परिभविन्** त्रि० परि+भू–ताच्छील्ये इनि । परिभवन-

**परिभाविन्** त्रि० परि+भू-ग्रहा० भूतेऽर्थे णिनि । सर्वतोभावेन भवनयुक्ते स्त्रियां ङीप् ।

**परिभाषण** न० परि+भाष-ल्युट् । १निन्द्या दुष्टवचने आलापे २नियमे च मेदि० ।

**परिभाषा** स्त्री परि+भाष-अ । शास्त्रकृतां १कृत्रिमसंज्ञायाम् अवयवार्थमनादृत्य समुदायार्थे २विशिष्टसंज्ञायाम् ।

संज्ञापरिभाषयोस्तु अवान्तरभेदः परिभाषेन्दुशेखरे "यथोद्देशं संज्ञापरिभाषम्" "यथाकार्यं संज्ञापरिभाषम्" अनयोर्व्याख्याने दृश्यः। "कश्चिदेकदेशस्थः सर्वशास्त्रमभिज्वलयति यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयतीति "षष्ठी स्थाने" इति सूत्रे भाष्ये उक्तम्। "अधिकारशब्देन पारार्थ्यात् परिभाषाप्युच्यते। कश्चित् परिभाषारूप इति" कैयटः। दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत्। स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्यम्। ४आधुनिकसङ्केते पारिभाषिकशब्दे दृश्यम्।

**परिभूत** त्रि॰ परि+भू–क्त। १तिरस्कृते २अनादृते च हेमच॰

**परिभ्रमण** न॰ परितो भ्रमणम्। १सर्वतोभ्रमणे २पर्य्यटने च

**परिमण्डल** त्रि॰ परिगतो मण्डलम्। १वर्त्तुलाकारे हेमच॰ २अणुपरिमाणयुक्ते च परिमाणशब्दे दृश्यम्।

**परिमर** पु॰ परिम्रियन्ते अस्मिन् परि+मृ–आधारे अप्। वायौ "तद्ब्रह्मणः परिमर इत्युपासीत" तैत्ति॰उ॰ ३। १०।४ "ब्रह्मणः परिमरः परिम्रियन्तेऽस्मिन् पञ्च देवताः विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निरित्येताः। अतो वायुः परिमरः श्रुत्यन्तरप्रसिद्धेः। "स एवायं वायुराकाशेनानन्य" इत्याकाशो ब्रह्मणः परिमरस्तमाकाशं वाय्वात्मानं ब्रह्मणः परिमर इत्युपासीत" भा॰।

**परिमर्द्द** पु॰ परि+मृद–भावे घञ्। १घर्षणे २नाशने ३हिंसने च भा॰शा॰२१८५ श्लो॰। ल्युट्। परिमर्द्दन तत्रार्थे

**परिमल** पु॰ परि+मल-अच्। १कुङ्कुमचन्दनादिमर्दने मर्दनोद्भूते २सुगन्धौ अमरः। ३परितः सम्बन्धे च "सतां परिमलोद्भूतबहोत्सवः" इत्युदयनः ४पण्डितसमूहे शब्दर॰

**परिमाण** न॰ परिमीयतेऽनेन परि+मा-ल्युट्। यवाङ्गुलप्रस्थादिभिर्गुञ्जादिभिश्च द्रव्यस्य परिच्छेदे (माप) गुञ्जादिपरिमाणभेदविशेषाश्च कर्षशब्दे १७७१ पृ॰ उक्ता दृश्याः। अङ्गुलादिपरिमाणञ्च वैशेषिकमते द्रव्यगुणभेदस्तच्चातुर्विध्यं चोक्तं यथा "अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते।" कणा॰सू॰ "तदेवं स्थूलो नीलः कलस इति प्रात्यक्षिकप्रत्यये यथा नीलं रूपं विषयस्तथा परिमाणमपि तेन च परिमाणेन परमाणुपर्य्यन्तं परिमाणमनुमीयते प्रत्यक्षत्वात् द्रव्यप्रत्यक्षहेतुत्वाच्च। द्रव्यप्रत्यक्षतायां रूपवत् परिमाणमपि कारणं नहि महत्त्वमन्तरेण द्रव्यं प्रत्यक्षं भवति तथा च द्रव्यप्रत्यक्षकारणत्वेन अयञ्च प्रत्यक्षतया परिमाणं गुणोऽस्तीति निश्चीयते। यदि हि घटादिस्वरूपं परिमाणं स्यात् तदा महदानयेत्युक्ते घटमात्रमानयेत् तथाच प्रैषसंप्रतिपत्ती विरुध्येयाताम्, एवं घटपदात् परिमाणं प्रतीयेत परिमाणपदाद्वा घट इति। मानव्यवहारासाधारणकारणत्वं द्रव्यसाक्षात्कारकारणनिष्ठसामान्यगुणत्वं वा महत्त्वम्। मानव्यवहारो हस्तवितस्त्यादिव्यवहारो नतु पणसङ्ख्यादिव्यवहारः। तच्च परिमाणञ्चतुर्विधं महत्त्वमणुत्वं दीर्घत्वं ह्रस्वत्वञ्च, तत्र परममहत्त्वपरमदीर्घत्वे विभुचतुष्टयवर्त्तिनी परमाणुत्वपरमह्रस्वत्वे परमाणुवर्त्तिनी अवान्तराणुत्वावान्तरह्रस्वत्वे द्व्यणुकवर्त्तिनी त्रसरेणुमारभ्य महावयविपर्य्यन्तं महत्त्वदीर्घत्वे। एवञ्च सर्वाण्यपि द्रव्याणि परिमाणद्वयवन्ति। बिल्वामलकादावणुत्वव्यवहारः समिदिक्षुदण्डादिषु च ह्रस्वत्वव्यवहारो भाक्तः, भक्तिश्चात्र प्रकर्षभावाभावः, आमलके यः प्रकर्षभावस्तस्याभावः कुवले। बिल्वे यः प्रकर्षभावस्तस्याभाव आमलके, स च गौणत्वस्योभयभागित्वाद्भक्तिपदवाच्यः। दीर्घह्रस्वत्वे नित्ये न वर्त्तेते इत्येके, परिमाण एव ते न भवत इत्यपरे, महत् दीर्घमानीयतामितिवत् महद्वृत्तं वर्त्तुलं त्रिकोणञ्चानीयतामिति निर्धारणवदाहर्त्तुं वृत्तादीनामप्यापत्तेरिति तेषामाशयात्। इदानीं परिमाणकारणानि परिसङ्ख्ये। "उप॰सू॰"कारणबहुत्वाच्च" कणा॰सू॰ "चकारो महत्त्वप्रचयौ समुच्चिनोति, परिमाणमुत्पद्यते इति शेषः, तत्र कारणबहुत्वं केवलं त्र्यणुके महत्त्वदीर्घत्वे जनयति महत्त्वप्रचययोस्तत्कारणेऽभावात् तच्च बहुत्वमीश्वरापेक्षाबुद्धिजन्यं तद्बुद्धेरनेकविषयत्वेऽप्यदृष्टविशेषोपग्रहो नियामकः, एवं परमाणुद्वयगतं द्वित्वं द्व्यणुके परिमाणोत्पादकं वक्ष्यते द्वाभ्यां तन्तुभ्यामप्रचिताभ्यामारब्धे पटे केवलं महत्त्वमेवासमवायिकारणं बहुत्वप्रचययोस्तत्राभावात्। यत्र च द्वाभ्यां तूलकपिण्डाभ्यां तूलकपिण्ड आरब्धस्तत्र परिमाणोत्कर्षदर्शनात् प्रचयः कारणं बहुत्वस्याभावात् महत्त्वस्य सत्त्वेऽपि परिमाणोत्कर्षं प्रत्यप्रयोजकत्वात्। एवञ्च सति यदि महत्त्वं तत्र कारणं तदा न दोषः तदुक्तं "द्वाभ्यामेकेन सर्वैर्वा" इति। प्रचयश्च आरम्भकसंयोगः, स च स्वाभिमुखकिञ्चिदवयवासंयुक्तत्वे सति स्वाभिमुखकिञ्चिदवयवसंयोगलक्षणः, यथावयवसंयोगः स्वावयवप्रशिथिलसंयोगापेक्षः परिमाणजनकः "गुणकर्मारम्भे

बाधेच्च" इति वचनात् उ॰वृ॰। "अतो विपरीतमणु" क॰सू॰ "महत्त्वदीर्घत्वे व्युत्पाद्याणुत्वं व्युत्पादयति। अतः प्रत्यक्षसिद्धान्महतः परिमाणाद्यद्विपरीतं तदणु परिमाणमित्यर्थः। वैपरीत्यञ्चाप्रत्यक्षत्वात् कारणवैपरीत्याच्च, महत्त्वे हि महत्त्वबहुत्वप्रचयानां कारणत्वम्, एतेन दीर्घत्वविपरीतं ह्रस्वत्वमित्यपि द्रष्टव्यम्, वैपरीत्यञ्चात्रापि पूर्ववत्" उ॰वृ॰ "इदानीं कुवलामलकादावणुत्वव्यवहारो भाक्त इति दर्शयति। "अणु महदिति तस्मिन् विशेषभावात् विशेषाभावाच्च" क॰सू॰ "इतिशब्दो व्यवहारपरतां दर्शयति, तेन बिल्वापेक्षया कुवलमणु, कुवलापेक्षयामलकं महत्, आमलकापेक्षया बिल्वं महदिति तावद्व्यवहारोऽस्ति, तत्र महदिति तेषु व्यवहारो मुख्यः, कुत एवमत आह विशेषभावात् महत्त्वविशेषस्यैव तरतमादिभावेन भावात्। अणुव्यवहारस्तु तेषु भाक्तः, कुत एवमत आह विशेषाभावात् अणुत्वविशेषस्य तत्राभावात्, अणुत्वं हि कार्य्यं द्व्यणुकमात्रवृत्ति, नित्यं परमाणुवृत्ति, कुवलादौ तदभावात्। यद्वा विशेषस्य महत्त्वकारणस्यैवावयवबहुत्वमहत्त्वप्रचयानां कुवलाद्यवयवेषु भावात् सद्भावात्। विशेषाभावात् विशेषस्य अणुत्वकारणस्य महत्त्वासमानाधिकरणद्वित्वस्य कुवलाद्यवयवेष्वभावादसद्भावादित्यर्थः" उप॰वृ॰। "अणुत्वव्यवहारो भाक्त इत्यत्र हेतुमाह। "एककालत्वात्" कणा॰सू॰ "महत्त्वमणुत्वञ्च द्वयमप्येकस्मिन् कालेऽनुभूयते, ते च महत्त्वाणुत्वे परस्परविरोधिनी नैकत्राश्रये सह सम्भवतः, अतो महत्त्वकारणसद्भावान्महत्त्वप्रत्ययस्तत्र मुख्योऽणुत्वप्रत्ययप्रयोगौ च भाक्तावित्यर्थः" उप॰वृ॰ "महत्त्वप्रत्ययस्य मुख्यत्वे हेतुमाह "दृष्टान्ताच्च" कणा॰सू॰ "दृश्यते तथा वस्तुगत्या महत्त्वेव कुवलामलकबिल्वेषु स्थूलस्थूलतरस्थूलतमव्यवहारेण भवितव्यमित्यर्थः यथा वस्तुगत्या शुक्लेष्वेव पटशङ्खस्फटिकादिषु शुक्लशुक्लतरशुक्लतमव्यवहारः" उप॰वृ॰। नन्वणु महत्परिमाणमितिव्यवहारबलान्महत्त्वेऽपि परिमाणे महत्त्वमणुत्वेऽप्यणुत्वमस्तीति ज्ञायते तत् कथं द्रव्यमात्रवृत्तित्वमनयोः कथं वा गुणे गुणवृत्तित्वविरोधो नापद्यत इत्यत आह। "अणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावः कर्मगुणैर्व्याख्यातः" कणा॰ सू॰। "यथा गुणकर्मणी नाणुत्वमहत्त्ववती तथाऽणुत्वमहत्त्वे अपि नाणुत्वमहत्त्ववती इत्यर्थः प्रयोगश्च भाक्तो द्रष्टव्यः" उप॰वृ॰। "ननु यथा गुणा गुणवन्तः कथमन्यथा महान् शब्दः द्वौ शब्दौ एकः शब्दः चतुर्विंशतिर्गुणा इत्यादिव्यवहारः, कर्माण्यपि च कर्मवन्ति प्रतीयन्ते कथमन्यथा शीघ्रं गच्छति द्रुतं गच्छतीति व्यवहारः तथाचाणुत्वमहत्त्वे अपि तद्वती स्यातामित्यत आह। "कर्मभिः कर्माणि गुणैश्च गुणा व्याख्याताः" कणा॰सू॰। "कर्मभिः कर्माणि न तद्वन्ति गुणैश्च गुणा न तद्वन्तस्तथाऽणुत्वमहत्त्वे अपि न तद्वती, व्यवहारस्तु सर्वत्र भाक्त इत्यर्थः" उप॰वृ॰। ननु महान्ति कर्माणि अणूनि कर्माणि महान्तो गुणाः अणवो गुणा इत्यादिव्यवहारादणुत्वमहत्त्ववन्ति कर्माणि तदुभयवन्तश्च गुणाः प्रसक्ता इत्यत आह। "अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याताः" कणा॰सू॰। "यथाऽणुत्वमहत्त्वे नाणुत्वमहत्त्ववती तथा न कर्माणि तदुभयवन्ति न वा गुणास्तदुभयवन्त इत्यर्थः, प्रयोगस्तु पूर्ववद्भाक्त इति भावः" उप॰वृ॰। "अणुत्वमहत्त्वप्रक्रियां दीर्घत्वह्रस्वत्वयोरतिदिशति। "एतेन दीर्घत्वह्रस्वत्वे व्याख्याते" क॰सू॰। "ह्रस्वत्वदीर्घत्वे अपि न ह्रस्वत्वदीर्घत्ववती महत्त्वोत्पादकमेव ह्रस्वत्वोत्पादकम्, कारणैक्यात् कथं कार्यभेद इति चेन्न भामभावभेदेन पाकजवदुपपत्तेः यत्रैव महत्त्वं तत्र दीर्घत्वं यत्राणुत्वं तत्र ह्रस्वत्वं यत्र नित्यमणुत्वं तत्र नित्यं ह्रस्वत्वमित्याद्यतिदेशार्थः" उप॰वृ॰। "इदानीं विनाशकमाह "अनित्येऽनित्यम्" क॰सू॰ "एतच्चतुर्विधमपि परिमाणं विनाशिनि द्रव्ये वर्त्तमानमाश्रयनाशादेव नश्यति न तु विरोधिगुणान्तरात्। घटे सत्यपि तत्परिमाणं विनश्यति कथमन्यथा कम्बुभङ्गेऽपि स एवायं घट इति प्रत्यभिज्ञेति चेन्न आश्रयनाशेन तत्र घटनाशावश्यकत्वात् न हि परमाणुद्वयसंयोगनाशाद् द्व्यणुके नष्टे तदाश्रितस्य त्रसरेणोस्तदाश्रितस्य चूर्णशर्करादेरविनाश इति युक्तिरभ्युपगमो वा, कथं तर्हि प्रत्यभिज्ञेति सैवेयं दीपकलिकेति प्रत्यभिज्ञानवद्भ्रान्तित्वात्। प्रदीपप्रत्यभिज्ञाऽपि प्रमैव ह्रस्वत्वदीर्घत्वे परत्वादविनाशशालिनी इति चेन्न तद्विनाशस्याश्रयविनाशमन्तरेणानुपपत्तेरुक्तत्वात्" उप॰वृ॰। "नित्ये नित्यम्" कणा॰सू॰। "तत् किं पार्थिवपरमाणुरूपादिवत् परमाणुगतमणुत्वं शब्दबुद्ध्यादिवदाकाशादिगतं महत्त्वमपि नश्यतीत्यत आह। नित्येष्वाकाशादिषु परमाणुषु च यत् परिमाणं तन्नित्यं विनाशकाभावात्" उप॰वृ॰।

परमाणुपरिमाणस्य वैशेषिकसिद्धां संज्ञामाह "नित्यं परिमण्डलम्" कणा०सू० परिमण्डलमेव पारिमाण्डल्यम् (स्वार्थे ष्यञ्) उप०सू०।

"परिमितिव्यवहारासाधारणं कारणं परिमाणमित्यर्थः" सि०मुक्ता० "अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः। अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम्। संख्यातः परिमाणाच्च प्रचयादपि जायते। अनित्यं द्व्यणुकादौ तु संख्याजन्यमुदाहृतम्। परिमाणं घटादौ तु परिमाणजमुच्यते। प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते" भाषा० "तच्चतुर्विधम् अणु महद् दीर्घं ह्रस्वञ्च। तत्परिमाणम्। नित्यमित्यत्र परिमाणमित्यनुषज्यते। जायत इत्यत्रापि परिमाणमित्यनुवर्त्तते। अनित्यमिति पूर्वेणान्वितम्। तथा चानित्यं परिमाणं संख्याजन्यं परिमाणजन्यं प्रचयजन्यं चेत्यर्थः। तत्र संख्याजन्यमुदाहरति। द्व्यणुकादाविति। द्व्यणुकस्य त्रसरेणोश्च परिमाणं प्रति परमाणुपरिमाणं द्व्यणुकादिपरिमाणं वा न कारणम् परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वात्। द्व्यणुकादिपरिमाणन्तु परमाणुत्वापेक्षया नोत्कृष्टम्। त्रसरेणुपरिमाणन्तु न सजातीयम्। अतः परमाणौ द्वित्वसंख्या द्व्यणुकपरिमाणस्य, द्व्यणुके, त्रित्वसंख्या च त्रसरेणुपरिमाणस्यासमवायिकारणमित्यर्थः। परिमाणजन्यमुदाहरति। परिमाणं घटादाविति। परिमाणजं कपालादिपरिमाणजन्यम्। प्रचयजन्यमुदाहर्त्तुं प्रचयं निर्वक्ति प्रचय इति" सि०मुक्ता० "परिमाणं तूलकादौ नाशस्त्वाश्रयनाशतः" भाषा० "नाश इति अर्थात् परिमाणस्य। न चावयवनाशः कथं परिमाणनाशकः त्र्यणुकावयविनि त्रिचतुरपरमाणुविश्लेषे तदुपचये चावयविनः प्रत्यभिज्ञानेऽपि परिमाणान्तरस्य प्रत्यक्षसिद्धत्वादिति वाच्यम् परमाणुविश्लेषे द्व्यणुकस्य नाशोऽवश्यमभ्युपेयस्तन्नाशे च त्रसरेणुनाशः एवं क्रमेण महावयविनो नाशस्यावश्यकत्वात् सति च नाशकेऽनभ्युपगममात्रेण नाशस्यापवदितुमशक्यत्वात्। शरीरादाववयवोपचयेऽवश्यकासमवायिकारणनाशस्यावश्यकत्वादवयविनाश आवश्यकः। न च पटाविनाशेऽपि तन्त्वन्तरसंयोगात् परिमाणाधिक्यं स्यादिति वाच्यम् तत्रापि वेमाद्यभिघातेन असमवायिकारणतन्तुसंयोगनाशात् पटनाशस्यावश्यकत्वात्। किञ्च तन्त्वन्तरस्य तत्पटावयवत्वे पूर्वं तत्पट एव न स्यात् तत्तन्तुरूपकारणाभावात् तत्तन्तोरवयवत्वाभावे च न तेन परिमाणाधिक्यं संयुक्तद्रव्यान्तरवत्। तस्मात् तत्र तन्त्वन्तरसंयोगे सति पूर्वपटनाशस्ततः पटान्तरोत्पत्तिरित्यवश्यं स्वीकार्यम्। अवयविनः प्रत्यभिज्ञानन्तु साजात्येन दीपकलिकादिवत्। न च पूर्वतन्तव एव तन्त्वन्तरसहकारात् पूर्वपटे सत्येव पटान्तरमारभन्तामिति वाच्यम् मूर्त्तयोः समानदेशताविरोधात्। एकदा नानाद्रव्यस्य तत्रानुपलब्धेर्बाधितत्वाच्च पूर्वद्रव्यस्य प्रतिबन्धकस्य विनाशे द्रव्यान्तरोत्पत्तिरित्यवश्यमभ्युपेयत्वात्" सि०मुक्ता०।

वेदान्तिमते अणुमहदिति द्वैव परिमाणद्वैविध्यम्। तच्च आरम्भवादशब्दे दर्शितम्। एवं सांख्यमतेऽपि परिमाणद्वैविध्यम्। "न परिमाणचातुर्विध्यं द्वाभ्यां तद्योगात्" सां०सू०।

**परिमार्जन** न० परि+मृज-भावे ल्युट् वृद्धिः। १जलक्षोभादिना मृत्यादेः शोधने मधुमस्तकरूपे २भक्ष्यद्रव्यभेदे च "मधुतैलघृतैर्भक्ष्यो वेष्टिताः समितामये। मधुमस्तकमुद्दिष्टं तज्ज्ञैः परिमार्जनम्" शब्दच०।

**परिमित** त्रि० परि+मा-क्त। १कृतपरिमाणे २यथार्हपरिमाणे च त्रिका०।

**परिमिति** स्त्री परि+मा-क्तिन्। परिमाणे भावापरिच्छेदः

**परिमुख** अव्य० मुखस्य वर्जनम् अव्ययी० पूर्वनि०। वक्त्रवर्जने "परिमुखञ्च" पा० तत्र वर्त्तते ठक्। पारिमुखिक सेवके परिमुखं भवम् "अव्ययीभावाच्च" पा०परिमुखादिभ्य एवेष्यते इत्युक्तेः ञ्य। पारिमुख्य तत्र भवे त्रि०।

**परिमुखादि** ञ्यप्रत्ययनिमित्ते शब्दगणे स च गणः "परिमुख परिहनु पर्य्योष्ठ पर्य्युलूखल परिसीर उपसीर उपाञ्जन उपकलाप अनुपथ अनुपद अनुगङ्ग अनुतिल अनुशीत अनुमाष अनुसीर अनुभाष अनुयव अनुयूप अनुवंश प्रतिशाख"।

**परिमोक्ष** पु० परितो मोक्षः। १अपवर्गमुक्तौ २निर्याणमोक्षे भाग० २।६।१० श्लोके श्रीधरः। ३मोचने च

**परिमोषिन्** त्रि० परि+मुष-ताच्छील्ये इनि। परिमोषणशीले चौरे स्त्रियां ङीप्।

**परियज्ञ** पु० परित उभयतो विहितो यज्ञोऽस्य। उभयतो विहितयज्ञे बृहस्पतिसवादौ कात्या० १४।१।८। संप०

**परि(री)योग** पु०परि+युज-भावे घञ् वा दीर्घः। परितोयोगे

**परिरथ्या** स्त्री परितो रथ्या। चतुष्पथादौ [विकूने।

**परि(री)रम्भ** पु० परि+रभ-घञ् मुम् च वा दीर्घः। आ-

**परिराटक** त्रि॰ परि+रट-ताच्छील्ये वुञ्। समन्तात् रटनशीले। [रटनशीले स्त्रियां ङीप्।

**परिराटिन्** त्रि॰ परि+रट—ताच्छील्ये घिनुण्। समन्तात्

**परिल** त्रि॰ परितो लाति ला—क। परितो ग्राहके ततः शिवा॰ अपत्ये अण्। पारिल तदपत्ये पुंस्त्री॰।

**परिलेख** त्रि॰ परिलिख्यतेऽनेन परि+लिख—करणे घञ्। परितो लेखनसाधने द्रव्ये। उपरागशब्दे १२०२ पृ॰ दर्शिते पदार्थे च। [रेखादिकरणे।

**परिलेखन** परि+लिख-भावे ल्युट्। अङ्गस्थानेषु परितो

**परिवत्सर** पु॰ संवत्सरपञ्चकान्तर्गते वत्सरभेदे "शकाब्दात् पञ्चभिः शेषात् समाद्याद्यीयवत्सराः। सम्परीदानुपूर्वाश्च तथोदापूर्वकामताः" मलमा॰त॰। "परिपूर्वे तथा दानं वसानां च द्विजोत्तमा!" विष्णु ध॰।

**परिवर्जन** न॰ परिवर्ज्यतेऽसुभिरनेन वृज-णिच्-ल्युट्। १मारणे। वृज-भावे ल्युट्। २त्यागे अमरः। पतितादीनां सहासनादौ परिवर्जनमुक्तं यथा

"एकशय्यासनं पङ्क्तिर्भाण्डपक्वान्नमिश्रणम्। याजनाध्ययने योनिस्तथैव सह भोजनम्। सहाध्यायस्तु दशमः सहयाजनमेव च। एकादश समुद्दिष्टा दोषाः साङ्कर्यसंज्ञिताः। समीपे चाप्यवस्थानात् पापं संक्रमते नृणाम्। तस्मात् सर्वप्रयत्नेन साङ्कर्यं परिवर्जयेत्" इति कौर्मे उपरिभागे १५अ॰। देशभेदावर्जनीया यथा "यस्मिन् देशे न सम्मानो न प्रीतिर्न च बान्धवाः। न च विद्यागमः कश्चित्तं देशं परिवर्जयेत्" चाणक्यः। वर्ज्यमनुष्यादयो यथा "ब्राह्मणं वालिशं क्षत्रमयोद्धारं विशं जडम्। शूद्रमक्षरसंयुक्तं दूरतः परिवर्जयेत्। कुभार्य्याञ्च कुमित्रञ्च कुराजानं कुसौहृदम्। कुबन्धुञ्च कुदेशञ्च यत्नतः परिवर्जयेत्" गरुडपु॰

**परि(री)वर्त्त** परि+वृत—भावे घञ् वा दीर्घः। १विनिमये। आधारे घञ्। २युगान्तकाले हेमच॰ ३पन्थविच्छेदे अध्यायादौ जटा॰ कर्त्तरि अच्। ४कूर्मराजे। ५दुःसहपुत्र-दुःसाध्यपुत्रभेदे मार्कण्डे॰ पु॰ ५१ अ॰। तन्नामनिरुक्तिस्तत्रैव "अन्यगर्भं परान् गर्भान् सदैव परिवर्त्तयन्। रतिमाप्नोति वाक्यञ्च विवक्षोरन्यदेव हि। परिवर्त्तन संज्ञोऽयम्"। तस्य सुतौ च विरूपविकृतौ तयोः कर्म च तत्रोक्तं यथा "परिवर्त्तसुतौ द्वौ तु विरूपविकृतौ द्विज!। तौ तु वृक्षाग्रपरिखाप्राकाराम्भोधिसंश्रयौ। गुर्विण्याः परिवर्त्तं तौ कुरुतः पादपादिषु। क्रोष्टुके परिवर्त्तन्त्या गर्भस्यान्योदरात्ततः। न वृक्षं चैव शैलाग्रं न प्राकारं महोदधिम्। परिखां वा समाक्रामेदवला गर्भधारिणी"। ६आवृत्तौ "युगानां परिवर्त्तन" सू॰सि॰। यत् स्थानमारभ्य प्रहचलितः स चेत् पुनस्तत्स्थानमायाति तादृशे राशिचक्रस्य ७परिवर्त्ते च "तेषान्तु परिवर्त्तेन पौष्णान्ते भगणः स्मृतः" सू॰सि॰। परिवर्त्तते परि+वृत—अच्। ८परिवृत्तियुक्ते धनादौ ताण्ड्य॰ब्रा॰भाष्यम्।

**परिवर्त्तन** न॰ परि+वृत—भावे ल्युट्। १विनिमये मेदि॰। परि+वृत—णिच्—ल्यु। २दुःसाध्यपुत्रभेदे परिवर्त्तशब्दे दृश्यम्।

**परिवर्त्तिका** स्त्री मेढ्रगतरोगभेदे "मर्दनात् पीडनाच्चापि तथैवाप्यभिघाततः। मेढ्रचर्म यदा वायुर्भजते सर्वतश्चरन्। तदा वातोपसृष्टन्तु चर्म प्रतिनिवर्त्तते। मणेरधस्तात् कोषश्च ग्रन्थिरूपेण लम्बते। सवेदनं सदाहञ्च पाकञ्च व्रजति क्वचित्। मारुतागन्तुसम्भूतां विद्यात्तां परिवर्त्तिकाम्। सकण्डूः कठिना चैव सैवाश्लेष्मसमुत्थिता" सुश्रु॰।

**परिवर्त्तिन्** स्त्री परि+वृत णिनि। १पुनः पुनरावृत्तियुक्ते स्त्रियां ङीप्। सा च त्रिवृत्स्तोमस्य २विष्टुतौ। "तिसृभ्यो हिङ्करोति स पराचीभिः" (एवं त्रिरुक्ता) "परिवर्त्तिनी त्रिवृतविष्टुतिः" ताण्ड्यब्रा॰२।२।१। "परिवर्त्तिनी आवर्त्तिनी" भा॰। [रचितत्वनादौ अमरः।

**परिवर्ह** पु॰ परि+वर्ह घञ्। १परिच्छदे राजचिह्नभेद-

**परिवसथ** पु॰ परि+वस—आधारे अथच्। ग्रामे हेमच॰।

**परिवह** पु॰ परि+वह-अच्। सप्तवायुमध्यपातिनि वायुभेदे अनिलशब्दे दृश्यम्।

**परि(री)वाद** पु॰ परि+वद—घञ् वा दीर्घः। १अपवादे "गुरोर्यत्र परीवादः" इति मनुः। करणे घञ्। २वीणावादनसाधने च मेदि॰।

**परिवादिन्** त्रि॰ परि+वद—"संपृचेत्यादि" पा॰ ताच्छील्ये घिनुण्। १परिवदनशीले स्त्रियां ङीप् सा च २सप्ततन्त्रीयुते वीणाभेदे अमरः।

**परि(री)वाप** पु॰ परि+वप—घञ् वा दीर्घः। १वपने। वप-णिच्-घञ्। २मुण्डने ३जलस्थाने ४परिच्छदे च। ततः चतुरर्थ्यां कुमुदा॰ ठक्। पारिवापिक तस्यादूरदेशादौ त्रि॰। स्त्रियां षित्त्वात् ङीष्। प्रेक्षादि॰ तदर्थे इनि। परिवापिन् तस्यादूरदेशादौ त्रि॰ स्त्रियां ङीप्। ल्युट्। परिवापणमप्यत्र।

**परिवापित** त्रि॰ परिवापे नियुक्तः। परिवापने नियोजिते अमरः। परि+वप--णिच्--क्त। २मुण्डिते त्रि॰।

**परि(री)वार** पु॰ परिव्रियतेऽसौ अनेन वा परि+वृ-घञ् वा दीर्घः। १परिजने कुटुम्बादौ रघुः ६।१० २खड्गकोषे (खाप) मेदि॰ भावे घञ्। परिवरणे च।

**परिवासन** न॰ परिवास्यतेऽनेन। यज्ञियवेदाच्छादनकुशविशेषे "शुल्बात् प्रादेशे परिवास्य वेदपरिवासनानि निदधाति" आपस्तम्बसूत्रम्। तानि च वेदाग्राणि कार्य्याणीति धूर्त्तस्वामी।

**परि(री)वाह** पु॰ परि+वह-घञ् वा दीर्घः। जलोच्छ्वासे अमरः। परितः समन्ताज्जलानामुच्छ्वसनात् पालवर्जनेन वा वहनात्तथात्वम् रघुः ८।७४ उदा॰

**परिवित्त** पु॰ परि+विद्--क्त न दस्य नः। अकृतदाराग्न्याधाने पूर्वं कृतविवाहाग्न्याधानस्य कनिष्ठस्य ज्येष्ठे भ्रातरि यजु॰ ३०।९

**परिवित्ति** पु॰ परि+विद्-क्तिच्। अकृतविवाहाग्न्याधाने पूर्वं कृतविवाहाग्न्याधानस्य कनिष्ठस्य ज्येष्ठे भ्रातरि परिवेत्तृशब्दे दृश्यम्। [हेमच॰।

**परिविद्ध** त्रि॰ परि+व्यध-क्त। १परितो विद्धे २कुवेरे पु॰

**परिविन्दत्** पु॰ परित्यज्य अतिक्रम्य ज्येष्ठं विन्दति भार्य्यामग्न्याधानं वा विद्--लाभे शतृ। अकृतदाराग्न्याधानस्य ज्येष्ठस्य पूर्वं कृतदाराग्न्याधाने कनिष्ठे भ्रातरि अत्र परिवेदने दोषः परिवेत्तृशब्दे हारीतोक्तो दृश्यः। तत्र प्रतिप्रसवादिकं उद्वा॰ निर्णीतं यथा

छन्दोगपरिशिष्टम् "देशान्तरस्थक्लीवैकवृषणानसहोदरान्। वेश्याभिषक्तपतितशूद्रतुल्यातिरोगिणः। जडमूकान्धबधिरकुब्जकुण्ठकवामनान्। अतिवृद्धानभार्य्यांश्च कृषिसक्तान् नृपस्य च। धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा। कुलटोन्मत्तचौरांश्च परिविन्दन्न दुष्यति"। धनवार्धुषिकं राजसेवकं कर्षकं तथा प्रोषितञ्च प्रतीक्षेत वर्षत्रयमपि त्वरन्। प्रोषितं यद्यश्रूयमाणमब्दादूर्ध्वं समाचरेत्"। जडो विकलान्तःकरणः हिताहितावधारणाक्षम इति यावदिति मिताक्षरा। कुण्ठः सर्वक्रियालसः "कुण्ठो मन्दः क्रियासु यः" इत्यमरोक्तेः अभार्य्यान् शास्त्रनिषिद्धभार्य्यासम्बन्धान् नैष्ठिकब्रह्मचारिवानप्रस्थभिक्षुरूपान्। नृपस्य चेति चकारेण मन्त्रानित्यनुलभ्यते। कामतः कारिणः श्रौतस्मार्त्तनिरपेक्षस्वच्छन्दव्यवहारिणः। कुलटः कुलान्यटतीति परकुलाटनशील इति नारायणमहामहोपाध्यायाः तेषामयमाशयः कुलं परकुलम् अटति गच्छति प्राप्नोति यो दत्तकः स कुलटः इति। चौरानित्यत्र पौरानिति पाठे पुरजनप्रेष्यान्। धनवार्धुषिकादित्रयं देशान्तरस्थितञ्च ज्येष्ठं त्वरन्नपि वर्षत्रयं प्रतीक्षेत। ततश्च पूर्ववचने एतान् परिविन्दन्न दुष्यति इत्युक्तम् अत्र परेऽप्यर्थत्वाद्द्वितीया। तत्र देशान्तरस्थकृषिसक्तनृपसक्तधनवृद्धिप्रसक्तान् प्रति वर्षत्रयादूर्द्धमिति बोद्धव्यम्। अत्रापि प्रोषिते यत् त्र्यब्दप्रतीक्षणं तद्विद्याधर्मधनेतरार्थप्रोषितपरं वक्ष्यमाणवशिष्ठगौतमवचनात् अश्रूयमाणं प्रत्ययव्यत्ययेन अश्रूयमाणमिति परिशिष्टप्रकाशकारः। अश्रृण्वन् च इति पाठस्तु रत्नाकरे प्रोषितस्य कल्याणवार्त्तामशृण्वन् वर्षं प्रतीक्ष्य परिणयनं करोति। तत्र समागते ज्येष्ठे कनिष्ठः परिवेदनशुद्धये परिवेदनप्रायश्चित्तस्य कृच्छ्रपादं चरेत् एवमन्यत्रापि प्रायश्चित्तमुच्छन्नाऽन्वेष्या। वशिष्ठः "अष्टौ दश द्वादश वर्षाणि ज्येष्ठं भ्रातरमनिर्विष्टमप्रतीक्षमाणः प्रायश्चित्ती भवतीति तत्र श्लोकौ "द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोर्गतः। न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनःपुनः। उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव वा। राजयक्ष्मामयावी च न न्याय्यः स्यात् प्रतीक्षितुम्"। गौतमश्च "द्वादश वर्षाणि प्रतीक्षणं ब्राह्मणस्य विद्यासम्बन्धे भ्रातरि चैवं ज्यायसि यवीयान् कन्याग्न्युपयमेषु षडित्येके" इति विद्यार्थं प्रोषितस्य ब्राह्मणस्य दारा अपत्योत्पादनार्थं तदभिगमने द्वादशवर्षाणि प्रतीक्षेरन्नित्युक्त्वा भ्रातरि चैवमित्यनेन सर्वमतिदिष्टम् एतेनैतदवसीयते विद्याधनधर्मार्थं गतानां ब्राह्मणक्षत्रियवैश्यशूद्राणां क्रमशो द्वादशदशाष्टषड्वर्षाणां प्रतीक्षणमिति प्रायश्चित्तविवेकः। रत्नाकरकृतस्तु श्रूयमाणेऽभिसुखगमनं प्रव्रजिते गमनस्य निवृत्तिप्रसङ्गादित्यधिकं गौतमीयं लिखित्वा प्रोषिते भ्रातरि ज्येष्ठे विवाहाग्न्याधाने तं कारयितुमभिसुखगमनं यवीयसा कर्त्तव्यं कृतसन्न्यासे च ततो निवृत्तिरिति व्याख्यातम्। शातातपः "क्लीबे देशान्तरगते पतिते भिक्षुकेऽपि वा"। योगशास्त्राभियुक्ते विषयात्यन्तविरक्ते इति रत्नाकरः। अत एव दक्षः "वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि। एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते"। तेन विषयानासक्तमनसा जीवपरमात्मनोरभेदचिन्तनविशेषो योग इति। छन्दोगपरिशिष्टम् "नाग्नयः परि-

विन्दन्ति न यज्ञा न तपांसि च । न च श्राद्धं कनिष्ठस्य या च कन्या विरूपिका”। “विकला या च कन्यकेति” पाठः शातातपीये । नान्यः परिविन्दतीति ज्येष्ठाननुमत्या यथाह उशनाः“ज्येष्ठभ्राता यदा तिष्ठेदाधानं नैव कारयेत् । अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा”। वशिष्ठः “अग्रजोऽस्य यदानग्निरधिकार्य्यनुजः कथम् । अग्रजानुमतः कुर्य्यादग्निहोत्रं यथाविधि” । एतेन विवाहस्त्वनुमत्यापि दोषायेति प्रायश्चित्तविवेकः” ।

**परिविन्न** पु० परि+विद–क्त तस्य दस्य च नः । नकारेण व्यवहारात् न णत्वम् मूर्द्धन्यपाठः प्रामादिकः“कृत्यचः” पा० अचः परत्वाभावात् नकारेण व्यवधानाच्च अप्राप्ते निर्विण्णस्योपसंख्यानात् णत्वम् । विषण्णस्य तु उपसर्गस्थनिमित्तत्वाभावात् नास्य प्रवृत्तिः । पूर्वं कृतविवाहाग्न्याधानस्य कनिष्ठस्य ज्येष्ठे भ्रातरि परिवेत्तृशब्दे दृश्यम् । २तादृशस्त्रियां स्त्री परिवेदनदोषकर्म्मत्वात् तयोः परिवेदनकर्मत्वम् ।

**परिविष्टि** स्त्री परि+विष०विष-वा क्तिन् । १परिचर्य्यायां २व्याप्तौ च ऋ०४।२२।२भा०।

**परिवी** स्त्री परि+व्ये-क्विप् संप्रसारणे दीर्घः । १परिवारिते २परितः स्यूते च यजु० ६।४

**परिवीत** त्रि० परि+व्येञ्-क्त सम्प्र० दीर्घः । परिवेष्टिते ऋ० १०५।४१ [१२।१०८

**परिवृंहण** न०परि+वृन्ह–णिच्-ल्युट् । बलीकरणे मनुः

**परिवृंहित** त्रि० परितो वृंहितम् । १सर्वतोभावेन वर्द्धिते २बलीकृते च । भावे क्त । ३करिध्वनिभेदे न० । [का०उ०

**परिवृक्ण** त्रि० परि+व्रश्च–क्त । १छिन्ने २छिन्नहस्तपादे च

**परिवृक्त** त्रि० परि+वृज-क्त । परित्यक्ते ऋ० १०।१०२भा०

**परिवृढ** त्रि०परि+वृन्ह-क्त नि० । १अधिपे प्रभौ । ततः भावे दृढा० इमनिच् ऋतोरः । परिव्रढिमन् आधिपत्ये पु० पक्षे ष्यञ् । पारिवाढ्र्यं तदर्थे न० ।

**परिवृत** त्रि० परितो वृतः । परितो वेष्टिते “सख्यैः परिवृतोऽध्वरम्” कात्या० स्मृतिः ।

**परिवृत्त** त्रि०परि+वृत-क्त । परितोवृत्ते । ततः चतुरर्थ्यां कुमुदा० ऋश्यादि०च क । परिवृत्तक तददूरदेशादौ त्रि०

**परिवृत्ति** स्त्री परि+वृत-क्तिन् । १परिवर्त्ते २अर्थालङ्कारभेदे अर्थालङ्कारशब्दे ३८८ पृ० दृश्यम् ।

**परिवृत्तिसह** त्रि० परिवृत्तिं परावृत्तिं सहते सह-अच् । यौगिके शब्दभेदे स च पूर्वोत्तरपदयोः परावृत्त्या योगरूढ्यार्थं बोधयतीति तस्य तथात्वम् । तत्र केचित् पूर्वपदपरावृत्त्यायोगरूढ्यार्थबोधकाः केचिदुत्तरपदपरावृत्त्या । केचित्तु नोभयपदपरावृत्तिसहा यथाह हेमच०

“स्वस्वामित्यादिसम्बन्धं तथाङ्कनीमतद्गताम् । स्वात् पाल्वधनभुग्नेतृपतिमत्वर्थकादयः । भूपालो भूधनो भूभुग्भूनेता भूपतिस्तथा । भूमांश्चेतिकवेरूढ्यात्तैवोदाहरणावली । जन्यात् कृत्कर्त्तृसृट्स्रष्टृविधातृकरसमाः । जनकाद्योनिजरुहजन्मभूसूत्यथादयः । धार्य्याद्ध्वजास्त्रपाण्यङ्कमौलिभूषणभृन्निभाः । शालिशेखरमत्वर्थभागिभर्तृधरा अपि । भोज्याद्भुगन्धोव्रतलिट्पायिप्राशाशनादयः । पत्युःकान्तप्रियतमावधूप्रणयिनीनिभाः । कलत्राद्वररमणप्रणयीशप्रियादयः । सख्युः सखिसमा वाह्याद्यानियानासनादयः । जनेः स्वस्तृदुहितात्मजाप्रजावरजादयः । आश्रयात्सद्मपर्यायशयवासिसदादयः । वध्याद्विड्द्वेषिजिद्घातिप्रत्यपुध्वंसिशासनाः । अपन्तकारिदमनदर्पच्छिन्मथनादयः । विवक्षितो हि सम्बन्ध एकतोऽपि पदात्ततः । प्राक्प्रदर्शितसम्बन्धिशब्दा योज्या यथोचितम् । दृश्यते खलु वाह्यत्वे वृषस्य वृषवाहनः । स्वत्वे पुनर्वृषपतिर्धार्य्यत्वे वृषलाञ्छनः । अंशोर्धार्य्यत्वेऽंशुमाली स्वत्वेऽंशुपतिरंशुमान् । वध्यत्वेऽहेरहिरिपुर्भोज्यत्वे चाहिभुगपि । चिह्नैर्व्यक्तैर्भवेद्यत्र जातिशब्दोऽपि वाचकः । तथा ह्यगस्तिपूता दिग्दक्षिणाशा निगद्यते । अयुग्मविषमशब्दौ त्रिपञ्चसप्तादिवाचकौ । त्रिनेत्रपञ्चेषुसप्तपलाशादिषु योजयेत् । गुणशब्दो विरोध्यर्थं नञादिरितरोत्तरः । अभिधत्ते यथाकृष्णः स्यादसितः सितेतरः । वाह्वादिषु पदे पूर्वं वाडवाग्न्यादिषूत्तरे । द्वयेऽपि भद्रदारौ पर्य्यायपरिवर्त्तनम् । एवं परावृत्तिसहायोगाः स्युरिति यौगिकाः । मिश्राः पुनः परावृत्त्यसहागीर्वाणसन्निभाः” ।

**परिवेत्तृ** पु० परि+विद-तृच् । अकृतदाराग्न्याधानस्य ज्येष्ठस्य पूर्वं कृतदाराग्न्याधाने कनिष्ठे “ज्येष्ठे अनिर्विष्टे कनीयान् निर्विशन् परिवेत्ता भवति परिविन्नो ज्येष्ठः परिवेदनीया कन्या परिदायी दाता परिकर्त्ता याजकः ते सर्वे पतिताः” उद्वा०त० हारीतः ।

**परिवेदन** न० परि+विद-लाभे ल्युट् । अकृतदाराग्न्याधाने ज्येष्ठे कनिष्ठस्य पूर्वं १विवाहे २अग्न्याधाने च परिवेत्तृशब्दे दृश्यम् । विद-ज्ञाने विद–सत्तायां भावे

ल्युट् । ३सर्वतो स्नाने ४सर्वतो हतौ सर्वत्र स्थितौ च ।

**परिवेदनीया** स्त्री परि+विद कर्मणि अनीयर् । परिवेत्तृ-भार्य्यायां परिवेत्तृशब्दे दृश्यम् ।

**परिवेदिनी** स्त्री परिवेदः अस्त्यस्याम् इनि ङीप् । परिवेत्तृभार्य्यायां परिवेदनीयायां स्त्रियाम् हेमच० ।

**परिवेश(ष)** पु० परि+विश-(ष-)घञ् । १परिधौ २वेष्टने सूर्य्यचन्द्रमण्डलयोर्वेष्टनाकारे ३उपसूर्य्यकमण्डले तल्लक्षणादिकं वृ०सं० उक्तं यथा

"सम्मूर्च्छिता रवीन्द्वोः किरणाः पवनेन मण्डलीभूताः । नानावर्णाकृतयस्तन्वभ्रे व्योम्नि परिवेषाः । ते रक्तनीलपाण्डुरकापोताभ्राभशवलहरिशुक्लाः । इन्द्रयमवरुणनिर्ऋतिश्वसनधनेशपितामहाग्निकृताः । धनदः करोति मेचकमन्योऽन्यगुणाश्रयेण चाप्यन्यः । प्रविलीयते मुहुर्मुहुरल्पफलः सोऽपि वायुकृतः । चाषशिखिरजततैलक्षीरजलाभः स्वकालसम्भूतः । अविकलवृत्तः स्निग्धः परिवेषः शिवसुभिक्षकरः । सकलगगनानुचारी नैकाभः क्षतजसन्निभो रूक्षः । असकलशकटशरासनशृङ्गाटकवत् स्थितः पापः । शिखिगलसमेऽतिवर्षं बहुवर्णे नृपवधो, भयं धूम्रे । हरिचापनिभे युद्धान्यशोककुसुमप्रभे चापि । वर्णेनैकेन यदा बहुलः स्निग्धः क्षुराभ्रकाकीर्णः । स्वर्तौ सद्योवर्षं करोति पीतश्च दीप्तार्कः । दीप्तविहङ्गमृगरुतः कलुषः सन्ध्यात्रयोत्थितोऽतिमहान् । भयकृत्तडिदुल्काद्यैर्हतो नृपं हन्ति शस्त्रेण । प्रतिदिनमर्कहिमांश्वोरहर्निशं रक्तयोर्नरेन्द्रवधः । परिविष्टयोरभीक्ष्णं लग्नास्तनभःस्थयोस्तद्वत् । सेनापतेर्भयकरो द्विमण्डलो नातिशस्त्रकोपकरः । त्रिप्रभृति शस्त्रकोपं युवराजभयं नगररोधम् । दृष्ट्वास्त्रुद्धेष मासेन विग्रहो वा घनेन्दुभनिरोधे । होराजन्माधिपयोर्जन्मर्क्षे वाशुभो राज्ञः । परिवेषमण्डलगतो रवितनयः क्षुद्रधान्यनाशकरः । जनयति च वातवृष्टिं स्थावरकृषिकृन्निहन्ता च । भौमे कुमारबलपतिसैन्यानां विद्रवोऽग्निशस्त्रभयम् । जीवे परिवेषगते पुरोहितामात्यनृपपीडा । मन्त्रिस्थावरलेखकपरिवृद्धिश्चन्द्रजे सुवृष्टिश्च । शुक्रे यायिक्षत्रियराज्ञां पीडाऽप्रियं चान्नम् । क्षुदनलमृत्युनराधिपशस्त्रेभ्यो जायते भयं केतौ । परिविष्टे गर्भभयं राहौ व्याधिर्नृपभयं च । युद्धानि विजानीयात् परिवेषाभ्यन्तरे द्वयोर्ग्रहयोः । दिवसकृतः शशिनो वा क्षुदवृष्टिभयं त्रिषु प्रोक्तम् । याति चतुर्षु नरेन्द्रः सामात्यपुरोहितो वशं मृत्योः । प्रलयमिव विद्धि जगतः पञ्चादिषु मण्डलस्थेषु । ताराग्रहस्य कुर्य्यात् पृथगेव समुत्थितो नरेन्द्रवधम् । नक्षत्राणामथ वा यदि केतोर्नोदयो भवति । विप्रक्षत्रियविट्शूद्रहा भवेत् प्रतिपदादिषु क्रमशः । श्रेणीपुरकोशानां पञ्चम्यादिष्वशुभकारी । युवराजस्याष्टम्यां परतस्त्रिषु पार्थिवस्य दोषकरः । पुररोधो द्वादश्यां सैन्यक्षोभस्त्रयोदश्याम् । नरपतिपत्नीपीडां परिवेषोऽभ्युत्थितश्चतुर्दश्याम् । कुर्य्यात् तु पञ्चदश्यां पीडां मनुजाधिपस्यैव । नागरकाणामभ्यन्तरस्थिता यायिनां च बाह्यस्था । परिवेषमध्यरेखा विज्ञेयाक्रन्दसाराणाम् । रक्तः श्यामो रूक्षश्च भवति येषां पराजयस्तेषाम् । स्निग्धः श्वेतो द्युतिमान् येषां भागो जयस्तेषाम् ।"

**परिवेषण** न० परि+विष ल्युट् । १परितो वेष्टने विष-ल्युट् । २भोजनार्थं परितो भक्ष्यादेरर्पणे च । तच्च श्राद्धे परिवेषणप्रकारादि श्रा०त० उक्तं यथा

मनुः "पाणिभ्यां तूपसंगृह्य स्वयमन्नस्य वर्द्धितम् । विप्रान्तिके पितॄन् ध्यायन् शनकैरुपनिःक्षिपेत्" । वर्द्धितमिति छन्दसि तृतीयार्थे वर्द्धितं पूरितं पात्रमिति शेषः । उपनिःक्षिपेत् परिवेषणार्थं समीपे धारयेत् तथा च पाकस्थाल्या आकृष्य प्रथमं भोजनपात्रे न देयं किन्तु स्थाल्यादिकं पाणिभ्यां पात्रसमीपे भूमौ संस्थाप्य पश्चादुभाभ्यां पाणिभ्यां पात्रान्तरिताभ्यां श्राद्धे परिवेषणं कुर्य्यात् । "उभाभ्यामपि पाणिभ्यामाहृत्य परिवेषयेत्" इति मनुस्मृपुराणात् । यत्तु श्राद्धे परिवेषणस्य दक्षिणपाणिमात्रेणैवाम्नानभिधानादिति मैथिलोक्तं तन्न "एकेन पाणिना दत्तं शूद्रदत्तं न भक्षयेत्" इत्यादिपुराणेनैकपाणिदत्तशूद्रदत्तभक्षणनिषेधेन तन्मात्रपरिवेषणस्यापि निषिद्धत्वात् । पाणिभ्यामपि पात्रान्तरितं कृत्वा देयम् । "हस्तदत्तास्तु ये स्नेहा लवणं व्यञ्जनानि च । दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते तु किल्बिषम् । तस्मादन्तरितं देयं पर्णेनाथ तृणेन वा । प्रदद्यात् न तु हस्तेन नायसेन कदाचन" इति वचनेन सामान्यतोऽभिधानात् पितृभक्तितरङ्गिण्यामप्येवम् । मनुः "गुणांश्च सूपशाकाद्यान् पयोदधि घृतं मधु । विन्यसेत् प्रयतः सम्यक् भूमावेव समाहितः । भक्ष्यं भोज्यञ्च विविधं मूलानि च फलानि च । हृद्यानि

चैव मांसानि पानानि सुरभीणि च । उपनीय तु तत् सर्वं शनकैः सुसमाहितः । आमिषं पानपात्रञ्च भोक्तुर्दक्षिणतो न्यसेत् । परिवेषयेच्च प्रयतो गुणान् सर्वान् प्रचोदयन्" । गुणान् उपकरणानि । भूमावेव न तु व्यञ्जनादिपात्राद्युपपात्रोपरि निःक्षिपेत् पात्रा सत्त्वे भोजनपात्रेऽपि" ।

**परिव्याध** परि+व्यध कर्त्तरि ण । १अम्बुवेतसे २द्रुमोत्पले च मेदि० ३परितो वेधनकारके त्रि० ।

**परिव्रज्या** स्त्री परि+व्रज-भावे क्यप् । तपस्यायां हेमच० ।

**परिव्राज्** पु० परिवर्ज्य पुत्रादिकं व्रजति परि+व्रज-क्विप् दीर्घः । पुत्रदारादिकं सर्वकर्माणि च परित्यज्य आश्रमान्तरगामिनि भिक्षौ यतौ अमरः । तल्लक्षणं यथा "सर्वारम्भपरित्यागो भैक्ष्याश्यं ब्रह्ममूलता । निष्परिग्रहताऽद्रोहसमता सर्वजन्तुषु । प्रियाप्रियपरिष्वङ्गे सुखदुःखाविकारिता । सबाह्याभ्यन्तरं शौचं सुखदुःखा विकारिता । सर्वेन्द्रियसमाहारो धारणाध्याननित्यता । भावसंशुद्धिरित्येष परिव्राड्धर्म्म उच्यते" ।

**परिव्राज** पु० परित्यज्य पुत्रादीन् व्रजति परि+व्रज—संज्ञायां कर्त्तरि घञ् । परिव्राजि भिक्षौ

**परिव्राजक** पु० परित्यज्य पुत्रादीन् सर्वकर्माणि च व्रजति व्रज—घञ् स्वार्थे क ण्वुल् वा । चतुर्थाश्रमिणि यतौ ।

**परिव्राजि** स्त्री परि+व्रज—णिच्-इन् । श्रावण्यां (मुण्डि) क्षुपे राजनि० ।

**परिशिष्ट** त्रि० परि+शिष-क्त । १अवशेषे । ततः स्वार्थे अच् । २तत्प्रकाशकग्रन्थभेदे न० हेमच० यथा "गृह्यपरिशिष्टं छन्दोगपरिशिष्टम् इत्यादि ।

**परिशुष्क** त्रि० परि+शुष-क्त तस्य कः । १परितः शोषयुते २नीरसे "मांसं बहुघृतैर्भृष्टं सिक्तञ्चोदम्बुना मुहुः । जीरकाद्यैः समायुक्तं परिशुष्कं तदुच्यते" भाव्प्र० उक्ते ३परिपक्वमांसभेदे न० ।

**परिशेष** पु० परि+शिष-घञ् । अवशेषे

**परिशोध** पु० परि+भावे घञ् । १ऋणादेः शोधने । णिच् अच् । २परितः शुद्धिसम्पादने च । ल्युट् । परिशोधन तत्रार्थे न० ।

**परिश्रम** पु० परि+श्रम—घञ् न वृद्धिः । १व्यायामे क्लेशकारके आयासे हेमच० । आर्षे तु क्वचित् वृद्धिः । परिश्राम तत्रार्थे भाग० २।६।२० [च मेदि० ।

**परिश्रय** पु० परि+श्रि-आधारे अच् । १आश्रये २सभायां

**परिश्रित्** स्त्री परिश्रयत्यनया परि+श्रि-करणे क्विप् । कुण्डपाषाणे शत०ब्रा० ७।१।१२ भाष्यम् । २यज्ञियेष्टकासमसंख्यके पाषाणखण्डे च कात्या०श्रौ०१८।६।१२

**परिश्रित** त्रि० परि+श्रि+क्त । १समाश्रिते भावे क्त । २आश्रये न० । ३परितोवेष्टने ४दण्डादिपरिहारके तिरस्करण्यादिभिर्वेष्टने शत०ब्रा० ३।१।२।८ भा० । आश्व० श्रौ० २।४।१ नारा० ।

**परिषद्** स्त्री परिषीदत्यस्यां परि+सद—आधारे क्विप् । सभायां धर्मनिर्णयार्थं विद्वद्भिर्युक्तायां२ सभायाञ्च यथोक्तं मनुना "अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत् । यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशंसयः"

प्रायश्चित्तनिर्णयार्थं परिषदुपस्थानप्रकारः परिषद्विशेषव्यवस्थादिकं प्रा०वि० उक्तं यथा

"अथ प्रायश्चित्तिनः परिषदुपस्थानम् । तत्राङ्गिराः "कृते निःसंशये पापे न भुञ्जीतानुपस्थितः । भुञ्जानो वर्द्धयेत् पापमसत्यं संसदि ब्रुवन् । सचेलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः । उपस्थाय ततः शीघ्रमार्त्तिमान् धरणीं गतः । गात्रैश्च शिरसा चैव न च किञ्चिदुदाहरेत्" । उपस्थानञ्च वस्त्रादिना ब्राह्मणान् तोषयित्वा कार्य्यम् "तोषयित्वा द्विजोत्तमानिति" देवलवचनात् । महत्सु पापेषु राज्ञाप्युपस्थितिः कार्य्येत्याह देवलः "स्वयं वा ब्राह्मणैः कल्पमल्पदोषे विधीयते । राज्ञा च ब्राह्मणैश्चैव महत्सु परिकल्पते" । परिषदमाह अङ्गिराः "एकविंशतिसंख्यातैर्मीमांसान्यायव्यायपारगैः । वेदाङ्गकुशलैश्चैव परिषत्त्वं प्रकल्पयेत् । चातुर्वैद्यः विकल्पी च अङ्गविद्धर्मपाठकः । त्रयश्चाश्रमिणो वृद्धाः परिषत् स्याद्दशावरा" । परिराद्भवन्तोऽत्र सभार्हपरः । चातुर्वैद्यः चतुर्वेदपारगः । विकल्पी सर्वधर्मप्रमाणज्ञः धर्मपाठकः धर्मशास्त्रज्ञः । मनुः "त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः । त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा" । अङ्गिराः "एषा तु लघुकार्य्येषु मध्यमेषु तु मध्यमाः । महापातकशोध्येषु शतशो भूय एव वा" प्रदर्शनार्थमिदं यावद्भिरेव निरूपणं भवति तावद्भिरेव परिषत् दृष्टार्थत्वादस्याः । तथाच यमः "एको द्वौ वा त्रयो वापि यद्ब्रूयुर्धर्मपाठकाः । स धर्म इति विज्ञेयो नेतरेषां सहस्रशः । यद् वदन्ति तमोमूढा मूर्खा धर्ममतद्विदः । तत्पापं शतधा भूत्वा तद्वक्तॄननुगच्छति" । द्रव्यदाता-

तपः "अबुद्धा धर्मशास्त्राणि प्रायश्चित्तं वदन्ति ये। प्रायश्चित्ती भवेत् पूतस्तत् पापं तेषु गच्छति"। अङ्गिराः "आर्त्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः। जानन्तो न प्रयच्छन्ति तेऽपि तद्दोषभागिनः। अनर्च्चितैरनाहूतैरपृष्टैश्चैव संसदि। प्रायश्चित्तं न वक्तव्यं जानद्भिरपि अल्पतः"। तथा "न्यायतो मार्गमाणस्य क्षत्रियादेः प्रयाणिनः। अन्तरा ब्राह्मणं कृत्वा व्रतमेतत् समादिशेत्"। [हिरूपकोषः।

**परिषद्** त्रि॰ परितः सीदति परि+सद-क्विप्। अनुचरे

**परिषद्य** त्रि॰ परिषदमर्हति यत्। सभार्हे हिरूप॰। सोलं समेतानामृत्विजां सभायोग्ये पवमाने अग्निभेदे यजु॰ ५।३२ वेददीपः।

**परिषद्वल** त्रि॰ परिषद्+अस्त्यर्थे वलच्। सभासदे तत्र आश्रयत्वेन परिषदः सत्त्वात् तथात्वम्।

**परिषीवण** न॰ परि+षिव-भावे ल्युट् षत्वं वा दीर्घः नि॰। ग्रन्थिकरणे (गाँटदेओया) माघः ८।६।१२ पक्षे परिसेवणमप्यत्र।

**परिषूति** स्त्री परि+षू-प्रेरणे भावे क्तिन्। १प्रेरणे। कर्त्तरि क्विप्। २प्रेरके त्रि॰ ऋ॰ १।१८।६

**परिषेचक** परि+षिच-ण्वुल्। परितः सेचके अकारान्तेऽपि याजका॰ समर्थनच्छा समासः। अन्तोदात्तता चास्य।

**परिष्कन्न** त्रि॰ परि+स्कन्द-क्त तस्य दस्य च न वा षत्वे षत्वम्। परपुष्टे षत्वाभावे णत्वाभावात् परिस्कन्न तत्रार्थे।

**परिष्क(स्क)न्द** त्रि॰ परिष्कद्यते पूर्यते परि+स्कन्द घञ् वा षत्वम्। १परपुष्टे अमरः २परितः स्थायिनि रथगोपके भा॰भ॰ ४३अ॰।

**परिष्कर** पु॰ परि+कृ-भावे बा॰ अप् सुट् षत्वम्। रथस्य रथादौ भा॰व॰ २४अ॰ "सर्प्पिभिमण्डलं स्त्रोयं रथस्यासीत् परिष्करः"।

**परिष्कार** पु॰ परि+कृ-घञ् सुट् षत्वम्। १भूषणे विद्यमानवस्तुनो गुणान्तरस्य २आधानादौ ३संस्कारे च अमरः ४शुद्धौ।

**परिष्कृत** त्रि॰ परि+कृ-क्त सुट् षत्वम्। १भूषिते २चेष्टिते ३कृतमार्जनादिसंस्कारे च अमरः यज्ञार्थं मण्डपखननाय-यज्ञपात्रासादनाय च कृतसंस्कारायां ४भूमौ स्त्री अमरः।

**परिष्टि** स्त्री परि+इष-क्तिन् वेदे शक॰। अन्वेषणे ऋ॰ ११। ६५। लोके तु परीष्टिरित्येव

**परिष्टुभ्** त्रि॰ परि+स्तुभ-क्विप् षत्वम्। १परितः निरर्थकशब्दरूपस्तोभयुक्ते ऋ॰ १।१६६।११ भा॰। २परितः स्तोतव्ये ऋ॰ ८।६२।२४ भा॰।

**परि(ष्टो)स्तोम** पु॰परितः स्तूयते उत्तमवर्णयुक्तत्वात् षत्वम्। परिगतः स्तोमम् प्रा॰स॰ तत्र परेः स्तौतिं प्रत्यनुपसर्गत्वात् न षत्वमिति भेदः इति स्वामी। गजपृष्ठास्तरणकम्बले (झूल) अमरः। [षत्वम्। परितः स्थले।

**परिष्ठल** न॰परितः स्थलम् "विकुशमिपरिभ्यः स्थलम्" पा॰

**परिष्ठा** त्रि॰ परि+स्था-क्विप् षत्वम्। पराहन्त्याम् ऋ॰६।

**परि(ष्य)स्यन्द** त्रि॰ परि+स्यन्द-घञ्। "परिस्यन्दः प्राच्यभरतेषु" पा॰ प्राच्यार्थे न षत्वम् अन्यत्र वा षत्वम्। १परितः स्पन्दनयुक्ते २कुसुमादेः पत्रावल्यादिरचनायाम् अमरः। ३परिष्कारे ४परिवारे च हेमच॰।

**परिष्वङ्ग** पु॰ परि+स्वञ्ज-घञ्। आलिङ्गने अमरः

**परिसंवत्सर** अव्य॰ऊर्द्ध्वं संवत्सरात् अव्ययी॰। वत्सरादूर्द्ध्वं "परिसंवत्सरात् पुनः" मनु॰पञ्चम्या अलुक्। २परिवत्सरे पु॰

**परिसंख्या** स्त्री परि+सम्-ख्या-भावे अङ्। १परिगणिते २विधिभेदे नियमशब्दे ४०७८ पृ॰ क्रतुकारशब्दे च १४ ३७पृ॰ दृश्यम्।

**परिसंख्यात** त्रि॰ परि+सम्-ख्या-कर्मणि क्त। परिगणिते

**परिसञ्चर** पु॰ सृष्टिकालादूर्द्ध्वं सञ्चरति परि+सम्-चर-अच्। प्रतिसञ्चरकाले सृष्टिप्रलयकाले "त्रिविधः सर्वभूतानां कीर्त्त्यते परिसञ्चरः। अनावृष्टिर्भास्कराच्च घोरः संवर्त्तकोऽनलः। मेघो ह्यकालवर्षी वायुस्तथा रात्रिर्भयानकः" वराहपु॰।

**परिसमूहन** परि+सम्-ऊह भावे ल्युट्। यज्ञादौ अनलोपरि १तृणैः समिदाधाने परितः पतितलघ्वादेः प्रक्षिप्य अग्निमध्ये २प्रक्षेपरूपव्यापारभेदे च कात्या॰श्रौ॰४।१२। १८। ३अग्नेः समन्तात् मार्जने च।

**परिसर** पु॰ परि+सृ-अप्। १नदीनगरपर्वतादेः पर्य्यन्तभूमौ अमरः २मृत्यौ ३विधाने मेदि॰।

**परिसर्प** पु॰ परि+सृप-भावे घञ्। १परितो जलादिना वेष्टने २समन्तात् गमने च हेम॰। ३सारस्वतयागभेदे न॰ आश्व॰ १२।६।२२

**परिसर्य्या** स्त्री परि+सृ-भावे क्यप्। सर्वतो गमने अमरः।

**परिसारक** त्रि॰ परि+सृ-ण्वुल्। १परितो गन्तरि। ततः मत्वर्थे अण्। पारिसारक तच्छब्दयुक्ते अध्याये अनुवाके च पु॰।

**परिस्य(ष्य)न्द** पु० परि+स्यन्द–भावे घञ् अप्राणिकर्तृकत्वे वा षत्वम्। घृतादेः क्षरणे प्राणिकर्तृके तु स्यादेर्मद्यक्षरणे तु न षत्वम्।

**परिस्रव** परि+स्रु–भावे अप्। परितः क्षरणे

**परिस्राव** पु० परि+स्रु–णिच्-अच्। सुश्रुतोक्ते परिस्रवजनके १उपद्रवभेदे "क्रूरकोष्ठस्यातिप्रवृद्धदोषस्याल्पदोषघ्नमवचारितं वस्तुत्क्लिश्य दोषान्निःशेषानपहरति ततो दोषाः परिस्रावमापादयन्ति तत्र दौर्बल्योदरविष्टम्भारुचिगात्रसदनानि भवन्ति स्रवेद्वा चास्य पित्तश्लेष्माणौ परिस्रवतस्तं परिस्रावमित्याचक्षते। परि+स्रु भावे बा० घञ्। २परिक्षरणे च

**परिस्राविन्** त्रि० परि+स्रु–णिनि। १क्षरणयुक्ते सुश्रुतोक्ते पञ्चविधभगन्दरमध्ये २तद्भेदे च "श्लेष्मा तु प्रकुपितः समीरणेनाधःप्रेरितः पूर्ववदवस्थितः शुक्लावभासां स्थिरां कण्डूमतीं पिडकां जनयति तस्य कण्ड्वादीन्वेदनाविशेषाश्चनयत्यप्रतिक्रियमाणा च पाकमुपैति व्रणश्च कठिनः संरम्भी कण्डूप्रायः पिच्छिलमजस्रमास्रावं स्रवत्युपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति तं भगन्दरं परिस्राविणमित्याचक्षते" तत्र तल्लक्षणमुक्तम्।

**परिस्रुत्** स्त्री परि+स्रु–क्विप्। १सुरायाम् अमरः। २परितः क्षरणयुक्ते त्रि० "अन्नात् परिस्रुतो रसम्" यजु० १९।७५। भावे सम्प० क्विप्। ३क्षरणे स्त्री।

**परिस्रुत** त्रि० परि+स्रु–क्त। १पुष्पादिभ्यो निःसृतसारसृपे पदार्थे "जलं वहन्तीरस्रुतं घृतं पयः कीलालं परिस्रुतम्" यजु० २।३४ "परिस्रुतं वहन्तीः पुष्पेभ्यो निःसृतं सारं वहन्त्यः। तच्च सारं त्रिविधम् जलशब्देन घृतशब्देन पयःशब्देन चाभिधेयम्। तत्रोजशब्दोऽन्नगतं स्वादुत्वमभिधत्ते। घृतपयसी प्रसिद्धे" वेददी०। २मदिरायां स्त्री मेदि०।

**परिहनु** अव्य० हन्वोरुपरि अव्ययी०। हन्वोरुपरि ततः परिमुखा० भवार्थे ण्य। पारिहनव्य तत्र भवे त्रि०

**परिहस्त** अव्य० परिवर्जने अव्ययी०। हस्तस्य वर्जने तस्य निष्टकादित्वात् अन्तोदात्तता।

**परि(री)हार** पु० परि+हृ-घञ् वा दीर्घः। १अवज्ञायां अनादरे शब्दरत्ना०। २दोषाद्युद्धारणे च

**परिहार्य्य** त्रि० परि+हृ–कर्मणि ण्यत्। १परिहर्त्तव्ये २वलये हिरूपकोषः। ३उद्धार्ये च

**परि(री)हास** पु०परि+हस-घञ् वा दीर्घः। नर्मणि त्रिका०

**परिहृत्** त्रि० परि+हृ–क्विप्। परिहृत्य गन्तरि ऋ०६।४।५

**परीक्षक** त्रि० परि+ईक्ष–ण्वुल्। १तर्केण प्रमाणैरनिर्द्धारितनिर्द्धारणाय शास्त्रपरिशीलनेन प्राप्तबुद्धिप्रकर्षे इष्टान्तशब्दे ३६७२ पृ० दृश्यम्। २व्यवहारादौ दिव्यभेदपरीक्षाकारके च।

**परीक्षण** न० परि+ईक्ष-भावे ल्युट्। राज्ञा अमात्यादेः चारादेश्च १दुष्टादुष्टत्वनिरूपणे तर्कप्रमाणाभ्यां २वस्तुतत्त्वावधारणे च "भेदोपजापावुपधाधर्माद्यैर्यत् परीक्षणम्" अमरः।

**परीक्षा** स्त्री परि+ईक्ष–भावे अ। दिव्यशब्दे ३५८८ पृष्ठादौ दर्शिते १दिव्यशब्दार्थे तर्कप्रमाणादिना २वस्तुतत्त्वावधारणे च। [द्यवधारके।

**परीक्षिन्** त्रि० परि+ईक्ष–णिनि। युक्तिप्रमाणैर्वस्तुस्वरूपा-

**परीणस्** त्रि० परि+नस–कौटिल्ये धातूनामनेकार्थत्वात् व्याप्तौ क्विप् दीर्घः। १व्यापके ऋ०५।१०।१ भा०। परि+नह बा० डसुन् दीर्घः। २परितोनद्धे च ऋ०१।१२९।९

**परीणसा** अव्य० परि+नस–व्याप्तौ बा० आत् दीर्घः। बहुपदार्थे निघण्टुः ऋ०८।९७।८। उदा०।

**परीणह्** त्रि० परितः नह्यते बध्यते नह–क्विप् दीर्घः। १परितो बन्धने २तत्कर्मणि च। अलि पदान्ते कुत्वं चः।

**परीत** त्रि० परि+इ–क्त। परितो गते [भा०उ० ११०अ०

**परीप्सा** स्त्री परि+आप्-सन्–भावे अ। प्राप्तुमिच्छायाम्

**परीर** न० पूर्य्यतेऽनेन पृ–करणे ईरन्। फले उज्ज्वल०।

**परीरण** पु० परि+रण–अप् दीर्घः। १कमठे २दण्डे ३पट्टशाटके च मेदि०।

**परीरम्भ** पु० परि+रम्भ–घञ् वा दीर्घः। आलिङ्गने अमरः

**परीष्टि** स्त्री परि+इष–क्तिन्। १अन्वेषणायाम् २परिचर्य्यायाश्च हेमच०।

**परीसार** पु० परि+सृ–घञ् दीर्घः। सर्वतोगमने हेमच०।

**परु** पु० पृ–उन्। १समुद्रे २स्वर्गे ३ग्रन्थौ ४पर्वते च संक्षिप्त०

**परुच्छेप** पु० परुषि शेफोऽस्य पृषो०। ऋषिभेदे निरु०१०।४२

**परुत्** अव्य० परस्मिन् वर्षे नि०। परवर्षे इत्यर्थे अमरः। तत्र भवः त्न। परुत्न परवर्षभवे त्रि०।

**परुद्वार** स्त्री परुः समुद्रो पर्वतो वा द्वारमस्य। घोटके शब्दमाला स्त्रियां जातित्वात् ङीष्।

**परुष** न० पृ–उषन्। १निष्ठुरवचने २नीलझिण्ट्याम् अमरः ३फलभेदे परूषके भावप्र०। [यके त्रि०।

**परुषोक्ति** स्त्री कर्म०। १निष्ठुरोक्तौ। बहु०। २कटुवाक्य-

**परुस्** न॰ पॄ–उसि। ग्रन्थौ (गाँट) पर्वणि अमरः।

**परूष** न॰ पॄ–ऊषन्। फलभेदे (फलसा) "परूषकं कषाया-म्लमामं पित्तकरं लघु। तत् पक्वं मधुरं पाके शीतं विष्टम्भि वृंहणम्। हृद्यं हट् पित्तदाहास्रज्वरक्षयस-मीरहृत्" भावप्र॰।

**परेत** त्रि॰ परा+इ–क्त। मृते अमरः।

**परेतराज्(ज)** पु॰ ६त॰ टच्समा॰ परेतेषु राजते राज–क्विप् वा। यमे अमरः।

**परेतवास** पु॰ ६त॰। श्मशाने।

**परेद्यवि** अव्य॰ परस्मिन् अह्नि नि॰। परदिने इत्यर्थे।

**परेद्युस्** अव्य॰ परस्मिन् अह्नि पर+एद्युस्। परदिने इत्यर्थे

**परेष्टुका** स्त्री परैरिष्यते इष–तु स्वार्थे क। बहुप्रसवायां गवि अमरः।

**परैधित** त्रि॰ परैरेधितः एध+णिच्–क्त ३त॰। अन्य-पालिते औदासीन्येनापरवर्द्धिते अमरः।

**परोक्ष** अव्य॰अक्ष्णः परम् अव्ययी॰ सुट् नि॰ पूर्वनिपातः। १अप्रत्यक्षज्ञाने "परोक्षज्ञानमनाहार्य्यं निश्चयश्चेति सिद्धान्तः" इत्युक्तेस्तज्ज्ञानस्यानाहार्य्यत्वम् निश्चयरूप-त्वञ्च बोध्यम्। अर्श आद्यच्। २तद्विषये त्रि॰। ३तप-स्विनि शब्दमाला। [स्त्रियाम्।

**परोढा** स्त्री परेणोढा ३त॰। परेण कृतविवाहायां

**परोपकार** पु॰ ६त॰। परस्य हितादिसम्पादनव्यापारे

**परोबाहु** पु॰ परोबाहुर्बन्धोऽस्य नि॰ सुट्। परमबन्ध-युक्ते शत॰ब्रा॰६।५।३।१०। [शत॰ब्रा॰ १४।८।१५।१

**परोरजस्** त्रि॰ रजसः परः सुट् नि॰। १रागाभावे २विरक्ते

**परोलक्ष** न॰ लक्षात् परः सुट् नि॰। १लक्षसंख्यातोऽधिक-संख्यायाम् २तदन्विते च।

**परोवरीण** त्रि॰ "परांश्चापरांश्चानुभवति ख अवरस्यौत्त्वं निपात्यते। श्रेष्ठानुयुक्ते।

**परोवरीयस्** परश्च वरीयांश्च नि॰ पूर्वपदे सुट्। अत्यन्त-श्रेष्ठे परमात्मनि "परोवरीयसो ह लोकान् जयति" छा॰उ॰।

**परोष्णी** स्त्री परा+उष्णा–कर्म॰ गौरा॰ ङीष्। तैलपायि-कायाम् अमरः। [कुलत्थे अमरः।

**पर्कटि(टी)** स्त्री पृच–अटि स्वङ्का॰ कुत्वम्। (पाकुड़)

**पर्कटिन्** पु॰ पृच–अटिनि स्वङ्का॰ कुत्वम्। वृक्षभेदे (पाकुड़) "पर्कटी कटुकः प्रोक्तः शिशिरश्च कषायकः। रक्तदोषहरो मूर्च्छाप्रलापभ्रमनाशनः" राजनि॰ तद्-गुणा उक्ताः।

**पर्जनी** स्त्री पृज–करणे ल्युट् ङीप्। दारुहरिद्रायाम् अमरः।

**पर्जन्य** पु॰पृषु–सेचने अन्य जान्तादेशः। १इन्द्रे २मेघे मेदि॰ "यज्ञाद्भवति पर्जन्यः" इति मनुः। ३मेघशब्दे विश्वः पर्जन्य इव सर्वान् कामानभिवर्षति। ४विष्णौ पु॰। "कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनोऽनिलः" विष्णुस॰ ५दारुहरिद्रायां स्त्री राजनि॰।

**पर्जन्यपत्नी** स्त्री पर्जन्यः पतिरिवास्याः सपूर्वकत्वात् पत्युर्नं ङीप्। वशायां "वशा पर्जन्यपत्नी देवा अप्येति ब्राह्मणा ऋषयश्च भद्रे! पर्जन्यो विद्युतस्ते स्तना वशे!" अथ॰ १०।१०।६। ६त॰। २इन्द्रपत्न्यां शच्याञ्च।

**पर्ण** हरितीकरणे अ॰चु॰ उभ॰सक॰सेट्। पर्णयति–ते अप॰ पर्णत्–त। वसन्तः पर्णयति भवनकम्।

**पर्ण** न॰ पॄ–न, पर्ण–अच् वा। १पत्रे २पक्षे च "सुपर्णो गरुडो मतः" इति। ३पलाशवृक्षे पु॰ ४ताम्बूले न॰ ५पत्रयुक्ते त्रि॰ अमरः। "पर्णमूले भवेद्व्याधिः प-र्णाग्रे पापसम्भवः। जीर्णं पर्णं हरेदायुः शिरा बुद्धिप्रणाशिनी" आह्नि॰ त॰। तन्मूलादिसेवननिषेधः। "अनिधाय मुखे पर्णं पूगं खादयते परम्। मतिभ्रंशात् दरिद्रः स्यादन्ते न स्मरते हरिम्" । अत्र परमित्युक्तेः धन्याकादियोगे न दोषः। पर्णस्येदम् शिवा॰ अण्। पार्णं तत्सम्बन्धिनि त्रि॰। अस्त्यर्थे अशा॰ अच् कुक् च। पर्णकीय तद्युक्तदेशे त्रि॰। तस्याद्दूरनगरादि वराहा॰ अण् पार्ण तस्यादूरदेशादौ त्रि॰। बहुत्वे तस्य लुक् पर्णाः इत्येव। तत्र भवः "ककपर्णात् भरद्वाजे" पा॰ भवादौ छ। पर्णीय भरद्वाजदेशभवे अन्यत्र अणेव पार्णं त-त्रार्थे त्रि॰। जुहूः पर्णम् ङीप्। २जुहूपर्णी स्त्री स्वास्य-पर्णं अश्वरादि॰ छन्। पर्णिक तद्विक्रेतरि स्त्रियां षित्त्वात् ङीप्।

**पर्णक** पु॰ ऋषिभेदे तस्य गोत्रापत्यम् इञ् पार्णकि तद्गो-त्रापत्ये बहुत्वे तु उपका॰ तस्य वा लुक्।

**पर्णकार** पुंस्त्री॰ पर्णं करोति उत्पादयति अण् उप॰स॰। (बारुइ) ख्याते जातिभेदे ताम्बूलजीविनि स्त्रियां जातित्वात् ङीष्। [रचिते कुटुम्बके (पातेरकुँड़े)।

**पर्णकुटी** स्त्री पर्णैर्निर्मिता कुटी शा॰त॰। पत्रमात्रेण

**पर्णकूर्च** पु॰ पर्णकल्कोदकद्रव्याणां त्रिरात्रोपवासान्ते पिबे-त्तो भोजननिषेधादिव्रतभेदे यथाह मिता॰। "यदा तु पर्णादीनामेकीकृतानां कायश्चिरात्रान्ते पीयते तदा

पर्णकूर्चः यथाह यमः "एतान्येव समस्तानि त्रिरात्रोपोषितः शुचिः । क्वाथयित्वा पिबेदद्भिः पर्णकूर्चोऽभिधीयते" इति । एतानि पर्णकृच्छ्रोक्तद्रव्याणि ।

**पर्णकृच्छ्र** पु० पञ्चाहसाध्ये व्रतभेदे "पर्णोदुम्बरराजीवबिल्वपत्रकुशोदकैः । प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः" याज्ञ० 'पलाशोदुम्बरारविन्दश्रीवृक्षपर्णानामेकैकेन क्वथितमुदकं प्रत्यहं पिबेत् । कुशोदकञ्चैकस्मिन्नहनीति पञ्चाहसाध्यः पर्णकृच्छ्रः' मिता० ।

**पर्णखण्ड** पु० पर्णमेव खण्डः खण्ड्यते यस्य पुष्पहीनत्वात् । १पुष्पहीने वनस्पतौ वृक्षे शब्दच० । समूहे खण्डच् । २पर्णसमूहे न० ।

**पर्णचोरपट** पु० महादेवे भा० शा० २८६अ० ।

**पर्णचोरक** पु० पर्णं चोरयति चुर–ण्वुल् । चोरनामगन्धद्रव्ये राजनि० ।

**पर्णनर** पु० पर्णनिर्मितः नर इव । अस्थ्यलाभे मृतस्य दाहार्थं पर्णनिर्मिते नराकृतौ पुत्तलिकाभेदे तद्विधानं शु० त० उक्तं यथा

"अथास्थ्यलाभे पर्णनरदाहः । तत्राश्वलायनगृह्यपरिशिष्टम् "अस्थिनाशे पलाशानां त्रीणि षष्टिशतानि च । पुरुषप्रतिकृतिं कृत्वा दहेत मन्त्रपूर्वकम् । अशीत्यर्द्धन्तु शिरसि ग्रीवायां दश योजयेत् । उरसि त्रिंशतं दद्याद्विंशतिं जठरे तथा । बाहुभ्याञ्च शतं दद्यात् दद्यादङ्गुलिभिर्दश । द्वादशार्द्धं वृषणयोरष्टार्द्धं शिश्न एव च । ऊरुभ्याञ्च शतं दद्यात्त्रिंशतं जानुजङ्घयोः । पादाङ्गुलिषु च दश एतत् प्रेतस्य लक्षणम् । ऊर्णासूत्रेण संवेष्ट्य यवपिष्टेन लेपयेत्" । आदिपुराणम् "तदलाभे पलाशोत्थैः पर्णैः कार्यः पुमानपि । शतैस्त्रिभिस्तथा षष्ट्या शरपत्रैर्विधानतः" । तदलाभेऽस्थ्यलाभे । अत्र पलाशपत्रशरपत्रयोस्तुल्यत्वेनोपादानात् आश्वलायनगृह्येऽपि प्रतिकृतौ शरपत्रस्य लाभः । अतः शरादीन्यपि शरपत्रैः पुत्तलकं कृत्वा शिरःप्रभृतिषु पलाशपत्राणि देयानि ततो वेष्टनमूर्णासूत्रेण, लेपनं यवपिष्टेनेति । अत्राशौचाभ्यन्तरे दाहे शेषाहेन शुद्धिः तदुत्तरपर्णनरदाहे तु त्रिरात्रम् । "एवं पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेत्" इत्यादिपुराणात् । यम-मार्गः "पुत्राश्चेदुपलभ्येरन् तदस्थीनि कदाचन । तदलाभे पलाशस्य दहने हि पुनःक्रिया" । हि यस्मात् तदलाभेऽस्थ्यसंप्राप्तौ पलाशस्य तत्कृतपुत्तलकस्य दाहक्रिया पुनरपि तल्लाभे अस्थिदाहक्रिया विहिता तस्माद्यदि पुनरस्थीनि प्राप्यन्ते तदा पुनर्दाहे त्रिरात्राशौचे कर्त्तव्ये न पुनः पिण्डादिदानं वक्ष्यमाणयुक्तेः । "अशौचानन्तरं चेत् स्याद्दाहः पर्णनरस्य च । त्र्यहाच्छुद्ध्यन्ति च तथा सपिण्डाः सगोत्रजाः" । दर्शे दहेत् "पर्णनरं दहेच्चैव विना दर्शं कथञ्चन । अस्थ्यलाभे तु दर्शेऽपि ततः पर्णनरं दहेत्" इति दीपकलिकायां सुमन्तुवचनात् । दर्शे इत्यत्राष्टम्यामिति क्वचित् पाठः । अष्टमी कृष्णा चन्द्रे हि पितृकर्मणि कृष्णपक्षप्राधान्येनोक्तेः । "नरं पर्णं दहेच्चैव प्राक् त्रिपक्षात् कथञ्चन । त्रिपक्षे तु न वै दद्यात् दर्शं प्राप्ते ह्यनग्निकः" । इत्यशौचव्यपगमे बोध्यम् । यथाह शुद्धिरत्नाकरे यमः "अशौचमध्ये यत्नेन दाहयेदुक्तया कृता । कृष्णपक्षे पञ्चदश्यामष्टम्यां वा समाहितः । एकादश्यां विशेषेण ततः प्रभृति सूतकम् । त्रिरात्रं सर्ववर्णानामेष धर्मो व्यवस्थितः ।" कृष्णपक्ष इत्यशौचव्यपगमे बोध्यम् । वायुपुराणे "पर्णनरं दहेच्चैव प्राक् त्रिपक्षात् कथञ्चन । पितृहा बालहाष्ट्याञ्चैव दर्शे दहेत् यदि ।" विष्णुपु० "त्रिपक्षे तु गते पर्णनरं दद्यादनग्निकः । त्रिपक्षाभ्यन्तरे राजन् ! नैव पर्णनरं दहेत् । तदूर्द्ध्वमष्टमीं प्राप्य दर्शं वापि विचक्षणः ।" दहेदिति शेषः । "अशौचाभ्यन्तरे यदि दाहं न कुर्यात् तदा मरणदिनावधि त्रिपक्षानन्तरं दाहः कार्य्य इत्यर्थः" इति हरिदासतर्काचार्य्याः । "पर्णं नरं दहेच्चैव विना दर्शं कदाचन । अस्थ्नामलाभे दर्शे तु ततः पर्णनरं दहेत्" इति दीपकलिकायां सुमन्तुवचनाद्दर्शे दाहः । अत्राष्टमीति क्वचित् पाठः । यमः "त्रिपक्षाभ्यन्तरे राजन् ! नैव पर्णनरं दहेत् । तदूर्द्ध्वमष्टमीं प्राप्य दर्शं वापि विचक्षणः" । अष्टमीत्यत्र कृष्णाष्टमीत्यर्थः । पितृकर्मणि कृष्णपक्षप्राधान्येनोक्तेः इति हरिदासतर्काचार्य्यलिखनात् । एतच्चाशौचव्यतिरिक्तविषयम्" ।

अत्र नक्षत्रादिकालभेदः शु० चि० पी० उक्तो यथा

"शुक्रारार्किषु दर्शभूतमदने नन्दा सतीक्ष्णोग्रभे पौष्णे वारुणभे त्रिपुष्करदिने न्यूनाधिमासेऽयने । याम्येऽब्दात् परमत्र मातपरिघे देवेज्यशुक्रास्तके भद्रावैधृतयोः सपतिकृतेर्दाहो न पक्षे सिते । जन्मप्रत्यरितारयोर्मृतिभवान्त्येऽजे च कर्त्तुर्न सन् षष्ठ्यो नैत्रभगादितिषु वविमाषाढर्क्षभे क्षेऽपि च । क्षेत्रो-

ऽर्केज्यविधोर्दिने श्रुतिकरस्वात्यश्विपुष्ये तथा त्वाशौचा-न्ततो विचार्यमखिलं मध्ये यथासम्भवम्” सु०चि० । “एवंविधे दिने शवस्य मृतस्य प्रतिकृतिः शरपत्रादिना शावयशत्वकल्पनं तस्य दाहो न कार्यः कुतः यतो द्विविधः प्रेतसंस्कारः प्रत्यक्षशरीरस्यैकः प्रतिकृतेरन्यः तत्र प्रत्यक्ष-शरीरसंस्कृतौ शुभाशुभदिनविचाराभावः यदाह गार्ग्यः “प्रत्यक्षशवसंस्कारे दिनं नैव विशोधयेदिति” प्रतिकृतिसं-स्कारस्य हि कालत्रयम् अशौचमध्ये वर्षमध्ये वर्षानन्तरं चेति अत्राशौचमध्ये यदि प्रतिकृतिसंस्कारश्चिकीर्षित-स्तदा यथासम्भवं दिनशुद्धिर्विचार्या वर्षमध्ये वर्षानन्तरं वा प्रतिकृतिसंस्कारे अवश्यं कालशुद्धिर्विचार्या एतदप्याह गार्ग्य एव“आशौचमध्ये क्रियते पुनःसंस्कारकर्म चेत् । शोधनीयं दिनं तत्र यथासम्भवमेवमेव तु । आशौचवि-निवृत्तौ चेत् पुनः संस्क्रियते मृतः । संशोध्यैव दिनं मा-सादूर्ध्वं संवत्सरादपि” । प्रेतकार्याणि कुर्वीतेति शेषः अतएवोक्तम् “आशौचात्परतो विचार्यमखिलं मध्ये यथासम्भवमिति” । एतद्वाक्यमत्रैव स्पष्टं व्याख्यास्यते तत्र दिनशुद्धिरुच्यते शुक्रारेत्यादिना शुक्रः प्रसिद्धः आरो मङ्गलः आर्किः शनिः एषां वारे प्रतिकृतेर्दाहो नेति प्रत्येकं सम्बन्धः । तथा दर्शोऽमावस्या भूतश्चतुर्दशी मदनस्त्रयोदशी नन्दाः प्रतिपत्षष्ठ्येकादश्यः आसु तिथिषु दाहो न कार्यः यदाह मरीचिः “नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे । पितृश्राद्धं न कुर्वीत कृते पुत्रधनक्षयात् । एकादश्यां तु नन्दायां सिनी-वाल्यां भृगोर्दिने । नभस्ये च चतुर्दश्यां कृत्तिकासु त्रिपुष्करे” । द्वितीयवाक्यमतिदुष्टताकथनार्थं सिनी-वाल्याममावास्यायां भृगोर्दिने शुक्रवारे इति सम्बन्धो व्याख्येयः अत्र श्राद्धं न कुर्वीतेत्यनुषङ्गः श्राद्धशब्दे-नात्र प्रेतक्रिया विवक्षिता । तथा तीक्ष्णोग्रभे मूल-ज्येष्ठार्द्राश्लेषास्तीक्ष्णानि उग्राणि पूर्वात्रयभरणीमघाः धौष्ण्ये रेवत्यां वारुणे शतभे त्रिपुष्करदिने भद्रातिथयः सूर्यभौमशनिवाराः कृत्तिकापुनर्वसूत्तराफाल्गुनी वि-शाखोत्तराषाढ़ापूर्वभाद्रपदाः एतत्त्रितयसंहतिरूपे दिने प्रतिकृतेर्दाहो न कार्य इति केचिद्व्याकुर्वते तत्र पूर्व-पद्येनैव निषेधसत्त्वात् ननु प्रत्यक्षमृतौ स निषेधो न तु प्रतिकृतिदाहे एवं तर्हि सम्मतिवाक्याभावाद्वायमर्थ इति ब्रूमः । यदुक्तं ज्योतिःपराशरेण “साधारणध्रुवो-ग्रे चैव नो शस्यते मनुष्याणाम् । प्रेतक्रिया कथ-ञ्चित् त्रिपुष्करे यमलधिष्ण्ये चेति” अत्र त्रिपुष्करशब्देन विशिष्टयोगो विवक्षित इति चेत् अत्र ब्रूमः त्रिचरण-नक्षत्राण्येव त्रिपुष्करपदेनोच्यन्तेऽतो हेमाद्रिणापि कृत्तिकादीन्येव त्रिचरणानि भानि त्रिपुष्करशब्देन व्याख्यातानि अतएवाह कश्यपः “भरण्यार्द्रा मघा श्लेषा मूलं त्रिचरणानि च । प्रेतक्रियासु दुष्टानि धनिष्ठाद्यं च पञ्चकम्” इति पराशरवाक्ये बहूनि प्रेतकृत्ये सामान्यतो निषिद्धानि कश्यपवाक्येऽन्यान्यतिदुष्टान्युक्तानि इदमेवा-भिप्रेत्य ग्रन्थकृतोक्तानि तत्र धनिष्ठाया अग्रहणं मध्य-मेषु वक्ष्यमाणत्वात् । अथ न्यूनाधिमासे क्षयमासे अधि-मासे च शवप्रतिकृतिदाहो न कार्यः । उक्तञ्च ज्योति-र्निबन्धे गरुडपुराणे “न कुर्यात् गुरुशुक्रास्ते पौषे चापे मलिम्लुचे । विलम्बितं प्रेतकार्यं गयां गोदावरीं विनेति” मेधातिथिः “अस्तं गते गुरौ शुक्रे पौषाषा-ढाधिमासके । प्रेतकार्यं न कुर्वीत गयां गोदावरीं विनेति” अधिमासस्योपलक्षणत्वात् क्षयमासेऽपि न कार्यं प्रेतकार्यमित्यर्थः । अतएव मूले न्यूनमासनि-षेधः । अथाशौचकालावधेरनन्तरतः ऊर्ध्वं याम्येऽयने दक्षिणायने कर्कादिषड्राशिस्थिते सूर्ये न दाहः कार्यः अर्थादुत्तरायणं शस्यते, उपलक्षणत्वादवमदिनमपि निषिद्धम् उक्तञ्च गार्ग्येण “ऊर्ध्वं संवत्सराद्यदि” प्रेतकार्याणि कुर्वीत श्रेष्ठं तत्रोत्तरायणम् । कृष्णपक्षश्च तत्रापि वर्जयेत्तु दिनक्षयम्” । इति गारुडपुराणेऽपि “न कुर्याद्गुरुशुक्रास्ते पौषे चापे मलिम्लुचे । विलम्बितं प्रेतकार्यं गयां गोदावरीं विनेति” । अत्र वाक्ये पौषचा-पयोर्निषिद्धत्वान्मार्गशीर्षस्य मध्यमत्वं प्रतीयते तदावश्य-कविषयं प्रथमवर्षे तु दक्षिणायनमपि शुभमेव । पात-परिघे व्यतिपाताख्ये योगे गणितागते व्यतीपाताख्ये महापात इत्यपि केचित् परिघाख्ये योगे तथा देवे-ज्यशुक्रास्तके गुरुशुक्रयोरस्ते अत्र स्वार्थे कः । तथा भद्रावैधृतयोः भद्रावैधृतौ प्रसिद्धौ गणितसाध्ये वैधृ-ताख्ये महापाते इत्यपि केचित् । तथा सिते पक्षे शुक्लपक्षे शवप्रतिकृतेर्दाहो न कार्यः । यदुक्तं नारदेन श्राद्धप्र-करणाध्याये “चतुर्दशीं तिथिं नन्दां शुक्रारार्किवासरम् । सितेज्ययोरस्तमयं द्व्यङ्घ्रिभं त्रिपदाग्निभम् । शुक्लपक्षं च सन्त्यज्य पुनर्दहनमुच्यते” इति अन्यत्रापि “नन्दा मदन-भूतायां पातवैधृतविष्टिषु । शुक्रार्किभौमपरिघध्रुवमिश्रो-ग्रपूर्वभे । कर्क्यन्द्रेऽष्टवेदान्त्ये जन्मप्रत्यरितारके ।

त्रिपादृभे स्थिते पञ्चेऽयने याम्येऽब्दतः परम् । शवप्रतिकृतेर्दाहः शुक्रेऽस्तेऽधिकमासके । नेष्टो मध्यो द्विपान्नमैत्रद्दीशादितिभगध्रुवे" इति तथा कर्त्तुः प्रेतस्याद्याधिकारिणो जन्मप्रत्यरितारयोः जन्मतारा उत्पत्तिनक्षत्रं दशममेकोनविंशं चेति प्रत्यरितारा जन्मभात् पञ्चमं चतुर्दशं त्रयोविंशं चेति । कथा कर्त्तुस्तिथिस्थान्येऽब्दे स्वजन्मराशेरष्टमचतुर्थद्वादशस्थे चन्द्रे सति दाहो न सन् न प्रशस्तः" ।

वराहपुराणे "चतुर्थाष्टमगे चन्द्रे द्वादशे च विवर्जयेत् । प्रेतकार्य्यं व्यतीपाते वैधृतौ परिघे तथा । करणे विष्टिसंज्ञे च शनैश्चरदिने तथा" । विष्टिसंज्ञं करणं भद्रा । महाभारते "नक्षत्रेण न कुर्वीत यस्मिन् जातो भवेन्नरः । न प्रोष्ठपदयोः कार्य्यं तथाग्नेयेऽपि भारत ! । दारुणेषु च सर्वेषु प्रत्यरे च विवर्जयेत्" इति प्रोष्ठपदयोः पूर्वाभाद्रपदोत्तराभाद्रपदयोः आग्नेये कृत्तिकायाम् । कालविशेषादिकं नारदेनोक्तम् "दिनोत्तरार्द्धे तत्कर्त्तुश्चन्द्रताराबलान्विते । पापग्रहे बलयुते शुक्रलग्नांशवर्जनम् । तत्पुनर्दहनं प्रोक्तमिति" "अथ शवप्रतिकृतिदाहे मध्यनक्षत्राण्युच्यन्ते मैत्रमनुराधा भगः पूर्वाफाल्गुनी अदितिश्च विशाखाः प्रसिद्धाः द्व्यङ्घ्रिभं स्वर्गचित्रा धनिष्ठा । सोऽपि बुधवारेऽपि शवप्रतिकृतिदाहो मध्यमः न शुभफलदो नाप्यनिष्टफलद इत्यर्थः उक्तञ्च कश्यपेन "फल्गुनीद्वितयं रोहिण्यनुराधा पुनर्वसुः । द्वे आषाढे विशाखा च भानि द्विचरणानि च । एतानि किञ्चिद्दुष्टानि वर्जयेत् सति सम्भवे" इति । "नेष्टो मध्यो द्विपान्नमैत्रद्दीशादितिभगध्रुवः" इति चेत्युक्तं बुधे मध्यत्वभावः । अथार्केज्यविधोरर्केज्याभ्यां सहितो विधुरिति मध्यमपदलोपी समासः । सूर्यगुरुचन्द्राणां दिने वारे दाहः श्रेष्ठस्तथा तेन करणेन श्रुतिकरस्वात्यश्विपुष्ये एषु निषिद्धनक्षत्रगणाद्बहिर्भूतेषु पञ्चसु भेषु शवप्रतिकृतेर्दाहः श्रेष्ठोऽनुष्ठीयमानः शुभफलद इत्यर्थः । आशौचान्तरव इत्यादिव्याख्यातार्थं ननु प्रतिकृतिसंस्कारः किंनिमित्तम् उच्यते । दैवान्मानुषाद्वाऽपराधान्मृतस्य विधिवद्दाहो नाभूत् किन्तु काष्ठवद्दाहो जातोऽथ वा परदेशगतस्य चौरदंष्ट्र्यादिहतस्य तद्भीतेरेव केनचित् काष्ठदाहोऽपि न कृतोऽथ वैकाकित्वाच्च जातस्तदा प्रतिकृतिदाहो विधेयः उक्तञ्च ब्रह्मपुराणे "अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना द्विजैः । तदभावे पलाशोत्थैः पर्णैः कार्य्यः पुमानपि । सर्पिष्टैलसंमिश्रैर्दग्धव्यस्तथाग्निना । असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा सबान्धवैः । एवं पर्णशवं दग्ध्वा त्रिरात्रमशुचिर्भवेत्" इति । तदभावे देहाभावे तथाग्निना गृह्याग्निना अपिशब्दात् स्त्रीमरणे तद्देहाभावेऽपि पलाशोत्थैः पर्णैः कार्य्य इत्यर्थः । आहिताग्नेस्तु श्रौतसूत्रे विधिमाहापस्तम्बः "यद्याहिताग्निः प्रोषितः प्रमीतो न प्रज्ञायेत स यां दिशमभिप्रस्थितस्तां दिशमस्याग्निभिः कक्षं दहेयुरपि वाजसनेयिनामिति त्रीणि षष्टिशतानि पलाशवृन्तानि तैः कृष्णाजिने पुरुषाकृतिं कृत्वा तामस्याग्निभिर्दहेयुरिति वा" । अत्र पक्षद्वयं यथाप्रवासगतो यदि न प्रज्ञायेत प्रमीत इति यतो मृत इत्येव निर्णये स यां दिशं प्रस्थितो भवेत्तां दिशं प्रति यः कक्षोऽकृष्टोभूमिप्रदेशस्तृणवांस्तं देशमस्य मृतस्य श्रौताग्निभिस्तृणौ दहेयुर्बान्धवाः पितृमेधविधिना । अयमेकः पक्षः । अपि वा अथवा । त्रीणि षष्ट्युत्तराणि शतानि ३६० पलाशवृन्तानि पलाशानि पर्णानि यत्र तिष्ठन्ति तादृशानि वृन्तानि संपाद्य तैर्वृन्तैः पलाशवृक्षीयैस्त्रिपत्रैर्वृन्तैः कृष्णाजिने पुरुषाकृतिं कृत्वा तामाकृतिमस्याग्निभिः पितृमेधविधिना दहेयुरिति वाजसनेयिनां मतमिति द्वितीयः पक्षः । पराशरेण तु कुशैः प्रतिकृतिः कार्य्येत्युक्तम् । "कृष्णाजिने समास्तीर्य कुशैस्तु पुरुषाकृतिमिति" कुर्य्यादिति शेषः । अत्र पलाशवृन्तकुशविध्योरन्यतरेणानुष्ठानं व्रीहियववत्तुल्यबलत्वात् । शवप्रतिकृतिदाहानुष्ठानविधिस्तु शौनकाद्युक्त दिशा ज्ञेयः नात्राप्रस्तुतत्वाल्लिख्यते अयं च पलाशवृन्तादिभिः प्रतिकृतिविधिरस्थ्यलाभे यदा तु मृतास्थ्नां लाभस्तदा तैरेव प्रतिकृतिः कार्य्या । यदुक्तं छन्दोगसूत्रे "अथातः पुनर्दाहविधिं व्याख्यास्यामो यदि शरीरं नश्येदस्थीन्यादायास्थीनि क्षीरोदकेन प्रक्षाल्यास्थिभिः कृष्णाजिने पुरुषाकृतिं कृत्वा पूर्ववद्दहेत्तामलाभे पलाशवृन्तैः कृष्णाजिने पुरुषाकृतिं कृत्वा चत्वारिंशता शिरो दशभिर्ग्रीवां विंशत्योरस्त्रिंशतोदरं पञ्चाशता पञ्चाशता बाहू तयोरेव पञ्चभिरङ्गुलीन् सप्तत्या सप्तत्या पादौ तथैवाङ्गुलीरष्टाभिः शिश्नं द्वादशभिर्वृषणं तां कुशैर्वेष्टयित्वा तस्मिन्नेव पूर्ववद्दहेदिति" । अस्यार्थः चत्वारिंशता पलाशवृन्तैः शिरः संपाद्य दशभिर्ग्रीवां विंशत्योरस्त्रिंशता जठरं पञ्चाशतैकबाहुं तथैव पञ्चाशताऽपरम् पञ्चभिः पञ्चभिरङ्गुलीन् तथा सप्तत्या सप्तत्या पादद्वयं तत एव

वा रस्य लः। १खट्वायाम् (पालङ्क) अमरः। २वीरासनाङ्के अङ्कस्थापितकरतले यथाह योगसारे वशिष्ठः "एकं पादमथैकस्मिन् विन्यस्योरौ तु संस्थितम्। इतरस्मिन् तथैवोर्ध्वं वीरासनमिदं स्मृतम्। उत्तानिते करतले करकुत्तानितं परम्। आधायाङ्कगतं कृत्वा ध्यायेद्यस्तस्य सोऽन्तरम्"। ३अवसिक्थकायाम् हेमच०। ४योगपट्टे च।

**पर्य्यङ्कपादिका** स्त्री पर्य्यङ्कस्येव पादोऽस्यस्याः ठन् बहु० कप् वा कापि अतइत्त्वम्। कोलशिम्ब्याम् राजनि०।

**पर्य्यङ्कबन्ध** पु०पर्य्यङ्कस्य योगपट्टस्य बन्धः बन्ध–घञ्। योगपट्टवस्त्रादिना पृष्ठजानुजङ्घाबन्धने "पर्य्यङ्कबन्धं निविड़ं बिभेदेति" कुमारः। ल्युट्। पर्य्यङ्कबन्धन अत्रैव न०।

**पर्य्यग्निकृत** त्रि०अग्नेः परितः कृतः। "समन्तादग्निवेष्टनेन कृतसंस्कारे "तान् पर्य्यग्निकृतानुत्सृजति"ता०ब्रा०।

**पर्य्यङ्ग** पु० अश्वमेधीये प्रथमयूपे बध्यमानेषु पञ्चदशसंख्याकेषु पशुभेदेषु ते च यजु० २४।१ मन्त्रे उक्ताः। "ते वाम ते बहुदश पर्य्यङ्ग्याः पशवो भवन्ति" शत०ब्रा० १३।२।२।१। "पर्य्यङ्ग्यानश्वे" कात्या०श्रौ० २०।५।४। "कृष्णग्रीवादयः वामनान्ताः पञ्चदश पर्य्यङ्गसंज्ञा इत्यर्थः" कर्कः।

**पर्य्यटन** न० परितोऽटनम्। पुनःपुनर्भ्रमणे हेमच०।

**पर्य्यनुयोग** पु० परितोऽनुयोगः प्रश्नः। दूषणार्थं जिज्ञासायाम् कुलायु० "एतेनास्यापि पर्य्यनुयोगस्यानवकाशः" इति दायभागः।

**पर्य्यनुयोज्य** त्रि० परि+अनु–युज–कर्मणि ण्यत्। निग्रहोपपत्त्या चोदनीये (निग्रहस्थानं प्राप्तोऽसि) इत्येवमनुयोक्ये न्यायभाष्यम्।

**पर्य्यनुयोज्योपेक्षण** न० गौतमोक्ते निग्रहस्थानभेदे निग्रहस्थानप्राप्तस्योपेक्षणे। "अनिग्रहः पर्य्यनुयोज्योपेक्षणम्" गौ०सू०। पर्य्यनुयोज्योपेक्षणं लक्षयति। निग्रहस्थानं प्राप्तवतोऽनिग्रहः निग्रहस्थानानुद्भावनमित्यर्थः यत्र त्वनेकनिग्रहस्थानपाते एकतरोद्भावनं तत्र न पर्य्यनुयोज्योपेक्षणम् अवसरे निग्रहस्थानोद्भावनत्वावच्छिन्नाभावस्यैव तत्त्वात् ननु वादिना कथमिदमुद्भाव्यं स्वकौपीनविवरणस्यायुक्तत्वादिति चेत् सत्यं मध्यस्थेनैवोद्भाव्यं वादि च स्वयमुद्भावनेऽप्यदोषः" वृत्तिः।

**पर्य्यन्त** पु० परिगतोऽन्तम् प्रा०स०। शेषसीमाप्रान्ते।

**पर्य्यन्तभू** स्त्री पर्य्यन्तस्य शेषसीमायाः भूः। ग्रामादेः शेषसीमास्थाने परिसरे अमरः।

**पर्य्यन्तिका** स्त्री परितोऽन्तिका। गुणनाशे हारा०।

**पर्य्यन्य** पु० पर्जन्यः+पृषो०। पर्जन्यशब्दार्थे उणा०।

**पर्य्यय** पु०परित्यज्य शास्त्रलौकिकमर्य्यादाम् अयः इण–भावे अच्। शास्त्रलोकव्यवहारातिक्रान्ते आचारे अमरः।

**पर्य्यवसान** न० परि+अव+सो–भावे ल्युट्। १तत्तदर्थावधारणे २शेषावधौ च।

**पर्य्यवसित** त्रि० परि+अव+सो–कर्मणि क्त। १पूर्वापरालोचनेन अवधारितेऽर्थे २निष्कृष्टार्थे च।

**पर्य्यवस्था** स्त्री परि+अव+स्था–अङ्। १विरोधे २प्रतिपक्षवादे च। ल्युट्। पर्य्यवस्थान तत्रैव न०। तच पर्य्यवस्थातृ तत्कर्त्तरि त्रि०। "परितः विश्वं व्याप्य स्थितः। पर्य्यवस्थित विष्णौ पु०"जीवनः पर्य्यवस्थितः" विष्णुस०।

**पर्य्यसन** न० परि+अस–क्षेपे–भावे ल्युट्। १अपसारणे २दूरीकरणे परितः ३क्षेपणे च। [२पतिते च मेदि०।

**पर्य्यस्त** त्रि० परि+अस–क्षेपे कर्मणि क्त। १परितः क्षिप्ते

**पर्य्यस्ति** स्त्री पर्य्यस्यते शरीरं यत्र परि+अस–क्षेपे आधारे भावे वा क्तिन्। १पल्यङ्के (पालङ्क) त्रिका० तत्रार्थे २दूरीकरणे च स्वार्थे क। पर्य्यस्तिका हेमच०।

**पर्य्याचान्त** न० परित आचान्तम्। एकपङ्क्तिस्थान् भुञ्जानामन्यानवमत्य यत्रान्येनाद्ये भुज्यमाने अन्येनाचमनं कृतं तादृशे अन्ने तच्चान्नमभक्ष्यम् "उच्छिष्टं सूतिकान्नञ्च पर्य्याचान्तमनिर्दशम्" मनुव्याख्यायां कुल्लूकभट्टः। "उदक्याम् प्रस्पृष्टं पर्य्याचान्तञ्च वर्जयेत्" याज्ञ०। मुद्रितपुस्तके पर्य्यायान्नमिति पाठः प्रामादिकः मनुनैकवाक्यत्वात् तथा पाठस्य युक्तत्वात्।

**पर्य्याचित** त्रि० परि+आ+चि-क्त। आचिते आचिता-नाद्यान्तोदात्तता।

**पर्य्याण** न० परि+या-ल्युट् पृषो०। १अश्वसज्जायां २पल्ययने (जिन्) इण–ल्युट्। पर्य्ययणमप्यत्र।

**पर्य्याणहन** न० सोमोऽनसि स्थितः समन्तादानह्यतेऽनेन परि+आ+नह–करणे ल्युट्। सोमशकटोपरिगत पटकुटीरूपे तद्बन्धनोपाये पदार्थे कात्या०श्रौ०७।७।१२०

**पर्य्याप्त** न० परि+आप-भावे-क्त। १यथेष्टे २तृप्तौ ३सामर्थ्ये ४निवारणे ५योग्यत्वे च। कर्त्तरि क्त। ६समर्थे ७प्राप्ते च त्रि० मेदि०। ८पर्य्याप्तिसम्बन्धयुक्ते त्रि०।

**पर्य्याप्ति** स्त्री परि+आप–भावे क्तिन्। १सम्यक् प्राप्तौ न्यायमतसिद्धे २स्वरूपसम्बन्धभेदे तथाहि "द्वित्वादिकं पर्य्याप्तिसम्बन्धेन द्वित्वादिष्वेव वर्त्तते न प्रत्येकम्।

समवायेन तु प्रत्येकवृत्तिः । "प्रत्येकावृत्तेः समुदायाद्वृत्तित्वनियमस्तु समवायादिनैव न पर्य्याप्तिसम्बन्धेनेति भेदः । स च सर्वेषामेव पदार्थानां विशिष्टबुद्धिनियामकः । पदार्थभेदेन नाना यथा "पर्य्याप्तिसम्बन्धेन एको घट इमौ द्वौ इत्यादि प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः" इति दीधितिः । समवायेन गुणे गुणत्वासत्त्वेऽपि चत्वारो गुणा इत्यादिप्रतीत्या गुणादिषु संख्यादिसत्त्वनियामकोऽपि तादृशः सम्बन्धः" इति सामान्याभावे जगदीशः द्वितीयनुत्पत्तिवादे गदाधरभट्टाचार्य्यश्च । पर्य्याप्तिर्द्विविधा अर्थपर्य्याप्तिः पूर्णपर्य्याप्तिश्च । तत्र प्रथमा यत्राधिकस्य निरासार्था या पर्य्याप्तिर्निवेश्यते सार्थपर्य्याप्तिः यथा पर्वतो वह्निमान् धूमादित्यादौ साध्यतावच्छेदकवह्नित्वनिष्ठा पर्य्याप्तिः । द्वितीया । यत्र न्यूनवारणाय या पर्य्याप्तिर्निवेश्यते सा पूर्णपर्य्याप्तिः । यथा पर्वतो न महानसीयवह्निमानित्यादौ साध्यतावच्छेदकीभूतमहानसीयत्वविशिष्टवह्नित्वनिष्ठा पर्य्याप्तिः" ।

**पर्य्याप्लाव** पु० परि+आ–प्लु घञ् । १अभिप्लवशब्दे वै तैत्ति० ब्रा० ७।५।७।२। २परित आप्लावे (छयलापि) ।

**पर्य्याय** पु० परि+इण–घञ् । १अनुक्रमे २प्रकारे ३अवसरे मेदिनिः ४निर्माणे ५द्रव्यधर्मभेदे ६समानार्थबोधके शब्दे च हेमच० । [क्रमेण शयने अमरः ।

**पर्य्यायशयन** न० पर्य्यायेण क्रमेण शयनम् । यामिकभटानां

**पर्य्यायोक्त** न० अर्थालङ्कारभेदे अलङ्कारशब्दे दृश्यम् ।

**पर्य्यारिणी** स्त्री परि+ऋ–णिनि ङीप् । १परित आर्त्तिमत्यां व्याधिग्रस्तायां गवि "तस्य दक्षिणा कृष्णा गौः परिमूर्णी पर्य्यारिणी" शत०ब्रा०५।३।१।१३। २परित आर्त्तियुक्ते त्रि० ।

**पर्य्याली** अव्य० परि+आ–अल ई ऊर्य्यादि० । हिंसायाम् गणरत्नटी० पर्य्यालीकृत्य हिंसित्वेत्यर्थः ।

**पर्य्यालोचन** न०परि+आ+लोच–भावे ल्युट् । सम्यग्विवेचने

**पर्य्यावर्त्तन** न० परि+आ–वृत–ल्युट् । सूर्य्यस्य पश्चिमवर्त्तिन्याः छायायाः पूर्वदिग्वर्त्तित्वेन परिवृत्तौ "सन्ध्यायां तु सङ्गवादूर्द्ध्वं प्राक् पर्य्यावर्त्तनाद्रवेः" कर्मप्रदीपः ।

**पर्य्यास** पु० परि+अस–क्षेपे घञ् । १परिवर्त्ते "पर्य्यासं च परिमाणञ्च गतिं चन्द्रार्कयोरपि" मार्कण्डपु० । २पतने ३हनने च । वहिर्व्यवस्थानगतानां त्रयाणां त्वचानां मध्ये ४अन्तिमे त्वचे । "तोलीयानुरूपौ त्वचौ भवतो इयवन्तस्तथा भवन्ति उत्तमः पर्य्यासः" शा० सं० भा० धृता श्रुतिः ।

**पर्युक्षण** न०परित उक्षणम् । अग्न्यादेः मन्त्रवर्ज्जं तूष्णीं अग्न्यादेः परितः सेचने । "उदकसंस्पर्शन्तूष्णीं पर्युक्षणम्" आश्व०गृ० १।३।१ "तूष्णीं यद्ग्रहणं मन्त्रवर्ज्जमन्यो धर्मो अग्निहोत्रदृष्टो भवन्तीत्येवमर्थम् । त्रिश्चिरेकैकं पुनःपुनरुदकमादायादावान्ते च कर्मणां पर्युक्षणम्" नारा० एतच्च ऋग्वेदिविषयम् सामगानां तु तत्र गोभिलेनमन्त्रभेदा उक्ता यथा "अग्निमुपसमाधाय परिसमुह्य दक्षिणजान्वक्तो दक्षिणेनाग्निम् "अदितेऽनुमन्यस्वेति" पश्चात् । "सरस्वत्यनुमन्यस्वेति" उत्तरतः, "देवसवितः प्रसुवेति" प्रदक्षिणमग्निं पर्युक्षेत् सकृत्त्रिर्वा" ।

**पर्युदञ्चन** न० पर्युदञ्च्यते उद्ध्रियते परि+उद्–अञ्च कर्मणि ल्युट् । १ऋणे अमरः भावे ल्युट् । २उद्धारे च ।

**पर्युदय** अव्य० उदयस्य सामीप्यम् सामीप्ये अव्ययी० । उदयसामीप्ये सूर्योदयसमीपे कात्या०श्रौ० ४।७।२५

**पर्युदस्त** त्रि० परि+उद्+अस–क्त । १निवारिते २फलप्रत्यवायशून्यतया बोधिते नञा भेदप्रतियोगिनि "यथा रात्रौ श्राद्धं न कुर्वीत" इति अत्र हि रात्रौ श्राद्धे न फलं न वा प्रत्यवायः इति रात्रिः पर्युदस्ता तद्विज्ञानावस्था नञा बोध्यते । ३परित उत्क्षिप्ते च ।

**पर्युदास** पु० परि+उद्+अस–घञ् । १निवारणे फलप्रत्यवायशून्यतया "प्राधान्यं हि विधेर्यत्र प्रतिषेधेऽप्रधानता । पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्" इत्युक्तलक्षणे भेदरूपे नञर्थे । नञ्शब्दे मतभेदेन विस्तरो दृश्यः ।

**पर्युपवेशन** न० परित्यज्य कर्मान्तरमुपवेशनम् । होमाभिषवादिकर्मपरिहारेण उपवेशनमात्रे कात्या०श्रौ० ८।४।१ व्याख्यायां दृश्यम् ।

**पर्युप्ति** स्त्री परि+वप–भावे क्तिन् । परितो वपने मेदि०

**पर्युषित** त्रि० परिहृत स्वकालमतिक्रम्य उषितम् वस–क्त । (वासि) कालातिक्रान्ते गतरात्रिकालके द्रव्ये । देवेभ्यः पर्युषितपुष्पदानं निषिद्धं यथा नारसिंहे "अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः । स्वीयारामोद्भवैर्वापि पुष्पैः संपूजयेद्धरिम्" योगिनीतन्त्रे तत्प्रसवः "विल्वपत्रञ्च माध्यञ्च तमालामलकीदलम् । कह्लारतुलसी चैव पद्मञ्च मुनिपुष्पकम् । एतत् पर्युषितं न स्यात् यच्चान्यत् कलिकात्मकम्" । पर्युषिताचा-

द्विभक्षणनिषेधो यथा “शुक्तं पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम् । उदक्यास्पृष्टसंघुष्टं पर्यायान्नञ्च वर्जयेत्” गरुडपु० “यातयामं गतरसं पूति पर्युषितञ्च यत् । उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्” गीता । “शुक्तं पर्युषितञ्चैव शूद्रोच्छिष्टन्तथैव च” मनुः । अत्र प्रतिप्रसवः पर्युषितं रात्र्यन्तरितं तच्च स्नेहाक्तं भक्ष्यमाह मनुः “यत्किञ्चित् स्नेहसंयुक्तं भक्ष्यभोज्यमगर्हितम् । तत् पर्युषितमप्याद्यं हविःशेषञ्च यद्भवेत्” विशेषमाह सएव “चिरसंस्थितमप्याद्यं मस्नेहाक्तमपि द्विजैः” आह्निक० “मन्त्राभिमन्त्रितं मस्तं न च पर्युषितं नृप ! । अन्यत्र फलशाकेभ्यः शुष्कशाकालिकादतः । गडदद्दरिकाभ्यश्च गुडपक्वेभ्य एव” आह्निक० “यच्च पर्युषितञ्च यत्” इत्युक्तनिषेधविषये प्रतिप्रसवः उपरागशब्दे दृश्यः ।

**पर्यूहण** न० परि+ऊह–भावे ल्युट् । परिसमूहने अग्नेः समन्तान्मार्जने कात्या०श्रौ० ८।५।३५

**पर्य्येषणा** स्त्री परितस्तर्कादिना एषणा परीक्षा । १तर्कादिना पदार्थपरीक्षायाम् २अन्वेषणायाञ्च अमरः । परि+एषि–भावे ल्युट् । पर्य्येषण न० तत्रार्थे । क्तिन् । पर्य्येष्टि स्त्री तत्रार्थे ।

**पर्य्येहि** त्रि० परि+आ+ईह–इन् । समन्तात् चेष्टाकारके स्त्रियां शार्ङ्गरवा० ङीन् । इदिकारान्तत्वेन ङीपः प्राप्तावपि नित्स्वरार्थं ङीनोविधानम् ।

**पर्व** पूर्त्तौ भ्वा०पर०सक०सेट् । पर्वति अपर्वीत् । पपर्व ।

**पर्वक** न०पर्वणा कायति कै–क । जङ्घसन्धौ (आँटु)शब्दच०

**पर्वका(र)रिन्** त्रि०अपर्व पर्व तत्तुल्यक्रियं करोति कृ–अण् णिनि वा । धनलोभादिना अपर्वदिने पर्वोक्तकर्मकारिणि

**पर्वगामिन्** पु० पर्वसु गच्छति स्त्रियं गम+णिनि । पर्वकाले स्त्रीगमनकारिणि पर्वशब्दे तत्र स्त्रीगमननिषेधो दृश्यः

**पर्वण** पु० १राक्षसभेदे भा०व० २८४अ० । पर्व पूर्त्तौ करणे ल्युट् । २पूर्त्तिकरणे स्त्रियां ङीप् सा च ३पौर्णमास्याम् । “चन्द्रस्येवोदये प्राप्ते पर्वण्यां सरितां पतिः” हरिव० १५२ अ० । पर्वणि सन्धौ जाता अण् संज्ञापूर्वकत्वात् न वृद्धिः ङीप् । सुश्रुतोक्ते ४अक्षिगतरोगभेदे स्त्री “ताम्रा तन्वी दाहशूलोपपन्ना रक्ताज्ज्ञेया पर्वणी वृत्तशोफा” । [सुश्रुतः ।

**पर्व(णी)णिका** स्त्री पर्वणी+स्वार्थे क । पर्वगतरोगभेदे

**पर्वत** पु० पर्व–अतच्, पर्वाणि भागाः सन्त्यस्य त वा । १गिरौ अमरः दानार्थं कल्पिते पर्वताकारे २धान्यादिसंहदयके ३मुनिभेदे “कश्यपात् नारदश्चैव पर्वतोऽरुन्धती तथा” तस्य नारदसोदरत्वमुक्तम् । भा०शा० ३०अ० तु तस्य नारदभागिनेयत्वमुक्तम् तच्च कपिवक्त्रशब्दे १६७६ पृ० दर्शितम् । कल्पभेदाद्विरोधः । ४मत्स्यभेदे (पावदा) ५वृक्षे ६शाकभेदे च मेदिनिः । ७गन्धर्वभेदे भा०आ० १८७अ० । धर्मस्य पुत्रे साध्यायां जाते देवभेदे मत्स्यपु० २०४अ० ।

सुमेरोः पूर्वे पर्वता यथा “शीताक्तश्चक्रमुञ्जश्च कुलीरोऽथ कङ्कवान् । मणिशैलोऽथ वृषवान् महानीलो भवाचलः । सुविन्दुः मन्दरो वेणुः सुमेघो निषधस्तथा । देवशैलस्य पूर्वेण मन्दरस्य महाचलाः सुमेरोः दक्षिणे पर्वता यथा “त्रिकूटः शिखराद्रिश्च कलिङ्गोऽथ पतङ्गकः । रुचकः सानुमांश्चैव ताम्रकोऽथ विशाखवान् । श्वेतोदरः समूलश्च वसुधारश्च रत्नवान् । एकशृङ्गो महाशैलो राजशैलः पिपाठकः । पञ्चशैलोऽथ कैलासो हिमवांश्चाचलोत्तमः । इत्येते दक्षिणे पार्श्वे मेरोः प्रोक्ता महाचलाः” । सुमेरोः पश्चिमे पर्वता यथा “सुवक्षः शिशिरश्चैव वैदूर्यः पिङ्गलस्तथा । पिञ्जरोऽथ तथा भद्रः सुरसः कपिलो मधुः । अञ्जनः कुक्कुटः कृष्णः पाण्डुरश्चाचलोत्तमः । सहस्रशिखरश्चाद्रिः पारियात्रः सशृङ्गवान् । पश्चिमेन तथा मेरोर्विष्कम्भात् पश्चिमाद्बहिः । एतेऽचलाः समाख्याताः दृष्टव्यास्तथोत्तरान्” । सुमेरोरुत्तरे पर्वता यथा “शङ्खकूटोऽथ ऋषभो हंसनाभो तथाचलो । कपिलेन्द्रस्तथा शैलः सानुमान्नील एव च । शतशृङ्गः स्वर्णशृङ्गः पुष्पाको मेघपर्वतः । विराजाख्यो वराहाद्रिर्मयूरो कपिलस्तथा । इत्येते कथिता ब्रह्मन्मेरोरुत्तरतो नगाः” मार्कण्डेय पु० ।

अन्ये उपपर्वता विंशतिर्यथा “हिमवान् हेमकूटश्च निषधो नीलपर्वतः । श्वेतश्च शृङ्गवान् मेरुर्माल्यवान् गन्धमादनः । महेन्द्रो मलयः सह्यः शुक्तिमान्नृक्षमानपि । विन्ध्यश्च पारिपात्रश्च कैलासो मन्दरस्तथा । लोकालोको महांस्तेषु तथैवोत्तरमानसः । एते विंशतिर्विख्याताः पर्वतास्तत्प्रधानतः” । गिरीणां सपक्षत्वच्छेदनकथा यथा “ततोऽद्रयो जातपक्षा विष्णोश्चैव तु मायया । प्रस्थिता मेदिनीं त्यक्त्वा यथापूर्वं निवेशिताः । तत्स्थानमसुराक्रान्तं धात्रादिष्टं जला-

र्थाने । प्रतीच्यां पर्वताः सर्वे निममज्जुर्यथा गजाः । तत्रासुरेभ्यः संरक्ष्य आधिपत्यं सुराश्रयम् । तच्छ्रुत्वैव सुराः सर्वे चक्रुरुद्योगमुत्तमम्” इत्युपक्रमे तेषां युद्धमुक्त्वा युद्धजयानन्तरं तेषां पक्षच्छेद उक्तो यथा “शरस्थान्तु गिरीन् स्थाप्य स्वेषु स्थानेषु गोपतिः । चिच्छेद पविना पक्षान् सर्वेषां भुविचारिणाम् । एकः सपक्षो मैनाकः सुरैस्तत्समये कृतः” कालिकापु० । पर्वतानां स्थावरजङ्गमरूपे द्वे रूपे यथा “नद्यश्च पर्वताः सर्वे द्विरूपाश्च स्वभावतः । तोयं नदीनां रूपन्तु शरीरमपरन्तथा । स्थावरं पर्वतानान्तु रूपं कायस्तथाऽपरः । शुक्तीनामथ कम्बूनां तथैवान्तर्गता तनुः । बहिरस्थिस्वरूपन्तु सर्वदैव प्रवर्त्तते । एवं जलं स्थावरञ्च नदीपर्वतयोर्यथा । अन्तर्वसति कायस्तु सततं नोपलभ्यते । आप्याय्यते स्थावरेण शरीरं पर्वतस्य तु । तथा नदीनां कायस्तु तोयेनाप्याय्यते सदा । नदीनां कामरूपित्वं पर्वतानां तथैव च । जगत्स्थित्यै पुरा विष्णुः कल्पयामास यत्नतः । तोयहानौ नदीदुःखं जायते सततं द्विजाः ! । विशीर्णे स्थावरे दुःखं जायते गिरिकायगम्” कालिकापु० २२पु० ।

**पर्वतकाक** पुंस्त्री० पर्वते भवः काकः । द्रोणकाके हेमच० स्त्रियां जातित्वात् ङीष् ।

**पर्वतज** त्रि० पर्वताज्जायते जन--ड ५त० । १गिरिजातमात्रे २नद्यां स्त्री हेमच० । [भेदे राजनि० ।

**पर्वततृण** न० पर्वतभवं तृणं शा०त० । (सगड) गिरि तृण-

**पर्वतपति** पु० ६त० । हिमालये पर्वतनाथादयोऽप्यत्र ।

**पर्वतमोचा** स्त्री पर्वतोद्भवा मोचा शा०त० । गिरिकदल्यां राजनि० ।

**पर्वतराज्** पु० पर्वतेषु राजते राज--क्विप् । हिमालये

**पर्वतराज** पु० ६त० टच्समा० । हिमालये “आरभ्य तस्यां दशमीञ्च यावत् प्रपूजयेत् पर्वतराजपुत्रीम्” ति०त० ।

**पर्वतवासिन्** त्रि० पर्वते वसति वस--णिनि ७त० । १गिरिवासिनि स्त्रियां ङीप् । सा च २आकाशमांस्यां राजनि०

**पर्वतात्मजा** स्त्री ६त० । हैमवत्यां दुर्गायां हरिवं०१७६अ० २मैनाके पु०पर्वतसुतादयोऽप्यत्र । [भूधरत्वेन तस्यास्तथात्वम्

**पर्वताधारा** स्त्री पर्वत आधारो यस्याः । पृथिव्यां नगानां

**पर्वतारि** पु० ६त० । इन्द्रे शब्दरत्ना० । तस्य तत्पक्षच्छेत्तृत्वात् तथात्वम् पर्वतशब्दे दृश्यम् ।

**पर्वताशय** पु० पर्वते आशेते आ+शी-अच् । मेघे शब्दच० ।

**पर्वताश्रय** त्रि०पर्वत आश्रयो यस्य । १पर्वतवासिनि २शरभे पुंस्त्री० राजनि०स्त्रियां जातित्वेऽपि योपधत्वात् टाप् ।

**पर्वतासन** न० रुद्रयामलोक्ते आसनभेदे यथा “अथ वक्ष्ये महादेव ! पर्वतासनमङ्गलम् । यत् कृत्वा स्थिररूपिण्याः षट्चक्रादिविलोडनम् । योन्यासनं पर्वतेन योगं योगबलाबलम् । तत्कालं च फलं तावत् खेचरो यावदेव हि । पादमेकेन चाक्रम्य जिह्वाग्रं यो नियोजयेत् । अन्यत् पद्मरौ दत्त्वा तत्र योन्यासनं भुवि । एतन्मध्ये महेशान ! पर्वतासनमुच्यते” ।

**पर्वतीय** पु० पर्वते भवः छ । ( पाहाड़ीया ) १जातिभेदे

**पर्वतेष्ठा** त्रि० पर्वते स्था--क्विप् षत्वम् अलुक्समा० । १पर्वतस्थायिनि ऋ०६।२२।२ लोके तु न षत्वम् ।

**पर्वधि** पु०पर्वाणि दधाति किरणवृद्धिं धा-कि । चन्द्रे त्रिका०

**पर्वन्** न० पृ--वनिप् । १उत्सवे २ग्रन्थौ (गाँट) ३लक्षणभेदे ४प्रस्तावे ५ग्रन्थविच्छेदस्थाने मेदि० । “चतुर्दश्यष्टमी चैव अमावस्या च पूर्णिमा । पर्वाण्येतानि राजेन्द्र ! रविसंक्रान्तिरेव च” इति उक्तेषु तेषु पञ्चसु ६कालभेदेषु च “स्त्रीतैलमांससंभोगी पर्वस्वेतेषु वै पुमान् । विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः” विष्णुपु० । तत्र कर्त्तव्यमाह “नित्यं द्वयोरयनयोर्नित्यं विषुवतोर्द्वयोः चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु । अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपम् । यः करोति पवित्रात्मा तस्य स्यादक्षयं फलम्” ब्रह्मपु० “अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः । न धर्मशास्त्रेष्वन्येषु पर्वण्येतानि वर्जयेत्” कूर्मपु० । ७दर्शान्तपूर्णिमान्तरूपकाले “गतेश्च पर्वनाडीनाम्” सू०सि० “पर्वनाड्यः दर्शान्तपूर्णिमान्तनाड्यस्तासाम्” रङ्ग० । ८अंशे भागे “विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि” पात०सू० “अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः” विष्णुपु० “त्रिंशकद्वादशाशस्य चतुर्विंशतिपर्वणः” भा०व० १३२अ० । राशिचक्रे स्वस्वगत्या गच्छतोः सूर्यचन्द्रयोर्यदात्यन्तं विप्रकर्षस्तदा पौर्णमासी यदाऽत्यन्तं सन्निकर्षस्तदा दर्शः ते द्वे पर्वणी एवं चतुर्विंशत्या पर्वभिस्तदुभयस्मादधिकेन शततयेन, चान्द्रो वर्षः” नील० । “पर्वणोऽंशे चतुर्थे च कर्त्तव्येष्टिर्द्विजोत्तमैः” कालमाधवधृतस्मृतिः । राशिचक्रे अयनसंक्रान्तेर्विषुवद्वयस्य च सन्धितुल्यत्वात् पर्वत्वमुन्नेयम् । चातुर्मास्ययागे वैश्वदेववरुणप्रघासशाकमेधशुनासीरीयाख्येषु ९०चतुर्षु यागेषु तेषाञ्चोत्सवरूपत्वात्तथात्वम्-

त्यन्ये कात्या० श्रौ० ५।१।१ सूत्रव्याख्याने दृश्यम्। "द्वयोः प्रणीयन्तीत्यधिकरणे पर्वचतुष्टयविहिताया उत्तरवेदेर्न पर्वद्वये प्रतिषेध उपपद्यते तत्र पर्वद्वये विकल्पसापेक्षं विधानं पर्वद्वये च निरपेक्षमिति" दायभा० "पर्वचतुष्टयेति चातुर्मास्ययागप्रसङ्गे वैश्वदेववरुणप्रघासशाकमेधशुनासीरीयाख्यास्त्वारो यागाः चातुर्मास्यसाध्या उक्ताः तत्र च "उपात्र वपन्ति न वैश्वदेवे न शुनासीरीये उत्क वा एतौ यज्ञस्य यद्वरुणप्रघासः शाकमेधश्चेति द्वयोः प्रणयन्तीति" श्रुतिरस्ति। तस्यार्थः अत्र पर्वसंज्ञके यागचतुष्के उत्तरवेदिम् उपवपन्ति निर्वपन्ति सम्पादयन्तीत्यर्थः इति उत्तरवेदिः अग्निप्रणयनपात्रम्" श्रीकृष्णः। एतच्च श्रौतकर्मानभिज्ञानादुक्तम् "उत्तरवेदिं निवपत्युत्तरस्याम्" कात्या०श्रौ० १।३।१८ सूत्रादौ स्थण्डिलभेदस्यैव उत्तरवेदिनामता उक्ता यथा "वक्ष्यमाणेन प्रकारेण उत्तरस्यां वेदौ उत्तरवेदिं निर्वपति उत्तरवेदिरिति वक्ष्यमाणसंस्कारसंस्कृतस्य चात्वालमृदा कृतस्य स्थण्डिलस्य नामधेयम्" कर्कः। तदुत्तरत्र सूत्रेषु तन्निर्माणप्रकार उक्तः चात्वालशब्दे च शत०ब्रा०भाष्यवाक्यं दृश्यम्। ११चन्द्रसूर्ययोरुपरागे च पर्वशब्दे दृश्यम्। १२प्रतिपत्पञ्चदश्योरन्तराले काले पर्वसन्धिशब्दे दृश्यम्। पर्वणि विहितः तत्र भवो वा अण्। पार्वण अमावास्यादिविहिते श्राद्धे पर्वभवे त्रि०

**पर्वमूला** स्त्री पर्वणि पर्वणि मूलं यस्याः मूलान्तत्वात् जातित्वेऽपि टाप्। श्वेतदूर्वायां राजनि०।

**पर्वयोनि** पु० पर्व ग्रन्थिर्योनिरुत्पत्तिसाधनमस्य। इक्ष्वादौ हेमच०। तस्य ग्रन्थित एवोत्पत्तेस्तथात्वम्।

**पर्वरीण** पु० पर्वरीण+पृषो०। १पत्रद्रन्तरसे २गर्वे ३मारुते ४पर्णशिरायां ५मृतके ६द्यूतकम्बले ७पत्रचूर्णरसे च ८पर्वणि न० शब्दरत्ना०।

**पर्वरुह्** पु० पर्वणि रोहति रुह–क्विप्। दाडिमे त्रिका०

**पर्ववल्ली** स्त्री पर्व प्रधाना ग्रन्थिश्रेष्ठा वल्ली। मालादूर्वायाम् (गाटदूर्वा) राजनि०।

**पर्वसन्धि** पु० पर्वणोः सन्धिः। पर्वणोः पञ्चदशीप्रतिपदोरन्तादिदण्डचतुष्टयात्मकाले अमरः "सैंहिको यदा राहुर्ग्रसते पर्वसन्धिषु" यमः। दण्डचतुष्टयोक्तिः प्रायिकी सू०सि० ग्रहणेष्टकालस्य अन्यथा दर्शितत्वात्। तच्च उपरागशब्दे दृश्यम्।

**पर्वावधि** पु० ६त०। परपन्थौ हारा०।

**पर्वास्फोट** पु० ६त०। अङ्गुलिपर्वण आस्फोटने कामन्दकी०

**पर्वित** पुंस्त्री० पर्व–क्त। (पावदा) पर्वतमत्स्ये शब्दच०।

**पर्वेश** पु० ६त०। ग्रहणकालभेदानामधिपभेदे स च बृ०सं० ५अ० उक्तो यथा

"षण्मासोत्तरवृद्ध्या पर्वेशाः सप्त देवताः क्रमशः। ब्रह्मशशीन्द्रकुबेरा वरुणाग्नियमाश्च विज्ञेयाः। १ब्राह्मे द्विजपशुवृद्धिः क्षेमारोग्याणि सस्यसम्पच्च। तद्वत् २सौम्ये पीड़ा विदुषामदृष्टिश्च। ३ऐन्द्रे भूपविरोधः शारदसस्यक्षयो न च क्षेमम्। ४कौवेरेऽर्थपतीनामर्थविनाशः सुभिक्षं च। ५वारुणमवनीशाशुभमन्येषां क्षेमसस्यवृद्धिकरम्। ६आग्नेयं मित्राख्यं सस्यारोग्याभयाम्बुकरम्। ७याम्यं करोत्यवृष्टिं दुर्भिक्षं सङ्क्षयं च सस्यानाम्। यदतःपरं तदशुभं क्षुन्माराद्यृष्टिदं पर्व"।

**पर्शान** न० पार्श्वस्थानम् पृषो०। १पार्श्वस्थाने ऋ०७।४।१९ भा० २पीड्यमाने त्रि० ऋ०८।७।३४ भा० ३विमर्षयोग्ये ऋ०८।४५।४१ ४मेघे पु० निघण्टुः पाठान्तरम्।

**पर्शु** पु० "स्पृशेः श्वण्शुनौ पृ च" उणा० स्पृश–शुन् धातोः पृ० आदेशः। १आयुधे २परश्वधे हेमच०। ३आयुधजीविसंघभेदे ततः पर्श्वा० स्वार्थे अण्। पार्शव तत्रार्थे।

**पर्शुका** स्त्री पर्शुरिव कायति कै–क। पार्श्वास्थि अमरः।

**पर्शुपाणि** पु० पर्शुः पाणावस्य। १गणेशे हेमच० २परशुरामे च। [शब्दच०। परशुरामशब्दे दृश्यम्।

**पर्शुराम** पु० पर्शुसहितो जातो रामः शा०त०। जामदग्न्ये

**पर्शुल** त्रि० पर्शुः तदाकारमस्त्यस्य ततः सिध्मा०लच्। पर्श्वयुक्ते

**पर्श्वध** पु० परश्वध+पृषो०। परश्वधे कुठारे जटाध०

**पर्श्वादि** पु० "पर्श्वादियौधेयादिभ्योऽणञौ" पा० स्वार्थे अण् प्रत्ययनिमित्ते शब्दगणे स च गणः पा० ग०सू० उक्तो यथा "पर्शु असुर रक्षस् वाह्लीक वयस् मरुत् सत्वत् दशार्ह पिशाच अशनि कार्षापण"।

**पर्ष** स्नेहे भ्वा०आत्म०सक०सेट्। पर्षते अपर्षिष्ट पपर्षे।

**पर्षद्** स्त्री पृष–अदि। १सभायाम् २धर्मोपदेशकपण्डितसमाजे च। ततः अस्त्यर्थे वलच्। पर्षद्वल सभासदि त्रि० हेमच०।

**पर्षिक** त्रि० पर्षः पूरणम् अस्त्यर्थे ठन्। पूरयितव्ययुक्ते पुरोहिता० भावादौ यक्। पार्षिक्य तद्भावे न०

**पर्ष्वन्** त्रि० पृष–वनिप्। पूरयितव्ये ऋ० १०।१२६।२०

**पल** गतौ भ्वा० पर० सक०सेट्। पलति अपालीत् पपाल पेलतुः। जित् ज्वला०पलः पालः।

**पल** रक्षणे चुरा०उभ०सक०सेट्। पालयति ते अपीपलत्-

**पल** न० पल—अच। १मांसे न० अमरः "दशगुर्व्वक्षरोच्चारकालः प्राणः षडात्मकैः। तैः पलं स्यात्, तत्षष्ट्या दण्ड इत्यभिधीयते" ज्योति० उक्ते २कालभेदे "पलं तु लौकिकैर्मानैः साष्टरक्तिद्विमाषकम्। तोलकत्रितयं ज्ञेयं ज्योतिर्ज्ञैः स्मृतिसम्मतम्" ति०त०उक्ते ३मानभेदे "पलं कर्षचतुष्टयम्" उक्ते ४कर्षचतुष्टये ५पलाले तुषधाने पु० हेम० "छायाऽर्कवेद्या विषुवद्दिनार्द्धे वृतिः पलोऽक्षश्च स एव तज्ज्ञैः" सि०शि० उक्तायां विषुवद्दिनार्द्धे अक्षनतौ पु०। [तस् बा० यत्। पालङ्क्यशाके राजनि०।

**पलक्या** स्त्री पल++स्वार्थे क पलकं मांसं तत्पुष्टये हि-

**पलक्ष** पु० वलक्ष+पृषो०। १श्वेतवर्णे २श्वेतवर्णयुक्ते त्रि० यजु० २४,४ वेददी०।

**पलक्षार** पु० पलस्य मांसस्य क्षार इव उत्पादकत्वात्। शोणिते त्रिका० तत्पाकेन मांसोत्पत्तेस्तस्य तथात्वम्।

**पलगण्ड** पु० पलं मांसमिव कर्द्दमादिना भित्तिं गण्डति वद- नैकदेशमिव करोति गडि—वदनैकदेशे अण्। लेपके (राज) अमरः।

**पलङ्कट** त्रि० पलम् कटति आवरणोति भीत्या कट—आव- रणे बा० अच् मुम्। भीरौ त्रिका० भीत्या मांसस्या- वरणस्येव करणात्तस्य तथात्वम्। [धातौ त्रिका०।

**पलङ्कर** पु० पलं करोति कृ—बा० खच् मुम्। पित्ताख्ये

**पलङ्कष** पुंस्त्री० पलं कषति कष+बा०खच् मुम्। १राक्षसे मेदि० स्त्रियां जातित्वात् ङीष्। २कणगुग्गुलौ पु० राजनि० ३लाक्षायाम् ४रास्नायां ५शल्लक्यां ६किंशुके ७गुग्गुलुमात्रे ८गोक्षुरके च पु० मेदि०। ९क्षुद्रगोक्षुरके १०महाश्रावण्यां ११मक्षिकायाञ्च स्त्री राजनि०।

**पलद** त्रि० पलं मांसं ददाति सेवनेन दा—क। १सेवनेन मांसकारके द्रव्यभेदे २देशभेदे ३नगरीभेदे स्त्री। "कन्था पलदनगरग्रामह्रदोत्तरपदात्" पा० (कन्थादिपलदोत्त- रपदाद्देशवाचिनो वृद्धाच्छः) भवार्थे छ। दाक्षिपलदीय दाक्षिपलदभवे त्रि०। पलद्यां भवः पलद्या० अण्। पालद तत्र भवे त्रि० स्त्रियां ङीप्।

**पलद्यादि** पु० "प्रस्थोत्तरपदपलद्यादिकोपधादण्" पा० अण्- प्रत्ययनिमित्ते शब्दगणे स च गणः पा०ग० उक्तो यथा "पलदी परिषद् रोमक वाह्लीक कलकीट बहुकीट जा- लकीट कमलकीट कमलकीकर कमलभिदा गोष्ठी नैकती परिखा शूरसेन गोमती पटच्चर उदपान यकृल्लोम"।

**पलप्रिय** पुंस्त्री० पलं प्रियमस्य। १काके राजनि० स्त्रियां टाप्। पललप्रियादयोऽप्यत्र २मांसप्रियमात्रे त्रि०।

**पलभा** स्त्री पलस्य अक्षस्य भा। विषुवद्दिनार्द्धजायां शङ्कु- च्छायायाम्। "मेषादिगे सायनसूर्यभागे दिनार्द्धजा भा पलभा भवेत् सा" ग्रहलाघवम्। अक्षभाविषुवद्भाद- योऽप्यत्र "भुजोऽक्षभा कोटिरिनाङ्गुलो ना" सि०शि० "अक्षभा नाम पलभा" प्रमिता० "रेखा प्राच्यपरा साध्या विषुवद्भा यतस्तथा" सू०सि० रङ्गनाथव्याख्यायां वि- स्तरो दृश्यः।

**पलल** न०पल०कलच्। १मांसे २पङ्के ३तिलचूर्णे च "पललं तिलकल्कः स्यात् तिलचूर्णञ्च पिष्टकम्" राजनि०। पलं लाति ला—क। ४राक्षसे पु० स्त्री मेदि० स्त्रियां जाति- त्वात् ङीष्। "पललं मधुरं वृष्यं पित्तास्रबलपुष्टिदम्" पललन्तु समाख्यातं सैन्धवं तिलपिष्टकम्" वैद्यकोक्ते (तिलकुटा) ५पिष्टकभेदे "पललं मलकृद् वृष्यं वातघ्नं कफपित्तलम्। बृंहणं गुरु तल्यञ्च स्निग्धं मूत्रनिव- र्त्तकम्" तत्र तद्गुणा उक्ताः।

**पललज्वर** पु० पललं ज्वरयति ज्वर—णिच् अच्। हृतः। पित्ते धातौ हारा०। [शब्दच०।

**पललाशय** पु० पलले आशेते आ+शी-अच्। गण्डरोगे

**पलव** पु० पल+बा० भावे अप् पलतो गतितो वाति रक्षति वा—क। जीवतां मत्स्यानां गतिरोधके (पोलो) मत्स्यधारणसाधने यन्त्रभेदे त्रिका०।

**पलस्ति** त्रि०पल—बा० अति। १पलिते २दीर्घायुषि ऋ०१। ५३।१६ भा०। [हारा०।

**पलाग्नि** पु० पलस्य मांसस्य पावकोऽग्निरिव। पित्ते धातौ

**पलाग्र** न० पलस्याग्रं सारांशः। मांससारांशे हरिवं० ८४६२ श्लो०।

**पलाङ्ग** पुंस्त्री० पलप्रधानमङ्गं यस्य। शिशुमारे हारा०

**पलाण्डु** पु० पलस्य मांसस्याण्डमिवाचरति अण्ड+आ- चारे क्विप् व्यङ्क्वा० कु। मूलकभेदे (पेयाज) "पला- ण्डुर्यवनेष्टश्च दुर्गन्धो मुखदूषकः। पलाण्डुस्तु गुणै- र्ज्ञेयो रसोनसदृशैर्गुणैः। स्वादुपाकरसोऽनुष्णः कफ- कृन्नातिपित्तलः। हरते केवलं वातं बलवीर्य्यकरो गुरुः" भावप्र०। तद्भक्षणे दोषः "पलाण्डुं विड्वराहञ्च छत्राकं ग्रामकुक्कुटम्। लशुनं गृञ्जनञ्चैव जग्ध्वा चा- न्द्रायणञ्चरेत्" प्रा०वि०। एतज्ज्ञानतः सकृत्। अत्र च पुनरुपयनमित्याह विष्णुः "लशुनपलाण्डुगृञ्जनतद्ग-

श्विविड्वराहग्रामकुक्कुटनरगोमांसभक्षणे सर्वेष्वेतेषु द्विजातीनां प्रायश्चित्तान्ते भूयः संस्कारं कुर्य्यात्” ।

**पलाद्** पुंस्त्री पलमत्ति अद-अण् उप०स० । १राक्षसे हेमच० । स्त्रियां जातित्वात् ङीष् । २मांसभोजिमात्रे त्रि० ।

**पलादन** पुंस्त्री० पलमदनं यस्य । १राक्षसे हेमच० स्त्रियां जातित्वात् ङीष् । २मांसभोजिमात्रे त्रि० ।

**पलान्न** न० पलमिश्रणेन पक्वमन्नं शा०त० । (पोलाओ) ख्याते मांसादिमिश्रणेन पक्वान्नभेदे तत्र द्रव्यादिपाकराजेश्वरे उक्तानि यथा “शरावमात्रं छागमांसं तत्पादमितं घृतम् त्रिमाषकं त्वचं लवङ्गमेलाफलञ्च । शरावमितास्तण्डुलाः । मरिचं तोलकद्वयम् एकमाषकं कुङ्कुमम् । आर्द्रकं तोलकद्वयमात्रं षट्तोलकं लवणम् । शरावार्द्धपादमिता द्राक्षा” । तत्पाकप्रकारो यथा “छागमांसं सूक्ष्मं चोरयित्वा शुष्कप्रलेहपाककरणानन्तरं पात्रान्तरे तैजपत्रोपरि अल्पात्पखण्डगन्धद्रव्येण सह प्रथमं सज्जी कर्त्तव्यम् । ततस्तण्डुलं जलेनार्द्धसिद्धं कृत्वा मण्डगालनपूर्वकमल्पाल्पखण्डगन्धद्रव्येण सह तन्मांसोपरि सज्जी कर्त्तव्यम् । एवंप्रकारेण वारंवारं सज्जीकृत्य तदुपरि अवशिष्टघृतक्षेपणेन दण्डद्वयं तप्ताङ्गारोपरि रक्षेत्” ।

**पलाप** पु० पलमाप्यतेऽत्र बाहुल्येन आप-आधारे घञ् । १हस्तिकपोले २कण्ठपाशे च शब्दमाला । [गतौ हेम० ।

**पलायन** न० परा-अय-ल्युट् रस्य लः । भीत्या स्थानान्तर

**पलायित** त्रि० परा+अय-गत्यर्थत्वात् कर्त्तरि क्त रस्य लः । १भीत्या पलायनकर्त्तरि २अपयाते च हेमच० ।

**पलाल** पु०न० पल-कालन् । शस्यशून्ये धान्यकाण्डे (नाड़ा) (पोयाल) अमरः ।

**पलालदोहद** पु० पलालं दोहदं यस्य । आम्रवृक्षे शब्दमाला पलालवेष्टने हि तस्य वृद्धिरिति तस्य तथात्वम् ।

**पलाली** स्त्री ६त० । मांसराशौ ततः अस्त्यर्थे पामादि० न ह्रस्वः च । पलालिन तद्युक्ते त्रि० ।

**पलाश** न० पल-गतौ भावे घञर्थे क पलं गतिं कम्पनमश्नुते अश-व्याप्तौ अण् उप०स० । १पत्रे अमरः पलं मांसमयं ब्रह्ममांसोत्पन्नत्वेन कारणतया तद्वा अश्नुते अश-व्याप्तौ अण् उप०स० । २स्वनामख्याते वृक्षभेदे तस्योत्पत्तिः शत०ब्रा० १२।४।४ “मांसेभ्य एवास्य पलाशः समभवत् । तस्मात्स बहुरसो लोहितरसो लोहितमिव हि मांसं तेनैवैनं तद्रूपेण समर्धयत्यन्तरे खादिरा भवन्ति बाह्यः पालाशा अन्तराणि ह्यस्थीनि बाह्यानि मांसानि स एवैनांस्तदायतने दधाति” । स च ब्रह्ममांसजत्वात् ब्रह्मरूपः यथोक्तं शत०ब्रा० ६।६।३।७ “ब्रह्म वै पलाशः” इति “अश्वत्थरूपो भगवान् विष्णुरेव न संशयः । रुद्ररूपो वटस्तद्वत् पलाशो ब्रह्मरूपधृक्” पद्मोत्त० १६०अ० । तत्पर्य्यायगुणादि भावप्र० उक्तं यथा “पलाशः किंशुकः पर्णो याज्ञिको रक्तपुष्पकः । क्षारश्रेष्ठो वातपोथो ब्रह्मवृक्षः समिद्वरः । पलाशो दीपनो वृष्यः सरोष्णो व्रणगुल्मजित् । भग्नसन्धानकृद्दोषग्रहण्यर्शःक्रिमीन् हरेत् । तत्पुष्पं स्वादु पाके तु कटुतिक्तं कषायकम् । वातलं कफपित्तास्रकृच्छ्रजिद्ग्राहि शीतलम् । तृड्दाहशमनं वातरक्तकुष्ठहरं परम् । फलं लघूष्णं मेहार्शःक्रिमिवातकफापहम् । विपाके कटुकं रूक्षं कुष्ठगुल्मोदरप्रणुत्” । “नवपलाशपलाशवनम्” माघः ३स्त्रियां ४पर्णां च स्त्री । पलं मांसमश्नाति अश-भोजने अण् उप० स० । ५राक्षसे पुंस्त्री०मेदि० स्त्रियां जातित्वात् ङीष् । तस्य मांसभोजित्वात्तथात्वम् । ६हरिद्वर्णे च ७मगधदेशे पु० शब्दरत्ना० ८लाक्षायां स्त्री राजनि० गौरा० ङीष् । [स्वार्थे क । २पलाशवृक्षे शब्दच० ।

**पलाशक** पु० पलाश+संज्ञायां कन् । १शठ्यां जटाधरः ।

**पलाशपर्णी** स्त्री पलाशस्येव पर्णमस्याः गौरा० ङीष् । अश्वगन्धायाम् । [नाडीहिङ्गौ राजनि० ।

**पलाशाख्य** पु० पलाशं तत्पुष्पगन्धमाख्याति आ+ख्या क ।

**पलाशादि** पु० “पलाशादिभ्यो वा” पा० विकारे अञ्प्रत्ययनिमित्ते शब्दगणे स च गणः पा०ग० उक्तो यथा “पलाश खदिर शिंशपा स्यन्दन पुलाक करीर शिरीष यवास विकङ्कत” पलाशस्य विकारः पालाश इत्यादि ।

**पलाशान्ता** स्त्री पलाशानामन्तो गन्धवान् यस्याः । गन्धपलाशाम् राजनि० ।

**पलाशिन्** पु०पलाशं विद्यतेऽस्य इनि । १वृक्षे अमरः २पलयुक्ते त्रि० स्त्रियां ङीप् । [शादर्शासकदेशादौ ।

**पलाशिल** त्रि० पलाशस्यादूरदेशादि काशा० इल । पला-

**पलाशीय** त्रि० पलाशमस्यास्य उत्करा० छ । पत्रयुक्ते

**पलिक** त्रि० पलं मानत्वेनास्त्यस्य ठन् । पलपरिमितद्रव्ये

**पलिक्नी** स्त्री पलिता इव स्त्री “छन्दसि क्त वा ङीप्” पा० क्त ङीप् । १श्वेतकेशायां वृद्धायां स्त्रियां यजु० २०।१५ लोके तु न । पलिता इत्येव । २बालगर्भिण्यां स्त्रीगव्याम् हेमच० ।

**पलिघ** पु॰ परिघवत्। "परेश्च घाङ्कयोः" पा॰ रस्य लः। १काचघटे २प्राकारे ३गोष्ठे च मेदि॰। ४परिघग-व्दार्थे च।

**पलित** न॰पल--भावे क्त। १केशादौ जरया जातायां श्वेततायाम् २मांसादेर्विपरीतभावे च अमरः ३तद्वति त्रि॰ स्त्रियां पलिता। वेदे तु पलिक्नीत्युक्तम्। ४तापे ५शिलजे ६कर्दमे मेदि॰। "फलेरितजादेश पः" उणा॰ फल--इतच् फस्य पः। ७केशपाके उज्ज्वलद॰ "क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः। पित्तं च केशान् पचति पलितं तेन जायते" माधवकरः। ततः अर्श॰ अच्। ८तद्युते त्रि॰।

**पलितङ्करण** न॰ अपलितं पलितं क्रियतेऽनेन-च्व्यर्थे ख्युन् मुम्। अपलितस्य पलितताकरणसाधने।

**पलितम्भविष्णु** त्रि॰ अपलितः पलितो भवति अभूततद्भावे भू--कर्त्तरि खिष्णुच् मुम्। अपलिते पलिततया भूते तदर्थे खुकञ्। पलितम्भावुक तत्रार्थे त्रि॰।

**पल्य** त्रि॰पल+यत्। उत्तमे वर्णशा शब्दे न समासे अप्रमा॰। पल्यवर्ण व उत्तमतेजसि

**पल्यङ्क** पु॰परिगतोऽङ्कं रस्य लः। शय्यायाम् (पालङ्क)अमरः

**पल्ययन** न॰परि+अय-करणे ल्युट् रस्य लः। (घोड़ार जिन्) पर्य्याणे हेमच॰। [ल्यति ते अपपल्युलत् त।

**पल्युल** छेदने पूतौ च अद॰चुरा॰उभ॰ सक॰ सेट्। पल्यु-

**पल्यूल** छेदने पवित्रताकरणे च अद॰ चुरा॰उभ॰सक॰सेट्। पल्यूलयति ते अपपल्यूलत् त।

**पल्ल** गतौ भ्वा॰पर॰सक॰ सेट्। पल्लति अपल्लीत् पपल्ल।

**पल्ल** पु॰ पदं लाति ला--क पादस्थाने पत्। (पालुइ) (मराइ) ख्याते धान्याधारभेदे मेदि॰।

**पल्लव** पु॰न॰ अर्द्ध॰ पल्लते सम्य॰ क्विप् पल्, लूयते लू--अप् कर्म॰। १अभिनवे पत्त्रस्तबके २तद्युक्तशाखायां ३विस्तारे ४बले ५अलक्तकरागे ६वलये मेदि॰ "पर्वपत्त्रादिसंघाते शाखायाः पल्लवो मतः" इत्युक्ते ७शाखादेः पर्वपत्त्रसमुदाये च। ८नवपत्त्रे मधुसूदनः ९विटपे १०शृङ्गारे ११चापले शब्दर॰।

**पल्लवक** पु॰पल्लव इव कायति कै--क। १मत्स्यभेदे २वेश्यापतौ च हला॰ स्वार्थे क। ३नवकिसलये पु॰न॰ पल्लवेन कायति कै--क। ४अशोकवृक्षे राजनि॰।

**पल्लवद्रु** पु॰ पल्लवप्रधानो द्रुः शा॰त॰। अशोकवृक्षे राजनि॰। पल्लवद्रुमादयोऽप्यत्र।

**पल्लवाङ्कुर** पु॰ पल्लवस्याङ्कुरो यत्र। शाखायाम् हला॰।

**पल्लवाधार** पु॰ ६त॰। शाखायां शब्दच॰।

**पल्लविक** त्रि॰ पल्लवः इव अस्त्यस्य ठन्। कामुके हेमच॰

**पल्लवित** त्रि॰ पल्लवं नूतनपत्त्रं विस्तारो वा जातः अस्य तार॰ इतच्। १पल्लवयुक्ते २विस्तारयुक्ते च पल्लव+ आचारे क्विप् ततः क्त। ३लाक्षारक्ते त्रि॰ मेदि॰।

**पल्लविन्** पु॰ पल्लव+अस्त्यर्थे इनि। वृक्षे शब्दच॰।

**पल्लि(ल्ली)** स्त्री पल्ल--इन् वा ङीप्। १क्षुद्रग्रामे २कुटग्रामे ३गेहे च। दीर्घान्तः ४नगरभेदे राजनि॰। पल्लं स्तम्बमाश्रयत्वेनास्त्यस्याः अच् गौरा॰ ङीष्। ४स्तम्बगोधिकायाम् स्त्री हेमच॰।

**पल्लिवाहु** पु॰ पल्लिं क्षुद्रग्रामं वाहयति निर्वाहयति वह-णिच् उण्॰ उप॰स॰। तृणभेदे राजनि॰।

**पल्वल** न॰ पल--वल। क्षुद्रजलाशये (डोवा) "अल्पं सरः पल्वलं स्यात्" चन्द्रचं गे रवौ। न तिष्ठति जलं यावे तत्रत्यं वारि पाल्वलम्। पाल्वलं वार्यभिष्यन्दि गुरु स्वादु त्रिदोषकृत्" भावप्र॰। चन्द्रचंम् जगधिरत्वम्।

**पव** पु॰ पू--भावे अप्। १निष्पावे शूर्पवायुना धान्यादेर्निर्बुसकरणे शाल्यादेः शोधने अमरः कर्त्तरि अच्। २वायौ शब्दच॰।

**पवन** न॰ पू--ल्युट्। १निष्पावे शूर्पवातेन धान्यादेः शोधने आधारे ल्युट्। २कुम्भकारस्य आमघटादिपाकस्थाने (पोयान) मेदि॰। करणे ल्युट्। ३जले शब्दमा॰ कर्त्तरि ल्यु। ४वायौ पु॰ अमरः पवनाश्च आवहादयः सप्त अनिलशब्दे १६४पृ॰दर्शिताः। वत्सरभेदे तेषां क्रमेणैकैकवत्सराधिपतित्वम् तच्च ज्योतिस्तत्त्वे उक्तं यथा "शाकः शराब्धिसंयुक्तो मुनिभिर्भाग हारितः। आवहादिक्रमेणैव सप्त वाताः प्रकीर्त्तिताः" शुगत्ता शाकाङ्कः। गुणाङ्कः४५। भाज्यकः ७। ५दयते त्रि॰ शब्दर॰। ६विष्णौ पु॰ "पवनः पावनोऽनिलः" विष्णुसं॰। [ऽप्यत्र।

**पवनतनय** पु॰ ६त॰। १हनूमति २भीमे च पवनसुतादयो-

**पवनविजय** पु॰ पवनः श्वासवायुर्विजीयतेऽनेन। वि+जि--करणे अच्। देहस्थवायोः श्वासप्रश्वासगतिभेदेन शुभाशुभसूचके ग्रन्थभेदे तत्प्रकारो नरङ्पु॰ उक्तो यथा "कुजे वह्नी रविः पृथ्वी सौरिरापः प्रकीर्त्तिताः। वायुसंस्थास्थितो राहुर्दक्षरन्ध्रावभासकः। गुरुः शुक्रस्तथा सौम्यश्चन्द्रश्चैव चतुर्थकः। वामनाड्यास्तु मध्यस्थान् कार्येदात्मनस्तथा। यदाचार इडायुक्तस्तदा

कर्म्म समाचरेत् । स्नानसेवां तथा ध्यानं वाणिज्यं राज-दर्शनम् । अन्यानि शुभकर्म्माणि कारयेत प्रयत्नतः । दक्षनाडीप्रवाहे तु शनिर्भौमश्च सैंहिकः । इनश्चैव तथाप्येवं पापानामुदयो भवेत् । शुभाशुभविवेको हि ज्ञायते तु स्वरोदयात् । देहमध्ये स्थिता नाड्यो बहु-रूपाः सुविस्तराः । नाभेरधस्ताद्यः कन्दो अङ्कुरास्तत्र निर्गताः । द्वासप्ततिसहस्राणि नाभिमध्ये व्यव-स्थिताः । चक्रवच्च स्थितास्तास्तु सर्व्वाः प्राणहराः स्मृताः । तासां तिस्रोमता श्रेष्ठा वामदक्षिणमध्यमाः । वामा सोमात्मिका प्रोक्ता दक्षिणा रविसन्निभा । म-ध्यमा च भवेदग्निरूपिणी कालरूपिणी । वामा ह्यमृतरूपा च जगदाप्यायने स्थिता । दक्षिणा रौद्र-भावेन जगच्छोषयते सदा । द्वयोर्वाहे तु मृत्युः स्यात् सर्व्वकार्य्यविनाशिनी । निर्गमे च भवेद्वामा प्रवेशे द-क्षिणा स्मृता । कारयेत् क्रूरकर्म्माणि प्राणे पिङ्गल-संस्थिते । इडाचारे तथा सौम्यं चन्द्रसूर्य्यगतस्तथा । यात्रायां सर्व्वकार्य्येषु विषापहरणे इडा । भोजने मैथुने युद्धे पिङ्गला सिद्धिदायिका । उच्चाटमारणा-द्येषु कर्म्मस्वेतेषु पिङ्गला । मैथुने चैव संग्रामे भोजने सिद्धिदायिका । शोभनेषु च कार्य्येषु यात्रायां विषक-र्म्मणि । शान्तिमुक्त्यर्थसिद्धौ च इडाज्ञेया नराधिपैः । द्वाभ्याञ्चैव प्रवाहे च क्रूरसौम्यविवर्ज्जने । विषुवतीन्तु जानीयात् संचारेषु विचक्षणः । सौम्येषु शुभकार्य्येषु लाभादिजयजीविते । गमनागमने चैव वामा सर्व्वत्र पूजिता । युद्धादिभोजने घाते स्त्रीणाञ्चैव तु सङ्गमे । प्रशस्ता दक्षिणा नाडी प्रवेशे क्षुद्रकर्म्मणि । शुभाशुभानि कार्य्याणि लाभालाभौ जयाजयौ । जीवाजीवाय यत् पृच्छेत् सिध्यति च मध्यमा । वामाचारेऽथ वा दक्षे प्रत्यये यत्र नायकः । तत्रस्थः पृच्छते यस्तु तत्र सिद्धिर्न संशयः । पैच्छन्दो वामदेवस्तु यदा वहति चात्मनि । तत्र भागे स्थितः पृच्छेत् सिद्धिर्भवति निष्फला । वामे वा दक्षिणे वापि यत्र संक्रमते शिरा । घोरे घोराणि कर्म्माणि सौम्ये वै मध्यमानि च । प्रस्थिते भागतो हंसे द्वाभ्यां वै सर्व्ववाहिनि । तदा मृत्युं विजानीयात् योगी योगविशारदः । यत्र यत्र स्थितः पृच्छेद्वाम-दक्षिणसम्मुखः । तत्र तत्र समं दिद्याद्दातस्तोदयनं तदा । अग्रतो वामिका श्रेष्ठा पृष्ठतो दक्षिणा शुभा । वामेन वामिका प्रोक्ता दक्षिणे दक्षिणा शुभा । जीवो जीवति जीवेन यच्छून्यं तत्स्वरो भवेत् । यत्किञ्चित् कार्य्यमुद्दिष्टं जयादि शुभलक्षणम् । तत्सर्व्वं पूर्णना-डीनु जायते निर्विकल्पकम् । अन्यनाड्यादिपर्य्यन्तं पञ्च-मंयमुदाहृतम् । यावत् षष्ठौ तु शून्यायां पूर्णायां प्र-श्नं जयेत् । रिक्तायान्तु द्वितीयन्तु कथयेत्तदर्थाद्धृतः । वामाचारः समं वायुर्जायते कर्म्मसिद्धिदः । प्रहृत्ते दक्षिणे मार्गे विषमे विषमाक्षरम् । अन्यत्र वामवाहे तु नाम वै विषमाक्षरम् । तदासौ जयमाप्नोति योधः संग्राममध्यतः । दक्षवातप्रवाहे तु यदि नाम समाक्षरम् । जायते नात्र सन्देहो नाडीमध्ये तु लक्षयेत् । पिङ्ग-लान्तर्गते प्राणे समानीयाङ्गवल्लयेत् । यावन्नाड्युदयं चारस्तां दिशं यावदाजयेत् । न जातु जयते सोऽपि नात्र कार्य्या विचारणा । अथ संग्राममध्ये तु यत्र नाडी सदा वहेत् । सा दिशा जयमाप्नोति शून्ये भङ्गं विनिर्दिशेत् । जातस्वरे जयं विद्यान्मृतके मृतिमा-दिशेत् । जयं पराजयञ्चैव योजानाति स पण्डितः । वामे वा दक्षिणे वापि यत्र सञ्चरते शिरा । कृत्वा तत् पदमादौ तु यात्रां नयति शोभनाम् । पश्चिमसूर्य्यप्रवाहे तु सति युद्धं समाचरेत् । तत्रस्थः पृच्छते यस्तु स वाधुर्जयते ध्रुवम् । यां दिशं वहते वायुस्तां दिशं याम्यदाजयेत् । जयते नात्र सन्देह इन्द्रो यद्यग्रतः स्थितः । मेषाद्या दश या नाड्यो दक्षिणा वामसंस्थिताः । चरस्थिरद्विभागौ तास्ताद्दशे तादृशः क्रमात् । निर्गमे निर्गमं याति संग्रहे संग्रहं विदुः । पृच्छकस्य वचः श्रुत्वा वर्णाकारेण लक्षयेत् । वामे वा दक्षिणे वापि पञ्चतत्त्वस्थितः शिवे ! । ऊर्द्ध्वेऽग्निरध आपश्च तिर्य्यक्-संस्थः प्रभञ्जनः । मध्ये तु पृथिवी ज्ञेया नभः सर्व्वत्र सर्व्वदा । ऊर्द्ध्वे मृत्युरधः शान्तिस्तिर्य्यक् चोच्चाटयेत् सुधीः । मध्ये स्तम्भं विजानीयात् मोक्षः सर्व्वत्र सर्व्वगे" ।

**पवनव्याधि** पुं० पवनः वातरोगभेदो व्याधिरस्य । उद्धवे यादवचर्य्यभेदे त्रिका० ।

**पवनात्मज** पुं० हन० १हनुमति २भीमे ३वह्नौ च "वायो-रग्निः" इति श्रुतेस्तस्य वायुजातत्वात्तत्सुतत्वम् । पव-नप्रभवादयोऽप्यत्र ।

**पवनाल** पुं० पवनायालति पर्य्याप्नोति अल–पर्य्याप्तौ अच् ४त० । (देधान) धान्यभेदे "पवनालो हिमः स्वादु-र्लोहितः श्लेष्मपित्तजित् । अवृष्यस्तुवरो रूक्षः कोट-जन् कथितो लघुः" भावप्र० ।

**पवनाश** पुंस्त्री० पवनमश्नाति अश—अण् उप०स०। १सर्पे स्त्रियां जातित्वात् ङीष्। २वायुभक्षके त्रि० हला०।

**पवनाशनाश** पु०पवनः अशनमस्य पवनाशनं सर्पमश्नाति अश-अण्। १गरुडे २मयूरे हला०स्त्रियां जातित्वात् ङीष्।

**पवनेश्वर** न०पवनेन स्थापित ईश्वरः ईश्वरलिङ्गम्। काशीस्थे शिवलिङ्गभेदे काशीख० १२अ०।

**पवनेष्ट** पु० पवने पवनहन्तौ इष्टः। महानिम्बे रत्नमा०।

**पवनाम्बुज** न० पवनं पवित्रमम्बुजमिव पुष्पो०। मधूकफले शब्दच० पवनाम्बुजमित्येव तत्र पाठः साधुः।

**पवमान** पु० पू—ताच्छील्ये चानश्। १वायौ अमरः २गार्हपत्येऽग्नौ "अथ यः पवमानस्तु निर्मथ्योऽग्निः स उच्यते। स च वै गार्हपत्योऽग्निः प्रथमो ब्रह्मणः सुतः" मत्स्यपु० ७८अ०। ३सोमे च तदधिकृत्य प्रवृत्तं सूक्तम् अण्। पावमान सोमदेवताके सूक्तभेदे तानि च सूक्तानि ऋ० ६।१सूक्तावधि षट्षष्टिसूक्तात्मकानि स्वादिष्ठयेत्यादिकानि हिन्वन्तीत्याद्यन्तानि।

**पवमानात्मज** पु० ६त०। वह्निभेदे "पवमानात्मजो वह्निर्हव्यवाहन उच्यते" मत्स्यपु० ४८अ०। तस्य "वायोरग्निः" इति श्रुतेर्वायुजत्वात्तथात्वम्। [रिकेय तदपत्ये पुंस्त्री०।

**पवष्टुरिक** पु० ऋषिभेदे तस्यापत्यम् शुभ्रा० ढक्। पावष्टु-

**पवाका** स्त्री पू-आक। वात्यायाम् उज्ज्वलदत्तः।

**पवि** पु०पू-शोधे इ। १वज्रे अमरः २वाचि स्त्री निघण्टुः।

**पवित** त्रि० पूङ् शोधे "पूङश्च" पा०वा इट्। "पूङः क्त्वा च" पा० न कित्त्वम्। १पवित्रे २मरिचे न० राजनि०।

**पवित्र** पु०न० पूयते आज्यमनेन पू—करणे इत्र। १आज्यसंस्कारके २कुशद्वये उत्पवनशब्दे तल्लक्षणं १२२पृ० दर्शितम् "अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च। प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" कर्मप्र०। ३अनामिकावेष्टने पवित्रतासाधने द्रव्ये च ३यज्ञोपवीते त्रिका० पवित्रारोपणशब्दे दृश्यम्। ४विष्णौ "पवित्रं मङ्गलं परम्" विष्णुसं०। ५वर्षणे ६ताम्रे ७पयसि न०मेदि०। ८घर्षणे न० विश्वः ९अर्घोपकरणे हेमच०। १०घृते ११मधुनि च राजनि०। १२तिलवृक्षे १३पुत्रजीववृक्षे पु० राजनि० १४व्रतशौचादिना १५शुद्धे त्रि० अमरः। १६तुलस्यां स्त्री शब्दमा० १७नदीभेदे हेमच० १८हरिद्रायाम् १९अश्वत्थवृक्षे च स्त्री राजनि०।

**पवित्रक** पु० पवित्रमिव कायति कै—क स्वार्थे क, संज्ञायां कन् वा। १पवित्रशब्दार्थे २अश्वत्थवृक्षे ३उदुम्बरवृक्षे ४कुशे ५दमनकवृक्षे राजनि० ६शणसूत्रनिर्मिते जाले मत्स्यधारणसाधने द्रव्यभेदे न० अमरः।

**पवित्रधान्य** न० नित्यकर्म०। यवे राजनि०।

**पवित्रारोप(ह)ण** न० ६त०। विष्णुप्रभृतिदेवसम्प्रदानके यज्ञोपवीतदाने देवभेदेन तिथिभेदादौ तद्दानप्रकारश्च हेमा० व्र० विष्णुरहस्ये उक्तो यथा

"तस्माद्भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः। वर्षे वर्षे प्रकर्त्तव्यं पवित्रारोपणं हरेः। श्रावणस्य सिते पक्षे कर्कटस्थे दिवाकरे। द्वादश्यां वासुदेवस्य पवित्रारोपणं स्मृतम्। सिंहस्थे वा रवौ कार्यं कन्यायान्तु गतेऽथ वा। तस्यामेव तिथौ सम्यक् तुलास्थे न कथञ्चन। विष्णोरुद्रस्य सूर्यस्य विरिञ्चेः षण्मुखस्य च। देव्या गणाधिनाथस्य मातॄणां धनदस्य च। पवित्रारोपणं कार्यमन्येषाञ्च यथाविधि। अकृत्वा फलहानिः स्यात् संवत्सरकृतार्चनात्। सर्वेषान्तु महत् पुण्यं पवित्रारोपणे कृते। तिथयस्तत्त्वविन्यासाः पृथगुक्तास्तपोधन!। प्रतिपद्धनदस्योक्ता पवित्रारोपणे तिथिः। श्रिया देव्या द्वितीया तु तिथीनामुत्तमा तिथिः। तृतीया तु भवान्यास्तु चतुर्थी तत्सुतस्य तु। पञ्चमी नागराजस्य षष्ठी प्रोक्ता गुहस्य च। सप्तमी भास्करे प्रोक्ता दुर्गायाश्चाष्टमी स्मृता। मातॄणां नवमी प्रोक्ता दशमी वासुकेः स्मृता। एकादशी ऋषीणान्तु द्वादशी चक्रपाणिनः। त्रयोदशी त्वनङ्गस्य शिवस्योक्ता चतुर्दशी। मम देवमुनिश्रेष्ठ! पौर्णमासी तिथिः स्मृता। यथोक्ताः शुक्लपक्षे तु तिथयः श्रावणस्य च। सर्वेषामेव देवानां तथा कार्यं यथाविधि। प्रथमं दर्भसूत्रन्तु पद्मसूत्रं ततःपरम्। ततः क्षौमं सुपुण्यं स्यात् पट्टसूत्रं ततः परम्। शुचि कार्पाससूत्रेण निर्मितं वा शुभाशुभम्। शुचिर्भूत्वा शुचौ देशे कारयीत प्रयत्नतः। तद्विधानोपयुक्तन्तु यथोक्तफलदायकम्। कन्या कर्त्तयते सूत्रं नारी वाथ पतिव्रता। विधवा साधुशीला वा सूत्रमेतत्तु कर्त्तयेत्। केशयुक्तं च्युतं दग्धं मूषरक्तादिदूषितम्। मलिनं नीलरक्तं वा प्रयत्नेन विवर्जयेत्। यथोक्तं सूत्रमादाय त्रिगुणं त्रिः प्रयोजयेत्। पवित्रं तेन कुर्वीत कनिष्ठोत्तममध्यमम्। कनिष्ठं तन्तुभिर्ज्ञेयं सप्तविंशतिभिः शुभम्। मर्त्यलोके तु तत्कीर्त्तिसुखायुर्द्धनपुत्रदम्। चतुःपञ्चाशता ज्ञेयं तन्तूनां मध्यमं परम्। दिव्यभोगावहं पुण्यं स्वर्गावाससुखप्रदम्। उत्तमं

चैव तन्तूनां शतमष्टोत्तरं शतम्। दत्त्वा तद्वासुदेवाय विष्णुलोकं भजेन्नरः। अष्टोत्तरसहस्रं तु तन्तूनां परिसंख्यया। वनमाला स्मृता विष्णोर्दत्ता भक्तिप्रदा हि सा। कनिष्ठं नाभिमात्रं स्यादूरुमात्रन्तु मध्यमम्। पवित्रं चोत्तमं प्रोक्तं जानुमात्रं प्रमाणतः। वनमाला प्रमाणेन प्रतिमायाः प्रणीयते। नराणां जन्मसंसार दुःखसन्तत्युपशामिनी। कनिष्ठे द्वादशैवोक्ता मध्यमे द्विगुणाः स्मृताः। त्रिगुणास्तूत्तमे प्रोक्ता ग्रन्थयस्तु पवित्रके। शतमष्टोत्तरं कार्य्यं ग्रन्थीनां तु विधानतः। मुनीन्द्र! वनमालायां विष्णुपूजनतत्पर!। अधिवासनसूत्रे तु ग्रन्थयो द्वादश स्मृताः। तत्त्वन्यास विधानं तु श्रूयतां गुह्यकोत्तम"। इत्युपक्रमे तत्त्वन्यास स्तत उक्तः "पवित्रं तच्च विख्यातं ब्रह्मतेजो हि गीयते। विष्ण्वाख्यया तु विख्यातं तदा लोके निगद्यते। तदेव स्तम्भरूपेण यज्ञेशः कर्मणः प्रभुः। तदेव त्रिगुणीभूतं नारायणसमाख्यया। त्रिवेदात्मा त्रिदेवात्मा त्र्यक्षरः प्रणवः स्मृतः। ते पवित्रात्समुद्भूता वराङ्गाङ्गसमाश्रिताः। संघातेन च तन्तूनां नवात्मा परिकीर्त्तितः। तन्तूनां प्रथमो देवो वासुदेवो जगद्गुरुः। हलायुधो द्वितीयस्तु प्रद्युम्नश्च तृतीयकः। अपरे त्वनिरुद्धस्तु ततो नारायणः प्रभुः। ब्रह्माविष्णुस्तथा नवां वरारोहे समाश्रिताः। अधिदैवन्तु रूपेण अध्यात्मं च निबोध मे। मनोबुद्धिरहङ्कारस्तन्मात्राणि तथैव च। जीवश्चेति नवैतच्च अध्यात्मं सुव्यवस्थितम्। द्यौरन्तरिक्षं पृथिवी भूर्भुवःस्वस्तथैव च। अकारश्चाप्युकारश्च मकारश्चाधिभूतकम्। अग्नित्रयं तथा कर्म त्रयश्च सदनत्रयम्। श्रेयः पवित्रे तद्विद्वानधिदैवमुदाहरेत्"। शिवपवित्रलक्षणम् "एकादशाथ वा रुद्रैस्त्रिंशता वाष्टयुक्तया। पञ्चशता वा कर्त्तव्यं तुल्यग्रन्थ्यन्तरालकम्। द्वादशाङ्गुलमानानि व्यायामाष्टाङ्गुलानि च। लिङ्गविस्तारमानानि चतुरङ्गुलिकानि वा। तथैव पिण्डिकास्पर्शं चतुर्थं सार्वदैवतम्। वाङ्मावतारकं कार्य्यं पवित्रमतिसुन्दरम्"। पवित्रारोहणसमयश्च "आषाढशुक्लपक्षस्य याष्टमी श्रावणस्य च। पवित्रारोहणं कुर्यात् देवप्रीतिकरं परम्" कालिकापु० ५८अ०। [न्द्रायन तद्गोत्रापत्ये पुंस्त्री०।

**पविन्द** पु० ऋषिभेदे तस्य गोत्रापत्यम् अश्वा० फञ्। पावि-

**पवीट** त्रि० पू–ईच् वेदे इटो दीर्घः। शोधके ऋ० ८।४।४

**पवीनस** पु० गर्भोपद्रावके असुरभेदे अथ० ८।६।२

**पवीर** न० १आयुधे "पविः शल्यो भवति यद्विपुनातिकायं तद्वत् पवीरमायुधम्" निरु० १२।३०। पवि+स्वार्थे ईर। २वज्रे ऋ० १०।६०।३ "पविधीरास्यास्ति र पूर्वाणो दीर्घः। ३फाले यजु० १२।७१ वेददी०।

**पवीरव** पु० पवे रव बेरे दीर्घः। वज्रशब्दे ऋ० १।१७४।४भा०

**पव्य** त्रि० पू–यत्। १शोध्ये २यज्ञपात्रादौ च ऋ० ८।८६।२४ तत्र "पव्यया पात्राणि" भा० यकःस्थाने याट्।

**पश(ष-स)** बाधे विहतौ भ्वा०उभ०सक० सेट्। पश(ष)-(स)ति ते अपशी(षी)(सी)त् अपाशी(षी)(सी)त् अपशि(षि)(सि)ष्ट। पपाश(ष)(स) पेशे(षे)(से)। दन्त्यान्त्यस्यैव अभ्यासस्य लुक्" यङ्यङ्लुकोः सि० कौ० पस्पस्ति–पस्पसीति। तालव्यान्त्यस्य तथेत्यन्ये।

**पश(ष स)** स्पर्शे, मतौ अनुपसर्गात् बन्धे बाधे च अद०चु० उभ०सक०सेट्। पश(ष)(स)यति ते अपपश(ष)(स)त् त।

**पश(ष-स)** बन्धे चुरा० उभ०सक०सेट्। पाश(ष)यति ते अपीपश(ष)(स) त। [१।२२०स्त्री० २पशुसम्बन्धिनि च।

**पशव्य** त्रि०पशवे हितम् तस्येदं वा यत्। १पशुहिते वाच०

**पशु** पु० सर्वमविशेषेण पश्यति दृश–कु पशादेशः। स्वनादौ लोमस्त्राङ्गूलवति १जन्तुभेदे २दर्शनार्थेऽव्ययम् अमरः। ३प्रमथे ४देवे ५प्राणिमात्रे शब्दर० ६छागे "अनादिशे पशुश्छागः" मीमांस०। ७यज्ञभेदे भरणिः तस्य पशुसाध्यत्वात् तथात्वम्। "न तो पशौ करोति "स्मृतौ पशुः पशुसाध्यो यागः। ७अश्वोडुम्बरे शब्दच०। ८तन्त्रोक्ते साधकानां भावभेदे तत्र जन्तुभेदानां ग्रामारण्यभेदा यथा "गोरविरजोऽश्वोऽश्वतरो गर्दभो मनुष्यश्चेति सप्त ग्राम्याः पशवः। महिषवानर ऋक्षसरीसृपरुरु पृषत मृगाश्चेति सप्तारण्याः पशवः" दुर्गोत्सवत०। छागादौ पशुपदप्रयोगमाह यज्ञपार्श्वः "उष्ट्रो वा यदि वा मेषश्छागो वा यदि वा हयः। पशुस्थाने नियुक्तानां पशुशब्दोऽभिधीयते"। पश्वधिष्ठातृदेवताभेदा यथा "सिंहे वसति दुर्गा च शरभे च प्रजापतिः। एणे च वसते वायुर्मेषे चैव च चन्द्रमाः। नक्षत्राणि च शशके कृष्णसारे हरिः स्वयम्। शतक्रतुर्गवां पृष्ठे गवये भुवनानि च। मल्लके मङ्गलान्यष्टौ गजे विघ्नेश्वरः। अश्वे तु द्वादशादित्या ब्राह्मणे सर्वदेवताः। ब्रह्मा तु चमरे चैव छागले तु तथाऽनलः। एतस्मात् कारणादेते पूज्या वन्द्याः प्रयत्नतः" इति मत्स्यसूक्त-

तन्त्रे २९ पटले। बल्यर्थपशुलक्षणादि यथा "निवेदयेत् मोषगण्डम् मानुषं वा लुलापकम्। वराहं वाथ छगलं चमरं वाऽऽरणन्तथा। मेषञ्चाथ वराहञ्च गोधिकाञ्च निवेदयेत्" मत्स्यसूक्ते "लुलापञ्च तथा खड्गं चमरञ्च वराहकम्। कच्छपं शल्लकीं गोधां मानुषं मदनन्तरम्। न दद्याद्ब्राह्मणो मद्यं मानुषञ्च तथा स्वरम्। त्रैपक्षिकान् विवर्णांश्च मानुषाञ्च कपीनपि। संवत्सरात् परं छागं यावत् स्यात्तु त्रिहायणम्। वराहदन्तसदृशविषाणाभ्यां सुशोभनम्। मदगन्धसमायुक्तं रोमराजिविराजितम्। कृष्णं वाऽरुणकञ्चैव दद्याद् द्वादशवार्षिकम्"। जातिभेदे वर्णविशेषमाह तत्रैव "श्वेतञ्च छागलञ्चैव ब्राह्मणस्य विधिस्मृते। रक्तं श्वेतं क्षत्रियस्य वैश्यस्य गौरमेव च। नानावर्णं हि शूद्रस्य सर्वेषामञ्जनप्रभम्" योगिनीतन्त्रे "पशूनाञ्चैव सर्वासात् परतश्च बलिर्भवेत्। छागलः कृष्णः श्वेतो वा हिरण्यांत् परतो यदि। "तथा चाश्वं छगञ्चैव छागञ्च पार्वतीयकम्। मूषिकञ्च शराबञ्च क्षुद्रमार्जारमेव च"।

रुद्रयामले उत्तरख० ६प० पशुभावलक्षणं यथा

"पशुभावस्थितां नाथ! देवतां शृणु विस्तरात्। दुर्गापूजां विष्णुपूजां शिवपूजाञ्च नित्यशः। अवश्यं हि यः करोति स पशूत्तमः स्मृतः। केवलं शिवपूजाञ्च यः करोति च स साधकः। पशूनां मध्यमः श्रीमान् शिवदा सह चोत्तमः। केवलं वैष्णवो धीरः पशूनां मध्यमः स्मृतः। भूतानां देवतानाञ्च सेवां कुर्वन्ति ये सदा। पशूनामधमाः प्रोक्ता नरकस्था न संशयः। [illegible]सेवां मम सेवाञ्च ब्रह्मविष्ण्वादिसेवनम्। [illegible] सर्वभूतानां नायिकानां महाप्रभो!। यक्षिणीनां भूतिनीनां ततः सेवां शुभप्रदाम्। यः पशुर्ब्रह्मलक्ष्म्यादिसेवाञ्च कुरुते सदा। तथा श्रीतारकब्रह्मसेवां ये वा नरोत्तमाः। तेषामसाध्यभूतादिदेवताः सर्वकामदाः। वर्जयेत् पशुमार्गेण विष्णुपूजापरो जनः" द्वितीयपटले। "नित्यं श्राद्धं तथा सन्ध्यावन्दनं पितृतर्पणम्। देवतादर्शनं पीठदर्शनं तीर्थदर्शनम्। गुरोराज्ञापालनञ्च देवतानित्यपूजनम्। पशुभावस्थितो मर्त्यो महासिद्धिं लभेद्ध्रुवम्"। यज्ञियपशुलक्षणं च आ०श्र० ४।८।१ सूत्रादौ दृश्यः। ९शैवागमप्रसिद्धे जीवात्मनि पशुपतिशब्दे दृश्यम्। १०अग्नौ पश्विष्टिशब्दे दृश्यम्।

**पशुकल्प** पु० पशोः यज्ञाङ्गपशोः कल्पो विधानम्। "अथ पशुकल्पः" आ०श्र० ३।११।१ सूत्रादौ विहिते पशूपाकरणादिसंस्कारादिकर्मणि।

**पशुगायत्री** स्त्री०। पशोः कर्णे जप्यमन्त्रभेदे स च "पशुपाशाय विद्महे विश्वकर्मणे धीमहि। तन्नो जीवः प्रचोदयात्" इत्येवं रूपः। [ श्यामाचारे भाग० ५।२६।२३।

**पशुचर्य्या** स्त्री पशोरिव चर्य्याचारः। पशोरिव निर्ल-

**पशुतन्त्र** न० पशूनां तन्त्रम्। १अनेकोद्देशेन एकजातीयैकपशुप्रहणे आश्व०श्रौ०२।६।१७ पशोस्तन्त्रम्। २पश्वधीने च। कात्या०श्रौ० ५।११।१८। ३पशुकल्पे च।

**पशुद** त्रि० पशुं ददाति दा—क। १पशुदातरि २कुमारानुचरमातृभेदे स्त्री भा०श० ४७अ०।

**पशुदेवता** स्त्री पश्वधिष्ठात्री देवता पशुसम्प्रदानं देवता वा। १पश्वधिष्ठात्र्यां देवतायाम्। पशुभेदे देवताभेदाश्च पशुशब्दे दर्शिताः। २पशुसम्प्रदाने देवताभेदे च।

**पशुधर्म्म** पु० पशूनामिव यथेष्टमैथुनादिरूपो धर्मः। यथेष्टमैथुनादिसम्पादके पशुतुल्यधर्मे मनुः ९।६६ श्लो०।

**पशुनाथ** पु० ६त०। १शिवे हेमच० २पशुस्वामिनि च।

**पशुप** त्रि० पशून् पाति—क। १पशुपालके २पशूनां पत्यौ च।

**पशुपति** पु० पशूनां जीवानां पतिः। १महेश्वरे शिवे २पशुस्वामिनि। ३यजुर्वेदीयकर्मकाण्डपद्धतिकारके ४क्वाथौषध महोदरे ५पक्षितभेदे च। शिवस्य तन्नामनिरुक्तिर्यथा "अयञ्च सर्वविद्यानां पतिराद्यः सनातनः। अह वै पतितो येन पशुमध्ये (जीवमध्ये) व्यवस्थितः। अतः पशुपतिर्नाम त्वं लोके ख्यातिमेष्यसि" वराहपु०। पशुपतिनोपदिष्टम् अण्। पाशुपत शैवागमभेदे तत्र प्रतिपाद्यविषयाश्च सर्वदर्शनसंग्रहे नकुलीशमतप्रदर्शनानन्तरं दर्शिता यथा

"तमिमं परमेश्वरः कर्मादिनिरपेक्षः कारणमिति पक्षं वैषम्यनैर्घृण्यदोषदूषितत्वात् प्रतिक्षिपन्तः केचन माहेश्वराः शैवागमसिद्धान्ततत्त्वं यथावदीक्षमाणाः कर्मादिसापेक्षः परमेश्वरः कारणमिति पक्षं कक्षीकुर्वाणाः पक्षान्तरमुपक्षिपन्ति। तत्र पशुपतिपाशभेदात् त्रयः पदार्था इति। तदुक्तं तन्त्रतत्त्वज्ञैः "त्रिपदार्थं चतुष्पादं महातन्त्रं जगद्गुरुः। सूत्रेणैकेन संक्षिप्य प्राह विस्तरतः पुनः" इति अस्यार्थः त्रयः पशुपतिपाशाः पदार्था यस्मिन् सन्ति तत् त्रिपदार्थं, विद्याक्रियायोगचर्य्याख्याश्चत्वारः पादा यस्मिन् तच्चतुष्पादं महातन्त्रमिति। तत्र पशूनामस्वतन्त्रत्वात्

पाशानामचैतन्यात् तद्विलक्षणस्य पत्युः प्रथममुद्देशः। चेतनत्वसाधर्म्यात् पशूनां तदानन्तर्य्यम्। अवशिष्टानां पाशानामन्ते विनिवेश इति क्रमनियमः। दीक्षायाः परमपुरुषार्थहेतुत्वात्तस्याश्च पशुपाशेश्वरस्वरूपनिर्णयोपायभूतेन मन्त्रमन्त्रेश्वरादिमाहात्म्यनिश्चायकेन ज्ञानेन विना निष्पादयितुमशक्यत्वात् तदवबोधकस्य विद्यापादस्य प्राथम्यम्। अनेकविधसाङ्गदीक्षाविधिप्रदर्शकस्य क्रियापादस्य तदानन्तर्य्यम्। योगेन विना नाभिमतप्राप्तिरिति साङ्गयोगज्ञापकस्य योगपादस्य तदुत्तरत्वम्। विहिताचरणनिषिद्धवर्जनरूपां चर्य्यां विना योगोऽपि न निर्वहतीति तत्प्रतिपादकस्य चर्य्यापादस्य चरमत्वमिति विवेकः। तत्र पतिपदार्थः शिवोऽभिमतः। मुक्तात्मनां विद्येश्वरादीनाञ्च यद्यपि शिवत्वमस्ति तथापि परमेश्वरपारतन्त्र्यात् स्वातन्त्र्यं नास्ति। ततश्च तदुपकरणभुवनादीनां भावानां सन्निवेशविशिष्टत्वेन कार्य्यत्वमवगम्यते। तेन च कार्य्यत्वेनैषां बुद्धिमत्पूर्व्वकत्वमनुमीयत इत्यनुमानवशात् परमेश्वरप्रसिद्धिरुपपद्यते। ननु देहस्यैव तावत्कार्य्यत्वमसिद्धं न हि कश्चित् केनचित् कदाचित् देहः क्रियमाणो दृष्टचरः। सत्यं तथापि न केनचित् क्रियमाणत्वं देहस्य दृष्टमिति कर्त्तृदर्शनापह्नवो न युज्यते तस्यानुमेयत्वेनाप्युपपत्तेः। देहादिकं कार्य्यं भवितुमर्हति सन्निवेशविशिष्टत्वात् विनश्वरत्वाद्वा घटादिवत् तेन च कार्य्यत्वेन बुद्धिमत्पूर्व्वकत्वमनुमातुं सुकरमेव। विमतं सकर्त्तृकं कार्य्यत्वात् घटवत् यदुक्तसाधनं तदुक्तसाध्यं न यदेवं न तदेवं यथात्मादि। परमेश्वरानुमानप्रामाण्यसाधनानुमानमन्यत्राकारीत्युपरम्यते "अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा" इति न्यायेन प्राणिकृतकर्म्मापेक्षया परमेश्वरस्य कर्त्तृत्वोपपत्तेः। न च स्वातन्त्र्यविहतिरिति वाच्यं करणापेक्षया कर्त्तुः स्वातन्त्र्यविहतेरनुपलम्भात् कोषाध्यक्षापेक्षस्य राज्ञः प्रसादादिना दानवत्। यथोक्तं सिद्धगुरुभिः "स्वतन्त्रस्याप्रयोज्यत्वं करणादिप्रयोक्तृता। कर्त्तुः स्वातन्त्र्यमेतद्धि न कर्म्माद्यनपेक्षता" इति। तथा च तत्तत्कर्म्माशयवशाद्भोगतत्साधनतदुपादानादिविशेषज्ञः। तत्र कर्त्ता अनुमानादिसिद्ध इति सिद्धम्। तदिदमुक्तं तत्रभवद्भिर्बृहस्पतिभिः "इह भोग्यभोगसाधनतदुपादानादि यो विजानाति। तमृते भवेन्नेदं पुंस्कर्म्माशयविपाकज्ञमिति"। अन्यत्रापि "विवादाध्यासितं सर्व्वं बुद्धिमत्पूर्व्वकर्त्तृकम्। कार्य्यत्वादावयोः सिद्धं कार्य्यं कुम्भादिकं यथा" इति सर्व्वकर्त्तृत्वादेवास्य सर्व्वज्ञत्वं सिद्धम् अज्ञस्य करणासम्भवात्। उक्तञ्च श्रीमन्मृगेन्द्रैः "सर्व्वज्ञः सर्व्वकर्त्तृत्वात् साधनाङ्गफलैः सह। यो यज्जानाति कुरुते स तदेवेति सुस्थितम्" इति। अस्तु तर्हि स्वतन्त्र ईश्वरः कर्त्ता न तु तावदशरीरः घटादिकार्य्यस्य शरीरवता कुलालादिना क्रियमाणत्वदर्शनात् शरीरवत्त्वे चास्मदादिवदीश्वरः क्लेशयुक्तोऽसर्व्वज्ञः परिमितशक्तिः प्राप्नुयादिति चेन्मैवं मंस्थाः अशरीरस्याप्यात्मनः स्वशरीरस्पन्दादौ कर्त्तृत्वदर्शनादभ्युपगमस्यापि शरीरवत्त्वेऽपि भगवतो न प्रागुक्तदोषानुषङ्गः। परमेश्वरस्य हि मलकर्म्मादिपाशजालासम्भवेन प्राकृतं शरीरं न भवति किन्तु शाक्तं शक्तिरूपैरीशानादिभिः पञ्चभिर्मन्त्रैर्मस्तकादिकल्पनायामीशानमस्तकस्तत्पुरुषवक्त्रोऽघोरहृदयो वामदेवगुह्यः सद्योजातपादः ईश्वर इति प्रसिद्धं यथाक्रमानुग्रहतिरोभावादानलक्षणस्थितिलक्षणोद्भवलक्षणकृत्यपञ्चककारणं स्वेच्छानिर्म्मितं तच्छरीरं न चास्मच्छरीरसदृशम्। तदुक्तं श्रीमन्मृगेन्द्रे "मलाद्यसम्भवाच्छाक्तं वपुर्नैतादृशं प्रभोः" इति। अन्यत्रापि "तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः। ईशतत्पुरुषाघोरवामाद्यैर्मस्तकादिमत्" इति। ननु पञ्चवक्त्रस्त्रिपञ्चदृगित्यादिना आगमेषु परमेश्वरस्य मुख्य एव शरीरेन्द्रियादियोगः श्रूयत इति चेत् सत्यं निराकारे ध्यानपूजाद्यसम्भवेन भक्तानुग्रहकरणाय तत्तदाकारग्रहणाविरोधात्। तदुक्तं श्रीमत्पौष्करे "साधकस्य तु रक्षार्थं तस्य रूपमिदं स्मृतम्" इति। अन्यत्रापि "आकारवांस्त्वं नियमादुपास्यो न वस्त्वनाकारमुपैति बुद्धिः" इति। कृत्यपञ्चकं च प्रपञ्चितं भोजराजेन "पञ्चविधं तत्कृत्यं सृष्टिस्थितिसंहारतिरोभावाः। तद्वदनुग्रहकरणं प्रोक्तं सततोदितस्यास्य" इति। एतच्च कृत्यपञ्चकं शुद्धाध्वविषये साक्षाच्छिवकर्त्तृकं कष्टाध्वविषये त्वनन्तादिद्वारेणेति विवेकः। तदुक्तं श्रीमत्करणे "शुद्धेऽध्वनि शिवः कर्त्ता प्रोक्तोऽनन्तोऽहिते प्रभोः" इति। एवञ्च शिवशब्देन शिवत्वयोगिनां मन्त्रेश्वरमहेश्वरमुक्तात्मशिवानां सवाचकानां शिवत्वप्राप्तिसाधनेन दीक्षादिनोपायकलापेन सह पतिपदार्थेन संग्रहः कृत इति बोद्धव्यम्। तदित्थं पतिपदार्थो निरूपितः। सम्प्रति

पशुपदार्थो निरूप्यते । अणुक्षेत्रज्ञादिपदवेदनीयो जीवात्मा पशुः न तु चार्वाकादिवद्देहादिरूपः "नान्यदृष्टं स्मरत्यन्यः" इति न्यायेन प्रतिसन्धानानुपपत्तेः । नापि नैयायिकादिवत् प्रकाश्यः अनवस्थाप्रसङ्गात् । तदुक्तम् "आत्मा यदि भवेन्मेयस्तस्य माता भवेत् परः । पर आत्मा तदानीं स्यात् स परो यदि दृश्यते" इति । न च जैनवदव्यापकः नापि बौद्धवत् क्षणिकः देशकालाभ्यामनवच्छिन्नत्वात् । तदुक्तम् "अनवच्छिन्नसद्भावं वस्तु यद्देशकालतः । तन्नित्यं विभु चेच्छन्तीत्यात्मनो विभुनित्यता" इति । नाप्यद्वैतवादिनामिवैकः, भोगप्रतिनियमस्य पुरुषबहुत्वज्ञापकस्य सम्भवात् । नापि साङ्ख्यानामिवाकर्त्ता पाशजालापोहने नित्यनिरतिशयदृक्क्रियादिरूपचैतन्यात्मकशिवत्वश्रवणात् । तदुक्तं "पाशान्ते शिवताश्रुतेः" इति "चैतन्यं दृक्क्रियारूपं तदस्त्यात्मनि सर्वदा । सर्वतश्च यतो मुक्तौ श्रूयते सर्वतोमुखम्" तत्त्वप्रकाशेऽपि "मुक्तात्मानोऽपि शिवाः किन्तु एते यत्प्रसादतो मुक्ताः । सोऽनादिमुक्त एको विज्ञेयः पञ्चमन्त्रतनुः" इति । पशुस्त्रिविधः विज्ञानाकलप्रलयाकलसकलभेदात् तत्र प्रथमो विज्ञानयोगसन्न्यासैर्भोगेन वा कर्मक्षये सति कर्मक्षयार्थस्य कलादिभोगबन्धस्याभावात् केवलमलमात्रयुक्तो विज्ञानाकल इति व्यपदिश्यते । द्वितीयस्तु प्रलयेन कलादेरुपसंहारात् मलकर्मयुक्तः प्रलयाकल इति व्यवह्रियते । तृतीयस्तु मलमायाकर्मात्मकबन्धत्रयसहितः सकल इति संलप्यते । तत्र प्रथमो द्विप्रकारो भवति समाप्तकलुषासमाप्तकलुषभेदात् । तत्राद्यान् कालुष्यपरिपाकवतः पुरुषधौरेयान् अधिकारयोग्याननुगृह्यानन्तादिविद्येश्वराष्टपदं प्रापयति । तद्विद्येश्वराष्टकं निर्दिष्टं बहुदैवत्ये "अनन्तश्चैव सूक्ष्मश्च तथैव च शिवोत्तमः । एकनेत्रस्तथैवैकरुद्रश्चापि त्रिमूर्त्तिकः । श्रीकण्ठश्च शिखण्डी च प्रोक्ता विद्येश्वरा इमे" । अन्त्यान् सप्तकोटिसङ्ख्यातान् मन्त्राननुग्रहकरणान् विधत्ते तदुक्तं तत्त्वप्रकाशे "पशवस्त्रिविधाः प्रोक्ता विज्ञानप्रलयाकलौ सकलः । मलयुक्तस्तत्राद्यो मलकर्मयुतो द्वितीयः स्यात् । मलमायाकर्मयुतः सकलस्तेषु द्विधा भवेदाद्यः । आद्यः समाप्तकलुषोऽसमाप्तकलुषो द्वितीयः स्यात् । आद्याननुगृह्य शिवो विद्येशत्वे नियोजयत्यष्टौ । मन्त्रांश्च करोत्यपरान् ते चोक्ताः कोटयः सप्त" इति । सोमशम्भुनाप्यभिहितम् । "विज्ञानाकलनामैको द्वितीयः प्रलयाकलः । तृतीयः सकलः शास्त्रेऽनुग्राह्यस्त्रिविधो मतः । तत्राद्यो मलमात्रेण युक्तोऽन्यो मलकर्मभिः । कलादिभूमिपर्य्यन्ततत्त्वैस्तु सकलो युतः" इति । प्रलयाकलोऽपि द्विविधः पक्वपाशद्वयः तद्विलक्षणश्च तत्र प्रथमो मोक्षं प्राप्नोति द्वितीयस्तु पुर्य्यष्टकयुतः कर्मवशान्नानाविधजन्मभाक् भवति । तदप्युक्तं तत्त्वप्रकाशे "प्रलयाकलेषु येषामपक्वमलकर्मणी व्रजन्त्येते । पुर्य्यष्टकदेहयुता योनिषु निखिलासु कर्मवशात्" इति । पुर्य्यष्टकमपि तत्रैव निर्दिष्टम् "स्यात् पुर्य्यष्टकमन्तःकरणं धीकर्म्मकरणानि" इति विवृतं चाघोरशिवाचार्य्येण "पुर्य्यष्टकं नाम प्रतिपुरुषनियतः सर्गादारभ्य कल्पान्तं मोक्षान्तं वा स्थितः पृथिव्यादिकलापर्य्यन्तत्रिंशत्तत्त्वात्मकः सूक्ष्मो देहः । तथा चोक्तं तत्त्वसंग्रहे "वसुधाद्यस्तत्त्वगणः प्रतिपुंनियतः कलान्तोऽयम् । पर्य्येति कर्मवशाद्भुवनजदेहेष्वयञ्च सर्वेषु" इति । तथा चायमर्थः सम्पद्यते अन्तःकरणशब्देन मनोबुद्ध्यहङ्कारचित्तवाचिना अन्यान्यपि पुंसो भोगक्रियायामन्तरङ्गाणि कलाकालनियतिविद्यारागप्रकृतिगुणाख्यानि सप्त तत्त्वानि उपलक्ष्यन्ते धीकर्मशब्देन ज्ञेयानि पञ्चभूतानि तत्कारणानि च तन्मात्राणि विवक्ष्यन्ते करणशब्देन ज्ञानकर्मेन्द्रियदशकं संगृह्यते । ननु श्रीमत्कालोत्तरे "शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चकम् । बुद्धिर्मनस्त्वहङ्कारः पुर्य्यष्टकमुदाहृतमिति" श्रूयते तत्कथमन्यथा कथ्यते । सत्यं अतएव च तत्रभवता रामकण्ठेन तदुक्तं तत्त्वपरतया व्याख्यातमित्यलमतिप्रपञ्चेन । तथापि कथं पुनरस्य पुर्य्यष्टकत्वं भूततन्मात्रबुद्धीन्द्रियकर्मेन्द्रियान्तःकरणसञ्ज्ञैः पञ्चभिर्वर्गैस्तत्कारणेन प्रधानेन कलादिपञ्चकात्मना वर्गेण चारब्धत्वादित्यविरोधः । तत्र पुर्य्यष्टकयुतान् विशिष्टपुण्यसम्पन्नान् कांश्चिदनुगृह्य भुवनपतित्वमत्र महेश्वरोऽनन्तः प्रयच्छति । तदुक्तम् "कांश्चिदनुगृह्य वितरति भुवनपतित्वं महेश्वरस्तेषामिति" । सकलोऽपि द्विविधः पक्वकलुषापक्वकलुषभेदात् । तत्राद्यः परमेश्वरस्तत्परिपाकपरिपाट्या तदनुगुणशक्तिपातेन मण्डल्याद्यष्टादशोत्तरशतं मन्त्रेश्वरपदं प्रापयति । तदुक्तम् "ज्ञेया भवन्ति सकलाः कलादियोगादहर्मुखे काले । शतमष्टादश तेषां कुरुते स्वयमेव मन्त्रेशान् । तत्राष्टौ मण्डलिनः क्रोधाद्यास्तत्समाश्चवीरेशाः । श्रीकण्ठशतरुद्राः शतमित्यष्टादशा-

भ्यधिकम्” इति। तत्परिपाकाधिक्यनिरोधेन शक्त्य-नुग्रहार्थं दीक्षाकरणेन मोक्षपदो भवत्याचार्य्यमूर्त्ति-मास्थाय परमेश्वरः। तदप्युक्तम् “परिपक्वमलानेता-नुत्सादनशक्तिपातेन। योजयति परे तत्त्वे स दीक्षया-चार्य्यमूर्त्तिस्थः” इति। श्रीमृगेन्द्रेऽपि “पूर्वं व्यत्यासि तस्याणोः पाशजालमपोहति” इति। व्याकृतञ्च ना-रायणकण्ठेन “तत्सर्वं तत एवावधार्य्यम् अस्माभिस्तु विस्तरभिया न प्रस्तूयते। अपक्वकलुषान् बद्धानणून् भोगभाजो विधत्ते परमेश्वरः कर्मवशात्। तदप्युक्तम् “बद्धान् शेषानपरान् विनियुङ्क्ते भोगभुक्तये पुंसः। तत्कर्मणामनुगमादित्येवं कीर्त्तिताः पशवः” इति। अथ पाशपदार्थः कथ्यते। पाशश्चतुर्विधः मलकर्ममायारोध-शक्तिभेदात्। ननु “शैवागमेषु मुख्यं पतिपशुपाशा इति क्रमात्त्रितयम्। तत्र पतिः शिव उक्तः पशवो ह्य-णवोऽर्थपञ्चकं पाशाः” इति पाशः पञ्चविधः कथ्यते तत् कथं चतुर्विध इति गद्यते। उच्यते बिन्दोर्मायात्मनः शिवतत्त्वपदवेदनीयस्य शिवपदप्राप्तिलक्षणपरमपुरुषापे-क्षया पाशत्वेऽपि तद्योगस्य विद्येश्वरादिपदप्राप्तिहेतु-त्वेनापरमुक्तित्वात् पाशत्वेनानुपादानमित्यविरोधः। अतएवोक्तं तत्त्वप्रकाशे “पाशाश्चतुर्विधाः स्युः” इति। श्रीमन्मृगेन्द्रेऽपि “प्राक्कतीयौ बलं कर्म मायाकार्य्यं च-तुर्विधम्। पाशजालं समासेन धर्मनाम्नैव कीर्त्तितम्” इति। अस्यार्थः प्राक्कणोति प्रकर्षेणाच्छादयत्यात्मनो दृक्क्रिये इति प्राक्कतिः स्वाभाविकाशुचिर्मलः स च ईष्टे स्वातन्त्र्येणेति ईशः। तदुक्तम् “एको ह्यनेकशक्तिदृक्-क्रिययोश्छादको मलः पुंसः। तुषतण्डुलवज्ज्ञेयस्ता-म्राश्रितकालिकावद्वेति”। बलं रोधशक्तिः अस्याः शिवशक्तेः पाशाधिष्ठानेन पुरुषनिरोधायकत्वादुपचारेण पाशत्वम्। तदुक्तम् “तासामहं वरा शक्तिः सर्वानुग्रा-हिका शिवा। धर्मानुवर्त्तनादेव पाश इत्युपचर्य्यते” इति। क्रियते फलार्थिभिरिति कर्म धर्माधर्मात्मकं बीजाङ्कुरवत् प्रवाहरूपेणानादि। यथोक्तं श्रीमत्-किरणे “यथानादिर्मलस्तस्य कर्माल्पकमनादिकम्। यद्यनादि न संसिद्धं वैचित्र्यं केन हेतुना” इति। मा-त्यस्यां शक्त्यात्मना प्रलये सर्वं जगत् सृष्टौ व्यक्तिं यातीति माया। यथोक्तं श्रीमत्सौरभेये “शक्तिरू-पेण कार्य्याणि तल्लीनानि महाक्षये। विकृतौ व्यक्ति-मायाति सा कार्य्येण कलादिना” इति। यद्यप्यत्र वक्त-व्यमस्ति तथापि ग्रन्थभूयस्त्वभयादुपरम्यते। तदित्थं पतिपशुपाशपदार्थास्त्रयः प्रदर्शिताः। “पतिविद्ये तथाऽविद्या पशुः पाशश्च कारणम्। तन्निवृत्ताविति प्रोक्ताः पदार्थाः षट्समासतः” इत्यादिना प्रकारान्तरं ज्ञानरत्नावल्यादौ प्रसिद्धम्। सर्वं तत एवावगन्तव्यमिति सर्वं समञ्जसम्”।

४ओषधौ च। प्रजापतिना रुद्रादिनामकरणप्रसङ्गे शत॰ ब्रा॰ ६।१।३।१२ “तमब्रवीत् पशुपतिरसीति। तद्यदस्य तन्नामाकरोदोषधयस्तद्रूपमभवन्नोषधयो वै पशुपतिस्त-स्माद्यदा पशव ओषधीर्लभन्तेऽथ पतीयन्ति”। [शब्दच॰।

**पशुपल्वल** न॰ पशूनां प्रियं पल्वलमिव। कैवर्त्तीमुस्तके

**पशुपाल** त्रि॰ पशून् पालयति पालि–अण् उप॰स॰। १पशूनां पालके वृत्त्यर्थतया मेषादीनां पालके। तस्याभोज्यान्नता मनुनोक्ता ३।१५४ श्लोके। वृ॰सं॰ १४अ॰ उक्ते ऐशान्यां स्थिते २देशभेदे च तद्देशस्थानां च पशुपालनवृत्तिक-त्वात् तथात्वम्। पशुपालस्य भावः ष्यञ्। पाशुपाल्य पशुपालनरूपे वैश्यवृत्तिभेदे “वैश्यानां पाशुपाल्यञ्च” स्मृतिः। ण्वुल्। पशुपालक पशुपालनकर्त्तरि त्रि॰। तस्य पत्नी पालकान्तत्वात् पुंयोगेऽपि न ङीष् किन्तु टाप्

**पशुपाश** पु॰ ६त॰। पशुरूपजीवानां बन्धे पशुपतिशब्दे दृश्यम्।

**पशुपाशक** पु॰ “स्त्रियमानतपूर्वाङ्गीं स्वपादान्तःपदद्वयम्। ऊर्द्ध्वांशेन रमेत् कामी बन्धोऽयं पशुपाशकः” रतिमञ्ज-र्य्युक्ते रतिबन्धभेदे।

**पशुप्रेरण** न॰ ६त॰। गवादीनां चालने अमरः।

**पशुमारम्** अव्य॰ पशुमिव मारयित्वा णमुल्। पशोरिव हिं-सायाम् कषादित्वात् मारयतीत्यादेरनुप्रयोगे एवास्य साधुता “पशुमारममारयत्” भा॰व॰ ११अ॰।

यज्ञे पशुमारणं श्वासरोधेन गलादिनिष्पीडनेनैव, न शस्त्रादिना शमिता कारणीयमिति श्रौतसम्प्रदायः।

**पशुमोहनिका** स्त्री पशुर्मोह्यतेऽनेन मुह–णिच्–ल्युट् स्वार्थे क कापि अतइत्त्वम्। १कट्व्यां २लतायाम् राजनि॰।

**पशुयाग** पु॰ पशुकरणको यागः ३त॰वा। पशुद्रव्यके पशु-नामके यागभेदे स च यागः “पशौ” आश्व॰श्रौ॰सूत्रादौ विहितः “व्यावर्त्तनं दर्भकूर्चेन सर्वत्र स्रोतसां पशोः। वृष्णोर्मिच्छाक्रमेण स्वाहापार्श्वे पार्षदारुणी। सप्त तावन् मूर्द्धन्यानि तथा स्तनचतुष्टयम्। नाभिः श्रोणिरपा-नञ्च गोत्रोतांसि चतुर्दश। मूरौ मांसावदानार्थः

कतुष्टः स्विष्टकृदाहुता । वपामादाय जुहूवाचव मन्त्रं समापयेत् । हृज्जिह्वाक्रोडमस्थीनि यकृद्वृक्कौ गुदं स्तनाः । श्रोणिस्कन्धसटापार्श्वं पश्वङ्गानि प्रचक्षते । एकादशानामङ्गानामवदानानि सङ्ख्यया । पार्श्वस्य वृक्कमग्नीच हित्वादाङ्गस्तदर्द्धम । चरितार्था श्रुतिः कार्य्या यस्मादप्यनुकल्पशः । अतोऽष्टर्चेन होमः स्याच्छागपक्षे चरावपि" कर्मप्र०। तत्कालः पश्चिच्याशब्दे दृश्यः ।

**पशुरज्जु** स्त्री ६त० । पशुबन्धसाधनदामनि अमरः ।

**पशुराज** पु० पशूनां राजा टच्समा०। सिंहे शब्दच०स्त्रियां जातित्वात् ङीष् ।

**पशुवर्द्धन** न० ६त० । पशोः संपुष्टताविधायके व्यापारभेदे वन्यिपशुवर्द्धनप्रकारश्च आश्व०गृ०४।८ दृश्यवादौ दृश्यः।

**पशुष** पु० पशुषु सीदति सद–ड षत्वम् । पशुषु स्थायिनि चौरदस्यादौ ऋ० ५।४१।१ तत्र पशुषः इत्यत्र षषः सः

**पशुसनि** त्रि० पशुं सनोति ददाति सन–इन् । पशुदायके यजु० १८।४८ मन्त्रः । [आम्रातकफले त्रिका०।

**पशुहरितकी** स्त्री पशूनां हरितकीव हितकारित्वात् ।

**पश्चा** अव्य० पश्चात्+वेदे पृषो० । पश्चादित्यर्थे ऋ० १।१२३।५ आर्षेऽपि क्वचित् अपरशब्दस्थाने पश्चभावः । "पूर्वपश्चायतावेतौ" मार्कण्डपु० ५४अ०।

**पश्चात्** अव्य० अपर+प्रथमापञ्चमीसप्तम्यर्थे आति पश्चादेशः । १प्रतीच्यांदिगादिवृत्तेरपरशब्दस्यार्थे २चरमे ३अधिकारे च मेदि०। ततो भवार्थे त्यक् । पाश्चात्य पश्चाद्भवे त्रि० स्वार्थे तातिल् पश्चात्तात् तदर्थे अव्य० ऋ० ७।७२।५

**पश्चात्ताप** पु० पश्चात् चरमस्तापः । अनुशये कृतस्य कर्मणो ऽनुचितत्वधिया अनुशोचने अमरः ।

**पश्चार्द्ध** पु०अपरचार्द्धोर्द्धं च "अपरस्यार्द्धे पश्चभावः"वार्त्ति० पश्चादेशः । अपरार्द्धे "अर्द्धं नपुंसकम्"पा० एकदेशिसमासे तु अर्द्धपिप्पल्यादिवत् अर्द्धापरमित्येवेति भेदः ।

**पश्चिम** त्रि०पश्चाद्भवः डिमच् । १पश्चाद्भवे २प्रतीच्यां दिशि स्त्री

**पश्चिमानूपक** पु० नृपभेदे "पश्चिमानूपकं विद्धि तं नृप नृपसत्तम !" भा०स्मा० ६७अ० ।

**पश्चिमरात्र** पु० पश्चिमं रात्रेः एकदेशिसमा० अच्समा० । रात्रेः शेषभागे "पूर्वापरोत्तरमेकदेशिनैकाधिकरणे"पा० "सर्वोऽप्येकदेशोऽह्ना समस्यते सङ्ख्याविशायेति न्याय-कात् मध्याह्नः सायाह्नः । केचित्तु सर्वएकदेशः कालेन समस्यते नत्वह्नैव न्यायकस्य सामान्यापेक्षत्वात् । तेन मध्यरात्रः "उपारताः पश्चिमरात्रगोचरादित्यादि सिद्धमित्याहुः" सि०कौ०। मल्लिनाथेन तु "उपरताः पश्चिमरात्रिगोचरादिति" पठित्वा समासान्तं निराचष्टे यथा पश्चिमा चासौ रात्रिश्चेति विग्रहः अपररात्र इत्यर्थः । पूर्वा दिक् पश्चिमं नभ इत्यादिवत् एकदेशिशब्दस्यैकदेशशब्दसामानाधिकरण्यादेकदेशे पर्य्यवसानं, न तु पश्चिमं रात्रेरित्येकदेशिसमासः तद्विधायके पूर्वापरादिसूत्रे पश्चिमशब्दाग्रहणादतएव "अहः सर्वैकदेशेत्यादिना न समासान्तोऽपि तस्यापि पूर्वापरादिसूत्रोक्तसमासविषयत्वादिति । प्रकाशवर्षस्त्वेकदेशिसमासमेवाश्रित्य समासान्तमाह तन्मूलं मृग्यम्" ।

**पश्चिमोत्तरा** स्त्री पश्चिमाया उत्तरस्या दिशोऽन्तरला दिक् "दिङ्नामान्यन्तराले" पा०स०। वायुकोणे विदिशि ।

**पश्य** अव्य०दृश–बा०शः । १प्रशंसायाम् २विस्मये च शब्द-रत्ना० ३यथोक्तदर्शिनि विमर्षे त्रि० हला०उ० ।

**पश्यतोहर** त्रि० पश्यन्तमनादृत्य हरति हृ–अच् अनादरे षष्ठी "वागिदक्पश्यद्भ्यो युक्तिदण्डहरेषु" वार्त्ति० अलुक्स०। पश्यन्तमनादृत्य हरे चौरभेदे स्वर्णकारादौ "यः पश्यतो हरेदर्थं स चौरः पश्यतोहरः" हेमच०।

**पश्यन्ती** स्त्री दृश–शतृ ङीप् । १दर्शिन्यां स्त्रियां २वाग्विशेषे "प्राणापानान्तरे देवी वाग्वै नित्यं हि तिष्ठति । स्थानेषु विकृते वायौ कृतवर्णपरिग्रहा । वैखरी वाक् प्रयोक्तॄणां क्रमरूपानुपातिनी । प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्त्तते । अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा । स्वरूपज्योतिरेवान्तः परा वागनपायिनी"मञ्जूषा-धृतवाक्यम् अस्यार्थः शब्दार्थरत्ने"चेतनेन ज्ञातार्थविवक्षया तद्बोधकशब्दनिष्पादनाय प्रेरितमन्तःकरणं मूलाधारस्थितमनलं चालयति तच्चालितश्चानलस्तत्स्थस्यानिलचालनाय प्रभवति तच्चालितेन चानिलेन तत्रैव सूक्ष्मरूपेणोत्पादितः शब्दः परा वागित्यभिधीयते । ततो नाभिदेशपर्य्यन्तं चलितेन तेन तद्देशसंयोगादुत्पादितः शब्दः पश्यन्तीति व्यपदिश्यते एतद्द्वयस्य सूक्ष्मतरसूक्ष्मतमतया ईश्वरयोगिमात्रगम्यता नास्मदीयश्रुतिगोचरता । ततस्तेनैव हृदयदेशं परिसरता हृदयसंयोगेन निष्पादितः शब्दो मध्यमेत्युच्यते सा च स्वकर्णपिधानेन ध्वन्यात्मकतया सूक्ष्मरूपेण कदाचिदस्माकमपि समधिगम्या । ततो मुखपर्य्यन्तमागच्छता तेन कण्ठदेशं प्राप्य आहत्य मूर्द्धानं तत्प्रतिघातेन परावृत्य च मुखविवरे कण्ठादितत्तदष्टस्थानेषु स्वाभिघातेनोत्पादितः शब्दो वैखरीत्युच्यते"

"वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा। द्योतितार्था तु पश्यन्ती सूक्ष्मा वागनपायिनी" मल्लिनाथधृतवाक्यम्।

**पश्वयन** न० यागभेदे शत०ब्रा०४।६।६।१ [कर्क० ४।१।१६भा०।

**पश्वयन्त** त्रि०पश्वोरिदं वा० छ कर्म०। पशुनिर्गमनार्थयन्त्रभेदे

**पश्ववदान** न० पश्वोरङ्गविशेषस्यावदानं छेदनम्। पश्वोरङ्गविशेषच्छेदने पशुशब्दे कर्मप्र० वाक्यं दृश्यम्।

**पश्वाचार** पु० पशूनामधिकारिविशेषाणामाचारः। तन्त्रोक्ते आचारभेदे पशुभावे "वेदोक्तेन यजेद्देवीं कामसंकल्पपूर्वकम्। स एव वैदिकाचारः पश्वाचारः स उच्यते"। कुब्जिकातन्त्रे ७प० "भावश्च त्रिविधो देवि! दिव्यवीरपशुक्रमात्। विश्वञ्च देवतारूपं भावयेत् सुरसुन्दरि!। स्त्रीमयञ्च जगत्सर्वं पुरुषं शिवरूपिणम्। अभेदे चिन्तयेत् यस्तु स एव देवतात्मकः। नित्यस्नानं नित्यदानं त्रिसन्ध्यञ्च जपार्चनम्। निर्मलं वसनं देवि! परिधानं समाचरेत्। वेदशास्त्रे दृढस्नानं गुरौ देवे तथैव च। मन्त्रे चैव दृढस्नानं पितृदेवार्चनं तथा। बलिवैश्वं तथा श्राद्धं नित्यकार्यं शुचिस्मिते!। मत्स्यं मांसं देवि! चिन्तयेत्तु महेश्वरि!। तथाचैव महेशानि! सर्वेषां परिवर्जयेत्। गुरोरन्नं महेशानि! भोक्तव्यं सर्वसिद्धये। कदर्यञ्च महेशानि, निष्ठुरं परिवर्जयेत्। देवतानिन्दकं दृष्ट्वा नालापञ्च समाचरेत्। असत्यञ्च कथयेद्देवि! न मिथ्या च कदाचन" महानिर्वाणतन्त्रे "दिव्यवीरमयो भावः कलौ नास्ति कदाचन। केवलं पशुभावेन मन्त्रसिद्धिर्भवेन्नृणाम्"।

**पश्विज्या** स्त्री पशुना इज्या। पशुयागभेदे तत्कर्त्तव्यताकादिः कात्या०श्रौ० ६।४।१ सूत्रादौ दृश्यः।

**पश्विष्टका** स्त्री अग्निचयनार्थे इष्टकाभेदे पशुयागे हि पञ्च इष्टका भवन्ति यथोक्तं शत०ब्रा० ६।२।१।२९ "कथमस्यैषोऽग्निः पञ्चेष्टकः सर्वः पशुव्यारब्धो भवतीति पुरोडाशः कपालेषु न्वोप्यत इयं प्रथमा स्वयमातृण्णेष्टकाथ यत् पशुमालभते तेन पश्विष्टकाप्यतेऽथ यदुपामभितो हिरण्यशकलौ भवतस्तेन हिरण्येष्टकाप्यतेऽथ यद्दिग्धो यूपः परिधयस्तेन वानस्पत्येष्टकाप्यतेऽथ यदाज्यं भोज्यमयः पुरोडाशस्तेनान्नं पशुमीष्टकाप्यत एवमुपहास्यैषोऽग्निः पञ्चेष्टकः सर्वः पशुव्यारब्धो भवति"।

**पश्विष्टि** स्त्री इत०। पशुयागाङ्गे इष्टिभेदे सा च इष्टिः "इष्टिरूभयतोऽन्यतरतो वा" आश्व०श्रौ०३।१।२ सूत्रादौ विहिता।

**पश्वेकादशिनी** स्त्री एकादश परिमाणमस्य डिनि ङीप् पशुना एकादशिनी। शत०ब्रा० ३।९।१ उक्ते एकादश देवताकैकादशपशुसाध्ये यज्ञभेदे ते च पशवः "आग्नेयं प्रथमपशुमालभेत्" इत्युपक्रमे १आग्नेयः २सारस्वतः ३सौम्यः ४पौष्णः ५बार्हस्पत्यः ६वैश्वदेवः ७ऐन्द्रः ८मारुतः ९ऐन्द्राग्नः १०सावित्रः ११वारुणः इत्येते अग्न्याद्येकादशदेवताकाः उक्ताः।

**पष्ठवाह्** पु० पृष्ठेन वहति पष्ठं भारं वा वहति वह–ण्वि पृषो०। पश्चन्मेि भारवहे वृषे तथावस्थायां स्त्रियां गवि ङीप् वाह ऊठ् पष्ठौही यजु० १४।९ "द्वादश पष्ठौह्यो गर्भिण्यो अद्भ्यः" आश्व०श्रौ०९।४।१४। मुग्धबोधे पृष्ठौ हीत्युक्तिः लोकाभिप्रायेण वेदे तु पष्ठवाट् पष्ठौही इत्येव प्रयोगात्।

**पस** नाशने चु०उभ०सक०सेट् इदित्। पंसयति ते अपपंसत् त

**पसस्** न० पस–असुन्। राङ्गे "यथैराङ्गं पसोराङ्गमेव" शत०ब्रा० १२।२।८।६

**पस्त्य** न० पस–भावे क्तिन् तत्र साधु यत्। रूढ़े निरुक्तः पस्त्यमिति पाठान्तरम् अत्तये स्थितये साधु यत्। तत्र हेमच० निरुक्तौ तु पस्त्यमित्येव रूढ्यर्थमस्य पठितम्। पस्त्यमस्त्यस्येति मतुप् मस्य वः दीर्घः। पस्त्यावत् सदःप्राचीनवंशादिकमुक्तमिति कर्क० १।१५।१२भा०।

**पस्पश** पु० पाश्चारसम्पर्कके उपोद्घाते व्याकरणाङ्गभेदे स च महाभाष्यस्य प्रथममाह्निकात्मकः शब्दविद्येवनो भाति राजनीतिरपस्पशा" माघः।

**पह्लव** पु० म्लेच्छधारिणे म्लेच्छजातिभेदे कल्कीशब्दे १८००पृ० दृश्यम्। स्त्रियां जातित्वात् ङीष्।

**पह्लिका** स्त्री अप+ह्ल+वा० ड संज्ञायां कन् कापि अत इत्वम् अपेरल्लोपः। वारिपर्ण्यां शब्दरत्ना०।

**पा** पाने भ्वा० पर०सक० अनिट्। पिबति पिबादेशः पिबति अपात् पपौ पेयात् पीयते पीत्वा पीतः पायः पेयं प्रपा। णिच् पाययति अपीप्यत्। पिपासति पेपीयते।

**पा** रक्षणे अदा०पर०सक० सेट्। पाति अपासीत् पपौ। पायात् णिच् पालयति अपीपलत्। पालनम् पालकः।

**पांश(स)न** त्रि० पसि–ल्यु बा० दीर्घः पृषो०वा। दूषके त्रिका०

**पांश(स)व** पु० पांश(सोः)र्विकारः अण्। (पाङ्गा) लवणभेदे पांश(सु)शुल्कादयोऽप्यत्र राजनि०।

**पांशु(सु)** पु० पसि–नाशने कर्मार्थमिकल्प्यमिसपलिसप्रामभ्रकि

पचिबाधात्वजिपचिश्लकुधुमदोर्घश्चाय" उणा॰ ङ दीर्घश्च । १धूलौ २मस्त्रार्थंचिरसञ्चितगोमये च त्रिः उणादिसूत्रे दन्त्यान्त्य पशिधातोरेव उप्रत्ययदोर्घयोर्विधानात् विश्वप्रकाशे तालव्यान्ते कीर्त्तनाच्च पृषो॰ दन्त्यस्य शः इति बोध्यम् । अतएव "तालव्या अपि दन्त्याः स्युः शंबशूकरपांशवः" शकारभेदे उक्तम् । ३लवणभेदे न॰ "औद्भिदं पांशु(सु)लवणं यज्जातं भूमितः स्वयम् । क्षारं गुरु कटु स्निग्धं स्वेदनं वातनाशनम्" भावप्र॰ । ४पर्पटे ५कर्पूरभेदे पु॰ राजनि॰ । पांशु(सु)तो भवः यत् । पां(श)सव्य तत्र भवे त्रि॰ । रुद्रभेदे पु॰ यजु॰ १६।४५

**पांशु(सु)कासीस** न॰ कासीसे राजनि॰ ।

**पां(श)सुकुली** पांशून् कोलति कुल–संहतौ क गौरा॰ ङीष् । राजमार्गे हारा॰ ।

**पांशुकूल** न॰ हृत॰ । निरूपपदशासनभेदे "शासनं धर्म्मकीयः स्यात् सकृतिः शूद्रशासनम् । पट्टोलिका कूटकीया पांशुकूलं न कस्यचित्" त्रिका॰ ।

**पांश(सु)चार** न॰ पांशु(सु)रिव चारम् । चारलवणे (पाङ्गालोन) पार॰ निघण्टुः ।

**पांश(सु)चत्वर** पु॰ पांशुभिश्चत्वर इव । घनोपले शब्दमा॰ ।

**पांश(सु)चन्दन** पु॰ पांशुधूलिचन्दनमिवास्य । विभूतिभूषिते शिवे त्रिका॰ ।

**पांश(सु)चामर** पु॰ पांशुश्चामर इवास्य । १पटवासे (ताबु) जटा॰ । २दूर्वाञ्चिततटीतटे ३वप्राणके ४प्रशंसायाम् ५पुरोटौ ६धूलिगुच्छके च मेदि॰ ।

**पांश(सु)ज** न॰ पांशु(सु)तो जायते जन–ड । (पाङ्गा) लवणभेदे रत्नमा॰ । पांशु(सु)भवादयोऽप्यत्र ।

**पांश(सु)पत्र** न॰ पांशु(सु)भिः सञ्जितगोमयैः पत्त्रमस्य । वास्तूकशाके शब्दमा॰ ।

**पांश(सु)मर्दन** पु॰ पांशुः(सुः) मृद्यतेऽत्र मृद–आधारे ल्युट् । केदारे क्षेत्रभेदे त्रिका॰ । [(डांग) हारा॰ ।

**पांश(सु)र** पु॰ पांशुं(सुं) राति–क । १खञ्जे २दंशके च

**पांश(सु)रागिणी** स्त्री रञ्ज–घिनुण् ङीप् । पांशु(सु)भिः रागिणी ३त॰ । महामेदायां राजनि॰ । [५१अ॰ ।

**पांश(सु)राष्ट्र** न॰ पांशु(सु)प्रधानं राष्ट्रम् । देशभेदे भा॰स॰

**पांश(सु)ल** त्रि॰ पां(स)शुरस्त्यस्य सिध्मा॰ लच् । १धूलियुक्ते मनुष्यपापयुक्ते २पुंश्चले च स्त्रियां टाप् ।

**पाक** पु॰ पच–भावे घञ् । १तण्डुलादिविक्लेदनव्यापारभेदे स च स्थूलीभाजनाधःसन्तापनाद्योदनपरीणामोत्थापारवसूहः । पिबति स्तनम् पा–कन् वयसि अर्भका॰ नि॰ वा । २स्तनपायिनि शिशौ ३परिणते जरया ४केशादेः पाके अमरः । ५पेचके ६राष्ट्रभङ्गे ७भीतौ शब्दरत्ना॰ ८दैत्यभेदे हेमच॰ पाकशासनः । द्रव्यादेः पाकप्रकारभेदादिकं पाकराजेश्वरे उक्तं यथा
"भर्जनं तलनं स्वेदः पचनं क्वथनं तथा । तान्दूरं पुटपाकश्च पाकः सप्तविधो मतः" । भर्जनं केवलपात्रे । तलनं स्नेहद्रव्ये, स्वेदनम् अम्बूष्मतापे । पचनं जले । क्वथनं सिद्धद्रव्यरसपरूषे । तान्दूरं द्वारवहृतप्रयन्त्रे, पुटपाक ऊर्द्ध्वाधोऽग्नितापे ज्ञेयः" ।

श्राद्धे पाकप्रकारादिः नि॰सि॰ उक्तो यथा
देवलः "तथैव यन्त्रितो दाता प्रातःस्नात्वा सहाम्बरः । आरभेत नवैः पात्रैरन्वारम्भं च बान्धवैः" अत्रात्मनेपदात् स्वयमेव पाकः कार्यः अशक्तौ पत्न्या तदभावे बान्धवैः "ततस्तानि पचापाशु बीता जनकनन्दिनी" इति पाद्मलिङ्गादिति हेमाद्रिः । श्राद्धदीपकलिकायामाश्वलायनः "समानप्रवरैर्भिन्नैः सपिण्डैश्च गुणान्वितैः । कृतोपकारिभिश्चैव पाककार्यं प्रशस्यते" । व्यासः "स्वस्त्रियो वैव सुस्नाता पाकं कुर्यात् प्रयत्नतः । निष्पन्नेषु च पाकेषु पुनः स्नानं समाचरेत्" । पृथ्वीचन्द्रोदये ब्राह्मे "रजस्वलां च पापघ्नं पुंश्चलीं पतितां तथा । व्यङ्गां शूद्रां तथा वन्ध्यां विधवां चान्यगोत्रजाम् । अर्भकां चतुर्थाहःस्नातामपि रजस्वलाम् । वर्जयेच्छ्राद्धपाकार्थं समातृपितृवंशजाम्" मातृपितृवंशजाभिन्नां त्यजेदित्यर्थः । स्मृतिसारे "न पाकं कारयेत् पत्नीमन्यां (अन्यामन्यवर्णाम्) वाप्यन्यगोत्रजाम् । अन्तर्वत्नीं च गर्भिणीं गर्भिणीं चैव दुर्मुखीम्" । पाकभाण्डानि तु हेमाद्रौ नागरखण्डे "सौवर्णान्यथ रौप्याणि कांस्यताम्रोद्भवानि च । मार्त्तिकान्यपि भव्यानि नूतनानि दृढानि च" तथैवादित्यपुराणे "पचेदन्नानि सुस्नातः पात्रेषु शुचिषु स्वयम् । स्वर्णादिधातुजातेषु मृन्मयेष्वपि वा द्विजः । अच्छिद्रेष्वविदीर्णेषु तथाचोपहतेषु च । आयसेषु न भिन्नेषु दूषितेष्वपि कर्हिचित् पूर्वं कृतोपयोगेषु मृन्मयेषु न तु क्वचित्" । वायुपुराणे "न कदाचित्पचेदन्नमयःस्थालीषु पैतृकम् । अयसो दर्शनादेव पितरोऽपद्रवन्ति हि । कालायसं विशेषेण निन्दन्ति पितृकर्मणि । फलानां चैव शाकानां कदनार्थानि यानि तु । महानसेऽपि शस्त्राणि तेषामेव हि सन्निधिः । इष्यते नेतरस्यात्र शस्त्रमात्रस्य दर्श-

नम् । श्राद्धदेशे तु विदुषा पितृणां तृप्तिमिच्छता । अज्ञानतेऽतियुक्तानामपि कार्यं न दर्शनम्” । तत्रैव “पचमानस्तु भाण्डेषु भक्त्या ताम्रमयेषु च । समुद्धरति वै घोरात् पितॄन् दुःखमहार्णवात् । तैजसानामभावे तु पिठरे मृण्मयेऽपि च । नवे शुचौ प्रकुर्वीत पाकं पित्रर्थमादरात्” । तत्रैवादित्यपुराणे “पक्वान्नस्थापनार्थे तु शस्यन्ते दारुजान्यपि । दर्व्यादीन्यपि कार्याणि यज्ञियैरपि दारुभिः” । यमः “विवाहे प्रेतकार्ये च माता पित्रोः क्षयेऽहनि । नवभाण्डानि कुर्वीत यज्ञकाले विशेषतः” । अत्र पाकाग्निमाह हेमाद्रौ प्रजापतिः “औपासनेनाग्निना सिद्धिरग्नौकरणमेव च” । पृथ्वीचन्द्रोदयेऽङ्गिराः “शालाग्नौ तु पचेदन्नं लौकिके वापि नित्यशः । यस्मिन्नग्नौ पचेदन्नं तस्मात् होमो विधीयते” । मनुः “वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि । पञ्चयज्ञविधानञ्च पक्तिं चान्वाहिकीं द्विजः” । श्राद्धस्य गृह्यत्वं चोक्तमपरार्केण, अत्र विशेषः कर्मप्रदीपे “प्रातर्होमं तु निर्वर्त्य समुद्धृत्य हुताशनात् । शेषं महानसे कृत्वा तत्र पाकं समाचरेत् । पाकान्तेऽग्निं तमाहृत्य स्वस्थाग्नौ तु पुनः क्षिपेत् । ततोऽग्निन् वैश्वदेवादिकर्म कुर्यादतन्द्रितः” । तदभावे लौकिके “ततः पचेयुरन्नानि निर्वापानन्तरं शनैः । वैवाहिकेऽग्नावन्यत्र लौकिके वापि संयतः” इति दीपकलिकायां संग्रहोक्तेः” ।

पाकभाण्डस्य त्याज्यत्वं यथा “नित्यं नूतनभाण्डेन कर्त्तव्यः पाक एव च । अथ वा पक्षपर्य्यन्तं तत्त्याज्यं मनीषिभिः” इति ब्रह्मवैवर्त्तपु० । पाककाले शूद्रायाग्निदाननिषेधो यथा “शूद्रायाग्निञ्च यो दद्यात् पाककाले विशेषतः । शूद्रपक्वं भवेदन्नं ब्राह्मणः शूद्रतामियात्” कर्मलोचनम् । एकोद्दिष्टश्राद्धे तस्य नित्यत्वं यथा “एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम् । अभावे पाकपात्राणां तदहः समुपोषणम्” श्राद्धत० । शूद्रेण तत्रापि आमान्नेनैव कार्यम् “आमं शूद्रस्य पक्वान्नमित्युक्तेः आमान्नेनैव शूद्रेणेत्युक्तेश्च पाकविधिर्यथा

“पूर्वाशाभिमुखो भूत्वा उत्तराशामुखोऽथ वा । पचेदन्नञ्च मध्याह्ने सायाह्ने च विवर्जयेत् । अन्याशाभिमुखे पक्वमस्ताद्यं विजानता । पूर्वमुखो धर्मकामः शोकहानिश्च दक्षिणे । श्रीकामश्चोत्तरस्थः पतिकामश्च पश्चिमे । ऐशान्याभिमुखे पक्त्वा दरिद्रो जायते नरः । यदा तु आयसे पात्रे पक्वमश्नाति वै द्विजः । स पापिष्ठोऽपि भुङ्क्तेऽन्नं रौरवे परिपच्यते । ताम्रे पक्त्वा चतुर्हामांनो वै लभते स्वयम् । पित्तल्यां पक्वमन्नञ्च पित्तल्ये च वरानने ! । पुण्डरीकस्य यज्ञस्य लभते फलमीप्सितम् । वालुकेन तु यत्पक्वं भगिन्या च कनिष्ठया । असगोत्रेण यत्पक्वं शोधितं तदपि स्मृतम् । अभक्तेन च यत्पक्वं स्त्रिया पक्वन्तथैव च । पक्वपात्रे च यत्पक्वं तत्सर्वं निष्फलं भवेत् । उडुम्बरेण काष्ठेन कदम्बस्य दलेन च । शालेन करमर्द्देन उदरावर्त्तकेन च । पक्वान्नं नैव भुञ्जीत भुक्त्वा रात्रिमुपावसेत् । गर्हितान्यवीरान्नं भुक्त्वा कृच्छ्रं समाचरेत् । अप्रजा या तु वनिता नाश्नीयादेव तद्गृहे । शालकाष्ठस्य पक्वान्नं चिरीषकस्य चैव हि । कपित्थस्य तकस्यैव वज्रावृक्षकस्य च । एरण्डशाल्मलेर्वापि पक्वान्नं गर्हितं स्मृतम् । यदा मृण्मयपात्रे तु पक्वं वै सर्वकालिकम् । मासे पक्षे तथाष्टाहे तत्पात्रं विसृजेत् गृही । धनुःपात्रे तथा सिंहे मिथुने वा वरानने ! । यः कुर्याद्भोजनं देवि ! तत्क्षणेनैव विशुध्यति । एकदा तु जलं दद्यादुद्धिवारं न प्रदापयेत् । त्रिभागं पूरयेत् पात्रं पश्चात्तोयं न दापयेत्” मत्स्यसूक्ते ४२प० । जाठराग्निना पाकप्रकारस्तु कल्पद्रुमे ? ५८पृ० उक्तः

औषधपाकप्रकारस्तु चक्रपाणिदत्तादिग्रन्थे द्रष्टव्यः । पच्यते फलं यत्र काले आधारे वा । दुष्टफलपाकाभिकरणे कालभेदे शुभाशुभलक्षणफलोत्पातादीनां पाककालश्च वृ० सं० ४७ अ० उक्तो यथा

“पक्षाद्भानोः सोमस्य मासिकोऽङ्गारकस्य वक्रस्य । आ दर्शनाच्च पाको बुधस्य जीवस्य वर्षेण । षड्भिः सितस्य मासैरब्देन शनेः सुरद्विषोऽब्दाधात् । वर्षात् सूर्यग्रहणे सद्यः स्यात् त्वाष्ट्रकीलकयोः । त्रिभिरेव धूमकेतोर्मासैः श्वेतस्य सप्तरात्रान्ते । सप्ताहात् परिवेषेन्द्रचापसन्ध्याभ्रसूचीनाम् । शीतोष्णविपर्यासः फलपुष्पमकालजं दिशां दाहः । स्थिरचरयोरन्यत्वं प्रसूतिविकृतिश्च षण्मासात् । अक्रियमाणककरणं भूकम्पोऽनुत्सवो दुरिष्टं च । शोषश्चाशोष्याणां स्रोतोऽन्यत्वं च वर्षार्धात् । सम्प्रकुड्यार्चानां जल्पितरुदितप्रकम्पितस्वेदाः । मासत्रयेण कलहेन्द्रचापनिर्घातपाकाश्च । कीटाखुमक्षिकोरगबाहुल्यं मृगविहङ्गमरुतं च । लोष्टस्य चाप्सु तरणं त्रिभिरेव विपच्यते मासैः । प्रसवः शुनामरण्ये वन्यानां ग्रामसम्प्रवेशश्च । मधुनिलयतोरणे-

न्द्रध्वजाश्च वर्षात् समधिकाद्वा । सोमायुष्मन्प्रसङ्गा दश-
ह्निकाः सद्य एव तूर्य्यरवः । आक्रुष्टं पञ्चफलं वल्-
मीकविदारणं च प्राहुः । अद्भुतशमजननं सततैव-
माद्रिवर्षणं चापि । सद्यः परिपच्यन्ते मासेऽध्यर्द्धे च
जनवादः । क्वचिदितियूपक्षतवक्षवीजानां सम्प्रविर्भवति
पत्नीः । कतस्य तोरणस्य च केचिन्मासात् फलं प्राहुः ।
वल्मीकविरुद्धानां स्नेहः शब्दश्च वियति भूतानाम् ।
मार्जारनकुलयोर्मूषकेण सङ्गश्च मासेन । गन्धर्वपुरं मा-
साद् रसवैकृत्यं हिरण्यविकृतिश्च । ध्वजवेश्मपांशुधू-
माकुला दिशश्चापि मासफलाः । नवकैकाष्टदशकैकषट्त्रि-
कत्रिकसंख्यमासपाकानि । नक्षत्राण्यश्विपूर्वकाणि सद्यः-
पाकाऽश्लेषा । पित्र्याज्जायाः षट् षट् तयोऽर्द्धमष्टौ
च त्रिषड्केकाः । मासचतुष्काषाढ़े सद्यःपाकाभिजित्
तारा । सप्ताष्टावध्यर्द्धं त्रयस्त्रयः पञ्च चैव मासाः स्युः ।
श्रवणादीनां पाको नक्षत्राणां यथासंख्यम् । निगदित-
समये न दृश्यते चेद् अधिकतरं द्विगुणे प्रपच्यते तत् ।
यदि न कनकरत्नगोप्रदानैरुपशमितं विधिवद्द्विजैश्च
शान्त्या" । दशाशब्दे ऽन्तर्दशाशब्दे च ग्रहसूचितफलपा-
कभेदो दृश्यः । कर्मणि घञ् । १०परिपाके ऋ० ७।१०४।८
११परिणतबुद्धौ च त्रि० पाकस्तन्नशब्दे दृश्यम् । १२अल्पे
१३प्रशस्ते च पाकयज्ञशब्दे दृश्यम् । पाकस्य अल्पस्य
प्रशस्य वा भावः पृथ्वा० इमनिच् । पाकिमन् तद्भावे
पु० । पाकस्थादूरदेशादिः पक्षा० फक् । पाकायन पाकस्था-
दूरदेशादौ त्रि० । [शब्दमाला ।

**पाककृष्ण** पु० पाके फलपाके कृष्णः । (पानीयामला) वृक्षभेदे

**पाकज** न० पाकाज्जायते जन-ड । १काचलवणे । २पाक-
जातमात्रे त्रि० । "अनुष्णाशीतपाकजः" भाषा । ३परि-
णामशूलरोगे । [सु०८।१८।१५ ।

**पाकत्रा** अव्य० पाकः विपक्वप्रज्ञः स्वार्थे त्रा । विपक्वप्रज्ञे

**पाकदूर्वा** स्त्री पाकयुक्ता दूर्वा शा० त० । परिपक्वदूर्वायाम्
ऋ० १०।१६।१३ भा० ।

**पाकद्विष्** पु० पाकाय दैत्याय द्वेष्टि द्विष-क्विप् ४त० ।
पाकशासने इन्द्रे हेमच० । पाकारिप्रभृतयोऽप्यत्र ।

**पाकपात्र** न० पाकसाधनं पात्रम् शाक०त० । पचनसाधने
पात्रे स्थाल्यादौ । तद्भेदाः पाकशब्दे दृश्याः । पाकभा-
जनपाकभाण्डादयोऽप्यत्र ।

**पाकपुटी** स्त्री पाकसाधनं पुटी शा० त० । (पोयान) कुम्भ-
काराग्निशालायाम् हेमच० ।

**पाकफल** न० पाकयुक्तं फलमस्य शा०त० । (पानीयामला)
फलपाके शब्दच० ।

**पाकमत्स्य** पु० पाकः पक्वः मत्स्यः । १पक्वमत्स्ये व्यञ्जनभेदे
शब्दच० । २कीटभेदे सुश्रुतः कीटशब्दे २०५८ पृष्ठे
दृश्यम् । शब्दार्थे ३मत्स्यभेदे सुश्रुतः विराजकशब्दे
४०८६ पृ० दृश्यम् ।

**पाकयज्ञ** पु० पाकसाध्यो यज्ञः शा०त० । चरुपाकेन कर्त्तव्ये
यज्ञभेदे स च यज्ञः वृषोत्सर्गादिहोमः । "पाकयज्ञं तु
वाहयेत्" ति० त० उक्तेस्तस्मिन् वाहयेत् । पाकः
अल्पः बालकसाध्यात् प्रशस्तो वा यज्ञः । २अल्पयज्ञे
३प्रशस्तयज्ञे च यथाह "अथः पाकयज्ञाः" आश्व०गृ०१।१।२।
वृत्तौ नारायणः ।
"पाकयज्ञास्त्रयस्त्रिविधा हुतादयः । हुताः प्रहुताः
प्रहुताश्च हुताः" इत्येकेषामेव बहुवचननिर्देशात् । यदि
हि त्रिविधत्वं न स्यात् एकवचनेन निर्देशं कुर्यात् ।
तस्मात् त्रिविधत्वमिति । पाकयज्ञाः अल्पयज्ञाः प्रशस्त-
यज्ञा वा । दृष्टश्चोभयत्र पाकशब्दः । योऽस्मात् पाक-
तरः इत्यत्राल्पत्वे पाकशब्दः । तं पाकेन मनसाऽपश्यम्
इति यो वा पाकेन मनसा इति च प्रशंसायाम् । तेन
आज्यहोमेष्वपि पाकयज्ञतन्त्रं सिद्धं भवति । यदि
हि पाकशब्दः पक्तौ वर्तेत आज्यहोमेषु तन्त्रं न
स्यात् । इष्यते च तस्मात् तत्र वर्त्तेत । प्रशस्तयज्ञा इ-
त्युक्तम् । कथं प्रशस्तत्वम् उच्यते यस्मादेतेषु संस्कारा
उच्यन्ते । तैश्च ब्राह्मण्यमवाप्यते । के पुनस्ते संस्काराः ।
गर्भाधानादयः । तस्मात् सर्वेषां पाकयज्ञत्वमिति सिद्धं
तत् सम्यक् । कथं त्रिविधत्वमित्यत आह "हुता अग्नौ
हूयमाना अनग्नौ प्रहुता ब्राह्मणे (ब्राह्मणभोजने)
हुताः" सू० ।

**पाकयज्ञिक** पु० पाकयज्ञस्य तत्प्रतिपादकग्रन्थस्य व्याख्यानो
ग्रन्थः पाकयज्ञे भवो वा ठञ् । १पाकयज्ञग्रन्थव्याख्याने
ग्रन्थे २पाकयज्ञभवे च । [१।७।४।१८

**पाकयज्ञिय** त्रि० पाकयज्ञमर्हति घ । पाकयज्ञार्हे शत०ब्रा०

**पाकरञ्जन** न० पाकं पच्यमानं रञ्जयति रन्ज-णिच्-ल्यु ।
तेजपत्रे शब्दच० ।

**पाकल** न० पाकं लाति ला-क । १कुष्ठौषधौ (कुड़) अमरः
२वह्नौ ३वायौ च पु० विश्वः । ४कर्कोट्यां स्त्री गौरा०
ङीष् । शब्दमा०५कुञ्जरज्वरे ६बोधनद्रव्ये च पु०मेदि० ।

**पाकलि** स्त्री पा-पाने बस्सदा०भावे-क्विप् तां पाकं कलयति

कस–कर्त्तरि इन् । रोहिणीति ख्याते वृक्षभेदे रत्नमा० ।

**पाकशाला** स्त्री ६त० । पाकस्थाने पाकस्थानपाकस्थानादयोऽप्यत्र "प्राच्यां दिशि स्नानगृहमाग्नेय्यां पचनालयम्" पी०धा० धृतवाक्यम् स्थानशब्दे दृश्यम् ।

**पाकशासन** पु० पाकं तन्नामदैत्यं शास्ति शास–ल्यु । इन्द्रे तस्य तन्नामकता यथा "पाकं जघान तीक्ष्णाग्रैर्मार्गणैः कङ्कवाससैः । तत्र नाम विभुर्लेभे शासनत्वात्सुरैर्दृढैः । पाकशासनतां शक्रः सर्वामरपतिर्विभुः" वामनपु० ।

**पाकशासनि** पु० पाकशासनस्यापत्यम् इञ् । इन्द्रपुत्रे १जयन्ते अमरः २अर्जुने ३वालिवानरे च । [शब्दच० ।

**पाकशुक्ला** स्त्री पाके परिणामे शुक्ला । (खड़ि)ख्याते पदार्थे

**पाकसंस्थ** त्रि० पाकः संस्था यस्य । पाकसाध्ये यज्ञभेदे । स च गौतमेन दर्शितः "अष्टका पार्वणश्राद्धं श्रावण्याग्रहायण्यौ चैत्र्याश्वयुजी चेति सप्त पाकसंस्थाः" । हारीतः "पाकयज्ञानुपक्रमेन्नित्यं हविर्यज्ञांश्च नित्यशः । सोमांश्च विधिपूर्वेण य इच्छेद्धर्ममव्ययम्" ।

**पाकसुत्वन्** पु० पाकेन परिपक्वेन मनसा सुनोति सोमाभिषवं करोति सु–क्वनिप् तुक् च । परिपक्वमनसा सोमाभिषव कर्त्तरि यजमाने ऋ० १०।८६।१८ ।

**पाकारि** पु० पाकमृच्छति ऋ–इन् । १श्वेतकाञ्चने रत्नमाला । ६त० । २पाकशासने इन्द्रे च ।

**पाकल** त्रि० पाकेन सुखपाकेन अलम् पाकस्य अन्नादिपाकस्य वा अलः अतम् यत्र० । १सुखपाकेन युते २अन्नपाकनाशके अग्निमान्द्ये च वसु० १२।८५। वैद्यो० ।

**पाकिन्** त्रि०पच–वा० घिनुण् कुत्वम् । १पाककर्त्तरि २पाकयुते च लघुपाकी इत्यादि सुश्रु० ।

**पाकिम** त्रि० पाकेन निर्वृत्तः भावान्तत्वात् पाक+इमप् । पाकेन निर्वृत्ते सि०कौ० ।

**पाकु** त्रि० पच–उण् न्यङ्क्वा० कुत्वम् । पाचके [उणादि०

**पाकुक** त्रि०पच–उकञ् चस्य कः । सूपकारे पाचके उणा० ।

**पाक्य** त्रि० पच–कर्मणि ण्यत् चजोरिति चस्य कः । १पक्तव्ये पाकेन साध्यम् पाकस्य हितं वा ना० यत् । २विड्लवणे न० अमरः ३पांशुलवणे रत्नमा० ४यवक्षारे पु० अमरः ।

**पाक्षिक** त्रि० पक्षे पञ्चदशतिथ्यात्मके काले पक्षान्तरे संशयकोटिभेदे वा भव ठञ् । १पक्षकालभवे २पक्षान्तरभवे ३संशयैककोटीभवे च "नियमःपाक्षिके सति" मीमांसा ।

**पाखण्ड** त्रि० "पालनाच्च त्रयीधर्मः पाशब्देन निगद्यते" इत्युक्तेः पालोति पा–क्विप् पाः त्रयीधर्मः तं खण्डयति खण्ड–अण् उप०स० । पाषण्डे सर्वलिङ्गिनि अमरटीकायां भानुदीक्षितः । मूर्द्धन्यषमध्यः सर्वसम्मतः ।

**पागल** त्रि० पिबति सुरां पा+कर्त्तरि क्विप् पाः सुरापायीव गलति स्खलति गल–अच् । उन्मत्ते "पागलायाङ्गहीनाय चान्धाय बधिराय च । जड़ाय चैव मूर्खाय क्लीवतुल्याय पापिने । ब्रह्महत्यां लभेत् सोऽपि यः स्वकन्यां ददाति च" ब्रह्मवै० प्रक० १४अ० ।

**पाङ्क्त** त्रि० पङ्क्तौ भवादि वा उत्सा० अञ् । १पङ्क्तिभवे २दशाक्षरपादकच्छन्दोभेदयुते च । पङ्क्तिसंख्याऽस्त्यस्य अण् । ३तत्संख्यायुतावयवयुते पशौ ४पुरुषे च "पाङ्क्तः पुरुषः पाङ्क्ताः पशवः" ताण्ड्यब्रा० २।४२। "पाङ्क्तत्राख्ये छन्दसि पञ्चसंख्या विद्यते तस्य पञ्चभिः पदैरुपेतत्वात् पुरुषेऽपि द्वौ हस्तौ द्वौ पादौ शिरश्चेति पञ्चसङ्ख्या विद्यते पशुष्वपि चत्वारः पादाः पुच्छञ्चेति पञ्चसंख्यास्ति" भा० पङ्क्तिच्छन्दसः दशाक्षरपादकत्वात् चतुर्षु चरणेषु चत्वारिंशदक्षराणि सन्ति तेन चतुष्टुपा मध्यमया पञ्चपादत्वमिति बोध्यम् ।

**पाचक** त्रि० पच–ण्वुल् ।१पाककर्त्तरि तद्वृत्तियुक्ते २सूपकारे च । ३अग्नौ पु०आयु०तस्य जठराग्निरूपेण वाह्याग्न्यादेश्च पाचकत्वात्तथात्वम् ४पित्ताख्ये धातौ भावप्र० "पाचकं रञ्जकं चापि साधकालोचके तथा । भ्राजकञ्चेति पित्तस्य नामानि स्थानभेदतः" भावप्र०। तत्कार्यभेदश्च पित्तशब्दे दृश्यः । अन्नादौ विषदानादिपरिजिहीर्षया स्वपादिभिर्यथा पाचकः वैद्याद्यधिष्ठितः कर्त्तव्यस्तथा सुश्रुते कल्पस्थाने दर्शितं यथा "विशेनिघ्नन्तु निपुणं नृपतिं दुष्टचेतसः । स्त्रियो वा विविधान् योगान् कदाचित्सुभगेच्छया । विषकन्योपयोगाद्वा क्षणाज्जह्यादसून्नरः । तस्माद्वैद्येन सततं विषाद्रक्ष्यो नराधिपः । यस्माच्च चेतोऽनित्यत्वमश्ववत् प्राणिनां स्मृतम् । न विश्वसात्ततो राजा कदाचिदपि कस्यचित् । कुलीनं धार्मिकं स्निग्धं सुभृतं सततोत्थितम् । अलुब्धमशठं भक्तं कृतज्ञं प्रियदर्शनम् । क्रोधपारुष्यमात्सर्यमदालस्यविवर्जितम् । जितेन्द्रियं क्षमावन्तं शुचिं शीलदयान्वितम् । मेधाविनमसंश्रान्तमनुरक्तं हितैषिणम् । पटुं प्रगल्भं निपुणं दक्षं मायाविवर्जितम् । पूर्वोक्तैश्च गुणैर्युक्तं नित्यं सन्निहितागदम् । महानसे प्रयुञ्जीत वैद्यं तद्विद्यपूजितम् । प्रशस्तदिग्देशकृतं शुचिभाण्ड

महदर्चि । सजालकं गवाक्षाढ्यमाप्तवर्गनिषेवितम् । विकसद्दृष्टसंसृष्टं सवितानं कृतार्चनम् । परीक्षितस्त्रीपुरुषं भवेच्चापि महानसम् । तत्राध्यक्षं नियुञ्जीत प्रायो वैद्यगुणान्वितम् । शुचयो दक्षिणा दक्षा विनीताः प्रियदर्शनाः । संविभक्ताः सुमनसो नीचकेशनखाः स्थिराः । स्नाता दृढं संयमिनः कृतोष्णीषाः सुसंयताः । तस्य चाज्ञाविधेयाः स्युर्विविधाः परिकर्मिणः । आहारस्थितयश्चापि भवन्ति प्राणिनो यतः । तस्मान्महानसे वैद्यः प्रमादरहितो भवेत् । आहारविकवोढारः सौपौदनिकपौपिकाः । भवेयुर्वैद्यवशगा ये चाप्यन्ये तु केचन । इङ्गितज्ञो मनुष्याणां वाक्चेष्टामुखवैकृतैः । विद्याद्विषस्य दातारमेभिर्लिङ्गैश्च बुद्धिमान् । न ददात्युत्तरं पृष्टो विवक्षन् मोहमेति च । अपार्थं बहुसङ्कीर्णं भाषते चापि मूढवत् । स्फोटयत्यङ्गुलीर्भूमिमकस्माद्विलिखेद्धसेत् । वेपथुर्जायते तस्य त्रस्तश्चान्योऽन्यमीक्षते । क्षामो विवर्णवक्त्रश्च नखैः किञ्चिच्छिनत्त्यपि । आलभेतासकृद्दीनः करेण च शिरोरुहान् । निर्यियासुरपद्वारैर्वीक्षते च पुनः पुनः । वर्त्तते विपरीतस्तु विषदाता विचेतनः । केचिद्भयात् पार्थिवस्य त्वरिता वा तदाज्ञया । असतामपि सन्तोऽपि चेष्टां कुर्वन्ति मानवाः । तस्मात् परीक्षणं कार्यं भृत्यानामादितो भृशैः । अन्ने पाने दन्तकाष्ठे तथाभ्यङ्गेऽवलेखने । उत्सादने कषाये च परिषेकेऽनुलेपने । स्रक्षु वस्त्रेषु शय्यासु कवचाभरणेषु च । पादुकापादपीठेषु पृष्ठेषु गजवाजिनाम् । विषजुष्टेषु चान्येषु नस्यधूमाञ्जनादिषु । लक्षणानि प्रवक्ष्यामि चिकित्सामप्यनन्तरम्" । ४भुक्तान्नपाचकौषधादौ त्रि० ।

**पाचन** न०पाचयति कर्त्तरि ल्यु पाच्यतेऽनेन करणे ल्युट् वा । १पापक्षयकारके प्रायश्चित्ते मेदि० तस्य फलजनकत्वादनेन पापस्य नाशनात् तथात्वम् । २दोषपाचनसाधनद्रव्यभेदे तानि च चक्रपाणिदत्तेन रोगभेदे नानाविधान्युक्तानि तत्र दृश्यानि नवज्वरादावकालस्य "ज्वरितं षडहेऽतीते लघ्वन्नमतिभोजनम् । सप्ताहात् पच्यतेऽसत्वे सामे स्यात् पाचनं हितम्" । सर्वपाचनद्रव्यप्रमाणं वैद्यके उक्तं यथा "दशरत्तिकमानेन गृहीत्वा तोलकद्वयम् । दत्त्वाम्भः षोडशगुणं ग्राह्यं पादावशेषितम्" ३अग्नौ पु० मेदि० । ४अम्लरसे हेमच० ५रक्तैरण्डे पु०राजनि० ६हरितक्यां स्त्री ङीप् मेदि० । स्वार्थे क । पाचनक तत्रार्थेषु पाचन+संज्ञायां कन् । टङ्कने (सोहागा) हेमच० ।

**पाचल** न०पाचयति पच–णिच् बा०कलन् । १पाचने हेमच० २पाचके ३अग्नौ ४रन्धनद्रव्ये ५वायौ च पु० शब्दर० ।

**पाची** स्त्री पाचयति पाचि–इन् गौरा० ङीष् । मरकतपत्र्यां हरितलतायां (पाचे) ख्याते लताभेदे राजनि०

**पाच्य** त्रि०पच–आवश्यके ण्यत् आवश्यकार्थत्वात् न कुत्वम् । अवश्यपचनीये ।

**पाजस्** न० पाति रक्षत्यनेन पा–असुन् जुट् च । १बले निघण्टुः २पृष्ठे पस्य वः । बाजस् अन्ने निघण्टुः पाजसे हितम् यत् । पाजस्य बलकरे त्रि० यजु० २५।८ ।

**पाञ्चकपाल** त्रि० समाहारद्विगुः तस्येदम् अण् । पञ्चकपालसम्बन्धिनि । द्विगुनिमित्तत्वाभावात् "द्विगोर्लुगनपत्ये" पा० न लुक् सि०कौ०।

**पाञ्चजन्य** पु० पञ्चजनस्य दैत्यभेदस्येदम् वा० ष्यञ्। पञ्चजनदैत्यास्थिनिर्मिते १विष्णोः शङ्खे तत्कथा "समुद्रप्रत्यवाचेदं दैत्यः पञ्चजनो महान् । तिमिरूपेण तं बालं ग्रस्तवानिति भारत ! । स पञ्चजन्यमासाद्य जघान पुरुषोत्तमः । न चाससाद तं बालं गुरुपुत्रं तदाऽच्युतः । स तु पञ्चजनं हत्वा शङ्खं लेभे जनार्दनः । स च देवमनुष्येषु पाञ्चजन्य इति श्रुतः" हरिवं० ८९अ० । पञ्चभिर्जनैर्निर्वृत्तः ष्यञ् । पञ्चजननिष्पाद्ये पञ्चवर्णे काश्यपवासिष्ठप्राणाङ्गिरसच्यवनसुपाञ्चिपञ्चकसाध्ये २वह्निभेदे यथोक्तं भा०व० २१९अ० । "काश्यपो ह्यथ वासिष्ठः प्राणश्च प्राणपुत्रकः । अग्निराङ्गिरसश्चैव च्यवनस्त्रिसुवर्चकः । अचरत् स तपस्तीव्रं पुत्रार्थं बहुवार्षिकम् । पुत्रं लभेयं धर्मिष्ठं यशसा ब्रह्मणा समम् । महाव्याहृतिभिर्ध्यातः पञ्चभिस्तैस्तदा त्वथ । जज्ञे तेजोमहार्चिष्मान् पञ्चवर्णः प्रभावतः । समिद्धोऽग्निः शिरस्तस्य बाहू सूर्यनिभौ तथा । त्वङ्नेत्रे च सुवर्णाभे कृष्णे जङ्घे च भारत । पञ्चवर्णः स तपसा कृतस्तैः पञ्चभिर्जनैः । पाञ्चजन्यः श्रुतो देवः पञ्चवंशकरस्तु सः" । पाञ्चजन्यस्यादूरदेशादि चतुरर्थ्यां० कर्णा०फिञ् । पाञ्चजन्यायनि तत्सन्निकृष्टदेशादौ त्रि० ।

**पाञ्चजन्यधर** पु० पाञ्चजन्यं धारयति धारि–अच् सुखः । विष्णौ हारा० । [पञ्चदश्यां भवे

**पाञ्चदश** त्रि० पञ्चदश्यां भवः कालत्वेऽपि सन्धिवेला०अण् ।

**पाञ्चदश्य** पु० पञ्चदशभिः सामधेनीमन्त्रैः प्रकाश्यः यत् । पञ्चदशभिः सामधेनीमन्त्रैः प्रकाश्ये अलौकिके वह्नौ भाग० ६।१।२२।

**पाञ्चभौतिक** त्रि॰ पञ्चभ्यो भूतेभ्य आगतः ठञ् द्विपद-वृद्धिः। आकाशादिभूतपञ्चकारब्धे देहादौ “पाञ्चभौतिको देह” “चातुर्भौतिकमित्येके” “ऐकभौतिकमित्यपरे” सां॰सू॰। “ऐकभौतिकमैकैकिकभौतिकमित्यर्थः तत्र मनुष्यादिशरीरे पार्थिवाधिक्येन पार्थिवता एवं सूर्य्यादिलोकेषु तैजसाधिक्येन तैजसादिता शरीराणां सुवर्णादीनामिव” भा॰। इत्यनेकेषां मतमुक्त्वा ५अ॰ स्वयं निर्णयस्तत्रोक्तो यथा “न पाञ्चभौतिकं शरीरं बहूनामुपादानायोगात्” सां॰सू॰ “बहूनां भिन्नजातीयानां चोपादानत्वं घटपटादिस्थले न दृष्टमिति सजातीयमेवोपादानम्। इतरच्च भूतचतुष्टयमुपष्टम्भकमित्याशयेन पाञ्चभौतिकत्वव्यवहारः। एकोपादानकत्वेऽपि पृथिव्येवोपादानं सर्वशरीरस्य शरीरस्यैकमात्रभूतोपादानकत्वं पूर्वोक्तमनेनैव प्रसङ्गेन विशिष्याह” भा॰ “सर्वेषु पृथिव्युपादानमसाधारण्यात् तद्व्यपदेशः पूर्ववत्” सां॰ सू॰ सर्वेषु शरीरेषु पृथिव्येवोपादानम् असाधारण्यात् आधिक्यादिभिरुत्कर्षात्। अतोऽपि शरीरे पाञ्चचतुरादिभौतिकत्वव्यपदेशः पूर्ववत् इन्द्रियाणां भौतिकत्ववदुपष्टम्भकत्वमात्रेणेत्यर्थः” भा॰। अयञ्च सांख्यपक्षः। वेदान्तिमते तु त्र्यात्मकता कायस्य तच्च कायशब्दे १९२४ पृष्ठादौ दर्शितं तत्र दृश्यम्।

**पाञ्चालिका** स्त्री पञ्चाली स्वार्थे अण् ततः स्वार्थे क कापि अतइत्वम्। वस्त्रादिनिर्मितपुत्तलिकायाम् हिरूप॰।

**पाञ्चवर्षिक** त्रि॰ पञ्च वर्षाः प्रमाणमस्य ठञ् तस्य वा न लुक्। पञ्चवर्षवयस्के त्रिका॰।

**पाञ्चशब्दिक** त्रि॰ पञ्चभिः शब्दैर्निर्वृत्तं ठक्। पञ्चभिः शब्दैर्निष्पादिते वाद्यभेदे। पञ्चशब्दाश्च वाद्यभेदाः यथा “चर्मजं कर्मजं चैव तन्त्रजं कांस्यजं तथा। फुत्कृतं चेति मुनिभिः कथितं पाञ्चशब्दिकम्” स्कान्दे रेवाख॰।

**पाञ्चार्थिक** पु॰ पञ्च अर्था तत्त्वानि पाशाःवा यत्र सन्ति ठन् वा॰ वृद्धिः। १पशुपतिशब्ददर्शिततत्त्वपञ्चकान्विते २तत्रोक्तपाशपञ्चकयुते च पाशुपतागमे त्रिका॰।

**पाञ्चाल** त्रि॰पञ्चालदेशे भवः स्वार्थे वा अण्। १पञ्चालदेशभवे स्त्रियां ङीप्। पाञ्चाली। २पञ्चालदेशे च पञ्चानां विषयाणामन्यतोऽनवगतानां प्रकाशनायालमिति पृषो॰। ३शास्त्रे “प्रवृत्तं च निवृत्तं च शास्त्रं पाञ्चालसंज्ञकम्” भाग॰ ४।२५ व्याख्यायां श्रीधरधृतवाक्यम्।

**पाट्** अव्य॰ पाट–णिच् क्विप्। सम्बोधने मेदि॰।

**पाटक** त्रि॰ पट–ण्वुल्। १छेदके २महाकिष्कौ ३कटकान्तरे ४वाद्ये ५अक्षादिपातने ६मूलद्रव्यापचये ७रोधे मेदि॰ दग्रामैकदेशे हेमच॰।

**पाटच्चर** पु॰ पटच्चर एव स्वार्थे प्रज्ञादित्वादण्। चौरे अमरः

**पाटन** न॰ चु॰ पट–भावे ल्युट। छेदने

**पाटल** पु॰ पाटयति पट–णिच्–कलच्। १श्वेतरक्तवर्णे। २तद्वति त्रि॰ (पारुल) ख्याते ३वृक्षे स्त्री॰ अमरः। ४तत्पुष्पे ५आशुधान्ये च न॰“अत्युष्णं पाटलं वह्निच्छर्द्दि च त्रिदोषकृत्” राजनि॰। ६रक्तलोध्रे स्त्री शब्दच॰। पाटलोत्पत्तिर्यथा। “प्रदह्यमानो चरणौ हराऽसौ कुसुमायुधः। उत्ससर्ज धनुः श्रेष्ठं तच्चागमाच्च पञ्चधा। यदासीन्मुष्टिबन्धन्तु रुक्मपृष्ठं महाप्रभम्। स चम्पकतरुजातः सुगन्धाढ्यो गुणाकृतिः। नाहस्थानं शुभाकारं यदासीद्वज्रभूषितम्। तत् जातं केशराढ्यं च बकुलो नामतो नगः। या च कोटी सुभाह्यासीदिन्द्रनीलविभूषिता। जाता सा पाटला रम्या भृङ्गराजिविभूषिता” वामनपु॰ ६अ॰। पाटलवर्णत्वात् ७दुर्गायाम् स्त्री तन्त्रसा॰। पाटलावतीशब्दे दृश्यम्। पाटलानां समूहः पाशा॰ य। पाटल्या तत्समूहे स्त्री।

**पाटलद्रुम** पु॰ नित्यकर्म॰। पुन्नागवृक्षे राजनि॰।

**पाटलापुष्पसन्निभ** न॰ पाटलापुष्पमेव वर्णम् नित्यस॰। पद्मकाष्ठे राजनि॰।

**पाटलावती** स्त्री १नदीभेदे मा॰भी॰ ९अ॰। २दुर्गायाञ्च। “अपर्णानेकवर्णा च पाटला पाटलावती” तन्त्रसा॰।

**पाटलि** स्त्री पट–णिच् अलि। (पारुल) ख्याते १वृक्षे “पाटलिसंसर्गसुरभिवनवाताः” इति शकुन्तला २घण्टापाटलौ च अमरः वा ङीप्। ङीबन्तः ३कटभीवृक्षे ४मुष्ककवृक्षे च राजनि॰।　　[हारा॰।

**पाटलिक** पु॰ पाटि–अलि संज्ञायां कन्। अन्यधर्म्मज्ञे

**पाटलिपुत्र** न॰ (पाटना) ख्याते नगरभेदे कुसुमपुरे हेमच॰

**पाटलोपल** पु॰ नित्यक॰। श्वेतरक्तवर्णयुक्ते मणिभेदे

**पाटव** न॰पटोर्भावः पृथ्वा॰इमनिच्चोऽभावपक्षे अण्। १दक्षत्वे २आरोग्ये च राजनि॰। पटोरयमात्मा: अण्। पाटवाः तच्छात्रे बन्ध॰।　　[त्रिका॰।

**पाटविक** त्रि॰ पाटवमस्त्यस्य ठन्। १पटौ दक्षे २धूर्त्ते च

**पाटहिका** स्त्री पटहस्येदम् पाटहं तदाकारमस्त्यस्य ठन्। १गुञ्जायां हारा॰ पटहे तद्वादने प्रसृतः ठक्। २पटहवाद्यवादके त्रि॰।

**पाटा** स्त्री पाठा+पृषो॰ । पाठायाम् अम॰ २।२७।४

**पाटित** त्रि॰ चुरा॰ पट–क्त । विदारिते हेमच॰ ।

**पाटी** स्त्री पट–इन् वा ङीप् । १बलाटक्ये राजनि॰ २परिपाट्याम् गुणनादीनां ३स्पष्टक्रमे च “अस्ति त्रैराशिकं बीजं पाटी च विमला मतिः” लीला॰।

**पाटीगणित** न॰ पाट्या परिपाट्या गणितम् । लीलावत्याद्यङ्कशास्त्ररूपे गणितशास्त्रे । “पाटी नाम सङ्कलितव्यवकलितगुणनभजनादीनां क्रमः तया युक्तं गणितं पाटीगणितम्” लीलावती टीका ।

**पाटीर** पु॰पटीर+स्वार्थे अण् । पटीरे चन्दने विश्वः ।

**पाटूपट** त्रि॰ “पाटेर्णिलुक् चोक् चाभ्यासस्य” वार्त्ति॰ पाटि–अच् नि॰ णिलुक् द्वित्वमभ्यासस्य उक् च । पाटके । सि॰कौ॰ । पक्षे पाट तत्रार्थे ।

**पाट्य** त्रि॰ चु॰ पट–कर्मणि यत् । १छेद्ये २पट्टशाके न॰ राजनि॰ । “पाट्यशाकन्तु मधुरं दुर्जरं गुरुपाकि च” राजनि॰ ।

**पाठ** पु॰ पठ–भावे घञ् । १शास्त्रादेरभ्यासे पौनःपुन्येन उच्चारणे । णिच्–भावे अच् । २अध्यापने शिष्येभ्यः प्रतिपादने च पाठस्याष्टादश दोषा यथा “शङ्कितं भीतमुद्घुष्टमव्यक्तमनुनासिकम् । विस्वरं विरसञ्चैव विश्लिष्टं विषमाहतम् । काकस्वरं निरस्तं तथा स्थानविवर्जितम् । व्याकुलं तालहीनञ्च पाठदोषाः चतुर्दश । संगीतं शिरसः कम्पमल्पकण्ठमनर्थकम्” मार्क॰पु॰। अध्ययनक्रमो यथा “आचम्य प्रयतो नित्यमधीयीत उदङ्मुखः । उपसंगृह्य तत्पादौ वीक्षमाणो गुरोर्मुखम्” अध्यापनक्रमो यथा “अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत् । प्राक् कूलान् पर्युपासीनः पवित्रैश्चैव पावितः । प्राणायामैस्त्रिभिः पूतस्तत ओँकारमर्हति । ब्राह्मणः प्रणवं कुर्य्यादन्ते च विधिवद्द्विजाः! । कुर्य्यादध्यापनं नित्यं स ब्रह्मादीनि पूर्वतः । सर्वेषामेव भूतानां वेदश्चक्षुः सनातनः । अधीयीताप्ययनित्यं ब्राह्मण्याद्धीयतेऽन्यथा” इति कौर्मे उपरिभागे १४अ॰ ।

**पाठक** त्रि॰ पठ–ण्वुल् । १पठनकर्त्तरि णिच्–ण्वुल् । पाठके २अध्यापके ३पुराणादिवाचके च । तस्य वरणादि-कर्त्तव्यं ति॰त॰ यथा

“भविष्यपुराणम् “इतिहासपुराणानि श्रुत्वा भक्त्या विशांपते ! । मुच्यते सर्वपापेभ्यो ब्रह्महत्यादिभिर्विभो ।। ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात् । श्रुत्वान्यवर्णाज्जाद्राजन् ! वाचकान्नरकं व्रजेत्” तथा “देवार्चामग्रतः कृत्वा ब्राह्मणानां विशेषतः । ग्रन्थिस्तु शिथिलं कुर्य्याद्वाचकः कुरुनन्दन ! । पुनर्बध्नीत तत्सूत्रं न सन्धा धारयेत् क्वचित् । हिरण्यं रजतं गाश्च तथा कांस्योपदोहनाः । दत्त्वा तु वाचकायेह श्रुतस्याप्नोति तत्फलम्” । कांस्योपदोहनाः कांस्यक्रोडाः । “वाचकः पूजितो येन प्रसन्नास्तस्य देवताः” । तथा “श्रुत्वा पर्वसमाप्तिं च पूजयेत् वाचकं बुधः । आत्मानमपि विक्रीय, य इच्छेत् सफलं कृतम्” । तथा “विस्पष्टमद्रुतं शान्तं स्पष्टाक्षरपदं तथा । कलस्वरसमायुक्तं रसभावसमन्वितम् । बुध्यमानः सदा शुद्धो ग्रन्थार्थं कृत्स्नशो नृप ! । ब्राह्मणादिषु सर्वेषु ग्रन्थार्थं चार्पयन्नृप ! । य एवं वाचयेद्ब्रह्मन् स विप्रो व्यास उच्यते” । “सप्तस्वरसमायुक्तं काले काले विशांपते ! । प्रदर्शयन् रसान् सर्वान् वाचयेद्वाचको नृप !” ।

**पाठच्छेद** पु॰ ६त॰ । १पाठस्य विच्छेदे २यतौ च त्रिका॰।

**पाठन** न॰ पाठ–णिच्–भावे ल्युट् । १अध्यापने युच् पाठना तत्रार्थे स्त्री । २कर्त्तरि ल्यु । २पाठके त्रि॰ स्त्रियां गौरा॰ ङीष् ।

**पाठभू** स्त्री ६त॰ । पाठस्थाने त्रिका॰ पाठशालादयोऽप्यत्र ।

**पाठमञ्जरी** स्त्री पाठस्याभ्यासस्य मञ्जरीव । शारिकायाम् शब्दमाला । [रिकायाम् शब्दमा॰ २पाठयुक्ते त्रि॰ ।

**पाठशालिनी** स्त्री पाठेन शलते शल–णिनि ङीप् । १शा-

**पाठा** स्त्री पठ–कर्मणि घञ् टाप् । विद्धकर्ण्याम्(आकनादि) अमरः । “पाठोष्णा कटुका तीक्ष्णा वातश्लेष्महरी लघुः । हन्ति शूलज्वरच्छर्दिं कुष्ठातीसारहृद्रुजः । दाहकण्डूविषश्वासकृमिगुल्मगरव्रणान्” भावप्र॰ । स्वार्थे क कापि अतइत्त्वम् । पाठिका तत्रार्थे भावप्र॰ । पाठकर्त्र्यां स्त्रियां च ।

**पाठाद्यचूर्ण** न॰ “पाठा बिल्वानलव्योषजम्बूदाडिमधातकी । कटुकातिविषामुस्तादार्वीभूनिम्बवत्सकैः । सर्वैरेतैः समं चूर्णं कौटजत्वक्सुचाम्बुना । सक्षौद्रञ्च पिबेच्छर्दि ज्वरातीसारशूलवान् । हृद्दाहपाण्डुरोगारोचकानलसादजित्” चक्र॰ उक्ते चूर्णभेदे ।

**पाठि** पु॰ पाठ–इन् । पृष्ठे पाठीनशब्दे दृश्यम् ।

**पाठिन्** त्रि॰ पठ–णिनि । १पाठके स्त्रियां ङीप् । पाठेनाकारेऽप्यस्य इनि । २चित्रकवृक्षे अमरः । [राजनि॰ ।

**पाठीकुट** पु॰ पाटेव कुटति कुट–क पृषो॰ । चित्रकवृक्षे

**पाठीन** पुं स्त्री॰पाठिं पृष्ठं नमयति नम–ड दीर्घः । १मत्स्य-

भेदे (बोयाल) अमरः स्त्रियां ङीष् । "पाठीनरोहिताद्यौ" मनुः । "पाठीनः श्लेष्मलः स्निग्धो मधुरश्च कषायकः । बल्यो वृष्यः कटुः पाके रोचनो वातपित्तनुत्" राजव०पठ-ईनन् । २गुग्गुलुवृक्षे ३पाठके त्रि० मेदि० ।

**पाठेय** त्रि० पाठायां भवः नद्या० ढक् । पाठाभवे

**पाण** पु०पण-भावे घञ् । १व्यवहारे २पणने ३स्तवे च भा० व०६०४८श्लो० । ४पाणौ शब्दच० ।

**पाणि** पु० पण-इण् आयाभावः । १करे २कुञ्चिके हस्ते च (कुञ्चेखाड़ा) अमरः ३पण्यवीथ्यां ४हट्टे च स्त्री० उणा० । करश्च मणिबन्धावध्यङ्गुलिपर्य्यन्तः ।

**पाणिक** त्रि० पणेन क्रीतं निष्का० ठक् । १पणेन क्रीते २कुमारानुचरमातृभेदे भा०व० ५५ अ० ।

**पाणिकच्छपिका** स्त्री पाणिभ्यां कृता कच्छपिका कच्छपस्तदाकारोऽस्त्यस्याः ठन् । कूर्मसुद्रायाम् "पाणिकच्छपिकां कुर्य्यात् कूर्ममन्त्रेण साधकः" कालिकापु०५६अ० ।

**पाणिकर्म्मन्** पु० पाणिभ्यां वादनरूपं कर्म्मास्य । १महादेवे भा०शा० २८६ । २पाणिभ्यां वादके त्रि० ।

**पाणिकूर्च्चा** स्त्री कुमारानुचरमातृभेदे भा० श० ४६ अ० ।

**पाणिखात** न० तीर्थभेदे भा०व० ८३ अ० ।

**पाणिगृहीती** स्त्री पाणिर्गृहीतो यस्याः ङीप् । पाणिग्रहणेन कृतसंस्कारायां सवर्णायां स्त्रियाम् अमरः । "पाणिग्रहणसंस्काराः सवर्णास्पदिश्यते" मनुना सवर्णायामेव पाणिग्रहणविधानात् तथात्वम् ।

**पाणिग्रह** पु० पाणिर्गृह्यतेऽत्र ग्रह-आधारे अप् । विवाहे "हस्ताक्षातिषु सततोचितमिथुनेष्वस्तु पाणिग्रहः" ह०स० १०० अ० ।

**पाणिग्रहण** न० पाणिर्गृह्यते कर ग्रह-आधारे ल्युट् । विवाहे हेमच० । पाणिग्रहणप्रकारः आश्व० गृ० सू० १।७।३ यथा "पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्योत्तरपुरस्तादुदकुम्भं समन्वारब्धायां हुत्वा तिष्ठन् प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया गृह्णामि ते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीयाद्यदि कामयीत पुमांस एव मे पुत्रा जायेरन्निति" सू० । "दक्षिणतः पत्नुरुपविशेत् उत्तरतः पतिरिति शास्त्रान्तरे दृष्टम् । "उत्तानेनोत्तानं पाणिं गृह्णीयात्" नारा० ।

"अङ्गुलीश्चेव स्त्रीकामः" सू० "एवकारोऽङ्गुष्ठनिवृत्त्यर्थः । स्त्रीकामो दुहितृकाम इत्यर्थः" नारा० "हस्तमङ्गुष्ठमुभयकामः" सू० । "उभयकामः पुत्रदुहितृकामः अङ्गुष्ठमङ्गुलीभिः" सह गृह्णीयादित्यनुषङ्गः नारा० ।

**पाणिग्रहणिक** त्रि०पाणिग्रहणं प्रयोजनमस्य ठञ् । विवाहाङ्गे मन्त्रे "पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः" "पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् । तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे" मनुः ते च मन्त्राः "अर्य्यमणं नु देवं कन्या अग्निमयक्षतेत्यादयः" आश्व० गृ० १।७।१७ सूत्रादौ १९ सूत्रान्ते पठिता बोध्याः । [पद्यो भा० अनु० ४४२३ श्लोकः ।

**पाणिग्रहीतृ** पु० पाणिं गृह्णाति ग्रह-तृच् इत० । वोढरि

**पाणिग्राह** पु० पाणिं गृह्णाति ग्रह-अण् उप० स० । वोढरि मनुः ५।१४८ ।

**पाणिघ** त्रि० पाणिं पाणिना वा हन्ति "पाणिघताडघौ शिल्पिनि" पा० हन-ट नि० । १पाणिताड़के पाणिना २मृदङ्गादिवादके च शिल्पिभेदे ।

**पाणिघात** पु० पाणिं हन्ति-अशिल्पित्वात् अण् उप०स० । १पाणिताड़कमात्रे सि०कौ० । हन-भावे घञ् । २पाणिहनने पु० । [हस्ततालवादके यजु० ३५।२० ।

**पाणिघ्न** त्रि० पाणौ हन्ति हन-टक् वेदे शिल्पिनि नि० ।

**पाणिज** पु० पाणौ जायते जन-ड ७त० । नखे हेमच० ।

**पाणितल** न० ६त० । १करस्याधोभागे पाणिरेव तलम् । करतले । तन्मितद्रव्ये २तोलके कर्षशब्दे दृश्यम् ।

**पाणिधर्म्म** पु० पाणिग्रहणाख्यो धर्म्मः शा० त० । पाणिग्रहणरूपे धर्म्मे "पाणिधर्म्मो नाऽप्रमाणं मनुभिः सेवितः पुरा" भा० अ० ८१ अ० ।

**पाणिन** पु० पणिनो मुनेरपत्यम् अण् गाथील्यादित्वा प्रकृत्या न टिलोपः । पाणिनौ मुनौ त्रिका० ।

**पाणिनि** पु० पणिनो मुन्यपत्यम् अण् ततः यूनि इञ् न टिलोपः । पाणिनिनामके मुनौ "येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः" शेखरः । स च अष्टाध्यायीरूपसूत्रपाठं गणपाठं धातुपाठं लिङ्गानुशासनं शिक्षारूपं च ग्रन्थपञ्चकं चकार । पाणिनिमतञ्च सर्व्वदर्शनसंग्रहे दर्शितं ततो दिङ्मात्रं प्रदर्श्यते ।

"भवति च व्याकरणशास्त्रस्य शब्दानुशासनं प्रयोजनं (तस्य तदुद्देशेन प्रवृत्तेः तत्प्रयोजनत्वम्) यथा स्वर्गोद्देशेन प्रवृत्तस्य यागस्य स्वर्गः प्रयोजनं तस्मात् शब्दानुशिष्टिः संस्कारपदवेदनीया शब्दानुशासनस्य प्रयोजनम् । नन्वेवमप्यभिमतं प्रयोजनं न लभ्यते तदुपायाभावात् । अथ प्रति-

पदपाठ एवाभ्युपाय इति मन्तव्याः तर्हि स ह्यनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठो भवेत् शब्दापशब्दभेदेनानन्त्याच्छब्दानाम् एवं हि समाम्नायते “बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदपाठविहितानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम” बृहस्पतिश्च प्रवक्ता इन्द्रोऽध्येता दिव्यं वर्षसहस्रमध्ययनकालः न च पारावाप्तिरभूत् किमुताद्य यश्चिरं न जीवति अधीतबोधाचरणप्रचारणैश्चतुर्भिरुपायैर्विद्योपयुक्ता भवति। तत्राध्ययनकालेनैव सर्वमायुरुपयुक्तं स्यात्तस्मादनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठ इति प्रयोजनं न सिद्ध्येदिति चेन्मैवं शब्दप्रतिपत्तेः प्रतिपदपाठसाध्यत्वानङ्गीकारात् प्रकृत्यादिविभागकल्पनावत्सु च लक्षेषु सामान्यविशेषरूपाणां लक्षणानां पर्जन्यवत् सकृदेव प्रवृत्तौ बहूनां शब्दानामनुशासनोपलम्भाच्च तथाहि कर्मण्यण्, इत्येकेन सामान्यरूपेण लक्षणेन कर्मोपपदाद्धातुमात्रादण्प्रत्यये कृते कुम्भकारः काण्डलाव इत्यादीनां बहूनां शब्दानामनुशासनमुपलभ्यते एवमातोऽनुपसर्गे क इति। प्रतिपदपाठस्याशक्यत्वप्रतिपादनपरोऽर्थवादः। नन्वन्येष्वङ्गेषु सत्सु किमित्येतदेवाद्रियते। उच्यते प्रधानञ्च षट्स्वङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति। तदुक्तम् “आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः। प्रथमं छन्दसामङ्गमाहुर्व्याकरणं बुधाः” इति। तस्मात् व्याकरणशास्त्रस्य शब्दानुशासनं भवति साक्षात् प्रयोजनं पारम्पर्येण तु वेदरक्षादीनि। अतएवोक्तं भगवता भाष्यकारेण “रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति” साधुशब्दप्रयोगवशादभ्युदयोऽपि भवति तथाच कथितं कात्यायनेन “शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देनेति”। अन्यैरप्युक्तम् “एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवतीति”। तथा “नाकमिष्टसुखं यान्ति सुयुक्तैर्बडवारथैः। अथ पत्काषिणो यान्ति ये चीत्कमणभाषिणः”। “नन्वचेतनस्य शब्दस्य कथमीदृशं सामर्थ्यमुपपद्यत इति चेन्मैवं मन्तव्याः महता देवेन साम्यश्रवणात् तदाह श्रुतिः “चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश”। व्याचकार च भाष्यकारः “चत्वारि शृङ्गाणि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताः, त्रयो अस्य पादाः लडादिविषयाः त्रिधा भूतभविष्यद्वर्त्तमानकालाः। द्वे शीर्षे द्वौ नित्यानित्यात्मानौ नित्यः कार्यश्च व्यङ्ग्यव्यञ्जकभेदात्, सप्तहस्तासो अस्य तिङा सह सप्त सुब्विभक्तयः, त्रिधा बद्धः त्रिषु स्थानेषु उरसि कण्ठे शिरसि च बद्धः, वृषभ इति प्रसिद्धवृषभत्वेन रूपणं क्रियते वर्षणात्तद्वर्षणञ्च ज्ञानपूर्वकानुष्ठानेन फलप्रदत्वं, रोरवीति शब्दं करोति रौतिः शब्दकर्म्मा। इह शब्दशब्देन प्रपञ्चो विवक्षितः। महो देवो मर्त्यां आविवेश महादेवः शब्दः मर्त्या मरणधर्म्माणो मनुष्यास्तानाविवेशेति महता देवेन परेण ब्रह्मणा साम्यमुक्तं स्यादिति” जगन्निदानं स्फोटाख्यो निरवयवो नित्यः शब्दो ब्रह्मैवेति हरिणाभाणि ब्रह्मकाण्डे “अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्। विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः” इति। ननु नामाख्यातभेदेन पदद्वैविध्यप्रतीतेः कथं चातुर्विध्यमुक्तमिति चेन्मैवं प्रकारान्तरस्य प्रसिद्धत्वात्। तदुक्तं प्रकीर्णके “द्विधा कैश्चित् पदं भिन्नं चतुर्द्धा पञ्चधापि वा। अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवदिति”। “कर्मप्रवचनीयेन वै पञ्चमेन सह पदस्य पञ्चविधत्वमिति” हेलाराजो व्याख्यातवान्। कर्मप्रवचनीयास्तु क्रियाविशेषोपजनितसम्बन्धावच्छेदहेतव इति सम्बन्धविशेषद्योतनद्वारेण क्रियाविशेषद्योतनादुपसर्गेष्वेवान्तर्भवतीत्यभिसन्धाय चतुर्विध्यं भाष्यकारेणोक्तं युक्तमिति विवेक्तव्यम्। ननु भवता स्फोटात्मा नित्यः शब्द इति निजागद्यते तन्न मृष्यामहे तत्र प्रमाणाभावादिति केचित् अत्रोच्यते प्रत्यक्षमेवात्र प्रमाणं गौरित्येकं पदमिति नानावर्णातिरिक्तैकपदावगतेः सर्वजनीनत्वात् ह्यसति बाधके यदानुभवः शक्यो मिथ्येति वक्तुं पदार्थप्रतीतेरन्यथानुपपत्त्यापि स्फोटोऽभ्युपगन्तव्यः। न च वर्णेभ्य एव तत्प्रत्ययः प्रादुर्भवतीति परीक्षाक्षमं विकल्पासहत्वात् किं समस्ता व्यस्ता वा अर्थप्रत्ययं जनयन्ति ? नाद्यः वर्णानां क्षणिकानां समूहासम्भवात् नान्त्यः व्यस्तवर्णेभ्योऽर्थप्रत्ययासम्भवात्। न च व्याससमासाभ्यामन्यः प्रकारः सम्भवतीति तस्माद्वर्णानां वाचकत्वानुपपत्तौ यद्बलादर्थप्रतिपत्तिः स स्फोट इति वर्णातिरिक्तो वर्णाभिव्यङ्ग्योऽर्थप्रत्यायको नित्यः शब्दः स्फोट इति तद्विदो वदन्ति। अतएव स्फुट्यते व्यज्यते वर्णैरिति स्फोटो वर्णाभिव्यङ्ग्यः स्फुटीभवत्यस्मादर्थ इति स्फोटोऽर्थप्रत्यायक इति स्फोटशब्दार्थमुभयथा निराहुः। तथाचोक्तं भगवता पतञ्जलिना महाभाष्ये

"अथ गौरित्यत्र कः शब्दो ? येनोच्चरितेन सास्नालाङ्गूलककुदखुरविषाणानां सम्प्रत्ययो भवति स शब्द इत्युच्यते" इति। विवृतञ्च कैयटेन "वैयाकरणा वर्णव्यतिरिक्तस्य पदस्य वाचकत्वमिच्छन्ति वर्णानां वाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गादित्यादिना तद्व्यतिरिक्तः स्फोटो नादाभिव्यङ्ग्यो वाचको विस्तरेण वाक्यपदीये व्यवस्थापित" इत्यन्तेन प्रबन्धेन। ननु स्फोटस्यार्थप्रत्यायकत्वं न घटते विकल्पासहत्वात् किमभिव्यक्तः स्फोटोऽर्थं प्रत्याययति अनभिव्यक्तो वा न चरमः सर्वदार्थप्रत्ययलक्षणकार्योत्पादप्रसङ्गात् स्फोटस्य नित्यत्वाभ्युपगमेन निरपेक्षस्य हेतोः सदा सत्त्वेन कार्यस्य विलम्बायोगात्। अथैतद्दोषपरिजिहीर्षया अभिव्यक्तः स्फोटोऽर्थं प्रत्याययतीति कक्षीक्रियते तथाभिव्यञ्जयन्तो वर्णाः किं प्रत्येकमभिव्यञ्जयन्ति सम्भूय वा पक्षद्वयेऽपि वर्णानां वाचकत्वपक्षे भवता ये दोषा भाषितास्त एव स्फोटाभिव्यञ्जकत्वपक्षे आवर्त्तनीयाः। तदुक्तं भट्टाचार्यैर्मीमांसाश्लोकवार्त्तिके "यस्यानवयवः स्फोटो व्यज्यते वर्णबुद्धिभिः। सोऽपि पर्यनुयोगेन नैकेनापि विमुच्यते" इति। "विभक्त्यन्तं पदम्" विभक्त्यन्तेषु वर्णेषु पाणिनिना "ते विभक्त्यन्ताः पदमिति" गौतमेन च पदसंज्ञाया विहितत्वात् सङ्केतग्रहणेनानुग्रहवशाद्वर्णेष्वेव पदबुद्धिर्भविष्यति। तर्हि सर इत्येतस्मिन् पदे यावन्तो वर्णास्तावन्त एव रस इत्यत्रापि वनं नवं नदी दीना रामो मारो राजा जारेत्यादिष्वर्थभेदप्रतीतिर्न स्यादिति चेन्न क्रमभेदेन भेदसम्भवात् तदुक्तं तौतातितैः "यावन्तो यादृशा ये च यदर्थप्रतिपादने। वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः" इति। तस्माद्यश्चोभयोः समो दोषो न तेनैकश्चोद्यो भवतीति न्यायात् वर्णानामेव वाचकत्वोपपत्तौ नातिरिक्तस्फोटकल्पनाऽवकल्पते इति चेत् तदेतत् काशकुशावलम्बनकल्पं विकल्पानुपपत्तेः किं वर्णमात्रे पदप्रत्ययावलम्बनं वर्णसमूहे वा ? नाद्यः परस्परविलक्षणवर्णानामभिन्नं निमित्तं पुष्पेषु विना सूत्रं मालाप्रत्ययवदित्येकं पदमिति प्रतिपत्तेरनुपपत्तेः नापि द्वितीयः उच्चरितप्रध्वस्तानां वर्णानां समूहभावासम्भवात्। तत्र हि समूहव्यपदेशः ये पदार्था एकस्मिन् प्रदेशे सहावस्थिततया बहवोऽनुभूयन्ते यथा एकस्मिन् प्रदेशे सहावस्थिततयानुभूयमानेषु धवखदिरपलाशादिषु समूहव्यपदेशः यथा वा गजतुरगादिषु, न च ते वर्णास्तथानुभूयन्ते उत्पन्नप्रध्वस्तत्वात्। अभिव्यक्तिपक्षेऽपि क्रमेणैवाभिव्यक्तौ समूहासम्भवात् नापि वर्णेषु काल्पनिकः समूहः कल्पनीयः परस्पराश्रयप्रसङ्गात्। एकार्थप्रत्यायकत्वसिद्धौ तदुपाधिना वर्णेषु पदत्वप्रतीतिः तत्सिद्धावेकार्थप्रत्यायकत्वसिद्धिरिति। तस्माद्वर्णानां वाचकत्वासम्भवात् स्फोटोऽभ्युपगन्तव्यः। ननु स्फोटवाचकतापक्षेऽपि प्रागुक्तविकल्पप्रसरेण घट्टकुटीप्रभातायितमिति चेत् तदेतन्मनोराज्यविजृम्भणं वैषम्यसम्भवात्। तथाहि अभिव्यञ्जकोऽपि प्रथमो ध्वनिः स्फोटमस्फुटमभिव्यनक्ति उत्तरोत्तराभिव्यञ्जकक्रमेण स्फुटं स्फुटतरं स्फुटतमं, यथा स्वाध्यायः सकृत् पठ्यमानो नावधार्यते अभ्यासेन तु स्फुटावसायः यथा वा रत्नतत्त्वं प्रथमप्रतीतौ स्फुटं न चकास्ति चरमे चेतसि यथावदभिव्यज्यते "नादैराहितबीजायामन्त्येन ध्वनिना सह। आवृत्तिपरिपाकायां बुद्धौ शब्दोऽवधार्यते" इति प्रामाणिकोक्तेः। तस्माद्गकाराद्यर्थं प्रतिपद्यामहे इति व्यवहारवशाद्वर्णानाम् अर्थवाचकत्वानुपपत्तेः प्रथमे काण्डे तत्रभवद्भिर्भर्तृहरिभिरभिहितत्वात् निरवयवशब्दप्रत्यायकं शब्दतत्त्वं स्फोटाख्यमभ्युपगन्तव्यमित्येतत् सर्वम् "परमार्थसंविल्लक्षणसत्ता जातिरेव सर्वेषां शब्दानामर्थ इति प्रतिपादनपरे जातिसमुद्देशे प्रतिपादितम्। यदि सत्तैवार्थः सर्वेषां शब्दानां पर्यायता स्यात् तथा च क्वचिदपि युगपत्त्रिचतुरपदप्रयोगायोग इति महदापत्त्यपासुपातः। तदुक्तम् "पर्यायाणां प्रयोगो हि यौगपद्येन नेष्यते। पर्यायेणैव ते यस्माद्वदन्त्यर्थं न संहताः" इति। तस्मादयं पक्षो न क्षोदक्षम इति चेत् तदेतद्गगनरोमन्थकल्पं नीललोहितपीताद्युपरञ्जकद्रव्यभेदेन स्फटिकमणेरिव सम्बन्धिभेदात् सत्तायास्तदात्मना भेदेन प्रतिपत्तिसिद्धौ गोसत्तादिरूपगोत्वादिभेदनिबन्धनव्यवहारवैलक्षण्योपपत्तेः तथा चाप्तवाक्यम् "स्फटिकं विमलं द्रव्यं यथा युक्तं पृथक् पृथक्। नीललोहितपीताद्यैस्तद्वर्णमुपलभ्यते" इति। तथा हरिणाप्युक्तम् "सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु। जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः। तां प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते। सा सत्ता सा महानात्मा तामाहुस्त्वतलादयः" इति। आश्रयभूतैः सम्बन्धिभिर्भिद्यमाना कल्पितभेदा गवाश्वादिषु सत्तैव महासामान्यमेव जातिः गोत्वादिकमपरं सामान्यं परमार्थतस्ततो भिन्नं न भवति गोसत्तैव गोत्वं

भापरमन्वयि प्रतिभासते एवमश्वसत्ता अश्वत्वमित्यादि वाच्यम्। एवञ्च तस्यामेव गवादिभिन्नायां सत्तायां जातौ गोशब्दादयो वाचकत्वेन व्यवस्थिताः प्रातिपदिकार्थञ्च सत्तामाहुः। भाववचनो धातुरिति पक्षे भावः सत्तैवेति धात्वर्थः सत्ता भवत्येव क्रियावचनो धातुरिति पक्षेऽपि "जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्त्तिनीमिति" जातिपदार्थनयानुसारेणानेकव्यक्तिक्रियासमुद्देशे क्रियाया जातिरूपत्वप्रतिपादनात् धात्वर्थः सत्ता भवत्येव तस्य भावस्त्वतलाविति भावार्थे त्वतलादीनां विधानात् सत्तावाचित्वं युक्तं सा च सत्ता उदयव्ययवैधुर्यान्नित्या सर्वस्य प्रपञ्चस्य तद्विवर्त्ततया देशतः कालतो वस्तुतश्च परिच्छेदराहित्यात् सा सत्ता महानात्मेति व्यपदिश्यत इति कारिकाद्वयार्थः। द्रव्यपदार्थसंविलक्षणं तत्त्वमेव सर्वशब्दार्थ इति सम्बन्धसमुद्देशे समर्थितम् "सत्यं वस्तु तदाकारैरसत्यैरवधार्य्यते। असत्योपाधिभिः शब्दैः सत्यमेवाभिधीयते। अध्रुवेण निमित्तेन देवदत्तगृहं यथा। गृहीतगृहशब्देन शुद्धमेवाभिधीयते" इति। भाष्यकारेणापि "सिद्धे शब्दार्थसम्बन्धे" इत्येतद्वार्त्तिकव्याख्यानावसरे द्रव्यं हि नित्यमित्यनेन ग्रन्थेन असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्दवाच्यं सर्वशब्दार्थः" इति निरूपितम्। जातिशब्दार्थवादिनो वाजप्यायनस्य मते गवादयः शब्दाः भिन्नद्रव्यसमवेतां जातिमभिदधति तस्यामवगाह्यमानायां तत्सम्बन्धात् द्रव्यमवगम्यते, शुक्लादयः शब्दा गुणसमवेतां जातिमाचक्षते गुणे तत्सम्बन्धात् प्रत्ययः द्रव्यसम्बन्धिसम्बन्धात् संज्ञाशब्दानामुत्पत्तिप्रभृत्या विनाशात् शैशवकौमारयौवनाद्यवस्थादिभेदेऽपि स एवायमित्यभिप्रत्ययबलात् सिद्धा देवदत्तत्वादिजातिरभ्युपगन्तव्या। क्रियास्वपि जातिरास्थीयते सैव धातुवाच्या पचतीत्यादावनुवृत्तप्रत्ययस्य प्रादुर्भावात्। द्रव्यपदार्थवादिव्याडिनये शब्दस्य व्यक्तिरेवाभिधेयतया प्रतिभासते जातिस्तूपलक्षणतयेति नानन्त्यादिदोषावकाशः। पाणिन्याचार्य्यस्योभयं सम्मतं यतो जातिपदार्थमभ्युपगम्य "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" इत्यादिव्यवहारः, द्रव्यपदार्थमङ्गीकृत्य "सरूपाणामेकशेष एकविभक्तौ" इत्यादिः। व्याकरणस्य सर्वपार्षदत्वान्मतद्वयाभ्युपगमे न कश्चिद् विरोधः। तस्मात् अद्वयं सत्यं परं ब्रह्मतत्त्वं सर्वशब्दार्थ इति स्थितम्। तदुक्तम् "तस्माच्छक्तिविभागेन सत्यः सर्वः सदात्मकः। एकोऽर्थः शब्दवाच्यत्वे बहुरूपः प्रकाशते" इति। सत्यस्वरूपमपि हरिणोक्तं सम्बन्धसमुद्देशे "यत्र द्रष्टा च दृश्यञ्च दर्शनञ्चाविकल्पितम्। तस्यैवार्थस्य सत्यत्वमाहुस्त्रय्यन्तवेदिनः" इति। द्रव्यसमुद्देशेऽपि "विकारोपगमे सत्यं सुवर्णं कुण्डले यथा। विकारापगमो यत्र तामाहुः प्रकृतिं पराम्" इति। अभ्युपगताद्वितीयत्वनिर्वाहाय वाच्यवाचकयोरविभागः प्रदर्शितः "वाच्या सा सर्वशब्दानां शब्दाच्च न पृथक् ततः। अपृथक्त्वेऽपि सम्बन्धस्तयोर्नानात्मनोरिव" इति तत्तदुपाधिपरिकल्पितभेदबहुलतया व्यवहारस्याविद्यामात्रकल्पितत्वेन प्रतिनियताकारोपधीयमानरूपभेदं ब्रह्मतत्त्वं सर्वशब्दविषयः अभेदे च पारमार्थिके संवृतिवशाद्व्यवहारदशायां स्वप्नावस्थावदुच्चावचः प्रपञ्चो विवर्त्तत इति कारिकार्थः। तदाहुर्वेदान्तवादनिपुणाः। "यथा स्वप्नप्रपञ्चोऽयं मयि मायाविजृम्भितः। एवं जाग्रत्प्रपञ्चोऽपि मयि मायाविजृम्भितः" इति। तदित्थं कूटस्थे परस्मिन् ब्रह्मणि सच्चिदानन्दरूपे प्रत्यगभिन्नेऽवगते अनाद्यविद्यानिवृत्तौ तादृग्ब्रह्मात्मनावस्थानलक्षणं निःश्रेयसं सेत्स्यति। "शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति" इत्यभियुक्तोक्तेः। तथा च शब्दानुशासनशास्त्रस्य निःश्रेयससाधनत्वं सिद्धम्। तदुक्तम् "तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्। पवित्रं सर्वविद्यानामधिविद्यं प्रचक्षते" इति। तथा "इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्। इयं सा मोक्षमाणानामजिह्मा राजपद्धतिरिति"। तस्माद्व्याकरणशास्त्रं परमपुरुषार्थसाधनतयाध्येतव्यमिति"।

पाणिनिप्रोक्ताष्टाध्यायीरूपस्य व्याकरणत्वम्। तत्तात्पर्यञ्च वाक्यपदीये हरिणा ब्रह्मकाण्डे विस्तरत उक्तं दृश्यम्।

**पाणिनीय** त्रि॰ पाणिनौ भक्तिरस्य छ। १पाणिनिभक्तियुक्ते तेन ज्ञातमुपज्ञातं वा छ। २पाणिनिना ज्ञाते ३तेनोपज्ञाते च। पाणिनिना प्रोक्तम् अण्। ४पाणिना प्रोक्ते त्रि॰ "अकृतव्यूहाः पाणिनीयाः" व्या॰ परिभाषा।

**पाणिन्धम(य)** पाणिं धमति ध्मा—धयति वा धे—वा खश्। १पाणिवादके याने २पाणितापके त्रुष्वबो॰तन्त्रूनं स्त्रम्यम्

**पाणिपाद** न॰ पाणी च पादौ च समाहृतौ समा॰द्व॰। पाण्योः पादयोश्च समाहारे ततः अस्त्यर्थे प्राण्यङ्गत्वात् मतुबेव न ठन्। पाणिपादवत् तद्युते त्रि॰कौ॰।

**पाणिपीड़न** न॰ पाणिः पीड्यते अत्र पीड-आधारे ल्युट्। १विवाहे अमरः। हृत॰। २अन्योन्यं पाण्योर्मर्द्दने च।

**पाणिबन्ध** पु० पाणिर्बध्यतेऽत्र बन्ध—आधारे घञ्। विवाहे भा०आ० २९७अ०।

**पाणिभुज्** पु० पाणिरिव भुज्यते मोट्यते भुज—मोटने क्विप्। १उदुम्बरवृक्षे। पाणिना भुङ्क्ते भुज—क्विप्। २हस्तेन भोजके त्रि० शब्दच०।

**पाणिमर्द्द** पु० पाणिं मृद्नाति मृद—अण् उप०स०। १करमर्द्दे राजनि०। २करमर्द्दकमात्रे त्रि०। [अस्त्रे हेमा०।

**पाणिमुक्त** न० पाणिभ्यां मुक्तम्। हस्तक्षिप्यमाणे आयुधे

**पाणिमुख** पु० पाणिर्भिर्प्रपाणिरेव मुखमिव होमस्थानं यस्य। पितरि। "अग्निमुखा वै देवाः पाणिमुखाः पितरः इति ब्राह्मणम्" आश्व०श्रौ०४।८।६ "देवानामग्निमुखत्वादग्नौ होमः पितॄणां पाणिमुखत्वात् पाणौ होमः" नारा०। होमवाचाग्नौकरणाङ्गहोमः पाणिहोमशब्दे दृश्यः।

**पाणिरुह** पु० पाणौ रोहति रुह—क। नखे राजनि०

**पाणिवाद** पु० पाणिं पाणिना मृदङ्गादिकं वा वादयति वद—णिच्—अण्। १हस्ततालके २हस्तेन मृदङ्गादिवादके च अमरः ण्वुल्। पाणिवादक तत्रार्थे त्रि० हेमच०। [कृतम्। रज्ज्वाम् त्रि०कौ०।

**पाणिसर्ग्या** स्त्री पाणिभ्यां सृज्यतेऽसौ सृज—कर्मणि यत्

**पाणिस्वनिक** त्रि० पाणिस्वनः प्रयोजनमस्य ठक्। हस्तताडनादायके पाणिवादके भा०द्रो० ८२अ०।

**पाणीतक** पु० कुमारानुचरमातृभेदे भा०श० ४६अ०।

**पाणिहोम** पु० ७त०। पात्रब्राह्मणानां पाणौ कर्त्तव्ये होमे "उद्धृत्य घृताक्तमन्नमनुज्ञापयत्यग्नौ करिष्ये करवै करवाणीति" इत्युपक्रमे "अभ्यनुज्ञायां पाणिष्वेव वा" आश्व०गृ०४।८।५सू० "अभ्यनुज्ञायामिति यदि ब्राह्मणाः पाणिषु होममभ्यनुजानन्ति अग्निकार्यकरणं यदि पाणिषु सेवामभ्युपगच्छन्तीत्यर्थः। तथा सति पाणिषु जुहोति। ताभ्यामेव मन्त्राभ्यां पाणिषु जुहुयात्। ब्राह्मणाः पित्रादित्रयार्थम् उपविष्टास्तेषां सर्वेषां पाणिषु जुहोतीति वचनात्, मन्त्रौ च द्वौ तत्रार्थाटेकैकाम् आहुतिं विभज्य विभज्य सर्वेषां दक्षिणपाणिषु जुहोति" नारा०। कुशब्राह्मणपक्षे जले एव च होमो विधेयः "अन्यभावे तु विप्रस्य पाणावेव जलेऽपि वा" मत्स्यपु० वाक्यात् एतयोः पक्षयोरपि अनूहेनैव अग्नौ करिष्ये" इत्येवानुज्ञाप्रश्नो भा०त० रघु०।

**पाणीकरण** न० पाणौ क्रियतेऽनेन कृ—आधारे ल्युट् अलुक्स०। विवाहे जटाध०।

**पाण्ड** त्रि० पण्डएव स्वार्थे अण्। पण्डे स्त्रियां गौरा० पाठात् ङीपं बाधित्वा ङीष् स्वरे भेदः।

**पाण्डर** पु० पडि—अर दीर्घश्च। १मरुवकवृक्षे २श्वेतवर्णे च ३तद्वति त्रि० अमरः। ४कुन्दपुष्पे ५गैरिके च न० शब्दच०

**पाण्डरपुष्पिका** स्त्री पाण्डरं पुष्पमस्याः कप् कापि अत इत्त्वम्। शीतलावृक्षे शब्दच०।

**पाण्डव** पु० पाण्डोरपत्यम् अण्। पाण्डुपत्न्याः क्षेत्रजे धर्मादिभ्योजाते युधिष्ठिरादौ "यः स कौरव्यदायादः पाण्डुर्नाम नराधिपः। कामभोगान् परित्यज्य शतशृङ्गमितो गतः। ब्रह्मचर्य्यव्रतस्यास्य तस्य दिव्येन हेतुना। साक्षाद्धर्मादयं पुत्रस्तत्र जातो युधिष्ठिरः। तथैवं बलिनां श्रेष्ठं तस्य राज्ञो महात्मनः। मातरिश्वा ददौ पुत्रं भीमं नाम महाबलम्। पुरुहूतादयं जज्ञे कुन्त्यामेव धनञ्जयः। यस्य कीर्त्तिर्महेष्वासान् सर्वानभिभविष्यति। यौ तु माद्री महेष्वासावसूत पुरुषोत्तमौ। अश्विभ्यां पुरुषव्याघ्राविमौ तावपि पश्यत" भा०आ० १२६अ०। [अभीलोयतः। श्रीकृष्णे त्रिका०।

**पाण्डवाभील** पु० अभीः अभयं ता लाति ला—क। पाण्डवः

**पाण्डवायन** पु० पाण्डवानामयनं रक्षणादिकं यतः। श्रीकृष्णे ६त०। तत्रार्थे न०। [सम्बन्धिनि।

**पाण्डवीय** त्रि० पाण्डवस्येदम् "वृद्धाच्छः" पा०छ। पाण्डव

**पाण्डवेय** पु० पाण्डोरियम् अञ् ङीप् पाण्डवी कुन्ती माद्री च तयोरपत्यम् ढक्। पाण्डुपत्नीपुत्रेषु युधिष्ठिरादिषु भा०आ० १अ०। तेषां क्षेत्रजत्वात् मातृद्वारेण कीर्त्तनम्।

**पाण्डार** पुंस्त्री० पण्डस्यापत्यम् आरक्। पण्डस्यापत्ये त्रि० कौ०। [१पण्डितभावे २तत्कर्मणि च न०।

**पाण्डित्य** न० पण्डितस्य भावः कर्म वा दृढादि० पक्षे ष्यञ्।

**पाण्डु** पु० पडि—कु नि० दीर्घः। "सितपीतसमायुक्तः पाण्डुवर्णः प्रकीर्त्तितः" १शुभ्रयुक्ते "पाण्डुस्तु पीतभागार्द्धः केतकीधूलिसन्निभः" इत्युक्ते च २वर्णभेदे ३तद्वति त्रि०। स्त्रियामुदन्तगुणवचनत्वेऽपि न ङीप् पाण्डुशब्दपर्युदासात्। ४सितवर्णे शब्दरत्ना० ५तद्वति त्रि० सान्तनुपुत्रविचित्रवीर्य्यस्य क्षेत्रे व्यासेनोत्पादिते ६नृपभेदे ७नागभेदे ८गजभेदे ९रोगभेदे च शब्दर०। १०पाण्डुरफलीक्षुपे ११पटोले च राजनि०। १२देशभेदे पु० पाण्डुनृपोत्पत्तिकथा भा०आ०१०६अ० तद्वर्णता-कारणञ्च उक्तं यथा ततस्तेनैव विधिना महर्षिस्तामविन्दत। अम्बालिकामथाभ्यागादृषिं दृष्ट्वा च सापि

नम्। विवर्णा पाण्डुवर्णाभा समपद्यत भारत !" इत्युपक्रमे "यस्मात् पाण्डुत्वमापन्ना विरूपं प्रेक्ष्य मामिह। तस्मादेष सुतस्ते वै पाण्डुरेव भविष्यति। नाम तस्य तदेवेह भविष्यति शुभानने"। तस्य दिग्विजयादिकथा तदुत्तराध्यायेषु दृश्या। पाण्डुरोगभेदे निदानादिकं भावप्र० उक्तं यथा "पाण्डुरोगाः स्मृताः पञ्च वातपित्तकफैस्त्रयः। चतुर्थः सन्निपातेन पञ्चमो भक्षणान्मृदः" पञ्चमो भक्षणात् मृद इति ननु मृत्तिकापि दूषितवातादिदोषद्वारेणैव पाण्डुरोगं जनयतीति मृद्भक्षणजः पाण्डुरोगो दोषजादभिन्न एव कथं पञ्चम इति उच्यते अपरकारणकुपिता वातादयोऽन्यानपि रोगान् कुर्वन्ति। मृत्तिकाभक्षणात् कुपितास्तु वातादयो विशेषतः पाण्डुरोगमेव जनयन्त्येवेति विशेषात् चिकित्साविशेषाच्च पञ्चमः चरकेणोक्तः। तच्चिकित्सापरकारणकुपितदोषजनितपाण्डुरोगचिकित्सा भवतीति सुश्रुतेन मृत्तिकाजः पृथक् न पठितः। अथ विप्रकृष्टनिदानपूर्विकां सम्प्राप्तिमाह "व्यवायमम्लं लवणानि मद्यं मृदं दिवास्वप्नमतीव तीक्ष्णम्। निषेवमाणस्य विदूष्य रक्तं दोषास्त्वचं पाण्डुरतां नयन्ति" तीक्ष्णं राजिकादि। अथ पूर्वरूपमाह "त्वक्स्फोटनिष्ठीवनगात्रसादमृद्भक्षणप्रेक्षणकूटशोथाः। विण्मूत्रपीतत्वमथाविपाको भविष्यतस्तस्य पुरःसराणि" प्रेक्षणकूटशोथः इति अक्षिगोलकशोथः। अथ वातिकस्य पाण्डुरोगस्य लक्षणमाह "त्वङ्मूत्रनयनादीनां रूक्षकृष्णारुणाभता। वातपाण्ड्वामये कम्पतोदानाहभ्रमादयः"। कृष्णारुणाभता पाण्डुत्वं नातिक्रामति। अतएव सुश्रुते "सर्वेषु चैतेष्वपि पाण्डुभावो यतोऽधिकोऽतः खलु पाण्डुरोगः" इति। भ्रमादय इत्यादिशब्दात् भेदशूलादयः। अथ पैत्तिकस्य लक्षणमाह "पीतत्वङ्नखविण्मूत्रदाहतृष्णाज्वरान्वितः। भिन्नविट्कोऽतिपीताभः पित्तपाण्ड्वामये नरः"। भिन्नविट्कः सद्रवमलः। अथ श्लैष्मिकस्य लक्षणमाह "कफप्रसेकः श्वयथुः तन्द्रालस्यातिगौरवैः। पाण्डुरोगी कफात् शुक्लैस्त्वङ्मूत्रनयनाननैः"। अत्रोपलक्षणे तृतीया। सान्निपातिकस्य लक्षणमाह "सर्वान्नसेविनः सर्वे दुष्टा दोषास्त्रिदोषजम्। त्रिदोषलिङ्गं कुर्वन्ति पाण्डुरोगं सुदुःसहम्"। अथ मृज्जस्य सम्प्राप्तिमाह "मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः। कषाया मारुतं, पित्तमूषरा, मधुरा कफम्। कोपयेन्मृद्रसादींश्च रौक्ष्याद्भुक्तञ्च रूक्षयेत्। पूरयत्यविपक्वैव स्रोतांसि निरुणद्ध्यपि। इन्द्रियाणां बलं हत्वा तेजो वीर्य्यौजसी तथा। पाण्डुरोगं करोत्याशु बलवर्णाग्निनाशनम्"। स्रोतांसि शिरामुखानि। तेजो दीप्तिः ओजः सर्वधातुरसः। अथ मृज्जस्य लक्षणमाह "मृद्भक्षणाद्भवेत्पाण्डुस्तन्द्रालस्यनिपीडितः। सकासश्वासशूलार्त्तः सदाऽरुचिसमन्वितः। शूनाक्षिकूटगण्डभ्रूः शूनपान्नाभिमेहनः। क्रिमिकोष्ठोऽतिसार्य्येत मलं सासृक्कफान्वितम्"। क्रिमिकोष्ठः उदराभ्यन्तरस्थक्रिमिर्भवेदित्यनेन सम्बध्यते अतिसार्य्येत मलमिति कर्मकर्त्तरि तत्कर्मवत् मन्तव्यम्। तस्मिन् कर्मण्यर्थेऽत्र यक्प्रत्ययः। अथ साध्यस्य लक्षणमाह "ज्वरारोचकहृल्लासच्छर्दितृष्णाक्लमान्वितः। पाण्डुरोगी त्रिभिर्दोषैस्त्याज्यः क्षीणो हतेन्द्रियः। पाण्डुरोगाच्चिरोत्पन्नः खरीभूतो न सिध्यति। कालप्रकर्षात् शूनाङ्गो यो वा पीतानि पश्यति" खरीभूतः अतिरूक्षितः सर्वभावः "बद्धाल्पविट् सहरितं सकफं योऽतिसार्य्यते। दीनः श्वेतातिदिग्धाङ्गः छर्दिमूर्च्छातृषान्वितः। पाण्डुदन्तनखो यस्तु पाण्डुनेत्रश्च यो भवेत्। पाण्डुसङ्घातदर्शी च पाण्डुरोगी विनश्यति"। पाण्डुसङ्घातदर्शी पीतवर्णस्य राशिं पश्यति। "अन्तेषु शूनं परिहीनमध्यं म्लानं तथान्तेषु च मध्यशूनम्। गुदे मुखे शेफसि मुष्कयोश्च शूनं प्रताम्यन्तमसंज्ञकल्पम्"। "उरभ्रे निहते चैव पाण्डुरोगः प्रजायते" शाता० मेषवधकर्मणोविपाकत्वेन उक्तः। १२भाषपर्य्याम् (माषाणी) स्त्री राजनि०। पाण्डोरपत्यम् "ओरञ्" पा० अञ्। पाण्डव पाण्डोरपत्ये युधिष्ठिरादौ। पाण्डोः जनपदभेदस्य राजा "पाण्डोर्ड्यन्" वार्त्ति० ड्यन्। पाण्ड्यदेशन्वये रघु० ४।८२। स्वार्थे क पाण्डुक तत्रार्थे ततः अस्त्यर्थे इनि पाण्डुकिन् तद्रोगयुते त्रि०। संज्ञायां कन्। पाण्डुक धान्यभेदे सुश्रुतः। तत्र पृषो० दीर्घमध्यः पाण्डूक तत्रार्थे पड्कुशब्दे २४८२पृ० सुश्रुतवाक्यं दृश्यम्। पाण्डुकस्य वृद्धिः क्षीरिकादिश्या भवतीत्युक्तं इ०स० २८अ०।

पाण्डुकण्टक पु० पाण्डुवर्णानि कण्टकानि यस्य। अपामार्गे राजनि० पाण्डुरोगस्य नाशकत्वाद्वा तस्य तथात्वम्।

पाण्डुकम्बल पु० पाण्डुवर्णः कम्बलः नित्यक०।

१राजास्तरणे कम्बलभेदे (शाल) सि०कौ०। २प्रस्तरभेदे मेदि० ततः "पाण्डुकम्बलादिनिः" पा० मत्वर्थे इनि। पाण्डुकम्बलिन् तद्युक्ते। तत्र इनिग्रहणमणो-निवृत्त्यर्थमिति सि०कौ०।

**पाण्डुकर्म्मन्** न० ६त०। शुक्लवर्णसम्पादने सुश्रुतोक्ते व्रणस्य उपक्रमभेदे चिकित्साभेदे। पाण्डुकरणमप्यत्र कृष्णकर्मशुक्लकर्मणी तु षष्प्रकारे तत्रोक्ते यथा "भल्लातकान् वासयेत्तु क्षीरे प्राङ्मूत्रभावितान्। ततो द्विधा छेदयित्वा लौहे कुम्भे निधापयेत्। कुम्भेऽन्यस्मिंश्चिवान्येत तं कुम्भमथ योजयेत्। सुखं सुखेन सन्धाय गोमयैर्दाहयेत्ततः। यः स्नेहश्च्यवते तस्मादुद्धाहयेत्तं शनैर्भिषक्। ग्राम्यानूपप्रफान्दग्ध्वान् खुरश्चूर्णानि कारयेत्। तैलेनानेन संसृष्टं शुक्लमालेपयेद्व्रणम्। भल्लातकविधानेन सारस्नेहांस्तु कारयेत्। ये च केचित्फलस्नेहविधानं तेषु कीर्त्तितम्। दुरूढत्वात्तु कृष्णानां पाण्डुकर्म हितं भवेत्। सप्तरात्रं स्थितं क्षीरे छागले रोहिणीफलम्। तेनैव पिष्टं सुश्लक्ष्णं सवर्णकरणं हितम्"।

**पाण्डुतरु** पु० कर्म०। धवहक्षे राजनि०।

**पाण्डुतीर्थ** न० तीर्थभेदे शिवपुराणम्।

**पाण्डुनाग** पु० नाग इव पाण्डुः राजद०। १पुन्नागहक्षे २श्वेतहस्तिनि ३श्वेतसर्पे च शब्दरत्ना०।

**पाण्डुपत्नी** स्त्री पाण्डु पत्रं यस्याः जातित्वात् ङीप्। रेणुकानामद्रव्ये राजनिः। [त्रिका०।

**पाण्डुपृष्ठ** त्रि० पाण्डु पृष्ठं यस्य। दुर्लक्षणपत्नेतत्पृष्ठयुक्ते

**पाण्डुफल** पु० पाण्डूनि फलान्यस्य। १पटोले २चिर्भट्यां स्त्री राजनि०।

**पाण्डुभूम** त्रि० पाण्डुः भूमिरत्र अच्समा०। १पाण्डुवर्णभूमियुक्ते कर्मधारये अच्समा०नेष्यते। २श्वेतमृत्तिकायां ३खटिकायाम् च स्त्री हेमच० "पाण्डूदकलवणतो भूमिः पाण्डूदकलवणमृत्तिकाः" हेमचन्द्रोक्तेः। अन्ये तु तत्रापि अच्समा०। सा च तत्रार्थे स्त्रीति भेदः।

**पाण्डुमृत्तिका** स्त्री नित्यक०। खटिकायाम् हेमच०। पाण्डुमृदादयोऽप्यत्र स्त्री।

**पाण्डुर** पु० पाण्डुर्वर्णोऽस्यास्ति र। १श्वेतपीतमिश्रिते वर्णे अमरः २तद्वति त्रि०। पडि—उर पृषो० हस्विः। ३श्वेतवर्णे ४तद्वति च हला०। ५कामलाख्ये रोगे ६श्वित्ररोगे न० शब्दरत्ना०। ७माषपर्ण्यां स्त्री टाप् राजनि०।

**पाण्डुरङ्ग** पु० पाण्डुरमङ्गमस्य शक०। (पाटराङ्गा) शाके "पाण्डुरङ्गः क्रमिश्लेष्मपित्तजित् वपुतिक्तकः" राजवल्लभः

**पाण्डुरद्रुम** पु० नित्यक०। कुटजहक्षे (कुडची) त्रिका०।

**पाण्डुरपृष्ठ** त्रि० पाण्डुरं पृष्ठमस्य। दुर्लक्षणरूपपाण्डुरपृष्ठयुते हेमच०।

**पाण्डुरफली** स्त्री पाण्डुरं फलमस्या रः ङीप्। क्षुद्रक्षुपभेदे। "कफवातदोषपित्तानां मूत्रघातस्य नाशिनी। बल्या हृद्या च पाण्डुरफली तु शिशिरा तथा" राजनि०

**पाण्डुराग** पु०० पाण्डू रागोऽस्य। दमनकहक्षे राजनि०।

**पाण्डुरेतु** पु० नित्यकर्म०। श्वेतक्षौ राजनि०।

**पाण्डुलेख** पु०(सुशविदा) ख्याते पूर्वपक्षादिलेखनभेदे पाण्डुलेख्यादयोऽप्यत्र। तत्प्रकारादि वीरमि० उक्तो यथा "अयञ्च पक्षः प्राक्पाण्डुलेख्यं भूमिफलकादौ कारयित्वा शोधितः पश्चात्पत्रे लेखनीयः तथा च बृहस्पतिः "अधिकान् शातयेदर्थान् न्यूनांश्च परिपूरयेत्। भूमौ निवेशयेत्तावद्यावदर्थो विनिश्चितः" शातयेदुद्धयेत् भूमाविति पाण्डुलेखस्योक्ताधारोपलक्षणम्। अतएवाह स एव "पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत्। पाण्डुलेखेन फलके ततः पत्रे विशोधितम्" इति। स्वभावोक्तम् भयाद्युपाधिनोक्तम्। व्यासोऽपि "पाण्डुलेखेन फलके भूमौ वा प्रथमं लिखेत्। ऊनाधिकन्तु संशोध्य पश्चात्पत्रे निवेशयेत्"। शोधनञ्चोत्तरदानावधि विधेयम् न ततःपरमनवस्थापत्तेरदृष्टार्थताबाधाच्च। तथा च नारदः "शोधयेत्पूर्ववादन्तु यावन्नोत्तरदर्शनम्। अवष्टब्धस्योत्तरेण निवृत्तं शोधनम्भवेत्" अवष्टब्धस्योत्तरयोग्यस्य। यस्त्वर्थ्यं प्रगल्भत्वात् पक्षदोषगुणहानादानाभ्यां शोधयितुमशक्तस्तस्य वक्तव्यार्थं निर्धार्य सभ्यैरेव संशोधनीयः। यथाह बृहस्पतिः "अभियोक्ताऽप्रगल्भत्वाद्वक्तुं नोत्सहते यदा। सभ्यैस्तु शोधनं तस्य कार्य्यमर्थाद्रूपतः" इति। यदि भाषामशोधयित्वैवोत्तरन्दापयन्ति सभ्यास्तदा रागाल्लोभाद्भयाद्वापील्याद्युक्तदण्डेन सभ्यान् दण्डयित्वा पुनः प्रतिज्ञालेखनपूर्वकं व्यवहारः प्रवर्त्तनीयो राज्ञेति तात्पर्य्यम्। यदा त्वर्थिप्रत्यर्थिनोर्लेखनापाटवाद्राजकीयलेखकद्वारा तौ भाषोत्तरे लेखयतः। स चान्यतरपक्षपातेनान्यथा लिखत्यन्यत् च राज्ञा चौरवद्दण्ड्य इत्याह कात्यायनः "अन्यदुक्तं लिखेदन्यद्योऽर्थिप्रत्यर्थिनां वचः। चौरवच्छासयेत्तन्तु धार्मिकः पृथिवीपतिः" इति।

**पाण्डुलोमशा** स्त्री पाण्डूनि लोमानीवाङ्गानि सन्ति यस्याः श । १माषपर्ण्याम् । २श्वेतलोमवति त्रि० रत्नमा० । पाण्डुलोमाऽप्यत्र जटा० । [ रोगे गरुडपु० १८२ अ० ।

**पाण्डुशर्करा** स्त्री पाण्डुवर्णा शर्करा । सितानामकप्रमेह-

**पाण्डुशर्म्मिला** स्त्री द्रौपद्यां त्रिका० ।

**पाण्डुसोपाक** पु० सङ्कीर्णजातिभेदे "चाण्डालात्पाण्डुसोपाकस्त्वक्सारव्यवहारवान् । आहिण्डिको निषादेन वैदेह्यामेव जायते" मनुः। त्वक्सारः वेणुः ।

**पाण्ड्य** पु० पाण्डुः देशोऽभिजनोऽस्य तस्य राजा वा अण् । १तद्देशवासिनि २पाण्डुदेशनृपे च । स च देशः वृ०सं० १४ अ० मध्यमे भागे उक्तः । दक्षिणदिक्स्थश्च । "दिशि मन्दायते तेजः दक्षिणस्यां रवेरपि । तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे" रघुः ।

**पाण्ड्यवाट** पु० पाण्डुदेशस्थे मुक्तानामाकरभेदे वृ०सं० ८१ अ० । मुक्ताशब्दे दृश्यम् ।

**पात** पु० पातयति ग्रहमुत्तरां दक्षिणां वा पाति—अच् । रविभिन्नग्रहाणां दक्षिणोत्तराकर्षके चक्राद्यरूपे कालमूर्त्तिरूपे सू०सि० उक्ते भचक्रस्थिते १जीवभेदे तदधिष्ठातृदेवे २राहौ च । पातस्य तथात्वमुक्तशब्दे सू०सि० वाक्ये दर्शितम् । तत्र ग्रहाणां दक्षिणोत्तराकर्षकत्वं च तत्रोक्तं यथा "दक्षिणोत्तरतोऽप्येवं पातो राहुः स्वरंहसा । विक्षिपत्येष विक्षेपं चन्द्रादीनामपक्रमात्" सू०सि० "चन्द्रादीनां विरविग्रहाणामपक्रमात् क्रान्तिवृत्तस्थस्पष्टग्रहभोगस्थानाद्दक्षिणोत्तरतो दक्षिणस्यामुत्तरस्यां वा दिशि । अपिशब्दः पूर्वापराभ्यां समुच्चयार्थकः । एष गणितागतः पातः पातराश्यादिभोगस्थानम् । अत्राप्यपिशब्द उक्तेन समुच्चयार्थकोऽन्वेति । यथोक्तेन पूर्वापरयोः फलान्तरं भवति तथेत्यर्थः । विक्षेपं विक्षेपणं स्वरंहसात्मवेगेन विक्षिपति करोति । विशिष्टवाचकानां पदानां विशेषणवाचकपदसमवधाने विशेषणमात्रार्थत्वात् चन्द्रादीन् विक्षिपतीति तात्पर्यार्थः । नन्वनेन स्वाधिष्ठितजीवद्वारा ग्रहाकर्षणं क्रियते तथा पातेनाचेतनत्वाद्वेगाभावेन ग्रहविक्षेपणं कर्त्तुमशक्यमित्यत आह राहुरिति । पातस्थानाधिष्ठात्री देवता राहुर्जीवविशेषश्चन्द्रपातस्तु दैत्यविशेषो राहुः । रहति त्यजति ग्रहमिति राहुरिति व्युत्पत्तेः । अथैतद्विशदयति" रङ्ग० "उत्तराभिमुखं पातो विक्षिपत्यपरार्द्धगः । ग्रहं प्राग्भगणार्द्धस्थो याम्यायामपकर्षति" सू०सि० "अपरार्द्धगो ग्रहस्थानात् पश्चिमविभागस्थितभगणार्द्धात्मकराशिषट्कस्थितो राहुर्ग्रहबिम्बं स्वराश्यादिभोगस्थानीयप्रदेशादुत्तरदिगभिमुखं विक्षिपति विक्षेपान्तरेण त्यजति । प्राग्भगणार्द्धस्थः ग्रहस्थानात् पूर्वविभागस्थितराशिषट्कमध्यस्थितो दक्षिणस्यां दिश्यपकर्षति विक्षिपति । अथ बुधशुक्रयोर्विशेषमाह" रङ्ग० "बुधभार्गवयोः शीघ्रात् तद्वत् पातो यदा स्थितः । तच्छीघ्राकर्षणात् तौ तु विक्षिप्येते यथोक्तवत्" सू०सि० "बुधशुक्रयोः शीघ्रोच्चात्तत्त्वाभिप्रायेणैकवचनम् । तद्वत् परार्द्धपूर्वार्द्धभगणार्द्धमध्ये यदा तत्काले स्थितस्तदाकारात् यत्काले पाताभ्यामित्यर्थः । तौ बुधशुक्रौ यथोक्तवत् पूर्वार्द्धपरार्द्धक्रमेण दक्षिणोत्तरयोर्विक्षिप्येते विक्षेपान्तरेण त्यज्येते । तथा हि स्वशीघ्रोच्चाद्बुधशुक्रयोर्यदन्तरं राश्यात्मकं तद्वत् पातस्तेनान्तरेण युक्तः पूर्वानीतपात इत्यर्थः । यथा बुधशुक्रयोरपरपूर्वार्द्धक्रमेण स्थितोऽवस्थितस्तदाकारात् तथेत्यर्थः । तच्छीघ्राकर्षणात् तादृशपाताभ्यां शीघ्रं वेगेनाकर्षणं तस्मात् पातस्थानाधिष्ठातृदेवताभ्यां स्वस्वस्थितग्रहसम्बन्धवायुसूत्रस्यातिवेगाकर्षणरचनादित्यर्थः । तौ बुधशुक्रावुक्तवदुत्तरदक्षिणक्रमेण विक्षिप्येते । अत्र पातशब्देन चक्रशोधितपातो बोध्यः । अन्यथा ग्रहेण शीघ्रोच्चरूपकेन्द्रयोजनस्योपपत्तिसिद्धत्वेन शीघ्रोच्चोनग्रहरूपकेन्द्रयोजनोक्त्यनुपपत्तेः । तथा च सर्वग्रहसाधारणं विक्षेपकथनं पातभेददर्शनार्थं बुधशुक्रयोः पृथगुक्तम् । न ह्यन्यथाऽत्र पत्र उक्तयोर्विक्षेपणं प्रतीयते येन प्रागुक्तसर्वविक्षेपासङ्गतं शङ्कनीयम् । पातभेदोक्तिकारणं च "ये चात्र पातभगणाः कथिता ज्ञभृग्वोः ते शीघ्रकेन्द्रभगणैरधिका यतः स्युः । स्वल्पाः स्वसाधनदिताश्चलकेन्द्रयुक्तौ पातौ तयोः पठितचक्रभवौ विधेयौ" इति भास्कराचार्य्योक्तमिति दिक्" रङ्ग० ।

अत्रेदं बोध्यं रवेः स्वतएव दक्षिणोत्तरयोर्गमनसम्भवात् नास्य पातेन विक्षेपणमित्येतेति विरविग्रहाणामित्युक्तम् । तत्र युगे चन्द्रपातभगणाः "चन्द्रोच्चस्याग्निशून्याश्विवसुसर्पार्णवा युगे । वामं पातस्य वस्वग्नियमाश्विशिखिदस्रकाः" सू०सि० "चन्द्रमन्दोच्चस्य पूर्वगतेरंशग्रहरूपस्य भगणा महायुगे रामनखाष्टाष्टवेदमिताः । पातस्य चन्द्रशब्दस्य सन्निहितत्वाच्चन्द्रपातस्यांशग्रहरूपस्य वामं पश्चिमगत्या द्वादशराशिभोगात्मकपरिवर्त्तरूपभगणा महायुगे वसु-

रामाङ्कतिरामद्विमिताः। अत्र युगपठ्यं वक्ष्यमाणचन्द्रोच्चपातभगणसम्बन्धिकल्पवालवारणार्थम्। चन्द्रोच्चपातभगणास्तु युगे युगे नोत्पन्ना इत्यस्मिन् युगसम्बन्धिप्रसङ्गे नोक्ताः" रङ्ग०। कल्पे भौमादिपातानां भगणास्तु तत्रोक्ता यथा "पातानामथ वामतः" इत्युपक्रमे "अथानन्तरं पातानां भौमादिपातानां वामतः पश्चिमगत्या भगणा उच्यन्त इति शेषः। तान् श्लोकाभ्यामाह" रङ्ग० "मनुदस्रास्तु कौजस्य, बौधस्याष्टाष्टसागराः। कृताद्रिचन्द्रा जैवस्य त्रिखाङ्काश्च भृगोस्तथा। शनिपातस्य भगणाः कल्पे यमरसर्तवः। भगणाः पूर्वमेवात्र प्रोक्ताश्चन्द्रोच्चपातयोः" सू०सि० "कौजस्य कुजसम्बन्धिनः। तुकारात् पातस्य भौमपातस्य कल्पे भगणाश्चतुर्दशाधिकं शतद्वयम्। बौधस्य बुधसम्बन्धिनः शनिपातस्येत्यस्यैकदेशपातस्येत्यस्यान्वेति। बुधपातस्य द्वादशोना पञ्चशती। जैवस्य गुरुपातस्य चतुःसप्तत्यधिकं शतम्। भृगोः शुक्रस्य तथा सम्बन्धिनश्चकारात्पातस्य शुक्रपातस्येत्यर्थः। त्र्यधिका नवशती। शनिपातस्य द्विरसषट्का भगणाः कल्पे भवन्ति। नन्वस्मिन् प्रसङ्गे चन्द्रोच्चपातयोर्भगणाः कथं नोक्ता इति मन्दाशङ्कापाकरणाय पूर्वोक्तं स्मारयति भगणा इति। चन्द्रोच्चपातयोश्चन्द्रस्य मन्दोच्चपातयोर्भगणा अत्रास्मिन्नधिकारे पूर्वं ग्रहयुगभगणकथने उक्ताः" रङ्ग०। पतति चन्द्रार्कयोः क्रान्तिसाम्येन उत्ति-ष्ठति पत–ज्वला०कर्त्तरि ण। सूर्यसिद्धान्तोक्ते चन्द्रार्कयोः क्रान्तिसाम्येनाशुभसूचके महापातरूपे २वह्निभेदे तथा हि "तत्र भेदद्वयात्मकपातस्य सम्भवं विवक्षुः प्रथमं वैधृतसंज्ञपातस्य सम्भवमाह" रङ्ग० "एकायनगतौ स्यातां सूर्याचन्द्रमसौ यदा। तद्युतौ मण्डले क्रान्त्योस्तुल्यत्वे वैधृताभिधः" सू० सि०। सूर्याचन्द्रौ "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदिति" श्रुत्युक्तप्रयोगः। एकायनगतौ अभिन्नदक्षिणोत्तरान्यतरायनस्थौ भवतस्तत्र यदा यस्मिन् काले तद्युतौ सूर्यचन्द्रयोर्भांशयोर्योगे मण्डले द्वादशराशिमिते सति तदा तयोः क्रान्त्योः समत्वे महापातरूपे वैधृतसंज्ञः पातो भवति। अथ व्यतीपातसंज्ञपातस्य सम्भवमाह" रङ्ग० "विपरीतायनगतौ चन्द्रार्कौ क्रान्तिलिप्तिकाः। समास्तदा व्यतीपातो भगणार्धे तयोर्युतौ" सू०सि० "चन्द्रार्कौ विपरीतायनगतौ भिन्नायनस्थौ भवतस्तत्र यदा तयोः सूर्यचन्द्रयोर्भांशयोर्योगे भगणार्द्धे राशिषट्के सति तयोः क्रान्तिकलास्तुल्या भवन्ति तदा तस्मिन् काले व्यतीपातसंज्ञकः पातो भवति" "ननु क्रान्त्योः साम्ये कथं पातो भवतीत्यत आह" रङ्ग०। "तुल्यांशुजालसम्पर्कात् तयोस्तु प्रवहाहतः। तद्दृक्क्रोधभवो वह्निर्लोकाभावाय जायते" सू० सि०। "तयोश्चन्द्रसूर्ययोः। तुकारात् क्रान्तिसाम्यकालिकयोः। तुल्यांशुजालसम्पर्कात् समकिरणानां जालं समूहस्तयोरन्योन्याभिमुखयोः सम्पर्कात् एकीभावापन्नत्वात् तद्दृक्क्रोधभवः सूर्यचन्द्रयोरन्योन्याभिमुखयोर्दृक्क्रोधो बिम्बकेन्द्रयोर्दृग्रूपो क्रोधः परस्पराभिमुखेन दीप्त्याधिक्यं तदुत्पन्नोऽग्निः। प्रवहाहतः प्रवहवायुप्रज्वलितः लोकाभावाय जनानामशुभफलाय जायते। अथायं वह्निर्व्यतीपाताख्यो वैधृताख्यो वेत्यत आह" रङ्गना०। "विनाशयति पातोऽस्मिन् लोकानामसकृद्यतः। व्यतीपातः प्रसिद्धोऽयं संज्ञाभेदेन वैधृतिः" सू० सि०। "अस्मिन् क्रान्तिसाम्यकाले प्रसिद्धः पूर्वश्लोकोक्तस्वरूपः पातो वह्निः, यतः कारणात् असकृत् सम्भवेन वारं वारम् लोकानां विनाशयति। नाशं करोति। अतः कारणादयं वह्निर्व्यतीपातसंज्ञोऽयमेवाग्निः संज्ञाभेदेन नामान्तरेण वैधृतिसंज्ञः। तथा चोभयत्र पाताख्यो वह्निर्भवतीति भावः। अथ तत्स्वरूपमाह" रङ्गना०। "स कृष्णो दारुणवपुर्लोहिताक्षो महोदरः। सर्वानिष्टकरो रौद्रो भूयो भूयः प्रजायते" सू० सि०। "स क्रान्तिसाम्यकालोत्पन्न उभयसंज्ञकः पाताख्योऽग्निपुरुषः कृष्णः श्यामः, दारुणवपुः कठिनशरीरः, लोहिताक्ष आरक्तनेत्रः, महोदरः पृथूदरः। अतएव सर्वानिष्टकरः सर्वलोकानामशुभकारकः, रौद्रः भयकारकः, भूयोभूयोऽनेकवारम् प्रजायते। प्रत्येकं क्रान्तिसाम्यकाल उत्पन्नो भवतीत्यर्थः" रङ्गना०।

उपयमशब्दे १२६५ पृ० तद्भेदादिकं दृश्यम् भावे घञ्। सि०शि०टी०उक्ते ४प्रतिमण्डलविमण्डलयोः संपाते मेलने च "पातो नाम प्रतिमण्डलविमण्डलयोः संपातः। यस्मादारभ्य विक्षेपप्रवृत्तिः। इह सुसरलवंशशलाकया कक्षामण्डलं तत्प्रतिमण्डलं च छेद्यकोक्तविधिना विरचय्य तत्र शीघ्रप्रतिमण्डले मेषादेः प्रतिलोमं पातस्थानं च चिह्नयित्वा तत्र विमण्डलं निवेशयम्। पातचिह्नाद्राशिषट्कान्तरे विमण्डलप्रतिमण्डलयोरन्यं संपातं कृत्वा पातात् पूर्वतस्त्रिभेऽन्तरे पठितविक्षेपप्रमाणेन

प्रतिमण्डलादुत्तरतो विमण्डलं केनचिदाधारेण स्थिरं कृत्वा मेषादेरनुलोमं मन्दस्फुटं यहं प्रतिमण्डले विमण्डले च दत्त्वा विक्षेपोपपत्तिं दर्शयेत्। तत्र तयोर्यद्द्वयोर्यावान् विप्रकर्षस्तावांस्तत्र प्रदेशे विक्षेपः। अथ तस्यानयनम्। पातस्थाने हि विक्षेपाभावः। ततस्त्रिभेऽन्तरे परमो विक्षेपः। अन्तरेऽनुपातेन। अतः पातग्रहचिह्नयोरन्तरं तावज्ज्ञेयम्। तच्च तयोर्योगे कृते भवति। यतो मेषादेरनुलोमं ग्रहो दत्तः। पातस्तु प्रतिलोमम्”। गणितागतपातकाले कृत्याकृत्ये “पातस्थितिकालान्तर्मङ्गलकृत्यं न शस्यते तज्ज्ञैः। स्नानजपहोमदानादिकमतोऽपैति खलु वृद्धिम्” सि० शि० उक्ते। पत—घञ् भावे ।५पतने। दृष्टिपातः शस्त्रपात इत्यादि। पत—ण्वुल्० कर्त्तरि च। ६पतनकर्त्तरि त्रि०। पारक्षसे कर्म्मणि घञ्। ७प्राते त्रि०मेदि०।

**पातक** त्रि० पातयति पाति—ण्वुल्। १पतनकारके नरकरूपाधःस्थानप्रापके नवविधे पापभेदे २अनुपातके च यथोक्तं प्रा० वि० “पातकपदमनुपातकपर्य्यायः, ननु नवस्वेव पापेषु पातकशब्दो दृश्यते यथा पैठीनसिः, “कौमोदकवर्जं ब्राह्मणचिकित्सको कोमविक्रयी शूद्रेण यथाभोजी कन्यादूषी कुमारदाही इत्यादिपतिरमनुवादी चैति पातकिनः” । नवविधं पापमभिधायाह विष्णुः “एवं पातकिनः पापमनुभूय सुदुःखिताः। तिर्य्यग्योनौ प्रवर्त्तन्ते दुःखानि विविधानि च”। याज्ञवल्क्यः “गोवाभिगमनं गर्भपातनं भर्त्तुर्हिंसनम्। विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम्”। पतनीयानि पातकानीत्यर्थः। “कृतस्तुटो बहुकर्मिति” करेऽस्मीयर्। “महापातकतुल्यानि पापान्युक्तानि यानि च। तानि पातकसंज्ञानि तदूनमुपपातकम्”। अतो महापातकतुल्यपापविषयेऽस्य शक्तिः। “नवविधपातकस्तु विष्णुः।” “तेनायमाक्रान्तोऽतिपातकमहापातकानुपातकोपपातकेषु प्रवर्त्तते। जातिभ्रंशकरेषु सङ्करीकरणेष्वपात्रीकरणेषु च। मलावहेषु प्रकीर्णकेषु च” इत्यन्तम्। ततः अस्त्यर्थे इनि। पातकिन् तद्युक्ते त्रि० स्त्रियां ङीप्।

**पातङ्गि** पु० पतङ्गस्य सूर्य्यस्यापत्यम् इञ्। १शनैश्चरे २यमे च ३कर्णे ४वैवस्वतमनौ ५सुग्रीवे च।

**पातञ्जल** न० पतञ्जलिना प्रोक्तम् अण्। १पाणिनिसूत्रवार्त्तिकव्याख्यारूपे “अथ शब्दानुशासनम्” इत्यादिके महाभाष्ये, “पातञ्जले महाभाष्ये कृतभूरिपरिश्रमः शेखरः। “अथ योगानुशासनम्” इत्यादिके २योगशास्त्रे च। पतञ्जलिशब्दे दृश्यम्।

**पातञ्जिम्** पु० पतञ्जी तत्कृतोऽस्त्यत्राध्याये अनुवाके वा विमुक्ता०अण्। पतञ्जिशब्दयुक्ते १अध्याये २अनुवाके च।

**पातन** त्रि०पातयति पाति—ल्यु। १पतनकारके स्त्रियां गौरा० ङीष्। भावे ल्युट्। २अधोनयने न०।

**पातनत्र** त्रि०पत—बा० अत्रच्। पतनशीले ऋ०२।५२।१७भा०

**पाताल** न० पतत्यस्मिन्नधर्मेण पत—आलञ्। १भुवनस्याधोभागे २सर्वाधोभागस्थे स्थानभेदे। तानि च सप्तैव यथा “पातालानि च सप्तैव मुनयः संप्रचक्षते। अतलं वितलञ्चैव सुतलञ्च तलातलम्। महातलञ्च विख्यातं ततो ज्ञेयं रसातलम्”। “ततः पातालमित्येवं सप्त पातालसंज्ञकाः। एते स्वर्गाधिकसुखा! विलस्वर्गाः प्रकीर्त्तिताः। सप्तद्भवनोद्यानविहारक्रीडनस्थलाः” पाद्मे पातालखण्डे। “अतलं सुतलञ्चैव वितलञ्च गभस्तिमत्। महातलं रसातलं पातालं सप्तमं स्मृतम्। कृष्णभौमं शिलाभौमं पातालं नीलमृत्तिकम्। रक्तपीतश्वेतकृष्णभौमानि च भवन्त्यपि। पातालानाञ्च सप्तानां लोकानाञ्च यदन्तरम्। शुषिरं तानि कथ्यन्ते भुवनानि चतुर्दश। अष्टाविंशतिसंख्याता जाता नरककोटयः। नरकाणामधस्तात्तु धूमः कालाग्निसम्भवः। तस्मादस्तादनन्ताख्यो वह्निः सर्वमयो महान्। तदधो धर्मचक्रन्तु येनेदं धार्य्यते जगत्” वह्निपु०। ३वीभ्यपाकार्थयन्त्रभेदे “ऊर्ध्वं भाण्डतले वह्निमध्ये च रसयन्त्रकः। पातालयन्त्रमेतद्धि प्रोक्तमेव पारदस्य दिकम्”। ४वडवानले ५गर्त्तमात्रे च मेदि०।

**पातालकेतु** पु० दानवभेदे मार्क०पु० २१अ०।

**पातालगरुडी** स्त्री छिलिहिण्डाख्ये लताभेदे राजनि०। भावप्र० अस्य गुणस्तद्वत् यथा “छिलिहिण्डो महाबलः पातालगरुडाह्वयः। छिलिहिण्डः परं वृष्यः कफघ्नः पवनापहः”।

**पातालनिवास** पु० नि+वस—आधारे घञ् पाताले निवासो यस्य। दैत्ये पातालनिलयादयोऽप्यत्र। दृष्टा० पातलौकस् तत्रार्थे हेमच०। [शिथि च उज्ज्वलद०।

**पाति** पु० पाति पा-रक्षणे अति। १प्रभौ पत—इण्। २प०

**पातिक** पुंस्त्री० पातः पतनं जलमज्जनं प्रयोजनमस्य वाते साधु वा ठक्। शिशुमारे जलजन्तुभेदे शब्दमाला स्त्रियां जातित्वात् ङीष्।

**पातिली** स्त्री पतिः स्वामी पत्नी वा लीयते अत्र लि—बा० ड गौरा० ङीष्। १वागुरायां २नार्य्यां ३मृत्पात्रभेदे (पातिल) मेदि०। [ स्तिनि च मेदि०।

**पातुक** त्रि० पत—उकञ्। १पतनशीले २प्रपाते ३जलह-

**पात्र** त्रि०पाति रक्षति पिबति वा पा—ष्ट्रन्। १रक्षके २पायिनि च त्रि० स्त्रियां ङीप्। ३गन्धपत्रे ४छत्रभेदे पु० हेमच०। [सेनागणककर्मणि तद्भावे च।

**पात्तिगणक** न० पत्तिगणकस्य भावः उद्गात्रा० अञ्।

**पात्नीवत** पु०पत्नी विद्यतेऽस्य मतुप्। "छन्दसीरः" पा०मस्य वः तच्छब्दोऽस्त्यत्र विमुक्ता० अण्। पत्नीवच्छब्दयुक्ते १अध्याये २अनुवाके च। यथानुवाकः "तान् यजताम् इत्यादिवर्गः" ऋ० १।३।७। बसोदम् अण्। ३ग्रहरूपपात्रभेदे यजु० १८।२० कात्या० ८।९।२१ शत०ब्रा० १३।७।३।८।

**पात्य** न०पत्युर्भावः यक्। १पतित्वे "भर्त्तारि स्त्रिया भर्त्ता पात्यान्नैव स्त्रियाः पतिः" भा०आ० २६७अ० पत—णिच् यत्, पत—ण्यत् वा। २पातनीये ३पतनीये च त्रि०।

**पात्र** पु०न० अर्द्धर्चा० पाति रक्षत्याधेयं पिबत्यनेन वा पा—ष्ट्रन्। १जलाद्याधारे भोजनयोग्ये २अमत्रे अमरः। अस्य स्त्रीत्वमपि शिष्टात् ङीष्। विद्यादियुक्ते दानयोग्ये ३ब्राह्मणे न० "ब्राह्मणं पात्रमाहुः" इति स्मृतिः। ४पर्णे स्रुवादौ, तीरद्वयमध्यवर्त्तिनि ५जलाधारस्थाने ६राजामात्ये च मेदि०। नाटकेऽभिनेये ७नायकादौ च न० हेमच० ८मानभेदे वैद्यकम्। अग्निहोत्रादिसाधनपात्रलक्षणम् कात्या० श्रौ० भाष्ये। "अथ पात्राणां लक्षणमुच्यते खादिरः स्रुवोऽङ्गुष्ठपर्वमात्रपुष्करो नासिकावत् पर्वाङ्खातो भवति। स्फ्यश्च खादिरः खड्गाकृतिररत्निमात्रः। स्रुचो बाहुमात्र्यो मूलदण्डास्त्वग्बिला हंसमुखवदेकप्रणालिकायुक्ताः। पाणिमात्रपुष्करास्त्वक्खातयुक्ताश्च कार्य्याः। पालाशी जुहूः, उपभृदाश्वत्थी, वैकङ्कती ध्रुवा "एतेषां हस्त्याकासे-कस्य वा सर्वाः स्रुचः कारयेत्, बाहुमात्र्योऽरत्निमात्र्यो वायापात्रस्तक्ताविला हंसमुखः" इत्यापस्तम्बः। अग्निहोत्रहवणी वैकङ्कती, अग्निहोत्रस्रुवो वैकङ्कतः। यैः पात्रैर्होमो न क्रियते तानि सर्वाणि वारणानि भवन्ति तानि चोलूखलमुषलकूर्चेडापात्रीपिष्टपात्रीपुरोडाशपात्रीशम्यास्त्रावदावाभ्रूपवेषान्तर्द्धानकटप्राशित्रहरणषडवत्तप्राशनादीनि। उलूखलादीनि वा-रणानि। कूर्चो बाहुमात्रः पीठाकारः। इडापात्री पिष्टपात्र्यौ अरत्निमात्र्यौ मध्यसंगृहीते। पुरोडाशपात्री प्रादेशमात्री समचतुरस्रा षडङ्गुलखातवती। शम्या प्रादेशद्वादशाङ्गुला प्राशित्रहरणं हस्तमादर्शाकारं चतुरस्रं चमसाकारं वा तथैव द्वितीयमपिधानपात्रम् षडवत्तं चोभयत्र खातवत्। आसनानि चारत्निमात्रदीर्घाणि प्रादेशमात्रविपुलानि सर्वेषु पात्रेषु मूलाभिज्ञानार्थं हस्तानि कार्य्याणि अनादेशे होमसाधनभूतानि पात्राणि वैकङ्कतानि भवन्ति यथा सोमयागे पञ्चमस-द्रोणकलशादीनि तत्रापि हविर्धानाधिषवणफलकम-आरणोपरिस्रवादीन्यहोमसंयुक्तानि वारणान्येव षोडशिनः पात्रं खादिरं चतुरस्रम् अंशुदाभ्यपात्रमौदुम्बरं वचनात् वाजपेये सप्तदशानां सोमग्रहाणां पात्राणि वारणानि अहोमसंयुक्तत्वात्। सुराग्रहपात्राण्यपि वारणानि शाखान्तरानुरूपमयानि वा इत्येवमादि सर्वमूहनीयम्। मूलं कात्या०श्रौ०१।३।३१ सूत्रादौ द्रष्टव्यम्। कर्मप्रदीपे च "आज्यस्थाली च कर्त्तव्या तैजसद्रव्यसम्भवा। महीमयी वा कर्त्तव्या सर्वास्वाज्याहुतीषु च। आज्यस्थाल्याः प्रमाणं तु यथाकामन्तु कारयेत्। सुदृढामव्रणां भद्रामाज्यस्थालीं प्रचक्षते। तिर्य्यगूर्द्ध्वं समिन्मात्रा दृढा नातिबृहन्मुखी। मृन्मय्यौदुम्बरी वापि चरुस्थाली प्रशस्यते। स्वशाखोक्तः पशुस्त्रिग्धो ह्यदग्धोऽकठिनः शुभः। न चातिशिथिलः पाच्यो न चरुश्चारसस्तथा। इध्मजातीयमिध्मार्द्धप्रमाणं मेक्षणं भवेत्। वृत्तं चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम्। एषैव दर्वी यस्तत्र विशेषस्तमहं ब्रुवे। दर्वी द्व्यङ्गुलपृथ्वग्रा तुरीयोऽनन्तमेक्षणम्। मुसलोलूखले वार्क्षे स्वायते सुदृढे तथा। इच्छाप्रमाणे भवतः शूर्पं वैणवमेव च। दक्षिणं वामतो बाह्यमात्माभिमुखमेव च। बाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः। त्रयो भवन्ति शीर्णाग्रा एकेषान्तु चतुर्दिशम्। प्रागग्रावभितः पश्चादुदगग्रमथापरम्। न्यसेत् परिधिमन्यञ्चेदुदगग्रः स पूर्वतः" देवपूजाङ्गपात्रमानं देवीपु० उक्तं यथा "षट्त्रिंशदङ्गुलं पात्रमुत्तमं परिकीर्त्तितम्। मध्यमं तत्त्रिभागेन हीनं कन्यसमीरितम्। वसङ्गुलप्रमाणन्तु तत्पात्रं कारयेत् क्वचित्। नानाविचित्ररूपाणि पौष्करीकाकृतीनि च। पद्मनीलोत्पलाकारपात्राणि परिकल्पयेत्। रत्नादिरचितान् कुर्य्यात् काञ्चनस्य-

स्थितान्। यथाशोभं यथालाभं तथा पात्राणि कारयेत्। विना पात्रेण यः कुर्य्यात् प्रतिष्ठां यात्रिकीं क्रियाम्। विफला भवते सर्व्वा वाहनादिषमापहा" दानशब्दे दानपात्रलक्षणादिकं ३५२० पृ० उक्तम्। पाकपात्रलक्षणादिकं पाकशब्दे ४२८४पृ० दृश्यम्।

**पात्रट** पु० पातेव पिबन्निव घटति घट-अच्। १कर्पटे २कृशे शब्दच०।

**पात्रटीर** पु० पातेव पिबन् रक्षन्निव वा घटति घट बा० ईरन्। १उचितव्यापारयुते मन्त्रिणि २लौहपात्रे ३कांस्यपात्रे ४रजतपात्रे ५सिंघाने ६पावके च मेदि०। ७विह्नाग्रे ८काके ९कङ्के च पुंस्त्री० शब्दरत्ना० स्त्रियां जातित्वात् ङीष्। [रत्नके तुलाधट पु० जटाध०।

**पात्रपाल** त्रि० पात्रं पालयति पाल-अण् उप०स०। पात्र-

**पात्रसंस्कार** पु० ६त०। पात्रशुद्धौ भस्मनादिना पात्रमार्जने पुरोटौ शब्दच०।

**पात्रासादन** न० ६त०। यज्ञपात्राणां यथोक्तक्रमेण यज्ञनिष्पादनाय स्थापने यज्ञपात्रासादनक्रमश्च कात्या०श्री० २।३।५ सू० कर्कभाष्ये उक्तो यथा

"शूर्पाग्निहोत्रहवणीस्फ्यकपालं शम्याकृष्णाजिनमुलूखलमूषलं दृषदुपलमर्थवन्नं" इसू० "स्फ्यकपालमित्येकवद्भावादिदमेकं द्रव्यम् तेन बहुभिरपि कपालैरेकमेव पात्रमिति द्रष्टव्यम्। कपालानि च मिलस्य घटादेर्याज्ञानि अभिन्नान्यपि रौहिणकपालवत् निर्म्मितानि भवन्तीत्येके इति धूर्त्तस्वामिनः। शूर्पं च नडतृणमयमिषीकानिर्म्मितं वेणुदलनिर्म्मितं वा भवति। अर्थवच्च येन येन पात्रेणात्र प्रयोजनं तेषां सर्व्वेषामुपयोगक्रमेणासादनम्। तथा च कात्यायनः "प्राक् प्राक्पुरस्तात्‌दनन्तरकार्य्यं सभीपतः। तत्तथा सादयेद्द्रव्यं यद्यथा विनियुज्यते" इति तत्रैवम् "अनो वा पात्री वा व्रीहयो यवा वा तत्रैवम् अनोव्रीहयश्चानोयवाश्च पात्रीव्रीहयः पात्रीयवाश्चेति वा पवित्रच्छेदनानि पवित्रे च उपवेषः संयवनार्थमुदकं च आज्यस्थाली आज्यं च अमावस्यायां दोहनचतुष्टयम्, वेदार्थः कुशमुष्टिः, दक्षिणार्थो अन्वाहार्य्यं तण्डुलाश्च दर्भतृणमभ्रिश्च इध्मो बर्हिश्च ध्रुवो जुहूश्च उपभृद्ध्रुवा च प्राशित्रहरणे इडापात्रं च द्वे पुरोडाशपात्र्यौ इति" कर्कादयः। तदयुक्तमिति केचित्। स्वस्वशाखान्तरसूत्रेषु सादनप्रतापनोपसारणादिष्वेकस्य द्वयं दर्शनात्। यथेडापात्रीपिष्टपात्र्योरभेद-

कात्यायनेऽपि अयुक्तम् शाखान्तरसूत्रेषु तयोर्भेददर्शनात् तथा च तैत्तिरीयसूत्रम् "प्राशित्रहरणं चेडापात्रं च मेक्षणं च पिष्टपात्री चेति" विस्तृतौ चातुर्मास्यादौ यत्र चर्व्वादिभिर्व्यवहिताः पुरोडाशाः तत्र भवतु पुरोडाशपात्रीभेदः। याज्ञ्यां यूनकुशाश्च परिधयः कुशाश्चौर्ण्ण होतृषदनं च इडापात्री षड्वत्तं च अन्वधानकटः पूर्ण्णपात्रं च पचे कार्य्यायणी समिद्धयासादाते परिधीनामपि प्रथमासादनमष्टादशकाष्ठेष्वपक्षे एकविंशतिकाष्ठेष्वपक्षे तस्मादेवेष्यात् त्रीणि काष्ठान्यादाय विकल्पेन परिधिपरिधानविधानात्। एवमत्र पात्राणामुपादानक्रमेणासादनमुक्तम्। यस्य यस्य पात्रस्य येन क्रमेण तस्यासादनम् एवं च सुतरां दृष्टार्थता भवति लाघवं च विनियोगक्रमेणासादने च तथा न स्यात् हविर्ग्रहणे पात्र्याः हविर्द्रव्यस्य च देशविप्रकर्षात् आज्य निर्वापे स्थाल्याज्ययोश्च तस्मादुपादानक्रम एव पितृभूतिवार्त्तिककारमतः पात्रासादने युक्तः। कर्कोपाध्यायास्तु विनियोगक्रमेणासादनमाहुः"। स्थले अर्थवन्नेषु क्रमेणैवा यथा यत्र यत्र यस्य यस्योपयोगस्य तस्य तत्र तत्रासादनम्। तत्स्थानप्रकारो च तदुत्तरत्र स्थलेषु दृश्यौ

**पात्रिक** त्रि० पात्रस्य वापः ठन्। पात्रवापकत्वादौ स्त्रियां षित्त्वात् ङीष् पात्रिकी च तथात्रिः सि० कौ०। पात्रं वहति अपहरति आहरति वा ठञ्। पात्रावहारकादौ स्त्रियां ङीप्। पक्षे च। पात्रीव तदर्थे स्त्रियां टाप्। तदर्थे।

**पात्रिय** त्रि० पात्रमर्हति घ। पात्रार्हे पक्षे यत्। पात्र्य

**पात्रीय** न० पात्रे साधु बा० छ। पात्रसाधौ यज्ञद्रव्ये त्रिका०। [यज्ञद्रव्ये।

**पात्रीव(र)** पुंन०अर्द्धर्चादि०पात्रीं रा(वा)ति रा-(वा) क।

**पात्रेबहुल** पु० ब० व०। पात्रे भोजनसमये एव बहुला० न तु कार्य्ये पात्रेसमिता० अलुक्समा० बहुक्त्त०। भोजनसमय एव बहुलीभूतेषु कार्य्याक्षमेषु। मुक्तारोहा० अस्वात्यु दात्तता।

**पात्रेसमित** त्रि० पात्रे भोजनकाल एव समितः सङ्गतः पात्रेसमि० अलुक्स०। १कार्य्यकाले अक्षमेषु भोजन एव सङ्गतेषु। मुक्तारोहा० अस्वात्युदात्तता। "स पात्रेसमितोऽन्यत्र भोजनाच्चिरितो न यः" त्रिका० "निधाय हृदये पापं यः परं शंसति स्वयम्। स पात्रेसमितोऽय स्मादिति" शब्दा० उक्तलक्षणे पुरुषविशेषे च।

**पात्रेसमितादि** पु॰ चेपे अलुक्समासादिनिमित्ते शब्दगणे स च गणः पा॰ ग॰ उक्तो यथा "पात्रेसमिताः पात्रेबहुलाः उदुम्बरमशकः उदुम्बरकृमिः कूपेकच्छपः अवटेकच्छपः कूपमण्डूकः कुम्भमण्डूकः उदपानमण्डूकः नगरकाकः नगरवायसः मातरिपुरुषः पिण्डीशूरः पितरिशूरः गेहेशूरः गेहेनर्दी गेहेक्ष्वेडी गेहेविजिती गेहेव्याडः गेहेमेही गेहेदाही गेहेदृप्तः गेहेधृष्टः गर्भेतृप्तः आखनिकबकः गोष्ठेशूरः गोष्ठेविजिती गोष्ठेक्ष्वेडी गोष्ठेपटुः गोष्ठेपण्डितः गोष्ठेप्रगल्भः कर्णेटिरिटिरा कर्णेचुरचुरा"।

**पात्रोपकरण** न॰ ६त॰। पात्रार्थासुपभूषणे "रौप्यस्वर्णादिविज्ञातं पात्रोपकरणादिकम्। दद्यादाव्यवर्जन्तु भूषणं न कदाचन। घण्टाचामरकुम्भादि पात्रोपकरणादिकम्। तद्भूष्यान्तरे दद्याद्यथाशक्तीपभूषणम्" कालिकापु॰ ८६ अ॰।

**पात्र** न॰ पतति पत–क्विप् पतं पतन्तं त्रायते त्रै–क स्वार्थे प्रज्ञाद्यण्। पापित्रातरि "सर्वेषामेव पात्राणां परं पात्रं महेश्वरः। पतन्तं त्रायते यस्मादतीव नरकार्णवात्" नन्दिपु॰। महेश्वर इति प्रदर्शनं केनोरविशेषात् "पात्राण्याध्यात्मिका मुख्या विशुद्धायाम्भिहोत्रिणः। देवताश्च तथा मुख्या गोदानं सोऽतदुत्तमम्" प्रा॰ त॰।

**पाथ** न॰ पीयतेऽदः पा–कर्मणि थ। १जले पाति रक्षति थ। २अग्नौ ३सूर्ये च मेदि॰।

**पाथस्** न॰ पाति रक्षति, पीयते वा पा–पाने रक्षणे वा असुन् थुक् च। १जले २अन्ने च उज्ज्वलद॰। अन्नभोजने हि देहरक्षा ३आकाशे च मेदि॰। [स्त्रियां ङीप्।

**पाथिक** पुंस्त्री॰ पथिकस्यापत्यं शिवा॰ अण्। पथिकापत्ये

**पाथिक्य** न॰ पथिकस्य भावः पुरोहि॰ यक्। पथिकत्वे

**पाथिस्** पु॰ पा–पाने इसिन् थुक् च। १समुद्रे २नेत्रे च उज्ज्वलद॰।

**पाथेय** त्रि॰पथि तद्व्यवहारे साधु ढञ्। १मार्गेषु आहारोपयोगिद्रव्ये २कन्याराशौ दीपिका कोषशब्दे २२७८पृ॰ दृश्यम्। ३देशभेदे। ततो भवेऽर्थे धूमा॰ वुञ्। पाथेयक तत्रभवे त्रि॰ [राजनि॰ २शङ्खे च पाथोजातादयोऽप्यत्र।

**पाथोज** न॰ पाथसि जायते जन–ड ७त॰। १जलजे कमले

**पाथोद** पु॰पाथो ददाति दा–क। १मेघे त्रिका॰ मेघनामनामके २मुस्तके अमरः।

**पाथोधर** पु॰ पाथो धारयति धारि–अच् ह्रस्वः। जलधरे १मेघे हला॰ २मुस्तके च। [जलधौ समुद्रे त्रिका॰।

**पाथोधि** पु॰ पाथो धीयतेऽत्र धा–आधारे कि उप॰स॰।

**पाथोनिधि** पु॰ पाथो निधीयतेऽत्र नि+धा–कि उप॰स॰। जलनिधौ समुद्रे शब्दरत्ना॰। भवे यजु॰ ११।१४।

**पाथ्य** त्रि॰ पाथसि भवः वेदे ड्यत्। पाथसि हृदयाकाशे

**पाद्** पु॰ पद+णिच् क्विप्। चरणे पादे जटा॰

**पाद** पु॰ पद्यते गम्यतेऽनेन करणे कर्मणि वा घञ्। १चरणे अमरः २श्लोकमन्त्रयोश्चतुर्थांशे "सोऽपि लोपे चेत् पादपूरणम्" पा॰ "पादश्चेल्लोपे सत्येव पूर्य्येत" सि॰कौ॰। "पादेन नाक्रमेत् पादमुच्छिष्टं नैव लङ्घयेत्। न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः" इति कर्मलोचनम्। पादप्रक्षालनादिनिषेधो यथा "न पादक्षालनं कुर्य्यात् पादेन वा कदाचन। नाग्नौ प्रतापयेत् पादौ न कांस्ये धावयेद्बुधः। नातिप्रसारयेद्देवब्राह्मणानामथापि वा। वाय्वग्निरुपविप्राणां सूर्य्यं वा शशिनं प्रति" कौर्मे उपरिभागे १५अ॰। सुसंख्यापूर्वकस्य अन्त्यलोपः बहु॰ समा॰। द्विपात् सुपात्। उपमानात्तु वा व्याघ्रपाद्(दः)। पाच्छब्दे नैकोपपत्तौ अन्त्यलोपविधानम् द्विपादः सुपादः इति प्रयोगवारणार्थम्। ३तदेव इन्द्रियभेदः इन्द्रियशब्दे ८५५ पृ॰ दृश्यः। ४चतुर्थांशे पादपः। ४चतुर्थभागे ५प्रत्यन्तपर्वते महाद्रिसन्निकृष्टक्षुद्रपर्वते ६किरणे च मेदि॰ ७प्रत्यावर्तनाभे इत्यव॰ यवनाले। भावे घञ्। ८गमने तत्र कुशलः आकर्षा॰ कन्। पादक गमनकुशले त्रि॰। पादेन चरति पर्पा॰ ष्ठन् पदादेशश्च पदिक पादचारिणि त्रि॰ स्त्रियां ङीष्। अस्य अन्ते यतादौ च परे वा पदादेशः। पादान् पद्भः इत्यादि। हला॰ आद्युदात्तताश्च। १॰ऋषिभेदे

**पादकटक** पु॰ पादस्य कटक इव। नूपुरे अमरः।

**पादकृच्छ्र** पु॰ व्रतभेदे तल्लक्षणञ्च यथा "एकभक्तेन नक्तेन तथैवायाचितेन च। उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः" याज्ञ॰। "एतच्चतुरकृच्छ्रपाद्यम्" प्रा॰वि॰।

**पादगण्डीर** पु॰ पादस्य गण्डः (गुंड) इवाभ्यामलाच्छादावधिभागस्य ईः प्रोत्साहश्च वा॰ र। श्लीपदे (गोद) रोगभेदे त्रिका॰।

**पादग्रह** पु॰ ग्रहाः पादः मयूर॰ पूर्वनि॰। ग्रहे पादे

**पादग्रन्थि** पु॰ पादस्य ग्रन्थिरिव। १गुल्फे २पादसन्धौ च।

**पादग्रहण** न॰ पादौ गृह्यते यत्र ग्रह–आधारे ल्युट्। १चरणपर्शपूर्वकप्रणामे। "विप्रोष्य पादग्रहणमन्वहं

णाभिवादनम्" मनुः अभिवादनशब्दे २९९ पृ० द्रष्टव्यम्। तत्र शौचान्तरमाह कूर्मपुराणे "यस्मिन् स्थाने कृतं शौचं वारिणा तद्विशोधयेत्"। अनभिवाद्यानाह हारीतः "धावन्तञ्च प्रमत्तञ्च मूत्रोच्चारकृतन्तथा। भुञ्जानमाचमनार्हञ्च नास्तिकं नाभिवादयेत्। अत्राप्रभृतिवत् किञ्चित् चेतसा धर्ममाचरेत्। सर्वं तन्निष्फलं याति एकहस्ताभिवादनात्"। "समित्पुष्पकुशाज्याम्बुमृदन्नाद्यहस्तो नाभिवादयेत् यथाप्येवं युक्तम्" इति। बौधायनः। "जपयज्ञजलस्थञ्च समित्पुष्पकुशानलान्। दन्तकाष्ठञ्च भक्ष्यञ्च वहन्तं नाभिवादयेत्" लघुहारीतः। "न कुर्यात् स्नातपाणिर्नोच्छिष्टो जपन् न देवपितृकार्यं कुर्वन्" अभिवादयेदित्यनुवृत्तौ शङ्खलिखितौ।

**पादघृत** न० पादयोर्लेपनार्थं घृतं शा०त०। पादयोरभ्यङ्गार्थे घृते भा० व० १९९ अ०।

**पादचतुर** लि० पादे पादव्यापारे चतुरः। १पादव्यापारदक्षे २छागले पुं स्त्री। ३सैकते ४पिप्पले ५करके ६करदोषेण प्रवक्तृपुरुषे च मेदि०।

**पादचारिन्** पु० पादेन चरति चर–णिनि ३त०। १पदातौ २पद्भ्यां गन्तरि लि० हेमच० स्त्रियां ङीप्।

**पादज** पुं स्त्री पादात् जायते जन–ड ५त०। ब्रह्मणः पदाद्रुत्पन्ने १शूद्रे त्रिका० स्त्रियां जातित्वात् ङीष्। "पद्भ्यां शूद्रो अजायत" यजु० ३१।११। श्रुतेस्तस्य तथात्वम्। २चरणजातरोगादौ लि०।

**पादजल** न०पादक्षालनं जलम् शा०त०। १पादोदके। पादमितं जलं यत्र। २चतुर्थांशमितजलयुक्ते लि०२तक्रे न० अमरः

**पादजाह** न० पादस्य मूलं कर्ण्या० जाहच्। पादस्य मूले।

**पादत्र** लि० पादौ त्रायते त्रै–क। १पादरक्षके २पादुकायाम् स्त्री। [जटाध०। उपानच्छब्दे दृश्यम्।

**पादत्राण** न० पादस्त्रायतेऽनेन त्रै–करणे ल्युट्। पादुकायां

**पाददाह** पु० पादौ दहति–दह अण् उप० स०। सुश्रुतोक्ते १वातव्याधिभेदे "पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः। विशेषतश्चङ्क्रमतः पाददाहं तमादिशेत्"।

**पादप** पु० पादेन मूलेन पिबति सिक्तं जलम् पा–क। १वृक्षे अमरः। पादं पाति रक्षति पा–क। २पादपीठे मेदि०। ३पादुकायां स्त्री मेदि०। पादपेन सतम् अञ्। ४पादपसते लि०। ततः समूहे खण्डच्। पादपखण्ड तत्समूहे न०। [(परगाछा)। राजनि०।

**पादपरुहा** स्त्री पादपं रोहति रुह–क। वन्दायाम्

**पादपाश** पु० ६त०। १अश्वपादबन्धनदामनि हेमच० २शृङ्खलायां ३अश्वकायाम् (खेँडुवा) ४लतायां स्त्री मेदि० गौरा० ङीष्।

**पादपीठ** पुं न० ६त०। पादस्थापनार्थे पीठे हेमच०। संज्ञायां कन् कापि अत इत्त्वम्। पादपीठिका० नापितादिशिल्पे स्त्री शब्दमा०।

**पादप्रक्षालन** न० ६त०। पादयोः १क्षालने जले "पादप्रक्षालनं मेधाजननं सुपवित्रकम्। अलक्ष्मीकलिघ्नञ्च आयुषो हितकारि च" राजनि० "पादप्रक्षालनं विशेषयति देवलः "प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः। उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः" गवेश्वरः। दैवपैतृकेतरप्रायश्चित्तः "प्रत्यक्पादावसेचनमिति"। प्रत्यक् पश्चिमाभिमुखः। अत्राह गोभिलः "सव्यं पादमवनेनिज्य इति सव्यं पादं प्रक्षालयति"। अर्कजीवे तथा दर्शनात् सर्वत्र तथा कल्प्यते। पारस्करः "सव्यं प्रक्षाल्य दक्षिणं प्रक्षालयतीति" "सव्यं प्रथमं प्रक्षालयतीति" छन्दोगपाठे सव्यपादप्रक्षालने सिद्धे सव्यं प्रक्षाल्य दक्षिणं प्रक्षालयतीत्यत्र सव्यग्रहणं सामान्यार्थं तेनान्यत्रापि पादप्रक्षालने सव्यस्यैव प्राथम्यम् अन्यार्थं पूर्ववचनस्यापि दर्शनात्"। "ब्राह्मणस्य दक्षिणं प्रथममिति" कल्पं तत्र पादौ यदि ब्राह्मणः प्रक्षालयति तदा दक्षिणं प्रथममिति न सव्यम्। यथा प्रक्षालयतोऽन्यत्र ह्यापस्तम्बः "दक्षिणपादं ब्राह्मणाय प्रयच्छेत् सव्यं शूद्रायेति"। स्वयं प्रक्षालने सव्यस्यैव प्राथम्यमिति हरिशर्मा। एवञ्च दक्षिणपादप्रक्षालनानन्तरं वामपादप्रक्षालनं वाचस्पतिमिश्राद्युक्तं हेयमिति" आ०त० रघुनन्दनः।

**पादबन्धन** न० पादौ बध्येते अनेन करणे ल्युट् ६त०। १गोगर्दभादेः पादबन्धने दामनि। भावे–ल्युट्। २गोगर्दभादिपादयोर्बन्धने जटा०। अच् पादबन्ध तदर्थे पु०।

**पादभाग** पु० ६त०। १चरणाधोभागे हेमच०। १पादमितः भागः आ०त०। २चतुर्थांशे च।

**पादमूल** न० ६त०। १चरणस्याधोभागे २चरणसमीपे च।

**पादरक्ष** लि० पादं रक्षति रक्ष–अण् उप०स०। १चरणरक्षके पादुकादौ २रथचरणरक्षकपक्षरक्षके च भा०वि० ६९अ०। स्त्र। पादरक्षक तदर्थे लि०भावे ल्युट्। ६त०। ३पादस्य रक्षणे न०। [प्रोदबन्धनार्थे दामनि जटाध०।

**पादरज्जु** स्त्री पादबन्धनार्था रज्जुः शा०त०। हस्त्यादेः

**पादरथी** स्त्री क्षुद्रो रथः ङीप् पादस्य रथीव । पादुकायां त्रिका० । [ल्यु । पादरोहण तदर्थे राजनि० ।

**पादरोह** पु० पादेन मूलेन रोहति रुह–अच् । वटवृक्षे

**पादवन्दन** न० पादयोर्वन्दनम् । पादग्रहणपूर्वकप्रणामे "कुर्याच्छ्वशुरयोः पादवन्दनं भर्तृतत्परा" याज्ञ० मनुना कश्चिद्विशेष उक्तः "गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः । पूर्णविंशतिवर्षेण गुणदोषौ विजानता" [हेमच०

**पादवल्मीक** पु० पादे वल्मीक इव । श्लीपदरोगे ( गोद )

**पादविक** त्रि० पदवीमनुधावति ठक् । पथिके सि०कौ० ।

**पादविग्रह** पु०, पादस्यावयवस्य विग्रहः । अवयवग्रहणे । "ये च विष्णुमधीयन्ते बहुधा पादविग्रहैः" हरिवं० २१७अ० । पादः चतुर्थांशमितो विग्रहो यस्य । पादमितावयवयुक्ते त्रि० "अधर्मो पादविग्रहः" १९८अ० ।

**पादविरजस्** स्त्री पादौ विरजसः धूलिहीनौ यस्याः । १पादुकायां हारा० । ६ब० । २देवेषु च तेषां विरजस्कपादत्वात्तथात्वम् ।

**पादशस्** अव्य० पादं पादमित्यादिकारकार्थे वीप्सायाम् शस् एकपादभिन्नत्वे न पदादेशः । वीप्सायां कारकार्थकत्वे पादशब्दार्थे मनुः १।८२। तु एकपादे तु पच्छस्

**पादशाखा** स्त्री पादस्य शाखेव । पादाङ्गुलौ शब्दार्थकल्पत०

**पादशैल** पु० पादात्मकः शैलः । प्रत्यन्तपर्वते शब्दरत्ना० ।

**पादशोथ** पु० पादजातः शोथः शा०त० । पादजाते शोथे रोगभेदे "अन्योन्योपद्रवकृतः शोथः पादसमुत्थितः । पुरुषं हन्ति नारीन्तु मुखजो गुह्यजो द्वयम्" माधवः ।

**पादशौच** न० ६त० । पादप्रक्षालने पादप्रक्षालनशब्दे दृश्यम् "वाग्यतः पादशौचम्" शास्त्रप्रयोगः । श्राद्धे दक्षिणामुखेनैव तस्य करणं यथोक्तं श्रा०त० "प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः । उदङ्मुखो वा दैवत्ये पैत्र्ये दक्षिणामुखः" इति देवलवचनात् दक्षिणामुखः सन् कृतपादशौचस्तत्रापि वामपादादिक्रमः" रघु० ।

**पादस्फोट** पु० ६त० । १विपादिकाख्ये २क्षुद्रकुष्ठभेदे अमरः कुष्ठशब्दे २१५५पृ० तस्य लक्षणादि दृश्यम् ।

**पादस्वेदन** न० ६त० । पादयोः स्वेदने । ततः अध्यात्मा० निर्वृत्तेऽर्थे ठञ् । पादस्वेदनिक तन्निर्वृत्ते रोगभेदोपशमादौ त्रि० ।

**पादहर्ष** पु० "हृष्यतश्चरणौ यस्य भवतश्च प्रसुप्तवत् । पादहर्षः स विज्ञेयः कफवातप्रकोपजः" सुश्रुतोक्ते वातव्याधिभेदे ।

**पादहारक** त्रि० पादाभ्यां हरति ह्रियते वा हृ–कर्त्तरि कर्मणि वा नि० ण्वुल् । १पादेन हरणकर्त्तरि २तत्कर्मणि च । [२चरणशून्ये च ।

**पादहीन** त्रि० ३त० । १त्रिपादात्मके पदार्थे (तिनपोया)

**पादाकुलक** "यदतीतकृतविविधलक्ष्मयुतैर्मात्रासमादिपादैः कलितम् । अनियतवृत्तपरिमाणसहितम् प्रथितं जगत्सु पादाकुलकम्" वृ०र० उक्ते मात्रावृत्तभेदे ।

**पादाग्र** न० ६त० । चरणाग्रभागे प्रपदे अमरः ।

**पादाङ्गद** न० पादस्य अङ्गदमिव । नूपुरे अमरः गौरा० ङीष् । तत्रार्थे स्त्री हारा० ।

**पादाङ्गुलीयक** न०६त० (चुटकी) चरणाङ्गुलीयके हेमच०

**पादात्** त्रि० पादाभ्यामतति अत–क्विप् । १पद्भ्यां गन्तरि २पदातौ पु० हेमच० ।

**पादात** न० पदातीनां समूहः अण् । १सैन्यसमुदाये अमरः पादाभ्यामतति गच्छति अत–अच् । २पदातौ सैन्ये पु० पादातिः पादातिकोऽप्यत्र पु० हेमच० ।

**पादाम्बु** न० पादमितमम्बु यत्र । तक्रे (घोल) अमरः ।

**पादाभ्यञ्जन** न० ६त० । पादलेपनार्थे घृतादौ काशी०ख० ।

**पादाम्भस्** न० पादप्रक्षालनमम्भः । पादशौचजले "दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत्" याज्ञ० तस्य दूरे त्यक्तव्यतोक्ता । [पादविक्षेपणे ।

**पादायन** पुंस्त्री० पादस्यर्षेः गोत्रापत्यम् अश्वा० फञ् ।

**पादारक** पु० पाद इव ऋच्छति ऋ–ण्वुल् । नौकावयवभेदे पोलिन्दे हेमच० । [नौकायां हारा०

**पादालिन्दी** स्त्री पाद इवालिन्दो यस्याः गौरा० ङीष् ।

**पादावर्त्त** पु० पाद इवावर्त्तते आ+वृत–अच् । कूपादितो जलोद्धारणे यन्त्रभेदे अरघट्टे हेमच० ।

**पादाविक** त्रि० पदातिक+पृषो० । पदातौ शब्दरत्ना० ।

**पादिक** त्रि० पादेन चतुर्थांशेन जीवति वेतना० ठक् । १चतुर्थांशवृत्तियुते । पादः परिमाणमस्य निष्का० ठक् । २पादपरिमाणे मनुः ८।

**पादिन्** त्रि० पादश्चरणोऽस्त्यस्य पादचतुर्थांशो भागीत्वेनास्त्यस्य वा इनि । १पादयुते जलजन्तुभेदे "कुम्भीरकूर्मनक्राश्च गोधामकरशङ्कवः । घण्टिकः शिशुमारश्चेत्यादयः पादिनः स्मृताः । पादिनोऽपि च ये ते तु कोषस्थानां गुणैः समाः" भावप्र० । २चतुर्थांशभागिनि च "सर्वेषामर्द्धिनो मुख्यास्तदर्द्धेनार्द्धिनोऽपरे । तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः" मनु०त० अर्द्धिन्शब्दे ३७८पृ० दृश्यम् ।

**पादु** स्त्री भावे उण् । गमने उ० १।२७।२४ भाष्ये दृश्यम् ।

**पादुक** त्रि०पद्—उकञ् । १गमनशीले पादु+स्वार्थे क "के-ऽणः" पा० ह्रस्वः । चर्ममयपादत्राणे स्त्री अमरः । तस्या उत्पत्तिकथा च्छातपत्रशब्दे ६१८ पृ० दृश्या तत चानुशासनिकपर्वाध्यायसंख्या ८१।८९स्थाने८५।८६संख्या ज्ञेया । "वर्षातपादिके छत्री दण्डी रात्र्यटवीषु च । शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत्" ज्यो०त० "पादप्रधारणं हृष्यमोजस्यं चक्षुषो हितम् । सुखप्रचार-मायुष्यं बल्यं पादत्राणकम्" । तस्या अधारणे दोषा यथा "पादाभ्यामनुपानद्भ्यां चर्या च क्रमणं सदा । अनारोग्यमनायुष्यमिन्द्रियघ्नमदृष्टिकृत्" राजनि० अधिकं हिनचर्याशब्दे ३१८० पृ० दृश्यम् । "दत्तानानाय विप्राय यः प्रयच्छत्युपानहौ । स्नातकाय महाबाहो ! संशिताय द्विजातये । सोऽपि लोकानवाप्नोति दैव-तैरपि पूजितान् । गोलोके च सदा युक्तो वसति प्रेत्य भारत !" भा०आनु० ८६अ० क्वचित्पादुकाधारणनि-षेधः "वृक्षमुपानहौ पद्भ्यां वस्तु नाद्युपसंक्रमेत् । चर्मकारस्तु जायेत वर्णानान्तु त्रयोदश" वराहपु० । "सोपानत्कश्च यद्भुङ्क्ते तद्वै रक्षांसि भुञ्जते" मनुः । देवतापादुकानिर्माणप्रकारो देवीपु० यथा "मणिरत्नमयी कार्या हेमरूप्यमयी तथा । चन्दनेनापि कर्त्तव्या पादुका प्रतिमापि वा । श्रीपर्णी चोटू,ना चापि देवदारुमयी तथा । षडङ्गुला च सा कार्या पादुकां पूजयेत् सदा" ।

**पादुकाकार** पु० पादुकां करोति कृ—अण् उप०स०। चर्म-कारे पादूकृत्पादुकाकृदादयोऽप्यत्र हेमच० ।

**पादू** स्त्री पद्यते सुखेनानया पद्—करणे "श्वि कषिपद्य-र्त्तेः" उणा० ऊ—णिच्च । चर्ममयपादत्राणायाम् अमरः ।

**पादोदक** न० पादप्रक्षालनसुदकम् शा०त०। पादप्रक्षालनजले हरिमूर्त्तिपादोदकपानफलं हरिभक्तिविलासादौ दृश्यम्

**पादोदर** पुंस्त्री० पाद उदरे यस्य । सर्पे भ्रमोप० स्त्रियां जातित्वात् ङीष् ।

**पाद्धत** न० पद्धतीनां समूहः भिक्षा० अण् । पद्धतिसमूहे

**पाद्म** न०पद्ममधिकृत्य प्रवृत्तम् अण् । "तदधिकृत्य कृते ग्रन्थे" पा० वा अण् । पद्माधिकारेण प्रवृत्ते १ब्रह्मादिकल्पे कल्पभेदे तदधिकारेण कृते २पद्मपुराणाख्ये ग्रन्थे च ।

**पाद्य** त्रि०पादार्थं पाद—यत् । १पादशौचार्थे जले अयमर्थः स्त्री तेन "पाद्याः पाद्याः पाद्याः प्रतिगृह्यन्तामिति" विवाहे ऽर्घ्यप्रश्नः । पादं चलनीयमर्हति यत् । २चलनीय-मार्हे त्रि० । देवदेयपाद्ये द्रव्यविशेष उक्तो यथा "पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरीरितम्" । एतद्द्रव्ययुक्तं जलमिति" देवप्र० रघु० । तद्दानपात्रलक्षणं यथा "पादा-वसेचनजलयदृश्यं पात्रमद्भुतम् । सौवर्णं राजतं वा हैमं राजतमेव वा" वैखानसस० । "षडङ्गुलप्रविस्ता-रमुत्सेधे चतुरङ्गुलम् । ओष्ठमेकाङ्गुलं कुर्यात् नासिकां चतुरङ्गुलाम् । पृष्ठे पादसमायुक्तं चतुरङ्गुलमानतः । पाद्यपात्रमिति ख्यातं सर्वदेवप्रपूजने" सिद्धान्तशेखरः । पाद्यप्रकारः स्वार्थे० कन् । पाद्यक पाद्यप्रकारे त्रि० ।

**पान** न० पा—ल्युट् । १द्रवद्रव्यस्य गलाधःसंयोजने २रक्षणे च ३निश्वासे च पु० हेमच० । निश्वासेन प्राणरक्षणात्तथा-त्वम् । आधारे ल्युट् । ४पानभाजने मेदि० पीय-तेऽस्मात् अपादाने ल्युट् । ५शौण्डिके पु० जटा०। करणे ल्युट् । अस्त्राणां तीक्ष्णतासम्पादने ६अस्त्रसारभेदे (पानदेओया) असिशब्दे ५९१ पृ० पायनाशब्दे च दृश्यम् । पीयते कर्मणि ल्युट् । ७मद्यादौ ।

**पानक** न० पानार्थं कायति कै—क । अम्लिकानिम्बुरसादि-मिश्रितशर्कराजलादौ अलातुशब्दे २१८पृ० दृश्यम् ।

**पानगोष्ठिका** स्त्री पानार्थं गोष्ठिका । १मद्यादि-पानार्थसभायाम् तत्रोक्ते २भैरवीचक्रे च ।

**पानठ** त्रि० पाने कुशलः वा० अठच् । पानकुशले स्त्रियां गौरा० ङीष् । [रायमुकुटः ।

**पानप** त्रि० पानं पेयं मद्यादि पिबति पा—पाने क । सु-

**पानपात्र** न० पानस्य पेयस्य सुरादेः पात्रम् । पेयसुरादेः पात्रे कंसे अमरः । पानभाजनादयोऽप्यत्र ।

**पानवणिज्** पु० पानस्य पेयस्य सुरादेः वणिज् । शौण्डिके हेमच० । [प्रकृतिस्वरः ।

**पानशौण्ड** त्रि० पाने शौण्डः ७त० । सुरादिपानदक्षे

**पानस** न० पनसस्य तत्फलस्य विकारः तस्येदं वा अण् । पनसभवे १मद्यभेदे "पानसं द्राक्षमाधूकम्" द्वादशम-द्योक्तौ प्रा०वि० । २पनससम्बन्धिनि त्रि० ।

**पानात्यय** पु० सुश्रुतोक्ते मद्यपानजे रोगभेदे मद्यस्य पा-नदोषादिकनिरूपणेन तल्लक्षणादिकं तत्रोक्तं यथा

"मद्यमुष्णं तथा तीक्ष्णं सूक्ष्मं विशदमेव । रूक्ष-माशुकरञ्चैव व्यवायि च विकाशि च । औष्ण्याच्छीतो-पचारं तत्तैक्ष्ण्याद्धन्ति मनोगतिम् । विशत्यवयवान् सौक्ष्म्याद्वैशद्यात्कफशुक्रनुत् । मारुतं कोपयेद्रौक्ष्या-दाशुत्वादाशुकर्मकृत् । हर्षदम् व्यवायित्वाद्विकाशित्वाद्वि-

वर्धते । तदच्छं रसतः प्रोक्तं लघु रोचनदीपनम् । केचिल्लवणवर्जांस्तु रसानत्रादिशन्ति हि । स्निग्धैस्तद्वन्मांसैश्च भक्ष्यैश्च सह सेवितम् । भवेदायुःप्रकर्षाय बलायोपचयाय च । काम्यता मनसस्तुष्टिस्तेजोऽतिविक्रमः । विधिवत्सेव्यमाने तु मद्ये सन्निहिता गुणाः । तदेवानन्नमद्येन सेव्यमानमनात्मया । कायाग्निनाद्यग्निसमं समेत्य कुरुते मदम् । मदेन करणानान्तु भावान्यत्वे कृते सति । निगूढमपि भावं स्वमकार्यी कुरुतेऽवशः । तत्रावस्थ मदो ज्ञेयः पूर्वो मध्योऽथ पश्चिमः । पूर्वं वीर्यरतिप्रीतिहर्षभाष्यादिवर्द्धनम् । प्रलापो मध्यमे हर्षो युक्तायुक्तक्रियास्तथा । विसंज्ञः पश्चिमे प्रोक्ते नष्टकर्मक्रियागुणः । स्त्रैणिकानल्पपित्तांश्च स्निग्धान्नात्मोपसेविनः । पानं न बाधतेऽत्यर्थं विपरीतांस्तु बाधते । निर्भक्तमेकान्तत एव मद्यं निषेव्यमाणं मनुजेन नित्यम् । उत्पादयेत् कष्टतमान्विकारानापादयेच्चापि शरीरभेदम् । क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन । व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि । अत्यम्लभक्ष्यावततोदरेण साजीर्णभुक्तेन तथा बलेन । उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान्विकारान् । पानात्ययं परमदं पानाजीर्णमथापि वा । पानविभ्रममुग्रञ्च तेषां वक्ष्यामि लक्षणम् । कम्पाङ्गमर्दहृदयग्रहतोदकम्पाः पानात्ययेऽनिलकृते शिरसो रुजश्च । स्वेदप्रलापमुखशोषदाहमूर्च्छाः पित्तात्मके वदनलोचनपीतता च । श्लेष्मात्मके वमथुशीतकफप्रसेकाः सर्वात्मके भवति सर्वविकारसम्पत् । जृम्भा शरीरगुरुता विरसाननत्वं श्लेष्माधिकत्वमरुचिर्मलमूत्रसङ्गः । लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञास्तृष्णा रुजा शिरसि सन्धिषु चापि भेदः । आध्मानमुद्गिरणमम्लरसो विदाहोऽजीर्णस्य पानजनितस्य वदन्ति लिङ्गम् । ज्ञेयानि तत्र भिषजा सुविनिश्चितानि पित्तप्रकोपजनितानि च कारणानि । हृद्गात्रतोदवमथुज्वरकण्ठधूममूर्च्छाकफस्रवणमूर्द्धरुजो विदाहः । द्वेषः सुरान्नविकृतेषु च तेषु तेषु तं पानविभ्रममुशन्त्यखिलेन धीराः । हीनोत्तरौष्ठमतिशीतममन्ददाहं तैलप्रभास्यमतिपानहतं विजह्यात् । जिह्वौष्ठदन्तमसितं त्वथवापि नीलं पीते च यस्य नयने रुधिरप्रभे च । हिक्काज्वरौ वमथुवेपथुपार्श्वशूलाः कासभ्रमावपि च पानहतं भजन्ते" । परममदपानाजीर्णपानविभ्रमा अपि तत्रोक्ते मद्यपानजे रोगभेदे तल्लक्षणमत्रैवोक्तम् ।

**पानिल** न० पानमाधारतयाऽस्त्यस्य इलच् । जलपात्रे शब्दच०

**पानीय** त्रि० पा—पाने रक्षणे वा कर्मणि अनीयर् । १पेये जलादौ २रक्षणीये च ३जले न० अमरः । तद्गुणभेदादि अम्बुशब्दे दृश्यम् ।

**पानीयकाकिक** पु० काकस्याकारोऽस्त्यस्य ठन् ६त० । (पानकौड़ि) पक्षिभेदे मद्गुखगे उज्ज्वलद० ।

**पानीयनकुल** पुंस्त्री० पानीये जले नकुल इव । (उद्बिडाल) जलबिडाले हेमच० ।

**पानीयपृष्ठज** पु० पानीयपृष्ठे जलोपरि जायते जन—ड । (पाना) कुम्भराम् रत्नमाला ।

**पानीयफल** न० ६त० । (माखना) जलकन्दफलभेदे भावप्र०

**पानीयभक्तगुड़िका** स्त्री चक्रदत्तोक्ते गुडिकाभेदे "रसोऽर्द्धभागिकस्तुल्याविडङ्गमरिचाभ्रकाः । भक्तोदकेन संमर्द्य कुर्य्याद् गुञ्जासमां गुडीम् । भक्तोदकानुपानेन सेव्या वह्निप्रदीपनी । वार्य्यन्नभोजनञ्चात्र प्रयोगे शस्यमिष्यते" । [शब्दच० ।

**पानीयमूलक** न० पानीयं मूलं यस्य कप् । सोमराज्याम्

**पानीयवर्षिका** स्त्री पानीयमिव वर्षति वर्षि—ण्वुल् । वालुकायां राजनि० ।

**पानीयशालिका** स्त्री पीयतेऽस्याम् आधारे अनीयर् पानीया शाला पानीयवितरणार्थं वा शाला ततः स्वार्थे क कापि अतइत्वम् । प्रपायाम् (जलसत्रस्थाने) अमरः । तद्दानविधिः हेमाद्रि०दा० भविष्यपु० उक्तो यथा "अतीते फाल्गुने चापि प्राप्ते चैव महोत्सवे । पुण्येऽह्नि विप्रकथिते शुभचन्द्रबलान्विते । मण्डपं कारयेद्विद्वान् नवच्छायं मनोरमम् । पुरस्य मध्ये पथि वा चैत्यवृक्षतलेऽथ वा । सुशीतलतलं रम्यं विचित्रासनसंयुतम् । तन्मध्ये स्थापयेत् कुम्भान् सचित्रकांश्च शोभनान् । पाकलयुक्तान् करकान् वस्त्रैरावेष्टिताननान् । आह्वये शीलसम्पन्नं भृतिं दत्त्वा यथोदिताम् । प्रपापालः प्रकर्त्तव्यो बहुपुत्रपरिच्छदः । पानीयपानाद्ध्वान्तान् यः कारयति मानवान् । एवंविधां प्रपां कृत्वा शुभेऽह्नि विधिपूर्वकम् । यथाशक्त्या नरश्रेष्ठ ! प्रारम्भे भोजयेद्द्विजान् । ततश्चोत्सर्जयेद्विद्वान् मन्त्रेणानेन मानवः । प्रपेयं सर्वसामान्या भूतेभ्यः प्रतिपादिता । अस्याः प्रदानात् पितरस्तृप्यन्तु च पितामहाः । अनिवारितं ततो देयं जलं मासचतुष्टयम् । त्रिपक्षं वा महाराज !

जीवानां जीवनं परम्। गन्धाढ्यं सुरसं शीतं भोजने राजते स्थितम्। मद्द्यादप्रतिहतं सुखपानमवलोकयन्। प्रत्यहं कारयेत्तस्यां भोजनं शक्तितो द्विजान्। अनेन विधिना यस्तु ग्रीष्मे तोयप्रपासनम्। पानीयमुत्तमं दद्यात्तस्य पुण्यफलं शृणु। कपिलाशतदानस्य सम्यग्दत्तस्य यत् फलम्। तत्पुण्यफलमाप्नोति सर्वदेवैः सुपूजितः। पूर्णचन्द्रप्रतीकाशं विमानमधिरुह्य सः। याति देवेन्द्रनगरं पूज्यमानोऽप्सरोगणैः। त्रिंशत्कोट्यो हि वर्षाणां यक्षगन्धर्वसेवितम्। पुण्यक्षयादिहागत्य चतुर्वेदो द्विजो भवेत्। ततःपरं पदं याति पुनरावृत्तिदुर्लभम्"।

**पानीयामलक** न० कर्म०। (पानिआमला) वृक्षभेदे "पानीयामलकं दोषत्रयज्वरविनाशनम्। अम्लं स्वादु मुखशुद्धिकरं मलविशुद्धिकृत्" राजवल्लभः।

**पानीयालु** पु० पानीयजात आलुः शा०त०। (पानीआलु) कन्दभेदे राजनि० "पानीयालुस्त्रिदोषघ्नः सन्तर्पणकरः परम्"। [स्त्री० ङ टाप्। बल्वजायां राजनि०।

**पानीयाश्रा** स्त्री पानीयं जलमश्नाति मूलेन अश—भोजने

**पान्थ** त्रि० पन्थानं नित्यं गच्छति अण् पन्थादेशः। नित्यं पथि गन्तरि १पथिके अमरः। २वियोगिनि च त्रि०।

**पान्थायन** त्रि० पथोऽदूरदेशादि पथिन्+पक्षा० फक् पन्थ देशः। मार्गस्यादूरदेशादौ।

**पान्नागारि** पुंस्त्री० पन्नागारस्य ऋषेरपत्यं युवा इञ् "इञः प्राच्यभरतेषु" पा० युवप्रत्ययस्य लुक्। गोत्रप्रवर्त्तकपन्नागारेः १गोत्रापत्ये २तदीये यून्यपत्ये च।

**पाप** न० पाति रक्षति आत्मानमस्मात् पा—अपादाने प। १नरकहेतौ दुरदृष्टे तत्साधने २हिंसादौ ज्योतिषोक्तेषु ३क्षीणचन्द्ररविप्रभृतिषु ग्रहेषु पापग्रहशब्दे दृश्यम्। पापलक्षणं पापसत्तायां प्रमाणञ्च प्रा०वि० उक्तं यथा "ननु किं पापलक्षणम् उच्यते चोदनालक्षणोऽर्थो धर्म्म इति धर्मलक्षणं कुर्वता सूत्रकारेण जैमिनिना वेदैकप्रतिपाद्योऽनर्थोऽधर्म्म इत्यधर्म्मलक्षणं सूचितम् अनर्थश्चानिष्टसाधनं तथा चोक्तं भाष्यकृता कोऽर्थो योऽभ्युदयाय कोऽनर्थो योऽनभ्युदयाय"। ननु पापसत्तायां किं मानं न तावत् वेदः तस्य कार्य्ये कार्य्यान्विते वा प्रामाण्यात् न च दुरितापूर्वं कार्य्यं कार्य्यान्वितं वा। न च नित्यकर्माकरणस्य निषिद्धाचरणस्य च वेदोक्तप्रत्यवायसाधनत्वान्यथानुपपत्त्या कल्प्यं तस्य तथाविधशब्दाभावेन अविदितत्वेन अवगन्तुमशक्यत्वात्, उच्यते "यो ब्राह्मणायावगुरेत् तं शतेन यातयात्" इति श्रुतौ लिङ्श्रुतेरवगोरणशतयातनयोः साध्यसाधनभावोऽवगम्यते "हेतुहेतुमतोर्लिङ्" इति पाणिनिस्मरणादिति यथोक्तं शब्दप्रकरणे, तथात्रापि क्वचित् पञ्चम्या क्वचित् तृतीयया क्वचिद्विशेषणेन तदवगम्यते। यथा याज्ञवल्क्यः "विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" (अत्र पञ्चम्या) मनुः "शरीरजैः कर्म्मदोषैर्याति स्थावरतां नरः। वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्। इह दुश्चरितैः केचित् केचित् पूर्वकृतैस्तथा। प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्य्ययम्" (अत्र तृतीयया) विष्णुपु० "नरकं कर्म्मणां लोपादेवमाहुर्महर्षयः" यमः "सुरापो ब्रह्महा गोघ्नः सुवर्णस्तेयतस्करः। पतितैः संप्रयुक्तश्च कृतघ्नो गुरुतल्पगः। एते पतन्ति सर्वेषु नरकेष्वनुपूर्वशः"। अत्र ते सुरापादयः पतन्तीति सुरापादीनां पतनकर्तृत्वावगतेः पतनकर्तृत्वञ्च साधनत्वविशेषः। अतः सुरापानादिविशिष्टस्य पुरुषस्य पतनसम्बन्धे विशेषणस्य सुरापानादेः सति सम्भवे पतनसाधनत्वमवगम्यते। "समुद्रयप्राजापत्यानुपशूनालभेत" इतिवत्। एवं "वारिदस्तृप्तिमाप्नोति" इत्यादिषु। नरकसाधनत्वस्य कार्य्यान्वयाभावात् कथं शब्दादवगतिरिति चेत् शृणुत विधयविशेषणतया इति ब्रूमः। यथा यातनासाधनादवगोरणान्निवर्त्तितव्यमिति विधिः। तथा नरकसाधनात् सुरापानादेरपि निवर्त्तितव्यमिति"। यथा कालान्तरभावि स्वर्गादिसाधनत्वान्यथानुपपत्त्या यागादेर्द्वारीभूतधर्मकल्पकता एवं कालान्तरभाविनरकादिसाधनत्वान्यथानुपपत्त्या सुरापानादेर्द्वारीभूताधर्मकल्पकत्वमिति बोध्यम्। पापमस्त्यस्य अर्श० अच्। ४पापयुक्ते त्रि०। पापं च कायिकादिभेदेन दशविधं दशहराशब्दे ३४८३पृ० दर्शितम् कायिकादिभेदेनान्यान्यपि पापान्युक्तानि यथा "प्राणाभिपातनं स्तैन्यं परदारमथापि च। त्रीणि पापानि कायेन सर्वतः परिवर्जयेत्। असत्प्रलापं पारुष्यं पैशुन्यमनृतं तथा। चत्वारि वाचा राजेन्द्र! न जल्पेत न चिन्तयेत्। अनभिध्या परस्वेषु सर्वसत्त्वेषु सौहृदम्। कर्म्मणां फलमस्तीति त्रिविधं मनसाचरेत्" भा०शा०दानधर्मः। पापस्य पुरुषमवश्यमनुवर्त्तित्वं यथा "नाधर्म्मश्चरितो राजन्! सद्यः फलति गौरिव। शनै-

काचस्य दीपनिर्वापकः। त्रपुचामरसीसकविक्रयी रजकः। एकशफविक्रयी मृगव्याधः। कुण्डाशी भगास्यः, चाण्टिकः स्तेनः। वार्धुषिको भ्रामरी। मिष्टाशी वातगुल्मी। समयभेत्ता खल्वाटः, स्त्रीपद्यवकीर्णी। परवृत्तिघ्नो दरिद्रः। परपीडाकरो दीर्घरोगी। एवं कर्मविशेषेण जायन्ते लक्षणान्विताः। रोगान्वितास्तथा न्याश्च कुब्जखञ्जैकलोचनाः। वामनाबधिरामूका दुर्बलाश्च तथा परे। तस्मात् सर्वप्रयत्नेन प्रायश्चित्तं समाचरेत्”। यद्यपि सर्वेषां रोगाणां दुःखदायकत्वेन पापहेतुकत्वं तथापि उन्मादाद्यष्टरोगाणां प्राधान्येन महापापजत्वेन पापरोगत्वं यथोक्तं शु॰त॰रघुनन्दनेन “महारोगिण इति पापरोगाष्टकान्यतमरोगवतः। ते च उन्मादस्त्वगदोषो राजयक्ष्मा श्वासो मधुमेहो भगन्दरः उदरोऽश्मरी इत्यष्टौ पापरोगा नारदोक्ताः। कर्मविपाकशब्दे १७४५ पृ॰ विस्तरः। २मसूरीरोगे शब्दरत्ना॰।

**पापरोगिन्** त्रि॰ पापजन्यरोगो नित्यत्वेनास्त्यस्य इनि। महारोगयुक्ते ३।१।२ मनुः। [२पापर्द्धौ च।

**पापर्द्धि** स्त्री पापानामृद्धिरत्र। १मृगयायां हेमच॰ हृत॰।

**पापल** त्रि॰ पापं लाति ला—क। १पापप्रापके पातयति तुलादण्डं स्वाधिष्ठानेन अधोनयति पाति—कलच् तस्य पत्र। २परिमाणभेदे न॰ उणादिकोषः।

**पापशमनी** स्त्री पापं शम्यतेऽनया शम—णिच्—करणे ल्युट् ङीप्। १शमीवृक्षे राजनि॰। पापं शमयति शमि—ल्यु। २पापनिवारके त्रि॰। [तुल्ये।

**पापसम** अव्य॰पापेन तुल्यम् तिष्ठद्गु॰ अव्ययीभावः। पाप-

**पापहन्** त्रि॰ पापं हन्ति हन—क्विप्। पापनाशके मनुः ७।२५।

**पापाख्या** स्त्री पापमनिष्टमाख्याति सूचयति आ+ख्या—क। वृ॰सं॰७अ॰उक्ते बुधस्य गतिभेदे “प्राकृतविमिश्रसंक्षिप्ततीक्ष्णयोगान्तघोरपापाख्याः। पराशरतन्त्रे मतास्तैः कीर्त्तितागतयः” इत्युपक्रमे “पापाख्या सावित्रं मैत्रं शक्राग्निदैवतं चेति” सावित्रादिनक्षत्रे तद्गतेः संज्ञास्ता “प्राकृतगत्यामारोग्यवृष्टिशस्यप्रवृद्धयः क्षेमम्। संक्षिप्तमिश्रयोर्मिश्रमेतदन्यासु विपरीतम्” इति तस्याः अशुभफलकथनेन पापसूचकत्वात् तथात्वम्।

**पापात्मन्** त्रि॰ पापयुक्त आत्मा अन्तःकरणं यस्य। पापान्विते जीवे “पापात्मा पापसम्भवः” इति पुराणम्। तेषां संसरणप्रकारः पाद्मे क्रियायो॰ २२अ॰ यथा “पापात्मनां शृणु गतिं विस्तरेण वदाम्यहम्। षडशीति सहस्राणि योजनानि दुरात्मनाम्। प्रोक्तो मार्गस्य विस्तारः सर्वदुःखान्वितस्य च। क्वचित् क्वचित् ज्वलदग्निः सन्तप्तः कर्दमः क्वचित्। क्वचित् क्वचित् द्विजश्रेष्ठ! सन्तप्तं ताम्रवालुकम्। क्वचित् क्वचित्तीक्ष्णशिलाः क्वचित्तप्तशिलास्तथा। क्वचित् क्वचिच्छस्त्रवृष्टिः क्वचिदङ्गारवर्षणम्। कुत्रचिद्वह्निवृष्टिश्च कुत्रचित् पङ्कवर्षणम्। उष्णाम्बुवर्षणं क्वापि क्वचित् पाषाणवर्षणम्। ज्वलदग्निरिव क्वापि सन्तप्तो वाति मारुतः। गभीरा अन्धकूपाश्च तृणावृतमुखा द्विज!। क्वापि कण्टकवृक्षाश्च नाराचसमकण्टकाः। पाषाणश्रेणयः क्वापि दुरारोहाः सपन्नगाः। क्वचिद्गाढान्धकाराश्च क्वचित् शोणित कन्दराः। क्वचिद्दीर्घतृणाश्च क्वचित् काशाः क्वचित् शराः। क्वचित् क्वचिच्छर्कराश्च लेष्टवश्च क्वचित् क्वचित्। क्वचिदस्थ्नां राशयश्च दुर्गन्धा मांसराशयः। क्वचित् कण्टकराशिश्च शैवालानि क्वचित् क्वचित्। कीलकावलयः क्वापि क्वचिद्व्याघ्रास्तथा शिवाः। खड्गिनः करिणः क्वापि क्वचिदश्वा भयङ्कराः। एवं बहुविधक्लेशे छाया जलविवर्जिते। तस्मिन् मार्गे द्विजश्रेष्ठ! पापिनो यान्ति दुःखिनः। नग्नाविमुक्तकेशाश्च प्रेताकारभयङ्कराः। गच्छन्ति पापिनस्तत्र शुष्ककण्ठोष्ठतालुकाः”।

**पापान्त** न॰ पृथूदकापरनामके तीर्थभेदे वामनपु॰ ३८अ॰।

**पापाह** पु॰पापमशुद्धत्वात् गर्ह्यमहः टच्समा॰। अशौचदिने

**पापिन्** त्रि॰ पाप+अस्त्यर्थे इनि। पापयुक्ते। अतिशयेन पापी इष्ठन्। पापिष्ठ अतिशयेन पापयुक्ते। ईयसुन् पापीयस् तत्रार्थे त्रि॰ स्त्रियां ङीप्। [पापे अमरः।

**पाप्मन्** पु॰ आप्नोति व्याप्नोति पापिनम् आप—मनिन् नि॰।

**पामघ्न** पु॰ पाम हन्ति हन—टक्। १गन्धके राजनि॰। २कटुकायां स्त्री जटाधरः।

**पामन्** न॰ पा—मनिन्। विचर्चिकायां (खोस पाचड़ा) स्त्रीत्वमपि मनन्तात् वा डाप् पामाप्यत्र अमरः।

**पामन** त्रि॰ पामास्त्यस्य मत्वर्थे न। पामरोगवति अमरः पक्षे मतुप् मस्य वः। पामवत् तत्रार्थे त्रि॰ स्त्रियां ङीप्

**पामर** त्रि॰ पाति क्विप् पाः लयोधर्मः स म्रियतेऽनेन मृ—घ। १मूर्खे २नीचे मेदि॰ ३खले हेमच॰।

**पामरोद्धारा** स्त्री पामरमुद्धरति उद्—हृ—अण् अजादित्वात् टाप्। गुडूच्याम् शब्दरत्ना॰।

**पामादि** पु॰“पामादिभ्यो नः” पा॰ अस्त्यर्थे नप्रत्ययनिमित्ते

शब्दगणे स च गणः पा॰ग॰ सू॰ उक्तो यथा "पामन् वामन् हेमन् श्लेष्मन् कद्रुवलि सामन् ऊष्मन् कृमि- (अङ्गात् कल्याणे) (शाकोपलालीदद्रूणां ह्रस्वत्वञ्च)(विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः) (लक्ष्म्या अच्च)

**पामारि** पु॰ ६त॰। गन्धके हेमच॰। तत्सेवने हि पामरोगनाशः इति तस्य तथात्वम्।

**पायना** स्त्री पा–णिच्+भावे युच्। अस्त्रादीनां धाराकरणार्थे व्यापारभेदे तेषां पायना त्रिविधा "क्षारोदकतैलेषु, तत्र क्षारपायितं शरशल्यास्थिच्छेदनेषु। उदकपायितं मांसच्छेदनभेदनपाटनेषु, तैलपायितं सिराव्यधनस्नायुच्छेदनेषु" सुश्रुतः।

**पायस** त्रि॰पयसोविकारः अण्। १दुग्धविकारे २परमान्ने पु॰ अमरः। तत्पाकप्रकारो यथा "अतप्ततण्डुलो धौतः परिभ्रष्टो घृतेन च। सशर्करेण दुग्धेन पाचितः पायसो भवेत्। पायसः कफकृद्बल्यो विष्टम्भी मधुरो गुरुः" पाकराजेश्वरः।

**पायसिक** त्रि॰ पायसो भक्तिरस्य। पायसभक्तियुक्ते

**पायिक** पु॰ पादविक+पृषो॰। पदातौ शब्दच॰।

**पायित** त्रि॰ पा+णिच–क्त। १पानकर्त्तृभूतीकृते पदार्थे (पानदेओया) २अस्त्रे च पायनाशब्दे दृश्यम्।

**पायु** पु॰ अपैति अनेन वायुः अप+इण करणे–उण् अपेरल्लोपः पिबत्यौषधमनेन पा–उण् वा। १अपानवायुस्थाने २कर्मेन्द्रियभेदे च इन्द्रियशब्दे दृश्यम्।

**पाय्य** न॰ मीयतेऽनेन मा–ण्यत् नि॰ पादेशः। १परिमाणे २पानीये न॰ ३निन्दनीये त्रि॰ विश्वः। ४पाने उणादि॰

**पार** कर्मसमाप्तौ अद॰चु॰उभ॰सक॰सेट्। पारयति ते अपपारत् त।

**पार** न॰ परं तीरं परमेव अण्, पृ–घञ् वा। नदीलङ्घनेन प्राप्ये १परे तीरे अमरः। २प्रान्तभागे शेषावधौ मेदि॰।

**पारक** त्रि॰ पृ–ण्वुल्। १पूर्त्तिकारके २पालके ३प्रीतिकारके च स्त्रियां गौरा॰ ङीष्। [साधौ।

**पारकुलीन** त्रि॰ परकुले साधु प्रतिजना॰ खञ्। परकुले

**पारक्य** त्रि॰परस्मै लोकाय हितम् तस्येदं वा ष्यञ् कुक्च। १परलोकसाधने २परकीये च "पारक्यमविरोधि च" कर्मप्रदीपः "उद्धृत्य चतुरः पिण्डान् पारक्ये स्नानमाचरेत्" अत्रिस॰। [समाप्तिगन्तरि च।

**पारग** त्रि॰ पारं गच्छति गम–ड। १पारगन्तरि २कार्य-

**पारगत** त्रि॰ पारं गतः। १पारगामिनि २जिने पु॰ हेमच॰

**पारज** न॰ पार–जनि–ड। सुवर्णे उज्ज्वलद॰। [गन्तरि।

**पारजायिक** पु॰परजायां गच्छति परदारादि॰ठक्। परदार-

**पारटीन** पु॰ प्रस्तरे त्रिका॰।

**पारण** न॰ पार–भावे ल्युट्। १व्रतान्तभोजने युच् पारणा तत्रार्थे। "पारणं पावनं पुंसां सर्वपापप्रणाशनम्। उपवासाङ्गभूतञ्च फलदं शुद्धिकारणम्। सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते। अन्यथा फलहानिः स्यादृते धारणपारणम्। न रात्रौ पारणं कुर्यादृते वै रोहिणीव्रतात्। निशायां पारणं कुर्याद्वर्जयित्वा महानिशाम्। पूर्वाह्णे पारणं शस्तं कृत्वा विप्र! सुरार्चनम्। सर्वेषां सम्मतं कुर्यादृते वै रोहिणीव्रतम्" ब्रह्मवै॰ श्रीकृष्णजन्मखण्डे दक्ष॰। जन्माष्टमीशब्दे एकादशीशब्दे च दृश्यम्। ल्यु। २मेघे पु॰ शब्दमाला। ३ऋषिभेदे। पारणस्यर्षेरपत्यम् इञ्। पारणि तदपत्ये। ततः यूनि फञ् पारणायन यूनि तदपत्ये। तौल्वला॰ फिञो न लुक्।

**पार(द)त** पु॰ पृ–णिच्–तन्, पृषो॰ तस्य दो वा। १रसभेदे (पारा)। पारं ददाति दा–क। २पारदायिनि त्रि॰हेमच॰ "रसायनार्थिभिर्लोकैः पारदो रस्यते यतः। ततो रस इति प्रोक्तः स च धातुरपि स्मृतः"। अथ पारदस्योत्पत्तिलक्षणनामगुणाः "शिवाङ्गात् प्रच्युतं रेतः पतितं धरणीतले। तद्देहसारजातत्वाच्छुक्लमच्छमभूच्च तत्। क्षेत्रभेदेन विज्ञेयं शिववीर्य्यं चतुर्विधम्। श्वेतं रक्तं तथा पीतं कृष्णं तत्तु भवेत् क्रमात्। ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्च खलु जातितः। श्वेतं शस्तं रुजां नाशे, रक्तं किल रसायनम्। धातुवादे तु तत्पीतं खेगतौ कृष्णमेव च। पारदो रसधातुश्च रसेन्द्रश्च महारसः। चपलः शिववीर्य्यञ्च रसः सूतः शिवाह्वयः। पारदः षड्रसः स्निग्धस्त्रिदोषघ्नो रसायनः। योगवाही महावृष्यः सदा दृष्टिबलप्रदः। सर्वामयहरः प्रोक्तो विशेषात् सर्वकुष्ठनुत्। स्वस्थो रसो भवेद्ब्रह्मा बद्धो ज्ञेयो जनार्दनः। रञ्जितः क्रामितश्चापि साक्षाद्देवमहेश्वरः। मूर्च्छितो हरति रुजं बन्धनमनुभूय खेगतिं कुरुते। अजरीकरोति हि मृतः कोऽन्यः करुणाकरः सूतात्। असाध्यो यो भवेद्रोगो यस्य नास्ति चिकित्सितम्। रसेन्द्रो हन्ति तं रोगं नरकुञ्जरवाजिनाम्। मलं विषं वह्निगिरी च चापलं नैसर्गिकं दोषमुशन्ति पारदे। उपाधिजौ द्वौ त्रपुनागयोगजौ दोषौ रसेन्द्रे कथितौ

**पारस्करादि** "पारस्करप्रभृतीनि च संज्ञायाम्" पा० उक्ते सुडागमनिपातननिमित्ते शब्दगणे स च "पारस्करो देशः। कारस्करो वृक्षः। रथस्पा नदी। किष्कुः प्रमाणम्। किष्किन्धा गुहा। (तद्बृहतोः करपत्योश्चौरदेवतयोः सुट् तलोपश्च) (प्रात्तुम्पतौ गवि कर्त्तरि)।

**पारस्त्रैणेय** त्रि० परस्त्रिया अपत्यं ढक् इनङादेशः। जारजे परस्त्रियाः सुते अमरः स्त्रियां ङीप्।

**पारस्यकुलीन** त्रि० परस्य कुले भवः प्रतिजना० खञ् तत्र परस्यकुलेति पाठात् अलुक्स०। परकुलोत्पन्ने दत्तकसुतादौ

**पारापत** पुंस्त्री० पारादप्यापतति प्रेम्णा आ+पत–अच्। पारावते (पायरा) अमरः स्त्रियां ङीष्।

**पारावत** पुंस्त्री०परं जीवमवति परात् शत्रोर्वा अहङ्कारद्वा ज्ञानोपदेशद्वारा अवति अव–शतृ परावत् तत्त्वज्ञः तस्यायमुपदेष्टा अण्। कपोते अमरः स्त्रियां ङीष्। चतुर्विंशगुरुमध्ये पारावतस्यापि गुरुत्वमुक्तं तत्र प्रसङ्गात् चतुर्विंशतिगुरवोऽत्र प्रदर्श्यन्ते "पृथिवी वायुराकाशमापोऽग्निश्चन्द्रमा रविः। कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद्गजः। मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः। कुमारी शरकृत् सर्प ऊर्णनाभिः सुपेशकृत्। एते मे गुरवो राजन्! चतुर्विंशतिराश्रिताः। शिक्षावृत्तिभिरेतेषामन्वशिक्षमिहात्मना" भाग० ११।७ अ०। तत्कथा तदुत्तरत्र दृश्या

**पारापा(वा)र** न० पारमपारञ्चास्त्यस्य अर्शा० अच्। १समुद्रे अमरः द्व०। २तटद्वये द्वि०व०। पारावारशब्दोऽप्युभयत्रार्थे।

**पारायण** न० पारं समाप्तिमयतेऽनेन अय–ल्युट्। १साकल्ये अमरः २ग्रन्थादीनामाद्यन्तपाठे च। तत्र वेदपारायणं चतुष्प्रकारम् कल्पद्रुमशब्दे १४१२पृ०दृश्यम्। पुराणस्य ग्रन्थपाठेऽपि पारायणव्यवहारः। तत्र भागवतपारायणे कश्चिद्विशेषः पद्म०पाता० ७१अ०उक्तो यथा "कृतनित्यक्रियः प्रातः कुशहस्तः कृतासनः। देवद्विजगुरून्नत्वा ध्यात्वा विष्णुं सनातनम्। द्वैपायनं नमस्कृत्य शुकदेवञ्च भक्तितः। हिरण्याक्षवधं यावत् प्रथमेऽहनि कीर्त्तयेत्। चरितं भरतस्यापि द्वितीयेऽथ तृतीयके। मथनञ्चाम्बुधेस्तस्यापि, यत्र कूर्मः स्वयं हरिः। चतुर्थदिवसे, चैव दशमे हरिजन्म च। पञ्चमे तु पठेद्विद्वान् रुक्मिण्या हरणावधि। षष्ठे चोद्धवसंवादं सप्तमे तु समापयेत्। अध्यायं प्राप्य विरमेन्न तु मध्ये कदाचन। कृते विरामे मध्ये तु अध्यायादिं पठेत् पुनः। पठेदर्थं बुध्यमानः श्रावयेद्वाचोत्तमैः। श्रोता तु प्राङ्मुखो भूत्वा शृणुयाद्भक्तितत्परः। अध्याये स्वर्णमाषैकं तथा दद्याच्च दक्षिणाम्। समाप्तौ च ततो धेनुं स्वर्णशृङ्गीं निवेदयेत्। कुर्याच्च वैष्णवं होमं सात्वतान् भोजयेत्ततः। एवं यः कुरुते देवि! पाठं भागवतस्य तु। श्रवणं श्रावणं वापि स इष्टां गतिमाप्नुयात्। एतत् पारायणं नाम सर्वकामफलप्रदम्" तत्र मासभेदाः पाद्मोत्तरख० ह्स० उक्ता यथा "अथ ते संप्रवक्ष्यामि सप्ताहश्रवणे विधिम्। सहायैर्वसुभिश्चैव प्रायः साध्यो विधिः स्मृतः। दैवज्ञन्तु समाहूय मुहूर्त्तं पृच्छ्य यत्नतः। विवाहे यादृशं वित्तं तादृशं परिकल्पयेत्। नभस्य आश्विनोर्जौ च मार्गशीर्षः शुचिर्नभाः। एते मासाः कथारम्भे श्रोतॄणां मोक्षसूचकाः"। "कृच्छ्रो देव्ययुतञ्चैव प्राणायामशतद्वयम्। तिलहोमसहस्रन्तु वेदपारायणं भवेत्" इति मिता०धृतषट्त्रिंशन्मतम्।

**पारायणिक** त्रि० पारायणमावर्त्तयति ठक्। १तदावर्त्तनकारिणि। पारायणस्येदं तदधिकृत्य वा प्रवृत्तं "वृद्धाच्छः" पा० छ। पारायणीय पारायणसम्बन्धिनि पारायणग्रन्थाधिकारेण प्रवृत्ते ग्रन्थभेदे च।

**पारारुक** पारमृच्छति ऋ–उकञ्। प्रस्तरे शब्दच०

**पारावतघ्नी** स्त्री पारावारं हन्ति हन–टक् पृषो०। पारवति दूरदेशे भवाऽपि दृष्टादेर्हन्त्री। सरस्वत्यां नद्याम् ऋ० ६।६१।२। इतादृचकमधिकृत्य निरु०२।२४ उक्तं "पारावतघ्नीं पारावारघातिनी"।

**पारावतपदी** स्त्री पारावतस्येव पादो मूलमस्य अन्त्यलोपः ङीष् पद्भावः। (नया फटकि) १लतायां रत्नमा०। २काकजङ्घायां राजनि०। [ज्योतिष्मतीलतायाम् अमरः।

**पारावताङ्घ्रि** पु० पारावतस्याङ्घ्रिरिव मूलमस्य। ज्योति-

**पारावताङ्घ्रिपिच्छ** पुंस्त्री० पारावताङ्घ्रिरिवारुणाकारयुतं पिच्छमस्य। पारावतभेदे राजनि०।

**पारावारीण** त्रि० पारमवारञ्च समस्तं समुद्रं वा गच्छति खञ्। १तटद्वयगामिनि २समुद्रगामिनि च। पारापारीणोऽप्यत्र।

**पाराशर** पु० पराशरस्यापत्यं गर्गा० यञ् पाराशर्यः तस्य छात्रा० कण्वा० अण् अन्त्ययलोपः। १पाराशर्यस्य छात्रेषु। पराशरेण प्रोक्तम् अण्। २पराशरप्रोक्ते स्त्रियां ङीप् "कलौ पाराशरी स्मृतिः" पराशरः।

**पाराशरकल्पिक** त्रि०पाराशरकृतः कल्पः तं वेत्त्यधीते वा

"विद्यायथसङ्ख्यानात्" वार्त्ति० ठक् । १पराशरतन्त्र-सम्बन्धाध्येतरि २तत्कल्पसम्बन्धार्थवेत्तरि च ।

**पाराशरि** त्रि० पराशरस्येदम् इञ् । अपत्ये तु यञेव । १पराशरसम्बन्धिनि २शुकदेवे पु० त्रिका० ।

**पाराशरिन्** पु० ब०व०। पाराशर्य्येण प्रोक्तं भिक्षुसूत्रम-धीयते इनि यलोपः । वेदव्यासप्रणीतशारीरकसूत्रस्य भिक्षुसूत्राध्यायिषु चतुर्थाश्रमिषु अमरः ।

**पाराशरीय** त्रि० पराशरस्यादूरदेशा० कृशाश्वा० छण् । परा-शरसन्निकृष्टदेशादौ ।

**पाराशर्य्य** पु० पराशरस्यापत्यं गर्गा० यञ् । पराशरस्या-पत्ये वेदव्यासे द्वैपायनशब्दे दृश्यम् । "यञञोः" पा० तस्य यूनि फक् पाराशर्य्यायण तदीये यूनपत्ये ।

**पारिकर्म्मिक** त्रि० परिकर्म्मणि नियुक्तः ठञ् । परिकर्म्म-णि नियुक्ते ।

**पारिकाङ्क्षिन्** पु० पारयति संसारात् तारयति पारि ब्रह्म पारि ब्रह्मज्ञानं तत्काङ्क्षति णिनि । यतिभेदे अमरः ।

**पारिख** त्रि० परिखायां भवः सङ्काशा० अण् । परिखाभवे तत्रेदं "सङ्काशः"पा०ग। पारिखीय तत्सम्बन्धिनि त्रि०।

**पारिखेय** त्रि० परिखा प्रयोजनमस्य ढञ् । परिखार्थे मृदादौ स्त्रियां ङीप् पारिखेयी भूमिः ।

**पारिणामिक** त्रि०परिणामे भवः ठञ् । आमक परिणामे

**पारिजात** पु० पारमस्त्यस्य पारी समुद्रस्तत्र जातः जन-ड । १देवतरुभेदे "ततोऽभवत् पारिजातः सुरलोक-विभूषणम्" भाग० ८।८।६ श्लो०। समुद्रमथनजातत्वात् समुद्रादुत्पत्तिरुक्ता । हरिवंशे तु १८६अध्याये कश्यपात् उत्पत्तिरुक्ता तन्नामनिरुक्तिश्चास्य दर्शिता यथा

"पारिजातं ततोऽस्राक्षीददित्याः प्रियकाम्यया । सर्वकामप्रदैः पुष्पैराचितं दिव्यगन्धजैः । नियामं सर्वदा हृद्यं सर्वभूतमनोहरम् । सर्वपुष्पाणि दृश्यन्ते तस्मि-न्नेव महाद्रुमे । इच्छायास्तु कुसुमानि विमृश्यैकाऽति-रूपिणी । बहुरूपाणि चान्यस्य पद्मानि च तथाऽ-परा । मन्दारादपि वृक्षाच्च सारमुद्धृत्य कश्यपः । त-स्मादेव तदग्र्योऽभूत् सर्वेषां ज्येष्ठतां गतः । ततस्तस्मै निव-ध्याथ कश्यपं प्रददौ शुभा । अदितिस्तं व्रतार्थं सौ-भाग्यार्थं तथैव च । नियमेन मया स्नातः कश्यपस्तु तपोधनः । इन्द्रोदत्तस्तथेन्द्राण्या सौभाग्यार्थं ततो मम । सोमवाप्यथ रोहिण्या भद्रया च धनदस्तथा । एवं सौभाग्यदो वृक्षः पारिजातो न संशयः । पारिजातो विष्णुपद्याः पारिजातेति वन्दितः । मन्दारपुष्पैर्संयुक्तो मन्दारस्तेन कथ्यते । कोऽप्येवं दारयिष्याम्यरजानन्तो यतो जनाः । कोविदारः इति ख्यातस्तस्मात् स महा-तरुः । मन्दारः कोविदारश्च पारिजातश्च नामभिः । स वृक्षो गीयते दिव्यो यस्यैतत् कुसुमोत्तमम्" । तस्य द्वारकायामानयनकथा पारिजातहरणे तदुत्तराध्या-येषु दृश्या । २नागभेदे भा०आ० ५७अ० । ३ऋषिभेदे भा०स०५अ०। स्वार्थे क । पारिजातक तथार्थे अमरः ।

**पारिजातसरस्वती** स्त्री पारिजातेश्वरी सरस्वती । सरस्व-तीभेदे तन्नामादि तन्त्रसारे दृश्यम् ।

**पारिणाय्य** त्रि० परिणये तत्काले लब्धम् बा०ष्यञ् । परि-णयकाले लब्धे धनादौ "मातुः पारिणाय्यं स्त्रियो विभ-जेरन्" दायभागे वशिष्ठः ।

**पारिणाह्य** त्रि० परिणाहमर्हति बा० ष्यञ् । गृहोप-करणे भाण्डादौ मनुः ९।११ कुल्लू० ।

**पारितथ्या** स्त्री परितथ्या परितथ्या स्वार्थे ष्यञ् । सी-मन्तस्थितायां स्वर्णादिपट्टिकायां (सिँथी) अमरः ।

**पारितोषिक** त्रि० परितोषः प्रयोजनमस्य ठञ् । परि-तोषार्थे दीयमाने धनादौ ।

**पारिधेय** त्रि० परिधौ भवः शुभ्रा० ढक् । परिधौ भवे ।

**पारिन्द्र** पुंस्त्री०पारीन्द्र+पृषो०। सिंहे हेमच० स्त्रियां ङीष् ।

**पारिपन्थिक** त्रि० पन्थानं वर्जयित्वा आश्रय वा परि-पन्थम् अव्ययीभा० तत्र तिष्ठति हन्ति वा ठक् "परिपन्थञ्च तिष्ठति" पा०उक्तेः निपा० पन्थादेशः । पन्थानं वर्जयित्वा आश्रय वा १स्थायिनि २हन्तरि च चौरे हेमच० ।

**पारिपाट्य** न० परिपाट्येव स्वार्थे ष्यञ् । परिपाट्याम् ।

**पारिपा(या)त्र** पु० पर्वतभेदे "हिमवान् पारियात्रश्च" भा० स० १० अ० । स तु भारतवर्षस्थकुलाचलभेदः यथोक्तं "विन्ध्यश्च पारिपात्रश्च सप्तैते कुलपर्वताः । तेषां सहस्रशो राजन्! पर्वतास्ते समीपतः" भा० भी० ९ अ०। "जठरो देवकूटश्च पूर्वस्यां दिशि पर्वतौ । आ-नीलनिषधौ प्राप्तौ परस्परनिरन्तरौ । निषधः पारि-पात्रश्च मेरोःपार्श्वे तु पश्चिमे । यथा पूर्वौ तथा चैता वानीलनिषधावतौ" मार्क० पु० ५४अ०। "वेदस्मृतिर्वेद-वती वृत्रघ्नी सिन्धुरेव च । वेण्या सानन्दिनी चैव सदा-नीरा नदी तथा । पारा चर्म्मण्वती नूपी विदिशा वेत्र-वत्यपि । शिप्रा ह्यवन्ती च तथा पारियात्राश्रयाः

श्रुताः” मार्क०पु० ५७ अ०। “मद्रकोपाङ्गवाश्चैव पारिपात्रनिवासिनः” विष्णुपु०। स च पर्वतः वृ०सं० १४ अ० कूर्मविभागे मध्यस्थितत्वोक्तः यथा “उत्तरपाण्डेतकक्कुरुक्कालकोटिकुकुराश्च पारियात्रनगः” स्वार्थे क। पारिपात्रक तत्रार्थे क्वचित् समध्यपाठस्तत्रार्थे।

**पारिपार्श्विक** त्रि० परिपार्श्वं पार्श्वं व्याप्य वर्त्तते ठक्। पार्श्वं व्याप्य स्थायिनि १सेवकादौ। स्थापकानुचरे २नटभेदे पु० “नटी विदूषको वाऽपि पारिपार्श्विक एव वा। सूत्रधारेण सहिताः संलापं यत्र कुर्वते”। सूत्रधारसदृशत्वात् स्थापकोऽपि सूत्रधार उच्यते तस्यानुचरः पारिपार्श्विकः” सा०द०।

**पारिप्लव** त्रि० परि+प्लु–अच् स्वार्थेऽण्। १चञ्चले २व्याकुले च अमरः। ३तीर्थभेदे भा० व० ८ अ०। पञ्चममन्वन्तरे ४प्रकृतिभेदे हरिवं० ७ अ०। ५आख्यानभेदे शत० ब्रा० १३।४।३।२। तच्चाख्यानं “पारिप्लवमाख्यानमाचक्षीत” इत्युपक्रमे “मनुर्वैवस्वतो राजेत्याह” इत्यादिकं तत्र दृश्यम्

**पारिभद्र** पु० परितो भद्रमस्यस्य प्रज्ञाद्यण्। (पालदामान्दार) १वृक्षे अमरः। “पारिभद्रोऽनिलश्लेष्मशोथमेदःकृमिप्रणुत्। तस्य पुष्पं पित्तरोगकर्णव्याधिविनाशनम्” भावप्र०। परिभद्राय कायति कै–क। २देवदारुवृक्षे ३निम्बवृक्षे च पु० मेदि०। ४कुष्ठौषधौ न० शब्दच०। ५सरलवृक्षे पु० शब्दच० ६शाल्मलिद्वीपपतिपुत्रभेदे ७तद्वर्षभेदे च पु० भाग० ५।२०।६ श्लो०।

**पारिभाव्य** न० परिभवाय रोगप्रशमनाय हितः ष्यञ्। कुष्ठौषधौ अमरः। परिभुवः प्रतिभुवो भावः ष्यञ्। प्रतिभूभवने “वाणिज्यं पारिभाव्यञ्च” इति स्मृतिः।

**पारिभाषिक** त्रि०परिभाषात आगतः ठञ्। १परिभाषातः प्राप्ते २परिभाषारूपाधुनिकसङ्केतयुते शब्दे पु० ३तादृशसंज्ञायां स्त्री। “उभयावृत्तिधर्मेण संज्ञा स्यात् पारिभाषिकी”। “उभयावृत्तिधर्मावच्छिन्नसङ्केतवती संज्ञा पारिभाषिकी यथाकाशडित्थादिः सा हि द्वितीयावृत्तिनैव शब्दादिना रूपेण तदाश्रयमभिधत्ते न चाकाशादिपदस्य गगनादौ निरवच्छिन्नैव शक्तिः पटादिपदस्यापि पटादौ तादृशशक्त्यापत्तेः पटे शक्तमपि पटपदं न पटत्वावच्छिन्नशक्तिमदित्यादिप्रत्युत्तरं ततः पटत्वविशिष्टस्यानुभवादयमर्थं तच्छक्तिरवच्छिन्नेति चेत् शब्दवति शक्तमाकाशपदं न शब्दत्वावच्छिन्नशक्तिमदित्येवं यदृच्छयाकाशादिपदात् शब्दत्वेन गगनस्य प्रतीतिरतस्तत्रापि शब्दत्वावच्छिन्नैव तत्र शक्तिरिति विभाव्यताम्। “यद्वाधुनिकसङ्केतशालित्वात् पारिभाषिकम्” अत्रार्थे यत्राधुनिकसङ्केतवत्त्वदेव तत्र पारिभाषिकं यथा पित्रादिभिः पुत्रादौ सङ्केतितं चैत्रादि यथा च शास्त्रकृद्भिः सिद्धभावादौ पचतादि” शब्दशक्तिप्रका०।

**पारिमाण्डल्य** न० परितो मण्डलं यस्य सर्वत्र विद्यमानत्वात् परिमण्डलः परमाणुस्तस्य भावः ष्यञ्। १न्यायोक्ते अवयवाविकारवत्ताशून्ये परमाणुपरिमाणे। स्वार्थे ष्यञ्। २परिमण्डलशब्दार्थे परिमण्डलशब्दे दृश्यम्।

**पारिमुखिक** त्रि० परिमुखं वर्त्तते ठक्। मुखसमीपे वर्त्तमाने। [हेमच०। पारिपात्रशब्दे दृश्यम्।

**पारियात्रिक** पु० पारियात्र+स्वार्थे ठक्। कुलाचलभेदे

**पारियानिक** पु० परियानं प्रयोजनमस्य ठक्। मार्गयानयोग्यरथे हेमच०। [रिणि तापसे हेमच०।

**पारिरक्षक** पु० परिरक्षा व्रतभेदः प्रयोजनमस्य ठक्। मस्क-

**पारिव्राजक** न० परिव्राजकस्य भावः युवा० अण्। परिव्राजकस्य भावे मन्वादौ। [(पलाशपिप्पल) ख्याते वृक्षे।

**पारिश** पु० पिपूर्त्ति पृ–क्विप् पारी तं श्यति शो–क।

**पारिषत्क** पु० परिषदं तत्प्रतिपादकं ग्रन्थमधीते वेत्ति वा उक्था० ठक्। परिषद्ग्रन्थाध्येतरि तद्वेत्तरि च।

**पारिषद** त्रि०परिषदि साधु अण् भवेऽर्थे पक्ष्या० अण् वा। १सभासाधौ २सभाभवे च।

**पारिषदक** त्रि० परिषदा कृतं कुला०वुञ्। परिषदा कृते

**पारिषद्य** त्रि० परिषदि साधु–ण्य। सभायां साधौ

**पारिसौर्य्य** त्रि० परिसीरं सीरं वर्जयित्वा भवम् परिमुखा० ञ्य। हलवर्जनेन भवे।

**पारिहनव्य** त्रि० परिहनु+परिमुखा० ञ्य। हनूपरिभवे

**पारिहारिक** त्रि० परिहारे साधु ठक्। परिहारकारके शब्दार्थकल्पतरुः। [स्वार्थे ष्यञ्। वलये अमरः।

**पारिहार्य्य** पु० परिह्रियतेऽसौ परि+हृ–कर्मणि घञ्

**पारी** स्त्री पा–पाने रक्षणे वा सम्प०भावे क्विप् तां राति रा–क गौरा० ङीष्। १जलपूरे २कर्कर्य्यां गलन्तिकायां ३हस्तिपादबन्धनदामनि च मेदि०। [माणिकारके च।

**पारीण** त्रि० पारं गच्छति पार+ख्ञ्। १पारगे २कर्मस-

**पारीन्द्र** पु० पृ–पालने कर्मणि इण् पारिः पशुः पारिरिन्द्र इव। १सिंहे २अजगरसर्पे च हेमच०।

**पारीरण** पुंस्त्री०पार्य्यां जलपूरे रणति रण+अच्। कमठे स्त्रियां ङीष्। १दण्डे २पटमाटके च त्रिका०। [उणादि०

**पारु** पु० पिबति जलं रश्मिभिः पा—रु । १आदित्ये २वह्नौ च

**पारुच्छेपि** पु० आचार्यभेदे आश्व०श्रौ० ७।१२।१।

**पारुष्ण** स्त्री पक्षिभेदे यजु० २४।२४ स्त्रियां ङीप् ।

**पारुष्य** न० परुषस्य भावः परुषि भवो वा ष्यञ् । १निष्ठुरत्वे २दुर्वाक्ये च मेदि० । ३इन्द्रवने विश्वः ४अगुरुचन्दने शब्दच० ५बृहस्पतौ पु० मेदि० । ६विरुद्धाचरणे दण्डपारुष्यशब्दे ३५२४ पृ० दृश्यम् ।

**पारेगङ्ग** अव्य० गङ्गायाः पारम् अव्ययी० एदन्तत्वं निपा०। गङ्गायाः पारे पारेसमुद्रादयोऽपि तत्तत्पारे ।

**पार्घट** न० पार्श्वे घटते घट—अच् पृषो० । पांशौ हारा० ।

**पार्थ** पु० पृथायाः कुन्त्या अपत्यम् शिवा० अण् । १कुन्तीपुत्रे युधिष्ठिरादौ २अर्जुननामपाण्डवे शब्दच० । पृथेः पृथिव्या ईश्वरः अण् । ३पृथिवीपाले

**पार्थक्य** न० पृथक् इत्यस्य भावः ष्यञ् भत्वे अव्ययस्य टिलोपस्यानित्यत्वात् न टिलोपः । पृथक्त्वे

**पार्थव** न० पृथोर्भावः पृथ्वा० इमनिजोऽभावपक्षे अण् । १पृथुत्वे । पृथोरयम् अण् । २पृथुसम्बन्धिनि स्त्रियां ङीप् । अस्य कार्त्तकौजपा० द्वन्द्वे न अन्तोदात्तता ।

**पार्थसारथि** पु० ६त० । १श्रीकृष्णे २मीमांसाग्रन्थकारके मिश्रोपाधिके विप्रभेदे च ।

**पार्थिव** पु० पृथिव्या ईश्वरः अण् । १राजनि पृथिव्या विकारः इदं वा उत्सा०अञ् । २भूमिभवे त्रि० ३सीतायां स्त्री ङीप् । ४तगरपुष्पे न० राजनि० । पृथिव्याः निमित्तं संयोग उत्पातो वा अञ् । ५पृथिवीनिमित्ते ६तत्संयोगे ७तदुत्पाते च ८शरीरे पु० त्रिका० । [८२।१५ भा०।

**पार्थ्य** पु० पृथोरपत्यं बा० यक् । पृथिवंश्ये ऋषिभेदे ऋ०१०।

**पार्य्य** पु० पारे भवः ष्यञ् । रुद्रभेदे यजु० १६।४२।

**पार्य्याप्तिक** त्रि० पर्य्याप्तिरेव स्वार्थे क वा अस्त्यस्य प्रज्ञा० अण् । १सम्पूर्णे २मृगभेदे पुंस्त्री० शब्द० स्त्रियां ङीष् पर्य्याप्तिमाह ठक् । ३पर्य्याप्तिर्जातेति वादिनि ।

**पार्वण** त्रि०पर्वणि क्रियते वैदिकोऽण् पर्वणि भवे तु कालाट्ठञेव स्यात् तेन पार्विक इत्येव अतएव"न शारदः पार्विकशर्वरीश्वरः" इति नैषधे पठित्वा मल्लिनाथेन तथोक्तम् । १पर्वविहिते २अमावास्यानिमित्तके श्राद्धे न० यथोक्तं श्रा०त० "अमावास्याकर्त्तव्यपर्वकर्त्तव्ययोः पार्वणत्वमाह भविष्यपुराणम् "अमावास्यां यत् क्रियते तत्पार्वणमुदाहृतम् । क्रियते वा पर्वणि यत् तत्पार्वणमिति स्मृतिः" । अत्र यदित्यादेरुभयत्राभिधानेन विकल्पार्थवाचकत्वेन च पार्वणस्य लक्षणं द्वितीयमुक्तं पर्वणि यत् क्रियते इत्यनेनामावास्यायाः पर्वत्वात्तच्छ्राद्धस्य वैदिकप्रयोगाधीनयौगिकत्वेन पार्वणत्वप्राप्तौ अमावास्यायां यत् पृथगुपादानं तदमावास्याश्राद्धस्य रूढित्वार्थं तेन पार्वणेन विधानेन इत्यादौ यौगिकनानावयवशक्त्यपेक्षया एकस्या एव समुदायशक्तेर्लघुत्वात् अमावास्यापार्वणधर्मातिदेशो लभ्यते न तु पूर्णादिद्व्यष्टकादिपार्वणधर्मातिदेशः । अतः अमावास्यायामष्टम्यादिपर्वणि च तन्निमित्तकश्राद्धे पार्वणश्राद्धम् अन्यत्र पार्वणविधिना श्राद्धमित्यभिलापे विशेषः"। कालमाधवीये च शातातप आह "दर्शश्राद्धन्तु यत् प्रोक्तं पार्वणं तत् प्रकीर्त्तितम् । अपराह्णे पितॄणां तु तत् प्रदानं विशिष्यते" इति । यद्यप्येतादृशं पार्वणं प्रतिपदि न प्राप्नोति तथापि तद्विकृतिरूपतया त्रिपुरुषोद्देशेन कर्त्तव्यादिकाम्यश्राद्धादेः पार्वणत्वं व्यवहर्त्तुं शक्यम् । अतएव कात्यवाक्यं पूर्वमुदाहृतम् "त्रीनुद्दिश्य तु यत्तद्धि पार्वणं मुनयो विदुः" इति । तच्च कालभेदाच्च नि०सि० निर्णीताः यथा हेमपराशरः "श्राद्धं ग्रहणचन्द्रेऽप्यायामहयसंक्रमे । नवोदके नवान्ने च नवच्छन्ने तथा गृहे । नवैर्वेषु चेच्छन्ति पितरो हि सदाप्यपि" । "पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च" इति शातातपपाठः नवोदके नवकूपवाप्यादाविति केचित् । वर्षोपक्रमे आर्द्राप्रवेशे इति गौडाः "हरिशये शुक्लपक्षे तु नवान्नं शस्यते बुधैः" अतः कृष्णपक्षे नेति गौडाः मैथिलास्तु "अज्ञातायवं चैव धान्यजातं नरोत्तम !" इति वाराहोक्तेः प्रतिधान्यं श्राद्धमाहुः तत्र जातपदस्य श्राद्धयोग्यसमूहपरत्वात् । हेमाद्रौ जातूकर्ण्यः "ग्रहोपरागे च सुते च जाते पित्र्ये गयायामयनद्वये च । नित्यं च शङ्खे च तथैव पद्मे दत्तं भवेन्निष्कसहस्रतुल्यम् । शङ्खं प्राहुरमावास्यां क्षीणचन्द्रां द्विजोत्तमाः । अष्टकासु भवेत्पद्मं तत्र दत्तं तथाऽक्षयम्" । तत्रैव शङ्खः "यदा विष्टिर्व्यतीपातो भानुवारस्तथैव च । पद्मकं नाम तत्प्रोक्तमयनाच्च चतुर्गुणम्" । याज्ञवल्क्यः "अमावस्याष्टकावृद्धिः कृष्णपक्षोऽयनद्वयम् । द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्यसंक्रमः । व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः । श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः" कृष्णपक्षः सर्वोऽपि "शाकेनापरपक्षं नातिक्रमेत् मासि मासि वाऽशनमिति"श्रुतेः "ऊर्द्ध्वं वा चतुर्थ्यां यदहः सम्पद्यते

ऋते चतुर्द्दशीमिति" कात्यायनोक्तेः "मासि मासि कार्य्यमपरपक्षस्यापराह्णः श्रेयान्" इत्यापस्तम्बोक्तेश्च वीप्सया सर्व्वकृष्णपक्षेषु नित्यम् "तेनोपसंहाराच्चाष्टकापरत्वं परास्तम् अत्र प्रत्यहं पञ्चम्यादि यदहःसम्पत्तिर्व्वेति त्रयः पक्षाः यदैकैकदिने श्राद्धं तदा दर्शं पृथगेव याज्ञवल्क्येनामावास्यायाः पृथङ्निर्द्देशात् । एतेन कृष्णपक्षे यदहः सम्पद्यते अमावास्यायां तु विशेषेणेति निगमोक्तेर्गुर्व्वोऽपरपक्षश्राद्धस्यामावास्येति शूलपाणिमतमप्यपास्तम् । अशक्तौ दर्शेनापि मासि श्राद्धसिद्धिरिति नारायणवृत्तिः । निरग्निकानां कस्मिंश्चिद्दिने आहिताग्नेस्तु दर्शे एव "न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः" इति मनूक्तेः सर्व्वकृष्णपक्षाशक्तौ मात्स्ये "अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्व्वपेत् । कन्याकुम्भवृषस्थेऽर्के कृष्णपक्षे च सर्व्वदा" । कर्कोऽपि "आहिताग्नेः संवत्सरे त्रिः श्राद्धनियम" इति । देवलः "अनेन विधिना श्राद्धं कुर्य्यात् संवत्सरं सकृत् । द्विस्त्रिर्व्वा यथाश्रद्धं मासि मासि दिने दिने" । कृष्णपक्षेष्वपि महालयस्य श्रैष्ठ्यं तत्रोक्तं प्राक् । व्यतीपाते विशेषमाह हेमाद्रौ शङ्खः "फलं चन्द्रग्रहत्यक्तौ अयने कोटिरुच्यते । पतने शतकोट्यस्तु पाते वै दत्तमक्षयम्" ज्योतिःशास्त्रे "द्वाविंशतिस्तथोत्तमो अयने चैकविंशतिः । पतने दश नाड्यस्तु पतिते सप्त नाडिकाः" अन्यौ च द्वौ व्यतीपातौ प्रागुक्तौ । हेमाद्रौ मार्कण्डेयः "यदा च श्रोत्रियोऽभ्येति गेहं वेदविदग्निचित् । तेनैकेनापि कर्त्तव्यं श्राद्धं च विधुवक्षयम्" । इदं चापिण्डं कार्य्यमिति हेमाद्रिः सन्तत्यैव पितृकोऽपि "उद्वाहे पुत्त्रजनने पित्र्येष्ट्यां सौमिके मखे । तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः" इति मैत्रायणीयपरिशिष्टोक्तेः । तिथिविशेषे फलविशेषो याज्ञवल्क्येनोक्तः "कन्यां १ कन्यावेदिन २ श्च पशू ३ न्वै सत्सुतानपि ४ । द्यूतं ५ कृषिं ६ च वाणिज्यं ७ द्विशफैकशफां ८ । ९ स्तथा । ब्रह्मवर्च्चस्विनः पुत्त्रान् १० स्वर्णरौप्ये सकुप्यके ११ । १२ ।" ज्ञातिश्रैष्ठ्यं १४ सर्व्वकामानाप्नोति १५ श्राद्धदः सदा । प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्द्दशीम्" एताः कृष्णपक्षस्था एव महालये तु फलभूमेति पृथ्वीचन्द्रोदयः । पौर्णमास्यां हेमाद्रौ पितामहः "अमावास्याव्यतीपाते पौर्णमास्यष्टकासु च । विद्वान् श्राद्धमकुर्व्वाणो नरकं प्रतिपद्यते" एतन्माघ्यादिपरम् "व्रीहिपाके च कर्त्तव्यं यवपाके च पार्थिव ! । पौर्णमासी तथा माघी श्रावणी च नृपोत्तम ! । प्रौष्ठपद्यामतीतायां तथा कृष्णत्रयोदशी । एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः" इति विष्णुधर्म्मोक्तेः । विष्णुः "माघी प्रौष्ठपद्यूर्द्ध्वं कृष्णत्रयोदशीति" । अत्र माघी पौर्णमासीति कल्पतरुः । श्रावण्यूर्द्ध्वमपि मघायोगसम्भवात्त्रयोदशी विशेषणमिति गौडाः नक्षत्रेष्वपि याज्ञवल्क्यः "स्वर्गं ह्यपत्यमोजश्च शौर्य्यं क्षेत्रं बलं तथा । पुत्त्रान् श्रैष्ठ्यं च सौभाग्यं समृद्धिं मुख्यतां शुभम् । प्रवृत्तचक्रतां चापि वाणिज्यप्रभृतीनपि । अरोगित्वं यशो वीतशोकतां परमाङ्गतिम् । धनं वेदान् भिषक्सिद्धिं कुप्यं गा अप्यजाविकम् । अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति । कृत्तिकादिभरण्यन्तं स कामान् प्राप्नुयादिमान्" । फलान्तराण्यपि महाभारतकौर्म्मादिषूक्तानि । माधवीये मरीचिः "कृत्तिकादिषु ऋक्षेषु श्राद्धे यत् फलमीरितम् । विष्कुम्भादिषु योगेषु तदेव फलमिष्यते" बृहस्पतिः "आरोग्यं चैव सौभाग्यं समरे च पराजयम् । सर्व्वान् कामान् श्रियं विद्यां धनमायुर्यथाक्रमम् । सूर्य्यादिदिवसेष्वेतच्छ्राद्धकृल्लभते फलम् । ववादिकरणेष्वेतच्छ्राद्धकृल्लभते फलम्" अन्यानि च मन्वन्तरश्राद्धादीनि प्रागुक्तानि मार्कण्डेयपुराणे "आहारदूषणसम्भूतौ तथा दुःस्वप्नदर्शने । ग्रहपीडासु श्राद्धं कुर्व्वीत स्वेच्छया" ।

"संक्रान्तावुपरागे च पर्व्वस्वपि महालये । निर्व्वाप्यास्तु त्रयः पिण्डा एकतस्तु क्षयेऽहनि । एकोद्दिष्टं परित्यज्य पार्व्वणं कुरुते द्विजः । अकृतं तद्विजानीयात् स नरः पितृघातकः । अमावस्यां क्षयो यस्य प्रेतपक्षेऽथ वा यदि । सपिण्डीकरणादूर्द्ध्वं तस्योक्तः पार्व्वणो विधिः । त्रिदशपहरणादेव प्रेतत्वं नैव जायते । अहन्येकादशे प्राप्ते पार्व्वणन्तु विधीयते" लिखितव॰ । एतेषां व्याख्यानतात्पर्य्यकथनपूर्व्वकं विकृतिपार्व्वणविधानम् श्रा॰त॰ निर्णीतं यथा "त्रयं षण्मासानां त्रयं कुर्य्यात् त्रिशो दद्यादित्यर्थः । मृताहपर्व्वदत्तत्रिदैवतत्वस्य प्रतिप्रसवमाह अमावास्यामिति प्रेतपक्षोऽत्र पितृपक्षः आश्वयुक्कृष्णपक्ष इति यावत् न तु कृष्णपक्षमात्रं कृष्णपक्षसामान्यपरत्वेऽमावास्यापदवैयर्थ्यापत्तेः पितृपक्षं विशेषयति हेमाद्रिमाधवाचार्य्यधृतं नागरखण्डम् "नभो वाथ नभस्यो वा मलमासो यदा भवेत् । सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः" । अत्र श्रावणभाद्रयोरन्यतरस्य मलमासत्वे

आषाढाद्यपेक्षया सप्तमपक्षस्य पितृपक्षत्वात् अत्र मृत-स्यैव प्रेतपक्षत्वं न तु मलमासभाद्रकृष्णपक्षमृतस्य । ततश्च तत्र मृतस्य वर्षान्तरेऽस्पृष्टकृष्णपक्षेऽपि तत्क्षया-हकरणे न पार्वणं किन्त्वेकोद्दिष्टमिति । अत्र पार्वणो विधिः पार्वणेतिकर्त्तव्यताकैकोद्दिष्टविधिरिति नव्यव-र्द्धमानप्रभृतयः तन्न पूर्वं वचनोक्तनैमित्तिकस्य क्षयाहे पर्युदस्तस्य पार्वणो विधिरित्यनेन प्रतिप्रसवात् तस्मात् तदेकोद्दिष्टं त्वैपुरुषिकं न तु षाट्पौरुषिकं "कृष्णपक्ष-न्वितं युक्ता तथाद्यं श्राद्धमोड्यम् । प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षडिति स्थितिः" इति छन्दोगपरिशिष्टवच-नेन प्रत्याब्दिकव्यतिरेकेण षट्संख्यानियमात् । एवममा-वास्यादिमरणनिमित्तेन मातुरपि प्रत्याब्दिकं पार्वण-विधिनैव "अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये । तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम्" इति व्यापकत्ववचने अपुत्रा इति विशेषणोपादानात् सपु-त्राणां पार्वणाभ्यनुज्ञानात् । एतच्च मात्रादित्रितयदैवत-कार्य्यम् "मातृ पितामही प्रपितामही च पूर्ववत् आ-सु-भासाम् भोजयित्वा" इत्यन्वष्टकायां तथा दर्शनात् अमावा-स्यादिनिमित्तत्वेन पार्वणविधिना छन्दोगैरपि मात्रादि-त्रिकाणां श्राद्धं कर्त्तव्यं "न योषिद्भ्यः पृथग्दद्यादव-सानदिनादृते" इति छन्दोगपरिशिष्टवचने विशेषतः प्रतिप्रसवात् । एवं सपिण्डीकरणेऽपि । एतच्च क्षयाहे पार्वणं मातापित्रोरेव । तथा च हेमाद्रिधृतकात्यायन-वचनं "सपिण्डीकरणादूर्द्धं पित्रोरेव हि पार्वणम् । पितृव्यभ्रातृमातृणामेकोद्दिष्टं सदैव तु" । मातृपदं सपत्नीमातृपरम् । सपत्नीमातृमित्यत्र मातृपदस्य राज-दन्तादित्वात् परनिपातः ततश्च वाक्ये मातृसपत्नीमिति न प्रयोज्यं किन्तु सपत्नीमातरित्यादिकम् । एवं वाग्नि-कौरसक्षेत्रजाभ्यां क्षयाहे पार्वणं कर्त्तव्यम् "औरस-क्षेत्रजौ पुत्रौ विधिना पार्वणेन तु । प्रत्यब्दमितरे कुर्यु-रेकोद्दिष्टं सुता दश" इति जावालवचनस्य "यत्र यत्र प्रदातव्यं सपिण्डीकरणात् परम् । पार्वणेन विधानेन देयमग्निमता सदा" इति मत्स्यपुराणवचनस्य चैकवा-क्यत्वात् । उशना च "प्रत्यब्दं दर्शवच्छ्राद्धं साग्निः कुर्वीत वै द्विजः । एकोद्दिष्टं सदा कुर्य्यान्निरग्निः श्राद्धदः सुतः" ।

**पार्वत** त्रि॰ पर्वते भवः अण् । १पर्वतजातमात्रे (चोड़ा-निम) २निम्बभेदे ३दुर्गायां स्त्री ङीप् अमरः । ४श-ल्लक्यां ५गोपालपूतिकायां स्त्री मेदि॰ ६जीवन्त्यां विश्वः ७द्रौपद्यां ८सौराष्ट्रमृत्तिकायाम् रत्नमाला ९क्षुद्रपा-षाणभेदायां १०धातक्यां राजनि॰ तत्र दुर्गायां पार्व-तीशब्दनिरुक्तिर्यथा

"तिथिभेदे कल्पभेदे पर्वभेदप्रभेदतः । ख्याता तेषु च विख्याता पार्वती तेन कीर्त्तिता । महोत्सवविशेषश्च पर्वेति प्रकीर्त्तितम् । तस्याधिदेवी या सा च पार्वती परिकीर्त्तिता । पर्वतस्य सुता देवी साविर्भूता च प-र्वते । पर्वताधिष्ठातृदेवी पार्वती तेन कीर्त्तिता" इति प्रकृतिखण्डे दुर्गोपाख्याने ५४अ॰ । ११अञ्चे स्त्री व॰व॰ निघण्टुः तत्र पार्वत्यः इति पाठान्तरं तत्रार्थे ।

**पार्वतायन** पुंस्त्री॰ पर्वतस्यर्षेः गोत्रापत्यम् फक् वा । पर्व-तर्षेर्गोत्रापत्ये पक्षे इञ् । पार्वति तत्रार्थे

**पार्वतीनन्दन** पु॰ ६त॰ । कार्त्तिकेये अमरः पार्वतीसुता-दयोऽप्यत्र तस्य तत्सुतत्वकथा अग्निकुमारशब्दे ५५१० मा॰व॰ २२४अ॰ वाक्ये दृश्या । तत्र उमायोन्यां तु रुद्रेणेत्यशुद्धम् उमायोन्यां तु रुद्रेणेत्येव पाठः साधुः ।

**पार्वतीश्वर** न॰१काशीस्थे शिवलिङ्गभेदे काशीख॰२शिवे पु॰

**पार्वतेय** न॰पर्वते भवं ढक् । १सौवीराञ्जने २सूर्य्यावर्त्तवृक्षे पु॰ रत्नमाला ।

**पार्वायनान्तीया** स्त्री पर्वणोऽयनस्य चान्ते विहिता छण् । इष्टिभेदे सा च इष्टिर्दर्शपौर्णमासायनस्यान्ते काले विहिता" "इष्टीः पार्वायनान्तीयाः केवला निर्व-पेत् सदा" मनु॰ कुल्लूकव्याख्याने ।

**पार्शव** पु॰ पर्शुः प्रहरणमस्य । परशुप्रहरणयुक्ते

**पार्श्व** पु॰न॰ स्पृश—श्वण् धातोः पृ—च । १कक्षाधोभागे अमरः २समीपे च । पर्शूनां पार्श्वस्थां समूहः पर्शु—अण् । पर्शूसमूहे न॰ मेदि॰ ४जिने पु॰ ५कुटिलहृदि त्रि॰ हेमच॰ ६अनृजूपाये शाठ्ये त्रि॰कौ॰ ।

**पार्श्वक** त्रि॰ पार्श्वेन अनृजूपायेन शाठ्येनान्विच्छति कन् । शाठ्येनान्विच्छायुक्ते ।

**पार्श्वतस्** अव्य॰ पार्श्व+सार्वविभक्तिकस्तसिल् । तत्तद्विभ-क्त्यर्थयुते पार्श्वशब्दार्थे ततो भवार्थे गहा॰छ भस्य टिलोपः । पार्श्वतीय पार्श्वतोभवे त्रि॰ ।

**पार्श्वद** त्रि॰पार्श्वं ददाति दा—क । पार्श्वचरे मा॰श॰४६अ॰

**पार्श्वनाथ** पु॰ परेशनाथे जैनदेवभेदे

**पार्श्वपरिवर्त्तन** न॰ पार्श्वेन परिवर्त्तनम् । यत्पार्श्वमधः-स्थापयित्वा शयितः तत्पार्श्वस्योर्द्धीकरणे (पाशमोड़ा)

१पार्श्वस्य परावृत्तौ । तत्र हरेः भाद्रशुक्लैकादश्यादौ कर्त्तव्ये पार्श्वपरिवर्त्तनाख्ये २उत्सवभेदे च "प्राप्ते भाद्रपदे मासि एकादश्यां स्थितेऽहनि । कटिदानं भवेदि-ष्णोर्महापातकनाशनम् । जलाशयान्तिकं नीत्वा संपू-ज्याभ्यर्च्य च प्रभुम् । कर्णिकापरिवृत्तिञ्च दक्षिणाङ्गे प्रकल्पयेत्" हरिभ०भवि०पु० । एकादश्यामिति सन्ध्यायां श्रवणमध्यपादलाभे बोध्यमन्यथा "द्वादश्यामेव कारयेत्" तत्र व्यवस्था उत्थानशब्दे ११०३पृ०दृश्या । [भावप्र०।

**पार्श्वपिप्पल** न०पार्श्वे पिप्पलमिव । हरीतकीभेदे (मलाठ)

**पार्श्वभाग** पु० कर्म०। १पक्षभागे हस्त्यादेः २पार्श्वदेशे अमरः

**पार्श्वल** त्रि० पार्श्व+अस्त्यर्थे सिध्मा०लच् । पर्शुसमुदाययुते

**पार्श्ववक्त्र** पु० पार्श्वे वक्त्रमस्य । महादेवे हरिवं० २१७अ०।

**पार्श्वशय** त्रि० पार्श्वाभ्यां शेते शी–अच् । पार्श्वाभ्यां क्रमेण शायिनि ।

**पार्श्वशूल** पु० सुश्रुतोक्ते शूलरोगभेदे तल्लक्षणादि यथा "वध्वा मारुतं श्लेष्मा कुक्षिपार्श्वव्यवस्थितः । स संरुध्य करोत्याशु ध्मानं गुडगुडायनम् । सूचीभिरिव निस्तोदः क्लिष्टोच्छ्वासी तदा नरः । नान्नं वाञ्छति नो निद्रा-मुपैत्यार्त्तिनिपीडितः । पार्श्वशूलः स विज्ञेयः कफानिल-समुद्भवः"। [२तथाभूते नटे पारिपार्श्विके हेमच०।

**पार्श्वस्थ** त्रि० पार्श्वे तिष्ठति स्था–क ७त० । १समीपस्थिते

**पार्श्वादि** "पार्श्वादिभ्य उपसंख्यानम्" वार्त्ति० उक्ते शेतेरच्प्र-त्ययनिमित्ते शब्दगणे स च गणः "पार्श्व उदर पृष्ठ उत्तान अवमूर्द्ध" ।

**पार्श्वास्थि** न० ६त०। देहपार्श्वस्थिते अस्थ्नि (पाँजर) अमरः

**पार्श्विक** त्रि०पार्श्वे भवः ठक् । १पार्श्वभवे २अन्विजीवके हारा०

**पार्श्वी** स्त्री द्वि०व० । द्यावापृथिव्योः निघण्टुः ।

**पार्श्वैकादशी** स्त्री पार्श्वस्य हरेः पार्श्ववर्त्तनस्य निमित्तमे-कादशी । पार्श्ववर्त्तनैकादश्याम् भाद्रशुक्लैकादश्याम् । पार्श्ववर्त्तनशब्दे दृश्यम् । [क । कर्कटे हेमच० ।

**पार्श्वोदरप्रिय** पार्श्वमुदरञ्च ताभ्यां प्रीणाति भोजनं प्री–

**पार्षिक** पु० गोत्रप्रवर्त्तकर्षिभेदे प्रवराध्यायः ।

**पार्षत** त्रि०पृषतस्य विराटरूपस्येदम् अण् । १विराटरूपसम्ब-न्धिनि २तत्पुत्रे धृष्टद्युम्ने पु०३द्रौपद्यां स्त्री ङीप् त्रिका०

**पार्षद्** स्त्री परिषद्+पृषो० । सभायां त्रिका० ।

**पार्षद** त्रि० पार्षदमर्हति अण् । पारिषदे शब्दच० । अञ् । पार्षद्योऽप्यत्रार्थे भरतः । [रिंषे भवे ।

**पार्षदंश** त्रि० पृषदंशे भवः उत्सा० अञ् । पृषदंशे विन्ध्यो-

**पार्षदश्व** पु० पृषदश्वस्य वायोर्रूपभेदस्य वेदम् अण् । १वायु-सम्बन्धिनि २रूपभेदसम्बन्धिनि च ३गोत्रप्रवर्षिभेदे पु० आश्व० श्रौ०१२।११ [कात्या०श्रौ० २२।७।१

**पार्ष्ठिक** त्रि० पृष्ठे षडहे भवः ठञ् । षडहसम्बन्धिनि

**पार्ष्णि** पुं स्त्री० पृष–नि नि०वृद्धिः । १पादग्रन्थेर्गुल्फस्याधो-भागे अमरः । (गोडालि) २पृष्ठे मेदि० ३सैन्यपृष्ठे हला० ४जिगीषायाञ्च पु० रत्नकोषः ५उन्मत्तस्त्रियां स्त्री मेदि० कुन्त्यां स्त्री धरणिः ।

**पार्ष्णिक्षेम** पु० विश्वदेवभेदे भा०अनु० ९१अ० ।

**पार्ष्णिग्राह** पु० पार्ष्णिं पृष्ठदेशं गृह्णाति अण् । विजयार्थं जिगमिषोः पश्चात्तद्‌ग्राहिणि पृष्ठस्थे १नृपे २द्वादशरा-जचक्रमध्ये पृष्ठस्थायिनृपे च अरिशब्दे ३५५पृ०दृश्यम् ।

**पार्ष्णिवाह** त्रि० पार्ष्णिं वहति वह–अण् । पृष्ठस्थे का-र्यनिर्वाहके भा० सौ० १३०अ० ।

**पार्ष्णील** त्रि०पार्ष्णिरस्त्यस्य सिध्मा०लच् दीर्घश्च । पार्ष्णियुक्ते

**पाल** रक्षणे चु०उभ०सक०सेट् । पालयति ते अपीपलत् त ।

**पाल** त्रि० पालयति पाल–अच् । १रक्षके "पालदोषविनाशे च पाले दण्डो विधीयते" इति स्मृतिः । भावे अच् । २रक्षणे पु० ।

**पालक** पु० पालयति पाल–ण्वुल् । १अश्वरक्षके जटा० २चित्रकवृक्षे पु० राजनि० ३पालनकर्त्तरि त्रि० स्त्रियां टाप् कापि अतइत्त्वम् एतदन्तस्य पुंयोगेऽपि टाप् गोपालकस्य पत्नी गोपालिका इत्येव न ङीष् ।

**पालकाप्य** पु० १करेणुभुवि मुनिभेदे हेमच०। २तत्कृते हस्त्यायुर्वेदलक्षणज्ञापके अर्थशास्त्रभेदे न० [हेमच० ।

**पालक्या** स्त्री पालाय कायति कै–क । (पालङ्) शाकभेदे

**पालघ्न** पु० पालं जलादितो रक्षकं कवं हन्ति हन–टक् । १छत्राख्ये २जलजतृणभेदे अमरः ।

**पालङ्क** पु० पाल–सम्प० क्विप् पाला अङ्क्यते अङ्क–घञ् । (पालङ्) १शाकभेदे अमरः । स्त्रीत्वमपि स्त्रियां ङीप् । अत्रैव "पालङ्की कथिता कृच्छा वातादिमयवन्मता" राजवल्लभः २कुन्दुरुवृक्षे स्त्री अमरः गौरा० ङीष् ।

**पालङ्क्य** न०पालङ्क+स्वार्थे ष्यञ् । (पालङ्) १शाके राजनि० २कुन्दुरौ स्त्री अमरः । "पालङ्क्या वातला शीता श्लेष्मला भेदिनी गुरुः । विष्टम्भिनी मदश्वासपित्तरक्तविषापहा" भावप्र० । २श्येनखगे मेदि० ।

**पालन** न०पाल–भावे ल्युट् । १रक्षणे करणे ल्युट् । सद्यः-प्रसूतायाः गोः क्षीरे पेयूषे शब्दचन्द्रिका । तद्वशी०

रस्य पानद्वारा वत्सपालनकरत्वात् तथाभूतत्वम् ।

**पालवणिज्** पु॰पाले कन्यारक्षणे वणिक् । कन्यापाले त्रिका॰

**पालल** त्रि॰ पललस्य तिलचूर्णस्य विकारः अण् । तिलचूर्णपिष्टके "पाललाः श्लेष्मजननाः शष्कुल्यः कफपित्तलाः" सुश्रु॰ ।

**पालाश** त्रि॰पलाशस्य विकारः अवयवो वा अण् । १पलाशावयवे २तद्विकारे च "पालाशो दण्ड आषाढः" अमरः । ३तमालपत्रे (तेजपात) राजनि॰तद्वर्णः अस्त्यस्य अण् । ४हरिद्वर्णे पु॰ ५तद्विशिष्टे त्रि॰ अमरः पलाशेन निर्वृत्तम् सङ्काशा॰ ण्य । पालाश्य पलाशनिर्वृत्ते त्रि॰। पलाशस्यादूरदेशादि वराहा॰ कक् । पालाशक तत्सन्निकृष्टदेशादौ । स्वार्थे क । तत्रार्थे

**पालाशखण्ड** पु॰ मगधदेशे शब्दरत्ना॰ ।

**पालाशि** पु॰ पलाश गोत्रप्रवर्षिभेदे प्रवराध्यायः ।

**पालि(ली)** स्त्री पल-बा॰ इण् । १कर्णलतायां २अश्रौ कोणे ३श्रेणौ ४अङ्कभेदे ५कालादिदेये च मेदि॰ ६यूकायां ७पोटायां ८प्रशंसायां ९प्रस्थे १०उत्सङ्गे क्रोडे च हेमच॰ वा ङीप् दीर्घान्तः ११स्थाल्याम् शब्दच॰ ।

**पालिंहिर** स्त्री मण्डलिसर्पभेदे सुश्रुतः अहिशब्दे दृश्यम् ।

**पालिका** स्त्री पालि+स्वार्थे क । १पालिशब्दार्थे संज्ञायां कन् । २कर्णपत्रे शब्दच॰ ३दध्यादिच्छेदन्यां हारा॰ । ४पालनकर्त्र्यां स्त्रियां च ।

**पालित** त्रि॰ पाल-क्त । १रक्षिते क्रोष्टुवंश्ये २नृपभेदे ३देशभेदे च पु॰ हरिवं॰२७अ॰। ४शाखोटवृक्षे पु॰शब्दार्थकल्प॰ ५कुमारानुचरमातृभेदे स्त्री भा॰श॰ ४७अ॰।

**पालित्य** न॰ पलितस्य भावः ष्यञ् । केशादेः शुभ्रतादौ । पलितस्यादूरदेशादि सङ्काशा॰ण्य । पलितस्य सन्निकृष्टदेशादौ त्रि॰। [नृपभेदे पु॰ हरिवं॰ २अ॰।

**पालिन्** त्रि॰ पालयति पालि-णिनि । १पालके २पृथुपुत्र-

**पालिन्द** पु॰ पालि-बा॰ किन्दच् । १कुन्दुरुवृक्षे राजनि॰ । २श्यामालतायां स्त्री अमरः गौरा॰ ङीष् । पलिन्दीति पाठान्तरम् पृषो॰ । ३त्रिवृतायां द्विरूपकोषः ।

**पालिशायन** पु॰ गोत्रप्रवर्षिभेदे प्रवराध्यायः ।

**पालीवत** काश्मर्य्यां वृक्षभेदे वृ॰सं॰ ५४अ॰ ।
"द्राक्षापालीवताश्चैव बीजपूरातिमुक्तकाः । एते द्रुमाः काश्मर्य्या गोमयेन प्रलेपिताः । मूलच्छेदेऽथ वा स्कन्धे रोपणीयाः प्रयत्नतः" ।

**पालीहय** पु॰ गोत्रप्रवर्षिभेदे प्रवराध्यायः ।

**पाल्लक** त्रि॰ पल्ल्यां भवः धूमा॰ वुञ् । पल्लीभवे जानदौ

**पाल्वलतीर** त्रि॰ पल्वलतीरे भवः अञ् । पल्वलतीरभवे

**पावक** पु॰ पुनाति पू-ण्वुल् । १वह्नौ अमरः "अपावनानि सर्वाणि वह्निसंसर्गतः क्वचित् । पावनानि भवन्त्येव तस्मात् स पावकः स्मृतः" इति काशीख॰ ९अ॰ उक्तेस्तस्य तथात्वम् । २वैद्युताग्नौ च "पावकः पवमानश्च शुचिरग्निश्च ते त्रयः । निर्मन्थ्यः पवमानः स्यात् वैद्युतः पावकः स्मृतः । यश्चासौ तपते सूर्यः शुचिरग्निश्च स स्मृतः" कूर्मपु॰ । ३सदाचारे ४वह्निमन्थे ५चित्रकवृक्षे ६भल्लातके ७विडङ्गे च मेदि॰। ८शोधके त्रि॰ हेमच॰। ९रक्तचित्रके १०कुसुम्भे च पु॰ राजनि॰ ११वरुणे १२सूर्ये च ऋ॰१।५०।६भा॰तयोश्च शोधकत्वात् तथात्वम् । १३ऋषिभेदे भा॰व॰१२५अ॰। पावः पवनं शुद्धिस्तं कायति कै-क । १४सरस्वत्यां स्त्री ऋ॰ १।३।२०भा॰। पावकाश्च सप्तविंशतिः "पावकाः सप्तविंशतिः" भा॰स॰ ७अ॰व्याख्यायां नीलकण्ठधृतवाक्येभ्यः तानि च "ब्रह्मणोऽङ्गात् प्रसूतोऽग्निरङ्गिरा१ इति विश्रुतः । दक्षिणाग्निगार्हपत्याहवनीयाविति२।३।४ त्रयी । निर्मन्थ्यो५ वैद्युतः६ शूरः७ संवर्त्तोद लौकिक९स्तथा । जाठरो१०विषग:११ क्रव्यात्१२ क्षेमवान्१३ वैष्णव१४स्तथा । दस्युमान्१५ बलद१६श्चैव शान्तः१७ पुष्टो१८विभावसुः१९ । ज्योतिष्मान्२० भरतो२१ भद्रः२२ स्विष्टकृद्२३वसुमान्२४ क्रतुः२५ । सोमश्च२६ पितृमां२७श्चैव पावकाः सप्तविंशतिः" । अन्ये पावकभेदा अग्निशब्दे ५१९॰ दृश्याः ति॰त॰गृह्यपरिशिष्टे कर्मभेदे तस्य नामभेदा उक्ता यथा
"लौकिके पावको१ ह्यग्निः प्रथमः परिकल्पितः । अग्निस्तु मारुतो२ नाम गर्भाधाने विधीयते । पुंसवने चन्द्रनामा३ शुङ्गाकर्मणि शोभनः४ । सीमन्ते मङ्गलो५ नाम प्रगल्भो६ जातकर्मणि । नाम्नि स्यात् पार्थिवो७ ह्यग्निः प्राशने च शुचि८स्तथा । सत्यनामा९थ चूड़ायां व्रतादेशे समुद्भवः१० । गोदाने सूर्य्यनामा११ च केशान्ते ह्यग्नि१२रुच्यते । वैश्वानरो१३ विसर्गे तु विवाहे योजक१४स्तथा" । गोदाने गोदानाख्य संस्कारे । "चतुर्थ्यान्तु शिखी१५ नाम धृति१६रग्निस्तथाऽपरे" । अपरे धृतिहोमादौ । "प्रायश्चित्ते विधु१७श्चैव पाकयज्ञे तु साहसः"१८ । प्रायश्चित्ते तदाख्यकमहाव्याहृतिहोमादौ । पाकयज्ञे पाकाङ्गकवृषोत्सर्गश्रवणहोमादौ । "लक्षहोमे च वह्नि:१९ स्यात् कोटिहोमे हुताश-

नः२० । पूर्णाहुत्यां मृडो२१ नाम शान्तिके वरदः२२ स्मृतः । पौष्टिके बलद२३श्चैव क्रोधो२४ऽग्निश्चाभिचारके । कोष्ठे तु जठरो२५ नाम क्रव्यादो२६ मृतभक्षणे । आहूय चैव होतव्यो यत्र यो विहितोऽनलः” ।

**पावकात्मज** पु० ६त० । १कार्त्तिकेये पावकसुतादयोऽप्यत्र इक्ष्वाकुवंश्यदुर्य्योधनकन्यावोढरि सुदर्शनाख्ये २मुनिभेदे च ।

**पावकारणि** पुंस्त्री० ६त०। अग्निमन्थनकाष्ठे शब्दमाला । अरणिशब्दे दृश्यम् ।

**पावकि** पु० पावकस्यापत्यम् इञ् । १कार्त्तिकेये सुदर्शनाख्ये २मुनिभेदे च भा० आनु० २अ० तत्कथा दृश्या ।

**पावकेश्वर** पु० १तीर्थभेदे शिवपु०। काशीस्थे पावकस्थापिते २शिवलिङ्गभेदे न० ।

**पावन** त्रि०पावयति पू–णिच्–ल्यु । १पवित्रीकारके २प्रायश्चित्ते ३जले च न० मेदि० ४गोमये न० शब्दच० । ५रुद्राक्षे ६कुष्ठौषधे न० राजनि० ७चित्रकवृक्षे ८अध्यासे न०विश्वः । पावके ८वह्नौ ९वेदव्यासे पु० मेदि०। १०सिद्धके विश्वः । ११पीतभृङ्गराजे पु०राजनि०। १२सिद्धे १३पावयितरि त्रि० हेमच० १४विष्णौ पु० विष्णुसं० पवनशब्दे दृश्यम् तस्य स्मृतिमात्रेण पवित्रताकरणात् तथात्वम् “पवनः पावनोऽनलः” इति द्विधापाठस्तु पावयतीति “भीषास्माद्वातः पवते” इति श्रुतेः पवनव्यापारनियोक्तृत्वात् पावनत्वम् इति अर्थभेदान्नामद्वयम् । करणे ल्युट् ङीप् । १५हरीतक्यां १६स्नोमव्यां १७तुलस्यां च स्त्री राजनि० १८गङ्गायां च स्त्री ।

**पावनध्वनि** पु० पावनो ध्वनिरस्य । १शङ्खे राजनि० २पावनशब्दयुक्ते त्रि०।

**पावमान** त्रि० पवमानमधिकृत्य प्रवृत्तम् अण् । १पवमानवक्त्राद्यधिकारेण प्रवृत्ते सूक्ते २ऋचि स्त्री ङीप् ।

**पावित्रायण** पुंस्त्री पवित्रस्यर्षेर्गोत्रापत्यम् अश्वा० फञ् । पवित्रर्षिगोत्रापत्ये ।

**पावीरवी** स्त्री १शोधयित्र्यां स्त्रियां ऋ०६।४९।७भा० “आयुधवान् पवीरवान् इन्द्रो देवताऽस्य अण् ङीप् । २दिव्यायां ३वाचि निरु०१२।३० “इन्द्रः पावीरवान् तद्देवताका पावीरवी पावीरवी च दिव्या वाक्” इत्युक्तम् ।

**पाश** पु० पश्यते बध्यतेऽनेन पश–करणे घञ् । १मृगविहगादिबन्धने रज्जुभेदे (फाँद) २रज्जुमात्रे च । केशादुत्तरं पाशशब्दः संघार्थः। यथा केशपाशः । कर्णात् परः शोभार्थः यथा कर्णपाशः शोभनकर्ण इत्यर्थः । छात्रादिभ्यः पाशप् । छात्रपाश अपकृष्टच्छात्र इत्याद्यर्थे ३शस्त्रभेदे शब्दरत्ना०। तल्लक्षणं हेमा०परि० औशनसशास्त्रोक्तं यथा “शाणं क्षौमं कार्पासं सूत्रं तथा रोमाणि चर्म च सर्वकालिकस्य पाशस्य द्रव्याणि भवन्ति तानि द्रव्याणि स्नायुमिश्राणि पैशस्य पाशस्य योग्यानि स्युः । नालिकेलवल्कलादिबन्धनादि प्रावृषेण्यस्य नारिकेलाम्लातक तालहन्तवल्कलानि हैमनस्य पाशस्य भवन्ति । त्रिहताद्दृढहतगुणसंयुक्तः पाशः प्रयोगिकः । पाशो भवेदामूलात् सङ्घपाशः षडङ्गुलः स्याद्दशाङ्गुप्रमाणः सुखावहः सुखस्पर्शश्च पाशस्थाने सुश्लिष्टोऽनुपूर्वबलान्वितो भवति । रज्जुपाशस्तु नवकानुवर्त्तितः स्यात् । एकहस्तस्त्रिहस्तः पादहीनः सह कर्णाभ्यां च पाशो दशपलिकः पादान्ते पञ्चकार्षकः श्रेष्ठो भवति पञ्चदशपलो वा तथा रथाश्वयोरपि विज्ञेयो । विंशतिपलिकः कर्त्तव्यः प्रमाणे सप्तकार्षकस्त्रिंशत्पलिको वा दन्तिनां मतङ्गजस्य नवपलकौ हस्तिनि त्रुवे च पाशो भवति भावविक्षते नागारत्निगुणः पाशः” इति ।

**पाशक** पु० पश–ण्वुल् । द्यूतक्रीडासाधने गुडिकादौ (पाशा) अमरः । [दृश्यम् ।

**पाशद्युम्न** पु० वयतः पुत्रे एतन्नामके नृपे ऋ० ७।३३।२भा०

**पाशधर** पु०पाशं धारयति धारि–अच् ह्रस्वः । १वरुणे हरिवं०४८०अ०तद्देवताके २शततारके ३पाशधारिमात्रे त्रि०

**पाशन** न० पाशि–भावे ल्युट् । बन्धने भा०द्रो० ५९अ० ।

**पाशपाणि** पु०पाशः पाणौ यस्य । १वरुणे हला० २शतभे च पाशहस्तादयोऽप्यत्र पाश+अस्त्रार्थे इनि । पाशीत्यप्यत्र

**पाशभृत्** पु०पाशं बिभर्त्ति भृ–क्विप् । १वरुणे २तद्देवताके शतभिषानक्षत्रे न० । ३पाशधारिमात्रे त्रि० । “हंसारूढः पाशभृद्वरुणः” ह०सं० ५०अ० ।

**पाशमुद्रा** स्त्री तन्त्रसारोक्ते मुद्राभेदे “वाममुष्टेस्तु तर्जन्या दक्षमुष्टेस्तु तर्जनीम् । संयोज्याङ्गुष्ठकाग्राभ्यां तर्जन्यग्रे स्वके क्षिपेत् । एषा पाशाह्वया मुद्रा विद्वद्भिः परिकीर्त्तिता” ।

**पाशव** त्रि०पशोरिदम् अण् । १पशुसम्बन्धिनि तन्त्रोक्ते २पश्वाचारे च पशूनां समूहः अण्। ३पशुसमूहे न०[शब्दच०

**पाशवपालन** न०पाशवं पशुसंघं पालयति पालि–ल्यु । घासे

**पाशवासन** न० “पाशवासनमावक्ष्ये कृत्वा पशुपतिर्भवेत् । पृष्ठे हस्तद्वयं बद्ध्वा कर्पराग्रे समस्तकम्” रुद्रया० उक्ते आसनभेदे ।

**पाशबीज** न० (बीं) रत्नाकारके बीजे वैद्यश० रघु० ।

**पाशहस्त** पु० पाशः हस्ते यस्य । १वरुणे २यतभे च ३हस्तस्थितपाशके त्रि० ।

**पाशादि** (पाशादिभ्यो यः) पा० उक्तप्रत्ययनिमित्ते शब्दगणे स च गणः "पाश तृण धूम वात अङ्गार पाटल पोत गल पिटक पिटाक शकट हल नट वन" । तदन्तः स्त्रीलिङ्गः पाशा वात्या इत्यादि । [व०।

**पाशान्त** पु०पार्श्वस्यान्तः पृषो० । वस्त्रस्य पार्श्वान्ते हे०सं०७।

**पाशिक** त्रि० पाशः प्रहरणमस्य ठक् । पाशवन्धनरूपप्रहरणयुक्ते कृगयौ हे०सं० ७५अ० ।

**पाशिन्** पु० पाशोऽस्त्यस्य इनि । १वरुणे २यतभे ३पाशवति त्रि०। स्त्रियां ङीप् । ४व्याधे पु० मेदि० ५इतराष्ट्रपुत्रभेदे पु० भा०आ० ११७अ० । [कूटदेशादौ ।

**पाशिल** त्रि० पाशस्यादूरदेशादि०काशा०इल । पाशस्य सन्नि-

**पाशिवाट** पु०देशभेदे भा०भी०६अ० । सोऽभिजनोऽस्य अण् । तस्य बहुषु लुक् । पिलादिक्कमेण तद्देशवासिषु ब०व०।

**पाशुक** पु० पशोर्यागद्वापकपन्थस्य व्याख्यानो ग्रन्थः अच्कत्वात् ठक् । १पशुयागज्ञापकपन्थव्याख्याने । पशोरिदम् ठक् । २पशुसम्बन्धिनि त्रि० कात्या० श्रौ०११।२०"नानापाशुकमज्जमांसरुधिरैः क्षत्वा नवत्यां वलिम्" ति०त०।

**पाशुपत** त्रि० पशुपतिर्देवताऽस्य तस्येदं तेन प्रोक्तम् वा अश्वपत्या०अण् । १पशुपतिदेवताके अक्षादौ २तद्दैवते हविरादौ ३पशुपतिसम्बन्धिनि ४तेनोपदिष्टे शास्त्रभेदे न० तन्मतं पशुपतिशब्दे दर्शितम् । ५वकद्रुमे पु०मेदि० तस्य तत्प्रियत्वात्तथात्वम् । [१।११६

**पाशुपाल्य** न० पशुपालस्य भावः ष्यञ् । वैश्यवृत्तौ याज्ञ०

**पाशुबन्धक** त्रि०पशुबन्धः प्रयोजनमस्य ठक् । यत्रे १आलम्भनार्थपशुबन्धनस्थानादौ २वेद्यां स्त्री कापि अतदन्तम् आश्व०श्रौ० ३।१।६

**पाश्चात्त्य** त्रि० पश्चाद् भवः त्यक् । पश्चिमदेशभवे ।

**पाश्चात्त्याकरसम्भव** न०पाश्चात्त्ये आकरे सम्भवति सम्+भू—अच् ७त० । (साम्भरी) लवणभेदे रत्नमाला ।

**पाषक** न० पष—बन्धे ण्वुल् । पादाभरणभेदे

**पाषण्ड** त्रि० पाति रक्षति दुरितेभ्यः पा—क्विप् पाः वेदधर्मस्तं षण्डयति निष्फलं करोति । "पालनाच्च त्रयीधर्मः पाशब्देन निगद्यते । षण्डयन्ति तु तं यस्मात् पाषण्डस्तेन कीर्त्तितः" इत्युक्ते वेदाचारत्यागिनि अमरः स्तुल् । पाषण्डक तत्रार्थे त्रि०।

**पाषण्डिन्** पु० पां वेदधर्मं षण्डयति षण्ड+णिच्-इनि । पाषण्डे शब्दच० तस्य लक्षणं यथा

"येऽन्यदेवं परत्वेन वदन्त्यज्ञानमोहिताः । नारायणाद् जगद्वन्द्यात् ते वै पाषण्डिनस्तथा । कपालभस्मास्थिधरा ये ह्यवैदिकलिङ्गिनः । ऋते वनस्थाश्रमांश्च जटावल्कलधारिणः । अवैदिकक्रियोपेतास्ते वै पाषण्डिनस्तथा । शङ्खचक्रोर्द्धपुण्ड्रादिचिह्नैः प्रियतमैर्हरेः । रहिता ये द्विजा देवि ! ते वै पाषण्डिनो मताः । श्रुतिस्मृत्युक्तमाचारं यस्तु नाचरति द्विजः । स पाषण्डीति विज्ञेयः सर्वलोकेषु गर्हितः । समस्तयज्ञभोक्तारं विष्णुं ब्रह्मण्यदैवतम् । उद्दिश्य देवतान्येभ्यो जुहोति च ददाति च । स पाषण्डीति विज्ञेयः स्वतन्त्रो वापि कर्मसु । स्वातन्त्र्यात् क्रियते यैस्तु कर्म वेदोदितं महत् । विना वै भगवत्प्रीत्या ते वै पाषण्डिनः स्मृताः । यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः । समत्वेनैव जानाति स पाषण्डी भवेत् सदा । अनास्था क्रियते यैस्तु मनोवाक्कायकर्मभिः । वासुदेवं न जानाति स पाषण्डी भवेत् द्विजः । हरेर्नामकमन्त्राभ्यां लोकाः सङ्गिविवर्जिताः । यदि वर्णाश्रमाद्या ये ते वै पाषण्डिनः स्मृताः । वर्णानां गुरवो नित्यं शिवे ! यद्यप्यवैष्णवाः । भगवद्धर्मरहिता वैष्णवादिविनिन्दकाः । रजस्तमोमया जीवहिंसका जीवभक्षकाः । असत्प्रतिग्रहरता देवला ग्रामयाजकाः । भ्रष्टाचारास्तथा ज्ञात्वा नानाविबुधपूजकाः । देवतोच्छिष्टश्राद्धादिभोजिनः शूद्रवत्क्रियाः । विविधात्मम्भरता भक्ष्याद्यविचारिणः । लोभमोहमदक्रोधकामाहङ्कारिणः सदा । एवंविधाः पारदारिकाद्या येऽत्र शुभानने ! । अन्येषां का कथा तत्र पाषण्डा ब्राह्मणाः स्मृताः । वर्णाश्रमाद्या ये मर्त्याः स्वस्वधर्मविवर्जिताः । ते वै पाषण्डिनो देवि ! नारायणबहिष्कृताः । सर्वाशिनो द्विजा येऽपि सर्वविक्रयिणस्तथा । ये वेदाचाररहितास्ते वै पाषण्डिनो मताः । ये त्वसद्ग्राह्यपानादिरता लोका निरन्तरम् । शिवे ! पाषण्डिनो ज्ञेया इह नास्त्यत्र संशयः । विष्णुवैष्णवगोभूमिदेवादिषु विशेषतः । अश्वत्थतुलसीतीर्थक्षेत्रादिषु महागुरौ । लक्ष्मीश्वरस्त्रीगङ्गायमुनासु वरानने ! । स्मृताः पाषण्डिनस्तेऽपि ये न सेवापरायणाः । रुद्राक्षेन्द्राक्षभद्राक्षस्फटिकाक्षादिधारिणः । जटिला भस्मलिप्ताङ्गास्ते वै पाषण्डिनः प्रिये ! । असिजीवी मसीजीवी-

धावकः पाचकस्तथा। एते पाषण्डिनो विप्रा मादक द्रव्यभोजिनः। देवि ! कार्ष्णादयो भक्ता अनन्यशरणास्तु ये। पाषण्डसङ्गं न कुर्युस्तद्वत् पानभोजने। तत् स्पर्शजलपानञ्च चक्रुस्तत्सङ्गमादिकम्। तत्पानभोजनालापसङ्गालिङ्गनतोऽचिरात्। पाषण्डिनो वैष्णवाः स्युरन्येषामपि का कथा। किमत्र बहुनोक्तेन ब्राह्मणा ये ह्यवैष्णवाः। अवदाचरणास्ते तु स्युस्ते पाषण्डिनः स्मृताः। एतद्भोजनपानादिकर्मभिर्वैष्णवा जनाः। पाषण्डिनस्तथा स्युर्वै जटाभस्मादिधारिणः" पाद्मोत्तरखण्डे पाषण्डाचरणं नाम ४२अ०। एतच्च वैष्णवप्रशंसार्थमेव लिङ्गधारणस्यापि शास्त्रसिद्धत्वात्। तत्संसर्गादिनिषेधो यथा "तस्मात् पाषण्डिभिः पापैरालापं स्पर्शनं त्यजेत्। विशेषतः क्रियाकाले यज्ञादौ चापि दीक्षितः। क्रियाहानिर्गृहे स्वयं पश्येत मतिमान् नरः। किं पुनर्यैस्तु सन्त्यक्ता त्रयी सर्वात्मना द्विज !। पाषण्डभोजिभिः पापैर्वेदवादविरोधिभिः। पाषण्डिनो विकर्मस्थान् वैडालव्रतिकान् शठान्। हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्। दूरापास्तस्तु संसर्गः सहास्था चापि पापिभिः। पाषण्डिभिर्दुराचारैस्तस्मात्तान् परिवर्जयेत्। एते नग्नास्तवाख्याता दृष्ट्या श्राद्धोपघातकाः। येषां सम्भाषणात् पुंसां दिनपुण्यं प्रणश्यति। एते पाषण्डिनामानो ह्येतान् नालपेद्बुधः। पुण्यं नश्यति सम्भाषादेतेषां तद्दिनोद्भवम्। पुंसां जटाधरणमौण्ड्यवतां तथैव मोघाशिनामखिलशौचनिराकृतानाम्। तोयप्रदानपितृपिण्डबहिष्कृतानां सम्भाषणादपि नरा नरकं प्रयान्ति" विष्णु पु० ३अंशे १८अ०।

**पाषाण** पु० पिनष्टि पिष–संचूर्णने आनच् पृषो०। १प्रस्तरे अमरः अल्पार्थे ङीप्। २पाषाणी (वाटखारा) २लघुमानपाषाणे स्त्री शब्दच०।

**पाषाणगर्द्दभ** पु० सुश्रुतोक्ते क्षुद्ररोगभेदे "हनुसन्धौ समुद्भूतं शोफमल्परुजं स्थिरम्। पाषाणगर्द्दभं विद्यात् बलासपवनात्मकम्"।

**पाषाणचतुर्द्दशी** स्त्री वृश्चिकस्थरविके मासे शुक्लचतुर्द्दश्याम् तस्यां पाषाणाकारपिष्टकभोजनात्तस्यास्तन्नामता यथोक्तं भविष्ये "वृश्चिके शुक्लपक्षे तु या पाषाणचतुर्द्दशी। तस्यामाराधयेद्गौरीं नक्तं पाषाणभोजनैः"। पाषाणभोजनैः पाषाणाकारपिष्टकभोजनैः" ति त० रघु०।

**पाषाणदारक** पु० पाषाणं दारयति दारि–ण्वुल्। टङ्कास्त्रे (पाथरकाटाछेनी) अमरः। ल्यु। पाषाणदारणोऽप्यत्र।

**पाषाणभेदन** पु० पाषाणं भिनत्ति ल्यु। (हाडजोडा) १वृक्षभेदे राजनि० ण्वुल्। पाषाणभेदकोऽप्यत्र "पाषाणभेदकोऽश्मघ्नो गिरिभिद्भिन्नयोजनी। अश्मभेदो हिमः स्निग्धः कषायो वस्तिशोधनः। भेदनो हन्ति दोषार्शो गुल्मकृच्छ्राश्महृद्रुजः। योनिरोगान् प्रमेहांश्च प्लीहा शूलव्रणानि च" भावप्र०। २प्रस्तरभेदकमात्रे त्रि०।

**पाषाणभेदिन्** पु० पाषाणं भिनत्ति भिद–णिनि (पाथुरचुर) १वृक्षभेदे रत्नमा० २शिलाभेदके त्रि० स्त्रियां ङीप्।

**पाषी** स्त्री पाष्यते बध्यतेऽनया पष–बन्धे करणे घञ्। १मक्राां २शिलायाञ्च ऋ० १।५६।६ भा०। पाषाणवद् दायाञ्च ऋ० ८ १०१।२ भा०। [ऋ० ४।२१।६ भा०।

**पास्त्य** त्रि० पस्त्ये गृहे वसति शैषिकोऽण्। गृहवासिनि

**पाहत** पु० अपाहन्ति अप+आ+हन–ड अपेरल्लोपः पाहः स इव अतति अत–अण् शक०। अश्मदारकृद्वृक्षे शब्दच०।

**पि** गतौ तु०अक०पर०अनिट्। पियति। अपैषीत्। पिपाय। पिप्यतुः। [अमरः स्त्रियां ङीप्।

**पिक** पुंस्त्री० अपि कायति कै–क अपेरल्लोपः। कोकिले

**पिकप्रिया** स्त्री ६त०। महाजम्ब्वाम् राजनि०।

**पिकबन्धु** पु० ६त०। आम्रवृक्षे त्रिका०।

**पिकराग** पु० पिकोरज्यतेऽत्र रन्ज–आधारे घञ् कुत्वञ्च। आम्रवृक्षे राजनि०।

**पिकवल्लभ** पु० ६त०। आम्रवृक्षे भावप्रकाशः।

**पिकाक्ष** पु० पिकस्याक्षीवाक्षत्रस्य समानवर्णत्वात् अच्। १रोचन्याम् शब्दच० पिकस्याक्षीवाक्षि अस्य षच् समा०। २पिकतुल्यरक्तनेत्रयुक्ते त्रि० स्त्रियां षित्वात् ङीष्।

**पिकाङ्ग** पुंस्त्री० पिकस्याङ्गमिवाङ्गमस्य। पक्षिभेदे शब्दच०।

**पिकानन्द** पु० पिकमानन्दयति आ+नन्दि–अण् उप०स०। वसन्तकाले राजनि०।

**पिकेक्षणा** स्त्री पिकस्येक्षणं तद्वर्णोऽस्त्यस्याः अच्। १कोकिलाक्षे करवीरभेदे राजनि०। पिकस्येक्षणमिवेक्षणमस्य। २रक्तनेत्रे त्रि० स्त्रियां स्वाङ्गत्वेऽपि बह्वच्कत्वात् न ङीष् किन्तु टाप्।

**पिक्क** पु० पिक इव कायति कै–क पृषो०। १हस्तिशावके शब्दमा०। २सङ्ख्यापरिमाणभेदे स्त्री हे०सं०८१श्लो०।

**पिङ्ग** पु० पिजि–वर्णे–अच् न्यङ्का० कुत्वम्। १मूषिके मेदि० स्त्रियां ङीष्। २दीपशिखाभे वर्णे पु० "पिङ्गो दीपशिखाभः स्यात् पिङ्गलः पद्मधूलिवत्"। ३तद्वति त्रि०

अमरः गौरा॰ पाठात् स्त्रियां ङीप् । कडारा॰ पाठात् अस्य पूर्वनिपातः । ४ऋषिभेदे पु॰तेन प्रोक्तः कल्पः णिनि पैङ्गिन् तत्प्रोक्ते कल्पे । पिङ्ग+अस्त्यर्थे सिध्मा॰वा लच् । पिङ्गल तद्वर्णयुते त्रि॰ पक्षे मतुप् मस्य वः । पिङ्गवत् तत्रार्थे त्रि॰ स्त्रियां ङीप् ।

**पिङ्गकपिशा** स्त्री पिङ्गा च कपिशा च "वर्णोवर्णेन" पा॰ स॰ । १तैलपायिकायां स्त्री हेमच॰ २पिङ्गवर्णयुते अथच कपिशवर्णयुते त्रि॰ । [नेत्रे त्रि॰ ।

**पिङ्गचक्षुस्** पु॰ पिङ्गं चक्षुरस्य । कुम्भीरे हेमच॰ । २पिङ्ग-

**पिङ्गजट** पु॰ पिङ्गा जटाऽस्य । शिवे हेमच॰ ।

**पिङ्गतीर्थ** न॰ तीर्थभेदे भा॰व॰ ८२अ॰ ।

**पिङ्गल** पु॰ पिङ्ग+सिध्मा॰लच् पिङ्गं लाति—क वा । १नील-पीतमिश्रितवर्णे २तद्वति त्रि॰अमरः । अस्मिन् परे घोषा॰ पूर्वपूर्वपदस्याद्युदात्तम् । प्राकृतभाषयाच्छन्दोग्रन्थकारके ३नागभेदे ४रुद्रे ५सूर्यपारिपार्श्विकभेदे ६निधिभेदे ७वा-नरे नकुले ८स्थावरविषभेदे च हेमच॰ । ९क्षुद्रोलूके राजनि॰ "देशभङ्गोऽथ दुर्भिक्षं स्यास्यात् कथयाम्यहम् । पिङ्गले चारुपद्माक्षि ! दुर्भिक्षं नर्मदातटे" इति ज्यो॰त॰ उक्ते प्रभवादिषष्टिमध्ये १०वर्षभेदे च । ११नागराजभेदे भा॰आ॰३५अ॰ । १२यक्षभेदे भा॰स॰ २१०अ॰ । १३रीतौ पित्तले १४शिंशपायां च स्त्री राजनि॰ । १५वामनदिग्गजस्य स्त्रियां कुमुदस्य १६करिण्यां मेदि॰ । १७कर्णि-कायां तन्त्रोक्ते १८नाडीभेदे हेमच॰ । इडाशब्दे दृश्यम्

**पिङ्गलक** पु॰ पिङ्गल+स्वार्थे क । पिङ्गलशब्दार्थे २यक्षभेदे पु॰ भा॰स॰१०अ॰ । ततः उपका॰ द्वन्द्वे अद्वन्द्वे च गोत्रप्रत्ययस्य बहुत्वे वा लुक् ।

**पिङ्गला** स्त्री १वेश्याभेदे संज्ञायां कन् । कापि अतइत्त्वम् । पिङ्गलिका बलाकायां त्रिका॰

**पिङ्गललोह** न॰ नित्यकर्म॰ । पित्तले राजनि॰ ।

**पिङ्गसार** पु॰ पिङ्गं सारमस्य । हरिताले राजनि॰ ।

**पिङ्गस्फटिक** पु॰ नित्यकर्म॰ । गोमेदमणौ राजनि॰ ।

**पिङ्गा** स्त्री पिङ्ग—अस्त्यर्थे अच् । १गोरोचनायां २हिङ्गौ ३नालिकायां ४चण्डिकायां मेदि॰ ५हरिद्रायां शब्दच॰ ६वंशरोचनायां राजनि॰ ।

**पिङ्गाश** पुंस्त्री॰ पिङ्गं वर्णमश्नुते अश—व्याप्तौ अण् । (पा-ङ्गाश) १मत्स्यभेदे स्त्रियां ङीष् । २पल्लीपतौ ३उत्तम-स्वर्णे न॰ मेदि॰ ४नीलिकायां स्त्री मेदि॰ ।

**पिङ्गास्य** पुंस्त्री॰ पिङ्गमास्यमस्य । (पाङ्गाश) मत्स्यभेदे शब्दच॰ । स्त्रियां योगधत्वात् टाप् । २पिङ्गमुखयुक्ते त्रि॰

**पिङ्गाक्ष** पु॰ पिङ्गे अक्षिणी यस्य षच्समा॰ । १शिवे काशी॰ ख॰ १२अ॰ उक्ते २व्याधभेदे । ३पिङ्गवर्णनेत्रयुक्ते त्रि॰ स्त्रियां ङीष् । ३कुमारानुचरमातृभेदे स्त्री भा॰श॰ ४७॰

**पिङ्गी** स्त्री पिङ्ग+अस्त्यर्थे अच् गौरा॰ ङीष् । शमीवृक्षे मेदि॰ । [नेत्रयुक्ते त्रि॰ ।

**पिङ्गेक्षण** पु॰ पिङ्गमीक्षणमस्य । १शिवे हेमच॰ । २पिङ्ग-

**पिचण्ड** पु॰ अपि+चम—ड तस्य नेत्त्वम् अपेरल्लोपः । १उदरे २पश्वोरवयवे च हेमच॰ । पृषो॰इत्त्वम् । पिचिण्डोऽप्यत्र ततः तुन्दादि॰ इलच् । पिचण्डिल वृद्धोदरे तुन्दिले त्रि॰ पक्षे ठन् । पिचण्डिक तत्रार्थे त्रि॰ । "भोगाढ्या समजठरा निःस्वाः स्युर्घटसन्निभाः । सर्पोदरा दरिद्राः स्युः" गरुड़े तस्याशुभसूचकत्वमुक्तम् ।

**पिचण्डक** त्रि॰ पिचण्डे कुशलः आकर्षा॰ कन् । औदरिके उदरपूर्त्तौ कुशले उदरम्भरौ ।

**पिचव्य** पु॰ पिचवे तूलाय साधुः यत् । कार्पासवृक्षे हेमच॰ ।

**पिचु** पु॰ पच—उ पृषो॰ । १कार्पासतूले (तुला) अमरः २कुष्ठ-भेदे ३कर्षे ४असुरभेदे मेदि॰ ५भैरवे ६शस्यभेदे विश्वः ।

**पिचुक** पु॰ पिचुरिव कायति कै—क । १मदनवृक्षे (मयना) रत्नमाला । ततः अस्त्यर्थे उत्करा॰ छ । पिचुकीय त-द्युते देशादौ त्रि॰ ।

**पिचुतूल** न॰ ६त॰ । तूले (तुला) त्रिका॰ ।

**पिचुमन्द(र्द)** पु॰ पिचुं कुष्ठं मन्दयति मृद्नाति वा अच् उप॰स॰ । निम्बवृक्षे (दौन्तः) अमरः (न्दान्तः) हेमच॰ ।

**पिचुल** पु॰पिचुं लाति ला—क । १झावुकवृक्षे (झाउ) २हिज्जले ३जलवायसे च मेदि॰ ४तूले अमरटीका ।

**पिच्च** छेदे चु॰उभ॰सक॰ सेट् । पिच्चयति ते अपिपिच्चत् त ।

**पिच्चट** न॰ पिच्च—अटन् । १सीसके २रङ्गे ३नेत्ररोगभेदे पु॰

**पिच्चा** स्त्री मुक्तापरिमाणभेदे वृ॰सं॰ ८१अ॰ ।

**पिच्चिट** पु॰ कीटभेदे कीटशब्दे २०५८पृ॰ सुश्रुतवाक्यम् ।

**पिच्चित** न॰ सुश्रुतोक्ते काण्डभग्नभेदे "पिच्चितं पृथुतां गत-मनल्पशोफम्" इति तल्लक्षणम् ।

**पिच्छ** बाधे तु॰पर॰सक॰सेट् । पिच्छति अपिच्छीत् पिपिच्छ

**पिच्छ** न॰ पिच्छ—अच् । १मयूरपुच्छे २चूडायां ३ला-ङ्गूले पु॰ मेदि॰ ४शाल्मलीवेष्टे स्त्री अमरः । ५पूगे ६छटायां ७कोषे ८मोचायां ९पङ्क्तौ १०भक्तमण्डे ११हयपदामये च स्त्री मेदि॰ १२कोषिकायां १३फणि-लालायां हारा॰ । १४शिंशपावृक्षे च स्त्री शब्दच॰ ।

**पिच्छबाण** पु० पिच्छं बाण इव यस्य । श्येनखगे राजनि०

**पिच्छल** पु० वासुकिवंश्ये सर्पभेदे भा०आ० ५७अ० ।

**पिच्छलदला** स्त्री पिच्छ–कलच् तादृशं दलमस्याः । बद-रीवृक्षे त्रिका० ।

**पिच्छादि** अस्त्यर्थे इलच्प्रत्ययनिमित्ते शब्दगणे यथा “पिच्छा उरस् ध्रुवक ध्रुवक (जटाघटाकालाः क्षेपे) वर्ण उदक पङ्क प्रज्ञा” । [शिंशपावृक्षे शब्दच० ।

**पिच्छितिका** स्त्री पिच्छ–भावे क्तिन् तया कायति कै–क ।

**पिच्छिल** त्रि० पिच्छ–वा० इल । (पिचल) १पदार्थे २भक्त-मण्डे तद्युक्ते च ३स्निग्धसूपादौ । पिच्छा+अस्त्यर्थे पिच्छा० इलच् । ४चूडायुक्ते त्रि० ५श्लेष्मातकवृक्षे पु० राजनि० संज्ञायां कन् । पिच्छिलक धन्वनवृक्षे पु० राजनि० ।

**पिच्छिलच्छदा** स्त्री पिच्छिलः छदोऽस्याः । उपोदक्यां राजनि० । [त्रिका० ।

**पिच्छिलत्वच्** पु० पिच्छिला सूक्ष्मा त्वक् यस्य । नागरङ्गवृक्षे

**पिच्छिलसार** पु० पिच्छिलः सारोऽस्य । मोचरसे राजनि०

**पिच्छिला** स्त्री पिच्छ–इल पिच्छा+अस्त्यर्थे इलच् वा । १पोतिकायां २शिंशपायां ३शाल्मलौ ४सिन्धुभेदे मेदि० ५कोकिलाक्षे ६वृश्चिकालुपे ७अतस्यां ८तूलीवृक्षे च राजनि० ९कटुकायां शब्दच० ।

**पिज** दीप्तौ वासे बले (सामर्थ्ये) च अक० हिंसायां दाने च सक० चु० उभ० सेट् इदित् । पिञ्जयति ते अपिपिञ्जत् त ।

**पिजवन** पु० सर्वजीवजये विश्वामित्रयाज्ये नृपभेदे निरु० २।२४ भाष्यम् । [तद्गोत्रापत्ये पुंस्त्री० ।

**पिज्वल** पु० ऋषिभेदे ततः अश्वा० गोत्रे फञ् । पैज्वलायन

**पिञ्छ** न० पिच्छ–पृषो० । पिच्छशब्दार्थे हेमच० ।

**पिञ्ज** न० पिजि–अच् । १बले २व्याकुले त्रि० मेदि० ३वधे अमरः ४कर्पूरभेदे पु० ५तूले ६हरिद्रायां स्त्री मेदि० ७हिंसायां स्त्री त्रिका० । भावे अच् । ८कटायां स्त्री रत्नमाला ।

**पिञ्जट** पु० पिजि–अटन् । नेत्रमले (पिँचुटी) शब्दरत्ना० ।

**पिञ्जन** न० पिजि–करणे ल्युट् । तूलस्फोटने १यन्त्रभेदे । भावे ल्युट् । २तूलादेः स्फोटने ।

**पिञ्जर** न० पिजि–अरच् । १हरिताले अमरः २स्वर्णे मेदि० ३नागकेशरे राजनि० ४विहङ्गमादिबन्धनस्थाने ५देहास्थि-वृन्दे च रामाश्रमः । ६अश्वभेदे पु० ७पीतरक्तवर्णे ८पीतवर्णे च पु० हेमच० । ९तद्वति त्रि० १०सर्पभेदे पु० भा० आ० ३५अ० । स्वार्थे क । पिञ्जरक तत्रार्थे न० ।

**पिञ्जल** न० पिजि–कलच् । १हरिताले २कुशपत्रे च धरणिः ३अत्यन्ताकुलसैन्यादौ पु० अमरः ४कुशान्तरवेष्टिते साग्र-कुशपत्रद्वये स्त्री ङीप् । “एतदेव पिञ्जल्या लक्षणं समु-दाहृतम्” कर्मप्रदीपे तत्र पवित्रलक्षणातिदेशात्तथात्वम् ।

**पिञ्जाल** न० पिजि–वा० आलच् । स्वर्णे राजनि० ।

**पिञ्जिका** स्त्री पिजि–ण्वुल् अतइत्त्वम् । तूलनालिकायां (पाँइज) त्रिका० ।

**पिञ्जूल** पु० पिजि–ऊलच् । १कुशवर्त्तिकायाम् उज्ज्वलद० । संज्ञायां कन् । पिञ्जूलक २ऋषिभेदे ततः । उपका० गो-त्रप्रत्ययस्य बहुत्वे द्वन्द्वे अद्वन्द्वे च वा लुक् ।

**पिञ्जेष** पु० पिजि–वा० एषन् । कर्णमले हेमच० ।

**पिञ्जेट** पु० पिञ्जं अटति अट् अच् अलुक्स० । नेत्रमले शब्दरत्ना० ।

**पिञ्जोला** स्त्री पिजि–वा० ओल । पत्रशब्दे हारा० [पिपेट ।

**पिट** संहतौ ध्वनौ च भ्वा० पर० अक० सेट् । पेटति अपेटीत्

**पिट** न० पिट–क । १वाले त्रिका० (पेटारा) २पेटके पु० धरणिः

**पिटक** पु० पिट–वा० क्वुन् । (पेटरा) वेत्रादिनिर्मिते वस्तु-रक्षाधारे पदार्थे अमरः । तेन हरति उत्सङ्गा० ठञ् । पैटकिक पेटकेन हारिणि त्रि० । २स्फोटके पु० मेदि० । देहजातस्फोटशुभाशुभादिकं बृ० सं० ५२अ० उक्तं यथा “सितरक्तपीतकृष्णा विप्रादीनां क्रमेण पिटका ये । ते क्रमशः प्रोक्तफला वर्णानामग्रजादीनाम् । सुस्निग्ध-व्यक्तशोभाः शिरसि धनचयं मूर्ध्नि सौभाग्यमाराद् दौर्भाग्यं भ्रूयुगोत्थाः प्रियजनघटनामाशु दुःशीलतां च । तन्मध्योत्थाश्च शोकं नयनपुटगता नेत्रयोरिष्टदृष्टिं प्रव्रज्यां शङ्खदेशेऽश्रुजलनिपतनस्थानगाश्चातिचिन्ताम् । घ्राणागण्डे वसनसुतदाश्चोष्ठयोरन्नलाभं कुर्युस्तद्वच्चिबु-कतलगा भूरि वित्तं ललाटे । हन्वोरेवं गलकृतपदा भूषणान्यन्नपाने श्रोत्रे तद्भूषणगणमपि ज्ञानमात्मस्वरू-पम् । शिरःसन्धिग्रीवाहृदयकुचपार्श्वोरसि गता अयोघातं घातं सुततनयलाभं शुचमपि । प्रियप्राप्तिं स्कन्धेऽप्यटन-मथ भिक्षार्थमसकृद्विनाशं कक्षोत्था विदधति धनानां वसुचयम् । दुःखमथ निचयस्य विघातं पृष्ठबाहुयुगजा रचयन्ति । संयमं च मणिबन्धनजाता भूषणाद्यमुपबा-हुयुगोत्थाः । धनाप्तिं सौभाग्यं शुचमपि कराङ्गुल्युट-रगाः सुपानाद्यं नाभौ तदध इह चोरैर्धनहृतिम् । धनं धान्यं बस्तौ युवतिमथ मेढ्रे सुतनयान् धनं सौभाग्यं

वा गुदहृषणजाता विदधति। ऊर्वोर्नाड्नाकाभ नाभ्वोः शत्रुजनात् क्षतिम्। अंसे च जङ्घयोर्बन्धेऽध्ववस्त्रक्षयदायिनः। स्फिक्पार्ष्णिपादजाता धननाशागम्यगमनमध्वानम्। बन्धनमङ्गुलिनिचयेऽङ्गुष्ठे च ज्ञातिलोकतः पूजाम्। उत्पातगण्डपिटका दक्षिणतो वामतस्त्वभीघाताः। धन्या भवन्ति पुंसां तद्विपरीतास्तु नारीणाम्। इति पिटकविभागः प्रोक्त आमूर्द्धतोऽयं व्रणतिलकविभागोऽप्येवमेव प्रकल्प्यः। भवति मशककल्कावर्त्तजन्मापि तद्वद्विगदितफलकारि प्राणिनां देहसंस्थम्"।

**पिटक्या** स्त्री पिटकानां समूहः पाशा० य। पिटकसमूहे

**पिटङ्कोकी** स्त्री पिटं कोकते कुक—वा० क ङीप्। इन्द्रवारुण्यां रत्नमाला।

**पिटाक** पु० पिट—वा० काक। १मुनिभेदे ततः शिवा० अण्। पैटाक तदपत्ये पुंस्त्री०। २पेटके च तेन हरति उत्सङ्गा० ठञ्। पैटाकिक तेन हारिणि त्रि०। संघार्थे पाशा० य। पिटाक्या तत्समूहे स्त्री।

**पिट्टक** न० पिट—ण्वुल् पृषो०। दन्तकिट्टके शब्दर०।

**पिट्ट** कुटनभेदे (पेँटा) कुट्टनेनाधःप्रवेशने च० उभ० सक० सेट्। पिट्टयति त अपिपिट्टत् त। कात्या० श्रौ० ६।२।११कर्कः।

**पिट्टिक** त्रि० पिट्ट—इन् स्वार्थे क। कुट्टनेन अधःप्रवेशिते मेदि०। [पिपेठ।

**पिठ** क्लेशे अक० वधे सक० भ्वा० पर० सेट्। पेठति अपेठीत्

**पिठर** पु० पिठ—करन्। १गृहभेदे त्रिका० २मुस्तायां ३मन्थानदण्डे च न० मेदि०। ४स्थाल्यां पुंस्त्री० स्त्रीत्वे ङीप्। अमरः। ५दानवभेदे पु० भा० स० ६७अ०। संज्ञायां कन्। पिठरक ६नागभेदे पु० भा० आ० ३५अ०। पीलुपाकशब्दे दृश्यम्। [पैठीनसि तदपत्ये उपस्मृतिकारके ऋषिभेदे।

**पिठीनस्** पु० ऋषिभेदे ऋ० ६।२६।६भा० तस्यापत्यम् इञ्

**पिड** राशीकरणे भ्वा० आत्म० सक० सेट् इदित्। पिण्डते अपिपिण्डत्। अयं चुरादिरपि तत्रार्थे उभ०। पिण्डयति ते अपिपिण्डत् त।

**पिडका** स्त्री पीडयति पीड़—ण्वुल् क्षिपकादि० नि०। कुष्ठाधिकारे पीड़ादायके क्षुद्रस्फोटके भावप्रका०। सुश्रुतादौ रोगभेदे नानाविधैव पिडका उक्ता तत्र भगन्दरे "अपक्वाः पिडकाः पक्वास्तु भगन्दराः" इत्युपक्रमे पित्तादिपिड़का उक्ता यथा "पित्तन्तु प्रकुपितमनिलेनाधःप्रेरितं पूर्ववदवस्थितं रक्तां तन्वीमुच्छ्रितामुष्ट्रग्रीवाकारां पिडकां जनयति। तस्य ओषादीन् वेदनाविशेषान् जनयत्यप्रतिक्रियमाणा च पाकमुपैति व्रणञ्चाग्निक्षाराभ्यामिव दह्यते दुर्गन्धमुष्णमास्रावं स्रवति" "श्लेष्मजादचञ्चादिकं तु परिस्राविनृशब्दे दर्शितम् वायुजादच्चादि तत्रोक्तं यथा

"वायुः प्रकुपितः प्रकुपितौ पित्तश्लेष्माणौ परिगृह्याधो गत्वा पूर्ववदवस्थितः पादाङ्गुष्ठप्रमाणां सर्वलिङ्गां पिडकां जनयति तस्य तोददाहकण्ड्वादीन् वेदनाविशेषान् जनयत्यप्रतिक्रियमाणा च पाकमुपैति व्रणश्च नानाविधवर्णमास्रावं स्रवति पूर्णनदीशम्बूकावर्त्तवच्चात्र समुत्तिष्ठन्ति वेदनाविशेषाः"। मेहजास्तु भावप्र० उक्ता यथा "शराविका कच्छपिका जालिनी विनताऽलजी। मसूरिका सर्षपिका पुत्रिणी सविदारिका। विद्रधिश्चेति पिडकाः प्रमेहोपेक्षया दश। सन्धिमर्मसु जायन्ते मांसलेषु च धामसु। अन्तोन्नता च तद्रूपा निम्नमध्या शराविका१। सदाहा कूर्मसंस्थाना ज्ञेया कच्छपिका२ बुधैः। जालिनी३ तीव्रदाहा तु मांसजालसमावृता। अविगाढरुजाक्लेदा पृष्ठे वाप्युदरेऽपि वा। महती पिडका नीला सा बुधैर्विनता४ स्मृता। रक्ताऽसिता स्फोटचिता विज्ञेया त्वलजी५ बुधैः। मसूरदलसंस्थाना विज्ञेया तु मसूरिका६। गौरसर्षपसंस्थाना तत्प्रमाणा च सर्षपी७। महत्यल्पचिता ज्ञेया पिडकापि च पुत्रिणी८। विदारीकन्दवद्वृत्ता कठिना च विदारिका९। विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका तु सा। ये यन्मयाः स्मृता मेहास्तेषामेतास्तु तन्मयाः। विना प्रमेहमप्येता जायन्ते दुष्टमेदसः। तावच्चैता न लक्ष्यन्ते यावद्वास्तु परिग्रहः। गुदे हृदि शिरस्यंसे पृष्ठे मर्मसु चोत्थिताः१०। सोपद्रवा दुर्बलाग्नेः पिडकाः परिवर्जयेत्। तृट्श्वासमांससङ्कोथमोहहिक्कामदज्वराः। विसर्पमर्मसंरोधाः पिड़कानामुपद्रवाः"।

कुष्ठाधिकारे भावप्र० पिडकानां दृहत्त्वे स्फोटत्वम् क्षुद्रत्वे पिडकात्वमुक्त्वा तद्भेदा उक्ता यथा "यवाकारा सुकठिना ग्रथिता मांससंश्रिता। पिडका श्लेष्मवाताभ्यां यवप्रख्येति१ सोच्यते। घनामवक्त्रां पिडकामुन्नतां परिमण्डलाम्२। अन्त्रालजीमल्पपूयां तां विद्यात् कफवातजाम्। विवृतास्यां महादाहां पक्वोडुम्बरसन्निभाम्। परिमण्डलां पित्तकृतां विवृतां३ नाम तां विदुः। ग्रथिताः पञ्च वा षड्वा दारुणाः कच्छ-

पोपमाः। कफानिलाभ्यां पिडका ज्ञेयाः कच्छपिका४ बुधैः। ग्रीवांसकक्षाकरपाददेशे सन्धौ गले वा त्रिभिरेव दोषैः। ग्रन्थिः स वल्मीकवदक्रियाणां जातः क्रमेणैव गतप्रवृद्धिः। मुखैरनेकैः स्रुतितोदवद्भिर्विसर्पवत् सर्पति चोन्नताग्रैः। वल्मीकमाहुर्भिषजो विकारं निष्प्रत्यनीकं चिरजं विशेषात्। पद्मकर्णिकवन्मध्ये पिडकाभिः समाचिताम्। इन्द्रवृद्धान्तु६ तां विद्याद्वातपित्तोत्थितां भिषक्। मण्डलं वृत्तमुत्सन्नं सरक्तं पिडकाचितम्। रुजाकरीं गर्दभिकां७ तां विद्याद् वातपित्तजाम्। वातश्लेष्मसमुद्भूतः श्वयथुर्हनुसन्धिजः। स्थिरो मन्दरुजः स्निग्धो ज्ञेयः पाषाणगर्दभः८। कर्णस्याभ्यन्तरे जातां पिडकामुग्रवेदनाम्। स्थिरां पनसिकाः९न्तान्तु विद्यादन्तःप्रपाकिनीम्। विसर्पवत् सर्पति यः शोथस्तनुरपाकवान्। दाहज्वरकरः पित्तात् स ज्ञेयो जालगर्दभः१०। पिडकामुत्तमाङ्गस्थां वृत्तामत्युग्ररुग्ज्वराम्। सर्वात्मिकां सर्वलिङ्गां जानीयादिरिवेल्लिकाम्११। बाहुपार्श्वांसकक्षेषु कृष्णस्फोटां सवेदनाम्। पित्तप्रकोपसम्भूतां कक्षा१२मित्यभिनिर्दिशेत्। एकामेतादृशीं दृष्ट्वा पिडकां स्फोटसन्निभाम्। त्वग्गतां पित्तकोपेन गन्धनामां१३ प्रचक्षते। कक्षभागेषु ये स्फोटा जायन्ते मांसदारुणाः। अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः। सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवम्। तामग्निरोहिणीं१४ विद्यादसाध्यां सन्निपाततः। नखमांसमधिष्ठाय वातपित्तञ्च देहिनाम्। कुरुते दाहपाकौ च व्याधिन्तं चिप्प१५मादिशेत्। तदेवाल्पतरैर्दोषैः कुनखं परुषं१६ वदेत्। गम्भीरामल्पसंरम्भां सवर्णामुपरिस्थिताम्। पादस्यानुशयीं१७ तान्तु विद्यादन्तःप्रपाकिनीम्। विदारीकन्दवद्वृत्तां कक्षावङ्क्षणसन्धिषु। विदारी१८मिति तां विद्यात् सर्वजां सर्वलक्षणाम्"।

**पिण्ड** त्रि॰ पिडि—अच्। १संहते २घने च ततः गौरा॰ स्त्रियां ङीष्। तस्या अपत्यं कुर्वा॰ ण्य। पैण्ड्य संहतायाः स्त्रिया अपत्ये पुंस्त्री॰। ३बोले ४बले ५देहैकदेशे ६गृहैकदेशे ७देहमात्रे ८अन्नादिमये पितृभ्यो देये गोलाकारे ९पदार्थे १०गोले ११सिह्लके १२जवापुष्पे च पु॰ मेदि॰ १३वृन्दे (अर्वुदिपिण्डम्)१४कवले पु॰ हेमच॰ १५गजकुम्भे १६अमरः १७मदनवृक्षे पु॰ राजनि॰। १८आजीवने १९अयसि न॰ मेदि॰। तत्र श्राद्धीयद्रव्याद्यादिनिर्मिते पदार्थे सामगानां पुंस्त्वेन प्रयोगः "पिण्डानोदाहनाच्चैषाम्" छन्दोगपरिशिष्टे पुंस्त्वेन प्रयोगात्। यजुर्वेदिभिः "असावेतत्ते पिण्डं स्वधेति" यजुःश्राद्धप्रयोगात् क्लीवत्वम्। "तेभ्यःपिण्डं मया दत्तमक्षय्यमुपतिष्ठताम्" वायुपु॰ प्रयोगः यजुर्वेदिविषयः। तत्र देयद्रव्यादि श्रा॰त॰ निरूपितं यथा "यावदन्नमुपादाय हविषोऽर्भकमर्भकम्। चरुणा सह सङ्गीय पिण्डदानमुपक्रमेत्"। श्राद्धार्थीद्धविषोऽन्नादेः सकाशाद् यावत् भक्ष्यमोदनव्यञ्जनादि ततोऽल्पाल्पं गृहीत्वा अग्नौकरणचरुशेषेण सह मिश्रीकृत्य पिण्डदानमारभेदित्यर्थः। एकस्मिन् पात्रेऽन्नं मध्वादिद्रव्येण मिश्रयेत्। "मध्वाज्यतिलसंयुक्तं सर्वव्यञ्जनसंयुतम्। उष्णमादाय पिण्डन्तु कृत्वा बिल्वफलोपमम्। दद्यात् पितामहादिभ्यो दर्भमूले यथाक्रमम्" इति ब्रह्मपुराणवचनात्। अत्र पितामहपदं पितृपरं वचनान्तरैकवाक्यत्वात्। "स्वपित्रे प्रथमं पिण्डं दद्यादुच्छिष्टसन्निधौ। पितामहाय चैवाथ तत्पित्रे च ततःपरम्। दर्भमूले लेपभाजस्तर्पयेल्लेपघर्षणैः"।

अत्र पिण्डमात्रस्य बिल्वफलोपमत्वश्रुतेः छन्दोगपरिशिष्टे च पित्रादीन् मातामहादीनुपक्रम्य "अवनेजनवत् पिण्डान् कृत्वा बिल्वप्रमाणकानिति" श्रुतेश्च सामगयजुर्वेदिनोर्बिल्वप्रमाणकत्वम् "पृथङ्मातामहानाञ्च केचिदिच्छन्ति सत्तमाः। त्रीन् पिण्डानानुपूर्व्येण साङ्गुष्ठान् पुष्टिवर्द्धनात्" इति वायुपुराणीयं शाखान्तरीयं श्रा॰त॰। वायवीये "मधुसर्पिस्तिलयुतांस्त्रीन् पिण्डान्निर्वपेद्बुधः। नित्यशो सेतौ "तिलमन्नं च पानीयं धूपं दीपं पयस्तथा। मधु सर्पिः खण्डयुक्तं पिण्डमष्टाङ्गमुच्यते"। याज्ञवल्क्यः "सर्वमन्नमुपादाय सतिलं दक्षिणामुखः। उच्छिष्टसन्निधौ पिण्डान् दद्याद्वै पितृयज्ञवत्"। केचित्तु पिण्डेषु माषान् वर्जयन्ति "माषाः श्राद्धेषु वै ग्राह्या वर्ज्यांश्चैवाग्निपिण्डयोः। ब्राह्मणेषु यथा मद्यं तथा माषोऽग्निपिण्डयोः" इति। स्मृतिसारात् "माषान् सर्वत्र वै दद्यात् पिण्डेऽग्नौ च विवर्जयेत्" इति स्मृतेश्च। अथ पिण्डप्रमाणभेदः हेमाद्रावङ्गिराः "कपित्थबिल्वमात्रान् वा पिण्डान् दद्याद् विधानतः। कुक्कुटाण्डप्रमाणान् वामलकैर्बदरैः पुमान्" इति। तत्रैव धूम्रः "कपित्थस्य प्रमाणेन पिण्डान् दद्यात् समाहितः। तत्सम विकिरं दद्यात् पिण्डान्ते तु षडङ्गुलैः"। अन्योऽपि पद्धतौ मन्त्रास्तु "एकोद्दिष्टे सपिण्डे तु कपित्थन्तु विधीयते। नारिकेलप्रमाणन्तु प्रत्यब्दे मासिके तथा। तीर्थे दर्शे

च संप्राप्ते कुक्कुटाण्डप्रमाणतः। महालये गयाश्राद्धे कुर्य्यादामलकोपमम्” इत्याह। कलिकायामाचार्य्यः “यत्र स्युर्बहवः पिण्डास्तत्र बिल्वफलोपमाः। यत्र चैको भवेत् पिण्डस्तत्र नारिकेलसन्निभः”। प्रेतपिण्डस्तु दैर्घ्येण द्वादशाङ्गुल उच्यते” इति। वायवीये “पत्नी पिण्डांस्तु मद्गीवात् त्रिवर्गस्य सहायिनी”। हेमाद्रौ कौर्मायि: “महालये गयायां च प्रेतश्राद्धे दशाह्निके। पिण्डशब्दप्रयोगः स्यादन्नमन्यत्र कीर्त्तयेत्” नि०सि०

पिण्डदानद्रव्यभेदाः आग्नेये उक्ता यथा “पायसेनाज्ययुक्तेन सक्तुना चरुणा तथा। पिण्डदानं तण्डुलैश्च गोधूमैस्तिलमिश्रितैः” इति। देवीपुराणे च “सक्तुभिः पिण्डदानञ्च संयावैः पायसेन च। कर्त्तव्यमृषिभिः प्रोक्तं पिण्याकेन गुडेन वा” अथ प्रेतपिण्डसंख्या यद्यपि हेमाद्रौ पारस्करेण

“ब्राह्मणे दश पिण्डास्तु क्षत्रिये द्वादश स्मृताः। वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत् प्रकीर्त्तिता” इत्युक्तं तथापि “प्रेतेभ्यः सर्ववर्णेभ्यः पिण्डान् दद्याद्दशैव तु” इति। तेनैवोक्तेः सर्वेषां दशैव ज्ञेयाः। मदनरत्नेऽप्येवम् तथा च हेमाद्रौ ब्राह्मपाद्मयोः “जात्युक्ताशौचतुल्यांस्तु वर्णानां कथितेव हि। देशधर्मान् पुरस्कृत्य प्रेतपिण्डान् वपन्त्यपि” इत्युक्त्वा विप्रादेषु दशमपिण्डोत्कर्षः उक्तः “देवस्तु दशमः पिण्डो राज्ञां वै द्वादशेऽहनि। वैश्यानां वै पञ्चदशे देयस्तु दशमस्तथा। शूद्रस्य दशमः पिण्डो मासे पूर्णेऽह्नि दीयते”। प्रेतपिण्डदानस्थानम् “असंस्कृतानां भूमौ पिण्डं दद्यात् संस्कृतानां कुशेषु” इति प्राचेतसोक्तम् मिताक्षरायां “कृत्वान्तरे भूमौ भाल्यं पिण्डं पानीयसम्पवे वा दद्युः” पिण्डं प्रेतपिण्डम्।

पुनःपुष्कः “फलमूलैश्च पयसा शाकेन च गुडेन च। तिलमिश्रन्तु दर्भेषु पिण्डं दक्षिणतो हरेत्। तूष्णीं प्रसेकं पुष्पं च धूपं दीपं तथैव च। शालिनाक्तुभिर्वापि शाकैर्वाप्यथ निर्वपेत्। प्रथमे नियतं द्रव्यं तदेव स्याद्दशाह्निकम्”। पिण्डशब्दस्य देहतदेकदेशपरता तु असपिण्डशब्दे उक्ता। दायभागमते तु निर्वाप्यपिण्डपरतेति। भावे अच्। २०संघाते पिण्डारकशब्दे दृश्यम्

**पिण्डक** पु० पिण्ड इव कायति कै—क। १पिण्डालौ स्वार्थे क। २सिह्लकगन्धद्रव्ये ३बोले ४पिण्डमूले मूलभेदे राजनि०।

**पिण्डकन्द** पु० पिण्डाकारः कन्दः। पिण्डालौ राजनि०।

**पिण्डखर्ज्जूर** पु० पिण्डाख्यः खर्ज्जूरः। स्वनामख्याते दृक्षे (कोहारा) प्रसिद्धे २खर्ज्जूरे स्त्री ङीष्। अथ पिण्डखर्ज्जूरीभेदः “सुनेपाली तु मृदुला बलिहीनकफला च या। सुनेपाली श्रमध्वान्तिदाहमूर्च्छास्रपित्तनुत्” भावप्र०। “पिण्डखर्ज्जूरिका लन्या या देशे पश्चिमे भवेत्। खर्ज्जूरी गोस्तनाकारा परादुद्वीपादिहागता। जायते पश्चिमे देशे सा च्छोहारेति कीर्त्यते। खर्ज्जूरीत्रितयं शीतं मधुरं रसपाकयोः। स्निग्धं रुचिकरं हृद्यं क्षतक्षयहरं गुरु। तर्पणं रक्तपित्तघ्नं पुष्टिविष्टम्भि शुक्रदम्। कोष्ठमारुतहृद्बल्यं वान्तिवातकफापहम्। ज्वराभिघातक्षुत्तृष्णाकासश्वासनिवारकम्। मदमूर्च्छामरुत्पित्तमद्योद्भूतमदान्तकृत्। महतीभ्यां गुणैरल्पं स्वल्पखर्ज्जूरिका स्मृता। खर्ज्जूरी तरुतोयन्तु मदपित्तकरं भवेत्। वातश्लेष्महरं रुच्यं दीपनं बलशुक्रकृत्”।

**पिण्डगोस** पु० गां जलं सनोति सन—ड पिण्डः संहतो गोसः। गन्धरसे रसानायः।

**पिण्डतर्कुक** पु० पिण्डं तर्कयति तर्क—बा० उक। पिण्डलेपभागिषु वृद्धप्रपितामहादिषु त्रिषु “प्रपितामहाः दक्षिणतः पृष्ठतः पिण्डतर्कुकाः” स्मृत्यर्थसा०।

**पिण्डतैलक** पु० पिण्डं संहतं तैलं यस्य कप्। तुरुष्के गन्धद्रव्ये राजनि०।

**पिण्डद** पु० पिण्डं ददाति दा—क। श्राद्धे पिण्डदातरि पुत्रादौ “पिण्डदोंऽशहरश्चैव पूर्वाभावे परः परः” याज्ञ०। दत्तपिण्डदात् तत्रार्थे “उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः” मनुः।

**पिण्डपद्** न० पिण्डस्य संहतस्य पदम्। १अङ्कभेदे ज्यो०ति० स्तहशब्दे दृश्यम्। २पिण्डस्थाने च।

**पिण्डपाद्** पुंस्त्री० पिण्ड इव पादोऽस्य। गजे त्रिका०। स्त्रियां जातित्वात् ङीष्।

**पिण्डपितृयज्ञ** पु०पिण्डैः पितॄणां यज्ञः। साग्निककर्त्तृकस्य कर्त्तव्ये पितृउद्देश्यके पिण्डदानात्मके यज्ञभेदे आश्व०श्रौ० २।६ सूत्रादौ कात्या०श्रौ०४।१।१सूत्रादौ च दृश्यम्। तत्कालश्च “अपराह्णे पिण्डपितृयज्ञश्चन्द्रादर्शनेऽमावास्यायाम्” तत्रत्य प्रथमसूत्रम्।

**पिण्डपुष्प** न० पिण्डं संहतं पुष्पम्। १अशोकपुष्पे २जवापुष्पे ३पद्मपुष्पे ४तगरपुष्पे च मेदि० शब्दच०।

**पिण्डपुष्पक** पु० पिण्डेन संहतेन पुष्पेण कायति कै—क। वास्तूकशाके शब्दमाला।

**पिण्डफला** स्त्री पिण्डमिव फलं यस्याः । कटुतुम्ब्याम् जटा०

**पिण्डमुस्ता** स्त्री पिण्डा संहता मुस्ता । नागरमुस्तायाम् राजनि० ।

**पिण्डमूल** न० पिण्डमिव मूलमस्य । गर्जरे (गाजर) राजनि०

**पिण्डयज्ञ** पु० पिण्डेन यज्ञः । पिण्डदानरूपे यज्ञरूपे श्राद्धे याज्ञ० १।१६ पिण्डपितृयज्ञे च ।

**पिण्डल** पिडि–बा० कलच् । सेतौ हारा० ।

**पिण्डलेप** पु० पिण्डस्य लेपः करसंलग्नांशभेदः । करसंलग्ने पिण्डांशभेदे तद्भागिनश्च वृद्धप्रपितामहादयः त्रयः यथाह "लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः" मनुवाक्यम् "लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्" कुल्लू० धृत मात्स्यवचनम् ।

**पिण्डस** पु० पिण्डं सनति यच्छे सन–बमक्तौ बा भक्तदाने बा० ड । परपिण्डोपजीविनि भिक्षोपजीविनि शब्दर०

**पिण्डसम्बन्ध** पु० पिण्डेन देहेन देयपिण्डेन वा सम्बन्धः । देहेन सह जन्यजनकतारूपे १सम्बन्धे पिता० देयपिण्डस्य २दातृत्वभोक्तृत्वान्यतरसम्बन्धे च दायभागादयः ।

**पिण्डसेक्तृ** पु० सर्पभेदे भा० आ० ५७अ० ।

**पिण्डा** स्त्री पिडि–अच् । १पिण्डायसे २कस्तूरीभेदे च राजनि० । ३वंशपत्र्यां भावप्र० ।

**पिण्डात** पु० पिण्ड इवातति अत–सातत्ये अच् । पिण्डं संहननं वा अतति+अत–गतौ अच् । सिह्लके पु० ।

**पिण्डान्वाहार्य्यक** न० पिण्डानां पिण्डपितृयज्ञानां पश्चादाह्रियते अनु+आ+हृ–ण्यत् स्वार्थे क । पार्वणश्राद्धे "पिण्डान्वाहार्य्यकं श्राद्धं कुर्यान्मासानुमासिकम्" मनुः ।

**पिण्डाभ** पु० पिण्डः संघात इवाभाति आ+भा क । सिह्लके रत्नमालायां पाठान्तरम् ।

**पिण्डाभ्र** न० अभ्रस्येदम् अण् आभ्रं पिण्डमिव घनमाभ्रम् । मेघजातकरकायाम् शब्दच० । [राजनि०]

**पिण्डायस** न० पिण्डं संहतमयः अच् समा० । तीक्ष्णायसे

**पिण्डार** पु० पिण्डं संघातमृच्छति ऋ–अण् । १विकङ्कतवृक्षे राजनि० २क्षपणके ३गोपे ४महिषीरक्षके ५द्रुमभेदे मेदि० ६शाकभेदे न० "पिण्डारं शीतलं बल्यं पित्तनाशि रुचिप्रदम् । पाके लघु विशेषेण विषशान्तिकरं मतम्" भावप्र० । ७सर्पभेदे पु० भा० उ० १०३अ० स्वार्थे क पिण्डारक तत्रार्थे ८नागभेदे भा० आ० ३५अ० । ९वसुदेवभ्रातृजभेदे पु० हरिवं० ३६अ० १०तीर्थभेदे न० "पिण्डारके नरः स्नात्वा लभेद्बहु सुवर्णकम्" भा० व० ८२अ० ।

**पिण्डालु** पु० पिण्डाकार आलुः । (गोलआलु) राजनि० । १कन्दभेदे २कन्दगुडूच्याञ्च स्वार्थे क अत्रैव । "पिण्डालुर्मधुरः शीतः मूत्रकृच्छ्रविनाशनः । दाहशोषप्रमेहघ्नो हृद्यः सन्तर्पणो गुरुः" राजनि० संज्ञायां कन् । (चुपडिआलु) आलुभेदे न० "पिण्डालुकं कफहरं गुरु वातप्रकोपकृत्" राजवल्लभः ।

**पिण्डाह्वा** स्त्री पिण्डां कस्तूरीभेदमाह्वयते स्पर्द्धते गन्धेन आ+ह्वे–क । नाडीहिङ्गुनि राजनि० ।

**पिण्डि(ण्डी)** स्त्री पिडि–इन् वा ङीप् स्वार्थे क वा । सर्वकाष्ठाश्रयाधारे रथचक्रमध्ये स्थाने १रथनाभौ अमरः । २पीठे जानुनोऽधःस्थे ३मांसलप्रदेशे च हेमच० ४श्वेताम्लौ राजनि० ५देवादेः पीठिकाभेदे तल्लक्षणादि मत्स्यपु० २६२अ० उक्तं यथा

"पिण्डिकालक्षणं वक्ष्ये यथावदनुपूर्वशः । पीठोच्छ्रायं यथावच्च भागान् षोडश कारयेत् । भूमावेकः प्रविष्टः स्याच्चतुर्भिर्जगती मता । वृत्तो भागस्तथैकः स्यात् वृत्तपट्टस्य भागतः । भागैस्त्रिभिस्तथा कण्ठः कण्ठपट्टस्त्रिभागतः । भागाभ्यामूर्द्ध्वपट्टश्च शेषभागेन पट्टिका । प्रविष्टं भागमेकैकं जगती यावदेव तु । निर्गमस्तु पुनस्तस्य यावद्वै शेषपट्टिका । वारिनिर्गमनार्थन्तु तत्र कार्यां प्रणालिका । पीठिकानान्तु सर्वासामेतत् सामान्यलक्षणम् । विशेषान् देवताभेदात् शृणुध्वं द्विजसत्तमाः ॥ स्थण्डिला वापवापी वा यक्षी देवी च मण्डला । पूर्णचन्द्रा च वज्रा च पद्मा वार्धशशी तथा । त्रिकोणा दशमी तासां संस्थानं वा निबोधत । स्थण्डिला१ चतुरस्रा तु वर्जिता मेखलादिभिः । वापी२ द्विमेखला ज्ञेया यक्षी३ चैव त्रिमेखला । चतुरस्रायता वेदी४ न तां लिङ्गेषु योजयेत् । मण्डला५ वर्तुला या तु मेखलाभिर्गणप्रिया । रक्ता द्विमेखला मध्ये पूर्णचन्द्रा६ तु सा भवेत् । मेखलात्रयसंयुक्ता षडस्रा वज्रिका७ भवेत् । षोडशास्रा भवेत्पद्मा८ किञ्चिद्ध्रस्वा तु मूलतः । तथैव धनुराकारा सार्द्धचन्द्रा९ प्रशस्यते । त्रिशूलसदृशी१० तद्वत् प्रशस्तलक्षणान्विता । परिवेषं त्रिभागेन निर्गमं तत्र कारयेत् । विस्तारं तत्प्रमाणञ्च मूले चाग्रे ततोऽर्द्धतः । जलमार्गश्च कर्त्तव्यस्त्रिभागेण सुशोभनः । लिङ्गस्यार्द्धं त्रिभागेण स्थौल्येन समधिष्ठिता । मेखला तत्त्रिभागेण खातस्यैव प्रमाणतः । अथ वा

पादहीनन्तु शोभनं कारयेत्सदा । उत्तरस्य प्रमाणन्तु प्रमाणादधिकारयेत् । स्थण्डिलायामथारोग्यं धनं धान्यञ्च पुष्कलम् । गोप्रदा च भवेद्वापी वेदी सम्पत्प्रदा भवेत् । मण्डलायां भवेत्कीर्त्तिर्वरदा पूर्णचन्द्रिका । आयुःप्रदा भवेद्वज्री पद्मा सौभाग्यदा भवेत् । पुत्रप्रदार्द्धचन्द्रा स्यात्त्रिकोणा शत्रुनाशिनी । देवस्य यजनार्थन्तु पीठिका दश कीर्त्तिताः । शैले शैलमयीं दद्यात् पार्थिवे पार्थिवीं तथा । दारुजे दारुजां कुर्य्यात् मिश्रे मिश्रां तथैव च । नान्ययोनिस्तु कर्त्तव्या प्रदा शुभफलेप्सुभिः । अङ्गुलीयामसमन्दैर्घ्यं लिङ्गायामसमन्तथा । यस्य देवस्य या पत्नी तां पीठे परिकल्पयेत् । एतत्सर्वं समाख्यातं समासात् पीठलक्षणम्" ।

**पिण्डित** त्रि॰ पिडि—क्त । १संहते २गणिते मेदि॰ ३गुणिते ४तुरस्के पु॰ राजनि॰ । [२गन्धके त्रि॰ उणादि॰ ।

**पिण्डिल** पु॰पिण्ड+अस्त्यर्थे—इलच् । सेतौ शब्दच॰ ।

**पिण्डी** स्त्री पिडि—इन् ङीप् । १पिण्डीतगरे २अलाबुलतायां ३खर्जूरभेदे (क्षोहारा) मेदि॰ ४तक्षद्वारनाभ्योपदेशे धरणिः ।

**पिण्डीजङ्घ** पु॰ ऋषिभेदे । तस्य गोत्रापत्यम् इञ् । पैण्डीजङ्घि तदपत्ये बहुत्वे तु अस्त्रियां यस्का॰ तस्य लुक् ।

**पिण्डीतक** पु॰ पिण्डीं रूक्षपिण्डं फलपुष्पहारा तकति अनुकरोति तक—हासे अच् । १मदनवृक्षे २तगरे च अमरः ३फणिज्झके विश्व ।

**पिण्डीतगर** पु॰ पिण्डया स्वल्पपिण्डेनोपलक्षितस्तगरः । तगरवृक्षे त्रिका॰ । [अशोकवृक्षे राजनि॰ ।

**पिण्डीपुष्प** पु॰पिण्ड्या उपलक्षितं पुष्पमस्य । संहतस्तवकपुष्पे

**पिण्डीर** पु॰ पिण्डं पिण्डाकारं फलमीरयति ईर—अण् । १दाडिमवृक्षे त्रिका॰२नीरसे हारा॰।३हिण्डीरे रायमु॰

**पिण्डीशूर** पु॰ पिण्ड्यां भोजने एव नान्यत्र शूरः । गेहेनर्द्दिनि युद्धादावसमर्थे हेमच॰ । भट्टिः ५।८७ उदा॰

**पिण्या** स्त्री पण्यते स्तूयते रोगहन्तृत्वेन यत् पृषो॰इत्वम् ज्योतिष्मतीलतायाम् अमरः ।

**पिण्याक** पु॰न॰ पण—व्यवहारे आकन् नि॰ । १तिलकल्के २हिङ्गुनि ३वाह्लीके च । ४सिह्लके पुंस्त्री॰ मेदि॰ । स्त्रीत्वे ङीप् तस्य व्रतार्थभक्षणे न दोषः मनुः ११।९२ अन्यत्र दोषो यथा "पिण्याकं भक्षयित्वा तु यो वै आसपवर्पति । तस्य वै स्त्रचु कुर्वन्ति । प्रायश्चित्तं कुर्वीतन्तु । उक्तो दश वर्षाणि कष्टमुक्त समातवम् ।

जायते मानवस्तत्र मम कर्मपरायणः" वराहपु॰ ।

**पितरिशूर** पु॰ पात्रे समिता॰ अलुक्स॰ । पितृविषये एव शूरे नान्यत्रेति । क्षेपेऽस्य प्रयोगः ।

**पितापुत्र** पु॰द्वि॰व॰ द्वन्द्वे पूर्वपदे आनङ् । पितरि पुत्रे च

**पितामह** पु॰ पितुः पिता पितृ+डामहच् । पितुः पितरि पितृपित्रादयोऽप्यत्र । तत्पत्न्यां स्त्री॰ ङीप् अमरः ।

**पितु** पु॰ पा—रक्षणे तुन् पृषो॰ । अन्ने निघण्टुः । पातेर्वा पिबतेः प्यायतेर्वा" निरु॰९।२४। ऋ॰ १०।७६।५ उदा॰।

**पितुःपुत्र** पु॰ ६त॰ अलुक्स॰। विख्यातात् (बापेर मत बेटा) पितृतुल्ये पुत्रे क्षेपे तु वा अलुक्स॰।

**पितुःस(ष्व)सृ** स्त्री ६त॰अलुकस॰ वा षत्वम् । पितृभगिन्यां तस्या अपत्यं ढक् । पितुःस्व(ष्व)सीय तदपत्ये पुंस्त्री॰।

**पितृ** पु॰ पाति रक्षति पा—तृच् नि॰ । १जनके । माता च जनकश्च पितरौ पितृशेषः द्वि॰व॰। मातापित्रोः अमरः । पञ्च॰ पितृशब्दे ४१८८पृ॰दृश्यम् । पितरः श्राद्धदेवता इत्युक्तेः श्राद्धोद्देश्ये २प्राप्तपितृलोकके । पितृलोकः पितृयाणम्

**पितृक** त्रि॰ पैतृक+पृषो॰ । १पितुरागते शब्दमा॰। पितृदत्त एव ठञ् वा इत्यलोपः । २पितृदत्ते च ।

**पितृकर्मन्** न॰ पितृनुद्दिश्य कर्म । श्राद्धादौ मनुः ३।२५२ स्त्री॰, पितृकार्य्यादयोऽप्यत्र ।

**पितृकल्प** पु॰ पितृनुद्दिश्य कल्पो विधानम् । पितृश्राद्धादिकर्मणि । हरिवं॰ १७अ॰ उक्ते पितृश्राद्धत्वादिज्ञापके २मन्त्रभेदे च हरिवं॰२१अ॰ । दैवधूने कल्पएव । २पितृकल्पे च

**पितृकानन** न॰ ६त॰ । श्मशाने जटा॰ ।

**पितृकुल्या** स्त्री पितृकृता कुल्या । तीर्थभेदे भा॰व॰५७अ॰।

**पितृगण** पु॰ ६त॰। अग्निष्वात्तादिषु "मनोर्हैरण्यगर्भस्य ये मरीच्यादयः सुताः । तेषामृषीणां सर्वेषां पुत्राः पितृगणाः स्मृताः । विराट्सुताः सोमसदः साध्यानां पितरः स्मृताः । अग्निष्वात्ताश्च देवानां मारीच्या लोकविश्रुताः । दैत्यदानवयक्षाणां गन्धर्वोरगरक्षसाम् । सुपर्णानां नराणाञ्च स्मृता बर्हिषदोऽत्रिजाः । सोमपा नाम विप्राणां क्षत्रियाणां हविर्भुजः । वैश्यानामाज्यपा नाम शूद्राणान्तु सुकालिनः । सोमपास्तु कवेः पुत्रा हविष्मन्तोऽङ्गिरःसुताः । पुलस्त्यस्याज्यपाः पुत्रा वशिष्ठस्य सुकालिनः । अग्निदग्धानग्निदग्धान् काव्यान् बर्हिषदस्तथा । अग्निष्वात्तांश्च सौम्यांश्च विप्राणामेव निर्द्दिशेत् । य एते तु गणा मुख्याः पितृणां परिकी-

र्त्तिताः। तेषामपीह विज्ञेयं पुत्रपौत्रमनन्तकम्” । एते च दिव्यपितरः।

**पितृगाथा** स्त्री पितृभिः पठिता गाथा। पितृभिः पठिते श्लोकसमुदाये मार्क॰पु॰ २२अ॰ यथा “पितृगाथास्तथैवात्र गीयन्ते ब्रह्मवादिभिः। या गीताः पितृभिः पूर्वमैलस्यासीन्महीपतेः। कदा नः सन्ततावग्र्यः कस्यचिद्भविता सुतः। यो योगिभुक्तशेषान्नो भुवि पिण्डं प्रदास्यति। गयायामथ वा पिण्डं खड्गमांसं महाहविः। कालशाकं तिलाढ्यं वा कृसरं मासतृप्तये। वैश्वदेवञ्च सौम्यञ्च खड्गमांसं परं हविः। विषाणवर्जं खड्गत्वा आसूर्यञ्चाश्नुवामहे। दद्यात् श्राद्धं त्रयोदश्यां मघासु च यथाविधि। मधुसर्पिःसमायुक्तं पायसं दक्षिणायने”। अन्या अपि पितृगाथा शास्त्रान्तरे दृश्याः।

**पितृगृह** न॰ ६त॰। श्मशाने हेमच॰।

**पितृग्रह** पु॰ स्कन्दानुचरे ग्रहभेदे ग्रहशब्दे २७४५पृ॰ सुश्रुतवाक्ये १७७६ भारतवाक्ये च दृश्यम्।

**पितृतर्पण** न॰ ६त॰। १पितॄणां जलदानरूपे तृप्तिजननव्यापारभेदे। करणे ल्युट्। २पितृतीर्थे शब्दच॰ ३तिले राजनि॰।

**पितृतिथि** पुंस्त्री॰ पितृप्रिया तिथिः। अमावास्यायाम्।

**पितृतीर्थ** न॰पितृप्रियं तीर्थम् शा॰त॰। “अन्तराङ्गुष्ठदेशिन्योः पितॄणां तीर्थमुत्तमम्” कूर्मपु॰ उक्ते १तर्जन्यङ्गुष्ठमध्यस्थाने अमरः। २गयादौ तीर्थे च यथोक्तं मत्स्यपु॰२२अ॰ “पितृतीर्थं गया१ नाम सर्वतीर्थवरं शुभम्। यत्रास्ते देवदेवेशः स्वयमेव पितामहः। तत्रैषा पितृभिर्गीता गाथा भागमभीप्सुभिः। एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्। यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्। तथा वाराणसी२ पुण्या पितॄणां वल्लभा सदा। यत्राविमुक्तसान्निध्यं भुक्तिमुक्तिफलप्रदम्। पितॄणां वल्लभं तद्वत् पुण्यञ्च विमलेश्वरम्३। पितृतीर्थं प्रयाग४न्तु सर्वकामफलप्रदम्। वटेश्वर४स्तु भगवान् माधवेन समन्वितः। योगनिद्राशयस्तद्वत् सदा वसति केशवः। दशाश्वमेधिकं६पुण्यं गङ्गाद्वारं७ तथैव च। नन्दाप्यथ ललिता९ तद्वत्तीर्थं मायापुरी१० शुभा। तथा मित्रपदं११ नाम ततः केदार१२मुत्तमम्। गङ्गासागर१३मित्याहुः सर्वतीर्थमयं शुभम्। तीर्थं ब्रह्मसर१४स्तद्वच्छतद्रुसलिले ह्रदे। तीर्थन्तु नैमिषं१५ नाम सर्वतीर्थफलप्रदम्। गङ्गोद्भेदा१६स्तु गोमत्यां यत्रोद्भूतः सनातनः। तथा यज्ञवराह१७स्तु देवदेवश्च शूलभृत्। यत्र तत्काञ्चनं द्वारमष्टादशभुजो हरः। नेमिस्तु हरिचक्रस्य शीर्णा यत्राभवत् पुरा। तदेतन्नैमिषारण्यं १८ सर्वतीर्थनिषेवितम्। देवदेवस्य तत्रापि वाराहस्य तु दर्शनम्। यः प्रयाति स पूतात्मा नारायणपदं व्रजेत्। कृतशौचं महा पुण्यं सर्वपापनिषूदनम्। यत्रास्ते नारसिंहस्तु स्वयमेव जनार्दनः। तीर्थमिक्षुमती१९ नाम पितॄणां वल्लभं सदा। सङ्गमे यत्र तिष्ठन्ति गङ्गायाः पितरः सदा। कुरुक्षेत्रं२० महापुण्यं सर्वतीर्थसमन्वितम्। तथा च सरयूः २१ पुण्या सर्वदेवनमस्कृता। इरावती२२ नदी तद्वत् पितृतीर्थाधिवासिनी। यमुना२३ देविका२४ काली२५ चन्द्रभागा२६दृषद्वती२७। नदी वेणुमती२८ पुण्या परा वेत्रवती२९ तथा। पितॄणां वल्लभा ह्येताः श्राद्धे कोटीगुणा मताः। जम्बूमार्गं३० महापुण्यं यत्र मार्गो हि लक्ष्यते। अद्यापि पितृतीर्थं तत्सर्वकामफलप्रदम्। नीलकुण्डमिति३१ ख्यातं पितृतीर्थं द्विजोत्तमाः!। तथा रुद्रसरः३२ पुण्यं सरोमानस३३मेव च। मन्दाकिनी३४ तथाऽच्छोदा३५ विपाशा३६थ सरस्वती३७। पूर्वमित्रपदं३८ तद्वद्वैद्यनाथं३९ महाफलम्। शिप्रा४० नदी महाकाल४१स्तथा कालञ्जरं४२ शुभम्। वंशोद्भेदं४३ हरोद्भेदं४४ गङ्गोद्भेदं४५ महाफलम्। भद्रेश्वरं४६ विष्णुपदं४७ नर्मदाद्वार४८मेव च। गयापिण्डप्रदानेन समान्याहुर्महर्षयः। एतानि पितृतीर्थानि सर्वपापहराणि च। स्मरणादपि लोकानां किमु श्राद्धकृतां नृणाम्। ओङ्कारं४९ पितृतीर्थञ्च कावेरी५० कपिलोदकम्५१। सम्भेद५२श्चण्डवेगायास्तथैवामरकण्टकम्५३। कुरुक्षेत्राच्छतगुणं तस्मिन् स्नानादिकं भवेत्। शुक्रतीर्थ५४ञ्च विख्यातं तीर्थं सोमेश्वरं५५ परम्। सर्वव्याधिहरं पुण्यं शतकोटिफलाधिकम्। श्राद्धे दाने तथा होमे स्वाध्याये जलसन्निधौ। कायावरोहणं५६ नाम तथा चर्मण्वती५७ नदी। गोमती५८ वरुणा५९ तद्वत्तीर्थमौशनसं६०परम्। भैरवं६१ भृगुतुङ्गं६२ च गौरीतीर्थं६३मनुत्तमम्। तीर्थं वैनायकं६४ नाम भद्रेश्वरं६५मतःपरम्। तथा पापहरं६६ नाम पुण्याथ तपती६७ नदी। मूलतापी६८पयोष्णी६९ च पयोष्णीसङ्गम७०स्तथा। महाबोधिः७१ पाटला७२ च नागतीर्थ७३मवन्तिका७४।

तथा वेणा७५ नदी पुण्या महाशालं ७६तथैव च। महारुद्रं७७ महालिङ्गं दशार्णा७८ च नदी शुभा। शतरुद्रा७९ शताह्वा८० च तथा विश्वपदं८१ परम्। अङ्गारवाहिका८२ तद्वन्नदी च शोण८३ घर्घरौ८४। कालिका८५ च नदी पुण्या वितस्ता८६ तो नदी तथा। एतानि पितृतीर्थानि शस्यन्ते स्नानदानयोः। श्राद्धमेतेषु यद्दत्तन्तदनन्तफलं स्मृतम्। द्रोणी८७ वाटनदी८८ धारा८९सरित् क्षीरनदी९० तथा। गोकर्णं९१ गजकर्णं९२श्च तथा च पुरुषोत्तमः९३। द्वारका९४ कृष्णतीर्थं९५ तथार्बुदसरस्वती९६। नदी मणिमती९७ नाम तथा च गिरिकर्णिका९८। धूतपापं९९ तथा तीर्थं समुद्रो१०० दक्षिणस्तथा। एतेषु पितृतीर्थेषु श्राद्धमानन्त्यमश्नुते। तीर्थं मेघकरं१०१ नाम स्वयमेव जनार्द्दनः। यत्र शार्ङ्गधरो विष्णुर्मेखलायामवस्थितः। तथा मन्दोदरीतीर्थं१०२ तीर्थं चम्पा१०३नदी शुभा। तथा सामलनाथ१०४श्च महाशालनदी१०५ तथा। चक्रवाकं१०६ चर्मकोट१०७ तथा जन्मेश्वरं१०८ महत्। अर्जुनं१०९ त्रिपुरं११० चैव सिद्धेश्वर१११मतः परम्। श्रीशैलं११२ शाङ्करं११३ तीर्थं नारसिंह११४मतः परम्। महेन्द्र११५ञ्च तथा पुण्यमथ श्रीरङ्गसंज्ञितम्११६। एतेष्वपि सदा श्राद्धमनन्तफलदं स्मृतम्। दर्शनादपि चैतानि सद्यः पापहराणि वै। तुङ्गभद्रा११७ नदी पुण्या तथा भीमरथी११८ सरित्। भीमेश्वरं११९ कृष्णवेणा१२० कावेरी१२१ कुड्मला१२२ नदी। नदी गोदावरी१२३ नाम त्रिसन्ध्यातीर्थ१२४मुत्तमम्। तीर्थं त्रैयम्बकं१२५ नाम सर्वतीर्थनमस्कृतम्। यत्रास्ते भगवानीशः स्वयमेव त्रिलोचनः। श्राद्धमेतेषु सर्वेषु कोटिकोटिगुणं भवेत्। स्मरणादपि पापानि नश्यन्ति शतधा द्विजाः!। श्रीपर्णी१२६ ताम्रपर्णी१२७ च जयातीर्थ१२८मनुत्तमम्। तथा मत्स्यनदी१२९ पुण्या शिवधारं१३० तथैव च। भद्रतीर्थ१३१ञ्च विख्यातं पम्पातीर्थ१३२ञ्च शाश्वतम्। पुण्यं रामेश्वरं१३३ तद्वदेलापुर१३४मलम्पुर१३५म्। अङ्गभूत१३६ञ्च विख्यातमामर्द्दकमलं पुरम्१३७। आम्रातकेश्वरं१३८ तद्वदेकाम्रक१३९मतःपरम्। गोवर्द्धनं१४० हरिश्चन्द्रं१४१ कपुचन्द्रं१४२ पृथूदकम्१४३। सहस्राक्षं१४४ हिरण्याक्षं१४५ तथा च कदली१४६ नदी। रामाधिवास१४७स्तत्रापि तथा सौमित्रिसङ्गमः१४८। इन्द्रकीलं१४९महानाद१५०स्तथा च प्रियमेलकम्१५१। एतान्यपि सदा श्राद्धे प्रशस्तान्यधिकानि तु। एतेषु सर्वदेवानां सान्निध्यं दृश्यते यतः। दानमेतेषु सर्वेषु दत्तं कोटिशताधिकम्। बाहुदा१५२ च नदी पुण्या तथा सिद्धवनं१५३ शुभम्। तीर्थं पाशुपतं१५४ नाम नदी पार्वतिका१५५ शुभा। श्राद्धमेतेषु सर्वेषु दत्तं कोटिशतोत्तरम्। तथैव पितृतीर्थन्तु यत्र गोदावरी नदी। युता लिङ्गसहस्रेण सर्वान्तरजलावहा१५६। जामदग्न्यस्य तत्तीर्थं१५७क्रमादायातमुत्तमम्। प्रतीकस्य भयाद्भिन्ना यत्र गोदावरी नदी। तत्तीर्थं हव्यकव्यानामप्सरोयुगसंज्ञितम्१५८। श्राद्धाग्निकार्यदानेषु तथा कोटिशताधिकम्। तथा सहस्रलिङ्गं१५९श्च राघवेश्वर१६०मुत्तमम्। सेन्द्रफेना१६१ नदी पुण्या यत्रेन्द्रः पतितः पुरा। निहत्य नमुचिं शक्रस्तपसा स्वर्गमाप्नवान्। तत्र दत्तं नरैः श्राद्धमनन्तफलदं भवेत्। तीर्थन्तु पुष्करं१६२ नाम शालग्रामं१६३ तथैव च। सोमपानं१६४ञ्च विख्यातं यत्र वैश्वानरालयः। तीर्थं सारस्वतं१६५ नाम स्वामितीर्थं१६६ तथैव च। मलन्दरा१६७ नदी पुण्या कौशिकी१६८ चन्द्रिका१६९ तथा। वैदर्भी१७०वाथ वेरा१७१ च पयोष्णी१७२ प्राङ्मुखा परा। कावेरी१७३ चोत्तरा पुण्या तथा जालन्धरो१७४ गिरिः। एतेषु श्राद्धतीर्थेषु श्राद्धमानन्त्यमश्नुते। लोहदण्डं१७५ तथा तीर्थं चित्रकूट१७६स्तथैव च। विन्ध्ययोग१६७श्च गङ्गायास्तथा नदीतटं१७८ शुभम्। कुब्जाम्र१७९न्तु तथा तीर्थं उर्वशीपुलिनं१८० तथा। संसारमोचनं१८१ तीर्थं तथैव ऋणमोचनम्१८२। एतेषु पितृतीर्थेषु श्राद्धमानन्त्यमश्नुते। अट्टहासं१८३ तथा तीर्थं गौतमेश्वर१८४मेव च। तथा वशिष्ठतीर्थं१८५न्तु हारीतं१८६ तु ततःपरम्। ब्रह्मावर्त्तं१८७ कुशावर्त्तं१८८ हयतीर्थं १८९ तथैव च। पिण्डारकञ्च १९०विख्यातं शङ्खोद्धारं १९१ तथैव च। घण्टेश्वरं१९२ बिल्वकञ्च१९३ नीलपर्वत१९४मेव च। तथा च धरणीतीर्थं१९५ रामतीर्थं १९६ तथैव च। अश्वतीर्थं१९७ञ्च विख्यातमनन्तं श्राद्धदानयोः। तीर्थं वेदशिरो१९८ नाम तथैवौघवती १९९ नदी। तीर्थं वसुप्रदं२०० नाम छागलाण्डं २०१तथैव च। एतेषु श्राद्धदातारः प्रयान्ति परमं पदम्। तथा च बदरीतीर्थं२०२ गणतीर्थं२०३ तथैव च। जयन्तं२०४

विजय२०५स्तथैव शुक्रतीर्थं२०६ तथैव च। श्रीपतेश्च२०७ तथा तीर्थं तीर्थं रैवतकं२०८ तथा। तथैव शारदा-तीर्थं२०९ भद्रकालेश्वरं२१० तथा। वैकुण्ठतीर्थं२११ञ्च परं भीमेश्वर२१२मथापि वा। एतेषु श्राद्धदातारः प्रयान्ति परमां गतिम्। तीर्थं मातृगृहं२१३ नाम करवीरपुरं२१४ तथा। कुशेश्वरं२१५ञ्च विख्यातं गौरीशिखरं२१६मेव च। नकुलेशस्य२१७ तीर्थञ्च कर्दमालं २१८ तथैव च। दण्डिपुण्यकरं२१९ तद्वत् पुण्डरीकपुरं२२० तथा। सप्तगोदावरीतीर्थं२२१ सर्वतीर्थेश्वरेश्वरम्२२२। तत्र श्राद्धं प्रदातव्यमनन्तफलमीप्सुभिः"।

**पितृदान** न० पित्रे दानम्। निवापे श्राद्धे अमरः स्वार्थे क। पितृदानक तत्रार्थे न० शब्दच०।

**पितृदिन** न० ६त०। १अमावास्यायाम्। पक्षद्वयात्मके २तत्सम्बन्धिदिने च "मानेनानेन यो मासः पक्षद्वयसमन्वितः। पितॄणां तदहोरात्रमिति कालविदो विदुः। कृष्णपक्षस्त्वहस्तेषां शुक्लपक्षस्तु शर्वरी। कृष्णपक्षे त्वहः श्राद्धं पितॄणां वर्त्तते नृप!" हरिवं० ७अ०।

**पितृपक्ष** पु० पितॄणां प्रियः पक्षः। गौणाश्विनकृष्णपक्षे "नभो वाथ नभस्यो वा मलमासो यदा भवेत्। सप्तमः पितृपक्षः स्यादन्यत्र तु च पञ्चमः" नागरख०। २पितृकुलजे च "पितृपक्षः प्रमुः स्त्रियाः" दायभागे नारदः याज्ञवल्क्यादौ १पित्रादिमिके च।

**पितृपति** पु० ६त०। यमे अमरः।

**पितृपितृ** पु० ६त०। पितामहे अमरः।

**पितृप्रसू** स्त्री ६त०। १पितामह्याम् पितॄणां प्रसूरिव। २सन्ध्यायाम् अमरः। पितृकार्ये सन्ध्यागामितिथेर्ग्राह्यत्वात् तस्याः प्रसूवत् पालकत्वात् तथात्वम्।

**पितृप्रिय** पु० ६त०। भृङ्गराजे राजनि०।

**पितृबन्धु** पु० ६त०। "पितुः पितुःस्वसुः पुत्राः पितुर्मातुः स्वसुःसुताः। पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः" इत्युक्तेषु पितुः पितृष्वसृपुत्रादिषु।

**पितृभोजन** पु० पितृभिर्भुज्यते कर्मणि ल्युट्। १माषे श्राद्धे तद्दानस्य प्रशस्तत्वात् तथात्वम्। भावे ल्युट् ६त०। २पितृभक्षणे न० राजनि०।

**पितृमेध** पु० कात्या० श्रौ० २१।२।१सूत्रादिषूक्ते पितृउद्देश्यके कर्मभेदे। [पितृतर्पणे "पितृयज्ञस्तु तर्पणम्" मनुः।

**पितृयज्ञ** पु० पितृउद्देश्यको यज्ञः शा०त०। पञ्चमहायज्ञान्तर्गते

**पितृयाण** पु० पितरो यान्ति अनेन या-करणे ल्युट् संज्ञात्वात् णत्वम्। पितॄणां चन्द्रलोकगमनमार्गे। तत्प्रापककर्मरूपहेतुसहितः तद्यानप्रकारः छान्दो०५।१०स्तौ यथा "अथ य इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड्दक्षिणैति मासांस्तान् नैते संवत्सरमभिप्राप्नुवन्ति। मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति" छा०। "य इमे गृहस्थाः। ग्राम इति गृहस्थानामसाधारणं विशेषणमरण्यवासिभ्यो व्यावृत्त्यर्थम्। यथा वानप्रस्थपरिव्राजकानामरण्यं विशेषणं गृहस्थेभ्यो व्यावृत्त्यर्थं तद्वत्। इष्टापूर्त्ते इष्टमग्निहोत्रादि वैदिकं कर्म। पूर्त्तं वापीकूपतडागारामादिकरणम्। दत्तं च बहिर्वेदि यथाशक्त्यर्हेभ्यो द्रव्यसंविभागो दत्तम्। इत्येवंविधं परिचरणपरित्राणाद्युपासते इतिशब्दस्य प्रकारदर्शनार्थत्वात्। ते दर्शनवर्जितत्वाद्धूमं धूमाभिमानिनीं देवतामभिमुख्येन सम्भवन्ति प्रतिपद्यन्ते। तयाऽतिवाहिता धूमाद्रात्रिं रात्रिदेवतां, रात्रेरपरपक्षदेवताम् एवमेव कृष्णपक्षाभिमानिनीमपरपक्षाद्यान् षण्मासान् दक्षिणा दक्षिणां दिशमेति सविता। तान् मासान्, दक्षिणायन षण्मासाभिमानिनीर्देवताः प्रतिपद्यन्त इत्यर्थः। सङ्घचारिण्यो हि षण्मासदेवता इति मासानिति बहुवचनप्रयोगः स्यात्। नैते कर्मिणः प्रकृताः संवत्सरं संवत्सराभिमानिनीं देवतामभिप्राप्नुवन्ति। कुतः पुनः संवत्सरप्राप्तिप्रसङ्गो यतः प्रतिषिध्यते। अस्ति हि संवत्सरस्य प्रसङ्गो ह्येकस्यावयवभूते दक्षिणोत्तरायणे तत्रार्चिरादिमार्गप्रवृत्तानामुदगयनमासेभ्योऽवयविनः संवत्सरस्य प्राप्तिरुक्ता। अत इहापि तदवयवभूतानां दक्षिणायनमासानां प्राप्तिं श्रुत्वा तदवयविनः संवत्सरस्यापि पूर्ववत्प्राप्तिराप्तेत्यतस्तत्प्राप्तिः प्रतिषिध्यते नैते संवत्सरमभिप्राप्नुवन्तीति। मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसम्। कोऽसौ यस्तैः प्राप्यः चन्द्रमा य एष दृश्यतेऽन्तरीक्षे सोमो राजा ब्राह्मणानां तदन्नं देवानां तं चन्द्रमसमन्नं देवा इन्द्रादयो भक्षयन्ति। अतस्ते धूमादिना गत्वा चन्द्रभूताः कर्मिणो देवैर्भक्ष्यन्ते नन्वनर्थायेष्टादिकरणं यद्यन्नभूता देवैर्भक्ष्येरन् नैष दोषः अन्नमित्युपकरणमात्रस्य विवक्षितत्वात्। न हि ते कवलोत्क्षेपेण देवैर्भक्ष्यन्ते। किं तर्ह्युपकरणमात्रं ते देवानां भवन्ति स्त्रीपशुभृत्यादिवत्। दृश्यते ह्यन्न

उपकरणेषु स्निग्धोऽयं यज्ञोऽयं विघोऽयं राजाभि-त्यादि। न च तेषां स्त्र्यादीनां सुखोपभोग्यत्वेऽप्युपभोगो नास्ति। तस्मात्कर्मिणो देवतानामुपभोग्या अपि सन्तः सुखिनो देवैः क्रीडन्ते। शरीरञ्च तेषां सुखोपभोगयोग्यं चन्द्रमण्डले आप्यमारभ्यते। तदुक्तं पुरस्तात् श्रद्धाशब्दा आपो द्युलोकाग्नौ हुताः सोमो राजा सम्भवतीति। ता आपः कर्मसमवायिन्य इतरैश्च भूतैरनुगताः द्युलोकं प्राप्य चन्द्रत्वमापन्नाः शरीराद्यारम्भिका इष्टाद्युपासकानां भवन्ति" शाङ्करभाष्यम्।

**पितृराज** पु॰ ६त॰ टच्समा॰। यमे भा॰स॰ ६अ॰।

**पितृरूप** पु॰ईषदूनः जनकः पिता पितृ+रूपप्। शिवे भा॰ अनु॰१५॰अ॰। तस्य सर्वजनकत्वेन पितृतुल्यत्वात् तथात्वम्

**पितृलोक** पु॰ ६त॰। चन्द्रलोकोपरिस्थे १भुवनभेदे "विधूर्ध्वभागे पितरो वसन्तः स्वाधः सुधादीधितिमामनन्ति। पश्यन्ति तेऽर्कं निजमस्तकोर्ध्वे दर्शे यतोऽस्मादु द्युदलं तदैषाम्। भार्धान्तरत्वान्न विधोरधःस्थं तस्मान्निशीथः खलु पौर्णमास्याम्। कृष्णे रविः पक्षदलेऽभ्युदेति शुक्लेऽस्तमेत्यर्थत एव सिद्धम्" सि॰शि॰। पितृयाणशब्दे दृश्यम्। कर्म॰। २पितृरूपे लोके ३श्वश्रुरमातादौ च।

**पितृवन** न॰६त॰। प्रेतावासे श्मशाने शब्दार्थच॰। [शिवे।

**पितृवनेचर** त्रि॰ पितृवने चरति चर—ट। श्मशानवासिनि

**पितृवर्त्तिन्** पु॰ ब्रह्मदत्तनामके नृपभेदे हरिवं॰ २०अ॰।

**पितृव्य** पु॰ पितुर्भ्राता पितृ+व्यत्। ज्येष्ठे कनिष्ठे वा पितृ-भ्रातरि। [ल्युट्, वेदे षत्वम्। कुशे यजु॰ ५।२६

**पितृषदन** न॰ पितरः सीदन्ति उपविशन्त्यत्र सद—आधारे

**पितृष्व(स्व)सृ** स्त्री ६त॰ वा षत्वम्। पितुर्भगिन्याम्।

**पितृष्वस्रीय** पुं स्त्री॰पितुः स्वसुरपत्यम् छ। पितृष्वसुरपत्ये

**पितृसन्निभ** पु॰ पित्रा गुरुत्वा सन्निभा तुल्यता यस्य। पितृतुल्ये गुरुतुल्ये च प्रा॰वि॰ देवलोक्ता यथा "आचार्यश्च पिता ज्येष्ठो भ्राता चैव महीपतिः। मातुलः श्वशुरस्त्राता मातामहपितामहौ। वर्णज्येष्ठो पितृव्यश्च पुंस्येते गुरवो मताः"। [शब्दमाला।

**पितृसू** स्त्री पितरं सूते सू—क्विप्। १पितामह्यां २सन्ध्यायां

**पितृह** पु॰"पितृहूर्दक्षिणः कर्ण उत्तरो देवहूः स्मृतः" भाग॰ ४।२८। उक्ते दक्षिणकर्णे तस्य तथात्वञ्च समर्थितं "शास्त्रश्रवणकाले बलाधिक्यात् दक्षिणकर्णः प्रथमं प्रवर्त्तते। शास्त्रे च प्रथमं श्रोतव्यं कर्मकाण्डम् इत्येतावता साम्येन प्रवृत्तसंज्ञस्य कर्मकाण्डस्य दक्षिणकर्णेन श्रवणं क्रियते। अथ तदर्थमनुष्ठाय पितृभिराहूतः पितृलोकप्रापकं पितृयाणं प्रपद्यते। तदनेन प्रकारेण पितृयामाह्वानं भवतीति पितृहूर्दक्षिणकर्णः" ४।२५।४८ श्रीधरेण

**पित्त** न॰ अपि+दो—क्त तादेशः अल्लोपः न दीर्घः। देहस्थे धातुभेदे तल्लक्षणादि भावप्र॰ उक्तं यथा "पित्तमुष्णं द्रवं पीतं नीलं सत्त्वगुणोत्तरम्। सरं कटु लघु स्निग्धं तीक्ष्णमम्लन्तु पाकतः"। पीतमविरामम् नीलं सामम्। एकं पित्तं वातवन्नामस्थानकर्मभेदैः पञ्चविधम्। तेषां पित्तानां नामान्याह "पाचकं रञ्जकञ्चापि साधकालोचके तथा। भ्राजकञ्चेति पित्तस्य नामानि स्थानभेदतः" अथ पाचकादीनां स्थानान्याह "अग्न्याशये यकृत्प्लीह्नोर्हृदये लोचनद्वये। त्वचि सर्वशरीरेषु पित्तं निवसति क्रमात्" अथ तेषां कर्माण्याह। "पाचकं पचते भुक्तं शेषाग्निबलवर्द्धनम्। रसमूत्रपुरीषाणि विरेचयति नित्यशः"। पाचकं पित्तमामपक्वाशयमध्यस्थं षड्विधमाहारं भोज्यं भक्ष्यं चर्व्यं लेह्यं चूष्यं पेयं पचति दोषरसमूत्रपुरीषाणि पृथक्करोति च। तदग्न्याशयस्थमेव स्वशक्त्या रसरञ्जनहृदयस्थकफतमोपनोदनरूपग्रहणप्रभाप्रकाशनाभ्यङ्गलेपादिपाचनाद्यग्निकर्मणां विशेषाणां पित्तस्थानानामनुग्रहं करोति। शेषाण्यपि पित्तस्थानानि यकृत्प्लीहादीनि भागेन गत्वा तत्र तत्र रसरञ्जनादिकर्मभिरुपकरोतीत्यर्थः। कथम्भूतं पाचकं पित्तं शेषाग्निबलवर्द्धनम् शेषा अग्नयः पृथिव्यादिमहाभूतगणाः। यत उक्तं चरकेण "भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः" इति। ऊष्माणः अग्नयः। यत उक्तं वाग्भटेन "दोषधातुमलादीनामूष्मेत्यात्रेयशासनम्" इति। दोषधातुमलादीनामूष्माग्निरित्यर्थः। रसादिसप्तधातुगताः तेषां बलवर्द्धनम् यथा कूटे स्थापितानि रत्नानि खद्योतवद्दूरभास्वराणि तान्यपि दीपज्योतिषा दूरप्रकाशकानि भवन्ति तथा अग्न्याशयस्थपाचकाग्नितेजसा सर्वे अग्नयो बलवन्तो भवन्ति तथा च वाग्भटः "अन्नस्य पक्ता सर्वेषां पक्तॄणामधिपो मतः। तन्मूलास्ते च तद्वृद्धिक्षयवृद्धिक्षयात्मकाः" इति। ननु पित्तादन्योऽग्निराहोस्वित्पित्तमेवाग्निरिति सन्देहः। उच्यते पित्तस्योष्णादिगुणद्वाराहारपाचनरञ्जनदर्शनादिकर्माणि न खलु पित्तव्यतिरेकेणान्योऽग्निः। तस्मादग्निरूपस्यैव पित्तस्य स्थानभेदात्पाचकरञ्जकसाधकालोचकभ्राजकसंज्ञाः। तथा च

वाग्भटः "पाचकं तिलमानं स्यात् काठिन्याच्चास्य दोषता । चतुर्द्धाऽऽत्मविकृतं पित्तं पाकोष्मदर्शनैः । क्षुत्तृड्रुचिप्रभामेधाधीशौर्य्यतनुमार्दवैः । पित्तं पञ्चात्मकं तत्र पक्वामाशयमध्यगम् । पञ्चभूतात्मकत्वेऽपि यत्तैजसगुणोदयम् । त्यक्तद्रवत्वं पाकादिकर्मणाऽनलशब्दितम् । पचत्यन्नं विभजते सारकिट्टौ पृथक् तथा । तत्रस्थमेव पित्तानां शेषाणामप्यनुग्रहम् । करोति बलदानेन पाचकं नाम तत् स्मृतम्" । ननु यदि पित्ताग्न्योरभेदस्तदा कथं घृतं पित्तघ्नमग्निदीपकमिति । तथा मत्स्याः पित्तं कुर्वन्ति न च तेऽग्निदीप्तिकरा इति । तथा समदोषः समाग्निश्चेत्यपि वक्तुं न युज्यते । तथा "द्रवं स्निग्धमधोगञ्च पित्तं वह्निरतोऽन्यथेति" । अत्रोच्यते । पित्तमग्नेः सन्तताधिष्ठानम् । तथा चोक्तं तन्त्रान्तरे "अग्निभिस्त्रिगुणैर्युक्तः पित्तं भिन्नगुणैस्तथा । द्रवं स्निग्धमधोगञ्च पित्तं वह्निरतोऽन्यथा । तस्माच्चोष्मवं पित्तं पित्तोष्मा यः स पक्तिमान् । स सञ्चरति कुक्षिस्थः सर्वतो धमनीमुखैः । स कायाग्निः स कायोष्मा स पक्ता स च जीवनम् । अनन्यमतिरिक्तेन देहे कायाग्निरुच्यते" अन्यत्र "वामपार्श्वाश्रितं नाभेः किञ्चित् सोमस्य मण्डलम् । तन्मध्ये मण्डलं सौर्य्यं तन्मध्येऽग्निर्व्यवस्थितः । जरायुमात्रप्रच्छन्नः काचकोषस्थदीपवत्" । तथा च मधुकोषे "द्रवतेजःसमुदायात्मकस्यापि पित्तस्य तेजोभागोऽग्निरिति" । तेन पित्तमप्यग्निरुच्यते अतितापितायोगोलकवत् । परमार्थतस्तु अग्निः पित्ताद्भिन्न एवेति सिद्धान्तः । अतएवाह रत्नप्रदीपे "जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः । सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते । नाभौ मध्ये शरीरस्य विशेषात् सोममण्डलम् । सोममण्डलमध्यस्थं विद्यात् सूर्य्यस्य मण्डलम् । प्रदीपवत्तत्र नृणां स्थितो मध्ये हुताशनः । सूर्य्यो दिवि यथा तिष्ठंस्तेजोयुक्तैर्गभस्तिभिः । विशोषयति सर्वाणि पल्वलानि सरांसि च । तद्वच्छरीरिणां भुक्तं ज्वलनो नाभिमाश्रितः । मयूखैः पचते क्षिप्रं नानाव्यञ्जनसंस्कृतम् । स्थूलकायेषु सत्त्वेषु यवमात्रः प्रमाणतः । ह्रस्वकायेषु सत्त्वेषु तिलमात्रः प्रमाणतः । कृमिकीटपतङ्गेषु बालमात्रोऽवतिष्ठते" इति । पुनः प्रकृतमनुसरति "रञ्जकं नाम यत्पित्तं तद्रसं शोणितं नयेत् । यत्तु साधकसंज्ञं तत् कुर्य्याद् बुद्धिं धृतिं स्मृतिम्" । धृतिं मेधाम् "यदालोचकसंज्ञं तद्रूपग्रहणकारणम् । "भ्राजकं कान्तिकारि स्यात् पाच्यङ्गादिपाचकम्" वातपित्तादिनिरूपणे । स्थानान्तरे तत्रैव पित्तप्रकृतिक उक्तो यथा "पित्तप्रकृतिको यादृक् तादृशोऽथ निगद्यते । अकालपलितो गौरः क्रोधी स्वेदी च बुद्धिमान् । बहुभुक् ताम्रनेत्रश्च स्वप्ने ज्योतींषि पश्यति । मन्त्रावबोधः क्षमी शूरो बहुवीर्यो महाबलः । पित्तं वह्निर्वह्निजं वा यदस्मात् पित्तोद्रिक्तस्तीव्रतृष्णो बुभुक्षुः । गौरोष्णाङ्गस्ताम्रहस्ताङ्घ्रिवक्त्रः शूरो मानी पिङ्गकेशोऽल्परोमा" । पित्तस्योपशमहेतवस्तत्रैव "तिक्तस्वादुकषायशीतपवनच्छायानिशावीजनज्योत्स्नाभूगृहयन्त्रवारिजलदस्त्रीगात्रसंस्पर्शनम् । सर्पिःक्षीरविरेकसेकरुधिरस्रावप्रदेहादिकं पानाहारविहारभेषजमिदं पित्तं प्रशान्तिं नयेत्" । पित्तप्रकोपकारणान्युक्तानि "कट्वम्लोष्णविदाहितीक्ष्णलवणक्रोधोपवासातपस्त्रीसम्भोगतृषाक्षुधाभिहननव्यायाममद्यादिभिः । भुक्तेऽजीर्य्यति भोजने च शरदि ग्रीष्मे तथा प्राणिनां मध्याह्ने च यथार्द्धरात्रसमये पित्तप्रकोपो भवेत्" भावप्र० "पित्तञ्च तिक्ताम्लरसञ्च सारकं उष्णं द्रवं तीक्ष्णमिदं मधौ बहु । वर्षान्तकाले प्रथमार्द्धरात्रे मध्यन्दिनेऽन्नाभ्युदिते च कुप्यति" राजनि० ।

**पित्तघ्न** त्रि० पित्तं हन्ति हन–टक् । १पित्तनाशकद्रव्ये स्त्रियां ङीप् । सा च २गुडूच्यां शब्दच० ।

**पित्तज्वर** पु० पित्तनिमित्तो ज्वरः शाक०त० । पैत्तिके ज्वरे ज्वरशब्दे ३१७१ पृ० माधवकरोक्तं तल्लक्षणं दृश्यम् ।

**पित्तद्राविन्** पु० पित्तं द्रावयति द्रु–णिच् णिनि । मधुरजम्बीरे राजनि० ।

**पित्तधरा** स्त्री सुश्रुतोक्ते कलाभेदे "षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता । पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्त्तिता" । [रक्तपित्तशब्दे लक्षणादि दृश्यम् ।

**पित्तरक्त** न० पित्तसंसृष्टं रक्तम् । रक्तपित्ते रोगे राजनि० ।

**पित्तल** त्रि० पित्तमस्त्यस्याधिक्येन सिध्मा० लच् । १पित्तबहुले । पित्तं लाति ला–क । २उपधातुभेदे रीतौ ३भूर्जपत्रे शब्दमा० ४तोयपिप्पल्यां स्त्री मेदि० । रीतिश्च द्विविधा यथोक्तं राजनि० "शुक्ला स्निग्धा मृदुः शीता सुरङ्गा [illegible] । हेमोपमा शुभा स्वच्छा जात्या रीतिः प्रकीर्त्तिता" । "रीतिरप्युपधातुः स्यात् ताम्रस्य यशदस्य च । पित्तलस्य गुणा ज्ञेयाः स्वयोनिसदृशा जनैः । संयोगस्य प्रभावेन तस्यान्येऽपि गुणाः स्मृताः । रीतिकायुगलं रूक्षं तिक्तञ्च लवणं रसे । शोधनं पाण्डुरो-

गन्धं कमिन्नं नातिलेखनम्" भावप्र०। तच्चारस्याबोधन-
विधिः कांस्यशब्दे १८४२ पृ० दृश्यः।

**पित्तातिसार** पु० पित्तजनितोऽतिसारः शाक०त०। पित्त-
जनिते अतिसाररोगभेदे अतिसारशब्दे १०७पृ०दृश्यम्।

**पित्ताभिष्यन्द** पु० पित्तकृतः अभिष्यन्दः शाक०त०। पित्तकृते
नेत्रजलक्षरणरूपे रोगभेदे अभिष्यन्दशब्दे ३०४पृ०दृश्यम्

**पित्तारि** पु० ६त०। १पर्पटे (खेतपापड़ा) २लाक्षायां
३वर्वरे च राजनि०।

**पित्र्य** त्रि० पितुः इदं प्रियं वा पितृत आगतं वा यत्।
१पितृसम्बन्धिनि। २पितृतीर्थे तर्जन्यङ्गुष्ठयोर्मध्यस्थाने
३मधुनि ४भचामस्थले च राजनि०। तस्य पितृदैवतत्वात्तत्-
सम्बन्धित्वम्। ५पितृप्रिये माषे पु०६अमावास्यायां तिथौ स्त्री
हेमच० ७ज्येष्ठभ्रातरि पु० दपौर्णमास्यां स्त्री शब्दच०।

**पित्र्यावत्** त्रि० पितुः तत्सम्बन्धि अस्त्यस्य मतुप् मस्य
वः दीर्घः। १पितृसम्बन्धियुक्ते २कन्यायां स्त्री ङीप्।
ऋ०८।४६।२ भा०।

**पित्सत्** त्रि० पतितुमिच्छति पत–सन् इस अभ्यासलोपः।
१पतितुमिच्छायुते २खगे पुंस्त्री० अमरः।

**पित्सल** पु० पतितुमिच्छत्यत्र पत–सन् पित्स+आधारे क-
लच्। पथि मार्गे उणादि०।

**पिद्व** पु० मृगभेदे यजु० २४।३२ [२उदकुम्भे च हेमच०।

**पिधान** न० अपि+धा–ल्युट् अल्लोपः। १छादने अमरः

**पिधानक** पु०पिधानाय कायति कै–क। खड्गकोषे हेमच०

**पिनद्ध** त्रि० अपि+नह–क्त अल्लोपः। परिहिते वस्त्रादौ
हेमच०।

**पिनाक** पु०न० पा–रक्षणे आकन् नुट् धातोरात इत्त्वम्।
१शिवधनुषि उज्ज्वलद०। २शूलास्त्रे अमरः ३दिव उत्त-
रनामस निघण्टुः।

**पिनाकिन्** पु० पिनाक+अस्त्यर्थे इनि। महादेवे अमरः
पिनाकहस्तादयोऽप्यत्र। [जटा०।

**पिन्यास** न० अपिगतो न्यासोऽत्र प्रा०ब०अल्लोपः। हिङ्गुनि

**पिपतिषत्** त्रि० पतितुमिच्छति पत–सन्–शतृ। १पतितुमि-
च्छति। २खगे मेदि०। [२खगे राजनि०

**पिपतिषु** त्रि० पतितुमिच्छुः पत–सन उ। १पतितुमिच्छौ

**पिपासा** स्त्री पातुमिच्छा पा–पाने सन् भावे अ। पातुमिच्छा-
याम् सा च प्राणवृत्तिः ऊर्मिभेदः "बुभुक्षा च पिपासा
च प्राणस्य, मनसः स्मृतौ। शोकमोहौ, शरीरस्य जरा-
मृत्यू षडूर्मयः" शा०ति०। तद्धेतुः पित्तभेदस्तच्छब्दे

दृश्यम्। तारका०इतच्। पिपासित संजातपिपासे त्रि०।

**पिपीतक** पु०ब्राह्मणभेदे येन पिपीतकीद्वादश्यीव्रतमाचरितम्

**पिपीतकी** स्त्री पिपीतको ब्राह्मणभेदः स प्रवर्त्तकतयास्त्यस्य
अच् गौरा० ङीष्। वैशाखशुक्लद्वादश्याम् तद्विधानं भवि-
ष्यपु० "वैशाखे शुक्लपक्षस्य द्वादशी वैष्णवी तिथिः। तस्यां
सुशीतलजलैः स्नापयेत् केशवं प्रभुम्। पूजयेद्गन्ध-
पुष्पाद्यैर्धूपदीपैर्विधानतः। नैवेद्यैर्विविधैश्चैव ताम्बूलै-
रथ वाससा। तस्मा तु वैष्णवं मन्त्रं इदमेव प्रयत्ने-
नतः। दद्याद्विजेभ्यो विधिवत् कुम्भांस्तोयसम-
न्वितान्। प्रथमेऽब्दे चतुःकुम्भान् दद्याद्वस्त्रसंयुतान्।
मालाभिरङ्कितग्रीवान् सुशीतलजलान्वितान्। शुक्ल-
वस्त्रावृतास्यांश्च पवीतसंयुतान्। चतुर्थांशवयात्रान्
समोदकान्वितान्। द्वितीयेऽष्टौ घटान् दद्याद्
धिशर्करसंयुतान्। तृतीये द्वादश घटान् तिलमोदकसंयु-
तान्। चतुर्थे षोडश घटान् दुग्धकुड्यसंयुतान्।
दद्यात् संपूज्य देवेशं द्विजातिभ्यः प्रयत्नतः। दक्षिणां
शक्तितो दद्यात् भोजयेच्च विशेषतः" पिपीतकव्रतं
प्रति वशोपदेशः। तत्कथा तु ति०त०उक्ता द्वादशीशब्दे
१७६८ पृ० दृश्याः। अधिकं तत्कथायां दृश्यम्।

**पिपीलक** पु० अपि–पील–ण्वुल् अल्लोपः। (डेओपिपड़ा)
ख्याते १कीटे (क्षुद्रेपिपड़ा) २ख्याते कीटे स्त्री टाप्।
हेमच०। अच्–पिपीलोऽप्यत्र शब्दच० गौरा० ङीष्
पिपीलीत्यप्यत्र हेम०। क्षुद्रकीटे राजनि०।

**पिपीलिकामध्य** न० पिपीलिकाया मध्यमिव मध्यमस्य।
चान्द्रायणभेदे पुंस्त्री० चान्द्रायणशब्दे २८।२ पृ०दृश्यम्।

**पिप्पक** पुंस्त्री०शरव्यादेवतोद्दे शेन आलभ्ये पक्षिणि अजादि०
टाप्। स्त्रीपक्षिभेदे स्त्री यजु० २४।४०।

**पिप्पटा** स्त्री खाद्यभेदे त्रिका०।

**पिप्पल** न० पा–अलच् पृषो०। १जले निघण्टुः २वस्त्र-
खण्डभेदे च मेदि० ३अश्वत्थवृक्षे अमरः ४अञ्जनवृक्षे
पक्षिणि च पु०शब्दच०। ५नद्यां (पिपुल) स्त्री गौरा०
ङीष् स्वल्पः पिप्पलिः पिप्पली चाल। तस्याः फलम्
अण् हरीतक्या० तस्य लुप्। तत्फलेऽपि स्त्री।
अस्त्यर्थे उत्करादि०छ। पिप्पलीय तद्युते त्रि०। रेवत्यां
जाते ६मित्रपुत्रभेदे पु० भाग०६।१८।६

**पिप्पलाद** पु० ऋषिभेदे भाग० ११।१८।८ [४।१३।

**पिप्पलायन** पु० भरतान्वये भागवतप्रधाने नृपभेदे भाग०५।

**पिप्पलीघृत** न० चक्रदत्तोक्ते घृतभेदे "पिप्पलीगुडसंयुक्त"

कामक्षीरयुतं हतम् । यतदग्निविवर्द्धनं सर्पिष चयका-
मिनाम्" ।

**पिप्पलीश्रोणि** स्त्री नदीभेदे मार्क॰पु॰ ५७अ॰

**पिप्पलीमूल** न॰ पिप्पल्या इव मूलमस्य । (पिपुलमूल) ख्याते द्रव्ये राजनि॰ "दीपनं पिप्पलीमूलं कटूष्णं पाचनं लघु । रूक्षं पित्तकरं भेदि कफवातोदरापहम् । आनाहप्लीहगुल्मघ्नं कृमिश्वासक्षयापहम्" भावप्र॰ । ततः सत्वर्थे उत्कराः॰ छ । पिप्पलमूलीय तद्युते त्रि॰ ।

**पिप्पलु** पु॰ ऋषिभेदे तस्य गोत्रापत्यं गर्गा॰ यञ् । पैप्पलव्य तद्गोत्रापत्ये पुंस्त्री॰ ।

**पिप्पल्याद्य** न॰चक्रदत्तोक्ते तैलभेदे "पिप्पलीं मधुकं बिल्वं शताह्वां मदनं वचाम् । कुष्ठं शटीं पुष्कराख्यं चित्रकं देवदारु च । पिष्टा तैलं विपक्तव्यं द्विगुणक्षीरसंयुतम् । अर्शसां मूढवातानां तच्छ्रेष्ठमनुवासनम् । गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम् । कट्यूरुपृष्ठदौर्बल्यमानाहं वङ्क्षणाश्रयम् । पिच्छास्रावं गुदे शोथं वातवर्च्चोविनिग्रहम् । उत्थानं बहुशो यच्च जयेत्तैवानुवासनात्" ।

**पिपरिका** स्त्री दन्तवल्के हेमच॰ । [शुभस्तवकलतक्रम् ।

**पिप्पीक** पुंस्त्री॰ खगभेदे शु॰यं॰२४।४०तस्य दर्विदाविकसत्ते

**पिप्रु** पु॰ असुरभेदे ऋ॰ १।५१।५ भा॰ ।

**पिप्लु** पु॰ अपि+प्लु—डु अपेरल्लोपः । जड़ुले अमरः ।

**पिब्दमाना** स्त्री अपि+मब्द्—शानच् पृषो॰। मब्दायमाने

**पिब्दन** त्रि॰ अपि+मब्द्—ल्युट् पृषो॰। १अव्यक्तं मब्दायमाने २रक्षोभेदे पु॰ ऋ॰६।४६।२

**पियारु** पी—हिंसाया वा॰ आरुक् । हिंस्रे ऋ॰१।१६०।५ "पीयतिर्हिंसाकर्मेति" निरु॰ ४।२५

**पियाल** पु॰पी—पाने कालन् । पीतसाले (पेयाशाल) (चरगा) इत्यभेदे अमरः "पियालस्तु खरःस्कन्धसारो बहुवल्कलः । राजादनसापसेष्टः सन्नकद्रुर्धनुष्पटः । सारः पित्तकफास्रघ्नस्तत्फलं मधुरं गुरु । स्निग्धं सरं मरुत्पित्तदाहज्वरतृषापहम् । पियालमज्जा मधुरो वृष्यः पित्तानिलापहः । हृद्योऽतिदुर्जरः स्निग्धो विष्टम्भी चामवर्द्धनः" भावप्र॰ ।

**पिल** प्रेरणे चु॰उभ॰सक॰सेट् । पेलयति ते अपीपिलत् त ।

**पिलिप्पनी** स्त्री चिक्कणायां भुवि । यजु॰ २३।१२ "श्रीर्वै पिलिप्पनी" शत॰ब्रा॰ १३।२।६।१६ "श्रयत्वेनाकिति श्रीश्चब्देन पृथिवीति" वेददीपः ।

**पिलु** पु॰ अपि+ला—बा॰ डु । पीलुवृक्षे शब्दरत्नावली ।

**पिलुनी** स्त्री अपि+ला बा॰ डुन गौरा॰ ङीष् । मूर्वायां रत्नमाला । [टीकायां रत्नमाला ।

**पिलुपर्णी** स्त्री पीलोरिव पर्णमस्याः ङीप् पृषो॰ । मोर-

**पिल्ल** न॰ क्लिद्—ल पिलादेशः । १क्लिन्नचक्षुषि । २तद्युते त्रि॰ अमरः ।

**पिल्लका** स्त्री पिल्ला इव कायति कै—क । हस्तिन्यां शब्दमा॰

**पिव** सेचने भ्वा॰पर॰सक॰ सेट् इदित् । पिन्वति अपिन्वीत् । पिपिन्व पिन्व्यते । पिन्वनम्

**पिश** अवयवे समुदायाभावे अक॰ दीपनायां सक॰ तुदा॰ मुचा॰ पर॰ सेट् । पिंशति पटः समुदीभवतीत्यर्थः । "त्वष्टा रूपाणि पिंशतु" ऋ॰१०।१८४।१ दीपयतु इत्यर्थः अपेशीत् पिपेश ।

**पिश(स)** त्रि॰ पिश—क । १पापनिर्मुक्ते २वक्ररूपे न॰ ।

**पिशङ्ग** पु॰ पिश—अङ्गच् किच्च । मद्यपुष्पितले १पिङ्गलवर्णे २तद्वति त्रि॰ अमरः ।

**पिशङ्गक** पु॰ पिशङ्ग+स्वार्थे क । १पिशङ्गशब्दार्थे पिशङ्गेन कायति कै—क । २विष्णौ अग्नपु॰ ।

**पिशङ्गभृष्टि** त्रि॰ भ्रस्ज—कर्मणि क्तिच् पिशङ्ग इव भृष्टिः सारभूतोऽस्य । शुद्धपिङ्गलवर्णे ऋ॰ १।१३३।५भा॰।

**पिशङ्गराति** त्रि॰ पिशङ्गः वक्ररूपो रातिर्धनमस्य । वक्रधनसाधिवि ऋ॰ ६।३१।२ भा॰ । [पित्तले ।

**पिशङ्गिला** स्त्री पिशं वक्ररूपं गिलति क इत्म् । रीतौ

**पिशाच** पु॰ पिशितमाचामति आ+चम—बा॰ ड पृषो॰ । १देवयोनिभेदे २प्रेते च अमरः "अन्तरीक्षचरा ये च भूतप्रेत पिशाचकाः । वर्जयित्वा बहुमर्यांसे तत्रैव चरन्ति हि । नोर्द्धं विक्रमणे शक्तिस्तेषां ब्रह्म तपापनाम् । अत ऊर्द्धं हि विप्रेन्द्र ! राक्षसा ये कर्तनवः । ते तु सप्तर्षिटपः सर्वे विहरन्त्यूर्द्धवर्जिताः" इति पाद्मे स्वर्गखण्डे १५अ॰ । प्रेते यथा "अशौचान्ताद्द्वितीयेऽह्नि यस्य नोत्सृज्यते वृषः । पिशाचत्वं भवेत्तस्य दत्तैः श्राद्धशतैरपि" शु॰ त॰ । तन्निवारणे कुशलः आकर्षा॰ कन् । पिशाचक तन्निवारणकुशले त्रि॰ स्वार्थे यन्धो॰ अण् । पैशाच तदर्थे पिशाच इव कायति कै—क । पिशाचतुल्ये यक्षगुह्यकादौ ।

**पिशाचकिन्** पिशाचक यक्षादिरस्यास्य स्वत्वेन पिशाचक+इनि । यक्षेश्वरे कुबेरे हेमच॰ [शाखोटवृक्षे त्रिका॰ ।

**पिशाचद्रु** पु॰ पिशाचप्रियः घनान्धकारत्वात् द्रुः शा॰त॰।

**पिशाचमोचन** न० स्वनामख्याते तीर्थभेदे स्कान्दपुराणम् ।
**पिशाचसभ** न० ६त० क्लीवता । पिशाचानां सभायाम्
**पिशाची** स्त्री पिशाचजातिः स्त्री ङीष् । १पिशाचजाति स्त्रियां वहद्दन्त्ययुक्तायां २मव्यमांस्यां राजनि० । [वृत्तः ।
**पिशिक** पु० देशभेदे स च वृ०सं० १४कूर्मविभागे दक्षिणस्था-
**पिशित** न० पिश–क्त । १मांसे अमरः । २जटामांस्यां स्त्री वा ङीप् मेदि० । [चषादौ पिशिताशादयोऽप्यत्र ।
**पिशितभुज्** त्रि० पिशितं भुङ्क्ते भुज–क्विप् । क्रव्यादे रा-
**पिशी** स्त्री पिश–क गौरा० ङीष् । जटामांस्यां राजनि० ।
**पिशील** न० पिश–बा० ईल । शरावे मृण्मयपात्रे शत०ब्रा० २।५।२।६ भा० कात्या० ५।२।४२ कर्कः ।
**पिशुन** न० पिश–उनन् किच्च । १कुङ्कुमे अमरः । २नारदे ३काके च पु० ४सूचके ५क्रूरे च त्रि० ( पिशुङ् ) ६शाकभेदे स्त्री० टाप् मेदि० ।
**पिष** चूर्णने रु० पर०सक० अनिट् । पिनष्टि अृदित् अपिषत् पिपेष पेष्टा पिष्टः पेषः पेषणम् । "शुष्कचूर्णरूक्षेषु पिषः" पा० एषूपपदेषु कर्मसु णमुल् कषा० यथाविध्यनुप्रयोगः "शुष्कपेषं पिनष्टु वीं म्" भट्टिः "स्नेहने पिषः" पा० स्नेहसाधने करणे उपपदे णमुल् । उदपेषम् पिनष्टि उदकेन पिनष्टीत्यर्थः पेषमादिपरे उदकस्योदादेशः ।
**पिष्ट** न० पिष–क्त । १सीसके रत्नमाला २पिष्टके पु०न० "अन्नादष्टगुणं पिष्टं पिष्टादष्टगुणं पयः । पयसोऽष्टगुणं मांसं मांसादष्टगुणं घृतम् । घृतादष्टगुणं तैलं मर्दनान्न च भक्षणात्" वैद्य० अस्य गुणाः "पिष्टं माषकरं रूक्षं विदाहि गुरु दुर्जरम् । शालिपिष्टमया भक्ष्याः कफपित्तविनाशनाः । वैदला गुरवो भक्ष्या विष्टम्भिस्पृष्टमारुताः । सगुडाः सतिलाश्चैव सक्षीरक्षारशर्कराः । भक्ष्या बल्याश्च हृद्याश्च गुरवो बृंहणाः परम् । सस्नेहाः स्नेहसिद्धाश्च भक्ष्या गोधूमसम्भवाः । गुरवस्तर्पणा हृद्या बलोपचयवर्द्धनाः । मर्दितां समितां क्षीर नारिकेलघृतादिभिः । अवग्राह्य घृते पक्त्वा घृतपूरोयमुच्यते । घृतपूरो गुरुर्वृष्यः कफकृद्रक्तमांसदः । रक्तपित्तहरो हृद्यः स्वादुः पित्तहरोऽग्निदः" । गोधूमचूर्णं समिता । "समिता मधुदुग्धेन खण्डेलामरिचादिभिः । घृते पक्त्वा क्षिपेत् खण्डे संयावो बृंहणो गुरुः । समिता वेष्टिता मध्ये मधु दत्त्वा घृते भृता । मधुमस्तकसुद्दिष्टं वृष्यं गुरु दुर्जरम्" राजवल्लभः । ३रूपे न०निघण्टु ४चूर्णिते त्रि० ५ऋषिभेदे पु० । तस्यापत्यम् ऋष्यण्-अण् । पैष्ट तदपत्ये पुंस्त्री० । ततः गोत्रप्रत्ययस्य बहुत्वे द्वन्द्वे अद्वन्द्वे च उपका० लुक् ।
**पिष्टक** त्रि० पिष्टस्य विकारः कन् । १पिष्टस्य विकारभेदे संज्ञायां कन् । २अपूपे अस्त्री अमरः । तत्पाकप्रकारादि भावप्र० वाक्यं दृश्यम् । ३तिलचूर्णे न०राजनि० । ४नेत्ररोगभेदे मेदि० "श्लेष्मा मारुतकोपेन शुक्ले पिष्टवदुन्नतम् । विष्टवत् पिष्टकं विद्धि मलाक्तादर्शसन्निभम्" माधवकरः ।
**पिष्टप** न० विशन्त्यत्र विश–कप निपा० । भुवने अमरः ।
**पिष्टपचन** न० पिष्टं पच्यतेऽनेन पच–करणे ल्युट् । पिष्टकपाकपात्रे कटाहादौ अमरः ।
**पिष्टपाककृत्** न० पिष्टस्य पाकं करोति आधारस्य कर्तृत्वविवक्षायां कृ–कर्त्तरि क्विप् तुक् च । १पिष्टपाकाधारे पात्रे हेमच० कर्त्तरि क्विप् । २पिष्टपाचके त्रि० ।
**पिष्टपूर** पु० पिष्ट इव पूर्यते पूरि–कर्मणि अच् । वटके घार्त्तिके हेमच० ।
**पिष्टपाकभृत्** न० पिष्टपाकं बिभर्त्ति भृ–क्विप् । पिष्टपाकपात्रे हेमच० । [त्रि०को० ।
**पिष्टमय** त्रि० पिष्टस्य विकारः मयट् । पिष्टविकारे भक्ष्यादौ
**पिष्टमेहिन्** पु० पिष्टमिव मेहति मिह–णिनि । सुश्रुतोक्ते प्रमेहभेदरोगयुते "पिष्टरसतुल्यं पिष्टमेही मेहति" सुश्रुतः । [(भूमनी) हेमच० ।
**पिष्टवर्त्ति** पु० पिष्टं वर्त्तयति वर्त्ति–इन् । तण्डुलमाषादिचूर्णे
**पिष्टसौरभ** न० पिष्टस्येव सौरभमस्य । चन्दने हारा० ।
**पिष्टात** पु० पिष्टमिताततीति अत–अण् । १पटवासे पटवासनार्थे गन्धद्रव्ये (आवीर) ख्याते २पदार्थे च अमरः ।
**पिष्टिक** न० पिष्टमस्त्यस्य उत्पत्तिसाधनत्वेन ठन् । तण्डुलचूर्णभवे द्रव्यात्मके (पिठालि) ख्याते पदार्थे राजनि० (पिठो) प्रसिद्धायां पिष्टच्छिद्रे स्त्री "दालिः संस्थापिता तोये ततोऽपहृतकञ्चुका । शिलायां साधु संपिष्टा पिष्टिका कथिता बुधैः" भावप्र० ।
**पिष्टोडी** स्त्री श्वेताम्लिकायां राजनि० ।
**पिष्टोदक** न० पिष्टमिश्रितमुदकं शाक०त० । चूर्णतण्डुलमिश्रितजले भा० आ० १३१अ० । [अपिपेसत्-त ।
**पिस** गतौ भ्वा०पर०सक०सेट् । पेसति अपेसीत् पिपेस ऋदित्
**पिस** दीप्तौ वा चु० उभ०पक्षे भ्वा० पर०अक० सेट् इदित् । पिंसयति ते अपिपिंसत् त । पक्षे पिंसति अपिंसीत् ।

विधिना यः गुरुं पीठमाचरेत् । तस्य अस्त्रोः सर्वं नैव कदाचिन्न सिद्ध्यति । अज्ञानाद्वा मोहाद्वाऽन्यथा पीठमाचरेत् । एतानि तस्य नश्यन्ति चक्षुरोगाद्युतं कुलम्” । ३स्वर्णमाला उ० हरिवं० १६१अ० । ४अक्षरभेदे पु० मा० द्वो० १७अ० । ५देवतामूर्त्तिस्थापनाधारे पिण्डिकायां स्त्री ङीप् स्वार्थे क पीठिका तत्रार्थे पिण्डिकाशब्दे दृश्यम् । ६देवतापूजनाङ्गे हृदयरूपे आधारे तत्र पूज्यपदार्थाः पूज्यदेवताश्च तन्मध्ये यथा “पीठपूजां ततः कुर्य्यात् आधारशक्तिपूर्वकम् । प्रकृतिं कमठञ्चैव शेषं पृथ्वीं तथैव च । सुधाम्बुधिं मणिद्वीपं चिन्तामणिगृहं तथा । श्मशानं पारिजातस्य तन्मूले रत्नवेदिकाम्” । शारदायाम् “अनन्तं हृदये पद्मं तस्मिन् सूर्य्येन्दुपावकान् । एषु स्वस्वकलां न्यस्य नामाद्यक्षरपूर्वतः । सत्त्वादीन् त्रिगुणांस्तस्य यथैवात्र गुरुक्रमः । आत्मानमन्तरात्मानं परमात्मानमेव च । ज्ञानात्मानं प्रविन्यस्य न्यसेत् पीठमनुन्ततः” । पीठमन्त्रश्च देवताभेदे इच्छाज्ञानादयस्तत्तत्कल्पोक्ताः शारदादौ दृश्याः । ७मन्त्रसिद्ध्यर्थजपस्थानभेदे तन्त्राणि विष्णुचक्रेण विभक्तस्य सतीदेहस्य तत्तदङ्गभेदपतनात् तत्तत्स्थानस्य पूज्यता तत्र पीठानि तदङ्गप्रत्यङ्गभेदपतनं च तन्त्रचूडामण्यादौ यथा

“एकपञ्चाशत् पीठाः शक्तिभैरवदेवताः । अङ्गप्रत्यङ्गपातेन विष्णुचक्रक्षतेन च । ममास्य वपुषो देव ! हिताय त्वयि कथ्यते । ब्रह्मरन्ध्रं हिङ्गुलायां भैरवो भीमलोचनः । कोट्टरीशा महादेव ! त्रिगुणा या दिगम्बरी ॥१ करवीरे त्रिनेत्रं मे देवी महिषमर्द्दिनी । क्रोधीशो भैरवस्तत्र २, सुगन्धायाञ्च नासिका । देवस्त्र्यम्बकनामा च सुनन्दा तत्र देवता ३। काश्मीरे कण्ठदेशश्च त्रिसन्ध्येश्वरभैरवः । महामाया भगवती गुणातीता वरप्रदा४ । ज्वालामुख्यां महाजिह्वा देव उन्मत्तभैरवः । अम्बिका सिद्धिदानाम्न्यो५ स्तनो जालन्धरे मम । भीषणो भैरवस्तत्र देवी त्रिपुरमालिनी६ । हार्दपीठं वैद्यनाथे वैद्यनाथस्तु भैरवः । देवता जयदुर्गाख्या७, नेपाले जानु मे शिव ! । कपाली भैरवः श्रीमान् महामाया च देवता८ । मानसे दक्षहस्तो मे देवी दाक्षायणी हर ! । अमरो भैरवस्तत्र सर्वसिद्धिप्रदायकः९ । उत्कले नाभिदेशस्तु विरजाक्षेत्रमुच्यते । विमला सा महादेवी जगन्नाथस्तु भैरवः१० । गण्डक्यां गण्डपातश्च तत्र सिद्धिर्न संशयः । तत्र सा गण्डकी चण्डी चक्रपाणिस्तु भैरवः११ । बहुलायां वामबाहुर्बहुलाख्या च देवता । भीरुको भैरवस्तत्र सर्वसिद्धिप्रदायकः १२ । उज्जयिन्यां कूर्परञ्च माङ्गल्यकपिलाम्बरः । भैरवः सिद्धिदः साक्षाद्देवी मङ्गलचण्डिका१३ । चट्टले दक्षबाहुर्मे भैरवश्चन्द्रशेखरः । व्यक्तरूपा भगवती भवानी तत्र देवता । विशेषतः कलियुगे वसामि चन्द्रशेखरे १४। त्रिपुरायां दक्षपादो देवी त्रिपुरसुन्दरी । भैरवस्त्रिपुरेशश्च सर्वाभीष्टप्रदायकः१५ । त्रिस्रोतायां वामपादो भ्रामरी भैरवेश्वरः१६ । योनिपीठं कामगिरौ कामाख्या तत्र देवता । यत्रास्ते त्रिगुणातीता रक्तपाषाणरूपिणी । यत्रास्ते माधवः साक्षादुमानन्दोऽथ भैरवः । सर्वदा विहरेद्देवी तत्र मुक्तिर्न संशयः । तत्र श्रीभैरवी देवी तत्र च क्षेत्रदेवता । प्रचण्डचण्डिका तत्र मातङ्गी त्रिपुरात्मिका । बगला कमला तत्र भुवनेशी सधूमिनी । एतानि वरपीठानि शंसन्ति वरभैरवाः१७। अङ्गुल्यश्चैव हस्तस्य प्रयागे ललिता भवः१८ । जयन्त्यां वामजङ्घा च जयन्ती क्रमदीश्वरः १९। भूतधात्र्यां महामाया भैरवः क्षीरकण्टकः । युगाद्या सा महामाया दक्षाङ्गुष्ठः पदो मम२० । नकुलीशः कालिपीठे दक्षपादाङ्गुली च मे । सर्वसिद्धिकरी देवी कालिका तत्र देवता” २१ । भुवनेशी सिद्धरूपा किरीटस्था किरीटतः । देवता विमलानाम्नी संवर्त्तो भैरवस्तथा२२ । वाराणस्यां विशालाक्षी देवता कालभैरवः । मणिकर्णीति विख्याता कुण्डलञ्च मम श्रुतेः२३। कन्याश्रमे च मे पृष्ठं निमिषो भैरवस्तथा । सर्वाणी देवता तत्र २४, कुरुक्षेत्रे च गुल्फतः । स्थाणुर्नाम्ना च सावित्री२५ मणिवेदिकदेशतः । मणिबन्धे च गायत्री सर्वानन्दस्तु भैरवः२६। श्रीशैले च मम ग्रीवा महालक्ष्मीस्तु देवता । भैरवः संवरानन्दो देशेदेशे व्यवस्थितः २७। काञ्चीदेशे च कङ्कालो भैरवो रुरुनामकः । देवता देवगर्भाख्या२८ नितम्बः कालमाधवे । भैरवश्चासिताङ्गश्च देवी काली सुसिद्धिदा२९ । दृष्ट्वा दृष्ट्वा नमस्कृत्य मन्त्रसिद्धिमवाप्नुयात् । शोणाख्ये भद्रसेनस्तु नर्मदाख्या नितम्बकम् ३०। रामगिरौ तथा माता स्तिवानी चण्डभैरवः ३१। वृन्दावने केशजाले उमानाम्नी च देवता । भूतेशो भैरवस्तत्र सर्वसिद्धिप्रदायकः ३२। संहाराख्य ऊर्द्धदन्ते देवी नारायणी शुचौ ३३। अधोदन्ते महारुद्रो वाराही पञ्चसागरे ३४। करतोयातटे

तस्य वामे वामनभैरवः । अपर्णा देवता तत्र ब्रह्मरूपा करोद्भवा॥३५॥ श्रीपर्वते दक्षगुल्फं तत्र श्रीसुन्दरी परा। सर्वसिद्धीश्वरी सर्वा सुनन्दानन्दभैरवः॥३६॥ कपालिनि भीमरूपा वामगुल्फविभागतः। भैरवश्च महादेव ! सर्वानन्दः शुभप्रदः॥३७॥ उदरञ्च प्रभासे मे चन्द्रभागा यशस्विनी। वक्रतुण्डो भैरवश्चोऽ्र्द्धोष्ठो भैरवपर्वते। अवन्त्याञ्च महादेवी लम्बकर्णस्तु भैरवः॥३९॥ चिबुके भ्रामरी देवी विकृताख्या जलेस्थले। भैरवः सर्वसिद्धीशस्तत्र सिद्धिरनुत्तमा॥४०॥ गण्डोगोदावरीतीरे विश्वेशी विश्वमातृका। दण्डपाणिर्भैरवस्तु॥४१॥ वामगण्डे तु राकिणी। भैरवो वत्सनाभस्तु तत्र सिद्धिर्न संशयः॥४२॥ रत्नावल्यां दक्षस्कन्धे कुमारी भैरवः शिवः॥४३॥ मिथिलायां महादेवी वामस्कन्धे महोदरः॥४४॥ नलाहाट्यां नलापातो योगीशो भैरवस्तथा। तत्र सा कालिका देवी सर्वसिद्धिप्रदायिका॥४५॥ कर्णाटे चैव कर्णोमे त्वभीरुनाम भैरवः। देवता जयदुर्गाख्या नानाभोगप्रदायिनी॥४६॥ वक्रेश्वरे मनःपातो वक्रनाथस्तु भैरवः। नदी पापहरा तत्र देवी महिषमर्द्दिनी॥४७॥ यशोरे पाणिपद्मञ्च देवता यशोरेश्वरी। चण्डश्च भैरवस्तत्र यत्र सिद्धिमवाप्नुयात्॥४८॥ अट्टहासे चोष्ठपातो देवी सा फुल्लरा स्मृता। विश्वेशो भैरवस्तत्र सर्वाभीष्टप्रदायकः॥४९॥ हारपातो नन्दिपुरे भैरवो नन्दिकेश्वरः। नन्दिनी सा महादेवी तत्र सिद्धिर्न संशयः॥५०॥ लङ्कायां नूपुरश्चैव भैरवो राक्षसेश्वरः। इन्द्राक्षी देवता तत्र इन्द्रेणोपासिता पुरा॥५१॥ विराटदेशमध्ये तु पादाङ्गुलिनिपातनम्। भैरवश्चामृताख्यश्च देवी तत्राम्बिका स्मृता॥५२॥ मागधे दक्षजङ्घा मे व्योमकेशस्तु भैरवः। सर्वानन्दकरी देवी सर्वानन्दफलप्रदा॥५३॥" (पुस्तकान्तरपाठसंवादात् पीठद्वयाधिक्यं लिपिकरप्रमादात् पीठद्वयस्य निर्मूलता तत्र कयोर्निर्मूलता तन्न शक्नुमोविवेचयितुम्)। एतास्ते कथिता पुत्र ! पीठनाथाधिदेवताः। क्षेत्राधीशं विना देव! पूजयेन्नान्यदेवताम्। भैरवैर्ह्रियते सर्वं जपपूजादिसाधनम्। अज्ञात्वा भैरवं पीठे पीठशक्तिञ्च शङ्कर !। प्राणनाथ ! न सिध्येत् तु कल्पकोटिजपादिभिः"। अन्यान्यपि सिद्धपीठानि कुब्जिकातन्त्रे ७पटलोक्तानि यथा "शूयतां सावधानेन सिद्धपीठं पतिव्रते !। यस्मिन् साधनमात्रेण सर्वसिद्धीश्वरी भवेत्। मायावती मधुपुरी काशी गोरक्षचारिणी। हिङ्गुला च महापीठं तथा जालन्धरं पुनः। ज्वालामुखी महापीठं पीठं नगरसम्भवम्। रामगिरिर्महापीठं तथा गोदावरी प्रिये !। नेपालं कर्णसूत्रञ्च महाकर्णं तथा प्रिये। अयोध्या च कुरुक्षेत्रं सिंहलाख्यं मनोरमम्। मणिपुरं हृषीकेशं प्रयागञ्च तपोवनम्। बदरी च महापीठमम्बिका अर्द्धनालकम्। त्रिवेणी च महापीठं गङ्गासागरसङ्गमम्। नारिकेलञ्च विरजा उड्डीयानं महेश्वरी। कमला विमला चैव तथा माहिष्मती पुरी। वाराही त्रिपुरा चैव वाग्मती नीलवाहिनी। गोवर्द्धनो विन्ध्यगिरिः कामरूपं कलौ युगे। घण्टाकर्णोऽश्वग्रीवो माधवश्च सुरेश्वरि !। वीरधामं वैद्यनाथं जानीयाद्वामलोचने !। कामरूपं महापीठं सर्वकामफलप्रदम्। कलौ शीघ्रफलं देवि ! कामरूपे जपः स्मृतः"। "पीठप्रसङ्गाद्देवेशि ! पीठानि शृणु भैरवि !। शृणु तानि महाप्राज्ञे ! श्रेष्ठस्थानानि यानि च। सिद्धिप्रदानि साधूनां महद्भिः सेवितानि च। पुष्करञ्च गयाक्षेत्रं अक्षयाख्यवटस्तथा। वराहपर्वतश्चैव तीर्थञ्चामरकण्टकम्। नर्मदां यमुनां पिङ्गां गङ्गाद्वारं तथा प्रिये !। गङ्गासागरसङ्गञ्च कुशावर्त्तञ्च बिल्वकम्। श्रीनीलपर्वतश्चैव कलम्बकुब्जिके तथा। भृगुतुङ्गञ्च केदारं सर्वप्रियमहाचलम्। ललिता च सुगन्धा च शाकम्भरीपुरप्रियम्। कर्णतीर्थं महागङ्गा तण्डिकाश्रम एव च। कुमाराख्यप्रभासौ च तथा धन्या सरस्वती। अगस्त्याश्रममिष्टं मे कन्याश्रममतः परम्। कौशिकी सरयूश्चाथ ज्योतिःसरःपुरःसरम्। कालोदकं प्रियं श्रीमत् प्रियमुत्तरमानसम्। मतङ्गवापी सप्तार्चिर्महाविष्णुपदं महत्। वैद्यनाथं महातीर्थं प्रियः कालञ्जरो गिरिः। रानोद्भेदं गङ्गोद्भेदं हरोद्भेदं महावनम्। भद्रेश्वरमहातीर्थं लक्ष्मणोद्भेटमेव च। आत्रेयी प्रियश्रेष्ठा च कावेरी कपिलोदका। सोमेश्वरं शुक्लतीर्थं कृष्णवेण्वाप्रभेदकम्। पाटला च महाबोधिर्नगतीर्थं मदन्तिके। पुण्यं रामेश्वरं देवि ! तथा मेघवनं हरेः। शैलेयकवनञ्चैव गोवर्द्धनमत्प्रियम्। हरिश्चन्द्रं पुरश्चन्द्रं पृथूदकमथ प्रिये। इन्द्रनीलं महानादं तथैव प्रियमैनकम्। पञ्चाप्सरः पञ्चवटी वटी पर्पटिका तथा। गङ्गाबिलप्रसङ्गञ्च प्रियनाटवटं तथा। गङ्गारामाचलञ्चैव तथैव ऋणमोचनम्। गौतमेश्वरतीर्थञ्च वशिष्ठतीर्थमेव च। हारीतञ्च तथा देवि ! ब्रह्मावर्त्तं शिवप्रियम्। कुशावर्त्तमभिश्रेष्ठं हंसतीर्थं

तथैव च । पिण्डारकवनं स्नाकं हरिद्वारं तथैव च । तथैव बदरीतीर्थं रामतीर्थं तथैव च । जयन्तो विजयन्तश्च सर्वकल्याणदं प्रिये ! । विजया शारदातीर्थं भद्रकालेश्वरं तथा । वस्त्रतीर्थं सुविख्यातं तथा देवि ! शिवप्रियम् । श्रोणवती नदी चैव तीर्थमभयप्रदं तथा । कामलिङ्गपालकञ्च करवीरपुरं तथा । सप्तगोदावरं तीर्थं विख्यातं सर्वमोहनम् । किरीटसत्तरे तीर्थं दक्षिणे तीर्थसत्तमम् । विशालतीर्थं कात्यायवनं वृन्दावनं तथा । ज्वालामुखी हिङ्गुला च महातीर्थं यथेश्वरम् । काशीहि सर्वतीर्थानां श्रेष्ठस्थानानि सुन्दरि ! । यत्र सन्निहिता नित्यं सर्वदेवा महर्षयः । पितरो योगिनश्चैव ये ये सिद्धिपरायणाः । यात्र तिष्ठन्ति कर्माणि सत्त्वार्थमिषतां प्रिये ! । पुण्यकाले पठेद्यस्तु तत्पुण्यमक्षयं भवेत् । श्राद्धकाले पठेद्यस्तु जुह्वन्नथापि भक्तितः । अक्षयं तद्भवेत् सर्वं पितॄणां परमं दुर्लभम् । कस्मिन् स्थाने पठेद्यस्तु सिद्धिर्भवति तत्क्षणात् । अथ वक्ष्ये महेशानि ! यत्र या देवता शृणु । यत्र ते यानि नामानि कथयिष्यामि तत् शृणु । मग्नोऽहं परमानन्दे तत्कथामृतवारिधौ । पुष्करे कमलाक्षी च गयायाञ्च गयेश्वरी । अथवा चाक्षयवटेऽमरेशोऽमरकण्टके । वराहपर्वते च त्वं वराही वरशोभिया । नर्मदा नर्मदायाञ्च कालिन्दी यमुनाजले । शिवाख्या च गङ्गायां श्वेता देवहिकाश्रमे । शारदा सरयूतीरे शोके च कनकेश्वरी । अप्रकाशा सदा देवी ज्योतिर्मय्यलिसङ्गमे । श्रीनाथा श्रीगिरौ चैव काली कालोदके तथा । महोदरी महातीर्थे नीला चोत्तरमानसे । मातङ्गी मतङ्गे च सुप्राप्तिर्विष्णुपादके । नर्मदा नर्मदायां च गोदावर्य्यां गवेश्वरी । विश्वङ्किश्चैव गोमत्यां शिवाशाख्यां महाबला । शतद्रुं शतरूपा च चन्द्रभागा च तत्र वै । ऐरावत्याञ्च देवीम सिद्धिदा सिद्धितीरके । दक्षा पञ्चनदे चैव दक्षिणा त्वं प्रकीर्त्तिता । श्रीजपे वीर्य्यदा च त्वं सङ्गमा तीर्थसङ्गमे । पाण्डुदासामवन्ता त्वं कुरुक्षेत्रेऽक्षयाक्षया । तपस्विनी पुण्यतमा भारती भारताश्रमे । सुकथा नैमिषारण्ये पाण्डौ च पाण्डुरानना । विशालायां विशालाक्षी सुरपृष्ठे शिवात्मिका । श्रद्धा कनखले तीर्थे शुद्धबुद्धिर्त्तनीश्वरी । सुवेशा सुमना गौरी मानसे च सरोवरे । नन्दापुरे महानन्दा ललिता ललितापुरे । ब्रह्माणी ब्रह्मशिरसि महापातकनाशिनी ।

पूर्णिमा चेन्दुमत्याञ्च त्रिस्रोतसि प्रिया सदा । जाह्नवीसङ्गमे तुष्टिः स्वधा च पितृतृप्तिदा । पुण्या वस्तुसितायाञ्च प्रयागे पापनाशिनी । मङ्गलंदलके चैव घोररूपा महोदरी । स्वर्णोद्भेदे महाकाली प्रबला च महावने । भद्रा च भद्रकाली च भद्रेश्वरी शिवप्रिया । भद्रेश्वरे रमा विष्णुप्रिया विष्णुपदे तथा । दारुणा नर्मदोद्भेदे कावेर्य्यां कपिलेश्वरी । मेदिनी कृष्णवेण्यायां संभेदे शुभवासिनी । श्रद्धा च शुक्रतीर्थे च प्रभासे चेश्वरी तथा । महाबोधौ महाबुद्धिः पाटले पाटलेश्वरी । सुबला नागतीर्थे च नागेशी नागवन्दिता । मदन्ती च मदन्ती च प्रमदा च मदान्तिका । मेघस्वना मेघनादे विद्युत्सौदामनीच्छटा । रामेश्वरे महाबुद्धिर्गौरी चैलापुरे सती । शिवालयमार्गके दुर्गा सुवेशा सुरसुन्दरी । कात्यायनी महादेवी गोवर्द्धनेऽखिलात्मिका । शुभेश्वरी हरिश्चन्द्रे, पुरश्चन्द्रे पुरेश्वरी । पृथूदके महावेगा मैनाकेऽखिलवर्द्धिनी । इन्द्रनीले महाकान्ता रत्नवेशा सुशोभना । माहेश्वरी महानादे, महातेजा महावने । पश्चात्सरसि सारङ्गा, पञ्चवट्यां तपस्विनी । वटीयी वटिकायाञ्च सर्वदा सुरङ्गिणी । सङ्गमे विन्ध्यगङ्गाख्या, विन्ध्ये श्रीविन्ध्यवासिनी । महानन्दा नन्दतटे, गङ्गाटाचले शिवा । आर्य्यावर्त्ते महार्य्या त्वं, विशक्तिश्चमोचने । अट्टहासे च चामुण्डा, तन्त्रे श्रीगौतमेश्वरी । वेदमयी ब्रह्मविद्या वाशिष्ठे त्वमरुन्धती । हारीते हरिणाक्षी च ब्रह्मावर्त्ते व्रजेश्वरी । गायत्री चैव सावित्री कुशावर्त्ते कुशप्रिया । हंसेश्वरी महातीर्थे परहंसेश्वरेश्वरी । पिण्डारकवने धन्या सुरसा सुखदायिनी । नारायणी वैष्णवी च गङ्गाद्वारे विमुक्तिदा । श्रीविद्या बदरीतीर्थे, रामतीर्थे महाद्युतिः । जयन्ती च जयन्ते त्वं, विजयन्तेऽपराजिता । विजया च महाशुद्धिः, शारदायाञ्च शारदा । सुभद्रे भद्रदा, भव्या भद्रकालेश्वरे तथा । महाभद्रा महाकाली हयतीर्थे गवीश्वरी । वेददा वेदमाता च शिरीषे वेदमस्तके । युवत्याञ्च महाविद्या, महानद्यां महोदया । चण्डा च त्रिपदे चैव कामलिङ्गे बलिप्रिया । मातृदेशे जगन्माता, करवीरपुरे सती । मालवे रङ्गिणी रामा परमा परमेश्वरी । सप्तगोदावरे तीर्थे देवर्षावखिलेश्वरी । अयोध्यायां भवानी च जयदा जयमङ्गला । माधवी मथुरायाञ्च देवकी यादवेश्वरी । वृन्दागोपेश्वरी राधा रासवृन्दावने रमा ।।

कात्यायनी महामाया भद्रकाली कलावती। चन्द्रभागा महायोगा महायोगिन्यधीश्वरी। वज्रेश्वरी यथोदेति वज्रयोगोकुलेश्वरी। काञ्च्यां कनककाञ्ची स्यादेवञ्चा-मतिपावनी। विद्या विद्यापुरे चैव विमला नीलपर्वते। रामेश्वरी सेतुबन्धे, विमला पुरुषोत्तमे। विरजा नाग-पुर्याञ्च भद्राश्वे भद्रकर्णिका। तमोलिप्ते तमोघ्नी च स्वाहा सागरसङ्गमे। कुलक्षीर्वे गृहस्थे च माधवी मा-धवप्रिया। मङ्गला मङ्गले कोटे, राढे मङ्गलचण्डिका। ज्वालामुखी शिवापीठे मन्दरे भुवनेश्वरी। कालीघाटे गुह्यकाली, किरीटे च महेश्वरी। किरीटेश्वरी महा-देवी, लिङ्गाख्ये लिङ्गवाहिनी। साक्षात् सर्वत्र भक्तानाम भक्तानां कुतोऽपि न। अथान्यत् संप्रवक्ष्यामि शिवस्था-नानि सुन्दरि!। सर्वपापविनाशार्थं सर्वसिद्धिप्रदं नृ-णाम्। निर्मितानि शिवेनेह शिवस्थानानि यानि च। स्तुत्वा मनसि भाव्यानि प्रकाश्यान्यधिकारिषु। अमरेश महापीठे कुमारश्चारसंज्ञकः। तत्र दुर्गाह्वयं नाम च-ण्डिका च महेश्वरी। प्रभासे सोमनाथोऽसौ देवी च पुष्करेक्षणा। देवदेवाधिपः शम्भुर्नैमिषे च महेश्वरः। तत्र प्रभा च देवी च शिवानी लिङ्गधारिणी। पुष्करे च राजगन्धिः पुरुहूता महेश्वरी। श्रीपर्वते शिवा नाम्ना शङ्करस्त्रिपुरान्तकः। मायावी शङ्करी तत्र भक्तानाम-भिवार्थदा। जप्येश्वरे महास्थाने शङ्करी च त्रिशू-लिनी। त्रिशूली शङ्करस्तत्र सर्वपापविमोचकः। आ-म्रातकेश्वरे सूक्ष्मः सूक्ष्माख्या परमेश्वरी। गयाक्षेत्रे म-हाकाख्या शिवो यः प्रपितामहः। कुरुक्षेत्रे शिवःस्थाणुः शिवा स्थाणुप्रिया परा। इष्टनाभे स्वयम्भूश्च देवी स्वा-यम्भुवा मता। उग्रः कनखले प्रोक्तः शिवोऽप्ये शिवव-ल्लभा। विमलेश्वरे विश्वशम्भुरिष्टा विश्वप्रिया सदा। अ-ट्टहासे महानन्दो महानन्दा महेश्वरी। महान्तको महेन्द्रे च पार्वती च महान्तका। भीमेश्वरो भीमपीठे शिवा भीमेश्वरी तथा। वस्त्रपादे भवो नाम भवानी भवनेश्वरी। अर्द्धकूटे महायोगी रुद्राणी परमेश्वरी। अविमुक्ते महादेवो विशालाक्षी शिवा परा। महामाये हरोरुद्रो महाभागा शिवा तथा। महाबलश्च गोकर्णे शिवभद्रा च चण्डिका। भद्रकर्णे महादेवो भद्रा च कर्णिका तथा। सुवर्णाक्षे सहस्राक्षः उत्पला परमे-श्वरी। स्थाणुसंज्ञे शिवः स्थाणुरीशस्था श्रीधरा शिवा। कमलाये महास्थाने कमलाक्षो महेश्वरः। कमलाक्षी महेशानी सकलार्थप्रदायिनी। छागला तु कपर्दी च प्रभा च महेश्वरी। अहं रेता अरण्ये च सन्ध्याख्या परमेश्वरी। माकोटे च महाकोटः शिवा च मुकुटे-श्वरी। मातुलेश्वरपीठे च करवीराद्यशेखरा। श्रीम-द्व्याघ्रपुरे व्याघ्राङ्गनामा सभापतिः। शिवः सभापति-र्नाम यत्र नृत्यति शङ्करः। आत्मानन्दमहानाद पूर्णा-नन्दमहार्णवम्। नृत्यन्तं यत्र देवेशं देवेशी परि-पश्यति। तत्र साधु महादेवो भक्तानां वरदो भवेत्। नृत्यन्तं यत्र सर्वेशं वीक्ष्य लोको विमुच्यते। पुण्यस्थानेषु सर्वेषु स्थानमेतन्मनोरमम्। यद्यत्कर्माणि सर्वाणि अक्षयाणि भवन्ति वै। तस्मिन् महोत्तमे स्थाने शिव-गङ्गाख्यमद्भुतम्। तडागमस्ति तत्तीरे दक्षिणे नृत्यतो-शुरः। तटाकेऽस्मिन् वसन् स्नात्वा सभानाथं समीक्ष्य च। अष्टोत्तरसहस्रन्तु जपेच्छ्रोमुदान्वितः। यानि ते क-थितान्यत्र सदा तिष्ठन्ति देवताः। पितरः सिद्धगन्धर्वा विबुधः सर्वविद्विदाः। अत्र दत्तं हुतं जप्तं ज्ञानमक्षय-पुण्यदम्। यद्यत् प्रकीर्त्तितं नाम तैरेव परिपूर्णं च। प्रणवादिहृदन्तेन समतेऽभीष्टमुत्तमम्। भोजयेद्ब्रा-ह्मणान् योऽत्र अक्षयं फलमश्नुते। इह नानासुखं भुक्त्वा हरगौरीपुरं व्रजेत्। शोकदुःखविनाशोऽयं क-रुणानिधिरीश्वरः। निर्ममे सर्वसम्पत्त्यै पुण्यक्षेत्राणि भूतले। अकाले पुण्ययुक्तानामनेकपुण्यसाधनैः। आ-स्तिकानां भवेदत्र निवासः साधनं प्रति। तस्माद्ब्रयत्नेन कर्त्तव्यमत्र साधनमुत्तमैः"।

कालिकापु० १८अ० एकपञ्चाशत्पीठोत्पत्तिर्दृश्या।

**पीठकेलि** पु० पीठमर्दे नायकसहायभेदे त्रिका०।

**पीठगात्र** न० लेख्यव्रताङ्गाष्टदलकमलावयवभेदे व्रत०त०।

**पीठचक्र** न० पीठ इव चक्रमस्य। शकटादौ "पीठचक्रेण गोयुक्तेनेत्येके" आश्व०गृ० ४।२।६ "गोयुक्तेन पीठच-क्रेण शकटादिना" नारा०।

**पीठन्यास** पु०पीठे न्यासः। पीठदेवतानां आधारशक्तिप्रकृ-त्यादीनां प्रणवादिनमोऽन्तेन हृदये न्यासभेदे तन्त्रसारः

**पीठभू** स्त्री प्राकारसमीपस्थे भूभागे वप्रे हेमच०।

**पीठमर्द** पु० नायकसहायभेदे "दूरानुवर्त्तिनि स्यात् तस्य प्रासङ्गिकेतिवृत्ते तु। किञ्चित्तद्गुणहीनः सहाय ए-वास्य पीठमर्दाख्यः"। "तस्य नायकस्य बहुव्यापिनि प्रसङ्गागतेतिवृत्तेऽनन्तरोक्तनायकसामान्यगुणैः किञ्चि-दूनः पीठमर्दनामा सहायो भवति। यथा राम-

चन्द्रादीनां सुधीवादयः" साहित्यदर्पणे उक्तम् ।

**पीठसर्प** त्रि॰ पीठे सर्पति सृप–अच् । खञ्जे मा॰व॰३पु॰क॰। णिनि पीठसर्पिन् तत्रार्थे हारा॰ ।

**पीड** बधे विलोडने च चु॰उभ॰सक॰सेट् । पीडयति ते अपिपीडत् त । पीडा पीडनम् । धान्यादेर्मर्दने च । आ+भूषणे सक॰। आपीडयति आपीडा । अवादिपूर्वकस्तु तत्तदुपसर्गद्योत्यार्थयुक्ते विलोडने ।

**पीडन** न॰ पीड+भावे ल्युट् । १दुःखोत्पादने २शस्यादीनां मर्दने (माडा) (टेपा) ३व्यापारभेदे "गर्भोऽभिघातविषमाशनपीडनाद्यैः पक्वं द्रुमादिव फलं पतति क्षणेन" माधवकरः ।

**पीडा** स्त्री पीड–भावे भिदा॰ अङ् । १व्यथायां २दुःखे च ३कृपायां ४शिरोमाल्यायां ५सरलद्रुमे च मेदि॰ ।

**पीडित** त्रि॰पीड–क्त । १व्यथिते २मर्दिते ३स्त्रीणां करणभेदे मेदि॰"वक्षस्यार्षोधिका भल्ला दक्षकाः पीडिताङ्घ्रयः" तन्त्रसारोक्ते ४मन्त्रभेदे पु॰ भावे क्त । ५पीडायां न॰ ।

**पीत** त्रि॰पा–कर्मणि क्त । १पानकर्मणि भावे क्त । २पाने न॰ पिबति वर्णान्तरं पा–अचा॰ कर्त्तरि क्त । ३वर्णभेदे पु॰ ४तद्वति त्रि॰ अमरः । ५हरिताले न॰ मेदि॰ । पीतं पानमस्त्यस्य अच् । ६पानकर्त्तरि त्रि॰ "वनाय पीत प्रतिबद्धवत्साम्" रघुः । काव्ये वर्णनीयपीतवर्णद्रव्याणि कविकल्पलताधाससङ्ग्रानि यथा "पीतानि ब्रह्मा१ जीवेन्द्र२ गरुडे३स्वर४गजटाः६ । गौरी७ द्वापर८ गोमूत्र९ मधु१० वीररसा११ रजः १२ । हरिद्रा१३ रोचना१४ रीति१५गन्धके१६ दीप१७ चम्पके१८ । किञ्जल्कां१९ वल्कले२० शालि२१ हरिताल२२ मनःशिलाः २३। कर्णिकार२४ चक्रवाक२५ वानरौ२६ शारिका-सखम्२७ । केसर्यांशुक२८ मण्डूक२९ पराग३० कनकादयः३१ ।

**पीतक** त्रि॰ पीत+स्वार्थे क । १पीतशब्दार्थे संज्ञायां कन् । २हरिताले अमरः ३कुसुम्भे जटाधरः । ४अगुरुभेदे ५पद्मकाष्ठे ६रीतौ पित्तले ७माक्षिके ८पीतचन्दने न॰ राजनि॰ ९नन्दीवृक्षे १०पीतशाले च पु॰ रत्नमाला । ११श्योनाकभेदे १२हरिद्रुद्रुमे १३अशोकद्रुमे च पु॰ राजनि॰। पीतेन हरितालेन रक्तं "तेन रक्तं रागात्" पा॰ इत्यधिकारे "पीतात् कन्" वार्त्ति॰कन् । १४हरितालेन रक्ते त्रि॰। १५अव्यक्तराशेः संज्ञाभेदे वीजगणितम् । अव्यक्तशब्दे दृश्यम् ।

**पीतकदली** स्त्री नित्यकर्म॰। स्वर्णकदल्याम् (चाँपाकला) राजनि॰ ।

**पीतकद्रुम** पु॰ नित्यकर्म॰। हरिद्रुद्रुमे राजनि॰।

**पीतकन्द** न॰ पीतः कन्दो यस्य । गर्जरे (गाँजर) राजनि॰

**पीतकरवीरक** पु॰ नित्यकर्म॰। स्वार्थे क । पीतवर्णकरवीरवृक्षे राजनि॰ ।

**पीतकावेर** न॰कुत्सितं वेरं कावेरं पीतं कावेरं यस्मात् यस्य वा । कुत्सिताङ्गं पीतं करोति १कुङ्कुमे २पित्तले च मेदि॰।

**पीतकाष्ठ** न॰नित्यकर्म॰। पीतचन्दने पीतागुरुणि राजनि॰।

**पीतकाला** स्त्री पीता अथ च काला । आवर्त्तकलतायां राजनि॰ । [चैव पीतकुष्ठं प्रजायते" शाता॰।

**पीतकुष्ठ** न॰ नित्यकर्म॰ । पीतवर्णकुष्ठरोगे "भगिनी गमने

**पीतगन्ध** न॰पीतमथच गन्धं गन्धयुक्तम् । पीतचन्दने राजनि॰

**पीतघोषा** स्त्री नित्यकर्म॰। पीतपुष्पवत्यां घोषातक्याम् राजनि॰ । [राजनि॰।

**पीतचन्दन** न॰ नित्यकर्म॰ । कालेयकेतिप्रसिद्धे चन्दनभेदे

**पीतचम्पक** पु॰ पीतः चम्पक इव । प्रदीपे जटा॰।

**पीततण्डुल** पु॰पीतस्तण्डुलो यस्य । (काङ्गनी) १धान्यभेदे हेमच॰। २ज्योतिष्कायाम् स्त्री टाप् । राजनि॰। [ङीप् ।

**पीततुण्ड** पु॰पीतं तुण्डमस्य । कारण्डवाख्ये लिङ्गा॰ स्त्रियां

**पीततैला** स्त्री पीतं तैलं यस्याः । १ज्योतिष्मतीलतायां जटा॰ २महाज्योतिष्मतीलतायां राजनि॰ । पीतं तैलं येन राजद॰वा परनि॰। पीततैल तैलपीतं वा तैलपायिनि त्रि॰

**पीतदारु** न॰ नित्यकर्म॰ । १सरलद्रुमे रत्नमाला २देवदारुणि ३हरिद्रुद्रुमे च राजनि॰। तस्य विकारः रजतादि॰ अञ् । पैतदारव तद्विकारे त्रि॰ स्त्रियां ङीप् ।

**पीतदुग्धा** स्त्री पीतं दुग्धं यस्याः । इक्षुपरिवर्त्तनेन इक्षुरूपेण यस्या दुग्धमुत्तमर्णेन पीयते तस्याम् गवि आधिकृतगव्यां धेन्वाम् हेमच॰ ।

**पीतद्रु** पु॰नित्यकर्म॰। १सरलद्रुमे २दारुहरिद्रायाञ्च अमरः ।

**पीतन** न॰ पीतं करोति पीत–णिच्–ल्यु । १कुङ्कुमे २हरिताले ३पीतदारुणि च मेदि॰। ४प्लक्षे ५आम्रातके च पु॰ मेदि॰ स्वार्थे क । आम्रातके (आमडा) पु॰ राजनि॰ ।

**पीतनील** पु॰ "वर्णो वर्णेन" पा॰ कर्म॰ । १नीलपीतमिश्रिते हरिद्वर्णे हेमच॰ । २तद्वति त्रि॰ । [शब्दच॰ ।

**पीतपर्णी** स्त्री पीतं पर्णं यस्याः ङीप् । (विछिटी)लतायाम्

**पीतपाणि** पु॰ पीतः पाणिरस्य । रोगभेदेन पीतवर्णहस्तयुक्ते "मार्जारे निहते चैव पीतपाणिः प्रजायते" शाता॰

**पीतपादा** स्त्री पीतौ पादौ यस्याः। शारिकाखगे हेमच०।

**पीतपुष्प** त्रि० पीतं पुष्पमस्य। १पीतवर्णपुष्पयुक्ते २कर्णिकारवृक्षे पु० शब्दच०। ३चम्पकवृक्षे पु० राजनि०। ४घोषकिरट्याम् ५पिण्डीतकभेदे पु० रत्नमाला। पीतं पुष्पमस्याः अच् टाप्। ६इन्द्रवारुण्यां ७सिंहपुष्पिकाक्षुपे ८आढक्यां च स्त्री राजनि०। पीतं पुष्पं यस्याः जातित्वात् ङीप्। ९शङ्खपुष्प्यां १०सहदेव्यां ११महाकोशातक्यां १२तनपुष्यां च स्त्री राजनि०।

**पीतप्रसव** पु० पीतः प्रसवः पुष्पमस्य। पीतकरवीरे राजनि०

**पीतफल(क)** पु० पीतं फलं यस्य वा कप्। १शाखोटवृक्षे राजनि० २कमीरवृक्षे त्रिका०। [त्रिका०।

**पीतवालुका** स्त्री पीता वालुकेव चूर्णत्वात्। हरिद्रायाम्

**पीतवी(बी)जा** स्त्री पीतं वी(बी)जमस्याः। मेथिकायां राजनि०। [युक्ते भृङ्गराजभेदे राजनि०।

**पीतभृङ्गराज** पु० कर्म०। (पीतकेशरिया) ख्याते पीतवर्ण-

**पीतमणि** पु० नित्यकर्म०। पुष्परागमणौ राजनि०।

**पीतमस्तक** पु० पीतं मस्तकं यस्य। खगभेदे मेदि०।

**पीतमाक्षिक** न० नित्यकर्म०। माक्षिके राजनि०।

**पीतमुद्ग** पु० कर्म०। (सोनामुग) मुद्गभेदे हेमच०।

**पीतमूलक** न० पीतं मूलमस्य कप्। (गाजर) गर्जरे राजनि०

**पीतयूथी** स्त्री नित्यकर्म०। स्वर्णयूथ्यां राजनि०।

**पीतरक्त** न० "वर्णो वर्णेन" पा० कर्म०। १रक्तवर्णे अथच पीतवर्णे च पीतेन रक्तं शतरागम्। २पुष्परागमणौ न० राजनि०।

**पीतराग** न० पीतो रागो वर्णो यस्य। १किञ्जल्के २सिक्थे च कर्म०। ३पीतवर्णे पु० ४तद्वति त्रि०।

**पीतरोहिणी** स्त्री पीता सती रोहति रुह–णिनि ङीप्। काश्मर्याम् भावप्र०। [द्युते त्रि०।

**पीतल** पु० पीतं वर्णान्तरं लाति ला–क। १पीतवर्णे २त-

**पीतलक** न० पीतत्वेन वर्णेन कायते कै–क। पित्तले राजनि०

**पीतलोह** न० नित्यकर्म०। पित्तले राजनि०। [द्रावस्त्रयुते त्रि०

**पीतवासस्** पु० पीतं वासो यस्य। १श्रीकृष्णे हला० २हरि-

**पीतवृक्ष** पु० नित्यकर्म०। श्योनाकभेदे राजनि०।

**पीतशाल** पु० पीतं फलं शलति याति शल–अण् उपस०। असनवृक्षे (पियाशाल) अमरः।

**पीतसार** न० पीतं सारं यस्य। १पीतवर्णचन्दनकाष्ठे मलयजे शब्दच० २हरिचन्दने च ३गोमेदमणौ पु० मेदि० ४अङ्कोटवृक्षे जटा० ५तरस्के वीजके च पु० राजनि०। कप्। पीतसारक निम्बे शब्दच०। [शब्दच०।

**पीतसारि** न० पीतं सारयति सृ–णिच–इन्। स्रोतोऽञ्जने

**पीतसालक** पु० कर्म० संज्ञायां कन्। (पेयाशाल) पियालवृक्षे अमरः। [वृक्षभेदे शब्दार्थकल्प०।

**पीतस्कन्ध** पु० पीतः स्कन्धोऽस्य। हरिद्राभस्कन्धयुक्ते

**पीतस्फटिक** पु० नित्यकर्म०। पुष्परागमणौ राजनि०।

**पीतहरित** पु० "वर्णो वर्णेन" पा० १पीतवर्णे अथच हरिद्वर्णे २तद्युते त्रि० हेमच०। [द्राभमात्रे त्रि० स्त्रियां ङीप्।

**पीताङ्ग** पु० पीतमङ्गमस्य। १श्योनाकभेदे राजनि०। २हरि-

**पीताब्धि** पु० पीतोऽब्धिः समुद्रो येन। अगस्त्यमुनौ हेमच० तत्कथा भा०व० १०५अ० दृश्या।

**पीताम्बर** पु० पीतमम्बरं यस्य। १श्रीकृष्णे अमरः २शैलूषे नटे च मेदि० ३हरिद्राभवस्त्रयुक्ते त्रि० कर्म०। ४पीतवसने न०। [वर्णयुक्ते २तद्वति त्रि०।

**पीतारुण** पु० "वर्णो वर्णेन" पा० कर्म०। १पीतरक्तमिश्रित-

**पीताश्मन्** पु० नित्यकर्म०। पुष्परागमणौ राजनि०।

**पीति** पु० पा–क्तिच्। १घोटके अमरः पा–भावे क्तिन्। २पाने ३गतौ च करणे क्तिन्। ४शुण्डायाम् मेदि०।

**पीतिका** स्त्री पीतैव स्वार्थे क अतइत्त्वम्। १दारुहरिद्रायां रत्नमाला २स्वर्णयूथ्यां जटा०।

**पीतिन्** स्त्री पीतमनेन इष्टादित्वात् इनि। घोटके रायमुकुटः

**पीतु** पु० पा–पाने पा–रक्षणे वा तुन् किच्च। १वह्नौ २दिवाकरे च उज्ज्वलद० सूर्यस्य रश्मिभिर्जलस्य पानात् वह्निना स्वदह्यमानायोगुड़कलस्य पानात्तथात्वम्। ३यूथपतौ संक्षिप्तसारः।

**पीतुदारु** पु० पीतुरिव अग्निरिव सूर्याभं वा दारु यस्य। १उदुम्बरे शत०ब्रा० ३।५।२।१५ माधवः। २देवदारुणि कात्या०श्रौ० २४।३।१२ कर्कः। [स्थिरीभूते।

**पीत्वास्थिरक** त्रि० पीत्वा स्थिरः मयू० स०। पानोत्तरं

**पीथ** न० पा–पाने कर्मणि थक्। १घृते २जले च ३सूर्ये ४वह्नौ च पु० उज्ज्वलद०।

**पीथि** पु० पीति+पृषो०। घोटके क्षीरस्वामी

**पीन** त्रि० प्याय–क्त संप्रसारणे दीर्घः। १स्थूले २दृढे ३अंसले च अमरः। भावे क्त। ४स्थूलतायां न०। पीनस्य उरदेशादि अप्राप्यादि०र। पीनर पीनस्य सन्निकृष्टदेशादौ त्रि०

**पीनस** पु० पीनं पीनतां स्यति सो–क। १नासिकारोगभेदे प्रतिश्याये अमरः तद्रोगस्य निदानादि माधवकरोक्तं यथा "आनह्यते यस्य विशुष्यते च प्रक्लिद्यते धूप्यति चैव

माया। न वेत्ति यो गन्धरसांश्च जन्तुर्जुष्टं व्यवस्येत् खलु पीनसेन। तथानिलश्लेष्मभवं विकारं ब्रूयात् प्रतिश्यायसमानलिङ्गम्”। आमपीनसलक्षणं यथा “शिरोगुरुत्वमरुचिर्नासास्रावस्तनुस्वरः। क्षामः ष्ठीवति चाभीक्ष्णमामपीनसलक्षणम्”। पक्वपीनसलक्षणं यथा “आमलिङ्गान्वितः श्लेष्मा घनः खेषु निमज्जति। स्वरवर्णविशुद्धिश्च पक्वपीनसलक्षणम्”। २कर्कट्यां स्त्री राजनि० गौरा० ङीष्। [धस्तायां गवि अमरः।

**पीनोध्नी** स्त्री पीनमूधोऽस्याः ङीप् अनङ्न्त्यादेशः। पीवरोध-

**पीपर** याच्ञायां भ्वा०सक०पर०सेट्। पीपरति निरुक्तः।

**पीपरि** पु०अपि+पृ–इन् अल्लोपः दीर्घः। कुम्भवृक्षे राजनि०

**पीय** प्रीणने चौ०पर० सक० सेट्। पीयति अपीयीत् पिपीय। अयं हिंसायां निरु० ४।२५

**पीयत्नु** त्रि० पीय–हिंसायां बा० कत्नु। हिंसाशीले शब्दो क० ८।२।१५ [२रवौ ४सूके च मेदि०।

**पीलु** पु० पा–पाने कु नि०। १काके २काके च उणादिको०।

**पीयूचा** स्त्री वृक्षभेदे ततः चतुरर्थ्यां काशा० इल। पीयूचिल तत्सन्निकृष्टदेशादौ त्रि०। तस्याः विकारः ताला० अण्। पैयूच तद्विकारे त्रि०। एतत्परस्य वनस्य णत्वं पीयूचावणम्।

**पीयूष** न०पीय–ऊषन्। देवानां पेयभेदे १अमृते। नवप्रसूतायाः गोः आसप्तरात्रमवे २दुग्धे च अमरः। तत्र पेयूषमपि

**पीयूषमहस्** पु०पीयूषमिव आह्लादकं महो यस्य। सुधाकरे १चन्द्रे शब्दरत्ना० २कर्पूरे च। पीयूषरश्मिप्रभृतयोऽप्यत्र।

**पीयूषवर्ष** पु० पीयूषं वर्षति करद्वारा वृष–अण् उप०स०। १चन्द्रे २कर्पूरे ३चन्द्रालोकालङ्कारग्रन्थकारे विप्रभेदे च

**पील** रोधे भ्वा०पर०सक०सेट्। पीलति अपीलीत् पिपील।

**पीलक** त्रि०पील–ण्वुल्। १रोधके २पिपीलिकायां हेमच०।

**पीला** स्त्री पीलनाम्न्यां स्त्रियाम् तस्या अपत्यं “पीलाया वा” पा०अण् पक्षे “ढकः” इति ढक्। पैल पैलेय तदपत्ये पुंस्त्री०।

**पीलु** पु० पील–उ। १परमाणौ पीलुपाकः इति वैशेषिकादयः। पीलुपाकप्रकारः कणादसूत्रोपस्कारवृत्तौ ७।६ तत्रे दर्शनः औलुक्यशब्दे सर्वदर्शनसंग्रहोक्तं १५८७ पृ० दर्शितम्। २गजे ३अस्थिखण्डे ४तालकाण्डे ५कुसुमे च मेदि० ६शरे ७अस्थौ धरणिः। कोङ्कणदेशख्याते ८गुडफलवृक्षे राजनि०। तस्य गुणाश्च राजनि० उक्ता यथा “पीलुः श्लेष्म वायुगुल्मनाशनः पित्तदो

मतः। यत् स्वादु तिक्तं तदोष्णं त्रिदोषहरणं फलम्”। तस्य फलमण् तस्य लुक्। ८तत्फले न०।

**पीलुक** पु० पीलुरिव कायति कै–क। कृमिभेदे हेमच० स च त्रीन्द्रियः “कृमिपीलुकलूताद्याः स्युर्हि त्रिचतुरिन्द्रियाः” हेमच०।

**पीलुकुण** न० पीलूनां पाकः पील्वादि० कुणच्। पीलुपाके तस्येदम् उत्सा०अञ्। पैलुकुण तत्सम्बन्धिनि त्रि०।

**पीलनी** स्त्री पील–उन गौरा० ङीष्। मूर्वायाम् रत्नमा०।

**पीलुपत्र** पु० पीलुयुक्तं लक्षिकलितं पत्रं यस्य। मोरटालतायां राजनि०।

**पीलुपर्णी** स्त्री पीलुकलितानि पर्णान्यस्याः ङीष्। १मूर्वायाम् २बिम्बिकायाम् ३ओषधिभेदे च मेदि०।

**पीलुमूल** न०६त०। १पीलोर्मूले २शतमूल्यां स्त्री रत्नमाला ३शालपर्ण्यां भावप्र० ४तरुण्यां गवि च संक्षिप्तसारः। ५अश्वगन्धायां ६शतावर्यां च स्त्री टाप् राजनि०। तत्र दीयते व्युष्टा०अण्। पैलुमूल। तत्र देये। “तेनैकदिक्” पा० अधिकारे तसिः। पीलुमूलतस् पीलुमूलैकदिशि अव्य०।

**पीलुवह** त्रि०पीलुं वहति वह–अच् पील्वादीनां पर्युदासात् “इको वहे” पा० न दीर्घः। पीलुवाहिनि जवादौ।

**पील्वादि** पु०पाके कुणच्प्रत्ययनिमित्ते शब्दगणे स च पा० ग०सू०उक्तो यथा “पीलु कर्कन्धू शमी करीर कुवल बदर अश्वत्थ खदिर”।

**पीव** स्थौल्ये भ्वा०पर०अक०सेट्। पीवति अपीवीत् पिपीव।

**पीवन्** त्रि० प्यै–कनिप् सम्प्र०दीर्घः। १स्थूले अमरः। २बलवति त्रि० ३वायौ पु० संक्षिप्तसारः।

**पीवर** त्रि०प्यै–ष्वरच् सम्प्र० दीर्घः। १स्थूले उपचितावयवयुक्ते ( मोटा ) अमरः स्त्रियां ङीप्। तामसमन्वन्तरे २सप्तर्षिभेदे पु० मार्कं०पु० ७४अ०। [इत्यादि।

**पीवस्** त्रि० पीव–स्थौल्ये असुन्। स्थूले। पीवान् पीवांसौ

**पीवा** स्त्री पी–पाने बा० व। जले संक्षिप्तसारः।

**पीवोपवसन** त्रि० पीवसः उपवसनं समीपस्थितिरस्य पृषो० सलोपः। स्थूले यजु० २१।४१ वेददीपः।

**पुंयोग** पु० ६त०। पुरुषयोगे “लक्ष्मीः पुंयोगमाशंसुः”।

**पुंराशि** पु० कर्म०। विषमे राशौ मेषमिथुनसिंहादौ।

**पुंलिङ्ग** न० ६त०। १पुरुषचिह्ने शिश्ने। पुंस इव लिङ्गमस्य। २पुंस्त्वबोधके शब्दभेदे पु०।

**पुंवत्** अव्य०पुंस इव वति। पुंसा तुल्ये। तस्य भावः। पुंवद्भावः पुंलिङ्गस्य शब्दस्येव भावे पुंस इव रूपे।

**पुंवत्स** पु० कर्म०। १पुरुषरूपे वत्से। पुमान् वत्सो यस्याः। २पुंरूपवत्सयुक्तायां गव्यादौ स्त्री काला० ङी०४।१।४१

**पुंवृष** पु० पुमानिव वर्षति वृष–क। छछुन्दरे (छुँचा) शब्दमा०

**पुंश्चली** स्त्री पुंसो भर्त्तुः सकाशात् चलति पुरुषान्तरं गच्छति अच् गौरा० ङीष् पुंसोऽन्त्यलोपे अम्परे खयि रुत्वस्य "संपुंकानाम् सः" वा० सः श्चुत्वम्। १असत्यां स्त्रियाम् अमरः। उपचारात् २पारदारिकपुरुषेऽपि। "अरक्ष्य-मायुर्नवतिर्विच्छिन्नाभिश्च पुंश्चलाः" मत्स्यपु० ६६अ०। पुंश्चलीनिन्दा ब्रह्मवै०पु० श्रीकृष्णजन्मख० २१।२४।२२अ० यथा "अहो कोऽवेद भुवने दुर्ज्ञेयं पुंश्चलीमनः। पुंश्चल्यां यो हि विश्वस्तो विधिना स विडम्बितः। वह्निरूपतम वचसा धर्मेण च्छलकेन च। वाञ्छितं नूतनं प्राप्य विसृजति पुरातनम्। सदा स्वकर्मसाध्या या को वा तस्याः प्रियोऽप्रियः। दैवे कर्मणि पैत्ये च पुत्रे बन्धौ च भर्त्तरि। दारुणं पुंश्चलीचित्तं सदा क्षुरधार क-र्मणि। प्राणाधिकं रतिज्ञं साऽमृतदृष्ट्या हि पुंश्चली। रतप्रदं रतिविज्ञं विषदृष्ट्या हि पश्यति। सर्वेषां स्वजनस्त्येव पुंश्चलीनां न कुत्रचित्। दारुणा पुंश्चली जातिर्नरजातिश्च एव च। निष्कृतिः कर्मभोगान्ते सर्वेषामस्ति निश्चितम्। न पुंश्चलीनां विप्रेन्द्र! याव-च्चन्द्रदिवाकरौ। अन्यासां कामिनीनाञ्च कीटं हन्तुञ्च या दया। सा नास्ति पुंश्चलीनान्तु कान्तं हन्तुं पुरा-तनम्। रतिज्ञं नूतनं प्राप्य विषतुल्यं पुरातनम्। कान्तं दृष्ट्वा हिनस्त्येव सोपायेनावलीलया। पृथिव्यां यानि पापानि पुंश्चलीष्वेव भारते। तिष्ठन्ति ताभ्यो न पराः पापिष्ठाः सन्ति केचन। पुंश्चलीपरिपक्वान्नं सर्व-पातकमिश्रितम्। दैवे कर्मणि पैत्ये च देयं न च तथा जलम्। अन्नं विष्ठा पयो मूत्रं पुंश्चलीनाञ्च निश्चि-तम्। दत्त्वा पितृभ्यो देवेभ्यो भुक्त्वा च नरकं व्रजेत्। शतवर्षं कालसूत्रे पचत्येव हुताशने। घोरान्धकारे कृमयस्तद्दन्ति दिवानिशम्। पुंश्चल्यन्नञ्च यो भुङ्क्ते दैवाद्यदि नराधमः। सप्तजन्मकृतं पुण्यं तस्य नश्यति निश्चितम्। आयुःश्रीयशसां हानिरिह लोके परत्र च। तस्माद्यत्नाद्वर्जनीयं पाकपात्रं कलङ्ककम्। पुंश्च-लीदर्शने पुण्यं यात्राविघ्नर्भवेद्ध्रुवम्। स्पर्शने च महापापं तीर्थस्नानाद्विशुध्यति। स्नानं दानं व्रतञ्चैव जपश्च देवपूजनम्। निष्फलं पुंश्चलीनाञ्च भारते जीवनं वृथा"। "अहो सर्वैः परित्याज्या पुंश्चली च विशे-षतः। धनायुःप्राणयशसां नाशिनी दुःखदायिनी। स्वकार्य्यतत्परा शश्वत् परकार्य्यविघातिनी। निष्ठुरा नरघातिन्यः सर्वापद्बीजरूपिणी। विद्युद्दीप्तिर्जले रेखा लोभानुमैत्री यथा भवेत्। परद्रोहाद्यथा सम्पत् कुलटा प्रेम तत्परम्। सर्वेभ्यो हिंस्रजन्तुभ्यो विपद्बीजा सदैव सा। योविन्नसेव्यां संमूढो विपत्तस्य पदे पदे"।

**पुंश्चलू** स्त्री पुंसु चलति चल–कू पुंश्चलीवत् सन्धिकार्यम्। पुंश्चल्यां स्त्रियाम् "कामस्य पुंश्चलूम्" यजु०३०।५ वेददी०

**पुंश्चिह्न** न० ६त० पुंश्चलीवत् सन्धिकार्यम्। पुरुषचिह्ने शिश्ने हेमच०।

**पुंस** मर्दे चु० उभ०सक० सेट्। पुंसयति ते अपुपुंसत् त।

**पुंसवन** न० पुमान् सूयते अनेन सू–करणे ल्युट्। स्त्रीणां गर्भ-पालसंस्कारभेदे तच्च कर्म द्विविधम् यथाह ज्यो०त०गोभिलः "तृतीयस्य गर्भमासस्यादिमदेशे पुंसवनस्य कालः"। गर्भे सति तृतीयमासस्य आदिमदेशे दशमदिनाभ्यन्तरे ज्यो-तिःशास्त्रोक्तकाले पुंसवनं कार्य्यम्। "प्रातः सशिरस्का-प्लुता पश्चादग्नेरुदगग्रेषु कुशेषु प्राच्युपविशति" गो०। आ-प्लुता स्नाता पश्चात् पश्चिमदिशि प्राङ्मुखी उपविशति "पत्युर्दक्षिणतः पाणिपादस्थायोपविशति" इत्यन्यत्र दर्श-नात्। पश्चादित्यभिधानात् अग्निस्थापनं लभ्यते। तत् साधकत्वाय "आज्यं हव्यमनादेशे जुहोतिषु विधीयते। मन्त्रस्य देवताऽलाभे प्रजापतिरिति स्थितिः" इति छन्दोग-परिशिष्टोक्तद्रव्यादि लभ्यते। जुहोतिषु हवनेषु मन्त्रस्था-नादेशे प्रजापतिः प्राजापत्योमन्त्रः। स च मन्त्रः व्या-हृत्यात्मकः। ततश्च विरूपाक्षजपान्तां कुशण्डिकां समाप्य समित्प्रक्षेपादिमहाव्याहृतिभिर्होमं कृत्वा प्रजापतिदेव-ताकसमस्तमहाव्याहृतिहोमं कुर्य्यात्। ततः प्रकृतं कर्म। तत्र गोभिलः "पश्चात् पतिरवस्थाय दक्षिणेन पाणिना दक्षिणमंसमन्ववमृश्यानाहितं नाभिदेशम-भिमृशेत् पुमांसौ मित्रावरुणावित्येतयर्चा"। उपवि-ष्टाया वध्वाः पश्चिमदेशं गत्वावस्थितः पतिर्दक्षिण-हस्तेन तस्या दक्षिणस्कन्धमवमृश्य वस्त्राद्यव्यव-हितं नाभिं पुमांसावित्यनेन मन्त्रेण स्पृशेत्। अथ अनन्तरं वामदेव्यगानान्तं समापयेत्। यदि लग्नको-देशाचारात् कुलाचाराद्वा एकस्मिन् दिने द्वितीयपुंस-वनमपि क्रियते तदा सकृदेकं परिसमूहनम्। "इध्मो-बर्हिःपर्युक्षणमाज्यभागः सर्वेभ्यः समवदाय सकृदेव सौविष्टकृतं जुहोतीति" गोभिलसूत्रान्तरात्। उभय०

कर्मान्ते वामदेव्यगानाद्युदीच्यं कर्म कर्त्तव्यम् । अतएव त्वरायां दिनद्वये भद्रभाव्यभवदेवयोरेकदिने उभयकरणं लिखितम् । "अथापरम्" गो० अथ प्रथमपुंसवनसमाप्तिकालानन्तरं तदानीमपरमव्यत् पुंसवनं कार्य्यम् "प्रागुदीच्यां दिशि न्यग्रोधशुङ्गामुभयतःफलामस्रामामकृमिपरिसृप्तां त्रिःसप्तभिर्यवैर्माषैर्वा परिक्रीय उत्थापयेत् । यद्यसि सौमी सोमाय त्वा राज्ञे परिक्रीणामि, यद्यसि वारुणी वरुणाय त्वा राज्ञे परिक्रीणामि, यद्यसि वसुभ्यः वसुभ्यस्त्वापरिक्रीणामि, यद्यसि रुद्रेभ्यो रुद्रेभ्यस्त्वा परिक्रीणामि, यद्यसि आदित्येभ्य आदित्येभ्यस्त्वा परिक्रीणामि, यद्यसि मरुद्भ्यो मरुद्भ्यस्त्वा परिक्रीणामि, यद्यसि विश्वेभ्यो देवेभ्यस्त्वापरिक्रीणामि ओषधयः सुमनसो भूत्वा अस्यां वीर्य्यं समाधत्त इयं कर्म करिष्यतीत्युत्थाप्य तृणैः परिधायाहृत्य वैहायसीं निदध्यात्" स्०। वटतरोः पूर्वस्यां दिशि शुङ्गा मुकुलितपत्रः । "लतायास्तु स्तबो गूढः शुङ्गेति परिकीर्त्यते । पतिव्रता व्रतवती ब्रह्मबन्धुस्तथाऽश्रुतः" इत्युक्तेः । अश्रुतो वेदहीनः तां फलयुक्तयुतामस्रामां कृमिभिरव्याप्तां त्रिराहृत्तैः सप्तभिर्यवैर्माषैर्वा त्रिराहृत्तैः क्रीत्वा गृह्णीयात् । क्रयस्तु वटस्वामिनो, न स्यात् तेन द्रव्यस्वामिने यवा माषा वा देयाः यद्यसीत्यादि सप्तभिर्मन्त्रैः । प्रतिमन्त्रञ्च शुङ्गक्रयम् दद्यात् । ओषधय इति मन्त्रेणोत्थाप्य च तृणैर्वेष्टयित्वा आनीयाकाशस्थां निदध्यात् । दृषदं प्रक्षाल्य ब्रह्मचारी व्रतवती वा ब्रह्मबन्धुः कुमारी वा अप्रत्याहरन्ती पिनष्टि दृषदं शिलां पेषणार्थत्वेन स्पृशतां कुमारी अनूढा व्रतवती पतिव्रता अप्रत्याहरन्ती तिर्य्यक्प्रक्षेप पेषणमकुर्वती किन्तु ऋजुप्रक्षेप पुनःपुनः पेषणं कुर्वती प्रातःस्नानसमाप्ता उदगग्रेषु कुशेषु प्राक्शिराः संविशति शेते शेषं सुगमम् । "पश्चात् पतिरवस्थाय दक्षिणस्य पाणेरङ्गुष्ठेनोपकनिष्ठयाऽङ्गुल्या अभिसंगृह्य दक्षिणनासिकायां तस्या नयेत् । पुमानग्निः पुमानिन्द्र इत्येतयर्चा" स्० । पश्चादवस्थाः पश्चिमदिशि उपकनिष्ठयानामिकया तेनाङ्गुष्ठानामिकाभ्याम् । पिष्टां शुङ्गां वस्त्रबद्धां गृहीत्वा निष्पीड्य दक्षिणनासारन्ध्रे क्षिपेत् पुमानग्निरिति मन्त्रेण । अथ अनन्तरं दक्षिणाद्युदीच्यं कर्म कुर्य्यात् । पुंसवनकर्माधानकर्तृत्वविधानेऽन्येनापि कर्त्तव्यम् "अष्टौ संस्कारकर्माणि गर्भाधानमृते स्वयम् । पिता कुर्य्यात्तदन्यो वा तस्याभावेऽपि तत्क्रमात्" इति स्मृतेः । भुजबले "शुक्लवस्त्रं करे कृत्वा स्थिरे तत्रासने तथा । गृह्योदितेन होमञ्च शान्तिञ्चैव च कारयेत् । कर्णान्तरे च संपश्य जीवं जातीञ्च विक्रमम् । सुवर्णं रजतं हेम दद्यात् स्तनतटान्तरे । तत्प्रभृति नदीतीरं देवखातोदकं त्यजेत् । अभ्याटनं तरोर्मूलं तथा देवगृहं त्यजेत्" ।

पुंसवन मुहूर्त्तादिकं मु०चि०पी० उक्तं यथा

"पूर्वोदितैः पुंसवनं विधेयं मासे तृतीये त्वथ विष्णुपूजा" मु०चि० "पूर्वोदितैरिति । पूर्वं सीमन्तोन्नयने उदितैः प्रोक्तैस्तिथिवारनक्षत्रलग्नैरुपलक्षिते तृतीये मासि पुंसवनाख्यं कर्म विधेयम् । पुमान् सूयतेऽनेन कर्मणेति व्युत्पत्त्या पुंसवनकर्मणा पुंस्त्वहेतुना । यदाह शौनकः "व्यक्ते गर्भे तृतीये तु मासे पुंसवनं भवेत् । गर्भेऽव्यक्ते तृतीये चेत् चतुर्थे मासि वा भवेत्" नृसिंहः "सीमन्तोन्नयनप्रोक्ततिथिवासरराशिषु । पुंसवं कारयेद्विद्वान् सहैवैकदिनेऽथ वा" इति । विशेषमाह वशिष्ठः "कुर्य्यात्पुंसवनं प्रसिद्धविषये गर्भे तृतीयेऽथ वा मासि स्त्रीतनौ तुषारकिरणे पुष्येऽथ वा वैष्णवे । हित्वा कर्कटकं त्वयुग्मभवनाप्यन्यत्र रिक्ते तिथौ शुद्धे नैधनधाम्नि शुक्रशशभृद्दिवान्निशां वासरे" इति । नैधनधाम्नि अष्टमस्थाने शुद्धे सर्वग्रहरहिते । यदाह वशिष्ठः "अष्टमस्था ग्रहाः सर्वे नेष्टास्तेऽत्र शुभावहाः । एवं सम्यक् परीक्ष्यैव कुर्य्यात्पुंसवनक्रियाम्" इति । वारास्तत्र सौम्यग्रहाणामुक्ताः । वृहस्पतिरत्र विशेषमाह "गुरुशुक्रबुधेन्दूनां द्रेक्काणादिवलांशकाः । तेषामुदयहोराश्च पुंसवेऽतिशुभावहाः" इति अन्यैस्तु श्रीपत्यादिभिः पुंवारा एव प्रशस्ता अभिहितास्तत्फलान्याह गर्गः "सौम्ये मृतप्रजा मन्दे स्यात् वन्ध्या च भार्गवे । सोमे दुग्धविहीना स्यात् शेषाः सर्वार्थसिद्धिदाः" इति । अत्र वचनद्वयप्रामाण्याद्विकल्पः । केचित्तु यदा तृतीये मासि पुंसवनं चिकीर्षितं तदा सौम्यवारा एव ग्राह्याः । यदा तु चतुर्थे मासि गर्भस्य व्यक्तत्वात् पुंसवनं चिकीर्षितं तदा पुंवारा एव ग्राह्या इत्याहुः । नक्षत्राणि अत्र पुंनामानि ग्राह्याणि तानि "श्रवणः सकर" इति श्रीपतिनोक्तानि । वशिष्ठेन तु पुंनामान्यभिहितानि यथा

"पुंनाम श्रवणं तिष्यः स्वाती हस्तः पुनर्वसुः । मूलं प्रोष्ठपदं चानुराधा मृगशिरोऽश्विनी" । विशेषमाह समुच्चयः । "हस्ताद्वीतित्रमूलानि सौम्यो विष्णुः पुन-

वेद्यः। प्रोष्ठपदाद्वयं प्रोक्तमाषाढद्वयमेव च। अश्विनि कथितान्येव धिष्ण्यान्येकादशैव तु। स्वातौ तथा मघायां च रेवत्यां फल्गुनीद्वये। चाश्विन्यां चैव मघले यदा पुंसवनं भवेत्। नरः सम्पद्यते दैवाद्यदा स्यात् हतलग्नः। लुब्धोऽलसतनुः क्रूरो नारी चेत् कुलटा भवेत्। शेषाणि दश धिष्ण्यानि निन्दितानि विशेषतः" तदेतयोर्हि वराहयोर्वाक्ययोर्देशाचारतो व्यवस्था। तत्र वशिष्ठवाक्येन दाक्षिणात्याव्यवहरन्ति। प्राच्यास्तु कालोक्तवाक्येन। अथ जन्मशुद्धिमाह कालोत्तरः "मीनद्वयिककुम्भेषु चापमोक्तिं हकन्यकाः। उक्ताः पुंसवनादौषु सुतपुत्रादिवाञ्छया। केन्द्रत्रिकोणभवनेषु शुभस्थितेषु पापेषु षट्त्रिदशलाभगतेष्वस्थितेषु। जीवेन्दुभानुभृगुभूमिजमन्दिरेषु लग्नेषु लग्नपरिशुद्धशुभांशकेषु"। अत्रापि स्त्रीपुंसयोश्चन्द्रबलमावश्यकमित्याह वशिष्ठः "अपि पुंसवनं कार्यं दम्पत्योरनुकूलभे। जन्मादि वर्जयेद्राशिं चांशकं विपदादिषु" इति पी०धा०। "कुर्यात् पुंसवनं सुयोगकरणे नन्दे समद्रे तिथौ माङ्गल्याङ्गभेश्वरेषु न दिने वेधं विनेन्दौ शुभे। अन्तर्गते नवपञ्चकण्टकगते सौम्ये शुभे दृष्टिषु स्त्रीयुद्धा भटयुग्म कृष्णगुरुभेवृत्तस्तु मावतये" ज्यो०त०। व्यादिने पुंमहवारे। वेधो दशयोगभङ्गः। दृष्टिरुपचयनस्थानम्। अप्। पुंसवोऽप्यत्र पु०।

पुंसवनव्रतम् भाग० ६स्कन्धे १९अ० "शुक्ले मार्गशिरे पक्षे योषिद्भर्तुरनुज्ञया। आरभेत व्रतमिदं सार्वकामिकमादितः" इत्युपक्रम्योक्तं दृश्यम्। [तस्मिन् सि०कौ०।

**पुंसानुज** पु० पुंसानुजः अलुकस०। यस्यानुजः पुमान्

**पुंस्कामा** स्त्री पुमांसं कामयते कामि–अण् पुंसोऽलुकोपि हत्वे "संपुंकानामिति" वा० रोः सः। पुरुषकामायां स्त्रियाम्। [कोकिले कुमा० ३।२२।

**पुंस्कोकिल** पु० कर्म०। पुंस्कामावत् स्त्रीकोकिलम्। पुरुष-

**पुंस्त्व** न० पुंसोभावः त्व स्वतन्त्वे। १पुरुषत्वे तदुपनिश्चिते २शुक्रे वीर्ये हेमच०। [राजनि०।

**पुंस्त्वविग्रह** पु० पुंस्त्वस्य शुक्रस्येव विग्रहोऽस्य। भूतृषे

**पुक** ड्ड पु–बा० कक्। पविले तस्मादूरदेशादि प्रेक्षा० इनि। पुकिन् तद्दर्शिकदेशादौ।

**पुक्कश(स)** पुंस्त्री०पुक् कुत्सितं कशति कश–गतौ अच् पृषो० वा शः। १चण्डाले २अधमे लि०अमरः "न्दपायां न्द्रज्ञंकमोज्ज्ञातः पुक्कश(स) उच्यते" उशनसोक्ते ३संकीर्ण-जातिभेदे स्त्रियां जातित्वात् ङीष्। ङीषन्तः ४कालिकायां ५नीलद्रामोषधौ च मेदि०।

**पुंचीर** न० पुंप्रियं चीरम् शा०त०। स्वयः अमूपरत्वाभावात् न णः। पुरुषप्रिये चीरे। [अमरः।

**पुङ्ख** पु०न० पुमांसं खनति खन–ड। १बाणमूले २पुष्पाले

**पुङ्खतीर्थ** न० रामकृते तीर्थभेदे शिवपु०।

**पुङ्ग** पु० पूग–पृषो०। समूहे शब्दच०।

**पुङ्गव** पु० पुमान् गौः कर्म+पच् समा०। १वृषे २ऋषभौषधौ च मेदि० उत्तरपदस्थः श्रेष्ठवाचकः। यथा नरः पुङ्गव इव उपमितसमासवाक्यम्। नरपुङ्गव नरश्रेष्ठार्थे।

**पुङ्गवकेतु** पु० पुङ्गवः वृषः केतुरस्य। वृषध्वजे शिवे।

**पुच्छ** प्रमादे भ्वा०पर०सक० सेट्। पुच्छति अपुच्छीत् पुपुच्छ रायमुकुटः।

**पुच्छ** पु०न०अर्द्धर्चा०। पुच्छ–अच्। १लाङ्गूले अमरः। २पश्चाद्भागे न०मेदि० ३शोभवल्लाङ्गूले ४कलापे च पु०शब्दादि० बहुव्रीहौ एतदन्तात् ङीष् कबरपुच्छी।

**पुच्छकण्टक** पु० पुच्छे कण्टको यस्य। वृश्चिके हेमच०।

**पुच्छटि(टी)** स्त्री पुच्छ–अटि वा ङीप्। अङ्गुलिमोटने (आङ्गुलमटकान) त्रिका०।

**पुच्छदा** स्त्री पुच्छमिव दायति दै–क। लक्ष्मणाकन्दे राजनि०

**पुच्छण्डक** पु० तक्षकवंश्ये नागभेदे भा०आ० ५७अ०

**पुच्छिन्** पु० पुच्छ+अस्त्यर्थे इनि। १कुकुटे शब्दच० २अर्कवृक्षे च राजनि०। ३लाङ्गूलयुक्ते त्रि०।

**पुञ्ज** पु० पिजि–अच् पृषो०। वक्रत्वा पुमांसं जयति जि–ड वा। राशौ चये अमरः।

**पुञ्जातुक** पु० वृक्षभेदे तारा०।

**पुञ्जि** पु० पिञ्जयति पिजि–हिंसाबलदाननिकेतने इन् पृषो०। समूहे। तत्र निर्वृत्त स्वा–क। अस्वाञ्व्यादिना प्रत्ययम्। पुञ्जिष्ठा पक्षिपुञ्जघातके यजु० १६।२७।

**पुञ्जिकास्तना** स्त्री अप्सरोभेदे मार्क०पु० ५४अ०।

**पुञ्जिकास्थला** स्त्री अप्सरोभेदे यजु० १५।१५ वेददी०।

**पुञ्जिल** पु० पिजि–बा० इल पृषो०। पिञ्जले (पाँज) तैत्ति० ६।१।१।८। [पुपोट।

**पुट** दीप्तौ चक०चूर्णने सक० चुरा०उभ० सेट्। पोटयति-ते

**पुट** श्लेषे तु०कु०पर०सक० सेट्। पुटति अपुटीत् पुपोट।

**पुट** संसर्गे अद०चु०उभ०सक०सेट्। पुटयति ते अपुपुटत् त।

**पुट** न०पुट–क। १जातीफले राजनि० २उपर्य्युपरिभावापन्नेक मृदादिकपात्रद्वयेन निर्मिते औषधपाकपात्रभेदे च पु०

**पुटोटज** न० पुटं संश्लिष्टमुटजमिव । श्वेतच्छत्रे त्रिकाण्डशेषः ।

**पुटोदक** पु० पुटं संश्लिष्टमुदकं यत्र, पुटे कपालाकारफलभेदमध्ये उदकं वा यस्य । नारिकेले हारा० ।

**पुट्ट** अनादरे चु०उभ०सक० सेट् । पुट्टयति-ते अपुपुट्टत्-त ।

**पुड** मर्दने भ्वा०पर०सक० सेट् इदित् । पुण्डति अपुण्डीत् ।

**पुण** धर्माचरणे तु०पर०सक०सेट् । पुणति अपोणीत् पुपोण ।

**पुण्ड** पु० पुडि—अच् । तिलके जटा० ।

**पुण्डरिन्** पु० पुण्डं तिलकमृच्छति ऋ—णिनि शक० । (पुण्डरिया) ख्याते मांसपर्णीतुल्यपत्रे क्षुपभेदे शब्दर० ।

**पुण्डरीक** न० पुडि—ईक नि० । १श्वेतपद्मे २अग्निकोणस्थे ३दिग्गजे पु० ४व्याघ्रे पुंस्त्री० अमरः स्त्रियां जातित्वात् ङीष् । ५श्वेतच्छत्रे ६भेषजे च न० । ७आम्रे ८राजिलसर्पे ९हस्तिज्वरे पु० हेमच० । १०दमनकवृक्षे राजनि० । ११कमण्डलौ १२श्वेतवर्णे अनेकार्थकोषः १३श्वेतवर्णवति त्रि० १४कुष्ठभेदे पु० । "सश्वेतं रक्तपर्यन्तं पुण्डरीकदलोपमम् । सोत्सेधञ्च सरागञ्च पुण्डरीकं प्रचक्षते" माधवकरः । १५कोषकारभेदे पु० मेदि० ।

**पुण्डरीकप्लव** पुंस्त्री० पुण्डरीकमिव प्लवते जले प्लु—अच् । सुश्रुतोक्ते संघातचारिणि खगभेदे स्त्रियां जातित्वात् ङीष् । [जलायुकाभेदे सुश्रुतः ।

**पुण्डरीकमुखा** स्त्री पुण्डरीकमिव मुखं यस्याः । निर्विषे

**पुण्डरीकाक्ष** पु० पुण्डरीकमिवाक्षि यस्य षच् समा० हृदयपुण्डरीकम् अश्नोति अश—व्याप्तौ अच् उप०स० वा । १विष्णौ "अमोघः पुण्डरीकाक्षः" विष्णुसं० "हृत्पुण्डरीकपुरमध्यसंस्थितम्" श्रुतेस्तस्य तथात्वम् भाष्यम् । २पुण्डर्य्ये (पुण्डरिया) ख्याते क्षुपे शब्दच० ।

**पुण्डरीयक** न० पुण्डरीकवाचरति पुण्डरिन्+आचारे क्यच् ततः ण्वुल् । १स्थलपद्मे शब्दच०२प्रपौण्डरीके राजनि०

**पुण्डर्य्य** न० पुण्डयति पुडि—खण्डने अच् तस्माय्यं प्रधानम् शक० । (पुण्डरिया) ख्याते मांसपर्णीतुल्यपत्रे क्षुपभेदे अमरः ।

**पुण्ड्र** पु०पुडि—भेदने रक् । (पुँडिया) १इक्षुभेदे अमरः । इक्षुशब्दे दृश्यम् अत्र पुण्ड्रकादौ इक्षुभेदतुल्याकारतया प्रयोगः २दैत्यभेदे ३अतिमुक्तके ४चित्रके ५कृमौ ६पुण्डरीके ७देशभेदे पु० मेदि० । स च देशः बृ० १४अ० "उदयगिरिभद्र गौडकपौण्ड्रोत्कलकाशिमेकलाम्बष्ठाः" पूर्वस्यामुक्तः । तेन तस्य प्राक्स्थत्वात् नगरान्तत्वे द्विपदवृद्धिः पौण्ड्रनागर तत्र भवे त्रि० "पुण्ड्रः कलिङ्गश्च तथा वाले च जलसज्यते" हरिवं० ३१दअ० सोऽभिजनोऽस्य तस्य राजा वा अण् । पौण्ड्र पित्रादिक्रमेण तद्देशवासिनि तन्नृपे च । बहुत्वे तस्य लुक् । "सूतेमागधपुण्ड्रैश्च गीयमानस्ततस्ततः" हरिवं०३११अ० । ८तिलकवृक्षे हेमच० । ९सुखसूचो राजनि० । स्वार्थे क । पुण्ड्रक माधवीलतायाम् अमरः । इक्षुभेदादौ च ।

**पुण्ड्रकेलि** पु० पुण्ड्रः इक्षुभेदः केलिः केलिसाधनमस्य । गजे शब्दमाला । तस्य इक्षुप्रियत्वात् तथात्वम् ।

**पुण्य** न० पू—ड्यत् । १शुभादृष्टे धर्मे २तद्वति त्रि०अमरः । ३शोभनकर्मान्विते ४पावने ५सुन्दरे च त्रि० हेमच० ६सुगन्धौ त्रि० जटाध० । लग्नात्अधिके ७नवमस्थाने ज्यो०त० नील०ता० उक्ते वर्षलग्नाधीने ८सहमभेदे पुण्यसहमशब्दे दृश्यम् । धर्मरूपपुण्यस्य गङ्गास्नानादिजन्यं कर्मनाशाजलस्पर्शनाशाच्च । कीर्त्तनादपि तस्य नाशस्तथा "इष्टं दत्तमधीतं वा विनश्यत्यनुकीर्त्तनात् । श्लाघानुशोचनाभ्याञ्च भग्नतेजो विभिद्यते । तस्मादात्मकृतं पुण्यं वृथा न परिकीर्त्तयेत्" शु०त० देवलोक्तेः । यागदानाध्ययनादीनामाशुविनाशित्वात् तज्जन्यं पुण्यमेव विनश्यतीति बोध्यम् । तस्मादात्मकृतं पुण्यमित्युत्तरत्र निर्देशाच्च । तत्र प्रारब्धभिन्नानामेव तत्त्वज्ञाननाश्यत्वम् प्रारब्धपुण्यानां तु भोगादेव क्षयः "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति श्रुतेः "तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते" इति श्रुतेः । "पुण्यश्च पुष्करश्चैव आधानाक्ष्यस्तथैव च । तुल्याहल्या भवन्त्येते नित्यं द्वादश राशयः" ज्यो०त० उक्ते ९मेषकर्कटतुलामकररूपे राशौ पु० ।

**पुण्यक** न० पुण्याय कायति कै—क । १पुण्यार्थे उपवासादौ व्रते हरिवं०१२६अ० उक्ते २व्रतभेदे । अन्यच्च पुण्यकव्रतं ब्रह्मवै०पु० ३।४अ० उक्तम् दृश्यम् । २विष्णौ पु० "पूर्णः पूरयिता पुण्यः" विष्णुस० "श्रवणेन सर्वेषां पापनाशनेन पवित्रतासाधनत्वात् पुण्यः" भाष्यम् ।

**पुण्यकर्म्मन्** न० पुण्यजनकं कर्म । १पुण्यजनके कर्मणि । पुण्यं कर्म यस्य । २पुण्यकर्मकारिणि त्रि० भा० शा० २९९अ० ।

**पुण्यकाल** पु० पुण्यनिमित्तं कालः कालभेदः । रवेः स्थिरसंक्रान्तौ रव्यादीनां चरसंक्रान्तौ च विहितस्नानदानादौ पुण्यजनके कालभेदे तत्र रवेः स्थिरसंक्रान्तिपुण्यकालनिर्णयः स्मृ०सि०रत्ना० दर्शितो यथा

"अर्कमानकलाः षष्ट्या गुणिता भुक्तिभाजिताः । तदर्द्धनाड्यः संक्रान्तेरर्वाक् पुण्यं तथापरे" सू०सि० "सूर्य्यस्य बिम्बप्रमाणकलाः षष्ट्या गुणिताः सूर्य्यगत्या भक्तास्तस्य फलस्यार्द्धं तत्संख्याका घटिका इत्यर्थः । संक्रान्तेः सूर्य्यस्य राशिप्रवेशकालादित्यर्थः । अर्वाक् पूर्व्वं पुण्यं स्नानादिधर्म्मकृत्ये पुण्यघटिकाः पुण्यवृद्धिकारिकाः । अपरे संक्रान्त्युत्तरकाले तथा स्नानादिधर्म्मकृत्ये पुण्यवृद्धिदा इत्यर्थः । अत्रोपपत्तिः । सूर्य्यबिम्बकेन्द्रस्य राश्यादौ सञ्चरणकालः संक्रमणकालस्तस्य सूक्ष्मत्वेन दुर्ज्ञेयत्वात् स्थूलकालः कोऽप्यभ्युपेयः स तु राश्यादौ बिम्बसञ्चरणरूपोऽङ्गीकृतो बिम्बसम्बन्धात् । अतः सूर्य्यगत्या यदि षष्टिसावनघटिकास्तदा सूर्य्यबिम्बकलाभिः का इत्यनुपातानीता बिम्बघटिकाः संक्रान्तिकालः स्थूलः प्राङ्नेमिसञ्चरणकालात् पश्चिमनेमिसञ्चरणकालपर्य्यन्तं तदर्द्धं घटिका व्यासार्द्धघटिका इति संक्रान्तिकालात् ताभिः पूर्व्वमपरस्मिन् काले प्रागपरनेम्योः क्रमेण सञ्चरणात् पूर्व्वोत्तरकाले पुण्या इति" रङ्ग० । स च सौरमानेन "सौरेण द्युनिशोर्मानम्" इत्युपक्रमे "संक्रान्तेः पुण्यकालता" इति तत्रोक्तेः । तत्र संक्रान्तिविशेषे कालविशेषस्य पुण्यपुण्यतरत्वादिकं समपर्कं कालमाधवीये निर्णीतं यथा शातातपः "संक्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः । तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि ॥ रविसंक्रमणे पुण्ये न स्नायाद् यदि मानवः । सप्तजन्मसु रोगी स्याद्दुःखभागी च जायते" इति । स्नानदानाद्यङ्गभूते संक्रान्तिकाले मुख्यकल्पस्यासम्भवादनुकल्प एवादर्त्तव्यः । तदाह देवलः "संक्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः । तद्योगादप्यधश्चोर्द्ध्वं त्रिंशन्नाड्यः पवित्रिताः" इति दैवाव्यवधानादत्यन्तसंश्लिष्टयोः पूर्व्वोत्तरराश्योर्मध्ये सूर्य्यः पूर्व्वराशिं परित्यज्य यावत्कालमेतेनोत्तरराशिं प्रविशति स देशो योगदृष्टिं विना मांसदृष्ट्या दुर्लक्ष्यः । अतोऽनुष्ठाने मुख्यसंक्रान्तिकालासम्भवात् संक्रान्तिसम्बन्धिनौ पूर्व्वोत्तरकालौ ग्रहीतव्यौ । संक्रान्तेः पूर्व्वोत्तरयोरेकैकस्मिन् त्रिंशत् घटिकाः पुण्या इति सामान्येनोक्तम् तत्र विशेषमाह बृहस्पतिः "अतीतानागते पुण्ये द्वे उदग्दक्षिणायने । त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः स्मृताः" इति । उदगयनमतीतं सत् पुण्यं भवति । दक्षिणायनमनागतं पुण्यं त्रिंशदित्यादिना तदेव स्पष्टीक्रियते । कर्कटाख्याद्दक्षिणायनात् प्राचीनास्त्रिंशद्घटिकाः पुण्याः । मकराख्यादुत्तरायणादूर्द्ध्वकालीना विंशतिघटिकाः पुण्याः । बृहस्पतिरपि "अयने त्रिंशतिः पूर्व्वा मकरे विंशतिः पराः । वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश" इति वचनात् । न चात्र त्रिंशद्घटिकावादिना सामान्यवचनेन विरोधः शङ्कनीयः सामान्यवचनस्याप्यनुष्ठानपरत्वात् विशेषवचनोक्तो घटिकासङ्कोच एव प्रशस्तः । "याः याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः" इति देवलेनोक्तत्वात् केनापि निमित्तेन सन्निहितघटिकास्वनुष्ठानासम्भवे त्रिंशद्घटिकाः परा अवधित्वेनानुसार्य्यन्ते । षडशीतिषु ततोऽपि दीर्घमवधिमाह बृहस्पतिः "षडशीत्यामतीतायां षष्टिरुक्तास्तु नाडिकाः" इति । विष्णुपद्यां प्रशस्तकालं स एवाह "पुण्यायां विष्णुपद्यां च प्राक् पश्चादपि षोडश" इति संक्रान्तीनां पूर्व्वोत्तरौ पुण्यकालौ निर्णीतौ । ताश्च संक्रान्तयः कदाचिदह्नि भवन्ति कदाचिद्रात्रौ भवन्ति तद्भेदादनुष्ठानभेदमाह बृहस्पतिः "अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम् । रात्रौ संक्रमणे भानोर्दिनार्द्धं स्नानदानयोः । अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया । ऊर्द्ध्वं संक्रमणे चोर्द्ध्वमुदयात् प्रहरद्वयम् । पूर्णे चेदर्द्धरात्रे तु यदा संक्रमते रविः । प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ" इति । अह्नि यदा संक्रान्तिर्भवति तदा कृत्स्नमहः पुण्यम् । रात्रौ संक्रमणे पूर्व्वोत्तरदिनार्द्धयोः पुण्यत्वं विदधता वचनेनार्थाद्रात्रौ स्नानदानादिकं प्रतिषिध्यते । एवं सत्युदयानन्तरभाविनि दक्षिणायने पूर्व्वभागे प्राशस्त्यं बाधित्वोत्तरभागेऽनुष्ठानं भवति । अस्तमयप्राचीनक्षणभाविन्युत्तरायणे चोत्तरभागप्राशस्त्यं परित्यज्य पूर्व्वभागेऽनुष्ठातव्यम् । उत्तरभागप्राशस्त्यं तु मध्याह्नादिसंक्रमणविषयम् । तस्मादन्येव हेयोपादेययोः पूर्व्वोत्तरभागयोः सम्भवात्, अनेनैव न्यायेन कर्कटेऽपि मध्याह्नभाविनि पूर्व्वभागप्राशस्त्यं भवति । अस्तमयप्राचीनभाविषु षडशीतिमुखेष्वप्युत्तरभागप्राशस्त्यं परित्यज्य मकरन्यायेन पूर्व्वभागप्राशस्त्यं विधातव्यम् । उदयानन्तरभाविषु वचनान्तराविरोधेनोत्तरभाग एवानुष्ठानसम्भवात् तद्विरुद्धं पूर्व्वभागप्राशस्त्यं न विधीयते । उभयभागप्राशस्त्योपेतेषु विषुवद्विष्णुपदेषु मध्याह्नभाविषु पूर्व्वस्योत्तरस्य वा स्वेच्छयानुष्ठातव्यम् । उदयानन्तरभाविषु तेषु पूर्व्वभागप्राशस्त्यं बाध्यते अस्त-

ध्यप्राप्तेषु तेषु उत्तरप्राशस्त्यं बाध्यते इति विवेकः । एतद्वचनानुसारेण यस्य संक्रमणस्य यस्मिन् भागेऽनुष्ठानं तस्मिन्नेव भागे व्यवस्थिता नाड्यः पुण्याः ईषद्व्यवहिताः पुण्यतराः अत्यन्तव्यवहिताः पुण्यतमा द्रष्टव्याः । यदा रात्रौ भानोः संक्रमणं भवति तदा तस्या रात्रेः पूर्वस्य परस्य वा दिनस्यार्द्धं प्रहरद्वयं स्नानदानयोः पुण्यम् । कुत्र पूर्वदिनं कुत्र परदिनमिति विचिकित्सायां तदुभयमर्द्धरात्रादिति वचनेन व्यवस्थाप्यते । अर्द्धरात्रेः अर्द्धरात्रः, द्वितीयप्रहरस्य चरमघटिका तृतीयप्रहरस्य प्रथमघटिकेत्येवं घटिकाद्वययुक्तः कालस्तस्मादर्द्धरात्रादधः संक्रमणे सति पूर्वदिनमध्याह्नस्योपरितने प्रहरद्वये क्रिया कार्या । अर्द्धरात्रादूर्द्ध्वं संक्रमणे सति उत्तरकालीनादुदयादूर्द्ध्वं प्रहरद्वयं पुण्यं पूर्णेऽर्द्धरात्रे घटिकाद्वये संक्रान्तौ पूर्वोत्तरदिनद्वयं सकलं पुण्यम् । तदुक्तं भविष्योत्तरे "संक्रमस्तु निशीथे स्यात् चतुर्यामाः पूर्वपश्चिमाः । संक्रान्तिकालो विज्ञेयस्तत्र स्नानादिकं चरेत्" इति । अनेकं व्यवस्था । अर्द्धरात्रे यदा षडशीतिस्तदानीमेतद्वचनानुसारेण पूर्वोत्तरदिनद्वयस्य पुण्यत्वात् यद्यप्यैच्छिको विकल्पः प्राप्नोति । तथाप्युत्तरदिने षष्टिघटिकाप्रतिपादकप्रातिस्विकवचनानुग्रहलाभात्तत्रैवानुष्ठातव्यम् । विषुवतोर्विष्णुपदेषु च प्रातिस्विकवचनं न नियामकम्, तस्य वचनस्य पूर्वोत्तरभागयोः साम्येन प्राशस्त्यप्रतिपादकत्वात् । प्रकृतं वचनं पूर्वोत्तरदिने साम्येन विधत्ते । तस्मात् पूर्वस्मिन्नुत्तरस्मिन् वा यथेच्छयानुष्ठानमिति विकल्प्यते । अयनयोऽस्तु प्रकारान्तरं वक्ष्यते । अयनव्यतिरिक्तासु दशसु संक्रान्तिषु मध्यरात्रादूर्द्ध्वं प्रवृत्तासु परेद्युरनुष्ठानमित्यत्रापि नास्ति सन्देहः । षडशीत्यान्तु प्रकृतवचनेन पूर्वेद्युरनुष्ठानं प्राप्तम् । षष्टिघटिकाप्राशस्त्यप्रतिपादकप्रातिस्विकवचनेन परेद्युः प्राप्नोति । अतः सन्देहे सति पूर्वेद्युरनुष्ठानमिति निर्णयो द्रष्टव्यः । कुतः "विष्णुपद्यां धनुर्मीनकन्यकास्वाथ वै तदा । पूर्वोत्तरगतं रात्रौ भानोः संक्रमणं भवेत् । पूर्वाह्णे पञ्च नाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः । अपराह्णे तु पञ्चैव श्रौते स्मार्त्ते च कर्म्मणि" इति स्मृतेः । यदा रात्रौ पूर्वभागगतं विष्णुपदी षडशीतिसंक्रमणं भवेत् । तदा पूर्वेद्युरपराह्णे पञ्च नाड्यः पुण्याः उत्तरभागगते संक्रमणे परेद्युः पूर्वाह्णे पञ्च नाड्यः पुण्याः । न चैवं सति प्रहरद्वयपुण्यत्वविरोध इति वाच्यम् । पञ्चनाडिकावचनेषु पुण्याधिक्यस्य विवक्षितत्वात् । अतः प्रहरद्वयवाक्यं पुण्यमात्राभिप्रायम् । एतस्मिन्नेव विषये देवीपुराणे पठ्यते "असंपूर्णेऽर्द्धरात्रे तु उदयेऽस्तमयेऽपि च । मानार्द्धं भास्करे पुण्यमपूर्णे शर्वरीदले । अर्द्धरात्रे त्वसंपूर्णे दिवा पुण्यमनागतम् । संपूर्णे उभयोर्मध्यमतिरिक्ते परेऽहनि" इति । भास्करशब्देन सूर्य्ययुक्तं दिनमुपलक्ष्यते । यद्वा भास्करशब्दो न सूर्य्ये रूढः किन्तु यौगिकः भासं करोतीति व्युत्पत्तिसम्भवात् । तथा च सूर्य्य इव भास्करशब्दो दिनेऽपि मुख्यः तस्यापि भासं प्रत्यधिकरणकारकत्वेन कर्त्तृत्वात् । भास्करे दिवसे विद्यमानं प्रहरचतुष्टयं तस्यार्द्धं प्रहरद्वयम् आदित्यास्तमयस्योपरितन आगामिसूर्य्योदयात् प्राचीनः कालो रात्रिः । उदयोपरि अस्तमयात् प्राचीनः कालो दिनम् । उदयास्तमयकालौ सन्धिरूपतया प्रोक्ताभ्यां रात्रिदिवसाभ्यां पृथगित्युक्ते । रेखामात्रस्यापि सूर्य्यमण्डलांशस्य दृश्यमानतया दिवसान्तःपातित्वमित्यपरे । सर्व्वथापि न रात्रौ तयोरन्तर्भावः । सा च रात्रिस्त्रेधा भिद्यते मध्यवर्त्तिघटिकाद्वयात्मक एको भागस्तस्मात् पूर्वोत्तरौ द्वौ भागौ । तत्र पूर्वभागे संपूर्णेऽर्द्धरात्रे इत्यनेन विवक्ष्यते तस्मिन् यदा संक्रान्तिस्तदानीं सूर्य्यास्तमये प्रत्यासन्नं यत् पूर्वदिनस्योत्तरार्द्धं तत् पुण्यम् । अपूर्णे शर्वरीदले इत्यनेनार्द्धरात्रादनन्तरभावी रात्रिभागो विवक्षितः । पूर्वोत्तरदलयोरेकैकस्यापि घटिकाया अर्द्धरात्रकालार्द्धस्य पृथक् सत्त्वादसंपूर्त्तिरवगन्तव्या । तस्मिन् घटिकाऽन्यूने परभागे यदा संक्रान्तिस्तदानीं भाविसूर्य्योदये प्रत्यासन्नं दिनार्द्धं पुण्यम् । अयमेवार्थो द्वितीयश्लोके प्रपञ्च्यते । घटिकान्यूनत्वेनासम्पूर्णेऽर्द्धरात्रे पूर्वभागे यदा संक्रमणं भवति तदा यद्यपि दिवासंक्रमणमनागतं तथापि तस्य दिवसस्य उत्तरार्द्धं पुण्यं यदा सम्पूर्णेऽर्द्धरात्रे घटिकाद्वयात्मके निशीथे संक्रमणं भवेत्तदानीं पूर्वोत्तरयोर्दिनयोः पुण्यं ज्ञेयम् । अतिरिक्ते परभागे संक्रान्तौ परेऽहनि पूर्वार्द्धं पुण्यम् । देवलोऽपि "आसन्नसंक्रमं पुण्यं दिनार्द्धं स्नानदानयोः । रात्रौ संक्रमणे भानोर्विषुवत्ययने दिने" इति । अयमर्थः । रात्रौ भानोः संक्रमणे विषुवदात्मके जाते सति संक्रमणप्रत्यासन्नदिनार्द्धं पुण्यम् । पूर्वरात्रसंक्रमणे पूर्वदिनस्योत्तरार्द्धं पुण्यम् । अपररा-

तसंक्रमणे परदिनस्य पूर्वार्द्धं नित्यमगमन्त्यम्। अयने अयननामके भानोः संक्रमणे दिवा जाते इति यथायोग्यं तद्दिनार्द्धं तु पुण्यं द्रष्टव्यम्। कर्कटे पूर्वार्द्धं मकरे उत्तरार्द्धम्। एतच्च मध्यंदिनायनविषयम्। उदयास्तमयप्रत्यासन्ने अयने पूर्वोत्तरभागप्राशस्त्यव्यवस्था तत्तद्दिवसपुण्यत्वनिर्णयः पूर्वमेवोक्तः। अयनव्यतिरिक्तेषु दशसु संक्रमणेषु रात्रिगतेषु यो निर्णयस्तं सर्वं पर्युदस्तिं तद्वचःशेषः “मुक्त्वा मकरकर्कटाविति वर्णितः। “याः याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः” इत्युक्तेन सामान्यवचनेन रात्रिसंक्रमणेषु रात्रावेवानुष्ठानं प्रसक्तं तदपोह्य दशसु संक्रान्तिषु दिवानुष्ठानं विधाय मकरकर्कटयोस्तत्पर्युदासे सति पूर्वप्रसक्तं रात्रावनुष्ठानमेव पर्यवस्यति। एवं सति रात्रौ स्नानमभ्युपगच्छतो याज्ञवल्क्यवचनस्यापि कश्चिद्विषयः सम्पद्यते। तथा च याज्ञवल्क्यः “राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु। स्नानदानादिकं कार्यं निशि काम्यव्रतेषु च” इति। सुमन्तुरपि “रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः। नैमित्तिकं च कुर्वीत स्नानं दानं च रात्रिषु। यज्ञे विवाहे यात्रायां तथा पुस्तकवाचने। दानान्येतानि शस्तानि रात्रौ देवालये तथा। ग्रहणोद्वाहसंक्रान्तियात्रार्त्तिप्रसवेषु च। श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यते” इति। ननु यथोक्तपर्युदासानुग्रहीतैः पुण्यतमत्वादिदेवलयाज्ञवल्क्यसुमन्तुवचनैर्मकरकर्कटयोर्निशानुष्ठानप्रापणं शास्त्रान्तरेण विरुद्धम्। तथा च भविष्योत्तरे “मिथुने कर्कसंक्रान्तिर्यदि स्यादंशुमालिनः। प्रभाते वा निशीथे वा कुर्यादहनि पूर्वतः। कार्मुकं तु परित्यज्य झषं (मकरम्) संक्रमते रविः। प्रदोषे वार्द्धरात्रे वा स्नानं दानं परेऽहनि” इति। वृद्धगार्ग्योऽपि “अस्तमयवेलायां मकरं याति भास्करः। प्रदोषे वार्द्धरात्रे वा स्नानं दानं परेऽहनि” इति। “अर्द्धरात्रे तदूर्द्ध्वं वा संक्रान्तौ दक्षिणायने। पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः” इति। भविष्योत्तरवृद्धगार्ग्यवचनेषु रात्र्यनुष्ठानप्रतिषेधस्याप्रतीतेदिवसानुष्ठानप्रतिषेधकल्पने पर्युदासानुग्रहीतवचनानामानर्थक्यं प्राप्नोति। तस्मात्शास्त्रद्वयेन विकल्पप्राप्तौ तत्तद्देशप्रसिद्धशिष्टाचारेण व्यवस्था द्रष्टव्या”। अयनसंक्रान्तिशब्दे च ३४०पृ० रव्यादिग्रहाणां चसंक्रान्तेः पुण्यकालता दर्शिता।

**पुण्यकीर्त्तन** पु० पुण्यं पुण्यजनकं कीर्त्तनं यस्य। १विष्णौ “पुण्यश्रवणकीर्त्तनः” विष्णुसं०। २पुण्यजनककीर्त्तनयुक्ते त्रि० ६त०। ३पुण्यकथने न०। पुण्यश्रवणोऽपि विष्णौ।

**पुण्यकीर्त्ति** पु० पुण्या कीर्त्तिर्यस्य। १पुण्यश्लोके यस्य कीर्त्तने पुण्यं जायते तस्मिन्। कर्म०। २पुण्यजनिकायां कीर्त्तौ च।

**पुण्यकृत्** त्रि० पुण्यं कृतवान् कृ—भूते क्विप्। “सुकर्मपापमन्त्रपुण्येषु कृञः” पा० त्रिविधः नियमः क्विवेति नियमात् कर्म कृतवानित्यत्राण् न। कृञ एवेति नियमात्मन्त्रमधीतवान् मन्त्राध्यायः अत्र न क्विप्। भूत एवेति नियमात् मन्त्रं करोति करिष्यति वेति विवक्षायाञ्च क्विप्। स्वादिष्वेवेति नियमाभावादन्यस्मिन्नप्युपपदे क्विप्। शास्त्रकृत् भाष्यकृत्” सि०कौ०। धर्मकृतवति।

**पुण्यचेत** न०पुण्यस्य चेतम्। पुण्यभूमौ आर्य्यावर्त्ते हला०

**पुण्यगन्ध** पुण्यः सुन्दरः गन्धो यस्य। चम्पके त्रिका०।

**पुण्यगन्धि** त्रि० पुण्यः शुभावहः गन्धोलेशोऽस्य कृतुसमा०। शुभावहलेशयुक्ते भा०उ० १८३अ०।

**पुण्यजन** पुंस्त्री० पुण्यः विपरीतलक्षणया पापी जनः कर्म०। १राक्षसे अमरः। २यक्षे मेदि०स्त्रियां जातित्वात् ङीष्। ३सज्जने पु० मेदि० ४दशसु प्राचेतसेषु पुत्रेषु “दश प्राचेतसाः पुत्राः सन्तः पुण्यजनाः स्मृताः” भा०आ० ६५अ०।

**पुण्यजनेश्वर** पु० ६त०। कुवेरे अमरः।

**पुण्यजित** पु० पुण्येन जितः आयत्तीकृतः। चन्द्रलोकादौ “एवमस्तु पुण्यजितो लोकः क्षीयते” श्रुतिः।

**पुण्यतृण** न० नित्यकर्म०। श्वेतकुशे राजनि०।

**पुण्यदर्शन** पुंस्त्री पुण्यं दर्शनमस्य। १चाषखगे राजनि०। स्त्रियां जातित्वात् ङीष्। यस्य दर्शने पुण्यं भवति तस्मिन् २देवप्रतिमादौ त्रि०।

**पुण्यनामन्** पु० १कुमारानुचरभेदे भा०श०४६अ०। २पुण्यसाधननामके त्रि० स्त्रियां वा डाप्।

**पुण्यफल** पु० पुण्यानि शुभानि फलान्यस्य। १लक्ष्म्यावासेवनभेदे शब्दमा० कर्म०। २पुण्यरूपे फले न० मनुः ३८।५

**पुण्यभाज्** त्रि० पुण्यं भजते भज—ण्वि उप०स०। पुण्ययुक्ते

**पुण्यभूमि** स्त्री पुण्यस्य पुण्योत्पादनार्थां भूमिः। आर्य्यावर्त्ते देशे अमरः। “आ समुद्रात्तु वै पूर्वादा समुद्रात्तु पश्चिमात्। तयोरेवान्तरं गिर्य्योरार्य्यावर्त्तं विदुर्बुधाः”

मनुना तत् शीमोक्ता । (तयोर्विन्ध्यहिमाचलयोः)। पुण्यभूप्रस्थतयोऽप्यत्र ।

**पुण्यरात्र** पु॰पुण्या रात्रिः अच् समा॰रात्रान्तत्वात् पुंस्त्वम् । पुण्यायां रात्रौ । [चन्द्रलोकादौ कर्म॰। २धर्मिष्ठजने च।

**पुण्यलोक** पु॰ पुण्यप्राप्योलोकः शा॰त॰। १पुण्येनप्राप्ये

**पुण्यवत्** त्रि॰ पुण्य+भूमार्थे मतुप् मस्य वः । बहुपुण्ययुक्ते अमरः। स्त्रियां ङीप् ।

**पुण्यशकुन** न॰ पुण्यसूचकं शकुनम् । १शुभसूचके शकुने साध्यतया तदस्त्यस्य अच् । २तत्साधने त्रि॰ "मयूराः पुण्यशकुनाः हंससारसघातकाः" भा॰उ॰१४२अ॰ ।

**पुण्यशील** त्रि॰ पुण्यं शीलयति शील–अण् उप॰स॰ । नियतपुण्यानुष्ठायिनि ।

**पुण्यश्लोक** त्रि॰ पुण्यः पुण्यदायकः श्लोको यशश्चरितं वा यस्य । "पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः । पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्दनः" इत्युक्तेषु १नलादिषु । २पुण्यचरितयुक्तमात्रे च ३स्त्रीपद्यां स्त्री शब्दमा॰ ४वैदेह्यां स्त्री ।

**पुण्यसम** अव्य॰पुण्यं समं यत्र तिष्ठद्गु॰अव्ययी॰। तुल्यपुण्ये।

**पुण्यसहम** न॰ नील॰ता॰ उक्ते सहमभेदे तदानयनप्रकारस्तत्रोक्तो यथा "सूर्योनचन्द्रान्वितमङ्कि लग्नं रवीन्दुयुक्तं निशि पुण्यसंज्ञम् । शोध्यर्क्षशुद्धाश्रयभान्तराले लग्नं न चेत् सैकभमेतदुक्तम्" । "यत्राब्दे पुण्यसहमे शुभं सोऽब्दः शुभावहः" । अनिष्टेऽस्मिन् शुभं नेति पुण्यमादौ विचारयेत्" ।

**पुण्यस्थान** न॰पुण्यनिमित्तं स्थानम् । १पुण्योत्पादनसाधने स्थानभेदे २लग्नावधिके नवमस्थाने च ज्यो॰ [मातेच ।

**पुण्या** स्त्री पु–हुयत् । १तुलस्यां शब्दमा॰। २पुण्यजनकस्त्री-

**पुण्यात्मन्** त्रि॰ पुण्य आत्मा यस्य । पुण्यस्वभावे तेषां परलोकगतिप्रकारः पद्मपु॰ क्रियां॰ उक्तो यथा

"सुमन्तोवाच शृणु विप्र ! प्रवक्ष्यामि यत्त्वया श्रोतुमिष्यते । पुण्यात्मनां पापिनाञ्च पन्थानं सुखदुःखदम् । आदौ ब्रवीमि पन्थानं त्वयां पुण्यवतामहम् । शृणुष्व द्विजशार्दूल ! शृण्वतां प्रीतिवर्द्धनम् । प्रस्तरैरिष्टकैर्बद्धो दिव्यवस्त्रैः समावृतः । भाति पुण्यात्मनां पन्थाः सर्वोपद्रववर्जितः। क्वचिद्गन्धर्वकन्याभिर्गीयते गानमुत्तमम् । क्वचिन्मञ्जुशरीराभिरप्सरोभिश्च नृत्यते । क्वचिच्च वीणावादनं नानावाद्यं मनोहरम् । क्वचित् कुसुमवृष्टिश्च क्वचिद्वायुः सुशीतलः । क्वचित् क्वचिद्दीर्घिकाश्च फुल्लपद्मसुशोभिताः । क्वचित्पुण्याः शीततोयाः क्वचित् भक्ष्यशालिकाः। क्वचिद्देवाश्च गन्धर्वाः पठन्तस्तवमुत्तमम् । सुच्छायाः पादपाः क्वापि पुष्पिता वञ्जुलादयः । समस्तसुखसम्पन्ने पथि गच्छन्ति मानवाः । पुण्यात्मानो द्विजश्रेष्ठ ! सुखस्थत्वमवाप्य च । केचित्तु रत्नमारूढा नानालङ्कारभूषिताः । धृतशुभ्रधवलच्छत्रैर्गच्छन्त्यावृतमस्तकाः । केचिद्यान्ति गजारूढा रथारूढाश्च केचन । यानारूढा जनाः केचित् सुखेन यममन्दिरम् । केचिद्देवाङ्गनाहस्तन्यस्तचामरवायुभिः । गच्छन्ति वीजिता मर्त्याः स्तूयमानाः सुरर्षिभिः । केचिद्दिव्याम्बरधराः सुचन्दनविभूषिताः । भुञ्जतो यान्ति ताम्बूलं पुण्यात्मानो यमालयम् । निजगात्रत्विषा केचिच्चालयन्तो दिशो दश । व्रजन्ति शमनागारं चन्द्रसूर्यसमत्विषः । केचिच्च पायसं दिव्यं भुञ्जन्तो यान्ति सत्तमाः । सुधापानं प्रकुर्वन्तः पथि गच्छन्ति केचन । केचिद्दुग्धं पिबन्तश्च केचिदिक्षुरसं तथा । केचित्तक्रं पिबन्तश्च गच्छन्ति यममन्दिरम् । केचिद्दधीनि खादन्तः केचिन्नानाफलानि च । केचिन्मधु पिबन्तश्च पुण्यवन्तो व्रजन्ति वै । नानामतांस्ततो दृष्ट्वा नरान् धर्मपरायणान् । भास्करिः प्रीतिमासाद्य स्वयं नारायणो भवेत् । चतुर्बाहुः श्यामवर्णः प्रफुल्लकमलेक्षणः । शङ्खचक्रगदापद्मधारी गरुडवाहनः । स्वर्णयज्ञोपवीती च स्मेरचारुतराननः । किरीटी कुण्डली चैव वनमालाविभूषितः । चित्रगुप्तो महाप्राज्ञस्तथाद्या यमकिङ्कराः । सर्वे नारायणाकारा बभूवुर्मधुरोक्तयः । ततः स्वयं धर्मराजस्तान् सर्वान् मनुजोत्तमान् । परमां प्रीतिमासाद्य मित्रवत् पूजयेद्द्विज ! । दिव्यैर्वस्त्रैः फलैश्चैव तेषां पुण्यवतां नृणाम् । भोजनं कारयित्वा तु तानुवाचाथ भास्करिः । यम उवाच "यूयं सर्वे महात्मानो नरकक्लेशभीरवः । निजपुण्यप्रभावेन गम्यतां परमं पदम् । संसारे जन्म संप्राप्य पुण्यं यः कुरुते नरः । स मे पिता स मे भ्राता स मे बन्धुः स मे सुहृत् । इत्युक्ता धर्मराजेन ते सर्वे द्विजसत्तम ! । दिव्यं रथं समारुह्य नारायणपुरं ययुः" ।

**पुण्याह** न॰ पुण्यमहः टच् समा॰ अहान्तत्वेऽपि "पुण्यसुदिनाभ्यामहः" अमरोक्तेः क्लीवता । पुण्यदिने

**पुण्याहवाचन** न॰ ६त॰। पुण्यदिनस्य विप्रद्वारा वाचने तत्प्रकारः "पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते । एतदेव निरोङ्कारं कुर्यात् क्षत्रियवैश्ययोः । ओङ्कारं

ब्राह्मणे ब्रूयात् निरोङ्कारं महीपतौ। उपांशु च तथा वैश्ये शूद्रे स्वस्ति प्रयोजयेत्” उद्वा०त० यमोक्तः।

**पण्योदका** स्त्री पुण्यजनकं स्नानदानादुदकं यस्याः। नदीभेदे भा०अनु० १२०अ०। [पुन्नामनृशब्दे तद्व्युदर्थाः।

**पुत्** न० “निपरणाद्वा पुत्” निरु०पृ—बा०डुति पृषो०। नरकभेदे

**पुत्त** गतौ सौ०भ्वा०पर०सक० सेट्। पुत्तति अपुत्तीत् पुपुत्त।

**पुत्तलक** पु० पुत्त—बा० ल स्वार्थे क। पत्रादिनिर्मिते शवादिप्रतिमूर्त्तिभेदे पर्णनरशब्दे दृश्यम् शुद्धि०त०।

**पुत्तली** स्त्री पुत्त—ल गौरा० ङीष्। वस्त्रपत्रमृदादिनिर्मिते (पुँतुल) ख्याते पदार्थे “अमावास्यां समासाद्य मध्यरात्रे विचक्षणः। पुत्तलीं लवणमयीं कृत्वा दीपादिभिरलङ्कृताम्” उत्तरकामाख्यातन्त्रम्। स्वार्थे क अतइत्त्वम्। पुत्तलिका तत्रार्थे स्त्री।

**पुत्तिका** स्त्री पुत् इति शब्दं तनोति तन—ड स्वार्थे क ह्रस्वः अत इत्त्वम्। क्षुद्रमक्षिकायाम् अमरः।

**पुत्र(त्त्र)** पु० पू—क्त ह्रस्वश्च पुतो नरकभेदात् त्रायते त्रै—क वा। १स्वजन्यपुरुषे २स्वजन्यायां स्त्रियां स्त्री ङीष्। निरुक्ते तु २।११अन्या व्युत्पत्तिरुक्ता “पुत्र पुरु त्रायते निपरणाद्वा पुत् नरकं तस्मात् त्रायते वा” पृषो०। “पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः। तस्मात् पुत्र इति प्रोक्तः” मनुः। तेनास्य एकतकारता द्वितकारता च। तस्यापत्यं विदा०अञ्। पौत्र तदपत्ये पुंस्त्री० हरितादि०यूनि फक्। पौत्रायण पुत्रस्य यून्यपत्ये पुंस्त्री०। राजदन्ता० पतिपशुशब्दाभ्यां समासे पतिपशुशब्दयोः परनि०। पत्युःपुत्रः पुत्रपतिः पशोः पुत्रः पुत्रपशुः। स च मौख्यगौणभेदेन द्वादशविधः द्वादशपुत्रशब्दे१८०१पृ०दृश्यम् अन्यथापि ते चतुर्विधाः यथा “ऋणसम्बन्धिनः केचित् केचिन्न्यासापहारकाः। रिपवश्च प्रियाश्चेति स्वकर्मवशवर्त्तिनः। भेदैश्चतुर्भिर्जायन्ते पुत्रा मित्राः स्त्रियस्तथा। भार्य्या पिता च माता च भृत्याः स्वजनबान्धवाः। स्वेन स्वेन हि जायन्ते सम्बन्धेन महीतले। न्यासापहरणं पूर्वं यस्य यस्य कृतं भुवि। न्यासस्वामी भवेत् पुत्रो गुणवान् रूपवान् भुवि। येन चापहृतो न्यासस्तस्य गेहे न संशयः। न्यासापहरणाद्दुःखं स दत्त्वा दारुणं गतः। न्यासस्वामी स पुत्रोऽभून्न्यासापहारकस्य च। गुणवान् रूपवांश्चैव सर्वलक्षणसंयुतः। भक्तिञ्च दर्शयेत्तस्य पुत्रो भूत्वा दिने दिने। प्रियवाक्यधरो वापि बहुस्नेहं प्रदर्शयेत्। स्नीयं द्रव्यं समुद्राव्य प्रीतिमुत्पाद्य चातुलाम्। भुक्त्वा तु पोषणात्तेन तदादाय पुनर्व्रजेत्। यथा तेन प्रदत्तं तन्न्यासापहरणात् पुरा। दुःखमेवं महत् कृत्वा दारुणं प्राणनाशनम्। तादृशं तस्य दद्यात् स पुत्रो भूत्वा महागुणैः। अल्पायुषस्तथा भूत्वा मरणं यान्ति ते तथा। दुःखं दत्त्वा प्रयान्त्येवं मक्षत्यैवं पुनः पुनः। यदाह पुत्र पुत्रेति प्रलापं हि करोति सः। तदा हास्यं करोत्येष कः स पुत्रो हि कस्य च। अनेनापि हृतो न्यासो मदीयः परिचारिणा। द्रव्यापहारोऽपि पिता पूर्वमद्यैव तस्य च। पिशाचत्वं मया दत्तमद्यैव हि दुरात्मनः। द्रव्यापहरणेनापि मम प्राणा गताः किल। दुःखेन महता चैव यथाहं पीडितः पुरा। तथा दुःखं प्रदत्त्वाहं द्रव्यं समुद्राड्यमुत्तमम्। भोगेन सर्वमादाय चिराहिषास्य सौख्यवत्। गतोऽस्मि स्वच्छयाद्य कस्याहं सुत ईदृशः। न चैषोऽपि पिता पूर्वमद्यैव न च कस्यचित्। पिशाचत्वं मया दत्तमद्यैव च दुरात्मनः। एवमुक्त्वा प्रयात्येव तं प्रहस्य पुनः पुनः। प्रयात्यनेन मार्गेण दुःखं दत्त्वा सुदारुणम्। एवं न्यासस्य सम्बन्धात् पुत्राः केचित् भवन्ति वै। संसारे दुःखबहुला दृश्यन्ते यत्र तत्र हि १। ऋणसम्बन्धिनः पुत्रान् प्रवक्ष्यामि तथाप्यतः। ऋणं यस्य गृहीत्वा यः प्रयाति मरणं किल। अतस्तस्य सुतो भूत्वा भ्राता वाथ पिता प्रियः। मित्ररूपेण वर्त्तेत अत्यदुष्टः सदैव सः। गुणं नैव प्रपश्येत स क्रूरो निष्ठुराकृतिः। जल्पते निष्ठुरं वाक्यं सदैव स्वजनेषु च। नित्यमिष्टं समश्नाति भोगान् भुङ्क्ते नित्यशः। द्यूतकर्मरतो नित्यं चौरकर्मणि नित्यशः। गृहाद्द्रव्यं बलाद्धर्त्ता वार्यमाणः प्रकुप्यति। पितरं मातरञ्चैव कुत्सते च दिने दिने। द्रावकस्त्रासकश्चैव बहु निष्ठुरजल्पकः। वञ्चयित्वैव सुद्राश्च हृत्वा सुखेन तिष्ठति। जातकर्मादिभिर्बाल्ये द्रव्यं गृह्णाति दारुणः। पुनर्विवाहसंयोगान्नानाभेदैरनेकधा। एवं संक्षीयते द्रव्यं नैवमेतद्ददात्यपि। गृहक्षेत्रादिकं सर्वं ममैव हि न संशयः। पितरं मातरञ्चैव वदत्येवं दिने दिने। मुद्गरैर्मुषलैश्चैव कषाघातैस्तु दारुणैः। मृते तु तस्मिन् पितरि तथा मातरि निष्ठुरम्। निःस्नेहो निर्घृणश्चैव जायते नात्र संशयः। एवंविधास्ततः पुत्रा भवन्ति च महीतले २। रिपुपुत्रं प्रवक्ष्यामि तवाग्रे द्विजपुङ्गव!। बाल्ये वयसि सम्प्राप्ते रिपुवद्वर्त्तते सदा। पितरं मातरञ्चैव क्रीडमानो हि ताडयेत्। ताडयित्वा प्रयात्येवं

प्रहृष्टश्चैव पुनःपुनः। पुनरायाचितं तत्र पितरं मातरं पुनः। सक्रोधो वर्त्तते नित्यं वैरकर्मणि सर्वदा। पितरं मारयित्वा तु मातरञ्च पुनःपुनः। प्रयात्येवं स दुष्टात्मा पूर्ववैरानुभावतः ३। अथातः संप्रवक्ष्यामि यस्मात्सख्यं भवेत् प्रियम्। जातमात्रः प्रियं कुर्य्याद्बाल्ये गमनक्रीड़नैः। वयः प्राप्य प्रियं कुर्य्यान्मातापित्रोरनन्तरम्। भक्त्या सन्तोषयेत् नित्यं तावुभौ परिपालयेत्। स्नेहेन वचसा चैव प्रियसम्भाषणेन च। मृतौ गुरू समाज्ञाय स्नेहेन रुदते पुनः। श्राद्धकर्माणि सर्वाणि पिण्डदानादिकां क्रियाम्। करोत्येवं सुदुःखार्त्तस्तेभ्यो यात्रां प्रयच्छति। ऋणत्रयान्वितः स्नेहात्सिर्योपयति निश्चितः। यस्मात्सख्यं भवेत् कान्तं प्रयच्छति न संशयः। पुत्रो भूत्वा महाप्राज्ञ अनेन विधिना किल ४। उदासीनं प्रवक्ष्यामि तवाग्रे द्विज! साम्प्रतम्। उदासीनेन भावेन स देव परिवर्त्तते। ददाति नैव गृह्णाति न क्रुध्यति न तुष्यति। नैवोपयाति संत्यज्य उदासीनो द्विजोत्तम!। तवाग्रे कथितं सर्वं पुत्राणां गतिरीदृशी। यथा पुत्रास्तथा भार्य्या पिता माता च बान्धवाः। भृत्याश्चान्ये समाख्याताः पशवस्तुरगास्तथा। गजा महिष्यो दासाश्च ऋणसम्बन्धिनस्त्वमी" पाद्मे भूमिख॰११।१२।

तत्रैव १८।२०अ॰ सुपुत्रलक्षणं यथा

"पुत्रस्य लक्षणं पुण्यं तवाग्रे प्रवदाम्यहम्। पुण्यप्रसक्तो यस्यात्मा सत्यधर्मरतः सदा। बुद्धिमान् ज्ञानसम्पन्नस्तपस्वी वाग्विदांवरः। सर्वकर्मसु सन्धीरो वेदाध्ययनतत्परः। सर्वशास्त्रप्रवक्ता च देवब्राह्मणपूजकः। याजकः सर्वयज्ञानां दाता त्यागी प्रियंवदः। विष्णुध्यानपरो नित्यं शान्तो दान्तः सुहृत् प्रियः। पितृमातृपरो नित्यं सर्वस्वजनवत्सलः। कुलस्य तारको विद्वान् कुलस्य परिपोषकः। एवं गुणैः ससंयुक्तः सुपुत्रः सुखदायकः"।

वैष्णवपुत्रस्य पूर्वपुरुषत्रातृत्वं यथा "वैष्णवो यदि पुत्रः स्यात् तारयते हि स पूर्वजान्। पितृनधस्तनान् वंशांस्तारयन्ति च पावनाः" कुपुत्रजनने पितॄणां नरकगमनं यथा "तथा यदि कुपुत्रः स्यात्तेन मज्जन्ति पूर्वजाः। सुघोरे नरके दीनाः शपन्ति च मुहुर्मुहुः। यथा जले कुप्लवेन तरन्मज्जति मूढ़धीः। तथा पिता कुपुत्रेण तमस्यन्धे निमज्जति। जातमात्रे कुले जन्तौ संशेरते पितामहाः। किमेषोऽधो नयेदस्मानूर्द्ध्वं वा वैष्णवो भवन्"। २जन्मावधिके पञ्चमस्थाने नील॰ता॰ वर्षका-

लीने ४सहमभेदे च। पुत्रसहमशब्दे दृश्यम्।

**पुत्रक** पु॰ पुत्त्र+अनुकम्पायां संज्ञायां वा कन् स्वार्थे क वा। १अनुकम्पितपुत्रे २पुत्रमात्रे च अष्टापदे ३शरभे पशुभेदे पुंस्त्री॰। ४धूर्त्ते ५शैलभेदे ६वृक्षभेदे च मेदि॰ ७पतङ्गे दश्ननुकम्प्यजने च शब्दर॰।

**पुत्रकन्दा** स्त्री पुत्र इव स्निग्धत्वात् कन्दोऽस्याः। लक्ष्मणाकन्दायां राजनि॰।

**पुत्रका** स्त्री पुत्र इव कायति कै—क। औरसतुल्यायां पुत्रिकायां शब्दर॰। [भिक्षाप्रयुक्ते।

**पुत्रकाम** त्रि॰ पुत्रं कामयते कामि—अण् उप॰स॰। पुत्रा-

**पुत्रकाम्या** स्त्री आत्मनः पुत्त्रमिच्छति पुत्र+काम्यच्—भावे अ। आत्मनः पुत्रेच्छायाम् भट्टिः ३।४२ [६।१।१।

**पुत्रकृथ** पु॰ कृ+बा॰ भावे थक् ६त॰। पुत्रस्योत्पादने ऋ॰५।

**पुत्रघ्नी** स्त्री पुत्रं हन्ति हन—टक्। सुश्रुतोक्ते योनिरोगभेदे "स्थितं स्थितं हन्ति गर्भं पुत्रघ्नी रक्तसंस्रवात्"।

**पुत्र(त्त्र)जग्धी** स्त्री पुत्रो जग्धोयया ङीष्। "वा हतजग्धयोः" वार्त्ति॰तकारस्य वा द्वित्वम्। पुत्रभक्षणकर्त्र्यां स्त्रियां तथा पुत्र(त्त्र)हतीशब्देऽपि वा तस्य द्वित्वं ङीप् च। सा च पुत्रहन्त्र्यां स्त्रियां स्त्री।

**पुत्रजीव** पु॰ पुत्त्रं गर्भं जीवयति जीव—अण् उप॰ स॰। (जियापुता) वृक्षे "पुत्त्रजीवो हिमो वृष्यः श्लेष्मदो गर्भजीवनः। चक्षुष्यः पित्तशमनः दाहतृष्णानिवारकः" राजनि॰ "पुत्त्रजीवो गुरुर्वातकारी वृक्षो मतो बुधैः। सृष्टमूत्रमलः स्वादुः पटुः कटुरपि स्मृतः" भावप्र॰। [पुत्रजीववृक्षे रत्नमा॰।

**पुत्रञ्जीवक** पु॰ पुत्रं गर्भं जीवयति जीव+बा॰ ण्वुल्।

**पुत्रदा** स्त्री पुत्रं गर्भं ददाति सेवनात् दा—क। १वन्ध्याकर्कोट्यां २लक्ष्मणाकन्दे च राजनि॰ गर्भधारके त्रि॰।

**पुत्रदात्री** स्त्री पुत्त्रं ददाति दा—तृच् ङीप्। मालवे प्रसिद्धे लताभेदे "पुत्रदात्री वातकफकटूष्णानाशिनी मता। सुरभिः सर्वदा पथ्या वन्ध्यादोषविनाशिनी" राजनि॰।

**पुत्रपौत्र** न॰ गवाश्वादि॰ समा॰ द्व॰। पुत्रपौत्रयोः समाहारे तदनुभवति ख। पुत्त्रपौत्त्रीण पुत्रपौत्रपर्य्यन्तगामिनि भट्टिः ५।१५। [राजनि॰ २पुत्रदातृमात्रे त्रि॰।

**पुत्रप्रदा** स्त्री पुत्त्रं प्रददाति प्र+दा—क। १अविकायां क्षुपभेदे

**पुत्रप्रिय** पु॰ ६त॰। खगभेदे भा॰व॰ १०८अ॰।

**पुत्रभद्रा** स्त्री पुत्रस्य भद्रं यस्याः ५ब॰। बृहज्जीवन्त्याम् लतायां राजनि॰।

**पुत्रभाव** पु॰ पुत्रस्य भावः । १पुत्रत्वे ज्योतिषोक्ते २पञ्चमे भावे द्वादशभावशब्दे ३८०२ पृ॰ दृश्यम् । तत्र यहादिस्थित्यादिफलादि जातकपद्धतावुक्तं यथा "शुभखगवशतिः सुतालयस्थ्ये शुभखहितः शुभवीक्षितोऽपि वा स्यात् । कथयति शुभसन्ततिं नराणां स च विपरीतफलः खलस्य योगात् । चन्द्रादिलग्नादपि पुत्रभावे वर्गो यदैकोऽपि च गोपतेः स्यात् । तदा वदेदौरसमेव पुत्रं बलाबलोकस्य हि तारतम्यात् । तनौ धने वा सहजे विलग्ननाथे सुतः स्यात् प्रथमं चतुर्थे । पुत्रो भवेत्तत्परतश्च पुत्रात् द्विकन्यकानां जननप्रदः स्यात् । चन्द्रभौमभृगवोद्विदेहगा चाद्विमे वयसि सन्तिप्रदाः । ते पुनर्धनुषि नाल्पिमे तथा प्राचि सन्ततिकरा मता विदाम् । सन्तानभावे यहदृष्टियोगो नवांशयोगोऽप्यथ वाक्ययोगः । यावन्मितः स्यात् खलु तत्प्रसंख्या स्यात् सन्ततिस्तत्प्रनवांशतो वा । अपत्यसंख्या सुतभे नवांशाद्वाच्या द्विनिघ्ना शुभदृष्टियोगात् । शुभांशतो जीववती च कष्टा पापांशतः पापखगप्रदृष्टेः । कलिवितक्रूरकवयः क्रमाच्च हिकलत्रगाः । क्रमात् कुर्वन्ति मनुजं तोककौतुकवर्जितम् । कविकलानिधिवर्गयुते सुते कविकलानिधियुक्तनिरीक्षिते । समभवर्गगते खलु कन्यका विषमभे तु सुतान् प्रदिशन्ति हि । द्वाशेभवान्यपत्यानि सितांशे सुतभावगे । सितदृष्टे च केचित्तु चन्द्राद्य्येवमूचिरे । शनिगणाः शनिभं सुतभे यदा शशिसुतेन दृशा प्रविलोकितम् । कुलकुजार्कदृशा न युतं तदा प्रतनुते तनयं निजमूभिजम् । सुतभं शनिभं चेत् स्याच्छनियुक्तं शनिनेक्षितम् । दत्तात्मजाप्तिसद्बोध्यं तद्वच्चेत् क्रीतपुत्रदम् । सन्तानभावे कुजसप्तमांशे मन्दान्वितेऽन्यग्रहदृष्टिहीने । पुत्रो भवेत् क्षेत्रजकोऽथ कुण्डः पापैर्युते पापदृष्टे सुतर्क्षे । चन्द्रे कुजांशे सुतगे प्रदृष्टे मन्देन नान्यैः खलु गूढजातः । शन्यंशगे सूर्यनिरीक्षिते च कुजे सुतस्थे च सुतोऽपविद्धः । शनिवर्गगते चन्द्रे शनियुक्ते च पञ्चमे । प्रदृष्टे रविशुक्राभ्यां भवेत् पौनर्भवः सुतः । रविचन्द्रमसोर्वर्गः सुतभे च तयोर्युतिः । शुक्रेण केवलं दृष्टे सहोढः कथितः सुतः । सुतालये भूसुतसंस्थितिश्चेत् संजातसंजातसुतक्षतिः स्यात् । यदा न दृष्टिर्गुरुदैत्यगुर्वोर्दृष्ट्या तयोः स्यात् प्रथमोत्थनाशः । सन्तानभावे नवमांशको यः पापैः प्रदृष्टः खलु यन्मितैः स्यात् । गर्भा विनश्यन्ति हि तत्प्रमाणा यदा न दृष्टिः शुभखेचराणाम् । काव्ये कुजे नीचरिपोर्नवांशे पराजिते वापि मृतप्रजः स्यात् । स्त्रीखेटभांशे तु सुताप्रजः स्यादन्यांशकस्थे पुमपत्यभाक् ना । पापैः सुतस्थानगतैर्धनैः स्वजनैः सुखैर्नो रहितः कुजे तु । वैकल्यभाग् व्याधियुतः शनौ तु शुभग्रहैः पुत्रधनैः प्रपूर्णः" । वर्षलग्नतः पुत्रभावफलं नी॰ता॰ उक्तं यथा "पुत्रायगो वर्षपतिर्गुरुश्चेत् सूर्यौरसौख्योद्यनसोऽथ चेत्यम् । सत्पुत्रसौख्याय खलाहितास्ते दुःखप्रदाः पुत्रत एव चिन्त्याः । पुत्रे सुतस्य सहमे सबले सुताप्तिः सौम्येक्षितेऽप्यतिसुखं यदि तत्र वर्षे । सौम्येक्षिते शुभगृहे सकुजो बुधश्चेत् पुत्रायगः सुतसुखं विबले सुतार्त्तिः । जीवो जन्मनि यद्राशावब्देऽत्र सुतगोबली । पुत्रसौख्याय भौमो ज्ञो वर्षेशोऽत्र सुताप्तिदः । सतेज्यो जनुषि स्थे विलग्नमेतत् पुत्राप्त्यै बुधसितयोरपीत्यमूह्यम् । यद्राशौ जनुषि शनिः कुजश्च सोऽब्दे पुत्रार्त्तिं तनुसुतगः करोति नूनम् । पुत्रे पुण्यस्य सहमं पुत्राप्त्यै शुभदृष्टियुक् । लग्नपुत्रेश्वरौ पुत्रे पुत्रदौ बलिनौ यदि । चन्द्रो जीवोऽथ वा शुक्रः स्त्रोऽच्चगः सुतदः सुते । वक्री भौमः सुतस्थश्चेदुत्पन्नसुतनाशनः । सुताधिपो जन्मनि भार्गवोऽब्दे पुत्रे विलग्नाधिपतीत्यशालः । पुत्रप्रदो मन्दगृहस्थपुत्रे पापाधिकारीक्षित चालजार्त्तिः । यद्राशिगोऽपत्यः स्तौ स राशिस्तत्प्रदाभिधः । बली जन्मोत्थसौख्याय वर्षे तद्दुःखदोऽन्यथा"

**पुत्रवत्** त्रि॰ पुत्रोऽस्त्यस्य "अन्यत्रापि दृश्यते" वार्त्ति॰ वलच् । पुत्त्रयुक्ते पक्षे मतुप् मस्य वः । पुत्रवत् तथार्थे त्रि॰ स्त्रियां ङीप् ।

**पुत्रशृङ्गी** स्त्री पुत्रं पवित्रं शृङ्गमिव पुष्पमस्याः ङीप् । अजशृङ्ग्यां राजनि॰ । इयं सुश्रुते श्यामादिगणे पठिता ।

**पुत्रश्रेणी** स्त्री पुत्रा पवित्रा श्रेणिरस्य ङीप् । मूषिककर्ण्यां रत्नमाला ।

**पुत्रसङ्करिन्** पु॰ पुत्रे पुत्रोत्पादने सङ्करी । भिन्नवर्णायां स्त्रियां पुत्रोत्पादनेन वर्णसङ्करकारके भा॰क॰ ४४अ॰ ।

**पुत्रसहम** न॰ नील॰ता॰ उक्ते सहमभेदे । तदानयनञ्च तत्र दर्शितं यथा "सुतोऽह्निशिमन्दमीज्यात्" । स्फुटजीवादिन्दुं त्यक्त्वा दिवारात्रौ लग्नयोगे पुत्रसहमं भवति । तत्र च पुण्यसहमवत् सैकतादि ज्ञेयम् ।

**पुत्रसू** स्त्री पुत्रं सूते सू–क्विप् । पुत्रप्रसवकर्त्र्याम् ।

**पुत्राचार्य्य** पु॰ पुत्र आचार्य्योऽध्यापको यस्य । पुत्रतोध्यायिनि । मनुः ३।१६२

**पुत्रा(त्त्रा)दिन्** पु० पुत्रमत्ति अद–णिनि आक्रोशे गम्ये तकारस्य वा द्वित्वम्। (बेटाखेक) पुत्रभक्षकत्वेन आक्रुश्यमाने १पुरुषे २तथाभूतायां स्त्रियां स्त्री ङीप्।

**पुत्रान्नाद** पु० पुत्रस्य पुत्रोपहृतमन्नमत्ति अद–अण् उप०स०। कुटीचके सन्न्यासिभेदे त्रिका० कुटीचकशब्दे दृश्यम्।

**पुत्रिक** त्रि० पुत्रोऽस्त्यस्य ठन्। पुत्रयुक्ते। ततः पुरोहिता० भावे यक्। पौत्रिक्य तद्युक्तत्वे न०।

**पुत्रिका** स्त्री पुत्री+स्वार्थे क।१कन्यायाम् शब्दर०।२पुत्तल्यां ३यावकतूले च मेदि०। अपुत्रेण समयभेदेन ४कृतायां सुतायां स्त्री। स च समयः तद्विभागादिश्च मनुनोक्तो यथा "अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम्। यदपत्यं भवेदस्यां तन्मम स्यात् स्वधाकरम्। अनेन तु विधानेन पुरा चक्रेऽथ पुत्रिकाः। विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षः प्रजापतिः। ददौ च दश धर्माय, कश्यपाय त्रयोदश। सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम्। यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा। तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत्" "दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत्। स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च। पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः। तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः। पुत्रिकायां कृतायान्तु यदि पुत्रोऽनुजायते। समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः" "मातुः प्रथमतः पिण्डं निर्वपेत् पुत्रिकासुतः। द्वितीयन्तु पितुस्तस्यास्तृतीयं तत्पितुःपितुः"। अधिकं पुत्रिकापुत्रशब्दे दृश्यम्।

**पुत्रिकापुत्र** पु० पुत्रिकैव पुत्रः, ष्ठत० वा। १पुत्रिकारूपपुत्रे २पुत्रिकाया पुत्रे च यथाह वशिष्ठः "अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्। अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति"। "अथ वा पुत्रिकैव सुतः पुत्रिकासुतः सोऽप्यौरससम एव पितृवयवानामल्पत्वान्मातृवयवानां बाहुल्याच्च यथाह वशिष्ठः "द्वितीयः पुत्रिकैवेति। द्वितीयः पुत्रः कन्यैवेत्यर्थः इति, मिताक्षरा। अत्र विशेषो दायभागोक्तो यथा "तत्र पुत्रिकौरसयोस्तुल्यांशित्वं न पुनः पुत्रिकाया ज्येष्ठत्वेन विंशोद्धारार्हता तदाह मनुः "पुत्रिकायां कृतायान्तु" (इत्यादि अनुपदमुक्तम्) स्वतो ज्येष्ठपुत्रकार्यकरणात् स्वपुत्रद्वारेण पुत्रिकायाः पिण्डदातृत्वात्। तदाह मनुः "अपुत्रोऽनेन विधिना" (इत्यादि उक्तम्)। न च पुत्रिकायामेव प्रथमं पुत्रे जाते तदनन्तरमौरसपुत्रोत्पत्तौ पुत्रिकापुत्रस्य ज्येष्ठांशिता भवेदिति वाच्यं तस्य पौत्रत्वात् तदाह मनुः "अकृता वा कृता वापि यं विन्देत् सदृशात् सुतम्। पौत्री मातामहस्तेन दद्यात् पिण्डं हरेद्धनम्"। पुत्रिका हि पुत्रस्तस्याः पुत्रः पौत्र एव भवति तदांश पौत्रो भवति न च ज्येष्ठत्वेन पौत्रस्यांशातिरेकः श्रुतोऽस्ति"। यत्तु वशिष्ठवचनम् "अभ्रातृकां प्रदास्यामि" (इत्यादि उक्तम्)। पुत्रिकापुत्रस्यैव पुत्रत्वं वदति तेन पुत्रिकायास्तत्पुत्रस्य च पुत्रत्वं तत्र मनुविरोधात् पिण्डदानमात्रयोगात् पुत्रत्वमस्य गौणं तद्द्वारेणैव पुत्रिकायाः पिण्डदातृत्वात् एकस्य स्वतोऽन्यस्य तद्योगात्। पुत्रिकौरसयोस्तु सवर्णत्वे सति पूर्वोक्तविभागो बोद्धव्यः असवर्णत्वे तयोरसवर्णौरसपुत्रवदेव विभागः पुत्रिकौरसयोः समानत्वात्। यदि च कृतापि पुत्रमनुत्पाद्यैव विधवा भूता वन्ध्यात्वेनवाऽवधृता तदा तस्याः पितृधनेऽनधिकारः स्वधाकरपुत्रार्थं पुत्रिकायाः कृतत्वात् तदभावे दुहितन्तरतुल्यत्वात्" दा०भा०। व्याकृतं चैतत् श्रीकृष्णेन "ज्येष्ठता श्रेष्ठता सा च पुन्नामनरकत्राणनिबन्धना तदभावात् श्रेष्ठत्वाभाव इत्याह स्वत इति साक्षादित्यर्थः। ज्येष्ठत्वेनेति। ज्येष्ठपुत्रकार्यं पुन्नामनरकत्राणं तदकरणात्। तर्हि पुत्रिकाकरणं किमर्थमत आह स्वपुत्रद्वारेणेति। स्वधाकरं त्रिविधक्रियाकरम् अन्यथा स्वधाकरशब्दस्य श्राद्धकरणमात्रार्थत्वे दौहित्रान्तरसाधारण्यात् पुत्रिकाकरणवैयर्थ्यापत्तेः। एतेन पुत्रिकापुत्रसत्त्वेऽपि पुत्रिकाया एव प्रेतधनाधिकार इति मतमपि निरस्तमिति वेदितव्यं तथा च परम्परयोपकारार्थमेव पुत्रिकापुत्रकरणमिति भावः। ज्येष्ठांशितेति। तस्य साक्षादेव ज्येष्ठपुत्रकार्यकरणादिति भावः। पौत्रत्वादिति आतिदेशिकपौत्रत्वादित्यर्थः। मनुविरोधादिति। न च विनिगमनाविरहः किं मनुविरोधात् वशिष्ठोक्तं पुत्रत्वं गौणं, किं वा वशिष्ठविरोधात् मनूक्तं पौत्रत्वमेव गौणमिति वाच्यं मनुस्मृतेः सर्वस्मृतिप्रबलत्वस्यैव विनिगमकत्वात्। पुत्रत्वं पुत्रव्यपदेशः। गौणमिति पिण्डदातृत्वस्य मुख्यपुत्रगुणस्य योगात् गौणता बोध्या। पिण्डदानयोगमेवोपपादयति तद्द्वारेणैवेति। एकस्य पुत्रिकापुत्रस्य, अन्यस्य पुत्रिकास्वरूपस्य तद्योगात् पुत्रत्वयोगात्। न च परम्परया पिण्डदानापेक्षया साक्षात् पिण्डदानस्य बलवत्त्वेन पुत्रिकापुत्रस्यैव पुत्रत्वं न्याय्यं

न तु पुत्रिकाया इति वाच्यं पुत्रिकाया अङ्गजत्वात् तदधीनजन्मतया च तत्पुत्रस्य पिण्डदानयोगात् तस्या एवोत्कर्षेण पुत्रत्वौचित्यात्। एतन्न्यायादेव अपुत्रि-काया अपि दुहितृत्वभाव एव दौहित्रस्यैव प्राप्तधि-कारोपपत्तिः। अतएव समस्तमित्यनेन पुत्रिकौरसयोरेव समभागिता मनूक्ता न तु तस्याः पुत्रस्य औरससम-भागिता केनाप्युक्तेति। इत्यत्र "पुत्रिकापुत्र एव चेति" द्वादशविधपुत्रगणनायां कर्मधारयो न तु तत्पुरुष इति विभावनीयम्। पूर्वोक्तविभाग इति समभाग इत्यर्थः"। अपत्यधनाधिकारे च दाय०भा० कश्चिद्विशेष उक्तो यथा "यतएव सपुत्रद्वारेण पिण्डदातृतया दुहितुः पितृधना-धिकारः अतएव पुत्रिकाया अपि पितृमरणजातधन-सम्बन्धायाः पश्चाद्बन्ध्यात्वेन तद्भर्त्तुर्वा प्रसवासाम-र्थ्येन विपर्य्यस्तपुत्राया मरणे तद्धनं न भर्त्तुः। यथा शङ्खलिखितौ "प्रेतायाः पुत्रिकायास्तु न भर्त्ता द्रव्यम-र्हत्यपुत्रायाः"। तथा पैठीनसिः "प्रेतायां पुत्रिकायान्तु न भर्त्ता द्रव्यमर्हति। अपुत्रायां, कुमार्य्यां वा स्वसा ग्राह्यं तदन्यथा"। ततः कुमार्य्यां स्वसा अन्यया वा पुत्रवत्या सम्भावितपुत्रया स्वसा तद्धनं ग्राह्यम्। अतः स्वयधिकारे व्यावृत्तिरन्याधिकारस्य। यत्तु मनुवचनम् "अपुत्रायां मृतायान्तु पुत्रिकायां कथञ्चन। धनं तत् पुत्रिकाभर्त्ता हरेतैवाविचारयन्"। तद्विपर्य्यस्तपुत्रा-या अनुत्पन्नस्तपुत्रायाः पुत्रिकाया मरणे वेदितव्यम्" "विपर्य्यस्तपुत्रायाः पुत्रात्यन्ताभाववत्याः। तद्धनं ग्राह्यमिति। तदपि पत्यभावे कुमार्य्यादीनां पत्नीवा-च्यत्वादिति बोध्यम्। अत इति उक्तोभयस्वसाव्यां वि पर्य्यस्तपुत्रायाः पुत्रिकायामरणे कुमार्य्यादीनामधिकारे प्राप्ते भर्त्तुरधिकारस्य व्यावृत्तिरिति समप्योपसंहारः। प्राञ्चस्तु यतः पुत्रिकाया एव विपर्य्यपुत्रायामरणे न तत्संक्रान्तदाये भर्त्तुरधिकारोऽतः स्वधिकारे अन्यासां दुहित्रादीनामप्यधिकारेऽनन्तरं विपर्य्यस्तपुत्रायां तासां मरणे भर्त्तुरधिकारस्य व्यावृत्तिरिति व्याचक्रुः। तद्वि-पर्य्यस्तपुत्राया इति। एतस्यैव विवरणम् अनुत्पन्नस्त-पुत्राया इति। अत्र पक्षान्तराभावात् चकारः क्वाचित्कः पाठः प्रामादिकः। अथात्र शङ्खलिखितादिवचनमेव उत्पन्नस्तपुत्राविषयं मनुवचनन्तु अनुत्पन्नपुत्राविषय-मिति वैपरीत्यमेव न कुतः? उत्पन्नपुत्राया, इवावि-पर्य्यस्तपुत्रायाः पुत्रोत्पत्त्यैव पितुः पुन्नामनरकनिवर्त्त-कत्वेन कृतोपकारकतया स्वामित्वे निव्यूढे पितुरित-रापेक्षया तस्या एवाधिकोपकारित्वात् तद्भर्त्तुरधिकारो युक्तः अतएव "दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचसि" इत्यनेन दौहित्रमुखदर्शनस्यापि नरकनिस्तारकतेति। पुत्रानुत्पत्तौ तु पितृपकाराभावात् तस्या एव न स्वा-मित्वं कुतस्तत्पत्युरिति तत्पितृधनाधिकारिणां कन्या-दीनामेव तदानीं तत्राधिकारस्य न्याय्यत्वात्। यद्यपि बन्ध्यात्वेनावच्छिन्नतायां जीवन्त्यामप्येवमुचितं तथापि प्रेताया इति पठनात् न जीवन्त्यां तस्याम् अन्यदुहि-त्रादीनामधिकार इति" श्रीकृष्णव्याख्या।

**पुत्रिन्** पुंस्त्री पुत्र+अस्त्यर्थे इनि। पुत्रयुक्ते स्त्रियां ङीप्

**पुत्री** स्त्री पुत्र+गौरा० ङीष्। १कन्यायां २वृक्षभेदे हला०।

**पु(त्रीय)त्र्य** त्रि० पुत्रस्य निमित्तं संयोग उत्पातो वा "पु-त्राच्छ च" पा० छ पक्षे यत्। १पुत्रनिमित्ते संयोगे २तदीयोत्पाते च। पुत्रस्येदम् छ। ३पुत्रसम्बन्धिनि त्रि०। "धन्यं यशस्यं पुत्रीयमायुष्यं विजयाय च" भा०आ० ६७अ०। ४इष्टिभेदे स्त्री रामा०अयो० १५।२

**पुत्रेष्टि** स्त्री पुत्रकाम कर्त्तव्या इष्टिः शा०त०। पुत्रकाम-कार्य्ये इष्टिभेदे सा च आश्व०श्रौ०२।१०.दक्षकादौ दृश्यः। "गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमं चरेत्" दत्तकमी-मांसाधृतवाक्यम्। स्वार्थे क। तत्रार्थे जटाध०।

**पुत्रैषणा** स्त्री ६त०। पुत्रेच्छायां शत०ब्रा० १४।६।४।१

**पुथ** हिंसे दि०पर०सक०सेट्। पुथ्यति अपोथीत्। पुपोथ।

**पुथ** वधे सक० क्लेशे अक०भ्वा०पर०सेट् इदित्। पुन्थति अ-पुन्थीत् पुपुन्थ पुन्थ्यते।

**पुथ** दीप्तौ चु०उभ०सक० सेट्। पोथयति-ते अपूपुथत्-त।

**पुद्गल** पु० पूरणात् पुत् गलतीति गलः कर्म०। १परमाणौ "पूरणाद्गलनात् देहे पुद्गलाः परमाणवः" इति विष्णुपु० टीकायां श्रीधरधृतवाक्यम्। २बौद्धमतप्रसिद्धे द्व्यणुकादि-पदार्थभेदे च। पुत् कुत्सितो गलो यस्मात्। ३सुन्दराकारे त्रि०शब्दर०। ४रूपादिविशिष्टे त्रि०हेमच०[भोक्तरि अमरः।

**पुनःपुनर्** अव्य०पुनर्+वीप्सायां द्वित्वम्। १मुहुरित्यर्थे २अ-

**पुनःपुना** स्त्री पु० पुनः पुनाति पू—नक् पृषो०। नदीभेदे "कीकटेषु गया पुण्या नदी पुण्या पुनःपुना" वायुपु०।

**पुनःसंस्कार** पु० पुनर्वारः संस्कारः। १द्वितीयोपनयनसंस्कारे गोमांसादिभक्षणे प्रायश्चित्तनिमित्ते पुनर्वारोपनयन-भेदे "पुनर्वसौ कृतो विप्रः पुनःसंस्कारमर्हति" इत्युक्ते उपनयने ज्योति० "अज्ञानात् प्राश्य विण्मूत्रं सुरासं-

स्पृष्टमेव च । पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः । वपनं मेखलादण्डो भैक्ष्यचर्य्याव्रतानि च । निवर्त्तन्ते द्विजातीनां पुनःसंस्कारकर्म्मणि” मनुः । “विड्वराहादीनां वक्ष्यमाणत्वात् मनुष्यसम्बन्धि मूत्रं पुरीषं वा अबुद्धिपूर्वकं प्राश्य सुरासंस्पृष्टञ्च भक्तादिरसं वा प्राश्य द्विजातयस्त्रयोवर्णाः पुनरुपनयनमर्हन्ति । वपनमिति “शिरोमुण्डनं मेखलाधारणं दण्डधारणं भैक्ष्याणि च मधुमांसस्त्रीवर्जनयुतानि प्रायश्चित्तार्थं पुनरुपनयने द्विजातीनां न भवन्ति” कुल्लू० ।

**पुनः(न)स्तोम** पु० वा विसर्गलोपः । उक्थ्यसंस्थे यज्ञभेदे “बहुप्रतिग्राह्य गरगीरिव योमन्येत तस्य पुनःस्तोम उक्थ्यः” कात्या० २२।६।१६ “बहुप्रतिग्राह्य गरस्फीतमिवात्मानं यो मन्यते तस्य पुनःस्तोमसंज्ञक उक्थ्यसंस्थो भवति” कर्कः ।

**पुनर्** अव्य० पन–स्तुतौ बा० अरि पृषो० । १द्वितीयवारे अप्रथमे २भेदे च अमरः । ४अधिकारे ५पक्षान्तरे मेदि० “पुनरित्यप्रथमे ६विशेषे च” गणर० उक्ते विशेषे च पुनरिति भूयोऽर्थविशेषयोः” गणरत्नटीका ।

**पुनरसु** पु० पुनरसुर्जीवनं सम्भवोऽस्य । पुनर्जाते शत० ब्रा० १।५।२।१४ ।

**पुनरागत** त्रि० पुनर्वारमागतः । प्रत्यागते मनुः ११।१८६।

**पुनरागमन** न० पुनर्वारमागमनम् । प्रत्यागमने

**पुनराधान** न० पुनर्वारमाधानम् । श्रौतस्मार्त्ताग्नेर्द्वितीयाधाने “पुनर्दारक्रियां कुर्य्यात् पुनराधानमेव च” मनुः ५।१६८। “अरण्योरल्पमप्यङ्गं यावत्तिष्ठति पूर्वयोः । न तावत् पुनराधानमन्यारण्योर्विधीयते” कर्मप्रदीपः । “नाशजवदाहादिनिमित्तेष्वन्ययोः परिग्रहोपदेशाच्च” कात्या० श्रौ० ४।७।२२ “अरण्योर्दग्धयोर्वापि नष्टयोः क्षीणयोस्तथा । आहृत्यान्ये समारोप्य पुनस्तत्रैव निर्मथेत्” इति “अरण्योः क्षयनाशाग्निदाहेष्वग्निं समाहितः । पालयेदुपशान्तेऽस्मिन् पुनराधानमिष्यते” कर्मप्रदीपः ।

**पुनराधेय** न० पुनर्वारमाधेयमग्न्याधानम् । श्रौते कर्मभेदे तच्च “पुनराधेय आधानाप्रतिज्ञानस्य” कात्या० श्रौ० ४।११सूत्रादौ तद्भाष्ये च पद्धतौ दृश्यम् ।

**पुनरावर्त्तिन्** त्रि० पुनःपुनर्वारमावर्त्तते आ+वृत–णिनि । भूयो भूय आगन्तरि “आ ब्रह्मभुवनात् लोकाः पुनरावर्त्तिनोऽर्जुन !” गीता ।

**पुनराहार** पु० पुनर्वारमाहारो भोजनं प्रा० त० । द्वितीयवारभोजने भूयस्तद्व्याहरणे च कात्या० श्रौ० २५।११।१०

**पुनरुक्त** त्रि० पुनर्वारमुक्तम् । पुनर्वारं कथिते १अर्थे २शब्दे च । तत्र शब्दस्य पुनरुक्तत्वे तदर्थस्यापि पुनरुक्तत्वं नियतम् ततः उक्था० तद्वेत्त्यर्थे ठक् पौनरुक्तिक तद्वेत्तरि त्रि० । शब्दपरत्वे ऋगयनादित्वात् अण् । पौनरुक्त तच्छब्दाध्येतरि त्रि० । भावे क्त । ३पुनःकथने न०

**पुनरुक्तजन्मन्** पु० पुनरुक्तं द्वितीयवारं जन्म यस्य । १द्विजातौ २ब्राह्मणे त्रिका० “द्वितीयं मौञ्जीबन्धने” मनूक्तेस्तस्य तथात्वम् ।

**पुनरुक्तवदाभास** पु० अलङ्कारभेदे अलङ्कारशब्दे २८८ पृ० दृश्यम् ।

**पुनरुत्पत्ति** स्त्री उत्पन्नस्य पुनरुत्पत्तिः । असत्ये उत्पन्नस्य पुनरुत्पादे स च न सम्भवति उत्पन्नस्य पुनरुत्पादासम्भवात् इति सिद्धान्तः ।

**पुनरुत्सृष्ट** पु० पशुभेदे । “पूर्वं वाहितः दौर्बल्यात् स उत्सृष्टः पुनरपि सबलो जातः पुनरपि वाहितः पुनश्च दौर्बल्यादुत्सृष्टस्तादृशे पशौ” कात्या० ७।१।५ सूत्रभाष्यम् ।

**पुनर्जन्मन्** न० पुनर्भूयो जन्म । भूयोजन्मनि “मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते” गीता

**पुनर्ण(न)व** पु० पुनरपि नवः “पूर्वपदात् संज्ञायामगः” पा० संज्ञायां णत्वम् अन्यत्र न णत्वम् । १नखे हेमच० तस्य छिन्नरूढत्वात्तथात्वम् । २भूयोनवे त्रि० अणत्वम् ।

**पुनर्नवा** स्त्री पुनर्नवा पुनर्नूयते नू–अप् वा क्षुभ्नादेराकृतिगणत्वात् न णत्वम् । शोथघ्न्यां (पुनपुना) शाकभेदे अमरः । सा च द्विविधा श्वेता रक्ता च तयोर्गुणादि भावप्र० उक्तं यथा
“पुनर्नवा श्वेतमूला शोथघ्नी दीर्घपत्रिका । कटुः कषावाऽरुच्यर्शःपाण्डुहृद्दीपनी परा । शोफानिलगरश्लेष्महरी ब्रध्नोदरप्रणुत् । पुनर्नवाऽपरा रक्ता रक्तपुष्पा शिलाटिका । शोथघ्नी क्षुद्रवर्षाभूर्वर्षकेतुः कठिल्लकः । पुनर्नवाऽरुणा तिक्ता कटुपाका हिमा लघुः । वातला ग्राहिणी श्लेष्मपित्तरक्तविनाशिनी” ।

**पुनर्नवामण्डूर** न० चक्रपाणिदत्तोक्ते औषधभेदे
“पुनर्नवात्रिवृच्छुण्ठीपिप्पलीमरिचानि च । विडङ्गं देवकाष्ठञ्च चित्रकं पुष्कराह्वयम् । त्रिफलां द्वे हरिद्रे च दन्तीञ्च चविकन्तथा । कुटजस्य फलं तिक्तां पिप्पलीमूलमुस्तकम् । एतानि समभागानि मण्डूरं द्विगुणं ततः । गोमूत्रेऽष्टगुणे पक्त्वा स्थापयेत् स्निग्धभाजने । पाण्डुशोथोदरानाहशूलार्शःक्रिमिगुल्मनुत्” ।

**पुनर्भव** पु० छिन्नोऽपि पुनर्भवति भू–अच् । १नखे अमरः

२भूयोजाते त्रि॰। भावे ल्यप्। ३पुनर्जन्मादौ पु॰कुमा॰३सर्गः

**पुनर्भू** स्त्री पुनर्भवति जायात्वेन भू—क्विप्। एकेन व्यूढायां पुनरन्यसङ्गृहीतायां भार्य्यायाम् अन्यपूर्व्वायाम् अन्यपूर्व्वाशब्दे २१२ पृ॰ दृश्यम्। [२।२।२।२०।

**पुनर्मृत्यु** पु॰ भूयोभूयो मृत्युः। भूयोभूयोमरणे शत॰ब्रा॰

**पुनर्यज्ञ** पु॰भूयः कार्य्ये यज्ञे। का॰त्या॰श्रौ॰२५।१।२॰भाष्यम्।

**पुनर्यात्रा** स्त्री १प्रत्यागतौ जगन्नाथस्य पुनर्वारं २रथयात्रायाम् "पुनर्यात्रा विधातव्या तथैव नवमेऽहनि" ति॰त॰। सा च द्वितीयातो नवमदिने दशम्यां कर्त्तव्याऽहनुशब्दस्य चान्द्रदिनपरत्वात्। ३पुनर्वारगमने च।

**पुनर्वत्** त्रि॰ पुनः पुनःशब्दोऽस्त्यस्य मतुप् मस्य वः। पुनः शब्दयुक्ते कात्या॰ २१।१०।२७ भाष्यम्।

**पुनर्वसु** पु॰पुनर्+वस—उ। १विष्णौ "विश्वयोनिः पुनर्वसुः" विष्णु स॰ पुनः पुनः सर्व्वशरीरेषु क्षेत्रज्ञरूपेण वसतीति पुनर्वसुः, भाष्यम्। २शिवे च अश्विन्यवधिके सप्तमे ३नक्षत्रे द्वि॰व॰। ४कात्यायनमुनौ ५लोकभेदे ६धनाराख्ये च शब्दच॰। अश्विन्यादिषु मध्ये सप्तमनक्षत्रस्वरूपादिरेखादि नक्षत्रशब्दे ४६७पृ॰दर्शितम्। तदीयाद्यचरणत्रयं मिथुनराशिघटकम् शेषपादस्तु कर्कटराशिघटकः। तस्य द्विवचनान्तत्वं तु प्रायिकं "पुनर्वसौ जातो विप्रः" इत्यादिप्रयोगात्। नक्षत्रार्थे तिष्य्रेण सह द्वन्द्वे अस्य द्विवचनान्तता, तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू पुनर्वसुनक्षत्रस्य द्विवचनत्वेन बहुत्वे प्राप्ते द्वित्वविधानम्। कुकुरवंश्ये ७नृपभेदे हरिवं॰४२अ॰।

**पुन्नाग** पु॰ पुमान् नाग इव श्रेष्ठत्वात् व इव वा। १स्वनाम ख्याते पुष्पप्रधाने वृक्षे अमरः "पुन्नागपुष्पं मधुरं सुगन्धि शीतलं तथा। मलप्रशादनकरं पित्तनाशनमेव तत्" राजनि॰। २श्वेतोत्पले ३जातीफले ४नरश्रेष्ठे ५पाण्डुनागे च मेदि॰।

**पुन्नाट(ड)** पु॰ पुमानिव नाटयति नाटि—अच्। चक्रमर्दे राजनि॰। नाडि—अच्। पुन्नाडोऽप्यत्र।

**पुन्नामन्** पु॰ पुदिति नामास्य। १नरकभेदे "पुंनाम्नो नरकात् यस्मात्" मनुः। तन्नरकगतिकारणञ्च षोडशविधं यथोक्तं वामनपु॰ ५८अध्याये

"परदाराभिगमनं पापानाञ्चोपसेवनम्। पारुष्यं सर्व्वभूतानां प्रथमं नरकं स्मृतम्। फलस्तेयं महापापं फलार्हस्य च पाटनम्। पाटनं वृक्षजातीनां द्वितीयं परिकीर्त्तितम्। वर्ज्यादानं तथा द्विष्टमवध्यवधबन्धनम्। विवादमर्थहेतोश्च तृतीयं नरकं स्मृतम्। भयदं सर्व्वसत्त्वानां नरभूमिविनाशनम्। भ्रंशनं निजधर्म्माणां चतुर्थं नरकं स्मृतम्। मारणं मित्रकौटिल्यं मिथ्याभिशपनञ्च यत्। मिष्टैकाशनमित्युक्तं पञ्चमस्य विपाचनम्। फलोहरणं यन्त्रकरं वमनं योगनाशनम्। यानमुख्यस्य हरणं षष्ठमुक्तं कृपार्णवम्। राजभागस्य हरणं राजजायानिषेवणम्। राज्ये त्वहितकारित्वं सप्तमं नरकं स्मृतम्। लुब्धत्वं लोलुपत्वञ्च लब्धधर्म्मार्थनाशनम्। नानाकर्म्मकरं प्रोक्तमष्टमं नरकं स्मृतम्। ब्रह्मस्वहरणञ्चैव ब्राह्मणानां विनिन्दनम्। विरोधो ब्राह्मणैश्चोक्तो नवमो नरकस्त्वयम्। शिष्टाचारविनाशश्च शिष्टद्वेषं शिशोर्वधम्। शास्त्रस्तेयं धर्म्मशून्यं दशमं परिचक्षते। षडङ्गनिधनं घोरं षाड्गुण्यप्रतिषेधनम्। एकादशममेवोक्तं नरकं सद्भिरुत्तम!। सद्भिरुक्तं सदाचारं विना चारोद्भवत्क्रिया। संस्कारपरिहीनत्वमिदं द्वादशमं स्मृतम्। हानिर्धर्म्मार्थकामानामपवर्गस्य हारणम्। समर्गहन्तृत्वं मतिदं त्रयोदशमिहोच्यते। कृपणं धर्म्महीनञ्च यद्वर्ज्यं यच्च दीपनम्। चतुर्दशकमेवोक्तं नरकं सद्भिर्गर्हितम्। अज्ञानञ्चाप्यनिष्टत्वमशौचमशुभावहम्। गर्ह्यं तत्पञ्चदशकमसत्यवचनानि च। आलस्यं चाततायित्वमगारेष्वग्निदापनम्। इच्छा च परदारेषु नरकाय निगद्यते। ईर्ष्याभावश्च सर्व्वेषु षोडशन्तु विगर्हितम्। एतैस्तु पापैः पुरुषः पुन्नामनरके पतेत्। पुन्नामनरकं घोरं विनाशं प्राह सर्व्वतः। एतस्मात् कारणात् त्राता ततः पुत्त्रो निगद्यते"। पुमान् पुंलिङ्गनामाख्यनक्षत्रभेद "हस्तो मूलश्रवणपुनर्वसुमृगशिरस्तथा पुष्यः। गर्भाधानादिकार्य्येषु पुन्नामाख्यं गणः शुभदः" ज्यो॰ त॰।

**पुप्पुट** पु॰ "दन्तवेष्टः शोफकुथः पीताभो दन्तपुप्पुटः" इति सुश्रुतोक्ते १क्षुद्ररोगे "नीरुक् स्थायी कोलमात्रः कफात् स्यात् मेदोयुक्तात् पुप्पुटस्तालुदेशे" तत्रोक्ते २तालुगते रोगभेदे च।

**पुप्पुस** पु॰ (फोफरा) ख्याते १क्लोमे पद्मबीजाधारे २बीजकोषे च हेमच॰। फुप्फुस इति पाठान्तरं तत्रार्थे।

**पुमस्** पु॰ पाति पा—पालने "पातेर्डुमसुन्" उणा॰डुमसुन्। १पुरुषे २मनुष्यजातिमात्रे च अमरः। सत्त्वप्रधानत्रिगुणात्मकार्थे शब्दसंस्कारविशेषयुक्ते शब्दे च। सर्व्वनामस्थाने परे असुन् पुमांसौ पुमांस इत्यादि समासे पदान्तत्वे अम्-

परे खयि परे रु: तस्य च स: । पुंस्कोकिल इत्यादि । बहुव्रीहौ उर:प्रभृतित्वात् नित्यं कप् । सुपुंस्का अपुंस्का इत्यादि ।

**पुमनुजा** स्त्री पुमांसमनुरुध्य जायते "अनौ कर्मणि" पा० (अनुपूर्वाज्जनेः कर्मण्युपपदे डः स्यात्) अनु+जन–ड पुमांसमनुरुध्य जाता पुमनुजा" सि०कौ०। "इह अनिः सकर्मकः अनुरोधविशिष्टजननार्थत्वात्" तत्त्वकौ० पदान्तत्वेन अनुस्वारलोपः । पुरुषानन्तरजातायां भगिन्याम् ।

**पुमपत्य** न० पुंरूपमपत्यम् । पुंरूपापत्ये अमरः ।

**पुमाख्या** स्त्री ६त० । १पुरुषसंज्ञायां पुमांसमाख्याति आ+ख्या–क । "जातिभेदाः पुमाख्याश्च" अमरोक्ते २पुरुषवाचकशब्दे पु० ।

**पुम्भूमन्** पु० ६त० । पुंलिङ्गबहुत्वे अमरः ।

**पुर** अग्रगतौ तु०पर०सक० सेट् । पुरति अपोरीत् । [ङीप् ।

**पुर:सर** त्रि० पुरोऽग्रे सरति सृ–ट । अग्रगामिनि स्त्रियां

**पुर** न० पुर–अग्रगमने क । १गेहे २देहे पाटलिपुत्रे ३नगरभेदे ४कुङ्कुमदलाख्ये मेदि० ५नागरमुस्तायां रत्नमा० ६चर्मणि शब्दर० ७नक्षत्रोपरिगृहे च विश्वः । ८बहुग्रामीयव्यवहारस्थाने बहुहट्टादियुक्ते प्रधानग्रामे न० स्त्री श्रीधरः । स्त्रीत्वे ङीप् । ९पीतकाष्ठायाम् अमरः धान्यादिचये १०राशौ ११गुग्गुलौ च पु० शब्दच० पॄ–क । १२पूर्णे प्रचुरे त्रि० । नगरशब्दे ३९१६ पृ० पुरीशब्दे च दृश्यम् । पुरे वर्णनीयपदार्थाः कविकल्पलतायामुक्ता यथा "पुरे हट्टप्रतोली च परिखातोरणध्वजाः । प्रासादाध्वप्रपारामवापीवेश्याघतीत्वरी" ।

**पुरग** त्रि० पुरं गच्छति गम–ड । नगरगामिनि ततः अश्वाद्यञ्चतरर्थ्यां छञ् । पौरगीय तत्सन्निकृष्टदेशादौ । कोटरादि० वनशब्दे परे दीर्घः, कृतदीर्घात् परस्य वनस्य णत्वम् । पुरागवणं नगरगतवने ।

**पुरजित्** पु० पुरं त्रिपुरासुरं जितवान् जि–भूते क्विप् । १त्रिपुरारौ शिवे त्रिपुरघ्नशब्दे ३३७० पृ० दृश्यम् । २चन्द्रवंश्ये नृपभेदे च "अजोऽथ पुरजित्सुतः" भाग० ९।१२।१२ श्लो० ।

**पुरज्योतिस्** पु० पुरं प्रचुरं ज्योतिरस्य । वह्नौ शब्दार्थक० ।

**पुरञ्जन** पु० पुरं देहरूपक्षेत्रं जनयति जनि–वा० खच् । क्षेत्रज्ञे जीवे "पुरुषं पुरञ्जनं विद्याद् यद्व्यनक्त्यात्मनः पुरम् । एकद्वित्रिचतुष्पादं बहुपादमपादकम्" भाग० ४।२९।२ श्लो० । १तद्विज्ञानरूपायां २बुद्धौ स्त्री ङीप् भाग० ४।२५ २९ अध्याये पुरञ्जनोपाख्याने दृश्यम् ।

**पुरञ्जय** पु० सूर्य्यवंश्ये शशादपुत्रे १नृपभेदे हरिवं० ११अ० २सूर्यवंश्ये काकुत्स्थे त्रिका० । "पुरञ्जयस्तस्य सुत इन्द्रवाह इतीरितः । काकुत्स्थ इति चाप्युक्तः" भाग० ९।६।१२ श्लो० ।

**पुरट** न० पुर–वा० अटन् । स्वर्णे "पुरटरचिताङ्कदस्थलविहङ्गमिथुनैः" भाग० ५।२।५ "पुरटरचिता स्वर्णरचिताः" श्रीधरः ।

**पुरण** पु० पॄ–क्यु । समुद्रे उज्ज्वलदत्तः ।

**पुरतटी** स्त्री पुरस्था तटीव । क्षुद्रहट्टे हारा० ।

**पुरतस्** अव्य० पुर–अतसुच् । अग्रत इत्यर्थे अमरः ।

**पुरद्वार** न० ६त० । गोपुरे नगरप्रवेशद्वारे अमरः ।

**पुरद्विष्** पु० पुराणां मयनिर्मितानां नगरभेदानां दाहकत्वात् द्विट् द्विष–क्विप् ६त० । शिवे जटा० त्रिपुरघ्नशब्दे ३३७२ पृ० ।

**पुरन्दर** पु० पुरः शत्रूणां दारयति "पूःसर्वयोर्दारिसहोः" पा० खच् । "वाचंयमपुरन्दरौ" पा०नि० । १इन्द्रे अमरः । तस्य शत्रुपुरदारकत्वात् तथात्वम् । स च वैवस्वतमन्वन्तरे इन्द्रभेदः भाग०८।१३।४दृश्यम् २ज्येष्ठानक्षत्रे । ३विष्णौ "आदिदेवः पुरन्दरः" विष्णुस० । ४चव्ये (चइ) ख्याते न० शब्दच० ५गङ्गायां स्त्री हारा० ।

**पुरन्धि** स्त्री द्वि०व० १द्यावापृथिव्योः निघण्टुः । बहु इष्टकाजातं दधाति पुरुधा बहुधा धीयते स्थाप्यते वा धा–कि पृषो० । २इष्टकाभेदे यजु०१४।२ वेददी० ३बहुबुद्धौ स्त्री "कक्षीवते अरदतं पुरन्धिम्" ऋ० १।११६।७ पुरन्धिं बहुधियिति यास्कः पृषोदरादित्वात् पुरन्धिभावः । यद्वा पुरं पूरयितव्यं सर्वविषयजातमस्यां धीयतेऽवस्थाप्यत इति पुरन्धिर्बुद्धिः कर्मण्यधिकरणे चेति दधातेः किप्रत्ययः । "तत्पुरुषे कृति बहुलमिति" पा० बहुलवचनादलुक् इदं च व्युत्पत्तिमात्रं वस्तुतः पृषोदरादिरेव" माधवभाष्यम् । पुरन्धिः अस्त्यस्य मतुप् "छन्दसीरः पा० मस्य वः पुरन्धिवत् ऋ०९७।२।४ तद्युते त्रि० ।

**पुरन्ध्रि(न्ध्री)** पुरं गेहस्थजनं धारयति पालयति धृ–खच् ङीप् पृषो० वा ह्रस्वः । बहुकुटुम्बवत्याम्, पतिपुत्रवत्याञ्च स्त्रियां, "स्रेहेन्दुहे व्याघ्रपुरन्ध्रिवर्गम्" कुमा० ।

**पुरपाल** पु० पुरं नगरं देहं वा पालयति पालि–अण् । १नगरपाले २देहपालके जीवे च ।

**पुरभिद्** पु० पुराणि त्रिपुरासुरपुराणि भिनत्ति–भिद्–क्विप् । महादेवे शिवे हेमच० त्रिपुरघ्नशब्दे दृश्यम् । पुरभेदनादयोऽप्यत्र ।

**पुरमथन** पु० पुरं त्रिपुरासुरं मथ्नाति मथ–ल्यु । शिवे

**पुरमार्ग** पु० ६त० । नगरमार्गे कुमा० ४।११ श्लो० ।

**पुरमानिनी** स्त्री नदीभेदे भा० भी० ९अ० ।

**पुरय** पु० नृपभेदे ऋ० ६।६३।९ भा० ।

**पुररक्ष** पु० पुरं रक्षति रक्ष–अण् उप० स० । नगररक्षके क्षिणि ६त० । पुररक्षिन् तत्रार्थे ।

**पुरला** स्त्री पुर–कलच् । दुर्गायां हेमच० ।

**पुरवासिन्** त्रि० पुरे वसति णिनि । नगरवासिनि पौरे जने स्त्रियां ङीप् ।

**पुरशासन** पु० पुरं शास्ति शास–ल्यु । महादेवे कुमा० ७।२०

**पुरश्चरण** न० पुरस्+चर–भावे ल्युट् । १अग्रत आचरणे तन्त्रोक्ते २गृहीतमन्त्रसिद्धिहेतुप्रयोगभेदे तत्प्रकारादि तन्त्रसारे उक्तं यथा

"अथ पुरश्चरणं योगिनीहृदये "गुरोराज्ञां समादाय शुद्धान्तःकरणो नरः । ततः पुरस्क्रियां कुर्य्यान्मन्त्रसिद्धि काम्यया" । तस्य नित्यतामाह "जीवहीनो यथा देही सर्वकर्मसु न क्षमः । पुरश्चरणहीनोऽपि तथा मन्त्रः प्रकीर्त्तितः । तस्मादादौ स्वयं कुर्य्याद्गुरुं वा कारयेद्बुधः" योगिनीहृदये "गुरोरभावे विप्रं वा सर्वप्राणिहिते रतम् । स्निग्धं शास्त्रविदं मित्रं नानागुणसमन्वितम् । स्त्रियं वा सद्गुणोपेतां सपुत्रां विनियोजयेत् । आदौ पुरस्क्रियां कर्त्तुं स्थाननिर्णय उच्यते" । योगिनीहृदये "पुण्यक्षेत्रं नदीतीरं गुहा पर्वतमस्तकम् । तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं वनम् । उद्यानानि विविक्तानि बिल्वमूलं तटं गिरेः । तुलसीकाननं गोष्ठं वृषशून्यं शिवालयम् । अश्वत्थामलकीमूलं गोशाला जलमध्यतः । देवतायतनं कूलं समुद्रस्य निजं गृहम् । साधने तु प्रशस्तानि स्थानान्येतानि मन्त्रिणाम् । अथ वा निवसेत्तत्र यत्र चित्तं प्रसीदति" । वायवीयसंहितायामपि "सूर्य्यस्याग्नेर्गुरोरिन्दोर्दीपस्य च जलस्य च । विप्राणाञ्च गवां चैव सन्निधौ शस्यते जपः" । तथा "गृहे शतगुणं विद्याद्गोष्ठे लक्षगुणं भवेत् । कोटिर्देवालये पुण्यमनन्तं शिवसन्निधौ । स्थले गोष्ठे तडागे च नदीनदशिवालये । गुरोर्वा सन्निधिर्यत्र स जपः परमो मतः । म्लेच्छदुष्टमृगव्यालशङ्कातङ्कविवर्जिते । एकान्तपावने निन्दारहिते भक्तिसंयुते । सुदेशे धार्मिके देशे सुभिक्षे निरुपद्रवे । रम्ये भक्तजनस्थाने निवसेत्तापसः प्रिये ! । गुरूणां सन्निधाने च चित्तैकाग्र्यस्थले तथा । प्रेतभूम्यादिकञ्चैव तत्तत्कल्पप्रकाशितम् । एषामन्यतमं स्थानमाश्रित्य जपमाचरेत् । यत्र ग्रामे जपेन्मन्त्री तत्र कूर्मं विचिन्तयेत्" गौतमीये "पर्व्वते सिन्धुतीरे वा पुण्येऽरण्ये नदीतटे । यदि कुर्य्यात् पुरश्चर्य्यां तत्र कूर्मं न चिन्तयेत् । ग्रामे वा यदि वा वास्तौ मठे तत्र विचिन्तयेत्" रुद्रयामले "जपमेकगुणं गेहे गोष्ठे दशगुणं भवेत् । वनान्तरे शतगुणं तडागे च सहस्रकम् । नदीतीरे लक्षगुणं नगाग्रे कोटिसम्मितम् । शिवालये कोटिशतमनन्तं गुरुसन्निधौ" । अथ पुरश्चरणे भक्ष्यादिनियमाः गौतमीये "पुरश्चरणकृन्मन्त्री तत्र भक्ष्यं विवेचयेत् । अन्यथा भोजनाद्दोषात् सिद्धिहानिः प्रजायते । भक्ष्यान्नञ्च समश्नीयान्मन्त्रसिद्धिमभीप्सया । तस्मान्नित्यं प्रयत्नेन भक्ष्याशी भवेन्नरः" । अगस्त्यसंहितायाम् "तिलाश्चैव सिताशुद्धाः कन्दः केमुकवर्ज्जितः । नारिकेलफलञ्चैव कदली लवली तथा । आम्रमामलकञ्चैव पनसञ्च हरीतकी । व्रतान्तरे प्रशस्तञ्च हविष्यं मन्यते बुधैः" । व्रतान्तर इति "हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः । कलायकङ्गुनीवारा वास्तूकं हिलमोचिका । षष्टिकाः कालशाकानि मूलकं केमुकेतरत् । लवणे सिन्धुसामुद्रे गव्ये च दधिसर्पिषी । पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी । पिप्पलीजीरकञ्चैव नागरङ्गकतिन्तिडी । कदली लवली धात्री फलान्यगुडमैक्षवम् । अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते । भुञ्जानो वा हविष्यान्नं शाकं यावकमेव वा । पयोमूलं फलं वापि यत्र यत्रोपलभ्यते । रम्भाफलं तिन्तिडीकं कमलानागरङ्गकम् । फलान्येतानि भोज्यानि पथ्योऽन्यानि विवर्जयेत्" यत्तु योगिनीतन्त्रे "निशायां नालिकाशाकं कलायं लकुचं तथा । कदम्बं नारिकेलञ्च व्रते कुष्माण्डकं त्यजेत्" इति तत्तु व्रतान्तरे बोद्धव्यम् । तथा वर्ज्यानि "विवर्जयेन्मधुक्षार लवणं तैलमेव च । ताम्बूलं कांस्यपात्रञ्च दिवाभोजनमेव च" । तथा "क्षारञ्च लवणं मांसं व्यञ्जनं कांस्यभोजनम् । माषाढकीमसूरांश्च चणकान् कोद्रवानपि । कौटिल्यं क्षौरमभ्यङ्गमनिवेदितभोजनम् । असङ्कल्पित कृत्यञ्च वर्जयेन्मर्दनादिकम् । स्नायाच्च पञ्चगव्येन केवलामलकेन वा । मन्त्रजाप्यसपानीयैः स्नानाचमनभोजनम् । कुर्य्याद्यथोक्तविधिना त्रिसन्ध्यं देवतार्चनम् । अपवित्रकरो नग्नः शिरसि प्रावृतोऽपि वा । प्रलपन् प्रजपेद्यावत्तावन्निष्फलमुच्यते" । नारदीये "बहु सोक्ष

सुपक्वञ्च कुर्य्याद्वै लघुभोजनम्। नेन्द्रियाणां यथातृप्तिस्तथा भुञ्जीत साधकः"। कुलार्णवेऽपि "मद्यादिपानपुष्टाङ्गः कुरुते धर्म्मसञ्चयम्। परान्नदातुः फलस्यार्द्धं कर्त्तारं न संशयः। तस्मात् सर्व्वप्रयत्नेन परान्नं वर्जयेत् सुधीः। पुरश्चरणकाले तु सर्व्वकर्म्मसु शाम्भवि !। जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात्। मनो दग्धं परस्त्रीभिः कथं सिद्धिर्वरानने !" परान्नं भिक्षेतरविषयम्। भिक्षायां तस्य सत्त्वोत्पादात् तथा च "वैदिकाचारयुक्तानां शुचीनां श्रीमतां सताम्। सत्कुलस्थानजातानां भिक्षा स्याद्यजन्मनाम्" योगिनीहृदये "विहाय वह्निं न हि वस्तु किञ्चित् ग्राह्यं परेभ्यः सति सम्भवे च। असम्भवे तीर्थबहिर्विशुद्धात् पर्व्वातिरिक्तं प्रतिग्रह्य जप्यात्। तत्रासमर्थोऽनुदिनं विशुद्धाद्याचेत यावद्दिनमात्रभक्ष्यम्। स्वल्पातिरामादधिकं न सिद्धिः प्रजायते कल्पशतैरलभ्य"। मलादुत्सरिते मन्त्रे प्रणवं समुदीरयेत्। प्रोक्ते पारगे मन्त्रे प्राणायामं समाचरेत्। बहुप्रलापी चाचम्य न्यस्याङ्गानि ततो जपेत्। क्षुतेऽप्येवं तथाऽस्पृश्यस्थानानां स्पर्शनेन च। एवमादीन् नियमान् पुरश्चरणमाचरेत्। विमूत्रोत्सर्गशङ्कादियुक्तः कर्म्म करोति यः। जपार्चनादिकं सर्व्वमपवित्रं भवेत् प्रिये !। मलिनाम्बरकेशादिमुखदौर्गन्ध्यसंयुतः। यो जपेत्तं दहत्याशु देवता गुप्तिसंस्थिता। आलस्यं जृम्भणं निद्रां क्षुतं निष्ठीवनं भयम्। नीचाङ्गस्पर्शनं कोपं जपकाले विवर्जयेत्। एवमुक्तविधानेन विलम्बं त्वरितं विना। प्रत्यहं जपं कुर्य्यात् पुरश्चरणसिद्धये। देवतागुरुमन्त्राणामैक्यं सम्भावयन् धिया। जपेदेकमनाः प्रातःकालान्मध्यन्दिनावधि। यत्संख्यया समारब्धं तत्कर्त्तव्यमहर्निशम्। यदि न्यूनाधिकं कुर्य्यात् व्रतभ्रष्टो भवेन्नरः"। मुण्डमालायाम् "यत्संख्यया समारब्धं तज्जप्तव्यं दिने दिने। न्यूनाधिकं न कर्त्तव्यमासमाप्तं सदा जपेत्। प्रजपेदुक्तसंख्यायाश्चतुर्गुणजपं कलौ"। अन्यत्रापि "कृते जपस्तु कल्पोक्तः त्रेतायां द्विगुणो जपः। द्वापरे त्रिगुणः प्रोक्तश्चतुर्गुणजपः कलौ"। कुलार्णवेऽपि "न्यूनातिरिक्तकर्म्माणि न फलन्ति कदाचन। यथाविधि कृतान्येव तत्कर्म्माणि फलन्ति हि। भूशय्या ब्रह्मचारित्वं मौनमाचार्य्यसेविता। नित्यं त्रिषवणं स्नानं क्षुद्रकर्म्मविवर्जनम्। नित्यपूजा नित्यदानं देवतास्तुतिकीर्त्तनम्। नैमित्तिकार्चनञ्चैव विश्वासो गुरुदेवयोः। जपनिष्ठा द्वादशैते धर्म्माः स्युर्मन्त्रसिद्धिदाः। स्त्रीशूद्रपतितव्रात्यनास्तिकोच्छिष्टभाषणम्। असत्यभाषणं जिह्मभाषणं परिवर्जयेत्। सत्येनापि न भाषेत जपहोमार्चनादिषु। अन्यथानुष्ठितं सर्व्वं भवत्येव निरर्थकम्"। तन्त्रे "ऋतुकालं विना मन्त्री स्त्रियं नापि संस्पृशेत्। मैथुनं तत्कथालापं तद्गोष्ठीः परिवर्जयेत्। पुरश्चरणकाले तु यदि स्यात् सूतकम्। तथापि कृतसंकल्पो व्रतं नैव परित्यजेत्" योगिनीहृदये "शयीत कुशशय्यायां शुचिवस्त्रधरः सदा। प्रत्यहं क्षालयेत् शय्यामेकाकी निर्भयः स्वपेत्। असत्यभाषणं वाचं कुटिलां परिवर्जयेत्। वर्जयेद्गीतवाद्यादिश्रवणं नृत्यदर्शनम्। अभ्यङ्गं गन्धलेपञ्च पुष्पधारणमेव च। त्यजेदुष्णोदकस्नानमन्यदेवप्रपूजनम्"। तत्रैव "नैकवासा जपेन्मन्त्रं बहुवासाकुलोऽपि वा"। वैशम्पायनसंहितायाम् "विपर्य्यासं न कुर्य्याच्च कदाचिदपि मोहतः। उपर्य्यधो बहिर्वस्त्रे पुरश्चरणतत्परः। विनियोगविधाने तु भवेदनियमः क्वचित्। पतितानामन्त्यजानां दर्शने भाषणे श्रुते। क्षुतेऽधोवायुगमने जृम्भणे जपमुत्सृजेत्। तथा तस्य च तत्प्राप्तौ प्राणायामं षडङ्गकम्। कृत्वा सम्यक् जपेच्छेषं यद्वा सूर्य्यादिदर्शनम्"। आदिशब्दाद्वह्निब्राह्मणौ। तन्त्रान्तरे "मनःसंहरणं शौचं मौनं मन्त्रार्थचिन्तनम्। अव्यग्रत्वमनिर्व्वेदो जपसम्पत्तिहेतवः। उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गलावृतः। अपवित्रकरोऽशुद्धः प्रलपन्न जपेत् क्वचित्। अनासीनः शयानो वा गच्छन् भुञ्जान एव वा। अप्रावृतौ करौ कृत्वा शिरसि प्रावृतोऽपि वा। चिन्ताव्याकुलचित्तो वा क्रुद्धो भ्रान्तः क्षुधान्वितः। रथ्यायामशिवे स्थाने न जपेत्तिमिरान्तरे। उपानद्गूढपादो वा यानशय्यागतस्तथा। प्रसार्य्य न जपेत् पादावुत्कटासन एव वा। न यज्ञकाष्ठे पाषाणे न भूमौ नासने स्थितः। मार्ज्जारं कुक्कुटं क्रौञ्चं श्वानं शूद्रं कपिं खरम्। दृष्ट्वाचम्य जपेच्छेषं स्पृष्ट्वा स्नानं विधीयते"। "एवं जपं पुरा कृत्वा तेजोरूपं समर्पयेत्। देवस्य दक्षिणे हस्ते कुशपुष्पार्घ्यवारिभिः। सफलं तद्विभाव्यैव प्राणायामं समाचरेत्। जपस्यादौ जपान्ते च त्रितयं त्रितयञ्चरेत्"। शक्तिविषये देव्या वामहस्ते तथा च "एवं जपं पुरा कृत्वा गन्धाक्षतकुशोदकैः। जपं समर्पयेद्देव्या वामहस्ते विचक्षणः"। "जपान्ते प्रत्यहं मन्त्री होमयेत्तद्दशांशतः। तर्पणञ्चाभिषेकञ्च तत्तद्दशांशतो मुने!।

मत्यहं भोजयेद्विप्रान् न्यूनाधिक्यप्रशान्तये। अथ वा सर्वसम्पूर्त्तौ होमादिकमथाचरेत्”। मुण्डमालायाम् “तस्य यावान् जपः प्रोक्तस्तद्दशांशमनुक्रमात्। तत्तद्द्रव्यैर्जपस्यान्ते होमं कुर्य्याद्दिने दिने”। पुरश्चरणचन्द्रिकायाञ्च “ततो जपदशांशेन होमं कुर्य्याद्दिने दिने। अथ वा लक्षसंख्यायां पूर्णायां होममाचरेत्”। तथा होमाद्यशक्तौ सनत्कुमारीये “यद्यदङ्गं भवेद्भग्नं तत्संख्याद्विगुणो जपः। होमाभावे जपः कार्य्यो होमसंख्याचतुर्गुणः। विप्राणां, क्षत्रियाणाञ्च रससङ्ख्यागुणः स्मृतः। वैश्यानां वसुसंख्याकमेवं स्त्रीणामयं विधिः। यं वर्णमाश्रितः शूद्रः स च तस्य विधिञ्चरेत्। अनाश्रितस्य शूद्रस्य दिक्संख्याकः समीरितः। शूद्रस्य विप्रभृत्यस्य तत्तुल्यः सदृशो जपः”। अत्राप्यशक्तश्चेद्योगिनीहृदये “होमकर्म्मण्यशक्तानां विप्राणां द्विगुणो जपः। इतरेषान्तु वर्णानां त्रिगुणादिः समीरितः। त्रिगुणादिः होमसंख्यात्रिगुणजपः क्षत्रियेण कार्य्यः। वैश्येन चतुर्गुणः। शूद्रेण पञ्चगुणः कार्य्यः। तदुक्तं कुलप्रकाशे “यद्यदङ्गं विहीनं स्यात्तत्संख्याद्विगुणो जपः। कुर्य्युस्त्रिचतुःपञ्च यथासंख्यं द्विजादयः”। एतेन स्त्रीशूद्रादीनां होमाधिकारः। तथा च शूद्राणां त्र्यसमिति कुण्डप्रकरणे शारदायाम्। स्त्रीणां होमाधिकारश्च तत्रैव “लाजैस्त्रिमधुरोपेतैर्होमैः कन्यां प्रयच्छति। अनेन विधिना कन्या वरमाप्नोति वाञ्छितम्”। अतः स्त्रीणां होमाधिकारः। तच्च ब्राह्मणद्वारा तथा च तन्त्रे “ओङ्कारोच्चारणाद्धोमात् शालग्रामशिलार्च्चनात्। ब्राह्मणीगमनाच्चैव शूद्रश्चाण्डालतां व्रजेत्”। तथा स्त्रीणामपि सर्व्ववैदिककर्म्मसु शूद्रतुल्यत्वप्रतिपादनात् यथा “स्त्रीशूद्रकरसंस्पर्शो वज्रपातसमो मम” इति भगवद्वचनात् तथा नारायणकल्पे “अष्टाक्षरो महामन्त्रः स प्राप्यः शूद्रयोषितोः। प्रणवादिस्तु यो मन्त्रो न स्त्रीशूद्रे प्रशस्यते” इति सर्व्वत्र स्त्रीणां शूद्रवद्व्यवहारः। सर्व्वेषां वा द्विगुणो जपः। तथा च तन्त्रान्तरे “यद्यदङ्गं विहीयेत तत्संख्याद्विगुणो जपः। कर्त्तव्यश्चाङ्गसिद्ध्यर्थं तदशक्तेन भक्तितः। न चेदङ्गं विहीयेत तद्विशिष्टमवाप्नुयात्” तथागस्त्यसंहितायाम् “यदि होमेऽप्यशक्तः स्यात् पूजायां तर्पणेऽपि वा। तावत्संख्यजपेनैव ब्राह्मणाराधनेन च। भवेदङ्गद्वयेनैव पुरश्चरणमाप्यते”। तत्र ब्राह्मणभोजनमावश्यकमेव “सर्व्वथा भोजयेद्विप्रान् कृतसाङ्गत्वसिद्धये। विप्राराधनमात्रेण व्यङ्गं साङ्गं भवेद्ध्रुवम्। दीक्षाहीनान् पशून् यस्तु भोजयेद्वा स्वमन्दिरे। स याति परमेशानि! नरकानेकविंशतिम्”। पशुर्द्विधा अदीक्षितः कुलाचारनिन्दकश्च यथा कुलार्णवे “अदीक्षितः कुलाचारनिन्दको द्विविधः पशुरिति”। नैवेद्यदानेऽपि “न पशुभ्यो न वाऽद्विजे” इति निन्दाश्रवणाच्च सर्व्वत्रायं विधिरिति सम्प्रदायः। “एवं यः कुरुते देवि! पुरश्चर्य्यादिकं प्रिये! सर्व्वपापविनिर्म्मुक्तो देवसायुज्यमाप्नुयात्”। ततश्च “गुरवे दक्षिणान्दद्याद्भोजनाच्छादनादिभिः। गुरुसन्तोषमात्रेण मन्त्रसिद्धिर्भवेद्ध्रुवम्। सम्यक्सिद्धैकमन्त्रस्य पञ्चाङ्गोपासनेन च। सर्व्वे मन्त्राश्च सिद्ध्यन्ति तत्प्रसादात् सुरेश्वरि!। गुरुमूलमिदं सर्व्वमित्याहुस्तन्त्रवेदिनः। एकग्रामे स्थितो नित्यं गत्वा वन्देत वै गुरुम्। गुरुरेव परं ब्रह्म तस्मादादौ तमर्च्चयेत्। तदन्ते महतीं पूजां कुर्य्यात् साधकसत्तमः। सुवासिनीं कुमारीञ्च भूषणैरभिभूषयेत्। मिष्टान्नं बहुशः कार्य्यं भुञ्जीत बान्धवैः सह। एवं सिद्धमनुर्मन्त्री साधयेत् सकलेप्सितान्”। तन्त्रे “अथ वान्यप्रकारेण पुरश्चरणमिष्यते। ग्रहणेऽर्कस्य चेन्द्वोर्वा शुचिः पूर्व्वमुपोषितः। नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः। ग्रासाद्विमुक्तिपर्य्यन्तं जपेन्मन्त्रमनन्यधीः। इति कृत्वा न सन्देहो जपस्य फलभाग् भवेत्”। नद्यभावे “यद्वा पुण्योदके स्नात्वा शुचिः पूर्व्वमुपोषितः। ग्रहणादिविमोक्षान्तं जपेन्मन्त्रं समाहितः” उपवासासामर्थ्ये तु तत्रैव “अथ वान्यप्रकारेण पौरश्चरणिको विधिः। चन्द्रसूर्य्योपरागे च स्नात्वा प्रयतमानसः। स्पर्शाद्विमोक्षपर्य्यन्तं जपेन्मन्त्रं समाहितः। जपाद्दशांशतो होमं तथा होमात्तु तर्पणम्। एवं कृत्वा तु मन्त्रस्य जायते सिद्धिरुत्तमा। चन्द्रसूर्य्योपरागे तु ये शक्ताः परसेविनः। तेषां विद्या न सिद्ध्यन्ति परं नरकगामिनः। सूर्य्याचन्द्रमसोः पर्व्व प्राप्यापि च पुरस्क्रियाम्। ये मूढा न च कुर्व्वन्ति ते भवन्ति कुलद्रुहः” इति कुलार्णववचनात् पुरश्चरणस्यावश्यकत्वमेवेति। गोपालमन्त्रतर्पणं तु होमसमसंख्यकं यथा “इह गोपालमन्त्राणां तर्पणं होमसंख्यया” इति। “इष्ट्वा स्नात्वा सङ्कल्पो विमोक्षान्तं जपञ्चरेत्। तावद्दानादिकं कुर्य्याद्ग्रहणान्ते शुचिः पुमान्। एवंजपे मन्त्रसिद्धिर्भवत्येव न संशयः”। ग्रहणे

जपस्यावश्यकत्वम् "श्राद्धादेरनुरोधेन यदि जाप्यं त्यजेन्नरः। स भवेद्देवताद्रोही पितॄन् सप्त नयत्यधः" इति सनत्कुमारीयवचनादिति केचित्। वस्तुतस्तु आरब्धपुरश्चरणविषयमिदम्। तथा हि "आरब्धे पुरश्चरणे यदि यज्ञो भवेत् तदा। श्राद्धादेरनुरोधेन जपं नैव त्यजेत् नरः"। एवं रात्रावपि पुरश्चरणे बोद्धव्यम् इति सर्वसमञ्जसम्। नारदतन्त्रे "रोहिणी श्रवणार्द्रा च धनिष्ठा चोत्तरात्रयम्। पुष्या शतभिषा हस्ता पुरश्चरणकर्मणि। पूर्णिमा पञ्चमी चैव द्वितीया सप्तमी तथा। त्रयोदशी च दशमी प्रशस्ता सर्वकर्मणि। सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणि। पुरश्चर्यां प्रकुर्वाणो मासादीन् न शोधयेत्"। योगिनीहृदये "कल्पोक्तविधिना मन्त्री कुर्य्याद्धोमादिकन्ततः। अथ वा तद्दशांशेन होमादींश्च समाचरेत्" तथा "अनन्तरं दशांशेन क्रमाद्धोमादिकञ्चरेत्। तदन्ते महतीं पूजां कुर्य्यात् ब्राह्मणभोजनम्। ततो मन्त्रस्य सिद्ध्यर्थं गुरुं संपूज्य तोषयेत्। एवञ्च मन्त्रसिद्धिः स्याद्देवता च प्रसीदति। दीक्षाहीनान् पशून् यस्तु भोजयेद्धा स्वमन्दिरे। स याति परमेशानि! नरकानेकविंशतिम्"। यद्यपि पुरश्चरणपदं पञ्चाङ्गपरं तथा च "जपहोमौ तर्पणञ्चाभिषेको विप्रभोजनम्। पञ्चाङ्गोपासनं लोके पुरश्चरणमिष्यते" तथापि ग्रहणादौ पुरश्चरणपदं गौणं जपमात्रम् "सूर्य्योदयं समारभ्य यावत् सूर्य्योदयान्तरम्" इत्यादौ तथादर्शनात् तत्र होमादेरभावात्। तर्हि कथं ग्रहण पुरश्चरणे होमादिरिति चेत्। वचनादेव जायते न च पुरश्चरणस्य पञ्चाङ्गत्वात् सर्वत्र तदेव स्यादिति वाच्यम्। ग्रहणे पुनस्तद्विधानमनर्थकं स्यात्। किन्तु ग्रहणे होमादिनियमान् नान्यत्र होमादिः। ग्रहणपुरश्चरणे होमादिविधानन्तु प्रकृतीभूतपञ्चाङ्गपुरश्चरणतुल्यताबोधनाय। अतएव ग्रहणे पञ्चाङ्गस्वरूपपुरश्चरणकर्त्ता मुख्यप्रयोगेऽप्यधिकार इति प्रकटीकृतम्। तदकरणे पुनः केवलजपमात्रपुरश्चरणे नाधिकार इति सर्वसम्मतम्। पुरश्चरणकालस्तु वाराहीतन्त्रे "चैत्रे मासत्र वा कुर्य्यात् शुभर्क्षे गुरुशासनात्। द्वादश्यां शुक्लपक्षे तु माधवे मासि तत्तिथौ। आरभेदमलायां वै पुरश्चर्यां विशुद्धये"। इदन्तु गोपालविषयम्। वैशम्पायनसंहितायाम् "चन्द्रताराऽनुकूले च शुक्लपक्षे शुभेऽहनि। आरभेनृमकरादौ च यत्ने विष्णो जपेन च। चन्द्रताराऽनुकूले च शुक्लपक्षे शुभेऽहनि। आरभेनृमकरादौ च हरौ सुप्ते न चारभेत्"। प्रतिप्रसवो रुद्रयामले "कार्त्तिकाश्विनवैशाखमाघेऽथ मार्गशीर्षके। फाल्गुने श्रावणे दीक्षा पुरश्चर्य्या प्रशस्यते। रवौ गुरौ सिते सोमे कर्त्तव्यं बुधवासरे। चन्द्रताराऽनुकूले च पुरश्चरणकर्म तत्। ग्रहणे च महातीर्थे न कालमवधारयेत्"। शुक्रास्ते शुक्रोदये च दीक्षापुरश्चरणयोर्निषेधमाह तन्त्रान्तरे "शुक्रेऽस्ते ह्युदिते नैव दीक्षां कुर्य्याज्जपं प्रिये!। कृते नाशोऽभवेदाशु ह्यायुःस्त्रीसुतसम्पदाम्"। क्यप्। पुरश्चर्य्याप्यत्र स्त्री। [त्रिका०।

**पुरश्छद** पु० पुरश्छादयति छदि णिच् ह्रस्वः। (उलु) तृणभेदे

**पुरस्** अव्य० प्रथमापञ्चमीसप्तम्यर्थवृत्तेः पूर्वशब्दात् दिग्देशकालवाचकात् असि पुर् आदेशः। १पूर्वस्यां दिशि पूर्वस्मिन् २काले ३देशे च। तथा च पूर्वा दिक् पूर्वः कालो देशो वा तथा पूर्वस्या दिश आगच्छति पूर्वस्मादागच्छति पूर्वस्यां दिशि वर्त्तते पुरो वर्त्तते एवं देशे काले च।४अग्रत इत्यर्थे अमरः। "पुरोऽव्ययम्" पा० अस्य च समर्थेन सह समासः कृञ्योगे भूप्रभृतियोगे च उपपदसंज्ञायाम् पुरस्कृत्य पुरोभूय पुरोगत्वेति प्रयोगः।

**पुरसंस्कार** पु० ६त०। नष्टदुर्गस्य संस्कारे हारा०।

**पुरस्कार** पु० पुरस्+कृ–भावे घञ्। १पूजने २अरिप्रहणे ३अभिशापे ४अग्रतः करणे ५स्वीकारे ६सेके च। पुरस्+कृ–भावे श। पुरस्क्रिया तथार्थे पुरश्चरणे च स्त्री।

**पुरस्कृत** त्रि० पुरस्+कृ–क्त। १पूजिते २अभिशप्ते ३अरिग्रहीते ४अग्रतः कृते च मेदि०। ५स्वीकृते ६सिक्ते च हेमच०।

**पुरस्तात्** अव्य०दिग्देशकालपरात् पूर्वशब्दात् प्रथमापञ्चमीसप्तम्यर्थे अस्ताति पुर् आदेशः। दिग्देशकालवृत्तौ प्रथमापञ्चमीसप्तम्यर्थवृत्तौ पूर्वशब्दार्थे, पुरोवत् उदाहरणम् बोध्यम्

**पुरहन्** पु० पुरं त्रिपुरं हन्ति हन–भूते क्विप्। १महादेवे शत्रुपुराणां हन्तरि २विष्णौ च भाग० ७।१०।६८ तस्य महादेवे स्वशक्त्याः संक्रमणात् त्रिपुरनाशकत्वम् तत्कथा तत्र अध्याये दृश्या।

**पुरा** अव्य०पुर–का।१अविच्छेदेन क्रियाकरणे २पुराणे ३अतीते ४भाविनि ५निकटे पुरावृत्ते च अमरः। पुर+क टाप्। ७पूर्वस्यां दिशि ८सुगन्धिद्रव्यभेदे च स्त्री०राजनि० "पुरा तिक्ता कटुः शीता कषायकफपित्तनुत्। पित्तश्वासश्रमविषदाहमूर्च्छातृषापहा" तद्गुणाः तत्रोक्ताः ९भीरौ अव्य० शब्दरत्ना०।

**पुराकथा** स्त्री पुरा प्राचीना कथा। इतिहासे भाग० ३।१३।४८

**पुराकल्प** पु० पुरा पुराणः कल्पः। प्राचीने कल्पे मनुः ८।२२अ०। "स्तुतिर्निन्दापुराकृतिपुराकल्पः" इत्यर्थवादः गौ०।१।२।६०उक्ते २अर्थवादभेदे। अर्थवादशब्दे ३६६ पृ० दृश्यम्।

**पुराकृत** त्रि० पुरा पूर्वं कृतम्। पूर्वकृते इह जन्मनि जन्मान्तरे कृते पापपुण्यादौ "अकाले दर्शनं विष्णो० र्हन्ति यत्र पुराकृतम्" स्मृतिः। प्रारब्धकर्मणस्तु भोगादेव क्षयो न तेषां केनापि नाश्यतेति सिद्धान्तः।

**पुराग** त्रि० पुरा गच्छति गम–ड। पूर्वगामिनि ततः कृशा० श्वा०चतुरर्थ्यां छण्। पौरागीय तत्सन्निकृष्टदेशादौ त्रि०

**पुराण** आख्याने कण्ड्वादेराकृतिगणत्वात् यक् पर० सक० सेट्। पुराण्यति अपुराण्यीत्।

**पुराण** त्रि० पुरा भवः ट्यु नि० तुट् न, पुरा नीयते नी ड वा पूर्व०णत्वम्। १पुराभवे "सर्गश्च प्रतिसर्गश्च वंशोमन्वन्तराणि च। वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम्" इत्युक्तलक्षणे व्यासादिप्रणीते २शास्त्रभेदे न०।

तच्च द्विविधं महापुराणोपपुराणभेदात् तत्र उपपुराणशब्दे तद्भेदादिकमुक्तं महापुराणं च दशलक्षणकम् "सर्गोऽस्याथ विसर्गश्च वृत्ती रक्षान्तराणि च। वंशो वंशानुचरितं संस्था हेतुरपाश्रयः। दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः। केचित् पञ्चविधं ब्रह्मन्! महदल्पव्यवस्थया। अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः। भूतसूक्ष्मेन्द्रियार्थानां सम्भवः सर्ग उच्यते। पुरुषानुगृहीतानामेतेषां वासनामयः। विसर्गोऽयं समाहारो बीजाद्बीजं चराचरम्। वृत्तिर्भूतानि भूतानां चराणामचराणि च। कृता स्वेन नृणां तत्र कामाच्चोदनयापि वा। रक्षाऽच्युतावतारेहा विश्वस्यानुयुगे युगे। तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः। मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वराः। ऋषयोऽंशावताराश्च हरेः षड्विधमुच्यते। राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वयः। वंशानुचरितं तेषां वृत्तं वंशधराश्च ये। नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः। संस्थेति कविभिः प्रोक्तश्चतुर्द्धास्य स्वभावतः। हेतुर्जीवोऽस्य सर्गादेरविद्याकर्मकारकः। यं चानुशयिनं प्राहुरव्याकृतमुतापरे। व्यतिरेकान्वयौ यस्य जाग्रत्स्वप्नसुषुप्तिषु। मायामयेषु तद्ब्रह्म जीववृत्तिष्वपाश्रयः। पदार्थेषु तथा द्रव्यं तन्मात्रं रूपनामसु। बीजादिपञ्चतान्तासु ह्यवस्थासु युतायुतम्" भाग०१२।७अ०। तच्चाष्टादशविधम्। विष्णुपुराणे तद्भेदा उक्ता यथा

"अष्टादश पुराणानि पुराणज्ञाः प्रचक्षते। ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा। तथान्यन्नारदीयञ्च मार्कण्डेयञ्च सप्तमम्। आग्नेयमष्टमञ्चैव भविष्यं नवमं स्मृतम्। दशमं ब्रह्मवैवर्त्तं लैङ्गमेकादशं स्मृतम्। वाराहं द्वादशञ्चैव स्कान्दञ्चैव त्रयोदशम्। चतुर्दशं वामनञ्च कौर्मं पञ्चदशं स्मृतम्। मात्स्यञ्च गारुडञ्चैव ब्रह्माण्डञ्च ततःपरम्"। हेमाद्रि० व्र० उक्तं तेषां श्लोकसंख्यादि तत्तत्पुराणशब्दे दृश्यम्। तेषां तामसत्वादिभेदाः पद्मपु० उत्तरख० ४३अ० दर्शिता यथा "मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च। आग्नेयञ्च षडेतानि तामसानि निबोधत"। "वैष्णवं नारदीयञ्च तथा भागवतं शुभम्। गारुडञ्च तथा पाद्मं वाराहं शुभदर्शने!। सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै"। "ब्रह्माण्डं ब्रह्मवैवर्त्तं मार्कण्डेयं तथैव च। भविष्यं वामनं ब्राह्मं राजसानि निबोधत। सात्त्विका मोक्षदा देवि! निर्वाणप्राप्तिहेतवः"। अशीति वराटकमिते ३पणे ४कार्षापणे च पु०न० शब्दरत्ना०।

**पुराणग** पु० पुराणैः गीयते गै–कर्मणि क, पुराणं गायति गै–क वा। १ब्रह्मणि परात्मनि हेमच०२पुराणगायके त्रि०।

**पुराणपुरुष** पु० पुराणैरुपस्तुतः पुरुषः शाक०त० कर्म० वा। १विष्णौ २वृद्धे पुरुषे च त्रिका०।

**पुराणान्त** पु० पुराणान् पुरातनान् अन्तयति अन्त+णिच्–अण् उप०स०। १यमे हेमकरः। हृत०। २पुराणभेदे च

**पुरातन** त्रि० पुराभवः पुरा+ट्यु–तुट् च। १पुराभवे अमरः स्त्रियां ङीप्। २विष्णौ पु० "स्थानमव्ययः पुरातनः" विष्णु स०। "कालेनापरिच्छिन्नत्वात् पुराऽपि भवतीति पुरातनः" भा०। [देहाधिपे जीवे पुरञ्जनशब्दे दृश्यम्

**पुराधिप** पु० हृत०। १नगराधिपे। पुराध्यक्षादयोऽप्यत्र।

**पुरायोनि** पु० पुरा प्राचीना योनिरस्य महादेवे। "पुरायोनिर्युधाजिच्च कथिता स्तुदितो भवः" भा०व०१८५अ०।

**पुरारति** पु० हृत०। त्रिपुरभेदके शिवे पुरारिप्रभृतयोऽपि

**पुरार्द्धविस्तार** पु० पुरा प्राग्वर्त्ती अर्द्धविस्तारोऽस्य। १खेटके २अस्त्रभेदे हेमच०।

**पुरावती** स्त्री नदीभेदे भा०भी० ६अ०।

**पुरावसु** पु० पुरा पूर्वं वसुः। वसुभेदांशजाते भीष्मे त्रिका०।

द्युनामवसोर्वसिष्ठशापेन भीष्मरूपेणाविर्भवकथा भा०आ० ९७अ० दृश्या । [भिज्ञे ।

**पुराविद्** त्रि० पुरा पुरावृत्तं वेत्ति विद्–क्विप् । पुरावृत्ता-

**पुरावृत्त** न० पुरा पूर्वकालिकं वृत्तम् यत्र । १इतिहासे पूर्वतनकथने भारतादौ अमरः । कर्म० । २पूर्वतनवृत्तान्ते च ।

**पुरासाह्** पु० पुराणि शत्रुपुराणि सहते अभिभवति सह–ण्वि पूर्वपददीर्घः । १शत्रुपुराभिभावके २इन्द्रे च । झलि पदान्ते च "सहेः साडः सः" पा० षत्वम् ऋ०१०।७४।४ अन्यत्र न षत्वम् । [तायां राजनि० ।

**पुरासिनी** स्त्री पुरं गृहमस्यति अस–णिनि । सहदेवील-

**पुरासुहृद्** पु० पुरस्य त्रिपुरस्यासुहृत् शत्रुः । त्रिपुरारौ महादेवे हेमच० ।

**पुरि(री)** स्त्री पूर्यते पृ–इ किच्च । १नगरे २नद्याञ्च उज्ज्वलद०। वा ङीप् । ३राजनि त्रि०को० । तत्र जिगीषु नगरे वर्णनीयपदार्थाः भा०व० दर्शिता यथा
"अभिसारेण सर्वेण तत्र युद्धमवर्त्तत । पुरी समन्ताद्विहिता सपताका सतोरणा । सचक्रा सहुडा चैव सयन्त्रखनका तथा । सोपतल्पप्रतोलीका साट्टाट्टालकगोपुरा । सचक्रग्रहणी चैव सोल्कालातावपोथिका । सोष्ट्रिका भरतश्रेष्ठ ! सभेरीपणवानका । सतोमराङ्कुशा राजन् ! सशतघ्नीकलाङ्गला । सभुशुण्ड्यश्मगुडका सायुधा सपरश्वधा । लोहचर्मवती चापि साग्निः सगुडशृङ्गिका । शास्त्रदृष्टेन विधिना संयुक्ता भरतर्षभ ! । रथैरनेकैर्विविधैर्गदसाम्बोद्धवादिभिः । पुरुषैः कुरुशार्दूल ! समर्थैः प्रतिवारणे । अभिख्यातकुलैर्वीरैर्दृष्टवीर्यैश्च संयुगे । मध्यमेन च गुल्मेन रक्षिभिः सा सुरक्षिता । उत्क्षिप्तगुल्मैश्च तथा हयैश्च सपताकिभिः । आघोषितञ्च नगरे न पातव्या सुरेति वै । प्रमादं परिरक्षद्भिरुग्रसेनोद्धवादिभिः । प्रमत्तेष्वभिघातं हि कुर्याच्छाल्वो नराधिपः । इति कृत्वाऽप्रमत्तास्ते सर्वे वृष्ण्यन्धकाः स्थिताः । आनर्त्ताश्च, तथा सर्वे नटनर्त्तकगायनाः । बहिर्निवासिताः क्षिप्रं रक्षद्भिर्वित्तसञ्चयम् । संक्रमा भेदिताः सर्वे नावश्च प्रतिषेधिताः । परिखाश्चापि कौरव्य ! कीलैः सुनिचिताः कृताः । उदपानाः कुरुश्रेष्ठ ! तथैवाप्यम्बरीषकाः । समन्तात् क्रोशमात्रञ्च कारिता विषमा च भूः । प्रकृत्या विषमं दुर्गं प्रकृत्या च सुरक्षितम् । प्रकृत्या चायुधोपेतं विशेषेण तदाऽनघ ! । सुरक्षितं सुगुप्तं च सर्वायुधसमन्वितम् । तत्पुरं भरतश्रेष्ठ ! यथेन्द्रभवनं तथा । न चामुद्रोभिनिर्याति न चामुद्रः प्रवेश्यते । वृष्ण्यन्धकपुरी राजंस्तदा सौभसमागमे । अनुरथ्यासु सर्वासु चत्वरेषु च कौरव ! । बलं बभूव राजेन्द्र ! प्रभूतगजवाजिमत् । दत्तवेतनभक्तं च दत्तायुधपरिच्छदम् । कृतोपधानं च तदा बलमासीन् महाभुज ! । न कुप्यवेतनी कश्चिन्न चातिक्रान्तवेतनी । नानुग्रहभृतः कश्चिन्न चादृष्टपराक्रमः । एवं सुविहिता राजन् द्वारका भूरिदक्षिणा । आहुकेन सुगुप्ता च राज्ञा राजीवलोचन!" भा०व०१५अ० ।
"अभितः परित उपरितश्चायुधानां सरणं निःसरणमभिसारस्तेन सर्वेणाच्छिद्रेण सर्वाभ्यो दिग्भ्यो युगपद्विरलायुधसमुद्गमेनेत्यर्थः । पताका ध्वजाञ्चल तोरणानि बहिर्द्वाराणि चक्राणि योधगणाः हुडास्तटाश्रयस्थानानि भाषायां (बुरुज)इति संज्ञानि । अन्ये तु विण्मूत्रोत्सर्जनशृङ्गाणि हुडा इत्याहुः उदाहरन्ति च "कल्पयन्ते हुडशृङ्गाणि रथस्योपरि धूरपि विण्मूत्रस्पर्शशुद्ध्यर्थं करादिस्पर्श उच्यते" इति । यन्त्राण्याग्नेयौषधबलेन दृषत्पिण्डोत्क्षेपणानि महान्ति(कमान) इति संज्ञानि क्षुद्राणि सीसगुलिकोत्क्षेपणानि (वन्दुक) इति संज्ञानि । खनकाः सुरङ्गद्वारा गुप्तमार्गकर्त्तारः । उपतल्पा लोहसूचाः कीलास्तद्युक्ताः प्रतोल्यो रथ्यामार्गा यस्यां सा अट्टालिका उपरिगृहाः गोपुराणि साट्टानि अट्टेनान्नेन सहितानि अट्टालकादीनि यस्यां सा साट्टेति विशेषणम् उपतल्पस्य पाशान्तस्य रथ्यायाश्चावृत्त्या संबध्यते । चक्रग्रहणी सैन्यनिग्राहिका (मोर्चा) इति म्लेच्छप्रसिद्धा । सोल्कालातावपोथिका सोल्कमलातं ज्वालासहितमुल्मुकं यस्यां सा सोल्कालाता अवबद्धाः पोथिकायन्त्रबद्धाः काष्ठपाषाणादयो रिपूणामुपरिपातनाय यस्यामिति प्राञ्चः । उल्केवोल्का प्राणहरत्वाद्यन्त्रोत्क्षिप्तो गोलः अलातं सकाष्ठदण्डलोहमयमाग्नेयं प्रहरणं (वाण) इति भाषायां प्रसिद्धं तयोरप्रत्याख्येयगत्योरवपोथिकाः पातयितारो मन्त्रमयः शक्तयः कर्णेन्द्रदत्तशक्तिसदृशास्तद्युक्ताः सोल्कालातावपोथिकाः । उष्ट्रिका उष्ट्रचर्ममयाणि भाण्डानि दृष्टिकेति पाठे ऋष्टय आयुधविशेषाः । अश्मगुडका वर्त्तुलिताः पाषाणाः लोहमयानि चर्माणि कमठपृष्ठाकाराणि प्रहारवारकाणि (ढाल) साग्निः आग्नेयौषधसहिता गुडागोलकाः शृङ्गिकास्तदुत्क्षेपकयन्त्राणि शत्रूणामुपरिपातनाय तप्तोगुडो द्रवीभूतो

यत्र शिखरे स्थाप्यते तत्सहितेत्यन्ये। मध्यमो गुल्मः यत्र स्थितेन योधसङ्घेन चतुर्दिगवस्थिता रिपवो द्रष्टुं बाणादिना प्रहर्त्तुं च शक्यन्ते तादृशसङ्घस्थानम्। उत्क्षिप्तगुल्मैः परकीयगुल्मोच्चाटनकरैः। अप्रमत्ता इतिच्छेदः। संक्रमा नदीसेतवः। कीलैः शूलैः सुनिचिता व्याप्ताः। "उदपानाः कूपाः" "अम्बरीषो भवेद्भ्राष्ट्र" इति विश्वः शुष्काग्निरित्यन्ये। विषमलोहकण्टकाद्याकीर्णां। अनुरथ्यासु प्रतिरथ्यम्। वेतनं धनं भक्तं नित्यभोजनं कृतोपधानं कृतविशेषम्। कुप्यं स्वर्णरूप्येतरधनं ताम्रादि। पद्मोरणोद्यमस्तमनुलक्ष्यीकृत्य भृतोऽनुग्रहभृतस्तत्कालस्वीकृतो न कश्चित् किन्तु चिरसंभृत एव। कृपा भृतो न किन्तु शौर्य एवेति वा। भूरिदक्षिणा बहवो दाक्षिण्ययुक्ता यस्याम् आङ्केन उपसेनेन" नील०। ४सन्न्यासिनामुपाधिभेदे स्त्री "ज्ञानरत्नेन सम्पूर्णा पूर्णतत्त्वपर्य्यास्थितिः। परब्रह्मरतो नित्यं पुरीनाम्ना स उच्यते" महानिर्वा०, ५देहे च स्त्री।

**पुरि(री)तत्** स्त्री पुरीं देहं तनोति तन–क्विप्। १देहारक्षके (आँत) अन्त्राख्ये नाडीभेदे। पुरि देहे तनोति आच्छादयति हृदयादि अलुक्स० ह्रस्वमध्यः। २हृदयाच्छादके मांसभेदे यजु० २५।८ दीर्घपाठः अन्यत्र ह्रस्वपाठः। ३देहे च "यदा सुप्तो न कञ्चन वेद हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते" शत०ब्रा० १४।५।१।२१ "यस्मिन् काले जाग्रत्स्वप्नयोर्द्रष्टा दर्शनवृत्तिं स्वप्नं हित्वा सुषुप्तः विशेषज्ञानाभावेन सम्प्रसादस्वरूपं ब्रह्मैक्यं गतो भवति। हृदयं नामोदरवक्षःप्रदेशयोर्मध्यस्थितः पुण्डरीकाकारो मांसपिण्डस्तत्परिवेष्टनं पुरीतदित्युच्यते इह पुनस्तदुपलक्षितं शरीरं पुरीतच्छब्देनाभिप्रेतम्। तथा च हृदयात् पुरीततं शरीरमभिप्रतिष्ठन्त इति कृत्स्नं शरीरं व्याप्नुवन्त्योऽश्वत्थपर्णराजय इव बहिर्मुखाः अभितो निःसरन्ति। ताभिर्नाडीभिः कृत्वा जाग्रद्विषयाया बुद्धेः कर्मवशात् प्रत्यवसर्पणमनु विज्ञानमय आत्मा प्रत्यवसृप्येन्द्रियाण्युपसंहृत्य पुरीतति शेते अग्निवत् तप्तं लोहपिण्डमविशेषेण संव्याप्य वर्त्तते" भा०

**पुरिशय** पु० पुरि देहे शेते शी–अच् अलुक् स०। जीवे शत०ब्रा०१४।५।५।१८ [शब्दमाला

**पुरीमोह** पु० पुरीं देहं मोहयति मुह–णिच्–अण्। धूस्तूरे

**पुरीष** न० पॄ–ईषन् किच्च। १विष्ठायाम् अमरः २उदके निघण्टुः पुरीषिन्शब्दे दृश्यम्। विष्ठात्यागप्रकारादिकं यथा "मुहूर्त्ते ब्राह्म उत्थाय रात्रिवासं परित्यजेत्। परिधायापरं वस्त्रं शयनस्थानतोऽन्वहम्। सुखाद्धि हस्तान् प्रक्षाल्य हिराचम्य ततो द्विजः। कृष्ण! कृष्ण! स्मृतिं कृत्वा खनित्वा नैर्ऋतीं दिशम्। खनित्रखननेनैव द्वादशाङ्गुल्यधोऽस्तदम्। गृहीत्वोदकपात्रञ्च मितं गच्छेद्धनुःशतम्। यामाद्वा शरविक्षेपमात्रमनुदिते रवौ। मैत्रमावश्यकं कर्त्तुं नमराच्च चतुर्गुणम्। तत्रिसृष्ट्यायतं गर्त्तं तथा कृत्वा गभीरकम्। कृत्वा त्वद्भिः खनित्रेण कुशैराच्छाद्य तत्तृणम्। शुष्कैः काष्ठैरयज्ञीयैर्भूगर्त्तमवगुण्ठितः। संवीताङ्गो वेणुदलैः पत्रैर्न्यग्रयमाजनैः। कृत्वं खनित्रं संस्थाप्य वारिपात्रमुपानहौ। ततो द्विजस्तु प्रविशेद्वस्त्रेणाच्छाद्य मस्तकम्। यज्ञोपवीतं कर्णेऽथ धृत्वा मौनी च दक्षिणे। अपतो द्विज अग्निं नो पश्यन् सन्तञ्च भास्करम्। गुरुं समीरणं सर्वदेवतामूर्त्तिमेव च। मातरं पितरं चन्द्रं सर्वं गुरुजनं स्त्रियम्। उदङ्मुखस्त्रिसन्ध्यासु दिवसे च यदा निशि। दक्षिणास्य उत्सर्गं कुर्य्यान्मूत्रपुरीषयोः। पूर्वाह्णे तु द्विजः कुर्य्यात् पश्चिमाभिमुखोऽथ वा। अपराह्णे पूर्वमुखो मूत्रगूथविसर्जनम्। मध्याह्ने प्रयतः कुर्य्याद्यतवागुत्तरामुखः। दक्षिणाभिमुखो रात्रौ द्विजो मैत्रं प्रयत्नतः। निशायामन्धकारे तु छायायां दिवसे तथा। यथेच्छं तु सुखो भूत्वा मैत्रं कुर्य्यात् द्विजो भयात्। दिग्भ्रमाच्च मनोदुःखाद्विण्मूत्रस्य विसर्जनम्। मोहाद्वाऽधोमुखः कुर्य्याद्यतवाक्प्रयतो द्विजः। सन्न्यासी ब्रह्मचारी च वानप्रस्थो गृही द्विज!। शाखाध्यायी च वेदानां सर्वयज्ञेषु दीक्षितः। मुनिश्च सर्वधर्मज्ञो दान्तः शान्त उदारधीः। सदोत्तरमुखः कुर्य्याद्वैष्णवो नान्य एव च। प्रातश्च मैत्रं सायाह्ने दक्षिणाभिमुखो निशि। योगिनान्तु तथा स्त्रीणां शूद्रादीनामयं क्रमः। न देवायतने वृक्षमूले च न जले नदे। न नदीकूपमार्गेषु न वापीगोष्ठभूमिषु। न चिताग्निश्मशानेषु नोषरे न द्विजालये। नाम्भःसमीपे न पुण्ड्रे नाकाशे न च शाद्वले। न रथ्ये न काष्ठे च न तीर्थे न द्विजाश्रमे। न यज्ञवृक्षमूलेषु नोपद्वारे चतुष्पथे। न शस्यक्षेत्रे न खले पुष्पोद्याने न चत्वरे। सोपानत्कोन नग्नस्तु न रथ्या-

शेषमूतये। न वैष्णवालये गोष्ठे न सूर्य्याभिमुखस्तथा। न फालकृष्टकेदारे न तिष्ठंश्च कदाचन। न मार्गे च वल्मीके न च पर्व्वतमस्तके। न जलं न दिशोभागांस्तारकाश्चावलोकयन्। न गोव्रजे नदीतीरे निम्नस्थाने न गोमये। न यज्ञभूमौ न गृहे न पवित्रीकृतस्थले। द्विजो न देहच्छायायां मलमूत्रविसर्जनम्। कुर्य्याद्दु यत्नेष्टकाकूटे न च सप्राणिगर्त्तके। उद्धृताम्भोमृत्तिकाभ्यामित्थं नारद! यत्नतः। कृत्वोत्सर्गं ततः कुर्य्यात् शौचं मलपुरीषयोः। शुष्ककाष्ठेन लोष्टेनायज्ञीयेन तृणेन वा। प्रमार्ज्य गुह्यमुत्तिष्ठेत् शिश्नञ्चैव विशेषतः। विधृत्य वामहस्तेन शिश्नं तूपविशेच्छुचि। चेद्दक्षिणामुखः सन्ध्यां दिवोत्तरमुखस्तदा। पूतिगन्धि जलं दुष्टं सफेनञ्च सबुद्बुदम्। तीर्थोदकं सलवणं पाथो वर्णान्तरस्तथा। समुद्रगा नदीवारः सामुद्रञ्च सकर्द्दमम्। यवनान्त्यजखाताम्भः समुद्भवनगोदकम्। धान्यचेलस्य सलिलं सकीटञ्च परित्यजेत्। मानवो देवखाताम्भः सकले शौचकर्म्मणि"। "मृदः सकीटास्तीर्थानां देवायतनगोष्ठयोः। नदोदधिनदीदेवखाततीरस्थमृत्तिकाः। महीतलोद्भवाः चैत्यकुड्ययोः विकृताश्च याः। अन्तर्जला धूलिमृदो वल्मीकस्य च कर्द्दमाः। ऊषराश्च हलोत्खाता मृत्तिका भवनस्य च। अश्वत्थतुलसीधात्रीमूलादीनां च या मृदः। श्मशानभूमेः शैवस्य तथाऽपूतस्थलस्य च। शौचावशिष्टा मार्गस्य आखूत्खाताश्च मृत्तिकाः। यज्ञस्थानस्य विप्राणां साधूनामालयस्य च। मृत्तिका वर्ज्जयेदेता देवर्षे! शौचकर्म्मणि। पवित्रस्थानतो ग्राह्या द्वादशाङ्गुल्यधोमृदः। द्विजः सकलशौचार्थं शर्करादिविवर्जिताः। प्रथमेऽद्भिर्नरः शौचं कुर्य्यान्मृद्भिरतःपरम्। पुनर्जलैः पुरीषस्य यथा गन्धक्षयो भवेत्। मृत्तिका प्रथमा शौचे त्वर्द्धप्रसृतिसम्मिता। पूर्णप्रसृतिमात्रा तु द्वितीया कथिता तथा। तृतीया प्रमिता शौचे सार्द्धप्रसृतिमृत्तिका। चतुर्थ्याद्याः क्रमादेवमर्द्धप्रसृतिवर्द्धिताः। यया मृत्तिकया पूर्यं लिप्तं शौचकारिणः। अर्द्धप्रसृतिमात्रा सा मुनिभिः परिकीर्त्तिता। गुदे दद्यान्मृदन्तिस्रः पञ्च वा सप्त वा तथा। मृदमेकां तथा शिश्ने तिस्रो वा मृत्तिकाद्वयम्। सप्त वामकरे दद्यान्मृद्दक्षिणे चतुर्दश। तिस्रो वा हस्तयोः सप्त चतुर्दश च षोडश। पादयोरेकां मृदं पृष्ठे षड् वा तिस्रश्च मृत्तिकाः। हस्तद्वयमथैकैकां तिस्रश्च षड् मृदस्तथा। मैथुने रेतःस्खलने मूत्रोत्सर्गे च मृद्द्वयम्। दद्यात्तिस्रश्च शिश्ने च तिस्रो वामकरे मृदः। हस्ते च मृद्द्वयं जलैस्तिस्रो वा शुचितत्परः। पादैकैकं द्विजस्तिस्रो गृहीत्वा शौचमाचरेत्। गृहिणो द्विगुणं शौचं यत्नतो ब्रह्मचारिणाम्। गृहस्थात् वानप्रस्थानां प्रोक्तं द्विगुणमेव च। सन्न्यासिनां वैष्णवानां शौचं सेव्यं चतुर्गुणम्। हस्तपादादिपात्रेषु मृद्भिरद्भिश्च गोमयैः। दिवा यद्विहितं शौचं निशायामर्द्धकं भवेत्। एतदर्द्धमशौचे तु जातके मृतकेऽपि च। चौरादिबाधिते मार्गे शौचमर्द्धार्द्धमाचरेत्। योषितामेतदर्द्धन्तु शूद्रादीनाञ्च नारद!। व्याधिभिश्चातुरो मर्त्त्यः स्यात् आर्त्तो यदि यथाबलम्। शौचं कुर्य्यात् कृतं यत्र तत् स्थानं शोधयेज्जलैः। वेदस्मृतिपुराणानि धर्म्मशास्त्राणि नैत्यिकम्। मैत्रादिकर्म्म यः कुर्य्याद्विहाय मन्दधीर्द्विजः। प्रतिष्ठानमायुश्च प्रज्ञां हन्ति यशः श्रियम्। बलमाचारहीनस्य सदा तस्यापवित्रता। सात्वताश्चेद्द्विजा भूपा वैश्यशूद्रान्त्यजाः स्त्रियः। कुर्व्वन्ति शौचं यत्नेन यावच्चेतःपवित्रता। येषां कृष्णस्य मननं तथा नामप्रजल्पनम्। सदैव चरणं भागवतानां साधुसेवनम्। भक्तिप्रधौतमनसां गोविन्दार्पितकर्म्मणाम्। बाह्यान्तःकृष्णचित्तानां शुचिता तदहर्निशम्। मृद्गोमयजलैः शौचमनेकैः कुरुते यदि। मनोऽपवित्रता यस्य कदाचिद्वै न शुध्यति। गोविन्ददासता नास्ति यस्य लोकस्य जन्मनि। सोऽपि देहाशुचिः कृत्वा शौचं मैत्रादिकर्म्म च। शतधा यदि देवर्षे! शौचं कुर्य्यात् सहस्रधा। मृद्वारिगोमयैर्लोको भावदुष्टो न शुध्यति। सदा चित्तापवित्रत्वमकार्षीद् भुवि यो नरः। तस्य तु स्यान्न मैत्रादिशौचेनैव स शुध्यति। पर्व्वताकारकूटैश्च गोविट् सर्व्वनदीजलैः। शौचं कृत्वा न शुध्येत दुष्टचित्तो भवेद् यदि" पाद्मोत्तरखण्डे १०९ अ०। २पुरीषतुल्यायां मृदि ४यवसे च वेददी० पुरीषवाहनशब्दे दृश्यम्। [ल्युट्। पुरीषे विष्ठायां त्रिका०।

**पुरीषण** पु० पुरीतो देहात् ईष्यते ईष–दाने (त्यागे) कर्म्मणि

**पुरीषम** पु० पुरीषं मिमीते मा–क। मर्दं जड़े माषे त्रिका०।

**पुरीषवाहन** पुरीषमिव पांशुरूपां मृदं यवसं वा वहति वह–ल्युट्। १पांशुरूपमृदाहके २यवसवाहके गर्दभे यजु० ११।४। वेददी०

**पुरीषाधान** न० पुरीषमाधीयतेऽत्र आ+धा—आधारे ल्युट्। देहस्थे पुरीषाशयस्थाने “पुरीषाधानमेव च” याज्ञ० ३।९५। “पुरीषाशयः” इति मिता०पुरीषाशयादयोऽप्यत्र।

**पुरीषिन्** त्रि० पृणाति प्रीणातीति पुरीषमुदकं ततः मत्वर्थे इनि। जलयुक्ते ऋ० ५।५५।५।

**पुरीष्य** त्रि० पुरीषाय हितम् यत्। पुरीषहिते।

**पुरु** त्रि० पृ—पालनपोषणयोः कु। १प्रचुरे अमरः २देवलोके मेदि० तस्य कर्मभिः पूरणात् तथात्वम्। ३ययातिपुत्रभेदे हरिवं०३०अ०। तद्वंशकथा ३१अ०; ४तन्नामके युधिष्ठिरसभ्ये नृपभेदे भा० स० ४अ०। ५परागे मेदि०। ६दैत्यभेदे पुरुहूतशब्दे दृश्यम्। ७नदीभेदे स्त्री शब्दच०।

**पुरुकुत्स** पु० मान्धातुः पुत्रभेदे हरिवं० १२अ०। तस्य पत्नी मानसी कन्या नर्म्मदा ऋषिशापेन नदीत्वमाप्ता।

**पुरुकुत्सन** पु० १दैत्यभेदे “इन्द्रो विपश्चिद्देवानां तद्रिपु पुरुकुत्सनः। जघान हस्तिरूपेण भगवान् मधुसूदनः” गारुडे ८७ अ०।

**पुरुकुत्सानी** स्त्री पुरुकुत्सस्य पत्नी वा० आनुक् ङीप्। पुरुकुत्समानयति आन—णिच् अण् गौरा० ङीष् वा। पुरुकुत्सपत्न्यां ऋ०४।४२।९।

**पुरुक्षु** त्रि० पुरवःक्षुधोऽन्नान्यस्य छान्दसः अन्त्यलोपः। बह्वन्नशालिनि ऋ०३।५।२। पुरुषु क्षीयते क्षि—निवासे डु। २बहुनिकेतने यजु० २७।२० वेददी०।

**पुरुज** पु० भरतवंश्ये सुशान्तेः पुत्रे नृपभेदे भाग० ९।२१।२२ हरिवंशे “पुरुजातिः सुशान्तेश्च” ३२अ०। पाठान्तरात् सोऽपि तत्रार्थे

**पुरुजित्** त्रि० कुन्तिभोजे नृपभेदे भा० स० ८अ०। स च अर्ज्जुनमातुलः यथोक्तं “पुरुजित् कुन्तिभोजश्च मातुलः सव्यसाचिनः” भा० क० ६अ०। २शशविन्दुवंश्ये रुचकपुत्रभेदे भाग० ९।२३।१५ ३विष्णौ पु०। “पुरुजित् पुरुषोत्तमः” विष्णुस०। बहूनां जेतृत्वात्तस्य तथात्वम्।

**पुरुणा(ना)य** पु०पुरूणां गायोनेता संज्ञायां णत्वम्। १तन्नामके नृपभेदे ऋ०१५९।७। २बहुजेतृमात्रे त्रि०अणत्वम्

**पुरुत्मन्** पु० पुरुरात्मा यस्य पृषो०। प्रचुरात्मके ऋ०१।२।१८।

**पुरुत्रा** अव्य० द्वितीयासप्तम्यर्थवृत्तेः पुरुशब्दात् त्रा। बहुकर्म्मके बह्वधिकरणे च ऋ० १।२२।७

**पुरुद** न० पुरु—प्रचुरं दायति दै—क। सुवर्णे शब्दार्थक०।

**पुरुदंशक** पु० पुरवो दंशा यस्य भवति कप्। हंसे त्रिका०।

**पुरुदंशस्** पु० पुरुं तन्नामानमसुरं दष्टवान् दंश—असुन्। इन्द्रे उज्ज्वल० असम्बुद्धौ सौ परे आनङ्। पुरुदंशा

**पुरुदंसस्** त्रि०पुरूणि दंसांसि कर्म्माण्यस्य। बहुकर्मयुक्ते। पुरुं तन्नामानं दैत्यभेदं दंसयते पश्यति शत्रुत्वेन चुरा० दंसि—दर्शने भूते असुन्। २इन्द्रे पु० उज्ज्वलदत्तः।

**पुरुदत्र** पु० दीयते दा—क्त दत्रं धनम् पुरु दत्रमस्य। बहुधने इन्द्रे ऋ० ६।१८।९ भा०।

**पुरुदस्म** त्रि० पुरु दसति दस—बा० मन्। बहुनाशके २बहु-कर्मके च ऋ० ३।५४।८।

**पुरुद्रुह्** त्रि० पुरुभ्यो बहुभ्यः, पुरवे दैत्याय वा द्रुह्यति द्रुह—क्विप्। १बहूनां द्रोहकारके ऋ०२।१८।१। २पुरुहूते इन्द्रे च। भलि पदान्ते च वा धत्वढत्वे।

**पुरुद्वत्** पु० वैदर्भ्यां जाते क्रोष्टुवंश्ये मधुसुते नृपभेदे हरिवं० २७ अ०। [प्रकारे ऋ०१।१२२।२

**पुरुधा** अव्य० बह्वर्थत्वेन संख्याशब्दत्वात् प्रकारे धाच्। बहु-

**पुरुभूत** पु० पुरुहूत+पृषो०। इन्द्रे हरिवं०१५अ०। पुरुहूत इत्येव तत्र पाठः साधुः।

**पुरुभोजस्** पु० पुरून् भुङ्क्ते भुज—असुन्। १मेघे निघ० २प्रचुरभोजके त्रि०। [२धृतराष्ट्रपुत्रभेदे च

**पुरुमित्र** पु० १महारथनृपभेदे भा०व०६त०। भा०आ० ६२अ०

**पुरुमीढ** ऐक्ष्वाक्यां सुहोत्रात् जाते अजमीढानुजे पौरव-नृपभेदे भा० आ० ९४ अ०।

**पुरुरथ** पु० रथा रंहतेः पुरुः रथो रंहणं यस्य। भक्तानां भुक्तिभेदात् बहुरंहणे आदित्ये ऋ० १०।६४।५। भा०

**पुरू(रु)रवस** पु० सोमवंश्ये नृपभेदे “तथेति चाभ्यासत्त्वे तु देवाभ्यां सैव कन्यका। इला समभवत् तस्याः सुद्युम्न इति विश्रुतः। पुनश्चेश्वरशापेन मृगयामटता वने। स्त्रीत्वमासादितन्तेन मनुपुत्रेण धीमता। पुरू(रु)रवसनामानं चक्रवर्त्तिनमूर्जितम्। जनयामास तनयं सा सोम-सुतो बुधः” मार्क०पु०१११अ०। पुरू(रु)रवस् पृषो० तत्रार्थे

**पुरुरावन्** त्रि० पुरु फलं ददाति रा—दाने वनिन्। बहु-विधफलदातरि यजु० ५।७ स्त्रियां ङीप् वनोरश्च।

**पुरुवर्पस्** त्रि० पुरुवर्पोऽस्य। बहुमाने ऋ०१०।१२०।५।

**पुरुश्चन्द्र** त्रि० पुरुः चन्द्र आह्लादकत्वात् दीप्तिरस्य पृषो०। “ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे” पा० सुट्। बहुदीप्तिके ऋ० १।२७।१। अमन्त्रे तु न सुट् पुरुचन्द्र इत्येव

**पुरुष** पु० पुर—अग्रगतौ कुषन् पुरिदेहे शेते शी—ड पृषो०। १मनुष्ये २पुंसि च अमरः। ३आत्मनि सांख्यमतसिद्धे पञ्चविंशे ४तत्त्वे ५पुन्नागवृक्षे च मेदि०। ६विष्णौ शब्दच०

७मेषमिथुनादौ विषमराशौ । “भौमारजीवाः पुरुषाः” ज्यो०त० दभौमादिषु ग्रहेषु । पुरुषाणां शुभाशुभलक्षणं वृ०सं० ६८अ० उक्तं यथा

“उन्मानमानगतिसंहतिसारवर्णस्नेहस्वरप्रकृतिसत्त्वमनूकमादौ । क्षेत्रं मृजां च विधिवत् कुशलोऽवलोक्य सामुद्रविद्वदति यातमनागतं च । अस्वेदनौ मृदुतलौ कमलोदराभौ श्लिष्टाङ्गुली रुचिरताम्रनखौ सुपार्ष्णी । उष्णौ सिराविरहितौ सुनिगूढगुल्फौ कूर्मोन्नतौ च चरणौ मनुजेश्वरस्य । शूर्पाकारविरूक्षपाण्डुरनखौ वक्रौ सिरासन्ततौ संशुष्कौ विरलाङ्गुली च चरणौ दारिद्र्यदुःखप्रदौ । मार्गायोत्कटकौ कषायसदृशौ वंशस्य विच्छित्तिदौ ब्रह्मघ्नौ परिपक्वमृद्द्युतितलौ पीतावगम्यारतौ । प्रविरलतनुरोमवृत्तजङ्घा द्विरदकरप्रतिमैर्वरोरुभिश्च । उपचितसमजानवश्च भूपा धनरहिताः श्वशृगालतुल्यजङ्घाः । रोमैकेकं कूपके पार्थिवानां द्वे द्वे ज्ञेये पण्डितश्रोत्रियाणाम् । त्र्याद्यैर्निःस्वा मानवा दुःखभाजः केशाश्चैवं निन्दिताः पूजिताश्च । निर्मांसजानुर्म्रियते प्रवासे सौभाग्यमल्पैर्विकटैर्दरिद्राः । स्त्रीनिर्जिताश्चापि भवन्ति निम्नै राज्यं समांसैश्च महद्भिरायुः । लिङ्गेऽल्पे धनवानपत्यरहितः स्थूले विहीनो धनैर्मेढ्रे वामनते सुतार्थरहितो वक्रेऽन्यथा पुत्रवान् । दारिद्र्यं विनते त्वधोऽल्पतनयो लिङ्गे सिरासन्तते स्थूलग्रन्थियुते सुखी मृदुकरोऽत्यन्तं प्रमेहादिभिः । कोषनिगूढैर्भूपा दीर्घैर्भग्नैश्च वित्तपरिहीनाः । ऋजुवृत्तशेफसो लघुसिराश्शिश्नाश्च धनवन्तः । जलमृत्युरेकवृषणो विषमैः स्त्रीचञ्चलः समैः क्षितिपः । ह्रस्वायुश्चोद्बद्धैः प्रलम्बवृषणस्य शतमायुः । रक्तैराढ्या मणिभिर्निर्द्रव्याः पाण्डुरैश्च मलिनैश्च । सुखिनः सशब्दमूत्रा निःस्वा निःशब्दधाराश्च । द्वित्रिचतुर्धाराभिः प्रदक्षिणावर्त्तवलितमूत्राभिः । पृथ्वीपतयो ज्ञेया विकीर्णमूत्राश्च धनहीनाः । एकैव मूत्रधारा वलिता रूपप्रधानसुतदात्री । स्निग्धोन्नतसममणयो धनवनितारत्नभोक्तारः । मणिभिश्च मध्यनिम्नैः कन्यापितरो भवन्ति निःस्वाश्च । बहुपशुभाजो मध्योन्नतैश्च नात्युल्बणैर्धनिनः । परिशुष्कवस्तिशीर्षैर्धनरहिता दुर्भगाश्च विज्ञेयाः । कुसुमसमगन्धशुक्रा विज्ञातव्या महीपालाः । मधुगन्धे बहुवित्ता मत्स्यसगन्धे बह्न्यपत्यानि । तनुशुक्रः स्त्रीजनको मांसमगन्धो महाभोगी । मदिरागन्धे यज्वा क्षारसगन्धे च रेतसि दरिद्रः । शीघ्रं मैथुनगामी दीर्घायुरतोऽन्यथाऽल्पायुः । निःस्वोऽतिस्थूलस्फिक् समांसलस्फिक् सुखान्वितो भवति । व्याघ्राभाध्यर्धस्फिगमण्डूकस्फिङ्नराधिपतिः । सिंहकटिर्मनुजेन्द्रः कपिकरभकटिर्धनैः परित्यक्तः । समजठरा भोगयुता घटपिठरनिभोदरा निःस्वाः । अविकलपार्श्वा धनिनो निम्नैर्वक्रैश्च भोगसन्त्यक्ताः । समकुक्षा भोगाढ्या निम्नाभिर्भोगपरिहीनाः । उन्नतकुक्षाः क्षितिपाः कुटिलाः स्युर्मानवा विषमकुक्षाः । सर्पोदरा दरिद्रा भवन्ति बह्वाशिनश्चैव । परिमण्डलोन्नताभिर्विस्तीर्णाभिश्च नाभिभिः सुखिनः । स्वल्पा त्वदृश्यनिम्ना नाभिः क्लेशावहा भवति । वलिमध्यगता विषमा शूलाबाधं करोति नैःस्व्यञ्च । शाठ्यं वामावर्त्ता करोति मेधां प्रदक्षिणतः । पार्श्वायता चिरायुषमुपरिष्टाच्चेश्वरं गवाढ्यमधः । शतपत्रकर्णिकाभा नाभिर्मनुजेश्वरं कुरुते । शस्त्रान्तं स्त्रीभोगिनमाचार्य्यं बहुसुतं यथासङ्ख्यम् । एकद्वित्रिचतुर्भिर्वलिभिर्विद्यान्नृपं त्ववलिम् । विषमवलयो मनुष्या भवन्त्यगम्याभिगामिनः पापाः । ऋजुवलयः सुखभाजः परदारद्वेषिणश्चैव । मांसलमृदुभिः पार्श्वैः प्रदक्षिणावर्त्तरोमभिर्भूपाः । विपरीतैर्निर्द्रव्याः सुखपरिहीनाः परप्रेष्याः । सुभगा भवन्त्यनुद्बद्धचूचुका निर्धना विषमदीर्घैः । पीनोपचितनिमग्नैः क्षितिपतयश्चूचुकैः सुखिनः । हृदयं समुन्नतं पृथु न वेपनं मांसलञ्च नृपतीनाम् । अधमानां विपरीतं खररोमचितं सिरालञ्च । समवक्षसोऽर्थवन्तः पीनैः शूरास्त्वकिञ्चनास्तनुभिः । विषमं वक्षो येषां ते निःस्वाः शस्त्रनिधनाश्च । विषमैर्विषमो जत्रुभिरर्थविहीनोऽस्थिसन्धिपरिणद्धैः । उन्नतजत्रुर्भोगी निम्नैर्निःस्वोऽर्थवान् पीनैः । चिपिटग्रीवो निःस्वः शुष्का सशिरा च यस्य वा ग्रीवा । महिषग्रीवः शूरः शस्त्रान्तो वृषभसमग्रीवः । कम्बुग्रीवो राजा प्रलम्बकण्ठः प्रभक्षणो भवति । पृष्ठमभग्नमरोमशमर्थवतामशुभदमतोऽन्यत् । अस्वेदनपीनोन्नतसुगन्धिसमरोमसङ्कुलाः कक्षाः । विज्ञातव्या धनिनामतोऽन्यथार्थैर्विहीनानाम् । निर्मांसौ रोमचितौ भग्नावल्पौ च निर्धनस्यांसौ । विपुलावव्युच्छिन्नौ सुश्लिष्टौ सौख्यवीर्यवताम् । करिकरसदृशौ वृत्तावाजानुविलम्बिनौ समौ पीनौ । बाहू पृथिवीशा-

नामधनानां रोमशौ ह्रस्वौ । हस्ताङ्गुलयो दीर्घाश्चिरा-
युषामवलिताश्च सुभगानाम् । मेधाविनां च सूक्ष्मा-
श्चिपिटाः परकर्मनिरतानाम् । स्थूलाभिर्धनरहिता
बहिर्नताभिश्च शस्त्रनिर्याणाः । कपिसदृशकरा धनिनो
व्याघ्रोपमपाणयः पापाः । मणिबन्धनैर्निगूढैः सुश्लिष्ट-
र्मात्मभिर्नृपाः । हीनैर्हस्तच्छेदः श्लथैः सशब्दैश्च नि-
र्द्रव्याः । पितृवित्तेन विहीना भवन्ति निम्नेन कर-
तलेन नराः । संवृतनिम्नैर्धनिनः प्रोत्तानकराश्च दा-
तारः । विषमैर्विषमा निःस्वाश्च करतलैरीश्वरास्तु
लाक्षाभैः । पीतैरगम्यवनिताभिगामिनो निर्धना रूक्षैः ।
तुषसदृशनखाः क्लीवाश्चिपिटैः स्फुटितैश्च वित्तसन्त्यक्ताः ।
कुनखविवर्णैः परतर्ककाश्च ताम्रैश्च भूपतयः । अङ्गुष्ठय-
वैराढ्याः, सुतवन्तोऽङ्गुष्ठमूलगैश्च यवैः । दीर्घाङ्गुलि-
पर्वाणः सुभगा दीर्घायुषश्चैव । स्निग्धा निम्ना रेखा
धनिनां तद्व्यत्ययेन निःस्वानाम् । विरलाङ्गुलयो निःस्वा
धनसञ्चयिनो घनाङ्गुलयः । तिस्रो रेखा मणिबन्धनो-
त्थिताः करतलोपगा नृपतेः । मीनयुगाङ्कितपाणि-
र्नित्यं सत्रप्रदो भवति । वज्राकारा धनिनां विद्या-
भाजां तु मीनपुच्छनिभाः । शङ्खातपत्रशिविकागजा-
श्वपद्मोपमा नृपतेः । कलशमृणालपताकाङ्कुशोपमाभि-
र्भवन्ति निधिपालाः । दामनिभाभिश्चाढ्याः स्वस्तिक-
रूपाभिरैश्वर्यम् । चक्रासिपरशुतोमरशक्तिधनुःकुन्त-
सन्निभाः रेखाः । कुर्वन्ति चमूनाथं यज्वानमुलूख-
लाकाराः । मकरध्वजकोष्ठागारसन्निभाभिर्महाधनो-
पेताः । वेदीनिभेन चैवाग्निहोत्रिणो ब्रह्मतीर्थेन ।
वापीदेवकुलाद्यैर्धर्मं कुर्वन्ति च त्रिकोणाभिः । अङ्गुष्ठ-
मूलरेखाः पुत्राः स्युर्दारिकाः सूक्ष्माः । रेखाः प्रदेशि-
नीगाः शतायुषां कल्पनीयमूनाभिः । छिन्नाभिर्द्रुम-
पतनं बहुरेखारेखिणो निःस्वाः । अतिकृशदीर्घैश्चिबुकै-
र्निर्द्रव्या मांसलैर्धनोपेताः । बिम्बोपमैरवक्रैरधरैर्भूपा-
स्तनुभिरस्वाः । ओष्ठैः स्फुटितविखण्डितविवर्णरूक्षैश्च
धनपरित्यक्ताः । स्निग्धा घनाश्च दशनाः सुतीक्ष्णदंष्ट्राः
समाश्च शुभाः । जिह्वा रक्ता दीर्घा श्लक्ष्णा सुसमा च
भोगिनां ज्ञेया । श्वेता कृष्णा परुषा निर्द्रव्याणां
तथा तालु । वक्त्रं सौम्यं संवृतममलं श्लक्ष्णं समं च
भूपानाम् । विपरीतं क्लेशभुजां महामुखं दुर्भगाणां च ।
स्त्रीमुखमनपत्यानां शाठ्यवतां मण्डलं परिज्ञेयम् ।
दीर्घं निर्द्रव्याणां भीरुमुखाः पापकर्माणः । चतुरस्रं
धूर्तानां निम्नं वक्त्रं च तनयरहितानाम् । कृपणा-
नामतिह्रस्वं सम्पूर्णं भोगिनां कान्तम् । अस्फुटि-
ताग्रं स्निग्धं श्मश्रु शुभं मृदु च सन्नतं चैव ।
रक्तैः परुषैश्चौराः श्मश्रुभिरल्पैश्च विज्ञेयाः । निर्मांसैः
कर्णैः पापमृत्यवश्चिपिटैः सुबहुभोगाः । कृपणाश्च ह्रस्व-
कर्णाः शङ्कुश्रवणाश्च भूपतयः । रोमशकर्णा दीर्घा-
युषस्तु धनभागिनो विपुलकर्णाः । क्रूराः शिरावनद्धै-
र्व्यालम्बैर्मांसलैः सुखिनः । भोगी त्वनिम्नगण्डो मन्त्री
सम्पूर्णमांसगण्डो यः । सुखभाक् शुकसमनासश्चिर-
जीवी शुष्कनासश्च । छिन्नानुरूपयाऽगम्यगामिनो दीर्घया
तु सौभाग्यम् । आकुञ्चितया चौरः स्त्रीमृत्युः स्याच्चि-
पिटनासः । धनिनोऽग्रवक्रनासा दक्षिणवक्राः प्रभक्षणाः
क्रूराः । ऋज्वी स्वल्पच्छिद्रा सुपुटा नासा सभाग्या-
नाम् । धनिनां क्षुतं सकृद् द्वित्रिपिण्डितं ह्लादि
सानुनादं च । दीर्घायुषां प्रमुक्तं विज्ञेयं संहतं
चैव । पद्मदलाभैर्धनिनो रक्तान्तविलोचनाः श्रियोभाजः ।
मधुपिङ्गलैर्महार्था मार्जारविलोचनाः पापाः । हरि-
णाक्षा मण्डललोचनाश्च जिह्मैश्च लोचनैश्चौराः ।
क्रूराः केकरनेत्रा गजसदृशदृशश्च भूपतयः । ऐश्वर्यं
गम्भीरैर्नीलोत्पलकान्तिभिश्च विद्वांसः । अतिकृष्णतार-
काणामक्ष्णामुत्पाटनं भवति । मन्त्रित्वं स्थूलदृशां श्या-
वाक्षाणां च भवति सौभाग्यम् । दीना दृङ् निःस्वानां
स्निग्धा विपुलार्थभोगवताम् । अभ्युन्नताभिरल्पायुषो
विशालोन्नताभिरतिसुखिनः । विषमभ्रुवो दरिद्रा
बालेन्दुनतभ्रुवः सधनाः । दीर्घासंसक्ताभिर्धनिनः खण्डा-
भिरर्थपरिहीना । मध्यविनतभ्रुवो ये ते सक्ताः स्त्रीष्व-
गम्यासु । उन्नतविपुलैः शङ्खैर्धन्या निम्नैः सुतार्थ-
सन्त्यक्ताः । विषमललाटा विधना धनवन्तोऽर्धेन्दु-
सदृशेन । शुक्तिविशालैराचार्यता शिरासन्ततैरधर्मरताः ।
उन्नतसिराभिराढ्याः स्वस्तिकवत्संस्थिताभिश्च । निम्नल-
लाटा वधबन्धभागिनः क्रूरकर्मनिरताश्च । अभ्युन्न-
तैश्च भूपाः कृपणाः स्युः सङ्कटललाटाः । रुदितमदी-
नमनश्रु स्निग्धं च शुभावहं मनुष्याणाम् । रूक्षं दीनं
प्रचुरास्रं चैव न शुभप्रदं पुंसाम् । हसितं शुभद-
मकम्पं सनिमीलितलोचनं च पापस्य । दुष्टस्य हसित-
मसकृत् सोन्मादस्यासकृत् प्रान्ते । तिस्रो रेखाः शत-
जीविनां ललाटायताः स्थिता यदि ताः । चतसृभिर-
वनीशत्वं नवतिश्चायुः सपञ्चाब्दा । विच्छिन्नाभिश्चा-

मध्यमाभिनो नवतिरथ्यरेखेण । केशान्तोपगताभी रेखाभिरशीतिवर्षायुः । पञ्चभिरायुः सप्ततिरेकाग्रावस्थिताभिरपि षष्टिः । बहुरेखेण शतार्धं चत्वारिंशच्च वक्राभिः । त्रिंशद्भ्रूलग्नाभिर्विंशतिकश्चैव वामवक्राभिः । क्षुद्राभिः स्वल्पायुर्न्यूनाभिश्चान्तरे कल्प्यम् । परिमण्डलैर्गवां ध्याम्यच्छत्राकारैः शिरोभिरवनीशाः । चिपिटैः पितृमातृघ्नाः करोटिशिरसां चिरान्मृत्युः । घटमूर्धा ध्यानरुचिर्द्विमस्तकः पापकृद्धनैस्त्यक्तः । निम्नं तु शिरो महतां बहुनिम्नमनर्थदं भवति । एकैकभवैः स्निग्धैः कृष्णैराकुञ्चितैरभिन्नाग्रैः । मृदुभिर्न चातिबहुभिः केशैः सुखभाग् नरेन्द्रो वा । बहुमूलविषमकपिलाः स्थूलस्फुटिताग्रपरुषह्रस्वाश्च । अतिकुटिलाश्चातिघनाश्च मूर्धजा वित्तहीनानाम् । यद्यद्गात्रं रूक्षं मांसविहीनं शिरावनद्धं च । तत्तदनिष्टं प्रोक्तं विपरीतमतः शुभं सर्वम् । त्रिषु विपुलो गम्भीरस्त्रिष्वेव षडुन्नतश्चतुर्ह्रस्वः । सप्तसु रक्तो राजा पञ्चसु दीर्घश्च सूक्ष्मश्च । उरो ललाटं वदनं च पुंसां विस्तीर्णमेतत्त्रितयं प्रशस्तम् । नाभिः स्वरः सत्त्वमिति प्रदिष्टं गम्भीरमेतत्त्रितयं नराणाम् । वक्षोऽथ कक्षा नखनासिकास्यं कृकाटिका चेति षडुन्नतानि । ह्रस्वानि चत्वारि च लिङ्गपृष्ठं ग्रीवा च जङ्घे च हितप्रदानि । नेत्रान्तपादकरताल्वधरोष्ठजिह्वा रक्ता नखाश्च खलु सप्त सुखावहानि । सूक्ष्माणि पञ्च दशनाङ्गुलिपर्वकेशाः सार्धं त्वचा कररुहाश्च न दुःखितानाम् । हनुलोचनबाहुनासिकाः स्तनयोरन्तरमत्र पञ्चमम् । इति दीर्घमिदं तु पञ्चकं न भवत्येव नृणामभूभृताम्" (इति चेलम्) । "छाया शुभाशुभफलानि निवेदयन्ती लक्ष्या मनुष्यपशुपक्षिषु लक्षणज्ञैः । तेजोगुणान् बहिरपि प्रविकाशयन्ती दीपप्रभा स्फटिकरत्नघटस्थितेव । स्निग्धद्विजत्वङ्नखरोमकेशच्छाया सुगन्धा च महीसमुत्था१ । तुष्ट्यर्थलाभाभ्युदयान् करोति धर्मस्य चाहन्यहनि प्रवृत्तिम् । स्निग्धा सिताच्छहरिता नयनाभिरामा सौभाग्यमार्दवसुखाभ्युदयान् करोति । सर्वार्थसिद्धिजननी जननीव चाप्या२ छाया फलं तनुभृतां शुभमादधाति । चण्डाऽधृष्या पद्महेमाग्निवर्णा युक्ता तेजोविक्रमैः सप्रतापैः । आग्नेयीति३ प्राणिनां स्याज्जयाय क्षिप्रं सिद्धिं वाञ्छितार्थस्य धत्ते । मलिनपरुषकृष्णा पापगन्धाऽनिलोत्था४ जनयति वधबन्धव्याध्यनर्थनाशान् । स्फटिकसदृशरूपा भाग्ययुक्तात्युदारा निधिरिव गगनोत्था५ श्रेयसां स्वच्छवर्णा । छायाः क्रमेण कुजलाग्न्यनिलाम्बरोत्थाः केचिद्वदन्ति दश ताश्च यथानुपूर्व्या । स्त्रीजनाभपुरुहूतयमोडुपानां तुल्यास्तु लक्षणफलैरिति तत्समासः" (इति छाया) । "करिवृषरथौघभेरीमृदङ्गसिंहाभ्रनिःस्वना भूपाः । गर्दभजर्जररूक्षस्वराश्च धनसौख्यसन्त्यक्ताः" (इति स्वरः) । "सप्त भवन्ति च सारा मेदोमज्जात्वगस्थिशुक्राणि । रुधिरं मांसं चेति प्राणभृतां तत्समासफलम् । ताल्वोष्ठदन्तपालीजिह्वानेत्रान्तपायुकरचरणैः । रक्तैस्तु रक्तसारा बहुसुखवनितार्थपुत्रयुताः । स्निग्धत्वक्का धनिनो मृदुभिः सुभगा विचक्षणास्तनुभिः । मज्जामेदःसाराः सुशरीराः पुत्रवित्तयुक्ताः । स्थूलास्थिरस्थिसारो बलवान् विद्यान्तगः सुरूपश्च । बहुगुरुशुक्राः सुभगा विद्वांसो रूपवन्तश्च । उपचितदेहो विद्वान् धनी सुरूपश्च मांससारो यः । (इति सारः) सङ्घात इति च सुश्लिष्टसन्धिता सुखभुजो ज्ञेयाः" (इति संहतिः) । "स्नेहः पञ्चसु लक्ष्यो वाग्जिह्वादन्तनेत्रनखसंस्थः । सुतधनसौभाग्ययुताः स्निग्धैस्तैर्निर्धना रूक्षैः" (इति स्नेहः) । "द्युतिमान् वर्णः स्निग्धः क्षितिपानां मध्यमः सुतार्थवताम् । रूक्षो धनहीनानां शुद्धः शुभदो न सङ्कीर्णः" (इति वर्णः) । "साध्यमनूकं वक्त्राद् गोवृषशार्दूलसिंहगरुडमुखाः । अप्रतिहतप्रतापा जितरिपवो मानवेन्द्राश्च । वानरमहिषवराहाजतुल्यवदनाः सुतार्थसुखभाजः । गर्दभकरभप्रतिमैर्मुखैः शरीरैश्च निःस्वसुखाः" (इत्यनूकम् ।) "अष्टशतं षण्णवतिः परिमाणं चतुरशीतिरिति पुंसाम् । उत्तमसमहीनानामङ्गुलसङ्ख्या स्वमानेन" (इत्युन्मानम्) । "भारार्धतनुः सुखभाक् तुलितोऽतो दुःखभाग्भवत्यूनः । भारोऽतीवाढ्यानामध्यर्धः सर्वधरणीशः । विंशतिवर्षा नारी पुरुषः खलु पञ्चविंशतिभिरब्दैः । अर्हति मानोन्मानं जीवितभागे चतुर्थे वा" (इति मानम्) । "भूजलशिख्यनिलाम्बरसुरनररक्षःपिशाचकतिरश्चाम् । सत्त्वेन भवति पुरुषो लक्षणमेतद्भवत्येषाम् । महीस्वभावः शुभपुष्पगन्धः सम्भोगवान् सुश्वसनः स्थिरश्च । तोयस्वभावो बहुतोयपायी प्रियाभिलाषी रसभोजनश्च । वायोः स्वभावेन चलः कृशश्च क्षिप्रं च कोपस्य वशं प्रयाति । खप्रकृतिर्निपुणो विवृतास्यः शब्दगतौ कुशलः सुषिराङ्गः ।

त्यागयुतो पुरुषो मृदुकोपः स्नेहरतश्च भवेत् सुरसत्त्वः। मर्त्यसत्त्वसंयुतो गीतभूषणप्रियः। संविभागशीलवा-न्नित्यमेव मानवः। तीक्ष्णप्रकोपः खलचेष्टितश्च पापश्च सत्त्वेन निशाचराणाम्। पिशाचसत्त्वश्चपलो मलाक्तो बहुप्रलापी च समुल्बणाङ्गः। भीरुः क्षुधालुर्बहुभुक् च यः स्याज्ज्ञेयः स सत्त्वेन नरस्तिरश्चाम्। एवं नराणां प्रकृतिः प्रदिष्टा यल्लक्षणज्ञाः प्रवदन्ति सत्त्वम्" (इति प्रकृतिः)। "शार्दूलहंससमदद्विपगोपतीनां तुल्या भवन्ति गतिभिः शिखिनां च भूपाः। येषां च शब्द-रहितं स्तिमितं च यातं तेऽपीश्वरा द्रुतपरिप्लुतगा दरिद्राः" । (इति गतिः)। "श्रान्तस्य यानमशनं च बुभुक्षितस्य पानं तृषापरिगतस्य भयेषु रक्षा। एतानि यस्य पुरुषस्य भवन्ति काले धन्यं वदन्ति खलु तं नर-लक्षणज्ञाः। पुरुषलक्षणमुक्तमिदं मया मुनिमतान्यव-लोक्य समासतः। इदमधीत्य नरो नृपसम्मतो भवति सर्वजनस्य च वल्लभः"। प्रकृत्यादिभ्योऽतिरिक्तत्वेन साङ्ख्यकारिकया पुरुषस्यास्तित्वं समर्थितं यथा "सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्। पुरु-षोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च॥" का॰ "पुरुषो-ऽस्त्यव्यक्तादिव्यतिरिक्तः कुतः सङ्घातपरार्थत्वात् अव्यक्त महदहङ्कारप्रभृतयः परार्थाः सङ्घातत्वात् शयनासना-द्यङ्गवत् सुखदुःखमोहात्मकतया अव्यक्तादयः सर्वे सङ्घाताः। स्यादेतत् शयनासनादयः सङ्घाताः सङ्घात-शरीराद्यर्थाः दृष्टा न तु आत्मानं व्यक्ताव्यक्तव्यतिरिक्तं प्रति परार्थाः तस्मात्सङ्घातान्तरमेव परं गमयेयुर्नत्वस-ङ्घातमात्मानमित्यत आह त्रिगुणादिविपर्ययात्। अय-मभिप्रायः सङ्घातान्तरार्थत्वे हि तस्यापि सङ्घातत्वात् तेनापि सङ्घातान्तरार्थेन भवितव्यमेवं तेन तेनेत्यनवस्था स्यात्। न च व्यवस्थायां सत्यामनवस्थाकल्पना युक्ता गौरवप्रसङ्गात्। नच प्रमाणवत्त्वेन कल्पना गौरवमपि मृष्यत इति युक्तं संहतत्वस्य पारार्थ्यमात्रेणान्वयात्। दृष्टान्तदृष्टसर्वधर्मानुरोधेन त्वनुमानमिच्छतः सर्वानुमा-नोच्छेदप्रसङ्ग इत्युपपादितं न्यायवार्त्तिकतात्पर्यटीकाया-मस्माभिः। तस्मादनवस्थाभिया असंहतत्वमिच्छता त्रिगुणत्वमविवेकित्वमविषयत्वमसामान्यत्वं चेतन-त्वमप्रसवधर्मित्वं चाभ्युपेयं त्रिगुणत्वादयो हि धर्माः सङ्घातत्वेन व्याप्ताः। तत् संहतत्वमस्मिन् परे निवर्त्त-मानं त्रिगुणत्वादि व्यावर्त्तयति ब्राह्मण्यमिव निवर्त्तमानं कठत्वादिकं तस्मादाचार्य्येण त्रिगुणादिविपर्ययादिति वदता असंहतः परोविवक्षितः स चात्मेति सिद्धम्। इतश्च पुरुषोऽस्ति अधिष्ठानात् त्रिगुणात्मकानामधिष्ठीय-मानत्वात् यद्यत् सुखदुःखमोहात्मकं तत्सर्वं परेणाधिष्ठीय-मानं दृष्टं यथा रथादि यन्त्रादिभिः,सुखदुःखमोहात्मक-ञ्चेदं बुद्ध्यादि तस्मादेतदपि परेणाधिष्ठातव्यम्। स च परस्त्रैगुण्यादन्य आत्मेति। इतश्चास्ति पुरुषः भोक्तृ-भावात् भोक्तृभावेन भोग्ये सुखदुःखे उपलक्षयति। भोग्ये हि सुखदुःखे अनुकूलप्रतिकूलवेदनीये प्रत्यात्ममनुभूयेते तेनानयोरनुकूलनीयेन प्रतिकूलनीयेन च केनचिदप्यन्येन भवितव्यं नचानुकूलनीयाः प्रतिकूलनीयाः वा बुद्ध्या-दयस्तेषां सुखदुःखाद्यात्मकत्वेन स्वात्मनि वृत्तिविरोधात्। तस्माद्योऽसुखाद्यात्मा सोऽनुकूलनीयः प्रतिकूलनीयो वा स चात्मेति। अन्ये त्वाहुः भोग्या दृश्या बुद्ध्यादयः न च द्रष्टारमन्तरेण दृश्यता युक्ता तेषां, तस्मादस्ति द्रष्टा दृश्यबुद्ध्याद्यतिरिक्तः, स चात्मेति। भोक्तृभा-वात् दृश्येन द्रष्टृत्वानुमानादित्यर्थः। दृश्यत्वं च बुद्ध्यादीनां सुखाद्यात्मकतया पृथिव्यादिवदनुमितम्" त॰कौ॰ अधिकम् आत्मन्शब्दे ६६२ पृष्ठादौ दर्शितम्

रतिमञ्जर्य्यां पुरुषचातुर्विध्यमुक्त्वा तेषां लक्षणमुक्तं यथा "शशो मृगो वृषश्चाश्वो नृणां जातिचतुष्टयम्। मृदुवचन सुशीलः कोमलाङ्गः सुकेशः सकलगुणनिधानः सत्यवादी शशोऽयम्॥१ वदति मधुरवाणीं दीर्घनेत्रोऽतिभीरुश्च-पलमतिसुदेहः शीघ्रवेगो मृगोऽयम्॥२ बहुगुण-बहुबन्धुः शीघ्रकामो नताङ्गः सकलरुचिरदेहः सत्यवादी वृषोऽयम्३। उदरकटिकृशः स्यादुष्ककण्ठाधरौष्ठो दशन-वदननासः श्रोत्रदीर्घो हि वाजी४"। तत्र विष्णौ "अव्ययः पुरुषः साक्षी" विष्णुस॰। "आसीत् पुरा पूर्वमेवेति" विग्रहं कृत्वा व्युत्पादितः पुरुषः पूर्वमेवाहमिहास-मिति तत् पुरुषस्य पुरुषत्वमिति" श्रुतेः पूर्षु पुरीषु उत्-कर्षशालिषु सत्त्वेष्ववसीदतीति वा,पुरूणि बहूनि फलानि मनोऽभिलषितानि सनोति ददाति वा, पुरूणि भुवनानि संहारसमये स्यति अन्तं करोतीति वा पूरणात् सदनाद्वा पुरुषः, "पूरणात् सदनाच्चैव ततोऽसौ पुरुषो मतः" इति महाभारतम्" भाष्यम्। "पुरं शरीरं अक्षं पुरं वा शेते इति पुरुषः। नवद्वारं पुरं पुण्यमेतैर्भूयः समन्वितम्। व्याकरोति महात्मा यत्तस्मात् पुरुष उच्यते" इति महाभारते यद्वा षद शरणगत्यवसादनेषु

षण दाने षो अन्तकर्मणि इत्येषां धातूनां रूपाणि पूरणात् पृ-पालनपूरणयोरिति धातोरिदं रूपं पुरुः। सीदति गच्छति द्युलोकान्तरिक्षपृथिवीषु स्वर्य्यवा-त्म्यात्मना गत्यर्थकसदेरिदं रूपम्" आनन्दगि॰ "पुरा-ण्यनेन सृष्टानि नृतिर्यगृषिदेवताः "शेते जीवेन रूपेण पुरेषु पुरुषो ह्यसौ" भाग॰७।१४।२७ "पुरः स चक्रे द्विपदः पुरश्चक्रे चतुष्पदः" इत्युपक्रमे "पुरः पुरुष आविशत्" इति श्रुतेस्तस्य सर्वपुरप्रवेशात् तथात्वम्।

**पुरुषक** न॰ पुरुष इव कायति कै-क। अश्वानामूर्द्ध्वस्थितौ (घिरपातोला) त्रिका॰।

**पुरुषकार** पु॰ कृ-भावे घञ् ६त॰। पुरुषचेष्टिते पौरुषे दैवात् पुरुषकारस्य प्राधान्यमुक्तं मत्स्यपु॰ १९५ अ॰ यथा "स्वमेव कर्म दैवाख्यं विद्धि देहान्तरार्जितम्। तस्मात् पौरुषमेवेह श्रेष्ठमाहुर्मनीषिणः। प्रतिकूलं तथा दैवं पौरुषेण विहन्यते। मङ्गलाचारयुक्तानां नित्यमुत्थान-शालिनाम्। येषां पूर्वकृतं कर्म सात्त्विकं मनुजोत्तम!। पौरुषेण विना तेषां केषाञ्चिद्दृश्यते फलम्। कर्मणा प्राप्यते लोके राजसस्य तथा फलम्। कृच्छ्रेण कर्मणा विद्धि तामसस्य तथा फलम्। पौरुषेणाप्यते राजन्! मार्गितव्यं फलं नरैः। दैवमेव विजानन्ति नराः पौ-रुषवर्जिताः। तस्मात्त्रिकालसंयुक्तं दैवं न सफलं भवेत्। पौरुषं दैवसम्पत्त्या काले फलति पार्थिव!। दैवं पुरुषकारश्च कालश्च मनुजोत्तम!। त्रयमेतन्मनुष्यस्य पिण्डितं स्यात् फलावहम्। कृषेर्वृष्टिसमायोगाद्-दृश्यन्ते फलसिद्धयः। तास्तु काले प्रदृश्यन्ते नैवाकाले कथञ्चन। तस्मात् सदैव कर्त्तव्यं सधर्मं पौरुषं नृभिः। एवन्ते प्राप्नुवन्तीह परलोकफलं ध्रुवम्। नालसाः प्राप्नुवन्त्यर्थान्न च दैवपरायणाः। तस्मात् सर्वप्रयत्नेन पौरुषे यत्नमाचरेत्। त्यक्त्वालसान् दैवपरान् मनुष्या-नुत्थानयुक्तान् पुरुषान् हि लक्ष्मीः। अन्विष्य यत्ना-द्वृणु ते नृपेन्द्र! तस्मात् सदोत्थानवता हि भाव्यम्"।

**पुरुषच्छन्दस्** स्त्री पुरुष इव द्विपादत्वात् छन्दो यस्याः। द्विपदाख्ये छन्दोभेदे "अथ द्विपदाः पुरुषच्छन्दसं वै द्विपदा द्विपाद्वा अयं पुरुषः" शत॰ब्रा॰२।३।४।

**पुरुषत्रा** अव्य॰ द्वितीयासप्तम्यन्तार्थवृत्तेः पुरुषशब्दात् त्राच्। द्वितीयासप्तम्यन्तार्थवृत्तौ पुरुषशब्दार्थे पुरुषत्रा वन्दे रमे वा

**पुरुषदघ्न** त्रि॰ पुरुषः पुरुषपरिमाणं परिमाणमस्य। ऊर्द्ध्व-विस्तृतबाहुकनरपरिमाणतुल्ये पञ्चहस्तपरिमाणे स्त्रियां ङीप्। तदर्थे द्वयसच्। पुरुषद्वयस तत्रार्थे त्रि॰स्त्रियां ङीप्। एवं मात्रच्। पुरुषमात्र तत्रार्थे त्रि॰स्त्रियां टाप्।

**पुरुषदन्तिका** स्त्री पुरुषस्येव दन्तो दन्ताकारोऽस्याः कप् कापि अतइत्त्वम्। मेदायां राजनि॰।

**पुरुषधर्म** पु॰६त॰। पुरुषमात्रधर्मे न यज्ञधर्मे। "धेन्वनडुहो-र्मांसं नाश्नीयात्" इत्युपक्रमे "पुरुषधर्मो वाऽसम्भवात्" कात्या॰श्रौ॰७।२।२४। "क्रतुमध्ये समाम्नानात् क्रतुधर्मो-ऽयमिति प्राप्ते इदमुच्यते पुरुषमात्रधर्मोऽयम् न क्रतु-धर्मः कुतः क्रतावसम्भवात् न हि क्रतौ धेन्वनडुन्-मांसभोजनस्य प्राप्तिः या निषिध्येत यतो दीक्षितस्य पयोव्रतता विहिता तत्सिद्धत्यनन्तरं हविःशेषभक्ष उक्तः अतो निषेधस्यासम्भवात् पुरुषमात्रधर्म एवायमिति" कर्कः।

**पुरुषनाय** पु॰ पुरुषान् नयति अण् उप॰स॰। १नरपाले २सेनापतौ च छान्दो॰ ६।८।२।

**पुरुषपुण्डरीक** पु॰ पुरुषः पुण्डरीकः व्याघ्रभेद इव उप-मितस॰। १मनुष्यश्रेष्ठे २जिनराजभेदे च हेमच॰।

**पुरुषमेध** पु॰ पुरुषेण परमपुरुषेण दृष्टो मेधः, पुरुषा नर-जातीया मेध्यन्ते हिंस्यन्तेऽत्र वा मिध-आधारे घञ्। स्वनामख्याते यज्ञभेदे तदुक्तं शत॰ब्रा॰१३।६।१।१। "पुरुषो ह नारायणोऽकामयत। अतितिष्ठेयं सर्वाणि भूतान्यहमेवेदं सर्वं स्यामिति स एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत तेनेष्ट्वात्य-तिष्ठत् सर्वाणि भूतानीदं सर्वमभवत् अतितिष्ठति सर्वाणि भूतानीदं सर्वं भवति य एवं विद्वान् पुरुषमेधेन यजते यो वैतदेवं वेद"। यजु॰ ३॰ अ॰ व्याख्यायाञ्च तत्कालाद्युक्तं यथा "इत उत्तरं पुरुषमेधो व्याख्यायते "नारायणः पुरुषोऽपश्यत्। ब्राह्मणराज-न्ययोरतिष्ठाकामयोः पुरुषमेधसंज्ञको यज्ञो भवति। सर्वभूतान्यतिक्रम्य स्थानमतिष्ठा। चैत्रशुक्लदशम्यामा-रम्भः। अत्र त्रयोविंशतिर्दीक्षा भवन्ति द्वादशोपसदः पञ्च सुत्या इति चत्वारिंशद्दिनैः सिध्यति अत्र यूपैका-दशिनी भवति एकादशाग्नीषोमीयाः पशवो भवन्ति तेषां च प्रतियूपं मध्यमे वा यूपे यथेच्छं नियोजनम्। आज्येन सकृद्गृहीतेन "देव सवितरिति" प्रत्यृचं तिस्र आहुतीराहवनीये जुहोति" वेददी॰। तत्र चाध्याये चतुर्थ्यन्तेन देवताभेदा द्वितीयान्तेन पशुभेदा उक्ताः।

**पुरुषवाच्** स्त्री पुरुषस्येव वाक् यस्याः। शारिखगे यजु॰ २४।३६। वेददी॰।

**पुरुषवाह** पु० पुरुषेण नरेण उह्यते वह–कर्मणि घञ्। नरवाहने १कुवेरे। पुरुषमाद्यिपुरुषं वहति–वह–अण् उप०स०। २गरुड़े। भाग० ५।२४ २९ श्लो०।

**पुरुषवाहम्** अव्य० पुरुष+वह–णमुल्। पुरुषकर्मके वहने पुरुषवाहं वहति पुरुषं वहतीत्यर्थः कषादि० यथाविध्यनुप्रयोगः।

**पुरुषविध** त्रि०पुरुषस्येव विधा यस्य। पुरुषप्रकारे निरु०७।६

**पुरुषव्याघ्र** पु० पुरुषः व्याघ्र इव उपमितस०। श्रेष्ठपुरुषे एवं पुरुषपुङ्गवादयोऽपि व्याघ्रादित्वात् उपमितस०। नरश्रेष्ठे "स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः" अमरः। व्याघ्रादितुल्यत्वेन नरस्य प्रशंसनात् श्रेष्ठत्वं गम्यते।

**पुरुषसिंह** पु० उपमितस०।१पुरुषश्रेष्ठे अमरः। २जिनराजभेदे हेमच०।

**पुरुषसूक्त** न० परमपुरुषप्रतिपादकम् सूक्तम्। ऋ०१०.९०पठिते सहस्रशीर्षेत्यादिके षोडशर्चात्मके सूक्तभेदे।

**पुरुषांशक** पु० ६त०स्वार्थे क। १पुरुषांशभेदे २तत्प्रतिपादके ग्रन्थे च। ततः शौनका० तदधीते वेत्त्यर्थे छन्दसि णिनि। पौरुषांशकिन् तदध्येतरि तद्वेत्तरि च त्रि० ब० ब०।

**पुरुषाद्** पु० पुरुषमत्ति अद–क्विप्। राक्षसे।

**पुरुषाद** पु०स्त्री पुरुषमत्ति अद–अण् उप०स०। १राक्षसे स्त्रियां जातित्वात् ङीप्। २मध्यदेशभेदे बृ०सं०१४अ० दृश्यम्। [आद्योऽस्य। ३राक्षसे च।

**पुरुषाद्य** पु० पुरुषेष्वाद्यः। १विष्णौ २जिनभेदे। पुरुषो नर

**पुरुषायण** त्रि० पुरुष आत्मा अयनं प्रतिष्ठा यस्य पूर्वप० णत्वम्। आत्मप्रतिष्ठे प्राणादौ। "षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति" प्रश्नोप०६।५। "षोडश कलाः प्राणाद्या उक्ताः कलाः पुरुषायणा नदीनामिव समुद्रः पुरुषोऽयनमात्मभावगमनं यासां कलानां ताः पुरुषायणाः पुरुषं प्राप्य पुरुषात्मभावमुपगम्य यथैवास्तं गच्छन्ति" भाष्यम्। [रघुः १।६३।

**पुरुषायुष** न० ६त० अच्समा०। पुरुषस्यायुःकाले

**पुरुषार्थ** पु० ६त०। १धर्मार्थकाममोक्षरूपेषु पुरुषस्य इष्टेषु "धर्मार्थकाममोक्षाश्च पुरुषार्था उदाहृताः" अग्निपु०। वैष्णवमते भक्तिरपि पुरुषेष्टत्वात् पुरुषार्थः। २पुरुषप्रयोजनमात्रे च क्रत्वर्थशब्दे २२८५ पृष्ठादौ दृश्यम्। ३साङ्ख्यमते पुरुषाय बुद्धेरिष्टे भोगेऽपवर्गे च।

**पुरुषाशिन्** पु० पुरुषमश्नाति अश–णिनि ६त०। नरखादके राक्षसे राजनि०। स्त्रियां ङीप्।

**पुरुषास्थिमालिन्** पु० पुरुषस्यास्थिमाला साऽस्यास्ति इनि। महादेवे हेम०।

**पुरुषोत्तम** पु० पुरुषेषु उत्तमः। नारायणे "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" गीता। अत्र समासादिविवेकः पुरूत्तमशब्दे २६२४ पृ० दृश्यः।

**पुरुष्य** त्रि० पुरुषाय हितं यत्। पुरुषहिते ऋ० ७।२९।४

**पुरुह** त्रि० पुरु प्रचुरं पुरुत्वं हन्ति गच्छति हन–गतौ ड। प्रचुरे अमरः। हन–बा० हु अमरे पुरुहु इति पाठान्तरं तत्रार्थे क्षीरस्वामी।

**पुरुहूत** पु० पुरूणि प्रचुराणि हूतानि नामान्यस्य पुरुर्बहुयमेदो हूतो युद्धार्थं येन वा। इन्द्रे अमरः।

**पुरुहूति** स्त्री दाक्षायण्यां १पुरवो हूतयो नामान्यस्य। २विष्णौ पु० भाग० ६।६।२६।

**पुरुहोत्र** पु० अंशुवंश्यनृपभेदे भाग० ९।२४।४।

**पुरूद्वह** पु० पुरून् पौरवनृपान् तद्भारमुद्वहति उद्+वह। १पौरववंश्यनृपश्रेष्ठे २द्वादशमन्वन्तरे रुद्रसावर्णमनोः पुत्रभेदे च मार्कपु० ९४ अ०।

**पुरूरवस्** पु० पुरु रौति रु–असि दीर्घश्च। सोमवंश्ये बुधस्य पुत्रे १राजभेदे तज्जन्मकथा यथा
"इलोवाच। मित्रावरुणयोरंशे जाताऽस्मि वदतां वर!। तयोः सकाशं यास्यामि न मां धर्मो हतोऽवधीत्। सैवमुक्त्वा मनुं देवं मित्रावरुणयोरिला। गत्वाऽन्तिकं वरारोहा प्राञ्जलिर्वाक्यमब्रवीत्। अंशेऽस्मिन् युवयोर्जाता देवौ किं करवाणि वाम्। मनुना चाहमुक्ता वै अनुगच्छस्व मामिति। तां तथा वादिनीं साध्वीमिलां धर्मपरायणाम्। मित्रश्च वरुणश्चोभावूचतुर्यन्निबोध तत्। अनेन तव धर्मेण प्रश्रयेण दमेन च। सत्येन चैव सुश्रोणि! प्रीतौ स्वो वरवर्णिनि!। आवयोस्त्वं महाभागे! ख्यातिं कन्येति यास्यसि। मनोर्वंशकरः पुत्रस्त्वमेव च भविष्यसि। सुद्युम्न इति विख्यातस्त्रिषु लोकेषु शोभने!। जगत्प्रियो धर्मशीलो मनोर्वंशविवर्द्धनः। निवृत्ता सा तु तच्छ्रुत्वा गच्छन्ती पितुरन्तिकम्। बुधेनान्तरमासाद्य मैथुनायोपमन्त्रिता। सोमपुत्राद्बुधाद्राजन्! तस्यां जज्ञे पुरूरवाः। जनयित्वा ततः सा तं पुनः सुद्युम्नतां गता" हरिवं०२०अ०। २विश्वदेवभेदे जटा०।

च च पार्श्वे यजनीयदेवः । "पुरुरवामार्द्रवाच पार्वणे यवदाहृतौ" श्राद्ध० बृहस्पतिः ।

पुरूवसु त्रि० पुरु प्रचुरं वसु धनं यस्य वेदे दीर्घः । बहुधने ऋ० १।८।१८ । [अमरः । २प्रधाने च हेमच०

पुरोग त्रि० पुरोऽग्रे गच्छति गम–ड । १अग्रगामिनि

पुरोगति पु० पुरोऽग्रे गतिरस्य । १कुक्कुरे शब्दचि० । २पुरोगन्तरि त्रि० ।

पुरोगम त्रि० पुरो गच्छति गम–खच् । पुरोगन्तरि ऋ० ६।८५।८

पुरोग्निः पु० पुरोऽग्रे गच्छति गम्–नि नि० । अग्रगमे यजु० १७।६६ ।

पुरोचन पु० जतुगेहे पाण्डवानां दाहार्थं नियोजिते दुर्योधनमित्रभेदे तत्कथा भा० आ० १४१ अ० दृश्या ।

पुरोजन्मन् त्रि० पुरोऽग्रे जन्म यस्य । १अग्रजन्मनि २अग्रजन्मिन्यां स्त्री वा टाप् ।

पुरोटि पु० पुरोऽटति+अट–इन् । पत्रशब्दे त्रिका० ।

पुरोडाश(स) पु०पुरोदाश्यते दाश–दाने कर्मणि क्विप्, घञ् वा डस्य डः । हविषि अग्निहव्ये । पृदत्वे अन् । पुरोडा इत्येव । पुरोडाशसहचरितो मन्त्रः अण् । अदन्तः २पुरोडाशसहचरिते मन्त्रे । तस्य व्याख्यानो ग्रन्थः ठञ् । पुरोडाशिक तद्व्याख्याने ग्रन्थे । अदन्तः ३यवचूर्णनिर्मितरोटिकाभेदे ४हुतशेषे ५पिष्टकधूमस्यां च मेदि० ।६सोमरसे हेमच० ।

पुरोडाशीय त्रि० पुरोडाशाय हितं छ । पुरोडाशहिते यवतण्डुलादौ पक्षे यत् । पुरोडाश्य तदर्थे त्रि० ।

पुरोद्भवा स्त्री पुरे उद्भवति उद्+भू–अच् । १महामेदायां रत्नमालायां । २नगरभवे त्रि० । [पुरोहिते अमरः ।

पुरोधस् पु० पुरोऽग्रे धीयते धा–कर्मणि असि किच्च ।

पुरोधा स्त्री पुरस्+धा–अङ० भावे क्विप् । पौरोहित्ये "एतामेव पुरोधाकामस्य कुर्यात्" शत० ब्रा० २।१६।४

पुरोऽनुवाक्या स्त्री पुरोऽग्रेऽनुवाक्या । ऋग्भेदे यजु० २१।१२

पुरोभागिन् त्रि०पुरः पूर्वं भजते भज–घिनुण् । १गुणत्यागेन दोषमात्रग्राहिणि । २अग्रभागवति त्रि० । कर्त्तरि घञ् । पुरोभाग तदर्थे तस्य भावः ष्यञ् । पौरोभाग्य दोषदर्शने दुष्टत्वे च । [पूर्वदिग्भवे वायौ ।

पुरोमारुत पु० पूर्वो मारुतः पूर्वशब्दादपि पुर आदेशः ।

पुरोयावन् त्रि० या–वनिप् ७त० । पुरोगते ऋ० १।६५ ।

पुरोरवस् पु० पुरूरवस्+पृषो० । पुरूरवसि ऋ० ८४ सू० ।

पुरोरुच् स्त्री पुरोऽग्रे रोचते रुच–क्विप् । १ऋग्भेदे यजु० २०।२६ । "वायुरग्रेगा यज्ञप्रीरिति सप्तानां पुरोरुचां तत्रात्तत्रा उपरिष्टात् त्र्यचं त्र्यचं शंसेत्" आ० श्रौ० ६।१०।४।"एताः सप्त पुरोरुचो नाम ऋचः"नारा०अग्निपरुच्छ्वरूपे अन्यापि ऋग् शत०ब्रा०६।४।४।२०भा०उक्ता, यजु०७।१६ मन्त्रे च तदन्यापि ऋक् तत्संज्ञा बोध्या ।

पुरोवात पु० पूर्ववर्त्ती वातः । पौरस्त्यवायौ कात्या०श्रौ० ४।५।१८। "वापयति वाययति वा मा: पुरोवातः" वि० कौ० । रघुः १७।१८ श्लो० ।

पुरोहित पु० पुरो धीयतेऽसौ धा–क्त । दैवकार्यादौ अग्रे धार्य्ये १पुरोधसि तल्लक्षणं कविकल्पलतायामुक्तं यथा "पुरोहितो हितो वेदस्मृतिज्ञः सत्यवाक् शुचिः । ब्रह्मण्यो विमलाचारः प्रतिकर्त्ताऽऽपदामृजुः" । "वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः । आशीर्वादपरोयुक्त एव राजपुरोहितः" चाणक्यः । "तस्मात् धर्मप्रधानात्मा वेदधर्मविदीप्सितः । ब्राह्मणो गुणवान् कश्चित् पुरोधाः प्रतिदृश्यताम् । क्षत्रियेणाभिजातेन पृथिवीं जेतुमिच्छता । पूर्वं पुरोहितः कार्य्यः पार्थ ! राज्याभिवृद्धये । महीं जिगीषता राज्ञा ब्रह्म कार्य्यं पुरःसरम्" भा०आ०१७४अ० । भा०शा०७२ अ० "राज्ञा पुरोहितः कार्य्यो भवेद्विद्वान् बहुश्रुतः । उभौ समीक्ष्य धर्मार्थावप्रमेयावनन्तरम् । धर्मात्मा मन्त्रविद्येषां राज्ञां राजन् ! पुरोहितः । राजा चैव गुणो येषां कुशलं तेषु सर्वतः । उभौ प्रजा वर्द्धयतो देवान् सर्वान् सुतान् पितॄन् । भवेयातां स्थितौ धर्मे श्रद्धेयौ सुतपस्विनौ । परस्परस्य सुहृदौ विहितौ समचेतसौ । ब्रह्मक्षत्रस्य सम्मानात् प्रजासुखमवाप्नुयात् । विमाननात् तयोरेव प्रजा नश्येयुरेव हि । ब्रह्म क्षत्रं च सर्वेषां वर्णानां मूलमुच्यते" इत्युपक्रमे "राज्ञां पुरोहिताधीनः विजयादिः तत्रोक्तो दृश्यः । अग्निपु० "सर्वासु दण्डनीत्यां च कुशलः स्यात् पुरोहितः" "अथर्ववेदविहितं कुर्याच्छान्तिकपौष्टिकम्" । "काणं व्यङ्गमपुत्रं वाऽनभिज्ञमजितेन्द्रियम् । न कुर्वं व्याधितं वापि नृपः कुर्यात् पुरोहितम्" कालिकापु० तदीयदोषा उक्ताः । २अग्रधारिते त्रि० । पुरोहितस्य धर्म्यं अहिषा० अन् । १पुरोहितधर्म्ये ।

पुरोहितादि पु० "पुरोहितादिभ्यो यक्" पा०यक्प्रत्ययनिमित्ते शब्दगणे स च गणः पा०ग०सू०उक्तो यथा "पुरोहित (राजाऽसे)ग्रामिक पिण्डिक सुहित बालमन्द खण्डिक दण्डिक वर्मिक धर्मिक शिविक सूतिक मूलिक तिलक

पुपोष । "स्वे पुषः" पा० अस्तुत् कस्मादिषु यथाविध्य-
नुप्रयोगात् समपोषं पुष्यति आत्मानं पुष्यतीत्यर्थः ।

**पुष पुष्टौ** अक०पोषणे सक०क्र्या०प०सेट् । पुष्णाति अपोषीत्

**पुष पुष्टौ** भ्वा०पर०सक०सेट् । पोषति अपोषीत् ।

**पुष धृतौ** चु०उभ०सक०सेट् । पोषयति ते अपूपुषत् त ।

**पुषा** स्त्री पुष्णाति पुष—क टाप् । लाङ्गलीवृक्षे शब्दच० ।

**पुष्क** न० पुष–भा० भावे क किच्च आद्य कस्य नेत्त्वम् । पुष्टौ ततः सिध्मा०मत्वर्थे लच् । पुष्कल तद्युते त्रि० ।

**पुष्कर** न० पुष्कं पुष्टिं राति रा—क । १हस्तिशुण्डाग्रे २वाद्यभाण्डमुखे ३जले ४आकाशे ५खड्गफले ६पद्मे ७तीर्थभेदे ८कुष्ठौषधौ अमरः । ९काण्डे १०द्वीपभेदे च मेदि० । ११रोगभेदे १२नागभेदे १३सारसखगे नलराज भ्रातरि१४ नृपभेदे१५ वरुणपुत्रे पुष्करद्वीपस्य१६राजभेदे च पु०मेदि०।१७मेघाधिपभेदे १८त्रिपुष्करघटकयोगे त्रिपुष्कर-शब्दे ३३३१ पृ० दृश्यम् । १९असुरभेदे हरिवं० २०विष्णौ भा० आ० ४३ अ० । तीर्थभेदश्च त्रिपुष्करशब्दे दृश्यः । १६बुद्धकृतसरोवरभेदे न० । "पितामहसरः पुण्यं पुष्करं नाम नामतः" भा० व० ८५ अ० । २१पुष्करद्वीपस्थे पर्वतभेदे पु० "पुष्करे पुष्करो नाम पर्वतो मणिसानुमान्" भा०भी० १२अ० । १६पुष्कर-द्वीपाधिपन्नपे "द्वीपे शुभे पुण्यजनैरुपेते उवास राजा स तु पुष्कराख्यः। तेनैव नाम्नास तु पुष्करोऽपि सदोच्यते देवगणैः ससिद्धैः" अग्निपु० । तस्य पुष्कर (पद्म) तुल्ययानत्वात् वा तथात्वम् "तेनैव यानेन तथाम्बुजेन बभूव नाम्ना तमथाह्वयन्ति" अग्निपु०।
१७मेघाधिपभेदानयनञ्च ज्यो०त० उक्तं यथा
"त्रियुते शाकवर्षे तु चतुर्भिः शेषिते क्रमात् । आवर्त्तं विद्धि संवर्त्तं पुष्करं द्रोणमम्बुदम्"तस्य फलम् "पुष्करे दुष्करं वारि शस्यहीना वसुन्धरा । विग्रहोपहता लोकाः पुष्करे जलदाधिपे"।१०द्वीपभेदश्च"अत एव कृताः सप्त भुवोद्वीपाः जम्बुप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्कर-संज्ञाः" भाग०५।१।३२ । विष्णुपु० तस्य प्रमाणाद्युक्तं यथा "शाकद्वीपप्रमाणेन वलयेनेव वेष्टितः । क्षीराब्धिः सर्वतो ब्रह्मन्! पुष्कराख्येन वेष्टितः। द्वीपेन शाकद्वीपात्तु द्विगुणेन समन्ततः । तद्द्वीपाधिपतेश्चैव महावीतोऽ-भवत् सुतः। धातकिश्च तयोस्तत्र द्वे वर्षे नाम चिह्निते । महावीतं तथैवान्यत् धातकीखण्डसंस्थितम् । एकश्चात्र महाभाग! प्रख्यातो वर्षपर्वतः । मानसोत्तरसंज्ञो वै मध्यतो वलयाकृतिः । योजनानां सहस्राणि ऊर्द्ध्वं पञ्चाशदुच्छ्रितः । तावदेव च विस्तीर्णः सर्वतः परि-मण्डलः । पुष्करद्वीपवलयं मध्ये च विभजन्निव । स्थितोऽसौ पर्वतस्तेन जातं तद्वर्षकद्वयम् । वलयाकार-मेकैकं तयोर्वर्षं तथा गिरिः । दशवर्षसहस्राणि तत्र जीवन्ति मानवाः । निरामया विशोकाश्च रागद्वेष विवर्जिताः । अधमोत्तमौ न तेष्वास्तां न वध्यवधकौ द्विज!। नेर्ष्यासूयाभयं रोषो दोषो लोभादिको न च। महावीतं महावर्षं धातकिसंज्ञकन्ततः । मानसोत्तर शैलस्य देवदैत्यादिसेवितम् । सत्यानृते न तत्रास्तां द्वीपे पुष्करसंज्ञिते । न तत्र शैलनद्यो वा द्वीपे वर्षद्वयान्विते। तुल्यवेशास्तु मनुजा देवैस्तत्रैकरूपिणः । वर्णाश्रमाचार-हीनं धर्माचरणवर्जितम् । त्रयीवार्त्तादण्डनीति-शुश्रूषारहितञ्च तत् । वर्षद्वयञ्च मैत्रेय! भौमः स्वर्गोऽय-मुत्तमः । सर्वस्य सुखदः कालो जरारोगादिवर्जितः । पुष्करे धातकीखण्डे महावीते च वै मुने!। न्यग्रोधः पुष्करद्वीपे ब्रह्मणः स्थानमुत्तमम् । तस्मिन्निव सति ब्रह्मा पूज्यमानः सुरासुरैः । स्वादूदकेनोदधिना पुष्करः परिवेष्टितः । समेन पुष्करस्यैव विस्तारान् मण्ड-लात्तथा"।१४नलनृपभ्रातरि "पुष्कर! त्वं हि मे भ्राता सञ्जीव शरदः शतम् । एवं नलः सान्त्वयित्वा भ्रातरं सत्यविक्रमः। स्वपुरं प्रेषयामास परिष्वज्य पुनः पुनः। सान्त्वितो नैषधेनैवं पुष्करः प्रत्युवाच तम्" भा०व०७८ अ०। भगवतः २२पद्मरूपेण प्रादुर्भावे हरिवं०२०२अ०।

**पुष्करकर्णिका** स्त्री पुष्करं पद्ममिव कर्णः पुष्पं यस्याः कप् कापि अत इत्त्वम् । स्थलपद्मिन्यां राजनि० ।

**पुष्करचूड़** पु० लोकालोकपर्वतोपरिस्थे दिग्गजभेदे भाग० २०।१० ।

[गौरा० ङीष् । स्थलपद्मिन्यां राजनि०।

**पुष्करनाड़ी** स्त्री पुष्करं नाडयति नाडि+अण् उप०स०

**पुष्करनाभ** पु०पुष्करं पद्मं नाभौ यस्य अच्समा०। पद्मनाभे विष्णौ पु० ।

**पुष्करप्रादुर्भाव** पु०पुष्कराकारः प्रादुर्भावः । भगवतः पद्मा-कारेण प्रादुर्भावे तद्विवरणम् ।
"अथ योगविदां श्रेष्ठ सर्वभूतमनोमयम् । स्रष्टारं सर्वभूतानां ब्रह्माणं सर्वतोमुखम् । तस्मिन् हिरण्-मये पद्मे बहुयोजनविस्तृते । सर्वतेजोगुणमये पार्थिवैर्लक्षणैर्युते । तच्च पद्मं पुराणज्ञाः पृथिवीरूप-मुत्तमम् । नारायणात् समुत्पन्नं प्रवदन्ति महर्षयः ।

या तु पद्मासना देवी तां पृथ्वीं परिचक्षते। ये तु गर्भाङ्कुराः सारास्तान् दिव्यान् पर्वतान् विदुः। हिमवन्तञ्च मेरुञ्च नीलं निषधमेव च। कैलासं क्रौञ्चवन्तञ्च तथाऽद्रिं गन्धमादनम्। पुण्यं त्रिशिखरं चैव कान्तं मन्दरमेव च। उदयञ्च गिरिश्रेष्ठं विन्ध्यमस्तच पर्वतम्। एते देवगणानाञ्च सिद्धानाञ्च महात्मनाम्। आश्रयाः सर्वभूतानां पुण्याः कामदुजोऽद्रयः। एतेषामन्तरो देशो जम्बूद्वीप इति स्मृतः। जम्बूद्वीपस्य संस्थानं याज्ञिका यत्र कुर्वते। गर्भोद्यतः स्रवेत् तोयं देवामृतरसोपमम्। दिव्यतीर्थशतापाङ्कुस्ता दिव्याः सरितः स्मृताः। यान्येतानि तु पद्मस्य केशराणि समन्ततः। असंख्याता पृथिव्यास्तु सर्वे ते धातुपर्वताः। यानि पद्मस्य पत्नाणि भूरीणह्यूर्ध्वं नराधिप!। ते दुर्गमाः शैलचिता म्लेच्छदेशा विकल्पिताः। यान्यधः पद्मपत्राणि निवासार्थं विभागशः। दैत्यानामुरगाणाञ्च पातालं तन्महात्मनाम्। तेषामधोगतं यत्तदुदकेत्यभिसंज्ञितम्। महापातककर्माणो मज्जन्ते यत्र मानवाः। पद्मस्यान्ते कृतं यत्तदेकार्णवजलं महत्। प्रोक्तास्ते दिक्षु सङ्ख्यातास्त्वत्वारो जलसागराः। एवं नारायणस्यार्थो महापुष्करसम्भवः। प्रादुर्भावोऽव्ययस्यास्यात्मा पुष्करसंज्ञितः। एतस्मात् कारणात् तज्ज्ञैः पुराणैः परमर्षिभिः। याज्ञिकैर्वेददृष्टार्थैर्यज्ञे पद्मविधिः स्मृतः। एवं भगवता पद्मविधया परया विधिः। पर्वतानां नदीनाञ्च देशानाञ्च विनिर्मितः। विभुस्तथाप्रतिमप्रभावः प्रभाकरो योगिवरोऽमितद्युतिः। स्वयं स्वयम्भूः शयनेऽम्बुजसदा जगन्मयं पद्मनिधिं महार्णवे" हरिवं० २०२ अ०।

**पुष्करमालिन्** त्रि० पुष्करमाला+अस्त्यर्थे इनि। १पद्ममालायुक्ते स्त्रियां ङीप्। २हिमवत्कन्याभेदभर्त्तरि पु० मार्कपु० २१अ०।

**पुष्करमूल** न० पुष्करमिव मूलमस्य। १कुष्ठौषधे राजनि०। ६त०। २पद्ममूले च स्वार्थे क। तत्रार्थे त्रिका०।

**पुष्करवी(बी)ज** न० ६त०। पद्मबीजे।

**पुष्करशायिका** स्त्री सङ्कचारिखगभेदे सुबे सुश्रुतः।

**पुष्करशिफा** पुष्करस्य शिफा जटेव। पुष्करमूले राजनि०। पुष्करजटाप्यत्र।

**पुष्करसद्** त्रि० पुष्करे सीदति सद–क्विप्। १पद्मवासिनि। २गोत्रप्रवर्त्तकर्षिभेदे पु०, तस्य गोत्रापत्यम् बाह्वा० इञ् अनुशतिका० द्विपदवृद्धिः पौष्करसादि तदपत्ये पुंस्त्री। ततो यूनि फञ् पौष्करसादायन तदीये यूनिन्यपत्ये बहुत्वे तु यञो यस्का० लुक्।

**पुष्करसागर** पु० पुष्करं सागर इव। १कुष्ठौषधे वैद्यक० प्र०।

**पुष्करसाद्** पु० पुष्करं पद्मं सीदति भक्षयति धातूनामनेकार्थत्वात् सद–भक्षणे ण्वि उपप०स०। कमलभक्षे पक्षिभेदे यजु० २४।२।

**पुष्करस्थपति** पु० महादेवे भा० आनु० १७ अ०।

**पुष्करस्रज्** स्त्री ६त०। १पद्ममालायाम्। पुष्करमयी स्रक् यस्य। २पुष्करमालायुक्ते त्रि० ३अश्विनीकुमारयोः पु० द्वि० व०। यजु० २।३३।

**पुष्कराक्ष** पु० पुष्करमिवाक्षि यस्य षच्‌समा०। १पद्मतुल्यनेत्रे स्त्रियां ङीष्। २विष्णौ पु० "पुष्कराक्षो महाशनः" "पुष्कराक्षो महामनाः" इति च विष्णुस०। "पुष्करं हृदयपुण्डरीकमक्ष्णोति व्याप्नोति अक्ष–उपप०स० अण्। हृदयपुण्डरीकव्यापितया तस्य तथात्वम् व्युत्पत्तिभेदाच्च नामद्वयम्।

**पुष्कराख्य** पु० पुष्करस्य पद्मस्याख्या आख्या यस्य। पद्मतुल्यनामके १सारसे अमरः। पुष्कराह्वये २कुष्ठौषधे राजनि०। [मूले कुष्ठौषधे वैद्यक० प्र०।

**पुष्कराङ्घ्रिज** न० पुष्कराङ्घ्रिरिव जायते जन–ड। पुष्कर-

**पुष्करादि** पु० "पुष्करादिभ्यो देशे" पा० देशे गम्ये मत्वर्थे इनिप्रत्ययनिमित्ते शब्दगणे स च गणः पा० ग० उक्तो यथा "पुष्कर पद्म उत्पल तमाल कुमुद नड कपित्थ बिस मृणाल कर्दम शालूक विगर्ह करीष शिरीष यवास प्रवाह हिरण्य कैरव कल्लोल तट तरङ्ग पङ्कज सरोज राजीव नालीक सरोरुह पुटक अरविन्द अम्भोज अब्ज कमल पयस"

**पुष्करारुणि** पु० पुरुवंश्ये नृगपौत्रे नृपभेदे भाग०९।२१।१५

**पुष्करावती** स्त्री पुष्कराणि सन्त्यत्र मतुप् मस्य वः दीर्घः। नदीभेदे।

**पुष्करावर्त्तक** पु० पुष्करं जलमावर्त्तयति आ+वृत–णिच्–ण्वुल् उपस०। मेघाधिपभेदे "पुष्करावर्त्तका नाम ते मेघाः पक्षसम्भवाः। संयोगाद्वायुनोच्छिन्नाः पर्वतानां महौजसाम्। कामगानां प्रवृद्धानां लोकानां शिवमिच्छताम्। पुष्करा नाम ते मेघा वृहत्तोयमत्सराः। पुष्करावर्त्तकास्तेन कारणेनेह शब्दिताः" विष्णुपु०। भीमो भीमसेनवत् उत्तरपदलोपे पुष्करोऽप्यत्र २०६३पृष्ठे दृश्यम्।

**पुष्कराङ्ग** पु० पुष्करस्याङ्गा आङ्गा यस्य। सारसखगे अमरः पुष्कराङ्गमप्यत्र। तत्र पुष्करमूले कुष्ठौषधे न० राजनि०।

**पुष्करिका** स्त्री पुष्करं तदाकारोऽस्त्यस्य ठन्। शूकदोषनिमित्ते रोगभेदे "पित्तशोणितसम्भूता पिडका पिडकान्विता। या पुष्करसमानाभा ज्ञेया पुष्करिकेति सा" सुश्रुतः

**पुष्करिन्** पु० पुष्करं शुण्डाग्रमस्त्यस्य इनि। १गजे हारा० स्त्रियां ङीप्। पुष्करादि० देशे गम्ये इनि ङीप्। २स्थलकमले ३पुष्करमूले कुष्ठौषधे राजनि०। ४पद्मिन्यां ५जलाशयभेदे मेदि०। जलाशयशब्दे ३०७५ पृ० तल्लक्षणादि दृश्यम्। ६चाक्षुषमनोःपत्नीभेदे हरिवं० २अ०। ७कपोतमातरि भूमन्युपत्नीभेदे भा० आ० ९४ अ०। मत्वर्थे इनि। ८पद्मसमूहे हेम०।

**पुष्कल** त्रि०पुष—कलच् किच्च बाहुलकात् नेत्त्वम् पुष्क+विघ्रा० अच् वा। १श्रेष्ठे अमरः २उपचिते जटा० ३बहुलयुक्ते च। "अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम्" इत्युक्ते ४परिमाणे न० ५भिक्षार्थदेये अन्नमानभेदे न०। "भिक्षामाहुर्ग्रासमात्रमन्नं तच्चतुर्गुणम्। पुष्कलं हन्तकारन्तु तच्चतुर्गुणमुच्यते" कूर्मपु०। ६असुरभेदे पु०। हरिवं० ४२अ०। ७भरतपुत्रे पु० भाग० ९।११।७।

**पुष्क(ष्क)लक** पु० गन्धमृगे त्रिका० रघुः १५।८। "सौमित्रिपुष्क(ष्क)लोद्धतः" सि० कौ०। अनध्ययपाठस्तत्रैव

**पुष्कलावत** पु० १उत्तरस्थे देशभेदे वृ०स०१४अ०। २भरतपुत्रपुष्कलस्य राजधान्याम् स्त्री।

**पुष्ट** त्रि० पुष—क्त। यस्य पोषणं कृतं तस्मिन् १कृतपोषणे अमरः। भावे क्त। २पुष्टौ न०। तत् कार्य्यतया अस्त्यस्य अच्। ३विष्णौ पु० "तुष्टः पुष्टः पुष्टिकरः" विष्णुस०।

**पुष्टावत्** त्रि० पुष्टं पोषणं कार्य्यत्वेनाऽस्त्यस्य मतुप् मस्य वः वेदे दीर्घः। पोषणकर्त्तरि यस्य तथात्वे ऋ० ८।४५।१६

**पुष्टि** स्त्री पुष—भावे क्तिन्। १पोषणे अन्नादिनोपचयकरणे २वृद्धौ च मेदि०। कर्त्तरि क्तिच्। ३अश्वगन्धायां राजनि० शच्यादिषु ४मातृकाभेदे ५योगिनीभेदे ६धर्मस्य पत्नीभेदे भा० ६६अ०। [राजनि०।

**पुष्टिका** स्त्री पुष्टग्रै कं जलमस्याः। जलशुक्तिकायां

**पुष्टिकान्त** पु० ६त०। गणाधिपे गणेशे।

**पुष्टिद** त्रि० पुष्टिं ददाति दा—क। १पोषणकारके २अश्वगन्धायां स्त्री राजनि०।

**पुष्टिपति** पु० १अग्निभेदे भा० व० २२० अ०। २सरस्वत्यां च शत०ब्रा० ११।४।३।१६।

**पुष्प** विकाशे दि०पर०अक०सेट्। पुष्प्यति अपुष्पीत्। पुपुष्प "शरदि पुष्प्यन्ति सप्तच्छदाः"। कण्ड्वा०अपुष्प्यीत्।

**पुष्प** न० पुष्प्यति पुष्प—विकाशे अच्। (फुल) ख्याते १कुसुमे २स्त्रीरजसि। भावे घञ्। ३विकाशे पु० मेदि० ४कुवेरविमाने न० नेत्ररोगभेदे हेमच०। "पुष्पस्य पत्रं च फलं तथैव यथोत्तरं ते लघवः प्रदिष्टाः तेषां तु पुष्पं कफपित्तहन्तृ फलं निहन्यात् कफमारुतौ च" सुश्रुते सामान्यतस्तस्य गुणा उक्ताः। विशेषतः पुष्पवर्गे अन्येषां गुणा तत्रोक्ताः। स्त्रीरजसि "शुक्रं दुष्टं शोणितं चाङ्गनानां पुष्पोद्रेकं तस्य नाशस्य कष्टम्। पुष्पकाले शुचिस्तस्मादपत्यार्थी स्त्रियं व्रजेत्" इति सुश्रुतः। पुष्पशब्दनिरुक्तिस्तद्गतविशेषादिकं नानातन्त्रे उक्तं यथा तत्र पुष्पशब्दव्युत्पत्तिः कुलार्णवे "पुण्यसंवर्द्धनाच्चापि पापौघपरिहारतः। पुष्कलार्थप्रदानाच्च पुष्पमित्यभिधीयते"। प्रपञ्चसारे "तुलसी पङ्कजे जात्यौ केतक्यौ करवीरके। शस्तानि दश पुष्पाणि तथा रक्तोत्पलानि च। उत्पलानि च नीलानि कह्लारकुमुदानि च"। विश्वसारतन्त्रे "बकुलानि कुसुमानि च" इति पाठः। "मालतीं कुन्दमन्दारं नन्द्यावर्त्तादिकानि च। पलाशपाटलापद्मजयन्त्यावर्त्तकानि च। चम्पकानि सनागानि रक्तमन्दारकाणि च। अशोकोद्भवबिल्वाख्यकर्णिकारोद्भवानि च"। विश्वसारतन्त्रे शक्तिविषये विशेष उक्तो यथा "अथ देव्यर्चने वक्ष्ये पुष्पाणि शृणु पार्वति!। इत्युपक्रमे तुलस्यादीन्युक्त्वा "एतान्यन्यानि तन्त्रेऽस्मिन् पुष्पाणि सन्ति वै प्रिये!। नानादेशोद्भवानि सुः सर्वकालोद्भवानि च। फलानि चैव पुष्पाणि दद्याद्देव्यै विशेषतः। अथ पुष्पं प्रवक्ष्यामि कर्मयोगे महेश्वरि! शृणुष्व परया भक्त्या यथोक्तं ब्रह्मणा पुरा। कमले करवीरे द्वे कुसुमे तुलसीद्वयम्। जातीकुसुमे केतकीद्वे कुमारीचम्पकोत्पलम्। कुन्दमन्दारपुन्नागपाटलानागचम्पकम्। आरग्वधं कर्णिकारं पावन्ती नवमल्लिका। सौगन्धिकं बकोरण्डं पलाशाशोकसंज्ञकाः। अपामार्गः सिन्धुवारो वापुलीकञ्च कामजम्। आम्रचेलं दमनकं मरुवकं ततःपरम्। लवङ्गं जलकर्चूरं तगरञ्च जवा तथा। शिवपुष्पं द्रोणपुष्पं कामराजं धुस्तूरकम्। अन्यानि वनपुष्पाणि जलजस्थलजानि च।

गिरिजानि देशजानि नानापुष्पाण्यतःपरम् ।” सारदायाम् “कमले करवीरे द्वे कुमुदे तुलसीद्वयम् । जातीद्वयं केतके द्वे कह्लारं चम्पकोत्पले । कुन्दमन्दारपुन्नागपाटलानागचम्पकम् । आरग्वधं कर्णिकारं जयन्ती नवमालिका । सौगन्धिकं सकोरण्टं पलाशाशोकमल्लिकाः । धुस्तूरं सर्जकं बिल्वमर्जुनं मुनिपुष्पकम् । अन्यान्यपि सुगन्धीनि पत्रपुष्पाणि देशिकैः । उपदिष्टानि पूजायामाददीत विचक्षणः” । योगिनीतन्त्रे ७ पटले “शृणु देवि ! प्रवक्ष्यामि पुष्पाध्यायं समासतः । ऋतुकालोद्भवैः पुष्पैर्मल्लिकाजातिकुङ्कुमैः । सितरक्तैस्तथा पुष्पैर्नीलपद्मैश्च पाण्डुरैः । किंशुकैस्तगरैश्चैव अशोकनकचम्पकैः । बकुलैश्चैव मन्दारैः कुन्दपुष्पैः कुरुण्टकैः । धुस्तूरकादियुक्तैश्च बन्धूकागस्त्यसम्भवैः । मदनैः सिन्धुवारैश्च दूर्वाङ्कुरसुकोमलैः । मञ्जरीभिः कुशानाञ्च बिल्वपत्रैः सुकोमलैः” तत्रैव ९ पटले “तुलसीद्वे मालतीद्वे तमालामलकी तथा । पुन्नागं मुनिपुष्पञ्च मल्लिकाञ्च निवेदयेत् । करवीरस्य कुसुमैर्येऽर्चयन्ति जनार्द्दनम् । दर्शनात्तस्य देवेशि ! नरकाग्निः प्रणश्यति” । करवीरादिमाहात्म्यं पुरश्चरणोल्लासे १० पटले “करवीरं जवा देवि ! स्वयं काली न चान्यथा । तारा च अपरा चैव स्वयं त्रिपुरसुन्दरी” । तथा “करवीरजवामूले सुवसा नगनन्दिनि । यदि प्राणांस्त्यजेद्देवि ! माहात्म्यं तस्य सुन्दरि ! । वक्त्रकोटिशतेनापि जिह्वाकोटिशतेन च । वर्णितुं तस्य माहात्म्यं न शक्नोमि कदाचन” । “शुक्लं कृष्णं तथा पीतं हरितं लोहितं तथा । करवीरं महेशानि ! जवापुष्पं तथैव च । स्वयं काली महामाया स्वयं त्रिपुरसुन्दरी । अनादरं न कर्त्तव्यं कृत्वा च नरकं व्रजेत्” । दशमपटले “कृष्णापराजिता साक्षाद्भद्रकाली न संशयः । करवीरञ्च भुवना द्रोणं भुवनसुन्दरी । जवा साक्षाद्भगवती सर्वविद्यास्वरूपिणी । ये साधका अमन्त्रातरर्चयन्ति शिवप्रियाम् । एतैश्च कुसुमैश्चण्डि ! स शिवो नात्र संशयः । येनार्च्चिता जगद्धात्री द्रोणकृष्णजवादिभिः । राजसूयाश्वमेधाद्यैर्वाजपेयाग्निहोत्रकैः । फलं यज्जायते चण्डि ! तत् सर्वं कुसुमार्च्चनात् । जवाद्रोणं तथा कृष्णामालूरं करवीरकम् । साक्षाद्ब्रह्मस्वरूपञ्च महादेव्यै निवेदयेत् । श्वेतचन्दनसंयुक्तं रक्तचन्दनलेपितम् । यो दद्याद्भक्तिभावेन स शिवो न संशयः” । अथ कामनाभेदे पुष्पविशेषः तत्रैव “करवीरस्य माघस्य सहस्राणि ददाति यः । स कामान् प्राप्य चाभीष्टान् देवीलोके महीयते । तथैककरवीरेण पद्मानां द्वे सहस्रके । महाघोरे महोत्पाते महापदि च सङ्कटे । महादुःखे महारोगे महाशोके महाभये । पूजयेत् कालिकां तारां भुवनां षोड़शीं शिवाम् । बालां छिन्नाञ्च बगलां धूमां भीमां करालिनीम् । कमलामन्नपूर्णाञ्च दुर्गां दुःखविनाशिनीम् । सर्वविद्या जवाद्रोण करवीरैर्मनोहरैः । मालूरपत्रैः कृष्णाभिः कृष्णां संपूज्य भूतले । साधकेन्द्रो महेशानि ! भवेन्मुक्तो न संशयः” । मुण्डमालायां दशमपटले “जवापुष्पैर्द्रोणपुष्पैः करवीरैर्मनोहरैः । कृष्णापराजितापुष्पैरन्यैश्च मुनिपुष्पकैः । पूजयेत् परया भक्त्या चण्डिकां परमेश्वरीम्” । योगिनीतन्त्रमत्स्यसूक्तयोः “येऽर्चयन्ति जनाध्यक्षं करवीरैः सितासितैः । चतुर्युगानि देवेशि ! प्रीतो भवति माधवः ।” “बकपुष्पं च जातिस्तु तथा रुद्रजटस्य च । वाजपेयस्य यज्ञस्य फलं प्राप्नोति नान्यथा । सर्वेषामेव पुष्पाणां प्रवरं नीलमुत्पलम् । नीलोत्पलसहस्रेण यस्तु मालां प्रयच्छति । दुर्गायै विधिवद्देवि ! तस्य पुण्यफलं शृणु । वर्षकोटिसहस्राणि वर्षकोटिशतानि च । देव्याः सानुचरो भूत्वा रुद्रलोके महीयते” । मुण्डमालायाम् “अन्यासां माहिषैर्मेषैरजैर्दानैर्मखैः शुभैः । पूजिता या जगद्धात्री सद्यो या कुसुमार्च्चिता । माहात्म्यञ्चैव कृष्णायाः कृष्णा जानाति तत्त्वतः । तदर्द्धं शाम्भवं देवि ! तदर्द्धं श्रीपतिः सदा । तदर्द्धं पद्मजन्मा वै तदर्द्धं वेदसाधकः । अन्यपुष्पस्य माहात्म्यं संक्षेपाद्वच्मि शङ्करि ! । पृथिव्यां मण्डले स्वर्गे वैकुण्ठे कालिकापुरे । जवादिकरवीरैश्च दलैः किं किं फलं लभेत् । न जानाति जगद्धात्री को वेद पार्वतीं विना । करवीरैः श्वेतरक्तै रक्तचन्दनमिश्रितैः । पूजयेत् ख्यातटे यस्तु स विश्वेशो भवेद्ध्रुवम् । कृष्णापराजितापुष्पैर्यस्तु देवीं प्रपूजयेत् । सोऽश्वमेधसहस्राणां फलं प्राप्य शिवां व्रजेत् । महाविपत्तौ यो दद्याज्जवां कृष्णापराजिताम् । द्रोणं वा करवीरं वा स गच्छेत् कालिकापुरम्” । तत्रैव “किञ्च पाद्यैः किञ्च वाद्यैर्नैवेद्यैः किञ्च पूजनैः । मधुदानैर्मधुपर्कैः कुम्भकैः किञ्च रेचकैः । पूरकैः किञ्च वा ध्यानैः प्राणायामैश्च किञ्च वा । किं जपैः किं तपोभिर्वा मत्स्यैर्मांसैश्च पञ्चकैः । किमन्यमन्त्रैः किं

तन्त्रैः किं यन्त्रैः किञ्च साधनैः। किं वेदैरागमैः किं वा स्नानैर्मन्त्रसाधनैः। किमध्वरैर्मन्त्रपूतैर्मन्त्रार्थैर्मन्त्रजीवनैः। किं योनिमुद्रया किं वा तीर्थैः किं ब्रह्मसाधनैः। किं मातृकान्यासगणैः किं कटैः किं घटैः पटैः। किं काकचञ्चुभिः षोढान्यासैः किं धर्मसाधनैः। येनार्च्चिता महादेवी करवीरैर्जवादिभिः। कृष्णापराजितापुष्पैः करवीरैर्मनोहरैः। द्रोणैस्तु केतकीपुष्पैर्जवामालूरपत्रकैः। पूजिता यैर्भगवती तेषां किं कर्मसाधनैः”। नित्यातन्त्रे एकादशपटले “न तुलस्या यजेत् कालीं नाक्षतैर्विष्णुमर्च्चयेत्। अपराजितायादानेन साक्षात्तुष्टा भवेच्छिवा। कालिकायाश्च तारायाः करवीरमतिप्रियम्। जवापुष्पं महेशानि! दद्याच्च धारयेत् क्वचित्। रक्तोत्पलेन देवेशि! कालिकां पूजयेत् सकृत्। शतवर्षसहस्राणां पूजायाः फलमाप्नुयात्”। तथा “दूर्वापि गर्भसंयुक्ता देवी तुष्टिकरी भवेत्”। पुरश्चरणचन्द्रिकायां “मञ्जरीं सहकारस्य केशवाय निवेदयेत्। रुद्रजटां शिरीषञ्च दाड़िमं काञ्चनं तथा। नीलकण्ठं मयूरञ्च योन्याकारञ्च वर्जयेत्।” पुष्पदाने काम्यफलं नित्यातन्त्रे ईश्वर उवाच। “ब्रह्महत्यादिपापानां प्रायश्चित्तं सुरेश्वरि। रक्तपुष्पैर्महादेवि! चक्रराजं प्रपूजयेत्। कुलाचारक्रमेणैव कर्पूरक्षोदमिश्रितम्। महापातककोटिश्च जन्मान्तरकृता अपि। मासमात्रेण हन्यन्ते सत्यं सत्यं न संशयः। लक्ष्मीस्तस्य भवेद्गेहे सुस्थिरा वीरवन्दिते!। जवापुष्पैर्महेशानि! पूर्व्ववद्यदि पूजयेत्। मासमात्रेण नश्यन्ति सप्तजन्मकृतान्यपि। ब्रह्महत्यादिपापानि धनवान् जायते कविः। पूर्व्ववत् केतकीपुष्पैः पत्रैर्वा यदि पूजयेत्। मासमात्रेण देवेशि! उपपातककोटयः”। (नश्यन्तीति पूर्व्वोक्तेनान्वयः)। “लभते राजसौभाग्यं साधको नात्र संशयः। शतपत्रैर्महेशानि! पूर्व्ववत् पूजयेच्छिवाम्। मासमात्रेण देवेशि! सर्व्वपापं विनाशयेत्। चम्पकैः पूजयेद्देवीं पूर्व्ववन्मासमात्रकम्। निहत्य परमेशानि! पातकं शतजन्मजम्। सौभाग्यं लभते मन्त्री त्रिषु लोकेषु पार्व्वति!। श्वेतपद्मैर्महेशानि! मासमात्रं प्रपूजयेत्। त्रिंशज्जन्मकृतं पापं नाशयेन्नात्र संशयः। बन्धूकैः पूर्व्ववद्देवि! मासमात्रं प्रपूजयेत्। निहत्य सर्व्वपापानि राजानं वशमानयेत्। मालतीमल्लिकाजातीकुन्दैः श्वेतोत्पलैः सह। सुमिश्रैः पूर्व्ववद्देवि! मासमात्रं प्रपूजयेत्। ब्रह्महत्यादिपापानि शतजन्मकृतान्यपि। नाशयेत् परमेशानि! मुक्तिस्तस्य करे स्थिता। रक्तोत्पलजवार्कञ्च बन्धूकागस्त्यकैः शिवाम्। पूर्व्ववत् परमेशानि! मासमात्रं प्रपूजयेत्। पातकं नाशयित्वाऽसौ मम तुल्यो भवेन्नरः। नागकेशरकह्लारबकुलैः सिन्धुवारकैः। पाटलैः पूजयेद्देवि! श्रीपीठान्तर्निवासिनीम्। पूर्व्ववत् पूजयेद्देवि! मासमात्रं प्रसन्नधीः। सहस्रजन्मजं पापं नाशयेन्नात्र संशयः। सौभाग्यमतुलं तस्य भवेद्देवी प्रसादतः”। योगिनीतन्त्रे “नोत्सृज्य दद्यात् पुष्पाणि वनस्थानि कदाचन। न गृह्णन्ति वै देवाः समाकर्षितुमुद्यताः। एकैकं कुसुमं यक्षा रक्षन्ति दंश वै यतः। तथा यक्षाङ्गनाः यक्ष सर्व्वतः कुसुमावृताः। तस्मादाहृत्य कुसुमं यजेद्देवान् पितॄनपि” इति हस्तस्थपुष्पदानिषेधः। मत्स्यसूक्ते “स्नात्वा मध्याह्नसमये न छिन्द्यात् कुसुमं नरः। तत्पुष्पैरर्च्चने देवि! रौरवे परिपच्यते” मध्याह्न इत्युपादानात् प्रातःस्नातस्य पुष्पाहरणे न दोषः। अथ पुष्पमाला विश्वसारतन्त्रे “नीलोत्पलसहस्रेण यस्तु मालां प्रयच्छति। दुर्गायै विधिवद्देवि! तस्य पुण्यफलं शृणु। वर्षकोटिसहस्राणि वर्षकोटिशतानि च। देव्या अनुचरो भूत्वा रुद्रलोके महीयते”। योगिनीतन्त्रे नवमपटले “मालतीमालया विष्णुरर्च्चितो येन कार्त्तिके। पापाचरकृता माला नाशिता तस्य विष्णुना”। तथा “करवीरकृतां मालां माधवाय प्रयच्छति। देवेन्द्रोऽपि महेशानि! करोति करसंपुटम्”। तत्रैव “न भेदयेद्वशस्त्रत्वं मालाश्चैव न भेदयेत्। विशेषं मालतीमालां व्यञ्चनं तथैव च”। कुलार्णवतन्त्रे द्वितीयपटले “कोकनदञ्च बन्धूकं कर्णिकाद्वयमेव च। वकमन्दाररक्तानि करवीराणि शस्यते। मल्लिकात्रितयं जाती कौमपुष्पं जयन्तिका। बिल्वपत्रं कुरुवकं मुनिपुष्पञ्च केसरम्। वासन्ती चैव सौगन्धं काञ्चपुष्पं मनोहरम्। आमलकञ्च कादम्बं बकुलं यूथिका तथा। बिल्वैर्मरुवकाद्यैश्च तुलसीवर्जितैः शुभैः। ओड्रपुष्पैर्विशेषेण दर्जपुष्पेण शोभितम्। सर्व्वं पुष्पं प्रदद्याच्च भक्तियुक्तेन चेतसा। जवापुष्पं महेशानि! दद्याद्देव्यै विशेषतः। पद्मं प्रियतरं देव्याः शेफाली बकुलं तथा। रक्तोत्पलेन देवेशि! पूजयेत् परमां शिवाम्। लक्षवर्षसहस्राणां पूजायाः फलमाप्नुयात्। शिरीषं मरुकं

देव्याः प्रीतिदं तगरं तथा । स्थलपद्मं सुन्दरं जल-संस्थक्रमेण तु । यदि दद्यान्महेशानि ! सर्वसिद्धिः सुरेश्वरि ! । तदैव मन्त्रसिद्धिः स्यान्नात्र कार्य्या विचारणा । द्विजातीं तुलसीं रम्यां तस्याः प्रीतिकरीं पराम् । काञ्चनं रक्तवर्णञ्च अतिप्रियतरं महत् । भक्तियुक्तो महेशानि ! सर्वपुष्पं निवेदयेत्" । बृहन्नीलतन्त्रे "चातुर्मास्ये तु लक्षैकमालत्या योऽर्च्चयेद्धरिम् । शतजन्मकृतं पापं तत्क्षणादेव नश्यति । करवीरस्य कुसुमैर्येऽर्च्चयन्ति हरेर्हरे । दर्शनात्तस्य देवेशि ! नरकाग्निः प्रणश्यति" । वर्ज्यपुष्पाणि "नार्च्चयेत् झिण्टिपुष्पेण पीतैश्च तगरैस्तथा । श्वेतेनोड्रेण कृष्णेन विजयेन नचार्च्चयेत्" । प्रपञ्चसारे सप्तपटले "कुङ्कुमे पतितैर्माल्यैः शीर्णैर्वा जन्तुदूषितैः । आघ्रातैरङ्गसंस्पृष्टैरुषितैर्नापि चार्च्चयेत्" । सारदायाम् "मलिनं भूमिसंस्पृष्टं कृमिकेशादिदूषितम् । अङ्गस्पृष्टं समाघ्रातं त्यजेत् पर्युषितं तथा" । मत्स्यसूक्ते चतुर्दशपटले "शेफालिका तु कह्लारं शरत्काले प्रशस्यते । अन्यत्र न स्पृशेद्देवि ! प्रायश्चित्तन्तु पूजनात् । नार्च्चयेद्रक्तकृष्णेन तथोग्रगन्धिकेन च । करवीरस्य माध्यस्य बन्धूजीवस्य चैव हि । केशरस्य जवजस्य रक्तं देवि ! प्रशस्यते" । योगिनीतन्त्रे "बिल्वपत्रं शमीपत्रं तमालामलकीदलम् । अपाङ्गभृङ्गपत्रञ्च कुशं दूर्वास्तथैव च । पुष्पाणामप्यभावे तु फलान्यपि निवेदयेत् । फलानामप्यभावे तु तत्पत्रैः पूजयेद्धरिम् । "गुप्तपूजापुष्पञ्च तत्रैव "सिंहास्यञ्चैव मालूरं धत्तूरञ्च चतुर्विधम् । तथा रुद्रजटे द्वे च गुह्यपुष्पञ्च शङ्करि । पद्मे नीलोत्पले देवि ! बकमन्दारकाञ्चने । माधवीद्वे तमालञ्च गुप्तमेतद्धराचने" । दिवारात्रिभेदेन पुष्पविशेषेण पूजनमुक्तं तत्रैव "कनकानि सुगन्धीनि रात्रौ देयानि शङ्करि ! । दिवा चान्यानि पुष्पाणि दिवा रात्रौ च मल्लिका । देवालयस्य पुष्पेण यो देवं प्रतिपूजयेत् । अन्धत्वं प्राप्नुयात् सोऽपि दश वर्षाणि पञ्च च" । देवताविशेषे पुष्पविशेषवर्जनमपि तत्रैव "शिवे विवर्जयेत् कुन्दं माघे माध्यं प्रशस्यते । गणेशे वर्जयेन्माध्यमशोकं तगरन्तथा । सूर्य्ये माध्यञ्च मन्दारं कनकञ्च तथैव च । महालक्ष्म्यै च तुलसीं झिण्टिकां काञ्चनन्तथा । बन्धूजीवञ्च द्रोणञ्च सरस्वत्यै न दापयेत् । पद्मानां बिल्वपत्रञ्च शमीपत्रं तथैव च । ब्रह्मणे वर्जयेत् काशं कौसुम्भं शमीपुष्पकम् । धात्रीपुष्पं कुरण्टञ्च जलपुष्पं तथैव च । दुर्गायै न प्रदद्याच्च सोमपुष्पं तथैव च । त्रिपुरायै काञ्चनञ्च कनकं वासकं तथा । किंशुकं कृष्णकान्ताञ्च इन्द्राण्यै वर्जयेत्तथा" । अकर्मण्यपुष्पदाने दोषो यथा "वराह उवाच" अकर्मण्येन पुष्पेण यो मामर्चयते भुवि । पातकं तस्य वक्ष्यामि तच्छृणु त्वं वसुन्धरे ! । नाहं तत् प्रतिगृह्णामि न च ते वै, मम प्रियाः । मूर्खैर्भागवतैर्दत्तं मम विप्रियकारिणः । पतन्ति नरके घोरे रौरवे तदनन्तरम् । अज्ञातस्य च दोषेण दुःखान्यनुभवन्ति च । वानरो दश वर्षाणि मार्जारश्च त्रयोदश । मूषकः पञ्चवर्षाणि बलीवर्दश्च द्वादश । छागश्चैवाष्ट वर्षाणि वर्षं वै ग्रामकुक्कुटः । त्रीणि वर्षाणि महिषो भवत्येव न संशयः । एतत्ते कथितं भद्रे ! पुष्पं यन्मेऽत्र रोचते । अकर्मण्यं विशालाक्षि ! पुष्पं यो न ददाति वै" वराहपु० । देवीप्रियपुष्पाणि यथा "पुष्पाणि देव्या वैष्णव्याः प्रियाणि शृणु संप्रति । बकुलैश्चैव मन्दारैः कुन्दपुष्पकुरण्टकैः । करवीरार्कपुष्पैश्च शाल्मलैश्चापराजितैः । दमनैः सिन्धुवारैश्च वर्कैर्मरुवकैस्तथा । लताभिश्चाष्टधैव दूर्वाङ्कुरैश्च कोमलैः । मञ्जरीभिः कुशानाञ्च बिल्वपत्रैः सुशोभनैः । पूजयेद्वैष्णवीं देवीं कामाख्यां त्रिपुरां तथा । अन्याश्च याः शिवाप्रीत्यै जायन्ते पुष्पजातयः । ता इमाः शृणु कीर्त्त्यन्ते मया वेताल ! भैरव ! । मालती मल्लिका जाती यूथिका माधवीलता । पाटला करवीरञ्च जवा तर्करिका तथा । कुब्जकं तगरश्चैव कर्णिकारोऽथ रोचनः । चम्पकाम्रातकौ वाणबर्वरौ मल्लिका तथा । अशोका लोध्रतिलकाटरूषशिरीषकैः । शमीपुष्पञ्च द्रोणञ्च पद्मोत्पलनवकारुणाः । श्वेतारुणे त्रिसन्ध्ये च पलाशः खदिरस्तथा । वनमालाऽथ सेवन्ती कुमुदोऽथ कदम्बकः । चक्रं कोकनदञ्चैव भण्डिलो गिरिकर्णिका । नागकेशरपुन्नागौ केतक्यञ्जलिका तथा । दोहदा बीजपूरश्च नमेरुः शालमेव च । त्रपुषी चारुसिन्धुश्च झिण्टी पञ्चविधा तथा । एवमाद्युक्तकुसुमैः पूजयेत् वरदां शिवाम्" । वर्जनीयपुष्पं यथा "पुष्पञ्च कृमिसम्भिन्नं विशीर्णं भग्नसुद्भवम् । सकेशं मूषिकाधूतं यत्नेन परिवर्जयेत् । याचितं परकीयञ्च तथा पर्युषितञ्च यत् । अन्त्यस्पृष्टं पदास्पृष्टं यत्नेन परिवर्जयेत्" कालिका पु० ६८।५४ अ० । केशवपूजने प्रशस्तपुष्पाणि यथा "मालतीमल्लिका चैव यूथिका चातिमुक्तिका । पाटलाकरवीरञ्च जयाशेवतिरेव

च। कुब्जकस्तगरश्चैव कर्णिकारः कुरण्टकः। चम्पकश्चागरः कुन्दो बाणश्च वरमल्लिकाः। अशोकस्तिलकश्चम्पस्तथा चैवाटरूषकः। अमी पुष्पप्रकारास्तु शस्ताः केशवपूजने। केतकीपत्रपुष्पञ्च पुष्पं भृङ्गारकस्य च। तुलस्यामलकी चैव सद्यस्तुष्टिकरं हरेः। पद्मान्यम्बुसमुत्थानि रक्तनीले तथोत्पले। सितोत्पलञ्च कृष्णस्य दयितानि सदा नृप!। तानि पुष्पाणि देयानि विष्णवे प्रभविष्णवे" अग्निपु०। किञ्च "जाती शताह्वा सुमना कुन्दं बहुपुटं तथा। बाणञ्च पङ्कजाशोकं करवीरञ्च यूथिका। पारिभद्रं पाटला च बकुलं गिरिशालिनी। तिलकं वनजञ्चैव पीतकं तगरन्त्वपि। एतानि हि प्रशस्तानि कुसुमान्यच्युतार्चने। सुरभीणि तथान्यानि वर्जयित्वा तु केतकीम्। बेलामपि हि पुष्पाणि प्रशस्तान्यच्युतार्चने। पत्राण्यपि तेषां स्युः प्रशस्तानि महासुर!। वीरुधानां प्रधानेन बर्हिषाञ्चार्चयेत्तथा। नानारूपैश्चाम्बुभवैः कमलेन्दीवरादिभिः। प्रवालैः शुचिभिः शुद्धैर्जलप्रक्षालितैर्बले!। वनस्पतीनामर्चेत तथा दूर्वादिपल्लवैः" वामनपु० ६१। विष्णौ पुष्पविशेषदानस्य फलं यथा "आरामप्रभवैः पुष्पैरच्छिद्रैः कीटवर्जितैः। तथाऽपर्युषितैस्तद्वत् कार्त्तिके विष्णुमर्चयेत्। वर्णानां हि यथा विप्रस्तीर्थानां जाह्नवी यथा। देवानाञ्च यथा विष्णुः पुष्पाणां मालती तथा। मालतीमालया देवं योऽर्चयेद्गरुड़ध्वजम्। जन्मदुःखजरारोगैः कर्मभिर्मुक्तिमाप्नुयात्। मालतीमालया येन पूजितः कार्त्तिके हरिः। पापलक्षायुतं तस्य वत्स! शौरिः प्रमार्जति। मालतीपुष्पमालाभिः कार्त्तिके पुष्पमण्डपम्। विष्णोर्गृहे कृतं यैस्तु ते यान्ति परमां गतिम्। जातिपुष्पैर्विरचितां मालां यः सम्प्रयच्छति। विष्णवे विधिवद्भक्त्या तस्य पुण्यफलं शृणु। कल्पकोटिसहस्राणि कल्पकोटिशतानि च। वसेद्विष्णुपुरे श्रीमान् विष्णुतुल्यपराक्रमः। यः स्वर्णकेतकैः पुष्पैः पूजयेद्गरुड़ध्वजम्। अब्दकोटिशतं यावत्तुष्टस्तस्य वै हरिः। दामोदरं पूजयेद्यः कुसुमैः केतकोद्भवैः। स वसेद्विष्णुनिलये देवेन सह मोदते। मल्लिकाकुसुमैर्देवं योऽर्चयेत् त्रिदशेश्वरम्। कार्त्तिके परया भक्त्या दहेत् पापं त्रिधार्जितम्। सुगन्धैर्मल्लिकापुष्पैरच्युतं योऽर्चयेन्मुने!। स सर्वपापनिर्मुक्तो विष्णुलोके महीयते। वेदधर्मेण केनापि संप्राप्ते मधुमाधवे। योऽर्च्चयेत् स मुनिश्रेष्ठ! लभते वैष्णवं पदम्। यः पुनः पाटलापुष्पैरर्च्चयेद्गरुड़ध्वजम्। सुपुण्यात्मा परं स्थानं स प्रयाति हरेर्मुने!। अगस्त्यपुष्पैर्देवेशं येऽर्च्चयन्ति जनार्द्दनम्। देवर्षे! दर्शनात्तेषां नरकाग्निः प्रणश्यति। न तत् करोति विप्रेन्द्र! तपसा तोषितो हरिः। यत् करोति हृषीकेशो मुनिपुष्पैरलङ्कृतः। विहाय सर्वपुष्पाणि मुनिपुष्पेण केशवम्। कार्त्तिके योऽर्च्चयेद्भक्त्या वाजिमेधफलं लभेत्। मुनिपुष्पकृतां मालां ये यच्छन्ति जनार्द्दने। शक्रोऽपि तैः समं वत्स! कुरुते ह्यभिभाषणम्। ददात्यभीप्सितान् कामान् इष्टचिन्तामणिर्यथा। कार्त्तिके मुनिपुष्पेण पूजितो गरुड़ध्वजः। गवामयुतदानेन यत् फलं कार्त्तिके मुने!। मुनिपुष्पेण चैकेन कार्त्तिक्यां तत् फलं स्मृतम्। येऽर्च्चयन्ति सुराध्यक्षं करवीरैः सितासितैः। तेषां वशगतं यावत् प्रभुर्भवति केशवः। बकुलाशोककुसुमैर्येऽर्च्चयन्ति जगत्पतिम्। निर्भीकास्ते भवन्तीह यावच्चन्द्रदिवाकरौ। अशोककुसुमैरर्च्यैर्जन्मशोकभयापहम्। पूजयित्वा हरिं याति पदं विष्णोरनामयम्। शुभगन्धैः सितैर्वत्स! कुसुमैः पङ्कजोद्भवैः। अधोक्षजं समभ्यर्च्य नरो याति हरेः पदम्। अभ्यर्च्य कौमुदैः पुष्पैः केशवं त्रिदशैरपि। अटरूषकपुष्पैश्च पूजयेद्यो जगत्पतिम्। स पुण्यवान्नरो याति तद्विष्णोः परमं पदम्। कार्त्तिके योऽर्च्चयेद्विष्णुं तुलसीबिल्वपङ्कजैः। त्रिदशैरपि पूज्यः स न शक्यो यमकिङ्करैः। माधवे योऽर्च्चयेद्विष्णुं तुलसीबिल्वपङ्कजैः। त्रिदशैरपि पूज्यः स न शक्यो यमकिङ्करैः। माधवे योऽर्च्चयेद्विष्णुं सुपुष्पैस्तिलकोद्भवैः। धूतपापो निरातङ्कः स विष्णोर्याति तत् पदम्। समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरेत्। शूद्रानीतैश्च हरेः पूजां कुर्वन् व्रजत्यधः। तस्माद्विप्रो मुनिश्रेष्ठ! शिष्येण स्वयमेव वा। पुष्पादीनि समाहृत्य पूजयेत् परमेश्वरम्। विप्रो दूर्वामयैः पुष्पैस्तथा काशकुशोद्भवैः। तुलसीबिल्वपत्रैश्च पूजयेद्देवताः पितॄन्। नार्च्चयेत्तगरैः सूर्यं धूर्त्तपुष्पेण केशवम्। देवीं लकुचपुष्पैश्च शङ्करं नागकेशरैः"। कालविशेषे तस्य पर्य्युषितत्वं यथा "प्रहरं तिष्ठते जाती प्रहरार्द्धन्तु मल्लिका। त्रियामं मुनिपुष्पञ्च करवीरमहर्निशम्"। आम्रमञ्जरीबिल्वपत्रदानफलं यथा "मञ्जरीं सहकारस्य ये प्रयच्छन्ति वैष्णवाः। कार्त्तिके

सफलास्ते युगकोटीफलभागिनः । कार्त्तिके योऽर्च्चयेद्भक्त्या विल्वपत्रेण केशवम् । दद्याद् यज्ञायुतफलं केशवस्तस्य वै मुने ! ॥ विल्वपत्रेण ये कृष्णं कार्त्तिके कलिमर्द्दनम् । पूजयन्ति महाभक्त्या मुक्तिस्तेषां करे स्थिता ॥ नागकेशरपुष्पैर्यः पूजयेद् गरुड़ध्वजम् । स याति वैष्णवं स्थानं यत्र गत्वा न शोचते । कदम्बकुसुमैर्यो वै पूजयेन्मधुसूदनम् । जन्मायुतार्जितं पापं स्फोटितं तेन नारद ! ॥ न तथा केतकीपुष्पैर्मालतीकुसुमैस्तथा । तोषमायाति देवेशः कदम्बकुसुमैर्यथा । दृष्ट्वा कदम्बपुष्पाणि तोषमायाति माधवः । किं पुनः पूजितो देवः सर्व्वकामप्रदो हरिः । हरिं किंशुकपुष्पैर्यः पूजयेत् त्रिदशाधिपम् । वैकुण्ठे रमते शश्वत् विष्णुना सह वैष्णवः । वर्षाकाले च देवेशं कुसुमैश्चन्दनार्च्चितैः । योऽर्च्चयेत् परमं विष्णुं संसारे न पुनर्विशेत् । कुन्दपुष्पैश्च विप्रर्षे ! योऽर्च्चयेद् गरुड़ध्वजम् । कोटिजन्मार्जितं पापं तत्क्षणादेव नश्यति । शमीपुष्पैश्च देवेशं पूजयेदसुरद्विषम् । यमं न पश्येद्विप्रर्षे ! न याति दुर्गतिं नरः" पाद्मोत्तरख० १२१ अ० । लक्ष्मीतुल्यप्रियपुष्पाणि नारदीयसं० "मालती बकुलाशोकशेफालीनवमालिकाः । अम्लानतगराङ्कोठमल्लिका मधुपिण्डिकाः । यूथिकाष्टापदं कुन्दं कदम्बं मधुपिप्पलम् । पाटलाचम्पकं हृद्यं लवङ्गमतिमुक्तकम् । केतकं च कुरुवकं विल्वं कह्लारकं द्विज ! ॥ पञ्चविंशतिपुष्पाणि लक्ष्मीतुल्यप्रियाणि मे" । केशवार्च्चने निषिद्धपुष्पाणि विष्णुधर्म्मोत्तरे । "उग्रगन्धीन्यगन्धीनि कुसुमानि न दापयेत् । अन्यायतनजातानि कण्टकीनि तथैव च । रक्तानि यानि धर्म्मज्ञ ! चैत्यवृक्षोद्भवानि च । श्मशानजातान्यन्यानि यानि चाकालजानि च" । तथा "कुटजं शाल्मलीपुष्पं शिरीषञ्च जनार्द्दने । निवेदितं भयं रोगं निःस्वत्वञ्च प्रयच्छति । बन्धुजीवकपुष्पाणि रक्तान्यपि च दापयेत् । अन्यरक्तकपुष्पाणां दानात् दौर्भाग्यमाप्नुयात्" । परारोपितवृक्षस्य पुष्पग्रहणे दोषः । यमस्त्यः "परारोपितवृक्षेभ्यः पुष्पाण्यानीय योऽर्च्चयेत् । अविज्ञाप्य च तस्यैव निष्फलं तस्य पूजितम्" । एतद् द्विजेतरपरम् "द्विजस्तृणैधः पुष्पाणि सर्व्वतः स्ववदाहरेत्" इति याज्ञवल्क्यात् । "देवाद्यर्थन्तु कुसुममस्तेयं मनुरब्रवीत्" इति वचनात् । "गोऽग्न्यर्थे तृणमेधांसि वीरुद्वनस्पतीनां पुष्पाणि स्ववदाददीत फलानि चापरिवृतानि" इति गौतमवचनाच्च । द्विजेतरस्य दण्डोऽपि "तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम् । अनापृच्छन् हि गृह्णानो हस्तच्छेदनमर्हति" इति स्मृतेः । "देवोपरिधृतं मस्तकोपरिधृतम् अधोवस्त्रधृतम् अन्तर्जलप्रक्षालितञ्च पुष्पं दुष्टमिति" हरिभक्तिनामके ग्रन्थे । अभिवाद्याभिवादककरस्थपुष्पं प्रोक्षणात् कर्म्मण्यम्" इति केचित् । याचितादिपुष्पदानस्य निष्फलत्वम् । "याचितं निष्फलं पुष्पं क्रयक्रीतञ्च निष्फलम्" इति वदन्ति । वामहस्तधृतादिपुष्पस्यादेयत्वं यथा "न पुष्पच्छेदनं कार्य्यं देवार्थं वामहस्ततः । न दद्यात्तानि देवेभ्यः संस्थाप्य वामहस्ततः । समित्पुष्पादीनां स्वयमाहरणीयत्वं हारीतशातातपौ "समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् । शूद्रानीतैः क्रयक्रीतैः कर्म्म कुर्व्वन् पतत्यधः" । क्रये प्रतिप्रसवमाह ब्रह्मपु० "पुष्पैर्धूपैश्च नैवेद्यैर्वीरक्रयक्रियाहृतैः" । वीरक्रयो वीरवत् याच्ञामूल्येन विक्रेतुरधन्यस्तमूल्येन क्रयः । पुष्पप्रदानप्रकारो ज्ञानमालायां "पुष्पं वा यदि वा पत्रं फलं नेष्टमधोमुखम् । पुष्पाञ्जलिविधिं हित्वा यथोत्पन्नं तथार्पणम्" । मध्याह्नस्नानानन्तरं पुष्पचयनस्य दोषो यथा "स्नानं कृत्वा तु ये केचित् पुष्पं गृह्णन्ति वै द्विजाः । देवतास्तन्न गृह्णन्ति भस्मीभवति दारुवत्" । एतत्तु द्वितीयस्नानाभिप्रायम् । इति रत्नाकरः । व्यक्तं मत्स्यसूक्ते "स्नात्वा मध्याह्नसमये न छिन्द्यात् कुसुमं नरः । तत्तत्पुष्पार्च्चने देवि ! रौरवे परिपच्यते" । पुष्पाभावे देयानि विष्णुधर्म्मोत्तरे "पुष्पाभावेऽपि देयानि पत्राणि च जनार्द्दने । पत्राभावे जलं दद्यात्तेन पुण्यमवाप्यते" । पुष्पप्रदानमाहात्म्यं यथा "न रत्नैर्न सुवर्णेन न वित्तेन च भूरिणा । तथा प्रसादमायाति यथा पुष्पैर्जनार्द्दनः" । देवताविशेषे वर्ज्जनीयपुष्पं यथा शातातपः "शिवे विवर्ज्जयेत् कुन्दमुन्मत्तञ्च हरेस्तथा । देवीनामर्कमन्दारौ सूर्य्यस्य तगरन्तथा" । पुष्पविशेषाणां कालभेदे पर्य्युषितत्वमुक्तं भविष्ये "पद्मानि सितरक्तानि कुमुदान्युत्पलानि च । एषां पर्य्युषिताशङ्का कार्य्या पञ्चदिनोत्तरम्" । पुष्पविशेषस्यापर्य्युषितत्वं यथा "तुलस्यगस्त्यविल्वानां न च पर्य्युषिताक्षता" । योगिनीतन्त्रे "विल्वपत्रञ्च माध्यञ्च तमालामलकीदलम् । कह्लारं तुलसीञ्चैव पद्मञ्च मुनिपुष्पकम् । एतत् पर्य्यु-

षितं न स्यात् यच्चान्यत् कलिकात्मकम् ।” कलिकात्मकं प्रस्फुटनयोग्यम्”एका०त०। अन्यत् पर्युषितशब्दे दृश्यम्।

**पुष्पक** न० पुष्पमिव पुष्पेण वा कायति कै—क स्वार्थे क वा। १पुष्पशब्दार्थे २रीतिपुष्पे ३कुवेरविमाने ४नेत्ररोगभेदे ५रत्नकङ्कणे ६रसाञ्जने ७लौहकांस्ये ८मृत्तिकाङ्गारवाहकशकटयाञ्च मेदि०। ९कासीसे हेमच०।

**पुष्पकरण्डक** न० अवन्तिस्थे शिवोद्यानभेदे “महाकालश्चोज्जयिनी विशालाऽवन्तिका तथा। तस्योद्यानं तु विज्ञेयं नाम्ना पुष्पकरण्डकम्” शब्दमा०। ततः अस्त्यर्थे इनि ङीप्। पुष्पकरण्डिका उज्जयिन्यां स्त्री हेमच०। ६त०। (साजि) २पुष्पचयनपात्रभेदे न०।

**पुष्पकाल** पु० पुष्पस्य कालः। १स्त्रीणामृतुसमये द्वादशवर्षादौ काले पुष्पप्रधानः कालः शा०त०२कुसुमप्रधाने ३वसन्तकाले।

**पुष्पकासीस** न० पुष्पमिव कासीसम्। कासीसभेदे राजनि०। “कासीसं धातुकासीसं पांशुकासीसमित्यपि। तदेव किञ्चित् पीतन्तु पुष्पकासीसमुच्यते” भावप्र० कासीसशब्दे दृश्यम्

**पुष्पकीट** पु० पुष्पप्रियः कीटः। १भ्रमरे त्रिका० ७त०। २कुसुमस्थितकृमिमात्रे च।

**पुष्पकेतन** पु० पुष्पं केतनं यस्य। कामदेवे हेमच०।

**पुष्पकेतु** न० पुष्पनिर्मितः केतुरिव। १कुसुमाञ्जने अमरः ६ब०। २कामदेवे च। [२कुसुमनाशके त्रि०।

**पुष्पघातक** पु० पुष्पं हन्ति हन—ण्वुल्। १वंशे शब्दमा०।

**पुष्पचाप** पु० पुष्पमयं चापमस्य। कामे पुष्पधन्वादयोऽप्यत्र।

**पुष्पचामर** पु० पुष्पं चामर इव यस्य। १मदनवृक्षे त्रिका०। २केतकवृक्षे शब्दमाला०।

**पुष्पज** न० पुष्पाज्जायते जन—ड ५त०। १पुष्परसे राजनि०। २पुष्पजातमात्रे त्रि०“अपारयन् किल पुष्पजं तेजः”सा०द०

**पुष्पद** पु० पुष्पं ददाति दा—क उप०स०। वृक्षे हेमच०।

**पुष्पदंष्ट्र** पु० पुष्पमिव दंष्ट्राऽस्य। नागभेदे हरिवं०२३८०।

**पुष्पदन्त** पु० पुष्पमिव दन्तो यस्य। १वायुकोणस्थे दिग्गजभेदे अमरः। २विद्याधरभेदे मेदि०। ३जिनभेदे हेमच०। ४नागभेदे धरणिः। ५वैष्णवानुचरभेदे भाग०८।२१।१०। ६पुरद्वाराधिपभेदे “शङ्खावर्णेन्द्रं मन्त्राट् पुष्पदन्तं तथैव च” हरिवं० ११६ अ०।

**पुष्पदन्तक** पु० महिम्न इत्यादिस्तवकर्त्तरि गन्धर्वभेदे।

**पुष्पदामन्** न० पुष्पनिर्मितं दाम। १पुष्पनिर्मितमाल्ये भूता याश्चान्तं मतनसररगैः कीर्त्तितं पुष्पदाम” वृ०र०टी०उक्ते • जनविंशत्यक्षरपादके २छन्दोभेदे च।

**पुष्पद्रव** पु० ६त०। कुसुमरसे मकरन्दे राजनि०।

**पुष्पध** पुंस्त्री “व्रात्यात् तु जायते विप्रात् पापात्मा भूर्जकण्टकः। आवन्त्यवाटधानौ च पुष्पधः शैख एव च” मनूक्ते व्रात्यविप्रजाते जातिभेदे स्त्रियां जातित्वात् ङीष्।

**पुष्पधनुस्** पु० पुष्पं धनुरस्य “वा संज्ञायाम्” पा० पक्षे संज्ञात्वे न अनङ्। कामदेवे माघः ८।४।

**पुष्पधन्वन्** पु० पुष्पं धनुरस्य संज्ञात्वात् वा अनङ्। कामदेवे अमरः। धन्वनृशब्देन समासेनैव प्रयोगोपपत्तौ अनङ्विधानम् असंज्ञायां धनुःशब्दप्रयोगनिवृत्त्यर्थम्।

**पुष्पधारण** पु०पुष्पं धारयति धारि—ल्यु। विष्णौ शा०७अ०।

**पुष्पनिक्ष** पुंस्त्री पुष्पं निक्षति निक्ष–चुम्बने अण् उप०स०। भ्रमरे पुंस्त्रियां जातित्वात् ङीष्।

**पुष्पनिर्यास** पु० ६त०। पुष्परसे मकरन्दे राजनि०। “पुष्पनिर्यासकः शीतः कषायः स्थौल्यकारकः। दाहभ्रमार्त्तिवमिनुत् मोहवक्त्रामयप्रणुत्। तृष्णार्त्तिकफपित्तास्रशिरारोचकनाशनः। तर्पणः सुरभिः सारो भिषग्भिः परिकीर्त्तितः” राजनि०।

**पुष्पनेत्र** न० पुष्पनिर्मितं नेत्रम्। पुष्पनिर्मिते वस्तिशलाकाऽवयवभेदे नेत्रशब्दे ४१४० पृ० दृश्यम्। “क्षारहृत्कषायन्तु पुष्पनेत्रेण योजितम्” सुश्रुतः।

**पुष्पन्धय** पुंस्त्री० पुष्पं धयति धे—खश् मुम्। १भ्रमरे राजनि० स्त्रियां जातित्वात् ङीष्। २कुसुमरसपायिनि त्रि० स्त्रियां धेटः टित्त्वात् ङीप्।

**पुष्पपत्र** न० ६त०। (फुलेर पापड़ि) नवदले हला०।

**पुष्पपत्त्रिन्** पु० पुष्पं तन्मयः पत्री बाणोऽस्य। कुसुमशरे कामे।

**पुष्पपथ** पु० ६त०। स्त्रीणामृतुरजोनिर्गमद्वारे योनौ त्रिका०।

**पुष्पपाण्डु** पु० मण्डलिसर्पभेदे सुश्रुतः अहिशब्दे दृश्यम्।

**पुष्पपुर** न० पाटलिपुत्त्रनगरे कुसुमपुरे (पाटना)।

**पुष्पप्रच(चा)य** पु० प्र+चि—“हस्तादाने चेरस्तेये”पा० घञ् “हस्तादान इत्यनेन प्रत्यासत्तिरादेयस्य गम्यते” सि०कौ० मशब्देन तादृशी प्रत्यासत्तिर्द्योत्यते। हस्तेन कुसुमानां चयने। चौर्ये तु अच्। चौर्येण कुसुमहरणे। हस्तादान इत्युक्तेः यष्ट्यादिना चयने तु अजेव।

**पुष्पप्रचायिका** स्त्री पर्यायेण पुष्पाणां चयनम् प्र+चि—पर्याये ण्वुच् तद्गत्वस्य स्त्रीत्वम् क्रीड़ात्वात् नित्यस०। आद्युदात्तता च। परिपाट्या कुसुमानां चयने।

**पुष्पफल** पु०पुष्पयुक्तं फलमस्य । १कपित्थे अमरः २कुष्माण्डे शब्दमाला ।

**पुष्पभूषित** त्रि० ३त० । १कुसुमेनालङ्कृते । २वणिग्नायके रूपकप्रकरणभेदे सा० द० प्रकरणोदाहरणम् ।

**पुष्पमास** पु० पुष्पप्रधानो मासः शाक०त० । चैत्रे मासि २वसन्तसमये राजनि० ।

**पुष्परक्त** पु० पुष्पं रक्तं यस्य । सूर्य्यमणिवृक्षे राजनि० ।

**पुष्परजस्** न० ६त० । कुसुमपरागे हेमच० ।

**पुष्परथ** पु० पुष्पनिर्मितो रथः । पुष्पनिर्मिते रथभेदे हेमच० ।

**पुष्परस** पु० ६त० । मकरन्दे कुसुमनिर्यासे अमरः ।

**पुष्परसाह्वय** न०पुष्पस्य रस आह्वयो यस्य । मधुनि राजनि० ।

**पुष्पराग** पु० पुष्पस्येव रागो वर्णो यस्य । १मणिभेदे (पोकराज) तस्य लक्षणादि युक्तिकल्पतरावुक्तं यथा "सुच्छायपीतगुरुगात्रसुरङ्गशुद्धं स्निग्धञ्च निर्मलमतीव सुवृत्तशीतम् । यः पुष्परागशकलं कलयेद्धस्य पुष्णाति कीर्त्तिमतिशौर्य्यसुखायुरर्थान्" । तस्य दोषलक्षणं यथा "कृष्णविन्दुङ्कितं रूक्षं धवलं मलिनं लघु । विच्छायं शर्कराकारं पुष्परागं सदोषकम्" । तस्य परीक्षालक्षणं यथा "घृष्टो विकाशयेत् पुष्परागमधिकमात्मीयम् । न खलु पुष्परागो जात्यतया परीक्षकैरुक्तः" राजनि० । तस्योत्पत्त्यादि यथा "सूत उवाच । पतिता या हिमाद्रौ हि त्वचस्तस्याः सुरद्विषः । प्रादुर्भवन्ति ताभ्यस्तु पुष्परागा महागुणाः । आपीतपाण्डुरुचिरः पाषाणः पुष्परागसंज्ञस्तु । कौरुण्टकनामा स्यात् स एव यदि लोहितापीतः । आलोहितस्तु पीतः स्वच्छः काषायकः स एवोक्तः । आनीलशुक्लवर्णः स्निग्धः सोमालकः स्वगुणैः । अत्यन्तलोहितो यः स एव खलु पद्मरागः स्यात् सुनीलः सन् । मूल्यं वैदूर्य्यमणेरिव गदितं ह्यस्य रत्नशास्त्रविदा । धारणफलञ्च तद्वत् किन्तु स्त्रीणां शुभप्रदो भवति" गारुडे ७५ अ० । प्रकारान्तरम् शणपुष्पसमः कान्त्या स्वच्छभावस्तु चिक्कणः । पुत्रदो धनदः पुण्यः पुष्परागो मणिर्मतः । दैत्यधातुसमुद्भूतः पुष्परागमणिर्द्विधा । पद्मरागाकरे कश्चित् कश्चित्तस्योपलाकरे । ईषत्पीतच्छविच्छाय स्वच्छं कान्त्या मनोहरम् । पुष्परागमिति प्राक्तं रङ्गसोमसशोभितम् । ब्रह्मादिजातिभेदेन तद्विज्ञेयं चतुर्विधम् । छाया चतुर्विधा तस्य सिता पीता सितासिता" । क्लीवत्वमपि । [राजनि० ।

**पुष्पराज** पु० पुष्पमिव राजते राज–अच् । पुष्परागमणौ ।

**पुष्परेणु** पु० ६त० । परागे कुसुमरजसि शब्दर० ।

**पुष्परोचन** पु० पुष्पं रोचनेव यस्य । नागकेशरे । त्रिका० ।

**पुष्पलाव** त्रि० पुष्पं लुनाति मालारचनार्थं लू–अण् उप०स० । मालाकारे त्रिका० । णिनि । पुष्पलाविन् तत्रार्थे जटा० ।

**पुष्पलिह्** पु० पुष्पं लेढि लिह–क्विप् ६त० । मधुकरे । क । पुष्पलिहोऽप्यत्र अमरः ।

**पुष्पवन्त(त)** पु० द्वि०व० । पुष्प+मत्वर्थे मतुप् मस्य वः । १रविशशिनोः । पुष्पो० अदन्तोऽप्ययं तयोरर्थयोः । अत्र "रविलचन्द्रत्वाभ्यामेकशक्तिमदेव नियतद्विवचनाकाङ्क्षम्" शब्द०प्र०द्वन्द्वप्रक० । विस्तरस्तु गदाधर शक्तिवादे दृश्यः । २कुसुमयुक्ते त्रि० । [कृतुमत्यां स्त्रियाम् अमरः ।

**पुष्पवती** स्त्री पुष्पं स्त्रीरजः अस्त्यस्य मतुप् मस्य वः ।

**पुष्पवर्ग** पु० ६त० । सुश्रुतोक्ते कुसुमविशेषसमुदाये तेषां विशेषगुणाश्च तत्रोक्ता यथा "कोविदारशणशाल्मलीपुष्पाणि मधुराणि मधुरविपाकानि रक्तपित्तहराणि च । वृषागस्त्ययोः पुष्पाणि तिक्तानि कटुविपाकानि क्षयकासापहानि । मधुशिग्रुकरीरकुसुमानि कटुविपाकानि वातहराणि सृष्टमूत्रपुरीषाणि च । "आगस्त्यं नातिशीतोष्णं नक्तान्धानां प्रशस्यते । रक्तवृक्षस्य निम्बस्य मुष्कककार्कयोस्तथा च । कफपित्तहरं पुष्पं कुष्ठघ्नं कुटजस्य च । सुतिक्तं मधुरं शीतं पद्मं पित्तकफापहम् । मधुरं पिच्छिलं स्निग्धं कुमुदं ह्लादि शीतलम् । तस्मादल्पान्तरगुणे विद्यात् कुवलयोत्पले । सिन्धुवारं विजानीयाद्धितं पित्तविनाशनम् । मालतीमल्लिके तिक्ते सौरभ्यात् पित्तनाशने । सुगन्धिविशदं हृद्यं बकुलं पाटलानि च । श्लेष्मपित्तविषघ्नन्तु नागं तद्वच्च कुङ्कुमम् । चम्पकं रक्तपित्तघ्नं शीतोष्णं कफनाशनम् । किंशुकं कफपित्तघ्नं तद्वदेव कुरण्टकम् । यथाद्रव्यं विजानीयात् पुष्पं द्रव्योचितं तथा । मधुशिग्रुकरीराणि कटूनि प्रहराणि च" । अन्येषां गुणा भावप्र० विशेषत उक्तास्तत्र दृश्याः ।

**पुष्पवाटी** स्त्री० ६त० । पुष्पोद्याने । स्वार्थे क । तत्रार्थे अमरः । "दक्षिणेन पुष्पवाटिकामालाप इव श्रूयते" शकुन्तला ।

**पुष्पवा(वा)ण** पु० पुष्पं वाणोऽस्य । १कन्दर्पे २कुशद्वीपस्थपर्वतभेदे भा०व० १२ अ० । ३दैत्यभेदे भा०शा०२२७अ० । ४नायकभेदे पुष्पवाणचरिते दृश्यम् ।

**पुष्पवाहन** पु० राजभेदे अग्निपु० ।

**पुष्पवाहिनी** स्त्री नदीभेदे हरिवं॰ २६६ अ॰।
**पुष्पशकटी** स्त्री दैववाण्याम् हारा॰। [ङ्यम्।
**पुष्पशकलिन्** पु॰ निर्विषसर्पभेदे सुश्रुतः। अहिशब्दे
**पुष्पशर** पु॰ पुष्पं शरोऽस्य। कुसुमेषौ कामदेवे।
**पुष्पशरासन** पु॰ पुष्पमयं शरासनं धनुरस्य। कामे [त्रि॰
**पुष्पशून्य** पु॰ ३त॰। १उडुम्बरे राजनि॰। २पुष्परहितमात्रे
**पुष्पसमय** पु॰ ६त॰। वसन्ते ऋतौ अमरः।
**पुष्पसार** पु॰ ६त॰। १कुसुमरसे राजनि॰। ७त॰। २तुलस्यां
अह्नै॰पु॰। [कविकारोऽस्य राजनि॰।
**पुष्पसौरभा** स्त्री पुष्पे सौरभमस्याः। कुसुमे सौरभान्विते
**पुष्पस्वेद** पु॰ ६त॰। कुसुमरसे मकरन्दे राजनि॰।
**पुष्पहासा** स्त्री पुष्पं हास इव यस्याः। १रजस्वलायां स्त्रियां
शब्दच॰। मुकुलात्मना स्थितानां पुष्पाणां हास इव
प्रपञ्चरूपेण प्रकाशोऽस्य। २विष्णौ पु॰। "पुष्पहासः
प्रजागरः" विष्णुस॰। ६त॰। ३कुसुमविकाशे पु॰।
**पुष्पहीन** पु॰ ३त॰ १कुसुमरहिते द्रुमे। २उडुम्बरवृक्षे स्त्री
३रजःशून्यायां स्त्रियां स्त्री हेम॰।
**पुष्पा** स्त्री चम्पापुर्यां (भागलपुर) त्रिका॰।
**पुष्पागम** पु॰पुष्पाणामागमोऽत्रत्र आ+गम आधारे घञ्।
वसन्ते पुष्पाकरादयोऽप्यत्र। [मालाकारे हेमच॰।
**पुष्पाजीव** पु॰ पुष्पमाजीवति आ+जीव-अच् उप॰स॰।
**पुष्पाञ्जन** न॰ ६त॰। कुसुमाञ्जने (कोमकाजल)। राजनि॰
**पुष्पानन** पु॰ पुष्पमिव विकसितमाननमस्यात्। मद्यभेदे
भा॰ व॰ १०अ॰।
**पुष्पाम्बुज** न॰ पुष्पस्याम्बुनो जायते जन-ड ५त॰।
मकरन्दे राजनि॰। [दयोऽप्यत्र।
**पुष्पायुध** पु॰ पुष्पमायुधमस्य। कुसुमायुधे कामदेवे पुष्पास्त्रा-
**पुष्पार्ण** पु॰ राजभेदे भाग॰ ४।१३।१३।
**पुष्पावचायिन्** पु॰ पुष्पमवचिनोति मालार्थम् अव+चि-
णिनि ६त॰। मालाकारे हेमच॰। [मादकत्वाच्च तथात्वम्।
**पुष्पासव** न॰ ६त॰। मधुनि राजनि॰ तस्य पुष्पोद्भवत्वात्
**पुष्पास्त्र** पु॰ पुष्पमस्त्रमस्य। कुसुमायुधे कामे हेमच॰।
**पुष्पाह्वा** स्त्री पुष्पमित्याह्वा यस्याः। शतपुष्पायाम् राजनि॰
**पुष्पिका** स्त्री पुष्प+स्वुन्। १दन्तमले हारा॰। २लिङ्गमले
हेम॰। ग्रन्थाध्यायसमाप्तौ तत्प्रतिपाद्यकथने ग्रन्थांशभेदे
यथा "इति महाभारते शतसाहस्र्यां संहितायामि-
त्यादि"। [क्त। २विकसिते च।
**पुष्पित** त्रि॰पुष्प+तार॰इतच्। १संजातकुसुमे। पुष्प-कर्तरि

**पुष्पिताग्रा** स्त्री "अयुजि नयुगरेफतो यकारो युजि च
नजौ जरगाश्च पुष्पिताग्रा" वृ॰र॰उक्ते अर्द्धसमवृत्तभेदे।
**पुष्पिन्** त्रि॰ पुष्प+अस्त्यर्थे इनि। १कुसुमयुक्ते वृक्षे स्त्रियां
ङीप्। सा च २रजस्वलायां स्त्रियां स्त्री।
**पुष्पेषु** पु॰ पुष्पमिषुर्यस्य। कुसुमबाणे कामे हेम॰।
**पुष्पोत्कटा** स्त्री राक्षसीभेदे सा च रावणकुम्भकर्णयोर्माता
"पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ। कुम्भ-
कर्णदशग्रीवौ" भा॰ व॰ २७४ अ॰। [अपुष्प्रीत्।
**पुष्प्य** पुष्प विकसने कल्पद्रु॰ पाठान्तरम् अक॰सेट्। पुष्प्यति
**पुष्य** पुंस्त्री कार्यं पुष्यति पुष-कर्त्तरि यत् नि॰। अश्विन्यादि
२७ नक्षत्रमध्ये १अष्टमे नक्षत्रे, स्त्रीत्वे टाप्।
तस्याधिपतिः जीवः। तद्योगताराादिकम् नक्षत्रशब्दे
दृश्यम्। २पौषमासे ३कलियुगे च पु॰ मेदि॰।
**पुष्यनेत्रा** स्त्री पुष्यः नक्षत्रं नेता प्रथमावधिशेषपर्यन्त
समापको यस्याः अथर्वणा॰। यस्यां रात्रौ प्रथमावधि-
शेषपर्यन्तं पुष्यनक्षत्रस्य दर्शनं तादृश्यां रात्रौ। [तत्रार्थे
**पुष्यरथ** पु॰ यात्रार्थे रथे अमरः। पुष्परथेति तत्र पाठान्तरं
**पुष्यलक** पुंस्त्री पुष-कि पुषिः पुषिस्तया अलति पर्य्याप्नोति
अल-अच् स्वार्थे क। गन्धप्रधाने मृगभेदे। "शौष्किः
पुष्यलकोऽद्भुतः" त्रिका॰। स्त्रियां जातित्वात् ङीष्।
२क्षपणके ३कीले च पु॰ मेदि॰।
**पुष्यस्नान** न॰ पुष्यनक्षत्रकाले स्नानम्। शास्त्रोक्तविधानेन
पुष्यनक्षत्रयुक्तकाले नृपस्याभिषेकभेदे तद्विधानं वृ॰सं॰४८
अ॰दृश्यम्। तत्कालश्च तत्रोक्तो यथा "शुभे नक्षत्रे
संप्राप्ते पुष्ययुक्ते निशाकरे" पुष्याभिषेकोऽप्यत्र।
**पुस** मर्दे व्यूहे हानौ च चुरा॰उभ॰सक॰सेट्। पोसयति
ते अपूपुसत् त। [पुस्तत् त।
**पुस्त** बन्धे अनादरे च चु॰उभ॰सक॰सेट्। पुस्तयति ते अपु-
**पुस्त** न॰ पुस्त-अच्। "मृदा वा दारुणा वापि वस्त्रेणाप्यथ
चर्मणा। लौहरत्नैः कृतं वापि पुस्तमित्यभिधीयते"
इत्युक्ते १शिल्पादिशिल्पकर्मणि। स्वार्थे कं। २लिप्या-
धारे ग्रन्थे पुंस्त्री॰ स्त्रीत्वे गौरा॰ ङीष्।
पुस्तकमानलेखनप्रकारादिकं योगिनीतन्त्रे उक्तं यथा
"मानं वक्ष्ये पुस्तकस्य शृणु देवि! समासतः। माने-
नापि फलं विन्द्यादमाने श्रीर्हता भवेत्। हस्तमात्रं
मुष्टिमात्रमावाहु द्वादशाङ्गुलम्। दशाङ्गुलं तथाष्टौ
च ततो हीनं न कारयेत्"। तस्य वेधो यथा "वेधद्वयं
मध्यदेशे वामभागे निरन्तरम्। मध्यभागे मध्ययानि!

हस्तादौ रूप(?)रन्ध्रकम्। यष्टाङ्गुलं परित्यज्य मध्ये वेधं तु कारयेत्। प्रादेशादौ भवेद्रन्ध्रं द्व्यङ्गुले वा समाचरेत्। पुस्तकस्य च आद्यन्ते सन्धिवेधं विवर्जयेत्। भार्य्याहानिर्भवेदाशु धनानां वा क्षयो भवेत्। दग्धरन्ध्रे भवेत् पीडा वर्तुलं शुभदं भवेत्। चतुष्कोणे विशुचस्तु त्रिकोणे मरणं भवेत्"। पुस्तकलेखनपत्रं यथा "भूर्जे वा तेजपत्रे वा ताले वा ताडिपत्रके। अगुरुणापि देवेशि! पुस्तकं कारयेत् प्रिये!। सम्भवे स्वर्णपत्रे च ताम्रपात्रे च शङ्करि!। अन्यवृक्षत्वचि देवि! तथा केतकीपत्रके। मार्त्तण्डपत्रे रौप्ये वा वटपत्रे वरानने!। अन्यपत्रे वसुदले लिखित्वा यः समभ्यसेत्। स दुर्गतिमवाप्नोति धनहानिर्भवेद्ध्रुवम्। पुस्तके पाठवेदलिखननिषेधो यथा "वेदस्य लिखनं कृत्वा यः पठेद् ब्रह्महा भवेत्। पुस्तकं वा गृहे स्थाप्य वज्रपातो भवेद्ध्रुवम्"। युगभेदे पुस्तकाधारस्य देवा यथा "सत्येऽक्षरे स्थितः शम्भुः शूलपाणिस्त्रिलोचनः। प्रजापतिर्द्वापरे च त्रेतायां सूर्य एव च। कृते युगे पिनाकी च कलौ लिप्यक्षरे हरिः"। तल्लेखकपूजाफलं यथा "आरम्भे च समाप्तौ च लेखकं प्रतिपूजयेत्। हरिच गन्धपुष्पाद्यैर्वस्त्रैश्च सुमनोहरैः। यावदक्षरसंख्यानं प्रतिपत्रं च सुन्दरि!। तावद्युगसहस्राणि ब्रह्मलोके वसेन्नरः"। लेखकस्य वेतनग्रहणे दोषो यथा "वेतनं यस्तु गृह्णीयात् लिखित्वा पुस्तकं च यः। यावदक्षरसंख्यानं तावन्नरकं वसेत्"। भूमौ पुस्तकलेखनस्थापननिषेधो यथा "न भूमौ विलिखेद्यन्त्रं मन्त्रं न पुस्तकं लिखेत्। न भूमौ पुस्तकं स्थाप्यं न हस्तमाहरेत्तु तत्। भूष्ठ्युग्रहणे चैव अक्षरं वाऽथ पुस्तकम्। भूमौ तिष्ठति देवेशि! जन्मजन्मसु मूर्खता। तदा भवति देवेशि! तस्मात्तत् परिवर्जयेत्"। तस्य दानफलं यथा "विप्राय पुस्तकं दत्त्वा धर्मशास्त्रस्य च द्विज। पुराणस्य च यो दद्यात् स देवत्वमवाप्नुयात्। शास्त्रदृष्ट्या जगत्सर्वं दृश्यतस्तु शुभाशुभम्। तस्मात् शास्त्रं प्रयत्नेन दद्याद्विप्राय कार्त्तिके। वेदविद्याश्च यो दद्यात् स्वर्गं कल्पत्रयं वसेत्। आत्मविद्याश्च यो दद्यात्तस्य संख्या न विद्यते। तीर्थानि तुल्यप्रदानानि तीर्थतुल्यफलानि च। शास्त्रं कामदुघा धेनुः पृथिवी चैव शाश्वती" इति पाद्मोत्तरखण्डे ११७ अ०। वेदशास्त्रादिदानफलं यथा "वेदार्थयज्ञशास्त्राणि धर्मशास्त्राणि चैव हि। मूल्येन लेखयित्वा यो दद्याद् याति स वैदिकम्। इतिहासपुराणानि लिखित्वा यः प्रयच्छति। ब्रह्मदानसमं पुण्यं प्राप्नोति द्विगुणीकृतम्" इति गारुडे २१५ अ०। पुराणादिपुस्तकदानविधिः हेमा०दा० चण्डीखण्डे ऽधिकं दृश्यम्।

**पुस्तकमुद्रा** स्त्री "वामसुष्टिं स्वाभिमुखीं कृत्वा पुस्तकमुद्रिका" तन्त्रसारोक्ते मुद्राभेदे। [कर्मकर्त्तरि इना०।

**पुस्तकर्म्मिन्** त्रि० पुस्तं ग्रन्थलेखनं कर्मास्य। लेख्यादि-

**पू** शोधे दि०आत्म०सक०सेट्। पूयते अपविष्ट। पुपुवे पूतः।

**पू** शोधे भ्वा०आ०सक०सेट्। पवते अपविष्ट। पुपुवे पूतः पवित्रः।

**पू** शोधे क्र्यादि०प्रा०उभ०सक०सेट्। पुनाति पुनीते अपावीत् अपविष्ट पुपाव पुपुवे। आर्षे क्वचित् श्नाप्रत्ययस्य लुक्ः। "अरण्यात् पुनते पापं धारणात् पूर्वसञ्चितम्"।

**पूग** पु० पू–गन् कित्। (सुपारि) १वृक्षे २समूहे अमरः ३छन्दसि ४भावे ५कण्टकिवृक्षे च मेदिनी०। ६पूगफले न०। समूहार्थात् तस्मात् पूरणे डट् तिथुक् च। पूगतिथ पूगपूरणे त्रि०स्त्रियां ङीप्। पूगे भवः दिगा० यत्। पूग्य तद्भवे त्रि०। समासे आद्युदात्ततास्य।

**पूगपात्र** न० पूगस्य दलचर्वित तद्गुडस्य आधारभूतं पात्रम्। (पिकदानी) पतद्ग्रहे हारा०।

**पूगपीठ** पु०न० ६त०। पतद्ग्रहे त्रिका०।

**पूगपुष्पिका** स्त्री पूगसहितं पुष्पमत्र कप् कापि अत इत्त्वम्। विवाहोत्सवे दीयमाने गुवाकयुक्तताम्बूलदानकर्मणि त्रिका०।

**पूगरोट** पु० पूगः पूगवृक्ष इव रोटयति द्योतते रुट–द्युतौ अच्। हिन्तालवृक्षे त्रिका०।

**पूज** पूजने चु०उभ०सक०सेट्। पूजयति ते अपूपुजत् त।

**पूजक** त्रि० पूज–ण्वुल्। पूजाकारके। अकान्तत्वेऽपि याजकादि० षष्ठीसमासः देवपूजकः इत्यादि।

**पूजन** न० पूज–भावे ल्युट्। १अर्चने। पूज्यतेऽसौ कर्मणि ल्युट् ङीप्। २यक्षिनिविष्टमस्त्रीभेदे भा०आ०१३८ अ० तदुपाख्यानं दृश्यम्।

**पूजनीय** त्रि० पूज+कर्मणि अनीयर्। १पूजार्हे। २पूजन्यां पतत्रयोषिद्भेदे स्त्री हरिवं० २० अ० दृश्यम्।

**पूजा** स्त्री पूज–भावे अ। अर्चने। ल्युट्। पूजनमप्यत्र न०। उपचारभेदे तद्भेदा उक्ताः

देवीपूजायां सुमभेदनिरूपणं यथा

"दिग्विभागे तु कौवेरी दिक् शिवाप्रीतिकारिणी। तस्मात्तन्मुखमासीनः पूजयेच्चण्डिकां सदा" पूजास्थानानि यथा "लिङ्गस्थां पूजयेद्देवीं पुस्तकस्थां तथैव च। स्थण्डिलस्थां महामायां पादुकाप्रतिमासु च। चित्रे च त्रिशिखे खड्गे जलस्थां वापि पूजयेत्। पञ्चाशदङ्गुलं खड्गं त्रिशिखञ्च त्रिशूलकम्। शिलायां पर्वतस्याग्रे गङ्गायामपि तत्समम्। आर्य्यावर्त्ते मध्यदेशे तथा पर्वतगह्वरे। देवीं संपूजयेन्नित्यं भक्तिश्रद्धासमन्वितः। वराह्याश्च सदा पूजा सम्पूर्णफलदायिनी। ततस्तु द्विगुणा प्रोक्ता पुरुषोत्तमसन्निधौ। ततोऽपि द्विगुणा प्रोक्ता द्वारवत्यां विशेषतः। सर्वक्षेत्रेषु तीर्थेषु पूजा द्वारवतीसमा। विन्ध्ये शतगुणा प्रोक्ता गङ्गायामपि तत्समा। आर्य्यावर्त्ते मध्यदेशे ब्रह्मावर्त्ते तथैव च। विन्ध्यवत्फलदा पूजा प्रयागे पुष्करे तथा। ततश्चतुर्गुणं प्रोक्तं करतोयानदीजले। तस्माच्चतुर्गुणफला नन्दिकुण्डे च भैरव!। ततश्चतुर्गुणा प्रोक्ता जल्पीशेश्वरसन्निधौ। तत्र सिद्धेश्वरीयोनौ ततोऽपि द्विगुणा स्मृता। ततश्चतुर्गुणा प्रोक्ता लौहित्यनदपाथसि। तत्समा कामरूपे तु सर्वत्रैव जले स्थले। सर्वश्रेष्ठो यथा विष्णुर्लक्ष्मीः सर्वोत्तमा यथा। देवीपूजा तथा शस्ता कामरूपे सुरालये। देवीक्षेत्रं कामरूपं विद्यतेऽन्यन्न तत्समम्। अन्यत्र विरला देवी कामरूपे गृहे गृहे। ततः शतगुणं प्रोक्तं नीलकूटस्य मस्तके। ततोऽपि द्विगुणं प्रोक्तं हेरके शिवलिङ्गके। ततोऽपि द्विगुणा प्रोक्ता शैलपुत्र्यादियोनिषु। ततः शतगुणा प्रोक्ता कामाख्या योनिमण्डले" कालिकापु० ५४।५७ अ०। पूजासनानि तत्फलानि च यथा "उपविश्यासने रम्ये कृष्णाजिनकुशोत्तरे। राङ्कवे कम्बले वापि काष्ठादौ व्याघ्रचर्मणि। न कुर्य्यादर्च्चनं विष्णोः शिवे! काष्ठासनादिषु। काष्ठासने वृथा पूजा पाषाणे रोगसम्भव। भूम्यासने गतिर्नास्ति वस्त्रासने दरिद्रता। कुशासने ज्ञानवृद्धिः कम्बले सिद्धिरुत्तमा। कृष्णाजिने धनी पुत्री मोक्षः स्याद्व्याघ्रचर्मणि। मन्त्रयोगं प्रकुर्वीत भोगार्थं सुखमासने" इति पाद्मोत्तरखण्डे ७४ अ०। पूजाधिकारिताप्रयोजकदेवषट्कपूजाऽऽदौ कार्य्या "गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम्। संपूज्य देवषट्कञ्च सोऽधिकारी च पूजने। गणेशं विघ्ननाशाय निष्पापाय दिवाकरम्। वह्निं शुद्धाय विष्णुञ्च मुक्तये पूजयेन्नरः। शिवं ज्ञानाय ज्ञानेशं शिवाञ्च बुद्धिवृद्धये। संपूज्य तान् लभेत् प्राज्ञो विपरीतमतोऽन्यथा" इति ब्रह्मवै० प्रकृतिखण्डे ८ अ०। सामान्यतस्तन्त्रोक्तपूजाप्रकारस्तु "आदावृष्यादिकन्यासः करशुद्धिस्ततःपरम्। अङ्गुलिव्यापकन्यासौ हृदादिन्यास एव च। ध्यानं पूजा जपश्चेति सर्वतन्त्रेष्वयं विधिः" तन्त्रसारः।

**पूजाधार** पु० ६त० देवतानां पूजनाधारे जलादौ यथोक्तं तन्त्रसारे नारदीये "आपोऽग्निर्हृदयं चक्रं विष्णोः क्षेत्रसमुद्भवम्। यन्त्रञ्च प्रतिमास्थानं अर्चने सर्वदा हरेः" गौतमीये "शालग्रामे मणौ यन्त्रे प्रतिमामण्डलेषु वा। नित्यं पूजा हरेः कार्य्या न तु केवलभूतले। शालग्रामशिलास्पर्शात् कोटिजन्माघनाशनम्। किं पुनश्चार्चनं तत्र हरिसान्निध्यकारणम्। बहुभिर्जन्मभिः पुण्यैर्यदि कृष्णशिलां लभेत्। गोष्पदेनैव चिह्नेन तेन जन्म समाप्यते"। एतेन विष्णुपूजायां शिलाया अतिप्राधान्यम् मण्डलादीनान्तु सर्वसाधारणत्वात्" योगिनी तन्त्रे "लिङ्गस्थां पूजयेद्देवीं पुस्तकस्थां तथैव च। मण्डलस्थां महामायां यन्त्रस्थां प्रतिमासु च। जलस्थां वा शिलास्थां वा पूजयेत् परमेश्वरीम्। कौलावलीये "यत्रापराजितापुष्पं जवापुष्पञ्च विद्यते। करवीरे शुक्लरक्तं द्रोणं वा यत्र तिष्ठति। तत्र देवी वसेन्नित्यं यद्यन्त्रे चण्डिकार्चनम्"। एतत् सर्वं यन्त्राभावे तथा च "यन्त्रं मन्त्रमयं प्रोक्तं मन्त्रात्मा देवतैव हि। देहात्मनोर्यथाऽभेदो यन्त्रदेवतयोस्तथा। तथा। आदौ लिखेद्यन्त्रराजं देवतायाश्च विग्रहम्। कामक्रोधादिदोषोत्थसर्वदुःखनियन्त्रणात्। यन्त्रमित्याहुरेतस्मिन् देवः प्रीणाति पूजितः। विना यन्त्रेण पूजायां देवता न प्रसीदति। दुःखनिर्यन्त्रणात् यन्त्रमिताहुस्तन्त्रवेदिनः"।

[२मान्ये च शब्दर०।

**पूजार्ह** त्रि० पूजामर्हति अर्ह—अण् उप०स०। १पूजायोग्ये

**पूजित** त्रि० पूज—कर्मणि क्त। यस्य पूजा कृता तस्मिन् अर्चिते अमरः। [२देवे उणा०।

**पूजिल** पु० पूज—कर्मणि इलच् किच्च। १पूज्ये त्रि०।

**पूज्य** पु० पूज—यत्। १श्वशुरे। २पूजनीयमात्रे त्रि०। "य एव विद्वांस्तपसा च वृद्धः स एव पूज्यो भवति द्विजानाम्" मत्स्यपु० ९अ०।

**पूण** राशीकरणे चु०उभ०सक०सेट्। पूणयति ते अपूपुणत् त

**पूत** न० पू—क्त। अपनीततुषे (आमड़ारहित) १वहुलीकृते

धान्ये अमरः। २व्रतादिना शुद्धे त्रि॰जटाध॰ ३सत्ये। ४यज्ञे ५श्वेतकुशे ६विकङ्कतवृक्षे च पु॰। ७दूर्वायां स्त्री टाप् राजनि॰ ८पवित्रे त्रि॰।

**पूतक्रतु** पु॰ पूतः शुद्धः क्रतुरस्य। इन्द्रे जटा॰। तस्य पत्नी ङीष् ऐङ्। पूतक्रतायी तत्पत्न्यां शच्याम् स्त्री।

**पूतगन्ध** पु॰ पूतः पवित्रो गन्धो यस्य। वर्वरे (वावुइतुलसी) राजनि॰।

**पूततृण** न॰ नित्यक॰। श्वेतकुशे राजनि॰।

**पूतद्रु** पु॰ नित्यक॰। पलाशवृक्षे राजनि॰।

**पूतधान्य** न॰ नित्यक॰। तिले राजनि॰।

**पूतना** स्त्री पूतयति पूत+णिच्–ल्यु। १हरीतकीभेदे सा च सिन्धुदेशजाद्बल्पक इइतो च लेपने प्रशस्ता राजनि॰। २गन्धमांस्यां राजनि॰। ३कंसस्य धात्रीभेदे सा च शकुनी रूपं कृत्वा कृष्णाय विषाक्तं स्तनं ददौ। कृष्णेन च तस्याः प्राणेन सह स्तनं पपाविति कथा हरिवं॰ ६१अ॰। भाग॰ १०।६। कंसेन प्रहिता सा राक्षसीरूपा बालघातिनी सौम्यरूपं कृत्वा कृष्णाय विषाक्तं स्तनं पातुं ददौ कृष्णेन च तस्याः स्तनपानमिषेण प्राणाकर्षणेन सा निहतेति स्थितम्। ४बालग्रहभेदे सुश्रुतः तल्लक्षणादिकं ग्रहशब्दे २७६४पृ॰ उक्तम्। ५बालानां क्षुद्ररोगभेदे बहिपूतनशब्दे ५८४ पृ॰ तल्लक्षणादि। ६बालमातृकाभेदे "तृतीये दिवसे मासे वर्षे वा गृह्णाति पूतना नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रमुद्वेजयति स्तन्यं न गृह्णाति दृष्टिं बध्नाति क्रन्दति ऊर्द्ध्वं निरीक्षते" चक्रपाणिदत्तः।

**पूतनारि** पु॰ ६त॰। वासुदेवे श्रीकृष्णे शब्दर॰ पूतनाराद्यादयोऽप्यत्र। पूतनाशब्दे दृश्यम्।

**पूतफल** पु॰ पूतानि फलान्यस्य। पनसे (कांटाल)। राजनि॰

**पूतभृत्** पु॰ पूतं शुद्धं सोमरसं बिभर्त्ति भृ–क्विप् ६त॰। सोमरसाधारे पात्रभेदे यजु॰ १८।२१ वेददी॰।

**पूतयव** अव्य॰ पूता निस्तुषीकृता यवा यत्र तिष्ठद्गु॰अव्ययी॰। पूतयवाधारे खलादौ।

**पूतात्मन्** त्रि॰ पूत आत्मा यस्य। १शुद्धान्तःकरणे २शुद्धदेहे च। ३विष्णौ पु॰ "पूतात्मा परमात्मा च" विष्णुस॰।

**पूति** न॰ पू–कर्त्तरि क्तिच्। १रोहिषतृणे। भावे क्तिन्। २पवित्रतायाम् राजनि॰। पूय विशरणे दुर्गन्धे च क्तिच्। ३दुर्गन्धे ४दुर्गन्धवति त्रि॰ रायमुकुटः।

**पूतिक** न॰ पूत्या दुर्गन्धेन कायति कै–क। १विष्ठायाम् २पूतिकरञ्जे पु॰। ३शाकभेदे स्त्री (पुँइ) "पूतिका ब्रह्मघातिका" इति स्मृतिः। ४मार्जाल्यां राजनि॰। पूतिका च सोमांशुतो जातेति सोमस्याभावे प्रतिनिधित्वेन ग्राह्या तदेतत् ताण्ड्यब्रा॰ ८।४।५।१ उक्तं यथा "तस्य ये ह्रियमाणस्यांशवः परापतंस्ते पूतीका अभवन्" ताण्ड्यो दीर्घः। "ह्रियमाणस्य सोमस्य पतिताः अंशवः पूतिका अभवन्" तस्मात् सोमाभावे पूतीकादीनां प्रतिनिधित्वेन सोमसंबन्धितामभिधातुं प्रासङ्गिकानामेषाम् उपन्यासः" भा॰।

**पूतिकरज(ञ्ज)** पु॰पूतियुक्तः करजः(ञ्जः)। (नाटाकरमजा) करञ्जभेदे अमरः। करञ्जशब्दे १६८८ पृ॰ दृश्यम्।

**पूतिकर्णक** पु॰ पूतिः कर्णो यत्र कप्। कर्णरोगभेदे "कर्णविद्रधिपाकाद्वा जायते चाम्बुपूरणात्। पूयं स्रवति वा पूति स ज्ञेयः पूतिकर्णकः" इति माधवकरः।

**पूतिकामुख** पु॰ पूतिका तत्फलमिव मुखमस्य। शम्बूके [शब्दरत्ना॰।

**पूतिकाष्ठ** न॰ पूतेः पावनार्थं काष्ठम् चतुर्थ्यर्थे अश्वघासवत् ६त॰। देवदारुणि शब्दच॰। संज्ञायां कन्। पूतिकाष्ठक सरलवृक्षे पु॰ अमरः।

**पूतिकीट** पु॰ कर्म॰। (गँधोपोका) कीटभेदे सुश्रुतः।

**पूतिकेश्वरतीर्थ** तीर्थभेदे शिवपु॰।

**पूतिगन्ध** पु॰ पूतिर्दुष्टो गन्धो यस्य। १गन्धके अमरः। २इङ्गुदीवृक्षे राजनि॰। ३रङ्गे न॰।कर्म॰। ४दुर्गन्धे पु॰ वा द्वतसमा॰। पूतिगन्धि दुष्टगन्धयुक्ते त्रि॰। स्वार्थे क। पूतिगन्धि कदुष्टगन्धान्विते। पूतिग्रामे वाकुच्यां स्त्री राजनि॰

**पूतिघास** पु॰ "मद्गुमूषिकछुच्छुन्दरीकाऽवकुशपूतिघासवानरप्रभृतयः मृगाः" सुश्रुतोक्ते जन्तुभेदे।

**पूतितैल** स्त्री पूति दुर्गन्धं तैलं यस्याः। ज्योतिष्मत्याम् (लताकटकी) रत्नमा॰।

**पूतिनस्य** न॰ नसि भवः यत् कर्म॰। "दोषैर्विदग्धैर्गलतालुमूले संवासितो यस्य समीरणस्तु। निरेति पूतिर्मुखनासिकाभ्यां तं पूतिनस्यं प्रवदन्ति रोगम्" सुश्रुतोक्ते नासारोगभेदे।

**पूतिनासिक** त्रि॰ पूतिर्नासिकाऽस्य। दुर्गन्धनासायुक्ते "पिशुनः पूतिनासिकः" याज्ञ॰ पिशुनताकर्मविपाकतया पौतनासिक्यमुक्तम्।

**पूतिपत्र** पु॰ पूतीनि पत्राण्यस्य। श्योनाकभेदे राजनि॰।

**पूतिपुष्पिका** स्त्री पूतीनि पुष्पाण्यस्याः कप् कापि अत इत्त्वम्। मातुलुङ्गायाम् रत्नमा॰।

**पूतिफला(ली)** स्त्री पूतीनि फलान्यस्याः वा ङीप्। सोमराज्याम् अमरः। ङीबन्तः जटाध॰।

**पूतिमयूरिका** स्त्री पूतिर्मयूरीव ततः स्वार्थे क। अज-मोदायाम् राजनि०।

**पूतिमाष** पु० गोत्रप्रवरर्षिभेदे "संकृतिपूतिमाषतण्डिशम्बुशैव गवानामाङ्गिरसगौरिवीतसाङ्कृत्येति" आश्व०श्रौ०१२।१२।५ ततः गर्गा०अपत्ये यञ्। पौतिमाष्य तदपत्ये पुंस्त्री०।

**पूतिमृत्तिक** न० ७ब०। नरकभेदे याज्ञ० ३।२।२ स्लो०।

**पूतिमेद** पु० पूतिर्मेदोऽस्य। अरिमेदे विट्खदिरे। राजनि०

**पूतिवक्त्र** पु० पूति वक्त्रमस्य। दुर्गन्धमुखयुक्ते "पूतिवक्त्रस्तु सूचकः" याज्ञ०३।२११ स्लो० तच्चिदानकर्मभेद उक्तः।

**पूतिवात** पु० पूत्वं पविमनाये वातोऽस्य। १विल्ववृक्षे रत्नमा० कर्मेह। २दुष्टगन्धयुक्तवायौ पु०।

**पूतिवृक्ष** पु० कर्म०। श्योनाकवृक्षे रत्नमा०।

**पूतिशारिजा** स्त्री पूतिः शारीव जायते जन-ड। खट्टाशे (खटाश) वनजन्तुभेदे त्रिका०।

**पूतीक** पु० पूतिक+पृषो०। पूतिकरञ्जे अमरः।

**पूतीकरञ्ज** पु० पूतिकरञ्ज+पृषो०। करञ्जभेदे रत्नमाला।

**पूतीका** स्त्री पूतिका+पृषो०। (पुंइ) ख्याते लताभेदे पूतिक-शब्दे तात्पर्य०आ० भक्ते दृश्यम्।

**पूत्यण्ड** पु० पूति दुर्गन्धमण्डमस्य। (गंधोपोका) १गन्धकीटे २कस्तूरीनाभियोनिमृगभेदे च पुंस्त्री०मेदि०।भा०शा०२२४अ०

**पूथिका** स्त्री पूतिका+पृषो०। पूतिकायां शाकभेदे सुश्रुतः। पुच्छशब्दे २६५६ पृ० दृश्यम्।

**पून** त्रि० पू-क्त "पूञो विनाशे" पा० क्तस्य नः। विनष्टे।

**पूप** पु० पू-पक्। १पिष्टके अमरः। पूपाय हितम् अपूपा० छ यत् वा। पूपीय पूप्य तदर्थे तण्डुलादौ त्रि०।

**पूपला** स्त्री पूपं तदाकारं लाति ला-क। पोलिकायां हेमच० स्वार्थे क। पूपलिका तत्रार्थे हारा०। [कायां त्रिका०।

**पूपाली** स्त्री पूपाय अलति अल-अच् गौरा०ङीष्। पोलि-

**पूपाष्टका** स्त्री अष्ट परिमाणं यस्याः कन् अष्टका अष्टमी उपचारात् तत्कर्त्तव्यं श्राद्धम् पूपद्रव्यसाधनाष्टका कर्म०। आग्रहायण्याः परतः कृष्णाष्टमीविहिते श्राद्धे। "आद्याः पूपैः सदा कार्य्या मांसैरन्या भवेत्तथा। शाकैः कार्य्या तृतीया स्यादेष द्रव्यगतो विधिः" ति०त०।

**पूपिका** स्त्री पूपस्तदाकारोऽस्त्यस्याः ठन्। पोलिकायां हेम०

**पूय** दुर्गन्धे अक० भेदने विशरणे च सक०दिवा०आत्म०सेट्। पूयते अपूयिष्ट। अपूयिढ्ढ्वम् (ध्वम्) पुपूये।

**पूय** न० पूय-अच्। व्रणादिनिःसृते रक्तविकारभेदे (पूँज)। हेमच०। भावे ल्युट्। पूयन तत्रार्थे न० शब्दच०।

**पूयमानयव** अव्य० पूयमाना निस्तुषीक्रियमाणा यवा यत्र। तिष्ठद्गु० अव्ययी०। परिक्रियमाणयवाधारे खलादौ।

**पूयरक्त** पु० पूययुक्तं रक्तमत्र। "दोषैर्विदग्धैरथ वापि जन्तोर्ललाटदेशेऽभिहतस्य तैस्तु। नासा स्रवेत् पूय-मसृग्विमिश्रं तं पूयरक्तं प्रवदन्ति रोगम्" सुश्रुतोक्ते नासारोगभेदे पूयशोणितादयोऽप्यत्र।

**पूयवर्द्धन** पु० पूयं वर्द्धयति वृध-णिच्-ल्यु। सुश्रुतोक्ते नवधान्यादौ द्रव्यवर्गभेदे।

"नवधान्यमाषतिलकलायकुलत्थनिष्पावहरितकशाकाम्ल-लवणकटुकगुडपिष्टविकृतिवल्लूरशुष्कशाकाजाविकानूपौद-कमांसवसाशीतोदकक्षरपायसदधिदुग्धतक्रप्रभृतीन् परि-हरेत्। तस्मान्नोनवधान्यादिर्योऽयं वर्ग उदाहृतः। दोषसञ्जननो ह्येष विज्ञेयः पूयवर्द्धनः"। [द्यो ऽप्यत्र।

**पूयारि** पु० ६त०। निम्बवृक्षे राजनि०। पूयनाशका-

**पूयालस** पु० "पक्वः शोफः सन्धिजः संस्रवेद्यः सान्द्रं पूयं पूति पूयालसः सः" सुश्रुतोक्ते सन्धिगतरोगभेदे।

**पूयोद** न०पूयमेवोदकमत्र उदादेशः। नरकभेदे भाग०५।२।७।

**पूर** पूर्त्तौ प्रीणने च दिवा०आत्म०सक०सेट्। पूर्य्यते अपूरि-अपूरिष्ट। पुपूरे ईदित्। पूर्णः। [पूरितः।

**पूर** पूर्त्तौ प्रीणने चु० उभ०सक०सेट्। पूरयति अपूपुरत् त।

**पूर** पु० पूर-क। १जलसमूहे २खाद्यभेदे ३व्रणशुद्धौ च मेदि०। ४दाहागुरुणि न० राजनि०।

**पूरक** त्रि०पूरयति पूरि-ण्वुल्। १पूरणकर्त्तरि २गुणके अङ्के च। ३बीजपूरे राजनि०। ४बहिःस्थितस्य प्राणस्य वायोः नासयाकर्षणद्वारा देहान्तःप्रवेशनरूपव्यापारभेदे। प्राणायाम-शब्दे दृश्यम्। स्वाशौचकालमध्ये देये प्रेतस्यातिवाहिक-देहनाशनेन प्रेतदेहपूरके ५पिण्डे तत्कर्त्तव्यतादिशु०त०यथा "अनेदं बीजं पूर्वक्रियाया आतिवाहिकदेहनाशोत्तर देहान्तरजननं, मध्यक्रियाया अपि प्रेतत्वपरिहारो-त्तर देहान्तरजननं तत्रैकयैव तत्सिद्धौ पुनस्तत् करणं वचनाभावेऽनर्थकम्। तथा च विष्णुधर्मोत्तरे "तत्क्षणादेव गृह्णाति शरीरमातिवाहिकम्। ऊर्द्ध्वं व्रजन्ति भूतानि त्रीणि तस्मात्तस्य विग्रहात्"। त्रीणि भूतानि तेजोवाय्वाकाशानि पृथिवीजले तु अधो गच्छतः। तत्क्षणात् मृत्युक्षणात्। तथा "आतिवाहिक संज्ञोऽसौ देहो भवति भार्गव!। केवलं तन्मनुष्याणां नान्येषां प्राणिनां क्वचित्"। तथा प्रेतपिण्डैस्तथा दत्तै-

र्देहमाप्नोति भार्गव ! । भोगदेहमिति प्रोक्तं क्रमादेव न संशयः । प्रेतपिण्डा न दीयन्ते यस्य तस्य विमोचनम् । श्मशानिकेभ्यो देवेभ्य आकल्पं नैव विद्यते । तत्रास्य यातना घोराः शतवातातपोद्भवाः । ततः सपिण्डीकरणे बान्धवैः स कृते नरः । पूर्णे संवत्सरे देहमतोऽन्यं प्रतिपद्यते । ततः स नरके याति स्वर्गे वा स्वेन कर्मणा"। तथा च वायुपुराणम् "पूरकेण तु पिण्डेन देहो निष्पाद्यते यतः । कृतस्य करणायोगात् पुनर्नावर्त्तयेत् क्रियाम्" । अत एवातिवाहिकदेहपरित्यागाय तत्कालीनकर्माऽसमर्थपुत्रसत्त्वेऽप्यन्येन दाहादि क्रियते "पितृमातृसपिण्डैस्तु समानसलिलैर्नरैः । संघात्मगतैर्वापि राज्ञा वा धनहारिणा । पूर्वाः क्रियास्तु कर्त्तव्याः पुत्राद्यैरेव चोत्तराः" शुद्धित० ।

तेन दाहादिपूरकपिण्डदानान्ताद्यक्रिया तया आतिवाहिकदेहनिवृत्तिपूर्वकं प्रेतदेहप्राप्तिः आद्यश्राद्धादि सपिण्डान्ता मध्यक्रिया तया प्रेतदेहमुक्तिपूर्वकं भोगदेहप्राप्तिः तदुत्तरवार्षिकादिश्राद्धादि उत्तरक्रिया तया भोगमात्रमिति भेदः । पूरकपिण्डदानकालादिस्तु शुद्धित०निर्णीतो यथा

"प्रथमेऽहनि यो दद्यात् प्रेतायान्नं समाहितः । स एव चान्येषु स एव प्रदद्यात्यपि । मृण्मयं भाण्डमादाय नवं स्नातः सुसंयतः । अगुडं सर्वदोषघ्नं स्थपीता तोयमानयेत् । ततश्चोत्तरपूर्वस्मात्प्रान्तम् प्रज्वालयेद्विधि । तण्डुलप्रसृतिं तत्र प्रक्षाल्याद्भिः पचेत् स्वयम् । सर्पिर्विलेखिलैर्मिश्रां केशकीटविवर्जिताम् । द्वारोपान्ते ततः शिला शुद्धां वा गौरसन्निकाम् । तत्पृष्ठे प्रस्तरेद्दर्भान् याम्याग्रान् देवसम्भवान् । ततोऽवनेजनं दद्यात् संस्मरन् गोत्रनामनी । तिलसर्पिर्मधुक्षीरैः सिक्तं तप्तमेव हि । दद्यात् प्रेताय पिण्डन्तु दक्षिणाभिमुखस्थितः । फलमूलगुडक्षीरतिलमिश्रन्तु कुत्रचित् । अर्घ्यैः पुष्पैस्तथा धूपैर्दीपैस्तोयैः सुशीतलैः । ऊर्णातन्तुमयैः शुद्धैर्वासोभिः पिण्डमर्चयेत् । प्रयाति यावदाकाशं पिण्डाद्वाष्पमयी शिखा । तावत्तत्सम्मुखस्तिष्ठेत् सर्वं तोये ततः क्षिपेत् । दिवसे दिवसे देयः पिण्ड एवं क्रमेण तु । सद्यःशौचेऽपि दातव्याः सर्वेऽपि युगपत्तथा । त्र्यहाशौचे प्रदातव्याः प्रथमे त्वेक एव हि । द्वितीयेऽहनि चत्वारस्तृतीये पञ्च चैव हि" । दैवात् अग्निदातॄ पूरकपिण्डस्यादाने आद्यश्राद्धाधिकारिणा अग्निमद्दिने आद्यश्राद्धदिने वा तत् करणीयमिति व्यवस्था शुद्धित०स्थिता ।

**पूरण** न० पूर—भावे ल्युट् । १पूरणे अङ्कशास्त्रप्रसिद्धे २वृष्टौ ३कुट्टचट्टे शब्दमा० । करणे ल्युट् । ४वापतन्तुषु हेम० ५सेतौ ६समुद्रे च पु० ७समुद्रापूरणे मेदिनिः । यथा द्वयोः पूरणः द्वितीयः । कर्त्तरि ल्यु । ८पूरयितरि त्रि० ९विष्णुतैले धरणिः । करणे ल्युट् ङीप् यथा संख्या पूर्यते १० तस्यां संख्यायां स्त्री तयाणां पूरणी तृतीयेत्यादि । कर्मणि ल्युट् ।११शाल्मलिवृक्षे पु०अमरः

**पूरयितृ** त्रि० पूर—तृच् । १पूरणकर्त्तरि त्रि० स्त्रियां ङीप् । २विष्णौ पु० । "पूर्णः पूरयिता पुण्यः" विष्णुस० ।

**पूराम्ल** पु० पूरमम्लं यत्र । वृक्षाम्ले राजनि० ।

**पूरिका** स्त्री पिष्टकभेदे लताशब्दे २१८२पृ० दृश्यम् ।

**पूरित** त्रि० पूर—क्त । १पूर्णे २गुणिते च अमरः ।

**पूरु** पु० स०व० । पृ—बा० कु । १मनुष्ये निघण्टुः अ०द्दा२०।१ वैराजस्य मनोः नड्वलायां जाते २पुत्रभेदे हरिवं०२ अ०। ३अङ्गपुत्रभेदे भाग०८।३५।२ । ४राक्षसभेदे यजु०१२।३४ वेददी० । ५ययातिपुत्रभेदे भा० आ० ७५ अ० । तस्यापत्यं अण् । पौरव तदपत्ये पुंस्त्री० स्त्रियां ङीप् ।

**पूरुष** पु० पूर—उषन् । १पुरुषे २नरे च अमरः तस्य शुभाशुभलक्षणं पुरुषशब्दे उक्तं किञ्चिदधिकमत्रोच्यते "कटिर्विशाला बहुपुत्रभागी विशालहस्तो नरपुङ्गवः स्यात् । उरो विशालं धनधान्यभागी शिरोविशालं नरपूजितः स्यात् । न श्रीस्त्यजति रक्ताक्षं नार्थः कनकपिङ्गलम् । दीर्घबाहुं न चैश्वर्यं न मांसोपचितांसकम् । कदाचिद्दन्तुरो मूर्खः कदाचिल्लोमशः सुखी । कदाचित् तुन्दिलो दुःखी कदाचिच्चञ्चला सती । नेत्रस्नेहेन सौभाग्यं दन्तस्नेहेन भोजनम् । त्वक्स्नेहेन चैश्वर्यं पादस्नेहेन वाहनम् । अकर्मकठिनौ हस्तौ पादावध्वनि कोमलौ । यस्य पाणितले रक्ते तस्य राज्यं विनिर्दिशेत् । दीर्घलिङ्गेन दारिद्र्यं स्थूललिङ्गेन निर्धनः । कृशलिङ्गेन सौभाग्यं सुखलिङ्गेन भूपतिः । रेखाभिर्बहुभिर्दुःखं स्वल्पाभिर्धनहीनता । रक्ताभिः श्रियमाप्नोति कृष्णाभिर्लोकपूजितः । अङ्गुष्ठोदरमध्ये तु यवो यस्य विराजितः । उत्तमं भोजनं तस्य शतं जीवति मानवः । अङ्कुशं कुण्डलं चक्रं यस्य पाणितले भवेत् । ऐश्वर्यञ्च विनिर्दिष्टमपीत्यायुर्भवेद्ध्रुवम् । धनुर्यस्य भवेत् पाणौ पङ्कजं वाथ तोरणम् ।

तस्यैश्वर्य्यञ्च राज्यञ्च शतोत्यायुर्भवेद् ध्रुवम्। कनिष्ठा तर्जनीं यावत् रेखा भवति चायता। विंशत्यब्दाधिकशतं नरा जीवन्त्यनामयाः। कनिष्ठामध्यमां यावत् रेखा भवति चायता। शताब्दं वाथ वाशीतिर्नरो जीवेन्न संशयः। कनिष्ठानामिकायाश्चेत् रेखा भवति चायता। विंशत्यब्दाधिकं शतं नरा जीवन्त्यनामयाः। कनिष्ठानामिकायाश्चेत् रेखा भवति चायता। षष्टिमब्दाशदब्दं वा नरा जीवन्त्यसंशयम्। रेखया भिद्यते रेखा स्वल्पायुश्च भवेन्नरः। कनिष्ठायां स्थिता रेखा संख्या यावतिका स्मृता। तावती पुरुषाणान्तु नारी भवति निश्चितम्। करमध्यगता रेखा भुवा ऊर्द्ध्वं भवेद् यदि। नृपो वा नृपतुल्यो वा चिरं स्यातोऽर्थवान् भवेत्। मत्स्यपुच्छप्रकीर्णेन विद्यावित्तसमन्वितः। पितामहस्य वा किञ्चित् धनञ्च लभते ध्रुवम्। मध्यमायां यदि यवा दृश्यन्तेऽतन्तशोभनाः। तदान्यसञ्चितं वित्तं प्राप्नोत्यङ्गुष्ठके यवे। यस्याऽत्र चक्रमङ्गुष्ठे यवादूर्द्ध्वञ्च दृश्यते। तदा वै पामरादीनामर्ज्जितं धनमाप्नुयात्। तर्जन्यामथ चक्रञ्च मित्रद्वारा धनं भवेत्। तेनैव विपरीतन्तु व्ययो भवति निश्चितम्। अनामायां भवेत् चक्रं सर्वद्वारा भवेद्धनम्। तेनैव विपरीतन्तु व्ययो भवति निश्चितम्। कनिष्ठायां भवेच्चक्रं वाणिज्येन धनं भवेत्। तेनैव विपरीतन्तु व्ययो भवति निश्चितम्। ललाटे दृश्यते यस्य चक्ररेखाचतुष्टयम्। अशीत्यायुः समाप्नोति पञ्च रेखाः शतं समाः। वस्योक्तं ललाटस्य तारावर्णस्य दृश्यते। रेखाहीनस्य कचस्य स चोन्नतो मर्त्ती भवेत्। यस्य जिह्वा भवेद्दीर्घा नासाग्रं लेढि सर्वदा। भोगी भवति निर्विघ्न पृथ्वी भवति सर्वदा। दन्ताश्च विरला यस्य नीचवन्नीचकर्म्मकृत्। समसुभो दन्तुरः सत्यं वेदान्तपारगो भवेत्"। प्राकारान्तरम्। "दन्ताश्च विरला यस्य गण्डे कूपोऽपि जायते। परस्त्री रमणो नित्यं परवित्तेन वित्तवान्। दीर्घलिङ्गे च सौभाग्यं सूक्ष्मलिङ्गे नृपो भवेत्। वक्रस्य कठिनैलिङ्गैः प्रमाणान्निर्गतः सदा। रमते च सदा दासीं निर्धनो भवति ध्रुवम्। क्षणलिङ्गेन सूक्ष्मेण रक्तवर्णेन भूपतिः। बहुस्त्रीरमणो नित्यं नारीणां वल्लभो भवेत्। क्षणलिङ्गेन रक्तेन लभते चोत्तमाङ्गनाम्। राज्यं यस्य दिव्याङ्ग्याः कन्यकायाः पतिर्भवेत्। यस्य पादतले पद्मं चक्रं वाप्यथ तोरणम्। अङ्कुशं कुलिशं वापि स राजा भवति ध्रुवम्। क्षणनिर्लोमशा ये स्युः केकराचाः कुचेलकाः। कातरा व्यालजिह्वाश्च ते दरिद्रा न संशयः। कपिला मलिनाङ्गाश्च ह्रस्वाश्चैव ह्रस्वनखाः। अत्यतिदीर्घा महुजास्ते दरिद्रा न संशयः। चिबुके श्मश्रुशून्या ये निर्लोमहृदयाश्च ये। ते धूर्त्ता नैव सन्देहः सत्यवचनं यथा। स्थूलनखाः भग्नपृष्ठाः कृष्णदन्ताः कुचेलकाः। वक्रनासा वक्रनासास्ते नरा दुष्टमानसाः। दयालवश्च दातारो रूपवन्तो जितेन्द्रियाः। परोपकारिणश्चैव तेऽपूर्वा मानवाः स्मृताः"।

**पूर्ण** त्रि० पूर–क्त नि०। १पूरिते २सकले ३समग्रे च ज्योतिषोक्ताषु उभयपक्षयोः ४पञ्चमीदशमीपञ्चदशीतिथिषु च स्त्री मेदि०। ५आप्तकामे पु० स्वेच्छावच्छिन्ने (अपेक्षाशून्ये) गदाधरः। ह०सं०८८अ० उक्ते पक्षिभेदानां ६स्वरभेदे पु० तत्र दृश्यम् ७नागभेदे पु० भा० आ०५७ अ०। ८गन्धर्वदेवगन्धर्वभेदे पु० ६५ अ०। ९उदके न० निघण्टुः।

**पूर्णक** पुंस्त्री० पूर्ण+संज्ञायां कन्। स्वर्णचूडखगे मेदि०। स्त्रियां जातित्वात् ङीष्। स्वार्थे क। पूर्णकशब्दार्थे स्त्रियां टाप् अत इत्त्वम्।

**पूर्णककुद्** पु० पूर्णं ककुदमस्य अवस्थायाम् अन्त्यलोपः समा०। तादृशावस्थे वृषे। अनवस्थायां तु नान्त्यलोपः।

**पूर्णकाकुद** त्रि० पूर्णं काकुदं तालु यस्य न अन्त्यलोपः समा०। पूर्णतालुकमात्रे।

**पूर्णकाम** पु० पूर्णः कामोऽस्य। आप्तकामे परमेश्वरे मार्कं०२२अ०।

**पूर्णकू(कु)ट** पुंस्त्री पक्षिभेदे "भषकूटपूरिकरवकचराथिकाः पूर्णकूटसंज्ञाः स्युः" ह० सं० ८८ अ०। तत्रैव २५श्लोके ह्रस्वमध्यतया पठितः तत्रार्थे।

**पूर्णकुम्भ** पु० जलादिभिः पूर्णः कुम्भः। १जलादिभिः पूरिते घटे अमरः। २दानवभेदे पु० हरिवं०२४२ अ०।

**पूर्णकोशा** ओषधिभेदे ह०सं० ४८।४०।

**पूर्णकोष्ठा** स्त्री पूर्णं कोष्ठं यस्याः। नागरमुस्तायाम् राजनि०।

**पूर्णपर्वेन्दु** स्त्री पूर्णः पर्वणि इन्दुः पर्वेन्दुः यत्र। पौर्णमास्याम् "हे हे चित्राटिताराणां पूर्णपर्वेन्दुसङ्गते" सद्दर्पणकाव्यम्। "पूर्णपर्वेन्दुसङ्गते पौर्णमासीयुते" मल०त० रघुनन्दनः।

**पूर्णपात्र** न० नित्यक०। वस्त्रोपके वस्तुपूर्णे १पात्रे मेदि०। "हर्षादुत्सवकाले यदलङ्कारांशुकादिकम्। आकृष्य ह्रियते पूर्णपात्रं पूर्णकञ्च तत्" जटाधरोक्ते २पुत्रजन्मोत्सवादिषु दासैः स्वामिनोऽङ्गात् वस्त्रादेर्ग्रहणे। होमान्ते ब्रह्मणे देये दक्षिणारूपे ३द्रव्यभेदे "होमान्ते पूर्णपात्रं दक्षिणां

ब्राह्मणे दद्यात्" गोभिलः। तन्मानञ्च छन्दोगसंग्रहे "अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम्। पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते"। तेन २५६ मुष्टिभिः पूर्णपात्रम्। तत्प्रत्यद्रव्यश्चोक्तं "पूर्णपात्रो दक्षिणा" कात्या०श्रौ०६।१०।२७। कर्कोक्तं। "पाकयज्ञेषु तण्डुलसहगोधूमादियज्ञियधान्यपूर्णः पूर्णपात्रो दक्षिणा धान्यस्य मानपात्रम्" कर्कः। तेनास्य पुंस्त्वमपि। छन्दोगपरिशिष्टे (कर्मप्रदीपे) २।५।२ कात्यायनस्तु प्रकारान्तरमाह "यावता बहुभोक्तुस्तु तृप्तिः पूर्णेन विद्यते। नावराध्यं मतः कुर्यात् पूर्णपात्रमिति स्थितिः" इति"। ४जलपूर्णपात्रे च कात्या०श्रौ० ३।८।८।

**पूर्णप्रज्ञ** त्रि० पूर्णा प्रज्ञाऽस्य। सम्पूर्णबुद्धौ वायोस्तृतीयावतारे मध्वापरनामके आनन्दतीर्थे २वैष्णवमतभेदप्रस्थापकाचार्यभेदे। तन्मतञ्च सर्व० सं० न्यरूपि यथा "तदेतद्रामानुजमतं जीवाणुत्वदासत्ववेदापौरुषेयत्वसिद्धार्थबोधकत्वस्वतःप्रमाणत्वप्रमाणत्रित्वपाञ्चरात्रोपजीव्यत्वप्रपञ्चभेदसत्यत्वादिसाम्येऽपि परस्परविरुद्धभेदादिपक्षत्रयकक्षीकारेण क्षपणकपक्षनिक्षिप्तमित्युपेक्षमाणः स आत्मा तत्त्वमसीत्यादिवेदान्तवाक्यजातस्य भङ्ग्यन्तरेणार्थान्तरपरत्वमुपपाद्य ब्रह्ममीमांसाविवरणव्याजेनानन्दतीर्थः प्रस्थानान्तरमास्थित। तन्मते हि द्विविधं तत्त्वं स्वतन्त्रास्वतन्त्रभेदात्। तदुक्तं तत्त्वविवेके "स्वतन्त्रमस्वतन्त्रञ्च द्विविधं तत्त्वमिष्यते। स्वतन्त्रो भगवान् विष्णुर्निर्दोषोऽशेषसद्गुणः" इति। ननु सजातीयविजातीयस्वगतनानात्वशून्यं ब्रह्म तत्त्वमिति प्रतिपादकेषु वेदान्तेषु जागरूकेषु कथमशेषसद्गुणत्वं तस्य कथ्यत इति चेन्मैवं भेदप्रमापकबहुप्रमाणविरोधेन तेषां तत्र प्रामाण्यानुपपत्तेः तथा हि प्रत्यक्षं तावदिदमस्माद्भिन्नमिति नीलपीतादेर्भेदमध्यक्षयति। अथ मन्येथाः किं प्रत्यक्षं भेदमेवावगाहते किं वा धर्मिप्रतियोगिघटितम्। न प्रथमः धर्मिप्रतियोगिप्रतिपत्तिमन्तरेण तत्सापेक्षस्य भेदस्याग्रहणाध्यवसायत्वात्। द्वितीयोऽपि धर्मिप्रतियोगिग्रहणपुरःसरं भेदग्रहणमथ वा युगपत् तत्सर्वग्रहणम्। न पूर्वः बुद्धेर्विरम्य व्यापाराभावात् अन्योन्याश्रयप्रसङ्गाच्च। नापि चरमः कार्य्यकारणबुद्ध्योर्यौगपद्याभावात् धर्मिप्रतीतिर्हि भेदप्रत्ययस्य कारणं सन्निहितेऽपि धर्मिणि व्यवहितप्रतियोगिज्ञानमन्तरेण भेदस्याज्ञातत्वे नान्वयव्यतिरेकाभ्यां कार्य्यकारणभावावगमात्।

तस्मात् भेदप्रत्यक्षं दुरपह्नवमिति चेत् किं वस्तुस्वरूपभेदवादिनं प्रति दूषणानि दूषणान्युद्भाव्यन्ते किं वा धर्मिभेदवादिनं प्रति। प्रथमे चोरापराधान्माण्डव्यनिग्रहन्यायापातः भवदभिधीयमानदूषणानां तद्विषयत्वात्। ननु वस्तुस्वरूपस्यैव भेदत्वे प्रतियोगिसापेक्षत्वं न घटते घटादितत्तत्प्रतियोगिसापेक्ष एव सर्वत्र भेदः प्रथत इति चेन्न प्रथमं सर्वतो विलक्षणतया वस्तुस्वरूपे ज्ञायमाने प्रतियोग्यपेक्षया विशिष्टव्यवहारोपपत्तेः तथा हि परिमाणघटितं वस्तुस्वरूपं प्रथममवगम्यते पश्चात् प्रतियोगिविशेषापेक्षया ह्रस्वं दीर्घमिति तदेव विशिष्य व्यवहारभाजनं भवति। तदुक्तं विष्णुतत्त्वनिर्णये "न च विशेषणविशेष्यतया भेदसिद्धिः विशेषणविशेष्यभावस्य भेदापेक्षः, धर्मिप्रतियोग्यपेक्षया भेदसिद्धिः भेदापेक्षञ्च धर्मिप्रतियोगित्वमित्यन्योन्याश्रयतया भेदस्यासिद्धेः पदार्थस्वरूपत्वाद्भेदस्येत्यादिना"। अत एव गवार्थिनो गवयदर्शनान्न प्रवर्त्तन्ते गोशब्दञ्च न स्मरन्ति। न च नीरक्षीरादौ स्वरूपे गृह्यमाणे भेदप्रतिभासोऽपि स्यादिति भणनीयं समानाभिहारादिप्रतिबन्धकबलाद्भेदभानव्यवहाराभावोपपत्तेः तदुक्तम् "अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्। सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहाराच्चेति" अतिदूराद्गिरिशिखरवर्त्तितर्वादौ, अतिसामीप्याल्लोचनाञ्जनादौ, इन्द्रियघाताद्विद्युदादौ, मनोऽनवस्थानात् कामाद्युपप्लुतमनस्कस्य स्फीतालोकवर्त्तिनि घटादौ, सौक्ष्म्यात् परमाण्वादौ, व्यवधानात् कुड्याद्यन्तर्हिते, अभिभवात् दिवाप्रदीपप्रभादौ, समानाभिहारात् नीरक्षीरादौ यथावद्ग्रहणं नास्तीत्यर्थः। भवतु वा धर्मभेदवादस्तथापि न कश्चिद्दोषः धर्मिप्रतियोगिग्रहणे सति धर्मभेदभानसम्भवात्। न च धर्मभेदवादे तस्य तस्य भेदस्य भेदान्तरभेद्यत्वेनानवस्था दुरवस्था स्यादित्याश्रयेयं भेदान्तरप्रसक्तौ मूलाभावात् भेदभेदिनौ भिन्नाविति व्यवहारदर्शनात्। न चैकभेदबलेनान्यभेदानुमानं दृष्टान्तभेदाविघातेनोत्थानदोषाभावात्। सोऽयं पिण्याकयाचनाय गतस्य खारिकातैलदातृत्वाभ्युपगम इव दृष्टान्तभेदविमर्दे त्वदुत्थानमेव। न हि वरविघाताय कन्योद्वाहः। तस्मान्मूलक्षयाभावादनवस्था न दोषाय। अनुमानेनापि भेदोऽवसीयते। परमेश्वरो जीवाद्भिन्नः तं प्रति सेव्यत्वात् यो यं प्रति सेव्यः स तस्माद्भिन्नः यथा भृत्याद्राजा। न हि सुखं मे स्यात् दुःखं मे न मनागपि इति

पुरुषार्थमर्थयमानाः पुरुषाः स्वपतिपदं कामयमानाः सत्कारभाजो भवेयुः । प्रत्युत सर्वानर्थभाजनं भवन्ति । यः स्वस्यात्मनो हीनत्वं परस्य गुणोत्कर्षञ्च कथयति स स्तुत्यः प्रीतः स्तावकस्य तस्याभीष्टं प्रयच्छति । तदाह "घातयन्ति हि राजानो राजाहमिति वादिनम् । ददत्यखिलमिष्टञ्च स्वगुणोत्कर्षवादिनामिति"। यच्च परमेश्वराभेदतृष्णया विष्णोर्गुणोत्कर्षस्य स्वगतत्वेनाभिधानं विपुलकदलफललिप्सया जिह्वाच्छेदमनुहरति एतादृशविष्णुविद्वेषणादन्धतमसप्रवेशप्रसङ्गात् । तदेतत् प्रतिपादितं मध्यमन्दिरेण महाभारततात्पर्यनिर्णये "अनादिद्वेषिणो दैत्या विष्णोर्द्वेषो विवर्द्धितः । तमस्यन्धे पातयति दैत्यानन्धे विनिश्चयादिति" । सा च सेवा अङ्कननामकरणभजनभेदात्त्रिविधा । तत्राङ्कनं नारायणायुधादीनां,तद्रूपकरणार्थमपेक्षितार्थसिद्ध्यर्थञ्च । तथा च शाकल्यसंहितापरिशिष्टम् "चक्रं बिभर्त्ति पुरुषोऽभितप्तं बलं देवानाममृतस्य विष्णोः । स याति नाकं दुरितं विधूय विशन्ति यद्यतयो वीतरागाः । देवासो येन विधृतेन बाहुना सुदर्शनेन प्रयातास्तमायन् । येनाङ्किता मनवो लोकसृष्टिं वितन्वन्ति ब्राह्मणास्तद्वहन्ति । तद्विष्णोः परमं पदं येन गच्छन्ति लाञ्छिताः । उरुक्रमस्य चिह्नैरङ्किता लोके सुभगा भवाम" इति "अतप्ततनुर्न तदामो अश्नुते शृतास इद्वहन्तस्तत् समासतेति" तैत्तिरीयकोपनिषच्च । स्थानविशेषश्चाग्निपुराणे दर्शितः "दक्षिणे तु करे विप्रो बिभृयाद्वै सुदर्शनम् । सव्येन शङ्खं बिभृयादिति ब्रह्मविदो विदुरिति"। अन्यत्र चक्रधारणे मन्त्रविशेषश्च दर्शितः "सुदर्शन ! महाज्वाल ! कोटिसूर्य्यसमप्रभ ! । अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय । त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे । नमितः सर्व्वदेवैश्च पाञ्चजन्य ! नमोऽस्तु ते इति"।नामकरणं पुत्रादीनां केशवादिनाम्ना व्यवहारः सर्वदा तन्नामानुस्मरणार्थम् । भजनं दशविधं वाचा सत्यं हितं प्रियं स्वाध्यायः, कायेन दानं परित्राणं परिरक्षणं, मनसा दया स्पृहा श्रद्धा चेति । अत्रैकैकं निष्पाद्य नारायणे समर्पणं भजनम् । तदुक्तम् "अङ्कनं नामकरणं भजनं दशधा च तदिति" । एवं ज्ञेयत्वादिनापि भेदोऽनुमातव्यः तथा श्रुत्यापि भेदोऽवगन्तव्यः सत्यमेतमनुविश्वे मदन्ति रातिं देवस्य गृणतो मघोनः सत्यासो अस्य महिमा गृणे शवोयज्ञेषु विप्रराज्ये सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा मयि वारुण्यो मयि वारुण्यः" इति जीवानन्दभेदप्रतिपादकश्रुतिभ्यः । "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" "जगद्व्यापारवर्ज्जम्" "प्रभुकरणासन्निहितत्वाच्चेत्यादिभ्यश्च । न च "ब्रह्म वेद ब्रह्मैव भवतीति" श्रुतिबलाज्जीवस्य पारमैश्वर्यं शक्यमङ्क्तुं "सम्पूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेदितिवत् बृंहितो भवतीत्यर्थपरत्वात् । "ननु प्रपञ्चो यदि वर्त्तेत निवर्त्तेत न संशयः । मायामात्रमिदं द्वैतमद्वैतं परमार्थतः" इति वचनात् द्वैतस्य कल्पितत्वमवगम्यत इति चेत् सत्यं भावमनभिज्ञायाभिधानात् तथा हि यद्ययमुत्पद्येत तर्हि निवर्त्तेत न संशयः । तस्मादनादिरेवायं प्रकृष्टः पञ्चविधो भेदप्रपञ्चः । न चायमविद्यामात्रः मायामात्रत्वान्मायेति भगवदिच्छोच्यते । "महामायेत्यविद्येति नियतिर्मोहिनीति च । प्रकृतिर्वासनेत्येव तवेच्छानन्त ! कथ्यते । प्रकृष्टत्वात् प्रकृतिर्वासना वासयेद्यतः । अ इत्युक्तो हरिस्तस्य मायाऽविद्येति संज्ञिता । मायेत्युक्ता प्रकृष्टत्वात् प्रकृष्टे हि मयाभिधा । विष्णोः प्रज्ञप्तिरेवैका शब्दैरेतैरुदीर्य्यते । प्रज्ञप्तिरूपो हि हरिः सा च स्वानन्दलक्षणा" इत्यादिवचननिचयप्रामाण्यबलात् । सैव प्रज्ञा ज्ञानत्राणकर्त्री च यस्य तन्मायामात्रं ततश्च परमेश्वरेण ज्ञातत्वाद्रक्षितत्वाच्च न द्वैतं भ्रान्तिकल्पितं न हीश्वरे सर्वज्ञे भ्रान्तिः सम्भवति विशेषादर्शननिबन्धनत्वाद्भ्रान्तेः । तर्हि तद्व्यपदेशः कथमित्यत्रोत्तरम् अद्वैतं परमार्थत इति परमार्थत इति परमार्थापेक्षया तेन सर्वस्मादुत्तमस्य विष्णुतत्त्वस्य समाभ्यधिकशून्यत्वमुक्तं भवति । तथा च परमा श्रुतिः "जीवेश्वरभिदा चैव जडेश्वरभिदा तथा । जीवभेदो मिथश्चैव जडजीवभिदा तथा । मिथश्च जडभेदो यः प्रपञ्चो भेदपञ्चकः । सोऽयं सत्योऽप्यनादिश्च सादिश्चेन्नाशमाप्नुयात् । न च नाशं प्रयात्येष न चासौ भ्रान्तिकल्पितः । कल्पितश्चेन्निवर्त्तेत न चासौ विनिवर्त्तते । द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम् । मतं हि ज्ञानिनामेतन्मितं त्रातं हि विष्णुना । तस्मान्मात्रमिति प्रोक्तं परमो हरिरेव तु"इत्यादि। तस्माद्विष्णोः सर्वोत्कर्ष एव तात्पर्यं सर्वागमानाम् । एतदेवाभिसन्धायाभिहितं भगवता । "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः

परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः । यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः । यो मामेवमसंमूढो जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारत ! । इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ! । एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत !" । महावाराहेऽपि "मुख्यञ्च सर्ववेदानां तात्पर्य्यं श्रीपतौ परे । उत्कर्षे तु तदन्यत्र तात्पर्य्यं स्यादवान्तरम्" इति । युक्तञ्च विष्णोः सर्वोत्कर्षे महातात्पर्य्यम् । "मोक्षो हि सर्वपुरुषार्थोत्तमः धर्म्मार्थकामास्त्वनित्याः मोक्ष एव नित्यः तस्मान्नित्यं तदर्थाय यतेत मतिमान्नर" इति भाल्लवेयश्रुतेः । मोक्षश्च विष्णुप्रसादमन्तरेण न लभ्यते । "यस्य प्रसादात् परमा यत्स्वरूपात् तस्मात् संसारान्मुच्यते नापरे सुरानाराधयन्तोऽसौ परमो विचिन्त्यो मुमुक्षुभिः कर्म्मपाशादमुष्मादिति" नारायणश्रुतिः । "तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं धर्म्मार्थकामैरलमल्पकास्ते । समाश्रिताद्ब्रह्मतरोरनन्तात् निःसंशयं मुक्तिफलं प्रयाताः" इति विष्णुपुराणोक्तेश्च । "प्रसादश्च गुणोत्कर्षज्ञानादेव नाभेदज्ञानादित्युक्तम् । न च तत्त्वमस्यादितादात्म्यव्याकोपः श्रुतितात्पर्य्यापरिज्ञानविजृम्भणात् । "आह नित्यपरोक्षन्तु तच्छब्दो ह्यविशेषतः । त्वंशब्दश्चापरोक्षार्थं तयोरैक्यं कथं भवेत् । आदित्यो यूप इतिवत् साध्यार्थो तु वा श्रुतिरिति" । तथाच परमा श्रुतिः । जीवस्य परमैक्यञ्च बुद्धिसारूप्यमेव वा । एकस्थाननिवासो वा व्यक्तिस्थानमपेक्ष्य वा । 'न स्वरूपैकता तस्य मुक्तस्यापि विरूपतः । स्वातन्त्र्यपूर्णतेऽल्पत्वपारतन्त्र्ये विरूपता" इति । अथ वा तत्त्वमसीत्यत्र स एवात्मा स्वातन्त्र्यादिगुणोपेतत्वात् अतत्त्वमसि त्वं तन्न भवसि तद्रहितत्वादित्यैकत्वमतिशयेन निराकृतम् । तदाह "अतत्त्वमिति वा च्छेदस्तेनैक्यं सुनिराकृतम्" इति । तस्मात् दृष्टान्तनवकेऽपि "स यथा शकुनिः सूत्रेण बद्ध" इत्यादिना भेद एव दृष्टान्ताभिधानाय अयमभेदोपदेश इति तत्त्ववादरहस्यम् । तथाच महोपनिषत् "यथा पक्षी च सूत्रञ्च नानावृक्षरसा यथा । यथा नद्यः समुद्राश्च शुद्धोदलवणे यथा । चारापहार्यौ च यथा यथा पुंविषयावपि । तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ । तथापि सूक्ष्मरूपत्वान्न जीवात् परमो हरिः । भेदेन मन्ददृष्टीनां दृश्यते प्रेरकोऽपि सन् । वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बध्यतेऽन्यथेति । ब्रह्मा शिवः सुराद्याश्च शरीरक्षरणात् क्षराः । लक्ष्मीरक्षरदेहत्वादक्षरात्तः परो हरिः । स्वातन्त्र्यशक्तिविज्ञानसुखाद्यैरखिलैर्गुणैः । निःसीमत्वेन ते सर्वे तद्वशाः सर्वदेवताः" इति । विष्णुं सर्वगुणैः पूर्णं ज्ञात्वा संसारवर्जितः । निर्दुःखानन्दभुङ्नित्यं तत्समीपे स मोदते । मुक्तानाञ्चाश्रयो विष्णुरधिकाधिपतिस्तथा । तद्वशा एव ते सर्वे सर्वदैव स ईश्वर" इति च । एकविज्ञानेन सर्वविज्ञानञ्च प्रधानत्वकारणत्वादिना युज्यते न तु सर्वमिथ्यात्वेन । न हि सत्यज्ञानेन मिथ्याज्ञानं सम्भवति यथा प्रधानपुरुषाणां ज्ञानाज्ञानाभ्यां ग्रामो ज्ञातः अज्ञात इत्येवमादिव्यपदेशो दृष्ट एव । यथा च कारणे पितरि ज्ञाते जानात्यस्य पुत्रमिति । अन्यथा "यथा सौम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृण्मयं विज्ञातम्" इत्यत्र एकपिण्डशब्दौ वृथा प्रसज्येयातां मृदा विज्ञातयेत्येतावतैव वाक्यस्य पूर्णत्वात् । न च वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्येतत् कार्य्यस्य मिथ्यात्वमाचष्टे इत्येतच्च वाचारम्भणं विकारो यस्य तत् अविकृतं नित्यं नामधेयं मृत्तिकेत्यादिकमित्येतद्वचनं सत्यमिति तथ्यस्य स्वीकारात् । अपरथा नामधेयमेवेति शब्दयोर्वैयर्थ्यं प्रसज्येत । अतो न कुत्रापि जगतो मिथ्यात्वसिद्धिः । किञ्च प्रपञ्चो मिथ्येत्यत्र मिथ्यात्वं तथ्यमतथ्यं वा । प्रथमे सत्याद्वैतभङ्गप्रसङ्गः चरमे प्रपञ्चसत्यत्वापातः । नन्वनित्यत्वं नित्यमनित्यं वा उभयथाप्यनुपपत्तिरित्याक्षेपवदयमपि नित्यसमजातिभेदः स्यात् । तदुक्तं न्यायनिर्वाणवेधसा "नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः" इति । तार्किकरक्षायाञ्च "धर्म्मस्य तदतद्रूपविकल्पानुपपत्तितः । धर्म्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत्" इति । अस्याः संज्ञायाः उपलक्षणत्वमभिप्रेत्याभिहितं प्रबोधसिद्धौ "अन्वर्थित्वात्तु परक्षकधर्म्मसमेति" । तस्मादसदुत्तरमेतदिति चेत् अचिन्तितभाषणमेतत् दुष्टत्वमूलानिरूपणात् । तद्द्विविधं साधारणमसाधारणञ्च तत्राद्यं स्वव्याघातकं द्वितीयं त्रिविधं युक्ताङ्गहीनत्वमयुक्ताङ्गाधिकत्वमविषयवृत्तित्वञ्चेति । तत्र साधारणमसम्भावितमेव उक्तस्याक्षेपस्य स्वात्मव्यापनानुपलम्भात् । एवमसाधारणमपि घटस्य नास्तितायां नास्तितोक्तावस्तित्ववत् प्रकृतेऽप्युपपत्तेः । ननु प्रपञ्चस्य मिथ्यात्वमभ्युपेयते नासत्त्वमिति चेत

तदेतत् योऽयं शिरश्छेदेऽपि शतं न ददाति विंशति-
पञ्चकन्तु प्रयच्छतीति शाकटिकदृष्टान्तमनुहरेत् मिथ्या-
त्वात्तत्त्वयोः पर्य्यायत्वादित्यलमतिप्रपञ्चेन । तत्र "अथातो
ब्रह्म जिज्ञासेति" प्रथमसूत्रस्यायमर्थः तत्राथशब्दो मङ्ग-
लार्थोऽधिकारानन्तर्य्यार्थश्च स्वीक्रियते । अतःशब्दो
हेत्वर्थः तदुक्तं गारुडे "अथातःशब्दपूर्वाणि सूत्राणि
निखिलान्यपि । प्रारभेत नियत्यैव तत्किमत्र निया-
मकम् । कश्चार्थस्तु तयोर्विद्वान् कथमुत्तमता तयोः ।
एतदाख्याहि मे ब्रह्मन्! यथा ज्ञास्यामि तत्त्वतः ।
एवमुक्तो नारदेन ब्रह्मा प्रोवाच सत्तमः । आनन्तर्य्याधि-
कारे च मङ्गलार्थे तथैव च । अथशब्दस्त्वतःशब्दो
हेत्वर्थे समुदीरितः" इति । यतो नारायणप्रसादमन्तरेण
न मोक्षो लभ्यते प्रसादश्च ज्ञानमन्तरेण अतो ब्रह्म
जिज्ञासा कर्त्तव्येति सिद्धम् । जिज्ञास्यब्रह्मणो लक्षण-
मुक्तं "जन्माद्यस्य यतः" इति । सृष्टिस्थित्यादि यतो
भवति तद्ब्रह्मेति वाक्यार्थः । तथाच स्कान्दे वचः
"उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः । बन्धमोक्षौ
च पुरुषाद् यस्मात् स हरिरेकराड्" इति । "यतो वा
इमानीत्यादि"श्रुतिभ्यश्च । तत्र प्रमाणमप्युक्तं यथा"शा
स्त्रयोनित्वादिति"।"नावेदविन्मनुते तं बृहन्तम्" "तन्त्वौप
निषदम्" इत्यादिश्रुतिभ्यः तस्यानुमानिकत्वं निराक्रियते
न चानुमानस्य स्वातन्त्र्येण प्रामाण्यमस्ति । तदुक्तं
कौर्मे "श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् । निश्च-
यात् साधयेदर्थं प्रमाणान्तरमेव च । श्रुतिस्मृतिसहायं
यत् प्रमाणान्तरमुत्तमम् । प्रमाणपदवीं गच्छेन्नात्र
कार्य्या विचारणा"इति शास्त्रस्वरूपमुक्तं स्कान्दे "ऋग्-
यजुः सामाथर्वा च भारतं पाञ्चरात्रकम् । मूलरामा
यणञ्चैव शास्त्रमित्यभिधीयते । यच्चानुकूलमेतस्य तच्च
शास्त्रं प्रकीर्त्तितम् । अतोऽन्यो ग्रन्थविस्तारो नैव
शास्त्रं कुवर्त्म तत्" इति । तदनेनानन्यलभ्यः शास्त्रार्थ
इति न्यायेन भेदस्य प्राप्तत्वेन तत्र न तात्पर्यं किन्त्वद्वैत
एव वेदवाक्यानां तात्पर्यमिति अद्वैतप्रत्याशा प्रतिक्षिप्ता
अनुमानादीश्वरस्य सिद्धभावेन तद्भेदस्यापि ततः सिद्ध्य
भावात् । तस्मात् भेदानुवादकत्वमिति तत्परत्वमवगम्यते
अत एवोक्तम् "सदागमैकविज्ञेयं समतीतक्षराक्षरम् ।
नारायणं सदा वन्दे निर्दोषाशेषसद्गुणम्" इति । शा-
स्त्रस्य तत्र प्रामाण्यमुपपादितं "तत्तु समन्वयादिति" सम-
न्वय उपक्रमादिलिङ्गम् उक्तं बृहत्संहितायाम् "उप-
क्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती-
च लिङ्गं तात्पर्यनिर्णये" इति । एवं वेदान्ततात्पर्य-
वशात्तद्देव ब्रह्म शास्त्रगम्यमित्युक्तं भवति । दिङ्मात्र-
मत्र प्रादर्शि विष्टमानन्दतीर्थभाष्यव्याख्यानादौ द्रष्टव्यं
ग्रन्थबाहुल्यभियोपरम्यत इति । एतच्च रहस्यं पूर्णप्रज्ञेन
मध्यमन्दिरेण वायोस्तृतीयावतारं मन्येन निरूपित-
मिति । "प्रथमस्तु हनूमान् स्यात् द्वितीयो भीम एव
च । पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः" इति । एत-
देवाभिप्रेत्य तत्र तत्र ग्रन्थसमाप्ताविदं पद्यं लिख्यते
"यस्य त्रीण्युदितानि वेदवचने दिव्यानि रूपाण्यलं ह्येत-
द्दर्शितमित्थमेतदखिलं वेदस्य गर्भे महः । वायो राम-
वचोनतं प्रथमकं पृक्षो द्वितीयं वपुर्मध्वो यत्तु तृतीय-
मेतदमुना ग्रन्थः कृतः केशवे" । तस्मात् सर्वस्य शास्त्रस्य
विष्णुतत्त्वं सर्वोत्तममित्यत्र तात्पर्यमिति सर्वं निरवद्यम्"

**पूर्णबीज** पु० पूर्णं बीजं यस्य । बीजपूरे राजनि० ।

**पूर्णभद्र** पु० १नागभेदे भा०आ०३५ अ० । २यक्षभेदे हरिवं०
२१ अ० । स च रत्नभद्रसुतः तस्य सुतः हरिकेशः
तत्कथा काशीख० ३२ अ० ।

**पूर्णमा** स्त्री पूर्णः कलापूर्णश्चन्द्रो मीयतेऽस्यां मा—घञर्थे
क । पूर्णमास्यां तिथौ ।

**पूर्णमास्** स्त्री पूर्णः कलाभिः पूर्णोमाश्चन्द्रमा यत्र । १पूर्णि-
मायाम् । पूर्णं मासं मिमीते मा—असुन् । २सूर्ये ३चन्द्रे च
"एष वै पूर्णमाः । य एष तपत्यहरहर्ह्येवैष पूर्णोऽथैष एव
दर्शो यच्चन्द्रमा ददृश इव ह्येष अथो इतरथाहुः एष एव
पूर्णमा यच्चन्द्रमा एतस्य ह्यनुपूरणं पौर्णमासीत्याचक्षते"
शत०ब्रा०११।२।४।१ "एषः सूर्य्यस्तपति एष खलु पूर्णमाः
स पूर्य्यमाणः ददृश इव अमावास्यायामविद्यमानः
प्रतिपदि पश्चाद्दृश्यमानो भवति । एतच्च पूरणमनुलक्ष्य
पौर्णमासीत्याचक्षते" भा० ।

**पूर्णमास** पु० पूर्णमासी विधानकालत्वेनास्त्यस्य अच् ।
१पूर्णिमायां कर्त्तव्ये यागभेदे "दर्शपूर्णमासाभ्यां यजेत"
"सर्वेभ्यो दर्शपूर्णमासौ" श्रुतिः । आदित्यभेदस्य
धातुरनुमतिभार्य्यायां जाते २पुत्रभेदे । "धातुः कुहूः
सिनीवाली२ राका३ चानुमति४स्तथा । सायं १दर्शमथ-
प्रातः२ पूर्णमास४ मनुक्रमात्" भाग० ६।१८।३। अमूते-
त्यनुषङ्गः । पूर्णमासयागविधानञ्च शत०ब्रा०११।२।४।८ ।
पूर्णमासश्चान्द्रमासो यत्र गौरा०ङीप् । २पूर्णिमातिथौ
स्त्री शब्दमाला ।

**पूर्णमुख** पु० जनमेजयसर्पसत्रे दग्धनागभेदे भा० आ० ५७ अ०।

**पूर्णयोग** पु० बाहुयुद्धभेदे तत्प्रकारः भा० स० २२ अ० उक्तो यथा "ततस्तौ नरशार्दूलौ बाहुशस्त्रौ समीयतुः। वीरौ परमसंहृष्टावन्योऽन्यजयकाङ्क्षिणौ। करग्रहणपूर्वं तु कृत्वा पादाभिवन्दनम्। कक्षैः कक्षां विधुन्वानावास्फोटं तत्र चक्रतुः। स्कन्धे दोर्भ्यां समाहत्य निहत्य च मुहुर्मुहुः। अङ्गमङ्गैः समाश्लिष्य पुनरास्फालनं विभो!। चित्रहस्तादिकं कृत्वा कक्षाबन्धं च चक्रतुः। गलगण्डाभिघातेन सस्फुलिङ्गेन चाशनिम्। बाहुपाशादिकं कृत्वा पादाहतशिरावुभौ। उरोहस्तं ततश्चक्रौ पूर्णकुम्भौ प्रयुज्य तु। करसंपीडनं कृत्वा गर्जन्तौ वारणाविव। नर्दन्तौ मेघसङ्काशौ बाहुप्रहरणावुभौ। तलेनाहन्यमानौ तु अन्योऽन्यं कृतवीक्षणौ। सिंहाविव सुसंक्रुद्धावाकृष्याकृष्य युध्यताम्। अङ्गेनाङ्गं समापीड्य बाहुभ्यामुभयोरपि। आवृत्य बाहुभिश्चापि उदरं च प्रचक्रतुः। उभौ कक्षां सुपार्श्वे तु तक्षवन्तौ च शिक्षितौ। अधोहस्तं स्वकण्ठे तूदरस्योरसि चाक्षिपत्। सर्वातिक्रान्तमर्यादं पृष्ठभङ्गं च चक्रतुः। स पूर्णमूर्द्धं बाहुभ्यां पूर्णकुम्भं प्रचक्रतुः। तृणपीडं यथाकामं पूर्णयोगं समुष्टिकम्। एवमादीनि युद्धानि प्रकुर्वन्तौ परस्परम्" मू० "कक्षैर्दोर्मूलैः कक्षां प्रकोष्ठगतां रज्जुं धुन्वानौ यत्र यत्र कक्षे आस्फोटं चक्रतुः बाहुमूलास्फालनेनाकृष्टवत्करज्जुशेषं कम्पयन्तावित्यर्थः। चित्रहस्तादिकं हस्तस्यातिवेगेनाकुञ्चनप्रसारणोपर्य्यधश्चालनसुष्टीकरणानि चित्रहस्ताः। आदिपदात् पादस्यापाकुञ्चनादि। कक्षाबन्धं परस्परकक्षायां हस्तौ कृत्वा बन्धनम् गले गण्डेन भागदेशेनाभिघातस्तेन पाषाणवदघातस्त्वात्तयोरभिघातेन विस्फुलिङ्गोत्पत्त्याऽशनिं वज्रमिव सस्तजतुरित्यर्थः। बाहुपाशादिकं चरणपाश आदिशब्दार्थः। पादाभ्यामाहताः शिराः स्नायवो याभ्यान्तौ दृढप्रहारेण नाडीपर्य्यन्तमपि वेदनावन्तावित्यर्थः। उरोहस्तमुरसि चपेटाप्रहारं पूर्णकुम्भौ ग्रथिताङ्गुलिभ्यां हस्ताभ्यां परशिरसः पीडनं पूर्णकुम्भः द्वित्वं परस्परं द्वावपि चक्रतुरिति वक्तुम्। तलेन चपेटया, आहत्य जत्रुदेशे पृष्ठं कृत्वा बाहुभिर्बद्धाभ्यां द्वावपि मिथ उदरमादाय प्रचक्रतुः प्रचिक्षिपतुः कृ विक्षेपेऽस्य रूपम्। एवं कक्षां सुपार्श्वे च प्रचक्रतुः। तक्षवन्तौ तक्षणानूकरणं गात्रसङ्कोच रूपवद्भः वदन्तौ। अधोहस्तमुदरस्याधस्तात् कृत्वा हस्ताभ्यामुदरमावेष्ट्य स्वकण्ठे स्वोरसि च कण्ठोरःसमीपे आनीयाक्षिपदास्फालितवान्। पृष्ठस्य भूमग्नत्वेन जातं भङ्गं पराभवं बाहुभ्यामुदरादीनि पीडने सम्पूर्णमूर्द्धं मू" नीलकण्ठः।

**पूर्णवैनाशिक** पु० सर्ववैनाशिके सर्वशून्यत्ववादिनि बौद्धभेदे सर्ववैनाशिकोऽप्यत्र।

**पूर्णहोम** १० पूर्णो होमः। पूर्णाहुतौ।

**पूर्णा** स्त्री "नन्दा भद्रा जया रिक्ता पूर्णा प्रतिपदः क्रमात्" ज्यो० त० उक्ते पक्षयोः पञ्चमीदशमीपञ्चदशीरूपे तिथिभेदे

**पूर्णाङ्गद** पु० नागभेदे भा० आ० ५७ अ०।

**पूर्णान(ल)क** न०। वर्द्धापनायाम् पूर्णपात्रे मेदि० पूर्णपात्रशब्दे दृश्यम्। [कारे विदङ्गे दे च।

**पूर्णानन्द** पु० पूर्ण आनन्दो यत्र। १परमेश्वरे २तन्त्रप्रकरण-

**पूर्णाभिषेक** पु० कर्म०। तन्त्रोक्ते कौलाभिषेकभेदे।

**पूर्णायुस्** पु० १प्राधेये गन्धर्वभेदे भा० आ० ६५ अ०। पूर्णमायुरस्य। २शतायुष्के कर्म०। ३शतवर्षमिते जीवनकाले न०।

**पूर्णावतार** पु० कर्म०। १नृसिंहे २रामे ३श्रीकृष्णे च तेषां भगवतः संपूर्णावतारत्वात् तथात्वं अन्येषान्तु कलावतारत्वम्। "पूर्णो नृसिंहो रामश्च श्वेतद्वीपविराड् विभुः। परिपूर्णतमः कृष्णो वैकुण्ठे गोकुले स्वयम्। वैकुण्ठे कमलाकान्तो रूपभेदाच्चतुर्भुजः। गोलोके गोकुले राधाकान्तोऽयं द्विभुजः स्वयम्" ब्रह्मवै० जन्मख० २८ अ० उक्तेस्तेषां तथात्वम्।

**पूर्णाशा** स्त्री नदीभेदे भा० भी० ९ अ०।

**पूर्णाहुति** स्त्री पूर्णा आहुतिः। होमसमाप्तौ होम्यायामाहुतौ शत० ब्रा० २।२।१।१।

**पूर्णि** स्त्री पृ—णिङ्। पूर्त्तौ पूर्णिमा।

**पूर्णिका** स्त्री नासाच्छिन्नीनामकखगे त्रिका०।

**पूर्णिमा** स्त्री पूर्णि पूर्त्तिं मिमीते मा—क। १पौर्णमास्यां तिथौ मरीचेः कलायां पत्न्यां जाते २कन्याभेदे "भार्य्या मरीचेस्तु कला सुषुवे कर्दमात्मजा। कश्यपं पूर्णिकाञ्चैव ययोरापूरितं जगत्। पूर्णिकाऽसूत विरजं विश्वगञ्च परन्तप!। भाग० ४।१।१२ तत्तिथिस्वरूपं द्वैधे खण्डभेदस्य कर्मभेदे ग्राह्यतादिकं च कालमा० न्यरूपि यथा "तत्र शुक्लायां पञ्चदश्यां चन्द्रमण्डलं स्वकलाभिः सर्वात्मना पूर्य्यते सेयं मण्डलपरिपूर्त्तिः पूर्णिमेत्यनेन नाम्ना ख्यायते। तदुक्तं ब्रह्माण्डमत्स्यपुराणयोः "कालत्रये व्यतिक्रान्ते दिवापूर्णौ परस्परम्। चन्द्रादित्यौ प०

राह्णे तु पूर्णत्वात् पूर्णिमा स्मृता” इति। अह्नः परो भागः पराह्णः सूर्य्यास्तमयकाल इत्यर्थः। तत्र यथादित्यः संपूर्णमण्डलः सन्नस्तमेति तथोत्तरभागे चन्द्रः सम्पूर्णमण्डलः सन्नुदेतीति। दृष्टान्तदार्ष्टान्तिकभावस्य विवक्षितत्वाद् द्वयोरादित्यचन्द्रयोरुपन्यासः। यथा च मण्डलपूर्णत्वविवक्षया पूर्णिमाशब्दः प्रयुज्यते तथा मासपूर्णत्वविवक्षया पौर्णमासीशब्दः प्रयुज्यते। तदुक्तं भविष्योत्तरे “पौर्णमासी महाराज! सोमस्य दयिता तिथिः। पूर्णो मासो भवेद् यस्मात् पौर्णमासी ततः स्मृता” इति। पूर्णिमामावास्ययोर्विकल्पेन मासान्तत्वं मासप्रस्तावे दर्शितम्। अतएव पौर्णमास्यामत्यन्तविप्रकर्षे सत्यनभिभूतत्वाच्चन्द्रमण्डलः सम्पूर्णो दृश्यते। तावेतौ सन्निकर्षविप्रकर्षौ गोभिल आह “यः परो विप्रकर्षः सूर्य्याचन्द्रमसोः सा पौर्णमासी। यः परः सन्निकर्षः सामावास्येति”। तदेवं पर्व्वाभिधायाः पञ्चदश्याः पूर्णिमादिनामनिर्वचनेन स्वभावविशेषो ज्ञापितो भवति। ते च पूर्णमास्यामावास्ये प्रत्येकं द्विविधे। तच्च पुराणे दर्शितम् “राका चानुमतिश्चैव पौर्णमासी द्विधा स्मृता। सिनीवाली कुहूश्चैवममावास्या द्विधैव तु” इति। एतासां चतसृणां स्वरूपं काठकशाखायां विस्पष्टं श्रूयते “या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका। या पूर्वाऽमावास्या सा सिनीवाली योत्तरा सा कुहूः” इति। बृहद्वसिष्ठोऽपि “राका चानुमतिश्चैव पौर्णमास्यौ द्विधा विदुः। राका संपूर्णचन्द्रा स्यात् कलोनाऽनुमतिर्मता। पौर्णमासी दिवा दृष्टे शशिन्यनुमतिः स्मृता। रात्रिदृष्टे पुनस्तस्मिन् सैव राकेति कीर्त्तिता”। मत्स्यब्रह्माण्डपुराणयोः “यस्मात्तामनुमन्यन्ते पितरो दैवतैः सह। तस्मादनुमतिर्नाम पूर्णिमा प्रथमा स्मृता। अत्यर्थं राजते यस्मात् पौर्णमास्यां निशाकरः। रञ्जनाच्चैव चन्द्रस्य राकेति कवयो विदुः” इति। “अथ पञ्चदशी निर्णीयते। सा द्विविधा पौर्णमास्यमावास्या च। तत्र पौर्णमास्यां परस्परविरुद्धानि वाक्यान्युपलभ्यन्ते। तत्र परविद्धाया ग्राह्यत्वं विष्णुधर्मोत्तरे “एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी। अमावास्या तृतीया च उपोष्याः स्युः परान्विताः”। परविद्धानिषेधः पूर्वविद्धाविधिश्च ब्रह्मपुराणपद्मपुराणयोः “षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाऽष्टमी। पूर्णिमा परविद्धा च नोपोष्यं तिथिपञ्चकम्। पूर्वविद्धा तु कर्त्तव्या सप्तमी व्रतिभिर्नरैः। पौर्णमासी, शष्ठीयाच-पराया निक्षयाकृता” इति। पूर्वविद्धायाह्यत्वं च युग्मवाक्ये। “चतुर्दश्या च पूर्णिमेति”। एवं परस्परविरोधे सति या व्यवस्था सा ब्रह्मवैवर्त्ते दर्शिता “पूर्वविद्धा न कर्त्तव्या अमावास्या च पूर्णिमा। वर्जयित्वा मुनिश्रेष्ठ! सावित्रीव्रतमुत्तमम्” इति। सावित्री राजकन्या तया चीर्णं व्रतं सावित्रीव्रतम्। तच्च भविष्योत्तरपुराणे दर्शितम् “कथयामि कुलस्त्रीणां महिम्नो वर्द्धनं परम्। यथा चीर्णं व्रतं पूर्वं सावित्र्या राजकन्यया” इति। एतच्च पौर्णमास्याममावास्यायां च विहितम्। तस्मिन् व्रते पूर्वविद्धा ग्राह्या। व्रतान्तरे पूर्वविद्धा न कर्त्तव्या किन्तु परविद्धैव कर्त्तव्येति परस्परविरुद्धस्य वाक्यद्वयस्य व्यवस्था। यदा तु चतुर्दश्यष्टादशनाडिका भवति तदा सावित्रीव्रतमपि तत्र परित्याज्यम्। “भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिमिति” स्मृतेः। सोऽयं पौर्णमासीनिर्णय एवामावास्यायामप्यवगन्तव्यः। तत्रापि सावित्रीव्रतं पूर्वदिने कर्त्तव्यं व्रतान्तराण्युत्तरदिने। अस्यां च व्यवस्थायां ब्रह्मवैवर्त्तवचनं पूर्वमुदाहृतम्। स्कन्दपुराणेऽपि “भूतविद्धा सिनीवाली न तु तत्र व्रतं चरेत्। वर्जयित्वा तु सावित्रीव्रतं तु शिखिवाहन!” इति। एवं च सति युग्मशास्त्रं सावित्रीव्रतव्यतिरिक्तेषु व्रतेषु द्रष्टव्यम्। प्रचेता अपि “कामविद्धा तु या षष्ठी सप्तम्या च युताष्टमी। दशम्येकादशीविद्धा त्रयोदश्या चतुर्दशी। भूतविद्धाप्यमावास्या न ग्राह्या मुनिपुङ्गवैः। उत्तरोत्तरविद्धास्ताः कर्त्तव्याः काठकी श्रुतिः” इति। पद्मपुराणेऽपि “षष्ठ्यष्टमी तथा दर्शः कृष्णपक्षे त्रयोदशी। एताः परयुताः कार्य्याः पराः पूर्वेण संयुताः” इति। यत्तु नारदीयपुराणे “दर्शं च पौर्णमासं च पितुः सांवत्सरं दिनम्। पूर्वविद्धमकुर्व्वाणो नरकं प्रतिपद्यते” इति तत् सावित्रीव्रतविषयं श्राद्धविषयं वा। अमावास्यायामिव पौर्णमास्यामपि श्राद्धं विहितम् तथाच पितामहः “अमावास्याव्यतीपातपौर्णमास्यष्टकासु च। विद्वान् श्राद्धमकुर्व्वाणः प्रायश्चित्तीयते द्विजः” इति। अमावास्याश्राद्धस्य च पार्व्वणरूपत्वमपराह्णस्य तत्कर्म्मकालत्वं कुतपस्य प्रारम्भकालत्वमित्येतत्सर्व्वं प्रतिपत्प्रकरणे प्रत्याब्दिकनिर्णये प्रपञ्चितम्”।

“या चतुर्दशीयुता याह्या तुस्मात्। यमः “पञ्चान्ते सो-

नहि स्नायात् तेन नायाति सत्पुरम्" विष्णुः "इयन्ते वहितौ यस्यां दिवि चन्द्रबृहस्पती। पौर्णमासी तु महती ज्ञेया संवत्सरे तु सा। तस्यां स्नानोपवासा अक्षयत्वं परिकीर्त्तितम्"। वहितौ माससंज्ञानिमित्तकृत्तिकादिनक्षत्रगतौ महाकार्त्तिक्यादिदर्शनात्। तथा च राजमार्त्तण्डः "माससंज्ञे यदा ऋक्षे चन्द्रः सम्पूर्णमण्डलः। गुरुणा याति संयोगं सा तिथिर्महती स्मृता"। स्कान्दमात्स्ययोः "पौर्णमासीषु चैतासु मासर्क्षसहितासु च। एतासु स्नानदानाभ्यां फलं दशगुणं स्मृतम्" ति॰त॰ स्थितम्।

**पूर्णेन्दु** पु॰ कर्म॰। पञ्चदशभिः कलाभिः पूर्णे चन्द्रे।

**पूर्णोत्कट** पु॰ पु॰ प्राच्ये देशभेदे मार्क॰पु॰५८अ॰। [दृश्यम्।

**पूर्णोपमा** स्त्री उपमालङ्कारभेदे अलङ्कारशब्दे ३८६ पृ॰

**पूर्त्त** त्रि॰ पूर–क्त नि॰। १पूरिते २छन्ने विश्वः। पृ–पालने कर्मणि क्त। ३पालिते। भावे क्त। ४पालने न॰५ शब्दर॰। ६खातादिकर्मणि न॰ अमरः। जातुकर्ण्यः "वापीकूपतडागादिदेवतायतनानि च। अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते"। आरामः पुष्पफलोपायहेतुर्भूभागः। "अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनम्। आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते। ग्रहोपरागे यद्दानं पूर्त्तमित्यभिधीयते। इष्टापूर्त्ते द्विजातीनां धर्मः सामान्य उच्यते। अधिकारी भवेच्छूद्रः पूर्त्ते धर्मे न वैदिके"। वैदिके वेदाध्ययनसाध्ये अग्निहोत्रादाविति" रत्नाकरः। एवं स्त्रीणामपि पूर्त्ताधिकारः। यथा नारीव्रतदत्तौ बृहस्पतिः "पितृश्वशुरयोर्हितान् भर्त्तुः स्वीयमातृवान्। पूजयेत् कव्यपूर्त्ताभ्यां ब्रह्मणातिथीन् स्त्रियः"। एतेन "जलाशयोत्सर्गे गौरवतरत्वात् मन्त्रपाठयोर्यजमानकर्त्तृकमन्त्रपाठः तत्रामन्त्रकतया स्त्रीशूद्रयोरनधिकारेण तद्वति यागेऽप्यनधिकारः विशेषोपदेशविरहादिति" द्वैतनिर्णयोक्तं निरस्तम्। अतएव तयोर्जलाशयोत्सर्गादिषु ब्राह्मणद्वारा होमादिसमाचारः। तत्र होमो यज्ञो न साक्षात् कल्पतरुरत्नाकरधृतापस्तम्बवचनात्। तद्यथा आपस्तम्बात्युपक्रम्य "तद्गुतमङ्गताग्नौ न स्त्री जुहुयात् नानुपेतः इति" अनुपेतः अनुपनीतः, किन्तु ब्राह्मणद्वारा कर्त्तव्यः। "श्रौतस्मार्त्तक्रियाहेतोर्वृणुयादृत्विजः स्वयम्" इति याज्ञवल्क्योक्तेः "ऋत्विग्वादे नियुक्तौ च यमौ संपरिकीर्त्तितौ। यज्ञे स्वाम्याप्नुयात् पुण्यं हानिं वादेऽथ वा श्रमम्" इति बृहस्पत्युक्तेः। वैदिकेतर मन्त्रपाठे शूद्रादेरप्यधिकारः। "वेदमन्त्रवर्जं शूद्रस्येति" छन्दोगाह्निकाचारचिन्तामणिधृतस्मृतौ वेदेतिविशेषणात्। "शूद्रोऽप्येवंविधः प्रोक्तो विना मन्त्रेण संस्कृतः। न केनचित् समसृजत् छन्दसा तं प्रजापतिः" इति समसृजत् छन्दसा वेदेन इत्युक्तेश्च। तं शूद्रम्। पञ्चयज्ञस्नानश्राद्धेषु वैदिकेतरमन्त्रोऽपि निषिद्धः। शूद्रमधिकृत्य "नमस्कारेण मन्त्रेण पञ्चयज्ञान् न हापयेत्" इति याज्ञवल्क्यीयेन "श्रद्धायुक्तविधानमेव मन्त्रवत् स्नानमिष्यते। तूष्णीमेव हि शूद्रस्य सनमस्कारकं मतम्" इति योगियाज्ञवल्क्यीयेन श्राद्धमधिकृत्य "अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः। अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते" इति वराहपुराणीयेन च नमस्कारेणेति तूष्णीमिति मन्त्रवर्जित इत्यभिधानात्"।

**पूर्त्ति** स्त्री पृ–भावे क्तिन्। १पूरणे "हन्तिः पूर्त्तिश्च पूरणे" ज्यो॰त॰उक्ते २गुणने च। [ङीप्।

**पूर्त्तिन्** त्रि॰ पूर्त्तमनेन इष्टा॰ इनि। कृतपूरणे। स्त्रियां

**पूर्द्वार** न॰ इत॰। पुरस्य द्वारे गोपुरे अमरः। [अपूर्धीत्।

**पूर्ध** याचनायां भ्वा॰प॰सक॰सेट्। निघण्टुः। पूर्धति

**पूर्ब** निमन्त्रणे सक॰ निवासे अक॰ चु॰उभ॰ सेट्। पूर्बयति ते अपुपूर्बत् त। ओष्ठ्यान्तोऽयम्।

**पूर्य** त्रि॰ पृ–क्यप् पूर–यत् वा। १पूरणीये २परिपाल्ये च

**पूर्व** निवासे अक॰ निमन्त्रणे सक॰ भ्वा॰ प॰ सेट्। अन्तस्थान्तोऽयम्। पूर्वति अपूर्वीत्।

**पूर्व(र्व)** त्रि॰ पूर्व(र्व)–अच्। १प्रथमे आद्ये यस्यां दिशि देवां सूर्यस्य प्रथमं दृष्टिः तेषां तस्यां २दिशि स्त्री तदुपलक्षिते ३देशे यस्य यदपेक्षया प्रथमं जन्मादि तस्य ४तादृशकाले ५तदुपलक्षिते च। तस्य दिग्देशकालव्यवस्थावाचित्वे सर्वनामकार्यं पूर्वस्मै इत्यादि जसि ङिङस्योस्तु वा पूर्वे पूर्वाः पूर्वस्मात् पूर्वात् पूर्वे पूर्वस्मिन्। स्त्रियां तु न विभाषा पूर्वस्यै पूर्वासाम् इत्यादि। सर्वनामत्वेन वृत्तिमात्रेऽस्य पुंवद्भावः। पूर्वस्यां स्थितं पूर्वस्थितम्। पूर्वस्या रूपं पूर्वरूपम् इत्यादि।

**पूर्व(र्व)कर्म्मन्** न॰ कर्म॰। प्रथमे कर्मणि "कर्म त्रिविधं पूर्वकर्मप्रधानकर्म पश्चात्कर्मेति" सुश्रुतः। पूर्वभागे।

**पूर्व(र्व)काय** पु॰ पूर्व(र्व) कायस्य एकदेशित॰। कायस्य

**पूर्व(र्व)कालिक** त्रि॰ पूर्वः(र्वः)कालः साधनतयाऽस्त्यस्य ठन्। पूर्व(र्व)कालसाध्ये "दर्शनं पूर्व(र्व)कालिकम्"

मा॰सौ॰दश॰। पूर्व(र्व)काले भवः ठञ् वृद्धिः। पौर्व्व(र्व)-कालिक इत्येव तदर्थे त्रि॰ स्त्रियां ङीप् इति भेदः।

**पूर्व(र्व)कृत्** पु॰ पूर्वां(र्वां) करोति कृ—क्विप् वृत्तौ पुंवत्। १पूर्व(र्व)दिगस्थचक्रे आदित्ये २तदधिपे इन्द्रे च यजु॰ १०।२६। ३पूर्व(र्व)कारकमात्रे त्रि॰।

**पूर्व(र्व)कोटि** स्त्री विमतिपत्तौ पूर्वोपात्ते विषये पूर्वपक्षे

**पूर्व(र्व)गङ्गा** स्त्री नित्यक॰। नर्मदानद्यां हेम॰।

**पूर्व(र्व)चित्ति** त्रि॰चित—भावे क्तिन् पूर्वं(र्वं) चित्तिः ज्ञानं यस्य। १पूर्वानुभवविषये यजु॰१२।११।१२।४२। २अप्सरो-भेदे स्त्री हरिवं॰ १२अ॰।

**पूर्व(र्व)ज** पु॰ पूर्वस्मिन् काले जायते जन—ड ।१ज्येष्ठभ्रातरि रघु॰ १०।२६। २ज्येष्ठभगिन्यां स्त्री अमरः। ३पूर्वकाल-जातमात्रे त्रि॰। "ज्येष्ठामूलीयमिच्छन्ति भाषमाणाद् पूर्व(र्व)जम्"। ४चन्द्रलोकस्थे दिव्यपितृगणे "अथ पूर्व(र्व)जाः" पितरश्चन्द्रलोकस्था न्यस्तशस्त्राः स्वधाभुजः। कव्यवाडादयस्ते च" त्रिका॰। ५पितामहादौ "स पूर्व(र्व)जानां कपिलेन रोषात्" रघुः। [त्रिका॰

**पूर्व(र्व)जिन** पु॰ कर्म॰। प्राचीने जिनभेदे मञ्जुघोषप्रभृतौ

**पूर्व(र्व)दक्षिणा** स्त्री पूर्व(र्व)स्या दक्षिणस्याश्चान्तराला दिक् "दिङ्नामान्यन्तराले" पा॰स॰। पूर्वदक्षिणयोर्दिशोरन्त-रालायां दिशि १अग्निकोणे २तद्दिक्स्थे देशे च मार्क॰ पु॰ ५८ अ॰।

**पूर्व(र्व)दिक्पति** पु॰ कर्म॰६त॰। इन्द्रे हेम॰। पूर्व(र्व)दिशो मादयोऽप्यत्र। २मेषसिंहादिराशिषु। "प्रागादिककुभां नाथा यथासंख्यं प्रदक्षिणम्। मेषाद्या राशयो ज्ञेया स्त्रिरावृत्तिपरिक्रमात्" ज्यो॰त॰।

**पूर्व(र्व)दिग्बल** न॰ दिग्बलशब्दे ३५७१ पृ॰ उक्ते सूर्या-दिग्रहाणां बलभेदे पूर्वस्यां दिशिभवे बलभेदे

**पूर्व(र्व)दिग्वदन** न॰ पूर्वदिशि वदनमस्य। दिग्वदनशब्दे ३५७५ पृ॰ उक्ते मेषसिंहधनूरूपराशित्रिके

**पूर्व(र्व)दिश्** स्त्री कर्म॰। प्राच्यां दिशि यस्यां दिशि येषां सूर्यस्य प्रथमदृष्टिः तेषां सा दिक्प्राची। तज्ज्ञानो पायश्च दिग्ज्ञानशब्दे ३५७४ पृ॰ दृश्यः।

**पूर्व(र्व)दिष्ट** त्रि॰ पूर्वं(र्वं) दिष्टं भाग्यं साधनत्वेनास्त्यस्य अच्। पूर्वभाग्यानुरूपेण जाते १दुःखादौ "दैवैर्मर्त्यस्य यत्प्रोक्तं पूर्व(र्व)दिष्टं हि तत् स्मृतम्" भाग॰ ६।१७ श्लो॰। पूर्वं(र्वं) दिष्टम्। २पूर्वविहिते त्रि॰।

**पूर्व(र्व)देव** पु॰ पूर्वे(र्वे) देवाः।१असुरे अमरः। तेषां प्रथमं देवत्वेन जायमानत्वेऽपि अन्यायाचरणात् ततो भ्रष्टानां दैत्यभावं प्राप्तिरिति पौराणिकी कथानुसन्धेया। कर्म॰। पूर्वतनयोः देवयोः २नरनारायणयोः द्वि॰ व॰। भा॰ उ॰ ४८ अ॰।

**पूर्व(र्व)देवता** स्त्री कर्म॰। अनादिदेवभावेषु पितृषु "अक्रो-धनाः शौचपराः सततं ब्रह्मचारिणः। न्यस्तशस्त्रा महाभागाः पितरः पूर्व(र्व)देवताः" मनुः। तदधिकं पितृशब्दे दृश्यम्।

**पूर्व(र्व)देश** पु॰ पूर्व(र्व)स्मिन् देशः। जम्बुद्वीपस्थे देशभेदे स च देशः वृ॰ सं॰ १४ अ॰ कूर्मविभागे दर्शितः।

**पूर्व(र्व)नदी** स्त्री कर्म॰। कूर्मविभागे उक्तायां पूर्वदिक्स्थायां नद्याम् ततो नद्यन्तत्वात् ठक् उत्तरपदवृद्धिः पूर्वनादेय तत्र—भवे त्रि॰।

**पूर्व(र्व)पक्ष** पु॰ कर्म॰। १शुक्लपक्षे अमरः। शास्त्रीयसंशय-निरासार्थप्रश्ने २फक्किकायाम् ।३सिद्धान्तविरुद्धकोटौ "वि-षयो विषयश्चैव पूर्वपक्षस्तथोत्तरम्" इत्युक्ताधिकरणा-वयवभेदे व्यवहारे प्रतिज्ञापरपर्य्याये भाषापदाख्ये ४प्रथमावयवभेदे। तल्लक्षणादिकं वीरमि॰ उक्तं यथा "पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरस्तथा। क्रिया-पादस्तृतीयस्तु चतुर्थो निर्णयस्तथा" इति वृहस्पतिवच-नस्य निर्णयफलकपरामर्शरूपप्रत्याकलितपरमेव निर्णय-पदमुपचारादित्याह "इतरथा पूर्वोदाहृततद्वचनविरोधः स्यात्। तत्र प्रतिज्ञावादी कः स्यादित्यपेक्षिते नारदः "राज्ञे कुर्यात् पूर्वमावेदनं यस्तस्य ज्ञेयः पूर्ववादो विधि-ज्ञैः" इति पूर्ववादः प्रतिज्ञा। पूर्ववादकस्यैव प्रतिज्ञावादि-तेत्यस्यापवादमाह स एव "यस्य वाऽभ्यधिका पीडा कार्य्यं वाभ्यधिकं भवेत्। तस्यार्थिवादो दातव्यो न यः पूर्वं निवेदयेत्"। अर्थिवादः प्रतिज्ञा। वृहस्पतिः "अहंपूर्वि(र्वि)कया यातावर्थिप्रत्यर्थिनौ यदा। वादो वर्णा-नुपूर्व्येण ग्राह्यः पीडामवेक्ष्य चेति"। मनुरपि "अर्था-नर्थावुभौ बुद्ध्वा धर्माधर्मौ च केवलौ। वर्णक्रमेण सर्वाणि पश्येत् कार्य्याणि कार्य्यिणाम्"। ब्राह्मणादीनां युग-पदुभयाधिकरणं प्राप्तानां वर्णानुक्रमेण ब्राह्मणादौ ततः क्षत्रियस्येत्येवमादिक्रमेण चतुष्पाद्व्यवहारः प्रव-र्त्तनीयो राज्ञा पीडाधिक्यकार्य्यगौरवं चेदर्थिप्रत्यर्थिनो-रन्यतरस्य तदा न पूर्वावेदनक्रमो नापि वर्णक्रमः। यदा तु सर्वे सवर्णास्तदा आवेदनक्रमः। युगपदावेदने स-मानवर्णत्वे समानपीडत्वे च ब्रह्मत्वमपरीक्ष्येति

निर्गलितोऽर्थः। प्रतिज्ञालक्षणमाह याज्ञवल्क्यः "प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना। समामासतदर्द्धाहर्नामजात्यादिचिह्नितम्"। अर्थ्यत इत्यर्थः साध्यः सोऽस्यास्तीत्यर्थी तद्विपरीतः प्रत्यर्थी तस्याग्रतः पुरतो लेख्यं लेखनीयं सभ्येन सभापतिना यथावेदितं पूर्वावेदनमनतिक्रम्य येन प्रकारेणावेदनसमये स्ववचनं लेखितं तथैव प्रत्यर्थिसमक्षमपि न पुनरन्यथा। तथा सत्यन्यवादित्वेन भङ्गप्रसङ्गात्। अन्यवादीत्यादि हीनलक्षणे वक्ष्यते। प्रागेवार्थिना स्वप्रतिज्ञातार्थस्य लिखितत्वादधुना लेखनमनर्थकमित्याशङ्कानिरासायाह समामासेति। संवत्सरमासपक्षतिथिवारार्थिप्रत्यर्थिनाम-तदीयजातिभिरादिशब्दोपात्तैश्च द्रव्यसङ्ख्यातज्जातिलक्षणमहर्षादिस्थानवेलाक्षमालिङ्गादिभिर्यथोपयोगं चिह्नितमिति कार्य्यमत्रमावेदनकाले लिखितमधुनोपयुक्तसहितं लिख्यत इति नानर्थक्यमिति भावः। आदिशब्दग्राह्याणि च कात्यायन आह "निवेश्य कालं वर्षं च मासं पक्षं तिथिं तथा। वेलां प्रदेशं विषयं स्थानं जात्याकृती वयः। साध्यं प्रमाणं द्रव्यञ्च सङ्ख्या नाम तथात्मनः। राज्ञां च क्रमशो नाम निवासं साध्यनाम च। क्रमात् पितॄणां नामानि पीड़ामाहर्त्तृदायकौ। क्षमालिङ्गानि चान्यानि पक्षं सङ्कल्प्य कीर्त्तयेत्"। कालो धनप्रयोगादिकालः। वर्षं पत्रलिखनकालीनम् एवं मासपक्षतिथयोऽपि सन्ध्यावन्दनादिक्रियोपलक्षितः कालो वेला। प्रदेशः क्षेत्रादिस्थलविशेषः। विषयोऽन्तर्वेद्यादिविषयः स्थानं विवादास्पदीभूतक्षेत्रादिग्रामादि आकृतिरवयवसंस्थानविशेषः वयस्तारुण्यादि प्रमाणं निवर्त्तनप्रस्थादि। आत्मनो राज्ञां च क्षेत्रादिभोगकालीनानां बहुवचनं तदीयपित्रादिप्राप्त्यर्थं निवासो निकटस्थहादिः। पितरोऽर्थिप्रत्यर्थिनोः। पीड़ा प्रतिभूप्रभृतीनां धनिकादिकृता। आहर्त्ता प्रतिग्रहादिविषयवस्तूनि आनेता दायको दातृविक्रेत्रादिः। क्षमालिङ्गान्यात्मीयधनादेः परोपभोगाद्यपराधक्षमणचिह्नानि। अन्यत् सुबोधम्। संग्रहकारोऽपि "अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम्। साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च। प्रसिद्धमविरुद्धञ्च निश्चितं साधनक्षमम्। संक्षिप्तं निखिलार्थं च देशकालाविरोधि च। वर्षर्त्तुमासपक्षाहर्वेलादेशप्रदेशवत्। स्थानावसथसाध्याख्याजात्याकारवयोयुतम्। साध्यप्रमाणं सङ्ख्यावदात्मप्रत्यर्थिनाम च। परात्मपूर्वजानेकराजनामभिरङ्कितम्। क्षमालिङ्गात्मपीड़ावत् कथिताहर्तृदायकम्। यदावेदयते राज्ञे तद्भाषेत्यभिधीयते" इति। अर्थवत् प्रयोजनवत्। धर्मसंयुक्तम् अल्पाक्षरप्रभूतार्थत्वादिगुणयुक्तम्। परिपूर्णमध्याहाराद्यनपेक्षम्। अनाकुलमसन्दिग्धाक्षरम्। साध्यवत् साधनीयार्थयुतम्। वाचकपदम् गौणलाक्षणिकपदरहितम्। प्रकृतार्थाविरोधि प्रागावेदितार्थेन सह संवादि। प्रसिद्धं लोकप्रसिद्ध्यनतिक्रान्तम् अविरुद्धं पुरराष्ट्रप्राड्विवाकराजाद्यविरुद्धम्। पूर्वापराविरुद्धं व्यवहारिकधर्माविरुद्धञ्च। निश्चितं संशयरहितम्। साधनक्षमम् साधनार्हम्। संक्षिप्तं शब्दाडम्बरशून्यम्। निखिलार्थं निरवशेषवक्तव्यार्थप्रतिपादकम्। देशकालाविरोधि मध्यदेशीयमस्मत्क्षेत्रम् शरत्कालीनशस्याढ्यं मदीयमपहृतमित्यादिदेशकालविरोधविधुरम्। परात्मनोः प्रतिवादिवादिनोर्ये पूर्वजाः पित्रादयस्तथा अनेके राजानः क्षेत्रादिभुक्तिकालीनास्तेषां नामभिरङ्कितं युक्तम्। अत्रार्थवत्त्वादीनि देशकालविरोधित्वमर्थिप्रत्यर्थिनामानुक्तत्वं चेति सर्वत्र भाषायामवश्यम्भावीनि तैर्विना साध्यनिर्देशासिद्धेः। वर्षादीनि तु यत्र यावन्त्युपयुज्यन्ते तत्र तावन्त्येव निवेशनीयानि सर्वाणि न सर्वत्र अदृष्टार्थत्वप्रसङ्गात्। तत्र वर्षादीनां कालानां वृद्धिधनद्वैगुण्यादिविवादेषु प्रतिग्रहक्रयादिपौर्वापर्यवादे चोपयोगः। देशप्रदेशस्थानानामाहर्तृदायकयोरात्मादिपूर्वजराजादिनाम्नां च स्थावरक्षेत्रादिविवादेषु। साध्याख्याजात्याकारवयसां चौर्यादिदास्यविक्रयादिविवादेषु। प्रमाणसंख्ययोर्मेयतुलितादिद्रव्यविवादे चौर्यादिविवादे च क्षमालिङ्गानामुपेक्षितपरोपभुज्यमानभूम्यादिविवादे। आत्मपीड़ाया ऋणिकप्रतिभ्वादिविवादे एवमन्यदप्यूह्यम्। अतएवाशयवादाह कात्यायनः "देशश्चैव तथा स्थानं सन्निवेशस्तथैव च। जातिः संज्ञाधिवासश्च प्रमाणं क्षेत्रनाम च। पितृपैतामहश्चैव पूर्वराजानुकीर्त्तनम्। स्थावरेषु विवादेषु दशैतानि निवेशयेत्" इति। एतेषां तत्रोपयोगित्वात्। हारीतोऽपि "आसनं शयनं यानन्ताम्रं कांस्यमयोमयम्। धान्यमश्ममयं वस्त्र द्विपदञ्च चतुष्पदम्। मणिमुक्ताप्रवालानि हीरका रूप्यकाञ्चनम्। यदि द्रव्यसमूहः स्यात् संख्या कार्य्या तदैव तु। यस्मिन् देशे च यद्द्रव्यं येन मानेन मीयते। तेन तस्मिंस्तदा सङ्ख्या कर्त्तव्या व्यवहारिभिः" इति।

मानसंख्याशङ्कावत्त्वान्योऽन्योपलक्षणम्। अत्रैतावद्विवक्षितं यत्र यावदुपयुज्यते तत्र तावन्निवेश्यं भाषापत्रे। अन्यथा साध्यनिर्देशस्यापूर्णत्वात् पक्षाभासतापत्तेरधिकनिवेशेऽदृष्टार्थतापत्तेरिति। कात्यायनोऽप्यत एवाह "देशकालविहीनश्च द्रव्यसङ्ख्याविवर्जितः। क्रियामानविहीनश्च पक्षो नादेय इष्यते"। क्रिया प्रमाणम्। मानं साध्यपरिमाणम्।" यद्यपि पूर्वोक्तपक्षलक्षणरहितानां पक्षाभासत्वमर्थसिद्धं तथापि नारदादिभिः स्पष्टार्थं प्रपञ्चितम्। तत्र नारदः "अन्यार्थमर्थहीनञ्च प्रमाणागमवर्जितम्। लेख्यहीनाधिकं भ्रष्टं भाषादोषा उदाहृताः"। एतान् स एव विवृतवान्। "अर्थे साधारणेऽप्येको सम्बन्धोऽथानियुक्तकः। लेखयेद्यस्तु भाषार्थमन्यार्थां तां विदुर्बुधाः"। गणकार्यमेको वा यद्यसम्बन्धी तदनियुक्तो वा लेखयेद्यस्यां भाषायामित्यर्थः। "अल्पाहार्यमिति द्वेषात् क्रोधाद्वापि वदेत्तु यः। साध्यं च मोचयेत् पश्चादर्थहीनान्तु तां विदुः"। उक्तं साध्यं वादिना यस्यां त्यज्यते सा भाषाऽर्थहीनेत्यर्थः। "गणिते लिखिते मेये तथा क्षेत्रगृहादिषु। यत्र सङ्ख्या न निर्दिष्टा सा प्रमाणविवर्जिता"। सङ्ख्यानं सङ्ख्येति व्युत्पत्त्या सङ्ख्याशब्देन गणनतोलनमानानां परिग्रहः। "विद्यया प्राप्तमर्थाच्च लब्धं क्रीतं क्रमागतम्। नत्वेवं लिख्यते यत्र सा भाषा स्यादनागमा। समामासस्तथा पक्षस्तिथिर्वारस्तथैव च। यत्रैतानि न लिख्यन्ते लेख्यहीनान्तु तां विदुः"। अवश्यं यद्यत्र पूर्वोक्तरीत्या लेख्यं तद्रहिता लेख्यहीनेत्यर्थः। "लेखयित्वा तु तां भाषामनिर्दिष्टे तथोत्तरे। निर्दिशेत् साक्षिणः पूर्वमधिकां तां विनिर्दिशेत्"। साक्षिण इति प्रमाणोपलक्षणम्। व्युत्क्रमादत्राधिक्यमनेनाप्राप्तकालता फलिता। "यत्र स्यात्तु यथापूर्वं निर्दिष्टं पूर्ववादिना। सन्दिग्धमेव लेख्येन भ्रष्टां भाषान्तु तां विदुः" उभयं पूर्वमिति पाठे पक्षद्वयमपि प्रतिज्ञावादिनैव निर्दिष्टं स्यादित्यर्थः"। प्रसङ्गात् पक्षाभासोऽपि तत्र निर्णीतोऽत्र प्रदर्श्यते। तत्र कात्यायनः "अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम्। असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत्"। अप्रसिद्धमाह बृहस्पतिः "न केनचित् कृतो यस्तु सोऽप्रसिद्ध उदाहृतः। यथा कत-सङ्कलकृष्टक्षेत्रमपहृतमिति मदीयं शशविषाणं गृहीत्वा न प्रयच्छतीत्याद्यप्रसिद्धमित्याह विज्ञानेश्वरः। बृहस्पतिना त्विदमसाध्योदाहरणमुक्तं तच्च वक्ष्यते। निराबाधं निरुपद्रवं मम मन्दिरे दीप्यमानदीपकप्रकाशेनायं स्वमन्दिरे व्यवहरतीतिप्रभृति निरर्थमभिधेयहीनं मदीयं कचटतपञ्चवर्गदशं वा गृहीत्वा न ददातीत्यादि विज्ञानयोगी। बृहस्पतिवचनात्त्वन्यथा निरर्थकपदार्थः प्रतीयते यथाह "स्वल्पापराधः स्वल्पार्थो निरर्थक इति स्मृतः" इति। एतस्योदाहरणं स्मृतिचन्द्रिकायाम् "अहमनेन सस्मितमीक्षितः। मामकी शिलाऽनेनापहृतेत्यादि निष्प्रयोजनं यथायं देवदत्तोऽस्मद्गृहसन्निधौ सुस्वरमधीते इत्यादि मिताक्षरास्मृतिचन्द्रिकयोरुदाहृतम्। बृहस्पतिना तथैव लक्षितम्। "कार्यबाधाविहीनस्तु विज्ञेयो निष्प्रयोजनः" इति। स एव प्रकारान्तरेणापि निरर्थनिष्प्रयोजनौ लक्षितवान् "कुसीदाद्यैः पदैर्हीनो व्यवहारो निरर्थकः। वाक्पारुष्यादिभिश्चैव विज्ञेयो निष्प्रयोजनः"। कुसीदऋणदानं तत्प्रभृतिभिश्चतुर्दशभिरर्थविषयव्यवहारैर्हीनो निरर्थकः। वाक्पारुष्यादिभिर्हिंसात्मकैश्चतुर्भिर्हीनो निष्प्रयोजनः इत्यर्थः। अष्टादशपदाविषयः पक्षो दुष्ट इत्याशयः। असाध्यविरुद्धावाह स एव "समानेन प्रदातव्यं शशशृङ्गकृतं धनुः। असम्भाव्यमसाध्यन्तं पक्षमाहुर्मनीषिणः। यश्चाप्यावेदिते पक्षे प्राड्विवाकेऽथ राजनि। पुरराष्ट्रविरोधः स्याद्विरुद्धः सोऽभिधीयते" इति। मिताक्षरायामसाध्यविरुद्धयोरुक्तौ "देवदत्तेनाहं सपूमङ्गुष्ठपहसित इत्याद्यसाध्यसाधनासम्भवात् अलक्षणत्वात् साक्ष्यादिसम्भवो लिखितं दूरतोऽस्त्वात्र दिव्यमिति। मूकेनाहं शप्त इत्यादि विरुद्धमिति"। पुरराष्ट्रादिविरुद्धमपि विरुद्धपदेन व्याख्याय राज्ञा विवर्जित इत्यादिस्मृत्यन्तरञ्च तदर्थतयोदाहृतन्तच्च पूर्वमस्माभिर्नारदीयव्यवहारनिरूपणे लिखितम्। अन्येऽपि पक्षाभासाः स्मृतिचन्द्रिकोदाहृतवचनोक्ता ज्ञेयाः। यथा "भिन्नक्रमो व्युत्क्रमार्थः प्रकीर्णार्थो निरर्थकः। अतीतकालो विदिष्टः पक्षो नादेय इष्यते। यथास्थाननिवेशेन नैव पक्षार्थकल्पना। क्रियते तेन पक्षः स भिन्नक्रम उदाहृतः"। व्यत्यस्ताक्षरसन्निवेशो भिन्नक्रम इति यावत्। व्युत्क्रमार्थो व्यवहितान्वयेनार्थावबोधकः। प्रकीर्णार्थोऽसङ्कलितार्थः। "मूलमर्थं परित्यज्य तद्गुणो यत्र लिख्यते। निरर्थकः स वै पक्षो मूलसाधनवर्जितः। मृतकालमतिक्रान्तं द्रव्यं यत्र हि लिख्यते। अतीत-

कालः पक्षोऽसौ प्रमाणे सत्यपि स्मृतः। यस्मिन् पक्षे द्विधा साध्यं भिन्नकालविमर्शनम्। विरुध्यते क्रियाभेदः स पक्षोदिष्ट उच्यते"। भूतसाधनं भूतभूतं साधनं तेन वर्जितः। भूतकालः साध्यकालः। अन्यानपि पक्षाभासानाह स एव "अन्याचारनिवेशेन अन्यार्थगमनेन च। व्याकुलन्तु भवेद्यत्र क्रिया चैवाकुला भवेत्। साधनं सह साध्येन निर्दिष्टं यत्र लेखयेत्। उक्तक्रमविहीनत्वात् सोऽपि पक्षो न सिध्यतीति। विरुद्धयाविरुद्धस्य द्वावप्यर्थौ निवेशितौ। एकस्मिन् यत्र दृश्येते तं पक्षं दूरतस्त्यजेत्। परस्परविरुद्धानि यः पदानि निवेशयेत्। विरुद्धपदसङ्कीर्णा भाषा तस्य न सिध्यतीति"। यत्तु "पुरराष्ट्रविरुद्धस्य यश्च राज्ञा विवर्जितः। अनेकपदसङ्कीर्णः पूर्वपक्षो न सिद्ध्यतीति" स्मरणात् तत्रासमर्थः। राज्ञा विवर्जितो राजत्वक्रमुकादिविषयकचौर्यदानादिपदमिश्रितस्तु क्रियाभेदेन युगपन्न सिद्ध्यतीति मदीया रूपका इत्यन्तोऽन्यथा इत्याऽनेन स्पष्टीताः इत्यर्थश्च यथा निक्षेपोऽतस्तदर्थमिदं मदीयक्षेत्रमपहरतीत्यनेकपदविषयस्यापि पक्षस्य क्रमेणाप्यनुपादेयत्वे तत्त्वनिर्णयाभावप्रसङ्गेन युक्तिविरोधात्। "बहुप्रतिज्ञं यत्कार्यं व्यवहारेषु निश्चितम्। कामं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सयेति" कात्यायनवचनविरोधाच्च। तस्माद्युगपत् पक्षाभासतैत्येव रमणीयम्। अनेकवस्तुसङ्कीर्णस्याप्यत्वन्नततपदत्वमस्तु। हिरण्यरूपकवासांसि वानेन मत्तो हृत्वा स्पष्टीतान्यस्य ह्रस्वे मया निक्षिप्तान्यनेनापहृतानि वेत्येकस्मिन्नपि पदे युगपदपीडयपक्षोपन्यासस्यादुष्टत्वात्। साध्यञ्च विधिमुखेन प्रतिषेधमुखेन वा पक्षनिक्षेपणीयमित्याह कात्यायनः "न्याय्यं संगच्छते कर्तुमन्याय्यं वा करोत्ययम्। न लेखयति यस्त्वेवं तस्य पक्षो न सिध्यति"। न्याय्यं धनमित्यनेन मत्तोऽयं ग्रहणमादाय न ददातीत्यादि प्रतिवस्तुमुखताऽपि लक्षिता। अन्याय्यं वेत्यनेन ममेदमपहरतीत्यादि विधिमुखता प्रदर्शिता। बृहस्पतिरपि "प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम्। निश्चितं लोकसिद्धञ्च पक्षं पक्षविदो विदुः" इति। प्रतिज्ञादोषैः प्रतिज्ञाभव्यापारादिभिर्मुक्तं रहितम्। ते च दर्शिताः प्राक्। साध्यं साधनार्हम्। सत्कारणान्वितं स्फुटदोषरहितहेतुसहितम्। निश्चितं सन्देहाजनकवाक्यप्रयुक्तं न तु स्वयमेव निश्चितं विप्रतिपत्त्यदर्शनिश्चयाभावात्। लोकसिद्धं व्यवहारिकधर्माविरुद्धम्। अतएव मनुः "सत्या न भाषा भवति यद्यपि स्यात् प्रतिष्ठिता। बहिश्चेद्भाष्यते धर्मान्नियताद्व्यवहारिकात्"। प्रतिष्ठिता प्रसिद्धत्वादिदोषनिर्मुक्ता। भाषा प्रतिज्ञा व्यावहारिकधर्मादविरुद्धा च सत्या ग्राह्या न भवति राजादीनामित्यर्थः। मदवेवस्तु "यत्र स्मृतमात्र एव सति लोकानां समन्वयस्तल्लोकसिद्धं तेन निर्धनत्वतो लक्षादिबहुधनाक्षेपो न पक्ष इति व्याचख्यौ तद्बाधकप्रतिज्ञादोषवत्त्वेनैव तादृशपक्षस्य निराकरणात्। प्रतिज्ञादोषनिर्मुक्तमित्यनेनैव गतार्थम्"। ततः गहा० भवार्थे छ। पूर्वपक्षीय तद्भवे त्रि०।

**पूर्व(र्व)पद** न० कर्म०। पूर्ववर्त्तिनि विभक्त्यन्ते पदे "पूर्वपदात् संज्ञायामगः" पा०। २पूर्ववर्त्तिस्थाने च। पूर्वपदमधीते "पूर्वोत्तरपदात्" वार्त्ति० ठकन्। पूर्वपदिक तद्वेत्तरि तदध्यायिनि च।

**पूर्व(र्व)पर्वत** पु० नित्यक०। उदयाचले अमरः।

**पूर्व(र्व)पाञ्चालक** त्रि० पूर्वस्मिन् पञ्चाले भवः वुञ् उत्तरपदवृद्धिः। पूर्वपञ्चालभवे। पूर्वं पञ्चालानाम् एकदेशिस० तत्र भवः अपि तु नोत्तरपदवृद्धिः। पौर्वपञ्चाल इत्येव त्रि० कौ०।

**पूर्व(र्व)पाटलिपुत्रक** त्रि० पूर्वपाटलिपुत्रे भवः वुञ् न पूर्वपदवृद्धिः। पूर्वपाटलिपुत्रनगरभवे। [कौ०४।६।४

**पूर्व(र्व)पाद** पु०पूर्वं पादस्य एकदेशिस०। अपपरत्वे काला०।

**पूर्व(र्व)पालिन्** पु०पूर्वं देशं दिशं वा पालयति पालि–णिनि। १पौरस्त्यदेशपतिनृपभेदे २पूर्वदिगीशे इन्द्रे च। [शब्द०

**पूर्व(र्व)पितामह** पु०पूर्वः पितामहात्। प्रपितामहे भा०वि०

**पूर्व(र्व)पीठिका** स्त्री कर्म०। कथाद्यन्वावतरणिकाभेदे।

**पूर्व(र्व)पुरुष** पु० कर्म०। पितादित्रिके पुरुषे।

**पूर्व(र्व)पूर्व(र्व)** त्रि० पूर्व+वीप्सायां द्वित्वम्। वीप्सार्थक पूर्वशब्दार्थे। [अश्लेषायब्दे तदीयादि दृश्यम्।

**पूर्व(र्व)फल्गुनी** स्त्री अश्विन्यादिषु एकादशे नक्षत्रे।

**पूर्व(र्व)फल्गुनीभव** पु० पूर्व(र्व)फल्गुन्यां भवति भू–अच्। बृहस्पतौ शब्दमाला।

**पूर्व(र्व)भ(भा)द्रपदा** स्त्री भद्रस्य वृषस्येव पदं चरणमस्य तस्येदमण् वा कर्म०। अश्विन्यादिषु पञ्चविंशतितमनक्षत्रे तत्स्वरूपादिकं अश्लेषाशब्दे उक्तम्।

**पूर्व(र्व)भाव** पु० पूर्वो भावः। १पूर्ववर्त्तित्वे कारणत्वे "येन सह पूर्वभावः कारणमादाय वा यस्य" भाषा० कर्म०।

२पूर्ववर्त्तिनि भावे पदार्थधर्मभेदे शृङ्गाररसस्य पूर्वरागापरपर्य्याये ३भावभेदे ।

**पूर्व(र्व)भाविन्** त्रि॰ पूर्वं भवति भू—णिनि । १कारणे २पूर्ववर्तिनि पदार्थमात्रे च सां॰ सू॰ १ ७५ ।

**पूर्व(र्व)यक्ष** पु॰ नित्यक॰ । मणिभद्रादौ जिनोत्तमे त्रिका॰

**पूर्व(र्व)रङ्ग** पु॰ पूर्वं रज्यतेऽस्मिन् रज—आधारे घञ् । "यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्ति पूर्व(र्व)रङ्गः स उच्यते" दशरूपकोक्ते नान्दीपाठादौ ।

**पूर्व(र्व)राग** पु॰ पूर्वो रागः । नायकयोर्मिलनात् पूर्वजाते अनुरागभेदे "श्रवणाद्दर्शनाद्वापि मिथःसंरूढ़रागयोः । दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते । श्रवणन्तु भवेत्तत्र दूतवन्दिसखीमुखात् । इन्द्रजाले च चित्रे च साक्षात् स्वप्ने च दर्शनम् । अभिलाषश्चिन्ता स्मृतिगुणकथनोद्वेगसंप्रलापाश्च । उन्मादोऽथ व्याधिर्जड़ता मृतिरिति दशात्र कामदशाः । अभिलाषः स्पृहा चिन्ता प्राप्त्युपायादिचिन्तनम् । उन्मादश्चापरिच्छेदश्चेतनाचेतनेष्वपि । अलक्ष्यवाक् प्रलापः स्यात् चेतसो भ्रमणाद्भृशम् । व्याधिस्तु दीर्घनिःश्वासः पाण्डुताकृशतादयः । जड़ता हीनचेष्टत्वमङ्गानां मनसस्तथा । रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते । जातप्रायन्तु तद्वाच्यं चेतसा चापि काङ्क्षितम् । "वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः" । "आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात्तदिङ्गितैः । नीलीकुसुम्भमञ्जिष्ठः पूर्वरागोऽपि च त्रिधा । न चातिशोभते यन्नापैति प्रेम मनोगतम् । तन्नीलीरागमाख्यान्ति यथा श्रीरामसीतयोः । कुसुम्भरागं तं प्राहुर्यदपैति च शोभते । मञ्जिष्ठारागमाहुस्तं यन्नापैत्यतिशोभते" सा॰ द॰ ।

**पूर्व(र्व)रात्र** पु॰ पूर्वं रात्रेः एकदेशिस॰ अच्समा॰ रात्रान्तत्वात् पुंस्त्वम् । रात्रेः पूर्वभागे ।

**पूर्व(र्व)रूप** न॰ कर्म॰ । अर्थालङ्कारभेदे अलङ्कारशब्दे ४००पृ॰ दृश्यम् । भविष्यद्रोगस्य प्राग्जातरूपे तस्य लक्षणविशेषो भाविरोगज्ञापकत्वं चोक्तं यथा

"प्राग्रूपं येन लक्ष्यते । उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः । लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम् । द्विविधं हि पूर्वरूपं भवति सामान्यं विशिष्टञ्च सामान्यं येन दोषदृष्यसंमूर्च्छनावस्थाजनितेन भाविज्वरादि व्याधिमात्रं प्रतीयते न तु वातादिजनितत्वादिविशेषः । यथा "श्रमोऽरतिर्विवर्णत्वमिति" । तथा वाग्भटवाक्यमहेशादि । सामान्याभिप्रायेणैव तन्त्रान्तरं यथा "व्याधेर्जातिर्बुभूषा च पूर्वरूपेण लक्ष्यते । भावः किमात्मकत्वञ्च लक्ष्यते लक्षणेन तु" इति । तथाह पराशरः "पूर्वरूपं नाम येन भाविव्याधिविशेषो लक्ष्यते न तु दोषविशेषः" इति । विशिष्टं यथा उरःक्षतादौ लिङ्गान्येव वातादिजान्यव्यक्तानि । यदुक्तं तत्रैव "अव्यक्तं लक्षणं तेषां पूर्वरूपमिति स्मृतिः" । तथाह सुश्रुतः "सामान्यतो विशेषात्तु जृम्भात्यर्थं समीरणात् । पित्तान्नयनयोर्दाहः कफान्नान्नाभिनन्दनमिति" । हारीतेनाप्युक्तम् "इति पूर्वरूपमष्टानां ज्वराणां सामान्यतो विशेषात्तु जृम्भाङ्गमर्द्दभूयिष्ठं हृदयोद्वेगि वातजमिति" । प्राग्रूपं येन लक्ष्यते इत्यस्यार्थमाह रक्षितः "येन श्रमादिना उत्पित्सुः सामग्रीसाकल्यादुत्पादेच्छुरामयो रोगः दोषविशेषेण वातादिजन्यासाधारणवेपथ्वादिना अनधिष्ठितोऽसम्बद्धो लक्ष्यते ज्ञायते तत् प्राग्रूपमिति" । लिङ्गमव्यक्तमल्पत्वादित्यस्यार्थमाह स एव "प्राग्रूपमित्यनेन पूर्वोक्तेन सम्बन्धि लिङ्गं लक्षणम् अव्यक्तं नात्यभिव्यक्तं तत्र हेतुरल्पत्वात् नत्वावरणादियोगादव्यक्तत्वमित्यर्थः । अन्ये तु पूर्वरूपलक्षणमाहुः "स्थानसंश्रयिणः क्रुद्धा भाविव्याधिप्रबोधनम् । दोषाः कुर्वन्ति यल्लिङ्गं पूर्वरूपं तदुच्यते" इति । संक्षेपतस्तु लक्षणं भाविव्याधिबोधकमेव लिङ्गं पूर्वरूपम्" इति माधवकरविजयरक्षितौ ।

**पूर्व(र्व)वत्** अव्य॰ पूर्वस्येव पूर्वेण तुल्यं वा क्रियावति । १पूर्वेण तुल्यक्रियान्वितभेदे पूर्वस्य २तुल्ये च । पूर्वं कारणं विषयतयाऽस्त्यस्य मतुप् मस्य वः । ३कारणेन कार्य्यानुमाने न॰ । "अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतोदृष्टञ्च" गौत॰ सू॰ । "पूर्वं कारणं तद्वत् कारणलिङ्गकम् यथा मेघोन्नतिविशेषेण कार्य्यानुमानमिति" गौत॰ वृत्तिः । "तत्रैकं दृष्टस्वलक्षणसामान्यविषयं यत् तत् पूर्ववत्, पूर्वं प्रसिद्धं दृष्टस्वलक्षणसामान्यमिति यावत् तदस्य विषयत्वेनास्त्यनुमानज्ञानस्येति पूर्ववत् यथा धूमाद्वह्नित्वसामान्यविशेषः पर्वतेऽनुमीयते तस्य च वह्निसामान्यविशेषस्य स्वलक्षणो वह्निविशेषो दृष्टो रसवत्याम्" सां॰ त॰ कौ॰ ।

**पूर्व(र्व)वयस्** त्रि॰ पूर्वं वयः कालावस्थाभेदोऽस्य । १बाल्यावस्थान्विते । कर्म॰ । २बाल्यावस्थायाम् न॰ । वेदे बा॰ अच्समा॰ । पूर्ववयस बाल्यवयसि न॰ । शत॰ब्रा॰ १२।२।३।६

**पूर्व(र्व)वर्त्तिन्** त्रि० पूर्वं वर्त्तते वृत–णिनि। अन्यथा-सिद्धिशून्ये १प्रागवर्त्तिनि कारणे २प्राग्वर्त्तिमात्रे च त्रि०।

**पूर्व(र्व)वाद** पु०पूर्वो वादः। व्यवहारे प्रथमावेदने पञ्चभाषा-ऽपरपर्य्याये पूर्वपक्षशब्दे। "पूर्ववादं परित्यज्य योऽन्य-मालम्बते पुनः। पदसंक्रमणात् ज्ञेयो हीनवादी स वै नरः" मिताक्षरा।

**पूर्व(र्व)वादिन्** त्रि० पूर्वं वदति वद–णिनि। पूर्ववादकारके व्यवहारे प्रथमावेदनकर्त्तरि अर्थिनि। "मिथ्योक्तौ पूर्व-वादी तु प्रतिपत्तौ न सा भवेत्"। "मिथ्योत्तरे पूर्ववादी कारणे प्रतिवादिनि च" मिता०।

**पूर्व(र्व)वार्षिक** त्रि०पूर्वं वर्षाणाम् एकदेशिस० ततः "कालात् ठञ्" पा० ठञ् "अवयवादृतोः" पा० उत्तरपदवृद्धिः। वर्षाणां पूर्वभागभवे अवयवादित्युक्तेः पूर्वासु वर्षासु भवः इत्यर्थे ठञि पूर्वपदवृद्धिः पौर्ववर्षिक इत्येव सि० कौ०।

**पूर्व(र्व)वाह्** पु० पूर्वं वयसि वहति वह–णिव ७त०। पूर्व-वयसि वाहके शत०ब्रा० २।१।४।१७।

**पूर्व(र्व)वृत्त** न०पूर्वं वृत्तम्। कर्म०। प्राचीने वृत्ते इतिहासे।

**पूर्व(र्व)शारद** त्रि० पूर्वं शरदः एकदेशिस०। तत्र भवः अण्प् "अवयवादृतोः" पा० उत्तरपदवृद्धिः। शरदः पूर्वभवे।

**पूर्व(र्व)शैल** पु० कर्म०। उदयाचले जटा०। पूर्वाचलादयोऽप्यत्र।

**पूर्व(र्व)सक्थ** न० पूर्वं सक्थ्नः एकदेशिस०अचसमा०। सक्थ्नः पूर्वभागे। [दयोऽप्यत्र।

**पूर्व(र्व)समुद्र** पु० कर्म०। पूर्वदिक्स्थे समुद्रे पूर्वसागरा-

**पूर्व(र्व)सर** त्रि० पूर्वः सन् सरति कर्त्तरि उप पदे एव सृ+ट उप० स०। पूर्वाभूयगामिनि स्त्रियां ङीप्। अन्यत्र पूर्वं सरतीति वाक्ये अण् पूर्वसार अग्र-गामिनि त्रि०।

**पूर्वा(र्वा)तिथि** पु० गोत्रप्रवरर्षिभेदे।

**पूर्वा(र्वा)दि** पु० पूर्वः आदिर्यस्य। व्यवस्थायामसंज्ञायां सर्व-नामकर्मनिमित्ते १शब्दगणे स च गणः "पूर्व पर अवर द-क्षिण उत्तर अपर स्व–अन्तर। "पूर्वादिभ्यो नवभ्यो वा" पा० पूर्वे पूर्वा इत्यादि। पूर्वा आदिर्यस्याः।२पूर्वादिकक्रमे स्त्री

**पूर्वा(र्वा)निलः** पु० कर्म०। पूर्वदिक्स्थवायौ तद्गुणाश्च "पूर्वस्तु मधुरो वातः स्निग्धः कटुरसान्वितः। गुरुर्विदाह-शमनो वातदः पित्तनाशनः" राजनि०। "प्राग्वातो मधुरः क्षारो वह्निमान्द्यकरो गुरुः। वैरस्यगौरवौ-ष्ण्यानि करोत्यपक्षोषधीषु च। अम्लोत्पित्तवाताक्षेषु रागश्लेष्मदाहकृत्। सन्निपातज्वरश्वासत्वग्दोषार्शो विषक्रिमीन्। कोपयेदामवातञ्च घनसंघातकारणम्" राजवल्लभः।

**पूर्वा(र्वा)नुयोग** पु० दृष्टिवादभेदे "प्रतिकर्मसूत्रपूर्वानुयोग पूर्वगतचूलिकाः। पञ्च स्युर्दृष्टिवादभेदाः" हेम०।

**पूर्वा(र्वा)पर** त्रि०द्वन्द्व०। पूर्वस्मिन् अपरस्मिन् च देशे तयो-र्भावः ष्यञ्। पौर्वापर्य्य तद्भावे न०। क्वचिन्न पूर्वपद वृद्धिः। पूर्वापर्य्य तत्रार्थे न०।

**पूर्वा(र्वा)पहाना** स्त्री पूर्वमपहीयते अप–हा–कर्मणि ल्युट् अजा० टाप्। पूर्वापहानकर्मणि अजादिगणः।

**पूर्वा(र्वा)ह्ण** त्रि० पूर्वाह्णे भवः पक्षे यत्। पूर्वाह्णे भवे। पक्षे ठञ्। पौर्वा(र्वा)ह्णिक तत्रार्थे त्रि०।

**पूर्वा(र्वा)षाढ़ा** स्त्री कर्म०। अश्विन्यादिषु विंशे नक्षत्रे तत्-स्वरूपादिकमस्मिन्शब्दे उक्तम्।

**पूर्वा(र्वा)ह्ण** पु० पूर्वमह्नः एकदेशिस० टच्समा० अह्नादेशः "रात्राह्नाहाःपुंसि" पा० पुंस्त्वम्। दिनस्य पूर्वभागे पूर्वाह्णश्च त्रिधा विभक्तदिनस्य प्रथमभागः। "पूर्वाह्णो वै देवानां मध्याह्नो मनुष्याणामिति" श्रुतिः। अह्नः प्रथम-प्रहरद्वयकालश्च। "आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परम्" स्कन्दपु०। "आवर्त्तनात् पश्चिमदिग्वर्त्तिच्छायायाः परिवर्त्तनम्"। अतएव "अश्वत्थं वन्दयेन्नित्यं पूर्वाह्णे प्रहरद्वये" मल०त०।

**पूर्वा(र्वा)ह्ण(ह्णे)तन** त्रि० पूर्वाह्णे काले भवः ट्यु तुट् च "काञ्चतनेति" सप्तम्या अलुक्। १पूर्वाह्णभवे स्त्रियां ङीप्। पूर्वाह्णः सोढोऽस्य इति विग्रहे तु पूर्वाह्णतन इत्येव। २पूर्वाह्णसहनकर्त्तरि त्रि०।

**पूर्वा(र्वा)ह्णिक** त्रि० पूर्वाह्णः साधनतयाऽस्त्यस्य ठन् पूर्वाह्ण-साध्ये कर्मणि। "दैवं पूर्वाह्णिकं कुर्यादपराह्णे तु पैतृकम्" भा० आ० २३ अ०।

**पूर्वि(र्वि)न्** त्रि०पूर्वं कृतमनेन "पूर्वादिनिः" पा०इनि। १पूर्वं क्रियाकारके। वेदे तु "पूर्वैः कृतमिनयौ च" पा० इन। पूर्विण पूर्वैः कृते "आयान्तु नः पितरः सोम्यासो गम्भी-रेभिः पथिभिः पूर्विणेभिः" पित्रावाहनमन्त्रः। छान्दसौ रूपसिद्धिः। [स्मिन् दिने इत्यर्थे।

**पूर्वे(र्वे)द्युस्** अव्य० पूर्वस्मिन् अहनि पूर्व(र्व)+एद्युस्। पूर्व-

**पूर्वे(र्वे)षुकामशमी** स्त्री कर्म०। पूर्वदिग्वर्त्ति नगरभेदे अन्तोदात्तताऽस्य। पूर्वेषुकामशम्यां भवः अण् उत्तरपद-वृद्धिः पूर्वेषुकामशम तद्भवे त्रि०। [देशानकोणे विदिशि।

**पूर्वो(र्वो)त्तरा** स्त्री पूर्वस्याः उत्तरस्याश्चान्तराला दिक् ब०व०।

**पूर्व्य(र्व्य)** त्रि० पूर्वैः कृतम् "पूर्वैः कृतमिनयौ" पा० पक्षे य। पूर्वैः कृते पुराणे निघण्टुः।

**पूल** संहतौ (राशीकरणे) वा चु० उभ० पक्षे भ्वा०पर०सक० सेट्। पूलयति ते पूलति। अपूपुलत् त अपूलीत्।

**पूलक** पु० पूल-ण्वुल्। १टृणादेस्तूपे २धान्यतृणादिहुटौ कात्या०श्रौ० २२।३।३०।

**पूलाक** पु० पुलाक+पृषो०। तुच्छधान्ये। तस्य विकारः अवयवो वा पलाशा० अञ्। पौलाक तदवयवे तस्य विकारे च त्रि०।

**पूलास** त्रि० पूल-राशीकरणे घञ् तमस्यति अस-क्षेपे अण्। तृणादिस्तूपविक्षेपके तेन निर्वृत्तम् बह्वा० अण्। पौलास तन्निर्वृत्ते त्रि०।

**पूलासककुरण्ड** न० कुरण्डस्य पूलासकः राजद० परनि०। कुरण्डस्य तृणादेर्निरासके।

**पूलिका** स्त्री पूरिका+रस्य लः। पूपभेदे हेमच०।

**पूष** वृद्धौ अक०भ्वा०पर०सेट्। पूषति अपूषीत्। पुपूष।

**पूष** पु० पूष-वृद्धौ क। ब्रह्मदारुवृक्षे (तूत) अमरः।

**पूषक** पु० पूष-ण्वुल्। ब्रह्मदारुवृक्षे राजनि०।

**पूषणा** स्त्री पूष-ल्यु। कुमारानुचरमातृभेदे भा०शा०४७अ०। पूष्णः पृथिव्याः इदम् अण् वेदे न वृद्धिः नोपधा लोपः। पार्थिवे पदार्थे त्रि० ऋ०१०।५।५।

**पूषदन्तहर** पु० पूष्णः सूर्यभेदस्य दन्तं हरति हृ-अच्। दक्षयज्ञकाले पूष्णो दन्तोत्पाटके शिवांशे वीरभद्रे अदन्तशब्दे ११३ पृ० दृश्यम्।

**पूषध्र** पु० वैवस्वतमनोः पुत्रभेदे। मार्कपु० १११ अ०।

**पूषन्** पु० पूष-कनिन्। १सूर्ये आदित्यभेदे भा० आ०६५अ०। ङौ तु पूष्णि पूषणि पूषि। २पृथिव्यां स्त्री निघण्टुः। पूषणा शब्दे दृश्यम्। अयमन्तोदात्तः। स्वार्थे क। तत्रार्थे। पूषा अस्त्यस्य मतुप् वेदे नुट् अत्वम्। पूषण्वत् सूर्ययुक्ते पृथिवीयुक्ते च त्रि०। ऋ०१।८२।६।भा० [जटाध०।

**पूषभासा** स्त्री पूषेव भासते भास-अच्। इन्द्रनगर्यां

**पूषराति** पु० पूषा तदाख्यो देवो रातिर्दाता यस्य। सूर्यदेये वस्तुनि ऋ० १।२३।८।

**पूषात्मज** पु० ६त०। १मेघे २इन्द्रे देवे च। "आदित्याज्जायते वृष्टिरित्युक्तेर्वृष्ट्यधिपमेघस्य आदित्याज्जायमानत्वात् तथात्वम्। "इन्द्रम् पूषात्मजो यथा" भा० व०२० अ०। तत्र पूषात्मजेति पाठान्तरं वृष्ट्यधिपस्य मेघस्य सूर्याज्जातत्वात् तथात्वम्।

**पूषासुहृत्** पु० ६त०। शिवे तस्य स्वांशवीरभद्रेण पूषदन्तोत्पाटनात् तथात्वम्। अदन्तशब्दे दृश्यम्।

**पृ** व्यापारे तु०आत्म०सक० अनिट् प्रायेणायम् व्याङ्पूर्वः। व्याप्रियते व्यापृत। व्यापप्रिये। व्याप्रियते। व्यापृतः व्यापारः। [अपार्षीत्। पपार।

**पृ** प्रीतौ अक० प्रीणने सक० स्वा० पर० अनिट्। पृणोति

**पृ** पालने पूरणे च जुहो० पर० सक०अनिट् वा दीर्घे सेट्। पिपर्त्ति पिपृतः पिपूर्त्तः। अपार्षीत्-अपारीत्। पपार पप्रतुः पपरतुः। पूर्षः।

**पृ** प्रीतौ चु० उभ० सक० सेट्। पारयति ते-अपीपरत्-त।

**पृक्का** स्त्री पृच-कन् अप्। कृतम्। (पिड़िङ्) शाकभेदे रत्नमाला।

**पृक्त** त्रि० पृच-क्त। १सम्बन्धे २धने न० हेमच०।

**पृक्ति** स्त्री पृच-भावे क्तिन्। १सम्पर्के २स्पर्शे च अमरः।

**पृक्षस्** पु० पृच-बा० असि सुट् च। अन्ने निघण्टुः। ऋ० ३।७।१०।

**पृक्षे** अव्य० पृच-बा० क्से। संग्रामे निघण्टुः ऋ० १।६१।१२

**पृक्षुध्** स्त्री प्र+क्षुध्-क्विप् वेदे बा० प्रस्य पृसम्प्रसारणम्। प्रकृष्टक्षुधायाम् ऋ० १।१४१।४। [ईदित्। पृक्णः।

**पृच** सम्पर्के अदा०आत्म०अक०सेट्। पृक्ते अपर्चिष्ट। पपृचे

**पृच** संयमने सक० सम्पर्के अक०चु०उभ०पक्षे भ्वा०पर०सेट्। पर्चयति-ते पर्चति। अपीपृचत्-त अपपर्चत्-त अपर्चीत्। [कथनाय प्रेरणे अमरः।

**पृच्छा** स्त्री प्रच्छ-अङ् संप्रसारणम्। प्रश्ने १ज्ञातुमिच्छया

**पृच्छ्य** त्रि० प्रच्छ-बा० कर्मणि क्यप् सक्य०। जिज्ञास्ये।

**पृज** सम्पर्के, अदा० आ० अक० सेट्। पृक्ते अपर्जिष्ट। ईदित् पृग्णः।

**पृड** हर्षे तु०पर०अक०सेट्। पृडति। अपर्डीत् पपर्ड।

**पृण** तर्पणे तु०पर०सक०सेट्। पृणति अपर्णीत्। पपर्ण।

**पृत्** स्त्री पृ-पालने क्विप्। सेनायाम् ऋ० २।२७।१५।

**पृतना** स्त्री पृ-तनन्-किच्च।१सेनायाम् २सङ्ख्याविशेषान्वित-रथहस्त्यश्वादिसैन्यभेदे च (रथाः २४३ गजाः २४३ अश्वाः ७२९ पदातयः १२१५) अमरः। अनीकिनीशब्दे १६६ पृ० तत्रादिसंख्या दृश्या। ३संग्रामे ४मनुष्ये च निघण्टुः।

**पृतनाज्य** न० संग्रामे निघण्टुः। "पृतनानामजनाह्वा पृतनाज्यं जयनाह्वा" निरु० ८।२४।

**पृतनासाह्** पु० पृतनां सहते सह-ण्वि। इन्द्रे त्रिका०।

यस्य भक्ति यदान्ते च यस्य णत्वम्। पृतनाषाट्। अन्यत्र न णत्वम् पृतनासाहम् इत्यादि।

**पृतसुध** पु० पृतस्य धीयते धा-कर्मणि घञर्थे क अलुक्स०। १संग्रामे निघण्टौ पाठान्तरम्।

**पृथ** प्रक्षेपे चुरा०उभ०सक०सेट्। पार्थयति-ते अपीपृथत् त अपपर्थत्-त। [अमरः।

**पृथक्** अव्य०पृथ-बा०कक्रि। १भिन्ने २नानारूपे ३विनार्थे च।

**पृथक्त्व** न० पृथक् इत्यस्य भावः त्व। वैशेषिकोक्ते पृथक्त्व-बुद्धिसम्पादके गुणभेदे। तत्परीक्षा च कणा० सू० वृत्त्योर्दर्शिता यथा "तथा पृथक्त्वम्" सू०। "एकत्ववत्त्वतयैकपृथक्त्वमपि साधयितुमाह अपोद्धार व्यवहारस्तावदस्ति इदमस्मात् पृथगन्यदर्थान्तरमित्याकारः अपकृष्यावधिमपेक्ष्य य उद्धारो निर्द्धारणं सह्यपोद्धारः तत्र च न रूपादि तन्त्रं व्यभिचारादवध्यनिरूप्यत्वाच्च। नन्वन्योन्याभाव एव पृथक्त्वम् इदमस्मात् पृथगन्यदर्थान्तरमितिवद्भिन्नमिति प्रतीतेरन्योन्याभावावलम्बनत्वात्, न, पृथगादिशब्दानां पर्य्यायत्वेऽपि नान्योन्याभावार्थत्वं तत्र पञ्चमीप्रयोगानुपपत्तेः इदमस्मात् पृथक् इदमिदं न भवतीति प्रतीत्योर्भिन्नविषयत्वात्, न चान्योन्याभाववानर्थः पृथक्त्वम् घटः पट इत्यत्रापि पञ्चमी प्रयोगापत्तेः। ननु पृथगिति विशिष्ट इति प्रतीत्योरेकाकारत्वाद्वैशिष्ट्यमेव पृथक्त्वमिति चेन्न नैवम् दण्डवैशिष्ट्यदशायां नैतात् पृथगयं नैव इत्यपि प्रतीत्यापत्तेः। एवं शब्दविशिष्टे व्योम्नि बुद्धिविशिष्टे चात्मनि पृथक्त्वव्यवहारापत्तेः। अतएव वैधर्म्यमपि न पृथक्त्वं पाकरक्ते घटे श्यामाद्घटात् पृथगयं घट इति व्यवहारापत्तेः तद्विरोधिधर्मवत्त्वमेव हि तद्वैधर्म्यं तच्च श्यामानन्तरं रक्ततादशायामपि। न च सामान्यमेव पृथक्त्वं सामान्यस्यावध्यनिरूप्यत्वात् जातिसङ्करप्रसङ्गाच्च। सन्मात्रवृत्तित्वे सत्तया, द्रव्यमात्रवृत्तित्वे द्रव्यत्वे नान्यूनानतिरिक्तवृत्तित्वापत्तेः" वृत्तिः। "एकत्वैकपृथक्त्वयोरेकत्वैकपृथक्त्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः" क०सू०। "नन्वेकमेकत्वं रूपादिभ्यः पृथक्पृथक्त्वमिति व्यवहारादेकत्वेऽप्येकत्वं पृथक्त्वेऽपि पृथक्त्वमेवं तत्र तत्रा-मीत्यत आह यथाऽणुत्वमहत्त्वे नाणुत्वमहत्त्ववती तद्व्यवहारस्तत्र भाक्तस्तथैकत्वैकपृथक्त्वे नैकत्वैकपृथक्त्ववती तद्व्यवहारस्तत्र भाक्त इत्यर्थः। कर्मभिः कर्माणि गुणैर्गुणाः इत्यपि दृष्टान्तस्तदयं पूर्वदृष्टान्तस्तत्रैवैकत्वाद्यापन्नमेवात्र भासते यथा कर्माणि न कर्मवन्ति गुणाश्च न गुणवन्तस्तथैकत्वैकपृथक्त्वे न तद्वती इत्यर्थः" वृत्तिः।

**पृथक्त्वचा** स्त्री पृथक् त्वचा यस्याः। मूर्वायाम्। रत्नमा०

**पृथक्पर्णी** स्त्री पृथक् पर्णान्यस्याः ङीप्। (चाकुलिया) क्षुपभेदे अमरः।

**पृथक्क्षेत्र** पु० पृथक् भिन्नं क्षेत्रमुत्पत्तिस्थानमस्य। एकस्मात् पितुर्विभिन्नमातृजाते पुत्रे मिता०। [१भेदे २विशेषे।

**पृथगात्मता** स्त्री पृथक् आत्मा स्वरूपं यस्य तस्य भावः तल्।

**पृथगात्मिका** स्त्री पृथक् आत्मा स्वरूपं यस्याः कप् नलोपे कापि अत इत्त्वम्। व्यक्तौ। वह्नित्वे नैकरूपाणामपि वह्नीनां महानसीयत्वादिरूपेण तेषां स्वरूपभेदात् तथात्वम्।

**पृथग्जन** पु० पृथक् भिन्नो जनो महाजनो यस्मात्। १नीचे २मूर्खे ३पामरे च अमरः। [अमरः।

**पृथग्विध** त्रि० पृथक् भिन्ना विधा यस्य। नानारूपे

**पृथग्बीज** पु०पृथक् बीजमन्यस्य। भल्लातकवृक्षे (भेला) राजनि०

**पृथा** स्त्री कुन्तिभोजकन्यायाम् कुन्त्याम् जटाधरः।

**पृथाज** पु० पृथायां जायते जन-ड ७त०। १युधिष्ठिरादौ कुन्तीपुत्रे २अर्जुनवृक्षे राजनि०।

**पृथापति** पु० ६त०। पाण्डुराजे त्रिका०।

**पृथिका** स्त्री पृथग्थ्यजर्थे-क स्वार्थे क शतपद्याम् अत इत्त्वम्। शतपद्याम् शब्दमाला।

**पृथिन्** पु० प्रथ-बा० किनि संप्र०। वेनपुत्रे पृथुनामके नृपे "पृथी ह वै वैन्यो मनुष्याणां प्रथमोऽभिषिषिचे" शत०ब्रा०५।३ ५।४ "पृथी यद्वां वैन्यः" ऋ०८।९।१० "लोकेऽस्य पृथुसंज्ञा"।

**पृथ(थि)(वि)वी** स्त्री प्रथते विस्तारमेति प्रथ-षिवन् (षवन्) वा नि० संप्रसारणं षित्वात् ङीष् पृषो० वा गुणः। धरायाम् क्षितौ तद्गुणादिकं यथा

"रूपद्रवत्वप्रत्यक्षयोगि स्यात् प्रथमत्रिकम्। गुरुणी द्वे रसवती द्वयोर्नैमित्तिकोद्रवः। स्पर्शादयोऽष्टौ वेगश्च द्रव्यत्वञ्च गुरुत्वकम्। रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश। स्नेहहीना गन्धयुता क्षितावेते चतुर्दश"। "तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता। षड्विधस्तु रसस्तत्र गन्धोऽपि द्विविधो मतः। स्पर्शस्तु तस्या विज्ञेयो ह्यनुष्णाशीतपाकजः। नित्याऽनित्या च सा द्वेधा नित्या स्यादणुलक्षणा। अनित्या तु तदन्या स्यात् सैवावयवयोगिनी। सा च त्रिधा भवेद्देह इन्द्रियं विषयस्तथा। योनिजादिर्भवेद्देह इन्द्रियं घ्राणलक्षणम्।

विषयो द्व्यणुकादिस्तु ब्रह्माख्यान उदाहृतः” भाषाप०। तस्या अध्यात्मादिभेदा यथा “पृथिवी पञ्चमं भूतं प्राणस्याध्यात्ममुच्यते। अधिभूतं तथा गन्धो वायुस्तत्राधिदैवतम्” भा०आश्व० ४२अ०। तस्या उत्पत्तिकारणं यथा “शृणु तां वसुधाजन्म सर्वमङ्गलकारणम्। विघ्ननिघ्नकरं पापनाशनं पुण्यवर्द्धनम्। अहो केचिद्वदन्तीति मधुकैटभमेदसा। बभूव वसुधा जन्म तद्विरुद्धमतं शृणु। ऊचतुस्तौ पुरा विष्णुं तुष्टौ युद्धेन तेजसा। आवां जहि न यत्रोर्वी पायसा संवृतेति च। तयोर्जीवनकाले च प्रत्यक्षा साऽभवत् स्फुटम्। ततो बभूव मेदश्च मरणस्यान्तरन्तयोः। मेदिनीति च विख्यातेत्युक्ता यैस्तन्मतं शृणु। जलौता तथा पूर्वं वर्द्धिता मेदसा यतः। कथयामि च तज्जन्म सार्थकं सर्वसम्मतम्। पुरा श्रुतं यत् श्रुत्युक्तं धर्मवक्त्राच्च पुष्करे। महाविराट् शरीरस्य जलस्थस्य चिरं स्फुटम्। मलो बभूव कालेन सर्वाङ्गव्यापको ध्रुवम्। स च प्रविष्टः सर्वेषां तल्लोम्नां विवरेषु च। कालेन महता तस्माद्बभूव वसुधा मुने!। प्रत्येकं प्रतिलोम्नाञ्च कूपेषु सा स्थिरा स्थिता। आविर्भूता तिरोभूता सा जले च पुनःपुनः। आविर्भूता सृष्टिकाले तज्जलोपर्य्यवस्थिता। प्रलये च तिरोभूता जलाभ्यन्तरवस्थिता। प्रतिविश्वेषु वसुधा शैलकाननसंयुता। सप्तसागरसंयुक्ता सप्तद्वीपयुता सती। हिमाद्रिमेरुसंयुक्ता ग्रहचन्द्रार्कसंयुता। ब्रह्मविष्णुशिवाद्यैश्च सुरैर्लोकैस्तदालये। पुण्यतीर्थसमायुक्ता पुण्यभारतसंयुता। पातालसप्त तदधस्तदूर्द्धं ब्रह्मलोककः। ब्रह्मलोकश्च तत्रैव सर्वविश्वञ्च तत्र वै। एवं सर्वाणि विश्वानि पृथिव्यां निर्मितानि च। ऊर्द्धं गोलोकवैकुण्ठौ नित्यौ विश्वपरौ च तौ। नश्वराणि च विश्वानि सर्वाणि कृत्रिमाणि च। प्रलये प्राकृते ब्रह्मन्! ब्रह्मणश्च निपातने। महाविराडादिसृष्टौ सृष्टेः कृष्णेन चात्मना। नित्यैः स्थिता च प्रलये काष्ठाकाशेश्वरैः सह। चित्याधिष्ठातृदेवी सा वाराहे पूजिता सुरैः। मुनिभिश्च निभिर्विप्रैर्गन्धर्वादिभिरेव च। विष्णोर्वराहरूपस्य पत्नी सा श्रुतिसम्मता। तत्पुत्रो मङ्गलो देवी घण्टेशो मङ्गलात्मजः। भवनं यत्र सर्वेषां भूर्भूमिस्तेन कीर्त्तिता। वसुरत्नं या दधाति वसुधा सा वसुन्धरा। हरेरूरौ च या जाता सा चोर्वी परिकीर्त्तिता। धरा धरित्री धरणी सर्वेषां धारणात्तु या। इज्याश्च यागाधाराञ्च क्षौणी क्षीणा क्षये च या। महाक्षये क्षयं याति क्षितिस्तेन प्रकीर्त्तिता। काश्यपी कश्यपस्येयमचला स्थिररूपतः। विश्वम्भरा तद्भरणात् अनन्तानन्तरूपतः। पृथिवी पृथुकन्यात्वाद्विस्तृतत्वात् महामुने!” ब्रह्मवै०प्र०ख०८अ०।

तस्याः सर्वसहत्वेऽपि केषाञ्चित् भारासहनकथा यथा “कृष्णभक्तिविहीना ये ये च तद्भक्तनिन्दकाः। तेषां महापातकिनामशक्ता भारवाहने। स्वधर्माचारहीना ये नित्यकृत्यविवर्जिताः। श्रद्धाहीनाश्च वेदेषु तेषां भारेण पीड़िता। पितृमातृगुरुस्त्रीणां पोषणं पुत्रपोष्ययोः। ये न कुर्वन्ति तेषाञ्च न शक्ता भारवाहने। ये मिथ्यावादिनस्तात! दयासत्यविहीनकाः। निन्दका गुरुदाराणां तेषां भारेण पीड़िता। मित्रद्रोही कृतघ्नश्च मिथ्यासाक्ष्यप्रदायकः। विश्वासघ्नः स्थाप्यहारी तेषां भारेण पीड़िता। कल्याणयुक्तनामानि हरेर्नामैकमङ्गलम्। कुर्वन्ति विक्रयं ये वै तेषां भारेण पीड़िता। जीवघाती गुरुद्रोही ग्रामयाजी च लुब्धकः। शवदाही शूद्रभोजी तेषां भारेण पीड़िता। पूजायज्ञोपवासादिव्रतानि नियमानि च। ये ये मूढा विहन्तारस्तेषां भारेण पीड़िता। सदा द्विषन्ति ये पापा गोविप्रसुरवैष्णवान्। हरिं हरिकथां भक्तिं तेषां भारेण पीड़िता। शङ्खादीनाञ्च भारेण पीड़िताऽहं यथा विधे!। ततोऽधिकेन दैत्यानां तेषां भारेण पीड़िता” ब्रह्मवै०पु० जन्मख० ४ अ०।

**पृथिवीक्षित्** पु० क्षि—ऐश्वर्ये क्विप् ६त०। भूमीशे नृपे।

**पृथिवीञ्जय** पु० पृथिवीं जयति जि-वा० खच् मुम् च। दानवभेदे हरिवं० २३२ अ०।

**पृथिवीतीर्थ** न० तीर्थभेदे भा० वन० ८३ अ०।

**पृथिवीपति** पु० ६त०। १भूमिपतौ राजनि २ऋषभनामौषधौ च मेदि०। ३यमे हेम०। पृथिवीनाथादयोऽप्यत्र राजनि।

**पृथिवीपाल** पु० पृथिवीं पालयति पालि—अण् उप०स०। भूमिपाले। ण्वुल्। पृथिवीपालक तत्रार्थे पु०।

**पृथिवीभुज** पु० पृथिवीं भुनक्ति अवति भुज अवने क्विप्। भूपाले क। पृथिवीभुजोऽपि तत्रार्थे।

**पृथिवीरुह** पु० पृथिव्यां रोहति रुह—क। भूमिरुहे वृक्षे।

**पृथिवीशक्र** पु० पृथिव्यां शक्र इव। राजनि हेमच०। पृथिवीन्द्रभूमीन्द्रादयोऽप्यत्र।

**पृथु** त्रि० प्रथ–कु सम्प्र० । १विस्तीर्णे स्त्रियां गुणवचनोदन्तत्वात् ङीप् । २आदिराजे वेनपुत्रे सूर्य्यवंश्ये नृपभेदे पु० तदुत्पत्तिकथा भाग० ४।१५ अ० ।

अथ तस्य (वेनस्य) पुनर्विप्रैरपुत्रस्य महीपतेः । बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत । तद्दृष्ट्वा मिथुनं जातमृषयो ब्रह्मवादिनः । ऊचुः परमसन्तुष्टा विदित्वा भगवत्कलाम् । एष विष्णोर्भगवतः कला भुवनपालिनी । इयञ्च लक्ष्मीः संभूतिः पुरुषस्यानपायिनी । अत्र वः प्रथमो राज्ञां पुमान् प्रथयिता यशः । पृथुर्नाम महाराजो भविष्यति पृथुश्रवाः” । तेन च भगवदवतारेण पृथिवी समीकृता नानौषधीश्च मथिता दुहितृत्वेन कल्पिता च । तत्कथा उत्तराध्याये दृश्या ४।१८ अ० ।

“एवं पृथ्वादयः पृथ्वीं दुदुहुः स्वसमात्मनः । दोहवत्सादिभेदेन क्षीरभेदं कुरूद्वह ! । ततो महीपतिः प्रीतः सर्वकामदुघां पृथुः । दुहितृत्वे चकारेमां प्रेम्णा दुहितृवत्सलः । चूर्णयन् स्वधनुःकोट्या गिरिकूटानि राजराट् । भूमण्डलमिदं वैन्यः प्रायश्चक्रे समं विभुः” ३महादेवे भा० आनु० ८ अ० । चतुर्थमन्वन्तरे काव्ये ४सप्तर्षिभेदे हरिवं० ७अ० । काकुत्स्थे अनेनसः पुत्रे ५नृपभेदे १७अ० । अजमीढवंश्ये पारपुत्रस्य ६पुत्रभेदे हरिवं० २० अ० । क्रोष्टुवंश्ये चित्रकस्य पुत्रे ७नृपभेदे ३५ अ० । ८दानवभेदे २६अ० । ९अग्नौ मेदि० । १०कृष्णजीरके पु० अमरः ११त्वक्पत्र्यां १२हिङ्गुपत्र्याञ्च स्त्री मेदि० १३अहिफेने शब्दरत्ना० १४महति त्रि० शब्दर० १५विष्णौ पु० । “प्राणदः प्रणवः पृथुः” विष्णुस० ।

**पृथुक** पु० पृथु कं जलं पेयत्वेनास्त्यस्य अच् । १चिपिटके अमरः । तस्य चर्वणे बहुजलशोषणात् तस्य तथात्वम् । अस्य क्लीवत्वमपि “द्विःखिन्नमन्नं पृथुकं गुडं देशविशेषके” ब्रह्मवै०ख०२१अ० । पृथु कं शिरोऽस्य । २बालके पुंस्त्री० मेदि० । ३हिङ्गुपत्र्यां स्त्री शब्दरत्ना० ।

**पृथुकीय** त्रि० पृथुकाय हितं अपूपा०छ । पृथुकहिते । पक्षे यत् पृथुक्य तत्रार्थे त्रि० ।

**पृथुकीर्त्ति** स्त्री पृथानुजायाम् वसुदेवभगिनीभेदे “पृथुकीर्त्त्यां तु संजज्ञे तनयो वृद्धशर्मणः । करूषाधिपतिर्वीरो दन्तवक्रो महाबलः” । हरिवं० २७ अ० पृथुः कीर्त्तिरस्य । २बृहद्यशस्के त्रि० ।

**पृथुकोल** पु० कर्म० । राजवदरे राजनि० ।

**पृथुग्रीव** पु० १राक्षसभेदे रामा०आ०८स० । २विस्तीर्णग्रीवे त्रि०

**पृथुच्छद** पु० पृथु छदोऽस्य । १हरिदर्भे राजनि० । २वृहत् पत्रयुक्ते त्रि० ।

**पृथुपत्र** पु० पृथूनि पत्राण्यस्य । रक्तलशुने राजनि० ।

**पृथुपलाशिका** स्त्री पृथूनि पलाशान्यस्याः कप् कापि अत इत्त्वम् । शठ्याम् राजनि० ।

**पृथुरुक्म** पु० क्रोष्टुवंश्ये रुक्मकवचपुत्रभेदे हरिवं० ३७अ० ।

**पृथुरोमन्** पु० पृथूनि रोमाणि रोमस्थानीयशल्कान्यस्य । १मत्स्ये अमरः । २वृहल्लोमयुक्ते त्रि० स्त्रियां वा डाप् ।

**पृथुल** त्रि० पृथु+स्वार्थे लच् पृथुः पृथुत्वमस्त्यस्य सिध्मा० लच् वा । १स्थूले अमरः । २हिङ्गुपत्र्यां स्त्री जटाध० ।

**पृथुलाक्ष** त्रि० पृथुले अक्षिणी यस्य षच्समा० । १वृहन्नेत्रयुक्ते २पुरुवंश्ये चतुरङ्गपुत्रभेदे पु० हरिवं० ३१ अ० ।

**पृथुवक्त्र** त्रि० पृथु वक्त्रमस्य । १वृहन्मुखयुक्ते । २कुमारानुचरमातृभेदे स्त्री भा० श० ४७ अ० ।

**पृथुशिम्ब** पु० पृथ्वी शिम्बा यस्य । श्योनाकभेदे राजनि० ।

**पृथुशेखर** पु० पृथु शेखरं यस्य । पर्वते त्रिका० ।

**पृथुश्रव(स)** त्रि० पृथु श्रवः कर्णोऽस्य । १वृहत्कर्णे अदन्तः २कुमारानुचरभेदे भा० श० ४६ अ० । सान्तस्तु । ३शशविन्दुनृपपुत्रभेदे पु० हरिवं० ३६अ० ।

**पृथुसेन** पु० अनुवंश्ये रुचिरनृपपुत्रभेदे हरिवं० २० अ० ।

**पृथुस्कन्ध** पुंस्त्री पृथुः स्कन्धोऽस्य । शूकरे राजनि० स्त्रियां जातित्वात् ङीष् ।

**पृथूदक** न० तीर्थभेदे भा० व० ८६ अ० ।

तच्च सरस्वतीप्रदेशस्थितम् यथोक्तम् “जातिस्मरो रुषङ्गुस्तु गङ्गाद्वारे सदास्थितः । अन्तकालं ततो दृष्ट्वा पुत्रान् वचनमब्रवीत् । इह श्रेयो न पश्यामि नयध्वं मां पृथूदकम् । विज्ञाय तस्य तद्भावं रुषङ्गोस्ते तपोधनाः । तं वै तीर्थमुपानिन्युः सरस्वत्यास्तपोधनम् । स तैः पुत्रैः समानीतः सरस्वत्यां समीपतः । स्तुत्वा तीर्थगुणान् सर्वान् प्राहेदमृषिसत्तमः । सरस्वत्यास्तु तीरे यः संत्यजेदात्मनस्तनुम् । पृथूदके जप्यपरो नैनं श्वो मरणं लभेत् । तत्रैव ब्रह्मयोन्यस्ति ब्रह्मणा यत्र निर्मिता” वामनपु० ३८ अ० ।

**पृथूदर** पुंस्त्री० पृथु उदरं यस्य । १मेषे स्त्रियां जातित्वात् ङीष् । २वृहत्कुक्षौ त्रि० हारा० । स्त्रियां स्वाङ्गत्वात् वा ङीष् ।

**पृथ्वादि** पु० “पृथ्वादिभ्य इमनिच् वा” पा० भावे इमनिच्प्रत्ययनिमित्ते शब्दगणे स च पा०ग० उक्तो यथा

"पृथु मृदु महत् पटु तनु लघु बहु साधु आशु उरु गुरु बहुल खण्ड दण्ड चण्ड अकिञ्चन चोड़ पाक वत्स मन्द स्वादु ह्रस्व दीर्घ प्रिय वृष ऋजु क्षिप्र क्षुद्र अणु"।

**पृथ्वी** स्त्री पृथुत्वगुणयुक्ता स्त्री ङीष्। १पृथुत्वयुक्तायां स्त्रियां २भूमौ ३हिङ्गुपत्र्यां ४कृष्णजीरके च। ५स्थूलैलायाम् ६पुनर्नवायाम् मेदि०। ७वृत्तार्हन्मातृभेदे हेम० स्वार्थे क। पृथ्वीका। वृहदेलायाम् हिङ्गुपत्र्यां कृष्णजीरके च। तत्र पृथिव्याः पृथुराजेन दुहितृत्वस्य कल्पनात् पुंयोगे ङीष्। "दुहितृत्वमनुप्राप्ता देवी पृथ्वी तथोच्यते" अग्निपु०। "जसौ जसयलावसुग्रहयतिश्च पृथ्वी गुरुः" वृ० र० उक्ते दशसप्ताक्षरपादके छन्दोभेदे।

**पृथ्वीकुरवक** पु० पृथ्व्यां भूमौ कुरवक इव शुभ्रत्वात्। श्वेतमन्दारके राजनि०। [२गणेशे हेमच०।

**पृथ्वीगर्भ** पु० पृथ्वीव लम्बमानो गर्भ उदरमस्य। १लम्बोदरे

**पृथ्वीज** त्रि० पृथ्व्यां जायते जन–ड ७त०। १भूमिजाते २गडलवणे न० राजनि०।

**पृथ्वीधर** पु० पृथ्वीं धरति धृ–अच्। महीधरे पर्वते।

**पृदाकु** पु० स्पर्द–वा० आकु सम्प्रसारणे सलोपश्च। सर्पे अमरः १वृश्चिके २व्याघ्रे ३चित्रके मेदि०। ४गजे ५वृक्षे च। संज्ञिप्रसारोपादिवृत्तिः। [ऋ०१।७।१५।

**पृदाकुसानु** पु० पृदाकुः गज इव सानुः समुच्छ्रयः। इन्द्रे च

**पृशन्य** पु० स्पृश–भावे क्यु पृषो० सलोपः पृशनं स्पर्शः तत्र साधु यत्। स्पर्शसाध्ये ऋ० १।७१।५ आत्मनः पृशनमिच्छति क्यच् उ। पृशनायु तदिच्छौ ऋ० १।८४।११।

**पृश्नि** त्रि० स्पृश–प्रच्छ–वा नि किच्च पृषो० सलोपः। १स्वल्पे २दुर्बलास्थियुक्ते ३खर्वे च अमरः। ४रश्मौ श्रीकृष्णस्य जन्मान्तरे मातृभूतायां देवकीरूपेण द्वापरे प्रादुर्भूतायां ५वसुदेवपत्न्याञ्च स्त्री। "त्वमेव पूर्वसर्गे भूः पृश्निः स्वायम्भुवे सति!। तदायं सुतपा नाम प्रजापतिरकल्मषः। अहं सुतो वामभवं पृश्निगर्भ इति श्रुतः। तयोर्वां पुनरेवाहमदित्यामास कश्यपात्। उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः। तृतीयेऽस्मिन् भवेऽहं वै तेनैव वपुषा हि वाम्। जातो भूयस्तयोरेव" भाग०१०।३ अ०। देवकीं प्रति वासुदेववाक्यम्। ५सामरके त्रि० निघण्टुः ६सवितृःपत्नीभेदे स्त्री भाग० ६।१८।१। ७ऋषिभेदे पु०भा० द्रो० १९१अ०। युधाजिन्नृपस्य माद्र्यां जाते ८पुत्रभेदे अग्निपु०। [शब्दमाला।

**पृश्निका** स्त्री पृश्नि स्वल्पं कं जलमत्र। कुम्भिकायां (पाना)

**पृश्निगर्भ** पृश्नेः सुतपःप्रजापतिपत्न्याः गर्भः साधनत्वेनास्त्यस्य अच्। नारायणे पृश्निशब्दे दृश्यम्।

**पृश्निगु** त्रि० पृश्नयोनानावर्णत्वात् साधरणा गावो रश्मयोऽस्य। नानावर्णदीप्तिके ऋ० १।११२।७। वेदे क्वचित् "गोस्त्रियोरुपसर्जनस्येति न ह्रस्वः" ऋ० ७।१८।१०। उदा० दृश्यम्। [विख्यातायां लतायाम् अमरः।

**पृश्निपर्णी** स्त्री पृश्नि स्वल्पं पर्णमस्याः ङीप्। (चाकुलिया)

**पृश्निभद्र** पु० ७त०। पृश्निगर्भजाते नारायणांशभेदे।

**पृश्निमातृ** पु० पृश्निः नानावर्णा भूमिर्मातेव जन्मभूमिर्यस्य समासान्तविधेरनित्यत्वात् न कप्। नानावर्णभूमिजाते ऋ० १।२३।१७।

**पृश्निशृङ्ग** पु० पृश्नि शृङ्गमग्रमस्य। गणेशे त्रिका०। तस्य मुखे गजमुखत्वेन शृङ्गाकारत्वात् तथात्वम्। पृश्निः शृङ्गमिवास्य उत्पत्तिस्थानत्वेन। पृश्निगर्भजाते २विष्णौ शब्दमाला। [(पाना) शब्दमाला।

**पृश्नी** स्त्री पृश्नि+कृदिकारान्तत्वात् वा ङीष्। कुम्भिकायां

**पृष** सेके भ्वा०आ०सक०सेट्। पर्षते अपर्षिष्ट। पपृषे।

**पृषत्** न० पृष–अति कित् शतृवच्च कार्यं तेन पृषन्ति। १विन्दौ अमरः। २सेकयुक्ते त्रि०। अस्य विन्दौ बहुत्वविवक्षायां न…विच्छन्त्ये वै।

**पृषत** पुंस्त्री० पृष–अतच् किच्च। १शुभ्रविन्दुमति मृगभेदे स्त्रियां जातित्वात् ङीष्। २विन्दौ पु० अमरः। ३वायुवाहने मृगे पुंस्त्री निघण्टुः। "पृषत्यो मरुताम्" इत्यत्र स्त्रीत्वमविवक्षितम्। भरद्वाजसुते ४नृपभेदे पु० भा० आ० १३ अ०।

**पृषतांपति** पु० ६त० अलुक्स०। वायौ जटा०।

**पृषताश्व** पु० पृषतो मृगभेदोऽश्व इव गतिसाधनं यस्य। वायौ अमरः।

**पृषत्क** पु० पृषन्ति विन्दव इव को वायुरत्र। वाणे अमरः।

**पृषदंश** पु० पृषति विन्दौ अंशोऽस्य। वायौ तत्र उत्तृषा० भवादौ अञ्। पार्षदंश तद्भवादौ त्रि०। [वायौ अमरः

**पृषदश्व** पु० पृषन् मृगभेदोऽश्व इव वाहकत्वात् यस्य।

**पृषदाज्य** न० पृषद्युक्तं दधिविन्दुयुक्तं दधिसेकयुक्तं वा आज्यम् शाक०त०। दधिसिक्ते घृते अमरः।

**पृषद्वल** पु० पृषन्निव बलमस्य। वायोरश्वे शब्दमाला।

**पृषध्र** पु० वैवस्वतमनोःपुत्रभेदे हरिवं० १० अ०। [१५६अ०

**पृषद्ध्रु** पु० द्वापरयुगीये युधिष्ठिरपक्षस्थे नृपभेदे भा०द्रो०

**पृषन्ति** पु० पृष–वा झिच्। विन्दौ। "पयः पृषन्तिभिः स्पृष्टा

यान्ति वाताः शनैः शनैः" आश्ववतीविशदपद्याम्।

**पृषभाषा** स्त्री पृष—सेके क तादृशी भाषा यस्याः। अमरावत्यामिन्द्रनगर्य्याम् शब्दमाला०।

**पृषाकरा** स्त्री पृषदिवाकीर्य्यते आ+कृ—कर्मणि अच् पृषो०। क्षुद्रशिलायाम् (बाटखारा) शब्दच०।

**पृषातक** न० पृषन्तं पृषदाज्यं तकते हसति तक-अच्। पृषो०। दधियुक्तघृते हेमच०।

**पृषोदर** त्रि० पृषदिवोदरं यस्य पृषो० तलोपः। १सल्पोदरे पृषन्ति उदरे यस्य। २वायौ पु०।

**पृषोदरादि** "पृषोदरादीनि यथोपदिष्टम्" पा० विहित लोपादिनिमित्ते शब्दगणे स च गणः पा० ग० सू० उक्तो यथा "पृषोदर पृषोत्थान बलाहक जीमूत श्मशान उलूखल पिशाच वृषी मयूर"। "वर्णागमो वर्णविपर्य्ययश्च द्वौ चापरौ वर्णविकारनाशौ। धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्"। एतच्च समासविषयकमेवेति नियमो न प्राचीनकारिकायां हंससिंहादिशब्दानामपि पृषोदरादित्वात् सिद्धत्वोक्तेः। अस्यार्थः सि० कौ० मनोरमादौ यथा

"पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि स्युः। पृषत् उदरम् पृषोदरम्। तलोपः। वारिवाहको बलाहकः। पूर्वपदस्य वः उत्तरपदादेश्च लत्वम्। "भवेद्वर्णागमात् हंसः सिंहो वर्णविपर्य्ययात्। गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम्" दिक्शब्देभ्यस्तीरस्य तारभावो वा। दक्षिणतारम् दक्षिणतीरम्। उत्तरतारम् उत्तरतीरम्। दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेष्टुत्वञ्च। दुःखेन दाश्यते दूडाशः। एवं दुःखेन नाश्यते दूणाशः दुःखेन दभ्यते दूडभः। ध्यः ष्टिभ्यः। दभ्नोतेर्लोपो निपात्यते। दुष्टं ध्यायतीति दूढ्यः। आतश्चेति कः। मुवन्तोऽस्यां सीदन्तीति वृसी। मुवच्छब्दस्य वृ आदेशः। सदेरधिकरणे डट्। आकृतिगणोऽयम्"। छन्तेः पश्चाद्यचि नुमागमे हंस इति हिंसेस्तु पश्चाद्यचि हकारसकारयोः स्थानव्यत्ययात् सिंह इति गूढोत्मेत्यत्र आकारविकृत्या उकारादेशः पृषोदरमित्यत्र तकारवर्णलोपः इत्येवं रीत्या सर्वत्र बोध्यम्। एतन्मूलकमेव "लुम्पेदवश्यमः कृत्ये तुम् काममनसोरपि। समो वा हिततयोर्मांसस्य पचियुजघ्नोरिति"। अन्नमिति शेषः कृत्यप्रत्ययान्ते उत्तरपदे अवश्यम्शब्दस्यान्त्यमकारं लुम्पेत्। अवश्यपाव्यः। तथा कामशब्दमनःशब्दयोः परतः तुम्शब्दस्यान्त्यम्। गन्तुकामः गन्तुमनाः। तुमिति भावार्थे प्रथमा। हिततत्शब्दयोः परतः समोऽन्त्यं मकारम् वा लुम्पेत्। सहितः संहितः सततः सन्ततः। युजपचपरपचिधातौ परे मांसशब्दान्त्याकारं लुम्पेत्। मांसपचनः मांसपचनः मांसपाकः मांसपाक इत्यादि।"

**पृष्ट** त्रि० पृषु सेके प्रच्छ—वा क्त। १सिक्ते—यजु०२१।२८। २जिज्ञासिते "नापृष्टः कस्यचिद् ब्रूयात्" मनुः।

**पृष्टहायन** पु० नित्यक०। १धान्यभेदे २गजे पुंस्त्री मेदि०। स्त्रियां जातित्वात् ङीष्।

**पृष्टि** स्त्री पृष+सेके भावे क्तिन्। सेके शत०ब्रा० ७।५।१।१२। २।१।१५। प्रच्छ—क्तिन्। २जिज्ञासायाम्। पृष—कर्त्तरि क्तिच् दीर्घः; ३पार्श्वस्थे स्त्री ऋ०१०।८।१० पृष्टीः पार्श्वस्थान् भा०। ४पृष्ठदेशे यजु० २।८। 'पृष्टीः पृष्ठदेशः" वेददीप०। पृष्टिवह पृष्ठ्यावहः। पृष्ठवहे अथ० १८।४।१०

**पृष्ठ** न०पृष—स्पृश—वा थक् नि० तनोः पश्चाद्भागे अमरः। निरुक्ते ४।३"पृष्ठं संस्पृष्टमङ्गैः" इत्युक्तं युक्तञ्चैतत् पृषधातोस्तु तद्रूपसिद्धेः निपातनानुपपत्तेः अतः स्पृशधातोरेव निपा०। २स्तोत्रविशेषे स च ता०ब्रा० भाष्ये उक्तो यथा "एकस्मिन् सूक्ते विद्यमानानां तिसृणामृचां ब्राह्मणोक्तविधानेन सप्तदशधाभ्यासः सप्तदशस्तोमः माध्यन्दिनेषु स्तोत्रेषु पृष्ठशब्दः श्रूयते "सप्तदशानि पृष्ठानि इति" तानि पृष्ठानि द्विविधानीति चोदकप्राप्तत्वात् सर्वपृष्ठशब्देनानूद्यन्ते इत्येकः पक्षः। रथन्तर पृष्ठ बृहत्पृष्ठयोर्ज्योतिष्टोमे विकल्पितयोरिहापि चोदकेन विकल्पप्राप्तौ सर्वशब्देन समुच्चयो विधीयते। तथा सत्यनुवादकृतं वैयर्थ्यं न भविष्यति इति द्वितीयः। सर्वत्वं बहुषु मुख्यं न तु द्वयोः। तस्मादनेन सर्वपृष्ठशब्देन षट्संख्याकानि पृष्ठान्यतिदिश्यन्ते षडहे प्रतिदिनमेकैकं पृष्ठं विहितम्। तानि च पृष्ठानि षट् रथन्तरबृहद्वैरूपवैराजशाक्वररैवतसामभिः निष्पाद्यानि"।

**पृष्ठगोप** पु० पृष्ठं गोपायति गुप—वा भयाभावे अनुक्। पृष्ठदेशरक्षके योधभेदे भा० आ० २०१ अ०।

**पृष्ठग्रन्थि** त्रि० पृष्ठे ग्रन्थिर्यस्य। (कुजो) कुब्जे हेमच०।

**पृष्ठचक्षुस्** पु० पृष्ठे पश्चाद्भागे चक्षुः दृष्टिः तद्व्यापारोऽस्य। पश्चाद्दृष्टियुक्ते भल्लूके शब्दार्थक०।

**पृष्ठज** त्रि० पृष्ठे पश्चात् जायते जन—ड। पश्चाद् जाते भा० आ० ६३ अ०।

**पृष्ठजाह** त्रि० पृष्ठस्य मूलं कर्ण्णा० मूले जाहच्। पृष्ठमूले।

**पृष्ठतल्पन** न० तल्पमिवाचरति तल्प+क्विप् नामधातुः भावे ल्युट्। पृष्ठस्य तल्पनं तल्पवदाचरणम्। (पिठे शोओया) प्रवेष्टे त्रिका०।

**पृष्ठतस्** अव्य० पृष्ठ+तसिल्। पश्चाद्भागे इत्यर्थे।

**पृष्ठदृष्टि** पु० पृष्ठे दृष्टिस्तद्व्यापारोऽस्य। भल्लूके राजनि०।

**पृष्ठमर्म्मन्** न० ७त०। सुश्रुतोक्ते पृष्ठस्थमर्म्मभेदे स च तत्रोक्तो यथा

"अत ऊर्द्ध्वं पृष्ठमर्म्माण्यनुव्याख्यास्यामः। तत्र पृष्ठवंशमुभयतः प्रतिश्रोणीकाण्डमस्थिनी कटीकतरुणे नाम मर्म्मणी तत्र शोणितक्षयात् पाण्डुर्विवर्णो हीनरूपश्च म्रियते। पार्श्वजघनबहिर्भागे पृष्ठवंशमुभयतो नातिनिम्ने कुकुन्दरे नाम मर्म्मणी तत्र स्पर्शाज्ञानमधःकाये चेष्टोपघातश्च। श्रोणीकाण्डयोरुपर्य्याशयाच्छादनौ पार्श्वान्तरप्रतिबद्धौ नितम्बौ नाम तत्राधःकायशोषो दौर्ब्बल्याच्च मरणम्। अधःपार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ययोस्तिर्य्यगूर्द्ध्वञ्च जघनात् पार्श्वसन्धी नाम तत्र लोहितपूर्णकोष्ठतया म्रियते। स्तनमूलादृजुभयतः पृष्ठवंशस्य बृहती नाम तत्र शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैर्म्रियते। पृष्ठोपरि पृष्ठवंशमुभयतस्त्रिकसम्बद्धे अंसफलके नाम तत्र बाह्वोः स्वापः शोषो वा। बाहुमूर्द्धग्रीवामध्येऽंसपीठस्कन्धनिबन्धनावंसौ नाम तत्र स्तब्धबाहुता। एवमेतानि चतुर्दश पृष्ठमर्म्माणि व्याख्यातानि"।

**पृष्ठमांस** न० पृष्ठस्य मांसम्। पश्वादीनां पृष्ठस्थे मांसे। तस्याभक्ष्यता मार्कपु० उक्ता यथा "पृष्ठमांसं वृथामांसं गर्ह्यं मांसं च पुत्रक!। न भक्षयीत सततं प्रत्यक्षलवणानि च"।

**पृष्ठमांसाद** त्रि० पृष्ठे परोक्षे मांसाद इव। १परोक्षे शास्त्रेन वाक्याभिधायिनि पुरुषे दोषोद्घोषके त्रिका०। "कृत्स्त्या विभवान्वेषीत्यतः कृत्स्त्येति समाकर्षात् वाक्याभिधानेऽन्वये तथार्थत्वम्। पृष्ठमांसादनशब्दे दृश्यम्। पश्वादेः २पृष्ठमांसभक्षके त्रि०।

**पृष्ठमांसादन** न० पृष्ठे परोक्षे मांसादनमिव। "पृष्ठमांसादनं तत् यत् परोक्षे दोषकीर्त्तनम्" हेमच० उक्तेऽर्थे २पश्वादीनां पृष्ठमांसस्य भक्षणे च।

**पृष्ठयज्वन्** पु० पृष्ठैः रथन्तरादिभिरिष्टवान् यज—वनिप्। रथन्तरादिभिः षड्भिःस्तोत्रसमूहैरिष्टवति ऋ० ५।५४।१

**पृष्ठयान** न० पृष्ठेन यानं गमनम्। (पिठे याओया) पृष्ठेन गमने। तच्च अर्शोरोगे निदानं सुश्रुते उक्तं अर्शःशब्दे दृश्यम्।

**पृष्ठवंश** पु० ६त०। (पिठेर दाँडा) पृष्ठास्थि हेमच०। "चतुर्विंशतिः पृष्ठवंशे" सुश्रुतोक्तेः तत्र चतुर्विंशतिरस्थीनि। पृष्ठमर्म्मनशब्दे दृश्यम्।

**पृष्ठवास्तु** न० ७त०। बलिदातुः पृष्ठभागस्थे वास्तुनि "पृष्ठवास्तुनि कुर्वीत बलिं सर्वात्मभूतये" मनुः। "उद्दिष्टो परिच्छिन्नं पृष्ठवास्तु" २कुल्लूकभट्टोक्तेऽर्थे च।

**पृष्ठवाह्** त्रि० पृष्ठं पश्चाद्भागं वहति वह—ण्वि। १पश्चाद्भागवाहके हरिवं० १६६ श्लो०। भत्वे वाह ऊठ्। पृष्ठौहः। स्त्रियां ङीप्। पृष्ठं युगपार्श्वं वहति वह—ण्वि। २युगपार्श्ववाहकवृषे [वृषे हेमच०।

**पृष्ठवाह्य** पु० पृष्ठेन वाह्यं वहनं यस्य। पृष्ठेन भारवाहके।

**पृष्ठशय** त्रि० पृष्ठे शेते पृष्ठरूपाधिकरणोपपदे कर्त्तरि अच्। पृष्ठे शायिनि उत्तानशये।

**पृष्ठशृङ्ग** पुंस्त्री पृष्ठे शृङ्गमस्य। वनच्छागे हेमच०। स्त्रियां जातित्वात् ङीष्। [मेदि०।

**पृष्ठशृङ्गिन्** पु० ७त०। १महिषे २नपुंसके ३भीमसेने च

**पृष्ठसुख** पु० पृष्ठे सुखमस्य अलुक्स०। कुमारानुचरभेदे भा०श०४६अ०।

**पृष्ठोदय** पु० पृष्ठेनोदयो यस्य। ज्योतिषोक्ते पृष्ठेनोदययुक्ते राशिभेदे "अजो गोपतियुग्मञ्च कर्किधन्विमृगास्तथा। निशासंज्ञाः स्मृतास्चैते शेषास्त्वन्ये दिनात्मकाः। निशासंज्ञा विमिथुनाः स्मृताः पृष्ठोदयास्तथा। शेषाः शीर्षोदया ह्येते मीनश्चोभयसंज्ञकः"।

**पृष्ठ्य** न० पृष्ठानां स्तोत्रभेदानां समूहः "पृष्ठस्योपसंख्यानम्" वार्त्ति० समूहे यत्। १स्तोत्रसमूहे। पृष्ठे भवः यत्। २पृष्ठभवे त्रि०। "सोमयागेषु छन्दोगैः क्रियमाणः पृष्ठ्यादिसंज्ञिका स्तुतिः स्तोमः" मि०कौ०। पृष्ठेन वहति यत्। ३पृष्ठेन भारवाहके अश्वे (वेटोघोड़ा) अमरः।

**पृष्ठ्यस्तोम** पु० पृष्ठ्यस्तोमः साधनतयाऽस्त्यस्य अच्। साम-वेदप्रसिद्धेषु षट्सु क्रतुभेदेषु "पृष्ठ्यस्तोमास्त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाः" कात्या०श्रौ०२२।६।२६ "पृष्ठस्तोमसंज्ञकाः षट् क्रतवो भवन्ति त्रिवृदादयः" कर्कः।

**पृष्णि** पु० पृश्नि+पृषो०। नानावर्णयुक्ते भरतः २पार्ष्णिभागे स्त्री उणादि०।

**पॄ** पालने पूर्त्तौ च क्र्या० स्वा० पर० सक० सेट्। आमन्त्र्ये परे

ह्रस्वः। पृणाति अपारीत्। पपार पपरतुः पप्रतुः।
पृ पूर्त्तौ चु० उभ० सक० सेट्। पारयति-ते अपीपरत् त।
पेचक पु० स्त्री पच-वुन् अतएत्त्व। (पँचा) १उलूके स्त्रियां जातित्वात् ङीष्। २गजपुच्छमूलोपान्ते ३गुदाच्छादकमांसपिण्डभेदे पु० अमरः। ४पर्य्यङ्के ५यूके पु० विश्वः। ६मेघे शब्दर०। [शब्दरत्ना० स्त्रियां ङीष्।
पेचकिन् पु० पेचकः पुच्छमूलोपान्तोऽस्त्यस्य इनि। गजे
पेचिल पुंस्त्री० पच+बा० इलच् अतएत्त्व। गजे त्रिका०। स्त्रियां जातित्वात् ङीष्।
पेचु न० पचि-उन् अत एत्वम्। पेचल्यां त्रिका०। [त्रिका०।
पेचुलो स्त्री पच-उलच् अतएत् गौरा० ङीष्। शाकभेदे।
पेट पु० पिट-अच्। १प्रहस्ते राजनि०, २संहतिकारके त्रि०
पेटक पु०न० पिट-ण्वुल्। पुस्तकादीनां स्थापनार्थे वेत्रादिनिर्मिते १पदार्थे २कदम्बके ३समूहे च मेदि०। ४वंशादिनिर्मिते सम्पुटकाकारे (पेटारा) पदार्थे पु० अमरः।
पेटाक पु० पेटक+पृषो०। पेटके द्विरूपकोषः।
पेटिका स्त्री पिट-ण्वुल् कापि अत इत्वम्। (टेपारि) क्षुपभेदे रत्नमाला।
पेटी स्त्री पिट-अच् स्वल्पार्थे ङीष्। क्षुद्रपेटके अमरः।
पेडा स्त्री पेट+पृषो०। बृहत्पेटिकायां भरतः।
पेढाल पु० अवसर्पिण्यां जिनोत्तमभेदे हेमच०।
पेण गतौ पेषे च सक० श्लेषे अक० भ्वा० पर० सेट्। पेणति अपेणीत्। ऋदित् चङि न ह्रस्वः अपिपेणत् त।
पेत्व न० पा-पाने कर्मणि इत्वन्। १अमृते २घृते च उज्ज्वल०
पेदु पु० राजभेदे ऋ० १।११६।१० भा०।
पेय त्रि०पा-पाने कर्मणि यत्। १पातव्ये २जले मेदि०।३दुग्धे शब्दच०। ४अष्टविधान्नान्तर्गते तरलद्रव्यमात्रे अन्नभेदे "भोज्यं पेयं तथा चूष्यं लेह्यं खाद्यञ्च चर्व्यणम्। निष्पेयञ्चैव भक्ष्यं स्यादन्नमष्टविधं स्मृतम्" राजनि०। ५सिक्थयुक्तपेयद्रव्ये स्त्री। "पेया स्वेदाग्निजननी वातवर्चोऽनुलोमनी। क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरनाशिनी" राजव०। ६आपायां मेदि०।
पेयूष पु०न० पीय-ऊषन् बाहुलकात् पक्षे गुणः। १अमृते २नवघृते। "सप्तरात्रप्रसूतायाः क्षीरं पेयूषमुच्यते" हारा० उक्ते आसप्तरात्राभ्यन्तरकालीने ३दुग्धे च।
पेरज न० उपमणिभेदे राजनि०। पिरोजशब्दे दृश्यम्।
पेरा स्त्री पि-बा० रे। वाद्यभेदे भट्टिः १७।७।
पेरु पु० पीयते रसान् पी-रु। १सूर्य्ये २वह्नौ च उज्ज्वल०। पुरु-उ कमण्ड्वादेराकृतिगणत्वात् नि०। ३समुद्रे त्रिका०।
पेरुक पु० राजभेदे ऋ० ६।६३।९
पेरोज न० उपमणिभेदे (पीरोजा) राजनि०। तच्च द्विविधं पीताभं हरिताभञ्च। तस्य गुणाः "पेरजं सुकषायं स्यान्मधुरं दीपनं परम्। स्थावरं जङ्गमञ्चैव संयोगाच्च यथाविषम्। तत्सर्वं नाशयेत् शीघ्रं शूलं भूतादिदोषजम्। पाठान्तरं यथा "पेरजं सुकषायं स्यान्मधुरं दीपनं द्वयोः। स्थावरादिविषघ्नं स्याद्धरितञ्चापरं स्मृतम्। पीताभं नाशयेच्छीघ्रं शूलं तिमिरभूतजम्" राजनि०।
पेल कम्पे अक० गतौ सक० भ्वा० पर० सेट्। पेलति अपेलीत्। ऋदित् चङि न ह्रस्वः अपिपेलत् त। निघण्टौ अयं गतिकर्मतया चुरादित्वेन पठितः। तेन पेलयति ते
पेल न० पेल-अच्। पुंश्चिह्ने अण्डभेदे (अण्डकोष) हेमच०।
पेलव त्रि० पेल-बञ् पेलं वाति वा-क। १कोमले त्रिका० २कृशे हेमच०। ३विरले अमरः।
पेलि पु० पेल-इन्। गन्तरि हृत०। तत्परं शाखायाः न क्लीवत्वम्। आद्युदात्तता चास्य।
पेव सेवने भ्वा०सक०आत्म०सेट्। पेवते अपेविष्ट। ऋदित् चङि न ह्रस्वः। अपिपेवत् त। ओष्ठान्त्यतयाऽयं धातुपाठे पठितस्तेनोभयरूपता।
पेश पु० पिश-अच्। रूपे निघण्टुः पेशलशब्दे दृश्यम्।
पेश(ष)(स)ल त्रि० पिश(ष)(स)-अलच्। १सुन्दरे २दक्षे ३कोमले च अमरः। मूर्द्धन्यदन्त्यमध्योऽप्यत्रार्थे भरतः। ४धूर्त्ते शब्दर०। पेशोरूपमस्त्यस्य सिध्मा०लच्। ५विष्णौ पु०। "अक्रूरः पेशलो दक्षः" विष्णुस०
पेशस् न० पिश-असुन्। १रूपे २हिरण्ये च निघण्टुः। ३कोषे च।
पेशस्कार त्रि०पेशो रूपान्तरं करोति स्वस्पृष्टकीटस्य कृ-अण् उप०स०। स्वरूपकरे कीटभेदे स्त्रियां ङीप्। यजु०३०।८।
पेशस्कृत् त्रि० पेशो रूपान्तरं स्वस्पृष्टकीटस्य करोति कृ-क्विप्। कीटभेदे (काँचपोका) "कीटः पेशस्कृतं ध्यायन् कुड्यां तेन प्रवेशितः। याति तत्सात्मतां राजन्! पूर्वरूपमसंत्यजन्" भाग० ११।९।२४
पेशि(शी) स्त्री पिश-इन् वा ङीप्। १वज्रे २मांसपिण्डे च उणादि०। दीर्घान्तः ३अण्डे अमरः। ४सुपक्वकलिकायां ५मांस्यां ६खड्गपिधाने (खाप) ७मांसपिण्ड्यां च मेदि०। ५नदीभेदे ६पिशाचीभेदे ७राक्षसीभेदे शब्दरत्ना०। दमभौ-

वेष्टनचर्ममये कोषे च “बिन्दुर्मांसादयोऽवस्थाः शुक्रशोणितसम्भावाः। यासामेव निपातेन कललं नाम जायते। कललात् बुद्बुदोत्पत्तिः पेशी च बुद्बुदात् स्मृता। पेश्याः स्वकृमतिनिर्वृत्तिः” भा० शा०३२३ अ०। दृश्यात्मभेदे “तथा भेर्य्यश्च पेश्यश्च क्रकचा गोविषाणिकाः” भा०भी०४३अ०।

पेशीकोष पु० ६त०। अण्डकोषे हेमच०।

पेष सेवने निश्चये च भ्वा०आ०सक०सेट्। पेषते अपेषिष्ट पिपेषे ऋदित् चङि न ह्रस्वः। अपिपेषत् त।

पेषण न० पिष–भावे ल्युट्। १अवयवविभागेन चूर्णने। आधारे ल्युट्। २खले औषधादेर्मर्दनपात्रभेदे (तेकाटा-सिज) ३शस्त्रभेदे पु० शब्दच०।

पेषणि(णी) स्त्री पिष–करणे अनि। (शिल) ख्याते हरिद्रादेश्चूर्णनसाधने शिलामये द्रव्यभेदे वा ङीप्।

पेषाक पु० पिष–आकन्। पेषणस्थाने उणा०।

पेषि पु० पिष–इन्। वज्रे उज्ज्वलदत्तः।

पेस गतौ भ्वा० पर० सक०सेट्। पेसति अपेसीत् पिपेस। ऋदित् चङि न ह्रस्वः। अपिपेसत् त। [१८। भा०

पेसुक त्रि० पिष–बा० उक। अभिवर्द्धनशीले शत०ब्रा०१।७।२

पेस्वर त्रि० पिष–शीलार्थे वरच्। गतिशीले।

पै शोषे भ्वा०पर०सक०अनिट्। पायति अपासीत् पपौ।

पैङ्ग पु० ऋषिभेदे भा०स० ४अ०।

पैङ्गराज पु० पक्षिभेदे यजु० २४।२४ भा०।

पैङ्गल पु० ३०व०। पिङ्गलस्यापत्यं गर्गा० यञ्। पैङ्गल्य तस्य छात्राः कण्वा० अण् यलोपः। पिङ्गलस्यापत्यस्य छात्रेषु। [फक्। तन्नामकर्षेरपत्ये।

पैङ्गरा(ला)यन पुंस्त्री० पिङ्गर(ल)स्यर्षेः गोत्रापत्यम् नडा०

पैङ्गलोदायनि पुंस्त्र० पैङ्गलोदायनस्यापत्यम् इञ्। प्राच्यभवे तन्नामकर्षिगोत्रापत्ये ततः युनि फक् तस्य पैला० लुक्। तदीये यून्यपत्ये। [गोत्रापत्ये।

पैङ्गल्य पुंस्त्री० पिङ्गलस्य गोत्रापत्यं गर्गा०यञ्। पिङ्गलर्षे-

पैङ्गि पुंस्त्री० पिङ्गस्यापत्यमिञ्। पिङ्गस्यर्षेः पुंसि स्त्रियां ङीप्। “पैङ्गीपुत्रात् पैङ्गीपुत्रः” शत०ब्रा०१४।९।४।३०।

पैङ्गिन् पु० पिङ्गेनर्षिणा प्रोक्तः कल्पः इनि। पिङ्गर्षिप्रोक्ते कल्पशास्त्रे। [प्रवरर्षिभेदः।

पैङ्ग्य पु० पिङ्ग बा० अपत्ये यञ्। पैङ्गर्षिपुत्रे स च गोत्र-

पैयवन पु० पीयवनस्यापत्यमृष्यण्। पैयवने नृपे मनुः ८।११० पैयवन इति पाठान्तरम्।

पैञ्जूष पु० पिञ्ज–ऊष स्वार्थे अण्। कर्णे गोत्रे हेमच०।

पैठर त्रि०पिठरे संस्कृतं पक्वम्। स्थालीपक्वमांसादौ अमरः।

पैठिक पु० असुरभेदे हरिवं० १६१ अ०। [प्रवरा०।

पैठिनसि पु० १धर्मसंहिताकारके २ऋषिभेदे ३गोत्रर्षिभेदे च

पैण्डायन पुंस्त्री पिण्डस्यर्षेर्गोत्रापत्यम् नडा०फक्। पिण्डर्षि-गोत्रापत्ये।

पैण्डिक्य(न्य) पिण्डं परपिण्डं भक्ष्यतयाऽस्त्यस्य ठन् इनि वा पिण्डिक पिण्डिन् वा तस्य भावः पुरोहिता० यक् ष्यञ् वा। परपिण्डोपजीवित्वे भिक्षोपजीवने त्रिका०।

पैण्ड्य त्रि० पिण्ड्यां भवः कुर्वा० ण्य। पिण्डीभवे।

पैतरावण पु० गोत्रप्रवरर्षिभेदे प्रवरा०।

पैतृक त्रि० पितृत आगतं पितुरिदं वा ठञ्। १पितृतः प्राप्ते २पितृसम्बन्धिनि च। पैतृकभूमिमाहात्म्यं ब्रह्मवै० जन्मख० १०२ अ० दर्शितं यथा

“वासुदेव! न यास्यामि भूमिं तां, पैतृकी पुनः। सर्वतीर्थपरा शुद्धा दैवे कर्मणि पैतृके। पारक्ये भूमिदेवे च पितृणां निर्वपेत्तु यः। तद्भूमिस्वामिपितृभिः श्राद्धकर्म निहन्यते। पितृणां निष्फलं श्राद्धं देवानामपि पूजनम्। किञ्चित्फलप्रदश्चैव सम्पूर्णं पैतृके स्थले। पुत्रपौत्रकलत्रेभ्यः प्राणेभ्यः प्रेयसी सदा। दुर्लभा पैतृकी भूमिः पितृमातृगरीयसी। तत्रस्थश्च पवित्रश्च दैवे कर्मणि पैतृके। क्रीतश्च लभते दानं परदत्तमशुद्धकम्। म्रियते पैतृकभूम्यां तीर्थतुल्यफलं लभेत्। गङ्गाजलसमं पूतं पितृखातोदकं हरे!। पितृणां तर्पणं तत्र पवित्रं देवपूजनम्। पैतृकी जन्मभूमिश्चेत् फलं तद्द्विगुणं लभेत्। पैतृकभूमितुल्या न दानभूमिः सतामपि”।

पैतृमत्य त्रि० पितृमत्यां अनूढायां कन्यायां भवः कुर्वा० ण्य। कन्यायां भवे कानीने। [पितृस्वसुरपत्ये।

पैतृष्वसेय पुंस्त्री पितुः स्वसुरपत्यम् ढक् अन्त्यलोपः षत्वम्।

पैतृस्वस्रीय पुंस्त्री०पितुः स्वसुरपत्यम् छण्। पितृस्वसुरपत्ये

पैत्त त्रि०पित्तात् आगतः अण्। धातुविशेषपित्तकृते ज्वरादौ

पैत्तिक त्रि० पित्तेन निर्वृत्तः ठञ्। धातुविशेषपित्तकृते व्याधौ।

पैत्र त्रि०पितुरिदम् अण्। १पितृसम्बन्धिनि श्राद्धादौ। अङ्गुष्ठतर्जन्योर्मध्यस्थाने २पितृतीर्थे न०। ३पितृसम्बन्धिदिने च तन्मानं च अहन्शब्दे ५७६ पृ० उक्तं दृश्यम्।

पैद्व पुंस्त्री अश्वे निघण्टु। ऋ० ९।८८।४। स्त्रियां जातित्वात् ङीष्।

**पैनद्धक** त्रि॰ पिनद्ध+चतुरर्थ्यां वराहा॰कक्। पिनद्धसमीपादौ।

**पैप्पलाद** पु॰ ब॰ व॰। पिप्पलादेन ऋषिणा प्रोक्तमधीयते अण्। १पिप्पलर्षिप्रोक्ताध्यायिषु तदर्थस्य २वेत्तृषु च कालकौज॰ सौभेन सह द्वन्द्वे पूर्वं प्रकृतिस्वरः।

**पैप्पलादि** पुंस्त्री पिप्पलादस्यर्षेरपत्यम् इञ्। पिप्पलादर्षेरपत्ये स च गोत्रप्रवरर्षिभेदः प्रवराध्यायः स्त्रियां ङीष्।

**पैल(लेय)** पुंस्त्री॰ पीलाया अपत्यं "पीलाया वा" पा॰ अण् पक्षे ढक्। पीलाया अपत्ये स्त्रियां ङीष्। युवापत्ये तु "अनोद्व्यचः" पा॰ फिञ् तस्य पैलादि॰ लुक्। तस्य युवापत्येऽपि। तथा च पैलः पिता पुत्रश्च।

**पैलगर्ग** पु॰ कर्म॰। ऋषिभेदे तदाश्रमस्य च तीर्थत्वम् भा॰ व॰ १८७ अ॰।

**पैलव** त्रि॰ पीलौ दीयते कार्यं वा व्युष्टा॰ अण्। पीलौ १दीयमाने २कार्ये च। व्युष्टा॰ गणे पीलुमूलेति असमस्तमित्येके समस्तमित्यन्ये। इदमर्थे अण्। पीलुसम्बन्धिनि त्रि॰ मनुः २।४०। [जलादिभवे।

**पैलुवहक** त्रि॰पीलुवहे भवः वहान्तत्वात् वुञ्। पीलुवह-

**पैलादि** "पैलादिभ्यश्च" पा॰ युवप्रत्ययलुगनिमित्ते शब्दगणे स च गणः "पैल शालङ्कि सात्यकि सात्यङ्कामि राहवि रावणि औदञ्चि औदवजी औदमेघि औद्रमज्जि औदश्ज्जि दैवस्थानि पैङ्गलोदायनि राहक्षति भौलिङ्गि राणि औदन्वि औद्गाहमानि औज्जिहानि औद्शुद्धि (तद्राजा चाणः) (आकृतिगणोऽयम्)। तद्राजसंज्ञकात् परस्य युवप्रत्ययस्य लुगित्यर्थः।

**पैशाच** पु॰ पिशाचेन निर्वृत्तः अण्। "सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति। स पापिष्ठो विवाहानां पैशाचः" मनूक्ते १विवाहभेदे २पिशाचकृते ३तत्सम्बन्धिनि च त्रि॰। स्त्रियां ङीप् "पैशाचीं योनिमापन्नाः" पुरा॰। "यद्याक्रुश्य ददाति दत्त्वा वा क्रोशति अश्रद्धाकृतं पैशाचमिति" हारीतोक्ते ४दानभेदे स्वार्थे अण्। ५पिशाचशब्दार्थे पु॰ पर्श्वा॰ अण्। ६आयुधजीविसङ्घभेदे। बहुषु तस्य लुक्।

**पैशुन(न्य)** न॰ पिशुनस्य भावः युवा॰ अण् ब्राह्मणा॰ ष्यञ् वा। पिशुनत्वे

**पैष्ट** त्रि॰ पिष्टस्येदम्। अण् १पिष्टसम्बन्धिनि स्त्रियां ङीप् सा च २सुराभेदे। "पैष्टी कटुस्तीक्ष्णा स्यादौष्णाद्रोरोगौ पुत्रा परा। वातहृत् कफकृत् पित्तकृत् पित्तलस्रोतोहनी च सा" राजनि॰।

**पैसुकायन** पु॰ गोत्रप्रवरर्षिभेदे प्रवराध्यायः।

**पो** त्रि॰ पवते पुनाति वा पु–पू–वा विच् १शुद्धे २शोधके च।

**पोगण्ड** पु॰ पौः शुद्धो गण्ड एकदेशो यस्य। १विकलाङ्गे २न्यूनाधिकाङ्गे। स्वार्थे अण्। "पौगण्डः पञ्चमाद्वर्षादर्वाक् च दशमाब्दतः" इत्युक्तवयस्के बालके पु॰ हला॰।

**पोट** पु॰ पुट–श्लेषे घञ्। १संश्लेषे–आधारे घञ्। २वेश्मभूमौ जटा॰।

**पोटगल** पु॰ पोटेन संश्लेषमात्रेण गलति गल–अच्। १नले २काशे च अमरः। ३मत्स्यभेदे पुंस्त्री मेदि॰ स्त्रियां ङीष्।

**पोटलक** न॰ पोटेन लीयते ली–ड स्वार्थे क। (पुँटलि) ख्याते संश्लिष्टवस्त्रादौ कात्या॰ श्रौ॰ ७।८।४। कर्कः। तदर्थे स्त्री कापि अत इत्त्वम् पोटलिका। [अमरः।

**पोटा** स्त्री पु॰ पुट–अच्। पुरुषलक्षणयुक्तायां स्त्रियाम्।

**पोट्टलिका** स्त्री पोटलिका+पृषो॰ (पुँटलि) ख्याते पदार्थे पोट्टलीत्यपि तदर्थे "गुडार्थं त्रिफलाक्वाथे गुडूच्याः काथ एव वा। दोलायन्त्रे पुरः पाच्यः पोट्टल्या वस्त्रबद्धया" वैद्यक॰।

**पोट्टिल** पु॰ अवसर्पिण्यां जिनोत्तमभेदे हेमच॰।

**पोडु** पु॰ पुड–ड्‌ड। कपालास्थितले राजनि॰।

**पोत** पुंस्त्री पू–तन्। १बालके २वर्त्तिले च अमरः। ३गृहस्थानभेदे (पोँता) ४वस्त्रे च मेदि॰। ५दशवर्षीयगजे हेमच॰। ६पत्रद्वयाने नौकाभेदे (जाहाज) ततः समूहे पाशा॰ य। पोत्या पोतसमूहे स्त्री।

**पोतक** पु॰पोत इव कायति कै–क स्वार्थे क वा।१पोतपदार्थे २नागभेदे भा॰ उ॰ १०२ अ॰। गौरा॰ ङीष्। ३पूतिकाख्याके स्त्री ४श्योनाके च स्त्री राजनि॰।

**पोतज** पु॰ पोतः सन् जायते जन–ड। शिशुभूततया जायमाने गजाश्वादौ हेमच॰। [गौरा॰ ङीष्।

**पोतन** त्रि॰ पू–तन। १पवित्रे २पवित्रताकारके च स्त्रियां

**पोतप्लव** पु॰ पोतेन प्लवते प्लु–अच्। नौकया तारके ह॰ सं॰ १०।१०। [अमरः।

**पोतवणिज्** पु॰ पोते वणिक्। नौकया वाणिज्यकारके

**पोतरक्ष** पु॰ पोतं रक्षति अण् उप॰ स॰। (हालि) ख्याते पदार्थे नौनिपातके शब्दमा॰।

**पोतनकप्रिय** त्रि॰ बुद्धभेदे त्रिका॰।

**पोतवाह** पु॰ पोतं नावं वहति वह–अण् उप॰ स॰। नौकावाहके (दाँडि) अमरः।

**पोताच्छादन** न॰ पोतस्येवाच्छादनम्। वस्त्रकुटीरे हारा॰।

**पोताधान** पु॰पोतानां शिशूनामल्पजातमत्स्यानामाधानम्। क्षुद्रमत्स्यसङ्घे (पोनारझाँक) अमरः। [राजनि॰

**पोतास** पु॰ पोत इवास्मति अस-दीप्तौ अच्। कर्पूरभेदे

**पो(पौ)तिमत्स्यक** पु॰ नृपभेदे भा॰ स॰ ९अ॰।

**पोतिका** स्त्री पूतिका+पृषो॰। पूतिकायां १शाकभेदे भरतः २शतपुष्पायां ३मूलपोत्यां च राजनि॰।

**पोतु** पु॰ पु-तुन्। मानभाण्डशोधके हेमच॰।

**पोतृ** पु॰ पुनाति पु-तृन्। ऋत्विग्भेदे अच्छावाकशब्दे ८५ पृ॰ दृश्यम्। होत्रादिशब्देन द्वन्द्वे ऋत आत्। पोताहोतारौ।

**पोत्र** न॰ पू-त्र। १यज्ञे २शूकरमुखाग्रे ३लाङ्गलमुखाग्रे, ४वहित्रे च मेदि॰। [स्त्रियां जातित्वात् ङीष्।

**पोत्रायुध** पुंस्त्री पोत्रमायुधमिवास्य। शूकरे राजनि॰।

**पोत्रिन्** पु॰ पोत्रमस्त्यस्य इनि। शूकरे अमरः। पोत्रयुक्ते त्रि॰। स्त्रियां ङीप्। [मत्स्यभेदे त्रिका॰।

**पोत्रिरथा** स्त्री पोत्री रथ इव गतिसाधनमस्याः। जिन-

**पोत्रीय** त्रि॰ पोतुः कर्म छ। पोतृकर्त्तव्ये कर्मणि। कात्या॰ श्रौ॰ २४।४।४२।

**पोथकी** स्त्री "कण्डूरावान्विता गुर्व्यो रक्तसर्षपसन्निभाः। पिड़काश्च दृशावर्त्तः पोथक्य इति संज्ञिताः" सुश्रुतोक्ते पिड़काभेदे। [स्त्री गौरा॰ङीष्।

**पोल** त्रि॰ पुल-ज्वला॰ण। १महत्त्वयुक्ते। २पिष्टकभेदे

**पोलिका** स्त्री पूरिकाभेदे कृतान्नशब्दे २१८१ पृ॰ दृश्यम्।

**पोलिन्द** पु॰ पोतस्यालिन्द इव पृषो॰। नौकांशभेदे त्रिका॰।

**पोषयित्नु** त्रि॰ पुष-णिच्-इत्नु। १पोषके २काकपोतृ पिके च उज्ज्वल॰।

**पोषुक** त्रि॰ पुष-बा॰ उक। पोषणकरणशीले "तमनुपोष पोषुको भवति" षड्विंशब्रा॰। [सके त्रि॰ शब्दच॰।

**पोष्टृ** पु॰ पुष-तृच्। (काँटा करमञ) १करञ्जभेदे। २पो-

**पोष्य** त्रि॰पुष-कर्मणि ण्यत्। १पोषणीये। आवश्यके ण्यत्। २अवश्यपोष्ये। अवश्यपोष्याश्च दर्शिता यथा "भरणं पोष्यवर्गस्य इष्टादृष्टफलोदयम्। मन्त्रवायोऽप्य-भरणे कर्त्तव्यन्तु प्रयत्नतः। माता पिता गुरुः पत्नी त्वपत्यानि समाश्रिताः। अभ्यागतोऽतिथिश्चाग्निः पोष्य-वर्गा अमी नव" काशी॰ख॰ ४५ अ॰। "ज्ञातिर्बन्धु-जनः क्षीणस्तथाऽनाथः समाश्रितः। अन्येऽप्यधनयुक्ताश्च पोष्यवर्ग उदाहृतः" दक्षस्मृ॰।

**पोष्यपुत्र** पु॰ कर्म॰। पालनादिना पुत्रत्वाप्ते "अधुना कृत्तिकादीनां अस्यां यः पोष्यपुत्रकः। तन्नाम चक्रुस्तां प्रेम्णा कार्त्तिकश्चेति कौतुकात्" ब्रह्म॰वै॰गण॰ख॰१४अ॰। अधुना दत्तकपुत्रस्य पोष्यपुत्रत्वं व्यवह्रियते तद्विधानं दत्तकशब्दे ३४३८पृ॰ दृश्यम्।

**पौंश्चलेय** पुंस्त्री पुंश्चली+अपत्ये ढक्। पुंश्चल्या अपत्ये

**पौंश्चल्य** न॰ पुंश्चल+भावे ष्यञ्। १असतीत्वे परपुरुष-गामित्वे २पुंस्त्रियोर्मिथोव्यभिचारे च मनुः ९।१५।

**पौंसायन** पु॰ सौत्रामण्यां याजके दुष्टरीतौ राजभेदे शत॰ब्रा॰ १२।८।१।२

**पौंस्न** न॰ पुंसो भावः स्नञ्। पुंस्त्वे।

**पौंस्य** न॰ पुंस अभिमर्दने ण्यत् तत्र साधु वा॰ यत्। १बले निरु॰। २संग्रामे च निघण्टुः ऋ॰१।११८।१०।

**पौगण्ड** न॰ पोगण्डस्य भावः। १पञ्चमावधिदशमवर्षान्ता-वस्थाभेदे पोगण्डशब्दे दृश्यम्। स्वार्थे अण्। २तद-वस्थायुते त्रि॰।

**पौञ्जिष्ठ** पुंस्त्री अन्त्यजातिभेदे यजु॰ ३०।८। वेददी॰।

**पौटायन** पुंस्त्री पुटायानर्षेरपत्यम् अण्। पूटायनर्षेः गोत्रापत्ये। [गोत्रस्त्रियाम्।

**पौणिक्या** स्त्री पुणिगोत्रस्य स्त्री अण् स्त्रियां ष्यङ्। पुण-

**पौण्डरीक** न॰ पुण्डरीकमिव शर्करा॰ अण्। पुण्डरीक-तुल्ये प्रपौण्डरीके राजनि॰।

**पौण्ड्र्य** न॰पुण्ड्र्यमेव अण्। पुण्ड्र्ये भरतः।

**पौण्ड्र** पु॰ १देशभेदे स च वृ॰स॰१४॰ पूर्वस्यामुक्तः भा॰भी॰९अ॰ पौण्ड्रस्य अभिजनः तस्य राजा वा अण्। २तद्देशस्थे ३पि-त्रादिक्रमेण तद्देशवासिनि च। "पौण्ड्रस्तु बलिनां वरः" हरिवं॰९१अ॰। स च कृष्णेन निहतः "पाण्ड्रं पौण्ड्रं कलिङ्गञ्च मातृभ्यश्चैव जनार्दनः। जघान सहितान् सर्वान्" हरिवं॰ १६१ अ॰। "वसुदेवस्य सुतनूपत्नीजाते ४पुत्रभेदे। "सुतनुस्य नराची च शौरेरासां परिग्रहः। पौण्ड्रश्च कपिलश्चैव वसुदेवस्य तौ सुतौ। नराच्यां क-पिलो जज्ञे पौण्ड्रश्च सुतनूसुतः। तयोर्ज्येष्ठोऽभवत् पौण्ड्रः कपिलश्च वनं ययौ" हरिवं॰१६२ अ॰। ५भीम-सेनशङ्खे ६इक्षुभेदे पु॰ शब्दमा॰। ७क्रियालोपेन शूद्र-त्वप्राप्ते क्षत्रियभेदे मनुः १०।४४ स्वार्थे क। तत्रार्थे इक्षुभेदे (पुँड़ि)।

**पौण्ड्रनागर** पु॰ पौण्ड्रनगरे भवः अण् तस्य प्राच्यत्वे-ऽपि नगरान्तत्वेन उत्तरपदवृद्धिः। पौण्ड्रनगरभवे।

**पौण्ड्रमात्स्यक** पु॰ राजभेदे भा॰ स॰ २७ अ॰।

**पौण्ड्रवर्द्धन** पु०(बेहार) ख्याते देशभेदे शब्दर० तत्र पौण्ड्रेषु प्राचुर्य्यात् तथात्वम्। [२गोत्रप्रवरर्षिभेदे प्रवराध्यायः।

**पौण्ड्रिक** पु० पुण्ड्र+स्वार्थे ठञ्। १इक्षुभेदे शब्दमा०।

**पौण्य** त्रि० पुण्येषु श्रौतस्मार्तकर्मसु साधु ष्यञ्। पूर्त्तकर्मकारके कात्या० २२।२।५।

**पौतव** न० पोतव–पृषो०। परिमाणे हेमच०।

**पौतिक** त्रि० पूतिकेन दुर्गन्धिना निर्वृत्तम् मक्षुला० ष्यञ्। पूतिकद्रव्यनिर्वृत्ते।

**पौतिमाष** पु० ब०व०। पूतिमाषस्यर्षेः गोत्रापत्यं गर्गा० यञ्। तस्य छात्राः कण्वा० अण् यलोपः। पौतिमाषप्रच्छात्रेषु।

**पौत्तक** न० पोतुरिदं ठञ्। ऋत्विग्भेदपोतृसम्बन्धिनि।

**पौत्तिक** न० पुत्तिकाभिर्मधुमक्षिकाभेदैर्निर्वृत्तम् ठञ्। मधुनि रत्नमा०।

**पौत्र** पुंस्त्री० पुत्रस्यापत्यं शिवा० अण्। पुत्रस्य पुत्रे नप्तरि "पौत्रेणानन्त्यमश्नुते" इति श्रुतिः। स्त्रियां ङीप्।

**पौदन्य** पु० अश्मकस्थपनगरे भा० आ० १७७ अ०।

**पौनःपुनिक** त्रि०पुनःपुनर्भवः ठञ् टिलोपः। पुनःपुनर्भवे।

**पौनःपुन्य** न० पुनः पुनरेव स्वार्थे चतुर्वर्णा ष्यञ् टिलोपश्च। १पुनःपुनरित्यर्थे भावे ष्यञ्। २आभीक्ष्ण्ये

**पौनरुक्त** न० पुनरुक्तस्य भाव युवादि० अण्। पुनर्वादोक्तौ

**पौनरुक्तिक** न० पुनरुक्तमर्थं वेत्ति तत्पदं वाऽधीते उक्था० ठक्। १पुनरुक्तार्थाभिज्ञे २पुनरुक्तपदाध्येतरि च।

**पौनर्भव** पुंस्त्री० पुनर्भू+शिवा० अपत्ये अण्। पुनर्भ्वपत्ये १द्वादशपुत्रमध्ये पुत्रभेदे "पत्या वा च परित्यक्ता विधवा वा स्वयेच्छया। उत्पादयेत् पुनर्भूत्वा स पौनर्भव उच्यते" मनुः। २तथाविधकन्यायां स्त्री स्वार्थे अण्। तत्रार्थे "सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः। वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला। उदकस्पर्शिता या च या च पाणिगृहीतिका। अग्निं परिगता या च पुनर्भूप्रभवा च या। इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत्" काश्यपोक्ते सप्तविधे ३कन्याभेदे च। आर्षत्वात् ङीबभावः। अजादेराकृतिगणत्वात् वा टाप् इत्यन्ये। पुनर्भुवं विन्दति अण्। ४पुनर्भूवेदके भर्त्तरि। "सा चेदक्षतयोनिः स्यात् गतप्रत्यागताऽपि वा। पौनर्भवेन भर्त्रा सा पुनःसंस्कारमर्हति" मनुः।

**पौर** त्रि० पुरे वसति शैषिकोऽण्। १पुरवासिनि २रोहिषतृणे न०(रामकर्पूर) अमरः। पूरः पूरक एव स्वार्थे अण्। ३उदरपूरके त्रि०ऋ०२।११।११भा०। पुरोभवः पुरस्+अण् टिलोपः। ४पूर्वदिग्देशकालभवे "पौरा ऊधपुरस्विजा नित्यम्" बृ०सं० १७ अ०।

**पौरक** न० पौर इव कायति कै–क। गृहबाह्योद्याने हेम०।

**पौरकुत्सी** स्त्री पुरुकुत्सस्यापत्यं स्त्री इञ् ङीप्। गाधिराजमातरि हरिवं० २७ अ०। [समीपादौ।

**पौरगीय** त्रि० पुरग+कृशाश्वा० चतुरर्थ्यां छण्। पुरगत०

**पौरण** पु० "पूरणवारिप्रापयन्तानां वैश्वामित्रदेवरातपौरणैः" आश्व०श्रौ०१२।१४।५ उक्ते गोत्रप्रवरर्षिभेदे। पूरण+स्वार्थे अण्। २पूरणे स्त्रियां ङीप्। "पौरणीं भूषणक्रियाम्" हरिवं० ८८अ०।

**पौरन्दर** त्रि० पुरन्दरस्येदम् पुरन्दरो देवताऽस्य वा अण्। १शक्रसम्बन्धिनि २ज्येष्ठानक्षत्रे च बृ०सं०१५अ०।

**पौरव** पुंस्त्री० पु(पू)रोर्गोत्रापत्यमण्। १ययातिपुत्रभेदस्य पु(पू)रोरपत्ये २तत्सम्बन्धिनि च। ३उदीच्यदेशभेदे बृ० सं०१४अ०। मार्क०पु०५८ अ० तस्य पूर्वोत्तरदिक्स्थत्वमुक्तं यथा "त्रिनेत्राः पौरवाश्चैव गन्धर्वाश्च द्विजोत्तम!। पूर्वोत्तरन्तु कूर्मस्य पादमेते व्यवस्थिताः" सोऽभिजनोऽस्य तस्य राजा वा अण्। पित्रादिक्रमेण ४तद्देशवासिनि ५तन्नृपे च। [भक्तियुक्ते त्रि०कौ०।

**पौरवीय** त्रि० पौरवो राजा भक्तिरस्य छ। पौरवनृप-

**पौरश्चरणिक** त्रि०पुरश्चरणस्य व्याख्यानस्तत्र भवो वा ठञ्। १पुरश्चरणप्रतिपादकग्रन्थव्याख्यानग्रन्थे २तत्र भवे च।

**पौरस्त्य** त्रि०पुरस्+भवार्थे त्यक्। १पुरोभवे २प्रथमे च अमरः

**पौरागीय** त्रि० पुराग+कृशाश्वा० चतुरर्थ्यां छण्। पूर्वकालगतस्यादूरदेशादौ। [१अ०।

**पौराण** त्रि० पुराणे पठितः अण्। पुराणपठिते भा० आ०

**पौराणिक** त्रि० पुराणं वेत्त्यधीते वा "आख्यानाख्यायिकेतिहासपुराणेभ्यश्च" वार्त्ति० ठक्। १पुराणार्थाभिज्ञे २तदध्येतरि च। पुराणे पठिता ठक्। ३तत्र पठिते त्रि० स्त्रियां ङीप्।

**पौरिक** पु० दाक्षिणात्ये देशभेदे मार्कपु० ५७ अ०।

**पौरुकुत्स** पु० गोत्रप्रवरर्षिभेदे प्रवराध्यायः।

**पौरुष** न० पुरुषस्य भावः कर्म वा युवा० अण्। १पुरुषत्वे २विक्रमे ३उद्यमे च। पुरुषस्येदम् अण्। ४ऊर्द्धविस्तृतबाहुपाणिकमनुष्यपरिमाणे अमरः। "ऊर्द्धेऽपि मानेऽपि च पौरुषाधिकम्" नैष०। स्वार्थे अण्। ४पुरुषशब्दार्थे शत०ब्रा० १४।७।१।११।

**पौरुषांशकिन्** पु० ब०व०। पुरुषांशकेन ऋषिणा प्रोक्त-

मधीयते शौनका० णिनि । पुरुषांशकर्षिणा प्रोक्ताध्येतृषु ।

**पौरुषेय** पु० पुरुषस्य वधादि "पुरुषाद्वधविकारसमूहतेन कृतेषु" वा० ठञ् । पुरुषस्य १वधे २विकारे ३समूहे ४तेन कृते च ।

**पौरेय** त्रि० पुरस्यादूरदेशादि सख्या० ढञ् । नगरसमीपादौ

**पौरोगव** पु० पुरोऽग्रे पाकयज्ञवस्तुषु गौर्नेत्रं यस्य पुरोगुः ततः स्वार्थे प्रज्ञा० अण् । पाकशालाध्यक्षे अमरः ।

**पौरोहित** त्रि० पुरोहितस्य धर्म्यम् महिष्या० अण् । पुरोहितस्य धर्म्ये । [कर्मभेदे आश्व०श्रौ०२।१८।६ ।

**पौर्णदर्व** न० पूर्णया दर्व्या निष्पाद्यं कर्म अण् । वैदिके

**पौर्णमास** पु० पौर्णमास्यां भवः सन्धिवेला० अण् । १पौर्णमासीविहिते यागे "दर्शपौर्णमासाभ्यां यजेत" श्रुतिः स च द्विविधः यावज्जीवकालिकः पञ्चदशीप्रतिपत्सन्धिकाले कर्त्तव्यश्च । तत्कालादिविधानं कात्या० श्रौ० २।१ कण्डिकादौ दृश्यम् । पूर्णोमाश्चन्द्रमास्तस्येयम् अण् पूर्णो माश्चो यस्यां वर्त्तते "पूर्णमासादण् वक्तव्यः" वा० अण् वा । २शुक्लपक्षीयपञ्चदश्यकलाक्रियायां तद्युपलक्षितकालरूपायां वा ३तिथौ स्त्री ३तदुत्तरप्रतिपदि च "द्वे ह वै पौर्णमास्यौ पूर्वा उत्तरा च तत्र पञ्चदशी पूर्वा प्रतिपदुत्तरा" इति श्रुतेः तत्र पञ्चदशी मुख्या प्रतिपद्गौणी इत्यर्थः ।

**पौर्णमासिक** त्रि० पूर्णमास्यां भवः कालाट् ठञ् । पौर्णमासभवे यागादौ वा० यत् । पौर्णमास्य तत्रार्थे ।

**पौर्णमी** स्त्री पूर्णतया चन्द्रो-मीयतेऽत्र मा--आधारे घञर्थे क स्वार्थे अण् ङीप् । पूर्णिमातिथौ त्रिका० । [१।१७८

**पौर्त्तिक** त्रि० पूर्त्तेन साधु ठक् । पूर्त्तसाधने कर्मणि मनु०

**पौर्य्य** पुंस्त्री०पुरस्यापत्यं कुर्वा०ण्य । पुरनामकस्य नृपस्यापत्ये

**पौर्वनगरेय** त्रि० पूर्वनगर्यां भवः नद्या०ढक् । पूर्वनगरीभवे

**पौर्वपदिक** त्रि० पूर्वपदं गृह्णाति ठञ् । पूर्वपदग्राहके ।

**पौर्वातिथ** पु० गोत्रप्रवरर्षिभेदे आश्व० श्रौ० १२।१४।१।

**पौर्वापर्य्य** न० पूर्वापरयोर्भावः ष्यञ् । पूर्वापरत्वे ।

**पौर्वाह्ण(ह्णि क)ह्णेत्र** त्रि० पूर्वाह्णे भवः यत् अञ् ठञ् वा पूर्वाह्णभवे । [च । पूर्वाह्णेतन तत्रार्थे त्रि० ।

**पौर्वाह्णिक** त्रि० पूर्वाह्णे भवः ठञ् । पूर्वाह्णभवे पक्षे ट्यु टुट्

**पौर्विक** त्रि० पूर्वस्मिन् काले भवः ठञ् । पूर्वकालभवे स्त्रियां ङीप् । "जातिं स्मरति पौर्विकीम्" मनु० ४।१४८ ।

**पौलस्त्य** पुंस्त्री० पुलस्त्यस्यापत्यं गर्गा०यञ् । पुलस्त्यस्यापत्ये १कुवेरे २रावणादौ च मेदि० । स्त्रियां ङीप् यलोपः । पौलस्ती शूर्पनखायाम् । [विकारे ।

**पौलाक** त्रि० पुलाकस्य विकारः पलाशा० अञ् । पुलाक-

**पौलि** पु०पुल--इञ् वा० वृद्धिश्च । १ईषत्पक्वे व्यारख्यपक्वावस्थे कलायादौ अमरः । स्वार्थे क । तत्रार्थे हेमच० ।

**पौलिषि** पु० पुलुषवंश्ये सत्ययज्ञे ऋषिभेदे शत०ब्रा०१०।६।१।१

**पौलोमी** स्त्री पुलोम्नोऽपत्यम् अण् अनोलोपः । पुलोमजायां शच्यां हेमच० ।

**पौष** पु० पुष्येण युक्ता पौर्णमासी पुष्य--अण् यलोपः ङीप् पौषी सा यत्र मासे अर्द्धमासे वर्षे वा पुनरण् । १पुष्यनक्षत्रयुक्तपौर्णमासीयुक्ते १मासे २पक्षे ३अब्दे वर्षभेदे कार्त्तिकशब्दे १९४९पृ० दृश्यम् । "मीनादिस्थो रविर्येषामारम्भः प्रथमक्षणे" इत्यादिरीत्या धनुःस्थरव्यारब्धः शुक्लप्रतिपदादिदर्शान्तात्मको मुख्यचान्द्रपौषः कृष्णपक्षादिपौर्णमास्यन्तः गौणः पौषः, धनूराशिस्थरविकः सौरः पौष इति भेदः तेनान्यत्र भक्तिः ।

**पौष्कर** न०पुष्करस्याकारोऽस्त्यस्य मूले प्रज्ञा०अण् । १पुष्करमूले राजनि० पुष्करस्येदम् अण् । २पुष्करसम्बन्धिनि त्रि० विष्णोः पद्मतया प्रादुर्भावयुते ३पाद्मे कल्पे पु० ।

**पौष्करमूल** न०स्वार्थे अण् । पुष्करमूले सुगन्धिद्रव्यभेदे भरतः

**पौष्करिणी** स्त्री पुष्कराणां समूहः अण् स्वार्थे अण् वा ततोऽस्त्यर्थे इनि ङीप् । पुष्करिण्यां शब्दच० ।

**पौष्करेयक** न० पुष्करे जातादि कत्त्र्या० ढकञ् । पुष्करे जातादौ स्त्रियां ङीप् ।

**पौष्कल** त्रि० पुष्कलेन निर्वृत्तम् सङ्कला० अण् । १पुष्कलनिर्वृत्ते २सामभेदे न० "उष्णिहि शफं ककुभि पौष्कलम्" सामसं०भा०धृता श्रुतिः "तस्य गीतं पवस्व मधुमत्तम" इति प्रगाथे (उत्तरा० १प्र०१६) तस्मिन् पूर्वा ककुप् उत्तरा पङ्क्तिः । तत्र (ककुभि) पौष्कलं साम । (तच्च) उत्त० गा०१प्र--१६ दर्शितम् ।

**पौष्कलावत** पु० दिवोदासधन्वन्तरिं प्रति आयुर्वेदज्ञानार्थं प्रश्नकारके सुश्रुतसहाध्यायिभेदे सुश्रुते १।१अ० दृश्यम् ।

**पौष्कलेयक** त्रि० पुष्कले जातादि कत्त्र्या०ढकञ् । पुष्कले-जातादौ स्त्रियां ङीप् ।

**पौष्टिक** त्रि० पुष्ट्यै हितम् ठक् । पुष्टिसाधने कर्मभेदे "पुष्टिर्धनजनादीनां वृद्धिरित्यभिधीयते । तद्धेतुभूतं यत् कर्म पौष्टिकं तदिहोच्यते" स्मृतिदुर्गभञ्जनः ।

**पौष्टी** स्त्री पुरोर्नृपस्य स्त्रीभेदे भा० आ० ९४ अ० ।

**पौष्ण** त्रि॰ पूषा देवताऽस्य तस्येदं वा अण् अषन्तत्वात् उप-धालोपः। १पूषदेवताके चर्वादौ २रेवतीनक्षत्रे न॰ ३पूष-सम्बन्धिनि त्रि॰ स्त्रियां ङीप्।

**पौष्प** न॰ पुष्पेण निर्वृत्तः तस्येदं वा अण्। १पुष्पसाध्ये २मद्यभेदे स्त्री। ३कुसुमसम्बन्धिमात्रे त्रि॰ स्त्रियां ङीप्। ४पाटलिपुत्रनगर्य्यां स्त्री ङीप् शब्दरत्ना॰।

**पौष्य** पु॰ करवीरपुराधिपे पूष्णः पुत्रे १नृपभेदे तत्कथा "पुष्णः पुत्रोऽभवत् पौष्यः सर्वशास्त्रार्थपारगः" कालिकापु॰। उतङ्केन विद्या गुरुदक्षिणार्थं याचिते तस्मै कुण्डलदातरि २नृपभेदे भा॰आ॰३अ॰। तदधिकृत्य कृतो ग्रन्थः अण्। भा॰ आ॰ पर्वान्तर्गते ३पर्वभेदे न॰।

**प्याट्** अव्य॰ प्याय–बा॰ डाटि। सम्बोधने अमरः।

**प्याय** वृद्धौ भ्वा॰आ॰अक॰सेट्। प्यायते, अप्यायि–अप्यायिष्ट इदित् ओदित्त्वं पीनः।

**प्यायस्वण** पु॰ गोत्रप्रवर्षिभेदे।

**प्युक्ष** न॰ अपि–उक्ष–बा॰ नक् अपेरल्लोपः। १आयुधे २अजगरसर्पे कर्मणि च कात्या॰श्री॰ १५।२।२१ कर्कः।

**प्युष** उत्सर्गे चु॰उभ॰सक॰सेट्। प्योषयति ते। अपुप्युषत् त

**प्युष** विभागे दाहे च दि॰ पर॰ सक॰ सेट्। प्युष्यति इरित् अप्युषत् अप्योषीत् पुप्योष। [अप्योषीत् पुप्योष।

**प्युस** विभागे दिवा॰पर॰सक॰सेट्। प्युस्यति इरित्- अप्युसत्

**प्यै** वृद्धौ भ्वा॰आ॰अक॰अनिट्। प्यायते अप्यास्त।

**प्र** अव्य॰प्रथ–ड। १आरम्भे २गतौ ३उत्कर्षे ४प्राधान्ये ५सर्वतोभावे ६उत्पत्तौ, ७ख्यातौ ८व्यवहारे च पुरुषोत्तमः। अस्य क्रियायोगे उपसर्गत्वम्। गतित्वञ्च। अस्यार्थभेदोदाहरणानि गणरत्नटी॰ उक्तानि यथा
"प्र आदिकर्मदीर्घशब्दयशस्सम्भवत्प्तिवियोगशुद्धिशक्तीच्छाशान्तिपूजाग्रदर्शनेषु" प्रयातः। प्रवालमूषिकः प्रभुर्देशस्य। प्रवदन्ति दायादाः। हिमवतो गङ्गा प्रभवति। प्रभुक्तमन्नम्। प्रोषितः। प्रसन्नं जलम्। प्रशक्तः। प्रार्थयते। प्रशान्तोऽग्निः। प्राञ्जलिः। प्रवालम्। प्रलोकयति"।

**प्रउग** न॰ प्राच्युगम् पृषो॰। १प्रागवर्त्तिनि युगे ईषान्तरे कात्या॰ ७।९।५। कर्कः। तत्र चीयमानस्याग्नेः प्रउगचित्संज्ञा कात्या॰ १६।५।९। २शस्त्रविशेषे प्रउगमुक्थ्यमव्यथायै" यजु॰१५।११। "प्रउगं शंसति निष्केवल्यं शंसति" शा॰सं॰भाष्यधृता श्रुतिः" प्रउगनिष्केवल्यशब्दौ शस्त्रविशेषनामनी" इत्युक्त्वा "अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रमिति भाष्ये शस्त्रशब्दार्थमाह भाष्यकृत्।

**प्रकङ्कत** पु॰ १प्रकृष्टविषे २प्रकृष्टगमने सर्पभेदे ऋ॰ १।१९१।७।

**प्रकट** त्रि॰ प्र+कट–अच्। स्पष्टे।

**प्रकटित** त्रि॰ प्र+कट–क्त। प्रकाशिते हेमच॰।

**प्रकण्व** पु॰ प्रकृष्टः कण्वो यत्र। ऋषिभिन्नत्वात् न सुट्। देशभेदे सि॰कौ॰। ऋषौतु सुट् प्रस्कण्व इत्येव।

**प्रकम्पन** पु॰ प्र+कपि–णिच्–युच्। १वायौ "प्रकम्पनेनानु चकम्पिरे सुराः" माघः। २नरकभेदे च शब्दरत्ना॰। ३प्रकम्पनकारके त्रि॰।

**प्रकर** पु॰ प्र+कॄ–भावे अप्। १समूहे २अतिक्षेपे च। कर्मणि अप्। ३प्रकीर्णे पुष्पादौ त्रि॰। ४अगुरुचन्दने न॰ मेदि॰

**प्रकरण** न॰ प्र+कृ-ल्युट्। १प्रस्तावे २अभिनेयनायकादिके दृश्यकाव्यभेदे हेमच॰। ३ग्रन्थसन्धौ ४एकार्थप्रतिपादकग्रन्थांशे च त्रिका॰। नाटकादिनो दश दृश्यकाव्यरूपकाणि विभज्य सा॰द॰ तल्लक्षणमुक्तं यथा
"भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम्। शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथ वा वणिक्। सापायधर्मकामार्थपरो धीरप्रशान्तकः"। विप्रनायकं यथा मृच्छकटिकम्। अमात्यनायकं मालतीमाधवम्। वणिङ्नायकं पुष्पभूषितम्। "नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित्। तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः। कितवद्यूतकारादिविटचेटकसङ्कुलः"। कुलस्त्री पुष्पभूषिते। वेश्या तरङ्गदत्ते द्वे अपि मृच्छकटिके। अस्य नाटकप्रकृतित्वात् शेषं नाटकवत्"। कर्त्तव्यस्य इतिकर्त्तव्यताकाङ्क्षस्य वचनं प्रकरणम् इति शवरभाष्योक्ते५ऽर्थे च "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्" जै॰ ३।३।१४। तत्र विनियोगसाधने तस्य श्रुतिलिङ्गवाक्यबाध्यत्वं स्थानसमाख्यायोर्बाधकत्वञ्च स्थितम्"। "श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि। सा प्रक्रिया या कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या" पार्थसारथिमिश्रः। शास्त्रसिद्धान्तप्रतिपादके ६ग्रन्थभेदे "अस्य च च वेदान्तप्रकरणत्वात्" वेदान्तसा॰।

**प्रकरणसम** पु॰गौतमोक्ते सत्प्रतिपक्षापरपर्य्याये १हेत्वाभासभेदे "यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः" गौ॰सू॰। "क्रमप्राप्तं प्रकरणसमं लक्षयति। स हेतुः स्वसाध्यस्य परसाध्याभावस्य वा निर्णयार्थमपदिष्टः प्रयुक्तः प्रकरणसम उच्यते स क इत्याकाङ्क्षायामाह यस्मात् प्रकरणचिन्तेति करणं "पक्षप्रतिपक्षाविति" भाष्यं

साध्यतदभावत्वाविति तदर्थं तया च निर्णयार्थं हेतुर्यत्र निर्णयं जनयितुमशक्तस्तुल्यबलेन परेण प्रतिबन्धात् किन्तु धर्मिणः साध्यवत्त्वं तदभाववत्त्वं वेति चिन्तां जिज्ञासां प्रवर्त्तयति स प्रकरणसमः। यद्वा प्रकृष्टं करणं लिङ्गं परामर्शो वा को हेतुरनयोः साधकः एतयोः कः परामर्शः प्रमेति वा यत्र जिज्ञासा भवतीत्यर्थः। यथादित्यादि वस्तुस्थितिमात्रं लक्षणन्तु तुल्यबलविरोधिपरामर्शकालीनपरामर्शविषयत्वं स्वसाध्यपरामर्शकालीनतुल्यबलविरोधिपरामर्शो वा। विरोधिपरामर्शस्य च हेतुनिष्ठत्वमेकज्ञानविषयत्वसम्बन्धेन अन्यथा हेतोर्दुष्टत्वं न स्यात्। अयञ्च दशाविशेषे दोषः इत्यतः सद्धेतोरपि विरोधिपरामर्शकाले दुष्टत्वमिष्टमेवेत्यवधेयम्” वृत्तिः।

२जातिरूपासदुत्तरभेदे गौ० ५।१।१६।८८ सू०।

“उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः” सू० “उभयसाधर्म्यात् अन्वयसहचाराद्व्यतिरेकसहचाराद्वा प्रक्रिया प्रकर्षेण क्रिया साधनं विपरीतसाधनमिति फलितार्थः तत्सिद्धेस्तस्य पूर्वमेव सिद्धेः तथाचाधिबलत्वेनारोपितप्रमाणान्तरेण बाधेन प्रत्यवस्थानं प्रकरणसमः यथा शब्दोऽनित्य कृतकत्वादित्युक्ते नैतदेवं श्रावणत्वेन नित्यत्वसाधकेन बाधात् बाधादेशनाभासा चेयम्। वृ०। “प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः” सू०। अत्रोत्तरमाह प्रतिपक्षाद्विपरीतसाध्यसाधकत्वेनाभिमताच्छ्रावणत्वादितः प्रकरणसिद्धिद्वारा मदीयसाध्यस्य यः प्रतिषेधः त्वया क्रियते तस्यानुपपत्तिः कुतः प्रतिपक्षोपपत्तेः त्वत्पक्षापेक्षया प्रतिपक्षस्य मदीयपक्षस्योपपत्तेः साधनात्। अयमाशयः श्रावणत्वेन पूर्वं नित्यत्वस्य साधनाद्यो बाध उच्यते स नोपपद्यते पूर्वं साधितस्य बलवत्त्वाभावात् कदाचित् कृतकत्वेनानित्यत्वस्यापि पूर्वं साधनादिति त्वत्पक्षप्रतिषेधोऽपि स्यात्” वृत्तिः।

**प्रकरणी** न० नाटिकाभेदे “नाटिकैव प्रकरणी सार्थवाहादिनायका। समानवंशजा नेतुर्भवेद्यत्र च नायिका” सा०द०

**प्रकरी** स्त्री १नाट्याङ्गभेदे २चत्वरभूमौ च शब्दरत्ना०।

**प्रकर्ष** पु० प्र+कृष–घञ्। १उत्कर्षे २प्रकृष्टतया कर्षणे च।

**प्रकर्षण** न० प्र+कृष–ल्युट्। १उत्कर्षे २आकर्षणे च।

**प्रकलाविद्** पु० प्रकृष्टां कलां वेत्ति विद–क्विप् पृषो० ह्रस्वः। १वणिग्जने निरु०६।६। २अज्ञातरि त्रि०ऋ०७।१८।१५भा०

**प्रकाण्ड** पु०प्रकृष्टः काण्डः प्रा०त०। वृक्षस्य मूलादारभ्य शाखान्ते भागे। २प्रशस्ते न०। ३विटपे पु० मेदि०।

**प्रकाण्डर** पु० प्रकाण्ड+अस्त्यर्थे बा० र। वृक्षे शब्दच०।

**प्रकाम** त्रि०प्रगतः कामम् प्रा०स०। १यथेष्टे अमरः। प्रा०ब०। २प्रकृष्टकामके त्रि०। ३देवभेदे पु०यजु० ३०।१२।

**प्रकामम्** अव्य०प्र+कम–णमुल्। अत्यर्थे अनुमतौ च अमरः।

**प्रकामोद्य** पु० देवभेदे यजु०३० ८

**प्रकार** पु० प्र+कृ+घञ्। १भेदे २सादृश्ये च अमरः। ३विशिष्टज्ञाने विशेषणतया भासमाने पदार्थे “स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तदनिरूपकत्वम् सर्वांशे भ्रमभिन्नत्वमिति” गदाधरः।

**प्रकारता** स्त्री प्रकारस्य भावः तल्। १विषयताभेदे ज्ञायमानविशेषणप्रतियोगिकसंसर्गावच्छिन्नविषयत्वे।

**प्रकालन** त्रि० प्रकालयति प्र+कालि ल्यु। १हिंसके २सर्पभेदे पु० भा०आ०७५ अ०। भावे ल्युट्। ३मारणे न०।

**प्रकाश** पु०प्र+काश–घञ्। १आतपे २विकाशे च। कर्त्तरि अच्। ३विकाशयुक्ते त्रि०अमरः। प्रकाशश्च सत्त्वज्ञानतेजःसाधारणः यथोक्तम् “जडप्रकाशायोगात् प्रकाशः” सां०सू० “वैशेषिका आहुः। प्राग्प्रकाशरूपस्य जडस्यात्मनो मनःसंयोगाज्ज्ञानाख्यप्रकाशो जायत इति तन्न। लोके जडस्याप्रकाशस्य लोष्टादेः प्रकाशोत्पत्त्यदर्शनेन तदयोगात्। अतः सूर्यादिवत् प्रकाशस्वरूप एव पुरुषः इत्यर्थः। तथा च स्मृतिः “यथा प्रकाशतमसोः सम्बन्धो नोपपद्यते। तद्वदैक्यं न संबन्धं प्रपञ्चपरमात्मनोः”। इति। “यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान्। ज्ञानात्मानं तथा विद्यात् पुरुषं सर्वजन्तुषु” इति च। प्रकाशत्वं च तेजःसत्त्वचैतन्येष्वनुगतमखण्डोपाधिरनुगतव्यवहारादिति। ननु प्रकाशस्वरूपत्वेऽपि तेजोवद्धर्मधर्मिभावोऽस्ति न वा तत्राह सां०प्र०भा० “निर्गुणत्वान्न चिद्धर्मा” सू० “पुरुषस्य प्रकाशरूपत्वे सिद्धे तत्सम्बन्धमात्रेणान्यव्यवहारोपपत्तौ प्रकाशात्मकधर्मकल्पनागौरवमित्यपि बोध्यम्। तेजसश्च प्रकाशाख्यरूपविशेषाग्रहेऽपि स्पर्शपुरस्कारेण ग्रहात् प्रकाशतेजसोर्भेदः सिद्ध्यति। आत्मनस्तु ज्ञानाख्यप्रकाशाग्रहकाले ग्रहणं नास्तीत्यतो लाघवाद्धर्मधर्मिभावशून्यं प्रकाशरूपमेवात्मद्रव्यं कल्प्यते। तस्य च न गुणत्वम् संयोगादिमत्त्वात् अनाश्रितत्वाच्चेति। तथा च स्मर्यते “ज्ञानं नैवात्मनो धर्मो न गुणो वा कथञ्चन। ज्ञानस्वरूप एवात्मा नित्यः

पूर्व्वः सदा शिवः" मा०प्र०मा०। वैवस्वतमनोः ३पुत्रभेदे हरिवं०७अ०।

**प्रकाशक** त्रि० प्रकाशयति प्र+काश-णिच् ण्वुल्। १प्रकाशकारके सूर्य्यादौ सांख्यमतसिद्धे २सत्त्वगुणे च "तत्र सत्त्वं निर्म्मलत्वात् प्रकाशकमनामयम्" गीता।

**प्रकाशकज्ञात** पु० प्रकाशकस्य पूर्व्वं ज्ञाता। कुक्कुटे शब्दच०। तस्य प्रथमं प्रकाशकसूर्य्यज्ञातृत्वात्तथात्वम्।

**प्रकाशन** त्रि० प्रकाशयति प्र+काश--णिच्--ल्यु। १प्रकाशकारके २विष्णौ पु०। "नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः" विष्णुस०।

**प्रकाशात्मन्** पु० प्रकाश आत्मा स्वरूपमस्य। १विष्णौ "प्रकाशात्मा प्रतापनः" विष्णुस०। २व्यक्तस्वभावे त्रि०।

**प्रकाशित** त्रि० प्र+काश+णिच्--कर्म्मणि क्त। १प्रकटिते हेम० प्र+काश--कर्त्तरि क्त। २प्रकाशयुते त्रि०। भावे क्त। ३प्रकाशे न०।

**प्रकाश्य** त्रि० प्र+काशि--कर्म्मणि यत्। १प्रकाशनीये २प्रायोऽन्वर्षयज्ञादौ नवके न० आश्व० १० अ०। नवनवकशब्दे २९८८ पृ० दृश्यम्।

**प्रकीर्ण** न० प्र+कॄ--कर्म्मणि क्त। १चामरे जटा०। २ग्रन्थविच्छेदे त्रिका०। ३विक्षिप्ते ४मिश्रिते विभिन्नजातीये त्रि०। ५पूतिकरञ्जे पु० राजनि०। भावे क्त। भिन्नजातीयानां ६मिश्रणे ७विक्षेपे ८विस्तारे च न०। स्वार्थे क। तत्रार्थे। अनुक्तप्रायश्चित्तविशेषे पापकविशेषे पातकशब्दे ४२९९ पृ० विष्णुवाक्यम् दृश्यम्। "अनुक्तं तत्प्रकीर्णकम्" अनुक्तमनुक्तनिष्कृतिकं पापं प्रकीर्णकमित्यर्थः। "अनुक्तनिष्कृतीनां तु पापानामपनुत्तये। शक्तिं चावेक्ष्य पापञ्च प्रायश्चित्तं प्रकल्पयेत्" विश्वामित्रः "प्रकीर्णपातके ज्ञात्वा गुरुत्वमथ लाघवम्। प्रायश्चित्तं बुधः कुर्य्यात् ब्राह्मणानुमतः सदा" विष्णुः। "क्रयविक्रयदुष्टभोजनप्रतिग्रहेषु अनादिष्टप्रायश्चित्तेषु चान्द्रायणं प्राजापत्यं वा" शङ्खलिखितौ। भट्टिकाव्ये नानाजातीयप्रत्ययोदाहरणबोधककाण्डं प्रकीर्णकाण्डम्। संज्ञायां कन्। तुरङ्गमे पुंस्त्री० स्त्रियां जातित्वात् ङीष्।

**प्रकीर्य्य** पु० प्रकीर्य्यतेऽसौ प्र+कॄ--क्यप्। (नाटाकरञ्जा) १करञ्जभेदे अमरः। २पूतकरञ्जे (रीठाकरञ्जा) राजनि०। ३विक्षेप्ये ४व्याप्ये च त्रि०।

**प्रकुञ्च** पु० "प्रकुञ्चः षोड़शी बिल्वं पलमेवात्र कीर्त्त्यते" भावप्र० उक्ते पलरूपे मानभेदे। "चूर्णप्रकुञ्चम्" इत्यादि सुश्रुतः

**प्रकुल** न० प्र+कुल-कर्त्तरि क। प्रशस्तदेहे त्रिकाण्डशेषः।

**प्रकूष्माण्डी** स्त्री दुर्गायां हेमच०।

**प्रकृत** त्रि० प्र+कृ--क्त। १अधिकृते २आरब्धे ३प्रकरणप्राप्ते च। ४ऋषिभेदे पु०। प्रकृतस्यर्षेर्गोत्रापत्यम् अश्वा० फञ्। प्राकृतायन तद्गोत्रापत्ये पुंस्त्री०।

**प्रकृति** स्त्री प्र+कृ--कर्त्तरि क्तिच् भावादौ क्तिन् वा। १स्वभावे २योनौ ३लिङ्गे ४स्वाम्यमात्यादौ राज्याङ्गे अमरः। ५शिल्पिनि हेम०। ६शक्तौ ७योषिति शब्दर०। ८परमात्मनि धरणिः। १०आकाशादिभूतपञ्चके ११करणे १२गुह्ये १३जन्तौ च १४एकविंशत्यक्षरपादके छन्दोभेदे। १५मातरि १६प्रत्ययनिमित्ते शब्दभेदे तल्लक्षणं शब्द०प्र० उक्तं यथा "स्वोपस्थाप्यपदार्थस्य बोधने यस्य निश्चयः। तत्त्वेन हेतुरेव वा प्रकृतिः सा तदर्थिका। तत्त्वेन विषयत्वेन स्वोपस्थाप्यशाब्दार्थस्यान्वयबोधं प्रति अव्यवहितोत्तरत्वसंसर्गेण यादृशशब्दवत्तानिश्चयत्वेन हेतुत्वं तादृश एव शब्दस्तथाविधार्थे प्रकृतिरिति तु फलितार्थः। वङ्कुड़ो द्राक्षेत्यादौ वङ्कजाद्यर्थस्यान्वयबोधं प्रति गुड़ादिपदधर्म्मिकवङ्कजादिनिश्चयत्वेन न हेतुत्वमपि तु गुड़ादिधर्म्मिकवङ्कगुड़ादिपदनिश्चयत्वेन अन्यथा केवलादपि वङ्कगुड़ादिशब्दात् द्राक्षादौ वङ्कजाद्यर्थस्यान्वयबोधापत्तेरिति न तत्र प्रसङ्गः"। "निरुक्ता प्रकृतिर्द्वेधा नामधातुप्रभेदतः। यत् प्रातिपदिकं प्रोक्तं तन्नाम्नो नातिरिच्यते। निरुक्ता न तु सांख्यानामिव जगदुपादानभूता। यच्च पाणिनिप्रभृतिभिः प्रातिपदिकं प्रकृतिरुक्तं तदपि नाम्नो नातिरिच्यते नातो विभागन्यूनता"। वैयाकरणमते तल्लक्षणन्तु शब्दार्थरत्नेऽभिहितं यथा "एवं प्रकृतिप्रत्ययादिसमुदायरूपपदस्वरूपे तद्विभागे च दर्शिते इदानीं तदवयवरूपप्रकृतिप्रत्ययस्वरूपविभागौ प्रदर्श्येते। तत्र प्रकृतिर्नाम अर्थावबोधहेतुः प्रत्ययविधानावधिभूतः शब्दविशेषः सर्व्वेषामेव च प्रत्ययानां प्रकृतिं निमित्तीकृत्यैव विधानात्। प्रत्ययानाञ्च प्रत्यायकत्वरूपेणैव निवेशः न तु वक्ष्यमाणप्रत्ययत्वेन तेन नान्योन्याश्रयः। अवधित्वञ्च पूर्व्वापरत्वरूपं ग्राह्यं तेन वङ्कजादेर्निमित्तप्रकृतौ नाप्रसङ्गः। वस्तुतस्तु सिद्धान्ते वृत्तिशब्दानां समुदायशक्तिस्वीकारात् तद्घितादीनां निरर्थकत्वाच्च तत्र प्रकृतिप्रत्ययादिविभागः। अत एव भाष्ये "तावेव सुप्तिङौ यो ततः परो नैव प्रकृतिराद्येति" सुप्तिङ्मात्रयोरेव प्रत्ययत्वमित्युक्तम्।

ततोविधानावधेः यौ परौ तावेव सुप्तिङौ या च तयोराद्या विधानावधिभूता सैव प्रकृतिरिति तदर्थः। एतदभिप्रायेणैव हरिणा "सः शब्दः स्वेतरस्वार्थे स्वार्थस्यान्वयबोधने। यदपेक्षस्तयोः पूर्वा प्रकृतिः प्रत्ययः परः" इति प्रकृत्यादिलक्षणमुक्तम्। अत्र च पूर्वत्वं बोधकशब्दविधानावधित्वमेव बोध्यं भाष्यैकवाक्यत्वात् नत्वेतत्कारिकोपात्तपूर्वापरत्वं तथासति पचतीत्यादौ तिङादेरेव धात्वर्थे स्वार्थप्रकारकान्वयबोधजनकत्वस्वीकारात् तत्रातिव्याप्तिः। एवञ्च निरुक्तपूर्वत्वरूपलक्षणेनैव प्रसक्तातिप्रसक्त्यादिवारणसम्भवे प्रकृतिप्रत्यययोरर्थबोधकत्वसाकाङ्क्षत्वद्योतनायैव सः शब्द इत्यादिकथनं बोध्यमेवञ्च स्वार्थे इत्यत्र विशेष्यतया विशेषणतया वान्वयबोधने इत्यर्थः तेन सिद्धान्ते तिङर्थप्रकारकान्वयबोधेऽपि न क्षतिः। तथा च तदर्थान्वितस्वार्थबोधने तदपेक्षत्वे सति तद्विधानावधिभूतत्वं तत्प्रकृतित्वमिति फलितम्। एवञ्चावयवशक्तिस्वीकारेऽपि बहुजादावतिप्रसङ्गादिशङ्कापि नोदेति बहुजादेः प्रकृतिविधानावधित्वाभावात् अवधित्वस्य पूर्वापरत्वरूपस्य निवेशाच्च। अत एतत्पक्षे भाष्ये सुप्तिङ्शब्दौ प्रत्ययान्तरस्याप्युपलक्षकाविति द्रष्टव्यम्। तथा शेखरकारेणापि प्रत्ययविधानोद्देश्यतावच्छेदकाक्रान्तत्वमेव प्रकृतित्वमित्यभिदधे पूर्वसिद्धवस्तुन एव उद्देश्यत्वसम्भवात् पूर्वत्वमर्थायातं बहुजादेरपि सुप उद्देश्यत्वान्न किञ्चिद् दूषणमावहतीति। एवञ्च प्रकरोति प्रत्ययं बोधयतीति व्युत्पत्तिसत्त्वात् प्रकृतिशब्दो योगरूढ इति बोध्यम्"। १७उपादानकारणे "प्रकृतिश्च दृष्टान्तानुपरोधात्" शा॰सू॰ "सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी" हरिका॰। १८उपदिष्टसर्वाङ्गके कर्मभेदे। तदेतत् नागेश्ट॰भा॰निर्णीतं यथा "ननु का प्रकृतिः का विकृतिरिति चेत् उच्यते यत्र कर्त्तव्यं सर्वं प्रकर्षेण कर्मान्तरनैरपेक्ष्येणोपदिश्यते सा प्रकृतिः यत्र विशेषरूपमेव कर्त्तव्यं मुख्योपदिश्यते इतरत् सर्वं कर्मान्तरादतिदिश्यते सा विकृतिः। सचातिदेशः प्रत्यक्षवचनाद्वा साम्याद्वा लिङ्गाद्वाऽवगन्तव्यः। तत् सर्वं सप्तमाष्टमाध्याययोर्बहुधा विचारितम्। प्रकृतिश्च द्विविधा मूलप्रकृतिरवान्तरप्रकृतिश्चेति। सर्वात्मना कर्मान्तरनिरपेक्षा मूलप्रकृतिः कतिपयेष्वङ्गेषु कर्मान्तरं चापेक्षते स्वयञ्च कैश्चित् कर्मभिरपेक्षणीया भवति सेयमवान्तरप्रकृतिः। तत्र तिस्रो मूलप्रकृतयः ताश्चाष्टमाध्यायस्य प्रथमपादे तृतीयाधिकरणस्य द्वितीयवर्णके विचारिताः। "इष्टिमग्निहोत्रसोमानां मूलप्रकृतिता न हि। अस्ति वा नालौकिकत्वादियत्तानवधारणात्। लोकवत् सन्निपत्यारादुपकारिद्वयश्रुतेः। इयत्तायानिश्चितत्वान्मूलप्रकृतिता त्रिषु। अलौकिकत्वेनैतावद्भिरङ्गैः सम्भूय उपकार इति निश्चेतुमशक्यत्वात् इष्ट्यादीनां नास्ति मूलप्रकृतित्वमिति चेत् नैवं लौकिकसदृशत्वात्। यथा लोके भुजिक्रियायामोदनः करणं तस्य सन्निपत्योपकारिणः शाकसूपादयः, आरादुपकारिणः पीठप्रदीपादयः। तथा भावनायां यागः करणम् अवघातादयः सन्निपातिनः, प्रयाजादयः आरादुपकारिणः। अतो नात्यन्तिकमलौकिकत्वम्। इयत्ता लौकिके यथा प्रत्यक्षेण निश्चीयते तथा श्रौते श्रुत्या निश्चीयतां तस्मादिष्टग्निहोत्रसोमानां मूलप्रकृतित्वमस्ति"। १९सत्त्वरजस्तमसां साम्यावस्थायां साम्यावस्थोपलक्षिते सत्त्वादिगुणे। "सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम्। साम्यावस्थितिरेतेषां प्रकृतिः परिकीर्त्तिता। केचित् प्रधानमित्याहुरव्यक्तमपरे जगुः। एतदेव प्रजासृष्टिं करोति विकरोति च" मात्स्ये ४अ॰। "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः" सा सू॰। "तेषां सत्त्वादिद्रव्याणां या साम्यावस्थाऽन्यूनानतिरिक्तावस्थान्यूनाधिकभावेनासंहतावस्थेति यावत् अकार्य्यावस्थेति निष्कर्षः। अकार्य्यावस्थोपलक्षितं गुणसामान्यं प्रकृतिरित्यर्थः। यथाश्रुते वैषम्यावस्थायां प्रकृतिनाशप्रसङ्गात् "सत्त्वं रजस्तम इति एषैव प्रकृतिः सदा। एषैव संसृतिर्जन्तोरस्याः पारे परं पदम्" इत्यादिस्मृतिभिर्गुणमात्रस्यैव प्रकृतित्ववचनाच्च। सत्त्वादीनामनुगमाय सामान्येति। पुरुषव्यावर्त्तनाय गुणेति। महदादिव्यावर्तनाय चोपलक्षितान्तमिति। महदादयोऽपि हि कार्य्यसत्त्वादिरूपाः पुरुषोपकरणतया गुणाश्च भवन्तीति। तदत्र प्रकृतेः स्वरूपमेवोक्तम्। अस्या विशेषस्तु पश्चाद्वक्ष्यते" प्र॰भा॰। "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृति र्न विकृतिः पुरुषः" सां॰ का॰। "संक्षेपतो हि शास्त्रार्थस्य चतस्रो विधाः। कश्चिदर्थः प्रकृतिरेव, कश्चित् विकृतिरेव,कश्चित् प्रकृतिविकृतिः कश्चिदनुभयरूप इति। तत्र का प्रकृतिरेवेत्यत उक्तम् मूलप्रकृतिरविकृतिरिति प्रकरोतीति प्रकृतिः प्रधानं सत्त्वरज-

समयो साम्यावस्था सा अविकृतिः। प्रकृतिरेवेत्यर्थः कस्मादित्यत उक्तम् मूलेति मूलञ्चासौ प्रकृतिश्चेति मूलप्रकृतिः विश्वस्य कार्य्यसंघातस्य सा मूलं नतस्या मूलान्तरमस्तीति भावः। कतमाः पुनः प्रकृतिविकृतयः कियत्यश्चेत्यत उक्तम् महदाद्याः प्रकृतिविकृतयः सप्तेति प्रकृतयश्च ता विकृतयश्च ता इति। तथा हि महत्तत्त्वमहङ्कारस्य प्रकृतिर्विकृतिश्च मूलप्रकृतेः। एवमहङ्कारतत्त्वं तन्मात्राणामिन्द्रियाणाञ्च प्रकृतिर्विकृतयश्च महतः। एवं पञ्चतन्मात्राणि भूतानामाकाशादीनां प्रकृतयो विकृतयश्चाहङ्कारस्य। अत विकृतिरेव कियती चेत्यत उक्तं षोड़शकस्तु विकार इति। षोडशसंख्यापरिमितो गणः षोडशकः तुशब्दोऽवधारणे भिन्नक्रमश्च पञ्चमहाभूतान्येकादशेन्द्रियाणि चेति षोड़शको गणो विकार एव "न प्रकृतिरिति। यद्यपि च पृथिव्यादीनामपि गोघटवृक्षादयो विकाराः एवं तद्विकारभेदानां दध्यङ्कुरादयस्तथापि गवादयो बीजादयो वा न पृथिव्यादिभ्यस्तत्त्वान्तरं तत्त्वान्तरोपादानत्वञ्च प्रकृतित्वमिहाभिप्रेतमिति न दोषः सर्वेषां गोघटादीनां स्थूलतेन्द्रियग्राह्यता च समेति न तत्त्वान्तरत्वम्। अनुभयरूपमुक्तं तदाह न प्रकृतिर्न विकृतिः पुरुषः" इति त०कौ०। शब्दस्पर्शविहीनं तद्रूपादिभिरसंयुतम्। त्रिगुणं तत् जगद्योनिः" श्रुतिः। तदनुमापकाः कार्य्यभेदाः तद्धर्माश्च सां०सू० भाष्याद्युक्ता यथा "ततः प्रकृतेः" सा० सू० "ततो महत्तत्त्वात् कार्य्यात् कारणतया प्रकृतेरनुमानेन बोध इत्यर्थः। अन्तःकरणसामान्यस्यापि कार्य्यत्वं तावदेकदा पञ्चेन्द्रियज्ञानानुत्पत्त्या मध्यमपरिमाणतया देहादिवदेव सिद्धं श्रुतिस्मृतिप्रमाणाच्च। तस्य च प्रकृतिकार्य्यत्वेऽयं प्रयोगः। सुखदुःखमोहधर्मिणी बुद्धिः सुखदुःखमोहधर्मकद्रव्यजन्या कार्य्यत्वे सति सुखदुःखमोहात्मकत्वात् कान्तादिवदिति कारणगुणानुसारेणैव कार्य्यगुणौचित्यं चात्रानुकूलतर्कः श्रुतिस्मृतयोऽप्यत्रेतिमन्तव्यम् भा० "हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्" सू० कारणानुमापकत्वाल्लयगमनाद्वाऽत्र लिङ्गं कार्य्यजातम् न तु महत्तत्त्वमात्रमत्र विवक्षितं हेतुमत्त्वादीनामखिलकार्य्यसाधारण्यात्। "हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्। सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्" इति कारिकायामप्यत एव व्यक्ताख्यं सर्वं कार्य्यमेव लिङ्गमित्युक्तम्। तथा च तल्लिङ्गं हेतुमत्त्वादिधर्मकमिति वाक्यार्थः। तत्र हेतुमत्त्वं कारणवत्त्वम् अनित्यत्वं विनाशिता प्रधानस्य या व्यापिता पूर्वोक्ता तद्वैपरीत्यमव्यापित्वम्। सक्रियत्वमध्यवसायादिरूपनियतकार्य्यकारित्वम्। प्रधानस्य तु सर्वक्रियासाधारण्येन कारणत्वान्न कार्य्यैकदेशमात्रकारित्वम्। न च क्रिया कर्मैव वक्तुं शक्यते प्रकृतिक्षोभात् सृष्टिश्रवणेन प्रकृतेरपि कर्मवत्तया सक्रियत्वापत्तेरिति। अनेकत्वं सर्गभेदेन भिन्नत्वम्। सर्गद्वयासाधारण्यमिति यावत्। न पुनः सजातीयानेकव्यक्तिकत्वम् प्रकृतावतिव्याप्तेः प्रकृतेरपि सत्त्वाद्यनेकरूपत्वात् "सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात्" इत्यागामिसूत्रादिति। आश्रितत्वं चावयवेष्विति" सां०प्र०भा०। एतद्विपरीतत्वमेव तद्धर्मत्वम्। २०प्रकृत्यंशदेवीपञ्चकरूपशक्तिभेदे "गणेशजननी दुर्गा१ राधा२ लक्ष्मीः३ सरस्वती४। सावित्री५ च सृष्टिविधौ प्रकृतिः पञ्चमी स्मृता"। पञ्चप्रकृतिशब्दनिरुक्तिर्यथा "प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः। सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्त्तिता। गुणे प्रकृष्टे सत्त्वे च प्रशब्दो वर्त्तते श्रुतौ। मध्यमे रजसि कृश्च तिशब्दस्तामसः स्मृतः। त्रिगुणात्मस्वरूपा या सर्वशक्तिसमन्विता। प्रधाना सृष्टिकरणे प्रकृतिस्तेन कथ्यते। प्रथमे वर्त्तते प्रश्च कृतिश्च सृष्टिवाचकः। सृष्टेराद्या च या देवी प्रकृतिः सा प्रकीर्त्तिता"। तस्या आविर्भूतिः स्वरूपञ्च यथा "योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव सः। पुमांश्च दक्षिणार्द्धाङ्गात् वामाङ्गात् प्रकृतिः स्मृता। सा च ब्रह्मस्वरूपा च यथा नित्या सनातनी। यथात्मा च यथाशक्तिर्यथाग्नौ दाहिका स्मृता। अत एव हि योगीन्द्रः स्त्रीपुंभेदं न मन्यते। सर्वं ब्रह्ममयं ब्रह्मन्! शश्वत् पश्यति नारद!। स्वेच्छामयं स्वेच्छया च श्रीकृष्णस्य सिसृक्षया। साविर्बभूव सहसा मूलप्रकृतिरीश्वरी। तथा ज्ञेया पञ्चविधा सृष्टिकर्मणि भेदतः। सर्वाः प्रकृतिसम्भूता उत्तमाधममध्यमाः। सत्त्वांशाश्चोत्तमा ज्ञेयाः सुशीलाश्च प्रतिव्रताः। मध्यमा राजसांशाश्चाश्च भोग्याः प्रकीर्त्तिताः। सुखसम्भोगवश्याश्च स्वकार्य्ये तत्पराः सदा। अधमास्तामसांशाश्च अज्ञातकुलसम्भवाः। दुर्मुखाः कुलटा धूर्त्ताः स्वतन्त्राः कलहप्रियाः। पृथिव्यां कुलटा याश्च स्वर्गे चाप्सरसां गणाः। प्रकृतेस्तामसांशास्ताः पुंश्चल्यः परिकीर्त्तिताः। एवं निगदितं सर्वं प्रकृतेः परिकीर्त्तनम्"।

इति स्तोमात्तस्य प्रकृत्यंशतया प्रकृतिवाचकशब्दस्यैव प्राथम्यकीर्त्तनं निर्णीतं यथा "आदौ राधां समुच्चार्य्य पश्चात् कृष्णं विदुर्बुधाः। निमित्तमस्य मां भक्त वद भक्तजनप्रिय !" श्रीनारायण उवाच "निमित्तमस्य त्रिविधं कथयामि निशामय। जगन्माता च प्रकृतिः पुरुषश्च जगत्पिता। गरीयसीति जगतां माता शतगुणैः पितुः। राधाकृष्णेति गौरीशेत्येवं शब्दः श्रुतौ श्रुतः। कृष्णराधेशगौरीति लोके न च कदा श्रुतः। प्रसीद रोहिणीचन्द्र ! गृहाणार्घ्यमिदं मम। गृहाणार्घ्यं मया दत्तं संज्ञया सह भास्कर !। प्रसीद कमलाकान्त ! गृहाण मम पूजनम्। इति दृष्टं सामवेदे कौथुमे मुनिसत्तम !। राशब्दोच्चारणादेव स्फीतो भवति माधवः। धाशब्दोच्चारतः पश्चाद्धावत्येव ससम्भ्रमः। आदौ पुरुषमुच्चार्य्य पश्चात् प्रकृतिमुच्चरेत्। स भवेन्मातृगामी च वेदातिक्रमणे मुने !" ब्रह्मवै॰ जन्म॰ ख॰ ५॰ अ॰।

**प्रकृतिज** त्रि॰ प्रकृत्या जायते जन–ड। १स्वभावजे। प्रकृतिरूपेण जायते जन–ड। प्रकृतिस्वभावरूपे सांख्यमतसिद्धे सत्त्वादिगुणे "गुणाः प्रकृतिजास्तथा" गीता।

**प्रकृतिधर्म** पु॰ ६त॰। सांख्यमतसिद्धे प्रकृतिधर्मभेदे स च प्रकृतिशब्दे हेतुमदनित्यादिविपरीतधर्मरूपेण दर्शितः। सुश्रुते तु "अत ऊर्द्ध्वं प्रकृतिपुरुषयोः साधर्म्यवैधर्म्ये व्याख्यास्यामः। तद्यथा "उभावप्यनादी उभावप्यनन्तौ उभावप्यलिङ्गौ उभावपि नित्यौ उभावप्यपरौ उभौ च सर्वगतावीति। एका तु प्रकृतिरचेतना त्रिगुणा बीजधर्मिणी प्रसवधर्मिण्यमध्यस्थधर्मिणी चेति। बहवस्तु पुरुषाश्चेतनावन्तोऽगुणा अबीजधर्मिणोऽप्रसवधर्मिणो मध्यस्थधर्मिणश्चेति"।

**प्रकृतिमण्डल** न॰ ६त॰। १राज्याङ्गेषु स्वाम्यमात्यादिषु २प्रजासमुदाये च रघुः ८।२ श्लोकव्या॰ मल्लिनाथः।

**प्रकृतिवत्** अव्य॰ प्रकृत्या तुल्यम् प्रकृति+वति। व्याकरणप्रसिद्धे आदिश्यमानस्य प्रकृतिभूतस्यानितुल्यकार्य्ये।

**प्रकृत्यादि** पु॰ प्रकृतिशब्द आदिर्यस्य। सर्वविभक्त्यपवाद तृतीयानिमित्ते शब्दगणे स च गणः "प्रकृति प्राय गोत्र सम विषम द्विद्रोण पञ्चक साहस्र"। प्रकृत्या प्रायेण याज्ञिकः इत्यादि। आकृतिगणोऽयम्। तेन नाम्ना सुतीक्ष्णचरितेन दान्त." भट्टिः इत्यादि।

**प्रकृष्ट** त्रि॰ प्र+कृष–क्त। उत्कर्षयुक्ते हेमच॰।

**प्रकृष्य** त्रि॰ प्र+कृष–कर्मणि क्यप्। भूमिसंलग्नतया कर्षणीये "उलूखलबुध्नो यूपः प्रकृष्यः" कात्या॰ श्रौ॰ २४।५।२७ प्रकृष्यः देशान्तरनयनेन प्रकर्षणीयः भूमिसंलग्नतया प्रेरणीयो न तु उत्पाठ्येनेति तदर्थः।

**प्रकॢप्ति** स्त्री प्र+कृप–भावे क्तिन्। उपकॢप्तौ विद्यमानतायां कात्या॰ १।८।२२

**प्रकेत** त्रि॰ प्र+कित–णिच्–अच्। १प्रकर्षेण ज्ञापके ऋ॰ १। ११३।१भा॰। प्रकर्षेण कं सुखमीयतेऽनेन प्र–ई–बा॰करणे क्त। २प्रकृष्टसुखसाधने यजु॰ १५।६॰वेददीपः।

**प्रकोथ** पु॰ प्र+कुथ–पतिनत्वे भावे घञ्। १प्रकृष्टपतने २संशोषे च "शीघ्रं सतो हि स्तदुमांसतयोपनद्धः सर्वं प्रकोथमुपयात्यवदीर्य्यते च" सुश्रुतः।

**प्रकोष्ठ** पु॰ प्रगतः कोष्ठं प्रा॰स॰। कूर्परस्याधोभागस्थे मणिबन्धपर्य्यन्ते १हस्तावयवे २गृहद्वारदेशस्थे च अमरः। गृहाभ्यन्तरप्रदेशभेदे मुकुटः।

**प्रख(च)र** पु॰ प्रखर+पृषो॰प्र+चर अच् वा। १अश्वसन्नाहे शब्दमाला तत्र द्विधा पाठः। २कुक्कुरे ३अश्वतरे च ४अत्यन्ततीक्ष्णे त्रि॰ मेदि॰।

**प्रक्रम** पु॰ प्र+क्रम–भावे घञ्। १उपक्रमे अमरः २प्रथमारम्भे ३अवसरे मेदि॰ भग्नप्रक्रमः काव्यदोषभेदः। भावे ल्युट्। प्रक्रमण–तत्रार्थे प्रकर्षेण क्रमणे न॰।

**प्रक्रान्त** त्रि॰ प्र+क्रम–क्त। १आरब्धे २प्रकरणप्राप्ते [युक्ते त्रि॰।

**प्रक्रिया** स्त्री प्र+कृ–भावे श। १प्रकरणे "सा प्रक्रिया या कथमित्यपेक्षा" पार्थसारथिमिश्रः। २अधिकारे नृपादीनां चामरव्यजनच्छत्रधारणादिव्यापारे च ३शब्दप्रयोगसाधनाख्यायाम् ४पक्षप्रतिपक्षयोः प्रवृत्तौ गौतमसू॰ ५।१।१६ शबरभा॰।

**प्रक्लिन्न** त्रि॰ प्र+क्लिद–कर्त्तरि क्त। १तृप्ते जटा॰ २बहुक्लेद॰

**प्रक्व(का)ण** पु॰ प्र+क्वण–भावे घञ् अप् वा। वीणादेः क्वणिते शब्दे अमरः।

**प्रक्षाल** त्रि॰ प्रक्षालयति क्षालि–अच्। शोधके प्रायश्चित्ते न॰ "परिपूष्टिका वैतसिकास्तप्रक्षालास्तथैव च" (यतयः) भा॰ आश्व॰ ९२अ॰। "अप्रक्षालाः (निष्पापतया) शोधकहीनाः" नीलकण्ठः। अत्र मुद्रितपुस्तके "परिष्टिका वेदासिकास्तप्रख्यालास्तथैव च" इत्यपपाठः।

**प्रक्षेप** पु॰ प्र+क्षिप–भावे घञ्। १अर्पणे २बहुद्रव्यमध्ये अपरात्स्वांशनिवेशने च।

**प्रक्ष्वेडन** पु॰ प्र+क्ष्विड–ल्यु। नाराचास्त्रे हेमच॰।

**प्रख्या** स्त्री प्र+ख्या–भावे अङ्। १विख्यातौ २उपमायां च

उत्तरपदस्थः बहु० । उपमायुक्ते यथा वज्रप्रख्यः इत्यादि

**प्रख्यात** त्रि० प्र+ख्या—क्त । विख्याते सुप्रसिद्धे ।

**प्रख्यातवप्तृ(क)** पु० प्रख्यातो वप्ता जनयिता यस्य कप् । विख्यातपितृके ख्यातप्रभृतौ हेमच० ।

**प्रख्यास्** पु० प्र+चक्ष- असि 'बहुलं णिच्' इत्युक्तेर्न णित् तेन ख्यादेशः । प्रजापतौ उज्ज्वल० ।

**प्रगण्ड** पु० गडि—वदनैकदेशे अच् प्रकृष्टो गण्डः अवयवः प्रा०स० । १कूर्परोपरिकक्षपर्य्यन्तभागे अमरः । दुर्गप्राकारभित्तौ २मूराणां निवेशनस्थाने च स्त्री गौरा० ङीष् । "यद्वारो यत्र लोकानां दूरादेवावबुध्यते । प्रगण्डी सा च विज्ञेया बहिःप्राकारसंस्थिता । प्रणिधिस्तत्र यत्नेन कर्त्तव्यो मतिमिच्छता । स एवाकारकोटीति ह्युच्यते शस्त्रकोविदैः" भा०टी०धृतवाक्यम् । "प्रगण्डीः कारयेत् सम्यगाकाशजननीस्तथा" भा० शा० ६९ अ० । "प्रगण्डीर्दुर्गप्राकारभित्तौ मूराणामुपवेशनस्थानानि । आकाशजननीस्तत्रैवैककक्षायां भित्तौ तत्स्थानां रक्षणभूतायां बाह्यार्थदर्शनार्थानि क्षुद्रच्छिद्राणि यद्द्वारा आग्नेयास्त्रगुलिकाः प्रक्षिप्यन्ते" नीलकण्ठः ।

**प्रगतजानु(क)** त्रि० प्रगते परस्परमसंश्लिष्टे जानुनी यस्य वा कप् । असंहतजानुके प्रगतौ यस्य जानुनोर्मध्ये महदन्तरालं तस्मिन् अमरः । स्त्रियां कृते बुक्ते त्रि० ।

**प्रगन्ध** पु० प्रकृष्टो गन्धोऽस्य । १पर्पटे राजनि० । २प्रकृष्टगन्धे ।

**प्रगल्भ** त्रि० प्र+गल्भ—अच् । १प्रत्युत्पन्नमतौ २प्रतिभान्विते च अमरः । ३नायिकाभेदे स्त्री तल्लक्षणादि नायिकाशब्दे ४०४३ पृ० दृश्यम् ।

**प्रगल्भता** स्त्री प्रगल्भस्य भावः तल् । १प्रौढत्वे २उत्साहे च हेमच० । "निःशङ्कता प्रयोगेषु बुधैरुक्ता प्रगल्भता" उज्ज्वलमणयुक्ते प्रयोगेषु ३निःशङ्कत्वे च ४प्रतिभान्वितत्वे च ।

**प्रगाढ़** त्रि० प्रकर्षेण गाढम् गाह—क्त । १अत्यन्तभये २कृच्छ्रे च अमरः । ३दृढे भरतः ।

**प्रगातृ** त्रि० प्र+गै तृच् । उत्तमगायके शब्दरत्ना० ।

**प्रगाथ** पु० प्र+ग्रन्थ—बा० आधारे घञ् 'छन्दसः प्रगाथेषु' निर्देशात् नि०नरयोर्लोपे उपधावृद्धिः । वेदे द्वे ऋचौ यत्र तिस्रः क्रियन्ते १तत्कार्ये विस्तरस्तु सामसंहिताभाष्ये दृश्यः । दिङ्मात्रं ततः समाहृत्येहोच्यते । "काकुभः प्रगाथः" इत्यत्र प्रगाथशब्दार्थपर्य्यालोचनेनापि ग्रथनं गम्यते प्रकर्षेण ग्रथनं यत्र स प्रगाथः प्रकर्षो नाम आम्नाताहकपाठादाधिक्यम्, तच्च पूर्वोक्तरीत्या पादाभ्यासपुरःसरस्तृचान्तरसम्पादनेनोपजायते । तस्माच्चोत्पत्तिककुभौ गृहीतव्ये किन्तर्हि ग्रथनेन द्वे उत्तरे ककुभौ सम्पाद्य तासु तिसृषु रथन्तरं गातव्यम् । रौधसनामकं किञ्चित् साम तथा यौधाजयनामकमपरम् तयोः साम्नोर्द्वे हतो- च्छन्दस्कस्तृच आश्रय इति उत्तरापन्ये तु तस्य सामद्वयस्याश्रय एकः प्रगाथः आम्नातः तस्मिंश्च प्रगाथे पुनानः सोमेत्यष्टाक्षरा प्रथमा सा च बृहती "दुहान ऊधर्दिव्यमिति" द्वितीया सा तु विष्टारपङ्क्तिः तामेतां विष्टारपङ्क्तिमपनीय तस्याः स्थाने उत्पत्तिबृहत्यौ द्वे ऋचौ आनेतव्ये इति पूर्वपक्षः । बृहतीविष्टारपङ्क्त्योः प्रथमनविशेषेण द्वे बृहत्यावुत्तरे सम्पादनीये इति राद्धान्तः । प्रगाथत्वेन ध्येये २मन्त्रे च यजु०१९।२४वेददी० ।

**प्रगुण** त्रि० प्रस्तुतो गुणो यत्र प्रकृष्टो गुणो यस्य वा प्रा०ब० । १ऋजुतावति २दक्षे च अमरः । प्रकृष्टगुणोऽप्यत्र ।

**प्रगृह्य** न० प्र+ग्रह—क्यप् । व्याकरणोक्ते स्वरसन्धिराहित्ययोग्ये १पदभेदे २स्मृतौ ३वाक्ये च अमरः ।

**प्रगे** अव्य० प्रगीयतेऽत्र प्र+गै—के । अतिप्रातःकाले अमरः । तत्र भवः ट्यु तुट् च । प्रगेतन प्रातर्भवे त्रि० राजनि० ।

**प्रगेनिश** त्रि०प्रगे प्रातःकाले निशेव स्वापहेतुर्यस्य । प्रातःकालशायिनि । "उत्तुङ्गर्य शायिनश्चावन् सर्वे चावन् प्रगेनिशाः" भा०शा० २२८अ० ।

**प्रग्रथन** न० प्रकर्षेण ग्रथने । प्रगाथशब्दे दृश्यम् ।

**प्रग्रह** पु०प्र+ग्रह कर्मकरणादौ पक्षे अप् । १तुलासूत्रे २हयादिसंयमनरज्ज्वौ ३वन्द्यां च अमरः । ४नियमने ५भुजे ६सुवर्णालङ्कारे मेदि० । ७कर्णिकारवृक्षे राजनि० । प्र+ग्रह—कर्त्तरि अच् । दक्षिणौ "प्रग्रहो निग्रहो व्ययः" विष्णुस० "भक्तैरुपाहृतं पत्रपुष्पादिकं प्रगृह्णातीति प्रग्रहः" भा० । [२हयादिसंयमनदाम्नि च अमरः ।

**प्रग्राह** पु० प्र+ग्रह—कर्मकरणादौ वा घञ् । १तुलासूत्रे

**प्रग्रीव** पु०न०प्रकृष्टा ग्रीवा यस्य । १चन्द्रशालादौ प्रान्तभाग्ये दारुपङ्क्तौ २वातायने सुभूतिः ३ऋक्षग्रीव्यके गोवर्द्धनः । ४प्रकृष्टग्रीवान्विते त्रि० ।

**प्रघटाविद्** पु०प्रकृष्टा घटा आडम्बरः तां वेत्ति विद्–क्विप् । शास्त्रगण्डे शास्त्राभिज्ञे त्रिका० ।

**प्रघट्टक** पु० प्र+घट्ट—ण्वुल् । एकार्थप्रतिपादनार्थग्रन्थावयवभेदे सां०प्र०भाष्ये दृश्यम् ।

**प्रघ(घा)ण(न)** पु० प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते

हन–कर्मणि घञ् अप् वा घत्वम् । १अलिन्दे अमरः । २प्रकोष्ठे त्रिकां० । अवलः ३ताम्रकुम्भे ४लोहमुद्गरे च मेदि० । मुकुटमतेऽयमघत्वमध्यः ।

**प्रघस** पु० प्र+अद–अप् घसादेशः । १प्रकृष्टभक्षके २राक्षसभेदे पु० भा० व० २८४अ० ३असुरे ४दैत्ये च त्रिका० कुमारानुचरमातृभेदे स्त्री भा०श० ४७अ० ।

**प्रघात** न० प्रहन्यतेऽत्र हन-आधारे घञ् । १युद्धे हेमच० भावे घञ् । २प्रहनने पु० ।

**प्रघास** पु० प्र+घस–कर्मणि घञ् । प्रकर्षेण भक्ष्यतेऽत्र हविरादौ वरुणप्रघासचातुर्मास्ययागभेदः । प्रघासोऽस्त्यस्य इनि । प्रघासिन् मरुत्सु "प्रघासिनोहवामहे मरुतश्च" यजु० ३।४४ वेददीपे दृश्यम् ।

**प्र(प्रा)घुण** पु० प्र(+आ+घा) घुण–क । अतिथौ हेमच० ।

**प्रघूर्ण** पु० प्र+घूर्ण–अच् । अतिथौ हेमच० ।

**प्रघोष** पु० प्र+घुष–भावे घञ् । १प्रकृष्टघोषणे स्वार्थे कन् । २अव्यक्तशब्दे ध्वनौ जटा० ।

**प्रचक्र** न० प्रगतचक्रं प्रा० स० । स्वचक्रात् परचक्रं प्रति चलिते सैन्ये अमरः ।

**प्रचक्षस्** पु०प्र+चक्ष–असि न ख्यादेशः । बृहस्पतौ उणादि० ।

**प्रचण्ड** त्रि० प्रकर्षेण चण्डः प्रा०स० । १दुर्द्धर्षे २दुर्वहे ३दुरन्ते ४प्रतापान्विते च ५श्वेतकरवीरे पु०मेदि० ६दुर्गाया नायिकाभेदे स्त्री "उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका" कालिकापु०। ७श्वेतदूर्वायां स्त्री राजनि०।

**प्रचण्डमूर्त्ति** पु० प्रचण्डा मूर्त्तिरस्य । १वरुणवृक्षे २भयानकरूपे त्रि० शब्दच० ।

**प्रच(चा)य** पु० प्र+चि–"हस्तादाने चेरस्तेये" पा० हस्तादाने अस्तेये घञ् अन्यत्र "एरच्" पा० अच् । तत्र अजन्तः यष्ट्यादिना हस्तागम्यानां पुष्पाणां १चयने २समूहे शब्दच० ३उपचये ४शिथिलसंयोगभेदे परिमाणशब्दे ७२५०पृ० दृश्यम् "संख्यातः परिमाणाच्च प्रचयादपि जायते । प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते । परिमाणं तूलकादौ नाशस्त्वाश्रयनाशतः" भाषा० हस्तादाने तु घञ् । हस्तेन पुष्पप्रचाय इत्येव चौर्य्ये तु अच् । प्रचय इत्येव चौर्येण हस्तेन पुष्पादेश्चयने । [धरण्णिः ।

**प्रचर** पु० प्र+चर+गोचरसंचरौ नि० आधारेऽप् । मार्गे

**प्रचल** त्रि० प्र+चल–अच् । प्रकृष्टचलनयुक्ते चञ्चले ।

**प्रचलक** पु० प्र+चल+वा वुन् । कीटभेदे सुश्रुतः कीटशब्दे २०५८पृ० दृश्यम् ।

**प्रचलाक** पु० प्र+चल–वा० आकन् । १शराघाते २मयूरशिखण्डे ३भुजङ्गमे पुंस्त्री० मेदि० स्त्रियां ङीप् ।

**प्रचलाकिन्** पु० प्रचलाक+मत्वर्थे इनि । मयूरे त्रिका० ।

**प्रचलाय** नामधातुः प्रचल+भृशा० अभूततद्भावे क्यङ् आ० अक०सेट् । प्रचलायते अप्रचलायिष्ट प्रचलायिष्ट इत्यन्ये

**प्रचलायित** त्रि० प्रचलाय+नामधातुः कर्त्तरि क्त । निद्रादिना घूर्णिते अमरः ।

**प्रचायिका** स्त्री प्र+चि+भावे ण्वुच् । १परिपाट्या पुष्पादेश्चयने । प्र+चि–ण्वुल् टाप् कापि अत इत्त्वम् । प्रचयनकर्त्र्यां २स्त्रियां स्त्री ।

**प्रचार** पु० प्र+चर–भावे घञ् । १प्रसरणे २गतौ ३प्रकाशे च । ततः तारका० इतच् । प्रचारित सञ्जातप्रचारे त्रि० । प्रकाशिते च ।

**प्रचाल** पु० प्रकृष्टचालः । वृषस्य कटकभेदे । भा०द्रो०६१ अ०।

**प्रचिकीर्षु** त्रि०प्र+कृ–सन्+उ । प्रतीकारेच्छौ भाग०४।१०।१०

**प्रचित** त्रि० प्र+कर्मणि क्त । १कृतप्रचयने पुष्पादौ स्वार्थे क ततार्थे । २प्रचयस्वरयुक्ते त्रि०। संज्ञायां कन् । दण्डकभेदे "प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको नद्वयादुत्तरैः" वृ०र० । [सुखदः ।

**प्रचीबल** न० पृथेकं बलं यत्र पृषो०। वीरणे (वेणार मूल)

**प्रचीर** पु० वत्सप्रोक्तपक्ष १पुरुवन्नामभेजाते २पुत्रे नृपभेदे मार्कपु० ११८ अ० । [२वङ्के अमरः ।

**प्रचुर** त्रि० प्र+चुर–क प्रगतचुरावा वा प्रा०स० । १चौरे

**प्रचुरपुरुष** पु० प्र+चुर–क नित्यक० । चौरे त्रिका० ।

**प्रचेतसी** स्त्री प्रकर्षेण चेतयति कूक्षितं चित–णिच्–असुन् गौरा०ङीष् । कट्फले राजनि० तद्भक्षणे हि मूर्च्छा नाशकता वैद्यकप्रसिद्धेति तथात्वम् ।

**प्रचेतस्** पु० प्र+चित-असुन् । १वरुणे अमरः । २मुनिभेदे ३प्रकृष्टहृदये त्रि०मेदि० । ४अनुवंश्ये नृपभेदे हरिवं० ३२ अ० । ५प्राचीनबर्हिषः सामुद्रीभार्य्यायां जातेषु पुत्रेषु राजभेदेषु अ०व० । हरिवं०२अ० । ६प्रकृष्टज्ञानःयुक्ते ऋ० २।३३।२ भा० ।

**प्रचेल** त्रि०प्र+चि–लच् । १प्रचयनकर्त्तरि २सारथौ पु०हेमच०

**प्रचेतुन** त्रि० प्र+चित–उन । प्रकृष्टज्ञानयुक्ते ऋ०।१।२१।६

**प्रचेल** न० प्र+चिल–चेल–वा अच् । पीतकाष्ठे शब्दच० ।

**प्रचेलक** पुंस्त्री० प्र+चेल-गतौ ण्वुल् । १घोटके शब्दमा० । स्त्रियां जातित्वात् ङीष् । २प्रकृष्टगतियुक्ते त्रि० स्त्रियां टाप् ।

**प्रचोदक** त्रि॰ प्र+चुद–प्रेरणे ण्वुल् । १प्रेरके स्त्रियां टापि अत इत्त्वम् । प्रचोदिका । सा च दुःसहस्य नियोजिताख्यायां कन्यायां जाते २कन्याभेदे मार्कपु॰ ५१अ॰।

**प्रचोदनी** स्त्री प्रचोद्यते अपसार्य्यते रोगोऽनया चुद–णिच् ल्युट् ङीप् । १कण्टकारिकायाम् अमरः । भावे ल्युट् । २प्रेरणे न॰ ।

**प्रच्छ** जिज्ञासायां तु॰पर॰द्विक॰अनिट् । पृच्छति अप्राक्षीत् । पप्रच्छ । द्विकर्मकत्वेन दुहादि॰गौणे कर्मणि लकारादि । पृच्छ्यते शिष्येण गुरुः धर्मं, जिज्ञासाविषयज्ञानानुकूलव्यापारः कथं धर्म आचरितव्य इत्यभिलापादिः पृच्छेरर्थः, ज्ञानविषयत्वेन धर्मस्य, तज्ज्ञानाश्रयत्वाच्च गुरोः कर्मत्वम् ।

**प्रच्छद्** न॰ प्रच्छादयति प्र+छादि–क्विप् ह्रस्वः । चर्म "छन्दं वा प्रच्छच्छन्दोऽन्नं प्रच्छद् इति श्रुतेः" यजु॰१५।५ वेददीपे दृश्यम् । [आच्छादने वस्त्रादौ ।

**प्रच्छद** पु॰प्रच्छाद्यतेऽनेन प्र+छद–णिच्–करणे घ ह्रस्वः ।

**प्रच्छदपट** पु॰प्रच्छाद्यतेऽनेन प्र+छद-णिच्–घ ह्रस्वः कर्म॰। (पाछुडि) प्रावरणवस्त्रे अमरः ।

**प्रच्छना** स्त्री प्रच्छ+बा॰ युच् । आमन्त्रणे जटा॰ ।

**प्रच्छन्न** न॰ प्र+छद-क्त । १गुप्तद्वारे २अन्तर्द्वारे । ३आच्छन्ने त्रि॰ अमरः ।

**प्रच्छर्दन** न॰ प्र+छर्द-भावे ल्युट् । १वमने २कोष्ठ्यस्य वायोर्नासिकापुटाभ्यां निःसारणप्रयत्नभेदे रेचने "प्रच्छर्दनविधारणाभ्यां वा प्राणस्य" पात॰ सूत्रे भाष्यं दृश्यम् । कुम्भकशब्दे २११४ पृ॰ दृश्यम् ।

**प्रच्छर्दिका** स्त्री प्र+छर्द–रोगाख्यायां ण्वुल्" पा॰ ण्वुल् तदन्तः स्त्री । १वमनरोगे अमरः । कर्त्तरि ण्वुल् । २प्रच्छर्दके वमनकारके त्रि॰स्त्रियां टाप् कापि अत इत्त्वम् ।

**प्रच्छादन** न॰ प्रच्छाद्यतेऽनेन छद–णिच्-ल्युट् । १उत्तरीयवस्त्रे हेमच॰ भावे ल्युट् । २आच्छादने "नवोढ़के नवान्ने च स्वहप्रच्छादने तथा" स्मृतिः ।

**प्रच्छान** न॰प्र+छो–भावे ल्युट् । १प्रकृष्टच्छेदने २सुश्रुतोक्ते शस्त्रविस्रावणभेदे "तच्च द्विविधं शस्त्रविस्रावणं शिराव्यधनञ्च" सुश्रुतः ।

**प्रच्छिल** त्रि॰ प्रच्छ बा॰ इलच् । निर्जले जलशून्ये हेमच॰

**प्रच्यव** पु॰ प्र+च्यु–अच् । १प्रच्युतियुते । भावे अप् । २प्रचरणे स्वभावक्षरणे "प्रकृतेः स्वभावप्रच्यव" इति सां॰ प्र॰भाष्यम् । भावे ल्युट् । प्रच्यवन क्षरणे न॰ ।

**प्रज** पु॰ प्रविश्य जायायां जायते जन–ड । पत्यौ भरतः

**प्रजङ्घ** पु॰ प्रकृष्टा जङ्घाऽस्य । राक्षसभेदे रामा॰लं॰।दश्लो॰।

**प्रजग्मि** त्रि॰ प्र+गम–ज्ञाने कि द्वित्वम् उपधालोपः । प्रज्ञाशीले शत॰ब्रा॰ ५।१।१।१५

**प्रजन** पु॰ प्र+जन–घञ् न वृद्धिः । १प्रजनने । प्रजायतेऽनेन करणे घञ् । स्त्रीगव्यादिषु २पुङ्गवादीनामभिगमने गर्भग्रहणार्थमैथुने २उपसरे (पालदेओया) अमरः ।

**प्रजनन** न॰ प्रजायतेऽत्र प्र+जन–आधारे ल्युट् । १योनौ भावे ल्युट् । २जन्मनि मेदि॰। करणे ल्युट् । ३उपसरे विश्वः । जनयति जनि–ल्यु । ४जनके त्रि॰ यजु॰१६।४८

**प्रजनिका** स्त्री प्रजनयति प्र+जनि–ण्वुल् । मातरि जटा॰।

**प्रजनिष्णु** त्रि॰प्र+जन–इष्णुच् । जनने शत॰ब्रा॰६।४।१७

**प्रजनुक** त्रि॰ प्र+जन बा॰ उक । प्रजननशीले हेमच॰।

**प्रजनू** स्त्री प्र+जन–बा॰ ऊ । प्रजनने तैत्ति॰३।११।४२

**प्रजय** पु॰प्र+जि–अच् । प्रकृष्टजये याथादि॰अन्तोदात्ततास्य ।

**प्रजल्प** पु॰प्र+जल्प–भावे घञ् । "असूयेर्ष्यामदयुजा योऽवधीरणमुद्रया । प्रियस्य कौशलोद्गारः प्रजल्पः स तु कथ्यते" उज्ज्वलमणिलक्षिते १वाक्यभेदे २प्रकृष्टकथाभेदे च ।

**प्रजविन्** त्रि॰ प्र+जु–इनि । प्रकृष्टवेगयुक्ते अमरः ।

**प्रजहित** पु॰ १पुराणे २गार्हपत्ये वह्नौ ताण्ड्य॰ ब्रा॰ १।४।१० भाष्यधृतवाक्यं दृश्यम् ।

**प्रजा** स्त्री प्र+जन–ड ।१सन्ततौ २जने च अमरः "नञ्दुःसुभ्यः परस्य बहु॰असिच्समा॰ । अप्रजाः दुःप्रजाः ।३जनने च

**प्रजागर** पु॰ प्र+जागृ–अप् । प्रकर्षेण जागरणे १निद्राक्षये हला॰। कर्त्तरि अच् । २विष्णौ "पुष्पहासः प्रजागरः" विष्णुस॰ "नित्यं प्रबुद्धत्वात् प्रजागर्त्तीति प्रजागर." भा॰ प्रजागरयति णिच्–अच् । ३अप्सरोभेदे स्त्री भा॰व॰४३अ॰ ।

**प्रजाता** स्त्री प्रजातं प्रजननं गर्भमोचनमस्त्यस्याः अर्श आद्यच् । १प्रसूतायां स्त्रियाम् हला॰ । प्र+जन-क्त । प्रकर्षेण २जाते त्रि॰ । ३अश्वभेदे पु॰ "वडवायां कृतरेतस्कन्दनः प्रजात इत्युच्यते" कात्या॰श्रौ॰२०।३।२०भाष्यम्

**प्रजातन्तु** पु॰ प्रजायाः प्रजननस्य तन्तुरिव । सन्ताने तैत्तिरीय॰ ।

**प्रजाति** स्त्री प्र+जन-क्तिन् । १प्रजायां २प्रजनने च ३पौत्रोत्पत्तौ "प्रजा च स्वाध्यायप्रवचने च प्रजनश्च स्वाध्यायवचने च प्रजातिश्च स्वाध्यायवचने च" तैत्तिरीय॰ "तत्र प्रजा स्वयमुत्पाद्या प्रजनश्च प्रजननऋतौ भार्या

गमनं प्रजातिः पौत्रोत्पत्तिः” भा० । ४पुत्रादिदृष्टौ शत० ब्रा०७।३।१।४६। ५प्रांशुत्वपमुखभेदे पु० मार्क०पु०११८अ०

**प्रजादा** स्त्री प्रजां तद्धेतुगर्भं ददाति सेवनात् दा--क। गर्भधात्रीवृक्षे राजनि० ।

**प्रजादान** न० ६त० । १प्रजाया दाने २आदाने च । प्रजातः जन्मतः दानं शुद्धिरस्य । ३रजते न० शब्दच० ।

**प्रजानाथ** पु० ६त०। लोकनाथे नृपे प्रजापालादयोऽप्यत्र ।

**प्रजाप** पु० प्रजां पाति पा--क। नृपे हेमच० ।

**प्रजापति** पु० ६त०। १चतुर्मुखे ब्रह्मणि अमरः । २दक्षादौ ३नृपे च मेदि० । ४जामातरि ५सूर्य्ये ६वह्नौ ७त्वष्टरि हेमच०। प्रजापतयस्च बहुविधाः यथोक्तम् “आद्यार्थं चासृजत् पुत्रान् लोककर्तृन् पितामहः । विश्वे प्रजानां पतयो येभ्यो लोका विनिःसृताः । विश्वेशं प्रथमं नाम महातपसमात्मजम् । सर्वमन्त्रमयं पुत्रं नाम्ना धर्मं स सृष्टवान् । दक्षं मरीचिमत्रिञ्च पुलस्त्यं पुलहं क्रतुम् । वशिष्ठं गौतमञ्चैव भृगुमङ्गिरसं मनुम् । अथर्वभूता इत्येते ख्याताश्चैव महर्षयः । त्रयोदश सुता येषां वंशास्तु संप्रतिष्ठिताः” हरिवं० २०४अ० “असृजं सृष्टिं तद्रूपं षडभिम्ब्रत् प्रजापतीन् । मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम् । वशिष्ठञ्च महातेजाः सोऽसृजत् सप्त मानसान् । सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः” हरिवं० १अ० । एकविंशतिः प्रजापतयो यथा “ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्धर्मस्तथा यमः । मरीचिरङ्गिरात्रिश्च पुलस्त्यः पुलहः क्रतुः । वशिष्ठः परमेष्ठी च विवस्वान् सोम एव च । कर्दमश्चापि यः प्रोक्तः क्रोधोऽर्वाक् क्रीत एव च । एकविंशतिरुत्पन्ना ते प्रजापतयः स्मृताः” महाभारते मोक्षधर्मः । अन्येऽपि प्रजापतयः पुराणादौ प्रसिद्धा यथा “मनुः प्रजापतिः” श्रुतिः । ८विष्णौ पु० “पद्मनाभः प्रजापतिः” विष्णु स० । ९वस्त्रे निघण्टुः । १०स्वनामख्याते कीटभेदे ।

**प्रजापतिहृदय** न० सामभेदे “प्रजापतेर्हृदयं गायति” शत०ब्रा० ८।१।२।४० “प्रजासु च प्रजापतौ च गायति प्रजापतेर्हृदयमिति किञ्चित् साम तदत्र गायेत् । प्रजापतेर्हृदयं गायतादि सामवत् कस्मिंचिदृचि न गीयते अपि तु केवलं प्रजाशब्दे प्रजापतिशब्दे च गीयते” भा० ।

**प्रजावत्** पुंस्त्री० प्रजाऽस्त्यस्य मतुप् मस्य वः । १सन्तानयुक्ते स्त्रियां ङीप् । ङीवन्तः; २भ्रातृजायायाम् स्त्री अमरः ।

३प्रकृतियुक्ते नृपे पु० । [यजे यजु० १६।४८।

**प्रजासनि** त्रि० प्रजां सनोति ददाति सन--इन् । सन्तानदातरि

**प्रजाहित** त्रि० प्रजायै हितम् । सन्तानजनयोर्हितकारके जले न० शब्दमाला ।

**प्रजिन** पु० प्र+ज्या-बा० नक् सम्प्र० । वायौ शब्दमा०।

**प्रजेश** पु० ६त० । नृपे प्रजेश्वरादयोऽप्यत्र त्रिका०।

**प्रज्ञ** त्रि० प्रजानाति प्र+ज्ञा कर्त्तरि क । १प्रज्ञायुते प्रज्ञ एव प्राज्ञादि० स्वार्थे अण् । प्राज्ञ तत्रार्थे त्रि० भावे अङ् । २बुद्धौ स्त्री । प्रज्ञा अस्त्यस्य प्रज्ञा० ण । प्राज्ञ प्रज्ञायुते त्रि० ।

**प्रज्ञप्ति** स्त्री प्र+ज्ञपि--भावे क्तिन् । १बुद्धौ हेमच० “ऋतम्भरा तत्र प्रज्ञा” पात०सू० “तत्र सप्तधा प्रान्तभूमिः प्रज्ञा” पात०सू०। २सङ्केते ३देवीभेदे च त्रिका०।

**प्रज्ञाकाय** पु० प्रज्ञा काय इव यस्य । मञ्जुघोषे त्रिका०।

**प्रज्ञाचक्षुस्** पु० प्रज्ञैव चक्षुरिवास्य । धृतराष्ट्रे शब्दर०।

**प्रज्ञादि** पु० स्वार्थेऽण्प्रत्ययनिमित्ते १शब्दगणे स च गणः “प्रज्ञ वणिज उशिज उष्णिज प्रत्यक्ष विद्वस् विदन् षोडन् विद्या मनस् (श्रोत्र शरीरे) (जुहृत् कृष्णमृगे) चिकीर्षत् चोर शत्रु योध चक्षुस् वसु एनस् मरुत् क्रुञ्च सत्वत् दशार्ह वयस् व्याकृत असुर रक्षस् पिशाच अशनि कर्षापण देवता बन्धु ।। अस्त्यर्थे णप्रत्ययनिमित्ते २शब्दगणे च । स च गणः प्रज्ञा श्रद्धा (अर्चा:) (वृत्ति वार्त्त)” वार्त्ति० ।

**प्रज्ञान** न० प्र+ज्ञा—भावे ल्युट् । १बुद्धौ । करणे ल्युट् । २चिह्ने अमरः । प्रज्ञानमस्त्यस्य अच् । ३पण्डिते हिङ्गपकोषः ।

**प्रज्ञाल** त्रि० प्रज्ञाऽस्त्यस्य सिध्मा० लच् । बुद्धियुते त्रि०।

**प्रज्ञिन्** त्रि०प्रज्ञाऽस्त्यस्य इनि । पण्डिते हिङ्गपको०पक्षे मतुप् मस्य वः । प्रज्ञावत् तत्रार्थे उभयतः स्त्रियां ङीप् ।

**प्रज्ञिल** त्रि० प्रज्ञा+अस्त्यर्थे पिच्छा० इल । बुद्धियुते

**प्रज्ञु** त्रि० प्रगते विरले जानुनी यस्य जानुनोर्ज्ञुः । विरलजानुके जने अमरः ।

**प्रडीन** न०प्र+डी--क्त । खगगतिभेदे खगगतिशब्दे दृश्यम् ।

**प्रण** त्रि० पुराभवः प्र+“नश्च पुराणात् प्रात्” ५।४।२० वार्त्ति० न । पुराणे प्राचीने चकारात् पक्षे त्न प्रत्न+ख प्रीण तत्रार्थे त्रि० ।

**प्रणख** पु०प्रकृष्टः नखः पूर्वपदात् णत्वम् । नखाग्रे “आप्रणखात् सर्व एव सुवर्णः” छान्दो०। [२विनययुते च ।

**प्रणत** त्रि॰ प्र+नम-कर्त्तरि क्त । कृतप्रणामे त्रिका॰ । प्रह्वे

**प्रणति** स्त्री प्र+नम-भावे क्तिन् । प्रणामे करशिरःसंयोगादिरूपे स्वापकर्षबोधकव्यापारे ।

**प्रणदन** पु॰ प्र+नद-भावे ल्युट् । प्रणादे अमरः ।

**प्रणपात्** त्रि॰ प्रकर्षेण नपात् नभ्राडित्यादिना नञ्‌ प्रकृतिभावः पूर्वपदात् णत्वम् । प्रकर्षेण न पातयितरि ऋ॰ ८।१७।१३ [१विस्तारे ४निर्वाहे च मेदि॰ ।

**प्रणय** पु॰ प्र+नी-अच् । १प्रेम्णि अमरः २प्रार्थनायां

**प्रणयन** न॰ प्र+नी-भावे ल्युट् । १प्रकर्षेण नयने २करणे च ३अग्नेः संस्कारभेदकरणे कात्या॰श्रौ॰ ६।२।१४।

**प्रणयनीय** त्रि॰प्र+नी-कर्मणि अनीयर् । १प्रकर्षेण नेतव्ये २संस्कार्ये वह्नौ च प्रणयनस्य वह्निसंस्कारस्येदम् छ । ३वह्निसंस्कारसम्बन्धिनि इध्माद्यादौ कात्या॰१।३।२१

**प्रणयिन्** त्रि॰ प्रणयोऽस्त्यस्य इनि । णत्वे प्राप्ते पाठात् "नेभाचरात् अतोजातेरिति" निषेधस्याप्रवृत्तेः इति । १प्रणयवति २स्वामिनि पु॰ हेमच॰। ३भार्यायां स्त्री ङीप् ।

**प्रणव** पु॰ प्रकर्षेण नूयतेऽनेन प्र+नू-अप् । १ओङ्कारे वेदादौ गेये शब्दभेदे अमरः । ११५८ पृष्ठादौ दृश्यम् । उद्गात्रादीनां गानारम्भात् प्राक् यजमानेन ओमित्युक्त्वा गेये २सामावयवभेदे च । प्रणूयते प्र+नू-कर्मणि अप्, प्रणववाच्यत्वात् । ३परमेश्वरे पु॰ "प्राचट् प्रणवः प्रभुः" "प्राचट् प्रणवः पणः" विष्णुस॰। द्विधा व्युत्पत्तियोगात् द्वे नामनी । [णत्वम् । प्रगतनासिके

**प्रणस** त्रि॰ प्रगता नासिका यस्य नसादेशः अच्समा॰

**प्रणाडी** स्त्री प्रणाडी+स्वार्थे कः । १प्रणालीशब्दार्थे २द्वारमात्रे च "तस्यां स्थितौ व्यवधिमात्रं मनं प्रणाड्या प्रतिपदं निष्पादयति" दायभागः ।

**प्रणाद** पु॰ प्र+नद-घञ् । अनुरागजे सीत्कृतादौ १शब्दे अमरः । "अनुरागजाते शब्दे प्रणादः सीत्कृतो न्नृणामिति" शब्दार्णवः । २तारशब्दे ३कर्णरोगभेदे च मेदि॰ । कर्णरोगभेदस्य लक्षणं "कर्णस्रोतःस्थिते वाते शृणोति विविधान् स्वरान् । भेरीमृदङ्गशङ्खानां कर्णनादः स उच्यते" सुश्रुतः ।

**प्रणाम** पु॰प्र+नम-भावे घञ् । प्रकर्षो १स्वापकर्षबोधकव्यापारे करशिरःसंयोगादौ "पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा । वचसा मनसा चैव प्रणामोऽष्टाङ्ग उच्यते" इत्युक्ते २अष्टाङ्गव्यापारभेदे च प्रणामस्य चतुर्धा अभिवादनम् अष्टाङ्गः पञ्चाङ्गः करशिरःसंयोगश्च । तत्राभिवादनशब्दे अभिवादनलक्षणं दृश्यम् । अष्टाङ्गलक्षणमुक्तं द्वितीयो यथा "बाहुभ्यां चैव जानुभ्यां शिरसा वचसा दृशा । पञ्चाङ्गोऽयं प्रणामः स्यात् पूजासु प्रवरः स्मृतः" । नतिविशेषस्तु कालिके "त्रिकोणाकारा सर्वत्र नतिः शस्ता समीरिता । दक्षिणाद्वायवीं गत्वा दिशं तस्माच्च याम्याम् । ततश्च दक्षिणां गत्वा नमस्कारस्त्रिकोणवत्" एकहस्तप्रणामनिषेधो यथा "एकहस्तप्रणामश्च एकं वापि प्रदक्षिणम् । अकाले दर्शनं विष्णोर्हन्ति पुण्यं पुराकृतम्" इति तन्त्रसारः । स च कायिकवाचिकमानसभेदेन प्रत्येकं त्रिविधः यथा "कायिको वाचिकश्चैव मानसस्त्रिविधः स्मृतः । नमस्कारस्तु तत्त्वज्ञैरुत्तमाधममध्यमः । प्रसार्य पादौ हस्तौ च पतित्वा दण्डवत् क्षितौ । जानुभ्यामवनीं गत्वा शिरसाऽऽस्पृश्य मेदिनीम् । क्रियते यो नमस्कार उत्तमः कायिकस्तु सः । जानुभ्यां क्षितिमस्पृष्ट्वा शिरसाऽऽस्पृश्य मेदिनीम् । क्रियते यो नमस्कारो मध्यमः कायिकस्तु सः । पुटीकृत्य करौ शीर्षे दीयते यद्यथा तथा । अस्पृष्ट्वा जानुशीर्षाभ्यां क्षितिं सोऽधम उच्यते । यः स्वयं गद्यपद्याभ्यां घटिताभ्यां नमस्कृतिः । क्रियते भक्तियुक्तैर्वा वाचिकस्तूत्तमः स्मृतः । पौराणिकैर्वैदिकैर्वा मन्त्रैर्वा क्रियते नतिः । मध्यमोऽसौ नमस्कारो भवेद्वाचनिकः सदा । स वाचिकोऽधमो ज्ञेयो नमस्कारेषु पुत्रकौ ! । इष्टमध्यानिष्टगतैर्मनोभिस्त्रिविधं पुनः । मननं मानसं प्रोक्तमुत्तमाधममध्यमम् । त्रिविधे च नमस्कारे कायिकस्तूत्तमः स्मृतः । कायिकैस्तु नमस्कारैर्देवास्तुष्यन्ति नित्यशः । अयमेव नमस्कारो दण्डादिप्रतिपत्तिभिः । प्रणाम इति विज्ञेयः स पूर्वं प्रतिपादितः" कालिकापु॰ ७०अ॰। शूद्रसंस्कृतपूजितदेवताप्रणामनिषेधो यथा "यः शूद्रेणार्चितं लिङ्गं विष्णुं वा प्रणमेद्यदि । निष्कृतिस्तस्य नास्त्येव प्रायश्चित्तायुतैरपि" इति कर्मलोचनम् । "नमेत् यः शूद्रसंस्कृतम्" इत्यादि च ।

**प्रणाय्य** त्रि॰ प्र+नी-ण्यत् "प्रणाय्योऽसम्मतौ" पा॰नि॰। १चौरे २प्रीतिरहिते ३विरक्ते च सि॰कौ॰, ४अभिलाषवर्जिते मेदि॰ । ५साधौ त्रिका॰ ६प्रिये च । असम्मतिभिन्नेषु प्रणेय इत्येव ।

**प्रणाली** स्त्री प्र+नल-घञ् गौरा॰ङीष् णत्वम् ।१जलनिर्गमनमार्गे (पयनाला) अमरः २परम्परायाञ्च । प्रणालोऽप्यत्र पु॰।

**प्रणिधान** न॰ प्रणिधीयते प्र+नि+धा-ल्युट् । १प्रयत्ने २स-

भिनिवेशे ३योगशास्त्रोक्ते चिन्तनविशेषरूपे समाधिभेदे ४भक्तिविशेषे च "ईश्वरप्रणिधानाद्वा" पात० "प्रणिधानात् भक्तिविशेषात्" भाष्यम् । ५अर्पणे ६कर्मणां फलत्यागे च "तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" पात० "ईश्वरप्रणिधानं सर्वक्रियाणां तस्मिन् परमगुरावर्पणं फलसन्न्यासो वा" भा० ७मनसो विषयान्तरसञ्चाराभावरूपे ऐकाग्र्ये च गौत० ३।२।३६ सूत्रवृत्तिः ।

**प्रणिधि** पु० प्रणिधीयते प्र+नि+धा-कि । १गुप्तचरे अमरः । २अनुचरे च । भावे कि ।३याचने ४अवधाने च मेदि० । काश्यपस्य इडदूषस्य ५पुत्रभेदे भा०व० २१८अ० ।

**प्रणिपात** पु० प्र+नि+पत-घञ् । प्रणामे हेमच० "तद्विद्धि प्रणिपातेनेति" गीता । [हिते च मेदि० ।

**प्रणिहित** त्रि० प्र+नि+धा-क्त । १प्राप्ते २स्थापिते ३समा-

**प्रणी** त्रि० प्रणयति प्र+नी-क्विप् । १कारके २ईश्वरे च "ग्रामणीर्विनिःप्रण्यः" भट्टिः ।

**प्रणीत** त्रि०प्र+नी-कर्मणि क्त । पाकेन रूपरसान्यथाभावापादिते १पदार्थे २क्षिप्ते ३निवेशिते ४विहिते च हेमच० । ५वह्नौ संस्कृताग्नौ पु०अमरः । ६यज्ञपात्रभेदे स्त्री मेदि० अग्निपदसान्निध्ये ७मन्त्रसंस्कृतपात्रे "यथाध्वरे वह्निरभिप्रणीतः" भट्टिः । ८मन्त्रसंस्कृतासु अप्सु स्त्री ब०व० । तदाधारपात्री तु उपचारात् प्रणीताशब्दवाच्या । "प्रणीतानाम आपो मन्त्रसंस्कृता आहवनीयस्योत्तरतो निहिताः" आश्व०श्रौ०१।१।५ नारा० । "तदापः प्राचकृंतवाद्रापः प्रणीतास्तत्प्रणीतानां प्रणीतात्वम्" शत० ब्रा० १।१।१।२।८।

**प्रणीय** त्रि० प्र+नी-कर्मणि वेदे क्यप् । यस्य मन्त्रेण संस्कारः कृतस्तस्मिन् । लोके तु प्रणेय इत्येव ।

**प्रणुत** त्रि० प्र+णु-स्तुतौ कर्मणि क्त । स्तुते अमरः ।

**प्रणेय** त्रि० प्र+नी-यत् । १वश्ये अधीने २कृतलौकिकसंस्कारे च हेमच० ३प्रापणीये ।

**प्रतक्वन्** पु० प्र+तक-गतौ वनिप् । प्रकर्षेण गतियुक्ते "नमोऽस्ति प्रतक्वा" ता०ब्रा०१।४।२२ "प्रकर्षेण प्रतक्वा स्वावयवैः पांशुभिः सर्वान् धिष्ण्यान् प्रति गन्ता तकतिर्गतिकर्म्मा" भा० ।

**प्रतति** स्त्री प्र+तन-भावे क्तिन् । १विस्तारे । कर्त्तरि क्तिच् वा ङीप् । २वल्ल्यां च अमरः ।

**प्रतद्वसु** पु० प्रतत् प्राप्तं वसु धनं येन । १प्राप्तवसुके २विस्तीर्णधने त्र ऋ० ८।१३।२७।

**प्रतन** त्रि० प्र+"नश्च पुराणात् प्रात्" वार्त्ति० चकारात् त्नु तट् च । पुरातने अमरः ।

**प्रतनु** त्रि० प्रकृष्टस्तनुः प्रा०स० । १अतिस्वल्पे २अतिसूक्ष्मे च

**प्रतमा(रा)म्** अव्य०प्र+आम तरप् तमप् वा । अत्यन्तप्रकर्षे

**प्रतर** पु० प्र+तॄ-भावे अप् । प्रकर्षेण १तरणे आधारे अप् । २प्रतरणाधारे नौप्रतरशब्दे दृश्यम् । [प्रतर्के तर्कार्थे ।

**प्रतर्कण** न० प्र+तर्क-भावे ल्युट् । वितर्के शब्दर० । घञ् ।

**प्रतर्द्दन** न० प्र+तर्द-भावे ल्युट् । १ताडने । कर्त्तरि ल्यु । २ताडके त्रि० ३दिवोदासपुत्रभेदे पु० हरिवं० २९अ० । ४इन्द्रोपदेश्यभेदे प्रतर्दनं प्रति इन्द्रेण ब्रह्मविद्योपदिष्टेति वेदान्ते प्रसिद्धम् ।

**प्रतल** न० न० प्रकृष्टं तलम् । १पाताळभेदे मेदि० । प्रकृष्टं तलमस्य । २विस्तृताङ्गुलिके पाणौ चपेटे पु० अमरः ।

**प्रतान** पु० प्र+तन-घञ् । १विस्तारे २ऋषिभेदे च तस्य गोत्रापत्यम् इञ् । प्रातानि तद्गोत्रापत्ये बहुत्वे तु तस्य उपका० लुक् । प्रताना इत्येव । ३तन्तुयुक्ते अलाबूलतादौ । "गुच्छगुल्मन्तु विविधं तथैव तृणजातयः । बीजकाण्डरुहाण्येव प्रताना वल्ल्य एव वा" मनुः । "प्रतानास्तन्तुयुक्तास्त्रपुसालाबुप्रभृतयः" कुल्लू० ।

**प्रतानिन्** त्रि० प्र+तन-णिनि । १विस्तीर्णे २विस्तृतलतायाम् स्त्री ङीप् अमरः ।

**प्रताप** पु० प्र+तप-घञ् । १कोशदण्डजाते नृपादेः तेजसि अमरः । २तापे ३अर्कवृक्षे च राजनि० ।

**प्रतापन** पु० प्रतापयति तप-णिच्-ल्यु । १नरकविशेषे २तापके त्रि० शब्दरत्ना० भावे ल्युट् । ३पीडने शब्दर० । कर्त्तरि ल्यु । ४विष्णौ पु० । "प्रकाशात्मा प्रतापनः" विष्णु स० "सूर्यप्रभृतिभिर्विश्वं प्रतापयतीति प्रतापनः" भा० ।

**प्रतापवत्** त्रि० प्रताप+अस्त्यर्थे मतुप् मस्य वः । १प्रतापयुक्ते २स्कन्दानुचरगणभेदे पु० भा० श० ४६ अ० ।

**प्रतापस** पु० तपसि साधु अण् प्रकृष्टस्तापसः प्रा०स० । १प्रकृष्टतापसे२शुक्लार्कवृक्षे च अमरः ।

**प्रतास्** अव्य० प्र+तस बा० क्विप्-स्वरादि । ग्लानौ मनोरमा ।

**प्रतारक** त्रि० प्र+तॄ-णिच्-ण्वुल् । १वञ्चके २धूर्त्ते च ।

**प्रतारण** न० प्र+तॄ-णिच्-भावे ल्युट् । १वञ्चने अन्यपदार्थस्य अन्यथारूपेण ज्ञापने । युच् । प्रतारणाऽपि तत्रार्थे स्त्री । "प्रतारणासमर्थस्य विद्यया किं प्रयोजनम्" उद्भटः ।

**प्रतारित** त्रि० प्र+तॄ-णिच्-क्त । १वञ्चिते त्रिका० ।

प्रति अव्य० प्रथ–डति । १व्याप्तौ २लक्षणे ३कञ्चित्प्रकारमापन्नस्य कथने ४भागे ५प्रतिदाने ६प्रतिनिधीकरणे मेदि० ७स्तोके ८लोपे ९निश्चये १०व्यावृत्तौ ११आभिमुख्ये १२स्वभावे च शब्दर० । अस्य निपातत्वेऽपि क्रियायोगे उपसर्गत्वम् गतित्वञ्च । अस्यार्थभेदोदाहरणादि गणरत्नमहोदधिटी० उक्तं यथा “प्रति व्याप्त्याख्यानहिंसाक्षेपणप्रतिदानप्रतिनिधिव्याप्त्यभिमुख्यव्याप्तिवारणेषु । प्रतिदेवता । प्रतिम्लायति । प्रतिहन्ति प्रतिज्ञानम् । अभिमन्युरर्जुनतः प्रति । प्रतिश्यायः । प्रतिस्पर्धते । प्रतिकीर्णम् पांशुभिः । प्रतिषिद्धः” । तत्र लक्षणेत्थम्भूताख्यानभागवीप्सासु कर्मप्रवचनीयसंज्ञा तद्योगे द्वितीया परिचय्र्द्र उदा० दृश्यम् । प्रतिनिधिप्रतिदानयोः कर्मप्रवचनीयसंज्ञा तद्योगे पञ्चमी । प्रद्युम्नः कृष्णात्प्रति प्रतिनिधिरित्यर्थः । तिलेभ्यः प्रतियच्छति माषान्, माषान् स्वीकृत्य प्रतिरूपतया तिलान् ददातीत्यर्थः । मात्रार्थेऽव्ययीभावे परनिपातः । शाकप्रति शाकस्य लेश इत्यर्थः । कर्मप्रवचनीयत्वे नोपसर्गसंज्ञा तेन हरं हरं प्रतिसिञ्चतीत्यादौ न षत्वं तथा गतिसंज्ञापि न, तेन गतिर्गतातिङिति निघातो न । “प्रतेरंश्वादयस्तत्पुरुषे पा० प्रतेः परस्यांश्वादेः अन्तोदात्तता अंश्वादिशब्दे २७पृ० दृश्यम् ।

प्रतिक त्रि०कार्षापणेन क्रीतः ठिठन् (इकार उच्चारणार्थः) प्रतिरादेशश्च । कार्षापणेन क्रीते स्त्रियां टित्त्वात् ङीप् । ततः पुरोहिता० भावे यक् । प्रातिक्य तद्भावे न०

प्रतिकण्ठ अव्य० वीप्सार्थे समीप्ये वा अव्ययीभावः । १कण्ठे कण्ठे इत्याद्यर्थे २कण्ठसामीप्ये च । प्रतिकण्ठं व्यवहरति ठक् । प्रातिकण्ठिक कण्ठसमीपव्यवहारिणि ।

प्रतिकर पु० प्रति+कृ-विक्षेपे भावे अप् । १प्रतिकीर्णतायां २विक्षेपे च । [प्रतीकारकर्त्तरि ।

प्रतिकर्त्तृ त्रि० प्रति+कृ–तृच् । कृतस्योपकारस्य प्रत्युपकारके

प्रतिकर्म्मन् न० प्रति+कृ-मनिन् । १विद्यमानस्य गुणान्तराधाने २अङ्गप्रसाधनायां प्रसाधने अमरः ।

प्रतिकर्ष पु० प्रति+कृष-भावे घञ् । १समाकर्षणे अन्ययार्थे पूर्वोपात्तस्य पदादेर्ग्रहणे कात्या० १५।८।१० कर्कः ।

प्रतिक(ष्क)श प्रति+कश-गतिशासनयोः अच् सुट् नि० सुङ्भाव्यः । १सहाये २पुरोगे च सि०कौ० । ३वार्त्ताहरे मेदि० । प्रतिगतः कशाम् प्रा०स० । प्रतेः न कश्चि प्रत्युपसर्गत्वम् किन्तु गमेरेवोपसर्गत्वमतो न सुट् । ४कशाघातप्राप्तेऽश्वे सि०कौ० । [२तत्कृतौ च ।

प्रतिकष्ट न० प्रतिरूपं कष्टं प्रा०त० । १कष्टानुरूपकष्टे

प्रतिकाम अव्य० कामं कामं प्रति अव्ययी० । प्रत्येककामे

प्रतिकाय पु०प्रति+चि-घञ् कादेशः । १प्रतिरूपके २शरव्ये लक्ष्ये च जटा० ।

प्रति(ती)कार पु० प्रति+कृ-घञ् वा दीर्घः । १वैरनिर्यातने कृतस्यापकारस्य तुल्यरूपापकारकरणेन २शोधने ३रोगादेश्चिकित्सायाञ्च शब्दरत्ना० ।

प्रति(ती)काश पु० प्रतिरूपः काशः प्र+काश-घञ् वा प्रा०स० दीर्घः । तुल्यत्वे अस्य नित्य० नित्यस० । अमरटीकायां रमानाथेनायं दन्त्यान्ततया पठितः ।

प्रतिकितव पु०प्रतिकूलः कितवः प्रा०त० । द्यूतकारस्य प्रतिकूले द्यूतकारे येन सह द्यूतमुद्दिश्य क्लिश्यति ।

प्रतिकूप पु० प्रतिरूपः कूपः प्रा०त० । परिखायां हारा० ।

प्रतिकूल त्रि० प्रतिरूपं कूलं यस्याऽस्य प्रा०ब० । १अननुकूले विरुद्धपक्षावलम्बिनि प्रतीपे अमरः प्रा०ब० । २विपरीताचरणे न० ।

प्रतिकृति स्त्री प्र+कृ-कर्मादौ क्तिन् । १प्रतिमायां २प्रतियाने ३प्रतिनिधौ अमरः । ४प्रतिकाये मेदि० ।

प्रतिकृष्ट त्रि० प्रति+कृष-क्त । १गर्ह्ये २द्विरावृत्ते ३अपकृष्टे चेत्यादौ च मेदि० । [प्रति कोपे च

प्रतिकोप पु०प्रतिरूपः कोपः । १रोगहेतुरूपे कोपे २विपक्ष

प्रतिक्रिया स्त्री प्रति+कृ-भावे श । प्रति(ती)कारे

प्रतिक्षण अव्य०क्षणं क्षणं व्याप्य व्याप्तौ अव्ययी० । आभीक्ष्ण्ये

प्रतिक्षय पु० प्रति+क्षि-ऐश्वर्ये अच् । रक्षके शब्दर०

प्रतिक्षिप्त त्रि० प्रति+क्षिप-कर्मणि क्त । १प्रेषिते २वारिते मेदि० । ३बाधिते ४तिरस्कृते च अमरः । “आहूय प्रेषितो यस्तु प्रतिक्षिप्तः स उच्यते” इत्युक्ते ५आहूयप्रेषिते अल्पदायः । [२तिरस्कारे च ।

प्रतिक्षेप पु० प्रति+क्षिप-भावे घञ् । १निरासे मेदि० ।

प्रतिखुर पु० सम्भूते एकीयमतोक्ते मूढगर्भभेदे “निःसृतहस्तपादशिरःकायसङ्गी प्रतिखुरः” इति तन्त्र लक्षितम् ।

प्रतिख्याति स्त्री प्रति+ख्या-भावे क्तिन् । १विख्यातौ २कतिख्यातौ अमरः ।

प्रतिगत न० प्रति+गम-भावे क्त । “गतागतप्रतिगतसख्या० तान्याश्च पक्षिणाम्” जटाधरोक्ते १खगगतिभेदे २परावृत्यागमने च । कर्त्तरि क्त । ३परावृत्ते त्रि० ।

प्रतिगर पु०प्रतिगीर्यते प्रत्युच्चार्यते प्रति+गृ-भावे अप् । वैदि-

मन्त्रभेदस्य उच्चारणभेदे। तस्य प्रकार आश्व०श्रौ०५।९।४ सूत्रादौ वृत्तौ च दर्शितो यथा "प्रणवस्वरः प्रतिगर ओथामो दैवेति" सू० "प्रणवस्य स्वर इव स्वरो यस्य स प्रणवस्वरः। उत्तरपदलोपोऽत्र द्रष्टव्यः। प्रणवतुल्यस्वर इत्यर्थः। सवनस्वरस्याविधेयत्वादन्योऽपि यो विशिष्टः स्वरो विहितः प्रणवस्य तस्य प्रापणार्थं वचनम्। ओथामोदैव इत्ययं प्रतिगरसंज्ञो भवति प्रतिगीर्यते प्रत्युच्चार्यते इति प्रतिगरः। वक्ष्यमाणविशेषविशिष्टतया सकृदेव विधातुं शक्येऽपि सामान्यस्य पृथग्विधानं प्रतिगरशब्दव्यवहारेऽपि सामान्येनास्य ग्रहणार्थम्" नारा० वृ० "शंसामो दैवेत्याहावे" सू० "प्रतिगरो भवतीति शेषः। यः पुनरयं प्रतिगरोऽपरो विधीयते तज्ज्ञापयति। प्रतिगरान्तरमध्यवर्त्तिन्याहावेऽयं निमज्जते। तेन शस्त्रमध्येऽयमेव स्यात् शस्त्रादावयं आह्वानोक्तः शंसामोदैवोमिति वा" ना०वृ०। "प्लुतादिः प्रणवेऽप्लुतादिरवसाने" सू०। "व्यवहितस्यैनौ विशेषविधौ। अनन्तरस्य प्रणवावसानरूपेण विषयभेदासम्भवात्" वृ०। "प्रणवे प्रणव आहावोत्तरे" सू०। "प्लुतादेरयमपवादः। आहावोत्तरे प्रणवे प्रणव एव प्रतिगरो भवति"। "अवसाने च" सू०। प्रणवः प्रतिगरो भवतीति शेषः। शस्त्रान्तरे शस्त्रमध्ये चावसानेऽयं विधिर्भवति" वृत्तिः। "प्रणवान्तो वा" सू०। विकल्पद्वयेऽयं विकल्पः यत्र यत्र चान्तःशस्त्रं प्रणवेनावस्यति। प्रणवान्त एव तत्र प्रतिगरः" वृत्तिः। शस्त्रान्ते तु प्रणवः" वृ०।

**प्रतिग्रह** पु० प्रति+ग्रह–अप्। १स्वीकारे २अदृष्टार्थदत्तद्रव्यस्य ग्रहणे ३सैन्यपृष्ठे ४पतद्ग्रहे च मेदि०। प्रतिग्रहश्चादृष्टार्थत्यक्तद्रव्यस्वीकारः। तत्र दानस्यैव स्वत्वध्वंसमिव परस्वत्वोत्पत्तिं प्रति हेतुता प्रतिग्रहस्य तु यथेष्टविनियोगार्हताप्रयोजकस्वत्वं प्रति कारणता यथोक्तं दायभागे

"स्वत्वं लोकेऽपि दाने हि चेतनोद्देशविशिष्टत्यागादेव दातृव्यापारात् सम्प्रदानस्य द्रव्ये स्वामित्वम्। न च स्वीकरणात् स्वत्वं स्वकर्त्तुरेव दातृत्वापत्तेः परस्वत्वापत्तिफलेन हि दानरूपता तच्च फलं सम्प्रदानाधीनं यथा देवतोद्देशेन द्रव्यत्यागं कुर्वन्नपि यजमानो न होता किन्तु तस्यैव त्यागस्य होमाभिधाननिमित्तं प्रक्षेपं कुर्वन् ऋत्विगेव होतेत्युच्यते तद्वदत्रापि स्यात्। किञ्च मनसा पात्रमुद्दिश्येत्यादिशास्त्रे स्वीकारात् प्रागेव दानपदं दृष्टम्। ननु ग्रहणं स्वीकारः अभूततद्भावे च्विप्रयोगात् अस्वं स्वं कुर्वन् व्यापारः स्वीकारो भवति कथं तत् प्रागेव स्वत्वम्। उच्यते उत्पन्नमपि स्वत्वं सम्प्रदानव्यापारेण ममेदमिति ज्ञानेन यथेष्टव्यवहारार्हं क्रियत इति स्वीकारशब्दार्थः। याजनाध्यापनवाहणयोश्च प्रतिग्रहस्य स्वत्वजनकतोऽपि अर्जनरूपता न विरुद्धा याजनादौ दक्षिणादानादेव स्वत्वात्" मूलम्। व्याख्यातमेतत् श्रीकृष्णेन यथा

"ननु त्यागात् केवलं स्वत्वनाशः सम्प्रदानस्वत्वं तु ममेदमिति भाविस्वत्वावगाहितत्स्वीकारादेवेति मतं निराकरोति नचेति। स्वीकर्त्तुरेवेत्येवकारेण त्यक्तुर्व्यवच्छेदः। इदमुपपादयति परस्वत्वापत्तिफलेन हीति। अत्रायमाशयः धात्वर्थतावच्छेदकफलानुकूलव्यापारवत एव तदन्तधातुव्यपदेश्यत्वं यथा धात्वर्थतावच्छेदकोत्तरदेशसंयोगानुकूलव्यापारवति चैत्रे गन्तेति व्यवहारः। स्वीकारस्य स्वत्वहेतुत्वे धात्वर्थतावच्छेदकपरस्वत्वानुकूलस्वीकाररूपव्यापारवतः स्वीकर्त्तुरेव दातृपदव्यपदेश्यत्वापत्तिरिति पूर्वस्वत्वध्वंसरूपफलस्य न तद्व्यपदेशनियामकता तथात्वे उपेक्षितुरपि दातृपदव्यपदेश्यत्वापत्तिरिति। केचित्तु स्वीकारस्य स्वत्वहेतुत्वे परस्वत्वफलोपहितत्यागात्मकदाने सर्वांशे एकस्यापि कर्त्तृत्वाभावात् एकांशमादायैव दातृत्वव्यवहारे कर्त्तव्ये प्रधानीभूतफलांशानुकूलव्यापारवत्त्वेन दातृव्यवहारः स्यादिति व्याचक्रुः। दृष्टान्तेनेदं द्रढयति यथा होतीति। होमाभिधाननिमित्तमिति। विशिष्टदेशावच्छिन्नप्रक्षेपोपहितत्यागस्य होमत्वात् प्रक्षेपस्य तदभिधाननिमित्तत्वमित्यर्थः। तेन हुधात्वर्थतावच्छेदकप्रक्षेपानुकूलव्यापारवति ऋत्विजि होतेति व्यपदेशो यथा तथेत्यर्थः। त्यागस्य स्वत्वहेतुत्वे स्फुटमेव शास्त्रं प्रमाणयति किञ्चेति। आदिना भूमौ तोयं विनिःक्षिपेदित्युत्तरप्रतीकपरिग्रहः। शास्त्रे शास्त्रबोधितत्यागे। दानपदं दृष्टमिति। "विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते" इति तद्वचनस्योत्तरार्द्धे दानपदं प्रयुक्तमित्यर्थः। तथाच निरन्तरयोरेव स्वस्वत्वध्वंसपरस्वत्वोत्पत्तिफलयोर्ददातिधात्वर्थतावच्छेदकत्वात् दानस्य परस्वत्वहेतुता शास्त्रसिद्धैवेति भावः। स्वीकारात् प्रागेव स्वत्वे ग्रहणस्य स्वीकारपदार्थत्वासम्भवमाशङ्कते नन्विति। स्वीकारशब्दार्थ इति। तथाच स्वपदस्य यथेष्टविनियोगार्हत्वविशिष्टे लक्षणेति भावः। ननु याज-

नाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमार्जयेदित्यत्र राजसूयेन यजेतेत्यादिवत् याजनाद्यात्मकैकैकमर्जयेदित्यन्वयात् प्रतिग्रहस्यार्जनरूपता सिद्धा प्रतिग्रहस्य स्वत्वहेतुत्वे च तदिदं स्वत्वहेतुव्यापारस्यैवार्जनत्वात् आह याजनेति । अर्जनरूपता अर्जनपदव्यपदेशः । अविरोधमुपपादयति याजनाद्याविति तथा च याजनादीनां स्वत्वहेतुत्वेन तदन्वयानुरोधवत् अर्जयेदित्यस्यार्जनत्वं न स्वत्वजनकत्वं किन्तु स्वत्वप्रयोजकत्वमेव तच्च प्रतिग्रहेऽप्यक्षतं दत्ते स्वत्वं प्रतीच्छामीत्यवधारण एव तदुद्देशेन दातृत्यागात् तत्स्वत्वोदयात् प्रतिग्रहवैलक्षण्ये तदतिरेकाच्चेति भावः" ।

"न च दानस्य स्वत्वहेतुत्वे प्रमाणाभावः "सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः । प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च" इत्यादिमन्वादिवचनैस्तस्य स्वत्वहेतुत्वाप्रतिपादनादिति वाच्यं ब्राह्मणाय त्यक्तायां गवि ममैरियं ब्राह्मणस्य न तु ममेत्यादिसार्वजनीनप्रतीतेरेव तत्र प्रमाणत्वात् प्रदानं स्वाम्यकारणमिति वचनाच्च अत एव विदेशस्थं पात्रमुद्दिश्य त्यक्तधने स्वीकारमन्तरेणैव पात्रस्य मरणे पित्र्यदायत्वेन तद्धनं पुत्रादिभिर्विभज्य गृह्यते अन्यथा तैरिव उदासीनैरपि तद्धनस्यारण्यकुशादेरिवोपादाने यथेष्टनियोगे च प्रत्यवायो न स्यात् । नन्वेवं दानादेव स्वत्वसिद्धेर्दत्तवस्तुनि स्वीकारो व्यर्थ इति चेन्न "अवध्या चाप्यगुप्तं चेत्यादि"स्मृतेः प्रतिग्रहीतरि द्रव्यदानस्य फलविशेषं प्रति हेतुत्वेन सार्थकफलसम्पत्त्यर्थमेव प्रतिग्रहस्योपयोगात् याजनाध्यापनप्रतिग्रहैर्द्विजो धनमर्जयेदित्यादिस्मृत्या प्रागुक्तयुक्त्या च प्रतिग्रहस्यापि स्वत्वहेतुत्वबोधनाच्च स्वत्वजनकव्यापारस्यैवार्जनपदार्थत्वात्" मदनपारिजा० । अधिकं दानशब्दे दृश्यम् । दुष्प्रतिग्रहे दोषस्तु अपात्रशब्दे उक्तस्तत्र

अयाचितस्य विषयभेदे प्रतिग्रहे न दोषः यथा "अयाचितोपपन्ने तु नास्ति दोषः प्रतिग्रहे । अमृतं तं विदुर्देवास्तस्मात्तन्नैव निर्णुदेत् । गुरून्भृत्यांश्चोज्जिहीर्षुरर्चिष्यन् देवतातिथीन् । सर्वतः प्रतिगृह्णीयात् न तु तृप्येत् स्वयं ततः । आपुतः प्रतिगृह्णीयादप्य वाऽसाधुतो द्विजः । गुणवानल्पदोषस्तु निर्गुणो हि निमज्जति । एवं तस्करद्रव्या वा कल्याधरणमात्मनः । कुर्याद्विशुद्धिं परतः प्रायश्चित्तं द्विजोत्तमः" । गारुडे २१५ अ० । अधिकम् आपदि दर्शविमभावे शु०तत्त्वपल्ले दृश्यम् । तीर्थप्रतिग्रहनिषेधो यथा "स्वकार्ये पितृकार्ये वा देवताभ्यर्चनेऽपि वा । निष्फलं तस्य तत्तीर्थं यावत् तद्धनमश्नुते । अतस्तीर्थे न गृह्णीयात् पुण्येष्वायतनेषु च" कौर्मे २२अ० । राजादितः प्रतिग्रहनिषेधो यथा "न राज्ञः प्रतिगृह्णीयात् शूद्रपतितादपि । न चान्यस्मादशक्तश्च निन्दितात् वर्जयेद्बुधः" कौर्मे १६अ० । आपदि गर्हितप्रतिग्रहस्यादोषः इत्यरा० "प्रोक्तप्रतिग्रहाभावे आपन्नायां तु तदापदि । विप्रोऽस्मात् प्रतिगृह्णन् वा यतस्ततोऽपि नाघभाक् । सुरादिदोषप्रवर्गोऽथ देवाद्यर्थं च सर्वशः । प्रत्यादद्याद्द्विजो यस्तु मन्त्रधर्मात्मनोऽपि च । दधिक्षीराज्यमांसानि गन्धपुष्पाण्यपूपकान् । मद्यामांसादन्नं शाकं प्रत्याख्येयं न कर्हिचित् । अपि दुष्कृतकर्मभ्यः समादद्यादयाचितम् । पतितेभ्यस्तथाऽन्येभ्यः प्रतिग्राह्यमसंशयम्" । प्रतिगृहीतं मत्वा तत्त्यागे तत्रैव स्थानान्तरे स्वर्ग उक्तो यथा "मन्त्रःप्रतिगृहीतं यो वेदतत्त्वः सुसंयतः । लभ्यमानं न गृह्णाति स्वर्गस्तस्य सुनिश्चितम् । प्रतिग्रहमथ वापि याचितं यो न यच्छति । तत्कोटिगुणितपत्तो मृतो दासत्वमर्हति" । दाता च न स्मरेद्यत्र प्रतिग्राही न याचते । तावुभौ नरकं यातो दाता चैव प्रतिग्रही । वदन्ति कवयः केचिद्दानप्रतिग्रहौ प्रति । प्रत्यक्षं विष्णुमेवेह दातृयाचकयोर्बलम् । दातृहस्तो भवेदूर्ध्वमधस्तिष्ठेत् प्रतिग्रही । यद्दानं प्रतिगृह्णीयात् प्रतिग्राही अवाङ्मुखः ।" तस्य प्रकारमाह शु०त० विष्णुधर्मोत्तरे "भूमेः प्रतिग्रहं कुर्याद्भूमेः कृत्वा प्रदक्षिणम्" । प्रदक्षिणं न सर्वस्या भूमेः किन्तु तत्स्थस्य प्रदक्षिणावर्त्तनमात्रं, भूमेरसन्निधाने तामुद्दिश्य प्रदक्षिणम् । "करे गृह्य तथा कन्यां दासदासौ द्विजोत्तमाः ! । करन्तु हृदि किन्तस्य धर्मो ज्ञेयः प्रतिग्रहे" "आरुह्य च गजस्योक्तः कर्णे चाश्वस्य कीर्त्तितः । तथाचैकशफानान्तु सर्वेषामविशेषतः । प्रतिगृह्णीत गां पुच्छे पुच्छे कृष्णाजिनं तथा । आरण्याः पशवश्चान्ये ग्राह्याः पुच्छे विचक्षणैः । प्रतिग्रहमथोष्ट्रस्य आरुह्य च तथाऽऽचरेत् । बीजानां मुष्टिमादाय रत्नान्यादाय सर्वशः । वस्त्रं दद्यात्तु आदद्यात् परिधाय तथा पुनः । आरुह्योपानहौ यानमारुह्यैव च पादुके । ईषायान्तु रथं ग्राह्यं छत्रं दण्डं च धारयेत् । आयुधानि समादाय तथाऽऽभूष्य विभूषणम् । वर्मध्वजौ तथा स्पृष्ट्वा प्रविश्य च तथा गृहम् । अवतीर्य च सर्वाणि जल-

स्थानानि वै द्विजाः। द्रव्यागमन्त्वथादाय स्पृशा
न्यो ब्राह्मणः पठेत्। प्रतिगृहीता सावित्रीं सर्वत्रैव
प्रकीर्त्तयेत्। ततस्तु सार्द्धं द्रव्येण तस्य द्रव्यस्य दैव-
तम्" भूमिर्विष्णुदेवतेत्यादि कीर्त्तयेदित्यर्थः। "समा-
पयेत्ततः पश्चात् कामस्तुत्या प्रतिग्रहम्। विधिं धर्म-
मथो ज्ञात्वा यस्तु कुर्य्यात् प्रतिग्रहम्। दातारं सह
तरत्येव नरकाद्घोरादसौ द्विजः"। ब्रह्मपुराणे "ब्रा-
ह्मणः प्रतिगृह्णीयाद्वृत्त्यर्थं साधुतस्तथा। अल्पमपि
मातङ्गतिललौहांश्च वर्जयेत्। कृष्णाजिनहयग्राही न
भूयः पुरुषो भवेत्। शय्यालङ्कारवस्त्रादि प्रतिगृह्य
मृतस्य च। नरकान्न निवर्त्तन्ते धेनुं तिलमयीं तथा"।
तथा "ब्रह्महत्या सुरापानमपि स्तेयं तरिष्यति। का-
लराद् यद्गृहीतन्तु तत्कथं वै तरिष्यति" एतदादि-
द्रव्यदानं ग्रहीतृदोषजनकम्। अनिच्छके विद्यारहित-
त्वेनासमर्थाय च दातुरपि दोषजनकत्वमाह दक्षः "न
केवलं हि सद्याति शेषस्य च नश्यति"। तत् द्रव्यं
शेषं द्रव्यस्य अतएव याज्ञवल्क्यः "विद्यातपोभ्यां ही-
नेन न तु ग्राह्यः प्रतिग्रहः। गृह्णन् प्रदातारमधो-
नयत्यात्मानमेव च"। अधो नरकम्। एतद्दानप्रति-
ग्रहणोत्तरं तपोजपादिभिरात्मतारणक्षमाय स्वेच्छया
प्रतिग्रहीत्रे दानं न दोषायेत्याह विष्णुः "एतानि यदि
गृह्णाति स्वेच्छयाभ्यर्थितो न तु। तस्मै दाने न दोषो-
ऽस्ति यस्त्वात्मानन्तु तारयेत्"। तारणप्रकारमाह हा-
रीतः "मणिवासोगवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं
जपेत् पञ्चमध्यमे दशोत्तमे द्वादशरात्रं पयोव्रतं शत-
सहस्रं असत्प्रतिग्रहेष्विति" अष्टसहस्रशताधिकसहस्रम्
असत्प्रतिग्रहेषु उभयतोमुख्यादिप्रतिग्रहेषु तथाचादि-
पुराणे "किं करिष्यत्यसौ मूढो गृह्णात्युभयतोमुखीम्।
सहस्रं वारुणाः पाशाः क्षुरधाराग्निसन्निभाः। पूर्णे व-
र्षसहस्रे तु पाश एकः प्रमुच्यते"। अत एव देवलः
"प्रतिग्रहसमर्थो हि मत्वा विप्रो यथाविधि। नि-
स्तारयति दातारमात्मानञ्च स्वतेजसा"। स्कान्दे "वे-
दाङ्गपारगो विप्रो यदि कुर्य्यात् प्रतिग्रहम्। न स
पापेन लिप्येत पद्मपत्रमिवाम्भसा" एवं "तीर्थे न प्रति-
गृह्णीयात् पुण्येष्वायतनेषु च। निमित्तेषु च सर्वेषु न
प्रमत्तो भवेन्नरः" इति महाभारतवचनम्। प्रतिग्रहीतृ-
दोषजनके गङ्गातीरादिदेशग्रहणादिकाले दानेऽपि बोध्यम्।
किन्त्विदानीन्तथाविधपात्राभावात् "मनसा पात्रमुद्दिश्य"
इत्यादि प्रागुक्तवचनात्तद्देशकालयोरुत्सृज्य देशान्तरे
कालान्तरे च प्रतिपादनाचारः सर्वथा समीचीनः।
गङ्गातीरादावप्येवम्। याज्ञवल्क्यः "प्रतिग्रहसमर्थो
हि नादत्ते यः प्रतिग्रहम्। ये लोका दानशीलानां स
तानाप्नोति पुष्कलान्"। अपवादमाह स एव "कुशाः
शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः। मांसं
शय्यासनं धानाः प्रत्याख्येयं न वारि च"। चकाराद्गृ-
हादि "शय्यां गृहान् कुशान् गन्धानपः पुष्पं मणीन्
दधि। मत्स्यान् धानाः पयोमांसं शाकञ्चैव न निर्णु-
देत्" इति वचनात्। मार्गेन विप्रादिनिवारकान्। तथा
"एधोदकं फलं मूलमन्नमभ्युद्यतञ्च यत्। सर्वतः प्रति-
गृह्णीयात् मध्वथाभयदक्षिणाम्"। अभयदक्षिणाम् अ-
भयदानं अभयप्रद इति वक्ष्यमाणवचनात्। अभ्युद्यतम्
अप्रार्थ्य दत्तम्। किमिति प्रत्याख्येयम् इत्याह। तथा च
मनुः "अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः। अन्यत्र
कुलटाषण्डपतितेभ्यस्तथा द्विषः" एतद्वचनं याज्ञवल्क्य-
स्येति मिताक्षराकुल्लूकभट्टमाधवाचार्य्याः। मनोरिति
शूलपाणिः। भरद्वाजः "अयाचितोपपन्ने तु नास्ति
दोषः प्रतिग्रहे। अमृतं तद्विदुर्देवास्तस्मात्तं नैव निर्णु-
देत्"। अपवादान्तरमाह स एव "देवातिथ्यर्चनकृते गुरु-
भृत्यार्थमेव च। सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च"
भृत्या भरणीयाः भार्य्यापुत्रादयः। तथा च मनुः "वृद्धौ
च मातापितरौ साध्वी भार्य्या सुतः शिशुः। अप्यकार्य्य-
शतं कृत्वा भर्त्तव्या मनुरब्रवीत्"। आत्मवृत्त्यर्थं जीवन-
मात्रम्। "न तु तृप्येत् स्वयं ततः" इति मनुस्मृतेः।
प्रयोगसारे "प्रतिग्रहं न गृह्णीयादात्मभोगोपलिप्सया।
देवतातिथिपूजार्थं धनं यत्नादुपार्जयेत्"। अङ्गिराः
"कुटुम्बार्थं द्विजः शूद्रात् प्रतिगृह्णीत याचितम्। क्र-
त्वर्थमात्मने चैव न हि याचेत कर्हिचित्"। अत एव
यज्ञार्थं याचकत्वे निन्दामाह याज्ञवल्क्यः "चाण्डालो
जायते यज्ञकरणाच्छूद्रभिक्षणात्" शूद्रस्यापि अयाचित-
दातृत्वमाह नृसिंहपुराणम् "अयाचितप्रदाता च कृषिं
वृत्त्यर्थमाश्रयेत्। पुराणं शृणुयान्नित्यं नरसिंहस्य पूजनम्"

**प्रतिग्रहीतृ** त्रि॰ प्रति+ग्रह-तृच्। प्रतिग्रहकर्त्तरि प्रति-
ग्रहीतृधर्माश्च दानशब्दे १पृ॰ उक्ता दृश्याः।

**प्रतिग्राह** त्रि॰ प्रति+ग्रह-कर्त्तरि ण। १प्रतिग्रहकारके
२पतद्ग्रहे (पिकदानी) पु॰ अमरः।

**प्रतिघ** पु॰ प्रति+हन-ड न्यङ्क्वा॰ कुत्वम्। १प्रतिघाते मेदिः

२कोपे अमरः । कामप्रतिघातेन तस्य जातत्वात्तथात्वम् । ३मूर्च्छायां शब्दर० ।

**प्रतिघात** पु० प्रति+हन–णिच् भावे अप् । १मारणे २प्रतिरुद्धे विघाते च । ल्युट् प्रतिघातन तत्रार्थे न०अमरः ।

**प्रतिघ्न** न० प्रति+हन–घञर्थे क । अङ्गे शब्दच० ।

**प्रतिचक्ष्य** त्रि० प्रति+चक्ष–ण्यत् वा ख्यादेशाभावः । प्रकर्षेण दृश्ये ऋ०१।११२।११भा० ।

**प्रतिच्छन्दस्** त्रि० छन्दोऽभिप्रायः प्रतिगतश्छन्दः अत्या०स०। १अभिप्रायानुरूपे २प्रतिरूपे ३अनुरोधे च त्रिका० । वेदश्छन्दः साकल्ये अव्ययी०। ४प्रतिवेदमित्यर्थे अव्य० ।

**प्रतिच्छन्दक** त्रि० प्रति+छन्द–ण्वुल् । प्रतिनिधौ ६।१८० श्लोके कुल्लूकभट्टः ।

**प्रतिच्छाया** स्त्री प्रतिरूपा छायायाः प्रा०स० । प्रतिरूपायां १प्रतिमायां २सादृश्ये च अमरः । [हेमच० ।

**प्रतिजङ्घा** स्त्री प्रतिगता जङ्घाम् अत्या०स० । अपजङ्घायाम्

**प्रतिजन** अव्य० वीप्सायाम् अव्ययी०। जनं जनं प्रतीत्यर्थे तस्य अंशा० अन्तोदात्तता । तत्र साधु प्रतिजना० खञ् । प्रातिजनीन प्रत्येकजनसाधौ त्रि० ।

**प्रतिजनादि** "प्रतिजनादिभ्यः खञ्" पा० उक्ते खञ्प्रत्ययनिमित्ते शब्दगणे स च गणः पा०ग० उक्तो यथा "प्रतिजन इदंयुग संयुग समयुग परयुग परकुल परस्यकुल अमुष्यकुल सर्वजन विश्वजन महाजन पञ्चजन"

**प्रतिजन्य** न० प्रतिकूलं जन्यं युद्धं यस्य, प्रतिजने विपक्षजनपदे भवः यत् वा । १प्रतिबले २प्रतिपक्षजनपदभवे च ऋ०४।५।७ भा० ।

**प्रतिजल्पक** पु० "दुःखजदन्यभावेऽस्मिन् प्राप्तिर्नार्हेत्यनुद्धतम् । दूतस्य वचनेनोक्तं यत्र स प्रतिजल्पकः" उज्ज्वलमण्युक्तलक्षणे दूतवाक्यभेदे ।

**प्रतिजागर** पु० जागरस्य प्रतिनिधिः । १प्रत्यवेक्षणाय स्व्हमवेक्षणेति नियोगे अमरटी० रायमुकुटः । ल्युट् । प्रतिजागरण तत्रार्थे न० मार्कं०पु० ६६अ० ।

**प्रतिजिह्वा** स्त्री प्रतिरूपा जिह्वा प्रा०स० । तालुमूलस्थे जिह्वाकारे मांसपिण्डे (आलजिभ) स्वार्थे क । तत्रार्थे त्रिका० ।

**प्रतिज्ञा** स्त्री प्रति+ज्ञा–भावे "आतश्चोपसर्गे" पा० अङ् । १कर्त्तव्यत्वप्रकारकज्ञानाहकव्यापारे स च करिष्यामीत्यादिवाक्यरूपः "साध्यनिर्देशः प्रतिज्ञा" गौ०सू०उक्ते साध्यवत्त्वेन पक्षनिर्देशरूपे २पञ्चाङ्गन्यायावयवभेदे "यथा पर्वतो वह्निमान् इत्यादिवाक्यम् तत्र भाष्यम् "प्रज्ञापनीयेन धर्मेण विशिष्टस्य परिग्रहवचनम् साध्यनिर्देशः प्रतिज्ञा यथा शब्दोऽनित्य इति" । अवयवग्रन्थे अनुमानचिन्तामण्यादिदीधितौ विस्तारः । व्यवहारे पक्षाभिधायके ३पूर्वपक्षभाषाद्यपरपर्य्याये वाक्ये यथा ममेदं द्रव्यमनेन गृहीतं न ददातीत्यादि । पूर्वपक्षशब्दे ४४०३पृ० दृश्यम् । ४अङ्गीकारे अमरः भावे ल्युट् । प्रतिज्ञानं तत्रार्थे न० ।

**प्रतिज्ञात** त्रि० प्रति+ज्ञा–क्त । प्रागुक्तप्रतिज्ञाविषये "ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधनम्" इति स्मृतिः ।

**प्रतिज्ञान्तर** न० अन्या प्रतिज्ञा मयू०स० । "प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम्" गौ०सू० उक्ते निग्रहस्थानभेदे विवृतं चेदं वृत्तौ "प्रतिज्ञान्तरं लक्षयति । प्रतिज्ञातस्यार्थस्य प्रतिषेधे कृते तद्दूषणोद्दिधीर्षया धर्मस्य धर्मान्तरस्य विशिष्टः कल्पो विकल्पः तस्माद्विशेषणान्तरविशिष्टतया प्रतिज्ञातार्थस्य कथनमिति फलितार्थः । प्रतिषेध इत्यनेन झटितिसंवरणे विलम्बेनापि स्वयं दूषणं विभाव्य विशेषणे न दोष इत्युक्तं, प्रतिज्ञातार्थस्येत्युपलक्षणम् हेत्वतिरिक्तार्थस्येति तत्त्वं तेन उदाहरणान्तरमुपनयान्तरञ्च प्रतिज्ञान्तरत्वेन संगृहीतं भवति । इदञ्च पक्षसाध्यविशेषणभेदात् प्रत्येकं द्विविधं यथा शब्दोऽनित्य इत्युक्ते ध्वनौ बाधेन परेण प्रत्युक्ते वर्णात्मकः शब्दः पक्ष इति प्रतिज्ञान्तरं, न चेदमर्थान्तरं प्रकृतोपयोगात् न चैवं प्रतिज्ञाहानिः पूर्वोक्तस्यापरित्यागात् एवं पर्वतो वह्निमान् सुरभिमलिनधूमवत्त्वादित्युक्ते असमर्थविशेषणत्वेन च परेण प्रत्युक्ते तथाभूतपर्वतवह्निमानित्यत्र, एवं तादृशवह्नौ साध्ये यः सुरभिमलिनधूमवान् स वह्निमानित्युदाहरणे न्यूनत्वेन प्रत्युक्ते स तादृशवह्निमानित्यत्र, एवमन्यदप्यूह्यम् ।

**प्रतिज्ञापत्र** न० प्रतिज्ञासूचकं पत्रम् शा०त०। भाषापत्रभेदे ।

**प्रतिज्ञाविरोध** न० "प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः" गौ० सू० उक्ते निग्रहस्थानभेदे विवृतश्चेदं वृत्तौ "प्रतिज्ञाविरोधं लक्षयति अत्र च प्रतिज्ञाहेतुपदे कथाकालीनवाक्यपरे तथा च कथायां स्ववचनार्थविरोधः प्रतिज्ञाविरोधः यद्यपि काञ्चनमयः पर्वतो वह्निमान् पर्वतः काञ्चनमयवह्निमान् ह्रदो वह्निमान् ह्रदत्वात् पर्वतो वह्निमान् काञ्चनमयधूमादित्यादौ हेत्वाभासान्तरसाङ्कर्य्यं तथाप्युपाधेयसङ्करेऽप्युपाधेरसाङ्कर्य्यान्न दोषः । न चासङ्कीर्णस्यत्राभावः पर्वतो न वह्निमान् धूमात् यो

यो धूमवान् स निरग्निरित्युदाहरणे निरग्निशायमित्युपनये तत्सत्त्वात् एवं निगमनेऽपि बोध्यम् ।

**प्रतिज्ञासन्न्यास** न० “पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्न्यासः” गौ०सू०उक्ते निग्रहस्थानभेदे विवृतश्चैदं वृत्तौ “प्रतिज्ञासन्न्यासं लक्षयति । पक्षस्य स्वाभिहितस्य परेण प्रतिषेधे कृते सति तत्परिजिहीर्षया प्रतिज्ञातार्थस्यापनयनमपलाप इत्यर्थः यथा शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते सामान्ये व्यभिचारेण परेण प्रत्युक्ते क एवमाह शब्दोऽनित्य इति ।

**प्रतिज्ञाहानि** न० “प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः” गौ०सू० उक्ते निग्रहस्थानभेदे विवृतश्चेदं वृत्तौ “प्रतिज्ञाहानिं लक्षयति प्रतिकूलो दृष्टान्तो यत्र स प्रतिदृष्टान्तः परपक्षः स्वः स्वीयः दृष्टान्तो यत्र स स्वदृष्टान्तः स्वपक्षः तथा च स्वपक्षे परपक्षधर्माभ्यनुज्ञा प्रतिज्ञाहानिः स्वयं विधिप्याभिहितपरित्याग इति फलितार्थः अपसिद्धान्तस्तु स्वयं विधिप्य नाभिधीयते इति नापसिद्धान्तसाङ्कर्य्यं सेयं पक्षहेतुदृष्टान्तसाध्यतदन्यहानिभेदात् पञ्चधा भवति यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते प्रत्यभिज्ञया बाधितविषयोऽयमित्युत्तरिते अस्तु तर्हि घट एव पक्ष इति, एवं तत्रैव ऐन्द्रियकत्वादिति हेतोरनैकान्तिकत्वमिति प्रत्युक्ते अस्तु कृतकत्वादिति हेतुरिति, एवं पर्वतो वह्निमान् धूमादयोगोलकवदित्युक्ते दृष्टान्तः साधनविकल इति प्रत्युक्ते अस्तु तर्हि महानसवदिति, एवम् अत्रैव सिद्धसाधने च प्रत्युक्ते अस्तु तर्हि द्रव्यवानिति अन्यहानिस्तु विशेषणहान्यादिः यथा तत्रैव नीलधूमादित्युक्तेऽसमर्थविशेषणत्वेन प्रत्युक्ते अस्तु तर्हि धूमादिति हेतुरित्यादि ।

**प्रतितन्त्र** न० प्रतिकूलं तन्त्रं शास्त्रम् प्रा०स०। स्वमतविरुद्धे शास्त्रे तन्त्रान्तरेतराभिमतसम्बद्धस्यार्थस्योपदेशः शास्त्रमिति ।

**प्रतितन्त्रसिद्धान्त** पु० “समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः” गौ०सू०उक्ते सिद्धान्तभेदे विवृतं चेदं वृत्तौ “प्रतितन्त्रसिद्धान्तं लक्षयति । समानशब्द एकार्थस्तेनैकतन्त्रसिद्ध इत्यर्थः स्वतन्त्रसिद्ध इति पर्य्यवसितोऽर्थः तथा च वादिप्रतिवाद्येकतरमात्राभ्युपगतस्तदेकतरस्य प्रतितन्त्रसिद्धान्त इति फलितार्थः । यथा मीमांसकानां शब्दनित्यत्वम् । उदाहृतं च भाष्ये यथा नासत आत्मलाभः नसत आत्महानं निरतिशया चेतनाः देहेन्द्रियमनःसु विषयेषु तत्तत्कारणेषु च विशेष इति सांख्यानाम् । पुरुषकर्मनिमित्तो भूतसर्गः कर्महेतवो दोषाः प्रवृत्तिश्च स्वगुणविशिष्टाश्चेतनाः असदुत्पद्यते उत्पन्नं निरुध्यते इति योगानाम्” ।

**प्रतितर** पु० प्रतितीर्य्यतेऽनेन प्रति+तॄ—करणे अप् । तरणसाधने नौकाचालनदण्डादौ सुश्रुतः ।

**प्रतिताल** पु० संगीतदा० उक्ते तालभेदे तल्लक्षणभेदादिकं तत्रोक्तं यथा “कान्तारः समराख्यश्च वैकुण्ठो वाञ्छितस्तथा । कथिता: शङ्करेणैव चत्वारः प्रतितालकाः । कान्तारः प्रतितालस्तु चन्द्रकोऽहं द्रुतद्वयम् । दृश्याक्षरपरिमाणं शृङ्गारे वर्त्तते रसे ॥१ लघुद्रुतौ लघुश्चान्ते रूपनाल उदाहृतः । रुद्रसंख्याक्षरपदः समरो वीरके रसे” ।२ “द्रुतत्रयस्तु वैकुण्ठे प्रतिताले समीरिताः ॥ अर्कसंख्याक्षरैः पादो हास्ये त्रिपुटतालके” ।३ “वाञ्छितस्तु तोय ताले लघुरेको द्रुतस्तथा । नवोदशाक्षरैर्युक्तो रसेऽद्भुते प्रकीर्त्तितः” ॥

**प्रतिताली** स्त्री प्रतिगता तालं गौरा० ङीष् । (चावि) तालकोद्घाटके यन्त्रभेदे हेमच० ।

**प्रतितूणी** स्त्री सुश्रुतोक्ते वातरोगभेदे “आहत्य वायुः सकफा धमनीः शब्दवाहिनीः ॥ नरान् करोत्यक्रियकान् मूकमिन्मिणगद्गदान् । अधिका वेदना याति वर्चोमूत्राशयोत्थिता । भिन्दन्तीव गुदोपस्थं सा तूणीत्युपदिश्यते । गुदोपस्थोत्थिता सैव प्रतिलोमविसर्पिणी ॥ वेगैः पक्वाशयं याति प्रतितूणी तु सा स्मृता” । तूणीशब्दोऽपि तत्र लक्षितवातरोगभेदे स्त्री ।

**प्रतिदान** न० प्रतिरूपं तुल्यरूपं दानम् प्रा०स० । विनिमये १तुल्यरूपदाने न्यस्तस्य द्रव्यस्य २प्रत्यर्पणे च अमरः ।

**प्रतिदारण** न० प्रति—दृ+णिच्—आधारे ल्युट् । युद्धे शब्दमाला भावे ल्युट् । भेदने ।

**प्रतिदिवन्** पु० प्रतिदीव्यति दिव—कनिन् । प्रत्यहं १दीप्तिशीले सूर्य्ये त्रिका० अस्य भत्वेऽल्लोपे दीर्घविधौ परनिमित्तत्वोपधापाजादेशस्य स्थानिवत्त्वाभावात् दीर्घः । प्रतिदीव्नः प्रतिदीव्नेत्यादि । शब्दरत्ना० प्रतिदीवन् इति शब्दान्तरं कृतं तत्र प्रमाणं मृग्यम् । [२१०१ पृ०दश्यम् ।

**प्रतिदृष्टान्तसम** पु० गौ०सू० उक्ते जात्युत्तरभेदे जातिशब्दे

**प्रतिद्वन्द्व** न० प्रतिरूपं द्वन्द्वम् प्रा०स०। तुल्ययुद्धे माकं०१८अ०।

**प्रतिद्वन्द्विन्** त्रि० प्रतिद्वन्द्वमस्त्यस्य इनि । १तुल्यरूपे येन सह द्वन्द्वं युद्धं क्रियते २तस्मिंश्च ।

**प्रतिधर्त्तृ** त्रि० प्रति+धृ-तृच् । निराकारके यजु० १५।१० वेददी०

**प्रतिधा** स्त्री प्रति+धा—भावे क्विप् । प्रतिविधाने भावे ल्युट् । प्रतिधान निराकरणे न० ।

**प्रतिधि** पु० प्रतिमुखं धीयते प्रति—धा कर्म्मणि कि । प्रातःसवनान्ते पाठ्ये १स्तोत्रभेदे ताण्ड्य० ब्रा० भा० २ईषातिर्य्यक्काष्ठे ऋ० १०।८५।८ भा० ३यज्ञे यजु० ६८ वेददी० ।

**प्रतिध्वनि** पु० प्रतिरूपो ध्वनिः प्रा० स० । शब्दानुसारेण [जायमाने शब्दे प्रतिशब्दे हेमच० ।

**प्रतिध्वान** पु० प्रति+ध्वन—घञ् । प्रतिशब्दे अमरः ।

**प्रतिनन्दन** न० प्रति+नन्द—भावे ल्युट् । आशीर्वादादिना सम्भावने । [हेम० ।

**प्रतिनप्तृ** पु० प्रतिनिहितो नप्ता पौत्रः प्रा० स० । प्रपौत्रे

**प्रतिनव** त्रि० प्रतिगतो नवं नूतनत्वम् अत्या० स० । नूतने जटा०

**प्रतिनाद** पु० प्रतिरूपो नादः प्रा० स० । प्रतिध्वनौ

**प्रतिनायक** पु० प्रतिकूलो नायकः प्रा० स० । वीररसादौ प्रतिकूले नायके नायकस्य तं प्रति कोपादि तस्मिन् "धीरोद्धतः पापकारी व्यसनी प्रतिनायकः" सा० द० । यथा रामस्य रावण इत्यादि ।

**प्रतिनिधि** पु० प्रतिरूपं निधीयते तुल्यरूपतया स्थाप्यते प्रति+नि+धा—कि । १प्रतिरूपे तुल्यरूपे अमरः । वैदिककर्म्माङ्गद्रव्यादीनां मुख्यानामलाभे २तुल्यरूपतयान्यस्मिन् निधीयमाने । कुत्र प्रतिनिधिर्भवति कुत्र वा न भवति तत्सर्वं विशेषघटितं कात्या० श्रौ० १।४ कण्डिकायां व्यवस्थापितं तच्च किञ्चिदर्थस्तु कात्यायनशब्दे १८६५ पृष्ठादौ दर्शितः । तदनुसारेण स्मार्त्तादिकर्म्मसु तद्व्यवस्था प्रदर्श्यते तत्र एकादशीतत्त्वे उक्तं यथा स्कान्दपुराणम् "पुत्रञ्च विनियोगेन भगिनीं भ्रातरस्तथा । एषामभाव एवान्यं ब्राह्मणं विनियोजयेत्" । मत्स्यपुराणम् "भार्य्या भर्त्तृव्रतं कुर्य्याद्भार्य्यायाश्च पतिस्तथा । असामर्थ्ये द्वयोस्ताभ्यां व्रतभङ्गो न जायते" । वराहपुराणे "पितृमातृपतिभ्रातृश्वश्रुगुर्व्वादिभूभुजाम् । उद्दिश्योपोषितेन स्वयञ्च फलभाक् भवेत्" । अत्र विषये कात्यायनः "दक्षिणा नात्र कर्त्तव्या शुक्लापि विहिता च या" ननु प्रतिनिधौ ममेह वर्म इत्यादिमन्त्रस्वफलं कथमन्वेतु इति चेत् प्रधान एव । तथाच शारीरकभाष्ये श्रुतिः "यां वै काञ्चन यज्ञ आशिषमाशासते यजमानायैव तामाशासते इति होवाच" इति । ब्राह्मणसर्वस्वे यजमानायेत्यत्र यजमानस्येति पाठः । करणायां तत्र "यां वै काञ्चन ऋत्विग आशिषमाशासते सा यजमानस्यैवेति" । अत्र ऋत्विग्यजमानपदे प्रतिनिधिप्रधानपरे आकाङ्क्षितत्वात् । अतएव प्रतिनिधिपुत्रादिना "आयान्तु नः पितरः" इत्यादिरनूह एव पठ्यते वाक्यस्य कालनिकत्वाच्च तथेति । कालमाधवीये "काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके हि सः । काम्येष्वपक्रमादूर्द्ध्वमन्ये प्रतिनिधिं विदुः" यथा नित्यं नैमित्तिकञ्च प्रतिनिधिनाप्युपक्रम्य कारयेत् काम्ये तु स्वसामर्थ्यं परीक्ष्य स्वयमेवोपक्रम्य कुर्य्यात् । असामर्थ्ये उपक्रमादूर्द्ध्वं प्रतिनिधिनापि कारयेत् । एतच्च श्रौतकाम्यपरं स्मार्त्तकाम्यन्तु अन्यद्वाराप्युपक्रम्य कार्य्यम् । तथा च पराशरभाष्ये शातातपः "श्रौतं कर्म स्वयं कुर्य्यादन्योऽपि स्मार्त्तमाचरेत् । अशक्तौ श्रौतमप्यन्यः कुर्य्यादाचारमन्ततः" । अन्तत उपक्रमात् परतः । एतच्च काम्येऽपि प्रतिनिधिविधायकं नैमित्तिकमात्रपरत्वे श्रौतस्मार्त्तभेदोपादानं व्यर्थं स्यात् तयोरविशेषादेव प्रतिनिधिलाभात् । अत एव भारतपाठादौ तथा समाचारः । स्मृत्यर्थसारे "नाभावस्य प्रतिनिधिरभावान्तरमिष्यते" । सजातीयस्येऽप्यभावान्तरस्याभावस्य प्रतिनिधिर्नेष्यते । भावस्तु कदाचिद्यथोपवासादौ ब्राह्मणभोजनादीति । "नापि प्रतिनिधातव्यं निषिद्धं वस्तु कुत्रचित् । कोलियासामभोज्यं यदुक्तं हि तदर्थतः । स्वामी प्रतिनिधित्वेन होमकार्य्ये न कुत्रचित् । द्रव्यं वैकल्पिकं किञ्चिद्यत्र समुद्दिष्टं भवेत् । तदभावे सदृग्ग्राह्यं न तु वैकल्पिकान्तरम् । उपात्ते तु प्रतिनिधौ मुख्यार्थो लभ्यते यदि । तत्र मुख्यमनादृत्य गौणेनैव समापयेत् । संस्कारादावयोग्योऽपि मुख्य एव हि गृह्यते । न तु संस्कारयोग्योऽन्यो गृह्यते प्रतिरूपकः । मुख्ये कार्य्योन्मुखे तु मुख्येऽप्येतस्य नादरः । प्रतिरूपकमादाय कर्म्मैवोपजायते । कार्य्यैरूपैस्तथा पत्रैः क्षीरैः पुष्पैस्तथा फलैः । गन्धै रसैः सदृग् ग्राह्यं पूर्वालाभे परं परम् । शाल्यभावात्तु भवेद्ग्राह्यमाशराण्यामरमयजम् । यवालाभे तु गोधूमास्तथा रेणुयवादयः । हविष्ये गोष्ठतं ग्राह्यं तदभावेऽपि माहिषम् । आजं वा तदभावे तु साक्षात्तैलं प्रयुज्यते । तैलाभावे ग्रहीतव्यं तैलजं तिलसम्भवम्" । तैलजं तैलघटं तिलसम्भवम् तिलपिष्टादि । "तदभावे तु दध्नेहं कौसुम्भं सर्षपोद्भवम् । वृक्षस्नेहस्तथा ग्राह्यः पूर्वाभावे

चरः परः। तदभावे गवादीनां क्रमात् क्षीरं विधीयते। तदभावे दधि चाज्यमलाभे तिल इष्यते। यत्र मुख्यं दधि क्षीरं तत्रापि तदलाभतः। अजादेः क्षीरदध्यादि तदभावेऽपि गोघृतम्। मुख्यालाभेऽथ वा ग्राह्यः कार्य्यकारणसन्ततौ"। अत एव घृताभावे पूर्वं दधि ततः पयः। तथा "सर्वत्र गौणकालेषु कर्म्मचोदितमाचरेत्। प्रायश्चित्तं व्याहृतिभिर्हुत्वा कर्म्म समाचरेत्"। मत्स्यसूक्ते "घृतं न लभ्यते यत्र शुष्कक्षीरेण होमयेत्। क्षीरस्य च दधि ह्येवं मधुनश्च गुड़ो भवेत्"। आयुर्वेदेऽपि "मधु यत्र न लभ्येत तत्र जीर्णो गुड़ो भवेत्"। काण्डमूलपर्णपुष्पफलप्ररोहरसगन्धादीनां सादृश्येन प्रतिनिधिं कुर्य्यात्। यवाभावे यवप्रतिनिधिर्भवतीति" काण्डं नालं प्ररोहोऽङ्कुरः। यवालाभे यव इति कल्पतरुः यवयव इति नारायणोपाध्यायः। शान्तिदीपिकायां नारदीयपञ्चरात्रम् "अभावे चैव धातूनां हरितालं विधीयते। बीजानामप्यभावे तु यव एकः प्रशस्यते। ओषधीनामभावे तु सहदेवी प्रशस्यते। रत्नानामप्यभावे तु मुक्ताफलमनुत्तमम्। लौहानामप्यभावे तु हेमपात्रं प्रकल्पयेत्"। लौहानां तैजसपात्राणाम्। न्यायप्राप्तप्रतिनिधिमधिकृत्य जैमिनिः "न देवताग्निशब्दक्रियाणामिति"। अस्यार्थः देवताया अग्नेश्च आहवनीयादेः शब्दस्य मन्त्रस्य क्रियाया प्रयाजाद्यदृष्टार्थकर्म्मणश्चादृष्टमात्रार्थकत्वेनारादुपकारकत्वान्न प्रतिनिधिः, व्रीह्यादीनान्तु सन्निपत्योपकारकाणां पुरोडाशसाधनं दृष्टमेव प्रयोजनमिति तत्र प्रतिनिधिरुचित इत्युक्तम्। परिशिष्टम् "मुख्यकाले तु मुख्यञ्चेद् साधनं नैव लभ्यते। तत्कालद्रव्ययोः कस्य गौणता मुख्यतापि वा"। तत्र भरद्वाजः "मुख्यकालसमाश्रित्य गौणमप्यस्तु साधनम्। न मुख्यद्रव्यलाभेन गौणकालप्रतीक्षणम्। गौणेषु तेषु कालेषु कर्म्म चोदितमारभेत्। प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत्"। उत्तरमतं सिद्धान्तमिति केचित्। तदभिप्रायकं मीमांसाषष्ठाध्यायसूत्रम्। "पौर्वापर्य्येऽपि पूर्वदौर्बल्यं प्रकृतिवदिति"। ज्योतिष्टोमेऽन्योन्यं सम्बध्य यज्ञशालातो बहिर्निर्गच्छता मृत्विजां विच्छेदनिमित्तं प्रायश्चित्तं श्रूयते यद्युद्गाता विच्छिन्द्यादृच्चिणेन यजेत यदि प्रतिहर्त्ता सर्व्वस्वदक्षिणेनेति"। तत्र उद्गातृप्रतिहर्त्रोः क्रमेण विच्छेदे विरुद्धप्रायश्चित्तयोः समुच्चयासम्भवात्। किं पूर्वं कार्य्यम् उत

वा परमिति संशये हि असुपजातविरोधात् पूर्वमिति पूर्वपक्षे राद्धान्तः पौर्वापर्य्ये सति निमित्तयोः पूर्वस्यैव निमित्तस्य दौर्बल्यम्। उत्तरस्य पूर्वनिरपेक्षस्य तद्बाधकतया उदितत्वात् पूर्वोदयकाले उत्तरस्याप्राप्तत्वेन पूर्वेण बाध्यत्वायोगात्। उक्तं हि "पूर्वं परमजातत्वादबाधित्वैव जायते। परस्यानन्यथोत्पादादुक्तबाधेन सम्भवः" इति प्रकृतिवदिति यथा हि प्रकृतौ क्लृप्तोपकाराः कुशाः प्रथममतिदेशेन विकृतावुपकाराकाङ्क्षिणः प्राप्ताः कल्पप्रोपकारतया चरमभाविभिरपि शरैर्निरपेक्षैर्बाध्यन्ते तद्वदिति। अत एव शारीरकभाष्यटीकायां वाचस्पतिमिश्राः "ज्येष्ठत्वञ्चानापेक्षितस्य बाध्यत्वे हेतुर्न बाधकत्वे रजतज्ञानस्य ज्यायसः शुक्तिज्ञानेन कनीयसा बाधदर्शनात् तदनपबाधने तद्बाधात्मनस्तस्योत्पत्तेरनुत्पत्तेः तथाच "पूर्वापरबलीयस्त्वं तत्र नाम प्रतीयताम्। अन्योन्यनिरपेक्षाणां यत्र जन्मधियां भवेत्" इति। यदि च पूर्ववचनस्य पूर्वपक्षत्वे वैयर्थ्यं स्यात् अत उभयवचनार्थौ विवक्षणीयौ तदा विषयभेदेन व्यवस्थापनीयौ। तथाहि यत्राष्टकाश्राद्धादौ कालान्तराभावस्तत्र तत्कालानुरोधाद्विहितद्रव्यालाभेऽपि प्रतिनिहितद्रव्यमादाय मुख्यकाल एव तत्कार्य्यं न तु वचनानुपात्तस्वेच्छाकल्प्यगौणकालप्रतीक्षणम्। तथाच छन्दोगपरिशिष्टम् "स्थालीपाकं पशुस्थाने कुर्य्याद् यद्यानुकल्पिकम्। श्रपयेत्तं सवत्सायास्तरुण्या गोः पयस्तु" इत्यादि। यत्रावदिकश्राद्धादौ कृष्णैकादश्यादिगौणकालोऽस्ति तत्र हताहादावश्याद्यभावे तदनुरोधेन उपवासादिरूपं प्रायश्चित्तं कृत्वा गौणकाले तत् कर्त्तव्यम्। तथाच लघुहारीतः "एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम्। अभावे पाकपात्राणां तदहः समुपोषणम्"। तथाच छन्दोगपरिशिष्टम् "संस्कारा अतिपत्येरन् स्वकालाच्चेत् कथञ्चन। हुत्वैतदेव कुर्व्वीत ये तूपनयनादधः"। यत्र तु विनिगमकवचनाभावस्तत्र यद्यपि क्रियायाः प्राधान्यात् कालो द्रव्यं द्वयमपि गुणभूतमेव तथाप्युभयोपसंहारासामर्थ्ये द्रव्यादरः कालस्य सूर्य्यादिक्रियाघटितस्य कर्त्रधीनत्वाभावादर्जनीयत्वविधिः असन्निधिकत्वान्निमित्तत्वमात्रेण बहिरङ्गत्वात्। कालस्य निमित्तत्वं व्यक्तं भविष्ये "अतः कालं प्रवक्ष्यामि निमित्तं कर्म्मणामिह"। द्रव्यस्य तु यागस्वरूपनिर्वाहकत्वेनाभ्यर्हितत्वात् कर्म्मणः कारकत्वेनान्तरङ्गत्वाच्च। मुख्यादि-

प्रतिनिध्यभावे तु ब्रह्मवैवर्त्ते: "उपवासासमर्थश्चेदेकं विप्रन्तु भोजयेत्। तावद्धनानि वा दद्याद् यद्भक्ताद्‌द्विगुणं भवेत्। सहस्रसम्मितां देवीं जपेद्वा प्राणसंयमान्। कुर्य्याद्द्वादशसंख्याकान् यथाशक्ति व्रते नरः"। देवीं गायत्रीम्। अत्र चान्द्रायणादौ परिसंख्या। काश्यपपञ्चरात्रे "मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने। फलमूलजलाहारी हृदि शल्यं समार्पयेत्। अत्र यो दीक्षितः कश्चिद्वैष्णवो भक्तितत्परः। निर्निमित्तमदीक्षार्थी न च सद्व्याधिपीड़ितः। अन्नं वा यदि भुञ्जीत मूलं फलमयापि वा। अपराधमहं तस्य न क्षमामि हि कश्यप॥ क्षिपामि नरके घोरे हृच्छल्यं मम जायते"। निमित्तं प्रारब्धचान्द्रायणादिव्रतविरोध इत्यादि, दीक्षायां चरुशेषप्राशनस्य विहितत्वाददीक्षायामित्युक्तम्। सद्व्याधिना पीड़ितः सर्वमेतत्प्रदर्शनमात्रं शक्तौ निर्विशेष इत्यर्थः। अन्नादिकमप्युपलक्षणमिति जीमूतवाहनः। अत्र निमित्तं प्रारब्धचान्द्रायणादीति यदुक्तं तत्र चान्द्रायणादौ भोजनस्यावश्यकत्वाभावात् किन्तु निमित्तं रविवारादुपवासपारणं जलपानरूपं दीक्षायामपि चरुप्राशनं प्राणरूपम् अन्यथा "पुरोडाशोऽपि सोमो वा संप्राप्ते हरिवासरे। अभक्ष्यो वध्यः प्रोक्तः किं पुनस्त्वाशनक्रिया" इति नारदीयं विरुध्येत। तदुप्राशस्य भोजनरूपतामाह कालादर्शे श्रुतिः "पित्रमाद्रेयं तस्यैवं प्राशितं भवति" इति पित्र्यमुपलक्षणम् आकाङ्क्षाया अविशिष्टत्वात्। तेनैकादश्यां तदुभयोर्जलपारणं चरुशेषप्राशनञ्च कृत्वा उपवासः कार्य्यः"।

आरब्धकार्त्तिकादिस्नाने तु व्याधादिनाऽसामर्थ्ये पुत्रादिभिः प्रतिनिधिना कारयितव्यं नानुकल्पविधिना नित्यस्नान एव तद्विधानादिति" इति मल०तत्र स्वयं करणाऽसामर्थ्ये अन्यद्वारा कारयितव्यं यथा दक्षः "स्वयं होमे फलं यत्तु तदन्येन न जायते। ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः। एभिरेव हुतं यत्तु तद्धुतं स्वयमेव हि" विट्पतिर्जामाता। एवञ्च ऋत्विगादीतरत्र फलन्यूनता। अत्राशौचाशङ्कया बोधनदिनात् पूर्वं शुचितत्कालजीवित्वरूपाधिकाराभावेऽपि यद्वरणादिकं क्रियते तत्कर्मकाले तस्य नारदोक्तस्वयंप्रवर्त्तनवत् प्रवर्त्तनाय न तु तदानीं प्रतिनिधीयते अथ वा "निःक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजन्तथा। प्रवसेत् कार्यवान् विप्रो वृथैव न चिरं वसेत्" इति छन्दोगपरिशिष्टवदन्यत्रापि प्रतिनिधीयते एवं वरणं विनापि कश्चिद्यदि ऋत्विक् प्रवर्त्तते तथापि तत्कर्मसिद्धिः। दक्षिणा च तस्मै शुचिकाले दातव्येति तथा च नारदः "ऋत्विक् च त्रिविधो दृष्टः पूर्वैर्जुष्टः स्वयं कृतः। यदृच्छया वा यः कुर्य्यादार्त्विज्यं प्रीतिपूर्वकम्" यदृच्छया स्वेच्छया" ति०त०। परार्थस्नाने स्वयमशक्तौ कुशमयप्रतिमूर्त्तिस्नानेऽपि फलविशेषः प्रा०त० उक्तो यथा "प्रतिकृतिं कुशमयीं कृत्वा तीर्थवारिषु मज्जयेत्। यमुद्दिश्य निमज्जेत सोऽष्टभागं फलं लभेत्। मातरं पितरं वापि भ्रातरं सुहृदं गुरुम्। यमुद्दिश्य निमज्जेत द्वादशांशं फलं लभेत्"। "अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा। पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात् प्रयत्नतः" दत्तकमी०।

**प्रतिनियम** पु० प्रत्येकं नियमः। १एकमेकं प्रति नियमे २व्यवस्थायाम् "प्रतिनियमादयुगपत्प्रवृत्तेश्च पुरुषबहुत्वं सिद्धम्" सा० का०।

**प्रतिनिर्देश्य** त्रि० प्रति+निर्—दिश-कर्मणि ण्यत्। प्रथमनिर्दिष्टस्य पुनर्गुणान्तरविधानार्थं कुमुदितार्थप्रतिपादनार्थं च निर्देशविषये यथा "उदेति सविता ताम्रस्ताम्र एवास्तमेति च" अत्र ताम्रतयोदितस्य पुनस्ताम्रगुणविशिष्टतयास्तत्वकीर्त्तनाय पुनर्निर्देशः। तत्र च कथितपदता न काव्यदोषः तदुक्तं काव्यप्रकाशे

"उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तो विषय एकपदप्रयोगनिषेधस्य, तद्वति विषये प्रत्युत तस्यैव पदस्य सर्वनाम्नो वा प्रयोगं विना दोषः। तथा हि "उदेति सविता ताम्रस्ताम्र एवास्तमेति च। सम्पत्तौ च विपत्तौ च महतामेकरूपता"। अत्र रक्त एवास्तमेतीति यदि क्रियते तदा पदान्तरप्रतिपादितः स एवार्थोऽर्थान्तरतयेव प्रतिभासमानः प्रतीतिं स्थगयति"। "तद्वतीति उद्देश्यप्रतिनिर्देश्यत्ववतीत्यर्थः दोष इति आपाततोऽर्थान्तरताभासरूप इत्यर्थः। अयं भावः "न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते" इति नियमाच्छब्देनोपस्थाप्यमानोऽर्थः शब्दविशिष्ट एव भासते अतः शब्दभेदेनोपादाने तच्छब्दविशिष्टेऽर्थे भासमाने विभिन्नशब्दरूपविशेषणभेदाद्भेदावभास इति। सर्वनाम्नापि पूर्वोपात्तशब्दविशिष्टभासनान्न भेदावभास इत्याह सर्वनाम्नोवेति" नागेशः।

**प्रतिनिवर्त्तन** न० प्रति+निर्—वृत—भावे ल्युट्। १अभीष्टवस्तुतः निवृत्तौ णिच्—ल्युट्। २निवारणे

**प्रतिन्याय** अव्य० प्रति+नि+अय इ—वा घञ्। न्यायो

संभविष्यन्ति देवताः । यतस्ते प्रतिपद्याम तिथिरेषा भवि-
ष्यति”। ४बहिष्पवमानस्तोत्रस्य प्रथमस्तुतौ ताण्ड्य०ब्रा० ४।२।१५ यथा “अस्य प्रत्नामिति प्रतिपदम् ... सोमाः सृष्टा इति बृहत्वती प्रतिपत्कार्या”।“प्रतिपद्यते प्रकम्यते बहिष्पवमानस्तोत्रं एषा प्रतिपत् सा बृहत्वती बृहच्छब्दोपेता एषा कार्या” भा०। वा ङीप् तत्रार्थे

**प्रतिपन्न** त्रि० प्रति+पद–क्त। १अवगते अमरः २स्वीकृते मेदि० “प्रतिपन्नं हि विच्छेत्तनैरपि” कुमारः। ३विक्रान्ते च हेमच० आचिता० अस्य गतिपूर्वकत्वेऽपि नान्तोदात्तता। [राजनि०।

**प्रतिपर्णशिफा** स्त्री प्रतिपर्णं शिफाऽस्याः। द्रवन्तीवृक्षे

**प्रतिपाश** पु० प्रति+पश–घञ्। प्रतिरूपदर्शने

**प्रतिपादक** त्रि० प्रति+पद–णिच्–ण्वुल्। बोधके।

**प्रतिपादन** न० प्रति+पद–णिच्-भावे ल्युट्। १दाने २बोधने ३प्रतिपत्तौ च मेदि०।

**प्रतिपाद्य** त्रि० प्रति+पद–णिच् कर्मणि यत्। बोधनीये

**प्रतिपूजन** न० प्रतिरूपं पूजनं प्रा०स०। केनचित् पूजने कृते तदनुरूपे तेन पूजकस्य १पूजने २आभिमुख्येन पूजने च।

**प्रतिप्रदान** न० प्रति+प्र+दा–भावे ल्युट्। १प्रतिदाने २प्रत्यर्पणे च।

**प्रतिप्रसव** पु० प्रति+प्र+सू–अप्। १निषिद्धस्य पुनःप्राप्तिसम्पादनायाम्। साकल्ये ऽव्ययी०। २प्रसवसाकल्ये प्रति-जन्मनीत्यर्थे। [भेदे अव्ययीभावशब्दे ८५पृ०दृश्यम्।

**प्रतिप्रस्थातृ** पु० प्रति+प्र+स्था–तृच्। सोमयागीये ऋत्विग्-

**प्रतिप्रस्थान** न० प्रतिकूलं प्रस्थानम् प्रा०स०। १विरुद्धप्रस्थाने यस्य प्रतिकूलं प्रस्थानं यस्य प्रा०ब०। २तद्वति त्रि० ३निपात्ये यजु०१८। १६ वेददी०।

**प्रतिप्रहार** पु० प्रतिरूपः प्रहारः प्रा०स०। १कृतप्रहारानुरूपप्रहारे २प्रतिघातभेदे च।

**प्रतिप्रैष** पु०प्रतिरूपः प्रैषः प्रा०स०। नियोजितेन नियोक्तारं प्रति पुनःप्रेषणे कात्या० २५।१०।२ कर्कः।

**प्रतिफल** त्रि० प्रतिफलति प्रति+फल–अच्। १प्रतिबिम्बे येन यत्कर्म कृतं २तस्यानुरूपप्रतीकारे। साकल्ये अव्ययी०। ३फलसाकल्ये अव्य०।

**प्रतिफलन** न०प्रति+फल–भावे ल्युट्। प्रतिबिम्बने सादृश्ये

**प्रतिफुल्लक** त्रि० प्रति+फुल्ल-विकासे ण्वुल्। प्रफुल्ले शब्दच०

**प्रतिबद्ध** त्रि०प्रति+बन्ध–कर्मणि क्त। १प्रतिरुद्धे २व्याप्त्येन सम्बद्धे व्यापके च प्रतिबन्धशब्दे दृश्यम्।

**प्रतिबन्ध** पु०प्रति+बन्ध–भावे घञ्। १प्रतिरोधे २व्याप्त्यैव सम्बन्धे व्याप्तौ च “प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम्” सा०सू० “प्रतिबन्धो व्याप्तिर्व्याप्तिदर्शनाद्व्यापकज्ञानमनुमानम्” प्र०भा०।

**प्रतिबन्धक** त्रि० प्रतिबध्नाति प्रति+बन्ध+ण्वुल्। १प्रतिरोधके। स्त्रियां टाप् कापि अत इत्त्वम्। “बलवद्दुर्दिष्टहेतुत्वमतिः स्यात् प्रतिबन्धिका” भाषा०। २विटपे शब्दच० प्रतिबन्धकत्वञ्च कारणीभूताभावप्रतियोगित्वम् तच्च मण्याद्यभावत्वेन न तु प्रतिबन्धकाभावत्वेनेति नान्योन्याश्रयः। एवं प्रतिबन्धकाभावकूट एव कारणं तेन मण्यसद्भावे मण्याद्यभावेऽपि न कार्यमिति” अनुमा० चि०अतिरिक्तशक्तिनिरासे। तच्च पञ्चधा भवति यथा तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयत्वेन प्रतिबन्धकत्वम्१। तदभावव्याप्यवत्तानिश्चयत्वेन२ तदभावावच्छेदकतया गृहीतधर्मवत्तानिश्चयत्वेन३। तदसमानाधिकरणधर्मवत्तानिश्चयत्वेन४। तद्व्यापकतावच्छेदकतया गृहीतधर्मावच्छिन्नाभाववत्तानिश्चयत्वेन५ चेति। तत्राद्यं यथा ह्रदो वह्निमानिति बुद्धिं प्रति ह्रदो न वह्निमानिति निश्चयस्य प्रतिबन्धकत्वम्। द्वितीयं ह्रदो वह्न्यभावव्याप्यवानिति निश्चयस्य। तृतीयं जलवान्वह्न्यभाववानिति निश्चयविशिष्टस्य जलवान् ह्रदः इति निश्चयस्य। चतुर्थं वह्न्यसमानाधिकरणजलवान् ह्रद इति निश्चयस्य। पञ्चमं ह्रदो धूमवानिति बुद्धिं प्रति धूमव्यापकतावच्छेदकतया गृहीतं यद्वह्नित्वं तादृशवह्नित्वावच्छिन्नाभाववान् ह्रद इति निश्चयस्येति। कार्यमात्रं प्रति तु कामिनीजिज्ञासायाः स्वातन्त्र्येण प्रतिबन्धकत्वम्। क्वचित् मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वम् यथा दाहं प्रति मणेः प्रतिबन्धकत्वम् इति।

**प्रतिबन्धि(न्धी)** प्रति+बन्ध–इन् वा ङीप्। प्रकृतैकपक्षे प्रदत्तं पुरुषदूषणंप्रकृतकल्पान्तरापादने प्रतिवादिमतेऽनिष्टान्तरप्रसञ्जकवाक्ये तत्रार्थे प्रतिबन्दीशब्दोऽपि तन्मूलं मृग्यम्। [सादौ मा० उ० १२०ख०।

**प्रतिबन्धु** पु० प्रतिरूपो बन्धुः प्रा०स०। बन्धुतुल्ये दौहि-

**प्रतिबल** पु०प्रतिकूलं बलं यस्य। १शत्रौ “प्रतिबलजलधेरिति” वेणी०। प्रतिरूपं बलं यस्य। २तुल्यबले त्रि० “यो मे प्रतिबलो लोके” इति चण्डी। प्रतिगतं बलम् प्रा०स०। २सामर्थ्ये न० त्रिका०।

**प्रतिबाहु** पु० प्रतिगतो बाहुम् अत्या०स०। बाहोरग्रे हं०सं०

५८।२५ स्वफलकस्य २पुत्रभेदे अक्रूरभ्रातरि भाग० ९।२४।१८

**प्रतिबुद्ध** त्रि० प्रति+बुध–कर्त्तरि क्त । १जागरिते । कर्मणि क्त । २ज्ञाते च ।

**प्रतिबोध** पु० प्रति+बुध–भावे घञ् । १जागरणे २ज्ञाने च कर्त्तरि अच् । ३जागरिते ४ज्ञायिनि च त्रि० । तस्यापत्यम् विदा० अञ् । प्रातिबोध तदपत्ये यूनि तु हरिता० फक् । प्रातिबोधायन तदीये यून्यपत्ये पुंस्त्री० ।

**प्रतिबोधिन्** त्रि० प्रति+बुध–भविष्यति गम्या० णिनि । भाविप्रतिबोधयुते गम्यादि० द्वितीयात०। शास्त्रप्रतिबोधी

**प्रतिभट** पु० प्रतिकूलो भटः प्रा० स०। प्रतियोधे येन सह युध्यते तस्मिन् ।

**प्रतिभय** त्रि० प्रतिगतं भयमस्मात् निरा० स०। १भयहेतौ भयङ्करे अमरः । प्रतिगतं भयम् प्रा० स० । २भये न० ।

**प्रतिभा** स्त्री प्रति+भा–भावे अङ् । १बुद्धौ २प्रत्युत्पन्नबुद्धौ च हेम० "प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता" रुद्रः ३दीप्तौ च । [पदार्थे ३प्रदीप्तियुते च ।

**प्रतिभात** त्रि० प्रति+भा–कर्त्तरि क्त । १ज्ञानेभासमाने

**प्रतिभान्वित** त्रि० ३त० । प्रतिभायुक्ते प्रगल्भे अमरः ।

**प्रतिभामुख** त्रि० प्रतिभान्वितं मुखं मुखव्यापारोऽस्य । प्रतिभान्विते हेमच० । [अच् । २प्रकाशमाने च ।

**प्रतिभास** पु० प्रति+भास–भावे घञ् । १प्रकाशे कर्त्तरि

**प्रतिभू** पु० प्रतिरूपो भवति प्रति+भू–क्विप् । (जामिन) ख्याते पदार्थे स्त्री । दर्शनप्रतिभूशब्दे ३४७५ पृष्ठादौ दृश्यम् । [२भेदने च ।

**प्रतिभेदन** न० प्रति+भिद्–भावे ल्युट् । १नेत्रादेरुत्पाटने

**प्रतिमण्डल** त्रि० प्रतिरूपं मण्डलं प्रा० स० । सूर्यादिमण्डलस्य १परिधौ परिवेशे हरिवं० २०६ अ० । अव्ययी० । २प्रत्येकमण्डले अव्य० ।

**प्रतिमल्ल** पु० प्रतिकूलो मल्लः प्रा० त०। प्रतियोधे

**प्रतिमा** स्त्री प्रति+मा–भावे अङ् । १सादृश्ये । करणे अङ् । २मृदादिनिर्मितदेवतादिमूर्त्तौ तन्मानादि देवताप्रतिमाशब्दे ३६८५ पृष्ठादौ दृश्यम् । ३अनुकृतौ ४गजदन्तबन्धे हेमच० उत्तरपदस्थः । ५सदृशार्थे त्रि० हेमच० । यथा देवप्रतिमः ।

**प्रतिमान** न० प्रतिमीयतेऽनेन प्रति+मि-मा-वा ल्युट् । १प्रतिबिम्बे २प्रतिमायां ३गजकुम्भस्याधोभागे ४तद्दन्तयोर्मध्यस्थाने च अमरः ।

**प्रतिमार्गक** पु० सौभपुरे व्योमचारिपुरे त्रिका० ।

**प्रतिमित्र** पु० १नृपभेदे भा०द्रो० १०२अ०। अव्ययी० । २प्रत्येकमित्रे अव्य० । [अमरः ।

**प्रतिमुक्त** त्रि० प्रति+मुच–क्त । १परिहिते २परित्यक्ते च

**प्रतिमुख** न० सा०द० उक्ते नाटकाङ्गसन्धिभेदे यथा "यथासङ्ख्यमवस्थाभिरभियोगात्तु पञ्चभिः । पञ्चधैवेतिवृत्तस्य भागाः स्युः पञ्च सन्धयः" इत्युपक्रमे तल्लक्षणमाह "अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति" । एकेन प्रयोजनेनान्वितानां कथाङ्गानामवान्तरैकप्रयोजनसम्बन्धः सन्धिः । तद्भेदानाह "मुखं प्रतिमुखं गर्भो विमर्ष उपसंहृतिः । इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते"। तत्र प्रतिमुखाङ्गलक्षणं भेदोदाहरणादि यथा "विलासः परिसर्पश्च विधूतं तापनं तथा । नर्म नर्मद्युतिश्चैव तथा प्रगमनं पुनः । विरोधश्च प्रतिमुखे तथा स्यात् पर्युपासनम् । पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि" । तत्र "समीहा रतिभोगार्था विलास इति कथ्यते" । रतिलक्षणस्य भावस्य यो हेतुभूतो भोगोऽस्य विषयः प्रमदा पुरुषो वा तदर्था समीहा विलासः यथा शाकुन्तले "कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि । अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते" । "दृष्टनष्टानुसरणं परिसर्पश्च कथ्यते" यथा शाकुन्तले राजा । भवितव्यमत्र तया । तथा हि "अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् । द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा" । "कृतस्यानुनयस्यादौ विधूतं त्वपरिग्रहः" यथा तत्रैव "अलं वो अन्तउरविरहपज्जुस्सुएण राएसिणा उवरुद्धेण"। केचित्तु "विधूतं स्यादरतिरिति" वदन्ति । "उपायादर्शनं यत्तु तापनं नाम तद्भवेत्" यथा रत्नवल्यां सागरिका "दुल्लहजणाणुराओ लज्जा गुरुई परवसो अप्पा । पियसहि ! विसमं पेम्मं मरणं सरणं णवर एक्कं" । "परिहासवचो नर्म—यथा रत्नवल्याम् सुसङ्गता । "सहि जस्स किदे तुमं आअदा सो अयं दे पुरदो चिट्ठदि । सागरिका साभ्यसूयम् । कस्स किदे अहं आअदा । सुसं । अइ अप्पसंकिदे णं चित्तफलअस्स" ।—धृतिस्तु परिहासजा" । "नर्मद्युतिः—यथा तत्रैव । सुसङ्गता "सहि अदक्खिणा दाणिं सि तुमं जा एवं भट्टिणा हत्थावलम्बिदावि कोवं ण मुञ्चसि" । साग । सभ्रूभङ्गमीषद्विहस्य "सुसङ्गदे दाणिं वि कीलिदुं ण विरमसि"। केचित्तु "दोषस्याच्छादनं हास्यं नर्मद्युतिरिति" वदन्ति ।—प्रग-

मर्थं वाक्यं स्यादुत्तरोत्तरम्"। यथा विक्रमोर्व्वश्याम् उर्व्वशी "जअदु जअदु महाराओ। राजा। मया नाम जितं यस्य त्वया जय उदीर्य्यते इत्यादि"। "विरोधो व्यसनप्राप्तिः—यथा चण्डकौशिके राजा "नूनमसमीक्ष्यकारिणा मयान्धेनेव स्फुरच्छिखाकलापो ज्वलनः पद्भ्यां समाक्रान्तः"—"कृतस्यानुनयः पुनः" "सान्त्वयुग्दासनं—रत्नावल्याम् विदू "भो मा कुप्य एसा हि कदलीघरन्तरं गदेत्यादि"—"पुष्पं विशेषवचनं मतम्"। यथा तत्रैव राजा "हस्ते गृहीत्वा स्पर्शं नाटयति" विदू "भो वअस्स एसा अवरेव्व सिरी तए समासादिदा" राजा। वयस्य सत्यम् "श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः। कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः"। "प्रत्यक्षनिष्ठुरं वज्रं—यथा तत्रैव राजा "कथमिह कोऽहं त्वया ज्ञातः" सुसं। न केवलं तुमं चित्तफलअस्स ता जाव गदुअ देवीए णिवेदइस्सं"।—उपन्यासः प्रसादनम्"। यथा तत्रैव सुसं। भट्टा अलं सङ्काए मए वि भट्टिणीए पसादेण कीडिदं ज्जेव एदेहिं ता किं कस्साभरणेण। अदोवि मे गरुअरो पसादो एसो जं तए अहं एत्थ आलिहिदात्ति कुविदा मे पिअसही सागरिआ एसा ज्जेव पसादीअदु"। केचित्तु "उपपत्तिकृतो योऽर्थ उपन्यासः स कीर्त्तितः" इति वदन्ति उदाहरन्ति च। तत्रैव "अदिमुहरा क्खु सा गब्भदासीति। "चातुर्व्वर्ण्योपगमनं वर्णसंहार इष्यते" यथा वीरचरिते तृतीयेऽङ्के "परिषदियमृषीणामेष वीरो युधाजित् सममधिभिरमात्यैर्लोमपादश्च वृद्धः। अयमविरतयज्ञो ब्रह्मवादी पुराणः प्रभुरपि जनकानामद्रुहो याजकास्ते"। [प्रतिमायाम्।

**प्रतिमूर्त्ति** स्त्री प्रतिरूपा मूर्त्तिः प्रा॰स॰। देवादिमूर्त्तिसदृशि-

**प्रतियत्न** पु॰ प्रति+यत–नङ्। १वाञ्छायाम् २उपग्रहे ३निग्रहादौ ४वन्द्याम् अमरटीकायां भरतमुकुटादयः। यतो गुणान्तराधानरूपे ५संस्कारे मेदि॰ ६उपहरणे ७प्रतिग्रहे च त्रिका॰। प्रतिरूपो यत्नो यस्य प्राव॰। ८प्रतियत्नयुक्ते त्रि॰। ९रचनायां जटाधरः।

**प्रतियातना** स्त्री प्रति+यात्यतेऽनया चु॰ यत–युच्। १प्रतिमायाम् प्रा॰स॰। २तुल्यरूपयातनायाम् अमरः।

**प्रतियायिन्** त्रि॰ प्रति+या–भविष्यति गम्या॰णिनि। भावियानयुते भा॰उ॰ ५७७श्लो॰। [सम्बन्धे च।

**प्रतियोग** पु॰ प्रति+युज–भावे घञ्। १विरोधे २विशेष-

**प्रतियोगिन्** त्रि॰ प्रतिरूपं युज्यते प्रति+युज–घिनुण्। १प्रतिकूलसम्बन्धवति। यथा अभावस्य प्रतिकूलसम्बन्धवत्त्वात् घटादिस्तस्य प्रतियोगी। २विरुद्धपक्षे विशिष्टबुद्धिनियामकसंसर्गस्य ३सम्बन्धिभेदे यथा संयोगेन घटवद्भूतलमित्यादौ संयोगस्य घटः प्रतियोगी भूतलमनुयोगि। चन्द्रतुल्यमुखमित्यादौ सादृश्यस्य चन्द्रः प्रतियोगी मुखमनुयोगि। तत्र विशिष्टबुद्धौ प्रकारतया भासमानं संसर्गस्य प्रतियोगि विशेष्यतया भासमानं संसर्गस्यानुयोगीति भेदः। तस्य भावः त्व प्रतियोगित्व न॰ तल् प्रतियोगिता स्त्री तद्भावे। सा च "अभावविरहात्मत्वं वस्तुनः प्रतियोगिता" इत्याचार्योक्ता। स्वरूपसम्बन्धविशेषरूपा दीधितिकारः। यथा घटो नास्तीत्यादौ घटेऽभावप्रतियोगिता। यथा वा घटवद्भूतलमित्यादौ घटे भूतलानुयोगिकसंयोगसम्बन्धप्रतियोगिता। अखण्डोपाधिर्धर्मविशेष इति सम्प्रदायः। वित्तिवेद्यत्वमित्यन्ये यथा चन्द्रवन्मुखमित्यादौ चन्द्रस्य सादृश्यप्रतियोगित्वम्। अन्वयित्वमित्यपरे। यथा चैत्रस्य पुत्र इत्यादौ षष्ठ्यर्थस्य चैत्रे प्रतियोगित्वम्। घटाभावादिबुद्धेर्विशिष्टवैशिष्ट्यावगाहिबुद्धितया अभावबुद्धिः विशेष्यविशेषणसंसर्गावगाहिनी विशिष्टबुद्धित्वात् संयोगेन घटवद्भूतलमित्यादिबुद्धिवत् इत्यनुमानेन अभावे घटादिविशिष्टबुद्धौ सम्बन्धतया अतिरिक्तप्रतियोगितासिद्धिरिति नव्यनैयायिकाः। श्रीहर्ष खण्डनादौ तस्य स्वरूपसम्बन्धविशेषरूपत्वेन प्रतियोगिस्वरूपत्वमनुयोगिस्वरूपत्वं वा स्वीकार्य्यं तेनैवोपपत्तौ नातिरिक्तपदार्थकल्पनेति स्थितम् विस्तरभयान्नोक्तम्।

**प्रतियोगितावच्छेदक** त्रि॰ ६त॰। येन रूपेण यस्याभावादौ प्रतियोगिता १तादृशे धर्मे यथा घटाभावे घटस्य घटत्वरूपेण प्रतियोगिता अतस्तत्र घटत्वं प्रतियोगितावच्छेदकं तच्च क्वचित् एकं क्वचिदनेकं तत्र वह्निर्नास्तीत्यत्र वह्नित्वमेकं महानसीयवह्निर्नास्तीत्यादौ महानसीयत्वं वह्नित्वञ्चेत्यादिकमनेकमित्याकरे दृश्यम्। येन सम्बन्धेन प्रतियोगितायाः अभावांशे भानं २तादृशसम्बन्धे च यथा संयोगेन घटो नास्तीत्यादौ संयोगेन घटस्याभावांशे प्रतियोगिताभानं तत्र संयोगसम्बन्धः प्रतियोगितावच्छेदकसम्बन्ध एवमन्यत्राप्यूह्यम्।

**प्रतिर** जठरे चिरकालावस्थाने ऋ॰ ८।४८।१०।

**प्रतिरथ** पु॰ प्रतिकूलो रथो यस्य प्रा॰ब॰। १प्रतियोद्धे अ-नाधृष्यवंश्ये तंसुधातरि नृपभेदे हरिवं॰३२अ॰। यदु-

वंश्ये १वत्सावत्पुत्रे हरिवं० १६२अ० । अव्ययी० । ३प्रत्येकरणे अव्य० ।

**प्रतिरम्भ** पु० प्रतिबन्ध+रम्भ रः । प्रतिबन्धे हिरूपकोषः ।

**प्रतिरव** पु०प्रतिरवन्ति प्रति+रु—कर्त्तरि अच् । १ग्रावेषु यजु० ३८।१५ "ग्रावा वै प्रतिरवाः" शत०ब्रा० १४।२।२।३४। भावे अप् प्रतिकूलो रवः प्रा०स० । २प्रतिकूलशब्दे मदीयं धनं न मोक्तव्यमनेन मदीयं धनं बलाद् गृह्यते इत्यादि लोकेषु उद्घोषणं प्रतिरवः ।

**प्रतिरूप** न०प्रतिकृतं रूपम् प्रा०स०। १तुल्यरूपे प्रतिमायाम् मेदि० । २दानवभेदे पु० भा०शा०२८७अ० । ३भेरुपार्श्वेहितभेदे स्त्री भाग० ५।२।२१ प्रतिकृतं रूपं येन प्रा०ब०। ४तुल्यरूपयुते त्रि० "रूपं रूपं प्रतिरूपो बभूव" श्रुतिः । [प्रतिबिम्बे जटा० ।

**प्रतिरूपक** न० प्रतिकृतं रूपं बिम्बस्य येन प्रा०ब० कप् ।

**प्रतिरोध** पु० प्रति+रुध—भावे घञ् । १निरोधे । स्वार्थे क । २प्रतिबन्धे ३तिरस्कारे भरतः । कर्त्तरि अच् । ४प्रकृतसाध्यानुमितिविरोधके सत्प्रतिपक्षदोषदुष्टे हेतौ "पक्षसाध्यसाधनाप्रसिद्धिसिद्धसाधनबाधप्रतिरोधानां निरासः" दीधिति० । भावे घञ् । ५हठचौर्य्ये ।

**प्रतिरोधक** पु०प्रति+रुध—ण्वुल् । १प्रतिबन्धके (डाकाइत) २हठचौरे हेमच० । तस्य रोधनेन लोकवर्त्तनात् तथात्वम् ।

**प्रतिरोधिन्** त्रि० प्रति+रुध–णिनि । १प्रतिबन्धके २प्रतिरुध्य हठहारिणि चौरे अमरः । [लम्भ" नैष० ।

**प्रतिलम्भ** पु० प्रति+लभ—अप् मुम् । लाभे "कलमदः प्रति-

**प्रतिलोम** त्रि० प्रतिगतं लोम आनुकूल्यमस्मात् प्रा०ब० अच् समा० । वामे विपरीते हेमच० ।

**प्रतिलोमज** पुंस्त्री० प्रतिलोमात् जातः जन—ड । उत्तमवर्णस्त्रियाम् अधमवर्णात् जाते सङ्कीर्णवर्णे ते च मनुनोक्ता १०।२५ षट् । तथा याज्ञ० "ब्राह्मण्यां क्षत्रियात् सूतो१ वैश्याद्वैदेहकस्तथा । शूद्राज्जातस्तु चण्डालः३ सर्वधर्मबहिष्कृतः । क्षत्रिया मागधं४ वैश्याच्छूद्रात् क्षत्तारमेव च । शूद्रादायोगवं६ वैश्या जनयामास वै सुतम्" । विष्णुना नामान्तरं हस्तिपमाहुक्ता यथा "तत्र वैश्यापुत्रः शूद्रेणायोगवः१ । पुक्कसमागधौ२।३ क्षत्रियापुत्रौ वैश्यशूद्राभ्याम् । चाण्डालवैदेहकसूताश्च ४।५।६ ब्राह्मणीपुत्राः शूद्रविट्क्षत्रियैः सङ्करसङ्कराश्चासंख्येयाः । रङ्गावतरणमायोगवानाम् । व्याधता पुक्कसानाम् । स्तुतिक्रिया मागधानाम् । वध्यघातित्वं चाण्डालानाम् । स्त्रीरक्षा तज्जीवनञ्च वैदेहकानाम् अश्वसारथ्यं सूतानाम् । चाण्डालानां बहिर्ग्रामनिवसनं मृतचेलधारणमिति विशेषः" । कर्त्तरि ड । प्रतिलोमजातोऽप्यत्र ।

**प्रतिवचन** न०प्रतिरूपं वचनम् प्रा०स० । १प्रतिवाक्ये २उत्तरे ३विरुद्धवाक्ये च मेदि० । प्रतिकथादयोऽप्यत्र स्त्री ।

**प्रतिवसथ** पु० प्रति+वस—आधारे अथ । ग्रामे संवसथे हेमच० ।

**प्रतिवस्तु** न० प्रतिरूपम् वस्तु प्रा०स० । तुल्यरूपे वस्तुनि ।

**प्रतिवस्तूपमा** स्त्री अर्थालङ्कारभेदे अलङ्कारशब्दे ४०० पृ० दृश्यम् ।

**प्रतिवात** त्रि० प्रतिगतो वातो यतः प्रा०ब०। यस्मात् प्रदेशात् वायुः आगच्छति तस्मिन् देशे "प्रतिवातेऽनुवाते च" मनुः । अव्ययी० । २वाताभिमुखे अव्य० ।

**प्रतिवाद** पु० प्रति+वद—भावे घञ् । वादिप्रयुक्तन्यायविरुद्धन्यायवाक्यप्रयोगे प्रतिवादिन्शब्दे दृश्यम् ।

**प्रतिवादिन्** त्रि० प्रतिकूलं वदति वद—णिनि । १वादिप्रयुक्तन्यायवाक्यविरुद्धवाक्यवादिनि यथा पर्वतो वह्निमान् धूमादित्यादौ साध्यविषये वादिना प्रयुक्ते येन पर्वतो न वह्निमान् पाषाणमयत्वात् इत्यादि वाक्यं प्रयुज्यते तस्मिन् । व्यवहारे २प्रत्यर्थिनि (आसामी) "कारणे प्रतिवादिनि" याज्ञ० ।

**प्रतिवारण** त्रि० प्रति+वारि—कर्त्तरि ल्यु । १निवारके २दैत्यभेदे पु०भाग०५।१८।१८ भावे ल्युट् । ३निवारणे न० ।

**प्रतिवार्त्ता** स्त्री प्रा०स० । प्रत्युत्तरत्वानीये वृत्तान्तभेदे

**प्रतिवासिन्** त्रि० प्रत्यासन्नं वसति प्रति+वस—णिनि । (पड़सि) गृहासन्नवासिनि स्त्रियां ङीप् ।

**प्रतिवाहु** पु० श्वफल्कपुत्रभेदे अक्रूरानुजे हरिवं० ३२अ० ।

**प्रतिविधान** न०प्रति+वि+धा—ल्युट् । १प्रतिकारे २प्रकृतस्योपपादनार्थमुपायावलम्बने च । [६१अ० ।

**प्रतिविन्ध्य** पु० १युधिष्ठिरस्य पुत्रे २नृपभेदे च भा०आ०

**प्रतिबिम्ब** प्रति+आचारे क्विप् नामधातुः पर०अक० सेट् । प्रतिबिम्बति अप्रतिबिम्बीत् । प्रत्यबिम्बीत् इत्यपरे ।

**प्रतिबिम्ब** पु०न०वी+गतौ उल्वा०नि०वन् नुट् च बिम्बं प्रतिरूपं बिम्बम् प्रा०स० । बिम्बानुरूपे प्रतिच्छायायुक्ते पदार्थे । तस्य बिम्बाद्भेदोऽभेदो वेति संशये विवरणप्रमेयसंग्रहे निरणायि यथा

"ननु जीवस्याहङ्कारस्यप्रतिबिम्बत्वे बिम्बाद्भेदः स्यात् दर्पणगतमुखप्रतिबिम्बवत् तत्र हि ग्रीवास्थदर्पणस्यो-

मुखयोरन्योन्याभिमुखत्वेन भेदोऽनुभूयते, सैवं मदीयमिदं मुखमित्यैक्यप्रत्यभिज्ञया भेदानुभवस्य बाधात्। न च प्रत्यभिज्ञैवेतरेण बाध्येति वाच्यं सति भेदे प्रतिबिम्बासम्भवात् किं प्रतिबिम्बोनाम मुखलाञ्छितमुद्रा ? उत दर्पणावयवा एव बिम्बस्य सन्निधिवशात्तथा परिणमन्ते ? नाद्यः दर्पणस्य मुखस्येतरस्मादत्यन्तत्वात् यत्र तु प्रौढदर्पणे प्रौढं मुखमुपलभ्यते तत्रापि तस्य न मुद्रात्वम् दर्पणमुखयोः संयोगाभावात्। न द्वितीयः निमित्तकारणस्य बिम्बस्यापायेऽपि तस्यावस्थानप्रसङ्गात् न हि तथाऽवतिष्ठते। तेनैव पुरुषेण दर्पणे तिर्यङ्निरीक्षिते पुरुषान्तरेण सम्यगवलोकिते वा तन्मुखानुपलम्भात्। न चैवं मन्तव्यं क्वचिन्निमित्तापाये कार्यमप्यपैति हस्तसंयोगजन्यस्य कटप्रसारणस्य हस्तसंयोगापायेऽपायदर्शनात्। न तत्र निमित्तापायात् कार्यापायः चिरकालसंवेष्टनाहितेन संस्कारेण संवेष्टनलक्षणविरुद्धकार्योत्पादात् अन्यथा चिरकालप्रसारणेन संवेष्टनसंस्कारे विनाशितेऽपि हस्तापाये प्रसारणमपेयात् न चैवमपैति। इह तु चिरकालबिम्बसन्निधावप्युत्पन्ने बिम्बापाये प्रतिबिम्बोऽपि गच्छत्येवेति न बिम्बः परिणामस्य निमित्तम्। अथ मन्यसे चिरकालस्थितोऽपि कमलविकाशः सवितृकिरणस्य निमित्तस्यापायेऽप्यपगच्छतीति। तत्र तत्रापि प्राथमिकमुकुलत्वहेतुभिः पार्थिवैराप्यैश्च कमलावयवैः पुनरपि रात्रौ मुकुलत्वे विरुद्धकार्ये जनिते विकाशापायात् अन्यथा तादृशावयवरहिते म्लाने कमलेऽपि रात्रौ विकाशोऽपगच्छेत्। आदर्शे तु मुखाकारपरिणते पुनः केन हेतुना समतलाकारपरिणामः स्यात् तदवयवानां कारुकर्मव्यतिरेकेणाकिञ्चित्करत्वात्। अतएव बिम्बसन्निधिमात्रेण नादर्शावयवा मुखाकारेण परिणमेरन् अन्यथा दर्पणद्रव्ये प्रतिमामुखे कर्त्तव्ये सति लौकिका बिम्बमेव सन्निधापयेयुः न तु कांस्यकारमपेक्षेरन्। दर्पणद्रव्यस्यान्याकारपरिणामे कारुकर्मापेक्षायामपि प्रतिबिम्बपरिणामे पुनःस्वरूपपरिणामे वा न तदपेक्षेति चेत् एवमपि न मुखप्रतिबिम्बाकारपरिणामो युक्तिसहः चक्षुर्नासिकादिनिम्नोन्नतभागस्य स्पर्शेनानुपलम्भात् समतलमेव हि पाणिनास्पृश्यते। समतलेन व्यवहितं मुखमिति चेत् तर्हि चाक्षुषमपि न स्यात्। तत एतत् सिद्धं विमतः आदर्शोमुखमध्यान्तरहितमज्जन्मकारणशून्यत्वात् यथा विमाने जन्मकारणशून्यं विमानरहितं गगनमस्तकमिति। ननु तर्हि शुक्तिरजतवन्मिथ्यात्वापत्तेर्न बिम्बैकत्वसिद्धिः प्रत्यभिज्ञा तु व्यभिचारिणी मिथ्यारजतेऽपि मदीयमिदं रजतमिति तद्दर्शनादिति चेत् विषमो दृष्टान्तः नेदं रजतमिति हि तत्र रजतस्वरूपबाधया रजताभिज्ञाया भ्रमत्वे तत्प्रत्यभिज्ञाया अपि भ्रमत्वमुचितम् अत्र न तथा नेदं मुखमिति स्वरूपबाधः किन्तु नात्र मुखमिति देशसम्बन्धमात्रबाधे सति उत्पन्ना मदीयमेव मुखमिति प्रत्यभिज्ञा कथं भ्रमः स्यात्। न च मुखावयवानामचाक्षुषत्वात् कथं प्रत्यभिज्ञानमिति वाच्यं नासाप्रादिकतिपयावयवदर्शनादपि घटादिवदवयविनश्चाक्षुषत्वोपपत्तेः। यः पुनर्दर्पणापगमे प्रतिबिम्बापगमः नासौ स्वरूपबाधः दर्पणेऽपि तत्प्रसङ्गात्। ननु तत्त्वमसिवाक्येन जीवरूपः प्रतिबिम्बो बाध्यते यथा स्थाणुरसौ न पुरुष इति बाधायां सामानाधिकरण्यदर्शनात् संसारविनाशे च मोक्षानुपपत्तेः सोऽयं देवदत्त इति वदैक्यपरत्वेनापि सामानाधिकरण्यसम्भवात् विरुद्धांशबाधमात्रेण मोक्षोपपत्तेः सत्यस्य जीवस्य बाधे मोक्षस्यापुरुषार्थत्वात्। यस्तु मन्यते प्रतिबिम्ब एव नास्ति दर्पणप्रतिफलिता नेत्ररश्मयः परावृत्य बिम्बमेव दर्पणादविविक्तं गृह्णन्तीति स्पष्टं प्रत्यङ्मुखत्वाद्यनुभवेनासौ निराकरणीयः। कथं तर्हि मूर्त्तद्रव्यस्य मुखस्यैकस्य भिन्नदेशद्वये युगपत् कार्त्स्न्येन वृत्तिः, दर्पणदेशवृत्तेर्मायाकृतत्वादिति ब्रूमः। न हि मायायामसम्भावनीयं नाम स्वशिरश्छेदादिकमपि स्वप्ने माया दर्शयति। नन्वेवमपि जलमध्येऽधोमुखस्य वृक्षप्रतिबिम्बस्य तीरस्थवृक्षेणैक्ये सति तीरस्थवृक्षोऽधिष्ठानं तत्र च मायया जलगतत्वमधोमुखत्वञ्चाध्यस्तमिति वक्तव्यं न चात्राध्यासहेतुरस्ति अधिष्ठानस्य साकल्येन प्रतीतेः तत्कथमसावध्यासः, उच्यते किमत्र हृक्षावरणाभावादध्यासाभावः ? किं वा दोषाभावात् ? उतोपादानाभावात् ? आद्ये खिदध्यासविरोधिनोऽधिष्ठानतत्त्वज्ञानस्य सद्भावात् ? नाद्यः चैतन्यावरणस्यैवाध्यासोपादानतया जडे पृथगावरणानुपयोगात्। एतेन तृतीयोऽपि निरस्तः। न द्वितीयः सोपाधिकभ्रमेषूपाधेरेव दोषत्वात्। न चतुर्थः निरुपाधिकभ्रमस्यैवाधिष्ठानतत्त्वज्ञानविरोधित्वात्। तर्हि सोपाधिकभ्रमस्य कर्तृत्वादेः नात्मतत्त्वज्ञानान्निवृत्तिः किन्तु अहङ्कारोपाध्यपगमादिति चेत् बाढं पारमार्थिकदर्पणाद्युपाधेस्तत्कृतभ्रमस्य च ज्ञानादनिवृत्तावप्यज्ञानज-

न्योपाधेरहङ्कारस्य निरुपाधिकब्रह्मरूपात्मतत्त्वज्ञाननिवृत्तौ कर्त्तृत्वादेर्ज्ञानान्निवृत्तिरर्थात् सिध्यति। ननु कथं तत्त्वज्ञानं जीवोनाऽनात्मतादात्म्यं जानाति न विरुद्धात्मतामात्मनोऽवगन्तुमर्हं प्रतिबिम्बत्वात् दर्पणगतप्रतिबिम्बवदिति चेत् न अचेतनत्वस्योपाधित्वात्। यस्तु लोकायतः शरीरस्यैव चैतन्यं मन्यते तं प्रति दर्पणगत जाड्येन प्रतिरुद्धत्वात् प्रतिबिम्बस्याचेतनत्वं सुसम्पादं चेतनत्वे तु बिम्बचेष्टया विनापि स्वयं चेष्टेत जीवस्य तु प्रतिबिम्बत्वेऽपि नोपाधिजाड्येन प्रतिबन्ध इत्यनुभवसिद्धं, यद्यपि लोके बिम्बभूतस्यैव देवदत्तस्य भ्रमनिवर्त्तकतत्त्वज्ञानाश्रयत्वम् दृष्टम्। तथापि न तत्र बिम्बत्वं प्रयोजकं किन्तु भ्रमाश्रयत्वं जीवश्च भ्रमाश्रयः अविद्यायाश्चिन्मात्राश्रयत्वेऽपि जीवपक्षपातित्वेन भ्रमोत्पादनात्। ननु ब्रह्म स्वस्य जीवैक्यं न जानाति चेत् असर्वज्ञं स्यात् जानाति चेत् जीवगतभ्रमं स्वगतत्वेन पश्येदिति चेत् न स्वमुखतत्प्रतिबिम्बयोरैक्यं जानतापि देवदत्तेन स्वमुखे प्रतिबिम्बगताल्पत्वमलिनत्वाद्यदर्शनात्। न च जीवस्य प्रतिबिम्बत्वे मानाभावः श्रुतिस्मृतिसूत्रेभ्यस्तत्सिद्धेः "रूपं रूपं प्रतिरूपो बभूवेति" श्रुतिः "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इति स्मृतिः। "अतएव चोपमा जलसूर्य्यकादिवदिति" सूत्रम्। न चामूर्त्तस्य ब्रह्मणः प्रतिबिम्बासम्भवः अमूर्त्तस्याप्याकाशस्य सान्द्रताभ्रनक्षत्रादिविशिष्टस्य जले प्रतिबिम्बभावदर्शनात्। जलान्तराकाश एवाभ्रादिप्रतिबिम्बाधार इति चेत् न जानुमात्रेऽपि जले दूरविशालाकाशदर्शनात्। जीवो घटाकाशवदुपाध्यवच्छिन्नो न प्रतिबिम्ब इति चेत् न तथा सति जीवोपाधिमध्ये ब्रह्मणोऽपि सत्त्वे चैतन्यं तत्र द्विगुणं स्यात् न चैवमाकाशस्य घटे द्वैगुण्यं दृष्टं ब्रह्मणस्तत्रासत्त्वे च सर्वगतत्वनियन्तृत्वादिहानिः। उभयानुगतचिद्रूपाकारस्यैव सर्वगतत्वनियन्तृत्वादि न ब्रह्मण इति चेत् न "य आत्मानमन्तरो यमतीति" श्रुतौ प्रकरणलभ्यस्य ब्रह्मण एव जीवमध्ये नियन्तृत्वेनावस्थानश्रवणात्। अतः शास्त्रे सर्वत्र घटाकाशदृष्टान्तोऽसङ्गत्वसाधको न जीवत्वसाधकः। प्रतिबिम्बपक्षे तु द्विगुणीकृत्य वृत्तिर्न दोषाय जलमध्ये स्वाभाविकजानुमात्राकाशस्य प्रतिबिम्बितविशालाकाशस्य च दृष्टेः। तस्मादहङ्कारोपाधिकतो ब्रह्मप्रतिबिम्बो जीवः"।

**प्रतिबिम्बन** न॰ प्रतिबिम्ब+नामधातुः भावे ल्युट्। अनुकरणे "दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्" सा॰द॰

**प्रतिबिम्बवाद** पु॰ ६त॰। जीवस्य ईश्वरप्रतिबिम्बतास्थापनार्थे वादे। द्विधा हि वेदान्तिमते जीवेश्वरयोर्विभागकल्पना प्रतिबिम्बभावेन तत्तदवच्छिन्नभावेन च। तत्राद्यः पक्षः विवरणानुसारिभिर्मन्यते द्वितीयः पक्षोऽन्यैर्मन्यते तदेतत् सिद्धान्तलेशे प्रदर्शितं यथा

विवरणानुसारिणस्त्वाहुः। "विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणोभेदमसन्तं कः करिष्यतीति" स्मृत्या एकस्यैवाज्ञानस्य जीवेश्वरविभागोपाधित्वप्रतिपादनाद्बिम्बप्रतिबिम्बभावेन जीवेश्वरयोर्विभागः। नोभयोरपि प्रतिबिम्बभावेन उपाधिद्वयमन्तरेणोभयोः प्रतिबिम्बत्वायोगात्। तत्रापि प्रतिबिम्बो जीवः बिम्बस्थानीय ईश्वरः। तथा सत्येव लौकिकबिम्बप्रतिबिम्बदृष्टान्तेन स्वातन्त्र्यमीश्वरस्य तत्पारतन्त्र्यं जीवस्य च युज्यते। "प्रतिबिम्बगताः पश्यन् ऋजुवक्रादिविक्रियाः। पुमान् क्रीडेत् यथा ब्रह्म तथा जीवस्थविक्रियाः" इति कल्पतरूक्तरीत्या "लोकवत्तु लीलाकैवल्यमिति" सूत्रमपि संगच्छते। अज्ञानप्रतिबिम्बे तस्य जीवस्यान्तःकरणरूपोऽज्ञानपरिणामभेदोविशेषाभिव्यक्तिस्थानम् सर्वतः प्रसृतस्य सवितृप्रकाशस्य दर्पण इव। अतस्तस्य तदुपाधिकत्वव्यवहारोऽपि न तावताऽज्ञानोपाधिपरित्यागः। अन्तःकरणोपाधिपरिच्छिन्नस्यैव चैतन्यस्य जीवत्वे योगिनः कायव्यूहाधिष्ठानानुपपत्तेः। न च योगप्रभावाद्योगिनोऽन्तःकरणं कायव्यूहाभिव्याप्तियोग्यं वैपुल्यं प्राप्नोतीति तदवच्छिन्नस्य कायव्यूहाधिष्ठानत्वं युज्यत इति वाच्यम्। "प्रदीपवदावेशस्तथा हि दर्शयतीति" शास्त्रोपान्त्याधिकरणभाष्यादिषु कायव्यूहे प्रतिदेहमन्तःकरणस्य चक्षुरादिवद्भिन्नस्यैव योगप्रभावात् सृष्टेरुपवर्णनात्। प्रतिबिम्बे बिम्बाभेदमात्रसाध्यस्तत्त्वेन स्वरूपेण तस्य सत्यत्वात् न प्रतिबिम्बरूपजीवस्य मुक्त्यन्वयासम्भव इति न तदतिरेकेण मुक्त्यन्वयावच्छिन्नरूपं जीवान्तरं वा प्रतिबिम्बजीवातिरिक्तं जीवेश्वरविलक्षणं कूटस्थशब्दितं चैतन्यान्तरं कल्पनीयम् "अविनाशी वाऽरे अयमात्मेति" श्रवणाज्जीवस्य तदुपाधिनिवृत्तौ प्रतिबिम्बभावापगमेऽपि स्वरूपं न विनश्यतीत्येतत्परं, न तदतिरिक्तकूटस्थनामकचैतन्यान्तरपरम्। जीवोपाधिनाऽन्तःकरणादिनावच्छिन्नं चैतन्यं बिम्बभूत ईश्वर एव "यो विज्ञाने तिष्ठन्नित्यादि" श्रुत्या ईश्वरस्यैव जीवसन्निधानेन तदन्तर्यामिभावेन

विकारान्तरस्यानवस्थानादिति"। अतः परमवच्छिन्नवाद-
स्तत्र दर्शितः प्रसङ्गात् पूर्वमनुक्तत्वाच्चालोच्यते "अन्यो
तु रूपानुपहितप्रतिविम्बो न युक्तः सुतरां नीरूपे गगन
प्रतिविम्बोदाहरणमप्ययुक्तं गगनाभोगव्यापिनि सविल-
करमण्डले सलिले प्रतिविम्बिते गगनप्रतिविम्बत्वव्यवहा-
रस्य भ्रममात्रमूलत्वात्। ध्वनौ वर्णप्रतिविम्बत्ववादो-
ऽप्ययुक्तः व्यञ्जकतया सन्निधानमात्रेण ध्वनिधर्माणा-
मुदात्तादिस्वराणां वर्णेष्वारोपोपपत्तेर्ध्वनेर्वर्णप्रतिविम्ब-
त्वग्राहित्वकल्पनायानिःप्रमाणकत्वात्। प्रतिध्वनिरपि
न पूर्वशब्दप्रतिविम्बः पञ्चीकरणप्रक्रियया पटहपयो-
निधिप्रभृतिशब्दानां क्षितिसलिलादिशब्दत्वेन प्रतिध्वने-
रेवाकाशशब्दत्वेन तस्यान्यशब्दप्रतिविम्बत्वायोगात्। वर्ण
रूपप्रतिशब्दोऽपि न पूर्ववर्णप्रतिविम्बः वर्णाभिव्यञ्जक-
ध्वनिनिमित्तकप्रतिध्वनेर्मूलध्वनिवदेव वर्णाभिव्यञ्जकत्वेनो-
पपत्तेस्तस्माद्घटाकाशवदन्तःकरणावच्छिन्नं चैतन्यं जीवः
तदनवच्छिन्नमीश्वरः। न चैवमण्डान्तर्वर्त्तिनश्चैतन्यस्य
तत्तदन्तःकरणोपाधिभिः सर्वात्मना जीवभावेनावच्छेदा-
त्तदवच्छेदरहितचैतन्यरूपस्येश्वरस्याण्डाद्बहिरेव सत्त्वं
स्यादिति "यो विज्ञाने तिष्ठन्नित्यादावन्तर्यामिभावेन वि-
कारान्तरवस्थानश्रवणं विरुध्यते। प्रतिविम्बपक्षे तु
जलगतस्वाभाविकाकाशे सत्येव प्रतिविम्बाकाशदर्शनादेकत्र
द्विगुणीकृत्य वृत्तिरुपपद्यत इति वाच्यम्। यतः प्रतिविम्ब-
पक्षेऽपि उपाधावनन्तर्गतस्यैव चैतन्यस्य तत्र प्रतिविम्बो
वाच्यः। न तु जलचन्द्रन्यायेन जलस्थप्रतिविम्बं तद-
न्तर्गतभागस्य तत्र प्रतिविम्बासम्भवात्। न हि मेघा-
वच्छिन्नस्याकाशस्यालोकस्य वा जले प्रतिविम्बवज्जलान्त-
र्गतस्यापि तत्र प्रतिविम्बो दृश्यते। न वा सुखादीनां
बहिःस्थितिसमय इव जलान्तर्निमज्जनेऽपि प्रतिवि-
म्बोऽस्ति। अतो जलप्रतिविम्बं प्रति मेघाकाशादेरि-
वान्तःकरणाद्युपाधिप्रतिविम्बं प्रति तदनन्तर्गतस्यैव वि-
म्बत्वं स्यादिति विम्बभूतस्य विकारान्तरवस्थानायोगात्
ईश्वरेऽन्तर्यामिब्राह्मणाम्नातस्वभावस्तुल्यः। एतेनावच्छि-
न्नस्य जीवत्वे कर्तृभोक्तृसमययोस्तत्र तत्रान्तःकरणाव-
च्छेद्यचैतन्यप्रदेशस्य भिन्नत्वात् कृतहानाकृताभ्यागम-
प्रसङ्ग इति निरस्तम्। प्रतिविम्बपक्षेऽपि स्थानान्तर्गतस्य
सन्निहितस्य चैतन्यप्रदेशस्यान्तःकरणे प्रतिविम्बस्य
वक्तव्यतया तत्र तत्रान्तःकरणस्य गमने विम्बभेदात् तत्-
प्रतिविम्बस्यापि भेदावश्यम्भावेन दोषतौल्यात्। न
चान्तःकरणप्रतिविम्बो जीव इतिपक्षे दोषतौल्येऽ-
प्यविद्याप्रतिविम्बो जीवस्तस्य च तत्र गतिद्वारम-
न्तःकरणं जलाशयव्यापिनो महामेघमण्डलप्रतिविम्बस्य
तदुपरि विस्तृतरश्मीतालोक इव तत्र विशेषाभिव्यक्ति-
हेतुरिति पक्षे नायं दोषः। अन्तःकरणस्य विद्यायागत्य-
भावेन प्रतिविम्बभेदानापत्तेरिति वाच्यम्। तथैवावच्छेद
पक्षेऽप्यविद्यावच्छिन्नो जीव इत्युपगमसम्भवात् तत्रा-
प्येकस्य जीवस्य कुचित्प्रदेशे कर्तृत्वं प्रदेशान्तरे भोक्तृ-
त्वमित्येवं कृतहानाकृताभ्यागमदोषापत्तये वस्तुतो
जीवैक्यस्य करणीकरणीयत्वेन तन्न्यायादन्तःकरणोपाधि-
पक्षेऽपि वस्तुतश्चैतन्यैक्यस्य तदवच्छेदकोपाध्यैक्यस्य
च तत्राभ्युपगमेन दोषनिराकरणसम्भवात्। न चाव-
च्छेदपक्षे "यथाह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना
बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः
क्षेत्रेष्वेवमजोऽयमात्मा"। "अतएवोपमा जलसूर्यकादिव-
दिति" श्रुतिसूत्राभ्यां विरोधः। "अम्बुवदग्रहणात्तु न तथा
त्वम्" इत्युदाहृत सूत्रानन्तरसूत्रेण यथा सूर्यस्य रूपवतः
प्रतिविम्बोदययोग्यता ततो विप्रकृष्टदेशं रूपवज्जलं स्व-
च्छाते नैवं सर्वगतस्यात्मनः प्रतिविम्बोदययोग्यं किञ्चि-
दस्ति ततो विप्रकृष्टमिति प्रतिविम्बासम्भवमुक्त्वा "वृद्धिह्रास
भाक्त्वम् अन्तर्भावादुभयसामञ्जस्यादेवमिति" तदनन्तरसूत्रेण
यथा जलप्रतिविम्बितः सूर्यो जलवृद्धौ वर्द्धत इव जल-
ह्रासे ह्रसतीव जलचलने चलतीवेति तस्याध्यासिकतद-
नुरोधिवृद्धिह्रासादिभाक्त्वमित्येवं दृष्टान्तदार्ष्टान्तिकयोः
सामञ्जस्यादविरोध इति स्वयं सूत्रकृतैवावच्छेदपक्षे
तयोस्तात्पर्यकथनात्। "घटसंवृतमाकाशं नीयमाने यथा
घटे। घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः"।
"अंशो नाना व्यपदेशादिति" श्रुतिसूत्राभ्यामवच्छेदपक्ष-
स्यैव परिग्रहात्। तस्मात् सर्वगतस्य चैतन्यस्यान्तःकरणा-
दिनावच्छेदोऽवश्यं भावीत्यावश्यकत्वादवच्छेदो जीव
इति पक्षं रोचयन्ते"।

**प्रतिविम्बित** त्रि० प्रतिविम्ब+तार० इतच्। जातप्रतिविम्बे
दर्पणादौ—प्रतिफलिते प्रतिच्छायापन्ने मुखादौ।

**प्रतिविषा** स्त्री प्रतिषिद्धं विषं यया प्रा०ब०। अतिविषायाम्
(आतइच) अमरः।

**प्रतिविष्णुक** पु० प्रतिकूलो विष्णुर्यस्य प्रतिविष्णुः मुचकु-
न्दस्तत्तन्नाम्ना कायति शब्दायते कै—शब्दे क। मुच-
कुन्दवृक्षे राजनि०।

**प्रतिवेश** पु० प्रत्यासन्नो वेशः प्रा०स० । प्रत्यासन्ने प्रतिवासिगृहे शब्दरत्ना० । प्रति+विश–आधारे घञ् वा दीर्घः । तत्रार्थे ।

**प्रतिवेशिन्** त्रि० प्रत्यासन्नं विशति प्रति+विश–णिनि । प्रत्यासन्नगृहवासिनि स्त्रियां ङीप् "दृष्टिं हि प्रतिवेशिनि ! क्षणमिहाप्यस्मद्गृहे दास्यसि" सा०द० ।

**प्रतिव्यूह** पु०प्रतिरूपः व्यूहः प्रा०स० । बलविन्यासस्य प्रतिरूपे व्यूहे भा०भी० ५०अ० ।

**प्रतिशब्द** पु० प्रतिरूपः शब्दः प्रा०स० । प्रतिध्वनौ शब्दानुरूपे शब्दजन्ये शब्दभेदे । प्रतिबिम्बवादशब्दे दृश्यम् ।

**प्रतिशयन** न० प्रति+शी–भावे ल्युट् । प्रतिस्वापे अभीष्टलाभाय प्रत्यादेशाशया देवोद्देशेन स्नानभोजनादिवर्जनपूर्वकस्वापे (हत्यादेयोया) दयकु० ५ उ० ।

**प्रतिशयित** त्रि०प्रति+शी+क्त । प्रतिशयनकारिणि

**प्रतिशासन** न० प्रति+शास–भावे ल्युट् । भृत्यादेर्निकृष्टस्य नियोगे अमरः । [ख्याते च त्रिका० ।

**प्रतिशिष्ट** त्रि० प्रति+शास–कर्मणि क्त । १प्रेषिते २प्रत्या-

**प्रतिश्या** स्त्री प्रति+श्यै–बा० करणे अङ् । प्रतिश्याये पीनसे रोगभेदे शब्दच० ।

**प्रतिश्याय** पु० प्रति+श्यै–करणे घञ् । पीनसे रोगभेदे तल्लक्षणादि सुश्रुतोक्तं यथा

"अथातः प्रतिश्यायप्रतिषेधं व्याख्यास्यामः । नारीप्रसङ्गः शिरसोऽभितापो धूमो रजः शीतमतिप्रतापः । सन्धारणं मूत्रपुरीषयोश्च सद्यः प्रतिश्यायनिदानमुक्तम् । चयङ्गता मूर्द्धनि मारुतादयः पृथक्समस्ताश्च तथैव शोणितम् । प्रकोप्यमाना विविधैः प्रकोपणैर्नृणां प्रतिश्यायकरा भवन्ति हि । शिरोगुरुत्वं क्षवथोः प्रवर्त्तनं तथाङ्गमर्दः परिहृष्टरोमता । उपद्रवाश्चाप्यपरे पृथग्विधा नृणां प्रतिश्यायपुरःसराः स्मृताः । आनद्धा पिहिता नासा तनुस्रावप्रवर्त्तिनी । गलताल्वोष्ठशोषश्च निस्तोदः शङ्खयोस्तथा । स्वरोपघातश्च भवेत्प्रतिश्यायेऽनिलात्मके । उष्णः सपीतकः स्रावो घ्राणात् स्रवति पैत्तिके । कृशोऽतिपाण्डुः सन्तप्तो भवेत्तृष्णाभिपीड़ितः । सधूमं सहसा वह्निं वमतीव च मानवः । कफः कफकृते घ्राणाच्छुक्लः शीतः स्रवेन्मुहुः । शुक्लावभासः शूनाक्षो भवेद्गुरुशिरोमुखः । शिरोगलौष्ठतालूनां कण्डूयनमतीव च । भूत्वा भूत्वा प्रतिश्यायो योऽकस्माद्विनिवर्त्तते । सम्पक्वो वाप्यपक्वो वा स सर्वप्रभवः स्मृतः । लिङ्गानि चैव सर्वेषां पीनसानां च सर्वजे । रक्तजे तु प्रतिश्याये रक्तास्रावः प्रवर्त्तते । ताम्राक्षश्च भवेज्जन्तुरुरोघातप्रपीड़ितः । दुर्गन्धोच्छ्वासवदनस्तथा गन्धान्न वेत्ति च । मूर्च्छन्ति चात्र क्रिमयः श्वेताः स्निग्धास्तथाऽणवः । क्रिमिमूर्द्धविकारेण समानं चास्य लक्षणम् । प्रक्लिद्यति पुनर्नासा पुनश्च परिशुष्यति । मुहुरानह्यते चापि मुहुर्विव्रियते तथा । निश्वासोच्छ्वासदौर्गन्ध्यं तथा गन्धांश्च वेत्ति न । एवं दुष्टं प्रतिश्यायं जानीयात्कृच्छ्रसाधनम् । सर्व एव प्रतिश्याया नरस्याप्रतिकारिणः । कालेन रोगजनना जायन्ते दुष्टपीनसाः । बाधिर्य्यमान्ध्यमघ्राणं घोरांश्च नयनामयान् । कासाग्निसादशोफांश्च वृद्धाः कुर्वन्ति पीनसाः" ।

**प्रतिश्रय** पु०प्रतिश्रीयते प्रति+श्रि–आधारे अच् । १यज्ञगृहे जटा० २सभायां ३आश्रये च मेदि० ४गृहे हेमच० ।

**प्रतिश्रव** पु० प्रति+श्रु–भावे अप् । स्वीकारे अमरः ।

**प्रतिश्रवण** न०प्रति+श्रु–भावे ल्युट् । १अङ्गीकारे । प्रतिगतः श्रवणं कर्णम् अत्या०स० । २श्रवणानुगते त्रि० अस्य तत्पुरुषे अम्बा० अन्तोदात्तता प्रतिगतं श्रवणं येन प्रा०ब० । तु न । [नृपभेदे भा०आ० ८५अ० ।

**प्रतिश्रवस्** पु०१गोत्रप्रवरर्षिभेदे । २परिक्षितृपुत्रभीमसेनात्मजे

**प्रतिश्रुत्** स्त्री प्रतिरूपं श्रूयते श्रु–सम्प० बा०कर्मणि क्विप् । प्रतिशब्दे प्रतिध्वनौ अमरः ।

**प्रतिश्रुत्का** स्त्री देवताभेदे यजु०२४।२२। १।१८ [नौ च ।

**प्रतिश्रुति** स्त्री प्रति+श्रु–भावे क्तिन् । १अङ्गीकारे २प्रतिध्व-

**प्रतिषिद्ध** त्रि० प्रति+सिध–कर्मणि क्त । निषिद्धे

**प्रतिषेध** पु०प्रति+सिध–भावे घञ् । १निषेधे 'मा कुरु इत्यादिना निवारणे'प्राधान्यं हि विधेर्यत्र प्रतिषेधेऽप्रधानता" मीमांसकका० । २अर्थालङ्कारभेदे अर्थालङ्कारशब्दे ४०० दृश्यम् । ३दूषणाभिधाने च । ल्युट् । प्रतिषेधन तत्रैव न० ।

**प्रतिषेधोपमा** स्त्री "न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्जितुम् । कलङ्किनो जड़स्येति प्रतिषेधोपमैव सा । काव्याद०। उक्ते अर्थालङ्कारभेदे सादृश्यप्रतिषेधेन अधिकवैचित्र्य प्रकटनात् तथात्वमस्याः ।

**प्रतिष्क** पु०प्रति+स्कन्द–बा०ड षत्वम् । दूते शब्दर० [जटा० ।

**प्रतिष्कष** पु० प्रति+कष–अच् बा०सुट् षत्वम् । चर्मरज्ज्वां

**प्रतिष्कस** पु०प्रति+कस–अच् बा० सुट् षत्वम् । चरे शब्दर०

**प्रतिष्टम्भ** पु०प्रति+स्तन्भ-भावे घञ् षत्वम् । १प्रतिबन्धे अमरः २क्रियाराहित्यापादने 'बाहुप्रतिष्टम्भविवृद्धमन्युः" रघुः

**प्रतिष्टुति** स्त्री प्रति+स्तु–क्तिन् । प्रतिरूपायां स्तुतौ ऋ० ८।१२।२

**प्रतिष्ठ** त्रि॰प्रतिष्ठा अस्त्यस्य अच् प्रति+स्था–क वा । १ख्या-तियुक्ते २जैनभेदे पु॰ हेमच॰ ३कुमारानुचरमातृभेदे स्त्री भा॰श॰४७अ॰। ४चतुरक्षरपादके वर्णवृत्तभेदे स्त्री वृ॰र॰।

**प्रतिष्ठा** स्त्री प्रति+स्था-भावाधारादौ अङ् । १स्थितौ २स्थाने ३गौरवे ४यागादिसमाप्तौ कर्त्तव्ये कर्मभेदे मेदि॰। देवादीनां पूज्यतादिप्रयोजके ५संस्कारभेदे देवताप्रतिष्ठाशब्दे तद्वि वरणं दृश्यम् । ६स्थैर्ये ७तुल्ये स्त्री निघण्टुः पात॰ सू॰ स्थैर्यभेदे फलभेद उक्तो यथा

"अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः" सू॰। "सर्वप्राणिनां भवति" भा॰"सत्यप्रतिष्ठायां क्रियाफला-श्रयत्वम्" सू॰"धार्मिकोभव इति भवति धार्मिकः, स्वर्गं प्राप्नुहीति स्वर्गं प्राप्नोति अमोघास्य वाग्भवति" भा॰ "अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्" सू॰ "सर्वदिक्-स्थान्यस्योपतिष्ठन्ते रत्नानि" भा॰ "ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः" सू॰ "यस्य लाभादप्रतिघान् गुणानुत्कर्ष-यति सिद्धश्च विनेयेषु ज्ञानमाधातुं समर्थो भवति इति" भा॰। ८आश्रये "ब्रह्म पुच्छं प्रतिष्ठा" श्रुतिः ।

**प्रतिष्ठान** न॰ प्रति+स्था–भावे ल्युट् । १व्रतादेः समाप्तौ कर्त्तव्ये कर्मभेदे देवादीनां पूज्यताप्रयोजके २संस्कारभेदे ३विख्यातौ च। आधारे ल्युट्। (पिठोर) ख्याते ४नगरभेदे "गङ्गायमुनयोर्मध्ये प्रयागं जघनं स्मृतम्। प्रयागं जघनस्थानमुपस्थमृषयो विदुः। प्रयागं सप्रति-ष्ठानं कम्बलाश्वतरौ तथा। तीर्थं भोगवती चैव वेदि-रेषा प्रजापतेः" भा॰व॰ ८५अ॰। "प्रतिष्ठाने नरपति-र्ययातिः प्रत्युपस्थितः" भा॰उ॰११२॰अ॰।

"एवंप्रभावो राजासीदैलस्तु पुरुषोत्तम!। देशे पुण्य-तमे चैव महर्षिभिरभिष्टुते। राज्यं स कारयामास प्रयागे पृथिवीपतिः। उत्तरे जाह्नवीतीरे प्रतिष्ठाने महायशाः" हरिवं॰२६अ॰। ५स्थाने च

**प्रतिष्ठित** त्रि॰ प्रतिष्ठा जाताऽस्य तारका॰ इतच्। १जात-प्रतिष्ठे देवादौ २विख्यातियुक्ते च। ३विष्णौ पु॰ "अप्र मत्तः प्रतिष्ठितः" विष्णुस॰।

**प्रतिष्ठिका** स्त्री प्रति+स्था–क स्वार्थे क कापि अत इत्त्वम् सुपामा॰ षत्वम्। प्रतिष्ठानकर्त्र्यां स्त्रियाम्।

**प्रतिसङ्क्रम** पु॰ प्रतिरूपः संक्रमः प्रा॰स॰। १प्रतिच्छायायाम् प्रा॰व॰। २प्रतिसंक्रान्ते प्रतिच्छायापन्ने त्रि॰। ३सञ्चारे च "चितिशक्तिरपरिणामिन्यप्रतिसंक्रमा दर्शितविषया शुद्धाऽनन्ता चेति" पात॰भा॰। "प्रतिसंक्रमः सञ्चारः" विवरणम्।

**प्रतिसंख्या** स्त्री प्रति+सम्+ख्या–भावे अङ्। १प्रसंख्याने २सांख्यादिसिद्धे ज्ञानभेदे च तस्य पञ्चविंशतिसंख्यान्वितत-त्त्वनिरूपणात् तदीयज्ञानस्य संख्यानियतत्वेन तथात्वम्।

**प्रतिसंख्यानिरोध** पु॰ प्रतिसङ्ख्यापूर्वकोनिरोधः शा॰त॰। बुद्धिपूर्वके भावानां नाशे बौद्धमतसिद्धे पदार्थभेदे अप्रति-संख्यानिरोधशब्दे ९६१पृ॰ दृश्यम्।

**प्रतिसञ्चर** पु॰ प्रतिसञ्चरन्ति क्रियाशून्यतया विलीयन्तेऽस्मिन् प्रति+सम्+चर-आधारे अप्। १प्रलयभेदे "यदा तु प्र-कृतौ याति लयं विश्वमिदं जगत्। तदोच्यते प्राकृतोऽयं विद्वद्भिः प्रतिसञ्चरः" मार्क॰पु॰ ६अ॰। २सञ्चारमात्रे च।

**प्रतिसन्देश** पु॰ प्रतिरूपः सन्देशः प्रा॰स॰। सन्देशानुरूपे प्रत्युत्तररूपतया वाचिकवृत्तान्तभेदे।

**प्रतिसन्धान** न॰ प्रति+सम्+धा–भावे ल्युट्। १अनुसन्धाने अनुचिन्तने ज्ञानभेदे नष्टस्य द्रव्यस्योपलब्धिहेतुव्यापारे २अन्वेषणे च।

**प्रतिसन्धि** प्र॰ प्रतीपः सन्धिः प्रा॰स॰। १वियोगे २उपरमे "अदृष्टतोऽनुपायाच्च प्रतिसन्धिश्च कर्मणः" भा॰शा॰२॰६ अ॰ टी॰ नील॰ प्रति+सम्+धा–कि। ३प्रतिसन्धाने च वीप्सायाम् अव्ययी॰। ४सन्धौ सन्धौ इत्यर्थे।

**प्रतिसन्धेय** त्रि॰ प्रति+सम्–धा-कर्मणि यत्। प्रतीकार्य्ये भा॰उ॰ ९५अ॰।

**प्रतिसम** त्रि॰ प्रतिकूलः समः। विपक्षे

**प्रतिसमन्त** त्रि॰ प्रतिगतं समन्तात् येन प्रा॰ब॰ पृषो॰। प्रा॰ प्रसमन्ताद्भावे शत॰ब्रा॰ ३।७।१।१२ भा॰।

**प्रतिसमासन** न॰ प्रति+सम्+आ+अस-क्षेपे भावे ल्युट्। निरसने निवारणे भा॰व॰ १९२१ श्लो॰।

**प्रतिसर** पु॰ प्रति+सृ-अच्। १सैन्यपश्चाद्भागे २हस्तसूत्रे च त्रिका॰। ३मन्त्रभेदे ४माल्ये ५व्रणशुद्धौ च मेदि॰। ६भूषणे ७रक्षाबन्धनसूत्रे पु॰ न॰ अमरः। ८नियोज्ये त्रि॰ मेदि॰ स्त्रीत्वमपि। "प्रतिसरया तुरगाणां भल्ला-तकशालिकुष्ठसिद्धार्थं कण्ठेषु निबध्नीयात्" वृ॰सं॰४२अ॰।

**प्रतिसर्ग** पु॰प्रतिरूपः प्रतिकूलो वा सर्गः। १ब्रह्मणः सृष्टि-तुल्यायां मरीच्यादिसृष्टौ २प्रलये च "आदिसर्गस्तु यः सूत! कथितो विस्तरेण च। प्रतिसर्गश्च ये येषामधिपा-स्तान् वदस्व नः" इति प्रश्ने प्रतिसर्ग उक्तः कालिकापु॰।

"प्रतिसर्गे तु मृत्पिण्डं हेमपिण्डं वा घटकुण्डलमुकुटादयो विशन्तोऽव्यक्तीभवन्ति तत्कारणरूपमेवाभिव्यक्तं कार्य्यमपेक्ष्याव्यक्तम् भवति। एवं पृथिव्यादयस्तन्मात्राणि विशन्त स्वापेक्षया तन्मात्राण्यव्यक्तयन्ति एवं तन्मात्राण्यहङ्कारं विशन्ति अहङ्कारमव्यक्तयन्ति एवमहङ्कारो महान्तमाविशन्महान्तमव्यक्तयति महान् प्रकृतिं स्वकारणं विशन् प्रकृतिमव्यक्तयति प्रकृतेस्तु न क्वचिद्विवेश इति सा सर्वकार्य्याणामव्यक्तमेव" सा॰त॰कौ॰

**प्रतिसर्य्य** पु॰ प्रतिसरे भवः यत्। रुद्रभेदे यजु॰१६।२२

**प्रतिसव्य** न॰ प्रतिगतं सव्यं वामं येन प्रा॰स॰। १प्रतिकूले २विरुद्धाचारिणि जटा॰।

**प्रतिसान्त्वानिक** पु॰ सान्त्वानं प्रयोजनमस्य ठक् प्रतिरूपः सान्त्वानिकः प्रा॰स॰। मागधे स्तुतिपाठके शब्दरत्ना॰।

**प्रतिसाम** वीप्सायाम् अव्ययी॰ अच् समा॰। प्रत्येकसामनि

**प्रतिसारण** त्रि॰ प्रतिसारयति प्रति+सृ-णिच् ल्यु। १अपसारके २दूरीकारके। भावे ल्युट्। २दूरीकरणे। करणे ल्युट्। सुश्रुतोक्ते ३अग्निकार्य्यभेदे। बलयविन्दुविलेखा प्रतिसारणानीति दहनविशेषाः। व्रणचिकित्साङ्गे ४उपक्रमभेदे "मासादूर्द्ध्वं ततस्तेन व्रणमालेपयेद्व्रणम्। कुक्कुटाण्डकपालानि कतकं मधुकं समम्। तथा समुद्रमण्डूकीं मणिचूर्णञ्च दापयेत्। गुटिकामूलपिष्टाश्च व्रणानां प्रतिसारणम्" सुश्रुतः। प्रतिसारणं व्रणस्य स्वस्थानात् स्थानान्तरनयनम् इत्यर्थः "दन्तजिह्वामुखानां यत्तु यैकल्कावलेहकैः। शनैर्घर्षणमङ्गुल्या तदुक्तं प्रतिसारणम्। वैरस्यं मुखदौर्गन्ध्यं मुखशोषं तथा तृषाम्। अरुचिं दन्तपीडाञ्च निहन्ति प्रतिसारणम्। हीने जाड्यकफोत्क्लेशावरसंज्ञानमेव च। अतियोगात् मुखे पाकः शोषस्तृष्णा वमिः क्लमः" भावप्र॰ उक्ते ४दन्तघर्षणभेदे।

**प्रतिसारणीय** त्रि॰ प्रति+सृ-णिच्-कर्मणि अनीयर्। स्थानान्तरनयनीये सुश्रुतोक्ते क्षारपाकविधिभेदे "स द्विविधः प्रतिसारणीयः पानीयश्च। तत्र प्रतिसारणीयः कुष्ठकिटिभदद्रुकिलासमण्डलभगन्दरार्बुददुष्टव्रणनाडीचर्मकीलतिलकालकन्यच्छव्यङ्गमशकबाह्यविद्रधिकृमिविषार्शःसूपदिश्यते"।

**प्रतिसारिन्** त्रि॰ प्रतीपं सरति सृ-णिच्-णिनि। १प्रतीपगामिनि २नीचगामिनि स्त्रियां ङीप्। भा॰व॰ ९१अ॰।

**प्रतिसीरा** स्त्री प्रतिसिनोति सीयते वा प्रति+सि-रक् दीर्घश्च। जवनिकायाम् (परदा) अमरकोषः।

**प्रतिसूर्य्य** पुंस्त्री॰ प्रतिरूपः सूर्य्यः प्रा॰स॰। १कृकलासे त्रिका॰। २द्वितीयसूर्य्यप्रादुर्भावरूपे आन्तरीक्षोत्पातभेदे च। स्वार्थे क। तत्रार्थे तच्छुभाशुभलक्षणं वृ॰सं॰३७अ॰ यथा "प्रतिसूर्य्यकः प्रशस्तो दिवसकृदृतुवर्णसप्रभः स्निग्धः। वैदूर्य्यनिभः स्वच्छः शुक्लश्च क्षेमसौभिक्षः। पीतो व्याधिं जनयत्यशोकरूपश्च शस्त्रकोपाय। प्रतिसूर्य्याणां माला दस्युभयातङ्कनृपहन्त्री। दिवसकृतः प्रतिसूर्य्यो जलकृदुदग्दक्षिणे स्थितोऽनिलकृत्। उभयस्थः सलिलभयं नृपमुपरि निहन्त्यधो जनहा"।

**प्रतिसृष्ट** त्रि॰ प्रति+सृज-कर्मणि क्त। १प्रेरिते २प्रत्याख्याते च मेदि॰। ३मत्ते धर्षिणः। [हिमवद्ग्राम् राजनि॰।

**प्रतिसोमा** स्त्री प्रतिरूपा सोमः सोमवल्ली यस्याः प्रा॰ब॰। म-

**प्रतिस्कन्ध** पु॰ १कुमारानुचरभेदे भा॰श॰ ४६अ॰। २नियमसन्ध्यङ्गभेदे पु॰ "परिक्लिष्टं फलं यत्र प्रतिस्कन्धेन दीयते। स्कन्धोपनेयं तं प्राहुः सन्धिं सन्धिविदो जनाः" कामन्द॰।

**प्रतिस्त्री** स्त्री प्रतिरूपा स्त्री प्रा॰स॰। १परनार्य्याम् आभिमुख्ये अव्य॰। २स्त्रिया आभिमुख्ये अव्य॰। "उपमन्त्रयते स हिङ्कारोत्प्रपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रतिस्त्रि सह शेते स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतत् वामदेव्यं मिथुने प्रोतम्" छा॰उ॰। "प्रतिस्त्रिशयनम् स्त्रियोऽभिमुखमेव शयनम्। सहशयनमेकपर्य्यङ्के शयनम्" भा॰।

**प्रतिस्पर्द्धा** स्त्री प्रति+स्पर्द्ध-भावे अङ्। प्रतिरूपसङ्घर्षायां प्रतिकक्षायाम् शब्दरत्ना॰।

**प्रतिस्वश** पु॰ प्रतिरूपः श्वशः। प्रतिद्वते

**प्रतिस्रोतस्** न॰ प्रतीपं स्रोतः प्रा॰स॰। स्रोतसोगमनप्रतिकूले

**प्रतिस्वर** पु॰ प्रति+स्वृ-शब्दोपतापयोः भावे आधारे वा अप्। १प्रतिशब्दे २उपतापाधारे आदित्यात् अग्निस्थाद नवाधने शुष्कगोमयादौ च। तत्प्रकारः निरुक्ते उक्तः यथा "उदीचि प्रथमसमावृत्त आदित्ये कंसं वा मणिं वा परिमृज्य प्रतिस्वरे यत्र शुष्कगोमयं संस्पर्शयन्धारयति तत्प्रदीप्यते सोऽयमेव संपद्यते"। प्रतिस्वरे उपतापाधारे सूर्य्यकिरणसम्पर्कस्थाने इत्यर्थः।

**प्रतिहत** त्रि॰ प्रति+हन-क्त। १द्विष्टे २रुद्धे ३निरस्ते ४प्रतिस्खलिते च मेदि॰। भावे क्त। ५निराशे न॰अमरः।

**प्रतिहति** स्त्री प्रति+हन-भावे क्तिन्। १प्रतिघाते आहत्य-

परावृत्तौ २रोषे च। तस्य कामप्रतिहत्या जायमानत्वात् तथात्वम्।

**प्रतिहर्त्तृ** त्रि० प्रति+हृ—तृच्। १पुनराहरणकर्त्तरि २ऋत्विग्भेदे पु० अच्छावाकशब्दे ८१पृ० दृश्यम्। स च प्रतिहारसामभेदगाता प्रतिहारशब्दे दृश्यम्।

**प्रतिहर्षण** न०प्रतिरूपं हर्षणम् प्रा०स०। १हर्षानुरूपे हर्षे णिच्–ल्युट्। २प्रतिरूपसन्तोषसम्पादने च।

**प्रतिहस्तक** पु० प्रतिरूपः हस्तो यस्य प्रा०ब० कप्। हस्तसाध्यक्रियाप्रतिरूपक्रियाकारिणि प्रतिनिधौ हेमच०।

**प्रति(ती)हार** पु० प्रत्येकं हरति स्वामिपार्श्वमानयति अण् वा दीर्घः। १द्वारपाले अमरः। स्त्रियां ङीप् गौरा०ङीष् वा। आधारे घञ्। तदधिष्ठानस्थाने २द्वारे च शब्दर०। प्रतिरूपं हरति हृ—अण् उपस०। ३मायाकारे भरतः। सामस्तृतीयभागे उद्गात्रा गेये ४सामावयवभेदे उद्गीथशब्दे ११७०पृ०दृश्यम्। तस्य देवता च अन्नं यथोक्तं छा०उ० "अथ हैनं प्रतिहर्त्तोपससाद प्रतिहर्त्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्द्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेति। अन्नमिति होवाच सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रत्यहरिष्यो मूर्द्धा ते व्यपतिष्यत्तथोक्तस्य मयेति"।

**प्रतिहारक** पु०प्रति+हृ–ण्वुल्। १मायाकारे भरतः २स्थानान्तरप्रापके त्रि० ३प्रतिहाररूपसामावयवगातरि पु०।

**प्रति(ती)हास** पु०प्रतिरूपः हासः प्रा०स० वा दीर्घः। १येन हासः कृतः तं प्रति हासे प्रा०ब०। २तत्कारके त्रि०। ३करवीरवृक्षे पु० अमरः।

**प्रतिहृर** पु० प्रति+हृ–आधारे अप्। समीपे ऋ०७।६६।१४

**प्रतीक** पु०प्रति+कन् नि० दीर्घः। १अवयवे अमरः। २प्रतिरूपे ३विलोमे च मेदि० प्रतीकोपासनं च ब्रह्मप्रतीकानामादित्यादीनां ब्रह्मदृष्ट्युपासनं तच्च शा० सू० भा० दर्शितं यथा

"न प्रतीके न हि सः" सू० "मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्म" (छा० ३।१८) इति, तथा "आदित्यो ब्रह्मेत्यादेशः,(छा०।३ १९) स यो नाम ब्रह्मेत्युपास्ते" (छा०।७।५) इत्येवमादिषु प्रतीकोपासनेषु संशयः, किमेष्वात्मग्रहः कर्त्तव्यो न वेति। किं तावत् प्राप्तमेतेष्वात्मग्रह एव युक्तः, कस्मात्, ब्रह्मणः श्रुतिष्वात्मत्वेन प्रसिद्धत्वात्। प्रतीकानामपि ब्रह्मविकारत्वात् ब्रह्मत्वे सत्यात्मत्वोपपत्तेरित्येवं प्राप्ते ब्रूमः। न प्रतीकेष्वात्ममतिं बध्नीयात्, न हि स उपासकः प्रतीकानि व्यस्तान्यात्मत्वेनाकलयेत्। यत्पुनर्ब्रह्मविकारत्वात् प्रतीकानां ब्रह्मत्व ततश्चात्मत्वमिति। तदसत् प्रतीकाभावप्रसङ्गात्। विकारस्वरूपोपमर्देन हि नामादिजातस्य ब्रह्मत्वमेवाश्रितं भवति, स्वरूपोपमर्दे च नामादीनां कुतः प्रतीकत्वमात्मग्रहो वा। न च ब्रह्मण आत्मत्वात् ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिः कल्प्या, कर्तृत्वाद्यनिराकरणात्, कर्तृत्वादिसर्वसंसारधर्मनिराकरणेन हि ब्रह्मण आत्मत्वोपदेशस्तदनिराकरणेन चोपासनविधानम्, अतश्चोपासकस्य प्रतीकैः समत्वादात्मग्रहो नोपपद्यते, न हि रुचकस्वस्तिकयोरितरेतरात्मत्वमस्ति, सुवर्णात्मनैव तु ब्रह्मात्मत्वे नैकत्वे प्रतीकाभावप्रसङ्गमवोचाम। अतो न प्रतीकेष्वात्मदृष्टिः क्रियते" भा० "ब्रह्मदृष्टिरुत्कर्षात्" सू० "तेष्वेवोदाहरणेषु अन्यः संशयः, किमादित्यादिदृष्टयो ब्रह्मण्यध्यसितव्याः किं वा ब्रह्मदृष्टिरादित्यादिष्विति। कुतः संशयः, सामानाधिकरण्ये कारणानवधारणात्। अत्र हि ब्रह्मशब्दस्यादित्यादिशब्दैः सामानाधिकरण्यमुपलभ्यते, "आदित्यो ब्रह्म प्राणो ब्रह्म विद्युद्ब्रह्म" इत्यादिसमानविभक्तिनिर्देशात्। न चात्राञ्जसं सामानाधिकरण्यमवकल्पते अर्थान्तरवचनत्वात् ब्रह्मादित्यादिशब्दानां, न हि भवति गौरश्व इति सामानाधिकरण्यम्। ननु प्रकृतिविकारभावात् ब्रह्मादित्यादीनां मृच्छरावादिवत् सामानाधिकरण्यं स्यात्, नेत्युच्यते, विकारप्रविलयो ह्येवं प्रकृतिसामानाधिकरण्यात् स्यात्, ततश्च प्रतीकाभावप्रसङ्गमवोचाम, परमात्मवाक्यञ्चेदिदानीं स्यात्, ततश्चोपासनाधिकारो बाध्येत, परिमितविकारोपासनञ्च व्यर्थम्। तस्मात् ब्राह्मणोऽग्निर्वैश्वानर इत्यादिवदन्यतरत्रान्यतरदृष्ट्यध्यासे सति क्व किंदृष्टिरध्यस्यतामिति संशयः तत्रानियमः, नियमकारिणः शास्त्रस्याभावादित्येवं प्राप्तम्। अथ वाऽऽदित्यादिदृष्टय एव ब्रह्मणि कर्त्तव्या इत्येवं प्राप्तम्। एवं हि आदित्यादिदृष्टिभिर्ब्रह्मोपासनञ्च फलवदिति शास्त्रमर्यादा। तस्मात् न ब्रह्मदृष्टिरादित्यादिष्वित्येवं प्राप्ते ब्रूमः। ब्रह्मदृष्टिरेवादित्यादिषु स्यादिति। कस्मात् उत्कर्षात्, एवमुत्कर्षेणादित्यादयो दृष्टा भवन्त्युत्कृष्टदृष्टेस्तेष्वध्यासात्। तथा च

लौकिको न्यायोऽनुगतो भवति, उत्कृष्टदृष्टिर्हि निकृष्टेऽध्यसितव्येति लौकिको न्यायः। यथा राजदृष्टिः क्षत्तरि, स चानुगन्तव्यो विपर्यये प्रत्यवायप्रसङ्गात्। न हि क्षत्तृदृष्टिपरिगृहीतो राजा निकर्षं नीयमानः श्रेयसे स्यात्। ननु शास्त्रप्रामाण्यादनाशङ्कनीयोऽत्र प्रत्यवायप्रसङ्गः, न च लौकिकेन न्यायेन शास्त्रीया दृष्टिर्नियन्तुं युक्तेति। अत्रोच्यते, निर्द्धारिते शास्त्रार्थे एतदेवं स्यात्, सन्दिग्धे तु तस्मिन् तन्निर्णयं प्रति लौकिकोऽपि न्याय आश्रीयमाणो न विरुध्यते, तेन चोत्कृष्टदृष्ट्यध्यासे शास्त्रार्थेऽवधार्य्यमाणे निकृष्टदृष्टिमध्यस्य प्रत्यवेयादिति श्लिष्यते। प्राथम्याच्चादित्यादिशब्दानां मुख्यार्थत्वमविरोधात् ग्रहीतव्यम्। तैः स्वार्थवृत्तिभिरवरुद्धायां बुद्धौ पश्चादवतरतो ब्रह्मशब्दस्य मुख्यवृत्त्या सामानाधिकरण्यासम्भवात् ब्रह्मदृष्टिविधानार्थतैवावतिष्ठते। इतिपरत्वादपि ब्रह्मशब्दस्यैष एवार्थो न्याय्यः। तथा हि ब्रह्मेत्यादेशः ब्रह्मेत्युपासीत ब्रह्मेत्युपास्ते इति च सर्वत्रेतिपरं ब्रह्मशब्दमुच्चारयति शुद्धांस्त्वादित्यादिशब्दान्। ततश्च यथा शुक्तिकां रजतमिति प्रत्येतीत्यत्र शुक्तिवचन एव शुक्तिकाशब्दः रजतशब्दस्तु रजतप्रतीतिलक्षणार्थः प्रतीत्यैव हि केवलं रजतमिति न तु तत्र रजतमस्ति, एवमत्राप्यादित्यादीन् ब्रह्मेति प्रतीयादिति गम्यते। वाक्यशेषोऽपि च द्वितीयानिर्द्देशेनादित्यादीनेवोपास्तिक्रियया व्याप्यमानान् दर्शयति "स य एतदेवं विद्वानादित्यं ब्रह्मेत्युपास्ते" (छा॰३।१९) "यो वाचं ब्रह्मेत्युपास्ते"(छा॰७।५।१) "यः सङ्कल्पं ब्रह्मेत्युपास्ते" (छा॰७।५।२) इति। यत्तूक्तं ब्रह्मोपासनमेवात्रादरणीयं फलवत्त्वायेति, तदयुक्तं उक्तेन न्यायेनादित्यादीनामेवोपास्यत्वावगमात्। फलन्त्वतिथ्याद्युपासन इवादित्याद्युपासनेऽपि ब्रह्मैव दास्यति सर्वाध्यक्षत्वात्। वर्णितञ्चैतत्, "फलम् अत उपपत्तेः" इत्यत्र (वे॰सू॰।३।२।३८)। ईदृशञ्चात्र ब्रह्मण उपास्यत्वं यत्प्रतीकेषु तद्दृष्ट्यध्यारोपणं प्रतिमादिष्विव विष्णादीनाम्"।

तत्फलविशेषोऽपि तत्र निर्णीतो यथा

"अप्रतीकालम्बनान्नयतीति वादरायण उभयथाऽदोषात् तत्क्रतुश्च" सू॰ "स्थितमेतत् कार्यविषया गतिर्न परविषयेति। इदमिदानीं सन्दिह्यते, किं सर्वान् विकारालम्बनानविशेषेणैवामानवः पुरुषः प्रापयति ब्रह्मलोकमुत कांश्चिदेवेति। किं तावत् प्राप्तं सर्वेषामेवैषां विदुषामन्यत्र परस्मात् ब्रह्मणो गतिः स्यात्। तथा हि "अनियमः सर्वासाम्" इत्यत्राविशेषेणैषा विद्यान्तरेष्ववतारितेत्येवं प्राप्ते प्रत्याह अप्रतीकालम्बनानिति। प्रतीकालम्बनान् वर्जयित्वा सर्वानन्यान् विकारालम्बनान्नयति ब्रह्मलोकमिति वादरायण आचार्यो मन्यते। न ह्येवमुभयथाभावाभ्युपगमे कश्चित् दोषोऽस्ति। अनियमन्यायस्य प्रतीकव्यतिरिक्तेष्वप्युपासनेषूपपत्तेः। तत्क्रतुश्चास्योभयथाभावस्य समर्थको हेतुर्द्रष्टव्यः। यो हि ब्रह्मक्रतुः स ब्राह्ममैश्वर्य्यमासीदेदिति श्लिष्यते "तं यथा यथोपासते तदेव भवन्ति" इति श्रुतिः। न तु प्रतीकेषु ब्रह्मक्रतुत्वमस्ति प्रतीकप्रधानत्वादुपासनस्य। नन्वब्रह्मक्रतुमानपि ब्रह्म गच्छतीति श्रूयते यथा पञ्चाग्निविद्यायाम् "स एतान् ब्रह्म गमयति" इति। भवतु यत्रैवमपवाद उपलभ्यते, तदभावे त्वौत्सर्गिकेन तत्क्रतुन्यायेन ब्रह्मक्रतूनामेव तत्प्राप्तिर्नेतरेषामिति मन्यते" भा॰ "विशेषञ्च दर्शयति" सू॰ "नामादिषु प्रतीकोपासनेषु पूर्वस्मात् पूर्वस्मात् फलविशेषमुत्तरस्मिन्नुत्तरस्मिन्नुपासने दर्शयति "यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवति" "वाग्वाव नाम्नो भूयसी यावद्वाचो गतं तत्रास्य यथा कामचारो भवति" "मनो वाव वाचो भूयः" इत्यादिना। स चायं फलविशेषः प्रतीकतन्त्रत्वादुपासनानामुपपद्यते, ब्रह्मतन्त्रे तु ब्रह्मणोऽविशिष्टत्वात् कथं फलविशेषः स्यात्। तस्मात् प्रतीकालम्बनानामितरैस्तुल्यफलत्वमिति" भा॰। वत्सन्धपस्य ४पुत्रभेदे भाग॰ ९।२।१२

**प्रती(ति)कार** पु॰ प्रति+कृ घञ् दीर्घः। १कृतापकारस्य प्रत्यपकारे वैरनिर्यातने अमरः २रोगनिवारणोपाये चिकित्सायाम् शब्दमा॰। [अमरः। अस्य नित्यसमासः। मेघप्रतीकाशः।

**प्रती(ति)काश** पु॰ प्रति+काश-घञ् वा दीर्घः। उपमायाम्

**प्रतीकाश्व** पु॰ भानुमत्पुत्रस्य पुत्रभेदे भाग॰ ९।१२।६

**प्रतीक्षा** स्त्री प्रति+ईक्ष-भावे अङ्। अपेक्षायाम्। भावे ल्युट्। प्रतीक्षण तत्रार्थे न॰।

**प्रतीक्ष्य** त्रि॰ प्रति+ईक्ष-कर्मणि ण्यत्। १पूज्ये २अपेक्षणीये च "प्रतीक्ष्यं तत् प्रतीक्ष्यायै पितृभ्यः प्रतिश्रुतम्" इति माघः।

**प्रती(ति)घात** पु॰ प्रति+हन-भावे घञ् वा दीर्घः। प्रतिघाते

**प्रतीची** स्त्री प्रत्यच्+स्त्रियां ङीप् अल्लोपे दीर्घः। पश्चिमायां दिशि यदपेक्षया सूर्य्यास्ताचलसन्निहिता या दिक् सा तदपेक्षया तस्य प्रतीची कथा॰ उप॰ वृत्तिः।

**प्रतीचीन** त्रि० प्रतीचि भवः प्रत्यच्+ख अल्लोपे दीर्घः । १प्रत्यग्भवे २पश्चिमदिग्भवे च । स्वार्थे ख । ३प्रतीचि पदार्थे हेमच० । शत०ब्रा० ५।२।४।२० प्रतीचीनफलम् ।

**प्रतीच्य** त्रि० प्रतीचि भवः प्रत्यच्–भवार्थे यत् । १प्रत्यग्भवे २पुत्रस्त्रभ्रातरि स्त्री भा०उ०११६अ० । ३अन्तर्हिते त्रि० निघण्टुः । [मनुः ४।१८।४ स्रो० ।

**प्रतीच्छक** त्रि० प्रतिगता इच्छा यस्य प्रा०ब० कप् । ग्राहके

**प्रतीत** त्रि० प्रति+इण–क्त । १ख्याते २ज्ञाते अमरः । ३हृष्टे ४सादरे च राजनि० । ५विश्वदेवगणभेदे पु०भा०अनु०६१अ०

**प्रतीति** स्त्री प्रति–इण–भावे क्तिन् । १ज्ञाने २ख्यातौ ३आदरे ४हर्षे च ।

**प्रतीतोद** पु० "अष्टौ व्याकरणव्याख्यानमध्यापयत् तस्य अवयवान् पदादीन् प्रतीतोदा इत्याचक्षते" इत्युक्तेऽर्थे ।

**प्रतीन्धक** पु० विदेहदेशे राजा० अयो० ७१।८ स्रो० ।

**प्रतीप** त्रि० प्रतिगता आपोऽत्र अच्समा० नि० प्रतिप+इणो० वा । १प्रतिकूले चन्द्रवंश्ये २नृपभेदे पु० हेमच० । प्रतिपशब्दे दृश्यम् । ३अलङ्कारभेदे अलङ्कारशब्दे ३८८पृ० दृश्यम् । क्रान्ते परेऽन्तोदात्ततास्य वा परनिपातः प्रतीक्रतः क्रतप्रतीप इति वा । स्वार्थे क । ४तदर्थे । कृष्यंवन्धपुत्रयदोः पुत्रे भाग० ६।१२।१२ तत्र प्रतिपक इति पाठान्तरम् तदर्थे । ततः सुखा० अस्त्यर्थे इनि । प्रतीपिकन् तद्युते त्रि० स्त्रियां ङीप् । सुखादिपाठात् ततः ठनुमतुपौ न स्तः ।

**प्रतीपदर्शिन्** त्रि०प्रतीपं वामं पश्यति दृश–णिनि । १प्रतिकूलदर्शके स्त्रियां ङीप् । वा च २स्त्रियाम् अमरः ।

**प्रतीपाश्व** पु० राजभेदे विष्णुपु० ।

**प्रतीर** न० प्रतीर्य्यते प्र+तीर–क । १तटे तीरे अमरः । २भौत्यमनुपुत्रभेदे मार्क०पु० १००अ० ।

**प्रतीवाप** पु० प्रति+वप–घञ् दीर्घः । १गलितस्वर्णादेरवचूर्णने अमरः । २भेषजर्षभिभेदे औषधविशेषसंयोगभेदे च "तत्र वीरतर्वादिषिद्धं जलमुषकादि प्रतीवापं पाययेत्" सुश्रुतः । [भाग० ५।१५।२

**प्रतीह** पु० भरतवंश्ये सुवर्चलायां जाते परमेष्ठिनः पुत्रभेदे

**प्रतुद** पु० प्र+तुद–क । खगभेदे "हारीतो धवलः पाण्डुश्चित्रपक्षो दहच्छुकः । पारावतः खञ्जरीटः पिकाद्याः प्रतुदाः स्मृताः" । "प्रतुदा भक्षयन्त्येते तुण्डेन प्रतुद्यातः" "प्रतुदा मधुराः पित्तकफघ्नास्तुवरा हिमाः । लघवो बद्धवर्चस्का किञ्चिद्वातकराः स्मृताः" भावप्र० ।

**प्रतूर्त्त** त्रि०प्र+तूर–वेगे क्त ।१प्रकृष्टवेगान्विते भावे क्त ।२प्रकृष्टवेगे न० । ततो गोषदादि०मत्वर्थे वुन् । प्रतूर्त्तक तद्युते त्रि०

**प्रतूलिका** स्त्री प्रकृष्टं तूलमत्र कप् कापि अतइत्त्वम् (तोषक) शय्याभेदे काशी०७अ० । [नदण्डे (चाबुक) अमरः ।

**प्रतोद** पु० प्रतुद्यतेऽनेन प्र+तुद–करणे घञ् । अश्वादिताड-

**प्रतोली** स्त्री प्र+तुल–अच् गौरा०ङीष् । १रथ्यायाम् २पुरान्तरवर्त्मनि अमरः इट्टादौ निर्मिते ३पथि च भरतः ।

**प्रतोष** पु०प्र+तुष–भावे घञ् । १सन्तोषे प्रकृष्टसन्तोषोऽस्य प्रा०ब० । २सन्तोषयुते त्रि० । ३स्वायम्भुवमनोः पुत्रभेदे पु० भाग० ४।१।७ स्रो० । [पुराणनामसु निघण्टुः ।

**प्रत्न** त्रि० पुरार्थे प्र+भवार्थे त्न । १पुरातने अमरः ।

**प्रत्यंशु** त्रि०प्रतिगतोऽंशुम् अत्या०स० । १प्राप्तांशुके । तत्पुरुषे अंशा० अन्तोदात्ततास्य । प्रतिगतोऽंशुर्येन प्रा०ब० । २प्रतिगतांशुके त्रि० तत्पुरुष इत्युक्तेः बहुव्रीहौ नान्तोदात्तता ।

**प्रत्यक्चेतन** पु०प्रतीपं विपरीतमञ्चति जानाति प्रति+अन्च+क्विप् कर्म० । १सांख्यमतसिद्धे पुरुषे । "ततः प्रत्यक्चेतनाधिगमः अन्तरायाभावश्च" योगसू० भाष्यम् । प्रत्यक्त्वम् अञ्चति अञ्चते कर्म० सर्वेत्ते २अन्तरात्मनि परमेश्वरे तद्भिन्ने ३जीवे च प्रत्यच्शब्दे दृश्यम् । [अमरः

**प्रत्यक्पर्णी** स्त्री प्रत्यञ्चि पर्णान्यस्याः ङीप् । १अपामार्गे

**प्रत्यक्पुष्पी** स्त्री प्रत्यक् पुष्पमस्याः ङीप् । अपामार्गे अमरः

**प्रत्यक्श्रेणी** स्त्री प्रतीची श्रेणीव अस्याः समासान्तविधेरनित्यत्वात् न कप् । १दन्तीवृक्षे २मूषिकपर्ण्याञ्च अमरः ।

**प्रत्यक्ष** अव्य० अक्ष्णः समीपम् "लक्षणेनाभिप्रती" पा० अव्ययीभावे प्रतिनाऽव्ययी० शरदा० अच्समा० अक्षिशब्देन इन्द्रियमात्रम् उच्यते ।१इन्द्रियसम्बन्धे ततोऽस्त्यर्थे अच् । २इन्द्रियसन्निकर्षजन्ये ज्ञाने न० । इन्द्रियाणां ज्ञानसाधनत्वं प्रत्येकं सन्निकर्षद्वारा हेतुत्वात् तथात्वम् । ततः अस्त्यर्थे पुनः अर्श आद्यच् ।३प्रत्यक्षविषये त्रि० । प्रत्यक्षत्वं च ज्ञानत्वव्याप्यजातिविशेषः तल्लक्षणन्तु इन्द्रियार्थसन्निकर्षोत्पन्नज्ञानत्वमिति नैयायिकाः । अधिकमपरोक्षशब्दे २३५ पृ० दृष्टशब्दे च २६७२ पृ० दृश्यम् । वेदान्तमते तल्लक्षणन्तु "तत्तदिन्द्रिययोग्यवर्त्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम् । स्वाकारवृत्त्युपहितप्रमातृचैतन्यसत्तातिरिक्तसत्ताकत्वशून्यत्वे सति वर्त्तमानयोग्यत्वं विषयस्य प्रत्यक्षत्वम्" वेदा०प० । तच्च लौकिकालौकिकभेदात् द्विधा ।

**प्रत्यक्षदर्शन** त्रि॰ प्रत्यक्षेण पश्यति दृश—ल्यु। साक्षिणि साक्षाद्दर्शिनि शब्दमाला। णिनि। प्रत्यक्षदर्शिन् तत्रार्थे त्रि॰ स्त्रियां ङीप्।

**प्रत्यक्षलवण** न॰ प्रत्यक्षं पृथक्तयोपलभ्यमानं लवणम्। पाकनिष्पत्त्युत्तरं व्यञ्जनादौ दीयमानलवणे। तस्य श्राद्धे वर्ज्यतोक्ता यथा श्रा॰त॰ ब्रह्मपु॰ "पिष्टाः कृताश्च ये भक्ताः प्रत्यक्षलवणीकृताः" श्राद्धे तस्य वर्ज्यतोक्तेः "पिष्टाः कृताः पिष्टग्रुत्तरकालं प्रत्यक्षलवणप्रक्षेपकृतः." श्रा॰त॰ रघु॰। तत्रैव विष्णुना श्राद्धवर्ज्येषु "आरनालं तथैव निर्यासाः प्रत्यक्षलवणानि च" इत्युक्तम्। शु॰त॰ ब्रह्मपु॰ "सैन्धवं लवणं चैव यच्च सामुद्रकं भवेत्। पवित्रे परमे ह्येते प्रत्यक्षेऽपि च नित्यशः"। "पृथक्तयोपलभ्यमानं लवणं प्रत्यक्षलवणं न तु व्यञ्जनादिसंस्कारकं संस्कारप्रत्यक्षयोर्भेदात्" शु॰त॰रघु॰। वस्तुतः सैन्धवादेरपि प्रत्यक्षलवणत्वेऽभक्ष्यता आर्द्रकादियोगे प्रतिप्रसवः न तु पिष्टग्रुत्तरकालप्रक्षेपेऽपि प्रतिप्रसवः। अतः पिष्टग्रुत्तरकालं लवणमात्रस्यैव प्रक्षेपे सर्वत्र भक्षणे दाने च निषेधः इति बोध्यम्।

**प्रत्यक्षवादिन्** पु॰प्रत्यक्षमेव प्रमाणतया वदति वद—णिनि। चार्वाके चार्वाकशब्दे २६२१पृ॰ दृश्यम्।

**प्रत्यक्षिन्** त्रि॰ प्रत्यक्षमस्त्यस्य इनि। १साक्षाद्द्रष्टरि २व्यक्तं दृष्टार्थे त्रिका॰ स्त्रियां ङीप्।

**प्रत्यक्स्रोतस्** पु॰ प्रत्यक् प्रतीचीगामि स्रोतो यस्य। १पश्चिमदिग्वाहिनि नदे "प्राक्स्रोतसो नद्यः प्रत्यक्स्रोतसो नद्यः नर्मदां विना" माघ ४।६६ टी॰ व्याख्यायां मल्लि॰ धृतवाक्यम्। २नर्मदायां स्त्री भा॰ व॰ ८६अ॰। प्रतीचि प्रत्यगात्मनि स्रोतश्चित्तप्रवाहोऽस्य। प्रत्यगात्मैकप्रवणचित्तवृत्तियुते ३यतिभेदे पु॰।

**प्रत्यगात्मन्** प्रतीचो जीवस्यात्मा स्वरूपम्। १परमेश्वरे ब्रह्मचैतन्ये भाग॰३।२४।४१ श्रीधरः। "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" कठो॰ भाष्ये तु अन्यथोक्तं यथा "प्रत्यक् चासावात्मा चेति प्रत्यगात्मा प्रतीच्येवात्मशब्दो रूढो लोके नान्यस्मिन् व्युत्पत्तिपक्षेऽपि तत्रैवात्मशब्दो वर्त्तते। "यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्त्यते" इत्यात्मशब्दव्युत्पत्तिस्मरणात्। तं प्रत्यगात्मानं स्वस्वभावमैक्षत् पश्यतीत्यर्थः" "स्वस्वभावं स्वस्वरूपमित्यर्थः" आनन्दगिरिः।

**प्रत्यगाशापति** पु॰ ६त॰। पश्चिमदिक्पाले वरुणे हलायुधः

**प्रत्यगुदच्** स्त्री प्रतीच्या उदीच्याश्च अन्तराला दिक् ब॰व॰। पश्चिमोत्तरदिशोरन्तरालायां विदिशि वायुकोणे आश्व॰ श्रौ॰ २।६।४।

**प्रत्यग्र** त्रि॰ प्रतिगतमग्रमग्रत्वम् अत्या॰स॰। १नूतने २शोधिते च अमरः। उपरिचरवसुवंश्ये ३बृहद्रथपुत्रे नृपभेदे पु॰ भाग॰ ६।२२।४

**प्रत्यग्रथ** पु॰ अहिच्छत्रदेशे हेमच॰। तत्र भवः तस्य राजा वा "साल्वावयवप्रत्यग्रथकालकूटाश्मकादिञ्" पा॰ इञ्। प्रात्यग्रथि तत्र भवे तद्नृपे च।

**प्रत्यग्रह** पु॰ चेदिदेशराजे नृपभेदे भा॰आ॰ ६३अ॰।

**प्रत्यङ्ग** न॰प्रतिगतमङ्गम् अत्या॰स॰। अङ्गानुगताङ्गभेदे अङ्गस्याङ्गभेदे कर्णादौ "तत्राङ्गान्यन्तराधिसक्थिबाहुशिरांसि तदवयवाः प्रत्यङ्गानि" सुश्रुतः। अङ्गशब्दे ७२पृ॰ दृश्यम्। [भेदे हरिवं॰ ३अ॰।

**प्रत्यङ्गिरस्** पु॰ चाक्षुषमन्वन्तरे आङ्गिरसे स्वकस्वरूपे ऋषि-

**प्रत्यङ्गिरा** स्त्री देवीभेदे "अथ प्रत्यङ्गिरां वक्ष्ये परकृत्यानिवर्हिणीम्" इत्यादिना मन्त्रमहोदधौ ८तरङ्गे तत्प्रयोग उक्तः।

**प्रत्यङ्मुख** त्रि॰ प्रत्यङ्मुखं यस्य। पश्चिमाभिमुखे "श्रियं प्रत्यङ्मुखो भुङ्क्ते" मनुना तन्मुखभोजने श्रीलाभः फलमुक्तम्। कर्मविशेषे सायंसन्ध्यावन्दने च तन्मुखता विहिता स्मृतौ दृश्या।

**प्रत्यच्(ञ्च्)** पु॰ प्रत्यञ्चति अन्च—क्विप् विच् वा। १आत्मनि प्रत्यगात्मन्शब्दे दृश्यम्।२पश्चिमे देशे ३काले च ४पश्चिमायां दिशि स्त्री ङीप् भत्वे अल्लोपे दीर्घः प्रतीची। एवं शसादावचि प्रतीचः प्रतीचेत्यादि। विचि तु नलोपाभावात् न तथा प्रत्यञ्चः प्रत्यञ्चा" इति। ततः सप्तम्यर्थे अस् तस्य लोपः। प्रत्यक् ५सप्तम्यर्थवृत्तौ पश्चिमदिग्देशकालादौ अव्य॰। [सुश्रुतः।

**प्रत्यञ्जन** न॰ प्रतिरूपमनुरूपमञ्जनं प्रा॰स॰। अनुरूपाञ्जने

**प्रत्यनन्तर** त्रि॰ प्रतिप्राप्तमनन्तरम् अत्या॰स॰। प्रत्यासन्ने सञ्चिकृष्टे मनुः १०,८०।

**प्रत्यनीक** पु॰प्रतिकूलमनीकं यस्य प्रा॰ब॰। १रिपौ २विघ्ने च हेम॰ उपचारात् ३प्रतिवादिनि ४अलङ्कारभेदे न॰ अलङ्कारशब्दे ४०१ पृ॰ दृश्यम्।

**प्रत्यनुमान** न॰ प्रतिरूपमनुमानं प्रा॰त॰। प्रतीपानुमाने यथा पर्वतो वह्निमान् धूमादिति वादिनोक्ते पर्वतो वह्न्यभा-

यवान् पाषाणमयत्वादिति" प्रतिवादिनः प्रतिपक्षानुमानम् ।

**प्रत्यन्त** पु॰ प्रतिगतोऽन्तम् अत्या॰स॰। १म्लेच्छदेशे २सन्नि-
कृष्टे त्रि॰ अमरः। [पश्चे पर्वते हेमच॰।

**प्रत्यन्तपर्वत** पु॰ प्रत्यन्तः सन्निकृष्टः पर्वतः। वृहत्पर्वतसमी-

**प्रत्यभिज्ञा** स्त्री प्रतिगता अभिज्ञाम् अत्या॰स॰। १अभिज्ञा-
नुरूपे तज्जन्यसंस्कारसहकारेण जनिते प्रत्यक्षभेदे यथा
सोऽयं देवदत्त इत्यादि। तत्स्वरूपादिकं विवरणप्रमेय
संग्रहे निर्णीतं यथा
"ननु केयं प्रत्यभिज्ञा नाम न तावदेकस्यातीतवर्त्तमानका-
लद्वयसम्बन्धविषयं प्रत्यक्षज्ञानं प्रत्यभिज्ञा, प्रत्यक्षज्ञानस्य
वर्त्तमानमात्रार्थग्राहित्वात्। पूर्वानुभवसंस्कारसहि-
तादिदानीन्तनवस्तुप्रमितिकारणाज्जातस्य तस्य तथात्व-
मिति चेत् एवमप्यात्मनि सोऽहमिति प्रत्यभिज्ञा न
सिद्ध्येत् नित्ये स्वयंप्रकाशे तस्मिन् संस्कारस्य जन्य-
ज्ञानस्य वाऽसम्भवात्। नापि स्वरूपज्ञानमेव प्रत्यभिज्ञा-
तस्य प्रदीपप्रभावत् वर्त्तमानार्थप्रकाशिनः पूर्वापरपरामर्शा-
त्मकत्वायोगात्, अथान्यते तु सोऽहमित्याकारद्वयोपप्लुतं
ज्ञानद्वयमेतच्च प्रत्यभिज्ञा। तस्मादनया दुर्निरूपया प्रत्यभि-
ज्ञया कथमैक्यसिद्धिः। उच्यते। केवले चिदात्मनि जन्य-
ज्ञानतत्संस्कारयोरसम्भवेऽन्तःकरणविशिष्टे तत्सम्भ-
वादुक्ता प्रत्यभिज्ञा किं न स्यात्। न च विशिष्टस्य प्रत्यभि-
ज्ञाविषयत्वे तस्यैव प्रत्यभिज्ञातृत्वमपीति कर्मकर्त्तृविरोधः
शङ्कनीयः, सर्ववादिनां देहव्यतिरिक्ताद्यनुमानविषयत-
यात्मनि कर्मकर्तृभावस्य संप्रतिपन्नत्वात्। अथ मतं नानु-
मानादौ विषयस्य कर्मकारकत्वम् अतीतादेस्त्वनुमाने वि-
षयस्याविद्यमानस्य ज्ञानजनकत्वायोगात् विषयत्वन्त्व-
विद्यमानस्यापि कथञ्चित् सम्भविष्यति ज्ञानस्य तदाकार-
त्वात् अतोऽनुमानादौ कर्त्तृत्वमेवात्मनः, प्रत्यक्षे तु विष-
यस्य ज्ञानजनकतया कर्मकारकत्वम् अतो विरोधस्तदवस्थ
इति नैवम् अन्तःकरणविशिष्टतयैवात्मनः प्रत्यभिज्ञातृत्वं
पूर्वापरकालविशिष्टतया च प्रत्यभिज्ञेयत्वमित्युपाधिभेदेना-
विरोधात्। किमेतावता प्रयासेन प्रत्यभिज्ञैव वा भूदिति
चेत् न, सोऽहमिति प्रत्यभिज्ञायाः स्वानुभवसिद्धत्वात्
अविसंवादित्वेन च भ्रान्तित्वायोगात्। यदुक्तं सोऽह-
मित्याकारद्वयोपप्लुतं ज्ञानद्वयमिति तदसत् तथ सति
विज्ञानं क्षणिकमित्यत्रापि ज्ञानद्वयप्रसङ्गेन विज्ञानस्य
क्षणिकत्वासिद्धिप्रसङ्गात्। विज्ञानमात्रवादिनां क्षणिक-
त्वादिधर्मा अवास्तवा एवेति चेत् तर्हि स्थायित्वादिधर्मा एव

वास्तवा उपादीयन्तां सोऽहमित्याद्यनुभवानुसारित्वात्।
यच्च प्राभाकरा मन्यन्ते सोऽहमितिप्रत्यभिज्ञायां विषय-
त्वेनाश्रयेनात्मा सिद्ध्यति किं तर्हि सोऽयं घट इत्यादि
प्रत्यभिज्ञाश्रयत्वेनेति, तदयुक्तं पूर्वापरकालविशिष्टस्य
क्षणमात्रवृत्तिप्रत्यभिज्ञाश्रयत्वासम्भवेन प्रत्यभिज्ञया स्था-
यित्वासिद्धिप्रसङ्गात्। अथ मतं मम संवेदनं जातमिति
इदानीमनुसन्धीयमाना पूर्वकालीना घटादिसंवित् स्वाश्रयं
तदानीन्तनमात्मानं साधयति स्मृतिश्च स्वाश्रयमिदानी-
न्तनमात्मानं साधयति ततश्च स्थाय्यात्मसिद्धिः न पुनरप्र-
माणिकं सोऽहमित्यात्मविषयकं प्रत्यभिज्ञानं किञ्चित् क-
ल्पनीयमिति चेत् नैतत् सारम् स्मृतिपूर्वानुभवौ ह्यभिज्ञा
द्वयवत्तत्कालीनमात्मानं यद्यपि साधयतः तथाप्येकस्या-
त्मनः कालद्वयसम्बन्धो न केनापि सिध्यति। संविद्-
द्वयमेव सम्बन्धस्यापि साधकमिति चेत् तर्हि तथैव घटा-
दिष्वपि स्थायित्वसिद्धौ तत्सिद्धये प्रत्यभिज्ञा नापेक्ष्येत।
दार्ढ्याय प्रत्यभिज्ञेति चेत् एवमपि प्रकृते संविद्द्वयं किं
साक्षात्सम्बन्धस्य साधकमुत प्रत्यभिज्ञामुत्पाद्य, नाद्ये
न तावदेकैकं तत्साधकम् एकैकस्य कालद्वयविशिष्टात्म-
न्यनाश्रितत्वात् नापि संभूय तत्साधकम्, अतीतानु-
भवस्य वर्त्तमानस्मृतेश्च यौगपद्यायोगात्। द्वितीये स्था-
य्यात्मविषयं सोऽहमिति प्रत्यभिज्ञानं त्वयैवाङ्गीकृतं
स्यात्। न च वाच्यं कश्चिदपि न ज्ञानविषयत्वमात्मन-
स्तत्कथं प्रत्यभिज्ञाविषयत्वमिति। मम संवेदनं जात-
मिति स्मृतिज्ञानविषयत्वात् यद्यप्यनेन स्मृतिज्ञानेन
स्वोत्पत्तिकालीन आत्मा स्वाश्रयत्वेनैव प्रकाश्यते न
विषयत्वेन तथापि अर्थं मामसंवेदनाश्रयभूतस्तत्संवेदन-
कालीन आत्मा विषयीक्रियत एव। अथोच्यते स्मृत्या
संवेदनमेव विषयीक्रियते तच्च संवेदनं स्मृतं सत् स्वा-
श्रयमात्मानमाश्रयतयैव प्रकाशयिष्यतीति तदसत् स्मृति-
काले संवेदनस्याविद्यमानस्य स्वाश्रयसाधकत्वायोगात्।
स्वयंप्रकाशमानं हि संवेदनमाश्रयं साधयति न तु
स्मृतिविषयतया परप्रकाश्यम् अन्यथा धर्मादीनामपि
परतः सिद्धानां स्वाश्रयात्मसाधकत्वप्रसङ्गात्। तस्मा-
दतीतकालीन आत्मा स्मृतिविषय एवेत्यभ्युपेयम्। तथाच
सोऽहमिति प्रत्यभिज्ञाप्यात्मानं विषयीकरिष्यतीति प्रा-
भाकरैरप्यात्मविषयप्रत्यभिज्ञयैव संविदात्मना क्षणिकत्वं
निराकरणीयम्"।

**प्रत्यभिज्ञादर्शन** न॰ प्रत्यभिज्ञायाः दर्शनम् शास्त्रम्। माहे-

श्वरशास्त्रभेदे तन्मतं च सर्वदर्शनसंग्रहे दर्शितं यथा "स्वापेक्षाविहीनानां जडानां कारणत्वं दुष्प्रतीत्यपरितुष्यन्तो मतान्तरमन्विष्यन्तः परमेश्वरेच्छावशादेव जगन्निर्माणं परिघुष्यन्तः स्वसंवेदनोपपत्त्यागमसिद्धप्रत्यगात्मतादात्म्यो, नानाविधमानमेयादिभेदाभेदशाली परमेश्वरोऽनन्यसापेक्षत्वलक्षणस्वातन्त्र्यभाक् स्वात्मदर्पणे भावान् प्रतिबिम्बवदवभासयेदिति भणन्तो बाह्याभ्यन्तरचर्य्याप्राणायामादिक्लेशप्रयासकलावैधुर्य्येण सर्वसुलभमभिनवं प्रत्यभिज्ञामात्रं परापरसिद्ध्युपायमभ्युपगच्छन्तः परे माहेश्वराः प्रत्यभिज्ञाशास्त्रमभ्यस्यन्ति। तस्येयत्तापि न्यरूपि परीक्षकैः "सूत्रं वृत्तिर्विवृतिर्लघ्वी बृहतीत्युभे विमर्शिन्यौ। प्रकरणविवरणपञ्चकमिति शास्त्रं प्रत्यभिज्ञायाः" तत्रेदं प्रथमं सूत्रम्। "कथञ्चिदासाद्य महेश्वरस्य दास्यं जनस्याप्युपकारमिच्छन्। समस्तसम्पत्समवाप्तिहेतुं तत्प्रत्यभिज्ञामुपपादयामि" इति। कथञ्चिदिति परमेश्वराभिन्नगुरुचरणारविन्दयुगलसमाराधनेन परमेश्वरघटितेनैवेत्यर्थः। आसाद्येति आ समन्तात् परिपूर्णतया सादयित्वा स्वात्मोपभोग्यतां निरर्गलां गमयित्वा तदनेन विदितवेद्यत्वेन परार्थशास्त्रकरणेऽधिकारो दर्शितः अन्यथा प्रतारणमेव प्रसजेत्। मायोत्तीर्णा अपि महामायाधिकृता विष्णुविरिञ्च्याद्या यदीयैश्वर्य्यलेशेनेश्वरीभूताः स भगवाननवच्छिन्नप्रकाशानन्दस्वातन्त्र्यपरमार्थो महेश्वरः तस्य दास्यं दीयतेऽस्मै स्वामिना सर्वं यथाभिलषितमिति दासः परमेश्वरस्वरूपस्वातन्त्र्यपात्रमित्यर्थः। जनशब्देनाधिकारिविषयनियमाभावः प्रादर्शि। यस्य यस्य हीदं स्वरूपकथनं तस्य तस्य महाफलं भवति प्रधानस्यैव परमार्थफलत्वात्। तथोपदिष्टं शिवदृष्टौ परमगुरुभिर्भगवत्सोमानन्दनाथपादैः "एकवारं प्रमाणेन शास्त्राद्वा गुरुवाक्यतः। ज्ञाते शिवत्वे सर्वस्थे प्रतिपत्त्या दृढात्मना। करणेन नास्ति कृत्यं क्वापि भावनया सकृत्। ज्ञाते सुवर्णे करणं भावनां वा परित्यजेत्" इति। अपिशब्देन स्वात्मनस्तदभिन्नतामाविष्कुर्वता पूर्णत्वेन स्वात्मनि परार्थसम्पत्त्यतिरिक्तप्रयोजनान्तरावकाशश्च पराकृतः। परार्थश्च प्रयोजनं भवत्येव तल्लक्षणयोगात् न ह्ययं दैवशापः, स्वार्थ एव प्रयोजनं न परार्थ इति। अत एवोक्तमक्षपादेन "यमर्थमधिकृत्य प्रवर्त्तते तत्प्रयोजनम्" इति। उपशब्दः सामीप्यार्थः तेन जनस्य परमेश्वरसमीपताकरणमात्रं फलम् अत एवाह समस्तेति परमेश्वरतालाभे हि सर्वाः सम्पदस्तन्निष्यन्दमय्यः सम्पन्ना एव रोहणाचललाभे रत्नसम्पद इव। एवं परमेश्वरतालाभे किमन्यत् प्रार्थनीयम्। तदुक्तमुत्पलाचार्य्यैः "भक्तिलक्ष्मीसमृद्धानां किमन्यदुपयाचितम्। एतया वा दरिद्राणां किमन्यदुपयाचितम्" इति। इत्थं षष्ठीसमासपक्षे प्रयोजनं निर्दिष्टम्। बहुव्रीहिपक्षे तूपायः समस्तस्य बाह्याभ्यन्तरस्य नित्यसुखादेर्या सम्पत् सिद्धिः तथात्मप्रकाशः तस्याः समवाप्तिर्यस्याः प्रत्यभिज्ञायाः हेतोः सा तथोक्ता तस्य महेश्वरस्य प्रत्यभिज्ञा प्रतिसन्धानाभिमुख्येन ज्ञानम्। लोके हि स एवायं चैत्र इति प्रतिसन्धानेनाभिमुखीभूते वस्तुनि ज्ञानं प्रत्यभिज्ञेति व्यवह्रियते इहापि प्रसिद्धपुराणसिद्धागमानुमानादिज्ञातपरिपूर्णशक्तिके परमेश्वरे सति स्वात्मन्यभिमुखीभूते तच्छक्तिप्रतिसन्धानेन ज्ञानमुदेति नूनं स एवेश्वरोऽहमिति। तामेतां प्रत्यभिज्ञामुपपादयामि उपपन्नः सम्भवतीति तत्समर्थाचरणेन प्रयोजनव्यापारेण सम्पादयामीत्यर्थः। यदीश्वरस्वभाव एवात्मा प्रकाशते तर्हि किमनेन प्रत्यभिज्ञाप्रदर्शनप्रयासेनेति चेत् तत्रायं समाधिः स्वप्रकाशतया सततमवभासमानेऽप्यात्मनि मायावशात् भागेन न प्रकाशते पूर्णतावभाससिद्धये दृक्क्रियात्मकशक्त्याविष्करणेन प्रत्यभिज्ञा प्रदर्श्यते। तथा च प्रयोगः अयमात्मा परमेश्वरो भवितुमर्हति ज्ञानक्रियाशक्तिमत्त्वात् यो यावति ज्ञाता कर्त्ता च स तावतीश्वरः प्रसिद्धेश्वरवत् राजवद्वा आत्मा च विश्वज्ञाता कर्त्ता च तस्मादीश्वरोऽयमिति अवयवपञ्चकस्याश्रयणं मायावादेन नैयायिकमतस्य कक्षीकारात्। तदुक्तमुदयकरसूनुना "कर्त्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे। अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः। किन्तु मोहवशादस्मिन् दृष्टेऽप्यनुपलक्षिते। शक्त्याविष्करणेनेयं प्रत्यभिज्ञोपदर्श्यते"। तथा हि "सर्वेषामिह भूतानां प्रतिष्ठा जीवदाश्रया। ज्ञानं क्रिया च भूतानां जीवतां जीवनं मतम्। तत्र ज्ञानं स्वतःसिद्धं क्रिया कायाश्रिता सती। परैरप्युपलक्ष्येत तयाऽन्यज्ज्ञानमुच्यते" इति। "या चैषां प्रतिभा तत्तत्पदार्थक्रमरूपिता। अक्रमानन्दचिद्रूपः प्रमाता स महेश्वरः" इति च। सोमानन्दनाथपादैरपि "सदा शिवात्मना वेत्ति सदा वेत्ति मदात्मना" इत्यादि। ज्ञानाधिकारपरिसमाप्तावपि "तदैक्येन विना नास्ति संविदां लोकपद्धतिः। प्रकाशैक्यात्तदेकत्वं

मातैकः स इति स्थितः। स एवार्थस्वरूपत्वेन नियतेन महेश्वरः। विमर्श एव देवस्य शुद्धे ज्ञानक्रिये यतः" इति। विवृतं चाभिनवगुप्ताचार्यैः "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति" श्रुत्या प्रकाशचिद्रूपमहिम्ना सर्वस्य भावजातस्य भासकत्वमभ्युपेयते ततश्च विषयप्रकाशस्य नीलप्रकाशः पीतप्रकाश इति विषयोपरागभेदाद्भेदः। वस्तुतस्तु देशकालाकारसङ्कोचवैकल्यादभेद एव स एव चैतन्यरूपः प्रकाशः प्रमातेत्युच्यते। तथा च पठितं शिवसूत्रेषु "चैतन्यमात्मेति"। तस्य चिद्रूपत्वमनवच्छिन्नविमर्शत्वमनन्योन्मुखमानन्दैकघनत्वं माहेश्वर्यमिति पर्य्यायः स एव स्वयं भावात्मा विमर्शः शुद्धे पारमार्थिक्यौ ज्ञानक्रिये तत्र प्रकाशरूपता ज्ञानं, स्वतो जगन्निर्मातृत्वं क्रिया। तच्च निरूपितं क्रियाधिकारे "एष चानन्दशक्तित्वादेवमाभासयत्यमून्। भावानिच्छावशादेषा क्रिया निर्मातृताऽस्य तु"। उपसंहारेऽपि "इत्थं तथा घटपटाद्याकारजगदात्मना। तिष्ठासोरेवमिच्छैव हेतुकर्तृकृता क्रियेति। तस्मिन् सतीदमस्तीति कार्य्यकारणतापि या। साप्यपेक्षाविहीनानां जडानां नोपपद्यते" इति न्यायेन यतो जडस्य न कारणता न वा अनीश्वरस्य चेतनस्यापि तस्मात्तेन तेन जगद्गतजन्मस्थित्यादिभावविकारतत्तद्दक्रियारूपरूपेण स्थातुमिच्छोः स्वतन्त्रस्य भगवतो महेश्वरस्यैवोत्तरोत्तरमभ्यस्तभावा क्रिया विश्वकर्तृत्वं बोध्यते इति। इच्छामात्रेण जगन्निर्माणमित्यत्र दृष्टान्तोऽपि स्पष्टं निर्दिष्टः "योगिनामपि मृद्बीजं विनैवेच्छावशेन यत्। घटादि जायते तत्तत् स्थिरस्वार्थक्रियाकरम्" इति। यदि घटादिकं प्रति मृदादेः परमार्थतः कारणं स्यात्तर्हि कथं योगीच्छामात्रेण घटादिजन्म स्यात्। अथोच्येत अन्य एव मृद्बीजादिजन्या घटाङ्कुरादयो योगीच्छाजन्यास्त्वन्या एवेति तत्रापि बोध्यसे सामग्रीभेदात्तावत् कार्य्यभेद इति सर्वजनप्रसिद्धम्। ये तु वर्णयन्ति नोपादानं विना घटाद्युत्पत्तिरिति योगी त्विच्छया परमाणून् व्यापारयन् सङ्घटयतीति तेऽपि बोधनीयाः। यदि परिदृष्टकार्य्यकारणभावविपर्य्ययो न लभ्येत तर्हि घटे मृद्दण्डचक्रादिदेहे स्त्रीपुरुषसंयोगादि सर्वमपेक्ष्येत तथा च योगीच्छासमनन्तरसञ्जातघटदेहादिसम्बन्धो दुःसमर्थ एव स्यात्। चेतन एव तु तथा भाति भगवान् भूरिभगो महादेवो नियत्युल्लङ्घनघनतरस्वातन्त्र्य इति पक्षे न काचिदनुपपत्तिः। अत एवोक्तं भट्टगुप्ताचार्य्यैः "निरुपादानसम्भारमभित्तावेव तन्वते। जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने" इति। ननु प्रत्यगात्मनः परमेश्वराभिन्नत्वे संसारसम्बन्धः कथं भवेदिति चेत्तत्रोक्तमागमाधिकारे "एष प्रमाता मायान्धः संसारी कर्मबन्धनः। विद्यादिज्ञापितैश्वर्य्यश्चिद्घनो मुक्त उच्यते" इति। ननु प्रमेयस्य प्रमात्रभिन्नत्वे बद्धमुक्तयोः प्रमेयं प्रति को विशेषः? अत्राप्युत्तरमुक्तं तत्त्वार्थसंग्रहाधिकारे "मेयं साधारणं मुक्तः स्वात्माभेदेन मन्यते। महेश्वरो यथा बद्धः पुनरत्यन्तभेदवदिति" नन्वात्मनः परमेश्वरत्वं स्वाभाविकं चेत्तर्हि प्रत्यभिज्ञाप्रार्थनया न हि बीजमप्रत्यभिज्ञातं सति सहकारिसाकल्ये अङ्कुरं नोत्पादयति। तस्मात् कस्मादात्मप्रत्यभिज्ञाने निर्बन्ध इति चेदुच्यते। शृणु तावदिदं रहस्यं द्विविधा ह्यर्थक्रिया बाह्याङ्कुरादिका प्रमातृविश्रान्तिचमत्कारसारा प्रीत्यादिरूपा च तत्राद्या प्रत्यभिज्ञानं नापेक्षते द्वितीया तु तदपेक्षत एव। इहाप्यहमीश्वर इत्येवम्भूतचमत्कारसारा परापरसिद्धिलक्षणजीवात्मैकत्वशक्तिविभूतिरूपाऽर्थक्रियेति स्वरूपप्रत्यभिज्ञानमपेक्षणीयम्। ननु प्रमातृविश्रान्तिसारार्थक्रिया प्रत्यभिज्ञानेन विना दृष्टा सती तस्मिन् दृष्टेति का दृष्टम्। अत्रोच्यते नायकगुणगणसंश्रवणप्रवृद्धानुरागा काचन कामिनी मदनविह्वला विरहक्लेशमसहमाना मदनलेखावलम्बेन स्वावस्थानिवेदनानि विधत्ते तथा वेगात्तत्सन्निकटमटत्यपि तस्मिन्नवलोकितेऽपि तदवलोकनं तदीयगुणपरामर्शाभावे जनसाधारणत्वं प्राप्ते हृदयङ्गमभावं न लभते। यदा तु दूतीवचनात्तदीयगुणपरामर्शं करोति तदा तत्क्षणमेव पूर्णभावमत्येति। एवं स्वात्मनि विश्वेश्वरात्मना भासमानेऽपि तन्निर्भासनं तदीयगुणपरामर्शविरहसमयं पूर्णं भावं न सम्पादयति यदा तु गुरुवचनादिना सर्वज्ञत्वसर्वकर्तृत्वादिलक्षणपरमेश्वरोत्कर्षपरामर्शो जायते तदा तत्क्षणमेव पूर्णात्मतालाभः। तदुक्तं चतुर्थे विमर्शे "तैस्तैरप्युपयाचितैरुपनतस्तन्व्याः स्थितोऽप्यन्तिके कान्तो लोकसमान एवमपरिज्ञातो न रन्तुं यथा। लोकस्यैष तथानपेक्षितगुणः स्वात्मापि विश्वेश्वरो नैवायं निजवैभवाय तदियं तत्प्रत्यभिज्ञोदिता" इति। अभिनवगुप्तादिभिराचार्य्यैर्विहितप्रतानोऽपि अयमर्थः संग्रहसुपक्रममाणैरस्माभिर्विस्तरभिया न प्रतानित इति सर्वं शिवम्"।

**प्रत्यभियोग** पु० प्रतिरूपोऽभियोगः प्रा०स०। अभियुक्तेन प्रतिवादिना स्वाभियोगिनं प्रति अभियोगान्तरकरणे।

**प्रत्यभिवाद** पु० प्रति+अभि+वद–णिच्-घञ्। अभिवादकस्य तत्प्रतिरूपे आशीर्वचनादौ। भावे ल्युट्। प्रत्यभिवादन तत्रार्थे न०। तत्प्रकारः मनुना कुल्लूकभट्टेन च दर्शितो यथा "आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने। अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः। यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम्। नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः" "अभिवादने कृते प्रत्यभिवादयिता अभिवादको विप्रादिः आयुष्मान् भव सौम्येति वाच्यः। अस्य चाभिवादकस्य यन्नाम तदन्ते योऽकारादिः स्वरो नाम्नामकारान्तत्वनियमाभावात् स प्लुतः कार्यः स्वरापेक्षयेदकारान्तत्वं व्यञ्जनान्तेऽपि नाम्नि सम्भवति स्वरान्तस्य च व्यञ्जनान्ते नाम्नोऽसम्भवात् आह पूर्वाक्षर इति। पूर्वनामगतमक्षरं संश्लिष्टं यस्य स पूर्वाक्षरः तेन नामाक्षरं पश्चाच्च अकारादिः स्वरः प्लुतः कार्यः। एतच्च वाक्यस्य टेः प्लुत उदात्तः इत्यत्रानुवृत्तौ "प्रत्यभिवादेऽशूद्रे" इति प्लुतं स्मरन् पाणिनिः स्फुटमुक्तवान्। व्याख्यातञ्च वृत्तिकृता वामनेन टेरिति किं व्यञ्जनान्तस्यैव टेः प्लुतो यथा स्यादिति। तस्मादीदृशं प्रत्यभिवादनवाक्यम् आयुष्मान् भव सौम्य! शुभशर्म्मं३न्! एवं क्षत्रियस्य बलवर्म्मं३न् एवं वैश्यस्य वसुभूते३ "प्लुतो राजन्यविशां वेति कात्यायनवचनात् क्षत्रियवैश्ययोः पक्षे प्लुतो न भवति। शूद्रस्य प्लुतो न कार्यः अशूद्र इति पाणिनिवचनात्। "स्त्रियामपि निषेध" इति कात्यायनवचनात् स्त्रियामपि प्रत्यभिवादनवाक्ये न प्लुतः"। [भियोगे सिद्धा०।

**प्रत्यभिस्कन्दन** न० प्रति+अभि+स्कन्द–भावे ल्युट्। प्रत्य-

**प्रत्यय** पु० प्रति+इण–भावकरणादौ अच्। १अधीने २शपथे ३ज्ञाने ४विश्वासे प्रामाण्येन निश्चये ५हेतौ ६छिद्रे ७शब्दभेदे अमरः। ८आचारे ९ख्यातौ मेदि०। १०निश्चये ११स्वादुनि हेमच० १२सहकारिकारणे सिद्धा०। शब्दभेदप्रत्ययलक्षणन्तु शब्दश० प्रका० उक्तं यथा "वाच-वाद्यथा निर्वक्ति "इतरार्थानवच्छिन्ने स्वार्थे यो बोधसाधनम्। तिङर्थस्य निम्नाद्यन्यः स वा प्रत्यय उच्यते"। यः शब्दः शब्दान्तरार्थाविशेषिते स्वाद्यर्थे धर्म्मिणि तिङर्थं स्वान्वयबोधने स्वरूपायोग्यः स वा निम्नादिशब्देभ्यो भिन्नस्तादृशार्थे प्रत्यय इत्यर्थः। चैत्रोऽस्तीत्यादावर्थान्तरानवच्छिन्ने स्वार्थे नाम्नां तिङर्थान्वयबोधकत्वम्। एवं यजेत लोकेतेत्यादौ यजादिधातूनाम्। पचतीत्यादौ तिङां पाचकोऽस्तीत्यादौ कृतां चाक्षुषपरिष्यादौ च प्रकृतीनाम् प्रकृत्यर्थानवच्छिन्ने एव स्वार्थे कृत्यादौ तिङर्थस्य वर्त्तमानत्वादेर्बोधकत्वं न तु तदनवच्छिन्ने इति न तेष्वप्रसङ्गः। निम्नविपातादिषु शब्दान्तरार्थानवच्छिन्ने घटत्वसुदृढत्वादिस्वार्थे तिङर्थान्वयं प्रति स्वरूपायोग्योऽपि निम्नादिरेवेति न तत्र प्रसङ्गः"।

वैयाकरणमते तु पचाभिन्नलक्षणं शब्दार्थरत्ने उक्तं यथा "प्रत्ययस्तु प्रकृतिमवधीकृत्य विधीयमानः स्वार्थबोधकः शब्दविशेषः प्रकृतिशब्ददर्शितभाष्योक्तेः। "जीवनर्थं प्रत्याययतीति" प्रत्ययलक्षणे भाष्योक्तेश्च तथैवावगम्यते। अवधित्व पूर्वापररूपो ग्राह्यः तेन क्वचिच्च नाप्रसङ्गः तस्यापि प्रकृत्यवधिकत्वेन विधीयमानत्वात्। सिद्धान्ते तु इतिपदानां समुदायशक्तिस्वीकारेण सङ्ख्यादेर्निरर्थकतया सुप्रत्ययत्वाभावादेव पूर्वत्वरूपावधित्वप्रवेशेऽपि न क्षतिः। अतएव प्रकृतिशब्दोक्तहरिकारिकायां "प्रत्ययः पर" इत्यनेन परत्वेन विधीयमानत्वं प्रत्ययत्वमुक्तं तस्य च सुप्त्वाद्योतनार्थं स्वार्थत्वाकाङ्क्षत्वकथनाच्च इतरत् द्विशेषणम् तथा च तदर्थान्वितस्वार्थबोधने तदपेक्षत्वे सति तदवधिकत्वेन विधीयमानत्वं तत्प्रत्ययत्वमिति फलितोऽर्थः। अन्वितत्वञ्च विशेष्यतया विशेषणतया वा ग्राह्यं तेन तिङां धात्वर्थविशेष्यकान्वयस्य बोधकत्वेऽपि न क्षतिः। यदि चाव्ययशक्तिस्वीकारस्तदा परपदेनावधित्वं वाच्यम् अवधित्व पूर्वापरान्यतरएव निवेशनीयः। एवञ्च प्रत्ययनिमित्तकप्रकृत्युत्तरकार्यविशेषे विकरणागमादीनां प्रत्ययत्वस्वीकारेण परत्वमात्रं प्रत्ययत्वमिति बोध्यम्। अथवा प्रत्यय इत्यधिकृत्य पञ्चमाध्यायसमाप्तेर्विधीयमानत्वं पारिभाषिकप्रत्ययत्वं तस्यैव अर्थबोधकत्वे प्रतीति विशेषणे सुखप्रत्ययत्वसामान्यलक्षणं पर्यवस्यति तत्तत्प्रत्ययत्वन्तु क्रमेव। स्वार्थिकप्रत्ययानामपि प्रकृत्यर्थानुवादितया स्वार्थबोधकत्वमतएवाभिहितं वाक्यपदीये "स्वार्थिकाः प्रत्ययाः केचित् प्रकृत्यर्थानुवादिनः" इति। एतदनुरोधेनैव शेखरादौ स्वप्रकृत्यर्थान्यतरप्रत्यायकत्वं प्रत्ययानामुक्तम्। विकरणादयः पुनः सर्वथा निरर्थकाः तेषां द्योतकत्वाद्यनङ्गीकारात् तद्व्यतिरेकेणापि कृदादौ धात्वर्थमात्रादेवार्थप्रतीतेर्दर्शनात्। उक्तञ्च वाक्यपदीये "यत्र वाऽव्यभिचारेण तयोः शक्तिप्रकल्पनम्। नियमस्तत्र

नियमो न त्वेवं स्मृत्यादिष्विति"। तत्र ययोरव्यभिचारेणान्वयव्यतिरेकाभ्यां, नियमः अर्थप्रतीतिनियमस्तयोः प्रकृतिप्रत्यययोः शक्तिकल्पनम्। यत्र चैवं न नियमस्तत्र स्मृत्यादिषु नेत्यसावस्या शक्तिकल्पनं नेत्यर्थः"। १२विष्णौ पु० "प्रत्ययः सर्वदर्शनः" विष्णुसं०। तस्य ज्ञानरूपत्वात् तथात्वम् भाष्ये दृश्यम्। प्रत्ययश्च बुद्धिरात्मगुण इति नैयायिकाः। महत्तत्त्वधर्म इति सांख्याः। "एष प्रत्ययसर्गो विपर्य्ययाशक्तितुष्टीनाम्" सा०का०। "प्रतीयतेऽनेनेति प्रत्ययो बुद्धिस्तस्य सर्गः तत्र विपर्य्ययोऽज्ञानमविद्या च बुद्धिधर्मः अशक्तिरपि करणवैकल्यहेतुका बुद्धिधर्म एव तुष्टिसिद्धी अपि वक्ष्यमाणे बुद्धिधर्मावेव, तत्र विपर्य्ययाशक्तितुष्टिषु यथायोगं समग्राणां धर्मादीनां ज्ञानवर्जमन्तर्भावः सिद्धौ च ज्ञानस्येति" त०कौ०। कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् सर्गपदं सृज्यमानपरं तथा चाविद्यादेर्बुद्धिधर्मत्वात् तत्सृष्टत्वम्।

**प्रत्ययकारिन्** त्रि०प्रत्ययं करोति कृ–णिनि। १विश्वासकारके स्वमतलक्षणके २मुद्राभेदे(मोहर)त्रिका०। [च अमरः

**प्रत्ययित** त्रि० प्रति+अय–क्त। १आप्ते २विश्वस्ते ३प्रतिगते

**प्रत्यरा** स्त्री प्रतिनिहिताः अराः प्रा०स०। अराद्दाढ्र्याय उपनिहिते कीलके "शतार्धारं विंशतिप्रत्यराभिः" श्वेताश्व०उ० "पूर्वोक्तानामराणां दाढ्र्याय ये प्रतिविधीयन्ते कीलकास्ते प्रत्यरा इत्युच्यन्ते" भाष्ये उक्तम्।

**प्रत्यरि** पु०प्रति+ऋ–इन्। १शत्रौ २जन्मतारातः पञ्चमचतुर्दशत्रयोविंशतितारके "जन्म सम्पद्विपत् क्षेमं प्रत्यरिः साधको वधः। मित्रं परममित्रं च जन्मादीनि त्रिधा पुनः" ज्यो०त०। "तारा पुनः पापाख्या त्रिविधा पञ्चचतुर्दशत्रिंशतित्रियुता। सिद्धिफला इष्टिकरी विनाशसंज्ञा क्रमात् कथिता" ज्यो०त०। तेन तृतीयस्यैव विशेषत आवश्यकार्य्यादौ निषेधात् त्याज्यता आद्ययोर्द्वयोस्तु प्रतिप्रसवः इति द्रष्टव्यम् "प्रत्यरौ लवणं दद्यादिति" दानमपि तृतीयप्रत्यरावेवेति विवेचनीयम्।

**प्रत्यर्थिन्** त्रि० प्रत्यर्थयते प्रति+अर्थ–पीडने णिनि। १शत्रौ अमरः। प्रतिकूलमर्थयति णिनि, प्रतिपक्षः अर्थिनः प्रा० स० वा। व्यवहारे २प्रतिवादिनि शब्दर०। "प्रत्यर्थिनोऽग्रतो लेख्यं प्रतिज्ञातार्थसाधनम्" याज्ञ०।

**प्रत्यर्पण** न० प्रति+ऋ–णिच्-पुक्-ल्युट्। प्रतिदाने गृहीतस्य धनादेः पुनर्दाने प्रतिसमर्पणे।

**प्रत्यवनेजन** न० प्रतिरूपमवनेजनम् प्रा०स०। श्राद्धाङ्गे प्रथमजलादिदानरूपावनेजने पिण्डोपरि क्रियमाणे पुनरवनेजने तच्च छन्दोगेतरपरं यथोक्तम् "छन्दोगानान्तु पिण्डपात्रप्रक्षालनेन पूर्ववदवनेजनम्। यथा छन्दोगपरिशिष्टं "तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत्" अत्राप्यवनेजयेदिति श्रुतेर्हि तोयावनेजनेऽपि अवनेनिक्ष्वेति वक्तव्यं न तु प्रत्यवनेनिक्ष्वेति" श्रा०त० रघु०।

**प्रत्यवमर्श** पु० प्रति+अव–मृश–भावे घञ्। अनुसन्धाने "स्मृतिः प्रत्यवमर्शश्च तेषां जात्यन्तरेऽभवत्" हरिवं०२१अ०

**प्रत्यवमर्ष** पु० प्रति+अव+मृष–क्षान्तौ भावे घञ्। सहने "स्वल्पसङ्करः सपरिहारः सप्रत्यवमर्षः" पञ्चशिखाचार्य्यः। "स्वल्पसङ्करः ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य स्वल्पेन पशुहिंसादिजन्मनाऽनर्थहेतुना अपूर्वेण सङ्करः, सपरिहारः कियतापि प्रायश्चित्तेन परिहर्त्तुं शक्यः। अथ प्रमादतः प्रायश्चित्तमपि नाचरितं प्रधानकर्मविपाकसमये च पच्यते तथापि यावदसावनर्थं सूते तावत् स प्रत्यवमर्षः प्रत्यवमर्षेण सहिष्णुतया सह वर्त्तत इति मृष्यन्ते हि पुण्यसम्भारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम्" त०कौ०। भावे ल्युट्। प्रत्यवमर्षण तत्रार्थे न०।

**प्रत्यवर** त्रि० प्रतिरूपोऽवरः प्रा०स०। अतिनिकृष्टे "प्रतिग्रहाद्याजनाद्वा तथैवाध्यापनादपि। प्रतिग्रहः प्रत्यवरः प्रेत्य विप्रस्य गर्हितः" मनुः।

**प्रत्यवरोह** पु० प्रति+अव+रुह–घञ्। (नामा) अवरोहे ल्युट्। प्रत्यवरोहण तत्रार्थे न०।

**प्रत्यवसान** न० प्रति+अव+सो–क्त। भोजने हेमच०।

**प्रत्यवसित** त्रि० प्रति+अव+सो–कर्मणि क्त। भुक्ते अमरः।

**प्रत्यवस्कन्द** पु० प्रति+अव+स्कन्द–करणे घञ्। व्यवहारे उत्तरभेदे उत्तरशब्दे १०८९पृ० दृश्यम्। करणे ल्युट्। प्रत्यवस्कन्दन तत्रार्थे न०।

**प्रत्यवस्था** स्त्री प्रति+अव+स्था–भावे अङ्। १प्रतिपक्षतया अवस्थाने। भावे ल्युट्। प्रत्यवस्थान तत्रार्थे न०। "साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानम्" गौ०सू०

**प्रत्यवस्थातृ** त्रि० प्रति+अव+स्था–तृच्। १प्रतिपक्षतया अवस्थातरि प्रतिवादिनि। २शत्रौ हेम०।

**प्रत्यवहार** पु०प्रति+अव–हृ–भावे घञ्। १संहारे रघुः ४।४४ २युद्धार्थमुद्युक्तानां सैन्यानां युद्धात् निवारणे भा०व० २८२अ०।

**प्रत्यवाय** पु॰ प्रति+अव+इण—करणे अच्। १पापे "अननुष्ठितं तथा काम्यं प्रत्यवायस्य मन्यते" जावालिः। भावे अच्। २वैपरीत्याचरणे मनुः ४।२४५।

**प्रत्यवेक्षण** न॰ प्रति+अव+ईक्ष—भावे ल्युट्। पूर्वापरालोचने २एतावत्कृतमेतावत् न कृतमित्यर्थानुसन्धाने च। प्रति+अव+ईक्ष—भावे अ। प्रत्यवेक्षा तत्रार्थे स्त्री रघुः १७.५१।

**प्रत्यश्मन्** पु॰ प्रतिरूपः अश्मा प्रा॰स॰। गैरिके हेम॰।

**प्रत्यष्ठीला** स्त्री सुश्रुतोक्ते अष्ठीलातुल्ये रोगभेदे "अष्ठीलावद्घनं ग्रन्थिमूर्द्ध्वमायतसुन्नतम्। वाताष्ठीलां विजानीयाद्बहिर्मार्गावरोधिनीम्। एतामेव रुजायुक्तां वातविण्मूत्ररोधिनीम्। प्रत्यष्ठीलामिति वदेज्जठरे तिर्य्युत्थिताम्"।

**प्रत्याकार** प्रतिकृत आकारः खड्गाकारो येन प्रा॰स॰। खड्गकोषे त्रिका॰। [२दूरीकृते अमरः।

**प्रत्याख्यात** त्रि॰ प्रति+आ+ख्या—कर्मणि क्त। १निराकृते

**प्रत्याख्यान** न॰ प्रति+आ+ख्या—भावे ल्युट्। निराकरणे अमरः। [(फिरे आया) हरिवं॰ १२५अ॰।

**प्रत्यागति** स्त्री प्रति+आ+गम—भावे क्तिन्। प्रत्यागमने

**प्रत्यागम** पु॰ प्रति+आ+गम—भावे अप्। (फिरे आया) यस्मात् गतस्त्वमिन् पुनरागमने "तीर्थात् प्रत्यागमेऽपि च" प्रा॰त॰। भावे ल्युट्। प्रत्यागमन तत्रार्थे न॰।

**प्रत्यादिष्ट** त्रि॰ प्रति+आ+दिश—कर्मणि क्त। निरस्ते अमरः

**प्रत्यादेश** पु॰प्रति+आ+दिश-भावे घञ्। १निराकरणे अमरः भक्तान् प्रति आदेशः। २भक्तान् प्रति अभीष्टसिद्ध्यर्थं देवानादेशे च।

**प्रत्याधान** न॰ प्रतिपन्त्या धीयते प्रति+आ+धा—कर्मणि ल्युट्। १मस्तके "यो ह वै शिरः आधानं प्रत्याधानम्" शत॰ब्रा॰ १४।५।२।१ भाष्यम्। "मस्तकस्य सर्वदेहेष्ववयवेषु आधीयमानत्वात् प्रत्याधानम्। भावे ल्युट् प्रा॰स॰। २द्वितीयाधाने न॰।

**प्रत्याध्मान** पु॰ वातव्याधिभेदे। तस्य लक्षणमाह "विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितम्। प्रत्याध्मानं विजानीयात् कफव्याकुलितानिलम्"। विमुक्तपार्श्वहृदयं पार्श्वं हृदयं च विहाय जातं तदेवाध्मानम्। कफव्याकुलितानिलं कफेनावरुद्धवातम्" भावप्र॰।

**प्रत्यापत्ति** स्त्री प्रति+आ+पद—भावे क्तिन्। १वैराग्ये भा॰ शा॰ २६१ अ॰ नीलकण्ठः। २पुनरागमने च।

**प्रत्याम्नान** त्रि॰ प्रतिरूपतया आम्नायते प्रति+आ+म्ना—कर्मणि ल्युट्। प्रतिनिधौ "यजमानकर्त्तृत्वेन विधीयन्ते प्रत्याम्नानात् ऋत्विजो निवर्त्तन्ते" कात्या॰ श्रौ॰ १।६।१२ पद्धतौ।

**प्रत्याम्नाय** पु॰ प्रतिरूपतया आम्नायते प्रति+आ+म्ना—कर्मणि घञ्। प्रतिनिधित्वेन विधीयमाने।

**प्रत्यायक** त्रि॰प्रति+इ—ण्वुल्। १विश्वासकारके २बोधके च।

**प्रत्यायन** न॰ प्रति+आ+इ—णिच् "णौ गमिरबोधने" पा॰ उक्तेः न गमादेशः भावे ल्युट्। १बोधने २विश्वासजनने भा॰अनु॰२४४८ श्लो॰।

**प्रत्यारम्भ** पु॰ प्रतिरूप आरम्भः प्रा॰स॰। आरम्भशब्दे पश्चात् आरम्भो मनपदशब्दे २५६२ पृ॰ दृश्यम्।

**प्रत्यालीढ** न॰ धन्विनां युद्धावस्थितिभेदे आलीढविपरीतरूपतया स्थितौ आलीढशब्दे ८२४ पृ॰ दृश्यम्।

**प्रत्यावर्त्तन** न॰ प्रति+आ+वृत—णिच्—वा भावे ल्युट्। १प्रतिनिवृत्तौ २प्रतिनिवारणे च।

**प्रत्याशा** स्त्री किञ्चित् वस्तु प्रति+आशा प्रा॰स॰। किञ्चिद्वस्तु प्रति वाञ्छायाम्।

**प्रत्याश्राव** पु॰ प्रति+आ+श्रु—णिच्-अच्। १उद्दिश्य श्राव्ये कर्मणि अच्।२अस्तुश्रौषडिति शब्दे यजु॰१८।२४वेददी॰

**प्रत्याश्रावण** न॰ प्रति+आ+श्रु-णिच् भावे ल्युट्। अन्योन्यकर्त्तृके अध्वर्युं प्रति मन्त्रविशेषस्य श्रावणे शत॰ब्रा॰ १२।२।८ भाष्ये दृश्यम्। [नार्थमाश्वासने।

**प्रत्याश्वासन** न॰प्रति+आ+श्वस—णिच्-भावे ल्युट्। सान्त्व-

**प्रत्यासत्ति** स्त्री प्रति+आ—सद—भावे क्तिन्। १नैकट्ये न्यायमते २अलौकिकप्रत्यक्षजनके सम्बन्धमात्रे "आसत्तिराश्रयाणान्तु" भाषा॰ "आसत्तिः प्रत्यासत्तिः" सि॰मु॰।

**प्रत्यासन्न** त्रि॰ प्रति+आ+षद—क्त। १अतिनिकटस्थे जटा॰ २सम्बद्धे च।

**प्रत्यास(सा)र** पु॰ प्रति+आ+सृ—आधारे घञ् अप् वा। सकलन्तः १सैन्यपश्चाद्भागे घञन्तः तत्रार्थे अमरः। यत्र व्यूहस्य पश्चाद्व्यूहान्तरं क्रियते २तत्रार्थे भरतः।

**प्रत्यास्वर** पु॰ प्रत्यास्वरति प्रति+आ+स्वृ—अच्। १प्रत्यागते अस्तभावात् पुनः २प्रत्यागते आदित्ये च "स्वर इतीमं (प्राणम्) आचक्षते स्वर इति प्रत्यास्वर इति चामुम्" (आदित्यम्) छा॰उ॰। "किञ्च स्वर इतीमं प्राणमाचक्षते कथयन्ति तथा स्वर इति प्रत्यास्वर इति चामुं सवितारम्। यस्मात् प्राणः स्वरत्येव न पुनरस्तं गतः प्रत्यागच्छति।

र्विना स्वसामित्वा पुनरन्यत्कर्मण्यहानि प्रत्यासप्यति । अतः प्रत्यास्वरोऽस्याहुस्तुवनो नामतय समानमितरेतरं प्राणादिलो" भा० । [विषयेभ्यो निवारणे ।

**प्रत्याहरण** न० प्रति+आ+हृ—भावे ल्युट् । १चित्तेन्द्रियादेः

**प्रत्याहार** पु० प्रति+आ+हृ—भावे घञ् । चित्तेन्द्रियादेः विषयेभ्यो निवारणे योगाङ्गभेदे तल्लक्षणं च अष्टाङ्गयोग शब्दे ५२४४पृ० उक्तं मत्स्यपुराणम् "प्राणायामाहितेन येन प्रत्याहार उदाहृतः" काशीख०४१अ०उक्तम् । "स्वविषयाऽसम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः" पात०सू० "स्वविषयसम्प्रयोगाभावे चित्तस्वरूपानुकार इवेति चित्तनिरोधे चित्तवन्निरुद्धानीन्द्रियाणि नेतरेन्द्रियजयवदुपायान्तरमपेक्षन्ते । यथा मधुकरराजं मक्षिका उत्पतन्तमनूत्पतन्ति निविशमानमनुविशन्ति तथेन्द्रियाणि चित्तनिरोधे निरुद्धानीत्येष प्रत्याहारः" भा० । "ततः परमा वश्यतेन्द्रियाणाम्" पात०सू० "शब्दादिष्व्यसनमिन्द्रियजय इति केचित् सक्तिर्व्यसनं व्यस्यत्येनं श्रेयस इति अविरुद्धा प्रतिपत्तिर्न्याय्या शब्दादिसम्प्रयोगः स्वेच्छयेत्यन्ये रागद्वेषाभावे सुखदुःखशून्यं शब्दादिज्ञानमिन्द्रियजय इति केचित् चित्तैकाग्र्यादप्रतिपत्तिरेवेति जैगीषव्यः । ततश्च परमा त्वियं वश्यता यच्चित्तनिरोधे निरुद्धानीन्द्रियाणि नेतरेन्द्रियजयवत् प्रयत्नकृतमुपायान्तरमपेक्षन्ते योगिनः इति" भा०

अत्र चित्तस्यैव प्रत्याहारेऽन्येन्द्रियस्य प्रत्याहारोऽर्थसिद्ध इति बोध्यम् तदुपायश्च । तदुना उक्तम् "प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान्" । प्रत्याह्रियन्ते संक्षिप्य वर्णा यत्र अनेन प्रति+आ+हृ—करणे घञ् । "आदिरन्त्येन सहेता" पा०उक्ते २अवसंज्ञायां च यथा "अच् इति अ इ उ" इति वर्णानां ग्रहणम् एवं सुप् तिङ्प्रभृतिष्वपि स्वादीनां तिबादीनाञ्च ग्रहणमिति । "प्रत्याहारेष्वितां न ग्रहणमिति" तेन अच् प्रत्याहारे चकारस्य न ग्रहणम् बोध्यम् । भावे घञ् । ३उपादाने पु० अमरः । [वाक्येन ४निराकृते च ।

**प्रत्युक्त** त्रि० प्रति+वच—कर्मणि क्त । १उत्तरिते प्रतिवा-

**प्रत्युक्ति** स्त्री प्रति+वच—भावे क्तिन् । प्रतिवाक्यकथने शब्दर० ।

**प्रत्युज्जीवन** न० प्रति+उद्+जीव—भावे ल्युट् । पुनर्जीवने मरणोत्तरं पुनर्जीवने । "रक्षःशिरश्छेदहेतुत्वात् मरणं नैव वर्ण्यते । वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः" सा०द० । यथा कादम्बरीग्रन्थे तद्वर्णनम् ।

**प्रत्युत** अव्य० प्रति—उत द्व० । १स्वपक्षस्थापनाय परपक्षनिराकरणाय वा उक्तस्य तद्वैपरीत्यभावे २वैपरीत्यमात्रे च "न दोषः पुनरुक्तोऽपि प्रत्युतेयमलङ्क्रिया" काव्याद० ।

**प्रत्युत्क्रम** पु० प्रति+उद्+क्रम—घञ् न वृद्धिः । १युद्धार्थोद्योगे २प्रधानप्रयोजनोद्देशेनाप्रधानारम्भे च अमरः । क्तिन् । प्रत्युत्क्रान्ति तत्रार्थे स्त्री क्षीरस्वामी ।

**प्रत्युत्तर** न० प्रतिरूपमुत्तरस्य प्रा०स० । उत्तरस्योत्तरवाक्ये वादिनोपन्यस्तपक्षस्य तद्विरुद्धपक्षप्रतिपादके वाक्ये ।

**प्रत्युत्थान** न० प्रति+उद्+स्था—ल्युट् । अभ्युत्थाने आगतस्य सम्मानार्थमासनादुत्थितौ "प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते" मनुः ।

**प्रत्युत्पन्नमति** त्रि० प्रत्युत्पन्ना तत्कालोचिता मतिर्यस्य । १तत्कालोचितबुद्धौ हेमच० । २प्रतिभान्विते जटा० । अनागतविधातृशब्दे ११४७पृ० दृश्यम् ।

**प्रत्युदाहरण** न० प्रतिकूलमुदाहरणं प्रा०स० । उदाहरणस्य वैपरीत्येन उदाहरणे । "अन्तर्वत्पतिवतोर्नुक्" पा० सू० इत्यत्र अन्तर्वत्नी पतिवत्नीत्युदाहृत्य "प्रत्युदाहरणन्तु अन्तरस्यस्यां शालायां घटः । पतिमती पृथिवी" सि०कौ० ।

**प्रत्युद्गम** पु० प्रति+उद्+गम—अप् न वृद्धिः । १प्रत्युत्थाने (आ-वाडयाचोया) प्रतिगमने २च भावे ल्युट् । प्रत्युद्गमन तत्रार्थे न० ।

**प्रत्युद्गमनीय** न० प्रति+उद्+गम—अनीयर् । १धौतवस्त्रयुग्मे अमरः "गृहीतप्रत्युद्गमनीयवस्त्रा" इति कुमारे पाठान्तरं प्रह्वे वेति न पुंस्त्वम् । २अभ्युत्थानयोग्ये पूजनीये च त्रि० ।

**प्रत्युन्नमन** न० प्रतिकूलमुन्नमनं प्रा०स० । उन्नमनप्रतिकूले अवनमने । "अकुल्याऽवपीडिते प्रत्युन्नमनम्" सुश्रुतः व्रणचिकित्साङ्गक्रियोक्तौ ।

**प्रत्युपकार** पु० प्रतिरूपः उपकारः प्रा०स० । १कृतोपकारेण कृते उपकारकस्य उपकारानुरूपे हिताचरणे ।

**प्रत्युपदेश** पु० प्रतिरूपः उपदेशः प्रा०स० । १उपदेशकस्य प्राप्तोपदेशेन कृते शिक्षाभेदे कुमा० १।२४

**प्रत्युपहार** पु० प्रतिरूप उपहारः प्रा०स० । अनुरूपे उपहारे उपढौकनीये द्रव्ये ।

**प्रत्युरस** अव्य० उरसि विभक्त्यर्थेऽव्ययी० । "प्रतेरुरसः सप्तमीस्थात्" पा० अच् समा० । उरसीत्यर्थे । सप्तमीस्थादित्युक्तेः लक्षणाद्यर्थे प्रतेर्न अच् । प्रत्युरः इत्येव ।

**प्रत्युलूक** पु० प्रतिकूल उलूकस्य प्रा०स० । १काके भाग०१।

१४।१४। "प्रत्युलूकः काकः" श्रीधरः। प्रतिरूपः उलूको यस्य कप्। प्रत्युलूकक उलूकानुरूपे पक्षिभेदे "उलूका प्रत्युलूककान्" हरिवं० ३अ०।

**प्रत्युष** पु०प्रति+उष–दाहे आधारस्य कर्त्तृत्वविवक्षायां क। प्रातःकाले मथुरेशः।

**प्रत्युषस्** न०प्रति+उष–आधारे असुन्। प्रातःकाले अमरः। "याति व्यक्तिं पुरस्तादरुणकिरणवशे प्रत्युषः पारिजातः" सूर्य्यशतकम्।

**प्रत्यूष** पु० प्रत्यूषति रुजति कामुकान् प्र+ऊष–रुजायां क। १प्रभाते अमरः "प्रत्यूषपवनाघारैः" हरिवं० ८३अ०। अष्टवसुमध्ये २वसुभेदे च जटा०। धरशब्दे ३८४७पृ० दृश्यम्। ३सूर्य्ये शब्दर०।

**प्रत्यूषस्** न० प्रति+ऊष–रुजायाम् असुन् ऊषि वा। प्रभाते अमरः "स्नानमत्यधिकं कार्य्यं प्रत्यूषस्यात्मनो जले" हरिवं० १४अ०। [प्रतिबन्धकत्वात्तथात्वम्।

**प्रत्यूह** पु० प्रति+ऊह–घञ्। विघ्ने अमरः तस्य ऊहां प्रति

**प्रत्यृच** अव्य०ऋचमृचं प्रति वीप्सायाम् अव्ययी०अच् समा०। एकैकस्यामृचि आश्व० ६।४

**प्रत्येक** अव्य० एकमेकं प्रति वीप्सायामव्ययी०। एकैकस्मिन् वीप्सायुते एकशब्दार्थे।

**प्रत्येकबुद्ध** पु० बुद्धभेदे त्रिका०।

**प्रत्वक्षस्** त्रि० प्र+त्वक्ष–तनूकरणे असुन्। प्रकर्षेण तनूकारके शत्रुघातिनि ऋ० १,८१।१ भा०।

**प्रथ** ख्यातौ भ्वा०आ०अक० सेट्। प्रथते अप्रथिष्ट घटा०णिच् प्रथयति। भावे अङ् प्रथा। [ति अपप्रथत् त।

**प्रथ** ख्यातौ अक०विक्षेपे सक०चुरा०उभ०सेट् घटा०। प्रथयति-

**प्रथम** त्रि० प्रथ–अमच्। १प्रधाने २आद्ये च अमरः। जसि वा सर्वनामतास्य प्रथमे प्रथमाः। तस्य भावः ष्यञ्। प्राथम्य आद्यत्वे प्राधान्ये च न०।

**प्रथमज** त्रि०प्रथमं जायते जन–ड। १पूर्वजाते २प्रथमगर्भजाते पुंस्त्री० यजु०१६।२५ जन–क्त। प्रथमजात तत्रार्थे त्रि०

**प्रथमवयसिन्** त्रि० प्रथमवयोऽस्त्यस्य वा० इनि सान्तत्वात् न पदत्वम्। प्रथमवयोयुक्ते शत०ब्रा० १२।१।७।८स्त्रियां ङीप्।

**प्रथमवित्ता** स्त्री प्रथमं वित्ता विन्ना लब्धा। प्रथमपरिणीतायां स्त्रियां महिष्यां कात्या० १६।३।२१।५

**प्रथमसाहस** पु० "पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः" विष्णु० उक्ते सार्द्धशतपणद्वयरूपे दण्डभेदे

**प्रथमाङ्गुलि** पुंस्त्री० कर्म०। वृद्धाङ्गुष्ठे "शब्दमयं महाप्रायं प्रथमाङ्गुलियोगतः" प्रथमाङ्गुलिर्वृद्धाङ्गुलिः तन्त्रसारः

**प्रथमाश्रम** पु०न०कर्म०। ब्रह्मचर्य्याश्रमे "शरीरबन्धः प्रथमाश्रमो यथा" कुमा०।

**प्रथा** स्त्री प्रथ–घटा० भावे अङ्। ख्यातौ अमरः।

**प्रथित** त्रि० प्रथ–क्त। १ख्याते अमरः। २स्वारोचिषमनोः पुत्रभेदे पु० हरिवं० ७अ०। ३विष्णौ पु० "अच्युतः प्रथितः प्राणः" विष्णु स०।

**प्रथिमन्** पु० पृथोर्भावः पृथु+इमनिच् प्रथादेशः। पृथुत्वे स्थूलत्वे। अतिशयेन पृथुः इमनिच्। अतिशयेन पृथुत्वयुते

**प्रथिमिनी** स्त्री प्रथिमाऽस्त्यस्याः "संज्ञायां मन्माभ्याम्" पा० इनि टिलोपः। पृथुत्वयुतस्त्रीभेदे। असंज्ञायां तु मतुप् मस्य वः। प्रथिमवत् इत्येव स्त्रियां ङीप्।

**प्रथिवी** स्त्री पृथिवी+पृषो०। पृथिव्यां भा०वि०४४अ०।

**प्रथिष्ठ** त्रि० अतिशयेन पृथु–इष्ठन् प्रथादेशः। पृथुतरे। तत्रार्थे ईयसुन् प्रथीयस् पृथुतमे स्त्रियां ङीप्।

**प्रथु** पु० प्रथते प्रथ––उन्। विष्णौ "प्राग्दः प्रथमः प्रथुः" विष्णु स०।

**प्रथुक** पु० प्रथ–बा० उक। पृथुके चिपिटके रायमुकुटः।

**प्रदक्षिण** न० प्रगतो दक्षिणाम् अत्या०स०। दक्षिणपार्श्वानुगते देवेभ्यः स्वदक्षिणदर्शनेन प्रणामभेदे तल्लक्षणफलादिकं यथा "प्रसार्य्य दक्षिणं हस्तं स्वयं नम्रशिराः पुनः। दक्षिणं दर्शयन् पार्श्वं मनसापि च दक्षिणः। सकृत्त्रिर्वा वेष्टयेत् देव्याः प्रीतिः प्रजायते। स च प्रदक्षिणो ज्ञेयः सर्वदेवौघतुष्टिदः। अष्टोत्तरशतं यस्तु देव्याः कुर्य्यात् प्रदक्षिणम्। सर्वान् कामान् समासाद्य पश्चान्मोक्षमवाप्नुयात्। मनसापि च यो दद्यात् देव्यै भक्त्या प्रदक्षिणम्। प्रदक्षिणाद्युगमष्टके नरकाणि न पश्यति" कालिकापु० ७०अ०। "एकं देव्यां रवौ सप्त त्रीणि कुर्य्याद्विनायके। चत्वारि केशवे कुर्य्यात् शिवे चार्द्धं प्रदक्षिणम्" कर्मलोचनम्। "दक्षिणाद्वायवीं गत्वा दिशं तस्याच्च शाम्भवीम्। ततश्च दक्षिणां गत्वा नमस्कारस्त्रिकोणवत्। अर्द्धचन्द्रं महेशस्य पृष्ठतश्च समीरितम्। शिवप्रदक्षिणे मन्त्री अर्द्धचन्द्रक्रमेण तु। व्यावृत्त्यक्रमेणैव सोमसूत्रं न लङ्घयेत्"। सोमसूत्रं जलनिःसरणस्थानम्। "प्रसार्य्य दक्षिणं हस्तं स्वयं नम्रशिराः पुनः। दर्शयेद्दक्षिणं पार्श्वं मनसापि च दक्षिणः। त्रिधा च वेष्टयेत् सम्यक् देवतायाः प्रदक्षिणम्" तन्त्रसारः।

**प्रदक्षिणित्** न॰ प्रदक्षिण+इष्णो॰। प्रदक्षिणशब्दार्थे ऋ॰२।४२।१। भाष्ये दृश्यम्। [प्रदत्ते प्रकर्षेण दत्ते।

**प्रदत्त** त्रि॰ प्र+दा-कर्मणि क्त वा तादेशाभावे दद्भावः।

**प्रदर** पु॰ प्र+दॄ-भावादौ अप्। १भङ्गे दारणसाधने २बाणे अमरः। ३विदारे ४स्त्रीणां योनिरोगभेदे मेदि॰ तन्नि-दानकर्म च भृगुभारतोक्तं कर्मविपाकशब्दे १७६८ पृ॰ दर्शितम्। स च असृग्दराख्यः स्त्रीणां योनिरोगभेदः। तल्लक्षणादि माधवनिदाने उक्तं यथा

"विरुद्धमद्याध्यशनादजीर्णाद्गर्भप्रपातादतिमैथुनाच्च। यानाध्वशोकादतिकर्षणाच्च भाराभिघाताच्छयनाद्दिवा च। असृग्दरं भवेत् सर्वं साङ्गमर्दं सवेदनम्। तस्याति-वृद्धौ दौर्बल्यं श्रमो मूर्च्छा मदस्तृषा। दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः"। स च चतुर्विधो यथा "तं श्लेष्मपित्तानिलसन्निपातैश्चतुःप्रकारं प्रवदन्ति वैद्याः। आमं सपिच्छाप्रतिमं सपाण्डु पुलाकतोयप्रतिमं कफात्तु। सपीतनीलासितरक्तमुष्णं पित्तार्त्तियुक्तं भृशवेगि पित्तात्। रूक्षारुणं फेनिलमल्पमल्पं वातार्त्ति वातात् पिशितोदकाभम्। सक्षौद्रसर्पिर्हरितालवर्णं मज्जप्रकाशं कुणपं त्रिदोषात्। तञ्चाप्यसाध्यं प्रवदन्ति तज्ज्ञा न तत्र कुर्वीत भिषक् चिकित्साम्"।

**प्रदल** पु॰ प्रकर्षेण दलति प्र+दल-अच्। बाणे जटा॰

**प्रदव** पु॰ दुनोति दु-अच् "दुन्योरनुपसर्गे" पा॰ अनुसर्गे इ-त्युक्तेः न ण। १प्रकृष्टतापके। भावे अप्। २प्रकृष्टतापे पु॰

**प्रदव्य** पु॰ प्रदवाय हितं वा॰ यत्। १दावाग्नौ कात्या॰श्रौ॰ २५।४।२२ कर्कः। [२प्रकृष्टदावके त्रि॰।

**प्रदा** स्त्री प्र+दा-भावे अङ्। प्रकृष्टदाने। कर्त्तरि क।

**प्रदान** न॰ प्र+दा-भावे ल्युट्। प्रकृष्टदाने "प्रदानं स्वाम्य-कारणम्" मनुः।

**प्रदि** त्रि॰ प्र+दा-"उपसर्गे घोः किः" पा॰कि। प्रदानकर्त्तरि

**प्रदिग्ध** त्रि॰ प्र+दिह-कर्मणि क्त। १लिप्ते २अञ्जनविशेषयुते मांसे न॰ "मांसं बहुघृतैर्भृष्टं सिक्तं चोष्णाम्बुना मुहुः। जीरकाद्यैः समायुक्तं परिशुष्कं तदुच्यते। तदेव घृत तक्राढ्यं प्रदिग्धं सलिलातकम्" शब्दच॰।

**प्रदिव्** त्रि॰प्रकर्षेण दीव्यति प्र+दिव-क्विप्। १प्रकर्षेण द्योतमाने ऋ॰३।२८।५ भा॰ष॰। २प्रकृष्टदिने स्त्री ३पूर्वदिने ऋ॰ १।४७।१। ४पुरातने निघण्टुः बहुव॰।

**प्रदिश्** स्त्री दिशोरन्तरालं प्रगता दिक् प्रा॰स॰। विदिशि दि-शोरन्तरालदिशि जटा॰।

**प्रदीप** पु॰ प्र+दीप-अच्। दीपे अमरः। दीपशब्दे ३६०५ पृ॰ दृश्यम्। तत्र हितः अपूपा॰ छ। प्रदीपीय तद्धिते त्रि॰ पक्षे यत्। प्रदीप्य तत्रार्थे

**प्रदीपन** पु॰ प्रदीप्यते प्र+दीप-ल्यु। १स्थावरे २विषभेदे तल्लक्षणं राजनि॰ उक्तं यथा "वर्णतो लोहितो यः स्यात् दीप्तिमान् दहनप्रभः। महादाहकरः पूर्वैः कथितः स प्रदीपनः"। णिच्-ल्यु। ३प्रकाशके त्रि॰।

**प्रदुह्** त्रि॰ प्र+दुह-सत्सूद्विषेत्यादिना क्विप् पा॰ प्रकर्षेण दोग्धरि पदत्वेऽस्य हस्य घत्वे दस्य धः। प्रधुक् प्रधुग्-भ्यामित्यादि। [न्यकुञ्चिते देशे ३भित्तौ च मेदि॰।

**प्रदेश** पु॰ प्रा॰स॰। १एकदेशमात्रे राजनि॰ २स्थाने तर्ज्ज-

**प्रदेशन** न॰ प्र+दिश-भावादौ ल्युट्। १उपदेशे कर्मणि ल्युट्। २राजादेरुपढौकने उपहारे (भेटि) द्रव्ये अमरः

**प्रदेश(शि)नी** स्त्री प्रदिश्यतेऽनया प्र+दिश-करणे ल्युट् ङीप्। तर्जन्यां तया हि वस्तु निर्दिश्यते। प्रदेशः अङ्गु-ष्ठादिमध्यस्थानमस्त्यस्य इनि ङीप्। अत्रैव अमरः।

**प्रदेह** पु॰ प्र+दिह-भावे घञ्। १प्रलेपे व्रणाद्युपशमार्थं द्रव्यविशेषस्य व्रणादौ २लेपने सुश्रुतः।

**प्रदोष** पु॰ प्रक्रान्ता दोषा रात्रिरत्र काले प्रा॰ब॰। रात्रेः प्रथमभागभेदे तिथिभेदस्य प्रदोषेऽनध्यायः ति॰त॰उक्तो यथा "सारस्वतादिप्रदोषमाह स्मृतिः "नवोदश्यां चतुर्थ्यां च सप्तम्यां द्वादशीतिथेः। प्रदोषेऽध्ययनं धीमान् न कुर्वीत यथाक्रमम्। सारस्वतो माधवतः सौरश्च वैष्णवस्तथा" प्रदोषशब्दोऽत्र प्रथमप्रहर इति हेमाद्रिः। रात्रिपर इति निर्णयामृतमद्ध। तथा व्रतभेदे रात्रिप्रथमयाम-परता हेमाद्रौ व्रत॰उक्ता "त्रयोदश्यां तथा रात्रौ सो-पहारं त्रिलोचनम्। दृष्ट्वेशं प्रथमे यामे मुच्यते सर्व-पातकैः"। इदं प्रदोषव्रतमिति हेमाद्रिः। शिवरात्रिव्रते तु "प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी" हेमाद्रि॰ स्मृतिः। तत्रैव वत्सः "प्रदोषोऽस्तमयादूर्द्ध्वं घटिकाद्वय-मिष्यते"। घटिकादण्डद्वयम् "त्रयोदश्यस्तगे सूर्य्ये चतसृष्वपि नाडिषु। भूतविद्धा तु सा तत्र शिवरात्रिव्रतं चरेत्" ति॰त॰ वायुपु॰ वाक्यैकवाक्यत्वात्। तथा च प्रदोषशब्दस्य रात्रिमात्रं रात्रेः प्रथमयामः प्रथमदण्ड-चतुष्टयं चार्थः कर्मभेदे तस्य ग्राह्यता। तत्रानध्याये शर्वरीमात्रपरता प्रदोषव्रते प्रथमयामपरता शिवरात्रिव्र-तादौ दण्डचतुष्टयपरतेति विवेकः। "प्रदोषो रजनी-मुखम्" इत्यमरोक्तिः रात्रेः प्रथमप्रहरप्रथमदण्डचतुष्ट-

अपरत्वाभिप्रायेण रात्रिमात्रे प्रद्रजेति बोध्यम् ।

**प्रदोषक** त्रि॰ प्रदोषे भवः कालात् ठञं बाधित्वा पूर्वाह्णे त्यादिना वुन् । प्रदोषकालभवे ।

**प्रद्युम्न** पु॰ प्रकृष्टं द्युम्नं बलं यस्य । १कन्दर्पे अमरः । स च वासुदेवस्य रुक्मिण्यां जातः हरिवं॰ ११८अ॰ । सनत्कुमारांशजातश्च भा॰ आ॰ ६७अ॰ । २वैष्णवागमोक्ते चतुर्व्यूहात्मकविष्णोरंशभेदे च अनिरुद्धशब्दे १६२पृ॰ चतुर्व्यूहशब्दे २८७६ पृ॰ च दृश्यम् । मनोर्नड्वलायां जाते ३पुत्रभेदे पु॰ भाग॰ ४।१३।१४

**प्रद्यो** त्रि॰ प्रकृष्टा द्यौर्दिनं यत्र । प्रकृष्टदिने क्लीवत्वे सुखः प्रद्युम्नस्य क्लीव एव सुसत्वेन गन्तव्येऽपि भाषितपुंस्कत्वाभावात् टाद्यचि न पुंवत् प्रद्युना इत्यादि सि॰कौ॰सुवन्त॰ प्रद्युकाप्रद्युनेत्युदाहृतं तच्चिन्त्यम् । [भा॰स॰ १६अ॰ ।

**प्रद्योत** पु॰ प्र+द्युत–अच् । १रश्मौ हेमा॰ । २यक्षभेदे पु॰

**प्रद्योतन** पु॰ प्र+द्युत–"अनुदात्तेतश्च हलादेः" पा॰ युच् । १सूर्ये हेमा॰ । २द्योतनशीले त्रि॰ । भावे ल्युट् । ३दीप्तौ न॰ ।

**प्रद्रव** पु॰ प्रकृष्टो द्रवः प्रा॰स॰ । पलायने अमरः ।

**प्रद्रावक** त्रि॰ प्र+द्रा–कुत्सितायां गतौ क्त स्वार्थे क । कुत्सितां गतिं प्राप्ते अन्त्यावस्थां प्राप्ते "उपसिहं चाक्रावश दृश्यमाने प्रद्रावकउवाच" का॰उ॰ "प्रद्रावकः कुत्सितां गतिं गतोऽन्त्यावस्थां प्राप्त इत्यर्थः" भा॰ ।

**प्रद्राव** पु॰ प्र+"प्रद्रुसुस्रुवः" पा॰ अपं बाधित्वा घञ् । पलायने अमरः । भावादि॰ अन्तोदात्तताच ।

**प्रद्राविन्** त्रि॰ प्र+द्रु–ताच्छील्ये णिनि । पलायनशीले ।

**प्रद्वार** न॰ प्रगतं द्वारं प्रा॰स॰ । द्वारप्रान्तभागे

**प्रधन** न॰ प्र+धा॰ क्यु । १युद्धे अमरः । प्रकृष्टं धनमस्य । २प्रकृष्टधनयुक्ते त्रि॰ । निघण्टौ संग्रामनामसु अङ्कमे इत्यत्र प्रधने पाठान्तरम् । एदन्तमव्ययं तदर्थे ।

**प्रधमन** न॰ प्र+वी॰ धम–ध्माने भावे ल्युट् । सुश्रुतोक्ते व्यापारभेदे सुश्रुतः ।

**प्रधा** स्त्री प्र+धा–भावे अङ् । १निधाने २दक्षसुतायां कश्यपपत्नीभेदे भा॰आ॰६५अ॰ । प्रधाया अपत्यं ढञ् । प्राधेय तदपत्ये पुंस्त्री॰ । "प्राधेयास्तपसांगणाः" मार्क॰ तत्कन्याश्च अलम्बुषाद्योऽप्सरसः भा॰आ॰ ६५अ॰।

**प्रधान** न॰ प्र+धा–ल्युट् । सांख्यमतसिद्धायाम् सत्त्वरजस्तमोरूपगुणत्रयात्मिकायां १प्रकृतौ प्रकृतिशब्दे दृश्यम्। महामात्ये २बुद्धितत्त्वे ३परमात्मनि ४प्रयत्ने ५सचिवे च । ६सेनापत्यध्यक्षे पु॰ ७श्रेष्ठे त्रि॰ अमरः "सेनाध्यक्षः प्रधानः स्यात्" अस्य पुंस्त्वमिति बोपालितः ।

**प्रधानधातु** पु॰ कर्म॰ । चरमधातौ वीर्ये शुक्रे त्रिका॰। शुक्रस्य चरमधातुत्वम् अहङ्कारशब्दे ५५८पृ॰उक्तं दृश्यम्

**प्रधि** पु॰ प्रधीयन्ते काष्ठान्यत्र प्र+धा-आधारे कि । चक्रावयवकाष्ठसञ्जनस्थाने रथनाभौ अमरः ।

**प्रधी** त्रि॰ प्रकृष्टा धीर्यस्य । १प्रकृष्टबुद्धियुक्ते प्रा॰स॰। २प्रकृष्टायां बुद्धौ स्त्री । प्रकृष्टं ध्यायति ध्यै–कर्त्तरि क्विप् । ३प्रकृष्टध्यानकर्त्तरि त्रि॰। तत्र तृतीयार्थे गतिपूर्वकत्वात् यण् प्रध्यः प्रध्या इत्यादि आद्ययोस्तु प्रशब्दस्य समासे प्रत्ययोपसर्गत्वात् न यण् किन्तु इयङ् । प्रधिया इत्यादीत्यन्ये सि॰कौ॰ तु "हरिकरादीनां मते लक्ष्मीवद्रूपम् पदान्तरं विनाऽपि स्त्रियां वर्त्तमानत्वं नित्यस्त्रीत्वमिति स्त्रीकारात् लिङ्गान्तरानभिधायकं तदिति कैयटमते पुंवद्रूपम् प्रकृष्टा धीरिति विग्रहे तु लक्ष्मीवत् अमि शसि च प्रध्यं प्रध्य इति विशेषः" इत्युक्तम् ।

**प्रधूपित** त्रि॰ प्र+धूप॰क्त । सन्तापिते "अवनप्रधूपिताम्" इति कुमारः । ज्योतिषोक्तायां २सूर्यगन्तव्यायां दिशि स्त्री । तत्र प्रधूमिता इति पाठान्तरम् । [तावस्थायाञ्च ।

**प्रध्वंस** पु॰ प्र+ध्वन्स–भावे घञ् । १नाशे सांख्यमते २अतीतावस्थायाञ्च ।

**प्रध्वस्त** त्रि॰ प्र+ध्वन्स॰क्त । १नाशप्रतियोगिनि २अतीते च ३मन्त्रभेदे पु॰ "एकोनविंशत्यर्णो वा यो मन्त्रस्तारसंयुतः । हृल्लेखाङ्कुशबीजाढ्यं प्रध्वस्तं तं प्रचक्षते" तन्त्रसा॰ ।

**प्रनप्तृ** पु॰ प्रगतो नप्तारं अनन्तरत्वात् प्रा॰स॰। पौत्रपुत्रे प्रपौत्रे उज्ज्वलद॰ । [प्रकर्षेण नर्द कर्त्तरि ।

**प्रनर्दक** त्रि॰ प्र+नर्द–ण्वुल् बोपदेशत्वाभावात् न णत्वम् ।

**प्रनष्ट** त्रि॰ प्र+नश–क्त षान्तत्वाभावात् न णत्वम् । नाशप्रतियोगिनि "प्रनष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत्" मनुः ।

**प्रना(णा)यक** त्रि॰ प्रकृष्टो नायकोऽस्य प्रशब्दस्य नयतिं प्रति उपसर्गत्वाभावात् न णत्वम् । प्रकृष्टनायकयुक्ते । प्र+नी–ण्वुलि तु णत्वम् । प्रणायकारके इति भेदः ।

**प्रपक्ष** पु॰ प्रगतः पक्षम् अत्या॰स॰ पक्षाग्रे भा॰द्रो॰ २०अ॰।

**प्रपञ्च** पु॰ प्र+पचि–आधारे घञ् । १विस्तारे २वैपरीत्ये ३प्रतारणे । कर्त्तरि पचा॰अच् । ४संसारे च अमरः । तत्र वैपरीत्यं भ्रमो माया वेति स्वामी ।

**प्रपञ्चित** प्र+पन्च–णिच्-कर्मणि क्त । १विस्तारिते २प्रतारिते भ्रान्तिज्ञानविषयतया ३सम्पादिते च भाग॰ १०।१३अ॰

**प्रपतन** न॰ प्रपतत्यस्मात् प्र+पत—भीमा॰ अपादाने ल्युट्। १पतनापादाने तटादौ। भावे ल्युट्। प्रकर्षेण २पाते तत्प्रयोजनमस्य छ। प्रपतनीय प्रपातसाधने त्रि॰।

**प्रपथ** पु॰ प्रकृष्टः पन्थाः प्रकृष्टः पन्था यत्र वा अच्समा॰। १प्रकृष्टमार्गे २तद्युक्ते त्रि॰ ऋ॰१।१६६।८ [स्त्री राजनि॰।

**प्रपथ्य** त्रि॰ प्रकृष्टं पथ्यं प्रा॰स॰। १अत्यन्तहिते २हरीतक्यां

**प्रपद** न॰ प्रारब्धं पदम् प्रा॰स॰। पादस्याग्रभागे अमरः। प्रपदं व्याप्नोति ख। प्रपदीन पादाग्रव्यापके त्रि॰ आप्रपदीनशब्दे माघः १।१२उदा॰दृश्यम्। [इति चण्डी।

**प्रपन्न** त्रि॰प्र+पद-क्त। शरणागते "प्रपन्नार्त्तिहरे! देवि!"

**प्रपन्नाड** पु॰ प्रपन्नान् अलति भूषयति अल-अच् उप॰स॰ लस्य डः। १चक्रमर्दे रत्नमा॰। तस्य दद्रुरोगिभिः सेवने तेषां रोगनिवारकत्वेन भूषकत्वात्तथात्वम्।

**प्रपा** स्त्री प्रपीयतेऽस्यां प्र+पा—घञर्थे क। पानीयशाला-याम्। पानीयशालिकाशब्दे ४२०६ पृ॰ दृश्यम्।

**प्रपाठक** पु॰प्रकृष्टः पाठोऽत्र कप्। १वेदस्याध्यायांशभेदे २ग्रौ-तपन्थांशभेदे च। [तत्त्वे राजनि॰।

**प्रपाणि** पु॰ प्रकृष्टः पाणिः प्रा॰स॰। करस्याधोभागे पाणि-

**प्रपात** पु॰ प्रपतत्यस्मात् पत-अपा॰घञ्। १तटरहिते २निर-वलम्बे ३पर्वतस्थानभेदे अमरः। ४निर्झरे ५कूले च मेदि॰ यस्मात् पतने अवस्थानाय क्रियाभेदो न भवति ६तादृशे स्थाने। भावे घञ्। ७अवस्कन्दे हेमच॰।

**प्रपानक** न॰ प्रकृष्टं पानमस्य कप्। खण्डमरिचादिमिश्रिते पानीयद्रव्यभेदे "प्रपानकरसन्यायाच्चर्व्यमाणो रसो भवेत्" यथा खण्डमरिचादीनां सम्मेलनादपूर्व इव कश्चिदा-स्वादः प्रपानकरसे सञ्जायते विभावादिसम्मेलनादिहापि तथेत्यर्थः" सा॰द॰। क्षताग्रशब्दे २०८४पृ॰दृश्यम्।

**प्रपापूरणीय** त्रि॰ प्रपापूरणं प्रयोजनमस्य "छप्रकरणे विधि पूरिपतिरहिप्रकृतेरनात्" वार्त्ति॰ छ। प्रपापूरण-प्रयोजनके। [शब्दमाला।

**प्रपावन** न॰ प्रपेव कामपूरकं वनम्। कामारण्ये वनभेदे

**प्रपितामह** पु॰ प्रगतः पितामहं कार्यत्वेन अत्या॰स॰। १पि-तामहपितरि अमरः। तस्य पत्नी ङीष् २प्रपिता-मही तत्पत्न्यां स्त्री "स्वेन भर्त्रा सह श्राद्धं माता भुङ्क्ते स्वधामयम्। पितामही च स्वेनैव स्वेनैव प्रपितामही" दायभागधृतवचनम्। पितामहस्य प्रजा-पतिजनकस्य चतुर्मुखब्रह्मणः जनके ३परब्रह्मणि "भू-र्भुवः स्वस्तस्तारः स पिता प्रपितामहः" विष्णुस॰। "यो वै ब्रह्माणं विदधाति पूर्वम्" श्रुतेस्तस्य पितामह-ब्रह्मस्रष्टृत्वात्तथात्वम्। "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु वीजमवासृजत्। तदण्डमभवद्धैमं सहस्रांशु-समप्रभम्। तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपिता-महः" मनुना सर्वपितामहस्यापि तेन सृष्टत्वात्तस्य तथात्वम्।

**प्रपित्वे** अव्य॰ उत्तरायणे निघण्टुः।

**प्रपुन्नाड(ट)** पु॰ पुमांसं नाटयति नडयति नड—भ्रंशे नट-अवस्यन्दने वा अण् प्रकृष्टः पुन्नाडः (पुन्नाटः) प्रा॰स॰। १चक्रमर्दे (चाकुन्दा) वृक्षे। डस्य लत्वे प्रपुन्नालोऽप्यत्र। २दद्रुमर्दने अमरः। पृषो॰ प्रपुनाड (पुपुन्नड) इत्येता-वपि तत्रार्थे अमरे पाठान्तरम्।

**प्रपूरिका** स्त्री प्रकर्षेण पूर्यते कण्टकैः पूर—कर्मणि घञ् स्वार्थे क टाप् कापि अत इत्त्वम्। १कण्टकार्य्याम् हेम-चन्द्रः २प्रकर्षेण पूरके त्रि॰।

**प्रपूर्वग** पु॰ प्रकृष्टः पूर्वगः पूर्ववर्त्ती प्रा॰स॰। सृष्टेः प्राग्व-र्त्तिनि १परमेश्वरे "सदेव सोम्येदमग्र आसीदेकमेवा-द्वितीयमिति श्रुतेः तस्य तथात्वम्। तद्रूपेण ध्याने २अश्वि-नीकुमारद्वये द्वि॰व॰। भा॰आ॰३अ॰ अश्विनीकुमारस्तुतिः।

**प्रपौण्डरीक** पु॰ पुण्डरीक+स्वार्थेऽण् प्रकृष्टं तादृशं पुष्पं यस्य। गजमनुष्याणां चक्षुर्हितकारके शालपर्णीतुल्य-पत्रके क्षुपभेदे अमरः।

**प्रपौण्डरीकाद्य** न॰ "प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्-पलैः। सिद्धं धात्रीरसे तैलं नस्येनाभ्यञ्जनेन वा। सर्वान्मूर्द्धगदान् हन्ति पलितानि च शीलितम्" चक्र-पाणिदत्तोक्ते तैलभेदे।

**प्रपौत्र** पुं स्त्री॰प्रगतः कारणतया पौत्रम् अत्या॰स॰। पौत्रस्य १पुत्रे तत्कन्यायां स्त्री ङीप्।

**प्रफर्वी** स्त्री प्रकृष्टं पर्व नितम्बस्थानं यस्याः स्त्रिया ङीप् पृषो॰। प्रशस्तनितम्बायां स्त्रियां ऋ॰१०।८५।१२ भा॰। फर्वति गतिकर्मा इति वेददीपः। २प्रकृष्टगतियुक्ते त्रि॰ यजु॰१२। ७६ वेददीपः।

**प्रफुल्त(ल्ल)** त्रि॰ प्र+फल—क्त आदित्त्वात् इटोऽभावे अत इत्त्वम् प्र+फुल्ल—विकाशे अच् वा (लडयगुतः)। विकाश-युते अमरः। "लोध्रद्रुमं सानुमतः प्रफुल्त(ल्ल)म्" रघु-टीकायां मल्लिनाथेन द्विधापाठः समर्थितः। [त्रिका॰।

**प्रबन्ध** पु॰ प्र+बन्ध—भावे घञ्। १सन्दर्भे ग्रन्थादेः २रचने च

**प्रबन्धन** न॰ प्र+बन्ध—भावे ल्युट्। प्रकर्षेण यन्त्रने बन्धने

**प्रबन्धकल्पना** स्त्री ६त॰। “प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुः” इत्युक्तलक्षणायामल्पसत्यायां बहुमिथ्याकथायाम् अमरः। [अमरः।

**प्रब(व)र्ह** त्रि॰ प्र+बर्ह स्तुतौ (इह) बधे वा अच्। प्रधाने

**प्रबल** त्रि॰ प्रकृष्टं बलमस्य। १प्रकृष्टबलयुते। प्रकृष्टं बलति बल—धान्यावरोधे अच्। २पल्लवे शब्दमाला ३प्रसारिण्यां लतायां स्त्री राजनि॰।

**प्रबल्हिका** स्त्री प्रबल्ह-आच्छादने ण्वुल् प्रहेलिकायाम् अम॰ अयमोक्ष्यादिः इत्। प्रबल्हि वा ङीप् प्रबल्ही च तत्रार्थे।

**प्रवाल** न॰ प्र+बल—धान्यावरोधे ज्वलादि॰ ण। १किसलये नवपल्लवे २वीणादण्डे च अमरः। ३रत्नभेदे पु॰ किं रत्नं कस्य ग्रहस्य प्रीतिकारित्वेन दोषहरं भवतीति प्रश्ने तदुत्तरमाह ज्यो॰ रत्नमालायां “माणिक्यन्तरणेः सुजातममलं, मुक्ताफलं शीतगोर्माहेयस्य तु विद्रुमो निगदितः, सौम्यस्य गारुत्मतम्। देवेज्यस्य च पुष्परागमसुराचार्यस्य वज्रं, शनेर्नीलं निर्मलमन्ययोर्निगदिते गोमेदवैदूर्यके”। “पुंसि क्लीबे प्रवालः स्यात् पुमानेव तु विद्रुमः” भावप्र॰ तत्रार्थेऽस्य पुंनपुंसकत्वमुक्तं रत्नानां गुणास्तत्रोक्ता यथा “रत्नानि भक्षितानि सुमधुराणि सराणि च। चक्षुष्याणि च शीतानि विषघ्नानि धृतानि च। मङ्गल्यानि मनोज्ञानि ग्रहदोषहराणि च”। युक्तिकल्पतरौ तस्योत्पत्त्यादिकं भेदादिकञ्चोक्तं यथा “सूत उवाच आदाय शेषस्तस्यान्त्रं यमाद्याकम्बलादिषु। चिक्षेप तत्र जायन्ते विद्रुमाः सुमहागुणाः। तत्र प्रधानं शशलोहिताभं गुञ्जाजवापुष्पनिभं प्रदिष्टम्। सनीलकं देवकरोमकञ्च स्थानानि तेषु प्रभवं सुरागम्। अन्यत्र जातञ्च न तत् प्रधानं मूल्यं भवेच्छिल्पिविशेषयोगात्। प्रसन्नं कोमलं स्निग्धं सुरागं विद्रुमं हि तत्। धनधान्यकरं लोके विपत्तिभयनाशनम्। परीक्षा पुलकेनोक्ता रुधिराख्यस्य वैमणेः। स्फटिकस्य विद्रुमस्य रत्नज्ञानाय शौनक!” इति गारुडे ८०अ॰। “श्वेतसागरमध्ये तु जायते वल्लरी तु या। विद्रुमा नाम रत्नाख्या दुर्लभा वज्रहपिणी। पाषाणं प्रभजत्येषा प्रयत्नात् कथिता सती। विद्रुमं नाम यद्रत्नमामनन्ति मनीषिणः। ब्रह्मादिजातिभेदेन तच्चतुर्विधमुच्यते। अरुणं शशरक्ताभं कोमलं स्निग्धमेव च। प्रवालं विप्रजातिः स्यात् सुखवेध्यं मनोरमम्। जवाबन्धूकसिन्दूरदाडिमीकुसुमप्रभम्। कठिनं स्निग्धदुर्वेधं क्षत्रजातिः तदुच्यते। पलाशकुसुमाभासं तथा पाटलसन्निभम्। वैश्यजातिर्भवेत् स्निग्धं वर्णाढ्यं मन्दकान्तिमम्। विद्रुमं शूद्रजातिः स्याद्दायुवेध्यं तथैव च। रक्तता स्निग्धता दार्ढ्यं चिरद्युति सुवर्णता। प्रवालानां गुणाः प्रोक्ता धनधान्यकराः पराः। हिमाद्रौ यत्तु संजातं तद्रक्तमतिनिष्ठुरम्। तत्र विप्रो भवेच्छिन्नकल्कोऽतिमधुरः स्थितः। तस्य धारणमात्रेण विषवेगः प्रशाम्यति। विवर्णता तु खरता प्रवाले दूषणद्वयम्। रेखा काकपदी बिन्दुर्यथा वज्रेषु दोषकृत्”। तथा प्रवाले सर्वत्र वर्जनीयं विचक्षणैः। रेखा हन्यादुयशो, लक्ष्मीमावर्त्तः कुलनाशनः। पट्टलो रोगकृत् ख्यातो बिन्दुर्धनविनाशकृत्। त्रासः संजनयेत् त्रासं नीलिका मृत्युकारिणी। मूल्यं शुद्धप्रवालस्य रूप्यद्विगुणमुच्यते। धारणेऽस्यापि नियमो जातिभेदेन पूर्ववत्”। तथा हि “विरूपजातिं विषमं विवर्णं खरप्रवालं प्रवहन्ति ये ये। ते मृत्युमेवात्मनि वै वहन्ति सत्यं वदत्येष कृती मुनीन्द्रः’। तस्य शुभाशुभलक्षणे राजनि॰ उक्ते यथा “शुद्धं दृढं घनं वृत्तं स्निग्धं गात्रसुरङ्गकम्। समं गुरु शिराहीनं प्रवालं धारयेत् शुभम्। गौरं रक्तजलाक्रान्तं रक्तकृष्णं सकोटरम्। रूक्षकृष्णं लघु श्वेतं प्रवालमशुभं त्यजेत्”।

**प्रवालक** पु॰ यक्षभेदे भा॰स॰ १०अ॰।

**प्रवालफल** न॰प्रवाल इव रक्तं फलमस्य। रक्तचन्दने भावप्र॰ तत्फलस्य प्रवालतुल्यरक्तत्वात् तथात्वम्।

**प्रवालाश्मन्तक** पु॰ प्रवाल इवाश्मन्तकः रक्तत्वात्। रक्ताश्मन्तकवृक्षे सुश्रुतः। [राजनि॰।

**प्रवालिक** पु॰प्रवालो नवपल्लवोऽस्त्यस्य भूम्ना ठन्। जीवशाके

**प्रवाहु** पु॰ प्रगतो बाहुम् अत्या॰स॰। बाहुमूले हु॰सं॰५ द्ब्य॰।

**प्रवाहुक** अव्य॰ प्रकृष्टो बाहुरत्र कप् स्वरादि॰। १समकाले २ऊर्द्ध्वार्थे च मनोरमा। पृषो॰प्रबाहुक् प्रबाहुम् पाठान्तरम् तत्रार्थे अव्य॰ “प्रबाहुग् जुहोति” तैत्ति॰२।६।१।

**प्रबुद्ध** त्रि॰प्र+बुध—कर्त्तरि क्त। १प्रबोधयुते २पण्डिते ३प्रफुल्ले पुष्पादौ च हेमच॰। ४जागरिते स्वापरहिते ५भागवतधर्मप्रधाने ऋषभदेवपुत्रभेदे पु॰ भाग॰५।४।११

**प्रबोध** पु॰ प्र+बुध—भावाधारादौ घञ्। १निद्रापगमे तस्य प्रकृष्टज्ञानाधारत्वात् तथात्वम्। २यथार्थज्ञाने च।

**प्रबोधन** न॰ प्र+बुध—भावे ल्युट्। १यथार्थज्ञाने २निद्रा·

पगमे । प्र+बुध–णिच्–भावे ल्युट् । ३प्रकृष्टबोधने ४उद्दीपने ५पूर्वगन्धस्य न्यूनतायां पुनः सौगन्ध्योत्पादनाय व्यापारभेदे अमरः ।

**प्रबोधनी** स्त्री प्रबोध्यते हरिरत्र प्र+बुध-णिच्-आधारे ल्युट् ङीप् । कार्त्तिकशुक्लैकादश्याम् तत्र शयितस्य हरेरुत्थापनानुकूलव्यापारस्याचरणात्तस्यास्तथात्वम् । उत्थानैकादशीशब्दे तस्याः स्वरूपभेदस्य व्याख्यता दर्शिता ।

तन्माहात्म्यं च पद्मपु॰उ॰ख॰१२६अ॰ उक्तं यथा "ब्रह्मोवाच प्रबोधन्याश्च माहात्म्यं पापघ्नं पुण्यवर्द्धनम् । मुक्तिदं शुद्धबुद्धीनां शृणुष्व मुनिसत्तम ! । तावद्गर्जन्ति तीर्थानि पुण्यान्यायतनानि च । यावत् प्रबोधनी विष्णोस्तिथिर्नायाति कार्त्तिके । अश्वमेधसहस्राणि वाजपेयशतानि च । एकेनैवोपवासेन प्रबोधन्यां भवन्ति हि । मेरुमन्दरतुल्यानि पापानि सुबहून्यपि । भस्मसात् कुरुते मर्त्त्यो हरिबोधन्युपासनात् । पूर्वजन्मसहस्रेषु यत्पापं समुपार्जितम् । जागरेण प्रबोधन्यां दह्यते तूलराशिवत् । उपवासं प्रबोधन्यां यः करोति समाहितः । विधिवन्मुनिश्रेष्ठ ! यथोक्तं लभते फलम् । यानि कानि च तीर्थानि त्रैलोक्ये संवसन्ति वै । तानि तस्य गृहे सम्यक् सता येन प्रबोधनी । किं तस्य बहुभिः पुण्यैः सुरलोकसुखप्रदैः । ऊर्जे सन्तोषिता येन संपूर्णा हरिबोधनी । बोधनीं समुपोष्यैव मुक्तिभागी भवेन्नरः । प्रबोधन्यां नरश्रेष्ठ ! न पुनर्गर्भमाविशेत् । स्नानं दानं जपो होमः समुद्दिश्य जनार्दनम् । नरैर्यत् क्रियते ऊर्जे प्रबोधन्यां तदक्षयम् । येऽर्चयन्ति नरास्तस्यां भक्त्या विष्णुं जगत्पतिम् । उषित्वा बोधनीं ते तु प्रभवेयुर्दिवौकसः । महाव्रतमिदं पुत्र ! महापापौघनाशनम् । प्रबोधन्यां मुने ! विष्णोर्विधिवत् समुपोषणम् । स ज्ञानी च स योगी च स तपस्वी जितेन्द्रियः । स्वर्गमोक्षौ च तस्यास्तां य उपास्ते प्रबोधनीम् । यत्तु जन्मशतं पापं स्वल्पं वा यदि वा बहु । करोति भस्मसाद्विष्णुः प्रबोधन्यां प्रपूजितः । हरिपूजाविधानज्ञा कार्त्तिके बोधवासरे । गीतशास्त्रविनोदेन प्रबोधन्यास्तु जागरात् । चन्द्रसूर्य्योपरागे च यत् फलं परिकीर्त्तितम् । तस्मात् सहस्रगुणितं प्रबोधन्यां हि जागरात् । स्नानं दानं जपो होमः स्वाध्यायश्चार्चनं हरेः । एतस्मात् कोटिगुणितं प्रबोधन्यां हि जागरात्" । स्कान्दे "जन्मप्रभृति यत्पुण्यं नरेणोपार्जितं भुवि । वृथा भवति तत्सर्वं न कृत्वा बोधवासरम्" । "प्रबोधन्याश्च माहात्म्यं पापघ्नं पुण्यवर्द्धनम् । मुक्तिदं शुद्धबुद्धीनां शृणु त्वं मुनिसत्तम ! । तावद्गर्जति विप्रेन्द्र ! गङ्गाभागीरथी क्षितौ । यावन्नायाति पापघ्नी कार्त्तिके हरिबोधनी । तावद्गर्जन्ति तीर्थानि आसमुद्रसरांसि च । यावत् प्रबोधनी विष्णोस्तिथिर्नायाति कार्त्तिके । वाजपेयसहस्राणि अश्वमेधशतानि च । एकेनैवोपवासेन प्रबोधन्यां लभेन्नरः । दुर्लभञ्चैव दुष्प्राप्यं त्रैलोक्ये सचराचरे । तदपि प्रार्थितं विप्र ! ददाति हरिबोधनी । ऐश्वर्यं सन्ततिं प्रज्ञां राज्यञ्च सुखसम्पदः । ददात्युपोषिता विप्र ! हेलया हरिबोधनी । मेरुमन्दरतुल्यानि पापान्यत्यर्जितान्यपि । एकेनैवोपवासेन दहते हरिबोधनी । पृथिव्यां यानि दानानि दत्त्वा यत् फलमाप्नुते । एकेनैवोपवासेन ददाति हरिबोधनी" हरि॰वि॰ ।

**प्रभञ्जन** न॰ प्रभञ्जति वृक्षादीन् प्र+भन्ज–युच् । वायौ अमरः । [लतायां स्त्री राजनि॰ ।

**प्रभद्र** पु॰ प्रकृष्टं भद्रमस्मात् ५ब॰ । १निम्बवृक्षे २प्रसारिण्यां

**प्रभद्रक** न॰ "भवति नजौ भजौ रसहितौ प्रभद्रकम्" वृ॰र॰ उक्ते चतुर्दशाक्षरपादके छन्दोभेदे ।

**प्रभर्मन्** पु॰ भृ–भावे कर्त्तरि वा मनिन् प्रकृष्टं भर्म भरणं प्रकृष्टो भर्त्ता भर्त्ता ऋत्विक् वा यस्मिन् । १यज्ञे ऋ॰८।८२।१ भाष्ये दृश्यम् । प्र+भृ-भावे मनिन् । २प्रकर्षेण भरणे सम्पादने न॰ ऋ॰ १।७९।७

**प्रभव** पु॰ प्रभवत्यस्मात् "भुवः प्रभवः" पा॰ भूकर्त्तृरुपादने वाच्ये अप् । १प्रथमप्रकाशस्थाने २अन्ततः विशेष प्रथमोपलम्भस्थाने हेमच॰ ३मूले ४मुनिभेदे ५जन्महेतौ । भावे अप् । ६जन्मनि । करणे अप् । ७पराक्रमे मेदि॰ । ८षष्टिवत्सरमध्ये वत्सरभेदे तत्फलमुक्तं ज्यो॰त॰ भविष्यपु॰ "बहुतोयास्तथा मेघा बहुसस्या च मेदिनी । बहुक्षीरास्तथा गावो व्याधिरोगविवर्जिताः । प्रशान्ताः पार्थिवाश्चैव प्रभवे परिकीर्त्तिताः" । ९विष्णौ पु॰ "संभवो भावनो भर्त्ता प्रभवः प्रभुरीश्वरः" विष्णुस॰

**प्रभवादि** पु॰ प्रभव आदिर्येषाम् । प्रभवप्रभृतिषष्टिसंवत्सरेषु स च गुरुमध्यभोगात् गणनीयः । "ज्योतिर्विद् दृश्यमध्यात् प्रभवादेश लक्षणम् । उक्तवत् समाद्यादि वर्षाणामपि लक्षणम्" ज्यो॰त॰ । ते च ज्यो॰त॰ फलसहिताः दर्शिता [illegible]शब्दे तद्वाक्यस्थं वक्ष्यते च तदानयनञ्च

ज्यो॰त॰“शकेन्द्रकालः पृथगाकृति २२ म्नः शशाङ्कनन्दा-श्वियुगैः ४२९१ समेतः। शराद्रिवस्विन्दु१८७५हृतः स लब्धः षष्ट्याप्तशिष्टाः प्रभवादयोऽब्दाः। वर्षवर्जन्तु यच्छेषं सूर्यैः१२ संपूर्य खोर्मिभिः६॰”(मलम्)। प्रभवादिवर्षाणां पञ्चस्य “आद्या तु विंशतिर्ब्राह्मी द्वितीया वैष्णवी स्मृता। तृतीया रुद्रदैवत्या श्रेष्ठा मध्याधमा भवेत्”। ज्यु॰सं॰दश॰अन्यथोक्तं गुरुवर्षशब्दे २६२२पृष्ठादावुक्तम्।

**प्रभविष्णु** त्रि॰ प्र+भू—शीलार्थे इष्णुच्। १प्रभावशीले २विष्णौ पु॰ भा॰अनु॰ ७१अ॰।

**प्रभा** स्त्री प्र+भा-भावे अङ्। १दीप्तौ राजनि॰। प्र+भा-क। २प्रदीप्तियुते त्रि॰३कुबेरपूर्यां स्त्री हेमच॰। ४दुर्गायां स्त्री “प्रभा प्रमानशीलत्वात् ज्योत्स्ना चन्द्रार्कमालिनी” देवीपु॰ तन्नामनिरुक्तौ। ५सूर्यपत्नीभेदे “विवस्वान् कश्यपात् पूर्वमदित्यामभवत् पुरा। तस्य पत्नीत्रयं तद्वत् संज्ञा राज्ञी प्रभा तथा। रैवतस्य सुता राज्ञी रैवन्तं सुषुवे सुतम्। प्रभा प्रभातं सुषुवे त्वाष्ट्री संज्ञा तथा मनुम्” मत्स्यपु॰ ११अ॰। ६स्वर्भानोः कन्याभेदे नहुषमातरि हरिवं॰ ३अ॰। ७अप्सरोभेदे भा॰अनु॰ १४२५ श्लो॰ ८गोपीभेदे “इदञ्च प्रभया गोप्या युक्तो वृन्दावने वने। प्रभा देहं परित्यज्य जगाम सूर्यमण्डलम्” ब्रह्मवै॰प्र॰ ख॰ ८अ॰।

**प्रभाकर** पु॰ प्रभां करोति कृ-ट। १सूर्ये २वह्नौ ३चन्द्रे ४समुद्रे च शब्दर॰। ५अर्कवृक्षे अमरः। ६मीमांसकभेदे स च गुरुत्वेन प्रसिद्धः। अत्रिवंश्ये ७मुनिभेदे हरिवं॰ ३१अ॰। ८कुशद्वीपस्थे वर्षभेदे मा॰भी॰ १२अ॰। अष्टम-मन्वन्तरे ९देवगणभेदे मार्क॰पु॰ ८०अ॰।

**प्रभाकीट** पु॰ प्रभान्वितः कीटः शा॰त॰। खद्योते राजनि॰।

**प्रभाञ्जन** पु॰ शोभाञ्जने त्रिका॰।

**प्रभात** न॰प्र+भा—भावे क्त प्रकृष्टं भातमत्र वा। १प्रातःकाले अमरः। प्र+भा कर्त्तरि क्त। २प्रभायुक्ते त्रि॰ ३वसुभेदे पु॰ प्रभास इत्यत्र प्रभात इति मिता॰ पाठः। धरशब्दे २८४७पृ॰दृश्यम्। प्रभातकाले दृश्या उक्ता राजवल्लभेन “वैद्यः पुरोहितो मन्त्री दैवज्ञोऽथ चतुर्थकः। प्रभातकाले द्रष्टव्यो नित्यं स्वश्रियमिच्छता” छन्दोगपरि॰ तत्र दृश्यादृश्यानाह यथा “श्रोत्रियं सुभगाम्ग्निं गाञ्चैवाग्निचितन्तथा। प्रातरुत्थाय यः पश्येदापद्भ्यः स विमुच्यते। पापिष्टं दुर्भगां मद्यं नग्नमुत्कृत्तनासिकम्। प्रातरुत्थाय यः पश्येत् तत् कलेरुपलक्षणम्”। प्रभातकाले स्मार्य्याः काशीखण्डे ३५अ॰ दर्शिता यथा “स्वहितं चिन्तयेत् प्रातर्मर्त्यो शीलाय सर्वदा। गजास्यं संस्मरेदादौ तत ईशं सहाम्बया। श्रीकान्तं श्रीसमेतं तु ब्रह्माख्या कमलोद्भवम्। इन्द्रादीन् सकलान् देवान् वशिष्ठादीन् मुनीनपि। गङ्गाद्या सरितः सर्वाः श्रीशैलाद्याखिलान् गिरीन्। क्षीरोदादीन् समुद्रांश्च मानसादिसरांसि च। वनानि नन्दनादीनि धेनूः कामदुघादिकाः। कल्पवृक्षादिवृक्षांश्च धातून् काञ्चनमुख्यतः। दिव्यस्त्रीरुर्वशीमुख्या गरुडादीन् पतत्त्रिणः। नागांश्च शेषप्रमुखान् गजानैरावतादिकान्। अश्वानुच्चैःश्रवो मुख्यान् कौस्तुभादीन् मणीन् शुभान्। अरुन्धत्यती मुख्याः पतिव्रतवतीर्वधूः। नैमिषादीन्यरण्यानि पुरीः काशीपुरीमुखाः। विश्वेशादीनि लिङ्गानि वेदान्कमुखानपि। गायत्रीप्रमुखान् मन्त्रान् योगिनः सनकादिकान्। प्रणवादिमहाबीजं नारदादींश्च वैष्णवान्। शिवभक्तांश्च बाणादीन् प्रह्लादादीन् दृढव्रतान्। वदान्यांश्च दधीच्यादीन् हरिश्चन्द्रादिभूपतीन्। जननी चरणौ स्मृत्वा सर्वतीर्थोत्तमोत्तमौ। पितरं च गुरुञ्चापि हृदि ध्यात्वा प्रसन्नधीः। ततश्चावश्यकं कर्त्तुं नैर्ऋतं दिशमाश्रयेत्”। “प्रभातायां तु शर्वर्य्याम्” भार॰नानास्थाने।

**प्रभातीर्थ** तीर्थभेदे शिवपु॰।

**प्रभातोर** पु॰ नागभेदे भा॰आ॰ ३५अ॰।

**प्रभाव** पु॰ प्र+भू—घञ्। राज्ञां कोषदण्डजाते १तेजसि अमरः। २तेजसि ३सामर्थ्ये हेमच॰ ४विक्रमे ५शान्तौ ६उद्भवे च मेदि॰। ७स्वारोचिषमनोः पुत्रभेदे मार्क॰पु॰ ६६अ॰। ८वसुभेदे प्रभास इत्यत्र पाठान्तरम् ९प्रभागर्भजाते सूर्यपुत्रभेदे प्रभाशब्दे दृश्यम्।

**प्रभावज** न॰ प्रभावात् जायते जन—ड। प्रभुशक्तिभेदे कोषदण्डाख्ये साध्ये तेजसि।

**प्रभावत्** त्रि॰प्रभा+अस्त्यर्थे मतुप् मस्य वः। १दीप्तियुक्ते स्त्रियां ङीप्। सा च वज्रनाभासुरस्य २कन्याभेदे। प्रद्युम्नेन तस्याहरणकथा च हरिवं॰ १५२अध्यायादौ दृश्या। ३तापसीभेदे भा॰व॰२८४अ॰। ४कुमारानुचरमातृभेदे भा॰श॰ ४७अ॰। ५अङ्गेश्वरस्य चित्ररथस्य भार्य्यायाम् भा॰अनु॰ ४२अ॰। ६मरुत्तनृपस्य पत्न्यां विदर्भराजदुहितरि मार्क॰ १२३ अ॰। ७अर्चिनामकोनविंशत्तार्हन्मातरि ८गणानां वीणायाञ्च स्त्री हेमच॰। ९त्रयोदशाक्षरपादके छन्दोभेदे “यस्यां प्रिये प्रथमकमक्षरद्वयं तुर्य्यन्तथा गुरु-

नेषम दिशान्तिमम् । शान्त्यं मवेद्यतिरपि चेद्युगपद्धेः सा लचिताश्वतदचिरे । प्रभावती" इति श्रुतबोधः ।

**प्रभाष** पु० प्र+भाष–अच्। १अष्टवसुमध्ये वसुभेदे २प्रकृष्टकथके त्रि० जटा०। धरशब्दे ३८१७पृ० दृश्यम् । तत्र षान्तत्वेन पाठः जटाधरसम्मतः ।

**प्रभास** त्रि०प्रभासते प्र+भास–अच् । १प्रकृष्टदीप्तियुते २जैनगणाधिपभेदे पु० हेमच०। ३कुमारानुचरगणभेदे पु०भा० श०४६अ० । ४ऋषिभेदे पु० भा०शा० १६६अ०। ५वसुभेदे पु० हरिवं० ३अ० सान्ततया पाठः । अष्टममन्वन्तरे ६देवगणभेदे पु० मार्क०पु०८०अ०। ७सोमतीर्थभेदे त्रिका० "पुण्यं प्रभासं समुपाजगाम यत्रोडुराट् यक्ष्मणा क्लिश्यमानः" इत्युपक्रमे एवं तु तीर्थप्रवरं पृथिव्यां प्रभासनात्तस्य तु सः प्रभासः" इत्यादिना तत्तीर्थोत्पत्तिमाहात्म्यादिकथा भा०श०३६अ० आदौ दृश्या ।

**प्रभासन्त** पु० प्र+भास–बा० झ । १परमेश्वरे २रुद्रे च हरिवं० १२१अ०। [त्वात् चरन्मदे २गजे पु० अमरः ।

**प्रभिन्न** त्रि० प्र+भिद-क्त । १प्रकृष्टभेदयुक्ते प्रभिन्नकटादिस्थल-

**प्रभु** त्रि०प्र+भू–डु । १स्वामिनि २कार्यसम्पादशक्तियुते "निग्रहानुग्रहे शक्तः प्रभुरित्यभिधीयते" इत्युक्ते ३निग्रहानुग्रहसमर्थे ४विष्णौ पु० "प्रभवः प्रभुरीश्वरः" विष्णुसं० "कामः कामप्रदः प्रभुः" तत्रैव नामान्तरं तत्र प्रकर्षेण भवनात् प्रभुरितीति भाष्योक्तेः "सर्वासु क्रियासु सामर्थ्यातिशयात् प्रभुः" भाष्योक्तेश्च व्युत्पत्तिभेदात् नामद्वयम् । ५अष्टमन्वन्तरे देवगणभेदे मार्क०पु० ८०अ० ।

**प्रभुत्वाक्षेप** पु० अर्थालङ्कारभेदे "धनञ्च बहु लभ्यं ते सुखं क्षेमञ्च वर्त्मनि । न च मे प्राणसन्देहस्तथापि प्रिय ! मा स्म गाः । इत्याचक्षाणया हेतून् प्रियथात्रानुबन्धिनः । प्रभुत्वेनैव रुद्धस्तत् प्रभुत्वाक्षेप उच्यते" । "हे प्रिय ! ते विदेशगमने इति अध्याहार्यं बहुधनं सुखञ्च तथा वर्त्मनि पथि क्षेमं कुशलञ्च लभ्यम् । अत्र च मे प्राणसन्देहः न तव शीघ्रप्रत्यागमनस्य बहुधनलाभस्य च सम्भवादिति भावः । तथापि मास्म गाः मा गच्छ अत्र प्रियबालायाः प्रियस्य विदेशगमनस्य अनुबन्धिनः पोषकान् हेतून् आचक्षाणया कीर्त्तयन्त्या कयाचित् स्वाधीनपतिकयेति शेषः प्रभुत्वेन स्वाधीनतया एव पतिः रुद्धः विदेशगमनात् निवर्त्तितः तस्मात् एषः प्रभुत्वाक्षेप उच्यते" प्रेम० टीका ।

**प्रभुभक्त** त्रि० ७तत्। १स्वाम्यनुरक्ते । "बह्वाशी स्वल्पसन्तुष्टः सुनिद्रः शीघ्रचेतनः । प्रभुभक्तश्च शूरश्च ज्ञातव्याः षड्गुणाः शुनः" चाणक्यः । कुलीने उत्तमे २घोटके पु० शब्दच०।

**प्रभूत** त्रि० प्र+भू-क्त । १प्रचुरे अमरः २उद्गते मेदि० ३भूते ४उन्नते च शब्दर०। ततः गोषदा०अस्त्यर्थे वुन् । प्रभूतक प्रचुरत्वादियुक्ते त्रि०प्रभूतमाह "आहौ प्रभूतमादिभ्यः" वार्त्ति० ठक् । प्राभूतिक प्रचुरवक्तरि त्रि० । द्वितीयान्तात् प्रभूतशब्दात् आहौ परे धातुनिर्देशे इक ठक् । एवम् आदिपदात् पर्याप्तमाह पार्य्याप्तिक तद्वक्तरि त्रि०।

**प्रभूति** स्त्री प्र+भू–भावे क्तिन् नित्त्वकारादिप्रत्यये परे प्रस्य गतेः प्रकृतिस्वरः । प्रकर्षेण भवने ।

**प्रभुवन्** त्रि० प्र+भू–क्वनिप् । सामर्थ्ययुते स्त्रियां ङीप् "वनोर च" पा० नस्य रः । प्रभूवरी यजु०२३।२१

**प्रभूष्णु** त्रि० प्र+भू–ग्स्नु । १प्रभावशीले २शक्ते समर्थे

**प्रभृति** अव्य० प्र+भृ-क्तिच् । तदारभ्येत्यर्थे । बहु०समासे उत्तरपदस्थः । तदादिके त्रि० अमरः ।

**प्रभृथ** त्रि० प्र+भृ–बा० थक् । प्रकृष्टभरणे ऋ०१।१५२।१२

**प्रभेद** पु० प्रभिद्यतेऽनेन प्र+भिद–घञ् । १प्रकारे विशेषे । भावे घञ् । २भेदे अमरः ।

**प्रभेश्वर** पु० तीर्थभेदे शिवपु० ।

**प्रभ्रंशथु** पु० "प्रभ्रश्यते नासिकयैव यस्य सान्द्रो विदग्धो लवणः कफस्तु । प्राक्सञ्चितो मूर्ध्नि च पित्ततप्तं प्रभ्रंशथुं व्याधिमुदाहरन्ति" सुश्रुतोक्ते नासागतरोगभेदे ।

**प्रभ्रष्ट** त्रि० प्र+भ्रन्श–क्त । भ्रंशयुक्ते संज्ञायां कन् । शिखावलम्बिमाल्ये चूडातोलम्बमानमाल्ये अमरः ।

**प्रमगन्द** पु० दैशुण्यादिलक्षणवद्धियुतोऽर्थो मामेव गमिष्यतीति बुद्ध्या परेषामर्थं ददातीति मगन्दो वार्द्धुषिकः निरु० प्रगतो मगन्दं कारणतया अत्या०स०। वार्द्धुषिकपुत्रे ऋ० ३।५३।१४ भा० ।

**प्रमण(न)स्** त्रि० प्रकृष्टं मनोऽस्य संज्ञात्वे णत्वम् अन्यत्राणत्वम् । १हर्षयुते अमरः । २सुमनस्के च ।

**प्रमति** पु० प्रतीचीश्वरसुनयन्वपस्य पुरोहिते कश्यपवंश्ये १ऋषिभेदे मार्क०पु०११८अ०। २च्यवनर्षेः पुत्रभेदे भा०आ० ५अ० । रुरुसमदर्षिवंश्ये वागिन्द्रर्षेः ३पुत्रे ऋषिभेदे भा०अनु०३०अ०। रुगस्य पुत्रे ४नृपभेदे। तदंश्ये वत्सप्रीतेः ५पुत्रे नृपभेदे भाग० ६।२।१६। ६प्रकृष्टमतियुक्ते त्रि० ।

**प्रमत्त** त्रि० प्र+मद–क्त । १अनवधानतायुक्ते प्रमादयुक्ते कर्त्तव्येऽकर्त्तव्यताज्ञानेन अकर्त्तव्ये वा कर्त्तव्यताधिया तत्रावधानशून्ये "मत्तं प्रमत्तमुन्मत्तं सुप्तं बालं स्त्रियं

जड़म् । प्रपन्नं विरथं भीतं न रिपुं हन्ति धर्मवित्” भाग० १।७अ० “मत्तं मद्यादिना, प्रमत्तमनवहितम् उन्मत्तं महवातादिना जड़म् अनुद्यमम् । प्रपन्नं शरणागतम्, विरथं भग्नरथम्” श्रीधरस्वामी । “सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति” मनुः । “सन्ध्यापूजाविहीनश्च प्रमत्तः परिकीर्त्तितः” ब्रह्मवै०पु० ७अ० उक्ते २सन्ध्यादिहीने च ।

**प्रमत्तगीत** न० प्रमत्तेन गीतम् तत० “इत्यम्भूतेन कृतमिति च” पा० क्तान्तमुत्तरपदमन्तोदात्तम् । प्रमत्तेन गीते ।

**प्रमथ** पु० प्रमथ्नाति प्र+मथ–अच् । १धृतराष्ट्रपुत्रभेदे भा० आ० ११७अ० । २घोटके ३शिवपारिषदभेदे च शब्दरत्ना० तत्स्वरूपसंख्यादि यथा

“नानारूपधरा ये वै जटाचन्द्रार्द्धमण्डिताः । ते सर्वे सकलैश्वर्य्ययुक्ता ध्यानपरायणाः । योगिनो मदमात्सर्य्यदम्भाहङ्कारवर्जिताः । क्षीणपापा महाभागाः शम्भोः प्रीतिकराः पराः । न ते परिग्रहं रामं काङ्क्षन्ति च कदाचन । संसारविमुखाः सर्वे यतयो योगतत्पराः । ध्यानावस्थं महादेवं परिवार्य्य धृतव्रताः । कृत्वा परिषदं रम्यां तिष्ठन्ति विगतक्लमाः । यदैव परमं ज्योतिः चिन्तयत्यम्बिकापतिः । तदैव ते पारिषदाः सर्वे संवेष्टयन्ति तम् । ते षोड़श समाख्याताः कोटयो वै धृतव्रताः । सिंहव्याघ्रादिसारूप्या अणिमादिसमायुताः । अपरे कामिनः शम्भोः सुन्दरा रूचिराः स्मृताः । विचित्ररूपाभरणा जटाचन्द्रार्द्धमण्डिताः । हरस्य तुल्याः रूपेण विशदा वृषभध्वजाः । उमासदृशरूपाभिः प्रमदाभिः समागताः । विचित्रमाल्याभरणा दिव्यस्रग्गन्धभूषणाः । उमासहायं क्रीड़न्तमनुगच्छन्ति भूषिताः । शृङ्गारवेशाभरणा अष्टौ ते कोटयो गणाः । अर्द्धनारीश्वराश्चान्ये ह्यर्द्धनारीश्वरं हरम् । अनुयान्ति महाभागास्तुल्यरूपा हरस्य ये । उमासहायो हि यदा रमते स सुखं हरः । अर्द्धनारीशरीरास्तु द्वारपाला भवन्ति ते । आकाशमार्गे गच्छन्तमनुगच्छन्ति नित्यशः । ध्यानस्थं परिचर्य्यन्ति बलिकादिभिरीश्वरम् । नानाशस्त्रधराः शम्भोर्गणास्तु प्रमथाः स्मृताः । प्रमथ्नन्ति च युद्धेषु युध्यमानान्महाबलान् : ते वै महाबलाः शूराः संख्याता बहुकोटयः । अपरे गायनास्तालमृदङ्गपणववादिभिः । वल्गन्ति वाद्यं कुर्वन्तो गायन्ति मधुरस्वरम् । नानारूपधरास्ते वै संख्यया कोटयस्त्रिकाः । सततं चानुगच्छन्ति विचरन्तं महेश्वरम् । सर्वे मायाविनः शूराः सर्वे शास्त्रार्थपारगाः । सर्वे सर्वज्ञ सर्वज्ञाः सर्वे सर्वत्रगाः सदा । ब्रह्मलोकात् सर्वभुवनं गत्वाऽऽयान्ति पुनःपुनः । अणिमाद्यष्टकैश्वर्य्ययुक्तास्ते वै महाबलाः । अपरे रुद्रनामानो जटाचन्द्रार्द्धमण्डिताः । देवेन्द्रस्य नियोगेन वर्त्तन्ते त्रिदिवे सदा । तेषां संख्या चैककोटिस्ते सर्वे बलवत्तमाः । कुर्वन्ति हि सदा सेवां हरस्य सततं गणाः । विध्वंसयन्ति पापिष्ठान् धर्मिष्ठान् पालयन्ति च । अनुगृह्णन्ति सततं धृतपाशुपतव्रतान् । विघ्नांश्च सततं घ्नन्ति योगिनां प्रयतात्मनाम् । षट्त्रिंशत् कोटयश्चैते हरस्य सकला गणाः” कालिकापु० २६अ० । तेषामुत्पत्तिकथा तत्रैवाध्याये दृश्या । ४हरीतक्यां स्त्री मेदि० ।

**प्रमथन** न० प्र+मथ–भावे ल्युट् । १वधे २क्लेशने ३विलोड़ने च अमरः ।

**प्रमथाधिप** पु० ६त० । शिवे अमरः प्रमथपत्यादयोऽप्यत्र ।

**प्रमथित** न० प्रकर्षेण मथितम् । १निर्जलतक्रे राजनि० । २प्रकर्षेण मथिते त्रि० ।

**प्रमद** पु० प्र+मद–अप् । १हर्षे अमरः । प्रमाद्यत्यनेन करणे अप् । २धुस्तूरफले न० शब्दच० । कर्त्तरि अच् । ३प्रमत्ते त्रि० मेदि० । ४दैत्यभेदे पु० हरिवं० ३अ० । तृतीयमन्वन्तरे वाशिष्ठे ५सप्तर्षिभेदे पु० ।

**प्रमदक** पु० “प्रमदको योऽयमेव लोकोऽस्ति न परः” इति प्रेषणरिति निरु० ६।२२ उक्ते परलोकाभाववादिनि नास्तिकभेदे ।

**प्रमदकानन** न० प्रमद्यतेऽनेन प्र+मद-करणे घञ् । प्रा० स० ६त० “ह्रस्वापोः संज्ञाच्छन्दसोः” पा० ह्रस्वो वा । प्रमदावने राज्ञामन्तःपुरोचिते उद्याने भरत. प्रमदावनादयोऽप्यत्र अमरः ।

**प्रमदा** स्त्री प्रमाद्यत्यनया प्र+मद–करणे अप् । १उत्तमयोषिति अमरः । “नजभजजा गुरुश्च भवति प्रमदा” वृ० र० उक्ते एकादशाक्षरपादके २वर्णवृत्तभेदे ।

**प्रमदाकानन** न० प्रमदोचितं काननं वनं शा०त० १राज्ञामन्तःपुरोचितवने भरतः । २प्रमदावन तत्रार्थे शब्दरत्ना० ।

**प्रमद्वरा** स्त्री शुनकर्षिमातरि रुरोर्भार्य्यायां भा० आ० ८अ० ।

**प्रमन्थु** पु० प्रियव्रतवंश्ये वीरव्रतस्य भोजायां भार्य्यायां जाते पुत्रे नृपभेदे भाग० ५।१५।१५

**प्रमय** पु० प्र+मी-वधे-भावे अच् । वधे हेमच० ।

**प्रमयु** त्रि० प्र+मी--वधे कर्त्तरि उन् । हिंसके अथ० ८।१।१६।

**प्रमर्द्दन** त्रि० प्रमृद्नाति+प्र+मृद-ल्यु । १प्रकर्षेण मर्द्दके २दैत्यभेदे पु० हरिवं० १६४अ० । ३विष्णौ पु० "लोहिताक्षः प्रमर्द्दनः" विष्णुसं० । तत्र प्रतर्द्दन इति पाठान्तरं तत्रार्थे "प्रलये सर्वभूतानां नाशकत्वात्" भाष्योक्तेस्तस्य तथात्वम् । "तृषित ! महातृषित ! प्रमर्द्दन" भा०शा० २४अ० विष्णुस्तुतौ ।

**प्रमा** स्त्री प्र+मा—भावे अङ् । १यथार्थज्ञाने भ्रमभिन्ने ज्ञाने तल्लक्षणं तदुत्पत्तौ गुणाश्च भाषा० उक्ता यथा

"दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् । प्रत्यक्षे तु विशेष्येण विशेषणवता समम् । सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ पुनः । पक्षे साध्यविशिष्टे च परामर्शो गुणो भवेत् । शाब्दबोधे योग्यतायास्तात्पर्यस्याथ वा प्रमा । गुणः स्याद्भ्रमभिन्नन्तु ज्ञानमत्रोच्यते प्रमा । अथ वा तत्प्रकारं यत् ज्ञानं तद्विशेष्यकम्" भाषा० । दोषशब्दे ३७६६पृ० अवकारस्य दर्शनम् तथा च तद्वति तत्प्रकारकज्ञानत्वं प्रमात्वं प्रामाण्यापरपर्य्यायम् तच्च मतभेदेन स्वतोग्राह्यं परतोग्राह्यञ्च तच्च परतोग्राह्यशब्दे ४२२४पृ० उक्तम् । तस्य विस्तरस्त्वत्रोच्यते । तत्र न्यायमते "प्रमात्वं न स्वतोग्राह्यं संशयानुपपत्तितः" भाषा० व्याकृतञ्च सि०मु० यथा "मीमांसका हि प्रमात्वं स्वतोग्राह्यमिति वदन्ति । तत्र गुरूणां मते ज्ञानस्य स्वप्रकाशरूपत्वात् तज्ज्ञानप्रामाण्यं तेनैव गृह्यते इति । भट्टानां मते तु ज्ञानमतीन्द्रियम् । ज्ञानजन्या ज्ञातता प्रत्यक्षा । तया च ज्ञानमनुमीयते । मुरारिमिश्राणां मतेऽनुव्यवसायेन ज्ञानं गृह्यते । सर्वेषामपि मते तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रामाण्यं गृह्यते । विषयनिरूप्यं हि ज्ञानम् । अतो ज्ञानवित्तिवेद्यो विषयः । तन्मतं दूषयति । न स्वतोग्राह्यमिति । संशयेति । यदि ज्ञानप्रामाण्यं स्वतोग्राह्यं स्यात् तदाऽभ्यासदशोत्पन्नज्ञाने तत्संशयो न स्यात् । तत्र हि यदि ज्ञानं ज्ञातं तदा प्रामाण्यं ज्ञातमेवेति कथं संशयः । यदि तु ज्ञानं न ज्ञातं तदा धर्म्मिज्ञानाभावात् कथं संशयः । तस्माज्ज्ञानप्रामाण्यमनुमेयम् । तथा हि इदं ज्ञानं प्रमा संवादिप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथाऽप्रमा । इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा गन्धवति पृथिवीत्वप्रकारकज्ञानत्वात् । एवम् इदं जलज्ञानं प्रमा स्नेहवति जलत्वप्रकारकज्ञानत्वात् । न च हेतुज्ञानं कथं जातमिति वाच्यम् । पृथिवीत्वप्रकारकत्वस्य स्वतोग्राह्यत्वात् तत्र गन्धवद्विशेष्यकत्वस्यापि सुग्रहत्वात् । तत्प्रकारकत्वावच्छिन्नतद्विशेष्यकत्वं परं न गृह्यते संशयानुरोधात् । न च प्रमात्वस्य साध्यस्य प्रसिद्धिः कथमिति वाच्यम् इदंज्ञानप्रमात्वस्य स्वतोग्राह्यत्वात् । न च प्रकारभेदेन प्रामाण्यभेदात् घटत्ववति घटत्वप्रकारादेः कथं प्रसिद्धिरिति वाच्यम् घटत्वप्रकारकत्वस्य स्वविशेष्यकत्वस्य च स्वतोग्राह्यत्वात् । घटस्य च पूर्व्वमुपस्थितत्वात् घटविशेष्यकं घटत्वप्रकारकमिति ज्ञाने प्रामाण्यस्य बाधकाभावः । व्यवसायपरन्तु प्रामाण्यं न गृह्यते । तत्र संशयसामग्रीसत्त्वे संशयस्यैवोपपत्तेः । किन्त्वभ्यासदशायां ततोयानुव्यवसायादिना प्रामाण्यस्य स्वत एव ग्रहसम्भवात् प्रथमानुव्यवसायपरं न तद्ग्राहकत्वमिति कल्प्यते संशयानुरोधात् । अथ प्रामाण्यानुमितौ प्रामाण्यग्रहे न तस्य विषयनिश्चयरूपत्वार्थं तत्र प्रामाण्यग्रहो वाच्यः सोऽप्यनुमित्यन्तरेणेति फलमुखी कारणमुखी वाऽनवस्थेति चेन्न अगृहीतप्रामाण्यग्रहकस्यैव निश्चयरूपत्वात् । यत्र च प्रामाण्यसंशयस्तत्रैव परं प्रामाण्यानुमितेरपेक्षया यावदावश्यं प्रामाण्यानुमितिरिष्यत एव सर्वत्र तु न संशयः क्वचित् कोट्यनुपस्थितेः क्वचिद्विशेषदर्शनादितः क्वचिद्विषयान्तरसञ्चारादिति संक्षेपः । ननु सर्वेषां ज्ञानानां यथार्थत्वात् प्रमालक्षणे तद्विशेष्यकत्वं विशेषणं व्यर्थम् । न च रङ्गे रजतार्थिनः प्रवृत्तिर्भ्रमजन्या न स्यात् तव मते भ्रमस्याभावादिति वाच्यम् । तत्र हि दोषाधीनस्य पुरोवर्त्तिनि स्वतन्त्रोपस्थितरजतभेदाग्रहस्य हेतुत्वात् । सत्यरजतस्थले तु विशिष्टज्ञानस्य सत्त्वात् तदेव कारणम् । अस्तु वा तत्रापि भेदाग्रह एव कारणमिति । न चाऽन्यथाख्यातिः सम्भवति रजतप्रत्यक्षकारणस्य रजतसन्निकर्षस्याभावात् रङ्गे रजतबुद्धेरनुपपत्तेरिति चेन्न सत्यरजतस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतायाः क्लृप्तत्वात् अन्यत्रापि तत्कल्पनात् । न च संवादिप्रवृत्तौ तु भेदाग्रहः कारणमिति वाच्यम् लाघवात् प्रवृत्तिमात्रे तस्य हेतुत्वकल्पनात् । इत्थञ्च रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणप्रत्यासत्तिकल्पनेऽपि न क्षतिः । फलमुखगौरवस्यादोषत्वात् । किञ्च यत्र रङ्गरजतयोरिमे रजते इति ज्ञानं जातं न कारणबाधोऽपि । अपि च यत्र रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानं तत्रोभयत्र युगपत्प्रवृत्तिनिवृत्ती स्याताम् । रङ्गे रङ्ग-

भेदग्रहे रजते रजतभेदग्रहेऽन्यथाख्यातिभयात् । त्वन्मते रङ्गे रङ्गभेदाग्रहस्य रजते रजतभेदाग्रहस्य च सत्त्वात् किञ्चानुमितिं प्रति भेदाग्रहस्य हेतुत्वे जलह्रदे वह्नि-व्याप्यधूमवद्भेदाग्रहाद् अनुमितिर्निर्बाधा । यदि च विशिष्टज्ञानं कारणं तदाऽयोगोलके वह्निव्याप्यधूमज्ञान-मनुमित्यनुरोधादापतितम् । इत्थम् अन्यथाख्यातौ प्रत्य-क्षमेव प्रमाणम् । रङ्गं रजततया जानामीत्यनुभवा-दिति सङ्क्षेपः" ।

वेदान्तिमते तस्य स्वतोग्राह्यता वेदान्तपरिभाषायां व्यवस्था-पिता यथा "एवमुक्तानां प्रमाणानां प्रामाण्यं स्वतएव उत्पद्यते ज्ञायते च तथा हि स्मृत्यनुभवसाधारणं संवा-दादिप्रवृत्त्यनुकूलं तद्वति तत्प्रकारकज्ञानत्वं प्रामाण्यं तच्च ज्ञानसामान्यसामग्रीप्रयोज्यं न त्वधिकं गुणमपेक्षते प्रमामात्रेऽनुगतगुणाभावात् । नापि प्रत्यक्षप्रमायां भू-योऽवयवेन्द्रियसन्निकर्षः, रूपादिप्रत्यक्षे आत्मप्रत्यक्षे च तदभावात् सत्यपि तस्मिन् पीतः शङ्ख इति प्रत्यक्षस्य भ्रमत्वाच्च । अतएव न सल्लिङ्गपरामर्शादिकमपि अनुमि-त्यादिप्रमायां गुणः असल्लिङ्गपरामर्शादिस्थलेऽपि विषया-बाधेनानुमित्यादेः प्रमात्वात् । न चैवमप्रमापि प्रमा स्यात् ज्ञानसामान्यसामग्र्यविशेषादिति वाच्यं दोषाभावस्यापि हेतुत्वाङ्गीकारात् । न चैवं परतस्त्वम् "आगन्तुकभावका-रणापेक्षायामेव परतस्त्वात्" ज्ञायते च प्रामाण्यं स्वतः, स्वतोग्राह्यत्वञ्च दोषाभावे सति यावत्स्वाश्रयग्राहकसा-मग्रीग्राह्यत्वम् । स्वाश्रयो वृत्तिज्ञानं तद्ग्राहकं सा-क्षिज्ञानं तेनापि वृत्तिज्ञाने गृह्यमाणे तद्गतं प्रामाण्य-मपि गृह्यते । न चैवं प्रामाण्यसंशयानुपपत्तिः तत्र संशयानुरोधेन दोषस्यापि सत्त्वेन दोषाभावघटितस्वा-श्रयग्राहकाभावेन तत्र प्रामाण्यस्यैवाग्रहात् । यद्वा यावत्स्वाश्रयग्राहकग्राह्ययोग्यत्वं स्वतस्त्वं संशयस्थले प्रामाण्यस्योक्तयोग्यतासत्त्वेऽपि दोषवशेनाग्रहात् न संशयानुपपत्तिः । अप्रामाण्यन्तु न ज्ञानसामान्यसामग्री प्रयोज्यं प्रमायामप्यप्रामाण्यापत्तेः किन्तु दोषप्रयोज्यं नाप्यप्रामाण्यं यावत्स्वाश्रयग्राहकग्राह्यम् अप्रामाण्य-घटकतदभाववत्त्वादेर्वृत्तिज्ञानानुपनीतत्वेन साक्षिणा ग्रहीतुमशक्यत्वात् किन्तु विसंवादिप्रवृत्त्यादिलिङ्गकानु-मित्यादिविषय इति परत एवाप्रामाण्यमुत्पद्यते ज्ञायते चेति" । अधिकं प्रमाणशब्दे दृश्यम् ।

**प्रमाण** न० प्र+मा–भावे करणे वा ल्युट् । १प्रमारूपज्ञाने २विष्णौ "प्रमाणं प्राणनिलयः" विष्णु स० । प्रमाणं "प्रज्ञानं ब्रह्मेति" श्रुतेस्तस्य ज्ञानरूपत्वात् तथात्वम् "प्र-माणं बीजमव्ययम्" विष्णु स० प्रत्यक्षादिप्रमाणरूपत्वात्तस्य तथात्वं व्युत्पत्तिद्वययोगात् नामद्वयम् । ३सत्यवादिनि ४इयत्तायां परिच्छेदे ५हेतौ ६प्रमातरि च मेदि० । ७प्रमितिकरणे चतुरादौ "यस्येप्साजिहासाप्रयुक्तस्य प्रवृत्तिः स प्रमाता स येनार्थं प्रमिणोति तत्प्रमाणम्" वात्स्या० "तच्च साधनाश्रयव्यतिरिक्तत्वे सति प्रमाव्याप्तं प्रमाणमिति" सर्वद०अक्षपाददर्शने । "तद्वति तत्प्रकार-कत्वरूपप्रकर्षविशिष्टज्ञानकरणत्वम्" गौ०सू० । "अनुभव-त्वव्याप्यजात्यवच्छिन्नप्रमावृत्तिकार्य्यतानिरूपितकारणता-शालित्वे सति व्यापारवत्त्वम् तत्त्वम्" तर्कप्रकाशे शिति-कण्ठः । प्रमाणत्वं च अनधिगतार्थकानुभवकारणत्वम् । तच्च अगृहीतग्राहीतरानुभवकारणत्वम् । स्वसमानाधि-करणस्वाव्यवहितपूर्ववर्त्तिस्वसमानाकारनिश्चयविषयविषय-केतरतद्विशेष्यकतत्प्रकारकानुभवकारणत्वमिति या-वत् न्यायकुसुमाञ्जलिटी० । "यज्जातीयविशिष्टज्ञानत्वा-वच्छेदेन समानाकारनिश्चयोत्तरत्वं तज्जातीयान्ययथा-र्थज्ञानस्यैवागृहीतग्राहित्वेन प्रमात्वात् अतएव धारा-वाहिप्रत्यक्षव्यक्तीनां समानाकारग्रहोत्तरवर्त्तित्वेऽपि न तासां प्रमात्वहानिः हानिस्तु समानाकारानुभवसमु-त्थानां स्मृतीनामिति" शब्द०प्र० । न्यायनये चत्वारि-प्रमाणानि । प्रत्यक्षम् । अनुमानम् । उपमानम् । शब्दः गौ०सू० प्रकारान्तरेण प्रमाणं द्विविधम् "शब्दोपजीवि शब्दानुपजीवि" कुसुमाञ्जलिटी० । प्रत्यक्षमेकमेव प्रमा-णमिति चार्वाकाः सङ्गिरन्ते । प्रत्यक्षमनुमानं चेति द्वे प्रमाणे इति वैशेषिका बौद्धा आर्हताश्च । प्रत्यक्षं शब्दश्चेति द्वे प्रमाणे इति श्रीमदानन्दतीर्थभगवत्पादाचार्य्याः । प्र-त्यक्षमनुमानमाप्तवचनमिति त्रीणि प्रमाणानीति सांख्या वेदान्तिनश्च । प्रत्यक्षानुमानोपमानानि त्रीणीति नैया-यिकैकदेशिनः । प्रत्यक्षानुमानोपमानशब्दा अर्थापत्तिश्चेति पञ्च प्रमाणानीति प्राभाकराः । प्रत्यक्षानुमानोपमानशब्दा अर्थापत्तिरनुपलब्धिश्चेति षट्प्रमाणानीत्यपरे भाट्टावेदा-न्तिभेदाश्च । सम्भवैतिह्ये अप्यतिरिक्ते प्रमाणे इति पौ-राणिकाः । चेष्टाप्यतिरिक्तं प्रमाणमिति तान्त्रिकाः । तत्र सांख्यपातञ्जलवेदान्तिमते अन्तःकरणवृत्तीनां पौरु-षेयचित्तवृत्तिप्रकाशरूपबोधे करणत्वम् अन्तःकरण-वृत्तिषु च ज्ञानत्वारोपेण तत्करणत्वमिन्द्रियाणामिति

भेदः । यथोक्तं सां॰प्र॰भा॰ "प्रमाता चेतनः शुद्धः प्रमाणं वृत्तिरेव नः । प्रमाऽर्थाकारवृत्तीनां चेतने प्रतिबिम्बनम् । प्रतिबिम्बितवृत्तीनां विषयो मेव उच्यते । साक्षाद्दर्शनरूपं च साक्षित्वं वक्ष्यति स्वयम् । अतः स्यात् कारणाभावाद्दृशेः साक्ष्येव चेतनः । विष्ण्वादेः सर्वसाक्षित्वं मोच 'लिङ्गाद्यभावतः" । "प्रमाणविपर्ययविकल्पनिद्राः स्मृतयः" पात॰सू॰ "इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात् तद्विषयसामान्यविशेषात्मनोऽर्थस्य विशेषावधारणं प्रधाना वृत्तिः प्रत्यक्षं प्रमाणं, फलमविशिष्टः पौरुषेयश्चित्तवृत्तिबोधः" भाष्यम् "अनधिगततत्त्वबोधः पौरुषेयो व्यवहारहेतुः प्रमा तत्करणं प्रमाणम् । ननु पुरुषवर्त्ती बोधः कथं चित्तगतायावृत्तेः फलं न हि खदिरगोचरव्यापारेण परशुना पलाशे छिदा क्रियते इत्यत आह अविशिष्ट इति । न हि पुरुषगतो बोधो जन्यते अपि तु चैतन्यमेव बुद्धिदर्पणप्रतिबिम्बितं बुद्धिवृत्त्या अर्थाकारया तदाकारतामापाद्यमानं फलम् । तत्र तथाभूतं बुद्धेरविशिष्टं बुद्ध्यात्मिका वृत्तिः वृत्तिश्च बुद्ध्यात्मिकेति सामानाधिकरण्याद्युक्तः प्रमाणफलभाव इत्यर्थः" विव॰। प्रमाणस्य भावः ष्यञ् प्रामाण्य न॰ तल् प्रमाणता स्त्री त्व प्रमाणत्व न॰ प्रमाणभावे प्रमितिकरणत्वे प्रमात्वे च । उद्देश्यविधेयभावेनान्वयस्थले प्रमाणशब्दस्य प्रमाकरणपरत्वे कचिदेकवचनता यथा "वेदाः प्रमाणं स्मृतयः प्रमाणम्" इत्यादौ । कचित्तु बहुवचनता यथा "प्रत्यक्षानुमानोपमानागमाः प्रमाणानि" गौ॰सू॰। तत्र पूर्वत्र शास्त्रत्वरूपप्रमात्वजातेरेकत्वात् एकवचनत्वम् । उत्तरत्र प्रत्यक्षत्वादिजातिचतुष्टयकरणानां बहुत्वात् बहुवचनता इति प्रमाणव्युत्पादे गदाधरेण प्रपञ्चितम् तत्र दृश्यम् । क्वचान्तत्वात् क्लीबतैवास्य । कचित्तु विशेषपरत्वे स्त्रीत्वपरता यथा प्रमाणी । स्त्री प्रमाणी यस्य ब॰व्री॰ "अप् पूरणीप्रमाण्योः" पा॰अप्समा॰ न कप् । भीप्रमाण इत्येव सि॰कौ॰ । ८परिमाणभेदे च । "प्रमाणे मात्रजद्वयसज्दघ्नचः" पा॰ वृत्तौ दृश्यम् ।

**प्रमाणबाधितार्थक** पु॰ प्रमाणेन बाधितोऽर्थो यस्य कप् । तर्कभेदे तर्कशब्दे ३२५५ पृ॰ दृश्यम् ।

**प्रमाणिक** त्रि॰ प्रमाणं विशिष्टहेतुतयाऽस्त्यस्य ठन् । प्रमाणसिद्धे "प्रमाणिका जरौ लगौ" वृ॰र॰ उक्ते अष्टाक्षरपादके २छन्दोभेदे स्त्री । ३परिमाणभेदयुते मध्यमाङ्गुलकूर्परान्तरमितपरिमाणयुते हस्ते हेमच॰ ।

**प्रमातामह** पु॰ प्रगतो मातामहं कार्यत्वेन अत्या॰स॰। १मातामहस्य पितरि अमरः । तस्य पत्नी ङीप् । प्रमातामही २तत्पत्न्यां स्त्री ।

**प्रमातृ** त्रि॰ प्रमिनोति प्र+मि–तृच् । प्रमाज्ञानकर्त्तरि । न्यायनये "यस्य प्रमाजिहासाप्रयुक्तस्य प्रवृत्तिः स प्रमाता" वात्स्या॰। सांख्यमते शुद्धचेतनो वृत्तिसाक्षी चः । प्रमाणशब्दे तद्वाक्यम् दृश्यम् । वेदान्तिमते "मेयातीतो विशुद्धो मुनिभिरभिहितो मोहसंक्रान्तमूर्त्तिः साक्षी संवित् प्रमा तत्प्रतिफलितवपुर्मीयतेऽसौ प्रमाता" इत्युक्तदिशा अन्तःकरणवृत्तिप्रतिबिम्बितं तदवच्छिन्नं वा चैतन्यमेव प्रमाता ।

**प्रमाथ** पु॰प्र+मथ-भावे घञ् । १बलाद् हरणे २प्रपीडने च । बा॰ कर्त्तरि ण । ३कुमारानुचरभेदे भा॰ श॰ ४६अ॰। स्वार्थे अण् । ४शिवपारिषदप्रमथगणे पु॰हरिवं॰१८३अ॰ ५धृतराष्ट्रपुत्रभेदे पु॰ भा॰द्रो॰ १५७अ॰ ।

**प्रमाथिन्** त्रि॰ प्रमथ्नाति प्र+मथ–णिनि । १बलाद् हारके २पीडके च । "इन्द्रियाणि प्रमाथीनि" गीता । स्त्रियां ङीप् । सा च ३अप्सरोभेदे भा॰आ॰ १२४अ॰। ४राक्षसभेदे पु॰ भा॰ व॰ २८४अ॰

**प्रमाद** पु॰ प्र+मद्–घञ् । १कर्त्तव्ये अकर्त्तव्यत्वधिया ततो निवृत्तौ अकर्त्तव्ये कर्त्तव्यत्वधिया तत्र प्रवृत्तौ वा अनवधानतायाम् अमरः । अनवधानताशब्दे १५२पृ॰दृश्यम् । स च तमोगुणकार्यः तमसशब्दे ३२१५ पृ॰ दृश्यम् । तस्य अमोहरूपत्वात्तत्कार्यत्वं बोध्यम् ।

**प्रमादवत्** पु॰ प्रमादोऽस्त्यस्य मतुप् मस्य वः । १प्रमादयुते २असमीक्ष्यकारिणि जटा॰ ।

**प्रमादिन्** त्रि॰ प्रमादः नित्ययोगे इनि न तु अत्त्रर्थे एकाचरत्वात् तस्य निषेधात् । नित्यप्रमादयुक्ते "एकः प्रमादी स कथं न हन्यते" श्रीधरधृतवाक्यम् ।

**प्रमापण** न॰ प्र+मीञ्–हिंसायां स्वार्थे णिच्–आत्वे पुक् ल्युट् । मारणे अमरः ।

**प्रमायुक** त्रि॰प्र +मी–ताच्छील्ये उकञ् । प्रकरणयोगे "न चास्य प्रियं प्रमायुकं भवति" छ॰उ॰। "प्रमायुकं मरणशीलम्" भा॰ । [च जटा॰ । २परिमिते ।

**प्रमित** त्रि॰ प्र+मि–मी वा क्त । १ज्ञाते २प्रत्यक्षावधारिते

**प्रमिताक्षरा** स्त्री प्रमितानि परिमितानि अक्षराणि यत्राम् । सिद्धान्तशिरोमणिव्याख्यानरूपायां टीकायां वृहत्तं चिन्तामणिटीकाभेदे च "प्रमिताक्षरा सजससै-

वदिता" वृ०र० उक्ते द्वादशाक्षरपादके वर्णवृत्तभेदे ।

**प्रमिति** स्त्री प्र+मि–मा–वा क्तिन् । प्रमाज्ञाने अमरः ।

**प्रमीढ** त्रि० प्र+मिह–क्त । १मूत्रिते २घने च मेदि० ।

**प्रमीत** त्रि० प्र+मीञ्-हिंसायां क्त । १मृते "प्रमीतौ पितरौ यस्य" इति स्मृतिः । २यज्ञार्थे हतपशौ पु० अमरः ।

**प्रमीला** स्त्री प्र+मील–भावे अ । तन्द्रायाम् अमरः ।

**प्रमुख** न० प्रकृष्टं मुखमारम्भः । १तदादित्वे त्रिका० प्रकृष्टं मुखमस्य । २प्रथमे ३प्रधाने अमरः ४मान्ये ५श्रेष्ठे च त्रि० मेदि० ६पुन्नागवृक्षे पु० शब्दरत्ना० ७समूहे पु० शब्दच० । बहु० । उत्तरपदस्थः । तदादिके त्रि० ।

**प्रमुच** पु० १ऋषिभेदे भा०शा० २०८अ० । प्रमुच्यति प्र+मुच–क । २प्रकर्षेण मोक्तरि त्रि० ।

**प्रमुचु** ऋषिभेदे भा०अनु० १५०अ० ।

**प्रमुद्** त्रि० प्रकृष्टा मुद् यस्य । १हृष्टे २हर्षयुक्ते अमरः । ३देवभेदे पु० यजु० १०।१०। भा०भ०। ४प्रकृष्टहर्षे स्त्री ।

**प्रमुदित** त्रि०प्र+मुद–कर्त्तरि क्त ।।१हृष्टे २हर्षयुक्ते अमरः ।

**प्रमुदितवदना** स्त्री "प्रमुदितवदना भवेन्नौ च रौ" वृ०र० उक्ते द्वादशाक्षरपादके छन्दोभेदे । [युक्ते स्थाने

**प्रमृग** अव्य० प्रकृष्टा मृगा यत्र तिष्ठ० अव्ययी०। प्रकृष्टमृग-

**प्रमृत** न० प्रकृष्टं मृतं मार्षिकीर्षितं यत्र । मनूक्ते कर्षणरूपे जीवनोपायभेदे "मृतन्तु याचितं भैक्ष्यं प्रमृतं कर्षणं स्मृतम्" मनुः । "कर्षणस्य भूमिगतप्रचुरप्राणिमरणनिमित्तत्वात् बहुदुःखफलकं प्रकर्षेण मृतमिव प्रमृतम्" कुल्लू० ।

**प्रमेय** त्रि० प्र+मा–कर्मणि यत् । १प्रमाज्ञानविषये पदार्थे २परिच्छेद्ये ३अवधार्ये च । तत्र वेदान्ते शुद्धचैतन्यं प्रमेयम् अन्यस्याध्यासमूलकत्वेन व्यवहारिकप्रमाज्ञानविषयत्वेऽपि न परमार्थप्रमेयत्वम् । न्यायमते "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" गौ०सू० उक्ताः आत्मादयः । प्रमेयत्वं च केवलान्वयि सर्वेषामीश्वरज्ञानरूपप्रमाविषयत्वात् ।

**प्रमेह** पु० प्र+मिह–आधारे करणे वा घञ् । रोगभेदे तल्लक्षणभेदादिकं भावप्र० उक्तं यथा

"आस्यासुखं स्वप्नसुखं दधीनि ग्राम्यौदकानूपरसाः पयांसि । नवान्नपानं गुडवैकृतं च प्रमेहहेतुः कफकृच्च सर्वम् । मेदश्च मांसञ्च शरीरजञ्च क्लेदं कफो वस्तिगतं प्रदूष्य । करोति मेहान् समुदीर्णमुष्णैस्तानेव पित्तं परिदूष्य चापि । क्षीणेषु दोषेष्ववकृष्य धातून् संदूष्य मेहान् कुरुतेऽनिलश्च । साध्याः कफोत्था दश पित्तजाः षट् याप्या न साध्याः पवनाच्चतुष्काः । समक्रियत्वाद्विषमक्रियत्वान्महात्ययत्वाच्च यथाक्रमन्ते । कफश्च पित्तं पवनश्च दोषा मेदोऽस्रशुक्राम्बुवसालसीकाः । मज्जारसौजःपिशितञ्च दूष्याः प्रमेहिणां विंशतिरेव मेहाः । दन्तादीनां मलाढ्यत्वं प्राग्रूपं पाणिपादयोः । दाहश्चिक्कणता देहे तृट्स्वाद्वास्यञ्च जायते । सामान्यं लक्षणं तेषां प्रभूताविलमूत्रता । दोषदूष्याविशेषेऽपि तत्संयोगविशेषतः । मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते । अच्छं बहुतरं शीतं निर्गन्धमुदकोपमम् । मेहत्युदकमेहेन किञ्चिच्चाविलपिच्छिलम् । इक्षोरसमिवात्यर्थं मधुरञ्चेक्षुमेहतः । सान्द्री भवेत् पर्युषितं सान्द्रमेहेन मेहति । सुरामेहि सुरातुल्यमुपर्यच्छमधोघनम् । संहृष्टरोमा पिष्टेन पिष्टवद्बहलं सितम् । शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति । मूर्त्ताणून् सिकतामेही सिकतारूपिणो मलान् । शीतमेही सुबहुशो मधुरं भृशशीतलम् । शनैःशनैः शनैर्मेही मन्दं मन्दं प्रमेहति । लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् । गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् । नीलमेहेन नीलाभं कालमेही मसीनिभम् । हारिद्रमेही कटुकं हरिद्रासन्निभं दहत् । विस्रं माञ्जिष्ठमेहेन मञ्जिष्ठासलिलोपमम् । विस्रमुष्णं सलवणं रक्ताभं रक्तमेहिनः । वसामेही वसामिश्रं वसाभं मूत्रयेन्मुहुः । मज्जाभं मज्जमिश्रं वा मज्जमेही मुहुर्मुहुः । कषायं मधुरं रूक्षं क्षौद्रमेहं वदेद् बुधः । हस्ती मत्त इवाजस्रं मूत्रवेगविवर्जितम् । सलसीकं विबद्धञ्च हस्तिमेही प्रमेहति । अविपाकोऽरुचिश्छर्दिर्निद्राकासः सपीनसः । उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् । वस्तिमेहनयोस्तोदो मुष्कावदारणं ज्वरः । दाहस्तृष्णाम्लिकामूर्च्छाविड्भेदः पित्तजन्मनाम् । वातजानामुदावर्त्तकम्पहृद्ग्रहलोलताः । शूलमुन्निद्रता शोषः श्वासः कासश्च जायते । यथोक्तोपद्रवाविष्टमतिप्रस्रुतमेव च । पिडकापीडितं गाढं प्रमेहो हन्ति मानवम् । मूर्च्छाछर्दिज्वरश्वासकासशोषप्रमोहकैः । उपद्रवैरुपेतो यः प्रमेही दुःप्रतिक्रियः । रजः प्रवर्त्तते यस्मात् मासि मासि विशोधयेत् । सर्वान् शरीरदोषांश्च न प्रमेहन्त्यतः स्त्रियः । जातः प्रमेही मधुमेहिनो वा न साध्यरोगः स हि बीजदोषात् । ये चापि केचित्कुलजा विकाराः भवन्ति तांश्च

चापि यदन्यथाध्याम्। सर्वस्य प्रमेहास्तु कालेनाप्रतिकारिणः। मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति च। मधुमेहो मधुनिभो जायते स किल द्विधा। क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथेऽथ वा। आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयन्। क्षीणक्षीणात् क्षणात् पूर्णो भजते कृच्छ्रसाध्यताम्। मधुरं यच्च सर्वेषु प्रायो माध्विव मेहति। सर्वेऽपि मधुमेहाख्यं माधुर्याच्च तनोरतः। शराविकाकच्छपिका जालिनी विनताजजी। मसूरिका सर्षपिका पुत्रिणी सविदारिका। विद्रधिश्चेति पिडकाः प्रमेहोपेक्षया दश"।

तद्रोगनिमित्तकर्मभेद शा० त० उक्तः। कर्मविपाकग्रन्थे १०७६ पृ० दृश्यम्। तत्र मधुमेहस्यैव महारोगभेदरूपता "मधुमेहमनन्दरो" इत्युक्तेः।

**प्रमेहिन्** पु० प्र+मिह–णिनि। प्रमेहरोगयुते।

**प्रमोचनी** स्त्री प्रकर्षेण मुच्यते निस्त्वचीक्रियते भोजनार्थम् मुच–कर्मणि ल्युट् ङीप्। १गोडुम्बायाम् (गोडुक) जटा०। २प्रमोचनसाधने त्रि०। भावे ल्युट्। ३प्रकर्षेण मोचने न०।

**प्रमोद** पु० प्र+मुद–हर्षे भावे घञ्। १हर्षे प्रियलाभनिमित्ते प्रकृष्टहर्षे आनन्दमयस्य ओ७पृ० तैत्ति०उ० भाष्यवाक्यं दृश्यम्। प्रकृष्टो मोदोऽस्य प्रा०ब०। २प्रमोदयुते त्रि० ३नागभेदे पु० भा०आ०५७अ०। ४स्कन्दानुचरभेदे पु० भा०श० ४६अ०। सा०त०कौ० उक्ते ५सुखसिद्धिभेदे "तिस्रश्च मुख्याः सिद्धयः प्रमोदमुदितमोदमानाः"। तत्राध्यात्मिकदुःखविघातस्य मुख्यत्वेन इष्टत्वात् प्रमोदत्वं बोध्यम्। आधिभौतिकदुःखविघातस्य मोदाधारत्वात् मुदितत्वम् आधिदैविकदुःखविघातस्य मोदमानत्वं मोदस्य मानं भानं यस्येति व्युत्पत्त्येति विवेकः।

**प्रमोदन** त्रि० प्रमोदयति प्र+मुद–णिच्–ल्यु। १हर्षकारके २विष्णौ पु० "जितामित्रः प्रमोदनः" विष्णुस०। भावे ल्युट्। ३हर्षसम्पादने न०। [२कुबेरे पु० शब्दमाला।

**प्रमोदित** त्रि० प्रमोदो जातोऽस्य तार० इतच्। १जातप्रमोदे

**प्रमोदिन्** त्रि० प्रमोदयति प्र+मुद–णिच्–णिनि। १प्रहर्षजनके। स्त्रियां ङीप्। सा च २जिङ्गिनीवृक्षे भावप्र०।

**प्रमोहन** न० प्रमुह्यतेऽनेन प्र+मुह–करणे ल्युट्, प्रमोहयति प्र+मुह+णिच्–ल्यु वा। १प्रमोहसाधने प्रमोहकारके २अस्त्रभेदे च यदस्त्रप्रयोगे विपक्षस्य प्रमोहो जायते वृत्तिस्तूक्ते। भा०भी०७७अ०। १प्रमोहकारकमात्रे त्रि०।

**प्रम्लोचन्ती** स्त्री प्रम्लोचति नरं प्रति आत्मानं दर्शयति प्र+म्लुच–शतृ–ङीप्। अप्सरोभेदे यजु० १५।१७

**प्रम्लोचा** स्त्री प्रम्लोचति नरं प्रत्यात्मानं दर्शयति प्र+म्लुच–अच्। अप्सरोभेदे गरुडपु० ६०अ०।

**प्रयज्यु** त्रि० प्र+यज "यजिमनिशुन्धिदसिजनिभ्यो युच्" उणा० युच् निरनुनासिकत्वात् अनादेशो न। अध्वर्यौ उज्ज्व० ऋ० १।१२१।६

**प्रयत** त्रि० प्र+यम–कर्त्तरि क्त। १पवित्रे संयते अमरः। प्र+यत–अच्। २प्रयत्नविशिष्टे त्रि०। प्रपूर्वक यमेर्दानार्थकात् कर्मणि क्त। ३दत्ते च। "प्रयतदक्षिणम्" ऋ० १।३१।१५

**प्रयत्न** पु० प्र+यत–भावे नङ्। प्रयासे। स च न्यायमते त्रिविधः यथा "प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम्। एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिदर्शितम्। चिकीर्षाकृतिसाध्येष्टसाधनत्वमतिस्तथा। उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत्। निवृत्तिस्तु भवेद्द्वेषात् द्विष्टसाधनताधियः। यत्नो जीवनयोनिस्तु सर्वदाऽतीन्द्रियो भवेत्। शरीरे प्राणसञ्चारे कारणं तत्प्रकीर्त्तितम्" भाषा० 'प्रयत्नस्तु क्रियावाप्त्यै व्यापारोऽतित्वरान्वितः' सा०द० उक्ते २फलार्थिभिः प्रारब्धस्य कर्मणोऽवस्थापञ्चकान्तर्गतेऽवस्थाभेदे ततोऽस्त्यर्थे मतुप् मस्य वः। प्रयत्नवत् तद्युक्ते त्रि० त्रिका०। स्त्रियां ङीप्।

**प्रयत्नशैथिल्य** इत०। स्वाभाविकप्रयत्नस्योपरमपूर्वकप्रयत्नभेदे तच्च योगाङ्गासनसिद्धिकारणं यथोक्तं "प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्" पा०सू० "भवतीति शेषः प्रयत्नोपरमात् सिद्ध्यत्यासनं येन नाङ्गमेजयो भवति अनन्ते वा समापन्नं चित्तमासनं निर्वर्त्तयतीति" भा० "सांसिद्धिकोऽहि प्रयत्नः शरीरधारको न योगाङ्गोपदेष्टव्यासनस्य कारणं तस्य तत्कारणत्वे उपदेशवैयर्थ्यात् स्वरसत एव तत्सिद्धेः तस्मादुपदेष्टव्यस्यासनस्यायमसाधकः विरोधी च स्वाभाविकः प्रयत्नः। तस्य च यादृच्छिकासनहेतुतयासननियमोपहन्तृत्वात्। तस्मादुपदिष्टनियमासनमभ्यस्यता स्वाभाविकप्रयत्नशैथिल्यात्मा प्रयत्न आस्थेयो नान्यथोपदिष्टमासनं सिध्यतीति स्वाभाविकप्रयत्नशैथिल्यमासनसिद्धिहेतुः अनन्ते वा नागनायके स्थिरतरफणासहस्रविधृतविश्वम्भरामण्डले समापन्नं चित्तमासनं निर्वर्त्तयतीति" विव०। [१।५।११५ भाष्यम्।

**प्रयन्तृ** त्रि० प्र+यम–तृच्। प्रकर्षेण १यन्तरि २दातरि च ऋ०

**प्रयस्** न० प्रयस्यतेऽत्र प्र+यस–आधारे क्विप् । जले निघण्टुः पय इत्यत्र प्रय इति पाठान्तरं ऋ० १।४५।८ उदा० ।

**प्रयस्त** त्रि० प्र+यस–आधारे क्त । १प्रयासेन कृते घृततक्रजा-तकादिना द्रव्येण प्रयत्नसंस्कृते २व्यञ्जने न० अमरः ।

**प्रयाग** पु० प्रकृष्टो यागो यागफलं यस्य यस्मात् वा । गङ्गा-यमुनयोः सङ्गमजाते १तीर्थभेदे २शतक्रतौ इन्द्रे च । ३अश्वे अश्वमेधाङ्गत्वात् यज्ञसाधनत्वात् तथात्वम् । कर्म० । ४प्रकृष्टे यज्ञे अमरः । तत्र तीर्थभेदे पुंन० पुराणे तथा प्रयोगात् । तन्माहात्म्यञ्च मत्स्यपु० १०२अध्यायादितो १०७अध्यायान्ते उक्तम् एवमन्यान्यपुराणेऽप्युक्तम् । ततो दिङ्मात्रं पुराणसमुच्चये दर्शितमत्र प्रदर्श्यते ।

"एतत् प्रजापतेः क्षेत्रं त्रिषु लोकेषु विश्रुतम् । न शक्यं कथितुं राजन् ! फलं वर्षशतैरपि । संक्षेपेण तु वक्ष्यामि तस्य तीर्थस्य यत् फलम् । षष्टिर्धनुःसहस्राणि तत्र रक्षन्ति जाह्नवीम् । यमुनां रक्षति सदा सविता सप्तवाहनः । तं वटं रक्षति शिवः शूलपाणिर्महेश्वरः । स्थानं रक्षन्ति वै देवाः सर्वपापहरं शुभम् । प्रयागं स्मरमाणस्य यान्ति पापानि संक्षयम् । दर्शनात्तस्य तीर्थस्य सर्वपापैः प्रमुच्यते । मृत्तिकालम्भनाद्वापि नरः पापात् प्रमुच्यते । पञ्च कुण्डानि राजेन्द्र ! येषां मध्ये तु जाह्नवी । प्रयागस्य प्रवेशाद्वै पापं नश्यति तत्-क्षणात् । मनसा चिन्तितान् कामान् सर्वान् प्राप्नोति पुष्कलान् । ततो गत्वा प्रयागन्तु सर्वदेवाभिरक्षितम् । ब्रह्मचारी शुचिर्भूत्वा पितॄन् देवांश्च तर्पयेत् । तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता । समागता महाभाग ! यमुना यत्र निर्मला । तत्रोपस्पृश्य राजेन्द्र ! स्वर्गलोकमुपाश्नुते । व्याधितो यदि वा दीनः क्रुद्धो वापि भवेन्नरः । गङ्गायमुनमासाद्य यस्तु प्राणान् परि-त्यजेत् । दीप्तकाञ्चनसङ्काशैर्विमानैः सूर्यवर्चसैः । गन्धर्वाप्सरसां मध्ये स्वर्गे तिष्ठति मानवः" ।

"देशस्थो यदि वाऽरण्ये विदेशे यदि वा गृहे । प्रयागं स्मरमाणोऽपि यस्तु प्राणान् परित्यजेत् । ब्रह्मलोक-मवाप्नोति वदन्ति मुनिपुङ्गवाः । सर्वकामफला वृक्षा महावेदिर्हिरण्मयी । स्त्रीसहस्राकुले रम्ये मन्दाकि-न्यास्तटे शुभे । मोदते ऋषिभिः सार्द्धं स्वर्गे तेनेह कर्मणा । सिद्धचारणगन्धर्वैः पूज्यते दिवि दैवतैः । ततः स्वर्गात् परिभ्रष्टो जम्बुद्वीपपतिर्भवेत् । ततः शुभानि कर्माणि चिन्तयानः पुनःपुनः । गुणवान् वित्त-सम्पन्नो भवतीह न संशयः । स्वर्णशृङ्गीं रूप्यखुरां चेलकण्ठीं पयस्विनीम् । प्रयागे श्रोत्रियं साधुं ग्राह-यित्वा यथाविधि । स्वर्गे च तत्फलं भुङ्क्ते प्रदाता पद्मकोटिषु । पुत्रान् दारांस्तथा भृत्यान् गौरेका प्रति-तारयेत् । ऐश्वर्यलोभमोहाद्वा गच्छेद्यानेन यो नरः । निष्फलं तस्य तत्तीर्थं तस्माद्यानन्तु वर्जयेत् । तत्र दानं प्रदातव्यं यथाविभवसम्भवम् । तेन तीर्थफलञ्चैव वर्द्धते नात्र संशयः । स्वर्गे तिष्ठति राजेन्द्र ! याव-दाहूतसंप्लवम् । वटमूलं समासाद्य यस्तु प्राणान् परित्यजेत् । सर्वलोकानतिक्रम्य रुद्रलोकं स गच्छति । तत्र ते द्वादशादित्यास्तपन्ते रुद्रमाश्रिताः । निर्दहन्ति जगत्सर्वं वटमूलं न दह्यते । नष्टचन्द्रार्कपवनं यदा चैकार्णवं जगत् । स्वपते तत्र वै विष्णुर्यजमानः पुनः-पुनः । देवदानवगन्धर्वा ऋषयः सिद्धचारणाः । सदा सेवन्ति तत्तीर्थं गङ्गायमुनसङ्गमम् । ततः पुण्यतमं नास्ति त्रिषु लोकेषु भारत ! । श्रवणात्तस्य तीर्थस्य नामसङ्कीर्त्तनादपि । मृत्तिकालम्भनाद्वापि नरः पापात् प्रमुच्यते । तुल्यं फलमवाप्नोति राजसूयाश्वमेधयोः । न देववचनात्तात न लोकवचनादपि । मतिरुत्क्रमणीया ते प्रयागमरणं प्रति । दश तीर्थसहस्राणि षष्टिःकोट्यस्तथा पराः । तेषां सान्निध्यमत्रैव माघे वै कुरुनन्दन ! । या गतिर्योगयुक्तस्य सत्यस्थस्य च धीमतः । सा गतिस्त्य-जतः प्राणान् गङ्गायमुनसङ्गमे । कम्बलाश्वतरौ नागौ विपुले यमुनातटे । तत्र स्नात्वा च पीत्वा च सर्वपापैः प्रमुच्यते । तत्र गत्वा च संस्थानं महादेवस्य धीमतः । नरस्तारयते पूर्वान् पुरुषानेकविंशतिम् । कृत्वाभिषेकन्तु नरो ह्यश्वमेधफलं लभेत् । स्वर्गलोकमवाप्नोति याव-दाहूतसंप्लवम् । पूर्वपार्श्वे च गङ्गायास्त्रिषु लोकेषु विश्रुतम् । कूपश्चैव तु साहस्रं प्रतिष्ठानञ्च नामतः । तत्र स्नात्वा विशुद्धात्मा अश्वमेधफलं लभेत् । उत्तरेण प्रतिष्ठानाद्भागीरथ्यास्तु पूर्वतः । हंसप्रपतनं नाम तीर्थं त्रैलोक्यविश्रुतम् । अश्वमेधमवाप्नोति स्नान-मात्रेण भारत ! । यावच्चन्द्रश्च सूर्य्यश्च तावत्स्वर्गे महीयते । उर्वशीपुलिने रम्ये विपुले हंसपाण्डुरे । परित्यजति यः प्राणान् शृणु तस्यापि यत् फलम् । षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च । मोदते पितृभिः सार्द्धं स्वर्गलोके नरोत्तमः । ततः स्वर्गात् परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः । उर्वशीसदृशीनान्तु

कन्यानां दिव्यतेजसाम् । मध्ये नारीसहस्राणां बहूनाञ्च पतिर्भवेत् । दशग्रामसहस्राणां भर्त्ता भवति भूमिपः । काञ्चीनूपुरशब्देन सुप्तोऽसौ प्रतिबुध्यते । अथ सन्ध्यावटे रम्ये ब्रह्मचारी जितेन्द्रियः । उपासीत शुचिः सन्ध्यां ब्रह्मलोकमवाप्नुयात् । कोटितीर्थं समासाद्य यस्तु प्राणान् परित्यजेत् । कोटिवर्षसहस्राणि स्वर्गलोके महीयते । ततः स्वर्गात् परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः । सुवर्णमणिमुक्ताढ्ये कुले जायेत रूपवान् । ततो भागीरथीं गत्वा वासुकेरुत्तरेण तु । दशाश्वमेधिकं नाम तत्र तीर्थं परं भवेत् । कृत्वाभिषेकन्तु नरो ह्यश्वमेधफलं लभेत् । धनाढ्यो रूपवान् दक्षो दाता भवति धार्मिकः । चतुर्वेदिषु यत् पुण्यं सत्यवादिषु यत्फलम् । अहिंसायाश्च यो धर्मो गमनादेव तत् फलम् । तथैव मानसं नाम गङ्गाया दक्षिणे तटे । त्रिरात्रमुषितः स्नात्वा सर्वान् कामानवाप्नुयात् । पृथिव्यां आसमुद्रायां महाभागः पतिर्भवेत् । षष्टितीर्थसहस्राणि षष्टितीर्थशतानि च । माघे मासि गमिष्यन्ति गङ्गायमुनसङ्गमम् । गवां शतसहस्रस्य सम्यग्दत्तस्य यत् फलम् । प्रयागे माघमासे वै त्र्यहं स्नातस्य तत् फलम् । गङ्गायमुनयोर्मध्ये योऽग्नौ स्वाङ्गं परित्यजेत् । अहीनाङ्गोऽप्यरोगश्च पञ्चेन्द्रियसमन्वितः । यावन्ति रोमकूपाणि तस्याङ्गेषु च धीमतः । तावद्वर्षसहस्राणि स्वर्गलोके महीयते । जलप्रवेशं यः कुर्य्यात् सङ्गमे लोकविश्रुते । राहुग्रस्तो यथा सोमो विमुक्तः सर्वपातकैः । सोमलोकमवाप्नोति सोमेन सह मोदते । षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च । स्वर्गलोकमवाप्नोति ऋषिगन्धर्वसेवितः । परिभ्रष्टश्च राजेन्द्र ! समृद्धे जायते कुले । अधःशिरास्तु यो ज्वालामूर्द्ध्वपादः पिबेन्नरः । शतं वर्षसहस्राणां स्वर्गलोके महीयते । परिभ्रष्टश्च राजेन्द्र ! अग्निहोत्री भवेन्नरः । यस्तु स्वदेहं कर्त्तित्वा शकुनिभ्यः प्रयच्छति । विहगैरुपभुक्तस्य शृणु तस्यापि यत् फलम् । शतं वर्षसहस्राणि सोमलोके महीयते । तस्मादपि परिभ्रष्टो राजा भवति धार्मिकः । यामुने चोत्तरे कूले प्रयागस्य च दक्षिणे । ऋणमोचनकं नाम तत्तीर्थं परमं स्मृतम् । एकरात्रोषितः स्नात्वा ऋणैः सर्वैर्विमुच्यते । अश्वमेधफलं तस्माद्गच्छतस्तु पदे पदे । पुरुषांस्तारयेद्राजन् ! दश पूर्वान् दशापरान् ।। अतीतान् पुरुषान् सप्त भविष्यांश्च चतुर्दश । नरस्तारयते सर्वान् यस्तु प्राणान् परित्यजेत् । अश्रद्दधानाः पुरुषाः पापापहृतचेतसः । न प्राप्नुवन्ति तत् स्थानं प्रयागं देवरक्षितम् । अज्ञानेन तु यस्येह तीर्थयात्रादिकं भवेत् । सर्वकामसमृद्धन्तु स्वर्गलोके महीयते । अग्नितीर्थमतिख्यातं यमुनादक्षिणे तटे । उत्तरेण तु वक्ष्यामि आदित्यस्य महात्मनः । तीर्थं निरूदकं नाम यत्र देवाः सवासवाः । उपासते सदा सन्ध्यां नित्यकालं युधिष्ठिर ! । गङ्गा च यमुना चैव उभे तुल्यफले स्मृते ।। केवलं ज्येष्ठभावेन गङ्गा सर्वत्र पूज्यते । नैमिषं पुष्करञ्चैव गोमती सिन्धुसागरम् । गया च धेनुकञ्चैव गङ्गासागरएव च । एते चान्ये च बहवो ये च पुण्याः शिलोच्चयाः । दश कोटिसहस्राणि षष्टिकोट्यस्तथा पराः । प्रयागे संस्थिता नित्यमेवमाहुर्मनीषिणः । कुरुक्षेत्रसमा गङ्गा यत्र तत्रावगाहिता । तस्माद्दशगुणा प्रोक्ता यत्र विन्ध्येन सङ्गता । तस्माच्छतगुणा प्रोक्ता काश्यामुत्तरवाहिनी । काश्याः शतगुणा प्रोक्ता गङ्गायमुनसङ्गमे । सहस्रगुणिता चापि भवेत् पश्चिमवाहिनी । सा राजन् ! दर्शनादेव ब्रह्महत्यापहारिणी । पश्चिमाभिमुखी गङ्गा कालिन्द्या सह सङ्गता । हन्ति कल्मषं पापं सा माघे नृप ! दुर्लभा । अमृतं कथ्यते राजन् ! सा वेणी परिकीर्त्तिता । तस्यां माघे मुहूर्त्तन्तु देवानामपि दुर्लभम् । षष्टितीर्थसहस्राणि षष्टितीर्थशतानि च । माघे मासि गमिष्यन्ति गङ्गायमुनसङ्गमम् । ब्रह्मविष्णुमहादेवरुद्रादित्यमरुद्गणाः । गन्धर्वा लोकपालाश्च यक्षकिन्नरगुह्यकाः । अणिमादिगुणैः सिद्धा ये चान्ये तत्त्वदर्शिनः । ब्रह्माणी पार्वती लक्ष्मीः शची मेधावती रतिः । सर्वास्ता देवपत्न्यश्च तथा नागाङ्गना नृप । घृताची मेनका रम्भा उर्वशी च तिलोत्तमा । गणाश्चाप्सरसां तद्वत् पितृणाञ्च गणाश्च ये । स्नातुमायान्ति ते सर्वे माघे वेण्यां नराधिप ! । कृते युगे स्वरूपेण कलौ प्रच्छन्नरूपिणः । सर्वतीर्थानि कृष्णानि पापिनां सङ्गदोषतः । भवन्ति शुक्लवर्णानि प्रयागे माघमज्जनात् ।। स्वर्णभारसहस्रेण कुरुक्षेत्रे रविग्रहे । यत् फलं लभते माघे वेण्यां तच्च दिने दिने । यज्ञतीर्थतपोभिश्च न तत् प्राप्नोति मानवः । यत् फलं समवाप्नोति वेण्यां स्नानाच्च संशयः । प्रयागे माघमासे तु यस्त्र्यहं स्नाति मानवः । पापं त्यक्त्वा दिवं याति जीर्णां त्वचमिवोरगः । प्रयागे माघमासे तु त्र्यहं स्नातस्य यद्भवेत् ।।

नाश्वमेधसहस्रेण तत् फलं लभते भुवि। त्र्यहस्नानफलं माघे पुरा काञ्चनमालिने। राक्षसाय ददौ भूप! तेन मुक्तः स पातकात्। योगाभ्यासेन यत् पुण्यं संवत्सरशतेन च। गवां कोटिप्रदानस्य सम्यग्दत्तस्य यत् फलम्। प्रयागे माघमासे तु त्र्यहं स्नातस्य तत् फलम्। किं गयापिण्डदानेन काश्यां वा मरणेन किम्। किं कुरुक्षेत्रदानेन प्रयागे वपनं यदि। प्रयागे वपनं कुर्यात् गयायां पिण्डपातनम्। दानं दद्यात् कुरुक्षेत्रे वाराणस्यां तनुं त्यजेत्। सितासितेषु ये स्नान्ति माघे मासि युधिष्ठिर!। न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि। स्वल्पं स्वल्पतरं पापं यदा यस्य नराधिप!। प्रयागं स्मरमाणस्य सर्वमायाति संक्षयम्। दर्शनात्तस्य तीर्थस्य नामसंकीर्त्तनादपि। मृत्तिकालम्भनाद्वापि नरः पापात् प्रमुच्यते। प्रयागस्य प्रवेशात्तु पापं नश्यति तत्क्षणात्। कीर्त्तनान्मुच्यते पापाद्दृष्ट्वा भद्राणि पश्यति। अवगाह्य च पीत्वा च पुनात्यासप्तमं कुलम्। गङ्गायमुनयोर्मध्ये स्नातो मुच्येत किल्बिषात्। मनसा चिन्तितान् कामांस्तांस्तान् प्राप्नोति पुष्कलान्। प्रयागन्तु ततो गत्वा सर्वदेवाभिरक्षितम्। ब्रह्मचारी भवेन्मासं पितॄन् देवांश्च तर्पयेत्। ईप्सितान् लभते कामान् यत्र कुत्रापि जायते। तत्राभिषेकं यः कुर्यात् सङ्गमे संशितव्रतः। स प्राप्नोति फलं तुल्यं राजसूयाश्वमेधयोः। पञ्चयोजनविस्तीर्णं प्रयागस्य तु मण्डलम्। प्रवेशादस्य भूमौ तु अश्वमेधः पदे पदे। प्रयागमनुगच्छेद्वा वसते वापि यो नरः। सर्वपापविशुद्धात्मा विष्णुलोके महीयते। मकरस्थे रवौ माघे गोविन्दाच्युत! माधव!। स्नानेनानेन मे देव! यथोक्तफलदो भव। तत्र दानं प्रदातव्यं यथाविभवविस्तरम्। तेन तीर्थफलञ्चैव वर्द्धते नात्र संशयः। स्वर्गे तिष्ठति राजेन्द्र! यावदाहूतसंप्लवम्। योजनानां सहस्रेषु गङ्गां यः स्मरते नरः। अपि दुष्कृतकर्माऽपि लभते परमां गतिम्। स्नातास्तु ये माकरभास्करोदये तीर्थे प्रयागे सुरसिन्धुसङ्गमे। तेषां गृहद्वारमलङ्करोति भृङ्गावली कुञ्जरकर्णताडिता" मत्स्यपु०।

तत्र मुण्डनविधिर्यथा "गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरौ मृते। आधाने सोमपाने च वपनं सप्तसु स्मृतम्" इति स्मृतिसमुच्चयलिखितवचनं प्रयागावच्छिन्नगङ्गाया विधायकम्। भास्करक्षेत्रं प्रयागः अपि च प्रयागमधिकृत्य "केशानां यावती संख्या छिन्नानां जाह्नवीजले। तावद्वर्षसहस्राणि स्वर्गलोके महीयते"। प्रयागे स्त्रीणामपि मुण्डनं न तु केशानां अङ्गुलच्छेदनमात्रं यथा "केशमूलमुपाश्रित्य सर्वपापानि देहिनाम्। तिष्ठन्ति तीर्थस्नानेन तस्मात्तान्यत्र वापयेत्। प्रयागे मुण्डनाकरणे दोषोऽपि "गङ्गायां भास्करक्षेत्रे मुण्डनं यो न कारयेत्। स कोटिकुलसंयुक्त आकल्पं रौरवे वसेत्" इति प्रा०त०।

**प्रयागभय** पु० प्रयागात् प्रकृष्टयागकर्त्तृजनात् बिभेति स्वपदच्युतिशङ्कया भी—अच्। इन्द्रे शब्दमाला।

**प्रयागसेतु** पु० त्रिस्थलीसेतुपर्य्याये प्रयागमाहात्म्यादिप्रतिपादके ग्रन्थे।

**प्रयाज** पु० प्र+यज—घञ् यज्ञाङ्गत्वात् न कुत्वम्। दर्शपौर्णमासाद्यङ्गे यागभेदे। प्रयाजाश्च पञ्च "समिधो यजति तनूनपातं यजति इडो यजति बर्हिर्यजति स्वाहाकारं यजतीत्येवं रूपाः श्रुत्युक्ताः। "पञ्च प्रयाजान्" कात्या० श्रौ० २।२।१।१७। आपस्तम्बोऽपि "पञ्च प्रयाजान् प्राचः प्रतिदिशं वा, समिधः पुरस्तात्, तनूनपातं दक्षिणतः, इडः पश्चात्, बर्हिरुत्तरतः, स्वाहाकारं मध्ये" तत्कर्मस्थानमाह। कर्मभेदे तेषां मध्ये कस्मिंश्चिदावृत्त्या अष्टसप्तनवैकादशसंख्याऽपि कात्या० श्रौ० उक्ता दृश्या। विस्तरभयात् नोक्ता। प्रयाजादयश्चारादुपकारका यथोक्तं लौकाक्षि० "द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकम् यथा प्रयाजादि। आरादुपकारकञ्च परमापूर्वोत्पत्तावेवोपयुज्यते। सन्निपत्योपकारकन्तु द्रव्यदेवतासंस्कारद्वारा यागस्वरूपेऽप्युपयुज्यते। इदमेव आश्रयिकर्मेत्युच्यते"।

**प्रयाजवत्** पु० प्रयाज+अस्त्यर्थे मतुप् मस्य वः। प्रयाजरूपकर्मभेदपञ्चकयुते प्रधानयागे दर्शादौ।

**प्रयाण** न० प्र+या—भावे ल्युट्। प्रस्थाने पुरादितो बहिर्गमने हेमच०। राज्ञां प्रयाणे वर्णनीयपदार्थाः कविकल्पलतायामुक्ता यथा "भेरीशब्दः भूमिकम्पः सैन्यधूलिप्रसरणं करभः वृषः (द्रव्यवाहनार्थं) ध्वजः छत्रं वणिक् शकटमित्यादयः। स्वार्थे क। तत्रार्थे हेमच०।

**प्रयात** त्रि० प्र+या—कर्त्तरि क्त। १प्रकर्षेण गन्तरि कर्मणि क्त। २प्रयासेनप्राप्ते ३भृगौ उच्चदेशे ३सौप्तिके च पु० हेम०

**प्रयाम** पु० प्र+यम—घञ्। महार्घ्यतावशात् धान्यादौ १जनानामादरातिशये अमरः। २क्रयदेये द्रव्ये ३मूल्याधिक्यपरिच्छेदने भरतः।

**प्रयास** पु० प्र+यस—भावे घञ्। १प्रयत्ने २परिश्रमे ३क्लेशे च

हेमच०। प्रयस्यतेऽनेन करणे घञ्। ४अविद्यादिषु पञ्चसु क्लेशदायकेषु। [युते ऋ० ८।१६।२७

**प्रयियु** त्रि० प्र+या—बा० कु द्वित्वे अभ्यासस्यात इत्त्वम्। प्रयाण

**प्रयुक्त** त्रि० प्र+युज—क्त। १प्रकर्षेण संयोगयुते २प्रेरिते ३प्रयोज्ये परम्परया कार्ये च। तस्य भावः प्रयुक्तत्व तद्भावे न०। स च स्वरूपसम्बन्धभेदः कारणाभावेन कार्याभाव इत्यादिप्रतीतिसिद्धः गौ०सू०। तदुक्तं गौ०सू० १।१।२। इत्तौ प्रयोज्यत्वं प्रयोजकत्वं वा पञ्चम्यर्थः दण्डाभावात् घटाभाव इतिवत् स्वरूपसम्बन्धविशेष एव तत्"।

**प्रयुक्ति** स्त्री प्र+युज—भावे क्तिन्। १प्रयोगे २शब्दोच्चारणभेदे "क्रुद्धस्य राक्षमातङ्गा इति न स्युः प्रयुक्तयः" का० कारिका ३प्रेरणे श०क०। ४प्रकृष्टायां युक्तौ च।

**प्रयुत** न० १दशलक्षसंख्यायां २तत्संख्याते च "लक्षप्रयुतकोटयः" क्रमशः इति लीला०। ३प्रकर्षेण युते त्रि०।

**प्रयुति** स्त्री प्र+यु—भावे क्तिन्। १प्रकर्षेण योगे २प्रयोगे ऋ० १०।२७।१२

**प्रयुतेश्वर** पु० तीर्थभेदे स्कान्दपु०।

**प्रयोक्तृ** त्रि० प्र+युज—तृच्। १प्रयोगकर्त्तरि २ऋणदानादौ धनप्रयोगकर्त्तरि उत्तमर्णे ३प्रयोजकमात्रे च अमरः।

**प्रयोग** पु० प्र+युज—भावकर्मकरणेषु यथायथं घञ् कुत्वम्। १अनुष्ठाने २शब्दादीनामुच्चारणभेदे ३वशीकरणाद्युपाये कामेषु कर्मणि। ४घोटके च मेदि०। प्रयोगेनिर्वृत्तः ठञ्। अनुशति० द्विपदवृद्धिः। प्रायोगिक प्रयोगसाध्ये त्रि० स्त्रियां ङीप्। तत्र वाक्योच्चारणं च अनुमानाङ्गपञ्चावयववाक्योच्चारणं यथा "अत्रायं प्रयोगः पर्वतो वह्निमान् धूमादित्यादि" यथायोगं समभिव्याहृतत्वेनोच्चारणं प्रयोग इति याज्ञिकाः। यज्ञादिक्रियाकलापेतिकर्त्तव्यताबोधकानां समुच्चयप्रतिपादके पद्धत्यपरपर्याये ग्रन्थे इति याज्ञिकाः। भूतप्रेताद्युच्चाटनादिसाधने मन्त्रोच्चारणभेदे तान्त्रिकाः। ५शस्त्रादिमोचने योद्धारः। ६नायकयोर्मेलने क्रियाभेदे इत्यालङ्कारिकाः।

**प्रयोगविधि** पु०प्रयोगज्ञापकोविधिः शा०त०। प्रयोगस्याविलम्बज्ञापके विधिभेदे तल्लक्षणादि लौगाक्षि० उक्तं यथा "प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः। स चाङ्गवाक्यैकवाक्यतापन्नः प्रधानविधिरेव। स हि साङ्गप्रधानमनुष्ठापयन् विलम्बे प्रमाणाभावादविलम्बापरपर्यायं प्रयोगप्राशुभावं विधत्ते। न च तदविलम्बेऽपि प्रमाणाभाव इति वाच्यं विलम्बे ह्यङ्गप्रधानविध्येकवाक्यतावगततत्साहित्यानुपपत्तिः विलम्बेन क्रियमाणयोः पदार्थयोः इदमनेन सह कृतमिति साहित्यव्यवहाराभावात्। स चाविलम्बो नियते क्रमे आश्रियमाणे भवति। अन्यथा हि किमेतदनन्तरमेतत् कर्त्तव्यमेतदनन्तरं वेति प्रयोगविक्षेपापत्तेः। अतः प्रयोगविधिरेव स्वविधेय प्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते। अतएवाङ्गानां क्रमबोधको विधिः प्रयोगविधिरित्यपि लक्षणम्। तत्र क्रमोनाम विततिविशेषः पौर्वापर्यरूपो वा। तत्र षट् प्रमाणानि। श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्याख्यानि। क्रमज्ञापकहेतवश्च क्रमशब्दे २२६० पृष्ठादावुक्ताः।

**प्रयोगातिशय** पु० सा०द० नाटकाङ्गप्रस्तावनाभेदे "यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते। तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा"। यथा कुन्दमालायाम् "नेपथ्ये इतोऽवतरत्वार्य्या। सूत्रधारः। कोऽयं खलु आर्य्याह्वानेन साहायकं मे सम्पादयति। विलोक्य। कष्टमतिकरुणं वर्त्तते। लङ्केश्वरस्य भवने सुचिरं स्थितेति रामेण लोकपरिवादभयाकुलेन। निर्वासितां जनपदादपि गर्भगुर्वीं सीतां वनाय परिकर्षति लक्ष्मणोऽयम्"। अत्र नृत्यप्रयोगार्थं स्वभार्य्याह्वानमिच्छता सूत्रधारेण सीतां वनाय परिकर्षति लक्ष्मणोऽयमिति सीतालक्ष्मणयोः प्रवेशं सूचयित्वा निष्क्रान्तेन स्वप्रयोगमतिशयान एव प्रयोगः प्रयोजितः"।

**प्रयोगार्थ** पु०प्रयोगस्यार्थम् "अर्थेन सह नित्यसमासोविभक्त्यलोपश्च" वार्त्ति०स०प्रयोगोऽर्थः प्रयोजनमस्य वा। प्रधानप्रयोगानुष्ठानानुकूले व्यापारभेदे प्रत्युत्क्रमे अमरः।

**प्रयोगिन्** त्रि० प्र+युज—घिनुण्। प्रयोगकर्त्तरि।

**प्रयोग्य** त्रि०प्रयुज्यते प्रयुज—कर्मणि ण्यत्। १प्रयोज्ये २अश्वे च "यथा प्रयोग्य आचरणे(रथे)नियुक्तः" छा०उ०भाष्यम्।

**प्रयोजक** त्रि०कार्य्यादौ भृत्यादीन् प्रयुनक्ति प्र+युज-ण्वुल्। निकृष्टस्य भृत्यादेः १प्रेरके व्याकरणोक्ते हेतुसंज्ञे २कर्त्तरि च। "तत्प्रयोजकोहेतुश्च" पा० तस्य स्वतन्त्रसंज्ञा विहिता। प्रयोजकस्य हन्तृत्वं प्रा०वि० निर्णीतं यथा "नरान्तरव्यापाराव्यवधानेन वधनिष्पादकः कर्त्ता, यः कर्त्तारं कारयति स प्रयोजकः। सोऽपि द्विविधः एकः स्वतोऽप्रवृत्तं पदातिं वेतनादिना वधार्थं प्रवर्त्तयति अपरः स्वतः प्रवृत्तमेव मन्त्रोपायोपदेशादिना प्रोत्साहयति"।

तस्य मूलञ्च आपस्तम्बवाक्यं यथा "प्रयोजयिता अनुमन्ता कर्त्ता चेति सर्वे स्वर्गनरकफलभोक्तारो यो भूय आरभते तस्मिन् फले विशेषः" । तस्य भावः त्व प्रयोजकत्व न० तद्भावे तस्य स्वरूपसम्बन्धभेदः तद्भिन्नान्यथासिद्धिभिन्नान्यथासिद्धिशून्यत्वे इति काय्याव्यवहित पूर्ववर्त्तित्वम्" ।

प्रयोजन न० प्रयुज्यतेऽनेन प्र+युज–करणे ल्युट् । यमधिकृत्य प्रवर्त्तते १तस्मिन् प्रवृत्त्यङ्गेच्छाविषये यमर्थमाप्तव्यं हातव्यं वा व्यवसाय तदाप्तिहानोपायमनुतिष्ठति प्रयोजनं तद्वेदितव्यम् । प्रवृत्तिहेतुत्वाद् इममर्थमाप्स्यामि हास्यामि वेति व्यवसायोऽर्थस्याधिकारः । एवं व्यवसीयमानोऽर्थोऽधिक्रियते इति" वात्स्या०१।१।२४। करणे ल्युट् । २हेतौ । कर्मणि ल्युट् । ३कार्य्ये च मेदि० । प्रयोजनञ्च द्विविधं मुख्यं गौणं च । तत्र अन्येच्छानधीनेच्छाविषयत्वं मुख्यप्रयोजनत्वम् अन्येच्छाधीनेच्छाविषयत्वं गौणप्रयोजनत्वम् । तत्राद्यम् दुःखाभावः सुखञ्च द्वितीयं तदुपकारिव्यञ्जनभोजनादि । तस्य सुखप्रयोजनेच्छयैव जन्याया इच्छाया विषयत्वात् तथात्वम् । "येन प्रयुक्तः प्रवर्त्तते तत्प्रयोजनम् । यमर्थमभीप्सन् जिहासन् वा कर्मारभते तेनानेन सर्वे प्राणिनः सर्वाणि कर्माणि सर्वाश्च विद्याव्याप्ताः । तदाश्रयश्च न्यायः प्रवर्त्तते" वात्स्या० १।१।१

प्रयोज्य त्रि०प्र+युज–ण्यत् । प्रयोक्तुं शक्ये १भृत्यादौ २मूलधने न० "प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विधितोचिता" इत्युक्ते ३णिजन्तधातुप्रकृत्यर्थकर्त्तरि च । तस्य भावः त्व प्रयोज्यत्व. स्वरूपसम्बन्धभेदे न० प्रयुक्तशब्दे दृश्याम् ।

प्ररथ अव्य० प्रगतो रथो यत्र तिष्ठद्गु०. अव्ययी० । प्रगतरथयुक्ते देशे । [कू० ११।१०।१५।

प्ररिच्वन् त्रि० प्र+रिच–ङ्वनिप् । प्रकर्षेण विरेचनकर्त्तरि

प्ररुज त्रि० प्र+रुज–क । १प्रकृष्टरोगकारके २देवसैन्याधिपभेदे पु० भा०आ०२२अ० ३राक्षसभेदे पु० भा०व०२८४अ० ।

प्ररुह त्रि० प्र+रुह–क । प्ररोहणकर्त्तरि अङ्कुरादौ

प्ररूढ त्रि० प्र+रुह–क्त । १प्ररोहणकर्त्तरि २संजाते हृष्टादौ ३बद्धमूले च ४जटरे न०. मेदि० । ५जाते ६प्रवृद्धे त्रि० शब्दमा० ।

प्ररोचन न० प्र+रुच–णिच्–भावे ल्युट् । १रुचिसम्पादने यथाऽर्थवादादीनां विध्यर्थानुष्ठाने प्ररोचनायां प्रवृत्तिः । युच् प्ररोचना तत्रार्थे स्त्री । सा च २प्रस्तावनाङ्गभेदे । "तस्याः प्ररोचना वीथी तथा प्रहसना मुखे । अङ्गान्यत्रोन्मुखीकारः प्रशंसातः प्ररोचना" सा०द० यथा "श्रीहर्षोनिपुणः कविरित्यादि रत्नावल्याम् । ३नाटकाङ्गविमर्षाङ्गभेदे स्त्री "प्ररोचना विमर्षे स्यात्" विमर्षोपक्रमे "प्ररोचना तु विज्ञेया संहारार्थप्रदर्शिनी" इति तत्र लक्षिता यथा वेणयां पाञ्चालकः अहं देवेन चक्रपाणिना सहित इत्युपक्रमे कृतं सन्देहेन पूर्य्यन्तां सलिलेनेत्यादि ।

प्ररोह पु० प्र+रुह–अच् । १अङ्कुरे "लक्षप्ररोह इव सौधतलं विभेद" इति रघुः । २आरोहे च हेमच० । भावे घञ् । ३उत्पत्तौ पु० । भावे ल्युट् । प्ररोहण उत्पत्तौ न० ।

प्रलपन न० प्र+लप–भावे ल्युट् । १प्रलापे २अनर्थकवाक्ये सा० द० १८८ कारिकायां दृश्यम् । भावे क्त । प्रलपित तत्रार्थे न० । "प्रलपितमिदं केनापि" मिता० काचित्

प्रलम्ब त्रि० प्रलम्बते प्र+लम्ब–अच् । १प्रलम्बमाने २दनुपुत्रे असुरभेदे पु० अग्निपु० । ३त्रपुषे(यथा) ४पयोधरे ५लताङ्कुरे ६शाखायां ७हारभेदे मेदि० । भावे घञ् । ८प्रलम्बने

प्रलम्बघ्न पु० प्रलम्बमसुरं हन्ति हन–क । १बलरामे अमरः तेन तस्य हननकथा हरिवं० ७१अ० दृश्या । प्रलम्बभिदादयोऽप्यत्र ।

प्रलम्बाण्ड पु० प्रलम्बः अण्डोऽस्य । दीर्घाण्डकोषयुते हेम० ।

प्रलम्भ पु०प्र+लभ–घञ् नुम् । प्रकर्षेण लाभे । भावे ल्युट् । प्रलम्भन तत्रार्थे भाग० ५।२५।११

प्रलय पु० प्रलीयतेऽस्मिन् प्र+ली–आधारे अच् । भूतादिलयाधारे कालभेदे स च चतुर्विधः नित्यनैमित्तिकप्राकृतात्यन्तिकभेदात् यथोक्तं कूर्मपु० ४२।४३ अ०

"कूर्म उवाच नित्यं नैमित्तिकञ्चैव प्राकृतात्यन्तिकौ तथा । चतुर्धायं पुराणेऽस्मिन् प्रोच्यते प्रतिसञ्चरः" । नित्यो यथा "योऽयं संदृश्यते नूनं नित्यं लोके क्षयस्त्विह । नित्यं संकीर्त्यते नाम्ना मुनिभिः प्रतिसञ्चरः" नैमित्तिको यथा "ब्राह्मो नैमित्तिको नाम कल्पान्ते यो भविष्यति । त्रैलोक्यस्यास्य कथितः प्रतिसर्गो मनीषिभिः" प्राकृतो यथा "महदाद्यं विशेषान्तं यदा संयाति संक्षयम् । प्राकृतः प्रतिसर्गोऽयं प्रोच्यते कालचिन्तकैः" आत्यन्तिको यथा "ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि । प्रलयः प्रतिसर्गोऽयं कालचिन्तापरैर्द्विजैः । आत्यन्तिकश्च कथितः प्रलयो लयसाधनः" । नैमित्तिकप्रलयविस्तारो यथा तत्रैव "नैमित्तिकमिदानीं वः

कीर्त्तयिष्ये समासतः । चतुर्युगसहस्रान्ते संप्राप्ते प्रतिसञ्चरे । आत्मसंस्थाः प्रजाः कर्त्तुं प्रतिपेदे प्रजापतिः । ततोऽभवदनावृष्टिस्तीव्रा सा शतवार्षिकी । भूतक्षयकरी घोरा सर्व्वभूतभयङ्करी । ततो यान्यल्पसाराणि सत्त्वानि पृथिवीतले । तानि चाग्रे प्रलीयन्ते भूमित्वमुपयान्ति च । सप्तरश्मिरथो भूत्वा समुत्तिष्ठन् दिवाकरः । असह्यरश्मिर्भवति पिबन्नम्भोगभस्तिभिः । ततस्ते रश्मयः सप्त पिबन्त्यम्बु महार्णवे । तेनाहारेण ते सूर्य्याः दीप्ताः सप्त भवन्ति हि । तस्य ते रश्मयः सप्त सूर्य्या भूत्वा चतुर्द्दिशम् । चतुर्लोकमिदं कृत्स्नं दहन्ति शिखिनो यथा । व्याप्नुवन्तश्च ते विप्रास्तूर्द्ध्वञ्चाधश्च रश्मिभिः । दीप्यन्ते भास्कराः सप्त दहन्तोऽग्निप्रतापिनः । ते सूर्य्या वह्निवत् दीप्ता बहुसाहस्ररश्मयः । खं समावृत्य तिष्ठन्ति निर्द्दहन्तो वसुन्धराम् । ततस्तेषां प्रतापेन दह्यमाना वसुन्धरा । साद्रिनद्यर्णवद्वीपा निःस्नेहा समपद्यत । दीप्ताभिः सन्तताभिश्च ज्वालाभिश्च समावृतः । अधश्चोर्द्ध्वञ्च तिर्य्यक् च समावृत्य सहस्रशः । सूर्य्याग्निना प्रसृष्टानां संसृष्टानां परस्परम् । एकत्वमुपजातानामेकज्वालो भवेत् प्रभुः । सर्व्वलोकप्रणाशश्च सोऽग्निर्भूत्वा तु कुण्डली । चतुर्लोकमिदं कृत्स्नं निर्द्दहत्यात्मतेजसा । ततः प्रलीने सर्व्वस्मिन् जङ्गमे स्थावरे तथा । निर्वृक्षा निस्तृणा भूमिः कूर्म्मपृष्ठे प्रकाशते । अम्बरीषमिवाभाति सर्व्वमापूरितं जगत् । सर्व्वमेव तदार्च्चिर्भिः पूर्णं जाज्वल्यते नभः । पाताले यानि तीर्थानि महोदधिगतानि तु । तत्र तानि प्रलीयन्ते भूमित्वमुपयान्ति वै । द्वीपांश्च पर्व्वतांश्चैव वर्षाण्यथ महोदधीन् । तान् सर्व्वान् भस्मसात् कृत्वा सप्तात्मा पावकः प्रभुः । समुद्रेभ्यो नदीभ्यश्च पातालेभ्यश्च सर्व्वशः । पिबन्नपः समिद्धोऽग्निः पृथिवीमाश्रितोऽज्वलत् । ततः संवर्त्तकः शैलानतिक्रम्य महांस्तथा । लोकान् दहति दीप्तात्मा रुद्रतेजोविजृम्भितः । स दग्ध्वा पृथिवीं देवो रसातलमशोषयत् । अधस्तात् पृथिवीं दग्ध्वा दिवमूर्द्ध्वं दहिष्यति । योजनानां शतानीह सहस्राण्ययुतानि च । उत्तिष्ठन्ति शिखास्तस्य वायुः संवर्त्तकस्य च । गन्धर्व्वांश्च पिशाचांश्च सयक्षोरगराक्षसान् । तदा दहत्यसौ दीप्तः कालरुद्रप्रचोदितः । भूर्लोकञ्च१ भुवर्लोकं२ स्वर्लोकञ्च३ तथा महः४ । दहेदशेषं कालाग्निः कालो विश्वतनुः स्वयम् । व्याप्तेषु तेषु लोकेषु तिर्य्यगूर्द्ध्वमथाग्निना । तत् तेजः समनुप्राप्य कृत्स्नं जगदिदं शनैः । अयोगुडनिभं सर्व्वं तदेवैकं प्रकाशते । ततो गजकुलोन्नादाः स्तनितैः समलङ्कृताः । उत्तिष्ठन्ति तदा व्योम्नि घोराः संवर्त्तका घनाः । केचिन्नीलोत्पलश्यामाः केचित् कुमुदसन्निभाः । धूम्रवर्णास्तथा केचित्तथा पीताः पयोधराः । केचिद्रक्ताभवर्णाश्च स्थूलाः क्षारनिभास्तथा । शङ्खकुन्दनिभाश्चान्ये जात्यञ्जननिभाः परे । मनःशिलानिभास्त्वन्ये कपोतसदृशाः परे । केचित् हरितालवर्णाभास्तथान्ये क्षीरसन्निभाः । तथा कर्व्वूरवर्णाभा भिन्नाञ्जननिभास्तथा । इन्द्रगोपनिभाः केचिद्धरितालनिभास्तथा । काकाण्डकनिभाः केचिदुत्तिष्ठन्ति घना दिवि । केचित् पर्व्वतसङ्काशाः केचिद्गजकुलोपमाः । कूटागारनिभाश्चान्ये केचिन्मीनकुलोद्वहाः । बहुरूपा घोररूपा घोरस्वरनिनादिनः । तदा जलधराः सर्व्वे पूरयन्ति नभस्तलम् । ततस्ते जलदा घोरा वारिणा भास्करात्मजाः । सप्तधा संवृतात्मानस्तमग्निं शमयन्त्युत । ततस्ते जलदा वर्षं वर्षन्तीह हिमौघवत् । सुघोरमशिवं सर्व्वं नाशयन्ति च पावकम् । प्रवृत्तेन तदात्यर्थमम्भसा पूर्य्यते किल । अद्भिस्तेजोऽभिभूतत्वात्तदाग्निः प्रविशत्यपः । नष्टे चाग्नौ वर्षशतैः पयोदाः क्षयसम्भवाः । प्लावयन्तोऽथ भुवनं महाजलपरिस्रवैः । धाराभिः पूरयन्तीदं चोद्यमानाः स्वयम्भुवा । उद्यन्तः सलिलौघैश्च वेला इव महोदधेः । साद्रिद्वीपा तथा पृथ्वी जलैः संछाद्यते शनैः । आदित्यरश्मिभिः पीतं जलमभ्रेषु तिष्ठति । पुनः पतति तद्भूमौ पूर्य्यन्ते तेन चार्णवाः । ततः समुद्राः स्वां वेलामतिक्रान्तास्तु कृत्स्नशः । पर्व्वताश्च विलीयन्ते मही चाप्सु निमज्जति । तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे । योगनिद्रां समास्थाय शेते देवः प्रजापतिः । चतुर्युगसहस्रान्तं कल्पमाहुर्महर्षयः । वाराहो वर्त्तते कल्पो यस्य विस्तार ईरितः । असंख्यातास्तथा कल्पा ब्रह्मविष्णुशिवात्मकाः । कथिता हि पुराणेषु मुनिभिः कालचिन्तकैः । सात्त्विकेष्वथ कल्पेषु माहात्म्यमखिलं हरेः । तामसेषु शिवस्योक्तं राजसेषु प्रजापतेः । सोऽयं प्रवर्त्तते कल्पो वाराहः सात्त्विको मतः । अन्ये च सात्त्विकाः कल्पा मम तेषु परिग्रहः । ध्यानन्तपस्तथा ज्ञानं लब्ध्वा तेष्वेव योगिनः । आराध्य गिरिशं यत्नात् याति तत् परमं

ज्ञानं दीपवदिन्द्रियोद्भवम् । यथा सूर्य्यस्तथा ज्ञानं यद्-विप्रर्षे ! विवेकजम् । मनुरप्याह वेदार्थं स्मृत्वा यन्मुनि-सत्तम ! । तदेतच्छ्रूयतामत्र सम्बन्धे गदतो मम । द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत् । शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति । द्वे विद्ये वेदितव्ये वै इति चाथर्व्वणी श्रुतिः । परया त्वक्षरप्राप्तिरृग्वेदादि-मयाऽपरा । यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम् । अनिर्देश्यमरूपञ्च पाणिपादाद्यसंयुतम् । विभुं सर्व-गतं नित्यं भूतयोनिमकारणम् । व्याप्यव्याप्यं यतः सर्वं तं वै पश्यन्ति सूरयः । तद्ब्रह्म तत्परं धाम तद्ध्येयं मोक्षकाङ्क्षिणाम् । श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम् । तदेव भगवद्वाच्यं स्वरूपं परमात्मनः । वाचको भगवच्छब्दस्तस्याद्यस्याक्षरात्मनः । एवं निगदितार्थस्य सतत्त्वं तस्य तत्त्वतः । ज्ञायते येन तज्ज्ञानं परमन्यत्त्रयीमयम् । अशब्दगोचरस्यापि तस्यैव ब्रह्मणो द्विज ! । पूजायां भगवच्छब्दः क्रियते ह्यौपचारिकः । शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्त्तते । मैत्रेय ! भगवच्छब्दः सर्वकारणकारणे । सर्व्वाणि तत्र भूतानि वसन्ति परमात्मनि । भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः । खाण्डिक्यः जनकायाह पृष्टः केशिध्वजः पुरा । नामव्याख्यामनन्तस्य वासुदेवस्य तत्त्वतः । भूतेषु वसते सोऽन्तर्वसन्त्यत्र च तानि यत् । धाता विधाता जगतां वासुदेवस्ततः प्रभुः । स सर्व-भूतप्रकृतिविकारगुणांश्च दोषांश्च मुने ! अतीतः । अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तरालम् । समस्तकल्याणगुणात्मको हि स्वशक्तिलेशावृतभूतसर्गः । इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ । तेजोबलैश्वर्य्यसमन्वितश्च सुवीर्य्यशक्त्यादिगुणैकराशिः । परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे । स ईश्वरो व्यष्टिसमष्टिरूपो व्यक्तस्वरूपः प्रकट-स्वरूपः । सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमे-श्वराख्यः । स ज्ञायते येन तदस्तदोषं शुद्धं परं निर्मल-मेकरूपम् । संदृश्यते चाप्यवगम्यते वा तज्ज्ञानम-ज्ञानमतोऽन्यदुक्तम्” विष्णुपु० । “नारद उवाच । कृतं त्रेता द्वापरञ्च कलिश्चेति चतुर्युगम् । दिनमेकं युगं ज्ञेयं तस्य या चैकसप्ततिः । मन्वन्तरन्तु तज्ज्ञेयं ते तु तत्र चतुर्द्दश । स कल्पो नाम वै कालस्तदन्ते प्रलयश्च यः । सा ब्रह्मरात्री राजेन्द्र ! यत्र सर्व्वेऽप्यनु-जायन्ते । सर्वे लोकास्तदा राजन् ! लीयन्ते तद्विचि-न्तितः । नैमित्तिको लयो नाम दैनन्दिन इतीर्य्यते । एवं दिनप्रमाणेन ब्रह्मणः शतवार्षिकम् । आयुः पूर्वं परार्द्धं तु परार्द्धं द्वे प्रकीर्त्तिते । द्विपरार्द्धे व्यतीते तु ब्रह्मणो जगदात्मनः । तदा प्रकृतयः सप्त प्रलयं यान्ति भूमिप ! लयः प्राकृतिको ज्ञेय लीने ब्रह्मणि भूपते ! । ब्रह्माण्डकोषोऽपि सकलः प्रलयं याति सर्व्वशः । पूर्वरू-पन्तु वक्ष्यामि प्रलयस्यास्य भूपते ! । शतवर्षाणि भूमौ हि पर्जन्यो नैव वर्षति । दुर्भिक्षे निर्ज्जले लोके प्रजाः सर्वाः क्षुधार्दिताः । परस्परं भक्ष्यमाणाः क्षयं यास्यन्ति भूमिप ! । समुद्रे च धरण्याञ्च ह्रदेषु च सरःसु च । देहे च यो रसस्तं हि रविर्हरति रश्मिभिः । ततः संवर्त्तको नाम ज्वालामाली हुताशनः । सङ्कर्ष-णमुखोत्पन्नो दहत्यऽनिलसारथिः । सर्वं ब्रह्माण्ड-भाण्डं वै तत्कालक्षोभगर्ज्जितः । एवं दग्धं महाराज ! वज्रकोट्यां समन्ततः । दग्ध्वा गोमयपिण्डाभं ब्र-ह्माण्डं सारवर्ज्जितम् । प्रचण्डः पवनो राजंस्ततो वर्ष-शतं पुनः । संवर्त्तको नाम महान् ब्रह्माण्डं चाल-यिष्यति । ततो मेघा महाघोरा नानावर्णा अने-कशः । शतं वर्षाणि वर्षन्ति गर्ज्जन्ति च महास्वनाः । एकोदकं ततो विश्वं निर्गुणं निर्विकारकम् । भूमेर्गन्ध-गुणं राजन् ! ग्रसन्त्यापः समन्ततः । गुणनाशात् ततः पृथ्वी प्रलयं प्राप्स्यते तदा । तेजस्त्वपां रसगुणं समस्तं पिबते बलात् । ततः प्रलयमायान्ति राजन्नापोऽपि तद्गुणात् । तेजसस्तु ततो रूपं रसगन्धसमन्वितम् । वायुर्हरति वेगात्मा, तेजः प्रलयमृच्छति । आकाशस्तु ततो वायोः स्पर्शं परगुणैः सह । समादत्ते महा-राज ! सोऽम्बरेऽथ प्रलीयते । आकाशस्य गुणं शब्दं गुणैरन्यैः समन्वितम् । अहङ्कारः समादत्ते नभस्तस्मिन् प्रलीयते । तैजसेन्द्रियाण्येव देवा वैकारिका तथा । अहङ्कारे प्रलीयन्ते जगदेतच्चराचरम् । अह-ङ्कारं भक्षयन्ति ततः सत्त्वादयो गुणाः । ग्रसते तान् महाराज ! आद्या प्रकृतिरव्यये । न तस्याः काल-दोषेण परिणामो नरर्षभ ! । आद्यान्तरहिता सा हि नित्यं कारणमव्ययम् । शक्तिर्भगवतः सा हि तदेक-परमा च सा । इत्युक्तः प्रलयो राजन् ! विस्तरस्य महामते ! । सर्वोत्पत्तिक्रमेणास्य व्युत्क्रमेण लयस्तथा” स च प्रलयो न्यायादिमते द्विविधः खण्डप्रलयो महा-

प्रलयश्च तत्र जन्यद्रव्यानधिकरणकालत्वं खण्डप्रलयत्वं जन्यभावानधिकरणकालत्वं महाप्रलयत्वं महाप्रलयश्च न प्रमाणसिद्ध इति नव्यनैयायिकाः। तत्र नैमित्तिकप्रलयकालश्च कल्पतुल्यः “यदा स देवो जागर्त्ति तदेदं चेष्टते जगत्। यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते” इति मनुना हिरण्यगर्भस्य निद्रासमये तत्प्रलयस्योक्तेः “शर्वरी तस्य तावती” इति तत्कालस्य च कल्पतुल्यकालत्वमुक्तम्। एतदभिप्रायेण अमरे “प्रलयो नष्टचेष्टता” इत्युक्तम् नैमित्तिकप्रलयकाले सर्वभूतानां चेष्टाशून्यत्वात्। “प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः” सा॰द॰ उक्ते २सात्त्विकभावभेदे।

**प्रलव** पु॰ प्र+लू–भावे अप्। १प्रकर्षेण छेदने याथा॰ अन्तोदात्ततास्य। प्रलूयते। कर्मणि अप्। २खण्डभेदे २लेशे च कात्या॰ श्रौ॰ २६।१।१० (शुक्लप्रलवान्) शुक्ललेशान्।

**प्रलवित्र** न॰ प्रलूयतेऽनेन प्र+लू+करणे इत्र। छेदनसाधने अस्त्रादौ याथा॰ अन्तोदात्तताऽस्य।

**प्रलाप** पु॰ प्र+लप–भावे घञ्। १अनर्थकवाक्ये २निष्प्रयोजने उन्मत्तादिवाक्ये च अमरः। ३रोगाणामुपसर्गभेदे “मूर्च्छा कांसश्वयोर्मोहः प्रलापो मरणमिति क्षये” सुश्रुते क्षयोपसर्गोक्तौ। [राजनि॰।

**प्रलापहन्** पु॰ प्रलापं हन्ति हन–क्विप्। कुलत्थजातेऽञ्जने

**प्रलापिन्** त्रि॰ प्र+लप–ताच्छील्ये घिनुण्। प्रलपनशीले

**प्रलीन** त्रि॰ प्र+ली–कर्त्तरि क्त। १प्रलयं प्राप्ते २चेष्टाशून्ये च। तस्य भावः तल्। प्रलीनता चेष्टानाशे इन्द्रियव्यापाराभावे च।

**प्रलेप** पु॰ प्र+लिप–भावे घञ्। व्रणादिशोधनार्थं द्रव्यविशेषेण लेपनविशेषे। सुश्रुते आलेपोपक्रमे “स त्रिविधः प्रलेपः प्रदेह आलेपश्चेति। तेषामन्तरं, प्रलेपः शीततनुरविशोषी विशोषी च। प्रदेहस्तूष्णः शीतो वा बहलोऽबहुरविशोषी च। रक्तपित्तप्रसादनकृदालेपः” इति आलेपनभेदलक्षणान्युक्तानि तत्र द्रव्यभेदास्तत्रोक्ता दृश्याः

**प्रलेपक** त्रि॰ प्र+लिप–ण्वुल्। १प्रलेपकर्त्तरि स्त्रियां टाप् कापि अत इत्त्वम् प्रलेपिका तस्या धर्म्यम् अहिष्या॰ अन्। २प्रलेपिकाधर्मे त्रि॰। सुश्रुतोक्ते ३ज्वरभेदे पु॰ “तथा प्रलेपको ज्ञेयः शोषिणां प्राणनाशनः। दुश्चिकित्स्यतमो मन्दः सुकष्टो धातुशोषकृत्” प्रलेपकं वातबलासकञ्च कफाधिकत्वेन वदन्ति तज्ज्ञाः” सुश्रुते तल्लक्षणाद्युक्तम्।

**प्रलेह** पु॰ प्रलिह्यतेऽसौ प्र+लिह–कर्मणि घञ्। व्यञ्जनभेदे (कोरमा) पाकराजेश्वरः।

**प्रलोलुप** त्रि॰ प्रा॰स॰। १अत्यन्तलोलुपे गरुडवंश्ये कुन्तिपुत्रे २पक्षिभेदे पु॰ मार्क॰पु॰ ७अ॰।

**प्रवक** त्रि॰प्रु+गतौ साधुकारित्वे द्योत्ये वुन्। भूयोगतियुते तत्र साधुकारिणि तत्त्वबोधिनी।

**प्रवक्तृ** त्रि॰प्रवक्ति प्र+वच–तृच्। प्रकर्षेण वक्तरि १अर्थानुसन्धानपूर्वकवेदादिवाचके २तदर्थोपदेशके च मनुः ६।१८६ याज्ञ॰ २।३५२

**प्रवग** पुंस्त्री॰ प्लवग+लस्य रः। खगे अमरटीका। एवं प्रवङ्ग प्रवङ्गमावपि रस्य लत्वे तत्रार्थे। सर्वत्र जातित्वात् स्त्रियां ङीष्।

**प्रवचन** न॰ प्रोच्यते प्र+वच–कर्मणि ल्युट्। १वेदादौ शास्त्रे भावे ल्युट्। २अर्थानुसन्धानपूर्वककथने च “नायमात्मा प्रवचनेन लभ्यः” कठोप॰। अस्य तिङः परस्य गोत्रा॰ कुत्सायाम् उदात्तता।

**प्रवचनीय** त्रि॰ प्र+वच–कर्मणि अनीयर्। प्रकर्षेण अर्थानुसन्धानेन १वाच्ये। “भव्य गेयेत्यादि” पा॰ कर्त्तरि अनीयर्। प्रवक्तरि कर्मप्रवचनीयाः तच्छब्दे दृश्यम्।

**प्र(प्रा)वट** पु॰प्रु+बा॰अट–स्वार्थे अण् वा। यवे जटाधरः।

**प्र(व)वण** पु॰प्र+व(ब)ण–अच्। १चतुष्पथे अमरः २निम्नस्थाने ३उदरे ४नते मेदिनिः। ५आयते ६प्रगुणे ७क्षणे शब्दर॰। ८प्रुते ९स्निग्धे त्रि॰ विश्वः १०क्षीणे च त्रि॰ धरणिः। ११आसक्ते त्रि॰ हेमच॰।

**प्रवत्** त्रि॰ प्रवणे वाति वा–बा॰ डति। १प्रवणदेशे निम्नस्थाने गन्तरि ऋ॰७।५०।४ अतोऽस्त्यर्थे मतुप् मस्य वः तान्तत्वात् न पदत्वम्। प्रवत्वत् तद्युते त्रि॰। ऋ॰ १।१८१।३भाष्यम्। स्त्रियां ङीप्। सोपसृष्टे धात्वर्थे वर्त्तमानात् सोपसर्गात् वति। २प्रकृष्टगमनादौ च।

**प्रवत्स्यत्पतिका** स्त्री प्रवत्स्यन् पतिर्यस्याः। यस्याः पतिः परदेशं गमिष्यति तादृश्यां स्त्रियां रसमञ्जरी। तत्र तल्लक्षणभेदादिकमुक्तं यथा “यस्याः पतिरग्निमक्षणे देशान्तरं यास्यत्येव सा प्रवत्स्यत्पतिका। अस्याश्चेष्टा काकुवचनकातरप्रेक्षणगमनविघ्नोपदर्शननिर्वेदसन्तापसम्मोहनिश्वासवाष्पादयः। सा च मुग्धामध्याप्रौढापरकीया धारणीभेदात् पञ्चविधा तदुदाहरणानि तत्र दृश्यानि।

**प्रवद्यामन्** त्रि॰ या–भावे बा॰ मनिन् प्रवत् प्रकृष्टगतियुक्तः यामा गतिर्यस्य। प्रकृष्टगमनेन शीघ्रयायिनि ऋ॰ १।१

१८।२ भाष्ये दृश्यम्। तत्र टाप्स्थाने "सुपांसुलोपः" इत्यादिना पा॰ यात्। अतो नोपधालोप इति बोध्यम्।

**प्रवयन** न॰ प्र+वय–गतौ भावे ल्युट्। १प्रकर्षेण २वयने करणे ल्युट्। ३पतोदे हेमच॰। [२पुराणे निघण्टुः

**प्रवयस्** त्रि॰ प्रकृष्टं वयोऽस्य। १वृद्धे स्थविरे हेमच॰।

**प्रवय्या** स्त्री प्र+वि–यत् "भव्यप्रवय्ये छन्दसि" पा॰सि॰। प्रकर्षेण गतियुतायां स्त्रियां स्त्रियामेवास्य निपातः पुंसि कर्मणि तु यत् प्रवेय इति सि॰कौ॰।

**प्रवर** पु॰ प्र+वृ–अप्। १सन्ततौ २गोत्रे गोत्रप्रवर्त्तकमुनिव्यावर्त्तके ३मुनिभेदे च। ४श्रेष्ठे त्रि॰ ५अगुरुचन्दने न॰। मेदि॰। गोत्रभेदे गोत्रप्रवर्त्तकमुनिभेदाश्च आश्वला॰ ८।१४श्र॰ दृश्याः। तदधिकं प्रवराध्यायादौ दृश्यम्।

**प्रवरललित** न॰ "यमौनः सो रौगः प्रवरललितं नाम वोध्यम्" वृ॰र॰ टीकोक्ते षोडशाक्षरपादके छन्दोभेदे।

**प्रवरवाहन** पु॰ द्वि॰व॰। प्रवरं वाहनं ययोः। अश्विनीकुमारयोः हेमच॰।

**प्रवर्ग** पु॰ प्रवृज्यतेऽसौ प्र+वृज–कञ्। १विष्णौ हरिवं॰ ४२ अ॰। २प्रवर्ग्ये महावीरे हेमच॰। तत्र प्रवर्ग्य इत्येव पाठो न्याय्यः।

**प्रवर्ग्य** पु॰ प्र+वृज–कर्मणि ण्यत् कुत्वम्। १महावीरे तत्प्रकारः कात्या॰ श्रौ॰ २६अ॰ प्रवर्ग्याध्याये दृश्यम्। अस्त्यर्थे मतुप्। प्रवर्ग्यवत्। २तद्युते ३यज्ञभेदे पु॰ शत॰ब्रा॰ २।४।४।१।

**प्रवर्त्तक** त्रि॰ प्रवर्त्तयति प्र+वृत–णिच्–ण्वुल्। प्रवृत्तिजनके "बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताविषयकं ज्ञानम् इष्टसाधनताविषयकं कृतिसाध्यताज्ञानं वा प्रवर्त्तकमिति तार्किकाः। यथा वा अविशेषवक्तृप्रतिसन्धानजन्यं कार्यताज्ञानं प्रवर्त्तकमिति गुरवः। "चोदनेति क्रियायाः प्रवर्त्तकं वचनम्" चोदनासूत्रे शवरभाष्यम् "क्रियाया नियोगस्य ज्ञानद्वारा प्रवर्त्तकं वाक्यं चोदनेत्यर्थः।

**प्रवर्त्तना** स्त्री प्र+वृत–णिच्–युच्। प्रवृत्तिजनकव्यापारे विध्यादौ "अस्ति प्रवर्त्तनारूपमनुरूपं यदाथ॑पि" इति भर्तृहरिः। भावे ल्युट् तत्रार्थे आरम्भे च न॰।

**प्रवलाकिन्** पु॰ १भुजङ्गे २चित्रमेखलके च त्रिकः।

**प्रवसु** पु॰ इलिलपुत्रे दुष्मन्तभ्रातरि नृपभेदे भा॰आ॰९४अ॰।

**प्रवह** पु॰प्र+वह–अच्। "यथाद् ज्योतींषि वहति प्रवहस्तेन कीर्त्तितः" इत्युक्ते १वायुभेदे। भावे अप्। २नगराद्बहिर्गमने

**प्रवहण** न॰ प्र+वह–करणे ल्युट्। १मनुष्यवाह्ये २वस्त्राच्छादिते स्त्रीवाहने कर्णीरथे (महाफाल) अमरः।

**प्रवह्लि** स्त्री प्रवह्लि–पृषो॰ अनन्त्यादि॰ वर्णव्यत्ययश्च। प्रहेलिकायां भरतः वा ङीप् तत्रार्थे स्वार्थे कः। तत्रार्थे अम॰

**प्रवा** पु॰ प्रकर्षेण वाति गच्छति वा–क्विप्। अश्वे यजु॰१५।६ वेददी॰।

**प्रवाच** त्रि॰ प्रकृष्टा वाक् यस्य। युक्तियुक्तवाक्यवक्तरि जटा॰।

**प्रवाणी** स्त्री प्र+वे–ल्युट् ङीप्। १तन्तुवायशलाकायाम् (माकु) निष्क्रान्ता प्रवाणात् निरा॰स॰ गौणत्वे प्रवाणिशब्दस्य ह्रस्वे सम्भवति भरतेन यत् वाणिशब्दस्यापि ह्रस्वान्तत्वं कल्पितं तच्चिन्त्यम्।

**प्रवात** त्रि॰ प्रकृष्टो वातो यत्र। १सुखसेव्यवातयुक्तदेशादौ प्र+वा–क्त। २निम्ने प्रवणे च प्रवातेजस्शब्दे दृश्यम्।

**प्रवाट** त्रि॰ प्रकर्षेण वाति प्र+वा–शतृ। १प्रकृष्टगतियुते २प्राणे पु॰ "प्राणो वै प्रवान्" शत॰ब्रा॰ १।४।२।२

**प्रवातेजस्** त्रि॰प्रवातं प्रवणं तेज ओजो यस्य। प्रवाततेजसि निरु॰ ६।८ [लोकवादे २परस्परकथोपकथने च।

**प्रवाद** पु॰प्र+वद–घञ्। १परम्परागतवाक्ये लोकेषु २प्रसिद्धे

**प्रवादिन्** त्रि॰ प्र+वद–ताच्छील्ये णिनि। परस्परकथनकारके स्त्रियां ङीप्।

**प्रवार** पु॰ प्र+वृ–आच्छादने करणे घञ्। आच्छादने वस्त्रे विभाषेत्यनुवर्त्तमानात् अपि प्रवर तत्रार्थे सि॰कौ॰॥

**प्रवारण** न॰प्र+वृ–णिच्–ल्युट्। १काम्यदाने २काम्यस्य उत्तमवस्तुनो दाने च अमरः। ३प्रकर्षेण वारणे मेदि॰। ४महादाने त्रिका॰तस्य उत्तमवस्तुनो दानरूपत्वात्तथात्वम्

**प्रवास** पु॰ प्रस्थितस्य वासः। स्वदेशात् प्रस्थितस्य भिन्नदेशे वासे चिरप्रवासगतस्य पुनरनागतस्य वार्त्ताद्यश्रवणे कालविशेषे तस्य प्रेतत्वावधारणाद्युक्तं नि॰त॰ "सन्देहे त्वाह यमः "गतस्य न भवेत् वार्त्ता यावत् द्वादशवार्षिकी। प्रेतावधारणात्तस्य कर्त्तव्यं सुतबान्धवैः। यत्रापि यदकुर्वीतस्तत्रापि तदहःक्रिया। दिनाज्ञाने कुहूस्तस्य आषाढस्याथ वा कुहूः"। नि॰सि॰ वृद्धमनुः "प्रोषितस्य तथा कालो गतश्चेद्द्वादशाब्दिकः। प्राप्ते त्रयोदशे वर्षे प्रेतकार्याणि कारयेत्"। बृहस्पतिः "यस्य न न श्रूयते वार्त्ता यावद्द्वादश वत्सरान्। कुशपुत्तलकदाहेन तस्य स्यादवधारणा"। भविष्ये "पितरि प्रोषिते यस्य न वार्त्ता नैव चागमः। ऊर्द्ध्वं पञ्चदशाद्वर्षात् कृत्वा तत्प्रतिरूपकम्। कुर्यात्तस्य तु संस्कारं यथोक्तविधिना

तत्र: । तस्यादौ न्येव सर्वाणि प्रेतकर्माणि कारयेत्” । द्वाद-शाब्दमतीत्या पितृभिन्नविषयेति मदनरत्ने उक्तम् । ब्रह्मपुराणकारिकायान्तु “तस्य पूर्ववयस्कस्य विंशत्यब्दोर्द्ध्वतः क्रिया । अर्द्धं पञ्चदशाब्दात् तु मध्यमे वयसि स्मृता । द्वादशाब्दात्परादूर्द्ध्वमुत्तरे वयसि स्मृता । चान्द्रायणत्रयं कृत्वा त्रिंशत् कृच्छ्राणि वा सुतैः । कुशैः प्रतिकृतिं दग्ध्वा कार्य्याः शौचादिकाः क्रियाः” इत्युक्तम् पराशरः “देशान्तरगतो नष्टस्तिथिर्न ज्ञायते यदि । कृष्णाष्टमी ह्यमावास्या कृष्णा चैकादशी च वा । उदकं पिण्डदानं च तत्र श्राद्धं तु कारयेत्” । इदं मासज्ञाने” प्रवासादागतेन गुर्वादेः पादयोर्ग्रहणपूर्वकम् प्रणामो विहितः यथा “विप्रोष्य पादग्रहणमन्वहञ्चाभिवादनम् । गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन् । मातृष्वसा मातुलानी श्वश्रूश्चाथ पितुः स्वसा । सम्पूज्या गुरुपत्नीव समास्ता गुरुभार्य्यया । भ्रातृभार्य्योपसंग्राह्या सवर्णाऽहन्यहन्यपि । विप्रोष्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः । पितुर्भगिन्यां मातुश्च ज्यायस्यां च स्वसर्य्यपि । मातृवद्वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी” कौर्मपु०१२अ०

**प्रवासन** न० प्र+वस–णिच्–भावे ल्युट् । १विदेशवासने “सीताप्रवासनपटोः करुणा कुतस्ते” उत्तरचरितम् । २वधे अमरः । ३निर्वासने पुरात् बहिर्यापने ।

**प्रवासिन्** त्रि० प्र+वस-णिनि । १विदेशे वासिनि हेमच० । “प्रवासी सुखमायाति” भटपञ्चाशिका । स्त्रियां ङीप्

**प्रवास्य** त्रि० प्र+वस–णिच्-कर्मणि यत् । पुरान्निर्वास्ये मनुः ८।२८४

**प्रवाह** पु० प्र+वह–घञ् । १प्रवृत्तौ २जलादिस्रोतसि मेदि० ३व्यवहारे विश्वः ४उत्तमाश्वे नानार्थरत्ना० । ५स-न्ततौ कालेन देशेन वा विच्छेदाभावे“प्रवाहरूपेणानादि”

**प्रवाहक** त्रि० प्र+वह–ण्वुल् । १प्रकर्षेण वोढरि २राक्षसे पुंस्त्री० शब्दमाला ।

**प्रवाहण** पु० १जैवले ऋषिभेदे शत०ब्रा० १४।९।१।१ तस्यापत्यं शुभ्रा० ढक् पूर्वपदस्य वा वृद्धिः । प्रावाहणेय प्रवाहणेय तदपत्ये पुंस्त्री० ततोऽपत्ये इञ् प्रावहणेयि प्रवाहणेयि प्रवाहणेयस्यापत्ये पुंस्त्री० । प्रवाहयति प्र+वह–णिच्-ल्यु । २प्रवाहयितरि “विभुरसि प्रवाहणः” यजु० ५।२१

**प्रवाहिका** स्त्री प्र+वह–रोगाख्यायाम् ण्वुल् । ग्रहणीरोगे अमरः ग्रहणीशब्दे २७५२पृ० दृश्यम् । ततः अपनयने तसि । प्रवाहिकातः कुरु प्रवाहिकायाः प्रतीकारं कुर्वित्यर्थः सि०कौ० ।

**प्रवाहिन्** त्रि० प्र+वह–णिनि । १प्रवाहयुते त्रि० प्रवाह+पुष्करा०देशे इनि ङीप् । २प्रवाहिणी प्रवाहयुतदेशे स्त्री

**प्रवाही** स्त्री प्र+वह–णिच्-अच् गौरा० ङीष् । बालुकायाम् राजनि० ।

**प्रवाह्य** पु० प्रवाहे भवः यत् । १रुद्रभेदे यजु० १६।४३। प्र+वह-कर्मणि ण्यत् । २प्रकर्षेण वाह्ये च । [अमरः

**प्रविख्याति** स्त्री प्र+वि+ख्या–भावे क्तिन् । अतिप्रसिद्धौ

**प्रविदारण** न०प्रविदार्य्यतेऽत्र प्र+वि+दॄ-णिच्-आधारे ल्युट् । १युद्धे अमरः । भावे ल्युट् । २अवदारणे मेदि० । कर्मणि ल्युट् । ३आकीर्णे त्रि० शब्दर०। कर्त्तरि ल्यु ४प्रविदारणकारके त्रि० ।

**प्रविवर** न० प्रकृष्टं विवरं छिद्रमस्य । १प्रीतकाष्ठे शब्दच० । २प्रकृष्टच्छिद्रयुते त्रि० । [क्षेपयुते च अमरः ।

**प्रविश्लेष** त्रि० प्रकर्षेण विश्लेषो यस्य । १विधुरे २परमवि-

**प्रविषा** स्त्री प्रकृतं विषं यया । अतिविषायाम् (आतइच्) अमरः ।

**प्रविष्ट** त्रि०प्र+विश–कर्त्तरि क्त । १कृतप्रवेशे २पैप्पलादिकैरभिकवीभीतरि स्त्री हरिवं० १९१अ० ।

**प्रवीण** त्रि० वीणया प्रगायति प्र+वीणा+णिच्–अच् । १निपुणे वीणया गायकस्य नैपुण्यप्रसिद्धेः तस्य स्वनैपुण्यवत्त्वात्तथात्वम् । भौत्यस्य मनोः २पुत्रभेदे पु०हरिवं०७अ०।

**प्रवीर** पु० प्रा०स० । १प्रकृष्टवीरे २सुभटे ३उत्तमे त्रि०भरतः ४हर्य्यश्वनृपपुत्रभेदे पु०विष्णुपु०। ५पूरोः पौष्ट्र्यां भार्य्यायां जाते पुत्रभेदे पु० भा०आ०९४अ० । ६ऐलस्य उपदानव्यां जाते ६पुत्रभेदे पु० हरिवं०२२अ०। ७पुरुवंश्ये प्रचिन्वतः पुत्रे नृपभेदे पु० हरिवं० ३१अ० ।

**प्रवीरबाहु** पु० राक्षसभेदे रामा० ६।२५ स० ।

**प्रवृञ्जनीय** पु० प्र+वृजी–कर्मणि अनीयर् । १प्रवर्ग्ये २महावीरे कात्या० २६।७।१४ [वेददीपः ।

**प्रवृत्** न० प्रवृणोति भूतानि प्र+वृ–क्विप् । जले यजु०१५।६

**प्रवृतहोम** पु० होमभेदे कात्या०श्रौ० ९।८।१६८

**प्रवृत्त** त्रि० प्र+वृत–कर्त्तरि क्त । १कृतप्रवृत्तिके प्रवृत्तियुते २आरब्धे च “प्रवृत्तमन्यथा कुर्य्यात् यदि मोहात् कथञ्चन” छन्दोगप०। ३प्रवृत्तिलक्षणे धर्मभेदे । भावे क्त । ४प्रवृत्तौ न० ।

**प्रवृत्तक** न० “यदा समावोजयुग्मकौ पूर्वयोर्भवति तत्प्रवृत्तक-

कम्" वृ०र० उक्ते वैतालीयप्रकरणीये मात्रावृत्तभेदे ।

**प्रवृत्तचक्र** पु० प्रवृत्तं स्वाज्ञानुसारेण चक्रं राष्ट्रादि यस्य । राष्ट्रादिष्वप्रतिहताज्ञे, "प्रवृत्तचक्रतां चैव वाचिकत्वं प्रभुतां तथा" याज्ञ० व्या० मिताक्षरा ।

**प्रवृत्ति** स्त्री प्र+वृत-क्तिन् । १प्रवाहे २वार्त्तायाम् ३अवन्त्यादिदेशे मेदि० ४हस्तिमदे हेमच० । ५न्यायोक्ते चिकीर्षाकृतिसाध्यताज्ञानाधीने ६प्रयत्नभेदे च प्रयत्नशब्दे दृश्यम् । "चिकीर्षाकृतिसाध्येष्टसाधनत्वमतिस्तथा । उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं मतम्" भाषा० । "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" गौत०सू० "एतस्मान्मिथ्याज्ञानादनुकूलेषु रागः प्रतिकूलेषु द्वेषः रागद्वेषाधिकाराच्चासत्येर्ष्यामायालोभादयो दोषा भवन्ति । दोषैः प्रयुक्तः शरीरेण प्रवर्त्तमानो हिंसास्तेयप्रतिषिद्धमैथुनान्याचरति वाचाऽनृतपरुषसूचनासम्बद्धानि, मनसा परद्रोहं परद्रव्याभीप्सां नास्तिक्यञ्चेति सेयं पापात्मिकाऽधर्माय अथ शुभा शरीरेण दानं परित्राणं परिचरणञ्च । वाचा सत्यं हितं प्रियं स्वाध्यायञ्चेति मनसा दयामस्पृहां श्रद्धाञ्चेति सेयं धर्माय । अत्र प्रवृत्तिसाधनौ धर्माधर्मौ प्रवृत्तिशब्देनोक्तौ । यथा अन्नसाधनाः प्राणाः । अन्नं वै प्राणिनः प्राणा इति । सेयं कुत्सितस्याभिपूजितस्य च जन्मनः कारणम्" भाष्यम् । "प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः" गौ० सू० "प्रवृत्तिदोषजनितोऽर्थः फलम्" गौ०सू० "प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम्" कुसा० । "प्रत्यगात्मनीति स्वात्मनीत्यर्थः इच्छाद्वेषजनिते प्रवृत्तिनिवृत्ती प्रयत्नविशेषौ व्याख्यातौ हिताहितप्राप्तिपरिहारफलके शरीरकर्मणी चेष्टालक्षणे जन्येते तथा च परशरीरे चेष्टां दृष्ट्वा इयं चेष्टा प्रयत्नजन्या चेष्टात्वात् मदीयचेष्टावत् स च प्रयत्न आत्मजन्य आत्मनिष्ठो वा प्रयत्नत्वात् मदीयप्रयत्नवदिति परात्मनोऽनुमानम्" उप०सू० । "इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिः" गौ०सू० "विहितकर्मणि रागनिबन्धना निषिद्धे कर्मणि हिंसादौ द्वेषनिबन्धना प्रवृत्तिः । तत्र रागनिबन्धना यागादौ प्रवृत्तिर्धर्मं प्रसूते द्वेषनिबन्धना हिंसादौ प्रवृत्तिरधर्मम् । तावेतौ रागद्वेषौ संसारमनुवर्त्तयतः" वात्स्या० । प्रवृत्तिस्तु द्वयी । कारणरूपा कार्यरूपा च । तत्राद्या यत्नत्वजातिमती प्रत्यक्षसिद्धा । द्वितीया तु धर्माधर्मरूपा यागादेरगम्यागमनादेश्च चिरध्वस्तस्य व्यापारतया कर्मनाशाजलस्पर्शादेः प्रायश्चित्तादेश्च नाश्यतया सिध्यतीति । (गौ०सू० ४।१) भट्टमते प्रवृत्तिर्द्वेधा । स्वेच्छाधीना परप्रेरणाजन्या । तत्राद्यायां प्रवर्त्तनाया अनुपयोगोऽपि द्वितीयप्रवृत्तौ सा प्रयोजिका । यथा आचार्य्यप्रेरणयेदं करोमीति" दि०क० । ७शब्दानामर्थबोधनशक्तिभेदे "प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी" कुमा० । ८तत्तद्विषये इन्द्रियादीनां व्यापारे च । [भिज्ञे २चरभेदे पु० त्रिका० ।

**प्रवृत्तिज्ञ** त्रि० प्रवृत्तिं वृत्तान्तं जानाति ज्ञा—क । १वृत्तान्ता-

**प्रवृत्तिनिमित्त** न० ६त० । १शब्दानां बोधनाय शक्तिनिमित्ते शक्यतावच्छेदके । यथा घटशब्दस्य प्रवृत्तिनिमित्तं घटत्वमेव शुक्लादिशब्दस्य शुक्लत्वं पाचकादेः पाकः देवदत्तादेः तत्तत्पिण्डादि । "सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च" काव्यप्र० ।

**प्रवृद्ध** त्रि० प्र+वृध—क्त । १वृद्धियुक्ते २प्रौढे च हेमच० ।

**प्रवृद्धादि** न० उत्तरपदस्यान्तोदात्ततानिमित्ते शब्दगणे स च गणः पा०ग० उक्तो यथा "प्रवृद्ध प्रयुत अवहित अनवहित खट्वारूढ कविशस्तः आकृतिगणः" ।

**प्रवेक** त्रि० प्र+विच—कर्मणि घञ् । प्रधाने अमरः ।

**प्रवेट** पु० प्र+वी—ट । यवे त्रिका० ।

**प्रवेणि(णी)** स्त्री प्र+वेण—इन् वा ङीप् । १गजपृष्ठस्थे कुथे चित्रकम्बले २वेण्यां जलादिप्रवाहे च मेदि० ।

**प्रवेल** पु० प्र+वेल—अच् । पीतमुद्गे (सोनामुग) हेमच० ।

**प्रवेश** पु० प्र+विश—घञ् । अन्तर्गमने हेमच० ।

**प्रवेशक** त्रि० प्रविशति प्र+विश—ण्वुल् । १प्रवेशकर्त्तरि सा०द० उक्ते अर्थोपक्षेपके २दृश्याङ्कभेदे "अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ" इत्युपक्रमे "प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः । अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा" । अङ्कद्वयान्तरित्युक्तेः प्रथमाङ्के चरमाङ्के चास्य प्रतिषेधः । यथा वेणीसंहारे अश्वत्थामाङ्के राक्षसमिथुनप्रयोजितः" एवमन्यत्रापि ।

**प्रवेशन** न० प्रविश्यतेऽनेन प्र+विश—करणे ल्युट् । १प्रधानद्वारे २सिंहद्वारे च । भावे ल्युट् । ३प्रवेशे हेमच० । प्र+विश+णिच—ल्युट् । ४प्रवेशसम्पादने । प्रवेशनं प्रयोजनमस्य छ । प्रवेशनीय प्रवेशनसाधने त्रि० ।

**प्रवेष्ट** पु० प्र+वेष्ट—अच् । १बाहौ अमरः २बाहुनीचभागे शब्दच० ३हस्तिदन्तमांसे हारा० । ४गजपृष्ठस्थाने त्रिका० स्वार्थे प्रायशः क । प्रवेष्टक दक्षिणबाहौ "प्रविश्य

प्रवेष्टेन निमित्तं सूचयित्वा” म॰कु॰“प्रवेष्टेन दक्षिण-बाहुना तत्स्पन्देन निमित्तं स्त्रीलाभरूपशुभसूचकं शकुनं सूचयित्वा “वामेतरभुजस्पन्दोऽवरस्त्रीसूचकः” शाकुनोक्तेः तत्स्पन्दस्य स्त्रीलाभसूचकत्वम् ।

**प्रव्यक्त** त्रि॰ प्रकर्षेण व्यक्तः । स्फुटे अमरः ।

**प्रव्याध** पु॰ प्रकृष्टो व्याधो यत्र । बलाधिक्येन क्षिप्तशरस्य पतनं यत्र तादृशे स्थाने शत॰ब्रा॰ ५।१।५।१२। कात्या॰१४।३।१६

**प्रव्रजन** न॰ प्राप्य स्थण्डिलादि व्रजनम् । स्वगृहस्थानं पुत्रादीन् च परित्यज्य व्रजने सन्न्यासे ।

**प्रव्रजित** पु॰ प्र+व्रज—क्त । १सन्न्यासिनि त्रिका॰ २मांस्यां ३मुण्डीर्यां ४तापसाख्ये स्त्री ५बुद्धभिक्षुकीभेदे मेदि॰ । परनिपाते प्रव्रजितशब्दस्य पाठात् कुमारप्रव्रजिता पुंसि तु न प्रव्रजितकुमार इत्येव ।

**प्रव्रज्या** स्त्री प्राप्य पुत्रादीन् व्रज्या व्रज—भावे क्यप् । पुत्रादीन् परित्यज्य गमने सन्न्यासाश्रमे ।

**प्रव्रज्यावसित** पु॰ प्रव्रज्यातोऽवसितः । सन्न्यासच्युते “प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजोत्तमाः । निर्वासं कारयेद्विप्रं दासत्वं क्षत्रवैश्ययोः” कात्यायनवचनम् । तत् प्रायश्चित्तञ्च याज्ञ॰ व्याख्याने मिताक्षरायाम् “वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रं चरित्वा महाकक्षं वर्द्धयेत् भिक्षुर्वानप्रस्थवत् सोमवृद्धिवर्ज्जम्” । कृतप्रायश्चित्तानामपि तेषामव्यवहार्यता यथोक्तम् “वर्हिस्तूभयथापि स्मृतेराचाराच्च” शा॰ सू॰ । यद्यूर्द्ध्वरेतसां स्वाश्रमेभ्यः प्रच्यवनं महापातकं यदि वोपपातकमुभयथापि शिष्टैस्ते बहिः कर्त्तव्याः “आरूढ़पतितं विप्रं मण्डलाच्च विनिःसृतम् । उद्बद्धं कृमिदष्टञ्च स्पृष्ट्वा चान्द्रायणं चरेत्” इति चैवमादिनिन्दातिशयस्मृतिभ्यः शिष्टाचाराच्च । न हि यज्ञाध्ययनविवाहादीनि तैः सहाचरन्ति शिष्टाः” भाष्यम् ।

**प्रव्राज** पु॰ प्र+व्रज-आधारे घञ् । १खातकनिम्ने देशे ऋ॰ ७।६०।७ भा॰ । भावे घञ् । २सन्न्यासे च ।

**प्रशंसन** न॰ प्र+शन्स—भावे ल्युट् । गुणकीर्त्तनेन स्तुतौ । युच् । प्रशंसनाऽप्यत्र स्त्री ।

**प्रशंसा** स्त्री प्र+शन्स—भावे अ । गुणाविष्कारेण स्तुतौ हेम॰

**प्रशंसोपमा** स्त्री काव्यादर्शोक्ते अर्थालङ्कारभेदे यथा “ब्रह्मणोऽप्युद्भवः पद्मश्चन्द्रः शम्भुशिरोधृतः । तौ तुल्यौ त्वन्मुखेनेति सा प्रशंसोपमोच्यते” । तौ पद्मचन्द्रौ त्वन्मुखेन तुल्यौ इति पद्मचन्द्रयोः प्रशंसितयोरपि त्वन्मुखसाम्येन प्रशंसातिशयात् मुखस्य च अधिकोत्कर्षव्यञ्जनात् प्रशंसोपमा उच्यते ।

**प्रशत्वन्** पु॰प्र+शद-क्वनिप् तुट् च । १समुद्रे उज्ज्वल॰ स्त्रियां ङीप् वनोर च । प्रशत्वरी २नद्यां उज्ज्वल॰ ।

**प्रशम** पु॰ प्र+शम—घञ् न वृद्धिः । १शान्तौ २निवृत्तौ च । प्रशाम्यति प्र+शम-अच् गौरा॰ङीष् । ३अप्सरोभेदे स्त्री भा॰अनु॰ १९अ॰ । ४रन्तिदेवस्य पुत्रभेदे पु॰ भाग॰ ९।२४।१६

**प्रशमन** न॰प्र+शम—णिच-ल्युट् । १वधे २शान्तताकरणे च “लब्धप्रशमनस्वास्थ्यम्” रघु॰ “सर्वाबाधाप्रशमनम्” चण्डी शम—भावे ल्युट् । ३शान्तौ हेमच॰ । [शब्दच॰ ।

**प्रशस्त** त्रि॰ प्र+शन्स—क्त । १प्रशंसनीये २श्रेष्ठे ३क्षेमे च

**प्रशस्ताद्रि** पु॰ वृ॰सं॰ १४अ॰ उक्ते मध्यदेशस्थे गिरिभेदे ।

**प्रशस्ति** स्त्री प्र+शन्स-भावे क्तिन् । १प्रशंसायाम् २स्तुतौ ऋ॰१।७४।२

**प्रशस्य** स्त्री प्र+शन्स—कर्मणि क्यप् । १प्रशंसनीये । तस्य इष्ठेयसुनोः परतः श्रादेशः अतिशयेन प्रशस्यः श्रेष्ठः श्रेयान् भावे क्यप् । २प्रशंसने न॰ ।

**प्रशाखा** स्त्री प्रगता शाखाम् अत्या॰स॰ । शाखाशाखायाम् भा॰कर्ण॰ १०६८ श्लोक॰ ।

**प्रशान्** अव्य॰ प्र+शो वा॰ डनि स्वरादि॰ । सामर्थ्ये

**प्रशासन** न॰ प्र+शास—भावे ल्युट् । शिष्यादीनामिष्टादिबोधकाय कर्त्तव्यताबोधकवाक्योच्चारणे “शासनेन प्रशासनमभूत्” का॰ख॰ ।

**प्रशास्तृ** पु॰ प्र+शास—उणा॰ सू॰ तृन् संज्ञायां अनिट् च । यज्ञरूपशंसनकर्त्तरि ऋत्विग्भेदे असंज्ञायान्तु तृच्—इट् । प्रशासितृ । प्रशासनकर्त्तरि राजादौ ।

**प्रशास्त्र** त्रि॰ प्रशास्तुरिदम् अण् संज्ञापूर्वविधेरनित्यत्वात् न वृद्धिः । यज्ञरूपशंसनकर्त्तृसम्बन्धिनि ।

**प्रशिष्य** पु॰ प्रगतः शिष्यमध्यापकत्वेन अत्या॰स॰ । शिष्यस्य शिष्ये “शिष्यप्रशिष्यैरुपगीयमानमवेहि तन्मण्डनमिश्रधाम” शङ्करदिग्विजयः ।

**प्रश्न** पु॰ प्रच्छ—भावे नङ् । जिज्ञासायाम् ज्ञातुमिच्छया १कथनाय प्रेरणे अमरः । अविज्ञातार्थज्ञानार्थम् इच्छाप्रयोज्यवाक्ये “अविज्ञातप्रवचनं प्रश्न इत्यभिधीयते” । जिज्ञासाशब्देन तत्प्रयोज्यकथानुकूलव्यापारोलक्ष्यते को भवान् ? किमेतस्य लक्षणम् ? इत्यादि । २उपनिषद्भेदे पु॰ दैवज्ञं प्रति भाविशुभाशुभज्ञानाय दैवज्ञस्य वचनानुकूल व्यापारे तदुत्तरज्ञापकशास्त्रञ्च प्रश्नमनोरमादि ।

**प्रश्नदूती** स्त्री प्रश्नस्य दूतीव । प्रहेलिकायाम् त्रिका० ।

**प्रश्नविवाक** पु० कृतान् प्रश्नान् विवक्ति उत्तरयति वि+वच–कर्त्तरि संज्ञायां घञ् । प्रश्नोत्तरदायके ज्योतिर्विद्भेदे "मर्य्यादायै प्रश्नविवाकम्" यजु० ३०।१० वेददी० ।

**प्रश्नव्याकरण** पु० प्रश्नान् शिष्यकृतप्रश्नान् व्याकरोति उत्तरयति वि–व्या+कृ–ल्यु हृत० । १जैनभेदे हेमच० । भावे ल्युट् । २पृष्टार्थोत्तरज्ञापने न० ।

**प्रश्नि** पु० १ऋषिभेदे भा०शा०२६अ० । पृच्छ–बा–नि वा ङीप् । २कुम्भिपाकायां (थाना) त्रिका० ।

**प्रश्नोपनिषद्** प्रश्नाधिकारेण प्रवृत्ता उपनिषत् । आथर्वणोपनिषद्भेदे "भगवन् ! कुतो वा इमाः प्रजाः प्रजायन्ते" इत्यादि षट्प्रश्नाधिकारेण तस्याः प्रवृत्तेस्तथात्वम् ।

**प्रश्रय** पु० प्र+श्रि–करणे अच् । प्रणये अमरः ।

**प्रश्रित** त्रि० प्र+श्रि–क्त । १विनीते अमरः शान्तिदेवस्य २पुत्रभेदे पु० भाग० ८।२४।२५

**प्रश्लथ** त्रि० प्रकर्षः श्लथः प्रा०स० । प्रकृष्टे शिथिले त्रिका० ।

**प्रश्लिष्ट** त्रि० प्र+श्लिष–क्त । सम्बन्धे युक्तियुक्ते आश्रिता० नाद्यान्तोदात्तता ।

**प्रश्वास** पु० प्र+श्वस–भावे घञ् । कोष्ठस्य वायोर्बहिर्निःसारणे "श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः" पा०त० सू० भाष्यम् । कुम्भकशब्दे २११४पृ० दृश्यम् ।

**प्रष्टृ** त्रि० प्रच्छ–तृच् । प्रश्नकारके स्त्रियां ङीप् ।

**प्रष्टि** पु० प्रच्छ–कर्त्तरि बा० ति । वाहनसमध्यवर्त्तिनि अश्वभेदे ऋ० १।३९।६

**प्रष्ठ** त्रि० प्र+स्था–क "प्रष्ठोऽग्रगामिनि" पा० षत्वम् । १अग्रगामिनि । २श्रेष्ठे च अमरः । तस्य पत्नी ङीप् । ३तत्पत्न्यां स्त्री । गौरा०ङीष् । ४शकटकोषधौ स्त्री राजनि० ।

**प्रष्ठवाह्** त्रि०प्रष्ठं वहति वह–ण्वि । १युगपार्श्वगे प्रथमयोजिते दम्ये गवादौ अमरः युगपार्श्वे योजिते गवादिके शिक्षार्थं यं प्रथमं वाहयति तस्मिन् । भत्वे वाह ऊट् प्रष्ठौहः प्रष्ठौहा इत्यादि । स्त्रियां ङीप् प्रष्ठौही तथाविधस्त्रियाम् २प्रथमगर्भिण्यां गवि धरणिः ।

**प्रस** प्रसवे ततौ च सक०दिवा० आ० सेट् । प्रस्यते अप्रसिष्ट । मित् घटादि णिच् प्रसयति ते ।

**प्रसक्त** त्रि० प्र+सन्ज–क्त । १प्रसङ्गविषये "प्रसक्तं हि प्रतिषिध्यते" मीमांस० । २नित्ये नित्यतायुक्ते त्रि०जटा०

**प्रसक्ति** स्त्री प्र+सन्ज–भावे क्तिन् । १प्रसङ्गे २आपत्तौ ३अनुमितौ दीधितिः । ४व्याप्तौ च "अतिप्रसक्तिरन्यधर्मत्वे" वा०स० । अतिव्याप्तिशब्दे । [१०] भाष्ये दृश्यम् ।

**प्रसक्तिन्** पु० प्र+सञ्ज–बा० णिनि । प्रसङ्गशीले ऋ०८।१२।

**प्रसंख्यान** न० प्र+सम्+ख्या–भावे ल्युट् । १सम्यग्ज्ञाने "हरः प्रसंख्यानपरो बभूव" कुमा० । प्रा०स० । २प्रकर्षेण संख्यायुते त्रि० भा० व० १२१अ० ।

**प्रसङ्ग** पु० प्र+सन्ज–भावे घञ् । १प्रकृष्टसङ्गे २व्याप्तिरूपे सम्बन्धे यथाऽतिप्रसङ्गः अप्रसङ्ग इत्यादौ ३सङ्गतिभेदे "प्रसङ्ग उपोद्धातो हेतुतावसरस्तथा । निर्वाहकैककार्य्यत्वे षोढा सङ्गतिरिष्यते" । तत्र "प्रसङ्गत्वम् स्मृतत्वे सत्युपेक्षानर्हत्वं तच्च स्मृतिविषयतापन्नत्वे सति द्वेषविषयतानापन्नत्वम्" अनुमितौ गदाधरः । ४अनुरक्तत्वे ५प्रस्तावे ६मैथुनासक्तौ ७प्राप्तौ च "कृताकृतप्रसङ्गि नित्यं तद्विपरीतमनित्यम्" व्या०परिभाषा । तत्र प्रसङ्गः प्राप्तिरेव "शब्दान्तरम् प्राप्नुवन् विधिरनित्यो भवति शब्दान्तरात् प्राप्नुवतः शब्दान्तरेऽप्राप्नुवतश्च लक्षणान्तरेण प्राप्नुवन् विधिरनित्यः" नागेशः । क्वचित् कृताकृतप्रसङ्गमात्रेणापि नित्यता" व्या० परिभाषा । प्रसङ्गशब्देन प्राप्तिरेव आख्याता । अन्योद्देशेन प्रवृत्तौ अन्यस्यापि उपस्थितौ तत्र यथान्यस्य सिद्धिस्तथा तदुदाहरणादिकञ्च प्रा०त० उक्तं यथा "अन्योद्देशेन प्रवृत्तावन्यस्यापि सिद्धिः प्रसङ्गः यथा पश्वर्थमनुष्ठितेन प्रयाजादिना पशुतन्त्रमध्यपातिनः पुरोडाशस्यापि उपकारः सिध्यति । यथा वा "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति वाजिभ्यो वाजिनम्" इत्यत्रामिक्षार्थं प्रवृत्तौ प्रसङ्गेनवाजिनस्यापि सिद्धिः" । यथा वा काम्ययागनित्यत्वर्थमनुष्ठितैराग्नेयादिभिर्नित्ययागादिसिद्धिरिति मिताक्षरोक्तम् । यथा दण्डनिपातप्रायश्चित्तेनैव गुरुत्वा तत्रान्तरीयका–वमोरणप्रायश्चित्तमपि सम्पद्यत इति प्रायश्चित्तविवेकोक्तम् । तथा ब्राह्मणवधोद्देशेन द्वादशवार्षिके कृते क्षत्रियवधनिमित्तकत्रैवार्षिकप्रायश्चित्तस्य सिद्धिः । एवञ्च तन्त्रप्रसङ्गयोरनावृत्तेनैव कर्मणा नानादृष्टफलसिद्धौ नावत्तमेव हेतुः । नन्वब्राह्मणोरवधक्षत्रियवधप्रायश्चित्तयोः कथं प्रसङ्गेन सिद्धिः सङ्कल्पादेरभावात्, तयोः सङ्कल्पादिः कुत इति चेत् प्रायश्चित्तत्वात् तथात्वेऽपि कथं सङ्कल्प इति चेत् काम्यत्वात्" । "एवञ्च काम्यस्य सर्वाङ्गाधिकरणे सर्वाङ्गोपेतस्यैव फलवत्त्वाभिधानात् तथापि प्रसङ्गविषयत्वे काम्ये हि काम्याभिलापरहितकुशतिलजलत्यागरूपः सङ्कल्पः शास्त्रार्थे इति मुख्यपाक्षिक०

रयोक्तेन “प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत् । प्रायश्चित्तमुपासीनो वाग्यतस्त्रिषवणं स्पृशेत्” इति लिखितवचने प्रत्येकं नियतं कालमिति तत्तद्व्रतकाल संख्याम् आत्मनो व्रतम् आत्मसम्बन्धित्वेन आत्मकर्तृत्वेन इति यावत् । तेनास्तकव्रतमहद्भुरिषग् इति चादिशेदुल्लेखं कुर्य्यात् इत्यनेन प्राप्तस्य सङ्कल्पस्य बाधः” इत्याशङ्क्य तत्र समाहितं यथा “प्रायश्चित्तस्य नित्यत्वेनाङ्गवैकल्येऽपि फलसिद्धिः” । अत्रेदं बोध्यम् प्रसङ्गशब्देन व्याप्तिरेवोच्यते तथा चोद्दिष्टकर्मणा व्याप्तस्य यत्र सिद्धित्वेनास्य प्रवृत्तिः । उद्दिष्टकर्मणः व्याप्यस्य देशकालकर्मादीनां प्रयोगानुबन्धिनां वैधहेतुभूतानामेवैक्ये भवति अतस्तन्त्रवदत्रापि कालदेशाद्यन्तर्भावेनैव व्याप्यता” ।

**प्रसङ्गसम** पु॰ स्थापनाहेतुप्रयोगे प्रतिषेधहेतुरूपजात्युत्तरभेदे “दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ” गौ॰५।१।९ “साधनस्यापि साधनं वक्तव्यमिति प्रसङ्गे प्रत्यवस्थानं प्रसङ्गसमः प्रतिषेधः क्रियाहेतुगुणयोगी क्रियावाँल्लोष्ट इति हेतुर्नोपदिश्यते । न च हेतुमन्तरेण सिद्धिरस्तीति । दृष्टान्तस्य कारणं प्रमाणं तदनपदेशोऽनभिधानम् अभिधानं चानतिप्रयोजनकं तथा च दृष्टान्तस्य साध्यवत्त्वे प्रमाणाभावाभावात् प्रत्यवस्थानमर्थः । यद्यपीदं सदुत्तरमेव तथापि दृष्टान्ते प्रमाणं वाच्यं तत्रापि प्रमाणान्तरमित्यनवस्थया प्रत्यवस्थाने तात्पर्य्यं तदुक्तमाचार्य्यैरनवस्थाभासप्रसङ्गः प्रसङ्गसम इति एतन्मते हेतोर्हेत्वन्तरमित्यनवस्थाऽपि प्रसङ्गसम एव पूर्वमते तु हेत्वनवस्थादिकं वक्ष्यमाणात्तिगणेष्वन्तर्भूतमिति विशेषः । अनवस्थादेशनाभासा चेयं प्रतिदृष्टान्तसमः प्रत्येतव्यः” वृत्तिः । अस्योत्तरं तत्रोक्तम् । “प्रदीपादानप्रसङ्गनिवृत्तिवत्तद्विनिवृत्तिः” गौ॰सू॰ “इदं तावदयं पृष्टो वक्तुमर्हति अथ के प्रदीपमुपाददते किमर्थं वेति दिदृक्षमाणाः दृश्यदर्शनार्थमिति । अथ प्रदीपं दिदृक्षमाणाः प्रदीपान्तरं कस्मान्नोपाददते अन्तरेणापि प्रदीपान्तरं दृश्यते प्रदीपः तत्र प्रदीपदर्शनार्थं प्रदीपोपादानं निरर्थकम् । अथ दृष्टान्तः स किमर्थमुच्यत इति । अप्रज्ञातस्य ज्ञापनार्थमिति अथ दृष्टान्ते कारणापदेशः किमर्थं दृश्यते यदि प्रज्ञापनार्थम् प्रज्ञातो दृष्टान्तः स खलु लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त इति तत्प्रज्ञानार्थः कारणापदेशो निरर्थक इति प्रसङ्गसमस्योत्तरम्” । प्रसङ्गसमे प्रत्युत्तरमाह । दृष्टान्तो हि निदर्शनस्थानत्वेनसाध्यनिश्चयार्थमपेक्ष्यते न तु दृष्टान्तदृष्टान्ताद्यनवस्थितपरम्परा लोकसिद्धा युक्तिसिद्धा वा अन्यथा घटादिप्रत्यक्षाय प्रदीप इव प्रदीपप्रत्यक्षार्थमनवस्थितप्रदीपपरम्परा प्रसज्येत तदीयसाधनमपि व्याहन्येत” वात्स्या॰।

**प्रसज्य** पुं॰ भीमो भीमसेनवत् प्रसज्यप्रतिषेधस्यान्त्यलोपः । प्रसज्यप्रतिषेधे अत्यन्ताभावे अत्र रोगीति निन्द्यान्वयात् प्रसज्यता” मल॰त॰ रघु॰ ।

**प्रसज्यप्रतिषेध** पु॰ प्रसज्य प्रसक्तिं सम्पाद्यारोप्येति यावत् प्रतिषेधः । अत्यन्ताभावे “प्रसक्तं हि प्रतिषिध्यते” इति न्यायेन आरोपितप्रसङ्गस्यैव निषेधः तेन वायौ रूपं नास्तीत्यादावपि वायौ रूपारोपं कृत्वैव निषेधो नञा बोध्यते इति विवेकः । कलञ्जाधिकरणशब्दे १७७७पृ॰ नञ्शब्दे ३१४२ पृष्ठादौ मतभेदेन नञः पर्युदासप्रसज्यप्रतिषेधपरता दृश्या । “अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्” शाब्दिकाः । न कलञ्जं भक्षयेदित्यत्र बलवदनिष्टासाधनत्वविशिष्टेष्टसाधनत्वरूपस्य विध्यर्थस्याभावो नञा बोध्यते तेन विधेरप्राधान्यं नञर्थाभावस्य च प्राधान्यं तेन तत्र क्रियापदान्वयिनञ्प्रसज्यप्रतिषेधार्थकः । गुरुमते तु कलञ्जभक्षणाभावविषयकं कार्य्यमिति बोधेन अभावविशेष्यकबोधेऽपि प्रतिषेधस्य प्राधान्यात् तथात्वं तथा च तन्मते क्वचित् विधेरप्राधान्येन क्वचित् प्रतिषेधस्य प्राधान्येन इति व्यस्तमेव प्रसज्यप्रतिषेधप्रबोधकप्रयोजकमिति बोध्यम् ।

**प्रसत्ति** स्त्री प्र+सद--क्तिन् । १नैर्मल्ये २प्रसन्नतायाम् जटा॰

**प्रसत्वन्** पु॰प्र+सद-वनिप् । १धर्मे २प्रजापतौ च सं॰उणा॰। ३प्रतिपत्तौ स्त्री ङीप् वनोर च । [सन्धौ च ।

**प्रसन्धि** पु॰ १मनुपुत्रभेदे भा॰आश्व॰४अ॰। प्रा॰त॰। २प्रकृष्ट-

**प्रसन्न** त्रि॰ प्र+सद--कर्मरि क्त । १निर्मले २सन्तुष्टे ३कतातृणभेदे अमरः । ४सुरायां स्त्री मेदि॰ “प्रसन्ना शुक्लवातार्शोविबन्धानाहनाशिनी । शूलप्रवाहिकाटोपकफवातार्शसां हिता” राजवल्लभः । तस्य भावः तल् प्रसन्नता स्त्री त्व प्रसन्नत्व न॰ तद्भावे प्रसादे नैर्मल्ये च ।

**प्रसन्नात्मन्** त्रि॰प्रसन्नो निर्मल आत्मा यस्य । १प्रसन्नान्तःकरणे २विष्णौ पु॰ “सुप्रसादः प्रसन्नात्मा” विष्णुस॰ । तत्स्वरूपस्य निर्दोषत्वात्तथात्वम् ।

**प्रसन्नेरा** स्त्री कर्म० । मदिराभेदे भरतः ।

**प्रसभ** त्रि० प्रगता सभा सभाधिकारोऽस्मात् प्रा०ब० । बलात्कारे अमरः "प्रसभोद्धृतारिः" रघुः ।

**प्रसयन** न० प्र+सि—बन्धने करणे ल्युट् । बन्धनसाधने १तन्तौ २जाले च "प्रसितिः प्रसयनात् तन्तुर्वा जालं वा" निरु० ६।१२।

**प्रसर** पु० प्र+सृ—भावाधारादौ यथायथम् अप् कर्त्तरि अच् वा । तन्तुविटपादेः प्रकर्षेण १सर्पणे प्रकर्षेण २सरणे अमरः ३वेगे ४प्रणये च मेदि० । ५समूहे शब्दर० ६युद्धे विश्वः । ७नाराचास्त्रे दर्विसर्पणकर्त्तरि त्रि० ।

**प्रसरण** न० प्र+सृ—भावे ल्युट् । १सैन्यादेः सर्वतो गमने तृणाद्याहरणार्थं सैन्यानामितस्ततो गतौ २आसारे अमरः । अनि प्रसरणि तथार्थे स्त्री रामाश्रमः वा ङीप् ।

**प्रसर्पण** न० प्र+सृप—ल्युट् । सैन्यानां सर्वतोव्याप्तौ अस्य स्त्रीत्वमु तत्र ङीप् । [कासे हेमच० ।

**प्र(प्रा)सल** पु० प्र+सल—अच् सुषो० प्रस ( खोवा ) हेमन्त-

**प्रसलवि** अव्य० प्रदक्षिणे शत०ब्रा० २।६।१।१।१५ भाष्यम् ।

**प्रसव** पु०प्र+सू—भावादौ अप् । १गर्भमोचने २उत्पत्तौ ३कार्य्ये ४फले ५पुष्पे ६अपत्ये च मेदि० नारीणां गर्भस्थिति कालश्च भावप्र० उक्तो यथा

"नवमे दशमे मासि नारी गर्भं प्रसूयते । एकादशे द्वादशे वा ततोऽन्यत्र विकारतः" । वैकृतं यथा "गर्ग उवाच "अकालप्रसवा नार्य्यः कालातीताः प्रजास्तथा । विकृतप्रसवाश्चैव युग्मप्रसवनास्तथा । अमानुषा अवयवाच नजातव्यञ्जनास्तथा । हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा स्त्रियः । पशवः पक्षिणश्चैव तथैव च सरीसृपाः । विनाशं तस्य देशस्य नृपस्य च विनिर्दिशेत् । निर्वासयेत्तां नृपतिः स्वराष्ट्रात् स्त्रियश्च, पूज्याश्च ततो द्विजेन्द्राः । किमिच्छिकैर्गोभूमयतर्पणैश्च लोके ततः शान्तिमुपैति पापम्" मात्स्ये २०९अ० । "भानौ सिंहगते चेत् यस्य गौः संप्रसूयते । मरणं तस्य निर्दिष्टं षड्भिर्मासैर्न संशयः । अत्र शान्तिं प्रवक्ष्यामि येन सम्पद्यते शुभम् । प्रसूतां तत्क्षणादेव तां गां विप्राय दापयेत् । ततो होमं प्रकुर्वीत घृताक्तैराजसर्षपैः । आहुतीनां घृताक्तानामयुतं जुहुयात्ततः" नारदः । "प्रसवविकारे स्त्रीणां द्विविचतुःप्रभृति सम्प्रसूतौ वा । हीनातिरिक्तकाये च देशकुलसङ्क्षयो भवति । वडवोष्ट्र महिषगोहस्तिनीषु यमलोद्भवे मरणमेषाम् । षण्मासात् सूतिफलं शान्तौ श्लोकौ च गर्गोक्तौ "नार्य्यः परस्य विषये त्यक्तव्यास्ता हितार्थिना । तर्पयेच्च द्विजान् कामैः शान्तिं चैवात्र कारयेत् । चतुष्पदाः स्वयूथेभ्यस्त्यक्तव्याः परभूमिषु । नगरं स्वामिनं यूथमन्यथा हि विनाशयेत्" वृ०सं० ४६अ० । गण्डान्तप्रसवप्रकारः ज्यो० त० उक्तो यथा "अस्ति गोदावरीतीरे जम्भिका नाम राक्षसी । तस्याः स्मरणमात्रेण विशल्या गर्भिणी भवेत्" । "षष्ठ रेखाः समुल्लिख्य तिर्य्यगूर्ध्वं क्रमेण हि । पदानि१६ षट्दशाचाद्य त्वेकमादौ स्वनौ७ न्यसेत् । नवमे सप्तदशाद्यम् वाणा५ पञ्चदशे तथा । द्वितीयेऽष्टावष्टमे षट् द्विश्च१०द्वौ षोडशे श्रुति४म् । एकादिना समं देयमिच्छाद्यौङ्क त्रिकोणके । तदा द्वात्रिंशदादिः स्यात् चतुःकोष्ठेषु सर्वतः । दर्शनाद्धारणात्तासां शुभं स्यादेषु कर्मसु । द्वात्रिंशत् प्रसवे नार्य्यास्तत्स्त्रिंशद्ग्रहमे नृणाम् । मृतारिष्टेषु पञ्चाशद् मृतापत्यासु वै शतम् । दावप्रतिसु सन्ध्यायां चतुःषष्टीरथाध्वनि । विप्रे विंशो भान्यकोटेष्टाविंशतिरेव च । चतुरष्टौ१२ च बालानां रोदने परि कीर्त्तिता" । स्थानविशेषादिस्थग्रहभेदानां विकृतप्रसवसूचकताभेदः ह०जा० उक्तो यथा

"उदयस्थेऽपि वा मन्दे कुजे वास्तं७ समागते । स्थिते वांऽन्तःसपापाख्ये शशाङ्कसुतशुक्रयोः । शशाङ्के पापलग्ने वा वृश्चिकेश(कुज) त्रिभागगे । शुभैःस्वाय२।११। स्थितैर्जातः सर्पस्तद्वेष्टितोऽपि वा । चतुष्पदे गते भानौ शेषैर्वीर्य्यसमन्वितैः । द्वितनुस्थैश्च यमलौ भवतः कोशवेष्टितौ । छागसिंहवृषैर्लग्ने तत्स्थे सौरेऽथ वा कुजे । राश्यंशसदृशे गात्रे जायते नालवेष्टितः" ।

स्थानभेदे प्रसवसूचकयोगः ह०जा० उक्तो यथा

"पूर्णे शशिनि स्वराशिगे सौम्ये लग्नगते शुभे सुखे । लग्नः जलजेऽस्तगेऽपि वा चन्द्रे पोतगता प्रसूयते । आप्योदयमाप्यगः शशी सम्पूर्णः समवेक्षतेऽथ वा । मेषूरणबन्धुलग्नः ग स्यात् सूतिः सलिले न संशयः । उदयोडुपयोर्व्यय१२स्थिते गुप्ता पापनिरीक्षिते यमे । अलिकर्किणते विलग्नगे सौरे शीतकरेक्षितेऽवटे । मन्देऽब्जगते विलग्नगे बुधसूर्येन्दुनिरीक्षिते क्रमात् । क्रीडाभवने सुरालये शैलभूमिषु च प्रसूयते । नृलग्नगं प्रेक्ष्य कुजः श्मशाने रम्ये सितेन्दू गुरुरग्निहोत्रे । रविर्नरेन्द्रामरगोकुलेषु शिल्पालये ज्ञः प्रसवं करोति । राश्यंशसमानगोचरे मार्गे जन्म चरे स्थिरे गृहे । स्वर्क्षांशगते स्वमन्दिरे

नवयोगात् फलमंशकयोः। आरार्कजयोस्त्रिकोणगे चन्द्रेऽस्तो च विसृज्यतेऽन्यथा। दृष्टेऽमरराजमन्त्रिणा दीर्घायुः सुखभाक् च स स्मृतः। पापेक्षिते तुहिनमा उदये कुजेऽस्ते॥ त्यक्तो विनश्यति कुजार्कजयोस्तथाये। सौम्येऽपि पश्यति तथाविधहस्तमेति सौम्येतरेषु परहस्तगतोऽप्यनायुः। पितृमातृगृहेषु तद्बलात्तरुशालादिषु नीचगैः शुभैः। यदि नैकगतौ तु वीक्षितौ लग्नेन्दू विजने प्रसूयते। मन्दक्षांशे शशिनि हिबुके मन्ददृष्टेऽब्जगे वा तद्युक्ते वा तमसि शयने नीचसंस्थैश्च भूमौ। यद्वद्राशिर्व्रजति हरिजं गर्भमोक्षस्तु तद्वत् पापैश्चन्द्रात् स्मरसुखगतैः क्लेशमाहुर्जनन्याः"। अथ सूतिकागृहमानम् "अष्टहस्तायतञ्चाष्टचतुर्हस्तविशालकम्। प्राचीद्वारमुदग्द्वारं विदध्यात् सूतिकागृहम्"। आसन्नप्रसवायालक्षणमाह "जाते हि शिथिले कुक्षौ मुक्ते हृदयबन्धने। शूले जघने नारी विज्ञेया प्रसवोत्सुका। आसन्नप्रसवायास्तु कटीपृष्ठन्तु सव्यथम्। भवेन्मुहुः प्रवृत्तिश्च मूत्रस्य च मलस्य च"। अथासन्नप्रसवाया उपचारः "तैलेनाभ्यक्तगात्राणां संस्नातासुखगारिणा। यवागूश्यापयेत् कोष्णां मात्रया हितसंयुतान्। ततोपधाने मृदुभिर्विस्तीर्णे शयने शनैः। आभुग्नसक्थि चोत्ताना नारी तिष्ठेदुपक्रमात्विता"। (आभुग्नसक्थि आसङ्कोचितोरुः) अथ धात्री "चतस्रोऽपक्लीयाश्च नार्यो कुशला हिताः। छिन्ननखाः स्त्रियः परिचरेयुस्ताः सम्यक् छिन्ननखाः स्त्रियः"। अथ तत्कृत्यम् "अपत्यमार्गं तैलेन समभ्यज्य समन्ततः। एका तु तासु सुभगे! प्रवाहस्वेति तां वदेत्। अन्यथा मा प्रवाहिष्ठाः प्रवाहेथा व्यथा यदि। प्रवाहेथाः शनैः पूर्वं प्रगाढ़ञ्च ततःपरम्। ततो गच्छति गर्भे योनिद्वारमुपागते। अपरावहितो गर्भो यावत् पतति भूतले"। अथाप्रवाहितायाः प्रवाहणाद्दोषमाह "मूकं वा बधिरं कुब्जं श्वासकासक्षयान्वितम्। सूते सन्ततमालस्यात् च प्रवाहणात्" भावप्र०। नवममासादिप्रसवकालश्च नारीणामन्यजन्तूनां भाषाभेदादन्यथा ज्याः

**प्रसवक** पु० प्रसवेन पुष्पादिना कायति कै–क। पियालवृक्षे शब्दमाला। [वृन्ते (बोंटा) अमरः।

**प्रसवबन्धन** न०बन्ध–करणे ल्युट् प्रसवस्य पुष्पादेः बन्धनम्।

**प्रसवस्थली** स्त्री ६त०। प्रसवस्य स्थलीव वा। १उत्पत्तिस्थाने २मातरि च।

**प्रसवितृ** पु० प्रसूते उत्पादयति प्र+सू–तृच् उत्पादनानुकूलव्यापारार्थत्वात् तृच्। १पितरि शब्दरत्ना० निरु० ६।२॥ प्रसूतौ २मातरि स्त्री ङीप्।

**प्रसविन्** त्रि० प्र+सू–शीलार्थे इनि। प्रसवशीले।

**प्रसव्य** त्रि० प्रगतं सव्यं वामत्वम्। १प्रतिकूले अमरः। कर्मणि यत्। २प्रसवनीये त्रि०।

**प्रसह** त्रि० सहति प्र+सह–अच्। १प्रकर्षेण सोढरि प्रसह्य बलात्कारेण भक्षयतीति प्रसहः। बलात्कारेण भक्षके २खगभेदे "काको गृध्र उलूकश्च चिल्लश्च शशघातकः। चाषो भासश्च कुरवः इत्याद्याः प्रसहाः स्मृताः" शशघातकः (बाज) इति लोके "प्रसहाः कीर्त्तिता एते प्रसह्याच्छिद्य भक्षणात्। प्रसहाः खलु वीर्योष्णास्तन्मांसं भक्षयन्ति ये। ते शोषभस्मकोन्मादैः शुक्रक्षीणा भवन्ति हि" भावप्र०।

**प्रसहन** त्रि० प्रगतं सहनं यस्य। १अमारहिते २हिंस्रपशुभेदे पुंस्त्री० "शार्दूलसिंहशरभर्क्षतरक्षुखलावेऽन्यान् प्रसह्य विनिहत्य निवर्त्तयन्ते। ते कीर्त्तिताः प्रसहनाः पललं तदीयमर्शःप्रमेहजठरामयशान्तिकारि" राजनि०। भावे ल्युट्। ३आलिङ्गने प्रकर्षेण ४क्षमायां च।

**प्रसह्य** अव्य० प्र+सह–ल्यप्। १हठादित्यर्थे अमरः "प्रसह्य तेजोभिरसंख्यतां गतैः" माघः। प्र+सह–कर्मणि शक्यार्थे यत्। प्रकर्षेण २सोढुं शक्ये त्रि०। [नचौरे त्रिका०।

**प्रसह्यचौर** पु०प्रसह्य बलात्कारेण चौरः। (डाकाइत)प्रका-

**प्रसह्यहरण** न० प्रसह्य बलात्कारेण हरणम्। १चविवेण कन्यायाः बलाद्धरणे भा०आ० ११९अ०। २हठेन हरणे (डाकाइति) प्रसह्यहरणं च साहसभेदः। [२१।४।२१।

**प्रसह्वन्** त्रि० प्र+सह–क्वनिप्। प्रसहनकर्त्तरि चमे कात्या०

**प्रसातिका** स्त्री सो–क्तिन् प्रगता सातिरस्याः कप् प्रा०स०। अणुधान्ये सूक्ष्मधान्ये रत्नमाला।

**प्रसाद** पु०प्र+सद–भावे घञ्। १नैर्मल्ये २अनुग्रहे ३काव्यगुणभेदे ४स्वास्थ्ये ५प्रसत्तौ ६देवनैवेद्ये ७गुरुजनभुक्तावशिष्टे च अमरः। काव्यगुणभेदश्च रसस्यैव धर्मभेदः शब्दानां तथात्वमुपचारात् यथोक्तं सा०द० "रसस्याङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा"। गुणाः यथा खल्वङ्गित्वमाप्तस्यात्मन उत्कर्षहेतुत्वात् शौर्यादयो गुणशब्दवाच्याः तथा काव्येऽङ्गित्वमाप्तस्य रसस्य धर्माः। स्वरूपविशेषाः माधुर्यादयोऽपि स्वसमर्पकपदसन्दर्भस्य काव्यव्यपदेशस्यौपाधिकानुगुणभाज इत्यर्थः"। यथा चैषां

रसमात्रस्य धर्मत्वं तथा दर्शितम्। “एवं माधुर्य्यौजो-ऽथ प्रसाद इति ते त्रिधा” इत्युपक्रमे “चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः। स प्रसादः समस्तेषु रसेषु रचनासु च”। व्याप्नोति व्याविष्करोति। “शब्दास्तद्व्यञ्जका अर्थबोधकाः श्रुतिमात्रतः” यथा “सूचीमुखेन सकृदेव कृतव्रणस्त्वं मुक्ताकलाप! लुठसि स्तनयोः प्रियायाः। बाणैः स्मरस्य शतशो विनिकृत्तमर्मा स्वप्नेऽपि तां कथमहं न विलोकयामि” सा०द०“प्रसादवत् प्रसिद्धार्थमिन्दोरिन्दीवरद्युति। लक्ष्म लक्ष्मीं तनोतीति प्रतीतिं सुभगं वचः” काव्यादर्शः। धर्मस्य पत्न्यां मूर्त्तौ जाते पुत्रभेदे भाग० ४।१।५१।

प्रसादना स्त्री प्र+सद-णिच्-युच्। १सेवायां हेमच०। भावे ल्युट्। २प्रसादने तत्रार्थे न०“मैत्रीकरुणामुदितो-पेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसा-दनम्” पा०सू०। चित्तप्रसादनशब्दे २९१४ पृ०दृश्यम्।

प्रसादपट्ट पु० प्रसादसूचकः पट्टः शा०त०। अनुग्रहसूचके ह०सं०५०अ० उक्ते पट्टभेदे पट्टशब्दे ४२०१पृ० दृश्यम्।

प्रसाधक त्रि० प्रसाधयति प्र+साधि-ण्वुल्। १भूषके स्त्रियां टापि अत इत्वम्। २अलङ्कर्त्र्यां स्त्रीभारवाहे स्त्री भावप्र०। राज्ञां प्रसाधकार्थे ३सेवकभेदे पु० “कूटवञ्चन-कर्त्तारस्तथा व्यसनकास्तथा। प्रसाधका भोजकाश्च गात्र-संवाहका अपि। अलक्ताञ्जनकुङ्कुमगन्धभूषणदायकाः” कामन्द०।

प्रसाधन न० प्र+सिध-णिच्-साधादेशः ल्युट्। १अलङ्कारभूषणे वेशे। करणे ल्युट्। २कङ्कतिकायाम् स्त्री ङीप् अमरः। ३निष्पादने ४सिद्धौ च मेदि०।

प्रसाधित त्रि०प्र+साधि-क्त। १अलङ्कृते २निष्पादिते च।

प्रसारण न० प्र+सृ-णिच्-ल्युट्। १विस्तारकरणे २क्रिया-भेदे च भाष० कर्मन्शब्दे १७२०पृ०दृश्यम्। विप्रकृष्टदेश-संयोगहेतुक्रिया प्रसारणम्। करणे ल्युट् ङीप्। (गन्ध भादाल) ३लताभेदे स्त्री राजवल्लभः।

प्रसारिन् त्रि० प्र+सृ-णिनि। १विस्तारयुते स्त्रियां ङीप्। सा च २गन्धप्रसारणीलतायां स्त्री राजनि०।

प्रसित त्रि० प्र+षो-क्त। १आसक्ते अमरः तच्चोगे विषयाधारे सप्तम्यास्तृतीयायाश्च विधानात् आसक्त्यर्थपरत्वे तृती सप्तम्यौ हरिणा हरौ वा प्रसित इति तत्त्वबो०। प्रा०स०। २प्रकृष्टशुक्ले त्रि० ४पूये न० शब्दच०। तस्य प्रकृष्टशुभ्रत्वात् तथा त्वम्।

प्रसिति स्त्री प्र+सि-बन्धने करणे क्तिन्। बन्धनसाधने १निगडादौ अमरः। २तन्तौ ३जाले च प्रसयनशब्दे निरु०।

प्रसिद्ध त्रि० प्र+सिध-क्त। १भूषिते २ख्याते च मेदि०।

प्रसिद्धि स्त्री प्र+सिध-भावे-क्तिन्। १ख्यातौ २टङ्कारे त्रिका० ३भूषणे च।

प्रसुह्म पु० १सुह्मदेशसमीपस्थे देशे २तन्नृपे च भा०स०२९अ०।

प्रसू स्त्री प्र+सू-क्विप्। १मातरि अमरः २घोटक्यां च ३कदल्यां ४वीरुधि च मेदि०। स्वार्थे क। प्रसूका वाजिन्यां राजनि०।

प्रसूत त्रि० प्र+सू-कर्मणि क्त। १जातप्रसवे कर्त्तरि क्त। २संजाते ३प्रकटसूते त्रि०। ४कुसुमे न० मेदि०। ५जात-पत्यायां स्त्रियां स्त्री अमरः। चाक्षुषमन्वन्तरे देवगण-भेदे पु०मार्क०पु० ७६अ०।

प्रसूति स्त्री+सू-क्तिन् क्तिच् वा। १प्रसवे अमरः २उद्भवे ३तनये ४दुहितरि च मेदि० ५मातरि। स्वार्थे क। प्रसूतिका जातप्रसवायां स्त्रियाम् अमरः।

प्रसूतिज न० प्रसूतेः उद्भवादारभ्य जायते जन-ड। १दुःखे अमरः। २प्रसवजातमात्रे त्रि०।

प्रसून न० प्र+सू-क्त ओदित्वात् तस्य नः। १कुसुमे २फले च अमरः। ३जाते त्रि०मेदि०। [नमराद्यौऽयम्।

प्रसूनेषु पु० प्रसूनमिषुर्यस्य। पुष्पशरे कामे त्रिका० प्रसू-

प्रसृत न० प्र+सृ-क्त। १पलद्वये शब्दमा० २अर्द्धाञ्जलौ न०। कर्त्तरि क्त। ३प्रसरणयुते त्रि० अमरः। ४विहिते ५वेगिते त्रि० मेदि०। ६गते त्रि० त्रिका० ७नियुक्ते त्रि० हला०। ८जङ्घायां स्त्री मेदि०।

प्रसृतज पु० १कुण्डगोलकरूपे पुत्रभेदे “आत्मा पुत्रश्च विज्ञे-यस्तस्यानन्तरजश्च यः। निरुक्तजश्च विज्ञेयः सुतः प्रसृतजस्तथा” भा०अनु० ४९अ०। “निरुक्तजः स्वक्षेत्रे ऽन्येनोत्पादितः बीजिनिर्दिष्टः (क्षेत्रजः) प्रसृतोऽनियुक्तो यो लोल्यात् परक्षेत्रे रेतः सिञ्चति तज्जः प्रसृतजः” (कुण्डगोलकरूपः) नीलक०।

प्रसृति स्त्री प्र+सृ-क्तिन्। प्रसृते अर्द्धाञ्जलिमाने रायमु०।

प्रसृष्ट त्रि० प्र+सृज-क्त। १प्रकर्षेण सृष्टे “तलैर्वज्रनिपा-तैश्च प्रसृष्टाभिस्तथैव च” भा०वि० १३अ० व्याख्याने “अङ्गुल्यः प्रसृता यासु ताः प्रसृष्टा उदीरिताः” नीलकण्ठोक्तायां २प्रसृतायामङ्गुलौ स्त्री।

प्रसेक पु०प्र+सिच-भावे घञ्। १आसिञ्चने २च्युतौ च मेदि०

**प्रसेकिन्** पु० प्र+सिच–बा० विनुण्। १प्रसेचनशीले प्रसेकयुक्ते २व्रणभेदे असाध्ये रोगभेदे पु० सुश्रुतः “मांसपिण्डवदुद्भूताः प्रसेकिनोऽन्तःपूयवेदनावन्तोऽश्वाऽपानवदुद्भूतोष्ठाः” (व्रणभेदाः)।

**प्रसेदिका** स्त्री क्षुद्रारामे हेमच०।

**प्रसेन** पु० १अनमित्रपौत्रे सत्राजित्भ्रातरि क्षत्रियभेदे हरिवं० ३८अ० “सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः” स्यमन्तकोपाख्यानम्। [प्रसिद्धे स्त्रा।

**प्रसेनजित्** पु० नृपभेदे भा०स० ८अ०। हरिवं०१२अ० तद्

**प्रसेव** पु० प्र+सिव–कर्मणि घञ्। १वीणाङ्गे २स्यूते ३याचिते च मेदि०। प्र+सेव–भावे घञ्। ४प्रकृष्टसेवने पु०।

**प्रसेवक** पु० प्र+सिव–ण्वुल्। वीणाप्रान्तवक्रे १काष्ठे वीणादण्डाधः शब्दगाम्भीर्यार्थम् अलाबुमयं भाण्डं यच्चर्मादिना आच्छाद्य दीयते तस्मिन् पदार्थे अमरः। २स्यूतरचितपात्रे (थोकड़ा) ३प्रकृष्टस्यूतिकारके त्रि०।

**प्रस्कण्व** पु० प्रगतः कण्वं कारणत्वेन नि० सुट्। कण्वपुत्रे ऋषिभेदे स च बहूनां वेदमन्त्राणां द्रष्टृत्वात् ऋषिः।

**प्रस्कन्दन** न० प्र+स्कन्द–भावे ल्युट्। १आक्रन्दने “अग्निप्रस्कन्दनपरः” भा०आ० ८४अ०। अपादाने ल्युट्। आस्कन्दनापादाने यत आस्कन्दनं क्रियते२तस्मिन्। भावे ल्युट्। ३विरेके रत्नमा० तत्रार्थे प्रस्कन्दनमित्येव न्याय्यः पाठः स्कन्देर्धातोरर्थानुगमात् तत्रार्थे प्रस्कन्दनमिति पाठस्तु लिपिकरप्रमादात्। कर्त्तरि ल्यु। ४महादेवे भा० अ० १७अ०।

**प्रस्कुन्द** पु०प्रगतः कुन्दम् चक्रम् अत्या०स० पारस्करा०सुट्। कुन्दाख्यचक्राकारवेदिकायाम् “प्रस्कुन्देन प्रतिष्ठ्याः” भा०उ०७२अ०। “प्रस्कन्देनेति पाठे मध्यमशिफयेत्यर्थः”। नीलकण्ठः।

**प्रस्तर** पु०प्र+स्तॄ–अच्। १पाषाणे (पातर) २पल्लवादिरचिते शयनीये शब्दर० ३मणौ मेदि० ४दर्भमुष्टौ “अध्वर्युः प्रस्तरं प्रहरति” ताण्ड्य०ब्रा० ६।७।१६ “प्रस्तरो दर्भमुष्टिः” भाष्यम्। तं प्रशंसति “यजमानो वै प्रस्तरः” १७। “प्रस्तरस्य हविरासादनादिद्वारा यागसाधनत्वात् यजमानोऽपि यज्ञसाधनमिति यागसाधनत्वसाम्यात् प्रस्तरो यजमानत्वेन स्तूयते” भा०।

**प्रस्तरिणी** स्त्री प्रस्तरस्तदाकारोऽस्त्यस्य इनि ङीप्। गोलोमिकायां राजनि०।

**प्रस्तरेष्ठा** पु०प्रस्तरे तिष्ठन्ति स्था–क्विप् सप्तम्या०अलुक्स०। विश्वदेवभेदे यजु० ३।१७।

**प्रस्तार** पु० प्र+स्तॄ–घञ्। १तृणप्रधानवने हेमच०। २पल्लवादिरचितशयनीये शब्दर०। ३अध्यामाने हारा०। प्रस्तार्यन्ते विस्तार्यन्ते गुरुलघुरूपतया वर्णा मात्रा वा अनेन प्र+स्तॄ–विच्–करणे घञ्। ४लघुगुरुवर्णस्थापनक्रियाभेदे तत्प्रकारश्च वृ०र० उक्तो यथा

“पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः। यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम्। ऊने दद्याद्गुरूनेव यावत् सर्वलघुर्भवेत्। प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः”। “प्रस्तारणीयवृत्तादीनां सर्वगुरुके पादे पाद इत्युपलक्षणं वर्णानामपि। प्रथमपङ्क्तौ लिखिते आद्यात् प्रथमगुरोरारभ्येत्यर्थः। द्वितीयपङ्क्तौ अधः तस्यैव अधस्तात्पङ्क्तौ प्रथमं लघुं न्यस्य यथा उपरि अङ्कस्थपङ्क्तौ अपरे अवशिष्टाः अलिखिताश्च तथा तस्य दक्षिणपार्श्वेषु गुर्वादयो लेख्याः। तृतीयपङ्क्तौ तु पूर्वमाया गुरुव्यक्तेरधस्तात् लघुं न्यस्य शेषान् उपरिस्थद्वितीयपङ्क्तिस्थान् गुर्वादीन् न्यसेत् एवञ्च तृतीयपङ्क्तौ आद्यस्थानस्य न्यूनता तत्र किं देयमित्याकाङ्क्षायामाह, ऊने प्रस्तार्यसंख्यातो न्यूने सति वामभागे गुरून् दद्यात् एवं भूयो भूयः कुर्यात् यावच्च सर्वलघुकः पादो भवेत्, तावदेव कुर्यादित्यर्थः। त्र्यक्षरप्रस्तारे लघुगुर्वोः ऋजुवक्रतया तदाकारेणोदाहरणम्

प्रथमः भेदः ऽऽऽ मगणः द्वितीयो भेदः ।ऽऽ यगणः
तृतीयो भेदः ऽ।ऽ रगणः चतुर्थो भेदः ।।ऽ सगणः
पञ्चमो भेदः ऽऽ। तगणः षष्ठो भेदः ।ऽ। जगणः
सप्तमो भेदः ऽ।। भगणः अष्टमो भेदः ।।। नगणः

मात्राप्रस्तारे विशेषस्तु पिङ्गलादौ द्रष्टव्यः।

मात्रावृत्तप्रस्तारेऽयं विशेषः ऊने गुर्वादिक्रमेण वर्णा देयाः। मात्राद्वये अवशेषे एको गुरुः त्रिमात्रावशेषे एको गुरुः तद्वामे एको लघुरेव देया वृत्तमात्रसंख्यया न्यूनमात्राद्वारा संख्यापूरणार्थं गुरुलघुदानमिति बोध्यम्।

**प्रस्तारपङ्क्ति** स्त्री छन्दोभेदे छन्दःशब्दे २९७८पृ०दृश्यम्।

**प्रस्तार्य्यर्म्म** न० “समन्तादिस्तृतः श्यावो रक्तो वा मांसप्रभवः। सन्निपातेन दोषाणां प्रस्तार्य्यर्म्म तदुच्यते” वैद्यकोक्ते नेत्ररोगभेदे।

**प्रस्ताव** पु० प्र+स्तु– “प्रे द्रुस्तुस्रुवः” पा० भावकरणादौ घञ्। १प्रकरणे स्तवे २अवसरे अमरः। ३प्रसङ्गे भाव०

दीक्षितः ४प्रकरणे काव्यप्र० । ५सामावयवभेदे स च प्रस्तोतृनामकेन ऋत्विजा गेयः साम्नः प्रथमो भागः । "प्रस्तोतव्यां देवता प्रस्तावमन्वायत्ता" छा०उ०। तत्र देवता च प्राणरूपः प्राक्तत्रैवोक्तः ।

**प्रस्तावना** स्त्री प्र+स्तु–णिच्–ल्युट् । १आरम्भे अटा० "आर्य्य बालचरितप्रस्तावनाडिण्डिमः" वीरच०। प्रस्तावयति प्र+स्तु–णिच्–ल्यु । नाटकाङ्गे आरम्भार्थके आमुखे स्त्री तल्लक्षणभेदादिकं सा०द०उक्तं तच्च आमुख शब्दे ७६६ पृष्ठादौ दृश्यम् ।

**प्रस्तिर** न० प्र+स्तॄ वा० क ऋत इत्वं रपरत्वं च । पल्लवादिरचिते शयनीये शब्दर० । [१संहते २ध्वनिते च ।

**प्रस्तीत(म)** त्रि० प्र+स्त्यै–क्त तस्य मोवा सम्प्रसारणञ्च ।

**प्रस्तुत** त्रि० प्र+स्तु–कर्मणि क्त । १प्रकरणप्राप्ते २प्रारब्धे ३उपस्थिते ४उद्यते ५प्रतिपन्ने ६प्रकर्षेण स्तुते च ।

**प्रस्तृत** त्रि० प्र+स्तृ–क्त । १विस्तरिते त्रिका० । २प्रकर्षेण विस्तारिते त्रि० ।

**प्रस्तोतृ** त्रि०प्रकर्षे स्तौति प्र+स्तु–तृच् । १प्रकर्षेण स्तोतरि २साम्नः प्रथमभागगायके ऋत्विग्भेदे पु० अच्छावाकशब्दे ८१पृ० दृश्यम् । प्रस्तोतृकर्त्तृकं तत्कर्म वा अ । प्रस्तोत्रिय तत्साध्ये सामप्रथमभागे तत्सम्बन्धिनि च त्रि० ।

**प्रस्थ** त्रि०प्र+स्था–क । १प्रकर्षेण स्थितियुते २गन्तरि च प्रपूर्वकतिष्ठतेर्गत्यर्थत्वात् । ३आढ़कचतुर्थांशरूपे परिमाणभेदे पु० आढ़कशब्दे ६११ पृ० दृश्यम् । ४द्विशरावपरिमाणे वैद्यकम् । आधारे घञर्थे क । ५पर्वतसमभूभागे स्थितियोग्यस्थाने सानौ पु०न०। ६उच्छ्रितवस्तुनि मेदिनिः ७विस्तारे च "दीर्घप्रस्थो समानस्तु न कुर्य्यान्मन्दिरं बुधः" ब्रह्मवै०पु०ज०ख० १०२अ०। प्रस्थं पचति पच–ख मुम् । प्रस्थम्पच प्रस्थमितपाचके त्रि० ।

**प्रस्थपुष्प** पु०प्रस्थमिव पुष्पमस्य । १मरुवके अमरः २स्वल्पपत्र तुलस्यां ३जम्बीरभेदे त्रिका० ।

**प्रस्थल** युधर्मराजसम्बन्धिनि देशभेदे भा०भी० ७५अ० ।

**प्रस्थान** प्र+स्था–भावे ल्युट् । १जिगीषोर्युद्धार्थगमने २गमनमात्रे च प्रस्थानं यस्य तथाऽस्यास्ति ठन् । प्रस्थानप्रतिपादके ग्रन्थे यथा युधिष्ठिरादीनां महाप्रस्थानप्रतिपादकः भारतान्तर्गतपर्वभेदः ।

कार्य्यवशात् यात्रादिने स्वयंगमनासम्भवे दूरस्थभेदानां विप्रादिभेदे प्रस्थापनमाह मु०चि०पी० यथा वसिष्ठः "तस्मिन् मुहूर्त्ते स्वयमप्रयाणे प्रयोजनात्पेचितया च दैवात् । तत्रैव तन्निर्गमनं च कार्य्यं सीतासनास्त्राणि तदुच्यमानम् राजमार्त्तण्डः । "प्रस्थाने ब्राह्मणादीनां यज्ञसूत्रमथाऽऽयुधम् । मध्वामलफलं चैव प्रशस्तं हस्तिकारणम्" वसिष्ठः "श्वेतातपत्रध्वजचामराश्वविभूषणोपलीगजाम्बराणि । आन्दोलिका रत्नरथाश्ववारान् प्रयाणनाद्यं मनसस्त्वभीष्टम्" इति नारदोऽपि "अप्रयाणे स्वयं कार्य्यमपेक्ष्य भूपतिस्तथा । कुर्य्याच्चिन्र्गमनं छत्रध्वजवाहनसंयुतमिति" "गेहाद्गेहान्तरमपि गमनस्वपि यात्रेति गर्गः सीमाः सीमान्तरमपि भृगुर्वाणविक्षेपमात्रम् । प्रस्थानं स्यादिति कश्यतेऽथो भरद्वाज एवं यात्रा कार्य्या बहिरिह पुरात् ब्राह्मणो प्रवीति" । "प्रस्थानमत्र धनुषां हि शतानि पञ्च केचिज्जगुर्दशशतानि दशैव चान्ये । संप्रस्थितो न तु मन्दिरतः प्रयातो गन्तव्यदिशु तदपि प्रयतेन कार्य्यम्" । "प्रस्थाने भूमिपालो दशदिवसमभिव्याप्य नैकत्र तिष्ठेत् सामन्तः सप्तरात्रं तदितरमनुजः पञ्चरात्रं तथैव । ऊर्द्ध्वं गच्छेच्छुभाहेऽप्यथ गमनदिनात् सप्तरात्राणि पूर्वं चायन्नो तद्दिनेऽसौ रिपुविजयमना मैथुनं नैव कुर्य्यात्" मु०चि०। श्रीपतिरपि "वसिष्ठ चैकत्र दश क्षितीशो दिनान्यथो सप्त च मण्डलीकः । यः प्राकृतः सोऽपि न पञ्चरात्रं भद्रेण याता परतः प्रयोज्या" । राजमार्त्तण्डः "प्राच्यामहानि मुनयः प्रवदन्ति सप्त याम्यामतीव शुभदानि दिनानि पञ्च । तीर्त्येव पश्चिमदिशि क्षितिनायकानां प्रस्थानकेषु दिवसद्वयमुत्तरस्याम्" प्रस्थाप्रकारमाह गुरुः "पूर्वं दक्षिणमुत्तुल पादं याचाकरात्रियः । द्वात्रिंशतं पदं गत्वा यानमारुह्य संव्रजेत्" । करणे ल्युट् । ३मार्गे ४उपदेशोपाये च यथा श्रुतिस्मृतिन्यायप्रदर्शकम् उपनिषद्गीताशारीरकसूत्ररूपप्रमाणत्रयरूपं प्रस्थानत्रयम् । यथा वा भाष्यटीकायां पञ्चपादिकाभामतीप्रभृतिप्रस्थानत्रयम् ।

**प्रस्थापित** त्रि० प्र+स्था–णिच्–पुक् कर्मणि क्त । १प्रेरिते हेमच० । २प्रकर्षेण स्थापिते त्रि० ।

**प्रस्थायिन्** त्रि० प्र+स्था–गम्या० भविष्यति णिनि । १भाविगमनकर्त्तरि । "प्रे स्थः" उणा० इति णिच् । २गन्तुमनसि उज्ज्वलदत्तः । [भावप्र० ।

**प्रस्थिका** स्त्री प्रस्थमतदाकारोऽस्त्यस्याः ठन् । अम्बष्ठालतायां

**प्रस्नुषा** स्त्री स्नुषायाः स्नुषा प्रपौ० । नप्तृवध्वाम् । "स्नुषाश्च प्रस्नुषाश्चैव दृष्टवाऽप्रिय विक्लवाः" भा०स०

६०अ० । नीलकण्ठः । [जलादौ कात्या०श्रौ० २०।२।१२।

**प्रस्नेय** त्रि० प्रस्नातमर्हति प्र+स्ना—अर्हार्थे यत् । स्नानार्हे

**प्रस्पन्दन** न० प्र+स्पन्द—भावे ल्युट् । प्रकर्षेण स्पन्दने चलनक्रियाभेदे तच्च सुश्रुते देहे वायुलक्षणतया उक्तम् “तत्र प्रस्पन्दनोद्वहनपूरणविवेकधारणलक्षणो वायुः पञ्चधा प्रविभक्तः शरीरं धारयति” ।

**प्रस्फुट** त्रि० प्र+स्फुट—क्त । १प्रफुल्ले विकसिते पुष्पादौ शब्दरत्ना०। २सुस्पष्टे सुव्यक्ते च ।

**प्रस्फोटन** न० प्रस्फुत्यते अनेन प्र+स्फुट—करणे ल्युट् । १शूर्पे (कुला) ख्याते अमरः । भावे ल्युट् । २ताड़ने ३प्रकाशे च मेदि० ।

**प्रस्यन्द** पु०प्र+स्यन्द—भावे घञ् । १प्रकर्षेण क्षरणे “तदभिहितो भावो द्रव्यवत् प्रकाशते” उक्तेः २स्यन्दमाने रथादौ कर्त्तरि अच् । ३प्रक्षरणकर्त्तरि त्रि० “प्रस्यन्दमाध्वीकम्” कुसुमा० ।

**प्रस्रवण** न०प्र+स्रु—भावे ल्युट् । १अविच्छेदेन जलादिस्रवणे २स्वेदे च । आधारे ल्युट् । यत्र स्थाने जलं निपत्य कुल्लीभवति तादृशे ३स्थाने उक्ते क्षीरस्वामी । अप । प्रस्रव तदर्थे हेमच० । माल्यवति पर्वते पु० हेमच०।

**प्रस्राव** पु०प्र+स्रु—भावे घञ् । १प्रकर्षेण क्षरणे तदभिहितभावस्य द्रव्यपरत्वेन २मूत्रे अमरः ।

**प्र(स्वा)स्वन** पु० प्र+स्वन—भावे अप् पक्षे घञ् । उच्चैःशब्दे

**प्रस्वादस्** त्रि० प्र+स्वद—णिच्—असुन् । प्रकर्षेण स्वादयितरि ऋ० १०।११।६६

**प्रस्वाप** पु० प्रस्वाप्यते शत्रुरनेन प्र+स्वप—णिच्—करणे अच् । शत्रोः प्रस्वापनसाधने अस्त्रभेदे भा० उद्यो० १८४अ० । करणे ल्युट् । प्रस्वापन तथाविधार्थे भा०व० ४१अ० ।

**प्रस्वापिनी** स्त्री सत्यभामायाः भगिन्यां कृष्णभार्य्याभेदे हरिवं० १६८अ० । [१६८अ० उक्तम् ।

**प्रस्वेद** पु०प्र+स्विद—भावे घञ् । अत्यन्तस्वेदे तदौषधं गरुड़पु०

**प्रहत** त्रि० प्र+हन—क्त । १वितते २क्षुण्णे च शब्दरत्ना०।

**प्रहनेमि** पु० प्रहन्ति प्र+हन—ड तादृशो नेमिरिवास्य स्वरूपम् । चन्द्रे त्रिका०। [दिवसस्याष्टमे भागे अमरः ।

**प्रहर** पु०प्रह्रियते यामिकढक्कादिरस्मिन् प्र+हृ—आधारे अप् ।

**प्रहरकुटुम्बी** स्त्री कुटुम्बिनीक्षुपे राजनि०।

**प्रहरण** न० प्रह्रियतेऽनेन प्र+हृ—करणे ल्युट् । १अस्त्रे २कवीर्य्ये च अमरः । आधारे ल्युट् । २युद्धे । भावे ल्युट् । ३प्रहारे ४दमे च ।

**प्रहरणकलिका** स्त्री “ननभनलघुगैः प्रहरणकलिका” वृ०र० उक्ते चतुर्दशाक्षरपादके छन्दोभेदे ।

**प्रहरिन्** पु० प्रहरोऽधिकारकालत्वेनास्त्यस्य इनि । १याभिके २प्रहरकालाधिकृते ३सैन्यभेदे ।

**प्रहर्षण** त्रि० प्रहर्षयति प्र+हृष—णिच्—ल्यु । १प्रकर्षेण हर्षकारके २बुधग्रहे पु० त्रिका० करणे ल्युट् । ३प्रहर्षसाधने त्रि०। स्त्रियां ङीप् । सा च ४हरिद्रायां हारा० “म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयम्” वृ०र० उक्ते त्रयदशाक्षरपादके छन्दोभेदे च ।

**प्रहस** पु० राक्षसभेदे रामा०ल० २६अ० ।

**प्रहसन** न०प्र+हस—भावे आधारे वा ल्युट् । १प्रकर्षेण हासे परिहासे २दृश्यकाव्यरूपकभेदे मेदि०। ३आक्षेपे हेमच० रूपकभेदस्य लक्षणादि सा०द० यथा “भाणवत् सन्धिसन्ध्यङ्गलास्याङ्गाङ्कैर्विनिर्मितम् । भवेत् प्रहसनं वृत्तं निन्द्यानां कविकल्पितम् । अत्र नाऽऽरभटी नापि विष्कम्भकप्रवेशकौ । अङ्गी हास्यरसस्तत्र वीथ्यङ्गानां स्थितिर्न वा” । तत्र “तपस्विभगवद्विप्रप्रभृतिष्वत्र नायकः । एको यत्र भवेद् धृष्टो हास्यं तच्छुद्धमुच्यते” यथा कन्दर्पकेलिः ।

**प्रहसन्ती** स्त्री प्र+हस—शतृ ङीप् । १यूथ्यां त्रिका० २वासन्तीलतायां राजनि०। प्रा०व०। ३महाङ्गारधान्याम् ।

**प्रहस्त** पु० प्रततो हस्तो यत्र । १विस्तृताङ्गुलिपाणौ चपेटे अमरः । रावणसैन्याधिपे ३राक्षसभेदे भा०व० २७४अ० ।

**प्रहाणि** प्र+हा—नि वालम् । अपचये ।

**प्रहार** पु० प्र+हृ—भावे घञ् । आघाते ।

**प्रहारण** न० प्र+हृ—णिच्—ल्यु । काम्यदाने शारदासुन्दरी ।

**प्रहारवल्ली** स्त्री प्रहारस्य वेदनोपशमनार्थं वल्ली शाक०त० । मांसरोहिण्याम् भावप्र० । [रामा०आर० ३१।१८

**प्रहारिन्** त्रि०प्र+हृ—णिनि । १प्रहारकर्त्तरि पु०२राक्षसभेदे

**प्रहास** पु० प्रकृष्टो हासोऽस्य । १शिवे त्रिका० २नटे शरणि ३सोमतीर्थे जटा०। प्रा०व०। ४अट्टहासे पु०शब्दरत्ना० ५नागभेदे पु० भा० आ० ५७अ० ।

**प्रहासिन्** त्रि० प्रकर्षं हासयति हसति वा हासि—हस—वा णिनि । १परस्य हासस्य कारके (भाँड) २स्वयं हासके ३विदूषके पु० हेमच० ।

**प्रहि** पु०प्रह्रियते अत्र प्र+हृ—आधारे इन् डिच्च । कूपे अमरः

**प्रहित** त्रि०प्र+हि—क्त । १प्रेरिते २क्षिप्ते ३सूपे न० हेमच०

**प्रहुत** न० प्र+हु–भावे क्त। भूतयज्ञे जटा०। “अहुतञ्च हुतञ्चैव तथा प्रहुतमेव च। ब्राह्म्यं हुतं प्राशितञ्च पञ्च यज्ञान् प्रचक्षते” इत्युपक्रम्य “प्रहुतो भौतिको बलिः” मनुनाऽस्य पारिभाषिकत्वमुक्तम् आर्षे पुंस्त्वम् “देवानभाजयत् हुतश्च प्रहुतश्च यद्देवेभ्यो जुहुति प्रजुहुति” इ०च०

“ये द्वे अन्ने सृष्टा देवानभाजयत् ये ते द्वे इत्युच्यते हुतश्च प्रहुतश्च। हुतमित्यग्नौ हवनम्। प्रहुतं हुत्वा बलिहरणम्। यस्माद्द्वे एते अन्ने हुतप्रहुते देवानभाजयत्। तस्मादेतर्ह्यपि गृहिणः काले देवेभ्यो जुहुति देवेभ्य इदमन्नमस्माभिर्दीयमानमिति मन्वानाः एव जुहुति प्रजुहुति च हुत्वा बलिहरणञ्च कुर्वते इत्यर्थः” भा०।

**प्रहृत** न० प्र+हृ–भावे क्त। १प्रहारे २आघाते। कर्मणि क्त। ३कृतप्रहारे त्रि० ४ऋषिभेदे पु०। तस्यापत्यम् अत्रा० फञ्। प्राहृतायन तदपत्ये पुंस्त्री०।

**प्रहेण(ल)क** न० पिष्टकभेदे हारा०।

**प्रहेलिका** स्त्री प्र+हेल–इन् संज्ञायां कन्। दुर्विज्ञानार्थप्रश्ने (हेँयालि) अमरः। तल्लक्षणादि विदग्धमु०उक्तं यथा “व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात्। यत्र बाह्यान्तरावर्थौ कथ्येते सा प्रहेलिका। सा द्विधार्थी च शाब्दी च विख्याता प्रश्नपावने। आर्थी स्यादर्थविज्ञानात् शाब्दी शब्दस्य भङ्गतः” आर्थी यथा “तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः। गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः”(ईषदूनजलपूर्णकुम्भः उत्तरम्) शाब्दी यथा “सदारिमध्यापि न वैरियुक्ता नितान्तरक्ताप्यसितैव नित्यम्। यथोक्तवादिन्यपि नैव दूती का नाम कान्तेति निवेदयन्ती” (सारिका उत्तरम्) काव्यादर्शे तु “प्रहेलिका प्रकाराणां पुनरुद्दिश्यते गतिः। क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे। परव्यामोहने चापि सोपयोगाः प्रहेलिकाः। आहुः समागता१ नाम गूढार्थां पदसन्धिना। वञ्चिता२ऽन्यत्र रूढेन यत्र शब्देन वञ्चना। व्युत्क्रान्ता३ऽतिव्यवहितप्रयोगान्मोहकारिणी। सा स्यात् प्रमुषिता४ यस्यां दुर्बोधार्था पदावली। समानरूपा५ गौणार्थारोपितैर्ग्रथिता पदैः। परुषा६ लक्षणास्तित्वमात्रव्युत्पादितश्रुतिः। संख्याता७ नाम संख्यानं यत्र व्यामोहकारणम्। अन्यथा भासते यत्र वाक्यार्थः सा प्रकल्पिता८। सा नामान्तरिता९ नाम यस्यां नामार्थकल्पना। निभृता१० निभृतान्यार्था तुल्यधर्मस्पृशा गिरा। समानशब्दो११ऽन्यत्र शब्दपर्यायसाधिता। संमूढा१२ नाम या साक्षान्निर्दिष्टार्थापि मूढये। योगमालात्मिका नाम या स्यात् सा परिहारिका१३। एकच्छन्ना१४ऽऽश्रितं व्यक्तं यस्यामाश्रयगोपनम्। सा भवेदुभयच्छन्ना१५ यस्यामुभयगोपनम्। सङ्कीर्णा१६ नाम सा यस्यां नानालक्षणसङ्करः। एताः षोडश निर्दिष्टाः पूर्वाचार्यैः प्रहेलिकाः। दुष्टप्रहेलिकाश्चान्याः तैरधीताश्चतुर्दश” । एताः समागताप्रभृतयः षोडश प्रहेलिकाः पूर्वाचार्यैः निर्दिष्टाः अदुष्टत्वेन कथिताः इत्यर्थः, तैः पूर्वाचार्यैरेव अन्याः चतुर्दश दुष्टाः प्रहेलिकाः च्युताक्षरादिकाः अधीता पठिताः सदोषत्वेन कीर्त्तिता इत्यर्थः”। एतासामुदाहरणानि तत्र दृश्यानि। तासाञ्चतुर्दश सरस्वतीकण्ठा० दृश्याः। “काव्यान्तर्गडुभूतत्वात् नालङ्कारः प्रहेलिका” सा०द०।

**प्रहोषिन्** त्रि० प्र+हु–बा० इनि सुमागमश्च। प्रकर्षेण हवनकर्त्तरि ऋ० ८।२३।४

**प्रह्रा(ह्ला)द** पु० १हिरण्यकशिपोः पुत्रभेदे भा०आ० ६५अ०। तच्चरितं भाग० ७ ५ अध्यायादौ दृश्यम्। तस्य पूर्वजन्मकथा पाद्मे भूमि०५अ० २नागभेदे भा०स०९अ०। ह्लद–भावे घञ्। ३प्रमोदे त्रि०। ह्लद–भावे घञ्। ४शब्दे धरणिः। [illegible]व०। २आसक्ते हेमच०।

**प्रह्व** त्रि० प्र+ह्वा त्यागे वन् नि० आलोपः। १नम्रे उज्ज्व०

**प्रह्वलीका** स्त्री प्रवल्हिका+पृषो०। प्रहेलिकायां हला०।

**प्रा** पूर्त्तौ अदा० प०सक० अनिट्। प्राति अप्रासीत् पप्रौ कविकल्पद्रुमे प्रा इति पाठः तत्रार्थे।

**प्रांशु** त्रि० प्रकृष्टा अंशवोऽस्य। १उच्चे उन्नते अमरः। वैवस्वतमनोः २पुत्रभेदे पु० हरिवं०१०अ०। वत्सप्रीत्पत्त्य सुदर्शनायां जाते ३पुत्रभेदे पु० मार्क०पु० ११८अ०।

**प्राकर** पु० द्युतिमतः पुत्रभेदे मार्क०पु० ५३अ०।

**प्राकरणिक** त्रि० प्रकरणे प्राप्तं ठञ्। प्रकरणप्राप्ते।

**प्राकर्षिक** त्रि०प्रकर्षं नित्यमर्हति छेदा०ठञ्। नित्यप्रकर्षार्हे

**प्राकाशिक** पु० प्र+आ+कश–किकन्। १स्त्रीणां नर्त्तके २परदारोपजीविनि च उज्ज्वलद०।

**प्राकाम्य** न० प्रकामस्य भावः ष्यञ्। १अष्टविधैश्वर्यमध्ये इच्छानभिघातरूपे ऐश्वर्ये २स्वाच्छन्द्यानुमतौ च हेमच० “प्राकाम्यं ते विभूतिषु” कुमारः। अणिमन्शब्दे ८६ पृ० ऐश्वर्यशब्दे १५४९ पृ० दृश्यम्।

**प्राकार** पु०प्रकीर्य्यते प्र+कॄ–आधारे घञ् दीर्घः। इष्टकादि-

रचिते वेष्टनाकारे प्राचीरादौ "ऊर्द्ध्वं विंशतिहस्तेभ्यः प्राकारं न शुभावहम्। प्रस्थे हस्तद्वयात् पूर्वं दीर्घे हस्तत्रयं तथा। स्टहियां शुभदं द्वारं प्राकारस्य गृहस्य च। न मध्यदेशे कर्त्तव्यं किञ्चिच्चैवाधिके शुभम्" ब्रह्मवै० पु० ११२अ० तन्मानाद्युक्तम्। अस्य क्लीवत्वमार्षम्। भावे घञ्। २सर्वतो विस्तारे पु०।

**प्राकारमर्दिन्** त्रि० प्राकारं मृद्नाति मृद–णिनि इत०। प्राकारभेदके। ततः बाह्वा० अपत्ये इञ् संयोगोपधेनन्तत्वात् न टिलोपः। प्राकारमर्दिनि तदपत्ये पुंस्त्री०।

**प्राकारीय** त्रि० प्राकारायायम् छ। १प्राकारप्रकृतौ इष्टकादौ। प्राकार आसामिष्टकानां स्यात् प्राकारोऽस्मिन् वा स्यात् छ। २सम्भवत्प्राकारायामिष्टकायाम् ३सम्भवत्प्राकारे देशे च।

**प्राकृत** त्रि० प्रकृष्टमकृतमपकार्य्यं यस्य। १नीचे। प्रकृतेरयम् अण्। २प्रकृतिसम्बन्धिनि। प्रकृत्या स्वभावेन निर्वृत्तः अण्। ३स्वभावसिद्धे "बभूव प्राकृतः शिशुः" भाग० १०। प्रकृतेः संस्कृतशब्दात् आगतः अण्। ४नाटकादौ प्रसिद्धे अपभ्रंशशब्दभेदे अमरः। प्राकृतभाषायाः संस्कृतशब्दप्रकृतिकत्वात् तथात्वं प्राकृतलङ्केश्वरादौ वररुच्यादिप्रणीते ग्रन्थेऽस्य विस्तरो दृश्यः। स्वभावतः सिद्धयोः ५मित्रामित्रयोः। स्वदेशानन्तरदेशवर्त्ती नृपः प्राकृतः शत्रुः सन्निकृष्टविषयग्राहित्वस्वभावात्तस्य तथात्वम् तदानन्तरविषयस्थो नृपः प्राकृतं मित्रं मध्यवर्त्तिनृपविषयस्य उभयोः जिघृक्षास्वभावात् तथात्वम्। "स्यातामित्रौ मित्रे च सहजप्राकृतावपि" माघ २सर्गश्लोकव्याख्याने मल्लिनाथः।

**प्राकृतज्वर** पु० "वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात्" ज्वराधिकारे माधवोक्ते ज्वरभेदे।

**प्राकृतप्रलय** कर्म०। प्रलयभेदे प्रलयशब्दे दृश्यम्।

**प्राकृतमित्र** न० कर्म०। स्वभावसिद्धे मित्रे विषयानन्तरस्य नृपरूपात् प्राकृतशत्रोः अव्यवहितोत्तरविषयस्थे नृपे।

**प्राकृतशत्रु** पु० कर्म०। विषयानन्तरवर्त्तिनि नृपे। [सिद्धे

**प्राकृतिक** त्रि० प्रकृत्या निर्वृत्तः ठञ्। प्रकृतिसाध्ये स्वभाव-

**प्राक्छाय** त्रि० प्राक् पूर्ववर्त्तिनी छाया यत्र दिने। हस्तिनः हस्तनक्षत्रस्य पूर्ववर्त्तिछायायुते दिने "प्राक्छाये कुञ्जरस्य च" मनुः। कुञ्जरच्छायशब्दे २०६८पृ० दृश्यम्।

**प्राक्तन** त्रि० प्राक् काले देशे प्राच्यां दिशि वा भवः ट्यु तुट् च। प्राग्भवे "प्रपेदिरे प्राक्तनजन्मविद्याः" कुमा०। स्त्रियां ङीप्। २पूर्ववर्त्तिनि कारणे च।

**प्राक्तनकर्मन्** न० प्राक्तनं कारणं कर्म यस्य। कर्मरूपकारणहेतुके अदृष्टे १पापे २पुण्ये च जटा०।

**प्राक्पद** पु० कर्म०। पूर्ववर्त्तिनि पदे।

**प्राक्पुष्पा** स्त्री प्राक् पुष्पं यस्याः अजा० टाप्। प्राग्वर्त्तिपुष्पान्वितलतायाम्। (काँटाल) जटाधरः।

**प्राक्फल** पु० प्राक् फलमस्य। पुष्पं विना फलयुते पनसे

**प्राक्फल्गुनी** स्त्री कर्म०। पूर्वफल्गुनीनक्षत्रे तत्र भवः ठञ्। प्राक्फल्गुनिक बृहस्पतौ। [बृहस्पतौ हारा०।

**प्राक्फल्गुनीभव** पु० प्राक्फल्गुन्यां भवति भू–अच्।

**प्राक्फाल्गुन** पु० प्राक्फाल्गुन्यां भवः अण्। बृहस्पतौ शब्दच०

**प्राक्शृङ्गवत्** पु० ऋषिभेदे भा०श०५२अ०। [सन्ध्यायाम्।

**प्राक्सन्ध्या** स्त्री कर्म०। पूर्वसन्ध्यायां सूर्य्योदयासन्नायां

**प्राक्सवन** न० प्राक्कालिकं सवनम्। यज्ञिये प्रथमसवने।

**प्राक्सौमिक** त्रि० सोमात् सोमयागात् प्राक् अव्ययी० प्राक्सोमं तत्र भवः ठञ् उत्तरपदवृद्धिः। सोमयागात् प्राक्कर्त्तव्ये अग्निहोत्रदर्शपौर्णमासपशुयागचातुर्मास्ययागरूपे १क्रियाकलापे २इष्टौ स्त्री ङीप्। "प्राक्सौमिकीः क्रियाः कुर्य्यात् यस्यान्नं वार्षिकं भवेत्" याज्ञ० वाक्यव्याख्यायां मिता० दृश्यम्।

**प्राक्स्रोतस्** स्त्री प्राञ्चि स्रोतांसि यस्याः। १नद्यां "प्राक्स्रोतसो नद्यः प्रत्यक्स्रोतसो नदा नर्मदां विनेत्याहुः" मल्लि० धृतवाक्यम्।

**प्रागग्र** त्रि० प्राक् अग्रं यस्य। पूर्वाभिमुखे।

**प्रागद्य** त्रि० प्रगादिनोऽदूरदेशादि प्रगद्या० चतुरर्थ्यां ञ्य। प्रगादिनोऽदूरदेशादौ।

**प्रागभाव** पु० प्राक्वर्त्ती अभावः। इह कपाले घटो भविष्यतीत्यादिप्रतीतिसिद्धे संसर्गाभावभेदे "प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च। एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते" भाषा०। तल्लक्षणन्तु ध्वंसप्रतियोगित्वे सत्यभावत्वम्। स च उपादानदेशः एव वर्त्तते नान्यत्र। तस्य च सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं नास्ति किन्तु तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वम्। स च प्रतियोगिजनकः इति न्यायमते। सांख्यादिमते भावस्यानागतावस्थैव प्रागभावपदवाच्येति भेदः।

**प्रागल्भ्य** न० प्रगल्भस्य भावः ष्यञ्। १प्रगल्भतायां "प्रागल्भ्यहीनस्य नरस्य विद्या शस्त्रं यथा कापुरुषस्य हस्ते"

ज्यो॰ त॰। “निःसाध्वसत्वं प्रागल्भ्यम्” सा॰ द॰ उक्ते २भयशून्यत्वरूपे स्त्रीणां सात्त्विकभावभेदे च।

**प्रागुदीची** स्त्री प्राच्या उदीच्या अन्तराला दिक् व॰स॰। पूर्वोत्तरदिशोरन्तरालायां दिशि विदिशि ईशानकोणे।

**प्राग्ज्योतिष** पु॰कामरूपदेशे हेमच॰। तत्र पूर्वं नरकासुरस्य पुरी आसीत् यथा कालिका॰ ३७अ॰ “करतोया सत्य गङ्गा पूर्वभागावधिश्रिता। यावल्ललितकान्तास्ति ताव-द्देशं पुरं तव। तत्र देवी महामाया योगनिद्रा जगत्-प्रसूः। कामाख्यारूपमास्थाय सदा तिष्ठति शोभना। तत्रास्ति नदराजोऽयं लौहित्यो ब्रह्मणः सुतः। तत्रैव दश दिक्पालाः स्वे स्वे पीठे व्यवस्थिताः। तत्र स्वयं महादेवो ब्रह्मा वाऽहञ्च(हरिश्च)सर्वदा। चन्द्रः सूर्यश्च सततं वसेत् तत्रैव पुत्रक!। सर्वे क्रीड़ार्थमायाता रह-स्यदेशत्वत्तमम्। तत्र श्रीः सर्वतो भद्रा भोग्यमत्र सदा बहु। अत्रैव हि स्थितो ब्रह्मा प्राङ् नक्षत्रं ससर्ज ह। ततः प्राग्ज्योतिषाख्येयं पुरी शक्रपुरीसमा। अत्र त्वं वस भद्रन्ते ह्यभिषिक्तो मया स्वयम्”। नरकं प्रति भग-वदुक्तिः। द्वापरे तत्र भगदत्तो नृप आसीत् यथोक्तम् “तैरेव सहितः सर्वैः प्राग्ज्योतिषमुपाद्रवत्। यत्र राजा महानासीद्भगदत्तो विशाम्पते!” भा॰स॰२५अ॰।

**प्राग्भक्त** न॰ सुश्रुतोक्ते भक्तभक्षणात् प्राक्कालरूपे ओषध-सेवनकालभेदे “अत ऊर्द्ध्वं दशौषधकालानुव्याख्यामः। तत्र निर्भक्तं १ प्राग्भक्तं २ मधोभक्तं ३ मध्येभक्तं ४ अन्तराभक्तं ५ सभक्तं ६ सामुद्गं ७ मुहुर्मुहुर्ग्रासं (सभक्तमभक्तं वा) ८।९ ग्रासान्तरं १० चेति दशौषधकालाः” इत्युपक्रमे “प्राग्भक्तं नाम यत्तु प्राग्भक्तस्योपयुज्यते। शीघ्रं विपाकमुपयाति बलं न हिंसादन्नावृतं न च मुहु-र्वदनान्निरेति। प्राग्भक्तसेवितमथो बलमादधाति दद्याच्च वृद्धशिशुभीरुवराङ्गनाभ्यः”।

**प्राग्भार** पु॰प्रकृष्टो भारः प्रा॰स॰। १उत्कर्षे २परभागे “सां-समस्तिव्यापकं प्राग्भारः” प्रबोधचन्द्रोदयः। ३पर्वताग्र-भागे त्रिका॰। प्राग्भाव तत्रार्थे त्रिका॰ पाठान्तरम्। स च प्राग्वर्त्तित्वे च। [अमरः।

**प्राग्रहर** त्रि॰ प्राग्ये प्रकृष्टाग्रे ह्रियतेऽसौ हृ—अप्। श्रेष्ठे

**प्राग्राट** न॰ प्राग्ये अटति अट—अच्। घनदध्नि (पात-लादह) त्रिका॰।

**प्राग्र्य** त्रि॰ प्रकर्षेणाग्रे भवः यत्। श्रेष्ठे अमरः।

**प्राग्वंश** पु॰ प्राक् वंशः सपत्नीकयजमानादिसदावासोऽत्र। हविर्गेहात् पूर्वभागस्थे यजमानादिस्थित्यर्थे गृहे अ-मरः। २विष्णौ च “प्राग्वंशो वंशवर्द्धनः” विष्णुसं॰। “अन्यस्य वंशः पाश्चात्त्यः अस्य तु वंशः प्रपञ्चः प्रागेव न पाश्चात्त्यः” भा॰।

**प्राग्वचन** न॰प्रागुक्तं वचनम्। मन्वादिभिः पूर्वमुक्ते वचने। “यथोक्तमेतद्वचनं प्रागेव मनुना पुरा। प्रागिदं वचनं प्रोक्तमतः प्राग्वचनं विदुः” भा॰ शा॰ १२१अ॰।

**प्राग्वत्** अव्य॰ प्रागिव वति। पूर्वदेशकालतुल्ये। [हेमच॰।

**प्राघात** पु॰ प्राहन्यतेऽत्र प्र+आ+हन—आधारे घञ्। युद्धे

**प्राघार** पु॰ प्र+घृ—क्षरणे भावे घञ् दीर्घः। यज्ञादौ वह्न्यु-परि घृतादेःक्षरणे अमरः।

**प्राघुण** पु॰ प्र+आ—घुण—क। अतिथौ त्रिका॰।

**प्राघुणिक** पु॰ प्रघुण+स्वार्थे ठक्। अतिथौ [तिथौ हेमच॰

**प्राघूर्णिक** पु॰ प्र+आ+घूर्ण—भावे घञ् तत्र साधु ठञ्। अ-

**प्राङ्ग** न॰प्रहतं प्रकृष्टं वाङ्गमस्य प्रा॰ब॰। १पणवाद्ये शब्दर॰ २प्रकृष्टदेहयुते त्रि॰ स्त्रियां स्वाङ्गत्वात् ङीष्।

**प्राङ्गण** न॰ प्रकृष्टमङ्गनं पूर्व॰ णत्वम्। १गृहभूमौ शब्दर॰ (उठान) २अजिरे ३पणवाद्ये च हेमच॰ “अभद्रं सर्ववेधं प्राङ्गणस्य तथैव च” ब्रह्म॰वै॰ज॰ख॰१०२अ॰उक्तेः तस्य सूर्यविद्धत्वमशुभम्। पूर्वपश्चिमायतत्वे हि तस्य सूर्यविद्धत्वं दक्षिणोत्तरायतत्वे च चन्द्रविद्धत्वमिति भेदः।

**प्राङ्न्याय** पु॰ “आचारेणावसन्नोऽपि पुनर्लेखयते यदि। सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते” इत्युक्ते व्यवहारविषये उत्तरभेदे १०९० पृ॰ दृश्यम्।

**प्राङ्मुख** त्रि॰ प्राक् पूर्वदिक्स्थं मुखमस्य। पूर्वदिङ्मुखे स्त्रियां ङीप्। यत्र विशेषो नोक्तः तत्र प्राङ्मुखत्वं आश्वलायनगृह्यसूत्रादौ दृश्यम्।

**प्राच्** अव्य॰ प्राचि सप्तम्यर्थे अस्ति तस्य लुक्। प्राचीत्यर्थे।

**प्राच्** त्रि॰प्र+अन्च—क्विप्। पूर्वे १देशे २काले च ३दिशि स्त्री ङीप्। ४पूज्यपूजयोरन्तरालदिशि स्त्री “यत्रैव भानुस्तु वियत्युदेति प्राचीति तां वेदविदो वदन्ति। तथा पुरः पूजकपूज्ययोश्च सदागमज्ञा प्रवदन्ति तन्त्रे” ति॰त॰ धृत-वाक्यम्। एतच्च “शिवपूजाव्यतिरिक्तविषयम्” वाचस्पति-मिश्राः। हलन्तत्वात् वा टाप्। “प्राचाजिह्मम्” ऋ॰ १।१४०।२। “प्राचामन्युः” ऋ॰८।६।१९ “प्राची वै दैवी दिक् पुरस्ताद्धै देवाः, प्रत्यञ्चो मनुष्यास्तानुपावृत्ताः तथा-चेभ्यः प्राङ्तिष्ठन् जुहोति” शत॰ २।१।१।६

**प्राच** पु॰प्र+आ+चल—क्तौ बा॰ड। १प्रकर्षेण रक्षके “प्राचो-

उक्तं" ताण्ड्य॰ब्रा॰ १।८।२स्व॰। प्र+अनृच–घञर्थे भावे घञ्। २प्रकृष्टगमने प्राचैःशब्दे स्व॰भाष्ये दृश्यम्।

**प्राचिका** स्त्री प्राचिनोति मधु प्र+आ+चि–ड स्वार्थे कापि अत इत्त्वम्। वनमक्षिकायाम् अमरः।

**प्राचिन्वत्** पु॰ राजभेदे "जनमेजयः खल्वनन्तां नामोपयेमे माधवीं तस्यामस्य जज्ञे प्राचिन्वान्नाम। यः प्राचीं दिशं जिगाय यावत् सूर्योदयात् ततस्तस्य प्राचिन्वत्त्वम्" भा॰ आ॰ ९५ अ॰।

**प्राचीन** त्रि॰ प्राक्+भवार्थे ख। १पूर्वदिग्देशादौ भवे। २वनतिक्तायाम् (आकनादि) अमरः ३रास्नायाञ्च स्त्री गौरा॰ टाप्।

**प्राचीनगर्भ** पु॰ ऋषिभेदे भा॰आ॰ ३५१अ॰।

**प्राचीनपनस** पु॰ बिल्ववृक्षे॰। बिल्वे त्रिका॰।

**प्राचीनबर्हिस्** पु॰। १इन्द्रे २नृपभेदे च हेमच॰। "अत्रिवंशे समुत्पन्नो ब्रह्मयोनिः सनातनः। प्राचीनबर्हिर्भगवान् तस्मात् प्रचेतसो दश" भा॰आ॰ २०८अ॰। "प्राचीनबर्हिर्भगवान् महानासीत् प्रजापतिः। हविर्धानात् द्विजश्रेष्ठ! तेन संवर्द्धिताः प्रजाः। प्राचीनाग्राः कुशास्तस्य पृथिव्यां विश्रुता मुने!। प्राचीनबर्हिर्भगवान् ख्यातो भुवि महाबलः" अग्निपु॰ उक्ते ३हविर्धानिः पुत्रे भा॰ अनु॰ १४७ अ॰।

**प्राचीनयोग** पु॰ प्राचीनो योगोऽस्य। ऋषिभेदे तस्य गोत्रापत्यं गर्गा॰यञ्। प्राचीनयोग्य तद्गोत्रापत्ये पुंस्त्री॰

**प्राचीनयोगिनीपुत्र** यजुर्वेदवंश्ये ऋषिभेदे शत॰ब्रा॰ १४।९।४।३३।

**प्राचीनामलक** न॰ नित्यकर्म॰। पानीयामलके अमरः।

**प्राचीनावीत** न॰ "सव्यं बाहुं समुद्धृत्य दक्षिणे तु द्विजातयः!। प्राचीनावीतमित्युक्तं पैत्रे कर्मणि योजयेत्" इत्युक्ते आद्धादौ कर्त्तव्ये वामकरे बहिष्कृते सति दक्षिणस्कन्धार्पिते यज्ञसूत्रादौ।

**प्राचीनावीतिन्** पु॰ प्राचीनावीतमस्त्यस्य इनि। तद्युते "उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः। सव्ये प्राचीनावीती निवीती कण्ठसज्जने" मनुः। गोभिलः "दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येऽंसे प्रतिष्ठापयति दक्षिणं कक्षमन्वलम्बं भवति एवं यज्ञोपवीती भवति। सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेऽंसे प्रतिष्ठापयति सव्यं कक्षमन्वलम्बं भवत्येवं प्राचीनावीती भवति"।

**प्राचीपति** पु॰ ६त॰। इन्द्रे त्रिका॰।

**प्राचीर** न॰ प्राचीयते प्र+आ–चि–क्रन् दीर्घश्च। सर्वतो वेष्टनाकारे इष्टकादिनिर्मिते आवरणे (पाँचिर) अमरः अस्य दुर्गं तस्मानादि च युक्तिकल्पतरावुक्तं यथा "नगरभेदास्तनुजैरलङ्घ्याः प्राचीरसत्सदा नृपतेर्भवन्ति। राजदण्डोद्गताः सर्वे प्राचीराः पृथिवीभुजः। विंशतिस्तु पश्चापि पार्श्वयोः पञ्च पञ्च च। पश्चात् पञ्च च विज्ञेयाः प्राचीराः पृथिवीभुजः। सर्वप्रान्ते त्वावरणो नाम प्राचीर उच्यते। प्रतिप्राकारसंस्थानं द्वारं नाभिमुखस्थितम्"। "राजच्छत्रान्तरे पञ्च राजद्वारे महीपतेः। राजदण्डत्रये सार्द्धं जयद्वारे प्रतिष्ठिताः। अद्वारे राजदण्डार्द्धं प्राचीराः पृथिवीपतेः। एवं व्यवस्थिते स्थाने मध्यमे तद्धि तिष्ठति। राजच्छत्रद्वयं सार्द्धमायामे जयवस्तुनि। परिणाहे पञ्च राजदण्डास्तिष्ठन्ति मध्यतः। राजपट्टाभिधानेन स्थानमेतन्निगद्यते। अस्मिन् गृहे नृपः कृत्वा सुचिरं सुखमश्नुते"

**प्राचेतस** पु॰ प्रचेतस्+अपत्यादौ अण्। १वाल्मीकिमुनौ २प्राचीनबर्हिषो नृपस्य पुत्रे ३दक्षस्य पुत्रे च।

**प्राचैस्** न॰ प्र+आ+चि–बा॰डैस्। प्राचीने ऋ॰१।८३।२भाष्यम्। तत्र च पक्षान्तरे प्राचैरित्यत्र प्राचयत्स्तुतीयावत्त्वचनात्र इत्युक्त्वा प्राचैः प्राञ्चैरित्युक्तम्।

**प्राच्य** त्रि॰ प्राचि भवः यत्। १शरावत्या नद्याः प्राग्दक्षिणे देशे अमरः। प्राच्यां दिशि प्राचि देशे काले वा २भवे त्रि॰। "प्राच्यैर्होलिका कर्तव्या" दायभा॰।

**प्राच्यवाट** न॰ प्राच्यो वाटो यस्य। प्राग्देशस्थे दयक्रमा॰।

**प्राच्यवृत्ति** स्त्री "पूर्वेण युतोऽथ पञ्चमः प्राच्यवृत्तिरुदितेह युग्मतो" इ॰र॰उक्ते १छन्दोभेदे। कर्म॰। २प्राचीनायां वृत्तौ स्त्री क॰स॰। ३तद्वत्त्याश्रयते त्रि॰।

**प्राच्यसप्तसम** त्रि॰ सप्त समाः प्रमाणमस्य कालस्य तस्य द्विगुत्वात् लुक् कर्म॰। प्राचीने सप्तसमे "द्विगौ प्रमाणे" पा॰ तस्य प्रकृतिस्वरः।

**प्राच्यायन** पुंस्त्री॰ प्राच्यस्य गोत्रापत्यम् अश्वा॰ फञ्। प्राच्यस्य गोत्रापत्ये। [प्राड्विवेकः।

**प्राच्छ्** त्रि॰ पृच्छति प्रच्छ–क्विप् निपा॰ दीर्घश्च। जिज्ञासके

**प्राजक** पु॰ प्र+अज–ण्वुल् वीभावाभावः। सारथौ "यत्रापवर्त्तते युग्यं वैगुण्यात् प्राजकस्य च" मनुः।

**प्राजन** न॰प्र+अज–करणे ल्युट् व्यभावः। तोदने पश्वादेश्चालनदण्डे (पाचनी) अमरः। [प्राजयालय प्रजया सत्वा वा।

**प्राजया** अव्य॰ प्राजनक्रियायाम् शाचा॰ वा मतिसंज्ञा।

**प्राजहृहा** अव्य॰ इर्हिक्रियायाम् वाचा॰ वा गतिसंज्ञा। प्राजहृहाकृत्य प्राजहृहा कृत्वा वा।

**प्राजहित** पु॰ गार्हपत्येऽग्नौ कात्या॰श्रौ॰ ८।६।१२

**प्राजापत** त्रि॰प्रजापतेः धर्म्य॰ अहिष्या॰अण्। प्रजापतेर्धर्म्ये

**प्राजापत्य** पु॰ प्रजापतिर्देवताऽस्य यक्। १अष्टविवाहमध्ये विवाहभेदे "ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः" मनुना अष्ट विवाहानुद्दिश्य "सहोभौ चरतां धर्ममिति वाचानुभाष्य च। कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः" इति लक्षित "त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्। त्र्यहं परञ्च नाश्नीयात् प्राजापत्यमिति स्मृतम्" इति स्मृत्युक्ते द्वादशाहसाध्ये २व्रतभेदे न॰। ३प्रजापत्यधिदेवताके चर्वादौ त्रि॰। ४प्रव्रज्याश्रमाङ्गे सर्वस्वदक्षिणकेष्टिभेदे स्त्री "प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम्। आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्" याज्ञ॰। ५रोहिणीनक्षत्रे न॰ ६प्रयागतीर्थे न॰ त्रिका॰ ७जैनभेदे पु॰ हेमच॰। [जायाया धर्म्ये।

**प्राजावत** त्रि॰ प्रजावत्या धर्म्य॰ महिष्या॰ अण्। जाह-

**प्राजिन्** पु॰प्र+अज–णिनि अभावः। पक्षिभेदे मेदि॰ अमरः

**प्राजितृ** पु॰ प्र+अज–तृच् वीभावाभावः। सारथौ।

**प्राजेश** न॰प्रजेशो देवताऽस्य अण्। १रोहिणीनक्षत्रे २प्रजापतिदेवताके चर्वादौ त्रि॰। प्राजेश्वरादयोऽप्युभयत्र।

**प्राज्ञ** पु॰प्रकर्षेण जानाति प्र–ज्ञा–क स्वार्थे अण्। १पण्डिते अमरः २राजयुक्ते राजनि॰। प्रज्ञाऽस्त्यस्य अण्। ३बुद्धिमति ४दक्षे च त्रि॰। प्रज्ञा+स्वार्थे च। ५बुद्धौ स्त्री टाप्। प्राज्ञस्य पत्नी ङीप्। प्राज्ञी ७प्राज्ञपत्न्यां स्त्री। ७कल्किनो ज्येष्ठभ्रातरि पु॰ कल्किपु॰ २अ॰। प्रकर्षेण अज्ञः। वेदान्तसारोक्ते व्यष्ट्युपहितचैतन्ये अकाज्ञानमात्रभासके जीवचैतन्ये पु॰ "एतदुपहितचैतन्यमल्पज्ञत्वानीश्वरत्वादिगुणकं प्राज्ञ इत्युच्यते। एकाज्ञानावभासकत्वादस्य प्राज्ञत्वम् अस्पष्टोपाधितयाऽनतिप्रकाशकत्वम्" वेदान्तसारः। प्रज्ञ+स्वार्थे अण् स्त्रियां ङीप्। प्राज्ञी ८सूर्यपत्न्याम् स्त्री। [त्रि॰ हेमच॰।

**प्राज्य** न॰प्रकृष्टमाज्यं प्र+अनृज–क्यप् वा। १प्रकृष्टघृते २प्रचुरे

**प्राञ्च्** त्रि॰ प्र+अनृच्+क्विप्। पूर्वदेशकालवर्त्तिनि। अल्लोपाभावात् भत्वे प्राञ्चः प्राञ्चा इत्येव।

**प्राञ्जल** त्रि॰ प्र+अनृज–अलच्। १सरले २सुबोधे च शब्दा॰।

**प्राञ्जलि** त्रि॰ प्रबद्धोऽञ्जलिर्येन प्रा॰ब॰। १बद्धाञ्जलिपुटे प्रा॰ब॰। २बद्धाञ्जलौ पु॰।

**प्राञ्जलिन्** त्रि॰ प्राञ्जलिरस्त्यस्य ब्रीह्या॰ इनि। बद्धाञ्जलियुक्ते स्त्रियां ङीप्।

**प्राडाहत** पु॰ ६त॰। प्रश्नकारकेणाहृते तस्यापत्यमिञ् प्राडाहृति तदपत्ये ततः यूनि फक् तौल्व॰ न लुक्। प्राडाहृतायन तदीये यून्यपत्ये पुंस्त्री॰।

**प्राड्वि(वा)वेक** पु॰ अर्थिप्रत्यर्थिनौ पृच्छति प्रच्छ–क्विप् प्राट्, तयोर्वाक्यं विरुद्धाविरुद्धतया विवेचयति वक्ति वा वि+विच–वि+वच–वा संज्ञायां घञ् कर्म॰। व्यवहारदर्शनाय राजनियुक्ते १विचारके स्वयं विचारक २व्यवहारे च तल्लक्षणादिकं वीरमि॰ उक्तं यथा "विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च। प्रियपूर्वं प्रागवदति प्राड्विवाकस्ततः स्मृतः" बृहस्पतिः। व्यासोऽपि "विवादानुगतं पृष्ट्वा ससभ्यस्तत् प्रयत्नतः। विचारयति येनासौ प्राड्विवेकस्ततः स्मृतः" गौतमेन तु बृहस्पतिवद्योगार्थः प्राड्विवाकशब्दस्य दर्शितः। "प्राड्विवाको वादिप्रतिवादिनौ पृच्छतीति प्राट् ताभ्यामुक्तं सभ्यैः सह विविच्य वक्तीति प्राड्विवाकः" इति बृहस्पतिना। विचारयतीत्यभिधानाद्विविनक्ति इति विवेकशब्दस्य व्युत्पत्तिरुक्ता। विविच्य वक्तीति विवाक इति। इति गौतमेन। नारदहारीतौ "यथा शल्यं भिषक्कायादुद्धरेद्यत्नयुक्तितः। प्राड्विवाकस्तथा शल्यमुद्धरेद्व्यवहारतः" इति। शल्यञ्च धर्मस्याधर्ममिश्रणम्। यथा च मनुः "विद्धो धर्मो ह्यधर्मेण सभां यत्रोपतिष्ठते। शल्यञ्चास्य निकृन्तन्ति विद्धास्तत्र सभासदः" इति। अयञ्च राज्ञा स्वयंव्यवहारदर्शने क्रियमाणेऽस्य सहायः "सप्राड्विवाकः" इति स्मरणात्। यदा तु राजा कार्य्यान्तरव्यग्रतया स्वास्थ्याभावेन वा स्वयं व्यवहारदर्शनासमर्थस्तदा तत्प्रतिनिधिः। "यदा स्वयं न कुर्य्यात् तु नृपतिः कार्य्यदर्शनम्। तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणं कार्य्यदर्शने। सोऽस्य कार्य्याणि सम्पश्येत्सभ्यैरेव त्रिभिर्वृतः। सभामेव प्रविश्याग्र्यामासीनः स्थित एव वा" इति मनुवचनात्। सभ्यपदस्यादमात्यादिनिवृत्तिः त्रिपदस्यात् संख्यान्तरनिवृत्तिः। सभ्यानामिति स्मृतिचन्द्रिकाकारः। तत्र दृष्टार्थत्वप्रसङ्गाद्युक्तमित्युपलक्षणत्वमेव न्याय्यम्। "अपश्यता कार्यवशाद्व्यवहारान् नृपेण तु। सभ्यैः स ह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित्" इति याज्ञवल्क्यवचनाच्च। "यदा न कुर्य्यान्नृपतिः स्वयं कार्यविनिर्णयम्। तदा तत्र

नियुञ्जीत ब्राह्मणं शास्त्रपारगम्। दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम्। परत्रभीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितम्” इति कात्यायनवचनाच्च। शास्त्रपारगं बहुशास्त्राभियोगशालिनम्। यथा ह स एव “एकं शास्त्रमधीयानो न विद्यात् कार्य्यनिर्णयम्। तस्माद्बह्वागमः कार्य्यो विवादेषूत्तमो नृपैः”। एवंविधब्राह्मणालाभे क्षत्रियं वैश्यं वा प्रतिनिदधीत न शूद्रम्। तथा च स एव “यत्र विप्रो न विद्वान् स्यात् क्षत्रियं तत्र योजयेत्। वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत्” मनुः “जातिमात्रोपजीवी वा कामं स्याद्ब्राह्मणब्रुवः। धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथञ्चन। यस्य राज्ञस्तु कुरुते शूद्रो धर्मविवेचनम्। तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः”। व्यासः “द्विजान् विहाय यः पश्येत् कार्य्याणि वृषलैः सह। तस्य प्रक्षुभ्यते राष्ट्रं बलं कोशश्च नश्यति”। इदं वचनं स्मृतिचन्द्रिकायामनात्यादिस्थानेऽपि शूद्रं वर्जयेत् किमुत धर्मनिर्णय इत्येवंपरमुक्तम् दोषातिशयकीर्त्तनात्। कल्पतर्वादिषु तु प्रकरणाद्व्यवहारदर्शन एव शूद्रवर्जकत्वेन लिखितम्। अयञ्च प्रतिषेधोऽदृष्टार्थ एव राष्ट्रक्षोभादेरदृष्टद्वारकफलस्यैव सङ्कीर्त्तनात्। पश्चेश्वरेण तु शूद्रस्य धर्मज्ञानेऽपि वेदाविरोधप्रतिसन्धानविरहात् तत्प्रतिसन्धानस्य च सम्यगनिर्णयोपायत्वात् त्याग इति युक्तिरप्युक्ता। या वणिगादिष्वतिप्रसक्तेत्यन्यायव्याख्यानम्। एते च सर्वे व्यवहारसम्बद्धाः प्रतिषेधा अभिषिक्तक्षत्रियाधिकारिकास्तत्स्थानापन्नान्याधिकारिकाश्च। प्राड्विवाकादयस्तदर्थितया ऋत्विक्स्थानीयाः। सप्राड्विवाक इत्यादिना तेषां शुभाशुभावगमाधियोगोक्तेश्च। “राजाभिषेकसंयुक्तो ब्राह्मणो वा बहुश्रुतः। धर्मासनगतः पश्येद्व्यवहारानतुल्बणः” इति प्रजापतिवचनात्। अत्र राजशब्दोऽवयुत्याधिकरणन्यायेन क्षत्रियजातिवचनः। अभिषेकसंयुक्त इति वचनात् स्मृत्यन्तरेऽप्यभिषिक्तक्षत्रियप्रकस्य तदभिधानाच्चानभिषिक्तक्षत्रियस्य नाधिकारः। अतश्च तत्प्रयुक्तशुभाशुभफलयोस्तद्गामितैव। प्राड्विवाकादीनान्तु प्राक्प्रदर्शितेभ्यो न्यायेनापि सं यान्तमित्यादि वाक्येभ्यो राज्ञोऽनिवारणे परं दृष्टादृष्टदोषभागिता। अनियुक्तानान्तु न तत्रापीत्यादि मिताक्षरादौ व्यक्तम्। ब्राह्मणो वेत्यनुकल्पत्वाभिप्रायको वाशब्दो न ब्रह्मकर्माधिकारपरः। अतुल्बणोऽनुद्धतः”१।

प्राण् पु० प्राणिति प्र+अन–क्विप् पदान्तत्वेऽपि णत्वम्। प्राणे

प्राण पु० प्र+अण–करणे घञ्। १ब्रह्मणि निरु० “अतएव प्राणः” शा०सू०१।१।२३ अतएव तल्लिङ्गात् प्राणशब्देन ब्रह्मैव तथा हि “सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते” इति छान्दो०उ०। सर्वभूतोत्पत्तिप्रलयहेतुरूपलिङ्गात् ब्रह्मण एव प्राणशब्दवाच्यता १।१।२३ सूत्रभाष्ये स्पष्टम्। २पञ्चवृत्तिके देहस्थे वायौ ३बोले काव्यजीवने ४रसे ५अनिले ६बले च ७पूरिते त्रि० मेदि०। ८सूक्ष्मदेहसमष्ट्युपहितचैतन्ये पु० वेदान्तसा०। ९प्राणोपाधिके जीवे “प्राणोह माता प्राणः पितेति” श्रुतिः। भावे घञ्। १०जीवने च नासाप्रवर्त्तिनि प्राणनवति ११वायौ ‘तस्य कर्म नासाग्रतो बहिर्गतिः” श्रीधरस्वामी। देहस्थः पञ्चवृत्तिकः वायुश्च प्राणापानसमानोदानव्यानरूपः तस्यार्थे श०च०। तेषां स्वरूपादि शा०ति०व्या० योगार्णवे उक्तं यथा “इन्द्रनीलप्रतीकाशं प्राणरूपं प्रकीर्त्तितम्। आस्यनासिकयोर्मध्ये हृन्मध्ये नाभिमध्यगे। प्राणालय इति प्राहुः पादाङ्गुष्ठेऽपि केचन। अपानयत्यपानोऽयमाहारं च मलार्पितम्। शुक्रं मूत्रं तथोत्सर्गमपानस्तेन मारुतः। इन्द्रगोपप्रतीकाशः सन्ध्याजलदसन्निभः। स च मेढ्रे च पायौ च ऊरुवङ्क्षणजानुषु। जङ्घोदरे कटाख्यां च नाभिमूले च तिष्ठति। व्यानो व्यानयते चान्नं सर्वव्याधिप्रकोपनः। महारजनसङ्काशो हानोपादानकारकः। स चाक्षिकर्णयोर्मध्ये कट्यां वै गुल्फयोरपि। घ्राणस्थाने स्फिग्गुह्ये तिष्ठत्यत्र निरन्तरम्। स्पन्दयत्यधरं वक्त्रं शाखनेत्रप्रकोपनः। उद्वेजयति मर्माणि उदानो नाम मारुतः। विद्युत्पावकसवर्णः स्वादुक्लमनाशनकारकः। पादयोर्हस्तयोश्चापि तत्सन्धिषु च वर्त्तते। पीतं भक्षितमाघ्रातं रक्तपित्तकफानिलात्। समं नयति गात्राणि समानो नाम मारुतः। गोक्षीरवर्णाकारः सर्वदेहे व्यवस्थितः”। स च सांख्यमते इन्द्रियाणां सामान्यकरणवृत्तिरूपः न तु वायुविकारः यथोक्तं सां०सू० प्र०भा०

“सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च” सू०। “प्राणादिरूपाः पञ्च वायुवत्सञ्चाराद् वायवो ये प्रसिद्धास्ते सामान्या साधारणी करणस्यान्तःकरणत्रयस्य वृत्तिः परिणामभेदा इत्यर्थः। तदेतत् कारिकयोक्तम्। “स्वालक्षण्यं वृत्तित्रयस्य सैषा भवत्यसामान्या। सामान्यकर-

वृत्तिः प्राणाद्या वायवः पञ्च"। इति तत्र कश्चित् प्राणाद्या वायुविशेषा एव ते चान्तःकरणवृत्त्या जीवनयोनिप्रयत्नरूपया व्याप्रियन्त इति मत्वा प्राणाद्यामन्तःकरणवृत्तिरित्यभेदनिर्देश इत्याह। तन्न। "न वायुक्रिये पृथगुपदेशादिति" वेदान्तसूत्रेण प्राणस्य वायुत्ववायुपरिणामत्वयोः स्फुटं प्रतिषेधात्तस्यापि तदेकवाक्यतौचित्यात् मनोधर्मस्य कामादेः प्राणक्षोभकतया सामानाधिकरण्येनैवौचित्याच्च। वायुप्राणयोः पृथगुपदेश श्रुतयस्तु "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी" इत्याद्याः। अतएव लिङ्गशरीरमध्ये प्राणानामगणनेऽपि न न्यूनता बुद्धेरेव क्रियाशक्त्या सत्त्वात्प्राणादिनामकत्वादिति। अन्तःकरणपरिणामेऽपि वायुतुल्यसञ्चारविशेषाद्वायुदेवताधिष्ठितत्वाच्च वायुव्यवहारोपपत्तिरिति" प्र॰भा॰। १२इन्द्रियस्थाने "सप्त शिरसि प्राणाः प्राणाः इन्द्रियाणि" ताण्ड्य॰ब्रा॰ १।१५।२ "सप्त शीर्षण्याः प्राणाः श्रोत्रे नासिके चक्षुषी इन्द्रियाधिष्ठानत्वात्" भा॰। १३प्राणे ब्रह्मशब्दे २७४६पृ॰ दृ॰। १४हृत्पिण्डे च

तत्र प्राणोत्पत्तिमभिधाय तस्य गौणमुख्यभावः संख्याविशेषावधारणम् इन्द्रियसामान्यवृत्तितो भेदादिकञ्च शा॰सू॰भा॰ २।४ पादे समर्थितं यथा

"सप्त गतेर्विशेषितत्वाच्च" सू॰ "उत्पत्तिविषयः श्रुतिविप्रतिषेधः प्राणानां परिहृतः, संख्याविषय इदानीं परिह्रियते। तत्र मुख्यं प्राणमुपरिष्टाद्वक्ष्यति। सम्प्रति तु कतीतरे प्राणा इति सम्प्रधारयति। श्रुतिविप्रतिपत्तेश्चात्र विशयः। क्वचित् सप्त प्राणाः सङ्कीर्त्यन्ते "सप्त प्राणाः प्रभवन्ति तस्मात्" इति। क्वचिदष्टौ प्राणा ग्रहत्वेन गुणेन सङ्कीर्त्यन्ते "अष्टौ ग्रहा अष्टावतिग्रहाः" इति, क्वचिन्नव "सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ" इति। क्वचिद्दश "नव वै पुरुषे प्राणा नाभिर्दशमी" इति। क्वचिदेकादश "दशेमे पुरुषे प्राणा आत्मैकादशः" इति। क्वचिद्द्वादश "सर्वेषां स्पर्शानां त्वगेकायनम्" इत्यत्र। क्वचित्त्रयोदश "चक्षुश्च द्रष्टव्यञ्च" इत्यत्र। एवं हि विप्रतिपन्नाः प्राणेयत्तां प्रति श्रुतयः। किं तावत् प्राप्तं सप्तैव प्राणा इति। कुतः गतेः, यतस्तावन्तोऽवगम्यन्ते "सप्त प्राणाः प्रभवन्ति तस्मात्" इत्येवंविधासु श्रुतिषु। विशेषिताश्चैते "सप्त वै शीर्षण्याः प्राणाः" इत्यत्र। ननु "गुहाशया निहिताः सप्त सप्त" इति वीप्सा श्रूयते, सा सप्तभ्योऽतिरिक्तान् प्राणान् गमयतीति। नैष दोषः, पुरुषभेदाभिप्रायेयं वीप्सा प्रतिपुरुषं सप्त सप्त प्राणा इति न तत्त्वभेदाभिप्राया सप्त सप्तान्येऽन्ये प्राणा इति। नन्वष्टत्वादिकापि संख्या प्राणेषूदाहृता कथं सप्तैव स्युः। सत्यमुदाहृता विरोधात्त्वन्यतमा संख्याध्यवसातव्या, तत्र स्तोककल्पनोपरोधात् सप्तसंख्याध्यवसानं वृत्तिभेदापेक्षञ्च सङ्ख्यान्तरश्रवणमिति मन्यते। अत्रोच्यते" भा॰ "हस्तादयस्तु स्थितेऽतो नैवम्" सू॰ "हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः श्रूयन्ते, "हस्तो वै ग्रहः स कर्मणातिग्रहेण गृहीतः, हस्ताभ्यां हि कर्म करोति" इत्येवमाद्यासु श्रुतिषु। एवं स्थिते च (अष्टादिसंख्यत्वे) सप्तत्वमन्तर्भावाच्छक्यते सम्भावयितुम्। हीनाधिकसङ्ख्याविप्रतिपत्तौ ह्यधिका सङ्ख्या संग्राह्या भवति, तस्यां हि हीनान्तर्भवति, न तु हीनायामधिका। अतश्च नैवं मन्तव्यं स्तोककल्पनानुरोधात् सप्तैव प्राणाः स्युरिति। उत्तरसङ्ख्यानुरोधात्त्वेकादशैव ते प्राणाः स्युः। तथा चोदाहृता श्रुतिः "दशेमे पुरुषे प्राणा आत्मैकादशः" इति। आत्मशब्देन चात्रान्तःकरणं परिगृह्यते करणाधिकारात्। ननु एकादशत्वादभ्यधिके द्वादशत्रयोदशत्वे उदाहृते, न त्वेकादशभ्यः कार्यजातेभ्योऽधिकं कार्यजातमस्ति यदर्थम् अधिकं करणं कल्प्येत। शब्दस्पर्शरूपरसगन्धविषयाः पञ्च बुद्धिभेदास्तदर्थानि पञ्च बुद्धीन्द्रियाणि, वचनादानविहरणोत्सर्गानन्दाः पञ्च कर्मभेदास्तदर्थानि च पञ्च कर्मेन्द्रियाणि, सर्वार्थविषयं त्रैकाल्यवृत्ति मन एकमनेकवृत्तिकं तदेव वृत्तिभेदात् क्वचिद्भिन्नवद्व्यपदिश्यते "मनो बुद्धिरहङ्कारश्चित्तञ्च" इति। तथा च श्रुतिः कामाद्या नानाविधा वृत्तीरनुक्रम्याह "एतत् सर्वं मन एव" इति। अपि च सप्तैव शीर्षण्यान् प्राणानभिमन्यमानस्य चत्वार एव प्राणा अभिमताः स्युः स्थानभेदाद्ध्येते चत्वारः सन्तः सप्त गण्यन्ते, "द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके एका वाक्" इति। न च तावतामेव वृत्तिभेदा इतरे प्राणा इति शक्यते वक्तुं, हस्तादिवृत्तीनामत्यन्तविजातीयत्वात्। तथा "नव वै पुरुषे प्राणा नाभिर्दशमी" इत्यत्रापि देहच्छिद्रभेदाभिप्रायेणैव दश प्राणा उच्यन्ते, न प्राणतत्त्वभेदाभिप्रायेण "ना-

भिर्दशमी" इति वचनात्। न हि नाभिर्नाम कश्चित् प्राणः प्रसिद्धोऽस्ति, मुख्यस्य तु प्राणस्य भवति, नाभिरपि एकं विशेषायतनमित्यतो नाभिर्दशमीत्युच्यते। क्वचिदुपासनार्थं कतिचित् प्राणा गण्यन्ते, क्वचित् प्रदर्शनार्थम्। तदेवं विचित्रे प्राणेयत्ताम्नाने सति क्व किं परमाम्नानमिति विवेक्तव्यम्। कार्यजातवशात्त्वेकादशत्वाम्नानं प्राणविषयं प्रमाणमिति स्थितम्। इयमपरा सूत्रद्वययोजना। सप्तैव प्राणाः स्युः यतः सप्तानामेव गतिः श्रूयते "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्यत्र। ननु सर्वशब्दोऽप्यत्र पठ्यते कथं सप्तानामेव गतिः प्रतिज्ञायत इति, विशेषितत्वादित्याह। सप्तैव हि प्राणाश्चक्षुरादयः त्वक्पर्य्यन्ताः विशेषिताः इह प्रकृताः, "स यत्रैष चाक्षुषः पुरुषः पराङ् पर्य्यावर्त्ततेऽथारूपज्ञो भवति एकीभवति न पश्यतीत्याहुरित्येवमादिनानुक्रमणेन। प्रकृतगामी च सर्वशब्दो भवति। यथा सर्वे ब्राह्मणा भोजिता इति ये निमन्त्रिताः प्रकृता ब्राह्मणास्त एव सर्वशब्देनोच्यन्ते नान्ये, एवमिहापि ये प्रकृताः सप्त प्राणास्त एव सर्वशब्देनोच्यन्ते नान्ये इति। नन्वत्र विज्ञानमष्टममनुक्रान्तं कथं सप्तानामेवानुक्रमणं नैष दोषः। मनोविज्ञानयोस्तत्त्वाभेदाद्वृत्तिभेदेऽपि सप्तत्वोपपत्तेः। तस्मात् सप्तैव प्राणा इत्येवं प्राप्ते ब्रूमः। हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः प्रतीयन्ते "हस्तो वै ग्रहः" इत्यादिश्रुतिषु। ग्रहत्वञ्च बन्धनभावो गृह्यते बध्यते क्षेत्रज्ञोऽनेन ग्रहसंज्ञकेन बन्धनेनेति। स च क्षेत्रज्ञो नैकस्मिन्नेव शरीरे बध्यते शरीरान्तरेष्वपि तुल्यत्वाद्बन्धनस्य। तस्माच्छरीरान्तरसञ्चारीदं ग्रहसंज्ञकं बन्धनमित्यर्थादुक्तं भवति। तथा च स्मृतिः "पुर्य्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते। तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च" इति। प्राङ्मोक्षाद्ग्रहसंज्ञकेनानेन बन्धनेनावियोगं दर्शयति। आथर्वणे च विषयेन्द्रियानुक्रमणे "चक्षुश्च द्रष्टव्यञ्च" इत्यत्र तुल्यवद्धस्तादीनीन्द्रियाणि सविषयाण्यनुक्रामति "हस्तौ चादातव्यञ्च उपस्थश्चानन्दयितव्यञ्च पायुश्च विसर्जयितव्यञ्च पादौ च गन्तव्यञ्च" इति। तथा "दशेमे पुरुषे प्राणा आत्मैकादशः ते यदास्माच्छरीरान्मर्त्त्यादुत्क्रामन्त्यथ रोदयन्ति" इत्येकादशानां प्राणानामुत्क्रान्तिं दर्शयति। सर्वशब्दोऽपि च प्राणशब्देन सम्बध्यमानोऽशेषान् प्राणानभिदधानो न प्रकरणवशेन सप्तस्वेव व्यवस्थापयितुं शक्यते, प्रकरणाच्छब्दस्य च बलीयस्त्वात्। सर्वे ब्राह्मणा भोजिता इत्यत्रापि सर्वेषामेव अवनिवर्त्तिनां ब्राह्मणानां ग्रहणं न्याय्यं सर्वशब्दसामर्थ्यात्। सर्वभोजनासम्भवात् तु तत्र निमन्त्रितमात्रविषया सर्वशब्दस्य वृत्तिराश्रिता, इह तु न किञ्चित् सर्वशब्दार्थसङ्कोचकारणमस्ति, तस्मात् सर्वशब्देनात्राशेषाणां प्राणानां परिग्रहप्रदर्शनार्थं सप्तानामनुक्रमणमित्यनवद्यम्। तस्मादेकादशैव प्राणाः शब्दतः कार्य्यतश्चेति सिद्धम्" भा० "अणवश्च" सू० "अधुना प्राणानामेव स्वभावान्तरमभ्युच्चिनोति। अणवश्चैते प्रकृताः प्राणाः प्रतिपत्तव्याः। अणुत्वञ्चैषां सौक्ष्म्यपरिच्छेदौ न परमाणुतुल्यत्वं, कृत्स्नदेहव्यापिकार्य्यानुपपत्तिप्रसङ्गात्। सूक्ष्मा एते प्राणाः स्थूलाश्चेत् स्युः मरणकाले शरीरान्निर्गच्छन्तो बिलादहिरिवोपलभ्येरन् म्रियमाणस्य पार्श्वस्थैः। परिच्छिन्नाश्चैते प्राणाः सर्वगताश्चेत् स्युः उत्क्रान्तिगत्यागतिश्रुतिव्याकोपः स्यात्, तद्गुणसारत्वञ्च जीवस्य न सिध्येत्। सर्वगतानामपि वृत्तिलाभः शरीरदेशे स्यादिति चेत्, न, वृत्तिमात्रस्य करणत्वोपपत्तेः। यदेव ह्युपलब्धिसाधनं वृत्तिः अन्यद्वा तस्यैव नः करणत्वं तेन संज्ञामात्रे विवाद इति करणानां व्यापित्वकल्पना निरर्थिका। तस्मात् सूक्ष्माः परिच्छिन्नाश्चैते प्राणा इत्यध्यवस्यामः" भा० "श्रेष्ठश्च" सू० "मुख्यश्च प्राणः इतरप्राणवद्ब्रह्मविकार इत्यतिदिशति। नन्वविशेषेणैव सर्वप्राणानां ब्रह्मविकारत्वमाख्यातम्, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति, सेन्द्रियमनोव्यतिरेकेणापि प्राणस्योत्पत्तिश्रवणात्, "स प्राणमसृजत" इत्यादिश्रवणेभ्यश्च। किमर्थः पुनरतिदेशः, अधिकाशङ्कापाकरणार्थः। नासदासीये हि ब्रह्मप्रधाने सूक्ते मन्त्रवर्णो भवति, "न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परं किञ्च नाम" इति। आनीदिति प्राणकर्मोपादानात् प्रागुत्पत्तेः सन्तमिव प्राणं सूचयति। तस्मात् अजः प्राण इति जायते कस्यचिन्मतिः, तामतिदेशेनापनुदति। आनीच्छब्दोऽपि न प्रागुत्पत्तेः प्राणसद्भावं सूचयति। अवातमिति विशेषणात् "अप्राणो ह्यमना शुभ्रः" इति च मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वस्य दर्शितत्वात्। तस्मात् कारणसद्भावप्रदर्शनार्थ एवायमानीच्छब्द इति। श्रेष्ठ इति च मुख्यं प्राणमभि-

इधाति, “प्राणो वाव ज्येष्ठः श्रेष्ठश्च” इति श्रुतिनिर्देशात्” भा० “ज्येष्ठश्च प्राणः” सू० “शुक्रनिषेककालादारभ्य तस्य वृत्तिलाभात्, न चेत् तस्य तदानीं वृत्तिलाभः स्यात् योनौ निषिक्तं शुक्रं पूयेत न सम्भवेद्वा, श्रोत्रादीनान्तु कर्णशष्कुल्यादिस्थानविभागनिष्पत्तौ वृत्तिलाभाच्च ज्येष्ठत्वम्” भा० “श्रेष्ठश्च प्राणः गुणाधिक्यात्” सू० “न वै शक्ष्यामस्त्वदृते जीवितुम्” इति श्रुतेश्च भा० । “न वायुक्रिये पृथगुपदेशात्” सू० “स पुनर्मुख्यः प्राणः किंस्वरूप इतीदानीं जिज्ञास्यते । तत्र प्राप्तं तावत् श्रुतेर्वायुः प्राण इति, एवं हि श्रूयते, “यः प्राणः स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानः” इति । अथ वा तन्त्रान्तरीयाभिप्रायात् समस्तकरणवृत्तिः प्राण इति प्राप्तं, एवं हि तन्त्रान्तरीया आचक्षते । “सामान्या करणवृत्तिः प्राणाद्या वायवः पञ्च” इति । अत्रोच्यते । न वायुः प्राणः नापि करणव्यापारः कुतः पृथगुपदेशात् । वायोस्तावत् प्राणस्य पृथगुपदेशो भवति, “प्राण एव ब्रह्मणश्चतुर्थः पादः, स वायुना ज्योतिषा भाति च तपति च” इति । न हि वायुरेव सन् वायोः पृथगुपदिश्यते तथा करणवृत्तेरपि पृथगुपदेशो भवति, वागादीनि करणान्यनुक्रम्य तत्र तत्र पृथक्प्राणस्यानुक्रमणात् । न हि करणव्यापार एव सन् करणेभ्यः पृथगुपदिश्येत । तथा “एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुः” इत्येवमादयोऽपि वायोः करणेभ्यश्च प्राणस्य पृथगुपदेशा अनुसर्त्तव्याः । न च समस्तानां करणानामेका वृत्तिः सम्भवति, प्रत्येकमेकैकवृत्तित्वात्, समुदायस्य चाकारकत्वात् । ननु पञ्जरचालनन्यायेन एतद्भविष्यति यथैकपञ्जरवर्त्तिन एकादश पक्षिणः प्रत्येकं प्रतिनियतव्यापाराः सन्तः सम्भूयैकं पञ्जरं चालयन्ति एवमेकशरीरवर्त्तिनः एकादश प्राणाः प्रत्येकं नियतवृत्तयः सन्तः सम्भूयैकां प्राणाख्यां वृत्तिं प्रतिलप्स्यन्त इति । नेत्युच्यते, युक्तम् तत्र प्रत्येकवर्त्तिभिरवान्तरव्यापारैः पञ्जरचालनानुरूपैरेवोपेताः पक्षिणः सम्भूयैकं पञ्जरं चालयेयुरिति तथा दृष्टत्वात् । इह तु श्रवणाद्यवान्तरव्यापारोपेताः प्राणा न सम्भूय प्राण्युरिति युक्तं, प्रमाणाभावात् अत्यन्तविजातीयत्वाच्च श्रवणादिभ्यः प्राणनस्य । तथा प्राणस्य श्रेष्ठत्वाद्युद्घोषणं गुणभावोपगमश्च तं प्रति वागादीनां न करणवृत्तिमात्रे प्राणेऽवकल्पते, तस्मादन्यो वायुक्रियाभ्यां प्राणः”

कथं तर्हीयं श्रुतिः, “यः प्राणः स वायुः” इति, उच्यते । वायुरेवायमध्यात्ममापन्नः पञ्चव्यूहो विशेषात्मनावतिष्ठमानः प्राणो नाम भण्यते न तत्त्वान्तरं नापि वायुमात्रं, अतश्चोभे अपि भेदाभेदश्रुती न विरुध्येते । स्यादेतत्, प्राणोऽपि तर्हि जीववदस्मिन् शरीरे स्वातन्त्र्यं प्राप्नोति, श्रेष्ठत्वात् गुणभावोपगमाच्च तं प्रति वागादीनामिन्द्रियाणाम् । तथा हि अनेकविधा विभूतिः प्राणस्य श्राव्यते “सुप्तेषु वागादिषु प्राण एको जागर्त्ति प्राण एको मृत्युनाऽनाप्तः प्राणः संवर्गो वागादीन् संवृङ्क्ते प्राण इतरान् प्राणान् रक्षति मातेव पुत्रान्” इति । तस्मात् प्राणस्यापि जीववत् स्वातन्त्र्यप्रसङ्गः, तं परिहरति” भा० “चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः” सू० “तुशब्दः प्राणस्य स्वातन्त्र्यं व्यावर्त्तयति । यथा चक्षुरादीनि राजप्रकृतिवत् जीवस्य कर्तृत्वं भोक्तृत्वं च प्रत्युपकरणानि न स्वतन्त्राणि तथा मुख्योऽपि प्राणो राजमन्त्रिवत् जीवस्य सर्वार्थत्वेन उपकरणभूतो न स्वतन्त्रः । कुतः तत्सहशिष्ट्यादिभ्यः तैश्चक्षुरादिभिः सहैव प्राणः शिष्यते, प्राणसंवादादिषु समानधर्माणाञ्च सह शासनं युक्तं बृहद्रथन्तरादिवत् । आदिशब्देन संहतत्वाचेतनत्वादीन् प्राणस्य स्वातन्त्र्यनिराकरणहेतून् दर्शयति । स्यादेतत् यदि चक्षुरादिवत् प्राणस्य जीवं प्रति करणभावोऽभ्युपगम्येत विषयान्तरं रूपादिवत् तस्य प्रसज्येत रूपालोचनादिभिर्वृत्तिभिर्यथा चक्षुरादीनां जीवं प्रति करणभावो भवति । अपि चैकादशैव कार्यजातानि रूपालोचनादीनि परिगणितानि यदर्थमेकादश प्राणाः संगृहीताः न तु द्वादशमपरं कार्यजातमवगम्यते यदर्थमयं द्वादशः प्राणः प्रतिज्ञायत इति । अत उत्तरं पठति” भा० “अकरणत्वाच्च न दोषस्तथा हि दर्शयति” सू० “न तावद्विषयान्तरप्रसङ्गो दोषः अकरणत्वात् प्राणस्य । न हि चक्षुरादिवत् प्राणस्य विषयपरिच्छेदेन करणत्वमभ्युपगम्यते । न चास्यैतावता कार्य्याभाव एव । कस्मात्, तथा हि श्रुतिः प्राणान्तरेष्वसम्भाव्यमानं मुख्यप्राणस्य वैशेषिकं कार्यं दर्शयति । प्राणसंवादादिषु “अथ ह प्राणा अहं श्रेयसि व्यूदिरे” इत्युपक्रम्य “यस्मिन् व उत्क्रान्ते इदं शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः” इति चोपन्यस्य प्रत्येकं वागाद्युत्क्रमणेन तद्वृत्तिमात्रहीनं यथापूर्वं जीवनं मुख्यप्राणस्य वैशेषिकं कार्यं दर्शयित्वा

प्राणोत्क्रिक्रमिषायां वागादिवैयिल्यापत्तिं शरीरपातप्रसङ्गञ्च दर्शयन्ती श्रुतिः प्राणनिमित्तां शरीरेन्द्रियस्थितिं दर्शयति। "तान् वरिष्ठः प्राणः उवाच मा मोहमापद्यथाहमेवैतत् पञ्चधात्मानं प्रविभज्यैतद्वाणमवष्टभ्य विधारयामि" इति च। एतमेवार्थं श्रुतिराह। "प्राणेन रक्षन्नवरं कुलाये" इति च। सुप्तेषु चक्षुरादिषु प्राणनिमित्तां शरीररक्षां दर्शयति। "यस्मात् कस्माच्चाङ्गात् प्राण उत्क्रामति तदेव तच्छुष्यति तेन यदश्नाति यत् पिबति तेनेतरान् प्राणानवति" इति च प्राणनिमित्तां शरीरेन्द्रियपुष्टिं दर्शयति। "कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि? कस्मिन् ? वा प्रतिष्ठितेऽहं प्रतिष्ठास्यामीति स प्राणमसृजत" इति प्राणनिमित्ते एव जीवस्योत्क्रान्तिप्रतिष्ठे दर्शयति" भा०। "पञ्चवृत्तिर्मनोवद्व्यपदिश्यते" सू०। "इतश्चास्ति मुख्यप्राणस्य वैशेषिकं कार्यं यत्कारणं पञ्चवृत्तिरयं व्यपदिश्यते श्रुतिषु "प्राणोऽपानो व्यान उदानः समानः" इति। वृत्तिभेदश्चायं कार्यभेदापेक्षः। प्राणः प्राग्वृत्तिरुच्छ्वासादिकर्मा, अपानोऽवाग्वृत्तिर्निश्वासादिकर्मा, व्यानः तयोः सन्धौ वर्त्तमानो वीर्य्यवत्कर्महेतुः, उदानः ऊर्ध्ववृत्तिरुत्क्रान्त्यादिहेतुः, समानः समं सर्वेष्वङ्गेषु योऽन्नरसान् नयति इति। एवं पञ्चवृत्तिः प्राणः मनोवत् यथा मनसः पञ्च वृत्तयः एवं प्राणस्यापीत्यर्थः। श्रोत्रादिनिमित्ताः शब्दादिविषयाः मनसः पञ्च वृत्तयः प्रसिद्धाः। न तु कामः सङ्कल्प इत्याद्याः परिपठिताः परिगृह्येरन्, पञ्चसङ्ख्यातिरेकात्। नन्वत्रापि श्रोत्रादिनिरपेक्षा भूतभविष्यदादिविषयाऽपरा मनसो वृत्तिरस्तीति समानः पञ्चसङ्ख्यातिरेकः। एवं तर्हि परमतमप्रतिषिद्धमनुमतं भवतीति न्यायादिहापि योगशास्त्रप्रसिद्धा मनसः पञ्च वृत्तयः परिगृह्यन्ते प्रमाणविपर्य्ययविकल्पनिद्रास्मृतयो नाम। बहुवृत्तित्वमात्रेण वा मनः प्राणस्य निदर्शनमिति द्रष्टव्यम्। जीवोपकरणत्वमपि प्राणस्य पञ्चवृत्तित्वान्मनोवदिति योजयितव्यम्" भा०। "अणुश्च" सू०। "अणुश्चायं मुख्यः प्राणः प्रत्येतव्यः इतरप्राणवत्। अणुत्वञ्चेहापि सौक्ष्म्यपरिच्छेदौ न परमाणुतुल्यत्वं, पञ्चभिर्वृत्तिभिः कृत्स्नशरीरव्यापित्वात्। सूक्ष्मः, प्राण उत्क्रान्तौ पार्श्वस्थेनानुपलभ्यमानत्वात्, परिच्छिन्नः उत्क्रान्तिगत्यागतिश्रुतिभ्यः। ननु विभुत्वमपि प्राणस्य समाम्नायते, "समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण" इत्येवमादिषु प्रदेशेषु। तदुच्यते, आधिदैविकेन समष्टिरूपेण हैरण्यगर्भेण प्राणात्मना एतद्विभुत्वमाम्नायते नाध्यात्मिकेन। अपि च समः प्लुषिणेत्यादिना साम्यवचनेन प्रतिप्राणिवर्त्तिनः प्राणस्य परिच्छेद एव प्रदर्श्यते तस्माददोषः" भा०। "ज्योतिराद्यधिष्ठानन्तु तदामननात्" सू० "ते पुनः प्रकृताः प्राणाः किं स्वमहिम्नैव स्वस्मै स्वस्मै कार्याय प्रभवन्ति आहोस्विद्देवताधिष्ठानाः प्रभवन्तीति विचार्य्यते। तत्र प्राप्तं तावद्यथा, स्वकार्यशक्तियोगात् स्वमहिम्नैव प्राणाः प्रवर्तेरन्निति। अपि च देवताधिष्ठितानां प्राणानां प्रवृत्तावभ्युपगम्यमानायां तासामेवाधिष्ठात्रीणां देवतानां भोक्तृत्वप्रसङ्गात् शारीरस्य भोक्तृत्वं प्रलीयेत, अतः स्वमहिम्नैवैषां प्रवृत्तिरिति, एवं प्राप्ते इदमुच्यते। ज्योतिराद्यधिष्ठानन्त्विति। तुशब्देन पूर्वपक्षो व्यावर्त्त्यते। ज्योतिरादिभिरग्न्याद्यभिमानिनीभिर्देवताभिरधिष्ठितं वागादिकरणजातं स्वस्वकार्येषु प्रवर्तत इति प्रतिजानीते। हेतुञ्च व्याचष्टे तदामननादिति। तथा ह्यामनन्ति "अग्निर्वाग्भूत्वा मुखं प्राविशदित्यादि"। अग्नेश्चायं वाग्भावो मुखप्रवेशश्च देवतात्मनोऽधिष्ठातृत्वमङ्गीकृत्योच्यते। नहि देवतासम्बन्धं प्रत्याख्यायाग्नेर्वाचि मुखे वा कश्चिद्विशेषः सम्बन्धो दृश्यते। तथा "वायुः प्राणो भूत्वा नासिके प्राविशत्" इत्येवमाद्यपि योजयितव्यम्। तथान्यत्रापि "वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च" इत्येवमादिना वागादीनामग्न्यादिज्योतिष्ट्ववचनेनैतमेवार्थं द्रढयति। "स वै वाचमेव प्रथमामत्यवहत् सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्" इति च। एवमादिना वागादीनामग्न्यादिभावापत्तिवचनेनैतमेवार्थं द्योतयति। सर्वत्र चाध्यात्माधिदैवतविभागेन वागाद्यग्न्याद्यनुक्रमणमनयैव प्रत्यासत्त्या भवति। स्मृतावपि "वागध्यात्ममिति प्राहुः ब्राह्मणास्तत्त्वदर्शिनः। वक्तव्यमधिभूतन्तु वह्निस्तत्राधिदैवतम्" इत्यादिना वागादीनामग्न्यादिदेवताधिष्ठितत्वं सप्रपञ्चं प्रदर्शितम्। यदुक्तं स्वकार्यशक्तियोगात् स्वमहिम्नैव प्राणाः प्रवर्त्तेरन्निति तदयुक्तम् अशक्तानामपि शकटादीनामनडुदाद्यधिष्ठितानां प्रवृत्तिदर्शनात्। उभयथोपपत्तौ चागमाद्देवताधिष्ठितत्वमेव निश्चीयते। यदप्युक्तं देवतानामेवाधिष्ठात्रीणां भोक्तृत्वप्रसङ्गो न शारीरस्य जीवस्येति

तत् परिच्छिद्यते" भा०। "प्राणवता शब्दात्" सू०। "सतीष्वपि प्राणानामधिष्ठात्रीषु देवतासु प्राणवता कार्यकरणसङ्घातस्वामिना शारीरेणैवैषां प्राणानां सम्बन्धः श्रुतेरवगम्यते। तथा हि श्रुतिः "अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम्" इत्येवंजातीयका शारीरेणैव प्राणानां सम्बन्धं श्रावयति। अपि चानेकत्वात् प्रतिकरणमधिष्ठात्रीणां देवतानां न भोक्तृत्वमेकस्मिन् शरीरेऽवकल्पते। एको ह्ययमस्मिन् शरीरे शारीरो भोक्ता प्रतिसन्धानादिसम्भावादवगम्यते" भा०। "तस्य च नित्यत्वात्" सू०। "तस्य च शारीरस्यास्मिन् शरीरे भोक्तृत्वेन नित्यत्वं पुण्यपापोपलेपसम्भवात् सुखदुःखोपभोगसम्भवाच्च न देवतानाम्। ता हि परस्मिन्नैश्वर्ये पदेऽवतिष्ठमाना न हीनेऽस्मिञ्छरीरे भोक्तृत्वं प्रतिलब्धुमर्हन्ति। श्रुतिश्च भवति "पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति" इति शारीरेणैव च नित्यः प्राणानां सम्बन्धः" भा०। "उत्क्रान्त्यादिषु तदनुवृत्तिदर्शनात्" सू०। "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्यादिश्रुतिभ्यः। तस्मात् सतीष्वपि करणानां नियन्त्रीषु देवतासु न शारीरस्य भोक्तृत्वमपगच्छति, करणपक्षस्यैव हि देवता न भोक्तृपक्षस्येति" भा०। "त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्" सू०। "मुख्यश्चैकः इतरे चैकादश प्राणा अनुक्रान्ताः, तत्रेदमपरं सन्दिह्यते किं मुख्यस्यैव प्राणस्य वृत्तिभेदा इतरे प्राणा आहोस्वित् तत्त्वान्तराणीति। किन्तावत् प्राप्तं मुख्यस्यैवेतरे वृत्तिभेदा इति। कुतः श्रुतेः। तथाहि श्रुतिर्मुख्यमितरांश्च प्राणान् सन्निधाप्य मुख्यात्मतामितरेषां ख्यापयति "हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवन्" इति। प्राणैकशब्दत्वाच्चैकत्वाध्यवसायः, इतरथा ह्यन्याय्यमनेकार्थत्वं प्राणशब्दस्य प्रसज्येत एकत्र वा मुख्यत्वमितरत्र वा लाक्षणिकत्वमापद्येत। तस्मात् यथैकस्यैव प्राणस्य प्राणाद्याः पञ्च वृत्तयः एवं वागाद्या अप्येकादशैत्येवं प्राप्ते ब्रूमः। तत्त्वान्तराण्येव प्राणाद्वागादीनीति कुतः व्यपदेशभेदात्। कोऽयं व्यपदेशभेदः, ते प्रकृताः, प्राणाः श्रेष्ठं वर्जयित्वाऽवशिष्टा एकादशेन्द्रियाणीत्युच्यन्ते श्रुतावेवं व्यपदेशभेददर्शनात्। "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इत्येवंजातीयकेषु श्रुतिप्रदेशेषु पृथक् प्राणो व्यपदिश्यते पृथक् चेन्द्रियाणि। ननु मनसोऽप्येवं वर्जनम् इन्द्रियत्वेन प्राणवत् स्यात् "मनः सर्वेन्द्रियाणि च" इति पृथक् व्यपदेशभेददर्शनात्। सत्यमेतत् स्मृतौ तु एकादशेन्द्रियाणीति मनसोऽपीन्द्रियत्वेन श्रोत्रादिवत् संग्रहणात्, प्राणस्य त्विन्द्रियत्वं न श्रुतौ स्मृतौ वा प्रसिद्धमस्ति। व्यपदेशभेदश्चायं तत्त्वभेदपक्षे उपपद्यते। तत्त्वैकत्वे तु स एवैकः सन् प्राण इन्द्रियव्यपदेशं लभते न लभते च इति विप्रतिषिद्धं, तस्मात्तत्त्वान्तरभूता मुख्यादितरे। कुतश्च तत्त्वान्तरभूता मुख्यादितरे" भा०। "भेदश्रुतेः" सू०। "भेदेन च वागादिभ्यः प्राणः सर्वत्र श्रूयते "ते ह वाचमूचुः" इत्युपक्रम्य वागादीनसुरपाप्मविध्वस्तानुपन्यस्योपसंहृत्य वागादिप्रकरणम्, "अथ हेममासन्यं प्राणमूचुः" इत्यसुरविध्वंसिनो मुख्यस्य प्राणस्य पृथगुपक्रमात्, तथा "मनो वाचं प्राणं तान्यात्मनेऽकुरुत" इत्येवमाद्या अपि भेदश्रुतय उदाहर्त्तव्याः। तस्मादपि तत्त्वान्तरभूता मुख्यादितरे। कुतश्च तत्त्वान्तरभूता मुख्यादितरे" भा०। "वैलक्षण्याच्च" सू०। "वैलक्षण्यञ्च भवति मुख्यप्राणस्येतरेषाञ्च सुप्तेषु वागादिषु मुख्य एको जागर्त्ति "स एव चैको मृत्युनाऽनाप्तः। आप्तास्त्वितरे" तस्यैव प्राणस्य स्थितिरुत्क्रान्तिभ्यां देहधारणपतनहेतुत्वं नेन्द्रियाणां विषयालोचनहेतुत्वञ्चेन्द्रियाणाम्। न प्राणस्येत्येवंजातीयको भूयान् लक्षणभेदः प्राणेन्द्रियाणाम्। तस्मादप्येषां तत्त्वान्तरभावसिद्धिः। यदुक्तं "त एतस्यैव सर्वे रूपमभवन्" इति श्रुतेः प्राण एवेन्द्रियाणीति तदयुक्तम् तत्रापि पौर्वापर्यालोचनाद्भेदप्रतीतेः। तथा हि "वदिष्याम्येवाहमिति वाग्दध्रे" इति वागादीनीन्द्रियाण्यनुक्रम्य "तानि मृत्युः श्रमो भूत्वोपयेमे तस्माच्छ्राम्यत्येव वाक्" इति च श्रमरूपेण मृत्युना ग्रस्तत्वं वागादीनामभिधाय "अथेममेव नाप्नोत् योऽयं मध्यमः प्राणः" इति पृथक्प्राणं मृत्युनानभिभूतमनुक्रामति। "अयं वै नः श्रेष्ठः" इति च श्रेष्ठतामस्यावधारयति। तस्मात्तदविरोधेन वागादिषु परिस्पन्दलाभस्य प्राणायत्तत्वं तद्रूपभवनं वागादीनामिति मन्तव्यं न तु तादात्म्यम्। अत एव प्राणशब्दस्येन्द्रियेषु लाक्षणिकत्वसिद्धिः। तथा च श्रुतिः "त एतस्यैव सर्वे रूपमभवन् तस्मादेते एतेनाख्यायन्ते प्राणाः" इति मुख्यप्राणविषयस्यैव प्राणशब्दस्य इन्द्रियेषु लाक्षणिकीं वृत्तिं दर्शयति। तस्मा-

न्द्रियान्तराणि प्राणादुत्क्रामतीन्द्रियाणीति" शाङ्करभा०। अतएव वेदान्तसारादौ आकाशादिपञ्चतन्मात्राणां समस्तानां रजोंऽशेभ्यः पञ्चवृत्तिकप्राणोत्पत्तिमङ्गीचकार तेनापि इन्द्रियेभ्यस्तस्य पृथक्त्वं गम्यते। १५देहस्थे दशवृत्तिके वायुभेदे प्राणशब्दानुशब्दे दृश्यम्। १६ धातुः पुत्रभेदे पु० "भार्य्ये धातृविधात्रोस्ते तयोर्जातौ सुतावुभौ। प्राणश्चैव मृकण्डुश्च" मार्क०५२अ०। वैवस्वतमन्वन्तरे १७सप्तर्षिभेदे पु० हरिवं० ७अ०। धराख्यवसोः १८पुत्रभेदे पु० हरिवं० ३अ०। १९विष्णौ पु० "ईशानः प्राणदः प्राणः" विष्णुस०। 'प्राणस्य प्राणः' इति श्रुतेस्तस्य तथात्वम्। प्राणयति प्राण "अच्युतः प्रथितः प्राणः" विष्णुस०। "सूत्रात्मना प्राणयति चेष्टयति प्रजाः प्राणः" भा० व्युत्पत्तिद्वययोगात् नामद्वयम्।

प्राणस्य जलेनैवोपचयस्य करणात् जलमयत्वम् यथोक्तं छा० उ० "आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः" इत्युक्त्वा "अन्नमयं हि सोम्य! मन आपोमयः प्राणस्तेजोमयी वाक्" इति च संक्षिप्योक्त्वा तत्समर्थितं यथा "यथा दध्नः सोम्य! मथ्यमानस्य योऽणिमा स ऊर्द्ध्वः समुदीषति तत्सर्पिर्भवति" इति दृष्टान्तीकृत्य "एवमेव खलु अपां सोम्य! पीयमानानां योऽणिमा स ऊर्द्ध्वः समुदीषति स प्राणो भवतीति" छा०उ०।"यथायं दृष्टान्तः एवमेव खलु सोम्यान्नादेरस्य भुज्यमानस्यौदर्य्येणाग्निना वायुसहितेन खजेनेव मथ्यमानस्य योऽणिमा स ऊर्द्ध्वः समुदीषति तन्मनो भवति मनोऽवयवैः सह संभूय मन उपचिनोतीति तद्वत् तथाऽपां सोम्य! पीयमानानां योऽणिमा स प्राण इत्यादि" भाष्यम्। २०मूलाधारस्थे वायौ च "मूलाधारोद्गतः प्राणः" शा०ति० [दृश्ये। स्वार्थे क। १बोले च मेदि०।

**प्राणक** पु० प्राणेन कायति कै—क। १जीवकाले २जीवक-

**प्राणकर** त्रि० प्राणं बलं करोति कृ—ट। बलकारके "सद्योमांसं नवान्नञ्च बाला स्त्री क्षीरभोजनम्। घृतमुष्णोदकं चैव सद्यः प्राणकराणि षट्" चाणक्यः।

**प्राणकर्म्मन्** न० ६त०। प्राणानां दशानां कर्म्मभेदे तानि च कर्म्माणि "सर्वाणीन्द्रियकर्म्माणि, प्राणकर्म्माणि चापरे" गीता भाष्य टी० आनन्दगिरिणोक्तानि यथा "प्राणानाञ्च दशानां कर्म्माणि, प्राणस्य बहिर्गमनम् अपानस्याधोगमनं व्यानस्य आकुञ्चनप्रसारणादीनि समानस्याशितपीतादीनां समुन्नयनं उदानस्योर्द्ध्वनयनम् "उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः। कृकरः क्षुत्करो ज्ञेयो देवदत्तो विजृम्भणे। न जहाति मृतञ्चापि सर्वव्यापी धनञ्जयः" इत्येवं रूपाणि।

**प्राणग्रह** पु० "प्राणो वै ग्रहः" तैत्ति० उक्ते प्राणाख्ये इन्द्रिये ग्रहशब्दे २७४६ पृ० दृश्यम्। तत्र प्राणशब्देन घ्राणमुच्यते इति भाष्ये समर्थितम्।

**प्राणजीवन** त्रि०प्राणं जीवयति जीवि—ल्यु। १प्राणस्थापके २प्राणपोषके विष्णौ पु०"प्राणदः प्राणजीवनः" विष्णुस० "प्राणयति प्राणिनो जीवान् जीवयति प्राणजीवनः "न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ" मन्त्रवर्णात्" भा०।

**प्राणतज** पु० कल्पभवे वैमानिकभेदे हेमच०। प्राणतज इत्येव साधुःपाठः। [व्यव०।

**प्राणथ** पु० प्र+अन—अथ। १प्राणशब्दार्थे २बलवति च उ-

**प्राणद** न० प्राणं प्राणनं बलं वा ददाति पुष्णाति द्यति वा दा दो—वा—क। १जले तस्य यथा प्राणोपकारकत्वं तथा प्राणशब्दे छा०उ०वाक्ये दर्शितम्। २रक्ते च हेमच०। ३जीवकवृक्षे पु० राजनि० ४हरीतक्याम् ५ऋद्धिवृक्षे च स्त्री राजनि०। ६प्राणदातृमात्रे त्रि० "किमाश्चर्य्यं चारदेवो प्राणदा यमदूतिका" तन्त्रटः। ७विष्णौ पु० तस्य प्रलये सर्वप्राणच्छेदकत्वात्तद्दातृत्वमिति नामद्वयम् प्राणशब्दे उदा० दृश्यम्।

**प्राणदा** स्त्री चक्रदत्तोक्ते गुटिकाभेदे "शुनागरार्द्धकर्षं हरीतकीदारकं गुडेन वा मोदकमल्पदारकम्। अर्शोग्रहणीमूकरोगदारकं करोति तद्वत् वह्नेरेव दारकम्। चूर्णे चूर्णसमो ज्ञेयो मोदके द्विगुणो गुडः। त्रिपलं शृङ्गवेरस्य चतुष्कं मरिचस्य च। पिप्पल्याः कुडवार्द्धञ्च चव्यायाः पलमेव च। तालीशपत्रस्य पलं पलार्द्धं केशरस्य च। द्वे पले पिप्पलीमूलादर्द्धकर्षञ्च पत्रकात्। सूक्ष्मैलाकर्षमेकन्तु कर्षं त्वचमृणालयोः। गुडात् पलानि तु त्रिंशच्चूर्णमेकत्र कारयेत्। अत्रप्राणाख्या गुटिका प्राणदेति च सा स्मृता"। [ल्युट्। २जले पु० शब्दच०।

**प्राणन** न० प्र+अन—भावे ल्युट्। १जीवने जटा०। करणे

**प्राणनाथ** पु० ६त०। पत्यौ शब्दरत्ना०। प्राणपत्यादयोऽप्यत्र

**प्राणनिग्रह** पु०प्राणो निगृह्यतेऽनेन नि+ग्रह—करणे अप्। प्राणायामे प्राणनिरोधादयोऽप्यत्र।

**प्राणन्त** पु० प्र+अन—करणे झच्। १वायौ उज्ज्वल० २रसा-

ञ्जने अञ्जनभेदे ३सुधायां ४हिक्कायाञ्च स्त्री उणादि० ।

**प्राणप्रद** त्रि० प्राणं बलं प्रददाति प्र+दा—क । १बलदायके २ऋद्धिनामकौषधौ स्त्री रत्नमा० ।

**प्राणभक्ष** पु० प्राणेन प्राणेन भक्षः ३त० । प्राणेनावघ्राण-मात्रे कात्या० १०।२६ कर्कः । [प्रस्थ० ।

**प्राणभास्वत्** पु० प्राणेन वायुना भास्वान् उद्दीप्तः । समुद्रे

**प्राणभृत्** त्रि० प्राणं बिभर्त्ति भृ—क्विप् ६त० । १प्राणिनि जीवे जन्तुमात्रे २प्राणपोषके त्रि० ३विष्णौ पु० "प्राणभृत् प्राणजीवनः" विष्णु स० ।

**प्राणमय** पु० प्राण+प्राचुर्य्ये मयट् । "कर्मेन्द्रियैः पञ्चभिरञ्चितोऽसौ प्राणो भवेत् प्राणमयस्तु कोषः" विवेकचू० उक्ते जीवस्वरूपावरके कोषभेदे "नैवात्मापि प्राणमयो वायुविकारो गन्ताऽऽगन्ता वायुवदन्तर्बहिरेष । यस्मात् किञ्चित् क्वापि न वेत्तीष्टमनिष्टं स्वं वाऽन्यं वा किञ्चन नित्यं परतन्त्रः" तस्य तत्र वात्मनोभेदे वेदवक्तः ।

**प्राणयम** पु० प्राणो यम्यतेऽनेन यम—करणे घञ् अवृद्धिः । प्राणायामे हेमच० प्राणरोधमात्रनियममात्रसंयमादयोऽप्यत्र ।

**प्राणयात्रा** स्त्री ६त० । प्राणस्य श्वासप्रश्वासादिके १व्यापारे उपचारात् तत्साधने २भोजनादौ । भोजनेन हि देहे प्राणयात्रानिर्वाहोऽन्यथा मरणेनोत्क्रान्तिः प्राणस्य भोजनं विना स्थित्यभावात् । प्राणयात्राऽस्यस्य प्रयोजनत्वेन ठन् । प्राणयात्रिक प्राणधारणभोजनयुक्ते विशिष्टभोजपरे मनुः ६।५७

**प्राणयोनि** पु० ६त० । १परमेश्वरे जगत्प्राणे २वायौ च ।

**प्राणवत्** त्रि० प्राण+मतुप् मस्य वः । प्राणिनि जीवे जन्तुमात्रे

**प्राणशरीर** पु० प्राणः शरीरं स्वरूपं यस्य । प्राणात्मत्वेन ध्येये परमेश्वरे "स क्रतुं कुर्वीत मनोमयः प्राणशरीरः" छा० उ० "प्राणो लिङ्गात्मा विज्ञानक्रियाशक्तिद्वययुतः "यो वै प्राणः सा प्रज्ञा या प्रज्ञा स प्राणः" इति-श्रुतेः" स शरीरं यस्य सः" भाष्यम् ।

**प्राणसंवाद** पु० ६त० । प्राणानामिन्द्रियाणां सहप्राणस्य च अहं श्रेष्ठत्वविषयके विवादे । स च छा०उ० "अथ ह प्राणाः अहं श्रेयसि व्यूदिरेऽहं श्रेयानस्म्यहं श्रेयानस्मीत्युपक्रमे दर्शितः ।

**प्राणसंशय** पु० ६त० । १प्राणस्य स्थितस्थितिसन्देहे उपचारात् २मरणफलकव्यापारभेदे च ।

**प्राणसद्मन्** न० ६त० । प्राणायतने देहे ।

**प्राणसम** पु० ६त० । १प्राणतुल्ये प्रिये २पत्यौ ३पत्न्यां स्त्री ।

**प्राणहर** त्रि० प्राणं हरति देहात् देहान्तरं प्रापयति बलं वा हरति हृ—अच । १प्राणस्य देहात् देहान्तरप्रापके २बलनाशके । "शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि । प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट्" चाणक्यः । ३विषादौ च याज्ञ० २।२२७।

**प्राणहारक** त्रि० प्राणं हरति हृ—ण्वुल् । १देहात् प्राणस्य हारके २नाशके ३वत्सनाभविषे न० राजनि० ।

**प्राणाग्निहोत्र** न० प्राणरूपेऽग्नौ होत्रम् । १वैश्वानरविदः प्राणानां पञ्चाहुतिरूपेऽग्निहोत्रात्मके भोजने । तच्च यथा कर्त्तव्यता तथा छा० उ० "तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेति" इत्युपक्रम्य दर्शितम् । तच्च प्राणाहुतिशब्दे दृश्यम् । तत्प्रतिपादके २कृष्णयजुर्वेदीयोपनिषद्भेदे च ।

**प्राणात्यय** पु० ६त० । १प्राणधारणाऽसम्भावनायाम् । व०र० । २तदुपलक्षिते काले च "प्राणात्यये च संप्राप्ते योऽन्नमत्ति यतस्ततः । न स पापेन लिप्येत पद्मपत्रमिवाम्भसा" स्मृतिः "सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्" शा० सू० ।

**प्राणाधिनाथ** पु० ६त० । पत्यौ शब्दा० ।

**प्राणान्त** पु० ६त० । मरणे । प्राणान्तः प्रयोजनमस्य ठञ् । प्राणान्तिक । मरणफलके प्रायश्चित्तादौ ।

**प्राणापान** पु०द्व०द्वि०व० । प्राणे अपाने च १वायौ "प्राणापानान्तरे देवी वाग्वै नित्यं प्रतिष्ठिता" मञ्जूषाधृतवाक्यम् । २अश्विनीकुमारयोः "तस्यां त्वाष्ट्र्यामश्वरूपां मार्त्तण्डश्चोग्रतेजसा । वीर्यं निर्वापयामास तच्छुक्रं तद्द्विधाऽपतत् । तत्र प्राणस्यापानश्च योनौ चालजितौ पुरा । वरदानेन च पुनर्मूर्त्तिमन्तौ बभूवतुः । तौ त्वाष्ट्राश्वरूपिण्यां जातौ येन नरोत्तमौ । ततस्तावश्विनौ देवौ कीर्त्त्येते रविनन्दनौ" वराहपु० ।

**प्राणायतन** न० ६त० । "अक्षिणी कर्णरन्ध्रे च पायूपस्थास्यनासिकाः । नवच्छिद्राणि तान्येव प्राणस्यायतनानि तु" याज्ञ० उक्ते प्राणस्य छिद्ररूपसस्थानभेदे

**प्राणायन** पुंस्त्री० प्राणस्यापत्यं नडा० फक् । प्राणस्यापत्ये

**प्राणायाम** पु० प्राण आयम्यतेऽनेन आ+यम—करणे घञ् । प्राणवायोर्गतिविच्छेदकारकव्यापारभेदे तद्विधिस्तन्त्रसारोक्तो यथा "तत्र प्राणायामेऽङ्गुलिनियमो ग्नानार्णवे "भूतशुद्धिं ततः कुर्यात् प्राणायामक्रमेण च । अनि-

स्थानामिकाङ्गुष्ठैर्नासापुटधारणम् । प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना"। प्राणायामो द्विविधः सगर्भो निगर्भश्च । तथा च "सगर्भो मन्त्रजापेन निगर्भो मात्रया भवेत्" । मात्रा च "वामजानुनि तत्पाण्याभ्रमणं यावता भवेत् । कालेन मात्रा सा ज्ञेया मुनिभिर्वेदपारगैः" । तत्र च मूलमन्त्रस्य वीजस्य प्रणवस्य वा षोडशवारादिजपेन वामनासापुटादिना वायुपूरकादिकं कुर्य्यात् । तथा च काशीखण्डे "प्राणायामत्रयं कुर्य्यात् कूटेन प्रणवेन वा । अथ वा मन्त्रवीजेन यथोक्तविधिना सुधीः" । यथा तस्य षोडशवारजपेन वायुं रेचयेत् । तस्य चतुःषष्टिवारजपेन वायुं कुम्भयेत् । तस्य द्वात्रिंशद्वारजपेन वायुं रेचयेत् । पुनर्दक्षिणेनापूर्य्य उभाभ्यां कुम्भयित्वा वामेन रेचयेत् । पुनर्वामेनापूर्य्य उभाभ्यां कुम्भयित्वा दक्षिणेन रेचयेत् । त्रिपुरासारसमुच्चये "विपरीतमतो विदधीत बुधः पुनरेव वा तद्विपरीतमिति"। यौगिके पुनर्मात्रानियमः । तथा च गौतमीये "मन्त्रप्राणायामः प्रोक्तो यौगिकं कथयामि ते । पूरयेद्वामया विद्वान् मात्राषोड़शसंख्यया" इत्यादि । यद्वा चतुःषोड़शाष्टवारजपेन पूरकादिकं कुर्य्यात् । तथा च तन्त्रान्तरे "पूरयेत् षोड़शभिर्वायुं धारयेत् चतुर्गुणैः । रेचयेत् कुम्भकार्द्धेन अशक्त्या तत्तुरीयकम् । तदशक्तौ तत्तुर्य्यमेव प्राणस्य संयमः । अस्य नित्यतामाह "प्राणायामं विना मन्त्रपूजने न हि योग्यता" सन्ध्याङ्गप्राणायामस्वरूपफलादिकं आह्निकतत्त्वे दर्शितं यथा तत्राग्निपुराणे "गायत्रीं प्रति ब्रह्मवाक्यम् "कुर्वन्तोऽपीह पापानि ये त्वां ध्यायन्ति पावनि । उभे सन्ध्ये न तेषां हि विद्यते तु विपातकम् । त्रिः पठेदायतप्राणः प्राणायामेन यो द्विजः । वर्त्तते न स लिप्येत पातकैरुपपातकैः" । वृहद्विष्णुः "प्राणायामान् द्विजः कुर्य्यात् सर्व्वपापापनुत्तये । दह्यन्ते सर्व्वपापानि प्राणायामैर्द्विजस्य तु" । विष्णुधर्म्मोत्तराग्निपुराणयोः "सर्व्वदोषहरः प्रोक्तः प्राणायामो द्विजन्मनाम् । ततस्त्वभ्यधिकं नास्ति पापप्रशमकारणम्" । अत्रिः "कर्म्मणा मनसा वाचा अह्ना पापं कृतञ्च यत् । आसीनः पश्चिमां सन्ध्यां प्राणायामैर्व्यपोहति" । अग्निपु० "प्राणायामत्रयं कृत्वा प्राणायामैस्त्रिभिस्त्रिभिः । अहोरात्रकृतात् पापान्मुच्यते नात्र संशयः" । वशिष्ठः "प्राणायामान् धारयेत् त्रीन् यथाविधि सुयन्त्रितः । अहोरात्रकृतं पापं तत्क्षणादेव नश्यति" । तथापस्तम्बः "पूर्व्वोक्तेषु चैतेषु तथान्येष्वपि सर्व्वशः । प्राणायामास्त्रयोऽभ्यस्ताः सूर्य्यस्योदयनं प्रति । जायन्ते तद्दिनाशाय तमसामिव भास्करः । सूर्य्यस्योदयनं प्राप्य निर्म्मला धूतकल्मषाः । भवन्ति भास्कराकारा विधूमा इव पावकाः" । योगियाज्ञवल्क्यः "यदह्ना कुरुते पापं कर्म्मणा मनसापि वा । त्रिकालसन्ध्याकरणात् प्राणायामैर्व्यपोहति"। वृहस्पतिः "प्राणायामैर्दहेद्दोषान् मनोवाग्देहसम्भवान्" । प्राणायामानुद्दिश्य बौधायनः "एतदाद्यं तपः श्रेष्ठमेतद्धर्म्मस्य लक्षणम् । सर्व्वदोषोपघातार्थमेतदेव विशिष्यते"। अत्रिवशिष्ठौ "आवर्त्तयेत् सदा युक्तः प्राणायामान् पुनःपुनः । आकेशाग्रान्नखाग्राच्च तपस्तप्यत उत्तमम्" । विष्णुधर्म्मोत्तराग्निपुराणयोः "आकेशाग्रान्नखाग्राच्च तपस्तप्येत् सुदारुणम् । आत्मानं शोधयत्येव प्राणायामः पुनःपुनः । दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः । तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् । प्राणायामैर्दहेद्दोषान् प्राणायामः परं तपः"। वृहन्मनुः "यथा हि शैलधातूनां धमतां धम्यते रजः । इन्द्रियाणां तथा दोषान् प्राणायामेन निर्दहेत्" । वृहस्पतिः "धम्यमानं यथा स्रोतधातूनां संस्कृतं मलम् । तथेन्द्रियकृतो दोषः प्राणायामेन दह्यते"। योगियाज्ञवल्क्यः "यथा पर्व्वतधातूनां दोषान् दहति पावकः । एवमन्तर्गतश्चैनः प्राणायामेन दह्यते"। अत्रिवशिष्ठौ "निरोधाज्जायते वायुर्वायोरग्निः प्रजायते । अग्नेरापो व्यजायन्त तैरन्तः शुध्यते त्रिभिः" । विष्णुधर्म्मोत्तराग्निपुराणयोः "निरोधाज्जायते वायुस्तस्मादग्निस्ततो जलम् । त्रिभिः शरीरं सकलं प्राणायामैर्विशुध्यति"। योगियाज्ञवल्क्यः "तथा निरोधसंयोगात् देवतात्मयचिन्तनात् । अग्नेर्वायोरपां योगादात्मा शुध्यति वै त्रिभिः" । मनुः "प्राणायामा ब्राह्मणस्य त्रयोऽपि विधिवत् कृताः । व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमं तपः" विष्णुधर्म्मोत्तराग्निपुराणयोः "प्राणसंधारणं कार्य्यं [illegible] । यः कुर्य्यादन्यथा राजन् ! प्रा० यामस्तदुत्तमः" । वृहद्विष्णुः "सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते । गायत्रीं शिरसा सार्द्धं जपेद्व्याहृतिपूर्व्विकाम् । प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः"। योगियाज्ञवल्क्यः "भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव च । प्रत्योङ्कारसमायुक्तं तथा तत्सवितुर्वरेण्यकम् ।

ज्योतीरापोऽज्योतिरित्येतच्छिरः पश्चात् प्रयोजयेत्। एवं मन्त्रप्रयोगस्तु प्राणायामविधेयने। त्रिरावर्त्तनयोगेन प्राणायामस्तु शब्दितः”। योगियाज्ञवल्क्यः “षोडशाक्षरकं ब्रह्म गायत्र्याश्च शिरः स्मृतम्। ज्योतीरापोऽज्योतिरित्येष मन्त्रो यस्तु प्रकीर्त्यते। तस्य प्रजापतिश्चर्षिर्यजुश्चाच्छन्दसा विना। ब्रह्माग्निवायुसूर्याश्च देवताः समुदाहृताः। प्राणस्यायमने चैव विनियोग उदाहृतः। गायत्रीशिरसा सार्द्धमेवं श्रुतिनिदर्शनम्। प्रणव व्याहृतियुतां गायत्रीं शिरसा सह। त्रिःपठेदायतप्राणः प्राणायामः स उच्यते। आदानं रोधसंसर्गं वायोस्त्रिस्त्रिः समभ्यसेत्। ब्रह्माणं केशवं शम्भुं ध्यायेदेताननुक्रमात्। रक्तं प्रजापतिं ध्यायेत् विष्णुं नीलोत्पलप्रभम्। शङ्करं त्र्यम्बकं श्वेतं ध्यायन्मुच्येत बन्धनात्। पूरके ब्रह्मसायुज्यं कुम्भके ब्रह्मणोऽन्तिकम्। रेचकेनाद्वितीयन्तु प्राप्नुयादैश्वरं पदम्” अथ प्राणायामविधिः तत्र व्यासपद्यम् “आदौ छन्द ऋषिदेवताविनियोगाश्चिन्त्यन्ते “गायत्रीं शिरसा सार्द्धं सप्तव्याहृतिपूर्विकाम्। प्राणायामेन त्रिरावर्त्तयेत् ततः शनैः प्रश्वसेच्च प्राणायामैर्दग्धदोषोऽयं यत् श्रेयः तत् सकलं भवति”। व्यासः “गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च। त्रिष्टुप् च जगती चेति छन्दांस्याहुरनुक्रमात्। अग्निवाय्वर्कवरुणा बृहस्पतिस्तथैव च। विश्वेदेवाः व्याहृतीनां देवतानि यथाक्रमम्। विनियोगः स्मृतस्तासां प्राणायामे महर्षिभिः”। योगियाज्ञवल्क्यः “व्याहृतीनान्तु सर्वासामार्षश्चैव प्रजापतिः। सप्त छन्दांसि प्रोक्तानि ह्यदनानि तु सर्वशः। गायत्र्युष्णिगनुष्टुप् च बृहती त्रिष्टुबेव च। पङ्क्तिश्च जगती चैव सप्त छन्दांसि तानि वै। अग्निवायुस्तथादित्यो बृहस्पतिः एव च। इन्द्रश्च विश्वदेवाश्च देवताः समुदाहृताः। अनाम्नातेषु नित्येषु प्रायश्चित्तेषु सर्वदा। प्राणायामप्रयोगे च विनियोग उदाहृतः”। बृहस्पतिः “बद्धासनं नियम्याक्षान् कृत्वा ब्रह्माञ्जलिं तथा। संनिमीलितदृङ् मौनी प्राणायामं समभ्यसेत्”। विष्णुधर्मोत्तरे “सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह। त्रिः पठेदायतप्राणः प्राणायामः स उच्यते। आदानं रोधसंसर्गं मनसा त्रिः समभ्यसेत्। ब्रह्माणं केशवं शम्भुं ध्यायन्मुच्येत बन्धनात्। रक्तं पितामहं ध्यायेद्विष्णुं नीलोत्पलप्रभम्। श्वेतं त्र्यम्बकञ्चैव संसारार्णवतारणम्”। योगियाज्ञवल्क्यः “वाह्यस्थित नासपुटेन वायुमाकृष्य तेनैव शनैः समन्तम्। नाडीश्च सर्वाः प्रतिपूरयेद्यः स पूरको नाम महानिरोधः। न रेचकोनैव च पूरको वा नासाग्रचारी स्थित एव वायुः। अनिश्चलं धारयति क्रमेण कुम्भाख्यमेतं प्रवदन्ति तत्त्वज्ञाः। निष्क्रम्य नासाविवरादशेषं प्राणं बहिः शून्यमिवानिलेन। निरुध्य संतिष्ठति योर्द्ध्ववायुः स रेचको नाम महानिरोधः। नासिकयाऽऽकृष्टोच्छ्वासं ध्मानं पूरक उच्यते। कुम्भो निश्चलनिश्वासो रिच्यमानस्तु रेचकः”। योगियाज्ञवल्क्यः “प्राणेनाप्यपानेन वेगवायुं समुत्सृजेत्। येन शब्दमधस्यांश्च निश्वासेन च चालयेत्। शनैर्नासापुटे वायुमुत्सृजेन्न तु वेगतः”। यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि” पात०सू० तस्य योगाङ्गतोक्ता। तस्य च योगाङ्गप्राणायामस्य लक्षणादि: पात०सू०भा० विवरणेषूक्तं यथा “तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः” सू०। “सत्यासनजये बाह्यस्य वायोराचमनं श्वासः। कोष्ठ्यस्य वायोर्निःसारणं प्रश्वासः, तयोर्गतिविच्छेद उभयाभावः प्राणायामः” भा०। स तु “बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः”सू०। “यत्र प्रश्वासपूर्वको गत्यभावः स बाह्यः यत्र श्वासपूर्वको गत्यभावः स आभ्यन्तरः तृतीयस्तम्भवृत्तिर्यत्रोभयाभावः सकृत्प्रयत्नाद् भवति यथा तप्ते न्यस्तमुपले जलं सर्वतः सङ्कोचमापद्यते। तथा द्वयोर्युगपद्गत्यभाव इति त्रयोऽप्येते देशेन परिदृष्टाः इयानस्य विषयो देश इति। कालेन परिदृष्टाः क्षणानामियत्तावधारणेनावच्छिन्ना इत्यर्थः। संख्याभिः परिदृष्टाः, एतावद्भिः श्वासप्रश्वासैः प्रथम उद्घातस्तद्वन्निगृहीतस्यैतावद्भिः द्वितीय उद्घातः एवं तृतीयः एवं मृदुरेवं मध्य एवं तीव्र इति संख्यापरिदृष्टः स खल्वयमेवमभ्यस्तो दीर्घसूक्ष्मः” भा० “बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः”सू०। “देशकालसंख्याभिर्बाह्यविषयः परिदृष्ट आक्षिप्तः तथाभ्यन्तरविषयः परिदृष्ट आक्षिप्त उभयथा दीर्घसूक्ष्मः तत्पूर्वको भूमिजयात् क्रमेणोभयोर्गत्यभावश्चतुर्थः प्राणायामः। तृतीयस्तु विषयानालोचितो गत्यभावः सकृदारब्ध एव देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मस्चतुर्थस्तु श्वासप्रश्वासयोर्विषयावधारणात् क्रमेण भूमिजयादुभयाक्षेपपूर्वको गत्यभावश्चतुर्थः प्राणायामः इत्ययं विशेष इति” भा०। “ततः क्षीयते प्रकाशावरणम्” सू०। “प्राणायामानभ्यस्यतोऽस्य

योगिनः क्षीयते विवेकज्ञानावरणीयं यत्तदाचक्षते महामोहमयेन इन्द्रजालेन प्रकाशशीलं सत्त्वमावृत्य तदेवाकार्ये नियुङ्क्ते इति तदस्य प्रकाशावरणं कर्म संसारनिबन्धनं प्राणायामाभ्यासात् दुर्बलं भवति प्रतिक्षणं च क्षीयते। तथा चोक्तम् "तपो न परं प्राणायामात्ततो विशुद्धिर्मलानां दीप्तिश्च ज्ञानस्येति"। किञ्च धारणासु च योग्यता मनसः प्राणायामाभ्यासादेव। "प्रच्छर्दनविधारणाभ्यां वा प्राणस्येति" वचनात्" भा०।

"प्राणायामविशेषत्रयलक्षणपरं सूत्रमवतारयति स त्विति। वृत्तिशब्दः प्रत्येकं संबध्यते। रेचकमाह यत्र प्रश्वासेति। पूरकमाह यत्र श्वासेति। कुम्भकमाह तृतीय इति। तदेव स्फुटयति यत्रोभयोः श्वासप्रश्वासयोः सकृदेव विधारकात् प्रयत्नादभावो भवति न पुनः पूर्ववदापूरणप्रयत्नौघप्रविधारकः प्रयत्नो नापि रेचकप्रयत्नौघविधारणप्रयत्नोऽपेक्ष्यते किन्तु यथा तप्ते उपले निहितं जलं परिशुष्यत् सर्वतः सङ्कोचमापद्यते एवमयमपि मारुतो वहनशीलो बलवद्विधारकप्रयत्ननिरुद्धक्रियः शरीर एव सूक्ष्मीभूतोऽवतिष्ठते न तु रेचयति येन रेचक इति। इयानस्य देशो विषयः प्रादेशवितस्तिहस्तादिपरिमितो निवाते प्रदेशे ईषिकातूलादिक्रियानुमितो बाह्य एवमान्तरोऽप्यापादतलमामस्तकं पिपीलिकास्पर्शसदृशेनानुमितः। स्पर्शननिमेषक्रियावच्छिन्नस्य कालस्य चतुर्थो भागः क्षणस्तेषामियत्तावधारणेनावच्छिन्नः स्वजानुमण्डलं पाणिना त्रिः परामृश्य छोटिकावच्छिन्नः कालो मात्रा ताभिः षट्त्रिंशन्मात्राभिः परिमितः प्रथम उद्घातो मन्दः। स एव द्विगुणीकृतो द्वितीयो मध्यमः स एव त्रिगुणीकृतस्तृतीयस्तीव्रस्तमिमं सङ्ख्यापरिदृष्टं प्राणायाममाह सङ्ख्याभिरिति। स्वस्थस्य हि पुंसः श्वासप्रश्वासक्रियावच्छिन्नेन कालेन यथोक्तच्छोटिकाकालः समानः प्रथमोद्घातकर्मतां नीतः उद्घातो विजितो वशीकृतो निगृहीतः क्षणानामियत्ताकालो विवक्षितः श्वासप्रश्वासेयत्ता संख्येति कश्चिद्गुरुः। स खल्वयं प्रत्यहमभ्यस्तो दिवसपक्षमासादिक्रमेण देशकालप्रचयव्यापितया दीर्घः परमनैपुण्यं समधिगमनीयः तथा च सूक्ष्मो न तु मन्दतया" विवृतिः।

योगाङ्गप्राणायामविधिः दत्तात्रेयसंहितायामुक्तो यथा "तस्मिन् मठे समास्तीर्य्य आसनं विष्टरादिकम्। तत्रोपविश्य मेधावी पद्मासनसमन्वितः। समकायः प्राञ्जलिश्च प्रणम्य चेष्टदेवताम्। ततो दक्षिणहस्तस्याङ्गुष्ठेन तु पिङ्गलाम्। निरुध्य पूरयेद्वायुमिडया तु शनैः शनैः। यथाशक्त्यानिरोधेन ततः कुर्य्याच्च कुम्भकम्। ततस्त्यजेत् पिङ्गलया शनैरेव न वेगतः। पुनः पिङ्गलयाऽऽपूर्य्य पूरयेदुदरं शनैः। धारयित्वा यथाशक्ति रेचयेन्मारुतं शनैः। यया त्यजेत्तयाऽऽपूर्य्य धारयेदविरोधतः। एवं प्रातः समासीनः कुर्य्याद्विंशतिकुम्भकान्। कुम्भकः सहितो नाम सर्वपङ्कविवर्जितः। मध्याह्नेऽपि तथा कुर्य्यात् पुनर्विंशतिकुम्भकान्। एवं सायं प्रकुर्वीत पुनर्विंशतिकुम्भकान्। कुर्वीत रेककुम्भाभ्यां सहितान् प्रतिवासरम्। कुर्य्यादेवं चतुर्वारमनालस्यो दिने दिने। एवं मासत्रयं कुर्य्यान्नाडीशुद्धिस्ततो भवेत्"। यहजामले त्रयोदशपटले "प्राणायामस्त्रिधा प्रोक्तो रेचकुम्भकपूरकैः। सहितः केवलश्चेति कुम्भको द्विविधो मतः। रेचपूरणयुक्तो यः स वै सहितकुम्भकः। यावत् केवलसिद्धिः स्यात् सहितं तावदभ्यसेत्। रेचकं पूरकं त्यक्त्वा सुखं यद्वायुधारणम्। प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः। गुरूपदिष्टमार्गेण प्राणायामं समाचरेत्। यावद्वायुः स्थितो देहे तावज्जीवितमुच्यते। मरणं तस्य निष्क्रान्तिस्ततो वायुं निबन्धयेत्। मलाकुलासु नाडीषु मारुतो नैव मध्यमः। कथं स्यात् निर्मलीभावः कार्यशुद्धिः कथं भवेत्। शुद्धिमेति यदा सर्वं नाडीचक्रं मलाकुलम्। तदैव जायते योगी प्राणसंग्रहणे क्षमः। प्राणायामं ततः कुर्य्यान्नित्यं सात्त्विकया धिया। तथा सुषुम्नापार्श्वस्था मलाः शोषं प्रयान्ति हि। बद्धपद्मासनो योगी प्राणं चन्द्रेण पूरयेत्। धारयित्वा यथाशक्ति पुनः सूर्य्येण रेचयेत्। प्राणं सूर्य्येण चाकृष्य पूरयेदुदरं शनैः। विधिवत् कुम्भकं कृत्वा पुनश्चन्द्रेण रेचयेत्। येन त्यजेत्तेनैव पूरयेदविरोधतः। रेचयेच्च ततोऽन्येन रेचयेच्च न वेगतः" चन्द्रेण वामनासया सूर्य्येण दक्षिणनासया। "प्राणं चेदिडया पिबेन्नियमितं भूयोऽन्यया रेचयेत् पीत्वा पिङ्गलया समीरणमथो बद्ध्वा त्यजेद्वामया। सूर्य्याचन्द्रमसोरनेन विधिना बिम्बद्वयं ध्यायतः शुद्धा नाडिगणा भवन्ति यमिनां मासत्रयादूर्द्ध्वतः। प्रातर्मध्यन्दिनं सायं मध्यरात्रे च कुम्भकान्। चतुरशीतिपर्य्यन्तं चतुर्वारं समभ्यसेत्। प्राणायामे महान् धर्मो योगिनो मोक्षदायिनि। प्राणायामे दिवारात्रौ देहपावं परि-

त्यजेत् । अधमे द्वादशी मात्रा मध्यमे द्विगुणा स्मृता । उत्तमे त्रिगुणा ज्ञेया प्राणायामस्य निर्णये । कनीयसि भवेत् स्वेदः कम्पो भवति मध्यमे । उत्तिष्ठत्युत्तमे प्राणी बद्धपद्मासनो मुहुः । जलेन श्रमजातेन गात्रमार्जनमाचरेत् । दृढता लघुता दीप्तिस्तेन गात्रस्य जायते । यदा तु नाडीशुद्धिः स्यात्तदा चिह्नानि बाह्यतः । जायन्ते योगिनो देहे तानि वक्ष्याम्यशेषतः । शरीरलघुता दीप्तिर्जठराग्निविवर्द्धनम् । कृशत्वञ्च शरीरस्य तस्य जायेत निश्चितम् । पूर्वोक्तकाले कुर्वीत परमाभ्यासमेव च । ततःपरं यथेष्टन्तु शक्तिः स्याद् वायुधारणे । यथेष्टधारणाद्वायोः सिद्धिः कुम्भस्य केवला । केवले कुम्भके सिद्धे रेचपूरकवर्जिते । न तस्य दुर्लभं किञ्चित् त्रिषु लोकेषु विद्यते" । [हेमच० ।

**प्राणावाय** न० प्राणेनावैति अव–इ अण् । क्रियाविशाले

**प्राणासन** न० "एतत् प्राणासनं नाम सर्वसिद्धिप्रदायकम् । वायुं मूले समारोप्य ध्यात्वाऽऽकुञ्च्य प्रधारयेत् । केवलं पादमेकञ्च स्कन्धे धारोय यत्नतः । एकपादेन गगने तिष्ठेत् स्वदण्डवत् प्रभो ! । आपानासनमेतत् हि सर्वेषां पूरकाश्रयम्" । कृत्वा स्कन्धशीर्षयोः समारोप्याथ बाहुभिः । तदासिद्धो भवेत् मर्त्यः प्राणापानसमागमम् । अपानासनयोगेन कृत्वा योगेश्वरो भुवि" रुद्रयामलोक्ते पूजाङ्गे आसनभेदे ।

**प्राणाहुति** स्त्री प्राणरूपेभ्योऽग्निभ्य आहुतिः । भोजनात् प्राक् स्वरूस्कर्त्तव्ये प्राणरूपाग्न्युद्देश्यकाहुतौ तत्प्रकारश्च आह्नि०त० दर्शितो यथा छन्दोगपरिशिष्टे "प्राणेभ्यस्त्वथ पञ्चभ्यः स्वाहा प्रणवसंयुताः । पञ्चाहुतीस्तु जुहुयात् प्रणवाग्निनिभेषु च" । प्राणाहुतिमुद्रामाह शौनकः "तर्जनीमध्यमाङ्गुष्ठैर्लग्ना प्राणाहुतिर्भवेत् । मध्यमानामिकाङ्गुष्ठैरपाने जुहुयात्ततः । कनिष्ठानामिकाङ्गुष्ठैर्व्याने च जुहुयाद्धविः । तर्जनीन्तु बहिष्कृत्वा उदाने जुहुयात्ततः । समाने सर्वहस्तेन समुदायाहुतिर्भवेत्" । स्मृत्यर्थसारे "प्राणाहुतौ घृताभावे पश्चात् भुञ्जीत नो घृतम्" अत्र पाठक्रमेण प्राणापानव्यानोदानसमानरूपेभ्य आहुतिरुक्ता । वैश्वानरविद्यस्तु छान्दो०उ०अन्यक्रम उक्तो यथा "तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं, स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात् प्राणाय स्वाहेति प्राणस्तृप्यति" । "अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति" । "अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति" । "अथ यां चतुर्थीं जुहुयात्तां जुहुयात् समानाय स्वाहेति समानस्तृप्यति" । "अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति" ।

**प्राणिद्यूत** न० ६त० । समाह्वयाख्ये विवादपदभेदे अमरः । द्यूतशब्दे ३७७३ पृ० दृश्यम् "एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये" याज्ञ० द्यूतधर्मोऽतिदिष्टः । [माले ।

**प्राणिन्** नित्यम् त्रि० प्राणोऽस्त्यस्य इनि । जीवे चेतने जन्तु-

**प्राणिमातृ** स्त्री प्राणिनो मातेव । गर्भदात्रीक्षुपे राजनि० ।

**प्राणिहित** त्रि० ६त० । १प्राणिनो हितसाधने २पादुकायां स्त्री त्रिका० । [प्राणीत्य तत्वार्थे पाठान्तरम् ।

**प्राणीत्य** न० प्रणीतस्य प्रयुक्तस्य भावः ष्यञ् । ऋणे त्रिका०

**प्राणेश** पु० ६त० । १पत्यौ जटा० । २भार्य्यायां स्त्री हेमच० । ३वायौ पु० त्रिका० । प्राणेश्वरादयोऽप्यत्र ।

**प्राण्यङ्ग** न० ६त० । प्राणिनोऽङ्गे अवयवे हस्तपादादौ तत्र उपसर्जने "अङ्गं मूर्तिमत् स्यादङ्गं प्राणिस्थमविकारिजम् । अतत्स्थं तत्र दृष्टञ्च तेन तद्वत् तथा युतम्" इत्युक्तलक्षणस्याङ्गरूपकत्वे असंयोगोपधत्वे ङीष् । तत्र क्रोडादिबह्वचो नासिकोदरजङ्घादन्तकर्णानाम् पुच्छस्य च विशेषोक्तेः संयोगोपधत्वेऽपि ङीष् स्यात् ।

**प्रातःकृत्य** न० ७त० । शास्त्रविहिते प्रातःकर्त्तव्ये कर्मणि तच्च आचारशब्दे ६२२पृ० दर्शितम् । एवमन्यत्रापि यथायथं नानाशास्त्रे उक्तं दृश्यम् ।

**प्रातःकाल** पु० कर्म० । १प्रभातकाले "प्रातःकालो मुहूर्त्तां स्त्रीन् सङ्गवस्तावदेव तु" स्मृतिपरिभाषिते सूर्य्योदयावधि मुहूर्त्तत्रयमिते २काले च ।

**प्रातःसन्ध्या** स्त्री सन्धौ भवः यत् सन्ध्या ७त० । १गतरात्रेरनन्तरं मुहूर्त्तात्मके भाविसूर्योदयस्य मध्यवर्तिनि २दण्डचतुष्टयात्मके वा काले "त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् । नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते" ति०त० । सन्ध्या च ब्रह्मणो मनोजाता कन्या सा च वसिष्ठोपदेशेन तपः कृत्वा पूर्वप्रतिज्ञातस्वाग्नौ शरीरत्यागस्य सम्पादनार्थं विष्णुवरेण पुरोडाशमयं देहमवाप्य मेधातिथियज्ञाग्नौ शरीरं जुहाव । तस्याः पूर्वार्द्धं प्रातःसन्ध्या । ३तस्याश्च तत्कथा कालिकापु० २२अ० यथा "तदा विष्णोः प्रसादेन सा विवेश विधेः सुता । वह्निस्तस्याः शरीरं तद्दग्ध्वा सूर्य्यस्य मण्डले । शुद्धं प्रवेश-

यामास विष्णोरेवाज्ञया पुनः । तच्छरीरं द्विधा विभज्याथ तच्छरीरं तदा रवे । खके संस्थापयामास प्रीतये पितृदेवयोः । यदर्द्धभागस्तस्यास्तु शरीरस्य द्विजोत्तमाः ! । प्रातःसन्ध्याभवत् सा तु अहोरात्रान्तमध्यगा । यः शेषभागस्तस्यास्तु अहोरात्रान्तमध्यगः । स सायमभवत् सन्ध्या पितृप्रीतिप्रिया सदा । सूर्य्योदयाच्च प्रथमं यदा स्यादरुणोदयः । प्रातःसन्ध्या तदोदेति देवानां प्रीतिकारिणी । अस्तं गते ततः सूर्य्ये शोणपद्मनिभा सदा । उदेति सायंसन्ध्यापि पितृणां मोदकारिणी" । तस्मिन् काले उपास्या सन्ध्या ७त० । पूर्व्वसन्ध्याकाले उपास्यायां गायत्रीप्रतिपाद्यपरमेश्वररूपायां २देवतायाञ्च यथोक्तं भरद्वाजस्मृतौ ७अ० यथा

"गायन्तं त्रायते यस्मात् गायत्रीति स्मृता ततः । प्राणा गया इति प्रोक्तास्त्रायते तानथापि वा । गायत्रीति भवेन्नाम केवलं त्रायतीति वा । व्याप्य प्राणजिह्वासु सदा वाग्रूपवर्त्तनात् । सरस्वतीति नाम्ना च समाख्याता महर्षिभिः । सवितृप्रकाशकरणात् सावित्रीत्यभिधा भवेत् । जगतः प्रसवित्रीति हेतुनानेन वापि च । तस्मादियं सदोपास्या निशादिवसयोर्द्विजैः । गायत्री सन्धिवेलायां सैव सन्ध्येति कीर्त्तिता । यो जपेदर्थं ज्ञात्वा नश्यन्त्यंहांसि तत्क्षणात् । ऋषिश्छन्दो देवताश्च जपेत्ताश्चान्विताः क्रमात् । ज्ञात्वा पदानि स्तुत्वाथ तुरीयं पादमव्ययम् । ब्रह्मणा याति तत्साम्यं पदं ज्ञात्वा तुरीयकम् । या गायत्री त्रिचरणा सा त्रिमूर्त्तिस्वरूपिणी । उपास्यानन्तरं विप्रैस्त्रिसन्ध्यासु त्रिमूर्त्तिषु । तुरीयपादमेतस्या ज्ञात्वा योपास्तिमाचरेत् । स रत्नपूर्णां पृथिवीं दत्त्वापि दोषभाग्भवेत् । ब्रह्मकेशवरुद्रादिदेवताभिरुपासिता । सन्ध्यान्तां कोन सेवेत विप्रः स्याद्भिलाषुकः । प्रातः सतारकां सन्ध्यां सायं सन्ध्यां सभास्कराम् । स्नानकर्मणि तन्मध्यामुपासीत यथाविधि । प्रातरेवमुपास्यैव प्रकुर्य्यात् हवनं जपम् । स्नानस्यानन्तरं कुर्य्यात् तर्पणञ्च महाक्रतून् । सायं सन्ध्यामुपासीत होमं कुर्वीत शासनात् । सन्ध्योपासनहीनो यो न योग्यः सर्व्वकर्मसु । तस्मादुपास्य विधिना सन्ध्यामन्यक्रियाश्चरेत् । नोपासयेद्द्विजः सन्ध्यां योऽसौ शूद्रत्वमाप्नुयात् । कर्माण्यन्यानि संत्यज्य सन्ध्यां यः केवलं द्विजः । उपास्ते, सर्व्वपुण्यानि कृतवान् स भवेद्ध्रुवम् । सन्ध्योपास्तिं विना विप्रः पुण्याण्यन्यानि चाचरेत् । सर्व्वाणि तानि पापानि भवन्त्येव न संशयः । नाशयेत् जन्मजनितं पापं दशजपाद्द्विजः । पुराकृतं शतजपाद्गायत्र्यास्तु द्विजन्मनः । कृतं युगेऽपि चैकस्मिन् सहस्रेण जपेन तु । सद्भक्त्या जपतस्तस्माद्गायत्रीं सर्व्वदा जपेत् । समस्तसप्ततन्तुभ्यो जपयज्ञः परं स्मृतः । हिंसया ते प्रवर्त्तन्ते जपयज्ञो न हिंसया । यावन्तः कर्म्मयज्ञाश्च दानानि च तपांसि च । ते सर्व्वे जपयज्ञस्य कलां नार्हन्ति षोडशीम् । जपेन देवता नित्यं स्तूयमाना प्रसीदति । प्रसन्ना विपुलान् भोगान् दद्यान्मुक्तिञ्च शाश्वतीम् । यक्षराक्षसवेतालग्रहभूतपिशाचकाः । जपाश्रयं द्विजं दृष्ट्वा दूरन्ते यान्ति भीतितः । तस्माज्जपः सदा श्रेष्ठः सर्व्वस्मात् पुण्यसाधनात् । इत्येवं सर्व्वथा ज्ञात्वा विप्रो जपपरो भवेत् । एवं जपपरः सन्ध्यां भक्त्योपासीत यो द्विजः । नियमेन सदा गच्छेद्दिवं नात्र संशयः । तस्माज्जितेन्द्रियो नित्यं सन्ध्योपास्तिं समाचरेत् । स सर्व्वलोकान् जित्वाऽथ विप्रः स्ववशमानयेत् । तदन्ते ब्रह्मभावेन यावदाभूतसंप्लवम् । तावन्नित्यो निरातङ्को भवेदत्र न संशयः । एवं सन्ध्याविधिं सर्व्वं यो विप्रोऽध्यापयेत् द्विजः । अध्यापको यथावत्सः श्रोता चैकाग्रमानसः । स सर्व्वपापनिर्म्मुक्तः सर्व्वविद्याविशारदः । अथ धान्यधनोपेतो जीवेच्छरदः शतं सुखी । एतद्विधानं योऽधीत्य श्रावयेत् ब्राह्मणोत्तमान् । प्रीतिपूर्व्वं प्रयत्नेन ब्राह्मणो नियमेन च । अज्ञानेन प्रमादेन दुरितं यत् समुत्थितम् । तस्य तत् सकलं नाशं व्रजेदत्र न संशयः । याः सन्ध्योपास्तयस्तिस्रो यस्य स्नानं विधीयते । पर्व्वणि श्रावणो यस्य तत् सर्व्वं पूर्णतामियात् । कामान्मोहाच्च लोभाच्च सन्ध्यां नातिक्रमेद्द्विजः । सन्ध्यातिक्रमणाद्विप्रो ब्राह्मण्याच्च्यवते यतः । अनागतां तु ये पूर्व्वामनतीताञ्च पश्चिमाम् । सन्ध्यां नोपासते विप्राः कथं ते ब्राह्मणाः स्मृताः ? । सायं प्रातः सदा सन्ध्यां ये न विप्रा उपासते । कामन्तान् धार्म्मिको राजा शूद्रकर्म्मसु योजयेत् । विधानमेतन्नो देयं रहस्यं यस्य कस्यचित् । वेदाध्यायाभिजाताय प्रदेयं स द्विजन्मने" । ब्राह्मणस० योगियाज्ञवल्क्यः "अतःपरं प्रवक्ष्यामि सन्ध्योपासनमुत्तमम् । अहोरात्रकृतैः पापैर्य्यामुपास्य प्रमुच्यते" । तथा "यावन्तोऽस्यां पृथिव्यां हि विकर्म्मस्थास्तु वै द्विजाः । तेषां वै पावनार्थाय सन्ध्या सृष्टा स्वयम्भुवा । या सन्ध्या सा तु गायत्री

द्विधा मता प्रतिष्ठिता”। तथा “या सन्ध्या कर्म विप्राणाम-होरात्रकृतस्य तु। पापापनुत्तये सन्ध्यां तस्मान्नित्यं समाचरेत्” यमः “सन्ध्यामुपासते ये तु सततं संशित-व्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्”। शा-तातपः “अनृतं मद्यगन्धञ्च दिवामैथुनमेव च। पुनाति वृषलस्यान्नं बहिः सन्ध्या ह्युपासिता”। याज्ञवल्क्यः निशायां वा दिवा वापि यदज्ञानकृतं भवेत्। त्रिकाल-सन्ध्याकरणात् तत्सर्वं विप्रणश्यति”। देवलः “सायं प्रातः सदा सन्ध्यामुपासीत शुचिर्बहिः”। विष्णुपु० “सर्वकाल-मुपस्थानं सन्ध्यायोः पार्थिवेष्यते। अन्यत्र सूतकाशौच-विभ्रमातुरभीतितः”। योगियाज्ञवल्क्यः “सर्वावस्थो-ऽपि यो विप्रः सन्ध्योपासनतत्परः। ब्राह्मण्यान्न स हीयेत अन्यजन्मगतोऽपि सन्। सन्ध्या तूपासिता येन तेन विष्णुरुपासितः। दीर्घमायुः स विन्देत सर्वपापैः प्रमु-च्यते”। तथा “सायं प्रातस्तु यः सन्ध्यां सम्यक् चोपयु-पासिते। जपंस्तेन पावनीं देवीं सावित्रीं लोकमात-रम्। स तया पावितो देव्या ब्राह्मणो धूतकिल्बिषः। न सीदेत् प्रतिगृह्णानोऽपि पृथ्वीं ससागराम्”। वह्नि-पुराणे सनय ऊचुः “कथं मुने! दिवं याति ब्राह्मणो धूतकिल्बिषः। अनग्निको हि नो ब्रूहि यदुक्तं वह्निना पुरा” सूत उवाच “सायं प्रातश्च यः सन्ध्यामुपास्तेऽभ्युद-मानसः। जपते पावनीं देवीं गायत्रीं वेदमातरम्। तया स भावितो देव्या ब्राह्मणः धूतकिल्बिषः। न सी-देत् प्रतिगृह्णानः पृथिवीञ्च ससागराम्। ये चास्य दा-रुणाः केचिद्ग्रहाः सूर्यादयो दिवि। ते चास्य सौ-म्यतां यान्ति शिवाः शिवतरास्तथा। यत्र तत्र गतञ्चैनं दारुणाः पिशिताशनाः। घोररूपा महाकायाः प्रभवन्ति न राक्षसाः। यावन्तश्च पृथिव्यां हि चीर्णवेदव्रता द्विजाः। अधीर्णव्रतवेदा वा विकर्मपथमाश्रिताः। ते-भ्यस्तु पावनार्थाय गायत्री नित्यमेव हि। द्वे सन्ध्ये ह्युपतिष्ठेत तदन्यर्थं महाव्रतम्”। तथा “द्वे सन्ध्ये ह्युपतिष्ठेत गायत्रीं प्रयतः शुचिः। यत्तस्य दुष्कृतिं नास्ति पूर्वतः परतोऽपि वा। एवं किल्बिषयुक्तो हि विनिर्दहति पातकम्। उभे सन्ध्ये ह्युपासीत तस्मा-न्नित्यं द्विजोत्तमः”। तथा “सन्ध्या येन न विज्ञाता सन्ध्या नैवाप्युपासिता। जीवन्नेव भवेत् शूद्रो मृतः श्वा चाभि-जायते”। मनुः “न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम्। स साधुभिर्बहिष्कार्यः सर्वस्माद् द्विजक-र्मणः”। व्यासः “बहिः सन्ध्या दशगुणा गोष्ठप्रस्रवणा-दिषु। स्नाते तीर्थे दशगुणा साहस्री जाह्नवीजले”। बहिरिति स्नानाच्छादितस्थाने प्राङ्गणादौ। शातातपः “गृहेषु प्राकृती सन्ध्या गोष्ठे शतगुणा स्मृता। नदीषु शतसाहस्रा अनन्ता शिवसन्निधौ”। गृहेषु गृहवीथ्यादौ। योगियाज्ञवल्क्यः “सन्ध्यौ सन्ध्यामुपासीत नास्तगे नोद्-गते रवौ। सन्ध्यात्रयन्तु कर्त्तव्यं द्विजेनात्मविदा सदा”। संवर्त्तः “प्रातःसन्ध्यां सनक्षत्रामुपासीत यथाविधि। सादित्यां पश्चिमां सन्ध्यामर्द्धास्तमितभा-स्कराम्”। नरसिंहपुराणे “पूर्वां सन्ध्यां सनक्षत्रामु-पक्रम्य यथाविधि। गायत्रीमभ्यसेत्तावद्यावदादित्य-दर्शनम्”। मनुः “ऋषयो दीर्घसन्ध्यत्वात् दीर्घमायुरवा-प्नुयुः। प्रज्ञां यशश्च कीर्त्तिञ्च ब्रह्मवर्चसमेव च। उ-पास्ते यस्तु नो सन्ध्यां ब्राह्मणो हि विशेषतः। स जीव-न्नेव शूद्रः स्यान्मृतःश्वा चाभिधीयते”। तथा “सन्ध्याहीनो ऽशुचिर्नित्यमनर्हः सर्वकर्मसु। यदन्यत् कुरुते किञ्चित् न तस्य फलभाग्भवेत्”। यमः “अनागतान्तु ये पूर्वामतीतां चापि पश्चिमाम्। ये विप्रा नानुतिष्ठन्ति सन्ध्यां ते वृषलाः स्मृताः”। छन्दोगपरिशिष्टे कात्यायनः “सन्ध्यां नोपास्य चाकर्त्ता स्नानदानस्य यः सदा। तं दोषा नोपसर्पन्ति वैनतेयमिवोरगाः”। तथा “एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम्। यस्य नास्त्यादरस्तत्र न स ब्राह्मण उ-च्यते”। कूर्मपुराणे “न तिष्ठति तु यः पूर्वां नोपास्ते यस्तु पश्चिमाम्। स शूद्रेण समो लोके सर्वधर्मविवर्जितः”। मुख्यकाले सन्ध्यावन्दनाकरणे प्रायश्चित्तमाह। व्यासः “आदित्योऽभ्युदियाद्यस्य सन्ध्योपास्तिमकुर्वतः। स्नात्वा प्राणांस्त्रिराचम्य गायत्र्यष्टशतं जपेत्” पारि-जाते तु “कालातिक्रमणे चैव चतुर्थ्यार्घ्यं प्रदापयेत्” इत्युक्तम्। मलमासतत्त्वे तु “कालातीता वृथा सन्ध्या वन्ध्यास्त्रीमैथुने यथा। गायत्रीं दशधा जप्त्वा पुनःसन्ध्यां समाचरेत्” काशीखण्डोक्तं प्रायश्चित्तान्तरमुक्तम्। अत्र यथाचारं व्यवस्था। सङ्गवपर्य्यन्तप्रातः सन्ध्याया गौण-कालः आप्रदोषावसानं सायंसन्ध्यायाः इति मधुसूदनः। “उदयास्तमयादूर्द्ध्वं यावत् स्याद्घटिकात्रयम्। तावत् सन्ध्यामुपासीत प्रायश्चित्तमतःपरम्” इति स्कान्दे वि-शेष उक्तः। मध्याह्ने तु दक्षः “आध्यर्द्धयामादासायं सन्ध्या माध्याह्निकीष्यते। अर्घ्यप्रदानतः पूर्वमुदया-स्तमयेऽपि वा। गायत्र्यष्टशतं जप्यं प्रायश्चित्तं द्विजा-

तिभिः” इति। गौणकालेऽप्यसम्भवे यमः “दिवोदितानि कर्म्माणि प्रमादादकृतानि चेत्। शर्व्वर्य्याः प्रथमे यामे तावत् कुर्य्याद्यथाक्रमम्”। अत्र मुख्यकालानुरोधात् सायंसन्ध्योपासनं पूर्वं कृत्वा “आगन्तूनामन्ते निवेश” इति न्यायेनातीतकालं कर्म्म पश्चात् कार्य्यमिति न्यायतः प्राप्तं तस्य निषेधार्थं यथाक्रममिति वचनमिति। “दिवोदितानि कर्म्माणि प्रागुक्तानीतराणि च। दिवोदितानि कृत्वैव विदध्यादुत्तराणि तु” मदनपारिजाते वशिष्ठोक्तेः। सूतके विशेषः मृतके इत्यनुवृत्तौ “अवगाहं ब्रह्मयज्ञं सौरजप्यञ्च वर्जयेत्” इति “स्नानं सन्ध्यां त्यजन् विप्रः सप्ताहाच्छूद्रतां व्रजेत्। तस्मात् स्नानञ्च सन्ध्याञ्च सूतकेऽपि न सन्त्यजेत्। सूतके मृतके चैव सन्ध्याकर्म्म समाचरेत्। मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः” इत्यनयोरविरोधाय न मानससन्ध्यानिषेध इति कल्प्याम्। किन्तु प्राणायाममन्त्रा मनसापि नोच्चार्य्या इत्यर्थः। पैठीनसिस्तु “मृतके सावित्र्याञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्य्यं ध्यायन्नमस्कुर्य्यात्” इत्यर्घ्यदानान्तां सन्ध्यामाह। अन्ये तु उच्चार्य्य वाचा गायत्रीं दद्यादर्घ्याञ्जलिमपि। अष्टविंशतिकृत्वोऽत्र गायत्रीं मनसा जपेत्” इति गायत्रीजपमप्याहुः। “मृतके कर्म्मणान्त्यागः सन्ध्यादीनां विधीयते” इति यद्यपि सन्ध्यायानिवृत्तिः श्रूयते तथाप्यञ्जलिप्रक्षेपादिकं कार्य्यम्। “मृतके सावित्र्या चाञ्जलिमक्षिप्य प्रदक्षिणं कृत्वा सूर्य्यं ध्यायन्नमस्कुर्य्यादिति” पैठीनसिस्मरणात् इति मिताक्षरा सन्ध्यादीनामप्यपवादमाहापरार्के पुलस्त्यः “सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत्। न त्यजेत् सूतके वापि त्यजन् गच्छेदधो द्विजः। सूतके मृतके चैव सन्ध्याकर्म्म समाचरेत्। मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः” ?। यत्तु चन्द्रिकायां जाबालः “सन्ध्यां पञ्च महायज्ञान् नैत्यिकं स्मृतिकर्म्म च। तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया” यच्च संवर्त्तः “सूतके कर्म्मणां त्यागः सन्ध्यादीनां विधीयते” यच्च विष्णुपु० “सर्व्वकालमुपस्था तु सन्ध्ययोः पार्थिवेष्यते। अन्यत्र सूतकाशौचविभ्रमातुरभीतितः” इति। तत् संपूर्णसन्ध्यानिषेधपरम्। “कर्य्यान्ता मानसी सन्ध्या कुशवारिविवर्जिता” इति शुद्धिदीपे व्यवनोक्तेः। पैठीनसिस्तत्र मन्त्रोच्चारणमप्याह” सूतके सावित्र्याञ्जलिं प्रक्षिप्य सूर्य्यं ध्यायन्नमस्कुर्य्यात्”। प्रयोगपारिजाते भरद्वाजोपि “सूतके मृतके कुर्य्यात् प्राणायाममन्त्रकम्। तथा मार्ज्जनमन्त्रांस्तु मनसोच्चार्य्य मार्ज्जयेत्। गायत्रीं सम्यगुच्चार्य्य सूर्य्यार्घ्यं निवेदयेत्। मार्ज्जनं तु न वा कार्य्यमुपस्थानं न चैव हि”। इत्येवं मिताक्षरापरिजातादौ अशौचे सन्ध्याकरणविशेषस्योक्तेः गौडानां तदनाचरणमनाचार एव तस्य श्रौतत्वेन कृत्वा बाधानुचितत्वादपि मिताक्षराद्युक्तं युक्तमिति द्रष्टव्यम्।

**प्रातःसवन** न० सवनं यज्ञाङ्गकर्म्मभेदः सोमाभिषवादि प्रातः कर्त्तव्यम् सवनम्। प्रातःकर्त्तव्ये यज्ञाङ्गकर्म्मभेदे। अच् प्रातःसव तत्रार्थे पु०।

**प्रातःस्नान** ७त०। प्रातःकर्त्तव्ये जलावगाहनादिरूपे स्नाने तस्य कर्म्माङ्गताद्युक्तं मत्स्यपु० “अथः काले तु संप्राप्ते कृत्वा चावश्यकं बुधः। स्नायान्नदीषु शुद्धासु शौचं कृत्वा यथाविधि। प्रातःस्नानेन पूयन्ते येऽपि पापकृतो जनाः। तस्मात् सर्व्वप्रयत्नेन प्रातःस्नानं समाचरेत्। प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टशुभं हि तत्। सुखसुप्तस्य सततं लालाद्याः संस्रवन्ति हि। अतो नैवाचरेत् कर्म्माण्यकृत्वा स्नानमादितः। अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम्। प्रातःस्नानेन पापानि धूयन्ते नात्र संशयः। न च स्नानं विना पुंसां प्राशस्त्यं कर्म्म संस्मृतम्। होमे जप्ये विशेषेण तस्मात् स्नानं समाचरेत्। अशक्तावशिरस्कन्तु स्नानमस्य विधीयते”।

**प्रातःस्मरणीय** त्रि० ७त०। प्रातःकीर्त्तनीये देवादौ पुण्यचरिते। प्रभातशब्दे ४४७५ पृ० दृश्यम्।

**प्रातर्** अव्य० प्र+अत–अर। १प्रभाते अमरः “प्रातःकालो मुहूर्त्तांस्त्रीनि”ति स्मृत्युक्ते २सूर्य्योदयावधिमिहूर्त्तकाले च

**प्रातर** त्रि० प्रकृष्ट आतरो यत्र। प्रकृष्टातरकृपतरणपण्ययुक्ते देशे ततः कशाश्वा० चतुरर्थ्यां छण्। प्रातरीय तन्निकटदेशादौ त्रि०।

**प्रातरह्नक** पु० सर्पभेदे भा०आ० ५७अ०।

**प्रातरनुवाक** पु० प्रातःपाठ्ये अनुवाके वेदांशभेदे शस्त्रे “प्रातरनुवाकं जायदुपासीत” कात्या० श्री० ९।१।१२ “पुरा प्रातरनुवाकस्य” का०उ० “प्रातरनुवाकस्य प्रारम्भात्” भा० “अप्रगीतमन्त्रजातं शस्त्रं यत् प्रातःकाले शस्यते प्रातरनुवाकस्तस्ये”ति यावत्” आनन्द०। [त्रिका०

**प्रातराश** पु० अश+भावे घञ् ७त०। प्रातःकालिके भोजने

**प्रातर्गेय** पु० प्रातर्गेयमस्य। १स्तुतिपाठके त्रिका० २प्रातःकाले गातव्ये सामादौ च त्रि०।

**प्रातर्दिन** न० कर्म० । पूर्ववर्त्तिनि दिवसे त्रिकाण्डशेषः ।

**प्रातर्भोक्तृ** पु० ७त० । काके शब्दच० ।

**प्रातर्भोजन** न० ७त० । प्रातराशे जटाध० ।

**प्रातस्तरा(मा)म्** अव्य० प्रातर्+तरप् तमप् वा आमु । अत्यन्तप्रातःकाले “प्रातस्तरां पतत्त्रिभ्यः” भट्टिः ।

**प्रातस्त्रिवर्गा** स्त्री प्रातः प्रातःकालेन त्रिवर्गो यस्याः । गङ्गायां भा०अनु० २६अ० ।

**प्राति** स्त्री प्रा+भावे क्तिन् । १पूर्त्तौ २व्याप्तौ च मेदि० ।

**प्रातिकण्ठिक** त्रि० प्रतिकण्ठं गृह्णाति प्रतिकण्ठ+ठक् । प्रतिकण्ठग्राहके ।

**प्रातिका** स्त्री प्र+अत-ण्वुल् टाप् । जवापुष्पे राजनि० ।

**प्रातिकामिन्** दुर्य्योधनस्य दूतभेदे भा०सभा० ६६अ० ।

**प्रातिकूलिक** त्रि०प्रतिकूलं वर्त्तते प्रतिकूल+ठञ् । प्रतिकूलं वर्त्तमाने स्त्रियां ङीप् “तां प्रातिकूलिकीं मत्वा” भट्टिः

**प्रातिक्य** न० प्रतिकस्य भावः पुरोहिता० यक् । प्रतिकभावे

**प्रातिजनीन** त्रि० प्रतिजनं साधु प्रतिजना० खञ् । प्रतिजनं साधौ । कात्या०श्रौ०२५।११।४

**प्रातिनिधिक** पु० प्रतिनिधि+स्वार्थे ठक् । प्रतिनिधौ

**प्रातिपथिक** त्रि०प्रतिपथमेति ठञ् । प्रतिपथं गन्तरि स्त्रियां ङीप् । [तिथौ भवे ।

**प्रातिपद** त्रि० प्रतिपदि भवः सन्धिवेला० अण् । प्रतिपद्-

**प्रातिपदिक** त्रि० प्रतिपदायां तिथौ भवः “कालाट् ठञ्” पा०ठञ् । १प्रतिपदायां तिथौ भवे २तत्सम्बन्धिनि वह्नौ पु० “आदौ प्रतिपदा येन तस्तृप्यसेऽसि पावक ! । तस्मात् प्रातिपदिक संज्ञविश्यन्ति देवताः” वराहपु० । ३नाम्नि शब्दभेदे “यत् प्रातिपदिकं नाम तत्तदर्थो नातिरिच्यते” शब्दच० । तल्लक्षणन्तु “अर्थवदधातुरप्रत्ययः प्रातिपदिकम्” “कृत्तद्धितसमासाश्च” पा०व्याख्याते चैते वस्त्वत्वामकौमुदि “अधातुरप्रत्यय इति पुं लिङ्गनिर्देशस्तु परवल्लिङ्गं द्वन्द्व तत्पुरुषयोरित्यभिधानात् । एतत्सूत्रं परस्मै चार्थवत्त्वमितत्सम्बन्धिभूतविभक्तीतरसमभिव्याहारानपेक्षया बोधेऽर्थबोधजनकत्वम् अन्यथाऽधातुरिति पर्युदासेन व्याख्यानाद्धोऽर्थवत्त्वे सहग्रहणेन सिद्धे उत्तरसूत्रे कृदादीनामनर्थकानामपि साधवत्त्वपरत्वं व्यर्थं स्यात् । अहन्निति धातौ वाक्ये हस्यादि प्रत्ययान्ते च एतत्-सार्थ्यविभक्त्यनपेक्षत्वेऽपि तद्धितरानपेक्षत्वसत्त्वेऽपि अधातुरप्रत्यय इति तत्पर्युदासः । एकदेशवर्त्तेऽर्थबोध-जनकत्वाभावात्तत्प्रसङ्गः । तत्र प्रत्ययपदं प्रत्ययप्रत्य-यान्तपरं तस्माद्वत्त्वे बोधकत्वपरत्वादित्याह (प्रत्ययं प्रत्ययान्तञ्चेति) सि०कौ०)। अतएव भाष्ये “न लोके केवलेन प्रत्ययेनार्थोऽवगम्यते केन तर्हि संप्रकृतिकेन” इत्युक्तम् ह-रिणाप्युक्तम् । “धात्वादीनां विशुद्धानां लौकिकार्थो न विद्यते । कृत्तद्धितानामर्थश्च केवलानामलौकिकः । प्राविभक्तेस्तदन्तस्य तथैवार्थो न विद्यते” इति । भू सत्तायामित्यादौ कर्मव्युत्पत्त्यादौ चार्थकथनन्तु अलौकिकार्थकथनमात्र प्रक्रियादशायामिति वेदितव्यम् “ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले । देवदत्तादयो वाक्ये तथैव स्युर्निरर्थकाः” इत्युक्तेरखण्डवाक्यस्यापि बोधकत्वात्-तस्यापि प्रातिपदिकत्वापत्त्या तद्वारं आदिग्रहणं इति तन्निवारणायेदं नियमसूत्रमित्याह पूर्वसूत्रे चेति सि०कौ०। प्रत्ययपदं च यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणमिति न्यायादेव प्रत्ययान्तत्वलाभात् कृत्तद्धितादीनामपि प्रत्ययत्वात् पूर्वसूत्रेण संज्ञासिद्धेरिति भावः । पदमिति खातन्त्र्येण प्रयोगार्हमर्थवदित्यर्थः । अनुकरणस्य शब्दमात्र परतया न प्रातिपदिकत्वमनुकरणस्यानितिपरस्य प्रयोगाकर्म्मेऽपि इतिपरस्य पृथक् प्रयोगार्हत्वादिति गवित्ययमाहेत्यादौ न प्रसङ्गः” हरिणाप्युक्तम् । अतएव “गवित्याह भू सत्तायामितीदृशम् । न प्रातिपदिकं नापि पदं साधु तु तत् स्मृतम्” । प्रातिपदिकार्थे लोके प्रथमैव । तदर्थ नामार्थाः “जातौ द्रव्यञ्च लिङ्गञ्च संख्या कर्मादिरेव च । अमी पञ्चैव नामार्थास्त्रयः केषाञ्चिदग्रिमाः” इत्युक्ताः । तत्र अलिङ्गा, नियतलिङ्गाश्च प्रातिपदिकार्थे प्रथमाया उदाहरणम्” सि० कौ० ।

**प्रातिपीय** पु० १नृपभेदे भा०द्रो०१६०अ०। २गोत्रप्रवरर्षिभेदे च प्रवराध्यायः ।

**प्रातिपेय** पु० नृपभेदे भा०स० ६८अ० ।

**प्रातिभ** त्रि० प्रतिभाऽस्त्यस्य प्रज्ञा० अण् । १प्रतिभान्विते योगिनां योगविघ्नकारके २उपसर्गभेदे मार्कण्डेयपु० ४०अ० यथा “प्रातिभः श्रावणो दैवो भ्रमावर्त्तौ तथापरौ । पञ्चैते योगिनां योगविघ्नाय कटुकोदयाः । वेदार्थाः काव्यशास्त्रार्थाः विद्याः शिल्पान्यशेषतः । प्रतिभान्ति यस्येति प्रातिभः१ स तु योगिनः । शब्दार्थानखिलान् वेत्ति शब्दं गृह्णाति चैव यत् । योजनानां सहस्रेभ्यः श्रावणः२ सोऽभिधीयते । समन्ताद्वीक्षते चाष्टौ स यदा देवतोपमः । उपसर्गन्तमप्याहुर्दैवमुन्मत्तवद् बुधाः । भ्राम्यते यन्निरालम्बं मनो दोषेण योगिनः । समस्त-

चारविभ्रंशाद् भ्रमः४ स परिकीर्त्तितः। आवर्त्त इव तोयस्य ज्ञानावर्त्तो यदाकुलः। नाशयेच्चित्तमावर्त्तं उपसर्गः स उच्यते। एतैर्नाशितयोगास्तु सकला देवयोनयः। उपसर्गैर्महाघोरैरावर्त्तन्ते पुनःपुनः"।

**प्रातिभाव्य** न॰ प्रतिभुवो भावः ष्यञ् द्विपदवृद्धिः। (जामिनि) १प्रतिभूभावे प्रतिभूत्वेन देये २धने च मनुः ८।१५। ५८ दर्शनप्रतिभूशब्दे २४७५ पृ॰ दृश्यम्।

**प्रातिभासिक** त्रि॰ प्रतिभासादागतः ठक्। प्रतिभासाधीन सत्त्ववति मिथ्यारजतादौ वेदान्तमते हि सत्त्वं त्रिविधं पारमार्थिकं व्यवहारिकं प्रातिभासिकं च तत्र ब्रह्मणः सत्त्वं पारमार्थिकं त्रिकालाबाध्यत्वात्, घटादीनां सत्त्वं व्यवहारिकं व्यवहारकालेऽबाध्यत्वात्, शुक्तौ रजतादेः सत्त्वं प्रातिभासिकम् अधिष्ठानज्ञानबाध्यत्वात् प्रतिभासकालमात्रसत्त्वाच्चेति वेदान्तपरिभाषायां स्थितम्।

**प्रातिशाख्य** त्रि॰ प्रतिशाखं भवः परिमुखा॰ ञ्य। प्रतिशाखं भवे व्याकरणभेदे न॰।

**प्रातिश्रुत्क** पु॰ प्रतिश्रुति तत्समये भवः ठञ्। प्रतिश्रवणवेलायां भवे पुरुषे "यत्र वाचं श्रौतः प्रातिश्रुत्कः पुरुषः" श॰ ब॰। [२प्रतिध्वनिभवे च।

**प्रातिस्विक** त्रि॰प्रतिस्वं भवः ठक्। १असाधारणधर्मे त्रिका॰।

**प्रातिहर्त्त** न॰ प्रतिहर्तुर्भावः कर्म वा उद्गात्रा॰ अञ्। प्रतिहर्त्तृरूपस्य ऋत्विग्भेदस्य कर्मणि १प्रतिहरणे २तद्भावे च।

**प्रातिहारक** पु॰ प्रतिहारक एव स्वार्थे अण्। प्रतिहारकशब्दार्थे अमरः। [कारके अमरः।

**प्रातिहारिक** त्रि॰ प्रतिहारः प्रयोजनमस्य ठक्। माया-

**प्रातीतिक** त्रि॰प्रतीत्या निर्वृत्तः ठञ्। प्रातिभासिके पदार्थे

**प्रातीप** प्रतीपस्यापत्यम् अण्। प्रतीपनृपस्यापत्ये शान्तनौ नृपे त्रिका॰। [कूलाचारिणि।

**प्रातीपिक** त्रि॰ प्रतीपं वर्त्तते ठञ्। प्रतीपं वर्त्तमाने प्रति-

**प्रातृद** पु॰ ऋषिभेदे शत॰ब्रा॰ १४.८।१।१।२

**प्रात्ययिक** त्रि॰ प्रत्ययाय स्थितः ठक्। प्रतिभूभेदे "दर्शनप्रतिभूर्यस्तु स्मृतः प्रात्ययिकोऽपि वा" याज्ञ॰। दर्शनप्रतिभूशब्दे २४७८ पृ॰दृश्यम्।

**प्राथमकल्पिक** त्रि॰ प्रथमकल्पे भवः ठक्। १प्रथमारब्धोचिते वेदाध्ययनादौ। प्रथमं कल्पमधीते कल्पान्तत्वात् ठक्। २पृथमकल्परूपशिक्षाद्यध्यायिनि अमरः।

**प्राथमिक** त्रि॰ प्रथमे भवः ठञ्। १प्रथमभवे स्त्रियां ङीप्।

प्रथममधीते प्रथम+ठक्। वेदादेः २प्रथमाध्येतरि च।

**प्रादि** पु॰ उपसर्गसंज्ञार्थं पा॰उक्ते शब्दभेदे स च गणः पा॰ ग॰उक्तो यथा"प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उद्(द्) अभि प्रति परि उप"एते प्रादयः। निस् दुस् सान्तौ"निसस्तपतावनासेवने इति (८।३।१२०) सूत्रे निस इति निर्देशात् निष्कृतं दुष्कृतमित्युदाहृत्य"इदुदुपधस्य चो विसर्जनीयः" इति भाष्योक्तेश्च। निरः कुषः इति (७।२।४६) "सुदुरोरधिकरणे" इति च निर्देशात् रान्तावपि मनो॰। उदिति दान्तोऽपि "उदोऽनूर्ध्वं चेष्टायामिति"। "उपसर्गाः क्रियायोगे"पा॰"गतिश्च" पा॰ प्रादयः क्रियायोगे उपसर्गसंज्ञा गतिसंज्ञाश्च स्युः" सि॰कौ॰।

**प्रादुराक्षि** पु॰ गोत्रप्रवरर्षिभेदे प्रवराध्यायः।

**प्रादुर्भाव** पु॰ प्रादुस्+भू—भावे घञ्। आविर्भावे प्रथमप्रकाशे

**प्रादुस्** अव्य॰ प्र+अद्—उस्। प्राकाश्ये अर्था॰ अस्य क्रिया॰ योगे गतित्वात् प्रादुष्कृत्य प्रादुर्भूय। स्वार्थे यत् न टि॰ लोपः प्रादुस्य प्रादुर्भावे न॰ उज्ज्वलदत्तः।

**प्रादेश** पु॰ प्र+दिश-घञ् दीर्घः। १तर्जनीसहितविस्तृताङ्गुष्ठे अमरः २देशमात्रे मेदि॰ "अङ्गुष्ठस्य प्रदेशिन्या व्यासः प्रादेश उच्यते" इत्युक्ते ३परिमाणभेदे च देवीपु॰।

**प्रादेशन** न॰ प्र+आ+दिश—ल्युट्। दाने अमरः।

**प्रादेशिक** त्रि॰ प्रदेशे भवः ठक्। प्रदेशभवे [स्त्रियां ङीप्।

**प्रादोष(षि)क** त्रि॰ प्रदोषे भवः वा अण्ठञौ। प्रदोषभवे

**प्रादोहनि** पु॰स्त्री प्रदोहनस्यापत्यम् इञ्। तदपत्ये। ततः यूनि फञ् तौल्व॰ तस्य न लुक्। प्रादोहनायनि तदीये यून्यपत्ये पुंस्त्री॰। [करणे भाग॰३।८।२१।

**प्राधनिक** त्रि॰ प्रधनं संग्रामः प्रयोजनमस्य ठक्। युद्धोप-

**प्राधा** स्त्री प्रधैव स्वार्थे अण्। दक्षकन्याभेदे काश्यपकलत्रभेदे हरिवं॰२२६अ॰। तस्याः अपत्यं ढक्। प्राधेय तदपत्ये पुंस्त्री॰ तदपत्यानि च देवगन्धर्वादयः भा॰आ॰६५ अ॰। अग्निपुराणे प्राधेया इत्येव पाठः शब्दकल्पद्रुमे प्राधेव शब्दकल्पनं लिपिकरप्रमादकृतपाठदर्शनात् इति बोध्यम्।

**प्राधानिक** त्रि॰ प्रधान+स्वार्थे ठक् तस्येदं ठक् वा। १प्रधानशब्दार्थे २प्रधानसम्बन्धिनि च"प्राधानिकरहस्यञ्च" इत्यादि देवीमाहात्म्यव्याख्यायां गुप्तवत्यां स्थितम्।

**प्राधान्य** न॰ प्रधानस्य भावः ष्यञ्। त्वतलौ। भावे त्वप्रधानत्व न॰ तल प्रधानता स्त्री तदर्थे। "अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता" शाब्दिककारिका।

**प्राध्व** त्रि॰ प्रकृष्टोऽध्वा अचसमा॰। १दूरपथे २प्रह्वे नम्रे ३बद्धे च हेमच॰ ब॰ग्री॰। ४बहुदूरगामिनि रथादौ च।

**प्राध्वम्** अव्य॰ प्र+आ+ध्वन—डमि। १आनुकूल्ये २बन्धने ३नम्रतायाञ्च अमरः।

**प्रान्त** पु॰ प्रकृष्टोऽन्तः। १प्रोषसीमायाम् हेमच॰। २ऋषिभेदे पु॰। ततः गोत्रापत्ये कण्वा॰ फञ्। प्रान्तायन तदपत्ये पुंस्त्री॰। [शब्दार्थक॰।

**प्रान्तदुर्ग** न॰ प्रान्ते दुर्गं व्यपाश्रयस्थानभेदः। दुर्गभेदे

**प्रान्तर** न॰ प्रकृष्टमन्तरं व्यवधानं यत्र। १दूरगस्ये पथि। २वृक्षादिच्छायाशून्ये पथि ३वने ४कोटरे च मेदि॰।

**प्रान्तशून्य** पु॰ प्रान्ते शून्यमस्य। छायादिरहिते पथि शब्दर॰

**प्रापणिक** पु॰ प्र+आ+पण—"प्राङि पणिकषः" उणा॰ किकन्। पण्यविक्रेतरि उज्ज्वलद॰।

**प्राप्त** त्रि॰प्र+आप—कर्मणि कर्त्तरि वा क्त। १लब्धे २आसादिते ३भूते अमरः। ४उपस्थिते च।

**प्राप्तकाल** पु॰ प्राप्तः कालोऽस्य। करणयोग्ये काले १।२।१३३ पा॰ सूत्रे दृश्यम्।

**प्राप्तपञ्चत्व** त्रि॰ प्राप्तं पञ्चत्वं मरणं येन। मृते अमरः। मरणे देहस्य पञ्चभूतात्मकताप्राप्तेस्तस्य तथात्वम्। प्रेतशब्दे दृश्यम्। [हलादौ शब्दरत्ना॰।

**प्राप्तभार** पु॰ प्राप्तः भारः तद्वहनकालोऽस्य। भारसह-

**प्राप्तरूप** त्रि॰ प्राप्तं रूपं येन। १मनोहरे २पण्डिते अमरः। ३रूपवति च।

**प्राप्ति** स्त्री प्र+आप—भावे क्तिन्। १उदये २अनादिष्टवृद्धौ ३लाभे च अमरः। ४प्रापणे ५संहतौ शब्दरत्ना॰ अणिमाद्यष्टविधैश्वर्यमध्ये ६ऐश्वर्यभेदे ऐश्वर्यशब्दे दृश्यम्। बार्हद्रथजरासन्धसुताभेदे ७कंसकलत्रभेदे भा॰स॰ १४अ॰। हरिवं॰ ८१अ॰ "अप्राप्तस्यैव या प्राप्तिः सैव संयोग उच्यते" भाषा॰ उक्ते ८संयोगरूपे द्रव्यगुणभेदे च। सा॰द॰उक्ते ९मुखाङ्गभेदे"युक्तिः प्राप्तिः समाधानमिति" मुखाङ्गान्युद्दिश्य "संप्रधारणा चार्थानां युक्तिः, प्राप्तिः सुखागमः" लक्षिता। कामस्य भार्याभेदे भा॰आ॰ ६६अ॰। नील॰ता॰ उक्ते दशरूपभेदे।

**प्राप्तिसम** न॰ गौ॰उक्ते जात्युत्तरभेदे "प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्या विशिष्टत्वात् प्राप्तिसमः" सू॰। "हेतुः प्राप्य वा साध्यं साधयेदप्राप्य वा ?। न तावत् प्राप्य। प्राप्त्यामविशिष्टत्वादसाधकः द्वयोर्विद्यमानयोः प्राप्तौ सत्यां किं कस्य साधकं साध्यं वा ?। अप्राप्यसाधकं न भवति। नाप्राप्तः प्रदीपः प्रकाशयतीति। प्राप्त्या प्रत्यवस्थानं प्राप्तिसमः" वात्स्या॰ "प्राप्त्या विशेषादर्निष्टप्रापादनेन प्रत्यवस्थानम्" गौ॰वृ॰ ५।७ यथा आत्मा स क्रियः क्रियाहेतुगुणवत्त्वादित्यादौ क्रियाहेतुगुणवत्त्वेनैव किमिति क्रियावत्त्वं साध्यते। किमिति क्रियावत्त्वेन तादृशगुणवत्त्वं न ? उभयोरविशेषादिति"।

**प्राप्त्याशा** स्त्री ६त॰। १लाभेच्छायाम् २प्रारब्धकार्यस्यावस्थाभेदे "अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः। आरम्भो यत्र प्रत्याशा नियताप्ति फलागमः" इत्युद्दिश्य "उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः" इति सा॰द॰ लक्षिता।

**प्राप्य** त्रि॰ प्र+आप—ण्यत्। १गम्ये २लभ्ये च ३व्याकरणोक्ते "क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते। दर्शनादनुमानाद्वा तत्प्राप्यमिह कथ्यते" इत्युक्ते ४कर्मभेदे कर्मन्शब्दे १७३॰पृ॰ दृश्यम्। प्र+आप—ल्यप्। लब्ध्वेत्यर्थे अव्य॰।

**प्राप्यकारिन्** त्रि॰ प्राप्य विषयदेशं गत्वा करोति विषयप्रकाशम् कृ—णिनि। विषयदेशं गत्वा विषयप्रकाशकारके चक्षुरादौ इन्द्रिये। तत्र न्यायमते चक्षुष एव प्राप्यकारिता नान्यस्य। वेदान्तमते श्रवणस्यापीति भेदः।

**प्राबोधिक** पु॰ प्रबोधाय हितं ठक्। १उषःकाले शब्दमा॰ प्रबोधः प्रबोधनं तत्र नियुक्तः तत्प्रयोजनमस्य वा ठञ्। २मागधे प्रातःस्तुतिपाठकभेदे।

**प्राभञ्जन** न॰ प्रभञ्जनो देवताऽस्य अण्। स्वातिनक्षत्रे तस्य तद्देवताकत्वात् तथात्वम्। तस्यापत्यम् इञ्। प्राभञ्जनि हनूमति "वायूंषि तस्य निर्भिद्य प्राभञ्जनिरमोचयत्" भट्टिः।

**प्राभव** न॰ प्रभोर्भावः अण्। १प्रभुत्वे २श्रेष्ठत्वे च।

**प्राभवत्य** न॰ प्रभवतो भावः ष्यञ्। विभुत्वे मनुः ८।४१२

**प्राभाकर** न॰ प्रभाकरस्य इदम् तन्मतं वेत्ति वा अण्। १मीमांसकभेदप्रभाकरसम्बन्धिनि २तन्मतज्ञे च।

**प्राभृत** न॰ प्र+आ+भृ—कर्मणि क्त। उपढौकनद्रव्ये अमरः। स्वार्थे क। २प्राभृतक तत्रार्थे हारा॰।

**प्रामधि** पु॰ पौलस्त्ये सप्तर्षिमध्ये ऋषिभेदे हरिवं॰ ७अ॰।

**प्रामाणिक** त्रि॰ प्रमाणेन निर्वृत्तः सिद्धः ठञ्। १प्रत्यक्षादिप्रमाणसिद्धे २शास्त्रसिद्धे च स्त्रियां ङीप्। ३हेतुके ४मर्यादाभिज्ञे ५शास्त्रज्ञे ६परिच्छेदके ७प्रमाणकर्त्तरि च।

**प्रामाण्य** न॰ प्रमाणस्य भावः। तद्वति तत्प्रकारकत्वरूपे

ज्ञानधर्मभेदे तच्च न्यायमते परतोग्राह्यं मीमांसकादिमते स्वतः, स्वमात्रग्राह्यं वा ग्राह्यमिति भेदः। प्रमाणशब्दे दृश्यम्। [वचने शब्दच० भावे ष्यञ्। २प्रमादे न०।

**प्रामाद्य** पु० प्रमाद्यत्यनेन प्र+मद बा० करणे ण्यत्। १मादक-

**प्रामीत्य** न० प्र+मी—भावे क्तिन् तत्र साधु यञ्। १ऋणे मिता० पाठान्तरम्। प्रमीतस्य भावः ष्यञ्। २मरणे न०।

**प्राय** पु० प्र+अय—इण्—वा अच्—अच् वा। १मृत्यौ २अन-शनमृत्यौ ३बाहुल्ये च मेदि० "प्रायेण सामग्र्यविधौ गुणानाम्" कुमारः। ततः प्रज्ञाद्या० स्वार्थेऽण्। सर्वविभक्त्य-न्तात् तृतीया प्रायेण गार्ग्यः सि०कौ०।

**प्रायण** न० प्र+अय—भावे ल्युट्। १देहत्यागेन स्थानान्तरगमने मनु ८।२२२ श्लो० उदा०। २प्रारम्भे च "एषा वि-ष्टुत्प्रायणा" ताण्ड्य० ब्रा० २।१५।२ "त्रिवृत् स्तोमः प्रायणे प्रारम्भे यस्याः" भा०।

**प्रायणीय** त्रि० प्रायणं आरम्भदिनं तत्र विहितः छ। १प्रारम्भदिने २गवामयनप्रथमाह्नादौ च विहिते अतिरात्रे यागभेदे च "प्रायणीयेऽद्य सुत्यामेके" कात्या० श्रौ० १२।६।२६ "प्रायणीयोऽतिरात्र एवाह आद्यः" देव-नाथः। ताण्ड्य० ब्रा० ४।२।१।२ भाष्ये द्वितीयाह-स्यैव प्रायणीयसंज्ञा तन्निरुक्तिश्च दर्शिता यथा "प्रायणीयमेतदहर्भवति" मू०। "एतदहर्यस्मात् प्रा-यणीयं प्रकर्षेण यान्ति गच्छन्ति स्वर्गमनेनेति व्युत्-पत्तेः। एतत्संज्ञं गवामयनस्य द्वितीयमहस्तदुक्तं भ-वति। यद्यपि श्रुत्यन्तरे प्रथमविहितस्यातिरात्रस्यैव प्रायणीय इति संज्ञा प्रसिद्धा तथापि प्रथमोत्तमयोरति-रात्रयोः सर्वत्र साधारणत्वादस्यैवाह्नो गवामयने असा-धारणं प्राथम्यमिति कृत्वा एतद्वादिकं गवायनस्वरूप-मित्यस्मिन् द्वितीयेऽहनि प्रायणीयशब्दोऽत्र प्रयुज्यते। उक्तमहर्नामनिर्वचनद्वारा प्रशंसति" भा० "प्रायणीयेन वा अग्रे देवाः स्वर्गं लोकं प्रायन् यत् प्रायंस्तत् प्रायणीयस्य प्रायणीयत्वम्" मू० "पुरा देवाः प्रायणीयेन प्रायणीया-ख्येन अह्ना स्वर्गं लोकं प्रायन् प्राप्ताः यद्यस्मात् प्रायन् स्वर्गं प्रागमन् तस्मादस्याह्नः प्रायणीयत्वं प्राय-णीयसाधारणत्वात् प्रायणीयमिति नाम सम्पन्नम्" भा०। तदहः कर्तव्यत्वादतिरात्रस्य प्रायणीयसंज्ञेति बोध्यम्।

**प्रायश्चित्त** न० पापक्षयमात्रसाधनत्वेन विधिबोधिते कर्म-भेदे यथोक्तं प्रा०वि०

अङ्गिराः "प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते। तपो निश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्। निश्चयसंयुक्तं पापक्षयसाधनत्वेन निश्चितमित्यर्थः। तथा हारीतः "प्रयतत्वाद्वोपचितमशुभं नाशयतीति प्राय-श्चित्तम्"। एतेन पापक्षयमात्रसाधनं कर्म प्रायश्चित्त-मिति तल्लक्षणम्। मात्रशब्दात् ब्रह्मपुरुषाश्वमेधादिव्या-वृत्तिः। तत्र पापविशेषस्यैव कामाकामकृतस्य शक्तिविशेषस्य ततो नाशः मतभेदेन अव्यवहार्यशब्दे ४७०।७१दर्शितः। "प्रायश्चित्तैरपैत्येनो यदज्ञानं कृतं भवेत्। कामतो व्य-वहार्यस्तु वचनादिह जायते" याज्ञ० वचनस्य प्रा०वि० व्याख्यानं मतभेदेन दर्शितं यथा

"कामत इति अज्ञानकृतपापप्रायश्चित्तेन कामकृतपापाप-गमो न भवति। किन्तु व्यवहार्यतामात्रम्। ननु सति पापे कथं व्यवहार्यतामात्रम् अत आह वचनादिति। अय-मभिप्रायः यद्यपि प्रायश्चित्तानुष्ठानेनापि पापक्षयात् सम्भा-षणस्पर्शनदर्शनादिवद्व्यवहारो न दुष्टः न तु भोजन-परिणयनव्यवहारोऽपि वचनादेव यथा कुनखित्वादि-सूचितमहापापशेषसद्भावे व्यवहार्यतेति। अथ वा अकारप्रश्लेषाद्यथोक्तेन प्रायश्चित्तेन कामतोऽपि पापक्षयो भवत्येव किन्त्वव्यवहार्यः पापाभावेऽपि वचनात्। अत एव मनुः "बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः। शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत्"। याज्ञवल्क्यः "शरणागतबालस्त्रीहिंसकान् संवसेन्न तु। चीर्णव्रतानपि सदा कृतघ्नसहितानिमान्"। कृतनिर्णेजनांश्चैव न जुगु-प्सेत कर्हिचित्" इति मनुवचनं त्वज्ञानकृतमहापापे बो-द्धव्यमिति। भवदेवस्तु सर्वत्र "स्नातः शुद्धिमवाप्नुयादिति" दर्शनादव्यवहार्यतावचनं निन्दार्थमित्याह। विज्ञा-नस्तु पापकर्मणा हि द्वयं जन्यते शरीरगतमशुचित्वमात्म-गतञ्च पापं तत्र स्नानादौ वैदिककर्मणि यानर्हत्वलक्षणं तेनात्र कामनाकृते केवलशरीरदोषः प्रायश्चित्तेनापनीयते जन्मान्तरकृतदुरितस्यैवात्मनः शरीरान्तरस्य व्यवहारा-धिकारित्वम् आत्मगतञ्च पापं भोगादेव क्षीयते" तच्च काम-कारकृतेऽप्याहुरेके श्रुतिनिदर्शनात् इति मनुवचनाद्युक्त-श्रुतिविरोधाच्च"। मिताक्षरामतन्तु अव्यवहार्यशब्दे दर्शितम्। प्रायश्चित्तस्य काम्यत्वं नैमित्तिकत्वं नित्यत्वञ्च यथाह जाबालः "काम्यानां सफलार्थञ्च दोषघातार्थमेव च। अतः काम्यं नैमित्तिकञ्च प्रायश्चित्तमिति स्थितिः। च-रितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये। निन्द्यैर्हि ल-क्षणैर्युक्ता जायन्तेऽनिष्कृतैनसः"। ज्ञानाज्ञानकृत-

कामयोः प्रायश्चित्तभेदो यथा अङ्गिराः "अज्ञानतः कृते पापे प्रायश्चित्तं, न कामतः। ज्ञानकामकृते तत्तु द्विगुणं बुद्धिपूर्वके"। प्रायश्चित्ताकथने दोषो यथा "आर्त्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः। जानन्तो न प्रयच्छन्ति तेऽपि तद्दोषभागिनः। अनर्चितैरनाहूतैरपृष्टैश्चैव संसदि। प्रायश्चित्तं न वक्तव्यं जानद्भिरपि जल्पतः। व्यायतो मार्गमाणस्य वनितारेः प्रयाचिनः। अन्तरा ब्राह्मणं कृत्वा व्रतमेतत् समादिशेत्" हारीतः "यथावयो यथाकालं यथाप्राणञ्च ब्राह्मणे। प्रायश्चित्तं प्रदातव्यं ब्राह्मणैर्धर्मपाठकैः। तस्मात् कृच्छ्रमथार्द्धं पादं वापि (पादमेव नातो न्यूनम्)विधानतः। ज्ञात्वा वयावयं कालं प्रायश्चित्तं प्रकल्पयेत्। अशक्तावनुग्रहमाह पराशरः। "दुर्बलेऽनुग्रहः कार्य्यस्तथा वै शिशुवृद्धयोः। अतोऽन्यथा भवेद्दोषस्तस्मान्नानुग्रहो भवेत्"। स्नेहादिनानुग्रहे दोषो यथा "स्नेहाद्वा यदि वा लोभात् भयादज्ञानतोऽपि वा। कुर्वन्त्यनुग्रहं ये तु तत् पापं तेषु गच्छति"। अशक्तौ प्रायश्चित्तमुदाहृत्य पश्चादनुग्रहः कार्य्य इत्याहाङ्गिराः "कृत्वा पूर्वमुदाहारं यथोक्तं धर्मवक्तृभिः। पश्चात् कार्य्यानुसारेण मन्त्रा कुर्य्यात्त्वनुग्रहम्"। वयःक्त्वादिभेदात् प्रायश्चित्तं यथा "अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः। प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च"। पापनिर्णाशोपायानाह मनुः "ख्यापनेनानुतापेन तपसाऽध्ययनेन च। पापकृन्मुच्यते पापात्तथा दानेन चापदि"। आपदीत्यनेन अध्ययनतपसोर्दानमनुकल्प इत्युक्तम्। एतच्च हिंसाव्यतिरिक्तविषयम्। हिंसायान्तु दानं मुख्यम्। यथा भविष्ये "हिंसात्मकानां सर्वेषां कीर्त्तितानां मनीषिभिः। प्रायश्चित्तकदम्बानां दानं समभिरुच्यते"। तथा मनुः "दानेन वधनिर्णेकं सर्पादीनामशक्नुवन्। एकैकशश्चरेत् कृच्छ्रं द्विजः पापापनुत्तये"। अथान्यप्रायश्चित्तान्याह संवर्त्तः "हिरण्यदानं गोदानं भूमिदानं तथैव च। नाशयन्त्याशु पापानि महापातकजान्यपि"। यमः "शोषणेन शरीरस्य तपसाऽध्ययनेन च। पापकृन्मुच्यते पापात् दानेन च दमेन च"। मनुः "कृत्वा पापं हि सन्ताप्य तस्मात् पापात् प्रमुच्यते। नैतत् कुर्य्यां पुनरिति निवृत्त्या पूयते नरः"। विष्णुपुराणम् "प्रायश्चित्तान्यशेषाणां कृष्णानुस्मरणं परम्"। यमः "गयाश्राद्धं देवपूजा वेदाभ्यासः सरित्प्लवः। नाशयन्त्याशु पापानि महापातकजान्यपि"। गौतमः "हिरण्यं गौर्वासोऽश्वो भूमिस्तिला घृतमन्नमिति देयानि"। एतान्येवानादेशे विकल्पेन क्रियेरन् एनसि लघूनि लघूनि गुरूणि गुरूणि"। विष्णुपुराणम् "एवं विषयभेदाद्वै व्यवस्थाप्यानि पुत्रक। प्रायश्चित्तानि सर्वाणि गुरूणि च लघूनि च। अन्यथा हि महाबाहो! लघूनामुपदेशतः। गुरूणामुपदेशो हि निष्प्रयोजनतां व्रजेत्"। महाभारते "महाकार्य्यशतं कृत्वा कृतं गङ्गाभिषेचनम्। सर्वं दहति गङ्गाम्भस्तूलराशिमिवानलः"। शुद्धिकारणानि व्रतान्याह विश्वामित्रः "कृच्छ्रचान्द्रायणादीनि शुद्ध्यभ्युदयकारणम्। प्रकाशे वा रहस्ये वा सर्वेष्वनुक्तके स्फुटे। प्राजापत्यं सान्तपनं शिशुकृच्छ्रं पराककः। अतिकृच्छ्रः पर्णकृच्छ्रः सौम्यकृच्छ्रोऽतिकृच्छ्रकः। महासान्तपनः शुद्धौ तप्तकृच्छ्रस्तु पावनः। जलोपवासकृच्छ्रश्च ब्रह्मकूर्चस्तु शोधकः। एते समस्ता व्यस्ता वा प्रत्येकमेकशोऽपि वा। पातकादिषु सर्वेषु पापकेषु प्रयत्नतः। कार्य्याश्चान्द्रायणेनैताः केवला वा विशुद्धये। शिशुचान्द्रायणं प्रोक्तं यतिचान्द्रायणं तथा। यवमध्यं तथा प्रोक्तं तथा पिपीलिकाकृति। उपवासस्त्रिरात्रं वा मासं पक्षं तदर्द्धकम्। षड्रात्रादयाहादि कार्य्यं शुद्धिमभीप्सुना। उपपातककृत्यानामनादिष्टेषु चैव हि। प्रकाशे च रहस्ये च अभिसन्ध्याद्यपेक्षया। जातिशक्तिगुणान् दृष्ट्वा सकृद्बुद्धिकृते तथा। अनुबन्धादिकं दृष्ट्वा सर्वं कार्य्यं यथाक्रमम्"। प्रकाशकृते पापे व्रतानि तुल्यानि रहस्यकृते जपादीनि यथा प्राजापत्यादीन्यभिधाय मनुः "एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः। अनाविष्कृतपापांस्तु मन्त्रैर्होमैश्च शोधयेत्"। देवलः "प्रकाशं ज्ञातं यत् किञ्चित् विभागो रहस्यके। त्रिभागः षड्भागः कन्यादौ आत्माद्यपेक्षया" प्रा॰ वि॰। कचिद्विषयभेदे प्रायश्चित्ताभावः यथोक्तं प्रा॰त॰

अथ गोवधाद्यपवादः। पराशरः "यूपेषु वह्निदानेषु दमे नाभिहतस्य च। काष्ठेन लेष्टुना वापि पाषाणेन तु ताडितः। मूर्च्छितः पतितश्चैव मृतो वा यद्य एव च। एवं मतानां धूर्य्याणां प्रवक्ष्यामि यथाविधि। उत्थितस्तु पदं गच्छेत् पञ्च सप्त दशाथ वा। ग्रासं वा यदि गृह्णाति तोयं वा पिबति स्वयम्। पूर्वव्याधिविनष्टानां प्रायश्चित्तं न विद्यते" यदि व्याधिग्रस्तानां उपायं

शृङ्गयोजनमात्रेण अन्यतरदण्डाघातेन वा मूर्च्छया पतनं भवति अनन्तरं गमनं आघातादौ कृते मरणं भवति तदा गवनग्रासपरिहृततोयपानैस्तदानीन्तनमरणे हेतुभावं निश्चित्य पूर्वव्याधिविनष्टत्वं ज्ञायते। यदि तु पूर्वव्याधिरहित एव प्रहारजनितव्याधिना घातादि कृत्वापि म्रियते तदा प्रायश्चित्तमस्त्येव। संवर्त्तः "यन्त्रणे गोचिकित्सायां मूढगर्भविमोचने। यत्ने कृते विपत्तिः स्यात् प्रायश्चित्तं न विद्यते। औषधं स्नेहमाहारान् दद्याद् गोब्राह्मणेषु च। प्राणिनां प्राणहन्त्र्यर्थं प्रायश्चित्तं न विद्यते। दाहच्छेदशिराभेदप्रयत्नैरुपकुर्वताम्। द्विजानां गोहितार्थं वा प्रायश्चित्तं न विद्यते" मूढगर्भः अन्तर्मृतगर्भः तस्य वैचित्त्ये यत्नेन तदाकर्षणात्। याज्ञवल्क्यः "क्रियमाणोपकारे तु मृते विप्रे न पातकम्। विपाके गोवृषाणाञ्च भेषजाग्निक्रियासु च"। विशेषमाहाङ्गिराः "स्कन्धभङ्गेऽस्थिभङ्गे च कर्णनिर्भेदनेऽपि वा। दशरात्रं चरेत् कृच्छ्रं कृत्वा स यदि गौर्भवेत्"। द्विजानां गवाञ्च हितार्थमित्यर्थः। अत्र प्राणरक्षार्थमाहारादिदानैर्मरणे दोषाभावस्य वाचनिकत्वात् मशकम्नाद्य मरणे नाश्वघातादि। एवं "गोपालको गवां गोष्ठे धूमं वस्तु न कारयेत्। मक्षिकादीनदंशे मक्षिकाभिः स भक्ष्यते" इति देवीपुराणानुसारादग्निं प्रज्वाल्य तत्रैव स्थितस्य दैवात्तदग्निना मरणे दोषाभावः। तत्रास्थितस्य तु अपायवर्निमित्तगोवधजन्यदोषः। मिताक्षरायां पराशरः "कूपे खाते च धर्मार्थे गृहदाहे च ये मृताः। ग्रामदाहे तथा घोरे प्रायश्चित्तं न विद्यते" इदन्तु बन्धनरहितस्य पशोः कदाचित् दाहादिना मृतविषयम्। इतरत्रापस्तम्बोक्तम् "कान्तारेष्वथ वा दुर्गे गृहदाहावटादिषु। यदि तत्र विपत्तिः स्यात् पाद एको विधीयते"। इति ज्ञेयम्। एतद्वचनं यमस्येति भवदेवभट्टः। चिकित्सायां पापाभावो यथावदुपचारे बोध्यः। न पुनः सन्निपाताभिभूतस्योदकस्नानादिना। अतएव मनुः "चिकित्सकानां सर्वेषां मिथ्याप्रचरतां दमः"। काश्यपोऽप्यत्र प्रायश्चित्तमाह "दोग्ध्री दमनातिदोहातिवाहनाशदामयष्ट्याभरणयोजनात् तैलपानौषधविनियोगाद्व्यापन्नानां प्रायश्चित्तं ब्राह्मणेभ्यो विनिवेद्य सशिखवपनं कृत्वा प्राजापत्यकृच्छ्रमाचरेत्। चीर्णान्ते गां दक्षिणां ब्राह्मणाय दद्यात् धेनुं त्रिग्रीवं त्रेति"।

प्रायश्चित्तपूर्वोक्तत्वम्। अङ्गिरोविहितौ "पाप वेदज्ञस्थान् पूर्वं इतं प्राप्य वह्निर्निशि। प्रत्येकं निसृतं कायमात्मनो व्रतमादिशेत्। प्रायश्चित्तमुपासीनो यागवतश्चिरवनं चरेत्"। केशधारणेच्छानां द्विगुणव्रतादिकमाह हारीतः "राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः। केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत्। केशानां धारणार्थं तु द्विगुणं व्रतमाचरेत्। द्विगुणे तु व्रते चीर्णे द्विगुणा दक्षिणा भवेत्। विप्रद्विपन्नप्रमीणां नेष्यते केशवापनम्। कृते वधापातकिनो गोहन्तुरवकीर्णिनः"। स्त्रीणां विशेषमाह भवदेवभट्टधृतं वचनम्। "वपनं नैव नारीणां नानुव्रज्या जपादिकम्। न गोष्ठे शयनं रात्रौ न च दुह्याद्गवाजिनम्। सर्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम्। सर्वत्रैव हि नारीणां शिरसो मुण्डनं स्मृतम्"। पापभेदेषु प्रायश्चित्तभेदाः प्रायश्चित्तविवेकादौ दृश्याः विस्तरभयान्नोक्ताः। तस्येदं छ। प्रायश्चित्तीय तदाचरणे न०।

**प्रायश्चित्ति** स्त्री प्रायः (अव्ययम्)। तपश्चित्तिः चित-भावे क्तिन् सुट्। प्रायश्चित्तशब्दार्थे

**प्रायश्चित्तिन्** त्रि० प्रायश्चित्तं कर्त्तव्यत्वेनास्त्यस्य इनि। प्रायश्चित्तार्हे स्त्रियां ङीप्। "प्रायश्चित्ती भवेत् पूतस्तत् पापं तेन गच्छति" प्रा० त०। ठन् प्रायश्चित्तिक तत्रार्थे

**प्रायस्** अव्य० प्र+अय-असि। १बाहुल्ये २तपसि अवादौ च "प्रायः पयोधरघनव्यतिरल हेतुः" उद्भटः। "प्रायो नाम तपः प्रोक्तम्" स्मृतिः।

**प्रायात्रिक** त्रि० प्रयाणाय हितं ठक्। यात्रिकाद्ये चामरादौ प्रायात्रिकादयोऽप्यत्र।

**प्रायिक** त्रि० प्रायेण भवः ठक्। प्रायभवे। [शब्दच०।

**प्रायुद्धेषिन्** पु० प्रायुधि प्रकृष्टयुद्धार्थं द्वेष्टि द्विष-णिनि। अश्वे

**प्रायोग** पु० प्रयुज्यते शकटादौ प्र+युज-कर्मणि घञ् कुत्वम् दीर्घः। शकटादौ नियोगार्हे वृषे ऋ० १०।१०६।२ भा०।

**प्रायोगिक** त्रि० प्रयोगं नित्यमर्हति छेदा० ठञ्। नित्यप्रयोगार्हे।

**प्रायोज्य** न० प्र+आ+युज-णिच्-कर्मणि यत्। प्रयोजनीये "प्रायोज्यं न विभज्येत" कात्या०स्मृ०। "प्रायोज्यम् प्रयोजनार्हं यथा पण्डितस्य पुस्तकादि न तत् शैर्विभजनीयमिति" दायभागः।

**प्रायोपविष्ट** त्रि० प्रायाय अनशनव्रताय उपविष्टः उप+

विश–क्त । अनशनेन मरणायोद्युक्ते भा०आनु०८०अ०।

**प्रायोपवेश** पु० प्रायाय अनशनमृत्यवे उपवेशः स्थितिः । सङ्कल्पपूर्वकम् सकलकार्यत्यागेन अनशनमरणार्थमुद्यमे भा०व० २५० श्लो० । भावे ल्युट् । प्रायोपवेशन तत्रार्थे न० । भा०व० १५।१२८ श्लो० ।

**प्रायोपेत** त्रि० भीष्मो भीमसेन वत् प्रायः प्रायोपवेशः तेन उपेतः । प्रायोपवेशनयुते भा०सौ० १६अ० ।

**प्रारब्ध** न० प्र+आ+रभ–आरम्भे क्त प्रकृष्टमारब्धं स्वकार्यजननाय कृतारम्भं येन । १देहाद्यारम्भके २अदृष्टभेदे तस्य च भोगेनैव क्षय इति शास्त्रे प्रसिद्धम् । "अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् । नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" शास्त्रेण प्रारब्धकर्मणो भोगं विना नाशाभावस्योक्तेः "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन !" गीतायां ज्ञानस्य सर्वकर्मनाशकत्वोक्तिः प्रारब्धकर्मातिरिक्तविषयेत्याकरे द्रष्टव्यम् । २कृतारम्भे त्रि० ।

**प्रारब्धि** स्त्री प्र+आ+रभ–करणे क्तिन् । १गजबन्धनदामनि त्रिका० । भावे क्त । २आरम्भे ।

**प्रारम्भण** न०प्र+आ+रभ–ल्युट् मुम् । प्रकर्षेणारम्भे । प्रारम्भणं प्रयोजनमस्य अनुश०ठक् । प्रारम्भणीय तत्प्रयोजनके त्रि० । प्र+आ+रभ–भावे घञ् मुम् । प्रारम्भ प्रकर्षेण आरम्भे पु० [स्त्रियां टाप् ।

**प्रारोह** त्रि० प्ररोहः यौवनस्य अस्त्या० च । प्ररोहयौवने

**प्रार्थ** न०प्रकृष्टमर्थं हविः । १प्रकृष्टे अर्थे प्रा०अ० । २तद्युते त्रि०

**प्रार्थना** स्त्री प्र+अर्थ–युच् । १याच्ञायां २हिंसायाञ्च । ३गर्भाङ्गभेदे सा०द० "संवृत्यानुमानश्च प्रार्थना क्षिप्तिरेव च" गर्भाङ्गान्युद्दिश्य "रतिहर्षोत्सवानान्तु प्रार्थनं प्रार्थना भवेत्" इति लक्षिता । ल्युट् । प्रार्थन याचने हिंसने च न० । ४मुद्राभेदे "प्रसृताकुञ्चितौ हस्तौ मिथःश्लिष्टौ च सम्मुखे । कुर्य्यात् स्वहृदये सेयं मुद्रा स्यात् प्रार्थनाभिधा" तन्त्रसा० ।

**प्रार्थनीय** त्रि० प्र+अर्थ–कर्मणि अनीयर् । १याचनीये अर्थयतेर्याचनार्थत्वेन द्विकर्मकत्वात् गौणे कर्मणि अनीयर् । यतोयाच्यते २तस्मिन् तस्याविवक्षायां मुख्ये याचनाकर्मणि इति बोध्यम् । ३द्वापरयुगे शब्दर० ।

**प्रार्थित** त्रि० प्र+अर्थ+क्त । १याचिते २अभिहिते मेदि० ३शत्रुसंयते च त्रिका० ।

**प्रालम्ब** न० प्रकर्षेणालम्ब्यते प्र+आ+लम्ब–अच् । १ऋजुतया कण्ठात् लम्बमाने माल्यादौ अमरः । २प्रकर्षेण लम्बमाने त्रि० । संज्ञायां कन् अत इत्त्वम् । प्रालम्बिका स्वर्णादिरचितलम्बिकायां अलङ्कारभेदे स्त्री अमरः ।

**प्रालेय** न०प्रकर्षेण लीयते प्र+आ–ली–यत् । आत्वे एत्वम्, प्रलयाय हितम् अण् नि० एत्वम् वा । हिमे अमरः ।

**प्रालेयांशु** पु० प्रालेयमंशो यस्य । १चन्द्रे हला० । तत्तत्सम्बन्धे २कर्पूरे च । प्रालेयकरादयोऽप्यत्रार्थे पु० ।

**प्रावट** पु० प्र+अव–अट् । यवे जटा० ।

**प्रावण** न० प्र+आ+वन संभक्तौ करणे घ । प्रनिरन्तरादि० णत्वम् । खनित्रे । प्रकर्षेणावन्यते संक्षिप्यते कुद्दनेन ऊ०२।२२।४भाष्ये इत्यन्यम् । वनं समासे अन्तोदात्तता

**प्रावणि** स्त्री प्र+अव–अनि । "हिलुमीनानि कोट्" च ८।४। १५।१६। हिलुमीनानीति क्षिप्या उज्ज्वलदत्तेन पठित्वा तत्र णत्वमुक्तम् । प्रकृतावनौ तत्सम्बन्धायः "हिलुमीनाम्यानि कोट्" सूत्रद्वये सम्प्रचारेण हिलुमानीति जायते हिलुमीना अनि इत्येषां णत्वम् । योगविभागात्तु आनि कोट् इत्यस्यापीति ।

**प्रावर** पु० प्र+आ+वृ–करणे अप् । १प्राचीरे शब्दरत्ना० । २देशभेदे भा०भी० १२अ० । [२उत्तरीयवस्त्रे हेमच० ।

**प्रावरण** न० प्र+आ+वृ–करणे ल्युट् । १आच्छादनवस्त्रे

**प्रावार** पु० प्र+आ+वृ–करणे घञ् । १उत्तरीयवस्त्रे अमरः भावे घञ् । २प्रकर्षेण आवरणे पु० ।

**प्रावारकर्ण** पु० उलूकभेदे भा० अ० १८८अ० ।

**प्रावारकीट** पु० ७त० । कीटभेदे जटाधरः ।

**प्रावास** त्रि० प्रवासे दीयते कार्यं वा अनुशा० अण् । १प्रवासे दीयमाने २तत्र कार्य्ये च ।

**प्रावासिक** त्रि० प्रवासाय प्रभवति सन्तापा० ठञ् । १प्रवाससाधने । प्रवासे साधु गुडा० ठञ् । प्रवासे साधौ च ।

**प्रावृट्काल** पु०कर्म०। ६त०वा । वर्षाकाले प्रावृट्समयादयोऽप्यत्र ।

**प्रावृट्कालवहा** स्त्री ७त० । नदीभेदे मार्कण्डेयपु०६७अ० ।

**प्रावृडत्यय** पु०६त० । १वर्षातिक्रमे वर्षोपगमे अ०व० । २शरत्काले राजनि० । [प्रकर्षेण २आवृतमात्रे त्रि० ।

**प्रावृत** न० प्र+आ+वृ–कर्मणि क्त । १प्रकर्षेण आवृते वस्त्रे

**प्रावृति** स्त्री प्र+आ+वृ–करणे क्तिन् । प्राचीरे शब्दर० ।

**प्रावृत्तिक** पु० प्रवृत्तौ तद्वचने हितः ठक् । प्रवृत्तिवाहके दूतभेदे हरिवं० १०४अ० ।

**प्रावृष्(षा)** स्त्री प्रवर्षतेऽत्र प्र+वृष–आधारे क्विप् दीर्घः हलन्तत्वात् वा टाप् । वर्षाकाले स च श्रावणभाद्रात्मकः

"नभश्च नभस्यश्च वार्षिकावृतू" यजु०। ऋतुशब्दे १४२२ पृ० अस्य शौरचान्द्रत्वविवेकश्च दृश्यः।

**प्रावृषायणी** स्त्री प्रावृषा अयनं यस्याः गौरा० ङीष्। कपिकच्छाम् (आलकुशी) अमरः।

**प्रावृषिक** पुंस्त्री प्रावृषि कार्य्यति शब्दायते कै-क अलुक्स० १मयूरे धरणिः। स्त्रियां जातित्वात् ङीष्। प्रावृषि भवः ठञ्। २वर्षाकालभवे त्रि० स्त्रियां ङीप्।

**प्रावृषिज** पु० प्रावृषि जायते जन—ड अलुक् स०। १झञ्झानिले त्रिका०। २वर्षाकालजाते त्रि० "जे विभाषा" वा अलुक् स०। तेन प्रावृड्ज तत्रार्थे त्रि०।

**प्रावृषीण** त्रि० प्रावृषि भवः बा० ख। वर्षाकालभवे ऋ०७। १०३।७ भाष्यम्।

**प्रावृषेण्य** त्रि० प्रावृषि भवः एण्य। १वर्षाकालजाते २कदम्बवृक्षे पु० मेदि०। ३कुटजवृक्षे ४धाराकदम्बे च पु० राजनि०। ५कपिकच्छाम् ६रक्तपुनर्नवायां स्त्री राजनि०। प्रावृषि दीयते कार्य्यं वा एण्य। ७वर्षाकाले देवे करादौ ८तत्र कार्य्ये च त्रि०। ९प्राचुर्य्ये न० शब्दर०।

**प्रावृषेय** पु० १देशभेदे भा०भी०९अ०। प्रावृषायां भवः ढक्। २वर्षाकालभवे त्रि० स्त्रियां ङीप्।

**प्रावृष्य** पु० प्रावृषि भवः बा० यत्। १धाराकदम्बे २कुटजे ३विकङ्कतवृक्षे च राजनि०।

**प्रावेशन** त्रि० प्रवेशने दीयते कार्य्यं वा अण्। १प्रवेशने दीयमाने २तत्कार्य्ये च। [ङीप्।

**प्रावेशिक** त्रि० प्रवेशाय साधुः ठञ्। प्रवेशसाधने स्त्रियां

**प्राशन** न० प्र+अश—भावे ल्युट्। भक्षणे। प्रकर्षेण भोजने अन्नप्राशनम्।

**प्राशास्त्र** न० प्रशास्तुर्भावः कर्म्म वा उद्गा० अञ्। प्रशास्तुर्ऋत्विजः कर्म्मणि १प्रशासने २तद्भावे च।

**प्राशित** त्रि० प्र+अश—भोजन कर्म्मणि क्त। १भक्षिते। भावे क्त। २भक्षणे न० ३पितृयज्ञे तर्पणे जटा० "प्राशितं पितृतर्पणम्" मनुना तत्रार्थे परिभाषितत्वात्।

**प्राशित्र** न० यज्ञिये यवमात्रं पिप्पलमात्रं वाऽवत्ते ब्रह्मोद्देश्यके भागे त्रिश्चायभेदे "शिष्यात् प्राशित्रावदानम्" कात्या० ११६७। "मित्रस्य त्वा चक्षुषा प्रतीक्ष इति प्राशित्रं प्रतीक्षते" २।२।१५ "प्राशित्रमवदीयमानमाज्यमार्ये च प्राशित्रं ब्रह्मणो भागः यवमात्रं पिप्पलमात्रं वाऽवत्तः" कर्कः "स यत् प्राशित्रमवद्यति" इत्युपक्रमे। अथातो ब्रह्मभागं पर्य्याहरन्ति। ब्रह्मा वै यज्ञस्य दक्षिणत आसोऽभिगोप्ता स एतं भागं प्रतिविद्वान् आस्ते यत् प्राशित्रं तदस्मै पर्य्याहार्षुस्तत्प्राशीदथ यदस्मै ब्रह्मभागं पर्य्याहरन्ति तेन भागी स यदतऊर्द्धं यज्ञसंस्थितं यज्ञस्य तदभिगोपायति तस्माद्वा अस्मै ब्रह्मभागं पर्य्याहरन्ति" शत०ब्रा० १।७।४।१८

**प्राशित्राहरण** प्राशित्रं ह्रियतेऽनेन हृ—करणे ल्युट्। प्राशित्ररूपभागहरणसाधने गोकर्णाकृतिपात्रभेदे शत० ब्रा० १।४।१।६ भाष्यम्।

**प्राश्य** पु०प्र+अश—भोजने ण्यत्। भक्षणे प्राशवे हितः यत्। प्राशव्य प्रकष्टभक्षणार्हिते ऋ० ८।२१।६ भा०। प्रा०स०। २प्रकृष्टभोज्ये निघण्टुः। [यजु०२४।२७

**प्राशृङ्ग** त्रि० प्रकृष्टं शृङ्गमस्य वेदे दीर्घः। प्रकृष्टशृङ्गयुक्ते

**प्राश्निक** पु०प्रश्नाय तदुत्तरदानाय साधु ठक्। १सभ्ये त्रिका० २प्रश्नोत्तरदानाय साधौ त्रि०।

**प्राश्नीपुत्र** पु०यजुर्वेदवंश्ये ऋषिभेदे शत०ब्रा० १४।९।४।३१

**प्राष्टवर्ण** पु०प्रकर्षेण अष्टः प्राप्तो वर्णः। पृश्निवर्णे नानावर्णे निरु० १०।२९

**प्रास** पु० प्रास्यते प्र+अस—क्षेपे कर्म्मणि घञ्। कुन्तास्त्रे अमरः। कुन्तशब्दे २००१८ पृ० दृश्यम्।

**प्रासक** पु०प्रास+संज्ञायां कन्। पाशके हेमच० तस्य देवकैः क्षिप्यमाणत्वात् तथात्वम्। स्वार्थे क। २प्रासार्थे पुं०।

**प्रासङ्ग** पु० प्र+सञ्ज—कर्म्मणि घञ् दीर्घः। दम्यवृषाणां स्कन्धे शिक्षार्थमावध्यमाने युगभेदे अमरः। तं वहति यत्। प्रासङ्ग्य तद्वाहके दम्यवृषे अमरः।

**प्रासङ्गिक** त्रि०प्रसङ्गादागतः ठञ्। प्रसङ्गागते स्त्रियां ङीप्।

**प्रासाद** पु० प्रसीदत्यस्मिन् प्र+सद—आधारे घञ् दीर्घः। देवनृपयोर्गृहे अमरः देवगृहशब्दे ३६७८ पृ० दृश्यम्।

**प्रासादकुक्कुट** पुंस्त्री० प्रासादे कुक्कुट इव। पारावते त्रिका० स्त्रियां जातित्वात् ङीष्।

**प्रासिक** पु०प्रासः प्रहरणमस्य ठक्। कुन्तेन योद्धरि अमरः

**प्रास्तारिक** त्रि० प्रस्तारे व्यवहरति ठक्। प्रस्तारे व्यवहारिणि। [व्यादौ मङ्कल्ये स्त्रियां ङीप्।

**प्रास्थानिक** त्रि० प्रस्थाने साधु ठञ्। यात्रिके मङ्गल-

**प्रास्थिक** त्रि०प्रस्थस्य वापः ठञ्। १प्रस्थमितधान्यवपनाधारे क्षेत्रे २भूमौ स्त्री ङीप्। प्रस्थं सम्भवति (तस्मिन् समावेशयति) अवहरति पचति वा ठञ्। प्रस्थमितधान्यादेः तस्मिन् ३समावेशके ४अवहारके ५पाचके च त्रि० स्त्रियां ङीप्। प्रस्थः परिमाणमस्य ठञ्। ६प्रस्थपरिमाणयुक्ते

धान्यराश्यादौ त्रि० प्रस्थेन क्रीतम् ठञ् । ७प्रस्थेन क्रीते त्रि० स्त्रियां ङीप् । प्रस्थस्य निमित्तं संयोग उत्पातो वा ठञ् । प्रस्थस्य इनिमित्ते ८संयोगे ९०उत्पाते वा ।

**प्राह्ण** पु० प्रकर्षेण आहेति शब्दोऽत्र । न्यासोपदेशे शब्दस्था० ।

**प्राह्ण** पु० प्रारब्धोऽह्नः प्रा०स०अच्समा० अह्नादेशः णत्वञ्च । त्रिधाविभक्तदिनस्य पूर्वभागे १पूर्वाह्णे अमरः । प्रकृष्ट-ह्यत्र तिष्ठद्गु० अव्ययी० । २प्रकृष्टदिनयुते अव्य० ।

**प्राह्णेतन** त्रि०प्राह्णे भवः ट्यु तुट् च निपातनात्त्वम् । पूर्वाह्णभवे स्त्रियां ङीप् ।

**प्राह्णेतरा(मा)म्** अव्य० अतिशयेन प्राह्णे तरप् तमप् वा आमु चकालेत्यादिना सप्तम्या अलुक् । अत्यन्तप्रातःकाले इत्यर्थे ।

**प्रिय** त्रि० प्रीणाति प्री–तर्पणे क । १भर्त्तरि पत्यौ अमरः २भार्य्यायां स्त्री । ३प्रियके मृगभेदे पु०स्त्री जटा०४ऋद्धिनामौषधौ ५हृद्ये त्रि० मेदि० ६जीवकौषधौ राजनि० ।

**प्रियंवद** त्रि०प्रियं वदति वद–खच् मुम् । १प्रियकरवादिनि मधुरभाषिणि । २खेचरे ३गन्धर्वभेदे पु० शब्दमा० वदेरन्तःस्थवादित्वात् प्रियमृवदेति मधुकादस्य कतमं प्रामादिकमेव । "भुवि मर्त्त्यसमजरैः प्रियंवदा" इ०र० उक्ते द्वादशाक्षरपादके ४छन्दोभेदे स्त्री । ५शकुन्तलासहचरीभेदे स्त्री शकु० दृश्यम् ।

**प्रियक** पु० प्रिय+स्वार्थे क संज्ञायां कन् वा । १पीतसालके (पियाशाल) २नीपे ३चित्रमृगे ४भ्रमरे ५प्रियङ्गौ ६कुङ्कुमे मेदि० ७धाराकदम्बे ८असनवृक्षे राजनि० । ९स्कन्दानुचरभेदे भा०स० ४६अ० । तस्यापत्यं विदा० अञ् । प्रैयक तिवत्तस्यापत्ये पुंस्त्री० ।

**प्रियकृत्** त्रि० प्रियं करोति कृ–क्विप् तुक् च । १प्रियकारिणि २विष्णौ पु० "प्रियकृत् प्रीतिवर्द्धनः" विष्णुस० ।

**प्रियङ्कर** त्रि० प्रियं करोति कृ–खच् मुम् । १प्रियकारिणि २श्वेतकण्टकार्य्यां ३वृश्चिकौन्याम् ४अश्वगन्धायाञ्च स्त्री राजनि० गौरा० ङीष् ।

**प्रियङ्करण** त्रि० अप्रियं प्रियं करोत्यनेन कृ–करणे ख्युन् । अप्रियस्य प्रियताकरणसाधने ।

**प्रियङ्गु** स्त्री प्रिय+गम–डु नि०मुम् च । १स्वनामख्याते लते अमरः "प्रियङ्गुः शीतला तिक्ता तुवरानिलपित्तहृत् । रक्तातियोगदौर्गन्ध्यस्वेददाहज्वरापहा । गुल्मतृड्विषमोहघ्नी तद्वद्गन्धप्रियङ्गुका । तत्फलं मधुरं रूक्षं कषायं शीतलं गुरु । विबन्धाध्मानबलकृत् संग्राहि कफपित्तजित्" भावप्र० । "प्रियङ्गुकलिकारम्" इति सुपप्रयाममन्त्रः । २राजिकायां राजनि० ३पिप्पल्याम् ४कङ्गुनी (काङ्गनी) धान्ये मेदि० ५कटुकायां धरणिः ।

**प्रियजन** पु०कर्म० । १हृद्ये जने । २प्रौढभावानुविद्धे उज्ज्वलसमयिः ।

**प्रियजीव** पु०प्रियो जीवो यस्मिन् । श्योनाकवृक्षे राजनि० ।

**प्रियतम** पु० अतिशयेन प्रियः तमप् । १मयूरशिखावृक्षे २अतिप्रिये त्रि० शब्दच० ।

**प्रियता** स्त्री प्रियस्य भावः तल् । १स्नेहे २प्रेमणि अमरः । त्व । प्रियत्व तत्रार्थे न० शब्दर० ।

**प्रियतोषण** त्रि० प्रियं तोषयति तुष–णिच् ल्यु । १प्रियसन्तोषकारके "नारीपादौ स्वहस्तेन धारयेत् जघनोपरि । स्तनापीडकरः कामी कामयेत् प्रियतोषणः" इतिमञ्जर्य्युक्ते २रतिबन्धभेदे ।

**प्रियदत्ता** स्त्री दीयमानपृथिव्याम् "नामास्याः प्रियदत्तेति गुह्यं देव्याः सनातनम् । दाने वाऽप्यथ वाऽऽदाने नामास्याः प्रथमं प्रियम् । य एतां विदुषे दद्यात् पृथिवीं पृथिवीपतिः । पृथिव्यामेतदिष्टं स राजा राज्यमितो व्रजेत्" भा०अनु० ६२अ० ।

**प्रियदर्शन** पु० प्रियं दर्शनमस्य । १क्षीरिकावृक्षे २शुकखगे च जटा० ३सुदृश्ये त्रि० ।

**प्रियप्रायस्** न० प्रियस्य प्रायः बाहुल्यं यत्र । प्रियवाक्ये हेमच० ।

**प्रियप्रेप्सु** त्रि० ७त० । इष्टार्थोद्युक्ते जटा० ।

**प्रियमधु** पु०प्रियं मधु मद्यं यस्य । १बलरामे हेमच० २मद्यप्रिये त्रि० ।

**प्रियमाल्यानुलेपन** त्रि० प्रियं माल्यमनुलेपनं च यस्य । १माल्यानुलेपनप्रिये २स्कन्दानुचरभेदे पु०भा०श० ४६अ० ।

**प्रियमेध** पु० १अजमीढस्य सुतभेदे "अजमीढस्य वंशाः स्युः प्रियमेधादयो द्विजाः" भाग० ९।२१।१७श्लो० । २यज्ञोपेते ऋषिभेदे ऋ० १।४५।४ भा० ।

**प्रियम्भविष्णु** त्रि०अप्रियः प्रियो भवति भू–कर्त्तरि खिष्णुच् । अप्रिये प्रिये भवितरि । सुकञ् प्रियम्भावुक तत्रार्थे त्रि० ।

**प्रियरूप** त्रि०प्रियं रूपमस्य । १हृद्यरूपे । तस्य भावः मनोज्ञा० वुञ् । प्रैयरूपक तस्य भावे न० । कर्म० । २हृद्ये रूपे न० ।

**प्रियवचन** त्रि०प्रियं वचनं वैद्यकवचनं वा यस्य । १प्रियवादिनि वैद्योक्तौ तत्काले अभिलषति २रोगिणि राजनि० । कर्म० । ३हृद्ये वाक्ये न० ।

**प्रियवर्णी** स्त्री प्रियो वर्णो यस्याः गौरा० ङीष् । प्रियङ्गौ जटाधरः ।

**प्रियवल्ली** स्त्री नित्यकर्म० । १प्रियङ्गौ राजनि० २कुङ्कुमालतायाञ्च ।

**प्रियवादिन्** त्रि॰ प्रियं वदति वद–णिनि। प्रियवाक्यभाषके स्त्रियां ङीप् "भार्य्या चाप्रियवादिनी" चाणक्यः।

**प्रियव्रत** त्रि॰ प्रियं व्रतमस्य। १व्रतप्रिये स्वायम्भुवमनोः २पुत्रभेदे पु॰ हरिवं॰ २अ॰। [१।६।२३।

**प्रियश्रवस्** पु॰ प्रियं श्रवः श्रवणं यस्य। परमेश्वरे भाग॰

**प्रियसख** पु॰ कर्म॰ ६त॰ वा, टच्समा॰। १सुहृदे सख्यौ २प्रियस्य सख्यौ च। स्त्रियां ङीप्। ३खदिरे शब्दच॰।

**प्रियसङ्गमन** त्रि॰ प्रिययोः सङ्गमनं यत्र। १प्रिययोर्मेलनस्थाने २कश्यपादित्योर्मेलनस्थाने देशभेदे पु॰ "ब्रह्मादितिः कश्यपश्च महात्मानौ इदृशतो। प्रियसङ्गमनं नाम तं देशं मुनयोऽवदन्" हरिवं॰ १२४अ॰।

**प्रियसत्य** न॰कर्म॰। १तथ्ये सत्ये च प्रिये सूनृतवाक्ये हेमच॰ प्रियं सत्यं यस्य। २सत्यप्रिये त्रि॰।

**प्रियसन्देश** पु॰ प्रियं सन्दिशति सम्+दिश–अण् उप॰स॰। १चम्पकवृक्षे भावे घञ् ६त॰। २प्रियसंवादे शब्दच॰।

**प्रियसाल(क)** पु॰कर्म॰स्वार्थे क वा। असनवृक्षे (पियाशाल) राजनि॰।

**प्रियादि** विशेष्यवाचिनि समानाधिकरणस्त्रीलिङ्गशब्दे परे स॰स्त्री॰ पूर्वस्य पुंवद्भावे पर्य्युदस्ते शब्दगणे स च गणः पा॰ग॰सू॰ उक्तो यथा "प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्ति सचिवा स्वा स्वसा कान्ता क्षान्ता समा चपला दुहिता वामना तनया"। सुन्दरी प्रिया यस्य। सुन्दरी प्रिय इत्यादि।

**प्रियाम्बु** पु॰ प्रियं पितृणां प्रियमम्बु मूले सिक्तं जलमस्य। १आम्रवृक्षे राजनि॰। २जलप्रिये त्रि॰।

**प्रियार्ह** त्रि॰प्रियमर्हति अर्ह–अण् उप॰स॰। १प्रियवाक्यादियोग्ये २विष्णौ पु॰ "अभिप्रायः प्रियार्होऽर्हः" विष्णुस॰।

**प्रियाल** पु॰ प्रियाय अलति पर्य्याप्नोति अल–अच्। प्रियाले (पियाशाल) २द्राक्षायां स्त्री राजनि॰ भावप्र॰ पियाल इत्येव पाठः "पियालस्तु खरस्कन्धश्चारो धनुःपटः। राजादनस्तापसेष्टः सन्नकद्रुर्द्रुमटः। चारः पित्तकफास्रघ्नस्तत्फलं मधुरं गुरु। स्निग्धं सरं मरुत्पित्तदाहज्वरतृषापहम्। पियालमज्जा मधुरो वृष्यः पित्तानिलापहः। हृद्योऽतिदुर्जरः स्निग्धो विष्टम्भी चामवर्द्धनः" भावप्र॰।

**प्रियोदित** न॰ कर्म॰। चाटुवाक्ये शब्दरत्ना॰।

**प्री** तर्पणे भ्वा॰उभ॰सक॰अनिट्। प्रयति ते अप्रैषीत् अप्रेष्ट पिप्राय पिप्रिये।

**प्री** प्रीतौ कान्तौ (इच्छायाम्) सक॰ दिवा॰ आत्म॰ अनिट्। प्रीयते अप्रेष्ट पिप्रिये।

**प्री** तर्पणे सक॰ कान्तौ तृप्तौ अक॰ क्र्या॰उभ॰अनिट्। प्रीणाति प्रीणीते अप्रैषीत् अप्रेष्ट पिप्राय पिप्रिये। प्रीतः। णिच् नुक्। प्रीणयति ते। [कदाचित् नुक् प्रीणयतीत्येके।

**प्री** तर्पणे सक॰चु॰उभ॰अनिट्। प्राययति ते अपिप्रयत्–ते।

**प्रीण** त्रि॰ प्री–णिच् कर्त्तरि अच्। १प्रीणनकारके करणे अच्। २नवर्थे मेदि॰। पुरणार्थप्रयत्नात् नवार्थे च। २पुराणे त्रि॰ त्रिका॰।

**प्रीणन** न॰ प्री–णिच्–नुक्–ल्युट्। तर्पणे अमरः।

**प्रीणस** पु॰ प्रीणि–बा॰ असच्। गण्डके राजनि॰।

**प्रीत** त्रि॰ प्री–कर्त्तरि क्त। हृष्टे अमरः।

**प्रीति** स्त्री प्री–भावे क्तिन्। १हर्षे २आमोदे ३तृप्तौ च। विष्कुम्भादियोगेषु ४द्वितीययोगे। ५कामस्य पत्नीभेदे रत्याः सपत्न्यां "वेश्याऽनङ्गवती नाम विभूतिद्वादशीव्रतम्। समाप्य माघमासस्य द्वादश्यां सवसायकम्। निवेदयन्ती गुरवे शय्याञ्चोपस्करान्विताम्। अलङ्कृत्य हृषीकेशं सौवर्णामरपादपम्। स चानङ्गवती वेश्या कामदेवस्य साम्प्रतम्। पत्नी, सपत्नी संजाता रत्याः प्रीतिरिति श्रुता" मात्स्ये ८२अ॰।

**प्रीतिजुष्** त्रि॰ प्रीतिं जुषते जुष–क्विप्। १प्रीतिभाजि २अनिरुद्धपत्न्यामुषायां स्त्री शब्दरत्ना॰ "विश्वकेतुः प्रीतिजुषा सुतः" त्रिका॰ तत्पुत्रोक्तौ। [प्रह्लादशिनि पु॰ हेमच॰।

**प्रीतिद** त्रि॰ प्रीतिं ददाति दा–क। प्रीतिदायके (भाँड)

**प्रीतिदत्त** त्रि॰३त॰। १प्रीत्या दत्ते २स्त्रीधनभेदे न॰ यथाह मिता॰ कात्यायनः "प्रीत्या दत्तं तु यत्किञ्चित् श्वश्र्वा वा श्वशुरेण वा। पादवन्दनिकं चैव प्रीतिदत्तं तदुच्यते"। भर्तृप्रीतदत्तस्थावरे तु विशेषः दाय॰ उक्तो यथा "भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेऽपि तत्। सा यथा काममश्नीयात् दद्याद्वा स्थावरादृते"।

**प्रीतिदाय** पु॰ प्रीत्या दीयते दा–कर्मणि घञ्। प्रीत्या दत्ते "श्वशुरात् प्रीतिदायं तु प्राप्य सा प्रीतमानसा" भा॰आनु॰ ८६ अ॰।

**प्रीतिभोज्य** न॰ प्रीत्या भोज्यम्। प्रीत्यैव भोज्ये अन्नादौ "अन्नानि प्रीतिभोज्यानि आपद्भोज्यानि वा पुनः। न च संप्रीयसे राजन्! न चैवापद्गता वयम्" भा॰उ॰ ९१ अ॰। "संप्रीतिभोज्यान्यन्नानि" इति मुद्रितपुस्तके पाठः।

**प्रीतिवर्द्धन** त्रि॰ प्रीतिं वर्द्धयति वृध–णिच्–ल्यु। १सन्तोष-

छदा । एतत्कारणमुद्दिश्य नाम पर्य्युषितं मम । सूचिता बहवोऽनेन विप्राद्या ह्यन्नकाङ्क्षिणः । एतत्कारणमुद्दिश्य सूचीमुखमिमं विदुः । शीघ्रं गच्छति विप्रेण याचितः क्षुधितेन वै । पश्चाद्भुङ्क्ते द्विजः शिष्टमेव शीघ्रक उच्यते । गृहोपरि सदा भुङ्क्ते स्वादु द्विजभयेन हि । द्विजाय कुत्सितं दत्त्वा एष रोहक उच्यते । मौनेनापि स्थिरो नित्यं याचितो विलिखन्महीम् । अस्माकमपि पापिष्ठो लेखको नाम एष वै । मेढ्रेण लेखको याति रोहकः पार्श्वतःशिराः । शीघ्रकः पङ्गुतां प्राप्तः सूची सूचीमुखोऽभवत्"। प्रेताहारस्तत्रोक्तो यथा "द्विज उवाच "ये जीवा भुवि तिष्ठन्ति सर्वे आहारमूलकाः । युष्माकमपि चाहारं श्रोतुमिच्छामि तत्त्वतः" प्रेता ऊचुः "शृणु आहारमस्माकं सर्वसत्त्वविगर्हितम् । श्लेष्ममूत्रपुरीषेण योषितान्तु मलेन च । गृहाणि त्यक्तशौचानि प्रेता भुञ्जन्ति तत्र वै । स्त्रीभिर्जग्धानि जीर्णानि संकीर्णोपहतानि च । मलेनातिजुगुप्सानि प्रेता भुञ्जन्ति तत्र वै । भयलज्जाविहीनानि पतितैः सेवितानि च । अन्योन्यदत्तयुक्तानि प्रेता भुञ्जन्ति तत्र वै । कलहान्वितशोकानि त्यक्तशोभानि मण्डनैः । सवर्चस्कानि भाण्डानि प्रेता भुञ्जन्ति तत्र वै । बलिमन्त्रविहीनानि द्विजाहृष्टानि यानि तु । नियमव्रतहीनानि प्रेता भुञ्जन्ति तत्र वै । गुरवो नैव पूज्यन्ते स्त्रीजितानि गृहाणि च । सक्रोधान्यपवित्राणि प्रेता भुञ्जन्ति तत्र वै । भुञ्जन्ति भिन्नभाण्डेषु मर्य्यादारहितेषु च । अन्योन्योच्छिष्टयुक्तेषु तत्र प्रेतास्तु भुञ्जति । सकेशमाक्षिकोच्छिष्टं पूति पर्य्युषितं तथा । सक्रोधस्य सशोकस्य तत्र प्रेतेषु भोजनम् । अनग्नं भोजनं यत्र नोत्तरीयं प्रदाचनम् । शोच्छ्वीयं(?) साम्बरीकञ्च तत्र प्रेतेषु भोजनम् । अर्द्धपाकं महापाकं शीतविप्र पतितं तथा । दुर्भुक्तं गोष्ठिकञ्चैव तत्र प्रेतेषु भोजनम् । चौतिकं सूतकञ्चैव राजसं कलुषीकृतम् । निर्दीपं कृमिवस्त्राग्रे यद्भुक्तं प्रैतिकन्तु तत् । एतत्ते कथितं सर्वं यत् प्रेतस्येव भोजनम् । निर्व्वाणाः प्रेतजात्या वै शुश्रूषसां(?) द्विजोत्तम" । प्रेतत्वाभावकारणं यथा न प्रेतो जायते येन येन चैवेह जायते । एतत्सर्वं समासेन ब्रूहि वदतां वर !" ब्राह्मण उवाच "एकरात्रं त्रिरात्रं वा कृच्छ्रं चान्द्रायणादिकम् । व्रतेष्वप्युषितो यस्तु न प्रेतो जायते नरः । मिष्टान्नपानदाता च सततं श्रद्धयान्वितः । देवपूजापरो नित्यं न प्रेतो जायते नरः । त्रिरग्निरेकपञ्चाग्निर्निरग्निर्वाप्युपासकः । सर्वभूतदयापन्नो न प्रेतो जायते नरः । तुल्यमानापमानश्च तुल्यः काञ्चनलोष्टयोः । तुल्यः शत्रौ च मित्रे च न प्रेतो जायते नरः । देवतातिथिपूजासु गुरुजातिषु नित्यशः । वेदशास्त्ररतो नित्यं न प्रेतो जायते नरः । जितक्रोधो मदैश्वर्यतृष्णासङ्गविवर्जितः । क्षमाऽक्रोधसुशीलश्च न प्रेतो जायते नरः । देवतातिथिपूजासु पर्व्वतीर्थ नदीस्तथा । षष्ठीद्वेषालयांश्चैव न प्रेतो जायते नरः"। प्रेतत्वकारणं यथा "शूद्रान्नं यो द्विजो भुङ्क्ते यः क्रामति द्विजोत्तमम् । हन्ता द्विजदेवेषु स प्रेतो जायते नरः । मातरं पितरं वृद्धं भ्रातिं बाधुजनं तथा । लोभात् त्यजति यः स्निग्धं स प्रेतो जायते नरः । अयाज्ययाजकश्चैव याज्यञ्च परिवर्जयेत् । शूद्रानुग्रहकर्त्ता च स प्रेतो जायते नरः । कुज्योतिषी कुविप्रस्तु कुजनेषु कुदेशकः । शूद्रसेवाकरो राज्ञां स प्रेतो जायते नरः । सेवनायाचरन्ते यः सेवकस्य परिग्रहः । तावुभावपि जायेते प्रेतौ काकाश्च किंप्रदौ । द्विजातुमन्त्रितो भुङ्क्ते शूद्रान्नं वा द्विजस्य तु । शूद्रेणैव द्विजः प्रेतो निरयानुपगच्छति । गीतवाद्यरतो नित्यं मद्यपस्त्रीनिषेवणात् । द्यूतमांसप्रियो यस्तु स प्रेतो जायते नरः । वृथारेता वृथामांसो वृथावादी वृथामतिः । निन्दको द्विजदेवानां स प्रेतो जायते नरः । वृद्धं बालं गुरुं विप्रं योऽवमन्य भुनक्ति वै । कन्यां ददाति शुल्केन स प्रेतो जायते नरः । न्यासापहर्त्ता मित्रध्रुक् परपाकरतस्तथा । विश्वासघाती कूटश्च स प्रेतो जायते नरः । निर्दोषान् सुहृदो नारीस्त्यजेत् कामात् याति यः । अनमोहेन यस्तेषां स प्रेतो जायते नरः । कृष्यश्वरथयानानि सूतशय्यासनादि यः । कृष्णाजिनञ्च गृह्णाति अनापत्सुगतो द्विजः । तथोभयमुखीं कालं सशैलां मेदिनीं द्विजः । कुरुक्षेत्रस्य दानं चाण्डालात् पतितात्तथा । अविवेकेऽपि नवश्राद्धे भुञ्जन् प्रेतान्नभुङ्मतः । ब्रह्महा गोवधी स्तेयी सुरापो गुरुतल्पगः । भूमिकन्यापहर्त्ता यः स प्रेतो जायते नरः । नानासङ्करकं नित्यं वर्णसङ्करकस्तथा । योनिसङ्करकश्चापि स प्रेतो जायते नरः । विक्रीणाति विषं मद्यं तिलानां लवणस्य तु । गवां केशरिणां मोहात् विक्रयात् प्रेततां व्रजेत् । कूटमाप्येन तोल्येन क्रयं क्री-

याति विक्रयात्। मद्यतक्रपयोदाता स प्रेतो जायते नरः। स्त्रीरक्तो मद्यपाने तु स्वगवामनुधावति। नित्यनैमित्तिकेऽदाता स प्रेतो जायते नरः” अग्निपु०। मनुष्याणाञ्च दाहादिक्रियया आतिवाहिकदेहानन्तरं प्रेतदेहो भवति यथाह विष्णुधर्मोत्तरे

“तत्क्षणादेव गृह्णाति शरीरमातिवाहिकम्। आतिवाहिकसंज्ञोऽसौ देहो भवति भार्गव!। केवलं तन्मनुष्याणां नान्येषां प्राणिनां क्वचित्। प्रेतपिण्डैस्ततो दत्तैर्देहमाप्नोति भार्गव!। भोगदेहमिति प्रोक्तं क्रमादेव न संशयः। प्रेतपिण्डा न दीयन्ते यस्य तस्य विमोक्षणम्। श्मशानिकेभ्यो देवेभ्य आकल्पं नैव विद्यते। तत्रास्य यातना घोराः शीतवातातपोद्भवाः। ततः सपिण्डीकरणे बान्धवैः स कृते नरः। पूर्णे संवत्सरे देहमतोऽन्यं प्रतिपद्यते। ततः स नरकं याति स्वर्गं वा स्वेन कर्मणा” शु०त०। ५प्राप्तपितृलोके “अत ऊर्द्ध्वं संवत्सरे संवत्सरे प्रेतायान्नं दद्यात्” गोभिलः “प्रेतलोकं परित्यज्य आगता ये महालये” ति०त०।

**प्रेतकर्मन्** न० इत०। १मृतोद्देशेन कर्त्तव्ये दाहादिसपिण्डनान्तकर्मणि भा०स्त्री०५२अ०। प्रेतकार्य्यादयोऽप्यत्र। २प्राप्तपितृलोकोद्देश्यकश्राद्धादौ च “अकृत्वा प्रेतकार्य्याणि प्रेतस्य धनहारकः। वर्णानां यद्वधे प्रोक्तं तद्व्रतं नियतश्चरेत्” दाय०त० वचनम्।

**प्रेतगृह** न० प्रेतस्य मृतस्य गृहमिव। मृतस्य शरीराधारे श्मशाने हेमच०। प्रेतावासादयोऽप्यत्र।

**प्रेततर्पण** न० इत०। मृतोद्देशेन वर्षपर्य्यन्तं प्रेतशब्दोल्लेखेन कर्त्तव्ये तर्पणविशेषे तद्विधानं शु०ति० यथा

मिश्राचार्य्यधृतोशनस्मृतिवचनम् “अतः सर्वे अयस्पर्शिनो गत्वा पितृपदस्थाने प्रेतपदोल्लेखेन द्वितीयान्तं तर्पयेयुः पितृशब्दोच्चारेण पितृहा भवति”। शातातपः “प्रेतान्तनामगोत्राभ्यामुत्सृजेदुपतिष्ठताम्” इति प्रेतान्तेति तत्पुरुषः न बहुव्रीहिः सर्वजघन्यत्वात् तेन प्रेतान्तनाम गोत्रञ्चेति समासः एतद्वचनाञ्चितापिण्डदाने उपतिष्ठतामिति पितृदैवताकमप्युक्तम्। एतेन प्रेतकार्य्ये समस्तार्थकपदप्रयोगो मैथिलोक्तो हेयः। एतेनामुकगोत्रममुकदेवशर्म्माणं तर्पयामीति भाषमाणो प्रयोगः। अत्र प्रेततर्पणे सतिलाञ्जलिरिति विशेषोपादानात् सूर्य्यादिवारेऽपि तिलैरेव तर्पणं प्रतीयते। अतएवाह कल्पतरुपारिजातधृता स्मृतिः “अयने विषुवे चैव संक्रान्त्यां ग्रहणेषु च। उपाकर्म्मणि चोत्सर्गे युगादौ मृतवासरे। सूर्य्यशुक्रादिवारे च न दोषस्तिलतर्पणे”। तथा “तीर्थे तिथिविशेषे च कार्य्यं प्रेते च सर्वदा”। तिथिविशेषे अमावस्यादशहरादौ। अत्र दक्षिणाकुशसहितमध्यमादिना वामहस्ते तिलदानं “वामहस्ते तिलान् दत्त्वा जलमध्ये तु तर्पयेत्। मुक्तहस्तन्तु कर्त्तव्यं न मुद्रां तत्र दर्शयेत्” इति विद्याकरधृतवचने वामहस्त इति सप्तम्यन्तश्रवणात् “तिलान् संमिश्रयेज्जले” इति तिलाधिकरणजलपक्षस्याभिधानाच्च। “सव्येन च तिलाः ग्राह्याः” इत्यत्रापि वामहस्ते आप्या इत्यर्थः। सव्येनेति आल्या पचतीतिवदधिकरणे तृतीया “विवक्षातो हि कारकाणि भवन्ती”त्युक्तेः। मुद्रा अङ्गुष्ठतर्ज्जन्यात्मकयोगरूपा तिलग्रहणायेति शेषः”।

**प्रेतधूम** पु०इत०। चिताधूमे मनुः ४।६८। [नदीभेदे शब्द च०।

**प्रेतनदी** स्त्री प्रेतगम्या नदी। यमद्वारस्थे वैतरणीनामके

**प्रेतनिर्हारक** पु०प्रेतं निर्हरति गृहात् श्मशानभूमिं निर् + हृ—ण्वुल्। शवहारके “प्रेतनिर्हारकाश्चैव वर्ज्जनीयाः प्रयत्नतः” तस्य अपाङ्क्तेयता मनुनोक्ता। तच्च कुल्लू० धनग्रहणपूर्वकहरणपरतया व्याख्यातं यथा

“प्रेतनिर्हारको धनग्रहणेन न तु धर्म्मार्थम्। “एतद्वै परमन्तपो यत् प्रेतमरण्यं हरन्तीति” श्रुत्या विहितत्वात्”

**प्रेतपक्ष** पु० प्रेतानां पितॄणां प्रियः पक्षः शा०त०। गौणाश्विनकृष्णपक्षे अत्र मृतयोः पित्रोः पार्वणविधिना त्रैपुरुषिकं श्राद्धं करणीयं यथाह श्रा०त० यमः

“सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते। तत्र तत्र त्रयं कुर्य्यात् वर्जयित्वा मृताहनि। अमावस्यां क्षयो यस्य प्रेतपक्षेऽथ वा पुनः। सपिण्डीकरणादूर्द्ध्वं तस्योक्तः पार्वणो विधिः”। त्रयं श्राद्धदानानां त्रयं कुर्य्यात् त्रिभ्यो दद्यादित्यर्थः। मृताहपर्य्युदस्तनिर्दिष्टत्वस्य प्रतिप्रसवमाह अमावस्यामिति प्रेतपक्षोऽत्र पितृपक्षः अश्वयुक्कृष्णपक्ष इति यावत् न तु कृष्णपक्षमात्रं कृष्णपक्षसामान्यपरत्वेऽमावास्यापदवैयर्थ्यापत्तेः पितृपक्षं विशेषयति हेमाद्रिमाधवाचार्य्यधृतं नागरखण्डम् “नभो वाऽथ नभस्यो वा मलमासो यदा भवेत्। सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः”। अत्र श्रावणभाद्रयोरन्यतरस्य मलमासत्वे आषाढ़ीमवधिं कृत्वा सप्तमपक्षस्य पितृपक्षत्वात् अत्र मृतस्यैव प्रेतपक्षमृतत्वं न तु मलमासभाद्रकृष्णपक्षे मृतस्य। ततश्च तत्र मृतस्य

ग्रहान्तरेऽप्ययुक्तत्वा चेऽपि तच्छ्राद्धकरणे न पार्वणं किन्त्वेकोद्दिष्टमिति। अत्र पार्वणो विधिः पार्वणेतिकर्त्तव्यताकैकोद्दिष्टविधिरिति नव्यवर्द्धमानप्रभृतयः। तन्न पूर्ववचनोक्तत्रैपुरुषिकस्य मृताहे पर्युदस्तस्य पार्वणोविधिरित्यनेन प्रतिप्रसवात्। तस्मात् मृतैकोद्दिष्टं त्रैपुरुषिकं न तु षाट्पौरुषिकं "अर्घ्यसमन्वितं कृत्वा तथाद्यं श्राद्धषोडशम्। प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षडिति स्थितिः" इति छन्दोगपरिशिष्टवचनेन प्रत्याब्दिकव्यतिरेकेण षट्संख्यानियमात् एवममावस्यादिमरणनिमित्तेन मातुरपि प्रत्याब्दिकं पार्वणविधिनैव "अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये। तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम्" इति आपस्तम्बवचने अपुत्रा इति विशेषणोपादानात् सपुत्राणां पार्वणाभ्यनुज्ञानात्। एतच्च मात्रादित्रितयदैवतं कार्यम्। "मातृपितामहीप्रपितामह्यौ पूर्ववत् ब्राह्मणान् भोजयित्वा" इत्यन्वष्टकायां तथादर्शनात् अवसानदिननिमित्तत्वेन पार्वणविधिना छन्दोगैरपि मात्रादित्रिकाणां श्राद्धं कर्त्तव्यम् "न योषिद्भ्यः पृथग् दद्यादवसानदिनादृते" इति छन्दोगपरिशिष्टवचने विशेषतः प्रतिप्रसवात्। एवं सपिण्डीकरणेऽपि। एतच्च मृताहपार्वणं मातापित्रोरेव। तथा च हेमाद्रिधृतकात्यायनवचनम् "सपिण्डीकरणादूर्द्ध्वं पित्रोरेव हि पार्वणम्। पितृव्यभ्रातृमातॄणामेकोद्दिष्टं सदैव तु"। मातृपदं सपत्नीमातृपरम्। सपत्नीमातृत्वात्र मातृपदस्य राजदन्तादित्वात् परनिपातः ततश्च वाक्ये मातृसपत्नीति न प्रयोज्यं किन्तु सपत्नीमातरित्यादिकम्। एवं साग्निकौरसक्षेत्रजाभ्यां मृताहे पार्वणं कर्त्तव्यम् "औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु। प्रत्यब्दमितरे कुर्युरेकोद्दिष्टं सुता दश" इति जाबालवचनस्य "यत्र यत्र प्रदातव्यं सपिण्डीकरणात् परम्। पार्वणेन विधानेन देयमग्निमता सदा" इति मत्स्यपुराणवचनस्य चैकवाक्यत्वात्। उशना च "प्रत्यब्दं दर्शवच्छ्राद्धं साग्निः कुर्वीत वै द्विजः। एकोद्दिष्टं सदा कुर्य्यान्निरग्निः श्राद्धदः सुतः"। अत्र नि० सि० विशेषमाह

वृद्धपराशरः "संग्रामे संस्थितानाञ्च प्रेतपक्षे यथाविधि। तेषां पार्वणमेवोक्तं क्षयाहेऽपि च सत्तमैः"। "चन्द्रक्षयानाशकसंयुगेषु यः प्रेतपक्षे मृतवान् सपिण्डः। सुपिण्डितानामपि चाब्दिकानि भवन्ति तेषामिह पार्वणानि"। तथा "भ्रातुर्ज्येष्ठस्य कुर्वीत ज्येष्ठो भ्राताऽनुजस्य च। दैवहीनं तु तत्कुर्य्यादिति धर्मविदब्रवीत्"। दैवहीनमेकोद्दिष्टम् ज्येष्ठो भ्राताऽनाद्यगर्भजः तथा च तत्रैव शातातपः "अनाद्यगर्भो ज्येष्ठोऽपि भ्राता सद्भिर्निगद्यते। ऋते सपिण्डनात्तस्य नैव पार्वणमाचरेत्"। आद्यगर्भे तु पार्वणमेकोद्दिष्टं वेत्यर्थः। मातुस्तु हेमाद्रौ कात्यायनः "प्रत्यब्दं यो यथा कुर्य्यात् पुत्रः पित्रे सदा द्विजः। तथैव मातुः कर्त्तव्यं पार्वणं चान्यदेव वा"। यत्तु तेनैवोक्तम् "सपिण्डीकरणादूर्द्ध्वं पित्रोरेव हि पार्वणम्। पितृव्यभ्रातृमातॄणामेकोद्दिष्टं सदैव तु" इति तत् चापलमातृपरम्। यत्तु वृद्धपराशरः "अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत्। स एवास्य तु कुर्वीत पिण्डदानादिकक्रियाम्। पार्वणं तेन कार्य्यं स्यात् पुत्रवद्भ्रातृजेन तु। पितृस्थाने तु तं कृत्वा शेषं पूर्ववदाचरेत्" इति तत्पितृवदुद्देशाचारवद्व्यवस्थितमिति पृथ्वीचन्द्रः। श्राद्धदीपकलिकायां ब्रह्मर्षिमतिमते तु "पितृव्यभ्रातृमातॄणां ज्येष्ठानां पार्वणं भवेत्। एकोद्दिष्टं कनिष्ठानां दम्पत्योः पार्वणं मिथः। अपुत्रस्य पितृव्यस्य भ्रातुर्वैमात्रजन्मनः। मातामहस्य तत्पत्न्याः श्राद्धं पार्वणवद्भवेत्" इत्युक्तं तत्पत्न्याः कर्तृत्वेऽपि पार्वणमेव "भर्त्रभावे स्वयं पत्न्याः स्वभ्रातॄणाममन्त्रकम्। सपिण्डीकरणं कुर्युस्ततः पार्वणमेव च" इति लौगाक्षिस्मृतेः। "ततः पत्न्यपि कुर्वीत सापिण्ड्यं पार्वणं तथेति" हेमन्तोक्तेश्चेति निर्णयामृते उक्तम्। अन्ये तु तत्पत्न्याश्च पार्वणपरमाहुः अतएव "भर्त्तुः श्राद्धं तु या नारी मोहात्पार्वणमाचरेत्। न तेन तृप्यते भर्त्ता दाता तु नरकं व्रजेत्" इति वचनं क्षयाहे पाक्षिकैकोद्दिष्टप्रशंसार्थं न पार्वणनिषेधार्थमित्युक्तं त्रिस्थलीसेतौ भट्टचरणैः। स्वभर्तृप्रभृतित्रिभ्य इत्यनेन विरोधाच्च अपुत्राणाम् चाह हेमाद्रावापस्तम्बः "अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये। तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम्। मित्रबन्धुसपिण्डेभ्यः स्त्रीकुमारीभ्य एव च। दद्याद्वै मासिकं श्राद्धं सांवत्सरमतोऽन्यथा"। पारिजाते तु अन्यथा पार्वणमित्युक्त्वा सर्वत्र पार्वणमित्युक्तम् एकोद्दिष्टवाक्यानि तु तीर्थमहालयपराणीत्युक्तम्। पृथ्वीचन्द्रोदये वृद्धगार्ग्यः "मातुः सहोदरा या च पितुः सहभवा च या। तयोश्च नैव कुर्वीत पार्वणं पिण्डनादृते" प्रचेताः "सपिण्डीकरणादूर्द्ध्वं

मेकोद्दिष्टं विधीयते। अपुत्राणां च सर्वेषामपत्नीनां तथैव च"। अपत्नीनां ब्रह्मचर्य्यादीनाम्। मार्कण्डेयपुराणे "प्रतिसंवत्सरं कार्य्यमेकोद्दिष्टं नरैः स्त्रियाः। मृताहनि यथान्यायं नृणां यद्वदिहोदितम्"। स्त्रीणामिति दर्शनात् गोविप्रहतपाषण्ड्यादीनां सपिण्डनाभावेऽपि सांवत्सरमेकोद्दिष्टं कार्य्यमेवेति शूलपाणिः। अनिरुद्धवशिष्ठौ "सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते। स्त्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च। पितृव्यगुरवे श्राद्धमेकोद्दिष्टं न पार्वणम्"। यत्तु जातूकर्ण्यः "पितृव्यभ्रातृमातॄणामपुत्राणां तथैव च। मातामहस्याप्यपुत्रस्य श्राद्धादि पितृवद्भवेत्" इति तदावश्यकत्वार्थं न तु पार्वणार्थमिति हेमाद्रिः। युक्तञ्चैतम् "मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः। तेषां तु पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः" इति पुलस्त्योक्तेः मातामहस्य पार्वणमेव तत्साहचर्य्यात् पितृव्यादौ तथा "पितृव्यभ्रातृमातॄणामेकोद्दिष्टं च पार्वणमिति" वचोऽपक्रमे पुलस्त्योक्ते च विकल्पः। केचित्तु पितृव्यादिवाक्यानि "व्युत्क्रमाच्च प्रमीतानां नैव कार्य्या सपिण्डता" इत्यस्य पितृव्यादिपरत्वादकृतसपिण्डनपितृव्यादिपराण्याहुः। माता सपत्नीमाता। एकोद्दिष्टं तु कनिष्ठपरमिति पृथ्वीचन्द्रोदयेऽप्येवम्। विशेषस्त्वधिकारिनिर्णये प्रागुक्तः। केचित्तु पुत्राभावेऽपि पितामहवार्षिकश्राद्धावश्यकम् "पुत्राभावे च तत्पुत्रः पत्नी भ्राता तथा पिता। वित्ताभावेऽपि सपिण्डाः कुर्य्युस्तस्यौर्ध्वदैहिकम्" इति मार्कण्डेयपुराणादिवाक्यस्य "पौत्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोडशमिति" कातीये विशेषोक्तेः।

प्रेतपक्षे श्राद्धकालादिनिरूपणम् श्रा॰ वि॰ यथा
ब्रह्मपुराणे "अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्य्याद्दिने दिने। त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा। न सन्ति पितरश्चेति कृत्वा मनसि यो नरः। श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते। यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः। तावत् श्राद्धस्य कालः स्यात् शून्यं प्रेतपुरं तदा"। दिने दिने इति वीप्सा पक्षश्राद्धार्था तेन पञ्चदश श्राद्धानि दर्शितानि। ननु तिथिह्रासादेकस्मिन्नेव पक्षे चतुर्दशत्वादह्नां चतुर्दश श्राद्धानि प्राप्नुवन्ति। एवं तिथिवृद्ध्या षोडश स्युः। न पक्षस्य तिथ्यात्मकत्वाच्चान्द्रपक्षस्य दिने दिने पञ्चदशतिथिष्वित्यर्थः तथा च एकस्मिन् दिने श्राद्धयोस्तिथिद्वयलाभे श्राद्धद्वयम् अहोरात्रद्वयेऽपि न श्राद्धवृद्धिः। तथा च विष्णुधर्मोत्तरप्रथमकाण्डम् "तिथिनैकेन दिवसश्चान्द्रमानेन कीर्त्तितः। अहोरात्रेण चैकेन सावनो दिवसः स्मृतः"। त्रिभागहीनं पक्षं वा इति षष्ठ्यादिकल्प उक्तः त्रिभागमित्येकादश्यादिकल्प उक्तः. अर्द्धमेवेति त्रयोदश्यादिकल्पः। न तु अर्द्धमिति पञ्चार्द्धमिति व्याख्यानं कल्पतरूक्तं युक्तम् उत्तरोत्तरलघुकालोपदेशात् अविधानाच्च त्रिभागार्द्धप्रतीतेः। त्रिभागहीनत्रिभागपदयोरपि पञ्चम्यादिविवेचनं कल्पतरोर्न युक्तमेव पक्षापेक्षया पञ्चम्यादेस्त्रिभागहीनादिपदार्थत्वानुपपत्तेरसङ्गतत्वात्। गौतमोक्तपञ्चम्यादिकल्पस्य सामान्योपक्रमाच्चाश्वयुक्परत्वम्। अतएव विष्णुधर्मोत्तरप्रथमकाण्डम् "उत्तरायणात् श्राद्धं श्रेष्ठं दक्षिणायनम्। चातुर्मास्यं तत्रापि प्रसुप्ते केशवे हितम्। प्रौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः। पञ्चम्यूर्द्ध्वं च तत्रापि दशम्यूर्द्ध्वमतोऽप्यति। मघायुक्ता च तत्रापि शस्ता राजंस्त्रयोदशी"। पञ्चम्यूर्द्ध्वं दशम्यूर्द्ध्वमित्यनेन षष्ठ्याद्येकादश्यादिकल्पावुक्तौ। न सन्तीत्यनेनाकरणे प्रत्यवायदर्शनं नित्यत्वज्ञापनार्थं तत्र च पक्षश्राद्धादिकल्पानां विषमशिष्टत्वेनैकाविकल्पाऽसम्भवादेकादशा तिस्रो देयाः षड्देया इतिवत् फलभूमा कल्पनीयः। एतेषामेव कल्पानां दर्शितत्वादाश्विने कृष्णपक्षे एकस्मिन्नपि दिने श्राद्धं कर्त्तव्यमिति पक्षश्चिन्तनीयः सामान्यमात्रविहितत्वादेव। अत्र संशयः प्रौष्ठपद्यूर्ध्वं यः कृष्णपक्षः स पौर्णमास्यन्तमासव्यवस्थयाऽश्वयुक्कृष्णपक्षो भवति स यदा कन्योपक्रमः कन्यासमाप्यश्च तदा तत्र पक्षश्राद्धमविवादमेव यदा सिंहोपक्रमः कन्यासमाप्यश्च समस्त एव वा सिंहसमाप्यः तदा कीदृशः शास्त्रार्थः। अत्र त्रिकनप्रभृतयः ब्रह्मपुराणादिवचनैरेवात्र व्यवस्थां दृष्ट्वाहुः। यथा ब्रह्मपुराणम् "यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः। तावत् श्राद्धस्य कालः स्यात् शून्यं प्रेतपुरं तदा"। तथा भविष्यपुराणे "कन्यां गते सवितरि पितरराजानुशासनात्। तावत् प्रेतपुरी शून्या यावद्वृश्चिकदर्शनम्। ततो वृश्चिक आयाते निराशाः पितरो नृप!। पुनः स्वभवनं यान्ति शापं दत्त्वा सुदारुणम्। हंसे वर्षासु कन्यास्थे शाकेनापि स्वगृहे वसन्। पञ्चम्या उत्तरे दद्यादुभयोर्वंशयोर्जलम्। सूर्ये कन्यास्थिते श्राद्धं यो न कुर्य्याद्गृहाश्रमी। कुतस्तस्य धनं

पुत्राः पितृभिः श्राद्धपीड़नात्"। इति स्मृत्यें इति । कृष्ण-
मिव कृष्णं पितृमातृकुलस्य दैन्यप्रद्यं परिशोध्यम् इत्यर्थः
इत्येवमादिवचनैः कन्यासम्बन्धेनैव श्राद्धप्रतिपादनात् एत-
स्यापि वचनस्य तदेकवाक्यतया सौराश्विनपरत्वम् । सौर-
परत्वे लक्षणा स्यादिति चेन्न पौर्णमास्यन्तेऽपि तथात्वात् ।
अतः सिंहोपक्रमे कृष्णपक्षे कन्यासम्बन्धिन्येव भागे
श्राद्धं स्यात् न सिंहसम्बन्धिनि अतः पक्षश्राद्धं तत्र
निवर्त्तते एव त्रिभागहीनमित्यादयः पक्षास्तत्र यथा-
सम्भवं योजनीयाः । कन्यासम्बन्धिन्यपरपक्षे श्राद्ध-
विधानात् उपक्रमे सिंहसम्बन्धेऽपि पक्षस्य कन्यासम्ब-
न्धोऽस्त्येवेति चेन्न एकस्य पक्षावयविनः पञ्चदशतिथ्या-
त्मकस्याभावात् अत एव पञ्चदशब्राह्मणसमुदायमध्ये
एकस्य पुरुषोत्तमस्पर्शे न सर्वेषां पुण्यभागिता एतन्मूलमे-
वेदं वचनं "कृत्तिकादिभरण्यन्तं वारा वा रविसप्तकाः ।
नैते संयोगमात्रेण पुनन्ति सकलां तिथिम्" । एकस्य
तिथ्यवयविनोऽभावादित्यर्थः इतरथा तु पूर्वदिने रात्रौ
चतुर्थीभौमवारयोगे बुधवारेऽपि भौमयुक्तचतुर्थी
विहितस्नानदानाद्यापत्तेः । यदा समस्त एवापरपक्षः
सिंहार्के निपतेत् तदा तं पक्षं विहाय कन्यागतापर-
पक्ष एव श्राद्धम् । नन्वेवं पञ्चमपक्षविरोधः । तथा
कार्ष्णाजिनिः "शक्रध्वजनिपाताद्यो यः स्यात् पक्षस्तु
पञ्चमः । स विज्ञेयोऽपरः पक्षः श्राद्धं तत्र विधीयते ।
पुत्रमायुर्धनं धान्यं भूतिमारोग्यमेव च । प्राप्नोति पञ्चमे
दत्त्वा श्राद्धं कामांस्तथा परान् । एतानेव हि हिंसन्ति
पञ्चमं यो व्यतिक्रमेत् । तस्मान्नातिक्रमेद्विद्वान् पञ्चमे
पैतृकं विधिम्"। तथा जातूकर्ण्यः "आषाढीमवधिं कृत्वा
यः स्यात् पक्षस्तु पञ्चमः । तत्र श्राद्धं प्रकुर्वीत कन्यां
गच्छतु वा न वा" । जावालः "अगतेऽपि रवौ कन्यां
श्राद्धं कुर्वीत यत्नतः । आषाढ्याः पञ्चमः पक्षः प्रशस्तः
पितृकर्मणि"। उच्यते एतेषां वचनानां भोजदेवप्रभृतिभि-
रलिखितत्वेन प्रामाण्याभावात् प्रत्युत पुत्रादिफलसम्ब-
न्धावगमात् काम्यं तद्भविष्यति । कन्यागतस्य च नित्यत्वं
प्रागेव दर्शितम् । न च काम्याधिकारनित्याधिकारयो-
रेकशास्त्रार्थत्वं यावज्जीवाधिकरणविरोधात् । तद्यदि
फलार्थितया कन्यासम्बन्धरहित एव श्राद्धं स्यात्
तथापि कन्यायामवश्यं कर्त्तव्यम् । वस्तुतस्तु श्राद्धभेदे
विधिगौरवापत्तेः कन्यागतश्राद्ध एव फलार्थितया पञ्चम-
पक्षीयगुणफलविधिः तदा च केवलापञ्चमपक्षे श्राद्ध-
मगच्छतमेव "कन्यां गच्छतु वा नवेति" पञ्चमपक्षस्तुत्यर्थं
न तु कन्यासम्बन्धाभावेऽपि श्राद्धविधानपरं प्राप्ते कन्या-
गतश्राद्धे गुणफलविधित्वात् तदसङ्गतं ब्रह्मपुराणे
"पौर्णमास्यन्तमासेनैव सकलतिथिकृत्याभिधानात् अश्वयुक्-
शब्दस्यापि पौर्णमास्यान्तपरत्वात् न सौराश्विनपरत्वम्
"आश्वयुज्यां तु कृष्णायां त्रयोदश्यां मघासु च" इति
ब्रह्मपुराण एव अश्वयुक्शब्दस्यापि पौर्णमास्यन्तपरत्वावधा-
रणाच्च पौर्णमास्यन्ताश्विन एव मघा त्रयोदशी भवति न
दर्शान्ते, लक्षणा च सौरेऽप्यविशिष्टा । अतएव न मुख्य-
त्वाय दर्शान्तपरतापि कृष्णतात्पर्यानुपपत्त्या लक्षणायां
धान्यपत्यधिकरणे दर्शितत्वात् । इदन्तु उच्यते उक्तयुक्तेः
पौर्णमास्यान्ताश्विनपरत्वे कन्यानिरपेक्षपञ्चमपक्षे पक्षश्रा-
द्धादिकल्पा नित्यतयाऽवगम्यन्ते न कन्याविशिष्टा निरपेक्ष-
श्रुतेः अत एव न गुणफलविधिः। अत एव कन्यासम्बन्धा-
नुद्देशेनैव प्रौष्ठपद्यूर्ध्वं पञ्चमपक्षे कृष्णपक्षश्राद्धादिकं दर्श-
यति विष्णुधर्मोत्तरप्रथमकाण्डम् "उत्तरादयनात् श्राद्धे
श्रेष्ठं स्यात् दक्षिणायनम् । चातुर्मास्यञ्च तत्रापि
प्रसुप्ते केशवे हितम् । प्रौष्ठपद्याः परः पक्षस्तत्रापि च
विशेषतः । पञ्चम्यूर्द्ध्वञ्च तत्रापि दशम्यूर्ध्वमतोऽप्यति ।
मघा युक्ता च तत्रापि शस्ता राजंस्त्रयोदशी । तत्राक्षयं
भवेत् श्राद्धं मधुना पायसेन तु । वंशस्तेनापि कर्त्तव्यं
श्राद्धमत्र नराधिप ! । पराक्रभोजी त्वपचः श्राद्धमत्र
तु कारयेत्" । यानि च कन्याविशेषाणि वचनानि
तानि पञ्चमपक्षानपेक्षश्राद्धान्तरविधायकान्येव । कन्या
प्रौष्ठपद्युत्तरपञ्चमपक्षसम्बन्धेऽपि कन्यागतस्यापि श्राद्धस्य
नित्यत्वेनावगम्यमानस्य तन्त्रादेव सिद्धेर्न पृथक्करणम् ।
यदा न कन्यासमुच्चयस्तदा कन्यायामपि नित्यत्वात् कर्त्त-
व्यमेव परन्तु पक्षश्राद्धादिकल्पेषु प्रमाणाभावात् सकृन्-
कृते कृतः शास्त्रार्थ इति न्यायात् सकृदेव श्राद्धं कर्त्त-
व्यम् । अधिमासपाते तत्र श्राद्धं न कर्त्तव्यं यथा लघु-
हारीतः "सपिण्डीकरणादूर्द्ध्वं यत्किञ्चित् श्राद्धिकं भ-
वेत् । इष्टं वाप्यथ वा पूर्त्तं तन्न कुर्यान्मलिम्लुचे" ।
एवमधिमासदोषोपाटवादिना च तत्र श्राद्धाकरणे तु-
लायां कर्त्तव्यतामाह ब्रह्मपुराणे "यावच्च कन्यातुलयोः
क्रमादास्ते दिवाकरः । तावत् श्राद्धस्य कालः स्यात्
शून्यं प्रेतपुरं तदा"। अत्र कन्यातुलयोर्दिवाकरावस्थितेः
क्रमादेव प्राप्तत्वात् क्रमात् श्राद्धस्य कालः स्यादित्यन्वयः
तुल्यकल्पानुकल्पभावेनेत्यर्थः ।

यस्य वा स्वतिथिस्तस्य प्रेतपक्षे तत्सजातीयतिथिः पौर्णमासीस्तस्य तु प्रौष्ठपद्येव पार्वणश्राद्धकालः इति हेमाद्रिप्रभृतिव्यवस्थेति पाश्चात्यदाक्षिणात्यानां तथाचारः। प्रा॰वि॰ तन्मूलवचनानामनुपलब्धक्रमतोवङ्गानां न तथाचार इति बोध्यम्। अधिकमपरपक्षशब्दे २११ पृ॰ दृश्यम्। [वाद्यभेदे त्रिका॰।

**प्रेतपटह** प्रेतस्य प्रेतत्वसूचकः पटहः। मरणकालवाद्यमाने

**प्रेतपति** पु॰ ६त॰। यमराजे

**प्रेतपर्वत** पु॰ प्रेतोद्धारार्थः पर्वतः। गयातीर्थस्थे स्वनामख्याते पर्वते वायुपु॰ गयाम॰।

**प्रेतपिण्ड** पु॰प्रेताय देयः पिण्डः। पूरकपिण्डे तस्य प्रेतस्य पिण्डरूपदेहविशेषपूरकत्वात् पूरकसंज्ञा यथोक्तं ब्रह्मपु॰ “शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते यदा। द्वितीयेन तु कर्णाक्षिनासिकास्तु समासतः। गलांसभुजवक्षांसि तृतीयेन तथा क्रमात्। चतुर्थेन तु पिण्डेन नाभिलिङ्गगुदानि च। जानुजङ्घे तथा पादौ पञ्चमेन तु सर्वदा। सर्वमर्माणि षष्ठेन सप्तमेन तु नाडयः। दन्तलोमाद्यष्टमेन वीर्यं च नवमेन तु। दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्ययः”।

**प्रेतपुर** न॰ ६त॰। यमालये “शून्यं प्रेतपुरं भवेत्” ब्रह्मपु॰

**प्रेतमेध** पु॰ ६त॰। पितृदेश्यके श्राद्धरूपे यज्ञे।

**प्रेतराक्षसी** स्त्री प्रेतस्य भूतभेदस्य राक्षसीव दूरतोऽपसर्पणकारित्वात्। तुलस्यां रत्नमाला।

**प्रेतराज** पु॰ ६त॰ टच्समा॰। यमे तस्य मृतस्य शुभाशुभफलविभजनेन शासनात् तथात्वम्।

**प्रेतलोक** पु॰ ६त॰। यमलोके “प्रेतलोकं परित्यज्य आगता ये महालये” श्राद्धकादानमन्त्रः।

**प्रेतवन** न॰ प्रेतानां मृतानां वनमिवाधारत्वात्। श्मशाने हेमच॰। प्रेतकाननादयोऽप्यत्र।

**प्रेतवाहित** त्रि॰ ३त॰। भूताविष्टे त्रिका॰।

**प्रेतशिला** स्त्री गयातीर्थस्थे प्रेतोद्धारार्थे गृध्रकूटपर्वतादिस्थे शिलाभेदे वायुपु॰गयाम॰। गरुडपु॰८५अ॰ तन्माहात्म्यादि यथा “वेदं प्रेतशिला ख्याता गयायां या त्रिधा स्थिता। प्रभासे प्रेतकुण्डे च गयासुरशिरस्यपि। धर्मेण धारिता भूमौ सर्वदेवमयी शिला। प्रेतत्वं ये गता न्टणां पित्राद्या बान्धवादयः। तेषामुद्धरणार्थाय यतः प्रेत शिला ततः। अतोऽत्र मुनयो भूपा राजपत्न्यादयः सदा। तस्यां शिलायां श्राद्धादिकर्तारो ब्रह्मलोकगाः। गयासुरस्य यन्मुण्डं तस्य पृष्ठे शिला यतः। मुण्डपृष्ठो गिरिस्तस्मात् सर्वदेवमयो ह्ययम्। मुण्डपृष्ठस्य पादेषु यतो ब्रह्मसरोमुखाः। अरविन्दवनन्तेषु तेन चैवोपलक्षितः। अरविन्दगिरिर्नाम क्रौञ्चपादाङ्कितो यतः। तस्माद्गिरिः क्रौञ्चपादः पितॄणां ब्रह्मलोकदः। गदाधरादयो देवा आद्या आदौ व्यवस्थिताः। शिलारूपेण च व्यक्तास्तस्माद्देवमयी शिला। गयाशिरश्छादयित्वा गुरुत्वादास्थिता शिला। स्नात्वा प्रेतशिलादौ तु वरुणाम्बुघृतेन च। पिण्डं दद्यादिमैर्मन्त्रैरावाह्य च पितॄन् परान्”।

**प्रेतशुद्धि** स्त्री प्रेते सति कालविशेषे शुद्धिः। विप्रादीनां मृतानां मरणनिमित्ताशौचापगमे शुद्धौ “प्रेतशुद्धिं प्रवक्ष्यामि” मनुनोपक्रम्याशौचरूपतद्विरोधिनो दर्शनेन तदपगमे शुद्धिः प्रतिपादिता।

**प्रेतशौच** न॰ प्रेते सति शौचम् ६त॰। प्रेते सति तन्निमित्ताशौचापगमे १शौचे २प्रेतसंस्कारभेदे च तत्प्रकारः गरुडपु॰ १०६अ॰ उक्तो यथा “प्रेतशौचं प्रवक्ष्यामि तच्छृणुध्वं यतव्रताः!। ऊनद्विवर्षं निखनेन्न कुर्यादुदकन्ततः। आश्मशानादनुव्रज्य इतरो ज्ञातिभिर्वृतः। यमसूक्तं तथा जप्यं जपन्निलौकिकाग्निना। स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत्। सप्तमाद्दशमाद्वापि ज्ञातयो ह्युपयन्त्यपः। अप नः शोशुचदघमनेन पितृदिङ्मुखाः। एवं मातामह्याचार्यप्रेतानाञ्चोदकक्रियाः। कामोदकाः सखिपुत्रस्वस्रीयश्वशुरर्त्विजः। नामगोत्रेण ह्युदकं सकृत् सिञ्चन्ति वाग्यताः। पाषण्डपतितस्तेना न कुर्युरुदकक्रियाम्। न ब्रह्मचारिणो व्रात्या योषितः कामगास्तथा। सुरापास्त्वात्मघातिनो नाशौचोदकभाजनाः। अतो न रोदितव्यं हि त्वनित्या जीवसंस्थितिः। क्रिया कार्या यथाशक्ति ततो गच्छेद्गृहान् प्रति। विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः। आचम्याग्निमुदकं गोमयं गौरसर्षपान्। प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः। प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि। इच्छतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात्। क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक् पृथक्। पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम्। जलमेकाहमाकाशे स्थाप्यं क्षीरञ्च मृण्मये। वैतानोपासनाः कार्याः क्रियाश्च श्रुतिचोदिताः”।

**प्रेतश्राद्ध** न॰ प्रेतोद्देश्यकं श्राद्धम्। प्रेतोद्देश्यके आद्यमासिकादिसपिण्डीकरणान्तश्राद्धे तस्य गौणकालादि ति॰त॰ उक्तम् यथा "मासेऽन्यस्मिन् तिथौ तस्मिन् तदा दद्याद्विचक्षणः"। तथा श्रा॰त॰ दर्शितं यथा "षोडशश्राद्धानां यत्पतितं कृष्णैकादश्यां तत्कर्त्तव्यम्। तथा च लघुहारीतः "श्राद्धविघ्ने समुत्पन्ने मृताहाऽविदिते तथा। एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः"। विशेषत इत्यमावस्यापेक्षया तस्यामपि विघ्नादौ विधानात्। यथा हेमाद्रिधृतं षट्त्रिंशन्मतम् "मासिके चाब्दिके श्राद्धे संप्राप्ते मृतसूतके। वदन्ति शुद्धौ तत्कार्यं दर्शे चापि विचक्षणैः"। राजमार्त्तण्डे "श्राद्धविघ्ने समुत्पन्ने अन्तरा मृतसूतके। एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः। श्राद्धविघ्ने समुत्पन्ने मृतस्याविदिते तथा। अमावस्यां प्रकुर्वीत वदन्त्येके मनीषिणः"। अत्र मृतसूतकोपदानात् ऋष्यशृङ्गवचनेऽशौचपदमेतत्परम्। यच्च अन्तरा मृतसूतकेऽप्येकादश्यां श्राद्धविधानं तत् "देवे पितॄणां श्राद्धे तु अशौचं जायते यदि। तदशौचे व्यतीते तु तेषां श्राद्धं विधीयते। शुचीभूतेन दातव्या या तिथिः प्रतिपद्यते। सा तिथिस्तस्य कर्त्तव्या नत्वन्या वै कदाचन" इति ऋष्यशृङ्गवचनविरोधात् अशौचान्तदिने मलमासादिरूपविघ्नान्तरेण तदकरणे। अतएव श्राद्धविवेके अपाटवाद्यशौचाभ्यामपि पतितमेकोद्दिष्टमेकादश्यामशौचान्ते च मलमासे न कर्त्तव्यं किन्तु मलमासाव्यामकृष्णैकादश्यामेवेत्युक्तम्"।

**प्रेति** पु॰ प्रकर्षेण इतं गमनं देहेऽस्य। १अग्नौ यजु॰ १५।६ वेददी॰। प्र+इ—भावे क्तिन्। २मरणे स्त्री ऋ॰१।२२।४भा॰

**प्रेतीषणि** त्रि॰ प्राप्तगमने ऋ॰ ६।१।८

**प्रेत्य** अव्य॰ प्र+इ—ल्यप्। १लोकान्तरे अमरः "प्रेत्य संज्ञा नास्ति" श्रुतिः। २मृत्वेत्यर्थे प्रकर्षेण देहत्यागेन अन्यदेहं गत्वेत्यर्थे च। प्रेत्यजातिः प्रेत्यभावः।

**प्रेत्यजाति** स्त्री प्रेत्य मृत्वा जातिर्जन्म। मृत्वा जन्मनि।

**प्रेत्यभाव** पु॰ प्रेत्य मृत्वा भावः। मरणोत्तरं पुनर्जन्मनि। "पुनरुत्पत्तिः प्रेत्यभावः" गौ॰सू॰ १।१।१९ "उत्पन्नस्य क्वचित् सत्त्वनिकाये मृत्वा या पुनरुत्पत्तिः स प्रेत्यभावः। उत्पन्नस्य सम्बद्धस्य सम्बन्धस्तु देहेन्द्रियमनोबुद्धिवेदनाभिः पुनरुत्पत्तिः पुनर्देहादिभिः सम्बन्धः पुनरित्यभ्यासाभिधानम् यत्र क्वचित् प्राणभृन्निकाये वर्त्तमानः पूर्वोपात्तान् देहादीन् जहाति तत् प्रैति यत् तत्रान्यत्र देहादीनन्यानुपादत्ते तद्भवति प्रेत्यभावो मृत्वा पुनर्जन्म सोऽयं जन्ममरणप्रबन्धाभ्यासोऽनादिरपवर्गान्तः प्रेत्यभावो वेदितव्य इति" वात्स्या॰। प्रवाहरूपेणानादिसम्बन्धः संसारः प्रेत्यभावः यथोक्तं कणा॰ सू॰ उप॰वृ॰ "इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिः" "तत्संयोगो विभागः" सू॰ "इदानीं धर्माधर्मयोः प्रयोजनं प्रेत्यभावमाह। ताभ्यां धर्माधर्माभ्यां संयोगोजन्म अपूर्वाभिः शरीरेन्द्रियवेदनाभिः सम्बन्धः संयोग इत्युच्यते विभागस्तु शरीरमनोविभागो मरणम् तथा चाय जन्ममरणप्रबन्धः संसारः प्रेत्यभावापरनामा धर्माधर्माभ्यामित्यर्थः अस्यैव च प्रेत्यभावस्याजरञ्जरीभाव इति वैदिकी संज्ञा"। "जातस्य च ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च" गीतायां च जन्ममरणप्रवाहस्य ध्रुवत्वमुक्तम्।

**प्रेत्वन्** पु॰ प्र+इ—क्वनिप्। १इन्द्रे २वाते मेदि॰।

**प्रेमन्** पु॰न॰ प्रियस्य भाव इमनिच् प्रादेशः एकाच्कत्वात् न टिलोपः। १सौहार्दे २स्नेहे ३हर्षे मेदि॰(वायौ इन्द्रे) शब्दकोषोक्तिः प्रामादिकी। "यद्भावबन्धनं यूनोः स प्रेमा परिकीर्त्तितः" उज्ज्वलमण्युक्ते ४भावबन्धभेदे पु॰

**प्रेमपातन** न॰ प्रेम्णा स्नेहेन पातनं यस्य। १नेत्रजले २तदुपलक्षिते लोचने शब्दच॰।

**प्रेमबन्ध** पु॰ ६त॰। गाढानुरागे।

**प्रेमभक्ति** स्त्री प्रेम्णा भक्तिः। श्रीकृष्णे प्रेम्णा स्नेहेन भक्तौ तल्लक्षणं नारदपञ्चरात्रे उक्तं यथा "अनन्यममता विष्णौ ममता प्रेमसंगता। भक्तिरित्युच्यते भीष्मप्रह्लादोद्धवनारदैरिति"। प्रेमभक्तेश्च माहात्म्यं भक्तेर्माहात्म्यतः परम्। त्रिदशमेव यतो भक्तेः फलं प्रेमैव निश्चितम्"। तच्चिह्नानि भाग॰७स्क॰ उक्तानि यथा "निशम्य कर्माणि गुणानतुल्यान् वीर्याणि लीलातनुभिः कृतानि। यदाऽतिहर्षोत्पुलकाश्रुगद्गदं प्रोत्कण्ठ उद्गायति रुद्यते च। यदा ग्रहग्रस्त इव क्वचिद्धसति क्रन्दते ध्यायति वन्दते जनः। मुहुः श्वसन् वक्ति हरे! जगत्पते! नारायणेत्यात्ममतिर्गतत्रपः। तदा पुमान् मुक्तसमस्तबन्धनस्तद्भावभावानुकृताशयाकृतिः। निर्दग्धबीजानुशयो महीयसा भक्तिप्रयोगेण समेत्यधोक्षजम्"।

**प्रेमिन्** त्रि॰ प्रेमास्त्यस्य व्रीह्या॰ इनि टिलोपः। प्रेमयुते

**प्रेयस्** त्रि॰ अतिशयेन प्रियः प्रिय+ईयसुन् प्रादेशः एकाच्कत्वात् न टिलोपः। प्रियतमे स्त्रियां ङीप् "प्रेयस्यपि प्रोज्झिता" प्रबोधच॰। १पत्यौ पु॰ २भार्य्यायां स्त्री हेम॰।

प्रेरक त्रि० प्र+ईर–ण्वुल्। प्रयोजके प्रवृत्त्यनुकूलव्यापारसाधके।

प्रेरण न० प्र+ईर–णिच्–ल्युट्। प्रेषणे विक्षेपणे क्षत्यादेः कार्य्यादौ नियोगे। णिच्–युच्। प्रेरणाप्यत्र स्त्री।

प्रेत्वन् पु० प्र+ईर–वनिप् तुट् च। १सागरे २वह्नौ स्त्री ङीप् वनोर च। प्रेत्वरी उज्ज्वल०।

प्रेष गतौ भ्वा०पर० सक० सेट्। प्रेषति अप्रेषीत्। ऋदित् चङि न ह्रस्वः। अपिप्रेषत् त।

प्रे(प्रै)ष पु० प्र+इष–घञ् वृद्धिः ईष–वा घञ् गुणः। १प्रेषणे २पीडने च जटा०।

प्रेषण न० प्र+इष–ल्युट्। प्रेरणे नियोगे। णिच्–युच्। प्रेषणाप्यत्र स्त्री। प्रेषणेन जीवति वेतना० ठक्। प्रैषणिक तदुपजीविनि त्रि०। प्रेषणं नित्यमर्हति छेदा० ठक्। प्रैषणिक नित्यप्रेषणार्हे त्रि०।

प्रेष्ठ त्रि०अतिशयेन प्रियः प्रिय+इष्ठन् प्रादेशः एकाचकत्वात् न टिलोपः। १प्रियतमे अमरः। स्त्रियां टाप्। सा च २प्रियतमायां ३जङ्घायाञ्च शब्दच०।

प्रे(प्रै)ष्य त्रि०प्र+इष–कर्मणि ण्यत् वृद्धिः ईष–वा ण्यत् गुणः। १प्रेरणीये नियोज्ये २दासे अमरः। भावे यत्। ३प्रेरणे न०। तत्करोति कृ–ट। प्रेष्यकर नियोगकारके "वन्तुः पुष्यकराङ्गः" भा०द्रो० २२अ०।

प्रेहिकटा स्त्री प्रेहि कट इत्युच्यते यस्यां क्रियायाम् मयू० स०। कटसम्बोधनक प्रगमनार्थक्रियानियोगे।

प्रेहिकर्दमा स्त्री प्रेहिकर्दम इत्युच्यते यस्यां क्रियायाम् मयू०स०। कर्दमसम्बोधनकप्रगमननियोगे। एवं प्रेहिद्वितीया प्रेहिवाणिजा इत्यादिपि मयू० समा०। द्वितयवाणिजसम्बोधनकप्रगमननियोगक्रियायोः। [स्त्री]

प्रैय न० प्रियस्य भावः युवा० इगन्तत्वाऽभावे अण्। प्रियत्वे

प्रैयव्रत त्रि० प्रियव्रतस्येदम् अण्। प्रियव्रतसम्बन्धिनि दैवस्वतमनोः पुत्रभेदे अपत्ये तु इञ् प्रैयव्रति तत्रार्थे पु०।

प्रैष पु० प्र+इष घञ् वा वरूणभावः। १क्लेशे २मर्दने ३उन्मादे ४प्रेरणे च मेदि०।

प्रोक्त न० प्र+वच–भावे क्त, तस्याविवक्षायां तुल्ये वा कर्मणि क्त। १कथिते यं प्रति किञ्चित् वस्तु कथ्यते तस्मिन् २वचनस्य कर्मणि पदार्थे च।

प्रोक्षण न० प्र+उक्ष–भावे ल्युट्। १यज्ञार्थं पशुहनने अमरः। २वधे ३सेचने च मेदि०। ४उत्तानहस्तेन जलादेः सेचने अभ्युक्षणशब्दे २१२पृ० दृश्यम्। प्रोक्षितेऽनया करणे ल्युट् ङीप्। ५प्रोक्षणसाधनेषु अप्सु स्त्री "असन्नुरे प्रोक्षणीर्निधाय" कात्या० श्रौ० २।१४० "वाभिरद्भिर्हविषः पुरोडाशानाञ्च प्रोक्षणं क्रतं ताः प्रोक्षण्यः" कर्कः। उपचारात् ७तदाधारपात्रेऽपि स्त्री।

प्रोक्षित त्रि० प्र+उक्ष–कर्मणि क्त। १सिक्ते २निहते मेदि० यज्ञार्थं संस्कृते ३पश्वादौ च "भक्षयेत् प्रोक्षितं मांसम्" इति स्मृतिः "आरण्याः सर्वदैवत्याः प्रोक्षिताः सर्वशो मृगाः। अगस्त्येन पुरा राजन्! मृगया येन पूज्यते" ति०त०।

प्रोज्जासन न० प्र+उद्+जस–णिच्–ल्युट्। मारणे हेमच०।

प्रोञ्छन न० प्र+उञ्छ–ल्युट्। मार्जने (पोँछा)।

प्रोज्झित त्रि० प्र+उज्झ–कर्मणि क्त। प्रकर्षेण त्यक्ते "धर्मः प्रोज्झितकैतवोऽत्र" भाग०।१।१।२ श्लो० "तत्र प्रशब्देन मोक्षाभिसन्धिरपि निरस्तः" श्रीधरः।

प्रौ(प्रौ)ढ त्रि० प्र+वह–क्त वा वृद्धिः। १दृढे अमरः २प्रगल्भे हेमच० ३निपुणे राजनि०। ४प्रकर्षेण ऊढे च। स्त्रियां टाप्। सा च ५नायिकाभेदे नायिकाशब्दे ४०८२ पृ० दृश्यम्। "त्रिंशद्वर्षादूर्द्ध्वं यस्य पञ्चाशद्वर्षपर्य्यन्तं प्रौढावस्था यथा"वा षोडशात् भवेद्बाला तरुणी त्रिंशता मता। पञ्चपञ्चाशता प्रौढा भवेद्वृद्धा ततःपरम्"। अस्या वश्यत्वकारणं यथा "अलङ्कारादिभिर्बाला तरुणी रतियोगतः। प्रेमदानादिभिः प्रौढा वृद्धा च दृढताडनात्"। तस्या रमणे दोषो यथा "बाला तु प्राणदा प्रोक्ता तरुणी प्राणहारिणी। प्रौढा करोति वृद्धत्वं वृद्धा मरणदा भवेत्" इतिम०। अत्र त्रिंशद्वर्षोर्द्ध्वं हृन्मन्ये "षोडशाब्दां युवा प्रौढत्वारिंशद्भिरपिमलः" तन्मता०। "अर्थवद् ग्रहणेनार्थकस्येति" परिभाषया ऊढेः पृथगग्रहणाद्धा क्त वति न वृद्धिः किन्तु वचाद् तत्र प्रोढवान् इत्येव।

प्रो(प्रौ)ढपाद त्रि०प्रौढः पादो यस्य। आसनारोपितपादादिके "आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा। कृतावसक्थिको यस्तु प्रौढपादः स उच्यते। आनमाचमनं होमं भोजनं देवतार्चनम्। प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम्" इति छन्दोगप०। "अनेकवास्त्रदारविशे भूमिगमे इष्टकाय संकीर्णभूता" इति बौधायनवचनात्तथाविधे आरूढपादोऽपि न कुर्य्यात्" आ०त०।

प्रो(प्रौ)ढि स्त्री प्र+वह–क्तिन् वा वृद्धिः। १सामर्थ्ये २सामर्थ्यहेतुके क्रियासु योग्यताध्यवसाये ३दृढोक्तौ च प्रौढिवादः।

प्रोष्ट पु० प्र+उठ–गतौ अच् पृषो०। पतद्रुमवृक्षे शफरा०।

**प्रोत** त्रि॰ प्र+वे–स्यूतौ क्त सम्प्रसारणम्। १प्रकर्षेण स्यूते २व्यथिते वस्त्रे न॰ जटा॰। भावे क्त। ३सीवने न॰।

**प्रोतोत्सादन** न॰ प्रोतं वस्त्रं उत्सादयति उत्+सादि–ल्यु। १वस्त्रकुट्टिमे २छत्रे च त्रिका॰।

**प्रोत्फल** पु॰ प्रकर्षेण उत्फलति प्र+उद्–फल–अच्। सिं-हलाङ्गूलाकारपुष्पवति वृक्षभेदे शब्दमाला।

**प्रोत्फुल्ल** त्रि॰ प्र+उत्+फुल्ल–विकाशे अच्। विकसिते।

**प्रोत्साहन** न॰ प्रकर्षेण उत्साहनम्। प्रवृत्तस्य कर्त्तव्ये कर्मणि १प्रकर्षेण यत्नसम्पादने सा॰द॰उक्ते २नाट्यालङ्का-रभेदे। प्रोत्साहनस्य इत्यादिना तान्युद्दिश्य "प्रोत्सा-हनं स्यादुत्साहगिरा कर्मणि योजनम्" इति लक्षि-तम्। यथा "कालरात्रिकरालेयं स्त्रीति किं विचिकित्ससि। तज्जगत्त्रितयं त्रातुं तात! ताडय ताडकाम्"।

**प्रोथ** परिपूर्णतायाम् सामर्थ्ये च भ्वा॰उभ॰अक॰सेट्। प्रो-थति ते अप्रोथीत् अप्रोथिष्ट पुप्रोथ थे। ऋदित् चङि न ह्रस्वः। अपुप्रोथत् त।

**प्रोथ** पु॰न॰ प्रु+थक्। १प्रस्थिते "हयान्तस्यद्‌कान्तस्य प्रियं प्रोथमनुप्रजेत्"। २अश्वनासिकायाम् अमरः। ३कट्यां पु॰ मेदि॰ ४भाटके पु॰ त्रिका॰। ५स्त्रीगर्भे पु॰ विश्वः हृगर्त्ते ७भीषणे ८स्फिग्देशे ९अश्वघुसे च संक्षिप्तसारः १०पथिके त्रि॰ ११प्रथिते त्रि॰ त्रिका॰ १२स्थापिते त्रि॰ सि॰कौ॰।

**प्रोथथ** पु॰ प्रोथ–बा॰ अथ। शब्दभेदे ऋ॰ १०।९४।६भा॰।

**प्रोष** पु॰ प्रुष–दाहे भावे घञ्। सन्तापे राजनि॰।

**प्रोषक** पु॰ देशभेदे भा॰ भी॰ ९अ॰।

**प्रोषित** त्रि॰ प्र+वस–क्त इट्। प्रवासं गते विदेशं गते। "आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा" काशीख॰ पतिव्रतालक्षणम्।

**प्रोषितभर्त्तृका** स्त्री प्रोषितः भर्त्ता यस्याः कप्। यस्याः पतिः विदेशं गतस्तस्यां स्त्रियाम् "नानाकार्य्यवशाद् यस्यादूरदेशं गतः पतिः। सा मनोभवदुःखार्त्ता भवेत् प्रोषितभर्त्तृका" सा॰द॰।

**प्रो(प्रौ)ष्ठ** पु॰प्रकृष्ट ओष्ठोऽस्य वा वृद्धिः। (पुँटि) मत्स्यभेदे रायमुकुटः। स्त्रियां ङीष्। २देशभेदे भा॰भी॰ ९अ॰। ३गवि च पुंस्त्री॰ सि॰कौ॰। प्रोष्ठपदशब्दे दृश्यम्।

**प्रो(प्रौ)ष्ठपदा** स्त्री प्रो(प्रौ)ष्ठो गौस्तस्येव पदं यस्याः। नक्षत्रविशेषे। तद्युक्ता पौर्णमासी अण् सा यत्र मासे पुनरण् वा न वृद्धिः। १चान्द्रभाद्रमासे अमरः। प्रोष्ठ-पदासु जातः अण् उत्तरपदवृद्धिः। प्रोष्ठपाद तत्र्जे २माणवके। "जे प्रोष्ठपदानाम्" पा॰ उक्तेः अवादौ नोत्तरपदवृद्धिः प्रौष्ठपद इत्येव।

२अश्विन्यादिषु पञ्चविंशषड्‌विंशनक्षत्रयोः स्त्री ब॰व॰ पूर्वोत्तरभाद्रपदयोः प्रत्येकं द्वित्वेन चतुष्कत्वात् बहुत्वम्। प्रोष्ठपदाभिर्युक्ता पौर्णमासी अण्। प्रौष्ठपदी चान्द्र-३भाद्रपौर्णमास्यां स्त्री ङीप् "प्रौष्ठपद्यामतीतायाम्"। प्रेतशब्दे दृश्यम्।

**प्रोष्य** अव्य॰ प्र+वस–ल्यप्। विदेशं गत्वेत्यर्थे तस्य पापीयसा सह मयू॰ समा॰ प्रोष्यपापीयस्। विदेशं गत्वा पापव-त्तरे त्रि॰स्त्रियां ङीप्। "राघवः प्रोष्यपापीयान्" भट्टिः

**प्रो(प्रौ)ह** पु॰ प्र+ऊह–क वा वृद्धिः। प्रकृष्टवाहके

**प्रोहकटा** पु॰ प्रोह कटं इत्युच्यते यस्यां क्रियायाम् मयूर॰ समा॰। कटसम्बोधनकप्रकृष्टोहार्थनिर्देशक्रि-यायाम्। एवं प्रोहकर्दमा इत्यपि तत्र पाठान्तरे कर्द-मस्यप्रदानकोहनिर्देशक्रियायाम्।

**प्रोह्यपदि** अव्य॰ प्रोह्यौ पादौ यत्र प्रहरणे द्विदण्ड्या॰ स॰इच् समा॰ पद्भावः। प्रकर्षेण द्वाभ्यां पादाभ्यां प्रहरणे

**प्रौढमनोरमा** प्रौढानां प्रगल्भानां मनोरमयति रम॰ णिच् अच्। भट्टोजिदीक्षितकृतायाम् सिद्धान्तकौमुदी-व्याख्यायाम्। [ २निपुणे च धरणिः।

**प्रौण** त्रि॰ प्र+ओण–अपसारणे अच्। १प्रकर्षेण अपसारके

**प्रौष्ठिक** त्रि॰ प्रोष्ठोऽस्त्यस्य ठन्। प्रकृष्टौष्ठयुते ततः शिवा॰ अपत्ये अण् प्रौष्ठिक तदपत्ये। [भाष्यम्।

**प्लक** पु॰प्र+कै–क रस्य लः। स्त्रीणामधोऽङ्गभेदे ऋ॰८।११।१८

**प्लक्ष** भक्षणे भ्वा॰उभ॰सक॰ सेट्। प्लक्षति ते अप्लक्षीत् अप्ल-क्षिष्ट पप्लक्ष क्षे। प्लक्षः।

**प्लक्ष** पु॰ प्लक्ष्यते कीटैः प्लक्ष–कर्मणि घञ्। (पाकुड़) १वृक्षे अमरः। प्लक्षसमीपस्थानात् २निःसृतायां सरस्वत्यां च भा॰व॰ ८४अ॰। तस्याः प्लक्षप्रस्रवणात् जातत्वात् तथात्वम् "प्रभवश्च सरस्वत्याः प्लक्षप्रस्रवणं मतम्" भा॰श॰ ५०अ॰। ३प्लक्षद्वीपचिह्निते द्वीपभेदे पु॰ "प्लक्षो जम्बूप्रमाणो द्वीपः ख्यातिकरो हिरण्मय उत्थितो यत्राग्निरुपास्ते सप्तजिह्वः। तस्याधिपतिः प्रियव्रता-त्मज इध्मजिह्वः स्वं द्वीपं सप्त वर्षाणि विभज्य सप्तवर्ष-नामभ्य आत्मजेभ्य आकलय्य स्वयमात्मयोगेनोपरराम। शिवं यवसं सुभद्रं शान्तं क्षेममस्मृतमभयमिति वर्षा-णि। तेषु गिरयो नद्यश्च सप्तैवाभिज्ञाताः मणिकूटो

वज्रकूटः शतशृङ्ग इन्द्रसेनो ज्योतिष्मान् सुपर्णो हिर-
ण्यष्ठीवो मेघमाल इति सेतुशैलाः। अरुणा नृम्णाऽऽ-
ङ्गिरसी सावित्री सुप्रभाता ऋतम्भरा सत्यम्भरेति
महानद्यः। यासां जलोपस्पर्शनविधूतरजस्तमसो हंस-
पतङ्गोर्ध्वायनसत्याङ्गसंज्ञाश्चत्वारो वर्णाः सहस्रायुषो
विबुधोपमसन्दर्शनप्रजननाः स्वर्गद्वारं त्रय्या विद्यया
भगवन्तं त्रयीमयं सूर्यमात्मानं यजन्ते" भाग० ५।२०।
"क्षारोदेन यथा द्वीपो जम्बुसंज्ञोऽभिवेष्टितः। संवेष्ट्य
क्षारमुदधिं प्लक्षद्वीपस्तथा स्थितः। जम्बुद्वीपस्य विस्तारः
शतसाहस्रसम्मितः। स एव द्विगुणो ब्रह्मन्! प्लक्षद्वीपो-
ऽप्युदाहृतः। सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरस्य वै।
ज्येष्ठः शान्तभयो नाम शिशिरस्तदनन्तरः। सुखोदय-
स्तथानन्दः शिवः क्षेमक एव च। ध्रुवश्च सप्तमस्तेषां
प्लक्षद्वीपेश्वरा इमे। पूर्वं शान्तभयं वर्षं शिशिरं सुखदं
तथा। आनन्दश्च शिवश्चैव क्षेमकः ध्रुवएव च। मर्य्यादा
कारकास्तेषां तथान्ये वर्षपर्वताः। सप्तैव तेषां नामानि
शृणुष्व मुनिसत्तम!। गोमेदश्चैव चन्द्रश्च नारदो दु-
न्दुभिस्तथा। सोमकः सुमनाः शैलो वैभ्राजश्चैव सप्तमः।
वर्षाचलेषु रम्येषु सर्वेष्वेतेषु चानघाः। वसन्ति देवग-
न्धर्वसहिताः सततं प्रजाः। तेषु पुण्याः जनपदाश्चिराच्च
म्रियते जनः। नाधयो व्याधयो वापि सर्वकालसुखं
हि तत्। तेषां नद्यश्च सप्तैव वर्षाणान्तु समुद्रगाः।
नामतस्ताः प्रवक्ष्यामि श्रुताः पापं हरन्ति याः। अनुतप्ता
शिखा चैव विपाशा त्रिदिवा क्रमुः। अमृता सुकृता
चैव सप्तैतास्तत्र निम्नगाः। एते शैलास्तथा नद्यः प्र-
धानाः कथितास्तव। क्षुद्रनद्यस्तथा शैलास्तत्र सन्ति सह-
स्रशः। ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते।
अपसर्पिणी न तेषां वै न चैवोत्सर्पिणी प्रजा। न
तत्रास्ति युगावस्था तेषु स्थानेषु सप्तसु। त्रेतायुगसमः
कालः सर्वदैव महामते!". विष्णुपु०। कल्पभेदाच्चानमभेदः।
तदुत्तरं वनस्य णत्वम् प्लक्षवणम्। प्लक्षादूरदेशादि क
नडा० कुकुक्। प्लक्षकीय तत्समीपादौ त्रि०।

**प्लक्षजाता** स्त्री प्लक्षात् तत्समीपस्थप्रस्रवणात् जाता। सर-
स्वत्यां नद्यां भा०आ० १७०अ०। [२६अ०।

**प्लक्षतीर्थ** न०प्लक्षसमीपस्थं तीर्थं शाक०त०। तीर्थभेदे हरिवं०

**प्लक्षप्रस्रवण** न० प्लक्षस्य समीपस्थं प्रस्रवणम्। सरस्वत्यु-
त्पत्तिस्थाने भा०श० ५०अ०।

**प्लक्षराज** पु० ६त०। सोमतीर्थस्थिते प्लक्षवृक्षे भा०श०४४अ०

**प्लक्षादि** पु०फले अण्प्रत्ययलुग्निमित्ते शब्दगणे स च गणः
पा० ग० उक्तो यथा "प्लक्ष न्यग्रोध अश्वत्थ इङ्गुदी
शिग्रु रुरु कक्षतु बृहती"।

**प्लक्षावतरण** न० अवतरत्यस्मात् अव—तृ—अपादाने ल्युट्
प्लक्षः तन्निकटस्थितप्रस्रवणरूपमवतरणम्। सरस्वत्या
अवतरणस्थाने प्लक्षप्रस्रवणे भा०व० ८९अ०।

**प्लति** पु० प्लु—बा० डति। ऋषिभेदे ऋ० १०।८४।१७

**प्लव** न०प्लु—अच्। १कैवर्त्तीमुस्तके २गन्धतृणे मेदि०। प्लुत्वा
३गन्तरि त्रि०। भावे अप्। ४प्लवने (भासा) कर्त्तरि क-
रणे वा अप्। ५भेके ६भेलके (भेला) ७मेषे ८श्वपचे
९वानरे १०जलकाके ११कुलके १२प्रवणे १३पर्कटीवृक्षे
१४कारण्डवखगे १५शब्दे १६प्रतिगतौ च पु० मेदि०।
जातित्वे स्त्रीत्वमपि स्त्रियां ङीष्। १७प्रेरणे १८यतौ
च पु०शब्दरत्ना०। १९जालभेदे हेमच०२०प्लवे (पोला)
मनुष्यधारणयन्त्रभेदे त्रिका०। २१जलकुक्कुटे मिता०
२२जलचरपक्षिगणभेदे यथोक्तं भावप्र०
"हंससारसकादम्बबकक्रौञ्चशरारिकाः। नान्दीमुखी
सकादम्बा बलाकाद्याः प्लवाः स्मृताः। प्लवन्ते सलिले
यस्मादेते तस्मात् प्लवाः स्मृताः"। एतेषां मांसगुणाः।
"प्लवाः पित्तहराः स्निग्धा मधुरा गुरवो हिमाः।
वातश्लेष्मप्रदाश्चापि बलशुक्रकराः सराः"।

**प्लवक** त्रि० प्लु—बा० अक। १प्लुतगतिकारके २खड्गधारादौ
नर्त्तके त्रिका० ३चाण्डाले हला० ४भेके ५प्लक्षे राजनि०

**प्लवग** पु० प्लवन् सन् गच्छति गम—ड नि०। १वानरे २भेके
३सूर्य्यसारथौ मेदि० ४प्लवसंज्ञखगे शब्दर०। ५शिरीष-
वृक्षे राजनि०। [भेकानां गतौ स्त्री।

**प्लवगति** पु० प्लवेन गतिरस्य। १भेके शब्दच०। ६त०। प्लवानां

**प्लवङ्ग** पु० प्लवन् सन् गच्छति गम—ड खच् मुम् नि०। १वानरे
२मृगे शब्दच०। ३प्लक्षवृक्षे राजनि०। [३वानरे अमरः।

**प्लवङ्गम** पु० प्लवन् सन् गच्छति गम—खच् मुम् नि०। १भेके।

**प्लवन** त्रि० प्लु—ल्यु। १निम्ने प्रवणे क्रमनिम्नतां गन्तरि
"प्रागुदक् प्लवनां भूमिं कारयेत् यत्नतो नरः" ति०त०
मत्स्यपु०। भावे ल्युट्। जलोपरि गतौ न० (भासा)।

**प्लविक** त्रि० प्लवेन तरति ठन्। प्लवेन तारिणि।

**प्लाक्ष** न० प्लक्षस्य समूहः, तस्य विकारस्तस्य फलं वा अण् न
लुप्। १प्लक्षवृक्षफले २तद्विकारे ३तत्समुदाये च।

**प्लायोगि** पु० प्रयोगनाम्नः राज्ञः पुत्रः इञ् वेदे रस्य लः।
प्रयोगनाम्नः राज्ञः पुत्रे ऋ० ८।१।२२

**प्लावन** न॰ प्लु–णिच्–ल्युट् । (उथ्लान) द्रवद्रव्यस्य समन्तात् द्रुतौ "तापनं घृततैलादेः प्लावनं गोरसस्य च । तन्मात्रमुद्धृतं कुर्य्यात् कठिनं तु पयोदधि" शु॰त॰ । २निमज्जनसम्पादने ३वहुतरजलसंयोजने च । करणे ल्युट् ङीप् । ४भूतानां धारणाभेदे स्त्री "स्तम्भनी प्लावनी चैव शोषणी भ्रामणी तथा । क्षोभणी च भवन्त्येताः भूतानां पञ्च धारणाः" काशीख॰ ४४अ॰ । [माघः १२२६ ।

**प्लावित** त्रि॰ प्लु–णिच्–क्त । जलादिना समन्तात् व्याप्ते

**प्लाशि** स्त्री प्रकर्षेणाश्नाति भुङ्क्तेऽनया प्र+अश–करणे इ वेदे रस्य लः । शिश्नमूलस्थनाड्याम् यजु॰२५।७

**प्लाशुक** पु॰ प्रकर्षेण आशु आयति भवति कै–क वेदे रस्य लः । प्रकर्षेणाशु पच्यमाने व्रीहौ "प्लाशुकानां व्रीहीणां सविता वै देवानां प्रसविता सवितृप्रसूतः सूय इत्यथ यत् प्लाशुकानां व्रीहीणां क्षिप्रे मा प्रसुवानिति" शत॰ ब्रा॰ ५।३।३।२ "प्लाशुनां चीर्वं गार्हपतं वावत् इष्टे तदेनमग्निरेव गृहपतिर्गार्हपतमभिपरिणयत्यथ यदाशुनां क्षिप्रे मा परिणयानिति" इभ॰ "प्लाशुकानाम् प्रकर्षेण आशु शीघ्रं पच्यमानानां पुनः प्ररूढानां व्रीहीणाम्" रेफस्य छान्दसो लत्वनिर्देशः । प्रसुवात् प्रसुवन्तु प्रेरयन्तु । प्लाशुकाः पुनःप्ररूढव्रीहय इत्युक्तम् ततोऽप्यधिककाले पक्वत्वे पाच्यमानाः षष्टिका व्रीहयःआशवः तेषामाशुत्वं च क्षिप्रतरमाशनियतपरिपाकव्रीह्यपेक्षम्" भा॰ ।

**प्लाशुचित्** अ॰ शीघ्रे प्राशु इत्यत्र पाठान्तरं निघण्टुः ।

**प्लिह** गतौ भ्वा॰पर॰सक॰सेट् । प्लेहति अपिप्लेहीत् पिप्लेह ।

**प्लि(प्ली)हन्** पु॰ प्लि–कनिन् पृषो॰ वा दीर्घः । (पिला) १वामकुक्षिपार्श्वस्थे मांसखण्डे तद्वृद्धिहेतुके २रोगभेदे च तन्निदानादि भावप्र॰ उक्तं यथा

"विदाह्यभिष्यन्दिरतस्य जन्तोः प्रदुष्टमत्यर्थमसृक्कफश्च । प्लीहाभिवृद्धिं कुरुतः प्रवृद्धौ तं प्लीहसंज्ञं गदमामनन्ति । वामे च पार्श्वे परिवृद्धिमेति विशेषतः सीदति चातुरोऽत्र । मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतः क्षीणबलोऽतिपाण्डुः" । विदाहि कुलत्थसर्षपशाकादि । अभिष्यन्दि माहिषं दध्यादि । कफपित्तलिङ्गैरुपद्रुत इत्यर्थः । प्रदुष्टमत्यर्थमसृक्कफश्चेति संप्राप्तिः असृजः पित्तस्य च समानधर्मत्वात् । रक्तजमाह "क्लमो भ्रमो विदाहश्च वैवर्ण्यं गात्रगौरवम् । मोहो रक्तोदरत्वञ्च ज्ञेयं रक्तजलक्षणम्" । पैत्तिकस्य लक्षणमाह "सज्वरः सपिपासश्च सदाहो मोहसंयुतः । पीतगात्रो विशेषेण प्लीहा पैत्तिक उच्यते" । श्लैष्मिकलक्षणमाह "प्लीहा मन्दव्यथास्थूलः कठिनो गौरवान्वितः । अरोचकेन संयुक्तः प्लीहा कफज उच्यते" । वातिकमाह "नित्यमानद्धकोष्ठः स्यान्नित्योदावर्त्तपीडितः । वेदनाभिः परीतश्च प्लीहा वातिक उच्यते" । तमसाध्यमाह "दोषत्रितयरूपोऽन्यः प्लीहाऽसाध्यो भवत्यपि" भावप्र॰ । तत्रैवान्यत्र तत्स्थानमुक्तं यथा "अथ शरीरावयवविशेषस्य यकृत्प्लीहलक्षणमाह "अधो दक्षिणतश्चापि हृदयाद्यकृतः स्थितिः । तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम्"

**प्ली** गतौ क्र्या॰ पर॰ सक॰ अनिट् । प्लीनाति अप्लैषीत् । अयं धातुः कविकल्पद्रुमे न दृश्यते धातुपाठे पाठान्तरेऽस्ति । [कुसुमवति इत्यभेदे शब्दच॰ ।

**प्लीहघ्न** पु॰ प्लीहानं हन्ति हन–क । (रोडा) दाडिमतुल्य-

**प्लीहशत्रु** पु॰ इत॰ । प्लीहघ्नशब्दे अमरः ।

**प्लीहा** स्त्री प्लिह–क पृषो॰ दीर्घः । प्लीहरोगे भरतः ।

**प्लीहारि** पु॰ इत॰ । अश्वत्थवृक्षे शब्दच॰ ।

**प्लीहोदर** न॰ उदररोगभेदे उदरशब्दे ११४६ पृ॰ दृश्यम् ।

**प्लु** सर्पणे उत्प्लुत्य गतौ च भ्वा॰आत्म॰सक॰ अनिट् । प्लवते अप्लोष्ट पुप्लुवे । अयं त्रिमात्रतयोच्चारणे च प्लुतशब्दे सि॰कौ॰ प्लवते इति निर्देशात् । गतौ निघण्टुः ।

**प्लुषि** पु॰ प्लुष–दाहे किप । १वह्नौ उज्ज्वलद॰ । २स्नेहे ३स्वल्पदाहे संक्षिप्तसारः ।

**प्लुत** न॰ प्लु-भावे क्त । १अश्वगतिभेदे अमरः । २तिर्य्यग्गतौ ३लम्फेन गतौ त्रिमात्रकालेनोच्चार्य्ये वर्णे पु॰ "एकमात्रो भवेद् ह्रस्वो द्विमात्रो दीर्घ उच्यते । त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रकम्" प्राचीनकारिका । अस्य ह्रस्वदीर्घाभ्यामिवाकारभेदाभावेन तदुत्तरवर्त्ति त्र्यङ्केनैव तथात्वसूचनं न तु लेखनेऽस्याकारविशेषोऽस्ति । प्लुतत्वविधायकानि पा॰सूत्राणि वार्त्तिकानि सोदाहरणान्यत्र प्रदर्श्यन्ते "वाक्यस्य प्लुत उदात्तः" पा॰ इत्यधिकृत्य "प्रत्यभिवादेऽशूद्रे" पा॰ "अशूद्रविषये प्रत्यभिवादे यद्वाक्यं तस्य टेः प्लुतः स्यात् । अभिवादये देवदत्तोऽहम् । भो आयुष्मानेधि देवदत्त !३ । स्त्रियान्न अभिवादये गार्ग्यहं भो आयुष्मतेधि गार्गि ! । नाम गोत्रं वा यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्रैव प्लुत इष्यते नेह आयुष्मानेधि भोः । राजन्यविशाश्चेति वाच्यम् । आयुष्मानेधि भोः । आयुष्मानेधीन्द्रवर्म्मन् आयुष्मानेधीन्द्रपालित३।

सि॰कौ॰ "दूराद्धूते च" पा॰। "दूरात् सम्बोधने यद्वाक्यन्तस्य टेः प्लुतः स्यात्। सक्तून् पिब देवदत्त३! "हैहे प्रयोगे हैहयोः" पा॰। एतयोः प्रयोगे दूराद्धूते यद्वाक्यन्तत्र हैहयोरेव प्लुतः स्यात्। है३ राम! राम! है३ "गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्" पा॰ दूराद्धूते यद्वाक्यन्तस्य ऋकारवर्जितस्यानन्त्यस्यापि गुरोर्वा प्लुतः स्यात्। दे३वदत्त। देवद३त्त। देवदत्त३। गुरोः किम्। वकारात् परस्य अकारस्य मा भूत्। अनृतः किम्। कृष्ण३। एकैकग्रहणं पर्य्यायार्थम्। इह प्राचामिति योगो विभज्यते तेन सर्वः प्लुतो विकल्प्यते "अप्लुतवदुपस्थिते" पा॰। उपस्थितोऽनार्ष इतिशब्दस्तस्मिन् परे प्लुतोऽप्लुतवद्भवति। अप्लुतकार्यं यणादिकङ्करोति। सुश्लोक३ इति। सुश्लोकेति। वत् किम् अप्लुत इत्युक्ते प्लुत एव निषिध्येत तथा च प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं स्यात्। अग्नी३ इति। "इ३ चाक्रवर्मणस्य" पा॰ इ३ प्लुतोऽचि परेऽप्लुतवद्वा स्यात्। चिनुहीति चिनुहि३ इति। चिनुहि३ इदं चिनुहीदम्। उभयत्र विभाषेयम् "ओमभ्यादाने" पा॰ ओंशब्दस्य प्लुतः स्यात् आरम्भे। ओ३म् अग्निमीळे पुरोहितम्। अभ्यादाने किम् ओमित्येकाक्षरम् "ये यज्ञकर्मणि" पा॰ ये३ यजामहे। यज्ञेति किम् ये यजामहे३ "प्रणवष्टेः" पा॰ यज्ञकर्मणि टेरोमित्यादेशः स्यात्। अपां रेतांसि जिन्वतो३म्। टेः किम् हलन्ते अन्त्यस्य मा भूत्। "याज्यान्तः" पा॰ ये याज्यान्ता मन्त्रास्तेषामन्त्यस्य टेः प्लुतो यज्ञकर्मणि। जिह्वामग्ने! चकृषे हव्यवाह३म्। अन्तः किम्। याज्यानामृचां वाक्यसमुदायरूपाणां प्रतिवाक्यं टेर्न स्यात्। सर्वान्तस्य चेष्यते "ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः" पा॰ एषामादेः प्लुतो यज्ञकर्मणि। अग्नयेऽनुब्रू३हि। अग्नये गोमयानि प्रे३ष्य। अस्तु श्रौ३षट्। सोमस्याग्ने वी३हि वौ३षट्। अग्निमा३वह "अग्नीत् प्रेषणे परस्य च" पा॰ अग्नीधः प्रेषणे आदेः प्लुतस्तस्मात् परस्य च। ओ३ श्रा३वय। नेह अग्नीदग्नीन् विहर३। बर्हिस्तृणीहि३। "विभाषा पृष्टप्रतिवचने हेः" पा॰ प्लुतः। अकार्षीः कटम् अकार्षं हि३। अकार्षं हि। पृष्टेति किम् कटं करिष्यसि हि३। हेः किम् करोमि ननु "निगृह्यानुयोगे च" पा॰ अत्र यद्वाक्यं टेः प्लुतो वा। अद्यामावास्येत्यात्थ३। अद्य अमावास्येत्येवंवादिनं युक्त्या स्वमतात् प्रच्याव्य एवमनु-
युज्यते। "आम्रेडितं भर्त्सने" पा॰ दस्यो३ दस्यो३ घातयिष्यामि त्वाम्। आम्रेडितग्रहणं द्विरुक्तोपलक्षणम्। चौर३ चौर। "अङ्गयुक्तन्तिङाकाङ्क्षम्" पा॰ अङ्गेत्यनेन युक्तन्तिङन्तं प्लवते। अङ्ग कूज३ इदानीं ज्ञास्यसि जाल्म!। तिङ् किम्? अङ्ग देवदत्त! मिथ्या वदसि३। आकाङ्क्षं किम् अङ्ग पच। नैतदपरमाकाङ्क्षति। भर्त्सन इत्येव। अङ्गाधीष्व भक्तन्तव दास्यामि। "विचार्य्यमाणानाम्" पा॰ वाक्यानां टेः प्लुतः। होतव्यं दीक्षितस्य गृहा३इ। (वक्ष्यमाणेन एतः स्थाने इः) न होतव्य३मिति। होतव्यञ्च होतव्यमिति विचार्यते। प्रमाणैर्वस्तुतत्त्वपरीक्षणं विचारः। "पूर्वन्तु भाषायाम्" पा॰ विचार्य्यमाणानां पूर्वमेव प्लवते। अहिर्नु३ रज्जुर्नु। प्रयोगापेक्षं पूर्वत्वम्। इह भाषाग्रहणात् पूर्वयोगश्छन्दसीति ज्ञायते। "प्रतिश्रवणे च" पा॰ वाक्यस्य टेः प्लुतोऽभ्युपगमे प्रतिज्ञाने श्रवणाभिमुख्ये च! गां मे देहि भो हन्त३ते ददामि३। नित्यः शब्दो भवितुमर्हति३। देवदत्त! किमात्थ३। "अनुदात्तं प्रश्नान्ताभिपूजितयोः" पा॰ अनुदात्तः प्लुतः स्यात्। दूराद्धूतादिषु सिद्धस्य प्लुतस्यानुदात्तत्वमात्रमनेन विधीयते। अग्निभूत३ इ। पट३ उ। अग्निभूते पटो एतयोः प्रश्नान्ते टेरनुदात्तः प्लुतः। शोभनः खल्वसि३ माणवक३। "चिदिति चोपमार्थे प्रयुज्यमाने" पा॰ वाक्यस्य टेरनुदात्तः प्लुतः। अग्निचिद्भाया३त्। अग्निरिव भायात् उपमार्थे किम् कथञ्चिदाहुः। प्रयुज्यमाने किम् अग्निर्माणवको भायात् "उपरिस्विदासीदिति च" पा॰ टेः प्लुतोऽनुदात्तः स्यात्। उपरिस्विदासी३त्। अधःस्विदासी३दित्यत्र तु विचार्य्यमाणानामित्युदात्तः प्लुतः। "स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु" पा॰ स्वरितः प्लुतः स्यादाम्रेडिते परेऽसूयादौ गम्ये। असूयायाम् अभिरूपक३ अभिरूपक रिक्तन्त आभिरूप्यम्। सम्मतौ। अभिरूपक३ अभिरूपक शोभनोऽसि। कोपे। अविनीतक३ अविनीतक इदानीं ज्ञास्यसि जाल्म!। कुत्सने। शाक्तीक३ शाक्तीक रिक्ता ते शक्तिः। "क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्" पा॰ आकाङ्क्षस्य तिङन्तस्य टेः स्वरितः प्लुतः स्यात् आचारभेदे आशिषि प्रैषेषु गम्यमानेषु। स्वयं ह रथेन याति३ उपाध्यायं पदातिं गमयति। प्रार्थनायाम्। पुत्रांश्च लप्सीष्ट३ धनञ्च तात। व्यापारणे। कटं कुरु३ ग्रामं गच्छ। आकाङ्क्षं किम्

दीर्घायुरसि अग्नीदग्नीन्विहर। "अनन्त्यस्यापि प्रश्नाख्यानयोः" पा० अनन्त्यस्यान्त्यस्यापि पदस्य टेः स्वरितः प्लुत एतयोः। प्रश्ने। अगम३ः पूर्वा३न् ग्रामा३न्। सर्वपदानामयम्। आख्याने अगम३म् पूर्वा३न् ग्रामा३न्। "प्लुतावैच इदुतौ" पा० यत्र दूराद्धूतादिषु प्लुतो विहितस्तत्रैव ऐचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लवेते। ऐ३ तिकायन!। औ३ पगव। चतुर्मात्रावत्र ऐचौ सम्पद्यते। "एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुतौ" पा० अप्रगृह्यस्य एचोऽदूराद्धूते प्लुतविषये पूर्वस्यार्द्धस्याकारः प्लुतः स्यादुत्तरस्य त्वर्द्धस्य इदुतौ स्तः। प्रश्नान्ताभिपूजितविचार्य्यमाणप्रत्यभिवादयाज्यान्तेष्वेव। प्रश्नान्ते। अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूत३ इ। अभिपूजिते। भद्रं करोषि पट३ उ। विचार्य्यमाणे। होतव्यन्दीक्षितस्य गृह३ इ। प्रत्यभिवादे। आयुष्मानेधि अग्निभूत३ इ। याज्यान्ते। स्तोमैर्विधेमाग्नय३ इ। परिगणनं किम् विष्णुभूते३ घातयिष्यामि त्वाम्। अदूराद्धूत इति न वक्तव्यम्। पदान्तग्रहणन्तु कर्त्तव्यम्। इह मा भूत् भद्रं करोषि गौ३रिति। अप्रगृह्यस्य किम् शोभने माले३। "आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः। अग्न३ इ पत्नीव" सि० कौ०

प्लुति स्त्री प्लु—भावे क्तिन्। प्लवने उत्प्लुत्यगमने। प्लुतिश्च शशादीनामिव गतिः (कस्यापि) समन्तात् जवादेर्गतिश्च। त्रिमात्रतयोच्चारणे च।

प्लुष दाहे भ्वा०पर०सक० सेट्। प्लोषति अप्लोषीत्। पुप्लोष उदित् क्त्वा वेट्। प्लुषित्वा प्लुष्ट्वा।

प्लुष दाहे दिवा०पर०सक० सेट्। प्लुष्यति लृदित् अप्लुषत्।

प्लुष सेके पूर्त्तौ च सक० स्नेहे अक० क्र्या० पर० सेट्। प्लुष्णाति अप्लोषीत् पुप्लोष।

प्लुषि पु० प्लुष—बा० कि। वकतुल्यतच्छवुक्ते १खगभेदे यजु० २४।२९ वेददीपः। २दाहके सर्पभेदे ऋ० १।१९१।१भा०। ३अल्पपरिमाणपुत्तिकादेहे शत०ब्रा० १४।४।१।२४ भाष्ये दर्शनम्। [मदकृम" भाग०

प्लुष्ट त्रि० प्लुष—क्त। दग्धे अमरः। "द्रोणास्त्रविप्लुष्टमिदं

प्लुस दाहे विभागे च दिवा०पर०सक० सेट्। प्लुस्यति इरित् अप्लुसत् अप्लोसीत् पुप्लोस। [तैत्ति० ७।५।८।५

प्लेङ्ख पु० प्र+इङ्ख—घञ् वेदे रस्य लः। प्रेङ्खे प्रकष्टकम्पने

प्लेव सेवने भ्वा०आत्म०सक०सेट्। प्लेवते अप्लेविष्ट। पिप्लेवे ऋदित् चङि न ह्रस्वः।

प्लोत न० प्र+वे—क्त संप्र०रस्य लः। सुश्रुतोक्ते शस्त्रकर्मोपकरणभेदे "अतोऽन्यतमं कर्म चिकीर्षता वैद्येन पूर्वमेवोपकल्पयितव्यानि तद्यथा यन्त्रशस्त्रक्षाराग्निशलाकाशृङ्गजलौकालाबूजाम्बवौष्ठपिचुप्लोतसूत्रपत्रपट्टमधुघृतवसापयस्तैलतर्पणकषायालेपनकल्कव्यजनशीतोष्णोदककटाहादीनि"। [दाहे न०

प्लोष पु० प्लुष—भावे घञ्। दाहे अमरः। भावे ल्युट्। प्लोषण

प्सा भक्षणे अदा०पर०सक० अनिट्। प्साति अप्सासीत्। पप्सौ। गतौ निघण्टुः।

प्सा स्त्री प्सा—भावे अङ्। भक्षणे त्रिका०।

प्सात त्रि० प्सा—कर्म्मणि क्त। भक्षिते अमरः।

प्सान न० प्सा—भावे ल्युट्। भोजने हेमच०।

प्सु पु० प्सा—बा० कु। रूपे निघण्टुः।

प्सुर त्रि० प्सु+वा० अस्त्यर्थे र। रूपवति ऋ० १०।२६।२भाष्ये

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसंकलिते वाचस्पत्ये पकारादिशब्दार्थसङ्कलनम्।

---

पकारादिषु शब्देषु केचित् शब्दा न सङ्कलिता केषाञ्चिच्चार्थभेदा भ्रमाच्चोक्तास्ते इतःपरं परिशिष्टे प्रदर्श्यन्ते।

## परिशिष्टम्

४२२५ पृष्ठस्थपद्मशब्दपरिशिष्टम्

"अष्टकासु भवेत् पद्मं तत्र दत्तं तथाऽक्षयम्" हेमा० श्रा० कालकण्ठोक्ते १५ अष्टकाश्राद्धे ।

४२२५ पृष्ठस्थ पद्मकशब्दपरिशिष्टम्

"यदा विष्टिर्व्यतीपातो भानुवारस्तथैव च । पद्मकं नाम तत्प्रोक्तमयनाच्च चतुर्गुणम्" हेमा० श्रा० यमोक्ते श्राद्ध- ५ कालभेदे न० ।

४३१४ पृ० पारावतशब्दस्य परिशिष्टम्

सर्वार्थचिन्तामण्युक्ते क्षेत्रहोराद्रेक्काणादिदशवर्गमध्ये येषु केषु चित् षट्सु शुभांशेषु । प्रसङ्गात् क्षेत्रादिदशवर्ग- निरूपणेन तत्र द्वित्रादिवर्गे एकैकस्य योगे नव विशेष- संज्ञाः तत्फलञ्च तत्रोक्तं प्रदर्श्यते तत्र क्षेत्रशब्दे क्षेत्रपतय उक्ताः द्रेक्काणाद्यधीश्वराः सर्वार्थ०उक्ता यथा "राशिं त्रिधा कृत्य द्रेक्काणमाहुस्तदीश१ पुत्रेश२ शुभाधि- नाथाः३ । युग्मेन्दुसूर्यौ भवने रवीन्दू नाथौ त्वयुग्मे भवनस्य चार्द्धे" । चरेऽशकानामधिपास्तदंशा राशौ स्थिरे तन्नवमेश्वराद्याः । द्विदेहभे तत्सुतराशिनाथाद्वदन्ति शास्त्रार्थविदो महान्तः । तत् क्षेत्रपा द्वादशभागनाथा लग्नस्य वर्गाधिपतिस्तदीयात् । त्रिंशांशपा भौमशनीज्य- सौम्यशुक्रा भवन्त्योजगृहे समे तु । विलोमतः पञ्चश- राष्टशैलबाणाः क्रमाद्बुधैरनेकशास्त्रैः । सप्तांशपास्त्वोज- गृहे तदीशाद्युग्मे गृहे सप्तमराशिपास्तु । दशांशपा- नामधिपास्तदीशादोजे समे तन्नवमेश्वराद्याः । ओजे १५ कलानामधिपास्तदीशाच्चतुर्मुखो (ब्रह्म) विष्णु ४५ हरो दिनेशः५० । युग्मे क्रमाद्व्युत्क्रमतमेव राशौ षष्ठ्यंश२०कानाम- धिपास्त्वयुग्मे । घोरांशको१ राक्षस२ देवभागौ३ कुबेर४ रक्षोगण५ किन्नरांशाः६ । भ्रष्टः७ कुलघ्नो८ गरला९ग्नि संज्ञौ१० मायांशकः११ प्रेतपुरीशभागः१२ । अपां पति- १३र्देवगणेशभागः१४ काला१५ऽहिभागा१६वमृतांशु१७ चन्द्रौ१८ । मृदंशकः१९ कोमल२० पद्मभागौ२१ ल- क्ष्मीश२२ वागीश२३ दिगम्बरांशाः२४ । देवार्द्रभागौ२५ २६। कलिनाशभागः२७ क्षितीश्वरांशः२८ कमलाकरांशः २९ । क्रमेण मन्दात्मज३० मृत्यु३१काल३२ दा- वाग्निघोरा३३ऽ३४मय३५ कण्टकाख्य३६ । सुधामृतांशुः३८ परिपूर्णचन्द्र३९ विषप्रदग्धो४० कलिनाश४१मुख्यौ४२ । वंशक्षयोत्पातककालरूपाः ४३।४४।४५ सौम्य४६श्च मृदंश ४७ सुशीतलांशू ४८। दंष्ट्रा४९ करालेन्दु५०मुख५१प्रवीणाः ५२ कालाग्नि५३दण्डायुध५४निर्मलांशाः५५ । शुभाशु- भांशा५६।५७ वतिशीतलांशः५८ सुधापयोधिभ्रमणेन्दु- रेखाः५९।६०। शेषाः क्रमाद्व्युत्क्रमतमेव युग्मे शुभान्वि- तांशो यदि शोभनाप्तिः । क्रूराः षष्ठ्यंश(२०)गाः सर्वे नाशयन्ति खचारिणः । परिपूर्णबलैर्युक्ता स्वोच्चमूलत्रि- कोणगाः । स्वर्क्षकेन्द्रोत्तमांशस्था मित्रक्षेत्रत्रिकोणगाः । सप्तवर्गोद्भवाः स्वांशाः स्वाधिमित्रांशकान्विताः । वर्गास्तु ये दश प्रोक्ताः पूर्वाचार्यैर्महर्षिभिः । भवन्ति वर्गसंयोगे पारिजातादिसंज्ञकाः१० दुःस्थारिनीचमूढस्था ग्रहा बल- विवर्जिताः । मरणावस्थगाश्चेत्तु पारिजातादिनाश- काः" । अयं पक्षो नादरणीयः । सत्पक्षस्तु स्वतांशे स्वनवांशके स्वभवन इति ग्राह्याः।"उत्तमं१ तु त्रिवर्गैक्यं चतुर्वर्गन्तु गोपुरम्२। वर्गपञ्चकसंयोगे सिंहासन३मिहो- च्यते । वर्गद्वयं पारिजातः४षष्ठां पारावतांशकः५ । सप्तमं देवलोकः६ स्यादष्टमं च तथा भवेत् । ऐरावतं९ तु नवमं फलं तेषां पृथक् पृथक् । दशवर्गस्य संयोगे विदुर्वैशेषिकां- शकान् १० । ऐरावते सार्वभौमः सर्वैश्वर्यसमन्वितः । देव- लोके६ महादानकर्त्ता राजा क्षितीश्वरः । पारावते५ मा- तुलिकः सर्वशास्त्रविशारदः । सिंहासने३ भवेद्भूमिपतिः सर्वैः स्तुतो महान् । गोपुरे२ धनवान्नित्यं सर्वविद्याविशा- रदः । उत्तमे१ सकला सम्पत् पारिजाते४ धनान्वितः । स्वांशे १० यशस्वी मतिमान् सर्वसौख्यसमन्वितः" ।

४२२८ पृ० पिण्डशब्दपरिशिष्टम् ।

तत्र संहतस्य एकीकृतः यथा "वणमनूनां तु संपिण्ड्य कार्य्यं तत्सखिभिः सह" रघु०वि० व्याख्याने "संपिण्ड्य एकी- कृत्य रघुनाथः । संपिण्ड्य मिश्रितं मिलितं कृत्वेत्यर्थः । तथा च बहुगणानयने प्रथममवदानां द्वन्द्वमेकत्र कार्य- मिति बोध्यम् । केरलशब्दे २२४१ पृ० प्रश्नमनोरमाद- र्शिते "वर्गवर्णप्रमाणञ्च सस्वरं ताडितं मिथः । पिण्ड- संज्ञा भवेत् तस्य यथाभागैस्तु कल्पना" इत्युक्ते१ पदार्थे च ।

४३३४ पृ० पितृपक्षशब्दपरिशिष्टम्

गौणाश्विनकृष्णपक्षे ४प्रेतपक्षे तच्छब्दे दृश्यम् ।

४३३६ पृष्ठस्थपित्तलशब्दपरिशिष्टम् ।

सुश्रुतोक्ते योनिरोगभेदे स्त्री स्त्रीणां ५योनिरोगा विंश- तिविधा उदावर्त्तशब्दे ११६२ पृ० सुश्रुतोक्ता दर्शिताः । तेषां लक्षणान्यत्रोच्यन्ते "सफेनिलमुदावर्त्ता रजःकृच्छ्रेण मुञ्चति । बन्ध्यां नष्टार्त्तवां विद्यादिप्लुतां२ नित्यवेदनाम् । परिप्लुतायां४ भवति ग्राम्यधर्मे रुजा भृशम् । वातला५

कर्कशस्तब्धा शूलनिस्तोदपीडिता। चतसृष्वपि चाद्यासु भवन्त्यनिलवेदनाः। यदार्हं प्रकिरत्यसृग्‌ यस्याः सा लोहितक्षरा६। सवातमुद्गिरेद्बीजं वामिनी ७रजसा युतम्। प्रस्रंसिनी८स्पन्दते तु क्षोभिता दुःप्रसूश्च या। स्थितं स्थितं हन्ति गर्भं पुत्रघ्नी९ रक्तसंस्रवात्। अत्यर्थं पित्तला१० योनिर्दाहपाकज्वरान्विता। चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत्। अत्यानन्दा११ न सन्तोषं ग्राम्यधर्मेण गच्छति। कर्णिन्यां१२ कर्णिका योनौ श्लेष्मासृग्भ्यां तु जायते। मैथुनाच्चरणात् पूर्वा १३ पुरुषादतिरिच्यते। बहुशश्चातिचरणात्तयो१४ बीजं न विन्दति। श्लेष्मला१५ पिच्छिला योनिः कण्डूयुक्तातिशीतला। चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रितिर्भवेत्। अनार्त्तवस्तना षण्ढी १६ खरस्पर्शा च मैथुने। अतिकायगृहीतायास्तरुण्याः फलिनी१७ भवेत्। विवृता महती१८योनिः सूचीवक्त्रा१९ऽतिसंवृता। सर्वलिङ्गसमुत्थाना सर्वदोषप्रकोपजा २०। चतसृष्वपि चाद्यासु सर्वलिङ्गोच्छ्रितिर्भवेत्"।

४२२८ पृ०पिष्टपचनशब्दात् परम परिशिष्टम्

**पिष्टपशु** पु० पिष्टमयः पशुः। यज्ञे पशुस्थाने पिष्टमये पशौ तथा हि पिष्टपशुमीमांसायाम् अनिष्टसाधनस्यापि हिंसाया वैदिकमन्त्रद्वारा संस्कारविशेषे जनिते इष्टसाधनत्वं यथा विषादेरनिष्टसाधनस्यापि वैद्योक्तसंस्कारभेदे कृते इष्टसाधनत्वम्। एवञ्च वैद्योक्तविषसंस्कारस्य किञ्चिदङ्गवैगुण्ये यथा नेष्टसाधनत्वमेवं वैदिकप्रयोगे मन्त्रादीनां यथोक्तस्वरादिवैगुण्येऽपि न हिंसाया इष्टसाधनत्वम्। विशेषतः सांख्यमते हिंसाया इष्टसाधनत्वेऽपि अनिष्टान्तरसाधनत्वमुररीकृतम्। तथा च वेदोच्चारणादौ सामर्थ्यहीनानामिदानीन्तनानां सुतरां पशुयागादौ पिष्टपशुनैव यागो विधेयः न तु साक्षात् पशुनेति व्यवस्थापितम्। मनुनापि "कुर्य्याद् घृतपशुं सङ्गे कुर्य्यात् पिष्टपशुं तथा" इत्यनेन कामनारूपासक्तौ पिष्टपशोरेव विधानमुक्तम्। एतन्न्यायानुसारेणैव भा०आश्व०९१अ० "आलम्भसमये तस्मिन् गृहीतेषु पशुष्वथ। महर्षयो महाराज! बभूवुः कृपयान्विताः। ततो दीनान् पशून् दृष्ट्वा ऋषयस्ते तपोधनाः। ऊचुः शक्रं समागम्य नायं यज्ञविधिः शुभः। अपरिज्ञानमेतत्ते महान्तं धर्ममिच्छतः। न हि यज्ञे पशुगणा विधिदृष्टाः पुरन्दर!। धर्मोपघातकस्त्वेष समारम्भस्तव प्रभो!। नायं धर्मकृतो यज्ञो न हिंसा धर्म उच्यते। आगमेनैव ते यज्ञं कुर्वन्तु यदि चेच्छसि। विधिदृष्टेन यज्ञेन धर्मस्ते सुमहान् भवेत्। यज बीजैः सहस्राक्ष! त्रिवर्षपरमोषितैः। एष धर्मो महान् शक्र! महागुणफलोदयः"।

४२९२ पृष्ठस्थपुष्पस्नानशब्दात् परम परिशिष्टम्।

**पुष्यानुग** न० चक्रदत्तोक्ते चूर्णभेदे "अम्बष्ठकीमोचरसौ समङ्गापद्मकेशरान्। वाह्लीकातिविषामुस्तं बिल्वं लोध्रं सगैरिकम्। कट्फलं मरिचं शुण्ठीं मृद्वीकां रक्तचन्दनम्। कट्वङ्गवत्सकानन्तधातकीमधुकार्जुनम्। पुष्येणोद्धृत्य तुल्यानि श्लक्ष्णचूर्णानि कारयेत्। तानि क्षौद्रेण संयुज्य पाययेत् तण्डुलाम्बुना। असृग्दरातिसारेषु रक्तं यश्चोपवेश्यते। दोषागन्तुकृता ये च बालानां तांश्च नाशयेत्। योनिदोषं रजोदोषं श्वेतं नीलं सपीतकम्। स्त्रीणां श्यावारुणं यच्च तत् प्रसह्य निवर्त्तयेत्। चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम्"।

४४२७पृ० प्रकृतिशब्दस्य परिशिष्टम्

राज्ञां पुरोहितादिषु२१ दशसु सुमन्त्रादिषु२२ अष्टासु च यथोक्तं शुक्रनीतिशास्त्रपरिशिष्टे

"पुरोधाश्च प्रतिनिधिः प्रधानः सचिवस्तथा। मन्त्री च प्राड्विवाकश्च पण्डितश्च सुमन्त्रकः। अमात्यो दूत इत्येता राज्ञः प्रकृतयो दश। दशमांशाधिकाः पूर्वा दूतान्ताः क्रमशः स्मृताः। अष्टप्रकृतिभिर्युक्तो नृपः कैश्चित् स्मृतः सदा। सुमन्त्रः पण्डितो मन्त्री प्रधानः सचिवस्तथा। अमात्यः प्राड्विवाकश्च तथा प्रतिनिधिः स्मृतः। एताश्चतिसमास्त्वष्टौ राज्ञः प्रकृतयः सदा"। एतेषां लक्षणानि तत्रैवोक्तानि इह तानि विस्तरभयान्नोक्तानि।

४४११ पृष्ठस्थप्रगल्भशब्दात् पूर्वम परिशिष्टम्

**प्रगदिन्** त्रि० प्रगदति वा० शीलार्थे इनि। प्रकर्षेण कथनशीले स्त्रियां ङीप् ततः प्रगद्या० चतुरर्थ्यां ञ्य। प्रागद्य तद्दूरदेशादौ त्रि०।

**प्रगद्यादि** पु० चतुरर्थ्यां ञ्यप्रत्ययनिमित्ते शब्दगणे स च गणः पा०ग० उक्तो यथा "प्रगदिन् मगदिन् मदिन् कविल खण्डित गदित चूडार मडार मन्दार कोविदार"

४४९९पृष्ठस्थप्रसाधनशब्दस्य परिशिष्टम्

प्रसाधनीकरणप्रकारश्च युक्तिकल्पतरावुक्तो यथा

"प्रसाधनी दिङ्नवनागप्रशस्ताभिरक्ताङ्गुलिभिः कृतैव। चतुर्विधानां पृथिवीपतीनां सम्पत्तिसौभाग्ययशःसमृद्धिदा। काष्ठजा नागजा चैव शृङ्गजा च यथाक्रमम्। जाङ्गलानूपसाधारणदेशजानां महीभुजाम्।

ष्टादशप्रवदुद्भवः कामजाया विनिश्चयः। कनकं रजतं ताम्रं पित्तलं सीसकं तथा। लौहं सर्वेषु सर्वार्थमादित्यादिदशाभुवाम्। राज्ञामेवोपयुज्येत कामकीर्त्तिप्रसाधनी। स्वगाणां भट्टिनाद्यासु स्वक्षुद्राता प्रसाधनी। गजदन्तसमद्भूता राज्ञामेवोपयुज्यते। अत्रापि रत्नविन्यासो यथैवामरदन्तवत्"।

४५०४ पृष्ठस्थप्राकृतशब्दस्य परिशिष्टम्

प्राकृतभाषा च अष्टादशभाषामध्ये भाषाभेदः। तासां श्राद्य सा०द० उक्ता यथा "पुरुषाणामनीचानां संस्कृतां स्यात् कृतात्मनाम्। शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम्। आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत्। अत्रोक्ता मागधी भाषा राजान्तःपुरचारिणाम्। चेटानां राजपुत्राणां श्रेष्ठिनां चार्द्धमागधी। प्राच्या विदूषकादीनां धूर्त्तानां स्यादवन्तिका। योधनागरिकादीनां दाक्षिणात्या हि दीव्यताम्। शकाराणां शकादीनां शाकारीं सम्प्रयोजयेत्। बाह्लीकभाषा दिव्यानां द्राविडी द्रविडादिषु। आभीरेषु तथाऽऽभीरी चाण्डाली पुक्कसादिषु। आभीरी शावरी चापि काष्ठपत्त्रोपजीविषु। तथैवाङ्गारकारादौ पैशाची स्यात् पिशाचवाक्। चेटीनामप्यनीचानामपि स्यात् शौरसेनिका। बालानां षण्ढकानाञ्च नीचग्रहविचारिणाम्। उन्मत्तानामातुराणां सैव स्यात् संस्कृता क्वचित्। ऐश्वर्येण प्रमत्तस्य दारिद्र्योपद्रुतस्य च। भिक्षुबन्धधरादीनां प्राकृतं सम्प्रयोजयेत्। संस्कृतं सम्प्रयोक्तव्यं लिङ्गिनीषूत्तमासु च। देवीमन्त्रिसुतावेश्यास्वपि कैश्चित्तथोदितम्। यद्देशं नीचपात्रन्तु तद्देशं तस्य भाषितम्। कार्यतश्चोत्तमादीनां कार्यो भाषाविपर्ययः। योषित्सखीबालवेश्याकितवाप्सरसां तथा। वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा"। तत्तल्लक्षणादि भाषाशब्दे द्रष्टव्यानि।

४५२२ पृष्ठस्थ प्रातर्शब्दस्य परिशिष्टम्

"प्रहरोऽर्द्धसंयुक्तः प्रातरित्यभिधीयते" नि॰सि॰ मा॰ धृतोक्ते द्वित्रिमात्राद्ध्वे इसार्द्धप्रहरात्मके काले।

# फ

फकारः पवर्गस्य द्वितीयवर्णः सर्ववर्णेषु द्वाविंशतितमः। अस्योच्चारणस्थानमोष्ठौ तस्योच्चारणे चाभ्यन्तरः प्रयत्नः जिह्वायाः ओष्ठाभ्यां सह स्पर्शः अतएवास्य स्पर्शवर्णता। बाह्याः प्रयत्नाः विवारश्वासाघोषाः महाप्राणश्च। अस्मिन् परे विसर्गस्य स्थाने उपध्मानीयः ᳵ। तन्त्रे वर्णाभिधाने अस्य वाचकशब्दा उक्ता यथा "फः सखो दुर्गिणी धूम्रा वामपार्श्वो जनार्दनः। जया पादशिरा रौद्री फेत्कारः शाखिनी प्रियः। दक्षा विहङ्गमः कण्ठः कुञ्जिनी प्रियपावकौ। प्रलयाग्निर्नीलपादोऽक्षरः पशुपतिः शशी। फुत्कारो यामिनी व्यक्ताप्यपानो मोहवर्द्धनः। निष्फलवायुह्ङ्कारः प्रयागो ग्रामणी फलम्"। तदीयदेवताध्यानं यथा "प्रवालाम्बुदवर्णाभां ललज्जिह्वां चतुर्भुजाम्। भक्ताभयप्रदां नित्यां नानालङ्कारभूषिताम्। एवं ध्यात्वा फकारन्तु तन्मन्त्रं दशधा जपेत्" वर्णोद्धारतन्त्रम्। अस्य ध्येयस्वरूपं यथा "फकारं शृणु चार्वङ्गि! रक्तविद्युल्लतोपमम्। चतुर्वर्गप्रदं वर्णं पञ्चदेवमयं सदा। पञ्चप्राणमयं वर्णं सदा त्रिगुणसंयुतम्। आत्मादितत्त्वसंयुक्तं त्रिबिन्दुसहितं सदा" कामधेनुतन्त्रम्। मातृकान्यासेऽस्य वामपार्श्वे न्यासः। काव्यादावस्य प्रथमविन्यासफलं फकारशब्दे उक्तं दृश्यम्।

फ न॰ फक्क—ड। १रूक्षवचने २निष्फलवाक्ये ३फुत्कारे च मेदि॰ ४झञ्झावाते ५वर्द्धने ६जृम्भाविस्फारे ७फलभागे च पु॰ विश्वः।

फकार पु॰ फ+स्वरूपे कार। फस्वरूपे वर्णे।

फक्क असदाचारे मन्दगतौ च भ्वा॰पर॰सक॰ सेट्। फक्कति अफक्कीत् पफक्क।

फक्किका स्त्री फक्क—धात्वनिर्देशे भावे ण्वुल्—टाप् अतइत्त्वम्। १व्यवहारे (फाँकि) २तत्त्वनिर्णयार्थं पूर्वपक्षे च "फणिभाषितभाष्यफक्किका" इति नैषधम्।

फगुन पु॰ गोत्रप्रवर्त्तिभेदे प्रवराध्यायः।

फञ्जिका स्त्री भञ्जति रोगान् भञ्ज—मर्दने ण्वुल् पृषो॰। (बामनहाटि) गुल्मे अमरः। २देवताडे ३ब्रह्मयष्टिभार्यां शब्दरत्ना॰।

फञ्जिपत्रिका स्त्री भञ्ज—णिनि पृषो॰ फञ्जि रोममर्दि—पत्रं यस्याः। आखुकर्णाम् (उन्दुरकानि) रत्नमा॰।

**फञ्जि(ञ्जी)** स्त्री भनृज–इन् पृषो॰ वा ङीप्। भार्ग्याम् (बामनहाटि) राजनि॰।

**फट** पुंस्त्री॰ स्फुट–विकाशे अच् पृषो॰। १सर्पाणां फणायाम् अमरः स्त्रियां टाप्। सा च २दन्ते मेदि॰ ३कितवे पु॰ हेमच॰।

**फट्** अव्य॰ स्फुट–क्विप् पृषो॰। १योगे तन्त्रोक्ते २अस्त्रनामके मन्त्रभेदे च। ३अनुकरणशब्दे तस्य नम आदिवद् द्रव्यविशेषस्य त्यागार्थताऽपि। शान्तिकुम्भचालने, अर्घ्यपात्रचालने, अर्घ्यजलेन पूजोपकरणाभ्युक्षणे, अन्तरीक्षगविघ्नोत्सारणाय विकिरक्षेपणे, गन्धपुष्पाभ्यां करशोधने, अघमर्षणे पापपुरुषताड़ने, कराङ्गन्यासे, नैवेद्यप्रोक्षणे, होमाग्नेः क्रव्यादांशत्यागे, होमाग्न्यावाहने, तद्‌ग्निप्रोक्षणादौ च इत्यादिषु कर्मसु अस्य प्रयोगः नानातन्त्रेषु दर्शितः। [स्वातायां झिल्लिकायां शब्दच॰।

**फडिङ्गा** स्त्री फडिति इङ्गते इङ्ग–अच्। (फड़िङ)

**फण** अनायासेनोत्पत्तौ भ्वा॰पर॰ सक॰ सेट्। फणति अफाणीत्–अफणीत् पफाण। फणा॰ फेणतुः पफणतुः।

**फण** गतौ भ्वा॰पर॰सक॰ सेट्। फणति अफाणीत् अफणीत् मित् वा घटादि॰। णिचि फाणयति फणयति फणादि॰।

**फण** पुंस्त्री॰ फण–अच्। दर्व्याकारे बहुविकाशवति सर्पमस्तके अमरः।

**फण(णा)कर** पु॰फणः(णा) कर इव यस्य। सर्पे शब्दरत्ना॰।

**फणादि** न॰ “फणाञ्च सप्तानाम्” पा॰ किति लिटि सेटि थलि च परे एत्वाभ्यासलोपनिमित्ते धातुवर्गे तच्च धातुपाठे उक्तं यथा “फण राज भ्राज भ्रास भ्लास स्यम स्वन” सि॰कौ॰ भ्वादौ द्रष्टव्यः।

**फण(णा)धर** पुंस्त्री॰ फणं(णां) धरति धृ–अच्। सर्पे शब्दरत्ना॰। स्त्रियां जातित्वात् ङीप्। फण(णा)भृदादयोऽप्यत्र।

**फणाभर** पुंस्त्री॰ फणां बिभर्ति भृ–अच्। सर्पे हारा॰ स्त्रियां जातित्वात् ङीष्। [छन्दः।

**फणिकार** पु॰ देशभेदे स च देशः वृ॰सं॰ १४अ॰ दक्षिणस्या-

**फणिकेसर** पु॰ फणिनामकः केसरः। नागकेसरे राजनि॰।

**फणिखेल** पुंस्त्री॰ फणिना खेलति खेल–अच्। (भारुइ) खगे त्रिका॰ स्त्रियां ङीष्।

**फणिचक्र** न॰ फणाकारं चक्रम्। विवाहादौ शुभाशुभसूचकनाडीकूटज्ञापनार्थे चक्रभेदे उपयमशब्दे १२१४ पृ॰ दृश्यम्।

**फणिजा** स्त्री फणीव जायते जन–ड। (फणिमनसा) वृक्षे रत्नमा॰। [शतावर्याम् २महासमङ्गायाञ्च राजनि॰।

**फणिजिह्वा** स्त्री फणिजिह्वा आकारोऽस्त्यस्य अच्। १महा-

**फणिज्झक** पु॰ फणिनमुज्झति उज्झ–ण्वुल् पृषो॰। १तुलसीभेदे २जम्बीरसामान्ये च अमरः।

**फणितल्पग** पु॰ फणिरूपे तल्पे गच्छति तिष्ठति गम–ड। शेषशायिनि विष्णौ शब्दार्थकल्प॰।

**फणिन्** पु॰ फणा अस्त्यस्य इनि। दर्वीकरे सर्पभेदे अमरः। अहिशब्दे ५८१ पृ॰ तद्भेदाः दृश्याः। २सर्पिणीनामकौषधौ स्त्री राजनि॰। ३शेषावतारे पतञ्जलिमुनौ पु॰ स च पाणिनीयभाष्यकारकः योगसूत्रकारकश्च तयोर्भेद ऐक्यं वा

**फणिप्रिय** पु॰ फणिनां प्राणप्रदत्वात् प्रियः। वायौ शब्दर॰ सर्पाणां वायुभक्षकत्वेन वायोस्तत्प्रियत्वम्।

**फणिफेन** न॰फणिनां फेन इव। (आफिङ)अहिफेने रत्नमा॰

**फणिभुज्** पु॰ फणिनं भुङ्क्ते भुज–क्विप्। पन्नगाशने गरुडे

**फणिमुख** न॰फणिन इव मुखमस्य। स्तेयसाधनोपयोगिनि खनित्राद्युपयोगार्थे यन्त्रभेदे दशकुमा॰।

**फणिवल्ली** स्त्री फणिसदृशी दीर्घा, फणिलोकस्था वा वल्ली। नागवल्ल्याम् (पानलता) फणिलतादयोऽप्यत्र हेमच॰।

**फणिहन्त्री** स्त्री फणिनं हन्ति हन–तृच् ङीप्। गन्धनाकुल्याम् राजनि॰। [वृद्धदारभार्यां राजनि॰।

**फणिहृत्** स्त्री फणिनं हरति अपसारयति हृ–क्विप्। वृ-

**फणीन्द्र** पु॰ ६त॰। सर्पेश्वरे अनन्ते २वासुकौ च।

**फणीश्वर** पु॰ ६त॰। १अनन्ते २वासुकौ शब्दरत्ना॰।

**फणीश्वरचक्र** न॰ नक्षत्रभेदे शनिस्थित्या सप्तद्वीपस्य शुभाशुभसूचके चक्रभेदे चक्रशब्दे २८२॰ दृश्यम्।

**फण्ड** पु॰ फण–गतौ ड तस्य नेत्त्वम्। जठरे उणादिकोषः।

**फत्कारिन्** पु॰ फदित्यव्यक्तं करोति कृ–णिनि। खगभावे शब्दच॰।

**फर** न॰ फल+अच् लस्य रः। फलके भरतः।

**फरुवक** न॰ पूगपात्रे हारा॰। [शफरी फर्फरायते” उद्भटः।

**फर्फर** त्रि॰ स्फुर–अच् पृषो॰। अत्यन्तचले “गण्डूषजलमात्रेण

**फर्फरीक** न॰ स्फुर–ईकन् “फर्फरीकादयश्च” उणा॰ नि॰। १नवपल्लवे उज्ज्वल॰। २चपेटे पु॰ ३मृदुत्वे न॰ मेदि॰। ४पादुकायां स्त्री संक्षिप्तसारः।

**फर्व** गतौ भ्वा॰पर॰सक॰ सेट्। फर्वति अफर्वीत् पफर्व। “प्रफर्व्यं च पीवरी” यजु॰ १२।७१ वेददी॰ “फर्वतिः पूरणार्थः” ऋ॰ १०।१०६।२ भा॰ दृश्यम्।

फर्वर त्रि० फर्व--पूरणे वरच्। पूरके उज्ज्व०१।१०६।रत्ना०।

फल भेदने भ्वा०पर०सक०सेट्। फलति अफालीत् पफाल फेलतुः आदित् आरम्भे भावे क्त वा इट्। फुल्तः फलितः। फुल्तम् फलितम् अन्यत्र फलितः इत्येव। जीत् वर्त्तमाने क्त। फलितः।

फल निष्पत्तौ भ्वा०पर०अक०सेट्। फलति अफालीत्। पफाल फेलतुः। क्त फलितः।

फल गतौ भ्वा०पर०सक० सेट्। फलति अफालीत्। अवा० कर्त्तरि वा च। फलः फालः। फलयति फालयति।

फल न०फल--अच्।१वृक्षादीनां शस्ये २लाभे ३फलके (ढाल) ४कार्य्ये ५उद्देश्ये ६प्रयोजने अमरः ७जातीफले ८त्रिफलायां ९कक्कोले मेदि०१०वाणाग्रे ११आर्त्तवे शब्दर०१२फाले हेम० १३दाने धर०।१४शस्ये च।१५कुटजवृक्षे पु०शब्दर०। १६धात्वर्थनिष्पाद्ये प्रधानोद्देश्ये प्रयोजने "स्वरितञित आत्मनेपदं कर्त्रभिप्राये क्रियाफले" पा०। "यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः। तत् प्रधानं फलं तेषां न लाभादि प्रयोजनम्" हरिः। तेन पाकादिजन्यं भोजनं यागादिजन्यञ्च पुण्यमेव फलम्। न वेतनादिलाभरूपं फलं तेन सूदकस्य ऋत्विगादेर्वा न धात्वर्थजन्यफलभागित्वम्। धात्वर्थजन्ये १७संयोगादौ च "फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः। फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्" हरिः। धात्वर्थशब्दे दृश्यम्। गौतमोक्ते १८प्रमेयभेदे तल्लक्षणञ्च तत्रोक्तं यथा

"आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" गौ०सू०उद्दिश्य "प्रवृत्तिदोषजनितोऽर्थः फलम्" गौ० सू०। "सुखदुःखसंवेदनं फलम् सुखविपाकं कर्म दुःखविपाकञ्च तत् पुनर्देहेन्द्रियविषयबुद्धिषु सतीषु भवतीति सह देहादिभिः फलमभिप्रेतम् तथा हि प्रवृत्तिदोषजनितोऽर्थः फलमेतत् सर्वं भवति तदेतत् फलमुपात्तमुपात्तं हेयं, त्यक्तं त्यक्तमुपादेयमिति नास्य हानोपादानयोर्निष्ठा,पर्य्यवसानं वाऽस्ति स खल्वयं फलस्य हानोपादानस्रोतसोह्यते लोक इति" वात्स्या०। "अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्मणः फलम्। भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित्" गीता। लवणादिसंयोगे फलस्यास्तमत्वं यथा "तक्रं तोऽग्निसंयोगाल्लवणेन च पिष्टकम्। फलं त्रितयसंयोगादस्तं भवति तत्क्षणात्" रामार्चनचन्द्रिकाधृतवचनम् १९निष्पन्ने त्रि०।

फलक न० स्वार्थे क। (ढाल) इति ख्याते चर्ममये अस्त्रप्रतिघातनिवारके १पदार्थे। २अस्थिखण्डे जटाध०३नागकेशरे ४काष्ठादिपट्टके च मिता०।

फलकक्ष पु० यक्षभेदे भा०स० १०अ०।

फलकण्टक पु०फले कण्टकं यस्य। कण्टकिफलवृक्षे नैघण्टुप्र०

फलकपाणि पु०फलकं पाणौ यस्य। (ढालि) चर्मिणि अम०

फलपुर न० पुरभेदे तस्य नान्तोदात्तता।

फलकयन्त्र न० सि०शि० उक्ते यन्त्रभेदे यथा

"कर्त्तव्यं चतुरस्रकं सुफलकं स्वाङ्गा९०ङ्गुलैर्विस्तृतं विस्ताराद्द्विगुणा१८०यतं सुगणकेनायाममध्ये तथा। आधारः सुषिरञ्च लम्बादिघटितः कार्य्यश्च रेखा ततस्त्वाधारादवलम्बसूत्रसदृशी सा लम्बरेखोच्यते। लम्बं नवत्य९०ङ्गुलकैर्विभज्य प्रत्यङ्गुलं तिर्य्यगतः प्रसार्य्य। स्यूतानि तत्रायतसूत्ररेखा जीवाभिधानाः सुधिया विधेयाः। आधारतोऽधः खगुणा३०ङ्गुलेषु ज्यालम्बयोगे सुषिरं च सूक्ष्मम्। इष्टप्रमाणा सुषिरे शलाका ज्ञेयाऽक्षसंज्ञा खलु सा प्रकल्प्या। षष्ट्यङ्गुलव्यासमतश्च रन्ध्रात् कृत्वा वृत्तं परिधौ तदङ्क्यम्। षष्ट्या घटीनां भगणांश ३६०कैश्च प्रत्यंशकं चाप्युपलैश्च दिग्भिः। अथ शरज्ञा तनुपट्टिकैका षष्ट्यङ्गुला दीर्घतया तथाङ्क्या" मू०।

"अस्यादौ धातुमयं श्रीपर्ण्यादिदारुमयं वा फलकं चतुरस्रं स्वच्छं समं कर्त्तव्यम्। तच्च नवत्यङ्गुलविस्तारं द्विगुण१८०विस्तारदैर्घ्यम्। तत्समीपे दैर्घ्यमध्ये तस्याधारः शिथिलः श्रृङ्खलादिः कार्य्यः। आधारे धृतं यन्त्रं यथा लम्बमानं स्यात् तथा धृते फलके आधारादधःसूत्रसमवलम्बरेखा कार्य्या। सा च लम्बसंज्ञा। तं लम्बं नवतिभागं कृत्वा भागे भागे तिर्य्यग्रेखा दीर्घा कार्य्या। तिर्य्यक्त्वं तु लम्बभवाल्पतृत्वात्। सा रेखा ज्यासंज्ञा ज्ञेया। आधारादधस्त्रिंशदङ्गुलान्तरे या ज्या तस्याः लम्बस्य च सम्पाते सुषिरम्। तत्रेष्टप्रमाणा शलाका ज्ञेया साऽक्षसंज्ञा। तस्माद्रन्ध्रात् त्रिंशदङ्गुलेन कर्कटकेन वृत्तरेखा कार्य्या। सा षष्टि६० घटिकाभिर्भगणांशकैः खण्डनसंख्यैः ३६० प्रत्यंशं दशभिर्दशभिः पानीयफलैश्चाङ्क्या। अथ ताम्रादिमयी वंशजा काष्ठमयी वा पट्टिका षष्ट्यङ्गुला६० दीर्घतया तैरेव फलकाङ्गुलैस्तथैवाङ्किता कार्य्या। सा पट्टिकार्धाङ्गुलविस्तृता। एकस्मिन् पार्श्वेऽङ्गुलविस्तृता कुठाराकारा कार्य्या। तत्र विस्तारमध्ये छिद्रं कार्य्यम्। अन्यस्मिन्नीतायाः पट्टिकाया अग्रो-

**फलेन्द्र** पु० फलेन इन्द्र ऐश्वर्यान्वितः। राजजम्बूवृक्षे।
"फलेन्द्रा कथितानन्दा राजजम्बूर्महाफला" भावप्र०।

**फलेपुष्पा** स्त्री फले फलस्थाने पुष्पमस्याः। द्रोणपुष्पीवृक्षे भावप्र०

**फलेरुहा** स्त्री फले तन्निमित्तं रोहति रुह–क। पाटलिवृक्षे अमरः।

**फलोत्तमा** स्त्री फलेन उत्तमा। १द्राक्षाभेदे राजनि०। २त्रि-फलायां वैद्यकप्र०। [ष्ठत०। २फलस्योत्पत्तौ स्त्री।

**फलोत्पत्ति** पु० फलाय उत्पत्तिरस्य। १आम्रवृक्षे शब्दच०।

**फलेच्छक** पु० १यक्षभेदे भा० स० १०अ०। २फलकामे त्रि०।

**फलोदय** पु०६त०।१फलोत्पत्तौ २लाभे ३स्वर्गे ४हर्षे च शब्दर०

**फल्क** पु० फल–क नेत्वम्। विशोधिताङ्गे उज्ज्वलद०।

**फल्गु** त्रि०फल–उ गुक् च। १रम्ये मेदि० २असारे अमरः। ३निरर्थके त्रिका०४मिथ्यावाक्ये शब्दर०५गयातीर्थस्थनद्यां स्त्री। मेदि० (फागु) इति ख्याते धूलिरूपे ६पदार्थे ७वसन्तसमये, जटा०। ८काकोडुम्बरिकायाम् अमरः। फल्गुतीर्थमाहात्म्यं यथा "फल्गुतीर्थं व्रजेत् तस्मात् सर्वतीर्थोत्तमोत्तमम्। मुक्तिर्भवति पितॄणां कर्तॄणां आदृतः सदा। ब्रह्मणा प्रार्थितो विष्णुः फल्गुको ह्यभवत् पुरा। दक्षिणाग्निहुतं न्यून तद्रजः फल्गु-तीर्थकम्। तीर्थानि यानि सर्वाणि भुवनेष्वखिलेष्वपि। तानि स्नातुं समायान्ति फल्गुतीर्थं सुरैः सह। गङ्गा-पादोदकं विष्णोः फल्गुर्ह्यादिगदाधरः। स्वयं हि द्रवरूपेण तस्माद्गङ्गाधिकं विदुः। अश्वमेधसहस्राणां सहस्रं यः समाचरेत्। नासौ तत्फलमाप्नोति फल्गु-तीर्थे यदाप्नुयात्" वायुपु० गयामा०।

**फल्गुदा** स्त्री फल्गुनद्यां "तत्र देशे गया नाम पुण्यदेशोऽस्ति पावनः। नदी च फल्गुदा नाम पितॄणां स्वर्गदायिनी" वृहद्धर्म पु०। [नामि २अर्जुने च भरतः।

**फल्गुन** पु० फल्गुनू र्थभेदो गीयतेऽस्मिन् गी–ड। १फाल्गुने

**फल्गुनी** स्त्री फल–उनन् गुक् च गौरा०ङीष्। १काकोडुम्बरिकायाम् राजनि०। अश्विन्यवधिके एकादशे द्वादशे च २नक्षत्रे च श०र० भरतः।

**फल्गुलुका** वायुकोणस्थे देशभेदे वृ०सं० १४अ०।

**फल्गुवाटिका** स्त्री फल्गूनां वाटीव इवार्थे कन्। काको-डुम्बरिकायाम् राजनि०।

**फल्गुवृन्ताक** पु० फल्गुना रम्येण वृन्तेन आकायति आ+कै–क। श्योनाकभेदे। राजनि०।

**फल्गूत्सव** पु० फल्गुनिमित्तक उत्सवः। फाल्गुनपौर्ण-मास्यादिषु कर्त्तव्ये (आवीर)फल्गुद्रव्यकरणे उत्सवे "गो-विन्दानुमहोत्सवं यात्राङ्गं तत्प्रकीर्त्तितम्। फल्गूत्सवं प्रकुर्वीत पञ्चाहानि त्र्यहाणि वा" दोलयात्रापद्धतिः।

**फल्य** न० फलाय हितं यत्। पुष्पे शब्दच०।

**फल्लकिन्** पु० फलक+पृषो० तदाकारोऽस्त्यस्य इनि। (फलुइ) मत्स्यभेदे शब्दार्थकल्प०।

**फल्लफल** पु० शूर्पवाते जटाधरः।

**फा** पु० फल–बा० डा। १निष्फलभाषणे शब्दर०। २सन्तापे ३वृद्धौ ४वर्द्धके च विश्वः। [उपधातुभेदे राजनि०।

**फाटकी** स्त्री स्फुट ण्वुल् पृषो० गौरा० ङीष्। (फटकिरी)

**फाणि** स्त्री स्फाय–नि पृषो०। १गुडविकारे, २करम्भे (दधि-मिश्रितसक्तौ) च उणादिकोषः।

**फाणित** न० फण–णिच्–क्त। गुडविकारभेदे (फेणी) अमरः "इक्षोः रसस्तु यः पक्वः किञ्चिद्गाढो बहुद्रवः। स एवेक्षुविकारेषु ख्यातः फाणितसंज्ञया" भावप्र०। "फाणितं गुर्वभिष्यन्दि वृंहणं कफशुक्रकृत्। वातपित्तश्रमहरं मूत्रवस्तिविशोधनम्" तद्गुणास्तत्रोक्ताः।

**फाण्ट** न०फण–क्त नि०। १अनायासेन कृते अमरः। "क्षिप्तोष्ण-तोये मृदितः फाण्ट इत्यभिधीयते" इत्युक्ते २काथभेदे पु०। "क्षुण्णद्रव्यपले सम्यक् जलमुष्णं विनिःक्षिपेत्। पात्रे चतुःपलमितं ततस्तु स्रावयेज्जलम्। सोऽयं चूर्णद्रवः फाण्टः भिषग्भिरभिधीयते" वैद्यक०।

**फाल** न० फलाय शस्याय हितम् अण्, फल्यते विदार्य्यते भूमिरनेन वा घञ्। १लाङ्गलमुखस्थे लौहभेदे अमरः। फालमस्त्यस्य अच्। २बलदेवे ३महादेवे च पु०। फलस्य विकारः अण्। ४कार्पासवस्त्रे मेदि०। ५तप्तफालकरणपरीक्षाभेदे न०। फलेषु भवः अण्। ६जम्बीरबीजे पु० कुल्लूकभट्ट। फालदिव्यप्रकारश्च दिव्यत०उक्तो यथा "वृहस्पतिः "आयसं द्वादशपलघटितं फाल-मुच्यते। अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तरम्। अग्नि-वर्णं ततश्चौरो जिह्वया लेहयेत् सकृत्। न दग्धश्चे-च्छुद्धिमियादन्यथा स तु हीयते" चौरोऽत्र गोचौरः "गोचौरस्य प्रदातव्यं तप्तफाललेहनम्" इति स्मृते-रिति मैथिलाः। अत्रापि त्वमग्ने इत्यादिमन्त्रानन्तरम्। "आयसं लेलिहानस्तु जिह्वयापि समादिशेत्" इति पितामहोक्तेः प्राड्विवाकशोध्याभ्यामभ्यभिमन्त्रणं का-र्य्यम्। अत्र प्रयोगः लौकिकचत्वारिंशत्तोलकमितं लौहघटितमष्टयवमध्याष्टाङ्गुलदीर्घम् तथाविध-

चतुरङ्गुलप्रस्तारं फालमग्नौ तापयेत्। तत्र प्राड्विवाकोधर्मावाहनादिहवनान्तं कर्म कृत्वा दक्षिणां दत्त्वा समन्त्रकं प्रतिज्ञापत्रं शोध्यशिरसि निधाय ओम् "त्वमग्ने वेदाश्चत्वारस्त्वञ्च यज्ञेषु हूयसे। त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम्। जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम्। पापं पुनासि वै यस्मात् तस्मात् पावक उच्यसे। पापेषु दर्शयात्मानमर्चिष्मान् भव पावक!। अथ वा शुद्धभावेषु शीतो भव हुताशन!। त्वमेव सर्वभूतानामन्तश्चरसि साक्षिवत्। त्वमेव देव! जानीषे न विदुर्यानि मानवाः। व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति। तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि"। इत्येतैः फालस्थमग्निमभिमन्त्रयेत्। शोध्यस्तु "त्वमग्ने सर्वभूतानामन्तश्चरसि पावक!। साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं कवे! मम" इत्यनेनाभिमन्त्र्याग्निवर्णं फालं जिह्वया सकृत् लिह्यात्। न दह्येत् शुद्धः"।

**फाल्गुन** पु॰ फल्गुनीयुक्ता पौर्णमासी अस्य वा यत्र मासे जेते वर्षे अर्द्धमासे वा अण्। चैत्रावधिके द्वादशे १स्वनामख्याते मासभेदे २ताहशे पक्षे ३जेते वर्षभेदे च कार्त्तिकशब्दे १६४६ पृ॰ दृश्यम्। "मन्थोपान्त्यो निभौ ज्ञेयो फाल्गुन निभोपत" इत्युक्तेः पौर्णमास्यां फाल्गुनीरूपनक्षत्रयोगात् तथात्वम्। स च मासः त्रिविधः मुख्यगौणचान्द्रसौरभेदात् तत्र कुम्भस्थरव्यारब्ध शुक्लप्रतिपदादिदर्शान्तो मुख्यचान्द्रः। तथाभूतकृष्णप्रतिपदादिपौर्णमास्यन्तो गौणः, कुम्भस्थरविकः सौरः इति। अयञ्च शब्दः दन्त्यनान्तो मेदिनिकोषे पठितः। फाल्गुने गगने फेने णत्वमिच्छन्ति वर्वराः" कारिकायाम् अणत्वमितिकथनं मेदिनिविरोधात् प्रामादिकमेव। ४तत्पौर्णमास्यां स्त्री ङीप्। ५अर्जुनाख्ये पाण्डवे तन्नामकत्वे कारणम् भा॰वि॰४४अ॰उक्तं यथा "उत्तराभ्यां फल्गुनीभ्यां नक्षत्राभ्यामहं दिवा। जातो हिमवतः पृष्ठे तेन मां फाल्गुनं विदुः"। ६अर्जुनवृक्षे पु॰ मेदि॰।

**फाल्गुनानुज** पु॰ फाल्गुनादनुजायते अनु+जन–ड। १चैत्रे मासि २वसन्तकाले हारा॰। ३नकुलसहदेवयोः द्वि॰ व॰।

**फाल्गुनिक** पु॰ फाल्गुनीनक्षत्रयुक्ता पौर्णमासी अस्मिन् मासे ठञ्। चैत्रावधिके द्वादशे मासे। [३कोषे शब्दर॰

**फि** पु॰ फल–वा॰ड्डि। १निष्फलवाक्ये २पापे च एकाक्ष॰को॰

**फिङ्गक** पु॰ कलिङ्ग+पृषो॰। (फिङा) पक्षिभेदे शब्दमा॰।

**फिरङ्ग** पु॰ स्वनामख्याते म्लेच्छदेशे१ रोगविशेषे२ भावप्र॰ तत्र फिरङ्गस्य निरुक्तिमाह। "फिरङ्गसंज्ञके देशे बाहुल्येनैव यद्भवेत्। तस्मात् फिरङ्ग इत्युक्तो व्याधिर्व्याधिविशारदैः"। तस्य विप्रकृष्टं निदानमाह गन्धरोगः फिरङ्गोऽयं जायते देहिनां ध्रुवम्। फिरङ्गिणोऽतिसंसर्गात् फिरङ्गिण्याः प्रसङ्गतः। व्याधिरागन्तुजो ह्येष दोषाणामनुसंक्रमः। भवेत्ता लक्षयेत्तेषां लक्षणैर्भिषजां वरः"। फिरङ्गिण्याः प्रसङ्गत इति विशेषार्थम्। रूपमाह "फिरङ्गस्त्रिविधो ज्ञेयो बाह्याभ्यान्तरस्तथा। बहिरन्तर्भवश्चापि तेषां लिङ्गानि च ध्रुवम्। तत्र बाह्यः फिरङ्गः स्याद्विस्फोटसदृशोऽल्परुक्। स्फुटितो व्रणवद्वेद्यः सुखसाध्योऽपि स स्मृतः। सन्ध्याभ्यन्तरः स स्यादुभयोर्लक्षणैर्युतः। कष्टोऽतिचिरस्थायी कष्टसाध्यतमश्च सः"। उपद्रवानाह "कार्श्य बलक्षयो नासाभङ्गो वह्नेश्च मन्दता। अस्थिशोषोऽस्थिवक्रत्वं फिरङ्गोपद्रवा अमी। साध्यत्वादिकमाह वहिर्भवो भवेत् साध्यो नूतनो निरुपद्रवः। आभ्यन्तरस्तु कष्टेन साध्यः स्यादयमामयः। बहिरन्तर्भवो जीर्णः क्षीणस्योपद्रवैर्युतः। बोध्यो व्याधिरसाध्योऽयमित्यूचुर्मुनयः पुरा"। ततोऽस्त्यर्थे इनि। फिरङ्गिन् तद्देशस्थजने तद्रोगयुते च त्रि॰ स्त्रियां ङीप्। [विश्वः।

**फु** पु॰ फल–डु। मन्त्रोच्चारणपूर्वके १फुत्कारे २तुच्छवाक्ये च

**फुक** पु॰ खगे शब्दच॰। [फणायां पु॰हेमच॰।

**फुट** त्रि॰ स्फुट–क पृषो॰। १विदीर्णे २प्रस्फुटिते च। ३सर्प-

**फु(फू)त्** अव्य॰ फल–डुति पृषो॰वा दीर्घः। अनुकरणशब्दे।

**फुत्कार** पु॰फु इत्यव्यक्तं शब्दं करोति कृ–ट। वह्नौ शब्दच॰

**फुत्कार** पु॰ कृ–भावे घञ् फुदित्यव्यशब्दस्य कारः। फुदित्यव्यक्तशब्दकरणे। फुत्कारयुक्ते वह्नौ आहुतिनिषेधो यथा "अल्पे कक्षे सस्फुलिङ्गे वामावर्त्ते भयानके। आर्द्रकाष्ठैः समुत्पन्ने फुत्कारवति पावके। कृष्णार्चिषि सुदुर्गन्धे तथा लिहति मेदिनीम्। आहुतिं जुहुयाद्यस्तु तस्य नाशो भवेद् ध्रुवम्" ति॰त॰।

**फुप्फुस** पु॰सुश्रुतोक्ते हृदयस्य वामपार्श्वस्थिते (फुसका) इति ख्याते कोष्ठभेदे "स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च। हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते" व्याख्यातं चेदम् "आमस्य स्थानमामाशयः नाभेरूर्द्धम्। अग्नेः स्थानं पच्यमानाशयः नाभिमध्यम्। पक्वस्य स्थानं पक्वाशयः नाभेरधः। मूत्रस्य स्थानं वस्तिः। रुधिरस्य स्थानं यकृत्प्लीहानौ। हृद् हृदयम्। रसपाकसमुद्भवः

शोणितमलसत्त्वजः उण्डुकः स चान्त्रदेशे व्यवस्थितः पुरीषाधानम्। फुप्फुसः हृदयस्य वामपार्श्वे स्थितः। (फुक्का) इति ख्यातः” इति विजयरक्षितः।

**फुल्त(ल्ल)** त्रि॰ फल–आरम्भे भावे क्त वा तयोर्नेट् अत उत्वम्। १फलनारम्भयुते २फलने च। पक्षे फलित इति। अन्यत्र फलित इत्येव। भावे क्तिन् फुल्ति फलने स्त्री।

**फुल्ल** विकाशे भ्वा॰पर॰अक॰सेट्। फुल्लति अफुल्लीत् पुफुल्ल।

**फुल्ल** त्रि॰ फुल्ल–विकाशे अच्। विकशिते पुष्पे अमरः।

**फुल्लफाल** पु॰ फुल्लं फलति फल–अण्। शूर्पवाते त्रिका॰।

**फुल्लदामन्** न॰ ६त॰। १फुल्लानां दामनि “मोगो नौ तौ गो यरहवसुरगैः फुल्लदाम प्रदिष्टम्” इ॰र॰ उक्ते अनविंशत्यक्षरपादके छन्दोभेदे।

**फुल्ललोचन** त्रि॰ फुल्लं विकसितं लोचनमस्य। १विकसितनेत्रे स्त्रियां स्वाङ्गत्वेऽपि बहुच्कत्वात् टाप्। २मृगभेदे पुंस्त्री॰शब्दच॰ स्त्रियां जातित्वात् ङीष्। [संक्षिप्तसा॰।

**फुल्लरीक** पु॰ फल–फर्फरीकादि॰ नि॰ १देशभेदे २सर्पे च

**फेण(न)** पु॰ स्फाय–न पृषो॰ मतान्तरे णत्वम्। दुग्धजलादेर्मथ्यमाने परिस्थे बुद्बुदाकारे पदार्थे (फेना) अस्य णान्तत्वमपि “हंसश्रेणो नदीतीरे निनदैः संप्रतीरिते। यथा सारस्वता मन्त्रा अन्तरे फेणसङ्कुताः” इत्युक्तौ पक्षे अन्तरेफेण अन्तःस्वरकारेण संयुता इत्यर्थः। २डिण्डिरे च ३गुड़विकारभेदे स्त्री ङीप्। “वटो वेशवारात् लवङ्गेन फेणी घनं पर्पटः शिम्बुबीजेन याति जीर्णमञ्जरी।” “बालीरं गगनं फेनमूलस्य दन्त्यनान्वितम्। व्याख्याः फाल्गुनमिच्छन्ति केचिन्मूर्धन्यणान्वितम्” भरतधृतवाक्यम्।

**फेण(न)क** स्वार्थे क संज्ञायां कन् वा। १फेनशब्दार्थे २पिष्टकभेदे त्रिका॰।

**फे(फ)नका** स्त्री फे(फ)न इव कायति कै–क। जलपक्वतण्डुलचूर्णे (काइ) शब्दच॰।

**फेण(न)दुग्धा** स्त्री फेणः(नः) इव दुग्धं निर्यासोऽस्य। (दुधफेणी) क्षुपभेदे राजनि॰।

**फेण(न)वाहिन्** पु॰ (फेण(न)मिव वहति श्वेततास्। वह–णिनि। वस्त्रे शब्दमाला। [राजनि॰।

**फेणा(ना)** स्त्री फेण(न) अस्त्यर्थे अच्। सातलाक्षुपे

**फेणा(ना)ग्र** न॰ ६त॰। बुद्बुदे। हारा॰।

**फे(णि)निका** स्त्री (खाजा) इति ख्याते पक्वान्नभेदे कृतान्नशब्दे २१८३।२४ पृ॰ दृश्यम्।

**फेणि(नि)ल** त्रि॰ फेन(ण)+अस्त्यर्थे इलच्। फेन(ण)विशिष्टे। २कोलिफले ३मदनवृक्षफले च न॰मेदि॰। ४बदरवृक्षे राजनि॰ ५अरिष्टवृक्षे च पु॰ अमरः।

**फेत्कारिणी** स्त्री तन्त्रभेदे।

**फेत्कारीय** पु॰ तन्त्रभेदे। [स्त्रियां जातित्वात् ङीष्।

**फेर** पुंस्त्री॰ फे इत्यव्यक्तं रौति रु–बा॰ ड। शृगाले शब्दर॰

**फेरण्ड** पुंस्त्री॰ फे इत्यव्यक्तं रण्डति रण्ड–अच्। शृगाले हेमच॰ स्त्रियां जातित्वात् ङीष्।

**फेरव** पुंस्त्री फे इत्यव्यक्तो रवोऽस्य। १शृगाले अमरः। २राक्षसे मेदि॰। स्त्रियां ङीष् ३धूर्ते त्रि॰ शब्दर॰।

**फेरु** पु॰ फे इत्यव्यक्तं रौति रु–डु। १शृगाले अमरः।

**फेल** गतौ भ्वा॰पर॰सक॰सेट्। फेलति अफेलीत् पिफेल। ऋदित् चङि न ह्रस्वः। अपिफेलत् त।

**फेल(ला)** न॰स्त्री॰ फेल–अच् वा टाप्। १भुक्तसमुज्झिते उच्छिष्टे शब्दरत्ना॰ न॰। अमरे स्त्री।

**फेलि** स्त्री फेल–इन्। उच्छिष्टे भुक्तावशिष्टे जटाध॰ स्वार्थे क फेलिका तत्रार्थे

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलिते वाचस्पत्ये फकारादिशब्दसङ्कलनम्।

---

फाण्टशब्दपरिशिष्टम्—“तद्दै नवनीतं भवति घृतं देवानां फाण्टं मनुष्याणाम्” शत॰ब्रा॰ “नवनीतभावात् प्रागवस्थापन्नं द्रव्यं फाण्टमित्युच्यते” भाष्यम्।

## ब

बकारः पवर्गस्य तृतीयवर्णः कादिषु त्रयोविंशतितमो व्यञ्जनवर्णः जिह्वाग्रेण ओष्ठयोः स्पर्शेन उच्चार्यत्वात् स्पर्शवर्णः। अस्योच्चारणस्य स्थानमोष्ठौ। उच्चारणे ओष्ठजिह्वाग्रेण स्पर्शः आभ्यन्तरप्रयत्नः। बाह्यप्रयत्नाः संवारनादघोषाः अल्पप्राणश्च। अस्य वाचकशब्दाः तन्त्रे वर्णाभिधानोक्ता यथा “बो वनी भूधरो मार्गो घर्घरी लोचनप्रियः। प्रचेताः कलसः पक्षी स्थलगण्डः कपर्दिनी। पृष्ठवंशोऽभया मत्तः शिखिवाहो युगन्धरः। सुखबिन्दुर्वली चण्टा योद्धा त्रिलोचनप्रियः। क्लेदिनी तापिनी भूमिः सुगन्धिस्त्रिवलिप्रियः। सुरभिर्मुखविष्णुश्च संहारो वसुधाधिपः। षष्ठी पुरं चपेटा च मोदको गगनं पतिः। पूर्वाषाढ़ा मध्यलिङ्गः शनिः कुम्भ तृतीयकौ”। तस्याधिष्ठातृदेवताध्यानं यथा “नीलवर्णां

त्रिनयनां नीलाम्बरधरां पराम्। नानाहारोज्ज्वलां देवीं द्विभुजां पद्मलोचनाम्। एवं ध्यात्वा वकारन्तु तन्मन्त्रं दशधा जपेत्" वर्णोद्धारतन्त्रम्। अस्य ध्येयस्वरूपं यथा "वकारं शृणु चार्वङ्गि! चतुर्वर्गप्रदायकम्। शरच्चन्द्र प्रतीकाशं पञ्चदेवमयं सदा" कामधेनुत०। मातृन्यासे ऽस्य पृष्ठवंशे न्यस्तता। काव्यादौ प्रथमप्रयोगे वकारशब्दोक्तं फलम्।

**व** पु० बल–ड। "वः पुमान् १वरुणे २सिन्धौ ३भगे ४तोये ५गते तु वा। ६गन्धने ७तनुसन्ताने पुंस्येव ८वपने स्मृतः" मेदि०। ६कुम्भे शब्दर०।

**बंहिष्ठ** त्रि० अतिशयेन बहुः इष्ठन् बंहादेशः। अतिशयबहुले अमरः। [बहुले स्त्रियां ङीप्।

**बंहीयस्** त्रि० अतिशयेन बहुः ईयसु बंहादेशः। अतिशयबहुले

**वक्कुर** त्रि० भास्कर+भयङ्कर+वा पृषो०। १भास्करे २भयङ्करे च ऋ० १।११७।२१ भा०।

**वठ** स्थौ सामर्थ्ये च भ्वा०पर०सक०सेट्। वठति अवठीत् अवाठीत्। ववाठ वेठतुः। [अमरः।

**वडवा** स्त्री बलं वाति वा–क लस्य डः। १घोटक्याम्, २अश्विनीनक्षत्रे ज्यो०। ३दास्याम्। वड़वानलशब्दे उदा०

**वड़वाकृ(हृ)त** न० वड़वया दास्या कृतः (हृतः) वा। दासभेदे "भक्तदासश्च विज्ञेयस्तथैव वड़वाकृ(हृ)तः" स्मृतिः।

**वडवाग्नि** पु० वड़वायाः शिवक्रोधाग्न्याधारस्य स्त्र्योऽग्निः। समुद्रस्थिते घोटकीमुखस्थे कालानले। कालिकापु०४१अ०। तदोत्पत्तिरुक्ताऽस्य। और्वशब्दे १५८१।८२पृ० अन्योत्पत्तिरुक्ता दृश्या। वड़वानलादयोऽप्यत्र।

**वड़वामुख** पु० वड़वाया मुखं स्थानत्वेनास्त्यस्य अर्श आदित्वादच्। समुद्रस्थे कालानले हेमच०।

**वड़वासुत** पु० द्वि०व० ६त०। अश्विनीकुमारयोः। अश्विनीकुमारशब्दे दृश्यम्। [मेदिनी

**वण** शब्दे भ्वा०पर०सक०सेट्। वणति अवाणीत्–अवणीत्

**वण** पु० वण–अच्। शब्दे भरतः।

**वणिक्पथ** पु० ६त० अच्समा०। हट्टे। [शब्दच०

**वणिग्बन्धु** पु० वणिजां बन्धुरिव पोषकत्वात्। नीलीवृक्षे

**वणिग्भाव** पु० ६त०। वाणिज्ये आजीवनार्थं क्रयविक्रयकरणे अमरः।

**वणिग्वह** पु० वणिजं वहति वह–अच्। उष्ट्रे शब्दच०

**वणिज्(ज)** पु० पणायते व्यवहरति पण–इजि इज्ये वा पस्य वः। आजीवनार्थं क्रयविक्रयव्यवहारकर्त्तरि अमरः। २ज्योतिषोक्ते ववादितः षष्ठे करणे च ४वाणिज्ये स्त्री मेदि०। स्वार्थे अण् वाणिज तत्रार्थे अमरः।

**वणिज्य** न० वणिजो भावः कर्म वा य। वाणिज्ये आजीवनार्थं क्रयविक्रयादिव्यवहारे भरतः। स्त्रीत्वमपि। "चतुरेण चतुर्वर्गचिन्तामणिवणिज्ययेति" सुक्ताफलम्। ष्यञ्। वाणिज्य तत्रार्थे न०।

**वद** स्थैर्ये निश्चलभवने भ्वा०पर०सक०सेट्। वदति अवादीत् अवदीत्। ववाद वेदतुः।

**वद** भाषणे वा चु०उभ०पक्षे भ्वा०पर०सक०सेट्। वादयति ते अवीवदत्–त। पक्षे वदतीत्यादि।

**ब(व)दर** पु० बदति स्थिरीभवति छिन्नस्यापि पुनः प्ररोहेण बद+स्थैर्ये अरच्। १कोलिवृक्षे २देवसर्षपवृक्षे राजनि०। तस्य फलम् अण् तस्य लुक्। ३कोलिफले राजनि०। कर्कन्धूशब्दे दृश्यम्। ४कार्पासफले ५कोलिफले न०। ६कोलिभेदे (सेओवाकुल) कार्पासास्थि पु० मेदि०। बन्ध्वस्थ्यादितमस्यान्यैरुक्तम्, ८वराहक्रान्तायां १कार्पासवृक्षे स्त्री अमरः।

**बदर(प)पाचन** न० तीर्थभेदे भा०श०४८अ०। तत्र इन्द्रोपदेशेन कुमार्य्या पक्वबदराणां पचनात्तथात्वम्।

**ब(व)दरफली** स्त्री ब(व)दरस्येव फलमस्याः ङीप्। भूमिब(व)दर्य्याम् राजनि०।

**ब(व)दरवल्ली** स्त्री ब(व)दरफलप्रधाना वल्ली शा०त०। भूमिब(व)दरीति ख्याते लताभेदे राजनि०।

**ब(व)दरामलक** न० ब(व)दरमिवामलकम्। १प्राचीनामलके हारा०। समा०द्व०। २वदरामलकफलयोः समाहारे न०

**ब(व)दरिकाश्रम** पु० न०। बदरी+स्वार्थे क तस्याः समीपे तच्चिह्नितोवाश्रमः। तीर्थविशेषे। ब(व)दरीयत्रोऽप्यत्र। भा० व० ८२ अ० दृश्यम्। बदरिकावनसमस्त तत्र हिमालयपर्वतैकदेशे श्रीनगराख्यदेशसमीपे अलकनन्दानदीपश्चिमभागे स्थितम्।

**ब(व)दरी** स्त्री ब(व)दर+गौरा०ङीष्। १कोलिवृक्षे अमरः २कार्पास्यां शब्दर० कपिकच्छ्वाम् राजनि०। ततः पीलु० पाके कुणच्। वदरीकुण तत्पाके न०।

**ब(व)दरीच्छदा** स्त्री ब(व)दर्य्या इव च्छदो यस्याः। १हरिकोलिवृक्षे २शङ्कुनल्याम् राजनि०।

**बवदरीपत्र** पु० ब(व)दर्य्या इव पत्रमस्याः। नखीनामगन्धद्रव्ये जटा०। स्वार्थे क। तत्रैव। [स्त्रिकायाम् शब्दमा०

**बवदरीफला** स्त्री ब(व)दर्य्या इव फलमस्याः। नीलशेफा-

**वद्ध** त्रि० बन्ध–कर्मणि क्त। बन्धनकर्मणि अमरः।

**बद्धगुद** न० बद्धं गुदमत्र। कोष्ठव्यवहारके रोगभेदे "यस्यान्त्रमन्नैरुपलेपिभिर्वा बालाश्मभिर्वा विहितं यथावत्। सञ्चीयते तस्य मलः सदोषात् शनैः शनैः सङ्करवच्च नाड्याम्। निरुध्यते तस्य गुदे पुरीषं निरेति कृच्छ्रादपि चाल्पमल्पम्। हृन्नाभिमध्ये परिवृद्धिमेति तस्योदरं बद्धगुदं वदन्ति" भावप्र०।

**बद्धफल** पु० बद्धानि फलान्यस्य। करञ्जवृक्षे राजनि०।

**बद्धमुष्टि** त्रि० बद्धः दानायाप्रसारितो मुष्टिर्यस्य। कृपणे।

**बद्धमूल** त्रि० बद्धं मूलमस्य। दृढमूले।

**बद्धरसाल** पु० नि०क०। राजाम्रभेदे राजनि०।

**बद्धशिख** त्रि० बद्धा शिखा येन यस्य वा। "बद्धोपवीतिना भाव्यं सदा बद्धशिखेन च" प्रा०त०उक्ते १शिखाबन्धनयुक्ते २उच्चटायां स्त्री मेदि०।

**बध** पु० हन–घञ्। वधादेशः। हनने प्राणवियोगसाधने व्यापारे अमरः। वधपदार्थविशेषं बधिभेदश्च प्रा० वि० उक्तो यथा

"अथ बधो निरूप्यते। ननु कोऽयं बधः किं बधित्वं कतिविधं च तत्,? उच्यते प्राणवियोगफलकव्यापारो बधः तन्निष्पादकत्वञ्च साक्षात्परम्परोदासीनं अतिचारपरिगणितं बधित्वम् अतो नेषुकारादिष्वतिव्याप्तिः तच्च पञ्चविधं अतिविस्तरत्वात् कर्त्ता प्रयोजकोऽनुमन्ता अनुग्राहको निमित्ती चेति यथाह आपस्तम्बः "प्रयोजयिता अनुमन्ता कर्त्ता चेति सर्वे स्वर्गनरकफलभोक्तारो यो भूय आरभते तस्मिन् फले विशेषः"। अनुग्राहकमाह याज्ञवल्क्यः "चरेद्व्रतमहत्वापि घातार्थञ्चेत् समागतः"। तथा मनुः "बहूनामेककार्य्याणां सर्वेषां शस्त्रधारिणाम्। यद्येको घातकस्तत्र सर्वे ते घातकाः स्मृताः"। भविष्ये "यद्येकं बहवो विप्रा घ्नन्ति विप्रमनागसम्। तदैषां निष्कृतिं वक्ष्ये शृणुष्वैकमना गुह!। तेषां यस्य प्रहारेण स विप्रो निधनं गतः। सरस्वतीं प्रतिस्रोतः स चरेत् पापशुद्धये"। स च द्विविधः। एको बध्यप्रतिरोधकः अन्यः शस्त्रप्रहर्त्ता। निमित्तिनमाह विष्णुः "अन्यायेन गृहीतस्वो न्यायमर्थयते तु यः। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्"। अत्र नरान्तरव्यापाराव्यवधानेन बधनिष्पादकः कर्त्ता, यः कर्त्तारं कारयति स प्रयोजकः सोऽपि द्विविधः। एकः स्वतोऽप्रवृत्तमेव पदातिं वेतनादिना बधार्थं प्रवर्त्तयति अपरः स्वतः प्रवृत्तमेव मन्त्रोपायोपदेशादिना प्रोत्साहयति। अनुमतिदाता अनुमन्ता। अनुमतिश्च द्विविधा। एका यद्विरोधाद्गमनं न सम्भवति तस्य विरोधिनो मया निरोधः कर्त्तव्य इति प्रतिज्ञा। अपरा एनं हन्मीति वचने यत्नस्याप्रतिषेध एव"। हिंसायाः पापाद्यनिष्टजनकत्वेऽपि वैधहिंसाया इष्टफलजनकत्वात् नानिष्टजनकता "यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा। अतस्त्वां घातयिष्यामि तस्माद्यज्ञे बधोऽबधः" ति० त० उक्तेः मनुनापि "या वेदविहिता सा नियतास्मिंश्चराचरे। अहिंसामेव तां विद्यात् वेदाद्धर्मो हि निर्बभौ" उक्तेश्च। अतः अहिंसा च तज्जन्यपापाजनकत्वेन तद्विरोधीत्यर्थः। बहूनां रक्षार्थमेकस्य बधेऽपि पुण्यजनकत्वमुक्तम् "एकस्य यत्र निधने प्रवृत्ते दुष्टकारिणः। बहूनां भवति क्षेमं तस्य पुण्यप्रदो बधः। रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः। आत्मानं घातयेद्यस्तु तस्य पुण्यप्रदो बधः" कालिका०२०अ०। ब्रह्महन्तृबधेऽपि न राज्ञो दोषः प्रा०वि०स्थितः "तथा नाततायिबधे दोषो हन्तुर्भवति कश्चन" स्मृतेः आततायिबधेऽपि नानिष्टफलमिति यथायथं बोध्यम्।

**बध** संयमने चु०उ०सक०सेट्। बाधयति–ते अबीबधत्–त।

**बध** निन्दायां बन्धने च भ्वादि०आत्म०सक०सेट्। बीभत्सते अबीभत्सिष्ट। निन्दनेऽर्थे एव स्वार्थे सन् बन्धने तु न तेन तत्र बधते अबधिष्ट इत्येव।

**बधक** त्रि० बध–क्वुन्। १बधकर्त्तरि त्रि० को०। २हिंस्रे ३व्याधौ ४मृत्यौ च संक्षिप्तसा०।

**बधत्र** न० बध–करणे अत्रन्। अस्त्रे उणादि०। [हारा०।

**बधस्थली** स्त्री ६त०। श्मशाने त्रिका०। बधस्थानमप्यत्र न०

**बधाङ्गक** न० बधः अङ्गमत्र कप्। कारागृहे त्रिका०।

**बधार्ह** त्रि० बधमर्हति अर्ह–अच् उ०स०। बधदण्डार्हे।

**बधिर** त्रि०बन्ध–किरच्। श्रोत्रेन्द्रियरहिते श्रवणशक्तिशून्ये। तस्यानंशिता मनुनोक्ता यथा "अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा"। ततः अरीहणा० चतुरर्थ्यां वुञ्। बाधिरक तन्निकटदेशादौ त्रि०। ततः दृढा०भावे वा इमनिच् पक्षे ष्यञ्। बधिरिमन् पु० बाधिर्य्य न० तद्भावे तन्निदानादि माधवकरेणोक्तं यथा "यदा शब्दवहं वायुः स्रोत आवृत्य तिष्ठति। शुद्धः श्लेष्मान्वितो वापि बाधिर्य्यं तेन जायते"।

**ब(व)धू** स्त्री बध्नाति ममतया बन्ध–ऊ नलोपः, उह्यते वह–ऊ धश्चान्तादेशो वा। १नार्य्याम्, २स्नुषायाम् अमरः

३स्नुषायां, ४नवोढ़ायाम्, भार्य्यायां ५यारिषोग्रभी ६युवत्याम्, च मेदि० ।

**ब(व)धूटी** स्त्री अल्पा ब(व)धूः अल्पार्थे टि वा ङीप् । अल्पवयस्कायां नार्य्याम् "गोपवधूटीदुकूलचौराय" भाषाप० ।

**ब(व)धूत्सव** पु० ब(व)ध्वा उत्सव आर्त्तवम् रजः स इव प्रसवः पलादिर्यस्य । रक्ताम्लाने राजनि० ।

**बधोद्यत** त्रि० बधाय उद्यतः । मारणार्थमुद्युक्ते आततायिनि अमरः । आततायिनशब्दे ६४७ पृ० दृश्यम् ।

**बध्य** त्रि० बधमर्हति बध+यत् । १बधार्हे अमरः । बन्ध-कर्मणि क्यप् । २कारारोद्धव्ये । आधारे क्यप् । ३बन्धनस्थाने च

**बध्यपाल** पु० बध्यं कारागारं पालयति पालि-अण् उप० स० । काराध्यक्षरक्षके । विष्णु० पु० २अंशे ६अ० ।

**बध्यभूमि** स्त्री हन-भावे यत् बधादेशः बध्यस्य भूमिः । श्मशाने बधस्थाने बध्यस्थानादयोऽप्यत्र [तद्गोत्रापत्ये पुंस्त्री०

**बध्योग** पु० ऋषिभेदे ततो विदा० गोत्रापत्ये अञ् । बाध्योग

**बध्र** न० बन्ध-ष्ट्रन् नलोपः । १सीसके, २चर्ममयरज्ज्वां स्त्री ङीप् । पृषो० नस्य रः । बध्रीत्यप्यत्र स्त्री अमरः ।

**बन** याचने तना० आत्म० द्विक० सेट् । बनुते अबनिष्ट । बेने उदित्त्वात् क्त्वा वेट् बनित्वा बान्त्वा वान्तः । [बबन्ध बध्यते ।

**बन्ध** बन्धने क्र्या० पर० सक० अनिट् । बध्नाति अभान्त्सीत् उद्+उत्तोलन बन्धने "उद्बन्धनमृता ये च" स्मृतिः ।

अनु+नियतपूर्ववर्त्तित्वे अनुगमने च । "तेषु किं भवतः स्नेहमनुबध्नाति मानसम्" देवीमा० ।

नि+नियमेन बन्धने निबन्धशब्दे दृश्यम् ।

निर्+आग्रहे निर्बन्धशब्दे दृश्यम् ।

प्र+सन्धाने काव्यनिबन्धने च प्रबन्धशब्दे दृश्यम् ।

प्रति+निरोधे "प्रतिबध्नाति हि श्रेयः" रघुः । व्याप्तौ च प्रतिबन्धशब्दे दृश्यम् ।

सम्+सम्बन्धे संसर्गे च ।

**बन्ध** संयमने चुरा० उभ० सक० सेट् । बन्धयति ते अबबन्धत् त

**बन्ध** पु० बन्ध-घञ् । १संयमने निगडादिना गतिरोधने २रज्ज्वादिवेष्टनस्थले च । रज्जुशब्दे २६२१पृ० दृश्यम् । करणे कर्मणि वा घञ् । ३देहे ४ऋणशोधनविश्वासाय स्थापिते द्रव्ये आधौ च । आधिशब्दे ७११पृ० दृश्यम् । करणे घञ् । ५गतिरोधसाधने शब्दर० । रतिबन्धभेदाश्च रतिमञ्जर्य्युक्ता यथा "पद्मासनो नागपदो लतावेष्टोऽर्द्धसंपुटः कुलिशं सुन्दरश्चैव तथा केसर एव च । हिल्लोलो नरसिंहोऽपि विपरीतस्तथाऽपरः । क्षुब्धो वै धेनुकश्चैव संपुटकस्ततः परम् । सिंहासनो रतिनागो विद्याधरस्तु षोडशः" तत्तच्छब्दे तेषां लक्षणानि दृश्यानि । स्मरदीपिकोक्ता अन्येऽपि बन्धाः सन्ति यथा "कामप्रदो विपरीतो नागरो रतिपाशकः । केयूरः प्रियतोषश्च ततः समपदस्तथा । ततश्चैकपदो ज्ञेयः सम्पुटश्चार्द्धसम्पुटः । ततः स्तनभरश्चैव ततोऽसुरतिसुन्दरः । जरुपीडाभरश्चक्री ततश्चोरुक्रमः स्मृतः । वेष्टको व्यंसकीलश्च ततो लीलासनस्तथा । अष्टादश क्रमाद्बन्धाः स्त्रीणां बहुसुखप्रदाः । पुंसां सुखकराश्चैव कथितास्तु क्रमागताः" । प्रवाहरूपेण सततं देहाद्देहान्तरगतिरूपे ६संसारे च ।

**बन्धक** न० बन्धे स्थापितं धनम् कन् । ऋणशोधार्थम् विश्वासहेतुतया आधीकृते १पदार्थे शब्दर० । स्वार्थे क । २विनिमये पु० मेदि० । ३रतहिण्डके नानार्थमाला । ४पुंश्चल्यां स्त्री अमरः । ५हस्तिन्यां मेदि० उभयत्र गौरा० ङीष् । ६पञ्चपुरुषगामिन्यां स्त्रियाम् भा० आ० १२२अ० ।

**बन्धन** न० बन्ध-भावे ल्युट् । १निगडादिना २संयमने अमरः ३बधे मेदि० । करणे ल्युट् । ४तद्धेतौ रज्ज्वौ । हेमच०

**बन्धनवेश्मन्** न० ६त० । कारागारे हारा० । बन्धनागारादयोऽप्यत्र । बन्धनालयोऽपि तत्रार्थे अमरः ।

**बन्धनस्तम्भ** पु० ६त० । हस्तिसंयमनकाष्ठे आलाने अमरः ।

**बन्धित** पु० बन्ध इव । १कामदेवे उणादि० । २चर्मव्यजने संक्षि०

**बन्धु** पु० बध्नाति मनः स्नेहादिना बन्ध-उ । १भ्रातौ मातुलपुत्रादौ अमरः । "२बन्धुभ्यः पितृमातृतः" इति स्मृतिः बान्धवे ३मित्रे ४पितरि ५मातरि ६भ्रातरि ७बन्धुजीववृक्षे च स्वार्थे अण् । बान्धव तत्रार्थे बन्धवश्च त्रिविधाः पारिभाषिका आत्मबन्धुशब्दे पितृबन्धुशब्दे उक्ता मातृबन्धुशब्दे वक्ष्यमाणाश्च दृश्याः । अतएव "तत्सुतो गोत्रजो बन्धुरिति" याज्ञ० तत्र व्याख्या इति मिता० । दायभागमते तु मातामहादयोऽपि बन्धवः अतएव "तत्सुतो गोत्रजो बन्धुरिति" याज्ञ०व्या० तेन बन्धुपदेन असगोत्राणां मातामहादीनां ग्रहणमित्युक्तम् । अतो मतभेदेन धनग्रहणे व्यवस्थाभेदः ।

**बन्धुक** पु० बन्ध-उक । बन्धुजीववृक्षे शब्दरत्ना० ।

**बन्धुजीव(क)** पु० बन्धुरिव जीवयति जीवि-अण् ण्वुल् वा । बन्धुजीववृक्षे । (बांधुल्लि) ख्याते वृक्षे अमरः । [च अमरः

**बन्धुता** स्त्री बन्धु+संघे भावे तल् वा । १बन्धुसमूहे, २तद्भावे

**बन्धुदत्त** न० ३त० । १स्त्रीधनभेदे "बन्धुदत्तं तथा शुल्क

कन्याधेयकमेव च। अप्रजायामतीतायां बान्धवास्तद-
वाप्नुयुः” याज्ञ०। “बान्धवा भ्रातरः बन्धुदत्तपदेन कन्या-
दशायां यत् पितृभ्यां दत्तं तदुच्यते” दायभागः। तन्मते
कन्यादशायां बन्धुभ्यां पितृभ्यां दत्ते २स्त्रीधने च।

**बन्धुर** न० बन्ध–उरच्। १मुकुटे शब्दर० २स्त्रीचिह्ने ३तिल-
कल्के ४बन्धुजीववृक्षे ५बधिरे ६हंसे च मेदि० ७विडङ्गे
हेमच० ८ऋषभौषधौ राजनि० ९बके विहङ्गे च पु०
शब्दर०। १०रम्ये ११नम्रे १२वेश्यायां स्त्री १३मतनुः पु०
श०र० मेदि०। १४उन्नतानते च त्रि० अमरः पाठान्तरम्।

**बन्धुल** पु० बन्ध–उलच्। १असतीपुत्रे अमरः २बन्धुके शब्दर०
३सुन्दरे ४रम्ये ५नम्रे च त्रि० अजयपालः।

**बन्धूक** पु० बन्ध–ऊक। (बान्धुली) वृक्षे अमरः “बन्धूकपुष्परक्ता-
धम्” रविप्रणाममन्त्रः। रक्तपीतादिपुष्पे मध्याह्ने प्रकाश-
वति पुष्पवृक्षे २पीतशालके मेदि०। “असितपीतलोहितपुष्प
विशेषाच्चतुर्विधो बन्धूकः। ज्वरहारी विषहारी यहपि-
शाचशमनः प्रसादनः सविताः स्यात्” राजनि०। “बन्धूकः
कफकृद्ग्राही रक्तपित्तहरो लघुः” भावप्र०। (बन्धुक)
इति ख्याते ३स्वधूपे न० हेमच०।

**बन्धूर** पु० बन्धू–ऊरच्। १छिद्रे उणा०। २रम्ये ३नम्रे च त्रि०
रभसः ४उन्नतानते क्वचिदुन्नते क्वचिन्नते त्रि० अमरः।

**बन्धूलि** पु० बन्ध–ऊलि। बन्धुजीववृक्षे शब्दर०।

**बन्ध्य** त्रि० बन्ध–यत्। कालप्राप्तावपि १फलशून्ये वृक्षे
अमरः। २निष्फले राजनि० “अवन्ध्यकोपस्य निहन्तु-
रापदाम्” किरा०। ३बन्धनीये च त्रि०। ४अपुत्रायां
स्त्रीजातौ स्त्री शब्दच०। ५बालाख्ये गन्धद्रव्ये स्त्री
मेदि०। प्रा०वि० बन्ध्यायाः दुष्टत्वमुक्तं यथा “बन्ध्या
च वृषली ज्ञेया वृषली च रजस्वला। अथ वा वृषली
ज्ञेया कुमारी या रजस्वला” ६योनिरोगभेदे स्त्री
भावप्र०। ४५८७पृ० पित्तलशब्दे परिशिष्टे दृश्यम्।

**बन्ध्यफल** पु० फले बन्ध्यः पूर्वनि०। फलहीने वृक्षे अमरः।

**बन्ध्याकर्कोटी** स्त्री बन्ध्याया उपकारिणी पुत्रप्रदत्वात्
कर्कोटी। तिक्तकर्कोट्याम् अस्याः पुत्रदायित्वेन बन्ध्यो-
पकारित्वम्। स्वार्थे क अत इत्त्वम्। बन्ध्याकर्कोटिका
तत्रैव भावप्र० “बन्ध्याकर्कोटिका तिक्ता कटूष्णा च कफा-
पहा। स्थावरादिविषघ्नी च रसायनकरी परा” तन्नामग्र
तत्र पुत्रदेति कीर्त्तनात् तस्य बन्ध्योपकारित्वं बोध्यम्।

**बन्ध्यातनय** पु० बन्ध्यायास्तनय इव। अलीके पदार्थे बन्ध्या-
सुतादयोऽप्यत्र।

**बभ्र** गतौ भ्वा०पर०सक०सेट्। बभ्रति अबभ्रीत् बबभ्र।

**बभ्रु** पु० भृ–कु–द्वित्वम् बभ्र–उ वा। १शिवे २विष्णौ ३नकुले
४वह्नौ, ५विशाले देशभेदे ६तद्देशवासिनि ब०व० मेदि०।
७मुनिभेदे च ८पिङ्गलवर्णे पु०। ९तद्वति त्रि० अमरः।
स्त्रियाम् ऊङ्। १०खलतौ वडुकरे पु० हेमच०। ११विता-
वरकशाके राजनि०। गर्गा० अपत्ये यञ्। बाभ्रव्य तन्मु-
नेरपत्ये पुंस्त्री०। स्त्रियां ङीप् यलोपः बाभ्रवी।

**बभ्रुधातु** पु० कर्म०। १स्वर्णे २गैरिके च राजनि०।

**बम्ब** गतौ भ्वा०पर०सक०सेट्। बम्बति अबम्बीत् बबम्ब।

**बम्भारि** त्रि० भृ–इन् द्वित्वं अभ्यासे मुम्। सर्वस्य भर्त्तरि
“बम्भारिरवसुरसि” तारड्ड्रा०।

**बर** न० वृ–अच् १कुङ्कुमे। २आर्द्रके ३त्वचे ४बालके गन्ध-
द्रव्ये राजनि०। कर्मणि अच्। ५जामातरि देवादिभ्यः
६प्रार्थ्ये ७विड़ङ्गे जारे च पु०। भावे अप्। ८वरणे
९त्रिफलायां मेदि०। १०गुडूच्यां, ११मेदायां १२ब्राह्म्याम्
१३विडङ्गे १४पाठायां १५हरिद्रायाञ्च स्त्री टाप्
राजनि०। १६शतावर्य्यां स्त्री मेदि० गौरा० ङीष्।

**बरम्** अव्य० वृ–बा० अमु। ईषदिष्टे अयमन्यस्मादित्यर्थे।

**बर्जह** न० गवादीनां दुग्धस्रोतउत्पत्तिस्थाने ऋ० १।६२।४ भा०

**बर्ब** गतौ भ्वा०पर०सक०सेट्। बर्बति अबर्बीत् बबर्ब।

**बर्बट** पु० बर्ब–अटन्। १राजमाषे (बरबटी) त्रिका०। गौरा०
ङीष्। २तत्रैव ब्रीहौ ३वेश्यायाञ्च स्त्री मेदि०।

**बर्बणा** स्त्री बर्ब–ल्यु। नीलमक्षिकायाम् अमरः।

**बर्बुर** न० न० बर्ब–उरच्। उदके निघण्टुः।

**बर्ह** दाने बधे स्तुतौ वाचि च भ्वा०आ०सक०सेट्। बर्हते
अबर्हिष्ट “विगर्हितं धर्मधनैर्निबर्हणम्” नैष०।

**बर्ह** न० बर्ह–अच्। १मयूरपिच्छे अमरः। २पत्रे ३परीवारे
हेमच० मयूरपिच्छे पुंस्त्वमपि। “कं हरेदेष बर्हः” इति
विक्रमो० प्रयोगात् “यथा बर्हाणि चित्राणि बिभर्त्ति
भुजगाशनः” क्लीबे प्रयोगः। [पु०६४अ०

**बर्हकेतु** पु० बर्हं केतुचिह्नं यस्य। नवममनोः पुत्रभेदे मार्क०

**बर्हवत्** पु० बर्ह+अस्त्यर्थे मतुप् मस्य वः। मयूरपिच्छयुक्ते
ततः विल्वकादि० अण्। बार्हवत तत्सम्बन्धिनि त्रि०।

**बर्हस्** न० बर्ह-स्तुतौ असुन्। व्याप्तरणे ऋ० १।११४।१०।

**बर्हि** न० बर्ह–इन्। कुशे।

**बर्हिण** पु० बर्ह+इन। मयूरे अमरः।

**बर्हिन्** पु० बर्ह+अस्त्यर्थे इनि। मयूरे अमरः।

**बर्हिर्वाहन** पु० बर्ही मयूरो वाहनमस्य। कार्त्तिकेये।

**बर्हिपुष्प** पु० बर्हि वर्हयुक्तमिव पुष्पमस्य । मयूरपिच्छतुल्ये बर्हिकुसुमादयोऽप्यत्र ।

**बर्हिर्मुख** पु० बर्हिर्वह्निर्मुखमस्य । देवे अमरः ।

**बर्हिःशुष्मन्** पु० बर्हिः कुशः बलमस्य । वह्नौ अमरः ।

**बर्हिषद्** पु० ब०व० बर्हिषि सीदति सद्–क्विप् षत्वम् । पितृगणभेदे पितृशब्दे दृश्यम् ।

**बर्हिष्केश** पु० बर्हिः केश इव यस्य । वह्नौ ।

**बर्हिष्मत्** त्रि० बर्हिरस्त्यस्य मतुप् । कुशयुक्ते स्त्रियां ङीप् ।

**बर्हिष्य** त्रि० बर्हिषि दत्तम् यत् । कुशे दत्ते पिण्डादौ ।

**बर्हिष्ठ** त्रि० बर्हिषि कुशे तिष्ठति स्था–क ७त० वा विसर्गलोपः षत्वम् । कुशस्थिते ।

**बर्हिस्** न० बर्ह–कर्मणि इसि । कुशे १यज्ञिये कुशे "निहोता सत्सि बर्हिषि" सामाचिकम् ।१।१।१। "उपमूललूनं बर्हिः पितृणां पर्वसु लूनं देवानाम्" कौ०त० । प्राचीनबर्हिःशब्दे दृश्यम् २दीप्तौ ३अग्नौ च "बर्हिषि रजतं न देयम्" श्रुतिः ।

**बल** जीवने, धान्यावरोधे च भ्वा०पर०सक०सेट् । बलति । अबालीत् बेलतुः । ज्वलादि०कर्त्तरि ण । बलः बालः ।

**बल** दाने वधे निरूपणे च भ्वा०उभ०सक०सेट् । बलति–ते अबालीत् अबलिष्ट । बेलतुः बेले । [बलत् त ।

**बल** जीवने चु०उभ०सक०सेट् मित् घटा० । बलयति-ते अवी-

**बल** निरूपणे चु०आत्म०सक०सेट् । बालयते अबीबलत ।

**बल** न० बल–अच् । १सैन्ये २देहजे सामर्थ्ये ३स्थौल्ये ४गन्धरसे ५रूपे मेदि० ६शुक्रे हेमच० ७दर्दहे जटा० ८पल्लवे शब्दर० ६रक्ते च शब्दच० । १०बलयुक्ते त्रि० मेदि० ११काके १२बलदेवे अमरः । १३वरुणवृक्षे शब्दच० । १४दैत्यभेदे पु० मेदि० । तत्र पारिभाषिकबलानि ब्रह्मवैपु० ३५ अ० उक्तानि यथा

"क्षत्रियाणां बलं युद्धं व्यापारश्च बलं विशाम् । भिक्षा बलं भिक्षुकाणां शूद्राणां विप्रसेवनम् । हरौ भक्तिर्हरेर्दास्यं वैष्णवानां बलं हरिः । हिंसा बलं खलानाञ्च तपस्या च तपस्विनाम् । बलं वेशश्च वेश्यानां योषितां यौवनं बलम् । बलं प्रतापो भूपानां बालानां रुदितं बलम् । सतां सत्यं बलं, मिथ्या बलमेवासतां सदा । अनुमानानुगमः सत्यखानाञ्च सञ्चयः । विद्या बलं पण्डितानां वाणिज्यं वणिजां बलम् । सवत्सुकर्मशीलानां मान्नीर्यं बाहवं बलम् । धनं बलं च धनिनां शुचीनां शौचमेव च । बलं विवेकः शान्तानां सुखिनां बलमेकता । सुखो बलं च सुखिनां चौराणां चौर्य्यमेव च । विप्रस्याप कापट्यमधर्मस्खलिनां बलम् । हिंसा च हिंस्रजन्तूनां सतीनां पतिसेवनम् । वरशापौ सुराणाञ्च शिष्याणां गुरुसेवनम् । बलं धर्मो स्पृहस्थानां भृत्यानां राजसेवनम् । बलं स्तवः स्तावकानां ब्रह्म च ब्रह्मचारिणाम् । यतीनाञ्च सदाचारो न्यासः सन्न्यासिनां बलम् । पापं बलं पातकिनां सुभक्तानां हरिर्बलम् । पुण्यं बलं पुण्यवतां प्रजानां नृपतिर्बलम् । फलं बलञ्च वृक्षाणां जलधीनां जलं बलम् । जलं बलञ्च मत्स्यानां मत्स्यानाञ्च जलं बलम् । शान्तिर्बलञ्च भूपानां विप्राणाञ्च विशेषतः" । "विद्याभिजनमित्राणि बुद्धिसत्त्वं धनानि च । तपःसहायवीर्य्याणि दैवञ्च दशमं बलम्" । भा० शा० ।

वैद्यके सद्योबलकरपदार्थाः संज्ञया दर्शिता यथा

"सद्यो बलकरं ज्ञेयं बालाभ्यङ्गः सुभोजनम् । सद्यो बलकरं ज्ञेयं सर्पिश्च मांसमद्युत" । "धातूनां यत् परं तेजस्तत्खल्वोजस्तदेव बलमित्युच्यते" वैद्य० वाग्दत्ते १५ज्वन्दानुचरभेदे पु० । "बलञ्चातिबलश्चैव महावक्त्रौ महाबलौ" भा० श० ३५।२६ श्लो० । असुरभेदश्च इन्द्रेण हतः इन्द्रपर्य्याये बलारातिशब्ददर्शनात्" देवीपु० ४७अ० तु स विष्णुना हत "तदा दत्ता ततस्तेन दानवेन महात्मना । विष्णुनापि स्वचक्रेण शिरश्छिन्नो बलः । प्राकृतं देहतत्तत्त्वं दिव्यकायस्तभूत्तदा । तस्यावयवजाता वज्राद्या रत्नजातयः । कोचने सुर तेजांसि पद्मरागाणि चाभवन् । विशुद्धपात्रदानेन कायो रत्नाकरोऽभवत्" । [अमरः । अन्त्यस्यवादिरयमिति स्वामी ।

**बलक्ष** पु० बलं क्षायत्यथात् क्षै–क । १शुक्लवर्णे । २तद्वति त्रि० ।

**बलज** न० बलात् जायते जन–ड । १क्षेत्रे २पुरद्वारे ३शस्ये ४युद्धे च । ५बलजाते त्रि० मेदि० । ६वरयोषायां ७यूथिकायां च स्त्री मेदि० ।

**बलद** पु० बलं ददाति दा–क । "पौष्टिके बलदः स्मृतः" १ पौष्टिककर्माङ्गे वह्निभेदे । २ अश्वगन्धायां स्त्री । राजनि० ३बलदातरि त्रि० । ४जीवके पु० राजनि० ।

**बलदीनता** स्त्री ३त० । ग्लानौ हेमच० ।

**बलदेव** पु० बलेन दीव्यति दिव–अच् बलोद्रिक्तो देवो वा शाक०त० । १बलरामे "बलदेवो बलोद्रेकात्" ब्रह्मवै० ज०ख० ६२ अ० । २त्रायमाणौषधौ स्त्री अमरः । ३वायौ पु० मेदि० ।

**बलप्रसू** स्त्री ६त०। रोहिण्यां वसुदेवभार्य्याभेदे स्त्री शब्दच० तज्जनन्यादयोऽप्यत्र।

**बलभद्र** पु०बल+अर्श आद्यच् बलो बलवानपि भद्रः सौम्यः। १बलदेवे, अमरः। २गवये राजनि०। ३अनन्ते पु० ४बलयुते त्रि० हेमच०। ५लोध्रे शब्दच०। बलेषु भद्रा। ६त्रायमाणौषधौ ६दृतकुमार्य्यां च स्त्री मेदि०। स्वार्थे क। बलभद्रिका तत्रार्थे स्त्री अमरः।

**बलराम** पु० बलेन रमते रम-संज्ञायां कर्त्तरि घञ् बलोपपदको वा रामःशा०त०। कृष्णाग्रजे रोहिणीनन्दने संकर्षणे रामस्य दाशरथिपरशुरामबलरामभेदेन त्रित्वात् अस्य बलोपदकत्वात्तथात्वम्। [भरतः।

**बलल** पु० बलं लाति ला—क बल-कलच् वा। बलरामे

**बलवत्** अव्य० बल+अतिशये मतुप् मस्य वः। १अतिशये अमरः। “बलदपि शिक्षितानाम्” शकुन्तला। २बलविशिष्टे मांसले त्रि० अमरः स्त्रियां ङीप्। [जटाधरः।

**बलवर्द्धिनी** स्त्री० बलं वर्द्धयति वृध—णिनि। जीवकौषधौ

**बलविन्यास** पु० बलानां सैन्यानां विशेषेण दुर्भेद्यतायै न्यासः स्थापनम्। व्यूहे सेनासन्निवेशविशेषे अमरः।

**बलशालिन्** त्रि० बलेन शालते शाल-णिनि। बलविशिष्टे स्त्रियां ङीप्। [इन्द्रे हला०। बलनिसूदनोऽप्यत्र।

**बलसूदन** पु० बलं तन्नामकमसुरं सूदयति सूद-ल्यु।

**बलस्थिति** स्त्री स्था-आधारे क्तिन् ६त०। शिविरे त्रिका०।

**बलहन्** पु०बलनामासुरं बलं वा हन्ति हन-क्विप्। बलारातौ १इन्द्रे २श्लेष्मधातौ शब्दर०। ३बलरामे हरिवं० १११ अ०।

**बला** स्त्री० बलं कार्य्यत्वेनास्त्यस्याः। (बालियड़ा) १क्षुपभेदे, अमरः। “बलाचतुष्टयं शीतं मधुरं बलकान्तिकृत्। स्निग्धं ग्राहि समीरास्रपित्तास्रक्षतनाशनम्। बलामूलत्वचश्चूर्णं पीतं सक्षीरशर्करम्। मूत्रातिसारं हरति दृष्टमेतन्न संशयः” भावप्र०। विश्वामित्रेण रामाय दत्ते २अस्त्रविद्याभेदे अतिबलशब्दे दृश्यम्।

**बलाका** स्त्री० बल-संवरणे आक। १बकपङ्क्तौ २बके विसकण्ठिकायां ३बकभेदे ४कामुक्यां च शाश्वतः।

**बलाकाश्व** पु० अजकन्यपुत्रे नृपभेदे हरिवं० ७अ०।

**बलाकिन्** त्रि० बलाका+व्रीह्या०इनि। १बलाकायुक्ते स्त्रियां ङीप् २धृतराष्ट्रपुत्रभेदे पु० भा० आ० ६७अ०।

**बलाङ्क** पु० बलयुक्तमङ्कमस्य कप्। वसन्तकाले हेमच०।

**बलाञ्चिता** स्त्री ३त०। बलरामवीणायां शब्दरत्ना०।

**बलाट** पु०बलाय तद्दानस्य अटति गच्छति उदरम् अट-अच्। मुद्गे (मुग) हेमच०।

**बलात्** अव्य० बलं सामर्थ्यं कारणत्वेनातति अत—क्विप्। हठादित्यर्थे। पञ्चम्यन्तबलशब्देनास्य न गतार्थता बलात् कार इत्यादिसिद्धये तस्याव्ययस्याङ्गीकार्य्यत्वात्। [च।

**बलात्कार** पु०बलात्+कृ—घञ्। बलपूर्व्वककरणे, हठात्करणे

**बलात्मिका** स्त्री० बलमेवात्मा स्वरूपं कारणत्वात् यस्याः कप् अत इत्वम्। (हातिशुड़ा) हस्तिशुण्डीवृक्षे शब्दर०

**बलादि** पु० चतुरर्थ्यां यः प्रत्ययनिमित्ते १शब्दगणे स च गणः पा०ग०उक्तो यथा “बल चुल नल दल वट लकुल उरल पुल मूल उल डुल वन कूल”। अस्त्यर्थे वा १मतुप्प्रत्यय निमित्ते २शब्दगणे च स च गणः पा०ग०सूत्रे उक्तो यथा “बल उत्साह उद्भास उद्वास उद्दास शिखा कुल चूड़ा सुल कूल आयाम व्यायाम उपयाम आरोह अवरोह परिणाह युद्ध”।

**बलाद्या** स्त्री० बलाय आद्या। (बेलियाड़ा) क्षुपभेदे राजनि

**बलाध्यक्ष** पु० ६त०। सेनापतौ मनु० ७।१८९।

**बलानुज** पु० अनुजायते अनु+जन—ड ६त०। श्रीकृष्णे।

**बलाबलाधिकरण** न०बलञ्च अबलञ्च ते अधिक्रियेते अस्मिन् अधि+कृ—आधारे ल्युट्। आकाङ्क्षानाकाङ्क्षारूपबलाबलयोर्निश्चायके जैमिन्युक्ते न्यायभेदे यथा “सा वैश्वदेव्यामिक्षा भवति वाजिभ्यो वाजिनम्”इत्यत्र वैश्वदेवयागस्यामिक्षान्वितत्वेनन वाजिनाकाङ्क्षेति न तत्र तस्यान्वयः वेदान्तप०।

**बलामोटा** स्त्री० बलमामोटयति आ+मुट—अच्। नागदमन्याम् भवाप्र०

**बलाय** पु० बलस्यायः स्थानम्। वरुणवृक्षे शब्दच०।

**बलाराति** पु० बलस्य तन्नामासुरस्यारातिः। इन्द्रे अमरः। बलघातु प्रभृतयोऽप्यत्र। [त्वच्। पानीयामलके शब्दच०।

**बलालक** पु० बलाय सामर्थ्याय अलति पर्य्याप्नोति अल-

**बलास** पु० बलमस्यति क्षिपति अस०अण् उप०सम०। कफधातौ हेमच० “गौरवं कफसंस्रावोऽरुचिस्तम्भोऽग्निमार्दवम्। माधुर्य्यमपि चास्यस्य बलासावतते हृदि”सुश्रु०

**बलाह्वकन्द** पु० बलं सामर्थ्यमाह्वयति आ+ह्वे-क तादृशः कन्दः। गुलुञ्चकन्दे राजनि०।

**बलि** पु० बल—इन्। १ पूजायाम् २उपहारे, “ददतु तौ बलिं चैव निजगात्रास्त्रगुक्षितमिति” चण्डी ३राजग्राह्ये अमरः ४चामरदण्डे, ५गृहस्थकर्त्तव्यपञ्चयज्ञमध्ये भागे, ५भूतयज्ञे, हेमच०। “बलिकर्म ततः कुर्य्यादिति”स्मृतिः।

विरोचनपुत्रे दैत्यभेदे च "येन बद्धो बलीराजा दानवेन्द्रो महाबलः" रक्षाबन्धनमन्त्रः। ७जरया श्लथचर्मणि स्त्री० ङीप्। "स्वहस्तस्तु यदा पश्येत् बलीपलितमात्मनः" इति मनुः। ८उदरावयवभेदे "बलिभयं चारु बभार बाला" इति कुमारः। ९गृहस्थे कर्क्कटाकारे मांसपिण्डे, वैद्यकम् अर्शसशब्दे दृश्यम्। १०स्वच्छदारुभेदे च (पाड़)स्त्री० स्वार्थे क। बलिका तत्रार्थे अतिबलायाञ्च राजनि०। ११ययातिवंश्यसुतपोऽपत्यपुत्रे विष्णु पु०। दानवभेदश्च भाग० ८स्क० दृश्याः।

वैश्वदेवबलिकरणप्रकारः मार्क० पु० उक्तो यथा।

"ततोऽन्नेनोपसेपनं कुर्य्याद्दद्याच्च बलिमित्यथ। ब्रह्मणे स्थण्डिलमध्ये तु विश्वेदेवेभ्य एव च। धन्वन्तरिं समुद्दिश्य प्रागुदीच्यां बलिं क्षिपेत्। प्राच्यां शक्राय, याम्यायां यमाय बलिमाहरेत्। प्रतीच्यां वरुणायैव सोमायोत्तरतो बलिम्। दद्याद्धात्रे विधात्रे च बलिं द्वारे गृहस्य च। अर्य्यम्णे च बलिं दद्यात् गृहेभ्यश्च समन्ततः। नक्तञ्चरेभ्यो भूतेभ्यो बलिमाकाशतो हरेत्। पितृणां निर्वपेच्चैव दक्षिणाभिमुखस्थितः। गृहस्थस्तत्परो भूत्वा सुसमाहितमानसः। ततस्तोयमुपादाय तिष्ठेदाचमनाय वै। स्थानेषु निक्षिपेत् प्राज्ञस्तास्ता उद्दिश्य देवताः। एवं गृहबलिं कृत्वा गृहे गृहपतिः शुचिः। आप्यायनाय भूतानां कुर्य्यादुत्सर्गमादरात्। श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्च वपेद्भुवि। वैश्वदेवं हि नामैतत् सायं प्रातरुदाहृतम्"।

देवोद्देश्यकबलिविशेषादिकं यथा

"साधकैर्बलिदानेषु ग्राह्याः सर्वहरस्य तु। पक्षिणः कच्छपा ग्राहा मत्स्या नवविधा मृगाः। महिषो गोधिका गावश्छागो बभ्रुश्च शूकरः। खड्गश्च कृष्णसारश्च गोधिका शरभो हरिः। शार्दूलश्च नरश्चैव स्वगात्ररुधिरन्तथा। चण्डिकाभैरवादीनां बलयः परिकीर्त्तिताः। बलिभिः साध्यते मुक्तिर्बलिभिः साध्यते सुखम्। बलिदानेन सततं जयेत् शत्रून् नृपान् नृपः। मत्स्यानां कच्छपानाञ्च रुधिरैः सततं शिवा। मासैकं तृप्तिमायाति ग्राहैर्मांसैस्तु त्रीनथ। मृगाणां शोणितैर्देवी नराणामपि शोणितैः। अष्टौ मासानवाप्नोति तृप्तिं कल्याणदा च सा। गोगोधिकानां रुधिरैर्वार्षिकीं तृप्तिमाप्नुयात्। कृष्णसारस्य रुधिरैः शूकरस्य च शोणितैः। आप्नोति सततं देवी तृप्तिं द्वादशवार्षिकीम्। महिषाणाञ्च खड्गानां रुधिरैः शतवार्षिकीम्। तृप्तिमाप्नोति परमां शार्दूलरुधिरैस्तथा। सिंहस्य शरभस्याथ स्वगात्रस्य च शोणितैः। देवी तृप्तिमवाप्नोति सहस्रं परिवत्सरान्। मांसैरपि तथा प्रीती रुधिरैर्यस्य यावती। कृष्णसारस्तते खड्गं तथा मत्स्यञ्च रोहितम्। वार्द्धीनसयुगस्यापि फलं तेषां पृथक् शृणु। कृष्णसारस्य मांसेन तथा खड्गेन चण्डिका। वर्षान् पञ्च शतान्येव तृप्तिमाप्नोति केवलाम्। रोहितस्य तु मत्स्यस्य मांसैर्वार्द्धीनसस्य च। तृप्तिमाप्नोति वर्षाणां शतानि त्रीणि मत्प्रिया। त्रिःपिबस्त्विन्द्रियक्षीणः श्वेतो वृद्धस्तजापतिः। वार्द्धीनसः प्रोच्यतेऽसौ हव्ये कव्ये च सत्तमः। नीलग्रीवो रक्तशीर्षः कृष्णपादः सितच्छदः। वार्द्धीनसः स्यात् पक्षीशो मम विष्णो रतिप्रियः। "मन्त्रपूतं शोणितन्तु पीयूषं जायते यदा। मस्तकञ्चापि तस्यास्ति मांसञ्चापि सदा शिवा। तस्मात्तु पूजने दद्याद्बलेः शीर्षञ्च लोहितम्। भोज्ये होमे च मांसानि नियुञ्जीताद्विचक्षणः। पूजासु नाऽऽम मांसानि दद्याद्वै साधकः क्वचित्। ऋते तु लोहितं शीर्षमक्षतं तत्तु जायते। कुष्माण्डमिक्षुदण्डञ्च मद्यमासवमेव च। एते बलिसमाः प्रोक्तास्तृप्तौ छागसमाः सदा। चन्द्रहासेन कर्त्र्या वा छेदनं मुख्यमिष्यते। दात्रासिधेनुकक्रचकङ्कुकाभिस्तु मध्यमम्। क्षुरस्तु रप्रभल्लैस्तैवाधमं परिकीर्त्तितम्। एभ्योऽन्यैः शक्तिवाणाद्यैर्बलिच्छेद्यः कदापि न। नास्ति देवी बलिं तन्तु दाता स्वस्यनवाप्नुयात्। हस्तेन छेदयेद्यस्तु शोणितं साधकः पशुम्। पक्षिणं वा ब्रह्मवत्सां सोऽवाप्नोति सुदुःसहाम्। नामन्त्र्य खड्गन्तु बलिं नियुञ्जीत विचक्षणः।" "पशूनां पक्षिणाञ्चापि नराणाञ्च विशेषतः। स्त्रियं न दद्यात्तु बलिं दत्त्वा नरकमाप्नुयात्। अज्ञातबलिदानेषु शोणितं पशुपक्षिणोः। बलिं दद्यान्मातृमेतु त्यक्त्वा अज्ञातपूजितम्। न त्रिमासीयकाद्यूनं पशुं दद्यात् शिवाबलिम्। न च त्रिपक्षकाद्यूनं प्रदद्याद्वै पतत्त्रिणम्। काणाभ्यङ्गादिदुष्टन्तु न पशुं पक्षिणन्तथा। देव्यै दद्याद्यथामत्स्यं तथैव पशुपक्षिणौ। छिन्नलाङ्गूलकर्णादिभग्नदन्तन्तथैव च। भग्नशृङ्गादिकञ्चापि न दद्यात्तु कदाचन।" "नारं सद्यो शिरो रक्तं देव्याः सम्यक् निवेदयेत्। छागन्तु वामतो दद्यान्माहिषं वितरेत् पुरः। पक्षिणं वामतो दद्यादग्रतो देव

शोणितम् । क्रव्यादीनां पशूनान्तु पक्षिणाञ्च शिरोऽसृजम् । वामे निवेदयेत् पार्श्वे जलजानाञ्च सर्व्वशः । लप्पासारस्य कूर्म्मस्य खड्गस्य शशकस्य च । ग्राहाणामथ मत्स्यानामग्र एव निवेदयेत् । सिंहस्य दक्षिणे दद्यात् खड्गिनोऽपि च दक्षिणे । पृष्ठदेशे न दद्यात्तु शिरो वा रुधिरं बलेः” कालिकापु० नानास्थानीयम् । “बलिदानेन विप्रेन्द्र ! दुर्गाप्रीतिर्भवेन्नृणाम् । हिंसाजन्यञ्च पापञ्च लभते नात्र संशयः । उत्सर्गकर्त्ता दाता च छेत्ता पोष्टा च रक्षकः । अग्रपश्चान्निरोद्धा च सप्तैते वधभागिनः । यो यं हन्ति स तं हन्ति चेति वेदोक्तमेव च । कुर्व्वन्ति वैष्णवीं पूजां वैष्णवास्तेन हेतुना” ब्रह्म० प्रकृ० ६१ । ६२ अ० । बलिदाननिन्दा यथा

“पार्व्वत्युवाच । ये समार्चनमित्युक्त्वा प्राणिहिंसनतत्पराः । तत् पूजनं समामेध्यं तद्दोषात्तदधोगतिः । मदर्थे शिव ! कुर्व्वन्ति तामसा जीवघातनम् । आकल्पकोटि निरये तेषां वासो न संशयः । मम नाम्नाथ वा यज्ञे पशुहत्यां करोति यः । क्वापि तन्निष्कृतिर्नास्ति कुम्भीपाकमवाप्नुयात् । दैवे पैत्रे तथात्मार्थे यः कुर्य्यात् प्राणिहिंसनम् । कल्पकोटिशतं शम्भो ! रौरवे स वसेत् ध्रुवम् । यो मोहान् मानवैर्द्देहिहत्यां कुर्य्यात् सदाशिव ! । एकविंशतिकल्पः स तत्तद्योनिषु जायते । यस्तु यज्ञे पशून् हत्वा कुर्य्यात् शोणितकर्द्दमम् । स पचेन्नरके तावद् यावल्लोमानि तस्य वै । हन्ता कर्त्ता तथोत्सर्गकर्त्ता धर्त्ता तथैव च । तथाभवन्ति सर्व्वे ते ध्रुवं नरकगामिनः । समोहे ये पशून् हत्वा स्वर्गं यातुमिच्छति । यो मूढ़ः स तु घोरे वसेद्‌ देव ! न संशयः । देवतान्तरयज्ञव्याजेन स्वेच्छया तथा । हत्वा जीवांस्ततो मोहात् नित्यं नरकमाप्नुयात् । यूपे बद्ध्वा पशून् हत्वा यः कुर्य्याद्रक्तकर्द्दमम् । तेन चेत् प्राप्यते स्वर्गो नरकं केन गम्यते । उपदेष्टा वधे हन्ता कर्त्ता धर्त्ता च विक्रयी । उत्सर्गकर्त्ता जीवानां सर्व्वेषां नरकं भवेत् । मध्यस्थस्य तथायापि प्राणिनां क्रयविक्रये । तथा दृष्ट्वा सूनायां कुम्भीपाको भवेद्‌ ध्रुवम् । स्वयंकामाशयो भूत्वा श्रीऽज्ञानेन विमोहितः । हन्यन्यात् विविधान् जीवान् कुर्य्यान्मन्नाम शङ्कर ! । तद्वाक्यवंशवक्ष्यत्सम्पातिदारादिसम्पदाम् । अचिराद्वै भवेन्नाशो मृतः स नरकं व्रजेत् । देवयज्ञे पितृश्राद्धे तथा माङ्गल्यकर्म्मणि । तस्यैव नरके वासो यः कुर्य्याज्जीवघातनम् । मद्व्याजेन पशून् हत्वा यो भवेत् सह बन्धुभिः । तद्गात्रलोमसंख्याब्दैरसिपत्रवने वसेत् । आवयोरन्यदेवानां नाम्ना च परकर्म्मणि । यः संपोष्य पशून् हन्यात् सोऽक्षतामिस्रमाप्नुयात् । पशून् हत्वा तथा त्वां मां योऽर्च्चयेन्मांसशोणितैः । तावत्तन्नरके वासो यावच्चन्द्रदिवाकरौ । निर्व्विघ्नभक्षतुल्यं तत् बहुद्रव्यैश्च यत् कृतम् । यस्मिन् यज्ञे प्रभो ! शम्भो ! जीवहत्या भवेद्‌ध्रुवम् । यज्ञमारभ्य चेत् यज्ञः कुर्य्याद्वै पशुघातनम् । स तदाऽधोगतिं गच्छेदितरेषाञ्च का कथा । आवयोः पूजनं मोहाद्वै कुर्य्युर्मांसशोणितैः । पतन्ति कुम्भीपाके ते भवन्ति पशवः पुनः । फलकामास्तु वेदोक्तैः पशोरालभनं मखे । पुनस्तत्तत् फलं भुक्त्वा ये कुर्व्वन्ति पतन्त्यधः । स्वर्गकामोऽश्वमेधं यः करोति निगमाज्ञया । तद्भोगान्ते पतेद्भूयः स जन्मनि भवार्णवे । ये हताः पशवो लोकैरिह स्वार्थेषु कोविदैः । ते परत्र तु तान् हन्युस्तथा खड्गेन शङ्कर ! । आत्मपुत्रकलत्रादिसम्पत्तिकुलेच्छया । यो दुरात्मा पशून् हन्यात् आत्मादीन् घातयेत् स तु” । जानन्ति नो वेद पुराणतत्त्वं ये कर्मठाः पण्डितमानयुक्ताः । लोकाधमास्ते नरके पतन्ति कुर्व्वन्ति मूढाः पशुघातनञ्चेत् । येऽज्ञानिनो मन्दधियोऽकृतार्था भवे पशुं घ्नन्ति न धर्म्मशास्त्रम् । जानन्ति नाकं नरकं न मुक्तिं गच्छन्ति घोरं नरकं नरास्ते । शुद्धात्मकाख्यां न विदन्ति शाक्ता न धर्म्मनामं परमार्थतत्त्वम् । पापं न पुण्यं पशुघातका ये पूर्वोदवासो भवतीह तेषाम् । जीवानुकम्पां न विदन्ति मूढा अज्ञानाच्च येऽसत्पथिनोऽन धर्म्मम् । अज्ञा भवे प्राणिवधं तु कुर्य्युस्ते यान्ति मर्त्त्याः खलु रौरवाख्यम् । ततस्तु खलु जन्तूनां घातनं नो करिष्यति । शुद्धात्मा धर्म्मवान् ज्ञानी प्राणान्तेनैव मानवः । यदीच्छेदात्मनः क्षेमं त्यक्त्वाऽज्ञानं तदा नरः । जीवान् कानपि नो हन्यात् सङ्कटापन्न एव चेत् । सम्पत्तौ च विपत्तौ वा परलोकेच्छुकः पुमान् । कदाचित् प्राणिनो हत्यां न कुर्य्यात् तत्त्ववित् सुधीः । मानवो यः परमेह तन्नेच्छेत् सदाशिव ! । सर्व्वविष्णुमयत्वेन न कुर्य्यात् प्राणिनां वधम् । वधाद्रक्षति यो मर्त्त्यो जीवान् तपस्व ! धर्म्मवित् । किं पुण्यं तस्य वक्ष्येऽहं ब्रह्माण्डं स तु रक्षति । यो रक्षेत् घातनात् शम्भो ! जीवमात्रं दयापरः । कण्ठप्रवतनो नित्यं सर्व्वरक्षां करोति सः । एकस्मिन्रक्षिते जीवे त्रैलोक्यं तेन रक्ष-

तम्। यथात् शङ्कर! वै येन तथाद्रुथम घातयेत्। पशुहिंसाविधिर्यत्र पुराणे निगमे तथा। उक्तो रजस्तमोभ्यां स केवलं मनसापि वा। नरकस्वर्गभेदार्थं संसाराय प्रवर्त्तितः। तयोस्तत्कर्मभोगेन गमनागमनं भवेत्। सत्त्वेन सात्त्वतपन्थे स विधिर्नैव शङ्कर!। प्रवृत्तितो निवृत्तिस्तु यत्रापि सात्त्विकी क्रिया। एवं नानाविधं कर्म पशोरालभनादिकम्। कामाशयः फलाकाङ्क्षी कृत्वाऽज्ञानेन मानवः। पश्चाज्ज्ञानाग्निना छित्वा भ्रान्त्याशां तामसीं सदा। यमभीतिहरं भक्त्या यदि गोविन्दमाश्रयेत्।" पाद्मोत्तरखण्डे १०४ १०५ अ०।

**बलिध्वंसिन्** पु० बलिं ध्वंसयति स्वस्थानात् पातयति ध्वन्स-णिच्-णिनि। विष्णौ वामनावतारेण हि तस्य तथात्वम्। तत्कथा च वामनपु० २२ अ० दृश्या।

**बलिनन्दन** पु० ६त०। बाणासुरे शब्दर०। [चर्मवति अमरः।

**बलिन(भ)** त्रि० बलि+अस्त्यर्थे-इन भ वा। जरया शिथिल-

**बलिन्** त्रि० बलमस्त्यस्य इनि। १बलवति। २उष्ट्रे, ३महिषे, ४वृषे, ५शूकरे, ६कुन्दवृक्षे, ७कफे पु० जटा० ८माषे पु० हेम०। ९बलरामे शब्दर० (वेडियाड़ा) १०कुपे स्त्री ङीप् शब्दच०।

**बलिपुष्ट** पु० बलिना वैश्वदेववलिद्रव्येण पुष्टः पुष-क्त ३त०। काके अमरः स्त्रियां ङीप्।

**बलिपोदकी** स्त्री उपोदक्यां राजनि०।

**बलिप्रिय** पु० बलिनं प्रीणाति प्री-क। लोध्रद्रुमे शब्दच०।

**बलिविन्ध्य** पु० रैवतकमनोःपुत्रभेदे भाग०८।५।२।

**बलिभुज्** पु० बलिं वैश्वदेवद्रव्यम् अदृश्यदत्तवलिं भुङ्क्ते भुज-क्विप्। काके अमरः।

**बलि(ली)मुख** पु० बलि(ली)युक्तं मुखमस्य शाक०त०। वानरे अमरः। [वति। २उष्ट्रे पु० राजनि०।

**बलिष्ठ** त्रि० अतिशयेन बली बलिन्+इष्ठन्। १अत्यन्तबल-

**बलिष्णु** त्रि०बल-संवरणे इष्णु। अपमानिते उणा०।

**बलिसद्मन्** न०६त०। पाताले अमरः बलिमन्दिरादयोऽप्यत्र।

**बलीक** पु० न० वालयति आच्छादयति बल-ईकन् नि०। पटल प्रान्ते (छाँच) अमरः। [युते स्त्रियां ङीप्।

**बलीयस्** त्रि० अतिशयेन बली बलिन्+ईयसु। अत्यन्तबल-

**बलीवर्द** पु० ई लक्ष्मीः व-णिच् वर तौ ईवरौ ददाति दा-क ईवर्दः बली चासौ ईवर्दश्चेति। वृषे अमरः। ततः शुभ्रा० अपत्ये ढक्। बालीवर्देय तदपत्ये पुंस्त्री०

**बलूल** त्रि० बल+सिध्मा० वा लच् ऊङ्। बलयुक्ते।

**बलोत्कटा** स्त्री १स्कन्दानुचरमातृकाभेदे भा० श०४५ अ०। २बलेनोत्कटे त्रि०।

**बल्य** न० बलाय हितं बल+यत् १प्रधानधातौ शुक्रे, २बलसाधने च ३अश्वगन्धायाम्, ४अतिबलायां, ५शिम्बडीक्षुपे ६प्रसारिण्याञ्च स्त्री राजनि०। बला० चतुरर्थ्यां यत्। ७बलनिर्वृत्ते त्रि० ८बुद्धभिक्षुके पु०त्रिका०। [तृणभेदे हेमच०

**बल्वजा** स्त्री० बल-क्विप् तं वजति वज-गतौ अच्। उलपे

**बल्ह** वृतौ दाने, वधे, च सक० याचने द्विक० भ्वा०आत्म० सेट्। बल्हते अवल्हिष्ट बबल्हे।

**बल्हि** पु०बल्ह-इन् ।१क्षत्रियभेदे२जनपदभेदे स्वार्थे क तत्रार्थे। ततः कोपधत्वात् भवे अण्। बाल्हिक हिङ्गुनि न०।

**बव** पु०प्रथमे तिथ्यर्द्धरूपे करणभेदे करणशब्दे दृश्यम्।

**बष्क(स्क)यि(यो)नी** स्त्री भष्क गतौ अयन् पृषो० भस्य बः सस्य वा षत्वम्। बष्क(स्क)योऽस्यास्ति इनि ङीप् बमध्यत्वे षत्वम्। चिरप्रसूतायां गवि अमरः। बष्क(स्क)यं नयतीति नी-ड गौ० ङीप् बमध्यत्वे पूर्व० षत्वम्। बष्क(स्क)यणी(नी) इत्यप्यत्र स्त्री।

**ब(व)ह** वृद्धौ भ्वा० आत्म० अक० सेट् इदित्। बं(वं)हते अबं(वं)हिष्ट। बबंहे मध्यावयादयमोष्ठ्यादिरिति पाणिनीयाः। दन्तोष्ठ्यादिरिति वोपदेवः।

**बहल** त्रि०बहि-कलच् नलोपश्च १प्रचुरे २बहुशब्दार्थे च।

**ब(व)हु** त्रि० बं(वं)हि-कु नलोपः। १त्रिप्रभृत्यनेकसंख्यान्विते, २विपुले च। ब(व)ह्वादि० स्त्रियां वा ङीप्।

बहुत्वं च त्रित्वपर्य्यवसायि कपिञ्जलन्यायात् अपेक्षाबुद्धिविशेषजन्यत्वं तच्च पर्य्याप्त्या सर्वत्र वर्त्तते समवायेन प्रत्येकं वृत्तिमत्। अस्य संख्यावत् कार्य्यम् तेन बहुशः बहुतम बहुतिथ इत्यादि। [४दाल्व्हे स्वर्गे५जलवातके च मेदि०

**बहुक** पु० बहु+संज्ञायां कन्। १कर्कटे २सूर्य्ये ३अर्कवृक्षे

**ब(व)हुकण्टक** पु० ब(व)हूनि कण्टकान्यस्य। १क्षुद्रगोक्षुरे। २यवासे (मोखुरी) ३हिन्ताले ४अग्निदमन्यां स्त्री क्षुपभेदे राजनि०। [कण्टकारिकायाम् राजनि०।

**ब(व)हुकण्टा** स्त्री ब(व)हवः कण्टाः कण्टकाः यस्याः।

**ब(व)हुकन्द** पु० ६ब०। १सूरणे। २कर्कट्यां स्त्री० राजनि०।

**बहुकर** त्रि०ब(व)हूनि किरति कॄ-अच्।(झराड़) १सभामार्जनकरे खलपौ अमरः। करणे अप्। २सम्मार्जन्यां स्त्री हेम० गौरा० ङीष्। कृ-अच् ६त०। ३उष्ट्रे त्रिका०। ४अनेककार्य्यकरे त्रि०। [कण्टीम् राजनि०।

**ब(व)हुकर्णिका** स्त्री०ब(व)हवः कर्णा इव पर्णान्यस्य। आखु

**बहुकूर्च** पु० बहूनि कूर्चान्यस्य । मधुनारिकेलविशेषे राजनि० ।

**ब(व)हुगन्ध** पु० ६ब० । १कुन्दुरुके । २त्वचे, (तेजपात) न० । ३चम्पककलिकायां ४यूथिकायां५कृष्णजीरके च स्त्री राजनि०

**बहुगन्धदा** स्त्री० ब(व)हुगन्धं ददाति दा–क । मृगमदे । राजनि० ।

**ब(व)हुग्रन्थि** पु० ६ब० । झावुके (झाउ) । शब्दर०

**बहुच्छिन्ना** स्त्री ब(व)हु यथा स्यात् छिद्यते स्म छिद्-क्त तस्य दत्वं च नः । कन्दगुडूच्याम् राजनि० ।

**बहुतरकणिश** पु० ६त० । रागीधान्ये राजनि० ।

**बहुतिक्ता** स्त्री ब(व)हुस्तिक्तो रसोऽस्याः । काकमाच्याम् राजनि० ।

**ब(व)हुतिथ** त्रि० ब(व)हूनां पूरणः ब(व)हु+डट् तिथुक् च । अनेकसंख्याते, "काले गते बहुतिथे" इत्युद्भटः ।

**ब(व)हुत्र** अव्य० ब(व)हु+त्रल् । अनेकेषु दिग्देशकालेषु ।

**ब(व)हुत्वच(क)** पु० ६ब० वा कप् । भूर्जपत्रवृक्षे शब्दर० कबलः हेमच० ।

**ब(व)हुदुग्ध** पु० ब(व)हूनि दुग्धानीव चूर्णानि शुभ्रवर्णत्वात् यस्य । १गोधूमे राजनि० । २ प्रचुरक्षीरवत्यां ३गवि, स्त्री हेमच०।वा कप् अत इत्वम् । बहुदुग्धिका स्नुही-वृक्षे स्त्री शब्दच०।

**ब(व)हुधा** अव्य० ब(व)हु+प्रकारे–धाच् । अनेकप्रकारे

**ब(व)हुधार** न० ६ब० । वज्रास्त्रे राजनि० तस्य षट्कोणत्वात् सर्वेषु कोणेषु धारायुक्तत्वात्तथात्वम् ।

**बहुनाडीक** पु० ६त०। अस्वाङ्गत्वात् कप् । १अनेकदण्डयुते २दिवसे ३स्तम्भे च त्रि०कौ०।स्वाङ्गे न कप् न वा ह्रस्वः। बहुनाडी इत्येव अनेकान्त्रयुते एवं तन्त्रीशब्देऽपि ह्रस्वकपोर्भावाभावौ ऊह्यौ ।

**बहुनाद** पु० ६ब० । शङ्खे राजनि० ।

**ब(व)हुपत्र** पु० ६ब० । १पलाण्डौ २अनेकपर्णयुक्ते त्रि० । ३वृश्चिकाल्याम् ४घृतकुमार्यां ५तुलस्यां ६बृहत्यां,७गोरक्षदुग्धायां, ८जतुकायाञ्च स्त्री राजनि० । गौरा० ङीष् । ९तरुणीपुष्पे स्त्री टाप् । ततः संज्ञायां क । बहुपत्रिका भूम्यामलक्यां, मेथिकायां, महाशतावर्य्याञ्च राजनि० ।

**ब(व)हुपर्ण** पु० ६ब० ।१सप्तच्छदवृक्षे तस्य प्रतिपर्णं सप्तसप्तपर्णवत्त्वात् तथात्वम् । २अनेकपर्णयुक्ते त्रि०३मेथिकायां स्त्री ङीप् । ततः संज्ञायां क । बहुपर्णिका आखुकर्ण्यां स्त्री टाप् । राजनि० ।

**ब(व)हुपाद(द्)** पु० ६ब० वा अन्त्यलोपः । वटवृक्षे हलन्तः अमरः । अदन्तः राजनि०।तस्यानेकशिफावत्त्वात्तथात्वम् ।

**ब(व)हुपुत्र** ब(व)हवः पुत्रा–इव पर्णान्यस्य ।१सप्तच्छदे शब्दच० अनेके पुत्रा इव मूलान्यस्य ।२शतमूल्यां स्त्री ङीप् रत्नमा० ६ब० । ३अनेकतनयान्विते त्रि० ।

**ब(व)हुपुष्प** पु०६ब०। निम्बवृक्षे । संज्ञायां कन् अत इत्वम्। बहुपुष्पिका धातक्यां स्त्री राजनि० ।

**ब(व)हुप्रज** त्रि० ६ब०। १बहुसन्तानवति । २शूकरे पु० हेम०। प्रजातुल्यप्रचुरदलवत्त्वात् ३मुञ्जतृणे पु० राजनि० ।

**बहुप्रतिज्ञ** पु०७ब०। अनेकविषयकप्रतिज्ञायुक्ते व्यवहारे यथा मदीयं रूपकमनेन गृहीतं, सुवर्णञ्चास्य, हस्ते निक्षिप्तं न ददाति,मदीयं क्षेत्रमपहरतीत्येवमादीनां पक्षत्वमिष्यत एव किन्तु क्रियाभेदात् क्रमेण व्यवहारो न युगपदित्येव "बहुप्रतिज्ञं यत् कार्य्यं व्यवहारेषु निश्चितम् । कामं तदपि गृह्णीयात् राजा तत्त्वबुभुत्सया" कात्यायनोक्तेः मिता० [अमरः ।

**बहुप्रद** त्रि०बहूनि प्रददाति प्र+दा–क । दानशौण्डे वदान्ये

**ब(व)हुफल** पु०६ब०। १कदम्बवृक्षे मेदि० २विकङ्कते, ३तेजःफले च राजनि०। ४अनेकफलयुक्ते त्रि०।५माषपर्ण्यां,६क्षविकायां, ७काकमाच्यां, ८त्रिपुष्यां,(शशा)९क्षुद्रकारवेल्ल्यां, स्त्री राजनि० १०भूम्यामलक्यां भावप्र०स्त्री । ११आमलक्यां स्त्री ङीप् मेदि० १२कणेवारौ राजनि०। संज्ञायां कन् इत्वम् । बहुफलिका । भूमिबदर्य्यां स्त्री राजनि०।

**बहुफेना** स्त्री ६त० । सातलायां राजनि० । [बले त्रि०

**बहुबल** पु० ६ब० । १सिंहे राजनि० स्त्रियां ङीष् । २अति-

**बहुवल्ली** स्त्री नित्यक० । डोडिक्षुपे राजनि० ।

**ब(व)हुमञ्जरी** स्त्री० ६ब० संज्ञात्वात् न कप् । तुलस्याम् भावप्र०। [युक्ते त्रि० ।

**ब(व)हुमल** पु० ६ब० । १सीसके रत्नमा० । २अनेकमल-

**बहुमार्ग** न० ७ब० ।१चत्वरे हेमच०। २अनेकपथयुते त्रि० ।

**ब(व)हुमूर्त्ति** स्त्री ६ब०।१वनकार्पासे शब्दच०। २नानाकारयुते त्रि० । [तथात्वम् ।

**बहुमूर्द्धन्** पु० ६ब० । विष्णौ सहस्रशीर्षत्वात्तस्य

**ब(व)हुमूल** त्रि० ६ब० । १अनेकमूलयुते । २शिग्रौ ३स्थूलशरे पु०राजनि०। ४भाकन्द्यां ५शतावर्य्यां स्त्री टाप् । ६वनकाग्ले त्रि० ङीप् राजनि० । ७नामभेदे भा० आ० २५अ०। संज्ञायां कन् । बहुमूलक उशीरे न० भावप्र० ।

**बहुमूल्य** त्रि० ६ब० । महार्घे महाधने अमरः । [राजनि०।

**बहुरन्ध्रिका** स्त्री ६ब० वा कप् अत इत्वम् । मेदायाम्

**ब(व)हुरसा** स्त्री० ६ब०। १महाज्योतिष्मत्याम् राजनि०। २नानारसवति त्रि०।

**बहुरुहा** स्त्री बहु रोहति रुह–क। बन्दगुडूच्यां राजनि०

**ब(व)हुरूप** पु० ६ब०। १सर्जरसे (धुना) अमरः। २शिवे, ३विष्णौ ४सरटे ५कामे मेदि० ६केशे ७ब्रह्मणि शब्दर०। ८बुद्धभेदे त्रिका० ९नानारूपवति त्रि०।

**बहुरेतस्** पु० ६ब०। ब्रह्मणि चतुर्मुखे शब्दरत्ना०। [हारा

**ब(व)हुरोमन्** त्रि०६ब०। १अनेकरोमवति रोमशे। २मेषे पु०

**ब(व)हुल** त्रि०ब(व)हि–कुलच् नि० नलोपः। १अनेकसंख्यान्विते २प्रचुरे। ब(व)हूनि वाति वा–क।३अग्नौ ४कृष्णपक्षे पु० मेदि०। "ब(व)हुलेऽपि गते निशाकरः" कुमारः। ५आकाशे ६सितमरिचे न० ७कृष्णवर्णे ८तद्वति त्रि० ९एलायां १०नीलिकायां ११गवि स्त्री मेदि०। १२देवीभेदे स्त्री कालिकापु०२१अ० अग्निदैवतत्वात् १३कृत्तिकानक्षत्रे स्त्री ब०व० मेदि०।

**बहुलगन्धा** स्त्री० ६ब०। एलायाम् राजनि०।

**ब(व)हुलच्छद** पु०६ ब०। रक्तशोभाञ्जने राजनि०।

**बहुलवण** न० नित्य०क०। अचरभूमिजे लवणभेदे राजनि०।

**बहुलाश्व** पु० मैथिलवंश्ये नृपभेदे भाग० ९।१३।१६।

**ब(व)हुलीकृत** त्रि० ब(व)हुल+च्वि–कृ–क्त। (आगड़ा) वुसापसारणेन राशीकृते खलस्थे १धान्ये, अमरः। २राशीकृतमात्रे च।

**बहुवचन** न० बहुत्वं वक्ति वच–ल्यु। "द्व्येकयोर्द्विवचनैकवचने बहुषु बहुवचनम्" पा० उक्ते बहुत्वबोधके जसादौ सुब्विभक्तौ झिप्रभृतौ २तिङ्विभक्तौ च।

**ब(व)हुवल्क** पु० ६ब०। प्रियाले। (पियासाल) राजनि०।

**ब(व)हुवारक** पु० ब(व)हूनि वारयति अण्, ण्वुल् वा। श्लेष्मातके (बोना आता) शब्दर०।

**बहुविध** त्रि० ६त०। नानाप्रकारे अमरः।

**ब(व)हुविस्तीर्णा** स्त्री० ब(व)हु यथा तथा विस्तीर्णा वि+स्तृ–क्त। (कुँचुड़) १कुचिकाख्ये शब्दच०। २अनेकविस्तारयुते त्रि०। [बीजवति त्रि०

**ब(व)हुबीज** पु०६ब०। १आतृप्ये वृक्षे(आता) शब्दच०।२प्रचुर-

**ब(व)हुवीर्य्य** पु० ६ब०। १विभीतके, (वयड़ा) जटा०। २तण्डुलीयशाके, (नटेशाक) ३शाल्मलिवृक्षे ४मरुवके च राजनि। ५भूम्यामलक्यां स्त्री राजनि०।

**ब(व)हुव्रीहि** त्रि० ६ब०। १अनेकधान्यादियुक्ते "तत्पुरुष! कर्म धारय येन वयं सदा बहुव्रीहिः" उद्भटः। व्याकरणोक्ते प्रायेण अन्यपदार्थप्रधाने २समासभेदे पु०। तल्लक्षणादिकं शब्दशक्तिप्रकाशिकायामुक्तं यथा
बहुव्रीहिं वक्ष्यति। "बहुव्रीहिः स्वगर्भार्थसम्बन्धित्वेन बोधकः। निरूढया लक्षणया स्वांशज्ञापकशब्दवान्" समास इति प्रकृतं तथा च स्वांशस्य निरूढलक्षणया ज्ञापकेन शब्देन घटितः स्वगर्भस्य यादृशार्थस्य सम्बन्धित्वप्रकारेणान्वयबोधं प्रति समर्थः समासः स्वगर्भतादृशार्थसम्बन्धिबोधेन बहुव्रीहिरित्यर्थः। आरूढवानरो वृक्ष इत्यत्र आरूढो वानरो यमिति व्युत्पत्त्या स्वकर्मकारोहणकर्तृवानरसम्बन्धित्वेन वृक्षं, पीतपयस्कं पात्रमित्यत्र पीतं पयो येन इति रीत्या स्वकरणकपानकर्मजलसम्बन्धित्वेन पात्रम्, पक्वतण्डुलश्चैत्र इत्यत्र पक्वास्तण्डुला येनेति दिशा स्वकर्तृकपाककर्मतण्डुलसम्बन्धित्वेन चैत्रं, दत्तदक्षिणो द्विज इत्यत्र दत्ता दक्षिणा यस्मै इति क्रमेण स्वसम्प्रदानकदानकर्मदक्षिणासम्बन्धित्वेन द्विजं, पतितपत्रस्तरुरित्यत्र पतितं पत्रं यस्मादिति विग्रहेण स्वापादानकपतनाश्रयपत्रसम्बन्धित्वेन तरुं, चित्रगुरित्यत्र चित्रा गौर्यस्येति वाक्यानुसारेण चित्राभिन्नस्वगोसम्बन्धित्वेन चैत्रम्" रक्तपटः काय इत्यत्र रक्तः पटो यत्रेति व्युत्पत्त्या रक्ताभिन्नस्ववृत्तिपटसम्बन्धित्वेन कायम्" एवं वाणच्छिन्नकरो नर इत्यादावपि। वाणेन छिन्नः करो येन यस्य वा इत्यादि विग्रहे वाणकरणकस्वकर्तृकच्छेदकर्मकरसम्बन्धित्वादिना नरादिकं बहुव्रीहिर्बोधयतीति सर्वत्र स्वगर्भतत्तदर्थसम्बन्धित्वेन धर्म्मिणामवगमः। दक्षिणपूर्वा पूर्वोत्तरेत्यादिदिग्बहुव्रीहिस्थले दक्षिणया पूर्वा यस्या इत्यादिविग्रहेण स्वपार्श्वस्थदक्षिणसहितपूर्वदिक्सम्बन्धित्वादिना आग्नेयीप्रभृतीनां विदिशां बोधः। अस्तिक्षीरा गौरीत्यादाव् अस्ति क्षीरं यस्या इत्यादिविग्रहेणास्तित्ववत्क्षीरसम्बन्धित्वादिप्रकारेण गवादेरवगतिः। इयांस्तु विशेषो यत्त्वेकेषाम्मतेऽस्तीत्यादिकं तिङन्तमन्येषां मते तत्प्रतिरूपकाव्ययमिति। उप समीपे दश येषामिति समीपगणितत्वार्थकषष्ठ्या विग्रहादुपदशाः शकुनय इत्यादौ स्वसमीपगणितदशसम्बन्धित्वेन नवानामेकादशानाञ्च पक्षिणामवगमस्तत्र दशशब्दस्य दशत्वलक्षणया स्वपर्य्याप्तसंख्यासमीपगणितदशत्वसम्बन्धित्वेनैव नवादेर्बोध इति दुर्गप्रभृतयः। अधिका दश येषामित्यादिविग्रहे अधिकदशाः पुरुषा इत्यादावपि स्वपर्य्याप्तसंख्याधिकदशवृत्तिसंख्या-

**बाणगङ्गा** स्त्री रावणबाणनिर्भेदेन प्रवृत्तायां नद्याम् "सो-मेश्वाद्दक्षिणे भागे बाणेनाभिविनिर्भिद्य वै। रावणेन प्रक-टिता जलधारातिपुण्यदा। बाणगङ्गेति विख्याता या स्नानादघहारिणी" वराहपु०। [२तूणे हेमच०।

**बाणधि** पु० बाणा धीयन्तेऽस्मिन् धा—आधारे कि। १तूणधौ

**बाणपुङ्खा** स्त्री बाणस्य पुङ्खोऽस्याः ५ब०। शरपुङ्खायां राजनि०

**बाणपुर** न० ६त०। बाणासुरनगरे शोणितपुरे त्रिका०।

**बाणमुद्रा** स्त्री "यथा हस्तगता बाणास्तथा हस्ताङ्गुरं प्रिये!। बाणमुद्रा समाख्याता रिपुवर्गनिकृन्तनी" तन्त्रसा० उक्ते मुद्राभेदे।

**बाणयुद्ध** न० ६त०। कृष्णेन सह प्रियवाहायकस्य बाणस्य युद्धे तत्र युद्धं भाग० १०।६१ अध्यायादौ दृश्यम्।

**बा(व)णलिङ्ग** बाणदैत्येन संपूज्य अभिसृज्य नर्मदायां निक्षिप्ते शिवलिङ्गभेदे। नर्मदाशब्दे ३८८७ पृ० विवृतिः।

**बाणवार** न० बाणं वारयति वारि—अण् उप०स०। १कञ्चुके सन्नाहे हारा०।

**वाणिज्य** न० वणिजो भावः, कर्म वा ब्राह्मणादित्वात् ष्यञ्। क्रयविक्रयादौ 'वाणिज्येन गतस्य मे स्वहृपतेर्वार्त्तापि न श्रूयते' सा०द० परि०।

तत्र विहितनिषिद्धानि मिता० उक्तानि यथा

"मानेन तुलया वापि योऽशमष्टमकं हरेत्। दण्डं शताद्वौ दिशतं वृद्धौ हानौ च कल्पितम्"। यः पुन-र्वणिक् व्रीहिकार्पासादेः पण्यद्रव्यस्याष्टमभागं कूटमानेन कूटतुलया वाऽन्यथापहरत्यसौ पणानां द्विशतं दण्ड-नीयः। अपहृतस्य पुनर्द्रव्यस्य वृद्धौ हानौ च दण्ड-स्यापि वृद्धिहानी कल्प्ये। "भेषजस्नेहलवणगन्धधान्य-गुडादिषु। पण्येषु प्रक्षिपन् हीनं पणान् दाप्यस्तु षो-डश" याज्ञ०। भेषजमौषधद्रव्यं स्नेहो घृतादिः। गन्ध-द्रव्यमुशीरादि धान्यमव्रीह्यादि। गुडमरिचादि। एतेष्वसार-द्रव्यं विक्रयार्थं मिश्रयतः षोडशपणो दण्डः। किञ्च। "मृच्चर्ममणिसूत्रायःकाष्ठवल्कलवाससाम्। अजातौ जाति-करणे विक्रेयाष्टगुणो दमः" याज्ञ०। "न विद्यते बहुमूल्या-जातिर्यस्मिन् मृच्चर्मादिके तदजाति तस्मिन् जातिकरणे विक्रयार्थं गन्धवर्णरसान्तरसञ्चारणेन बहुमूल्यजातीय-साद्दृश्यसम्पादने यथा मल्लिकामोदसञ्चारणेन मृत्तिकायां सुगन्धापादनमिति। मार्जारचर्मणि वर्णोत्कर्षापादनेन व्याघ्रचर्मेति स्फटिकमणौ वर्णान्तरकरणेन पद्मराग इति कार्पासिके सूत्रे गुणोत्कर्षाधानेन पट्टसूत्रमिति कार्ष्णायसे वर्णोत्कर्षाधानेन रजतमिति बिल्वकाष्ठे चन्द-नामोदसञ्चारणेन चन्दनमिति कक्कोले त्वगात्मके लवङ्ग-मिति कार्पासिके वाससि गुणोत्कर्षाधानेन कौशेयमिति विक्रेयस्यापादितस्य द्रव्यस्य मृच्चर्मादेः पण्यस्याष्टगुणो दण्डो वेदितव्यः। "समुद्रपरिवर्त्तञ्च सारभाण्डञ्च कृत्रि-मम्। आधानं विक्रयं वापि नयतो दण्डकल्पना। भिन्ने पणे तु पञ्चाशत्पणे तु शतमुच्यते। द्विपणे द्विशतो दण्डो मूल्यवृद्धौ च वृद्धिमान्" याज्ञ०। मुद्गं पिधानं मुद्गेन सह वर्त्तत इति समुद्गं करण्डकम्। परिवर्त्तनं व्यत्ययः। योऽन्यदेवमुद्गानां पूर्णं करण्डकं दर्शयित्वा हस्तलाघवेनान्यदेव स्फाटिकानां पूर्णकरण्डकं समर्पयति यश्च सारं भाण्डं कस्तूरिकादिकं कृत्रिमं कृत्वा विक्रय-माधिं वा नयति तस्य दण्डकल्पना वक्ष्यमाणा वेदितव्या। कृत्रिमकस्तूरिकादेर्मूल्यभूते पणे भिन्ने न्यूने न्यूनपण-मूल्यमिति"।

"लोकेऽस्मिन् द्विविधं पण्यं जङ्गमं स्थावरं तथा। षड्विधस्तस्य तु बुधैर्दानादानविधिः स्मृतः। गणिमन्तु-लितं मेयं क्रियया रूपतः श्रियेति" गणितं क्रमुकफलादि तुलितं कुङ्कुमादि मेयं शाल्यादि क्रियया वाहदोहादि-रूपयोपलक्षितमश्वमहिष्यादि। रूपतः पण्याङ्गनादि श्रिया दीप्त्या मरकतपद्मरागादि। इत्येवं षट्प्रकारमपि पण्यम्" मिता०। तत्र विप्रैरापदि स्वयं कार्यत्वं वि-दधे बृहस्पतिः "कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयं कृतम्। आपत्काले स्वयं कुर्वन् नैनसा लिप्यते द्विजः। लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चैव पूजयेत्। ते तुष्टास्तस्य तं दोषं शमयन्ति न संशयः। वणिक् कुसीदो-दद्यात्तु वस्त्रगोकाञ्चनादिकम्। कर्षकोऽन्नपानादि यानशय्यासनानि च। पण्येभ्यो विंशकं दत्त्वा पशु-स्वर्णादिकं शतम्। वणिक् कुसीदादोषः स्यात् ब्राह्मणा-नाञ्च पूजनात्। राज्ञे दत्त्वा तु षड्भागं देवतानाञ्च विंशकम्" आ०त०। अधिकं कृषिशब्दे २२०५पृ०दृश्यम्।

**वाणिनी** स्त्री वण—णिनि ङीप्। १विदग्धायां स्त्रियां २नर्त्तक्याम् ३मत्तस्त्रियाञ्च अजयपालः।

**बा(वा)दर** पु० ब(व)दर+स्वार्थेऽण्। १कार्पासवृक्षे, मेदि०। ब(व)दरस्येदं तस्य विकारो वा अण्। २कार्पाससूत्रे न०। ३तद्वस्त्रादौ त्रि० अमरः। ४कार्पासवृक्षे स्त्री अनन्तत्वेऽपि अजादेराकृतिगणत्वात् टाप् शब्दच०। [बा(वा)दरिरत्न।

**बा(वा)दरायण** पु० ब(व)दर्या भवः फक्। वेदव्यासे। इति।

**बादरिक** त्रि० बदराण्युञ्छति बदर–ठक्। बदरफलस्य भूमौ पतितस्यैकैकशग्राहिणि।

**बाध** विहतौ भ्वादि०आत्म०सक० सेट्। बाधते अबाधिष्ट। अबादित् चक्ङि न ह्रस्वः अबबाधत् त।

**बाध** पु० बाध भावे-घञ्। १प्रतिरोधे। २प्रतिबन्धे, पीडने, ३उपद्रवे च। न्यायमते ४साध्याभाववत्पदार्थे यथा वह्न्यनुमितौ वह्न्यभाववान् ह्रदो बाधः। "साध्याभाववत्त्वप्रमाविषयपक्षत्वम्" तल्लक्षणम्। ५हेतुदोषभेदे अनुचिन्ता० बाध-कर्त्तरि अच्। ६प्रतिबन्धके त्रि०।

**बाधक** त्रि० बाध–ण्वुल्। १प्रतिबन्धके। २स्त्रीणामृतुकाले प्रजाजननशक्तिप्रतिरोधके रोगभेदे पु०।

स च रोगश्चतुर्विधस्तल्लक्षणं वैद्यके उक्तं यथा "व्यथा कट्यां तथा नाभेरधः पार्श्वे स्तनेऽपि च। रक्तमाड्रीप्रदोषेण जायते फलहीनता। मासमेकं द्वयं वापि ऋतुयोगो भवेद्यदि। रक्तमाड्री१प्रदोषेण फलहीना तदा भवेत्। नेत्रे हस्ते भवेज्ज्वाला योनौ चैव विशेषतः। लालासंयुक्तरक्तञ्च षष्ठी बाधकयोगतः। मासैकेन भवेद् यत्र ऋतुस्नानद्वयं तथा। मलिना रक्तयोनिः स्यात् षष्ठीबाधकयोगतः। उद्वेगो गुरुतादेहे रक्तस्रावो भवेद्बहुः। नाभेरधो भवेत् शूलं चाङ्कुरः२ स तु बाधकः। ऋतुहीना चतुर्मासं त्रिमासं वा भवेद् यदि। कृशाङ्गी करपादे च ज्वाला चाङ्कुरयोगतः। सशूला च सगर्भा च शुष्कदेहाल्परक्तिका। जलकुमारस्य४ दोषेण जायते फलहीनता। या कृशाङ्गी भवेत् स्थूला बहुकालकृतुस्तथा। गुरुस्तनी स्वल्परक्ता जलकुमारस्य दूषणात्" वैद्यकम्।

**बाधन** न० बाध–भावे ल्युट्। १पीडायां शब्दर०। २प्रतिबन्धे च।

**बाधा** स्त्री बाध–भावे १अपीडायां २निषेधे ३प्रतिबन्धे च।

**बाधित** त्रि०बाध–कर्मणि क्त।१प्रतिबद्धे।२बाधज्ञानविषये च

**बाधिर्य्य** न० बधिरस्य भावः ब्राह्मणादित्वात् ष्यञ्। श्रवणशक्तिराहित्ये रोगभेदे बधिरशब्दे दृश्यम्।

**बान्धकिनेय** पु०स्त्री०बन्धक्याः अपत्यं ढक् इनङ् च। असत्या अपत्ये अमरः।

**बान्धव** पु० बन्धु+स्वार्थे, इदमर्थे वा अण्। १बन्धुशब्दार्थे, २पितृमातृसम्बन्धिनि ३भ्रातरि ४मातुलादौ च। "बान्धवास्तद्वाप्नुयुः" कात्या० स्मृतिः। [सुते हेमच०

**बार्बटीर** पु० १रङ्गे धातौ २आम्रास्थि, ३अङ्कुरे ४गणिका-

**बार्हत** न० बृहत्याः फलम् प्लक्षा० अण्। १बृहतीफले बृहतिभवः उत्सा० अञ्। २बृहतिभवे त्रि०।

**बार्हदग्न** पुंस्त्री० बृहदग्नेरपत्यम् कण्वा० अण्। बृहदग्निनामकर्षिगोत्रापत्ये। [न्दपसुते २तत्सम्बन्धिनि त्रि०।

**बार्हद्रथ** पुंस्त्री० बृहद्रथस्यापत्यम् शैकिकोऽण्। १बृहद्रथ-

**बार्हस्पत** पु० बृहस्पतेरिदम् सदेवताऽस्य वा अण्। गुरुसम्बन्धिनि १वत्सरे २चर्वादौ च। पत्यन्तत्वात् पुरोहिता०यक्। बार्हस्पत्य तत्रार्थे त्रि०। "बार्हस्पत्येन षट्त्रिंशं ज्ञेयं नान्यैस्तु निश्चयः" सू०सि०।

**बार्हिण** त्रि० बर्हिणो विकारः ताला० अण्। बर्हिविकारे।

**बाल** पु०न० बालाख्ये १गन्धद्रव्यभेदे। २मूर्खे ३शिशौ मेदि० "बाल आषोडशात् वर्षात्" स्मृतिपरिभाषित ४षोडशवर्षावधिकवयस्के च त्रि०। ५केशे पु० अमरः। अर्श आदित्वादस्त्यर्थे अच्। ६अश्वशिशौ अमरः ७अश्ववालधौ ८हस्तिवालधौ ९नारिकेले मेदि० १०पशुपुच्छे च पु० हेमच०। मत्स्यभेदे शब्दच०। "पञ्चवर्षो गता बालः" हेम० उक्ते पञ्चवयस्कापदे।

"बालाचतुष्टयं शीतं मधुरं बलकान्तिकृत्। स्निग्धाग्राहि समीरास्रपित्तास्रक्षयनाशनम्"। "बलामूलत्वचश्चूर्णं पीतं सक्षीरशर्करम्। मूत्रातिसारं हरति दृष्टमेतन्न संशयः। हरेन्महावला कृच्छ्रं भवेद्वातानुलोमनी। हन्यादिति बलामोहं पयसा सितया सह" भावप्र०।

बालादेरवधिमाह सुश्रुतः "वयस्तु त्रिविधं बाल्यं मध्यमं वार्द्धकं तथा। ऊनषोडशवर्षस्तु नरो बालो निगद्यते। त्रिविधः सोऽपि दुग्धाशी दुग्धान्नाशी तथान्नभुक्। दुग्धाशी वर्षपर्य्यन्तं दुग्धान्नाशी वरद्वयम्। तदुत्तरं स्यादन्नाशी एवं बालस्त्रिधामतः"।

"यथोक्त विधिना बालं मासि षष्ठेऽष्टमेऽपि च। अन्नं सम्प्राशयेत्किञ्चित् ततस्तद्वर्द्धयन् क्रमात्" अथ बालस्य परिचर्य्याविधिः। "बालमङ्के सुखं दध्यान्न चैनं तर्जयेत् क्वचित्। सहसा बोधयेच्चैव नायोग्यं सुपवेशयेत्" अयोग्यं उपवेशनासमर्थम्। "नाकस्मात् स्थापयेत् क्रोडे न क्षिप्रं शयने क्षिपेत्। रोदयेन्न क्वचित् कार्य्ये विधिमावश्यकं विना" आवश्यको विधिः भेषज दान तैलाभ्यङ्गोद्वर्त्तनादिः। "तच्चित्तमनुवर्त्तेत तं सदैवानुमोदयेत्। निम्नोच्चस्थानतश्चापि रक्षेद् बालं प्रयत्नतः" बालस्य स्वभावहितान्याह। "अभ्यङ्गोद्वर्त्तनं स्नानं नेत्रयोरञ्जनन्तथा। वसनं मृदु यत् तच्च तथा मृद्वनुलेपनम्। जन्मप्रभृतिपथ्यानि बालस्यैतानि सर्वथा"

बालस्य कवलादिः क्रममाह । "कवलः पञ्चमाद्वर्षादष्टमान्नस्य कर्म च । विरेकः षोडशाद्वर्षाद्विंशतेश्चैव मैथुनम्" । ततः ष्यञ् । इमनिच् वालिमन् बालभावे पु० पक्षे ष्यञ् बाल्य तदर्थे न० ।

**बालक** पु० बाल+स्वार्थे क । १शिशौ (बाला) २अश्वदूर्वा न० राजनि० । ३ह्रीवेरे ४अङ्गुरीयके ५पारिहार्ये न० विश्वः । ६अश्वकरिपुच्छयोः ७वलये मेदि० दवेशे च पु० विश्वः ।

**बालकप्रिया** स्त्री बालकं प्रीणाति प्री—क । १इन्द्रवारुण्यां (राखालशशा) २कदल्याञ्च राजनि० ३शिशुप्रियमात्रे त्रि० ।

**बालकृमि** पु० ६त० । केशकीटे (उकुन) जटा० ।

**बालक्रीडनक** पु० बालः क्रीड्यनेन क्रीड—करणे ल्युट् । स्वार्थे क । कपर्दके (कड़ि) राजनि० २तत्क्रीडासाधनमात्रे त्रि० ।

**बाल(लि)खिल्य** पु० ब० अङ्गुष्ठपर्वमितेषु षष्टिसहस्रसंख्येषु "क्रतोश्च सन्ततिर्भार्या बालखिल्यानसूयत । षष्टीनि सहस्राणि ऋषीणामूर्ध्वरेतसाम्" मार्कपु० उक्तेषु १मुनिभेदेषु । तेषां परिमाणञ्च अङ्गुष्ठमात्रं यथोक्तं भा० ब० ३१ अ० । "अथापश्यद्दृषीन् ह्रस्वान् अङ्गुष्ठोदरवर्ष्मणः । पलाशवल्लिकामेकां वहितान् वहतः पथि । प्रलीनान् स्वेष्विवाङ्गेषु निराहारांस्तपोधनान् । क्लिश्यमानान् मन्दबलान् गोष्पदे संप्लुतोदके"। "मासा वै बालखिल्याः" चरणव्यूहभाष्योक्तेषु २मासेषु च । [अमरः ।

**बालगर्भिणी** स्त्री बालैव गर्भिणी । प्रथमगर्भवत्यां गवि

**बालगोपाल** पु० कर्म० । श्रीकृष्णमूर्त्तिभेदे शिशुरूपे गोपाले नारदपञ्चरात्रे दृश्यम् ।

**बालग्रह** पु० ६त० । बालानां पीडके उपग्रहभेदे 'बालग्रहाभिभूतानां बालानां शान्तिकारकमिति" चण्डी । कुमारतन्त्राख्ये २१०८ पृ० दृश्यम् । [२शिशुचर्यायां स्त्री

**बालचर्य** पु० बालस्येव चर्याऽस्य । १कार्त्तिकेये त्रिका० ६त० ।

**बालतनय** पु० बाला तनया इव पत्राण्यस्य । १खदिरे अमरः २शिशुसुतके पु० स्त्री० ।

**बालतन्त्र** न० बालार्थं तद्रक्षार्थं तन्त्रमुपायः ।

गर्भिणीचर्यायाम् कुमारतन्त्रायां त्रिका० २१०८पृ० दृश्यम्

**बालतृण** न० कर्म० । नवतृणे शष्पे अमरः ।

**बालदलक** पु० बाल इव स्वल्पं दलमस्य कप् । खदिरे भरतः

**बालधि** पु० बाला धीयन्तेऽत्र धा—आधारे कि । केशयुक्तलाङ्गूले अमरः ।

**बालपत्र** पु० बाल इव क्षुद्रं पत्रमस्य । १यवासे राजनि० । २खदिरे च भरतः । ३नवपत्रयुते त्रि० कर्म० । ४नवीने पत्रे न० वा कप् । बालपत्रक खदिरे त्रिका० ।

**बालपाश्या** स्त्री बालस्य केशस्य समीपस्था पाश्या । सीमन्तान्तिकस्थस्वर्णादिरचितपट्टिकारूपे भूषाभेदे (सिँती) अमरः ।

**बालपुष्पी** स्त्री० बालानि क्षुद्राणि पुष्पाण्यस्याः ङीप् । यूथिकायाम् राजनि० । कप् बालपुष्पिका तत्रार्थे जटाधरः ।

**बालभद्रक** पु० बालेऽपि भद्र इव कायति कै—क । विषभेदे शब्दच० । [पद्मे च ।

**बालभैषज्य** न० ६त० । १रसाञ्जने राजनि० २शिशूनामौ-

**बालभोज्य** पु० ६त० । १चणके राजनि० २बालकभक्षणीये त्रि०

**बालमूषिका** स्त्री० कर्म० । क्षुद्रमूषिकायां गिरिकायाम् अमरः ।

**बालयज्ञोपवीतक** न० बालस्य यज्ञोपवीतमिव कायति कै—क । उरस्कटे (बुकवाकाडि) त्रिका० । [शब्दर० ।

**बालराज** न० बालः स्वल्पोऽपि राजते राज—अच । वैदूर्य्यमणौ

**बालरोग** पु० भावप्र० उक्ते बालस्य रोगभेदे तन्निदानादि तत्रोक्तं यथा

"अथ बालरोगाणां निदानानि लक्षणानि चाह । "धात्र्यास्तु गुरुभिर्भोज्यैर्विषमैर्दोषलैस्तथा । दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति । मिथ्याहारविहारिण्या दुष्टा वातादयस्त्रयः । दूषयन्ति पयस्तेन जायन्ते व्याधयः शिशोः । ह्रीवेरं शर्करा क्षौद्रं लीढं तृष्णाहरं परम् ।" इति तृष्णायाम् । "वातदुष्टं शिशुः स्तन्यं पिबन् वातगदातुरः । क्षामस्वरः कृशाङ्गः स्याद्बद्धविण्मूत्रमारुतः । स्विन्नो भिन्नमलो बालः कामलापित्तरोगवान् । तृष्णालुरुष्णसर्वाङ्गः पित्तदुष्टं पयः पिबन् । कफदुष्टं पिबन् क्षीरं लालालुः श्लेष्मरोगवान् । निद्रार्द्दितो जडः शूनो वक्त्राक्षिच्छर्दनः शिशुः । ज्वराद्याः व्याधयः सर्वे वक्ष्यन्ते महतान्तु ये । बालानामपि ते तद्वज्ज्ञेया भिषगुत्तमैः । बालानामेव ये रोगा भवन्ति महतां न च । तालुकण्टकमुख्यांस्तानत्र धारय यत्नतः ।" तत्रादौ तालुकण्टकमाह । "तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम् । तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते । तालुपातात् स्तनद्वेषः कृच्छ्रात् पानं शकृद्द्रवम् । तृट् चक्ष्वास्यरुजा ग्रीवादुर्द्धरता वमिः ।" पानं स्तनस्य, शकृद्द्रवं द्रवरूपम् । महापद्ममाह । "वीसर्पस्तु शिशोः प्राणनाशनः शीर्षवस्तिजः । पद्मवर्णो महापद्मरोगो२ दोषत्रयोद्भवः । शङ्खाभ्यां

हृदयं याति हृदयाच्च गुदं व्रजेत् ।” पद्मवर्णः लोहित वर्णः तत्र योनिजो वीसर्पः । गुदाभ्यां हृदयं याति हृद- याच्च गुदं व्रजेत् एवं वस्तिजो गुदं याति गुदतः हृदयं हृदयाच्छिरो याति इति बोद्धव्यम् । कुकूणकमाह “कुकूणकः शिशोर्दोषात्ज्ञिषुणामेव वर्त्मनि । जायते नयनं नेत्रं कण्डूरं प्रस्रवेद्बहु । शिशुः कुर्याल्ललाटा- चिकूटनासाप्रघर्षणम् । शक्तो नार्कप्रभां द्रष्टुं न चाक्ष्युन्मीलनक्षमः ।” कुकूणकं (कोथ) इति लोके । अथ तुण्डीगुदपाकमाह । “वातेनाध्मापिता नाभिः सरुजा तुण्डिरुच्यते । बालस्य गुदपाकाख्यो व्याधिः पित्तेन जायते ।” अहिपूतनमाह । “शकृन्मूत्रसमायुक्ते धौते याने शिशोर्भवेत् । स्विन्ने वा स्नाप्यमानस्य कण्डू रक्तकफोद्भवा । कण्डूयनात्ततः क्षिप्रं स्फोटः स्नावश्च जायते । एकीभूतं व्रणं घोरं तं विद्यादहिपूतनम् ।” स्विन्ने क्लेदिते । अजगल्लीमाह । “स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा । कफवातोत्थिता ज्ञेया बालानामजगल्लिका ॥ । ग्रथिता गुम्फितेव मुद्गसन्निभा मुद्गाकृतिः । पारिगर्भिकमाह माधः । कुमारो गर्भिण्याः स्तन्यं प्रायः पिबन्नपि । कासाग्निसादवमथुतन्द्राकार्श्या- रुचिभ्रमैः । युज्यते कोष्ठवृद्ध्या च तमाहुः पारिगर्भि- कम्७ । रोगं परिभवाख्यञ्च तत्र युञ्जीत दीपनम् । पिबन्पीत्वपिबन्नादपिबन्नपि पारिगर्भिकः (कक्षोडोति) लोके । परिभवाख्यं परिभवेति नामान्तरम् । अथ दन्तो- द्भेदकान् रोगानाह “दन्तोद्भेदः शिशोः सर्वं रोगाणां कारणं स्मृतम् । विशेषात् ज्वरविड्भेदकासच्छर्दिशिरो- रुजाम् । अभिष्यन्दस्य पोथक्यावीसर्पस्य च जायते” । कारणमित्यन्वयः पोथक्या वर्त्मरोगविशेषस्य ।”

**बालव** पु॰ तिथ्यर्द्धात्मकेषु करणेषु द्वितीये करणे ज्यो॰ त॰ ।

**बालवायज** न॰ वैदूर्य्यमणौ त्रिका॰ ।

**बालवाह्य** पु॰ बालो वाह्यो यस्य । वनच्छागे हारा॰

**बालव्यजन** न॰ बाला एव व्यजनम् । चामरे हेमच॰ । ‘कुर्वन्ति बालव्यजनैश्चमर्यः’ इति कुमारः । [हेमच॰।

**बालसन्ध्याभ** पु॰ बाल सन्ध्याया इवाभा यस्य । अरुणवर्णे

**बालसूर्य्य** न॰ बालः सूर्य्य सदृशोऽस्त्यस्य । १वैदूर्य्यमणौ त्रिका॰ शब्द॰ । २अचिरोदिते सूर्य्ये पु॰ । [शब्दर॰।

**बालसूर्य्यक** न॰ बालसूर्य्य इव कायति कै–क । वैदूर्य्यमणौ

**बालहस्त** पु॰बालाः केशा हस्त इव यत्र ।१पशूनां लाङ्गूले अमरः । बाल+वधे हस्तम॰ । २केशबन्धे च पु॰ ।

**बाला** स्त्री॰ बालाः केशाकाराः पदार्थाः सन्त्यस्य अच् । १नारिकेले २हरिद्रायां ३मल्लिकाभेदे, ४वलये, ५मेध्ये च हलायुधौ स्त्री मेदि॰ ७षट्वर्षकुमार्य्यां (बाला) ८गन्धद्रव्यभेदे, शब्दच॰। ९अम्बष्ठायां,१०नीलझिण्ट्याम् स्त्री राजनि॰ ११षोडशवर्षीयायां स्त्रियां १२कन्यायाञ्च ‘अर्भमाता भवेद् बाला’प्रा॰त॰उक्तायामेकवर्षीयायां १३गवि स्त्री १४देवी मूर्त्तिभेदे तन्त्रसारः । स्वार्थे क अत इत्त्वम् । बालिका तत्रैव । वालुकायां, पत्रकाहलायां मेदि॰ कर्णभूषणे (कानवाला) मेदि॰ एलायां शब्द॰ ।

**बालाकि** पु॰ बलाकाया अपत्यम् वा॰ इञ् । “हप्तबालाकि र्हानूचानो गार्ग्य आस” छ॰उ॰उक्ते गार्ग्ये ऋषिभेदे ।

**बालाची** स्त्री बालः केशा इवाचितव्यं पुष्पमस्याः गवचमा॰ स्त्रियां ङीष् । केशपुष्पोवृक्षे शब्दच॰ ।

**बालायनि** पुंस्त्री॰ बालाया अपत्यं तिका॰ फिञ् । बा- लाया अपत्ये स्त्रियां ङीप् । [चाणक्य ।

**बालार्क** पु॰ कर्म॰ । प्रातःकालीनसूर्य्ये “बालार्कस्तरुणं दधि”

**बालि** पु॰ बाले केशे जातः इञ् । केशे इन्द्रस्वत्त्वगुक्रजाते वानरभेदे । बालः तदुत्पत्तिस्थानत्वेनाऽस्त्यस्य इनि । बालिन् तत्रार्थे त्रिका॰ ।

तदुत्पत्तिकथा रामा॰ उत्तरा॰ ३७ स॰ यथा

“उत्प्लुत्य तस्मात् स ह्रदादुत्थितः प्लवगः पुनः । तस्मि- न्नेव क्षणे राम ! स्त्रीत्वं प्राप स वानरः । तद्रूपमद्भुतं दृष्ट्वा लज्जितो धैर्य्यमात्मनः । ततस्तस्यां सुरेन्द्रेण स्कन्नं शिरसि पातितम् । अनायासेन तां नारीं सर्वसत्त्वमयां भवत् । ततः सा वानरपतिं जज्ञे वानरमीश्वरम् । स- लोमरेतसस्तस्य वालवस्य महात्मनः । बालेषु पतितं बीजं बाली नाम बभूव ह । भास्करेणापि तस्यां वै कन्दर्प- वशवर्त्तिना । बीजं निषिक्तं ग्रीवायां विधानमनुवर्त्तता । ग्रीवायां पतितं बीजं सुग्रीवः समजायत” ।

**बालिश** त्रि॰ बाल-इन् बालिं श्यति शो–क डस्य लः । १मूर्खे, २शिशौ च मेदि॰ ‘बालिशमाश्रि ! शयानम्’ उद्भटः । बालाः सन्त्यस्य इनि बाली मूर्द्धा शेतेऽत्र शी- बा॰ आधारे ड । ३उपधाने न॰ शब्दमा॰ ।

**बालीश** पु॰ मूत्रकृच्छ्ररोगे शब्दर॰ ।

**बालिहन्** पु॰ बालिं बालिनं वा हन्ति हन–क्विप् । रामे बालिहन्त्रादयोऽप्यत्र पु॰ । तत्कथा रामा॰ सुन्दराकाण्डे दृश्या ।

**बालु** पु॰ बल-उण् । १एलवालुकनामगन्धद्रव्ये उणादि॰ ।

वालुक न० वालु+स्वार्थे क । १एलवे अमरः । पु० वाल-उक । २पानीयामलके पु० राजनि० । ३सिकतासु स्त्री । ४कर्कट्यां जटा० ५कर्पूरे ६यन्त्रभेदे शब्दच० ।

वालुकायन्त्र न० ६त० । १औषधपाकार्थे यन्त्रभेदे । "भाण्डे वितस्तिगम्भीरे मध्ये निहितकूपिके । कूपिकां कण्ठपर्यन्तं वालुकाभिश्च पूरिते । भेषजं कूपिकासंस्थं वह्निना यत्र पच्यते । वालुकायन्त्रमेतद्धि यन्त्रतन्त्रबुधैः स्मृतम्" भावप्र० । २कालज्ञापने रघुना० प्रदर्शिते यन्त्रभेदे "सूत्राकारेणाग्रभेद्य यस्यक कालं प्रसाधयेत्" सू०सि० व्याख्यायां "सूत्राकारेण रेणवः सिकतांशागर्भे उदरे यस्यैतादृशं यन्त्रं वालुकायन्त्रं प्रसिद्धम्" रङ्गनाथः ।

वालुकास्वेद पु० ३त० । भावप्र० उक्ते तप्तवालुकाभिः स्वेदने । "वातश्लेष्मणि प्रशस्ते स्वेदान् कारयेद्बुधनिर्मितान् । स्निग्धः स्वेदो निषिद्धोऽत्र विना केवलवातजान् । कर्परस्थस्पटस्थितकाञ्जिकवसिक्तवालुकास्वेदः । शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन् । कोष्णमार्द्रं कृत्वा गीत्वा पावकमाश्रयम् । कृत्वा वातकफस्तम्भं स्वेदो ज्वरमपोहति" । [दृष्टो०तुक् । वालुकीलत्यत्र लिका०

वालुकी स्त्री० पु०वल-उक गौरा०ङीष् । कर्कटीभेदे राजनि०

वालूक पु० पु० वाल-ऊक । विषभेदे हेमच० ।

वालेय पु० वलेरपत्यं, वलये हितं वा ढक् । १रासभे, अमरः २दैत्यभेदे, धरणिः ३अङ्गारवल्ल्यां विश्वः । ४चाणक्यमूलके पु० ५वालहिते च त्रि०मेदि० । [अमरः ।

वालेयशाक पु०वलये हितं ढक् कर्म०(वामनहाटि) शाकभेदे

वालेष्ट पु० वालानामिष्टः १व(व)दरे राजनि० । २बालकानामभीष्टे त्रि० ।

वालोपवीत न०६त० उरस्कटे वालवत्सोपवीतवद्धार्ये हारा०

वाल्वजभारिक त्रि० बल्वजानां भारं वहति अंशा० ठक् । बल्वजभारवाहके ।

वाल्य न० बालस्य भावः, कर्म वा ववोरभेदात् ष्यञ् । 'आ षोडशाद्भवेद्बाल' इत्युक्ते अवस्थाभेदे ।

वाल्हक न० बल्हिदेशे भवः वा० वुञ् । कुङ्कुमे अमरः पाठान्तरम् । [हिङ्गुनि न० ।

वाल्हायन त्रि० बल्हौ जातम् फक् । १बल्हिदेशोद्भवे

वाल्हि(ह्री)क पु० बल्हि+स्वार्थे ठञ् । ईक वा ।१कुङ्कुमे हिङ्गुनि च न० मेदि०२देशभेदे ३तद्देशीये च पु०मेदि० । ५तद्देशाधिपे हरिवं०६अ० । दीर्घमध्यः मन्त्रभेदे पु०शब्दर०

वाष्कल पु० ऋषिभेदे आश्व०स्व० १।४।४ ।

वाष्प(स्प) पु०बाध-पृषो०सत्वं षत्वं वा । १नेत्रजले, २ऊष्मणि च अमरः लौहे च मेदि० तत्र बाधमन्त्यस्वरादित्योक्तः ।

वास्कल पु० दैत्यभेदे हरिवं० ४अ० ।

वा(वा)ह प्रयत्ने भ्वादि० आत्म० अक० सेट् । वा(वा)हते अवा(वा)हिष्ट । ऋदित् चङि न ह्रस्वः अववाहत् त ।

वाह पुंस्त्री वाहु+पृषो० । वाहुशब्दार्थे रमानाथः ।

वाहा(हू)वाहवि अव्य० बाहुभ्यां बाहुभ्यां प्रहृत्य प्रवृत्तम् युद्धम् इच्समा० पूर्वपदे आत् दीर्घो वा । बाहुभ्यां बाहुभ्यां प्रहृत्य प्रवृत्ते युद्धे । [अमरः ।

वाहु पु० बाध-कु धस्य हः । भुजे कक्षावध्यङ्गुलिपर्यन्ते ऽवयवे

वाहुक पु० कलपर्यन्तस्य अग्रपादतादिरूमेव स्थिते नलनृपे तत्कथा भा०व०६७अ०दयत्रा । २नागभेदे भा०आ० ५७ अ० ।

वाहुकुण्ठ त्रि० ३त० । कुण्ठितबाहुके (कोणा) जटा० ।

वाहुकुब्ज पु० बाहुरिव कुब्जति कुब्ज-अच् । विहङ्गान्तरे बाहुस्थानीये पक्षे शब्दच० । [जाते ।

वाहुकुलेयक त्रि० बहुकुले जातादि ढकञ् । बहुकुल०

वाहुज पु०बाहुभ्यां ब्र(ब्र)ह्मबाहुभ्यां जायते जन-ड ।१क्षत्रिये अमरः । 'बाहू राजन्यः कृत' इति श्रुतिः । २कीरे ३स्वयंजाततिले च मेदि० ४बाहुजातमात्रे त्रि० ।

वाहुत्र पु०न०बाहुं त्रायते त्रै-क । बाहुत्राणपरत्वार्थे कृतवर्मे लौहकवचादौ हेमच० ।

वाहुत्राण न०बाहुं त्रायते अनेन त्रै-करणे ल्युट् । धनुराघात वारणार्थं बाहुबद्धवर्मणि हेमच० ।

वाहुदन्तक पु० बहवश्चत्वारो दन्ता यस्य कप् ऐरावतः उपचारात् इन्द्रः तेन प्रोक्तमण् । पुरन्दरप्रोक्ते पञ्चसहस्राध्याये नीतिशास्त्रभेदे भा०शा०५८अ० । [इन्द्रे हेमच० ।

वाहुदन्तेय पु० बहुदन्तस्यदन्तं ऐरावतस्यापत्यमर्हति वा० ढ ।

वाहुदा स्त्री अन्वामस्यात ४नदीभेदे । सा च प्रसेनजिज्जायां गौरी नाम, भर्त्रा शप्ता नदीरूपा जाता हरिवं०१२अ० । सा हि शङ्खस्य भ्रातुः फलहरणे शुद्धिवधदण्डेन छिन्नं लिखितस्य पाणेः हस्तम् अवगाहनात् समदंशाविति कथा भा०शा० २३ अ० यथा "स गत्वा बाहुदां धीमान् तर्पयस्व यथाविधि । देवान्पितॄन् पितॄंश्चैव वा चाधर्षे मनः कृथाः । तस्य तद्वचनं श्रुत्वा शङ्खस्य लिखितस्तदा । अवगाह्यापगां पुण्यामुदकार्थं प्रचक्रमे । प्रादुरास्तां ततस्तस्य करौ जलजसन्निभौ । ततः स लिखितो भ्रात्रे दर्शयामास तौ करौ" ।

२परीक्षिन्नाम्यभेदे भा० आदिप० ९५ अध्याये।

**बाहुबल** न० ६त०। युद्धोपयोगिनि बाहुविक्रमे।

**बाहुभूषा** स्त्री ६त०। केयूरे हेमच०।

**बाहुमात्र** त्रि० बाहुः प्रमाणमस्य बाहु+मात्रच्। बाहुपरिमाणे स्त्रियां ङीप् "बाहुमात्र्यः स्रुचः" कात्या० श्रौ० १।२।२७।

**बाहुमूल** न० ६त०। कक्षे (काँक) (बगल) ख्याते अमरः।

**बाहुयुद्ध** न० ३त०। नियुद्धे अमरः।

तत्प्रकारः भा० वि० १२ अ० यथा "कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च सुसङ्कटैः। सन्निपातावधूतैश्च प्रमाथोन्मथनैस्तथा। क्षेपणैर्मुष्टिभिश्चैव वराहोद्धूतनिःस्वनैः। तलैर्वज्रनिपातैश्च प्रसृष्टाभिस्तथैव च। शलाकानखपातैश्च पादोद्धूतैश्च दारुणैः। जानुभिश्चाश्मनिर्घोषैः शिरोभिश्चावघट्टनैः। तद्युद्धमभवद्घोरमशस्त्रं बाहुतेजसा। बलप्राणेन शूराणां समाजोत्सवसन्निधौ। अरज्यत जनः सर्वः सोत्कृष्टनिनदोत्थितः। बलिनोः संयुगे राजन्! वृत्रवासवयोरिव। प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः। आकर्षतुरथान्योन्यं जानुभिश्चापि जघ्नतुः"। मू० "कृतं कस्मिंश्चिद्देशे निपीडनं प्रतिकृतं तस्य मोचनम्। सुसङ्कटैः सुश्लिष्टत्वेन सङ्कीर्णैः सकङ्कटैरिति पाठे सकवचैः वज्रिवैरिति "कङ्कटो बाहुवरणे कवचे कठिने किणे" इति विश्वः सन्निपातोऽङ्गसंघट्टनम् अवधूतं तेनैव दूरीकरणं प्रमाथादय उक्ता मल्लशास्त्रे "निपात्य वेगतं भूमौ प्रमथ इति कथ्यते। यत्तूत्थाप्योन्मथनं तदुन्मथनमुच्यते। क्षेपणं कथ्यते यत्तु स्थानात् प्रच्यावनं हठात्। उभयोर्भुजयोर्मुष्टिं हृदोमध्ये निपात्यते। मुष्टिरित्युच्यते तज्ज्ञैर्मल्लविद्याविशारदैः। अवाङ्मुखं स्वभ्रगतं भ्रामयित्वा तथैव यः। क्षिप्रस्य शब्दः स भवेद्वराहोद्धूतनिःस्वनः। तलैर्वज्रनिपातैर्वज्रवद्दृढपातैश्चपेटैः। "प्रसृतास्तास्तु प्रसृष्टा या उदीरिताः। कन्ध्यां दृढा यथा क्षिप्तशलाका साङ्गुली स्मृता"। शलानखपातैः पादोद्धूतैः पादप्रसारणेनाक्षेपैः जानुभिः शिरोभिश्च कृतैरवघट्टनैराम्फालनैः अश्मनिर्घोषैरत्युभयविशेषणम्। अशस्त्रं निन्द्यं यथोक्तं तत्रैव "बाहुयुद्धं हि मल्लानामशस्त्रमृषिभिः स्मृतम्। मृतस्य तत्र न स्वर्गो यशोलेशोऽपि विद्यते" इति। बलप्राणेन बलेन शारीरबलेन प्राणेन मानसबलेन च। सोत्कृष्टनिनदः क्ष्वेडितसिंहनादोच्चारणेन वञ्चितस्य सम्यक्स्थापनम्। तदुक्तम्। "आलम्ब्य क्रोडीकरणं प्रकर्षणमुदाहृतम्। आकर्षणं लोलयैव सम्मुखीकरणं स्मृतम्। पुरः पश्चात् पार्श्वयोश्चाभ्याकर्षो भ्रमणं तथा। पश्चात् प्रपातनं वेगाद्विकर्षणमुदाहृतम्" नीलक०।

**बाहुल** पु० बहुलानां कृत्तिकानामयं स्वामी अण्। १वह्नौ शब्दच०। बहुलाभिर्युक्ता पौर्णमासी अण्। २कार्त्तिकपौर्णमास्यां स्त्री ङीप्। सा यत्र मासे पुनरण्। ३चान्द्रकार्त्तिकमासे पु० अमरः। ४बाहुल्यार्थे हेमच०। बहुलेन निर्वृत्तम् सङ्कला० अण्। ५अनेकसाध्ये त्रि०। पृथ्वा० इमनिचोऽभावे भावे अण्। ६बाहुल्ये न०।

**बाहुलक** न० बहुलेन बहुलपदत्वेन निर्वृत्तं सङ्कला० अण् संज्ञायां कन्। व्याकरणोक्तसर्वोपाधिरहिते विधानादौ यत्र यद्विधीयते तत्र क्वचिन्न स्यात् क्वचिद्वा स्यात् क्वचित्ततोऽन्यत्रापि स्यादित्येवं परे विधाननिषेधादौ। मनोज्ञा० भावे वुञ्। २बाहुलिका बहुलभावे स्त्री।

**बाहुलेय** पु० बहुलानामपत्यं ढक्। कार्त्तिकेये अमरः

**बाहुशालिन्** त्रि० बाहुभ्यां शालते तद्विक्रमाधिक्येन ख्यायते शाल–णिनि। बाहुवीर्याधिक्ययुते स्त्रियां ङीप्।

**बाहुसम्भव** पु० बाहू ब्रह्मबाहू सम्भवोऽस्य। १बाहुजे क्षत्रिये हेमच०। २बाहुजातमात्रे त्रि०।

**बाहुसहस्रभृत्** पु० बाहुसहस्रं बिभर्त्ति भृ–क्विप् तुक् च। कार्त्तवीर्ये त्रिका० कार्त्तवीर्यशब्दे दृश्यम्।

**बाह्य** त्रि० बहिर्भवः ष्यञ् टिलोपः। बहिर्भवे

**बाह्यकर्ण** पु० नागभेदे भा० आ० ३५अ०।

**बाह्यकुण्ड** पु० नागभेदे भा० उ० १०२ अ०।

**बाह्वादि** पु० इञ् प्रत्ययनिमित्ते शब्दगणे स च गणः पा०ग० उक्तो यथा "बाहु उपबाहु उपवाकु निवाकु शिवाकु वटाकु उपबिन्दु वृषली वृकला चूडा बलाका मूषिका कुशला क्षमला ध्रुवका धुवका सुमित्रा दुर्मित्रा पुष्करसद् अनुहरत् देवशर्मन् अग्निशर्मन् भद्रशर्मन् सुशर्मन् कुनामन् सुनामन् पञ्चन् सप्तन् अष्टन् अमितौजसः (सलोपश्च) सुधावत् उदञ्चु शिरस् माष शराविन् मरीचि क्षेमवृद्धिन् शृङ्खलतोदिन् खरनादिन् नगरमर्दिन् प्राकारमर्दिन् लोमन् अजीगर्त्त कृष्ण युधिष्ठिर अर्जुन साम्ब गद प्रद्युम्न राम उदङ्क उदकः (संज्ञायाम्) सम्भूयोऽम्भसोः (सलोपश्च) बाह्वादिः। बाहविः कार्त्तिः।

**बि(वि)ट** आक्रोशे भ्वा० पर० सक० सेट्। बे(वे)टति अबे(वे)टीत्

**बिटक** पु० पिटक+पृषो०। पिटके अमरे पाठान्तरम्।

**बि(वि)ठ** न० विट-क पृषो० अन्तरीक्षे निरुक्तकारः १।१० ।

**विद्** अवयवे भ्वा०पर०सक० सेट् इदित् । विन्दति अविन्दीत्

**विंदुल** न०विदि-कलच् नि०नलोपः ।१छिद्रे अमरः २ध्वंसे च

**बिन्दवि** पु० विदि-अवयवे बा० अवि । बिन्दौ अंशे । ततः गहा०छ । बिन्दवीय तत्सम्बन्धिनि ।

**बिन्दु** पु०विदि-उ । १अल्पेऽंशे अमरः । २राजभेदे ततोऽपत्ये विदा० अञ् । बैन्दव तदपत्ये पुंस्त्री० । ३रेखागणित प्रसिद्धे स्थूलत्वदीर्घत्वहीने लक्ष्यविशेषे ४पदार्थे शेषतन्त्रे २२८६ पृ० दृश्यम् ।

सा०द० उक्ते ५अर्थप्रकृतिभेदे "बीजं बिन्दुः पताका च प्रकरी कार्य्यमेव च । अर्थप्रकृतयः पञ्च" इत्युक्त्वा "अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्" लक्षितम् । ६अनुस्वारसूचके रेखाभेदे । "बिन्दुर्हि बिन्दुमालो" मुग्धबो० शा०ति० उक्ते ७नादजन्ये क्रियाप्राधान्यलक्षणे चिच्छक्तेरवस्थाभेदे यथा "सच्चिदानन्दविभवात् सकलात् परमेश्वरात् । आसीच्छक्तिस्ततो नादो नादात् बिन्दुसमुद्भवः" । तद्व्याख्यायां राघवभट्टधृतम् "या तत्त्वसंज्ञा चिन्मात्रज्योतिषः सन्निधेस्तदा । विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम्" "अभिव्यक्ता परा शक्तिरविनाभावलक्षणा । अखण्डपरचिच्छक्तिर्जाता चिद्रूपिणी विभुः । समस्ततत्त्वभावेन विवर्त्तेच्छासमन्विता । प्रयाति बिन्दुभावञ्च क्रियाप्राधान्यलक्षणम्" । तस्मादेव रौद्रीरुद्रयोरादिभावैः यथोक्तं शा० ति० "रौद्री बिन्दोस्ततो नादात् ज्येष्ठा बीजादजायत । वामा तेभ्यः समुत्पन्ना रुद्रब्रह्मरमाधिपाः" । ८बीजभेदे "बिन्दुः शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः । समवायः समाख्यातः सर्वागमविशारदैः" शा० ति० ।

**बिन्दुचित्रक** पु० बिन्दुरूपं चित्रमस्य कप् । मृगभेदे शब्दर० ।

**बिन्दुजाल** न० ६त० । १बिन्दुसमूहे २हस्तिशुण्डोपरिस्थ बिन्दुसमूहे हेमच० । संज्ञायां कन् । बिन्दुजालक गजमुखशुण्डादिस्थे तत्समूहे पद्मके अमरः । [२पाशके हारा०

**बिन्दुतन्त्र** पु० । १शारीफलके २चतुरङ्गक्रीडने च मेदि० ।

**बिन्दुदेव** पु० ६त० । बिन्दुवर्णस्येश्वरे शिवे मेदि० ।

**बिन्दुपत्र** पु० बिन्दुचिह्नितं पत्रमस्य । भूर्जपत्रवृक्षे रत्नमा० ।

**बिन्दुमाधव** पु० काशीस्थे वेणीमाधवे काशीख० ।

**बिन्दुरेखक** पु० बिन्दुरूपा रेखा सूचिकाऽस्य वा । १अनुस्वारे वर्णे २पक्षिभेदे शब्दच० ।

**बिन्दुसरस्** न० बिन्दुजातं सरः शा०त० । सरोवरभेदे यत्र गङ्गावतारार्थं भगीरथेन तपस्तेपे तत्कथा "अथोत्तरेण कैलासात् मैनाकं पर्वतं प्रति । हिरण्यशृङ्गः सुमहान् महामणिमयो गिरिः । रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः । दृष्ट्वा भागीरथीं गङ्गामुवास बहुलाः समाः" भा० स० ३अ० । मात्स्ये १०१ अ० तदुत्पत्तिकथा उक्ता यथा

"तत्र त्रिपथगा देवी प्रथमन्तु प्रतिष्ठिता । सोमपादात् प्रसूता सा सप्तधा प्रविभज्यते । यूपा मणिमयास्तत्र चितयश्च हिरण्मयाः । तत्रेष्ट्वा क्रतुभिः सिद्धः शक्रः सुरगणैः सह । दिव्यच्छायापथस्तत्र नक्षत्राणान्तु मण्डलम् । दृश्यते भास्वरा रात्रौ देवी त्रिपथगा तु सा । अन्तरीक्षं दिवञ्चैव भावयित्वा भुवङ्गता । भवोत्तमाङ्गे पतिता संरुद्धा योगमायया । तस्या ये बिन्दवः केचित् क्रुद्धायाः पतिता भुवि । कृतन्तु तैर्बिन्दुसरस्ततो बिन्दुसरः स्मृतम्" । बिन्दुसरोऽप्यत्र पु० ।

**बिल** भेदने वा चुरा०उभ०पक्षे तु०पर०सक० सेट् । बेलयति ते बिलति । अबीबिलत् त अबेलीत् ।

**बिल** न०तु०बिल+क । रन्ध्रे १छिद्रे अमरः ।२गुहायाम् ३उच्चैःश्रवसि पु० मेदि० । ४वेतसे शब्दच० ५गर्त्ते च । ततः तृणा० चतुरर्थ्यां च । बिलक तददूरदेशादौ त्रि० ।

**बिलकारिन्** त्रि० बिलं करोति कृ-णिनि । १गर्त्तकारके स्त्रियां ङीप् । २मूषके पुंस्त्री० राजनि० ।

**बिलवास** पु० बिले वासोऽस्य । जाहकजन्तौ राजनि० ।

**बिलवासिन्** पु० बिले वसति वस-णिनि । १सर्पे शब्दरत्ना० । २गर्त्तवासिनि त्रि० स्त्रियां ङीप् । अलुक्स० बिलेवासिन् तत्रार्थे । [स्त्रियां लोपधत्वात् टाप् ।

**बिलशय** पुंस्त्री० बिले शेते शी-अच् । सर्पे शब्दरत्ना० ।

**बिलेशय** पुंस्त्री० बिले शेते शी-अच् अलुक्स० १सर्पे अमरः २मूषिके जटा० ३गोधायां ४शशे ५शल्लक्यादौ भावप्र० । "गोधाशशभुजङ्गाखु शल्लक्याद्या बिलेशयाः । बिलेशया वातहरा मधुरा रसपाकयोः । बृंहणा बद्धविण्मूत्रा वीर्य्योष्णा अपि कीर्त्तिताः" तत्र तन्मांसगुणा उक्ताः ।

**बिल्म** न० तु०बिल-बा०मन् । भासने निरु० १।२०। ऋ०२।३५।१२। २शिरस्त्राणे यजु०१६।३५। तदस्यास्ति इनि । बिल्मिन् तद्वति त्रि०रुद्रभेदे पु०यजु०तन्मन्त्रे दृश्यम् ।

**बिल्व** न० बिलं क्विप् तं वाति वा—क । १आलवाले त्रिका० । २हिङ्गुनि शब्दच० ।

**बिल्वमूला** स्त्री बिल्वमिव मूलमस्याः । वाराहीकन्दे शब्दच०

**बिल्वसू** स्त्री "बिल्वसूर्दशपुत्रा स्यादिति" शब्दर॰ उक्तायां मृततद्दशपुत्रायां स्त्रियाम्।

**बिल्व** पु॰ बिल-उल्व्‌ बा॰नि॰। १स्वनामख्याते वृक्षे अमरः "श्रीफलः प्रवरस्तिक्तो ग्राही रूक्षोऽग्निपित्तकृत्। वातश्लेष्महरो बल्यो लघुरुष्णश्च पाचनः" भावप्र॰। "बिल्वं बालं कषायोष्णं पाचनं वह्निदीपनम्। संग्राहि तिक्तकटुकं तीक्ष्णं वातकफापहम्। पक्वं सुगन्धि मधुरं दुर्जरं ग्राहि दोषलम्। फलेषु परिपक्वेषु यो गुणः समुदाहृतः। बिल्वादन्यत्र स ज्ञेयो बिल्वमामं गुणोत्तरम्। कफवातामपित्तघ्नी ग्राहिणी बिल्वपेशिका" राजवल्लभः। "काञ्जिके संस्थितं बिल्वमग्निसन्दीपनं परम्" इति वैद्यकम्। २तत्फले न॰ मेदि॰। ३पलपरिमाणे न॰ शब्दमाला। तद्वृक्षोत्पत्त्यादिर्यथा "अगोर्लक्ष्मीर्या धेनुर्गौरूपा या मता मही। तद्गोमयभवो बिल्वः श्रीवृक्षस्तस्मादजायत। "बिल्ववृक्षः शिवः साक्षात्‌ योनिर्भविष्यति। सर्वपुण्योत्तमः श्रेष्ठो देवाह्लादो मनोरमः। वन्द्यः सर्वलोकानां छेदाचारः सदा त्यजाम्। ये च पापा दुराचाराः श्रीतरोश्छेदकारिणः। ते रौरवादिनरके पात्यन्ते ब्रह्मणो दिनम्। सुदुःखिता भविष्यन्ति नरा दुःखान्विताः सदा। तत्र देशे भयं नित्यं चिरं राजा न जीवति। न च द्रव्यपतिः कश्चिद्‌ बिल्ववृक्षस्य छेदकः। क्रियते यत्र विच्छेदः सपुष्पफलितस्य तरोः। अनावृष्टिभयं घोरं तस्मिन्‌ देशे प्रजायते"। अग्निपु॰। बृहद्धर्मपुराणे १०अ॰ अस्योत्पत्तिरन्यथोक्ता "लक्ष्म्या शिवाराधनार्थं स्वैकस्तनस्योत्पाटने कृते तुष्टेन शिवेन लक्ष्मीं प्रत्युक्तं यथा "मातः समुद्रतनये! मा मा छिन्धि स्तनं परम्। वत्से छिन्नः स्तनो वामो जायतां पुनरेव वः। जाता ते परमा भक्तिः पूर्णस्तेन मनोरथः। अयं छिन्नः स्तनोऽभक्त्या मल्लिङ्गोपरि ते शुभे। सोऽस्तु वृक्षः स्थितो पुण्यो नाम्ना श्रीफल इत्यतः। मूर्त्तिमांस्तव वै भक्तिर्वृक्षः श्रीफलनामकः। त्वत्कीर्त्तये स्थितावास्तां यावच्चन्द्रदिवाकरौ। स तरुर्मम वै लक्ष्मि! परमः सुप्रियो भवेत्। तत्पत्रेणैव मे पूजा भविष्यति न चान्यथा। स्वर्णमुक्ताप्रवालादि पुष्पाण्यन्यानि च ध्रुवम्। श्रीफलच्छदलेशस्य कलां नार्हन्ति कोटिकाम्। यथा मे श्रीफलतरुर्यथा लक्ष्मीजलं मम। तथा प्रियतमं लक्ष्मि! त्रिपत्रः श्रीफलच्छदः" तत्रैव ११अ॰। "धनुः शतत्रयास्य मूलात्‌ सर्वाग्रं तीर्थमुच्यते। अधो भूमेस्तथा तीर्थमतीर्थमयं सखि!। ऊर्ध्वपत्रं हरो ब्रह्मा यः पत्रं वामं विधिः स्वयम्। अहं दक्षिणपत्रञ्च त्रिपत्रदलमित्युत। अस्य छायाञ्च पत्रञ्च लङ्घयेच्च पदा स्पृशेत्। हरते लङ्घनादायुः पदा स्पर्शात्‌ शिवं हरेत्"। इत्यादिना तन्माहात्म्यमुक्त्वा तत्पत्रहरणविधानादि तत्रोक्तं यथा "पञ्चान्तद्वादशीसायमध्याह्नभिन्नकालतः। शाखाभङ्गो न कर्त्तव्यो नैवारोहेत्तथा तरुम्। परमारुह्य चिनुयाच्च शाखाभञ्जनं क्वचित्। खण्डितैश्च शिवः पूज्यः पत्रैरन्यैश्च खण्डितैः। षण्मासानन्तरं बिल्वपत्रं पर्युषितं भवेत्। पूज्या एतेन वै देवाः सूर्यलम्बोदरौ विना। बिल्ववृक्षवनं यत्र सा तु वाराणसी पुरी। पञ्च बिल्वद्रुमा यत्र तत्र तिष्ठेत्‌ स्वयं हरिः। सप्त बिल्वद्रुमा यत्र तत्र दुर्गायुतो हरः। एको बिल्वतरुर्यत्र तत्र शम्भुः श्रिया सह। विंशवृक्षा यत्र दश तत्र शम्भुर्गणैः सह। एतान्युक्तानि तीर्थानि देवाः सर्वे महद्‌धये। यत्र वास्तौ स्वगृहस्य कोणे ऐशाननामके। जायते श्रीफलतरुर्न तत्र विपदः क्वचित्। पूर्वस्यां सम्पदः स्युर्दक्षिणे यमभीतिहा। पश्चिमे च प्रजादायी वृक्षो बिल्व उदाहृतः। ग्रामे च नदीतीरे प्रान्तरे वा वनान्तरे। बिल्ववृक्षतलं प्रोक्तं सिद्धपीठस्थलं समम्। न मध्यप्राङ्गणे वृक्षं स्थापयेत्‌ श्रीफलाभिधम्। दैवाद्‌ यदि प्रजायेत तदा शिवमर्चयेत्। चैत्रादिचतुरो मासान्‌ शम्भवे परमात्मने। दत्तं स्याद्‌ बिल्वपत्रैकं लक्षधेनुसमं सुराः। मध्याह्नकाले ये मर्त्या बिल्वं कुर्युः प्रदक्षिणम्। तैः सुमेरुर्गिरिवरः कृतएव प्रदक्षिणम्। न छिन्द्यात्‌ श्रीफलतरुं न दहेत्‌ काष्ठमेव च। विना ब्राह्मणयज्ञार्थं पतितो बिल्वविक्रयी। पक्वबिल्वफलं दृष्ट्वा यो धत्ते मूर्ध्नि मानवः। यमाधिकारो नास्य स्यात्‌ मुक्तः पापोपपातकैः। बिल्वपत्रं फलं बीजं भूमौ पतितमीश्वरः। स्वयं गृह्णाति शिरसा वैवर्ण्यभयशङ्कितः। चैत्रादिचतुरो मासान्‌ सिञ्चेद्‌ बिल्वतरुं कृती। यथा स्निग्धो भवेद्वृक्षस्तथा तत्पितरोऽपि च। चैत्रादिचतुरो मासान्‌ सदा भ्रमति शङ्करः। नवीनबिल्वपत्रार्थी भुक्तिमुक्तिप्रदायकः। हरिद्रानगरे यत्र वैद्यनाथो महेश्वरः। तत्राद्यो बिल्ववृक्षः स्वर्गवृक्ष उदाहृतः। कामरूपे कामतरुः काश्यामुक्तस्तथादिमः। काञ्चीपुरे पुरः प्रोक्तः श्रीफलोऽक्षयपुण्यदः। तेऽपि तीर्थविशेषाः स्युस्तीर्थेष्वपि सदाऽच्युताः।" बृहद्धर्मपु॰ ११अ॰। "तद्फलैस्तत्प्रसूनै-

र्वो तत्पत्रैः प्रपूजयेत् । तत्काष्ठचन्दनैर्वापि स मे भक्तः स मे प्रियः । तत्काष्ठचन्दनं भाले यो धारयति सम्यग्यात् । तत्तच्छिवपूजया वा नमेद्देवी सदाम्बिता । अतस्तच्चन्दनं देवि ! न धारयति कश्चन । तत्पत्रं तत् प्रसूनं वा कदापि धारयेन्न हि । तन्मूले महेशानि ! प्राणांस्त्यजति यो नरः । रुद्रदेहो भवेत् सत्यं पाप कोटियुतोऽपि सन्" योगिनीतन्त्रे पटले ।

"बिल्वमूलं तथा देवि ! भगवान् शङ्करः स्वयम् । बिल्वस्य तले स्थित्वा यदि प्राणांस्त्यजेत् सुधीः । तत्क्षणात्मोक्षमाप्नोति बिल्वस्य तीर्थकोटिभिः । यत्र ब्रह्मादयो देवास्तिष्ठन्ति मुक्तिहेतवे । बिल्वमूलतले स्नानं यदि विष्णादिपूरितम् । तदेव शाङ्करं क्षेत्रं सर्वतीर्थमयं सदा । सर्वपीठमयं तत्र सर्वदेवमयं सदा । न त्यजेत् शाङ्करं क्षेत्रं न च गङ्गां त्यजेत् प्रिये ! । समीपे स च चार्वाङ्ग ! बिल्ववृक्षो यदि प्रिये ! । काशीपुरसमं तत्र तत्र प्राणान् त्यजेद् यदि । बिल्वस्य कोटितीर्थेन काशीवासेन किं प्रिये ! । मुण्डमालातन्त्रे १० पटले । तद्दानविधिर्यथा

"पत्रं वा यदि वा पुष्पं फलं नेष्टमधोमुखम् । यथोत्पन्नं तथा देयं बिल्वपत्रमधोमुखम् ।" मातृकातन्त्रे ५५ पटले । "शिव उवाच । शृणु देवि ! प्रवक्ष्यामि रहस्यं त्रिजटात्मकम् । पत्रं सम्मुखं देवि ! शृणु त्वं वरवर्णिनि ! । श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतनः । विष्णुप्रीतिकरश्चैव मम प्रीतिकरः सदा । ब्रह्मविष्णुशिवाः पत्रे तन्मध्ये शक्तिरूपकम् । तन्मूले तु वज्रं स्यात् पत्रे ब्रह्मपदं प्रिये ! । त्रिजटापत्रकेणैव हरं वा हरिमर्चयेत् । कैवल्यं तस्य तेनैव शक्तिपूजा विशेषतः । पत्रं पुष्पं फलं तोयं नैवेद्यं धूपदीपकम् । दत्त्वा यद्यत् फलं प्राप्तं तस्मात् कोटिगुणं भवेत् । सर्वैरर्चनतो देवि ! त्रिजटामेकमर्पयन् । कैवल्यदो हरिश्चैव दासोऽहं त्वत्स्वरूपताम् । त्वयि कैवल्यदं ज्ञानं धर्मकामार्थदं प्रिये ! । वज्रहीनमिदं देवि ! प्राप्नुयाद्वाञ्छितं फलम् । सवज्रे म्रियते न्यूनं वज्राघातेन पार्वति ! । तस्मात् साधकेन्द्रैश्च वज्रहीनं प्रदीयते" । 'प्राप्य गृहीत्वा यो गच्छेत् सर्वसिद्धिमवाप्नुयात् । ऊर्द्ध्वं सुदर्शनं रक्षेदधः पशुपतिस्तथा । पुरो माहेश्वरी रक्षेत् पृष्ठे च शूलधारिणी । दक्षपार्श्वे च मीनाक्षी वामपार्श्वे प्रजापतिः । चन्द्रसूर्यौ स्थितौ कलमहंसादकरौ सदा" । ज्ञानभैरवतन्त्रे ६ पटले । बिल्वमन्त्रस्य नम्यौषधत्वेऽपि सद्राचारे तादृशस्यौ भावात् चन्दनस्यौषधत्वं पूजितं सर्वत्र तस्मात् सुवृत्तं बोध्यम् । [भा० ३५ अ० ।

बिल्वक न० १तीर्थभेदे भा०अनु० २५ अ०। २नागभेदे भा०

बिल्वकादि पु० "बिल्वादिभ्यश्छस्य लुक्" पा०उ क्तौ छस्य लुगनिमित्ते शब्दगणे स च पा० ग० उक्तो यथा
"बिल्व वेणु वेत्र वेतस तृण काष्ठ कपोत ह्रस्व कुञ्चा (क्षुद्रत्वस्य) । तक्षन् (नलोपश्च)" बैल्वकीयायां भूमौ भवाः बैल्वकाः तस्य लुक् न छको निवृत्तिः ।

बिल्वकीय त्रि० बिल्वाः सन्ति यस्यां नडा० छ कुक् च । बिल्वयुक्तभूमौ ततो बहुत्वे बिल्वका० छमात्रस्य लुक् ।

बिल्वज त्रि०बिल्वात् जायते जन–ड । मालूरजाते । बिल्वस्य विषयः राजन्या० वुञ् । बैल्वजक तद्विषये ।

बिल्वतेजस् पु० नागभेदे भा० आ० ५७ अ० ।

बिल्वपत्र पु०१नागभेदे भा०भी० १०२ । ६त०२मालूरस्य पत्रे न० "बिल्वपत्रकृता पीठे"दुर्गोत्सवपद्धतिः ।

बिल्वपाण्डुर पु० नागभेदे भा०आ० ३५अ० ।

बिल्वपेशिका स्त्री बिल्वस्य पेशः साधनत्वेन अस्त्यस्याः ठन् । (बेलशुँठ) शुष्कबिल्वखण्डे राजनि० ।

बिल्ववन न० ६त० । मालूरसमुदाये तस्य विषयः राजन्या० वुञ् । बैल्ववनक तद्विषये ।

बिल्वर स्त्री० बिल–भेदने उणा०नि०। हिङ्गुपत्र्यां राजनि ।

बिल्वोदकेश्वर पु० । शिवमूर्तिभेदे तस्याविर्भवकथा हरिवं० १२६ अ० । [सवेशीत् बिवेश ।

बिस क्षेपे दि० पर०सक०सेट् । बिस्यति । इरित् अबिसत्-

बिस न० बिस–क । मृणाले अमरः । [अमरः ।

बिसकण्ठिका स्त्री बिसमिव कण्ठोऽस्याः कप् । बलाकायाम्

बिसकण्ठिन् पु०बिसमिव कण्ठोऽस्त्यस्य इनि । बके राजनि०

बिसकुसुम न० बिसस्थितं कुसुमम् शा०त०। कमले राजनि०
बिसप्रसून तत्रार्थे अमरः । [खनकर्त्तरि ।

बिसखा त्रि० बिसं मृणालं खनति खन–विट् डा । मृणाल

बिसग्रन्थि पु० ६त० । मृणालग्रन्थौ । तस्य जलकालुष्यनिवारकता सुश्रुते उक्ता यथा
"सप्त कलुषस्य प्रसाधनानि भवन्ति । तद्यथा कतकगोमेदकबिसग्रन्थिशैवालमूलवस्त्राणि मुक्तामणिश्चेति" ।

बिसनाभि स्त्री बिसं नाभिरिवास्याः । पद्मिन्यां त्रिका०

बिसनालिका स्त्री बिसस्य नालिकेव । मृणाले शब्दार्थकल्प० । तस्य सच्छिद्रकनालत्वात् तथात्वम् ।

बिसल न०बिस–कलच् । बिसवर्ये त्रिका०।

**बिसवत्** त्रि॰ बिस+चतुरर्थ्यां मतुप् मस्य वः । बिसाद्य-युक्तादौ स्त्रियां ङीप् ।

**बिसवर्त्मन्** पु॰न॰ बिसाख्ये नेत्रवर्त्मगतरोगभेदे सुश्रुतः । "शून्यं यद्वर्त्म बहुभिः सूक्ष्मैश्छिद्रैः समन्वितम् । बिसमन्तर्जल इव बिसवर्त्मेति तन्मतम्" ।

**बिसिनी** स्त्री बिस+पुष्करा॰ इनि । १पद्मिन्याम् अमरः । २बिसाद्यादियुक्ते देशे ३तत्समुदये च । [पादौ ।

**बिसिल** त्रि॰ बिस+चतुरर्थ्याम् काश्या॰ इल । बिसादिसमी-

**बीभत्स** त्रि॰बध-निन्दायां स्वार्थे सन् कर्मणि घञ् ।१पापि-नि २जुगुप्सिते, ३घृणाविषये च ४तद्वति त्रि॰ मेदि॰ । ५नाट्यादौ प्रसिद्धे जुगुप्सास्थायिभावके रसभेदे,पु॰अमरः तद्रसविषये ६विकृतमांसादौ त्रि॰ । "शृङ्गारहास्यकरुण-रौद्रवीरभयानकाः । बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्त-स्तथा मतः" इत्युद्दिश्य सा॰द॰लक्षितो यथा "जुगुप्सा-स्थायिभावस्तु बीभत्सः कथ्यते रसः । नीलवर्णो महा-कालदैवतोऽयमुदाहृतः । दुर्गन्धमांसपिशितमेदांस्यालम्बनं मतम् । तत्रैव कृमिपाताद्यमुद्दीपनमुदाहृतम् । निष्ठीव-नास्यवलननेत्रसङ्कोचनादयः । अनुभावास्तत्र मतास्तथा स्युर्व्यभिचारिणः । मोहापस्मारादिरोग । व्याधिश्च मर-णादयः" तल्लक्षितः । ७अर्जुने पु॰ मेदि॰ ।

**बीभत्सु** पु॰ बध-निन्दने स्वार्थे सन् उ । १अर्जुने । भा॰ वि॰ ४४अ॰ स्वस्वनिरुक्तिम् अन्ययोक्ता यथा "न कुर्य्यां कर्म बीभत्सं युध्यमानः कथञ्चन । तेन देव-मनुष्येषु बीभत्सुरिति विश्रुतः"। बीभत्सुरिति यदि कल्याणे लक्ष्ये चेत्तस्य यनि रूपम्" नीलक॰ । तत्र पृषो॰ इटो-ऽभावो नलोपश्च । अन्ये तु बीभत्सकर्मरहितत्वात् वि-रोधिलक्षणया तन्निन्दनकारित्वाद्वा तथात्वमित्याहुः ।

**बुक** त्रि॰बुक्क-अच् पृषो॰उपधालोपः । भषणशब्दकारके ततः प्रेक्षा॰ चतुरर्थ्याम् इनि । बुकिन् भषणशब्दकारकस-मीपादौ त्रि॰ ।

**बुक्क** कुक्कुरादिशब्दे कथने च वा चु॰उभ॰पक्षे भ्वा॰ पर॰सक॰ सेट् । बुक्कयति ते बुक्कति अबुबुक्कत् त अबुक्कत् अबुक्कीत् ।"कथने चुरा॰कथादिशब्दे तु भ्वा॰"रमानाथः ।

**बुक्क** न॰ बुक्क-अच् । १हृदयस्थे मांसपिण्डे २अग्रमांसे ३हृदये च अमरः अस्य स्त्रीत्वमपि स्त्रीत्वे टाप् गौ॰ङीष् वा । "बुक्काघातैर्युवतिनिकटे प्रौढ़गाक्रोन राधा" उद्भटः । ४छागे पु॰(बोका)त्रिका॰।५समये च पु॰, ६शोणिते भरत स्त्री टाप् । पृषो॰ बूक्कबूक्के अपि हृदये ।

**बुक्कन** न॰ बुक्क-भावे ल्युट् । भषणे कुक्कुरादिशब्दे

**बुक्कन्** पु॰ बुक्क-कनिन् । बुक्कशब्दार्थे भरतः ।

**बुक्कस** पुं स्त्री॰बुक्कस+पृषोदरादि । चण्डाले हेमचन्द्रः । [मुकुटः ।

**बुक्काग्रमांस** न॰ह्रृत॰। हृदयस्थे मांसपिण्डाकारे अग्रमांसे राय-

**बुक्कार** पु॰ बुक्कं भषणशब्दमिति कृ-अण् । सिंहध्वनौ हारा॰

**बुट** हिंसायां चुरा॰उभ॰ पक्षे भ्वा॰पर॰सक॰सेट् । बोटयति ते । बोटति । अबुबुटत्-त । अबोटीत् । [बुबोड़

**बुड** त्यागे संवरणे च तु॰कुटा॰सक॰ सेट् । बुडति अबुडीत्

**बुडिल** पु॰बुदा॰बुड-इलच् । अश्वतराश्वापत्ये राजभेदे छा॰ उ॰५।१०।१ । [अबुदत्-अबोदीत् अबोदिष्ट । उदित् क्त्वा वेट् ।

**बुद** निशामने (आलोचने)भ्वा॰उ॰सक॰सेट् । बोदति ते । इरित्

**बुद्ध** पु॰बुध क्त । १भगवतोऽवतारभेदे येन वेदतत्कर्मणोर्निन्दा-कृता ।२जागरिते,३ज्ञातवति च त्रि॰ ४पण्डिते पु॰मेदि॰। बुद्धश्च विष्णोः चतुर्विंशत्यवतारमध्ये एकविंशोऽवतारो यथोक्तं "ततः कलौ संप्रवृत्ते सम्मोहाय सुरद्विषाम् । बुद्धो नाम्नाऽञ्जनसुतः कीकटेषु भविष्यति" भाग॰१स्क॰ । बुद्धेन प्रोक्तम् अण् तद्वेति अण् । बौद्धप्रोक्तशास्त्रे तद्-भिज्ञे च त्रि॰ । तद्दर्शनभेदतन्मतादिकं सर्वद॰सं॰दर्शितं यथा "अत्र बौद्धैरभिधीयते यद्व्याप्तिरविनाभावो दुर्बोध इति तदसाधीयः तादात्म्यतदुत्पत्तिभ्यामविनाभावस्य सु-ज्ञानत्वात् । तदुक्तम् "कार्य्यकारणभावाद्वा स्वभावाद्वा नियामकात् । अविनाभावनियमो दर्शनान्तरदर्शनादिति" अन्वयव्यतिरेकावविनाभावनिश्चायकाविति । नत्र पक्षे सा-ध्यसाधनयोरव्यभिचारो दुरवधारणो भवेत्, भविष्यति, भूते वर्त्तमाने चानुपलभ्यमाने च व्यभिचारशङ्कायाः अनिवार-णात् । ननु तथाविधस्थले तावकेऽपि मते व्यभि-चारशङ्का दुष्परिहरेति चेन्न मैवं वोचः विनापि कारणं कार्य्यमुत्पद्यतामित्येवंविधायाः शङ्कायाः व्याघातावधिकतया निवृत्तत्वात् । तदेव ह्याशङ्क्येत यस्मिन्न-नाशङ्क्यमाने व्याघातादयो नावतरेयुः तदुक्तम् । "व्याघातावधिराशङ्केति" तस्मात् तदुत्पत्तिनिश्चयेन अवि-नाभावो निश्चीयते तदुत्पत्तिनिश्चयश्च कार्य्यहेत्वोः प्रत्यक्षो-पलम्भानुपलम्भपञ्चकनिबन्धनः । कार्य्यस्योत्पत्तेः प्रागनु-पलम्भः १कारणोपलम्भे २सत्युपलम्भः ३उपलब्धस्य पश्चात् कारणानुपलम्भात् ४अनुपलम्भः५ इति पञ्चकारण्या धूमधूम-ध्वजयोः कार्य्यकारणभावो निश्चीयते । तथा तादात्म्यनि-श्चयेनाप्यविनाभावो निश्चीयते यदि शिंशपा वृक्षत्वमतिपतेत् स्वात्मानमेव जह्यादिति विपक्षे बाधकप्रवृत्तेः । अप्रवृत्ते

स्वभावे भूयःसहभावोपलम्भेऽपि व्यभिचारशङ्कायाः को निवारयिता। शिंशपावृक्षयोश्च तादात्म्यनिश्चये वृक्षोऽयं शिंशपेति सामानाधिकरण्यमुपपद्यते। न ह्यत्यन्ताभेदे तत् सम्भवति पर्यायत्वेन युगपदपि प्रयोगायोगात् नाप्यत्यन्तभेदे गवाश्वयोरिवानुपपत्तेः। तस्मात् कार्यात्मानौ कारणात्मानमनुमापयत इति सिद्धम्। यदि कश्चित् प्रामाण्यमनुमानस्य नाङ्गीकुर्यात् तं प्रति ब्रूयात् अनुमानं न प्रमाणमित्येतावन्मात्रं प्रमाणं तत्र न किञ्चन साधनमुपन्यस्यते उपन्यस्यते वा। न प्रथमः एकाकिनी प्रतिज्ञा हि प्रतिज्ञातं न साधयेदिति न्यायात्। नापि चरमः अनुमानं प्रमाणं न भवतीति ब्रुवाणेन त्वया अविरुद्धवचनस्योपन्यासे मम माता वन्ध्येतिवद् व्याघातापातात्। किञ्च प्रमाणतदाभासव्यवस्थापनं तत्समानजातीयत्वादिति वदता भवतैव स्वीकृतं स्वभावानुमानम्। परगता विप्रतिपत्तिश्च वचनलिङ्गेनेति ब्रुवता कार्यलिङ्गकमनुमानम्। अनुपलब्ध्या कञ्चिदर्थं प्रतिषेधतानुपलब्धिलिङ्गकमनुमानम्। तथाचोक्तं तथागतैः "प्रमाणान्तरसामान्यस्थितेरन्यधियो गतेः। प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचिदिति" परामर्शस्थान सूरिभिरिति अलमप्रसङ्गेनेत्युपरम्यते। ते च बौद्धाश्चतुर्विधया भावनया परमपुरुषार्थं कथयन्ति। ते च माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसंज्ञाभिः प्रसिद्धा बौद्धा यथाक्रमं सर्वशून्यत्व-बाह्यशून्यत्व-बाह्यार्थानुमेयत्व बाह्यार्थप्रत्यक्षत्ववादानातिष्ठन्ते। यद्यपि भगवान् बुद्ध एक एव बोधयिता तथापि बोद्धव्यानां बुद्धिभेदाच्चातुर्विध्यं यथा गतोऽस्तमर्क इत्युक्ते जारचौरानूचानादयः स्वेष्टानुसारेणाभिसरणपरस्वहरणसदाचरणादिसमयं बुध्यन्ते। सर्वं क्षणिकं क्षणिकम्, दुःखं दुःखं, स्वलक्षणं स्वलक्षणं, शून्यं शून्यमिति भावनाचतुष्टयमुपदिष्टं द्रष्टव्यम्। तत्र क्षणिकत्वं नीलादिक्षणानां सत्त्वेनानुमातव्यं यत् सत् तत् क्षणिकं यथा जलधरपटलं सन्तश्चामी भावा इति। न चायमसिद्धो हेतुः अर्थक्रियाकारित्वलक्षणस्य सत्त्वस्य नीलादिक्षणानां प्रत्यक्षसिद्धत्वात् व्यापकव्यावृत्त्या व्याप्यव्यावृत्तिरिति न्यायेन व्यापकक्रमाक्रमव्यावृत्तावक्षणिकात् सत्त्वव्यावृत्तेः सिद्धत्वाच्च। तच्चार्थक्रियाकारित्वं क्रमाक्रमाभ्यां व्याप्तं न च क्रमाक्रमाभ्यामन्यः प्रकारः सम्भवति "परस्परविरोधे हि न प्रकारान्तरस्थितिः। नैकतापि विरुद्धानामुक्तिमात्रविरोधतः" इति न्यायेन व्याघातस्योद्भटत्वात्। तौ च क्रमाक्रमौ स्थायिनः सकाशाद् व्यावर्त्तमानौ अर्थक्रियामपि व्यावर्त्तयन्तौ क्षणिकत्वपक्ष एव सत्त्वं व्यवस्थापयत इति सिद्धम्। नन्वक्षणिकस्यार्थक्रियाकारित्वं किं न स्यादिति चेत् तदयुक्तं विकल्पासहत्वात् तथा हि वर्त्तमानार्थक्रियाकरणकाले अतीतानागतयोः किमर्थक्रिययोः स्थायिनः सामर्थ्यमस्ति? नो वा? आद्ये तयोरनिराकरणप्रसङ्गः समर्थस्य क्षेपायोगात् यत् यदा यत्करणसमर्थं तत् तदा तत्करोत्येव यथा सामग्री स्वकार्यं समर्थश्चायं भावः इति प्रसङ्गानुमानाच्च। द्वितीयेऽपि कदापि न कुर्यात् सामर्थ्यमात्रानुबन्धित्वादर्थक्रियाकारित्वस्य यत् यदा यन्न करोति तत् तदा तत्रासमर्थं यथा हि शिलाशकलमङ्कुरे, न चैष वर्त्तमानार्थक्रियाकरणकाले वृत्तवर्त्तिष्यमाणे अर्थक्रिये करोतीति तद्विपर्ययाच्च। ननु क्रमवत्सहकारिलाभात् स्थायिनः अतीतानागतयोः क्रमेण करणमुपपद्यते इति चेत् तत्रेदं भवान् पृष्टो व्याचष्टां सहकारिणः किं भावस्योपकुर्वन्ति? न वा? न चेत् नापेक्षणीयास्ते अकिञ्चित्कुर्वतां तेषां तादर्थ्यायोगात्। उपकारकत्वपक्षे सोऽयमुपकारः किं भावाद्भिद्यते? न वा? भेदपक्षे आगन्तुकस्यैव तस्य कारणत्वं स्यात् न भावस्याक्षणिकस्य, आगन्तुकातिशयान्वयव्यतिरेकानुविधायित्वात् कार्यस्य। तदुक्तम् "वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम्?। चर्मोपमश्चेत् सोऽनित्यः खतुल्यश्चेदसत्फल इति"। अथ भावस्तैः सहकारिभिः सहैव कार्यं करोतीति स्वभाव इति चेत् अङ्ग तर्हि सहकारिणो न जह्यात् प्रत्युत पलायमानानपि पाशेन बद्ध्वा कार्यं कुर्यात् स्वभावस्यानपायात्। किञ्च सहकारिजन्योऽतिशयः किमतिशयान्तरमारभते न वा उभयथापि प्रागुक्तदूषणपाषाणवर्षप्रसङ्गः। अतिशयान्तरारम्भपक्षे बहुमुखानवस्थादौस्थ्यमपि स्यात् अतिशये जनयितव्ये सहकार्यन्तरापेक्षायां तत्परम्परापात इत्यनवस्थाऽऽस्थेया, तथाहि सहकारिभिः सलिलपवनादिभिः पदार्थसार्थैराधीयमाने बीजस्यातिशये बीजमुत्पादकमभ्युपेयम् अपरथा तदभावेऽप्यतिशयः प्रादुर्भवेत् बीजञ्चातिशयमादधानं सहकारिसापेक्षमेवाधत्ते अन्यथा सर्वदोपकारापत्तौ अङ्कुरस्यापि सदोदयः प्रसज्येत। तस्मादतिशयार्थमपेक्षमाणैः सहकारिभिरति-

र्थान्तरमाधेयं बीजे, तस्मिन्नप्युपकारे पूर्वन्यायेन सहकारिसापेक्षस्य बीजस्य जनकत्वे सहकारिसम्पाद्यबीजगतातिशयानवस्था प्रथमा व्यवस्थिता । अथोपकारः कार्य्यधर्ममपेक्ष्यमाणोऽपि बीजादिनिरपेक्षं कार्य्यं जनयति तत्सापेक्षो वा । प्रथमे बीजादेरहेतुत्वमापतेत् । द्वितीये अपेक्ष्यमाणेन बीजादिना उपकारे अतिशय आधेयः एवं तत्र तत्रापीति बीजादिजन्यातिशयनिष्ठातिशयपरम्परापात इति द्वितीयानवस्था स्थिरा भवेत् । एवमपेक्ष्यमाणेनोपकारेण बीजादौ धर्मिण्युपकारान्तरमाधेयमित्युपकाराधेयबीजातिशयाश्रयातिशयपरम्परापात इति तृतीयानवस्था दुरवस्था स्यात् । अथ भावादभिन्नोऽतिशयः सहकारिभिराधीयत इत्यभ्युपगम्यते तर्हि प्राचीनो भावोऽनतिशयात्मा निवृत्तः अन्यश्चातिशयात्मा कुर्वद्रूपादिपदवेदनीयो जायत इति फलितं ममापि मनोरथद्रुमेण । तस्मादक्षणिकस्यार्थक्रिया दुर्घटा । नाप्यक्रमेण घटते विकल्पासहत्वात् । तथा हि युगपत्सकलकार्य्यकरणसमर्थः स भावस्तदुत्तरकालमनुवर्त्तते न वा । प्रथमे तत्कालवत् कालान्तरेऽपि तावत्कार्य्यकरणमापतेत् । द्वितीये स्थायित्वस्याशा मूषिकभक्षितबीजादावङ्कुरादिजननप्रार्थनामनुहरेत् । यत् विरुद्धधर्माध्यस्तं तन्नाना यथा शीतोष्णे । विरुद्धधर्माध्यस्तश्चायमिति जलधरे प्रतिबन्धसिद्धिः । न चायमसिद्धो हेतुः, स्थायिनि कालभेदेन सामर्थ्यासामर्थ्ययोः प्रसङ्गतद्विपर्य्ययसिद्धत्वात् तत्रासामर्थ्यसाधकौ प्रसङ्गतद्विपर्य्ययौ प्रागुक्तौ सामर्थ्यसाधकावभिधीयेते यद्यदा यज्जननासमर्थं तत् तदा तन्न करोति यथा शिलाशकलमङ्कुरम् असमर्थश्चायं वर्त्तमानार्थक्रियाकरणकाले अतीतानागतयोरर्थक्रिययोरिति प्रसङ्गः यद्यदा यत् करोति तत् तदा तत्र समर्थं यथा सामग्री स्वकार्य्यमिति, करोति चायमतीतानागतकाले तत्कालवर्त्तिन्यावर्थक्रिये भाव इति प्रसङ्गव्यत्ययः विपर्य्ययः । तस्मादु विपक्षे क्रमयौगपद्यव्यावृत्त्या व्यापकानुपलम्भेनाधिगतव्यतिरेकव्याप्तिकं प्रसङ्गतद्विपर्य्ययबलात् स्पष्टीतान्वयव्याप्तिकं सत्त्वं क्षणिकत्वपक्ष एव व्यवस्थास्यतीति सिद्धम् । तदुक्तं ज्ञानश्रिया "यत् सत्तत् क्षणिकं यथा जलधरः सन्तश्च भावा अमी सत्ताशक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा न वा । नाप्येकैव विधाऽन्यथा परकृतेनापि क्रियादिर्भवेत् द्वेधापि क्षणभङ्गसङ्गतिरतः साध्ये च विश्राम्यतीति" । न च कणभक्षाक्षचरणादिपक्षकक्षीकारेण सत्तासामान्ययोगित्वमेव सत्त्वमिति मन्तव्यं सामान्यविशेषसमवायानामसत्त्वप्रसङ्गात् । न च तत्र स्वरूपसत्तानिबन्धनः सद्व्यवहारः प्रयोजकगौरवापत्तेः अनुगतत्वाननुगतत्वविकल्पपराहतेश्च, सर्षपमहीधरादिषु विलक्षणेषु क्षणेष्वनुगतस्याकारस्य मणिषु सूत्रवदनुभूतगणेषु सुवक्षाप्रतिभासनाच्च । किञ्च सामान्यं सर्वगतं स्वाश्रयसर्वगतं वा प्रथमे सर्ववस्तुसङ्करप्रसङ्गः अपसिद्धान्तापत्तिश्च यतः प्रोक्तं प्रशस्तपादेन "स्वविषयसर्वगतमिति । किञ्च विद्यमाने घटे वर्त्तमानं सामान्यमन्यत्र जायमानेन संबध्यमानं तस्मादागच्छत् सम्बध्यते अनागच्छद्वा आद्ये द्रव्यत्वापत्तिः द्वितीये सम्बन्धानुपपत्तिः । किञ्च विनष्टे घटे सामान्यमवतिष्ठते, विनश्यति, स्थानान्तरं गच्छति वा प्रथमे निराधारत्वापत्तिः, द्वितीये नित्यत्ववाचोयुक्त्ययुक्तिः, तृतीये द्रव्यत्वप्रसक्तिः इत्यादि दूषणग्रहग्रस्तत्वात् सामान्यमप्रामाणिकमेव । "अन्यत्र वर्त्तमानस्य ततोऽन्यस्थानजन्मनि । तस्मादचलतः स्थानाद्वृत्तिरित्यतियुक्तता ॥ यत्रासौ वर्त्तते भावस्तेन संबध्यते न तु । तद्देशिनञ्च व्याप्नोति किमप्येतन्महाद्भुतम् ॥ न याति न च तत्रासीदस्ति पश्चान्न चांशवत् । जहाति पूर्वं नाधारमहो व्यसनसन्ततिरिति" अनुवृत्तप्रत्ययः किमालम्बन इति चेत् अङ्ग अन्यापोहालम्बन एवेति सन्तोष्टव्यमायुष्मतेति अलमतिप्रसङ्गेन । सर्वस्य संसारस्य दुःखात्मकत्वं सर्वतीर्थकरसम्मतम् अन्यथा तन्निविवर्त्तयिषूणां तेषां तन्निवृत्त्युपाये प्रवृत्त्यनुपपत्तेः । तस्मात् सर्वं दुःखं दुःखमिति भावनीयम् । ननु किंवदिति पृष्टे दृष्टान्तः कथनीय इति चेन्मैवं स्वलक्षणानां क्षणानां क्षणिकतया साधर्म्याभावात् नैतेन सदृशमपरमिति वक्तुमशक्यत्वात् । ततः स्वलक्षणं स्वलक्षणमिति भावनीयम् । एवं शून्यं शून्यमपि भावनीयं स्वप्ने जागरणे च न मया दृष्टमिदं रजतादीति विशिष्टनिषेधस्योपलम्भात् । यदि दृष्टं सत् तदा तद्विशिष्टस्य दर्शनस्येदन्तायाः अधिष्ठानस्य च तस्मिन्नध्यस्तस्य रजतत्वादेस्तत्सम्बन्धस्य च समवायादेः सत्त्वं स्यात् न चैतदिष्टं कस्यचिद्वादिनः । न चार्धजरतीयमुचितं न हि कुक्कुट्या एको भागः पाकाय अपरो भागः प्रस-

वाय कल्प्यतामिति कल्प्यते । तस्माद्धस्ताधिष्ठानतत्सम्बन्धदर्शनद्रष्टॄणां मध्ये एकस्यानेकस्य वा असत्त्वे निषेधविषयत्वेन सर्वस्यासत्त्वं बलादापतेदिति ।

(माध्यमिकाः) भगवतोपदिष्टे माध्यमिकास्तावदुत्तमप्रज्ञा इत्थमचीकथन् भिक्षुपादप्रसारणन्यायेन क्षणभङ्गाद्यभिधानमुखेन स्थायित्वानुकूलवेदनीयत्वानुगतसर्वसत्यत्वभ्रमव्यावर्त्तनेन सर्वशून्यतायामेव पर्य्यवसानम् । अतस्तत्त्वं सदसदुभयानुभयात्मकचतुष्कोटिविनिर्मुक्तं शून्यमेव । तथा हि यदि घटादेः सत्त्वं स्वभावस्तर्हि कारकव्यापारवैयर्थ्यम् । असत्त्वं स्वभाव इति पक्षे प्राचीन एव दोषः प्रादुःष्यात् । यथोक्तम् "न सतः कारणापेक्षा व्योमादेरिव युज्यते । कार्य्यस्यासम्भवो हेतुः खपुष्पादेरिवासतः" इति विरोधादितरौ पक्षावनुपपन्नौ तदुक्तं भगवता लङ्कावतारे "बुद्ध्या विविच्यमानानां स्वभावो नावधार्य्यते । अतो निरभिलप्यास्ते निःस्वभावाश्च दर्शिताः" इति । "इदं वस्तु बलायातं यद्वदन्ति विपश्चितः । यथा यथार्थाश्चिन्त्यन्ते विशीर्य्यन्ते तथा तथेति" च । न क्वचिदपि पक्षे व्यवतिष्ठत इत्यर्थः । इष्टार्थव्यवहारश्च न स्वप्नव्यवहारवत् संवृत्या सङ्गच्छते । अतएवोक्तम् "परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ । कुणपः कामिनी भक्ष्य इति तिस्रो विकल्पना इति ।" तदेवं भावनाचतुष्टयवशान्निखिलवासनानिवृत्तौ निर्वाणं शून्यरूपं सेत्स्यतीति वयं कृतार्थाः नास्माकमुपदेश्यं किञ्चिदस्तीति । शिष्यैश्चावश्योगश्चाचारश्चेति द्वयं करणीयम् । तत्राप्राप्तस्यार्थस्य प्राप्तये पर्य्यनुयोगो योगः गुरूक्तस्यार्थस्याङ्गीकरणमाचारः गुरूक्तस्याङ्गीकरणादुत्तमाः पर्य्यनुयोगस्याकरणादधमाश्च अतस्तेषां माध्यमिका इति प्रसिद्धिः ।

(योगाचाराः) गुरूक्तभावनाचतुष्टयं बाह्यार्थस्य शून्यत्वञ्चाङ्गीकृत्याऽऽन्तरस्य शून्यत्वस्याङ्गीकृतं कथमिति ? पर्य्यनुयोगस्य करणात् केषाञ्चिद् योगाचारप्रथा एषा हि तेषां परिभाषा स्वसंवेदनं तावदङ्गीकार्य्यम् अन्यथा जगदान्ध्यं प्रसज्येत । तत्कीर्त्तितं धर्म्मकीर्त्तिना "अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यतीति ।" बाह्यं ग्राह्यं नोपपद्यत एव विकल्पानुपपत्तेः । अर्थो ज्ञानग्राह्यो भावादुत्पन्नो भवति अनुत्पन्नो वा, न पूर्वः उत्पन्नस्य स्थित्यभावात् नापरः अनुत्पन्नस्यासत्त्वात् । अथ मन्येथाः अतीत एवार्थो ज्ञानग्राह्यः तज्जनकत्वादिति तदपि बालभाषितं वर्त्तमानतावभासविरोधात् इन्द्रियादेरपि ग्राह्यत्वप्रसङ्गाच्च । किञ्च ग्राह्यः किं परमाणुरूपोऽर्थः अवयविरूपो वा । न चरमः कृत्स्नैकदेशविकल्पादिना तन्निराकरणात् । न प्रथमः अतीन्द्रियत्वात् षट्केन युगपद्योगस्य बाधकत्वाच्च । यथोक्तम् "षट्केन युगपद् योगात् परमाणोः षडंशता । तेषामप्येकदेशत्वे पिण्डः स्यादणुमात्रकः" इति । तस्मात् स्वव्यतिरिक्तग्राह्यविरहात्तदात्मिका बुद्धिः स्वयमेव स्वात्मरूपप्रकाशिका प्रकाशवदिति सिद्धम् । तदुक्तम् "नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः । ग्राह्यग्राहकवैधुर्य्यात् स्वयं सैव प्रकाशते इति ।" ग्राह्यग्राहकयोरभेदश्चानुमातव्यः यद्वेद्यते येन वेदनेन तत्ततो न भिद्यते यथा ज्ञानेनात्मा, वेद्यन्ते तैश्च नीलादयः । भेदे हि सत्यधुना अनेनार्थस्य सम्बन्धित्वं न स्यात् तादात्म्यस्य नियमहेतोरभावात् तदुत्पत्तेरनियामकत्वात् यश्चायं ग्राह्यग्राहकसंवित्तीनां पृथगवभासः स एकस्मिन् चन्द्रमसि द्वित्वावभास इव भ्रमः अत्राप्यनादिरविच्छिन्नप्रवाहा भेदवासनैव निमित्तम् । यथोक्तम् "सहोपलम्भनियमादभेदो नीलतद्धियोः । भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये" इति । "अविभागोऽपि बुद्ध्यात्मा विपर्य्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते" इति च । न च रसवीर्य्यविपाकादि समानमाशामोदकोपार्जितमोदकानां स्यादिति वेदितव्यं वस्तुतो वेद्यवेदकाकारविधुराया अपि बुद्धेर्व्यवहर्त्तृपरिज्ञानानुरोधेन विभिन्नग्राह्यग्राहकाकाररूपवत्तया तिमिराद्युपहताक्षाणां केशेन्द्रनाडीज्ञानभेदवदनाद्युपप्लववासनासामर्थ्याद् व्यवस्थोपपत्तेः पर्य्यनुयोगायोगात् । यथोक्तम् "अवेद्यवेदकाकारा यथा भ्रान्तैर्निरीक्ष्यते । विभक्तलक्षणग्राह्यग्राहकाकारविप्लवा । तथा कृतव्यवस्थेयं केशादिज्ञानभेदवत् । यदा तदा न सञ्चोद्या ग्राह्यग्राहकलक्षणेति" तस्माद् बुद्धिरेवानादिवासनावशादनेकाकारावभासत इति सिद्धम् । ततश्च प्रागुक्तभावनाप्रचयबलान्निखिलवासनोच्छेदविगलितविविधविषयाकारोपप्लवविशुद्धविज्ञानोदयो महोदय इति ।

(सौत्रान्तिकाः) अन्ये तु मन्यन्ते यथोक्तं बाह्यं वस्तुजातं नास्तीति तदयुक्तं प्रमाणाभावात् । न च सहोपलम्भनियमः प्रमाणमिति वक्तव्यं वेद्यवेदकयोरभेदसाधकत्वेनाभिमतस्य तस्याप्रयोजकत्वेन सन्दिग्धविपक्षव्यावृत्तिकत्वात् । ननु भेदे सहोपलम्भनियमात्मकं

बाधकं न स्यादिति चेन्न ज्ञानस्यान्तर्बहिस्तया च भेदेन प्रतिभासमानतया एकदेशत्वैककालत्वलक्षणसहत्वनियमासम्भवात् नीलांशस्य ज्ञानाकारत्वे अहमिति प्रतिभासः स्यात् नत्विदमिति प्रतिपत्तिः प्रत्ययाव्यतिरेकात्। अथोच्यते ज्ञानस्वरूपोऽपि नीलाकारो भ्रान्त्या बहिर्वद्भेदेन प्रतिभासत इति न च तस्मादहरूपेण इति यथोक्तम् "परिच्छेदान्तराद् योऽयं भागो बहिरिव स्थितः। ज्ञानस्याभेदिनो भेदप्रतिभासोऽप्युपप्लवः" इति। "यदन्तर्ज्ञेयतत्त्वं तद् बहिर्वदवभासत इति च" तदयुक्तं बाह्यार्थाभावे तदुत्पत्तिरहिततया बहिर्वदित्युपमानोक्तेरयुक्तेः न हि वसुमित्रो वन्ध्यापुत्रवदवभासत इति प्रेक्षावानाचक्षीत। भेदप्रतिभासस्य भ्रान्तत्वे अभेदप्रतिभासस्य प्रामाण्यं, तत्प्रामाण्ये च भेदप्रतिभासस्य भ्रान्तत्वमिति परस्पराश्रयप्रसङ्गाच्च। अविसंवादान्नीलतादिकमेव संविदाना बाह्यमेवोपाददते अपत्युपेक्षन्ते चान्तरमिति व्यवस्थादर्शनाच्च। एवञ्चाभेदसाधको हेतुर्गोमयपायसीयन्यायवदाभासतां भजेत् अतो बहिर्वदिति वदता बाह्यं ग्राह्यमेवेति भावनीयमिति भवदीय एव बाणो भवन्तं प्रहरेत्। ननु ज्ञानाभिन्नकालस्यार्थस्य ग्राह्यत्वमनुपपन्नमिति चेत् तदनुपपन्नम् इन्द्रियसन्निकृष्टस्य विषयस्योत्पाद्ये ज्ञाने स्वाकारसमर्पकतया समर्पितेन चाकारेण तस्यार्थस्यानुमेयतोपपत्तेः अतएव पर्यनुयोगपरिहारौ समग्राहिषाताम्। "भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः। हेतुत्वमेव च युक्तिज्ञा ज्ञानाकारार्पणक्षममिति" तथा च यथा पुष्ट्या भोजनमनुमीयते यथा च भाषया देशः यथा वा सम्भ्रमेण स्नेहः तथा ज्ञानाकारेण ज्ञेयमनुमेयम्। तदुक्तम् "अर्थेन घटयत्येनां न हि मुक्त्वाऽर्थरूपताम्। तस्मात् प्रमेयाधिगतेः प्रमाणं मेयरूपतेति" न हि वित्तिसत्तैव तद्वेदना युक्ता तस्याः सर्वत्राविशेषात् तान्तु सारूप्यमाविशत् सरूपयितुं घटयेदिति च। तथा च बाह्यार्थसद्भावे प्रयोगः ये यस्मिन् सत्यपि कादाचित्काः ते सर्वे तदतिरिक्तसापेक्षाः यथा अविवक्षति, अजिगमिषति मयि वचनगमनप्रतिभासाः विवक्षुजिगमिषुपुरुषान्तरसन्तानसापेक्षाः तथा च विवादाध्यासिताः प्रवृत्तिप्रत्ययाः सत्यप्यालयविज्ञाने कदाचिदेव नीलाद्युल्लेखना इति। तत्रालयविज्ञानं नामाहमास्पदं विज्ञानं, नीलाद्युल्लेखि च प्रवृत्तिविज्ञानम्। यथोक्तम् "तत् स्यादालयविज्ञानं यद्भवेदहमास्पदम्। तत् स्यात् प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेदिति" तस्मादालयविज्ञानसन्तानातिरिक्तः कादाचित्कः प्रवृत्तिविज्ञानहेतुर्बाह्योऽर्थो ग्राह्य एव न वासनापरिपाकप्रत्ययः कादाचित्कत्वात् कदाचिदुत्पाद इति वेदितव्यम्। विज्ञानवादिनये हि वासनानामेकसन्तानवर्त्तिनामालयविज्ञानानां तत्तत्प्रवृत्तिजननशक्तिः तस्याश्च स्वकार्योत्पादं प्रत्याभिमुख्यं परिपाकः तस्य च प्रत्ययः कारणं स्वसन्तानवर्त्तिपूर्वक्षणः अङ्गीक्रियते सन्तानान्तरनिबन्धनत्वानङ्गीकारात्। ततश्च प्रवृत्तिज्ञानजननालयविज्ञानवर्त्तिवासनापरिपाकं प्रति सर्वेऽप्यालयविज्ञानवर्त्तिनः क्षणाः समर्था एवेति वक्तव्यम्। न चेदेव कोऽपि न समर्थः स्यादालयविज्ञानसन्तानवर्त्तित्वाविशेषात्। सर्वे समर्था इति पक्षे कार्य्यक्षेपानुपपत्तिः ततश्च कादाचित्कत्वनिर्वाहाय शब्दस्पर्शरूपरसगन्धविषयाः सुखादिविषयाः षडपि प्रत्ययाश्चतुरः प्रत्ययान् प्रतीत्योत्पद्यन्ते इति चतुरेणानिच्छताप्यच्छमतिना स्वानुभवमनाच्छाद्य परिच्छेत्तव्यम्। ते चत्वारः प्रत्ययाः आलम्बनसमनन्तरसहकार्य्यधिपतिरूपाः। तत्र ज्ञानपदवेदनीयस्य चित्तस्य नीलाद्यालम्बनप्रत्ययात् नीलाकारता भवति, समनन्तरप्रत्ययात् प्राचीनज्ञानाद् बोधरूपता, सहकारिप्रत्ययादालोकात्, चक्षुषोऽधिपतिप्रत्ययाद्विषयग्रहप्रतिनियमः उदितस्य ज्ञानस्य रसादिसाधारण्यप्राप्तौ नियामकं चक्षुरधिपतिर्भवितुमर्हति लोके नियामकस्याधिपतित्वोपलम्भात्। एवं चित्तचैत्तात्मकानां सुखादीनां चत्वारि कारणानि द्रष्टव्यानि। एवं चित्तचैत्तात्मकस्कन्धः पञ्चविधः रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकः। तत्र रूप्यन्ते एभिर्विषया इति च व्युत्पत्त्या सविषयाणीन्द्रियाणि रूपस्कन्धः। आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहो विज्ञानस्कन्धः। प्रागुक्तस्कन्धद्वयसम्बन्धजन्यः सुखदुःखादिप्रत्ययप्रवाहो वेदनास्कन्धः। गौरित्यादिशब्दोल्लेखिसविज्ञानप्रवाहः संज्ञास्कन्धः। वेदनास्कन्धनिबन्धना रागद्वेषादयः क्लेशा उपक्लेशाश्च मदमानादयो धर्माधर्मौ च संस्कारस्कन्धः। तदिदं सर्वं दुःखं दुःखायतनं दुःखसाधनञ्चेति भावयित्वा तन्निरोधोपायं तत्त्वज्ञानं सम्पादयेत्। अत एवोक्तं "दुःखसमुदायनिरोधमार्गाश्चत्वारः बुद्धाभिमतानि तत्त्वानि"। तत्र दुःखं प्रसिद्धं, समुदायो दुःखकारणं,

तच्च द्विविधं प्रत्ययोपनिबन्धनो हेतूपनिबन्धनश्च। तत्र प्रत्ययोपनिबन्धनस्य संग्राहकं सूत्रम् "इदं कार्य्यं ये अन्ये हेतवः प्रत्ययन्ति" गच्छन्ति तेषामयमानानां हेतूनां भावः प्रत्ययत्वं, कारणसमवायः तन्मात्रस्य फलं, न चेतनस्य कस्यचिदिति सूत्रार्थः। यथा बीजहेतुरङ्कुरो धातूनां षण्णां समवायाज्जायते। तत्र पृथिवीधातुरङ्कुरस्य काठिन्यं गन्धञ्च जनयति, अब्धातुः स्नेहं रसञ्च जनयति, तेजोधातुः रूपमौष्ण्यञ्च, वायुधातुः स्पर्शनं चलनञ्च, आकाशधातुरवकाशं शब्दञ्च ऋतुधातुर्यथायोगं पृथिव्यादिकम्। हेतूपनिबन्धनस्य च संग्राहकं सूत्रम् "उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषां धर्माणां धर्मता धर्मस्थितिता धर्मनियामकता च प्रतीत्यसमुत्पादानुलोमतेति"। तथागतानां बुद्धानां मते धर्माणां कार्य्यकारणरूपाणां या धर्मता कार्य्यकारणभावरूपा एषोत्पादादनुत्पादाद्वा स्थिता, यस्मिन् सति यदुत्पद्यते तत् तस्य कारणस्य कार्य्यमिति धर्मतेत्यस्य विवरणं, धर्मस्य कार्य्यस्य कारणानतिक्रमेण स्थितिः स्वार्थिकस्तल्प्रत्ययः। धर्मस्य कारणस्य कार्य्यं प्रति नियामकता। ननु कार्य्यकारणभावश्चेतनमन्तरेण न सम्भवतीति अत उक्तं कारणे सति तत्प्रतीत्य प्राप्य समुत्पादे अनुलोमता अनुसारिता या सैव धर्मता उत्पादादनुत्पादाद्वा धर्माणां स्थिता। न चात्र कश्चिच्चेतनोऽधिष्ठातोपलभ्यत इति सूत्रार्थः। यथा प्रतीत्यसमुत्पादस्य हेतूपनिबन्धः बीजादङ्कुरोऽङ्कुरात् काण्डं काण्डान्नालो नालाद्गर्भस्ततः शूकं ततः पुष्पं ततः फलम्। न चात्र बाह्ये समुदाये कारणं बीजादि कार्य्यमङ्कुरादि चेतयते अहमङ्कुरं निर्वर्त्तयामि अहं बीजेन निर्वर्त्तित इति। एवमाध्यात्मिकेष्वपि कारणद्वयमवगन्तव्यम्। पुरःस्थिते प्रमेयाब्धौ ग्रन्थविस्तरभियोपरम्यते। तदुभयनिरोधः तदनन्तरं विमलज्ञानोदयो वा मुक्तिः तन्निरोधोपायो मार्गः स च तत्त्वज्ञानं तच्च प्राचीनभावनाबलाद् भवतीति परमं रहस्यम्। सूत्रान्तं पृच्छतां कथितं भवन्तश्च सूत्रस्यान्तं पृष्टवन्तः सौत्रान्तिका भवन्त्विति भगवताभिहिततया सौत्रान्तिकसंज्ञाः सञ्जाताः।

(वैभाषिकाः) केचन बौद्धा बाह्येषु रूपादिषु आन्तरेषु सुखादिषु स्कन्धेषु सत्स्वपि तत्रानास्थामुत्पादयितुं सर्वं शून्यमिति, प्राथमिकान् विनेयानचीकथत् भगवान्, द्वितीयांस्तु विज्ञानमात्रग्रहाविष्टान् विज्ञानमेवैकं सदिति, तृतीयानुभयं सत्यमित्यास्थितान् विज्ञेयमनुमेयमिति, सेयं विरुद्धा भाषेति वर्णयन्तो वैभाषिकाख्यया ख्याताः। एषा हि तेषां परिभाषा समुन्मिषति। विज्ञेयानुमेयत्ववादे प्रत्यक्षस्य कस्यचिदप्यर्थस्याभावेन व्याप्तिसंवेदनस्थानाभावेनानुमानप्रवृत्त्यनुपपत्तिः सकललोकानुभवविरोधश्च। ततश्चार्थो द्विविधः ग्राह्योऽध्यवसेयश्च तत्र ग्रहणं निर्विकल्पकरूपं प्रमाणं कल्पनापोढत्वात्, अध्यवसायः सविकल्पकरूपोऽप्रमाणं कल्पनाज्ञानत्वात्। तदुक्तम् "कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम्। विकल्पो वस्तुनिर्भासादसंवादादुपप्लवः" इति। "ग्राह्यं वस्तु प्रमाणं हि ग्रहणं यदितोऽन्यथा। न तद्वस्तु न तन्मानं शब्दलिङ्गेन्द्रियादिजमिति च" ननु सविकल्पकस्याप्रामाण्ये कथं ततः प्रवृत्तस्यार्थप्राप्तिः संवादश्चोपपद्येयातामिति चेन्न तदुक्तं मणिप्रभाविषयमणिविकल्पन्यायेन पारम्पर्य्येणार्थप्रतिलम्भसम्भवेन तदुपपत्तेः। अवशिष्टं सौत्रान्तिकप्रस्तावे प्रपञ्चितमिति नेह प्रतन्यते। न च विनेयाशयानुरोधेनोपदेशभेदः साम्प्रदायिको न भवतीति भणितव्यं यतो भणितं बोधचित्तविवरणे "देशना लोकनाथानां सत्त्वाशयवशानुगाः। भिद्यन्ते बहुधा लोके उपायैर्बहुभिः किल। गम्भीरोत्तानभेदेन क्वचिच्चोभयलक्षणाः। भिन्ना हि देशनाऽभिन्ना शून्यताऽद्वयलक्षणेति।

द्वादशायतनपूजा श्रेयस्करीति बौद्धनये प्रसिद्धम्। "अर्थाननुपार्ज्य बहुशो द्वादशायतनानि वै। परितः पूजनीयानि किमन्यैरिह पूजितैः। ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाणि च। मनोबुद्धिरिति प्रोक्तं द्वादशायतनं बुधैरिति"। विवेकविलासे बौद्धमतमित्थमभ्यधायि। "बौद्धानां सुगतो देवो विश्वञ्च क्षणभङ्गुरम्। आर्य्यसत्त्वाख्यया तत्त्वचतुष्टयमिदं क्रमात्। दुःखमायतनञ्चैव ततः समुदयो मतः। मार्गश्चेत्यस्य च व्याख्या क्रमेण श्रूयतामतः। दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्त्तिताः। विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च। पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम्। धर्मायतनमेतानि द्वादशायतनानि तु। रागादीनां गणोऽयं स्यात् समुदेति नृणां हृदि। आत्मात्मीयस्वभावाख्यः स स्यात् समुदयः पुनः। क्षणिकाः

इति चेन्न योगजधर्मसहकारिणा मनसैव तद्ग्रहणात् तदुपग्रहाच्चक्षुरादिना वा। अचिन्त्यप्रभावोऽपि योगजो धर्मो न सहकार्य्यन्तरमपेक्षते। विप्रादाज्ञापितः पुरुषो न सर्वज्ञः पुरुषत्वादहमिवेत्यादि तु प्राभाकरो न मीमांसाभिज्ञः पुरुषत्वादहमिवेत्यादिशब्दविपक्षबाधकतर्कशून्यत्वादप्रयोजकम्। अथ वौद्धीयस्तु प्रत्यक्षं द्विविधं सविकल्पकं निर्विकल्पकञ्च सविकल्पकं ज्ञानं न प्रमाणमिति कीर्त्तिदिङ्नागादयः तथा हि अभिलापसंसर्गयोग्यप्रतिभासं हि तत् नह्यभिलापेन नाम्ना सम्बन्धत्वर्थस्य सम्बन्धो येन घट इति पट इति वा नामानुरञ्जितः प्रत्ययः स्यात् नच जात्यादि परमार्थसत् येन तद्वैशिष्ट्यं विषयेषु इन्द्रियगोचरः तस्मादिन्द्रियेणालोचनं जन्यते आलोचनमहिम्ना च सविकल्पकमुत्पद्यमानं तथार्थे प्रवर्त्तयत् प्रत्यक्षमिति चोच्यते इति। तन्न तदनुपपन्नमभिलापसंसर्गयोग्यप्रतिभासस्य भवेत् प्रमाणत्वमिन्द्रियार्थसन्निकर्षजन्यं स्यादिति इन्द्रियव्यतिरेकित्वं नामवैशिष्ट्यस्य चाक्षुषज्ञाने सत्यपि व सुरभि चन्दनमितिवदुपनीतभानसम्भवात्। यद्वा संज्ञावैशिष्ट्यं प्रत्यक्षज्ञाने न भासते संज्ञायाः स्मरणमात्रम् स्मृतैव साऽर्थव्यावर्त्तिका अभावज्ञाने प्रतियोगिस्मरणवत् जात्यादिकञ्च वस्तुभूतं साधितमेवातः सविकल्पकमपीन्द्रियार्थसन्निकर्षजत्वात् प्रत्यक्षम् प्रमाणम्। ननु निर्विकल्पकं न व्यवहारप्रवर्त्तकं न वा व्यवहारविषय इति कथं प्रमाणमिति चेत् सविकल्पकमेव तर्हि विशिष्टज्ञानम् न च विशेषणज्ञानमन्तरेण तदुत्पद्यते विशिष्टज्ञाने हि विशेषणज्ञानविशेष्येन्द्रियसन्निकर्षतदुभयासंसर्गाग्रहस्य कारणत्वावधारणात्" उपस्कारवृत्तिः।

"सा च सात्त्विकराजसतामसभेदेन त्रिविधा। तत्र सात्त्विकी यथा "प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये भयाभये। बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ! सात्त्विकी"। राजसी यथा "यया धर्ममधर्मञ्च कार्य्यञ्चाकार्य्यमेव च। अयथावत् प्रजानाति बुद्धिः सा पार्थ! राजसी"। तामसी यथा "अधर्मं धर्ममिति या मन्यते तमसावृता। सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ! तामसी" गीता० तस्याः पञ्चगुणा यथा। "इष्टाऽनिष्टविपत्तिश्च व्यवसायः समाधिता। संशयप्रतिपत्तिश्च बुद्धेः पञ्च गुणान् विदुः" महाभारते मोक्षधर्मः "इष्टानिष्टविपत्तिः इष्टानिष्टानां वृत्तिविशेषाणां विपत्तिर्नाशः निद्रारूपा वृत्तिरित्यर्थः। व्यवसायः उद्योगः। समाधिता चित्तस्थैर्य्यं चित्तवृत्तिनिरोध इत्यर्थः संशयः द्वयस्पृक् ज्ञानम्। प्रतिपत्तिः प्रत्यक्षादिप्रमाणवृत्तिः" तट्टीका। तस्याः सप्त गुणा यथा। "शुश्रूषा श्रवणञ्चैव ग्रहणं धारणन्तथा। ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः" हेमच०। तस्या वृत्तिः पञ्चधा यथा। "प्रमाणविपर्य्ययविकल्पनिद्रास्मृतयः" पात०सू० तल्लक्षणं च तत्तच्छब्दे दृश्यम्।

बुद्धिक्षयकरा यथा "शोकः क्रोधश्च लोभश्च कामो मोहः परासुता। ईर्ष्या मानो विचिकित्सा हिंसाऽसूया जुगुप्सता। द्वादशैते बुद्धिनाशहेतवो मानसा मलाः"। कालिकापु० १८अ०। "बुद्धिक्षयकरा एते माषकाचारस्थितिकाः"। बुद्धिवृद्धिकरा यथा "निम्बाटरूषपत्राद्य बुद्धिवृद्धिकरा मताः। बुद्धिक्षयकराणीत्थं त्यजेद्राजा च भोजने। भोजयेदन्वहं बुद्धिवृद्धिहेतुं नृपोत्तमः। कालिकापु० ८६ अ०।

**बुद्धिकामा** स्त्री कुमारानुचरमातृभेदे भा० श० ४७ अ०।

**बुद्धिजीविन्** त्रि० बुद्ध्या जीवति जीव–णिनि। बुद्ध्युपायेन जीविनि। "भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः" मनुः।

**बुद्धिसहाय** पु० ७त०। नीतिसचिवे अमात्यभेदे हारा०।

**बुद्धीन्द्रिय** न० ६त०। "मनः कर्णौ तथा नेत्रे रसना त्वक् च नासिके। बुद्धीन्द्रियमिति प्रोक्तम्" इत्युक्तेषु इन्द्रियेषु उभयोः ज्ञानकर्मेन्द्रिययोरुपकारकत्वात् मनसो ज्ञानमात्रसहकारित्वविवक्षया बाह्यान्तरज्ञानकरणतया च तथात्वम्। "चक्षुः श्रोत्रे स्पर्शनञ्च रसना घ्राणमेव च। बुद्धीन्द्रियाणि जानीयात्" इत्यत्र बाह्यापेक्षया पञ्चत्वमुक्तम्।

**बुद्बुद** न० बुद-क पृषो० द्वित्वम्। जलस्य गोलाकारे विकारभेदे अमरः। "पञ्चरात्रे च कललं बुद्बुदाकारतां व्रजेत्"। सुश्रुतो० उक्ते २गर्भावस्थाभेदे च।

**बुध** ज्ञापने भ्वा०प०सक०अनिट्। बोधति अभौत्सीत् शिष्यं गुरुः। बोद्धा बुद्धः।

**बुध** ज्ञाने भ्वा०उभ०सक०सेट्। बोधति ते। इरित् अबुधत् अबोधीत् अबोधि अबोधिष्ट। ज्वला० वा ण पक्षे अच्। बोधः बुधः।

**बुध** ज्ञाने दि० आ०सक० अनिट्। बुध्यते अबोधि अबोधिष्ट। बुबुधे। उद्+बुध—जागरणे विषयस्फुरणाभिमुखीभावरूपे संस्कारनिष्ठे व्यापारभेदे उद्बुद्धसंस्कारादेव स्मृतिर्भवतीति शास्त्रे स्थितम्।

**बुध** पु॰ बुध-क । १पण्डिते, बृहस्पतिभार्य्यायां तारायां चन्द्रेण जनिते २पुत्रे तस्य रोहिण्या प्रतिपालनात् रौहिणेयत्वम् । ३ग्रहभेदे । तस्योत्पत्तिकथा शिववरेण तस्य ग्रहत्वप्राप्तिकथा च काशीख॰१५अ॰। "बृहस्पतेः स वै भार्य्यामैश्वर्य्यमदमोहितः । पुरोहितस्यापि गुरोर्भ्रातुराङ्गिरसस्य वै । जहार तरसा ताराम्" इत्युपक्रमे । "ददावाङ्गिरसे तारां स्वयमेव पितामहः । अथान्तर्गर्भमालोक्य तारां प्राह बृहस्पतिः । मदीयायां न ते योनौ गर्भो धार्य्यः कथञ्चन । ईषिकास्तम्बमासाद्य सा गर्भं चोत्ससर्ज ह । जातमात्रः स भगवान् देवानामाक्षिपद्वपुः । ततः संशयमापन्नास्तारामूचुः सुरोत्तमाः । सत्यं ब्रूहि सुतः कस्य सोमस्याथ बृहस्पतेः । पृच्छ्यमाना यदा देवैर्नाह ताराऽतित्रपा । तदा तां शप्तुमारब्धः कुमारः सोऽतितेजसा । तन्निवार्य्य तदा ब्रह्मा तारां पप्रच्छ संशयम् । प्रोवाच प्राञ्जलिः सा तं सोमस्येति पितामहम् । तदा स मूर्द्ध्न्युपाघ्राय तारागर्भं प्रजापतिः । बुध इत्यकरोन्नाम तस्य बालस्य धीमतः । ततः स सर्वदेवेभ्यस्तेजोरूपबलाधिकः । बुधः सोमं समापृच्छ्य तपसे कृतनिश्चयः । जगाम काशीं निर्वाणराशिं विश्वेशपालिताम् । तत्र लिङ्गं प्रतिष्ठाप्य स्वनाम्ना तु बुधेश्वरम् । तपश्चचार चात्युग्रमयं संधीलयन् हृदि" । इति तत्रप उक्तं तत्तपसा च तुष्टेन शिवेनोक्तं यथा "रौहिणेय ! महाभाग ! सौम्य ! सौम्यवचोनिधे ! । नक्षत्रलोकादुपरि तव लोको भविष्यति । मध्ये सर्वग्रहाणाञ्च सपर्य्यां समप्स्यसे पराम्" । बुधग्रहस्य कक्षाभगणादिकं खगोलशब्दे दृश्यम् ।

**बुधचक्र** न॰ बुधस्य राश्यन्तरसञ्चारकाले स्वनक्षत्रस्थानाद्दिक्स्थानस्थितिभेदेन शुभाशुभसूचके चक्रभेदे "भौमोक्तमेकमथ मूर्ध्नि चतुष्क रोगः षट् पाणिभेऽसुखदं सुखदं त्रितेऽक्ष । दुःखं पदाक्षि सुयशो हृदि सप्त राज्यं नाभीन्दुभे हिम गले निधनं बुधस्य" इति समयामृतम् ।

**बुधचार** पु॰ ६त॰। वृ॰सं॰७अ॰ उक्ते बुधग्रहस्य शुभाशुभसूचके सञ्चारे यथा

"नोत्पातपरित्यक्तः कदाचिदपि चन्द्रजो व्रजत्युदयम् । जलदहनपवनभयकृद्धान्यार्घक्षयविवृद्ध्यै वा । विचरन् श्रवणधनिष्ठाप्राजापत्येन्दुवैश्वदेवानि२।मृद्नन् हिमकरतनयः करोत्यवृष्टिं सरोगभयाम् । रौद्रादीनि मघान्तान्युपाश्रिते चन्द्रजे प्रजापीडा । शस्त्रनिपातक्षुद्भयरोगानावृष्टिसन्तापैः । हस्तादीनि विचरन् षड्भान्युपपीडयन् गवामशुभः । स्नेहरसार्घविवृद्धिं करोति चोर्वीं प्रभूतान्नाम् । आर्यमणं१२ हौतभुजं१ भद्रपदामुत्तरां यमेशं२ च । चन्द्रस्य सुतो निघ्नन् प्राणभृतां धातुसंक्षयकृत् । आश्विनवारुण२४मूलान्युपमृद्नन् रेवतीं च चन्द्रसुतः । पण्यभिषग्नौजीविकसलिलजतुरगोपघातकरः । पूर्वात्रय११।२०।२६मेतयादेकमपीन्दोः सुतोऽभिमृद्नीयात् क्षुच्छस्त्रतस्करामयभयप्रदायी चरन् जगतः"। इतःपरं तस्य गतिविशेषास्तत्राभिहितास्तत्फलञ्च तत्र दर्शितं तच्च गतिशब्दे २५१५पृ॰ दर्शितम् । अध्यायशेषे च ।

"पौषाषाढ़श्रावणवैशाखेष्विन्दुजः समाघेषु । दृष्टो भयाय जगतः शुभफलकृत् प्रोषितस्तेषु । कार्त्तिकेऽश्वयुजि वा यदि मासे दृश्यते तनुभवः शिशिरांशोः । शस्त्रचौरहुतभुग्गदतोयक्षुद्भयानि च तदा विदधाति । रुद्धानि सौम्येऽस्तमिते पुराणि यान्युद्गते यान्युदयान्ति मोक्षम् । अन्ये तु पश्चादुदिते वदन्ति लाभः पुराणां भवतीति तज्ज्ञाः । हेमकान्तिरथ वा शुकवर्णः सस्यकेन मणिना सदृशो वा । स्निग्धमूर्तिरलघुश्च हिताय व्यत्यये न शुभकृच्छशिपुत्रः" । [सुतादयोऽप्यत्र ।

**बुधतनय** पु॰ ६त॰ । पुरूरवसि इलाशब्दे दृश्यम् बुध-

**बुधतात** पु॰ ६त॰ । चन्द्रे शब्दच॰ ।

**बुधरत्न** न॰ बुधप्रियं रत्नं शाक॰त॰ । मरकतमणौ गारुत्मते राजनि॰। ग्रहयज्ञे २७६२ पृ॰ दृश्यम् ।

**बुधवार** पु॰६त॰ बुधपतिकदिवसे दिनपशब्दे ३५८२ पृ॰दृश्यम्

**बुधसानु** पु॰बुध—सानुक् सुक् च । यज्ञपुरुषे पर्णे च संक्षिप्तसा॰

**बुधा** स्त्री बोधयति ज्ञापयति रोगित्वं सेवनात् बुध—ज्ञापने क । जटामांस्याम् शब्दच॰ ।

**बुधादित्य** पु॰ बुधसहित आदित्यः । जन्मकाले एकस्मिन् राशौ बुधादित्ययोर्योगे स च तयोरन्यतरस्थ एव भवतीति सम्प्रदायः ।

**बुधान** पु॰ बुध—शानच् किच्च । १आचार्य्ये गुरौ २विज्ञे मेदि॰ ३कवौ जटा॰। ४ब्रह्मवादिनि ५प्रियवादिनि त्रि॰ उणादिकोषः ।

**बुधाष्टमी** स्त्री॰ बुधवारयुताष्टमी शाक॰त॰ । चैत्रपौषहरिशयनादौतरत्र शुद्धकाले बुधवारयुतायां १शुक्लपक्षाष्टम्यां, २तत्कर्त्तव्ये व्रते च । तस्याः पूज्यत्वहेतुः हेमा॰ व्र॰ भविष्योत्तरे उक्तो यथा

"पुरा कृतयुगस्यादौ इलो राजा बभूव ह । बहुभृत्य-

युतो मित्रमन्त्रिभिः परिवारितः। जगाम हिमवत्पार्श्वे महादेवाभिशापतः। योऽसौ प्रविशते भूमौ स स्त्री भवति निश्चितम्। स राजा मृगयाङ्गेन प्रविष्टस्तु महावने। एकाकी तुरगोपेतः सहसा स्त्रीत्वं जगाम ह। सा बभ्राम वने शून्ये पीनोन्नतपयोधरा। का त्वं कस्य सुता प्राप्ता चतुरोधोऽसि कथय। तां दृष्ट्वा बुधस्तन्वीं रूपौदार्यगुणान्विताम्। अष्टम्यां बुधवारेण तस्यां दृष्टो बुधो ग्रहः। दृष्ट्वा स्त्रीरूपमत्यन्तमानीयत प्रतोषिताम्। पुत्रस्तस्यादयाभास योऽसौ ख्यातः पुरूरवाः। चन्द्रवंशकरो राजा ख्यातः सर्वमहीक्षिताम्। ततः प्रभृति पूज्येयमष्टमी बुधसंयुता"। सा च सम्पूर्णा ग्राह्या न भिन्ना यथोक्तं तत्रैव "बुधाष्टमी शुभा पूर्णा यथोक्तफलदायिनी" तत्र व्रतचरणं कार्यं तत्र भक्ष्यभेदादिकं च तत्रैवोक्तं यथा

"अष्टाष्टविधानेन विचित्राद्यैः पृथक् पृथक्। प्रथमा मोदकैर्भक्ष्यैः द्वितीया खाणकैस्तथा। तृतीया घृतपूरैश्च चतुर्थी वटकैरपि। पञ्चमी पुष्पकाकारैः षष्ठी सोहालकैः शुभैः। अशोकवर्तिभिः पुष्पैः सप्तमीं पारियात्रयेत्। अष्टमी फाणितैः पूर्णैः कर्त्तव्येष्टैर्युधिष्ठिर!।" तत्र विहितनिषेधकालादि राजमार्त्तण्डे उक्तं यथा "पतङ्गे मकरे जाते देवे जाग्रति माधवे। बुधाष्टमीं प्रकुर्वीत वर्जयित्वा तु चैत्रकम्। प्रसुप्ते च जगन्नाथे सन्ध्याकाले बधो तथा। बुधाष्टमीं न कुर्वीत हन्ति पुण्यं पुराकृतमिति"। एतद्व्रतचारम्भणमपि चैत्रादौ न कर्त्तव्यं तथाच स्मृतिः "चैत्रे धनुषि देवेशे सुप्तेऽप्यदिने तथा। बुधाष्टमीं न कुर्वीत पूर्वविहितामपि क्वचित्" अग्रदिने यथायथविशुद्धदिने।

बुधित त्रि० भ्वा०बुध–क्त इट्। ज्ञाते अमरः।

बुधिल त्रि० बुध–किलच्। विदुषि उणादि०।

बुध्न पु० बन्ध–नक् बुधादेशः। १मूले अमरः २शिवे भरतः ३अन्तरीक्षे ऋ० ४।१९।४ भाष्यम्। "बृहद्बुध्नोदरान्तिः" वेदान्तप०। "अशीर्वितमम अनु बुध्नः" भा०भा० धृता स्तुतिः। निरुक्ते तु यद्वा बध्यन्ते धृता आप इति अन्तरिक्षं बुध्नम्" तत्र निरुक्तिरुक्ता।

बुध्न्य पु० बुध्ने मूले भवः यत्। १गार्हपत्ये अग्नौ "अहिरसि बुध्न्यः" तैत्तिरीयब्रा०१।४।११ "अहिरसि हन्ता रक्षःप्रभृतीनां बुध्न्यः बुध्ने मूले आदौ आधानकाले प्रथमं जातोऽसि" २अहिर्बुध्न्ये १रुद्रभेदे च। "बुध्ने निवसति बध्नः योऽहिः सः अस्ति बुध्न्यः बुध्नमन्तरीक्षं अन्तरिक्षे च तन्निवासात्" निरु०। "अजोऽहिर्बुध्न्योऽहिरिति" तद्धृता स्तुतिः।

बुन्द् निशामने भ्वा० उभ० सक० सेट्। बुन्दति ते इरित् अबुदत् अबुन्दीत्। अबुन्दिष्ट। उदित् क्त्वा वेट्। निशामनमालोचनम् प्रणिधानमिति यावत्।

बुन्ध निशामने भ्वा० उभ० सक० सेट्। बुन्धति ते इरित् अबुधत्–अबुन्धीत् अबुन्धिष्ट। निशामनमालोचनम्। उदित् क्त्वा वेट्।

बुन्ध बन्धे चु०उभ०सक० सेट्। बुन्धयति ते अबुबुन्धत् त।

बुबुर न० उदके निघण्टौ बर्बुरमित्यत्र पाठान्तरम्।

बुभुक्षा स्त्री० भुज–सन्–भावे अ। भोजनेच्छायां क्षुधायाम्। सा च प्राणधर्मः यथोक्तं शा०ति० "बुभुक्षा च पिपासा च प्राणस्य" ऊर्मिषट्के इत्युक्तम्। अजीर्णे च सा न भवति अथ भवति चेत् अनिष्टदा यथोक्तं सुश्रुते "उद्गारशुद्धावपि भक्तकाङ्क्षा न जायते हृद्गुरुता च यस्य" "अन्नं यदा दोषविदग्धमाम वीर्यं न तेजः पवनाद्बलोति। भवत्यजीर्णेऽपि तदा बुभुक्षा सा मन्दबुद्धिं विषवन्निहन्ति"। स्वार्थे०योजार्थे अच्। बोभुक्ष तच्छीले त्रि०

बुभुक्षित त्रि० बुभुक्षा+तार० इतच्। क्षुधायुक्ते "बुभुक्षितः किं द्विकरेण भुङ्क्ते" इत्युद्भटः।

बुल मज्जने चु० उभ० सक० सेट्। बोलयति ते अबूबुलत् बोलयति प्लवः पयसि मज्जतीत्यर्थः।

बुलि स्त्री बदा० बुड–इन् डिच् डस्य लः। भये हेमच०।

बुल्ल त्रि० बुक्–ल बहुला० नि०। तिरश्चीने शत०ब्रा० ११।५।४।१३।

बुष(स) न० बुष्यते उत्सृज्यते बुष–उत्सर्गे क पृषो० वा सत्वम्। (भासा) १तुच्छधान्ये फलरहितधान्ये अमरः। अयं वोपधः २उदके वेदनिघण्टुः ततः इत्यर्थाः चतुरर्थ्यां च। बुषस तत्सन्निकृष्टो त्रि०। पृषो० दीर्घः। बूषभस। [यथोक्तेत् बुबोध

बुस उत्सर्गे दि०पर०सक०सेट्। बुस्यति। इरित् अबुसत्

बुस्त आदरे अनादरे च चु०उभ०सक०सेट्। बुस्तयति ते अबुबुस्तत् त।

बुस्त न० बुस्यते नाद्रियते आद्रियते वा बुस्त–घञ्। १पनसादिफलस्य त्याज्ये अंशे (भुषि) २मांसपिण्डभेदे च अमरभरतौ।

बूक न० बुक+पृषो० दीर्घः। बुक्कशब्दार्थे रमानाथः।

बृबदुक्थ न० पदे निघण्टुः।

बृषी स्त्री बृष्यन्तेऽस्यां सीदन्ति पृषो० ब्रुषो वृ सद–ड गौरा० ङीषच । व्रतिनामासने अमरः ।

बृ(वृ)ह वृद्धौ भ्वादि० पर० सक० सेट् । ब(व)र्हति अब(व)र्हीत् । इरित् इत्येके तेन अबृ(वृ)हदित्यपि । कवि० कल्पद्रुमे बृहधातुनामस्य अन्त्यस्यादित्वमुक्तम्" मेदि० "प्रोच्छित' निहते सिक्ते बृहती वसनान्तरे । छन्दोभित्‌क्षुद्रवार्त्ताकीवारिधानीषु वाचि च । कण्टकारीमहत्योश्च" "ब्रह्मतत्त्वतपोवेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रे बन्धनं वधबन्धयोः" । इहप्रकृति० बृहती ब्रह्मशब्दयोः शोधनादितयोक्तत्वादस्य उभया० दित्वम् ।

बृ(वृ)हक पु० बृ(वृ)ह–क्वुन् । देवगन्धर्वभेदे भा० आ० १२२अ० ।

बृ(वृ)हच्चञ्चु पु० ६ब० । महाचञ्चुशाके राजनि० ।

बृ(वृ)हच्चित्र पु० ७ब० । मतपूरे बीजपूरे शब्दच० ।

बृ(वृ)हच्छल्क पु० ६ब० । चिङ्गटमत्स्ये जटा० ।

बृ(वृ)हच्छ्रवस् त्रि० ६ब० । महायशस्के भाग० १।४।१ ।

बृ(वृ)हज्जातक न० कर्म० । वराहमिहिरकृते जातकग्रन्थभेदे ।

बृ(वृ)हज्जाबाल पु० कर्म० । उपनिषद्भेदे उपनिषच्छब्दे दृश्यम् ।

बृ(वृ)हज्जीवन्ती स्त्री कर्म० । महाजीवन्त्याम् राजनि० ।

बृ(वृ)हड्ढक्का स्त्री कर्म० । १भेरीवाद्ये जटा० ।

बृ(वृ)हत् त्रि० बृह–अति शतवत् कार्य्यम् । १महति स्त्रियां ङीप् । सा च २उत्तरीयभेदे नवाक्षरपादके ३छन्दोभेदे ४क्षुद्रवार्त्ताक्यां ५वारिधान्यां ६वाचि ७कण्टकार्य्याञ्च स्त्री मेदि० । ८विष्णौ पु० । "अणुर्बृ(वृ)हन् कृशः स्थूलः" विष्णुस० । आच्छादनपरत्वे कन् । बृहतिका उत्तरीयवस्त्रे अमरः । स्वार्थे क । बृहतीशब्दे च स्त्री ।

बृ(वृ)हतीपति पु० बृ(वृ)हत्या वाचः पतिः । पारस्करा० "तद्बृहतोः करपत्योश्चोरदेवयोः" वार्त्ति० देवतायामेव सुट् तलोपश्च नान्यत्र वाक्पतौ हेमच० ।

बृ(वृ)हत्क त्रि० बृहत्प्रकारः कन् । बृहत्प्रकारे

बृ(वृ)हत्कथा स्त्री वररुचिप्रणीते कथाभेदे ।

बृ(वृ)हत्कन्द पु० ६ब० । १लशुने रत्नमाला । २विष्णुकन्दे राजनि० । [पु० हरिवं० ३१अ०

बृ(वृ)हत्कर्म्मन् त्रि० ६त० । १महाकर्मयुते २बृहद्रथपुत्रभेदे

बृ(वृ)हत्काय पु० आजमीढवंश्ये नृपभेदे भाग० २१।१७ । ६ब० । २महादेहे त्रि० । [शाकभेदे त्रिका० ।

बृ(वृ)हत्कालशाक पु० नित्यक० । महति (कालकासुन्दिया)

बृ(वृ)हत्काश पु० नित्यक० । वङ्गदेशे तृणभेदे हारा० ।

बृ(वृ)हत्कीर्त्ति त्रि० ६ब० । १महाकीर्त्तियुक्ते २आङ्गिरसाग्निपुत्रभेदे पु० भा० व० २१७अ० । ३असुरभेदे पु० हरिवं० ४२अ०

बृ(वृ)हत्कुक्षि त्रि० ६ब० । तुन्दिले अमरः । [आ० ६अ० ।

बृ(वृ)हत्केतु त्रि० ६ब० । १महाध्वजयुते । २राजभेदे पु० भा०

बृ(वृ)हत्क्षत्र पु० आजमीढवंश्ये नृपभेदे भाग० ८।२६ ।

बृ(वृ)हत्ताल पु० नित्यक० । हिन्तालवृक्षे राजनि० ।

बृ(वृ)हत्तिक्ता स्त्री बृहन् तिक्तो रसोऽस्याः । पाठायाम् राजनि० ।

बृ(वृ)हत्तृण पु० ६ब० । वंशे शब्दच० ।

बृ(वृ)हत्त्वच् पु० ६ब० । (छातिम) वृक्षभेदे रत्नमा० ।

बृ(वृ)हत्पत्र त्रि० ६ब० । १महापत्रयुक्ते वृक्षे २हस्तिकन्दे राजनि० । ३त्रिपर्णिकायां स्त्री राजनि० ।

बृ(वृ)हत्पाटलि पु० नित्यक० । धुस्तूरे त्रिका० । [शब्दच०

बृ(वृ)हत्पाद त्रि० ६ब० । १महाचरणयुक्ते वटवृक्षे २वटवृक्षे पु०

बृ(वृ)हत्पारेवत न० कर्म० । महापारेवते राजनि० ।

बृ(वृ)हत्पालिन् पु० बृ(वृ)हन्तं पालयति पालि–णिनि । वनजीरके राजनि० ।

बृ(वृ)हत्पीलु पु० नित्यकर्म० । महापीलौ राजनि० ।

बृ(वृ)हत्पुष्पी स्त्री ६ब० ङीप् । १घण्टारववृक्षे जटा० । २महापुष्पयुतवृक्षमात्रे त्रि० स्त्रियां टाप् ।

बृ(वृ)हत्फल त्रि० ६ब० । १महाफलयुते । २कटुतुम्ब्यां ३माहेन्द्रवारुण्यां ४कुष्माण्ड्यां ५महाजम्बूवृक्षे च स्त्री टाप् राजनि० । [भेदे ।

बृ(वृ)हत्संहिता स्त्री वराहमिहिरप्रणीते ज्योतिषग्रन्थ-

बृ(वृ)हत्सामन् न० नित्यक० । सामभेदे तच्च साम "त्वामिद्धि हवामहे" इत्यस्यामृचि गेयं तच्च तृचादानादिपञ्चतावाक्यभिः १८१।८२ पृ० दर्शितम् । "वामदेव्यं बृ(वृ)हत्साम ज्येष्ठसाम रथन्तरम्" सामगद्वारपालपाठतया विधानपारि० उक्तम् । "बृ(वृ)हत्साम तथा साम्नाम्" गीता० । तच्च साम ब्रह्मप्रतिपादकमिति तद्भाष्यकारेणोक्तं समर्थितञ्चानन्दगिरिणा "इन्द्रः सर्वेश्वरत्वेनानेन स्तूयते इति तस्य श्रैष्ठ्यमिति" ।

बृ(वृ)हत्सेन त्रि० ६ब० । १महासेनायुक्ते । २ताक्ष्र्यवंश्ये भाविनि नृपभेदे पु० भाग० ८।२२।३। ३मागधदेशीये नृपभेदे भा० आ० ६७अ० । कर्म० । ४महत्यां सेनायां स्त्री ।

बृ(वृ)हद्गिरि पु० ६ब० । १नानाविधागिरियुते ततः गोत्रा०

सुते सर्वा० वध । बार्हद्रथ्य तदपत्ये तस्य छात्राः अस्या० अण् यलोपः । बार्हद्रथ तस्य छात्रेषु ब० व० सि०कौ० । [स्त्रियां स्वाङ्गत्वात् ङीष् ।

बृ(वृ)हदङ्ग पुंस्त्री ६ब०। १गजे शब्दच० २महाकाये त्रि०।

बृ(वृ)हदम्बालिका स्त्री कुमारानुचरमातृभेदे भा०शा०४७अ०

बृ(वृ)हदश्व पु० बृहन् अश्वो रथोऽस्य। (कामराङा) कामरङ्गे शब्दच०। [नृपभेदे हरिवं०११अ०।

बृ(वृ)हदश्व पु० १ऋषिभेदे भा०व०५२अ०। २चावस्तस्य पुत्रे

बृहदारण्यक न०। उपनिषद्भेदे।

बृहदिषु पु० आजमीढपुत्रे १नृपभेदे हरिवं०२०अ०। हर्यश्ववंश्ये २नृपभेदे च ६२ अ०।

बृ(वृ)हदुक्थ न० कर्म०। १महति उक्थे २अग्निवंश्ये तपसः पुत्रे २अग्निभेदे पु० भा० व० २१९ अ०। "बृ(वृ)हदुक्थोह वै वामदेव्यः" शत० ब्रा० १।२।२।१४। तदुक्थेन साध्ये ३यज्ञे अश्वमेधे पु०। [वेददीपे दृश्यम्।

बृ(वृ)हदुक्ष पु० १जगत्सृष्टिकारके २प्रजापतौ च यजु०८।८।

बृ(वृ)हदुत्तरतापनी स्त्री कर्म०। उपनिषद्भेदे।

बृ(वृ)हदेला स्त्री कर्म०। स्थूलैलायां राजनि०।

बृ(वृ)हद्गर्भ पु० शिविनृपपुत्रे यो हि ब्राह्मणभोजनार्थं प्रशाप्य संज्ञप्तः पुनरपि जीवितः तत्कथा भा० व० ११७ अ०।

बृ(वृ)हद्गु पु० राजभेदे भा० आ० १अ०।

बृ(वृ)हद्(गु)गृह पु० कारूषदेशे हेमच० स च देशः विन्ध्यपर्वतस्य पश्चात्प्रभागवर्त्तिरेवासमीपे स्थितः (बहदगुह) इति लिखाक्रमेण। [शब्दच०।

बृ(वृ)हद्गोल न० नित्यक०। (तरमुज) फलप्रधानवृक्षे

बृ(वृ)हद्धर्म पु० कक्षेयुवंश्ये नृपभेदे हरिवं० ३२अ०।

बृ(वृ)हद्दल पु० ६ब०। १हिन्ताले २पट्टिकालोध्रे च राजनि०

बृ(वृ)हद्द्युम्न पु० नृपभेदे भा०व०१३८अ०। [महावायुते त्रि०

बृ(वृ)हद्धनुस् पु० आजमीढवंश्ये नृपभेदे हरिवं० २०अ०।

बृ(वृ)हद्धर्मन् पु० आजमीढवंश्ये नृपभेदे। हरिवं०२०अ०।

बृ(वृ)हद्धर्मपुराण न० उपपुराणभेदे।

बृ(वृ)हद्धन त्रि० बृहद्धनमस्य। १महाधने २इक्ष्वाकुवंश्ये नृपभेदे पु० हरिवं०१५अ०।

बृ(वृ)हद्बल न० कर्म०। महाबालुके त्रिका०।

बृ(वृ)हद्ब्रह्मन् पु० आङ्गिरसे ऋषिभेदे। "ब्रह्मणो यस्तृतीयस्तु पुत्रः कुरुकुलोद्वह!। तस्याभवत् सुता भार्या प्रजास्तासां च मे शृणु। बृहत्कीर्त्तिर्बृहज्ज्योतिर्बृहद्ब्रह्मा बृहन्मनाः। बृहन्मन्त्रो बृहद्भासस्तथा राजन्! बृहस्पतिः" भा०व० २१७ अ०। बृहज्ज्योतिरादयस्तत्पुत्रे

बृ(वृ)हद्भट्टारिका स्त्री० कर्म०। दुर्गायां शब्दमाला।

बृह(वृ)द्भय पु० सावर्णिमनोः पुत्रभेदे मार्कण्डेयपु०९४अ०।

बृ(वृ)हद्भानु पु० ६ब०। १अग्नौ २चित्रकवृक्षे च अमरः। ३आङ्गिरसे वह्निभेदे भा०व० २२०। इन्द्रसावर्णिमन्वन्तरे ४हरेरवतारभेदे भाग० ८।१३ अ

बृ(वृ)हद्रण पु० इक्ष्वाकुवंश्ये भाविनि नृपभेदे भाग०९।१२।६।

बृ(वृ)हद्रथ पु० मौर्य्ये १नृपभेदे भाग०१२।१। २आङ्गिरसे वह्नेः पुत्रभेदे भा०२१९ ३मागधराजभेदे जरासन्धताते हरिव० ३अ०। ४चेदिराजवसोः पुत्रभेदे हरिवं० ११७अ०।

बृ(वृ)हद्रथन्तर न० सामभेदे १आङ्गिरसवंश्ये वह्निभेदे भा०व०२१९अ०।

बृ(वृ)हद्राज पु० इक्ष्वाकुवंश्ये भाविनि नृपभेदे भाग० ९।१२

बृ(वृ)हद्राविन् पु० बृहत् यथा तथा रौति रु-णिनि। क्षुद्रोलूके राजनि०।

बृ(वृ)हद्रूप पु० बकरूपभेदे हरिवं० २०४ अ०।

बृ(वृ)हद्वत् पु० बृहत् बृहत्साम तदस्यास्ति स्तोत्रतया मतुप् मस्य वः। बृहत्सामस्तोत्रस्तुत्ये इन्द्रे मनु०७।२२ २तत्साध्ये यज्ञे च ३नदीभेदे स्त्री ङीप् भा०भी०९अ०।

बृ(वृ)हद्वल्क पु० ६ब०। पट्टिकालोध्रे राजनि०।

बृ(वृ)हद्वात पु०७ब०। व्यवरोहरे धान्यभेदे (देधान) रत्नमा०

बृ(वृ)हद्वारुणी स्त्री कर्म०। महेन्द्रवारुण्याम् राजनि०।

बृ(वृ)हद्वीज ६ब०। महाद्रिसुते आम्रातकवृक्षे शब्दच०।

बृ(वृ)हन्नल पु० बृहन्नलेति आख्यातेन अर्जुनस्य ख्य। अर्जुने हेमच० "आदाय प्रययौ वीरः स बृहन्नलसारथिः" भा० वि०३७अ०। "अर्जुन उवाच। प्रतिज्ञा षण्ढकोऽस्मीति करिष्यामि महीपते!। ज्याघातौ हि महान्तौ मे संवर्त्तुं नृप! दुष्करौ। वलयैश्छादयिष्यामि बाहू किणकृताविमौ। कर्णयोः प्रतिमुच्याहं कुण्डले ज्वलनप्रभे। पिनद्धकम्बुः पाणिभ्यां तृतीयां प्रकृतिं गतः। वेणीकृतशिरा राजन्! नाम्ना चैव बृहन्नला" इति तस्य च अज्ञातवासकाले तथाख्यत्वम् भा०वि० २अ० उक्तम्।

बृहन्नारदीय न० उपपुराणभेदे।

बृहन्नारायणोपनिषद् स्त्री०उपनिषद्भेदे। [शब्दे दृश्यम्।

बृहन्नौका स्त्री० चतुरङ्गशब्दोक्ते क्रीडनभेदे। चतुरङ्ग-

बृहस्पति पु० बृहत्या वाचः पतिः पारस्करा०सुडादिः बृहतीपतिशब्दे दृश्यम्। आङ्गिरसे १मुनिभेदे बृहद्ब्रह्मन्शब्दे दृश्यम्। २देवपुरोहिते ३ग्रहभेदे च। तस्य गतिभग-

चादिकं खगोलशब्दे दर्शितम् । तच्चारश्च गुरुवर्षशब्दे २६२१ पृ० तस्य महत्वप्राप्तिकथा गुरुशब्दे दृश्या ।

**बृहस्पतिचक्र** न० बृहस्पतेः सञ्चारकाले नराकारचक्रस्य मूर्द्धादिषु स्वनक्षत्रस्य पातेन शुभाशुभसूचके चक्रभेदे तच्च ज्यो०त० उक्तं यथा "शीर्षे चत्वारि राज्यं चलधिरपि करे दक्षिणे चापि शोक्यं चैकं कण्ठे विभूतिं मदनशरमितं वक्षसि प्रीतिरिष्टिम् । पादस्थाः षट् च पीड़ां पुनरपि जलधिर्वामहस्ते च मृत्युं नेत्रे श्रीषि प्रदद्युः सुखमथ निजभे वाक्पतेः संक्रमणात्" ।

**बृहस्पतिपुरोहित** पु०६त० १इन्द्रे २देवमात्रे च यजु०२।११

**बृहस्पतिवार** पु० ६त० । जीवाभिपत्ययुक्ते दिने तदानयनादिकं दिनपशब्दे दृश्यम् ।

**बृहस्पतिसव** पु० यज्ञभेदे "वाजपेयेनेष्ट्वा राजा राजसूयेन यजेत ब्राह्मणो बृहस्पतिसवेन" आश्व० श्रौ० ९।९ ।

**बृ(वृ)हस्पतिस्तोम** पु० यज्ञभेदे ताण्ड्य० २५।१।१ ।

**बृंहणं** कती च क्र्या०म्वा०पर०सक०सेट् । बृ(वृ)णाति अबारीत् बबार बरि(री)ता बिबरी(रि)षति बुबूर्षति बूर्णः ।

**ब्रेकमाट** पु०बै दलपभ्रंशः द्वित्वबोधकः एकं गुणं द्रव्यम् अधिकाय दत्त्वा द्विगुणं मह्यं देयमिति पणनेन मादयति व्याहरति माटि-अच् बे एकशब्दयोः पृषो० बेभावः । कुर्यादिनि स्मृ० दा६६।११० भाष्ये दृश्यम् ।

**बेकुरा** स्त्री वाचि निघण्टुः ।

**बे(वे)ह** प्रयत्ने भ्वा० आत्म० सक० सेट् । बे(वे)हते अबे(वे)हिष्ट बे(वे)हे । ऋदित् चङि न ह्रस्वः ।

**बोकड़ी** स्त्री वृत्ताम्ब्रां राजनि० ।

**बोध** पु० बुध-भावे घञ् । १ज्ञाने त्रिका० । २जागरे च ३देवभेदे भा०भी०६अ० । [चके वैतालिके शब्दमा० ।

**बोधक** त्रि० बुध-णिच्-ण्वुल् । १ज्ञानजनके बोधकरे शब्द०

**बोधकर** त्रि० बोधं ज्ञानं जागरणं वा करोति कृ-ट । १ज्ञानकारके निशान्ते जागरणकारके२वैतालिके च अमरः

**बोधन** न० बुध-णिच्-ल्युट् । १विज्ञापने कालवशात् गन्धादेर्व्यक्तायां २तद्दीपने ३जागरणे च । "शयनं बोधनं हरेः" इति पुराणम् । "शाखाक्षे बोधनं कुर्यात्" इति स्मृतिः । देवीबोधनकालादिः ति०त०प्रदर्शितो यथा विष्णुपुराणम् "कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभे दिवा । नवम्यां बोधयेद्देवीं महाविभवविस्तरैः" "इषे मासि सिते पक्षे नवम्यामार्द्रयोगतः । श्रीवृक्षे बोधयामि त्वां यावत् पूजां करोम्यहम् । ऐं रावणस्य

बधार्थाय रामस्यानुग्रहाय च । अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा" इति मन्त्रलिङ्गञ्च । अकाल इति तु रात्रित्वेन दक्षिणायनस्य तथा च श्रुतिः "तपस्तपस्यौ शिशिरावृतुः । मधुश्च माधवश्च वासन्तिकावृतुः । शुक्रश्च शुचिश्च ग्रैष्मावृतुः । अथैतदुत्तरायणं देवानां दिनं, नभाश्च नभस्यश्च वार्षिकावृतुः इषश्च ऊर्जश्च शारदावृतुः । सहाश्च सहस्यश्च हैमन्तिकावृतुः । अथैतद्दक्षिणायनं देवानां रात्रिः" इति तत्रैव "रात्रावेव महामाया ब्रह्मणा बोधिता पुरा । तथैव च नराः कुर्युः प्रतिवर्षमृतुं नृप !" इति वचनाच्च तद्विषयत्वम् । अतएव विष्णुपुराणे दिवेत्युक्तम् । एवञ्च कालिकापुराणेऽपि बोधने रात्राविति पदं देवतारात्रिपरम् । ततश्च पूर्वाह्णे नवम्यामार्द्रानक्षत्रयुक्तायां बोधनं पूर्वाह्णेतरकाले आर्द्रालाभे नवम्यामार्द्रभे दिवेत्यत्र दिवापदात् तत्रापि बोधनम्, अन्यथा दिवापदं व्यर्थं स्यादिति । ज्योतिषार्णवे व्यक्तमुक्तं वराहेण "कन्यादित्ये नवम्यन्तं यत्र संप्राप्यते शिवः । तत्र बोधः प्रकर्त्तव्यो देव्या राज्ञा शुभप्रदः" । शिव आर्द्रा । एवञ्चोभय दिने पूर्वाह्णे नवमीलाभे परत्रार्द्रालाभे परत्र बोधनं न युज्यात् पूर्वत्र, युग्मशास्त्रपूर्वाह्णस्य बाधकवचनानुरोधात् दिवानक्षत्रालाभे तु पूर्वाह्ण एव नवम्याम् उभयत्र पूर्वाह्णलाभे तु पूर्वदिन एव युज्यात् । अत्र केवलनवम्यां बोधनविधेर्नक्षत्रस्यापि गुणफलत्वात् । "माघे वा फाल्गुने वापि भवेद्द्वै माघसप्तमी । माकरीति च यत् प्रोक्तं तत् प्रायो दृष्टिदर्शनात्" इति गौरागमात् माकरीतिवत् आर्द्रायोगतः इत्यस्य प्रायिकत्वेनाभिधानं प्रतीयते । ततश्चार्द्रारहितबोधने नक्षत्रान्तरानुपदेशात् तद्युक्तमन्त्रः प्रणवयुक्तत्वेन प्रयुज्यते । "यन्न्यूनं यातिरिक्तञ्च यच्छिद्रं यदयज्ञियम् । यदमेध्यमशुद्धञ्च यातयामञ्च यद् भवेत् । तदोङ्कारप्रयुक्तेन सर्वञ्चाविकलं भवेत्" इति योगियाज्ञवल्क्यवचनात् । षष्ठी बोधनेऽप्येवं नवम्यां बोधनासामर्थ्ये तु षष्ठ्यां सायं बोधनं यथाह भविष्ये "षष्ठ्यां बिल्वतरौ बोधं सायं सन्ध्यासु कारयेत्" । सन्ध्योक्ता वराहमिहिरेण "अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका यावत्" । षष्ठ्यां बोधने तु प्रागुक्तः "ॐ रावणस्य बधार्थाय" इति "अहमम्बिके षष्ठ्यां सायाह्ने बोधयाम्यहम्" इति च पठेत् । अत्र बोधनामन्त्रणयोः पृथक्त्वं तत्-

प्रकाशकमन्त्रभेदात् अत्र बोधनमन्त्रानुक्तावेव आम-न्त्रणमन्त्रो तु "मेरुमन्दरकैलासहिमवच्छिखरे गिरौ"। इत्यादौ प्रागुक्तदेवीपुराणे नवमीषष्ठ्योर्बोधनामन्त्रणयोः पृथक्त्वाभिधानाच्च। ततश्च षष्ठ्यामुभयकरणेऽपि सप्तमी-प्रवेशपूर्वदिने सायंषष्ठीलाभे एकदैवोभयकरणम्। यदा तु पूर्वदिने सायंषष्ठीलाभः न परदिने सायंषष्ठी-लाभः तदा पूर्वेद्युर्बोधनं परदिने सायमामन्त्रणम्। यदा तूभयदिने सायंषष्ठ्यलाभस्तदा परदिने पूर्वाह्णे षष्ठ्यां बोधनं "बोधयेद् बिल्वशाखायां षष्ठ्यां देवीं फ-लेषु च। सप्तम्यां बिल्वशाखां तामाहृत्य प्रतिपूजयेत्"।

**बोधनी** स्त्री बोध्यतेऽनया अत्र वा बुध–णिच्–करणे आधारे वा ल्युट्। १पिप्पल्यां तया हि मूर्च्छितो बोध्यते। २का-र्त्तिकशुक्लैकादश्यां तत्र हि हरेर्बोधनम्। "शयनीबोधनी-मध्ये या कृष्णैकादशी भवेत्। सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन" इति तिथ्यादित०। "तावद्गर्जन्ति तीर्थानि वाजिमेधादयो मखाः। मथुरायां प्रिया विष्णो-र्यावन्नायाति बोधनी" हरिभक्तिविलासे स्कन्दपु०वचनम्।

**बोधवासर** पु० ६त०। १हरिबोधनदिने कार्त्तिकशुक्लैका-दश्याम् २तत्कर्त्तव्ये व्रते च। "जन्मप्रभृति यत् पुण्यं नरेणोपार्जितं भुवि। वृथा भवति तत् सर्वं न कृत्वा बोधवासरम्" हरिभक्तिविलासधृतस्कान्दपु०।

**बोधान** त्रि० बुध–शानच्। १विज्ञे २गीष्पतौ शब्दर०।

**बोधि** पु० बुध–इन्। १समाधिभेदे २पिप्पलवृक्षे ३बुद्धभेदे मेदि० ४बोधे त्रिका०। ५ज्ञातरि त्रि०। [ऽश्वत्थे पु०

**बोधितरु** पु० कर्म०। अश्वत्थवृक्षे हेमच०। बोधिद्रुमादयो-

**बोधिसत्त्व** न० बोधि बोधयुतं सत्त्वम्। बुद्धभेदे हेमच०।

**बौद्ध** न० बुद्धेन प्रोक्तमण्। १बुद्धशास्त्रभेदे तच्च शास्त्रं प्रथमं बृहस्पतिना प्रयुक्तं तच्च बुद्धावतारे प्रपञ्चितम्। यथोक्तं मत्स्यपु० २४ अ०।

"आयुषो नहुषः पुत्रो वृद्धशर्मा तथैव च। रजिर्दम्भो विपाप्मा च वीराः पञ्च महारथाः। रजेः पुत्रशतं जज्ञे राजेयमिति विश्रुतम्" इत्युपक्रमे "रजिपुत्रैस्तदा-च्छिन्नं बलादिन्द्रस्य वैभवम्। यज्ञभागश्च राज्यञ्च तपोबल-गुणान्वितैः। राज्याद् भ्रष्टस्तदा शक्रो रजिपुत्रैर्निपी-डितः। प्राह वाचस्पतिं दीनः पीडितोऽस्मि रजेः सुतैः। न यज्ञभागो राज्यं मे निर्जितस्य बृहस्पते!। राज्य-लाभाय मे यत्नं विधत्स्व धिषणाधिप!। ततो बृहस्पतिः शक्रमकरोद्बलदर्पितम्। ग्रहशान्तिविधानेन पौष्टि-केन च कर्मणा। गत्वाथ मोहयामास रजिपुत्रान् बृह-स्पतिः। जिनधर्मं समास्थाय वेदबाह्यं स वेदवित्। वेदत्रयीपरिभ्रष्टांश्चकार धिषणाधिपः। वेदबाह्यान् परि-ज्ञाय हेतुवादसमन्वितान्। जघान शक्रो वज्रेण सर्वान् धर्मबहिष्कृतान्"। तदधीते वेत्ति वा पुनः अण्। २तच्छ-स्त्राध्यायिनि ३तद्वेत्तरि च त्रि०। बुद्धशब्दे तन्मतं दर्शितम्।

**बौध** पु० बुधस्यापत्यम् शैविकोऽण्। बुधात्मजे पुरूरवसि हेमच०।

**बौधायन** पु० बोधस्य गोत्रापत्यम् आङ्गिरसभिन्नम् इञ्। ततो यूनि इञन्तत्वात् फक्। यूनि बोधगोत्रापत्ये ऋषिभेदे तेन च कल्पसूत्रगृह्यसूत्रादिकं कृतम्।

**बौधि** पु० बोधस्य गोत्रापत्यमाङ्गिरसभिन्नम् इञ्। बोधस्य गो-त्रापत्ये आङ्गिरसभिन्ने आङ्गिरसे तु यञ्। बौध्य इत्येव

**बौध्य** पु० बोधस्य गोत्रापत्यमाङ्गिरसः यञ्। आङ्गिरसे बोध-गोत्रापत्ये तद्गीता च भा० शा० १७८अ० दर्शिता यथा "बौध्य उवाच। उपदेशेन वर्त्तामि नानुशास्मीह कञ्चन। लक्षणं तस्य वक्ष्येऽहं तत्स्वयं परिमृश्यताम्। पि-ङ्गला कुररः सर्पः सारङ्गान्वेषणं वने। इषुकारः कु-मारी च षडेते गुरवो मम"। भीष्म उवाच "आशा-बलवती राजन्नैराश्यं परमं सुखम्। आशां निराशां कृत्वा तु सुखं स्वपिति पिङ्गला१। सामिषं कुररं दृष्ट्वा वध्यमानं निरामिषैः। आमिषस्य परित्यागात् कुररः२ सुखमेधते। गृहारम्भो हि दुःखाय न सुखाय कदा-चन। सर्पः३ परकृतं वेश्म प्रविश्य सुखमेधते। सुखं जीवन्ति मुनयो भैक्ष्यवृत्तिं समाश्रिताः। अद्रोहेणैव भूतानां सारङ्गा४ इव पक्षिणः। इषुकारो५ नरः कश्चि-दिषावासक्तमानसः। समीपेनापि गच्छन्तं राजानं नाव-बुद्धवान्। बहूनां कलहो नित्यं द्वयोः सङ्कथनं ध्रुवम्। एकाकी विचरिष्यामि कुमारीशङ्खको६ यथा"। बोधो देशभेदोऽभिजनोऽस्य शण्डिकादि० ञ्य। पित्रादि-क्रमेण २तद्देशवासिनि त्रि०।

**ब्य(व्य)ध** ताडने दिवा० पर० सक० अनिट्। वि(वि)ध्यति अव्या(व्या)त्सीत् वि(वि)व्या(व्या)ध वध्यादित्वे सति विध्यत्सति। [अनुबन्धत् त।

**ब्रा(बा)ध** उत्सर्गे विभागे च चु०उभ०सक० सेट्। ब्राधयति–ते

**ब्र(व्र)ण** शब्दे भ्वा०पर०अक०सेट्। (ब्र)व्रणति। अब्र(व्र)-णीत्-अब(व)्राणीत्। कविकल्पद्रुमेऽयमन्त्यस्थादिः।

**ब्रध्न** पु० बन्ध–नक् बधादेशः। १सूर्ये २अर्कवृक्षे अमरः। ३शिवे हेमच०। ४दिने ५अश्वे त्रिकाण्ड०। ६मूलरोगभेदे

तस्य गोत्रापत्यम् कुञ्जा० च्फञ्। आम्नायन तद्गोत्रा-
पत्ये पुंस्त्री०। ७भौत्यमनोः पुत्रभेदे मार्कपु० १००अ०।
८रोगभेदे "अभ्यभिष्यन्दिगुर्वन्नसेवनाच्चिचयं गतः।
करोति यत्वयच्छोथं दोषो वङ्क्षणसन्धिषु। ज्वर-
शूलाङ्गसादाढ्यं तं ब्रध्नमिति निर्दिशेत्" माधवनि०

**ब्रध्नश्व** पु० नृपभेदे मा०व० ८८अ०।

**ब्रह्मकन्यका** स्त्री ६त०। १सरस्वत्यां त्रिका० (वामनहाटी) २ब्राह्म्यां राजनि०। [उ०२८अ०। २ईश्वरार्पितकर्मफलेनि०

**ब्रह्मकर्मन्** न० ब्रह्मविहितं कर्म०। १वेदविहिते कर्मणि भा०

**ब(ब्र)ह्मकर्मसमाधि** पु०ब्रह्मणि कर्मणां समाधिः "ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्। ब्रह्मैव तेन गन्तव्यम् ब्रह्मकर्मसमाधिना" गीतोक्ते सर्वकर्मणां कर्त्रादेश्च आत्मनो ब्रह्मरूपेण चिन्तने।

**ब(ब्र)ह्मकुण्ड** न० ब्रह्मनिर्मितं कुण्डम् शा० त०। सरोवरभेदे तदाविर्भवकथा।
"पाण्डुनाथस्योत्तरस्यां ब्रह्मकुण्डाह्वयं सरः। ब्रह्मणा निर्मितं पूर्वं स्नानाय स्वर्गवासिनाम्। आयामेन शतव्यामं विस्तीर्णेन तदर्द्धकम्। सर्वपापहरं पुण्यं देवलोकात् समागतम्" तत्र स्नानमन्त्रः। "कमण्डलु समुद्भूतः ब्रह्मकुण्डाह्वतथव!। हर मे सर्वपापानि पुण्यं स्वर्गञ्च साधय। इत्यनेन तु मन्त्रेण स्नायात् तस्मिन् सरोजले। पाण्डुनाथञ्च संपूज्य विष्णुसायुज्यमाप्नुयात्। ब्रह्मकुण्डजले स्नात्वा पूजयित्वा उमापतिम्। ब्रह्मकूटं समारुह्य मुक्तिमेवाप्नुयान्नरः" कालिकापु०८१ अ०।

**ब(ब्र)ह्मकूट** पु० पर्वतभेदे ब्रह्मकुण्डशब्दे दृश्यम्।

**ब(ब्र)ह्मकूर्च** न० "अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः। पञ्चगव्यं पिबेत् प्रातः ब(ब्र)ह्मकूर्चमिति स्मृतम्" इत्युक्ते १पञ्चगव्यपानरूपे व्रतभेदे। २कुशोदकसहित पञ्चगव्ये च नारसिंहपु० "पञ्चगव्येन देवेशं यः स्नापयति भक्तितः। ब्रह्मकूर्चविधानेन विष्णुलोके महीयते" "ब(ब्र)ह्मकूर्चविधानेन कुशोदकयुक्तेन" देव० प्र०त०रघु० प्रायश्चित्ताङ्ग ब(ब्र)ह्मकूर्चप्रमाणादि तुलादानादिपद्धतौ २२६१पृ० अस्माभिर्दर्शितम्।

**ब(ब्र)ह्मकृत्** त्रि०ब(ब्र)ह्म तपः करोति कृ-क्विप्। १तपःकर्त्तरि २विष्णौ पु० "ब(ब्र)ह्मण्यो ब(ब्र)ह्मकृत् ब्रह्मा" विष्णुस०

**ब(ब्र)ह्मकृत** त्रि० ३त०। ब्रह्मणा कृते। ततः शुभ्रा०अपत्ये ढक्। ब्राह्मकृतेय तदपत्ये पुंस्त्री०। [राजनि०।

**ब(ब्र)ह्मकोशी** पु० ब(ब्र)ह्मणः कोशीव। अजमोदायाम्

**ब(ब्र)ह्मगर्भा** स्त्री ब(ब्र)ह्मेव गर्भोऽस्य। आदित्यभक्तायां राजनि०।

**ब(ब्र)ह्मगार्ग्य** पु० ऋषिभेदे हरिवं० १५८ अ०।

**ब(ब्र)ह्मगिरि** पु० कामाख्यानिलयपूर्वस्यां स्थिते गिरिभेदे "ततस्तु नीलकूटाख्यं कामाख्यानिलयं परम्। तत्पूर्वभागे वसति ब्रह्मा ब्रह्मगिरिः पुनः" कालिकापु०८१अ०

**ब(ब्र)ह्मगीता** स्त्री ६त०। भा० आनु० ३५ अ० दर्शितायां ब्रह्मणा कथितायां अनुशासनरूपगाथायाम्।
"अत्र गाथाः पुरा गीताः कीर्त्तयन्ति पुराविदः। सृष्टा द्विजातीन् धाता हि यथापूर्वं समादधत्। न चान्य दिह कर्त्तव्यं किञ्चिदूर्द्धं यथाविधि। गुप्तो गोपायते ब्रह्म श्रेयो वस्तेन शोभनम्। स्वमेव कुर्वतां कर्म श्रीर्वो ब्राह्मी भविष्यति। प्रमाणं सर्वभूतानां प्रग्रहाश्च भविष्यथ। न शौद्रं कर्म कर्त्तव्यं ब्राह्मणेन विपश्चिता। शौद्रं हि कुर्वतः कर्म धर्मः समुपरुध्यते। श्रीश्च बुद्धिश्च तेजश्च विभूतिश्च प्रतापिनी। स्वाध्यायं चैव माहात्म्यं विपुलं प्रतिपत्स्यथ। हुत्वा चाहवनीयस्थं महाभाग्ये प्रतिष्ठिताः। अग्रभोज्याः प्रसूतानां श्रिया ब्राह्म्याऽनुकल्पिताः। श्रद्धया परया युक्ता ह्यनभिद्रोहलब्धया। दमस्वाध्यायनिरताः सर्वान् कामानवाप्स्यथ। यच्चैव मानुषे लोके यच्च देवेषु किञ्चन। सर्वं तु तपसा साध्यं ज्ञानेन नियमेन च। इत्येवं ब्रह्मगीतास्ते समाख्याता मयाऽनघ"।

**ब(ब्र)ह्मग्रन्थि** पु० यज्ञोपवीतस्य ग्रन्थिभेदे

**ब(ब्र) ह्मघातक** पु० ब्रह्माणं विप्रं हन्ति हन-ण्वुल्। १ब्रह्महत्याकारके "पङ्क्तिभेदी वृथा पाकी नित्यं ब्राह्मणनिन्दकः। आदेशी वेदविक्रेता पञ्चैते ब्रह्मघातकाः" इत्युक्ते पारिभाषिके २पापभेदयुक्ते त्रि०। ब्रह्मघातोऽस्त्यस्यां "भक्षणेन ठन्। द्वादश्यां भक्षणे ब्रह्महत्यापापयुतायां पूतिकायां "पूतिका ब्रह्मघातिका" ति०त०।

**ब(ब्र)ह्मघोष** पु० ६त०। वेदध्वनौ।

**ब(ब्र)ह्मघ्न** त्रि० ब्रह्माणं ब्राह्मणं हन्ति हन-क। ब्रह्महत्याकारके "ब्रह्मघ्नमपि चण्डालं कं पतन्तं पुनीमहे" म० त०। स्त्रियां ङीप्।

**ब(ब्र)ह्मचक्र** न० ब्रह्मनिर्मितं चक्रम्। १आश्चर्यकरणात्मके संसाररूपे चक्रे। "सर्वाजीवे सर्वसंस्थे बृहन्ते अस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे" श्वेताश्वतरोप०। रुद्रयामलोक्ते २दीक्षोपयोगिचक्रभेदे च।

ब्र(ब्र)ह्मचर्य्य न० ब्रह्मणे वेदग्रहणार्थं चर्य्यम्। द्विजानां वेदग्रहणार्थव्रतभेदे। "प्रतिवेदं ब्रह्मचर्य्यं द्वादशाब्दानि पञ्च वा। ग्रहणान्तिकमित्येके" गरुडपु० ९४अ०। तत्प्रकारो मनुनोक्तो यथा
"कृतोपनयनस्यास्य व्रतादेशनमिष्यते। ब्रह्मणो ग्रहणञ्चैव क्रमेण विधिपूर्वकम्। यद् यस्य विहितञ्चर्म यत् सूत्रं या च मेखला। यो दण्डो यच्च वसनन्तत्तदस्य व्रतेष्वपि। सेवेतेमांस्तु नियमान् ब्रह्मचारी गुरौ वसन्। सन्नियम्येन्द्रियग्रामन्तपोवृद्ध्यर्थमात्मनः। नित्यं स्नात्वा शुचिः कुर्य्याद्देवर्षिपितृतर्पणम्। देवताभ्यर्चनञ्चैव समिदाधानमेव च। वर्जयेन्मधुमांसञ्च गन्धं माल्यं रसान् स्त्रियः। शुक्तानि यानि सर्वाणि प्राणिनाञ्चैव हिंसनम्। अभ्यङ्गमञ्जनञ्चाक्ष्णोरुपानच्छत्रधारणम्। कामं क्रोधञ्च लोभञ्च नर्त्तनं गीतवादनम्। द्यूतञ्च जनवादञ्च परिवादन्तथाऽनृतम्। स्त्रीणाञ्च प्रेक्षणालम्भमुपघातम्परस्य च। एकः शयीत सर्वत्र न रेतः स्कन्दयेत् क्वचित्। कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः। स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः। स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्। उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान्। आहरेद्यावदर्थानि भैक्षञ्चाहरहश्चरेत्। वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु। ब्रह्मचार्य्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम्। गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु। अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत्। सर्वं वापि चरेद् ग्रामं पूर्वोक्तानामसम्भवे। नियम्य प्रयतो वाचमभिशस्तांस्तु वर्जयेत्। दूरादाहृत्य समिधः सन्निदध्याद्विहायसि। सायम्प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः। अकृत्वा भैक्षचरणमसमिध्य च पावकम्। अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्। भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद् व्रती। भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता। व्रतवद्देवदैवत्ये पित्र्ये कर्मण्यथर्षिवत्। काममभ्यर्थितोऽश्नीयाद् व्रतमस्य न लुप्यते। ब्राह्मणस्यैव कर्म्मैतदुपदिष्टं मनीषिभिः। राजन्यवैश्ययोस्त्वेवं नैतत् कर्म विधीयते"। ततः गुरुशुश्रूषा सा च गुरुशुश्रूषाशब्दे २६२२ पृ० दर्शिता। २योगाङ्गयमभेदे च "अहिंसासत्यास्तेय ब्र(ब्र)ह्मचर्य्याऽपरिग्रहा यमाः" पात०। तत्र ब्र(ब्र)ह्मचर्य्यं व्याकृतं भाष्यविवरणाभ्यां यथा "ब्र(ब्र)ह्मचर्य्यं गुप्तेन्द्रियस्योपस्थस्य संयमः" भा०। "संयतोपस्थोऽपि हि स्त्रीप्रेक्षणतदालापकन्दर्पायतनतदङ्गस्पर्शनसक्तो न ब्र(ब्र)ह्मचर्य्यवान् तन्निरासायोक्तं गुप्तेन्द्रियस्येति इन्द्रियान्तराण्यपि तत्र लोलुपानि रक्षणीयानि" विव०। तत्र अष्टाङ्गमैथुनशब्दे ५२३ पृ० दर्शितवाक्येन मैथुनस्य स्मरणाद्यष्टाङ्गतया तदुपयोगीन्द्रियाणि संयम्यानीत्यर्थः। तत्फलञ्च तत्रोक्तं यथा "ब्र(ब्र)ह्मचर्य्यप्रतिष्ठायां वीर्य्यलाभः" पात०। "यस्य लाभादप्रतिघान् गुणानुत्कर्षयति सिद्धश्च विनेयेषु ज्ञानमाधातुं समर्थो भवति" भा०। "वीर्य्यं सामर्थ्यं यस्य लाभादप्रतिघान् गुणानणिमादीन् विनेयेषु शिष्येषु ज्ञानं योगतदङ्गविषयमाधातुं समर्थो भवति" विव०। तथाच अष्टाङ्गमैथुनवर्जनमेव ब्र(ब्र)ह्मचर्य्यं तच्च स्त्रीपुंसयोः साधारणं पुंसः स्त्रीस्मरणाद्यष्टाङ्गराहित्यस्येव स्त्रीणां पुंस्मरणादिशून्यत्वस्यापि तथात्वम् "अतएव ब्र(ब्र)ह्मचर्य्यं तदन्वारोहणं वा" विष्णुसू०। विधवानामपि ब्र(ब्र)ह्मचर्य्यं विहितम् "मृते भर्त्तरि साध्वी स्त्री ब्र(ब्र)ह्मचर्य्यव्यवस्थिता। स्वर्गं गच्छत्यपुत्रापि यथा ते ब्र(ब्र)ह्मचारिणः" मनुव्याख्यायां ब्र(ब्र)ह्मचर्य्ये व्यवस्थिता अकृतपुरुषान्तरमैथुना" कुल्लू०उक्तम्। भावे क्यप् ब्रह्मचर्य्या तत्रार्थे स्त्री।

ब्र(ब्र)ह्मचारिन् पु० ब्र(ब्र)ह्म वेदस्तद्ग्रहणार्थं चरति व्रतभेदम् चर+णिनि। १उपनयनानन्तराद्याश्रमयुते द्विजातौ उपचारात् २तदाश्रमे च। तस्य कर्त्तव्यादिकं मनूक्तं ब्र(ब्र)ह्मचर्य्यशब्दे दर्शितम्।

ब्र(ब्र)ह्मचारिणी स्त्री "वेदेषु चरते यस्मात् तेन सा ब्रह्मचारिणी" देवीपु०४५अ० निरुक्तियुक्तायां वेदमातृमय्यां चिच्छक्तिरूपायां १दुर्गायां २ब्रह्मचर्य्ययुतायां स्त्रियाञ्च "आसीतामरणात् क्षान्ता नियता ब्र(ब्र)ह्मचारिणी" मनुः। ३करुणीवृक्षे राजनि०। ४ब्राह्मीशाके रत्नमाला।

ब्र(ब्र)ह्मज पु० ब्रह्मणो जायते जन—ड। १हिरण्यगर्भे "यो वै ब्र(ब्र)ह्माणं विदधाति पूर्वं यश्चास्मै प्रहिणोति वेदम्" श्रुतेः "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः" इत्युपक्रमे "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिन् जज्ञे स्वयंब्रह्मा सर्वलोकपितामहः" इति मनूक्तेश्च तस्य तथात्वम्। २ब्रह्मजातमात्रे पञ्चभूतादौ च "यतो वा इमानि भूतानि जायन्ते" इत्युपक्रमे "तद् विजिज्ञासस्व ब्रह्मेति" श्रुतौ ब्रह्मतः सर्वभूतोत्पत्तिश्रवणात्।

ब्र(ब्र)ह्मज्ञ त्रि० ब्रह्म जानाति ज्ञा–क । १ब्रह्मवेत्तरि २विष्णौ पु० "ब्रह्मज्ञो ब्राह्मणप्रियः" विष्णु स० । [राजनि०

ब्र(ब्र)ह्मजटा स्त्री ब्रह्मणो जटेव संहतत्वात् । दमनकवृक्षे

ब्र(ब्र)ह्मजा(या)मल न० यामलभेदे तन्त्रे ।

ब्र(ब्र)ह्मजिज्ञासा स्त्री ६त० । ब्रह्मावगतिफलके विचारे । शारीरकभाष्ये १सूत्रे तत्राधिकार्यादिकं दृश्यम् ।

ब्र(ब्र)ह्मजीविन् पु० ब्रह्म वेदस्तद्विहितेन श्रौतकर्मणा जीवति जीव–णिनि । स्वार्थं परकीयश्रौतादिकर्मकारके

ब्र(ब्र)ह्मज्ञान न० ब्रह्मणो ज्ञानं तेन सह आत्माभेदज्ञानम् । ब्रह्मविद्यायां तच्च अहं ब्रह्मास्मीत्येवंरूपम् "आत्मानं चेत् विजानीयादयमस्मीति पुरुषः । किमिच्छन् कस्य कामाय किमर्थमनुसंज्वरेत्" श्रुत्या तदभेदज्ञानस्यैव मोक्षहेतुत्वमुक्तं "वेदान्तशास्त्रसिद्धान्तब्रह्मज्ञानं वदाम्यहम् । अहं ब्रह्म परं ज्योतिः विष्णुरित्येव चिन्तयेत् । सूर्ये हृद्व्योम्नि वह्नौ च ज्योतिरेकं त्रिधा स्थितम् । यथा सर्पिः शरीरस्थं गवां न कुरुते बलम् । निर्गतं कर्मसंयुक्तं दत्ते तासां महाबलम् । तथा विष्णुः शरीरस्थो न करोति हितं नृणाम् । विनाऽऽराधनया देवः सर्वगः परमेश्वरः । आरुरुक्षुर्यतोऽथाथ कर्मज्ञानमुदाहृतम् । आरूढयोगवृक्षाणां ज्ञानं योगः परं मतम्" गरुडपु० २४० अ० । न्यायादिमते तज्ज्ञानं शरीरोपरमात् प्रमाणजन्यं आगमाद्युपायकम् । तत्त्वमसि अहं ब्रह्मास्मीत्यादिवाक्यजन्यमपि तज्ज्ञानं मननिदिध्यासनादिना पश्चात् प्रत्यक्षमुत्पद्यते । तज्ज्ञानाभिलाषादिकं विवेकचू० दर्शितं यथा "अव्यक्तादिस्थूलपर्यन्तमेतद्विश्वं यत्राभासमात्रं प्रतीतम् । व्योमप्रख्यं सूक्ष्ममाद्यन्तहीनं ब्रह्माद्वैतं यत्तदेवाहमस्मि । सर्वाधारं सर्ववस्तुप्रकाशं सर्वाकारं सर्वगं सर्वशून्यम् । नित्यं शुद्धं निश्चलं निर्विकल्पं ब्रह्माद्वैतं यत् तदेवाहमस्मि । यन्निरस्ताशेषमायाविशेषं प्रत्यग्रूपं प्रत्ययागम्यमानम् । सत्यज्ञानानन्दमानन्दरूपं ब्रह्माद्वैतं यत् तदेवाहमस्मि । निष्क्रियोऽस्म्यविकारोऽस्मि निष्कलोऽस्मि निराकृतिः । निर्विकल्पोऽस्मि नित्योऽस्मि निरालम्बोऽस्मि निर्द्वयः । सर्वात्मकोऽहं सर्वोऽहं सर्वातीतोऽहमद्वयः । केवलाखण्डबोधोऽहमानन्दोऽहं निरन्तरम्" ।

ब्र(ब्र)ह्मणस्पति पु० ६त० अलुक्स० निपातौ तस्य पदद्वयत्वेऽपि एकपदत्वम् । १ब्राह्मणजातिस्वामिनि यजु० १३,२८।२मन्त्रस्वामिनि च "पवित्रं विततं ब्रह्मणस्पते" ऋ० ९।८३।१ "हे ब्रह्मणस्पते ! मन्त्रस्वामिन्" भा० ।

ब्र(ब्र)ह्मण्य पु० ब्रह्मणे हितः । १विष्णौ "ब्रह्मण्यो देवकीपुत्रः" विष्णु सं० । २ब्राह्मणहितमात्रे त्रि० ३ब्रह्मदारुवृक्षे पु० अमरः । ४मुञ्जतृणे ५तालवृक्षे राजनि० । ६शनैश्चरे ७ब्रह्मणि तपसि साधौ त्रि० मेदि० ।

ब्र(ब्र)ह्मतीर्थ ६त० । १पुष्करमूले राजनि० २पुष्करतीर्थे च । ३तीर्थभेदे यत्र स्नाने "तत्र वर्णावरः स्नात्वा ब्राह्मण्यं लभते नरः । ब्राह्मणश्च विशुद्धात्मा गच्छेत परमां गतिम्" भा० व० ८३अ० । फलमुक्तम् ।

ब्र(ब्र)ह्मत्व न० ब्रह्मणो भावः त्व । १ऋत्विग्विशेषस्य ब्रह्मणो धर्मे २शुद्धतरीयब्रह्मभावे च ।

ब्र(ब्र)ह्मतुङ्ग पु० कालपर्वतभेदे । "स्निग्धाञ्जनचयाकारं संप्राप्तः कालपर्वतम् । ब्रह्मतुङ्गं नदीश्चान्यास्तथा जनपदानपि" भा० द्रो० ८अ० ।

ब्र(ब्र)ह्मद पु० ब्रह्म वेदं ददाति । उपनीय वेददातरि आचार्ये "उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता" मनुः दा–क ब्रह्मदात् तत्रार्थे पु० ।

ब्र(ब्र)ह्मदण्ड पु० ब्रह्मणो दण्डः । १ब्राह्मणदण्डे २अभिशापरूपे दण्डे "ब्रह्मदण्डहता ये च विद्युदग्निहताश्च ये" ति० त० षोडशीश्राद्धमन्त्रः । ३तपिस्विस्ज्ञवष्टिरूपे दण्डे च । "धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं परम् । एकेन ब्रह्मदण्डेन बहवो नाशिता मम" रामा० बालो० विश्वामित्रवाक्यम् । ४ब्राह्मणयष्टिहस्ते यद्गृच०।५विप्रस्य यष्टौ च । ६केतुभेदे बृ०स०११अ० । केतुशब्दे दृश्यम् ।

ब्र(ब्र)ह्मदण्डी स्त्री क्षुद्रो दण्डः ङीप् ब्रह्मोपपदनाद् दण्डी । क्षुद्रक्षुपभेदे कण्टकपत्रफलायामजगन्धायां राजनि० ।

ब्र(ब्र)ह्मदत्त इक्ष्वाकुवंश्ये नृपभेदे ३त० । २हिरण्यगर्भेण दत्ते त्रि०४त० ३विप्राय दत्ते त्रि० ४शुकदेवस्य कन्यायां कत्वीसमाख्यायां अणुहस्य पुत्रभेदे पु० तत्कथा हरिवं० ११ अ० दृश्या । [ग्राम् अमरः ।

ब्र(ब्र)ह्मदर्भा स्त्री ब्रह्मणो दर्भो यस्य तमस्याः । यमानिका–

ब्र(ब्र)ह्मदाय पु० ब्र(ब्र)ह्म च(ण) वा वेदाध्ययनसमाप्तौ, विप्राय वा राज्ञा दीयते दा–कर्मणि घञ् । समाहृतविप्राय देये धने "ब्र(ब्र)ह्मदायागतां भूमिं हरेयुर्ब्रह्मपोसुताः" दायभागधृतश्रुतिः । [वृक्षभेदे अमरः ।

ब्र)ह्मदारु पु० ब्रह्म वो विप्रस्य हितः दारुः । अस्मकाकारे

ब्र(ब्र)ह्मद्विष् त्रि० ब्रह्म वेदाय विप्राय द्वेष्टि द्विष–क्विप् । १वेदविप्रयोर्द्वेष्टरि २वेदनिन्दके च मनुः ३।१५ ।

**बृ(ब्र)ह्मन्** न० बृंह-मनिन् "बृंहेर्नोऽच्चेति" उणा० नकारस्याकारे ऋतो रत्वम्। १वेदे "तस्मादेतद् ब्रह्म नाम रूपमन्नञ्च जायते श्रुतिः"। "तेन ब्रह्म हृदा" भाग० १।१।१। २तपसि, ३सत्ये ४तत्त्वे यथार्थे अमरः। सर्वगुणातीते विशुद्धे तुरीये ५चित्स्वरूपे च। ६हिरण्यगर्भे ७विप्रे ८ऋत्विग्विशेषे च पु० अमरः। विष्णुयादिषु पञ्चविंशे ९योगे मेदि०। एतच्चवदन्तेन दन्त्योष्ठ्यादित्वेन साधितम् मेदिनीकरेण ओष्ठ्यादित्वेन कीर्त्तनात्तथापि। ब्रह्म च सच्चिदानन्दात्मकम्। तत्र तस्य स्वरूपलक्षणम्। विवरणानुसारिणस्तु "आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्मा अपृथक्त्वेऽपि पृथगिवावभासन्ते" इति तन्मोक्तौ मिथ्याभावः सत्यत्वम् अज्ञानभावश्चित्त्वम्। दुःखाभाव आनन्द इत्याहुः। तेषाममभावानाञ्च ब्रह्मरूपाधिकरणे स्थितत्वात् अभावस्याधिकरणस्वरूपतया ब्रह्मरूपत्वमिति। तस्य तटस्थलक्षणञ्च जगज्जन्मस्थितिप्रलयानां प्रत्येकमुपादानप्रत्यक्षचिकीर्षाकृतिमत्त्वं तेन तत्र लक्षणवत्त्वम् वेदान्तप०। अतएवोक्तं श्रीधरेण "विश्वसर्गविसर्गादिनवलक्षणलक्षितमिति"। तच्च ब्रह्म द्विविधं निर्गुणं सगुणञ्च। सच्चिदानन्दात्मकत्वेन निर्गुणत्वं जगज्जन्मादिकर्तृत्वेन सगुणत्वम्। जाग्रदाद्यवस्थात्रयसाक्षित्वेन सगुणत्वं अवस्थात्रयातीतस्य चतुरीयसंज्ञा "शिवमद्वैतं चतुर्थं मन्यन्ते" इति श्रुतेस्तथात्वम्। तत्र तस्य तटस्थलक्षणाभिप्रायेण "जन्माद्यस्य यतः" शा०सू० "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व ब्रह्मेति" श्रुतिश्च प्रवृत्ते तस्य स्वरूपलक्षणाभिप्रायेण "निर्गुणं निष्कलं शान्तं निरवद्यं निरञ्जनम्" इत्याद्याः श्रुतयः प्रवृत्ताः। आत्मबोधे तु तस्य ब्रह्मणोऽखिलवस्त्वपेक्षया श्रेष्ठत्वाद्ब्रह्मत्वमुक्तं यथा "यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम्। यज्ज्ञानान्नापरं ज्ञानं तद्ब्रह्मेत्यवधारयेत्। यद् दृष्ट्वा नापरं दृश्यं यद्भूत्वा न पुनर्भवः। यज्ज्ञात्वा नापरं ज्ञेयं तद्ब्रह्मेत्यवधारयेत्। तिर्यगूर्द्ध्वमधः पूर्णं सच्चिदानन्दमद्वयम्। अनन्तं नित्यमेकं यत्तद्ब्रह्मेत्यवधारयेत्। अतद्व्यावृत्तिरूपेण वेदान्तैर्लक्ष्यतेऽद्वयम्। अखण्डानन्दमेकं यत् तद्ब्रह्मेत्यवधारयेत्। दृश्यते श्रूयते यद्यद्ब्रह्मणोऽन्यन्न तद्भवेत्। तत्त्वज्ञानाच्च तद्ब्रह्म सच्चिदानन्दमद्वयम्। सर्वगं सच्चिदात्मानं ज्ञानचक्षुर्निरीक्षते। अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत्"। तच्च निर्गुणमपि गुणभेदेन नानारूपं यथोक्तम् "ब्रह्मैकं मूर्त्तिभेदस्तु गुणभेदेन सन्ततम्। तद्ब्रह्म द्विविधं वस्तु सगुणं निर्गुणं शिव!। मायाश्रितो यः सगुणो मायातीतश्च निर्गुणः। स्वेच्छामयश्च भगवानिच्छया विकरोति च। इच्छाशक्तिश्च प्रकृतिः सर्वशक्तिप्रसूः सदा। केचिद्वदन्त्येवं ब्रह्म ज्योतिः सनातनम्। केचिद्वदन्ति द्विविधं ब्रह्मप्रकृतिपूर्वकम्। अन्ये ये च वदन्त्येकं प्रकृतिपुरुषयोः परम्। तस्माद्भवति तौ द्वौ च तद्ब्रह्म सर्वकारणम्"। अथवैकं परं ब्रह्म द्विविधं भवतीच्छया। इच्छाशक्तिश्च प्रकृतिः सर्वशक्तिप्रसूः सदा" ब्रह्मवैवर्त्ते जन्मख० ४२ अ०। तस्य नवधा रूपं यथा "योगिनो यं वदन्त्येवं ज्योतीरूपं सनातनम्१। ज्योतिरभ्यन्तरे नित्यरूपं२ भक्ता वदन्ति यम्। वेदा वदन्ति सत्यं३ यं नित्यमाद्यं४ विचक्षणाः। यं वदन्ति सुराः सर्वे परं स्वेच्छामयं प्रभुम्५। सिद्धेन्द्रामुनयः सर्वे सर्वरूपं६ वदन्ति यम्। यमनिर्वचनीयञ्च योगीन्द्रः शङ्करो वदेत्७। स्वयं धाता च प्रवदेत् कारणानाञ्च कारणम्८। शेषो वदेदनन्तं९ यं नवधारूपमीश्वरम्। तर्काणामेव सङ्ख्यां यं षड्विधं रूपमीश्वरम्। वैष्णवानामेकरूपं वेदानामेकमेव च। पुराणानामेकरूपं तस्मात्त्रिविधं स्मृतम्। न्यायोऽनिर्वचनीयञ्च यन्मतं शङ्करोऽब्रवीत्। नित्यं वैशेषिकास्त्वन्यं वदन्ति च विचक्षणाः। सांख्यो वदति तं देवं ज्योतीरूपं सनातनम्। मीमांसा सर्वरूपञ्च वेदान्तः सर्वकारणम्। पातञ्जलोऽप्यनन्तञ्च वेदाः सत्यस्वरूपकम्। स्वेच्छामयं पुराणञ्च भक्ताश्च नित्यविग्रहम्" इति तत्रैव १२८अ०। अन्यथाऽपि सत्त्वादिगुणभेदेन तस्य चतुर्धा रूपं यथा "चतुर्विभागः संसृष्टौ चतुर्धा संस्थितः स्थितौ। प्रलयञ्च करोत्यन्ते चतुर्भेदो जनार्दनः। एकेनांशेन ब्रह्माऽसौ भवत्यव्यक्तमूर्त्तिमान्। मरीचिमिश्राः पतयः प्रजानामन्यभागतः। कालस्तृतीयस्तस्यांशः सर्वभूतानि चापरः। इत्थं चतुर्धा संसृष्टौ वर्त्ततेऽसौ रजोगुणः। एकांशेन स्थितो विष्णुः करोति परिपालनम्। मन्वादिरूपी चान्येन कालरूपी परेण च। सर्वभूतेषु चान्येन संस्थितिं कुरुते स्थितः। सत्त्वं गुणमुपाश्रित्य जगतः पुरुषोत्तमः। आश्रित्य तमसो वृत्तिमन्तकाले तथा प्रभुः। रुद्रस्वरूपो भगवानेकांशेन भवत्यजः। अग्न्यन्तकादिरूपेण भागेनान्येन वर्त्तते।

कालस्वरूपो भागोऽन्यः सर्वभूतानि चापरः। विनाशं कुर्वतस्तस्य चतुर्द्धैवं महात्मनः” विष्णुपु० १अंशे २१अ०। वेधाश्च रजोगुणप्रधानोपाधिकः कार्य्यब्रह्मा। ऋत्विग्भेदश्च अच्छावाकशब्दे ८५ पृ० दर्शितेषु प्रधानेषु चतुर्षु ऋत्विक्षु मध्ये एकतमः।“अयाज्यामपराधे तु ब्रह्मा परिहरेत् सदा” आश्व० श्रौतसूत्रकारिका। “अयाज्यानामध्वर्य्यूद्गातृहोतॄणां वेदत्रयविदां मध्ये ऋत्विगेको ब्रह्मनामको वेदत्रयमन्त्रतद्विहितकर्मविषये अपराधो न्यूनभावो यदि जायते तस्यापराधस्य परिहारं प्रतीकारं कुर्य्यात्” इति तदर्थः। “यज्ञस्य हैष भिषक् ब्रह्मेति” भाष्यधृतश्रुत्यन्तरम्। अतएवास्य कृताकृतावेक्षणार्थं वरणमन्यत्रोक्तम्। १०वृहस्पतौ च ब्रह्मपुरोहितशब्दे दृश्यम्।

**ब्(ब्र)ह्मनाल** न० ब्रह्मणो नालमिव। काश्यां मणिकर्णिकासमीपस्थे तीर्थभेदे। “पितामहेश्वरं लिङ्गं ब्रह्मनालोपरि स्थितम्। पूजयित्वा नरो भक्त्या ब्रह्मलोकमवाप्नुयात्। ब्रह्मस्रोतःसमीपे तु कृतं कर्म शुभाशुभम्। परामक्षय्यतामेति शुभमेव ततश्चरेत्। अन्यत्रापि यत् कर्म कृतमत्र शुभाशुभम्। प्रलयेऽपि न तस्यास्ति प्रलयो मुनिसत्तम!। नाभीतीर्थमिदं प्रोक्तं नाभीभूतं यतः क्षितेः। अपि ब्रह्माण्डगोलस्य नाभिरेषा शुभोदया। सा मणिकर्णिकैवेयं नाभिगाम्भीर्य्यभूमिका। ब्रह्माण्डगोलकं सर्वं यस्यामेति लये लयम्। ब्रह्मनालं परं तीर्थं त्रिषु लोकेषु विश्रुतम्। तत्सङ्गमे नरः स्नातः कोटिजन्माघं हरेत्। ब्रह्मनाले पतेद्यस्यापि कीकसमात्रकम्। ब्रह्माण्डमण्डपान्तस्थो न विशन्ति कदाचन” काशीख० ६१अ०।

**ब्(ब्र)ह्मनिर्वाण** न० ब्(ब्र)ह्मणि निर्वाणं निर्वृतिः। ब्(ब्र)ह्मभावलाभे सकलानर्थनिवृत्तिरूपे परमानन्दे “एषा ब्राह्मी स्थितिः पार्थ! नैनां प्राप्य विमुह्यति। स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति” गीता।

**ब्(ब्र)ह्मपत्र** न० ब्रह्मणः तन्नामकवृक्षस्य पत्रम्। पलाशपत्रे। “भोजनं ब्रह्मपत्रेषु कथया लोचनं हरेः। दर्शनं वैष्णवानाञ्च महापातकनाशनम्” पाद्मोत्तरख० ११८अ०।

**ब्(ब्र)ह्मपर्णी** स्त्री ब्(ब्र)ह्मेव विस्तीर्णानि मूलादारभ्य स्थितानि पर्णान्यस्याः ङीप्। पृश्निपर्ण्याम् राजनि०।

**ब्(ब्र)ह्मपवित्र** पु० ब्(ब्र)ह्मेव वेदोक्तकर्मणि वा पवित्रः। कुशे राजनि०।

**ब्(ब्र)ह्मपादप** पु० ब्(ब्र)ह्मणः प्रियः वैदिककर्मयोग्यत्वात् विप्रब्(ब्र)ह्मचारिधार्य्यदण्डार्थत्वाद्वा ब्रह्मनामकत्वात् वा पादपः। पलाशवृक्षे हेमच०। “पलाशो वै ब्रह्म” शत०ब्रा० पलाशवृक्षशब्दे दृश्यम्।

**ब्(ब्र)ह्मपुत्र** पु० ब्(ब्र)ह्मणः पुत्र इव कपिलवर्णत्वात्। १विषभेदे अमरः। तद्विषस्य लक्षणं भावप्र० उक्तं यथा “वर्णतः कपिलो यः स्यात्तथा भवति सारकः। ब्रह्मपुत्रः स विज्ञेयो जायते मलयाचले”। २उत्तरदेशप्रसिद्धे ३नदभेदे ४क्षेत्रभेदे च। ५सरस्वत्यां नद्यां स्त्री। तस्याः पितामहजातत्वं ब्रह्माणीशब्दे दृश्यम्। तस्य नदस्योत्पत्तिकथा “हरिवर्षे महावर्षे शान्तनुर्नाम नामतः। मुनिरासीन्महाभागो ज्ञानवान् सुतपोधनः। तस्य भार्य्या महाभागा अमोघाख्या महासती। हिरण्यगर्भस्य मुनेश्च षडन्दान्नमोद्भवा। तया सार्द्धं स कैलासमर्य्यादापर्वतेऽवसत्। लोहिताख्यस्य सरसस्तीरे वै गन्धमादने। एकदा स तपोनिष्ठो निजपुष्पादिगोचरे। जगाम वनमध्यन्तु चिन्वन् वस्तुफलानि च। तस्मिन्नवसरे ब्रह्मा सर्वलोकपितामहः। तत्राजगाम यत्रास्ति अमोघा शान्तनोः प्रिया। तां दृष्ट्वा देवगर्भाभां युवतीमतिसुन्दरीम्। मोहितो मदनेनाशु तथाऽभूत् स्खलितेन्द्रियः। उदीरितेन्द्रियो भूत्वा जिघृक्षुस्तां महासतीम्। अथाधावत्तदा ब्रह्मा सम्मुखो मदनार्दितः। धावमानं विधातारं दृष्ट्वाऽमोघा महासती। नैव नैवमिति प्रोच्य पर्णशालां व्यलीयत। दृढञ्चोवाच धातारममोघा कुपिता तदा। पर्णशालान्तरगता द्वारमावृत्य तत्क्षणात्। अकार्य्यं न मया कार्य्यं मुनिपत्न्या विगर्हितम्। बलात् प्रमथ्या चाहं चेन्मया त्वाञ्च शपाम्यहम्। अमोघया चैवमुक्तो विधातुश्च तदा नृप!। रेतःस्कन्दश्च तत्रैवाश्रमे शान्तनोर्मुनेः। च्युते रेतसि धातापि हंसयानं समास्थितः। लज्जयातिपरीतात्मा द्रुतं वै स्वाश्रमं ययौ। गते वेधसि शान्तनुर्निजमाश्रममागतः। आगत्य दृष्ट्वा हंसानां पदक्षोभं तथा भुवि। तेजश्च पतितं भूमौ विधातुर्ज्वलनोपमम्। अमोघां परिपप्रच्छ पर्णशालान्तरस्थिताम्। किमेतदत्र शुभगे! प्रत्यक्षं दृश्यते तु यत्। पक्षिणाञ्च पदक्षोभस्तेजश्चेदञ्च कीदृशम्। सा तस्य वचनं श्रुत्वा शान्तनुं मुनिसत्तमम्। अमर्षितेव त्वागद्गदाकुला विकचानना। हंसयुक्तस्यन्दनेन कोऽप्यागत्य महर्षे च।

कमण्डलुकरो भीरु रतिं मां समयाचत । ततो मया भर्त्सितः स कुटजान्तरधीनया । प्रच्याव्य तेजः स गतो मम शापभयार्दितः । कुरु तत्र प्रतीकारं यदि शक्नोषि शान्तनो ! । न हि तां घर्षणां सोढुं कश्चित् शक्नोति जीवन्नृ । स तस्या वचनं श्रुत्वा स्वयं ब्रह्मा समागतः । इति निश्चित्य मनसा तत्र ध्यानपरोऽभवत् । दिव्यज्ञानेन स ज्ञात्वा देवकार्यमुपस्थितम् । तीर्थानामप्यस्यापि हिताय जगतां मुनिः । ज्ञात्वोदर्कं चिन्तयित्वा स्वभार्यामिदमब्रवीत् । इदं तेजो ब्रह्मणस्त्वं पिबामोघे ! यथाज्ञया । हिताय सर्वजगतां देवकार्यार्थसिद्धये । भवत्या निकटे ब्रह्मा स्वयमेव समागतः । त्वामप्राप्य स महात्मा चावयोः स समर्प्य च । गतो निजास्पदं तच्च कर्त्तुमर्हसि मद्वचः । तत् श्रुत्वा शान्तनोर्वाक्यममोघातीव लज्जिता । साऽब्रवन्तीव तं प्राह पतिं नत्वा महासती । नाथ्यस्य तेजो धास्यामि न चेत्ते विमनस्कता । अवश्यं यदि कर्त्तव्यं पीत्वा त्वं मयि चोत्सृज । ततस्तस्या वचः श्रुत्वा मुक्तं तच्च शान्तनुः । स्वयं पीत्वा च तत्तेजस्तस्या गर्भेऽभ्यषेचयत् । संक्रामितैः शान्तनुना तेजोभिर्ब्रह्मणः सती । गर्भं दधाराऽमोघाख्या हिताय जगतां ततः । तस्यां काले तु संप्राप्ते संजातोजलसञ्चयः । तन्मध्ये तनयश्चापि नीलवासाः किरीटधृक् । रत्नमालासमायुक्तो रत्नगौरश्च अप्सवत् । चतुर्भुजः पद्मविद्यावरयज्ञिधरस्तथा । शिशुमारशिरस्थश्च तुल्यकायो जलोत्करैः । तं जातञ्च तथाभूतं शान्तनुर्लोकशान्तनुः । चतुर्णां पर्वतानाञ्च मध्यदेशे न्यवेशयत् । कैलासस्योत्तरे पार्श्वे दक्षिणे गन्धमादनः । जारुधिः पश्चिमे शैलः पूर्वे संवर्त्तकाह्वयः । तेषां मध्ये स्वयं कुण्डं पर्वतानां विधेः सुतः । तत्याऽतिवृद्धे नित्यं शरदीव निशाकरः । तं तोयमध्यगं पुत्रमासाद्य द्रुहिणः स्वयम् । क्रमतस्तस्य संस्कारानकरोद्धेहयुद्धये । अथ काले बहुतिथे व्यतीते ब्रह्मणः सुतः । तोयराशिस्वरूपेण ववृधे पञ्च योजनान् । तस्मिन् देवाः पपुः सस्तुर्दिंतीय इव सागरे । गौतामसजले हृद्ये देव्यश्चाप्सरसां गणैः । तस्मिन्नवसरे रामो जामदग्न्यः प्रतापवान् । चक्रे मातृवधं घोरमनुग्रपितुराज्ञया । तस्य पापस्य मोक्षाय स्वपितुश्चोपदेशतः । स जगाम महाकुण्डं ब्राह्माख्यं ज्ञातनिश्चया । तत्र स्नात्वा च पीत्वा च मातृहत्यां व्यपानयत् । तीर्थं परशुना कृत्वा तच्च क्ष्मामवातारयत्" तदुत्तरम् "ब्रह्मकुण्डात् सुतः सोऽथ कासारे लोहिताह्वये । कैलासोपत्यकायान्तु न्यपतद् ब्रह्मणः सुतः । तस्यापि सरसस्तीरं समुत्थाय महाबलः । कुठारेण दिशं पूर्वामनयद् ब्रह्मणः सुतम् । ततोऽपरत्रापि गिरिं हेमशृङ्गं विभिद्य च । कामरूपान्तरं पीठमवाहयदसुं हरिः । तस्य नाम विधिश्चक्रे स्वयंलोहितगङ्गकम् । लौहित्यात् सरसो जातो लौहित्याख्यस्ततोऽभवत् । स कामरूपमखिलं पीठमाप्लाव्य वारिणा । गोपयन् सर्वतीर्थानि दक्षिणं याति सागरम् । प्रागेव दिव्ययमुनां संत्यज्य ब्रह्मणः सुतः । पुनः पतति लौहित्ये गत्वा द्वादशयोजनम् । चैत्रे मासि सिताष्टम्यां यो नरो नियतेन्द्रियः । स्नाति लौहित्यतोयेषु स याति ब्रह्मणः पदम् । चैत्रन्तु सकलं मासं शुचिः प्रयतमानसः । लौहित्यतोये यः स्नाति स कैवल्यमवाप्नुयात्" कालिकापु॰ ८४,८५ अ॰ "मीने मधौ शुक्लपक्षे अशोकाख्यां तथाष्टमीम् । पिबेदशोककलिकाः स्नायाल्लौहित्यवारिणि । पुनर्वसौ बुधे सम्ने चैत्रे मासि सिताष्टमीम् । लौहित्ये विरजे स्नायात् सर्वपापैः प्रमुच्यते" ति॰त॰ ।

ब(ब्र)ह्मपुर न॰ ६त॰ । १ब्रह्मण उपासनार्थे हृदयस्थाने "अथ यदिदं ब्रह्मपुरे दहरं पुण्डरीकम्" छा॰ उ॰ । दहरशब्दे २५१० पृ॰ दृश्यम् । "यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि । दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः" मुण्डकोप॰ । "ब्रह्मणोऽत्र चैतन्यस्वरूपेण नित्याभिव्यक्तत्वाद्ब्रह्मणः पुरं हृदयपुण्डरीकं तस्मिन्" भा । २विधातृनगर्य्यां ३काम्यास्तु वा स्त्रीत्वेऽपि ङीप् तत्रार्थे । बृ॰सं॰१४अ॰उक्ते ऐशानदिक्स्थे ४देशभेदे पु॰ (वरमा) देशे स्वार्थे क । तत्रार्थे मार्कपु॰ पूर्वोत्तरकूर्मभागस्थदेशोक्तौ ।

ब(ब्र)ह्मपुराण न॰ वेदव्यासप्रणीते महापुराणभेदे तत्प्रतिपाद्यविषयाश्च बृहन्नारदीये ४पा॰ ९२अ॰ उक्ता यथा "ब्राह्मं पुराणं तत्रादौ सर्वलोकहिताय वै । व्यासेन वेदविदुषा समाख्यातं महात्मना । तद्वै सर्वपुराणाग्र्यं धर्मकामार्थमोक्षदम् । नानाख्यानेतिहासाढ्यं दशसाहस्रमुच्यते" तत्पूर्वभागे "देवानामसुराणाञ्च यत्रोत्पत्तिः प्रकीर्त्तिता । प्रजापतीनाञ्च तथा दक्षादीनां मुनीश्वर ! । ततो लोकेश्वरस्यात्र सूर्य्यस्य परमात्मनः । वंशानुकीर्त्तनं पुण्यं महापातकनाशनम् । तत्रावतारः कथितः परमानन्दरूपिणः । श्रीमतो रामचन्द्रस्य चतुर्व्यूहाव-

तारिणः। ततश्च सोमवंशस्य कीर्त्तनं यत्र वर्णितम्। कृष्णस्य जगदीशस्य चरितं कलुषापहम्। द्वीपानाञ्चैव सिन्धूनां वर्षाणां चाप्यशेषतः। वर्णनं यत्र पातालस्वर्गाणाञ्च प्रदृश्यते। नरकाणां समाख्यानं सूर्य्यस्तुतिकथानकम्। पार्वत्याश्च तथा जन्म विवाहश्च निगद्यते। दक्षाख्यानं ततः प्रोक्तमेकाम्रक्षेत्रवर्णनम्। पूर्वभागोऽयमुदितः पुराणस्यास्य मानद!"। तदुत्तरभागे। "अस्योत्तरे विभागे तु पुरुषोत्तमवर्णनम्। विस्तरेण समाख्यातं तीर्थयात्राविधानतः। अत्रैव कृष्णचरितं विस्तरात् समुदीरितम्। वर्णनं यम लोकस्य पितृश्राद्धविधिस्तथा। वर्णाश्रमाणां धर्माश्च कीर्त्तिता यत्र विस्तरात्। विष्णुधर्मयुगाख्यानं प्रलयस्य च वर्णनम्। योगानाञ्च समाख्यानं साङ्ख्यानां चापि वर्णनम्। ब्रह्मवादसमुद्देशः पुराणस्य च शंसनम्। एतद्ब्रह्मपुराणन्तु भागद्वयसमाचितम्। वर्णितं सर्वपापघ्नं सर्वसौख्यप्रदायकम्"तत्फलश्रुतिः। "सूतशौनकसंवादं भुक्तिमुक्तिप्रदायकम्। लिखित्वैतत् पुराणं यो वैशाख्यां हेमसंयुतम्। जलधेनुयुतञ्चापि भक्त्या दद्याद्द्विजातये। पौराणिकाय सम्पूज्य वस्त्रभोज्यविभूषणैः। स वसेद् ब्रह्मणो लोके यावच्चन्द्रार्कतारकम्। यः पठेच्छृणुयाद्वापि ब्रह्मानुक्रमणीं द्विज!। सोऽपि सर्वपुराणस्य श्रोतुर्वक्तुः फलं लभेत्। शृणोति यः पुराणन्तु ब्राह्मं सर्वं जितेन्द्रियः। हविष्याशी च नियमात् स लभेद् ब्रह्मणः पदम्। किमत्र बहुनोक्तेन यद्यदिच्छति मानवः। तत् सर्वं लभते वत्स! पुराणस्यास्य कीर्त्तनात्"

**ब्र(व्र)ह्मपुरुष** पु॰ ब्रह्मणः पुरुष इव। ब्रह्मप्रापकेषु द्वारपालरूपेषु चक्षुः वाङ्मनःप्राणेषु। चक्षुरादीन् प्रकृत्य "ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपालाः" छा॰ उ॰। देवर्षिपरशब्दे २७४५।२७४६ पृ॰ एतद्भाष्यञ्च दृश्यम्।

**ब्र(व्र)ह्मपुरोहित** पु॰ ब्रह्म बृहस्पतिः पुरोहितो यस्य देवे। त्रयस्त्रिंशद्वि देवाः ब्रह्म पुरोहिता इति ब्रह्म वै बृहस्पतिर्ब्रह्मपुरोहिताः" शत॰ब्रा॰१२।८।२।२८।

**ब्र(व्र)ह्मप्रसूत** त्रि॰ ३त॰। १ब्रह्मजाते जगति २ब्राह्मणारब्धे कर्मणि न॰। "यत् क्षत्रियोऽब्राह्मणो भवति स यत्र किं च कर्म कुरुतेऽप्रसूतं ब्रह्मणा मित्रेण न हैवास्मै तत् समृध्यते तस्माद् क्षत्रियेण कर्म करिष्यमाणेनोपसर्तव्य एव ब्राह्मणः सं हैवास्मै तद्ब्रह्मप्रसूतं कर्मर्ध्यते" शत॰ब्रा॰ ४।१।४।६।

**ब्र(व्र)ह्मबन्धु** पु॰ ब्रह्मा विप्रो बन्धुरुत्पादको यस्य ब्रह्मणो विप्रस्य बन्धुरिव वा। १विप्राचाररहिते निन्द्यकर्मकारिणि जात्या विप्रे २विप्रतुल्ये भट्टादौ च। "अननूक्तकुलीनोऽननूच्य ब्रह्मबन्धुरिव भवति" छा॰उ॰। "हे सौम्याऽननूच्यानधीत्य ब्रह्मबन्धुरिव भवतीति ब्राह्मणान् बन्धून् व्यपदिशति न स्वयं ब्राह्मणवृत्तः" इति भा॰। विप्रवंश्यापकृष्टब्राह्मणस्यापि दैहिकदण्डनिषेधो यथा "वपनं द्रविणादानं स्थानान्निर्वासनन्तथा। एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः" भाग॰१स्क॰

**ब्र(व्र)ह्मबिन्दु** पु॰ ब्रह्मणि वेदाध्ययनकाले बिन्दुः। वेदाध्ययनकाले मुखनिःसरल्लालालेशे।

**ब्र(व्र)ह्मबध्या** स्त्री वध—भावे क्यप् ६त॰। ब्रह्महत्यायाम्।

**ब्र(व्र)ह्मब्रुवाण** पु॰ आत्मानं ब्रह्माणं ब्रूते ब्रू—शानच्। विप्रतया आत्मनः कथके। यथा कर्णः आत्मानं विप्रं कथयित्वा परशुरामादस्त्रशास्त्रमधीतवान्" भा॰ उद्योग॰ ६१अ॰। ब्राह्मणब्रुवि २अपकृष्टब्राह्मणे च। [नैषधटुप्र॰।

**ब्र(व्र)ह्मभद्रा** स्त्री ७त॰। विप्रहितायां त्रायमाणौषधौ

**ब्र(व्र)ह्मभाग** पु॰ ६त॰। ब्रह्मरूपर्त्विजे हरणीये यज्ञद्रव्यस्य भागभेदे "अथास्मै ब्रह्मभागं पर्य्याहरन्ति। ब्रह्मा वै यज्ञस्य दक्षिणत आस्तेऽभिगोप्ता स एतं भागं प्रतिविद्वान् आस्ते यत् प्राशित्रं तदस्मै पर्य्याहार्षुस्तत् प्राशीदथ यमस्य ब्रह्मभागं पर्य्याहरन्ति तेन भागी समदत अर्द्धसमं स्थितं यज्ञस्य तदभिगोपायति तस्मादस्मै ब्रह्मभागं पर्य्याहरन्ति" शत॰ब्रा॰१।७।४।१८।

**ब्र(व्र)ह्मभूति** स्त्री ब्रह्मणो भूतिरत्र। १सन्ध्यायां शब्दच॰। २ब्रह्मजातमात्रे त्रि॰। [राजनि॰।

**ब्र(व्र)ह्मभूमिजा** स्त्री ब्रह्मभूमितो जायते जन—ड। सिंहल्यां

**ब्र(व्र)ह्मभूय** न॰ भू—भावे क्यप् ६त॰। ब्रह्मभावे शुद्धचैतन्यस्वरूपप्राप्तौ अमरः। [२५।७।१७ संक्षेपव्याख्या।

**ब्र(व्र)ह्ममण्डूकी** स्त्री मध्यस्थाय्ये ओषधीभेदे कात्या॰श्रौ॰

**ब्र(व्र)ह्ममय** त्रि॰ब्रह्मात्मकं ब्रह्मन्+मयट्। ब्रह्मात्मके "दर्शनं तस्य लाभः स्यात् त्वं हि ब्रह्ममयो निधिः" भा॰शा॰४३अ॰। स्त्रियां ङीप्। काशी ब्रह्ममयीत्यादि। २ब्रह्मास्त्रे च भा॰ उ॰ ६१अ॰।

**ब्र(व्र)ह्ममह** पु॰६त॰। विप्रानुद्दिश्य उत्सवे। भा॰आ॰१६४अ॰

**ब्र(व्र)ह्ममित्र** पु॰ ब्रह्म मित्रमस्य। मुनिभेदे मार्कपु॰ ६२अ॰।

**ब्र(व्र)ह्ममीमांसा** स्त्री ६त॰। ब्रह्मज्ञानार्थं वेदान्तवाक्यविचारात्मके व्यासप्रणीते ग्रन्थभेदे तत्प्रतिपाद्यविषयादि

वैयासिकन्यायमालायामुक्तं यथा "शास्त्रं ब्रह्मविचाराख्यमध्यायाः स्युश्चतुर्विधाः। समन्वयाविरोधौ २द्वौ साधन३ञ्च फलं४ तथा। समन्वये स्पष्टलिङ्ग१मस्पष्टत्वे २ऽप्युपास्यगम्२। ज्ञेयगं४ पदमात्रञ्च चिन्त्यं पादेष्वनुक्रमात्। द्वितीये स्मृतितर्काभ्यामविरोधो१ऽन्यदुष्टता२। भूतभोक्तृश्रुतेर्लिङ्गश्रुतेश्च४प्यविरुद्धता। तृतीये विरति१स्तत्त्वम्पदार्थपरिशोधनम्२। गुणोपसंहृति३र्ज्ञाने बहिरङ्गादिसाधनम्४। चतुर्थे जीवतो मुक्ति१रुत्क्रान्ति२र्गतिरुत्तरा३। ब्रह्मप्राप्तिब्रह्मलोकाविति ४पादार्थसंग्रहः। तेन तत्र प्रत्येकं चतुष्टयपादयुताः चत्वारोऽध्यायाः। तच्च शास्त्रं बहुभिः स्वस्वमतानुसारेण व्याख्यातम् तत्र गौडपादाचार्यशङ्कराचार्यादिभिरद्वैतपरतया व्याख्यातं रामानुजादिभिश्च विशिष्टाद्वैतपरतया, वल्लभाचार्यादिभिश्च विशुद्धाद्वैतपरतया माध्वाचार्यादिभिश्च द्वैतपरतया व्याख्यातं तत्तन्मतञ्च प्रायेण तत्तच्छब्दे द्रष्टव्यम्।

**ब्र(ब्र)ह्मयज्ञ** पु० ब्रह्मनिमित्तकस्तदध्ययनतदध्यापनाभिनिमित्तको यज्ञः। वेदाध्ययनाध्यापनादौ अमरः। "अध्यापनं ब्रह्मयज्ञः" मनुः। "स्वाध्यायो ब्रह्मयज्ञः" विष्णुसू०। तेन वेदाध्ययनाध्यापनयोर्ब्रह्मयज्ञता।

**ब्र(ब्र)ह्मयष्टि** स्त्री ब्रह्मणो यष्टिरिवावलम्बनत्वात्। (बामनहाटि) ख्याते वृक्षे रत्ना०।

**ब्र(ब्र)ह्मयुग** न० ब्रह्मा विप्रस्तद्रूपवर्णितं युगम्। हिरण्यगर्भस्य विप्रसृष्टिप्रधाने कालभेदे। तच्च हरिवं०२०८।२०९ अध्याये ततः सत्यादियुगचतुष्कवर्णितं तद्युगं २१०अ०उक्तम्

**ब्र(ब्र)ह्मयोग** पु० ब्रह्मणः सत्यज्ञानात्मकस्य योगः समाधिः। ब्रह्मसाक्षात्कारसाधने १समाधिभेदे हरिवं०२१० अ० "एष ब्रह्ममयो यज्ञो योगः सांख्यश्च तत्त्वतः। विज्ञानमसम्भवश्च धर्मं धर्मस्य एव च। एकत्वञ्च पृथक्त्वञ्च प्रभवं निधनं तथा। कालः कालक्षयश्चैव ज्ञेयो विज्ञानमेव" च विष्कम्भादिषु पञ्चविंशे योगे च।

**ब्र(ब्र)ह्मयोनि** पु० ब्रह्मणो योनिरुत्पत्तिस्थानम्। १ब्रह्मगिरौ पर्वते। २ब्रह्मप्राप्त्युपायस्थाननिष्ठायाञ्च "ब्राह्मणा ब्रह्मयोनिस्थाः" मनुः ३ब्रह्मोत्पन्ने त्रि०। ४सरस्वत्यां स्त्री ङीप् "सरस्वत्यास्तु तीरे यः संत्यजेदात्मनस्तनुम्। पृथूदके जप्यपरो नैनं श्वोमरणं तपेत्। तत्रैव ब्रह्मयोन्यस्ति ब्रह्मणा यत्र निर्मिता। पृथूदकं समाश्रित्य सरस्वत्यास्तटे स्थितः। चातुर्वर्ण्यस्य सृष्ट्यर्थमात्मज्ञानपरोऽभवत्। तस्याभिध्यायतः सृष्टिं ब्रह्मणो व्यक्तजन्मनः। मुखतो ब्राह्मणा जाता बाहुभ्यां क्षत्रियास्तथा। ऊरुभ्यां वैश्यजातीयाः पद्भ्यां शूद्रास्ततोऽभवन्। चातुर्वर्ण्यं ततो दृष्ट्वा आश्रमस्थान् सुतांस्ततः। एवं प्रतिष्ठितं तीर्थं ब्रह्मयोनीति संज्ञितम्। तत्र स्नात्वा मुक्तिकामः पुनर्योनिं न पश्यति" वामनपु० ३८अ० ५तत्तीर्थभेदे स्त्री वा ङीप्।

**ब्र(ब्र)ह्मरन्ध्र** न० उत्तमाङ्गस्थ रन्ध्रभेदे। "तयोर्ध्वमायन्नमृतत्वमेति" श्रुत्या तद्रन्ध्रेण प्राणोत्क्रमणे ब्रह्मलोकप्राप्तेरुक्तत्वात् तथात्वम्।

**ब्रह्मराक्षस** पु० ब्र(ब्र)ह्मा विप्रोऽपि कुकर्मभिः राक्षसः। कुकर्मणा विप्रयोनितो राक्षसरूपतां प्राप्ते भूतभेदे "संयोगं पतितैर्गत्वा परस्य योषितं तथा। अपहृत्य च विप्रस्वं भवति ब्रह्मराक्षसः" इति मनुः। पतितप्रतिग्रहेऽपि तद्योनिप्राप्तिः भा० आनु० ११अ० दर्शिता। तच्च वाक्यं अधर्मशब्दे १२१ पृ० दर्शितं तच्च न हरिवंशवाक्यं किन्तु अनुशासनपर्वीयमिति बोध्यम्। पारिभाषिकब्रह्मराक्षसा यथा "मूर्खः स्त्री कम्पश्चैव वाग्मी बधिर एव च। स्फीतार्थं न सृजन्ति ये ते ब्रह्मराक्षसाः" व्यवहारप्रदीपः। २शिवानुचरभेदे भाग० १०।६३अ०।

**ब्र(ब्र)ह्मरात** न० ब्रह्म तज्ज्ञानं रातं यस्मै। शुकदेवे "ब्रह्मरातो भृशं प्रीतो विष्णुरातेन संसदि" भाग०१।८।२७। २याज्ञवल्क्ये मुनौ हेमच० ब्रह्मरातिरिति वा पाठः। तेन हि जनकाय ब्रह्मविद्यादानात् तथात्वम् बृहदारण्यकोपनिषदि तत्कथा द्रष्टव्या।

**ब्र(ब्र)ह्मरात्र** पु० रात्रेरयम् अच् ६त०। ब्रह्मस्वामिके रात्रिशेषभागे मुहूर्ते "उपावृत्ते ब्रह्मरात्रे" भा० १०।२३।२८। व्याख्यायां श्रीधरः।

**ब्र(ब्र)ह्मरीति** ब्रह्मवर्णा रीतिः। पित्तलभेदे हेमच०।

**ब्र(ब्र)ह्मर्षि** पु० ब्र(ब्र)ह्मा विप्रः चासौ ऋषिश्चेति वा ऋषिः वेदस्य वा ऋषिः ऋत्विक्। ब्रह्मतुल्येषु वसिष्ठादिषु १वेदज्ञेषु २ऋषिषु हेमच०।

**ब्र(ब्र)ह्मर्षिदेश** ६त०। "कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाः शूरसेनकाः। एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरम्" मनूक्ते कुरुक्षेत्रादिदेशचतुष्टये। [ब्रह्मन्शब्दे द्रष्टव्यम्।

**ब्र(ब्र)ह्मलक्षण** न० ६त०। ब्रह्मणः स्वरूपतटस्थलक्षणे

**ब्र(ब्र)ह्मलोक** पु० ६त०। १ब्रह्माधिष्ठाने भुवने सत्यलोके "सत्यन्तु सप्तमो लोको ह्यपुनर्भववासिनाम्

ब्रह्मलोकः समाख्यातो ह्यप्रतीघातलक्षणः” देवीपु०। “षड्गुणेन तपोलोकात् सत्यलोको विराजते। अपुनर्मारका यत्र ब्रह्मलोको हि स स्मृतः”। ब्रह्मैव लोकः। २तुरीयब्रह्मस्वरूपे च ब्रह्मानन्दशब्दे दृश्यम्।

ब्र(ब)ह्मवर्चस न० ब्रह्मणा वेदाध्ययनेन वर्चः अच् समा०। वेदाध्ययनजनिते तेजसि “तपःस्वाध्यायजं यच्च तेजस्तु ब्रह्मवर्चसम्” जटा०। “ब्रह्मवर्चसकामः स्तुवीत” ताण्ड्य० ब्रा०२।५।२ “ब्रह्मवर्चसकामस्य कुर्य्यात् विप्रस्य पञ्चमे” मनुः तदस्यास्ति इनि। ब्रह्मवर्चसिन् तद्युते त्रि० “ब्रह्मवर्चस्यन्नादो भवति” छा० उ०। “वृत्तस्वाध्यायजं तेजः ब्रह्मवर्चसम्” शाङ्करभाष्यम्।

ब्र(ब)ह्मवर्चस्विन् पु० ६त०। ब्रह्मवर्चसः समासान्तविधेरनित्यत्वात् न अच् समा० ततोऽस्त्यर्थे विनि। ब्रह्मवर्चसिनि। “ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसम्मताः” मनुः।

ब्र(ब)ह्मवर्त्त पु० ब्रह्मणो वर्त्तो वर्त्तनं यत्र। ब्रह्मावर्त्ते देशे शब्दर०। [ताम्रे हेमच०।

ब्र(ब)ह्मवर्द्धन न० ब्रह्म वेदो रूपमिव वर्द्धते वृध–ल्यु।

ब्र(ब)ह्मवाटीय पु० मुनिभेदे हरिवं० १४१।

ब्र(ब)ह्मवाद पु० ६त०। १वेदपाठे हारा०। २ब्रह्माधिकारेण तत्त्वनिर्णयार्थे वादे कथाभेदे च।

ब्र(ब)ह्मवादिन् पु० ब्रह्म वेदं वदति पठति वद–णिनि। १वेदपाठके। ब्रह्म एव चैतन्यं सर्वात्मकतया वदति वद–णिनि। २वेदान्तप्रतिपाद्यसर्वात्मकब्रह्मनिर्णयार्थकथाभेदरूपवादयुते। “ब्रह्मवादिनो वदन्ति” छान्दो०। ३गुरुचैतन्यं वदति बोधयति। ४ब्रह्मबोधके शास्त्रे जटा०। ५गायत्र्यां स्त्री ङीप्। सा च निर्गुणब्रह्मप्रतिपादिकेति तस्यास्तथात्वम्। “आयाहि वरदे! देवि! त्र्यक्षरे! ब्रह्मवादिनि!” गायत्र्यावाहनमन्त्रः।

ब्र(ब)ह्मवालुक न० तीर्थभेदे भा० व० ८२अ०।

ब्रह्मवास पु० ६त०। ब्रह्मलोके हरिवं० २१९ अ०।

ब्रह्मवाहस् त्रि० ब्रह्मणा मन्त्ररूपवेदेन उह्यते वह–कर्मणि वा० असिच् चित्। मन्त्रैः प्राप्यमाणे ऋ०१।१०१।८।

ब्र(ब)ह्मविद् ब्रह्मस्वरूपतया वेत्ति आत्मानम् विद–क्विप्। ब्रह्मात्मैक्यवेत्तरि “ब्रह्मविद् ब्रह्म भवति” श्रुतिः। २विष्णौ पु० “ब्रह्मविद् ब्राह्मणो ब्रह्मी” विष्णुस०। वेदं वेदार्थं यथावत् वेत्तीति ब्रह्मविद्” भा०। ३वेदार्थज्ञातरि त्रि०। [ऽभेदेन ज्ञाने।

ब्र(ब)ह्मविद्या स्त्री ६त०। सच्चैतन्यात्मकस्य ब्रह्मण आत्मा-

ब्र(ब)ह्मविवर्द्धन पु० ६त०। १तपोवर्द्धके विष्णौ “सत्त्वं ब्रह्मविवर्द्धनम्” विष्णुस०। वृध–णिच् भावे ल्युट्। २तपआदीनां विशेषेण वर्द्धने न०।

ब्र(ब)ह्मवृक्ष पु०। पलाशवृक्षे हलायुधः। “ब्रह्म वै पलाशः” शत०ब्रा०१२।८।४।१ तपःसाधने २उडुम्बरवृक्षे रत्नमाला।

ब्र(ब)ह्मवृत्ति स्त्री ६त०। १ब्राह्मणस्य जीवनोपाये “स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत्तु यः। षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः” भाग०। २ब्रह्माकारान्तःकरणवृत्तौ च। [वेदान्ते च।

ब्र(ब)ह्मवेद पु० ६त०। १ब्रह्मज्ञाने २ब्रह्मप्रतिपादके वेदभागे

ब्र(ब)ह्मवेदि स्त्री ब्रह्मणो वेदिरिव। “ब्रह्मवेदिः कुरुक्षेत्रे पञ्चरामह्रदान्तरम्” इत्युक्ते देशे हेमच०।

ब्र(ब)ह्मवेदिन् त्रि० ब्रह्म वेत्ति आत्माभेदेन विद–णिनि। ब्रह्मात्मैक्याभिज्ञे “ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः। कृतबुद्धिषु कर्त्तारः कर्त्तृषु ब्रह्मवेदिनः” मनुः।

ब्रह्मवैवर्त्त न० अष्टादशमहापुराणमध्ये अष्टादशसहस्रसंख्यके १महापुराणभेदे तत्प्रतिपाद्यविषयादिकं बृहन्नारदीये ४ पादे १०१अ० उक्तं यथा

“ब्रह्मा उवाच। शृणु वत्स! प्रवक्ष्यामि पुराणं दशमं तव। ब्रह्मवैवर्त्तकं नाम वेदमार्गानुदर्शकम्। सावर्णिर्यत्र भगवान् साक्षाद्देवर्षयेऽर्थितः। नारदाय पुराणार्थं प्राह सर्वमलौकिकम्। धर्मार्थकाममोक्षाणां सारः प्रीतिर्हरौ हरे। तयोरभेदसिद्ध्यर्थं ब्रह्मवैवर्त्तमुत्तमम्। रथन्तरस्य कल्पस्य वृत्तान्तं यत्रयोदितम्। शतकोटिपुराणं तत् संक्षिप्य प्राह वेदवित्। व्यासश्चतुर्धा संव्यस्य ब्रह्मवैवर्त्तसंज्ञितम्। अष्टादशसहस्रन्तु पुराणं परिकीर्त्तितम्। ब्रह्म१प्रकृति२विघ्नेश३कृष्णखण्ड४समाचितम्। तत्र सूतर्षिसंवादः पुराणोपक्रमो मतः”। तत्र प्रथमे ब्रह्मखण्डे। “सृष्टिप्रकरणं त्वाद्यं ततो नारदवेधसोः। विवादः सुमहान् यत्र द्वयोरासीत् पराभवः। शिवलोकगतिः पश्चाद्ज्ञानलाभः शिवान्मुनेः। शिववाक्येन तत् पश्चात् मरीचेर्नारदस्य। तु गमनञ्चैव सावर्णिस्थानार्थं सिद्धसेविते। आश्रमे सुमहापुण्ये त्रैलोक्याश्चर्यकारिणि। एतद्धि ब्रह्मखण्डं हि श्रुतं पापविनाशनम्”। द्वितीये प्रकृतिखण्डे “ततः सावर्णिसंवादो नारदस्य समीरितः। कृष्णमाहात्म्यसंयुक्तो नानाख्यानकथोत्तरः। प्रकृतेरंशभूतानां कलानाञ्चापि

भवति" भा०। तत्र साम अङ्गाने। ६प्र०१४क०दर्शितम्।

**ब्र(ब्र)ह्मसायुज्य** न० सह युनक्ति युज–क्विप् तस्य भावः सायुज्यं ६त०। ब्र(ब्र)ह्मभावे।

**ब्र(ब्र)ह्मसार्ष्टिता** स्त्री ६त०। ब्रह्मतुल्यगतित्वे मनुः ४।२३२।

**ब्र(ब्र)ह्मसावर्णि** पु० दशमे मनुभेदे "दशमो ब्रह्मसावर्णिरुपश्लोकसुतो महान्। तत्सुता भूरिषेनाद्या हविष्मत्प्रमुखा द्विजाः। हविष्मान् सुकृतः सत्यो जयो मूर्त्तिस्तदा द्विजाः। सुवासनविरुद्धाद्या देवाः शम्भुः सुरेश्वरः। विष्वक्सेनो विषुच्यान्तु शम्भोः सख्यं करिष्यति। जातः स्वांशेन भगवान् गृहे विश्वसृजो प्रभुः" भाग० ८।१३।१०

[वसिष्ठादौ च।

**ब्र(ब्र)ह्मसम्भव** पु०६त०। १जैनभेदे हेम० २ब्रह्मणो जाते

**ब्र(ब्र)ह्मसिद्धान्त** ६त०। पैतामहे ज्योतिषसिद्धान्तभेदे "पौलिशरोम(रोम)क वासिष्ठसौरपैतामहेषु पञ्चस्वेतेषु सिद्धान्तेषु" ह०क०१अ०। [दयाम् । २मरीच्यादौ च

**ब्र(ब्र)ह्मसुत** पु० ६त०। १केतुभेदे ह०स० ११ अ० केतुशब्दे

**ब्र(ब्र)ह्मसुवर्चला** स्त्री ओषधिभेदे तत्स्थानलक्षणादिकमुक्तं सुश्रुते "देवसुन्दे सुदवरे तथा विन्ध्यो महानदे। दृश्यते च जलान्तेषु मध्ये ब्रह्मसुवर्चला"। "कनकाभा जलान्तेषु सर्वतः परिसर्पति। सक्षीरा पद्मिनीप्रख्या देवी ब्रह्मसुवर्चला"। तत्क्वथिते २जले च "पिबेत् ब्रह्मसुवर्चलाम्" मनुः।

**ब्र(ब्र)ह्मसू** पु० ब्रह्माणं सूतवान् सू–क्विप्। चतुर्व्यूहात्मकस्य विष्णोर्मूर्त्तिभेदे अनिरुद्धे तस्यावतारभेदे २प्रद्युम्ने च अमरः। "अनिरुद्धात्ततो ब्रह्मा तन्नाभिकमलोद्भवः" ब्रह्मपु०। ब्रह्माणि तपांसि सुवति प्रेरयति सू–प्रेरणे क्विप्। तपःप्रवर्त्तके ३कामे च कामेनैव सर्वं तपस्सु प्रेरणात्तस्य तथात्वम्। तदभिमानिदेवे ४कन्दर्पे च अमरः।

**ब्र(ब्र)ह्मसूत्र** न० ब्रह्माणि वेदपठनकाले धृतं सूत्रम्। १यज्ञोपवीते त्रिका०। २ब्रह्मप्रतिपादके शारीरकसूत्रे च। "ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितम्" गीता।

**ब्र(ब्र)ह्मसूनु** पु० ६त०। द्वादशचक्रवर्तिमध्ये १राजभेदे ब्रह्मदत्ते हेमच० २वसिष्ठादौ च।

**ब्र(ब्र)ह्मस्तेय** ६त०। स्वार्थमधीयानात् ततोऽननुज्ञामप्राप्य तदाकामयर्वेन वेदाध्ययने। "ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात्। स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपद्यते" मनुः

**ब्र(ब्र)ह्मस्थान** न० ६त०। तीर्थभेदे भा० व० ८३ अ०।

**ब्र(ब्र)ह्मस्व** ६त०। ब्रह्मस्वामिके धने। "ब्रह्मस्वं वा गुरुस्वं वा देवस्वं वापि यो हरेत्। स कृतघ्न इति ज्ञेयो महापापी च भारत!। वटवृक्षे वसेत् सोऽपि यावदिन्द्रा शतं शतम्। ततो भवेत् सुरापीति ततः शूद्रस्ततः शुचिः"। ब्रह्मवै० प्रक० ४८अ०।

**ब्र(ब्र)ह्महत्या** स्त्री० हन–क्यप् ६त०। विप्रहनने। तस्य महापातकत्वमुक्तं मनुना "ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्याहुः संसर्गश्चापि तैः सह" तदधिष्ठात्रुरूपमुक्तं ब्रह्मवै० पु० जन्म० ४७ अ० यथा "रक्तवस्त्रपरीधाना वृद्धा स्त्रीवेषधारिणी। अमृताशाम्बराधा या शुष्ककण्ठौष्ठतालुका। दैवात्प्रमादवशगा महाभीतस्य कातरम्। धावन्तं परिधावन्ती वलिष्ठाहृतचेतनम्। खड्गहस्ता हन्तास्यं तं दयाहीना च मूर्च्छितम्। इन्द्रो दृष्ट्वा च तां घोरां स्मारं स्मारं गुरोः पदम्। विवेश मानससरो मृणालसूत्राश्रितः। तत्र गन्तुं न शक्ता सा ब्रह्मणः शापकारणात्"। इन्द्रा सुरवधनिमित्तब्रह्महत्यापनोदनार्थं शक्रोऽश्वमेधकृते तस्या विभज्य स्थानविशेषे संक्रामणकथा भा० उ० प० १२अ० यथा "तत्राश्वमेधः सुमहान् महेन्द्रस्य महात्मनः। वहते पावनार्थं वै ब्रह्महत्यापहो नृप!। विभज्य ब्रह्महत्यां तु वृक्षेषु च नदीषु च। पर्वतेषु पृथिव्याञ्च स्त्रीषु चैव युधिष्ठिरः!" आतिदेशिकब्रह्महत्याः कतिचित् ब्रह्मवै०प्रक०२७अ० उक्ता यथा

"गोकृष्ये च तदर्थायां जलार्थां प्रकृतौ तथा। विप्रे च विष्णुलिङ्गे वा स्वयं स्वयं तनौ तथा। अन्येषां वा तदर्थायामेवं सर्वत्र सुन्दरि!। यः करोति भेदबुद्धिं ब्रह्महत्यां लभेत् तु सः। स्वगुरौ स्वेष्टदेवेषु जन्मदातरि मातरि। करोति भेदबुद्धिं यो ब्रह्महत्यां लभेत् तु सः। वैष्णवेष्वन्यभक्तेषु ब्राह्मणेष्वितरेषु च। करोति समतां यो हि ब्रह्महत्यां लभेत् तु सः। हरेः पादोदकेष्वन्यदेवपादोदके तथा। करोति समतां यो हि ब्रह्महत्यां लभेत् तु सः। विष्णौ विष्णुनैवेद्ये चान्यनैवेद्यके तथा। करोति समतां यो हि ब्रह्महत्यां लभेत् तु सः। सर्वेश्वरेश्वरे कृष्णे सर्वकारणकारणे। सर्वाद्ये सर्वदेवानां सेव्ये सर्वान्तरात्मनि। मायया नेकरूपे चाप्येकस्मिन् हि निर्गुणे। करोत्यनेन समतां ब्रह्महत्यां लभेत् तु सः। पितृदेवार्चनं पौर्वापर्ये वेदविनिर्मितम्। यः करोति तन्निषेधं ब्रह्महत्यां स विन्दति। ये निन्दन्ति हृषीकेशं तन्मन्त्रोपासकं तथा।

पवित्रायां पवित्रस्य ब्रह्महत्यां लभन्ति ते । ये निन्दन्ति विष्णुमायां विष्णुभक्तिप्रदां सतीम् । सर्वशक्तिस्वरूपाञ्च प्रकृतिं सर्वमातरम् । सर्वदेवस्वरूपाञ्च सर्वाद्यां सर्ववन्दिताम् । सर्वकारणरूपाञ्च ब्रह्महत्यां लभन्ति ते । कृष्णजन्माष्टमीं रामनवमीं पुण्यदां पराम् । शिवरात्रिं तथा चैकादशीं वारं रवेस्तथा । पञ्च पर्वाणि पुण्यानि ये न कुर्वन्ति मानवाः । लभन्ते ब्रह्महत्यां ते चाण्डालाधिकपापिनः । अम्बुवाच्यां भूखननं जले शौचादिकञ्च ये । कुर्वन्ति भारते वर्षे ब्रह्महत्यां लभन्ति ते । गुरुञ्च मातरं तातं साध्वीं भार्य्यां सुतं सुताम् । अनाथां यो न पुष्णाति ब्रह्महत्यां लभेत् तु सः । विवाहो यस्य न भवेत् न पश्यति सुतन्तु यः । हरिभक्तिविहीनो यो ब्रह्महत्यां लभेत् तु सः । हरेरनैवेद्यभोजी नित्यं विष्णुं न पूजयेत् । पुण्यं पार्थिवलिङ्गं वा ब्रह्महत्यां लभेत् तु सः" । आतिदेशिक्याश्चास्या विनाशनं हरिस्मरणगङ्गास्नानादि ।

**ब्र(व्र)ह्महत्यासम** न० "अनृतञ्च समुत्कर्षे राजगामि च पैशुनम् । गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया" मनूक्ते अनुपातकभेदरूपे मिथ्याभेदकथनादौ ।

**ब्र(व्र)ह्महन्** त्रि० ब्र(व्र)ह्माणं हतवान् हन-क्विप् । १विप्रहत्याकारिणि । "ब्र(व्र)ह्महा न भवत्यन्यो ब्र(व्र)ह्महा वृषलीपतिः । यस्तस्यामाहितो गर्भः स तेन ब्रा(व्रा)ह्मणो हतः" इत्युक्ते २वृषलीतौ च । "कुतोऽयतनजिह्वास्तु जीवोत्तिष्ठाङ्गुलिध्वनिः । गुरोरपि च कर्त्तव्यमन्यथा ब्रह्महा भवेत्" ३इत्यादिस्मृत्युक्तातिदेशिकब्र(व्र)ह्महत्यापापयुक्ते च । तत्प्रायश्चित्तं मनुनोक्तं यथा

"ब्रह्महा द्वादश समाः कुटीं कृत्वा वने वसेत् । भैक्ष्याश्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम्१ । लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः२ । प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः३ । यजेत वाश्वमेधेन४ स्वर्जिता५ गोसवेन वा६ । अभिजिद्विश्वजिद्भ्यां७। ८वा त्रिवृताग्निष्टुतापि९ वा । जपन् वान्यतमं१०। वेदं योजनानां शतं व्रजेत्११। ब्रह्महत्यापनोदाय मितभुङ् नियतेन्द्रियः । सर्वस्वं वेदविदुषे ब्राह्मणायोपपादयेत्१२ । धनं वा जीवनायालं गृहं वा सपरिच्छदम्१३ । हविष्यभुग् वाऽनुसरेत् प्रतिस्रोतः सरस्वतीम्१४ । जपेद्वा नियताहारस्त्रिर्वै वेदस्य संहिताम्१५ । कृतवापनो निवसेद् ग्रामान्ते गोव्रजेऽपि वा । आश्रमे वृक्षमूले वा गोब्राह्मणहिते रतः । ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान् परित्यजन्१६ । मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च । त्र्यवरं प्रतिरोद्धा वा१७ सर्वस्वमवजित्य वा । विप्रस्य तन्निमित्ते वा प्राणालाभे विमुच्यते" ।

**ब्र(व्र)ह्माङ्गभू** पु० ब्रह्मणोऽङ्गात् भवति भू-क्विप् । घोटके हारा० । ब्रह्मात्मभूशब्दे दृश्यम् ।

**ब्र(व्र)ह्माञ्जलि** पु० ब्र(व्र)ह्मणे वेदपाठाय अञ्जलिः गुरौ कृतो विनयाञ्जलिः, स्वरविशेषज्ञापनार्थं वा कृतोऽञ्जलिः संकुचितपाणिः । वेदपाठार्थं गुरुनिकटे कार्य्ये १विनयाञ्जलौ स्वरविशेषार्थज्ञापनाय कृतसङ्कोचे २पाणिद्वये च अमरः ।

**ब्र(व्र)ह्माणी** पु० ब्र(व्र)ह्माणम् आनयति जीवयति अन-णिच्-अण् पूर्व०णत्वम् । ब्रह्मशक्तौ "हंसयुक्ते विमानस्था साक्षसूत्रकमण्डलुः । आयाता ब्रह्मणः शक्तिः ब्रह्माणी साऽभिधीयते" इति देवीमा० । "ब्रह्माणी ब्रह्मजननात्" देवीपु० । ब्रह्मशब्दात् ङीष् आनुक् चेति त्वपाणिनीयम् । २रेणुकानामगन्धद्रव्ये रत्नमा० । ३राजरीतौ राजनि० । ४ब्रह्मणोऽर्द्धशरीरादुत्पन्नायां शतरूपायाम् । "ततः संजपतस्तस्य भित्त्वा देहमकल्मषम् । स्त्रीरूपमर्द्धमकरोदर्द्धं पुरुषरूपवत् । शतरूपा च सा ख्याता सावित्री च निगद्यते । सरस्वत्यथ गायत्री ब्रह्माणीत्युच्यते च सा" मत्स्यपु० ३अ० ।

**ब्र(व्र)ह्माण्ड** न० ६त० । "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः" इति मनूक्ते ब्रह्मण उत्पादके अण्डाकारे १भुवनकोषे "ब्रह्माण्डभाण्डोदरभ्राम्यत्पिण्डितचण्डिमेति" वीरचरितम् ।

ब्रह्माण्डसंस्था सू०सि० दर्शिता यथा

"वासुदेवः परं ब्रह्म तन्मूर्त्तिः पुरुषः परः । अव्यक्तो निर्गुणः शान्तः पञ्चविंशात् परोऽव्ययः । प्रकृत्यन्तर्गतो देवो बहिरन्तश्च सर्वगः । सङ्कर्षणोऽपः सृष्ट्वादौ तासु वीजमवासृजत् । तदण्डमभवद्धैमं सर्वत्र तमसावृतम् । तत्रानिरुद्धः प्रथमं व्यक्तीभूतः सनातनः । हिरण्यगर्भो भगवानेष छन्दसि पठ्यते । आदित्यो ह्यादिभूतत्वात् प्रसूत्या सूर्य उच्यते । परं ज्योतिस्तमःपारे सूर्योऽयं सवितेति च । पर्येति भुवनान्येष भावयन् भूतभावनः" इत्युपक्रमे "गुणकर्मविभागेन सृष्ट्वा प्राग्वदनुक्रमात् । विभागं कल्पयामास यथास्वं वेददर्शनात् । ग्रहनक्षत्रताराणां भूमेर्विश्वस्य वा विभुः । देवा-

सुरमनुष्याणां सिद्धानां च यथाक्रमम्। ब्रह्माण्डमेतत् सुषिरं तत्रेदं भूर्भुवादिकम्। कटाहद्वितयस्यैव सम्पुटं गोलकाकृति(१)। ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाऽभिधीयते। तन्मध्ये भ्रमणं भानामधोऽधः क्रमशस्तथा। मन्दामरेज्यभूपुत्रसूर्य्यशुक्रेन्दुजेन्दवः। परिभ्रमन्त्यधोऽधस्थाः सिद्धविद्याधरा घनाः। उपरिष्टात् स्थितास्तस्य सेन्द्रा देवा महर्षयः। अधस्तादसुरास्तद्वत् द्विषन्तोऽन्योन्यमाश्रिताः। ततः समन्तात् परिधिः क्रमेणायं महार्णवः। मेखलेव स्थितो धात्र्या देवासुरविभागकृत्। समन्तान्मेरुमध्यात् तु तुल्यभागेषु तोयधेः। द्वीपेषु दिक्षु पूर्वादिनगर्य्यो देवनिर्मिताः। भूवृत्तपादे पूर्वस्यां यमकोटीति विश्रुता। भद्राश्ववर्षे नगरी स्वर्णप्राकारतोरणा। याम्यायां भारते वर्षे लङ्का तद्वन्महापुरी। पश्चिमे केतुमालाख्ये रोमकाख्या प्रकीर्त्तिता। उदक् सिद्धपुरी नाम कुरुवर्षे प्रकीर्त्तिता। तस्यां सिद्धा महात्मानो निवसन्ति गतव्यथाः” सू० सि०।

(१)“एतत् प्रागुक्तं ब्रह्मणाधिष्ठितं सुवर्णाण्डं सुषिरमवकाशात्मकं तत्रावकाशे इदं जगत् भूर्भुवादिकं भूर्भुवःस्वर्गात्मकमवस्थितं न बहिः। नन्वण्डस्य गोलाकारत्वेनान्तरवकाशात्मकत्वमसम्भवतीत्यत आह कटाहद्वितयस्येति। कटाहोऽर्द्धगोलाकारं सावकाशं पात्रं तस्य द्वितयं द्वयं समं तस्य। एवकारो न्यूनाधिकव्यवच्छेदकार्थः। सम्पुटमाभिमुख्येन मिलितं गोलकाकृतिर्गोलाकारः स्यात्। तथाच न क्षतिः” रङ्गना०।

“भूभूधरत्रिदशदानवमानवाद्या येऽथाश्च धिष्ण्यगगनेचरचक्रकक्षाः। लोकव्यवस्थितिरधश्चोपरि प्रदिष्टा ब्रह्माण्डभाण्डजठरे तदिदं समस्तम्” सि० शि०। इदानीम् मन्योदितं ब्रह्माण्डमानं पूर्वं कथितमपि प्रसङ्गादनुवदति स्म” प्रमिता०। “कोटिघ्नैर्नखनन्दषट्कनखभूभृद्भुजङ्गेन्दुभिः १८७१२०६९२०००००००० ज्योतिःशास्त्रविदो वदन्ति नभसः कक्षामिमां योजनैः। तद्ब्रह्माण्डकटाहसंपुटतटे केचिज्जगुर्वेष्टनं केचित् प्रोचुरदृश्यदृश्यकगिरिं पौराणिकाः सूरयः। करतलकलितामलकवदमलं सकलं विदन्ति ये गोलम्। दिनकरकरनिकरनिहततमसो नभसः स परिधिरुदितस्तैः। ब्रह्माण्डमेतन्मितमस्तु नो वा कल्पे ग्रहः क्रामति योजनानि। यावन्ति पूर्वैरिह तत्प्रमाणं प्रोक्तं खकक्षाख्यमिदं मतं नः”। प्रमाणशून्यत्वात् प्रयोजनाभावाच्चाचार्य्यैर्ब्रह्माण्डमानं न कथितमित्यर्थः प्रमि०।

दानार्थकल्पिते महादानान्तर्गते ब्रह्माण्डात्मकस्वर्णादिघटिते २ पदार्थे तत्स्वरूपादि हेमा० दा० ख० मत्स्यपु० उक्तं यथा “अथातः संप्रवक्ष्यामि ब्रह्माण्डं विधिपूर्वकम्। यच्छ्रेष्ठं सर्वभूतानां महापातकनाशनम्। पुण्यं दिनमथासाद्य तुलापुरुषदानवत्। ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम्। लोकेशावाहनं तद्वदधिवासनकं तथा” तुलापुरुषदानवदिति, कालदेशर्त्विगाचार्य्यवादिपूजाब्राह्मणवाचनगुरुऋत्विग्वरणमधुपर्कदानकुण्डमण्डपवेदिकासम्भारलोकेशावाहनाधिवासनादि सर्वं मत्स्यपुराणोक्ततुलापुरुषदानविहितं वेदितव्यमित्यर्थः। “कुर्य्याद्विंशत्पलादूर्द्ध्वमासहस्राच्च शक्तितः। शकलद्वयसंयुक्तं ब्रह्माण्डं काञ्चनं बुधः”। शकलद्वयं, खण्डद्वयम्। तल्लक्षणन्तु ब्रह्माण्डपुराणे “कुम्भच्छाया भवेद्यादृक् प्रतीच्यां दिशि चन्द्रमाः। उदितः शुक्लपक्षादौ वपुरण्डस्य तादृशमिति” कुम्भच्छाया इति, कुम्भच्छाया पीयाहीनकुम्भादिजेत्यवधेयम्। “दिग्गजाष्टकसंयुक्तं षड्वेदाङ्गसमन्वितम्। लोकपालाष्टकोपेतं मध्यस्थितचतुर्मुखम्। शिवाच्युतार्कशिखरमुमालक्ष्मीसमन्वितम्। वस्वादित्यमरुद्गर्भं महारत्नसमन्वितम्”। अथैतेषां दिग्गजप्रभृतीनां क्रमेण लक्षणान्युच्यन्ते आदित्यपुराणे “शुभ्राभश्च चतुर्दंष्ट्रः श्रीमानैरावतो गजः। पुष्पदन्तो हरिद्वर्णः षड्दन्तः पुष्पदन्तवान्। सामान्यगजरूपेण शेषा दिक्करिणः स्मृताः”। तन्नामानि शास्त्रान्तरे “ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः। पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः”। वेदाङ्गानि स्कन्दपुराणे “शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषास्थिति। छन्दश्चेति षडेतानि वेदाङ्गानि प्रचक्षते। मूर्त्तानि ब्रह्मणो लोके शाश्वतानि तानि तु। द्विजाक्षिभिः शुभाङ्गानि वामे दधति कुण्डिकाम्”। तानि च पश्चिमदिशि वेदसन्निधौ निवेशनीयानि. दिग्विशेषानाम्नानात् प्रधानं नीयमानं हि तदङ्गान्यपकर्षतीति न्यायात्, वक्ष्यते च, “पश्चिमे चतुरो वेदानिति”। लोकपालरूपाण्याह विश्वकर्मा “चतुर्दन्तो गजारूढो वज्रपाणिः पुरन्दरः। प्राचीपतिः प्रकर्त्तव्यो नानाभरणभूषितः। पिङ्गश्मश्रुकेशाक्षः पीनाङ्गजठरोऽरुणः। छागस्थः साक्षसूत्रश्च सप्तार्चिः शक्तिधारकः। दंष्ट्रपीनो यमः कार्य्यो दण्डहस्तो विभाननः। रक्तदृक् पाशभृक् क्रुद्धो निर्ऋतिर्विकृताननः। पुंस्थितः

षड्गहस्तश्च भूतवान् राक्षसावृतः। वरुणः पाशभृत् सौम्यः प्रतीच्यां मकराश्रयः। धावद्धरिणपृष्ठस्थो ध्वजधारी समीरणः। दशाश्वरथगः सोमो गदापाणिर्वरप्रदः"। "शशकवाहनः" इत्यागमान्तरम्। "पूर्वोत्तरे त्रिनेत्रश्च वृषभस्थस्त्रिशूलधृक्। कपालपाणिश्चन्द्रार्द्धभूषणः परमेश्वरः"। चतुर्मुखरूपन्तु विष्णुधर्मोत्तरात् "पद्मपत्रासनस्थश्च ब्रह्मा कार्य्यश्चतुर्मुखः। अक्षमालाञ्च बिभ्रत् पुस्तकञ्च कमण्डलुम्। वामः कृष्णाजिनं तस्य पार्श्वे हंसस्तथैव च"। शिवलक्षणमुक्तं वायुपुराणे "पञ्चवक्त्रो वृषारूढः प्रतिवक्त्रं त्रिलोचनः। कपालशूलखट्वाङ्गी चन्द्रमौलिः सदाशिवः"। विष्णुलक्षणमुक्तं तुलापुरुषदाने। सूर्य्यलक्षणमुक्तं विष्णुधर्मोत्तरे "रविः कार्य्यः शुभश्मश्रुः सिन्दूरारुणसुप्रभः। पद्मासनः पद्मकरो भूषितो रशनाधरः"। उमालक्ष्मीसमन्वितमित्यत्र, शिवाच्युतयोः सन्निहिते उमालक्ष्म्यौ विधेये। उमालक्षणमुक्तं देवीपुराणे "गौरीं मृगेन्दुवर्णाभां सर्वदोषनिषेविताम्। हस्तपद्मासनासीनां साक्षसूत्रकमण्डलुम्। वरदोद्यतहस्ताढ्यां सर्वमाल्यफलप्रियाम्"। वरदोद्यतहस्ताढ्यां, वरदाभयपाणिकामित्यर्थः। लक्ष्मीलक्षणमुक्तं पञ्चरात्रे "पद्मासनस्थां कुर्वीत श्रियं त्रैलोक्यमातरम्। गौरवर्णां सुरूपाञ्च सर्वालङ्कारभूषिताम्। रौक्मपद्मकरव्यग्रां वरदां दक्षिणेन तु"। वस्वादित्यरूपाणि, नारदीये, "प्रसन्नवदनाः सौम्या वरदाः शक्तिपाणयः। पद्मासनस्था द्विभुजाः कर्त्तव्या वसवः सदा। पद्मासनस्था द्विभुजाः पद्मगर्भान्तकान्तयः। कराद्विन्यस्तपर्य्यन्तनालपङ्कजधारिणः। अधःसंस्थितमेषादिराशयः प्राप्तताङ्किकाः। इन्द्राद्या द्वादशादित्यास्तेजोमण्डलमध्यगाः" तथा। "वायुतुल्येन रूपेण मरुतो नाम देवताः"। कर्त्तव्या इति शेषः, वस्वादिनामानि, तुलापुरुषोक्तानि वेदितव्यानि। महारत्नसमन्वितमिति, महारत्नानि परिभाषायामुक्तानि, अनन्तमिथुनान्वितमिति क्वचित्पाठः। "कलासम्प्रान्वितोऽनन्तः पृथ्वी स्त्रीरूपधारिणीत्यनन्तमिथुनम्। अथ प्रकृतमुच्यते "वितस्तेरङ्गुलशतं यावदायामविस्तरम्। कौशेयवस्त्रसंवीतं तिलद्रोणोपरि न्यसेत्। तथाष्टादश धान्यानि समन्तात् परिकल्पयेत्"। वितस्तेरङ्गुलशतमिति, द्वादशाङ्गुलमारभ्याङ्गुलशतं यावत्क्रमानुसारेण कार्य्यमित्यर्थः। द्रोणमानमष्टादश धान्यानि च परिभाषायां द्रष्टव्यानि। स च तिलद्रोणो वेदिकायां लिखितचक्रस्योपरि स्थापनीयः। "पूर्वेऽनन्तशयनं प्रद्युम्नं पूर्वदक्षिणे। प्रकृतिं दक्षिणे देशे संकर्षणमतः परम्। पश्चिमे चतुरो वेदानिरुद्धमतः परम्। अग्निमुत्तरतो हैमं वासुदेवमतः परम्। समन्तात् पूजयेत् पीठस्थानर्चयेत् काञ्चनान् बुधः। स्थापयेद्वस्त्रसंवीतान् पूर्णकुम्भान् दशैव तु"। पूर्वेणेत्यादि, ब्रह्माण्डात् पूर्वदेशे अनन्तशयनं शेषशायिनं गुण(सत्त्वादि)पीठे स्थापयेत्, तन्मूर्त्तिलक्षणं विष्णुधर्मोत्तरात् "देवदेवश्च कर्त्तव्यः शेषसुप्तश्चतुर्भुजः। एकपादोऽस्य कर्त्तव्यो लक्ष्म्युत्सङ्गगतः प्रभोः। तथाऽपरश्च कर्त्तव्यः शेषभोगाङ्कसंस्थितः। एको भुजोऽस्य कर्त्तव्यस्तत्र जानौ प्रसारितः। कर्त्तव्यो नाभिदेशस्थस्तथा तस्यापरः करः। तथैवान्यः करः कार्य्यो देवस्य तु शिरोधरः। सन्तानमञ्जरीधारी तथा चास्य करः परः। नाभिसम्भूतकमले सुखासीनः पितामहः। नाललग्नौ तु कर्त्तव्यौ पद्मस्थौ मधुकैटभौ। शङ्खचक्रगदादीनि मूर्त्तानि परितो न्यसेदिति"। प्रद्युम्नलक्षणं पञ्चरात्रादिषु "दक्षिणोर्द्धकरे पद्मं दद्याच्छङ्खमधः करे। चक्रमूर्द्धे ततो वामे गदां दद्यात् तथा द्विज!। चापेषुभृत्वा प्रद्युम्नो रूपवान् विश्वमोहनः" इति। अत्र यद्यपि प्रकृतेरव्यक्तरूपतया विधानमशक्यं तथापि लक्ष्म्यादिशब्दव्यपदेश्यं सुकरमस्ति तद्रूपमित्यतस्तदन्यतमरूपनिर्माणमेव न्याय्यम्। तदुक्तं मार्कण्डेयपुराणे "सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी। मातुलुङ्गं गदां खेटं पानपात्रञ्च बिभ्रती। नागं योनिञ्च लिङ्गञ्च बिभ्रती नृप! मूर्द्धनीति"। संकर्षणरूपम् विष्णुधर्मोत्तरे "वासुदेवस्य रूपेण कार्य्यः संकर्षणः प्रभुः। स तु शुक्लवपुः कार्य्यो नीलवासा यदूत्तम!। गदास्थाने च मुषलं चक्रस्थाने च लाङ्गलमिति"। वेदमूर्त्तयो भूतघटे वक्ष्यन्ते। अनिरुद्धरूपं नारदीये। "कृष्णं चतुर्भुजं दक्षे शरं खड्गं तदुत्तरे। धनुःखेटधरं वीरमनिरुद्धं प्रचक्षते"। अग्निलक्षणमुक्तम्। वासुदेवरूपमपि नारदीये "वासुदेवः शिवः शान्तः सिताभश्च चतुर्भुजः। योगमूर्त्तिश्च शङ्खं च हृदि शायितहस्तकः। धारयेदुत्तरे चक्रं करे वै दक्षिणे गदामिति"। एते च देवताविशेषा, ब्रह्माण्डनिर्माणक्रमवशात् पृथक् सुवर्णेनैव घटनीयाः ब्रह्माण्डस्य किल विंशतिपलात्प्रभृति पलसहस्रावधिरिह नियमः, पुराणेषु दृश्यते ततोऽवशिष्ट-

माषकाञ्चने तस्मिन् न्यूनसंख्यत्वादयथावद्विहितत्वमापद्यते । न च दिग्गजाष्टकसंयुक्तं लोकपालोपेतमित्यादिना एक एव तावद्भिरङ्गैरङ्गी निष्पाद्यत इति ब्रह्माण्डस्वरूपप्रस्तवेनैव दिग्गजादिप्रतिमानिर्मितौ न कश्चिद्बाध इति वाच्यं, "काञ्चनान् कारयेदिति" पुनः काञ्चनोपदेशानार्थक्यापत्तेः । अत्र यमाषपरिमाणानां प्रतिमानामङ्गुष्ठपर्वप्रभृतिवितस्तिपर्य्यन्तं यथाशक्ति परिमाणं कल्पनीयम् । "पूर्णकुम्भान् स्थापयेदित्यत्र समन्तादिति बोध्यम् । "दशैव धेनवो देया सहेमाम्बरदोहनाः । पादुकोपानहच्छत्रचामरासनदर्पणैः । भक्ष्यभोज्यान्नदीपेक्षुफलमाल्यानुलेपनैः । होमाधिवासनान्ते च स्नापितो वेदपुङ्गवैः । इत्थमुच्चारयेन्मन्त्रं त्रिःकृत्वाथ प्रदक्षिणम्" । सहेमाम्बरदोहना इति, हेमशृङ्ग्यः ताम्रदोहनाः सवस्त्राः पार्श्वतो दक्षिणार्थमुपकल्पनीयाः । तत्राचार्य्याय द्वे, ऋत्विग्भ्योऽष्टौ संप्रदेया, जापकादीनां चान्यैव यथाशक्ति दक्षिणेति, । भविष्योत्तरे तु "श्रेयं निष्कशतं पार्श्वेत्यादिना सुवर्णमेव दक्षिणार्थमुपकल्पनीयमित्युक्तं, स्नानाधिवासनदिनादन्येद्युरग्निकुण्डेषु ऋत्विगुपवेशनादिकर्मशेषसमाप्तौ तुलापुरुषदानवद्विहितायां, पूर्ववदेव स्नापितः शुक्लमाल्याम्बरधरो गृहीतकुसुमाञ्जलिर्यजमानो ब्रह्माण्डं त्रिःप्रदक्षिणीकृत्य मन्त्रमुच्चारयेत् । मन्त्रः । "नमोऽस्तु विश्वेश्वर ! विश्वधामन् ! जगत्सवित्रे भगवन्नमस्ते । सप्ताधिलोकामरभूतलेन गर्भेण सार्द्धं वितराभिरक्षाम् । ये दुःखितास्ते सुखिनो भवन्तु प्रयान्तु पापानि चराचराणाम् । त्वद्दानशस्त्राहतपातकानां ब्रह्माण्डदोषाः प्रलयं व्रजन्तु । एवं प्रणम्यामरविश्वगर्भं दद्याद्द्विजेभ्यो दशधा विभज्य । भागद्वयं तत्र गुरोः प्रकल्प्य समं भजेच्छेषमतः क्रमेण" । दानवाक्यं तुलापुरुषवद्वेदितव्यं तच्च दशधा विभज्य गुरोर्भागद्वयं प्रकल्प्य चावशिष्टाष्टभागानामेकैकं भागं त्रिधा विभज्य चतुर्विंशतिसंख्येभ्य ऋत्विगादिभ्यः समं दद्यात्, तदनुज्ञयान्येभ्योऽपि ब्राह्मणेभ्यो दद्यात् । "स्वल्पं होमं गुरुरेक एव कुर्य्यादथैकाग्निविधानयुक्त्या । स एव संपूज्यतमोऽल्पवित्तैर्यथोक्तवस्त्राभरणादिकेन" । विंशतिपलादारभ्य पलसहस्रावधिकव्ये ब्रह्माण्डे सहस्रतदर्द्धादित्युत्तममध्यमादित्रैविध्यकल्पनायां कनीयोभागस्याल्पत्वमवधेयं, विंशतिपलनिर्मितस्यैवाल्पत्वमित्यन्ये उक्तविंशतिपलादर्वाक् यथाशक्तिविधाने स्वल्पत्वमवगन्तव्यमिति केचित् । एकाग्निविधानम् एकस्मिन्नेव कुण्डे होमकरणम् कुण्डमपि वह्निदिग्भागस्थितं वृत्ताकारञ्च कार्य्यं तदेतत्परिभाषायामुपपादितम् । अथ पुण्याहवाचने कृते देवतावेदीसमीपं गत्वा पूर्ववद्यजमानेन देवतापूजायां विहितायामाचार्य्यो विसर्जनं विदध्यात् । "इत्थं य एतदखिलं पुरुषोऽत्र कुर्य्याद्ब्रह्माण्डदानमधिगम्य महद्विमानम् । निर्धूतकल्मषविशुद्धतनुर्मुरारेरानन्दकृत् पदमुपैति सहाप्सरोभिः । सन्तारयेत् पितृपितामहपुत्रपौत्रबन्धुप्रियातिथिकलत्रशताष्टकं सः । ब्रह्माण्डदानशकलीकृतपातकौघमानन्दयेच्च जननीकुलमप्यशेषम् । इति पठति शृणोति वा य एतत् सुरभवनेषु गृहेषु धार्म्मिकाणाम् । मतिमपि च ददाति मोदते सोऽमरपतिभवने सहाप्सरोभिः" । "राजोवाच विधिं ब्रह्माण्डदानस्य कृत्वा यं मोक्षभाग्भवेत् । कालं देशं द्विजं तीर्थं सर्व्वमेतद्वदस्व मे । कृतेन येन सर्व्वस्य फलभागी भवाम्यहम् । कुत्सितस्यास्य भावस्य मोक्षः स्यादचिराच्च मे । वशिष्ठ उवाच "एवं श्रुत्वा ततो राजन् ! पुरोधास्तस्य तं द्विजः । ब्रह्माण्डं कारयामास सौवर्णं सर्व्वधातुभिः । पीठं निष्कसहस्रेण पद्मं तत्र प्रकल्पयेत् । तत्र ब्रह्मा तस्य मध्ये पद्मरागैरलङ्कृतः । सावित्र्या चैव गायत्र्या ऋषिभिस्तु निभिः सह । नारदाद्यैः सुतैः सर्व्वैरिन्द्राद्यैश्च सुरैस्तथा । सौवर्णविग्रहाः सर्व्वे ब्रह्मणस्तु पुरःसराः । वाराहरूपो भगवान् लक्ष्म्या सह सनातनः । नीलान्मरकतांश्चैव भूषाबान्तस्य कारयेत् । रजतस्य विशुद्धस्य देहं रुद्रस्य कारयेत् । गोमेदकैस्तस्य शोभाङ्कारयेच्च बुद्धिमान् । मौक्तिकैश्चापि सोमस्य शोभां वज्रकैर्दिवाकरैः" । सावित्रीगायत्र्यौ तु, ब्रह्मणः पार्श्वभागे स्थापनीयौ । तदाह नारदः "सावित्री दक्षिणे पार्श्वे गायत्री नाम वामतः । विलोकयन्त्यौ ब्रह्माणं साक्षसूत्रकमण्डलुम्" । ऋषयः सप्त गौतमाद्याः तदुक्तमादित्यपुराणे "गोतमश्च भरद्वाजो विश्वामित्रश्च काश्यपः । जमदग्निर्वशिष्ठोऽत्रिः सप्त वैवस्वतेऽन्तरे" । सप्तर्षिलक्षणमाह यमः "सप्तर्षयस्तु जटिलाः कमण्डल्वक्षसूत्रिणः । ध्याननिष्ठा वशिष्ठस्तु कार्य्यो भार्य्यासमन्वितः" । मुनयो वानप्रस्थाः, नारदाद्यैरिति तेषां विशेषणम्" । तानाह मनुः "अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम् । पतीन् प्रजानामसृजं महर्षीनादितो दश । मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम् । प्रचेतसं वशिष्ठञ्च

भृगुर्नारदमेव च”। तत्रैव चप्पाद् विश्वकर्मा “जटिलाः श्मश्रुलाः शान्ता दण्डाऽऽसननिषण्णकाः। कुशकमण्डलुधराः कार्य्या मुनयो द्विभुजाः सदा। तेषु कच्छपभुजाभूर्बलिष्ठ- चोरस्तु नारदः। कर्पूरगौरदेहश्च शाखामृगकरस्तु”। इत्यादिरूपाण्यपि प्रागभिहितानि। वाराहरूपं विष्णु- धर्म्मोत्तरे “वाराहरूपः कार्य्यस्तु शेषोपरिगतः प्रभुः। शेषश्चतुर्भुजः कार्य्यश्चारुरत्नफणान्वितः। कर्त्तव्यौ चोर- स्कन्धौ करयोस्तस्य यादव!। सर्परूपस्य कर्त्तव्यस्तथैव रचिताञ्जलिः। आलीढस्थानसंस्थानस्तत्पृष्ठे भगवान् भवेत्। वामारत्निगता तस्य योषिद्रूपा वसुन्धरा। नमस्कारपरा तस्य कर्त्तव्या द्विभुजा शुभा। यस्मिन् भुजे धरा देवी तत्र शङ्खः करे भवेत्। अन्ये तस्य कराः कार्य्याः पद्मचक्रगदाधराः। पद्मासनस्थां कुर्व्वीत श्रियं त्रैलोक्यमातरम्। गौरवर्णां सुरूपाञ्च सर्व्वालङ्कारभूषिताम्। रौक्मपद्मकरव्यग्रां वरदां दक्षिणेन तु”। इदृशं प्रागभितं पञ्चकलशानि नद्यांश्च नवग्रह- दाने वक्ष्यन्ते। सर्व्ववर्णानि पञ्चवर्णानि, रत्नानि भूषणार्थं दापयेदित्यर्थः। सर्व्वधातुभिः ब्रह्माण्डं कर्त्त- व्यमित्युक्तं, तत्र सुवर्णस्य पीठनिर्म्माणादिविनियोगमभि- धायेदानीं धात्वन्तरैः कर्त्तव्यं तदुच्यते “पीठात् चतुर्गुणं रौप्यं रौप्यात्ताम्रं तथाविधम्। ताम्रात् सप्त- गुणं कार्य्यं कांस्यञ्च नराधिप!। सप्तधा परतः सीसं त्रापुलोहं च कारयेत्। सप्तद्वीपाः समुद्राश्च सप्तैव कुल- पर्व्वताः। अनया संख्यया ज्ञात्वा निपुणैः शिल्पिभिः कृताः”। तथाविधं सप्तगुणमित्यर्थः सप्तद्वीपा इत्यादि एतेषामेकैकधातुना एकैकं द्वीपं समुद्रं कुलाचलञ्च रचये- दित्यर्थः। “वादित्राणि च भूतानि राजमान्येव कार- येत्। चारव्याणि च वस्त्राणि पीतवर्णानि च कारयेत्। दद्यात् वनस्पतींश्चात्र हृष्टवृक्षौ सवीरुधः”। वाद- त्राणि, जलस्थलजानि, पुष्पफलवन्तो वृक्षाः वनस्पतयः, वीरुधो गुल्मगुच्छादयः। “एवं प्र- कल्प्य विधिवत्तीर्थे देवं विचक्षणैः। कुरुक्षेत्रे गयायां च प्रयागेऽमरकण्टके। द्वारवत्यां प्रभासे च गङ्गाद्वारे च पुष्करे। तीर्थक्षेत्रेषु वै देवं चन्द्रसूर्य्यग्रहे सोमसूर्य्ययोः। दिनक्षयेषु सर्व्वेषु अयने दक्षिणोत्तरे। व्यतीपाते षडशीत्यां विषुवे च विशेषतः। दातव्यमेतद्राजेन्द्र! वि- चारं नैव कारयेत्। कालाग्निहोत्रिणं विप्रं सुरू- पञ्च गुणान्वितम्। सपत्नीकं च संपूज्य भूषयित्वा वि- भूषणैः। पुरोहितं मुख्यतमं ज्ञात्वान्यांश्च तथर्त्विजः। चतुर्विंशद् गुणोपेतान् सपत्नीकाद्विजन्मितान्। अङ्गता- भरणवस्त्रान् सम्रिपः सुविभूषितान्। अङ्गुलीयकर- त्नानि कर्णवेष्टांश्च दापयेत्। एवं विधांश्च संपूज्य तेषामग्रे स्वयं स्थितः। अष्टाङ्गप्रणिपातेन प्रणम्य च पुनः पुनः। पुरोहिताय पुरतः कृत्वा वै करसंपुटम्। यूयं वै ब्राह्मणा धाम्ना, मैनत्वेनानुकम्प्यताम्। योऽस्त्वनेन भवताञ्चैव पूतोऽनरः स्वयम्। भवतां प्रीतियोगेन स्वयं प्रीतः पिता- महः। ब्रह्म सत्वेन तु दत्तेन तेषां प्रीतो जनार्द्दनः। पिना- कपाणिर्भगवान् शक्रश्च त्रिदशेश्वरः। एते वै तोषमायान्ति अनुध्याता द्विजोत्तमैः। एवं स्तुत्वा ततो राजा ब्राह्मणान् वेदपारगान्। ब्रह्माण्डं गुरवे प्रादात् स- विधानं पुनः पुनः। सर्व्वकामैस्ततस्तृप्तो ययौ स्वर्गं नराधिपः। तेनापि गुरुणा तस्य विभक्तं ब्राह्मणैः सह। दत्तस्तैरपि चान्येभ्यो ब्रह्माण्डांशो नराधिप!। ब्रह्माण्डं भूमिदानं च यावद् नैवेन तद्भवेत्। स्वर्ग- लोकमवाप्नोति ब्रह्महत्यां न संशयः। सर्व्वेषाञ्चैव प्रत्यक्षं दातव्यं तन्नराधिप!। दीयमानञ्च पश्यन्ति तेऽपि पूता भवन्ति हि। दर्शनादेव ते पूता भवेयुर्नात्र संशयः”। पद्मपुराणोक्तविधिर्यथा

“शृणु वत्स! प्रवक्ष्यामि ब्रह्माण्डाख्यं पुरातनम्। तच्च द्वादशसाहस्रं भाविकल्पकथायुतम्। प्रक्रियाख्यो- ऽनुषङ्गाख्य उपोद्घातस्तृतीयकः। चतुर्थ उपसंहारः पादाश्चत्वार एव हि। पूर्व्वपादद्वयं पूर्व्वो भागोऽत्र समु- दाहृतः। तृतीयो मध्यमो भागश्चतुर्थस्तूत्तरो मतः। तत्र पूर्व्वभागे प्रक्रियापादे “आदौ कृत्यसमुद्देशो नैमिषा- ख्यानकं ततः। हिरण्यगर्भोत्पत्तिश्च लोककल्पनमेव च। एष वै प्रथमः पादो द्वितीयं शृणु मानद”। पूर्व्वभागे अनुषङ्गपादे “कल्पमन्वन्तराख्यानं लोकज्ञानं ततः परम्। मानसस्टृष्टिकथनं रुद्रप्रसववर्णनम्। महादेवविभूतिश्च ऋषिसर्गस्ततःपरम्। अग्नीनां विचयश्चाथ कालस- द्भाववर्णनम्। प्रियव्रतान्वयोद्देशः पृथिव्यायामवि- स्तरः। वर्णनं भारतस्यास्य ततोऽन्येषां निरूपणम्। जम्ब्वादिसप्तद्वीपाख्या ततोऽधोलोकवर्णनम्। ऊर्द्ध्वलोका- नुकथनं ग्रहचारस्ततःपरम्। आदित्यव्यूहकथनं देव- ग्रहानुकीर्त्तनम्। नीलकण्ठाह्वयाख्यानं महादेवस्य वैभ- वम्। अमावास्यानुकथनं युगतत्त्वनिरूपणम्। यज्ञप्रवर्त्तनं चाथ युगयोरन्त्ययोः कृतिः। युगप्रजालक्षणञ्च ऋषि-

प्रवरवर्णनम्। वेदानां व्यसनाख्यानं स्वायम्भुवनिरूपणम्। शेषमन्वन्तराख्यानं पृथिवीदोहनन्ततः। चाक्षुषेऽद्यतने सर्गो द्वितीयोऽङ्घ्रिः पुरोदिते"। मध्यभागे उपोद्घातपादे "अथोपोद्घातपादे तु सप्तर्षिपरिकीर्त्तनम्। प्राजापत्यचयस्तस्माद्देवादीनां समुद्भवः। ततो जयाभिव्याहारौ मरुदुत्पत्तिकीर्त्तनम्। काश्यपेयानुकथनम् ऋषिवंशनिरूपणम्। पितृकल्पानुकथनं श्राद्धकल्पस्ततः परम्। वैवस्वतसमुत्पत्तिः सृष्टिस्तस्य ततः परम्। मनुपुत्रान्वयश्चातो गान्धर्वस्य निरूपणम्। इक्ष्वाकुवंशकथनं वंशोऽत्रेः सुमहात्मनः। अमावसोरान्वयश्च रजेश्चरितमद्भुतम्। ययातिचरितञ्चाथ यदुवंशनिरूपणम्। कार्त्तवीर्य्यस्य चरितं जामदग्न्यं ततः परम्। वृष्णिवंशानुकथनं सगरस्याथ सम्भवः। भार्गवस्यानुचरितं तथा कार्त्तवीर्यवधाश्रयम्। सगरस्याथ चरितं भार्गवस्य कथा पुनः। देवासुराहवकथा कृष्णाविर्भाववर्णनम्। इनस्य च स्तवः पुण्यः शुक्रेण परिकीर्त्तितः। विष्णुमाहात्म्यकथनं बलिवंशनिरूपणम्। भविष्यराजचरितं संप्राप्तेऽथ कलौ युगे। एवमुपोद्घातपादोऽयं तृतीयो मध्यमे दले"। उत्तरभागे उपसंहारपादे "चतुर्थमुपसंहारं वक्ष्ये सम्यक् तथोत्तरे। वैवस्वतान्तराख्यानं विस्तरेण यथातथम्। पूर्वमेव समुद्दिष्टं संक्षेपादिह कथ्यते। भविष्याणां मनूनाञ्च चरितं हि ततः परम्। कल्पप्रलयनिर्देशः कालमानं ततः परम्। लोकाश्चतुर्दश ततः कथिता मानलक्षणैः। वर्णनं नरकाणाञ्च विकर्माचरणैस्ततः। मनोमयपुराख्यानं लयः प्राकृतिकस्ततः। शैवस्याथ पुरस्यापि वर्णनञ्च ततः परम्। त्रिविधाद्गुणसम्बन्धाज्जन्तूनां कीर्त्तिता गतिः। अनिर्देश्याप्रतर्क्यस्य ब्रह्मणः परमात्मनः। अन्वयव्यतिरेकाभ्यां वर्णनं हि ततः परम्। इत्येष उपसंहारः पादो वृत्तः स चोत्तरः। चतुष्पादं पुराणं ते ब्रह्माण्डं समुदाहृतम्। अष्टादशमनौपम्यं सारात् सारतरं द्विज!। ब्रह्माण्डञ्च चतुर्लक्षं पुराणत्वेन पठ्यते। तदेव व्यस्य गदितमत्राष्टादशधा पृथक्। पाराशर्य्येण मुनिना सर्वेषामपि मानद!। वस्तुदृष्ट्याथ तेनैव मुनीनां भावितात्मनाम्। मत्तः श्रुत्वा पुराणानि लोकेभ्यः प्रचकाशिरे। मुनयो धर्मशीलास्ते दीनानुग्रहकारिणः। मया चेदं पुराणन्तु वशिष्ठाय पुरोदितम्। तेन शक्तिसुतायोक्तं जातूकर्णाय तेन च। व्यासो लब्ध्वा ततश्चैतत् प्रभञ्जनमुखोद्गतम्। प्रमाणीकृत्य लोकेऽस्मिन् प्रावर्त्तयदनुत्तमम्"। तत्फलश्रुतिः "य इदं कीर्त्तयेद्वत्स! शृणोति च समाहितः। स विधूयेह पापानि याति लोकमनामयम्। लिखित्वैतत् पुराणन्तु स्वर्णसिंहासनस्थितम्। पात्रेणाच्छादितं यस्तु ब्राह्मणाय प्रयच्छति। स याति ब्रह्मणो लोकं नात्र कार्य्या विचारणा। मरीचे! ऽष्टादशैतानि मया प्रोक्तानि यानि ते। पुराणानि तु संक्षेपाच्छ्रोतव्यानि च विस्तरात्। अष्टादश पुराणानि यः शृणोति नरोत्तमः। कथयेद्वा विधानेन नेह भूयः स जायते। सूत्रमेतत् पुराणानां यन्मयोक्तं तवाधुना। तन्नित्यं शीलनीयं हि पुराणफलमिच्छता। न दाम्भिकाय पापाय देवगुर्वनुसूयवे। देयं कदापि साधूनां द्वेषिणे न शठाय च। शान्ताय शमचित्ताय शुश्रूषाभिरताय च। निर्मत्सराय शुचये देयं सद्वैष्णवाय च" नारदीयपु० ४पा० १०९ अ०।

ब्र(ब्र)ह्मात्मभू पु० ब्रह्मण आत्मनः देहात् भवति भू—क्विप्। अश्वे मह्यादी तस्य ब्रह्मदेहजातत्वं ह०उ०उक्तं यथा "प्राणा वै यशोवीर्यं तत् प्राणेषूत्क्रान्तेषु शरीरं श्वयितुमध्रियत तस्य शरीर एव मन आसीत्। सोऽकामयत मेध्यं म इदं स्यादात्मन्व्यनेन स्यामिति। ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम्" मू०। "तदेकं यशोवीर्यं भूतेषु प्राणेषूत्क्रान्तेषु शरीरान्निष्क्रान्तेषु तच्छरीरं प्रजापतेः श्वयितुमुच्छूनभावमुन्मुखमध्रियत मेध्यमस्याभवत्। तस्य प्रजापतेः शरीरान्निर्गतस्यापि तस्मिन्नेव शरीरे मन आसीत्। यथा कस्यचित् प्रिये विषये दूरङ्गतस्यापि मनो भवति तद्वत्। स तस्मिन्नेव शरीरे गतमनाः सन् किमकरोदिति। उच्यते सोऽकामयत कथं मेध्यं मेधार्हं यज्ञियं मे ममेदं शरीरं स्यात्। किञ्चात्मन्वी आत्मवांस्तेन शरीरेण शरीरवान् स्यामिति प्रविवेश। यस्मात्तच्छरीरं मद्वियोगात् गतयशोवीर्य्यं सदश्वयत् ततस्तस्मादश्वः समभवत्। ततोऽश्वनामा प्रजापतिरेव साक्षात् स्मर्यते। यस्माच्च पुनस्तत् प्रवेशाद्गतयशोवीर्य्यत्वादमेध्यं सन्मेध्यमभूत्तदेव तस्मादेवाश्वमेधस्याश्वमेधनाम्नः क्रतोरश्वमेधत्वमश्वमेधनामलाभः" शा०भा०

ब्र(ब्र)ह्मादनी स्त्री ब्रह्मा ब्रह्मवाहनं हंसः तस्यादनं पादरूपं यस्याः गौरा० ङीष्। हंसपद्यां राजनि०।

ब्र(ब्र)ह्माभिजाता स्त्री गोदावर्य्यां राजनि०।

ब्र(ब्र)ह्मानन्द पु० ब्रह्मस्वरूपानन्दे तस्य मनुष्यादी॰

नामानन्देभ्यः श्रेष्ठत्वम् शत० ब्रा० १४।७।१।३१ वाक्यादौ उक्तं यथा

"एषोऽस्य परमो लोक एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति। स यो मनुष्याणां राद्धः समृद्धो भवति। अन्येषामधिपतिः सर्वैर्मानुष्यकैः कामैः सम्पन्नतमः स मनुष्याणां परम आनन्दः। अथ ये शतं मनुष्याणामानन्दाः। स एकः पितॄणां जितलोकानामानन्दः। अथ ये शतं पितॄणां जितलोकानामानन्दाः। स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसम्पद्यन्ते। अथ ये शतं कर्मदेवानामानन्दाः। स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः। अथ ये शतमाजानदेवानामानन्दाः। स एको देवलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः। अथ ये शतं लोक आनन्दाः। स एको गन्धर्वलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः। अथ ये शतं गन्धर्वलोक आनन्दाः। स एकः प्रजापतिलोक आनन्दः अथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः एष ब्रह्मलोकः सम्राडिति" वृ०। "परमो मोक्षलक्षणो लोकः स्वयंज्योतिःस्वभावो लोकयन्तृत्व सुखवृत्तिविषयः स्वाभाविकः। परमः स्वरूपानुभवलक्षणो मुख्यो निरतिशय आनन्दः पूर्णानन्दः। किं च वस्तुतो नास्त्येवात्मतत्त्वातिरिक्तं वैषयिकमपि सुखमित्याह एतस्यैव ब्रह्मानन्दस्य मात्रां कलाम् अन्यानि अविद्यया ब्रह्मणोऽन्यत्वेन परिकल्पितानि ब्रह्मादिस्तम्बपर्यन्तानि भूतान्युपजीवन्ति उपभुञ्जते तावन्मात्रयैवानन्दीनि भवन्तीत्यर्थः। मानुषानन्दमारभ्य ब्रह्मानन्दपर्यन्तमुत्तरोत्तरमतशुचितातिशयशालिनां परब्रह्मानन्दावयवानां प्रतिपादनद्वारेणावयविनं निरस्तगणितभेदमनतिशयं ब्रह्मानन्दं दर्शयितुमुत्तरा श्रुतिः प्रवर्त्तते" भा०।

ब्र(व्र)ह्मापेत पु० सूर्यमण्डलस्थराक्षसभेदे "तक्षा च यमदग्निश्च कम्बलोऽथ तिलोत्तमा। ब्रह्मापेतोऽथ ऋतजिद्धृतराष्ट्रश्च सप्तमः। माघमासे वसन्त्येते सप्त मैत्रेय भास्करे" विष्णु पु० २अंशे १०अ०।

ब्र(व्र)ह्मारण्य न० ब्रह्मणोऽरण्यमिव। वेदपाठभूमौ त्रिका०

ब्र(व्र)ह्मार्पण न० १सर्वकर्मकर्त्तोद्यात्मकतया ब्रह्मचिन्तने ब्रह्मणि परमात्मनि ईश्वरे २सर्वकर्मफलानां सन्न्यासे च तत्प्रकारः कूर्मपु०४अ०उक्तो यथा "ब्रह्मणा दीयते देयं ब्रह्मणे संप्रदीयते। ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम्। नाहं कर्त्ता सर्वमेतद्ब्रह्मैव कुरुते तथा। एतत् ब्रह्मार्पणं प्रोक्तं ऋषिभिस्तत्त्वदर्शिभिः। प्रीणातु भगवानीशः कर्मणाऽनेन शाश्वतः। करोति सततं बुद्ध्या ब्रह्मार्पणमिदं परम्। यद्वा फलानां सन्न्यासं प्रकुर्य्यात् परमेश्वरे। कर्मणामेतदप्याहुर्ब्रह्मार्पणमनुत्तमम्"।

ब्र(व्र)ह्मावर्त्त पु० "सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्। तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते" मनूक्ते १देशभेदे २तत्रस्थे तीर्थभेदे च भा०व० ८३अ०।

ब्र(व्र)ह्मासन न० ६त०। ब्रह्मख्य ऋत्विग्भेदस्य १आसने ब्रह्मासनस्थादयोऽप्यत्र। ब्रह्म वस्तदुपासनार्थमासनम्। २पद्मस्वस्तिकादौ आसने। "ब्रह्मासनं तदाख्यं यत् कृत्वा ब्राह्मणो भवेत्। एकपादभूरौ दत्त्वा तिष्ठेदूर्ध्वाकृतिर्भवेत्" रुद्रया० उक्ते देवपूजाङ्गे ३आसनभेदे च।

ब्र(व्र)ह्मास्त्र न० ६त०। अस्त्रभेदे भा० आ० १६६ अ०।

ब्र(व्र)ह्माहुति न०ब्रह्मैवाहुतिः। वेदाध्ययने "ब्रह्माहुतिहुतं पुण्यमनध्यायवषट्कृतम्" मनुः।

ब्र(व्र)ह्मिन् पु० ब्रह्म वेदस्तपो वाऽस्त्यस्य श्रेष्ठतया ब्रीह्या० इनि टिलोपः। वेदतपसोः शेषीभूते १परमेश्वरे। तदाराधनार्थमेव तयोरनुष्ठानात् तस्य तच्छेषित्वम्। "ब्रह्मविद् ब्राह्मणो ब्रह्मी" विष्णु स०। ब्रह्म वेदो वेद्यतयास्त्यस्य इनि। २वेदतदर्थाभिज्ञे।

ब्र(व्र)ह्मिष्ठ त्रि०अतिशयेन ब्रह्मी इष्ठन् टिलोपः। अतिशयेन ब्रह्मणि। "ब्राह्मणा भगवन्तो वो ब्रह्मिष्ठः स वृता (ताः) उद्गाताम्" इ०उ० "ब्राह्मणाः श्रुताध्ययननिष्ठाश्च सर्वे निष्ठाः सर्वे यूयं ब्रह्मणोऽतिशयेन अभिज्ञः" भा०। "ब्रह्मिष्ठमाधाय निजेऽधिकारे ब्रह्मिष्ठमेव स्वतनुप्रसूतम्" रघु०। २दुर्गायां स्त्री "ब्रह्मिष्ठा वेदमातृत्वात् मायनी चरणात्मता। वेदेषु चरते यस्मात्तेन सा ब्रह्मचारिणी" देवीपु० ४५अ०।

ब्र(व्र)ह्मी स्त्री ब्रह्मणे हिता मेधाजनकतया अण् टिलोपः ङा० न वृद्धिः ङीप्। (वामनहाटि) ख्यातनामख्याते लताभेदे त्रिका०।

ब्र(व्र)ह्मीघृत न० ख्यातस्तत्रघृतमिति ख्याते औषधविशेषे यथा "समूलपत्राहतपाथम ब्राह्मीं प्रक्षाल्य वारिणा। उदूखले क्षोदयित्वा रसं वस्त्रेण गालयेत्। रसे चतुर्गुणे तस्मिन् घृतप्रस्थं विपाचयेत्। कुष्ठिका

मालतीकुसुमं हरुषी च हरीतकी। एतेषां पाचिकै-
र्भागैः येषाञ्च कार्षिकाः स्मृताः। पिप्पल्योऽथ विड-
ङ्गानि सैन्धवं शर्करा वचा। सर्वमेतत् समालोड्य शनै-
र्मृदग्निना पचेत्। एतत् प्राशितमात्रेण वाग्विशुद्धिः
प्रजायते। सप्तरात्रप्रयोगेण किन्नरैः सह गीयते।
अर्द्धमासप्रयोगेण स्वरो भवति कोकिलः। मासमेकं
प्रयोगेण भवेत् श्रुतिधरो नरः। पञ्च गुल्मान् प्रमेहांश्च
कासं पञ्चविधं जयेत्। वन्ध्यानाञ्चैव नारीणां नरा-
णामल्परेतसाम्। घृतं सारस्वतं नाम बलवर्णवपुःप्रदम्"
चिकित्सासारसंग्रहः।

**ब्र(ब्र)ह्मशय** ब्रह्मणि तपसि शेते शी—अच् पृषो०।१कार्त्तिकेये भा०व० २३१ अ०। २विष्णौ च भा०शा०२४०अ०।

**ब्र(ब्र)ह्मोज्झ** पु० ब्रह्म वेदमुज्झति उज्झ—त्यागे अच् उप० स०। वेदत्यागिनि "ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः। गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षट्" मनुना तत्त्यागस्यानुपातकत्वमुक्तम्।

**ब्र(ब्र)ह्मोदु(दु)म्बर** न० तीर्थभेदे भा० व० ८३ अ०।

**ब्र(ब्र)ह्मोत्तर** त्रि० ब्रह्मा ब्राह्मणः उत्तरोऽधिकारी यत्र। ब्राह्मणाधिकृते भूम्यादौ। २ब्रह्मप्रधाने च।

**ब्र(ब्र)ह्मोद्य** न० वद—भावे क्यप् ६त०। ब्रह्मप्रतिपादकवाक्ये कात्या० श्रौ० १२।४।२०। २ब्रह्मकथने च "ब्राह्मणा भगवन्तो हन्ताहमिमं (याज्ञवल्क्यम्) द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे वक्ष्यति न वै जातु युष्माकमिमं कश्चित् ब्रह्मोद्यम् जेतेति" वृ०उ०।

**ब्र(ब्र)ह्मोपनेतृ** पु० ब्रह्मार्थं विप्रमुपनयते तच्छेदकत्वात् उप—नी—तृच्। पलाशवृक्षे "विप्रस्य पालाशो दण्डः" स्मृतिः।

**ब्र(ब्र)ह्मोपनिषद्** स्त्री उपनिषद्भेदे उपनिषच्छब्दे दृश्यम्।

**ब्र(ब्र)ह्मौदन** पुं न० ब्रह्मार्थमोदनम्। यज्ञे ऋत्विग्भेदार्थे चरौ। "ब्रह्मौदनं पचति चतुर्णां प्राशित्रादिप्रसृतानाञ्च" कात्या०श्रौ० २०।१।४। "चतुर्णां पात्राणां चतुर्णामञ्जलीनां चतुर्णां प्रसृतानां च प्रसृतश्चैकाञ्जलि कोषः। "ब्रह्मौदनमाद्यत्विग्भ्यः प्रयच्छति"५सू०।"ओदनो-दनम्" कर्कः।

**ब्रा(ब्रा)ह्म** न०ब्रह्मण इदम्, तेन प्रोक्तम् वा अण् टिलोपः। १अङ्गुष्ठमूले तीर्थे, तेन हि तीर्थेन द्विजाचमनं विहित-मिति तस्य तत्सम्बन्धित्वम् "प्राग्वा ब्रा(ब्रा)ह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत्" इति मनुः "अङ्गुष्ठोत्तरतो रेखा या पाणेर्दक्षिणस्य च। एतद्ब्राह्ममिति ख्यातं तीर्थमाचमनाय वै" स्मृतिः। २नारदे पु०जटा०। ब्र(ब्र)ह्म-णोक्ते अष्टादशपुराणान्तर्गते ३महापुराणभेदे न०। ४विवाहभेदे ५पारदे च पु०। ६सरस्वत्यां तदधिष्ठातृकायां ७वाचि ८सोमलतायां ९ब्रह्मीशाके (वामनहाटि) शाक-भेदे च स्त्री। "आहूतानां सुवस्त्राय विप्राणां पूजको भवेत्। कन्यादानमयो होम ब्राह्मो धर्मो विधीयते" इति मनूक्ते राज्ञां १०धर्मभेदे पु०। ११मातृभेदे स्त्री ङीप्। "ब्राह्मी नारायणी तथेति" कालकवचम्। "हृहंसाः शरीरं यदग्रमेयं प्रकाशतः। हृदि-स्थीर्णमित्युक्तं ब्राह्मी देवी ततः स्मृता देवीपु० उक्त-निर्वचनायां १२देव्याञ्च स्त्री १३ब्रह्मसम्बन्धिनिमात्रे त्रि० स्त्रियां ङीप् "एषा ब्राह्मी स्थितिः पार्थ!" गीता। सरस्वत्या ब्रह्मजातत्वं च ब्रह्माणीशब्दे दर्शितं तत्र दृश्यम्। "ब्राह्मी हिमा सरा तिक्ता लघुर्मेध्या च शीतला। कषाया मधुरा स्वादुपाकायुष्या रसायनी। स्वर्या स्मृतिप्रदा कुष्ठपाण्डुमेहास्रकासजित्। विष-शोथज्वरहरी तद्वन्मण्डूकपर्ण्यपि" भावप्र० ब्राह्मी-शाकस्य गुणा उक्ताः। १४वाराहीकन्दे १५हिलमोचि-कायां स्त्री राजनि०। १६रोहिण्यां स्त्री १७नक्षत्रे न० तयोर्ब्रह्माधिष्ठातृदेवताकत्वात् तथात्वं "रात्रेश्च पश्चिमे भागे मुहूर्त्तो ब्राह्म उच्यते" पितामहोक्ते रात्रिशेषयामा-र्द्धस्थिते अरुणोदयकालात् प्रागवस्थदण्डात्मके१८ काले पु०१९ब्रह्मसम्बन्धिदिने २०तज्ज्ञाने च अहन्शब्दे दृश्यम्।

**ब्रा(ब्र)ह्मक** त्रि० ब्रह्मणा कृतं कुलालादि०वुञ्। विप्रेण कृते।

**ब्रा(ब्र)ह्मगुप्त** पु० आयुधजीविवर्गभेदे त्रिगर्त्तषष्ठशब्दे दृश्यम् स वर्गो येषां त्रिगर्त्ता० स्वार्थे क। ब्राह्मगुप्तीय तमार्थे।

**ब्रा(ब्रा)ह्मण** पुं स्त्री० ब्रह्म वेदं शुद्धं चैतन्यं वा वेत्त्यधीते वा अण् "ब्रह्मणो जाताविति" पा० न टिलोपः ब्रह्मणो मुखजातत्वात् ब्रह्मणोऽपत्यम् वा अण्। १विप्रे जाति-भेदे स्त्रियां जातित्वात् ङीष्। २पृक्कायां स्त्री ङीप्। "ब्रह्म जानाति ब्राह्मणः" इत्युक्ते ३परब्रह्मज्ञे त्रि०। ब्राह्मणत्वे ब्राह्मणाज्जातदेहे तत्कुलजातदेहे च ब्राह्मणत्वजातिः स्वीक्रियते यथा गोमयवृश्चिको मयजातदेहस्य वृश्चिकत्वं तद्वत्। तत्र शुक्रजाते देहे ब्राह्मणत्वं यथा नारदद्रोणादौ। इदानीन्तु ब्राह्मणस्य सत्यसंकल्पत्वाभावान्न तथात्वम्। किञ्च कलौ असवर्णा विवाहनिषेधादपि न तथात्वम्।

"ब्राह्म्यां ब्राह्मणाज्जातो ब्राह्मणः स्यान्न संशयः। क्षत्रियायां तथैव स्याद्वैश्यायामपि चैव हि" भा०दानधर्मवाक्यस्यापि संकल्पभेदादेव तथात्वेन युगान्तरविषयत्वम्। तस्य लक्षणं यथा "जात्या कुलेन वृत्तेन स्वाध्यायेन श्रुतेन च। एभिर्युक्तो हि यस्तिष्ठेन्नित्यं स द्विज उच्यते" वह्निपु०। "न क्रुध्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः। सर्वभूतेष्वभयदस्तं देवा ब्राह्मणं विदुः। अहेरिव गणाद्भीतः सौहित्यान्नरकादिव। कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः। येन केनचिदाच्छन्नो येन केनचिदाशितः। यत्र क्वचन शायी च तं देवा ब्राह्मणं विदुः। विमुक्तं सर्वसङ्गेभ्यो मुनिमाकाशवत् स्थितम्। असमेकचरं शान्तं तं देवा ब्राह्मणं विदुः। जीवितं यस्य धर्मार्थं धर्मो रत्यर्थमेव च। अहोरात्रश्च पुण्यार्थं तं देवा ब्राह्मणं विदुः। निराशिषमनारम्भं निर्नमस्कारमस्तुतिम्। अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः" भा० मोक्षध०। "विश्वामित्र उवाच। विप्रस्य लक्षणं ब्रूहि तद्भक्तिः का च तत्फलम्। यतस्त्वगात् पदेष्व वामवायाः ब्राह्मणाः स्मृताः"। कल्किरुवाच "वेदास्तमीश्वरं प्राहुरव्यक्तं व्यक्तिमत् परम्। ते वेदा ब्राह्मणमुखे नानाधर्माः प्रकाशिताः। यो धर्मो ब्राह्मणानां हि सा भक्तिर्मम पुष्कला। तयाहं तोषितः श्रीशः संभवामि युगे युगे। ऊर्ध्वं तु त्रिवृतं सूत्रं सधवानिर्मितं शनैः। तन्तुत्रयमधोवृत्तं यज्ञसूत्रं विदुर्बुधाः। त्रिगुणं तद्ग्रन्थियुक्तं वेदप्रवरसम्मितम्। शिरोधरान्नाभिमध्यात् पृष्ठार्द्धपरिमाणकम्। यजुर्विदां नाभिमितं सामगानामयं विधिः। वामस्कन्धेन विधृतं यज्ञसूत्रं बलप्रदम्। मृज्जाचन्दनाद्यैस्तु धारयेत्तिलकं द्विजः। भाले त्रिपुण्ड्रं कर्माङ्गं केशपर्यन्तमुज्ज्वलम्। पुण्ड्रमङ्गुलिमानन्तु त्रिपुण्ड्रं तत्त्रिधा कृतम्। ब्रह्मविष्णुशिवावासं दर्शनात् पापनाशनम्। ब्राह्मणानां मुखे स्वर्गो वाचि वेदाः करे हरिः। गात्रे तीर्थानि यागाश्च नाड़ीषु प्रकृतिस्त्रिवृत्। सावित्री कण्ठकुहरा हृदयं ब्रह्मसञ्ज्ञितम्। तेषां स्तनान्तरे धर्मः पृष्ठेऽधर्मः प्रकीर्त्तितः। भूदेवा ब्राह्मणा राजन्! पूज्या वन्द्याः सदुक्तिभिः। चातुराश्रम्यगुणका मम धर्मप्रवर्त्तकाः। बालाश्चापि ज्ञानवृद्धास्तपोवृद्धा मम प्रियाः। तेषां वचः पालयितुमवताराः कृता मया। माहात्म्यं ब्राह्मणानां सर्वपापप्रणाशनम्। कलिदोषहरं श्रुत्वा मुच्यते सर्वतोभयात्" कल्किपु० ४अ०। "कर्मणा ब्राह्मणो जातः करोति ब्रह्मभावनाम्। स्वधर्मनिरतः शुद्धस्तस्माद्ब्राह्मण उच्यते" ब्रह्मवै० गणेशख० ३५अ०।

"जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः। वेदाध्ययनसम्पन्नः षट्सु कर्मस्ववस्थितः। शौचाचारपरो नित्यं विघसाशी गुरुप्रियः। नित्यव्रती सत्यरतः स वै ब्राह्मण उच्यते। सत्यं दानमथाद्रोह आनृशंस्यं क्षमा घृणा। तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः"। तस्य धर्मो यथा "ब्राह्मणस्य तु यो धर्मस्तं ते वक्ष्यामि केवलम्। दममेव महाराज! धर्ममाहुः पुरातनम्। स्वाध्यायाभ्यसनञ्चैव तत्र कर्म समाप्यते। तञ्चेद्वित्तमुपागच्छेद्वर्त्तमानं स्वकर्मणि। अकुर्वाणं विकर्माणि शान्तं प्रज्ञानतर्पितम्। कुर्वीतापत्यसन्तानमथ दद्याद्यजेत च। संविभज्यापि भोक्तव्यं धनं सद्भिरितीष्यते। परिनिष्ठितकार्यस्तु स्वाध्यायेनैव ब्राह्मणः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते" भा० शान्तिप० २६ अ०। तस्य माहात्म्यादि यथा। "सर्वेषामेव वर्णानां ब्राह्मणः परमो गुरुः। तस्मै दानानि देयानि भक्तिश्रद्धासमन्वितैः। सर्वदेवाग्रजो विप्रः प्रत्यक्षत्रिदशो भुवि। स तारयति दातारं दुस्तरे विश्वसागरे। हरिशर्मोवाच। सर्ववर्णगुरुर्विप्रस्त्वया प्रोक्तः सुरोत्तम!। तेषां मध्ये च कः श्रेष्ठः कस्मै दानं प्रदीयते। ब्रह्मोवाच। सर्वेऽपि ब्राह्मणाः श्रेष्ठाः पूजनीयाः सदैव हि। अविद्या वा सविद्या वा नात्र कार्या विचारणा। क्रोधादिदोषलिप्ता ये ब्राह्मणा ब्राह्मणोत्तम!। आत्मभ्यो द्वेषिभ्यस्तेऽपि परेभ्यो न कदाचन। अनाचारा द्विजाः पूज्या न च शूद्रा जितेन्द्रियाः। अभक्ष्यभक्षका गावः लोकाः सुमतयो न च। माहात्म्यं भूमिदेवानां विशेषादुच्यते मया। तव स्नेहाद्द्विजश्रेष्ठ! निशामय समाहितः। क्षत्रियाणाञ्च वैश्यानां शूद्राणां गुरवो द्विजाः। अन्योऽन्यं गुरवो ज्ञेयाः पूजनीयाश्च भूसुर!। ब्राह्मणं प्रणमेद्यस्तु विष्णुबुद्ध्या नरोत्तमः। आयुः पुत्राश्च कीर्त्तिश्च सम्पत्तिस्तस्य वर्द्धते। न च नौति द्विजं यस्तु मूढ़धीर्मानवो भुवि। सुदर्शनेन तच्छीर्षं छेत्तुमिच्छति केशवः"। पुष्पादिहस्तस्य विप्रस्य प्रणामनिषेधो यथा। "पुष्पहस्तं पयोहस्तं देवहस्तञ्च भूसुर!। न नमेद् ब्राह्मणं प्रातस्तैलाभ्यङ्गकृतविग्रहम्। अवश्यं देववेश्मस्थं ध्यान-

भ्ज्जितचेतसम् । देवपूजाञ्च कुर्वन्तं न नमेद् ब्राह्मणं बुधः । वह्निकार्यं प्रकुर्वन्तं भुञ्जानञ्च द्विजोत्तम ! ॥ तथा सामानि गायन्तं न नमेद् ब्राह्मणं बुधः । ब्राह्मणा यत्र तिष्ठन्ति बहवो द्विजसत्तम । प्रत्येकन्तु नमस्कार-स्तत्र कार्य्यो न धीमता । कृताभिवादनं विप्रं भक्त्या यो नाभिवादयेत् । स चाण्डालसमो ज्ञेयो नाभिवाद्यः कदापि च । कृतप्रणामं तनयं नमेतां पितरौ न च । कृतप्रणामाः सर्व्वेऽपि नमस्कार्य्या द्विजैर्द्विजाः । कृत-दोषान् द्विजान् नाथ न द्विषन्ति विचक्षणाः । द्विषन्ति यापि मोहेन तेषां हन्ता सदा हरिः । याचकान् ब्राह्म-णान् यस्तु कोपदृष्ट्या प्रपश्यति । सूचीप्रक्षेपणं तस्य नेत्रयोः कुरुते यमः । विप्रनिर्भर्त्सनं मूढ़ा येन वक्त्रेण कुर्व्वते । तस्मिन् वक्त्रे यमस्तप्तं लौहपिण्डं ददाति वै । ब्राह्मणो यद्गृहे भुङ्क्ते तद्गृहे केशवः स्वयम् । देवताः सकला एव पितरश्च सुरर्षयः” । तस्य पादो-दकादिमाहात्म्यं यथा “विप्रपादोदकं यस्तु कणमात्रं वहेद्बुधः । देहस्थं पातकं तस्य सर्व्वमेवाशु नश्यति । कोटिब्रह्माण्डमध्येषु सन्ति तीर्थानि यानि च । तानि स-र्व्वाणि तीर्थानि वसन्ति द्विजपादयोः । विप्रपादोदकैर्नित्यं सिक्तं स्याद् यस्य मस्तकम् । स स्नातः सर्व्वतीर्थेषु सर्व्वय-ज्ञेषु दीक्षितः । सर्व्वपापानि घोराणि विप्रहत्यादिकानि च । सद्य एव विनश्यन्ति विप्रपादाम्बुधारणात् । व्याद्या व्याधयः सर्व्वे परमक्लेशदायकाः । गच्छन्ति विलयं सद्यो विप्रपादाम्बुभक्षणात् । पितृभ्यो यानि तोयानि दीयन्ते विप्रपादयोः । तैस्तृप्ताः पितरः स्वर्गे तिष्ठन्त्याचन्द्र-तारकम् । प्रक्षाल्य विप्रचरणौ दूर्व्वाभिर्योऽर्च्चयेद्बुधः । तेनार्च्चितो जगत्स्वामी विष्णुः सर्व्वसुरोत्तमः । विप्राणां पादनिर्म्माल्यं यो मर्त्त्यः शिरसा वहेत् । सत्यं सत्यमहं वच्मि तस्य मुक्तिर्हि शाश्वती” । तस्य प्रद-क्षिणफलम् “विप्रं प्रदक्षिणीकृत्य वन्दते यो नरोत्तमः । प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा” । तस्य पाद-सेवनफलम् “यो दद्यात् फलताम्बूलं विप्राणां पाद-सेवने । इह लोके सुखं तस्य परलोके ततोऽधिकम् । पुत्त्रार्थी लभते पुत्त्रं धनार्थी लभते धनम् । मोक्षार्थी लभते मोक्षं विप्रपादस्य सेवनात् । रोगी रोगात् प्रमु-च्येत पापी मुच्येत पातकात् । मुच्येत बन्धनाद्बद्धो विप्राणां पादसेवनात् । अनपत्याश्च या नार्य्यो मृताऽ-पत्याश्च या स्त्रियः । बहुपत्या जीववत्साः स्युर्विप्रपाद-सेवनात्” पाद्मे क्रियायोगसारे २अ० । तस्य सन्ध्या-वन्दनाकरणे दोषो यथा “नोपतिष्ठति यः पूर्व्वां नो-पास्ते यस्तु पश्चिमाम् । स शूद्रवद्बहिः कार्य्यः सर्व्व-स्माद् द्विजकर्म्मणः” मनुः । अन्यत्र च “न दहन्ति सुरा-स्तेषां पितरः पिण्डतर्पणम् । स्वेच्छया च द्विजातेश्च त्रिसन्ध्यरहितस्य च” । तस्य सन्ध्यावन्दनफलं यथा “यावज्जीवनपर्य्यन्तं यस्त्रिसन्ध्यं करोति हि । स च सूर्य्यसमो विप्रस्तेजसा तपसा सदा । तत्पादपद्मरजसा सद्यः पूता वसुन्धरा । जीवन्मुक्तः स तेजस्वी सन्ध्या-पूतो हि यो द्विजः । तीर्थानि च पवित्राणि तस्य सं-स्पर्शमात्रतः । ततः पापानि यान्त्येव वैनतेयादिवो-रगाः” । तस्य निन्द्यकर्म्माणि यथा “विष्णुमन्त्र-विहीनश्च त्रिसन्ध्यरहितो द्विजः । एकादशीविहीनश्च विषहीनो यथोरगः । हरेर्नैवेद्यभोगी न धावको वृष-वाहकः । शूद्रान्नभोजी विप्रश्च विषहीनो यथोरगः । शवदाही च शूद्राणां यो विप्रो वृषलीपतिः । शूद्राणां सूपकारी च शूद्रयाजी च यो द्विजः । असिजीवी-मसीजीवी विषहीनो यथोरगः । यो विप्रोऽवीरान्न-भोजी ऋतुस्नाताऽन्नभोजकः ॥ भगजीवी वार्द्धुषिको विषहीनो यथोरगः । यः कन्याविक्रयी विप्रो यो हरेर्नामविक्रयी । यो विद्याविक्रयी विप्रो विषहीनो यथोरगः । सूर्य्योदये च दिवाभोजी मत्स्यभोजी च यो द्विजः । शिवपूजादिरहितो विषहीनो यथोरगः” ब्रह्मवै०प्र०२१ अ० । अन्यत्र च “यदि शूद्रां व्रजेद्विप्रो वृषलीपतिरेव सः । स भ्रष्टो विप्रजातेश्च चाण्डालात् सोऽधमः स्मृतः । विष्ठासमश्च तत्पिण्डो मूत्रं तस्य च तर्पणम् । तत्पितॄणां सुराणाञ्च पूजने तत् समं सति ! ॥ कोटिजन्मार्जितं पुण्यं सन्ध्यार्च्चातपसार्ज्जितम् । द्विजस्य वृषलीभोगान्नश्यत्येव न संशयः । ब्राह्मणश्च सुरापीतः विड्भोजी वृषलीपतिः । हरिवासरभोजी च कुम्भी-पाकं व्रजेद्ध्रुवम्” । “करोत्यशुद्धां सन्ध्याञ्च सन्ध्यां वा न करोति यः । त्रिसन्ध्यं वर्ज्जयेद् यो वा सन्ध्या-हीनश्च स द्विजः” । नारायणक्षेत्रादितीर्थे तस्य प्रति-ग्रहदोषो यथा “तत्र नारायणक्षेत्रे कुरुक्षेत्रे हरेः पदे । वाराणस्यां वदर्य्याञ्च गङ्गासागरसङ्गमे । पुष्करे भास्करक्षेत्रे प्रभासे रासमण्डले । हरिद्वारे च केदारे सोमे वदरपाचने । सरस्वतीनदीतीरे पुण्ये वृन्दा-वने वने । गोदावर्य्याञ्च कौशिक्यां त्रिवेण्याञ्च हिमा-

-णये । एतेष्वन्येषु यो दानं प्रतिगृह्णाति कामतः । स च तीर्थप्रतिग्राही कुम्भीपाकं प्रयाति च” । पारिभाषिकमहापातकिब्राह्मणा यथा “शूद्रोद्दिष्टशूद्रयाजी ग्रामयाजीति कीर्त्तितः । देवोपजीवजीवी च देवलश्च प्रकीर्त्तितः । शूद्रपाकोपजीवी यः सूपकारः प्रकीर्त्तितः । सन्ध्यापूजाविहीनश्च प्रमत्तः पतितः स्मृतः । एते महापातकिनः कुम्भीपाकं प्रयान्ति ते” ब्रह्मवै० ज० ख० ८७ अ० । “ब्राह्मणस्य स्वधर्मश्च विष्णवर्च्चनं हरेः । तत्पादोदकनैवेद्यभक्षणञ्च सुधाधिकम् । अन्नं विष्ठा जलं मूत्रमनिवेद्य हरेश्च यत् । भवन्ति शूकराः सर्वे ब्राह्मणा यदि भुञ्जते । वाजीव भुञ्जते विप्रा एकादश्यां न भुञ्जते । कृष्णजन्मदिने चैव शिवरात्रौ सुनिश्चितम् । तथा रामनवम्याञ्च व्रततः पुण्यवासरे । ब्राह्मणानां स्वधर्मश्च कथितो वेधसा नृप !” ५६ अ० । गृहस्थब्राह्मणनियमा यथा “वेदं वेदौ तथा वेदानधीत्य तु समाहितः । तदर्थमभिगम्याथ ततः स्नायाद् द्विजोत्तमः । गुरवे तु धनं दत्त्वा स्नायीत तदनुज्ञया । चीर्णव्रतोऽथ युक्तात्मा स शक्तः स्नातुमर्हति । वैणवीं धारयेद्यष्टिमन्तर्वासस्तथोत्तरम् । यज्ञोपवीतद्वितयं सोदकञ्च कमण्डलुम् । छत्रञ्चोष्णीषममलं पादुके चाप्युपानहौ । रौक्मे च कुण्डले धार्य्ये कृत्तकेशनखः शुचिः । स्वाध्याये नित्ययुक्तः स्याद्बहिर्माल्यं न धारयेत् । अन्यत्र काञ्चनाद्विप्रो न रक्तां बिभृयात् स्रजम् । शुक्लाम्बरधरो नित्यं सुगन्धः प्रियदर्शनः । न जीर्णमलवद्वासा भवेच्च विभवे सति । न रक्तमुल्वणञ्चान्यधृतं वासो न कुण्डिकाम् । नोपानहौ स्रजञ्चाथ पादुके च प्रयोजयेत् । उपवीतमलङ्कारं कुशान् कृष्णाजिनानि च । नापसव्यं परीदध्याद्वासो न विकृतं वसेत् । आहरेद्विधिवद्दारान् सदृशानात्मनः शुभान् । रूपलक्षणसंयुक्तां योनिदोषविवर्जिताम् । अमातृगोत्रप्रभवामसमानार्षगोत्रजाम् । आहरेद्ब्राह्मणो भार्य्यां शीलशौचसमन्विताम् । ऋतुकालाभिगामी स्याद् यावत् पुत्त्रोऽभिजायते । वर्जयेत् प्रतिषिद्धानि प्रयत्नेन दिनानि तु । षष्ठ्यष्टमी पञ्चदशी द्वादशी च चतुर्द्दशी । ब्रह्मचारी भवेन्नित्यं तद्वज्जन्मत्रयाहनि । आदधीतावसथ्याग्निं जुहुयाज्जातवेदसम् । व्रतानि स्नातको नित्यं पावनानि च पालयेत् । वेदोदितं स्वकं कर्म नित्यं कुर्य्यादतन्द्रितः । अकुर्वाणः पतत्याशु नरकानतिभीषणान् । अभ्यसेत् प्रयतो नित्यं वेदं यज्ञान्न-हापयेत् । कुर्य्याद् गृह्याणि कर्म्माणि सन्ध्योपासनमेव च । सख्यं समाधिकैः कुर्य्यादुपेयादीश्वरं सदा । दैवतान्यपि गच्छेत तु कुर्य्याद्भार्य्याभिपोषणम् । न धर्मं ख्यापयेद्विद्वान् न पापं गूहयेदपि । कुर्व्वीतात्महितं नित्यं सर्वभूतानुकम्पनः । वयसः कर्म्मणोऽर्थस्य श्रुतस्याभिजनस्य च । वेषवाग्बुद्धिसारूप्यमाचरन् विचरेत् सदा । श्रुतिस्मृत्युदितः सम्यक् साधुभिर्यश्च सेवितः । तमाचारं निषेवेत नेहेतान्यत्र कर्हिचित् । येनास्य पितरो याता येन याताः पितामहाः । तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यति । नित्यं स्वाध्यायशीलः स्यान्नित्यं यज्ञोपवीतवान् । सत्यवादी जितक्रोधो ब्रह्मभूयाय कल्पते । सन्ध्यास्नानरतो नित्यं ब्रह्मयज्ञपरायणः । अनसूयुर्मृदुर्दान्तो गृहस्थः प्रत्यवान्विता । वीतरागभयक्रोधो लोभमोहविवर्जितः । सावित्रीजापनिरतः श्रद्धावान् मुच्यते गृही । मातापित्रोर्हिते युक्तो गोब्राह्मणहिते रतः । दाता यज्वा देवभक्तो ब्रह्मलोके महीयते । त्रिवर्गसेवी सततं देवतानाञ्च पूजनम् । कुर्य्यादहरहर्नित्यं नमस्येत् प्रयतः सुरान् । विभागशीलः सततं क्षमायुक्तो दयालुकः । गृहस्थस्तपसा युक्तो न गृहेऽपि गृही भवेत् । क्षमा दया च विज्ञानं सत्यञ्चैव दमः शमः । अध्यात्मनिरतता ज्ञानमेतद्ब्राह्मणलक्षणम् । एतस्मान्न प्रमाद्येत विशेषेण द्विजोत्तमः । यथाशक्ति चरन् कर्म निन्दितानि विवर्जयेत् । विधूय मोहकलिलं लब्ध्वा योगमनुत्तमम् । गृहस्थो मुच्यते बन्धान्नात्र कार्य्या विचारणा । विगर्हातिक्रमाक्षेपहिंसाबन्धवधात्मनाम् । अन्यमन्युसमुत्थानां दोषाणां वर्जनं क्षमा । स्वदुःखेष्विव कारुण्यं परदुःखेषु सौहृदात् । दया या मुनयः प्राहुः साक्षाद्धर्म्मस्य साधनम् । चतुर्द्दशानां विद्यानां धारणं हि यथार्थतः । विज्ञानमेतच्च विद्याद् येन धर्मो विवर्द्धते । अधीत्य विधिवद्विद्यामर्थञ्चैवोपलभ्य तु । धर्मकार्य्यान्निवृत्तश्चेन्न तद्विज्ञानमिष्यते । सत्येन लोकं जयति सत्यन्तत् परमं पदम् । यथाभूतप्रवादन्तु सत्यमाहुर्मनीषिणः । दमः शरीरोपरतिः शमः प्रज्ञाप्रसादजः । अध्यात्ममक्षरं विद्याद्यत्र गत्वा न शोचति । यया स देवो भगवान् विद्यया शिव ! वेद्यते । साक्षाद्देव महादेव ! तज्ज्ञानमिति कीर्त्तितम् । तन्निष्ठस्तत्परो विद्वान्नित्यमक्रोधनः शुचिः । महायज्ञपरो

विप्रो लभते तदनुत्तमम् । धर्मस्यायतनं यत्नाच्छरीरं परिपालयेत् । न हि देहं विना रुद्र ! पुरुषैर्विद्यते परः । नित्यं धर्मार्थकामेषु युञ्जीत नियतो द्विजः । न धर्मवर्जितं काममर्थं वा मनसा स्मरेत् । सीदन्नपि हि धर्मेण न त्वधर्मं समाचरेत् । धर्मो हि भगवान् देवो गतिः सर्वेषु जन्तुषु । भूतानां प्रियकारी स्यात् परद्रोहकर्मधीः । न वेददेवतानिन्दां कुर्यात्तैश्च न संवदेत् । यस्त्विमं नियतो विप्रो धर्माध्यायं पठेत् शुचिः । अध्यापयेच्छ्रावयेद्वा ब्रह्मलोके महीयते" । कूर्मपु० १४अ० । "सूत उवाच । आनृशंस्यं क्षमा सत्यमहिंसा दममार्जवम् । ध्यानं प्रसादो माधुर्यं मार्दवं शौचमेव च । इज्या दानं तपः सत्यं स्वाध्यायोऽप्यात्मनिग्रहः । व्रतोपवासौ मौनञ्च स्नानं पैशुन्यवर्जनम् । एभिर्युक्तो मुनिश्रेष्ठा ! यः सदा वर्त्तते द्विजः । हुत्वा तु पावकं पूर्वं परं ब्रह्माधिगच्छति । सविद्यो वा अविद्यो वा निरग्निः साग्निकोऽपि वा । यो विप्रस्तपसा युक्तः स परं स्वर्गमाप्नुयात् । सर्वेषामुत्तमं श्रेष्ठं विमुक्तिफलदायकम् । ब्राह्मणस्य तपो यच्च तन्मे निगदतः शृणु । सायं प्रातश्च यः सन्ध्यामुपास्तेऽविक्लवमानसः । जपन् हि पावनीं देवीं गायत्रीं वेदमातरम् । तपसा भावितो देव्या ब्राह्मणः पूतकिल्बिषः । न सीदेत् प्रतिगृह्णन् स त्वपि पृथ्वीं ससागराम् । द्वे सन्ध्ये ह्युपतिष्ठेत गायत्रीं प्रयतः शुचिः । यस्तस्य दुष्कृतं नास्ति पूर्वतः परतोऽपि वा । यज्ञदानरतो विद्वान् साङ्गवेदस्य पाठकः । गायत्रीध्यानपूतस्य कलां नार्हति षोड़शीम् । एवं किल्बिषयुक्तस्य विनिर्दहति पातकम् । उभे सन्ध्ये ह्युपासीत तस्मान्नित्यं द्विजोत्तमः" । तस्य देहापवित्रताहेतुः यथा "यथा देहापवित्रत्वं विप्रादीनां यतो भवेत् । देवर्षे ! शृणु तत् सर्वं नराणामानुपूर्विकम् । जातके मृतकेऽस्नाते जलौकाभिः क्षते तथा । अपवित्रो द्विजादीनां देहः सन्ध्यादिकर्मसु । अपूततनुरुत्सर्गे नरो मूत्रपूरीषयोः । अस्पृश्यस्पर्शने चैव ब्रह्मयज्ञजपादिषु । रक्तपाते नखच्छेदनखड्गादिभिः क्षते । विप्रादेरशुचिः कायः शस्त्रास्त्रैः कण्टकादिभिः । भुक्तवस्त्राननोच्छिष्टेऽपवित्रः कृतमैथुने । शयने ब्राह्मणादीनां शरीरं क्षुरकर्मणि । ज्वरादिभिस्ततः सर्वैरोगैर्युक्ते द्विजन्मनाम् । वपुरप्रयतं पूजादानहोमजपादिषु । धूमोद्गारे वमौ श्राद्धपतितान्नादिभोजने । तथा च रेतस्खलने मत्या, देहापवित्रता । अपवित्रं द्विजातीनां वपुः स्याद्दुःस्वप्नदर्शने । गर्हितदानग्रहणे पतिते पातकादिभिः । स्वशौचान्ते न शुद्धिः स्यादज्ञातके मृतके द्विज ! । सर्ववर्णाश्रमादीनां तनोः सन्ध्यादिकर्मसु" पाद्मोत्तरखण्डे १०६अ० । २मन्त्रेतरवेदभागे न० ऋ०भाष्योपोद्घाते सायह्णपूर्वकं तल्लक्षणमुक्तं यथा "तत्र ब्राह्मणस्य लक्षणं नास्ति । कुतः ? वेदभागानामियत्तानवधारणेन ब्राह्मणभागेष्वन्यभागेषु च लक्षणस्याव्याप्त्यतिव्याप्त्योः शोधयितुमशक्यत्वात् । पूर्वोक्तमन्त्रभाग एकः । भागान्तराणि च कानिचित् पूर्वैरुदाहृत्य संगृहीतानि "हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः । परक्रिया पुराकल्पो व्यवधारणकल्पनेति" । "तेन ह्यन्नं क्रियत" इति हेतुः १ । "तद्दध्नो दधित्वमिति" निर्वचनम् २ । "अमेध्या वै माषाः" इति निन्दा ३ । "वायुर्वै क्षेपिष्ठेति" प्रशंसा ४ । "तद्व्यचिकित्सा जुहवानी३ मा हौषा३मिति" संशयः ५ । "यजमानेन सम्मितौदुम्बरी भवतीति" विधिः ६ । "माषानेव मह्यं पचन्तीति" परकृतिः ७ । "पुरा ब्राह्मणा अभैषुः" इति पुराकल्पः ८ । "यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेदिति" विशेषावधारणकल्पनम् ९ । एवमन्यदप्युदाहार्य्यम् । न च हेत्वादीनामन्यतमं ब्राह्मणमिति लक्षणम् । मन्त्रेष्वपि हेत्वादिसद्भावात् । "इन्दवो वा मुषन्ति हीति" हेतुः । "उदानिषुर्महीरिति तस्मादुदकमुच्यत इति" निर्वचनम् । "मोघमन्नं विन्दते अप्रचेता" इति निन्दा । "अग्निर्मूर्द्धा दिवः ककुदिति" प्रशंसा । "अधः स्विदासी३दुपरि स्विदासी३दिति" संशयः । "वसन्ताय कपिञ्जलानालभेत" इति विधिः । "सहस्रमयुतं ददाविति" परकृतिः । "यज्ञेन यज्ञमयजन्त देवाः" इति पुराकल्पः । इतिकरणबहुलं ब्राह्मणमिति चेत् न "इत्यददा इत्ययजथा इत्यपच इति ब्राह्मणो गायेत्" इत्यस्मिन् ब्राह्मणेन गातव्ये मन्त्रेऽतिव्याप्तेः । इत्याहेत्यनेन वाक्येनोपनिबद्धं ब्राह्मणमिति चेत् न "राजा चित्तं भगं भक्षीत्याह यो मायातुं यातुधानेत्याह यो वा रक्षः । "शुचिरसीत्याहे अनयोर्मन्त्रयोरतिव्याप्तेः । आख्यायिकारूपं ब्राह्मणमिति चेत् न यमयमीसंवादसूक्तादावतिव्याप्तेः । तस्मान्नास्ति ब्राह्मणलक्षणमिति प्राप्ते ब्रूमः मन्त्रब्राह्मणरूपौ द्वावेव वेदभागावित्यङ्गीकारात् मन्त्रलक्षणस्य पूर्वमभिहितत्वादवशिष्टो वेदभागो ब्राह्मणमित्येतल्लक्षणं भविष्यति" ।

ब्रा(ब्रा)ह्मणक पु॰कुत्सितार्थे कन्। कुत्सितब्राह्मणे। ब्राह्मणकर्माणत्यक्ता “एवमुक्तो ब्राह्मणः स्यादन्यो ब्राह्मणको भवेत्” भा॰शा॰२७१अ॰वज्रोक्तेः। ब्राह्मणेन जातिमात्रेण खायति कै–क। २ब्राह्मणकृत्यरहिते विप्रवंश्ये। संज्ञायाम् कन्। आयुधजीविब्राह्मणप्रधाने ३देशे सि॰ कौ॰ ततः कोपधत्वात् कञ्। ब्राह्मणकीय तत्सम्बन्धिनि त्रि॰।

ब्रा(ब्रा)ह्मणकाम्या स्त्री ६त॰। १विप्रेच्छायाम् उपचारात् २तद्विषये च “अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः। हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्” भा॰त॰।

ब्रा(ब्रा)ह्मणचक्षुस् न॰ ब्राह्मणस्य सर्वार्थप्रकाशकत्वात् चक्षुरिव। “स्मृतिश्रुती च विप्राणां चक्षुषी देवनिर्मिते। काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्त्तितः” इत्युक्ते सर्वार्थप्रकाशकत्वेन विप्रस्य चक्षुस्तुल्ये वेदस्मृतिरूपे पदार्थे।

ब्रा(ब्रा)ह्मणचाण्डाल पु॰ ब्राह्मणश्चाण्डाल इव। शास्त्रनिषिद्धकर्मकारिणि अपकृष्टब्राह्मणे मनुः ९।८७।

ब्रा(ब्रा)ह्मणजातीय पु॰ ब्राह्मणजाति+स्वार्थे छञ् न जात्यन्तात् छ इत्युक्तेः प्रकृतिविकृत्यातिक्रमः। ब्राह्मजातियुक्ते

ब्रा(ब्रा)ह्मणजीविका स्त्री ६त॰। याजनाध्यापनप्रतिग्रहरूपायां ब्राह्मणवृत्तौ “ब्राह्मणा ब्रह्मयोनिस्था ये स्वकर्मण्यवस्थिताः। ते सम्यगुपजीवेयुः षट् कर्माणि यथाक्रमम्। अध्यापनमध्ययनं यजनं याजनन्तथा। दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः। षण्णान्तु कर्मणामस्य त्रीणि कर्माणि जीविका। याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः” मनुः। ब्राह्मणवृत्तिरप्यत्र स्त्री।

ब्राह्मणत्रा अव्य॰ब्राह्मणाय देयम् त्राच्। विप्राय देयमित्यर्थे

ब्रा(ब्रा)ह्मणप्रिय ६त॰। १विष्णौ “ब्रह्मण्यो ब्राह्मणप्रियः” विष्णु स॰। २विप्रहिते त्रि॰।

ब्रा(ब्रा)ह्मणब्रुव पु॰ ब्राह्मणं विप्रजातिमात्रतया आत्मानं ब्रवीति ब्रू–क आ॰स वच्यादेशः। वेदतत्कर्महीने जातिमात्रोजीविनि विप्रे “गर्भाधानादिमन्त्रैर्यो वेदोपनयनेन च। नाध्यापयति नाधीते स भवेद्ब्राह्मणब्रुवः” व्यासस॰। “जातिमात्रोपजीवी वा कामं स्याद् ब्राह्मणब्रुवः। धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथञ्चन” मनुः। “सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे” मनुः।

ब्रा(ब्रा)ह्मणयज्ञ पु॰ब्राह्मणमात्रकर्त्तृको यज्ञः शा॰त॰। विप्रमात्रकर्त्तव्ये सौत्रामणीयज्ञे “ब्राह्मणयज्ञः सौत्रामणी ऋद्धिकामस्य” कात्या॰श्रौ॰ १९।१।१ “ब्राह्मणग्रहणं क्षत्रियवैश्ययोर्निवृत्त्यर्थम् ऋद्धिकामस्य ब्राह्मणस्य नेतरयोर्वर्णयोरिति सौत्रामणीति कर्मनामधेयम्” कर्कः। “तस्मादेष ब्राह्मणयज्ञो यत् सौत्रामणी” शत॰ ब्रा॰ १२।८।१।१।

ब्रा(ब्रा)ह्मणयष्टि स्त्री ६त॰वा ङीप्। (वामनहाटी) १वृक्षभेदे २विप्रदण्डे च स्वार्थे क। अत्रैव अमरः।

ब्रा(ब्रा)ह्मणलक्षण न॰६त॰। विप्रस्यासाधारणे धर्मभेदे तच्च वशिष्ठेनोक्तं यथा “योगस्तपो दमो दानं सत्यं शौचं दया श्रुतम्। विद्या विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम्। सर्वत्र दान्ताः श्रुतपूर्णकर्णा जितेन्द्रियाः प्राणिवधे निवृत्ताः। प्रतिग्रहे सङ्कुचिताग्रहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः”।

ब्रा(ब्रा)ह्मणशस्त्र न॰ ब्राह्मणस्य शस्त्रमिव तत्कार्य्यकारित्वात्। अभिचारादिमन्त्रोच्चारणात्मके विप्रवाक्ये “वाक् शस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन् द्विजः” मनुः। “यस्मादभिचारमन्त्रोच्चारणात्मिका ब्राह्मणस्य वागेव शस्त्रं शस्त्रसाध्यकार्यकारि” कुल्लू॰।

ब्रा(ब्रा)ह्मणसम पु॰ ६त॰। “ब्रह्मबीजसमुत्पन्नो मन्त्रसंस्कारवर्जितः। जातिमात्रोपजीवी च स भवेद् ब्राह्मणः समः” व्यासोक्ते क्रियारहिते विप्रे

ब्रा(ब्रा)ह्मणाच्छंसिन् पु॰ब्राह्मणे मन्त्रेतरवेदभागे विहितानि शस्त्राणि उपचारात् ब्राह्मणानि तानि शंसति द्वितीयायार्थे पञ्चम्युपसंख्यानम् तस्याः “ब्राह्मणाच्छंसिन उपसंख्यानम्” वार्त्ति॰ अलुक्। ब्रह्मरूपस्य ऋत्विजः सहकारिणि ऋत्विग्भेदे अच्छावाकशब्दे ८६पृ॰दृश्यम्। अत्र कश्चिद्विशेषोऽभिधीयते। षोडशर्त्विजां मध्ये प्रधानभूतान् चतुर उक्त्वा कात्या॰श्रौ॰७।१।८।९।१०। उक्तं यथा “तत्पुरुषा इतरे यथावेदम्” सू॰। “इतरे द्वादशर्त्विजो तेषामाद्यानां ब्रह्मादीनां चतुर्णां पुरुषाः आदेशकारिणोऽनुचराः सेवकाः यथावेदमिति ये यद्वेदविहितस्य कर्मणः कर्त्तारस्ते तत्पुरुषाः यथावेदमिति ये ब्रह्मपुरुषा न ज्ञायन्त इति तान् स्वयमेवाह” कर्कः “ब्राह्मणाच्छंस्यग्नीत्पोतारो ब्रह्मणः” सू॰। प्रधानपुरुषवरणेन तद्वशवर्त्तित्वात्तेऽपि वृता एव भवन्ति प्रधानपुरुषे कार्य्यान्तरासक्ते ऽन्यत्र गते वा तदीयं कर्म तत्पुरुषैरेव कर्त्तव्यम् नान्यपुरुषैरिति पुरुषाणामपि पूर्वपूर्वे च करणसमवाये नोत्तरेण”। तस्य भावः कर्म वा “होत्राभ्यश्छः” पा॰–छ। ब्राह्मणाच्छंसीय तद्भावादौ

ब्रा(ब्रा)ह्मणादि पु॰ भावे कर्मणि चार्थे ष्यञ्प्रत्ययनिमित्ते शब्दगणे स च गणः “ब्राह्मण वाडव माणव (अर्हतोनुम्

च) चोर धूर्त्त आराधय विराधय अपराधय उपराधय एकभाव द्विभाव त्रिभाव अन्यभाव अचेतन्य संवादिन् संवेशिन् संभाषिन् बहुभाषिन् शीर्षघातिन् विघातिन् समस्थ विषमस्थ परमस्थ मध्यमस्थ अनीश्वर कुशल चपल निपुण पिशुन कुतूहल क्षेत्रज्ञ निश्र बालिश अलस दुःपुरुष कापुरुष राजन् गणपति अधिपति गडुल दायाद विशस्ति विषम विपात निपात (सर्ववेदादिभ्यः स्वार्थे) (चतुर्वेदस्योभयपदवृद्धिश्च) शौटीर" पा॰ग॰सू॰। ब्राह्मणादिराकृतिगणः। तेन औचित्यादि।

ब्रा(व्रा)ह्मणायन पुंस्त्री॰ ब्राह्मणापत्यं नडा॰ फक्। विप्रगोत्रापत्ये शुद्धवंशजाते विप्रे त्रिका॰।

ब्रा(व्रा)ह्मणिक त्रि॰ ब्राह्मणस्य मन्त्रेतरवेदभागस्य व्याख्यानो ग्रन्थः ठक्। मन्त्रेतरवेदभागव्याख्याने ग्रन्थे।

ब्रा(व्रा)ह्मण्य न॰ ब्राह्मणानां समूहः भावो वा ष्यञ्। १विप्रसमूहे। २ब्राह्मणधर्मे ३विप्रत्वे च।

जात्यन्तरगतस्य कारणविशेषाभावे ब्राह्मण्यप्राप्तिर्नास्तीति ब्राह्मण्यस्य दुष्प्रापत्वम् भा॰ २८ अ॰ मतङ्गोपाख्याने विस्तरेण उक्तं यथा "तिर्य्यग्योनिगतः सर्वो मानुष्यं यदि गच्छति। स जायते पुक्कशो वा चाण्डालो वाऽप्य संशयम्। पुक्कशः पापयोनिर्वा यः कश्चिदिह लक्ष्यते। स तस्यामेव सुचिरं मतङ्ग! परिवर्त्तते। ततो दशगते काले लभते शूद्रतामिति। शूद्रयोनावपि ततो बहुशः परिवर्त्तते। ततस्त्रिंशद्गुणे काले लभते वैश्यतामपि। वैश्यतायां चिरं कालं तत्रैव परिवर्त्तते। ततः षष्टिगुणे काले राजन्यो नाम जायते। ततः षष्टिगुणे काले लभते ब्रह्मबन्धुताम्। ब्रह्मबन्धुश्चिरं कालं तत्रैव परिवर्त्तते। ततस्तु द्विशते काले लभते काण्डपृष्ठताम्। काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्त्तते। ततस्तु त्रिशते काले लभते विप्रतामपि। तां च प्राप्य चिरं कालं तत्रैव परिवर्त्तते। ततश्चतुःशते काले श्रोत्रियो नाम जायते"। एतच्च जात्यभिप्रायं संस्कारादिना तु विशिष्टब्राह्मण्यलाभः यथोक्तमङ्गिरसा "चित्रं कर्म यथाऽनेकैरङ्गैरुन्मील्यते शनैः। ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्विधिपूर्वकैः"। २शनिग्रहे पु॰शब्दमाला। तादृशब्राह्मण्यहानिस्तु कर्मभेदात् यथा "शूद्रां शयनमारोप्य ब्राह्मण्यादेव हीयते" इत्यादि।

ब्रा(व्रा)ह्मणी स्त्री ब्राह्मणस्य पत्नी ङीष्। १ब्राह्मणस्य पत्न्यां ब्राह्मणस्येयम् अण् ङीप्। २ब्रह्मसम्बन्धिन्यां स्त्रियाम्। ३बुद्धौ च। "मनो मे ब्राह्मणं विद्धि बुद्धिं मे विद्धि ब्राह्मणीम्"। "अरणीं ब्राह्मणीं विद्धि गुरुरस्योत्तरारणिम्। तपःश्रुते चाभिमथ्नीतो ज्ञानाग्निर्जायते ततः" भा॰आश्व॰२४अ॰।

ब्रा(व्रा)ह्मीकन्द पु॰ ब्राह्म्या इव कन्दोऽस्य। १वाराहीकन्दे राजनि॰। २ब्रह्मयष्टिकायां विश्वः।

ब्रा(व्रा)ह्म त्रि॰ ब्रह्मण इदं अण्। १ब्रह्मसम्बन्धिनि स्त्रियां ङीप्। २विप्राये ३हव्ये च धरणिः।

ब्रा(व्रा)ह्ममुहूर्त्त पु॰ ब्रह्मा देवताऽस्य अण् टिलोपः कर्म॰। अरुणोदयात् प्रागवर्त्तिनि "रात्रेश्च पश्चिमे यामे मुहूर्त्तो ब्राह्म उच्यते" "रात्रेश्च पश्चिमे यामे मुहूर्त्तो यस्तृतीयकः। स ब्राह्म इति विख्यातो विहितः संप्रबोधने" आ॰त॰ सुमन्तुना उक्ते दण्डद्वयात्मके काले

ब्रू कथने अदा॰उभ॰द्विक॰सेट्। ब्रवीति आह ब्रूते। अवोचत् अवोचत। उवाच ऊचतुः। अस्यार्द्धधातुके वच्यादेशोऽनित्यः तेन "विब्रूतिः कटके कृता"। ब्राह्मणब्रुव इत्यादि सिद्धम्। अनु+पश्चात् कथने अनुवादे। वि+विरुद्धतया कथने विवादे च।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलिते वाचस्पत्याभिधाने वकारादिशब्दार्थसङ्कलनम्।

---

# भ

भकारः पवर्गीयचतुर्थवर्णो व्यञ्जनवर्णभेदः। तस्योच्चारणस्थानमोष्ठौ। अस्योच्चारणे आभ्यन्तरप्रयत्नः ओष्ठाभ्यां सह जिह्वाग्रस्य स्पर्शः अतस्तस्य स्पर्शवर्णता। बाह्यप्रयत्नाश्च संवारनादघोषाः महाप्राणश्च। तस्य ध्येयरूपं यथा "भकारं शृणु चार्वङ्गि! स्वयंपरमकुण्डली। महामोक्षप्रदं वर्णं तरुणादित्यसंप्रभम्। पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा" कामधेनुतन्त्रम्। अस्य अधिष्ठातृदेवताध्यानं यथा "तडित्प्रभां महादेवीं नागकङ्कणशोभिताम्। षड्भुजां वरदां भीमां रक्तपङ्कजलोचनाम्। रक्तवस्त्रपरीधानां रक्तपुष्पोपशोभिताम्। चतु-

वर्गप्रदां देवीं साधकाभीष्टसिद्धिदाम्। एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्"। अस्य वाचकशब्दाः यथा "भः क्लिन्ना भ्रमरो भीमो विश्वमूर्त्तिर्निशा-भवम्। द्विरण्डो भूधरोमलं यशस्तत्प्रवाचकः। नक्षत्रं भ्रमणा दीप्तिर्व्योमभूमिः पयो नभः। नाभिर्भद्रं महाबाहुर्विश्वमूर्त्तिर्वितापहः। प्राणात्मा तापिनी वज्रा विश्वरूपी च चन्द्रिका। भीमसेनः सुधासेनः सुखी मायापुरं हरः"। वर्णाभिधानम्। मातृकान्यासेऽस्य नाभौ न्यास्यता काव्यादावस्य प्रयोगे "सुखमयमरणक्लेश-दुःखं पवर्गः" इ॰टी॰ उक्तेः क्लेशः फलम्।

भ न॰ भाति भा—क। १नक्षत्रे अमरः। २ग्रहे शब्दरत्ना॰। ३राशौ ज्यो॰त॰। ४शुक्राचार्य्ये पु॰ मेदि॰। तेषां दीप्तिमत्त्वात् तथात्वम्। ५भूधरे एकाक्षरकोषः। ६भ्रान्तौ पु॰ शब्दरत्ना॰। इ॰र॰उक्ते ७आदिगुरुके अन्त्य-लघुद्वये वर्णत्रये। तस्य काव्यादौ प्रयोगे फलं यशः देवताचन्द्रः यथोक्तं इ॰र॰ टीकायाम् "भचन्द्रो यश उज्ज्वलम्"। [पायौ च॰ १०।१६२।

भंसस् पु॰ भसत् कटिदेशः पृषो॰। उपचारात् तत्प्रत्यङ्गिनि

भकार पु॰ भ+स्वरूपे कार। भस्वरूपे वर्णे।

भकक्षा स्त्री ६त॰। नक्षत्रकक्षायाम्।

"भवेत् भकक्षा तिग्मांशोर्भ्रमणं षष्टिताडितम्। सर्वो-परिष्टाद्भ्रमति योजनैस्तैर्भमण्डलम्" सू॰ सि॰। "सूर्य्यस्य भ्रमणं कक्षापरिधिमानं योजनात्मकम्" "खखार्थैकसुरार्णवाः" ४३१ ३२०० इति वक्ष्यमाणं षष्ट्यागुणितं सत् नक्षत्राणां कक्षा नक्षत्राधिष्ठितगोलस्य मध्यवृत्तं स्यात्। तैर्नक्षत्रकक्षामितैर्योजनैर्भमण्डलं नक्ष-त्राधिष्ठितगोलमध्यवृत्तं सर्वोपरिष्टाच्चन्द्रादिसप्तग्रहेभ्य उपरि दूरं भ्रमति भूगोलादभितः परिभ्रमति" रङ्गना॰।

भकूट न॰ ६त॰। विवाहे दम्पत्योः शुभाशुभसूचके राशिसमूहे तस्य शुभाशुभत्वं च उपयमशब्दे १२५१ पृ॰ दृश्यम्। "खेटारित्वं नाशयेत् सत् भकूटम्"। "प्रोक्तो दुष्टभकूटके परिणयः" मुहू॰ तत्रैव दृश्या। [शब्दार्थकल्पतरुः।

भक्किका स्त्री फक्किका+पृषो॰। (फड़िङ) ख्याते कीटभेदे

भक्त पुंन॰ भज—क्त। १अन्ने ओदने अमरः। २भक्तियुक्ते ३तद्रात्मके तत्परे ४विभक्ते कृतभागे च त्रि॰"भक्तो हरः शुध्यति यद्गुणः स्यात्" लीला। अन्नपाकप्रकारस्त-द्गुणश्च भावप्र॰ उक्तो यथा

"सुधौतांस्तण्डुलान् स्फीतांस्तोये पञ्चगुणे पचेत्। तद्भक्तं प्रस्रुतञ्चोष्णं विशदं गुणवन्मतम्। भक्तं वह्नि-करं पथ्यं तर्पणं रोचनं लघु। अधौतमस्रुतं शीतं गुर्वरुच्यं कफप्रदम्"।

भक्तियुक्तलक्षणादिकं तद्भेदश्च मुक्ताफले उक्तं यथा "सजन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि वै-रिह" "ते भक्ताः इति लक्षणं स च नवधा हासादिनववि-धरसास्वादमूलकत्वेन नवविधत्वात्"। रसभेदे भक्तविशेषाः मुक्ताफले दर्शिताः यथा "तस्य तत् खेलनं दृष्ट्वा गोप्यः प्रेमपरिप्लुताः। व्रीडिताः प्रेक्ष्य चान्योऽन्यं जातहासा न निर्ययुः" भाग॰१०।१२अ॰तथाच हासे गोप्य सम्भोगशृ-ङ्गारे गोप्यादयस्तत्र दर्शिताः। विप्रलम्भशृङ्गारेऽपि गोप्य स्तत्र दर्शिताः। "अन्तर्गृहगताः काश्चिद्गोप्योऽलब्धविनि-र्गमाः। इत्यादितद्भावनायुक्ता दध्युर्मीलितलोचनाः। दुः-सहप्रेष्ठविरहतीव्रतापधुताशुभाः। ध्यानप्राप्ताच्युताश्लेष-निर्वृत्या क्षीणमङ्गलाः। तमेव परमात्मानं जार-बुद्ध्याऽपि सङ्गताः। जहुर्गुणमयं देहं सद्यः प्रक्षीण-बन्धनाः। अन्यानि रासपञ्चाध्यायीवाक्यानि तत्रोदा-हृतानि दृश्यानि। करुणरसेऽर्जुनादयः। वाक्यानि तत्र दृश्यानि। रौद्ररसे हिरण्यकशिपुशिशुपालादयः। भयानकरसे कंसादयः। बीभत्सरसे पुरूरवाःपिङ्गला-दयश्च। शान्तरसे नारदादयः। अद्भुतरसे श्रीदाम-ब्रह्मादयः। वीररसे बलिप्रभृतयः। तत्र दानवीरे बलिः धर्मवीररसे कविप्रभृतयः। युद्धवीरे शिशुपालादयः। ए-तेषां मूलवाक्यानि तत्र दृश्यानि। अधिकं भक्तिशब्दे दृश्यम् "भक्तानां लक्षणं लक्ष्मि! गूढं श्रुतिपुराणयोः। पुण्य-स्वरूपं पापघ्नं सुखदं भक्तिमुक्तिदम्। सारभूतं गोप-नीयं न वक्तव्यं खलेषु च। गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे विशत्यलम्। वेदवेदाङ्गवेदान्तास्तं पवित्रं वदन्ति हि। पुरुषाणां शतं पूर्वं पूतं तज्जन्ममात्रतः। स्वर्गस्थं नरकस्थं वा मुक्तिमाप्नोति तत्क्षणात्। यैः कैश्चिद्यत्र वा जन्म लब्धं येषु च जन्तुषु च। जीवन्मुक्तास्ते च पूता यान्ति काले हरेः पदम्। मद्भक्तियुक्तो मत्पूजा-नियुक्तो मद्गुणान्वितः। मद्गुणश्लाघनीयश्च मन्निविष्टश्च सन्ततम्। सगद्गदः साश्रुनेत्रः स्वात्मविस्मृत एव च। न वाञ्छति सुखं मुक्तिं सालोक्यादिचतुष्टयम्। ब्रह्म-त्वममरत्वं वा तद्वाञ्छा मम सेवने। इन्द्रत्वञ्च मनुत्वञ्च देवत्वञ्च सुदुर्लभम्। स्वर्गराज्यादिभोगांश्च स्वप्ने च न हि वाञ्छति। भक्ताप्तानि विनश्यन्ति देवा ब्रह्मादयस्तथा।

कल्याणभक्तियुक्तश्च मद्भक्तो न प्रपश्यति । ब्रमन्ति भारते भक्ता लब्ध्वा जन्म सुदुर्लभम् । तेऽपि यान्ति मच्छ्री पूत्वा परं तीर्थं ममालयम्” ब्रह्मवै० प्र० ५ अ० । “रतिः कृष्णकथायाञ्च यस्यास्तु पुलकोद्गमः । मनो निमग्नं यस्यैव स भक्तः कथितो बुधैः । पुत्रदारादिकं सर्वं जानाति श्रीहरेरपि । आत्मना मनसा वाचा स भक्तः कथितो बुधैः । दयास्ति सर्वभूतेषु सर्वं कृष्णमयं जगत् । यो जानाति महाज्ञानी स भक्तो वैष्णवोत्तमः” ब्रह्मवै० जन्म० ३अ० । त्रिविधभक्तलक्षणं यथा “भक्तानां त्रिविधानाञ्च लक्षणं श्रूयतामिति । हृषामश्यारतो भक्तो मन्नाम गुणकीर्त्तिषु । मनोनिवेशयेत् त्यक्त्वा संसारसुखकारणम् । दास्यं विना नहीच्छेत्तु सालोक्यादिचतुष्टयम् । नैव निर्वाणमुक्तिञ्च सुधापानमभीप्सितम् । ध्यायते मत्पदाब्जञ्च पूजयेद्भक्तिभावतः । ब्रह्मेन्द्रकालस्य देवा यद्भूतपरक्षितस्य च । सर्वसिद्धिं न वाञ्छन्ति तेऽणिमादिकमीप्सितम् । ब्रह्मत्वममरत्वञ्च सुरत्वं सुखकारणम् । वाञ्छन्ति निश्चलां भक्तिं मदीयामतुलामपि । स्त्रीपुंविभेदो नास्त्येव सर्वजीवेषु भिन्नता । तेषां सिद्धेश्वराणाञ्च परराणां ब्रजेश्वर ! । क्षुत्पिपासादिकां निद्रां लोभमोहादिकं रिपुम् । त्यक्त्वा दिवानिशं मां च ध्यायते च दिगम्बरः । स मद्भक्तोत्तमोनन्द ! श्रूयतां मध्यमादिकम् । नासक्तः कर्मसु स्पृहो पूर्वप्राक्तनतः शुचिः । करोति सततञ्चैव पूर्वकर्मनिकृन्तनम् । न करोत्यपरं यत्नात् सङ्कल्परहितश्च सः । सर्वं कृष्णस्य यत्किञ्चिन्नाहं कर्त्ता च कर्मणः । कर्मणा मनसा वाचा सततं चिन्तयेदिति । न्यूनभक्तश्च तन्न्यूनः स च प्राकृतिकः स्मृतः । यमं वा यमदूतं वा स्वप्नेन च न पश्यति । पुरुषाणां सहस्रञ्च पूर्वं भक्तः समुद्धरेत् । पुंसां शतं मध्यमश्च तच्चतुर्थञ्च प्राकृतः । भक्ताश्च त्रिविधस्तात ! कथितश्च तवाप्यतः” इति तत्रैव ८४ अ० । भावे क्त । ५भजने न० ।

**भक्तकंस** पुं न० भक्तार्थः कंसः । भक्ताहरणार्थे पात्रे “भक्ताख्यास्तदर्थेषु” पा० आद्युदात्तताऽस्य ।

**भक्तकर** पु० भक्तं भजनं करोति कृ–ट । धूपे कृत्रिमधूपे शब्दच० । [सूपकारे हेमच० ।

**भक्तकार** त्रि० भक्तं करोति कृ–अण् उप०स० । पाचके

**भक्ततूर्य्य** न० भक्ते तद्भोजनकाले वादनीयं तूर्य्यम् शा०त० । भोजनकाले वादनीये वाद्यभेदे त्रिका० ।

**भक्तदास** पु० भक्तेन अन्नमात्रलाभेन दासः पक्वीकृतदासभावः । पञ्चदशदासान्तर्गते दासभेदे । “भक्तदासश्च विज्ञेयः” इति स्मृतिः । दासशब्दे दृश्यम् ।

**भक्तपुलाक** पु० भक्तस्य पुलाक इव । सिक्थे अन्नमण्डे (माँड़) त्रिका० ।

**भक्तमण्ड** पु० ६त० । भक्तस्य निस्रावे (माँड़) । हेमच० ।

**भक्तवत्सल** त्रि० ६त० । १भक्तेषु स्निग्धे २विष्णौ पु० । “माधवो भक्तवत्सलः” विष्णुस० ।

**भक्तसिक्थ** पु० ६त० । भक्तमण्डे अमरः ।

**भक्ति** स्त्री भज–क्तिन् । १सेवायाम् आराधनायां, २तदेकताने चित्तवृत्तिभेदे ३विभागे ४गौण्यां वृत्तौ ५उपचारे ६अवयवे ७भङ्ग्याम् ८श्रद्धायाम् ९रचनायाञ्च “भजति विरलभक्तिः” रघुः । भक्तिलक्षणमुक्तं शाण्डिल्यसूत्रटीकयो. यथा “सा परानुरक्तिरीश्वरे” सू० “अत्र सा परेति लक्ष्यनिर्देशः । शेषं लक्षणम् । परेति गौणीं व्यावर्त्तयति । ईश्वर इति प्रकृताभिप्रायम् । आराध्यविषयकरागत्वमेव भक्तित्वम् । इह तु परमेश्वरविषयकान्तःकरणवृत्तिविशेष एव भक्तिस्तद्वैशिष्ट्यं च लौकिकानुरागादौ सुवहम् । यथोक्तं परभक्तिमता प्रह्लादेन । (विष्णु० । अंशे१।अ०२० । श्लो० १७) । “या प्रीतिरविवेकानां विषयेष्वनपायिनी । त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु” । अत्र प्रीतिपदेन सुखनियतो राग एव लक्षितः । अन्यथा प्रीतेः सुखरूपाया निर्विषयत्वेन विषयसप्तमी न स्यात् तस्याः सुखज्ञानरूपत्वेऽपि तज्ज्ञानस्य सुखविषयत्वाद्विषयविषयत्वासम्भवात् । तस्मादनुरक्तिरेव सविषयिणी लक्षिता । न च विषयजन्यप्रीतिरर्थः अनन्वयप्रसक्त्या अननुशासनात् । किञ्च “अच्युतास्तु सदा त्वयि” इत्यत्र भक्तेरीश्वरविषयताभिज्ञो प्रीतिपदेनापि तदेकवाक्यतया सैवोच्यते । पूर्वं प्रतिजन्म भक्तिप्रार्थनमिह तु विषयरागदृष्टान्तेन तस्या एव सर्वथान्यपरिहार्यत्वप्रार्थनमिति विशेषः । विषयजन्यप्रीतिरपि रागं विना न सम्भवतीति रागात्मकत्वम् । तथा च पातञ्जलसूत्रम् । (पा०२।सू० ७पृ०७८) “सुखानुशयी रागः” इति । तस्यैव वक्ष्यमाणलिङ्गेषु व्यापनाल्लाघवाच्च भक्तित्वम् । न तु क्वचित् स्मरणस्य, क्वचिच्च कीर्त्तनादेः अननुगमात् । न च तज्ज्ञानस्य तत्त्वं द्वेषादिमत्स्वपि तत्प्रसङ्गात् । नाप्याराध्यत्वेन ज्ञानं सा पूजानमस्काराद्याराधनास्वननुगमात् । अपि च बलाद्भयाद्वा नमस्कार्यत्वादिज्ञानवत्यपि भक्तोऽयमनुरक्तोऽयमिति व्यवहारापत्तेः । अनु-

रागादिसहिताराध्यत्वज्ञानमिति चेत् अनुराग एवास्तु अतएव गी॰।अ॰१०। श्लो॰९) । "मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्। कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च। तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इत्यादौ मद्गतचित्तप्राणादीनां भजनमुक्तं माराध्यत्वेन ज्ञानवताम्। अतएव च कृष्णस्य कमनीयाकृतिदर्शनेनानुरक्तानां गोपतरुणीनामपि भक्तिफलं मुक्तिः स्मर्य्यते। अनुरक्तिस्तु न बुद्ध्यन्तर्गतः किन्तु भगवन्महिमादिज्ञानादनुपश्चाज्जायमानत्वादनुरक्तिरित्युक्तम्। ननु पित्रादिगोचरानुरागस्यापि प्रकृतभक्तित्वं प्रसज्येत जगत एव परमेश्वरात्मकत्वात्। अथ विकारविशिष्ट एव तथात्वं वाच्यं तथापि गोपीप्रभृतीनां प्रादुर्भावावच्छिन्नेश्वरभक्तावव्यापकम्। उच्यते जीवोपाध्यनवच्छिन्नचेतनविषयिणी अनुरक्तिरेव सेति। एवञ्च प्रादुर्भावावच्छिन्ने परिपूर्णे च भक्तिः संगृहीता भवति" टीका। "तत्संस्थस्यामृतत्वोपदेशात्" ३सू॰ "तस्मिन्नीश्वरे संस्था भक्तिर्यस्य स तथोक्तः। तस्यामृतत्वं फलमुपदिश्यते (छा॰।प्र॰ १२७) "ब्रह्मसंस्थोऽमृतत्वमेतीति"। तस्माज्ज्ञानस्यामृतत्वगौणफलत्वनिबन्धना तदभिमाना परिहृता भवतीति" टी॰। "ज्ञानमिति चेन्न द्विषतोऽपि ज्ञानस्य तदसंस्थितेः" ४सू॰ "ननु ब्रह्मसंस्थाशब्देन ब्रह्मज्ञानमेवोच्यते न तु तद्भक्तिः। तथाचामृतत्वफलं तस्यैवेति चेद्ब्रूमः। नैष दोषः। संस्था भक्तिरेव न ज्ञानं द्विषतस्तज्ज्ञानवतोऽपि तत्संस्थत्वव्यवहाराभावात्। राजाद्यनुरक्ताः अमात्यभृत्यादयस्तत्संस्था इति व्यपदिश्यन्ते न पुनः प्रतिपक्षभूपालाः। शब्दार्थनिर्णयो हि लोकवदेव वेदेऽपीति। अतएव चिरकालिकोपाख्याने "विश्वसृते न कालेन पत्नीसंस्था व्यतीक्रमः। सोऽयमीषन्मया तप्तो दुःखेनाप्नुहि वर्त्तयन्"। (महाभा॰ शा॰ अ॰ २६७ श्लो॰ ९५२६) इत्यनेन पतिभक्त्यतिक्रम उक्तः। तस्मात् संस्था भक्तिरिति एवञ्च (ब्रह्मसू॰।अ॰१।पृ॰७) "तन्निष्ठस्य मोक्षोपदेशादिति" बादरायणीयसूत्रस्याप्ययमेवार्थोऽध्यवसेयः" टी॰ "तयोपक्षयाच्च" ५सू॰। "तया भक्त्या मुक्तिं प्रति ज्ञानस्योपक्षीणं यथाहाकार उक्तयुक्तिसहस्रार्थः (गी॰।अ॰७।श्लो॰ ११)। "यदा ते निश्चलं चेतो मयि भक्तिसमन्वितम्। तदा त्वं मत्प्रसादेन निर्वाणमपि यास्यसि" इति स्थितम्। ननु (श्वे॰।उ॰।७२) "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यत्र वेदनफलं मुक्तिः श्रुता तद्विरोधेन श्रुतीनामन्यार्थत्वं स्यादिति चेन्न अत्रापि तथैवोपक्षयात्। तथा हि अतिमृत्युपदं न मुक्तौ रूढं किन्तु यस्यां सत्यां मृत्योरतिक्रम इति व्युत्पत्त्या तदपेक्षया यतो भक्तेर्मृत्यतिक्रम इति व्युत्पाद्य भक्तिमेवातिमृत्युपदेनाभिधत्ताम् उपपदविभक्त्यपेक्षया कारकविभक्त्यर्थस्य बलवत्त्वात्। (गी॰।अ॰१२ श्लो॰७)। "तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्। भवामि न चिरात् पार्थ! मय्यावेशितचेतसाम्"। इत्यादिना भक्तितो मृत्योरतिक्रमोक्तेः। मन्त्रश्च भवति (तैत्तिरीयमन्त्रभागे) "त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतादिति"। अत्र यजनं भक्तिः तथैव तत्कल्पव्याख्यानात् नचान्यां श्रुतौ भक्तेरुपविधानं सत्यावपि तुल्यत्वात्। तस्मादनयापि श्रुत्या ज्ञानस्योपक्षय एव प्रतीयत इति। ननु तथापि भक्ते रागरूपत्वे किं कारणमित्यपेक्षायामाह" टी॰। "द्वेषप्रतिपक्षभावाद्रसशब्दाच्च रागः" ६सू॰। "भक्तिः खलु राग एव भवितुमर्हति कुतः द्वेषविरोधित्वात्। लोके हि द्वेषाय भक्तोऽयमिति मिथोविरुद्धधर्मवति व्यवह्रियते तत्र द्वेषविरोधी च राग एव प्रसिद्धो न ज्ञानादिः। एवञ्च भगवति शिशुपालस्य द्वेषानुबन्धमभिधाय विष्णुपु॰ अ॰ ४ १५ गद्येन १॰ "अयं हि भगवान् कीर्त्तितः संस्तुतश्च द्वेषानुबन्धेनापि अखिलसुरासुरदुर्लभं फलं प्रयच्छति किमुत सम्यग्भक्तिमताम्" इत्युक्तम्। तथा चान्यस्मृतौ "विद्वेषादपि गोविन्दं दमघोषात्मजः स्मरन्। शिशुपालो गतः स्वर्गं किं पुनस्तत्परायणः" इति अत्रापि द्वेषविरोधित्वेन भक्तेरभिधानात्। तथा च गीतासु (गी॰अ॰१६। श्लो॰१८)। "मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः। तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु। आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि। मामप्राप्यैव कौन्तेय! ततो यान्त्यधमां गतिम्। इति। तद्विरोधिनी च भक्तिरीश्वरविषयैवानुरक्तिरिति युज्यते। किञ्च (तैत्ति॰। उ॰१००) 'रसं ह्येवायं लब्ध्वानन्दी भवतीति शब्दात् ब्रह्मानन्दाविर्भावस्य भक्तेर्ब्रह्मगोचरस्य रसस्य हेतुतावगम्यते। रसश्च रागः (गी॰।अ॰ २। श्लो॰ ५९)। "रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते" इत्यादौ प्रसिद्धः। अत्र

रक्तो विषयरागः । अत एव च (विष्णुपु० अ० ४ । अ० ४ मध्यम्) रामलक्ष्मणादीनां स्वर्लोकारोहणमुक्ता "येऽपि तेषु भगवदंशेष्वनुरागिणः कोशलनगरजानपदास्तेऽपि तन्मनसस्तत्सलोकतामापुरिति" साक्षादेव भक्तावनुरागशब्दः प्रयुक्त इति । तस्मादपि न ज्ञानं किन्त्वनुरागरूपैव भक्तिर्निःश्रेयसफलेति । ननु द्वेषविरोधित्वं न रागत्वे विरुद्धम् उदासीनत्वेनानैकान्त्यादिति चेत् उच्यते द्वेषकार्य्यं हि निवृत्तिस्तद्विरोधिनी प्रवृत्तिरिति । भवति च भक्तानां भजनीयानुवर्त्तनादौ प्रवृत्तिस्तद्विरोधिनां तदनुवर्त्तनादौ निवृत्तिः । एवञ्च कार्य्यमुखेन विरोधमभिप्रेत्य द्वेषप्रतिपक्षेत्युक्तम् । तथा च प्रयोक्तव्यं भक्तिर्भजनीयगोचररागरूपा तदनुवर्त्तनादिहेतुर्हितसाधनताधीभिन्नात्मविशेषगुणत्वात् यन्नैवं तन्नैवं यथा द्वेषः । रागोत्कर्षेण तदनुवर्त्तनाद्युत्कर्षस्य दृष्टत्वाच्च । किञ्च यो यस्मिन् भक्तस्तत्र तस्यौदासीन्याभावेऽवगते भक्तिस्तादृशानुवर्त्तनाद्यनुकूलद्वेषविरोधिगुणरूपा अनुवर्त्तनहेतुत्वात्मविशेषगुणत्वाद्धितसाधनताधीवदिति हितसाधनताधीत्वबाधसहकारेण परिशेषाद्रागत्वसिद्धिः । किमुत भक्तिमतामित्येतत्कैमुतिकन्यायो विरोधिन्येव द्रष्टव्यः । (गी० । अ० ९ । श्लो० ३२) । "मां हि पार्थ ! व्यपाश्रित्य येऽपि स्युः पापयोनयः" । "किं पुनर्ब्राह्मणाः पुण्याः" इत्यादौ च । एवं (गी० । अ० १६ । श्लो० १८) "मामात्मपरदेहेष्वित्यनेन द्वेषस्य संहारहेतुत्वात् तद्विरोधिगुणो जीवोपाधिपरिहारेण परात्मगोचरो राग एव भक्तिरूपः संसारनाशहेतुः । एतदेवोक्तं साम्प्राप्येनेति । चकारात् पुलकादिरागलिङ्गेनापि रागत्वम् । प्रसिद्धं हि "पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन" इत्यादौ । भक्तेर्गुणान्तरत्वे तु पृथग्लिङ्गताकल्पने गौरवात् । स च रागः केषाञ्चिदिष्टसाधनताज्ञानजन्योऽपि यागादिवदिच्छारूप एव । अस्माकं तु प्रीत्याभ्यनुरज्यामि नेच्छामीत्यादिप्रतीतेरागः पृथगेव द्वेषवत् । इच्छाया असिद्धमात्रविषयत्वाद्रागस्य सिद्धासिद्धविषयत्वाच्च । प्रत्युत तस्येच्छात्वादिव्याप्यत्वकल्पनागौरवाच्चेति दिक् । तस्मात् तल्लक्षणसिद्धिरिति । ननु भक्तिः क्रियात्मिका सा च निःश्रेयसाय न क्षमते (तैत्ति० । आरण्य० । खिलप्रश्ने ऋक् २१) "न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः" इत्यादिश्रुतिभ्य इत्याशङ्कां परिहरत्याह टी० । "न क्रिया कृत्यनपेक्षणाज्ज्ञानवत्" ७सू० । सा भक्तिर्न क्रियात्मिका भवितुमर्हति प्रयत्नानुविधानाभावात् । यन्न प्रयत्नानुविधायि तन्न क्रियात्मकं यथा ज्ञानम् । तद्धि प्रमाणवस्तुन्यधीनं न पुरुषेण स्वेच्छया कर्त्तुमकर्त्तुमन्यथा कर्त्तुं शक्यते । तथा भक्तिरपि न हि रागिणां प्रमदापुत्रादिविषयिणी पुंव्यापारेण तथा भवति भक्तिः किन्तु पूर्वमुक्तमौषभक्त्यादिसाधनाधीनेति" टी० । "अतएव फलानन्त्यम्" ८सू० । "यतः सा न क्रियात्मिका अतएव तत्फलस्य निःश्रेयसस्यानन्त्यमुपपद्यते । अन्यथा (छा० । ८ । १ । ६) "तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते" इत्यनेनामृतत्वस्यापि क्षयित्वं प्रसज्येतेति" टी० । "तद्वतः प्रपत्तिशब्दाच्च न ज्ञानमितरप्रपत्तिवत्" ९सू० । "भवति हि भगवद्वाक्यं (गी० । अ० ७ । श्लो० १९) "बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते । वासुदेवः सर्वमिति स महात्मा सुदुर्लभः" इति । ज्ञानवतः प्रपत्तिरुक्ता भक्तेर्ज्ञानहेतुत्वे नेदमुपपद्यते इतरप्रपत्तिवदिति । यथा तदनन्तरं (गी० । अ० ७ । श्लो० २०) । "कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः" । इत्यनेन देवतान्तरप्रपत्तिनिन्दामुखेनैव प्रपत्तिः स्तूयते । तत्र देवताभक्तेरेव प्रपत्तिशब्देन कथनं न तज्ज्ञानस्य । तस्मात् एव प्रपत्तेरुभयत्र प्रत्यभिज्ञानात् इति । ब्रह्मज्ञानानन्तर्य्यश्रवणमपि ज्ञानत्वाभावे निदानम् । यथा (गी० । अ० १५ । श्लो० १९) । "यो मामेवमसंमूढो जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारत !" इति । तथा (गी० । अ० ९ । श्लो० १३) । "भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् । इति मत्वा भजन्ते मां बुधा भावसमन्विताः" । इति च । तस्माच्च ज्ञानात्मिका । यद्यपि रागत्वेनैव ज्ञानभेदः सिद्धस्तथापि भक्तिशब्दो ब्रह्मज्ञाने गौण इति शङ्कानिरासार्थमेतत् । इदन्तु चिन्त्यते भगवद्गीतावाक्यानि न शब्दविधया वेदवत् प्रमाणम् । किन्तु भारतस्मृतित्वेन तथा च कथं शब्दादिति निर्देशः । अत्र केऽनुमितशब्दादिति व्याचक्षते । अन्ये त्वाहुः अदृष्टार्थकभगवद्वाक्यत्वमेव वेदत्वं तच्च गीतास्वप्यविशिष्टम् । अतएव भगवद्गीतासूपनिषत्स्विति दृश्यते, केवलं त एव श्लोका व्यासेन निबद्धाः तथा च पुराणान्तरम् । "गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः । या स्वयं पद्मनाभस्य मुखपद्मा-

द्विनिःसृता"। न च गृह्याणामनन्वयप्रसङ्गः भारतवचना-
द्यनुष्ठानेनैव तदुपपत्तेः प्रयाजादिस्तुत्यादिवत्। तद्वि-
च्छायेति चेन्न वचनाऽपरिपूर्त्तेः। तथाचोक्तमाचार्य्यैः।
"तानेव वैदिकान् मन्त्रान् भारतादिनिवेदितान्।
स्वाध्यायनियमं हित्वा लोकबुद्ध्या प्रयुञ्जते"टी०। १आ०।
"एवमवसितत्वं प्रथमस्याथाभिज्ञायां भक्तौ लक्षितायां ज्ञान-
योगभक्तीनामङ्गप्रधानभावविवेकाय द्वितीयाह्निकस्यारम्भः।
"सा मुख्येतरापेक्षितत्वात्"१०सू०। आह्निकसमाप्तावुक्तस्य
पुनः स्मरणाय सेति निर्देशः। सा परा भक्तिर्मुख्या प्रधा-
नम् इतरैरात्मज्ञानयोगादिभिः स्वोपकार्य्यतयापेक्षित-
त्वादित्यर्थः। छान्दोग्ये (प्र०६।१६) "यो भूमा तत्सुखम्"
इत्याद्युपक्रम्य श्रूयते "आत्मैवेदं सर्वमिति स वा
एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरा-
त्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवतीति"
तत्रात्मरतिरूपायाः परभक्तेः पश्यन्निति दर्शनमप्रिय-
त्वादित्वनिरासमुखेनाङ्गं भवति। यथा "दध्नो मैष-
मन्त्राय प्राचीनावीती दोहयति अभिजानन् जुहोति
धनवान् सुखवानित्यादौ दध्याद्यङ्गं तथा "दर्शनमपि
रतेरङ्गं मननविज्ञानयोरुक्तमिदर्शनार्थतया न्याय-
प्राप्तयोरनुवादः। एवमात्मक्रीडादेरतिनैयत्यादर्थप्राप्तो-
ऽनुवाद एव। अन्यथा रत्युद्देशेन दर्शनादिविधौ
दर्शनाद्युद्देशेन वा रत्यादिविधौ वाक्यानि भिद्येरन्।
तस्मात् (पूर्वमीमांसायाम्। अ० ३। पा०१। सू० २)
"शेषः परार्थत्वादिति" न्यायाद्दर्शनमङ्गमिति। अतएव
भगवान् मनुरपि। (महाभार०। शान्ति०।अ०१८४।
श्लो० ७१११।७११२)। "यस्त्यक्त्वा प्राकृतं कर्म
नित्यमात्मरतिर्मुनिः। सर्वभूतात्मभूतात्मा स्याद्वेत् पर-
मां गतिः"। इत्यनेनात्मरतेः प्राधान्यमाहेति" टी०।
"प्रकरणाच्च"११सू०।"प्रकरणं रतेरेव फलवत्त्वात् तस्यास्त-
दप्रकरणस्य दर्शनमङ्गं भवितुमर्हतीति"टी०। "दर्शनफल-
मिति चेन्न तेन व्यवधानात्"१२सू०। "अथ दर्शनस्यैव फलं
स्वाराज्यलक्षणममृतत्वं तथा च तस्यैव प्रकरणमिति वैप-
रीत्यमिति चेन्न तेन तच्छब्देन व्यवधानात् (छां०।
प्र०५।१६।१७) स स्वराड् भवतीत्यत्र तच्छब्देन प्रत्यासन्ना-
त्मरतिमानेवोपस्थाप्यते न विप्रकृष्टः पश्यन्निति व्यव
हितोपस्थितौ कारणाभावात्। प्रकरणमेव कारणमिति
चेन्न अन्योन्याश्रयात्"टी०। "दृष्टत्वाच्च"१३सू०। "दृष्टं हि लोके
सौन्दर्यादिज्ञानस्य तद्विषयरागं प्रति हेतुत्वं न तु
रतेर्ज्ञानहेतुत्वमिति दृष्टोपकारत्वादप्यङ्गत्वमवसीयते।
दृष्टं च प्राकृतनिष्कृष्टत्वात्ममहिमत्वाप्रियत्वादिज्ञानं
मनोमालिन्यकारणं भूतेषु करुणावत्त्वाव्याहतैश्वर्य्याति-
शयितद्रूपाण्य आत्मेति ज्ञानम्मालिन्यनिवृत्तिस्ततः परा
भक्तिरिति। अतएव गीयते (गी०।अ०५। श्लो० १७)।
"तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः। गच्छन्त्यपु-
नरावृत्तिं ज्ञाननिर्धूतकल्मषाः। इति। तथा आयु-
र्वेदेऽपि (अष्टाङ्गहृदये। अ० १। श्लो० २१)। धी-
धैर्य्यात्मादिविज्ञानं मनोदोषौषधं परम्" टी०। "अत-
एव तदभावाद्बल्लवीनाम्"१४सू०। "यतो ज्ञानं दृष्टोपकार-
कमङ्गमत एव दृष्टोपकारं निरस्य मनोमालिन्यादिबाधात्
प्रधानभगवदनुरागमात्रेण बल्लवीनां मुक्तिः स्मर्य्यते।
(विष्णुपुराणे। अंशे ५। अ० १३। श्लो० १४। १५।
"तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा। तदप्राप्ति-
महादुःखविलीनाशेषपातका। चिन्तयन्ती जगत्सूतिं
परब्रह्मस्वरूपिणम्। निरुच्छ्वासतया मुक्तिं गताऽन्या
गोपकन्यका" इति। अत्र सुखदुःखलिङ्गेनानुरागोऽनु-
मीयते न मुक्तिरिति वाक्यार्थः। द्वारबाधादनवक्लृप्त-
फलत्वेनापि कर्म्मणा फलसिद्धिरिव तासां रागान्मुक्ति-
स्तदवगम्यते ज्ञानमङ्गमेव प्रधानत्वे तु तदभावे फलं
न स्यात् विना च न ब्रह्मात्मैक्यज्ञानं तत्कारण-
श्रवणमननाद्यसम्भवात्। किन्त्वनुरागनियतानुवृत्ति-
रेव। नचायमर्थवाद अपूर्वार्थत्वाभावात् तद्विधौ विध्य-
भावाच्चेति"टी०। "भक्त्या जानातीति चेन्नाभिज्ञप्त्या
साहाय्यात्"१५सू०। "इदानीं श्रुतिविरोधेन प्रकरणस्थान-
लिङ्गबाधनामिव समाधीयते। यथा स्मृतं (गी०। अ०
१८। श्लो० ५५। "भक्त्या मामभिजानाति यावान्
यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते
तदनन्तरम्"। इति। तत्र (तैत्तिरीयसं०। अ०१।
प्र०५। अनुवाक०८) "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इति-
वत् कारकश्रुत्या बलीयस्या भक्तेर्ज्ञानहेतुत्वमवसीयते।
यद्यपि दृष्टत्वादित्यनेन दृष्टोपकारे प्रत्यक्षगम्ये न श्रुते,
रवकाशः तथापि ब्रह्मविषयिण्या रतेर्ब्रह्मविषयज्ञानोप-
कार्य्यत्वं न प्रत्यक्षगम्यम्। किन्तु तद्वचनादे रतौ तथा
दर्शनेन ब्रह्मगोचरायामप्यनुमातव्यम्। तथाच लिङ्गत्वे
पर्य्यवसानादिति चेन्न दोषः। तथाहि यदि केवलं
जानातीति वदेत् स्यैवम्। किन्त्वभिजानातीति।
अभिज्ञा पूर्वज्ञातज्ञानमुच्यते। तथा च भक्त्युपकारिपूर्व-

ज्ञानं तत्फलरूपभक्तिप्रवर्त्तकम्। अनन्तरं यावत् तद्दार्ढ्यं भक्त्यैवाभिव्यक्तिभावेनापेक्ष्यते ब्रीह्यवहननेनावघातवदिति। कार्य्यसाहाय्यार्थमुक्तं ततो ज्ञानदार्ढ्येन भक्तिदार्ढ्यं सति शिष्यत इति। तस्माच्चेयं स्मृतिः किन्तु न्यायप्राप्तानुवाद इति। एतमेवार्थं स्फुटीकरोति" टी०। "प्रागुक्तं च" १६सू०। "भक्त्या मामित्यस्य पूर्वं ब्रह्मभूयाय कल्पत इत्यभिधाय (गी०। अ० १८। श्लो० ५४)। "ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्" इत्युक्तम्। तस्य तु ज्ञानजन्यो ज्ञानप्रयोजनाभावादुक्तमनुवादत्वमिति" टी० "एतेन विकल्पोऽपि प्रत्युक्तः" १७सू०। "एतेन ज्ञानस्याङ्गत्वनिर्णयेन ज्ञानभक्त्योरत्र विकल्पपक्षोऽपि प्रत्युक्तः निराकृत इति मन्तव्यम्। नह्यङ्गाङ्गिनोरेकत्र विकल्पो भवतीति। अपिशब्दात् समुच्चयोऽपीति" टी०। "देवभक्तिरितरस्मिन् साहचर्य्यात्" १८सू०। "क्वचिदेवं श्रूयते (श्वेताश्व० ६।२३) "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इति। अत्र देवभक्तिरीश्वरेतरस्मिन् देवे मन्तव्या कुतः गुरुभक्तिसाहचर्य्यात्। साहचर्य्यं हि नान्यतफलायां भक्तौ घटते। इन्द्रादिदेवतास्त्वाराधिताः शुभवज्ज्ञानफलाय भवन्तीति साहचर्य्यमपि निर्वाहकम्। साहचर्य्यादुत्कर्षवदुपयुक्तोपपत्त्यकमेतत्" ११टी०। "योगस्तूभयार्थमपेक्षणात् प्रयाजवत्" १९सू०। "योगः पुनर्ज्ञानार्थं भक्त्यर्थं च भवति। समाहितमनस्कताया उभाभ्यामपेक्षणात्। ननु (पूर्वमीमांसायाम्। अ०३। पा० १। सू० २१) "गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यादिति" न्यायात् प्रधानाङ्गं योगः कथमङ्गाङ्गमित्यत आह प्रयाजवदिति यथा प्रयाजो वाजपेयाद्यङ्गं तदीयदीक्षणीयादेरप्यङ्गं तद्वत्। तदङ्गताबोधकप्रमाणाविशेषात्। केवलं ज्ञानार्थं योगानुष्ठानप्रसङ्गेन भक्तिमुपकरोतीति। एवं विषयवैराग्यमपि उभयार्थं मन्तव्यम्। ननु योगे पातञ्जलदर्शने २२सू० ) "ईश्वरप्रणिधानाद्वेति" पतञ्जलिकरणं दुरपह्नवं तत्र प्रणिधानाभिधेयस्य भगवद्भजनस्य समाधिसिद्ध्यर्थत्वमिति कथं भक्तेः प्राधान्यमित्यत आह" टी०। "गौण्या तु समाधिसिद्धिः" २०सू०। तत्र प्रणिधानं गौणभक्तिरेव न प्रधानं तया समाधिसिद्धिरिति न स्मृतिविरोधोऽपीति। भवति च वाक्यशेषस्तत्रैव (पा०द०१०.४१सू०) "तस्य वाचकः प्रणवः" "तज्जपस्तदर्थभावनमिति" टी०। "हेया रागत्वादिति चेन्नोत्तमास्पदत्वात् सङ्गवत्" २१सू०। "योगशास्त्रप्रस्तावादिदं सूत्रम्। योगशास्त्रोक्तरागत्वाविशेषाद्भक्तिरपि मुमुक्षुणा हेयैव। तथा च सूत्रं पा० द० ७२सू०) "हेयाः रागद्वेषाभिनिवेशाः क्लेशाः" इति। एवञ्चेदुच्यते। नैवं वाच्यम् उत्तमास्पदत्वाद्भक्तेः परमेश्वरविषयत्वादिति यावत्। न हि रागत्वमात्रेण हेयत्वं किन्तु संसारानुबन्धिरागत्वेनैव। यथा सङ्गत्वमात्रेण न त्याज्यता किन्तु असत्सङ्गत्वेन तद्वत्। तथा चेश्वरभक्तिर्हेया रागत्वादित्यत्र संसारानुबन्धित्वं मोक्षाननुगुणत्वं चोपाधिः। अत्र सात्त्विकी सा (गी०। अ० १७। श्लो०४) "यजन्ते सात्त्विका देवान्" इत्यादिना सात्त्विकत्वकीर्त्तनादिति" टी०। "तदेव कर्म्मिज्ञानियोगिभ्य आधिक्यशब्दात्" २२सू० "तदेव भजनं मुख्यं तस्यैव भक्तेर्वा मुख्यत्वम्। एतत् सर्व्वमेव निश्चितं यस्मादेवं शब्द्यते (गी०। अ० ६। श्लो० ४६। ४७)। "तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः। कर्म्मिभ्यश्चाधिको योगी तस्माद् योगी भवार्ज्जुन। योगिनामपि सर्व्वेषां मद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे युक्ततमो मतः" इति। अत्र विशेषणानां तपआदीनामाधिक्यनिबन्धनं विशेष्यस्यामाधिक्यं क्रमादिति मन्तव्यम्। न खल्वङ्गस्य मुख्यादाधिक्यमुपपद्यते। तस्माद्भक्तिः प्रधानमिति। सूत्रार्थेनापि तदुत्पत्तिपरिहारार्थं पठति" टी०। "प्रश्ननिरूपणाभ्यामाधिक्यसिद्धेः" २३सू०। अत्र कृत्स्नोऽपि द्वादशाध्याय उदाहरणम् (गी०। अ० १२। भक्तियोगशब्दे स च अध्यायो दृश्यः।

तल्लिङ्गानि च तत्रैवोक्तानि यथा

"तत्परिशुद्धिश्च गम्या लोकवल्लिङ्गेभ्यः" ४२सू०। "यद्यपि जानामीच्छामीत्यादिशब्दं भजे अनुरज्ये इत्येवं मानादिना प्रत्यक्षगम्यैव भक्तिस्तथापि तस्या दृढतरसंस्कारवैशिष्ट्यलक्षणा परिशुद्धिर्न प्रत्यक्षतो निर्णेतुं शक्यते ज्ञानप्रामाण्यवत्। तस्मात् तन्निर्णयो लोकवज्ज्ञातलिङ्गेभ्य एव। यथा लोकेऽनुरागतारतम्यं तत्कथादावश्रुपुलकादिविकारैरनुमीयते तद्वदिति। न केवलं लोकवल्लिङ्गानि भवन्ति महर्षीणां स्मृतिभ्योऽपि तानि लिङ्गानि बाहुल्येन बध्यन्त इत्याह" टीका। "सम्मानबहुमानप्रीतिविरहेतरविचिकित्सामहिमख्यातितदर्थप्राणस्थानतदीयतासर्वतद्भावाप्रातिकूल्यादीनि च

श्चुरन्येभ्यो बाहुल्यात्" ४४सू०। "यथार्जुनस्य सम्मानः। "प्रत्युत्थानं तु कृष्णस्य सर्वावस्थो धनञ्जयः। न लङ्घयति धर्मात्मा भक्त्या प्रेम्णा च सर्वदा"। बहुमानः यथा इक्ष्वाकोः (नृसिंहपु० अ०२५ श्लो०२२) "पक्षपातेन तन्नाम्नि मृगे पद्मे च तादृशि। बभार मेघे तद्वर्णे बहुमानमतिं नृपः"। प्रीतिर्यथा विदुरस्य। (महाभारते। उद्यो० अ० ८८ श्लो०३११४)। "या प्रीतिः पुण्डरीकाक्ष! तवागमनकारणात्। सा किमाख्यायते तुभ्यमन्तरात्मासि देहिनाम्"। विरहो यथा गोपीनाम् (विष्णुपु०। अंशे५। अ०१८। श्लो०१७) "गुरूणामग्रतो वक्तुं किं ब्रवीमि न नः क्षमम्। गुरवः किं करिष्यन्ति दग्धानां विरहाग्निना"। इतरविचिकित्सा यथा श्वेतद्वीपनिवासिनाम्। नारददर्शनेऽपि विघ्नवृत्तिः यथाचोपमन्योः (महाभरते। अनुशा० अ० १४। श्लो० ७०७७)। "अपि कीटपतङ्गो वा भवेयं शङ्कराज्ञया। न तु शक्र! त्वया दत्तं त्रैलोक्यमपि कामये"। महिमख्यातौ यथा यमस्य। (नृसिंहपुरा० अ० ८ श्लोक० २१) "नरके पच्यमानस्तु यमेन परिभाषितः। किं त्वया नार्चितो देवः केशवः क्लेशनाशनः"। (विष्णुपु०। अंशे ३। अ७। श्लो०१०)। "स्वपुरुषमभिवीक्ष्य पाशहस्तम्। वदति यमः किल तस्य कर्णमूले। परिहर मधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानाम्" तदर्थप्राणस्थितिर्यथा हनूमतः। तेनैवोक्तम् (वाल्मीकीये उत्तरकाण्डे। स०१०७ श्लो०२१२१)। "यावत् तव कथा लोके विचरिष्यति पावनी। तावत् स्थास्यामि मेदिन्यां तवाज्ञामनुपालयन्"। अथ वा ज्ञानवतामपि नारदादीनां तदेकाराधनार्थं प्राणधारणम्। अतएव श्रुतिः। (नृसिंहतापिनी। खं०६) "यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्चेति"। तदीयताभावस्तु वसोरुपरिचरस्य (महाभारते। शा०। अ० ३२७। श्लो० १२७।८) "आत्मराज्यं धनं चैव कलत्रं वाहनं तथा। एतद्भागवतं सर्वमिति तत् प्रेक्षते सदा" इति। सर्वभूतेषु तद्भावो यथा प्रह्लादस्य प्रसिद्धः। उक्तञ्च तेनैव। (विष्णुपु०। अंशे १। अ० १९। श्लो०५) "एवं सर्वेषु भूतेषु भक्तिरव्यभिचारिणी। कर्तव्या पण्डितैर्ज्ञात्वा सर्वभूतमयं हरिम्"। तदप्रातिकूल्यं यथा हन्तुमागतेऽपि भगवति भीष्मस्य। तेनैवोक्तम्। (महाभारते भीष्मप०। अ० ५८ श्लो० २६४) "एह्येहि देवेश! जगन्निवास! नमोऽस्तु ते शार्ङ्गगदासिपाणे!। प्रसह्य मां पातय लोकनाथ। रथादुदग्राद्भुतशौर्य संख्ये"। आदिशब्दादुद्धवाक्रूरादिचेष्टितान्यपि द्रष्टव्यानि। यद्यपि द्वेषविपक्षभावादित्यनेदमुक्तं तथापि तत्र रागलिङ्गत्वेनात्र च बहुभक्तिपरिशुद्धिलिङ्गतयेति विशेष इति। ननु स्वामिन्यनुरागिणां तदनुपहतारतम्यवत्सु द्वेषेर्ष्यादयो भवन्ति तेऽपि किं लिङ्गानि नेत्याह" टी०। "द्वेषादयस्तु नैवम्" ४५सू०। "तदसम्भादेव। यथोक्तं भगवता द्वैपायनेन महाभारते अनुशा०। अ० १४९। पृ० १४६। श्लो० ७३९) "न क्रोधो न च मात्सर्य्यं न लोभो नाशुभा मतिः। भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे" इति। शिशुपालस्य तु द्वेषात् स्मरणं ततः परा भक्तिस्ततो मुक्तिरित्येव क्रमः इति" टी०।

अत्रेदमवधेयम् शाण्डिल्यसूत्रादौ "भक्तिज्ञानाङ्गकत्वं यदुक्तं तद् भक्तेः प्रशंसार्थं तत्त्वज्ञानेनाज्ञाननिवृत्तौ अज्ञानकार्य्यानुरागविशेषान्तःकरणवृत्तिरूपाया भक्तेः सुतरां सम्भवोऽतो ज्ञानस्यैव भक्तिरङ्गम्। अतएव पात०सू० ईश्वरप्रणिधानात् योगसिद्धिरुक्ता "तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगाः" क्रियायोगत्वेश्वरप्रणिधानस्य योगाङ्गत्वमुक्तम् अतएव भक्तिर्ज्ञानाय कल्पते इति मुक्ताफलकर्त्ता वोपदेव उदाजहार। इयांस्तु भक्तौ रसास्वादसक्तौ सुखस्वरूपतेति।

तेन च मुक्ताफलग्रन्थे भक्तिलक्षणं तद्भेदाश्चान्यथोक्ता यथा "तत्र विष्णुभक्तिलक्षणं भेदाश्च। "तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्" मू० "यस्मात् कृष्ण एव कैवल्यप्रदः यद्वा तस्मात् उपायविशेषस्याविवक्षितत्वात्। केनापि विहितेन अविहितेन वा उपायेन साध्यसिद्धावभूतसामर्थ्येन, न तून्मादादिना कृष्णे सत्त्वोपाधौ ब्रह्मणि निवेशयेत् स्थिरीकुर्य्यात् लिङ्निर्देशस्याविवक्षितत्वात् उपायपूर्वं भगवति मनःस्थिरीकरणं भक्तिरिति लक्षणार्थः। न तावदस्यासम्भवः प्रह्लादादौ सुप्रसिद्धत्वात्। न च कर्मक्षयार्थविधिसिद्धार्थयोः भक्त्योरव्याप्तिः तयोरप्यन्तःकरणशुद्धिहेतुत्वेन मनोनिवेशहेतुत्वात्। नाप्युन्मादादावभक्तिभूतेऽतिव्याप्तिः तस्यानुपायत्वेन निरस्तत्वात्। नापि शुद्धायां भक्तौ उपायानिर्देशादुपायेनेति लक्षणेऽनन्तर्भूतमिति शङ्क्यम्। श्रौताभावेऽप्यानुमानिकस्य सम्भवात्। सा द्वेधा विहिता अविहिता च। तत्र विहिता "देवानां गुणलिङ्गानामानुश्रविककर्मणाम्। सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या।

अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी। जरयत्याशु या कोशं निगीर्णमनलो यथा"। सा द्वेधा मिश्रा शुद्धा च। मिश्रा त्रेधा। कर्ममिश्रा कर्मज्ञानमिश्रा ज्ञानमिश्रा च। कर्ममिश्रापि त्रेधा। तामसी राजसी सात्त्विकी च तामसी च त्रेधा। हिंसार्था दम्भार्था मात्सर्य्यार्था च।"अभिसन्धाय यद्धिंसां दम्भं मात्सर्य्यमेव वा। संरम्भी भिन्नदृगभावमपि कुर्य्यात् स तामसः। राजसी त्रेधा। विषयार्था यशोऽर्था ऐश्वर्यार्था च। "विषयानभिसन्धाय यश ऐश्वर्य्यमेव वा। अर्चायामर्चयेद् यो मां पृथग्भावः स राजसः। सात्त्विकी त्रेधा कर्मक्षयार्था विष्णुप्रीत्यर्था विधिसिद्ध्यर्था च। "कर्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम्। यजेत् यष्टव्यमिति वा पृथग्भावः स सात्त्विकः"। कर्मज्ञानमिश्रा त्रेधा उत्तमा मध्यमाऽधमा च सत्त्वतारतम्यात्। तत्रोत्तमा "सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः। भूतानि भगवत्यात्मन्येष भागवतोत्तमः। मध्यमा "ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च। प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः"। अधमा "अर्चायामेव हरये पूजां यः श्रद्धयेहते। न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः"। ज्ञानमिश्रा "मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये। मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ। लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्। अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे। सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत। दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः। स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः। येनातिव्रज्य त्रिगुणान् मद्भावायोपपद्यते"। अविच्छिता चतुर्धा, कामजा द्वेषजा भयजा स्नेहजा च।"कामाद् द्वेषाद् भयात् स्नेहाद् यथा भक्त्येश्वरे मनः। आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः"। भक्तिष्वधिकारिणश्च तत्रोक्ता यथा "गोप्यः कामाद्भयात् कंसो द्वेषाच्चैद्यादयो नृपाः। सम्बन्धाद् वृष्णयः स्नेहात् यूयं भक्त्या वयं विभो:"। सम्बन्धात् स्नेहाद्वृष्णयो यूयं चेत्येकम्। भक्त्या विहित या वयमित्यत्र विभागः। "निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु। तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम्। यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान्। न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः। य एतान् मे पथो हित्वा भक्तिज्ञानक्रियात्मकान्। क्षुद्रान् कामान् चलैः प्राणैर्जुषन्तः संसरन्ति ते। स्वे

स्वेऽधिकारे या निष्ठा स गुणः स प्रकीर्त्तितः"। एवं सति कर्ममिश्रा नव गृहस्थानाम्। कर्मज्ञानमिश्रास्तिस्रो वनस्थानाम्। ज्ञानमिश्रैका भिक्षूणाम्। शुद्धैका सर्वेषां उत्पन्नेऽनुरागे। उत्पाद्ये तु यथा संमिश्रा। अविच्छितास्ततस्रो गोप्यादीनाम् एवमष्टादश भेदाः। "यावन्न जायेत परावरेऽस्मिन् विश्वेश्वरे द्रष्टरि भक्तियोगः। तावत् स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत। नैष्कर्म्यमप्यच्युतभाववर्जितम् न शोभते ज्ञानमलं निरञ्जनम्। कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम्"। विष्णुभक्त्यङ्गवर्गलक्षणभेदाश्च तत्रोक्ता यथा "कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वानुसृतः स्वभावात्। करोति यद् यत् सकलं परस्मै नारायणायेति समर्पयेत्तत्" इत्युपक्रमे स एकोनविंशतिधा। षट्त्रिंशद्वर्गः१। त्रिंशद्वर्गः२। षड्विंशतिवर्गः३। पञ्चविंशतिवर्गः४। चतुर्विंशतिवर्गः५। विंशतिवर्गः ६। एकोनविंशतिवर्गः७। अष्टादशवर्गः८। पञ्चदशवर्गः ९। त्रयोदशवर्गः १०। द्वादशवर्गः ११। एकादशवर्गः १२। दशवर्गः १३। नववर्गः १४। सप्तवर्गः १५। षड्वर्गः१६। पञ्चवर्गः १७। चतुर्वर्गः१८। त्रिवर्गः १९। एते च यथोत्तरमन्तरङ्गवर्गाः।

तत्र षड्त्रिंशद्वर्गः "तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्। शाब्दे परे च निष्णातो ब्रह्मण्युपशमाश्रयम्१। तत्र भागवतान् धर्मान् शिक्षेद्गुर्वात्मदैवतः। अमाययानुवृत्त्या च यैस्तुष्येदात्मदो हरिः। सर्वतो मनसोऽसङ्गमादौ सङ्गञ्च साधुषु। दयां मैत्रीं प्रश्रयञ्च भूतेष्वद्धा यथोचितम्। शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम्। ब्रह्मचर्यमहिंसां च समत्वं द्वन्द्वसंज्ञयोः। सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम्। विविक्तचीरवसनं सन्तोषं येन केनचित्। श्रद्धां भागवते शास्त्रे निन्दामन्यत्र चापि हि। मनोवाक्कायदण्डञ्च सत्यं शमदमावपि। श्रवणं कीर्त्तनं ध्यानं हरेरद्भुतकर्मणः। जन्मकर्मगुणानाञ्च तदर्थेऽखिलचेष्टितम्। इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम्। दारान् सुतान् गृहान् प्राणान् यत् परस्मै निवेदनम्। एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम्। परिचर्य्यां चोभयत्र महत्सु नृषु साधुषु। परस्परानुकथनं पावनं भगवद्यशः। मिथोरतिर्मिथस्तुष्टिः निवृत्तिर्मिथ आत्मनः। स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं

हरिम्। भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुम्। क्वचिद्रुदन्त्यच्युतचिन्तया क्वचिद्धसन्ति नन्दन्ति वदन्त्यलौकिकाः। नृत्यन्ति गायन्त्यनुशीलयन्त्यजं भवन्ति तूष्णीं परमेत्य निर्वृताः। इति भागवतान् धर्मान् भक्त्या शिक्षेत्तदुत्थया। नारायणपरो मायामञ्जस्तरति दुस्तराम्” भाग०११।३अ०।

त्रिंशद्वर्गः “सत्यं दया तपः शौचन्तितिक्षेक्षा शमोदमः। अहिंसा ब्रह्मचर्य्यञ्च त्यागः स्वाध्याय आर्जवम्। सन्तोषः समदृक्सेवा ग्राम्येहोपरमः शनैः। नृणां विपर्य्ययेहेक्षा मौनमात्मविमर्शनम्। अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः। तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव!। श्रवणं कीर्त्तनं चास्य स्मरणं महतां गतेः। सेवेज्याऽवनतिर्दास्यं सख्यमात्मसमर्पणम्। नृणामयं परो धर्मः सर्वेषां समुदाहृतः। त्रिंशल्लक्षणवान् साक्षात् सर्वात्मा येन तुष्यति” भाग०७।११अ०।

षड्विंशतिवर्गः। “हरौ गुरौ मयि भक्त्यानुवृत्त्या वितृष्णया द्वन्द्वतितिक्षया च। सर्वत्र जन्तोर्व्यसनावगत्या जिज्ञासया तपसेहानिवृत्त्या। मत्कर्मभिर्मत्कथया च नित्यं मद्देवसङ्गाद्गुणकीर्त्तनान्मे। निर्वैरसाम्योपशमेन पुत्राः! जिहासया देहगेहात्मबुद्धेः। अध्यात्मयोगेन विविक्तसेवया प्राणेन्द्रियात्माभिजयेन सध्र्यक्। सच्छ्रद्धया ब्रह्मचर्य्येण शश्वदसंप्रमादेन यमेन वाचाम्। सर्वत्र मद्भावविचक्षणेन ज्ञानेन विज्ञानविराजितेन। योगेन धृत्युद्यमसत्त्वयुक्तो लिङ्गं व्यपोहेत् कुशलोऽहमाख्यम्” भाग०५।५अ०।

पञ्चविंशतिवर्गः “स्वधर्माचरणं शक्त्या विधर्माच्च निवर्त्तनम्। दैवलब्धेन सन्तोष आत्मविच्चरणार्चनम्। ग्राम्यधर्मनिवृत्तिश्च मोक्षधर्मरतिस्तथा। मितमेध्यादनं शश्वत् विविक्तक्षेमभावनम्। अहिंसा सत्यमस्तेयं यावदर्थपरिग्रहः। ब्रह्मचर्य्यं तपः शौचं स्वाध्यायः पुरुषार्चनम्। मौनं सदासनजयः स्थैर्य्यं प्राणजयः शनैः। प्रत्याहारश्चेन्द्रियाणां विषयान्मनसो हृदि। धिष्ण्यानामेकदेशे च मनसः प्राणधारणा। वैकुण्ठलीलाभिध्यानं समाधानं तथात्मनः। एतैरन्यैश्च पथिभिर्मनो दुष्टमसत्पथे। बुद्ध्या युञ्जीत शनकैर्जितप्राणो ह्यतन्द्रितः” भाग०३।२८अ०।

चतुर्विंशतिवर्गः “मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्चनम्। परिचर्य्या स्तुतिः प्रह्वगुणकर्मानुकीर्त्तनम्। मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव!। सर्वलाभोपहरणं दास्येनात्मनिवेदनम्। मज्जन्मकर्मकथनं मम पर्वानुमोदनम्। गीतताण्डववादित्रगोष्ठीभिर्मद्गृहोत्सवः। यात्राबलिविधानं च सर्ववार्षिकपर्वसु। वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम्। ममार्चास्थापने श्रद्धा स्वतः संहत्य चोद्यमः। उद्यानोपवनाक्रीडपुरमन्दिरकर्मणि। संमार्जनोपलेपाभ्यां सेकमण्डलवर्त्तनैः। गृहशुश्रूषणं मह्यं दासवद्यदमायया। अमानित्वमदम्भित्वं कृतस्यापरिकीर्त्तनम्। अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम्। यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः। तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते। मदर्चां संप्रतिष्ठाप्य मन्दिरं कारयेद्दृढम्। पुष्पोद्यानानि रम्याणि पूजायात्रोत्सवाश्रितान्। पूजादीनां प्रवाहार्थं सदा पर्वण्यथान्वहम्। क्षेत्रापणपुरग्रामान् दत्त्वा मत्सार्ष्टितामियात्। प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम्। पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात्” भाग०११।२७अ०।

विंशतिवर्गः “सेवितेनानिमित्तेन स्वधर्मेण महीयसा। क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः। मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवन्दनैः। भूतेषु मद्भावनया सत्त्वेनासङ्गमेन च। महतां बहुमानेन दीनानामनुकम्पया। मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च। आध्यात्मिकानुश्रवणान्नामसंकीर्त्तनाच्च मे। आर्जवेनार्य्यसङ्गेन निरहङ्क्रियया तथा। मद्धर्मिणो गुणैरेतैः परिसंशुद्ध आशयः। पुरुषस्याञ्जसाभ्येति श्रुतमात्रगुणं हि माम्” भाग०३।२९अ०।

एकोनविंशतिवर्गः “सच्छ्रद्धया भगवद्धर्मचर्यया जिज्ञासयाऽऽध्यात्मिकयोगनिष्ठया। योगेश्वरोपासनया च नित्यं पुण्यश्रवःकथया पुण्यया च। अर्थेन्द्रियारामसगोष्ठ्यतृष्णया तत्सम्मतानामपरिग्रहेण। विविक्तरुच्या परितोष आत्मन् विना हरेर्गुणपीयूषपानात्। अहिंसया पारमहंस्यचर्य्यया स्मृत्या मुकुन्दाचरिताग्र्यसीधुना। यमैरकामैर्नियमैरनिन्द्या निरीहया द्वन्द्वतितिक्षया च। हरेर्मुहुस्तत्परकर्णपूरगुणाभिधानेन विजृम्भमाणया। भक्त्या ह्यसङ्गः सदसत्यनात्मनि स्यान्निर्गुणे ब्रह्मणि चाञ्जसा रतिः” भाग०४।२२अ०।

अष्टादशवर्गः “मयि भावेन सत्येन मत्कथाश्रवणेन च। सर्वभूतसमत्वेन निर्वैरेणाप्रसङ्गतः। ब्रह्मचर्य्येण मौ-

नेन स्वधर्मेण महीयसा । यदृच्छयोपपन्नेन सन्तुष्टो मितभुङ्मुनिः । विविक्तशरणः शान्तो मैत्रः करुण आत्मवान् । सानुबन्धे च देहेऽस्मिन् कुर्वन्नसदाग्रहम् । ज्ञानेन दृष्टतत्त्वेन प्रकृतेः पुरुषस्य च । निवृत्तबुद्ध्यवस्थानो दूरीभूतान्यदर्शनः । उपलभ्यात्मनात्मानं चक्षुषेवार्कमात्मदृक् । मुक्तलिङ्गं सदाभासमसति प्रतिपद्यते । सतो बन्धुमसच्चक्षुः सर्वानुस्यूतमद्वयम्” भाग०३ २७अ० ।

षष्ठदशवर्मः “श्रद्धामृतकथायां मे शश्वन्मदनुकीर्त्तनम् । परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम । आदरः परिचर्य्यायां सर्वाङ्गैरभिवन्दनम् । मद्भक्तपूजाभ्यधिका सर्वभूतेषु मन्मतिः । मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम् । मय्यर्पणञ्च मनसः सर्वकामविवर्जनम् । मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च । इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः । एवं धर्म्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् । मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते” भाग० ११।१९अ० ।

सप्तदशवर्मः “कुर्य्यात् सर्वाणि कर्माणि मदर्थं शनकैः स्मरन् । मय्यर्पितमनश्चित्तो मद्धर्मात्ममनोरतिः । देशान् पुण्यानाश्रयेत मद्भक्तैः साधुभिः श्रितान् । देवासुरमनुष्येषु मद्भक्ताचरितानि च । पृथक् सत्रेण वा मह्यं पर्वयात्रामहोत्सवान् । कारयेद्गीतनृत्याद्यैर्महाराजविभूतिभिः । मामेव सर्वभूतेषु बहिरन्तरपावृतम् । ईक्षेतात्मनि चात्मानं यथाखममलाशयः । इति सर्वाणि भूतानि मद्भावेन महाद्युते ! । सभाजयन् मन्यमानो ज्ञानं केवलमाश्रितः । ब्राह्मणे पुल्कसे स्तेने ब्रह्मण्येऽर्के स्फुलिङ्गके । अक्रूरे क्रूरके चैव समदृक् पण्डितो मतः । विसृज्य स्मयमानान् स्वान् दृशं व्रीडाञ्च दैहिकीम् । प्रणमेद्दण्डवद्भूमावाश्वचाण्डालगोखरम् । यावत् सर्वेषु भूतेषु मद्भावो नोपजायते । तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः । नरेष्वभीक्ष्णं मद्भावं पुंसो भावयतोऽचिरात् । स्पर्द्धासूयातिरस्काराः साहङ्कारा वियन्ति हि” भाग० ११।२९अ० ।

द्वादशवर्गः “गुरुशुश्रूषया भक्त्या सर्वलाभार्पणेन च । सङ्गेन साधुभक्तानामीश्वराराधनेन च । श्रद्धया तत्कथायाञ्च कीर्त्तनैर्गुणकर्मणाम् । तत्पादाम्बुरुहध्यानात् तल्लिङ्गेक्षार्हणादिभिः । हरिः सर्वेषु भूतेषु भगवानास्त ईश्वरः । इति भूतानि मनसा कामैस्तैः साधु मानयेत् । एवं निर्जितषड्वर्गैः क्रियते भक्तिरीश्वरे । वासुदेवे भगवति यया संलभते रतिम् । निशम्य कर्माणि गुणानतुल्यान् वीर्याणि लीलातनुभिः कृतानि । यदातिहर्षोत्पुलकाश्रुगद्गदं प्रोत्कण्ठ उद्गायति रौति नृत्यति । यदा ग्रहग्रस्त इव क्वचिद्धसत्याक्रन्दते ध्यायति वन्दते जनम् । मुहुः श्वसन् वक्ति हरे ! जगत्पते ! नारायणेत्यात्ममतिर्गतत्रपः । तदा पुमान् मुक्तसमस्तबन्धनस्तद्भावभावानुकृताशयाकृतिः । निर्दग्धबीजानुशयो महीयान् भक्तिप्रयोगेण समेत्यधोक्षजम्” भाग०७ ७ ।

“एकादशवर्गः “स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुकीर्त्तने । करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये । मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् । घ्राणञ्च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते । पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने । कामञ्च दास्ये न तु कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिः” भाग०९।४ ।

दशवर्मः “आयुर्हरति वै पुंसामुद्यन्नस्तञ्च यन्नसौ । तस्य तेऽर्यत् क्षणो नीत उत्तमश्लोकवार्त्तया । तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत । न खादन्ति न मेहन्ति किं ग्रामपशवोऽपरे । श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः । न यत्कर्णपथोपेतो जातु नाम गदाग्रजः । बिले बतोरुक्रमविक्रमान् ये न शृण्वतः कर्णपुटे नरस्य । जिह्वाऽसती दार्दुरिकेव सूत ! न चोपगायत्युरुगायगाथाः । भारः परं पट्टकिरीटजुष्टमप्युत्तमाङ्गं न नमेन्मुकुन्दम् । शावौ करौ नो कुरुतः सपर्य्यां हरेर्लसत्काञ्चनकङ्कणौ वा । बर्हायिते ते नयने नराणां लिङ्गानि विष्णोर्न निरीक्षतो ये । पादौ नृणां तौ द्रुमजन्मभाजौ क्षेत्राणि नानुव्रजतो हरेर्यौ । जीवञ्छवो भागवताङ्घ्रिरेणुं न जातु मर्त्त्योऽभिलभेत यस्तु । श्रीविष्णुपद्या मनुजस्तुलस्याः श्वसञ्छवो यस्तु न वेद गन्धम् । तदश्मसारं हृदयं बतेदं यद्गृह्यमाणैर्हरिनामधेयैः । न विक्रियेताथ यदा विकारो नेत्रे जलं गात्ररुहेषु हर्षः” भाग०२।३अ० ।

नववर्मः “श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् । अर्च्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् । इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा । क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम्” भाग०७।५अ० ।

सप्तवर्गः "अनिमित्तनिमित्तेन स्वधर्मेणामलात्मना । तीव्रया मयि भक्त्या च श्रुतसम्भृतया चिरम् । ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा । तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना । प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम् । तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः" भाग०३।२७अ० ।

षड्वर्गः "वाणी गुणानुकथने, श्रवणौ कथायां, हस्तौ च कर्मसु,मनस्तव पादयोर्नः । स्मृत्यां, शिरस्तव निवासजगत् ! प्रणामे, दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम्" भाग० १०।११ अ० ।

पञ्चवर्गः "शृण्वतां गदतां शश्वदर्चतां त्वाभिवन्दताम् । नृणां संवदतामन्तर्हृदि भास्यमलात्मनाम्" भाग०१०।८६अ०।

चतुर्वर्गः "तस्मादेकेन मनसा भगवान् सात्वतांपतिः । श्रोतव्यः कीर्त्तितव्यश्च ध्येयः पूज्यश्च नित्यदा:" भाग० १।२ अ० ।

त्रिवर्गः "तस्माद्भारत ! सर्वात्मा भगवान् हरिरीश्वरः । श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यश्चेच्छताऽभयम्" भाग०२।१अ० "तस्मात् सर्वात्मना राजन् ! हरिः सर्वत्र सर्वदा । श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यो भगवान् नृणाम्" भाग०२।२अ० पुनर्वचनं त्रिवर्गस्यान्तरङ्गतमत्वख्यापनार्थम्" ।

"भज इत्येष वै धातुः सेवायां परिकीर्त्तितः । तस्मात् सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी" गारुड़े २३१अ०। अथ विशेषलक्षणानि । गौतमीयतन्त्रे "देवतायाञ्च मन्त्रे च तथा मन्त्रप्रदे गुरौ । भक्तिरष्टविधा यस्य तस्य कृष्णः प्रसीदति । तद्भक्तजनवात्सल्यं१ पूजायाञ्चानुमोदनम्२ । सुमना अर्चयेन्नित्यं३ तदर्थे दम्भवर्जनम्४ । तत्कथाश्रवणे रागः५ तदर्थे चाङ्गविक्रिया६ । तदनुस्मरणं७ नित्यं यस्तन्नाम्नोपजीवति८ । भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्त्तते । स मुनिः सत्यवादी च कीर्त्तिमान् स भवेन्नरः" । पाद्मे कार्त्तिकमाहात्म्ये यमधूम्रकेशसंवादे । "श्रवणं कीर्त्तनं पूजा सर्वकर्मार्पणं स्तुतिः । परिचर्य्या नमस्कारः प्रेम स्वात्मार्पणं हरौ" । तत्रैवोत्तरे शिवपार्वतीसंवादे "आद्यन्तु वैष्णवं प्रोक्तं शङ्खचक्राङ्कनं हरेः । धारणञ्चोर्द्ध्वपुण्ड्राणां तन्मन्त्राणां परिग्रहः । अर्चनञ्च जपो ध्यानं तन्नामस्मरणं तथा । कीर्त्तनं श्रवणञ्चैव वन्दनं पादसेवनम् । तत्पादोदकसेवा च तन्निवेदितभोजनम् । तदीयानाञ्च संसेवा द्वादशीव्रतनिष्ठता । तुलसीरोपणं विष्णोर्देवदेवस्य शार्ङ्गिणः । भक्तिः षोड़शधा प्रोक्ता भवबन्धविमुक्तये" । किञ्च । "दर्शनं भगवन्मूर्त्तेः स्पर्शनं क्षेत्रसेवनम् । आघ्राणं धूपशेषादेर्निर्माल्यस्य च धारणम् । नृत्यं भगवदग्रे च तथा वीणादिवादनम् । कृष्णलीलाद्यभिनयः श्रीभागवतसेवनम् । पद्माख्यमालादिष्टितिरेकादश्यादिजागरः । प्रासादरचनाद्यन्यज्ज्ञेयं शास्त्रानुसारतः । लिखिता भगवद्धर्मा भक्तानां लक्षणानि च । तानि ज्ञेयानि सर्वाणि भक्तेर्वै लक्षणानि हि । तेषु ज्ञेयानि गौणानि मुख्यानि च विवेकिभिः । बहिरङ्गान्तरङ्गाणि प्रेमसिद्धौ च तानि यत् । भेदास्तु विविधा भक्तेर्भक्तभावादिभेदतः । मुक्ताफलादिग्रन्थेभ्यो ज्ञेयास्तल्लिखनैरलम्" "प्रेमभक्तौ च सिद्धायां सर्वेऽर्थाः सेवकाः स्वयम् । भगवांश्चातिवश्यः स्याल्लिख्यतेऽस्याः सुलक्षणम् । अथ प्रेमभक्तिलक्षणम् । नारदपञ्चरात्रे "अनन्यममता विष्णौ ममता प्रेमसङ्गता । भक्तिरित्युच्यते भीष्मप्रह्लादोद्धवनारदैः । प्रेमभक्तेश्च माहात्म्यं भक्तेर्माहात्म्यकं परम् । सिद्धमेव यतो भक्तेः फलं प्रेमैव निश्चितम् । चिह्नानि प्रेमसम्पत्तेर्बाह्यान्याभ्यन्तराणि च । अथ प्रेमसम्पत्तिचिह्नानि ७स्कन्धे प्रह्लादस्य बालानुशासने । "निशम्य कर्माणि गुणानतुल्यान् वीर्य्याणि लीलातनुभिः कृतानि" इत्यादि ४६२६ पृ० दर्शितम् ।

एकादशे च कवियोगेश्वरोत्तरे "शृण्वन् सुभद्राणि रथाङ्गपाणेर्जन्मानि कर्माणि च यानि लोके । गीतानि नामानि तदर्थकानि गायन् विलज्जो विचरेदसङ्गः । एवंव्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः । हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः" । श्रीभगवदुद्धवसंवादे च "कथं विना रोमहर्षं द्रवता चेतसा विना । विनानन्दाश्रुकलया शुध्येद्भक्त्या विनाऽऽशयः । वाग्गद्गदा द्रवते यस्य चित्तं रोदित्यभीक्ष्णं हसति क्वचिच्च । विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति । यथोक्तभक्त्यशक्तौ तु भगवच्चरणाम्बुजम् । शरणागतभावेन कृत्स्नभीतिघ्नमाश्रयेत्" हरिभक्तिविलासे ११विलासः । उत्तमभक्तेर्लक्षणं यथा "अन्याभिलाषिताशून्यं ज्ञानकर्माद्यनावृतम् । आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा" । तथा नारदपञ्चरात्रे । "सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम् । हृषीकेण हृषीकेशसेवनं भक्तिरुच्यते" भाग० ३स्क० च । सा उत्तमा भक्तिः षड्विधा यथा "क्लेशघ्नी

शुभदा मोक्षलघुताकृत् सुदुर्लभा । सान्द्रानन्दविशेषात्मा श्रीकृष्णाकर्षिणी च सा" । तत्रास्याः क्लेशघ्नत्वम् "क्लेशस्तु पापं तद्बीजमविद्या चेति ते त्रिधा" । शुभदत्वं यथा "शुभानि प्रीणनं सर्वजगतामनुरक्तता । सद्गुणाः सुखमित्यादीन्याख्यातानि मनीषिभिः" मोक्षलघुताकृद् यथा "मनागेव प्ररूढायां हृदये भगवद्रतौ । पुरुषार्थास्तु चत्वारस्तृणायन्ते समन्ततः" । सुदुर्लभा यथा "साधनौघैरनासङ्गैरलभ्या सुचिरादपि । हरिणा चाश्वदेयेति द्विधा सा स्यात् सुदुर्लभा । सान्द्रानन्दविशेषात्मा यथा "ब्रह्मानन्दो भवेदेष चेत्परार्द्धगुणीकृतः । नैति भक्तिसुखाम्भोधेः परमाणुतुलामपि" । श्रीकृष्णाकर्षिणी यथा "कृत्वा हरिं प्रेमभाजं प्रियवर्गसमन्वितम् । भक्तिर्वशीकरोतीति श्रीकृष्णाकर्षिणी च सा" । सा उत्तमा भक्तिस्त्रिधा यथा "सा भक्तिः साधनं भावः प्रेमा चेति त्रिधोदिता"। साधनभक्तिर्यथा । कृतिसाध्या भवेत् साध्यभावा सा साधनाभिधा । नित्यसिद्धस्य भावस्य प्राकट्यं हृदि साध्यता" । भावभक्तिर्यथा "शुद्धसत्त्वविशेषात्मा प्रेमसूर्य्यांशुसाम्यभाक् । रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते" । प्रेमभक्तिर्यथा "सम्यङ्मसृणितस्वान्तो ममतातिशयाङ्कितः । भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते" भक्तिरसामृतसिन्धौ पूर्वविभागः ।

**भक्तियोग** पु० भक्तिरूपो योगश्चित्तैकाग्रतासाधनम् उपायभेदः । भक्तिरूपे योगे भक्तियोगस्य ज्ञानात् श्रेष्ठत्वम् सुखावाप्यसाध्यत्वात् गीतायाम् उक्तं यथा
"एवं सततयुक्ता ये भक्तास्त्वां पर्य्युपासते । ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः" मू० । "द्वितीयप्रभृतिष्वध्यायेषु विभूत्यन्तेषु परमात्मनो ब्रह्मणोऽक्षरस्य विध्वस्तसर्वविशेषणस्योपासनमुक्तं सर्वयोगैश्वर्य्य सर्वज्ञानशक्तिमत्सत्त्वोपाधेरीश्वरस्य तव चोपासनम् । तत्र तत्रोक्तं विश्वरूपाध्याये तु समस्तजगदात्मरूपं विश्वरूपं त्वदीयं दर्शितमुपासनार्थमेव त्वया तच्च दर्शयित्वोक्तवानसि मत्कर्म्मकृदित्यादिना अहमनयोरुभयोः पक्षयोर्विशिष्टतरबुभुत्सया त्वां पृच्छामीति अर्जुन उवाच । एवमिति । एवं सततयुक्ता नैरन्तर्य्येण भगवत्कर्मादौ यथोक्तेऽर्थे समाहिताः सन्तः प्रवृत्ता इत्यर्थः ये भक्ताः अनन्यशरणाः सन्तस्त्वां यथादर्शितं विश्वरूपमर्य्युपासते ध्यायन्ति ये चाप्यक्षरमिति ये चापि त्यक्तसर्वैषणाः सन्न्यस्तसर्वकर्माणो यथाविशेषितं ब्रह्माक्षरं निरस्तसर्वोपाधित्वादव्यक्तमकरणगोचरं यद्धि लोके करणगोचरस्तद्व्यक्तमुच्यते अञ्जेर्धातोस्तत्कर्मकत्वादिदं त्वक्षरं तद्विपरीतं शिष्टैरुच्यमानैर्विशेषणैर्विशिष्टं तद्ये चापि पर्य्युपासते तेषामुभयेषां मध्ये के योगवित्तमाः के अतिशयेन योगविद इत्यर्थः" भा० ।

"श्रीभगवानुवाच । मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते । श्रद्धया परयोपेतास्ते मे युक्ततमा मताः" मू० । "ये त्वक्षरोपासकाः सम्यग्दर्शिनो निवृत्तैषणास्ते तावत्तिष्ठन्तु तान् प्रति यद्वक्तव्यं तदुपरिष्टाद्वक्ष्यामः ये त्वितरे मयीति । मयि विश्वरूपे परमेश्वरे आवेश्य समाधाय मनः, ये भक्ताः सन्तो मां सर्वयोगेश्वराणामधीश्वरं सर्वज्ञं विमुक्तरागादिक्लेशतिमिरदृष्टिं नित्ययुक्ता अतीतानन्तराध्यायान्तोक्तश्लोकार्थन्यायेन सततयुक्ताः सन्त उपासते श्रद्धया परया प्रकृष्टया उपेताः ते मे मम मताः अभिप्रेता युक्ततमा इति नैरन्तर्य्येण हि ते मच्चित्ततयाहोरात्राण्यतिवाहयन्ति अतो युक्तं तान् प्रति युक्ततमा इति वक्तुम्" भा०।

"ये त्वक्षरमनिर्देश्यमव्यक्तं पर्य्युपासते । सर्वत्रगमचिन्त्यञ्च कूटस्थमचलं ध्रुवम्" । "किमितरे युक्ततमा न भवन्ति न, किन्तु तान् प्रति यद्वक्तव्यन्तत् शृणु ये तु अक्षरमनिर्देश्यमव्यक्तमव्यक्तत्वादशब्दगोचरमिति न निर्देष्टुं शक्यते अतोऽनिर्देश्यमव्यक्तं न केनापि प्रमाणेन व्यज्यत इत्यव्यक्तं पर्य्युपासते परिसमन्तादुपासते उपासनं नाम यथाशास्त्रमुपास्यस्य विषयीकरणेन सामीप्यमुपगम्य तैलधारावत् समानप्रत्ययप्रवाहेण दीर्घकालं यदासनन्तदुपासनमाचक्षते । अक्षरस्य विशेषणमाह सर्वत्रगं व्योमवद्व्यापि अचिन्त्यं चाव्यक्तत्वादचिन्त्यं यद्धि करणगोचरं तन्मनसापि चिन्त्यं तद्विपरीतत्वादचिन्त्यमक्षरं कूटस्थं दृश्यमानगुणमन्तर्दोषं वस्तु कूटरूपं कूटसाक्ष्यमित्यादौ कूटशब्दः प्रसिद्धो लोके तथा चाविद्याद्यनेकसंसारबीजमन्तर्दोषवन्मायाव्याकृतादिशब्दवाच्यतया "मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्" "मम माया दुरत्यया" इत्यादौ प्रसिद्धं यत्तत् कूटं तस्मिन् कूटे स्थितं तदध्यक्षतया । अथ वा राशिरिव स्थितं कूटस्थमत एवाचलं यस्मादचलं तस्मात् ध्रुवं नित्यमित्यर्थः" भा०।

"संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः। ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः" मू०। "संनियम्येति। संनियम्य सम्यक् नियम्य संहृत्य इन्द्रियग्रामं इन्द्रियसमुदायं सर्वत्र सर्वस्मिन् काले समबुद्धयः समा तुल्या बुद्धिर्येषामिष्टानिष्टप्राप्तौ ते समबुद्धयः ते समबुद्धयः ते ये एवंविधाः ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः न तेषां वक्तव्यं किञ्चित् मां ते प्राप्नुवन्ति इति ज्ञानित्वादात्मैव मे मतमित्युक्तत्वात् न हि भगवत्स्वरूपाणां सतां युक्ततमत्वमयुक्ततमत्वं वा वाच्यम्" भा०।

"क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्। अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते" मू०। "किन्तु क्लेशोऽधिकतरो यद्यपि मत्कर्मादिपराणां क्लेशोधिकस्तथापि अधिकतरस्त्वक्षरात्मनाम्। परमार्थदर्शिनां देहाभिमानपरित्यागनिमित्तः अव्यक्तासक्तचेतसामव्यक्ते आसक्तं चित्तं येषां ते अव्यक्तासक्तचेतसाम् अव्यक्ता हि यस्मात् या गतिरक्षरात्मिका दुःखं देहवद्भिर्देहाभिमानवद्भिरवाप्यते अतः क्लेशोऽधिकतर." भा०। "ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः। अनन्येनैव योगेन मां ध्यायन्त उपासते" मू०। "अक्षरोपासकानां यद्वर्त्तनं तदुपरिष्टाद् वक्ष्यामः ये त्विति। ये तु सर्वाणि कर्माणि मयीश्वरे सन्न्यस्य मत्परा अहं परो येषां ते मत्पराः सन्तः अनन्येनैव अविद्यमानमन्यदालम्बनं विश्वरूपं देवमात्मानं मुक्त्वा यस्य सोऽनन्यस्तेनानन्येनैव केवलेन योगेन समाधिना मां ध्यायन्तश्चिन्तयन्त उपासते" भा०।

"तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्। भवामि न चिरात् पार्थ! मय्यावेशितचेतसाम्"। "तेषां किमित्याह तेषामिति। तेषां मदुपासनैकपराणाम् अहमीश्वरः समुद्धर्त्ता कुत इत्याह मृत्युसंसारसागरात् मृत्युयुक्तः संसारो मृत्युसंसारः स एव सागरवत् सागरो दुरुत्तरत्वात् तस्मान्मृत्युसंसारसागरादहं तेषां समुद्धर्त्ता भवामि न चिरात् किं तर्हि क्षिप्रमेव हे पार्थ! मय्यावेशितचेतसां मयि विश्वरूपे आवेशितं समाहितं चेतो येषां ते मय्यावेशितचेतसस्तेषाम्" भा०।

"मय्येव मन आधत्स्व मयि बुद्धिं निवेशय। निवसिष्यसि मय्येव अत ऊर्द्ध्वं न संशयः। अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम्। अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय!। अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव। मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि। अथैतदप्यशक्तोऽसि कर्त्तुं मद्योगमाश्रितः। सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्। श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते। ध्यानात् कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम्। अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च। निर्ममो निरहङ्कारः समदुःखसुखः क्षमी। सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः। मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः। यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः। हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः। अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः। सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः। यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति। शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः। समः शत्रौ च मित्रे च तथा मानापमानयोः। शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः। तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित्। अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः। ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते। श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः" मू० गीता० १२अ०।

**भक्तिरस** पु० भक्तिः ईश्वरविषया रतिरेव रसः। तत्स्थायिभावके रसभेदे "विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः। स्वाद्यत्वं हृदि भक्तानामानीता श्रवणादिभिः। एषः कृष्णरतिस्थायिभावो भक्तिरसो भवेत्" इति भक्तिरसामृतसिन्धुः। मुक्ताफले तट्टीकायाञ्च भक्ते रसत्वम् व्यवस्थापितं यथा "भक्तिरसस्यैव हास्यशृङ्गारकरुणरौद्रभयानकबीभत्सशान्ताद्भुतवीररूपेणानुभवात् व्यासादिभिः वर्णितस्य विष्णोर्विष्णुभक्तानां वा चरितस्य नवरसात्मकस्य श्रवणादिना जनितचमत्कारो हि भक्तिरसः" मुक्ता०। "भक्तिर्विहिताऽविहिता च सैव परां प्रकर्षरेखामापन्ना रसः। यदाहुः। "भावा एवातिसम्पन्नाः प्रयान्ति रसतामभी" इति। भक्तिरसानुभावाश्च मन्त्रः यथा हृष्टानुभवात् हृष्ट इत्युच्यते सचानुभवो नवधा हास्यादिभङ्गिभेदेन हास्यादय एव हि भगवति प्रयुज्यमानाः "तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेदिति" भक्तिलक्षणाक्रान्तत्वात् भक्तिरसपदवीमासादयन्तीति भावः। हास्यादिलक्षणं तु वक्ष्यते। ते चामी नवापि सुखदुःखमोहात्मकत्रैगुण्यव्यतिकरोद्भवाः तथा हि। प्रथमे त्रयो रजोमूलाः, मध्यास्तु तमोमूलाः, चरमे सत्त्वमूलाः। रतिहासादयो हि रजःप्रभृतीनां विकारा इत्युक्तमेकादशस्य पञ्चविंशाध्याये। तत्रापि प्रथमेषु त्रिषु-

क्रमात् सत्त्वसंमिश्रं तमःसंमिश्रं सत्त्वतमःसंमिश्रं च रजोमूलम्। मध्येषु रजोमिश्रं सत्त्वमिश्रं रजः सत्त्वमिश्रञ्च तमः। चरमेषु तमोमिश्रं रजोमिश्रं रजस्तमोमिश्रं च सत्त्वम् ज्ञेयाभिधानक्रमेण चैव क्रमः”। आक्षेपपूर्वकं तस्या रसरूपत्वं तत्र व्यवस्थापितं यथा “तस्माद्विभावादिरससामग्रीविरहाच्च भक्तौ रसत्वम् अत एवायमन्यैः “एवं भक्तावपि वाच्यमिति” वदद्भिः सत्यादिष्टः। अत उत्तरं पठति। व्यासादिभिरिति। वर्णितस्य चरितस्य विष्णुभक्ताः गोप्यादयः श्रवणादिनेत्यादिशब्दात् तद्गुणकीर्त्तनस्मरणाभिनयात् चमत्कारः सामाजिकानां हि यस्मादेवं सामग्रीको भक्तिरसस्वादनपद्धतनीय इत्यर्थः। तत्रैषा सामग्री केनाप्युपायेन मनोनिवेशः स्थायी चरितश्रवणादय उद्दीपनविभावा विष्णुविष्णुभक्ताश्चालम्बनम् अनुभावास्तु स्तम्भादयो वक्ष्यमाणा यथायोग्यं धृत्यादिका व्यभिचारिणश्च। उपायस्तु रतिहासादिः। कविभिर्वर्णितस्येत्यनेन महाकविप्रबन्धसमर्थमार्गेणैव रसव्यवहारो नान्यत्रेत्युक्तम्। एवमेवैतत् अनुकार्येषु हि जानकीरामभद्रादिषु रत्यादिमात्रं चमत्कारश्च यद्यपि शृङ्गारादौ कश्चिदस्ति। तथापि तस्य भयानकादावनुपलब्धेः न तत्र रसव्यवहारः। अत एव च “तानि चेन्नाट्यकाव्ययोः” इत्यादीनि विशेषणानि। अभिनयैरुपदर्श्यमानादपि सन्दर्भैः समर्प्यमाणो रसोऽतिस्वदते अतएवोक्तं “कविवागभिनेयश्च तदुपायो द्विधेष्यते। वस्तुशक्तिमहिम्ना तु प्रथमोऽत्र विशिष्यते” इति। यच्चाभिनवगुप्तहेमचन्द्राभ्याम् “एवं भक्तावपि वाच्यम्” इत्युक्तं तदसत् रसत्वस्य दर्शितत्वात्। सामग्रीसद्भावेऽपि प्रत्याख्यानमरोचकतामात्रशरणम्। न च संगच्छमानोऽप्यसर्वविषयत्वात् रसत्वात्‌च्यवतामिति चोद्यं तथा सति सर्वरसोच्छेदापातात्। तथा हि शौलिकजरन्मीमांसकादयो हि नाट्यमण्डपान्तःप्रविष्टा अपि चमत्काराभावात् कीशप्राया एव। एवं प्रशान्तब्रह्मचारिप्रभृतयः शृङ्गाररसास्वादे बालानां गाढरागाणाञ्च शान्तरसचर्वणानभिज्ञत्वम्। अननुभूतशोकसर्गाणां च करुणरसास्वादावसरे पाषाणप्रख्यत्वम् तस्मात् सवासनस्यैव रसचर्वणेति भक्तिरसदर्शनम्”।

**भक्तिल** पु॰ भक्तिं भर्त्तरि लाति ला—क। साधुहये शब्दच॰

**भक्तिसूत्र** न॰ “अथातो भक्तिजिज्ञासेत्यादिके शाण्डिल्यमुनिप्रणीते सूत्रात्मकग्रन्थे।

**भक्ष** अदने चु॰उभ॰सक॰सेट्। भक्षयति—ते अबभक्षत्—त तस्य भ्वादित्वमपीत्येके भक्षति अभक्षीत्। उभयपदित्वमप्येत्यन्ये भक्षते अभक्षिष्ट।

**भक्ष** पु॰ भक्ष—भावे कर्मणि वा घञ्। १अशने २भक्ष्ये च। “वषट् कर्त्तुः प्रथमभक्षः” श्रुतिः उक्त्वा॰ अन्तोदात्ततास्य “गावः सोमस्य प्रथमस्य भक्षाः” सि॰कौ॰ धृतश्रुतिः।

**भक्षक** त्रि॰ भक्ष—ण्वुल् भक्षणकारके अमरः।

**भक्षिका** स्त्री भक्ष अर्हार्थे गम्ये भावे ण्वुच्। भक्षणार्हार्थे “भवानिक्षुभक्षिकामर्हति ऋणे इक्षुभक्षिकां मे धारयति” सि॰कौ॰।

**भक्ष(क्ष्य)कार** पु॰ भ(क्ष)क्ष्यं वा करोति कृ—अण्। भक्ष्यपिष्टकादिविक्रयोपजीविनि आपूपिके भरतः।

**भक्षटक** पु॰ भक्ष—बा॰अटन् संज्ञायां कन्। गोक्षुरे राजनि॰

**भक्षण** न॰ भक्ष—भावे ल्युट्। कठिनद्रव्यस्य गलाधःकरणव्यापारे भक्षणप्रकारः सुश्रुतोक्तः आहारशब्दे ८६७ पृष्ठादौ दृश्यः। [राजनि॰।

**भक्ष(क्ष्य)पत्रा** स्त्री भक्ष्यं पत्रमस्याः। ताम्बूलीलतायाम्

**भक्षालि** पु॰ भक्षाणामालिर्यत्र। देशभेदे ततो भवार्थे वुञ्। भाक्षालिक तद्देशभवे त्रि॰।

**भक्षिवस्** त्रि॰ भक्ष—क्वसु वेदे न द्वित्वम्। भक्षणे अथर्व॰ ६।१९। लोके तु बिभक्षिवस् इत्येव त्रि॰ स्त्रियां ङीप् बिभक्षुषी।

**भक्ष्य** त्रि॰ भक्ष—कर्मणि ण्यत्। १अदनीये “कठिनं विशदमभ्यवहार्यं भक्ष्यम्” महाभाष्योक्ते विविक्तावयवे कठिने २खाद्ये च “भक्ष्येण मिश्रीकरणम्” पा॰ मिश्रीकरणद्वारा सामर्थ्यम् शत॰। गुडधानाः।

**भक्ष्यालाबू** स्त्री कर्म॰। राजालाबूलतायां राजनि॰।

**भग** पु॰न॰ भज+घ। १सूर्य्ये २अणिमाद्यष्टविधैश्वर्य्ये ३वीर्य्ये ४यशसि ५श्रियां ६ज्ञाने ७वैराग्ये ८योनौ ९इच्छायाम् १०माहात्म्ये ११यत्ने मेदि॰ १२धर्मे १३मोक्षे १४सौभाग्ये १५कान्तौ १६चन्द्रे च। ज्योतिषोक्ते योनिनक्षत्रदैवते १७पूर्वफल्गुनीनक्षत्रे १८गुह्यमुष्कयोर्मध्यस्थाने च पु॰ आद्युदात्ततास्य। १९धने २०पदे च न॰निघण्टुः। भगवच्छब्दे दृश्यम्। स्त्रीचिह्नस्य लक्षणभेदादिकं यथा “विस्तीर्णञ्च गभीरञ्च द्विविधं भगलक्षणम्” “कूर्मपृष्ठं गजस्कन्धं पद्मगन्धं सुकोमलम्। अकोमलं सुविस्तीर्णं पञ्चैते च भगोत्तमाः। शीतलं निम्नमत्युष्णं गोजिह्वासदृशं परम्” रतिमञ्जरी।

**भगघ्न** पु॰ भगं तन्नेत्रं हन्ति हन–टक्। १महादेवे “नमस्ते त्रिपुरघ्नाय भगघ्नाय नमो नमः” भा॰द्रो॰२०२अ॰ तस्य दक्षयज्ञकाले तन्नेत्रहारित्वात् तथात्वम्।

**भगण** पु॰ ६त॰। १द्वादशराशीनां समूहे २तद्भोगकाले च। यथोक्तं सू॰ सि॰ “पश्चाद्व्रजन्तोऽतिजवान्नक्षत्रैः सततं ग्रहाः। जीयमानास्तु लम्बन्ते तुल्यमेव स्वमार्गगाः। प्राग्गतित्वमतस्तेषां भगणैः प्रत्यहं गतिः। परिणाह वशाद्भिन्ना तद्वशाद्भानि भुञ्जते। शीघ्रगस्तान्यथाल्पेन कालेन महताल्पगः। तेषां तु परिवर्त्तेन पौष्णान्ते भगणः स्मृतः। विकलानां कला षष्ट्या तत् षष्ट्या भाग उच्यते। तत्त्रिंशता भवेद्राशिर्भगणो द्वादशैव ते” सू॰सि॰। “शीघ्रगतिर्ग्रहस्तानि भान्यल्पेन कालेन भुनक्त्यल्पगति-र्ग्रहो बहुकालेन भुनक्ति, तुल्यराश्यादिभोगो मन्दशीघ्र-गतिग्रहयोस्तुल्यकालेन न भवतीति विशेषार्थः। तेषां राशीनां परिवर्त्तेन भ्रमणेन। तुकाराद्ग्रहादिगति-भोगजनितेन भगणः प्रागुक्तः। क्रान्तिवृत्ते द्वादश-राशीनां सत्त्वात् तद्भोगेन चक्रभोगसमाप्तेर्यत् स्थान-मारभ्य चलितो ग्रहः पुनस्तत् स्थानमायाति स चक्र-भोगः परिवर्त्तसंज्ञोऽपि द्वादशराशिभोगाद्भगण इत्यर्थः। ननु क्रान्तिवृत्ते सर्वप्रदेशेभ्यः परिवर्त्तसम्भवा-दत्र कः परिवर्त्तादिभूतः प्रदेश इत्यत आह पौष्णान्त इति। सृष्ट्यादौ ब्रह्मणा क्रान्तिवृत्ते रेवतीयोगतारा-सन्नप्रदेशे सर्वग्रहाणां निवेशितत्वात् तद्वशितो ग्रह-चलनाच्च पौष्णस्य रेवतीयोगतारायाः अन्ते निकटे प्रदेशे तथा च रेवतीयोगताराऽऽसन्नाश्विन्यादिस्थानमेकाद्यन्तावधिभूत-मिति भावः” रङ्गनाथः। [२९ अ॰।

**भगदत्त** पु॰ प्राग्ज्योतिषपुराधीशे नरकासुरपुत्रभेदे कालिकापु॰

**भगदा** स्त्री स्कन्दानुचरमातृभेदे भा॰श॰४७अ॰। [४२अ॰।

**भगदेव** पु॰ भगेन दीव्यति दिव–अच्। कामुके भा॰ आश्व॰

**भगदैवत** न॰ भगो योनिः दैवतं यस्य। पूर्वफल्गुनीनक्षत्रे तस्या योनिदेवताकत्वात् तथात्वम्। अग्र्यशब्दे दृश्यम्। तच्च हस्पतिजन्मनक्षत्रं यथोक्तं ज्यो॰त॰ “विशाखा-नलश्रोतयानि२४ वैष्णवं२२ भगदैवतम्११। पुष्या पौष्णौ२७ यमः२ सर्पौ९ जन्मभान्यर्कतः क्रमात्”। [हरिवंशम्।

**भगनन्दन** पु॰ ६त॰। ऐश्वर्य्यानन्दयुक्ते विष्णौ भगवच्छब्दे

**भगनन्दा** स्त्री कुमारानुचरमातृभेदे भा॰ श॰ ४७ अ॰।

**भगनेत्रघ्न** पु॰ भगनेत्रं हन्ति दक्षयज्ञकाले हन–टक्। महादेवे भा॰ अनु॰ १४९अ॰। भगनेत्रापहादयोऽप्यत्र।

**भगन्दर** पु॰ भगं गुह्यमुष्कमध्यस्थानं दारयति दृ–णिच्–खच् मुम् णिच् ह्रस्वश्च। स्वनामख्याते रोगभेदे। भावप्र॰ तन्नि-दाननिरुक्त्यादिकमुक्तं यथा

“अथ भगन्दरस्य पूर्वरूपसहितं स्वरूपमाह। “कटीक-पालयोस्तोददाहकण्डूरुजादयः। भवन्ति पूर्वरूपाणि भविष्यति भगन्दरे। गुदस्य द्व्यङ्गुले क्षेत्रे पार्श्वतः पीड़कार्त्तिकृत्। भिन्नो भगन्दरो ज्ञेयः स च पञ्च-विधो भवेत्”। आर्त्तिकृत् पीड़ाकृत्। पञ्चविधः वाति-कपैत्तिकश्लैष्मिकसान्निपातिकशल्यजभेदैः। अथ भगन्दर-शब्दस्य निरुक्तिमाह भोजः “भगन्दरः समन्ताच्च गुदं वस्तिं तथैव च। भगवद्दारयेद्यस्मात् तस्मादेष भग-न्दरः”। भजन्त्यनेनेति भगो मेहनम्। भजन्त्यस्मिन्निति भगं योनिः। अत्र भगशब्देन द्वयमपि कथ्यते। भगवत् योनिवत्। अथ वातिकं शतपोनकसंज्ञं भग-न्दरमाह। “कषायरूक्षैरतिकोपितोऽनिलस्त्वपानदेशे पि-ड़कां करोति याम्। उपेक्षणात् पाकमुपैति दारुणं रुजा च भिन्नारुणफेनवाहिनीम्। तत्रागमो मूत्रपुरीष-रेतसां व्रणैरनेकैः शतपोनकं वदेत्”। दारुणम् अति-दारुणकम्। व्रणैरनेकैः सूक्ष्ममुखैः। शतपोनकं शत-पोनकश्चालनी तत्तुल्यम्। अथ पैत्तिकमुष्ट्रग्रीवसंज्ञमाह “प्रकोपणैः पित्तमतिप्रकोपितं करोति रक्तां पिड़कां गुदे गताम्। तदाशुपाकां हिमपूतिवाहिनीं भगन्दरं चोष्ट्रशिरोधरं वदेत्”। आशुपाकां हिमपूतिवाहिनीं शीघ्रपाकामुष्णदुर्गन्धस्रावाहिनीं च। तद्वा भगन्दरमुष्ट्र-शिरोधरं वदेत्। उष्ट्रग्रीवसंज्ञा च पिड़कागतेन वक्रतयोष्ट्रग्रीवाकारत्वेन। अथ श्लैष्मिकं परिस्राविसंज्ञ-माह। “कण्डूयनो घनस्रावी कठिनो मन्दवेदनः। श्वेतावभासः कफजः परिस्रावी भगन्दरः”। कठिनः पिड़कावस्थायाम्। परिस्रावी निरन्तरस्रावशीलः। अथ सान्निपातिकं शम्बूकावर्त्तसंज्ञमाह। “बहुवर्णरुजा स्रावा पिड़का गोस्तनोपमा। शम्बूकावर्त्तगतिकः शम्बू-कावर्त्तकोमतः” बहुवर्णरुजास्रावा बहुशब्दो वर्णा-दिभिः प्रत्येकं संबध्यते गतिः स्रावमार्गः। अथ शल्यज-मुन्मार्गसंज्ञमाह। “क्षताद्गतिः पायुगता विवर्द्धते ह्युपेक्षणात् स्युः क्रमयो विदार्य्य ते। प्रकुर्वते मार्गमने-कधास्त्वेनं यैस्तमुन्मार्गभगन्दरं वदेत्”। क्षतात् कण्ट-कादिना नखेन कण्डूयनादिना वाऽभिघातात्। गतिः स्रावः उन्मार्गभन्दरम् एतस्य तिर्य्यक्क्षतमार्गैः सुदी-

इदानीं क्रान्तिं विक्षेपं चाह । "नाडिकामण्डलात् तिर्यगद्यापमः क्रान्तिवृत्तावधिः क्रान्तिवृत्तात्खरः । क्षेपवृत्तावधिस्तिर्यगेवं स्फुटो नाडिकावृत्तखेटान्तरालेऽपमः" । इदानीं क्रान्तिपातानां विक्षेपक्रान्तिवलययोः सम्पातः क्रान्तिपातः स्यात् । तद्भगणाः सौरोक्ता व्यस्ता अयुतत्रयं कल्पे । अयनचलनं यदुक्तं मुञ्जालाद्यैः स एवायम् । तत्पक्षे तद् भगणाः कल्पे गोऽङ्गर्तुनन्दगोचन्द्राः । तत् संजातं पातं क्षिप्त्वा खेटेऽपमः साध्यः । क्रान्तिवशाच्चरमुदयास्तदलमप्यपमे ततः क्षेप्यः" । इदानीं विक्षेपपातानाह । "एवं क्रान्तिविमण्डलसंपाताः क्षेपपाताः स्युः । चन्द्रादीनां व्यस्ताः क्षेपानयने तु ते योज्याः । मन्दस्फुटो द्राक् प्रतिमण्डले हि ग्रहो भ्रमत्यत्र च तस्य पातः । पातेन युक्तात् गणितागतेन मन्दस्फुटात् खेचरतः शरोऽस्मात् । पातेऽथ वा शीघ्रफलं विलोमं कृत्वा स्फुटात् तेन युताच्छरोऽतः । चन्द्रस्य कक्षावलये हि पातः स्फुटाद्विधोर्मध्यमपातयुक्तात्" । इदानीं ज्ञशुक्रयोर्विशेषमाह "ज्ञे चात्र पातभगणाः पठितास्तु ज्ञयोस्ते शीघ्रकेन्द्रभगणैरधिका यतः स्युः । अल्पाः स्वभार्धमुदिताश्चलकेन्द्रयुक्तौ पातौ तयोः पठितचक्रभवौ विधेयौ । चक्राद्विशोध्यः किल केन्द्रविद्भ्यां सपातदोश्चरस्तु योज्यः । अतश्चलात् पातयुताज्ज्ञभृग्वोः सुधीभिराद्यैः शरसिद्धिरुक्ता । स्फुटो न शीघ्रोच्चयुतौ स्फुटौ तयोः पातौ भगोले स्फुट एव पातः" । इदानीं ग्रहगोले विशेषमाह । ग्रहस्य गोले कथितापमण्डलं प्रकल्प्य कक्षावलयं यथोदितम् । निबध्य शीघ्रप्रतिवृत्तमत्र विमण्डलं तत्पठितैः शरांशैः । मध्येऽत्र पातोद्युसदां ज्ञभृग्वोः स्वशीघ्रकेन्द्रे च युतस्तु देयः" । इदानीमहोरात्रवृत्तमाह । "इष्टापमक्रान्तितुल्येऽन्तरे सर्वतो नाडिकावृत्ताद्धोरात्रवृत्तद्वयम् । तत्र बद्धा घटीनां च षष्ट्याङ्कितं यस्य विष्कम्भखण्डं द्युजीवा मता । इदानीमन्यदाह । "अथ कल्प्यामेषाद्या अनुलोमं क्रान्तिपातचिह्नात् । एषां मेषादीनां द्युरात्रवृत्तानि बध्नीयात् । नाडीवृत्तोभयतस्त्रीणि त्रीणि क्रमोत्क्रमात् तानि" । इदानीमस्योपसंहारमाह "एष भगोलः कथितः खेचरगोलोऽयमेव विज्ञेयः । क्रान्त्यपमण्डले वा सूत्राधारैरधस्तत्रैव । अन्यादीनां कक्षा बध्नीयादूर्णनाभजालाभाः । बद्धा भगोलमेवं यष्ट्यां यष्टिं खगोलनाभिगताम् । प्रविश्य भ्रमयेत् तं यष्ट्याधारं स्थिरौ खदृग्गोलौ" सि॰ शि॰ ।

**भग्न** त्रि॰ भन्ज-क्त । १क्षतावयवभेदे २रोगभेदे हेमच॰ ।
तन्निदानभेदादिकं सुश्रुते उक्तं यथा
"अथातो भग्नानां निदानं व्याख्यास्यामः । पतनपीडनप्रहाराक्षेपणव्यालमृगदशनप्रभृतिभिरभिघातविशेषैरनेकविधमस्थ्नां भङ्गमुपदिशन्ति तत् तु भङ्गजातमनुसार्य्यमाणं द्विविधमेवोत्पद्यते सन्धिमुक्तं काण्डभग्नञ्च । तत्र सन्धिमुक्तमुत्पिष्टं विश्लिष्टं विवर्त्तितमवक्षिप्तमतिक्षिप्तं तिर्य्यक्क्षिप्तमिति षड्विधम् । तत्र प्रसारणाकुञ्चनविवर्त्तनाक्षेपणाऽशक्तिरुग्ररुजत्वं स्पर्शासहत्वं चेति सामान्यं सन्धिमुक्तलक्षणमुक्तम् । विशेषेणोत्पिष्टे सन्धावुभयतः शोफो वेदनाप्रादुर्भावो विशेषतश्च नानाप्रकारा वेदना रात्रौ प्रादुर्भवन्ति । विश्लिष्टेऽल्पशोफो वेदनासातत्यं सन्धिविक्रिया च । विवर्त्तिते तु सन्धिपार्श्वापगमनाद्विषमाङ्गता वेदना च । अवक्षिप्ते सन्धिविश्लेषस्तीव्ररुजत्वञ्च । अतिक्षिप्ते द्वयोः सन्ध्यस्थ्नोरतिक्रान्तता वेदना च । तिर्य्यक्क्षिप्ते त्वेकास्थिपार्श्वापगमनमत्यर्थं वेदना चेति । काण्डभग्नमत ऊर्द्ध्वं वक्ष्यामः कर्कटकमश्वकर्णं चूर्णितं पिच्चितमस्थिच्छल्लितं काण्डभग्नं मज्जानुगतमतिपातितं वक्रं छिन्नं पाटितं स्फुटितमिति द्वादशविधम् । श्वयथुबाहुल्यं स्पन्दनविवर्त्तनस्पर्शासहिष्णुत्वमवपीड्यमाने शब्दः स्रस्ताङ्गता विविधवेदनाप्रादुर्भावः सर्वास्ववस्थासु न शर्मलाभ इति समासेन काण्डभग्नलक्षणमुक्तम् । विशेषतस्तु संमूढमुभयतोऽस्थिमध्यभग्नं ग्रन्थिरिवोन्नतं कर्कटकम् । चूर्णितमस्थि तत् तु शब्दस्पर्शाभ्यां बोद्धव्यम् । पिच्चितं पृथुताङ्गतमनल्पशोफम् । पार्श्वयोरस्थिहीनोन्नतमस्थिच्छल्लितम् । वेल्लत प्रकम्पमानं काण्डभग्नत्वम् । अस्थ्नवयवोऽस्थिमध्यमनुप्रविश्य मज्जानमुत्क्षिपतीति मज्जानुगतम् । अस्थि निःशेषतश्छिन्नमतिपतितम् । आभुग्नमविमुक्तास्थि वक्रम् । अन्यतरपार्श्वावशिष्टं छिन्नम् । पाटितमणु बहुविदारितं वेदनावच्च । शूकपूर्णमिवाध्मातं विपुलं विस्फुटीकृतं स्फुटितमिति । तेषु चूर्णितच्छिन्नातिपातितमज्जानुगतानि कृच्छ्रसाध्यानि कृशवृद्धबालानां क्षतक्षीणकुष्ठश्वासिनां सन्ध्युपगतञ्चेति । भवन्ति चात्र "भिन्नं कपालं कट्यान्तु सन्धिमुक्तं तथा च्युतम् । जघनं प्रतिपिष्टञ्च वर्जयेत् तच्चिकित्सकः । असंश्लिष्टं कपालन्तु ललाटे चूर्णितञ्च यत् । भग्नं

द्यादिनिर्गमाद्युन्मार्गसंश्च"। कष्टसाध्यमसाध्यञ्चाह "घोराः साधयितुं दुःखा सर्व एव भगन्दराः। तेष्वसाध्यस्त्रिदोषोत्थः क्षतजश्च विशेषतः। वातमूत्रपुरीषाणि क्रिमयः शुक्रमेव च। भगन्दरात् स्रवन्तस्तु नाशयन्ति तमातुरम्"।

**भगभक्त** त्रि॰ भगे धने भक्तः। धनरते ऋ॰ १।२४।५।

**भगभक्षक** पु॰ भगेन तद्व्यापारोपपादनेन भक्षति भक्ष-ण्वुल्। (कोटना) ख्याते नायकयोर्मेलके।

**भगल** त्रि॰ भगं तद्व्यापारं लाति—ला—क। भगव्यापार याचके ततः अरीहणा॰ चतुरर्थ्यां वुञ्। भागलक तन्निवृत्तादौ त्रि॰।

**भगशास्त्र** न॰ भगव्यापारबोधकं शास्त्रम् शा॰त॰। कामशास्त्रे

**भगवत्** पु॰ भगम् "ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना" इत्युक्तम् अस्त्यस्य मतुप् मस्य वः। १ऐश्वर्य्यादियुक्ते परमेश्वरे २बुद्धे अमरः तस्य षड्भिज्ञत्वात् भगरूपैश्वर्य्यादियोगाच्च तथात्वम्। अस्य संबोधने भगोः इत्येव अत्रादौ तस्य विसर्गस्य लोपः। ३दुर्गायां स्त्री ङीप्। "सेव्यते या सुरैः सर्वैस्ताश्चैव भजते यतः। धातुर्भजेति सेवायां भगवत्येव सा स्मृता" देवीपु॰ ४५ अ॰।

**भगवद्गीता** स्त्री ६त॰। भीष्मपर्वान्तर्गते अष्टादशाध्यायात्मके कर्मयोगज्ञानयोगभक्तियोगसूचके ग्रन्थे।

**भगवद्दृश्य** त्रि॰ भगवानिव दृश्यते दृश—कर्मणि क्यप्। भगवत्तुल्ये। "श्रुतं मे भगवद्दृश्येभ्यस्तरति शोकमात्मवित्" छा॰ उ॰। [विष्णौ "भगहा भगनन्दनः" विष्णुस॰।

**भगहन्** पु॰ भगमैश्वर्य्यं संहारकाले हन्ति—हन—क्विप्।

**भगाङ्कुर** पु॰ भगे गुह्यस्थानेऽङ्कुर इव। अर्शोरोगे शब्दार्थक॰

**भगाधान** न॰ ६त॰। १माहात्म्याधाने २सौभाग्ये च हरिवं॰ १२४ अ॰।

**भगाल** न॰भज—कालन् न्यङ्क्वा॰कुत्वम्। १नरमस्तके २नरकपाले उज्ज्वलः। ततः अस्त्यर्थे इनि। भगालिन् कपालधारके शिवे त्रिका॰ भगालशब्दे परे द्विगौ पूर्वपदप्रकृतिस्वरः पञ्चभगालः। द्विगुस्त्रिये तत्पुरुषे प्रकृतिस्वरत्वेन अन्तोदात्तताया।

**भगिनी** स्त्री भगं यत्नः पित्रादीनां द्रव्यादानेऽस्त्यस्याः इनि ङीप्। १सोदरायाम् स्वसरि अमरः। "भगिनीशुल्कं सोदर्य्याणाम्" दायभागः। २स्त्रीमात्रे च शब्दच॰ ३भाग्यान्वितस्त्रीमात्रेऽपि तेन सर्वस्त्रीणां तत्पदेन संबोधनं विहितम्। "परपत्नी तु या स्त्री स्यादसम्बन्धा च योनितः। तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीति च" मनुः।

**भगीरथ** पु॰ सूर्य्यवंश्ये नृपभेदे "असमञ्जसस्तु तनयो ह्यंशुमानाम विश्रुतः। तस्य पुत्रो दिलीपस्तु दिलीपात्तु भगीरथः। येन भागीरथी गङ्गा तपःकृत्वाऽवतारिता" मत्स्यपु॰ १२ अ॰। [श्वेता॰ उ॰।

**भगेश** पु॰ ६त॰। ऐश्वर्य्यादेरीश्वरे "धर्मावहं पापनुदं भगेशम्"

**भगोल** पु॰भानां नक्षत्राणां गोलाकारः पदार्थः। राशिचक्रे तस्य भ्रमणभेदादिकं सू॰ सि॰ उक्तं यथा

"सव्यं भ्रमति देवानामपसव्यं सुरद्विषाम्। उपरिष्टाद् भगोलोऽयं व्यक्षे पश्चान्मुखः सदा" सू॰सि॰। "अयं प्रत्यक्षो भगोलो नक्षत्राधिष्ठितमूर्तगोलो देवानां मेरोरुत्तराग्रवर्तिनां सव्यम् पूर्वादिक्रममार्गेणेत्यर्थः। भ्रमति भ्रमं परिवर्तं करोतीत्यर्थः। दैत्यानां मेरोर्दक्षिणाग्रवर्तिनामपसव्यं पूर्वादिदिग्व्युत्क्रममार्गेण। पूर्वोत्तरपश्चिमदक्षिणक्रमेणेत्यर्थः। नक्षत्राधिष्ठितगोलो भ्रमति। व्यक्षे निरक्षदेशेषु जात्यभिप्रायेणैकवचनम्। उपरिष्टान्मस्तकोर्ध्वमध्यभागो भगोलः पश्चान्मुखः पश्चिमदिगभिमुखः सदा नित्यं परिभ्रमति भगोलस्य ध्रुवमध्यस्थत्वेन भ्रमणात् तयोस्तत्र क्षितिजस्थत्वाच्च" रङ्ग॰। तस्य प्रत्यक्षदर्शनार्थं सि॰ शि॰ भगोलबन्धप्रकारमाह यथा

"इदानीं भगोलबन्धमाह। "याम्योत्तरक्षितिजवत् सदृढं विदध्यादाधारवृत्तयुगलं ध्रुवयष्टिबद्धम्। षष्ट्यङ्कमालवमयडलवत् तृतीयं नाड्याङ्कयं च विषुवद्वलयं तदेव" सू॰। इदानीं क्रान्तिवृत्तमाह। "क्रान्तिवृत्तं विधेयं षडङ्काङ्कं भमलव भानुच भार्धं क्रुभा भानुतः। क्रान्तिपातः प्रतीपं तथा प्रस्फुटाः खेपपाताश्च तत्स्थानकान्यङ्कयेत्"। इदानीं क्रान्तिवृत्तस्य निवेशनमाह। "क्रान्तिपाते च पाताङ्कघटकान्तरे नाडिकावृत्तलग्नम् विदध्यादिदम्। पाततः प्राक्त्रिभे सिद्धभागैरुदग् दक्षिणे तैश्च भागैर्विभागेऽपरे"। इदानीं विमण्डलमाह। "नाडिकामण्डले क्रान्तिवृत्ते तथा खेपवृत्तं न्यसेत्। खेपवृत्तं तु राश्यङ्कितं तत्र च खेपपातेषु चिह्नानि कृत्वोक्तवत्। क्रान्तिवृत्तस्य विक्षेपवृत्तस्य च खेपपाते सपङ्क्ते च कृत्वा युतिम्। खेपपातायतः पृष्ठतश्च त्रिभे खेपभागैः स्फुटैः सौम्ययाम्ये न्यसेत्। शीघ्रकर्णेन भक्ताश्चिमज्यागुणाः स्युः परक्षेपभागा ग्रहाणां स्फुटाः। खेपवृत्तानि षण्णां विदध्यात् पृथक् स्वस्ववृत्ते भ्रमन्तीन्दुपूर्वा ग्रहाः"।

स्थानान्तरे यच्छ पृष्ठे मूर्ध्नि च वर्जयेत्। आदितो यस्य दुर्ज्जातमस्थिरस्थिरथापि वा। यस्यक् संहितमप्यस्थि दुर्न्यासाद् दुर्निबन्धनात्। सङ्क्षोभादपि यद्‌बच्छेद्धिक्रियां तत् तु वर्जयेत्। मध्यस्य वयसोऽवस्थास्तिस्रो याः परिकीर्त्तिताः। तत्र स्थिरो भवेज्जानुरूपक्रान्तो विजानता। तद्वास्थीनि नमन्ते भज्यन्ते नवकानि तु। कपालानि विभिद्यन्ते स्फुटन्ति रुचकानि च"।

**भग्नपाद्** न० ज्यो०त० चक्रे कृत्तिकादिनक्षत्रे यस्य नक्षत्रस्य तृतीयपादस्य आद्यपादस्य वा राश्यन्तरघटकता तादृशे नक्षत्रे। "पुनर्वसूत्तराषाढ़ाकृत्तिकोत्तरफल्गुनी। पूर्वभद्रा विशाखा च षड़ेते पुष्कराः स्मृताः भग्नपादत्वसंयोगात्"।

**भग्नपृष्ठ** त्रि० भग्नं पृष्ठं यस्य। १त्रुटितपृष्ठके २सम्मुखे च त्रिका०।

**भग्नप्रक्रम** पु० भग्नः प्रक्रमो यत्र। काव्यमते वाक्यदोषभेदे १७६३।६४ पृ० दोषशब्दे दृश्यम्। तदुदाहरणं सा०द० "एवमुक्तो मन्त्रिमुख्यै रावणः प्रत्यभाषत" अत्र वचधातुना प्रक्रान्तं प्रतिवचनमपि तेनैव वक्तुमुचितं तेन "रावणः प्रत्यवोचतेति" पाठो युक्तः। एवञ्च सति न कथितपदत्वदोषः तस्योद्देश्यप्रतिनिर्देश्यव्यतिरिक्तविषयत्वात् इह हि वचनप्रतिवचनयोरुद्देश्यप्रतिनिर्देश्यत्वम्। यथा "उदेति सविता ताम्रस्ताम्र एवास्तमेति च" इत्यत्र। यदि पदान्तरेण स एवार्थः प्रतिपाद्यते तदान्योऽर्थ इव प्रतिभासमानः प्रतीतिं स्थगयति। यथा वा। "ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम्। सिद्धञ्चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः"। अत्र "अस्मा इति" इदमा प्रक्रान्तस्य तेनैव तत्समानाभ्यामेतददःशब्दाभ्यां वा परामर्शो युक्तो न तच्छब्देन। यथा वा। "उदन्वच्छिन्ना भूः स च पतिरपां योजनशतम्"। अत्र "मिता भूः पत्यापां स च पतिरपामिति" युक्तः पाठः। एवं "यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्त्तितुं वा। निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः" अत्र सुखमीहितुमित्युचितम्। अत्राद्ययोः प्रकृतिविषयः प्रक्रमभेदः। तृतीये पर्यायविषयः चतुर्थे प्रत्ययविषयः"।

**भग्नसन्धि** पु० भग्नः सन्धिरत्र। रोगभेदे गरुड़पु० १५७अ०।

**भग्नसन्धिक** न० भग्नः सन्धिः सम्बन्धनसयवयोजनमत्र कप्। तक्रे (घोल) शब्दच०।

**भग्नात्मन्** पु० ६ब०। चन्द्रे शब्दचन्द्रिका। तस्य कृष्णप्रतिपदादिक्रमेण एकैककलाविच्छेदेन भग्नदेहत्वात् तथात्वम्

**भग्नाश** त्रि० ६त०। १हताशे इष्टविषयाया इच्छायाः प्रतिघातयुक्ते।

**भग्नी** स्त्री भगिनी+पृषो०। भगिन्यां द्विरूपकोषः।

**भङ्कारी** स्त्री भमित्यव्यक्तशब्दं करोति कृ—अण् गौरा०ङीष्। मशकाख्यायां दंशे त्रिका०।

**भङ्ग** पु० भन्ज—भावादौ घञ्। १तरङ्गे अमरः २पराजये। ३खण्डे ४रोगभेदे मेदि०५कौटिल्ये ६भये ७पत्ररचनाभेदे हेम०। ८गमने ९जलनिर्गमे च अजयपालः १०मालालयाम्, अमरः। ११शणाख्ये १२शस्ये त्रिवृतायां (तेवडी) १३विजयायाञ्च (भाङ) स्त्री। १४रोगमाले पु० राजनि०।

**भङ्गकार** पु० अविक्षितो नृपस्य १पुत्रभेदे भा० आ० ९४अ०। २सत्राजित्पुत्रभेदे हरिवं ३८ अ०।

**भङ्गवासा** स्त्री भङ्गे वसति वासः सौरभं यस्याः। हरिद्रायां शब्दरत्ना० तस्याः भेदेन एव वासनावत्त्वात्तथात्वम्।

**भङ्गसार्थ** त्रि०भङ्गस्तद्युतः सार्थः मायायुतत्वात् सप्रयोजनः। कुटिले हारा०। [रजसि

**भङ्गाकट** न० भङ्गाया रजः भङ्गा+रजसि कटच्। भङ्गौषधे।

**भङ्गान** पुंस्त्री भङ्गेन तरङ्गेण अनिति अन-अच्। (भाङन) मत्स्यभेदे शब्दमा० स्त्रियां जातित्वात् ङीष्।

**भङ्गारी** स्त्री भमित्यव्यक्तं गिरति गॄ—अण् गौरा० ङीष्। दंशे त्रिकाण्डे पाठान्तरम्।

**भङ्गासन** पु० नृपभेदे तत्कथा भा० अनु० १२अ०।

**भङ्गि(ङ्गी)** स्त्री भन्ज—इन् न्यङ्क्वा० कुत्वम् वा ङीप्। १विच्छेदे २कौटिल्ये ३विन्यासे ४कल्लोले ५भेदे ६व्याजे च।

**भङ्गिमन्** पु० भङ्ग+वा० स्वार्थे इमनिच्। भङ्ग्याम्।

**भङ्गुर** त्रि०भन्ज—घुरच्। १स्वयं भञ्जनशीले जटा०। २कुटिले ३नदीनां वक्रे च शब्दमा०,४प्रियङ्गौ ५अतिविषायाम् च (आतइच) स्त्री राजनि०।

**भङ्ग्य** न० भङ्गानां भवनं क्षेत्रं तमर्हति वा यत्। भङ्गाभवनयोग्ये क्षेत्रे २भङ्गार्हे त्रि०।

**भचक्र** न० भानां नक्षत्राणां राशीनां वा चक्रम्। १राशिचक्रे २नक्षत्रचक्रे च "भ्रमावर्त्तो भचक्रेऽस्मिन् ध्रुवा नाभौ व्यवस्थितः। आराचक्रे स्थिन्दुभौमौ शुक्रजीवशनैश्चराः। राहुः केतुरनन्तश्च नक्षत्रागणश्च राशयः। यदा दिश्यु च आशासु मेरोर्भूगोलकोऽङ्कना। छाया भवेत्तदा रात्रिः स्यात्तु तदिरहाद्दिनम्। सूर्येन्द्वोरुपरागस्तु गोलकच्छायया भवेत्। अन्योन्ययोस्तयोरेव व्याप्तयोरेव कार-

स्यात् । ग्रासमोक्षौ तु जायेते तस्मात् पूर्वपश्चिमौ । तत्र पुण्यफलाद्भागः कृतो राहोस्तु विष्णुना” वह्निपु० । अधिकं भगोलशब्दे दृश्यम् ।

**भज** भागे पृथक्करणे सेवायाञ्च भ्वा० उभ० सक० अनिट् । भजति-ते अभाक्षीत् अभक्त बभाज भेजतुः भेजे । [त

**भज** पाके दाने च चु०उ०सक०सेट् । भाजयति—ते अबीभजत्

**भजि** दीप्तौ चु०उभ०सक०सेट् इदित् । भञ्जयति-ते अबभञ्जत्-

**भजमान** त्रि० भज–शानच् । १न्यायागतद्रव्यादौ २विभाजके ३सेवके च । सात्वतो नृपस्य कौशल्यागर्भजाते ४पुत्रभेदे पु० हरिवं० ३८अ० ।

**भजि** पु०भज–धातुनिर्देशे इन् । १भजधातौ । इन् । सत्वतो नृपस्य २पुत्रभेदे भाग० ६।२४।४श्लो० । हरिवं०३८ अ० । भजिन् इति पाठान्तरम् तत्रार्थे

**भजेन्य** त्रि० भज–बा०कर्मणि एन्य । भजनीये माश०५।१७।२०

**भजेरथ** पु० राजभेदे ऋ०।।६०२ ।

**भञ्जनक** पु० मुखरोगभेदे “वक्त्रं वक्रं भवेद्यस्य दन्तभङ्गश्च जायते । कफवातकृतो व्याधिः स भञ्जनकसंज्ञितः” माधवकरः ।

**भञ्जनागिरि** पु० ६त० । किंशुलुका० दीर्घः । पर्वतभेदे

**भञ्जर** पु० भन्ज–बा० उर । देवकुलोद्भवे वृक्षे त्रिका० ।

**भञ्जा** स्त्री अन्नपूर्णायाम् शब्दमाला ।

**भट** भृतौ कर्मसूल्यग्रहणे भ्वा०पर०सक०सेट् भटति । अभाटीत्—अभटीत् । यो भाटयित्वा शकटं नीत्वा चान्यत्र गच्छति । भाटं न दद्यात् दाप्यो साऽवहृद्यापि भाटकम्” इत्युक्तः ।

**भट** भाषणे भ्वा० पर० सक० सेट् । भटति अभा(भ)टीत् ।

**भट** पु० भट–अच् । १योद्धरि अमरः “तद्भटचातुरीतुरी” नैष० ।२म्लेच्छभेदे हेम० ३वीरे ४नीचभेदे ५रात्रिञ्चरे च मेदि० ६इन्द्रवारुणाम् (राखालशशा) स्त्री रत्न० ।

**भटित्र** न० भट–इत्र । शूलपक्वे मांसादौ (काबाब) अमरः ।

**भट्ट** पु० भट–तन् । स्तुतिपाठवृत्तियुते (भाट) १जातिभेदे “वैश्यायां शूद्रवीर्य्येण पुमानेको बभूव ह । स भट्टो वावदूकश्च सर्वेषां स्तुतिपाठकः” ब्रह्मवै० ब्रह्मख० ७अ० “क्षत्रियाद्विप्रकन्यायां भट्टो जातोऽनुवाचकः” । तेन-द्विविधा जातिः । २स्वामित्वे, ३वेदाभिज्ञे ३पण्डिते च । भट्टश्च तुतातभिधः मीमांसकभेदः तन्मतं च १०१ पृ० दर्शितम् । दिग्मात्रं लौगाक्षिभास्करेण दर्शितं यथा “स च यागादिर्यजेत स्वर्गकाम इत्यादि वाक्येन स्व-र्गमुद्दिश्य पुरुषं प्रति विधीयते । तथाहि यजेते-त्यत्रास्त्यंशद्वयं यजिधातुः प्रत्ययश्च । प्रत्ययेऽप्यस्त्यंशद्वयमाख्यातत्वं लिङ्त्वञ्च । तत्राख्यातत्वं दशलकारसाधारणं, लिङ्त्वं पुनर्लिङ्मात्रे । उभाभ्यामप्यंशाभ्यां भावनैवोच्यते । भावना नाम भवितुर्भवनानुकूलो व्यापारविशेषः । सा द्विधा—शाब्दी आर्थी चेति । तत्र पुरुषप्रवृत्त्यनुकूलो भावयितृव्यापारविशेषः शाब्दी भावना । सा च लिङंशेनोच्यते लिङ्श्रवणेऽयं मां प्रवर्त्तयति मत्प्रवृत्त्यनुकूलव्यापारवानिति नियमेन प्रतीतेः । यद्यस्माच्छब्दान्नियतं प्रतीयते तत् तस्य वाच्यं गामानयेत्यस्मिन् वाक्ये यथा गोशब्दस्य गोत्वम् । स च व्यापारविशेषो लौकिकवाक्ये पुरुषाभिप्रायविशेषः वैदिकवाक्येषु पुरुषाभावात् लिङादिशब्दनिष्ठ एव । अतएव शाब्दी भावनेति व्यवह्रियते । सा च भावनांशत्रयमपेक्षते—साध्यं साधनमितिकर्त्तव्यताञ्च । किं भावयेत् ? केन भावयेत् ? कथं भावयेत् ?—इति तत्र साध्याकाङ्क्षायां वक्ष्यमाणांशत्रयोपेता आर्थी भावना साध्यत्वेनान्वेति, एकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेः सङ्ख्यादीनामेकप्रत्ययगम्यत्वेऽप्ययोग्यत्वान्न साध्यत्वेनान्वयः । साधनाकाङ्क्षायां लिङादिज्ञानं करणत्वेनान्वेति, तस्य च करणत्वं न भावनोत्पादकत्वेन तत्पूर्वमपि तस्याः शब्दे सत्त्वात् किन्तु भावनाज्ञापकत्वेन शब्दभावनाभाव्यनिर्वर्त्तकत्वेन वा । इतिकर्त्तव्यताकाङ्क्षायामर्थवादज्ञाप्यप्राशस्त्यमितिकर्त्तव्यत्वेनान्वेति । प्रयोजनेच्छाजनितक्रियाविषयव्यापार आर्थी भावना । सा चाख्यातवाच्या, आख्यातसामान्यस्य व्यापारवाचित्वात् । साप्यंशत्रयमपेक्षते साध्यं साधनमितिकर्त्तव्यताञ्च । किं भावयेत् ? केन भावयेत् ? कथं भावयेत् ? इति । तत्र साध्याकाङ्क्षायां स्वर्गादिफलं साध्यत्वेनान्वेति । साधनाकाङ्क्षायां यागादिः करणत्वेनान्वेति, इतिकर्त्तव्यताकाङ्क्षायां प्रयाजाद्यङ्गजातमितिकर्त्तव्यत्वेनान्वेति” ।

**भट्टाचार्य्य** पु० भट्टस्तुतातभट्टस्य आचार्य्य उदयनाचार्य्यश्च तौ तुल्यतया तन्मताभिज्ञतया वाऽस्त्यस्य । तुतातभट्टेन उदयनाचार्य्येण च १तुल्ये २तयोर्मताभिज्ञे च । द्वन्द्वः । ३तयोः द्वि० व० । “नास्तिकानां निग्रहाय भट्टाचार्य्यौ भविष्यतः” ।

**भट्टार** त्रि० भट्टं स्वामित्वमृच्छति ऋ अण् । १पूज्ये

लिङ्गा०। सूर्ये पु० स्वार्थे क। पूज्ये त्रि० जटा०। नाट्योक्तौ नृपे संज्ञायां कन्। देवे तपोधने पु० मेदि० अमरः। "सखे! स्वायुनिर्मिताः पाशास्तदद्य भट्टारकवारे कथमेतान् दन्तैः स्पृशामि" हितो०।

**भट्टि** पु० १द्वाविंशतिसर्गात्मके महाकाव्यभेदे तच्च जयमङ्गलेन श्रीधरस्वामिसूनो र्महाब्राह्मणस्य महावैयाकरणस्य भट्टेः कृतिरित्युक्तं भरतमल्लिकेन भर्तृहरिणा कृतमित्युक्तं तच्चिन्त्यं "काव्यमिदं विहितं मया वलभ्यां श्रीधरसेननरेन्द्रपालितायाम्" तत्र द्वाविंशसर्गश्लोके उक्तेः न भर्तृहरिकृतत्वम् भर्तृहरेरुज्जयिनीवास्तव्यत्वेन तन्नृपतित्वेन च नृपान्तरराजधानीवास्तव्यत्वोक्तेरनुचितत्वात्।

**भट्टिनी** स्त्री भट्टं स्वामित्वमस्त्यस्य इनि ङीप्। नाट्योक्तौ १अकृताभिषेकायां राज्ञः स्त्रियाम् अमरः। २विप्रभार्यायाम् मेदि०।

**भट्टोजि** पु० सिद्धान्तकौमुदीशब्दकौस्तुभादिग्रन्थकारके दीक्षितोपनामके वैयाकरणभेदे। [कमले।

**भड** परिभाषणे भ्वा०आ०सक०सेट् इदित्। भण्डते अभण्डिष्ट

**भड** कल्याणभाषणे चु० उ०सक० सेट् इदित्। भण्डयति-ते अबभण्डत्-त। प्रतारणे च भण्डयति प्रतारको मुग्धं धनदानाङ्गीकारेण, सनिन्दोपलम्भे परिहासे च उणा० वृ० भडिभण्ड्योः पृथग्निर्देशात् अयमिदिदुभिन्नोऽपि।

**भड** पु० भडि-अच्। वर्णसङ्करभेदे "लेटतीवरकन्यायां जनयामास षड् नरान्। माल्लं मल्लं मातरं च भडं कोलं च कन्दरम्" ब्रह्मवै०ब्रह्मख०१०अ०।

**भडिल** पु० भड-इलच्। १वीरे २सेवके उज्ज्वल०। ३ऋषिभेदे ततः गर्गा० अपत्ये यञ्। भाडिल्य तदपत्ये अश्वा० फञ्। भाडिल्यायन तदपत्ये बहुत्वे तस्य लुक्।

**भण** कथने भ्वा०पर०द्विक०सेट्। भणति। अभाणीत्-अभणीत्। चङि वा ह्रस्वः। अबीभणत्-त अबभाणत्-त। कथनमिह व्यक्तवाक्यम्।

**भणिति** स्त्री भण-क्तिन् पृषोदरादित्वात् इट्। कथने। "गौडोर्वीशकुलप्रशस्तिभणितेः" नैष०। [२दूत्यां रत्नमाला।

**भण्टाकी** स्त्री भटि-आकन् ङीष्। १वार्त्ताक्याम्, अमरः।

**भण्टु(ण्टू)क** पु०भटि-उक ऊक वा। श्योनाकवृक्षे रत्नमा०

**भण्ड** पु० भडि-अच्। अश्लीलवाक्यभाषके (भाँड़) "त्रयो वेदस्य कर्त्तारो भण्डधूर्त्तनिशाचराः" सर्व०सं०चार्वाकदर्शनम्

**भण्डक** पुंस्त्री० भण्ड+संज्ञायां कन्। खञ्जनखगे जटा०। स्त्रियां जातित्वात् ङीष्।

**भण्डन** न० भडि-भावाधारादौ ल्युट् १अङ्गीकारे (प्रतारणे) २कवचे मेदि०। [वेश्यायां शब्दर०।

**भण्डहासिनी** स्त्री भण्डेन सह हसति णिनि ङीप्।

**भण्डि** स्त्री भडि-इन्। १वीचौ हारा०। वा ङीप् ङीषन्तः २शिरीषवृक्षे राजनि०। [शब्दर०

**भण्डिका** स्त्री भण्ड-ण्वुल् कापि अत इत्वम्। मञ्जिष्ठायां

**भण्डित** पु०भडि-क्त। १ऋषिभेदे ततः गर्गा० यञ्। भाण्डित्य तद्गोत्रापत्ये पुंस्त्री अश्वा०फञ्। भाण्डित्यायन तद्गोत्रापत्ये पुंस्त्री०। तस्य बहुत्वे वा लुक्।

**भण्डिर(ल)** पु०भण्ड-इरच् पृषो०रस्य वा लः। १शिरीषवृक्षे अमरः। रान्तः वाचस्पतिः। लान्तः शुभे दूते त्रि० उणादिको०।

**भण्डीतकी** स्त्री भण्डी सती तकति तक-हासे अच् गौरा० ङीष्। मञ्जिष्ठायां भावप्र०।

**भण्डीर** पु० भडि वा०ईर। १सप्तच्छदवृक्षे २तण्डुलीयशाके ३शिरीषवृक्षे च राजनि० हरिवं०६५ अ०। तद्वनवर्णनम्

**भण्डीरलतिका** स्त्री भण्डीर इव लतते लत-अच् स्वार्थे क कापि अत इत्वम्। मञ्जिष्ठायां राजनि०।

**भण्डीरी** स्त्री भडि। वा० ईर गौरा० ङीष्। मञ्जिष्ठायाम् अमरः। रस्य लः। तत्रार्थे पु० शब्दच०।

**भण्डु** पु० भडि-उण्। देशभेदे ततः सुवास्त्वा० चतुरर्थ्यां अण्। भाण्डव तददूरदेशादौ त्रि०।

**भण्डु(ण्डू)क** पु० भडि-उक ऊक वा। (मागुर) मत्स्यभेदे रत्नमाला। दीर्घमध्यः २श्योनाकवृक्षे रत्नमाला।

**भद** शुभकथने प्रीतौ च भ्वा० आ० अक० सेट् इदित्। भन्दते अभन्दिष्ट। [भन्दत्-त।

**भद** कल्याणकरणे चु०उ०सक०सेट् इदित्। भन्दयति-ते अब०

**भदन्त** पु० भदि-झच् नलोपः। १बौद्धभेदे। २पूजिते त्रि०। उणादि० ३प्रव्रजिते उज्ज्वल०।

**भदाक** न०भदि कल्याणे आकन् नलोपः। कल्याणे उज्ज्वल०

**भद्र** न० भदि-रक् नि० नलोपः। १मङ्गले उणा० २सुखे ३स्वर्णे च मेदि०। ज्योतिषोक्ते वृषादितः सप्तमे करणे स्त्री न०। ४महादेवे ५वृषे ६खञ्जने ७कदम्बे ८हस्तिजातिभेदे ९बलदेवे १०रामचरभेदे पु० मेदि०। ११सुमेरुशैले पु० हेमच० १२मुस्तके च पु० राजनि०। ज्योतिषोक्तासु १३द्वितीयासप्तमीद्वादशीतिथिषु च स्त्री। १४साधौ १५श्रेष्ठे च त्रि० मेदि०। १६देवदारुणि पु०। १७कृष्णभगिन्यां स्त्री "रामं मां भद्रया सह" हरि० वं०।

१८मध्यदेशभेदे पु॰वृ॰सं॰ १४अ॰कूर्म्मविभागे दर्शनात्। १९वसुदेवपुत्रभेदे पु॰ भाग॰ ९।२४।२५ श्लो॰। २०तुषितदेवगणभेदे भाग॰ ४।१।८। २१वैश्रवणपत्न्यां स्त्री॰भा॰१९८अ॰। २२सोमस्य दुहितरि उतथ्यपत्न्यां स्त्री भा॰अ॰ १५४अ॰। २३रौद्राश्वस्य कन्याभेदे हरिवं॰ ३६अ॰। २४नटभेदे पु॰ हरिवं॰ १५० अ॰। २५भारतवर्षस्थे नदीभेदे स्त्री मार्कपु॰ ५८ अ॰। विष्टिभद्रायाः सर्वकार्य्यवर्ज्जनप्रतिप्रसवादिकं मु॰ चि॰ पी॰धा॰ दर्शितं यथा "अयोगे सुयोगोऽपि चेत् स्यात् तदानीमयोगं निहत्यैष सिद्धिं तनोति। परे लग्नशुद्ध्या कुयोगादिनाशं दिनार्द्धोत्तरं विष्टिपूर्वं च शस्तम्(१)। शुक्ले पूर्वार्द्धेऽष्टमीपञ्चदश्योर्भद्रैकादश्यां चतुर्थ्यां परार्द्धे। कृष्णेऽन्त्यार्द्धे स्यात् तृतीयादशम्योः पूर्वे भागे सप्तमीशम्भुतिथ्योः(२)। पञ्चद्व्यद्रिकृताष्टरामरसभूयामादिघट्यः शरा विष्टेरास्यमसद्गजेन्दुरसरामाद्यश्विबाणाब्धिषु। यामेष्वन्त्यघटीत्रयं शुभकरं पुच्छं तथा वासरे विष्टिस्तिथ्यपरार्द्धजा शुभकरी रात्रौ तु पूर्वार्द्धजा(३)। कुम्भकर्कद्वये मर्त्ये स्वर्गेऽब्जेऽजात्त्रयेऽलिगे। स्त्रीधनुर्जूकनक्रेऽधो भद्रा तत्रैव तत्फलम्(४)" मू॰।

"अथावश्यकशुभकृत्ये कालान्तरप्रतीक्षाऽयोग्यतायां परिहारमाह विष्टिपूर्वं विष्टिर्भद्रा तत्पूर्वं तदादि व्यतीपातादिकं दिनार्द्धोत्तरं मध्याह्नादनन्तरं शस्तं प्राक् अर्थात् मध्याह्नं यावत्कालो निषिद्धः "विष्टिरङ्गारकश्चैव व्यतीपातश्च वैधृतिः। प्रत्यरं जन्मनक्षत्रं मध्याह्नात् परतः शुभम्" इति तेनैवोक्तत्वात्(१)। अथ भद्रा निषिद्धेति पूर्वमुक्तं तदधुना प्रस्तावात् तन्निषिद्धकालं शालिनीच्छन्दसाह शुक्ले इति। शुक्लपक्षे अष्टम्यां पूर्णिमायाञ्च पूर्वार्द्धे भद्रा भवति एकादश्यां चतुर्थ्यां चोत्तरार्द्धे भद्रा। अथ कृष्णे कृष्णपक्षे तृतीयायां दशम्यां चान्त्यार्द्धे उत्तरार्द्धे भद्रा स्यात् सप्तम्यां शम्भुतिथौ चतुर्दश्याञ्च पूर्वे भागे पूर्वार्द्धे भद्रा स्यात् पूर्वे इति पूर्वादिभ्यो नवभ्यो वेति स्मिन्भावपक्षे रूपम्। अष्टम्यादीनां तिथीनां गतभोग्यघटिकायोगार्द्धं भद्राप्रमाणमिति यावत् "तिथेर्गतैष्यैक्यदलं तन्मानं करणं भवेत्" वोपदेवोक्तेः "तिथ्यर्द्धभागं सर्वेषां करणानां प्रकल्पयेत्" इति सूर्य्यसिद्धान्तोक्तेश्च। उक्तञ्च दीपिकायाम् "तृतीयादशमीशेषे तदुपान्त्योस्तु पूर्वतः। कृष्णे विष्टिः सिते तद्वच्चाष्टां परतिथिष्वपि" बृहस्पतिना तु स्पष्टमुक्तम्। "सिते चतुर्थ्यामन्त्यार्द्धमष्टम्याद्यार्द्धमेव च। एकादश्यां परार्द्धे तु पूर्वार्द्धे पूर्णमीतगौ। कृष्णे तृतीयान्त्यार्द्धे हि सप्तम्याद्यार्द्धमेव च। दशम्यामुत्तरार्द्धे तु चतुर्दश्यर्द्धमादितः। विष्ट्याख्योऽयं महादोषः कथितोऽत्र समस्तमः। तदानीं कृतं तत्कर्म कर्त्ता सह विनश्यति" इति। पूर्णमीतगौ पूर्णिमायाम्। रत्नकोषे प्रत्येकं भद्रानामानि "हंसी नन्दिन्यपि च त्रिशिराः सुमुखी कराळिकाचैव वैकृतिरौद्रमुखी च चतुर्मुखी विष्टयः क्रमशः"। चतुर्थ्यादितिथिषूक्त्विति भद्रानामाभिधानं नामसादृश्येन फलतारतम्यसूचनार्थम्। भद्रास्वरूपं रत्नमालायाम् "उद्वद्धोद्भटसर्पोद्भिताऽतिकृष्णा दंष्ट्रोग्रा पृथुतनुमग्नदीर्घनासा। कार्य्यश्रीहुतवहवक्त्रवस्तुगिरन्ती विश्रान्तः पतति समस्ततोऽत्र विष्टिरिति"(२)। अथ चतुर्थ्यादितिथिषु भद्रायाम्मुखपुच्छविभागादिकं शार्दूलविक्रीडितेनाह। पञ्चेति चतुर्थ्यादितिथीनां क्रमशः पञ्चादिप्रहरेषु शराः पञ्च नाद्यः आदिमा विष्टेर्भद्राया आस्यं मुखं यथा चतुर्थ्याः पञ्चमप्रहरे, आदिभूताः पञ्च घट्यो भद्रामुखम् एवमष्टम्या द्वितीयप्रहरे, एकादश्याः सप्तमप्रहरे, पौर्णमास्याश्चतुर्थप्रहरे, तृतीयाया अष्टमप्रहरे, सप्तम्यास्तृतीयप्रहरे, भद्रामुखमित्यर्थः तच्च भद्रायामुखमसदशुभमित्यर्थः अथ पुनश्चतुर्थ्यादितिथीनां क्रमेण गजादिप्रहरेषु अन्त्यम् अन्ते भवमन्त्यं दिगादिभ्यो यदिति यत् घटीत्रयं पुच्छं पुच्छसंज्ञं तच्छुभकरं समस्तकार्य्येष्वित्यर्थः। यथा चतुर्थ्या अष्टमप्रहरस्यान्त्यं घटीत्रयं भद्रापुच्छम् एवमष्टम्याः प्रथमप्रहरस्य, एकादश्याः षष्ठप्रहरस्य, पूर्णिमायास्तृतीयप्रहरस्य, तृतीयायाः सप्तमप्रहरस्य, सप्तम्या द्वितीयप्रहरस्य, दशम्याः पञ्चमप्रहरस्य, चतुर्दश्याश्चतुर्थप्रहरस्यान्त्यं घटीत्रयं भद्रापुच्छमित्यर्थः। यदाह गुरुः "भूतदस्रखराम्भोधिवसुवह्न्यद्रिरूपकाः। यामेष्वेषु क्रमादास्यं भवेत् तिस्रश्च विष्टिष्विति"। व्यवहारसमुच्चये "दशम्यामष्टम्यां प्रथमघटिकापञ्चकपरं हरिद्युः सप्तम्यां दिवस १२घटिकान्ते त्रिघटिकम्। तृतीयाराकायां खयुग्२०घटिकाभ्यः परमतं शुभं विष्टेः पुच्छं त्रिशतिथिचतुर्थ्योस्तु विरमे" इति। हरिद्युरेकादशी राका पूर्णिमा। ननु भद्रा देवतेत्यभिधीयते तस्याः पुच्छकथनात्तु पशुत्वसिद्धिर्दृश्यते देवता च कथं पशुर्भवितुमर्हति। सत्यं दैत्येन्द्रैर्देवेषु पराजितेषु रुद्रस्य ज्वालामालाकुलनेत्रावोक्षितदेहात् देवी भद्रासंज्ञा सुखपुच्छादिमत्येव

उत्पन्ना दैत्यान् जघान यदुक्तं श्रीपतिना दैत्येन्द्रैः समरेऽमरेषु विजितेष्वीशः क्रुधा दृष्टवान् स्वकायं किल निर्गता खरमुखी लाङ्गूलिनी च त्रिपात्। विष्टिः सप्तभुजा मृगेन्द्रगलका क्षामोदरी प्रेतगा दैत्यघ्नी मुदितैः सुरैस्तु करणप्रान्ते नियुक्ता सदेति"। भद्राकृत्यमाह वशिष्ठः "वधबन्धविषाग्न्यस्त्रच्छेदनोच्चाटनादि यत्। तुरङ्गमहिषोष्ट्रादि कर्म विष्ट्यान्तु सिध्यति। न कुर्यात् मङ्गलं विष्ट्यां जीवितार्थी कदाचन। कुर्वन्नज्ञस्तदा क्षिप्रं तत् सर्वं नाशतां व्रजेत्"। तदाङ्गविभागः फलञ्च कश्यपसंहितायाम् "मुखे पञ्च गले त्वेका वक्षस्येकादश स्मृताः। नाभौ चतस्रः षट् कट्यां तिस्रः पुच्छे तु नाडिकाः। कार्य्यहानिर्मुखे मृत्युर्गले वक्षसि निःस्वता। कट्यामुन्मत्तता नाभौ च्युतिः पुच्छे ध्रुवो जयः"। अयन्तु भद्राङ्गविभागो नाडीनां त्रिंशतोऽन्यूनाधिकत्वे तु त्रैराशिकेन मुखादीनामङ्गानां विभागज्ञानं यथा यदि नाडी त्रिंशता दृष्टाङ्गपरिमाणं दृष्टपरिमाणेन किमिति त्रैराशिकम् एवं सति तत्ताङ्गपरिमाणं भद्राभोगमितघटीभिः षङ्गुणं त्रिंशता भाज्यं लब्धमोऽङ्गविभागः। तत्र मुखादिज्ञाना रत्नमालायाम् "जलधिशिखिशिरद्वाःशर्वकीनाशवायुत्रिदशपतिसुपर्ण प्रोक्तमास्यं हि विष्टेः। नियतमभिरियामसंख्यया प्रक्रमेण स्फुटमिह परिहार्य्यं सङ्कटेष्वेतदेव"। अयं अर्थः कीनाशो यमः शुक्लचतुर्थ्यां उत्तरार्द्धे पश्चिमदिशि भद्रामुखं तद्यामसंख्याक्रमेण पञ्चमे प्रहरे भवति अर्थात् भद्रायाः प्रहरचतुष्टयाधिकस्थितमानादन्ते एव घटिकात्रयं पुच्छं ततोऽष्टम्यां द्वितीयप्रहरेऽनेन प्रकारेण आग्नेय्यां दिशि मुखं मुखात् प्राक् पुच्छमिति प्रथमप्रहरान्त एव पुच्छघटिका इत्येवं सर्वत्रापि भद्रातिथिष्ववगन्तव्यं प्रयोजनमपि तत्रैव "श्रुतिवसुशशितिथियुगदशशिवगुणसंख्यासु तिथिषु पूर्वतः। यामाति विष्टेर्मुखं पृष्ठे शुभदा पुरस्त्वशुभेति" तदेतदात्ययिककार्य्यसम्भवे सति मुखादिकं संत्यज्यात्मानिषेधकमवधेयम्। ग्रन्थान्तरे चान्यदप्युक्तम्। "असिते सर्पिणी ज्ञेया सिते विष्टिस्तु वृश्चिकी। सर्पिण्यास्तु मुखं त्याज्यं वृश्चिक्याः पुच्छमेव च"। अथ परिहारमाह तत्रैव विष्टिस्त्वपराह्णजा तिथ्युत्तरार्द्धे संभूता वासरे दिवसे यदि स्यात् भद्रा तदा शुभकरी तेनैव प्रकारेण तिथिपूर्वार्द्धजा भद्रा रात्रौ चेत् स्यात् तदा शुभा शुभकरी स्यात्। उक्तञ्च "रात्रिभद्रा यदाह्नि स्यात् दिवा भद्रा यदा निशि। न तत्र भद्रादोषः स्यात् सा भद्रा भद्रदायिनी" इति। रात्रिभद्रा तिथ्युत्तरार्द्धोद्भवा दिवाभद्रा तिथिपूर्वार्द्धोद्भवा अस्यार्थं स्पष्टमाह गुरुः। "निशि पूर्वार्द्धजा विष्टिर्दिवा चापरतः शुभा। क्रमागता तु या विष्टिः सैव हालाहलोपमा" इति। कल्लोऽपि "दिवा परार्द्धजा विष्टिः पूर्वार्द्धोत्था यदा निशि। तदा विष्टिः शुभायेति कमलासनभाषितम्"। ब्रह्मसिद्धान्तेऽपि "दिवा परार्द्धजा विष्टिर्विष्टिरेव दिवानिशोः। सा त्याज्या त्वन्यथा विष्टिः सर्वकर्मशुभप्रदा"। ननु यत् तु नारदकश्यपादिभिरुक्तम्। "करणानि ववादीनि शुभसंज्ञानि षट् क्रमात्। क्रमायाता क्रमायाता विष्टिर्नेष्टा तु मङ्गले"। अत्र क्रमायाता दिवारात्रिक्रमायाता दिवाभद्रा रात्रौ रात्रिभद्रा च दिवेत्यर्थः। एवं सति द्विविधाया अपि भद्राया दोषवत्त्वोक्तेः पूर्वोक्तपरिहाराभिधानमयुक्तम् उच्यते इदमेव क्रमायातेति वचनं ज्ञापकत्वार्थञ्च अन्यथा सामान्यतो भद्रादये इत्युक्तौ द्विविधभद्राया दोषवत्त्वसिद्धेरनर्थकमिदं स्यात् तस्मात् शुभकार्य्याणां भद्राख्यदुष्टदिनव्यतिरिक्तकालप्रतीक्षाऽयोग्यत्वे तदैव कार्य्यं न दुष्टदिने अत्र तेनोपपत्तौ बाधो न न्याय्य इति न्यायात् वचनस्य निषेध एव तात्पर्य्यञ्च। अवश्यकर्त्तव्यस्य तु शुभकर्मणः कालान्तरप्रतीक्षासहमानस्य वचनादिपरिहारमाश्रित्य दुष्टदिने कृतिरुचितैव विष्टिकारकत्वेऽप्यपि परिहार एतत्पर एवेत्यलं पल्लवितेन। अथ भद्रानिवासं तत्फलञ्चाह (३)। कुर्केति अजो चन्द्रमसि कुम्भद्वये कुम्भमीनस्थे कर्कद्वये कर्कसिंहराशिस्थिते सति भद्रा मर्त्ये मनुष्यलोके तिष्ठति। अथाजातद्वये मेषवृषमिथुनस्थितेऽलिनि वृश्चिकस्थिते चन्द्रे स्वर्गे भद्रा तिष्ठति। कन्याधनुस्तुलामकरराशिस्थितेऽधः पातालोके भद्रा तिष्ठति। अथ भद्रा तत्रैव मर्त्यस्वर्गपातालेषु फलं ददातीत्यपवादद्वारा प्रयोजनमुक्तं भवति। उक्तञ्च "मेषोक्षकौर्पिमिथुने घटसिंहमीनकर्केषु चापमृगतौलिसुतासु चन्द्रे। स्वर्मर्त्यनागनगरीः क्रमशः प्रयाति विष्टिः फलान्यपि ददाति हि तत्र तेषु" इति। भूपालवल्लभे "कन्यातुलामकरधन्विषु नागलोके मेषालिवैषिक वृषेषु सुरालये स्यात्। पाठीनसिंहघटकर्कटकेषु मर्त्ये चन्द्रे वदन्ति मुनयस्त्रिविधां हि विष्टिम्" (४) पो॰ भा॰

भद्रशब्दात् परिवापणे (मुण्डने)ऽर्थे णिच् डाच्। अ(प)नुप्रयोगः मद्राद्यं०। भद्राकरोति मालकं मुण्डनेन संस्करोतीत्यर्थः सि०कौ०। एवं भद्रशब्देऽपि बोध्यम्।

भद्रक त्रि०भद्र—स्वार्थे संज्ञायां वा कन्। १मनोज्ञे त्रिका०। २भद्रमुस्तके न० शब्दमाला। ३देवदारुवृक्षे शब्दर०। "स्त्रौ नरनारनायच गुरुर्दिगकविरलं हि भद्रकमिदम्"। छ०र०उक्ते द्वाविंशत्यक्षरपादके ४छन्दोभेदे।

भद्रकण्ट पु० भद्रः कण्टोऽस्य। गोक्षुरक्षुपे राजनि०।

भद्रकर्ण पु० भद्रस्य वृषस्य कर्णौ यत्र। गोकर्णाख्ये तीर्थभेदे।

भद्रकर्णेश्वर पु०६त०। गोकर्णस्थे शिवलिङ्गभेदे भा०व०८३अ०।

भद्रकार त्रि० भद्रं करोति कृ—अण् उप०स०। १मङ्गलकारके २देशभेदे पु० भा० स० ३१ अ०।

भद्रकाय पु०। १माद्रवत्यां जाते श्रीकृष्णस्य पुत्रभेदे हरिवं० १६२ अ०। ६ब०। २मङ्गलदेहके त्रि०।

भद्रकाली स्त्री १दुर्गाशक्तिभेदे "जयन्ती मङ्गला काली भद्रकाली कपालिनी" दुर्गापूजामन्त्रः। तदाविर्भावकथा च कालिपु० ५०अ० दृश्या। तन्मन्त्रादिकं तन्त्रसारे दृश्यम्। २कुमारानुचरभेदे भा० श० ४७ अ०।

भद्रकाशी स्त्री भद्राय काशते काश-अच् गौरा० ङीष्। भद्रमुस्तायाम् राजनि०।

भद्रकाष्ठ न० ६ब०। देवदारुवृक्षे सुश्रुतः। [अमरः।

भद्रकुम्भ पु० भद्रकारकः कुम्भः शा०त०। पूर्णकुम्भे जलपूर्णघटे

भद्रगन्धिका पु० भद्रो गन्धोऽस्त्यस्या बाहुल्येन ठन्। मुस्तके रत्नमाला।

भद्रगौर पु० देशभेदे स च पूर्वदिग्वर्त्ती मार्क०५८ अ०।

भद्रङ्कर त्रि०भद्रं करोति कृ—खच् मुम्। मङ्गलकारके।

भद्रङ्करण न०भद्रं क्रियतेऽनेन कृ—ख्युन् मुम्। मङ्गलसाधने।

भद्रचारु पु० रुक्मिण्यां जाते वासुदेवस्य पुत्रभेदे हरिवं०११८अ०

भद्रचूड़ पु० भद्रा चूड़ा यस्य। (लङ्कासिज) वृक्षभेदे शब्दच०।

भद्रज पु० भद्राय जायते जन—ड। इन्द्रयवे राजनि०।

भद्रतरुणी स्त्री भद्रः तरुणीव। कुब्जकवृक्षे राजनि०।

भद्रतुङ्ग पु० तीर्थभेदे भा०व० ८२अ०।

भद्रतुरग न० भद्रास्तुरगा यत्र। जम्बुद्वीपस्य नववर्षमध्ये वर्षभेदे। "माल्यवज्जलधिमध्यवर्त्ति यत्तत् भद्रतुरगं जगुर्बुधाः" सि० शि०। जम्बुद्वीपशब्दे भद्राश्वशब्दे च विवरणं दृश्यम्।

भद्रदन्तिका स्त्री कर्म० स्वार्थे कन्। दन्तीवृक्षभेदे।

भद्रदारु पुंन०। कर्म०। देवदारुवृक्षभेदे अमरः।

भद्रद्वीप पु० कुरुवर्षान्तर्गते उपद्वीपभेदे मार्कपु० ५८ अ०।

भद्रनामन् पु०६ब०। (काठठोकरा) खगभेदे त्रिका०।

भद्रनामिका स्त्री भद्रं मङ्गलं नामयति प्रापयति नम—णिच्—ण्वुल्। त्रायन्तीलतायां रत्नमा०।

भद्रनिधि पु० दानार्थकल्पिते ताम्रादिघटितघटे तद्दानविधिश्च हेमा० दा० वामनपु० उक्तो यथा

"पुण्यान्निधिं प्राप्य तु पौर्णमास्यां तथोपरागे शशिसूर्ययोर्वा। चतुर्युगादिष्वयनद्वये वा प्रबोधने प्रस्वपनेऽथ विष्णोः। कुर्य्यादथौदुम्बरमेव कुम्भं हिरण्यभारेण यथात्मशक्त्या। तथाविधानञ्च तु राजतं स्याद्धिरण्यभारेण तु पूरयेत् तम्। तदर्द्धतोऽर्द्धेन तदर्द्धतो वा स्वशक्तितः स्वर्णपलैः शतेन। तदर्द्धमर्द्धेन तु वित्तशक्त्या पलत्रयाद्दूर्द्धमपि प्रकुर्य्यात्। तत्ताम्रभाण्डे कनकं निधाय सवज्रनीलोत्पलपद्मरागम्। वसुक्तवैदूर्य्यसविद्रुमञ्च तद्राजतं पात्रमधोमुखं स्यात्। एवन्तु तं भद्रनिधिं सुविद्वान् कृत्वासने प्रावरणोपयुक्ते। कुशोत्तरे दर्पणचामराद्ये सपादुकोपानहछत्रयुक्तम्। सवृन्तौ मवस्त्रोत्तमयुग्मयुक्तं संपूजयेन्मन्त्रवरैरथैतैः" "आदौ तु पञ्चामृतकेन विष्णुं संस्नाप्य संस्काररहरं समर्च्य। तथेश्वरं पावकमेव हुत्वा आमन्त्रयेद्भद्रनिधिं ततस्तम्। श्रीखण्डकर्पूरसकुङ्कुमेन पञ्चाक्षरं नाम शिवः प्रलिख्य। नमस्तथोङ्कारयुतं च पात्रे तद्राजतेऽप्येवमथार्चयेत। त्वया समस्तामरसिद्धयक्षविद्याधरेन्द्रोरगकिंनरेन्द्रैः। गन्धर्वविद्याधरदानवेन्द्रैर्युतं धृतं विश्वमिदं नमस्ते। समस्तसंसारकरी त्वमेव विभोः सदानन्दमयी च माया। समस्तकल्याणनिधिः सदाधिः। हरिप्रिये! भद्रनिधिर्नमस्ते। एवं पूज्य विधानेन ततो विप्रमथार्चयेत्। किरीटाङ्गदनिष्काद्यैर्कुण्डलाङ्गुलिभूषणैः। अलङ्कृत्य हरिं तद्वत् पीताम्बरधरं ततः। पूजयेदच्युतं ध्यात्वा मन्त्रेणानेन भक्तिमान्। भूदेवोऽसीत्यतो नित्यं नित्यानन्दमयो हरे!। हर मे दुष्कृतं कृष्ण! कृपाकर! नमस्तु ते। भूदेव! भगवद्धर्म! भवभङ्गकरेश्वर!। भवभूतिकरोजिष्णो! प्रभविष्णुर्नमोऽस्तु ते। एवं पूज्य हृदि ध्यात्वा तं द्विजं विष्णुरूपिणम्। ततो भद्रनिधिं दद्यान्मन्त्रेणानेन मानवः। स्वगोत्रोच्चारणेनादौ वपुर्नाम तथात्मनः। यवदर्भतिलैः सार्द्धमुदकं संपरित्यजेत्। पितृसन्तारणार्थाय नित्यानन्दविवृद्धये। सर्वौघविनाशाय विष्णो-

र्दानं मया कृतम्। तदनेन सवस्त्रेण धातुत्रययुतेन च। सच्चोमाम्बरयुक्तेन सादर्शपादुकेन च। आसनेन सच्छत्रेण चामरोपानहेन च। सदानन्दविधानेन प्रीयतां विष्णुरीश्वरः। एवमुच्चार्य्य तन्दद्यात् द्विजाय हरिरूपिणे। गोप्येन विधिना दद्याद्धेमसंख्यां न कीर्त्तयेत्। अकीर्त्तिते कोटिगुणायुतं फलं प्रगोपिते कल्पगुणेन संशयः। इतीदमन्यस्य न कीर्त्तयेत् सुधीः निधानमध्ये निहितञ्च यद्वत्। एवं कृते ब्राह्मणजः कृतात्मा तपेदथवा ब्रह्मरणं कदाचित्। प्रयाति विष्णोः पदमव्ययं तत् शिवात्मकानन्दमयं स्वसंज्ञम्” ।

**भद्रपदा** स्त्री ब०व० भद्रस्य इवस्येव पदं यासाम्। पूर्वोत्तरभाद्रपदासु रायमु०। तत्र जातः अण् उत्तरपदवृद्धिः। भद्रपाद तज्जाते त्रि०।

**भद्रपर्णी** स्त्री भद्रं पर्णमस्याः अजादि० टाप्। १कटम्भराख्ये भल्लसावा। २प्रसारिण्याम् अमरः। ३गाम्भार्य्याञ्च जटाध०। ङीप्। [पीठभेदे भद्रासनशब्दे दृश्यम्।

**भद्रपीठ** पुंन० भद्रार्थं पीठः। नृपदेवादीनामभिषेकार्थं

**भद्रबलन** पु० भद्रं बलनं बलमस्य। बलरामे शब्दमा०।

**भद्रब(व)ला** स्त्री भद्राय बलति चलति ब(व)ल–अच्। (गन्धभादाल) १लताभेदे २मल्लिकायां, ३माधवीलतायाञ्च अमरः। बलायां राजनि०। [न्याभेदे भा०आ०६६अ०

**भद्रभीमा** स्त्री कश्यपपत्न्यां दक्षसुतायां क्रोधायां जाते क-

**भद्रमल्लिका** स्त्री कर्म०। मल्लिकाभेदे नवमल्लिकायाम् शब्दमाला।

**भद्रमुख** त्रि०भद्रं मुखं तद्व्यापारोऽस्य कप्। सुवक्तरि “ततो भद्रमुखाताहं स्थास्ये स्वायुरिवाचलः” मार्कपु० १५अ०।

**भद्रमुञ्ज** पु० कर्म०। शरभेदे भावप्र०।

**भद्रमुस्तक** पु० कर्म०। नागरमुस्तके। अमरः।

**भद्रमुस्ता** स्त्री कर्म०। भद्रमुस्तके “भद्रमुस्ता च गुन्द्रा च तथा नागरमुस्तकः। मुस्तं कटु हिमं ग्राहि तिक्तं दीपनपाचनम्। कषायं कफपित्तास्रतृड्ज्वरारुचिजन्तुहृत्। अनूपदेशे यज्जातं मुस्तकं तत् प्रशस्यते। तत्रापि मुनिभिः प्रोक्तं वरं नागरमुस्तकम्” भावप्र०।

**भद्रयव** पु० भद्रो यव इव। इन्द्रयवे अमरः।

**भद्ररथ** पु० कक्षेयुवंश्ये हर्य्यङ्गनृपस्य पुत्रे हरिवं० ३१अ०।

**भद्ररेणु** इव०। ऐरावते गजे त्रिका०।

**भद्ररोहिणी** स्त्री भद्रार्थं रोहति रुह–णिनि ङीप्। कटुरोहिण्यां (कट्की) सुश्रुतः तस्याः भद्रदायकत्वात् तथात्वम्। “दार्वी त्वक् पिप्पली शुण्ठी वाचाशक्रयवैःहृतम्। संयुक्तं भद्ररोहिण्या पक्वं मेयादिभिश्चितम्”।

**भद्रवट** पु०७त०। १आश्रमभेदे भा०व०२२०अ०।२तीर्थभेदे च।

**भद्रवत्** न० भद्र+मतुप् मस्य वः। देवदारुवृक्षे राजनि०।

**भद्रवती** स्त्री भद्राणि पर्णानि सन्त्यस्या मतुप् मस्य वः ङीप्। १काश्मार्य्याम्। नाग्नजितीजातायां भरतकन्यायां स्त्री हरिवं० १६१अ०।

**भद्रवर्मन्** पु०भद्रं वृणाति वृ–मनिन्। नवमल्लिकायाम् शब्दच०

**भद्रवल्लिका** स्त्री नित्यक०। संज्ञायां कन् ह्रस्वः अत इत्वम् कर्म०। (अनन्तमूलख्याते) लताभेदे रत्नमा०।

**भद्रवल्ली** स्त्री नित्यक०। (अनन्तमूल) गोपवल्ल्याम् राजनि०।

**भद्रविराज्** “ओजे तपरौ जरौ गुरुश्चेत् मसौ जगौ भद्रविराड् भवेदनोजे” इत्यु० उक्ते अर्द्धसमे वृत्तभेदे।

**भद्रशर्मन्** पु०भद्रं शर्म सुखं यस्य। शुभाद्यानन्दयुते। ततो बाह्वा०अपत्ये इञ् भाद्रशर्मि तदपत्ये पुंस्त्री। [२२७अ०

**भद्रशाख** पु०भद्राः शाखाः सहायाः यस्य। कार्त्तिकेये भा०व०

**भद्रश्रय** न०भद्राय श्रीयते श्री–कर्मणि अच्। चन्दनवृक्षे रत्न०

**भद्रश्रवस्** पु० धर्मस्य पुत्रभेदे भाग० ५।१८।१।

**भद्रश्री** पु० भद्रा श्रीर्यस्य। चन्दनवृक्षे अमरः।

**भद्रश्रेण्य** पु० दिवोदासात् पूर्वं वाराणसीधीशे नृपभेदे हरिवं० २९अ०।

**भद्रसरस्** न० नित्यक०। सुपार्श्वाचलस्थे सरोभेदे धान्याचलशब्दे दृश्यम्। [७अ०।

**भद्रसालवन** न० ६त०। भद्राश्ववर्षस्थे वनभेदे भा० भी०

**भद्रसेन** पु० देवक्यां जाते वसुदेवस्य १पुत्रभेदे भाग०९।२४।२५ २कुन्तिनृपपुत्रभेदे च भाग० ९।२३।

**भद्रसोमा** स्त्री भद्रः सोम इव द्रवोऽस्याः। १गङ्गायां शब्दमा० २कुरुवर्षस्थे नदीभेदे मार्कपु० ५९अ०। [दृश्यम्।

**भद्रा** स्त्री भद्राश्ववर्षस्थे १नदीभेदे २विष्टिभद्रादौ भद्रशब्दे

**भद्राकरण** न०भद्र+डाच् कृ–ल्युट् साक्षदा०स०। मुण्डने हे म०

**भद्राङ्ग** पु० भद्रमङ्गमस्य। बलरामे हेमच०।

**भद्रात्मज** पु० खड्गे त्रिका०।

**भद्रारक** पु० अष्टादशद्वीपान्तर्गते द्वीपभेदे शब्दमाला।

**भद्रालपत्रिका** स्त्री भद्रामावलति पर्य्याप्नोति अल–अच् तादृशं पत्रं यस्याः कप् अत इत्वम्। गन्धाल्याम् (गान्धाल) शब्दमा०।

**भद्राली** स्त्री भद्रामावलति पर्य्याप्नोति अच् गौरा० ङीप्। १गन्धाल्याम् (गान्धाल) शब्दमा०। ६त०।२सङ्कश्रेणौ च।

**भद्रावती** स्त्री भद्र–अस्त्यर्थे मतुप् मस्य वः संज्ञायां पूर्वपद-दीर्घः । कट्फलवृक्षे राजनि० ।

**द्राश्रय** पु० ६त० । चन्दनवृक्षे ।

**द्राश्व** न० भद्रा अश्वा यत्र । १जम्बुद्वीपस्य नववर्षान्तर्गते वर्ष-भेदे । २तद्वर्षस्थे जनपदे पु०ब०व० । तद्वर्षविवरणञ्च "माल्य-वतः पूर्वपार्श्वे पूर्वगण्डिका एकस्तम्भात् योजनसहस्राणि मानन्तश्च भद्राश्वा नाम जनपदाः भद्रसालवनञ्च तत्र व्यवस्थितं, कालाम्रवृक्षाः, पुरुषाः श्वेताः, महावर्षिनः, स्त्रियः कुमुदवर्णाः दशवर्षसहस्राणि च तेषामायुस्तत्र च पञ्च कुलपर्वताः तद्यथा शैलवर्णः मालाख्यकोऽवरज-श्च त्रिपर्णो नीलश्चेति तद्विनिर्गता नद्यस्तदन्तःस्थितानां देशानां तान्येव नामानि ते च देशाः एताः नदीः पि-बन्ति तद्यथा सीता सुवाहिनी हंसवती कावेरी सुरसा शाखावती इन्द्रनदी अङ्गारवाहिनी हरितोया सोमा-वर्त्ता शतह्रदा वनाला वसुमती हंसवर्णा पञ्चगङ्गा धनुष्मती मणिवप्रा सुब्रह्मभागा विलासिनी कृष्णतोया पुण्योदा नागवती शिवा शैवालिनी मणितटा क्षीरोदा वरुणावती विष्णुपदी महानदी हिरण्यस्कन्धवाहा सुरावती वामोदा पताका वेत्येता महानद्यः एताश्च गङ्गासमाः कीर्तिताः आजन्मान्तं पापं विनाशयन्ति क्षुद्रनद्यश्च कोटिशस्ताश्च नदीर्ये पिबन्ति ते दशवर्षसह-स्रायुषः रुद्रोमाभक्ता इति" वराहपु० मद्यम् । अधिकं जम्बुद्वीपशब्दे ३०४५ पृ० दृश्यम् ।

**भद्रासन** न० भद्राय लोकक्षेमायास्यतेऽत्र आस–आधारे ल्युट् । नृपासने अमरः । तल्लक्षणादि हे०च० ४८अ० उक्तं यथा "आदावनड्डुहश्चर्म जरया संहृतायुषः । प्रशस्तलक्षण-भृतः प्राचीनग्रीवमास्तरेत् । ततो हृष्टस्य योधस्य चर्म रोहितमस्थतम् । सिंहस्याथ तृतीयं स्याद्व्याघ्रस्य च ततः परम् । चत्वार्येतानि चर्माणि तस्यां वेद्यामुपा-स्तरेत् । शुभे मुहूर्त्ते संप्राप्ते पुष्ययुक्ते निशाकरे । भद्रासनमेकतमेन कारितं रुक्मरजतताम्राणाम् । क्षीरतरुनिर्मितं वा विन्यस्तं चर्मणामुपरि । त्रिविध-स्तस्योच्छ्रायो हस्तः पादाधिकोऽर्द्धयुक्तश्च । माण्डलिका नन्तरजित् समस्तराज्यार्थिनां शुभदः । अन्तर्धाय हि-रण्यं तत्रोपविशेन्नरेश्वरः सुमनाः" ।

**भद्रिका** स्त्री भद्रा+स्वार्थे क । १पक्षयोः द्वितीयासप्तमी-द्वादशीषु तिथिषु । २योगिनीदशान्तर्गतायां पञ्चम्यां दशायाम् "मङ्गला पिङ्गला धान्या भ्रामरी भद्रिका तथा" इत्यादिशब्दे दृश्यम् । "भद्रिका भवति रो नरौ" इ० र० उक्ते नवाक्षरपादके ३छन्दोभेदे "ननरलगुरुभिश्च भद्रिका" इ०र० उक्ते ४एकादशाक्षरपादके छन्दोभेदे च ।

**भद्रेश्वर** पु० १शिवलिङ्गभेदे । २कलग्रामस्थ शिवलिङ्गभेदे च वामनपु० ४६ अ० ।

**भद्रैला** स्त्री स्थूलैलायाम् राजनि० ।

**भद्रोदनी** स्त्री भद्रमुदनिलयतया उद्+अन-बा० घञर्थे क गौरा० ङीष् । बलायां राजनि० । [शब्दार्थ ।

**भन** अर्चने भ्वा०प०सक०सेट् निघण्टुः । भनति अभा(भ)नीत

**भन्द** अर्चने दीप्तौ च भ्वा० आ० सक० सेट् निघण्टुः । भन्दते अभन्दिष्ट बभन्दे बभन्दे । कर्मणि भद्यते ।

**भन्दिल** त्रि०भदि–इलच् ।१शुभे २कम्पे ३दूते च संक्षिप्तसा०

**भन्द्रक** पु० वक्राश्वरसमीपस्थे देशभेदे स्कान्दपु० ।

**भपञ्जर** न० भानां पञ्जरमिव । नक्षत्रचक्रे सि०शि० ।

**भपति** पु० ६त० । १नक्षत्रेशे चन्द्रे हेमच० भनाथादयोऽ-प्यत्र । २राशीश्वरे मङ्गलादौ च ।

**भमण्डल** न० ६त० । राशिचक्रे सू०सि० ।

**भम्भ** पु० भमित्यव्यक्तशब्देन भाति भा–क । मक्षिकाभेदे दंशे हारा० । २तत्तुल्यगतिके धूमे हेमच० ।

**भम्भराली** स्त्री भमित्यव्यक्तशब्दस्य भरमालाति व्यक्तमाति आ+ला–क गौ० ङीष् । (डाँश) मक्षिकायाम् । स्वार्थे क अत इत्त्वम् । भम्भरालिका तत्रार्थे त्रिका० ।

**भम्भासार** पु० मगधदेशनृपभेदे हेमच० ।

**भय** न० बिभेत्यस्मात् भी–अपादाने अच् ।१भयहेतौ । भावेऽच् । २दैन्यात्मके परतः स्वानिष्टसम्भावनारूपे वा चित्तवृत्तिभेदे ३नाटकप्रसिद्धे भयस्थायिभावके रसभेदे च । भयञ्च "रौद्रशक्त्या तु जनितं चित्तवैकल्यजं भयम्" सा० द० लक्षितम् । भयानकशब्दे दृश्यम् । ४निर्ऋतिपुत्रभेदे पु० भा० आ० ६६अ० । [क० १५५२ श्लो० ।

**भयकर** त्रि० भयं करोति कृ–अच् ६त० । भयकारके भा०

**भयकृत्** त्रि०भयं करोति कृ–क्विप् ।१भयकारके भयं कृन्तति कृत–छेदने क्विप् । २परमेश्वरे । "भयकृद्भयनाशनः" विष्णुस० ।

**भयङ्कर** पु०भयं करोति कृ–खच् मुम् च ।१भयजनके २रस-भेदे ३डुण्डुलविहगे च पुंस्त्री० स्त्रियां ङीष् । भा०व० ३५अ०उदा०४विश्वदेवगणभेदे पु० भा० अनु० ९१ अ० । ५कुमारानुचरमातृभेदे स्त्री ङीप् भा० श० ४७ अ० ।

**भयडिण्डिम** पु० भयजनको डिण्डिमः । रणवाद्ये

**भयद्रुत** त्रि० भयेन द्रुतः ३त०। भयेन पलायिते अमरः।

**भयनाशन** त्रि० भयं नाशयति नाशि–ल्यु। १भयनिवारके २विष्णौ पु० "भयकृत् भयनाशनः" विष्णुस०।

**भयनाशिनी** स्त्री भयं रोगभयं नाशयति नश–णिच–णिनि। त्रायमाणालतायाम् राजनि०। [मनः स्थापके।

**भयब्राह्मण** पु० भयेन ब्राह्मणः सम्पद्यते। भीत्या विप्रत्वेना-

**भयभ्रष्ट** त्रि० ६त०। भयेन पलायिते जटाधरः।

**भयव्यूह** पु० भये सति व्यूहः। पार्श्वादितो भयभेदेन राज्ञा कर्त्तव्ये व्यूहभेदे भयभेदेन तत्प्रकारः काम० नी० उक्तो यथा "यायाद्व्यूहेन महता मकरेण पुरोभये। श्येनेनोभयपक्षेण सूच्या वाधीरवक्त्रया। पश्चाद्भये तु शकटं पार्श्वयोर्वज्रसञ्ज्ञितम्। सर्वतः सर्वतो भद्रं भयव्यूहं प्रकल्पयेत्"।

**भयानक** पु० बिभेत्यस्मात् भी–आनक। १व्याघ्रे २राहौ ३रसभेदे च मेदि०। ४भयङ्करे त्रि०। ५भीतेः अपादाने अमरः। तद्रसलक्षणादि सा०द० उक्तं यथा "भयानको भयस्थायिभावः कालाधिदैवतः। स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः। यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम्। चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः। अनुभावोऽत्र वैवर्ण्यं गद्गदस्वरभाषणम्। प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः। जुगुप्सावेगसंमोहसंत्रासग्लानिदीनताः। शङ्कापस्मारसंभ्रान्तिमृत्य्वाद्या व्यभिचारिणः"।

**भयापह** त्रि० भयमपहन्ति अप+हन–ड। १भयनाशके २नृपे पु० त्रिका० ३विष्णौ पु० "जितमन्युर्भयापहः" विष्णुस०

**भयावह** त्रि० भयमावहति आ+वह–अच् ६त०। भयकारके हेमच०।

**भय्य** न० भी–भावे यत् वेदे नि०। भये पञ्चमी० १०।५।६। लोके तु भेयमित्येव। [त्रि० अमरः।

**भर** पु० भृ–अप्। १अतिशये। कर्त्तरि अच्। २भरणकर्त्तरि

**भरग** त्रि० भरमतिशयं गच्छति गम–ड। १अतिशयगन्तरि भरगेति वर्णत्रयद्योत्ये २भर्गशब्दार्थे परब्रह्मणि यथोक्तं ब्राह्म०स० योगियाज्ञवल्क्येन "भेति भासयते यस्मात् रेति रञ्जयति प्रजाः। गेति च गच्छतेऽजस्रं भरगात् भर्ग उच्यते"। तत्र भासि–ड भः रञ्जि ड–रः। गम–ड गः तेषां समाहारः भरगम्। तदर्थत्वयोगात् भर्गं इत्युच्यते पृषो०।

**भरट** पु० भृ–अटन्। १कुम्भकारे तेन हरति भस्त्रा०ष्ठन् भरटिक तेन हरति त्रि० स्त्रियां षित्वात् ङीष् भरटिकी।

**भरण** न० भृ–भावकरणादौ ल्युट्। १वेतने २पोषणे ३धारणे च। अश्विन्यवधिके द्वितीये ४नक्षत्रे शब्दर० ५घोषकलतायाञ्च स्त्री ङीप्। नक्षत्रभेदे पु० मेदि०। तस्यायोगतारादिकम् अश्लेषाशब्दे उक्तम् सा च राशिचक्रस्य४०अं-शोत्तरं १३।२० कलाविकलात्मिका। उग्रगणान्तर्गता-अधोमुखगणान्तर्गता च। भरणेन हरति भस्त्रादि०ष्ठन् भरणिक वेतनेन हारिणि त्रि० स्त्रियां ङीष्।

**भरणीभू** पु० भरण्यां भवति भू–क्विप्। राहुग्रहे हेमच० भगदैवतशब्दे दृश्यम्।

**भरण्ड** पु० भृ–अण्डन्। १स्वामिनि २नृपे च उणादिको०।

**भरण्य** कण्ड्वा० नामधातुः भुरण्येत्यत्र पाठान्तरम् धारणे पोषणे पर० सक० सेट् भरण्यति भुरण्यति वा।

**भरण्यभुज्** त्रि० भरण्यं वेतनं भुङ्क्ते भुज–क्विप्। वैतनिके कर्मकरे अमरः। [इन्दो (रामदूती) शब्दच०।

**भरण्याह्वा** स्त्री भरण्या आह्वा आह्वा यस्याः। पर्द्दुण्गी-

**भ(भु)रण्यु** पु० कण्ड्वा० भ(भु)रण्य उन्। १शरण्ये २मित्रे च शब्दमाला। ३अग्नौ ४चन्द्रे ५स्वामिनि च सं‥ क्षिप्तसा०। भुरण्युरिति पाठान्तरम्।

**भरत** पु० भरं तनोति तन–ड। (जड़भरत) इति ख्याते १मुनिभेदे जड़भरतकथा च २०१५ पृ० दृश्या नाट्यशास्त्रस्य अलङ्कारशास्त्रस्य च २कर्त्तरि मुनिभेदे ३शवरे ४तन्तुवाये ५नटे ६कैकेयीसुते रामानुजे च। भरतेन प्रोक्तम् भारतं नाट्यशास्त्रमधीयते अण् तस्य लुक्। ७तच्छास्त्राध्येतृषु ब०व०। दुष्मन्तेन शकुन्तलायामुत्पादिते पुत्रभेदे पु० तस्यापत्यानि इञ् तस्य बहुषु लुक् ८भरतवंश्ये नृपे पु०ब०व०। दौष्मन्तिभरतकथा भाग०६।१०अ० दृश्या ९०ऋषभदेवपुत्रभेदे भाग०५।४अ०। ११वह्निपुत्रभेदे "पावको लौकिको ह्यग्निः प्रथमो ब्रह्मणः सुतः। ब्रह्मौदनाग्निस्तत्पुत्रो भरतो नाम विश्रुतः" मात्स्ये ४८ अ०। रामानुजभरतस्य जन्म यथा "भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः। साक्षाद्विष्णोश्चतुर्भागः सर्वैः समुदितो गुणैः"। १२भौत्यमनुपुत्रभेदे मार्कपु० १००अ०। १३आयुधजीविसंघभेदे पु० ततः यौधेया० स्वार्थे अण्। भारत तदर्थे ब० व०। १४क्षत्रिये ब० व० निघण्टुः।

**भरतखण्ड** कुमारिकाखण्डे "कुमारिकेति विख्याता यस्या नाम्ना प्रकथ्यते। इदं कुमारिकाखण्डं चतुर्वर्गफलप्रदम्। यथा कृतावनीयस्य नानाख्यानादिकल्पना।

**भरुज** पुंस्त्री॰ भेतिशब्देन रुजति रुज–क। स्त्रमावे ततः जातित्वेऽपि स्त्रियां बह्वा॰ वा ङीष्। भरुजा भरुजी। ततः इवार्थे अङ्गुल्या॰ ठक्। भारुजिक तदर्थे।

**भरुटक** न॰ भृ–उट संज्ञायां कन्। भृष्टामिषे हेमच॰।

**भरे** अव्य॰ भृ–बा॰ ए। संग्रामे निघण्टुः।

**भर्ग** पु॰ भ्रस्ज–घञ् भर्जादेशे कुत्वम्। १शिवे २ज्योतिः-पदार्थे ३आदित्यान्तर्गते ऐश्वरे तेजसि, "आदित्यान्तर्गतं यच्च भर्गाख्यं तन्मुमुक्षुभिः। जन्ममृत्युविनाशाय दुःखस्य त्रिविधस्य च। ध्यानेन पुरुषैर्यत्तु द्रष्टव्यं सूर्य-मण्डले" योगियाज्ञ॰। तस्य तेजस ऐश्वरत्वञ्च "यदा-दित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि य-च्चाग्नौ तत्तेजो विद्धि मामकम्" इति गीतायामुक्तम्। भावे घञ्। ४भर्जने च।५धृष्टकेतुवंश्ये नृपभेदे हरिवं॰ २८अ॰। ६देशभेदे। तत्र भवः तस्य राजा वा अण्। भार्ग। तद्देशमध्ये तत्र भवे च स्त्रियां न लुक् भार्गी।

**भर्गस्** पु॰ भ्रस्ज–असुन् न्यङ्क्वा॰। तेजसि ऋ॰ १।१४१।१।

**भर्गादि** पु॰ तद्राजार्थे प्रत्ययस्य स्त्रियां लुगनिमित्ते शब्दगणे स च गणः "भर्ग करूष केकय कश्मीर साल्व सुस्थाल उरस कौरव्य"।

**भर्गायण** पु॰ प्रवर्षिभेदे प्रवराध्यायः।

**भर्ग्य** पु॰ भ्रस्ज–यत् भर्जादेशे कुत्वम्। शिवे शब्दर॰।

**भर्जन** न॰ भ्रस्ज–भावे ल्युट् भर्जादेशः (भाजा) तण्डुलादेः पाकभेदे शब्दमा॰।

**भर्णस्** त्रि॰ भृ–असुन् नुगागमः। भरणकारके ऋ॰ ८।६।०२

**भर्तृ** पु॰ भृ–तृच्।१स्वामिनि २अधिपतौ अमरः। ३राजनि ४पोषके ५धातरि च त्रि॰ मेदि॰ याजका॰ षष्ठ्या समासः। ६विष्णौ पु॰"भवनो भावनो भर्त्ता"विष्णुस॰ तस्य सर्वस्वेन पालनात् तथात्वम्।

**भर्तृघ्नी** स्त्री भर्त्तारं हन्ति हन–टक् ङीप्। पतिघातिन्यां पाणिरेखायां "पाणिरेखाम्रानामिकतातलेनाभर्तृघ्नः काम-मादिवाः"याज्ञ॰। आर्षत्वात् मनुष्यकर्तृकत्वेऽपीह टक्।

**भर्तृदारक** पु॰ भर्त्तुरधिपस्य राज्ञः दारकः पुत्रः। नाट्यो-क्तौ १राजकुमारे। २तत्कन्यायां स्त्री। भर्तृदारिका॰ अमरः।

**भर्तृस्थान** न॰ तीर्थभेदे भा॰व॰ ८४ अ॰।

**भर्तृहरि** पु॰ भर्त्ता हरिरिव। वाक्यपदीयादि ग्रन्थकर्त्तरि विक्रमादित्यस्य ज्येष्ठे भ्रातरि राजभेदे। [भर्तृवत् त।

**भर्त्स** अधिक्षेपे चुरा॰उभ॰सक॰सेट्। भर्त्सयति ते अब-

**भर्त्सन** न॰ भर्त्स–ल्युट्। अपकारवचने अधिक्षेपे तिर-स्कारायापकारार्थकवाक्योक्तौ। युच्। भर्त्सनाप्यत्र स्त्री

**भर्त्सपत्रिका** स्त्री भर्त्सं भर्त्सनीयं पत्रमस्याः कप् कापि अत इत्वम्। महानीलीवृक्षे राजनि॰।

**भर्भ** हिंसायां भ्वा॰पर॰सक॰सेट्। भर्भति अभर्भीत्।

**भर्म(न्)** न॰ भृ–मन् मनिन् वा। १स्वर्णे अमरः। २भृतौ ३नाभौ ४धुस्तूरे च हेमच॰। नान्तः अदन्तश्च द्विरूपकोषः

**भर्मण्या** स्त्री भर्मणि साधु यत्। भृतौ हेमच॰।

**भर्म्याश्व** पु॰ भरतवंश्ये नृपभेदे भाग॰ ९।२१।२४।

**भर्व** हिंसायां भ्वा॰पर॰सक॰सेट्। भर्वति अभर्वीत्। भोजने निघण्टुः। [चिह्न बधे।

**भल** बधे दाने निरूपणे च भ्वा॰आ॰सक॰सेट्। भलते अभ-

**भल** निरूपणे चु॰आ॰सक॰सेट्। भालयते अबीभलत।

**भलता** स्त्री भाति–भा–क कर्म॰। शालपर्ण्यादिलतायाम् शब्दर॰

**भलन्दन** पु॰ १दिष्टवंश्ये नृपभेदे भाग॰९।२।१६। २कान्य-कुब्जदेशीये नृपभेदे अग्निपु॰ प्रक॰ ७ अ॰।

**भलानस्** त्रि॰ भद्रमुखे ऋ॰ ७।१८।७। [क्षीव।

**भल्ल** दाने बधे निरूपणे च भ्वा॰प॰सक॰सेट्। भल्लति अभ-

**भल्ल** पु॰ भल्ल–अच्। १भल्लूके। २अस्त्रभेदे पुंन॰। स्वार्थे क भल्लूके पुंस्त्री॰वा गौरा॰ङीष् पक्षे टाप्। भल्लूकायन। ततः अनुक्वा॰निर्वृत्तार्थे अण्। भाल्ल भल्लकृते त्रि॰ चतु-रथ्यां अस्या॰ ठञ्। भाल्लिक तस्यादूरदेशादौ त्रि॰। ह॰स॰१४ उक्ते देशान्तरे स्थिते ३देशभेदे पु॰।४तद्देशभवे च व॰व॰ स्वार्थे क। भल्लक तस्यार्थे ततः स्वार्थे क। भल्लकीय तदर्थे तस्यापत्यं क। भल्लकीय तदपत्यादौ त्रि॰।

**भल्लपाल** पु॰ भल्लं पालयति पालि–अण् उप॰स॰। भल्ल-पालके ततः सख्या॰चतुरर्थ्याम् ठञ्। भाल्लपालिक तेन निर्वृत्तादौ। (तल्लुका) क्षुपभेदे शब्दच॰।

**भल्लपुच्छी** स्त्री भल्लस्य पुच्छमिव पुष्पमस्याः ङीष्। (गोरच॰

**भल्लवि** पु॰ ऋषिभेदे तस्यापत्यमिञ्। भाल्लवि तदपत्ये तस्यापत्यं ठञ्। भाल्लवेय तदपत्ये पुंस्त्री॰। इन्द्रद्युम्ने ऋषिभेदे पु॰ छा॰उ॰। [छा॰उ॰।

**भल्लाक्ष** पु॰भल्लस्येवाक्षि यस्य षच्समा॰। मन्दद्युतौ हंसभेदे

**भल्लाट** पु॰ १पाण्ध्वजराजपुत्रे कल्किपु॰ २२अ॰। २भल्ल-दत्तवंश्ये ३नृपभेदे हरिवं॰२०अ॰।

**भल्लात** पु॰न॰ भल्लं भल्लास्त्रमिवातति चर्मणि अत–अच्। (भेला)वृक्षभेदे स्वार्थे क। तत्रैव पुंस्त्री॰गौ॰ङीष्। भल्ला-तकफल दरका॰।"भल्लातकं त्रिषु प्रोक्तमरुष्कोऽरुष्करो-

ऽग्निकः । तथैवाम्लीरुक्षो भल्लो वीरवृक्ष शोफकृत् । भल्लातकफलं पक्वं स्वादुपाकरसं लघु । कषायं पाचनं स्निग्धं तीक्ष्णोष्णं छेदि भेदनम् । मेध्यं वह्निकरं हन्ति कफवातव्रणोदरम् । कुष्ठार्शोग्रहणीगुल्मशोफनाह-ज्वरक्रिमीन् । तन्मज्जा मधुरो हृष्यो बृंहणो वातपित्तहा । वृन्तमायुष्करं स्वादु पित्तघ्नं केश्य-मग्निकृत् । भल्लातकः कषायोष्णः शुक्रलो मधुरो लघुः । वातश्लेष्मोदरानाहकुष्ठार्शोग्रहणीगदान् । हन्ति गुल्म-ज्वरं श्वित्रवह्निमान्द्यक्रिमिव्रणान्” भावप्र० । गुडभल्लातक-शब्दे भल्लातकीगुडपाकविधिर्दृश्यः ।

**भल्लातकतैल** सुश्रुतोक्ते भल्लातकफलव्यवजाते तैलभेदे “दुष्टत्वात् तु शुक्राणां क्षणकर्म हितं भवेत् । भल्ला-तकान्यापयेत् तु क्षीरे प्राक्कल्पभावितान् । ततो द्विधा छेदयित्वा लौहे कुम्भे निधापयेत् । कुम्भेऽन्यस्मि-न्निखाते तु तं कुम्भमथ योजयेत् । समं समेन स-न्धाय गोमयैर्दाहयेत् ततः । यः स्नेहस्रवते तस्मा-दुपाहरेत् तं मर्मभिषक् । पाण्डाम्ल(?)फलान्दत्त्वान् स्नेहचूर्णानि कारयेत् । तैलेनानेन संसृष्टं शुक्रमालेप-येद् भ्रमम् । भल्लातकविधानेन कारस्नेहांस्तु कार-येत् । ये च केचित्फलस्नेहा विधानं तेषु कीर्त्तितम् । दुष्टत्वात्तु व्रणानां पाण्डुकर्म हितं भवेत् । सप्तरात्रं स्थितं क्षीरे तामले रोहिणीफलम् । तेनैव पिष्टं सुक्ष्णं सवर्णकरणं हितम्” । [लौहभेदे

**भल्लातकलौह** न० चक्रदत्तोक्ते भल्लातकादियुक्ते लौहरूपे “चित्रकं त्रिफला मुस्तं पञ्चकं चविकाऽम्लता । हस्ति-पिप्पल्यपामार्गदण्डोत्पलकुठेरकाः । एषां चतुष्पलान् भागान् जलद्रोणे विपाचयेत् । भल्लातकसहस्रे द्वे छित्त्वा तत्रैव दापयेत् । तेन पादावशेषेण लौहपात्रे पचेद्भिषक् । तुलार्द्धं तीक्ष्णलौहस्य घृतस्य कुडवद्वयम् । त्र्यूषणं त्रिफलावह्निसैन्धवं विडमौद्भिदम् । सौवर्च-लविडङ्गानि पलिकांशानि कल्पयेत् । कुडवं वृद्धदारस्य तालमूल्यास्तथैव च । शूरणस्य पलान्यष्टौ चूर्णं कृत्वा विनिःक्षिपेत् । सिद्धे शीते प्रदातव्यं मधुनः कुडवद्वयम् । प्रातर्भोजनकाले च ततः खादेद् यथाबलम् । अर्शांसि ग्रहणीदोषं पाण्डुरोगमरोचकम् । क्रिमिगुल्मा-श्मरीमेहान् शूलञ्चाशु व्यपोहति । करोति शुक्रोप-चयं बलीपलितनाशनम् । रसायनमिदं श्रेष्ठं सर्व-रोगहरं परम्” ।

**भल्लातकविधान** सुश्रुतोक्ते बहुतरतत्फलसेवनप्रकारभेदे “अत ऊर्द्ध्वं भल्लातकविधानमुपदेक्ष्यामः । भल्लातकानि परिपक्वान्यनुपहतान्याहृत्यैकमादाय द्विधा त्रिधा चतुर्द्धा वा छेदयित्वा कषायकल्पेन विपाच्य कषायस्य शुक्तिमञ्जल्यां घृताभ्यक्तताल्वोष्ठजिह्वौष्ठः प्रातः प्रातरुपसेवेत ततोऽपराह्णे क्षीरं सर्पिरोदन इत्याहार एवमेकैकं वर्द्धयेत् तावद्-यावत्पञ्चेति ततः पञ्च पञ्चाभिवर्द्धयेद्यावत् सप्ततिरिति प्राप्य च सप्ततिमपकर्षयेद्भूयः पञ्च पञ्च यावत्पञ्चेति पञ्चभ्यश्चैकैकं यावदेकमिति । एवं भल्लातकसहस्र-मुपयुज्य सर्वकुष्ठार्शोभिर्विमुक्तो बलवानरोगः शतायु-र्भवति । द्वितीयोक्तेन विधानेन भल्लातकनिष्यू-तितं स्नेहमादाय प्रातः प्रातः शुक्तिमात्रमुपयुञ्जीत जीर्णे पूर्ववदाहारः फलप्रकर्षश्च । भल्लातकमज्जभ्यो वा स्नेहमादायापकृष्टदोषः प्रतिसंसृष्टभक्तो निवातमा-गारं प्रविश्य यथाबलं प्रसृतिं प्रकुञ्चं चोपयुञ्जीत । तस्मिन् जीर्णे क्षीरं सर्पिरोदन इत्याहारः” ।

**भल्ली** स्त्री भल्ल हिंसे अच् गौरा० ङीष् । भल्लातके शब्द-रत्ना० तत्फलस्य स्वर्गिनां व्रणकारितया हिंस्रत्वा-त्तथात्वम् । स्वार्थे क भल्लिका तत्रार्थे शब्दच० ।

**भल्लु(ल्लू)क** पु० स्त्री भल्ल—उ(ऊ)क । (भालूक) १जन्तुभेदे अमरः स्त्रियां ङीष् । २श्योनाकभेदे राजनि० । स च वीरभल्लादिगणे सुश्रुते उक्तः । कृष्णगन्धशब्दे दृश्यम् । ३कोषस्थे जलजन्तुभेदे “शङ्खशङ्खनखशुक्तिशम्बूकभल्लूक-प्रभृतयः कोषस्थाः” सुश्रुतः ।

**भव** पु० भवत्यस्मात् भू-अपादाने अप् । १महादेवे तस्य तन्नामनिरुक्तिः शत० ब्रा० ६।१।३।१५ । “तमब्रवीद्भवो-ऽसीति । तद्यदस्य तन्नामाकरोत्पर्जन्यस्तद्रूपमभवत् पर्जन्यो वै भवः पर्जन्याद्धीदं सर्वं भवति सोऽब्रवीज्ज्याया-न्वा अतोऽस्मि धेह्येव मे नामेति” अतस्य पर्जन्यदेवत-त्वात् तस्य जलमूर्त्तित्वम् । अतएवाष्टमूर्त्तिमध्ये जलरूपेण भवनाम्ना तस्यार्चा । भावे अप् । २जन्मनि ३उत्पत्तौ ४प्राप्तौ ५संसारे मेदि० । कर्त्तरि अच् (पाबता) ६फले न० राजनि० ।

**भवक** त्रि० भू-वुन् । १उत्पन्ने २आशीर्वादके संज्ञिप्रभा० ।

**भवकेतु** पु० केतुभेदे ह०सं० ११अ० केतुशब्दे दृश्यम् ।

**भवघस्मर** पु० ६त० । दावानले शब्दमा० ।

**भवत्** त्रि० भा—डवतु । १युष्मदर्थे, सर्वनामता चास्य । भवान् भवत्याः पुत्रः भवत्पुत्रः । भू—शतृ । २वर्त्तमानकाले

१भवनकर्त्तरि च । भवन् शिवात्तमवम ङीप् नुम् । ङीवन्तः ४विधाक्ताचे शब्दरत्ना० ।

**भवदा** स्त्री छन्दानुचरमातृभेदे भा० श० ४७ अ० ।

**भवदादि** पञ्चमीषष्ठमीतरविभक्त्यान्तादपि "इतराभ्योऽपि दृश्यन्ते" पा०तसिलादिप्रत्ययनिमित्ते शब्दमबे तत्र "दृशि-ग्रहणात् भवदादियोग एव" वार्त्ति० । स च गणः "भवान् दीर्घायुः देवानांप्रियः आयुष्मान्" । तेन च भवान् ततो भवान् तत्रभवान् तत्रभवन्तम् इत्यादि एवम् सदीर्घायुः ततो दीर्घायुरित्यादि ।

**भवदारु** पु०न० भवप्रियं दारु । देवदारुवृक्षे राजनि० ।

**भवदीय** त्रि० भवतोऽयम् छस् सिन्वात् पदत्वे तस्य दः । त्वत्सम्बन्धिनि । [१जन्मनि ४सत्तायाञ्च मेदि० ।

**भवन** न०भू-आधारे ल्युट् ।१गृहे अमरः भावे ल्युट् । २भावे

**भवनपति** पु० इत० । १गृहस्वामिनि २राशधीशे च भवन-नाथादयोऽप्यत्र ।

**भवन्त** पु० भू-झच् । काले उज्ज्वल० संक्षिप्तसा० ।

**भवन्ति** पु०भू-क्विप् तस्य झोऽन्तर्मपि । वर्त्तमानकाले अन्नादौ स्त्रीत्वे ङीप् । "वर्त्तमाने भवन्तीपरः प्रयोक्तव्यः" महाभाष्यम् ।

**भवभूत** न० भवरूपे अवितताद्रूपे परमेश्वरे "विश्वरूपं भव-भूतमीशम्" श्वेता०उ० ।

**भवभूति** पु० इत० । १महादेवविभूतौ । महावीरचरितो-त्तररामचरितमालतीमाधवादिनाटककर्त्तरि २विदुषि ।

**भवरुत्** पु० भवे जन्मान्ते रोदित्यनेन रुद-करणे क्विप् । प्रेतपटहे त्रिका० ।

**भवाचल** पु० इत० । मन्दरस्य पूर्वदिक्स्थिते शैलभेदे कैलासे । "शीतान्तं चक्रशङ्खञ्च कुलीरोऽथ सकङ्कवान् । मणिशैलो-ऽथ वृषवान् महानीलो भवाचलः । सविन्दुर्मन्दरो वेणुमान्सो निषधस्तथा । देवशैलश्च पूर्वेण मन्दरस्य महाचलाः" मार्कपु०५५अ० । [स्त्री शब्दमा०

**भवात्मज** पु० इत० । १कार्त्तिकेये २गणेशे च ३मनसादेव्यां

**भवादृश(ग्)ृश्** त्रि० भवन्तमिव दर्शनमस्य भवत्+दृश-क्विप् टक् कस क्विप् वा सर्वनामत्वात् आत् । भवत्तुल्ये जने । टकि क्विपि च ङीप् भवादृशी ।

**भवानी** स्त्री भवस्य पत्नी भव+ङीप् आनुक् च । शिव-पत्न्याम् दुर्गायाम् अमरः । [गुरुत्वात् तथात्वम् ।

**भवानीगुरु** पु० इत० । हिमाचले तस्य तद्गुरुपादकत्वेन तद्-

**भवानीपति** पु०इत०।महादेवे तत्पदस्य वाच्ये प्रयोगे भवा-न्याः पत्यन्तरप्रतीतिकारित्वाद्विरुद्धार्थद्योतकत्वं काव्यदोषः।

**भवान्तकृत्** पु० इत० । १वेधसि तस्य प्रलयकाले सर्वभूतानां जन्मविनाशकत्वात् तथात्वम् । "यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते" मनुः । २संसारनाशके ज्ञाने च ।

**भवाभीष्ट** पु० भवस्य महादेवस्याभीष्टः । १गुग्गुलौ राजनि० ७त० । २भवेऽभीप्सिते त्रि० ।

**भवायनी** स्त्री भवे महादेवशिरसि अयनं स्थानमस्याः गौरा०ङीष् ।१गङ्गायाम् शब्दर०२शिवतत्परे शैवे त्रि०।

**भविक** न० भवोभूतिरस्त्यस्य पाद्यत्वेनास्त्यस्य ठन् । १कुशले कुश-लस्य भूतिहेतुत्वात्तथात्वम् । अर्श० अच् २सहृति त्रि० अमरः । [पत्तिके जटा०।

**भवित** त्रि० भवो जातोऽस्य तार० इतच् । भूते अतीतोत्-

**भवितव्य** न० भू—भविष्यति कर्त्तरि च नि० तव्यत् । अवश्य भव्ये "भवितव्यं भवत्येव यद्विधेर्मनसि स्थितम्" ।

**भवितव्यता** स्त्री भवितव्यस्य भावः तल् । १अवश्यम्भावे । २भाग्ये च जटाधरः । [त्रिका०

**भवित्र** त्रि० भू-चिन्तायाम् बा० इत्र । काव्यस्य कर्त्तरि

**भविल** पु०भू-भविष्यति इलच् । १भव्ये भविष्यति उज्ज्वल० २जारे पु० त्रिका० ।

**भविष्णु** त्रि० भू-इष्णुच् । भवनशीले अमरः ।

**भविष्य(त्)** पु० भू-"लटः सद्वेति" शतृ-लृट् च प्रयो० वा तलोपः । भाविनि १काले २तत्कालवर्त्तिनि पदार्थे त्रि० स्त्रियां ङीप् नुम् च "अभ्यावेपो भविष्यन्त्याः" रघुः । तलोपपक्षे स्त्रीत्वता । उत्तर-पदस्थः त्रि० । "यद्भविष्यो विनश्यति" पञ्चत० ३भवि-ष्यमधिकृत्य कृते पुराणभेदे न०। तच्च महापुराणान्त-र्गतं पुराणं तत्प्रतिपाद्यविषयादिकं नारदीयपु० ४पा० १००अ० उक्तं यथा

"अथ ते संप्रवक्ष्यामि पुराणं सर्वसिद्धिदम् । भविष्यं भवतः सर्वलोकाभीष्टप्रदायकम् । तत्राहं सर्वदेवाना-मादिकर्त्ता समुद्यतः । सृष्ट्यर्थं तत्र सञ्जातो मनुः स्वायम्भुवः पुरा । स मां प्रणम्य पप्रच्छ धर्मं सर्वार्थ-साधकम् । अहं तस्मै तदा प्रीतः प्रावोचं धर्मसंहि-ताम् । पुराणानां यदा व्यासो व्यासञ्चक्रे महामतिः । तदा तां संहितां सर्वां पञ्चधा व्यभजन्मुनिः । अघो-रकल्पवृत्तान्तनानाश्चर्यकथाचिताम्" । तत्र प्रथम-पर्वणि । "तत्रादिमं स्मृतं पर्व ब्रह्मं यत्राप्युप-क्रमः । सूतशौनकसंवादे पुराणप्रश्नसंक्रमः । आदित्य-चरितः प्रायः सर्वाख्यानसमाचितः । सृष्ट्यादिलक्षणो-

मैतः शास्त्रसर्वस्वरूपकः । पुस्तकेस्वकवेश्नानां वक्ष्यामि ततः परम् । संस्कारायास्त्र सर्वेषां वक्ष्यमाणात कीर्त्तितम् । पञ्चत्वादितिथीनाञ्च कल्पाः सप्त च कीर्त्तिताः । अष्टमाद्याः शेषकल्पाः वैष्णवे पर्वणि स्मृताः । शैवे च कामतो भिन्नाः सौरे चान्त्यकथाचयः । प्रतिसर्गाह्वयं पर्वात्नानाख्यानसमाचितम् । पुराणस्योपसंहारसहितं पर्व पञ्चमम् । एषु पञ्चसु पूर्वस्मिन् ब्रह्मणो महिमाधिकः" । द्वितीयतृतीयचतुर्थपञ्चमपर्वसु "धर्मे कामे च मोक्षे तु विष्णोश्चापि शिवस्य च । द्वितीये च तृतीये च सौरो वर्गचतुष्टये । । प्रतिसर्गाह्वयं त्वान्त्यं प्रोक्तं सर्वकथाचितम् । एतत् भविष्यं निर्दिष्टं पर्व व्यासेन धीमता । चतुर्दशसहस्रन्तु पुराणं परिकीर्त्तितम् । भविष्यं सर्वदेवानां साम्यं यत्र प्रकीर्त्तितम् । गुणानां तारतम्येन समं ब्रह्मेति हि श्रुतिः" । तत्फलश्रुतिः । "तल्लिखित्वा तु यो दद्यात् पौष्यां विद्वान् विमत्सरः । गुडधेनुयुतं हेमवस्त्रमाल्यविभूषणैः । वाचकं पुस्तकञ्चापि पूजयित्वा विधानतः । गन्धाद्यैर्भोज्यभक्ष्यैश्च कृत्वा नीराजनादिकम् । यो वै जितेन्द्रियो भूत्वा सोपवासः समाहितः । अथ वा यो नरो भक्त्या कीर्त्तयेत् शृणुयादपि । स मुक्तः पातकैर्घोरैः प्रयाति ब्रह्मणः पदम् । सोऽष्टत्वक्रमयोगेनतां भविष्यस्य निरूपिताम् । पठेद्वा शृणुयान्मर्त्यो भुक्तिमुक्तिञ्च विन्दति" । ४(चालता) फलभेदे राजनि० । तालं ५जले निघण्टुः । भविष्यत्वञ्च वर्त्तमानप्रागभावप्रतियोगित्वमिति नैयायिकाः पदार्थस्य अनागतावस्थाभेद इति सांख्यादयः । ६हरिवंशपर्वभेदे न० ।

**भविष्यदाक्षेप** पु० "वत्स ब्रवीमि न त्वं मां द्रष्टुं वल्लभ ! लप्स्यसे । अन्यमुखमनसंक्रान्तसाकारक्लेन चक्षुषा । सोऽयं भविष्यदाक्षेपः प्रागेवातिमनस्विनी । कदाचिदपराधोऽस्य भावीत्येवमरक्षतः यत्" । काव्यादर्शोक्ते अर्थालङ्कारभेदे ।

**भवीयस्** त्रि० अतिशयेन बहुः बहु+ईयसुन् "बहोर्लोपो भू च बहोः" पा० भूरादेशः वेदे न ईलोपः । बहुतरे ऋ० ।१।८।१ लोके तु ईयसुन ईकारलोपः भूय इत्येव ।

**भव्य** त्रि० भू—कर्त्तरि नि० यत् । १भाविनि "अवश्यभव्येष्वनवग्रहग्रहेति" नैषधम् । (चालता) २फलभेदे राजनि० "भव्यं स्वादु कषायाम्लं हृद्यमास्यविशोधनम् । तदेव पक्वं दाहघ्नं गुरु ग्राहि विषापहम्" राजव० ।३अस्थि मेदि० ४शुभे ५सत्ये ६योग्ये च न० । ७तद्वति त्रि० । ८कर्मरङ्गे पु० ९गजपिप्पल्यां १०उमायां च स्त्री मेदि० । ११रसभेदे शब्दर० ।

**भष** कुक्कुरशब्दे भ्वा० पर० सक० सेट् । भषति अभषीत्-अभाषीत् ।

**भष** पुंस्त्री० भष—अच । १कुक्कुरे शब्दरत्ना० स्त्रियां जातित्वात् ङीष् । २स्वर्णक्षीर्यां स्त्री रत्नमा० टाप् ।

**भषक** पु० स्त्री० भष—क्वुन् । कुक्कुरे अमरः । स्त्रियां ङीष् ।

**भषण** न० भष—भावे ल्युट् । कुक्कुरशब्दे हेमच० ।

**भस** दीप्तौ अक० भर्त्सने सक० जु० पर० सेट् । बभस्ति । अभासीत् अभसीत् बभास । वैदिकोऽयम् । [बभास ।

**भस** भक्षणे भ्वा० सक० सेट् निघण्टुः । भसति अभा(भ)सीत्

**भसद्** न० भस—अदि । १जघने उज्ज्वल० ।२भास्करे ३मांसे च ४जघने स्त्री मेदि० ५कालखण्डे ६प्लवे पु० उणादिको० ७काले पुंलिङ्गा० । [पाठः ।

**भसन्त** पु० भस—बा० झच् । काले त्रिका० तत्र भवन्त इत्येव

**भसन्धि** पु० ६त० । नक्षत्रभेदानां सन्ध्यात्मके कालभेदे यथोक्तम् "सार्पेन्द्रपौष्ण्यधिष्ण्यानामन्त्याः पादाः भसन्धयः । तदग्रिमेष्वाद्यपादो गण्डान्तं नाम कीर्त्यते" मु० चि० । "अत्र भाश्ले षारेवतीनक्षत्राणामन्त्याश्चतुर्थाश्चरणाः नक्षत्रसन्धयो भवन्ति । तदग्रिमेषु तेषामग्रेषाश्लेषारेवतीनक्षत्राणामुत्तरेषु मघामूलाश्विनीनक्षत्रेष्वित्यर्थः प्रथमचरणो गण्डान्तं नाम प्रसिद्धमुच्यते । यद्यप्यश्लेषाश्लेषारेवतीनक्षत्राणामन्तिमं घटिकाद्वयं मघामूलाश्विनीनक्षत्राणामादिमं घटिकाद्वयमिति चतस्रोऽन्तरघटिका गण्डान्तम् । एतदतिरिक्तो नक्षत्रसन्धिः पूर्वनक्षत्रान्त्यघटिकोत्तरनक्षत्रादिमघटिकेत्यन्तरालघटिकाद्वयं चन्द्रमण्डलसम्बन्धेन घटिका सार्द्धद्वयमिति संहिताविरुद्धं तथापि मुख्यौत्तम्यतः प्रामाण्यान्न क्षतिः । अथवैकवाक्यतार्थं पादशब्दः करणेत्यादिवत् दिवसप्रायाचकः । घटिका इत्यध्याहारः । तथा च दिवसद्वयमिता अन्त्यघटिकानक्षत्रसन्धिः" रङ्ग० । २नक्षत्रयोः सन्धिकाले च तदानयनं सि० शि० दर्शितं तच्च तिथिसन्धिशब्दे ३३०० पृ० दर्शितम् ।

**भसित** न० भस—क्त । भस्मनि हैम० । [दैवज्ञे शब्दर० ।

**भसूचक** पु० भानि नक्षत्राणि सूचयति सूचि-ण्वुल् ।

**भस्त्रा** स्त्री भस-ष्ट्रन् । १चर्मप्रसेविकायाम् अग्निसन्धुक्षणे चर्मनिर्मिते यन्त्रभेदे । (याँता) अमरः । षित्त्वात् ङीष् । अत्रैव शब्दरत्ना० स्वार्थे क टाप् न ह्रस्वम् । भस्त्राकाप्यत्रैव । ततः उत्करा० चतुरर्थ्यां छ । भस्त्रीय तद्दूरदेशादौ त्रि० ।

**भस्मफला** स्त्री भस्मेव फलमस्याः ङीप्। (टेपारि) क्षुपभेदे

**भस्मक** न॰ भस्म करोति कृ–ड। (भस्मकीट) बहुभोजनकारके १रोगभेदे। “कट्वादिरूक्षान्नभुजां नराणां क्षीणे कफे मारुतपित्तवृद्धौ। अतिप्रवृद्धः पवनान्वितोऽग्निर्भुक्तं क्षणाद्भस्म करोति यस्मात्। तस्मादसौ भस्मकसंज्ञकोऽभूदुपेक्षितोऽयं पचते च धातून्”। भस्मकस्य सोपद्रवमरिष्टमाह “तृट्स्वेददाहमूर्च्छादीन् कृत्वैवात्यग्निसम्भवान्। पक्वान्नमाशु धात्वादीन् स क्षिप्रं नाशयेद्ध्रुवम्” भावप्र॰। भस्मेव इवार्थे कन्। २कलधौते रूप्ये ३विडङ्गे च मेदि॰।

**भस्मकूट** पु॰ भस्मरूपे पर्वतभेदे कालि॰ ८१८०।

**भस्मगन्धा** स्त्री भस्मन इव गन्धोऽस्याः। रेणुकाख्यगन्धद्रव्ये भावप्र॰। स्वार्थे क अत इत्त्वम्। तत्रैव जटा॰

**भस्मगन्धिनी** स्त्री भस्मन इव गन्धोऽस्त्यस्याः बाहुल्येन इनि ङीप्। रेणुकाख्ये गन्धद्रव्ये अमरः।

**भस्मगर्भ** पु॰ भस्म गर्भे यस्य। १तिनिशवृक्षे राजनि॰ २कपिलशिंशपायाम् अमरः। ३रेणुकाख्यगन्धद्रव्ये स्त्री जटाधरः टाप्।

**भस्मजावाल** पु॰ उपनिषद्भेदे उपनिषच्छब्दे दृश्यम्।

**भस्मतूल** न॰ भस्म तूलयति तूल–उत्क्षेपे क। १ग्रामकूटे २पांशुवर्षणे ३हिमे च मेदि॰।

**भस्मन्** न॰भस–मनिन्। (छाइ) दग्धगोमयादिविकारे अमरः अस्य शिवदेहलेपने कारणं कालिकापु॰ ४१ अ॰ उक्तं यथा “महादेवोऽथ तद्भस्म मनोभवशरीरजम्। आदाय सर्वगात्रेषु भूतिलेपं तदाकरोत्। लेपशेषाणि भस्मानि समादाय तदा हरः। सगणोऽन्तर्दधे काले विहाय विधिसम्मतः”। तद्धारणविधिर्यथा

“भस्मोपरि चन्दनादिकं न धार्यं तदुक्तं कौर्मे “वैदिकैर्मन्त्रै रहितं चन्दनागुरुकुङ्कुमम्। तिर्यक्पुण्ड्रात्मना धार्यं कान्तिसौख्याभिकाङ्क्षिभिः। पुण्ड्रोद्धृतचन्दनाद्यैरपि भस्म न संत्यजेत्। इत्येत भस्मसंत्यागी सतीयस्कोऽधर्मकृतः। चन्दनाद्युपरि प्राज्ञो धारयेद्भस्म वैदिकम्। लौकिकं चन्दनाद्यं तु भस्मोपरि न धारयेत्। भस्मचन्दनादीनां त्यागेनार्थो न विद्यते। चन्दनादीन्यतो लौकिकान्येवात्र न संशयः। उपरिष्टाच्चन्दनादैर्धृतेऽस्मे शितमस्मनि। चन्दनाद्युपमूलाया फलाप्तेः को निवारकः”। त्रिपुण्ड्रधारणं मन्त्ररहितं तूष्णीं तु कार्यम्” तदुक्तं शिवेश्वरसंहितायां “जाबालोक्तादिवैर्मन्त्रैर्धार्यं भस्मत्रिपुण्ड्रकम्। अन्यथा क्षेप्यजलं यावद्रजस्तमरकं व्रजेदिति”। शिवधर्मे “येन भस्मोक्तमार्गेण न धृतं मुनिपुङ्गव!। तस्य धिक् मुने! जन्म निःफलं शूकरो यथा”। मन्त्रसारसुधानिधौ” त्रिपुण्ड्रकं सदा कुर्यात् मन्त्रपूतेन भस्मना। मन्त्रेण हीनं यः कुर्यात् परभागी भवेन्नरः”। शिवपूजा तद्धारणं न सिध्यति “विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया। महादेवोऽर्चितो येन न च तस्य फलप्रदः” लिङ्गपु॰।

**भस्मरोहा** स्त्री भस्मनि रोहते रुह–अच्। दग्धिकायाम् राजनि॰।

**भस्मवेधक** पु॰भस्मन इव वेधो वेधनं यस्य कप्। कर्पूरे शब्द॰

**भस्मसा** अव्य॰ डाजन्तः। चर्वणजन्यशब्दानुकारे यजु॰११।८१ वेददी॰। [साति। साकल्येन भस्मरूपताकरणे।

**भस्मसात्** अव्य॰ भस्म कात्स्न्येन सम्पन्नं करोति भस्मन्+

**भस्माचल** पु॰ कामरूपस्थे गिरिभेदे कालिकापु॰ ८१अ॰।

**भस्मासुर** पु॰ असुरभेदे। इति ख्याते वृकासुरे शिववरेण स यस्य शीर्षं करेण स्पृशति स भस्म भवतीति कथा भाग॰ १०।८८ अ॰। [वा॰ च। कर्पूरे त्रिका॰।

**भस्माह्वय** पु॰ भस्म आह्वयते साहस्येन स्पर्धते आ+ह्वे–

**भा** दीप्तौ अदा॰पर॰अक॰अनिट्। भाति अभासीत् बभौ। प्रति+बुद्धिप्राकट्ये। वि+अति+विशेषभासने–आ॰दीप्तिश्च तैजसपदार्थावयवभेदः प्रकाशश्च। स च ज्ञाने विषयतया प्रकाशः चित्। भावे अङ्। भा

**भा** स्त्री भा–अङ् टाप्। दीप्तौ अमरः। [१।४४।२भा॰।

**भाऋजीक** पु॰ भास ऋजीकः। भासः प्रार्जके प्रसिद्धे ऋ॰

**भाकुट** पु॰ भया दीप्त्या कुटति कुट–क। (भेटकी) मत्स्यभेदे राजव॰। [ब्रा॰६।४ १।८ भा॰।

**भाकुरि** पु॰भां कुर्चति कुर्च–कि पृषो॰। दीप्तिकारके शत॰

**भाकूट** पु॰। १पर्वतभेदे २मत्स्यभेदे च (भेटकी)मेदि॰।

**भाकोष** पु॰ भानां दीप्तीनां कोष इव। सूर्ये त्रिका॰।

**भाक्त** त्रि॰ भक्तेः गौण्यावृत्तेरागतः अण्। १औपचारिके गौण्या वृत्त्या बोधितेऽर्थे। भक्तस्यान्नस्येदम् अण्। २अन्नसम्बन्धिनि त्रि॰। भक्तमन्नमस्मै नियतं दीयते वा अण्। ३नियतभक्तदानस्थ प्रदाने त्रि॰। भक्ताय हितम् अण्। ४भक्तसम्पादनसाधने तण्डुले। [सम्प्रदाये।

**भाक्तिक** त्रि॰ भक्तमस्मै नियतं दीयते ठक्। नियतभक्तदान

**भाक्ष** त्रि॰ भक्षा शीलमस्य छत्रा॰ अण्। भक्षणशीले।

**भाग** पु॰भज–भावे घञ्।१भजने कर्मणि घञ्। २अंशे अमरः

इष्टवस्तुनोऽंशे ३एकदेशे ४भाग्ये "त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते" इति ज्योतिषोक्ते राशेः ५त्रिंशांशके च शब्दर०। भगो देवताऽस्य अण्। ६पूर्वफल्गुनीनक्षत्रे तत्समसंख्यायाम् ७एकादशसंख्यायां ८भागहारे केनचित् अङ्केन कस्यचित् भजनरूपे अङ्कशास्त्रोक्ते व्यापारभेदे।

**भागजाति** स्त्री। भागस्य विभजनस्य प्रकारभेदे सा च चतुर्विधा भागजातिः प्रभागजातिः भागानुबन्धो भागापवाहश्च तत्र अंशानां समच्छेदकरणं भागजातिः इत्युच्यते। यथा "अन्योऽन्यहाराभिहतौ हरांशौ राश्योः समच्छेदविधानमेवम्। मिथो हराभ्यामपवर्त्तिताभ्यां यद्वा हरांशौ सुधियात्र गुण्यौ" लीला०। भागस्य भागः प्रभागो यथा "लवा लवघ्नाश्च हरा हरघ्नाः भागप्रभागेषु सवर्णनं स्यात्"। लीला०। भागस्यानुबन्धो योजनं भागानुबन्धो भागापवाहश्च तद्वियोजनम् यथा "छेदघ्नरूपेषु लवा धनर्णमेकस्य भागा अधिकोनकाश्चेत्। स्वांशाधिकोनाः खलु यत्र तत्र भागानुबन्धे च लवापवाहे। तलस्थहारेण हरं निहन्यात् स्वांशाधिकोनेन तु तेन भागान्" लीला०

**भागधेय** न० भाग+स्वार्थे धेय अभिधानात् नपुंसकत्वम्। १भाग्ये। भागेन धीयतेऽसौ धा-कर्मणि यत्। २राजदेये करे पु० अमरः। भागो धीयतेऽत्र धा-सम्प्रदाने यत्। ३दायादे सपिण्डे अजयपालः।

**भागलक्षणा** स्त्री भागे लक्षणा। शक्यार्थांशभेदपरित्यागेन इतरांशबोधकलक्षणाभेदे जहदजहत्स्वार्थलक्षणायाम्। जहदजहल्लक्षणाशब्दे ३०८१ पृ० दृश्यम्।

**भागवत** त्रि० भगवतः भगवत्या वा इदम् सोऽस्य देवता वा अण्। भगवतः भगवत्या वा १भक्ते, २तयोः सम्बन्धिनि च "भक्ताः कृष्णे भागवता भवन्ति" उद्भटः। तयोः सम्बन्धिगुणवर्णने ३महापुराणे ४उपपुराणे च न० "यैर्न श्रुतं भागवतं पुराणम्" भाग०। भागवतञ्च महापुराणभेदः उपपुराणभेदो वा उपपुराणशब्दे विस्तरेण दर्शितः। नारदीयपु० महापुराणप्रतिपाद्यविषयोक्तौ ये विषया उक्तास्ते नान्यत्रेति विष्णुभागवतस्यैव महापुराणत्वमित्येके उपपुराणशब्दे अन्यमतं दृश्यम्।

विष्णुभागवतप्रतिपाद्यविषयाश्च नार०पु०४अ०९६ उक्ता यथा "मरीचे! शृणु वक्ष्यामि वेदव्यासेन यत् कृतम्। श्रीमद्भागवतं नाम पुराणं ब्रह्मसम्मितम्। तदष्टादशसाहस्रं कीर्त्तितं पापनाशनम्। सुरपादपरूपोऽयं स्कन्धैर्द्वादशभिर्युतः। भगवानेव विप्रेन्द्र! विश्वरूपी समीरितः" तस्य प्रथमस्कन्धे। "तत्र तु प्रथमे स्कन्धे सूतर्षीणां समागमः। व्यासस्य चरितं पुण्यं पाण्डवानां तथैव च। पारीक्षितमुपाख्यानमितीदं समुदाहृतम्"। द्वितीयस्कन्धे "परीक्षिच्छुकसंवादे सृतिद्वयनिरूपणम्। ब्रह्मनारदसंवादेऽवतारचरितामृतम्। पुराणलक्षणञ्चैव सृष्टिकारणसम्भवः। द्वितीयोऽयं समुदितः स्कन्धो व्यासेन धीमता"। तृतीयस्कन्धे "चरितं विदुरस्याथ मैत्रेयेणास्य सङ्गमः। सृष्टिप्रकरणं पश्चाद् ब्रह्मणः परमात्मनः। कापिलं साङ्ख्यमप्यत्र तृतीयोऽयमुदाहृतः"। चतुर्थस्कन्धे "सत्याश्चरितमादौ तु ध्रुवस्य चरितं ततः। पृथोः पुण्यसमाख्यानं ततः प्राचीनबर्हिषः। इत्येष तुर्यो गदितो विसर्गे स्कन्ध उत्तमः"। पञ्चमस्कन्धे "प्रियव्रतस्य चरितं तद्वंश्यानाञ्च पुण्यदम्। ब्रह्माण्डान्तर्गतानाञ्च लोकानां वर्णनन्ततः। नरकस्थितिरित्येष संस्थाने पञ्चमो मतः"। षष्ठस्कन्धे "अजामिलस्य चरितं दक्षसृष्टिनिरूपणम्। वृत्राख्यानं ततः पश्चान्मरुतां जन्म पुण्यदम्। षष्ठोऽयमुदितः स्कन्धो व्यासेन परिपोषके"। सप्तमस्कन्धे "प्रह्लादचरितं पुण्यं वर्णाश्रमनिरूपणम्। सप्तमो गदितो वत्स! वासनाकर्मकीर्त्तने"। अष्टमस्कन्धे। "गजेन्द्रमोक्षणाख्यानं मन्वन्तरनिरूपणम्। समुद्रमथनञ्चैव बलिवैभवबन्धनम्। मत्स्यावतारचरितमष्टमोऽयं प्रकीर्त्तितः"। नवमस्कन्धे "सूर्य्यवंशसमाख्यानं सोमवंशनिरूपणम्। वंश्यानुचरिते प्रोक्तो नवमोऽयं महामते!"। दशमस्कन्धे "कृष्णस्य बालचरितं कौमारञ्च व्रजस्थितिः। कैशोरं मथुरास्थानं यौवनं द्वारकास्थितिः। भूभारहरणञ्चात्र निरोधे दशमः स्मृतः"। एकादशस्कन्धे "नारदेन तु संवादो वसुदेवस्य कीर्त्तितः। यदोश्च दत्तात्रेयेण श्रीकृष्णेनोद्धवस्य च। यादवानां मिथोऽन्तश्च मुक्तावेकादशः स्मृतः"। द्वादशस्कन्धे "भविष्यत्कलिनिर्देशो मोक्षो राज्ञः परीक्षितः। वेदशाखाप्रणयनं मार्कण्डेयतपः स्मृतम्। सौरी विभूतिरुदिता सात्वती च ततः परम्। पुराणसंख्याकथनमाश्रये द्वादशो ह्ययम्। इत्येवं कथितं वत्स! श्रीमद्भागवतं तव"। तत्फलश्रुतिः "वक्तुः श्रोतुश्चोपदेष्टुरनुमोदितुरेव च। साहाय्यकर्त्तुर्गदितं भक्तिभुक्तिविमुक्तिदम्। प्रौष्ठपद्यां पूर्णिमायां हेमसिंहसमन्वितम्। देयं भागवतायेदं द्विजाय

प्रीतिपूर्वकम्। संपूज्य वस्त्रहेमाद्यैर्भगवद्भक्तिमिच्छता। सोऽश्वमेधमवाप्नोति यावदिन्द्रा यथा तथा। स पुराण श्रवणजं प्राप्नोति फलमुत्तमम्” । विस्तरस्तु भाग० १२ उपसंहाराध्याये दृश्यः।

भगवद्भक्तरूपभागवतलक्षणं यथा भाग०११ स्क०।

“सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः। भूतानि भगवत्यात्मन्येष भागवतोत्तमः। न यस्य स्वपर इति वित्तेष्वात्मनि वा भिदा। सर्वभूतसमः शान्तः स वै भागवतोत्तमः”। हरियोगेश्वरोत्तरे “गृहीत्वापीन्द्रियैरर्थान् यो न द्वेष्टि न काङ्क्षति। विष्णोर्मायामिदं पश्यन् स वै भागवतोत्तमः”। हृहन्नारदीये “शिवे च परमेशाने विष्णौ च परमात्मनि। समबुद्ध्या प्रवर्त्तन्ते ते वै भागवतोत्तमाः”। स्कान्दे “येषां भागवतं शास्त्रं सदा तिष्ठति सन्निधौ। पूजयन्ति च ये नित्यं ते सुभागवता नराः। येषां भागवतं शास्त्रं जीवितादधिकं भवेत्। महाभागवताः श्रेष्ठा विष्णुना कथिता नराः”। लैङ्गे “भोजनाच्छादनं सर्वं यथा शक्त्या ददाति यः। विष्णुभक्तस्य सततं स वै भागवतः स्मृतः”। गारुडे “येन सर्वात्मना विष्णुभक्त्या भावो निवेशितः। वैष्णवेषु कृतात्मत्वात् महाभागवतो हि सः”। हृहन्नारदीये “तुलसीकाननं दृष्ट्वा ये नमस्कुर्वते नराः। तत्काष्ठाङ्कितकर्णा ये ते वै भागवतोत्तमाः। तुलसीगन्धमाघ्राय सन्तोषं कुर्वते तु ये। तन्मूलमृद्धृता येन ते वै भागवतोत्तमाः”। स्कान्दे “मत्कथां कुरुते यस्तु मत्कथायाः शृणोति च। हृष्यते मत्कथायाञ्च स वै भागवतोत्तमः”। हृहन्नारदीये “अन्नानवाप्य मद्भक्ता मद्भक्तजनलोलुपाः। मत्तामश्रवणासक्तास्ते वै भागवतोत्तमाः। येऽभिनन्दन्ति नामानि हरेः शृण्वन्ति हर्षिताः। रोमाञ्चितशरीराश्च ते वै भागवतोत्तमाः। अन्ये मासद्वयं दृष्टा येऽभिनन्दन्ति मानवाः। हरिनाम परा ये च ते वै भागवतोत्तमाः”। स्कान्दे “येऽर्चयन्ति सदा विष्णुं शङ्खेशं वरदं हरिम्। देहिनः पुण्यकर्माणः सदा भागवता हि ते”। लैङ्गे “विष्णुक्षेत्रे शुभान्येव करोति स्नेहसंयुतः। प्रतिमाञ्च हरेर्नित्यं पूजयेत् प्रयतात्मवान्। विष्णुभक्तः स विज्ञेयः कर्मणा मनसा गिरा। नारायणपरा नित्यं भूप! भागवतो हि सः” पद्मोत्तरखण्डे “तापादिपञ्चसंस्कारी नवेज्या कर्मकारकः। अर्थपञ्चकविद्विप्र! महाभागवतो हि सः। एकान्तेन सदा विष्णौ यस्माद्देवे परायणाः। तस्मादेकान्तिनः प्रोक्तास्तद्भागवतचेतसः” भाग० ११ स्कान्दे “ज्ञात्वा ज्ञात्वाथ ये वै मां यावान् यश्चास्मि यादृशः। भजन्त्यनन्यभावेन ते वै भागवता मताः। न कामकर्मबीजानां यस्य चेतसि सम्भवः। वासुदेवैकनिलयः स वै भागवतोत्तमः”। स्कान्दे “यस्य कृच्छ्रगतस्यापि केशवे रमते मनः। न विच्युता च भक्तिर्वै स वै भागवतो नरः। आपद्गतस्य यस्येह भक्तिरव्यभिचारिणी। नान्यत्र रमते चित्तं स वै भागवतो नरः”। हरियोगेश्वरे “विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः। प्रणयरसनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः” हरिभक्तिविलासे १० वि०।

**भागवित्ति** पु० चूडनामके ऋषिभेदे “एतद्ध स्मैव चूडो भागवित्तिः” शत० ब्रा० १४।९।३।१८ ततः कुत्सायां यूनि अपत्ये वा ठक्। भागवित्तिक तदीये कुत्सिते यून्यपत्ये पक्षे फक्। भागवित्तेय तत्रार्थे

**भागवृत्ति** स्त्री उणादिवृत्तिभेदे।

**भागहार** पु० भागस्य हारो हरणम्। लीलावत्युक्ते अङ्कपरिकर्माष्टकमध्ये भागहरणरूपे व्यापारभेदे “भागहारे करणसूत्रं वृत्तम्। भाज्याद्धरः शुध्यति यद्गुणः स्यादन्त्यात् फलं तत् खलु भागहारे। समेन केनाप्यपवर्त्य हारभाज्यौ भजेद्वा सति सम्भवे तु”। अस्य पूर्वोदाहरणे गुणिताङ्कानां स्वगुणच्छेदानां भागहारार्थं न्यासः भाज्यः। १६२०। भाजकः १२। भजनाल्लब्धो गुणः १३५। अथवा भाज्यहारौ त्रिभिरपवर्त्तितौ ५४० चतुर्भिर्वा ४०५ स्वस्वहारेण हृते फलं तदेव १३५।

**भागासिद्धि** स्त्री हेत्वाभासभेदे “पक्षतावच्छेदकसामानाधिकरण्येन बाध्याभावः। यथा पृथिवी गन्धवती घटत्वादित्यादौ पृथिवीत्वसामानाधिकरण्येन पटादौ घटत्वाद्यभावः। बाधे गदा०। यथा वा पृथिव्यादयश्चत्वारः परमाणवो नित्या गन्धवत्त्वादित्यत्र जलादौ गन्धाभावः।

**भागिन्** त्रि० भज-घिनुण्। अंशविशिष्टे। स्त्रियां ङीप्।

**भागिनेय** पुंस्त्री० भगिन्या अपत्यम् ढक्। स्वसृपुत्रे। तत्कन्यायां स्त्री ङीप्।

**भागीयस्** त्रि० अतिशयेन भागी ईयसुन् इनोलोपः। अतिशयभागयुते हरिवं० १११अ० अ०।

**भागीरथी** स्त्री भगीरथेन आनीता तेन भागीरथी स्मृता” ब्रह्मवै० प्र० ख० उक्ते गङ्गारूपे नदीभेदे।

**भागुरि** पु० स्मृतिव्याकरणादिकर्त्तरि मुनिभेदे। “वष्टि भागु-रिरल्लोपमवाप्योरुपसर्गयोः” सि० कौ०।

**भाग्य** न० भज-ण्यत् कुत्वम्। १शुभाशुभसूचके कर्मजन्ये-ऽदृष्टे अमरः। भागः प्रयोजनमस्य यत्। २भागार्थे त्रि०। भागमर्हति यत्। ३भागार्हे त्रि०।

**भाङ्गीन** न० भङ्गायाः विजयायाः भवनं क्षेत्रं खञ्। (भाङ) भङ्गाभवनयोग्ये क्षेत्रे। खञ्। भाङ्गमप्यत्र। हेमच। [अवभाजत् त।

**भाज** पृथक्करणे, अद० चु० उभ० सक० सेट्। भाजयति ते

**भाजक** त्रि० भज-ण्वुल्। भागकारके अङ्कभेदे विभाजके

**भाजन** न०भज्यतेऽनेन भाज-ल्युट्। १पात्रे अमरः। २आ-धारे ३योग्ये च मेदि०। ४आढकपरिमाणभेदे वैद्यकम्।

**भाजिन्** त्रि० भज-सेवायां णिनि। सेवके शब्दरत्नाव०।

**भाजित** त्रि० भाजि-कर्मणि क्त। १पृथक्कृते। २भक्ते च।

**भाजी** स्त्री० भाज-कर्मणि घञ् नि० ङीप्। व्यञ्जन-भेदे। अन्यत्र भाजा। सि० कौ०।

**भाज्य** त्रि० भज्यते विभज्यते भज-कर्मणि ण्यत्। विभ-जनीये “भाज्यो हरः शुध्यति यद्गुणः स्यादि”ति लीलावती।

**भाटक** पु०न० भट-पोषणे ण्वुल्। परस्य गृहयानादेरुपभोगार्थं तत्स्वामिने दीयमाने धने। (भाडा) शब्दा०।
“परभूमौ गृहं कृत्वा भाटयित्वा वसेत्तु यः। स तद् गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकम्। लोभं विना व-सित्वा तु परभूमावनिच्छतः। निर्गच्छंस्तृणकाष्ठानि न गृह्णीयात् कथञ्चन” कात्यायनः। “गृहवाप्यापणा-दीनि गृहीत्वा भाटकेन यः। स्वामिनोऽनर्पयेद्यावत्ता-वद्दाप्यः स भाटकम्। वापी परकृता अप्रतिष्ठितेति विव-क्षितम्। “उष्ट्रगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः। स्वामिनोऽनर्पयेद्यावत्तावद्दाप्यः स भाटकम्”। बृहस्पतिः “यो भाटयित्वा शकटं नीत्वा नान्यत्र गच्छति। भाटं न दद्याद्दाप्योऽसावनूढस्यापि भाटकम्”। शकटं इत्यनौकादेरप्युपलक्षणम्। अनूढस्यावाहितस्यापि शक-टादेः” इति विवादचिन्तामणिः।

**भाण** पु० सा० द० उक्तलक्षणे दशरूपकान्तर्गते दृश्यकाव्यभेदे तल्लक्षणं यथा
“भाणः स्याद्धूर्त्तचरितो नानावस्थान्तरात्मकः। एकाङ्क एक एवात्र निपुणः पण्डितो विटः। रङ्गे प्रकाशयेत् स्वेनानुभूतमितरेण वा। सम्बोधनोक्तिप्रत्युक्ती कुर्या-दाकाशभाषितैः। सूचयेद्वीरशृङ्गारौ शौर्यसौभाग्य वर्णनैः। तत्रेतिवृत्तमुत्पाद्यं वृत्तिः प्रायेण भारती। मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च”। आका-शभाषितरूपं परवचनमपि स्वयमेवानुवदन्नुत्तर-प्रत्युत्तरे कुर्यात्। शृङ्गारवीररसौ च सौभाग्यशौर्य-वर्णनेन सूचयेत्। प्रायग्रहणात् कौशिक्यपि वृत्ति-र्भवति। उदाहरणं लीलामधुकरः” सा० द०।

**भाण्ड** न० भाण्ड-अच् भण-ड-स्वार्थे अण् वा। पात्रे १तैलाद्याधारे २भाजने (भाँड) “अरालकेशिकं नष्टं भाण्डं दाप्यस्तु वाहकः” नारदः। ३मूलधने (भाँड़ार) “ब्रह्माण्डभाण्डोदरेत्यादि” वीरचरितम्। ४वणिजां मूल-धने ५अश्वभूषायां मेदि०। ६नदीकूलद्वयमध्ये पात्रे च हेमच०। ७गर्दभाण्डे वृक्षे पु० शब्दच०। भण्डस्य भावः अण्। ८भण्डचरित्रे न० (भाड़ामि) अजयः।

**भाण्डपुट** पु० नापिते जटाधरः।

**भाण्डपुष्प** पु० सर्पभेदे त्रिका०।

**भाण्डल** त्रि०भाण्डं लाति ला-क। भाण्डग्राहके स्त्रियां गौरा० ङीष्। [समीपादौ।

**भाण्डव** त्रि० भण्डोरदूरादि चतुरर्था० अण्। भण्ड-

**भाण्डागार** कर्म०। (भाँड़ार) गृहभेदे हेमच०। तत्र नियुक्तः ठन्। भाण्डागारिक तत्र नियुक्ते त्रि०।

**भाण्डार** न० भाण्डं तदाकारमृच्छति ऋ-अण् उप०स०। गृहभेदे (भाँड़ार)।

**भाण्डारिन्** पु० भाण्डमृच्छति ऋ-णिनि। धनादिरक्षा-गृहेषु कृताधिकारे। “क्षुधितस्तृषितः कामी विद्यार्थी अधिकारकः। भाण्डारी च प्रवासी च सप्त सुप्तान् प्रबोधयेत्” इति व्यवहारप्रदीपः। [(भाँड़ि)

**भाण्डि** स्त्री भण्डस्येदम्। नापितस्य क्षुराद्याधारपात्रभेदे

**भाण्डिवाह** पु०भाण्डिं क्षुराद्याधारं (भाँडि) वहति वह-अण् उप०स० नापिते भाण्डि+मत्वर्थे वच्। भाण्डिक तत्रार्थे शब्दमा०।

**भाण्डीर** पु० भण्ड-ईरन् पृषो०। १वटवृक्षे २वृन्दावनस्थे ३वटवनभेदे च जटा०। “प्रकाण्डो नाम भाण्डीरो वटं भाण्डीरमाश्रितः” हरिवं० ५५ अ०।

**भाति** स्त्री भा-क्तिन्। शोभायाम् राजनि०।

**भातु** पु०भा-तुन्। १सूर्ये त्रिका०। २दीप्ते त्रि०संक्षिप्त०।

**भाद्र** पु० भद्राभियुक्ता पौर्णमासी भाद्री सा अस्मिन् मासे अण्। चैत्रादितः षष्ठे चान्द्रे १मासे अमरः। २तस्मा-

सौम्यपौर्णमास्यां स्त्री ङीप्। भद्रैव स्वार्थे अण्। ३पूर्वोत्तरस्मादूपदास्वनक्षत्रे न०। "भाद्रपदे सागरे" ज्योतिषम्। ४भाद्र्या पौर्णमास्यायुक्ते पक्षे तथाविधे ५शुक्लवर्षे च कार्त्तिकशब्दे दृश्यम्।

**भाद्रपदा** स्त्री ब०व०। भद्रस्येदं अण् भाद्रमिव पदमास्याम्। अश्विन्यवधिके पञ्चविंशषड्विंशयोर्नक्षत्रयोः। १तद्युक्ता पौर्णमासी अण् ङीप्। २भाद्रमासस्य पौर्णमास्याम् चान्द्रे मासे अण्। ३चान्द्रे भाद्रे मासि पु०। तादृशे ४पक्षे ५शुक्लवर्षभेदे च कार्त्तिकशब्दे दृश्यम्।

**भाद्रमातुर** पु० भद्रायाः सत्याः मातुः अपत्यम् अण् मातृवत्। सतीपुत्रे हेमच०।

**भान** न०भा—भावे ल्युट्। १प्रकाशे २दीप्तौ ३ज्ञाने प्रकाशे च।

**भानु** पु० भा—नु। १सूर्य्ये २अर्कवृक्षे ३किरणे ४राजनि च अमरः ५प्रभौ भरतः। ६भूतजेवभेदे हेमच०। उत्तममन्वन्तरे ७देवे ब०व० हरिवं०८अ०। ८धर्मपत्नीभेदे स्त्री हरिवं० ३अ०। १०गन्धर्वभेदे पु० भा०आ०६५अ०। ११यदुवंश्यक्षत्रियभेदे भानुमत्याः पितरि पु० हरिवं० १४८अ०। १२विष्णौ पु० "अन्हतांशुर्भवो भानुः" विष्णु स० "तमेव भान्तमनुभाति सर्वम्" श्रुतेस्तस्य तथात्वम्।

**भानुफला** स्त्री भानुरिव दीप्तिमत् फलं यस्याः। कदल्याम् जटाधरः। तस्याः मोचकस्य सूर्य्यतुल्यवर्णत्वात्तथात्वम्। [१४८ अ०।

**भानुमती** स्त्री भानोर्यादवक्षत्रियभेदस्य कन्यायां हरिवं०

**भानुमत्** स्त्री भानुः किरणोऽस्त्यस्य मतुप्। १सूर्य्ये शब्दरत्ना० २अर्कवृक्षे च। भानुभानीत्यपत्य। ३नृपभेदे पु० भा०भी० ५४अ०। अङ्गजातिनृपस्य भार्य्यायां जाते कृतवीर्य्यस्य ४दुहितृभेदे स्त्री भा० आ० ८५अ०।

**भानुसेन** पु० कर्णपुत्रभेदे भा० क० ४८ अ०।

**भानेमि** पु० भानोः नेमिरिव।१सूर्य्ये २अर्कवृक्षे च त्रिका०।

**भान्त** पु० भायाः दीप्तेः पञ्चदशाङ्कमध्ये अन्तो यस्य। शुक्लकृष्णपक्षयोः पञ्चदशाहमध्ये कान्त्युपचयापचययुक्ते चन्द्रे "भान्तः पञ्चदशी" यजु० १४।२३ वेददी० हृत०। २नक्षत्रराश्योरन्ते च।

**भाम** क्रोधे भ्वा०आत्म०अक०सेट्। भामते अभामिष्ट बभामे।

**भाम** पु०भाम—घञ्।१क्रोधे निघण्टुः। भा—भावे म।२दीप्तौ च। कर्त्तरि म। ३सूर्य्ये मेदि०। ४अर्कवृक्षे च। ५भगिनीपतौ पु०शब्दरत्ना ६कोपनायां स्त्रियां स्त्री मेदि०।

**भामनी** पु० भामं नयति नी—क्विप्। परमेश्वरे "एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद" छा०उ०। "एष उ भामनीरेव हि यस्मात् सर्वेषु लोकेष्वादित्यचन्द्राग्न्यादिरूपैर्भाति दीप्यते। "तस्य भासा सर्वमिदं विभातीति" श्रुतेरतो भामानि नयतीति भामनीः" भा०। [नार्य्यां स्त्रियाम् स्त्री ङीप् अमरः।

**भामिन्** त्रि०भाम—णिनि। क्रोधयुक्ते स्त्रियां ङीप्। कोप-

**भार** पु० भृ—घञ्।१गुरुत्वपरिमाणे २वहति द्रव्ये ३विंशतितुलापरिमाणे (अष्टसहस्रतोलकपरिमाणे) च पु०।४वीवधे ५विष्णौ च मेदि०।

**भारङ्गी** स्त्री भृ-बा० अङ्गच्। पौष्पवल्ल्यां स्त्रियां ततः काश्या० ठञ्। भारङ्गिक तत्र भवे त्रि०।

**भारण्ड** पु० उत्तरदेशजे खगभेदे "एकोदराः पृथग्ग्रीवा अन्योऽन्यफलभक्षिणः। असंहता विनश्यन्ति भारण्डा इव पक्षिणः" पञ्चत०।

**भारत** न० भरतान् भरतवंश्यानधिकृत्य कृतो ग्रन्थः अण्। भारं वेदादिभ्योऽपि भारांशं तनोति तन—ड वा। १वेदव्यासप्रणीते लक्षश्लोकात्मके ग्रन्थभेदे। भरतेन क्षितं तच्छेदं वा अण्। "हिमाद्रे दक्षिणं वर्षं भरताय ददौ पिता। तस्मात्तु भारतं वर्षम्" इत्युक्ते जम्बुद्वीपान्तर्गते २वर्षभेदे। भरतस्य गोत्रापत्यम् अण्। भरतकृपस्य ३वंश्ये। भरतेन मुनिना प्रोक्तमण्। ४भरतमुनिकृते नाटकशास्त्रादौ न०। तदधीयते मुनरण्।५ नटे ब०व०६अग्निभेदे च। अस्यरूपभारतशब्दस्य निरुक्तिः भा०आ०१अ०दर्शिता यथा "एकतश्चतुरो वेदान् भारतञ्चैतदेकतः। पुरा किल सुरैः सर्वैः समेत्य तुलया धृतम्। चतुर्भ्यः सरहस्येभ्यो वेदेभ्यो ह्यधिकं यदा। तदाप्रभृति लोकेऽस्मिन् महाभारतमुच्यते। महत्त्वे च गुरुत्वे च ध्रियमाणं यतोऽधिकम्। महत्त्वाद्भारतत्वाच्च महाभारतमुच्यते। निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते"।

तच्च वेदव्यासेन कृतं तदादिष्टः तच्छिष्यः वैशम्पायनः जनमेजयं श्रावयामास यथोक्तं भा० आ० १अ०। "जनमेजयेन पृष्टः सन् ब्राह्मणैश्च सहस्रशः। शशास शिष्यमासीनं वैशम्पायनमन्तिके। स सदस्यैः सहासीनः श्रावयामास भारतम्। कर्मान्तरेषु यज्ञस्य चोद्यमानः पुनःपुनः। विस्तरं कुरुवंशस्य गान्धार्य्या धर्मशीलताम्। क्षत्तुः प्रज्ञां धृतिं कुन्त्याः सम्यग्द्वैपायनोऽब्रवीत्। वासुदेवस्य माहात्म्यं पाण्डवानाञ्च सत्यताम्। दुर्वृत्तं धार्त्तराष्ट्राणामुक्तवान् भगवानृषिः"।

तच्च नानाविधं नानासंख्यान्वितं च तत् लोके तु शतसाहस्रसंख्यातं यथोक्तं तत्रैवाध्याये
"चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम् । उपाख्यानैर्विना तावद्भारतं प्रोच्यते बुधैः । ततोऽध्यर्द्धशतं भूयः संक्षेपं कृतवानृषिः । अनुक्रमणिकाध्यायं वृत्तान्तानां सपर्व्वणाम् । इदं द्वैपायनः पूर्ब्बं पुत्त्रमध्यापयच्छुकम् । ततोऽन्येभ्योऽनुरूपेभ्यः शिष्येभ्यः प्रददौ विभुः । षष्टिं शतसहस्राणि चकारान्यां स संहिताम् । त्रिंशच्छतसहस्रञ्च देवलोके प्रतिष्ठितम् । पित्र्ये पञ्चदश प्रोक्तं गन्धर्व्वेषु चतुर्द्दश । एकं शतसहस्रन्तु मानुषेषु प्रतिष्ठितम् । नारदोऽश्रावयद्देवानसितो देवलः पितॄन् । गन्धर्व्वयक्षरक्षांसि श्रावयामास वै शुकः । अस्मिंस्तु मानुषे लोके वैशम्पायन उक्तवान् । शिष्यो व्यासस्य धर्म्मात्मा सर्व्ववेदविदांवरः । एकं शतसहस्रन्तु मयोक्तं वै निबोध तत्" । तस्याष्टादशमहापर्व्वयुतं तदवान्तरपर्व्वशतकं तद्विभागस्तत्र वर्णनीयपदार्थानां संग्रहश्च आ॰ प॰ २अ॰ दर्शितो यथा
"भारतस्येतिहासस्य श्रूयतां पर्व्वसंग्रहः" । आदिपर्व्वणि "१पर्व्वानुक्रमणी पूर्ब्बं द्वितीयः२ पर्व्वसंग्रहः ।३पौष्यं ४पौलोममास्तीकं५मादिरं(वं)शावतारणम्६। ततः सम्भव७पर्व्वोक्तमद्भुतं रोमहर्षणम् । दाहो जतुगृहस्यात्र८ हैडिम्बं९ पर्व्व चोच्यते । ततो वकवधः१० पर्व्व पर्व्व चैत्ररथं११ ततः । ततः स्वयम्बरो१२ देव्याः पाञ्चाल्याः पर्व्व चोच्यते । क्षात्रधर्म्मेण निर्जित्य ततो वैवाहिकं१३ स्मृतम् । विदुरागमनं पर्व्व राज्यलाभस्तथैव१४ च । अर्ज्जुनस्य वने वासः१५ सुभद्राहरणं१६ ततः । सुभद्राहरणादूर्द्ध्वं ज्ञेयं हरणहारिका १७ । ततः खाण्डवदाहाख्यं१८ तत्रैव मयदर्शनम् ।(२)सभापर्व्व तत१९प्रोक्तं मन्त्रपर्व्व२० ततः परम् । जरासन्धवधः२१ पर्व्व पर्व्व दिग्विजय२२स्तथा। पर्व्व दिग्विजयादूर्द्ध्वं राजसूयिक२३मुच्यते । ततश्चार्घाभिहरणं२४ शिशुपालवध२५स्ततः । द्यूतपर्व्व२६ ततः प्रोक्तमनुद्यूत२७मतः परम् । तत (३)आरण्यकं पर्व्व किर्म्मीरवधः२८ एव च। अर्ज्जुनस्याभिगमनं२९ पर्व्व ज्ञेयमतः परम् । ईश्वरार्ज्जुनयोर्युद्धं पर्व्व कैरात३०संज्ञितम् । इन्द्रलोकाभिगमनं ३१ पर्व्व ज्ञेयमतः परम् । नलोपाख्यान३२मपि च धार्म्मिकं करुणोदयम् । तीर्थयात्रा३३ ततः पर्व्व कुरुराजस्य धीमतः । जटासुरवधः३४ पर्व्व यक्षयुद्ध३५मतः परम् । निवातकवचैर्युद्धं ३६ पर्व्व चाजगरं३७न्ततः । मार्कण्डेयसमास्या३८ च पर्व्वानन्तरमुच्यते । संवादश्च ततः पर्व्व द्रौपदीसत्यभामयोः३९ । घोषयात्रा४० ततः पर्व्व मृगस्वप्नोद्भव४१स्ततः । व्रीहिद्रौणिक४२माख्यानमैन्द्रद्युम्नं (समास्यान्तर्गतं) तथैव च । द्रौपदीहरणं४३ पर्व्व जयद्रथविमोक्षणम्४४ । पतिव्रताया माहात्म्यं सावित्र्याश्चैवमद्भुतम्४५ । रामोपाख्यान४६मत्रैव पर्व्व ज्ञेयमतः परम् । कुण्डलाहरणं४७ पर्व्व ततः परमिहोच्यते । आरणेयं४८न्ततः पर्व्व (४)वैराटन्तदनन्तरम् । पाण्डवानां प्रवेशश्च४९ समयस्य च पालनम् । कीचकानां वधः५० पर्व्व पर्व्व गोग्रहणं५१न्ततः । अभिमन्योश्च वैराट्या पर्व्व वैवाहिकं ५२ स्मृतम् । (५)उद्योगपर्व्व विज्ञेयमत ऊर्द्ध्वं महाद्भुतम् । ततः सञ्जययानाख्यं५३ पर्व्व ज्ञेयमतः परम् । प्रजागरस्ततः५४ पर्व्व धृतराष्ट्रस्य चिन्तया । पर्व्व सनत्सुजातं ५५ वै गुह्यमध्यात्मदर्शनम् । यानसन्धि५६स्ततः पर्व्व भगवद्यान५७मेव च । मातलीयमुपाख्यानं चरितं गालवस्य च । सभाप्रवेशः कृष्णस्य विदुरापुत्रशासनम् । ज्ञेयं विवादपर्व्वा५८त्र कर्णस्यापि महात्मनः । निर्य्याणञ्च५९ ततः पर्व्व कुरुपाण्डवसेनयोः । रथातिरथसंख्या६० च पर्व्वोक्तं तदनन्तरम् । उलूकदूतागमनं ६१ पर्व्वामर्षविवर्द्धनम् । अम्बोपाख्यान६२मत्रैव पर्व्व ज्ञेयमतः परम् । भीष्माभिषेचनं(६) पर्व्व ततश्चाद्भुतमुच्यते । जम्बूखण्डविनिर्म्माणं६३ पर्व्वोक्तं तदनन्तरम् । भूमिपर्व्व६४ ततः प्रोक्तं द्वीपविस्तारकीर्त्तनम् । पर्व्वोक्तं भगवद्गीता६५ पर्व्व भीष्मवधं६६स्ततः । द्रोणाभिषे(७)चनं पर्व्व संशप्तकवधः६७स्ततः । अभिमन्युवधः६८ पर्व्व प्रतिज्ञा६९ पर्व्व चोच्यते । जयद्रथवधः७० पर्व्व घटोत्कचवध७१स्ततः । ततो द्रोणवधः७२ पर्व्व विज्ञेयं लोमहर्षणम् । मोक्षो७३ नारायणास्त्रस्य पर्व्वानन्तरमुच्यते । कर्णपर्व्व(८) ततो ज्ञेयं शल्यपर्व्व(९) ततः परम् । ह्रदप्रवेशनं७४ पर्व्व गदायुद्धमतः७५ परम् । सारस्वतं ७६ ततः पर्व्व तीर्थवंशानुकीर्त्तनम् । अत ऊर्द्ध्वं सुबीभत्सं पर्व्व सौप्तिक(१०)मुच्यते । ऐषीकं७७ पर्व्व चोद्दिष्टमत ऊर्द्ध्वं सुदारुणम् । जलप्रदानिकं७८ पर्व्व स्त्रीविलाप(११)स्ततः परम् । श्राद्धपर्व्व७९ ततो ज्ञेयं कुरूणामौर्द्ध्वदेहिकम् । चार्व्वाकस्य वधः८० पर्व्व रक्षसो ब्रह्मरूपिणः । आभिषेचनिकं८१

पर्व धर्म्मराजस्य धीमतः । प्रतिभागोऽ८२ महाभाग्य पर्वोक्तं तदनन्तरम् । शान्तिपर्व(१२) ततो यत्र राजधर्म्मानुशासनम्८३ । आपद्धर्म्मश्च८४ पर्वोक्तं मोक्षधर्म८५स्ततः परम् । शुकप्रश्नाभिगमनं ब्रह्मप्रश्नानुशासनम् । प्रादुर्भावश्च दुर्वासःसंवादश्चैव मायया । ततः पर्व परिज्ञेयमानुशासनिकम्(१३) परम् । स्वर्गारोहणिकञ्चैव ततो भीष्मस्य धीमतः । ततोऽश्वमेधिकं(१४) पर्व सर्वपापप्रणाशनम् । अनुगीता८६ ततः पर्व ज्ञेयमध्यात्मवाचकम् । पर्व चाश्रमवासा(१५)ख्यं पुत्त्रदर्शनमेव च । नारदागमनं८७ पर्व ततः परिमिहोच्यते । मौषलं(१६) पर्व चोद्दिष्टं ततो घोरं समुदाहृतम् । महाप्रास्थानिकं(१७) पर्व स्वर्गारोहणिकं(१८) ततः । हरिवंशस्ततः पर्व८८ पुराणं खिलसंज्ञितम् । विष्णुपर्व८९ शिशोश्चर्य्या विष्णोः कंसवधस्तथा । भविष्यं पर्व९० चाप्युक्तं खिलेष्वेवाद्भुतं महत् । एतत् पर्व शतं पूर्णं व्यासेनोक्तं महात्मना । (महापर्वरहितं किञ्चिदधिकशतपर्व्वात्रेति बोध्यम्) । यथावत् सूतपुत्त्रेण लौमहर्षणिना ततः । उक्तानि नैमिषारण्ये पर्व्वाण्यष्टादशैव तु । समासो भारतस्यायमत्रोक्तः पर्वसंग्रहः । पौष्यं पौलोममास्तीकमादिरं(वं)शावतारणम् । ततो जतुवेश्माख्यं हिडिम्बवकयोर्वधः । तथा चैत्ररथं देव्याः पाञ्चाल्याश्च स्वयंवरः । क्षात्रधर्म्मेण निर्जित्य ततो वैवाहिकं स्मृतम् । विदुरागमनञ्चैव राज्यलम्भस्तथैव च । वनवासोऽर्जुनस्यापि सुभद्राहरणं ततः । हरणाहरणञ्चैव दहनं खाण्डवस्य च । मयस्य दर्शनञ्चैव आदिपर्वणि कथ्यते । पौष्ये पर्वणि माहात्म्यमुत्तङ्कस्योपवर्णितम् । पौलोमे भृगुवंशस्य विस्तारः परिकीर्त्तितः । आस्तीके सर्वनागानां गरुडस्य च सम्भवः । क्षीरोदमथनञ्चैव जन्मोच्चैःश्रवसस्तथा । यजतः सर्पसत्रेण राज्ञः पारीक्षितस्य च । कथेयमभिनिर्वृत्ता भारतानां महात्मनाम् । विविधाः सम्भवा राज्ञामुक्ताः सम्भवपर्वणि । अन्येषाञ्चैव शूराणामृषेर्द्वैपायनस्य च । अंशावतारणञ्चात्र देवानां परिकीर्त्तितम् । दैत्यानां दानवानाञ्च । यक्षाणाञ्च महौजसाम् । नागानामथ सर्पाणां गन्धर्व्वाणां पतत्त्रिणाम् । अन्येषाञ्चैव भूतानां विविधानां समुद्भवः । महर्षेराश्रमपदे कण्वस्य च तपस्विनः । शकुन्तलायां दुष्मन्ताद्भरतश्चापि जज्ञिवान् । यस्य लोकेषु नाम्नेदं प्रथितं भारतं कुलम् । वसूनां पुनरुत्पत्तिर्भागीरथ्यां महात्मनाम् । शान्तनोर्वेश्मनि पुनस्तेषाञ्चारोहणं दिवि । तेजोऽंशानाञ्च सम्पातो भीष्मस्याप्यत्र सम्भवः । राज्यान्निवर्त्तनं तस्य ब्रह्मचर्य्यव्रते स्थितिः । प्रतिज्ञापालनञ्चैव रक्षा चित्राङ्गदस्य च । हते चित्राङ्गदे चैव रक्षा भ्रातुर्यवीयसः । विचित्रवीर्य्यस्य तथा राज्ये सम्प्रतिपादनम् । धर्म्मस्य नृषु सम्भूतिरणीमाण्डव्यशापजा । कृष्णद्वैपायनाच्चैव प्रसूतिर्वरदानजा । धृतराष्ट्रस्य पाण्डोश्च पाण्डवानाञ्च सम्भवः । वारणावतयात्रायां मन्त्रो दुर्य्योधनस्य च । कूटस्य धार्त्तराष्ट्रेण प्रेषणं पाण्डवान् प्रति । हितोपदेशश्च पथि धर्म्मराजस्य धीमतः । विदुरेण ततो यत्र हितार्थं म्लेच्छभाषया । विदुरस्य च वाक्येन सुरङ्गोपक्रमक्रिया । निषाद्याः पञ्चपुत्त्रायाः सुप्ताया जतुवेश्मनि । पुरोचनस्य चात्रैव दहनं सम्प्रकीर्त्तितम् । पाण्डवानां वने घोरे हिडिम्बायाश्च दर्शनम् । तत्रैव च हिडिम्बस्य वधो भीमान्महाबलात् । घटोत्कचस्य चोत्पत्तिरत्रैव परिकीर्त्तिता । महर्षेर्दर्शनञ्चैव व्यासस्यामिततेजसः । तदाज्ञयैकचक्रायां ब्राह्मणस्य निवेशने । अज्ञातचर्य्यया वासो यत्र तेषां प्रकीर्त्तितः । वकस्य निधने चैव नागराणाञ्च विस्मयः । सम्भवश्चैव कृष्णाया धृष्टद्युम्नस्य चैव हि । ब्राह्मणात् समुपश्रुत्य व्यासवाक्यप्रचोदिताः । द्रौपदीं प्रार्थयन्तस्ते स्वयंवरदिदृक्षया । पाञ्चालानभितो जग्मुर्यत्र कौतूहलान्विताः । अङ्गारपर्णं निर्जित्य गङ्गाकूलेऽर्जुनस्तदा । सख्यं कृत्वा ततस्तेन तस्मादेव च शुश्रुवे । तापत्यमथ वाशिष्ठमौर्व्वञ्चाख्यानमुत्तमम् । भ्रातृभिः सहितः सर्वैः पाञ्चालानभितो ययौ । पाञ्चालनगरे चापि लक्ष्यं भित्त्वा धनञ्जयः । द्रौपदीं लब्धवानत्र मध्ये सर्वमहीक्षिताम् । भीमसेनार्जुनौ यत्र संरब्धान् पृथिवीपतीन् । शल्यकर्णौ च तरसा जितवन्तौ महामृधे । दृष्ट्वा तयोश्च तद्वीर्य्यमप्रमेयममानुषम् । शङ्कमानौ पाण्डवांस्तान् रामकृष्णौ महामती । जग्मतुस्तैः समागन्तुं शालां भार्गववेश्मनि । पञ्चानामेकपत्नीत्वे विमर्शो द्रुपदस्य च । पञ्चेन्द्राणामुपाख्यानमत्रैवाद्भुतमुच्यते । द्रौपद्या देवविहितो विवाहश्चाप्यमानुषः । क्षत्तुश्च धृतराष्ट्रेण प्रेषणं पाण्डवान् प्रति । विदुरस्य च सम्प्राप्तिर्दर्शनं केशवस्य च । खाण्डवप्रस्थवासश्च तथा राज्यार्द्धशासनम् । नारदस्याज्ञया

चैव द्रौपद्याः समयक्रिया । सुन्दोपसुन्दयोस्तद्वदाख्यानं परिकीर्त्तितम् । अनन्तरञ्च द्रौपद्या सहासीनं युधिष्ठिरम् । अनुप्रविश्य विप्रार्थं फाल्गुनो गृह्य चायुधम् । मोक्षयित्वा गृहं गत्वा विप्रार्थं कृतनिश्चयः । समयं पालयन् वीरो वनं यत्र जगाम ह । पार्थस्य वनवासे च उलूप्या पथि सङ्गमः । पुण्यतीर्थानुसंयानं बभ्रुवाहनजन्म च । तत्रैव मोक्षयामास पञ्च सोऽप्सरसः शुभाः । शापाद्ग्राहत्वमापन्ना ब्राह्मणस्य तपस्विनः । प्रभासतीर्थे पार्थेन कृष्णस्य च समागमः । द्वारकायां सुभद्रा च कामयानेन कामिनी । वासुदेवस्यानुमते प्राप्ता चैव किरीटिना । गृहीत्वा हरणं प्राप्ते कृष्णे देवकिनन्दने । अभिमन्योः सुभद्रायां जन्म चोत्तमतेजसः । द्रौपद्यास्तनयानाञ्च सम्भवोऽनुप्रकीर्त्तितः । विहारार्थञ्च गतयोः कृष्णयोर्यमुनामनु । सम्प्राप्तिश्चक्रधनुषोः खाण्डवस्य च दाहनम् । मयस्य मोक्षो ज्वलनाद्भुजङ्गस्य च मोक्षणम् । महर्षेर्मन्दपालस्य शार्ङ्ग्यां तनयसम्भवः । इत्येतदादिपर्वोक्तं प्रथमं बहुविस्तरम् । अध्यायानां शते द्वे तु संख्याते परमर्षिणा । सप्तविंशतिरध्याया व्यासेनोत्तमतेजसा । अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च । श्लोकाश्च चतुरशीतिश्च मुनिनोक्ता महात्मना (१) ।

द्वितीयन्तु सभापर्व बहुवृत्तान्तमुच्यते । सभाक्रिया पाण्डवानां किङ्कराणाञ्च दर्शनम् । लोकपालसभाख्यानं नारदाद्देवदर्शिनः । राजसूयस्य चारम्भो जरासन्धवधस्तथा । गिरिव्रजे निरुद्धानां राज्ञां कृष्णेन मोक्षणम् । तथा दिग्विजयोऽत्रैव पाण्डवानां प्रकीर्त्तितः । राज्ञामागमनञ्चैव सार्हणानां महाक्रतौ । राजसूयेऽर्घसंवादे शिशुपालवधस्तथा । यज्ञे विभूतिं तां दृष्ट्वा दुःखामर्षान्वितस्य च । दुर्य्योधनस्यावहासो भीमेन च सभातले । यत्रास्य मन्युरुद्भूतो येन द्यूतमकारयत् । यत्र धर्मसुतं द्यूते शकुनिः कितवोऽजयत् । यत्र द्यूतार्णवे मग्नां द्रौपदीं नावमर्णवात् । धृतराष्ट्रो महाप्राज्ञः स्नुषां परमदुःखिताम् । तारयामास तां तीर्णां ज्ञात्वा दुर्य्योधनो नृपः । पुनरेव ततो द्यूते समाह्वयत पाण्डवान् । जित्वा स वनवासाय प्रेषयामास तांस्ततः । एतत् सर्व्वं सभापर्व समाख्यातं महात्मना । अध्यायाः सप्ततिर्ज्ञेयास्तथा चाष्टौ प्रसंख्यया । श्लोकानां द्वे सहस्रे तु पञ्च श्लोकशतानि च । श्लोकाश्चैकादश ज्ञेयाः पर्व्वण्यस्मिन् द्विजोत्तमाः” (२) । ( द्वितीयसभापर्व )

“अतःपरं तृतीयन्तु ज्ञेयमारण्यकं महत् । वनवासं प्रयातेषु पाण्डवेषु महात्मसु । पौरानुगमनञ्चैव धर्मपुत्रस्य धीमतः । अन्नौषधीनाञ्च कृते पाण्डवेन महात्मना । द्विजानां भरणार्थञ्च कृतमाराधनं रवेः । धौम्योपदेशात्तिग्मांशुप्रसादादन्नसम्भवः । हितञ्च ब्रुवतः क्षत्तुः परित्यागोऽम्बिकासुतात् । त्यक्तस्य पाण्डुपुत्राणां समीपगमनन्तथा । पुनरागमनञ्चैव धृतराष्ट्रस्य शासनात् । कर्णप्रोत्साहनाच्चैव धार्त्तराष्ट्रस्य दुर्मतेः । वनस्थान् पाण्डवान् हन्तुं मन्त्रो दुर्य्योधनस्य च । तं दुष्टभावं विज्ञाय व्यासस्यागमनं द्रुतम् । निर्याणप्रतिषेधश्च सुरभ्याख्यानमेव च । मैत्रेयागमनञ्चात्र राज्ञश्चैवानुशासनम् । शापोत्सर्गश्च तेनैव राज्ञो दुर्य्योधनस्य च । किर्म्मीरस्य वधश्चात्र भीमसेनेन संयुगे । वृष्णीनामागमश्चात्र पाञ्चालानाञ्च सर्व्वशः । श्रुत्वा शकुनिना द्यूते निकृत्या निर्जितांश्च तान् । क्रुद्धस्यानुप्रशमनं हरेश्चैव किरीटिना । परिदेवनञ्च पाञ्चाल्या वासुदेवस्य सन्निधौ । आश्वासनञ्च कृष्णेन दुःखार्त्तायाः प्रकीर्त्तितम् । तथा सौभवधाख्यानमत्रैवोक्तं महर्षिणा । सुभद्रायाः सपुत्रायाः कृष्णेन द्वारकां पुरीम् । नयनं द्रौपदेयानां धृष्टद्युम्नेन चैव हि । प्रवेशः पाण्डवेयानां रम्ये द्वैतवने ततः । धर्मराजस्य चात्रैव संवादः कृष्णया सह । संवादश्च तथा राज्ञा भीमस्यापि प्रकीर्त्तितः । समीपं पाण्डुपुत्राणां व्यासस्यागमनं तथा । प्रतिस्मृत्याथ विद्याया दानं राज्ञो महर्षिणा । गमनं काम्यके चापि व्यासे प्रतिगते ततः । अस्त्रहेतोर्विवासश्च पार्थस्यामिततेजसः । महादेवेन युद्धञ्च किरातवपुषा सह । दर्शनं लोकपालानामस्त्रप्राप्तिस्तथैव च । महेन्द्रलोकगमनमस्त्रार्थं च किरीटिनः । यत्र चिन्ता समुत्पन्ना धृतराष्ट्रस्य भूयसी । दर्शनं बृहदश्वस्य महर्षेर्भावितात्मनः । युधिष्ठिरस्य चार्त्तस्य व्यसने परिदेवनम् । नलोपाख्यानमत्रैव धर्मिष्ठं करुणोदयम् । दमयन्त्याः स्थितिर्यत्र नलस्य चरितं यथा । तथाक्षहृदयप्राप्तिस्तस्मादेव महर्षितः । लोमशस्यागमस्तत्र स्वर्गात् पाण्डुसुतान् प्रति । वनवासगतानाञ्च पाण्डवानां महात्मनाम् । स्वर्गे प्रवृत्तिराख्याता लोमशेनार्जुनस्य वै । सन्देशादर्जुनस्यात्र तीर्थाभिगमनक्रिया । तीर्थानाञ्च फलप्राप्तिः पुण्यत्व-

श्चापि कीर्त्तितम्। पुलस्त्यतीर्थयात्रा च नारदेन महर्षिणा। तीर्थयात्रा च तत्रैव पाण्डवानां महात्मनाम्। कर्णस्य परिमोक्षोऽत्र कुण्डलाभ्यां पुरन्दरात्। तथा यज्ञविभूतिश्च गयस्यात्र प्रकीर्त्तिता। आगस्त्यमपि चाख्यानं यत्र वातापिभक्षणम्। लोपामुद्राभिगमनमपत्यार्थमृषेस्तथा। ऋष्यशृङ्गस्य चरितं कौमारब्रह्मचारिणः। जामदग्न्यस्य रामस्य चरितं भूरितेजसः। कार्त्तवीर्य्यवधो यत्र हैहयानाञ्च वर्ण्यते। प्रभासतीर्थे पाण्डूनां वृष्णिभिश्च समागमः। सौकन्यमपि चाख्यानं च्यवनो यत्र भार्गवः। शर्य्यातियज्ञे नासत्यौ कृतवान् सोमपीथिनौ। ताभ्याञ्च यत्र स मुनिर्यौवनं प्रतिपादितः। मान्धातुश्चाप्युपाख्यानं राज्ञोऽत्रैव प्रकीर्त्तितम्। जन्तूपाख्यानमत्रैव यत्र पुत्त्रेण सोमकः। पुत्त्रार्थमयजद्राजा लेभे पुत्त्रशतञ्च सः। ततः श्येनकपोतीयमुपाख्यानमनुत्तमम्। इन्द्राग्नी यत्र धर्म्मश्चाप्यजिज्ञासञ्छिविं नृपम्। अष्टावक्रीयमत्रैव विवादो यत्र वन्दिना। अष्टावक्रस्य विप्रर्षेर्जनकस्याध्वरेऽभवत्। नैयायिकानां मुख्येन वरुणस्यात्मजेन च। पराजितो यत्र वन्दी विवादेन महात्मना। विजित्य सागरं प्राप्तं पितरं लब्धवानृषिः। यवक्रीतस्य चाख्यानं रैभ्यस्य च महात्मनः। गन्धमादनयात्रा च वासो नारायणाश्रमे। नियुक्तो भीमसेनश्च द्रौपद्या गन्धमादने। व्रजन् पथि महाबाहुर्दृष्टवान् पवनात्मजम्। कदलीषण्डमध्यस्थं हनूमन्तं महाबलम्। यत्र सौगन्धिकार्थेऽसौ नलिनीं तामधर्षयत्। यत्रास्य युद्धमभवत् सुमहद्राक्षसैः सह। यक्षैश्चैव महावीर्य्यैर्मणिमत्प्रमुखैस्तथा। जटासुरस्य च वधो राक्षसस्य वृकोदरात्। वृषपर्व्वणो राजर्षेस्ततोऽभिगमनं स्मृतम्। आर्ष्टिषेणाश्रमे चैषां गमनं वास एव च। प्रोत्साहनञ्च पाञ्चाल्या भीमस्यात्र महात्मनः। कैलासारोहणं प्रोक्तं यत्र यक्षैर्बलोत्कटैः। युद्धमासीन्महाघोरं मणिमत्प्रमुखैः सह। समागमश्च पाण्डूनां यत्र वैश्रवणेन च। समागमश्चार्ज्जुनस्य तत्रैव भ्रातृभिः सह। अवाप्य दिव्यान्यस्त्राणि गुर्व्वर्थं सव्यसाचिना। निवातकवचैर्युद्धं हिरण्यपुरवासिभिः। निवातकवचैर्घोरैर्दानवैः सुरशत्रुभिः। पौलोमैः कालकेयैश्च यत्र युद्धं किरीटिनः। वधश्चैषां समाख्यातो राज्ञस्तेनैव धीमता। अस्त्रसन्दर्शनारम्भो धर्म्मराजस्य सन्निधौ। पार्थस्य प्रतिषेधश्च नारदेन सुरर्षिणा। अवरोहः पुनश्चैव पाण्डूनां गन्धमादनात्। भीमस्य ग्रहणञ्चात्र पर्व्वताभोगवर्ष्मणा। भुजगेन्द्रेण बलिना तस्मिन् सुगहने वने। अमोचयद्यत्र चैनं प्रश्नानुक्त्वा युधिष्ठिरः। काम्यकागमनञ्चैव पुनस्तेषां महात्मनाम्। तत्रस्थांश्च पुनर्द्रष्टुं पाण्डवान् पुरुषर्षभान्। वासुदेवस्यागमनमत्रैव परिकीर्त्तितम्। मार्कण्डेयस्य च तथा देवर्षेर्नारदस्य च। मार्कण्डेयसमास्यायामुपाख्यानानि सर्व्वशः। पृथोर्वैन्यस्य चाख्यानं यत्रोक्तं परमर्षिणा। संवादश्च सरस्वत्यास्तार्क्ष्यर्षेः सुमहात्मनः। मत्स्योपाख्यानमत्रैव प्रोच्यते तदनन्तरम्। मार्कण्डेयसमास्या च पुराणं परिकीर्त्तितम्। ऐन्द्रद्युम्नमुपाख्यानं धौन्धुमारं तथैव च। पतिव्रतायाश्चाख्यानं तथैवाङ्गिरसं स्मृतम्। द्रौपद्याः कीर्त्तितश्चात्र संवादः सत्यभामया। पुनर्द्वैतवनञ्चैव पाण्डवाः समुपागताः। घोषयात्रा च गन्धर्व्वैर्यत्र बद्धः सुयोधनः। ह्रियमाणस्तु मन्दात्मा मोक्षितोऽसौ किरीटिना। धर्म्मराजस्य चात्रैव मृगस्वप्ननिदर्शनम्। काम्यके काननश्रेष्ठे पुनर्गमनमुच्यते। व्रीहिद्रौणिकमाख्यानमत्रैव बहुविस्तरम्। दुर्व्वाससोऽप्युपाख्यानमत्रैव परिकीर्त्तितम्। जयद्रथेनापहारो द्रौपद्याश्चाश्रमान्तरात्। यत्रैनमन्वयाद्भीमो वायुवेगसमो जवे। चक्रे चैनं पञ्चशिखं यत्र भीमो महाबलः। रामायणमुपाख्यानमत्रैव बहुविस्तरम्। यत्र रामेण विक्रम्य निहतो रावणो युधि। सावित्र्याश्चाप्युपाख्यानमत्रैव परिकीर्त्तितम्। कर्णस्य परिमोक्षोऽत्र कुण्डलाभ्यां पुरन्दरात्। यत्रास्य शक्तिं तुष्टोऽदादेकवीरवधाय च। आरणेयमुपाख्यानं यत्र धर्म्मोऽन्वशात् सुतम्। जग्मुर्लब्धवरा यत्र पाण्डवाः पश्चिमां दिशम्। एतदारण्यकं पर्व्व तृतीयं परिकीर्त्तितम्। अत्राध्यायशते द्वे तु संख्यया परिकीर्त्तिते। एकोनसप्ततिश्चैव तथाध्यायाः प्रकीर्त्तिताः। एकादश सहस्राणि श्लोकानां षट्शतानि च। चतुःषष्टिस्तथा श्लोकाः पर्व्वण्यस्मिन् प्रकीर्त्तिताः"३। (वनपर्व्व)

"अतःपरं निबोधेदं वैराटं पर्व्व विस्तरम्। विराटनगरं गत्वा श्मशाने विपुलां शमीम्। दृष्ट्वा सन्निदधुस्तत्र पाण्डवा ह्यायुधान्युत। यत्र प्रविश्य नगरं छद्मना न्यवसन्त ते। पाञ्चालीं प्रार्थयानस्य कामोपहतचेतसः। दुष्टात्मनो वधो यत्र कीचकस्य वृकोदरात्। पाण्डवान्वेषणा-

ईर्ष्या राज्ञो दुर्य्योधनस्य च । चराः प्रस्थापितास्तत्र निपुणाः सर्व्वतो दिशम् । न च प्रवृत्तिस्तैर्लब्धा पाण्डवानां महात्मनाम् । गोग्रहश्च विराटस्य त्रिगर्त्तैः प्रथमं कृतः । यत्रास्य युद्धं सुमहत् तैरासील्लोमहर्षणम् । ह्रियमाणश्च यत्रासौ भीमसेनेन मोचितः । गोधनञ्च विराटस्य मोचितं यत्र पाण्डवैः । अनन्तरञ्च कुरुभिस्तस्य गोग्रहणं कृतम् । समस्ता यत्र पार्थेन निर्जिताः कुरवो युधि । प्रत्याहृतं गोधनञ्च विक्रमेण किरीटिना । विराटेनोत्तरा दत्ता स्नुषा यत्र किरीटिनः । अभिमन्युं समुद्दिश्य सौभद्रमरिघातिनम् । चतुर्थमेतद्विपुलं वैराटं पर्व्व वर्णितम् । अत्रापि परिसंख्याता अध्यायाः परमर्षिणा । सप्तषष्टिरथो पूर्णा श्लोकानामपि मे शृणु । श्लोकानां द्वे सहस्रे तु श्लोकाः पञ्चाशदेव तु । उक्तानि वेदविदुषा पर्व्वण्यस्मिन् महर्षिणा ४ । (विराटपर्व्व)

"उद्योगपर्व्व विज्ञेयं पञ्चमं शृण्वतः परम् । उपप्लव्ये निविष्टेषु पाण्डवेषु जिगीषया । दुर्य्योधनोऽर्ज्जुनश्चैव वासुदेवमुपस्थितौ । साहाय्यमस्मिन् समरे भवान्नौ कर्त्तुमर्हति । इत्युक्ते वचने कृष्णो यत्रोवाच महामतिः । अयुध्यमानमात्मानं मन्त्रिणं पुरुषर्षभौ । अक्षौहिणीं वा सैन्यस्य कस्य किं वा ददाम्यहम् । वव्रे दुर्य्योधनः सैन्यं मन्दात्मा यत्र दुर्म्मतिः । अयुध्यमानं सचिवं वव्रे कृष्णं धनञ्जयः । मद्रराजञ्च राजानमायान्तं पाण्डवान् प्रति । उपहारैर्वञ्चयित्वा वर्त्मन्येव सुयोधनः । वरदं तं वरं वव्रे साहाय्यं क्रियतां मम । शल्यस्तस्मै प्रतिश्रुत्य जगामोद्दिश्य पाण्डवान् । शान्तिपूर्व्वञ्चाकथयद्यत्रेन्द्रविजयं नृपः । पुरोहितप्रेषणञ्च पाण्डवैः कौरवान् प्रति । वैचित्रवीर्य्यस्य वचः समादाय पुरोधसः । तथेन्द्रविजयञ्चापि यानञ्चैव पुरोधसः । सञ्जयं प्रेषयामास शमार्थी पाण्डवान् प्रति । यत्र दूतं महाराजो धृतराष्ट्रः प्रतापवान् । श्रुत्वा च पाण्डवान् यत्र वासुदेवपुरोगमान् । प्रजागरः संप्रजज्ञे धृतराष्ट्रस्य चिन्तया । विदुरो यत्र वाक्यानि विचित्राणि हितानि च । श्रावयामास राजानं धृतराष्ट्रं मनीषिणम् । तथा सनत्सुजातेन यत्राध्यात्ममनुत्तमम् । मनस्तापान्वितो राजा श्रावितः शोकलालसः । प्रभाते राजसमितौ सञ्जयो यत्र वा विभोः । ऐकात्म्यं वासुदेवस्य प्रोक्तवानर्ज्जुनस्य च । यत्र कृष्णो दयापन्नः सन्धिमिच्छन्महामतिः । स्वयमागाच्छमं कर्त्तुं नगरं नागसाह्वयम् । प्रत्याख्यानञ्च कृष्णस्य राज्ञा दुर्य्योधनेन वै । शमार्थे याचमानस्य पक्षयोरुभयोर्हितम् । दम्भोद्भवस्य चाख्यानमत्रैव परिकीर्त्तितम् । वरान्वेषणमत्रैव मातलेश्च महात्मनः । महर्षेश्चापि चरितं कथितं गालवस्य वै । विदुलायाश्च पुत्रस्य प्रोक्तञ्चाप्यनुशासनम् । कर्णदुर्य्योधनादीनां दुष्टं विज्ञाय मन्त्रितम् । योगेश्वरत्वं कृष्णेन यत्र राज्ञां प्रदर्शितम् । रथमारोप्य कृष्णेन यत्र कर्णोऽनुमन्त्रितः । उपायपूर्व्वं शौटीर्य्यात् प्रत्याख्यातश्च तेन सः । आगम्य हास्तिनपुरादुपप्लव्यमरिन्दम !। पाण्डवानां यथावृत्तं सर्व्वमाख्यातवान् हरिः । ते तस्य वचनं श्रुत्वा मन्त्रयित्वा च यद्धितम् । सांग्रामिकं ततः सर्व्वं सज्जं चक्रुः परन्तपाः । ततो युद्धाय निर्य्याता नराश्वरथदन्तिनः । नगराद्धास्तिनपुराद्बलसंख्यानमेव च । यत्र राज्ञा उलूकस्य प्रेषणं पाण्डवान् प्रति । श्वो भाविनि महायुद्धे दौत्येन कृतवान् प्रभुः । रथातिरथसंख्यानमम्बोपाख्यानमेव च । एतत्सुबहुवृत्तान्तं पञ्चमं पर्व्व भारते । उद्योगपर्व्व निर्द्दिष्टं सन्धिविग्रहमिश्रितम् । अध्यायानां शतं प्रोक्तं षडशीतिर्महर्षिणा । श्लोकानां षट् सहस्राणि तावन्त्येव शतानि च । श्लोकाश्च नवतिः प्रोक्तास्तथैवाष्टौ महात्मना । व्यासेनोदारमतिना पर्व्वण्यस्मिंस्तपोधनाः ! (५) । (उद्योगपर्व्व)

"अतःपरं विचित्रार्थं भीष्मपर्व्व प्रचक्षते । जम्बूखण्डविनिर्म्माणं यत्रोक्तं सञ्जयेन ह । यत्र यौधिष्ठिरं सैन्यं विषादमगमत् परम् । यत्र युद्धमभूद्घोरं दशाहानि सुदारुणम् । कश्मलं यत्र पार्थस्य वासुदेवो महामतिः । मोहजं नाशयामास हेतुभिर्म्मोक्षदर्शिभिः । समीक्ष्याधोक्षजः क्षिप्रं युधिष्ठिरहिते रतः । रथादाप्लुत्य वेगेन स्वयं कृष्ण उदारधीः । प्रतोदपाणिराधावद्भीष्मं हन्तुं व्यपेतभीः । वाक्यप्रतोदाभिहितो यत्र कृष्णेन पाण्डवः । गाण्डीवधन्वा समरे सर्व्वशस्त्रभृताम्वरः । शिखण्डिनं पुरस्कृत्य यत्र पार्थो महाधनुः । विनिघ्नन्निशितैर्बाणैरथाद्भीष्ममपातयत् । शरतल्पगतश्चैव भीष्मो यत्र बभूव ह । षष्ठमेतत् समाख्यातं भारते पर्व्व विस्तृतम् । अध्यायानां शतं प्रोक्तं तथा सप्तदशापरे । पञ्च श्लोकसहस्राणि संख्ययाष्टौ शतानि च । श्लोकाश्च चतुरशीतिरस्मिन् पर्व्वणि कौ-

र्त्तिताः । व्यासेन वेदविदुषा संख्याता भीष्मपर्व्वणि (६) । द्रोणपर्व्व ततश्चित्रं बहुवृत्तान्तमुच्यते । सैनापत्येऽभिषिक्तोऽथ यत्राचार्य्यः प्रतापवान् । दुर्य्योधनस्य प्रीत्यर्थं प्रतिजज्ञे महास्त्रवित् । ग्रहणं धर्म्मराजस्य पाण्डुपुत्त्रस्य धीमतः । यत्र संशप्तकाः पार्थमपनिन्यू रणाजिरात् । भगदत्तो महाराजो यत्र शक्रसमो युधि । सुप्रतीकेन नागेन स हि शान्तः किरीटिना । यत्राभिमन्युं बहवो जघ्नुरेकं महारथाः । जयद्रथमुखा बालं शूरमप्राप्तयौवनम् । हतेऽभिमन्यौ क्रुद्धेन यत्र पार्थेन संयुगे । अक्षौहिणीः सप्त हत्वा हतो राजा जयद्रथः । यत्र भीमो महाबाहुः सात्यकिश्च महारथः । अन्वेषणार्थं पार्थस्य युधिष्ठिरनृपाज्ञया । प्रविष्टौ भारतीं सेनामप्रधृष्यां सुरैरपि । संशप्तकावशेषञ्च कृतं निःशेषमाहवे । अलम्बुषः श्रुतायुश्च जलसन्धश्च वीर्य्यवान् । सौमदत्तिर्व्विराटश्च द्रुपदश्च महारथः । घटोत्कचादयश्चान्ये निहता द्रोणपर्व्वणि । अश्वत्थामापि चात्रैव द्रोणे युधि निपातिते । अस्त्रं प्रादुश्चकारोग्रं नारायणममर्षितः । आग्नेयं कीर्त्त्यते यत्र रुद्रमाहात्म्यमुत्तमम् । व्यासस्य चाप्यागमनं माहात्म्यं कृष्णपार्थयोः । सप्तमं भारते पर्व्व महदेतदुदाहृतम् । यत्र ते पृथिवीपालाः प्रायशो निधनं गताः । द्रोणपर्व्वणि ये शूरा निर्द्दिष्टाः पुरुषर्षभाः । अत्राध्यायशतं प्रोक्तं तथाध्यायाश्च सप्ततिः । अष्टौ श्लोकसहस्राणि तथा नव शतानि च । श्लोका नव तथैवात्र संख्यातास्तत्त्वदर्शिना । पाराशर्य्येण मुनिना संचिन्त्य द्रोणपर्व्वणि (७) ।

अतःपरं कर्णपर्व्व प्रोच्यते परमाद्भुतम् । सारथ्ये विनियोगश्च मद्रराजस्य धीमतः । आख्यातं यत्र पौराणं त्रिपुरस्य निपातनम् । प्रयाणे परुषश्चात्र संवादः कर्णशल्ययोः । हंसकाकीयमाख्यानं तत्रैवाक्षेपसंहितम् । वधः पाण्ड्यस्य च तथा अश्वत्थाम्ना महात्मना । दण्डसेनस्य च ततो दण्डस्य च वधस्तथा । द्वैरथे यत्र कर्णेन धर्म्मराजो युधिष्ठिरः । संशयं गमितो युद्धे मिषतां सर्व्वधन्विनाम् । अन्योन्यं प्रति च क्रोधो युधिष्ठिरकिरीटिनोः । यत्रैवानुनयः प्रोक्तो माधवेनार्ज्जुनस्य हि । प्रतिज्ञापूर्व्वकञ्चापि वक्षो दुःशासनस्य च । भित्त्वा वृकोदरो रक्तं पीतवान् यत्र संयुगे । द्वैरथे यत्र पार्थेन हतः कर्णो महारथः । अष्टमं पर्व्व निर्द्दिष्टमेतद्भारतचिन्तकैः । एकोनसप्ततिः प्रोक्ता अध्यायाः कर्णपर्व्वणि । चत्वार्य्येव सहस्राणि नव श्लोकशतानि च । चतुःषष्टिस्तथा श्लोकाः पर्व्वण्यस्मिन् प्रकीर्त्तिताः (८) । (कर्णपर्व्व)

अतःपरं विचित्रार्थं शल्यपर्व्व प्रकीर्त्तितम् । हतप्रवीरे सैन्ये तु नेता मद्रेश्वरोऽभवत् । यत्र कौमारकाख्यानमभिषेचनकर्म्म च । वृत्तानि रथयुद्धानि कीर्त्त्यन्ते यत्र भागशः । विनाशः कुरुमुख्यानां शल्यपर्व्वणि कीर्त्त्यते । शल्यस्य निधनञ्चात्र धर्म्मराजान्महात्मनः । शकुनेश्च वधोऽत्रैव सहदेवेन संयुगे । सैन्ये च हतभूयिष्ठे किञ्चिच्छिष्टे सुयोधनः । ह्रदं प्रविश्य यत्रासौ संस्तभ्यापो व्यवस्थितः । प्रवृत्तिस्तत्र चाख्याता यत्र भीमस्य लुब्धकैः । क्षेपयुक्तैर्व्वचोभिश्च धर्म्मराजस्य धीमतः । ह्रदात् समुत्थितो यत्र धार्त्तराष्ट्रोऽत्यमर्षणः । भीमेन गदया युद्धं यत्रासौ कृतवान् सह । समवाये च युद्धस्य रामस्यागमनं स्मृतम् । सरस्वत्याश्च तीर्थानां पुण्यता परिकीर्त्तिता । गदायुद्धञ्च तुमुलमत्रैव परिकीर्त्तितम् । दुर्य्योधनस्य राज्ञोऽथ यत्र भीमेन संयुगे । ऊरू भग्नौ प्रसह्याजौ गदया भीमवेगया । नवमं पर्व्व निर्द्दिष्टमेतदद्भुतमर्थवत् । एकोनषष्टिरध्यायाः पर्व्वण्यत्र प्रकीर्त्तिताः । संख्याता बहुवृत्तान्ताः श्लोकसंख्यात्र कथ्यते । त्रीणि श्लोकसहस्राणि द्वे शते विंशतिस्तथा । मुनिना सम्प्रणीतानि कौरवाणां यशोभृता (९) । (शल्यपर्व्व)

"अतःपरं प्रवक्ष्यामि सौप्तिकं पर्व्व दारुणम् । भग्नोरुं यत्र राजानं दुर्य्योधनममर्षणम् । अपयातेषु पार्थेषु त्रयस्तेऽभ्याययू रथाः । कृतवर्म्मा कृपो द्रौणिः सायाह्ने रुधिरोक्षितम् । समेत्य ददृशुर्भूमौ पतितं रणमूर्द्धनि । प्रतिजज्ञे दृढक्रोधो द्रौणिर्यत्र महारथः । अहत्वा सर्व्वपाञ्चालान् धृष्टद्युम्नपुरोगमान् । पाण्डवांश्च सहामात्यान् न विमोक्ष्यामि दंशनम् । यत्रैवमुक्त्वा राजानमपक्रम्य त्रयो रथाः । सूर्य्यास्तमनवेलायामासेदुस्ते महद्वनम् । न्यग्रोधस्याथ महतो यत्राधस्ताद्व्यवस्थिताः । ततः काकान् बहून् रात्रौ दृष्ट्वोलूकेन हिंसितान् । द्रौणिः क्रोधसमाविष्टः पितुर्व्वधमनुस्मरन् । पाञ्चालानां प्रसुप्तानां वधं प्रति मनो दधे । गत्वा च शिविरद्वारि दुर्द्दर्शन्तत्र राक्षसम् । घोररूपमपश्यत् स दिवमावृत्य धिष्ठितम् । तेन व्याघातमस्त्राणां क्रियमाणमवेक्ष्य च । द्रौणिर्यत्र विरूपाक्षं रुद्रमाराध्य सत्वरः । प्रसुप्तान्निशि विश्वस्तान् धृष्टद्युम्नपुरोगमान् । पाञ्चालान् सपरीवारान् द्रौपदेयांश्च सर्व्वशः । कृतवर्म्मणा च सहितः कृपेण च

निजघ्निवान्। यत्रामुच्यन्त ते पार्थाः पञ्च कृष्णबलाश्रयात्। सात्यकिश्च महेष्वासः शेषाश्च निधनं गताः। पाञ्चालानां प्रसुप्तानां यत्र द्रोणसुताद्वधः। धृष्टद्युम्नस्य सूतेन पाण्डवेषु निवेदितः। द्रौपदी पुत्रशोकार्त्ता पितृभ्रातृवधार्द्दिता। कृतानशनसंकल्पा यत्र भर्त्तॄनुपाविशत्। द्रौपदीवचनाद्यत्र भीमो भीमपराक्रमः। प्रियं तस्याश्चिकीर्षन् वै गदामादाय वीर्य्यवान्। अन्वधावत् सुसंक्रुद्धो भारद्वाजं गुरोः सुतम्। भीमसेनभयाद्यत्र दैवेनाभिप्रचोदितः। अपाण्डवायेति रुषा द्रौणिरस्त्रमवासृजत्। मैवमित्यब्रवीत् कृष्णः शमयंस्तस्य तद्वचः। यत्रास्त्रमस्त्रेण च तच्छमयामास फाल्गुनः। द्रौणेश्च द्रोहबुद्धित्वं वीक्ष्य पापात्मनस्तदा। द्रौणिद्वैपायनादीनां शापाश्चान्योन्यकारिताः। मणिं तथा समादाय द्रोणपुत्रान्महारथात्। पाण्डवाः प्रददुर्हृष्टा द्रौपद्यै जितकाशिनः। एतद्वै दशमं पर्व्व सौप्तिकं समुदाहृतम्। अष्टादशास्मिन्नध्यायाः पर्व्वण्युक्ता महात्मना। श्लोकानां कथितान्यत्र शतान्यष्टौ प्रसंख्यया। श्लोकाश्च सप्ततिः प्रोक्ता मुनिना ब्रह्मवादिना। सौप्तिकैषीकसम्बद्धे पर्व्वण्युत्तमतेजसा (१०)। (सौप्तिकपर्व्व)

"अत ऊर्द्ध्वमिदं प्राहुः स्त्रीपर्व्व करुणोदयम्। पुत्रशोकाभिसन्तप्तः प्रज्ञाचक्षुर्नराधिपः। कृष्णोपनीतां यत्रासावायसीं प्रतिमां दृढाम्। भीमसेनद्रोहबुद्धिर्धृतराष्ट्रो बभञ्ज ह। तथा शोकाभितप्तस्य धृतराष्ट्रस्य धीमतः। संसारगहनं बुद्ध्या हेतुभिर्मोक्षदर्शनैः। विदुरेण च यत्रास्य राज्ञ आश्वासनं कृतम्। धृतराष्ट्रस्य चात्रैव कौरवायोधनन्तथा। सान्तःपुरस्य गमनं शोकार्त्तस्य प्रकीर्त्तितम्। विलापो वीरपत्नीनां यत्रातिकरुणः स्मृतः। क्रोधावेशः प्रमोहश्च गान्धारीधृतराष्ट्रयोः। यत्र तान् क्षत्रियान् शूरान् संग्रामेष्वनिवर्त्तिनः। पुत्रान् भ्रातॄन् पितॄंश्चैव ददृशुर्निहतान् रणे। पुत्रपौत्रवधार्त्तायास्तथात्रैव प्रकीर्त्तिता। गान्धार्य्याश्चापि कृष्णेन क्रोधोपशमनक्रिया। यत्र राजा महाप्राज्ञः सर्व्वधर्म्मभृतां वरः। राज्ञां तानि शरीराणि दाहयामास शास्त्रतः। तोयकर्म्मणि चारब्धे राज्ञामुदकदानिके। गूढोत्पन्नस्य चाख्यानं कर्णस्य पृथयात्मनः। सुतस्यैतदिह प्रोक्तं व्यासेन परमर्षिणा। एतदेकादशं पर्व्व शोकवैक्लव्यकारकम्। प्रणीतं सज्जनमनोवैक्लव्याश्रुप्रवर्त्तकम्। सप्तविंशतिरध्यायाः पर्व्वण्यस्मिन् प्रकीर्त्तिताः। श्लोकसप्तशती चापि पञ्चसप्ततिसंयुता। संख्यया भारताख्यानमुक्तं व्यासेन धीमता (११) (स्त्रीपर्व्व)

"अतःपरं शान्तिपर्व्व द्वादशं बुद्धिवर्द्धनम्। यत्र निर्व्वेदमापन्नो धर्म्मराजो युधिष्ठिरः। घातयित्वा पितॄन् भ्रातॄन् पुत्रान् सम्बन्धिमातुलान्। शान्तिपर्व्वणि धर्म्माश्च व्याख्याताः शारतल्पिकाः। राजभिर्व्वेदितव्यास्ते सम्यग्ज्ञानबुभुत्सुभिः। आपद्धर्म्माश्च तत्रैव कालहेतुप्रदर्शिनः। यान् बुद्ध्वा पुरुषः सम्यक् सर्व्वज्ञत्वमवाप्नुयात्। मोक्षधर्म्माश्च कथिता विचित्रा बहुविस्तराः। द्वादशं पर्व्व निर्द्दिष्टमेतत् प्राज्ञजनप्रियम्। अत्र पर्व्वणि विज्ञेयमध्यायानां शतत्रयम्। त्रिंशच्चैव तथाध्याया नव चैव तपोधनाः। चतुर्द्दशसहस्राणि तथा सप्त शतानि च। सप्त श्लोकास्तथैवात्र पञ्चविंशतिसंख्यया (१२)। (शान्तिपर्व्व)

"अत ऊर्द्ध्वन्तु विज्ञेयमनुशासनमुत्तमम्। यत्र प्रकृतिमापन्नः श्रुत्वा धर्म्मविनिश्चयम्। भीष्माद्भागीरथीपुत्रात् कुरुराजो युधिष्ठिरः। व्यवहारोऽत्र कार्त्स्न्येन धर्म्मार्थीयः प्रकीर्त्तितः। विविधानाञ्च दानानां फलयोगाः प्रकीर्त्तिताः। तथा पात्रविशेषाश्च दानानाञ्च परो विधिः। आचारविधियोगश्च सत्यस्य च परा गतिः। माहात्म्यं गवाञ्चैव ब्राह्मणानां तथैव च। रहस्यञ्चैव धर्म्माणां देशकालोपसंहितम्। एतत् सुबहुलाख्यानमनुशासनमुत्तमम्। भीष्मस्यात्रैव सम्प्राप्तिः स्वर्गस्य परिकीर्त्तिता। एतत्त्रयोदशं पर्व्व धर्म्मनिश्चयकारकम्। अध्यायानां शतन्त्वत्र षट्चत्वारिंशदेव तु। श्लोकानान्तु सहस्राणि प्रोक्तान्यष्टौ प्रसंख्यया (१३)। (अनुशासनपर्व्व)

"ततोऽश्वमेधिकं नाम पर्व्व प्रोक्तं चतुर्द्दशम्। तत् संवर्त्तमरुत्तीयं यत्राख्यानमनुत्तमम्। सुवर्णकोषसम्प्राप्तिर्जन्म चोक्तं परीक्षितः। दग्धस्यास्त्राग्निना पूर्व्वं कृष्णात् सञ्जीवनं पुनः। चर्य्यायां हयमुत्सृष्टं पाण्डवस्यानुगच्छतः। तत्र तत्र च युद्धानि राजपुत्रैरमर्षणैः। चित्राङ्गदायाः पुत्रेण पुत्रिकाया धनञ्जयः। संग्रामे बभ्रुवाहेन संशयञ्चात्र दर्शितः। अश्वमेधे महायज्ञे नकुलाख्यानमेव च। अनुगीता तथा प्रोक्ता अश्वमेधमखे पुनः। कथितः शाश्वतो धर्म्मः कृष्णेनार्ज्जुनसन्निधौ। तथा ब्राह्मणगीता च संवादो गुरुशिष्ययोः। इत्याश्वमेधिकं पर्व्व प्रोक्तमेतन्महाद्भुतम्। अध्यायानां शतञ्चैव त्रयोऽध्यायाश्च कीर्त्तिताः। त्रीणि श्लोकसहस्राणि तावन्त्येव शतानि च। विंशतिश्च तथा

श्लोकाः संख्यातास्तत्त्वदर्शिना" (१४ आश्वमेधिकपर्व)।

"ततस्त्वाश्रमवासाख्यं पर्व पञ्चदशं स्मृतम्। यत्र राज्यं समुत्सृज्य गान्धार्य्या सहितो नृपः। धृतराष्ट्राश्रमपदं विदुरश्च जगाम ह। यं दृष्ट्वा प्रस्थितं साध्वी पृथाप्यनुययौ तदा। पुत्रराज्यं परित्यज्य गुरुशुश्रूषणे रता। यत्र राजा हतान् पुत्रान् पौत्रानन्यांश्च पार्थिवान्। लोकान्तरगतान् वीरानपश्यत् पुनरागतान्। ऋषेः प्रसादात् कृष्णस्य दृष्ट्वाश्चर्य्यमनुत्तमम्। त्यक्त्वा शोकं सदारश्च सिद्धिं परमिकां गतः। यत्र धर्मं समाश्रित्य विदुरः सुगतिं गतः। सञ्जयश्च महामात्यो विद्वान् गावल्गणिर्वशी। ददर्श नारदं यत्र धर्मराजो युधिष्ठिरः। नारदाच्चैव शुश्राव वृष्णीनां कदनं महत्। एतदाश्रमवासाख्यं पर्वोक्तं सुमहाद्भुतम्। द्विचत्वारिंशदध्यायाः पर्वैतदभिसंख्यया। सहस्रमेकं श्लोकानां पञ्च श्लोकशतानि च। षडेव च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना" (१५ आश्रमवासपर्व)

"अतःपरं निबोधेदं मौषलं पर्व दारुणम्। यत्र ते पुरुषव्याघ्राः शस्त्रस्पर्शहता युधि। ब्रह्मदण्डविनिष्पिष्टाः समीपे लवणाम्भसः। आपाने पानकलिता दैवेनाभिप्रचोदिताः। एरकारूपिभिर्वज्रैर्निजघ्नुरितरेतरम्। यत्र सर्वक्षयं कृत्वा तावुभौ रामकेशवौ। नातिचक्रमतुः कालं प्राप्तं सर्वहरं महत्। यत्रार्जुनो द्वारवतीमेत्य वृष्णिविनाकृताम्। दृष्ट्वा विषादमगमत् परां चार्त्तिं नरर्षभः। स संस्कृत्य नरश्रेष्ठं मातुलं शौरिमात्मनः। ददर्श यदुवीराणामापाने वैशसं महत्। शरीरं वासुदेवस्य रामस्य च महात्मनः। संस्कारं लम्भयामास वृष्णीनाञ्च प्रधानतः। स वृद्धबालमादाय द्वारवत्यास्ततो जनम्। ददर्शापदि कष्टायां गाण्डीवस्य पराभवम्। सर्वेषाञ्चैव दिव्यानामस्त्राणामप्रसन्नताम्। नाशं वृष्णिकलत्राणां प्रभावानामनित्यताम्। दृष्ट्वा निर्वेदमापन्नो व्यासवाक्यप्रचोदितः। धर्मराजं समासाद्य सन्न्यासं समरोचयत्। इत्येतन्मौषलं पर्व षोड़शं परिकीर्त्तितम्। अध्यायाष्टौ समाख्याताः श्लोकानाञ्च शतत्रयम्। श्लोकानां विंशतिश्चैव संख्यातास्तत्त्वदर्शिना" (१६मौषलपर्व)।

"महाप्रस्थानिकं तस्मादूर्द्ध्वं सप्तदशं स्मृतम्। यत्र राज्यं परित्यज्य पाण्डवाः पुरुषर्षभाः। द्रौपद्या सहिता देव्या महाप्रस्थानमास्थिताः। यत्र तेऽग्निं ददृशिरे लौहित्यं प्राप्य सागरम्। यत्राग्निना चोदितश्च पार्थस्तस्मै महात्मने। ददौ सम्पूज्य तद्दिव्यं गाण्डीवं धनुरुत्तमम्। यत्र भ्रातॄन् निपतितान्द्रौपदीञ्च युधिष्ठिरः। दृष्ट्वा हित्वा जगामैव सर्वाननवलोकयन्। एतत् सप्तदशं पर्व महाप्रस्थानिकं स्मृतम्। तत्राध्यायास्त्रयः प्रोक्ताः श्लोकानाञ्च शतत्रयम्। विंशतिश्च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना"। (१७महाप्रस्थानिकपर्व)।

"स्वर्गपर्व ततो ज्ञेयं दिव्यं यत्तदमानुषम्। प्राप्तं दैवरथं स्वर्गाद्वेष्टवान् यत्र धर्मराट्। आरोढुं सुमहाप्राज्ञ आनृशंस्याच्छुना विना। तामस्याविचलां ज्ञात्वा स्थितिं धर्मे महात्मनः। स्वरूपं यत्र तत्त्यक्त्वा धर्मेणासौ समन्वितः। स्वर्गं प्राप्तः स च तथा यातनां विपुलां भृशम्। देवदूतेन नरको यत्र व्याजेन दर्शितः। शुश्राव यत्र धर्मात्मा भ्रातॄणां करुणागिरः। निदेशे वर्त्तमानानां देशे तत्रैव वर्त्तताम्। अनुदर्शितश्च धर्मेण देवराज्ञा च पाण्डवः। आप्लुत्याकाशगङ्गायां देहं त्यक्त्वा स मानुषम्। स्वधर्मनिर्जितं स्थानं स्वर्गे प्राप्य स धर्मराट्। मुमुदे पूजितः सर्वैः सेन्द्रैः सुरगणैः सह। कथ्यते नरकप्राप्तिः प्रमोक्षश्चात्र कीर्त्त्यते। समागमश्च वीराणां स्वर्गलोके महात्मना। कीर्त्त्यते यत्र विधिवत् स्वर्गसंवाद एव च। स्वानि स्थानानि च प्राप्ता यत्र ते पुरुषर्षभाः। एतदष्टादशं पर्व प्रोक्तं व्यासेन धीमता। अध्यायाः पञ्च संख्याताः पर्वण्यस्मिन्महात्मना। श्लोकानां द्वे शते चैव प्रसंख्याते तपोधनाः। नव श्लोकास्तथैवान्ये संख्याताः परमर्षिणा। (१८स्वर्गारोहणिकपर्व)।

अष्टादशैवमेतानि पर्वाण्युक्तान्यशेषतः। खिलेषु हरिवंशश्च भविष्यञ्च प्रकीर्त्तितम्। विष्णुपर्व शिशोश्चर्य्या विष्णोः कंसवधस्तथा। भविष्यं पर्व चाप्युक्तं खिलेष्वेवाद्भुतं महत्। दश श्लोकसहस्राणि विंशत् श्लोकशतानि च खिलेषु हरिवंशे च संख्यातानि महर्षिणा"। "भारतं श्रुणुयान्नित्यं भारतं परिकीर्त्तयेत्। भारतं भवने यस्य तस्य हस्तगतो जयः" भा०आ० १अ०। भरतस्य अपत्यादि शुभ्रा०ढक् भारतेय तदपत्यादौ पुंस्त्री०।

**भारतवर्ष** पु० न० जम्बुद्वीपान्तर्गते वर्षभेदे जम्बुद्वीपशब्दे ३०४६ पृ० दृश्यम्।

**भारती** स्त्री भृ–अतच्। स्वार्थे प्रज्ञाद्यण्। १वाक्ये तदधिदेवतायां २सरस्वत्यां ३पक्षिभेदे "भारती संस्कृतप्रायो वाग्व्यापारो नराश्रय" इति सा०द० उक्तलक्षणोक्ते

४ऋत्विभेदे च ५सव्याविनाशुपाधिभेदे च स्त्री ।

**भारद्वाज** पु॰ भरद्वाजस्य गोत्रापत्यम् अण् । गोत्रप्रवर्त्तके १मुनिभेदे २द्रोणाचार्य्ये मेदि॰ ३अगस्त्यमुनौ शब्दर॰ ४व्याघ्राटविहगे ५बृहस्पतिपुत्रे च हेमच॰ ६वनकार्पास्यां स्त्री ङीप् । पृषो॰ । भाद्दौजोऽप्यत्र । विदा॰ अञ् ततः अश्वा॰ फक् । भारजायन तद्गोत्रापत्ये पुंस्त्री॰। स्त्रियां ङीप् । भारद्वाजी इत॰। भारद्वाजीपुत्र तत्पुत्रे च च यजुर्वेदस्य वंशस्थः ऋषिभेदः शत॰ब्रा॰१४।८।४।२।

**भारभृत्** त्रि॰ भारं बिभर्त्ति भृ–क्विप् । १भारधारके । २विष्णौ पु॰ "भारभृत् कथितो योगी" विष्णु स॰।

**भारमेय** त्रि॰ भारमस्येदम् शुभ्रा॰ ढक् । भरमसम्बन्धिनि स्त्रियां ङीप् ।

**भारय** पु॰भाषा रयो वेगो यस्य ।(भारद्द) खगभेदे शब्दच॰।

**भारयष्टि** स्त्री भारस्य वहनार्थं यष्टिः शाक॰त॰। भारवहन-दण्डे (बाँक) अमरः ।

**भारव** न॰ भारं वाति वा–क । धनुर्गुणे त्रिका॰।

**भारवाह(ह)** त्रि॰ भारं वहति अण् क्वि वा । भार-वाहिनि स्त्रु । भारवाहकोऽप्यत्र । अमरः स्त्रियां ङीप् खिप्रत्ययान्तस्य यञ्चादावजादौ ङीपि च ऊठ् । भारौहः भारौही ।

**भारवि** पु॰ किरातार्जुनीयकाव्यकारके १कविभेदे । "तावद्भा भारवेर्भाति यावन्माघस्य नोदयः । उदिते च पुनर्माघे भारवेर्भा रवेरिव" उद्भटः । तत्कृते २काव्ये च "उपमा कालिदासस्य भारवेरर्थगौरवम्" उद्भटः ।

**भारवृक्ष** पु॰ भारीभूतो वृक्षः । कालीनामगन्धद्रव्ये शब्दच॰

**भार(ह)हार** त्रि॰ भारं हरति हृ–अण् अच् वा । भार-वाहके तत्रानुद्यमने अच् । उद्यमने तु अण् इतिभेदः ।

**भाराक्रान्त** त्रि॰ ३त॰। १भारेणाक्रान्ते "भाराक्रान्ता नमन-रचना मुदः सुतिरवह्वेः" छन्दोम॰उक्ते २चतुर्दशाक्षर-पादके वर्णवृत्तभेदे स्त्री ।

**भारि** पु॰ इभस्यारिः पृषो॰ । सिंहे हेमच॰ ।

**भारिक** त्रि॰ भारं वहति भार+ठक् । भारवाहके अमरः

**भारिट** पु॰ भाषा रेटति रिट–क । ग्रामचटके खगभेदे राजनि॰ ।

**भारिन्** त्रि॰ भारोऽस्त्यस्य वाहुल्येन इनि । भारवाहके एतत्परस्य मालाशब्दस्य ह्रस्वः । मालभारी । "मल्लिका-मालभारिण्यः" काव्याद॰ ।

**भारुण्ड** पु॰ उत्तरकुरुवर्षस्थे १खगभेदे तदुपक्रमे "भारुण्डा नाम शकुनास्तीक्ष्णतुण्डा भयानकाः । तानिर्हरन्तीह मृतान् दरीषु प्रक्षिपन्ति च" भा॰मो॰ ७अ॰ । २सामभेदे तत्र भ रुडेति पाठभेदः । तत्सामदृष्टरि ३ऋषिभेदे "भा-रुण्डसामगीताभिरथर्वशिरसोद्गतैः" भा॰शा॰६७ अ॰ । तच्च सामार्चिके १।२।२ "इमं स्तोमर्हते" इत्यादिमन्त्रे गेयं साम, मतृकत तुलादानादिपद्धतौ १०२ पृ॰दृष्टव्यम् । "ज्यैष्ठदोहानि सामानि शान्तिकं भारुण्डानि च । प-श्चिमे द्वारपालौ तु पठेताम् सामगौ तथा" विधानपा॰।

**भारूप** न॰ भारूपमस्य । चिदात्मके १ब्रह्मणि २आत्मनि पु॰ ।

**भार्ग** पु॰ भर्गस्य देशभेदस्य राजा अण् । १भर्गदेशन्त्रपे तत्र तद्राजस्य भार्गो॰ स्त्रियां न लुक् । भार्गी । २प्रतर्दनस्य पुत्रभेदे पु॰ हरिवं॰ २९ अ॰ ।

**भार्गभूमि** पु॰ आङ्गिरसे भार्गपुत्रभेदे हरिवं॰ ३अ॰ ।

**भार्गव** पुंस्त्री॰ भृगोरपत्यम् तद्गोत्रापत्यं वा अण् ।।भृगु-वंश्ये बहुत्वे तु अत्रिभृग्वित्यादिना अणो लुक् । भृगवः तद्गोत्रापत्येषु । २शुक्राचार्य्ये ३धन्विनि ४गजे च पु॰ मेदि॰ । तेन प्रोक्ता तेनाधीता ज्ञाता वा अण् । ५वेदप्रसिद्धे विद्याभेदे ६पार्वत्यां ७लक्ष्म्यां ८दूर्वायां च स्त्री मेदि॰ ङीप् । प्राच्ये ९देशभेदे पु॰ । "अन्ना-न्तरा प्रविजया भार्गवाश्चेयमल्लकाः" मार्कण्डे॰। १०द्रुपद-नगरस्थे कुम्भकारभेदे पु॰ भा॰आ॰१९०अ॰। ११मन्वादिके पु॰ भा॰ द्रो॰ १०२अ॰ ।

**भार्गवन** न॰ द्वारकास्थे वनभेदे हरिवं॰ ११७ अ॰ ।

**भार्गवप्रिय** पु॰ ६त॰ । हीरके तस्य शुक्रग्रहप्रियत्वात् तथात्वम् । [भर्गगोत्रापत्ये ।

**भार्गायण** पुंस्त्री॰भर्गस्य गोत्रापत्यं तेगर्त्तं फञ् । तेगर्त्ते

**भार्गी** स्त्री भार्गस्येवमण् । (वामनहाटि)हृक्षभेदे राजनि॰।

**भार्म्य** पु॰ भर्गस्य गोत्रापत्यं गर्गा॰यञ् । चन्द्रवंशे नृपभेदे भाग॰ ९।२१।२४।

**भार्य्या** स्त्री भृ–ण्यत् । १विधिनोढायां स्त्रियाम् २स्त्रीमात्रे ३भरणीयमात्रे त्रि॰। भार्य्याशब्दश्च यूपाहवनीयादिवत् अ-लौकिकसंस्कारसहितस्त्रीबोधकः । तस्याः गुणदोषा यथा "सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रियंवदा । सा भार्य्या या पतिप्राणा सा भार्य्या या पतिव्रता । नित्यस्नाता सुगन्धा च नित्यञ्च प्रियवादिनी । अल्पभुक् अल्पभाषी च सततं मङ्गलैर्युता । सततं धर्म्मबहुला सततञ्च पतिप्रिया । सततं प्रियवक्त्री च सततं भर्त्तृ-कामिनी । पितृदेवक्रियायुक्ता सर्व्वसौभाग्यवर्द्धिनी ।

यस्येदृशी भवेद्भार्य्या देवेन्द्रो न च मानुषः"।
"यस्य भार्य्या विरूपाक्षी कश्मला कलहप्रिया। उत्तरोत्तरवादा स्यात् सा जरा न जरा जरा। यस्य भार्य्या श्रिताऽन्यत्र परवेश्माभिकाङ्क्षिणी। कुक्रिया त्यक्तलज्जा च सा जरा न जरा जरा। यस्य भार्य्या गुणज्ञा च भर्त्तारमनुगामिनी। अल्पाल्पेन तु सन्तुष्टा सा प्रिया न प्रिया प्रिया। दुष्टा भार्य्या शठो मित्रं भृत्याश्चोत्तरदायकाः। ससर्पे च गृहे वासो मृत्युरेव न संशयः। आपत्सु मित्रं जानीयात् युद्धे शूरं धने शुचिम्। भार्य्याञ्च विभवे क्षीणे दुर्भिक्षे च प्रियातिथिम्"। गारुडे १०८।१०९ अ०। "बृहस्पतिरुवाच "यस्य नास्ति सती भार्य्या गृहेषु प्रियवादिनी। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। सुशीला सुन्दरी कान्ता गता यस्य गृहोदरात्। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। भावानुरक्ता वनिता मृता यस्य च सन्ध्या। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। दैवेनापहृता यस्य पतिसाध्वी पतिव्रता। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। यस्य माता गृहे नास्ति भार्य्या चाप्रियवादिनी। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। प्रियाशून्यं गृहं यस्य पूर्णं श्रीधनवस्तुभिः। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। भार्य्यामूला क्रमस्ताः समाप्ताच गृहा गृहाः। गृहिणी च गृहं प्रोक्तं न गृहं गृहमुच्यते। यथाग्निः स्त्रीविहीनस्य दैवे पैत्रे च कर्म्मणि। यत् कर्म्म कुरुते कर्म न तस्य फलभागभवेत्। दाहकशक्तिहीनश्च यथा वह्नि हुताशनः। प्रभाहीनो यथा सूर्य्यः शोभाहीनो यथा शशी। शक्तिहीनो यथा जीवो यथात्मा च तनुं विना। विनाधारं यथाधेयो यथेशः प्रकृतिं विना। न च शक्तो यथा यज्ञः फलदां दक्षिणां विना। कर्म्मिणे च फलं दातुं सामग्रीमूलमेव च। विना स्वर्णं स्वर्णकारो यथाऽशक्तः स्वकर्म्मणि। यथाऽशक्तः कुलालश्च मृत्तिकाश्च विना हिजाः!। तथा गृही न शक्तश्च सन्ततं सर्व्वकर्म्मणि। भार्य्यामूलाश्च गुणाश्च भार्य्यामूला गृहाश्रमाः। भार्य्यामूलं सुखं शश्वद् गृहस्थानां गृहे सदा। भार्य्यामूलो सदा धर्म्मः भार्य्यामूलश्च मङ्गलम्। भार्य्यामूलश्च संसारो भार्य्यामूलश्च गौरवम्। यथा रथश्च रथिनं गृहिण्यास्तु तथा गृहम्। सारथिस्तु यथा तेषां गृहस्थानां तथा प्रिया। सर्व्वरत्नप्रधाना च स्त्रीरत्नं दुष्कुलादपि। सा गृहीता गृहस्थेनैवेत्याह कमलोद्भवः। यथा जलं विना पद्मं पद्मं शोभां विना यथा। तथैव च गृहं शश्वद् गृहिणां गृहिणीं विना"। ब्रह्मवै॰पु॰ प्र॰ ख॰ ५६ अ॰। "तोषयेत् सततं भार्य्यां विधिवत् पाणिपीडिताः। तासां तुष्ट्या तु कल्याणमकल्याणमतोऽन्यथा। सन्तुष्टो भार्य्यया भर्त्ता भर्त्ता भार्य्या तथैव च। यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम्। यया विरज्यते स्वामी सौभाग्यनष्टया। असतीत्वञ्च कर्त्तुं सा स्वादिष्टा भवान्तरे। इहापि लोकेऽवाच्यत्वमधर्म्मञ्चापि विन्दति। न च पितृकुलं स्वामिकुलं तस्याः प्रमोदते। विरुध्यमाने पत्नौ यत् सपत्न्या वा प्रवर्त्तते। अतीव दुःखं भवति तदकल्याणकं तयोः" कालिकापु॰ २० अ॰।

**भार्य्याट** पु॰ भार्य्यां तद्दानमटति अट अण् उप॰ स॰। अन्यस्मै सभार्य्यादानार्थं मन्तरि त्रिका॰।

**भार्य्याटिक** पु॰ भार्य्यया आटो गतिः प्रयोजनमस्य ठक्। १स्त्रीजिते २हरिणभेदे च मेदि॰।

**भार्य्यारु** पु॰ भार्य्यं चार्वं ऋच्छति ऋ उण्। १शैलभेदे २हरिणभेदे। भार्य्यां परभार्य्यामृच्छति ऋ–उण्। ३अनियोगेन परभार्य्यागामिनि च मेदि॰।

**भार्य्यावृक्ष** पु॰ भार्य्येव प्रियत्वात् वृक्षो यस्य। रक्तकदम्बे राजनि॰। [जटाधरः।

**भार्य्योढ़** पु॰ ऊढा भार्य्या येन आहिता॰ वा परनिपातः।

**भाल** न॰ भा–बच्। १ललाटे भ्रुवोरूर्ध्वभागे २तेजसि मेदि॰।

**भालक्रत्** पु॰ गोत्रप्रवर्त्तकभेदे प्रवराध्यायः।

**भालचन्द्र** पु॰ भाले चन्द्रोऽस्य। १शिवे २गणेशे ३दुर्गायां स्त्री।

**भालदर्शन** न॰ भाले दृश्यते कर्म्मणि ल्युट्। १सिन्दूरे बहुव्री॰ भाले दर्शनं नेत्रमस्य। २कपालदीपने महादेवे।

**भालदृश्** पु॰ भाले दृगस्य। त्रिनयने महादेवे हेमच॰।

**भालनेत्र** पु॰ भाले नेत्रमस्य। १शिवे। भालचन्द्रादयोऽप्यत्र। २त्रिनयनायां दुर्गायां स्त्री।

**भालाङ्क** पु॰ भालस्येवाङ्को यस्य भाले अङ्को यस्य वा। १शाकभेदे २करपत्रेऽस्त्रे (करात) ३रोहितमत्स्ये महालक्षणविशेषललाटचिह्नयुक्ते ४पुरुषभेदे ५शिवे ६कच्छपे च मेदि॰। [उज्ज्वल॰।

**भालु** पु॰ भाति रोगान् भ उदस्ने ज्ञप् रस्य लः। आदित्ये

**भालु(लू)क** पुंस्त्री॰ पु॰ भल–अवरोधे उक स्वक वा। स्त्रीत्वे

मख्याते पशुभेदे अमरः पाठान्तरम् । स्त्रियां जाति-त्वात् ङीष् ।

भाल्लवि पु० १सामशाखाभेदे २तदध्येतरि च । "तामेतां भाल्लवय उपासते" ताण्ड्य ब्रा० २।२।४ "तामेतां परिवर्त्तिनीं विष्टुतिम् भाल्लविशाखाध्यायिन उपासते" भा० ।

भाल्लू(ल्लु)क पुंस्त्री० भल्लूक+स्वार्थे अण् वा पृषो० ह्रस्वः । जन्तुभेदे भल्लूके स्त्रियां ङीष् ।

भाव पु० भावयति चिन्तयति पदार्थान् चु०भू—अच् । ना-न्योक्तौ नानापदार्थचिन्तके १पण्डिते । भावयति व्याप-यति हृदयमतस् भू—णिच्—अच् । २हृद्गतावस्थाभेदके मानसविकारे खेदकम्पादौ व्यभिचारिभावे । ३सत्ता-दिभावे मेदि० भू-भावे घञ् । ४साध्यरूपे क्रियारूपे वा ४क्रियारूपे धातोरर्थे । ४रागे ५आशये च ६सत्तायां ७चेष्टायाम् ८जन्मनि च अमरः ९विभूतौ । कर्त्तरि च । १०आत्मनि ११बुधे १२जन्तौ करणे घञ् । १४गौरविते १५नभिनयभेदे त्रिका० । १६योनौ १७उपदेशे धरणिः । संसारे भवशब्दार्थे च । ज्यो० उक्ते १८लग्नादितः तन्वादि द्वादशभावे तच्छब्दे १८०२ पृ० तदानयनश्च दृश्यम् । २०स्त्रीणां यौवनकाले सत्त्वभवाष्टाविंशत्यलङ्कारान्तर्गतेऽ-ङ्गजे प्रथमालङ्कारे । यथा "यौवने सत्त्वजास्तासामष्टा-विंशतिसंख्यकाः । अलङ्कारास्तत्र भावहावहेलास्त्रयो-ऽङ्गजाः । तत्र भावः "निर्विकारात्मके चित्ते भावः प्रथमविक्रिया" । जन्मतः प्रभृतिनिर्विकारे मनसि उद्-बुद्धमात्रो विकारो भावः । यथा "स एव सुरभिः कालः स एव मलयानिलः ! सैवेयमबला किन्तु मनोऽन्यदिव दृश्यते" सा०द० । भावस्य लक्षणान्तरं यथा "शरीरे-न्द्रियवर्गस्य विकाराणां विधायकाः । भावा विभाव-जनिताश्चित्तवृत्तय ईरिताः पुराणे नाट्यशास्त्रे च द्वयोस्तु रतिभावयोः । समानार्थतया चात्र द्वयमैक्येन लक्ष्यते" । २१ग्रहाणां द्वादशविधचेष्टाभेदे तदानयनं फलं च ज्यो०त० उक्तं यथा

"शयनञ्चोपवेशञ्च नेत्रपाणिः प्रकाशनम् । गमनं गम-नेच्छा च सभायां वसतिस्तथा । आगमनं भोजनञ्च नृत्यलिप्सा च कौतुकम् । निद्रा ग्रहाणां भावाश्च द्वादशैते प्रकीर्त्तिताः" । भावानयनक्रमो यथा "यद्राशौ विद्यते खेटस्तेन तं परिपूरयेत् । पुनरंशेन संपूर्य ऋक्षं तत्र नियोजयेत् । जातदण्डं तथा लग्नमेकीकृत्य यदा बुधैः । रविणा भागहारेण शेषं कार्यं नियोजयेत्" ।

रंशेन ग्रहसंख्यया । ऋक्षं ग्रहाणां जन्मनक्षत्रम् । तद्यथा । "विशाखानलतोयानि मैत्रं भगदैवतं पुष्या पौष्णोत्तम: सर्पो जन्मभान्यर्कतः क्रमात् । अश्वोराशिः । यदा मेषे ग्रहस्तदा १एकपूरितग्रहसंख्याङ्कः । यदा वृषे ग्रहस्तदा २द्विपूरितो ग्रहसंख्याङ्कः कार्य्यः । जाया-सुतमृत्युसुखलग्नत्रिकोणस्थानस्थितपापग्रहाणां नि-द्राशयनभावयोः फलम् "निद्रायाञ्च यदा पापो जायास्थाने शुभं वदेत् । यदि पापः शुभैर्दृष्टो नाशुभैश्च कदाचन । यदि वा शत्रुगेही स्याच्छयने यदि वेक्षितः । तदा नारीधनं तस्य नाशो भवति निश्चितम् । शुभा-शुभैर्यदा दृष्टः शुभग्रहसमन्वितः । नारी च म्रि-यते तस्य प्रथमा च विशेषतः । सुतस्थाने स्थितः पापो निद्रायां शयनेऽपि वा । तदा शुभं भवेत्तस्य नात्र कार्य्या विचारणा । सुखस्थाने लग्नके वा त्रिकोणे वा यदा भवेत् । अपत्यस्य तदा नाशो जायते नात्र संशयः । शुभग्रहो यदा तत्र क्रूरो वा यदि वेक्षितः । तदा प्रथमापत्यस्य नाशो भवति निश्चितम् । मृत्युस्थाने स्थितः पापो निद्रायां शयनेऽपि वा । तदात्मनोऽपमृत्युः स्याद्राजतोऽपरतोऽपि वा । शुभग्रहो यदा तत्र मृ-त्युस्थानेऽपि संस्थितः । तदा च मरणं तस्य मृत्यु-स्थाने विशेषतः । पापग्रहैर्यदा दृष्टः शुभो वा शत्रु-वीक्षितः । तदा तस्य शिरश्छेदो मुनिना परिकीर्त्तितः । एवं क्रमेण बोद्धव्यं ग्रहभावे सुबुद्धिना । बलाबल-विचारेण जायते च शुभाशुभम् । ज्योतिर्विदुश्च स-र्वेषु परिहारः कृतो मया । शयनादिकभावेषु ज्ञातव्य-श्चोपदेशतः । एकादशे वा दशमालये वा धनालये वा यदि वा विलग्ने । पापेन युक्तो न शुभग्रहस्तथापि सिद्धिं महतीं वदन्ति" । ग्रहभेदेन दशाभेदे फलं यथा

"मन्दाग्निः पित्तशूली च जायते शयने नरः१ । उपवेशे भवेच्छिल्पी श्यामवर्णस्तथा नरः२ । नेत्रपाणौ भवेत् क्रूरो जलदोषी भवेन्नरः३ । पुत्रवान् धार्मि-कश्चैव धनवांश्च प्रकाशने४ । गमने च रवेर्जातः कृपणो धनसंयुतः । बहुभाषी क्षमी क्रोधी लुब्ध-चित्तः सदा भवेत् ५ । अल्पभोक्ता शीघ्रगामी दीर्घायु-र्दर्पवल्लभः । शूरः श्रीमान् सुशीलश्च गमनेच्छाभवो नरः६ । सभायाञ्च रवेर्जातः सुखी दाता क्षमी भवेत् । दयालुः पण्डितो धीमान् गुणवान् पण्डित प्रियः७ । आगमने भवेन्मूर्खः कुरूपो धनवान् भ-

भवेत्८। भोजने भक्षको मांसलुब्धो महावपुर्बलीह। सत्यविपत्सौ सुन्दरो वाग्मी पण्डितस्तदाधिपः१०। उत्साही च महाभोगी कौतुके च दिवाकरे११। दाता भोक्ता प्रियः पुत्रकलत्राणां न संशयः। चिह्नं देहे करे चैव गुदे रोगी तथैव च। निद्रायान्तु भवेद्भानोः क्रोधनो रक्तनेत्रकः"१२। इति रवेः।

"शयने च विधौ क्रोधी दरिद्रो बहुलम्पटः१। उपवेशे महारोगी धनवांश्च भवेन्नरः२। नेत्रपाणौ नेत्ररोगी श्लीपदी बहुभाषकः। क्रूरः खलोऽतिशूरश्च जायते च विधौ तदा३। प्रकाशने निशानाथे धनवांश्च भवेन्नरः। दक्षो बुद्धिमान् दाता च परदारेषु लम्पटः ४। खरोगी वित्तहा चैव क्रूरकर्मा धनान्वितः। शिरोरोगी दन्तशूली जायते गमने विधौ५। नानामतिर्महाक्रोधी सम्यद्युक्तो भवेन्नरः। गमनेच्छुविधौ जातो धनहीनो भवेत् तदा६। दाता च धार्मिकश्चैव राजपालो भवेत् सदा। सभायाञ्च विधौ नित्यं जायते पुरुषोत्तमः७। नित्यक्रोधी महादुःखी भवेदागमने विधौ८। भोजने च भवेद्दुःखो भक्षकश्च महातुरः९। यो जातो नृत्यलिप्सायां गुणवान् धार्मिको भवेत्। बहुपुत्रो धनी दाता जायते नात्र संशयः१०। कौतुके च भवेद्रोगी नानाविद्यासु तत्परः। उत्साही च महाक्रोधी जायते च सुनिश्चितम्११। निद्रायां दद्रुरोगी स्यात् क्लेशपापरुजान्वितः। पुत्रशोकमहादुःखी नित्यं भ्रमति मेदिनीम्"१२। इति चन्द्रस्य।

"शयने च कुजे जातो वल्मीकद्रवहिरङ्गकः। अतिक्रोधी महादक्षः क्षपणो जायते नरः१। उपवेशे यदा भौमे जायते च नराधमः। धनवान् क्रूरकर्मा च निष्ठुरो जातिवर्जितः२। नेत्रपाणौ च यो जातोऽक्षिरोगी भवेन्नरः। पुत्रदारधनैर्युक्तो दारिद्र्येणैव दह्यते३। प्रकाशने कुजे जातो धनवान् पण्डितः सुधीः। नारी च म्रियते तस्य प्रथमा च विशेषतः४। गमने च यदा जातः प्रवासी नित्यदुःखितः। शरीरे च भवेद्रोगी कण्डादिकुष्ठदद्रुकः५। प्रवासी गमनेच्छायां गुदरोगी भवेच्च सः। धनहीनः कुकर्मा च जायते क्षितिजस्य च६। सभायाञ्च यदा जातो धार्मिको बहुसम्पदा। गुणवांश्च महादाता शिरोरोगी भवेद् ध्रुवम्"७। कुजस्यागमने नित्यं सञ्जो भवति नान्यथा। कर्णरोगी पित्तशूली जायते च नराधमः८। भोजने भूमिजस्यापि यो जातो मांसलुब्धकः। हठत्कायो महाक्रोधी मिथ्योत्साही धनान्वितः९। कुजस्य नृत्यलिप्सायां यो जातो धनवान् भवेत्। दाता भोक्ता सदा मानी राजपालो भवेच्च सः१०। कौतुके क्षितिजस्यापि जातो भवति पण्डितः। नानाधनेन संयुक्तो बहुपुत्रो हिमार्णवः११। निद्रायां भूमिपुत्रस्य यो जातो मूर्ख एव सः। कलहो बान्धवैः सार्द्धं शोकक्लेशरुजान्वितः१२" इति मङ्गलस्य।

"बुधस्य शयने जातो धनवान् सुखितः सदा। अङ्गच्छेदो भवेद्वापि खञ्जो भवति नान्यथा१। उपवेशे च यो जातः प्रवासी जायते ध्रुवम्। कविताशुभधीयुक्तो गौरवर्णो महाशयः२। नेत्रपाणौ च यो जातः श्लीपदादिरुजान्वितः। चक्षूरोगी विशेषः स्यात् पुत्रनाशो भवेद्ध्रुवम्३। प्रकाशने भवेज्जातो राजपालो धनान्वितः। नानाधनेन संयुक्तो जायते वेदपारगः४। गमने यो नरो जातः प्रवासी नित्यदुःखितः। शरीरे चतनाप्नोति नित्यरुग्णो भवेच्च सः५। यो जातो गमनेच्छायां लम्पटो दुष्टचित्तकः। स्त्रीकथो दुष्टमार्गश्च स नरो बहुभाषकः६। सभायाञ्च बुधे जातो मूर्खो भवति पण्डितः। धनवान् धार्मिकश्चैव चिररोगी भवेत्तु सः७। क्रूरः खलो हतो मूर्खः पापशीलो भवेन्नरः। बुधस्यागमने नित्यं जायते च नराधमः८। भोजने च भवेत् सौख्यं धनहीनो भवेन्नरः। परद्वेषी प्रवासी च शोकमानव्यथान्वितः९। यो जातो नृत्यलिप्सायां धनवान् पण्डितः कविः। उत्साही च महाहृष्टो मनस्वि सततम् ध्रुवम्१०। कौतुके च यदा जातो भवेत् सर्वजनप्रियः। अर्शोरोगी दद्रुयुक्तो धनवानल्पसत्त्वकः११। निद्रायाञ्च यदा जातः सर्वदास्यैकपालताम्। नानाक्लेशमवाप्नोति रोगशोकसमन्वयम्"१२। इति बुधस्य।

"धनवान् लम्पटः श्यामः स्वबन्धुजनान्वितः। जीवस्य शयने जातो मानवो नात्र संशयः१। उपवेशे गुरोर्जातो बहुभाषी च रोगवान्। पशुघाती महाशिल्पी श्लीपदीरोगसंयुतः२। नेत्रपाणौ गुरोर्जातः कामरोगी धनी भवेत्। सतादिस्वरचे नित्यं जायते नात्र संशयः३। गुरोः प्रकाशे धनवान् शिल्पगुण्ये रुजान्वितः। दक्षो लम्पटभाषी च श्यामवर्णो रुजान्वितः४। सर्पभीतो गूढकर्मा साहसी गमनोन्मुखे। परवित्तेन धनवान् पुमान् भवति

वाक्पतौ५ । गुरोश्च गमनेच्छायां जातो भवति मानवः । शूरो धनी प्रवासी च सेवाकर्मणि तत्परः६ । वक्ता दाता च धनवान् राजसेवान्वितो नरः । मूत्ररोगी भवेन्नित्यं सभायां वाक्पतौ स्थिते७ । धार्म्मिकश्चौर्य्यसन्धानी धनी चागमने गुरोः । परदारेषु संलुब्धो जायते नात्र संशयः । भोजने बहुसौख्याढ्यो मांसलुब्धो महाशूरः । कामुकः प्रियवाक्यश्च जायते नात्र संशयः९ । नृत्यलिप्सौ शठो वाग्मी धनवान् सात्त्विकस्तथा । महदैश्वर्य्यसंयुक्तो जीवस्य च भवेन्नरः१० । कौतुके च गुरोर्जातो धनवान् धार्म्मिकः सदा । नित्योत्साही महत्-सत्त्वी भुनक्ति सुखमद्भुतम्११ निद्रायाञ्चैव यो जातश्चक्षूरोगी भवेच्च सः । कृपणो बहुभाषी च दुःखितो भ्रमते महीम्"१२ । इति गुरोः ।

"शुक्रस्य शयने जातो लम्पटो बहुभाषकः । दन्तरोगी महाक्रोधी नीचो भवति निश्चयः१ । उपवेशे तथा जातो बलवान् दाक्षिणः सदा । नित्यप्रवासी रोगी च जायते नीचसंस्थिते२ । नेत्रपाणौ भृगोर्दुःखी रोगशोकसमन्वितः । धनहीनो महारोगी मानवः स्यान्न संशयः३ । भृगोः प्रकाशने जातो विद्याधनसमन्वितः । दाता च धार्म्मिकश्चैव कीर्त्तिमान् जायते नरः४ । शुक्रस्य गमने जातः पादमूले रुजान्वितः । नित्योत्साही महाशिल्पी भवेत्तीर्थगतो रतः५ । गमनेच्छो यदा जातो भ्रातृनाशो भवेद्ध्रुवम् । माता च म्रियते तस्य शैशवे व्याधिसंयुतः६ । सभायाञ्च भृगोर्जातो राजपात्रो महाधनी । कुलशीलो महाढ्यः केवलं मूत्ररोगवान्७ । भृगोरागमने जातो दुःखितो बहुलम्पटः । दद्रुरोगी गुह्यशोषी जायते च नराधमः । शुक्रस्य भोजने जातो बलवान् दाक्षिणः सदा । महाधनी भवेन्नित्यं वाणिज्येन विशेषतः८ । यो जातो नृत्यलिप्सायां स वाग्मी जायते ध्रुवम् । पाण्डित्यं कविता चैव वर्द्धते च दिने दिने । यदि चैव भवेत्पापे मूर्खो भवति निश्चयः । तनुस्थाने विशेषेण राजपात्रो महाधनी । कामुको बहुकान्तश्च परयोषित्प्रियः सदा । महाहृष्टो महानन्दः कौतुकी च भवेत् सदा । बहुपुत्रकलत्रश्च नानासुखसमन्वितः । नीचे तद्विपरीतः स्यात् दुःखशोकसमन्वितः११ । निद्रायाञ्च भृगोर्जातो भवेद्रोगी च निश्चितम् । नित्यक्लेशी महादुःखी जायते नात्र संशयः । जायायाश्च सुतस्थाने यदि निद्रा भृगोर्भवेत् । तदा सर्व्वविनाशः स्याद्विष्णुना परिकीर्त्तितम्" १२ । शुक्रस्य ।

"शयने च शनेर्जातो लम्पटो बहुभाषकः । गुह्यस्थाने भवेद्रोगी कोषवृद्धिश्च जायते । लग्नात् सप्ताष्टमे चैव शयनस्थः शनैश्चरः । तदा नित्यप्रवासी स्यात् स्वल्पव्ययी भवेच्च सः१ । उपवेशे यदा जातः श्लीपदीदद्रुसंयुतः । धनहीनो भवेत् तस्य पीड़ा भवति नित्यशः२ । नेत्रपाणौ यदा जातो मूर्खो भवति पण्डितः । धनवान् धार्म्मिकश्चैव द्विभार्य्यो बहुभाषकः३ । प्रकाशने च यो जातो राजपात्रो भवेच्च सः । नानागुणेन गुणवान् धार्म्मिकः पण्डितः शुचिः" "मतान्तरे 'जायास्थाने च लग्ने च प्रकाशने यदा शनिः । तदा सर्व्वविनाशः स्याज्जातिध्वंसो भवेद् ध्रुवम्४ । गमने च यदा जातः पादमूले रुजान्वितः । तीर्थे च मतिमान्नित्यं पुत्त्रदारैर्विवर्ज्जितः५ । यो जातो गमनेच्छायां श्लीपदीरोगसंयुतः । दन्ताघाती महाक्रोधी कृपणः परनिन्दकः६ । सभायाञ्च शनौ जातः पुत्त्रदारधनैर्युतः । सर्व्वत्र लभते वित्तं नानारत्नसमन्वितम्"७ । आगमने यदा जातो महाक्रोधी रुजान्वितः । सर्पादिभिश्च संदष्टो भ्रातृनाशी भवेद् ध्रुवम्८ । भोजने चैव यो जातो मन्दाग्निश्च महानपि । अर्शोरोगी तथा शूली चक्षूरोगी भवेच्च सः । यो जातो नृत्यलिप्सायां नर्त्तको बहुभाषकः । जीवने दुःखितश्चैव प्रवासी परिदेवकः१० । कौतुके च शनेर्जातो राजपात्रो महाशयः । दाता भोक्ता महाढ्यो धार्म्मिकः पण्डितः शुचिः११ । निद्रायाञ्च शनेर्जातो धनवान् पण्डितः शुचिः । चक्षूरोगी पित्तशूली द्विभार्य्यो बहुपुत्त्रकः । विशेषतश्च धर्म्मस्थे कर्म्मस्थे च कदाचन । यदि दैवाद्भवेन्निद्रा नाशो भवति निश्चितम् । कर्म्मनाशो धर्म्मनाशः क्षुधार्त्तः दुःखितः सदा । नित्यप्रवासी रोगी च कार्य्यनाशः पदे पदे । स्वभिन्नगेहे षष्ठे वा केन्द्रे वा स्वल्पके पुनः । तदा सर्व्वं विचार्य्यञ्च वैपरीत्येन चिन्तनम् । जायायाञ्च सुतस्थाने यदि निद्रा भवेत् पुनः । तदा सर्व्वं शुभं विद्याद्विष्णुना परिकीर्त्तितम्"१२ । शनेः ।

"शयने च यदा राहोर्जन्म यस्य भवेत् पुनः । तस्य क्लेशो महादुःखं जायते च न संशयः१ । उपवेशे च यो जातः श्लीपदीरोगसंयुतः । बहुहानिर्नरेन्द्रस्य पीड़ा भवति नित्यशः२ । नेत्रपाणौ यदा जातश्चक्षूरोगी भवेद् ध्रुवम् । सर्पाघातो महाभीतिर्द्विभार्य्यो बहुभाषकः३ । प्रकाशने च यो जातो धनवान् धा-

र्मिकः पुनः । नित्यप्रवासी चोत्साही सात्त्विको धार्मिकः शुचिः४ । गगने चैव यो जातो नानारोगैर्धनव्ययः । दन्ताघाती महाक्रोधी पिशुनः परनिन्दकः५ । यो जातो शयनेच्छायां बहुपुत्रो महाधनः । पण्डितो गुणवान् दाता जायते च नरोत्तमः६ । सभायाञ्च यदा जातः स्वपक्षो धनसंयुतः । नानागुणेन गुणवान् धार्मिकः पण्डितः शुचिः७ । आगमने च यो जातो लम्पटो बहुभाषकः । सुहृद्बन्धुविनाशः स्याद्दाराक्रोशश्च जायते८ । भोजने च महादुष्टो मन्दाग्निश्च रुजान्वितः । क्षयः कटुवाक्यश्च दुःखितो नित्यसेवकः९ । यो जातो न्त्यलिप्सायां सज्ञो भवति नान्यथा । पुत्रनाशो भवेत् तस्य जायानाशो भवेद् ध्रुवम्१० । कौतुके च यदा जातो गुणैः सर्वैः समन्वितः । नानाधनेन धनवान् राजसेवासु तत्परः । यदि दैवाद् भवेत् लग्ने स्वष्टमे वा कदाचन । तदा सर्वं वैपरीत्यं जायते च न संशय.११ । यो जातो राहुनिद्रायां दुःखितः सर्वतस्तथा । नानास्थाने गतो वापि धनपुत्रविवर्जितः । जायायाश्च सुतस्थाने यातो निद्रां विघुन्तुदः । तदा सर्वं वैपरीत्यं गतजायासमन्वितः१२ । राहोः एवं केतूनाम् ।
२२वैशेषिकोक्तेषु द्रव्यगुणकर्मसामान्यविशेषसमवायात्मकेषु षट्सु पदार्थेषु "द्रव्यादयः पञ्च भावा अनेके समवायिनः" भाषा० "तथा हि पदार्थो द्विविध. भावोऽभावश्च । तत्र भावाः षट् सप्तमस्याभावत्वकीर्तनात्" सि०मु० । अभाव एक इति पदार्थाः सप्त । तत्र द्रव्यादिपञ्चकस्य अनेकत्वविशिष्टं भावत्वं लक्षणं समवायस्य भावत्वेऽपि एकत्वात् न तत्र प्रसङ्गः । तत्र च द्रव्यादिषट्कान्यतमत्वम् भावत्वमिति सि०मु० । सत्तासम्बन्धित्वमिति दिनकरप्रभृतयः । सम्बन्धित्वं समवायसम्बन्धेन तादात्म्येन एकार्थसमवायेन वा बोध्यम् । तेन द्रव्यादित्रिके समवायेन, सत्तायां तादात्म्येन विशेषेषु एकार्थसमवायेन, समवाये स्वात्मकसमवायेन स्वरूपसम्बन्ध विशेषेण सत्तासम्बन्धसत्त्वान्नाप्रसङ्गः" । 'भावो यथा 'नयाऽभावः कार्य्यवत्कारणं सतः" कुसुमा० ।
भू-चिन्तायाम् करणे घञ् । २३अन्तःकरणे "भावदुष्टो न शुध्यति" स्मा०त० । २४तन्त्रोक्ते पश्वाचारादिरूपे "भावस्तु त्रिविधो देवि ! दिव्यवीरपशुक्रमात् । दिव्यवीरौ महाभावौ अधमः पशुभावकः । वैष्णवः पशुभावेन पूजयेत् परमेश्वरम् । शक्तिमन्त्रे वरारोहे ! पशुभावो भयानकः । दिव्ये वीरे महेशानि ! जायते सिद्धिरुत्तमा" ।
धात्वर्थेन साध्यरूपायाः क्रियाया भावत्वमुक्तं यथा "तद् यत्रोभे भावप्रधाने भवतः पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्य्यन्तं, मूर्त्तं सत्त्वभूतं सत्त्वनामभिर्व्रज्या पक्तिरित्यादिभिः सत्त्वानामुपदेशो गौरश्वः पुरुषो हस्तीति भवतीति भावस्य,आस्ते शेते व्रजति तिष्ठतीति" । आलङ्कारिकोक्तभावस्य द्विविधता सञ्चारिव्यभिचारिभेदात् तत्तच्छब्दे दृश्यम् । २५सङ्गीतसङ्केतपदार्थद्योतकहस्तादिचेष्टाभेदे च । "यस्य च क्रियया क्रियान्तरं लक्ष्यते स भावः" इति व्याकरणपरिभाषिते २६पदार्थे च तत्र च सप्तमीत्याकरे स्थितम् । भवतीति भू-कर्त्तरि ण । २७उत्पत्तियुते षड्विकारयुते च पदार्थे भावविकारशब्दे दृश्यम् । २८सांख्यमतसिद्धेषु धर्माधर्मादिषु बुद्धिधर्मेषु "संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्" सां०का० "भावैरधिवासितं धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि भावास्तदन्विता बुद्धिः तदन्वितञ्च सूक्ष्मशरीरमिति तदपि भावैरधिवासितं यथा सुरभिचम्पककुसुमसम्पर्कादस्त्रं तदामोदवासितं भवति तस्माद्भावैरेवाधिवासितत्वात् संसरति" तत्त्वकौ० । तेषां करणाश्रितत्वं कार्य्याश्रितत्वञ्च दर्शितं यथा "सांसिद्धिकाश्च भावाः प्राकृतिका वैकृतिकाश्च धर्माद्याः । दृष्टाः करणाश्रयिणः कार्य्याश्रयिणश्च कललाद्याः" सां०का० "वैकृतिकानैमित्तिकाः प्राकृतिकाः, स्वाभाविकाः सांसिद्धिकाः भावाः यथा सर्गादावादिविद्वान् भगवान् कपिलो महामुनिर्धर्मज्ञानवैराग्यैश्वर्यसम्पन्नः प्रादुर्बभूवेति स्मरन्ति । वैकृतिकाश्च भावाः असांसिद्धिकाः उपायानुष्ठानोत्पन्नाः यथा प्राचेतसप्रभृतीनां महर्षीणाम् । एवमधर्माज्ञानावैराग्यानैश्वर्य्याण्यपि । कार्य्यं शरीरं तदाश्रयिणस्तस्यावस्थाः कललबुद्बुदमांसपेशीकरण्डाङ्गप्रत्यङ्गव्यूहाः गर्भस्थस्य,ततो निर्गतस्य बालस्य बाल्यकौमारयौवनवार्द्धकानीति" त० कौ० । २९तत्तत्पदार्थासाधारणे धर्मे च "भावे त्वतलौ" पा० । भावशब्देनासाधारणधर्म उच्यते । स च तदितरावृत्तित्वे यावत्तद्वृत्तिधर्मः यथा गोत्वमित्यादौ भावार्थकत्वप्रत्ययेन गवेतरावृत्तित्वे सति सकलगोव्यक्तिवृत्तिधर्मो बोध्यते ।

**भावक** पु० भाव+स्वार्थे क । १भावशब्दार्थे मनोविकारे हला० । भू-भावि-वा ण्वुल् । २सत्ताश्रये ३उत्पादके च त्रि० ।

**भावत** त्रि० भू-शतृ भवत् तस्येदम् अण् । उत्पाद्यमानसम्बन्धिनि स्त्रियां ङीप् ।

**भावत्क** त्रि० युष्मदर्थकात् भवच्छब्दात् इदमर्थे पक्षे ठञ्। भवत्सम्बन्धिनि पक्षे छस्। सित्त्वात् पदत्वम्। भवदीय तत्रार्थे त्रि०।

**भावन** न० भू–णिच्–ल्युट्। (भावना) १फलभेदे २विष्णौ पु०। भावे ल्युट् ।३अधिवासने ४चिन्तायाम् ५ध्याने ६पर्य्यालोचनायां वैद्यकोक्ते ७औषधसंस्कारभेदे। भावि–युच्। "व्यापारो भावना सैवोत्पादना सैव च क्रिया" उक्ते ८भवितुर्भवनानुकूलव्यापारभेदे स्त्री शब्दशक्ति शब्दे दृश्यम्। अनुभवजन्ये स्मृतिहेतौ ९संस्कारभेदे स्त्री। "संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने" "अतीन्द्रियोऽसौ विज्ञेयः क्वचित् स्पन्देऽपि कारणम्। भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः। उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत्। स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते" भाषाप०। "भावनाख्य इति। तस्य संस्कारस्य, उपेक्षात्मकज्ञानात् संस्कारानुत्पत्तेरुपेक्षानात्मकनिश्चय इत्युक्तम्। तेनोपेक्षान्यनिश्चयत्वेन संस्कारं प्रति हेतुतेति भावः। ननु स्मरणं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्वं तेनोपेक्षादिस्थले न स्मरणम् इत्यस्तु संस्कारं प्रति ज्ञानत्वेनैव हेतुतास्त्विति चेन्न विनिगमनाविरहेणापि संस्कारं प्रति उपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात्। किञ्च उपेक्षास्थले संस्कारकल्पनाया गुरुत्वात् संस्कारं प्रति चोपेक्षान्यत्वेन हेतुतायाः सिद्धत्वात्। तत्र प्रमाणं दर्शयति। स्मरणे इति। असौ संस्कारः स्मरणं प्रत्यभिज्ञानञ्च जनयति। अतः संस्कारः कल्प्यते। विना व्यापारं पूर्वानुभवस्य स्मरणादिजननासामर्थ्यं स्वव्यापारान्यतराभावे कारणत्वासम्भवात्। न च प्रत्यभिज्ञां प्रति तत्तत्संस्कारस्य हेतुत्वेन प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यम्। अप्रयोजकत्वात्। परे तु अनुद्बुद्धसंस्कारात् प्रत्यभिज्ञानुदयादुद्बुद्धसंस्कारस्य हेतुत्वापेक्षया तत्तत्स्मरणस्यैव प्रत्यभिज्ञां प्रति हेतुत्वं कल्प्यत इत्याहुः" सि०मु०। भू–चिन्तायां युच् ।१०चिन्तायां स्त्री। चिन्ता च मानसवृत्तिभेदः सा च त्रिविधा यथोक्तं विष्णु पु०६ अं ७अ०। "त्रिविधा भावना विप्र! विश्वमेतन्निबोधत। ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका। ब्रह्मभावात्मिका ह्येका कर्मभावात्मिका परा। उभयात्मिका तथैवान्या त्रिविधा भावभावना। सनन्दनादयो ब्रह्मभावभावनया युताः। कर्मभावनया चान्ये देवाद्याः स्थावराश्चराः। हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा। बोधाधिकारयुक्तेषु विद्यते भावभावना"। बुद्धशब्ददर्शितं बौद्धमतसिद्धभावनाचतुष्टयञ्च दृश्यम्। चु० भू–मिश्रणे भावे युच्। ११निर्यासादिना चूर्णद्रव्यस्य मिश्रीकरणे चूर्णद्रव्यस्य निर्यासादिना संस्कारभेदो भावना तत्प्रमाणमुक्तं भावप्र० यथा "द्रवेण यावन्मानेन चूर्णं सर्वं प्लुतं भवेत्। भावनायाः प्रमाणन्तु चूर्णे प्रोक्तं भिषग्वरैः"।

**भावबोधक** पु०भावस्य रत्यादेर्बोधकः अनुमापकः। रत्याद्यनुमापके १भ्रूभङ्गादिदेहचेष्टाविशेषे २स्वरागादौ च अमरः

**भावय्** त्रि० भावमिच्छति क्यच् उन् वेदे नि०। भावेच्छौ। ऋ०१०।८६।१५। [ङीप्।

**भाववत्** त्रि० भाव+रसा०मतुप् मस्य वः। भावयुते स्त्रियां

**भावविकार** पु० ६त०। यास्कोक्तेषु उत्पत्तियुक्तपदार्थस्य जन्मादिषु षट्सु धर्मेषु "षड्भावविकारा भवन्तीति वार्ष्यायणिः, जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति, जायत इति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे न प्रतिषेधति अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणं, विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारं, वर्धत इति स्वाङ्गाभ्युच्चयं, सांयौगिकानां वार्थानां, वर्धते विजयेनेति वा वर्धते शरीरेणेति वा, अपक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमं, विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति"।

**भाववृत्त** पु०भावे वृत्तः प्रवृत्तः भावो वृत्तो जातो यस्माद्वा। सृष्टिकर्त्तरि ब्रह्मणि "अनुष्टुप् च भवेच्छन्दो भाववृत्तस्तु दैवतम्" स्मृतिः।

**भावाट** पु० भावं भावेन वा अटति अट–अण् अच् वा। १भावके २साधौ ३कामुके ४नटे ५निवेशे च मेदि०। भावे घञ् ६त०। ६भावप्राप्तौ।

**भावानुगा** स्त्री भावं पदार्थमाश्रयं वानुगच्छति गम–ड। १छायायाम् २अभिप्रायानुमन्तरि त्रि० राजनि०।

**भावालीना** स्त्री भावे पदार्थे आलीना। छायायां राजनि०

**भाविक** त्रि० भावेन निर्वृत्तम् ठञ्। १भावसाध्ये पदार्थे २अर्थालङ्कारभेदे ४०१ पृ० दृश्यम्।

**भावित** त्रि० चु०भू–शुद्धौ चिन्तायां मिश्रणे वा कर्मणि क्त। १वासिते २प्राप्ते मेदि०। ३शुद्धे ४चिन्तिते ५मिश्रिते वैद्यकोक्तनिर्यासादिना मिश्रिते ६चूर्णादौ च। वीजग० उक्ते अव्यक्तानेकवर्गसमीकरणेन ७व्यक्तीकरणे।

**भावित** त्रि० भू–सत्तायां णिच्–क्त । १वासिते, मिश्रिते । २प्राप्ते । ३चिन्तिते । ४शोधिते ५उज्ज्वले ।

**भाविन्** त्रि० भू–गत्या० भविष्यति णिनि । १भविष्यत्पदार्थे “भाविनि भूतवदुपचारः” न्यायः । स्त्रियां ङीप् । भावो रत्यादिभावः सात्त्विकभावो वाऽस्त्यस्य एकाचरत्वदन्तत्वेऽपि बाहुल्यार्थे इनि ङीप् । २बहुभावान्वितायां स्त्रियाम् भरतः ३स्त्रीमात्रे राजनि० । ४गन्धर्वकन्याभेदे स्त्री मार्कपु०१२८ तत्र भामिनीति पाठान्तरम् ।

**भावुक** न० भू–उकञ् । १मङ्गले २तद्वति त्रि० अमरः । ३भावनायुते त्रि० हेमच० । “मुकुरस्थो रसिका भुवि भावुकाः” इति भाग०१।१।३ ।

**भाव्य** न० भू–आवश्यके भावे ण्यत् ।१अवश्यम्भवितव्ये । भू–कर्त्तरि यत् भव्य श्चार्थे अच् । २भव्यशब्दार्थे “भावोऽवश्यं यत् भाव्यं तत्र प्रज्ञा न बाधकः” काशि०पु०२८अ० ।

**भाष** वचने भ्वा० आत्म० द्विक० सेट् । भाषते अभाषिष्ट । ऋदित् चङि न ह्रस्वः । उपसर्गपूर्वकस्तु तत्तदुपसर्गद्योतितार्थयुक्तवचने । परि+शास्त्रकारकृते ।

**भाषण** न० भाष–भावे ल्युट् । कथने अमरः । सा०द० उक्ते निर्वहणाङ्गभेदे “सन्धिर्विरोधो ग्रथनम्” इत्युपक्रमे “भाषणं पूर्ववाक्यञ्च” इत्यादिनोद्दिश्य लक्षितं यथा “सामदानादि भाषणम्” ।

**भाषा** स्त्री भाष–अ । १वाक्ये २संस्कृतादिवाक्ये च “अष्टादशभाषावारविलासिनीभुजङ्गः” इति सा०द० । भाषाभेदाश्च प्राकृतशब्दे ४५४८पृ० दर्शिताः । व्यवहारे ३प्रतिज्ञासूचकवाक्ये “यदावेदयते राज्ञे तद्भाषेत्यभिधीयते” इति स्मृतिः । पूर्वपक्षशब्दे ४४०६ पृ० दृश्यम् । ४रागिणीभेदे हला० ।

**भाषासम** न० शब्दालङ्कारभेदे यथोक्तं सा०द० १०परि० । “शब्दैरेकविधैरेव भाषासु विविधास्वपि । वाक्यं यत्र भवेत् सोऽयं भाषासम इतीष्यते” यथा “मञ्जुलमणिमञ्जीरे कलगम्भीरे विहारसरसीतीरे । विरसासि केलिकीरे किमालि ! धीरे च गन्धसारसमीरे” एष श्लोकः संस्कृतप्राकृतशौरसेनीप्राच्यावन्तीनागरापभ्रंशेष्वेकविध एव” ।

**भाषापाद** पु०कर्म० । चतुष्पाद्व्यवहारे प्रतिज्ञासूचके वाक्यरूपे प्रथमेऽंशे पूर्वपक्षशब्दे ४४०६ पृ० दृश्यम् ।

**भाषिक** त्रि०भाषया निर्वृत्तः ठञ् । वेदादिपरिभाषानिर्दिष्टे स्वरे निरु०२।२ । [कात्या०श्रौ०१।१।१८।१० भाष्ये दृश्यम् ।

**भाषिकस्वर** पु० कर्म । मन्त्रेतरवेदभागरूपब्राह्मणे पठितस्वरे

**भाषित** न०भाष–भावे–क्त । १कथने कर्मणि–क्त । २कथिते त्रि० “भाषितपुंस्कात्” पा० । भाषित उक्तः पुमान् येन कप् ।

**भाष्य** न० “सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो जनाः” इत्युक्त लक्षणे १सूत्रव्याख्याग्रन्थभेदे “फणिभाषितभाष्यफक्किका” नैष० । २कथनीये त्रि० ।

**भाष्यकार** पु० भाष्यं करोति कृ–अण् उप०स० । पाणिन्यादिसूत्रभाष्यकारके पतञ्जलिप्रभृतौ भाष्यकाराश्च सूत्रभेदे विभिन्ना यथा पाणिनिसूत्रस्य पतञ्जलिः” ब्रह्मसूत्रस्य शङ्कराचार्यरामानुजादयः । योगसूत्रस्य वेदव्यासः, सांख्यसूत्रस्य विज्ञानभिक्षुः, गौतमसूत्रस्य वात्स्यायनः, कणादसूत्रस्य प्रशस्तपादः । मीमांसासूत्रस्य शवरस्वामी इत्यादयः । “अहस्य भाष्यकारस्य कुशाग्रीयधियाऽप्यमी । नैव शब्दाम्बुधेः पारं किमन्ये जडबुद्धयः” दुर्गसिंहः नैव न सेव गतवन्तावित्यर्थः । क्विप् हृत० । भाष्यकृदप्यत्र ।

**भास** दीप्तौ भ्वा०आत्म०अक०सेट् । भासते अभासिष्ट । चङि वा ह्रस्वः । अबीभसत् त अबभासत् त । ज्ञानविषयत्वे च “प्रकारीभूय भासते” । [मेदि० ४स्वच्छायां धरणिः ।

**भास्** स्त्री भास–सम्प०भावे क्विप् ।१प्रभायाम् अमरः २मयूखे

**भास** पु० भास–भावे घञ् । १दीप्तौ विश्वः आधारे घञ् २गोष्ठे । कर्त्तरि अच् । ३कुक्कुटे ४शकुन्ते च ५शकुन्तेऽपि खगे हेमच० “यन्नार्थमदत्त वस्तु भासः काकोऽथवा भवेत्” स्मृतिः । ६कविभेदे “भासो हासः कविकुलगुरुः कालिदासो विलासः” प्रसन्नरा० ।

**भासद्** न०भसदः कटिदेशस्येदम् अण् । नितम्बे ऋ०१०।१६३ भाष्यम् । यजु०२५।६ वेददीपे तु भासते भास–बा०अदि । भासद् दान्तः तदर्थे इत्युक्तम् ।

**भासन्त** पु० भास–झच् । १सूर्ये २चन्द्रे उणा० ४नक्षत्रे हेमच० । ५सुन्दराकारे त्रि० ६भासपक्षे पुंस्त्री० मेदि० । ७तारायां स्त्री गौरा० उणा० ।

**भासस्** न० भास–भावे असुन् । दीप्तौ सिद्धकौमु० ।

**भासाकेतु** पु० भास–भावे अ । भासा दीप्तिः केतुः इव० । दीप्तिकारके वह्नौ ऋ० १०।२०।३ ।

**भासापुर** न० पुरभेदे ह०स० १६अ० ।

**भासु** पु० भास–उन् । सूर्ये त्रिका० ।

**भासुर** त्रि०भास–घुरच् ।१दीप्तियोगे२स्फटिके च त्रिका०३वीरे पु० धरणिः ४कुष्ठौषधे न०जटा० [(विषाति) राजनि० ।

**भासुरपुष्पी** स्त्री० भासुराणि पुष्पाण्यस्याः । वृश्चिकाली

**भास्कर** पु० भासं करोति भास्+कृ–टच् कस्का० । १सूर्ये

२अग्नौ मेदि०३वीरे धरणिः। ४अर्कवृक्षे ५सिद्धान्तशिरोमणिग्रन्थकृत्पण्डिते। ६स्वर्णे न० राजनि०। ७महादेवे पु० भा० आनु० ८अ०। ८भास्करेण कृते पक्वलवणभेदे न० चक्रदत्तः। भास्करलवणशब्दे दृश्यम्।

**भास्करद्युति** पु०भास्करे द्युतिरस्य। १विष्णौ पु० "चन्द्रांशुर्भास्करद्युतिः" विष्णु स०। "यदादित्यगतं तेज" इत्युक्तेस्तस्य तथात्वम्। ६त०। २सूर्य्यस्य द्युतौ स्त्री।

**भास्करप्रिय** पु० ६त०। पद्मरागमणौ (चुनि)।

**भास्करलवण** न० भास्करनिर्मिते लवणभेदे "पिप्पली पिप्पलीमूलं धन्याकृष्णजीरकम्। सैन्धवञ्च विडञ्चैव पत्रं तालीशकेशरम्। एषां द्विपलिकान् भागान् पञ्चसौवर्चलस्य च। मरिचाजाजिशुण्ठीनामेकैकस्य पलं पलम्। त्वगेले चार्द्धभागे च सामुद्रात् कुडवद्वयम्। दाड़िमात् कुडवञ्चैव द्वे पले चाम्लवेतसात्। एतच्चूर्णितं श्लक्ष्णं गन्धाढ्यममृतोपमम्। लवणं भास्करं नाम भास्करेण विनिर्मितम्। जगतस्तु हितार्थाय वातश्लेष्मामयापहम्। वातगुल्मं निहन्त्येतद्वातशूलानि यानि च। तक्रमस्तुसुरासीधुशुक्तकाञ्जिकयोजितम्। जाङ्गलानान्तु मांसेन रसेषु विविधेषु च। मन्दाग्नेरस्नतः शक्तो भवेदाश्वेव पावकः। अर्शांसि ग्रहणीदोषकुष्ठामयभगन्दरान्। हृद्रोगमामदोषांश्च विविधानुदरस्थितान्। प्लीहानमश्मरीञ्चैव श्वासकासोदरक्रिमीन्। विशेषतः शर्करादीन् रोगान्नानाविधांस्तथा। पाण्डुरोगांश्च विविधान् शमयत्यग्निदर्पणः" चक्रद०।

**भास्करावर्त्त** पु० सुश्रुतोक्ते शिरोरोगभेदे "सूर्य्योदयं या प्रतिमन्दमन्दमक्षिभ्रुवं रुक् समुपैति गाढ़म्। विवर्द्धते चांशुमता सहैव सूर्य्यापवृत्तौ विनिवर्त्तते च। शीतेन शान्तिं लभते कदाचिदुष्णेन जन्तुः सुखमाप्नुयाच्च। तं भास्करावर्त्तमुदाहरन्ति सर्वात्मकं कष्टतमं विकारम्"। [२मुनिभेदे भा० शा० ४७ अ०।

**भास्करि** पु०भास्करस्यापत्यम् इञ्। १वैवस्वते मनौ २कर्णे च।

**भस्करेष्टा** स्त्री ६त०। आदित्यभक्तालतायां राजनि०।

**भास्मन** त्रि० भस्मनो विकारः अण् अनन्तत्वात् न टिलोपः। भस्मविकारे।

**भास्मायन** पु० भस्मनो गोत्रापत्यम् फञ्। भस्मर्षिगोत्रापत्ये ततः स्वार्थे अण् स्त्रियां ङीप् भास्मायन्या तत्रार्थे स्त्री

**भास्वत्** पु० भास्+अस्त्यर्थे मतुप् मस्य वः। १सूर्य्ये २अर्कवृक्षे ३वीरे मेदि० ४दीप्ते त्रि० हेमच०। स्त्रियां ङीप् सा च ५नद्यां श०र० ६उषसि च स्त्री निघण्टुः। ७ज्योतिषनिबन्धभेदे स्त्री यत्र सूर्य्यग्रहणादिनिरूपणमस्ति।

**भास्वर** त्रि० भास–वरच्। १दीप्तियुक्ते २सूर्य्ये ३अग्नौ मेदि० ४दिने ५अर्कवृक्षे च पु०। ६कुष्ठौषधे (कुड़) न० राजनि० ७स्कन्दानुचरभेदे पु० भा० श० ४६ अ०।

**भिक्ष** लाभे लाभायोक्तौ सक० याचने द्विक० क्लेशे अक० भ्वा० आत्म० सेट्। भिक्षते अभिक्षिष्ट बिभिक्षे।

**भिक्षा** स्त्री भिक्ष–अ। १याचञायाम् अमरः। २सेवायां ३भृतौ च मेदि०। उपचारात् ४भिक्षिते वस्तुनि। तत्र ब्रह्मचारिभिक्षाप्रकारः ब्रह्मचर्य्यशब्दे ४५८६ पृ० उक्तः। तथा दानावश्यकत्वम् प्रमाणं च आ०त० मार्कपु०उक्तं यथा "भोजनं हन्तकारं वा अग्रं भिक्षामथापि वा। अदत्त्वा नैव भोक्तव्यं यथाविभवमात्मनः। ग्रासप्रमाणा भिक्षा स्यात् अग्रं ग्रासचतुष्टयम्। अग्राच्चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः"। ग्रासं पलमात्रमिति नव्य वर्द्धमानः"। भिक्षाया दानपात्राणि उक्तानि विष्णु पु० "दद्याच्च भिक्षात्रितयं परिव्राट् ब्रह्मचारिणाम्। स्वेच्छया तु नरो दद्यात् विभवे सत्यवारितम्। इत्येतेऽतिथयः प्रोक्ताः संप्राप्ता भिक्षुकाश्च ये। चतुरः पूजयन्नेतान् नृयज्ञर्णात् प्रमुच्यते"। चकारः पूर्वोक्तातिथिभोजनेन समुच्चयार्थः। सन्न्यासिभिक्षादाने तु "यतिहस्ते जलं दद्यात् भैक्ष्यं दद्यात् पुनर्जलम्। तद्भैक्ष्यं मेरुणा तुल्यं तज्जलं सागरोपमम्"। विष्णुधर्मोत्तरे "चाण्डालो वाथ पापो वा शत्रुर्वा पितृघातकः। देशकालात्ययगतो भरणीयो मतो मम" विष्णु पु०। "व्याधितस्यान्नहीनस्य कुटुम्बात् प्रच्युतस्य च। अध्वानं वा प्रपन्नस्य भिक्षाचर्य्यं विधीयते"। अत्र भिक्षाप्रदाने भोजननिषेधात् मनुष्ययज्ञस्य नित्यत्वाच्च अतिथिप्राप्तेरनित्यत्वात् यज्ञसिद्धये अन्नाभावाय भिक्षादिदानमावश्यकम्। अतएव बौधायनः "अहरहर्ब्राह्मणेभ्योऽन्नं दद्यात् आमूलफलशाकेभ्यः अथैवं मनुष्ययज्ञसमाप्नोति"। विष्णुः भिक्षुकाभावे चाग्रं गोभ्यो दद्यात् अग्नौ वा क्षिपेत्"।

**भिक्षाटन** न० भिक्षार्थमटनम्। भिक्षार्थे गमने तस्य सायं प्रातश्च निषेधो यथा "सायं प्रातर्गृहद्वारं भिक्षार्थं नावघट्टयेत्" कूर्मपु० १५ अ०।

**भिक्षादि** पु० "समूहार्थे भिक्षादिभ्योऽण्" पा० उक्ते अण्प्रत्ययनिमित्ते शब्दगणे स च गणो यथा "भिक्षा गर्भिणी

**भिण्ड** पुंस्त्री० भण–ड पृषो० । वराकृतिरक्तवर्णफले वर्त्तुला-कारबीजे क्षुपभेदे । स्त्रीत्वे टाप् राजनि० गौरा० ङीष् तत्रार्थे [भिण्डीक्षुपे राजनि० ।

**भिण्डीतक** पु० भिण्डो वती तकते तक–हासे अच् ।

**भित्त** न० भिद–क्त नि० तस्य न नः । खण्डे अमरः ।

**भित्ति** स्त्री भिद–क्तिन् । स्फुटादेः कुड्ये (देयाल) २प्रभेदे शब्दरत्ना० । ३अवकाशे ४संविभागे विश्वः । स्वार्थे क । तत्रार्थे संज्ञायां कन् । पत्न्यां हेमच० ।

**भित्तिचोर** पु० भित्त्या कुड्यादिभेदनेन चोरयति चुर-अच् । (सिंधेल) सन्धिभेदकचौरे ।

**भित्तिपातन** पुंस्त्री० भित्तिं कुड्यं पातयति भेदनेन पाति-ल्यु । महामूषिकभेदे राजनि० स्त्रियां जातित्वात् ङीष् ।

**भिद्** द्विधाकरणे विशेषकरणे च रुधा० उभ० सक० अनिट् । भिनत्ति भिन्ते इरित् अभिदत् अभैत्सीत् अभित्त । बि-भेद बिभिदे । भिन्नः । भेत्ता ।

**भिद्** संयकरणे भ्वा० पर० सक० सेट् इदित् । भिन्दति अभिन्दीत्

**भिद्** स्त्री भिद्–सम्प० भावे क्विप् । १भेदे २विशेषकरणे च । कर्त्तरि क्विप् । ३भेत्तरि त्रि० ।

**भिदक** न० भिद–क्वुन् । वज्रे १हीरके । २खड्गे उणा० को०

**भिदा** स्त्री भिद–भावे अङ् । १विदारणे द्वैधीकरणे २विशे-षकरणे च ।

**भिदादि** स्त्री अङ्प्रत्ययनिर्दे शे शब्दगणे स च गणः पा० ग० उक्तो यथा "भिदा छिदा विदा क्षिपा गुहा श्रद्धा मेधा गोधा आरा हारा कारा (बन्धनस्थाने) क्षिपा तारा (ज्योतिषि) धारा रे(ले)खा चूडा पीडा वपा वसा मृजा क्रपा । अत्र छिदा द्वैधीकरण एवान्यत्र छित्तिः । आरा शस्त्र्यामन्यत्र अर्त्तिः । धारा जलप्रवाहेऽन्यत्र धृतिः । गुहा गिर्योषध्योः अन्यत्र गूहिरिति बोध्यम्" ।

**भिदि** पु० भिद–कि । वज्रे हिरूपको० ।

**भिदिर** न० भिद–किरच् । वज्रे त्रिका० ।

**भिदु** न० भिद–कु । वज्रे त्रिका० ।

**भिदुर** न० भिद–कुरच् ।१स्वयंभेदनशीले अमरः । २प्लक्षवृक्षे राजनि० । तस्य सौधभेदकाङ्कुरवत्त्वात् तथात्वम् ।

**भिदेलिम** त्रि० भिद–कर्मकर्त्तरि केलिम । स्वयं भिद्यमाने ।

**भिद्य** पु० भिद–कर्त्तरि क्यप् नदे नि० । नदे हेमच० ।

**भिद्र** न० भिद–रक् । वज्रे त्रिका० ।

**भिन्दिपाल** पु० भिदि विदारणे इन् भिन्दिं भेदनं पाल-यति पालि–अण् । १हस्तक्षेप्ये नालिकास्त्रे, अमर-टीकायां भरतः । हस्तप्रमाणे अस्त्रभेदे क्षीरस्वामी । हेमा० प० तल्लक्षणमन्यत्रोक्तं यथा "भिन्दिपालस्य लक्षणं प्रोच्यते तस्य च आयामो यत्प्रमाणं दण्डस्य च यः परिणाहो यत्संस्थानं द्रव्यादिप्रमाणं यद्गुणमोचौ दुष्टादुष्टाश्च गतयस्तत्सर्वं यथोक्तं वक्ष्यामि यत्नत्र! नि-बोध । तत्र भिन्दिपालस्य दण्डः फलान्वितः सप्तहस्तो ज्येष्ठो भवति द्वादशाङ्गुलहीनो मध्यमो वितस्तिहीनस्तु कनिष्ठो मानतः आहस्तस्य सप्ताङ्गुलपरिणाहः श्रेष्ठो भ-वति मध्यमो द्व्यङ्गुलहीनस्त्र्यङ्गुलहीनस्तु कनिष्ठो भवति मूले परीणाहो ग्राह्यः स च गोपुच्छवत् वेदितव्यो दण्डार्थं पुनः कूटशाल्मलजं वैणवं भद्रसिंहकं खदिरजं वा दारु-मयं वा कारयेत् तन्मया हि दण्डा दृढाः स्युः काला-कुलोत्पादकारिणः कलमना विवर्द्धयन्ति चतुरस्त्रिंश-दवक्रा अवनोद्धारकानमोन्नमनक्षमा पूर्णभारपरी-क्षमाश्च भवन्ति ते नित्यं दण्डेषु कुशलैः शुभलक्षणा विज्ञेया दण्डस्योपरि पत्नं कर्णिकासंस्थानां प्रयोजयेत् क-र्णिका च द्व्यङ्गुलोत्सेधा षडङ्गुला च वेष्टा स्यात् यथा दण्डपरीणाहं वलितां कारयेत् सौवर्णं राजतमयं वा कांस्यं वा ताम्रं वा लौहमयं शार्ङ्गजातमथिजं योजयेत् तदभावे तु वैणवं दृढं वा विदध्यात् भिन्दि-पालफलन्तु विंशत्यङ्गुलप्रमाणं भवति निस्त्रिंशवदग्रम् पीतं सुनिशितधारद्वयं कुर्वीत अष्टादशाङ्गुलप्रमाणं मध्यं, षोडशाङ्गुलप्रमाणं नीचं निर्दिष्टं तत्र यावन्तः फलप्रम-पुण्यानां योनयो दृश्यन्ते तावन्तो भिन्दिपालफलकाः, कर्त्तव्या तथा विस्तारे त्र्यङ्गुलमूले चोष्णकवद्दृढौ महा-ङ्गुलं दण्डमूलं धारयेद्दृढयेत् पूर्वभागे मध्यान्तादिपालै-रित्युत्तमाधममध्यमानां भवेत् दण्डस्य प्रमाणद्विगुणं फलं तस्य गौरवात् भवति तस्माद्दशाङ्गुलं भिन्दिपालफलायामम् ऋजु कार्यं पञ्चभिः पञ्चभिः पत्रैर्वर्द्धिततया यावच्छत-पलं श्रेष्ठं पलापेक्ष यतिकः उत्तमः कर्त्तव्यः अशीति-पलोमध्यमः षष्टिपलो नीचः" ।

**भिन्न** त्रि० भिद–क्त । १विदारिते अमरः २सङ्गते ३अन्यार्थे ४प्रस्फुटिते च मेदि० । ५रोगभेदे न० । "शक्तिकुन्तेषु-खड्गाद्यविषाणैराशयो हतः । यत्किञ्चित् प्रस्रवेत्तद्धि-भिन्नमित्यभिधीयते" भावप्र० । आशयः कोष्ठः ।

**भिन्नक** पु० भिन्नं कं यस्य । बौद्धे त्रिका० । तन्मते विश्वस्य क्षणभङ्गुरत्वेन स्थायिसुखराहित्यात्तस्य तथात्वम् ।

**भिन्नकूट** न० कामन्द० उक्ते बलव्यसनभेदे । तत्र च बल-

देवगन्धर्वभेदे भा० आ० ६५ अ० । आङ्गिरसे वह्निभेदे भा० व० २१९ अ० । १०दानवभेदे भा० स० २२७ अ० । ११अनावसुवंश्ये नृपभेदे हरिवं० २७ अ० । वाच्चतवंश्ये १२नृपभेदे हरिवं० ८६ अ० । १३विदर्भाधीशे नृपभेदे दमयन्तीपितरि तत्कथा भा० व०५१अ० । १४अष्टादशाक्षरमन्त्रभेदे "आदौ मध्ये तथा चान्ते चतुरक्षरयुतो मनुः । ज्ञातव्यो भीम इत्येव वः ज्ञादशादशाक्षरः" तन्त्रसा० ।

**भीमक** पु० पार्वत्यारोषजाते गणभेदे हरिवं० १६८अ० ।

**भीमजानु** पु० यवनभाखे नृपभेदे भा० स० ८अ० ।

**भीमतिथि** स्त्री भीमोपाषिता तिथिः शा०त० । भीमैकादशयाम् माघशुक्लैकादश्याम् ।

**भीमद्वादशी** स्त्री भीमोपाषिता द्वादशी १माघशुक्लद्वादश्याम् तत्र भीमसेनकृते २व्रतभेदे च हेमा० व्र० पद्मपु० ।

**भीमनाद** पु०६ब०। १सिंहे शब्दक० । कर्म० । २भयानकशब्दे पु०

**भीमपराक्रम** त्रि० भीमः पराक्रमोऽस्य । १भयानकपराक्रमे २विष्णौ पु० "भीमो भीमपराक्रमः" विष्णुस० ।

**भीमपुर** न० ६त० । विदर्भराजस्य नगरे कुण्डिनपुरे भीमनगरादयोऽप्यत्र ।

**भीमबल** त्रि० ६ब० । १भयानकवीर्ये २धृतराष्ट्रपुत्रभेदे पु० भा० आ० ६७ अ० । ३वह्निभेदे पु०भा० व० २१९ अ० ।

**भीमयु** स्त्री आत्मनो भीमं इच्छति क्यच् वेदे कि० उन् । आत्मनो इच्छेच्छौ स्त्रीगव्याम् ऋ० ५।५६।३ ।

**भीमरथ** पु० १असुरभेदे गरुडपु० ८६अ० । २धृतराष्ट्रपुत्रभेदे भा० आ० ६७ अ० । ३धन्वन्तरिवंश्ये नृपभेदे हरिवं० २९ अ० । ४दशार्हवंश्ये नृपभेदे हरिवं ३७ अ० । सत्यभामायां जाते वासुदेवस्य ५पुत्रभेदे हरिवं १६२अ० ।

**भीमरथी** स्त्री "सप्तसप्ततिमे वर्षे सप्तमे मासि सप्तमी । रात्रि भीमरथी नाम नराणामतिदुस्तरा" इत्युक्तायां १रात्रौ । "तामतीत्य नरो योऽसौ दिनानि यानि जीवति । क्रतुभिस्तानि तुल्यानि सुवर्णशतदक्षिणैः । अतिः प्रदक्षिणं विष्णोर्जल्पनं मन्त्रधारणम् । ध्यानं निद्रा तथा चास्य भीमरथ्याः फलश्रुतिः" वैद्यके । २नदीभेदे भा०व०८८अ० ।

**भीमरिका** स्त्री सत्यभामागर्भजातायां श्रीकृष्णस्य कन्यायां हरिवं० १६२ अ० ।

**भीमल** त्रि०भियोमलः सम्बन्धो यत । भयङ्करे यजु०३०।६ ।

**भीमविक्रम** पु० १धृतराष्ट्रपुत्रभेदे भा०आ० ६७ अ० । ६ब० । २भयानकविक्रमे त्रि० ।

**भीमविक्रान्त** पु०स्त्री ६ब० । १सिंहे त्रिका० स्त्रियां जातित्वात् ङीप् । ६ब० । २भयानकविक्रमयुते त्रि० ।

**भीमवेग** त्रि० ६ब० । १भयानकवेगयुते २धृतराष्ट्रपुत्रभेदे पु० भा०आ० ६७ अ० । ३दानवभेदे पु०हरिवं २४ अ० ।

**भीमवेगवत्** पु० धृतराष्ट्रपुत्रभेदे भा० आ० १८६ अ० ।

**भीमशर** पु० धृतराष्ट्रपुत्रभेदे भा० आ० ६७ अ० ।

**भीमशासन** पु०भीमं शासनमस्य । १यमे शब्दार्थचिं: भयानकशासनकर्त्तरि २नृपादौ च ।

**भीमसेन** पु० युधिष्ठिरानुजे १मध्यमपाण्डवे २कर्पूरभेदे च शब्दरत्ना० । ३जनमेजयस्य भ्रातृभेदे भा० आ० ३अ० । ४पौरवप्राचीनजनमेजयस्य पुत्रभेदे भा०आ० ९४ अ० ।

**भीमहास** पु० इन्द्रतूले (बुढ़िरसुता) शब्दरत्ना० ।

**भीमा** स्त्री १भीमाख्यायाम् दुर्गायाम् २रोचनाख्यगन्धद्रव्ये शब्दरत्ना० ३कशायां शब्दमाला ४नदीभेदे भा०व०२२२अ० ।

**भीमादेवी** स्त्री भीमाख्या देवी । दुर्गामूर्त्तिभेदे "पुनश्चाहं यदा भीमं रूपं कृत्वा हिमाचले । रक्षांसि भक्षयिष्यामि मुनीनां त्राणकारणात् । तदा मां मुनयः सर्वे स्तोष्यन्त्यानम्रमूर्त्तयः । भीमादेवीतिविख्यातं तन्मे नाम भविष्यति" देवीमा०

**भीमादि** पु० "भीमादयोऽपादाने" पा० अपादाने निपातनसाध्ये शब्दगणे स च गणः पा० ग० उक्तो यथा "भीम भीष्म भयानक वरु चर प्रस्कन्दन प्रपात समुद्र स्रुव स्रुक् दृष्टि रक्षः शङ्कु क्षुक मूर्ख खलति" ।

**भीमैकादशी** स्त्री भीमेनोपाषिता एकादशी शाक० त० । माघशुक्लैकादश्याम् । तत्कर्त्तव्यव्रतादिकं मत्स्यपु०६५ अ० उक्तम् ।

**भीरु** त्रि०भी–क्रु । १भयशीले अमरः । २शतावर्य्यां स्त्री ध-रणिः । ३कण्टकार्य्यां ४शतपादिकायां शब्दर० । ५छागायां इयोर्मेति ७अजायां स्त्री मेदि० । ८इक्षुभेदे पु०शब्दमा० । ९व्याघ्रे राजनि० । १०इक्षुभेदे रत्नमा० ।

**भीरुक** पु० भी–क्रुकन् । १भूमगवे २व्याघ्रे ३इक्षुभेदे च । "वातपित्तप्रशमनो मधुरो रसपाकयोः । सुशीतो वृंहणो बल्यः पौण्ड्रको भीरुकस्तथा" भावप्र० । ४भययुक्ते त्रि० ।

**भीरुकच्छ** पु० देशभेदे मार्कण्डे० ५७ अ० । [अमरः

**भीरुपत्री** स्त्री भीरूणि पत्राणि यस्याः ङीप् । शतमूल्याम्

**भीरुस्थान** न० ६त० अग्रत्यमिति स्थानम् । भीरूणां स्थाने ।

**भीरुहृदय** पु० ६ब० । १मृगे त्रिका० २भयशीलहृदये त्रि० ।

**भीरू** स्त्री भीरु+स्त्रियामूङ् । भयशीलायां नार्य्यां भरतः ।

**भीलु(क)(लूक)** त्रि०भी-क्रु । भयशीले । क्रुकन् । तत्र मत्वे पु०

शब्दरत्ना० पृषो० भीषूक तत्रार्थे मत्के शब्दमा० ।

**भीषक** त्रि० भीषयते भी-णिच्-षुक् ण्वुल् । भयकारके हेमच० ।

**भीषण** पु० भीषयते भी-णिच्-षुक् ल्यु १भयानकरसे २कुन्दुरुके ३हिन्ताले राजनि० ४शल्लक्यां ५ब्रह्मादेवे शब्दरत्ना० ६कपोते च पु० ७गाढे ८दारुणे च त्रि० मेदि० ।

**भीषा** स्त्री भी-णिच्-षुक् भावे अङ् । १भयप्रदर्शने "स्तेनं वा भीषया हरन्" मनुः । स्वार्थे णिच् । २भये च "भीषास्माद्वातः पवते" श्रुतिः । तृतीयास्थाने वेदे आच् ।

**भीष्म** न० भी-णिच्-षुक् अपादाने मक् । १भयानकरसे अमरः । २भयानके त्रि० ३रुद्रे ४राक्षसे पु० हेमच० ५गङ्गागर्भजाते शान्तनुपुत्रभेदे पु० गङ्गाजशब्दे दृश्यम् ।

**भीष्मक** पु० रुक्मिण्याः पितरि नृपभेदे हरिवं० ६१ अ० ।

**भीष्मकेशव** पु० काशीस्थे केशवमूर्त्तिभेदे काशी० ३३अ० ।

**भीष्मजननी** स्त्री ६त० । गङ्गायाम् राजनि० । गङ्गाजशब्दे २४६१ पृ० दृश्यम् ।

**भीष्मपञ्चक** न०भीष्मेण प्राप्तमुपदिष्टं वा पञ्चकम् । कार्त्तिकशुक्लैकादश्यादिषु १पञ्चसु तिथिषु तत्कर्त्तव्ये २व्रतभेदे च । तन्निरुक्तिर्यथा "भीष्मेणैतत् पुरा प्राप्तं व्रतं पञ्च दिनात्मकम् । सकाशात् वासुदेवस्य तेनोक्तं भीष्मपञ्चकम्" हेमा०व्र० नारदपु० । पश्चात् तेन च पाण्डवायोपदिष्टं यथोक्तं तत्रैव "इदं भीष्मेण धर्म्मज्ञ शरतल्पगतेन च । तदेवात्र समाख्यातं दुष्करं भीष्मपञ्चकम्" । तत्कालश्च तत्रोक्तो यथा "कार्त्तिकस्य शुभे पक्षे स्नात्वा सम्यग्धृतव्रतः । एकादश्यान्तु गृह्णीयात् व्रतं पञ्च दिनात्मकम्" । तत्रैव तद्विधानं दृश्यम् ।

**भीष्मरत्न** हिमालयोत्तरदेशजातशुक्लवर्णप्रस्तरविशेषे । तस्योत्पत्त्यादि यथा "सूत उवाच । "हिमवत्युत्तरे देशे वीर्य्यं पतितं सुरद्विषस्तस्य । सम्प्राप्तमाकरतां भीष्मरत्नानाम् । शुक्लाः शङ्खाब्जनिभाः श्योनाकसन्निभाः प्रभावन्तः । प्रभवन्ति ततस्तस्मा वज्रनिभा भीष्मपाषाणाः । हिमाद्रिप्रतिबद्धं शुद्धमपि श्रद्धया विधत्ते यः । भीष्ममणिं ग्रीवादिषु स सम्पदं सर्वदा लभते । शुभयुक्तस्य तस्यैव धारणान्मुनिपुङ्गव ! । विषाणि तानि नश्यन्ति सर्वाण्येव महीतले । विषमा न बाधन्ते ये तमरण्यनिवासिनः समीपेऽपि । द्वीपिवृकशरभकुञ्जरसिंहव्याघ्रादयो हिंस्राः । तस्योत्कवर्जित हर्तिनो भवन्ति भयं न चापि समुपस्थितम् । भीष्ममणिं शुद्धः सम्यक् संप्राप्ताङ्गुलिविन्यस्तः । पितृतर्पणे पितॄणां तृप्तिर्बहुवार्षिकी भवति । शाम्यन्त्युद्धतान्यपि सर्पोन्दुजाम्बुवृश्चिकविषाणि । सलिलाग्निवैरितस्करभयानि भीमानि नश्यन्ति । शैवलवलाहकाभं परुषं पीतप्रभं प्रभाहीनम् । मलिनद्युतिं विवर्णं दूरात् परिवर्जयेत् प्राज्ञः । मूल्यं प्रकल्प्यमेषां विबुधवरैर्देशकालविज्ञानात् । दूरे भूतानां बहु किञ्चिन्निकटप्रसूतानाम्" गारुडे ७६ अ० । भीष्मवत्स्यादयोऽप्यत्र ।

**भीष्मसू** स्त्री भीष्मं सूते सू-क्विप् । गङ्गायाम् अमरः ।

**भीष्माष्टमी** स्त्री ६त० । भीष्मस्य देहत्यागदिवसे माघस्य शुक्लाष्टम्याम् । अतस्तस्मिन् दिने सर्ववर्णैस्तस्य तर्पणं कार्य्यम् यथोक्तं ति० त० भविष्योत्तरे "शुक्लाष्टम्यान्तु माघस्य दद्याद् भीष्माय यो जलम् । संवत्सरकृतं पापं तत्क्षणादेव नश्यति" । धवलष्टता स्मृतिः "अष्टम्यान्तु सिते पक्षे भीष्माय सतिलोदकम् । अत्रस्तु विधिवद्दद्युः सर्वे वर्णा द्विजातयः" । सर्वे इत्युपादानात् ब्राह्मणशूद्रयोरप्यधिकारः । द्विजातय इति सम्बोधनम् "ब्राह्मणस्त्वन्यवर्णानां यः करोत्यौर्द्ध्वदैहिकम् । तद्वर्णत्वमसौ याति इह लोके परत्र च" इति मरीचिवचनन्तु भीष्मान्येतरपरम् । तथा च स्मृतिः । "ब्राह्मणाद्यास्तु ये वर्णा दद्युर्भीष्माय नो जलम् । संवत्सरकृतं तेषां पुण्यं नश्यति सत्तम !" । अपसव्यजलदाननिषेधस्तु प्रकरणादपि श्राद्धादिविषय इति श्रीदत्तः । "आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम्" इत्याशंसामन्त्रे पुत्रपौत्रोचितामित्यभिधानात् पितृकर्मरीत्या तत्र कर्त्तव्यम् । ब्राह्मणः पितृतर्पणानन्तरं क्षत्रियादिकस्तु तत् पूर्वं तर्पयेत् इति संवत्सरप्रदीपादयः । अत्र वीजं वर्ण्यं दृश्यम्" रघु० ।

**भुक्त** त्रि० भुज-कर्मणि क्त । १भक्षिते २कृतभोगे च "भुक्तं भोग्यं रवेस्त्यजेत्" नील०ता० । भावे-क्त । ३भक्षणे न० ।

**भुक्तभोग** त्रि० भुक्तः कृतो भोगो येन । कृतभोगे "जहात्येनां भुक्तभोगामजोऽन्यः" श्वेता० उ० ।

**भुक्तसमुज्झित** त्रि० पूर्वं भुक्तं पश्चात् समुज्झितं त्यक्तम् । भोजनोत्तरं त्यक्ते अन्नादौ ।

**भुक्ति** स्त्री भुज-क्तिन् । १भोजने २रव्यादिग्रहाणां राश्यंशादिषु गमने ३भोगे च "आगमो निष्कलस्तत्र भुक्तिः स्तोकापि यत्र नो" इति स्मृतिः । भुक्तिप्रामाण्यनिर्णयादिकम् आगमशब्दे ६१४ पृ० दृश्यम् । कल-

कश्चिद्विशेषो वीरमित्रोदयग्रन्थे दर्शितो यथा "नारदः "आगमेन विशुद्धेन भोगो याति प्रमाणताम्। अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति। आगमस्याविशुद्धत्वं विरोध्याक्रन्दनं भवेत्"। व्यासः "आगमो दीर्घकालश्च विच्छेदापरवोज्झितः। प्रत्यर्थिसन्निधानञ्च परिभोगोऽपि पञ्चधा"। विच्छेदोऽन्तराय उपरव आक्रोशस्ताभ्यामुज्झितो रहितः। यद्वा- च्छेदो व्यवधानन्तद्विरमवान् विच्छेदो निरन्तर इति यावत्। अपरवो वर्जनविषयोरवः। मदीयं क्षेत्रादि त्वया किमिति भुज्यते इति प्रतिषेधः अपशब्दस्य वर्जनार्थत्वात् तेनोज्झितः। नारदः "सम्भोगं केवलं यस्तु कीर्त्तयेन्नागमं क्वचित्। भोगच्छलापदेशेन विज्ञेयः स तु तस्करः॥ विद्यमानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु। विशेषतः स्थावराणां यन्न भुक्तं न तत् स्थिरम्"। दानविक्रयादेरुपभोगसापेक्षस्यैव स्वत्वोत्पादकत्वात् कियान् भोगस्तोऽप्यवश्यं तत्रा- पेक्ष्यते इत्याशङ्कायामुपपत्तिरुक्ता विज्ञानेश्वराचार्यैः। "दानादेः परस्वत्वापादने परकर्त्तृकस्वीकारापेक्षाऽवश्यम्भावनीया। स्वीकारश्च त्रिविधो मानसो वाचिकः कायिकश्च। ममेदमित्यध्यवसायो मानसः। ममेदमित्याद्यभिलापो वाचिकः। उपादानाभिमर्षनादिरूपेणानेकप्रकारकः कायिकः। तत्र मानसं विना स्वत्वासम्भवात् स त्वावश्यक एव। दानविशेषपुरस्कारेण शब्दप्रयोगविशेषनियमहस्तादिदर्शनादिचेष्टाविशेषनियमाच्च वाचिककायिकावप्यावश्यकावित्यवसीयते। तत्र हिरण्यवस्त्रादौ दातृकर्त्तृकजलत्यागादनन्तरमेव प्रतिग्रहीतुरुपादानादिसम्भवात् त्रिविधोऽपि व्यापारः सम्पद्यते। क्षेत्रादौ तु फलोपभोगं विना कायिकस्वीकारासम्भवादल्पेनाप्युपभोगेनावश्यम्भवितव्यमन्यथा दानविक्रयादेः सम्पूर्णता न भवत्युत्तरकालीनाङ्गीकाराभावात्। तेन भोगरहितादागमात्तराद्विकल आगमो दुर्बलो भवति। एतच्च द्वयोरागमयोः पूर्वापरभावानवगमे तदपगमे तु स्वल्पभोगविकलोऽपि प्राक्तन एवागमो बलवान्। पूर्वेण दानादिना स्वत्वागमे दानाद्यन्तरासम्भवात्। न चैवन्तस्य क्षेत्रादेर्मध्यस्वत्वापत्तिः पूर्वस्वाम्यापगमादुत्तरस्वाम्यानुत्पत्तेश्चेति वाच्यम्। प्रतिश्रुतन्यायेनापेक्षणीयस्वत्वस्य सत्त्वात् पूर्वस्वाम्यसत्त्वेऽपि राज्ञैव प्रतिग्रहीत्रादेः कायिकस्वीकारस्यानिःप्रतिपन्नस्य सम्पादनीयत्वात्"

**भुक्तिप्रद** पु० भुक्तिं भोगं भोजनं वा प्रददाति स्वल्पायासभव्यत्वात्। मुद्गे राजनि० लघुपाकत्वात्तस्य। [भोगे

**भुक्तिसुहित** त्रि० सुहितस्य भुक्तिः मयूर०परनि०। तृप्त-

**भुग्न** त्रि० भुज-मोटने क्त। रोगादिना कुटिलीकृते।

**भुज** मोटने तु०प०सक०अनिट्। भुजति अभौक्षीत्। क्त ओदित् भुग्नः।

**भुज** भक्षणे भोगे च आ० पालने पर० सक० रुधा० अनिट्। भुङ्क्तेऽन्नम्। अभौक्षीत्। भूमिं भुनक्ति पालयति। "दिवं मरुत्वानिव भोक्ष्यते महीम्" रघुः। भुक्तः। उपसर्गपूर्वस्तु तत्तदुपसर्गद्योत्ययुक्तभोगादौ। भोगश्च सुखदुःखाद्यनुभवः सुखं दुःखं वा भुङ्क्ते सुखादिकमनुभवतीत्यर्थः।

**भुज** त्रि० भुज+क। १भोगकर्त्तरि २कुटिलीभूते च।

**भुज** पुंस्त्री० भुज्यतेऽनेन भुज-घञर्थे करणे क। १बाहौ २करे मेदि०। लीलावत्यादौ त्रिकोणचतुष्कोणादिक्षेत्रप्रसिद्धे क्षेत्रांशभेदे "तथायते तद्भुजकोटिघातः" इति लीलावती। क्षेत्रशब्दे दृश्यम्।

**भुजकोटर** पु० भुजस्य कोटर इव। कक्षदेशे (काँक) हेमच०

**भुजग** पुंस्त्री०भुज-वक्रणे क भुजः कुटिलीभवन् सन् गच्छति गम-ड। १सर्पे अमरः स्त्रियां ङीष्। २अश्लेषानक्षत्रे ज्यो०त०। तस्य तद्देवताकत्वात् तथात्वम्। अश्लेषाशब्दे दृश्यम्।

**भुजगदारण** पु० भुजगं दारयति दारि-ल्यु। गरुडे त्रिका०

**भुजगनिसृता** स्त्री "भुजगनिसृता नसौमः" वृ० र० उक्ते नवाक्षरपादके छन्दोभेदे। [राजनि०

**भुजगान्तक** पु० ६त०। गरुडे। भुजगनाशनादयोऽप्यत्र।

**भुजगभोजिन्** पु०भुजगं भुङ्क्ते भुज-णिनि। मयूरे राजनि० स्त्रियां ङीप्। [त्रिका० भुजगभक्षकादयोऽप्यत्र।

**भुजगाशन** पु० भुजगान् अश्नाति अश-ल्यु। गरुडे

**भुजङ्ग** पुंस्त्री०भुजः सन् गच्छति गम-खच् मुम् डिच्च। १सर्पे स्त्रियां ङीष् २जारे च पु० अमरः। ३अश्लेषानक्षत्रे पु० ज्यो०त०

**भुजङ्गघातिनी** स्त्री ६त०। भुजङ्गं तद्विषं हन्ति-हन णिनि ङीप्। सर्पाक्षीलतायाम् राजनि०।

**भुजङ्गजिह्वा** स्त्री ६त०। १सर्पजिह्वायां ६त०, २तदाकारयुतायां महासमङ्गायाम् राजनि०।

**भुजङ्गदमनी** स्त्री भुजङ्गो दम्यतेऽनया दम-करणे ल्युट् गौरा० ङीष्। नकुलेष्टायाम् शब्दच०

**भुजङ्गपर्णिनी** भुजङ्गस्तदाकार इव पर्णानि सन्ति यस्याः

हनि ङीप्। नागदमन्यां नैघण्टुप्रकाशिकायाम्।

**भुजङ्गपुष्प** पु॰ भुजङ्ग इव पुष्पमस्य। क्षुपभेदे सुश्रुतः।

**भुजङ्गप्रयात** न॰ "भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः" छ॰र॰ उक्ते द्वादशाक्षरपादके छन्दोभेदे।

**भुजङ्गभुज्** पु॰ भुजङ्गं भुङ्क्ते भुज–क्विप् ६त॰। १गरुडे शब्दर॰ २मयूरे अमरः।

**भुजङ्गभोजिन्** पु॰ भुजङ्गं भुङ्क्ते भुज–णिनि ६त॰। राजसर्पे हेमच॰। २गरुडे ३मयूरे च।

**भुजङ्गम** पुंस्त्री॰ भुजः कुटिलीभवन् सन् गच्छति गम–खच् मुम्। १सर्पे अमरः स्त्रियां जातित्वात् ङीष्। २सीसके न॰ राजनि॰। ३अश्लेषानक्षत्रे पु॰। [ताम्बूल्यां राजनि॰।

**भुजङ्गलता** स्त्री भुजङ्ग इव कुटिला तल्लोकस्था वा लता।

**भुजङ्गविजृम्भित** न॰ "वस्वीशाश्वच्छेदोपेतं ममतनयुगनरसलगैर्भुजङ्गविजृम्भितम्" छ॰र॰ उक्ते षड्विंशत्यक्षरपादके १छन्दोभेदे। ६त॰। २सर्पचेष्टिते च।

**भुजङ्गहन्** पु॰ भुजङ्गं हन्ति हन-क्विप्। गरुडे त्रिका॰।

**भुजङ्गाक्षी** स्त्री भुजङ्गस्याक्षि पुष्पं यस्याः षच् समा॰ ङीष्। रास्नायाम् अमरः। [शब्दमा॰

**भुजङ्गाख्य** पु॰ भुजङ्गतुल्या आख्या यस्य। नागकेसरे।

**भुजङ्गेश** पु॰ ६त॰। १वासुकौ २शेषे तदवतारे ३पिङ्गलमुनौ ४पतञ्जलिमुनौ च भुजङ्गेशादयोऽप्यत्र।

**भुजज्या** स्त्री सू॰सि॰उक्तायाम् त्रिकोणक्षेत्रस्य भुज जीवायाम् "ग्रहं संशोध्य मन्दोच्चात् तथा शीघ्राद्विशोध्य च। शेषं केन्द्रपदं तस्माद्भुजज्या कोटिरेव च" सू॰सि॰। "ग्रहं राश्यादिकं मन्दोच्चात् प्रागानीतस्पष्टराश्यादिकमन्दोच्चभोगात् संशोध्योनीकृत्य शीघ्रात् प्रागानीतराश्यादिशीघ्रोच्चात्। चः समुच्चये। ऊनीकृत्य शेषं राश्यादिकं तयोश्चक्रमेण केन्द्रं मन्दोच्चाद्धीनो ग्रहो मन्दकेन्द्रम्। शीघ्रोच्चाद्धीनो ग्रहः शीघ्रकेन्द्रं भवतीत्यर्थः। तस्मात् केन्द्रात् पदं राशित्रयात्मकं विषमं समं च पदं ज्ञेयम्। त्रिराश्यन्तर्गतं चेत् प्रथमं विषमं पदम्। ततः षड्राश्यन्तर्गतं चेत् त्र्यूनं केन्द्रं द्वितीयं समं पदम्। ततो नवराश्यन्तर्गतं चेत् षड्ऊनं तृतीयं विषमं पदम्। ततो नवोनं चतुर्थं पदं सममित्यर्थः। तस्मात् पदाद्भुजज्या कोटिः कोटिज्या च" रङ्ग॰। तदानयनं यथा "गताद्भुजज्या विषमे गम्यात् कोटिः पदे भवेत्। युग्मे तु गम्याद्बाहुज्या कोटिज्या तु गताद्भवेत्" सू॰सि॰। "विषमे पदे गताद्गुपहतस्य पदादितो यद्गतं राशिविभागात्मकं प्रागुक्तं तस्मादित्यर्थः। भुजज्या स्यात्। गम्याद्गतोनं त्रिभं यच्छ्यात् पादान्तावधिकमेष्यम्। तस्मात् कोटिः कोटिज्या स्यात्। युग्मे समे तुकारात् पदे एष्याद्भुजज्या गतात् कोटिज्या स्यात्। तुकारो विशेषद्योतकः। एकवारैवोक्तरीत्या द्वयं साधितम्" रङ्ग॰।

**भुजफल** न॰ "स्वेनाहते परिधिना भुजकोटिजीवे भांशैः ३६॰ हृते च भुजकोटिफलाह्वये स्तः" सि॰शि॰ उक्ते भुजेनानीते फलभेदे

**भुजमध्य** न॰ ६त॰। भुजान्तरे क्रोडे हला॰।

**भुजशिखर** पु॰ ६त॰। स्कन्धे हेम॰।

**भुजशिरस्** न॰ ६त॰। स्कन्धदेशे अमरः।

**भुजाग्र** पु॰ ६त॰। करे हला॰।

**भुजादल** पु॰ भुजाया बाहोर्दल इव। करे हस्ते त्रिका॰।

**भुजान्तर** न॰ ६त॰। भुजयोरन्तरं मध्यम्। क्रोडे अमरः स्वस्थेतरबाह्वोर्विशेषरूपे गणितागते पदार्थे यथोक्तं सि॰शि॰ "भानोः फलं गणितमर्कंयुतस्य राशेर्व्योमाटयेन खखनागमही १८०० विभक्तम्। गत्या ग्रहस्य गुणितं द्युनिशा विभक्तं स्वर्णं ग्रहेऽर्कवदिदं तु भुजान्तराख्यम्"।

**भुजि** पु॰ भुज–धातुनिर्देशे इक्। १भुजधातौ भुज-इन् किच्च। २वह्नौ उणादि॰ तस्य सर्वभक्षकत्वात् तथात्वम्।

**भुजिङ्ग** पु॰ देशभेदे भा॰ भी॰ ९अ॰।

**भुजिष्य** पु॰ भुज–किष्यन्। १दासे २रोगे ३स्वतन्त्रे ४हस्तसूत्रे च। ५दास्यां ६वेश्यायाञ्च स्त्री मेदि॰।

**भुज्यु** पु॰ भुज–युच् न अनादेशः। १भाजने उज्ज्वल॰। २भोजने उणा॰। ३अग्नौ संक्षिप्त॰ ४यज्ञे यजु॰१८।४२ वेददी॰"यज्ञो हि सर्वाणि भूतानि प्रावतीति" श्रुतेः सर्वलोकपालकत्वात्तस्य तथात्वम्।

**भुड** भरणे वरणे च भ्वा॰ आ॰ सक॰ सेट् इदित्। भुण्डते अभुण्डिष्ट बुभुण्डे कर्मणि भुण्ड्यते।

**भुणिक** पु॰ गोत्रावयवभेदे तस्यापत्यम् ततः इञ्। भौणिकि तदपत्ये पुंस्त्री॰स्त्रियां ष्यङ्। भौणिक्या तद्गोत्रावयवास्त्रियाम् सि॰ कौ॰।

**भुमन्यु** पु॰१पौरवे भरतपुत्रे नृपभेदे भा॰आ॰९४अ॰। २तद्वंश्ये प्राचीनधृतराष्ट्रपुत्रभेदे भा॰ आ॰ ९४अ॰।

**भुरज** प्राप्तौ भ्वा॰आ॰सक॰सेट्। भुरजते "भुरजन्त पक्वाः" ऋ॰ ४।४३।५। अयं धातुः धातुपाठादौ न दृश्यते।

**भुरण** धारणपोषणयोः कण्ड्वा॰ यक् आ॰सक॰ सेट्। भुरण्यति कभुरण्यी(णी)त् अयं गतौ निघण्टुः।

**भुरण्यु** न० भृ-च्युतौ बन्यु। १भरणे यजु० १८।५१ १२।४२ वेददीपे कण्वा०भुरण्य—छन् इत्युक्तम्। २क्षिप्रे निघण्टुः। ३तद्वति त्रि०।

**भुरिज्** स्त्री "भ्रज ऊर्ध्व" उणा० भ्र-इजि किच्च धातोरुकारादेशः। बहुस्वरायाम् उज्ज्वल०। २बाह्वोः द्वि०व० निघण्टुः। [वा० १७ श०।

**भुरुण्ड** पु० १प्रवरर्षिभेदे प्रवराध्यायः भारद्वाजगणे भा०

**भुर्व** अदने भ्वा०पर०सेट्। भूर्वति अभूर्वीत् "भुर्वतिरत्तिकर्मा" इति यास्कोक्तेः अयं तदर्थे धातुर्बोध्यः।

**भुर्वणि** पु० भुर्व—अनि न दीर्घः। १कर्त्तरि। ऋ० १।५६।१।

**भुव** पु० भवन्तीति भू—क। अग्नौ यजु० १२।५४। वेददी० २भुवोलोके च "तदेदं भूर्भुवादिकम्" स्मृ०वि०।

**भुवद्वत्** पु० भू—शतृ गणव्यत्यासे तुदा०। भुवन् धारयन् अन्यस्य मतुप् मस्य वः तान्तत्वेऽपि "भुवद्वद्भिः धारयद्भिः पदसंज्ञा वक्तव्या" वार्त्ति० उक्तेः पदत्वम्। धारकवति आदित्ये आ०श्रौ० ४।२।५

**भुवन** न०भवत्यत्र भू—आधारादौ क्युन्। १जगति २जले ३आकाशे ४चतुर्दशसंख्यायाम्। ५जने च मेदि०। भुवनानि च चतुर्दश यथा "चतुर्दशविधं ह्येतद्भूतवृन्दं प्रकीर्त्तितम्। भूर्भुवः स्वर्महश्चैव जनश्च तप एव च। सत्यलोकश्च सप्तैते लोकास्तु परिकीर्त्तिताः" "अतलं सुतलञ्चैव वितलञ्च गभस्तिमत्। महातलं रसातलं पातालं सप्तमं स्मृतम्। कृष्णभौमं शिलाभौमं पातालं नीलमृत्तिकम्। रक्तपीतश्वेतभौमानि च भवन्त्यपि। पातालानाञ्च सप्तानां लोकानाञ्च यदन्तरम्। शुषिराणि कथ्यन्ते भुवनानि चतुर्दश" वह्निपु०।

**भुवनकोष** पु० भुवनस्य कोष इव। १भूगोले २ज्योतिषप्रसिद्धे भेदे च। पुराणसर्वस्वे विष्णुपु० तद्वर्णनं यथा "रविचन्द्रमसोर्यावन्मयूखैरवभास्यते। ससमुद्रसरिच्छैला तावती पृथिवी स्मृता। यावत्प्रमाणा पृथिवी विस्तारपरिमण्डला। नभस्तावत्प्रमाणं वै विस्तारपरिमण्डलम्। भूमेर्योजनलक्षे तु सौरं मैत्रेय! मण्डलम्। लक्षे दिवाकरस्यापि मण्डलं शशिनः स्मृतम्। पूर्णे शतसहस्रे तु योजनानां निशाकरात्। नक्षत्रमण्डलं कृत्स्नमुपरिष्टात् प्रकाशते। द्विलक्षे चोत्तरे ब्रह्मन्! बुधो नक्षत्रमण्डलात्। तावत्प्रमाणभागे तु बुधस्याप्युशना स्थितः। अङ्गारकोऽपि शुक्रस्य तत्प्रमाणे व्यवस्थितः। लक्षद्वयेन भौमस्य स्थितो देवपुरोहितः। सौरिर्बृहस्पतेश्चोर्द्ध्वं द्विलक्षे समवस्थितः। सप्तर्षिमण्डलं तस्माल्लक्षमेकं द्विजोत्तम!। ऋषिभ्यस्तु सहस्राणां शतादूर्द्ध्वं व्यवस्थितः। मेधीभूतः समस्तस्य ज्योतिश्चक्रस्य वै ध्रुवः। त्रैलोक्यमेतत् कथितमुत्सेधेन महामुने!। इज्याफलस्य भूरेषा इज्या चात्र प्रतिष्ठिता। ध्रुवादूर्द्ध्वं महर्लोको यत्र ते कल्पवासिनः। एका योजनकोटी तु महर्लोको विधीयते। द्वे कोट्यौ तु जनो लोको यत्र ते ब्रह्मणः सुताः। सनन्दनाद्याः कथिता मैत्रेयामलचेतसः। चतुर्गुणोत्तरे चोर्द्ध्वं जनलोकात्तपः स्मृतः। वैराजा यत्र ते देवाः स्थिता दाहविवर्जिताः। षड्गुणेन तपोलोकात् सत्यलोको विराजते। अपुनर्मारकायत्र ब्रह्मलोको हि स स्मृतः। पादगम्यन्तु यत् किञ्चिद्वस्त्वस्ति पृथिवीमयम्। स भूर्लोकः समाख्यातो विस्तारोऽस्य मयोदितः। भूमिसूर्य्यान्तरं यच्च सिद्धादिमुनिसेवितम्। भुवर्लोकस्तु सोऽप्युक्तो द्वितीयो मुनिसत्तम!। ध्रुवसूर्य्यान्तरं यत्तु नियुतानि चतुर्दश। स्वर्लोकः सोऽपि कथितो लोकसंस्थानचिन्तकैः। त्रैलोक्यमेतत् कृतकं मैत्रेय! परिपठ्यते। जनस्तपस्तथा सत्यमिति चाकृतकं त्रयम्। कृतकाकृतकोर्मध्ये महर्लोक इति स्मृतिः। शून्यो भवति कल्पान्ते योऽत्यन्तं न विनश्यति। एते सप्त मया लोका मैत्रेय! कथितास्तव। पातालानि च सप्तैव ब्रह्माण्डस्यैव विस्तरः। एतदण्डकटाहेन तिर्य्यक् चोर्द्ध्वमधस्तथा। कपित्थस्य यथा वीजं सर्वतो वै समावृतम्। दशोत्तरेण पयसा मैत्रेयाण्डञ्च तद्वृतम्। सर्वोऽम्बुपरिवारोऽसौ वह्निना वेष्टितो बहिः। वह्निश्च वायुना, वायुर्मैत्रेय! नभसावृतः। भूतादिना नभः सोऽपि महता परिवारितः। दशोत्तराण्यशेषाणि मैत्रेयैतानि सप्त वै। महान्तञ्च समावृत्य प्रधानं समवस्थितम्। अनन्तस्य न तस्यान्तः संख्यानं वापि विद्यते"। भाग० ५।१६।१८ अ० विस्तरो दृश्यः।

**भुवनेश्वरी** स्त्री ६त०। महाविद्यामध्ये देवीमूर्त्तिभेदे तन्मन्त्रध्यानादिकं तन्त्रसा० दृश्यम्।

**भुवन्ति** पु० भुवं तनोति तन बा० डि खिच्च मुम्। रुद्रभेदे यजु० १६।१८। [२वह्नौ ३चन्द्रे च मेदि०।

**भुवन्यु** पु० भू—कन्युच्। १स्वामिनि २सूर्य्ये

**भुवपति** पु० ६त०। भुवोलोकपतौ यजु०२।२। भुवभर्त्तादयोऽप्यत्र।

**भुवर्** अव्य० भू-असुर्-किच्च । आकाशात्मके १द्वितीये लोके भुवनकोषशब्दे विष्णुपु०वाक्यं दृश्यम् । २व्याहृतिभेदे च ।

**भुवर्लोक** पु० कर्म० । द्वितीये लोके ।

**भुवस्** अव्य० भू-असुन् किच्च । १आकाशात्मके द्वितीये लोके २व्याहृतिभेदे भुवः स्वाहा ।

**भुवस्पति** पु० कर्म०। भुवो लोकस्य स्वामिनि अथर्व० १०५

**भुविष्ठ** त्रि०भुवि तिष्ठति स्था-क अलुक्स० षत्वम् । भूमिस्थिते भाग० १।५।१७ ।

**भुविस्** पु० भू-इसिन् किच्च । समुद्रे उज्ज्वल० ।

**भुशुण्डी** स्त्री पाषाणक्षेपणार्थे चर्ममययन्त्ररूपे अस्त्रभेदे "भुशुण्ड्युद्यतबाहवः" भा० आ० २२७ अ० नीलकण्ठः ।

**भू** प्राप्तौ चु० आ० सक० सेट् । भावयते अबीभवत ।

**भू** प्राप्तौ भ्वा०उ०सक०सेट् । भवति-ते अभूत् अभविष्ट ।

**भू** शुद्धौ अक० चिन्तने मिश्रणे च सक० चुरा० उभ० सेट् । भावयति-ते अबीभवत्-त ।

**भू** सत्तायां भ्वा०पर०अक०सेट्। भवति अभूत् बभूव । "भवत दुरितक्षयं यथोक्तैः क्रतुभिर्भावयते च नागलोकम्। भवति त्रिदशैश्च पूजितो यस्तु भवद्भावयति द्विषश्च सर्वान्" कविर० ।
अधि—आधिक्येन भवने ऐश्वर्ये ।
अनु—अनुभवे ज्ञानभेदे सक० अनुभवशब्दे दृश्यम् ।
अन्तर्+तिरोभावे अक० ।
अभि+तिरस्कारे सक० । अभिभवति शत्रून् ।
आविस्+प्रादुस्+प्रथमप्रकाशे ।
उद्—उत्पत्तौ अक० ।
तिरस् अन्तर्धाने स्थितस्य वस्तुनः कारणात्मनाऽवस्थाने अक० ।
परा+असहने पराभवः ।
परि+तिरस्कारे परिभवति अतिक्रम्य भवने ।
प्रति+तुल्यरूपभवने अक० प्रतिभूः ।
वि+व्याप्तौ विभुः । [वोपदेवः
वि+अति—परस्परभवने आत्म० सक० व्यतिभवतेऽर्कमिन्दुः ।
सम्+योग्यत्वे अक० । सम्भावति सम्+भू-णिच् सम्भावना-रूपज्ञानविषयत्वे सम्भाव्यते ।

**भू** स्त्री भू-आधारे कर्त्तरि अपादाने वा यथायथम् क्विप् । १भूमौ अमरः २स्थानमात्रे मेदि० ३यज्ञाग्नौ पु० जटा० ४उत्पद्यमाने त्रि० ५परमेश्वरे पु० "अनिर्विण्णः स्थविष्ठो भूः" विष्णु स० ।

**भूक** न० भू-कक् । १छिद्रे २काले मेदि० ।

**भूकदम्ब** पु० भुवि कदम्ब इव । (कोकसिमा) १अजम्बुपत्र्याम् स्त्रीमा०।२गोरक्षतुण्ड्यां स्त्री नैघण्टुप्र०। संज्ञायां कन् । भूकदम्बक । यवान्यां राजनि० । [राजनि०।

**भूकन्द** पु० भुवः कन्द इव । (घुलकुड़ि) महाश्रावणिकायाम्

**भूकम्प** पु० ६त० । लोकानामनिष्टादिसूचके अद्भुतरूपे पृथिव्याः स्वयंचलने । तस्य शुभाशुभसूचकता अद्भुत-सागरे उक्ता यथा "मेषे वृश्चिकभे गजः प्रचलति व्याघ्रादिभिः कथ्यते चापे मीनकुलीरभे च वृषभे सत्यं चलेत् कच्छपः । युक्ते कुम्भधरे मृगेन्द्रमिथुने कन्यामृगे पन्नगस्तेषामेकतमो यदि प्रचलति क्षौणी तदा कम्पते । कच्छपे मरणं ज्ञेयं मरणञ्चापि पन्नगे । सर्वत्र सुखदश्चैव पृथिव्यां चलिते गजे । प्रथितनरेश्वर मरणं व्यसनान्याग्नेयमारुतयोः । क्षुद्भयमतिवृष्टि-भिरुपपीड्यन्ते जनाश्चापि । त्रिचतुर्थपञ्चदिने मासे पक्षे त्रिपक्षके । भवति यदा भूकम्पः प्रधाननृपनाशनं कुरुते" । स च भूमिजोत्पातविशेषः यथा "चर-स्थिरभवं भौमं भूकम्पमपि भूमिजम् । जलाशयानां वैकृत्यं भौममन्यदपि कीर्त्तयेत् । भौमं चाल्पं फलं ज्ञेयं चिरेण परिपच्यते" ज्यो०त० ।

**भूकवृन्दारक** पु० भूशेलौ राजनि० ।

**भूकल** पुंस्त्री० दुर्विनीताश्वे राजनि० ।

**भूकश्यप** पु० भूमिजातः कश्यपस्तदवतार । वसुदेवे त्रिका० कश्यपस्य वसुदेवरूपेणावतारकथा च हरिवं० ५६ अ० । "तदस्य कश्यपस्यांशस्तेजसा कश्यपोपमः । वसुदेव इति ख्यातो गोषु तिष्ठति भूतले" ।

**भूकाक** पु० भुवि ख्यातः काकः । १कुड्कुकाके २क्रौञ्चे ३नीलकपोते च राजनि० ।

**भूकुम्भी** स्त्री भुवि कुम्भीव । भूमिपाटल्यां राजनि० ।

**भूकुष्माण्डी** स्त्री भुवि कुष्माण्डीव । वदर्याम् राजनि० ।

**भूकेश** पु० भुवः पृथिव्याः केश इव । १वटे २शैवले च मेदि० ३राक्षस्यां स्त्री शब्दरत्ना० ङीष् ।

**भूक्षित्** पु० भुवं क्षिणोति क्षिद्-क्विप् । शूकरे त्रिका० ।

**भूखर्जूरी** स्त्री भुवि लग्ना खर्जूरी शाक०त०। क्षुद्रखर्जूर्याम् राजनि० । भूमिखर्जूर्यादयोऽप्यत्र ।

**भूगर** न० १विषे राजनि० २भवभूतिकवौ पु० त्रिका०। [विष्णु स०

**भूगर्भ** पु० भूर्गर्भेऽस्य । विष्णौ पु० "हिरण्यगर्भो भूगर्भः"

**भूगृह** न० भूमध्यस्थं गृहम् । १भूमध्यस्थे गृहे धरणी-सदनादयोऽप्यत्र । २तन्त्रोक्ते यन्त्रबहिःस्थे रेखात्मकविशेषात्मके पदार्थे "धरणीसदनत्रयम्" श्रीयन्त्रोद्धारः ।

**भूगोल** पु० भूर्गोल इव। गोलाकारे भूखण्डे "मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति। बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिकाम्" सू० सि०। तत्स्थानभेदसंस्थानादिकं च सि० शि० उक्तं यथा "भूमेः पिण्डः शशाङ्कज्ञकविरविकुजेज्यार्किनक्षत्रकक्षा-वृत्तैर्वृत्तो वृतः सन् मृदनिलसलिलव्योमतेजोमयोऽयम्। नान्याधारः स्वशक्त्यैव वियति नियतं तिष्ठतीहास्य पृष्ठे निष्ठं विश्वं च शश्वत् सदनुजमनुजादित्यदैत्यं समन्तात्। सर्वतः पर्वतारामग्रामचैत्यचयैश्चितः। कदम्बकुसुमग्रन्थिः केशरप्रसरैरिव। मूर्त्तो धर्त्ता चेद्धरित्र्यास्ततोऽन्यस्तस्याप्यन्योऽस्यैवमत्रानवस्था। अन्त्ये कल्प्या चेत् स्वशक्तिः किमाद्ये किं नो भूमेः साष्टमूर्त्तेश्च मूर्त्तिः?। यथोष्णताऽर्कानलयोश्च, शीतता विधौ, द्रुतिः के, कठिनत्वमश्मनि। मरुच्चलो भूरचला स्वभावतो यतो विचित्रा बत वस्तुशक्तयः। आकृष्टिशक्तिश्च मही तया यत् खस्थं गुरु स्वाभिमुखं स्वशक्त्या। आकृष्यते तत् पततीव भाति समे समन्तात् क्व पतत्वियं खे। भपञ्जरस्य भ्रमणावलोकादाधारशून्या कुरिति प्रतीतिः। खस्थं न दृष्टं च गुरु क्षमातः खेऽधः प्रयातीति वदन्ति बौद्धाः। द्वौ द्वौ रवीन्दू भगणौ च तद्वदेकान्तरौ तावुदयं व्रजेताम्। यदब्रुवन्नेवमनम्बराद्या ब्रवीम्यतस्तान् प्रति युक्तियुक्तम्। भूः खेऽधः खलु यातीति बुद्धिर्बौद्ध मुधा कथम्। यातायातं तु दृष्ट्वापि खे यत् क्षिप्तं गुरु क्षितिम्। किं गण्यं तव वैगुण्यं द्वैगुण्यं यद् वृथा कथा। भार्केन्दूनां विलोक्याह्ना ध्रुवमत्स्यपरिभ्रमम्। यदि समा मुकुरोदरसन्निभा भगवती धरणी तरणिः क्षितेः। उपरिदूरगतोऽपि परिभ्रमन् किमु नरैरमरैरिव नेक्ष्यते। यदि निशाजनकः कनकाचलः किमु तदन्तरगः स न दृश्यते। उदगयं ननु मेरुरथांशुमान् कथमुदेति च दक्षिणभागके। समो यतः स्यात् परिधेः शतांशः पृथ्वी च पृथ्वी, नितरां तनीयान्। नरश्च, तत्पृष्ठगतस्य कृत्स्ना समेव तस्य प्रतिभात्यतः सा। पुरान्तरं चेदिदमुत्तरं स्यात् तदक्षविश्लेषलवैस्तदा किम्। चक्रांशकैरित्यनुपातयुक्त्या युक्तं निरुक्तं परिधेः प्रमाणम्। निरक्षदेशात् क्षितिषोडशांशे भवेदवन्ती गणितेन यस्मात्। तदन्तरं षोडशसंगुणं स्याद्भूमानमस्माद्बहु किं तदुक्तम्। ग्रहर्क्षोन्नतिग्रहयुतिग्रहणोदयास्तच्छा-यादिकं परिधिना घटतेऽमुना हि। नान्येन तेन जगुरुक्तमहीप्रमाणप्रामाण्यमन्वययुजा व्यतिरेककेण। लङ्का कुमध्ये यमकोटिरस्याः प्राक्, पश्चिमे रोमकपत्तनं च। अधस्ततः सिद्धपुरं सुमेरुः सौम्येऽथ याम्ये वडवानलश्च। कुवृत्तपादान्तरितानि तानि स्थानानि षड् गोलविदो वदन्ति। वसन्ति मेरौ सुरसिद्धसङ्घा वौर्वे च सर्वे नरकाः सदैत्याः। यो यत्र तिष्ठत्यवनीं तलस्थामात्मानमस्या उपरिस्थितं च। स मन्यतेऽतः कुचतुर्थसंस्था मिथश्च ते तिर्यगिवामनन्ति। अधःशिरस्काः कुदलान्तरस्थाश्छायामनुष्या इव नीरतीरे। अनाकुलास्तिर्यगधःस्थिताश्च तिष्ठन्ति ते तत्र वयं यथात्र। भूमेरर्द्धं क्षाराब्धेरुदक्स्थं जम्बूद्वीपं प्राहुराचार्यवर्याः। अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः। लवणजलधिरादौ दुग्धसिन्धुश्च तस्मादमृतममृतरश्मिः श्रीश्च यस्माद्बभूव। महितचरणपद्मः पद्मजन्मादिदेवैर्वसति सकलशास्ता वासुदेवश्च यत्र। दध्नो घृतस्येक्षुरसस्य तस्मान्मद्यस्य च स्वादुजलस्य चान्त्यः। स्वादूदकान्तर्वडवानलोऽसौ पातालतलोकाः पृथिवीपुटानि। चञ्चत्फणामणिगणांशुकृतप्रकाशा एतेषु असुरगणाः फणिनो वसन्ति। दिव्याभिर्दिव्यरमणीरमणीयदेहैः सिद्धाश्च तत्र च लसत्कनकावभासैः। शाकं ततः शाल्मलमत्र कौशं क्रौञ्चं च गोमेदकपुष्करे च। द्वयोर्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति। लङ्कादेशाद्धिमगिरिरुदग्धेमकूटोऽथ तस्मात् तस्मादन्यो निषध इति ते सिन्धुपर्यन्तदैर्घ्याः। एवं सिद्धादुदगपि पुराच्छृङ्गवच्छुक्लनीला वर्षाण्येषां जगुरिह बुधा अन्तरे द्वीपिदेशान्। भारतवर्षमिदं ह्युदगस्मात् किन्नरवर्षमतो हरिवर्षम्। सिद्धपुराच्च तथा कुरुवर्षात् विद्धि हिरण्मयरम्यकवर्षे। माल्यवांश्च यमकोटिपत्तनाद्रोमकाच्च किल गन्धमादनः। नीलशैलनिषधावधी च तावन्तरालमनयोरिलावृतम्। माल्यवज्जलधिमध्यवर्त्ति यत् तत्तु भद्रतुरगं जगुर्बुधाः। गन्धशैलजलराशिमध्यगं केतुमालकमिलाकलाविदः। निषधनीलसुगन्धसुमाल्यकैरभिलावृतमावृतमाबभौ। अमरकेलिकुलायसमाकुलं रुचिरकाञ्चनचित्रमहीतलम्। इह हि मेरुगिरिः किल मध्यगः कनकरत्नमयस्त्रिदशालयः। द्रुहिणजन्मकुपद्मजकर्णिकेति च पुराणविदोऽभ्यवर्णयन्। विष्कम्भशैलाः खलु मन्दरोऽस्य

सुगन्धशैलो विपुलः सुपार्श्वः । तेषु क्रमात् सन्ति च केतुवृक्षाः कदम्बजम्बूवटपिप्पलाख्याः । जम्बूफलाम्बुनदद्रवतः प्रवृत्ता जम्बूनदी रसयुता स्रवभूत् सुवर्णम् । जाम्बूनदं हि तदतः सुरसिद्धसङ्घाः शश्वत् पिबन्त्यमृतपानपराङ्मुखास्तम् । वनं तथा चैत्ररथं विचित्रं तेष्वप्सरोनन्दननन्दनं च । धृत्याह्वयं यद्धृतिकृत् सुराणां भ्राजिष्णु वैभ्राजमिति प्रसिद्धम् । सरांस्यथैतेष्वरुणं च मानसं महाह्रदं श्वेतजलं यथाक्रमम् । सरःसु रामारमणप्रमालसाः सुरा रमन्ते जलकेलिलालसाः । सदूलकाञ्चनमयं शिखरत्रयं च मेरौ सुरारिकपुरारिपुराणि तेषु । तेषामधः शतमखज्वलनान्तकानां रक्षोऽम्बुपानिलशशीशपुराणि चाष्टौ । विष्णुपदी विष्णुपदात् पतिता मेरौ चतुर्धाऽस्मात् । विष्कम्भाचलमस्तकगतसरःसङ्गता गता वियता । सीताख्या भद्राश्वं, सालकनन्दा च भारतं वर्षम् । चक्षुश्च केतुमालं, भद्राख्या चोत्तरान् कुरून् याता । याऽऽकर्णिताभिलषिता दृष्टा स्पृष्टावगाहिता पीता । उक्ता स्तुता स्मृता वा पुनाति बहुधा पापिनः पुरुषान् । यां चलितो दलिताखिलबन्धो गच्छति सद्गतिमत्र पितृसङ्घः । प्राप्ततटे विजितान्तकदूतो याति नरो निरयात् सुरलोकम् । ऐन्द्रं कशेरुसकलं किल ताम्रपर्णमन्यद्गभस्तिमदतश्च कुमारिकाख्यम् । नागं च सौम्यमिह वारुणमन्त्यखण्डं गान्धर्वसंज्ञमिति भारतवर्षमध्ये । वर्णव्यवस्थितिरिहैव कुमारिकाख्ये शेषेषु चान्त्यजजना निवसन्ति सर्वे । माहेन्द्रशुक्तिमलयर्क्षकपारियात्राः सह्यः सविन्ध्य इह सप्त कुलाचलाख्याः । भूर्लोकाख्यो दक्षिणे व्यक्षदेशात् तस्मात् सौम्योऽयं भुवः, स्वश्च मेरुः । लभ्यः पुण्यैः खे महः स्याज्जनोऽतोऽनल्पानल्पैः स्तैस्तपः सत्यमन्त्यः । लङ्कापुरेऽर्कस्य यदोदयः स्यात् तदा दिनार्धं यमकोटिपुर्याम् । अधस्तदा सिद्धपुरेऽस्तकालः स्याद्रोमके रात्रिदलं तदैव । यत्रोदितोऽर्कः किल तत्र पूर्वा, तत्रापरा यत्र गतः प्रतिष्ठाम् । तस्मात्ततोऽन्ये च ततोऽखिलानामुदक्स्थितो मेरुरिति प्रसिद्धम् । यथोज्जयिन्याः कुचतुर्थभागे प्राच्यां दिशि स्याद्यमकोटिरेव । ततश्च पश्चान्न भवेदवन्ती लङ्कैव तस्याः ककुभि प्रतीच्याम् । तथैव सर्वत्र यतो हि यत् स्यात् प्राच्यां ततस्तन्न भवेत् प्रतीच्याम् । निरक्षदेशादितरत्र तस्मात् प्राचीप्रतीच्यौ च विचित्रसंस्थे । निरक्षदेशे क्षितिमण्डलोपगौ ध्रुवौ नरः पश्यति दक्षिणोत्तरौ । तदाश्रितं खे जलयन्त्रवत् तथा भ्रमद्भचक्रं निजमस्तकोपरि । उदग्दिशं याति यथा यथा नरस्तथा तथा स्यान्नतमृक्षमण्डलम् । उदग्ध्रुवं पश्यति चोन्नतं क्षितेस्तदन्तरे योजनजाः पलांशकाः । योजनसंख्याभांशैर्गुणिता स्वपरिधिहृता भवन्त्यंशाः । भूमौ कक्षायां वा भागेभ्यो योजनानि च व्यस्तम् । सौम्यं ध्रुवं मेरुगताः खमध्ये याम्यं च दैत्या निजमस्तकोर्ध्वे । सव्यापसव्यं भ्रमदृक्षचक्रं विलोकयन्ति क्षितिजप्रसक्तम् । प्रोक्तो योजनसंख्यया कुपरिधिः सप्ताङ्गनन्दाब्धय४९६७ स्तद्व्यासः कुभुजङ्गसायकभुवः१५८१ सिद्धांशकेनाधिकः । पृष्ठे क्षेत्रफलं तथा युगगुणत्रिंशच्छराष्टेषवो ७८५३० २४ भूमेः कन्दुकजालवत् कुपरिधिव्यासाहतेः प्रस्फुटम् । दृष्टं कन्दुकपृष्ठजालवदिदं जानाति ये फलं कल्पितं तत्त्वेनास्य शतांशकोऽपि न भवेद्यस्मात् फलं वास्तवम् । तत् प्रत्यक्षविरुद्धहतमिदं नैवास्तु वा चास्तु वा चेन्मोढ़ा ! गणका विचारयत तन्माध्यस्थबुद्ध्या स्वयम् । यत् परिध्यर्धविष्कम्भघातं वृत्तं क्षेत्रं फलं किलाक्षकम् । तेनाधिक्याद्धते गोलः किञ्चिदल्पोऽवशिष्यते । गोलक्षेत्रफलात् तस्माद्वृत्तक्षेत्रफलं यतः । सार्धद्विगुणितावन्तं तावदेवापरे दले । एवं चतुर्गुणात् क्षेत्रफलात् पृष्ठफलं खलु । नाधिकं जायते तेन परिधिघ्नं कुतः कृतम् । वृत्तक्षेत्रफलं यस्मात् परिधिघ्नं न युक्तिमत् । दृष्टत्वाद् गणितज्ञास्य दुष्टं भूपृष्ठजं फलम् । गोलस्य परिधिः कल्प्यो वेदघ्नव्यासमितैर्मितः । सवदुग्नरेखाभिर्यद्वदामलके स्थिताः । इमयन्त्रे वप्रकाशवत् प्रागुक्तपरिधेर्मितान् । ऊर्ध्वाधःकृतरेखाभिर्गोले वप्रान् प्रकल्पयेत् । तत्रैकवप्रकक्षेत्रफलं खण्डैः प्रसाध्यते । सर्वज्यैक्यं त्रिभज्यार्धहीनं त्रिज्यार्धभाजितम् । एवं वप्रफलं तत् स्याद् गोलव्याससमं यतः । परिधिव्यासघातोऽतो गोलपृष्ठफलं स्मृतम् । वृत्तक्षेत्रे परिधिगुणितव्यासपादः फलं तत् क्षुण्णं वेदैरुपरि परितः कन्दुकस्येव जालम् । गोलस्यैवं तदपि च फलं पृष्ठजं व्यासनिघ्नं षड्भिर्भक्तं भवति नियतं गोलगर्भे घनाख्यम्" ।
पुराणमतेऽस्य विष्णुपु० अन्यथोक्तं यथा
"जम्बुप्लक्षाह्वयौ द्वीपौ शाल्मलश्चापरो द्विज ! । कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः । एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः । लवणेक्षुसुरासर्पिर्दधि-

दुग्धजलैः समः । जम्बूद्वीपः समस्तानामेतेषां मध्यमे स्थितः । तस्यापि मेरुर्मैत्रेय ! मध्ये कनकपर्व्वतः । चतुरशीतिसाहस्रो योजनैरस्य चोच्छ्रयः । प्रविष्टः षोडशाधस्तात् द्वात्रिंशन्मूर्द्ध्नि विस्तृतः । मूले षोडशसाहस्रो विस्तारस्तस्य भूभृतः । भूपद्मस्यास्य शैलोऽसौ कर्णिकाकारसंस्थितः । हिमवान् हेमकूटश्च निषधश्चास्य दक्षिणे । नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्व्वताः । लक्षप्रमाणौ द्वौ मध्यौ दशहीनास्तथा परे । सहस्रद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते । भारतं प्रथमं वर्षं ततः किंपुरुषं स्मृतम् । हरिवर्षं तथैवान्यं मेरोर्दक्षिणतो द्विज ! । रम्यकञ्चोत्तरं वर्षं तथैवानु हिरण्मयम् । उत्तराः कुरवश्चैव यथा वै भारतं तथा । नवसाहस्रमेकैकमेतेषां द्विजसत्तम ! । इलावृतञ्च तन्मध्ये सौवर्णो मेरुरुच्छ्रितः । मेरोश्चतुर्दिशं तत्र नवसाहस्रविस्तृतम् । इलावृतं महाभाग ! चत्वारश्चात्र पर्व्वताः । विष्कम्भा रचिता मेरोर्योजनायुतमुच्छ्रिताः । पूर्व्वेण मन्दरो नाम दक्षिणे गन्धमादनः । विपुलः पश्चिमे भागे सुपार्श्वश्चोत्तरे स्मृतः । कदम्बस्तेषु जम्बूश्च पिप्पलो वट एव च । एकादशशतायामाः पादपा गिरिकेतवः । जम्बूद्वीपस्य सा जम्बूर्नामहेतुर्म्महामुने ! । महागजप्रमाणानि जम्ब्वास्तस्याः फलानि वै । पतन्ति भूभृतः पृष्ठे शीर्य्यमाणानि सर्व्वतः । रसेन तेषां प्रख्याता तत्र जम्बूनदीति वै । सरित् प्रवर्त्तते सा च पीयते तन्निवासिभिः । न स्वेदो न च दौर्गन्ध्यं न जरा नेन्द्रियक्षयः । तत्पानस्वच्छमनसां जनानां तत्र जायते । तीरमृत्तत्र संप्राप्य सुखवायुविशोषिता । जाम्बूनदाख्यं भवति सुवर्णं सिद्धभूषणम् । भद्राश्वं पूर्व्वतो मेरोः केतुमालञ्च पश्चिमे । वर्षे द्वे तु मुनिश्रेष्ठ ! तयोर्म्मध्यमिलावृतम् । वनं चैत्ररथं पूर्व्वे दक्षिणे गन्धमादने । वैभ्राजं पश्चिमे तद्वदुत्तरे नन्दनं स्मृतम् । अरुणोदं महाभद्रं असितोदं समानसम् । सरांस्येतानि चत्वारि देवभोग्यानि सर्व्वदा । सीतान्तश्चैव सुञ्जश्च कुररो माल्यवांस्तथा । वैकङ्कप्रमुखा मेरोः पूर्व्वतः केशराचलाः । त्रिकूटः शिशिरश्चैव पतङ्गो रुचकस्तथा । निषधाद्यो दक्षिणतस्तस्य केशरपर्व्वताः । शिखिवासः सवैदूर्य्यः कपिलो गन्धमादनः । जारुधिप्रमुखास्तद्वत् पश्चिमे केशराचलाः । मेरोरनन्तराङ्गेषु जठरादिष्ववस्थिताः । शङ्खकूटोऽथ ऋषभो हंसो नागस्तथा परः । कालञ्जराद्याश्च तथा उत्तरे केशराचलाः । चतुर्द्दशसहस्राणि योजनानां महापुरी । मेरोरुपरि मैत्रेय ! ब्रह्मणः प्रथिता पुरी । तस्यां समन्ततश्चाष्टौ दिशासु विदिशासु च । इन्द्रादिलोकपालानां प्रख्याताः प्रवराः पुरः । विष्णुपादविनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम् । समन्ताद्ब्रह्मणः पुर्य्यां गङ्गा पतति वै दिवः । सा तत्र पतिता दिक्षु चतुर्द्धा प्रत्यपद्यत । सीता चालकनन्दा च चक्षुर्भद्रा च वै क्रमात् । पूर्व्वेण शैलात् सीता तु शैलं यात्यन्तरीक्षगा । ततश्च पूर्व्ववर्षेण भद्राश्वेनैति सार्णवम् । भद्रा तथोत्तरगिरीनुत्तरांश्च तथा कुरून् । अतीत्योत्तरमम्भोधिं समभ्येति महामुने ! । चक्षुश्च पश्चिमगिरीनतीत्य सकलांस्ततः । पश्चिमं केतुमालाख्यं वर्षमभ्येति सार्णवम् । तथा चालकनन्दापि दक्षिणेनैत्य भारतम् । प्रयाति सागरं भूत्वा सप्तभेदा महामुने ! । आनीलनिषधायामौ माल्यवद्गन्धमादनौ । तयोर्म्मध्यगतो मेरुः कर्णिकाकारसंस्थितः । भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा । पत्राणि लोकपद्मस्य मर्य्यादाशैलबाह्यतः । जठरो देवकूटश्च मर्य्यादापर्व्वतावुभौ । तौ दक्षिणोत्तरायामावानीलनिषधायतौ । मेरोः पश्चिमदिग्भागे यथा पूर्व्वौ तथा स्थितौ । त्रिशृङ्गो जारुधिश्चैव उत्तरे वर्षपर्व्वतौ । पूर्व्वपश्चायतावेतावर्णवान्तव्यवस्थितौ । इत्येते मुनिवर्य्योक्ता मर्य्यादापर्व्वतास्तव । जठराद्याः स्थिता मेरोर्येषां द्वौ द्वौ चतुर्द्दिशम् । मेरोश्चतुर्द्दिशं ये तु प्रोक्ताः केशरपर्व्वताः । सीतान्ताद्या मुने ! तेषामतीव हि मनोरमाः । शैलानामन्तरे द्रोण्यः सिद्धचारणसेविताः । सुरम्याणि तथा तेषु काननानि पुराणि च । लक्ष्मीविष्ण्वग्निसूर्य्यादिदेवानां मुनिसत्तम ! । तान्यायतनवर्य्याणि जुष्टानि वरकिन्नरैः । गन्धर्व्वयक्षरक्षांसि तथा दैतेयदानवाः । क्रीडन्ति तासु रम्यासु शैलद्रोणीष्वहर्न्निशम् । भौमा ह्येते स्मृताः स्वर्गा धर्म्मिणामालया मुने ! । नैतेषु पापकर्म्माणो यान्ति जन्मशतैरपि । भद्राश्वे भगवान् विष्णुरास्ते हयशिरा द्विज ! । वराहः केतुमाले तु भारते कूर्म्मरूपधृक् । मत्स्यरूपश्च गोविन्दः कुरुष्वास्ते सनातनः । विश्वरूपेण सर्व्वत्र सर्व्वः सर्व्वेश्वरो हरिः । सर्व्वस्याधारभूतोऽसौ मैत्रेयास्तेऽखिलात्मकः । यानि किंपुरुषाद्यानि वर्षाण्यष्टौ महामुने ! । न तेषु शोको नायासो नोद्वेगः क्षुद्भयादिकम् । सुस्था

प्रजा निरातङ्काः सर्वदुःखविवर्जिताः । दशद्वादशवर्षाणां सहस्राणि स्थिरायुषः । न तेषु वर्षत्यम्भो भौमान्यम्भांसि तेषु वै । कृतत्रेतादिका नैव तेषु स्थानेषु कल्पना । सर्वेष्वेतेषु वर्षेषु सप्त सप्त कुलाचलाः । नद्यश्च शतशस्तेभ्यः प्रसूता या द्विजोत्तम !"। "पराशर उवाच । उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम भारती यत्र सन्ततिः । नवयोजनसाहस्रो विस्तारोऽस्य महामुने ! । कर्मभूमिरियं स्वर्गमपवर्गञ्च गच्छताम् । महेन्द्रो मलयः सह्यः शक्तिमानृक्षपर्वतः । विन्ध्यश्च पारि(या)पात्रश्च सप्तात्र कुलपर्वताः । अतः संप्राप्यते स्वर्गो मुक्तिमस्मात् प्रयान्ति च । तिर्यक्त्वं नरकत्वञ्च यान्त्यतः पुरुषा मुने ! । इतः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते । न खल्वन्यत्र मर्त्यानां कर्म भूमौ विधीयते । भारतस्यास्य वर्षस्य नवभेदान्निशामय । इन्द्रद्वीपः कशेरुमांस्ताम्रवर्णो गभस्तिमान् । नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः । अयन्तु नवमस्तेषां द्वीपः सागरसंवृतः । योजनानां सहस्रन्तु द्वीपोऽयं दक्षिणोत्तरात् । पूर्वे किराता यस्यापि पश्चिमे यवनाः स्थिताः । ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च भागशः । इज्यायुद्धवणिज्याद्यैर्वर्त्तयन्तो व्यवस्थिताः । वेदस्मृतिमुखाश्चान्याः पारि(या)पात्रोद्भवा मुने ! । नर्मदा सुरसाद्याश्च नद्यो विन्ध्यविनिर्गताः । तापीपयोष्णीनिर्विन्ध्या कावेरीप्रमुखा नदी । गोदावरीभीमरथीकृष्णवेण्यादिकास्तथा । सह्यपादोद्भवा नद्यः स्मृताः पापभयापहाः । कृतमालाताम्रपर्णीप्रमुखा मलयोद्भवाः । त्रिसामा ऋषिकुल्याद्या महेन्द्रप्रभवाः स्मृताः । ऋषिकुल्याकुमाराद्याः शुक्तिमत्पादसम्भवाः । शतद्रुचन्द्रभागाद्या हिमवत्पादनिःसृताः । आसां नद्युपनद्यश्च सन्त्यन्यास्तु सहस्रशः । तास्विमे कुरुपञ्चालमध्यदेशादयो जनाः । पूर्वदेशादिकाश्चैव कामरूपनिवासिनः । ओड्राः कलिङ्गा मगधा दाक्षिणात्याश्च सर्वशः । तथापरान्ताः सौराष्ट्राः शूद्राभीरास्तथार्वुदाः । मारुका मालकाश्चैव पारि(या)पात्रनिवासिनः । सौवीराः सैन्धवा हूणाः शाल्वाः शाकलवासिनः । मद्रारामास्तथाम्बष्ठाः पारसीकादयस्तथा । आसां पिबन्तः सलिलं वसन्ति सरितां सदा । चत्वारि भारते वर्षे युगान्यत्र महामुने ! । कृतं त्रेता द्वापरञ्च कलिश्चान्यत्र न क्वचित् । तपस्तप्यन्ति मुनयो जुह्वते चात्र यज्विनः । दानानि चात्र दीयन्ते परलोकार्थमादरात् । पुरुषैर्यज्ञपुरुषो जम्बूद्वीपे सदेज्यते । तत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने ! । यतो हि कर्मभूरेषा ततोऽन्या भोगभूमयः । अत्र जन्मसहस्राणां सहस्रैरपि सत्तम ! । कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयम् । गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे । स्वर्गापवर्गास्पदहेतुभूते भवन्ति भूयः पुरुषाः सुरत्वात् । कर्माण्यसंकल्पिततत्फलानि सन्न्यस्य विष्णौ परमात्मरूपे । अवाप्य तां कर्ममहीमनन्ते तस्मिँल्लयं ये त्वमलाः प्रयान्ति । जानीम नैतत् क्व वयं विलीने स्वर्गप्रदे कर्मणि देहबन्धम् । प्राप्स्याम धन्याः खलु ते मनुष्या ये भारते नेन्द्रियविप्रहीनाः । नववर्षन्तु मैत्रेय ! जम्बूद्वीपमिदं मया । लक्षयोजनविस्तारं संक्षेपात् कथितं तव । जम्बूद्वीपं समावृत्य लक्षयोजनविस्तृतः । मैत्रेय ! वलयाकारः स्थितः क्षीरोदधिर्बहिः ।' "पराशर उवाच । क्षारोदेन यथा द्वीपो जम्बुसंज्ञोऽभिवेष्टितः । संवेष्ट्य क्षारमुदधिं प्लक्षद्वीपस्तथा स्थितः । जम्बूद्वीपस्य विस्तारः शतसाहस्रसम्मितः । स एव द्विगुणो ब्रह्मन् ! प्लक्षद्वीपोऽप्युदाहृतः । सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरस्य वै । ज्येष्ठः शान्तभयो नाम शिशिरस्तदनन्तरः । सुखोदयस्तथानन्दः शिवः क्षेमक एव च । ध्रुवश्च सप्तमस्तेषां प्लक्षद्वीपेश्वरा इमे । पूर्वं शान्तभयं वर्षं शिशिरं सुखदं तथा । आनन्दञ्च शिवञ्चैव क्षेमकं ध्रुवमेव च । मर्य्यादाकारकास्तेषां तथान्ये वर्षपर्वताः । सप्तैव तेषां नामानि शृणुष्व मुनिसत्तम ! । गोमेदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा । सोमकः सुमनाः शैलो वैभ्राजश्चैव सप्तमः । वर्षाचलेषु रम्येषु सर्वेष्वेतेषु चानघाः । वसन्ति देवगन्धर्वसहिताः सततं प्रजाः । तेषु पुण्या जनपदाश्चिराच्च म्रियते जनः । नाधयो व्याधयो वापि सर्वकालसुखं हि तत् । तेषां नद्यश्च सप्तैव वर्षाणान्तु समुद्रगाः । नामतस्ताः प्रवक्ष्यामि श्रुताः पापं हरन्ति याः । अनुतप्ता शिखा चैव विपाशा त्रिदिवा क्रमुः । अमृता सुकृता चैव सप्तैतास्तत्र निम्नगाः । एते शैलास्तथा नद्यः प्रधानाः कथितास्तव । क्षुद्रनद्यस्तथा शैलास्तत्र सन्ति सहस्रशः । ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते । अवसर्पिणी न तेषां वै नचैवोत्सर्पिणी प्रजा । न[illegible]चास्ति युगावस्था तेषु स्थानेषु सप्तसु । त्रेतायुग[illegible]मः कालः सर्वदैव महामुने ! । प्लक्षद्वीपादिषु ब्रह्मन् ! [illegible]कद्वीपान्तिकेषु वै । पञ्चवर्षसहस्राणि जना जीव[illegible]ना-

मयाः । धर्माः पञ्चस्वथैतेषु वर्णाश्रमविभागजाः । वर्णाश्च तत्र चत्वारस्तान्निबोध वदामि ते । आर्य्यकाः कुरराश्चैव विविंशा भाविनश्च ते । विप्रक्षत्रियवैश्यास्ते शूद्राश्च द्विजसत्तम ! । जम्बूवृक्षप्रमाणस्तु तन्मध्ये सुमहातरुः । प्लक्षस्तन्नामसंज्ञोऽयं प्लक्षद्वीपो द्विजोत्तम ! । इज्यते भगवांस्तत्र तैर्वर्णैरार्य्यकादिभिः । सोमरूपी जगत्स्रष्टा सर्वः सर्वेश्वरो हरिः । प्लक्षद्वीपप्रमाणेन प्लक्षद्वीपसमावृतः । तथैवेक्षुरसोदेन परिवेशानुकारिणा । इत्येतत्तव मैत्रेय ! प्लक्षद्वीपमुदाहृतम् । संक्षेपेण मया भूयः शाल्मलं मे निशामय । शाल्मलस्येश्वरो वीरो वपुष्मांस्तत्सुतान् शृणु । तेषान्तु नामसंज्ञानि सप्त वर्षाणि तानि वै । श्वेतोऽत्र हरितश्चैव जीमूतो हरितस्तथा । वैद्युतो मानसश्चैव सुप्रभश्च महामुने ! । शाल्मलेन समुद्रोऽसौ द्वीपेनेक्षुरसोदकः । विस्ताराद्द्विगुणेनाथ सर्वतः संवृतः स्थितः । तत्रापि पर्वताः सप्त विज्ञेया रत्नयोनयः । वर्षाभिव्यञ्जकास्ते तु तथा सप्तैव निम्नगाः । कुमुदश्चोन्नतश्चैव तृतीयश्च बलाहकः । द्रोणो यत्र महौषध्यः स चतुर्थो महीधरः । कङ्कस्तु पञ्चमः षष्ठो महिषः सप्तमस्तथा । ककुद्मान् पर्वतवरः सरिन्नामानि मे शृणु । योनितोया वितृष्णा च चन्द्रा शुक्ला विमोचनी । निवृत्तिः सप्तमी तासां स्मृतास्ताः पापशान्तिदाः । श्वेतञ्च लोहितञ्चैव जीमूतं हरितं तथा । वैद्युतं मानसञ्चैव सुप्रभं नाम सप्तमम् । सप्तैतानि तु वर्षाणि चातुर्वर्ण्ययुतानि वै । शाल्मलेऽपि च ये वर्णा वसन्त्येते महामुने ! । कपिलाश्चारुणाः पीताः कृष्णाश्चैव पृथक् पृथक् । ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव यजन्ति तम् । भगवन्तं समस्तस्य विष्णुमात्मानमव्ययम् । वायुभूतं मखश्रेष्ठैर्यज्विनोऽसङ्गसंस्थितम् । देवानामत्र सान्निध्यमतीव सुमनोरमे । शाल्मलिश्च महावृक्षो नाम निर्वृतिकारकः । एष द्वीपः समुद्रेण सुरोदेन समावृतः । विस्तारः शाल्मलस्यैव समेन तु समन्ततः । सुरोदकः परिवृतः कुशद्वीपेन सर्वतः । शाल्मलस्य तु विस्ताराद्द्विगुणेन समन्ततः । ज्योतिष्मतः कुशद्वीपे सप्त पुत्राः शृणुष्व तान् । उद्भिदो वेणुमांश्चैव सुरथो लम्बनो धृतिः । प्रभाकरोऽथ कपिलस्तन्नाम्ना वर्ष उच्यते । तस्मिन् वसन्ति मनुजाः सह दैतेयदानवैः । तथैव देवगन्धर्व्वयक्षकिंपुरुषादिभिः । वर्णास्तत्रापि चत्वारो निजानुष्ठानतत्पराः । दमिनः शुष्मिणः स्नेहा मन्देहाश्च महामुने ! । ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राश्चानुक्रमोदिताः । यथोक्तकर्म्मकर्तृत्वात् स्वाधिकारक्षयाय ते । तत्र वसत् कुशद्वीपे ब्रह्मरूपं जनार्द्दनम् । यजन्तः क्षपयन्त्युग्रमधिकारफलप्रदम् । विद्रुमो हेमशैलश्च द्युतिमान् पुष्पवांस्तथा । कुशेशयो हरिश्चैव सप्तमो मन्दराचलः । वर्षाचलास्तु सप्तैव तत्र द्वीपे महामुने ! । नद्योऽपि सप्त तासान्तु शृणु नामान्यनुक्रमात् । धूतपापा शिवा चैव पवित्रा सम्मतिस्तथा । विद्युदम्भा मही चैव सर्व्वपापहरास्त्विमाः । अन्याः सहस्रशस्तत्र क्षुद्रनद्यस्तथाऽचलाः । कुशद्वीपे कुशस्तम्बः संज्ञया तस्य तत् स्मृतम् । तत्प्रमाणेन स द्वीपो घृतोदेन समावृतः । घृतोदश्च समुद्रो वै क्रौञ्चद्वीपेन संवृतः । क्रौञ्चद्वीपो महाभाग ! श्रूयताञ्चापरो महान् । कुशद्वीपस्य विस्ताराद्द्विगुणो यस्य विस्तरः । क्रौञ्चद्वीपे द्युतिमतः पुत्राः सप्त महात्मनः । तन्नामानि च वर्षाणि तेषाञ्चक्रे महीपतिः । कुशलो मन्दगश्चोष्णः पीवरोऽथान्धकारकः । मुनिश्च दुन्दुभिश्चैव सप्तैते तत्सुता मुने ! । तत्रापि देवगन्धर्व्वसेविताः सुमनोरमाः । वर्षाचला महाबुद्धे ! तेषां नामानि मे शृणु । क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः । चतुर्थो हरशैलश्च स्वभाभिर्भासयन्नभः । देवावृत् पञ्चमश्चैव तथाऽन्यः पुण्डरीकवान् । दुन्दुभिश्च महाशैलो द्विगुणास्ते परस्परम् । द्वीपद्वीपेषु ये शैला यथा द्वीपानि ते तथा । वर्षेष्वेतेषु रम्येषु वर्षशैलवरेषु च । निवसन्ति निरातङ्काः सह देवगणैः प्रजाः । पुष्कराः पुष्कला धन्याः ख्याताश्च महामुने ! । ब्राह्मणाः क्षत्रियावैश्याः शूद्राश्चानुक्रमोदिताः । ते तत्र नद्यो मैत्रेय ! याः पिबन्ति शृणुष्व ताः । सप्त प्रधानाः परतस्तत्रान्याः क्षुद्रनिम्नगाः । गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा । ख्यातिश्च पुण्डरीका च सप्तैता वर्षनिम्नगाः । तत्रापि वर्णैर्भगवान् पुष्कराद्यैर्जनार्दनः । योगिरुद्रस्वरूपस्तु इज्यते यज्ञसन्निधौ । क्रौञ्चद्वीपः समुद्रेण दधिमण्डोदकेन च । आवृतः सर्वतः क्रौञ्चद्वीपतुल्येन मानतः । दधिमण्डोदकश्चापि शाकद्वीपेन संवृतः । क्रौञ्चद्वीपस्य विस्ताराद् द्विगुणेन महामते ! । शाकद्वीपेश्वरस्यापि भव्यस्य सुमहात्मनः । सप्तैव तनयास्तेषां ददौ वर्षाणि सप्त च । जलदश्च कुमारश्च सुकुमारो मनीरकः । कुसुदोदः समोदाकिः सप्तमश्च महाद्रुमः । तत्संज्ञान्यपि-

नाम्नैव सप्त वर्षाण्यनुक्रमात् । तत्रापि पर्वताः सप्त वर्षविच्छेदकारिणः ॥ पूर्वस्तत्रोदयगिरिर्जलाधारस्तथा परः । तथा रैवतकः श्यामस्तथैवास्तगिरिर्द्विज ! ॥ आम्बिकेयस्तथा रम्यः केशरी पर्वतोत्तमः । शाकस्तत्र महावृक्षः सिद्धगन्धर्वसेवितः ॥ यत्पत्रवातसंस्पर्शादाह्लादो जायते परः । तत्र पुण्या जनपदाश्चातुर्वर्ण्यसमन्विताः ॥ नद्यश्चात्र महापुण्याः सर्वपापभयापहाः । सुकुमारी कुमारी च नलिनी रेणुका तथा ॥ इक्षुश्च धेनुका चैव गभस्ती सप्तमी तथा । अन्याश्च शतशस्तत्र क्षुद्रनद्यो महामुने ! ॥ महीधरास्तथा चात्र शतशोऽथ सहस्रशः । ताः पिबन्ति मुदा युक्ता जलदादिषु ये स्थिताः ॥ वर्षेष्वेते जनपदाः स्वर्गादभ्येत्य मेदिनीम् । धर्महानिर्न तेष्वस्ति न संहर्षः परस्परम् ॥ मर्यादाव्युत्क्रमो नापि तेषु देशेषु सप्तसु । मगाश्च मागधाश्चैव मानसा मन्दगास्तथा ॥ मगा ब्राह्मणभूयिष्ठा मागधाः क्षत्रियास्तथा । वैश्यास्तु मानसास्तेषां शूद्रास्तेषां तु मन्दगाः ॥ शाकद्वीपे तु तैः सूर्य्यः रूपधरो मुने ! ॥ यथोक्तैरिज्यते सम्यक्कर्मभिर्नियतात्मभिः । शाकद्वीपस्तु मैत्रेय ! क्षीरोदेन समन्ततः ॥ शाकद्वीपप्रमाणेन वलयेनेव वेष्टितः । क्षीराब्धिः सर्वतो ब्रह्मन् ! पुष्कराख्येन वेष्टितः ॥ द्वीपेन शाकद्वीपात्तु द्विगुणेन समन्ततः । पुष्कराख्यद्वीपपतेर्महावीतोऽभवत् सुतः ॥ धातकिश्च तयोस्तत्र द्वे वर्षे नामचिह्निते । महावीतं तथैवान्यत् धातकीखण्डसंज्ञितम् ॥ एकश्चात्र महाभाग ! प्रख्यातो वर्षपर्वतः । मानसोत्तरसंज्ञो वै मध्यतो वलयाकृतिः ॥ योजनानां सहस्राणि ऊर्द्ध्वं पञ्चाशदुच्छ्रितः । तावदेव च विस्तीर्णः सर्वतः परिमण्डलः ॥ पुष्करद्वीपवलयं मध्ये संविभजन्निव । स्थितोऽसौ सुमहान् शैलो भाष्य तदर्षकद्वयम् ॥ वलयाकारमेवैकं तयोर्वर्षे तथा गिरिः । दशवर्षसहस्राणि तत्र जीवन्ति मानवाः ॥ निरामया विशोकाश्च रागद्वेषविवर्जिताः । अधमोत्तमौ न तेष्वास्तां न वध्यवधकौ द्विज ! ॥ नेर्ष्यासूयाभयं रोषो दोषो लोभादिको न च । महावीतं महावर्षं धातकीखण्डमन्ततः ॥ मानसोत्तरशैलस्य देवदैत्यादिसेवितः । सत्यानृते न तत्रास्तां द्वीपे पुष्करसंज्ञिते ॥ न तत्र शैलनद्यो वा द्वीपे वर्षद्वयान्विते । तुल्यवेषास्तु मनुजा देवैस्तत्रैकरूपिणः ॥ वर्णाश्रमाचारहीनं धर्माहरणवर्जितम् । त्रयीवार्त्तादण्डनीतिशुश्रूषारहितञ्च तत् ॥ वर्षद्वयन्तु मैत्रेय ! भौमः स्वर्गोऽयमुत्तमः । सर्वर्त्तुसुखदः कालो जरारोगादिवर्जितः ॥ पुष्करे धातकीखण्डे महावीते च वै मुने ! ॥ न्यग्रोधः पुष्करद्वीपे ब्रह्मणः स्थानमुत्तमम् । तस्मिन्निवसति ब्रह्मा पूज्यमानः सुरासुरैः ॥ स्वादूदकेनोदधिना पुष्करः परिवेष्टितः । समेन पुष्करस्यैव विस्तारान्मण्डलात्तथा ॥ एवं द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः । द्वीपश्चैव समुद्रश्च समानौ द्विगुणौ परौ ॥ पयांसि सर्वदा सर्वसमुद्रेषु समानि वै । न्यूनातिरिक्तता तेषां कदाचिन्नैव जायते ॥ स्थालीस्थमग्निसंयोगादुद्रेकि सलिलं यथा । तथेन्दुवृद्धौ सलिलमम्भोधौ मुनिसत्तम ! ॥ अन्यूनानतिरिक्ताश्च वर्द्धन्त्यापो ह्रसन्ति च । उदयास्तमनेष्विन्दोः पक्षयोः शुक्लकृष्णयोः ॥ दशोत्तराणि पञ्चैव अङ्गुलानां शतानि वै । अपां वृद्धिक्षयौ दृष्टौ सामुद्रीणां महामुने ! ॥ भोजनं पुष्करद्वीपे तत्र स्वयमुपस्थितम् । षड्रसं भुञ्जते विप्र ! प्रजाः सर्वाः सदैव हि ॥ स्वादूदकस्य पुरतो दृश्यते लोकसंस्थितिः । द्विगुणा काञ्चनी भूमिः सर्वजन्तुविवर्जिता ॥ लोकालोकस्ततः शैलो योजनायुतविस्तरः । उच्छ्रायेणापि तावन्ति सहस्राण्यचलो हि सः ॥ ततस्तमः समावृत्य तं शैलं सर्वतः स्थितम् । तमश्चाण्डकटाहेन समन्तात् परिवेष्टितम् ॥ पञ्चाशत्कोटिविस्तीर्णा सेयमुर्वी महामुने ! ॥ सहैवाण्डकटाहेन सद्वीपाब्धिमहीधरा । सेयं धात्री विधात्री च सर्वभूतगुणाधिका । आधारभूता सर्वेषां मैत्रेय ! जगतामिति" ॥

भूगोलस्य स्थिरत्वे युक्तिः भूगोलशब्दे उक्ता अधिकमत्र किञ्चिदुच्यते इंलण्डीयज्योतिर्विदां मते भूगोलस्यैव दक्षिणोत्तरगतिभ्यां सूर्य्यस्य उत्तरदक्षिणगतित्वं कल्प्यते स्थिरस्य सूर्य्यस्य उत्तरदक्षिणायनयोरसम्भवादिति । तदेतन्मतमतीवासमञ्जसं भूगोलस्य दक्षिणोत्तरगतिस्वीकारे सूर्य्यस्येव कृत्तिकारोहिणीशकटव्रगव्याधादीनामपि उत्तरदक्षिणयोर्गतिः प्रसज्येत न च तथा दृश्यते तेषाञ्च यथा विक्षेपनामशरसंख्या सौरागमे पठिता तादृशान्तर एव प्रत्यहं दर्शनं न मनागपि उत्तरदक्षिणायनमिति विवेच्य भूगोलस्य स्थिरत्वमनुसन्धातव्यम् ।

**भूच्छाया**, स्त्री, भुवश्छाया । सूर्य्यकिरणासम्पर्कात् जायमाने राहुपर्य्यायाभिधाने १तमसि २अन्धकारे च शब्दमाला ।

**भूजन्तु**, पुं, भूरिव जन्तुः । नागे हस्तिनि राजनि० ।

**भूजम्बू**, स्त्री, भुवो जम्बूरिव स्वादुत्वात् । १गोधूमे २विकङ्कु-

तरुके च (वर्द्धय) मेदि॰ भूमिलीना जम्बूः शब्द०त० १सुदूलम्बाम् । भूमिजम्ब्वादयोऽप्यत्र स्त्री

**भूत** न॰ भू-क्त । १न्याये उच्यते पृथिवीजलतेजोवायुगगन-रूपेषु गन्धादिविशेषगुणवत्सु २द्रव्येषु, ३सत्ये, यथार्थे वाक्यविदे 'भूतमप्यनुपन्यस्तं हीयते व्यवहारतः' इति स्मृतिः । ४तस्यानुसन्धाने च "कस्तं निरस्य भूतेन" स्मृतिः । ५पिशाचादौ पु॰ ६कुमारे दयोगीन्द्रे ८न्यायपक्षे १०प्राणिनि च न॰ । ११अतीते क्ते १२सदृशे १३प्राप्ते १४सत्यार्थे त्रि॰ । १५कृष्णचतुर्दश्यां स्त्री टाप् । भूतत्वं न आकाशत्वे सति विशेषगुणवत्त्वम् न तु जातिः मूर्त्तत्वेन साङ्कर्य्यात् तथाहि भूतत्वाभाववति मनसि मूर्त्तत्वस्य सत्त्वात् मूर्त्तत्वाभाववति गगने भूतत्वस्य सत्त्वात् उभयोः परस्परभावसमानाधिकरण्यम् पृथिव्यादिषु चतुर्षु च भूतत्वमूर्त्तत्वयोरुभयोः सत्त्वात् परस्परसमानाधिकरण्यमिति साङ्कर्य्यात् जातिव्याघकता ।

**भूतकला** स्त्री ६त॰ । शा॰ति॰ उक्ते धराद्भूतानामुत्पादके निवृत्त्याद्ये शक्तिभेदे "धरादिपञ्चभूतानां निवृत्त्याद्याः कलाः स्मृताः । निवृत्तिः सुप्रतिष्ठा स्यात् विद्या शान्तिरजन्तरम् । शान्त्यतीतेति ता ज्ञेया नादरेखसमुद्भवाः" शा॰ ति॰ "अब्धिः भवमसभ्नूता शान्त्यतीतापदोत्तरा शान्त्यतीतापदाम्भस्ततः शान्तिपदं क्रमात् । ततो विद्यापदं तस्मात् प्रतिष्ठापदसंभवः । निवृत्तिपदमुत्पन्नं प्रतिष्ठापदतः परम् । एवमुक्ता अनाशेन स्रष्टिरीश्वरनोदिता । आनुलोम्यादतेषां प्रातिलोम्येन संहृतिः । अस्मात् पञ्चपदोद्दिष्टाम् स्रष्ट्रन्तरमिष्यते । कलाभिः पञ्चभिर्व्याप्तं यस्माद्विश्वमिदं जगत्" राघवभट्टधृतमायवीयसंहिता ।

**भूतकेश** पु॰ भूतानां केश इव । (भूतकेश) नामके १तृणभेदे स्त्रीत्वमपि ङीप् । सा च तत्र, २शेफालिकायां च टाप् । ३गोधविन्दुवारे स्त्री ङीप् ।

**भूतक्रान्ति** स्त्री ६त॰ । पिशाचावेशे राजनि॰ ।

**भूतगन्धा** स्त्री॰ भूतः प्रभूतः गन्धो यस्याः । मुरानामगन्धद्रव्ये जटाध॰ ।

**भूतगुण** पु॰ ६त॰ । आकाशादीनां शब्दस्पर्शादिषु विशेषगुणेषु "शब्दस्पर्शरूपरसगन्धा भूतगुणाः स्मृताः" शा॰ति॰ "भूतगुणा भूतविशेषगुणा इत्यर्थः राघवः" । तत्रैव भूतानामेकैकविशेषगुणा उक्ता यथा, "आकाशस्य गुणः शब्दो वायोः स्पर्शः तेजसो रूपं जलस्य रसः भूमेर्गन्धः इति वैशेषिकादयः । सांख्यादयस्तु अन्वयानुगोचरं स्वीकृत्य नैयायिकसिद्धान्ताम् "शब्देकगुण आकाशः, शब्दस्पर्शगुणो मरुत् । शब्दस्पर्शरूपगुणैस्त्रिगुणं तेज उच्यते । शब्दस्पर्शरूपरसैरापो ज्ञेयाश्चतुर्गुणाः । शब्दस्पर्शरूपरसगन्धैः पञ्चगुणा मही" ।

**भूतघ्न** पु॰ भूतं हन्ति हन-टक् । १भूर्जपत्रे राजनि॰ तद्धारणे हि बालग्रहभूतादिनिवारणं शास्त्रे प्रसिद्धम् । भूतं प्रभूतं गन्धं हन्ति अधःकरोति । २लशुने ३उष्ट्रे च राजनि॰ । ४भूतनाशके त्रि॰ हेमच॰ । ५तुलस्यां स्त्री राजनि॰ ङीप् ।

**भूतचतुर्दशी** स्त्री॰ भूतप्रिया चतुर्दशी तदुद्देशेन तस्यां दीपदानात् । आश्विनकृष्णपक्षचतुर्दश्यां दीपान्विताअमावास्यापूर्वतिथौ यमचतुर्दश्याम् ।

**भूतजटा** स्त्री भूतस्य पिशाचस्य जटेव । १जटामांस्याम् शब्दमा॰ । २गन्धमांस्यां राजनि॰ ।

**भूतद्राविन्** पु॰ भूतान् पिशाचान् द्रावयत्यपसारयति द्रु-णिच्-णिनि । १रक्तकरवीरवृक्षे २भूताङ्कुशवृक्षे च राजनि॰

**भूतद्रुम** पु॰ भूतइव द्रुमः । श्लेष्मातकवृक्षे । भूतस्थानत्वादयोऽप्यत्र । भूतप्रियः द्रुमः शाक॰त॰ । २शाखोटवृक्षे ।

**भूतधात्री** स्त्री॰ भूतानि जन्तून् धारयति धा-तृच् ङीप् । पृथिव्याम् त्रिका॰ ।

**भूतनाथ** पु॰ ६त॰ । १शिवे २बटुकभैरवे च । "भैरवो भूतनाथश्च" इति वटुकस्तोत्रम् । भूतेशभूतपत्यादयोऽप्यत्र ।

**भूतनाशन** न॰ भूतान् नाशयति नश-णिच्-ल्यु । १रुद्राक्षे राजनि॰ २सर्षपे पु॰ ३भल्लातके च रत्नमा॰ ।

**भूतपच** पु॰ भूतप्रियः पचः अन्धकारकत्त्वात् । कृष्णपक्षे ।

**भूतपत्री** स्त्री भूतइव कृष्णं पत्रं यस्याः ङीप् । कृष्णतुलस्याम् राजनि॰ । [रत्नमा॰ ।

**भूतपुष्प** पु॰ भूत इव पुष्पं कृष्णत्वात् यस्य । श्योनाकवृक्षे

**भूतपूर्णिमा** स्त्री आश्विनपूर्णिमायाम् शब्दर॰ ।

**भूतभावन** पु॰ भूतानि पृथिव्यादीनि भावयति जनयति भू-णिच्-ल्यु, भूता सत्या यथार्था भावना यस्य वा । १विष्णौ, २वटुकभैरवे च "भूतात्मा भूतभावनः" इति । तयोः स्तोत्रे ।

**भूतमण्डल** न॰ ६त॰ । शा॰ति॰ उक्ते पृथिव्यादीनां मण्डलभेदे तत्स्वरूपं तत्रोक्तं यथा "वृत्तं द्विरन्ध्रं वक्त्रविन्दुलाञ्छितं मातरिश्वनः । त्रिकोणं स्वस्तिकोपेतं वह्नेरर्द्धेन्दुसंयुतम् । अम्भोजमम्भसो भूमेश्चतुरस्रं सवज्रकम् । तत्तद्भूतसमानानि मण्डलानि विदुर्बुधाः । वर्णैः

खैरङ्कितास्याङ्कः खननामाहतास्त्वपि"। "वर्णैः श्वेतादिभिर्भूतवर्णैरजोभिरङ्कितानीति पदार्थादर्शः। तत्तैतद्व्याख्या विस्तरेण दृश्या। मन्त्रमहोदधौ तेषां भूतैः स्वरूपं कर्मविशेषे विनियोगश्चोक्तो यथा "अर्द्धचन्द्रनिभं पार्श्वद्वये पद्मद्वयाङ्कितम्। जलस्य मण्डलं प्रोक्तं प्रशस्तं शान्तिकर्मणि। त्रिकोणं स्वस्तिकोपेतं वस्त्रे वह्नेस्तु मण्डलम्। चतुरस्रं वज्रयुक्तं शस्तो भूमेस्तु मण्डलम्। वृत्तं दिक्षु विदिक्षु बिन्दु षट्काङ्कितं तु तत्। वायुमण्डलमुच्चाटे मारणे वह्निमण्डलम्"।

**भूतमारिन्** पु॰ भूतान् पिशाचान् मारयति अपसारयति मृ–णिच्–णिनि। चिड़ानामगन्धद्रव्ये राजनि॰।

**भूतयज्ञ** पु॰ भूतानि प्राणिनो वायसादीन् उद्दिश्य यज्ञो बलिः। नित्यं गृहस्थकर्त्तव्यपञ्चयज्ञान्तर्गते बलिवैश्वदेवकर्मणि "भूतेभ्यो बलिहरणं भूतयज्ञः" हारीतस्मृतिः।

**भूतयोनि** स्त्री ६त॰। भूतानामाकाशादीनां कारणे परमेश्वरे वेदान्तोप॰।

[भूमेरधोभागे।

**भूतल** न॰ भूरेव तलम्। १पृथिव्याम्। ६त॰। २पाताले

**भूतलिका** स्त्री भूतलं पातालं मूलत्वेनास्त्यस्याः ठन्। पृक्कायाम् (पिड़िङ्शाक) राजनि॰ बहुदूरमूलत्वात्तस्यास्तथात्वम्।

**भूतलिपि** स्त्री ६त॰। भूतदैवत्ये वर्णभेदे "वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात्। पञ्च ह्रस्वाः पञ्च दीर्घाः बिन्दन्ताः सन्धिसम्भवाः। पञ्चशः कादयः पञ्चवर्णसहान्ताः प्रकीर्त्तिताः" शा॰ ति॰। कुलाकुलचक्रशब्दे २१२४पृ॰ दृश्यम्।

**भूतलोन्माथ** पु॰ दानवभेदे हरिवं॰ २४अ॰।

**भूतवर्ण** पु॰ ६त॰। ध्येये भूतानां श्वेतादिवर्णे यथोक्तं शा॰ति॰ "स्वच्छं वियन्मरुत् कृष्णो रक्तोऽग्निर्विशदं पयः। पीता भूमिः पञ्चभूतान्येकैकाधारतो विदुः"। "स्वच्छं श्वेतं तत्र वैशद्यच्छिद्ररूपिद्रव्याणां वर्णकथनसम्पादनार्थं सम्प्रदायानुरोधेन" राघवः। भूतदैवते ह्रस्वदीर्घसहिते वर्णादिवर्णे च। भूतलिपिशब्दे कुलाकुलचक्रशब्दे च दृश्यम्।

**भूतवास** पु॰ ६त॰। (बयड़ा) विभीतकवृक्षे। भूतावासाटयोऽप्यत्र

[यत:। अपस्माररोगे राजनि॰

**भूतविक्रिया** स्त्री भूतानां तदाविष्टानामिव विक्रिया

**भूतविद्या** स्त्री भूतादिनिवारणार्था विद्या। सुश्रुतोक्ते दैवाद्युपसर्गोपशमार्थे बलिहरणादौ "भूतविद्या नाम देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्मबलिहरणादि ग्रहोपशमनार्थम्" सा च तत्र उत्तरतन्त्रे दर्शिता "ब्रह्मविद्या क्षत्रविद्या नक्षत्रविद्या भूतविद्या सर्पविद्या" छा॰ उ॰। [शेफालिकायाम् शब्दर:।

**भूतवेशी** स्त्री भूतानामिव वेशोऽस्याः गौरा॰ ङीष्। श्वेत-

**भूतब्रह्मन्** पु॰ भूतः पिशाच इव ब्रह्मा। देवले शब्दमाला।

**भूतशुद्धि** स्त्री॰ भूतानां देहारम्भकपृथिव्यादीनां शुद्धिभावनाविशेषात् शोधनम्। तन्त्रादौ प्रसिद्धे देहारम्भकचतुर्विंशतितत्त्वानां भावनाविशेषेण संस्कारेण देवरूपतासम्पादने। भूतशुद्धिप्रकारस्तन्त्रसारे उक्तो यथा गौतमीये "सुषुम्णावर्त्मना सोऽहमिति मन्त्रेण योजयेत्। सहस्रारे शिवे स्थाने परमात्मनि देशिकः। धूम्रवर्णं ततो वायुवीजं (यं) षड्बिन्दुलाञ्छितम्। पूरयेदिडया वायुं सुधीः षोड़शमात्रया। मात्रया तु चतुःषष्ट्या कुम्भयेच्च सुषुम्णया। द्वात्रिंशन्मात्रया मन्त्री रेचयेत् पिङ्गलाख्यया। पूरयेदनया चैव संशोध्य शोषमारुतम्। रक्तवर्णं वह्निवीजं (रं) त्रिकोणं स्वस्तिकान्वितम्। तेन पूरकयोगेन मात्रया षोड़शाख्यया। चतुःषष्ट्या मात्रया च निर्दहेत् कुम्भकेन च। वामपार्श्वस्थितं पापपुरुषं कज्जलप्रभम्। ब्रह्महत्याशिरस्कञ्च स्वर्णस्तेयभुजद्वयम्। सुरापानहृदायुक्तं गुरुतल्पकटिद्वयम्। तत्संसर्गिपदद्वन्द्वमङ्गप्रत्यङ्गपातकम्। उपपातकरोमाणं रक्तश्मश्रुविलोचनम्। खड्गचर्मधरं क्रुद्धमेवं कुक्षौ विचिन्तयेत्। मूलाधारोत्थितेनैव वह्निना निर्दहेच्च तम्। एवं वन्हेः परितो द्वात्रिंशन्मात्रया ततः। भस्मना वहितं मन्त्री रेचयेदिड़या पुनः। वामनासां चन्द्रवीजं (ठं) कुन्देन्दुधवलप्रभम्। भालेन्दु वीजे संयोज्य ततः षोड़शमात्रया। सुषुम्णया चतुःषष्टिमात्रया तोयवीजकम् (वं)। ध्यात्वाऽमृतमयीं दृष्टिं पञ्चाशद्वर्णरूपिणीम्। तया देहं विचिन्त्यैवं मनसा पिङ्गलाख्यया। द्वात्रिंशन्मात्रया मन्त्री लंवीजेन दृढं नयेत्। स्वस्थाने हंसमन्त्रेण पुनस्तेनैव वर्त्मना। जीवं तत्त्वानि चानीय स्वस्थाने स्थापयेत् ततः। इति कृत्वा भूतशुद्धिं मातृकान्यासमाचरेत्"। ततो हंस इति वीजं हृदयमानीय कुलकुण्डलिनीं पृथिव्यादीनि च यथास्थाने स्थापयेत्। विशेषतस्तु शक्तिविषये। हंस इति जीवादिकं परमशिवे संयोज्य सोऽहमिति मन्त्रेण स्थाने नयेत्। तन्त्रान्तरे "सोऽहमेकं

समाभाव्य जीवं हृदि समानयेत्"। शूद्रे तु विशेषो वाराहीतन्त्रे "हंसाख्यं न चरेत् शूद्रो भूतशुद्धौ कदाचन। चरचाक्षरकं याति दीक्षा च विफला भवेत्"। सारदायाम् "जीवं तेजोमयं आत्मा नमो मन्त्रेण योजयेत्"। भूतशुद्धिपदव्युत्पत्तिमाह त्रिपुरेश्वरे "शरीराकारभूतानां भूतानां यद्विशोधनम्। अव्ययब्रह्मसंयोगात् भूतशुद्धिरियं मता" वराहीये "मूलाधारात्ततो बीजं ब्रह्ममार्गेण देशिकः। हंसेन पुष्करस्थाने परमात्मनि योजयेत्"। ब्रह्ममार्गः सुषुम्णा। त्रिपुरासारसमुच्चये "संयोज्य बीजमथ दुर्गमसुप्तनाडी-मार्गेण पुष्करनिविष्टशिवे सुषुम्ने"। शारदायामपि "प्राणप्रतिष्ठया पश्चात् जीवं देहे निधापयेत्। समुच्चये सद्याख्यं हंसस्तु विपरीतकः। उच्चरेत् परमेशानि! विद्येयं ब्रह्मचारी मता। प्राणप्रतिष्ठामन्त्रोऽयं सर्व-कर्माणि साधयेत्। तेनैव विधिना देवि! स्थिरीकुर्या-च्छिलां ततम्"। तारादौ विशेषस्तत्रैव दृश्यः।

**भूतसञ्चार** पु॰ ६त॰। भूतावेशे राजनि॰।

**भूतसञ्चारिन्** पु॰ भूत इव सञ्चरति सम्+चर–णिनि। दावानले शब्दमा॰। [त्रि भावते"।

**भूतसंप्लव** पु॰ ६त॰। प्रलये "आभूतसंप्लवस्थानममृतत्वं

**भूतसर्ग** पु॰ ६त॰। भूतसृष्टौ स च चतुर्दशविधः यथोक्तं वह्निपु॰ "ब्राह्मं प्राजापत्यैन्द्रं सौम्यमैन्द्रं तथैव च। गान्धर्वश्च कौबेररक्षःपैशाचमानुषम्। स्थावरं पाशवं नागं वार्यं शाकुनिकं तथा। चतुर्दशविधं ह्येतद्भूत-सर्गं प्रकीर्त्तितम्" सोऽवस्थमाहेम्।

**भूतसाधनी** स्त्री भूतानि प्राणिनः साधयति यत्र आधारे ल्युट् ङीप्। भूमौ। भूमिं विना जन्तुमात्रस्योत्पत्ते-रभावात् तस्यास्तथात्वम् यजु॰२६।१ वेददीपः। [राजनि॰

**भूतसार** पु॰ भूत इव कृष्णत्वात् सारोऽस्य। श्योनाकवृक्षे

**भूतहन्त्री** स्त्री भूतान् तद्भयं हन्ति हन–तृच् ङीप्। १वन्ध्याकर्कोट्यां, २श्वेतदूर्वायाम् तद्धारणे हि स्त्रीणां प्रजोत्पत्तिरोधकभूतभयनाशः। [राजनि॰

**भूतहर** पु॰ भूतान् हरति अपसारयति हृ–अच्। गुग्गुलौ

**भूतहारिन्** पु॰ भूतान् हरति स्थानान्तरं नयति हृ–णिनि। देवदारुवृक्षे राजनि॰।

**भूतांश** पु॰ १ऋषिभेदे ऋ॰ १०।१०६।११। २काश्यपर्षौ निरु॰ १२।४०। ६त॰। ३भूतानामंशे च। [अनामक्षाते हक्षे।

**भूताङ्कुश** पु॰ भूतानां पिशाचानामङ्कुश इवापसारकत्वात्।

**भूतात्मन्** पु॰ भूतानि पृथिव्यादीनि यस्य दृश्यानि आत्मा स्वरूपं यस्य। १देहे भूतानि यस्य दृश्यानि भूताः प्राणिनश्च आत्मा स्वरूपं यस्य। २परब्रह्मणि "सर्वं खल्विदं ब्रह्म तज्जलानिति" श्रुतिः। ३सर्वभूतात्मके हिरण्यगर्भे ४विष्णौ ५वटुकभैरवे च 'भूतात्मा भूतभावनः' इति तयोः स्तोत्रे।

**भूतादि** पु॰ ६त॰। "परमेश्वरे भूतादिर्निधिरव्ययः" विष्णुस॰ सांख्यमतसिद्धे २अहङ्कारतत्त्वे "अहङ्कारात् पञ्चतन्मा-त्राणि"सां॰सू॰। सात्त्विके तु तमसाख्ये।

**भूतारि** पु॰ ६त॰। हिङ्गौ राजनि॰ तद्गन्धेन हि भूताप-सरणमिति तस्य तथात्वम्।

**भूतार्त्त** त्रि॰ ३त॰। पिशाचाविष्टे हेमच॰।

**भूतार्थ** पु॰ भूतः सत्यभूतोऽर्थो यस्य। यथार्थे।

**भूताली** स्त्री॰ भूतानीव अलति पर्याप्नोति अल–अच् गौरा॰ ङीष्। १भूमिपाटलौ, २मुस्तायाम् राजनि॰।

**भूतावास** पु॰ भूतानां प्राणिनामावासः अधिष्ठानत्वात्। १विष्णौ, "भूतावासो वासुदेवः"विष्णुस॰।"वसन्ति त्वयि भूतानि भूतावासस्ततो हरिः" हरिवं॰ ६त॰२विभीतक-वृक्षे राजनि॰।

**भूताविष्ट** त्रि॰ भूतैराविष्टः। पिशाचग्रस्ते "भूताविष्टेषु पञ्चायत् व्रतापत्तावु वै मतम्" ज्यो॰त॰।

**भूतावेश** पु॰ ६त॰। पिशाचप्रवेशे (भूते पाओया) त्रिका॰।

**भूति** स्त्री भू-क्तिन्।।भवने २अणिमाद्यष्टविधैश्वर्ये ३विशाला स्थभस्मनि ४गजवेशे च मेदि॰५भूतृणे ६वृक्ष्मतौ ७जाती विशः ८वृद्धिनामौषधे च राजनि॰।

**भूतिक** न॰भूत्या वस्मना कायति कै-क।१भूनिम्बे २कत्तृणे च अमरः। ३यमान्याम् ४चन्दने ५कट्फले हेमच॰। पु॰ वा दीर्घः। भूतीकोऽप्यत्र चित्रके भावप्र॰। [शब्दमा॰।

**भूतिकील** पु॰ भूतेः वस्मनः कील इव। (खाया) भूमिखाते

**भूतितीर्था** स्त्री कुमारानुचरमातृभेदे भा॰ श॰ ४७अ॰।

**भूतियुवक** पु॰कूर्मचक्रस्य वामकुक्षिस्थे देशभेदे मार्कपु॰५८अ॰

**भूतिलय** पु॰ तीर्थभेदे भा॰व॰ १२९अ॰।

**भूतृण** न॰ भुव इव तृणं गन्धवत्त्वात् (गन्धवेण) १तृणभेदे रत्नमा॰ २रोहिषतृणे पु॰ राजनि॰।

**भूतेश** ६त॰। १प्रमथाधीशे २परमेश्वरे च भूतेश्वरादयोऽप्यत्र।

**भूतेष्टा** स्त्री ६त॰। आश्विनकृष्णचतुर्दश्याम्।

**भूतोड्डामर** न॰ तन्त्रभेदे।

**भूतोन्माद** पु॰ भूतकृत उन्मादः। पिशाचकृते उन्मादे।

**भूत्तम** न॰ भुवि उत्तमम् । सुवर्णे हेमच॰ ।

**भूदरीभवा** स्त्री॰ भूदर्य्यां भूमिबिले भवति भू-अच् । आखुकर्ण्यां (उन्दरकानि) भावप्र॰ ।

**भूदार** पुंस्त्री॰ भुवं दारयति खनति दृ-अण् । शूकरे अमरः स्त्रियां जातित्वात् ङीष् ।

**भूदेव** पु॰ भुवि देव इव । विप्रे अमरः । भूसुरादयोऽप्यत्र

**भूधन** पु॰ भूरेव धनमस्य । नृपे हेमच॰ ।

**भूधर** पु॰ भुवं धरति धृ-अच् । पर्वते अमरः ।

**भूध्र** पु॰ भुवं धरति धृ—क । महीध्रे पर्वते हेमच॰ ।

**भूधात्री** स्त्री भुवि जन्या धात्री आमलकी शाक॰त॰। भूम्यामलक्याम् राजनि॰ ।

**भूनाग** पु॰ भुवि नाग इव । उपरसभेदे राजनि॰। [राजनि॰

**भूनिम्ब** पु॰ भुवि जन्यः निम्बः शाक॰त॰। (चिराता) क्षुपभेदे

**भूनिम्बाद्य** न॰ चक्रदत्तोक्ते औषधभेदे "भूनिम्बकटुकाव्योषमुस्तकेन्द्रयवान् समान् । द्वौ चित्रकात् वत्सकत्वग्भागान् षोडश चूर्णयेत् । गुडशीताम्बुना पीतं ग्रहणीदोषगुल्मनुत् । कामलाज्वरपाण्डुत्वमेहारुच्यतिसारहृत् । गुडयोगाद् गुडाम्बु स्याद् गुडवर्णरसान्वितम्" ।

**भूनीप** पु॰ भुवि जन्यो नीपः शाक॰त॰। भूमिकदम्बे राजनि॰

**भूप** पु॰ भुवं पाति पा क । भूमिपाले अमरः भूमिपादयोऽप्यत्र ।

**भूपति** पु॰ ६त॰ । नृपे भूमिपत्यादयोऽप्यत्र ।

**भूपद** पु॰ भुवि पदं मूलं यस्य । १वृक्षमात्रे शब्दच॰। २मल्लिकायां स्त्री॰ ङीष् अमरः ।

**भूपरिधि** पु॰ ६त॰ । भूमेः परिधौ तन्मानं सू॰सि॰ उक्तं यथा "योजनानि शतान्यष्टौ भूकर्णो द्विगुणानि तु । तद्वर्गतो दशगुणात् पदं भूपरिधिर्भवेत्" "लम्बज्याघ्नस्त्रिजीवाप्तः स्फुटो भूपरिधिः स्वकः" । सि॰शि॰गणिताध्यायोक्तं यथा "प्रोक्तो योजनसंख्यया कुपरिधिः सप्ताङ्गनन्दाब्धय ४९६७ स्तद्व्यासः कुभुजङ्गसायकभुवः सिद्धांशकेनाधिकः १५८१।१/२४ । पृष्ठक्षेत्रफलं तथा युगगुणत्रिंशच्छराष्टाद्रयो ७८५१२०२४ भूमेः कन्दुकजालवत् कुपरिधिव्यासाहतेः प्रस्फुटम्" । [रत्नमा॰

**भूपलाश** पु॰ भुवि पलाशं यस्य । विशल्यकारके क्षुपभेदे

**भूपाटलि** भुवि ख्याता पाटलिः । भूतालीतृणे राजनि॰ ।

**भूपाल** पु॰ भुवं पालयति पाल-अण् उप॰स॰। भूपतौ शब्दमा॰

**भूपुत्र** पु॰ ६त॰ । १मङ्गले २नरकासुरे च । १जानक्यां स्त्री शब्दर॰ गौ॰ ङीष् ।

**भूपुर** न॰ भूरिव पुरम् । यन्त्रबहिःस्थे रेखाचतुष्टयवेष्टिते चतुरस्रे भूम्याकारे स्थाने ।

**भूपेष्ट** पु॰ भूपस्येष्टः । राजादनीवृक्षे (पियाशाल) राजनि॰ तद्बीजस्य चिरञ्जि इति ख्यातस्य राजप्रियत्वात्तथात्वम् ।

**भूबदरी** स्त्री भुवि ख्याता बदरी । क्षुद्रकोल्यां राजनि॰ ।

**भूबल** न॰ नरपतिजयचर्य्योक्ते जयसाधनोपाये बलभेदे "स्वरोदयैश्च चक्रैश्च यत्नयंत्र समोऽधिकः । तत्र युद्धे बलं ज्ञेयं भूबलानां जयार्थिनाम् । तेषां नामानि वक्ष्येऽहं ख्यातानि ब्रह्मयामले । चतुरशीतिसंख्यानां यद्बलेन जयी रणे । उड्डी जालन्धरी पूर्णा कामा कोल्ला कवीरिका । शिवीच्छा च महामारी क्षेत्रपाली च चंचला । रुद्रकालानलं प्रोक्तं कालरेखा निरामया । जयलक्ष्मीर्महालक्ष्मीर्जया विजयभैरवी । बाला योगेश्वरी चण्डी व्योमाम्बुभूककर्त्तरी । शार्दूली चिङ्कली तन्वी महामाया महेश्वरी । देवकोटी शिवा शक्तिर्घण्टा माला वराटिका । त्रिखण्डा मञ्जरी धर्मी स्मृता इष्टाखयाऽजया । दुर्मती प्रवरा गौरी काली नरहरी स्मृता । खेचरी भूचरी गुह्या ह्यार्या विष्टकेवला । त्रैलोक्यविजया काली कराला अडवा परा । रौद्री च शिशुमातङ्गी ह्यभेद्या दुष्टनी जिता । बहुला वर्गभूमिश्च कापाली त्वनिलानला । चन्द्रार्कबिम्बभूमी च ग्रहभूराशिखञ्जगा । राहुकालानलौ भूमिः स्वर भूमिर्द्विधा मता । रुद्रत्रिकालिकाश्चैव राहुश्चाष्टविधस्तथा । चन्द्रः सप्तविधः सूर्य्यश्चतुर्धा योगिनी त्रिधा । कालवेला त्रिभेदा च तिथिनक्षत्रवारगा । इमानि भूबलान्यत्र ज्ञात्वा यः प्रविशेत् रणे । परसैन्यं नश्यन्ति मेघा वातहता यथा । समबलाधिके नास्ति स्वरैश्चक्रैश्च भूबलैः । स्थानसैन्याधिके शस्तौ बलविज्ञानसंयुते" । एतल्लक्षणानि तत्र दृश्यानि ।

**भूभट** पु॰ वाजसा॰, ६त॰। भूमिपतौ भूमिभर्त्रादयोऽप्यत्र ।

**भूभुज्** पु॰ भुवं भुङ्क्ते भुनक्ति पालयति वा भुज-क्विप् । भूपाले जटा॰ । [१पर्वते, २भूपाले च मेदि॰ ।

**भूभृत्** पु॰ भुवं बिभर्त्ति धारयति, पालयति वा भृ क्विप् ।

**भूमण्डल** क्लि॰ ६त॰ । मण्डलाकारे भूमिभागे ।

**भूमन्** पु॰ बहोर्भावः बहु+इमनिच् "बहोर्लोपो भू च बहोः" इत्यादेशः । १बहुत्वे अतिशये स्वार्थे इमनिच् प्राग्वत् २अतिशयबहुत्वयुते च । "यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासि-

तव्यः। भूमानं भगवो विजिज्ञास इति” छा॰ उ॰। “यो वै भूमा महत् निरतिशयम् बह्विति पर्य्यायास्तत् सुखं ततोऽर्वाक् सातिशयत्वादल्पम्। अतस्तस्मिन्नल्पे सुखं नास्ति अल्पानां तृष्णाहेतुत्वात् तृष्णा च दुःखबीजम्। न हि दुःखबीजं ज्वरादि सुखं दृष्टं लोके। तस्मादयुक्तं नाल्पे सुखमस्तीति। अतो भूमैव सुखम् तृष्णादिदुःखबीजत्वासम्भवाद्भूम्नः” भाष्यम् तस्मिन् प्रपाठके च यथा यो भूमा तन्निरूपितं दृश्यम्।

**भूमय** त्रि॰ भू+मयट्। १मृदात्मके २छायायां स्त्रिका॰ स्त्री ङीप्

**भूमि(मी)** स्त्री भवन्त्यस्मिन् भूतानि भू—मि किच्च वा ङीप्। १पृथिव्याम् २स्थानमात्रे मेदि॰ ३जिह्वायां संक्षि॰ उणा॰ योगशास्त्रोक्ते ४योगिनां चित्तस्यावस्थाभेदे, ५एकसंख्यायाञ्च। पात्र्यसंख्यादितोऽच् समा॰बहु॰। द्विभूमः प्रासादः पाण्डुभूमो देशः। योगोक्तभूमयश्च “तस्य भूमिषु विनियोगः” पा॰ सू॰ उक्ताः। “तस्य संयमस्य जितभूमेर्याऽनन्तरा भूमिस्तत्र विनियोगः। नह्यजिताधरभूमिरनन्तरभूमिं विलङ्घ्य प्रान्तभूमिषु संयमं लभते तदभावाच्च कुतः तस्य प्रज्ञालोकः, ईश्वरप्रसादाज्जितोत्तरभूमिकस्य च नाधारभूमिषु परचित्तज्ञानादिसंयमो युक्तः कस्मात् तदर्थस्यान्यत एवावगतत्वात् भूमेरस्या इयमनन्तरा भूमिः” भा॰। सा च भूमिः सप्तप्रकारा यथोक्तं तत्रैव “तस्य सप्तधा प्रान्तभूमिः प्रज्ञा” पात॰सू॰। “तस्येति प्रत्युदितख्यातेः प्रत्याम्नायः सप्तधेति अशुद्ध्यावरणमलापगमाच्चित्तस्य प्रत्ययान्तरानुत्पादे सति सप्तप्रकारैव प्रज्ञा विवेकिनो भवति। तद्यथा परिज्ञातं हेयं नास्य पुनः परिज्ञेयमस्ति क्षीणा हेयहेतवो न पुनरेतेषां क्षेतव्यमस्ति साक्षात्कृतं निरोधसमाधिना हानम्। भावितो विवेकख्यातिरूपो हानोपाय इत्येषा चतुष्टयी कार्य्यविमुक्तिः प्रज्ञायाः। चित्तविमुक्तिस्तु त्रयी चरिताधिकारा बुद्धिगुणा गिरिशिखरकूटच्युता इव ग्रावाणो निरवस्थानाः स्वकारणे प्रलयाभिमुखाः सह तेनास्तं गच्छन्ति। न चैषां विप्रलीनानां पुनरस्त्युत्पादः प्रयोजनाभावादिति एतस्यामवस्थायां गुणसम्बन्धातीतस्वरूपमात्रज्योतिरमलः केवली पुरुष इत्येतां सप्तविधां प्रान्तभूमिप्रज्ञामनुपश्यन् पुरुषः कुशल इत्याख्यायते प्रतिप्रसवेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति सिद्धा भवति विवेकख्यातिर्हानोपायः इति” भा॰। “प्रत्युदितख्यातेः वर्त्तमानख्यातेः योगिनः प्रत्याम्नायः परामर्शः अशुद्धिरेवावरणं चित्तसत्त्वस्य तदेव मलं तस्यापगमात् चित्तस्य प्रत्ययान्तरानुत्पादे व्यवहारास्त्युत्थानप्रत्ययानुत्पादे निःसृतविवेकख्यातिनिष्ठामापन्नस्य सप्तप्रकारैव प्रज्ञा विवेकिनो भवति विषयभेदात् प्रज्ञाभेदः प्रकृष्टोऽन्तो यासां भूमीनामवस्थानां तास्तथोक्ता यतः परं नास्ति संप्रकर्षः प्रान्ता भूमयः यस्याः प्रज्ञाया विवेकख्यातेः सा तथोक्ता ता एव सप्तप्रकाराः प्रज्ञाः भूमीः उदाहरति। तद्यथेति तत्र पुरुषप्रयत्ननिष्पाद्यासु चतसृषु भूमिषु प्रथमामुदाहरति परिज्ञातं हेयं यावत् किल प्राधानिकं तत् सर्वं परिणामतापसंस्कारैर्गुणवृत्तिविरोधात् दुःखमेवेति हेयं मया परिज्ञातम्। प्रान्ततां दर्शयति नास्य पुनः किञ्चित् परिज्ञातं परिज्ञेयमस्ति। द्वितीयामाह क्षीणा इति। प्रान्ततामाह न पुनरिति। तृतीयामाह साक्षात्कृतं प्रत्यक्षेण निश्चितं यथा संप्रज्ञातावस्थायामेव निरोध॰ समाधिसाध्यं हानं न पुनरस्मात् परं निश्चेतव्यमस्तीति शेषः। चतुर्थीमाह भावितो निष्पादितः विवेकख्यातिरूपो हानोपायो नास्याः परं भावनीयमस्ति इति शेषः। एषा चतुष्टयी कार्य्यविमुक्तिरिति कार्य्यान्तरेण विमुक्तिः प्रज्ञाया इत्यर्थः प्रयत्ननिष्पाद्याश्चोक्ताऽनिष्पादनीयामप्रयत्नसाध्यां चित्तविमुक्तिमाह चित्तविमुक्तिस्तु त्रयी। तत्र प्रथमामाह चरिताधिकारा बुद्धिकृतभोगापवर्गकार्य्येत्यर्थः। द्वितीयामाह गुणा इति प्रान्ततामाह न चैषामिति। तृतीयामाह एतस्यामवस्थायामिति तस्यामवस्थायां जीवन्नेव पुरुषः कुशलो मुक्त इत्युच्यते चरमदेहत्वादित्याह एतामिति। अनौपचारिकं मुक्तमाह प्रतिप्रसवे प्रधानलयेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति” विवरणम्।

पृथिवीरूपभूमिगुणाश्च भा॰प्रा॰ उक्ता यथा “भूमेः स्थैर्य्यं गुरुत्वञ्च काठिन्यं प्रसवार्थता। गन्धो गुरुत्वं शक्तिश्च सङ्घातः स्थापना धृतिः”। प्रथमगुरुत्वं पतनविरोधी गुणः द्वितीयगुरुत्वम् पिण्डपुष्टिरतो न पौनरुक्त्यम्। शक्तिः धारणादिसामर्थ्यम् संघातः संश्लिष्टावयवत्वम्। स्थापना मनुष्यादिधारणानुकूलव्यापारः। धृतिर्धारणा इत्यर्थः।

**भूमिकदम्ब** पु॰ भूमिजातः कदम्बः शा॰ त॰। कदम्बभेदे “भूमिकदम्बाः कटुकास्तथा दोषहरा हिमाः। कषाय

तिक्ताः पित्तघ्ना वीर्यवृष्टिकरा पराः" राजनि० ।

**भूमिकन्दली** स्त्री भूम्या कन्दली शा०त० । कन्दलीभेदे माघः ६।१०। मल्लि० ।

**भूमिकम्प** पु० ६त० । क्षितिचलने तत्कारणादिकं स फलविशेषं वृ०सं० ३२अ० उक्तं यथा

"क्षितिकम्पमाहुरेके बृहदन्तर्जलनिवासिसत्त्वकृतम् । भूभारखिन्नदिग्गजविश्रामसमुद्भवं चान्ये । अनिलोऽनिलेन निहतः क्षितौ पतन् सस्वनं करोत्यन्ये । केचित्त्वदृष्टकारितमिदमन्ये प्राहुराचार्याः । गिरिभिः पुरा सपक्षैर्वसुधा प्रपतद्भिरुत्पतद्भिश्च । आकम्पिता पितामहमाहामरसदसि सव्रीडम् । भगवन्नाम ममैतत् त्वया कृतं यदचलेति तन्न तथा । क्रियतेऽचलैश्चलद्भिः शक्ताहं नास्य खेदस्य । तस्याः सगद्गदगिरं किञ्चित् स्फुरिताधरं विनतमीक्ष्य । साम्बुविलोचनमथ लोकपितामहः प्राह । मन्युं हरेन्द्र! धात्र्याः क्षिप कुलिशं शैलपक्षभङ्गाय । शक्रः कृतमित्युक्त्वा मा भैरिति वसुमतीमाह । किन्त्वनिलदहनसुरपतिवरुणाः सदसत्फलावबोधार्थम् । प्राग्द्वित्रिचतुर्भागेषु दिननिशोः कम्पयिष्यन्ति । चत्वार्यार्यम्णाद्यान्यादित्यं मृगशिरोऽश्वयुक् चेति । मण्डलमेतद्वायव्यमस्य रूपाणि सप्ताहात् । धूमाकुलीकृताशे नभसि नभस्वान् रजः क्षिपन् भौमम् । विरुजन् द्रुमांश्च विचरति रविरपटुकरावभासी च । वायव्ये भूकम्पे सस्याम्बुवनौषधीक्षयोऽभिहितः । श्वयथुश्वासोन्मादज्वरकासभवा वणिक्पीडा । रूपायुधभृद्वैद्याः स्त्रीकविगान्धर्वपण्यशिल्पिजनाः । पीड्यन्ते सौराष्ट्रककुरुमगधदशार्णमत्स्याश्च । पुष्याग्नेयविशाखाभरणीपित्र्याजभाग्यसंज्ञानि । वर्गो हौतभुजोऽयं करोति रूपाण्यथैतानि । तारोल्कापातावृतमादीप्तमिवाम्बरं सदिग्दाहम् । विचरति मरुत्सहायः सप्तार्चिः सप्तदिवसान्तः । आग्नेयेऽम्बुदनाशः सलिलाशयसङ्क्षयो नृपतिवैरम् । दद्रूविचर्चिकाज्वरविसर्पिकाः पाण्डुरोगश्च । दीप्तौजसः प्रचण्डाः पीड्यन्ते चाश्मकाङ्गबाह्लीकाः । तङ्गणकलिङ्गवङ्गद्रविडाः शबराश्च नैकविधाः । अभिजिच्छ्रवणधनिष्ठाप्राजापत्यैन्द्रवैश्वमैत्राणि । सुरपतिमण्डलमेतद्भवन्ति चास्यापि रूपाणि । चलिताचलवर्ष्माणो गम्भीरविराविणस्तडित्वन्तः । गवलालिकुलाहिनिभा विसृजन्ति पयः पयोवाहाः । ऐन्द्रं श्रुतिकुलजातिख्यातावनिपालगणपविध्वंसि । अतिसारगलग्रहवदनरोगकृच्छर्दिकोपाय । काशियुगन्धरपौरवकिरातकीराभिसारहलमद्राः । अर्बुदसुराष्ट्रमालवपीडाकरमिष्टवृष्टिकरम् । पौष्णाप्याद्रार्श्लेषामूलाहिर्बुध्न्यवरुणदैवानि । मण्डलमेतद्वारुणमस्यापि भवन्ति रूपाणि । नीलोत्पलालिभिन्नाञ्जनत्विषो मधुरराविणो बहुलाः । तडिदुद्भासितदेहा धाराङ्कुरवर्षिणो जलदाः । वारुणमर्णवसरिदाश्रितघ्नमतिवृष्टिदं विगतवैरम् । गोनर्दचेदिकुकुरान् किरातवैदेहकान् हन्ति । षड्भिर्मासैः कम्पो द्वाभ्यां पाकञ्च याति निर्घातः । अन्यानप्युत्पातान् जगुरन्ये मण्डलैरेतैः । उल्का हरिचन्द्रपुरं रजश्च निर्घातभूकम्पककुप्प्रदाहाः । वातोऽतिचण्डो ग्रहणं रवीन्द्वोर्नक्षत्रताराग्रहवैकृतानि । व्यभ्रे वृष्टिर्वैकृतं वातवृष्टिर्धूमोऽनग्नेर्विस्फुलिङ्गार्चिषो वा । वन्यं सत्त्वं ग्राममध्ये विशेद्वा रात्रावैन्द्रं कार्मुकं दृश्यते वा । सन्ध्याविकाराः परिवेषखण्डा नद्यः प्रतीपा दिवि तूर्यनादाः । अन्यच्च यत् स्यात् प्रकृतेः प्रतीपं तन्मण्डलैरेव फलं निगाद्यम् । इन्द्राग्नी वायव्यं वायुश्चाग्नेन्द्रमेवमन्योऽन्यम् । वारुणहौतभुजावपि वेलानलजाः कम्पाः । प्रथितनरेश्वरमरणव्यसनान्याग्नेयवायुमण्डलयोः । क्षुद्भयमरकावृष्टिभिरुपताप्यन्ते जनाश्चापि । वारुणपौरन्दरयोः सुभिक्षशिववृष्टिहार्दयो लोके । गावोऽतिभूरिपयसो निवृत्तवैराश्च भूपालाः । पक्षैश्चतुर्भिरनिलस्त्रिभिरग्निर्देवराट् च सप्ताहात् । सद्यः फलति च वरुणो येषु न कालोऽद्भुतेषूक्तः । चलयति पवनः शतद्वयं शतमनलो दशयोजनान्वितम् । सलिलपतिरशीतिसंयुतं कुलिशधरोऽप्यधिकं च षष्टिकम् । त्रिचतुर्थसप्तमदिने मासे पक्षे तथा त्रिपक्षे च । यदि भवति भूमिकम्पः प्रधाननृपनाशनो भवति ।"

भूमिचलनादयोऽप्यत्र । "निर्घाते भूमिचलने" म०त० ।

**भूमिका** स्त्री भूमिरिव कायति कै—क । १रचनायां "अन्यरूपैरन्यस्य प्रवेशस्तत्र भूमिका" इत्युक्ते नाट्ये-अभिनेयपात्रादिवेशान्तरग्रहणे २पर्य्ये ३वक्तव्यकथोद्घाते ४कक्षायाञ्च "नैयायिकादिभिरात्मा प्रथमभूमिकायामवतारितः" इति सांख्यप्रवचनभाष्यम् ।

**भूमिकुष्माण्ड** पु० भूमिजातः कुष्माण्डः शा०त० (भुँइकुमड़ा) ख्याते लताभेदे रत्नमा० ।

**भूमिखर्जूरिका** स्त्री भुवि जाता खर्जूरिका शा० त० । खर्जूरिकाभेदे "भूमिखर्जूरिका स्वाद्वी दुरारोहा मृदु-

ष्टा । अथ लम्बफला काकजर्कटी स्वादुमस्तका । पिण्डखर्जूरिका त्वन्या सा देशे पश्चिमे भवेत् । खर्जूरी गोस्तनाकारा परद्वीपादिहागता । जायते पश्चिमे देशे सा छोहारेति कीर्त्तिता । खर्जूरीत्रितयं शीतं मधुरं रसपाकयोः । स्निग्धं रुचिकरं हृद्यं क्षतक्षयहरं गुरु । तर्पणं रक्तपित्तघ्नं पुष्टिविष्टम्भशुक्रदम् । कोष्ठमारुतकृद्बल्यं वान्तवातकफापहम् । ज्वराभिघातक्षुत्तृष्णाकासश्वासनिवारणम् । मदमूर्च्छामरुत्पित्तमद्योद्भूतगदान्तकृत् । महतीभ्यां गुणैरल्पा स्वल्पखर्जूरिका स्मृता । खर्जूरीतरुतोयन्तु मदपित्तकरं भवेत् । वातश्लेष्महरं रुच्यं दीपनं बलशुक्रकृत्” भावप्र० ।

**भूमिचम्पक** पु० भूमिलग्नः चम्पकः शाक०त०(भूंचांपा) वृक्षभेदे शब्दच० ।

**भूमिज** पु० भूमेर्जायते जन-ड । १मङ्गलग्रहे २नरकासुरे मेदि० ३भूमिकदम्बे ४मनुष्ये च राजनि० । ५भूमिजातमात्रे त्रि० । ६सीतायां स्त्री ।

**भूमिजगुग्गुलु** पु० कर्म० । भाषापुरजाते गुग्गुलौ राजनि० ।

**भूमिजम्बु** स्त्री ७त० । क्षुद्रजम्ब्वां रत्नमा० वा ङी-तत्रार्थे राजनि० । स्वार्थे क । तत्रार्थे स्त्री अमरः ।

**भूमिजीविन्** पु० भूमिं तत्कर्षणं जीवति जीव-णिनि । वैश्ये शब्दरत्ना० ।

**भूमिञ्जय** पु० विराटनृपस्य पुत्रभेदे भा० वि० ३५अ० ।

**भूमिधर** पु० भूमिं धरति धृ-अच् । १कुलपर्वते उपचारात् २पर्वतमात्रे । [दयोऽप्यत्र ।

**भूमिप** पु० भूमिं पाति पा-क । नृपे जटा० । भूमिपाला-

**भूमिपक्ष** पु० भूमिः पक्ष इवास्य । वाताश्वे हारा० ।

**भूमिपति** पु० ६त० । नृपतौ भूमिनाथादयोऽप्यत्र ।

**भूमिपिशाच** पु० भूमौ पिशाच इव । तालवृक्षे जटा० ।

**भूमिपुत्र** पु० ६त० । १मङ्गलग्रहे २नरकासुरे च भूमिपुत्रादयोऽप्यत्र । ३जानक्यां स्त्री गौरा० ङीष् ।

**भूमिप्रविभाग** पु० सुश्रुतोक्ते औषधार्थभूमिविभागे “अथातो भूमिप्रविभागविज्ञानीयमध्यायं व्याख्यास्यामः । श्वभ्रशर्कराश्मविषमवल्मीकश्मशानाघातनदेवतायतनसिकताभिरनुपहतामनूषरामभङ्गुरामदूरोदकां स्निग्धां प्ररोहवतीं मृद्वीं स्थिरां समां कृष्णां गौरीं लोहितां वा भूमिमौषधार्थं परीक्षेत तस्यां जातमपि कृमिविषशस्त्रातपपवनदहनतोयसम्बाधमार्गैरनुपहतमेकरसं पुष्टं पृथ्ववगाढमूलमुदीच्यां चौषधमाददीतेत्येष भूमिपरीक्षाविशेषः सामान्यः । विशेषतस्तु । तत्राश्मवती स्थिरा गुर्वी श्यामा कृष्णा वा स्थूलवृक्षशस्यप्राया स्वगुणभूयिष्ठा । स्निग्धा शीतलाऽऽसन्नोदका स्निग्धशस्यतृणकोमलवृक्षप्राया शुक्लाऽम्बुगुणभूयिष्ठा । नानावर्णा लघ्वश्मवती प्रविरलाल्पपाण्डुवृक्षप्ररोहाऽग्निगुणभूयिष्ठा । रूक्षा भस्मरासभवर्णा तनुवृक्षकोटरात्परसवृक्षप्रायाऽनिलगुणभूयिष्ठा । मृद्वी समा श्वभ्रवत्यव्यक्तरसजला सर्वतोऽसारवृक्षा महापर्वतवृक्षप्राया श्यामा चाकाशगुणभूयिष्ठा । तत्र केचिदाहुराचार्य्याः प्रावृड्वर्षाशरद्धेमन्तवसन्तग्रीष्मेषु यथासंख्यं मूलपत्रत्वक्क्षीरसारफलान्याददीतेति तत्तु न सम्यक् कस्मात् सौम्याग्नेयत्वाज्जगतः । सौम्यान्यौषधानि सौम्येष्वृतुष्वाददीताग्नेयान्याग्नेयेष्वेवमव्यापन्नगुणानि भवन्ति । सौम्यान्यौषधानि सौम्येष्वृतुषु गृहीतानि सोमगुणभूयिष्ठायां भूमौ जातान्यतिमधुरस्निग्धशीतानि जायन्ते । एतेन शेषं व्याख्यातम् । तत्र पृथिव्यम्बुगुणभूयिष्ठायां भूमौ जातानि विरेचनद्रव्याण्याददीताग्न्याकाशमारुतगुणभूयिष्ठायां वमनद्रव्याणि । उभयगुणभूयिष्ठायामुभयतोभागानि । आकाशगुणभूयिष्ठायां संशमनान्येवं बलवत्तराणि भवन्ति । सर्वाण्येव चाभिनवान्यन्यत्र मधुघृतगुडपिप्पलीविडङ्गेभ्यः । सर्वाण्येव सक्षीराणि वीर्य्यवन्ति तेषामसम्पत्तावनतिक्रान्तसंवत्सराण्याददीतेति । भवन्ति चात्र । गोपालास्तापसा व्याधा ये चान्ये वनचारिणः । मूलाहाराश्च ये तेभ्यो भेषजव्यक्तिरिष्यते । सर्वावयवसाध्येषु पलाशलवणादिषु । व्यवस्थितो न कालोऽस्ति तत्र सर्वो विधीयते । गन्धवर्णरसोपेता षड्विधा भूमिरिष्यते । तस्माद्भूमिस्वभावेन बीजिनः षड्रसैर्युताः । अव्यक्तः किल तोयस्य रसो निश्चयनिश्चितः । रस एव स चाव्यक्तो भूमेरेव रसाद्भवेत् । सर्वलक्षणसम्पन्ना भूमिः साधारणी स्मृता । द्रव्याणि यत्र तत्रैव तद्गुणानि विशेषतः । विगन्धेनापरामृष्टमविपन्नं रसादिभिः । नवं द्रव्यं पुराणं वा ग्राह्यमेव विनिर्दिशेत् । विडङ्गं पिप्पली क्षौद्रं सर्पिश्चाप्यनवं हितम् । शेषमन्यत्त्वभिनवं गृह्णीयाद्दोषवर्जितम् । जङ्गमानां वयःस्थानां रक्तरोमनखादिकम् । क्षीरमूत्रपुरीषाणि जीर्णाहारेषु संहरेत् । प्लोतमृद्भाण्डफलकशङ्कुविन्यस्तभेषजम् । प्रशस्तायां दिशि शुचौ भेषजागारमिष्यते ।”

**भूमिमण्ड** पु॰ भूमिं मण्डयति मण्ड—अच् । (छापरमाळि) लताभेदे रत्नमा॰ । [ल्यु । माधवीलतायाम् राजनि॰।

**भूमिमण्डपभूषणा** स्त्री भूमिमण्डप इव तं भूषयति भूषि—

**भूमि(मी)रुह** पु॰ भूम्यां भूमौ वा रोहति रुह—क । वृक्षे महीरुहादयोऽप्यत्र । [त्रिका॰।

**भूमिलाभ** पु॰ भूमिर्लभ्यतेऽत्र लभ-आधारे घञ् । मृत्यौ

**भूमिलेपन** न॰ भूमिर्लिप्यतेऽनेन लिप-करणे ल्युट् हृत॰ । गोमये हेमच॰ ।

**भूमिवर्द्धन** पु॰ भूमिं वर्द्धयति स्वदेहस्यपार्थिवांशोपचयेन वृध-णिच-ल्यु । शवे मृते हेमच॰ क्षितिवर्द्धनादयोऽप्यत्र

**भूमिशय** पु॰भूमौ शेते शी—अच्।१आखौ २भूमौ शयाने त्रि॰

**भूमिष्ठ** पु॰ भूमौ तिष्ठति स्था—क अलु॰सम् । भूपृष्ठस्थे ।

**भूमिसत्त्र** न॰भूमिदानरूपं सत्त्रं शा॰त॰। भूमिदानरूपे याग-भेदात्मके सत्त्रे "इक्षुभिः सन्ततां भूमिं यवगोधूमशालि-नीम् । गोऽश्ववाहनपूर्णां वा बाहुवीर्य्यादुपार्जिताम् । निधिमत्तीं ददद्भूमिं सर्वरत्नपरिच्छदाम् । अक्षयान् लभते लोकान् भूमिसत्त्रं हि तस्य तत्" भा॰अनु॰६२अ॰

**भूमिसम्भवा** स्त्री भूमिः सम्भवोऽस्याः । १सीतायां जटा॰ । २मङ्गलग्रहे ३नरकासुरे पु॰ । ४भूमिजातमात्रे त्रि॰ ।

**भूमिसेन** पु॰ दशममनोःपुत्रभेदे मार्कं॰पु॰ ६४अ॰ ।

**भूमिस्तोम** पु॰ एकाहसाध्ये यज्ञभेदे आश्व॰ ६.५।२ ।

**भूमिस्पृश्** पु॰ भूमिं स्पृशति स्पृश—क्विन् । १वैश्ये २मनुष्ये ३चौरभेदे मेदि॰। ४खञ्जे ५अन्धे च शब्दरत्ना॰ ।

**भूमी** स्त्री भू-मि किच्च ङीप् ।१कर्णान्तिकायां विवाहहनन-हेतुतया यात्र स्तुते चक्रा "भूमी कुरवकश्चैव गण एकचरः स्मृतः । एकधो द्विस्त्रिधो वापि सर्वोत्तव्यो विवाहदः" ।

**भूमीच्छा** स्त्री भूमौ तत्पतने इच्छा । भूमिपतनेच्छायाम् ।

**भूमीन्द्र** पु॰ भूमौ इन्द्र इव । नृपे शब्दर॰ ।

**भूमीसह** पु॰ भूमौ सहते सह—अच् । (भुरषर) वृक्षभेदे "भूमीसहस्तु शिशिरः रक्तपित्तप्रसादनः" भावप्र॰ ।

**भूम्यनन्तर** पु॰भूमेरनन्तरः । स्वविषयसन्निकृष्टदेशस्थे नृपाणां शत्रौ कामन्द॰ ८५६ ।

**भूम्य** त्रि॰ भूमिमर्हति यत् । धरार्हे ऋ॰ ५।४१।१० ।

**भूम्यामलकी** स्त्री भूमिलग्ना आमलकी शाक॰त॰। स्वनाम-ख्याते क्षुपे राजनि॰। "स्यात् भूम्यामलकी तिक्ता कषाया मधुरा हिमा । पिपासाकासपित्तास्रकफकण्डूपाण्डुक्षय-प्रणुत्" भावप्र॰ ।

**भूम्यामली** स्त्री भूम्या सह आमलति सम्बध्नाति आ+मल अच गौ॰ ङीष् । भूम्यामलक्याम् राजनि॰ ।

**भूम्याहुल्य** न॰ क्षुपभेदे (भूजातखड़) राजनि॰।[शब्दरत्ना॰

**भूयस्** अव्य॰ भुवे भावाय यस्यति यस—भावे क्विप् । पुनरर्थे

**भूयस्** त्रि॰अतिशयेन बहुः ईयसुन् ।"बहोर्लोपो भू च बहोः" ईलोपः भूरादेशश्च । बहुतरे मेदि॰स्त्रियां ङीप् ।

**भूयशस्** अव्य॰भूयस्+वीप्सार्थे शस् सलोपः। बहुश इत्यर्थे

**भूयिष्ठ** त्रि॰ अतिशयेन बहुः इष्ठन् भ्वादेशो युक् च ।१बहु-तरे २प्रचुरे च ।

**भूयुक्ता** स्त्री भुवा युक्ता संबद्धा । भूमिखर्ज्यूराम् राजनि॰

**भूर्** अव्य॰ भू-रुक् । अन्तरीक्षलोकादधःस्थे चरणसञ्चार-योग्यस्थाने लोके भूः स्वाहा इदं भूः वसुधा देवतोद्देश्यः ।

**भूरि** त्रि॰ भू-क्रिन् । १विष्णौ २शिवे ३इन्द्रे च मेदि॰ । ४स्वर्णे न॰शब्दरत्ना॰बहु-रि भ्वादेशः ५प्रचुरे त्रि॰अमरः ६सोमदत्तपुत्रभेदे पु॰ भा॰ आ॰ १८६ अ॰ । शिवा॰ अपत्ये अण् । भौर भूरेरपत्ये पुंस्त्री॰ । [द्रव्ये राजनि॰ ।

**भूरिगन्धा** स्त्री भूरिः प्रचुरो गन्धो यस्याः । मुरानामगन्ध-

**भूरिगम** पु॰ भूरि भारयुक्तत्वेऽपि बहु गच्छति गम-अच् । गर्दभे राजनि॰ स्त्रियां जातित्वात् ङीष् ।

**भूरिज्** स्त्री भू-इजि अश्व रपरः । पृथिव्यां त्रि॰को॰ ।

**भूरिदक्षिण** त्रि॰ भूरिर्दक्षिणा यस्य । १बहुतरदक्षिणा-दानयुक्ते २विष्णौ पु॰"कपीन्द्रो भूरिदक्षिणः"विष्णुस॰ ।

**भूरिदुग्धा** स्त्री भूरीणि दुग्धानि निर्यासा यस्याः । वृश्चि-काल्यां राजनि॰ ।

**भूरिद्युम्न** पु॰ भूरि द्युम्नं यस्य । नवममनोः पुत्रभेदे सुद्धित-पुत्रके हरिवं॰ ७अ॰ । मार्कं॰पु॰ । भूद्युरिमृत इति पाठः प्रथमादिकः तदेववाक्यतया भूरिद्युम्न इत्येव तत्र पाठस्यौचित्यात् ।

**भूरिधामन्** पु॰ नवममनोःपुत्रभेदे हरिवं॰ ७अ॰ ।

**भूरिपत्र** पु॰ भूरीणि पत्राण्यस्य । उग्रवंशतृणे राजनि॰ ।

**भूरिपलितदा** स्त्री भूरि पलितमिव दायति दै-क । पाण्डुरफलीवृक्षे राजनि॰ ।

**भूरिपुष्पा** स्त्री भूरीणि पुष्पाण्यस्याः । शतपुष्प्याम् राजनि॰

**भूरिप्रेमन्** पु॰ भूरिः प्रचुरः प्रेमास्य । चक्रवाके राजनि॰ ।

**भूरिफेना** स्त्री भूरीणि फेनान्यस्याः । (चामकषा) सप्तला॰ वृक्षे अमरः ।

**भूरिबला** स्त्री भूरीणि बलानि यस्याः ६ब॰।१अतिबलायाम्

राजनि०। २प्रचुरबले त्रि० ३धृतराष्ट्रपुत्रभेदे पु० भा० आ० २७अ०

**भूरिमल्ली** स्त्री भूरि बहु यथा स्यात् तथा मल्लति मल्ल-अच् गौरा० ङीष्। अम्बष्ठायाम् राजनि०।

**भूरिमाय** पुंस्त्री० भूरयः माया यस्य। १शृगाले अमरः स्त्रियां योपधत्वात् टाप्। २प्रभूतमायायुते त्रि०

**भूरिमूलिका** स्त्री भूरीणि मूलानि यस्याः कप् टापि अत इत्त्वम्। अम्बष्ठायाम् नैघण्टुप्र०।

**भूरिशस्** अव्य० भूरि-शस्। बहुश इत्यर्थे।

**भूरिश्रवस्** पु० ६ब०। चन्द्रवंश्ये १सोमदत्तसुते नृपभेदे। भा० आ० १८७ अ०। २प्रचुरयशस्के त्रि०।

**भूरिश्रेष्ठिक** पु० भूरयः श्रेष्ठिनो यत्र। (भुरसुट्) गौड़देशस्थे पुरभेदे "गौड़े राष्ट्रमनुत्तमं निरुपमा तत्रापि राढ़ा पुरी भूरिश्रेष्ठिकनाम धाम परमं तत्रोत्तमोनः पिता" प्रबोधच०।

**भूरिहन्** त्रि० भूरीन् हन्ति हन-क्विप्। १बहुतरनाशके २असुरभेदे पु० भा० शा० २२७ अ०।

**भूरुण्डी** स्त्री भुवं रुण्डति आच्छादयति रुडि-आहृतौ (माधवकृतौ पठितः) अच् उप० स०। (हातिशुंड़ा) वृक्षभेदे अमरः। [शब्दमा०

**भूरुह** पु० भुवि रोहति रुह-क ७त०। महीरुहे वृक्षे

**भूर्ज** पु० ऊर्ज-अच् ७त०। स्वनामख्याते वल्कप्रधाने वृक्षे। "भूर्जत्वचः स्पर्शवतीर्दधानाः" कुमा०। "भूर्जः कटुः कषायोष्णः भूतरक्षाकरः परः। त्रिदोषशमनः पथ्यः दुष्टकौटिल्यनाशनः" राजनि०। "कर्णरोगपित्तकफमेदोविषहरश्च सः" भावप्र०।

**भूर्जकण्टक** पुंस्त्री० "व्रात्यात्तु जायते विप्रात् पापात्मा भूर्जकण्टकः" मनूक्ते जातिभेदे स्त्रियां ङीष्।

**भूर्जपत्र** पु० भुवि-ऊर्जं पत्रं यस्य। स्वनामख्याते वृक्षे। भूर्जत्वगादयोऽप्यत्र रत्नमा०।

**भूर्णि** स्त्री भृ-नि नि० ऊत्व रपरः। पृथिव्यां सि० कौ०।

**भूर्लोक** पु० कर्म०। पादसञ्चारयोग्यस्थानरूपे लोके।

**भूलग्ना** स्त्री भुवि लग्ना ७त०। शङ्खपुष्प्याम् राजनि०।

**भूलता** स्त्री भुवि लतेव। महीलतायां (केँचो) सरीसृपभेदे हेम०।

**भूलिङ्गशकुनि** पु० भूलिङ्गः शकुनिः कर्म०। विरुद्धवादिनि पक्षिभेदे "प्रकृतिं यान्ति भूतानि भूलिङ्गशकुनिर्यथा" भा० स० ४१अ०। तद्वृत्तिर्यथा

"अथ चैषा न ते बुद्धिः प्रकृतिं याति भारत!। मयैव कथितं पूर्वं भूलिङ्गशकुनिर्यथा। भूलिङ्गशकुनिर्नाम पार्श्वे हिमवतः परे। भीष्म! तस्याः सदा वाचः श्रूयन्तेऽर्थविगर्हिताः। मा साहसमितीदं सा सततं वाशते किल। साहसं चात्मनातीव चरन्ती नावबुध्यते। सा हि मांसार्गलं भीष्म! मुखात् सिंहस्य खादतः। दन्तान्तरविलग्नं यत्तदादत्तेऽल्पचेतना। इच्छतः सा हि सिंहस्य भीष्म! जीवत्यसंशयम्। तद्वत्त्वमप्यधर्मिष्ठ! सदा वाचः प्रभाषसे भा० स० ४४अ०। "भूलिङ्गशकुनिर्यथान्यद्वदत्यन्यत् करोति तद्वत्ते वृत्तं कामयन्ते शबलं वदन्तीत्यर्थः भुवं लिङ्गतीति भूलिङ्गो बिलशायी पक्षिविशेषः एषेति पाठे एषा अस्मदीया बुद्धिस्त्वदीया त्वद्वत्ते इति योज्यं तदा स्वस्यैव शकुन्युपमत्वम् अर्थविगर्हिताः उक्तिविपरीतक्रियया अर्थोविगर्हितो यासां ताः। वाशते शब्दं करोति। मांसार्गलं दंष्ट्रान्तरलग्नस्य मांसस्य बहिर्निर्गतभागमर्गलम् इच्छति इति। सा हि पक्षिणी मृत्युमुखे प्रविष्टापि तदुपेक्षया जीवन्ती यथा लोकानुपदिशति मा साहसमिति तथा त्वमुपदेशकारित्वात् मृत्युमुखे पतितोऽपि मृत्युना उपेक्षितो जीवन्लोकोपदिशसि मृत्युमुखे न पतितव्यमिति" नीलक०।

**भूवलय** न० भुवो वलयमिव। भूमिपरिधौ। [त्रिकाण्डः

**भूशमी** स्त्री भूजन्मा शमी शाक०त०। लघुशम्यां शब्दमा०

**भूशय** पु० भुवि शेते शी-अच् ७त०। १बिलशये नकुलादौ। २विष्णौ च "भूशयो भूषणो भूतिः" विष्णुस०। स हि रामावतारे समुद्रलङ्घनाय सागरोपान्तभूमौ शयित इति तस्य तथात्वम्। [नैघण्टुप्र०

**भूशर्करा** स्त्री भुवि ख्याता शर्करा शा० त०। कन्दभेदे

**भूशेलु** पु० भुवि ख्याता शेलुः शा० त०। भूकर्वुदारके राजनि०।

**भूष** अलङ्करणे वा चु०उभ०पक्षे भ्वा० पर० सक० सेट्। भूषयति ते भूषति अबूभुषत्-त अभूषीत्।

**भूषण** न० भूष्यतेऽनेन भूष-करणे ल्युट्। १अलङ्कारे किरीटादौ। भावे ल्युट्। २भूषायाम्। अलङ्कारभेदाः तत्साधनद्रव्याणि यथा

"किरीटञ्च शिरोरत्नं कुण्डलञ्च ललाटिका। तालपत्रञ्च हारश्च ग्रैवेयकमधोर्मिका। प्रालम्बिका रत्नसूत्रमुक्तोऽर्धमालिका। पार्श्वद्योतो नखद्योतोऽङ्गुलीच्छादक तथा। कटिप्रम्नं माणवको मूर्द्धतारा वलनिका। पङ्कूरो

बाहुवलयः शिखाभूषणमिङ्गिका। प्रमण्डवस्त्रं तनूपाशं नाभिपूरोऽथ मालिका। कञ्चुकी स्कन्धबन्धैव दण्डपत्रञ्च वर्णकः। जरत्कञ्च नीवी च सुदिव्यं प्रकीर्णकम्। पादाङ्गदं हंसकञ्च नूपुरं क्षुद्रघण्टिका। सुखपट्टमिति प्रोक्ता अलङ्काराः सुशोभनाः। चत्वारिंशदमी प्रोक्ता लोके वेदे च सौख्यदाः। अलङ्काराः प्रदानेन चतुर्वर्गप्रदायकाः। एतेषां पूजनं कृत्वा प्रदद्यादिष्टसिद्धये। तेषां दैवतमुच्चार्य्य पूजयेत्तु विचक्षणः। शिरोगतानि चादद्यात् सौवर्णानि तु सर्वदा। चूडारत्नादिकानीह भूषणानि तु भैरव!। ग्रैवेयकादिहंसान्तं सौवर्णं राजतञ्च वा। निवेदयेत्तु देवेभ्यो नान्यतैजससम्भवम्। रीतिवङ्गादिसंजातं पात्रोपकारणादिकम्। दद्यादायसवर्जन्तु भूषणं न कदाचन। घण्टाचामरकुम्भादिपात्रोपकरणादिकम्। तद्भूषणान्तरे दद्यात् यस्मात्तु तदुपभूषणम्। सर्वं ताम्रमयं दद्यात् यत् किञ्चिद्भूषणादिकम्। सर्वेभ्यः स्वर्णरत्नमयं पात्रं ततोऽधिकम्। पूजार्घ्यपात्रं नैवेद्याधारपात्रञ्च पानकम्। श्रीदुम्बरं सदा विष्णोः प्रीतिदं तोषदं तदा। ताम्रे देवाः प्रमोदन्ते ताम्रे देवाः सदा स्थिताः। सर्वप्रीतिकरं ताम्रं तस्मात्ताम्रं प्रयोजयेत्। स्वोपयोगे नरः कुर्य्याद्देवानामपि भैरव!। श्रीवीरदेवे रौप्यन्तु न कदाचिच्च भूषणम्। प्रावारः पानपात्रञ्च गेण्डुकं स्तम्भमेव च। पर्य्यङ्कादि यदन्यच्च सर्वं तदुपभूषणम्। अयोमयन्तु ते कांस्यन्ते यद्भूषणं भवेत्। स्वर्णरौप्यस्य चाभावे स्वधःकाले नियोजयेत्। एतेषां भूषणादीनां यद्दातुं शक्यते नरैः। तत्तद्द्यात् सभावे तु सर्वमेव प्रदापयेत्। चतुर्वर्गप्रदं नित्यं भूषणं सर्वसौख्यदम्। तुष्टिपुष्टिप्रीतिकरं यथाशक्तीष्टये सृजेत्। इदं ते भूषणं प्रोक्तं सर्वदेवस्य तुष्टिदम्" कालि॰पु॰६९अ॰। तद्धारणादिनमुच्यते "रेवत्यश्विधनिष्ठासु हस्तादिष्वपि पञ्चसु। गुरुशुक्रबुधस्याह्नि वस्त्रालङ्कारधारणम्। अनिष्टेष्वपि निर्दिष्टं वस्त्रालङ्कारधारणम्। उद्वाहे राजसम्माने ब्राह्मणानाञ्च सम्मते। शिरस्त्रं मुकुटं हारः कुण्डलञ्चाङ्गदन्तथा। कङ्कणं वालयश्चैव मेखलाष्टाविति क्रमात्। प्रधानभूषणान्येषु यथास्थं याति निश्चयः। पद्मरागञ्च वज्रञ्च विद्रुमो गोमेदस्तथा। मुक्तावैदूर्य्यनीलञ्च तथा मरकतं क्रमात्। आदित्यादिदशाजानां सर्वसम्पत्तिदायकाः। शुभदैवापि घटना सर्वैरासुपयुज्यते। प्रधानभूषणेष्वेवमप्रधाने न निर्णयः। प्रधानभूषणं प्रायः शिरसो ह्यभिधीयते। तस्य प्रधानभूतत्वादित्याह रघुनन्दनः। सुखदा मणयः शुद्धा दुःखदाः दोषशालिनः।" इति युक्तिकल्पतरुः।

**भूषा** स्त्री भूष-भावे अ। अलङ्करणक्रियायाम् अमरः।

**भूषित** त्रि॰ भूष-क्त। अलङ्कृते।

**भूष्णु** त्रि॰ भू-ग्स्नु। भवनशीले।

**भूसंस्कार** पु॰६त॰। यज्ञादौ भूमिभागस्य परिसमूहनोपलेपनरेखाकरणपांशूद्धरणजलकरणकाभ्युक्षणरूपेषु पञ्चसु संस्कारेषु तत्प्रकारश्च कात्या॰श्रौ॰२।१।२४सूत्रपद्धतौ दर्शितो यथा "तत्र पूर्वमाहवनीयखरे पञ्च भूसंस्काराः कर्त्तव्याः तद्यथा दर्भैः खरं प्राक्संस्थमुदक्संस्थं वा त्रिः परिसमुह्य १गोमयेन त्रिरुपलिप्य २स्फ्येन प्रागायता उदक्संस्था उदगायताः प्राक्संस्था वा तिस्रो लेखाः खरप्रमाणाः कृत्वा ३अनामिकाङ्गुष्ठेन ताभ्यो रेखाभ्यः पांशूनुद्धृत्य ४अद्भिरभ्युक्षेत्"५। परिसमूहनं (तृणानामपलुम्पनम्) कात्या॰श्रौ॰४।१२।१०कर्कः।

**भूसुत** पु॰६त॰। १मङ्गलग्रहे शब्दमा॰ २नरकासुरे च ३सीतायां स्त्री।

**भूस्तृण** न॰ भुवस्तृणम् मृषो॰सुट्। भूतृणे कत्वाले अमरः "गुह्यबीजञ्च भूतीकं सुगन्धं गोमयप्रियम्। भूस्तृणन्तु भवेच्छत्रा माला तृणकमित्यपि। भूस्तृणं कटुकं तिक्तं तीक्ष्णोष्णं रोचनं लघु। विदाहि दीपनं रूक्षमनेत्र्यं मुखशोधनम्। अहृद्यं बद्धविट्कञ्च पित्तरक्तप्रदूषणम्" भावप्र॰।

**भूस्पृश्** पु॰ भूमिं स्पृशति स्पृश-क्विन्। मनुष्ये हेमच॰।

**भूस्वर्ग** पु॰ भूमिस्थितः स्वर्गः शा॰त॰। सुमेरुपर्वते तदाश्रयतत्त्वामरधारत्वेन स्वर्गत्वात् तथात्वम्। [बन्धे।

**भृ** भरणे भ्वा॰उभ॰सक॰अनिट्। भरति-ते अभार्षीत् बभार

**भृ** धारणे पोषणे च जु॰उभ॰सक॰अनिट्। बिभर्त्ति बिभृते अभार्षीत् अभृत। बिभरामास-बभार। ङित्। अयु भरणः। ङित्। क्लि-घञ् च। भृत्रिमः।

**भ्रुकुंस(श)** पु॰ भ्रुवा कुंसा(शा) इङ्गितज्ञापनं यस्य नि॰ भ्रुवः वा संप्रसारणम्। स्त्रीवेशधारिणि नटे अमरः।

**भ्रुकुटि(टी)** स्त्री भ्रुवः कुटिः भङ्गिः वा संप्रसारणं वा ङीप्। भ्रूभङ्गे "रचितभ्रुकुटिवक्त्रं नन्दिना द्वारिरुद्धे" हरविलासः।

**भृगु** पु॰। भ्रज्जति क्विप् भृक् ज्वाला तया सहोत्पन्नः।

१अङ्गिरसःपुत्रे ऋषिभेदे “हुतमिन्मीव भृगुः पूर्वमङ्गारेभ्योऽङ्गिराऽभवत्। अङ्गारसंश्रयाच्चैव कविरित्यपरोऽभवत्। सह ज्वालाभिरुत्पन्नो भृगुस्तस्माद् भृगुः स्मृतः” भा० अनु० ८५ अ०। “भृगोः ख्यात्यां समुत्पन्ना श्रीः पूर्वमुदधेः पुनः। तथा धाता विधाता च जज्ञाते ख्यातौ भृगोः सुतौ। आयतिर्नियतिश्चैव मेरुकन्ये महात्मनोः। धातृविधात्रोस्ते भार्य्ये तयोर्जातौ सुतावुभौ। प्राणश्चैव मृकण्डुश्च मार्कण्डेयो मृकण्डुतः। ततो वेदशिरा जज्ञे प्राणस्य द्युतिमान् सुतः। ततो वंशो मुनिश्रेष्ठ! विस्तरं भार्गवो गतः” वह्निपु०। २महादेवे ३शुक्रग्रहे मेदि०। ४गिरिसानौ ५जमदग्नौ हेम०। ६गिरेरवलम्बने पर्वताद्युच्चस्थाने यतः पातेऽवलम्बनं न भवति तस्मिन् अतटस्थाने अमरः। भृगोर्गोत्रापत्यानि अण् बहुषु तस्य लुक्। ७भृगोरपत्येषु ब०व०। ८वरुणापत्ये ऋषिभेदे “भृगुर्वै वारुणिर्वरुणं पितरमुपससार” तैत्ति०उ०।

भृगुक उ० कूर्मचक्रस्य दक्षिणपार्श्वस्थे देशभेदे मार्कं०पु०५८अ०।

भृगुकच्छ पु० तीर्थभेदे काशी० ६अ०। [२२अ०।

भृगुकेशव पु० काशीस्थे भृगुस्थापितकेशवमूर्त्तिभेदे काशी०

भृगुज पु० भृगोर्जायते जन–ड। भार्गवे शुक्राचार्य्ये।

भृगुतनय पु०६त०। शुक्राचार्य्ये भृगुनन्दनभृगुसुतादयोऽप्यत्र

भृगुतुङ्ग न० तीर्थभेदे भा० आ० २१५ अ०। भा०व० ८४अ०।

भृगुपति पु०भृगूणां भार्गववंश्यानां पतिः। परशुरामे मल्लभा० तेषां चैद्यपतितो हि तेन रक्षा कृता इति तस्य तथात्वम्

भृगुभूमि पु० भार्गवमुनिभेदे हरिवं० २अ०।

भृगुवल्ली स्त्री भृगुनाऽधीता वल्ली। “भृगुर्वै वारुणिर्वरुणं पितरमुपससार” इत्यादिकायां तैत्तिरीयोपनिषदः तृतीयवल्ल्याम्।

भृगूणांपति पु० ६त० अलुक्स०। परशुरामे शब्दर०।

भृङ्ग पु० भृ–गन् किन् नुट् च। भ्रमरे २कलिङ्गविहगे (भिङ्गा) अमरः। ३भृङ्गराजे ४जारे मेदि० ५भृङ्गारे ६भृङ्गरोले च कीटभेदे (भीमरुल) शब्दरत्ना०।

भृङ्गक पु० भृङ्ग इव कायति कै–क। राजवासनस्थाने शब्दच०

भृङ्गजा स्त्री भृङ्ग इव जायते जन–ड। १भार्ङ्ग्याम्। २अगुरुचन्दने न० राजनि० ३अभ्रके ४गुरुत्वचि न०रत्नमा०।

भृङ्गपर्णी स्त्री भृङ्ग इव कृष्णत्वात् पर्णं यस्याः ङीप्। सूक्ष्मैलायाम्। स्वार्थे क। भृङ्गपर्णिका तत्रार्थे शब्दच०

भृङ्गप्रिया स्त्री ६त०। माधवीलतायां प्रचुरमधुत्वात् तस्यास्तत्प्रियत्वम् राजनि०।

भृङ्गमूलिका स्त्री भृङ्गस्य भृङ्गराजस्येव मूलमस्याः कप् कापि अत इत्वम्। भ्रमरच्छल्ल्याम् राजनि०।

भृङ्गरज पु० भृङ्गान् रञ्जयति अन्तर्भूतण्यर्थे रन्ज–अच् पृषो० नलोपः। भृङ्गराजे (केशुरिया)। भरतः।

भृङ्गरजस् पु० भृङ्गान् रजयति अन्तर्भूतण्यर्थे रन्ज–असुन् नलोपः। भृङ्गराजे अमरटीकायां भरतः।

भृङ्गराज पु० भृङ्गान् रजयति रन्ज–णिच्–अच् नि० ६त०। (केशुरिया)। १क्षुपभेदे। “भृङ्गराजः कटुस्तिक्तो रूक्षोष्णः कफवातनुत्। केश्यस्त्वच्यः कृमिश्वासकासशोथामपाण्डुहृत्। दन्त्यो रसायनो बल्यः कुष्ठनेत्रशिरोर्त्तिजित्” भावप्र० २पक्षिभेदे ६त० टच्। ३भ्रमरश्रेष्ठे मेदि० ४यक्षभेदे च धरणिः।

भृङ्गराजाद्य न० ‘भृङ्गराजरसप्रस्थे यष्टीमधुपलेन च। तेनस्य कुडवं पक्वं सद्यो दृष्टिं प्रसादयेत्। तत् स्याद् वलीपलितघ्नं मासेनैतन्न संशयः” चक्रदत्तोक्ते तैलभेदे।

भृङ्गरिट टि) पु० भृङ्ग इव रटति अच् इन् वा पृषो० अत इत्वम्। शिवपार्श्वचरभेदे। [कीटभेदे त्रिका०।

भृङ्गरोल पु० भृङ्ग इव रौति रु–लच्। (भीमरुल) ख्याते

भृङ्गवल्लभ पु० ६त०। १धाराकदम्बे २भूमिकदम्बे च। भृङ्गस्य वल्लभते लभ–क। ३भूमिजम्ब्वाम् स्त्री राजनि०। [त्रिका०

भृङ्गसोदर पु० भृङ्गस्य सोदर इव। (केशुरिया) केशराजे

भृङ्गानन्दा स्त्री आनन्दयति आ+नन्द+णिच्–अच् ६त०। यूथिकायाम् (जुइ) राजनि०।

भृङ्गाभीष्ट पु० अभि+इष–क्त ६त०। आम्रवृक्षे राजनि०।

भृङ्गार पु० बभर्त्ति जलं भृ–आरक् नि०। १स्वर्णमयजलपात्रभेदे अमरः २जलपात्रभेदे च (झारी)। भृङ्ग इव ऋच्छति ऋ–अच्। ३भृङ्गराजे जटा०। ४लवङ्गे ५सुवर्णे च न० राजनि०। ६झिल्लीनामकीटे स्त्री अमरः गौरा० ङीष्। स्वार्थे क। भृङ्गारिका तत्रैव। तत्र भृङ्गार पानादिकं मुक्तिकल्पतरावुक्तं यथा

“राज्ञोऽभिषेकपात्रं यत् भृङ्गार इति मन्यतम्। तदष्टधा तस्य मानं प्रकृतिश्चापि चाष्टधा। सौवर्णं राजतं मौक्तं ताम्रं स्फाटिकमेव च। चान्दनं लौहजं शार्ङ्गमेवमष्टविधं मतम्। मात्राः२दिशः।नवसप्ताष्टरुद्राः११कोशरोन्मिताः२२। अष्टावेते समाख्याता आयामपरिणाहयोः। दिक्चतुर्विश्वष्टवेदाब्धि४वाय४सप्ताष्टदर्शिता। यथाक्रमं समुद्दिष्टमादित्यादिदशाभुवाम्। यद्वा रामस्तथा सज्जं वैदूर्यं मौक्तिकन्तथा। नीलं मारकतञ्चैव तथा

स्थेन न सहते । जायेत हृष्टवदनः श्रुत्वा तद्विरमन्तरा । अप्रियाण्यपि चान्यानि तद्युक्तान्यभिमन्यते । उपायनं च गृह्णाति स्तोकं बह्वादवेत्तथा । कथान्तरेषु स्मरति प्रहृष्टवदनस्तथा । इति रक्तस्य वै चिह्नं कर्त्तव्यं तस्य सेवनम् । तद्दत्तवस्त्रभूषादि चिह्नं संधारयेत् सदा । न्यूनाधिके स्वाधिकारे नित्योद्युक्तो भवेत् सदा । तदर्थं तत्कृतां वार्त्तां शृणुयादपि कीर्त्तयेत् । चारसूचकदोषेण ह्यन्यथा यदि स्यान्नृपः । शृणुयान्मौनमाश्रित्य तथ्यं यत्नेन बोधयेत् । आपद्गतं सुभर्त्तारं कदापि न परित्यजेत् । स्वकार्य्यमथादिष्टं यत्स्यात् ह्यादरेण तत् । तदिष्टं चिन्तयेन्नित्यं पालकस्याज्ञया न किम् । अप्रधानः प्रधानः स्यात्, काले चात्यन्तसेवनात् । प्रधानोऽप्यप्रधानः स्यात् सेवालस्यादिना यतः । नित्यं संसेवनरतो भृत्यो राज्ञः प्रियो भवेत् । स्वाधिकारकार्य्यं यत् द्राक् कुर्य्यात् सुमाना यतः । न कुर्य्यात् सहसा कार्य्यं नीचं राजापि नोदयेत् । तत् कार्य्यकारकाभावे राज्ञः कार्य्यं सदैव हि । काले यदुचितं कर्त्तुं नीचमप्युत्तमोऽर्हति । यस्मिन् प्रीतो भवेद्राजा तदनिष्टं न चिन्तयेत् । न दर्शयेत् स्वाधिकारगौरवञ्च कदाचन । परस्परं नाभ्यसूयुर्न भेदं प्राप्नुयुस्तथा । राज्ञा चाधिकृताः सन्तः स्वस्वाधिकारगुप्तये । अधिकारिगणो राजा सद्वृत्तौ यत्र तिष्ठतः । उभौ, तत्र स्थिरा लक्ष्मीर्विपुला संमुखीभवेत् । अन्याधिकारवृत्तं तु न ब्रूयात् पृष्टमप्युत । राजा न शृणुयादन्यवचनस्तु कदाचन । न बोधयन्ति च हितमहितं चाधिकारिणः । प्रच्छन्नवैरिणस्ते तु दासरूपसुपाश्रिताः । हिताहितं न शृणोति राजा मन्त्रिमुखाच्च यः । स दस्यू राजरूपेण प्रजानां धनहारकः । सुपुष्टव्यवहारा वै राजपुत्राश्च मन्त्रिणः । विरुध्यन्ति च तैः सार्द्धं ते तु प्रच्छन्नतस्कराः । बाला अपि राजपुत्राः मानमान्यास्तु मन्त्रिभिः । सदा सुवक्तृवाक्यैस्तु संबोध्यास्ते प्रयत्नतः । असदाचरितं तेषां कश्चित् राज्ञे न दर्शयेत् । स्त्रीपुत्रमोहो बलवान् तयोर्निन्दा न श्रेयसे । राज्ञोऽवश्यतरं कार्य्यं प्राणसंशयितं च यत् । आज्ञापयाश्वतस्त्वहं करिष्ये तत्तु निश्चितम् । इति विज्ञाप्य तत् कर्त्तुं प्रयतेत स्वशक्तितः । प्राणानपि च संदद्यान्महाकार्य्ये नृपस्य च । भृत्यकुटुम्बपुष्ट्यर्थं नान्यथा तु कदाचन । भृत्या धनहराः सर्वे युक्त्या प्राणहरो नृपः । युद्धादौ तु महाकार्य्ये भृत्यप्राणान् हरेन्नृपः । नान्यथा भृतिरूपेण भृत्यो राजधनं हरेत् । अन्यथा हरतस्तौ तु भवतश्च स्वनाशकौ । राजा च युवराजश्च मान्योऽमात्यादिकैः सदा । तन्न्यूनामात्येन च किं तन्न्यूनाधिकृतेन किम् । मन्त्रितुल्यश्च भृतको न्यूनः साहसिको मतः । न क्रीडयेद्राजसमं क्रीडिते तं विशेषयेत् । नावमान्या राजपत्नी कन्या अपि च मन्त्रिभिः । राजसम्बन्धिनः पूज्याः सुहृदश्च यथार्हतः । नृपाज्ञतस्तुरं गच्छेत् त्यक्त्वा कार्य्यंशतं महत् । मित्रायापि न वक्तव्यं राजकार्य्यं सुमन्त्रितम् । भृतिं विना राजद्रव्यमदत्तं नाभिलाषयेत् । राजाज्ञया विना नेच्छेत् कार्य्यं माध्यस्थिकीं भृतिम् । न हि हन्यात् द्रव्यलोभात् न कार्य्यं यस्य कस्यचित् । स्वस्त्रीपुत्रधनप्राणैः काले संरक्षयेन्नृपम् । उत्कोचं नैव गृह्णीयात् नान्यथा बोधयेन्नृपम् । अन्यथादण्डकं भूपं नित्यं प्रबलदण्डकम् । निगृह्य बाधयेत् सम्यक् एकान्ते राज्यगुप्तये । हितं राज्ञश्चाहितं यल्लोकानां तन्न कारयेत् । नवीनकरशुल्काद्यैर्लोक उद्विजते ततः ।”

“भृत्यः कुर्य्यात् तु राजाज्ञां शिष्यवत् सन्नियः पतेः । न क्षिपेत् वचनं राज्ञो ह्यनुकूलं प्रियं वदेत् । रहोगतस्य वक्तव्यमप्रियं यद्धितं भवेत् । न नियुक्तो हरेद् वित्तं नोपेक्षेत् तस्य मानकम् । राज्ञश्च न तथाकार्य्यं वेशभाषाविचेष्टितम् । अन्तःपुरचराध्यक्षो वैरभूतैर्निराकृतैः । संसर्गं न व्रजेद् भृत्यो राज्ञो गुह्यञ्च गोपयेत् । दर्शयेत् कौशलं किञ्चिद्राजानं च विशेषयेत् । राज्ञा यच्छ्रावितं गुह्यं न तल्लोके प्रकाशयेत् । आज्ञाप्यमाने वान्यस्मिन् किङ्करोमीति वा वदेत् । वस्त्रं रत्नमलङ्कारं राज्ञा दत्तं च धारयेत् । नानिर्दिष्टो द्वारि विशेत्नायोग्यभुवि राजदृक् । जृम्भां निष्ठीवनं कासं कोपं पर्य्यङ्किकाश्रयम् । भृकुटीं वातमुद्गारं तत्समीपे विवर्जयेत् । स्वगुणाख्यापने युक्त्या परात्मानं नियोजयेत् । शाठ्यं लौल्यं सपैशून्यं नास्तिक्यं क्षुद्रता तथा । चापल्यञ्च परित्याज्यं नित्यं राजानुजीविना । श्रुतेन विद्याशिल्पैश्च संयोज्यात्मानमात्मना । राजसेवां ततः कुर्य्याद् भूतये भूतिवर्द्धनः । नमस्कार्य्याः सदा चास्य पुत्रवल्लभमन्त्रिणः । सचिवैर्नास्य विश्वासो राजचित्तप्रियञ्चरेत् । त्यजेद् विरक्तं रक्तात् तु वृत्तिमीहेत राजवित् । अपृष्टश्चास्य न ब्रूयात् कामं कुर्य्यात् तथा-

पदि। आपदो वाक्यसङ्ग्राही रहस्ये न च शङ्कते। कुशलादि परिप्रश्नं सम्प्रयच्छति चासनम्। तत्कथा-श्रवणाद्धृष्टो ह्यप्रियाण्यपि नन्दते। अल्पं दत्तं प्रहृ-ष्टाति स्मरेत् तच्च कथान्तरे। रक्तस्य राज्ञः कर्त्तव्या सेवामन्यस्य वर्जयेत्" अग्निपु० २२१अ०।

ते च दशधा तेषां प्राधान्याप्राधान्ये च तत्रैव उक्ते यथा "पुरोधाः प्रथमं श्रेष्ठः सर्वेभ्यो राजराड्भवेत्। तदनु-स्यात् प्रतिनिधिः प्रधानस्तदनन्तरम्। सचिवस्तु ततः प्रोक्तो मन्त्री तदनु चोच्यते। प्राड्विवाकस्ततः प्रोक्तः पण्डितस्तदनन्तरम्। सुमन्त्रस्तु ततः स्यातो ह्यमात्यस्तु ततःपरम्। दूतस्ततः क्रमादेते पूर्वश्रेष्ठा यथा गुणाः"।

तत्करणमुहूर्त्तादि मु०चि० उक्तं यथा "क्षिप्रे मैत्रे विटूचितार्केज्यवारे सौम्ये लग्नेऽर्के कुजे वा खलाभे। कोणे मैत्र्यां राशिपोश्चापि मैत्र्यां सेवा कार्य्या स्वामिनः सेवकेन" मु० चि०। "अथ सेव-कस्य स्वामिसेवायां मुहूर्त्तं शालिन्याह। क्षिप्रे मैत्रे इति। क्षिप्रे मैत्रे अश्विनीपुष्यहस्तचित्रानुराधामृग-रेवतीषुपञ्चनक्षत्रेषु, विटूचितार्केज्यवारे बुधशुक्रसूर्य्य-गुरुवारे तथा सौम्यग्रहे लग्नसंस्थे सति अर्के वा अथ वा कुजे भौमे वा खलाभे दशमैकादशस्थे सति सेवकेन भृत्येन स्वामिनो राजादेः सेवा कार्य्या। रा-जादिदर्शनं प्रागुक्तं वेतनग्रहणकार्य्योद्युक्तीकाल्पा सेवाख्यिन् मुहूर्त्ते कार्य्या तत्रापि स्वामिसेवकयोर्योनि-मैत्र्यां सत्याञ्च पुनः राशिपोः स्वामिसेवकयोर्यौ जन्मराशी तयोर्यावधिपती तयोरपि मैत्र्यां प्रीतौ सत्यां कार्य्या उक्तञ्च श्रीपतिना "शुभे विलग्ने दशमायगे च रवौ कुजे वा स्ववशेन योनेः। विद्यायुधाभ्यासरतेन कार्य्यः समाश्रयः स्वामिनि सेवकेन"। कश्यपोऽपि "दशमैकादशे सूर्य्ये कुजे वा शुभलग्नके। विद्यायुधाभ्यासयुक्तसेवा, कर्मापि सिध्यति"। राशिमैत्रीसाहित्यं तु "अङ्गूरग-श्वेणमिभेन्द्रसिंहमोत्वाखुसंञ्जं लजवानरञ्च गोव्याघ्रमश्वो-त्तरमाहिषञ्च वैरं न्नयोर्न्नं पश्चशयोश्चेति" वशिष्ठोक्ति सङ्कीर्त्य तल्लव्यावत्वात्तत्राप्युक्तं यन्मन्ता योनिमैत्री राशिमैत्री च विवाहप्रकरणे चश्विन्यश्वयोरिति "मित्राणि द्युमणेरिति वक्ष्यते" पी० धा०। उपयमशब्दे १२५० पृ० दृश्यम्।

भृतिम त्रि० भरणाज्जातः भृ-क्त्रि-मप् च। भरणाज्जाते।

भृ(भ्र)मि पु० भ्रम-इन् पृषो० वा संप्रसारणम्। (घूर्णी) १वायुभेदे २भ्रमणे च। "किन्तु चक्रभ्रमिकारितागुणः" नैषधम्।

भृम्यश्व पु० भृमय इवाश्वाः यस्य। ऋषिभेदे तस्य पुत्रः अण्। भार्म्यश्व तदपत्ये ऋषौ नि० ६।४।

भृश अधःपतने दि०पर०अक०सेट्। भृश्यति इरित् अभृशत् अभर्शीत् बभर्श। उदित्त्वात् क्त्वा वेट्।

भृश न० भृश-क। १अतिशये २तद्वति त्रि०। ततो भृशादि० च्व्यर्थे भवतौ क्यङ् भृशायते। [ शब्दरत्ना०।

भृशम् अव्य०मान्तमव्ययम् भृश-बा० अम्। १सुष्ठ्वर्थे २शोभने

भृशादि पु० च्व्यर्थे भवतौ क्यङ्प्रत्ययनिमित्ते शब्दगणे स च गणः पा० ग० उक्तो यथा

"भृश शीघ्र चपल मन्द पण्डित उत्सुक सुमनस् दुर्मनस् अभिमनस् उन्मनस् रहस् रोहत् रेहत् संश्चत् तृपत् शश्वत् भ्रमत् वेहत् शुचिस् शुचिवर्चस् अन्तर ऋषिस् ओजस् सुरजस् अरजस् इति भृशादयः। आकृति-गणोऽयं तेन श्यामायते इत्यादि सि० कौ०। एवं घूर्णायते "घूर्णायमानेक्षणम्" घूर्णायमानशब्दे दर्शितम्

भृषद् स्त्री दृषद्+पृषो०। पाषाणे शब्दरत्ना०। तत्र दृषद् इत्येव पाठः भ्रमादित्यपपाठः।

भृष्ट त्रि० भ्रस्ज-क्त। जलोपसेकं विना वालुकाग्निसंयोगाभ्यां पक्वे हेम०। "सुगन्धिः कफहा रूक्षः पित्तघ्नो भृष्ट-तण्डुलः" राजनि०।

भृष्टयव पु० कर्म०। धानाशब्दार्थे अमरः।

भृष्टान्न न० कर्म०। जलोसेकेन भृष्टे तण्डुले (सुड़ि)शब्द च०

भृष्टि स्त्री भ्रस्ज-भावे क्तिन्। १भर्जने २शून्यवाटिकायां मेदि०

भॄ भर्त्सने भर्जने भरणे च क्र्यादि०प्रा०पर०सक०सेट्। भृ-णाति अभारीत् बभार बभरतुः।

भेक पुं स्त्री० भी-कन् तस्य नेत्त्वम्। (व्याङ) १जन्तुभेदे अमरः स्त्रियां जातित्वात् ङीष्। "तेजःपद्योबलकरः भ्रमदड्-दाहमेहहृत्। स्वापकुष्ठच्छर्दिनाशी भेकस्तु परिकीर्त्तित" राजनि०। २मेघे मेदि०। ३मण्डूकपर्ण्यां स्त्री ङीप् अमरः

भेकट पु० भेक इव टलति टल-ड। मत्स्यभेदे हारावली:।

भेकनि(लि) पु० (भाङ्गन) मत्स्यभेदे राजव०।

भेकपर्णी स्त्री भेक इव पर्णमस्याः ङीप्। मण्डूकपर्ण्याम्

भेकभुज् पु० भेकं भुङ्क्ते भुज-क्विप्। सर्पे त्रिका०।

भेकासन न० रुद्रयामलोक्ते पूजाङ्गे आसनभेदे तल्लक्षणं यथा

"भेकनामासनं योगं निजपक्षिबद्धं सुखम्। निधाय पादयुगलं स्कन्धे बाहौ पदोपरि। ध्यायेदिष्टपदं श्रीपादु

आसनस्थः सुखाच्च तत्। यदि सर्वाङ्गमुत्तोल्य गगने खेचरासनम्। महाभेकासनं प्रोक्तं सर्वसिद्धिप्रदायकम्। महाविद्यामहामन्त्रं प्राप्नोति जपतीह यः”।

**भेकुरि** स्त्री अप्सरोरूपे नक्षत्रे “सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम” यजु०।१८।४० “तस्य चन्द्रमसः नक्षत्राणि नाम अप्सरसः कीदृश्यः भेकुरयः भां कान्तिं कुर्वन्तीति भेकुरयः पृषोदरादित्वात्साधुः “चन्द्रमाह गन्धर्वो नक्षत्रैरप्सरोभिर्मिथुनेन सहोच्चक्राम भेकुरयो नामेति भेकुरयोह नामैते भां हि नक्षत्राणि कुर्वन्तीति” शत०ब्रा० ६।४।१।६। [स्त्रियां ङीष्।

**भेड** पुंस्त्री० भी-ड तस्य नेत्त्वम्। मेषे (भेड़ा) हेमच०

**भेड्र** पुंस्त्री० भेड+पृषो०। मेषे त्रिका० स्त्रियां ङीष्।

**भेद** पु० भिद-घञ्। १पृथक्करणे २अन्यतो विशेषे राजाद्युपायभेदे विपक्षपावनार्थं ३तत्पक्षीयामात्यादिभेदने ४न्यायमतोक्ते अन्योऽन्याभावे च यथा घटात् पटस्य भेदः (तादात्म्येनाभावः) उपायभेदभेदप्रकारो यथा “परस्परन्तु ये द्विष्टाः क्रुद्धभीतावमानिताः। तेषां भेदं प्रयुञ्जीत परमं दर्शयेद् भयम्। आत्मीयान् दर्शयेदाशां येन दोषेण बिभ्यति। परास्तेनैव ते भेद्या रक्ष्यो वै ज्ञातिभेदकः। सामन्तकोपो बाह्यस्तु मन्त्र्यमात्यात्मजादिकः। अन्तःकोपञ्चोपशाम्य कुर्वन् शत्रोश्च तं जयेत्” अग्निपु०२२५ अ०। ५द्वैधे ६विदारणे मेदि०। ७विरेके वैद्यकम्।

**भेदक** त्रि० भिद-ण्वुल्। १रेचके २विदारके ३भेदकारके ४विशेषणे च। “स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः। गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः” अमरः

**भेदन** त्रि०भेदयति भिद-णिच्-ल्यु। १विरेचने २विशेषणे च ३हिङ्गौ न०४शूकरे ५अम्लवेतसे च पु० राजनि०। भिद-भावे ल्युट्। ६विदारणे ७द्वैधीकरणे न०।

**भेदित** त्रि० भिद-णिच्-क्त। १विदारिते भिन्ने च “आद्यं हृदये, शीर्षं वषट् वौषट् च मध्यमे। स एव भेदितो मन्त्रः सर्वशास्त्रविवर्जितः” तन्त्रसारोक्ते २मन्त्रभेदे पु०।

**भेदिन्** त्रि० भिद-णिनि। १भेदकारके स्त्रियां ङीप्। २अम्लवेतसे पु० राजनि०।

**भेदुर** न० भिदुर+पृषो०। वज्रे द्विरूपकोषः।

**भेद्य** त्रि० भिद-ण्यत्। १शस्त्रादिना विदार्ये २विशेष्ये च। “त्रिष्वेषां भेद्यगामि यत्” अमरः। भेद्यरोगप्रतिषेधश्च सुश्रुते उक्तो यथा

“अथातो भेद्यरोगप्रतिषेधं व्याख्यास्यामः। स्वेदयित्वा विषग्रन्थिं छिद्रस्य निराश्रयम्। पक्वं भित्त्वा तु शस्त्रेण सैन्धवेनावचूर्णयेत्। कासीसमागधीपुष्पनैपाल्यालाबुकेन तु। ततः क्षौद्रं घृतं दत्त्वा सम्यगेवमुपाचरेत्। रोचनाक्षारतुल्यानि पिप्पल्यः क्षौद्रमेव च। प्रतिसारणमेवैकं भिन्ने च गण्ड इष्यते। महत्यपि च युञ्जीत क्षाराग्निविधिकोविदः। छिन्नां भिन्नां विनिम्लोञ्च भिषगञ्जननामिकाम्। शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत्। रसाञ्जनमधुभ्यां वा भिन्नां वा शस्त्रकर्मवित्। प्रतिसार्य्याञ्जनैर्युञ्ज्यादुष्णैर्दीपशिखोद्भवैः। कफक्लिन्ने क्रमिग्रन्थौ भिन्ने स्यात् प्रतिसारणम्। त्रिफलातुत्थकासीसरैन्धवैस्तु रसक्रियाम्। भित्त्वोपनाहं कफजं पिप्पलीमधुसैन्धवैः। लेखयेन्मण्डलाग्रेण समन्तात् प्रोञ्छयेदपि। मंसोत्थ पलभक्तं च स्वेदयित्वा यथासुखम्। क्षारपाकविधिनोक्तेन पश्चाद् भेद्यानुपाचरेत्। सर्वेष्वेतेषु विहितं विधानं स्नेहपूर्वकम्। सम्यक् प्रयतो भूत्वा कुर्वीत व्रणरोपणम्”।

**भेर** पु० भी-रन्। पटहे संक्षिप्तसा०। उज्ज्वलदत्तेन गौरा० ङीष् भेरीत्युक्तत्वात् भेरी दुन्दुभिरित्युक्तम्।

**भेरि(री)** स्त्री भी-क्रिन् वृद्ध्या० नि० वा ङीप्। १ढक्कायाम्। २पटहे “रवः प्रगल्भाहतभेरिसम्भवः” कुमारः उज्ज्वलदत्तः। “ततः शङ्खाश्च भेर्यश्च” गीता।

**भेरीस्वनमहास्वना** स्त्री कुमारानुचरमातृभेदे भा०श०४७अ०

**भेरुण्ड** न० १गर्भधारणे शब्दर० २भयानके त्रि० ३देवताभेदे कालिपु० “महाविश्वेश्वरी श्वेता भेरुण्डा कुलसुन्दरी” तत्सहस्रनाम। ४पक्षिणीभेदे स्त्री मेदि०

**भेल** त्रि० भी-र रस्य लः। १प्लवे २भीरुके ३निर्बुद्धौ ४मुनिभेदे विश्वः। ५चञ्चले शब्दर०। स्वार्थे क। भेलक प्लवे उडुपे (भेला) शब्दर०।

**भेष** भये भ्वा०उभ०अक०सेट्। भेषति ते अभेषीत् अभेषिष्ट। ऋदित् चङि न ह्रस्वः। अबिभेषत् त।

**भेषज** न० भेष-घञ् भेषं रोगभयं जयति जि-ड। १औषधे। स्वार्थे ष्यञ्। भैषज्य तत्रार्थे भेषजसेवनकालादि भावप्र० उक्तं यथा

“अथ भेषजभक्षणसमयः “भैषज्यमभ्यवहरेत् प्रभाते प्रायशो बुधः। कषायांस्तु विशेषेण तत्र भेदस्तु दर्शितः। ज्ञेयः पञ्चविधः कालो भैषज्यग्रहणे नृणाम्। किञ्चित् सूर्योदये जाते तथा दिवसभोजने। सायन्तने

भोजने च लुङ्गवापि तथा निशि। तत्र प्रथमकालः "प्रायः पित्तकफोद्रेके विरेकवमनार्थयोः। लेखनार्थं च भैषज्यं प्रभातेऽनन्नमाहरेत्"। अथ द्वितीयकालः "भैषज्यं विगुणे पाने भोजनाग्रे प्रशस्यते। अरुचौ चित्रभोज्यैश्च मिश्रं रुचिरमाहरेत्। समानवाते विगुणे मन्देऽग्नावग्निदीपनम्। दद्याद्भोजनमध्ये च भैषज्यं कुशलो भिषक्। व्यानकोपे तु भैषज्यं भोजनान्ते समाहरेत्। हिक्काक्षेपककम्पेषु पूर्वमन्ते च भोजनात्"। अथ तृतीयकालः "उदाने कुपिते वाते स्वरभङ्गादिकारिणि। ग्रासग्रासान्तरे देयं भैषज्यं सान्ध्यभोजने। प्राणे प्रदुष्टे सान्ध्यस्य भुक्तस्यान्ते प्रदीयते। औषधं प्रायशो धीरैः कालोऽयं स्यात् तृतीयकः"। अथ चतुर्थकालः "मुहुर्मुहुश्च तृट्छर्दिहिक्काश्वासगरेषु च। सान्नश्च भेषजं दद्यादिति कालश्चतुर्थकः"। अथ पञ्चमकालः "ऊर्ध्वजत्रुविकारेषु लेखने बृंहणे तथा। पाचने शमने देयमनन्नं भेषजं निशि" इति पञ्चमकालः। निरन्नस्य भेषजस्य गुणमाह "वीर्याधिकं भवति भेषजमन्नहीनं हन्यात्तदामयमसंशयमाशु चैव। तद्बालवृद्धयुवतीमृदवश्च पीतम् ग्लानिं परां नयति चाशु बलक्षयञ्च"। सान्नस्य भेषजस्य गुणमाह "भीरुं विपाकमुपयाति बलेन हिंसादन्नावृतञ्च न मुहुर्वदनाद्विरेति। एतद्धितं स्थविरबालकशाकुनाद्यः प्राग्भोजनादुषदयितं किल तस्य तद्वत्" तद्वत् अन्नावृतवत् भेषजमिति शेषः। "औषधशेषे भुक्तं भोजनशेषे यदौषधं पीतम्। न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च"। पीतमिच्छुपलक्षणं वीड़ादिकस्य। "अनुलोमोऽनिलः स्वास्थ्यं क्षुत् तृष्णासुमनस्कताः। लघुत्वमिन्द्रियोद्गारशुद्धिर्जीर्णौषधाकृतिः। क्लमो दाहोऽङ्गसदनं भ्रमो मूर्च्छा शिरोरुजः। अरतिर्बलहानिश्च सावशेषौषधाकृतिः"। अथ भेषजभक्षणविधिमाह चरकः "देवान् गुरूंस्तथा विप्रान् पूजयित्वा प्रणम्य च। आशिषश्च समादाय श्रद्धया भेषजं भजेत्। रसायनमिवर्षीणां देवानाममृतं यथा। सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते। ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः। देवाश्च औषधिग्रामा भूमिदेवाश्च पान्तु वः। औषधं हेमरजतमृद्भाजनपरिस्थितम्। पिबेत्प्राङ्मुखः सम्यक् प्रसन्नवदनेक्षणः। विश्रान्तस्तूपविश्याथ पीत्वा पात्रमधोमुखम्। निःशियाचम्य सलिलताम्बूलाद्युपयोजयेत्।"

२जले ३सुखे च निघण्टुः। ४विष्णौ पु० "निर्वाणं भेषजं भिषक्" विष्णुस०। तद्भक्षणविहितनक्षत्रादिकं ज्यो० त० उक्तं यथा

"विष्णुधर्मोत्तरे। हरिं गोद्विजचन्द्रार्कसुराग्नीन् प्रतिपूज्य च। इत्थम् मन्त्रमिमं पुण्यं विद्वान् भेषजमारभेत्। ब्रह्मदक्षाश्विरुद्रेन्द्राभूचन्द्रार्कानिलानलाः। ऋषयश्चौषधिग्रामाभूतसङ्घाश्च पान्तु ते। रसायनमिवर्षीणां देवानाममृतं यथा। सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते। अयं मन्त्रस्तु ते इत्थम् मे इति वदेत्। अविशेषेण स्वयंभक्षणेऽपि पठेत्। "इज्ज्योदये गुरुबुधेन्दुसितेषु तेषां वारे रवेश्च सुविधौ सुतिथौ सुयोगे। भेषूत्तपूर्वगविशाखमिवेतरेषु अध्वर्क्षविच्छिरहितेष्वगदः शुभाय"। "औषधकरणं विभ्रायुगे विधियुगे मित्रयुगे वसुषु वासवविष्णौ। वसिष्ठविरेचनबोधाः शुभदिनतिथिचन्द्रलग्नेषु"। वसिष्ठसंपुटं विरेचनं विरेकः। वेधोत्रयादिवेधः। "पौष्णाश्विनीद्विविशाखज्ञमनेन्द्रपुष्याहस्तादितीन्दुहरिमूलहुताशभिन्नैः,चित्राश्विनैश्च गुरुबुधेन्दुरवीज्यवारे भैषज्यपानमचिरादपहन्ति रोगान्। रत्नमालायाम् शूलयम्लिधनव्ययसुत्रौ बहुभ्येषु निरतं नवनवस्य। आयुषस्य हितकारिणि योगे कीर्तिता नियतमौषधसेवा। द्यूनादिषु पापयोगेषयशून्येषु। आयुष्मानित्यादिशुभयोगे। भीमपराक्रमे, "भैषज्यपाने गुरुसोमशुक्राः शुभं विलग्नं द्विपदोदयेषु। स्थिरावरिक्ते करणे च शस्ते योगे च लग्ने हिमरीरसंज्ञे"। तत्रैव "रोहिणी चानुराधा च शस्तमौषधभक्षणे" इति वचनाद्रोहिण्यामपि। "भैषज्यं वसुषु मृदुचरे मूलभे द्व्यङ्गलग्ने शुक्रे मौल्ये विदि च दिवसे चापि तेषां रवेश्च। शुद्धे रिष्फद्युनस्थितरुचे सन्निधौ भोजनेभे" मु० चि०। "वसुमृदुचरे अश्विनीपुष्यहस्तचित्रामृगानुराधारेवतीश्रवणधनिष्ठाशततारकास्वातीपुनर्वसुभेषु मूले च भैषज्यम् औषधं प्रारब्धं भक्षितं वा सत् शुभफलदं भवतीत्यर्थः तथाचाह श्रीपतिः "पौष्णादये चादितिभदये च हस्तत्रये च श्रवणत्रये च। मैत्रे च मूले च मृगे च शस्तं भैषज्यकर्म प्रवदन्ति सन्तः"। वसिष्ठोऽपि "हस्तत्रये चाश्विनपौष्णभेषु शिवेन्दुमूलेषु च सूर्यवारे। भैषज्यमुक्तं शुभवासरेऽपि"। अथ द्व्यङ्गलग्ने द्विस्वभावराशिषु मिथुनकन्याधनुर्मीनेषु सत्सु शुक्रे मौल्ये विदि च

शुक्रचन्द्रबृहस्पतिबुधेषु द्विःस्वभावलग्नस्थेषु सत्सु च पुनस्तेषां शुक्रजीवज्ञबुधानां रवेश्च दिवसे वारे सत्तिथौ रिक्तावारहिते दिने भैषज्यं सत् । उक्तञ्च दीपिकायाम् "द्व्यङ्गोदये गुरुबुधेन्दुसितेषु तेषां वारे रवेश्च सुविधौ सुतिथौ सुयोगे" । अथ रिष्फद्युन-स्तिम्बहे लग्नात् द्वादशसप्ताष्टमलग्नेषु शुद्धेषु शुभपापरहितेषु सत्सु भैषज्यं सत् तत्र वर्षफलप्रश्नादिना सत्यायुर्हानियोगे औषधसेवनं हितमित्ययं विशेषो ध्येयः । तदुक्तं ज्योतिषे "द्यूनस्वनिधनव्ययशुद्धौ षट्पहेषु नितरां बलवत्सु । आयुषश्च हितकारिणि योगे कीर्त्तिता नियतमौषधसेवा" । कश्यपोऽपि "षट्सप्ताष्टान्त्यशुद्धौ च बलिनः शुभखेचराः । आयुर्दायकरे योगे कर्त्तव्या त्वौषधक्रियेति" । अथ जनेभे जन्मनक्षत्रे नो भैषज्यं सत तदुक्तं दीपिकायां "जन्मनक्षत्रमचन्द्रः प्रशस्तः सर्वकर्मसु । क्षौरभैषज्यवादाध्वकर्त्तनेषु च वर्जयेत् ।" पी॰ धा॰ ।

**भेषजाङ्ग** न॰ ६त॰ । औषधस्य अनुपेये वस्तुनि शब्दच॰ ।

**भैक्ष** न॰ भिक्षैव तत्समूहो वा अण् । १भिक्षायां २भिक्षासमूहे च । भिक्षायां भवः तत्प्रतिपाद्यग्रन्थव्याख्या वा ऋगयना॰ अण् । ३भिक्षाभवे त्रि॰ स्त्रियां ङीप् । ४तत्प्रतिपादकग्रन्थव्याख्याने च । "भिक्षाशनमनुद्योगात् प्राक् केनाप्यनिमन्त्रितम् । अयाचितं तु तद्भैक्षं भोक्तव्यं मनुरब्रवीत्" उशनाः । [२।१०८

**भैक्षचर्या** स्त्री चर-भावे क्यप् ६त॰ । भिक्षाचरणे मनुः

**भैक्षजीविका** स्त्री ३त॰ । भिक्षया जीवने त्रि॰ ।

**भैक्षव** न॰ भिक्षूणां समूहः खण्डिका॰ अञ् । भिक्षुसमूहे । [चातुर्वर्ण्या॰ ष्यञ् । २भिक्षायाम् ।

**भैक्ष्य** न॰ भिक्षाणां समूहः ष्यञ् । १भिक्षासमूहे । भिक्षैव

**भैदिक** त्रि॰ भेदं नित्यमर्हति छेदा॰ ठञ् । नित्यभेदनार्हे

**भैम** त्रि॰ भीमस्य अपत्यमिदम् वा अण् । १भीमस्यापत्यादौ स्त्रियां ङीप् । सा च २नलपत्न्यां दमयन्त्याम् । भीमेनोपासिता अण् ङीप् । ३माघशुक्लैकादश्याम् । एका॰ त॰ विष्णुधर्मोत्तरे "युगादौ यवधरे माघे मासि प्रजायते । एकादश्यां सिते पक्षे सोपवासो जितेन्द्रियः । द्वादश्यां षट्तिलाचारं कृत्वा पापात् प्रमुच्यते । तिलस्नायी तिलोद्वर्त्ती तिलहोमी तिलोदकी । तिलस्य दाता भोक्ता च षट्तिली नावसीदति" । मत्स्यपुराणे "यद्यष्टम्यां चतुर्दश्यां द्वादश्यामथ भारत ! । अन्येष्वपि दिनर्क्षेषु न शक्तस्त्वमुपोषितुम् । ततः पुण्यामिमां भीमतिथिं पापप्रणाशिनीम् । उपोष्य विधिनानेन गच्छेद्विष्णोः परं पदम् । भीमतिथिं भैमीत्वेन ख्यातामेकादशीम्" रघु॰

**भैमगव** पु॰ गोत्रभेदे "हरितकुत्सपिङ्गशङ्खदर्भभैमगवानामाङ्गिरसाम्बरीषयौवनाश्वेति" आश्व॰ श्रौ॰ १२।१२।१

**भैमरथ** पु॰ भीमरथमधिकृत्य कृतो ग्रन्थः । भीमरथाधिकारेण कृते ग्रन्थे

**भैमसेन्य** पु॰ भीमसेनस्यापत्यम् कुरुत्वात् अपि प्राप्ते वार्त्ति॰ ञ्य । भीमसेनापत्ये वा॰ इञ् । भैमसेनि तत्रार्थे

**भैमायन** पुंस्त्री॰ भीमस्यापत्यं युवा इञन्तात् फक् । भीमस्य यून्यपत्ये ।

**भैरव** पु॰ भीरोरिदम् अण् । १भये २तद्वति त्रि॰ अमरः । नाट्यादिप्रसिद्धे ३भयानके रसे । ४भयसाधने त्रि॰ मेदि॰ स्त्रियां ङीप् । ५शङ्करे ६तदवतारतद्गणभेदे शब्दर॰ ७नदभेदे च पु॰ हेमच॰ । ८शिवपत्न्यां स्त्री ङीप् । भैरवभेदानामुत्पत्तिर्वामनपु॰ १७ अ॰ यथा "दैत्याधिपः स्वहृदयस्य हरोरसि गदां क्षिपत् । संछिन्नश्च महायोगी सर्वाधारः प्रजापतिः । गदापातक्षताद्भूरि चतुर्धाऽसृगथापतत् । पूर्वधारासमुद्भूतो भैरवोऽग्निसमप्रभः । विद्याराजेति विख्यातः पद्ममालाविभूषितः । तथा दक्षिणधारोत्थो भैरवः प्रेतमास्थितः । कामराजेति विख्यातः कृष्णाञ्जनसमप्रभः । नागराजेति विख्यातश्चक्रमालाविभूषितः । क्षतजाद्रुधिराज्जातो भैरवः शूलभूषितः । स्वच्छन्दराजेति ख्यात इन्द्रायुधसमप्रभः । भूमिष्ठाद्रुधिराज्जातो भैरवः फलभूषितः । ख्यातो ललितराजेति शोभाञ्जनसमप्रभः । ततो भूद्वेवराजेति भैरवः क्षतजाद्य । उग्रराजो बभूवाथ क्षतजाद्भैरवोऽपरः । एवं हि सप्तरूपोऽसौ कथ्यते भैरवोऽङ्गने ! । विघ्नराजोऽष्टमः प्रोक्तो भैरवाष्टकमुच्यते ।" शारदीयदुर्गापूजायां तत्रत्याष्टौ भैरवा यथोक्तं ब्रह्मवै॰ प्र॰ ख॰ ६१ अ॰ । "आदौ महाभैरवञ्च संहारभैरवं तथा । असिताङ्गभैरवञ्च रुरुभैरवमेव च । ततः कालभैरवञ्च क्रोधभैरवमेव च । ताम्रचूडं चन्द्रचूडम् अन्ते च भैरवद्वयम् । एतान् संपूज्य मध्ये च नव शक्तीश्च पूजयेत् ।" कालीपूजादौ पूजनीया भैरवास्तु तन्त्रसारोक्ता यथा "असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तसंज्ञकः । कपाली भीषणश्चैव संहारश्चाष्टमः स्मृतः" । ९शिवगणाधिपभेदे कालि॰ पु॰ ४४ अ॰ यथा "नन्दी भृङ्गी

महाकालो वेतालो भैरवस्तथा । षट्‌कं भूत्वा महेशस्य वीतभीतास्तपोधनाः । वैमानुषशरीरेण प्रापिरे तपसो बलात् । गणानामाधिपत्यन्तु ते जानन्ति हरं परम् ।” शिवांशकरवीरभूपचन्द्रशेखरस्य पार्वत्यंश तारावतीगर्भजाते १०वेतालसोदरे च यथोक्तं कालिपु०४५ अ०। “प्रविवेश ततो देवी स्वयं तारावतीतनौ । महादेवोऽपि तस्यान्तु कामार्थं समुपस्थितः । कामावसाने तस्यान्तु सद्योजातं सुतद्वयम् । अभवत् पश्चाद्‌ वत्स ! तथा शाखामृगाननम् । ततस्तयोर्नाम चक्रे नारदवचनान्नृपः । ज्येष्ठो भैरवनामाभूत् भीरोः पुत्रो भयङ्करः । वेतालसदृशः कृष्णो वेतालोऽभूत्तथाऽपरः” । अपि च “योऽसौ भृङ्गी हरसुतो महाकालोऽपि भूगतः । तावेव गौरीशापेन सम्भूय नरयोनिजौ । वेतालभैरवौ जातौ पृथिव्यां कपिवेशस्मिन् । यथा भृङ्गिमहाकालावुत्पन्नौ प्राक् तथा शृणु । योऽसौ महाभैरवाख्यः सकायः सारको हरः । भैरवः प्रथमेनाथ गणाध्यक्षो हरात्मजः ।” देवीभेदेषु शिवरूपभैरवभेदाश्च तोड़लतन्त्रे १पटले उक्ता यथा “शिव उवाच । शृणु पार्वति ! शुभगे ! कालिकायाश्च भैरवम् । महाकालं दक्षिणाया दक्षभागे प्रपूजयेत् । महाकालेन वै सार्द्धं दक्षिणा रमते सदा । तारायाः दक्षिणे भागे अक्षोभ्यं परिपूजयेत् । समुद्रमथने देवि ! कालकूटं समुत्थितम् । सर्वे देवाः सदाराश्च महाक्षोभमवाप्नुवुः । क्षोभादिरहितं यस्मात् पीतं हालाहलं विषम् । अतएव महेशानि ! अक्षोभ्यः परिकीर्त्तितः । तेन सार्द्धं महामाया तारिणी रमते सदा । महात्रिपुरसुन्दर्य्या दक्षिणे पूजयेत् शिवम् । पञ्चवक्त्रं त्रिनेत्रञ्च प्रतिवक्त्रं सुरेश्वरि ! । तेन सार्द्धं महादेवी सदा कामकुतूहला । अतएव महेशानि ! पञ्चमीति प्रकीर्त्तिता । श्रीमद्भुवनसुन्दर्य्या दक्षिणे त्र्यम्बकं यजेत् । स्वर्गे मर्त्त्ये च पाताले या चाद्या भुवनेश्वरी । एतया रमते तेन त्र्यम्बकस्तेन कथ्यते । सर्वास्त्रिय समाख्यातः सर्वतन्त्रे प्रपूजितः । भैरव्या दक्षिणे भागे दक्षिणामूर्त्तिसंज्ञकम् । पूजयेत् परयत्नेन पञ्चवक्त्रं तमेव हि । छिन्नमस्तादक्षिणांशे कबन्धं पूजयेत् शिवम् । कबन्धपूजनाद्देवि ! सर्वसिद्धीश्वरो भवेत् । धूमावती महाविद्या विधवा रूपधारिणी । बगलाया दक्षभागे एकवक्त्रं प्रपूजयेत् । महारुद्रेति विख्यातं जगत्संहारकारकम् । मातङ्गीदक्षिणांशे च मतङ्गं पूजयेत् शिवम् । तमेव दक्षिणामूर्त्तिं जगदानन्दकारकम् । कमलाया दक्षिणांशे विष्णुरूपं सदाशिवम् । पूजयेत् परमेशानि ! स सिद्धो नात्र संशयः । पूजयेदन्नपूर्णाया दक्षिणांशे च रूपकम् । महामोक्षप्रदं देवं दशवक्त्रं महेश्वरम् । दुर्गाया दक्षिणे देशे नारदं परिपूजयेत् । नकारः सृष्टिकर्त्ता च दकारः पालकः सदा । रेफसंहाररूपत्वान्नारदः परिकीर्त्तितः । अस्याञ्च सर्वविद्याञ्च ऋषिर्यः परिकीर्त्तितः । स एव तस्या भर्त्ता च दक्षभागे तु पूज्यते” । ११रागभेदे स च महादेवस्वरूपः । धैवतनिषादषड्‌जगान्धारमध्यमरूपपञ्चस्वरमिलितैर्जातः । अस्य स्थानं धैवतस्वरः शरदृतौ प्रातर्गेयता । मतान्तरे अस्य रागिण्यः पञ्च । भैरवी वैराटी मधुमाधवी सिन्धवी बङ्गाली चेति” कल्लिनाथमते भैरवी गुर्जरी भाषा विलावली कर्णाटी वरांडी बङ्गाली चेति षट् । भरतमते मधुमाधवी ललिता बरारी महाबुली भैरवी चेति अष्टविधा पञ्च सङ्गी० दा० दृश्या । १२महाविद्यामूर्त्तिभेदे स्त्री ङीप् । सा च षड्‌दशविधा तन्त्रसारे उक्ता यथा १त्रिपुरभैरवी २सम्पत्प्रदा भैरवी ३कौलेशभैरवी ४भयविध्वंसिनी भैरवी ५चक्रविहिता भैरवी ६चैतन्यभैरवी ७कामेश्वरी भैरवी ८षट्कूटा भैरवी ९नित्या भैरवी १०रुद्रभैरवी ११भुवनेश्वरी भैरवी १२सकलेश्वरी भैरवी १३त्रिपुरबालाभैरवी १४नवकूटा बालाभैरवी १५अन्नपूर्णेश्वरीभैरवी च एतासां मन्त्रध्यानादिकं क्रमेण तत्र दृश्यम् । १३तारिणीशक्तियोगिनीभेदे च “महाकाल्यथ रुद्राणी उग्रा भीमा तथैव च । घोराख्या भ्रामरी चैव महारात्रिश्च सप्तमी । अष्टमी भैरवी प्रोक्ता योगिनीस्ताः प्रपूजयेत्” तन्त्रसा० । तत्र शिवस्य पत्न्यां “कालीतन्त्रादौ “भैरव्युवाच “कालीपूजा श्रुता नाथ” कालीकवचम् १४भैरवरागस्य पत्नीरूपरागिणीभेदे स्त्री “भैरवी कौशिकी चैव भाषा वेलावली तथा । बङ्गाली चेति रागिण्यो भैरवस्यैव वल्लभाः” संगीतसा० । मतान्तरे १५मालवरागस्य पत्नीभेदे “धानसी मानसी चैव रामकीरी च सिन्धुता । आशावरी भैरवी च मालवस्य प्रिया इमाः” । तस्या गानकालः पूर्वाह्णः । “विभाषा ललिता चैव कामोदा पटमञ्जरी । रामकीरी रामकेली वेला गारी च गुर्जरी । देशकारी च कुमना पञ्चमी च महाटकी । भैरवी चाव

कौमारी रागिण्यो दश पञ्च च। एताः पूर्वाह्णकाले तु गीयन्ते गायनोत्तमैः" सङ्गीतदा०। १५नागभेदे पु० भा० आ० ५७ अ०।

**भैरवीचक्र** न० भैरव्याः पूजनार्थं चक्रम्। देवीपूजार्थं कुलाचारवतां चक्राकारसमूहे तद्विधिर्यथा उत्पत्तितन्त्रे "नित्यं नैमित्तिकं काम्यं प्रकुर्याच्च दिने दिने। कुलवारे कुलर्क्षे च तिथौ चन्द्रनके तथा। भैरव्याः कल्पितं चक्रं संस्थाप्य पूर्ववत् प्रिये। सुराणां शोधनं कुर्य्याद् यथावत् परमेश्वरि!। प्रवृत्ते भैरवीचक्रे सर्वे वर्णा द्विजोत्तमाः। निवृत्ते भैरवीचक्रे सर्वे वर्णाः पृथक् पृथक्"।

**भैषज** न० भेषजमेव स्वार्थे अण्। १औषधे २लावकपक्षिणि जटा०। भिषजो गोत्रापत्यं गर्गा० यञ्। भैषज्य तस्य छात्राः कण्वा० अण् यलोपः। ३भिषजो गोत्रापत्यच्छात्रेषु ब०व०।

**भैषज्य** न० भिषजः कर्म भेषज-स्वार्थे वा ष्यञ्। १औषधे भिषजोऽपत्यं गर्गा० यञ्। २भिषजोऽपत्ये पुंस्त्री०।

**भैष्णज** पु० ब०व० भिष्णजो गोत्रापत्यं गर्गा०यञ् तस्य छात्राः कण्वा० अण् यलोपः। भिष्णजगोत्रापत्यच्छात्रेषु।

**भैष्णज्य** पुंस्त्री० भिष्णजो गोत्रापत्यं गर्गा०यञ्। तद्गोत्रापत्ये

**भैमकी** स्त्री भीमकस्य अपत्यम् इञ् ङीप्। भीमकनृप-कन्यायां रुक्मिण्याम् हरिवं० १२० अ०।

**भोक्तृ** त्रि० भुज-भोजने अवने च तृच्। १भोजनकर्त्तरि २भोगकर्त्तरि च ३पालनकर्त्तरि हेमच०। स्त्रियां ङीप्। ४विष्णौ पु० "भ्राजिष्णुर्भोजनं भोक्ता" विष्णुस०।

**भोग** पु० भुज-भावकर्मादौ घञ्। १सुखे २दुःखे ३सुखदुःखाद्यनुभवे ४स्त्र्यादीनां भाटके ५भाटकमात्रे च ६सर्पदेहे ७तत्फणायाञ्च अमरः। ८धने ९पालने १०भोजने च मेदि० ११देहे १२सर्पे १३माने च शब्दरत्ना०। १४रव्यादीनां राशिगतिकाले "अतीतानागतो भोगो नाड्यः पञ्चदश स्मृताः" तिथित०। १५भूम्यादीनां फलभुक्तौ भुक्तिशब्दे दृश्यम्। १६विभवभेदे "कर्त्ता च देही भोक्ता च आत्मा भोजयिता सदा। भोगो विभवभेदश्च निष्कृतिर्मुक्तिरेव च" ब्रह्मवै० प्र० ख० २३अ०।

**भोगक** त्रि० भोग+संज्ञायां कन्। भोगकाधीने ततः विदा० अपत्ये अञ्। भौगक तदपत्ये पुंस्त्री०।

**भोगगृह** न० भोगार्थं गृहम्। वासगृहे हेमच०।

**भोगदेह** पु० भुज्यते सुखदुःखादिकमत्र भुज-आधारे घञ् कर्म०। पुण्यपापफलभोगार्थे देहे "मृतदेहं परित्यज्य भोगदेहं प्रपद्यते" शु० त०। २भोगसाधने देहे स च लिङ्गशरीरात्मकः तस्यैव भोगसाधनत्वात् "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्" वेदान्तिनः। सांख्यमते पञ्चप्राणस्थाने पञ्चभूतमात्रा इति भेदः। स्थूलदेहस्य भोगावच्छेदकत्वात् उपचारात् तथात्वमिति बोध्यम्। तद्विवृतिर्यथा "शृणु देहविवरणं कथयामि यथागमम्। पृथिवी वायुराकाशस्तेजस्तोयमिति स्फुटम्। देहिनां देहबीजञ्च स्रष्टुः सृष्टिविधौ परम्। पृथिव्यादिपञ्चभूतैर्यो देहो निर्म्मितो भवेत्। स कृत्रिमो नश्वरश्च भस्मसाच्च भवेदिह। वृद्धाङ्गुष्ठप्रमाणश्च यो जीवः पुरुषः कृतः। बिभर्त्ति सूक्ष्मदेहन्तं तद्रूपं भोगहेतवे। स देहो न भवेद्भस्म ज्वलदग्नौ यमालये। जले न नष्टो देहो वा प्रहारे सुचिरं कृते। न शस्त्रे च न चास्त्रे च न तीक्ष्णकण्टके तथा। तप्तद्रवे तप्तलोहे तप्तपाषाण एव च। प्रतप्तप्रतिमाश्लेषेऽप्यत्यूर्ध्वपतनेऽपि च। न च दग्धो न भग्नश्च भुङ्क्ते सन्तापमेव स." ब्रह्मवै०प्र०२६अ०।

**भोगपाल** पु० भोगं भोगसाधनमश्वं पालयति पालि-अण् उप०स०। अश्वरक्षके शब्दमा०।

**भोगपिशाचिका** स्त्री भोगे पिशाचिकेव। क्षुधायाम् त्रिका०।

**भोगप्रस्थ** पु० उत्तरस्थदेशभेदे बृ०स० १४अ० दृश्यम्।

**भोगभूमि** स्त्री भोगार्थैव भूमिः न कर्मार्था। भारतवर्षातिरिक्ते वर्षे "तत्रापि भारतं श्रेष्ठं जम्बुद्वीपे महामुने!। यतो हि कर्म्मभूरेषा ततोऽन्या भोगभूमयः" विष्णुपु० २अंशे ३अ०।

**भोगवती** स्त्री भोगः सर्पशरीरं भूम्नाऽस्त्यस्याम् मतुप् मस्य वः ङीप्। १पातालगङ्गायाम् "भोगवती च पाताले स्वर्गे मन्दाकिनी तथा" इति पुराणम्। २कुमारानुचरमातृभेदे भा० श० ४७ अ०। ३नदीभेदे भा० स० १२अ०। ४भोगयुक्ते त्रि० स्त्रियां ङीप्।

**भोगवर्द्धन** पु० देशभेदे मार्क०पु० ५७ अ० ४८ श्लो०।

**भोगसद्मन्** न० भोगार्थं सद्म। वासगृहे शब्दरत्ना०।

**भोगायतन** न० ६त०। स्थूलदेहे "भोक्तुरधिष्ठानात् भोगायतननिर्माणमन्यथा पूतिभावः" सां०सू०।

**भोगार्ह** न० भोगमर्हति अर्ह-अच् उप०स०। १धान्ये राजनि० भोग्ये २वस्तुमात्रे च त्रि०।

**भोगावली** स्त्री ६त०। १भोगश्रेणौ। २स्तुतौ उपचारात् ३स्तुतिपाठके जटा० ४नागपुर्यां हेमच०।

स्थितः। विशुद्धवदनः प्रीतो भुञ्जीत न विदिङ्मुखः" जीवन्मातृकस्य दक्षिणामुखत्वनिषेधमाह आपस्तम्बः "दक्षिणामुखो न भुञ्जीत एवंविधभोजनमनायुष्यं मातृकस्येति" केचित् "कुष्माण्डं मत्स्यमांसं तिलैस्तर्पणमेव च। न जीवत्पितृकः कुर्यात् दक्षिणामुखभोजनम्" इत्याचारे करणाज्जीवत्पितृकस्यापि निषेध इत्याहुः। व्यासः "पञ्चार्द्रो भोजनं कुर्यात् प्राङ्मुखो मौनमास्थितः। हस्तौ पादौ तथैवास्यमेषु पञ्चार्द्रता मता।" गोभिलः "भुञ्जानेषु तु विप्रेषु यस्तु पात्रं परित्यजेत्। भोजने विघ्नकर्त्तासौ ब्रह्महापि तथोच्यते"। आपस्तम्बः "दिवा पुनर्न भुञ्जीतान्यत्र फलमूलेभ्यः"। मनुः "नातिप्रगे नातिसायं न सायं प्रातराशितः"। अतिप्रगेऽचिरोदितसूर्ये अतिसायं सूर्यास्तमितिसमय एवं प्रातराशितः दिनभोजनेनातितृप्तः न सायं न रात्रौ भुञ्जीतेत्यर्थः। आपस्तम्बः "यस्तु भोजनशालायां भोक्तुकाम उपस्पृशेत्। आसनस्थो न चान्यत्र स विप्र पङ्क्तिदूषकः" भोजनशालायां भोक्तुकामः सन् आसनस्थो वान्यत्र स्थितो वा न चोपस्पृशेत्। बौधायनः "उपलिप्ते समे स्थाने शुचौ श्लक्ष्णसमन्विते। चतुरस्रं त्रिकोणञ्च वर्त्तुलञ्चार्द्धचन्द्रकम्। कर्त्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम्। अकृत्वा मण्डलं ये तु भुञ्जतेऽधमयोनयः। तेषान्तु यक्षरक्षांसि हरन्त्यन्नानि तद्दृवनात्"। आपस्तम्बः "भिन्नकांस्ये तु यो विप्रो यदि भुङ्क्ते तु कामतः। उपवासेन चैकेन पञ्चगव्येन शुद्ध्यति"। तथा शूद्रादिभोजनेनापरिष्कृतपात्रेऽपि। वृद्धमनुः "ताम्रपात्रे न भुञ्जीत भिन्नकांस्ये मलाविले। पलाशपद्मपत्रे वा गृही भुक्त्वैन्दवं चरेत्"। ब्रह्मवैवर्त्तस्मृताग्निपुराणम् "अर्कपत्रे तथा पृष्ठे आयसे ताम्रभाजने। वटे कर्णटके चैव भुक्त्वा चान्द्रायणं चरेत्" पृष्ठे कदलीपत्रादिपृष्ठे। पैठीनसिः "ताम्ररजतसुवर्णाश्ममणिशुक्तिस्फटिकानां भिन्नमभिन्नम् इति न दोषः"। अत्र पाषाणपात्रं भोजने विहितम् "तैजसानां मणीनाञ्च सर्वस्याश्ममयस्य च। भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः" इति मनुना पाषाणपात्रस्य शुद्धिविधानाच्च। प्रचेताः "ताम्बूलाभ्यञ्जने चैव कांस्यपात्रे च भोजनम्। यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्"। अत्रिः "आसने पादमारोप्य यो भुङ्क्ते ब्राह्मणः क्वचित्। मुखेन चान्नमश्नाति तुल्यं गोमांसभक्षणैः"। मुखेन हस्तोत्तोलनं विना मुखादिनेत्यर्थः। आश्वमेधिके "आर्द्रपादस्तु भुञ्जीत प्राङ्मुखश्चासने शुचौ। पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः"। बौधायनः "भोजनं हवनं दानमुपहारः परिग्रहः। बहिर्जानु न कार्य्याणि तद्वदाचमनं स्मृतम्"। हारीतः "मार्ज्जनाद्यं बलिकर्म भोजनानि देवतीर्थेन कुर्यात्"। पराशरभाष्ये वृद्धमनुः "न पिबेन्न च भुञ्जीत द्विजः सव्येन पाणिना। नैकहस्तेन च जलं शूद्रेणावर्जितं पिबेत्"। मार्कण्डेयपुराणम् "पादप्रसारणं कृत्वा न च वेष्टितमस्तकः"। मनुः "पूजयेदशनं नित्यं चाद्याच्चैतदकुत्सयन्। दृष्ट्वा हृष्येत् प्रसीदेच्च प्रणमेच्चैव सर्वदा। अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः प्रार्थयेत्ततः। अस्माकं नित्यमस्त्वेतदिति भक्त्याथ वन्दयेत्"। विष्णुपु० "नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः। वहिःस्था वायवः पञ्च तेषां भूमौ प्रदीयते। अदत्त्वा वाह्यवायुभ्यः प्राणादिभ्यो न होमयेत्"। इति शिष्टपठितवचनान्नागादिभ्यो बलिदानमिति प्राचीनाचारः। तस्माद् देवेभ्योदत्त्वा भोक्तव्यं तथा च भगवद्गीतायाम् "इष्टान् भोगान् हि वो देवा दास्यन्ति यज्ञभाविताः। तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः"। यज्ञैः संवर्द्धिता देवा वो युष्मभ्यं भोगानन्नादीनि वृष्ट्यादिद्वारा दास्यन्ति। अतो देवैर्दत्तान् अन्नादीन् तेभ्योऽदत्त्वा यो भुङ्क्ते स चौर एव। स्मृतिः "निवेद्य प्राशनात् पूर्वं देवपादोदकाञ्जलिः। होतव्या जठरे वह्नौ स्वेन पाणितलेन तु"। तेन पादोदकेनापोशानं कृत्वा प्राणाहुतिर्नैवेद्येन कार्य्या" आ०त० रघु०।

**भोजनगर** न० भोजदेशस्थे नगरे धारापुरे भा०उ०११७अ० भोजपुराद्योऽप्यत्र। [१०।४७अ० भोजनागाद्योऽप्यत्र

**भोजपति** पु० ६त०। १भोजदेशाधिपे २कंसराजे च भाग०

**भोजिन्** त्रि० भुज–णिनि। भोजनकर्त्तरि स्त्रियां ङीप्।

**भोज्य** त्रि० भोज–ण्यत् भक्ष्यार्थत्वान्न कुत्वम्। १भक्षणीयद्रव्यमात्रे २भक्ष्यभेदे आहारशब्दे दृश्यम्। श्राद्धातुकल्ये पितॄणां तृप्त्यर्थं देये ३यवाद्दौ च।

**भोज्यसम्भव** पु० सम्भवत्यस्मात् सम्+भू–अपादाने अप् ६त०। भोज्यजाते देहस्थे रसधातौ शब्दच०।

**भोट** पु० (भोटान) देशभेदे शब्दरत्ना०।

**भोटाङ्ग** पु० (भोटान) देशभेदे शब्दर०।

**भोलि** पु० भा–डलि। उष्ट्रे त्रिका०।

**भोस्** अव्य० भा-डोसि । १सम्बोधने अमरः २प्रश्नविधाने शब्दर०

**भौजीय** त्रि० भोजे देशभेदे भवः गहा० छ । भोजदेशभवे ।

**भौत** पु० भूतानि प्राणिनोऽधिकृत्य प्रवृत्तः तानि देवता वा अस्य अण् । १देवले ब्राह्मणे शब्दमा० । बलिकर्मरूपे भूतयज्ञकर्त्तव्ये पञ्चयज्ञान्तर्गते २महायज्ञभेदे । "होमो दैवो बलिर्भौतो न्यज्ञोऽतिथिपूजनम्" मनुः । २रात्रौ स्त्री ङीप् हेमच० । भूतप्रियत्वात्तस्यास्तथात्वम् ।

**भौतिक** त्रि० भूतानि पृथिव्यादीनि पिशाचान् वा अधिकृत्य जातानि ठक् । १भूताधिकारेण जाते "आकाशादिकल्पकृतेन भौतिकानि" वा० स्फू० । २भूतकृते व्याध्यादौ । ३मुक्तायां राजनि० । ४महादेवे पु० त्रिका० ।

**भौत्य** पु० भूतेरपत्यं बा० यक् । चतुर्दशमनौ हरिवं० ७अ० । "बभूवाङ्गिरसः पुत्रो भूतिर्नाम्नातिकोपनः" इत्युपक्रमे मार्कं० पु० १०० तदुत्पत्त्यादिकमुक्तम् ।

**भौम** पु० भूमेरपत्यं तस्या इदं वा अण् । १नरकासुरे "त्वयि भौमं गते जेतुम्" माघः । २मङ्गलग्रहे च । ३भूमिभवे त्रि० मेदि० । भौमजलमुख्यादिकम् अम्बुशब्दे ११०पृ० दृश्यम् । ४भूमिव्यापके अम्बरे धरणिः । ५रक्तपुनर्नवायां राजनि० ।

**भौमन** पु० भूम्नोऽपत्यम् अण् मन्नन्तत्वात् न टिलोपः । विश्वकर्मणि भा० आ० ३२अ० ।

**भौमिक** त्रि० भूमौ तिष्ठति अधिकरोति वा ठक् । भूम्यधिकारिणि २भूमिस्थिते च मनुः ५।१४२ । [अमरः ।

**भौरिक** त्रि० भूरि स्वर्णमधिकरोति ठक् । कनकाध्यक्षे

**भौरिकि** पुंस्त्री० भूरिकस्यर्षेरपत्यम् इञ् । भूरिकस्यर्षेरपत्ये स्त्रियां क्रौड्या० ष्यङ् । भौरिक्या तदपत्ये स्त्रियां चित्त्वात् ङीष् च भौरिकीत्यपि तत्रार्थे । ततः अपत्ये तिका० फिञ् । भौरिक्यायणि भौरिकेरपत्ये पुंस्त्री० । भौरिक्या० विषये देशे विधल् । भौरिकिविध तद्विषये देशे

**भौरिक्यादि** पु० देशे विषये विधल्प्रत्ययनिमित्ते शब्दगणे स च गणः पा० ग० उक्तो यथा "भौरिकि भौलिकि चौपयत चैटयत काणेय वाणिजक वालिकाज्य सैकयत वैकयत" । [भौरिकिशब्दवत् सर्वम् ।

**भौलिकि** पुंस्त्री० भौरिकि+रस्य लः । भौरिकिशब्दार्थे

**भौलिङ्ग** पुंस्त्री० भूलिङ्गस्य स्वनामभेदस्यापत्यम् अण् । भूलिङ्गस्यापत्ये स्त्रियां गौरा० ङीष् । ततः युवप्रत्ययस्य लुक्

**भौवादिक** पु० भ्वादौ गणे पठितः ठक् वातृपूर्वम् ऐच् । भ्वादिगणपठिते धातौ । एवम् आदादिकजौहोत्यादिकदैवादिकादयोऽपि अदाद्यादिगणपठिते धातौ ।

**भ्यस** भये भ्वा० आ० अक० सेट् । भ्यसते अभ्यसिष्ट ।

**भ्यसते** अव्य० । उत्तरर्दाशि निघण्टुः ।

**भ्रंश** पु० भ्रन्श-भावे घञ् । भ्रंशने अमरः । अधःपाते च

**भ्रंशकला** अव्य० अव्या० । हिंसायाम् गणरत्न० टी० । भ्रंशकलाकृत्य हिंसित्वेत्यर्थः ।

**भ्र(भ्रु)(भ्रू)कुंश** पु० भ्रुवा कुंशा इङ्गितज्ञापनं यस्य । "कभ्रूकुंसादीनाम्" वार्त्ति० अ पक्षे वा ह्रस्वः इति रूपत्रयम् स्त्रीवेशधारिणि नटे अमरः ।

**भ्र(भ्रु)(भ्रू)कुटि** पुंस्त्री० भ्रुवः कुटिः कौटिल्यम् । भ्रकुंसवत् रूपत्रयम् । भ्रुवः कौटिल्ये अमरः ।

**भ्र(भ्रु)क्ष** अदने भ्वा० उ० सक० सेट् वा रस्य लः धातुपाठः । भ्र(भ्रु)क्षति ते अभ्र(भ्रु)क्षीत् । बभ्र(भ्रु)क्ष ।

**भ्रजस्** पु० भ्राजते भ्राज-असुन् पृषो० ह्रस्वः । १अग्नौ इन्द्रसि यजु० १५।५ । "अग्निर्वै भ्रजश्छन्दः" शत० ब्रा० ८।५।२।५ । २आदित्यरूपे सुरे च "सुरो भ्रजश्छन्द इत्यसौ वा आदित्यः सुरो भ्रजश्छन्दः" तत्रैव ।

**भ्रण** शब्दे भ्वा० पर० सक० सेट् । भ्रणति अभ्राणीत् अभ्रणीत् बभ्राण । [अभ्रंशीत् भ्रश्यते ।

**भ्रन्श** अधःपतने दिवा० अक० सेट् । भ्रश्यति इरित् अभ्रशत्

**भ्रन्श** अधःपाते अक० सेट् । भ्रंशति इरित् अभ्रशत् । उदित् । भ्रंशित्वा भ्रष्ट्वा । भ्रष्टः । [भ्रुवो भङ्गः ।

**भ्र(भ्रु)(भ्रू)भङ्ग** पु० ६त० । भ्रुकुंसवत् वा अकारस्थले

**भ्रम** चलने भ्वा० पर० सक० सेट् । भ्रमति कौटिल्ये इरित् । अभ्रमत् अभ्रमीत् । बभ्राम क्त्वा० वेट् भ्रेमतुः बभ्रमतुः ।

**भ्रम** चलने दिवा० पर० सक० सेट् शमा० । भ्राम्यति अभ्रमीत् ।

**भ्रम** भ्वा० पर० सक० सेट् । भ्रमति अभ्रमीत् क्त्वा० वेट् भ्रेमतुः बभ्रमतुः चक्रि न ह्रस्वः । ज्वला० भ्रमः भ्रामः ।

**भ्रम** पु० भ्रम-घञ् । १मिथ्याज्ञाने (अन्यथाभूतस्य वस्तुनोऽन्यथारूपेण ज्ञाने) २जलनिर्गमस्थाने ३कुन्दे (कुंद) ४भ्रमणे च मेदि० । भ्रमश्च तदभाववति तत्प्रकारकज्ञानम् । व्यधिकरणप्रकारावच्छिन्नविषयताशालिज्ञानम् । तत्प्रकारिका या विषयता तत्प्रकारव्यधिकरणविषयताकज्ञानम् । स्वप्रकारव्यधिकरणविषयताकज्ञानम् । स्वव्यधिकरणप्रकारावच्छिन्नविषयताप्रतियोगिज्ञानम्" (चि०) तदभाववद्विशेष्यकत्वनिरूपिततन्निष्ठविषयताप्रतियोगिताकतदभाववति तत्सम्बन्धेन तद्धर्मविशिष्टतन्निरूपितवैशिष्ट्यविषयताशालिज्ञानम् । विशेष्यितासम्बन्धेन तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकतदभाववदवच्छिन्ना वा तद्व्यक्तिप्रकारिता त०

अविद्याज्ञानम् । (मुग्धा०) “मिथ्याज्ञानादपर्य्यायोऽयं निश्चयः” (गौ०सू०) अतस्मिंस्तद्ग्रहः (भा०प०) । तदभाववति तत्प्रकारकं ज्ञानम् यथा शुक्तौ इदं रजतम् इति ज्ञानम् । (त०प्र०) भ्रमो द्विविधः । विपर्य्यासः संशयश्च । तद्धेतवश्च दोषा दोषशब्दे ३७६३ पृ० दृश्याः

**भ्रमण** न० भ्रम–ल्युट् । गतिभेदे पर्य्यटने कर्मनशब्दे दृश्यम्

**भ्रमणी** स्त्री भ्रम–करणे ल्युट् ङीप् । १क्रीडार्थपर्य्यटने तत्साधने २क्रीडिकायाञ्च मेदि० । [त्रिका०

**भ्रमत्कुटी** स्त्री भ्रमन्ती कुटीव । तृणादिनिर्मिते छत्रे

**भ्रमर** पुंस्त्री० भ्रम–करन् । १मधुकरे अमरः स्त्रियां जातित्वात् ङीष् । २कामुके मेदि० ।३भ्रमरच्छल्लीलताभेदे स्त्री राजनि० टाप् ।

**भ्रमरक** पु० भ्रमर इव कायति कै–क । ललाटलम्बिते भ्रमरतुल्ये चूर्णकुन्तले अमरः । स्वार्थे क । भ्रमरक भ्रमरे वालक्रीडाकायाञ्च मेदि० । (तुरमीन) वेधनयन्त्रभेदे दृश्यकुमा० । जलभ्रमणे त्रिदः ।

**भ्रमरकीट** पु० भ्रमर इव कीटः । (कुमिरपोका) कीटभेदे

**भ्रमरच्छल्ली** स्त्री लताभेदे राजनि० । भङ्गच्छल्ली दयोऽप्यत्र “भृङ्गच्छल्ली च कटुका तिक्ता दीपनरोचनी” राजनि० ।

**भ्रमरपदक** न० “भ्रमरपदकमिदमभिहितम्” द्वादशाक्षरपादके छ० र० टी० उक्ते छन्दोभेदे ।

**भ्रमरप्रिय** पु० ६त० । धाराकदम्बे रत्नमा० ।

**भ्रमरमारी** स्त्री भ्रमरं मारयति मारि अण् उप०स०गौरा० ङीष् । भृङ्गारिलतायाम् राजनि० । भृङ्गार्य्यादयोऽप्यत्र “भ्रमरारिस्तु तिक्ता स्यात् पित्तश्लेष्मकफापहा । त्रिदोषकुष्ठकण्डूतिशोफप्रशमविनाशिनी” राजनि० ।

**भ्रमरविलसिता** स्त्री “भोगौ नौगौ भ्रमरविलसिता” छन्दो० म० उक्ते एकादशाक्षरपादके छन्दोभेदे अस्य कोकिलमित्रे वदन्ति ।

**भ्रमरातिथि** पु० भ्रमरः अतिथिर्यस्य । चम्पके राजनि० ।

**भ्रमरानन्द** पु० भ्रमरान् आनन्दयति आ+नन्द–णिच् अण् उप०स० ।१बकुले २अतिमुक्तके रक्ताम्लाने च राजनि०

**भ्रमरालक** पु० भ्रमर इव अलति पर्य्याप्नोति अल–ण्वुल् । ललाटस्थे चूर्णकुन्तले हेमच० ।

**भ्रमरी** स्त्री भ्रमर+ङीष् । १षट्पद्यां अस्त्यर्थे अच् गौरा० ङीष् । तदाकारवत्यां २जतुकायां ३पुत्रदात्र्याञ्च राजनि०

**भ्रमरेष्ट** पु० ६त० । १श्योनाकवृक्षे २भार्ग्यां ३भूमिजम्ब्वाञ्च स्त्री राजनि० ।

**भ्रमरोत्सवा** स्त्री भ्रमराणामुत्सवो यतो यस्याः । माधवीलतायाम् राजनि० । [निमग्नजलक्षेत्रे हेमच० ।

**भ्रमासक्त** त्रि० भ्रमे निशानार्थचक्रभ्रमणे आसक्तः । शस्त्र-

**भ्रंश** अधःपतने दि०पर०सक०सेट् । भ्रश्यति अभ्रशीत् अभ्रंशीत् । उदित् क्त्वा वेट् । भ्रंशित्वा भ्रष्ट्वा । भ्रष्टः ।

**भ्रशिमन्** पु०भृशस्य भावः अतिशये वा इमनिच् ऋतोरः । १भृशत्वे २अतिशयश्च । अतिशये इष्ठन् भ्रशिष्ठ ईयसुन् भ्रशीयस् अतिशयश्च त्रि०ईयसुनि स्त्रियां ङीप् ।

**भ्रष्ट** त्रि० भ्रंश–क्त । च्युते गलिते स्वार्थे क । तत्रार्थे च च उपचा० ।

**भ्रस्ज** पाके तु० उभ०सक० अनिट् । भृज्जति आर्द्धधातुके वा भर्जादेशः स च सेट् अभ्राक्षीत् अभार्क्षीत् । अभ्रष्ट अभर्ष्ट । बभर्ज बभ्रज्ज ।

**भ्राज** दीप्तौ भ्वा०आत्म०अक०सेट् । भ्राजते अभ्राजिष्ट फणा० भ्रेजे बभ्राजे । भ्रेजिरे वा बभ्राजिरे । द्विन् च भ्राजथुः ।

**भ्राज** न० वर्षसाध्ये गवामयनसत्रे विषुवन्नामके प्रधानदिने गेये दिवाकीर्त्त्य सामभेदे “दिवाकीर्त्त्यं सामा भवति” इत्युपक्रमे तत्र दिवाकीर्त्त्यत्वं समर्थ्य “भ्राजाभ्राजे पवमानमुखे भवतो मुखत एवास्य ताभ्यां तमोऽपघ्नन्ति” ता०ब्रा०४।६।१४ । “यद्यप्यत्र पवमानमुखे इति सामान्यसम्बन्ध एव दृश्यते ये गायत्रे ते गायत्रीमुत्तरयोः पवमानयोरिति विशेषाभावतरेव व्याख्यातं स्वप्नमभ्वत् । अनेन भ्राजाभ्राजयोः साम्नोः स्थाननियमोऽर्थादुक्तो भवति”भा० तत्र साम “परिस्तानो गिरिष्ठ” इत्यस्मिन् गेयम् तच्च ऊहगाने ३प्र०१२ ।

**भ्राजक** त्रि० भ्राज–ण्वुल् । १दीप्तियोगे २पित्तभेदे न०शब्दरत्ना० पित्तशब्दे ४३२५ पृ० भावप्र० वाक्यं दृश्यम् ।

**भ्राजिर** पु० भौत्यमन्वन्तरे देवभेदे मार्कपु० १००अ० ।

**भ्राजिष्णु** त्रि० भ्राज–इष्णुच् । १दीप्तियोगे २विष्णौ पु० । “भ्राजिष्णुर्भोजनं भोक्ता” विष्णुस० ।

**भ्रातुष्पुत्र** पु० ६त० अलुक्स० कस्का० । भ्रातः पुत्रे ।

**भ्रातृ** पु० भ्राज–तृच् नृणो० । एकपितृजाते (भाइ) इति ख्याते पदार्थे तस्य स्वसा सहोक्तौ एक० । २भ्रातृभगिन्योः द्वि०व० ।

**भ्रातृक** त्रि० भ्रातुरिदम् ठञ् । भ्रातृसम्बन्धिनि ।

**भ्रातृज** पुंस्त्री० भ्रातुर्जायते जन–ड ५त० । १भ्रातुःपुत्रे २तत्कन्यायां स्त्री ।

**भ्रातृजाया** स्त्री ६त० । भ्रातृपत्न्यां कलौ नियोगेनापि तद्-

गमननिषेधो यथा "भ्रातृजायां कमनकुम्" कविकल्प् १८७२पृ० दृश्यम् । अवियोगेन तद्गमने दोषो यथा "भ्रातृजायापहारी च मातृगामी भवेन्नरः" ब्रह्मवै०प्र० ५६ अ० । भ्रातृपत्न्यादयोऽप्यत्र ।

**भ्रातृद्वितीया** स्त्री भ्रातृभोजनार्था द्वितीया । कार्त्तिकशुक्लपक्षस्य द्वितीयायाम् यमद्वितीयायां तद्विधिः निर्णयसि० भविष्ये "कार्त्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर ! । यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः। अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता । अस्यां निजगृहे विप्र ! न भोक्तव्यं ततो नरैः । स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् । दानानि च प्रदेयानि भगिनीभ्योऽपि विधानतः । स्वर्णालङ्कारवस्त्रान्नपूजासत्कारभोजनैः । सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः" प्रतिपन्नाः मातृभगिन्य इति हेमाद्रिः । "पितृव्यभगिनीहस्तात् प्रथमायां युधिष्ठिर ! । मातुलस्य सुताहस्ताद्द्वितीयायां तथा नृप ! ।। पितुर्मातुः स्वसुः कन्ये तृतीयायां तयोः करात् । भोक्तव्यं सहजायाश्च भगिन्या हस्ततः परम् । सर्वासु भगिनीहस्ताद्भोक्तव्यं बलवर्द्धनम् । यस्यां तिथौ यमुनया यमराजदेवः सम्भोजितः प्रतिजगत् स्वसृसौहृदेन । तस्यां स्वसुः करतलादिह यो भुनक्ति प्राप्नोति रत्नधनधान्यमनुत्तमं सः । गौडास्तु "यमं च चित्रगुप्तं च यमदूतांश्च पूजयेत् । अर्घ्यश्चात्र प्रदातव्यं यमाय सहजद्वयैः मन्त्रः "एह्येहि मार्त्तण्डज ! पाशहस्त ! यमान्तकालोकधरामरेश ! । भ्रातृद्वितीयाकृतदेवपूजां गृहाण चार्घ्यं भगवन्नमस्ते ! भ्रातस्तवानुजाताहं भुङ्क्ष्व भक्तमिदं शुभम् । प्रीतये यमराजस्य यमुनाया विशेषतः" ज्येष्ठाऽप्यजातेति वदेदिति चार्चीः । इत्यवस्तुदानमित्याहुः । ब्रह्माण्डपुराणेऽपि "या तु भोजयते नारी भ्रातरं युग्मके तिथौ । अर्चयेच्चापि ताम्बूलैर्न सा वैधव्यमाप्नुयात् । भ्रातुरायुःक्षयो राजन् न भवेत् तत्र कर्हिचित्" ।

**भ्रातृवधू** स्त्री ६त० । (भाद्रबौ) कनिष्ठभ्रातृभार्यायां स्नुषा०

**भ्रातृभगिनी** स्त्री द्वि०व० । वा एकशेषः । भ्रातासहित भगिन्याम् ।

**भ्रातृवल** त्रि० भ्राताऽस्त्यस्य वलच् । भ्रातृयुक्ते ।

**भ्रातृव्य** पु० भ्रातुः पुत्रः भ्रातृ+व्यत् ।१भ्रातृपुत्रे २शत्रौ च वेदेच "अतिपापमानं भ्रातृव्यं जयति य एतया स्तुते" ता०ब्रा०२.७।२। [ज्येष्ठभ्रातरि (भासुर) शब्दरत्ना०

**भ्रातृश्वशुर** पु०भर्त्तुर्भ्राता पतिभ्राता श्वशुर इव पूज्यत्वात् । पति-

**भ्रात्र** न० भ्रातुरिदम् शिवा० अण् । भ्रातृसम्बन्धिनि ।

**भ्रात्रीय** पुंस्त्री० भ्रातुरपत्यम् छ । भ्रातृपुत्रे अमरः ।

**भ्रान्त** न० भ्रम-भावे क्त ।१भ्रमणे "अनस्थाने भ्रान्तम्" नाट० कर्त्तरि क्त । २मिथ्याज्ञानयुक्ते ३भ्रमणयुक्ते च त्रि० । ४धुस्तूरे ५मत्तगजे च पु० राजनि० ।

**भ्रान्ति** स्त्री भ्रम-क्तिन् । १भ्रमणे २अयथार्थज्ञाने च । "भावमात्रिके तु संप्राप्ते भ्रान्तिः संजायते नृणाम् । भ्राताचराणि रूपाणि पश्यन्त्यन्यतः पुरा" ज्यो० त० । भ्रान्तिज्ञानञ्च चित्तविक्षेपः योगान्तरायः पात०सू० उक्तः चित्तविक्षेपशब्दे २८४१ पृ० दृश्यम् ।

**भ्रान्तिमत्** त्रि० भ्रान्तिरस्त्यस्य मतुप् मस्य वः । १भ्रमज्ञानयुते स्त्रियां ङीप् । २अर्थालङ्कारभेदे पु० अलङ्कारशब्दे दृश्यम् । [२भ्रमणशीले त्रि० स्त्रियां ङीप् ।

**भ्रान्तिहर** पु० भ्रान्तिं हरति हृ-ट । १मन्त्रिणि शब्दरत्ना०

**भ्राम** त्रि० भ्रम-ज्वला० कर्त्तरि ण । भ्रमयुक्ते ।

**भ्रामक** त्रि० भ्रामयति भ्रम-णिच्-ण्वुल् ।१भ्रमजनके २शृगाले पुंस्त्री० स्त्रियां ङीप् । ३धूर्त्ते त्रि० । ४सूर्य्यावर्त्ते मणौ ५अयस्कान्ते (चुम्बकपाथर) मेदि० तस्य लौहचालकत्वात् तथात्वम् ।

**भ्रामर** न० भ्रमरेण संभृतं तस्येदं वा अण् । १मधुनि ।२भ्रमरसम्बन्धिनि त्रि० ३अयस्कान्ते पु०मेदि० । "तदाहं भ्रामरं रूपं कृत्वाऽसंख्येयषट्पदम्" इत्युपक्रम्य "भ्रामरीति च मां लोकाः" इति देवीमा० उक्ते ४दुर्गामूर्त्तिभेदे स्त्री । भ्रामरमधुगुणादि "किञ्चित् कषायैः प्रभिन्नेभ्यः पुष्पेभ्योऽभिनिःसृतम् । निर्मलं स्फटिकाभं यत्तन्मधु भ्रामरं स्मृतम् । भ्रामरं रक्तपित्तघ्नं मूत्रजाड्यकरं गुरु । स्वादुपाकमभिष्यन्दि विशेषात् पिच्छिलं हिमम्" भावप्र० उक्तम् । ५अपस्माररोगे शब्दमाला ।

**भ्रामरिन्** त्रि० भ्रामरं भ्रमरस्येव घूर्णनमस्त्यस्य इनि । अपस्माररोगयुते "भ्रामरी गडुमाली च" मनुः ३।१६१। टीकायां कुल्लू० ।

**भ्राश** भासे भ्वा०आ०अक०सेट् । भ्राशते भ्राश्यते अभ्राशिष्ट । फणा० भ्रेशे बभ्राशे । ऋदित् चङि न ह्रस्वः । द्विर अबभ्राशत् ।

**भ्राष्ट्र** पु० भ्रस्ज-करणे ष्ट्रन् । १अम्बरीषे (भाजनाखोला) अमरः । भ्राष्ट्रे संस्कृतः अण् । २अम्बरीषसंस्कृते भक्ततण्डुलादौ त्रि० स्त्रियां ङीप् ।

**भ्राष्ट्रकि** पु० गोत्रर्षिप्रवरभेदे प्रवरा० ।

**भ्राष्ट्रिव्रतिन्** पु॰ गोत्रप्रवरर्षिभेदे हेमा॰ व्र॰ प्रवराध्यायः।

**भ्रास** दीप्तौ दिवा॰आ॰अक॰सेट्। भ्रास्यते अभ्रासिष्ट।

**भ्रास** दीप्तौ भ्वा॰आ॰अक॰सेट्। भ्रासते अभ्रासिष्ट फणा॰ भ्रेसे बभ्रासे ह्वित्। भ्रासयुः ऋदित् चङि न ह्रस्वः।

**भ्री** भये अक॰ भरणे सक॰ क्र्या॰ वा प्वा॰ पर॰ अनिट्। भ्रीणाति भ्रिणाति अभ्रैषीत्।

**भ्रुड** संवरणे सक॰ संघाते अक॰ तु॰ कु॰ पर॰ सेट्। भ्रुडति अभ्रुडीत् बुभ्रोड।

**भ्रू** स्त्री भ्रम-डू। नेत्रयोरूर्ध्वस्थायां रोमराजौ अमरः। तच्छुभाशुभलक्षणं गरु॰६६अ॰उक्तं यथा "विशालोन्नता सुखिनो दरिद्रा विषमभ्रुवः। धनी दीर्घासंसक्तभ्रूर्बाले न्दूनतसुभ्रुवः। आढ्यो निम्नस्य खण्डभ्रूर्मध्याश्च विनतभ्रुवः"। भ्रुवो भूलम् जाहच्। भ्रूजाह भ्रूमूले न॰।

**भ्रूक्षेप** पु॰ ६त॰। १भ्रूभङ्गे २सङ्केतज्ञापनाय भ्रुवोस्तिर्य्यक् चालने "भ्रूक्षेपमात्रानुमितप्रवेशाम्" कुमारः।

**भ्रूण** आशायां विशङ्कायाञ्च चु॰आत्म॰सक॰सेट्। भ्रूणयते अबुभ्रुणत।

**भ्रूण** पु॰ भ्रूण-घञ्। स्त्रीणां १गर्भे २बालके च अमरः।

**भ्रूणघ्न** त्रि॰ भ्रूणं गर्भं हन्ति हन-क। भ्रूणहत्याकारके क्विप् भ्रूणहाप्यत्र। "अपि भ्रूणहनं मासात्" मनुः। तत्प्रायश्चित्तं प्रा॰ वि॰ उक्तं यथा "तत्र पुंस्त्वेन ज्ञाते पुरुषवधप्रायश्चित्तं स्त्रीत्वेन ज्ञाते स्त्रीवधप्रायश्चित्तम्। अविज्ञाते तु पुंवधप्रायश्चित्तमाह मनुः "हत्वा गर्भमविज्ञातमेतदेव व्रतञ्चरेत्। राजन्यवैश्यौ चेज्जानादात्रेयी(रजस्वलां)मेव च स्त्रियम्" एतदेवेति। ब्रह्मवधप्रायश्चित्तमित्यर्थः। ब्राह्मणीगर्भवधविषयमिदं तस्यैव प्रक्रान्तत्वात्। क्षत्रियादिगर्भवधे तु वक्ष्यो गर्भस्तदर्णवधप्रायश्चित्तं कार्य्यं यथा याज्ञवल्क्यः "गर्भस्य च विज्ञाते चरेद्ब्रह्महणो व्रतम्। गर्भहा च यथावर्णं तथात्रेयीनिसूदनः" व्रतपदोपादानात् ज्ञानत इदम् अज्ञानतस्तदर्द्धं तेन ज्ञानकृते ब्राह्मणगर्भवधे द्वादशवार्षिकम्। क्षत्रियगर्भवधे त्रैवार्षिकं वैश्यगर्भवधे सार्द्धवार्षिकं शूद्रगर्भवधे नवमासिकं, धेनुसङ्कलनमप्यूहनीयम्"।

**भ्रूभङ्ग** पु॰ ६त॰। क्रोधादिज्ञापनार्थं भ्रुवस्तिर्य्यक्चालने "भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य" इति कुमारः।

**भ्रेज** भासे भ्वा॰आत्म॰अक॰सेट्। भ्रेजते अभ्रेजिष्ट। ऋदित् चङि न ह्रस्वः। अबिभ्रेजत् त।

**भ्रे(भ्ले)ष** पतने चलने च अक॰भ्वा॰उभ॰ सेट्। भ्रे(भ्ले)षति ते अभ्रे(भ्ले)षीत् अभ्र(भ्ले)षिष्ट। ऋदित् चङि न ह्रस्वः। अबिभ्रे(भ्ले)षत् त। तत्र पतने भ्वा॰ भये चलने उभ॰ अक॰ इति भेदः।

**भ्रेष** पु॰ भ्रेष-घञ्। उचितस्थानात् पतने अमरः। "कारणभ्रेषे कार्य्यभ्रेषो मा भूदिति" सु॰उ॰ भा॰।

**भ्रौवेय** त्रि॰ भ्रुव इदम् "भ्रुवो वुक् च" पा॰ ढक् वुक् च। भ्रूसम्बन्धिनि च।

**भ्लक्ष** भक्षणे भ्वा॰उभ॰सक॰सेट्। भ्लक्षति ते अभ्लक्षीत् अभ्लक्षिष्ट। दुर्गमते भक्षधातुरयम्।

**भ्लाश** दीप्तौ वा दिवा॰ पक्षे भ्वा॰ आ॰ अक॰ सेट्। भ्लाश्यते भ्लाशते अभ्लाशिष्ट फणा॰ भ्लेशे बभ्लाशे। ह्वित् (अथु) भ्लाशथुः। वोपदेवमते भ्राशधातुरयम्।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलिते वाचस्पत्ये भकारादिशब्दार्थसङ्कलनम्।

---

# म

**मकारः** पवर्गस्य पञ्चमवर्णः। अस्योच्चारणस्थानमोष्ठौ नासिका च जिह्वाग्रेण ओष्ठयोः स्पर्शेनोच्चारणम् आभ्यन्तरः प्रयत्नः अतएवास्य स्पर्शवर्णता अनुनासिकता च। बाह्यप्रयत्नाश्च संवारनादघोषाः अल्पप्राणश्च। अस्य ध्येयस्वरूपमुक्तं कामधेनुत॰ "मकारं शृणु चार्वङ्गि! स्वयं परमकुण्डली। तरुणादित्यसङ्काशं चतुर्वर्गप्रदायकम्। पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा"।

वर्णाभिधानेऽस्य पर्य्याया उक्ता यथा "मः कालो क्रोधितः कालो महाकालो महान्तकः। वैकुण्ठो वसुधा चन्द्रो रविः पुरुषराजकः। कालभद्रो जया मेधा विश्वदा दीप्तसंज्ञकः। जठरश्च श्रमो मानं लक्ष्मीर्मातोग्रबन्धनी। विषं शिवो महावीरः शशिप्रभा जनेश्वरः। प्रमत्तः प्रियश्च रुद्रः सर्वाङ्गो वह्निमण्डलम्। मातङ्गमालिनी बिन्दुः श्रवणा भरणी वियत्"। तदधिष्ठातृदेवताध्यानं यथा "कृष्णां दशभुजां भीमां पीतलोहितलोचनाम्।

तृष्णास्वरधरां नित्यां धर्मकामार्थमोक्षदाम्। एवं ध्यात्वा मकारन्तु तन्मन्त्रं दशधा जपेत्"। मातृकान्यासेऽस्य जठरे न्यास्यता। काव्यादौ प्रथमं प्रयोगे दुःखं फलं "सुखमथमरयं च मदुःखं यवर्गः" वृ०र०टी०धृतेः।

**म** पु० मा—क। १शिवे २चन्द्रे ३ब्रह्मणि एकाक्ष०। ४यमे ५समये ६विधौ ७विष्णौ च मेदि०। छन्दःशास्त्रोक्ते त्रिगुरुके गणे "मो भूमिस्त्रिगुरुः श्रियं दिशति यः" वृ०र०टी०। तस्य देवता भूमिः काव्यादौ प्रथमप्रयोगे श्रीलाभः फलम्। [क्विप् ममङ्क्।

**मक** भूषणे गतौ च भ्वा०आ०सक०सेट् इदित्। मङ्कते अम-

**मक** पुंन० म इव कायति कै—क अर्द्धर्चादि। शिवादिशब्दे।

**मकर** पुंस्त्री० मं विषं किरति कॄ—अच्। १जलजन्तुभेदे अमरः स्त्रियां जातित्वात् ङीष्। स च गङ्गावाहनं कामस्य ध्वजश्च। मकराकारत्वात् २मेषादितो दशमे राशौ। तद्राशिश्च उत्तराषाढाशेषपादत्रयसहितं श्रवणं धनिष्ठार्द्धञ्चेति नवपादात्मकः। तद्राशिजातफलादिकं नी० ता० उक्तं यथा "स्वगपरः स्यादवरो वलाढ्यो स्त्रीपिङ्गलाक्षः शुभभूमिभीतः। स्वस्थमजातश्चतुष्पदीर-रात्रिरादौ चतुष्पाद् विषमोदयो विट्। मकि—अच् पृषो० मकं भूषणं राति ददाति रा—क। ३निधिभेदे निधिशब्दे ४६८ पृ० दृश्यम्। [कारे कर्णभूषणे।

**मकरकुण्डल** पु० मकराकृति कुण्डलं कर्णभूषणम्। मकरा-

**मकरकेतन** पु० मकरः मकरचिह्नितं केतनं ध्वजो यस्य। कन्दर्पे हेमच० मकरकेत्वादयोऽप्यत्र।

**मकरध्वज** पु० मकरो ध्वजोऽस्य। कामदेवे अमरः।

**मकरन्द** पु० मकरमपि द्यति कामजनकत्वात् दो-बाहुलकात् क पृषो० मुम्। १पुष्परसे अमरः। २कुन्दवृक्षे च ३किञ्जल्के न० राजनि०।

**मकरन्दवती** स्त्री मकरन्द+बाहुल्ये मतुप् मस्य वः ङीप्। १पाटलायाम् शब्दच० २मधुविशिष्टे त्रि०।

**मकरन्दिका** स्त्री "रसैः षड्भिर्यौनैर्मनजजा यदि मकरन्दिका" वृ० र० टीकोक्ते जनविंशत्यक्षरपादके छन्दोभेदे। [भेदे भा० भी० ६९ अ०।

**मकरव्यूह** पु० मकर इव व्यूहः। मकराकारे सैन्यनिवेशन-

**मकरसंक्रान्ति** स्त्री ७त०। मकरे राशौ रवेः १संक्रमणे २तदुपलक्षितपुण्यकालोपलक्षिते च दिने।

**मकराकर** पु० ६त०। समुद्रे हेमच०। [करञ्जभेदे शब्दच०।

**मकराकार** पु० मकरस्येवाकारः फले यस्य। (काँटाकरमचा)

**मकराक्ष** पु० रावणपक्षस्ये राक्षसभेदे रामा० लङ्का०१७७अ०।

**मकराङ्क** पु० मकरोऽङ्को यस्य। १कामदेवे २मनुभेदे अजयपालः

**मकरालय** पु० ६त०। समुद्रे मकरावासादयोऽप्यत्र।

**मकरासन** न० रुद्रयामलोक्ते पूजाङ्गे आसनभेदे "मकरासनमाख्यातं बाहूनां तथाकारणात् पृष्ठे पादद्वयं बद्ध्वा हस्ताभ्यां पृष्ठबन्धनम्"।

**मकरीप्रस्थ** पु० मकर्या उपलक्षितः प्रस्थः। यदा कदाचित् मकरीजन्तुके प्रस्थे ग्रामे कर्क्या० अस्य नाद्युदात्तता।

**मकष्टु** पु० ऋषिभेदे तस्यापत्यं शुभ्रा० ढक्। माकष्टवेय तदपत्ये पुंस्त्री०।

**मकार** पु० म+स्वरूपे कार। मस्वरूपे वर्णे। मकारादिर्वर्णो वाद्यचरोऽत्रास्य अच्। मद्यमत्स्यमांसमैथुनमुद्रारूपे मकारादिवर्णयुक्ते तन्त्रोक्ते पदार्थपञ्चके। [रूपको०।

**मकुट** न० मकि-भूषणे उट पृषो०। शिरोभूषणे मुकुटे त्रि-

**मकुति** स्त्री मकि—उति पृषो०। शूद्रशासने त्रिका०।

**मकुर** पु० मकि-उरच् पृषो०। १दर्पणे २बकुलवृक्षे ३कुलालदण्डे ४कलिकायाञ्च हेमच०।

**मकुल** पु० मकि-उलच् पृषो०। १मुकुले २बकुलवृक्षे शब्दरत्ना०।

**मकुष्टक** पु० मकि-भूषायां उ-पृषो० मकुं भूषां स्तकति प्रतिहन्ति स्तक-अच् कुमारा० सत्वम्। वनमुद्गे (मुगानि) राजनि०।

**मकुष्ठ** पु० मीयते मा—उ कुत्सितं तिष्ठति स्था—क अम्बष्ठा० सत्वम् कर्म०। १व्रीहिभेदे "मकुष्ठो वातलो ग्राही कफपित्तहरो लघुः। वान्तिकृन्मधुरः पाके कृमिकृज्ज्वरनाशनः" भावप्र०। २मन्दगामिनि त्रि०। स्वार्थे क। ३वनमुद्गे

**मकूलक** पु० मकि—ऊलच् पृषो० संज्ञायां कन्। १दन्तीवृक्षे अमरः। २मुकुले रमानाथः।

**मक्क** गतौ भ्वा०आ०सक०सेट्। मक्कते अमक्किष्ट ममक्के।

**मक्कल** पु० शूलरोगभेदे "प्रजातायाश्च नार्या रूक्षशरीराया अल्पैरविशोधितं रक्तं वायुना तद्देशगेनातिसंरुद्धं नाभेरधःपार्श्वयोर्बस्तौ बस्तिशिरसि वा ग्रन्थिं करोति। ततश्च नाभिवस्त्युदरशूलानि भवन्ति सूचीभिरिव निस्तुद्यते भिद्यते दीर्य्यत इव च पक्वाशयः। समन्तादाध्मानमुदरे मूत्रसङ्गश्च भवतीति मक्कल्लक्षणम्" सुश्रुतः।

**मक्कूल** न० मक्क—ऊलच्। शिलाजतुनि शब्दर०।

**मक्कोल** पु० मक्क-बा० ओल। खटिकायां त्रिका०।

**मक्ष** रोषे संघाते च भ्वा०पर०सक०सेट्। मक्षति अमक्षीत्।

**मक्षवीर्य्य** पु० मक्षं संहतं वीर्य्यं यस्मात्। ५ब० पियालवृक्षे राजनि०।

**मक्षिका** स्त्री मश-सिकन् । कीटभेदे वंभराखीकीटे (मौ-माछि) उज्ज्वल० । पृषो० दीर्घः तत्रार्थे राजनि० ।

**मक्षिकामल** न० ६त० । सिक्थके (मोम) राजनि० ।

**मक्षिकासन** न० ६त० । (मौचाक) सिक्थकाधारे राजनि० पाठान्तरम् । [ऋ०८।२६।६

**मक्षु** न० मक्ष-उन् । १शीघ्रे निघण्टुः २शीघ्रगतियुते त्रि०

**मख** सर्पणे भ्वा०पर०सक०सेट् । मखति अमाखीत् अमखीत् ममाख मेखतुः । [मङ्खते ।

**मख** सर्पणे भ्वा०पर०सक०सेट् इदित् । मङ्खति अमङ्खीत्

**मख** पु० मख-संज्ञायां घ । यज्ञे अमरः ।

**मखत्राट** पु०मखं विश्वामित्रयज्ञमखं त्रायते त्रै-तृच् । श्रीरामे शब्दर० । [त्रि० ।

**मखद्विष्** पु०मखाय द्वेष्टि द्विष-क्विप् । १राक्षसे २यज्ञद्वेषिणि

**मखाग्नि** पु० ६त० । यज्ञे संस्कृताग्नौ जटा० । मखानलादयोऽप्यत्र ।

**मखान्न** न० मखे तत्काले भोज्यमन्नं सम्बन्धत्वात् शा०त० (माखना) १जलजाते सूक्ष्मे फलभेदे "मखान्नं पद्मबीजस्य गुणैस्तुल्यं विनिर्दिशेत्" भावप्र० । ६त० । २यज्ञान्ने च ।

**मखासुहृत्** पु० ६त० । दक्षयज्ञस्य नाशके महादेवे हेमच०

**मग** सर्पणे भ्वा०पर०सक०सेट् इदित् । मङ्गति अमङ्गीत् ।

**मगध** पु० मङ्ग्यते अधोगम्यतेऽनेन मगि-क पृषो० मगं दोषं पापं वा दधाति धा-क । १देशभेदे २तद्देशस्थे जने ब०व० । स च कीकटेतिसंज्ञः कुत्सितदेशश्च । "कीकटेषु गया पुण्या नदी पुण्या पुनःपुना" इत्युक्तेः गयादीनामेव पुण्यत्वम् । अन्येषामपुण्यत्वं प्रत्युत पापजनकत्वम् "अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति" मिता० देवलोक्तेः । "तीर्थयात्रां व्यतिरेकेणैतान् गत्वा तत्रैव चिरमुषित्वा गङ्गागमनं प्रायश्चित्तम् । तदशक्तौ पुनरुपनयनं अतिचिरवासे तु पुनरुपनयनं कृत्वा चान्द्रायणं कर्त्तव्यम्" प्रा० वि० । अतस्तस्य पापजनकत्वात् तथात्वम् । ततः भवार्थे गहा० छ । मगधीय तत्र भवे त्रि०

**मगधा** स्त्री मगध उत्पत्तिस्थानत्वेनास्त्यस्याः अच् । पिप्पल्यां रत्नमा० । [नामे च ।

**मगधेश्वर** पु० ६त० । १जरासन्धनृपे हेम० । २तद्देशपति-

**मगधोद्भवा** स्त्री मगधदेशे बाहुल्येनोद्भवति अच् । पिप्पल्याम् राजनि० । तद्देशे तस्याः प्रचुरभवत्वात्तथात्वम् ।

**मगध्य** परिवेष्टने कण्ड्वा० प० सक०सेट् । मगध्यति अमगध्यी(धी)त् ।

**मगन्द** पु०मगं पापं ददाति दा ड पृषो०मुम् च । कुसीदिनि निरु० ६।२२ ।

**मगण** पु० छन्दःशास्त्रोक्ते सर्वगुरुके वर्णत्रये ।

**मगल** पु० गोत्रप्रवर्त्तर्षिभेदे प्रवरा० ।

**मग्न** त्रि० मस्ज-क्त । (डोवा) जलादौ कृतमज्जने ।

**मघ** कैतवे द्यूतक्रीडादौ अक० गतौ निन्दायां आरम्भे च सक०भ्वा०आ०सेट् इदित् । मङ्घते अमङ्घिष्ट । [मङ्ग्यते

**मघ** भूषणे भ्वा०पर०सक०सेट् इदित् । मङ्घति अमङ्घीत् ।

**मघ** पु० मघि-अच् पृषो० । १द्वीपभेदे मेदि० । (मग)नामके २म्लेच्छदेशभेदे । ३पुष्पभेदे न० शब्दरत्ना० ।

**मघवन्(त्)** पु० मह-कनिन् नि०हस्य घः "मघवा बहुलम्" पा०वा तृ च । १इन्द्रे अमरः २तत्तन्नामके मेघके च । तृचि मघवान् अतृचि मघवा । एवं मघवानौ मघवन्तावित्यादिरूपद्वयम् । भत्वे अतृन्तस्य सम्प्र० । मघोनः तृजन्तस्य न मघवतः इत्यादि ङीपि मघोनी मघवतीत्यादि तद्धिते न सम्प्र० । माघवनम् इत्यादि भाष्ये तु मघवच्छब्दात् मतुपिरूपं साधयित्वा शब्दान्तरमित्युक्तं न तृजित्युक्तम् ।

**मघा** स्त्री मह-घ हस्य घत्वम् । अश्विन्यवधिके दशमे नक्षत्रे तस्याश्च पञ्चताराकत्वात् बहुत्वमपि "पितरः स्युश्वन्यवसन्ततास्मघासु च" श्रुतिः । "मघां मूलञ्च वर्जयेदिति "मघायां पितृदानञ्चेति" श्रुतिस्तु समुदायस्यैकत्वाभिप्रायेण । अस्याः योगताराद्रिकमस्य नक्षत्रे ४८७ पृ० उक्तम् । २ओषधभेदे धरणिः ।

**मघात्रयोदशी** स्त्री मघानक्षत्रेण युक्ता त्रयोदशी शा०त० । भाद्रकृष्णत्रयोदश्यां तत्रैव मघानक्षत्रसंयोगसम्भवात् । तत्र श्राद्धमावश्यकं यथोक्तं ति० त०

"प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदश्यां मघायुक्तायामनिषिद्ध यत्किञ्चिद्द्रव्येण श्राद्धमावश्यकं मन्त्रादिविधिवाक्ये नक्षत्रविशिष्टतिथेः श्रुतेः । ततश्च केवलत्रयोदशीकेवलमघाश्राद्धार्थवादा अपि कृष्णविशिष्टविधिप्राप्तकर्मणो नित्यत्वबोधकाः न तु केवलविध्यन्तरकल्पना गौरवात् । तथाच मनुः "प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् । प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन च" मनुः "यत्किञ्चित् मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् । तदप्यक्षयमेव स्यात् वर्षासु च मघासु च" । विष्णुधर्मोत्तरम् "प्रौष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी । एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः"। याता-

तपः "पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च। तस्माद्दद्यात् सदोद्युक्तो विद्वत्सु ब्राह्मणेषु च"। अमावास्यात्वश्रुतेः मनुवचने यत्किञ्चिदिति श्रुतेश्च मध्वोक्तपायसः फलातिशयार्थः। "गुणविशेषे फलविशेषः स्यात्" इति न्यायात्। व्यक्तं विष्णुधर्मोत्तरे "मघायुक्ता च तत्रापि शस्ता राजंस्त्रयोदशी। तत्राक्षयं भवेच्छ्राद्धं मधुना पायसेन च"। तत्राप्ययुक्तकृष्णपक्षे। अत्र यत् श्राद्धं तन्मधुयोगेन पायसयोगेन वाऽक्षयं भवेत्। एवं मनुवचने यत्किञ्चिन्मधुना मिश्रम् इत्यनेन मधुमात्रयुक्तत्वमुक्तम्। अतोऽत्र सुतरां शूद्रस्याप्यधिकारः। अत्र गजच्छायायोगे फलातिशयः। तथाच श्राद्धचिन्तामणौ स्मृतिः "कृष्णपक्षे त्रयोदश्यां मघास्विन्दुः करे रविः। यदा तदा गजच्छाया श्राद्धे पुण्यैरवाप्यते। करे हस्तानक्षत्रे कन्यादशमांशोपरि सपादत्रयोविंशांशं यावत्। अविभक्तानामप्यत्र पृथक् श्राद्धमावश्यकम्"। यथा श्राद्धचिन्तामणौ स्मृतिः "विभक्ता अविभक्ता वा कुर्युः श्राद्धमदैविकम्। मघासु च तथान्यत्र नाधिकारः पृथग्विना"। अदैविकं मत्स्याह्निकैकोद्दिष्टम् अन्यत्र कृष्णपक्षादौ नाधिकारः न नित्याधिकारः। "सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश। पृथङ्नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित्" इत्यत्रापिना सहच्छिन्नानामपृथग्द्रव्याणां पुंसां सपिण्डीकरणान्तानीति विशेषणात् तदुत्तरं श्राद्धानां पृथक्करणमपि प्रतीयते। मघात्रयोदशीनिमित्तकश्राद्धे पुत्रवता पिण्डा न देयाः। "भौजङ्गीं तिथिमासाद्य यावच्चन्द्रार्कसङ्गमम्। तत्रापि महती पूजा कर्त्तव्या पितृदैवते। ऋक्षे पिण्डप्रदानन्तु ज्येष्ठपुत्री विवर्जयेत्" इति देवीपुराणात् भौजङ्गीं पञ्चमीं चन्द्रार्कसङ्गमम् अमावास्यां पितृदैवते ऋक्षे मघायाम्। शातातपः "पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते। स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते। अक्षय्यदक्षिणा स्वस्ति सौमनस्यं तथास्त्विति" रघु०।

**मघाभू** पु० मघासु नक्षत्रे भवति भू—क्विप्। पूर्वफल्गुनीजाते शुक्रग्रहे त्रिका०। भगदैवतशब्दे ४६११पृ० दृश्यम्

**मघी** पु० मघानक्षत्रस्तदुत्पत्तिकालत्वेनास्त्यस्य अच् गौरा० ङीष्। मघानक्षत्रस्थरविभुज्यमानयुक्ते काले सौरभाद्रमासे जायमाने (आउस) धान्यभेदे मेदि०।

**मङ्कलक** पु० १ऋषिभेदे भा० व० ८३अ०। २यक्षभेदे तत्रैव।

**मङ्कि** पु० मकि—इन्। धनेच्छुकऋषिभेदे भा०शा० १७७अ०।

**मङ्कु** पु० मकि—उन्। सङ्कुलदुर्मतिके शत०ब्रा० ५।५।४।११।

**मङ्कुर** पु० मकि—उरच्। दर्पणे भरतः।

**मङ्क्षण** मङ्क्ष—ल्युट्। जङ्घात्राणे हारा०।

**मङ्क्षु (क्षु)** अव्य० मखि—उन्। १शैघ्र्ये २सत्यार्थे च। पृषो० खस्य क्षत्वमपि।

**मङ्ग** पु० मगि—घञ्। नौकाशिरसि हेम०।

**मङ्गल** पु० मगि—अलच्। १भूमिसुते ग्रहभेदे २प्रशस्ते ३अभीष्टार्थसिद्धौ च। ४तद्वति त्रि० अमरः। स्त्रियां ङीप् "सुमङ्गलीरियं वधूः" सि०कौ०। ५दुर्गायां ६हरिद्रायां ७दूर्वायां ८पतिव्रतायाञ्च स्त्री शब्दरत्ना० ९करञ्जभेदे स्त्री शब्दच०। १०अर्हन्मातृभेदे स्त्री हेम० ११योगिनीदशाभेदे "मङ्गला पिङ्गलेति" दशाशब्दे दृश्यम्। अभिप्रेतसिद्धिर्मङ्गलं तद्धेतुत्वात् गोरोचनादेरपि तथात्वम्। मङ्गलद्रव्याणि च मत्स्यसूक्ते ४२प०उक्तानि यथा "लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः। हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः। एतानि सततं पश्येन्नमस्येदर्चयेत्ततः। प्रदक्षिणन्तु कुर्वीत तथा चायुर्न हीयते। दूर्वां दधि सर्पिरथोदकुम्भं धेनुं सवत्सां वृषभं सुवर्णम्। मृद्गोमयं स्वस्तिकमक्षतानि लाजा मधु ब्राह्मणकन्यकाश्च। श्वेतानि पुष्पाणि तथा शमीश्च हुताशनं चन्दनमर्कबिम्बम्। अश्वत्थवृक्षञ्च समालभेत ततश्च कुर्याद्द्विजजातिधर्मम्" दधिमिश्रान्नम्। १२विष्णौ न० "पवित्रं मङ्गलं परम्" विष्णु स०। कुजशब्दे २०६६पृ० मङ्गलग्रहकथादि दृश्यम्। "प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम्। एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः" अभि० उक्ते १३प्रशस्ताचरणे निन्द्यवर्जने।

**मङ्गलचण्डी** स्त्री मङ्गले चण्डी दक्षा। १देवीभेदे स्वार्थे क। मङ्गलचण्डिकाप्यत्र तन्नामनिरुक्तिः ब्रह्मवै० प्र० ४१ अ० उक्ता यथा "दक्षायां वर्त्तते चण्डी कल्याणेषु च मङ्गलम्। मङ्गलेषु च या दक्षा सा च मङ्गलचण्डिका। पूज्यायां वर्त्तते चण्डी मङ्गलेऽपि महीसुतः। मङ्गलाभीष्टदेवी या सा वा मङ्गलचण्डिका। मङ्गलो मनुवंशस्य सप्तद्वीपधरापतिः। तस्य पूज्याभीष्टदेवी तेन मङ्गलचण्डिका"।

**मङ्गलच्छाय** पु० मङ्गला प्रशस्ता छाया यस्य। वटवृक्षे [राजनि०।

**मङ्गलपाठक** पु० मङ्गलार्थं स्तुतीः पठति पठ—ण्वुल्। स्तुतिपाठके हेमच०। "आः वृथामङ्गलपाठक!" वेणी०।

**मङ्गलागुरु** न० नित्यक०। अगुरुभेदे राजनि०।

**मङ्गल्य** न० मङ्गलाय हितं यत्। १चन्दने २मङ्गल्यागुरुणि ३स्वर्णे ४सिन्दूरे राजनि०५दध्नि च। ६रुचिरे त्रि०हेम० ७मङ्गलकरे त्रि० मेदि०। "सर्वमङ्गलमङ्गल्ये" इति देवीमा०। ८अश्वत्थे ९बिल्वे १०जीरके ११मसूरके च पु० मेदि० १२नारिकेले १३कपित्थे १४रीठाकरञ्जे च पु० राजनि०। १५त्रायमाणौषधौ पु० शब्दच०।

**मङ्गल्यक** पु० मङ्गलप्रदस्य प्रियः तद्दोषनिवारणार्थं दीय-मानत्वेन शास्त्रविधानात्। मसूरे अमरः। [भावप्र०।

**मङ्गलकुसुमा** स्त्री मङ्गल्यं कुसुमं यस्याः। शतपुष्प्याम्

**मङ्गल्यनामधेया** स्त्री ६ब०। जीवन्त्यामोषधौ जटा०।

**मङ्गल्या** स्त्री मङ्गलाय हिता यत्। १मल्लिकागन्धयुक्ता-गुरुणि अमरः २रोचनायाम् ३शङ्खपुष्प्याम् ४शम्यां ५शुक्लवचायां मेदि० ६प्रियङ्गौ ७माषपर्ण्यां हेमच० ८शतपुष्प्याम् ९जीवन्त्याम् १०ऋद्धिनामौषधौ ११हरिद्रायां १२दूर्वायां राजनि० १३दुर्गायाञ्च स्त्री शब्दमा०।

"मङ्गल्याऽगुरुशिशिरा मन्दाया दोषनाशिका" राजनि०

**मङ्गिनी** स्त्री मङ्गो नौकाग्रिमः अस्त्यस्या इनि ङीप्। नौ-कायां हेमच०। [पत्ये पुंस्त्री

**मङ्कुष** पु० नृपभेदे तस्यापत्यं शुभ्रा० ढक्। माङ्कुषेय तद-

**मच** दम्भे शाठ्ये च अक०भ्वा०आ०सेट्। मचते अमचिष्ट मेचे।

**मच** उन्नताकरणे धारणे पूजायां च सक० दीप्तौ अक० भ्वा० आत्म० सेट् इदित्। मञ्चते अमञ्चिष्ट। मञ्च्यते।

**मचक्रुक** न० कुरुक्षेत्रान्तर्गते तीर्थभेदे। कुरुक्षेत्रशब्दे दृश्यम्

**मचर्चिका** स्त्री चर्च-धात्वर्थनिर्देशे ण्वुल् मस्य शब्दस्येव चर्चिका ध्यानम्। प्रशस्ते अमरः। अव्युत्पन्नोऽयमित्यके "मतल्लिकादयो नियतलिङ्गा न तु विशेष्यनिघ्नाः" सि० कौ०"प्रशंसावचनैश्च"पा०अस्य विशेषणत्वेऽपि परनिपातः गोमचर्चिका गोमतल्लिका इत्यादि।

**मच्छ** पुंस्त्री० माद्यति मद्-क्विप् तथा सन् शेते शी-ड। मत्स्ये शब्दर०। स्त्रियां जातित्वात् ङीष्।

**मजिर** पु० ऋषिभेदे तस्यापत्यं शिवा० अण्। माजिर तद-पत्ये पुंस्त्री०।

**मज्जकृत्** न० मज्जानं करोति कृ-क्विप्। १देहस्थे अस्थि-रूपे पदार्थे हेमच० अन्नादिषु भुक्तेषु रसादिपरिपा-केन क्रमेणशोणितमांसत्वगस्थिशुक्राणामुत्पत्तेः अस्थ्नः मज्जाकृत्त्वम्।

**मज्जन्** पु० मस्ज-कनिन्।१अस्थिजाते अस्थिमध्यस्थे स्नेहा-कारे पदार्थे २वृक्षादेः सारांशे च अमरः। फलमज्ज-गुणाः "यस्य यस्य फलस्येह वीर्यं भवति यादृशम्। तस्य तस्यैव वीर्येण मज्जानमपि निर्दिशेत्" राजवल्लभः "अस्थि यत्स्वाग्निना पक्वं तस्य सारो द्रवो घनः। यः स्नेहवत् पृथग्भूतः स मज्जेत्यभिधीयते"। मज्ज-स्थानमाह "स्थूलास्थिषु विशेषेण मज्जा त्वभ्यन्तरे स्थितः" भावप्र०।

**मज्जन** न० मस्ज-भावे ल्युट्। १स्नाने (डोवा) जटाध०। कर्त्तरि ल्यु। २मज्जायां शब्दर०। अस्थिमध्यमज्जना-त्तस्यास्तथात्वम्। ३कुमारानुचरगणभेदे भा०श०४६अ०।

**मज्जसमुद्भव** न० मज्ज्ञः समुद्भवति सम्+उद्+भू-अच् ५त०। शुक्रे तस्य मज्जजातत्वम् मज्जकृच्छब्दे दृश्यम्।

**मज्जा** स्त्री मस्ज-अच् टाप्। १अस्थिसारे २वृक्षादेः सारांशे च हेम०। "भल्लातकी मूलकशिग्रुबिल्वैः प्रियालमज्जा-सहितैः"सुश्रुतः। [राजनि० २शुक्रधातौ न०

**मज्जाज** न० मज्जातो जायते जन-ड। १भूमिजे गुग्गुलौ

**मज्जारस** मज्जायाः रसः परिपाकः। शुक्रे राजनि०। तस्य मज्जासम्भवत्वं मज्जकृच्छब्दे उक्तम्।

**मज्जासार** न० मज्जायां सारोऽस्य। जातीफले राजनि०।

**मज्जूषा** स्त्री मस्ज-ऊषन्। मञ्जूषायां रायमुकुटः।

**मज्मन्** न० मस्ज-मनिन् पृषो०। बले निघण्टुः।

**मञ्च** पु० मचि-उच्छ्राये घञ्। १खट्वायाम् अमरः (माचा) वंशनिर्मिते २उच्चासने ३उच्चमण्डपभेदे हारा० "मञ्चस्थं रघुनन्दनम्"पुराणम्। स्वार्थे क। तत्रैव "इतोऽन्यः पतिरेष मञ्चकगतः" इति सा० द०।

**मञ्चकाश्रय** पु० ६ब०। मत्कुणे (छारपोका) राजनि०।

**मञ्चमण्डप** पु० मञ्च इव मण्डपः। मञ्चरक्षार्थं उच्चे पत्रा-दिकुटीरे (टङ्) हारा०। [शब्दरत्ना०।

**मञ्जर** न०मञ्ज-अरच्। १तिलकवृक्षे २मुक्तायाञ्च ३वल्लर्याञ्च

**मञ्जरि(री)** स्त्री मञ्जु ऋच्छति ऋ-इन् शक० पररूपं वा ङीप्। अभिनवोद्गतायां सुकुमारायां पल्लवाङ्कुररूपायां १वल्लर्याम् अमरः ङीबन्तस्तु तत्र २मुक्तायां ३तिलक-लतायां शब्दरत्ना०। ४तुलस्याम् राजनि० ततः तारका० इतच्। मञ्जरित जातमञ्जरीके त्रि०। ङीबन्तः "कलशा यत्रोभिति शरच्छैर्मञ्जरी" इ० र० टी० उक्ते चतुर्दशा-क्षरपादके छन्दोभेदे। [राज नि०।

**मञ्जरीनम्र** पु० मञ्जर्यां तदवस्थायामपि नम्रः। वेतसे।

**मञ्जा** स्त्री मजि-अच्। १छाग्यां त्रिका०।२मञ्जर्यां हेमच०।

**मञ्जि(ञ्जी)** स्त्री मञ्ज-इन् वा ङीप्। मञ्जर्याम् त्रिका०।

**मञ्जिका** स्त्री मजि–ण्वुल् टाप् अत इत्वम्। वेश्यायां हारा०।

**मञ्जिफला** स्त्री मञ्जिः मञ्जरी फले यस्याः। कदल्याम् त्रिका०

**मञ्जिष्ठा** स्त्री अतिशयेन मञ्जीमती इष्ठन् मतुपो लोपः। स्वनामख्यातायां लतायाम् अमरः। "मञ्जिष्ठा मधुरा तिक्ता कषाया स्वरवर्णकृत्। गुरूष्णा विषश्लेष्मशोथयोन्यक्षिकर्णरुक्। रक्तातीसारकुष्ठास्रविसर्पव्रणमेहनुत्" भावप्र०। मञ्जिष्ठया रक्तम् अण्। माञ्जिष्ठ तद्वर्णेन रक्ते त्रि०।

**मञ्जिष्ठामेह** पु० सुश्रुतोक्ते मेहभेदे तल्लक्षणं तत्रोक्तं यथा मेहतीत्यनुषक्ते "मञ्जिष्ठोदकप्रकाशं मञ्जिष्ठामेही"।

**मञ्जिष्ठाराग** पु० मञ्जिष्ठेव रागः। "मञ्जिष्ठारागमाहुस्तं यन्नापैत्यतिशोभते" सा०द० उक्ते पूर्वानुरागभेदे।

**मञ्जीर** न० मञ्ज–ध्वनौ ईरन्। १नूपुरे अमरः। "मञ्जुमणिमञ्जीरे कलगञ्जीरे" इति सा०१०प०। २दधिमन्थनदण्डबन्धस्तम्भे पु० हेमच०।

**मञ्जीरक** पु० मञ्जीर इव कायति शब्दायते कै–क। नूपुरध्वनितुल्यध्वनियुते ततः शिवा० अपत्ये अण्। माञ्जीर तदपत्ये पुंस्त्री०। [मञ्जुल तद्वति त्रि०।

**मञ्जु** त्रि० मनुज–उन्। मनोहरे अमरः। सिध्मा०लच्।

**मञ्जुकेशिन्** पु० कर्म० प्रशस्त्ये इनि। १श्रीकृष्णे हारा० २सुन्दरकेशयुते त्रि० स्त्रियां ङीप्। [त्रि०।

**मञ्जुगमना** स्त्री ६ब०। १हंस्यां राजनि० २सुन्दरगतियुते

**मञ्जुघोष** पु०। तन्त्रोक्ते १उपास्यदेवभेदे तन्त्रसारे दृश्यम्। २पूर्वजिनभेदे त्रिका०। कर्म०। ३मनोहरशब्दे पु०।

**मञ्जुपाठक** पुंस्त्री० मञ्जु पठति पठ–ण्वुल्। १शुकखगे राजनि० स्त्रियां जातित्वात् ङीष्। २मनोहरपाठके त्रि०

**मञ्जुप्राण** पु० ६ब०। चतुर्मुखे ब्रह्मणि जटा० सर्वव्यापित्वेन विधातृप्राणस्य महाप्राणत्वात् तस्य तथात्वम्।

**मञ्जुभद्र** पु० जिनभेदे त्रिका०।

**मञ्जुभाषिन्** त्रि० मञ्जु भाषते भाष–णिनि। १सुन्दरभाषके स्त्रियां ङीप् सा च "सजसा जगौ भवति मञ्जुभाषिणी" वृ०र० उक्ते २त्रयोदशाक्षरपादके छन्दोभेदे।

**मञ्जुल** त्रि० मनुज–सिध्मा० लच् मजि-उलच् वा। १मनोहरे २निकुञ्जे मेदि० ३जले न० विश्वः। ४जलरङ्कुखगे पुंस्त्री० मेदि० स्त्रियां ङीष्। [५सुन्दरश्रीके त्रि०।

**मञ्जुश्री** पु० ६ब०। १मञ्जुघोषे २पूर्वजिनभेदे त्रिका०।

**मञ्जुहासिनी** स्त्री "जतौ सजौ गो भवति मञ्जुहासिनी" वृ०र०टी०उक्ते १त्रयोदशाक्षरपादके २छन्दोभेदे। ३सुन्दरहासयुते त्रि०।

**मञ्जूषा** स्त्री मनुज ऊषन् (पेटरा) १पेटिकायाम् अमरः। २मञ्जिष्ठायाञ्च राजनि० ३पाषाणे उणा० को०।

**मट** सादे भ्वा०प०सक०सेट्। मटति अमटीत् अमाटीत् मेटतुः

**मटची** स्त्री मट–बा० अचि ङीप्। १पाषाणवृष्टौ "मटचीहतेषु कुरुषु" छान्दोग्यश्रुतिः। २रक्तवर्णक्षुद्रखगभेदे गोविन्दः।

**मटस्फटि** पु० दर्पारम्भे जटा०। [अमाठीत् मेठतुः।

**मठ** वासे अक०मर्दने सक० भ्वा० पर० सेट्। मठति अमठीत्-

**मठ** आध्याने भ्वा०सक०सेट् इदित्। मण्ठते अमण्ठिष्ट।

**मठ** पुंन० अर्द्ध र्चा० मठत्यत्र मठ-घञर्थे क। १छात्रादिवासे २देवागारे अमरः। मठप्रतिष्ठातत्त्वे तत्प्रतिष्ठाविधिर्दृश्यः। देवमठशब्दे चास्य दृश्यम्। ३गन्त्रीरथे हारा०।

**मठर** पु० मठ–अरन्। १मुनिभेदे २शौण्डे त्रि० उज्ज्वल०। राजद०परनिपातः राजमठरः। गर्गा० यञ्। माठर्य तस्य मुनेरपत्ये पुंस्त्री० स्त्रियां ङीप् यलोपः। शौण्डार्थकस्यापत्ये विदा० अञ्। माठर तदपत्ये पुंस्त्री०।

**मड** मोदे चु०उभ०अक०सेट् इदित्। मण्डयति-ते अममण्डत् त। विभाषे भ्वा० आत्म०। मण्डते।

**मड** भूषणे चुरा०उभ०पक्षे भ्वा०पर०सक०सेट् इदित्। मण्डयति ते मण्डति अममण्डत्-त अमण्डीत्। [जटा०।

**मडक** पु० मडि–क्वुन् पृषो० नलोपः। धान्यभेदे (मेडुया)

**मडर** पु० मडि–बा० अरन् पृषो० नलोपः। शिल्पिभेदे कन्याशब्दे परे अस्याद्युदात्तता।

**मडार** पु० मडि-बा० आरन् पृषो०। भूषणे ततः चतुरर्थ्यां प्रगद्या०ञ्य। माडार्य तेन निर्वृत्तादौ त्रि०।

**मड्डु** पु० मज्जन्ति अन्ये शब्दा अत्र मस्ज+उन् पृषो०। वाद्यभेदे अमरः स्वार्थे क मड्डुक तत्रार्थे। मड्डुकवादनं शिल्पमस्य वा ठक् पक्षे अण्। माड्डुकिक माड्डुक तद्वादनशिल्पयुते त्रि०। [मणीत् मेणतुः।

**मण** अव्यक्तशब्दे भ्वा०प०अक०सेट्। मणति अमाणीत् अ-

**मणि(णी)** पुंस्त्री० मण–इन् स्त्रीत्वपक्षे वा ङीप्। १रत्नादौ रत्ने "मणिरत्नं सरं शीतं कषायं स्वादु लेखनम्। चक्षुष्यं धारणाच्च पापालक्ष्मीविनाशनम्" राजवल्लभः। "मणिहारावलिरामणीयकमिति" "अपनीतमणीवहित्विषेति च" नैषधम्। २कण्ठमयपात्रभेदे अलिञ्जरे (जाला) ३लिङ्गाग्रे ४नागभेदे जटा० ५मणिबन्धे हेमच० स्वार्थे क संज्ञायां कन् वा। मणिक अलिञ्जरे न० अमरः।

अजागलस्तने मेदि० योन्यर्थे शब्दरत्ना० [हेमच्।

**मणिकर्ण** पु० १कामरूपस्थे २शिवलिङ्गभेदे मणिकूटशब्दे

**मणिकर्णिका** स्त्री मणिः कर्णे मणिमयकर्णभूषणमस्याः ठन्। विष्णुरूपप्रसादर्शनात् विस्मयेन शिवस्य मणिमयकुण्डलपतनस्थाने काशीस्थे तीर्थभेदे।
तन्नामनिरुक्तिः काशी० २६अ० यथा
विष्णुं प्रति शिववाक्यम् "त्वदीयस्यास्य तपसो महो-च्चयदर्शनात्। यन्मयान्दोलितो मौलिरहिमवत्-भूषणः। तदान्दोलनतः कर्णात् पपात मणिकर्णिका। मणिभिः खचिता रम्या ततोऽस्तु मणिकर्णिका। चक्र-पुष्करिणीतीर्थं पुराख्यातमिदं शुभम्। त्वया चक्रेण खननाच्छङ्खचक्रगदाधर!। मम कर्णात् पपातेयं यदा च मणिकर्णिका। तदा प्रभृति लोकेऽत्र ख्यातास्तु मणि-कर्णिका" मणिकर्णीत्यप्यत्र। २मणिमयकर्णभूषणे च।

**मणिकर्णीश्वर** न० काशीस्थे शिवलिङ्गभेदे काशीख०१००अ०

**मणिकर्णेश्वर** न० कामरूपस्थे शिवलिङ्गभेदे कालिपु०८१अ०।

**मणिकानन** न० मणिकमिवाननं यत्र। कण्ठे शब्दर०।

**मणिकार** पु० मणिमयं भूषणं करोति कृ-अण्। (जहरि) १मणिमयभूषणकारके २प्रत्यवादिवतः बरुतालकतर्तच-न्नामणिनामकसन्दकारे सङ्कीर्णोपाध्याये च। कृ-किप् इत०। मणिकृदप्यत्र।

**मणिकुट्टिका** स्त्री कुमारानुचरमातृभेदे भा०श०४७अ०।

**मणिकूट** पु०मणिमयः कूटोऽस्य। कामरूपस्थे पर्वतभेदे यथोक्तम् "अश्वकूटस्य चैशान्यां मणिकूटो महागिरिः। मणि-कर्णो नाम हरस्तत्र तिष्ठति लिङ्गकः"कालिकापु०८१अ०।

**मणिकेतु** पु० केतुभेदे वृ०सं० ११अ० केतुशब्दे दृश्यम्।

**मणिगणनिकर** पु० "वसुहयर्यतिरिह मणिगणनिकरः" वृ०र० उक्ते पञ्चदशाक्षरपादके छन्दोभेदे हिगुणचय वसुरित्यस्याप्यन्यदुक्तिः।

**मणिग्रीव** पु० कुवेरपुत्रभेदे शब्दर०।

**मणिच्छिद्रा** स्त्री मणिरिव छिद्रमस्याम्। १मेदानामौषधौ २ऋषभनामौषधौ च मेदि०। [११अ०।

**मणिजला** स्त्री मणिप्रचुरं जलमस्याम्। नदीभेदे भा० व०

**मणित** न० मण-क्त। रतिकाले स्त्रीणामव्यक्तशब्दभेदे हेम०

**मणितारक** पुंस्त्री० मणिरिव तारकास्य। सारसखगे राजनि० स्त्रियां जातित्वात् ङीष्।

**मणिदीप** पु० मणिमयः मणिप्रचुरो वा दीपः। क्षीरसमुद्र-मध्यस्थे श्रीविद्यापीठरूपे द्वीपभेदे "सुधाब्धिमध्ये

सुरविटपिवाटीपरिसरे मणिद्वीपे नीपोपवनचिन्ता-मणिगृहे" आनन्दल०।

**मणिनाग** पु० नागभेदे भा० आ० ३५ अ०। [१५८अ०।

**मणिपर्वत** पु० मणिप्रचुरः पर्वतः शा०त०। पर्वतभेदे हरिवं०

**मणिपालि** त्रि० मणिं पालयति पालि-इनि। मणिपालके तस्य धर्म्यं महिष्या०अण्। मणिपाल तस्य धर्म्ये त्रि०। तस्यापत्यम् रेवत्या०ठक्। माणिपालिक तदपत्ये पुंस्त्री०

**मणिपुच्छी** स्त्री मणिरिव पुच्छं यस्याः नित्यं ङीष्। मणिवत्पुच्छयुतायां स्त्रियाम्।

**मणिपुष्पक** पु० सहदेवस्य शङ्खे गीता १।१६।

**मणिपुर** न० पौरव्ये देशभेदे।

**मणिपूर** न० सुषुम्णान्तर्गते षट्चक्रमध्ये नाभिस्थे पद्मभेदे "तदूर्ध्वे नाभिदेशे तु मणिपूरं महाप्रभम्। मेघाभं विद्युदाभञ्च बहुतेजोमयं ततः। मणिवद्भिन्नं तत्पद्मं मणिपूरं तथोच्यते। दशभिश्च दलैर्युक्तं डादिफान्ता-क्षरान्वितम्। शिवेनाधिष्ठितं पद्मं विश्वलोकनकारणम्"

**मणिबन्ध** पु० मणिर्बध्यतेऽत्र बन्ध-आधारे घञ्। प्रकोष्ठ-पाण्योर्मध्यस्थे १करसन्धौ तस्य शुभाशुभलक्षणं गरु०पु० ६६अ० उक्तं यथा "मणिबन्धैर्निगूढैश्च सुश्लिष्ट-शुभसन्धिभिः। नृपा हीनैः करच्छेदस्सशब्दैर्धनवर्जिताः" २सैन्धवलवणाकारे पर्वतभेदे च। [राजनि०।

**मणिबी(वी)ज** पु० मणिरिव बी(वी)जमस्य। दाडिमवृक्षे

**मणिभद्र** पु० यक्षभेदे भा० स० १०अ०।

**मणिभूमि** स्त्री इत०। मणीनामाकरे।

**मणिमञ्जरी** स्त्री "इनावैः स्यात् सभनयजजगाः कीर्त्तिता मणिमञ्जरी" वृ० र० टीकोक्ते अनर्विंशत्यक्षरपादके छन्दोभेदे।

**मणिमण्डप** पु० मणिमयः मणिप्रचुरो वा मण्डपः। १मणि-खचिते मण्डपे २देवतापीठस्थानभेदे तन्त्रसारः।

**मणिमत्** त्रि० मणिरस्त्यस्य मतुप्। १मणियुते त्रि० स्त्रियां ङीप्। २यक्षभेदे पु० भा० व० १अ०। इत्यासुरांश-जाते द्वापरयुगीये ३नृपभेदे पु० भा० आ० ६७अ०। ४नागभेदे भा० स० ९अ०। ५राक्षसभेदे भा०व०१६१अ०। ६दैत्यभेदे हरिवं०३अ०। ७पश्चिमस्थे देशभेदे वृ०सं०१४अ०।

**मणिमध्य** न० "स्यान्मणिमध्यं चेद्भमसाः" छन्दोम० उक्ते नवाक्षरपादके छन्दोभेदे। [वक्षये अमरः।

**मणिमन्थ** न०मणिरिव मथ्यते मन्थ-कर्मणि घञ्। सैन्धव-

**मणिमाला** स्त्री इत०। "त्यौ त्यौ मणिमाला छिन्ना गुह-

वक्ते "छन्दो०उक्ते द्वादशाक्षरपादके १छन्दोभेदे। २हारे ३टन्नक्षतभेदे मेदि०। ४लज्जायां शब्दर०। ५दीप्तौ शब्दमा०

**मणिराग** न० मणेरिव रागो वर्णोऽस्य। १हिङ्गुले राजनि० हेत०। २मणिवर्णे पु०।

**मणिल** त्रि० मणि+सिध्मा० अस्त्यर्थे लच्। मणियुते।

**मणिव** पु० मणि-अस्त्यर्थे व। नागभेदे सि०कौ०।

**मणिवाल** पु० मणिरिव शुक्लत्वात् वालः केशोऽस्य। अश्वि-दैवत्ये पशुभेदे यजु० २२४।१।

**मणिवाहन** पु० नृपभेदे भा० आ० ६३अ०।

**मणिशैल** पु० मन्दराचलस्य पूर्वस्थे पर्वतभेदे मार्कपु० ५५।

**मणिसर** पु० मणीन् सरति कारणत्वेन गच्छति सृ-अच् हेत०। मणिखचिते हारभेदे।

**मणिस्कन्ध** पु० नागभेदे भा० आ० ५७अ०।

**मणीचक** न० मणेः ईं शोभां चकते प्रतिहन्ति चक-अच् हेत०। १चन्द्रकान्तमणौ त्रिका०। २मत्स्यरङ्गखगे पुंस्त्री० हारा० स्त्रियां ङीष्।

**मणीवक** न० मणीव कायति कै-क। पुष्पे हारा०।

**मणीवती** स्त्री मणि+अस्त्यर्थे मतुप् नि० मस्य वः शरा० दीर्घः। मणियुक्तनदीभेदे। [क्याम् राजनि०।

**मण्टपी** स्त्री मण्टं पाति पा-क गौरा० ङीष्। क्षुद्रोपद-

**मण्टि** पु० गोत्रप्रवरर्षिभेदे प्रवराध्यायः।

**मण्ठ(ठ)** पु० मठ-अच् पृषो०वा। (माठ) खाद्यभेदे राजनि०।
"समितां सर्पिषाढ्यां लवेनापि च वञ्चयेत्। अथास्य वटकं कृत्वा पचेत् सर्पिषि नीरसम्। एलालवङ्गकर्पूर-मरिचाद्यैरलङ्कृते। मज्जयित्वा सितापाके ततस्तु समुद्धरेत्। अयं प्रकारः संसिद्धो मण्ठ इत्यभिधीयते"। अस्य गुणाः "मण्ठस्तु बृंहणो वृष्यो बल्यः सुमधुरो गुरुः। पित्तानिलहरो रुच्यो दीप्ताग्नीनां सुपूजितः" भावप्र०मठ इति पठितम् खाद्यशब्दे २१८२ पृ० दृश्यम्

**मण्ड** पुंन० मन-ड तस्य नेत्त्वम् ।१सर्वोपानामग्ररसे (माड) २सारे ३पिच्छे च। ४आमलक्यां ५सुरायाञ्च स्त्री। ६दधिमण्डे (मात्) न० मेदि०। ७एरण्डवृक्षे दशाकभेदे भूषायां च पुंन० हेमच० अर्शआदि
भावप्र० तद्विधानं यथा
"तण्डुलानां सुसिद्धानां चतुर्दशगुणे जले। रसः सिक्थैर्विरहितो मण्ड इत्यभिधीयते। शुण्ठीसैन्धव-संयुक्तो दीपनः पाचनश्च सः। अथास्य सम्यक्सिद्धस्य ज्ञेया मण्डस्य सिद्धता। पेया सूपयवागूनां विलेपी भक्तयोरपि"। तस्य गुणाः "मण्डो ग्राही लघुः शीतो दीपनो धातुसाम्यकृत्। उरम्बस्तर्पणो बल्यः पित्त-श्लेष्मप्रमापहः"। "वृद्धबोधनो वस्तिविशोधनश्च प्राणप्रदः शोणितवर्द्धनश्च। ज्वरापहारी कफपित्तहन्ता वायुं जयेदष्टगुणो हि मण्डः। लाजमण्डोऽग्निजननो दाह-तृष्णानिवारणः। ज्वरातीसारशमनोऽशेषदोषामपाचनः। वाट्यमण्डोऽग्निजननः शूलानाहविनाशनः। पाचनो दीपनो हृद्यः पित्तश्लेष्मानिलापहः" राजवल्लभः। वाट्यमण्डो भृष्टयवमण्डः।

**मण्डक** पु० भाव० उक्ते पिष्टकभेदे खाद्यशब्दे २१८१ पृ० दृश्यम् सङ्गीतदामो० उक्ते गीताङ्गभेदे यथा
"जयप्रियः कलापश्च कमलः सुन्दरस्तथा। मङ्गलो वल्लभ-श्चेति मण्डकाः षट् प्रकीर्त्तिताः। जयप्रियो हंसताले लघुमध्ये यदा गुरुः। अनविंशाक्षरैर्युक्तो रसे वीरे च वर्त्तते। लघुर्गुरुर्लघुर्यत्र हंसतालः स उच्यते १। कलापो रङ्गतालेन युक्तो रौद्ररसे हि सः। द्वाविंशत्यक्षरैर्युक्तो लघुरादौ गुरुद्वयम्। लघुरादौ गुरुद्वन्द्वं रङ्गताल इतीरितः २। लघुद्वन्द्वं गुरुश्चैकोऽनिलोऽत्र गणात्मकः। पञ्चविंशत्यक्षरैः स्यात् कमलः शान्तहास्ययोः ३। गुरुरेको लघुद्वन्द्वं त्रिपुटे भगणात्मके। अष्टाविंशत्यक्षरैस्तु शृङ्गारे सुन्दरे मतः ४। आदौ गुरुर्लघुर्मध्ये प्लुतोऽन्ते अङ्गतालके। एकत्रिंशत्यक्षरैस्तु वीरे मङ्गल-मण्डकः ५। षड्भिताप्लुतके ताले गलनागलगात्मके। चतुस्त्रिंशदक्षरोऽयं वल्लभो रौद्रके रसे ६।"

**मण्डन** पु० मण्डयति मडि-ल्यु।१अलङ्कारके २प्रसिद्धमीमां-सकभेदे पु०"शिष्यप्रशिष्यैरुपगीयमानमवेहि तत् मण्डन-मिश्रधाम"। शङ्करदिग्विजयः तेन सह शङ्कराचार्यस्य विचारकथा तत्र दृश्या। भावे ल्युट्। ३भूषायाम् न०

**मण्डप** पुंन० मडि-घञ् मण्डं भूषां पाति रक्षति पा-क मडि-कपन् वा। १जनविश्रामस्थाने २देवादिगृहे च अमरः। यथा चण्डीमण्डप विष्णुमण्डप इत्यादि। ३मण्डपानकर्त्तरि त्रि० शब्दरत्ना०। ४निष्पाव्यां (शूक-शिम्बीभेदे) स्त्री राजनि०। [षिति स्त्री त्रिका० ङीप्।

**मण्डयन्त** त्रि० मडि-झच्। १अलङ्कारके सि०कौ०। २यो-

**मण्डर** त्रि० मडि-अरन्। १भूषणे ततः अङ्गुल्या० स्वार्थे ठक्। माण्डरिक तत्रार्थे।२दुर्व्यां स्त्री हारा०ङीप्।

**मण्डल** न० मडि-कलच्। १चक्राकारेण वेष्टने अमरः यथा सूर्यमण्डलं भूमण्डलम्। उभयतोविंशतियोजनमिते

२देशभेदे ३सूर्य्यचन्द्रयोः परिवेषे ४द्वादशराजचक्रे ५कोठरोगे च मेदि० ६माले अनेकतीर्थको०।७समूहे हेम० "धर्ममण्डलमण्डलम्" इति वोपदेवः। ८चक्रे त्रिका०। "मण्डलाकारपादाख्यं मण्डलं स्थानमीरितम्" इत्युक्ते ९धन्विनां स्थानभेदे शब्दर०। "मण्डलं सर्वतो वृत्तिः" इत्युक्ते १०सैन्यव्यूहभेदे कामन्द०। ललितकरेखावच्छिन्नेन रचिते ११पदार्थे च यथा यज्ञमण्डलं सर्वतोभद्रमण्डलमित्यादि। १२बिम्बे त्रि० अमरः स्त्रियां गौरा० ङीष्। सा च १३दूर्वायाम् हारा० १४कुक्कुरे पु०मेदि० १५सर्पभेदे पु० विश्वः १६व्याघ्रनखाख्यगन्धद्रव्ये शब्दच०। ततः स्वार्थे क। बिम्बे कुष्ठभेदे चादर्शे च। ललितमण्डलविधानमुक्तं देवीपु० यथा

"चतुर्हस्तं समारभ्य यावद्धस्तशतं भवेत्। मण्डलं तत्र कर्त्तव्यमत ऊर्ध्वं न कारयेत्। विमलं१ विजयं२ भद्रं३ विमानं४ शुभदं५ शिवम्६। वर्द्धमानञ्च७ देवश्रेष्ठ८ सर्त्ताख्यं९ (?) कामद१०कम्। रुचकं११ स्वस्तिकाख्यञ्च१२ द्व्यमिति मण्डलम्। सितादिहरितान्ताश्च रागाः कार्य्याः सुशोभनाः। शालिपिष्टककौसुम्भरजनीहरिपत्रजाः। सर्षिविद्रुमराणाश्च मन्त्रेण अभिमन्त्रिताः। सितसर्षप भूपाढ्यं रजः कृत्वा तु पातयेत्। अक्षबीजं न्यसेन्मन्त्री समन्वेति पदं च वा। समोत्थानं शुभं कृत्वा गोमयेनोपलेपितम्। चन्दनागुरुकर्पूरक्षोदधूपाधिवासितम्। भूभागं सुमितं चित्रं पूर्वपश्चिमकोत्तरम्। याम्यं स्वस्तिकमत्स्याद्यैः सुतवीथीकपताकैः। पद्मपत्राष्टकं मध्ये द्विगुणं त्रिगुणञ्च वा। द्वाराणि समसूत्राणि कर्णिकाकेसरोज्ज्वलम्। पद्मं तथावशेषाणि स्वस्तिकान्युत्पलानि च। सव्यावसव्यहस्तस्तु रजःपातं समाचरेत्। मध्यमानामिकाङ्गुष्ठैरपरिष्टाद् यथेप्सया। अधोमुखाङ्गुलिं कृत्वा पातयेत्तु विचक्षणः। समा रेखा तु कर्त्तव्याऽविच्छिन्ना पुष्टिवर्जिता। अङ्गुष्ठपर्ववैपुल्या समा कार्य्या विजानता। संसक्तं विषमं स्थूलं विच्छिन्नं जघराहतम्। पर्य्यन्तमपितं सुसमाविशेच्च कदाचन। संसक्ते कलहं विद्याद्वज्रेरेखे तु विग्रहम्। अतिस्थाने भवेद्व्याधिर्नित्यं पीडा विमिश्रिते। दुन्दुभेर्भयमाप्नोति समूपचाच्च संशयः। कृशायाञ्चार्थहानिः स्यात् विच्छिन्ने मरणं ध्रुवम्। वियोगात्तु भवेत्तस्य इष्टद्रव्यसुतस्य वा। अविदित्वा लिखेद्यस्तु मण्डलन्तु यथेप्सया। सर्वदोषानवाप्नोति ये दोषाः पूर्वभाषितः"। भोजनमण्डलं यथा "यातुधानाः पिशाचाश्च असुरा राक्षसास्तथा। घ्नन्ति तेषाममत्रस्य मण्डलस्य विसर्जनात्। आदित्यावसवो रुद्रा ब्रह्मा चैव पितामहः। मण्डलान्युपजीवन्ति तस्मात् कुर्वन्ति मण्डलम्। चतुःकोणं द्विजाग्र्यस्य त्रिकोणं क्षत्रियस्य तु। द्विकोणाकृति वैश्यस्य शूद्रस्य वर्त्तुलं सदा" वह्नि पु०। भोजनशब्दे आह्निकत० वाक्यं दृश्यम्।

व्यूहभेदलक्षणं कामन्दकीये उक्तं यथा "मण्डलोऽसंहतो भोगो दण्डश्चेति मनीषिभिः। कथिताः प्रकृतिव्यूहा भेदास्तेषां प्रकीर्त्तिताः। सन्तं व्यूहं कतिमान् काले स्थाने प्रकल्पयेत्। तिर्य्यग्वृत्तिश्च दण्डः स्याद्भोगः स्याद् वृत्तिरेव च। प्रदरो दृढकोऽसह्यश्चापो वै तद्विपर्य्ययः। प्रतिष्ठः सुप्रतिष्ठश्च श्येनौ विजय० सञ्जयौ। विशालविजयः सूची स्थूणाकर्णश्च मूमुखः। सुखास्यो वलयश्चैव दण्डभेदाः सुदुर्जयाः। अतिक्रान्तः प्रतिक्रान्तः कक्षाभ्याञ्चैकपक्षतः। अतिक्रान्तस्तु पक्षाभ्यां ततोऽन्यस्तु विपर्य्ययः। स्थूणापक्षो धनुःपक्षो द्विस्थूणो दण्ड ऊर्ध्वगः। द्विगुणान्तस्त्वतिक्रान्तपक्षोऽन्योऽस्य विपर्य्ययः। द्विचतुर्दण्ड इत्येवं ज्ञेयो लक्षणतः क्रमात्। गोमूत्रिकाऽहिसञ्चारी शकटो मकरस्तथा। भोगभेदाः समाख्यातास्तथा परिपतन्तकः। दण्डपक्षो युगोरस्यः शकटस्तद्विपर्य्ययः। मकरो व्यतिकीर्णश्च शेषः कुञ्जरराजिभिः। मण्डलव्यूहभेदौ च सर्वतो भद्रदुर्जयौ। गजानीको द्वितीयस्तु प्रथमः सर्वतोमुखः। अर्द्धचन्द्रक उद्धारो वज्रभेदास्त्वसंहताः। तथा कुक्कुटशृङ्गी च काकपादी च गोधिका। त्रिचतुःपञ्चसैन्यानां ज्ञेया आकारभेदतः। इति व्यूहाः समाख्याता व्यूहभेदप्रयोक्तृभिः। एते सप्तदश प्रोक्ता दण्डव्यूहाश्च पञ्चधा। तथा व्यूहद्वयञ्चैव मण्डलस्य प्रयोक्तृभिः। असंहतास्तु षड्व्यूहा भोगव्यूहाश्च पञ्चधा। व्यूहा एते प्रयोक्तव्याः स्युर्युद्धकाल उपस्थिते।" [भ्रमणरूपे नृत्ये शब्दमाला।

**मण्डलनृत्य** न० मण्डलाकारेण नृत्यम्। चक्राकारेण परि-

**मण्डलपत्रिका** स्त्री मण्डलाकारं पत्त्रमस्याः। रक्तपुनर्नवायाम् राजनि०।

**मण्डलपुच्छक** पु० कीटभेदे सुश्रुतः कीटशब्दे दृश्यम्।

**मण्डलब्राह्मण** न० शत०ब्रा०१०अध्याये पठिते "यदेतन्मण्डलं तपतीत्यादिके" ब्राह्मणे मण्डलाध्यायोऽप्यत।

**मण्डलाग्र** पु० मण्डलं इवाग्रमस्य । खड्गभेदे अमरः ।

**मण्डलाधिप** पु० ६त० । मण्डलेश्वरे नृपभेदे चतुर्योजनपर्य्यन्तो ह्यधिकारो नृपस्य च । यो राजा तत्कृतगुणः स एव मण्डलेश्वरः” ब्रह्मवै० ज० ख० ८६ अ० । मण्डलाधीश मण्डलेश्वरादयोऽप्यत्र । [शब्दर० ।

**मण्डलाकृत** त्रि० मण्डल+क्यङ् कर्मणि-क्त । वर्त्तुलाकारे

**मण्डलिन्** पु० मण्डलं कुण्डलनमस्त्यस्य इनि । १सर्पे २विडाले मर्कटमाला । ३जाहके (खट्टाश) हेमच० । ४वटवृक्षे त्रिका० ५गोनससर्पे च राजनि० ।

**मण्डहारक** पु० मण्डं हरति हृ-ण्वुल् । शौण्डिके अमरः

**मण्डा** स्त्री मण्डः सारभूतोऽस्त्यस्याः अच् । सुरायां हारा० मडि-अच् टाप् । २आमलक्यां मेदि० ।

**मण्डित** त्रि० मडि-क्त । १भूषिते २शौण्डिकभेदे पु० हेमच० ।

**मण्डु** पु० ऋषिभेदे तस्यापत्यं गर्गा० यञ् । माण्डव्य तदपत्ये ऋषिभेदे ।

**मण्डूक** पुंस्त्री० मण्डयति वर्षासमयम् मडि-ऊक । १भेके अमरः स्त्रियां जातित्वात् ङीष् । २शोणके ३मुनिभेदे च पु० मेदि० ४बन्धभेदे विश्वः । ५नाट्यतज्ञभेदे त्रि० शब्दर० ।

**मण्डूकपर्ण** पु० मण्डूक इव पर्णमस्य । १शोणाके अमरः २शोणके मेदि० । ३मञ्जिष्ठायां स्त्री टाप् ङीप् वा । ४ब्राह्म्यां (थानकुनि) ५ओषधिभेदे (थुलकुड़ी) रत्नमा० । स्त्री ङीप् मेदि० । ६आदित्यभक्तायां स्त्री ङीप् राजनि० । स्वार्थे क । मण्डूकपर्णिका तत्रार्थे “मण्डूकपर्णिका वल्ली स्वादुपाका सरा हिमा” । “मण्डूकपर्णिका वल्ली हृद्या वातविबन्धनुत्” राजवल्लभः ।

**मण्डूकमातृ** स्त्री मण्डूकस्य मातेव पोषकत्वात् । ब्राह्म्यां (थानकुनी) राजनि० । [सरोवरभेदे अमरः ।

**मण्डूकसरस** न० मण्डूकप्रचुरं सरः जातौ अच्समा० ।

**मण्डूर** न० मडि-ऊरच् । लौहमले अमरः ।

**मण्डूरवज्र** पु० चक्रदत्तोक्ते वज्रकभेदे “पञ्चकोलं समरिचं देवदारु फलत्रिकम् । विडङ्गमुस्तयुक्ताश्च भागास्त्रिपलसम्मिताः । यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः । पक्त्वा चाष्टगुणे मूत्रे घनीभूते तदुद्धरेत् । ततोऽक्षमात्रान् गुडकान् पिबेत् तक्रेण तक्रभुक् । पाण्डुरोगं जयत्येष मन्दाग्नित्वमरोचकम् । अर्शांसि ग्रहणीदोषमुरुस्तम्भमथापि वा । क्रिमिं प्लीहानमुदरं गररोगञ्च नाशयेत् । मण्डूरवज्रनामायं रोगानीकविनाशनः ।”

**मण्डूरवटक** पु० चक्रदत्तोक्ते मण्डूरादिघटिते वटकभेदे “त्रिवृतं त्रिफलाव्योषं विडङ्गं चव्यचित्रकौ । दार्वीं त्वगमाक्षिकौ धातुर्ग्रन्थिकं देवदारु च । एषां द्विपलिकान् भागांश्चूर्णं कृत्वा पृथक् पृथक् । मण्डूरं द्विगुणं चूर्णं शुद्धमञ्जनसन्निभम् । मूत्रे चाष्टगुणे पक्त्वा तस्मिंस्तु प्रक्षिपेत् ततः । उदुम्बरसमान् कुर्याद्वटकांस्तान् यथाग्नितः । उपयुञ्जीत तक्रेण सात्म्यं जीर्णे च भोजनम् । मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम् । कुष्ठान्यजरकं शोथमूरुस्तम्भकफामयान् । अर्शांसि कामलां मेहान् प्लीहानं शमयन्ति ते । पाण्डवत्वपरगुणितं मूलं मण्डूरचूर्णतः ।”

**मण्डोदक** न० मण्ड इवोदकं यत्र । १आतर्पणे (आलिपोना) २चित्तरागे ३चित्तवर्ते मेदि० । सुश्रुतोक्ते सुराकल्पान्तर्गतकल्पभेदे “वैरेचनिकमूलानां क्वाथे मासान् सुभावितान् । सुधौतांस्तत्कषायेण यवांश्चाप्यथ तण्डुलान् । अवक्षुद्यैकतः पिण्डान् कृत्वा शुष्कान् सुचूर्णितान् । भावितस्तु कषायेषु तत्कषायोष्मसाधितम् । तस्य पिण्डस्य भागांश्चैव किण्वभागविमिश्रितान् । मण्डोदकार्थे क्वाथस्य दद्याच्च सर्वमेकतः । निदध्यात् कलसे तान्तु सुरां जातरसां पिबेत् । एष एव सुराकल्पो वमनेष्वपि कीर्त्तितः ।”

**मत** त्रि० मन-क्त । १ज्ञाते २अभिप्रेते ३पूजिते ४अर्चिते च । भावे क्त । ५ज्ञाने ६अभिप्राये ७ज्ञाने ८उपदेशे च न० । ९सम्मते त्रि० मतशब्दे दृश्यम् । ततः ऋश्या० चतुरर्थ्यां क । मतक तत्सन्निकृष्टदेशादौ त्रि० । स्वार्थे क । मतक मतार्थे ।

**मतङ्ग** पु० माद्यति अनेन मद-अङ्गच् दस्य तः । १मेघे उज्ज्वला० दिकोषः । २मुनिभेदे भा० अ० ८८अ० । ३दानवभेदे हरिवं० २४२ अ० । ४राजर्षिभेदे भा० ७१ अ० । ब्राह्मण्यां नापितेन जाते ५चण्डालभेदे च तत्कथा भा० आनु० २८ अ० ।

**मतङ्गज** पुंस्त्री० मतङ्गः मेघ इव जायते जन-ड । १गजे अमरः तस्य मेघाकृतित्वात् तथात्वम् । स्त्रियां ङीष् । ग्रीष्मे गजानामूष्मणा कुष्ठादिरोगो भवति यथोक्तं कामन्द० “भृते ग्रीष्मे पीडकत्वात् प्रतापाद्भवन्ति कुष्ठानि मतङ्गजानाम् । सम्यक्क्रियायामपि कुञ्जराणामूष्मा शरीरेष्वभिजायतेऽतीव । आयासयोगेन हि कारकः प्रसह्य घ्नन्ति द्विरदान् प्रतापः । सर्वाणि सत्त्वानि

मधुमुकाले विनाम्बुना यान्ति पराभवत्वाम् । अमल-सुप्तप्रवितप्रवाया: प्रयान्ति वदा: करिणोऽपिबन्तः ।"

**मतङ्गवापी** स्त्री तीर्थभेदे भा० अनु० २० अ० ।

**मतङ्ग** पु० पार्श्वस्थे आत्मफलालंतियुक्ते ऋ०१०।१६३।१४।०

**मतल्लिका** स्त्री मतं मतिमवति भूषयति वल-क पृषो०। प्रशस्ते अमरः। अव्युत्पन्नोऽयमित्येके मितल्लिकोऽयम् सि०कौ०।

**मतानुज्ञा** स्त्री निग्रहस्थानभेदे गौ०सू० तल्लक्षणमुक्तं यथा "स्वपक्षदोषाभ्युपगमात् परपक्षदोषप्रसङ्गो मतानुज्ञा" "यः परेण चोदितं दोषं स्वपक्षेऽभ्युपगम्यानुद्धृत्य वदति भवत्पक्षे समानो दोष इति स स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषं प्रसञ्जयन् परमतमनुजानातीति मतानुज्ञां नाम निग्रहस्थानमापद्यते" भा० ।

**मति** स्त्री मन-भावे क्तिन् । १ज्ञाने अमरः । २इच्छायां ३स्मृतौ च । कर्त्तरि क्तिच् । ४आर्के मेदि० ५शाकभेदे शब्दच० । ६मेधाविनि निघण्टुः । ७अतिकरीषध गरु० १८८अ० उक्तं यथा "प्राह्य हे जीरके कुङ्कुमगन्धाजमोदकम् । यवानि-कटुकञ्चैव सवर्णं चूर्णमुत्तमम् । मातुलिङ्गरसे भावितम् सर्पिर्मधुसमन्वितम् । सम्प्राश्य भवितं कुम्भीकदेवस्वं मतिं पराम् ।"

**मतिदा** स्त्री मतिं ददाति दा-क । १ज्योतिष्मतीलतायाम् (मिलछी) राजनि० । दा-क । २बुद्धिदातरि त्रि० ।

**मतिनार** पु० नृपभेदे भा० आ० ९४अ० ।

**मतिभ्रम** पु०मतेर्भ्रमः अयथार्थविषयत्वेन भ्रमणम् । १बुद्धि-भ्रंशे भ्रान्तौ अमरः । भ्रम-भावे क्तिन् । मतिभ्रान्ति-रप्यत्र स्त्री । [मतिभ्रंशादयोऽप्यत्र ।

**मतिविभ्रम** पु० मतेर्विभ्रमोऽत्र । उन्मादरोगे राजनि० ।

**मतुख** त्रि० १मतमावके ऋ०८।७१।५। २मेधाविनि निघ० ।

**मतृक** पु० मद-क्विप् स्वार्थे क । १मतृकुणे (छारपोका) मनेदम् अनु मदादेयः । २मतृकमर्षिणि "मैतन्मतं मतृकमिति अनुवाचः" भट्टिः ।

**मतृकुण** पु० मद-क्विप् कुणति कुण-अच् कर्म० । १कीटभेदे (छारपोका) राजनि० । २निर्दन्तगजे ३अश्मश्रुपुरुषे ४नारिकेले मेदि० ५जलहस्तिनि हेम० । ६अजातलोम-मगावां स्त्रियां स्त्री शब्दर० ।

**मतृकुणारि** पु० ६त० । (पिठि) मल्लायां शब्दमाला । तत्-सम्पर्कोऽपि हि तस्य नाशः ।

**मतृकुणिका** स्त्री कुमारानुचरमातृभेदे भा० श० ४७अ० ।

**मत्त** पु० मद-क्त । १दुर्मदे गजे अमरः । २क्षीबे ३मदयुक्ते ४हृष्टे च त्रि० । ५धुस्तूरे ६कोकिले ७महिषे पु० राजनि० मत्तं मदोऽस्त्यस्याम् अच् । ८मदिरायां स्त्री राजनि० । "ज्ञेया मत्ता मभसगयुता" वृ० र० उक्ते ९दशाक्षरपादके छन्दोभेदे स्त्री ।

**मत्तकाशि(षि)नी** स्त्री मत्तेव क्षीबेव काशते कर्षति गच्छति वा णिनि पृषो० वृत्तः । उत्तमयोषिति अमरः ।

**मत्तकीश** पु० मत्तः कीश इव । गजे शब्दमा० स्त्रियां जातित्वात् ङीष् ।

**मत्तमयूर** पु० मत्तो मयूरो यस्मात् । १मेघे "वेदैरन्ध्रैर्म्तौ यसगा मत्तमयूरम्" वृ० र० उक्ते त्रयोदशाक्षरपादके २छन्दोभेदे च ।

**मत्तवारण** पु०कर्म०। १मत्तहस्तिनि । मत्तं वारयति वृ-णिच् ल्यु । २प्रासादवरण्डे न० (वारेण्डा) हेमच०। ३पूगचूर्णे शब्दमा० ।

**मत्ताक्रीडा** स्त्री "मत्ताक्रीडा मौ त्नौ नौ नल्गिति भवति मधुशरदशयतियुता" वृ० र० उक्ते त्रयोविंशत्यक्षरपादके छन्दोभेदे । [(वारेण्डा) प्रासादवरण्डे हेमच०।

**मत्तालम्ब** पु० मत्तैरालम्ब्यते आ+लवि-कर्मणि घञ् ।

**मत्तेभविक्रीडित** न०"सभरा मौ सलगाश्चवोदशयतिर्मत्तेभ-विक्रीडितम्" वृ० र० टी० उक्ते एकविंशत्यक्षरपादके १छन्दोभेदे । ६त० । २मत्तगजक्रीडायाम् ।

**मत्य** न० मते समीकरणे साधु यत् । कष्टोत्तरस्य समीकरण-साधने १फलकभेदे (मइ) "वप्राश्रितेन मत्येन मतीकरोति"ताण्ड्य०ब्रा०२।९।२ । "यथा लोके वप्रा-श्रितेन वप्रभिरनडुद्भिः वप्रभिन्नोऽस्मानोः बद्धभिर्वा अधिष्ठितेन मत्येन मत्यनाम तख्तस्य क्षेत्रस्य समीकरणा-दिसाधनं फलकम् । तेन मतीकरोति समीकरणार्थं कर्षकः प्रव्रजति क्षेत्रम्" भा० २दशाविक्रिन्टो हेम० [मन्यते ।

**मत्र** सुप्रभावे चु० आ० सक० सेट् इदित् । मन्त्रयते अम-

**मत्स** पुंस्त्री० मद-स । मत्स्ये उणा० ।

**मत्सगण्ड** पु० मत्स्येन गण्डो येषोऽत्र (माछेरघण्ट) व्य-ञ्जनभेदे शब्दच० ।

**मत्सर** पु० मद-सरन् । १अन्यशुभद्वेषे परसम्पदसहने २क्रोधे च ३तद्वति ४कृपणे च त्रि० अमरः । ५कीटभेदे मक्षिकायां स्त्री विश्वः । मत्सरस्य "निन्दन्ति मां सदा लोका धिगस्तु मम जीवनम् । इत्यात्मनि भवेद्यस्तु धिक्कारः स च मत्सरः" क्रिया-

योगसारोक्तः ।"स्वप्रयोजनप्रतिसन्धानं विना पराभिमतनिवारणेच्छा ।" गौ० इ० उक्तश्च बोध्यः ।

**मत्स्य** पु० मद–स्यन् । (माछ) १मीने २जलचरभेदे स्त्रियां ङीष् यलोपः मत्सी । तद्भेदगुणादि भावप्र०उक्तं यथा तत्र मत्स्येषु रोहितस्य "रक्तोदरो रक्तमुखो रक्ताक्षो रक्तपक्षतिः । स्वर्णपुच्छो भवन्नेको रोहितः कथितो बुधैः । रोहितः सर्वमत्स्यानां वरो वृष्योऽर्दितार्त्तिजित् । कषायानुरसः स्वादुर्वातघ्नो नातिपित्तकृत् । ऊर्द्ध्वजत्रुगतान् रोगान् हन्याद्रोहितमुण्डकम् ।" (सिलन्धा) "सिलन्धः श्लेष्मलो बल्यो विपाके मधुरो गुरुः । वातपित्तहरो हृद्य आमवातकरश्च सः ।" (अथ भांगन) "मद्गुरो मधुरः शीतो वृष्यः श्लेष्मकरो गुरुः । विष्टम्भजनकश्चापि रक्तपित्तहरः स्मृतः" । (मोनाचिका) "मोचिका वातहृद्बल्या वृंहणी मधुरा गुरुः । पित्तहृत् कफकृद्रुच्या वृष्या दीप्ताग्नये हिता । (बोदाल)"पाठीनः श्लेष्मलो बल्यो निद्रालुः पिशिताशनः । दूषयेद्रुधिरं पित्तकुष्ठरोगं करोति च ।" (अथ सौङ्गी) "शृङ्गी तु वातशमनी स्निग्धा श्लेष्मप्रकोपनी । रसे तिक्ता कषाया च लघ्वी रुच्या स्मृता बुधैः ।" (अथ हीलसा) "इल्लिशो मधुरः स्निग्धो रोचनो वह्निवर्द्धनः । पित्तहृत्कफकृत्किञ्चिल्लघुर्बल्योऽनिलापहः ।"(अथ सौल)"शल्कुली पाचिणी हृद्या मधुरा तु वरा स्मृता ।" अथ (गर्गरा) "गर्गरः पित्तलः किञ्चिद्वातजित् कफकोपनः ।" अथ (कवइ)"कविका मधुरा स्निग्धा कफघ्नी रुचिकारिणी । किञ्चित्पित्तकरी वातनाशिनी वह्निवर्द्धिनी ।" अथ (वर्मी) "वर्मिमत्स्यो हरेद्वातं पित्तं रुचिकरो लघुः ।" अथ (दरखारी) "दरखमत्स्यो रसे तिक्तः पित्तरक्तं कफं हरेत् । वातसाधारणः प्रोक्तः शुक्रलो बलवर्द्धनः ।" (अथ वाड़ि) "एरङ्गो मधुरः स्निग्धो विष्टम्भी शीतलो लघुः ।" (अथ पावता) "महाशफरसंज्ञस्तु तिक्तः पित्तकफापहः । शिशिरो मधुरो रुच्यो वातसाधारणः स्मृतः ।" अथ (गरइ) "गरघ्नी मधुरा तिक्ता तुवरा वातपित्तहृत् । कफघ्नी रुचिकृद्बल्या दीपनी बलवीर्यकृत् ।" अथ (मागुर) "मद्गुरो वातहृद्बल्यो वृष्यः कफकरो लघुः ।" अथ टेङ्गरा "सपादमत्स्यो मेधाकृत् श्लेष्मक्षयकरश्च सः । वातपित्तकरश्चापि रुचिकृत् परमो मतः ।" अथ शफरी (पोठी) "प्रोष्ठी तिक्ता कटुः स्वादुः शुक्रघ्नी कफवातजित् । स्निग्धास्य कण्ठरोगघ्नी रोचनी च लघुः स्मृता ।" अथ क्षुद्रमत्स्याः "क्षुद्रा मत्स्याः स्वादुरसाः दोषत्रयविनाशनाः । लघुपाका रुचिकरा बलदास्ते हिता मताः ।" अथातिक्षुद्रमत्स्याः "अतिसूक्ष्माः पुंस्त्वहरा रुच्याः कासानिलापहाः ।" अथ मत्स्याण्डः "मत्स्यगर्भो भवेद्वृष्यः स्निग्धः पुष्टिकरो लघुः । कफमेहप्रदो बल्यो ग्लानिकृत्कोष्ठनाशनः ।" अथ (शुकटी) "शुष्कमत्स्याः नवा बल्याः दुर्जराः विड्विबन्धिनः ।" अथ दग्धमत्स्याः "दग्धमत्स्यो गुणैः श्रेष्ठः पुष्टिकृद्बलवर्द्धनः ।" अथ कूपजादिमत्स्यगुणाः "कौपमत्स्याः शुक्रमूत्रकुष्ठश्लेष्मविवर्द्धनाः । सरोजा मधुराः स्निग्धा बल्या वातविनाशनाः । नादेया वृंहणा मत्स्या गुरवोऽनिलनाशनाः । रक्तपित्तकरा वृष्याः स्निग्धोष्णाः स्वल्पवर्चसः । चौण्ड्याः पित्तकराः स्निग्धा मधुरा लघवो हिमाः । ताडागा गुरवो वृष्याः शीतलाः बलमूत्रदाः । ताडागवच्चिप्रजाताः बलायुर्मतिकराः ।" ऋतुविशेषे मत्स्यविशेषगुणाः "हेमन्ते कूपजा मत्स्याः शिशिरे सारसा हिताः । वसन्ते ते तु नादेया ग्रीष्मे चौण्ड्यसमुद्भवाः । तडागजाता वर्षासु ताम्रपर्ण्या नदीभवाः । नैर्झराः शरदि श्रेष्ठा विशेषोऽयमुदाहृतः ।"

तद्भक्षणनिषेधादिकम्

"यो यस्य मांसमश्नाति स तन्मांसाद उच्यते । मत्स्यादः सर्वमांसादस्तस्मान्मत्स्यान् विवर्जयेत्" मनुः ।

"जलस्थलचरा ये च प्राणिनस्तान् हतानपि । न भक्षेन् मानवो ज्ञानी हत्वा तेषां भवेच्च हि । हत्वा हत्वा तु मत्स्याशी सर्वेषां यो विशेषतः । मांसादः प्राणिनां सोऽपि तस्मान् मत्स्यं परित्यजेत्" । पाद्मोत्तरखण्डे १०५ अ० । वर्जनीया मत्स्या यथा । "शृणु देवि ! प्रवक्ष्यामि मांसभेदान् निबोध मे । नादेयं तिक्तकमठं पद्मं शृङ्गिणमेव च । गोमीनं चक्रमत्स्यं बड़ालं राघवं तथा । वामीनं चवकर्णञ्च बचक्रं चेङ्गमेव च । भूंलग्नानिहस्तस्य गाङ्गेयानि विवर्जयेत्" मत्स्यसूक्तमहातन्त्रम् । रविवारे मत्स्यभक्षणे निषेधो यथा "आमिषं रक्तशाकञ्च यो भुङ्क्ते च रवेर्दिने । सप्तजन्म भवेत् कुष्ठी दरिद्रश्चोपजायते" भविष्यपु० । "मायमामिषमांसञ्च मसूरं निम्बपत्रकम् । भक्षयेद् यो रवेर्वारे सप्तजन्मान्यपुत्रकः" ति०त० । कार्त्तिके मत्स्यभक्षणनिषेधो यथा "न मत्स्यं भक्षयेन्मांसं न कौर्म्यं

नान्यदेव हि । चण्डालो जायते राजन् ! कार्त्तिके मांसभक्षणात्” नारदीयपु० । माघवैशाखयोरपि च ब्रह्मचर्य्यविधानात् मत्स्यभक्षणं नितरां निषिद्धमिति कृत्यतत्त्वम् । “नाभक्ष्यं नैवेद्यार्थे भक्ष्येष्वजामहिषी-क्षीरं वर्जयेत् पञ्चनखमत्स्यवराहमांसानि च” आह्नि०त० विष्णुसूत्रम् । जन्मतिथौ मत्स्यभक्षणनिषेधो यथा “आमिषं कलहं हिंसां वर्षवृद्धौ विवर्जयेत्” । “भुङ्क्ते यस्तु निरामिषं स हि भवेज्जन्मान्तरे पण्डितः” ति०त० । शैवस्य मत्स्यभक्षणनिषेधो यथा

“क्व मद्यं क्व शिवे भक्तिः क्व मांसं क्व शिवार्च्चनम् । मत्स्यमांसरतानां वै दूरे तिष्ठति शङ्करः” काशीख० । विन्ध्यपर्व्वतस्य पश्चिमे मत्स्यभक्षणनिषेधो यथा

“विन्ध्यस्य पश्चिमे भागे मत्स्यभुक् पतितो नरः” पुराणम् । कामतो मत्स्यभक्षणप्रायश्चित्तं यथा

“मत्स्यांस्तु कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत्” अज्ञानतस्तदर्द्धम्” प्रा०वि० । मत्स्यभक्षणनिषेधे प्रतिप्रसवो यथा “मत्स्यान् सशल्कान् भुञ्जीत मांसं रौरवमेव च । निवेद्य देवताभ्यस्तु ब्राह्मणेभ्यस्तु नान्यथा । शफरं सिंहतुण्डञ्च तथा पाठीनरोहितौ । मत्स्याश्चैते समुद्दिष्टा भक्षणाय तपोधनैः । प्रोक्षितं भक्षयेदेषां मांसञ्च द्विजकाम्यया । यथाविधि नियुक्तञ्च प्राणानामपि चात्यये” कौर्म्मे पु० १६अ० । “पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः । राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्व्वशः” मनुः । “अनिवेद्य न भोक्तव्यं मत्स्यं मांसञ्च यद्भवेत् । अन्नं विष्ठा पयो मूत्रं यद्विष्णोरनिवेदितम्” आ० त० । प्रेतश्राद्धे मत्स्यदानविधिर्यथा

“सपिण्डीकरणं यावत् प्रेतश्राद्धानि षोडश । एकाहेनैव कर्त्तव्यं सामिषेण द्विजातिभिः” श्राद्ध०त० ।

२विराटदेशे पु० सोऽभिजनोऽस्य तस्य राजा वा अण् । मात्स्य पित्रादिक्रमेण तद्देशवासिनि तस्य राज्ञे च बहुषु अणो लुक् । ३तद्देशवासिषु ब० व० । ४मेषादितो द्वादशराशौ मीनराशौ । ५भगवतः प्रथमावतारे तत्कथा मत्स्यपु०२अ० । भा० व० १८७ अ० च । मत्स्यं भगवदवतारभेदमधिकृत्य कृतो ग्रन्थः अण् । मात्स्य महापुराणभेदे तत्प्रतिपाद्यविषयाश्च तत्रैव २९०अ० उक्ता यथा “सूत उवाच । एतद्वः कथितं सर्व्वं यदुक्तं विश्वरूपिणा । मात्स्यं पुराणमखिलं धर्म्मकामार्थसाधनम् । अत्रादौ मनुसंवादो ब्रह्माण्डकथनन्तथा । साङ्ख्यं शारीरकं प्रोक्तं चतुर्मुखमुखोद्भवम् । देवासुराणामुत्पत्तिर्मारुतोत्पत्तिरेव च । मदनद्वादशी तद्वल्लोकपालाभिपूजनम् । मन्वन्तराणामुद्देशो वैण्यराज्याभिवर्णनम् । सूर्य्यवैवस्वतोत्पत्तिर्बुधस्यागमनं तथा । पितृवंशानुकथनं श्राद्धकालस्तथैव च । पितृतीर्थप्रवासश्च सोमोत्पत्तिस्तथैव च । कीर्त्तनं सोमवंशस्य ययातिचरितं तथा । कार्त्तवीर्य्यस्य माहात्म्यं वृष्णिवंशानुकीर्त्तनम् । भृगुशापस्तथा विष्णोर्दैत्यशापस्तथैव च । कीर्त्तनं पूरुवंशस्य वंशो हौताशनस्तथा । पुराणकीर्त्तनं तद्वत् क्रियायोगस्तथैव च । व्रतं नक्षत्रसंख्याकं मार्त्तण्डशयनं तथा । कृष्णाष्टमीव्रतं तद्वद्रोहिणीचन्द्रसंज्ञितम् । तडागविधिमाहात्म्यं पादपोत्सर्ग एव च । सौभाग्यशयनं तद्वदगस्त्यव्रतमेव च । तथानन्ततृतीया तु रसकल्याणिनी तथा । आर्द्रानन्दकरी तद्वद् व्रतं सारस्वतं पुनः । उपरागाभिषेकश्च सप्तमीस्नपनं पुनः । भीमाख्या द्वादशी तद्वदनङ्गशयनं तथा । अशून्यशयनं तद्वत्तथैवाङ्गारकव्रतम् । सप्तमीसप्तकं तद्वद्विशोकद्वादशी तथा । मेरुप्रदानं दशधा ग्रहशान्तिस्तथैव च । ग्रहस्वरूपकथनं तथा शिवचतुर्दशी । तथा सर्व्वफलत्यागः सूर्य्यवारव्रतं तथा । संक्रान्तिस्नपनं तद्वद्विभूतिद्वादशीव्रतम् । षष्टिव्रतानां माहात्म्यं तथा स्नानविधिक्रमः । प्रयागस्य तु माहात्म्यं सर्व्वतीर्थानुकीर्त्तनम् । पैलाश्रमफलं तद्वद्द्वीपलोकानुकीर्त्तनम् । तथान्तरिक्षचारश्च ध्रुवमाहात्म्यमेव च । भवनानि सुरेन्द्राणां त्रिपुरायोधनं तथा । पितृपिण्डदमाहात्म्यं मन्वन्तरविनिर्णयः । वज्राङ्गस्य तु संभूतिः तारकोत्पत्तिरेव च । तारकासुरमाहात्म्यं ब्रह्मदेवानुकीर्त्तनम् । पार्व्वतीसम्भवस्तद्वत् तथा शिवतपोवनम् । अनङ्गदेहदाहस्तु रतिशोकस्तथैव च । गौरीतपोवनं तद्वद्विश्वनाथप्रसादनम् । पार्व्वतऋषिसंवादस्तथैवोद्वाहमङ्गलम् । कुमारसम्भवस्तद्वत् कुमारविजयस्तथा । तारकस्य वधो घोरो नरसिंहोपवर्णनम् । पद्मोद्भवविसर्गस्तु तथैवान्धकघातनम् । वाराणस्यास्तु माहात्म्यं नर्म्मदायास्तथैव च । प्रवरानुक्रमस्तद्वत् पितृगाथानुकीर्त्तनम् । तथोभयमुखीदानं दानं कृष्णाजिनस्य च । तथा सावित्र्युपाख्यानं राजधर्म्मास्तथैव च । यात्रानिमित्तकथनं स्वप्नमाङ्गल्यकीर्त्तनम् । वामनस्य तु माहात्म्यं तथैवादिवराहकम् ॥

क्षीरोदमथनं तद्वत् कालकूटाभिशातनम् । प्रासादलक्षणं तद्वत् मण्डपानान्तु लक्षणम् । पुरुवंशे तु संप्रोक्तं भविष्यद्राजवर्णनम् । तुलादानादि बहुशो महादानानुकीर्त्तनम् । कल्पानुकीर्त्तनं तद्वद् ग्रन्थानुक्रमणी तथा । एतत्पवित्रमायुष्यमेतत् कीर्त्तिविवर्धनम् । एतत् पवित्रं कल्याणं महापापहरं शुभम् । अस्मात् पुराणादपि पादमेकं पठेत्तु यः सोऽपि विमुक्तपापः । नारायणाख्यं पदमेति नूनमनङ्गवद्दिव्यसुखानि भुङ्क्ते ।"

तद्दानविधिः मत्स्यपु० "श्रुतीनां यत्र कल्पादौ प्रवृत्त्यर्थं जनार्दनः । मत्स्यरूपी च मनवे नरसिंहोपवर्णनम् । अधिकृत्याब्रवीत् सप्तकल्पवृत्तं मुनिव्रताः ! । तन्मात्स्यमिति जानीध्वं सहस्राणि चतुर्दश । विषुवे हेममत्स्येन धेन्वा चैव समन्वितम् । यो दद्यात् पृथिवी तेन दत्ता भवति चाखिला" ।

**मत्स्यकरण्डिका** स्त्री मत्स्यानां करण्डिकेवाधारः । (खालुइ) मत्स्यरक्षणाधारे पात्रभेदे जटा० ।

**मत्स्यगन्धा** स्त्री मत्स्यस्येव गन्धोऽस्याः । १व्यासमातरि सत्यवत्याम् भा० आ० ६३अ० । २जलपिप्पल्याञ्च जटा०

**मत्स्यघण्ट** पु० स्वनामख्याते व्यञ्जनभेदे शब्दच० ।

**मत्स्यजाल** न० मत्स्यधारणं जालम् शा०त० । मत्स्यधारणार्थे जालभेदे हेमच० ।

**मत्स्यजीविन्** पु० मत्स्येन तद्धारणविक्रयादिना जीवति जीव-णिनि । निषादे "मत्स्यघातो निषादानाम्" मनुना तस्य तज्जीविकोक्तेस्तस्य तथात्वम् ।

**मत्स्यण्डी** स्त्री (राव) ख्याते गुडविकारभेदे भावप्र० "इक्षो रसो यः संपक्वो घनः किञ्चिद्द्रवान्वितः । मन्दवत् स्यन्दते यस्मात्मत्स्यण्डीति निगद्यते" । अस्या गुणाः "मत्स्यण्डी भेदिनी बल्या लघ्वी पित्तानिलापहा । मधुरा बृंहणी वृष्या रक्तदोषापहा स्मृता" ।

**मत्स्यद्वीप** पु० मत्स्यप्रधानो द्वीपः शा०त० । द्वीपभेदे विष्णुपु०

**मत्स्यधानी** स्त्री मत्स्या धीयन्तेऽस्यां धा-आधारे ल्युट् ङीप् । मत्स्यरक्षणाधारे (खालुइ) पात्रभेदे अमरः ।

**मत्स्यनाशन** पुंस्त्री० मत्स्यान् नाशयति ल्यु । १कुररखगे हेमच० । स्त्रियां जातित्वात् ङीष् ण्वुल् । मत्स्यनाशकोऽपि तत्रार्थे उभयत्र २मीनघातके त्रि० ।

**मत्स्यपित्ता** स्त्री मत्स्यस्य पित्तमिव रसोऽस्त्यस्याः अच् । कटुरोहिण्याम् (कट्की) अमरः ।

**मत्स्यबन्धक** त्रि० मत्स्यान् बध्नाति बन्ध-ण्वुल् । १मीनधारके "न्यायायोगव तस्यैव जातो मत्स्यबन्धकः" उशनःसाक्ते सङ्कीर्णजातिभेदे २धीवरे पुंस्त्री० । स्त्रियां जातित्वात् ङीष् । णिनि । मत्स्यबन्धिन् तत्रार्थे मत्स्यधान्यां स्त्री ङीप् हला० ।

**मत्स्यमुद्रा** पूजाङ्गे मुद्राभेदे

"दक्षपाणिपृष्ठदेशे वामपाणितलं न्यसेत् । अङ्गुष्ठौ चालयेत् सम्यक् मुद्रेयं मत्स्यरूपिणी । मत्स्यमुद्रा च कूर्माख्या लेलिहा मुण्डसंज्ञिका । महायोनिरिति ख्याता सर्वसिद्धिसमृद्धिदा" तन्त्रसारः ।

"श्यामादौ मुण्डमुद्रिका । "मत्स्यकूर्मलेलिहाख्या मुद्रा साधारणी मता" तत्रोक्तम् ।

**मत्स्यरङ्क** पुंस्त्री० मत्स्ये रजति रन्ज-कर्त्तरि संज्ञायां घञ् । (माछराङ्गा) पक्षिभेदे हारा० "त्रिभुवनविदितो हा मत्स्यरङ्क कलङ्कः" उद्भट० । स्त्रियां ङीष् ।

**मत्स्यराज** पु० ६त० । १रोहितमत्स्ये त्रिका० । २विराटन्टपे "नगरं मत्स्यराजस्य" भा० व० ७२ अ० । तस्य मत्स्यदेशाधिपत्वात् तथात्वम् ।

**मत्स्यविन्ना** स्त्री विद-लाभे क्त मत्स्यो मत्स्यरसो विन्नो यया तत्तुल्यतिक्तत्वात् । कटुक्याम् वैद्यकम् ।

**मत्स्यवेधन** न० मत्स्यो विध्यतेऽनेन विध-करणे ल्युट् । १वडिशे अमरः स्त्रीत्वमपि जटा० ङीप् । कर्त्तरि ल्यु । २मद्गुपक्षिणि (पानकौड़ि) स्त्री जटा० ।

**मत्स्यसन्तानिक** पु० व्यञ्जनभेदे "दग्धाऽङ्गारे सलवणो वेशवारैरुपस्कृतः । सार्द्रकः कटुतैलेन मत्स्यसन्तानिको भवेत्" शब्दच० ।

**मत्स्याक्षी** स्त्री मत्स्यस्याक्षीवाकारोऽस्याः षच्समा० ङीष् । १गण्डदूर्वायां राजनि० २सोमलतायाम् ३हिलमोचिकायाम् ४ब्राह्मीशाके रत्नमाला ।

**मत्स्याङ्गी** स्त्री मत्स्यः तत्पित्तमिवाङ्गं तिक्तत्वात् यस्याः ङीष् । हिलमोचिकायाम् त्रिका० ।

**मत्स्यादनी** स्त्री मत्स्य इवाद्यते आस्वाद्यते अद-कर्मणि ल्युट् । जलपिप्पल्याम् राजनि० ।

**मत्स्याशन** पुंस्त्री० मत्स्यमश्नाति अश-ल्यु । (माछराङ्गा) खगे त्रिका० स्त्रियां ङीष् ।

**मत्स्यासन** न० रुद्रयामलोक्ते आसनभेदे "अथ मत्स्यासनं वक्ष्ये पृष्ठोपरिकराङ्गुलि । पादयुग्मलमानेन वृक्षाङ्कुशस्य योजनम्" ।

**मत्स्योदरी** स्त्री मत्स्यगन्धयुक्तमुदरमस्याः । १व्यासमातरि मत्स्यगन्धायां २काशीस्थे तीर्थभेदे च काशी० ६९ अ० "दुर्गाणि तैः कृतानीह सप्त स्वर्गसमानि च । महाराणि प्रयन्त्राणि कवाटविकटानि च । कोटिकोटिभटाढ्यानि सर्वैर्दुर्वहितान्यपि । ततः शैलमहादुर्गैस्तैः काशीं परितः कृतम् । परिखा च कृतालिन्दा मत्स्योदर्यां जलाविला । मत्स्योदरी द्विधा जाता बहिरन्तश्चरा पुनः । तस्य तीर्थं महत् स्यात् मिलितं गाङ्गवारिणि । यदा संहारमार्गेण गङ्गाम्भः प्रसरेदिह । तदा मत्स्योदरीतीर्थं लभ्यते पुण्यगौरवात् । सूर्याचन्द्रमसोः पर्व तदा कोटिगुणं मतम् । सर्वपर्वाणि तत्रैव सर्वतीर्थानि तत्र वै । तत्रैव सर्वलिङ्गानि गङ्गामत्स्योदरी यतः । मत्स्योदर्यां ये स्नाता यत्र कुत्रापि मानवाः । कृतपिण्डप्रदानास्ते न मातुरुदरेशयाः । अविमुक्तमिदं क्षेत्रं मत्स्याकारत्वमाप्नुयात् । परितः स्वर्धुनीवारिसंहारे परितोऽहते । मत्स्योदर्यां कृतस्नाना ये नरास्ते नरोत्तमाः । कृत्वापि बहुपापानि सेवन्ते भास्करैः पुरीम् । किं स्नात्वा बहुतीर्थेषु किं तप्ता दुष्करं तपः । यदि मत्स्योदरीस्नाताः कुतो गर्भभयं ततः । यत्र यत्र हि लिङ्गानि रुद्रैर्वर्षिकृतान्यपि । तत्र मत्स्योदरीं प्राप्य सुस्नातो मोक्षभाजनम् । सन्ति तीर्थान्यनेकानि भूर्भुवःस्वर्गतान्यपि । न समानि परं तानि कोट्यंशेनापि निश्चितम् । इत्थं तीर्थं कृतं तेन विभो ! कैलासवासिना । गणाधिपेन सुमहत् सुमच्छोदारकर्मणा ।"

**मथ** विलोड़ने भ्वा०पर०सक०सेट् । मथति एदित् अमथीत् ज्वला० वा ण । मथः माथः । ऋदित् चङि न ह्रस्वः ।

**मथ** वधे सक०क्लेशे अक०भ्वा०पर०सेट् इदित् । मन्थति अमन्थीत् मन्थ्यते ।

**मथन** न०मथ-ल्युट् ।१वधे २क्लेशे ३विलोड़ने च ।"क्षीरोदमथनोद्भूतः" चन्द्रस्तवः । ४गणिकारिकावृक्षे पु०रत्नमा० ।

**मथित** न० मथ-क्त । १निर्जलतक्रे २पीड़िते ३हते च त्रि० ।

**मथु(थू)रा** स्त्री मथ-उ(ऊ)रच् । स्वनामख्यातायां नगर्याम् । "अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः" काशी०ख० । तन्माहात्म्यं विष्णुपु० ६अंशे ८अ० । वराहपु०२७अ० । ततः चतुरर्थ्यां वरणा० अण् । माथुर तत्पुण्यदूरभवे त्रि० । मथूराप्यत्र द्विरूपको० ।

**मथुरेश** पु० ६त० । श्रीकृष्णे शब्दर० । मथुरानाथादयोऽप्यत्र

**मद** हर्षे दिवा०पर०अक० सेट् शमा० । माद्यति इरित् अमदत् अमादीत् अमदीत् । ईदित् निष्ठायामनिट् पुषादिरयं तेन अमददित्येवेति पाणिनीयाः । घटा० मदयति ओत् मत्तोऽस्ति । प्र+अनवधाने । [दीत् घटा० मदयति

**मद** गर्वे दैन्ये च भ्वा०पर०अक०सेट् । मदति अमादीत्-अम-

**मद** तर्पणे चु०आ०सक०सेट् । मादयते । अमीमदत ।

**मद** जाड्ये स्वप्ने मदे आमोदे स्तुतौ दीप्तौ च यथायथं अक० सक० च भ्वा० आत्म० इदित् । मन्दते अमन्दिष्ट । तत्र स्तुतौ "मन्दमानः सुमन्मभिः" ताण्ड्य०ब्रा० ०१.७'६ । "मन्दमानः स्तूयमानः मदि-स्तुतौ कर्मणि यकि प्राप्ते व्यत्ययेन शप्" भा० ।

**मद** पु० मद अच् । १हस्तिगण्डादिच्युतजले दानजले अमरः २गर्वे हर्षे ३रेतसि ४मृगमदे मेदि०५मत्ततायाम् हेमच० ६नदे ७कल्याणकरे वस्तुनि च धरणिः ।

**मदकट** पु० मदेन कटति कट-अच् षण्डे (षांड़) हेमच० ।

**मदकल** त्रि० मदेन कलते कल-अच् । १मत्तहस्तिनि मदोत्कटे अमरः । २अव्यक्तशब्दकारिणि त्रि० शब्दरत्ना० । मदेन कलो यस्य । ३मदाव्यक्तभाषिणि त्रि० मेदि० ।

**मदगन्ध** पु० मदस्य हस्तिदानस्येव गन्धोऽस्य । १सप्तच्छदवृक्षे २मदिरायां स्त्री टाप् । ३अतस्याञ्च राजनि० ।

**मदघ्नी** स्त्री मदं मदिरामत्ततां हन्ति हन-ट ङीप् । पूतिकायाम् जटा० ।

**मदधार** पु० मदप्रधाना धारा यत्र । पर्वतभेदे भा०स०२९अ० ।

**मदन** पु० माद्यत्यनेन मद करणे ल्युट् । १कामदेवे अमरः । २सुरायां हेमच० । ३वसन्ते काले ४सिक्थके ५धुस्तूरे च पु० मेदि० । (मयना) ६वृक्षभेदे रत्नमाला । ७भ्रमरे जटा० माषे ८कषायभेदे हेमच० । ९खदिरवृक्षे शब्दच० १०अङ्कोटकवृक्षे ११बकुलवृक्षे (मयनफल) १२वृक्षभेदे च राजनि० । १३आलिङ्गनभेदे कामशास्त्रम् ।

**मदनक** पु० मदयति मद-णिच्-ल्युट् स्वार्थे क । दमनकवृक्षे राजनि० । [२रोमाञ्चे त्रिका० ।

**मदनकण्टक** पु० मदननिमित्तः कण्टक इव । १सात्त्विके

**मदनकाकुरव** पुंस्त्री० मदनेन हेतुना काकुरवोऽस्य । पारावते स्त्रियां जातित्वात् ङीष् ।

**मदनगृह** न० ६त० । १स्त्रीचिह्नभेदे करतलरेखादयोऽप्यत्र । २लग्नावधिके सप्तमस्थाने ज्यो० ।

**मदनगोपाल** पु० मदन इव गोपालः । श्रीकृष्णे ।

**मदनचतुर्दशी** स्त्री मदनपूजार्थां चतुर्दशी शा०त० । चैत्र-शुक्लचतुर्दश्याम् तत्र दमनकेन मदनपूजाविहितेति तस्यास्तथात्वम् । ति०त० दृश्यम् ।

**मदनत्रयोदशी** स्त्री मदनपूजार्थां त्रयोदशी । चैत्रशुक्लत्रयोदश्याम् ति०त०दृश्यम् । [मत्स्यपु०७अ०

**मदनद्वादशी** स्त्री मदनपूजार्थां द्वादशी । चैत्रशुक्लद्वादश्याम्

**मदनपक्षिन्** पु० माद्यति मद-ल्यु कर्म०। खञ्जनखगे शब्दच०

**मदनपाठक** पु० मदनोद्दीपनार्थं पठति पठ-ण्वुल् । स्मरोद्दीपनशब्दकारके कोकिले राजनि० ।

**मदनमोहन** पु० मदनमपि मोहयति सौन्दर्य्येण मुह-णिच् ल्यु । श्रीकृष्णे ।

**मदनललिता** स्त्री "वेदाङ्गाऽङ्गैर्मदनललिता मो भो नम लगाः" वृ०र० टीकोक्ते षोड़शाक्षरपादके छन्दोभेदे ।

**मदनलेख** पु० मदनज्ञापनार्थं लेखः । स्वकीयानुरागज्ञापनार्थं नायकयोः परस्परं प्रति प्रेष्ये लेखे पत्रभेदे । यथा शकुन्तलायाम् "तुज्झ ण आणे हिअअम्" इत्यादि ।

**मदनवीज** न० तन्त्रोक्ते (क्लीम्) इति बीजे

**मदनशलाका** स्त्री मदनोद्दीपिका शलाका तथाभूता शलाकेव वा । १स्मरोद्दीपकौषधे २सारसखगे मेदि०३कोकिले शब्दर०।

**मदनसदन** न० ६त० । १स्त्रीचिह्नभेदे । ज्योतिषोक्ते लग्नावधिके २सप्तमे स्थाने च ।

**मदनसारिका** स्त्री मदनोद्दीपिका सारिका शा०त० । (शालिक) पक्षिभेदे जटा० । [धान्यभेदे राजनि० ।

**मदनाग्रक** पु० मदनं मादकमग्रमस्य कप् । कोद्रवे (कोदो)

**मदनाङ्कुश** पु० मदनस्याङ्कुश इव । १पुरुषचिह्ने लिङ्गे त्रिका० २मैथुनकाले नखाघाते च ।

**मदनायुध** न० ६त० । स्त्रीचिह्ने शब्दच० । [राजनि० ।

**मदनायुस** पु० मदनस्यायुर्यत्र अच्समा० । इक्षिकरसुपभेदे

**मदनालय** पु० ६त० । २स्त्रीचिह्ने ज्योतिषोक्ते लग्नावधिके सप्तमस्थाने मदनभवनादयोऽप्यत्र ।

**मदनावस्था** स्त्री मदनकृतावस्था शा०त० । कामिनां स्मरकृते उन्मादादौ दशाभेदे दशाशब्दे दृश्यम् ।

**मदनी** स्त्री माद्यत्यनया मद-ल्युट् ङीप् । १सुरायाम् हारा० २मृगनाभौ ३अतिमुक्तके च राजनि० ।

**मदनेच्छाफल** पु० मदनेच्छां फलति फल-अच् ६त० । नवरसाले राजनि० ।

**मदनोत्सव** पु० मदननिमित्त उत्सवः । १होलाकोत्सवे ७व० । २स्वर्वेश्यायाम् स्त्री शब्दर० ।

**मदप्रयोग** पु० ६त०। गजानां मदोद्गमे त्रिका० । [शब्दच०।

**मदभञ्जिनी** स्त्री मदं भनक्ति भन्ज-णिनि । शतमूल्याम्

**मदयन्ती** स्त्री मद-णिच्-शतृ गौरा० ङीष् । वनमल्लिकायाम् (काठमल्लिका) राजनि० । स्वार्थे क ह्रस्वः । मदयन्तिका तत्रैवार्थे शब्दरत्ना० ।

**मदयित्नु** पु० मद-णिच्-इत्नुच् । १कामदेवे २मेघे ३शौण्डिके च मेदि० । ४मद्ये न० शब्दर० । ५मादके त्रि० त्रिका० ।

**मदलेखा** स्त्री "मृसौ गः स्यात् मदलेखा" वृ०र०उक्ते सप्ताक्षरपादके १छन्दोभेदे ६त० । २गजानां दानवारिपङ्क्तौ

**मदविक्षिप्त** पु० ३त०, १मत्तगजे शब्दच०।२मदेन क्षिप्ते त्रि०।

**मदशाक** पु० मदार्थं शाकमस्य । उपोदक्यां शब्दच० ।

**मदसार** पु० मदं सारयति गमयति सृ-णिच्-अण् उप०स०। तूलवृक्षे राजनि० ।

**मदस्थल** पु० ६त० । १सुरापाने शब्दरत्ना० । मदस्थानादयोऽप्यत्र । ज्योतिषोक्ते लग्नावधिके २सप्तमस्थाने च ।

**मदहस्तिनी** स्त्री मदेन हस्तिनीव । महाकरञ्जवृक्षे राजनि०

**मदहेतु** पु० ६त० । १मत्तताहेतौ २धातक्यां वैद्यकम् ।

**मदाघ** पु० ऋषिभेदे ततः । उपका० गोत्रप्रत्ययस्य द्वन्द्वे च बहुत्वे च लुक् ।

**मदाढ्य** पु० मदेन मदकारणेन (ताड़ि) रसेनाढ्यः । १तालवृक्षे राजनि० । २रक्तझिण्ट्याम् स्त्री शब्दच० । ३मदयुक्ते त्रि० ।

**मदातङ्क** पु० ६त० । मद्यजरोगभेदे राजनि० ।

**मदात्यय** पु० ६त० । मदनिमित्ते रोगभेदे तस्य निदानादि गरु०पु० १६० अ० उक्तं दृश्यम् । भावप्र० उक्तन्तु यथा "विषस्य ये गुणा दृष्टाः सन्निपातप्रकोपनाः । त एव मद्ये दृश्यन्ते विषे तु बलवत्तराः । तस्मादविधिपीतेन तथा मात्राधिकेन च । युक्तेन चाहितैरन्नैरकाले सेवितेन च । मद्येन खलु जायन्ते मदात्ययमुखा गदाः" । अविधिप्रयुक्तं मद्यं विकारानन्तरमप्युत्पादयतीत्याह । "निर्भक्तमेकान्तत एव मद्यं निषेव्यमाणं मनुजेन नित्यम् । उत्पादयेत् कष्टतमान् विकारानुत्पादयेच्चापि शरीरभेदम्" । एकान्ततो नैरन्तर्य्येण, विकारान् मदात्ययादीन् । शरीरस्य भेदं नाशम् । मदात्ययादीनां हेत्वन्तरमप्याह "क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन । व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन वापि । अत्यम्लभक्ष्यावततोदरेण सा-

जीर्णभुक्तेन तथाऽबलेन । उष्णाभिपन्नेन च सेव्यमानं करोति मद्यं विविधान् विकारान्” । तानेव विकारान् निदर्शयति । “पानात्ययं परमदं पानाजीर्णमथापि वा” । पानविकारान् निदर्शयति । “पानविभ्रममुग्रञ्च तेषां वक्ष्यामि लक्षणम् । तत्र मदात्ययस्य सामान्यलक्षणमाह “शरीरदुःखं बलवत्प्रमोहो हृदयव्यथा । अरुचिः प्रततं तृष्णा ज्वरः शीतोष्णलक्षणः । शिरःपार्श्वास्थिसन्धीनां वेदना विद्युते तथा । जायतेऽतिबलात् जृम्भास्फुरणं वेपनं श्रमः । उरोविबन्धः कासश्च श्वासो हिक्काप्रजागरः । शरीरकम्पः कर्णाक्षिमुखरोगास्त्रिकग्रहः । छर्दिर्विड्भेदउत्क्लेशो वातपित्तकफात्मकः । भ्रमः प्रलापो रूपाणामसताञ्चैव दर्शनम् । तृणभस्मलतापर्णपांशुभिश्चावपूरितम् । प्रकर्षं विहङ्गैश्च भ्रान्तचेताः स मन्यते । व्याकुलानामशस्तानां स्वप्नानां दर्शनानि च । मदात्ययस्य रूपाणि सर्वाण्येतानि लक्षयेत्” । अथ मदात्ययस्य वातिकस्य निदानमाह “स्त्रीशोकभयभाराध्वकर्मभिर्योऽतिकर्शितः । रूक्षाल्पप्रमिताशी च यः पिबत्यतिमात्रया । रूक्षं परिणतं मद्यं निशि निद्रां निहन्ति च । करोति तस्य तच्छीघ्रं वातप्रायं मदात्ययम्” । तत् मद्यम् । अथ तस्य लक्षणमाह । “हिक्काश्वासशिरःकम्पपार्श्वशूलप्रजागरैः । विद्याद्बहुप्रलापस्य वातप्रायं मदात्ययम्” । अथ पैत्तिकस्य निदानमाह “तीक्ष्णोष्णं मद्यमम्लञ्च योऽतिमात्रं निषेवते । अम्लोष्णतीक्ष्णभोजी च क्रोधनोऽग्न्यातपप्रियः । तस्योपजायते तीव्रः पित्तप्रायो मदात्ययः” । अथ तस्य लक्षणमाह “तृष्णादाहज्वरस्वेदमोहातीसारविभ्रमैः । विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम्” । अथ श्लैष्मिकस्य मदात्ययस्य निदानमाह “मधुरस्निग्धगुर्वाशी यः पिबत्यतिमात्रया । अव्यायामदिवास्वप्नशय्यासनसुखे रतः । मदात्ययं कफप्रायं स नरो लभते ध्रुवम्” । अथ तस्य लक्षणमाह “छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवैः । विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम्” । अथ सान्निपातिकस्य मदात्ययस्य निदानं लक्षणञ्चाह “त्रिदोषहेतुभिः सर्वैः सर्वैश्चिह्नैर्मदात्ययः” । अथ परमदलक्षणमाह “श्लेष्मोच्छ्रयोऽङ्गगुरुता विरसास्यता च विण्मूत्रसक्तिरथ तन्द्रिररोचकश्च । लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञा तृष्णा रुजा शिरसि सन्धिषु चापि भेदः” । तन्द्रिस्तन्द्रा । पानाजीर्णमाह “आध्मानमुग्रमथ चोद्गिरणं विदाहः पाने त्वजीर्णमुपगच्छति लक्षणानि” । उद्गिरणं वान्तिः उद्गारो वा । पीयत इति पानं मद्यम् । पानविभ्रममाह “हृद्गात्रतोदकफसंस्रवकण्ठधूममूर्च्छावमीज्वरशिरोरुजनप्रदेहाः । द्वेषः सुरान्नविकृतेषु च तेषु तेषु तं पानविभ्रममुशन्त्यखिलेषु धीराः । कण्ठधूमः निर्गम इव । प्रदेहः कफेन लिप्तास्यता । द्वेषः सुरान्नविकृतेषु सुराविकारेषु अन्नविकारेषु च द्वेषः । असाध्यानां मदात्ययादीनां लक्षणमाह । हीनोत्तरोष्ठमतिशीतममन्ददाहम् तैलप्रभास्यमतिपानहतं त्यजेत्तु । जिह्वोष्ठदन्तमसितं त्वथ वापि नीलम् पीते च यस्य नयने रुधिरप्रभे च । हिक्काज्वरौ वमथुवेपथुपार्श्वशूलाः कासभ्रमावपि च पानहतं त्यजेत्तम्” ।

**मदाम्रात** पु० मदस्यातिक्रमे आम्रातः । गजपृष्ठस्थे ढक्कावाद्ये हारा० ।

**मदाम्बर** पु० मदो दानमम्बरमिवास्य । मत्तगजे त्रिका० ।

**मदार** पुंस्त्री० मद-आरन् । १वराहे उज्ज्वल० स्त्रियां ङीष् । २धूर्त्ते ३मत्तगजे विश्वः । ४कामुके ५नृपभेदे उणादिको० । [त्रिका०

**मदाम्रद** पु० मदजन्यमम्रं ददाति दा-क । फलकवृक्षे

**मदालस** त्रि० मदेनालसः । १मदेनालसे २गन्धर्वराजविश्वावसुकन्यायां स्त्री । [शब्दमाला

**मदालापिन्** पु० मदेनालपति आ+लप-णिनि । कोकिले

**मदाह्व** पु० मदः मृगमद आह्वा यस्य । मृगमदे कस्तूर्यां त्रिका० ।

**मदि** स्त्री मद्यति कर्षकोऽनेन मद-इन् पृषो० । (मइ) ख्याते कृषिसाधने लम्बकाष्ठभेदे स्वार्थे क । तदर्थे कृषिशब्दे २१६६ पृ० मदिकादानविधिर्दृश्यः । तल्लक्षणन्तु २११८ पृ० तत्र शब्दे दृश्यम् ।

**मदिन्** त्रि० मदयतीति मदि-णिनि । तर्पके यजु० ६।२७।

**मदिन्तम** त्रि० अतिशयेन मदी तमप् वेदे नुमागमः । अतिशयतर्पके यजु० ६।२७ ।

**मदिरा** स्त्री मद-करणे किरच् । “माध्वीकं पानसं द्राक्षं खार्जूरं तालमैक्षवम् । मैरेयं माक्षिकं टाङ्कं मधूकं नारिकेलजम् । मुख्यमन्नविकारोत्थं मद्यानि द्वादशैव तु” इत्युक्ते १मद्यसामान्ये २मत्तखञ्जने शब्दरत्ना० । ३रक्तखदिरे पु० शब्दच० । कालभेदे तद्देदपाज्ञाता यथा

"गौडी तु शिशिरे पेया पैष्टी हेमन्तवर्षयोः। शरद्ग्रीष्मवसन्तेषु माध्वी पाह्या न चान्यथा। कादम्बरी शर्करजादिमद्यं सुपीतकं तस्करं मदापम्। माध्वीकं स्यात् तथा इक्षुजातं मद्यं सुपीतं सुख तर्पणञ्च। अन्यथा कुरुते पानं मद्यं बलायशोषदम्। अवदोषमदात्ययकारकं मूर्च्छनञ्च तत्"। "मद्यं तितमम्लमेव लवणं वा पिच्छिलं विरसं वा। दोषावहमविशेषात् मद्यं कृत्वा विवर्जयेत् सर्वम्। मद्यप्रयोगं कुर्वन्ति शूद्रादिषु सर्वास्विपि। द्विजोत्तमैस्तु न पातुं मद्यमुच्यते नैव तत्" राजनि०। अधिकं मद्यशब्दे दृश्यम्। ४वसुदेवस्य पत्न्यां हरिवं० ३६अ०। ५दुर्गायां १७८ अ०। "समुभकारततावषिता च गुरुः कविभिः कथिता मदिरा" इ० र० टी० उक्ते द्वाविंशत्यक्षरपादके ६छन्दोभेदे स्त्री।

**मदिराची** पु० १विराटस्य भ्रातरि भा०वि०२३अ०। मदिरामत्तखञ्जनाक्षीवाक्षियस्य अच्समा०। स्वञ्जनतुल्यनेत्रे त्रि० स्त्रियां ङीप्। [मत्ताक्षे मद्यसन्धानार्थं कक्षे अमरः

**मदिरागृह** न० मदिरसन्धानार्थं गृहम् शाक० त०।

**मदिराश्व** पु० १विराटसपबेनापतिभेदे भा० आश्व० २अ०। हिरण्यकस्य अपुरे २प्राचीने नृपभेदे भा०अनु०१३७अ०

**मदिरासख** पु० ६त० टच्समा०। आम्रवृक्षे जटा०। तस्य मदिरातुल्यास्वादत्वात् तथात्वम्। [मदिरायां हेमच०।

**मदिष्ठा** स्त्री अतिशयेन मदिनी मदयित्री इष्ठन् टिलोपः।

**मदेमहि** पु० प्रार्थनायाम् निघण्टुः।

**मदेव** पु० मद-बा० एव। मत्ते उणा०१।१४६।

**मदोत्कट** पु० मदेन दानवारिणा उत्कटः उदग्रः। १मत्तगजे अमरः २मदिरायां स्त्री राजनि०। ३मदोद्धते त्रि०।

**मदोदग्र** पु० मदेन हर्षेण दर्पेण वा उदग्रः उच्चः। १मत्ते "मदोदग्राः ककुद्मन्तः" रघुः। २गर्वो स्त्री शब्दमा०।

**मदोद्धत** त्रि० मदेन उद्धतः। मत्ते जटा०।

**मदोन्मत्त** पु० "सम्भो याचय वा विद्या व्रत्याचिवरदाक्षरः। कटकारणमुत्पादिवी मदोन्मत्त उदाहृतः" तन्त्रसारोक्ते १मन्त्रभेदे २मदेनोन्मत्ते त्रि०।

**मद्गु** पु०मस्ज-उ न्यङ्क्वा०। (पानिकौडि) १पक्षिभेदे अमरः। "मद्गुः स्निग्धो वातनाशी मेदकः शुक्रकारकः। रक्तपित्तविनाशी च शीतलः परिकीर्तितः" राजव०। २मद्गुरजीवे नौवरुत्वः।

**मद्गुर** पुंस्त्री०मद-उरच् न्यङ्क्वा०। (मागुर) १मत्स्यभेदे। जातौ च। मत्स्य अमरः स्त्रियां ङीप्। मद्गुरायाः मत्स्यशब्दे भावप्र०उक्ताः। "निषादो मद्गुरं सूते" मा० अनु० ४८ उक्ते २सङ्कीर्णजातिभेदे (डुबुरि) पुंस्त्री०। "मद्गुरान् मीनमेदान् वाति बा-क तस्य रः" नीलकण्ठः। जलमज्जनेन मीनहारित्वात् तस्य तथात्वम्। "तत्रादेते जले मग्नाः मद्गुरा नाम विश्रुताः। ये हरन्ति सदाऽसंस्मात् समुद्रोदरचारिणः" हरिवं० ८५अ०।

**मद्गुरप्रिया** स्त्री मद्गुरस्य प्रियेव। शृङ्गीमत्स्ये हेमच०। "मद्गुरस्य प्रिया शृङ्गी" अमरः।

**मद्गुरसी** स्त्री मद्गोः मद्गुरस्येव रस—आस्वादोऽस्याः गौरा० ङीष्। शृङ्गीमत्स्ये शब्दर०।

**मद्य** न० माद्यत्यनेन करणे यत्। मदिराशब्दे उक्ते माध्वीकादिद्वादशविधे मादकद्रव्ये अमरः। मद्यभेदा वर्णभेदेन तत्पाननिषेधादिकं प्रा० वि० उक्तं यथा

पुलस्त्यः "पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम्। माध्वीकं टाङ्कमाध्वीकं मैरेयं नारिकेलजम्। समानानि विजानीयान्मद्यान्येकादशैव तु। द्वादशन्तु सुरामद्यं सर्वेषामधमं स्मृतम्"। अनेनैकादशानां सुरात्वं निषेधयति मद्यशब्दस्य मदजनकद्रव्यमात्रवचनः तस्यादेव वचनात् तु मद्यानां सुरात्वार्थः। तथा च हलायुधः "गौडीं माध्वीं सुरां पैष्टीं पीत्वा विप्रः समाचरेत्। तप्तकृच्छ्रं पराकञ्च चान्द्रायणमनुक्रमात्"। मद्यानां सुरात्वे क्रमेण प्रायश्चित्तं न स्यात्। यथा भविष्ये "सुरा तु पैष्टी मुख्योक्ता न तथान्यितरे यमे"। पैष्टीति तण्डुलविकारमात्रोपलक्षणम्। इतरे गौडीमाध्व्यौ अतोऽन्यविकार एव सुराशब्दस्य मुख्यत्वात् त्रिविधा सुरेति गौडीमाध्व्योर्गौणसुरात्वज्ञापनार्थम्। तेनैतत्पानेऽपि महापातकत्वमतिदिशति "यथैवैका तथा सर्वेति" पैष्ट्यां पूर्वप्रसिद्धिं दर्शयति यथा पैष्टी सुरा तथा सर्वा गौडी माध्वी च पूर्ववचनोक्ता पैष्टीदृष्टान्तत्वेनात्र दर्शिता च पातव्या द्विजोत्तमैरित्यर्थः। त्रैवर्णिकपरत्वे उपमपदानर्थक्यात्। न च बहुवचनानर्थक्यपरिहारार्थम् उपमप्रतिपदिकानर्थक्यं युक्तं बहुवचनस्य सजातीयोपस्थापके चरितार्थत्वात्। अतो ब्राह्मणस्य त्रिविधसुरापानं महापातकं क्षत्रियवैश्ययोस्तु "सुरा वै मलमन्नानामिति" वचनेन पैष्ट्येवेति स्थितम्। गोविन्दराजमिताक्षरापधारेश्वराचार्यसम्मतोऽयमर्थः। अतएव "एव माध्वी च गौडी च पैष्टी च त्रिविधा सुरा। द्विजातिभिर्न पातव्या कदाचिदपि कर्हिचिदिति" भविष्यवचनेऽपि द्विजा-

प्रयत्नेन मद्यं नित्यं विवर्ज्जयेत्। पीत्वा पतति कर्म्मभ्यस्त्वसम्भाष्यो द्विजोत्तमः। भक्षयित्वाप्यभक्ष्याणि पीत्वापेयान्यपि द्विजः। नाधिकारी भवेत्तावद्यावत्तन्न जहात्यधः। तस्मात् परिहरेन्नित्यमभक्ष्याणि प्रयत्नतः। अपेयानि च विप्रो वै पीत्वा तद्याति रौरवम्। कूर्म्मपु० १६ अ०। "द्विजस्य पूजादौ मद्यदानविध्युक्तस्य निषेधो यथा। "मदिरां प्रयतो दद्यात् अन्यत् पानन्तु वामतः। अवश्यं विहितं यत्र मद्यं तत्र द्विजः पुनः। नारिकेलजलं कांस्ये ताम्रे च विसृजेन्मधु। नापद्यपि द्विजो मद्यं कदाचित् विसृजेदपि। ऋते, पुष्पासवाद्भक्तात् अन्नजाद्वा विशेषतः। राजन्यस्तथा मर्त्याः सचिवाः कौशिकादयः। दद्युर्न रक्तं भूप सम्यया विभवाय च। भूपाकानुमते मद्यं ददत् पापमवाप्नुयात्" कालिका पु० ६६ अ०। अथ ब्राह्मणस्य मद्यपाननिषेधप्रसङ्गमाद्यो यथा "वैशम्पायन उवाच। सुरापानाद्वञ्चनां प्राप्य विद्वान् संज्ञानाशं प्राप्य चैवातिघोरम्। दृष्ट्वा कचञ्चापि तथाभिरूपं पीतं तथा सुरया मोहितेन। समन्युरुत्थाय महानुभावस्तदोशना विप्रहितं चिकीर्षुः। काव्यः स्वयं वाक्यमिदं जगाद सुरापानं प्रति वै जातमन्युः। यो ब्राह्मणोऽद्यप्रभृतीह कश्चित् मोहात् सुरां पास्यति मन्दबुद्धिः। अपेतधर्म्मा ब्रह्महा चैव च स्यादस्मिँल्लोके गर्हितः स्यात् परे च। मया चेमां विप्रधर्म्मोक्तिसीमां मर्य्यादां वै स्थापितां सर्व्वलोके। सन्तो विप्राः शुश्रुवांसो गुरूणां देवा लोकाश्चोपशृण्वन्तु सर्व्वे" भा० आ० ७६ अ०। "नारिकेलसमं खार्ज्जूरं पानसञ्च तथैव च। ऐक्षवं मधुकं टाङ्कं तालञ्चैव च माक्षिकम्। द्राक्षन्तु दशमं प्रोक्तं गौड़ं चैकादशं स्मृतम्। पैष्टन्तु द्वादशं प्रोक्तं सर्व्वेषामधमं स्मृतम्। मध्यमं मधुजं गौड़ं श्रेष्ठोत्तममिहोच्यते। एतत् द्वादशकं मद्यं न पातव्यं द्विजैः क्वचित्। क्षत्रियादिः पिबेत् सर्व्वं पैष्टीमेकन्तु वर्ज्जयेत्। सुरां पीत्वा द्विजो मोहात् कामात् तप्तादिभिर्मृताम्। त्रैवार्षिकं व्रतं कुर्य्यादौपन्निके तु वार्षिकम्। तप्तादिभिश्चितां किञ्चित् सुरां पीत्वा ह्यकामतः। तप्तकृच्छ्रपादाद्यमर्थ्यं पुनः संस्कारमर्हति। मुखप्रवेशमात्रे तु प्रायश्चित्तार्द्धमाचरेत्। अनुपनीतो देवेशि ! व्रतं त्रैवार्षिकं चरेत्। पञ्चवर्षाधिकाहारी स्याद् ब्रह्मचर्य्यमथापि वा। आपद्यर्द्धं तदर्द्धं वा स्नानादर्द्धं विनिर्द्दिशेत्। क्षत्त्रस्य च विशेषेण अतिकृच्छ्रद्वयं चरेत्। अज्ञानतश्चाधिके तस्मिन् तदर्द्धं व्रतमाचरेत्। पैष्टीपाने ब्राह्मणस्य मरणान्तिकमुच्यते। माध्वीगौड़ीसुरापाने द्वादशाब्दं विधीयते। एतस्यान्तु पानेन शुद्धिश्चान्द्रायणेन तु। राजन्यवैश्ययोश्चापि गौड़ी माध्वी न शस्यते। मोहात् क्षत्रवैश्यश्च पीत्वा कृच्छ्रद्वयं चरेत्। शूद्रोऽपि गौड़ीं पैष्टीञ्च न पिबेद्धीनसंज्ञकाम्। कामात् पीत्वा सुरां विप्रो मरणान्तिकमाचरेत्। चरेच्चान्द्रायणं स्नानात् क्षत्रियो वैश्य एव च। पैष्टीपाने तु शूद्रस्य प्राजापत्यं विनिर्द्दिशेत्। स्नानाद्यभ्यासयोगे तु चान्द्रायणमकं स्मृतम्। नारिकेलं तथा स्नानाद्विप्रश्चान्द्रायणेन तु। क्षत्रियश्चैव वैश्यश्च प्राणायामेन शुध्यति। अपक्वं पानसञ्चैव आम्रञ्च बदरं तथा। स्थापयित्वा घटे नित्यं दद्याद्दासप्तमः पलम्। त्रैलोक्यविजयाञ्चैक मातुलङ्गं तथैव च। सप्तमेऽहनि ततो दद्यात् सन्धानात् पानमीरितम्। दधि मधु तथा चापि साज्यमिश्रं तिलकं तथा। अनुपाने तु देवेशि ! द्राक्षमद्यं सुनिश्चितम्। विडङ्गं माधवी मूलं समभागेन योजितम्। मधुना सह संस्थाप्य शेषपाकं समाचरेत्। पिप्पलीलवणं दत्त्वा मधुना मद्यमीरितम्। पानसं पक्वखर्ज्जूरमाक्षं लोपकसारकम्। एकीकृत्याम्लसन्धानात् खार्ज्जूरं मद्यमीरितम्। पक्वतालं दन्तिमालं ककुभञ्च तथैव च। एतैरेव सुसन्धानात् तालमद्यं प्रकीर्त्तितम्। इक्षुदण्डं मरीचञ्च बदरञ्च तथा दधि। शेषे तु लवणं दत्त्वा इक्षुमद्यं प्रकीर्त्तितम्। नवं मधु तथा बिल्वं पक्वं शर्करया सह। सन्धानाज्जायते मद्यं माध्वीकं शरतो रसम्। शतावरी टङ्कमूलं लवणं पद्ममेव च। मधुना सह सन्धानात् टङ्कमाध्वीकमीरितम्। माधूरमूलं बदरी शर्करा च तथैव च। एतामेकत्र सन्धानात् चैरेयं मद्यमीरितम्। इन्द्रजिह्वा पक्वताली नारिकेलजलन्तथा। कदलीफलसन्धानान्मद्यं नारिकेलजम्। दधि त्रैलोक्यविजया तथैव च मरीचका। गुड़ेन सह सन्धानात् गौड़ीमद्यं प्रकीर्त्तितम्। माषकलमर्दं पिष्टाच्च तण्डुलोदकसमन्वितम्। वह्नौ सन्तापयेत् किञ्चित् स्थापयित्वा दिनद्वयम्। शेषेऽहनि तु संस्थाप्य जीवनं तत्र निःक्षिपेत्। इक्षुबेरं मरीचञ्च मातुलङ्गं तथैव च। एतैरेव सुसन्धानात् पैष्टीमद्यं प्रकीर्त्तितम्" मत्स्यसूक्ते १६ पटले। "सिद्धमन्त्रो महावीरो न वीरो मद्यपानतः। कलौ तु भारते वर्षे लोका-

भारतशासिनः। घटे घटे सुरां पीत्वा वर्षकाष्टा भवन्ति हि” उत्पत्तितन्त्रे ६४ पटले। “दीव्यवीरमयो भावः कलौ नास्ति कदाचन। केवलं पशुभावेन मन्त्रसिद्धिर्भवेन्नृणाम्” महानिर्वाणतन्त्रम्। “न दद्याद् ब्राह्मणो मद्यं महादेव्यै कथञ्चन। वामकामो ब्राह्मणो हि मद्यं मांसं न भक्षयेत्” तन्त्रम्। भैरवतन्त्रे “नारिकेलोदकं कांस्ये ताम्रे गव्यं तथा मधु। राजन्यवैश्ययोरेवं न द्विजस्य कदाचन। एवं प्रदानमात्रेण क्षीणायुर्ब्राह्मणो भवेत्”। कलौ मद्यपानादिनिषेधो यथा याज्ञवल्क्यदीपकलिकायां ब्रह्मपु० “नराश्वमेधौ मद्यञ्च कलौ वर्ज्यौ द्विजातिभिः” निषेधविषयं स्पष्टयति उशना “मद्यमदेयमपेयमनिर्ग्राह्यम्”। अनिर्ग्राह्यमस्पृश्यमित्यर्थमिति कल्पतरुः। कालिकापु०। “स्वगात्ररुधिरं दत्त्वा आत्महत्यामवाप्नुयात्। मद्यं दत्त्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते”। स्मृतिः “ताम्रे चेक्षुरसो मद्यं पयसा सह चूर्णकम्। गव्यञ्च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना”। अतो मद्यप्रतिनिधिदानमपि न युक्तम्” ति०त० रघु०। मद्यतुल्यं यथा “नारिकेलोदकं कांस्ये ताम्रपात्रे स्थितं मधु। गव्यञ्च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना” कर्मलोचनम्।

**मद्यकीट** पु० मद्यजातः कीटः। सुराजाते कीटभेदे हेम०।

**मद्यद्रुम** पु० मद्यहेतुर्द्रुमः शा०त०। माडवृक्षे राजनि०।

**मद्यप** त्रि० मद्यं पिबति पा–क। १मद्यपायिनि २दानवभेदे पु० हरिवं २४० अ०।

**मद्यपङ्क** पु० मद्यस्य पङ्क इव। सुराकल्के (मेओया) हेम०।

**मद्यपाशन** न० मद्यपैरश्यते अश–कर्मणि ल्युट्। मद्यपानरोचके अवदंशे भक्ष्ये (चाटनी) हेम०।

**मद्यपीत** त्रि० पीतं मद्यं येन आहि० परनि०। सुरापानकर्त्तरि स्त्रियां ङीप्।

**मद्यपुष्पा** स्त्री मद्यं मदसाधनं पुष्पं यस्याः शा०त०। धातक्यां (धाइफुल) राजनि०। [जाते हेमच०।

**मद्यबीज** न० ६त०। किण्वादौ (बाखर) मद्यकारणे पदार्थ-

**मद्यवासिनी** स्त्री मद्यस्येव वासो गन्धो विद्यते वाहुल्येनास्याः इनि। धातकीवृक्षे (धाइफुल) राजनि०।

**मद्यसन्धान** न०मद्यस्य मद्योत्पादनार्थं सन्धानम् अभिषवः। मद्योत्पादनव्यापारे हेमच०। [राजनि०

**मद्यामोद** पु० मद्यस्येव आमोदः गन्धोऽस्य। वकुलवृक्षे

**मद्र** पु०मद–रक्। “विराटपाण्ड्ययोर्मध्ये पूर्वदक्षक्रमेण च। मद्रदेशः समाख्यातः” इत्युक्ते १देशे २हर्षे ३मङ्गले च। वृ०सं० १४अ०।

**मधु** न मन–उ नस्य धः। १मद्ये “गर्ज गर्ज क्षणं मूढ़! मधु यावत् पिबाम्यहम्” देवीमा०। २क्षौद्रे “मधु वाता ऋतायते” इति मधुसूक्तम्। ३पुष्परसे शब्दर०। “मधु द्विरेफः कुसुमैकपात्रे” कुमारः। ४जले च विश्वः ५मधुररसे च। “मधुक्षरन्ति सिन्धवः” इति मधुसूक्तम्। ६मधुरे त्रि० ७विष्णुकर्णमलजाते दैत्यभेदे पु०। “विष्णुकर्णमलोद्भूतावसुरौ मधुकैटभाविति” देवीमा० कुम्भीनस्याभर्त्तरि ८दैत्यभेदे पु०एवम् ९वसन्तर्त्तौ १०चैत्रमासि (मौल) ११वृक्षभेदे च मेदि० १२अशोकवृक्षे हेम० १३यष्टिमधौ पु० शब्दर० १४प्राणिनां शुभाशुभकर्मणि न०विष्णुस०भा०। १५जीवन्त्यां स्त्री अमरः। १६वन्द्रिभेदे १७खगभेदे च पु० विश्वः।

**मधुकण्ठ** पुंस्त्री० मधुः मधुरः कण्ठोऽस्य। कोकिले त्रिका०। स्त्रियां ङीष्।

**मधुकर** पुंस्त्री०मधूनि करोति सञ्चित्य निष्पादयति कृ अच्। १भ्रमरे अमरः २तद्योषिति स्त्री ङीप्। ३कामिजने धरणिः।४भृङ्गराजे च पु०रत्नमा०मधुकृदादयोऽपि भ्रमरे।

**मधुकर्कटी** स्त्री मधुः मधुरा कर्कटी। १जम्बीरभेदे २मिष्टखर्ज्जूरिकायाञ्च राजनि०। स्वार्थे क ह्रस्वः टाप्। मधुकर्कटिका बीजपूरे। [च मेदि०।

**मधुका** स्त्री मधिव इवार्थे कन्। १यष्टिमधौ, २मधुपर्ण्यां

**मधुकोष** पु० मध्वर्थं कृतः कोषः। (मौचाक) मक्षिकाकृते कोषाकारे पदार्थे शब्दच०। [क तत्रैव।

**मधुक्षीर** पु० मधु मधुरं क्षीरमस्य। खर्ज्जूरवृक्षे। स्वार्थे

**मधुखर्ज्जूरी** स्त्री मधुर्मधुरा खर्ज्जूरी। अतिमिष्टखर्ज्जूरीभेदे राजनि०।

**मधुच्छदा** स्त्री मधुर्मधुरः छदोऽस्याः। मधुरशिखायाम् भावप्र०

**मधुज** न० मधुनो जायते जन ड। १सिक्थके (मोम) राजनि० मधुदैत्यमेदोजातायां २भूमौ स्त्री शब्दच०।

**मधुजम्बीर** पु० मधुर्मधुरः जम्बीरः। अतिमिष्टजम्बीरे। (कमलालेबु) राजनि०।

**मधुजित्** पु० मधुमसुरभेदं जितवान् जि भूते क्विप्। विष्णौ शब्दरत्ना० मधुमथ्, मधुरिपुप्रभृतयोऽप्यत्र।

**मधुतृण** न०कर्म०। इक्षौ त्रिका०। पुंस्त्वं राजनि०।

**मधुत्रय** न० मधूनां मधुराणाम् त्रयम्। मधुघृतसितानां त्रये राजनि०। मधुत्रिकमप्यत्र न०।

**मधुदूत** पु० मधोर्वसन्तस्य दूत इवायवरत्वात्। १आम्रवृक्षे त्रिका० २पाटलायां स्त्री ङीप् भावप्र०।

**मधुद्रव** पु० मधुरो द्रवोऽस्य। रक्तशिग्रौ शब्दर०।

**मधुद्रुम** पु० मध्वर्थं मद्यार्थं द्रुमः। (मौल) वृक्षभेदे अमरः। तत्पुष्पेण हि पौष्पमधुसम्भवः।

**मधुधूलि** पु० मधुर्मधुरो धूलिरिव। खण्डे (खांड) गुड़विकारादौ हेमच०। [धेनुशब्दे २९०९ पृ० दृश्यम्।

**मधुधेनु** स्त्री० दानार्थं कल्पितायां मधुप्रभृतिद्रव्यकृतधेनौ।

**मधुप** पु० मधु पिबति पा-क। १भ्रमरे अमरः २मधुपायिनि त्रि०। "प्रारब्धो मधुपैरकारणमहो" इत्युद्भटः।

**मधुपर्क** न० पृच-घञ् मधुनः पर्को योगो यत्र। मधुयुते कांस्यपात्रस्थे कांस्यपात्रान्तरेणावृते "दधि सर्पिर्जलं क्षौद्रं सिता चैतैश्च पञ्चभिः। प्रोच्यते मधुपर्कस्तु" इत्युक्ते दध्यादिद्रव्यपञ्चके।

**मधुपर्णी** स्त्री मधु इव हितकरं पर्णं यस्याः। १गुडूच्याम् अमरः। २नाम्याम् ३नीलीवृक्षे मेदि० ४वराहक्रान्तायाम् ५मधुबीजपूरे च राजनि०। [र्यास् शब्दमा०।

**मधुपालिका** स्त्री मधूनि पालयति पाल-ण्वुल्। मार्ग्या-

**मधुपीलु** पु० कर्म०। मधुरपीलौ राजनि०।

**मधुपुरी** स्त्री मधोर्दैत्यस्य पुरी। मथुरायाम् शब्दरत्ना०।

**मधुपुष्प** पु० मधुप्रचुरं पुष्पं यस्य १मधूकवृक्षे (मौल) रत्नमा० २शिरीषवृक्षे, ३अशोकवृक्षे ४बकवृक्षे च ५दन्तीवृक्षे ६नागदन्तीवृक्षे च स्त्री टाप् राजनि०।

**मधुप्रिय** पु० मधु मद्यं प्रियं यस्य। १बलरामे त्रिका० मधु इव प्रियः। २भूमिजम्ब्वां जटाधरः।

**मधुफल** पु० मधु मद्यं फलं यस्य। १मधुनारिकेले २मधुखर्जूरिकायां स्त्री राजनि० टाप्।

**मधुबहुला** स्त्री मधु बहुलं यत्र। माधवीलतायाम् राजनि०

**मधुमक्षिका** स्त्री मधुसम्बन्धिका मक्षिका शा०त० (मौमाछि) बरलायाम् अमरः। [राजनि०।

**मधुमज्जन्** पु० मधुरः मज्जा सारोऽस्य। आक्षोटकवृक्षे

**मधुमत्** त्रि० मधुर्मधुररसोऽस्त्यस्य मतुप्। १माधुर्यवति "मधुमत् पार्थिवं रजः" इति मधुसूक्तम्। २काश्मरीवृक्षे ३नदीभेदे राजनि० ४योगशास्त्रप्रसिद्धे योगिनां चित्तवृत्तिभेदे ५वैदिकप्रसिद्धे 'मधु वाता' इत्यादौ ऋक्त्रये तन्त्रोक्ते ६देवीनायिकाभेदे च स्त्री ङीप्।

**मधुमर्कटी** स्त्री मधुजाता मर्कटी शाक०त०। (चिताखजूर) मधुजाते खर्जूरे।

**मधुमल्लि(ल्ली)** स्त्री मल्ल-इन् वा ङीप् मधुप्रधाना मल्लिः (ल्ली) मालत्यां शब्दमाला।

**मधुमस्तक** न० "मधुतैलघृतैर्मध्ये वेष्टिताः समिताश्च याः। मधुमस्तकमुद्दिष्टम्" शब्दच० उक्ते पिष्टकभेदे।

**मधुमूल** न०मधु मधुरं मूलम्। (मौआलु) आलुभेदे शब्दच०

**मधुयष्टि** स्त्री मधुरा यष्टिः काण्डम्। १इक्षौ २यष्टिमधौ शब्द० स्त्री वा ङीप्। [मधौ अमरः।

**मधुयष्टिका** स्त्री मधुः मधुरा यष्टिरिव इवार्थे कन्। यष्टि-

**मधुर** पु० मधु माधुर्यं राति रा-क, मत्वर्थे र वा। १गुडादिरसे मिष्टरसे माधुर्यरसवति इक्षादौ च मेदि० "मधुरया मधुबोधितमाधवी" माघः। २प्रिये ३स्वादौ च त्रि० मेदि० ५रक्तशिग्रौ ६राजाम्रे ७रक्तेक्षौ ८गुडे इत्यादौ, १०जीरके च पु० राजनि० ११विषे १२विषे च न० मेदि० १३शतपुष्पायां १४यष्टिमधौ १५मधुकर्कटिकायां १६मधूल्यां १७मेदायां १८महाराजमर्यां च स्त्री मेदि० १९काकोल्यां २०पलाश्यां २१क्षीरकाकोल्यां २२पालक्याशाके २३मिश्रेयायां (मौरी) स्त्री। स्वार्थे क। अत इत्वम्। मिश्रेयायाम् स्त्री अमरः।

**मधुरजम्बीर** पु० कर्म०। (कमलालेबु) जम्बीरभेदे राजनि०।

**मधुरत्वच** पु० मधुरा त्वचा यस्य। धवृक्षे त्रिका०।

**मधुरफल** पु० मधुरं फलमस्य। राजबदरे राजनि०।

**मधुरवल्ली** स्त्री कर्म०। मधुबीजपूरे जम्बीरभेदे राजनि०।

**मधुरस** पु० मधुन इव रसो यस्य। १इक्षौ भावप्र०। २ताले राजनि०। ३मूर्वायाम् स्त्री अमरः। ४द्राक्षायां ५दुग्धिकायां स्त्री मेदि०६गाम्भार्यां च भावप्र०। [राजनि०।

**मधुरस्रवा** स्त्री मधुरं स्रवति स्रु-अच्। पिण्डखर्जूर्याम्

**मधुराम्लक** पु० कर्म०। आम्रातके शब्दच०।

**मधु(धू)लग्न** पु० मधुर्मधुररसो लग्नो यत्र पृषो०वा दीर्घः। रक्तशोभाञ्जने रत्नमाला।

**मधु(धू)लिका** स्त्री मधु माधुर्यं लाति ला-क पृषो० वा दीर्घः संज्ञायां कन् अत इत्वम् राजिकायां (राइसर्षा) राजनि०। [अमरः स्त्रिनि। मधुलेहोऽस्यास्य।

**मधुलिह्** पु० मधु लेढि आस्वादयति लिह-क्विप्। भ्रमरे

**मधुवन** न० मधुदैत्याधिष्ठितं वनम् शा०त०। १मथुरासमीपस्थे वनभेदे किष्किन्ध्यास्थे मधुप्रचुरे २वनभेदे च।

**मधुवर्ग** पु० ६त०। नानाविधमधुवर्गे भावप्र० दृश्यम्।

**मधुवल्ली** स्त्री मधुप्रधाना वल्ली। यष्टिमधौ राजनि०। [अमरः

**मधुवार** पु०मधुनो मद्यस्य वारः क्रमः। पुनःपुनःमद्यपानक्रमे

मधु(बी)वीज पु० मधु मधुरं बी(वी)जं यस्य । दाड़िमे राजनि० ।
मधु(बी)वीजपूर पु० कर्म० । मधुकर्कटिकायाम् राजनि० ।
मधुव्रत पुंस्त्री० मधु तत्पानमेव व्रतं व्रतमनुष्ठेयं यस्य । भ्रमरे अमरः स्त्रियां ङीष् ।
मधुशर्करा स्त्री मधुजाता शर्करा शा०त० । (मितावखण्ड) मधुजातशर्करायां राजनि० ।
मधुशाख पु० मधुर्मधुरा शाखाऽस्य (मौल) इति शब्दच० ।
मधुशिग्रु पु० मधुः मधुरः शिग्रुः । रक्तशोभाञ्जने अमरः
मधुशेष पु० न० मधुनः शेषः उच्छिष्टम् । सिक्थके (मोम) । राजनि० ।
मधुश्रेणी स्त्री मधुनः श्रेणीव । मूर्वायाम् अमरः ।
मधुश्वासा स्त्री मधुन इव श्वसित्यस्मात् श्वस-अपादाने घञ् । जीवन्तीवृक्षे राजनि० । [वृक्षे अमरः ।
मधुष्ठील पु० मधु अष्ठीले गर्भेऽस्य पृषो० । (मौल) गुडपुष्प-
मधुसख पु० मधोर्वसन्तस्य सखा सहचरः टच्समा० । कामदेवे मधुसारथ्यादयोऽप्यत्र ।
मधुसूदन पु० मधुं तन्नामासुरं सूदयति, मधु, जीवानां शुभाशुभकर्म, ज्ञानदानेन सूदयति वा सूद-ल्यु । १श्रीकृष्णे । "भक्तानां कर्मणाञ्चैव सूदनात् मधुसूदनः" तन्नामनिरुक्तिः । मधु माध्वीकं सूदयति भक्षयति । २भ्रमरे जटा० पुंस्त्री० स्त्रियां ङीष् । मधु इव सूद्यते भक्ष्यते सूद-ल्युट् ङीप् । ३पालङ्कीशाके स्त्री हेमच० ।
मधुस्रव पु० मधूनि मद्यानि स्रवत्यस्मात् स्रु-अप् । (मौल) १वृक्षे २मोरटलतायां राजनि० । ३मधुयष्टिकायां स्त्री जटा० ४जीवन्त्यां स्त्री शब्दच० । ५मूर्वायां स्त्री राजनि० । [जटाधरः ।
मधुस्रवस् पु० मधु स्रवति स्रु-असुन् । (मौल) वृक्षे
मधुस्वर पुंस्त्री० मधुर्मधुरः स्वरोऽस्य । १कोकिले शब्दर० स्त्रियां ङीष् । २मधुरस्वरवति त्रि० स्त्रियां टाप् ।
मधुहन् पु० मधुं तन्नामासुरं कर्मफलं वा ज्ञानद्वारा हन्ति हन् क्विप् । विष्णौ ।
मधूक न० मह-ऊक हस्य धः । १यष्टिमधौ अमरः । (मौल)२वृक्षे पु०राजनि० । [अमरः । मधूलिकतमप्यत्र ।
मधूच्छिष्ट न० मधुन उच्छिष्टमवशिष्टम् । (मोम) सिक्थके
मधूपघ्न पु० मधुदैत्यस्योपघ्न आश्रयः । मथुरानगरे जटा० ।
मधूल पु० मधु लाति ला-क पृषो० । जलजगिरिजमधूकवृक्षयोः जटा० । २मधुकर्कट्याम् ३द्राक्षायां ४क्षीरनवे च स्त्री गौरा० ङीष् राजनि० । स्वार्थे क अत इत्त्वम् टाप् । मधूलिका मूर्वायाम् अमरः ।
मध्य पुंन० मन-यत् नस्य धः । १देहस्यावयवभेदे । (माजा) "मध्येन सा वेदिविलग्नमध्या" कुमारः । अवलग्नादौ-मन्त्रत्वमौल्लत्वमिच्चे २व्यापारभेदे न०अमरः । ३पूर्वापरसीमयोरन्तराले ४परार्द्धसंख्यातोऽर्वाचीनायां ५सङ्ख्यायां न०६तत्संख्याते च । "अन्त्यं मध्यं परार्द्धम्" लीला० । ज्योतिषोक्ते पञ्चायां ७गतिभेदे स्त्री तद्वति दण्डे पु० । ८न्याय्ये १०अन्तर्वर्त्तिनि च त्रि० शब्दर० । ११नवाक्षरपादके छन्दोभावे इ०र० ।
मध्यगन्ध पु०मध्ये फलमध्ये गन्धो यस्य । आम्रवृक्षे शब्दच० ।
मध्यतस् अव्य० मध्य+तसिल् । प्रथमापञ्चमीसप्तम्यर्थवृत्ते-र्मध्यशब्दस्यार्थे ।
मध्यदेश पु कर्म० । 'हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तित, मनूक्ते देशभेदे ।
मध्यदिन न० मध्यं दिनस्य एकदेशिस० । १मध्याह्ने । अलुक्स० । मध्यन्दिनमप्यत्र । तत्र भवे तत्र पुष्प्यति २बन्धूकवृक्षे राजनि० ।
मध्यपञ्चमूलक न० । "बलापुनर्नवैरण्डसूर्पपर्णीद्वयेन च । एकत्र योजितेनैव स्यान्मध्यं पञ्चमूलकम्" राजनि० उक्ते पदार्थपञ्चके ।
मध्यपदलोपिन् पु० मध्यपदस्य लोपोऽस्त्यस्य इनि । व्याकरणप्रसिद्धे शाकपार्थिवादिके मध्यपदलोपयुते समासभेदे ।
मध्यम त्रि० मध्ये भवः म । १मध्यभवे । २सप्तस्वरमध्ये क्रौञ्चस्वरतुल्ये ३पञ्चमे स्वरे पु० अमरः ।
मध्यमपाण्डव पु० कर्म० । अर्जुने तस्य पूर्वापरयोर्द्वयोर्द्वयो-र्मध्यवर्त्तित्वात् तथात्वम् । [मध्यमे दासे कर्मकरादौ ।
मध्यमभृतक पु० कर्म० । 'मध्यमस्तु कृषीवल' इत्युक्ते
मध्यमलोक पु० कर्म० । पृथिव्याम् तस्याः पातालस्वर्गलोकयोर्मध्यवर्त्तित्वात् तथात्वम् । "मध्यमलोकपालः" इति रघुः मध्यलोकोऽप्यत्र ।
मध्यमसंग्रह पु० कर्म० । "प्रेषणं गन्धमाल्यानां धूपभूषणवाससाम् । प्रलोभनञ्चान्नपानैर्मध्यमः संग्रहो मतः" व्यासोक्ते मध्यमे स्त्रीसंग्रहरूपे विवादभेदे ।
मध्यमसाहस न० कर्म० । "वासःपशन्नपानानां गृहोपकरणस्य च । एतेनैव प्रकारेण मध्यमं साहसं स्मृतम्" इत्युक्ते परकीयवस्त्रादेर्भङ्गाक्षेपादिरूपे साहसभेदे "पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः । मध्यमः

पञ्च विज्ञेयः” मनूक्ते पञ्चपर्वात्मके २दण्डभेदे पु० ।

**मध्यमा** स्त्री मध्य+म । १दृष्टरजस्कायां नार्य्याम् २तर्ज्जन्यनामयोरन्तःस्थायामङ्गुल्यौ, ३पद्मादीनां कर्णिकायाम् मेदि० परादिषु मध्ये ४हृदयोत्पन्नशब्दभेदे पश्यन्तीशब्दे ४२८१पृ० दृश्यम् ५नायिकाभेदे च ।

**मध्यमेश्वर** पु० काशीस्थे शिवलिङ्गभेदे । [गणनाभेदे ।

**मध्यमाहरण** न० वीजगणितप्रसिद्धे अव्यक्तमानज्ञापके

**मध्यरात्र** पु० मध्यं रात्रेः एकदेशिस० अच्समा० । रात्रान्तत्वात् पुंस्त्वम् । निशीथे अर्द्धरात्रे हला० ।

**मध्यवर्त्तिन्** त्रि० मध्ये वर्त्तते वृत-णिनि । वादिप्रतिवादिनोरन्ययोर्वा पक्षप्रतिपक्षयोर्वाक्यादिविषयविमर्शपूर्वकं १तत्त्वनिर्णायके स्वार्थाविरोधेन परार्थसम्पादके, कार्य्यसम्पादके च २मध्यस्थे ।

**मध्यस्थ** पु० मध्ये तिष्ठति स्था-क । १मध्यवर्त्तिनि २उदासीने च । ‘माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे’ इति कुमारः ।

**मध्याह्न** पु० मध्यमह्नः एक० स० टच्समा० अह्नादेशः । अह्नान्तत्वात् पुंस्त्वम् । त्रिधा विभक्तदिनस्य १द्वितीये भागे “प्रातःकालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु । मध्याह्नस्त्रिमुहूर्त्तं स्यात्” इत्युक्ते पञ्चधा विभक्तदिनस्य २तृतीये भागे च ।

**मध्वालु(क)** पु० मधुर्मधुर आलुः । (मौ आलु) मूलभेदे । स्वार्थे क । तत्रैव । [मधुद्रु मजाते मद्ये अमरः ।

**मध्वासव** पु० मधुना पुष्परसेन कृत आसवः शा०त० । (मौल)

**मन** पूजायां सक० गर्वे अक० भ्वा० पर० सेट् । मनति अमानीत्-अमनीत् मेनतुः ।

**मन** गर्वे अक० चु० आ० सेट् । मानयते अमीमनत् ।

**मन** बोधे तना० आ० सक० सेट् । मनुते अमनिष्ट मेने ।

**मन** बोधे दि० आ० सक० अनिट् । मन्यते । अमंस्त मेने ।

**मन** स्तुतौ अद०चु०उ०सक०सेट् । मनयति ते अममनत् त ।

**मन** पु० मन-अच् । जटामांस्याम् शब्दच० । [त्रिका० ।

**मनआप** त्रि० मन आप्नोति आप-अण् उप०स० । मनोज्ञे

**मन(थ)उ** पु० नील० ता० उक्ते वर्षकालीने ग्रहयोगभेदे “वक्रःशनिर्वा यदि शीघ्रखेटात् पश्चात् पुरस्तिष्ठति तुर्य्यदृष्ट्या । एकर्क्षसप्तर्क्षभुवा दृशा वा पश्चन्नवांशैरधिकोनकश्चेत् । तेजो हरेत् कार्य्यपदेत्यशाली स्थितोऽपि नाशी मन(थ)उः शुभो न” ।

**मनःशिला** स्त्री मनःशब्दवाच्या शिला । (मनृछल) रक्तवर्णे उपधातुभेदे “मनःशिलाविच्छुरिता निषेदुः” कुमारः । पृष० वा स्वत्वे पुंस्त्वमपि । “टङ्कैर्मनःशिलगुहैरविदार्य्यमाणे”ति भरतधृतवाक्यम् ।

**मनन** न० मन-ल्युट् । १अनुमाने २युक्त्या पदार्थनिर्णये च

**मनस्** न० मन्यतेऽनेन मन-करणे असुन् । १सर्वेन्द्रियप्रवर्त्तके अन्तरिन्द्रिये न्यायमतम् वेदान्तमते २सङ्कल्पविकल्पात्मकवृत्तिमदन्तःकरणे । तच्च सुखदुःखाद्याधारः “कामः संकल्पोविचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव” श्रुतेः । न्यायमते तज्ज्ञानादिसाधनमिति भेदः । ३मनःशिलायाञ्च शब्दच० ।

**मनसा** स्त्री मनं मननं स्यति सो-क । आस्तीकस्य मुनेर्मातरि वासुकिभगिन्याम् जरत्कारुपत्न्यां नाम्ना जरत्कारौ जटा० ।

**मनसादेवी** स्त्री मनसा दीव्यति दिवः करणस्य कर्मत्वात् कर्मोपदत्वेन अण् ङीप् अलुक्स० । मनसाशब्दार्थे जटा० ।

**मनसिज** पु० मनसि जायते जन-ड सप्तम्या वा अलुक् । १कामदेवे अमरः । लुकि । मनोजोऽप्यत्र । एवं चित्तजादयोऽप्यत्र ।

**मनसिशय** पु०मनसि शेते अच् अलुक्स० । कामदेवे हला०

**मनस्कार** पु० कृ घञ् मनसःकारोव्यापारभेदः । चित्तस्य सुखतत्परत्वे अमरः ।

**मनस्ताप** पु० मनसस्तापः । १अनुतापे २मनःपीडायाञ्च ।

**मनस्विन्** त्रि० प्रशस्तं मनोऽस्त्यस्य विनि । १प्रशस्तमनस्के । स्त्रियां ङीप् । “मनस्विनीनां प्रतिपत्तिरीदृशी” कुमारः २शरभे पु० राजनि० ।

**मनाक्** अव्य० मन-आकि । १ईषदर्थे अमरः “तुलहलाक्रान्तमना मनागभूत्” नैषधम् । २मन्दे च मेदि० ।

**मनाका** स्त्री मन आक । हस्तिन्याम् उणादिको० ।

**मनाक्कर** न० मनाक् करोति कृ-अच् । १मल्लिकागन्धयुक्ते अगुरुभेदे शब्दच० । २ईषत्करे त्रि० ।

**मनावी(यी)** स्त्री मनोः पत्नी वा ङीप् औङ् च । मनोः पत्न्याम् । जटाधरमते ऐङ् । मनायीत्येव तत्रार्थे ।

**मनित** त्रि० भ्वा० मन-कर्मणि क्त । ज्ञाते ।

**मनीक** न० मन-ईक । अञ्जने उणादिको० ।

**मनीषा** स्त्री ईष-क्ङ् ईषा मनस ईषा शक० । बुद्धौ अमरः ।

**मनीषिन्** पु० मनीषा अस्त्यस्य इनि । १पण्डिते अमरः २बुद्धियुक्ते त्रि० ।

**मनु** स्त्री मन उ । १पृक्कायाम् (पिडिङ्गशाक) राजनि० । २मनुपत्न्याञ्च ३प्रजापतिभेदे, धर्मशास्त्रकर्त्तरि स्वाय-

स्वारोचिषादौ मुनिभेदे च पु०। मनवश्च चतुर्दश ते च हरिवं० ७अ० उक्ता दृश्याः। [स्त्रियां जातौ ङीष्।

**मनुज** पु०मनोः स्वायम्भुवात् जायते जन-ड। मनुष्ये अमरः

**मनुष्य** पु० मनोरपत्यं यत् षुक् च। मानवे जातिभेदे। स्त्रियां जातौ टाप्। [कुबेरे अमरः।

**मनुष्यधर्मन्** पु० मनुष्यस्येव धर्मो यस्य अनिच् समा०।

**मनोगुप्ता** स्त्री मनसा मनःशब्देन तच्छब्दवाच्यत्वात् गुप्ता। मनःशिलायाम् अमरः।

**मनोजव** त्रि० जु-अच् मनोजवं वेगवत् गमनाय यस्मिन्। १पितृतुल्ये अमरः। मनस इव जवो यस्य। २अति-वेगवति त्रि० ३विष्णौ पु०। ४अग्निजिह्वाभेदे स्त्री जटा०। "काली कराली च मनोजवा च" शा० ति०। ५दुर्गाशक्तिभेदे। [कामवृद्धिकरवृक्षे राजनि०।

**मनोजवृद्धि** पु० मनोजस्य कामस्य वृद्धिर्यस्मात् ५ब०।

**मनोज्ञ** त्रि० मनो जानाति ज्ञापयति बोधनाय प्रवणी-करोति अन्तर्भूतण्यर्थे ज्ञा-क। १मनोहरे अमरः। २मनःशिलायां रत्नमा०। ३वन्ध्याककोट्यां, ४कटभ्यां, ५जीरके ६मदिरायाञ्च स्त्री राजनि०। ७राजपुत्र्यां जटा० ८सरलकाष्ठे न० रत्नमा०। [तयोऽप्यत्र।

**मनोभव** पु० मनसि भवति भू-अच्। कामदेवे मनोभूरप्य-

**मनोरथ** पु० मनएव रथोऽत्र, मनसो रथइव वा इष्ट-मात्रप्रापकत्वात्। इच्छायाम् अमरः।

**मनोरम** त्रि० मनोरमयति रम-णिच् अण् उप०स०। १मनो-हरे अमरः। २गोरोचनायां स्त्री राजनि०। ३रुचि-मनुभार्य्यायां स्त्री मार्कपु०। [वक्षे च।

**मनोहत** त्रि० मनो हतं यस्य। १प्रतिहते अमरः २प्रति-

**मनोहर** त्रि० मनो हरति स्वदर्शनाय हृ-अच्। १रुचिरे २कुन्दवृक्षे पु० शब्दर०। ३जात्यां ४स्वर्णयूथ्यां च स्त्री। ५स्वर्णे न० राजनि०। णिनि। मनोहारिन् मनोहरे त्रि० स्त्रियां ङीप्। [शिलायाम् अमरः।

**मनोह्वा** स्त्री० मनःशब्देनाहूयते ह्वे-घञर्थे क। मनः-

**मन्ज** मार्जने सक० ध्वनौ अक० भ्वा० पर० सेट्। मञ्जति अमञ्जीत् ममञ्जतुः। [मेदि०।

**मन्तु** पु० मन-तुन् तुट् च। १अपराधे २मनुष्ये ३प्रजापतौ च

**मन्त्र** पु० मन्त्रि-अच्। १गुप्तभाषणे, रहसि कर्त्तव्याव-धारणार्थमुक्तौ २देवादीनां साधनार्थं तन्त्राद्युक्ते शब्द-भेदे, ३वेदविभागभेदे च। वैदिकतान्त्रिकमन्त्रलक्षणादि क्रमभेदभाष्योक्तं पद्मपु० २६अ० उक्तञ्च दृश्यम्।

**मन्त्रकृत्** त्रि० मन्त्रं तत्स्मरणं वा कृतवान् कृ-भूते क्विप्। १मन्त्रणाकारके २वेदमन्त्राणां स्मरणकर्त्तरि ३ऋषिभेदे पु० परिशिष्टखण्डे दृश्यम्।

**मन्त्रजिह्व** पु०मन्त्र एव जिह्वा आस्वादनसाधनं यस्य। अग्नौ हेमच०। मन्त्रेण दत्तहविरास्वादकत्वात्तस्य तथात्वम्।

**मन्त्रणा** स्त्री मन्त्रि-युच्। गुप्तभाषणे ल्युट्। तत्रार्थे न०।

**मन्त्रदातृ** पु० दा-तृच् ६त०। गुरौ।

**मन्त्रिन्** पु० मन्त्रयते णिनि। धीसचिवे येन सह रहसि कर्त्तव्यमवधीयते तस्मिन् अमात्ये अमरः।

**मन्थ** क्लेशे अक० विलोडने सक० भ्वा० पर० सेट्। मन्थति अमन्थीत्। मथ्यते। [मथ्यते।

**मन्थ** विलोडे क्र्या० पर० द्विक० सेट्। मथ्नाति अमन्थीत्।

**मन्थ** पु० मन्थ करणे घञ्। १मन्थानदण्डे। "सक्तुभिः सर्पिषाभ्यक्तैः शीतवारिपरिप्लुतैः। नात्यच्छो नाति-सान्द्रश्च मन्थ इत्यभिधीयते" इत्युक्ते २पेयभेदे, "चूर्णे चतुष्पले शीते जलद्रव्ये पलं क्षिपेत्। मृत्पात्रे मन्थयेत् सम्यक् तस्माच्च द्विपलं पिबेत्" भावप्र० उक्ते पेयभेदे च। ३नेत्रमले धरणिः ४किरणे च शब्दच०। भावे घञ्। ५आलोडनादौ। [रत्नमा०।

**मन्थज** न० मन्थात् दधिमन्थनात् जायते जन-ड। नवनीते

**मन्थन** पु० मथ्यतेऽनेन करणे ल्युट्।१मन्थानदण्डे शब्दर०। भावे ल्युट्। २विलोडनादौ न०।

**मन्थर** न० मन्थ-अरच्। १कुसुम्भराम्। २कोषे ३फले, बाधे मन्थानदण्डे च पु०५वक्रे ६पृथौ ७मन्दे च त्रि० मेदि० "मदर्थसन्देशमृणालमन्थरः" नैष०। ८जड़े शब्दर०। ९नीचे हेम०। १०सूचके विश्वः ११कैकेय्याः दास्यां स्त्री।

**मन्थशैल** पु० ६त०। समुद्रमन्थनाय मन्थनदण्डरूपेण कल्पिते मन्दरपर्वते। [कण्टकी वृक्षे राजनि०।

**मन्थान** पु० मन्थ-आनच्। १मन्थनदण्डे अमरः। २आरग्-

**मन्द** त्रि० मदि-अच्। १मूर्खे २मृदौ ३अभाग्ये ४रोगिणि ५अल्पे ६स्वतन्त्रे ७खले च हेम०। ८मदरते ९शनिग्रहे १०हस्तिभेदे च पु० मेदि०। ११यमे त्रिका०। १२प्रलये च पु०अजय०। १३ज्योतिषोक्ते रविसंक्रान्तिभेदे १४चन्द्र-गतिभेदे च स्त्री।

**मन्दग** त्रि० मन्दं गच्छति गम ड। १मृदुगामिनि २शनि-ग्रहे पु० शनि, ज्ञानिपुरुष, वृष, हंस, गज, वरस्त्रियः इत्येते स्वभावान्मन्दगतयः। णिनि। मन्दगामिन् तत्रार्थे त्रि० स्त्रियां ङीप्।

**मन्दट** पु० मन्दं टीकते टीक-ड। पारिभद्रवृक्षे शब्दरत्ना०।

**मन्दता** स्त्री मन्दस्य भावः तल्। १आलस्ये २जाड्ये च "उच्चैरस्यति मन्दतामरसतामिति" चन्द्रालोकः।

**मन्दर** पु० मदि-अरन्। समुद्रमन्थाने १पर्वतभेदे २मन्दारवृक्षे मेदि० ३स्वर्गे ४हारभेदे हेम० ५दर्पणे च शब्दर०। ६बहुले ७मन्दे च त्रि० मेदि०।

**मन्दाकिनी** स्त्री मन्दमकति अक-णिनि। १स्वर्गगङ्गायां "स्वर्गे मन्दाकिनी तथा"पुराणम्। २संक्रान्तिभेदे च।

**मन्दाक्रान्ता** स्त्री "मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ तौ गुरू चेत्"इ०र०उक्ते सप्तदशाक्षरपादके छन्दोभेदे।

**मन्दाक्ष** न० मन्दं यद्धा चितमक्षि यस्मात् प्रब्बसमा०। १लज्जायाम् अमरः। ६ब०। २मन्दचक्षुषि त्रि०। कुचितनेत्रे स्त्रियां ङीप्।

**मन्दाग्नि** पु० मन्दः पचने अल्पशक्तिकः अग्निः जनकः, स यस्माद्वा। १देहस्थे अपचनशक्तिकेऽनले २तद्युते रोगभेदे च। तन्निदानादि यथा "मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः। कफपित्तानिलाधिक्यात् तत्साम्याज्जाठरोऽनलः। विषमो वातजान् रोगान् तीक्ष्णः पित्तसमुत्थितान्। करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान्। समा समाग्ने रशिता मात्रा सम्यग् विपच्यते। अल्पापि नैव मन्दाग्नेर्विषमाग्नेस्तु देहिनः" भावप्र०।

**मन्दार** पु० मदि-आरक्।१स्वर्गस्थे देववृक्षभेदे २पारिभद्रवृक्षे च अमरः ३हस्ते ४धूर्त्ते ५तीर्थभेदे ६अर्कवृक्षे च मेदि०।

**मन्दिर** न० मन्द्यतेऽत्र मदि-किरच्। १गृहे २पुरे च अमरः तत्र हिलिङ्गत्वमित्येके। ३समुद्रे मेदि० ४जानुपश्चाद्भागे च पु० हेमच०। [नीयकटे च (मादुर) मेदि०।

**मन्दुरा** स्त्री मदि-उरच्। १अश्वशालायाम् अमरः। २शय-

**मन्दोदरी** स्त्री मयदानवकन्यायां रावणमहिष्याम। [अमरः

**मन्दोष्ण** न० मन्दमीषदुष्णम्। १ईषदुष्णस्पर्शे २तद्वति त्रि०

**मन्द्र** पु० मदि-रक्। १वाद्यभेदे शब्दर०। २गम्भीरध्वनौ च। अर्श आद्यच् ३तद्वति त्रि० अमरः।

**मन्मथ** पु० मननं मत् मन-क्विप् मथति मथ अच् ६त०। १कन्दर्पे २कपित्थवृक्षे च अमरः ३कामचिन्तायां मेदि०।

**मन्मथालय** पु० ६त०।१आम्रवृक्षे राजनि० २स्त्रीचिह्नभेदे च।

**मन्या** स्त्री सेट्-मन-क्यप्। ग्रीवायाः पश्चाद्भागस्थायां शिरायाम् अमरः।

**मन्यु** पु० मन-युच् न अनादेशः। १शोके २दैन्ये ३क्रतौ ४क्रोधे च अमरः ५अहङ्कारे च शब्दर०।

**मन्वन्तर** न० मनूनामन्तरमवकाशस्तदुपलक्षितकालो वा। १स्वायम्भुवादिमनूनामधिकारे २तदुपलक्षिते काले च सत्ययुगमितवर्षाधिका एकसप्ततिचतुर्युगमिता (३११४४८-०००) वर्षास्तदवकाश इति पुराणम्।

**मभ्र** गतौ भ्वा०पर०सक०सेट्। मभ्रति अमभ्रीत्।

**मम** अव्य०मा-बा०डम। ममार्थंदले: अमच्चस्यार्थे तेन ममत्वमिति ममतेति च सिध्यति।

**ममता** स्त्री मम भावः तल्। १दर्पे २अहङ्कारे हेम०। ३मत्सरे च। एवं ममत्वमप्यत्र। "तथापि ममतावर्त्ते" इति "ममत्वं मम राज्यस्य" इति च देवीमा०। [विषये त्रि०को०

**ममापताल** पु० मम आतन् भातोर्वस्य मः अपतुनागमश्च।

**मय** गतौ भ्वा०आ०सक०सेट्। मयते अमयिष्ट।

**मय** पुंस्त्री० मय-अच्। १उष्ट्रे २अश्वतरे स्त्रियां टाप्। ३दानवभेदे च मेदि०।

**मयष्टक** पु० मि+अच् मयं प्रक्षेपं स्वकते प्रतिबध्नाति स्वक-अच् पृषो० षत्वम्। वनमुद्गे अमरः। पृषो० मपष्टक तत्रार्थे पु०।

**मयु** पु० मि-उ। १किन्नरे अमरः २मृगे मेदि०।

**मयुष्टक** पु० मिनोति मि-उ मयुः स्वक-अच् कर्म० पृषो० षत्वम्। वनमुद्गे पृषो०। मयुष्टकोऽप्यत्र।

**मयूख** पु० माङ्-ऊख मयादेशः। १त्विषि २किरणे ३शिखायाम् अमरः ४शोभायां मेदि० ५कीले शब्दच०।

**मयूर** पुंस्त्री० मी-ऊरन्। स्वनामख्याते १खगभेदे स्त्रियां ङीष्। २मयूरशिखावृक्षे पु० अमरः। दयार्थे कन् ३अपामार्गे अमरः। ४तत्साञ्जने (तुँते) न० मेदि०।

**मयूरग्रीवक** न० मयूरग्रीवेव कन्। तस्ये (तुँते) राजनि०।

**मयूरजङ्घ** पु० मयूरस्य जङ्घेव मूलमस्य। श्योनाकवृक्षे राजनि०। [राजनि०।

**मयूरतुत्थ** न० मयूर इव तद्वर्णं तुत्थम्। तुत्थे (तुँते)

**मयूरविदला** स्त्री मयूरैर्विदल्यते मयूर इव विशिष्टदलमस्या वा। अम्बष्ठायाम् (आमरुल) वैद्यकम्।

**मयूरशिखा** स्त्री मयूरस्येव शिखाऽस्याः। स्वनामख्याते क्षुपभेदे मयूरचूडादयोऽप्यत्र। "नीलकण्ठशिखा लघ्वी पित्तश्लेष्मातिसारजित्" भावप्र०।

**मयूरिका** स्त्री मयूरस्तदाकारो विद्यतेऽस्याः तच्चन्द्रकत्वाद्वाऽस्मात् ठन्। अम्बष्ठायाम् राजनि० (आमरुल)।

**मरक** पु० मृ-वुन्। १दैविकभौतिकोपद्रवजन्ये प्राणिनाम् कालमरणे (मडक) २मारिभये हेमच०।

**मरकत** न० मरकं मारिभयं तरत्यनेन तॄ-ड । हरिद्वर्णे-मणिभेदे (पान्ना) अमरः। तल्लक्षणादि परिशिष्टे दृश्यम्

**मरकतपत्त्री** स्त्री मरकतमिव हरिद्वर्णं पत्त्रमस्याः ङीष्। पाच्याम् राजनि० ।

**मरण** न० म्रियतेऽनेन मृ-करणे ल्युट् । वत्सनाभाख्ये १विषे राजनि०। भावे ल्युट् । देहात्मनोर्विच्छेदरूपे, प्राणवायो-रुत्क्रमणरूपे वा २व्यापारभेदे ।

**मरत** पु० मृ-अतच् । मरणे उणा० ।

**मरन्द** पु० मरं मरणं द्यति भ्रमराणां जीवनहेतुत्वात् दो-क पृषो० मुम् । मकरन्दे शब्दर० ।

**मराकाली** स्त्री मरो मरणकालिकं दुःखमिवाकति आत्म-नेन मराको हरिकः स इवाचरति पर्य्याप्नोति दुःख-दानाय अल-अच् गौरा० ङीष्। हरिकाली (विल्लाति) रत्नमाला ।

**मराल** पु० मृ-आलच्। १राजहंसे जटा० "तत्रामरालय-मरालमरालकेशी" नैषधम् । २कज्जले ३कारण्डवे ४अश्वे ५मेघे ६दाडिमीवने च सारसुन्दः । ७स्निग्धे त्रि० त्रिका० ।

**मरि(री)च** पु० मृ-इच पृ० वा दीर्घः । १स्वनामख्याते द्रव्ये अमरः । २कक्कोलके राजनि० । [राजनि०।

**मरि(री)चपत्त्रक** पु० मरिचस्येव पत्त्रमस्य कप् । सरलद्रुमे

**मरीचि** पु० मृ-ईचि । सप्तर्षिमध्ये ब्रह्मणो मानसे ज्येष्ठे पुत्रे १मुनिभेदे २कृपणे च हेमच० । ३किरणे पुंस्त्री० अमरः ।

**मरीचिका** स्त्री मरीचौ सूर्य्यकिरणे कमिव यत्र भ्रान्तौ । सूर्य्यकिरणे जलभ्रान्तौ, मृगतृष्णायाम् अमरः ।

**मरु** पु० मृ-उ । १पर्वते २निर्जलदेशे च अमरः ३कुरुवकवृक्षे भावप्र० ४देशभेदे च (माड़वार) हेमच० ।

**मरुज** पु० मरुदेशे जायते जन-ड । १नखीनामगन्धद्रव्ये शब्दच०। २निर्जलदेशजाते त्रि० । ३महाकर्कोटाम् स्त्री राजनि० ।

**मरुत्** पु० मृ-उति । १वायौ अमरः २मरुवके भावप्र० ३देवे ४ऋत्विग्भेदे न० मेदि० । ५पृक्कायां स्त्री शब्दर० । स्वार्थे प्रज्ञाद्यण् । मारुतोऽप्यत्र । पृषो० तुक् । मरुतोऽपि देवे च वायौ च व्याडिः । [शब्दच०।

**मरुत्कर** पु० मरुतमपानवायुं करोति कृ-अच् । राजमाषे

**मरुत्त** पु० चन्द्रवंश्ये १नृपभेदे ।

**मरुत्तक** पु० मरमिव तकति तक-हासे अच् । मरुवके भावप्र०

**मरुत्पथ** पु० ६त० । आकाशे । मरुद्वर्त्मादयोऽप्यत्र ।

**मरुत्पाल** पु० । मरुतो देवान् पालयति पाल-अच् । इन्द्रे

**मरुत्वत्** पु० मरुत् पाल्यत्वेन हेतुत्वेन वाऽस्त्यस्य म पदत्वम् मस्य वः । १इन्द्रे अमरः । २हनूमति शब्दर० ।

**मरुत्सख** पु० मरुतो वायोः सखा-टच्समा० । १इन्द्रे धरणिः । २वह्नौ ३चित्रकवृक्षे च । [शब्दमाला ।

**मरुदान्दोल** न० मरुतमान्दोलयत्यनेन करणे घञ् । व्यजने

**मरुदिष्ट** पु० मरुतां देवानामिष्टः । गुग्गुलौ राजनि० ।

**मरुद्भवा** स्त्री मरुतो वायोर्भवति वर्द्धते भू-अच् ५त०। ताम्र-मूलीलुपे (खिराट) रत्नमा० । [खदिरे रत्नमा०

**मरुद्रुम** पु० मरोर्निर्जलदेशस्य द्रुमस्तत्रजातत्वात् । विट्-

**मरुद्वाह** पु० मरुत् वाह इव यस्य । १धूमे त्रिका० २वह्नौ शब्दमा० ३चित्रकवृक्षे च । [अमरः ।

**मरुन्माला** स्त्री मरुतो मालेव । (पिड़िङ्शाक) पृक्कायाम्

**मरुभू** पु० मरुर्भूमिर्यत्र (माड़वार) १देशभेदे त्रिका०। कर्म०। २निर्जलभुवि स्त्री । [भावप्र०।

**मरुभूरुह** पु०मरुभुवि निर्जलभूमौ रोहति रुह-क। करीरे

**मरुव** पु० मरुं निर्जलदेशं वाति कारणत्वेन वा क । (नाग-दाना) (मरुया) वृक्षभेदे। स्वार्थे क। तत्र वृक्षभेदे (मरुना) स्वल्पपत्रतुलस्याम् अमरः । जम्बीरभेदे भरतः पुष्पप्रधाने (मरुयाफुल) वृक्षभेदे रत्नमा० व्याघ्रे, राहौ भयानके च जटा० ।

**मरुसम्भवा** स्त्री मरौ सम्भवति सम्+भू-अच् ७त०। क्षुद्र-दुरालभायाम् राजनि० मरुसम्भवाद्योऽप्यत्र ।

**मरूद्भवा** स्त्री मरौ उद्भवति उद्+भू-अच् ७त०।१कार्पास्यां २क्षुद्रखदिरे ३यवासे च राजनि० ।

**मर्क** गतौ भ्वा० पर० सक० सेट् । मर्कति अमर्कीत् ममर्क ।

**मर्कट** पुंस्त्री० मर्क-अटन् । १वानरे अमरः । स्त्रियां ङीष् २ऊर्णनाभे (माकड़सा) ३स्थावरविषभेदे हेमच० (ढाड़-शिङा) ४पक्षिभेदे च पुंस्त्री० त्रिका० स्त्रियां ङीष् । स्वार्थे क । मर्कटक तत्रैव संज्ञायां कन् । मत्स्यभेदे दैत्यभेदे च शब्दर० । [भावप्र० ।

**मर्कटतिन्दुक** पु० कर्कटप्रियस्तिन्दुकः शाक०त० । कुपीलौ

**मर्कटपिप्पली** स्त्री० मर्कटप्रिया पिप्पली शाक०त० । अपा-मार्गे राजनि० ।

**मर्कटप्रिय** पु० ६त० । क्षीरवृक्षे (खिरद) शब्दमा० ।

**मर्कटवासस्** पु० ६त०। (माकड़षालाज)लूतातन्तौ शब्दर०

**मर्कटशीर्ष** न०मर्कटस्य वानरस्य शीर्षमिव । हिङ्गुले रत्नमा०

**मर्कटास्य** मर्कटस्य वानरस्यास्यमिव रक्तत्वात् । १ताम्रवर्णे हेम० २तद्वति त्रि० ।

**मर्कटी** स्त्री मर्कटोऽस्त्यस्याः स्निग्धत्वेन अच् गौ० ङीष् । १अपामार्गे २अजमोदायाम् राजनि० ३करञ्जभेदे (माकड़करमचा) अमरः । ४मर्कटीजाले शिक्षुलः ।

**मर्कटीजाल** न० छन्दोग्रन्थोक्ते मात्रावर्णप्रस्तारे लघुगुरुस्थानविशेषज्ञानाय चक्रभेदे वृ०र० मन्थटीकायां दृश्यम् ।

**मर्कर** पु० मर्क-अरच् । १भृङ्गराजे (कें्शुरिया) २भाण्डे च ३सुरङ्गायां ४वन्ध्यायां स्त्रियाञ्च स्त्री विश्व० टाप् ।

**मर्च** शब्दे चु० उभ० सक० सेट् । मर्चयति-ते अममर्चत्-त

**मर्जु** पु० मृज-उन् । १रजके २पीठमर्दे च हेमच० । ३शुद्धौ स्त्री मेदि० ।

**मर्त्त** पु० मृ-तन् । १मनुष्ये २भूलोके च । तत्र भवः यत् । मर्त्त्य मनुष्ये । [२चूर्णने च ।

**मर्द्दन** न० मृद-ल्युट् । १गात्रपादादिसंवाहने अमरः

**मर्द्दल** पु० मृद-घञ् मर्द्दं लाति ला-क । वाद्यभेदे (माँदल) । अमरः ।

**मर्द्दित** त्रि० चु० मृद-क्त । १चूर्णिते २पश्चिते च भरतः ।

**मर्व** गतौ भ्वा० पर० सक० सेट् । मर्वति अमर्वीत् ममर्व ।

**मर्म्मज्ञ** पु० मर्म जानाति ज्ञा-क । तत्त्वज्ञे । मर्मविदादयोऽप्यत्र ।

**मर्म्मन्** न० मृ-मनिन् । १जीवनस्थाने राजनि० २सन्धिस्थाने ३तात्पर्ये च “अपि धर्मागममर्मपारगैरि”ति नैषधम् । “सन्निपातः शिरास्नायुसन्धिमांसास्थिसम्भवः । मर्माणि तेषु तिष्ठन्ति प्राणाः खलु विशेषत.” भावप्र० ।

**मर्म्मर** पु० मृ-अरन् मुट् च । १वस्त्रपर्णानां शब्दे (मड़मड़) इत्यव्यक्तशब्दे अमरः । ३पीतदारुणि ३हरिद्रायाञ्च स्त्री मेदि० गौरा० ङीष् ।

**मर्म्मस्पृश्** त्रि० मर्म्म प्राणस्थानं स्पृशति स्पृश-क्विन् । अरुन्तुदे मर्मपीड़के अमरः । [दोषेच । मर्मपीडके ।

**मर्म्माविध्** त्रि० मर्म्म सन्धिस्थानं विध्यति विध-क्विप् पूर्व

**मर्य्या** अव्य०म्रियतेऽर्वाग्यतेऽत्र मृ-यत् । १सीमायाम स्त्री त्वमपि राय० कर्त्तरि यत् । २मनुष्ये पु०।“मेषो मर्यो अपयसे”इति वेदमन्त्रः । “मर्य्यामनुष्या” इति भाष्यम् ।

**मर्य्यादा** स्त्री मर्य्यायां सीमायां दीयते दा-घञर्थे क मर्यादीयते वा परि+आ-दा-अङ् पृषो० पस्य मः । १न्याय्यपथस्थितौ अमरः । २सीमायाम् जटा० ३कूले च हेमच० ।

**मर्व** पूर्त्तौ भ्वा०पर०सक०सेट् । मर्वति अमर्वीत् ममर्व ।

**मल** धृतौ भ्वा०आ०सक०सेट् । मलते अमलिष्ट ।

**मल** पु० मृज्यते शोध्यते मृज-कल-टिलोपः । १पापे २पुरीषे लौहादीनां ३किट्टे अमरः । किट्टं कलङ्को मलरूरादिर्देहजातस्वेदश्लेष्मादिश्च । “वसा शुक्रमसृङ्मज्जामूत्रं विट्कर्णविड्नखाः । श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः” स्मृतिः । ४कर्पूरे शब्दच० ५वातपित्तकफेषु च माधवः । ५दुष्टे हृत्स्वल्पे च ।

**मलघ्न** पु० मलं विषं हन्ति रेचयति हन-क ।१शाल्मलीकन्दे २मागदमन्यां स्त्री ङीप् राजनि० । ३मलनाशके त्रि० । क्विप् । मलहन् तत्रार्थे त्रि० ।

**मलदूषित** त्रि० ३त० । मलिने अमरः ।

**मलद्राविन्** पु० मलं द्रावयति रेचयति द्रु-णिच्-अण् । जयपाले राजनि० । तत्फलस्य रेचकत्वात् तथात्वम् ।

**मलपू** स्त्री मलं मलस्थानं पुनाति पू-क्विप् । काकोदुम्बरिकायाम् अमरः ।

**मलभेदिनी** स्त्री मलं भेदयति रेचयति भिद्-णिच्-णिनि । कटुकायाम् । (कट्की) राजनि० ।

**मलमास** पु० मलो दुष्टो मासः । “अमावस्याद्वयं यत्र रविसंक्रान्तिवर्जितम् । मलमासः स विज्ञेयः” इत्युक्ते रविसंक्रान्तिशून्ये शुक्लप्रतिपदादिदर्शान्तरूपे चान्द्रे मासे । अधिमासशब्दे १२१५० दृश्यम् ।

**मलय** पु० मल-कयन् । दक्षिणस्थे १पर्वतभेदे हेम० । यत्र चन्दनजन्म तत्पर्वतान्तिकस्थे २देशभेदे ३उपवने ४शैलाङ्गे च मेदि० । ५नन्दनवने शब्दचि० । अष्टादशसु द्वीपेषु द्वीपभेदे शब्दमा० ७ऋषभदेवस्य पुत्रभेदे भाग०५।४ ।

**मलयज** पुंन० मलये पर्वते जायते जन-ड । १चन्दने अमरः २मलयदेशजाते वायौ पु० । ३तद्देशजाते त्रि० ।

**मलया** स्त्री मलयो देशोऽस्त्यस्याः कारणत्वेन अच् । त्रिवृतायां (तेओड़ि) मेदि० ।

**मलविनाशिनी** स्त्री मलं तद्दोषं विनाशयति वि+नश-णिच्-णिनि । शङ्खपुष्प्याम् राजनि० ।

**मलाकर्षिन्** पु० मलमाकर्षति आ+कृष-णिनि । चण्डाले (मेतर) शब्दमा० । [न्याञ्च उज्ज्वलमा० ।

**मलाका** स्त्री मल-आक । १कामिन्यां २दूत्यां ३हस्ति-

**मलारि** पु०मलस्य कलङ्ककिट्टादेररिः । सर्जिक्षारद्रव्ये राजनि०

**मलिन** त्रि०मल+अस्त्यर्थे इनन् ।१मलयुक्ते अमरः । २दूषिते ३कृष्णे च मेदि० । ४घोले न० शब्दच०। ५दोषे हेम०

६टङ्कणे न० राजनि० (सोहागा)। इति। मलीमसमत्र

**मलिनमुख** पु० मलिनं मुखं यस्य। १वह्नौ तस्यादौ धूमाय मानत्वेन कृष्णत्वात् २चित्रकवृक्षे च। ३वानरे पुंस्त्री० मेदि०स्त्रियां ङीप् ४क्रूरे ५खले च त्रि०मेदि०६प्रेते हेम०।

**मलिम्लुच** पु० मली वैदिककर्मानर्हत्वेन दुष्टः सन् म्लोचति गच्छति म्लुच-क।१मलमासे २वायौ ३अग्नौ ४चौरे च मेदि०। ५चित्रकवृक्षे। [कासीसे च मेदि०।

**मलीमस** त्रि०मल-ईमसच्।१मलिने अमरः। २लौहे ३पुष्प-

**मल्ल** धृतौ भ्वा०आ०सक०सेट्। मल्लते अमल्लिष्ट ममल्ले।

**मल्ल** पु० मल्ल-अच्। १बाहुयुद्धकारके नियोद्धरि २पात्रे ३बलीयसि ४मत्स्यभेदे ५कपोले च मेदि० ६व्रात्यक्षत्रियात् सवर्णायां जाते जातिभेदे (माल) ७सङ्कीर्णजातिभेदे लेटात् धीधरकन्यायां जाते सङ्कीर्णवर्णे (माला)ब्रह्मवै०पु० ८तन्त्रवाय्यां कुन्दकाराज्जाते सङ्कीर्णजातिभेदे च पुंस्त्री०स्त्रियां जातित्वात् ङीष्।९देशभेदे स्वार्थे क मल्लक तत्रार्थे। संज्ञायां कन्। दन्ते हेम०।

**मल्लक** पु० मल्ल्यते ध्रियतेऽत्र मल्ल-वुन्। १दीपाधारे पात्रे २नारिकेलफलजाते पात्रे च (माला) अमरः। ५प्रदीपे मधुरेश्वः ६स्वनामपुष्पे स्त्री अमरः टाप् अत इत्त्वम्।

**मल्लज** न० मल्ले देशे जायते जन-ड। मरिचे जटा०।

**मल्लभू** स्त्री मल्लक्रीडनस्य बाहुयुद्धस्य योग्या भूः स्थानम्। देशभेदे। मल्लभूम्यादयोऽप्यत्र।

**मल्लयुद्ध** ६त०। बाहुयुद्धे तत्प्रकारः भा० वि० १२अ०।

**मल्लार** पु०मल्ल इव ऋच्छति ऋ-अच्। १रागभेदे २वसन्तरागस्य रागिणीभेदे स्त्री ङीप् सङ्गीतदामो०।

**मल्लि(ल्ली)** स्त्री मल्ल-इन् वा ङीप्।१मल्लिकायाम् शब्दमा० संज्ञायां कन्। मल्लिका कृष्णवर्णदेहे आलोहितचञ्चुचरणे २हंसभेदे पुंस्त्री० मल्लिकाक्षोऽप्यत्र।

**मल्लिकापुष्प** पु० मल्लिकाया इव पुष्पमस्य। १कुटजवृक्षे राजनि०। २कदम्बवृक्षे च हेमच०। ६त०। ३मल्लिकायाः कुसुमे।

**मल्लिपत्र** न० मल्लिरिव पत्त्रमस्य। छत्राके त्रिका०।

**मव** बन्धे भ्वा०पर०सक०सेट्। मवति अमवीत् अमावीत्।

**मव्य** बन्धे भ्वा०पर०सक०सेट्। मव्यति अमव्यीत्।

**मश** ध्वनौ अक० कोपे सक० भ्वा० पर० सेट्। मशति अमशीत्-अमाशीत् मेशतः।

**मशक** पु० मश-वुन्। १कीटभेदे (मशा) राजनि०। २चर्मसयजलपात्रभेदे ३रोगभेदे शब्दर०। तद्रोगलक्षणं यथा "अवेदनं स्थिरं चैव यत्तु गात्रे प्रदृश्यते। माषवत् कृष्णमुत्पन्नं मलिनं मशकं दिशेत्" गरु० पु० १७५अ०।

**मशकिन्** पु० मशकोऽस्त्यस्य इनि। उदुम्बरवृक्षे हेम०।

**मशहरी** स्त्री मशं मशकं हरति हृ-ट। मशकनिवारणार्थे वस्त्रनिर्मिते पदार्थे चतुष्क्याम् जटा०।

**मशि(शी)** स्त्री मश(स) इन् वा ङीप्। (काली) १पत्रलेखनद्रव्ये त्रिका०। २नीलशेफालिकावृक्षे च शब्दर०।

**मष** वधे भ्वा०पर०सक०सेट्। मषति अमषीत् अमाषीत्।

**मस** परिणामे अक० परिमाणे सक०दि०पर०सेट्। मस्यति इरित् अमसत् अमसीत् अमासीत्। पुषादिरयं तेन अमसदित्येवेति पाणिनीयाः।

**मसन** न० मस-ल्यु। सोमराजीवृक्षे शब्दच०।

**मसरा** स्त्री मस-अरच्। मसूरे जटा०।

**मसिका** स्त्री मसीव इवार्थे कन्। नीलशेफालिकायाम् शब्दर०। [त्रिका०

**मसि(सी)जल** न०मसिमिश्रितं जलम्। (काली) लेखनद्रव्ये

**मसिधान** न० मसिर्धीयतेऽत्राधारे धा-ल्युट्। मस्याधारे (दोयात) स्त्रीत्वमपि तत्र ङीप्।

**मसिपण्य** पु० मसिमदुपलक्षितमक्षरमेव पण्यं विक्रेयं यस्य। लेखनोपजीविनि त्रिका०।

**मसिप्रसू** स्त्री मस्याः प्रसूरिव। १मस्याधारे। मसिः प्रसूरिव यस्याः। २लेखन्याम् हारा०।

**मसीना** स्त्री मस-ईनन्। अतस्याम् (तिसि) शब्दच०।

**मसु(सू)र** पुंस्त्री०मस-उरच् ऊरच् वा। १कलायभेदे त्रिका० स्त्रियां गौरा० ङीष्। २वेश्यायां, ३व्रीहिभेदे च स्त्री टाप् मेदि०।

**मसूरविदला** स्त्री मसूरस्येव विदलं यस्याः। १कृष्णत्रिवृति (कालतेओटी) अमरः। २श्यामलतायां रत्नमा०।

**मसूरिका** स्त्री मसूरेव इवार्थे कन्। १वसन्तरोगे २कुट्टिन्याञ्च शब्दमा० "कट्वम्ललवणक्षारविरुद्धाध्यशनाशनैः। दुष्टनिष्पावशाकाद्यैः प्रदुष्टपवनोदकैः। क्रूरग्रहेक्षणाच्चापि देशे दोषाः समुद्धताः। जनयन्ति शरीरेऽस्मिन् दुष्टरक्तं समुद्धताः। मसूराकृतिसंस्थानाः पिड़काः स्युर्मसूरिकाः" भावप्र०।

**मसूरी** स्त्री मस-ऊरच् गौरा० ङीष्। १वसन्तरोगे मेदि० २त्रिवृति, ३रक्तत्रिवृति च राजनि०।

**मसृण** त्रि० मस-क्नप, मसृ+क्नप-क पृषो० वा। १स्निग्धे २अकर्कशे च। ३अतस्यां स्त्री मेदि०।

**मस्क** गतौ भ्वा० पर० सक० सेट् । मस्कति अमस्कीत् ।

**मस्कर** पु० मस्क-अरच् । १वंशे अमरः । २रन्ध्रयुक्तवंशे च राजनि० । भावे अरच् । ३गतौ ४ज्ञाने च ।

**मस्करिन्** पु० मस्करो ज्ञानं गतिर्वास्त्यस्य इनि, मा करणं कर्म निषेद्धुं शीलमस्य मा+कृ-इनि "मस्करमस्करिणाविति" निपा० । १परिव्राजके विधानेन स्वकर्मपरित्याजके भिक्षौ अमरः । "धारयन् मस्करिव्रतम्" भट्टिः २चन्द्रे च शब्दच० ।

**मस्ज** स्नाने तु० पर० अक० अनिट् । मज्जति अमाङ्क्षीत् । ओदित् क्त मग्नः । ङित् मग्न मज्जथुः ।

**मस्त(क)** न० मस्यति परिमात्यनेन मस-करणे त ।१शिरसि त्रि०। २शिरसि च स्वार्थे क । ३वृक्षमात्रे पुंन० । [हेमच० ।

**मस्तकस्नेह** पु० ६त० । शिरःस्थितमज्जायाम् त्रिकाण्डे

**मस्तदारु** न०मस्यति परिमात्यनेन मस्तमिव दारु कर्म०। देवदारुणि भावप्र० । [ग्राम् ग्रीवावायाम् शब्दच०।

**मस्तमूलक** न० मस्तस्य मूलमिव इवार्थे कन् । शिरोधरा-

**मस्तिष्क** न० मस-क्विप् मस्तं पतिषणिभेदं मुष्कति मुष्क गतौ अच् पृषो०। मस्तकस्थे घृताकारे पदार्थे (मगज) अमरः । "मांसमस्तिष्कपङ्क प्राग्भारे" प्रबोधचन्द्रोदयम् ।

**मह** पूजायां भ्वा०पर०सक०सेट् । महति अमहीत् मेहतुः ।

**मह** वृद्धौ भ्वा० आ० अक० सेट् इदित् । मंहते अमंहिष्ट ।

**मह** पूजने अद० चु० उभ० सक० सेट् । महयति-ते अम-महत्-त ।

**मह** पु० मह-घञर्थे क । १उत्सवे सततानन्दजनकव्यापारे अमरः । २तेजसि मेदि० । ३यज्ञे पु०४महिषे च पुंस्त्री० हेमच० ।

**महत्** त्रि० मह-अति । १विपुले २वृद्धे च स्त्रियां ङीप् महती ३राज्ये न० मेदि० । ४सांख्योक्ते महत्तत्त्वे पु० "प्रकृतेर्महानिति" श्रुतिः । "मनो महान् मतिर्ब्रह्मा" इत्युक्ते ५हिरण्यगर्भलिङ्गदेहे प्रा० भा० सर्वनामस्थाने नुमदीर्घौ महान् महान्तौ एकार्थशब्दे परे समासे तस्थाने आ । महाधनम्

**महती** स्त्री मह-अत्+गौरा० ङीष् । १वीणाभेदे अमरः २नारदवीणायाम् भरत: ।"अवेक्षमाणं महतीं मुहुर्मुहुः" माघः । ३वृहत्यां ४वार्त्ताक्यां ५विपुलायां स्त्रियाञ्च राजनि० । समासे तौस्थाने आ । महत्या घासः महाघासः इत्यादि ।

**महत्तत्त्व** न० कर्म० । सांख्योक्तप्रकृत्यादिचतुर्विंशतितत्त्वमध्ये प्रकृतिकार्ये अहङ्कारादिकारणे निश्चयात्मकवृत्तिविशिष्टे तत्त्वभेदे । [भेदे च ।

**महर्** अव्य० मह-अर । १ऊर्ध्वस्थे चतुर्थे लोके २व्याहृति-

**महर्लोक** पु० कर्म० । भूरादिषु ऊर्ध्वस्थे सप्तलोकान्तर्गते चतुर्थे लोके

**महर्षि** पु० कर्म० । परमर्षिशब्दार्थे वेदव्यासादौ त्रिका० । "ऋषिर्हि गतौ धातुर्विद्यासत्यतपःश्रुतः । एष सन्निपयो यस्मात् ब्रह्मणश्च ततस्त्वृषिः । निवृत्तिसमकालन्तु बुद्ध्या व्यक्तर्षिस्त्वयम् । ऋषते परमं यस्मात् परमर्षिस्ततः स्मृतः । गत्यर्थादृषतेर्धातोर्नाम निर्वृतिकारणम् । यस्मादेष स्वयम्भूतस्तस्माच्च ऋषिता मता । तेनेश्वराः स्वयम्भूता ब्रह्मणो मानसाः सुताः । निवर्त्तमानैस्तैर्बुद्धा महान् परिगतः परम् । यस्मादृषिः परत्वेन महांस्तस्मान् महर्षयः" मत्स्यपु०१२०अ० तल्लक्षणोक्तिः

**महल्लिक** पु० "गुणाम्बुधोऽनुमतो यः स्त्रीस्वभावो महल्लिकः शब्दमालोक्ते अन्तःपुरररक्षकभेदे (खोजा) ।

**महस्** न० मह-असुन् । १तेजसि २उत्सवे च मेदि० ३यज्ञे शब्दर० । [शब्दच०। २स्तोत्रायां शब्दर०।

**महा** स्त्री मह-अच् । (गोरक्षचाकलिया) १गोपवल्लराम्

**महाकण्टकिनी** स्त्री महत् कण्टकमस्त्यस्य भूम्ना इनि ङीप (फणिमनसा) वृक्षभेदे शब्दच० । [३मूलके च शब्दर०

**महाकन्द** पु० कर्म० । १लशुने अमरः । २राजपलाण्डौ

**महाकपित्थ** पु० कर्म० । १बिल्ववृक्षे त्रिका० । २रक्तलशुने ४चाणक्यमूलके राजनि० ।

**महाकरञ्ज** पु० कर्म० । करञ्जभेदे (काँटाकरञ्जा) राजनि०

**महाकर्णिकार** पु० कर्म० । आरग्वधे (सोंदाल) राजनि०

**महाकाय** पु० ६ब० । १शिवानुचरभेदे नन्दिनि त्रिका० २हस्तिनि पुंस्त्री० स्त्रियां टाप् । ३विपुलदेहयुते त्रि० । कर्म० । ४स्थूलदेहे पु० ।

**महाकार्त्तिकी** स्त्री कार्त्तिकीमधिकृत्य "प्राजापत्यं यदा भत्तं तथैतस्यां नराधिप ! । सा महाकार्त्तिकी प्रोक्ता" इत्युक्तायां रोहिणीनक्षत्रयुक्तायां कार्त्तिकपौर्णमास्याम् ।

**महाकाल** पु० कर्म० । १अनवच्छिन्ने काले, २शिवे च "महाकालेन च समम्" कालिकाध्यानम् । (माकाल) ३लताभेदे रत्नमा०। ४भैरवभेदे च "महाकालं यजेद्देव्या दक्षिणे धूम्रवर्णकम्" इति कालीतन्त्रम् ।

**महाकाव्य** न०कवेः कर्म काव्यं कर्म० । सर्गबन्धरूपे अष्टाधिकसर्गके ग्रन्थभेदे तल्लक्षणं साहित्यदर्पणे ६प० दृश्यम्

**महाकुम्भी** स्त्री महती कुम्भीव (पाना) कटफले राजनि०।

**महाकुल** न० कर्म०। "दशपुरुषविख्यातं श्रोत्रियाणां महाकुलम्" इति मनूक्ते दशपुरुषावधिवेदाध्यायिवंशे।

**महाकुलीन** त्रि० महाकुले भवः खञ्। महाकुलोद्भवे।

**महाकोशफला** स्त्री कर्म०। देवदालीलतायाम् राजनि०।

**महाकोषातकी** स्त्री कर्म०। हस्तिघोषायाम् राजनि०।

**महागन्ध** न० महान् गन्धोऽस्य। १हरिचन्दने २बोले च राजनि०। ३जलवेतसे वृक्षे पु० शब्दच०। ४नागबलायां ५व्यविकायां च स्त्री राजनि०। ६चामुण्डायां स्त्री हेम०

**महागुरु** पु० कर्म०। "त्रयः पुरुषस्यातिगुरवो भवन्ति पिता माता चाचार्य्यश्च" स्मृत्युक्ते पुरुषस्य १पित्रादौ "पतिरेकोगुरुः स्त्रीणा" मित्युक्ते दत्तकन्याया २भर्त्तरि अदत्तकन्यायाः पितरि, मातरि च। "महागुरुनिपाते च काम्यं किञ्चिन्नचाचरेत्" स्मृतिः।

**महागुल्मा** स्त्री महान् गुल्मोऽस्याः। सोमवल्ल्याम् राजनि०

**महागुहा** स्त्री महती गुहेव मूलमस्याः। पृश्निपर्ण्याम् राजनि०। [ङीष्। २दीर्घग्रीवायुक्ते त्रि० स्त्रियां टाप्।

**महाग्रीव** पुंस्त्री० महान् ग्रीवाऽस्य। १उष्ट्रे राजनि० स्त्रियां

**महाघोषा** स्त्री घुष्यते कर्मणि घञ् कर्म०। १कर्कटशृङ्ग्याम्। (काकड़ासिङ्गे) मेदि०। २कुन्दुरुक्यां शब्दच०। महान् घोषोऽस्य अत्र वा। ३विपुलशब्दवति त्रि०। ४हट्टे न० मेदि०।

**महाङ्ग** पुंस्त्री० महदङ्गमस्य। १उष्ट्रे स्त्रियां ङीष्। २गोक्षुरके ३रक्तचित्रके च राजनि०। ४विपुलावयवयुते त्रि०। कर्म०। ५विपुलाङ्गे न०।

**महाच्छद** पु० महान् छदोऽस्य। देवताड़वृक्षे रत्नमा०।

**महाच्छाय** पु० महती छाया यस्य। १वटवृक्षे राजनि०। २विपुलच्छायायुक्ते त्रि०। [राजनि०

**महाच्छिद्रा** स्त्री महत् छिद्रमस्याः। महामेदायाम्

**महाजटा** स्त्री महती जटा यस्याः। १रुद्रजटावृक्षे राजनि०। २विपुलजटायुते त्रि०। कर्म०। ३बृहत्यां, जटायाम् स्त्री।

**महाजन** पु० कर्म०। वेदवाक्येषु श्रद्धावति जने। "महाजनो येन गतः स पन्थाः" भा० व० यक्षप्रश्नः।

**महाज(म्बु)म्बू** स्त्री कर्म०। राजजम्ब्वाम् रत्नमा०। दीर्घान्तः भावप्र० "राजजम्बूफलं स्वादु विष्टम्भि गुरु रोचनम्"।

**महाजाली** स्त्री कर्म०। १पीतवर्णघोषायाम् अमरः। २राजकोषातक्यां राजनि०।

**महाज्यैष्ठी** स्त्री "ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा। पूर्णिमा रविवारेण महाज्यैष्ठी प्रकीर्त्तिता" उक्तलक्षणायां ज्यैष्ठपौर्णमास्याम्। "महाज्यैष्ठ्यां तु यः पश्येत् पुरुषः पुरुषोत्तमम्" प्रा० त० लक्षणान्तरं दृश्यम्

**महाज्योतिष्मती** स्त्री कर्म०। (बड़मालकाङ्गनी) लताभेदे राजनि०। [२महति प्रभौ त्रि०।

**महाढ्य** पु० महेन उत्सवेनाढ्यः। १कदम्बे राजनि०। कर्म०।

**महातरु** पु० कर्म०। १स्नुहीवृक्षे हेमच०। २विपुलवृक्षे च।

**महातल** न० कर्म०। अधःस्थेषु पातालेषु मध्ये पञ्चमे पाताले शब्दमा०। [देव्यां हेमच०।

**महातारा** स्त्री कर्म०। तन्त्रोक्ते १तारिणीभेदे २जिन-

**महाताली** स्त्री कर्म०। विपुलतालीभेदे राजताल्याम् राजनि०

**महातिक्त** पु० कर्म०। १निम्बवृक्षे राजनि०। २अतिशयतिक्तरसयुते त्रि०। ३यवतिक्तायां स्त्री राजनि०। ४पाठायां शब्दमा०। [२अतितीव्रे त्रि०।

**महातीक्ष्णा** स्त्री कर्म०। १भल्लातवृक्षे (भेला) राजनि०

**महातेजस्** पु० महत् तेजोऽस्य। १पारदे राजनि०। २अतितेजस्विनि त्रि०। ३कार्त्तिकेये हला०। ४वह्नौ पु० शब्दच०। ५चित्रकवृक्षे च। [महाशये।

**महात्मन्** न० महान् आत्मा स्वभाव आशयो वा यस्य।

**महादान** न० कर्म०। विनायकादिस्तत्तजपाङ्गके तुलापुरुषादिषोड़शदाने "अथातः संप्रवक्ष्यामि महादानस्य लक्षणम्" इत्युपक्रम्य "आद्यन्तु सर्वदानानां तुलापुरुषसंज्ञकम्" इत्यादिना षोड़शदानान्यभिधाय "विनायकादिग्रहलोकपालवस्वष्टकादित्यमरुद्गणानाम्। ब्रह्माच्युतेशार्कवनस्पतीनां स्वमन्त्रतो होमचतुष्टयं स्यात्। जप्यानि सूक्तानि तथैव चैषामनुक्रमेणापि यथास्वरूपमित्युक्तं मात्स्ये। विस्तरस्तु मत्कृततत्त्वदानादिपद्धतौ ज्ञेयः।

**महादारु** न० कर्म०। देवदारुणि जटा०।

**महादेव** पु० कर्म०। "ब्रह्मादीनां सुराणाञ्च मुनीनां ब्रह्मवादिनाम्। तेषां महत्त्वात् देवोऽयं महादेवः प्रकीर्त्तितः" इत्युक्ते "महती पूजिता विश्वे मूलप्रकृतिरीश्वरी। तस्याः देवः पूजितश्च महादेवस्ततः स्मृतः" इत्युक्ते च शिवे। [महत्त्वम्। २वृहद्वृक्षे च।

**महाद्रुम** पु० कर्म०। १अश्वत्थवृक्षे शब्दच०। तस्य विष्णुरूपत्वात्

**महाधन** न० महत् मूल्यरूपं धनमस्य। १बहुमूल्ये अमरः। २सुवर्णे ३सिह्लके च मेदि०। ४कनीयस्के हेमच०

५कम्पो पु० शब्दरत्नावली । ६अतिशयधनयुते त्रि० ।

**महाधातु** पु० कर्म० । स्वर्णे शब्दच० । [नद्याञ्च ।

**महानदी** स्त्री । १ओड्रदेशस्थे नदीभेदे २समुद्रगामिन्यां

**महानन्द** पु० महान् अतिद्वहत् १आनन्दो यत्र । १मोक्षे हेमा०कर्म० । २अतिशयानन्दे पु० "माघमासस्य या शुक्ला नवमी लोकपूजिता । महानन्देति सा प्रोक्ता" इत्युक्तायां ३माघशुक्लनवम्यां ४सुरायां राजनि० ५नदीभेदे च स्त्री ।

**महानन्दि** पु० कलौ चन्द्रनन्दकरस्य महापद्मनृपभेदस्य पितरि ।

**महानवमी** स्त्री कर्म० । आश्विनशुक्लमधिकृत्य "ततोऽस्तु नवमी यस्मात् सा महानवमी स्मृता" इत्युक्तायाम् आश्विनशुक्लनवम्याम् ।

**महानस** न० महदनः संशायाम् अच् । पाकस्थाने अमरः ।

**महानाटक** न० दृश्यकाव्यनाटकभेदे "एतदेव यदा सर्वैः पताकास्थानकैर्युतम् । अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे" । सा० द० प० । २हनुमन्नाटके च ।

**महानाद** पुंस्त्री० महान् नादोऽस्य । १गजे स्त्रियां ङीष् । २गर्जन्मेघे मेदि० ३सिंहे पुंस्त्री० स्त्रियां ङीष् ४कर्णे च हेमच० । ५उष्ट्रे पुंस्त्री० राजनि० स्त्रियां ङीष् । ६कण्ठवाद्ये पु० हारा० । कर्म० । ७महति शब्दे च ।

**महानिद्रा** कर्म० । मरणे जटा० तत्र पुनः प्रत्युत्थानाभावात्तथात्वम् ।

**महानिम्ब** पु० कर्म० । (घोडानिम) वृक्षभेदे रत्नमा० ।

**महानिशा** स्त्री "महानिशा तु विज्ञेया मध्यमप्रहरद्वयम्" इत्युक्ते रात्रेर्मध्यमप्रहरद्वये ।

**महानील** पु० कर्म० । १भृङ्गराजे २मणिभेदे "यस्तु वर्णस्य भूयस्त्वात् क्षीरे शतगुणे स्थितः । नीलतां तद्गुणात् सर्वं महानीलः स उच्यते" गरुडपु० ७२ अ० । ३नागभेदे मेदि० ४महाजम्ब्वां राजनि० ५तन्त्रभेदे न० । ६नीलापराजितायां स्त्री राजनि० गौरा० ङीष् । [शब्दर० ।

**महानुभाव** पु० महाननुभाव आशयो यस्य । महाशये

**महापञ्चमूलक** न० वृहत्पञ्चमूले । "बिल्वोऽग्निमन्थः श्योनाकः काश्मर्यः पाटला तथा । सर्वैस्तु मिलितैरेतैः स्यान्महापञ्चमूलकम्" राजनि० ।

**महापञ्चविष** "शृङ्गी च कालकूटश्च मुस्तको वत्सनाभकः । शङ्खकर्णीति योगोऽयं महापञ्चविषाभिधः" इत्युक्ते पञ्चविधे विषे ।

**महापत्रा** स्त्री महत् पत्रमस्याः । महाजम्बूवृक्षे रत्नमा० ।

**महापथ** पु० कर्म० । १राजमार्गे हेमच० । २हिमालयोत्तरस्थे ३स्वर्गारोहणपथे च ।

**महापद्म** पु० कर्म० । १अष्टनागमध्ये नागभेदे हेमच० २कुबेरस्य निधिभेदे जटा० "अर्बुदमब्जं खर्वनिखर्वमहापद्मेति" लीलावत्युक्तायाम् ३अयुतकोटिसंख्यायां ४तत्संख्यान्विते न० ५नृपभेदे महानन्दिसुते च ६शुक्लपद्मे रत्नमा० ।

**महापातक** न० "ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुस्तत्संसर्गश्च पञ्चमः" इत्युक्तेषु पञ्चसु पातकेषु महापापमध्यत ।

**महापिण्डीतक** पु० कर्म० । कृष्णवर्णे विपुलमदनवृक्षे राजनि०

**महापीलु** पु० कर्म० । मधुपीलौ राजनि० अतिमधुरत्वात्तस्य हि महत्त्वम् ।

**महापुराण** न० न० "सृष्टिश्चापि विसृष्टिश्च स्थितिस्तेषाञ्च पालनम् । कर्मणां वासना वार्त्ता मनूनाञ्च क्रमेण च । वर्णनं प्रलयानाञ्च मोक्षस्य च निरूपणम् । उत्कीर्त्तनं हरेरेव देवानाञ्च पृथक् पृथक् । महापुराणं विज्ञेयमेकादशकलक्षणम्" ब्रह्मवै० ज० १३२अ० इत्युक्तलक्षणे व्यासप्रणीते पुराणभेदे ।

**महापुरुष** पु० कर्म० । १श्रेष्ठे नरे २नारायणे च । "वन्दे महापुरुष ! ते चरणारविन्दमिति भागवतम् ।

**महापुरुषदन्ता** पु० महापुरुषस्य विष्णोः दन्ता इव महत्त्वात् मूलान्यस्य । शतमूल्याम् रत्नमा० ।

**महापुष्पा** स्त्री महत् वन्यपुष्पत्वेन प्रशस्तं, पत्र मेलना हृहत् वा पुष्पं यस्याः । अपराजितायाम् शब्दच० ।

**महाप्रलय** पु० कर्म० । ब्रह्मणो दिनावसाने जायमानः सर्वभूतक्षयः प्रलयः तस्यैव स्वमानेन शतवर्षावसाने जायमानस्तु महान् प्रलयः १तस्मिन् २तदुपलक्षिते जन्यद्रव्यानधिकरणीभूते काले च । ३जन्यभावानधिकरणीभूते काले इत्यन्ये । तत्र प्रमाणाभाव इति नव्यनैयायिकाः

**महाप्रासाद** पु० "पादोदकञ्च निर्माल्यं नैवेद्यञ्च विशेषतः । महाप्रसाद इत्युक्त्वा ग्राह्यं विष्णोः प्रयत्नतः" इत्युक्ते १देवनैवेद्यादौ २विपुलप्रसन्नतायाञ्च ।

**महाप्राण** पुंस्त्री० महान् बहुकालस्थायित्वात् श्रेष्ठः प्राणो यस्य । १द्रोणकाके राजनि० स्त्रियां ङीष् कर्म० । २वर्णोच्चारणस्य वाह्यप्रयत्नभेदे स च वर्गद्वितीयचतुर्थवर्णानां शषसहानाञ्चोच्चारणप्रयत्नः तेषामुच्चारणे हि प्राणवायोर्भूयान् प्रयास इति तेषामपि महाप्राणत्वमुपचारात् ।

**महाफल** पु० महत् पत्रापेक्षया वृहत् फलमस्य । १बिल्व-

इचे रत्नमा०। २इन्द्रवारुण्यां (राखालशशा) स्त्री जटा०।

**महाबल** पु० महत् बलं यस्य। १वायौ २दयबले बुद्धे च लिङ्गा० ३महाबलयुते त्रि०। महत् बलं यस्मात् ६ब०। ४सीसके न० हेमच०। ५पीतवाट्यालके स्त्री रत्नमा०।

**महाभारत** पु० न० "चत्वारश्चैकतो वेदा भारतञ्चैकमेकतः। पुरा किल सुरैः सर्वैः समस्य तुलया धृतम्। चतुर्भ्यः सरहस्येभ्यो वेदेभ्योऽभ्यधिकं यदा। तदा प्रभृति लोकेऽस्मिन् महाभारतमुच्यते। महत्त्वात् भारतत्वाच्च महाभारतमुच्यते" इत्युक्तलक्षणे व्यासप्रणीते लक्षश्लोकात्मके ग्रन्थभेदे भारतशब्दे दृश्यम्।

**महाभीता** स्त्री कर्म०।१लज्जालुलतायाम् शब्दच०।स्पर्शमात्रेण हि सङ्कोचेन तस्या अतिभीतत्वम्। २अतिभीते त्रि०।

**महाभूत** न० कर्म०। सर्वेषां पञ्चात्मकतयाऽऽधारा भूततापन्नेषु बृहत्सु पृथिव्यप्तेजोवाय्वाकाशेषु १पञ्चसु भूतेषु। "तं वेधा विदधे नूनं महाभूतसमाधिना" रघुः। २परमेश्वरे पु०"तस्यैतस्य महाभूतस्य निःश्वसितमेतत् यदृग्वेदः" इत्यादि श्रुतिः। [मतुप्शब्दे०।

**महाभूतघट** पु० षोडशमहादानान्तर्गते षोडशे महादाने

**महाभृङ्ग** पु० कर्म०। २नीलभृङ्गराजे राजनि०। [हेमच०।

**महामनस्** त्रि० महदुदारं मनस्तद्व्यापारोऽस्य। महाशये।

**महामात्र** पु० "मन्त्रे कर्मणि भूषायाम् वित्ते माने परिच्छदे मात्रा च महती येषां महामात्रास्तु ते स्मृताः" इत्युक्ते प्रधानामात्ये।

**महामाया** स्त्री कर्म०। अन्यस्मिन् अन्यधर्मावभासो हि माया सर्वजगन्मूलत्वात्तस्या महत्त्वम्। १जगत्कारणभूतायाम् अविद्यायां २तदधिष्ठात्र्यां दुर्गायाञ्च "महामाया हरेश्चैषा यया संमोह्यते जगत्" देवीमा०।

**महामाष** पु० कर्म०। राजमाषे (वरवटी) शब्दच० माषापेक्षया तस्य हि महत्त्वात्तथात्वम्।

**महामूल** पु० महत् वीर्य्यकारित्वात् श्रेष्ठं मूलमस्य। राजपलाण्डौ राजनि०।

**महामृग** पुंस्त्री०महान् मृगः पशुः।१गजे हेमच०शरभे च राजनि०तयोर्हि पशुषु महत्त्वात् तथात्वम्। स्त्रियां ङीष्

**महामेद** पु० स्त्री ६ब०। वैद्यकप्रसिद्धाष्टवर्गोक्ते ओषधिभेदे रत्नमाला। तत्रार्थे स्त्री राजनि०। "महामेदाभिधः कन्दो मोरङ्गादौ प्रजायते। शुक्लार्द्रकनिभः कन्दो लताजातः सपाण्डुरः। महामेदाभिधो ज्ञेयः" भावप्र०।

**महामोह** पु० महान् मोहः भ्रान्तिहेतुको वस्तुतोऽनिष्टेऽपि रागः। १संसारतद्विषयकारणके अज्ञानभेदे "तमोऽविवेको मोहः स्यादन्तःकरणविभ्रमः। महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा" इत्युक्ते २मैथुनादिसुखभोगेच्छारूपे अन्तःकरणवृत्तिभेदे च। वैषयिकसुखस्य वस्तुतोऽनिष्टत्वात् तथात्वम्। "दशविधो महामोहः" सा० का०। शब्दादिषु पञ्चसु दिव्यादिव्यतया दशविधेषु विषयेषु रञ्जनीयेषु राग आसक्तिः" त० कौ० उक्ते ३दशविधविषयरागे च। [१तदुपहते पु०।

**महाम्ल** न० कर्म०। १अत्यम्ले २तिन्तिडीफले च जटा०।

**महायज्ञ** पु० कर्म०। नित्यं गृहस्थकर्त्तव्ये वेदाध्ययनाग्निहोत्रपितृतर्पणभूतबलिकर्मातिथिपूजनरूपेषु पञ्चसु कर्मसु।

**महारजत** न० कर्म०। १काञ्चने २धुस्तूरे च अमरः। तस्य हि रञ्जकत्वात् महत्त्वम्, कर्म०।३महद्रौप्ये च।

**महारजन** न० रजत्यनेन ल्युट् कर्म०। १कुसुम्भपुष्पे अमरः २स्वर्णे च मेदि०।

**महारथ** पु० "एकादश सहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च विज्ञेयः स महारथः" इत्युक्ते योधभेदे

**महारस** पु० ६ब०। १खर्जूरे २कशेरुणि ३कोषकारे मेदि० ४इक्षौ पु०काञ्जिके न०जटा०। कर्म० ५पारदे पु० राजनि०। "दरदः पारदं शस्त्रो वैक्रान्तं कान्तमभ्रकम्। माक्षिकं विमलश्चेति स्युरेतेऽष्टौ महारसाः" राजनि० उक्तेषु ४दरदादिषु पु०।

**महाराज(जि)क** पु० महान् सन् राजते वुन् पृषो० ह्रस्वो वा। विंशत्यधिकशतद्वयसंख्याते गणदेवभेदे।

**महाराजद्रुम** पु० कर्म०। आरग्वधे (सोन्दाल) राजनि०।

**महारात्रि** स्त्री "ब्रह्मणश्च निपाते च महाकल्पो भवेन्नृप!। प्रकीर्त्तिता महारात्रिः"इत्युक्ते महाकल्पात्मके १महाप्रलये "अर्द्धरात्रात् परं यत्तु मुहूर्त्तद्वयमुच्यते। सा महारात्रिरुद्दिष्टा" तन्त्रोक्ते अर्द्धरात्रोपरि मुहूर्त्तद्वयात्मके २रात्रिकाले।

**महाराष्ट्र** पु० कर्म०। (महाराष्ट्रा) १देशभेदे। तद्देशः कारणत्वेन अस्त्यस्या अच् गौरा० ङीष्। २जलपिप्पल्याम् ३शाकभेदे च स्त्री राजनि०। [शुभे न०।

**महारिष्ट** पु० कर्म०। १गिरिजाते निम्बभेदे राजनि०। २अत्य-

**महारोग** पु० कर्म०। "उन्मादो राजयक्ष्मा च श्वासस्त्वग्दोष एव च। मधुमेहश्चाश्मरी च तथोदरभगन्दरौ। इत्येतेऽष्टौ महारोगा महापातकसम्भवाः" इत्युक्तेषु महापातकजन्येषु उन्मादादिषु रोगेषु। (यद्याव: यद्यावदन्त)

**महारौरव** पु॰ कर्म॰। "महारौरवसंज्ञस्तु अध्योध्याख्य-संपुटे। भक्ष्यते खदिराङ्गारैः पच्यते कालमक्षयम्" इत्युक्ते नरकभेदे वह्निपु॰।

**महार्घ** त्रि॰ महानर्घो मूल्यं यस्य। बहुमूल्ये विश्वः।

**महार्णव** पु॰ कर्म॰। महासमुद्रे।

**महार्द्रक** न॰ कर्म॰। वनार्द्रके राजनि॰।

**महालय** पु॰ महान् आत्यन्तिको लयो यत्र। १परमात्मनि २तीर्थस्थाने ३विहारे ४कन्यास्थरविकमासकृष्णपक्षे न॰। "तस्यां दद्यात् न चेद्दत्तं पितॄणां वै महालये" इति भविष्यपु॰। कर्म॰। ५बृहदालये।

**महालक्ष्मी** स्त्री कर्म॰। चण्ड्याद्वितीयचरितदेवतारूपे "सेवे सैरिभमर्द्दिनीमिह महालक्ष्मीं सरोजस्थिताम्" इत्युक्त-लक्षणे अष्टादशभुजान्विते १दुर्गाशक्तिभेदे तन्त्रोक्ते २लक्ष्मीभेदे च।

**महानीलसरस्वती** स्त्री तारिणीभेदे तन्त्रसा॰।

**महालोध्र** पु॰ कर्म॰। लोध्रभेदे (पाठिया लोध) रत्नमा॰।

**महावरा** पु॰ वृणोति विस्तृणाति वृ-अच् कर्म॰। दूर्वायाम् शब्दर॰। [तारभेदे।

**महावराह** पु॰ कर्म॰। वृहद्वराहरूपधारिणि भगवद-

**महावरोह** पु॰ महान् अवरोहोऽस्य। वटवृक्षे राजनि॰।

**महावल्ली** स्त्री कर्म॰। माधवीलतायाम् शब्दच॰।

**महावाक्य** न॰ कर्म॰। परस्परसंबद्धार्थके १वाक्यसमुदायरूपे एकवाक्ये "वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते" मीमांसकाः। वेदान्तोक्ते २ब्रह्मविद्याप्रतिपादके तत्त्व-मस्यादुपनिषद्वाक्ये ३दानादौ अभिलापवाक्ये च।

**महाविद्या** स्त्री कर्म॰। "काली तारा महाविद्या षोडशी भुवनेश्वरी। भैरवी छिन्नमस्ता च विद्या धूमावती तथा। बगला सिद्धविद्या च मातङ्गी कमलात्मिका। एताः दश-महाविद्याः" इत्युक्तासु काल्यादिषु दशसु देवीषु।

**महाविष** पु॰ द्व॰। द्विमुखसर्पे जटा॰।

**महाविषुव** न॰। रवेर्मेषसंक्रमणे। तत्संक्रमणस्य स्वरूपतः संक्रमणं प्रभापुञ्जस्य संक्रमणं वा। तत्र प्रभापुञ्जसंक्र-मणमयनांशानुसारेण षण्मासाधिककाल् पश्चिमतः सरेरैके-कांशं परित्यज्य ततः पश्चात्पश्चात्तरादौ स्थाने भवति इदानीं च पश्चादयनं पूर्वायने तु पूर्वपूर्वतरादौ स्थाने भविष्यति। इत्यतस्तच्चञ्चलमनियतस्थानत्वात् स्वरूपसंक्रमस्तु स्थिरः सर्वदैकस्थाने जायमानत्वात्। अयनसंक्रान्तिशब्दे दृश्यम्।

**महावीचि** पु॰ नास्ति वीचिः सुखं यत्र स अवीचिः कर्म॰। १दुःखरहिते, "यत्र कल्लोलेन नीयते" इत्युक्ते २नरकभेदे च।

**महा(बी)वीर** पु॰कर्म॰।१गरुडे २हनुमति ३सिंहे ४यज्ञाग्नौ ५वज्रे ६श्वेतहरके ७यज्ञाश्वके च मेदि॰। ८शोभाञ्जने च ९कोकिले हेम॰। १०धनुर्द्धरे ११एकवीरवृक्षे राजनि॰ १२महाशूरे पु॰ १३क्षीरकाकोलीवृक्षे स्त्री रत्नमा॰। १४यज्ञसाधने स्वमये पात्रभेदे तन्निर्माणविधिः कात्या॰श्रौ॰२६।१ सूत्रादौ दृश्यः।

**महा(बी)वीर्य्य** पु॰ द्व॰। १वाराहीकन्दे राजनि॰।२परमा-त्मनि च शब्दर॰। ३अतिबलयुते त्रि॰। ४वनकार्पास्यां स्त्री राजनि॰।५संज्ञायां सूर्य्यपत्न्याञ्च स्त्री त्रिका॰।

**महावृहती** स्त्री कर्म॰। वार्त्ताक्याम् त्रिका॰।

**महावृक्ष** पु॰ कर्म॰। १स्नुहीवृक्षे हारा॰। २वृहत्तरौ च।

**महाव्याधि** पु॰ कर्म॰। महारोगे कुष्ठादौ रोगे।

**महाव्याहृति** स्त्री कर्म॰। वैदिके भूर्भुवःस्वरात्मके मन्त्रत्रये

**महाव्रण** न॰ कर्म॰। (नालिघा) दुष्टव्रणे।

**महाव्रत** न॰ कर्म॰। १अतिशयव्रते शारदीयदुर्गापूजादौ "महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम्" देवीपु॰। २द्वादशवार्षिके प्रायश्चित्तात्मके व्रतभेदे च।

**महाशङ्ख** पु॰ कर्म॰। तन्त्रे वीराचारप्रसिद्धे नरकपाला-स्थिजाते "ललाटास्थिखण्डेन रचिता जपमालिका। महाशङ्खमयी माला ताराविद्याजपे प्रिया" इत्युक्ते १भाल्यभेदे २वृहच्छङ्खे च। "पौण्ड्रं दध्मौ महाश-ङ्खम्" गीता। [त्रि॰।

**महाशठ** पु॰ कर्म॰। १राजधत्तूरे राजनि॰। २अतिधूर्त्ते

**महाशणपुष्पी** स्त्री शणस्येव पुष्पमस्याः ङीप् कर्म॰। वृह-च्छणपुष्प्याम् राजनि॰। स्वार्थे क। तत्रैव।

**महाशता** स्त्री शतं मूलानि सन्त्यस्याः अच् कर्म॰। वृह-च्छतावर्य्याम् राजनि॰।

**महाशतावरी** स्त्री कर्म॰। वृहच्छतावर्य्याम् राजनि॰।

**महाशय** त्रि॰ महान् उदार आशयो यस्य। महानुभावे अमरः। [राजनि॰।

**महाशाखा** स्त्री महती शाखाऽस्याः। नागबलायाम्

**महाशालि** पु॰ कर्म॰। स्थूलशालौ हेमच॰।

**महाशीता** स्त्री महती शीता शीतलवीर्य्या। १शतमूल्याम् शब्दच॰। २अतिशीतले त्रि॰।

**महाशुक्ति** स्त्री महती शुक्लाकारत्वेन प्रायशस्त्वात् शुक्तिः।

मुक्ताहेतौ शुक्तौ राजनि० । [स्त्री ङीप् ।

**महाशूद्र** पु०कर्म०। १आभीरे (आहीर) जातिभेदे २तत्स्त्र्यां

**महाश्मशान** न० कर्म० । काश्याम् समूलकर्मव्यपहितसर्वजी-
वानां पुनरनुत्पादनाय नाशाधारत्वात् तस्यास्तथात्वम् ।

**महाश्यामा** स्त्री कर्म० । १श्यामालतायां रत्नमा० । २शिं-
शपाभेदे राजनि० ।

**महाश्रावणिका** स्त्री कर्म० । (मुण्डकुड़ी) क्षुपभेदे राजनि०

**महाश्वेता** स्त्री कर्म० । १सरस्वत्याम् त्रिका० २कृष्णभूमि-
कुष्माण्डे च अमरः ।

**महाष्टमी** स्त्री कर्म० । "आश्विने शुक्लपक्षस्य भवेद् या तिथि-
रष्टमी । महाष्टमीति सा प्रोक्ता" इत्युक्तायामाश्विन-
शुक्लाष्टम्याम् । [राजनि० ।

**महासर्ज** पु० कर्म० । १असनवृक्षे २पनसवृक्षे च (काटाल)

**महासह** पु० कर्म०, १पुष्पप्रधाने कुब्जकवृक्षे राजनि०।२माषप-
र्ण्याम् स्त्री ३अम्लानवृक्षे च स्त्री अमरः।४अतिक्षमे त्रि०

**महासान्तपन** न०। कर्म०। सप्ताहसाध्ये स्मृत्युक्ते व्रतभेदे।

**महासार** पु० महान् सारोऽस्य । दुष्खदिरे राजनि० ।

**महासिंह** पु० नित्यक० । १शरभे राजनि० २वृहत्सिंहे च

**महासुगन्धा** स्त्री सुष्ठु गन्धोऽहिहिंसा वाऽस्याः कर्म० ।
१गन्धनाकुल्याम् राजनि० २अतिसुगन्धयुक्ते त्रि० ।

**महासेन** पु० महती सेनाऽस्य । १कार्त्तिकेये अमरः । २सु-
वृहत्सेनाधिपतौ च ।

**महास्कन्धा** स्त्री महान् स्कन्धोऽस्याः। जम्बूवृक्षे राजनि०।

**महाहास** पु० कर्म० । अट्टहासे उच्चैर्हासे शब्दर० ।

**महाहिगन्धा** पु० अहेर्गन्धो हिंसा यस्मात् अहिगन्धो
नकुलः समत्वेनास्त्यस्य अच् कर्म० । गन्धनाकुल्याम्
राजनि० । [२अतिसर्वे त्रि०

**महाह्रस्वा** स्त्री कर्म०। १कपिकच्छ्वाम् (आलकुशी) शब्दमा०

**महि(ही)** स्त्री मह-इन् वा ङीप् ।१पृथिव्याम् । ङीबन्तस्तु
माळवदेशस्थे २नदीभेदेऽपि ।

**महिका** स्त्री मह्यते मह-क्वुन् । हिमे अमरः ।

**महिमन्** पु० महतो भावः इमनिच् डित्त्वेन टिलोपः ।
१महत्त्वे २ईश्वरैश्वर्यभेदे हेमच० । [२अर्कवृक्षे च ।

**म(मि)हिर** पु० मह-(मिह-)वा किरच् ।१सूर्ये त्रिका० ।

**महिला** स्त्री मह-इलच्।१योषिति अमरः ।२प्रियङ्गुलतायां
३रेणुकागन्धद्रव्ये राजनि० ४मत्तायां स्त्रियाञ्च शब्दर० ।
एलच् । महेलापि योषिति शब्दर० ।

**महिष** पुंस्त्री० मह-टिषच् । १वनाख्याते पशुभेदे,
स्त्रियां ङीष् । २महिषासुरे च ।३कृताभिषेकायां राज्ञः
स्त्रियां ४सैरिन्ध्र्याम् ५ओषधिभेदे च स्त्री मेदि० ङीष् ।
६व्यभिचारिण्यां स्त्रियां माहिषिकशब्दे दृश्यम् ।

**महिषध्वज** पु० महिषो ध्वजः चिह्नं वाहनत्वेनास्य ।
१यमे २जिनभेदे च हेमच० महिषवाहनादयोऽप्यत्र ।

**महिषमर्दिनी** स्त्री महिषं महिषासुरं मृद्नाति मृद-
णिनि ङीप् ६त० । दुर्गाभेदे । [क तत्रैव ।

**महिषाक्ष** पु० महिषस्याक्षीव अच्समा० । गुग्गुलुभेदे । स्वार्थे

**महिषासुर** पु० रम्भासुरेण महिष्यामुत्पादिते असुरभेदे ।

**महिषासुरसम्भव** पु० महिषासुरात्तन्मेदसः सम्भवति
सम्+भू-अच् । भूमिजगुग्गुलौ राजनि०। [न्द्रे अमरः ।

**महीक्षित्** पु० महीं क्षयते ईष्टे क्षि-ऐश्वर्ये क्विप् तुक् च ।

**महीज** न०मह्या जायते जन-ड । १आर्द्रके राजनि० । २म-
ङ्गलग्रहे ३नरकासुरे च पु०४सीतायां स्त्री । [धरोऽप्यत्र ।

**महीध्र** पु०महीं धारयति धृ-क। पर्वते अमरः । अच् । मही०

**महीप्राचीर** न० मह्याः प्राचीरमिवावरकत्वात् । समुद्रे
त्रिका० । [क्विप् । १पर्वते २भूमिपाले च ।

**महीभृत्** पु० महीं बिभर्त्ति धारयति पालयति वा भृ-

**महीयस्** त्रि० अतिशयेन महान् महत्+ईयसुन् टिलोपः ।
अतिमहति "महतो महीयान्"श्रुतिः ।

**महीयमान** त्रि० महीयते मही+कण्ड्वा० यक्-शानच् ।
१पूज्ये २श्रेष्ठे च "महीयमाना भवताऽतिमात्रम्" भट्टिः।

**महीरुह** पु० मह्यां रोहति रुह-क ।१वृक्षे अमरः २शाकवृक्षे
राजनि० ।

**महीलता** स्त्री मह्या लतेव । (केँचो) किञ्चुलुके अमरः ।

**महेच्छ** त्रि० महती इच्छा यस्य । महाशये अमरः ।

**महेन्द्र** पु० महान् इन्द्रः इन्द्रस्यापि नियन्तृत्वात् । १परमे-
श्वरे २महैश्वर्यवति इन्द्रे ३जम्बुद्वीपस्थपर्वतभेदे च मेदि०

**महेन्द्रकदली** स्त्री महेन्द्रप्रिया तद्वर्णा वा कदली ।
कदलीभेदे राजनि० । [द्योऽप्यत्र राजनि० ।

**महेन्द्रपुरी** स्त्री ६त० । अमरावत्याम् । महेन्द्रनगर्या-

**महेन्द्रवारुणी** स्त्री महेन्द्रस्य वरुणस्य तयोरियं प्रियत्वात्
अण् देवताद्वन्द्वे उत्तरपदवृद्धिः कर्म० । (बड़माकाल)
लताभेदे राजनि० । [अमरः ।

**महेरणा** स्त्री महं गजोत्सवमीरयति ल्यु । शल्लकीवृक्षे

**महेश** पु० कर्म० । शिवे । महेश्वरोऽप्यत्र "महेश्वरस्त्र्यम्बक
एव नापरः" इति रघुः ।

**महेशबन्धु** पु० ६त० । बिल्ववृक्षे शब्दच० ।

**महैला** स्त्री॰ कर्म॰। स्थूलैलायाम् (बड़एलाची) राजनि॰।

**महोक्ष** पु॰ महान् उक्षा अच् समा॰। वृहद्वृषे अमरः। "महोक्षं वा महाजं वा श्रोत्रियाय प्रकल्पयेत्" मनुः।

**महोटी** स्त्री महान्ति फलापेक्षया स्थूलानि अटानि पर्णान्यस्याः ङीप् ] वृहत्यां क्षुपभेदे भावप्र॰।

**महोत्पल** पु॰ कर्म॰। १पद्मे, २सारसपक्षिणि च अमरः।

**महोत्सव** पु॰ कर्म॰। अनन्तसुखसम्पादकव्यापारे।

**महोत्साह** त्रि॰ महान् उत्साहो यस्य। अत्यन्तोद्यमयुक्ते महोद्यमोऽप्यत्र।

**महोदधि** पु॰ कर्म॰। समुद्रे।

**महोदय** पु॰ महान् उदयो ऋद्धिराधिपत्यं वा यत्र। १कान्यकुब्जदेशे।२तद्देशस्थे पुरभेदे न॰। ३मोक्षे पु॰मेदि॰ ४स्वामिनि पु॰हेमच॰। "अमार्कपाते श्रवणम्" इत्यादि वचनात् अलभ्ययोगविशेषे, "किञ्चिद्यूने महोदयः" इत्युक्ते किञ्चिदूने ५योगभेदे पु॰। ६नागबलायां स्त्री राजनि॰।

**महोदरी** स्त्री॰ महदुदरं यस्याः। १शतमूल्याम् भावप्र॰। २वृहदुदरयुक्ते त्रि॰। [त्रि॰।

**महोन्नत** पु॰ कर्म॰।१तालवृक्षे भावप्र॰। २अत्यन्तोन्नतियुक्ते

**महोरग** पु॰ कर्म॰। वृहत्सर्पभेदे महोरगाकारोऽस्त्यस्य अच्। २तगरमूले न॰ रत्नमा॰।

**महोल्का** स्त्री कर्म॰। वृहदुल्कायाम्।

**महौषध** न॰ कर्म॰। १शुण्ठ्याम् २लशुने ३वाराहीकन्दे वत्सनाभे ४विषे, ५भूम्याहुल्यके राजनि॰ ६पिप्पल्याम् शब्दच॰ ७अतिविषायाम् अमरः रत्नौषधशौषधमात्रे च।

**महौषधि** स्त्री कर्म॰। १दूर्वायां २लज्जालुक्षुपे शब्दच॰। "सहदेवी तथा व्याघ्री बला चातिबला त्वच शङ्खपुष्पी तथा सिंही अष्टमी च सुवर्चला। महौषध्यष्टकं प्रोक्तम्" इत्युक्ते ३देवादीनां स्नानीयद्रव्यभेदे। वा ङीप्। ४श्वेतकण्टकार्यां ५ब्राह्म्यां ६कटुकायाम् ७अतिविषायाञ्च राजनि॰ दक्षिणमोचिकायाम् त्रिका॰।

**महौषधिगण** पु॰ "पृश्निपर्णी श्यामलता भृङ्गराजः शतावरी। गुडूची सहदेवी च महौषधिगणः स्मृतः" शब्दच॰उक्ते पृश्निपर्ण्यादौ ओषधिगणे। [अमित समे।

**मा** शब्दे अक॰ माने सक॰ जु॰ आ॰ अनिट्। मिमीते

**मा** माने अदा॰ प॰ सक॰ अनिट्। माति अमासीत्।

**मा** माने दि॰ डित् आ॰ सक॰ अनिट्। मायते अमास्त।

**मा** अव्य॰ ङिदनुबन्धात् दैवादिकात् आदादिकाद्वा माधातोः क्विप्। १वारणे। धातोर्ङित्त्वेन शब्दे ङित्त्वव्यवहारात् "न माङ्योगे" पा॰ ङिदनुबन्धमाङ्योग एव योगे न अडागमः तद्भिन्नयोगे तु स्यादेव"मा निषाद। प्रतिष्ठां त्वमगमः" इति रामायणम्। मा-क-टाप्। २लक्ष्म्याम् मेदि॰३मातरि च स्त्री। मा-सम्प॰भावे क्विप्। ४माने स्त्री शब्दर॰।

**मांस** न॰ मन-स दीर्घश्च। "मांस भक्षयितामुत्र यस्य मांसमिहाद्म्यहम्। इति मांसस्य मांसत्वम्" मनूक्ते प्राणिदेहस्थशोणितपरिपाकजे धातुभेदे भावप्रकाशे मांसवर्गे तद्गुणाः उक्ता दृश्याः। पाकपचनशब्दे परे समासेऽस्यान्त्यलोपः "मांस्पचन्या उखायाः" महाभाष्यम्।

**मांसच्छदा** स्त्री मांसं छादयति छद-णिच्-अच् ह्रस्वः। मांसरोहिण्यां लतायाम् राजनि॰।

**मांसज** न॰ मांसाज्जायते जन-ड। देहस्थे मांसजन्ये मेदसि हेमच॰। अधककरशब्दे दृश्यम्।

**मांसदलन** पु॰ मांसं स्नीहात्मकं मांसं दलयति दल-णिच्-ल्यु। स्नीहघातकद्रुमे शब्दच॰। [राजनि॰।

**मांसद्राविन्** पु॰ मांसं द्रावयति णिच्-णिनि। अम्लवेतसे

**मांसपेशि** स्त्री कृत॰। गर्भस्थावयवभेदे। वा ङीप् तत्रैव भावप्र॰। [राजनि॰।

**मांसफला** स्त्री मांसमिव कोमलं फलं यस्याः। वार्ताक्याम्

**मांसमासा** स्त्री मस-परिणामे घञ् मांसस्य परिणामो यस्याः ५ ब॰। माषपर्ण्याम् राजनि॰।

**मांसरोहिणी** स्त्री मांसं रोपयति रुह-णिच् णिनि वा न पुक्। सुगन्धिद्रव्यभेदे (चामकषा)। राजनि॰।

**मांसल** त्रि॰ मांस+बलवत्त्वे लच्। १बलवति अमरः। २स्थूले ३पुष्टे च। [राजनि॰।

**मांसलफला** स्त्री मांसलं पुष्टं फलमस्याः। वार्ताक्याम्

**मांससार** पु॰ ६त॰। मेदसि राजनि॰। मांसस्नेहादयोऽप्यत्र

**मांसहासा** स्त्री मांसेन हस्यते कर्मणि घञ्। देहस्थचर्मणि शब्दर॰। [(कसाइ) अमरः।

**मांसिक** त्रि॰ मांसं पण्यमस्य ठक्। मांसविक्रयोपजीविनि।

**मांसिनी** स्त्री मांसलटाकारस्तद्वत्त्वं वाऽस्त्यस्याः इनि। जटामांस्याम् राजनि॰।

**मांसी** स्त्री मांसमस्त्यस्य अच् गौ॰ ङीष्। १जटामांस्याम् २कक्कोल्याञ्च मेदि॰ ३मांसच्छदायां राजनि॰।

**मांसिष्टा** स्त्री मांसमिष्टं यस्याः। वल्गुलायां खगभेदे राजनि॰

**माकन्द** पु॰ माति मा-क्विप् माः प्रमितः कन्दोऽस्य।

३आम्रे । २आमलक्यां स्त्री राजनि० ३नगरभेदे च स्त्री मेदि० गौरा० ङीष् । ४पीतचन्दने शब्दच० ।

**माकरी** स्त्री मकरस्य तदुत्तरविक्रकालस्य इयम् अण् । मकरस्थितरविककाले तद्‌ारब्धमाघमासस्य शुक्लसप्तम्यां "तस्मै रोगश्च शोकश्च माकरी हन्तु सप्तमी" ति० त० ।

**माच** स्म् ृ कायां भ्वा०पर०सक०सेट् इदित् । माङ्क्रति अमाङ्क्षीत् ।

**माचि(ची)क** न० मच्छिकाभिः सम्भृत्य कृतम् अण् पृषो० वा दीर्घः । १मधुनि अमरः । तत्तुल्यगुणे उपधातुभेदे २स्वर्णमाक्षिके ३रौप्यमाक्षिके च राजनि० । [राजनि०।

**माचिकज** न० माचिकाज्जायते जन-ड । सिक्थके (मोम)

**माचिकफल** पु० माचिकमिव मधुरं फलमस्य । मधुनारिकेले राजनि० ।

**माचि(ची)कशर्करा** स्त्री ६तत्० मधुजाते खण्डभेदे राजनि०

**मागध** पु० मगधदेशे भवः अण् ।१श्वेतजीरके मेदि० २स्तुतिपाठके अमरः क्षत्रियायां वैश्याज्जाते ३वर्णसङ्करभेदे (भाट) च । ४यूथिकायां ५पिप्पल्यां स्त्री मेदि० ङीप् । ६सूक्ष्मैलायां ७शर्करायां शब्दच० ८भाषाविशेषे च स्त्री हेमच०।९मगधदेशजाते त्रि० ।

**मागधखारिका** स्त्री जीवाबन्धुक्त खारिकाभेदे ।

**माघ** पु० मघानक्षत्रयुक्ता पौर्णमासी अण् ङीप् माघी सास्मिन् मासे पुनरण् । चैत्रावधिके ११एकादशे चान्द्रे मासे । २तत्पौर्णमास्यां स्त्री ङीप् । ३शिशुपालवधकाव्ये ४तत्कर्त्तरि च पु० । "तावद्भा भारवेर्भाति यावन्माघस्य नोदयः" इत्युद्भटः ।

**माघ्य** न० माघे भवं यत् । कुन्दपुष्पे अमरः ।

**माङ्गल्य** न० मङ्गलमेव, मङ्गलाय हितं वा ष्यञ् । १मङ्गले २मङ्गलसाधने च । [त्रायमाणायाम् राजनि० ।

**माङ्गल्यार्हा** स्त्री माङ्गल्यमर्हति अर्ह-अच् । त्रायमाणा-

**माचिका** स्त्री मच-ण्वुल् ।१अम्बष्ठायां राजनि० । २मच्छिकायाञ्च त्रिका० ।

**माञ्जिष्ठ** न० मञ्जिष्ठया रक्तमण् । १रक्तवर्णे २तद्वति त्रि०

**माठर** पु०मन-चरन् ठान्तादेशः ततः स्वार्थे अण्, सूर्यस्य परिपार्श्वे मठति मठ-अरन् वा । सूर्यस्य १पारिपार्श्विकेगणभेदे अमरः । २व्यासे मेदि० । ३विप्रे हेमच० । ४शौण्डिके त्रि० कौ० ।

**माण(न)क** न० मन-अकच् णुट् सुट् वा । स्वनामख्याते कन्दभेदे "हरिद्रा माण(न)कं कचुः" नवपत्रिकोक्तौ ।

**माणव** पु० मनोरपत्यं अण् अल्पार्थे णत्वम् । १अल्पवयस्के मनुष्ये शब्दच० । स्वार्थे क । तदर्थे हारभेदे च हेम० ।

**माणवीन** त्रि० माणवस्येदम् खञ् । बालकसम्बन्धिनि ।

**माणव्य** न० माणवानां समूहः यत् । बालकसमूहे ।

**माणिक्य** न०मणिरिव कायति कै-क स्वार्थे ष्यञ् । (माणिक) १रक्तवर्णे रत्नभेदे, २स्टहगोधिकायां स्त्री हेमच० ।

**माणिबन्ध(मन्थ)** न० मणिबन्ध(मन्थ) पर्वते भवः अण् । सैन्धवलवणे अमरः ।

**मातङ्ग** पुंस्त्री० मतङ्गस्य मुनेरयम् अण् । १गजे अमरः । २किरातजातिभेदे स्त्रियां ङीप् ।३जैनभेदे पु०हेमच० । ४दशमहाविद्याभेदे स्त्री ङीप् ।

**मातङ्गमकर** पु० मातङ्ग इव मकरो जलजन्तुः । महामत्स्यभेदे राजनि० ।

**मातरपितृ** स्त्री द्वि० व० माता च पिता च द्वन्द्वे मातृशब्दस्य मातरादेशः । मातापित्रोः । पक्षे मातुरानङ् । मातापितृ तयोर्द्वयोः द्वि० व० ।

**मातरिश्वन्** पु० मातरि आकाशे श्वयति वर्द्धते श्वि-कनिन् डित्त्व अलुक्स० । वायौ अमरः । [इन्द्रसारथौ अमरः ।

**मातलि** पु० मतं लाति ला-क मतलस्यापत्यम् इञ् ।

**माता** स्त्री मा-तृच् । जनन्याम् । "विश्वेश्वरीं विश्वमाताम्" इति दुर्गास्तवः । [२तदुपत्न्यां स्त्री गौरा०ङीष् ।

**मातामह** पु० मातुः पिता मातृ+डामह । १मातुः पितरि

**मातुल** पु० मातुर्भ्राता मातृ-डुलच् । १मातुर्भ्रातरि अमरः २तत्पत्न्यां वा ङीष् वा आनुक् च । मातुलानी मातुली मातुला च । मद-क्विप्-उलच् पृषो० ह्रस्व तः । ३धुस्तूरे ४व्रीहिभेदे५मदनवृक्षे च मेदि० ।६सर्पभेदे हेम० ।

**मातुलपुत्रक** न० मातुलस्य धुस्तूरस्य पुत्र इव कायति कै-क । १धुस्तूरे अमरः । ६त० स्वार्थे क । २मातुलसुते ।

**मातुलाहि** पु० मातुल इवाहिः । मातुवाने सर्पे अमरः ।

**मातुलुङ्ग** पु० मातुलं गच्छति गम-खच् डित्त्व पृषो० । १बीजपूरे भरतः । २मधुकर्कुट्याम् स्त्री रत्नमा० । स्वार्थे क । ३बीजपूरे अमरः ।

**मातृ** त्रि० मा-तृच् । १प्रमाणकर्त्तरि २परिमाणकर्त्तरि ३जीवे ४आकाशे च मातरिश्वा । मातारौ मातारः । मा-तृ । "ब्राह्मी माहेश्वरी चण्डी वाराही वैष्णवी तथा । कौमारी चैव चामुण्डा चर्चिकेत्यष्ट मातरः" इत्युक्तौ ५शिवसहचरीभेदे ।६जनन्याम् ७भूमौ ८विभूतौ शब्दर० ।९लक्ष्म्याम् हेमच० १०रेवत्याम् अमरः ११स्त्रीः

न्यां मेदि० १२आखुकर्णाम् १३इन्द्रवारुण्याम् (राखालशशा) १४जटामांस्यां राजनि०। चण्डीप्रसिद्धासु १५देवीशक्तिषु च। "मातः कोपमथाविशः" देवीमा०। अतिदेशिकमातरश्च ब्रह्मवै०पु०गण०ख०१५अ०उक्ता यथा "स्तन्यदात्री गर्भधात्री भक्ष्यदात्री गुरुप्रिया। अभीष्टदेवपत्नी च पितुः पत्नी च कन्यका। सगर्भजा या भगिनी पुत्रपत्नी प्रियाप्रसूः। मातुर्माता पितुर्माता सोदरस्य प्रिया तथा। मातुः पितुश्च भगिनी मातुलानी तथैव च। जनानां वेदविहिता मातरः षोडश स्मृताः"।

ब्रह्मवै० पु० जन्मख० ५८ अ० अन्यविधा उक्ता यथा "गुरुपत्नी राजपत्नी देवपत्नी तथा वधूः। पितुः स्वसा शिष्यपत्नी भृत्यपत्नी च मातुली। पितृपत्नी भ्रातृपत्नी श्वश्रूश्च भगिनीसुता। गर्भधात्रीष्टदेवी च पुंसः षोडश मातरः"। तत्रैव २५ अ० "गुरोःपत्नी राजपत्नी विप्रपत्नी च या सती। पत्नी च भ्रातृसुतयोर्मित्रपत्नी च तत्प्रसूः। प्रसूः पितृोश्च योर्भ्रातुःपत्नी श्वश्रूः स्वकन्यका। जननी तत्सपत्नी च भगिनी सुरभी तथा। स्वाभीष्टसुरपत्नी च धात्री कान्ता प्रदायिका। गर्भधात्री स्तनाम्नी च भयात्रातुश्च कामिनी। एता वेदप्रणीताश्च सर्वेषां मातरः स्मृताः"। अस्य रूपं मातरौ मातरः। पृथ्व्यादौ पूज्यासु गौर्यादिषु १६देवीशक्तिभेदेषु "गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः। शान्तिः पुष्टिर्धृतिस्तुष्टिरात्मदेवतया सह" सु०त०स्कन्दपु०।

**मातृका** स्त्री मातेव कायति कै-क। १उपमातरि २ब्रह्माण्यादिषु चण्डीप्रसिद्धदेवीमूर्त्तिषु ३सर्वशब्दोत्पादकेषु अकारादिक्षान्तपञ्चाशदक्षरेषु ४मातरि च मेदि०। मातृ+स्वार्थे क। मातृशब्दार्थे।

**मातृबन्धु** पु० ६त०। "मातुः पितुःस्वसुः पुत्रा मातुर्मातुःस्वसुः सुताः। मातुर्मातुलपुत्राश्च विज्ञेया मातृबन्धवः" इत्युक्तेषु मातुः पितृष्वस्रीयादिषु। मातृबान्धवोऽप्यत्र।

**मातृष्वसृ** स्त्री ६त०। मातृभगिन्याम् कस्कादि० उभयत्र षत्वम्। मातुःष्वसाप्यत्र।

**मातृष्वस्रेय** पु० मातृष्वसुरपत्यम् ढक्। १मातृभगिनीपुत्रे २तत्कन्यायां स्त्री ङीप्। छण्। मातृष्वस्रीयोऽप्यत्र।

**मतृसिंही** स्त्री मातुः प्रमातुः सिंहीव। वासकवृक्षे शब्दर०

**मात्र** न० मा-त्रन्। १कार्त्स्न्ये २अवधारणे च अमरः। ३परिच्छदे ४अल्पे ५परिमाणे स्त्री अमरः। ६कर्णभूषायाम् ७वित्ते ८वर्णावयवभेदे च स्त्री मेदि०। "कालेन यावता पाणिः पर्येति जानुमण्डलम्। सा मात्रा कविभिः प्रोक्ता" इत्युक्ते ९ह्रस्ववर्णोच्चारणकाले च स्त्री। "एकमात्रो भवेद् ह्रस्वः"। मीयन्तेऽनया विषयाः मा-करणे ष्ट्रन्। १०इन्द्रियवृत्तौ। "मात्रास्पर्शास्तु कौन्तेय!" गीता।

**मात्रापताका** स्त्री छन्दोग्रन्थोक्ते मात्राछन्दस्सु लघुगुरुस्थानाद्युपयोगे पताकाकारे चक्रे।

**मात्रामर्कटी** स्त्री छन्दोग्रन्थोक्ते मात्राछन्दस्सु लघुगुरुस्थानानयने मर्कटीजालचक्रभेदे। [मेरुचक्रे।

**मात्रामेरु** पु० छन्दोग्रन्थोक्ते मात्राछन्दस्सु लघुगुरुस्थानाद्युपयोगे

**मात्रावृत्त** न० मात्रया कृतं वृत्तम्। आर्यादौ छन्दोभेदे।

**मात्सर्य्य** न० मत्सरस्य भावः ष्यञ्। परगुणद्वेषे "मात्सर्य्यमुत्सार्य्य विचार्य्य धूर्य्याः" सा०द०। [असमन्वीत।

**माथ** वधे भ्वा० क्लेशे भ्वा० आ० प० सेट्‌ इदित्। मान्थति

**माथ** पु० मथ-घञ्। १पथि त्रिका०। २मन्थने शब्दर०।

**माथुर** त्रि० मथुरायां भवः मथुरायाः आगतो वा अण्। १मथुरानगरीभवे, २तत आगते च।

**माद** पु० मद-घञ्। १दर्पे २हर्षे च भरतः।

**मादक** त्रि० मदयति मद-णिच्-ण्वुल्। १मत्तताकारके द्रव्ये। माद्यति कर्त्तरि ण्वुल्। २दात्यूहे पुंस्त्री० शब्दमा० स्त्रियां ङीष्।

**मादन** न० मादयति मद-णिच्-ल्यु। १लवङ्गे शब्दच०। २कामदेवे ३मदनवृक्षे च पु०। ४विजयायां राजनि० ५माकन्द्याञ्च स्त्री भावप्र०गौरा०ङीष्। ६हर्षकारके त्रि०।

**मादृ(च)(श)श्** त्रि० ममेव दर्शनमस्य दृश्-कञ् ट क्विप् वा। मम तुल्यदर्शने मत्सदृशे। [-अतिविषायाञ्च राजनि०।

**माद्री** स्त्री मद्रे भवा अण्। १पाण्डुराजस्य द्वितीयपत्न्याम्

**माधव** पु० मायाः धवः। १नारायणे। मधु+स्वार्थे अण्। २वसन्ते विद्वः "स माधवेनाभिमतेन सख्या" कुमारः। मधुने पुष्परसाय मद्याय वा हितः अण्। ३वैशाखे मासि तस्य बहुपुष्पवत्त्वात् तद्धितत्वम्। ४मधूकवृक्षे तत्पुष्पेण हि मद्यसम्भवः। ५श्यामाहवे च राजनि०। मधु बाहुल्येनास्त्यस्याः अण्। ६वासन्तीलतायाम् स्त्री ङीप्।

**माधवीलता** स्त्री कर्म०। स्वनामख्यातायां लतायाम् अमरः

**माधवेष्टा** स्त्री माधवे वैशाखे माधवस्य कृष्णस्य वा इष्टा। वाराहीकन्दे राजनि०। [२माधवप्रिये त्रि०।

**माधवोचित** न० माधवे उचितः। १कक्कोले राजनि०

**माधवोद्भव** पु० माधवे वैशाखे उद्भवति फलवत्त्वेन उद्+भू-अच्। (पियाल) राजादन्याम् राजनि०।

**माधुर** न० मधु-राति अमरेभ्यो ददाति रा—क-स्वार्थे, मधुरस्येदं वा अण्। १मल्लिकापुष्पे त्रिका०। २मधुरसम्बन्धे त्रि०।

**माधुरी** स्त्री मधुरस्य भावः ष्यञ् माधुर्य्यं षित्त्वात् स्त्रीत्व-पक्षे ङीष् यलोपः। १माधुर्य्ये मधुरत्वे, "मद्यस्तवन्माधुरी धारा" इत्युद्भटः। मधुरा+स्वार्थे अण्। २मदिरायाम्

**माधुर्य्य** न० मधुरस्य भावः ष्यञ्। १मधुरत्वे "चित्तद्रवीभावमयो ह्लादो माधुर्य्यमुच्यते" सा०द० उक्ते २काव्यगुणभेदे च। तद्व्यञ्जकवर्णाश्च तत्रोक्ता यथा "मूर्द्ध्नि वर्गान्त्यवर्णेन युक्ताः टठडढान् विना। रणौ लघु च तद्व्यक्तौ वर्णाः कारणतां गताः। अवृत्तिरल्पवृत्तिर्वा मधुरा रचना मता"। तत्र सम्भोगशृङ्गारादावनुगुणं यथोक्तं तत्रैव "सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात्" ३लावण्ये हेम०। "रूपं किमप्यनिर्वाच्यं तनोर्माधुर्य्यमुच्यते" उज्ज्वलमणौ तल्लक्षणमुक्तम्।

**माध्यन्दिन** न० मध्यन्दिनमेव-अण्। मध्यमदिने तत्र भावः अण्। शुक्लयजुर्वेदीयशाखाभेदे।

**माध्वीक** क्ली मधुना मधूकपुष्पेण निर्वृत्तम् ईकक्। १मधूकपुष्पजाते मद्ये अमरः। मधु एव अण् स्वार्थे ईकक्। २द्राक्षाफले "साध्वी माध्वीक! चिन्ता विजहाति" इति जयदेवः। [नारिकेले राजनि०।

**माध्वीकफल** पु० माध्वीकमिव मधुरं फलमस्य। मधु-

**माध्वीमधुरा** पु० माध्वीकमिव मधुरा पृषो० कलोपः। मधुरखर्जूरिकायाम् राजनि०।

**मान** विचारे भ्वा० सक० सेट् स्वार्थे सन् नेट्। मीमांसते अमीमांसिष्ट अर्थार्था च तत्र न स्वार्थे सन्।

**मान** अर्चे वा चु० उ० पक्षे भ्वा० पर० सक० सेट्। मानयति ते मानति अमीमनत्-त अमानीत्।

**मान** न० मा-ल्युट्। १परिमाणे कुडवप्रस्थादौ द्रव्यपरिच्छेदे भावप्र० मानपरिभाषा कर्षशब्दे दृश्या। २प्रमाणे "मानाधीना मेयसिद्धिः" मीमांसकाः। मानाङ्के कालक्रियायां तालविरामोपलक्षिते ३कालव्यापारे च मेदि०। मन-घञ्। आत्मनि उत्कर्षाभिमानात्मिकायां ४चित्तसमुन्नतौ पु० अमरः। "स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये" इत्युक्ते ५अनुरक्तदम्पत्योः ६अवस्थाभेदे पु०। "मुञ्च मयि मानमनिदानम्" जयदेवः। ७सम्माने च।

**मानग्रन्थि** पु० मानस्य ग्रन्थिर्बन्धनं यस्मात्। अपराधे हारा०

**मानरन्ध्रा** स्त्री मानाय कालप्रमाणज्ञानाय रन्ध्रं यस्याः। ताम्रनिर्मिते सच्छिद्रे कालज्ञानहेतौ घटीयन्त्रभेदे त्रिका०।

**मानव** पु० मनोरपत्यम् अण्। १मनुष्ये अमरः। स्त्रियां जातौ ङीष्। सा च २स्वायम्भुवकन्यायाम् भारतम्। ३शासनदेवताभेदे हेमच०। २बाले पु० शब्दर०।

**मानस** न० मन एव अण्। १मनसि अमरः। कैलासान्तिकस्थे ब्रह्मणा मनसा कृते २सरोवरभेदे च। मनस इदम् अण्। ३चित्तसम्बन्धिनि त्रि०।

**मानसव्रत** न० मनसा कृतं मानसं कर्म०। "अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यमकल्कता। एतानि मानसानि व्रतानि" इत्युक्तेषु अहिंसादिषु। [मानयादयोऽप्यत्र।

**मानसौकस्** पु० मानसमोको यस्य। हंसे अमरः मान-

**मानिनी** स्त्री मान-इनि ङीप्। १फलीहक्षे मेदि०। २मानवत्यां स्त्रियां च। ३मानयुते त्रि० ४सिंहे पु० राजनि०।

**मानुष** पु० मनोरयम् अण् षुक् च। मानवे, ततो जातौ स्त्रियां ङीप् मानुषी। मानुषस्येदम् अण्। २मनुष्यसम्बन्धिनि त्रि० स्त्रियां ङीप्। सा च ३चिकित्साभेदे शब्दर०।

**मानुष्य** न० मानुषस्य भावः यत्। मनुष्यत्वे।

**मानोज्ञक** न० मनोज्ञस्य भावः मनोज्ञा० वुञ्। मनोहरत्वे

**मान्द्य** न० मन्दस्य भावः ष्यञ्। १रोगे हेम० २मन्दतायाञ्च।

**मान्धातृ** पु० मामिन्द्रं धयति धे-तृच्। "मामयं धास्यतीत्यस्मात् मान्धाता सौ प्रकीर्त्तितः" इति निरुक्ते युवनाश्वराजपुत्रे नृपभेदे। [२मल्लिकायां स्त्री शब्दमा०।

**मान्य** पु० मान-अर्चायां कर्मणि ण्यत्। १पूज्ये जटा०।

**मामक** त्रि० मम-इदम् अस्मद्+वुञ् ममादेशः। मत्सम्बन्धिनि खञ्। मामकीनोऽप्यत्र।

**माया** स्त्री मा-यत् बा० नेत्त्वम्। १शाठ्ये कापट्ये अमरः। २इन्द्रजालादौ ३मिथ्याबुद्धिहेतुज्ञानभेदे, ४कृपायां ५दम्भे ६बुद्ध्यां च मेदि०। ७बुद्धमातरि स्त्री अमरः। ८ईश्वरस्योपाधौ, अघटनघटनसाधिकायां शक्तौ वेदान्त०। ९पीताम्बरे १०असुरभेदे पु० मेदि०। [(बाजीकर) शब्दर०।

**मायाकृत्** पु० मायामिन्द्रजालं करोति कृ-क्विप्। मायाकरे

**मायादेवीसुत** पु० ६त०। बुद्धे अमरः।

**मायावत्** त्रि० माया+अस्त्यर्थे मतुप् मस्य वः। १मायाविशिष्टे २कंसराजे पु० शब्दर०। ३कामपत्न्यां स्त्री ङीप् जटा०।

**मायाविन्** त्रि॰ माया+अस्त्यर्थे विनि । १मायाकरे स्त्रियां ङीप् २बिडाले पु॰ राजनि॰ । [मायीयस्त ।

**मायिक** त्रि॰ मायाऽस्त्यस्य ठन् । मायाकरे जटा॰ । इनि

**मायु** पु॰ मा-यु नाऽनादेशः । देहस्थे पित्ते धातौ अमरः ।

**मायूर** न॰ मयूराणां समूहः तस्येदं वा अण् ।१मयूरसङ्घे । २मयूरसम्बन्धिनि त्रि॰ स्त्रियां ङीप् । [याम् राजनि॰।

**मायूरी** स्त्री मयूरस्येदं प्रियत्वात् अण् ङीप् । अजमोदा-

**मार** पु॰ मृ-घञ् । १मरणे । मारयति मृ-णिच्-अच् । २कामदेवे ३विघ्ने मेदि॰। ४धुस्तूरे च शब्दच॰ ।

**मारक** पु॰ मृ-णिच्-ण्वुल् मृ-णिच् घञ् स्वार्थे क वा । १मरके मारिभये त्रिका॰ । (बाज) २पक्षिभेदे च । ३नाशके त्रि॰ । जन्मलग्नावधिकाष्टमस्थानपतौ ४ग्रहभेदे पु॰"भाग्यव्ययाधिपत्येन रन्ध्रेशोमारकः स्मृतः"पराशरः । ५द्वितीयसप्तमाधीशे च मारकस्थानशब्दे दृश्यम् ।

**मारकस्थान** न॰ मारणकारणे स्थाने । "अष्टमं चायुषः स्थानमष्टमादष्टमञ्च यत् । तयोरपि व्ययस्थानं मारकस्थानमुच्यते, इत्युक्ते जन्मलग्नात् सप्तमे द्वितीये च स्थाने । [देवे अमरः ।

**मारजित्** पु॰ मारं कामं जितवान् जि-भूते क्विप् । १जिन-

**मारण** न॰ मृ-णिच्-भावे ल्युट् ।१वधे अमरः । करणे ल्युट् । वैरिवधसाधने तन्त्रोक्ते अभिचारकर्मभेदे च ।

**मारि(री)** स्त्री मृ-णिच्-इन् ।१मारणे । वा ङीप् । "मारीभये राजभये"इति वटुकस्तवः । ङीबन्तः २दुर्गाशक्तिभेदे मेदि॰।

**मारिष** पु॰ रिष-हिंसायाम् क निषेधार्थकमाशब्देन स॰ । नाट्योक्तौ १आर्ये हिंसानिवारकतया तस्य तथात्वम् । २तण्डुलीयशाके च अमरः ।३दक्षमातरि स्त्री मेदि॰टाप्

**मारीच** पु॰ ताटकाराक्षसीपुत्रे रावणानुचरे १राक्षसविशेषे २कक्कोलके ३याजकब्राह्मणे मेदि॰। ४राजगजे पुंस्त्री॰ जटा॰ स्त्रियां ङीष् ।

**मारुतव्रत** न॰ "प्रविश्य सर्वभूतानि यथा चरति मारुतः । तथाचरैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम्" मनूक्ते राज्ञां धर्मभेदे । [मारुतिरप्यत्र ।

**मारुतात्मज** पु॰ ६त॰ । १हनुमति २भीमे च इञ् ।

**मारुतापह** पु॰ मारुतं वायुदोषमपहन्ति अप+हन-ड । १वरुणवृक्षे राजनि॰ । २वायुदोषनाशके त्रि॰ ।

**मार्कण्ड** पु॰ मृकण्डोरपत्यम् अण् पृषो॰ । १मुनिभेदे तद्दृष्टे २लताभेदे (भुँइखखसा) स्त्री भावप्र॰ स्वार्थे क । तत्रार्थे ।

**मार्कण्डेय** पु॰ मृकण्डोरपत्यं शुभ्रा॰ ढक् पृषो॰ । १मृकण्डुमुनिपुत्रभेदे तेन प्रोक्तम् अण् । व्यासप्रणीते पक्षिमार्कण्डेयसंवादरूपे २महापुराणभेदे न॰। तत्प्रतिपाद्यविषयाश्च नारदपु॰ पूर्वभागे ९७अ॰ उक्ता यथा ।

"यत्राधिकृत्य शकुनीन् सर्वधर्मनिरूपणम् । मार्कण्डेयेन मुनिना जैमिनेः प्राक् समीरितम् । पक्षिणां धर्मसंज्ञानां ततो जन्मनिरूपणम् । पूर्वजन्मकथा चैषां विक्रिया च दिवस्पतेः । तीर्थयात्रा बलस्याथो द्रौपदेयकथानकम् । हरिश्चन्द्रकथा पुण्या युद्धमाजीवकाभिधम् । पितापुत्रसमाख्यानं दत्तात्रेयकथा ततः । हैहयस्याथ चरितं महाख्यानसमाचितम् । मदालसाकथा प्रोक्ता ह्यलर्कचरिताचिता । सृष्टिसंकीर्त्तनं पुण्यं नवधा परिकीर्त्तितम् । कल्पान्तकालनिर्देशो यक्षसृष्टिनिरूपणम् । रुद्रादिसृष्टिरप्युक्ता द्वीपवर्षानुकीर्त्तनम् । मनूनाञ्च कथा नाना कीर्त्तिताः पापहारिकाः । तासु दुर्गाकथात्यन्तं पुण्यदा चाष्टमेऽन्तरे । तत्पश्चात् प्रणवोत्पत्तिस्त्रयीतेजःसमुद्भवः । मार्त्तण्डस्य च जन्माख्या तन्माहात्म्यसमाचिता । वैवस्वतान्वयश्चापि वत्सप्रचरितं ततः । खनित्रस्य ततः प्रोक्ता कथा पुण्या महात्मनः । अविक्षिच्चरितं चैव किमिच्छव्रतकीर्त्तनम् । नरिष्यन्तस्य चरितं इक्ष्वाकुचरितं ततः । तुलस्याश्चरितं पश्चाद्रामचन्द्रस्य सत्कथा । कुशवंशसमाख्यानं सोमवंशानुकीर्त्तनम् । पुरूरवःकथा पुण्या नहुषस्य कथाद्भुता । ययातिचरितं पुण्यं यदुवंशानुकीर्त्तनम् । श्रीकृष्णबालचरितं माथुरं चरितं ततः । द्वारकाचरितञ्चाथ कथा सर्वावतारजा । ततः साङ्ख्यसमुद्देशः प्रपञ्चासत्त्वकीर्त्तनम् । मार्कण्डेयस्य चरितं पुराणश्रवणे फलम्" । यः शृणोति नरो भक्त्या पुराणमिदमादरात् । मार्कण्डेयाभिधं वत्स ! स लभेत् परमां गतिम् । यस्तु व्याकुरुते चैतच्छैवं स लभते पदम् । तत्प्रदद्याल्लिखित्वा यः सौवर्णकरिसंयुतम् । कार्त्तिक्यां द्विजवर्याय स लभेद् ब्रह्मणः पदम् । शृणोति श्रावयेद्वापि यश्चानुक्रमणीमिमाम् । मार्कण्डेयपुराणस्य स लभेद् वाञ्छितं फलम्" ।

**मार्कव** पु॰ मारयति क्षिप-मारि केशकीटं कूयते कू-अच् । भृङ्गराजे (केशरिया) अमरः । [अममार्गत त ।

**मार्ग** संस्कारे सर्पणे च चुरा॰ उभ॰ सक॰ सेट् । मार्गयति

**मार्ग** अन्वेषणे वा चु॰ उभ॰ पक्षे भ्वा॰ प॰सक॰ सेट् । मार्ग-

यति-ते मार्गति । अममार्गत् त । अमार्गीत् ।

**मार्ग** पु०मृज-गुङो-मार्ग-अन्वेषणे वा घञ् ।।पथि अमरः । तद्भेदा यथा "लिंशद्धनूंषि विस्तीर्णो देशमार्गस्तु तैः कृतः । विंशद्धनुर्ग्राममार्गः सीमामार्गो दशैव तु । धनूंषि दश विस्तीर्णः श्रीमान् राजपथः स्मृतः । नृवाजिरथनागानामसम्बाधः सुसञ्चरः । धनूंषि चैव चत्वारि शाखारथ्यास्तु निर्म्मिताः । त्रिकरायोपरथ्यास्तु द्विकरायोपरथ्यका । जङ्घापथस्तत्वादद्विपादश्च गृहान्तरम् । वृतिपादस्त्वर्द्धपादः प्राग्वंशः पादकः स्मृतः । अवकरः परिवारः पादमात्रः समन्ततः । प्राइट्काले तु प्राहृती कर्त्तव्या अन्यथा नहि" देवीपु० ।

**मार्गण** न० मार्ग-ल्युट् । १अन्वेषणे अमरः। २याचने ३प्रणये च मेदि० । कर्त्तरि ल्यु । ४याचके त्रि० ५शरे पु० अमरः ।

**मार्गशिर** पु० मृगशिरया युक्ता पौर्णमासी अण् सा यत्र मासे पुनरण् । चान्द्रे १अग्रहायणे मासि २तत्पौर्णमास्यां स्त्री ङीप् शब्दर० ।

**मार्गशीर्ष** पु० साधनं मार्गशिरवत् । १अग्रहायणे मासि । अमरः। २तत्पौर्णमास्यां स्त्री ङीप् ।

**मार्गित** त्रि० मार्ग-क्त । अन्वेषिते ।

**मार्ज्ज** मार्जने सक० ध्वनौ अक० चुरा० उभ० सेट् । मार्जयति-ते अममार्जत्-त ।

**मार्ज्जन** न० मृज-ल्युट् । प्रोञ्छनादिना निर्मलीकरणे । युच् । तत्रैवार्थे स्त्री । टाप च २सुरजध्वनौ हेमच० । करणे ल्युट । सम्मार्जन्याम् (झाँटा)। स्त्री ङीप् अमरः ।

**मार्ज्जार(ल)** पुंस्त्री० मृज-आरन् वा रस्य लः । १विड़ाले अमरः स्त्रियां ङीप् ।२रक्तचित्रके पु० राजनि० । ३खट्टाशे च हेमच० । ततः संज्ञायां कन् । मयूरे ।

**मार्ज्जारगन्धा** स्त्री मार्ज्जारस्येव गन्धो यस्याः । मुद्गपर्णीभेदे रत्नमा० । स्वार्थे क अत इत्वम् । तत्रैव ।

**मार्ज्जारी** स्त्री मृज-आरक् गौरा० ङीष् । १कस्तूर्य्याम् २खट्टाशजन्तौ ३मार्जारयोषिति च मेदि० ।

**मार्ज्जारी(ली)य** पुंस्त्री० मार्ज्जार+(ल) स्वार्थे छ, मृज-आरीयक् रस्य लत्वम् वा । १विड़ाले २शूद्रे च स्त्रियां टाप् ३कायशोधने पु० मेदि० ।

**मार्जित** पु० मार्ज-क्त । २शोधिते । दधि-खण्डमधुसर्पिर्मरिचादिकृते कर्पूरादिवासिते भक्ष्यभेदे स्त्री (रसा) । भरतः

**मार्त्तण्ड** पु० मृते अण्डे भवः अण् शक० । १सूर्य्ये । तस्य मृताण्डजन्म च "मारितञ्च यतः प्रोक्तमेतदण्डं त्वयोदित । तस्मान्मुने ! सुतस्तेऽयं मार्त्तण्डाख्यो भविष्यति" मार्क० पु०। २अर्कवृक्षे अमरः । ३शूकरे पुंस्त्री० मेदि० स्त्रियां ङीष् ।

**मार्त्तिक** न० मृत्तिकया निर्मितम् अण् । १शरावे (शरा) शब्दर० ।२मृण्मये त्रि० । [शाटके अमरः ।

**मार्द्दङ्गिक** त्रि० मृदङ्गः तद्वादनं शिल्पमस्य ठक् । मृदङ्गवादके

**मार्द्दव** न० मृदोर्भावः अण् । १मृदुत्वे २परदुःखासहिष्णुतायाम् ३द्रवीभावे च "अभितप्तमयोऽपि मार्द्दवं भजते कैव कथा शरीरिणाम्" रघुः । ४सङ्कीर्णजातिभेदे पुंस्त्री० जटा०। स्त्रियां ङीष् । [२नाक्षोक्तौ भरतः

**मार्ष** पु० मृष-क ततः स्वार्थे अण् । १तत्त्वबोधशालिनि भरतः

**मार्ष्टि** स्त्री मृज-क्तिन् । शोधने ।

**माल** पु० मल-संज्ञायां कर्त्तरि घञ् । "माला भिल्लाः किरातास्च सर्वेऽपि म्लेच्छजातयः" हेमच० उक्ते १म्लेच्छभेदे २विष्णौ पु०भरतः । ३देशभेदे ४क्षेत्रे मेदि० ५कपटे हेमच० ।

**मालक** न० मल ण्वुल् । १स्थलपद्मे जटा० । २नारिकेलपात्रभेदे पु० (माला) । ३निम्बवृक्षे पु० अमरः ।

**मालकोश** पु०रागभेदे तस्य गानसमयः शरद्गतौ रात्रिशेषः ।

**मालती** स्त्री मां लक्ष्मीं शोभां वा लतति वेष्टते लत-अच् गौरा० ङीष् । १जातीलतायां २युवत्यां अमरः । ३काकमाच्यां ४नदीभेदे ५विशल्यायां ज्योत्स्नायां ७निशायाञ्च हेमच० ।

**मालतीतीरज** पु० मालत्या नदीभेदस्य तीरे जायते जन-ड । टङ्कणे (सोहागा) हेम०। मालतीतीरभवादयोऽप्यत्र

**मालतीपत्री** स्त्री मालत्यास्तन्नामकजात्या इव पत्रमस्याः । जातीपत्रयाम् (जैयत्री) राजनि० । [जातीफले राजनि० ।

**मालतीफल** न०मालत्यास्तन्नामकजात्याः फलम् । (जायफल)

**मालभारिक** त्रि०मालानां भारोऽस्त्यस्य ठन् पूर्वपदह्रस्वः । मालानां भारवति । [सङ्गीतदा० ।

**मालव** पु०। १अवन्तिदेशे (मालयोयार देश) २रागभेदे च

**मालविका** स्त्री मालवे भवा ठक् । त्रिवृति (तेओड़ि) राजनि० ।

**मालसी** स्त्री मालं मलनं जटादिना दुष्टत्वं स्यति सो-क गौरा०ङीष् । १कैशिकपुष्टिकारके वृक्षे शब्दच०। २रागिणीभेदे च सङ्गीतदा० ।

**माला** स्त्री मल-संज्ञायां कर्त्तरि घञ् । १श्रेण्यां हेमच० ।

जपसंख्यार्थं रुद्राक्षादिबीजसंघातके २माल्यभेदे च ।

**मालाकण्ट** पु० मालाकारः कण्टः कण्टको यस्य । अपामार्गे राजनि० ।

**मालाकन्द** पु० मालाकारः कन्दो यस्य । मूलभेदे राजनि० ।

**मालाकार** पुंस्त्री० मालां करोति कृ-अण् । (माली) १वर्णसङ्करभेदे स्त्रियां ङीप् । २माल्यकारके त्रि० ।

**मालाग्रन्थि** पु०मालया ग्रन्थिरत्र । मालादूर्वायाम् राजनि० ।

**मालातृण** न० मालाकारं तृणम् । भूस्तृणे अमरः । स्वार्थे क । तत्रैव ।

**मालादीपक** न० अर्थालङ्कारभेदे अलङ्कारशब्दे दृश्यम् ।

**मालादूर्वा** स्त्री मालाकारा दूर्वा । (गाठिदूर्वा) दूर्वाभेदे राजनि० । [राजनि०

**मालारिष्टा** स्त्री मालाभूतमरिष्टं यस्याः ५ ब० । पाठायाम्

**मालाली** स्त्री मालामलति भूषयति अल-अण् ङीप् । पृक्कायां (पिडिङ्गशाक) राजनि० स्वार्थे क । तत्रैव ।

**मालिक** पुंस्त्री० माला तन्निर्माणं शिल्पमस्य ठन् । १मालाकारे जातिभेदे अमरः २पक्षिभेदे पुंस्त्री० मेदि० स्त्रियां ङीप् । ३रञ्जके शब्दर० । ४माल्यकारके त्रि० ।

**मालिका** स्त्री मालैव कन् अत इत्त्वम् । १वनमल्लिकायां २ग्रीवालङ्कारे ३नदीभेदे ४पुष्पमाल्ये ५पुत्र्याञ्च मेदि० ६सुरायां हारा० । ७अतसाम् शब्दच० "पाशाक्षमालिकाम्भोज" इति लक्ष्मीध्यानम् ।

**मालिन्** पु० माला शिल्पमस्त्यस्य इनि । १मालाकारे २माल्यवति त्रि० ३मालाकारपत्न्यां ४पञ्चदशाक्षरपादके, "ननमयययुतेयं मालिनी भोगिलोकैः" छ० र० उक्ते ५छन्दोभेदे । ६गौर्याम् ७चम्पानगर्यां ८मन्दाकिन्यां कण्वाश्रमान्तिकस्थे ९नदीभेदे १०मातृकाभेदे च स्त्री मेदि० ङीप् । ११अग्निशिखावृक्षे दुरालभायां स्त्री शब्दच० ङीप् ।

**मालु** स्त्री मल-उण् ।१पत्रलतायां (पातलता)२नार्याञ्च मेदि० ।

**मालुधान** पु० मालुरिव पत्रलतेव धीयतेऽसौ धा-कर्मणि ल्युट् । (मालुयासाप) १सर्पभेदे अमरः । २लताभेदे स्त्री ङीप् मेदि० । [२कपित्थे च राजनि० ।

**मालूर** पु०मां लक्ष्मीं परेषां लुनाति लू-रक् ।१बिल्वे अमरः

**मालेय** त्रि० मालायां साधुः ढक् । १मालारचनानिपुणे २स्थूलैलायां स्त्री रत्नमा० ।

**माल्य** न० मालायै हितं यत् । १पुष्पे । स्वार्थे ष्यञ् । २पुष्पमालायाम् ।२मूर्द्धिस्थायां पुष्पमालायाञ्च अमरः ।

**माल्यपुष्प** पु० मालायै हितं माल्यं पुष्पमस्य । १शणवृक्षे २शणपुष्प्याम् स्त्री राजनि० ङीप् । कप् । माल्यपुष्पिका तत्रैवार्थे ।

**माल्यवत्** त्रि० माल्यमस्त्यस्य मतुप् मस्य वः । १माल्ययुक्ते केतुमालेलावृतवर्षयोः सीमाभूते २पर्वतभेदे ३सुकेशराक्षसपुत्रे रावणमन्त्रिणि राक्षसभेदे च । [धके त्रिका० ।

**मार्गाव्दिक** त्रि० मेति शब्दं निषेधाय करोति ठक् । निषे-

**माष** पु०मष-संज्ञायां कर्त्तरि घञ् । (माषकलाइ) व्रीहिभेदे "दयार्द्धगुञ्जं प्रवदन्ति माषम्" इत्युक्ते "गुञ्जाभिर्दशभिर्माष" इत्युक्ते च २परिमाणभेदे । स्वार्थे क । तत्रार्थे ।

**माषकलाय** पु० माषाख्यः कलायः । स्वनामख्याते व्रीहौ

**माषपर्णी** स्त्री माषस्येव पर्णान्यस्याः ङीप् । वनमाषे अमरः

**माषभक्तबलि** पु० माषमिश्रितं भक्तमेव बलिः पूजोपहार द्रव्यम् । माषमिश्रिते भक्तरूपे पूजोपहारे ।

**माषवर्द्धक** पु० माषं माषपरिमितं स्वर्णं वर्द्धयति आच्छिनत्ति अपहरति वृध-छेदने ण्वुल् । स्वर्णकारे शब्दमा० ।

**माषीण** न० माषाणां भवनं क्षेत्रं खञ् । माषव्रीहिभवनयोग्ये क्षेत्रे । यत् । माष्यमप्यत्र ।

**मास्** पु० माति परिच्छिनत्ति जगतां कालम् मा-असुन् । १चन्द्रे २त्रिंशद्दिनात्मककालरूपे मासे च ।

**मास** पु० मास्एव अण् ।१चन्द्रे त्रिंशद्दिनात्मके २काले च । स च सौरसावनचान्द्रनाक्षत्रभेदाच्चतुर्विधः । मासचन्द्रशब्दयोः दृश्यम् ।

स्वायम् अण् ।३चान्द्रे मासे तु लक्षः । मस्यते परिमीयतेऽनेन मस परिमाणे करणे घञ् । परिमाणपञ्चगुञ्जात्मके भरतः । स्वार्थे क । मासक तत्रैवार्थे ।

**मासन** न०मासं नयति नी-ड । सोमराजीलतायाम् शब्दच० ।

**मासप्रमित** पु० मासं प्रमातुमारब्धः प्र+मा-क्त ।"कालाः परिमाणे" पा० स० । प्रतिपच्चन्द्रे ।

**मासर** पु०मस-परिणामे घञ् मासं परिणामं राति रा-क । भक्तमण्डे अमरः । [मासावसाने संक्रान्त्यादौ ।

**मासान्त** पु० मासस्य सौरस्य चान्द्रस्य वाऽन्तः अवमानम् ।

**मासिक** त्रि० मासे भवः कालाट्ठञ् । १मासभवे प्रेतोद्देशेन कृतसजातीयतिथौ, प्रतिमासम् अमावस्यायां च कर्त्तव्ये २श्राद्धे न० । "मासि मासि स्वकीये तु" स्मृतिः । "पितॄणां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधा" स्मृतिः ।

**मास्म** अव्य० मस-णिच्-बा० मन् । निवारणे ।

**माह** माने भ्वा० उभ० सक० सेट् । माहति ते अमाहीत् अमाहिष्ट । ऋदित् चङि न ह्रस्वः ।

**माहाकुल** त्रि॰ महाकुले भवः अण् । महाकुलोद्भवे । खञ् माहाकुलीनोऽप्यत्र त्रि॰ ।

**माहात्म्य** न॰ महात्मनो भावः ष्यञ् । महिमनि महत्त्वे ।

**माहिष** न॰ महिष्या इदम् अण् ।१महिषीदुग्धादौ महिषस्येदम् अण् । २तच्छृङ्गादौ त्रि॰ ।

**माहिषिक** पु॰ "महिषीत्युच्यते नारी या च स्याद् व्यभिचारिणी । तां दुष्टां कामयति यः स वै माहिषिकः स्मृतः" काशीपु॰ उक्ते १व्यभिचारिणीपतौ "महिषीत्युच्यते नार्या भगेनोपार्जितं धनम् । उपजीवति यस्तस्याः स वै माहिषिकः स्मृतः" विष्णुपु॰ व्याख्यायां श्रीधरधृतवाक्योक्ते व्यभिचारिस्त्रिया २भगोपार्जितद्रव्योजीविनि च । [प्रादिते सङ्करजातिभेदे अमरः ।

**माहिष्य** पु॰ महिष्यां भवः ष्यञ् । क्षत्रेण वैश्यायाञ्जाते ।

**माहेन्द्र** पु॰ महेन्द्रस्यायम् अण् । ज्योतिषोक्ते महेन्द्रसम्बन्धिनि १दण्डभेदे । २पूर्वस्यां दिशि ३इन्द्रपत्न्यां ४गवि च स्त्री राजनि॰ ङीप् । [स्त्रीगव्यां स्त्री अमरः ङीप् ।

**माहेय** पु॰ मह्या अपत्यम् मही+ढक् । १मङ्गले २नरकासुरे च

**माहेश्वर** त्रि॰ महेश्वरादधिगतम् तत आगत अण् ।१महेश्वरतः प्राप्ते सि॰कौ॰।२यवतिक्तायां स्त्री राजनि॰ ङीप् तस्येदम् अण् "माहेश्वरी वृषारूढा" इत्युक्ते ३मातृभेदे ४दुर्गामातृ स्त्री ङीप् ।

**मि** क्षेपे स्वा॰ उभ॰ सक॰ अनिट् । मिनोति मिनुते अमासीत् अमास्त । ड्वित् क्त्रि मप् च मित्रिमम् ।

अनु+व्याप्तिहेतुके परामर्शाधीनज्ञाने ।

उप+सादृश्यहेतुके ज्ञानभेदे ।

प्र+यथार्थज्ञाने ।

**मिच्छ** बाधे तुदा॰ पर॰ सक॰ सेट् । मिच्छति अमिच्छीत् ।

**मित** त्रि॰ मि मा-वा-क्त । १परिमिते, २प्रक्षिप्ते ३ज्ञाते च ।

**मितङ्गम** पुंस्त्री॰ मितं परिमितं यद्-गच्छति -गम-खच् मुम् च । १गजे सि॰कौ॰ स्त्रियां ङीष् । २परिमितगामिनि त्रि॰ स्त्रियां टाप् ।

**मितद्रु** पु॰ मितं द्रूणि द्रवति वा क्रु नि॰ । समुद्रे हेमच॰।

**मितम्पच** पु॰ मितं पचति पच-खच् मुम् च । १कृपणे अमरः । २परिमितपाचके त्रि॰ ।

**मिति** स्त्री मा-मि-वा क्तिन् । १ज्ञाने, २माने, ३अवच्छेदे, ४विक्षेपे च । ज्ञानमात्रस्य मितिमात्रमेयविषयकत्वमिति गुरवः ।

**मि(त्त)त्र** न॰मिद्यति स्निह्यति मिद-क्त । १स्नेहान्विते सुहृदि, राज्ञां विषयानन्तरितत्वपादितरस्मिन् २राजनि तयोर्द्वयोरपि मध्यस्थस्य राज्यहरणरूपैककार्यकरत्वात् मित्रत्वम् । मि-त्र । एकतकारः ३सूर्ये पु॰ अमरः ४अर्कवृक्षे ।

**मित्रयु** पु॰ मित्रं याति या-कु । मित्रवत्सले हेमच॰ ।

**मिथ** वधे मेधायाञ्च सक॰ भ्वा॰ उभ॰ सेट् । मेथति-ते अमेथीत् अमेथिष्ट । ऋदित् चङि न ह्रस्वः । [अमरः ।

**मिथस्** अव्य॰ मिथ-असुन् । १रहसि, २अन्योन्यस्मिन्नित्यर्थे

**मिथि** पु॰ निमिराजपुत्रे विष्णुपु॰ ।

**मिथिला** स्त्री मिथि+अस्त्यर्थे लच् । स्वनामख्यातायां मिथिराजधान्याम् । [दितसृतीये राशौ च ।

**मिथुन** न॰ मिथ-उनन् किञ्च । १स्त्रीपुंसयोर्युग्मे २मेषा-

**मिथ्या** अव्य॰ मिथ-क्यप् । अयथार्थे असत्ये ।

**मिथ्यादृष्टि** स्त्री मिथ्या सफलस्यापि अफलत्वेन दृष्टिः । नास्तिकतायां सफलस्यापि वैदिककर्मणो निष्फलत्वज्ञाने अमरः । [क्षेपे करणे ल्युट् । मथने भरतः ।

**मिथ्यानिरसन** न॰ मिथ्या निरस्यतेऽनेन निर्+अस-

**मिथ्याभियोग** पु॰ मिथ्याभूतेनासत्येनाभियोगः राज्ञोऽन्तिके वेदनम् अभि-युज-घञ् । शतं मे धारयतीत्यसत्यकथा राज्ञोऽन्तिके अभियोगे अमरः ।

**मिथ्याभिशंसन** न॰ मिथ्याभूतेनासत्येनाभिशंसनम् अपवादः "त्वया स्वर्णमपहृतम्" इत्यपवादकथने ।

**मिथ्याभिशाप** पु॰ मिथ्याभूतेनासत्येनाभिशापोऽपवादः । मिथ्यापवादे । [अतद्वति तद्वत्त्वेन ज्ञाने ।

**मिथ्यामति** स्त्री मिथ्याभूतस्य मतिः मन-क्तिन् । भ्रान्तौ-

**मिथ्योत्तर** न॰ कर्म॰ । व्यवहारे "मिथ्यैतत् नाभिजानामि तदा तत्र न सन्निधिः । अजातश्चास्मि तत्काले इति मिथ्या चतुर्विधम्" इत्युक्तप्रकारे, उत्तरभेदे, ("मिथ्योत्तरे पूर्ववादे")इति स्मृतिः । [ऋदित् चङि न ह्रस्वः ।

**मिद** बाधे मेधायाञ्च भ्वा॰ उ॰सक॰सेट् । मेदति-ते अमेदीत्

**मिद** स्नेहे भ्वा॰ आ॰ लुङि प॰ अक॰ सेट् । मेदते इरित् अमिदत् आदित् भावादौ क्ते मिन्नं मेदितम् ।

**मिद** स्नेहे वा चु॰ उभ॰पक्षे भ्वा॰अक॰सेट् इदित् । मिन्दयति अमिन्दत्-त । पक्षे मिन्दति अमिन्दीत् ।

**मिद** स्नेहे दि॰ पर॰ अक॰ सेट् । मेद्यति-ते इरित् अमिदत् अमेदीत् । आदित् क्त मेदितं भिन्नम् ।

**मिद** स्नेहे चु॰ उभ॰ अक॰ सेट् ' मेदयति-ते अमीमिदत्-त

**मिन्मिन** त्रि॰ सानुनासिकयकारकारके १रोगभेदे २तद्युते

लि० । "आहत्य वायुः सकफो धमनीः शब्दवाहिनीः । नरान् करोत्यक्रियकान् मूकमिन्मिनगद्गदान्" वाग्भटवचनात् ईषदर्थे नञ् । तत्र वायोर्बोञ्छल्ये मूकत्वम् मध्यमत्वे सानुनासिकशब्दकारकता अल्पत्वे गद्गदकरत्वमिति भेदः ।

**मिल** श्लेषे तु०उभ० सक० सेट् । मिलति अमेलीत् अमेलिष्ट कुटादिरयमित्येके तेन अमिलीत् लुटि मिलता ।

**मिव** सेके भ्वा० पर० सक० सेट् इदित् । मिन्वति अमिन्वीत् ।

**मिश** ध्वनौ अक० कोपे सक० भ्वा० पर० सेट् । मेशति अमेशीत् ।

**मिशि(शी)** स्त्री मिश-इन् वा ङीप् । १मधुरिकायां (मौरी) २शतपुष्पायां, (सुलफा) भरतः ३जटामांस्याञ्च शब्दर० । अत्र पृषो०मिषि मिषी मिसि-मिसी इत्यादयः उक्तार्थेषु । तत्र पाठान्तरम् । [ वति-ते अमिमिश(स)त् त ।

**मिश्र (च)** योजने अद० चु० उभ० सक० सेट् । मिश्र(च)

**मिश्र** त्रि० मिश्र अच् ।१संयुते उत्तरपदस्थः २श्रेष्ठार्थे । यथा आर्यमिश्राः । ३गजजातिभेदे पु० हेमच० । ४ज्योतिषोक्ते कृत्तिकाविशाखानक्षत्रकद्वये च पु० । संज्ञायां कन् । ५इन्द्रवने जटा० ६औषरलवणे राजनि० ।

**मिश्रकावण** न० मिश्रकनामकं वनं पूर्वदीर्घौ णत्वञ्च । १इन्द्रोद्याने । [कायाम् राजनि० ।

**मिश्रपुष्पा** स्त्री मिश्रं पुष्पं यस्याः अजा० टाप् । मेथि-

**मिश्रवर्ण** न० मिश्रवितो वर्णो यस्य । १कृष्णागुरुणि राजनि० २मिश्रितवर्णमात्रे त्रि० । [वार्त्ताक्यां राजनि०

**मिश्रवर्णफला** स्त्री मिश्रवर्णं चित्ररूपान्वितं फलं यस्याः ।

**मिश्रव्यवहार** पु० लीलावत्युक्ते गणनाभेदे ।

**मिश्रिता** स्त्री "मिश्रिता चैव विज्ञेया मिश्रितर्क्षेषु संक्रम" इत्युक्ते १कृत्तिकाविशाखानक्षत्रकाले रविसंक्रमणे । २गौरविते न० जटा० ३मिश्रिते त्रि० ।

**मिश्रेया** स्त्री मिश्र-अच् मिश्रा ईयते ई गतौ यत् तथा कर्म० शक० । १मधुरिकायां (मौरी) अमरः । २शतपुष्पायाञ्च (सुलफा) राजनि० । [क्ता सेट् ।

**मिष** सेचने भ्वा० पर० सक० सेट् । मेषति अमेषीत् । ऋदित्

**मिष** पराभिभवेच्छायाम् तु० पर० सक० सेट् । मिषति अमेषीत् मिमेष ।

**मिष** न० मिष-क । १छले २स्पर्द्धने पु० मेदि० ।

**मिषिका** स्त्री० मिषी+स्वार्थे क । जटामांस्याम् शब्दरत्ना० ।

**मिष्ट** त्रि० मिष-क्त । १सिक्ते २स्पर्द्धिते च । ३मधुररसे पु० ४तद्वति त्रि० भावप्र० ।

**मिह** सेचने भ्वा० पर० सक० अनिट् । मेहति अमिक्षत् ।

**मिहिका** स्त्री मिह-क्वुन् अत इत्वम् । नीहारे शब्दर० ।

**मिहिर** पु० मिह-किरच् । १सूर्ये २अर्कवृक्षे ३वृद्धे मेदि० ४मेघे हेमच० ५वायौ, ६चन्द्रे, विक्रमादित्यसभास्थे नवरत्नमध्यस्थे पण्डितभेदे च शब्दर० । तच्चिन्त्यम् । "धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासाः । ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य" ज्योतिर्विदाभरणवाक्ये वराहः मिहिर इत्येव तत्र समासे वराहमिहिर इत्येकः "वराहमिहिरात्मजेन पृथुयशसा" तत्पुत्रकृतषट्पञ्चाशिकायाद्युक्तेः द्वित्वे वररुचिना सह दशसंख्यापत्तेश्च ।

**मी** बधे दि० आ० सक० अनिट् । मीयते अमेष्ट ।

**मी** बधे क्र्या० उ० सक० सेट् । मीनाति मीनीते अमासीत् अमास्त । ओदित् क्त मीनः ।

**मी** गत्यां मत्याञ्च वा चु० उभ०पक्षे भ्वा०पर० सक० अनिट् । माययति ते मयति अमीमयत्-त अमैषीत् ।

**मीढ** त्रि० मिह-क्त । मूत्रिते ।

**मीढुष्टम** पु० मीढुस्+अतिशये तमप् नि० । शिवे ।

**मीढुस्** पु० मिह-क्वसु नि० । शिवे ।

**मीन** पुंस्त्री० मी-नक् ।१मत्स्ये अमरः स्त्रियां ङीष् मेषादितो द्वादशे २राशौ ३भगवदवतारभेदे च पु० ।

**मीनकेतन** पु० मीनः केतनं यस्य । कन्दर्पे अमरः । मीनध्वजादयोऽप्यत्र । [राजनि० मीनाक्ष्यादयोऽप्यत्र ।

**मीननेत्रा** स्त्री मीनस्य नेत्रमिव पत्रिरस्याः । गण्डदूर्वायां

**मीनाण्डी** स्त्री मीनस्याण्डस्तदाकारा रेणुकाऽस्त्यस्य अच् गौ० ङीष् । शर्करायाम् राजनि० ।

**मीम** शब्दे अक० गतौ सक० भ्वा० पर० सेट् । मीमति अमीमीत् । ऋदित् चङि न ह्रस्वः ।

**मीमांसक** पु० मीमांसां वेत्त्यधीते वा वुन् । १मीमांसाशास्त्रज्ञे २तदध्येतरि च । मान-विचारे स्वार्थे सन् ण्वुल् । ३सिद्धान्तकारके ।

**मीमांसा** स्त्री मान-विचारे स्वार्थे सन् अ । १विचारपूर्वकतत्त्वनिर्णये २तत्प्रतिपादकग्रन्थभेदे च स च ग्रन्थः कर्मब्रह्मविषयभेदेन द्विविधस्तत्र कर्मकाण्डविषयसंशयनिवारको ग्रन्थो जैमिनिप्रणीतः स च पूर्वमीमांसात्वेन प्रसिद्धः ब्रह्मविषयसंशयनिवारकश्चरमः स वेदान्तत्वेन प्रसिद्धः ।

**मील** निमेषे भ्वा० पर० अक० सेट् । मीलति अमीलीत् । ऋदित् चङि वा ह्रस्वः ।

**मीलन** न० मील ल्युट् । १मुद्रणे २सङ्कोचने च ।

**मीलित** त्रि० मील-क्त । १अप्रफुल्ले २सङ्कुचिते च 'मीलितं यदभिरामताधिके' इति काव्यप्रकाशः ।

**मीव** स्थूलीभवने भ्वा० पर० अक० सेट् । मीवति अमीवीत् ।

**मु** पु० मोचयति जीवान् ण्यर्थे मुच डु । १महेशे हट्टच० २बन्धने एका० । [पलाण्डौ भरतः ।

**मुकन्दक** पु० मुदः मुदे कन्दो यस्य कप् पृषो० मुदो दलोपः ।

**मुकु** पु० मुच-कु पृषो० चस्य कः ।१मोक्षे हट्टच० २चतुवर्गे च

**मुकुट** पु० मकि-उट पृषो० ।१शिरोभूषणे अमरः । २अङ्गुली-मोटने स्त्री शब्दर० ङीप् ।

**मुकुन्द** पु० मुकुं ददाति दा-क पृषो० मुम् ।"मुकुमव्ययमात्मञ्च निर्वाणमोक्षवाचकम् । तद्ददाति च यो देवः मुकुन्दस्तेन कीर्तितः" "मुकुम् भक्तिरसप्रेमवचनं वेदसम्मतम् । यस्तद् ददाति भक्तेभ्यो मुकुन्दस्तेन कीर्त्तितः" ब्रह्मवै० जन्मख०११०अ० इति वा निरुक्तिं विष्णौ ।

**मुकुम्** अव्य० मकि उमुच् पृषो० । १निर्वाणमोक्षे २भक्तिप्रेम-रसे च मुकुन्दशब्दे दृश्यम् ।

**मुकुर** पु० मकि-उरच् पृषो० । १दर्पणे, २बकुलवृक्षे ३कुलाल-दण्डे, मेदि० ४मल्लिकावृक्षे, विश्वः ५कोलीवृक्षे, शब्दर०। ६कोरके च हेमच० ।

**मुकुल** पु० न० मकि-उलच् पृषो० । १ईषद्विकाशितकलि-कायाम् अमरः २देहे, ३आत्मनि च धरणिः ।

**मुकुष्टक** पु० मुकुर्गलोत्सर्गस्तं ष्टकति ष्टक-अच् पृ० षत्वम् । वनमुद्गे अमरः पृषो० मुकुष्ठक तत्रार्थे ।

**मुकूलक** पु० मकि-ऊलच् संज्ञायां कन् । दन्तिवृक्षे । रामाश्रमः । [ च शब्दर० ।

**मुक्त** त्रि० मुच क्त । १त्यक्ते, २प्राप्तमोक्षे मेदि० । ३आनन्दिते

**मुक्तरसा** स्त्री मुक्तो रसो यस्याः । रास्नायाम् रत्नमा० ।

**मुक्तसङ्ग** त्रि० मुक्तः सङ्गो विषयासक्तिर्येन । १त्यक्तसर्वविष-याशक्ते २परिव्राजके पु० । [हस्तो येन । दानशूरे ।

**मुक्तहस्त** त्रि० मुक्तः दानाय प्रसारितः न बद्ध इति यावत्

**मुक्ता** स्त्री मुच-क्त । १रास्नायाम् रत्नमा० २शुक्तिजे (मति) रत्नभेदे च ।

**मुक्तापुष्प** पु० मुक्तेव शुभ्रं पुष्पमस्य । कुन्दवृक्षे राजनि० ।

**मुक्ताप्रसू** स्त्री मुक्तां प्रसूते प्र+सू-क्विप् ६त० । शुक्तौ राजनि० । [मुक्ताहारे हेमच० ।

**मुक्ताप्रालम्ब** पु० मुक्तया मुक्ताविशिष्टतया प्रालम्बते अच् ।

**मुक्ताफल** न० मुक्ता फलमिव । १मौक्तिके, २लवलीफले, (नोयाड़) ३कर्पूरे च मेदि० । ४वोपदेवकृते भक्तिप्रधाने ग्रन्थभेदे च "चतुरेण चतुर्वर्गचिन्तामणिविधित्सया । हेमाद्रिर्वोपदेवेन मुक्ताफलमचीकरत्" तद्ग्रन्थस्य पद्यम् ।

**मुक्तालता** स्त्री मुक्तया लतेव । मुक्ताहारे हेमच० ।

**मुक्तावली** स्त्री मुक्तया आवली हारभेदः । १मुक्ताहारे अमरः । ६त० । २मुक्ताश्रेणौ भाषापरिच्छेदग्रन्थ-टीकायां ३सिद्धान्तमुक्तावल्यां च । [शुक्तौ अमरः ।

**मुक्तास्फोट** पु० स्फुट्यते विदीर्यते स्फोटः मुक्तायै स्फोटः ।

**मुक्ति** स्त्री मुच-क्तिन् । १मोचने २संसारबन्धनराहित्ये मत-भेदेन ३आत्यन्तिकदुःखनिवृत्तौ, ४ब्रह्मस्वरूपावाप्तौ च देहेन्द्रियाध्यासात्मनो ५बन्धशून्यत्वे च ।

**मुक्तिमण्डप** पु० मुक्तिप्रदो मण्डपः शाक०त० । १काशीस्थे २जगन्नाथक्षेत्रस्थे च मण्डपभेदे तीर्थे । [रत्नमा० ।

**मुक्तिमुक्त** पु० मुक्तिर्मोचनं तया मुक्तोरहितः । सिह्लके

**मुख** न० खन अच् डित् धातोः पूर्वं मुट् च । "प्रजापतेर्मुखा यतः खातं तस्मादाहुर्मुखं बुधाः" इत्युक्ते देहावयवभेदे । "ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च । गलो गलादि सकलं सप्ताङ्गं मुखमुच्यते" इत्युक्ते गलादि-सप्तात्मकावयववति २वदने भावप्र० । ३गृहस्य निःसरण-वर्त्मनि, अमरः । ४हट्टमण्डपादेः प्रवेशनिर्गमे, ५आरम्भे, ६उपाये, ७नाटकादौ सन्धिभेदे मेदि० ८नाटकादि-शब्दभेदे, ९आद्ये, १०प्रधाने, ११शब्दे, १२वेदे, च शब्दर०। १३बकुलवृक्षे पु०(डेओ) शब्दच० [राजनि०

**मुखगन्धक** पु० मुखस्य गन्धो यस्य सेवनात् कप् । पलाण्डौ

**मुखचपला** स्त्री आर्य्यावान्तरभेदे मात्राभेदे छ०र० ।

**मुखज** पु० ब्रह्मणो मुखाज्जायते जन-ड । १विप्रे "ब्राह्मणोऽस्य मुखमासीदि"ति श्रुतिः २वदनजातमात्रे त्रि० ।

**मुखदूषण** पु० मुखं दूषयति सेवनात् दुर्गन्धेन दूष-णिच् ल्यु । पलाण्डौ राजनि० ।

**मुखधौता** स्त्री धौतं मुखं यया धाव-क्त ऊठ् परनि० । ब्राह्मणयष्टौ (वामनहाटि) शब्दच० ।

**मुखनिरीक्षक** त्रि० मुखमितरास्यं निरीक्षते निर्+ईक्ष ण्वुल् । १अलसे शब्दर० । स हि अन्यो यदि स्वकार्य्यं कुर्यात् तदानाहं करोमीत्याशयेन इतरमुखं निरीक्षमाणः स्वकार्य्ये न प्रवर्त्तते । इति तस्य तथात्वम् ।

**मुखपूरण** न० मुखं पूरयति पूर-ल्यु । गण्डूषमितजलादौ ।

**मुखप्रिय** न० मुखं प्रीणाति प्री-क-उप०स० । १नवङ्गे भावप्र० २मुखरोचकमात्रे त्रि० ।

**मुखभूषण** न० मुखं भूषयति भूष-ल्यु । १ताम्बूले । २मुख-मण्डने च ।

**मुखमण्डनक** पु० मुखस्य मण्डनमिव इवार्थे कन् । १तिलकवृक्षे राजनि० । इत० स्वार्थे क । २मुखभूषणे न० । मण्डयति—ल्यु स्वार्थे क इत० । ३मुखभूषके त्रि० ।

**मुखमोद** पु० मुखं मोदयति मुद-णिच्-अण् उप०स० । शोभाञ्जने राजनि० ।

**मुखर** त्रि० मुखं मुखव्यापारं कथनं राति दत्ते करोतीति यावत् रा-क । १अप्रियवादिनि अमरः । २बहुवादिनि च "मुखरस्तत्र हन्यते" इति हितोपदेशः । ३काके पुंस्त्री०स्त्रियां ङीप् । ४शङ्खे पु०राजनि० । [माने

**मुखरित** त्रि०मुखर इवाचरितः । मुखर+क्विप्-क्त । मञ्ज्ञाय-

**मुखरोग** पु० सप्ताङ्गस्य मुखस्य रोगः । सप्ताङ्गमुखस्य रोगभेदे तन्निदानादि यथा

"ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च । गलो गलादि सकलं सप्ताङ्गं मुखमुच्यते" । अथ मुखरोगाणां संख्यामाह "मुखरोष्ठयोर्दन्तमूले तु दश षट् तथा । दन्तेष्वष्टौ रसनायां पञ्च स्युर्नव तालुनि । कण्ठे त्वष्टादश प्रोक्तास्त्रयः सर्वसराः स्मृताः । एवं मुखामयाः सर्वे सप्तषष्टिर्मता बुधैः" मुखरोगाणां निदानान्याह "अनूपपिशितक्षीरदधिमाषादिसेवनात् । मुखमध्ये गदान् कुर्युः क्रुद्धा दोषाः कफोत्तराः" भावप्र० ।

**मुखलाङ्गल** पुंस्त्री० मुखं लाङ्गलमिव भूमिविदारकं यस्य । शूकरे जटा० स्त्रियां ङीप् ।

**मुखवल्लभ** पु० इत० । १दाडिमवृक्षे शब्दमा० तत्फलस्य मुखप्रियत्वात् तस्य तथात्वम् । २मुखप्रिये त्रि० ।

**मुखवासिका** स्त्री मुखं वासयति उज्ज्वलीकरोति सेवनात् वस-णिच्-ण्वुल् । अम्बष्ठायाम् राजनि० ।

**मुखवास** पु० मुखं वासयति सुरभीकरोति वासि-अण् उप०स०।१गन्धतृणे राजनि० । २कर्पूरादौ च ।

**मुखवासन** पु० मुखं वासयति वासि ल्यु । १मुखसौरभकारके गन्धे । २तद्वति त्रि० अमरः ।

**मुखविष्ठा** स्त्री मुखं विष्ठेव दुर्गन्धं यस्याः । तैलपायिकायां हेमच० तन्मुखस्पर्शमात्रे हि द्रव्यान्तरे दुर्गन्धो भवति ।

**मुखव्यादान** न० वि+आ+दा-ल्युट् इत० । मुखप्रसारणे ।

**मुखशोधन** न० मुखं शोधयति शुध-णिच्-ल्यु ।१त्वचे (दारचिनि) राजनि०।२कटुरसे पु०हेमच० । [राजनि०।

**मुखशोधिन्** पु० मुखं शोधयति शुध-णिच्-णिनि । जम्बीरे

**मुखस्राव** पु० स्रवति स्रु-ण ६त० । लालाख्ये मुखसलिलजले राजनि० ।

**मुखाग्नि** पु० मुखमेवाग्नितुल्यं शापदानेन दाहकत्वात् यस्य । १विप्रे कर्म० बहुव्रीहिमुखजे २दावानले च शब्दमा० ।

**मुखाम्ल** पु० मुखमेवाम्लं यस्य । कर्कटे त्रिका० । [च ।

**मुख्य** त्रि० मुखे आदौ भवः यत् ।१प्रथमकल्पे अमरः २श्रेष्ठे

**मुग्ध** त्रि० मुह-क्त । १मूढे । मोहयति अनभूतयर्थे मुहकर्त्तरि क्त ।२सुन्दरे विश्वः ।३नायिकाभेदे स्त्री सा०द०३प०

**मुच** दम्भे शाठ्ये भ्वा० आत्म० सक० सेट् । मोचते अमोचिष्ट इदित्त्वयम् तदर्थे । मुञ्चते ।

**मुच** त्यागे चुरा० उ० सक० सेट् । मोचयति ते अमूमुचत् त

**मुच** त्यागे तु० मुचादि० उभ० सक० अनिट् । मुञ्चति-ते अमुचत् अमुचत अमुक्त । कर्मकर्त्तरि अकर्मकः "मुच्यते सर्वपापेभ्यः" इति पुराणम् ।

**मुचकुन्द** पु० मुच-क मुचः कुन्द इव ।१स्वनामख्याते पुष्पवृक्षे भावप्र० मान्धातृसुतपुत्रे २नृपभेदे च ।

**मुज** ध्वनौ अक० मार्ज्जने सक० वा चुरा० पक्षे भ्वा० पर० सेट् । माजयति ते मोजति अमूमुजत् त अमोजीत् । इदित्त्वयमत्रार्थे । मुञ्जयति ते मुञ्जति अमुमुञ्जत् त अमुञ्जीत् ।

**मुञ्ज** पु० मुजि-अच् । (मुञ्ज) रज्जुसाधने तृणभेदे राजनि० । "मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा । दाहतृष्णा विसर्पास्रमूत्रवस्त्यक्षिरोगजित् । दोषत्रयहरं वृष्यं मेखलासूपयुज्यते" भावप्र० । [हेमच० ।

**मुञ्जकेशिन्** पु० मुञ्ज इव केशः अस्यस्य इनि । विष्णौ

**मुञ्जर** न० मुजि-अरन् । शालूके शब्दमा० । [मुञ्जप्रते ।

**मुट** मर्दने भ्वा० पर० सक० सेट् इदित् । मुण्टति अमुण्टीत् ।

**मुट** चोदे वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । मोटयति ते मोटति अमूमुटत् त अमोटीत् ।

**मुठ** चोदने आक्षेपे च तु० कु० पर० सक० सेट् । मुटति अमुटीत् मुमोट । [अमुण्डिष्ट ।

**मुठ** पलायने भ्वा० आ० अक० सेट् इदित् । मुण्ठते

**मुड** केशादिच्छेदे मर्दने च भ्वा० पर० सक० सेट् इदित् । मुण्डति अमुण्डीत् । [त्रिका ।

**मुड** मज्जने भ्वा० आ० अक० सेट् इदित् । मुण्डते अमु-

**मुण** प्रतिज्ञाने तु० पर० सक० सेट् । मुणति अमोणीत् ।

**मुण्ड** न० मुडि-कर्मणि घञ् ।१मस्तके अमरः ।२बोले ३मुण्डायसे च राजनि० ४दैत्यभेदे, ५राहुग्रहे पु० मेदि० ।

६नापिते जटा० ७स्यामुण्डके च पु० । ८मुण्डिते त्रि० । ९महाश्रावणिकायां १०मुण्डीरिकायाञ्च स्त्री टाप् मेदि० ११उपनिषद्भेदे "मुण्डमाण्डूक्यतित्तिरिः" ।

**मुण्डक** पु० मुण्डयति मुडि-णिच्-ण्वुल् । नापिते हेमच० ।

**मुण्डचणक** पु० मुण्डश्चणकइव । कलाये राजनि० ।

**मुण्डन** न० मुडि-भावे ल्युट् । केशच्छेदे वपने हेमच० ।

**मुण्डफल** पु० मुण्डं शिरइव फलमस्य । नारिकेले शब्दर० ।

**मुण्डशालि** पु० मुण्डः शूकशून्यः शालिः । निःशूके शालिभेदे राजनि० ।

**मुण्डायस** न० मुण्डमयः अच् समा० । लौहभेदे राजनि० ।

**मुण्डितिका** स्त्री मुडि-क्त स्वार्थे क अत इत्वम् टाप् । (मुण्डीरी) क्षुपभेदे रत्नमा० ।

**मुण्डिन्** पु० मुण्डयति मुडि-णिच्-णिनि । नापिते अमरः ।

**मुण्डीरी** स्त्री मुडि-ईरच् गौरा० ङीष् । स्वनामख्याते क्षुपभेदे जटाधरः ।

**मुथशील** पु० ८२५ पृ० दर्शिते नी० ता० उक्ते इत्थशालयोगे

**मुद** संमार्ज्जने चु०उ० सक० सेट् । मोदयति ते अमूमुदत् त

**मुद** हर्षे भ्वा० आ०अक० सेट् । मोदते अमोदिष्ट । मुमुदे ।

**मुद्(दा)** स्त्री मुद-सम्प०भावे क्विप् वा टाप् । १हर्षे अमरः । २वृद्धिनामौषधौ राजनि० ।

**मुदिर** पु० मुद-किरच् । १मेघे अमरः २भेके च संक्षिप्तसा० ३कामुके त्रि० मेदि० । [४जलकाके च हेमच० ।

**मुद्ग** पु० मुद-गक् नेट् । १कलायभेदे(मुग) पु०मेदि० २पक्षिभेदे

**मुद्गपर्णी** स्त्री मुद्गस्येव पर्णमस्याः ।(मुगानी)वनमुद्गे अमरः।

**मुद्गर** न० मुदं गिरति गॄ-अच् । १मल्लिकाभेदे २लोष्टभेदने (मुगुर) मेदि० । ३पुष्पप्रधानक्षुपभेदे ४कर्मारङ्गे (कामराङ्गा) च पु० राजनि० । स्वार्थे क । तत्रैव ।

**मुद्गल** न० मुदं गिलति गॄ-अच् रस्य लः । १रोहिषतृणे राजनि० । २गोत्रप्रवर्त्तके मुनिभेदे, ३रूपभेदे पु० ।

**मुद्गष्ट** पु० मुद्गं स्तकति प्रतिबध्नाति स्तक-ड पृषो० सत्वम् । वनमुद्गे अमरः । स्वार्थे क । मुद्गष्टकोऽप्यत्र ।

**मुद्रा** स्त्री मुद-रक् । १प्रत्ययकारिण्याम् (मोहर) त्रिका० २अङ्गुलिस्थे मुद्राङ्कनयुक्ताङ्गुलीयके शब्दर० ३स्वर्णरौप्यादिटङ्कायाम् ४अप्रकाशे । "मुद्रालिपिः शिल्पलिपिर्लिपिर्लेखनिसम्भवा । गुण्डिकाघुणसम्भूता लिपयः पञ्चधा मताः" इत्युक्तलिपिमध्ये ५लिपिभेदे वाराहीतन्त्रम् । "लेखन्या लिखितं विप्रैर्मुद्राभिरङ्कितञ्च यत् । शिलादिनिर्मितं यच्च पाद्यं धार्य्यञ्च सर्वदा" मुण्डमालातं० । ६तन्त्रप्रसिद्धे वीराचारसेव्ये "पृथुकास्तण्डुला भृष्टा गोधूमचणकादयः । तस्य नाम भवेन्मुद्रा" इत्युक्ते पञ्चमकारान्तर्गतद्रव्यभेदे ७देवविशेषाराधनायामङ्गुल्यादिसन्निवेशविशेषे तन्त्रसारः "मोदनात् सर्वदेवानां द्रावणात् पापसंहतेः । तस्मात् मुद्रेति सा ख्याता सर्वकामार्थसाधनी "मुद्रामत्स्यमुखमि"ति तन्त्रम् ८सङ्कोचे च ।

**मुद्रालिपि** स्त्री मुद्रया लिपिः । पञ्चधाविभक्तलिपिमध्ये लिपिभेदे (छापार अक्षर)

**मुद्रिका** स्त्री मद्रैव मुद्रा वा मुद्रा कन् । स्वर्णरौप्यादिनिर्मिते अङ्गुलिस्थे अङ्कनसाधनयोग्ये पदार्थे ।

**मुद्रित** त्रि०मुद्रा जाताऽस्य इतच् । १अप्रकाशिते २अङ्किते च

**मुधा** अव्य० मुह-का पृषो० हस्य ध. । मिथ्याशब्दार्थे अमरः

**मुनि** पु० मन-इन् पृषो० उत्वम् ।"दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते" गीतोक्तलक्षणे स्थिरचित्ते वीतरागादौ जने । ते च मन्वत्रिविष्णुहारीतादय । २सप्तसंख्यायाञ्च । ३वकुषेनतरौ ४जिने मेदि०।५पियालवृक्षे ६पराशरवृक्षे हेमच० ७दमनकवृक्षे राजनि० । "मननान्मुनिरुच्यते" इत्युक्ते ८मननयुते त्रि० । [राजनि० ।

**मुनिखर्ज्जूरी** स्त्री मुनिप्रिया खर्जूरी । खर्ज्जूरीभेदे

**मुनिच्छद** पु० मुनिसंख्याताः सप्तसंख्याताः छदाः प्रतिपर्वं यस्य । सप्तच्छदे (छातिम) राजनि० ।

**मुनितरु** पु० मुनिरगस्त्यनामकस्तरुः । वकवृक्षे रत्नमा० ।

**मुनिद्रुम** पु० मुनीनां प्रियो मुनिनामको वा द्रुमः । १श्योनाकवृक्षे रत्नमा० २वकवृक्षे च राजनि० ।

**मुनिपुत्रक** पु० मुनेः पुत्रः संज्ञायां कन् ।१दमनवृक्षे भावप्र० २खञ्जने च त्रिका० । ६त० । ३ऋषिसुते । [वकपुष्पे ।

**मुनिपुष्प** न०मुनिद्रुमस्य पुष्पं भीमो भीमसेनवदुत्तरपदलोपः ।

**मुनिभेषज** न० मुनीनां भेषजमिव । १हरीतक्यां २अगस्त्ये, मुनौ, ३भोजनाभावे च मेदि० । [भेदे ।

**मुनीन्द्र** पु० मुनिः इन्द्र इव ।१बुद्धे अमरः । ७त०। २ऋषि-

**मुन्थ** गत्यां भ्वा० पर० सक० सेट् क्त्वा वेट् । मुन्थति अमुन्थीत्

**मुन्था** स्त्री नी०क०ताजकप्रसिद्धे इन्थिहाशब्दार्थे । इन्थिहाशब्दे ८२८पृ० दृश्यम् ।

**मुन्यन्न** न० मुनियोग्यमन्नम् । नीवारकन्दादौ ।

**मुमुक्षु** त्रि० मोक्तुमिच्छुः मुच-सन्-उ । मोक्षेच्छावति । १संसारबन्धनाभावेच्छावति । २यतौ पु० ।

**मुमूचान** पु० मुच कान पृषो० दीर्घः । १मेघे २मुक्तवति त्रि०।

"द्रुपदादिव सुमुचानः" इति सव्याकृपाठप्रमन्त्रः ।

**मुमूर्षु** त्रि॰ मर्तुमिच्छुः मृ-सन्-उ । आसन्नमरणे ।

**मुर** वेष्टने तु॰ पर॰ सक॰ सेट् । मुरति अमोरीत् ।

**मुर** पु॰ मुर-क । १दैत्यभेदे "पार्थैनाथ द्विषन् मुरम्" माघः २वेष्टने । ३सुनामख्याते गन्धद्रव्ये स्त्री अमरः टाप् ।

**मुरज** पु॰ मुरात् वेष्टनात् जायते जन-ड । मृदङ्गे वाद्यभेदे अमरः । स इव बन्धः । मुरजबन्धः । चित्रालङ्कारभेदे ।

**मुरजफल** पु॰ मुरज इव फलं यस्य । पनसवृक्षे त्रिका॰ । मृदङ्गफलादयोऽप्यत्र ।

**मुररिपु** पु॰ ६ त॰ । विष्णौ । मुरारिमुरमथनादयोऽप्यत्र ।

**मुरला** स्त्री मुरं लाति ला-क । १नर्मदायाम् । "मुरला-मारुतोद्धूतम्" रघुः । २वंशीनाम्नि वाद्ये गौरा॰ ङीष् ।

**मुरलीधर** पु॰ मुरलीं धरति धृ अच् । श्रीकृष्णे मुरलीवाद-नादयोऽप्यत्र ।

**मुर्च्छ** मोहे वृद्धौ च भ्वा॰ पर॰ अक॰ सेट् । मूर्च्छति अमूर्च्छीत् । आदित् भावे क्त । मूर्तम् मूर्च्छितम् ।

**मुर्मुर** पु॰ मुर-क पृषो॰ द्वित्वम् । १तुषाग्नौ २कन्दर्पे सूर्याश्वे च मेदि॰ । [यामभिट् मूर्मः ।

**मुर्व** बन्धे भ्वा॰ पर॰ सक॰ सेट् । मूर्वति अमूर्वीत् निष्ठा-

**मुल** रोपणे चु॰ उभ॰ सक॰ सेट् । मोलयति ते अमूमुलत् त ।

**मुशटी** स्त्री मुष-अटच् गौरा॰ ङीष् पृषो॰ । सितकृष्णे हेमच॰ ।

**मुश(स)ली** स्त्री मुष मुस वा कलच् पृषो॰ मस्य शः गौरा॰ ङीष् । १तालमूल्याम् २स्वल्पगोधिकायाम् राजनि॰ संज्ञायां कन् । मुशलिका ।

**मुष** वधे भ्वा॰ पर॰ सक॰ सेट् । मोषति अमोषीत् ।

**मुष** खेदने दिवा॰ पर॰ सक॰ सेट् । मुष्यति इरित् अमुषत्-अमोषीत् पुषादिरयमित्यन्ये ।

**मुष** लुण्टने क्र्या॰ पर॰ द्विक॰ सेट् । मुष्णाति अमोषीत् ।

**मुष(ष)(श)ल** पु॰ मुष-कलच् पृषो॰ । अयोग्रे ख्यनामख्याते धान्यादिकण्डनसाधने पदार्थे अमरः । [रायमु॰ ।

**मुषा** स्त्री॰ मुष क-टाप् । धातुद्रावणे पात्रभेदे (मुची)

**मुषित** त्रि॰ मुष-क्त । अपहृतद्रव्ये जने अमरः ।

**मुष्क** पु॰ मुष-कक् । १पुरुषचिह्नभेदे अण्डकोषे (अण्डा-पाकल) २मोक्षकवृक्षे ३संहृते च मेदि॰ ४तस्करे, ५मांसले च हेमच॰ । स्वार्थे क । तत्रैव । [हेमच॰ ।

**मुष्कशून्य** पु॰ ३ त॰ । वृषणरहिते राज्ञामन्तःपुररक्षके (खोजा

**मुष्टि** पुं स्त्री॰ मुष-क्तिच । १बद्धपाणौ अमरः २पलपरिमाणे पु॰ हेमच॰ ३कुड्मलभागे च । क्तिन् । ४मोषणे स्त्री ।

**मुष्टिक** पु॰ मुष्ट्या कायति कै-क । १कंसराजमल्लभेदे । मुष्टि मौष्ट्यं प्रयोजनमस्य कन् । २स्वर्णकारे हेमच॰ ।

**मुष्टिकान्तक** पु॰ ६ त॰ । बलदेवे शब्दर॰ तस्य मुष्टिकासुर-हननात्तथात्वम् ।

**मुष्टिद्यूत** न॰ । ३ त॰ । कपर्दकमुष्ट्याक्रीडने (पुरनुट) शब्दमा॰

**मुष्टिन्धय** पु॰ मुष्टिं धयति धे खच् मुम् च । बालके त्रिका॰ ।

**मुष्टिबन्ध** पु॰ मुष्टेर्बन्धो यत्र । १संग्राहे अमरः । ६ त॰ २मुष्टि-बन्धने । [अमोषीत् पुषादिरयमित्यन्ये ।

**मुस** खण्डने दि॰ पर॰ सक॰ सेट् । मुस्यति इरित् अमुसत्

**मुस(ष)(श)लिन्** मुस(ष)(श)ल+अस्त्यर्थे इनि । बलदेवे अमरः । [वेध्ये अमरः ।

**मुस(ष)(श)ल्य** त्रि॰ मुस(ष)(श)लेन वेध्यः यत् । मुसल-

**मुसल्लह** पु॰ नी॰ ता॰ उक्ते नवांशे "मुसल्लहे यत्र ग्रहाः प्रदिष्टाः" नी॰ ता॰ ।

**मुस्त** संहतौ चु॰ उभ॰ सक॰ सेट् । मुस्तयति ते अमुमुस्तत् त ।

**मुस्त** पु॰ मुस्त अच् स्त्रीत्वे टाप् । मुस्तके (मुथा) ख्याते तृणभेदे स्त्री अमरः स्वार्थे क । अत्रैव अस्त्री॰ अमरः । स्थावरविषभेदे पु॰ हेमच॰ । [भेदे अमरः ।

**मुस्ताभ** न॰ मुस्तेव भाति भा-क । (नागरमुथा) मुस्तक-

**मुह** मोहे वैचित्त्ये दि॰ उभ॰ अक॰ सेट् मुह्यति इरित् अमुहत् उदित् मोहिता, मोग्धा, मोढा ओत् । मूढोऽस्ति ।

**मुहिर** पु॰ मुह किरच् । १कामे, २मूर्खे च मेदि॰ ।

**मुहुस्** अव्य॰ मुह-उसिक् । पौनः पुन्ये अमरः ।

**मुहूर्त्त** स्त्री॰ हुर्छ क्त धातोः पूर्वं मुट् च । १द्वादशक्षणमिते काले, पञ्चदशधाविभक्तस्य दिनस्य पञ्चदशभागे, किञ्चिन्-न्यूनाधिकघटिकाद्वयरूपे २काले च ।

**मू** बन्धे भ्वा॰ आ॰ सक॰ सेट् । मवते अमविष्ट मुमुवे ।

**मूक** पु॰ मू-कक् । १मत्स्ये त्रिका॰ २दैत्यभेदे मेदि॰ ३दीने हेम॰ वाक्यशक्तिरहिते च त्रि॰ अमरः । [४जडे हेमच॰ ।

**मूढ** त्रि॰ मुह-क्त । १मूर्खे अमरः । २बाले ३तन्द्रिते मेदि॰

**मूत** त्रि॰ मू+बन्धे क्त । १बद्धे २संयते च अमरः । [मूमुवत् त

**मूत** बन्धे अद॰ चु॰ उभ॰ अक॰ सेट् । मूतयति ते अमु-

**मूत्र** न॰ मुत्र-अच् । प्रस्रावे उपस्थात् क्षरितजले अमरः ।

**मूत्रकृच्छ्र** न॰ । रोगभेदे "व्यायामतीक्ष्णौषधरूक्षमद्य-प्रसङ्गनित्यद्रुतपृष्ठयानात् । आनूपमत्स्याध्यशनादजीर्णात् स्युर्मूत्रकृच्छ्राणि नृणां तथाष्टौ" भावप्र॰ ।

**मूत्रदोष** पु० मूत्रस्य दोषो यस्मात् दुष-घञ् हुत०। प्रमेहरोगे राजनि०।

**मूत्रनिरोध** पु० मूत्रं निरुणद्धि नि+रुध-अण्। मूत्रप्रतिबन्धकरोगे। [२कर्कोट्याञ्च राजनि०।

**मूत्रफला** स्त्री० मूत्रमेव फलं यस्याः। १त्रपुष्याम् (शशा)

**मूत्राघात** पु० मूत्रमाहन्ति आ+हन-अण्। मूत्रहननकारिणि रोगभेदे। "प्रायो मूत्रविघाताद्यैर्वातकुण्डलिकादयः। जायन्ते कुपितैर्दोषैर्मूत्राघातास्त्रयोदश" भावप्र०।

**मूत्राशय** पु० हुत०। नाभेरधोदेशे वस्तिनामकस्थाने भावप्र०।

**मूर्ख** त्रि० मुह ख उरादेशः। १मूढे २गायत्रीरहिते ३सार्थगायत्रीरहिते च। "क्रियाहीनस्य मूर्खस्ये"ति स्मृतिव्याख्यायां निबन्धकारैस्तथार्थकतया व्याख्यानात्।

**मूर्च्छना** स्त्री मुर्च्छ-युच्। "स्वरः संमूर्च्छितो यत्र रागतां प्रतिपद्यते। मूर्च्छनामिति तां प्राहुः कवयो ग्रामसम्भवाम्" इत्युक्ते गानाङ्गभेदे "स्फुटीभवद्ग्रामविशेषमूर्च्छनाम्" माघः।

**मूर्च्छा** स्त्री मुर्च्छ-भावे अङ्। १मोहे अमरः। २अनिद्रावस्थायामपि बाह्येन्द्रिय व्यापारशून्यावस्थायां "क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः। वेगाघाताद्भिघातात् हीनसत्त्वस्य वा पुनः। करणायतनेष्वस्या बाह्येष्वाभ्यन्तरेषु च। निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः" भावप्र०। ३वृद्धौ च।

**मूर्च्छाल** त्रि०मूर्च्छा+अस्त्यर्थे लच्। मूर्च्छाविशिष्टे अमरः।

**मूर्च्छित** त्रि० मूर्च्छा जातास्य तार० इतच्। १मूर्च्छायुक्ते २वृद्धे ३उच्छ्रिते च मेदि०

**मूर्त्त** त्रि० मुर्च्छ-क्त। १मूर्च्छान्विते अमरः। २मूढे ३कठिने च मेदि०। मूर्त्तिरस्त्यस्य अच्। ४मूर्त्तिमति व्यायोक्तेषु अवच्छिन्नपरिमाणवत्सु। क्षितिजलपावकपवनमनःसु च।

**मूर्त्ति** स्त्री मुर्च्छ-क्तिन्। १देहे २काठिन्ये, अमरः। ३प्रतिमायाञ्च हेम०।

**मूर्त्तिमत्** पु० मूर्त्तिरस्त्यस्य मतुप्। १देहे। २आकारयुक्ते ३काठिन्यवति च त्रि० स्त्रियां ङीप्। [जातमात्रे त्रि०।

**मूर्द्धज** पु० मूर्द्धि जायते जन-ड। १केशे जटा०। २मस्तक-

**मूर्द्धन्य** त्रि० मूर्द्धि भवः यत्। १मस्तकजाते। २शिक्षायन्योक्तेषु ऋकारटवर्गरषवर्णेषु पु०।

**मूर्द्धन्** पु० मुर्व-कनिन् धुट्, च। मस्तके अमरः।

**मूर्द्धपुष्प** पु०मूर्द्धि, पञ्चशिरसि पुष्पं यस्य। शिरीषवृक्षे शब्दचा०

**मूर्वा** स्त्री मुर्व-अच्। स्वनामख्याते धनुर्गुणोपयुक्ते लताभेदे गौरा० ङीष्। मूर्व्यमिव भरतः। [अमूर्लिष्ट।

**मूल** प्रतिष्ठायां भ्वा० उभ० अक० सेट्। मूलति ते अमूलीत्

**मूल** रोपणे चुरा०उभ०सक०सेट्। मूलयति ते अमूमुलत् त।

**मूल** न० मूल-क। १शिफायाम् (जड़) (शिकड़) अमरः २आद्ये ३निकुञ्जे ४नक्षत्रभेदे ५प्रान्तिके विप्रः ६वाणिज्याद्युपयोगिनि ७मूलधने, मेदि०। ८निजे अजयः। ९चरणे १०गुरवे शब्दमा० ११पिप्पलीमूले १२पुष्करमूले राजनि०। १३टीकादिना व्याख्येयग्रन्थे च अश्विन्यवधिके जनविंशे नक्षत्रे अस्त्री० ति०त० शब्दर० स्त्रीत्वमुक्तम्।

**मूलक** न०मूल+संज्ञायां कन्। १कन्दभेदे (मूला) वर्ज्जनीयं सदा विप्रैर्मूलकं मदिरासमम्" इति ब्रह्मपु०। २विषभेदे पु० हेमच०। [भ्रने रत्नमा०।

**मूलकपर्णी** स्त्री मूलकदलस्येव पर्णान्यस्याः ङीप्। शोभा-

**मूलकर्म्मन्** न० मूलेन मन्त्रौषधादिना कर्म्मवशीकरणादि। औषधादिना वशीकरणकर्म्मणि।

**मूलकृच्छ्र** पु० मूलेन क्वथितद्रव्यमूलेन कृच्छ्रः। "मूलकृच्छ्रः स्मृतो मूलैरि"ति" इत्युक्ते १व्रतभेदे। तद्व्रतस्य। २तद्वति त्रि०।

**मूलज** न० मूलाज्जायते जन ड। १आर्द्रके राजनि०। २उत्पलादौ पु० हेमच०। ३मूलनक्षत्रजातमात्रे त्रि०।

**मूलत्रिकोण** न०"सिंहो वृषश्च मेषश्च कन्या धन्वी घटोघटः। "अर्कादीनां त्रिकोणानि मूलानि राशयः क्रमात्" रव्यादीनां क्रमेण सिंहादिषु राशिषु। तदंशाश्च "रविभौमजीवभार्गवशनैश्चराणां त्रिकोणभागाः स्युः। नखरविदिक्तिथिनक्षत्राचन्द्रो दिग्भागकाः स्वभात्"ज्यो०त०।

**मूलद्रव्य** न० कर्म्म०। मूलधने यद्वलम्ब्य वाणिज्यादिकं क्रियते तस्मिन् (पूँजि) मूलधनादयोऽप्यत्र।

**मूलपर्णी** स्त्री मूलमारभ्य पर्णान्यस्याः ङीप्। मण्डूकपर्ण्याम् रत्नमा०। [राजनि०।

**मूलपुष्कर** न० पुष्करस्य मूलं राज० पर०। पुष्करमूले

**मूलपोती** स्त्री पू-तच् गौ०ङीष् मूलं प्रधाना पोती। पूतिकायाम् राजनि०।

**मूलप्रकृति** स्त्री मूलीभूता सर्वाद्या प्रकृतिः। सांख्यमतोक्ते सर्वेषां कारणीभूते साम्यावस्थापन्ने सत्त्वरजस्तमोरूपे त्रिगुणात्मके १प्रधाने "मूलप्रकृतिरविकृतिः" सांख्यकारिका। २दुर्गायाञ्च ब्रह्मवै०पु०४०अ०। [राजनि०।

**मूलफलद** पु० मूलेऽपि फलं ददाति प्रसूते दा-क। पनसवृक्षे

**मूलरस** पु० मूले रसो यस्य । मोरटालतायाम् रत्नमाला ।
**मूलशाकट** न० मूलानां क्षेत्रं मूल+शाकट । मूलभवन-
योग्ये क्षेत्रे शाब्दिक । मूलशाकिनोऽप्यत्र पु० । [राजनि०
**मूला** स्त्री मूलानि बाहुल्येन सन्त्यस्याः अच् । शतमूल्याम्
**मूलाधार** पु० ६त० । १नाभिलिङ्गयोर्मध्ये तस्य हि शरी-
रस्य सकलनाडीनां मूलस्थानत्वात्तथात्वम् "मूलाधारे
त्रिकोणाख्ये इच्छाज्ञानक्रियात्मके । मध्ये स्वयम्भू लि-
ङ्गन्तु कोटिसूर्य्यसमप्रभम्" इत्युक्तलक्षणे त्रिकोणाकारे
तन्त्रोक्ते २सुषुम्णानाडीस्थे चक्रभेदे च । [कोऽप्यत्र ।
**मूलिन्** पु० मूलमस्त्यस्य इनि । वृक्षे शब्दच० ठन् । मूलि-
**मूल्य** न० मूलाय पटादिकारणतन्त्वाद्यादानाय इदम् यत् ।
तन्त्वाद्यादानाय दीयमाने १धने अमरः । मूल—यत् ।
वपनयोग्ये त्रि० ।

**मूष** लुण्ठने भ्वा० पर० सक० सेट् । मूषति अमूषीत् । सुमूष
**मूष** पुंस्त्री० मूष-क । १मूषिके रत्ना० स्त्रियां ङीप् । २तै-
जसद्रव्यद्रावणपात्रे (मुचि) अमरः । ३गवाक्षे "एकद्वित्र्या-
दि मूषावहने" ति लीला० ४देवताप्रतिमायाञ्च स्त्री शब्दच०
**मूषक** पुंस्त्री० मूष-ण्वुल् स्त्रीत्वे टाप् अत इत्त्वम् ।
उन्दुरौ शब्दच० ।

**मूषकपर्णी** स्त्री मूषकस्य कर्ण इव पर्णान्यस्याः । (उन्दुर-
कानी) आखुकर्ण्याम् मूषिककर्ण्यादयोऽप्यत्र ।
**मूषरिफ** पु० नील०ता० उक्ते इशराफाख्ये योगभेदे "शीघ्रो
यदा मन्दतरस्यैकमप्यंशमत्येति तदेशराफः । कार्य्यक्षयो
मूषरिफे खलोऽस्मे सौम्ये न हिल्लाजमतेन चिन्त्यम्" ।
**मूषिक** पुंस्त्री० मूष-इन् । १उन्दुरौ अमरः स्त्रीत्वे टाप् ।
२मूषिकपर्ण्यां स्त्री शब्दर० ३मूषायां भरतः । [शब्दर० ।
**मूषिकपर्णी** स्त्री मूषिककर्ण इव पर्णान्यस्याः जलजतृणभेदे
**मूषी** स्त्री मूष+इन् गौ०ङीष् । १स्वर्णादिद्रावणपात्रे (मुची)
२महामूषिके राजनि० ।

**मृ** मृतौ तु० सार्वधातुके लुङि आशीर्लिङि च आ० अन्यत्र
पर० अक० अनिट् म्रियते । अमृत । ममार मर्त्तासि
मृषीष्ट ।

**मकण्ड(ण्डु)** पु० मुनिभेदे शब्दच० ।
**मृच्च** संघाते भ्वा० प० अक० सेट् । मृच्चति अमृच्चीत् ।
**मृग** अन्वेषणे याचने च अद० चु० आ० सक० सेट् मृगयते
अममृगत ।
**मृग** अन्वेषणे दिवा० पर० सक० सेट् । मृग्यति अमर्गीत् ।
**मृग** पु० मृग-क । १पशुमात्रे, २गजभेदे, ३अश्विन्यवधिके
पञ्चमे नक्षत्रे पु० । अ०चु०मृग-भावे अच् । ४अन्वेषणे पु०
५याचने च मेदि० ६यज्ञभेदे ७मार्गशीर्षे मासि अजयः
अच् । ८मृगमदे, भरतः ९मकरराशौ च पु० ज्यो०त० ।
१०हरिणे अमरः सर्वतः जातौ स्त्रियां ङीष् ११नरभेदे
"मृगे तुष्टा च चित्रिणी" रतिमञ्जरी ।
**मृगगामिनी** स्त्री मृग इव गच्छति गम णिनि ङीप् ।
१विडङ्गायाम् राजनि० । २मृगतुल्यगमनवति त्रि०
स्त्रियां ङीप् । [व्याधे शब्दच० ।
**मृगजीवन** पु० मृगैस्तन्मांसादिविक्रयाभिर्जीवति जीव-ल्यु ।
**मृगणा** स्त्री मृग युच् टाप् । नष्टद्रव्यस्यान्वेषणे अमरः ।
**मृगतृष्णा** स्त्री मृगाणां तृष्णेव तृष्णाहेतुत्वात् । सूर्य्यकिरणे
जलभ्रान्तौ अमरः । निर्जलदेशस्थं सूर्य्यकिरणं दूरतो
वीक्ष्य मृगैर्जलभ्रान्त्या तृष्णार्त्तैः सद्भिः वध्यते न च
लभ्यते इति ग्रीष्मे मरुदेशे सिकतादौ पतितरविकिरणेषु
जलभ्रान्तिरिति च लोकप्रसिद्धम् । स्वार्थे क । तत्रैव ।
**मृगदंशक** पुंस्त्री० मृगं दंशति दन्श ण्वुल् । कुक्कुरे अमरः
स्त्रियां जातित्वात् ङीष् । [स्त्रियां ङीष् ।
**मृगधूर्त्तक** पुंस्त्री० मृगेषु मध्ये धूर्त्तकः । शृगाले अमरः
**मृगनाभि** पु० मृगस्य नाभिः जन्महेतुर्यस्य । कस्तूर्य्याम्
मृगमदे अमरः ।
**मृगनेत्रा** स्त्री मृगो मृगशिरो नक्षत्रं नेता प्रापकः सर्व-
रात्रिप्रकाशकत्वात् यत्र बहुव्रीहि० । सौरमार्गस्य किञ्चि-
दधिकद्वयोविंशद्दिनावधिशेषपर्य्यन्तरात्रिषु ।
**मृगनाभिजा** स्त्री मृगस्य नाभेर्जायते जन-ड । कस्तूर्य्याम्
हेमच० । [हेमच०मृगेशादयोऽप्यत्र २सिंहराशौ च ।
**मृगपति** पु० ६त० । मृगाणां पशूनां पतिः स्वामी । १सिंहे
**मृगप्रिय** न० ६त० । पर्वततृणे राजनि० ।
**मृगवधाजीव** पु० मृगवधेनाजीवति आ+जीव-अच् । व्याधे
अमरः मृगाजीवोऽप्यत्र ।
**मृगबन्धनी** स्त्री मृगो बध्यतेऽनया बन्ध—करणे ल्युट् ङीप् ।
मृगबन्धनार्थे जाले अमरः । करणस्य कर्त्तृत्वविवक्षायां
णिनि ङीप् । मृगबन्धिनीत्यप्यत्र अमरे पाठान्तरम् ।
**मृगभक्ष्या** स्त्री मृगैर्भक्ष्यते भक्ष-कर्मणि यत् । जटामांस्याम्
राजनि० ।
**मृगमद** पु० मृगस्य मदो गर्वो यस्मात् । कस्तूर्य्याम् अमरः ।
**मृगमदवासा** स्त्री मृगमदस्येव वासः सौरभमस्याः । कस्तू-
रीमल्लिकायां राजनि० ।
**मृगया** स्त्री मृगं यात्यनया या—घञर्थे क । (शीकार)

पशुवधफलके व्यापारभेदे आखेटके अमरकोषः।

**मृगयु** पु० मृग–अस्त्यर्थे यु। १ब्रह्मणि २शृगाले ३व्याधे च मेदि० "मृगयुमिव मृगोऽथ दक्षिणेर्मा" भट्टिः।

**मृगरसा** पु० मृगो मृगमांसं तस्येव रसोऽस्याः। सहदेवीलतायाम् राजनि०।

**मृगराज** पु० मृगाणां पशूनां राजा टच्समा०। १सिंहे शब्दर०। मृगेण गजेन राजते अच्। २चन्द्रे। ३सिंहराशौ च। उपचारात् ४मृगशिरानक्षत्रे च।

**मृगराटिका** स्त्री मृगं रटति जीवत्वेन रट–अण् गौ० ङीष् स्वार्थे क। जीवन्त्यामोषधौ राजनि० [राशौ च।

**मृगरिपु** पु० ६त०। १सिंहे मृगशत्रुप्रभृतयोऽप्यत्र। २सिंह-

**मृगलाञ्छन** पु०मृगो लाञ्छनं यस्य।१चन्द्रे शब्दर०। मृगाङ्कादयोऽप्यत्र उपचारात् २मृगशिरानक्षत्रे च।

**मृगवल्लभ** न० ६त०। कुन्दरतृणे राजनि०।

**मृगवाहन** पु० मृगो वाहनं यस्य।१वायौ "धावन् हरिणपृष्ठस्थः" इति वायुध्यानम्।२स्वातिनक्षत्रे च।

**मृगव्य** न० मृगान् व्ययतेऽत्र व्यय-ड। मृगयायाम् अमरः।

**मृगशिरस्** न० पु०। मृगस्येव शिरोऽस्य। अश्विन्यवधिके पञ्चमे नक्षत्रे मृगशिराप्यत्र स्त्री टाप् शब्दर०। मृगशीर्षन्, न० रायमु० मृगशीर्ष पु० एतावप्यत्र भरतः।

**मृगा** स्त्री मृगो मृगमांसतुल्यरसोऽस्त्यस्य अच्। सहदेवीलतायाम् राजनि०।

**मृगाक्षी** स्त्री मृगस्येवाक्षि तत्तुल्यं पुष्पं वा यस्याः षच्समा० ङीष्। १विशालायां २मृगतुल्यनयनवत्यां स्त्रियां च मेदि०। [जायते जन–ड। कस्तूर्याम् राजनि०।

**मृगाण्डजा** स्त्री मृगस्याण्डाकारात् नाभिस्थितमांसपिण्डात्

**मृगादन** पुंस्त्री०मृगान् अत्ति अद-ल्यु। क्षुद्रव्याघ्रे अमरः। स्त्रियां ङीष्। मृगान्तकोऽप्यत्र।

**मृगादनी** स्त्री मृग इवाद्यते अद-कर्मणि ल्युट्। १सहदेव्याम् २इन्द्रवारुण्याम् (राखालशशा) ३कर्कोटीभेदे च राजनि०। [४सिंहराशौ च।

**मृगाराति** पुं० ६त०।१कुक्कुरे शब्दमा०।मृगशत्रौ २सिंहे च।

**मृगारि** पु० ६त०। १कुक्कुरे २सिंहे ३व्याघ्रे ४रक्तशोभाञ्जने च राजनि० तस्येवने हि तस्य नाशः।५सिंहराशौ च।

**मृगाविध्** पु० मृगं विध्यति व्यध+क्विप् पूर्वदीर्घः। व्याधे जटाधरः।

**मृगित** त्रि० मृग–क्त। १अन्वेषिते अमरः २याचिते च।

**मृगेन्द्र** पुंस्त्री०मृगः इन्द्र इव। सिंहे अमरः स्त्रियां ङीष्।

**मृगेन्द्रचटक** पु० मृगेन्द्र इव हिंस्रचटकः पक्षी। श्येनपक्षिणि जटा०।

**मृगेन्द्राशी** स्त्री मृगेन्द्रेण सिंहेनाश्यते भक्ष्यते अश-कर्मणि घञर्थे क गौरा०ङीष्। वासके राजनि०।

**मृगेर्वारु** स्त्री मृगप्रिया इर्वारुः कर्कोटी। श्वेतायामिन्द्रवारुण्याम् (सादा राखालशशा) राजनि०।

**मृगेष्ट** पु० ६त०। मुद्गरके राजनि०।

**मृगेक्षणा** स्त्री मृगस्य ईक्षणमिवेक्षणं पुष्पं वा यस्याः। १मृगेर्वारौ राजनि० २मृगतुल्यनेत्रायां स्त्रियां च।

**मृज** शोधने भूषणे च वा चु० उभ० पक्षे अदा० सक० वेट्। मार्जयति–ते मार्ष्टि अमीमृजत्–त अममार्जत्–त अमार्क्षीत् अमार्जीत् अमृक्षत् षित् मृजा। ["ता" भट्टिः

**मृजा** स्त्री मृज–अङ्। मार्जने अमरः "शिरसा च मृजा-

**मृड** तोषणे क्र्या० तु० च पर० सक० सेट्। मृड्णाति मृडति अमर्डीत् ममर्ड। [आशुक् च मृडानी।

**मृड** पु० मृड–क। १शिवे अमरः २तत्पत्न्याम् स्त्री ङीष्

**मृण** हिंसे तु० प० सक० वेट्। मृणति अमर्णीत्।

**मृणाल** पुंन० मृण–कालन्। १पद्मादेर्नालस्थे सूत्रे अमरः २वीरणमूले न० मेदि० गौरा० ङीष्। मृणालीत्यपि ३बिसतन्तौ स्त्री राजनि०।

**मृणालिन्** स्त्री मृणालं विद्यतेऽस्य अच् मृणालं पद्मं ततः समूहे तद्युक्तदेशे वा इनि। १पद्मसमूहे २पद्मयुक्तदेशे ३तद्युक्तलतायाञ्च जटा०।

**मृत** न० मृ–भावे क्त। १मरणे। २तत्तुल्यदुःखजनके याचितके द्रव्ये च अमरः। कर्त्तरि क्त। ३गतप्राणे त्रि०।

**मृतक** न० मृतेन मरणेन कायति कै-क। मरणाशौचे "सूतके मृतकेऽथ वा" इति स्मृतिः।

**मृतकल्प** त्रि० ईषदसमाप्तो मृतः मृत+कल्पप्। मृतप्राये।

**मृतकान्तक** पुंस्त्री० मृतः शवदेहः कान्तोऽभिमतो यस्य कप्। शृगाले हारा० स्त्रियां ङीष्।

**मृतजीव** पु० मृतः नष्टः सन् पुनर्जीवति जीव-अच्। तिलकवृक्षे राजनि०।

**मृतवत्सा** स्त्री मृतो वत्सो यस्याः। मृतापत्यायां १स्त्रियां २स्त्रीगव्याञ्च "मृतवत्सा च या नारीति" तन्त्रम्।

**मृतसञ्जीवनी** स्त्री मृतान् संजीवयति सम्+जीव-णिच्-ल्यु गौरा० ङीष्। १गोरक्षदुग्धायामोषधौ राजनि० तन्त्रोक्ते २विद्याभेदे च। [मरणनिमित्तं स्नतस्नाने अमरः

**मृतस्नात** त्रि० मृतं मरणं तन्निमित्तं स्नातः स्ना-क्त।

**मृत्तालक** न० मृत्तमालयति भूषयति अल–णिच्–ण्वुल्। आढक्याम् अमरः। मृत् मृत्तिका तालः प्रतिष्ठा यस्य वा कप्। मृत्तालकमप्यत्र शब्दर०। सौराष्ट्रमृदि राजनि०।

**मृत्तिका** स्त्री मृद्+तिकन् टाप्। १मृदि (माटि) सा चेमत्वेनाऽस्त्यस्य अच् टाप्। २आढक्याम् राजनि०।

**मृत्फली** स्त्री मृद् फलमस्याः ङीष्। कुष्ठौषधौ। (कुड़) हारा०।

**मृत्यु** पु० मृ–त्युक्। १यमे हेम० देहादिभ्यः २प्राणवियोगे विजातीयात्ममनःसंयोगनाशे वा ३मरणे च अमरः। "मृत्योः स मृत्युमाप्नोति" श्रुतिः अधर्मात् मायायां जाते ४पुत्रभेदे पु० अधर्माज्जज्ञेऽथ वै माया मृत्युं भूतापहारिणम्। निकृतिश्च तथा कन्या मृत्योर्भार्याऽभवत्सुते!। व्यलक्ष्मीनाम तस्यां च मृत्योः पुत्राश्चतुर्दश" मार्क०पु०।

**मृत्युञ्जय** पु० मृत्युं जयति जि–अच्। १महादेवे अमरः "कतिधा मृत्युकन्यानां ब्रह्मणा कोटियोजने। काले न लीनः शम्भुश्च तत्स्वरूपी च निर्गुणः। मृत्युकन्या जिता शम्भुः तत्र पितेन गुरुणा मम। न मृत्युना जितः शम्भुः कल्पे कल्पे श्रुतौ श्रुतम्" ब्रह्मवै०प्र० ५१अ०।

**मृत्युनाशक** पु० मृत्युं नाशयति नाशि–ण्वुल्। १पारदे राजनि० तस्य हि रसायनक्रियादिना शोधयित्वा सेवने मृत्युनाशकत्वम्। २मृत्युनाशकमात्रे त्रि०।

**मृत्युपुष्प** पु० मृत्यवे स्वामिमरणाय पुष्पं यस्य। इक्षौ रत्नमा० तस्मिन् पुष्पिते हि तत्स्वामिनो नाशः।

**मृत्युफला** स्त्री मृत्यवे स्वनाशाय फलं यस्याः। कदल्यां मेदि० फलपाके हि तस्या नाशो लोकसिद्धः। [त्रिकां०।

**मृत्युबीज** पु० मृत्युतस्तद्वंशस्य एव बीजं कारणमस्य। वंशे

**मृत्युसूति** स्त्री मृत्यवे सूतिः प्रसवोऽस्याः। कर्कटकयोषिति प्रसवेन हि तस्या नाशः "यथा कर्कटकी गर्भमादत्ते मृत्यवे निजम्" इति पुराणम्।

**मृत्(त्स)स्ना** स्त्री मृद्+प्रशस्तार्थे स्न वा। प्रशस्तमृत्तिकायाम् अमरः। अर्शआद्यच् स्नान्तः। २आढक्याम् अमरः।

**मृद** क्षोदे क्र्या० प० सक० सेट्। मृद्नाति अमर्दीत् ममर्द।

**मृद(दा)** स्त्री मृद्यते मृद–कर्मणि क्विप्। मृत्तिकायाम् (माटी) अमरः हलन्तत्वात् वा टाप्। मृदाप्यत्र।

**मृदङ्ग** पु० मृद–अङ्गच् किञ्च। १वाद्यभेदे अमरः। २कोशातक्यां स्त्री रत्नमा० गौरा० ङीष्।

**मृदङ्गफल** पु० मृदङ्ग इव फलमस्य। पनसवृक्षे शब्दर०।

**मृदङ्गफलिनी** स्त्री मृदङ्ग इव फलमस्त्यस्या इनि ङीप्। कोशातक्याम् राजनि०। तत्फलं साम्य इत्यत्र अच्। मृदङ्गतुल्यफले पनसवृक्षे पु० शब्दर०।

**मृदु** त्रि० मृद–कु। १कोमले अमरः। स्त्रियां वा ङीष् मृद्वी मृदुः। सा च २गृहकन्यायाम्। ३चित्रानुराधामृगरेवतीनक्षत्ररूपे नक्षत्रगणभेदे च ज्यो०त०।

**मृदुचर्मिन्** पु० मृदु कोमलं चर्म त्वचास्त्यस्य ब्रीह्या०इनि। भूर्जवृक्षे राजनि०।

**मृदुच्छद** पु० छाद्यतेऽनेन छदः त्वक् इव०। १भूर्जवृक्षे २पर्वतजपीलुवृक्षे जटा० ३कुकुरद्रुवे ४शीतालवृक्षे च राजनि०।

**मृदुताल** स्त्री कर्म०। शीतालवृक्षे (तेडेत) राजनि०।

**मृदुत्वच(च्)** पु० मृदुः त्वक् त्वचा वा यस्य। भूर्जवृक्षे अमरः।

**मृदुपत्र** पु० मृदूनि पत्राण्यस्य। १नले राजनि०। कर्म०। २कोमलपर्णे न० इव०। ३तद्वति त्रि०। ४चिल्लीशाके स्त्री राजनि० गौरा० ङीष्। [२मृदुपत्रियुक्ते त्रि०।

**मृदुपर्वक** पु० मृदूनि पर्वाण्यस्य कप्। १वेत्रे राजनि०।

**मृदुपुष्प** पु० मृदूनि पुष्पाण्यस्य। १शिरीषवृक्षे रत्नमा० इव०। २मृदुकुसुमयुते त्रि०। कर्म०, ३कोमलपुष्पे न०।

**मृदुफल** न० मृदूनि फलान्यस्य। १विकङ्कते (वइंचि) २मधुनारिकेले च राजनि०। ३कोमलफलयुते त्रि०। कर्म०। ४कोमलफले न०। [त्रि० अमरः।

**मृदुल** न० मृद–कुलच्। १जले शब्दच० २कोमलमात्रे

**मृदुलोमक** पु० इव०। १शशके हेमच०। २कोमललोमयुक्ते त्रि०। कर्म०। ३कोमललोम्नि न०।

**मृदूत्पल** न० कर्म०। १नीलोत्पले शब्दर०। २नीलपद्मे च।

**मृद्वीका** स्त्री मृदु+ईकन्। १द्राक्षायाम् अमरः २कपिलद्राक्षायाम् राजनि०।

**मृध** न० मृध्यतेऽत्र उन्दर्थे आधारे क। युद्धे अमरः।

**मृध** आर्द्रीभावे भ्वा० उभ० सक० सेट् इदित् क्त्वा वेट्। मर्धति-ते अमर्धीत् अमर्धिष्ट ममर्ध मम्र्धे।

**मृश** स्पर्शने प्रणिधाने च तु० पर० सक० अनिट्। मृशति अम्राक्षीत् अमार्क्षीत् अमृक्षत् ममर्श।

**मृष** क्षमायाम् अद०चु०उभ०सक०सेट्। मृषयति ते अमीमृषत् त। [अमृषिष्ट।

**मृष** क्षान्तौ अद०भ्वा०उभ० सक० सेट्। मृषति ते अमर्षीत्

**मृष** सेचने भ्वा०पर०सक०सेट्। मर्षति अमर्षीत् इदित् क्त्वा वेट्।

**मृष** क्षमायां चु॰उभ॰सक॰सेट् । मर्षयति ते अमीमृषत् त अममर्षत् त । [कित्वमिट् उदित् क्त्वा वेट् ।

**मृष** क्षमायां भ्वा॰ उभ॰ सक॰ सेट् । मर्षति ते अमर्षीत्

**मृष** क्षमायां चु॰पक्षे दिवा॰च उभ॰सक॰सेट् । मृष्यति ते । मर्षयति ते । मर्षितः मर्षित्वा ।

**मृषा** अव्य॰मृष-का । मिथ्याशब्दार्थे अमरः ।

**मृषार्थक** न॰ मृषा असत्यमाप्यभूतोऽर्थो यस्य । "कूर्मलोमतनुत्राणः शशशृङ्गधनुर्धरः" इत्यादि मिथ्यार्थकवाक्ये ।

**मृषालक** पु॰ मृषालक इव मध्यस्यास्य अच् । आम्रवृक्षे शब्दर॰ । [चूर्णो वह्निमानित्यादिवाक्यम् ।

**मृषावाद** पु॰ मृषा+वद-घञ् । मिथ्यावाक्ये जटा॰ यथा

**मृषोद्य** न॰ मृषा+वद-भावे क्यप् । १मिथ्याकथने तद्विद्यतेऽस्य अच् । २मिथ्यावादिनि त्रि॰शब्दमा॰। [त्रि॰अमरः

**मृष्ट** न॰मृज(ष)-क्त । १मरिचे राजनि॰; २शुद्धे ३शोधिते च

**मॄ** वधे क्र्या॰ प्वा॰ प॰ सक॰ सेट् । मृणाति अमारीत् ।

**मे** प्रतीदाने भ्वा॰ आत्म॰ सक॰ अनिट् । मयते अमास्त ।

**मेक(ख)ल** पु॰ मि-कलच् खलच् वा नान्त्वम् । १अद्रिभेदे मे इति कलो यस्य क मध्यः । २छागे पुंस्त्री॰ राजनि॰ स्त्रियां ङीष् ।

**मेक(ख)लकन्यका** स्त्री ६त॰ । नर्मदानद्याम् अमरः ।

**मेक(ख)लाद्रिजा** स्त्री मेक(ख)लाद्रेर्जायते जन-ड । नर्मदानद्याम् हेमच॰ ।

**मेक्षण** न॰ "द्व्यङ्गुलातीमिश्र्यार्द्धप्रमाणं मेक्षणं भवेत् । वृत्तं वाच्यं च पुच्छप्रमवदानक्रियाक्षमम्"कात्यायनोक्ते यज्ञपात्रभेदे । द्व्यङ्गुप्रमाणं प्रादेशदवम् ।

**मेखला** स्त्री मि-खलच् । "मेखला रशना काञ्ची" उक्ते १स्त्रीकट्याभूषणभेदे अमरः । उपनयनकाले ब्रह्मचारिधार्ये मौञ्ज्यादौ २कटीसूत्रे "मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्या विप्रस्य मेखला । क्षत्रियस्य च मौर्वी ज्या वैश्यस्य शणतान्तवी" मनुः । ३खड्गादिमुष्ट्याधारबन्धे ४पर्वतमध्यभागेन बन्धे ५शैलनितम्बे मेदि॰ ६नर्मदायां शब्दर॰ ७पृश्निपर्ण्याम् राजनि॰ । होमकुण्डोपरिस्थे मृत्कृते दवेष्टनभेदे च ।

**मेघ** पु॰ मिह-घञ् कुत्वम् । धूमज्योतिःपवनसलिलसंघातजन्ये १जलधरे २मुस्तके च अमरः ।३राक्षसभेदे शब्दच॰ ४रागभेदे च सङ्गी॰। [स्त्रियां ङीष् ।

**मेघजीवन** पुंस्त्री॰ मेघो जीवनं यस्य । चातकखगे राजनि॰

**मेघज्योतिस्** न॰मेघजन्यं ज्योतिः मा॰त॰। वज्राग्नौ अमरः

**मेघनाद** पु॰ मेघस्येव नादोऽस्य । १वरुणे २रावणस्य पुत्रे इन्द्रजिति । ६त॰ । ३मेघशब्दे च मेदि॰ ।

**मेघनादानुलासक** पुंस्त्री॰ मेघस्य नादेनानुलसति अनु+लस ण्वुल् । मयूरे राजनि॰ स्त्रियां ङीष् । णिनि । मेघनादानुलासिन् मयूरे अमरः ।

**मेघनामन्** पु॰ मेघस्य नामेव नाम यस्य । मेघवाचकशब्दवाच्ये मुस्तके अमरः ।

**मेघपुष्पक** न॰ मेघस्य पुष्पमिव । जले अमरः ।

**मेघयोनि** स्त्री॰ ६त॰ । धूमे शब्दरत्ना॰ ।

**मेघवर्णा** स्त्री मेघस्येव वर्णोऽस्याः । नीलीवृक्षे शब्दच॰ ।

**मेघवर्त्मन्** न॰६त॰। आकाशे त्रिका॰। मेघवीथ्यादयोऽप्यत्र।

**मेघवह्नि** पु॰ मेघजन्यो वह्निस्तद्घर्षणजातोऽग्निः । वज्राग्नौ हेमच॰ । एवं मेघानलादयोऽप्यत्र ।

**मेघवाहन** पु॰ मेघो वाहनमिव यस्य, मेघान् वाहयति चालयति वह-णिच् ल्यु वा । इन्द्रे अमरः ।

**मेघसार** पु॰ मेघस्य कर्पूरस्य सारः । चीनकर्पूरे राजनि॰ ।

**मेघस्तनितोद्भव** पु॰ मेघस्तनिताद्उद्भवति उद्+भू-अच् । विकङ्कतवृक्षे राजनि॰ ।

**मेघागम** पु॰ मेघानामागमो यत्र । वर्षाकाले वर्षर्तौ शब्दर॰

**मेघानन्दिन्** पु॰ मेघेन तद्ध्वनिना आनन्दति आ+नन्द-णिनि । मयूरे अच् मेघानन्दा । बलाकायां राजनि॰ ।

**मेघान्त** पु॰ मेघानामन्तो यत्र । शरत्काले राजनि॰ मेघात्ययादयोऽप्यत्र । [त्रिका॰ ।

**मेघास्थि** न॰ मेघानामस्थीव संहतकठिनत्वात् । करकायाम्

**मेचक** न॰ मच-वुन् पृषो॰ । १अन्धकारे २स्रोतोऽञ्जने च मेदि॰ ३नीलाञ्जने राजनि॰ । ४मयूरचन्द्रके ५कृष्णवर्णे मेदि॰ । ६धूमे ७मेघे दयोभाञ्जने शब्दर॰ ८कृष्णवर्णयुते त्रि॰ अमरः ।

**मेट** (ड) उन्मादे भ्वा॰ पर॰ सक॰ सेट् ऋदित् चङि न ह्रस्वः । मेट(ड)ति अमेटी(डी)त् ।

**मेटुला** स्त्री मेट-उलच् । आमलक्याम् शब्दच॰ ।

**मेढ्र** पुंस्त्री॰ मिह-ष्ट्रन् । १मेषे स्त्रियां ङीष् २पुंसोऽसाधारचिह्ने च पु॰ अमरः । [गाडरशिङ्गा) रत्नमा॰ ।

**मेढ्रशृङ्गी** स्त्री मेढ्रस्येव शृङ्गं यस्याः ङीष् । मेषशृङ्गाम्

**मेथ** वधे मेधायाञ्च सक॰ सङ्गे अक॰ भ्वा॰ उभ॰ सेट् । मेथति ते अमेथीत् अमेथिष्ट । ऋदित् चङि न ह्रस्वः ।

**मेथि(धि)** पु॰ मेथ (ध)-इन् । धान्यमर्द्दनार्थं पशुबन्धनकाष्ठे (मेड़काठ) हेमच॰ ।

मेथिका स्त्री मेथ–ण्वुल्। (मेथि) शाकभेदे राजनि०। णिनि मेथिनी। अत्रैव स्त्री ङीप्। अच् गौरा०ङीष्। मेथी अत्रैवार्थे राजनि०।

मेद् वधे मेधायाञ्च सक० भ्वा० उभ० सेट्। मेदति ते अमेदीत् अमेदिष्ट। ऋदित् चङि न ह्रस्वः।

मेदःसारा स्त्री मेदवः इव सारोऽस्याः। अष्टवर्गप्रसिद्धौषधिभेदे मेदायां राजनि०।

मेदक पु० मेद–ण्वुल्। जगले (मेकोया) अमरः।

मेदज पु० मेदात् मधुकैटभासुरमेदसो जायते जन–ड। भूमिज गुग्गुलौ राजनि०। मेदोजातमात्रे त्रि०।

मेदस् न० मेद–असुन्। मांसजन्ये धातुभेदे (वसा) अच्। मेद अत्रैव पु०। [मांसे हेमच०।

मेदस्कृत् न० मेदः करोति स्वपरिपाकेण जनयति कृ–क्विप्।

मेदा स्त्री मेदः कारणत्वेनास्त्यस्याः अच्। अष्टवर्गप्रसिद्धौषधिभेदे भावप्र०।

मेदिनी स्त्री मेदः मधुकैटभमेदोऽस्त्यस्याः कारणत्वेन इनि। १वसुन्धरायाम् "मधुकैटभयोरासीन्मेदसैव परिप्लुता। तेनेयं मेदिनी देवी प्रोच्यते" इति पुराणम्। २मेदायाञ्च।

मेदुर त्रि० मिद्–घुरच्। १अतिशयस्निग्धे। "मेघैर्मेदुरमम्बरम्" जयदेवः। २काकोल्यां स्त्री राजनि० टाप्।

मेदोज न० मेदसो वसातो जायते जन–ड। देहस्थे मज्जाहेतौ अस्थिनामके धातौ। [षधिभेदे राजनि०

मेदोद्भवा स्त्री मेदादुद्भवति उद्+भू–अच्। अष्टवर्गप्रसिद्धौ-

मेध मेथवत् सर्वम्। मेधति ते अमेधीत् अमेधिष्ट।

मेधस् पु० मेध–असुन्। स्वायम्भुवस्य मनोः पुत्रभेदे।

मेधा स्त्री मेध–अङ्। १धारणावत्यां बुद्धौ यया बुद्ध्या ज्ञातस्य न विस्मरणं तत्र। नञ्दुःसुभ्यश्च्यात् बहु० असिच्समा०। अमेधाः दुर्मेधाः सुमेधाः इत्यादि। आधारे घञ्। २यागे पु०। [वति त्रि० मेदि० स्त्रियां ङीप्।

मेधाविन् पु० मेधा+अस्त्यर्थे विनि। १शुकपक्षे। २मेधा-

मेधिर त्रि०मेधा+अस्त्यर्थे इरच्। मेधावति त्रिका०।

मेधिष्ठ त्रि०अतिशयेन मेधावान् इष्ठन् मतोर्लुक्। अतिशयमेधावति जने। ईयसुन् मेधीयस् तत्रार्थे स्त्रियां ङीप्

मेध्य त्रि० मेध–यत्। १पवित्रे अमरः २शुचौ च मेदि० मेधाय यज्ञाय हितः यत्। ३यागे ४खदिरे ५यवे च पु० मेदि०। ६केतक्यां ७शङ्खपुष्प्यां दरस्रवकायाम् दरोचनायां, १०वचायाम्, ११मण्डूक्यां १२ज्योतिष्मतीलतायाम् स्त्री राजनि०।

मेनका स्त्री मि–नक। १स्वर्वेश्याभेदे शब्दर०। मेनैव स्वार्थे क। २हिमालयपत्न्याम्। [ऽप्सर।

मेनकात्मजा स्त्री ६त०। ६तत्त्वात् दुर्गायाम् मेनासुताद्यो-

मेना स्त्री मि–न। हिमालयपत्न्याम् पितॄणां मानस्यां कन्यायाम्। "मेनां मुनीनामपि माननीयाम्" कुमा०।

मेनाद पुंस्त्री० मे इति नादो यस्य। १विडाले २छागे ३मयूरे च मेदि० स्त्रियां ङीष्।

मेन्धी स्त्री मा लक्ष्मीः इध्यते यया इन्ध–घञ् गौरा०ङीष्। (मेहदी) इति ख्याते तत्पल्लवमर्द्दने हि लक्ष्मीतुल्यरक्तत्वता।

मेप गतौ भ्वा० आ० सक० सेट्। मेपते अमेपिष्ट। ऋदित् चङि न ह्रस्वः। [नामेयं युक्तिः"।

मेय त्रि० मा–मि–वा यत्। १परिच्छेद्ये २ज्ञेये च "मानाधी-

मेरु पु० मि–रु। सर्वेषां उत्तरस्थे १पर्वतभेदे जपमालोपरिस्थे २फलबीजादिके ३करजपमालायामङ्गुलिपर्वभेदे च

मेरुक पु० मेरुरिव पीतवर्णत्वात् इवार्थे कन्। यक्षधूपे (धुना) शब्दच०।

मेरुसावर्ण पु०। चतुर्दशस्य मनुषु एकादशे मनौ।

मेलक त्रि० मेलयति मिल–णिच–ण्वुल्। १मिलाके योटकभेदे मिल–भावे घञ् स्वार्थे क। २सङ्गे अमरः।

मेला स्त्री मिल–णिच्–अच् टाप्। १नीलीवृक्षे राजनि०। २मस्याम् ३अञ्जने ४मेलने च मेदि०। [ अटा०।

मेलाम्बु पु० मेलाया मस्या अम्बुरिव। मस्याधारे (दोयात)

मेलापकाख्या स्त्री नी० ता० उक्ते यकटभेदे यकटात्र० शब्दे २७५१ पृ० दृश्यम्। [चङि न ह्रस्वः।

मेव सेवने भ्वा० आ० सक० सेट्। मेवते अमेविष्ट। ऋदित्

मेष पुंस्त्री० मिष–अच्। (भेड़) १पशुभेदे अमरः स्त्रियां ङीष्। २चक्रमर्दके मेदि०। ज्योतिषचक्रस्य द्वादशांशे अश्विनीभरणीकृत्तिकानक्षत्राद्यपादात्मके ३राशिभेदे।

मेषकम्बल पु० मेषस्य तल्लोम्ना निर्मितः कम्बलः। मेषलोमजाते वस्त्राकारे पदार्थे अमरः।

मेषलोचन पु० मेषस्य लोचनमिव पुष्पमस्य। १चक्रमर्दे भावप्र०। २मेषतुल्यनेत्रे त्रि० मेषनेत्रादयोप्यत्र।

मेषवल्ली स्त्री मेषस्य शृङ्गाकारफलयुता वल्ली शाक०त०। (गाडरशिङ्) लताभेदे भावप्र०।

मेषविषाणी स्त्री मेषस्य विषाणं शृङ्गमिव फलं यस्याः गौरा०ङीष् (माडरशिङ्) लताभेदे रत्नमा०। स्वार्थे क अत इत्वम्। मेषविषाणिका तत्रार्थे।

मेषशृङ्ग पु० मेषशृङ्गमिवाकारोऽस्त्यस्य अच्। १स्थावरविष-

मेदे हेमच०। २अजस्तन्याम् (गाडरमिङ्गा) स्त्री गौरा० ङीष् राजमा०। [शब्दच०।

**मेषा** स्त्री मिष-कर्मणि घञ्। सूक्ष्मैलायाम् (गुजराटी)

**मेषाक्षिकुसुम** पु० मेषाक्षीव कुसुमं यस्य। चक्रमर्दे राजमा० मेषपुष्पादयोऽप्यत्र।

**मेषाण्ड** पु० मेषस्याण्ड एवाण्डोऽस्य। इन्द्रे तस्य हि दक्षयज्ञेऽण्डनाशे मेषाण्डेन तत्करणमिति पुराणप्रसिद्धम्।

**मेषालु** पु० मेषाणामालुरिव प्रियः। बर्बरीवृक्षे शब्दच०।

**मेषी** स्त्री मिष-अच् गौ० ङीष्। १जटामांस्यां २तिनिशवृक्षे च राजनि०। जातौ ङीष्। ३मेषजातिस्त्रियाम्।

**मेसूरण** न० ब्रह्मावधिदशमस्थाने ज्यो० त०।

**मेह** पु० मिह-घञ्। १प्रस्रावे हेमच० २प्रमेहरोगभेदे च अमरः। प्रमेहशब्दे दृश्यम्। अच्। ३मेषे शब्दच०।

**मेहघ्नी** स्त्री मेहं हन्ति हन-टक् ङीप्। हरिद्रायाम् राजमा० आर्द्रतक्रयुतहरिद्रादिना मेहनाश इति वैद्यकप्रसिद्धिः।

**मेहन** न० मिह्यतेऽनेन मिह-करणे ल्युट्। १शिश्ने अमरः। कर्मणि ल्युट्। २मूत्रे मेदि०। भावे ल्युट्। ३मूत्रोत्सर्गे।

**मैत्र(त्र)** न० मित्रो देवताऽस्य अण् मैत्रं पायुक्षालनं पुनरपि। १विष्ठोत्सर्गे "मैत्रं कर्म समाचरेत्" इति स्मृतिः। मित्रो देवताऽस्य, मित्रात आगतं तस्येदं वा अण्। २अनुराधानक्षत्रे न०। तस्य हि मित्रो देवता। ३मित्रतः प्राप्ते "मैत्रमौद्वाहिकञ्चैव" स्मृतिः। ४सुहृत्सम्बन्धिनि च त्रि०। मित्रमेव स्वार्थे प्रज्ञाद्यण्। ५मित्रे ६ब्राह्मणे च पु० त्रिका०।

**मैत्रावरुण** पु० मित्रश्च वरुणश्च देवताद्वन्द्वे आनङ् मित्रावरुणयोरपत्यम् अण्। अगस्त्ये। इञ्। मैत्रावरुणिरप्यत्र वाल्मीके हि तस्य तयोः पुत्रत्वं पुराणप्रसिद्धम्।

**मैत्री** न० मित्रस्य भावः अण् वा ष्यञ् पक्षे ङीप् यलोपः। सौहार्दे मैत्र्यमप्यत्र न०। [त्रिका०।

**मैत्रेय** पु० मित्राया अपत्यम् ढक्। १मुनिभेदे २बुद्धदेवे

**मैथिली** स्त्री मिथिलायां भवा अण् ङीप्। १सीतायाम्। मिथिलाया राजा अण्। २मिथिलादेशाधिपे पु०।

**मैथुन** न० मिथुनेन स्त्रीपुंसाभ्यां निर्वृत्तम् अण्। १अन्याधानादौ, कर्मणि "सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने" इति स्मृतिः। अग्न्याधाने हि सपत्नीकस्यैवाधिकार इति तस्य तत्साध्यत्वम्। २स्त्रीपुंसयोः सङ्गमरूपे ग्राम्यधर्मे च अमरः। [जटा०।

**मैनाक** पु० मेनकायां भवः अण्। हिमालयसुते पर्वतभेदे

**मैरेय** न० मिरायां देशभेदे ओषधिभेदे वा भवं ढक्। मिरा देशजाते १आसवे "मैरेयं धातकीपुष्पगुडधानाम्लसन्धितम्" माधवोक्ते २मद्यभेदे च न०।

**मोक्ष** वधे वा चु० उभ० पक्षे भ्वा० पर० सक० सेट्। मोक्षयति ते मोक्षति अमुमोक्षत् त अमोक्षीत्।

**मोक्ष** पु० मोक्ष-घञ्। १अपवर्गे २मोचने "नीविमोक्षो हि मोक्षः" सा०द०। ३पाटलिवृक्षे मेदि०। ४मरणे हेमच०।

**मोघ** त्रि० मुह-घ अच् वा कुत्वम्। १निरर्थके अमरः २हीने ३पाटलावृक्षे मेदि० ४विडङ्गे च स्त्री हेम० ५प्राचीरे पु० शब्दमा०। [राजनि०।

**मोघपुष्पा** स्त्री मोघं पुष्पमार्त्तवं यस्याः। वन्ध्यायां स्त्रियाम्

**मोच** न० मुच-अच्। १कदलीफले २शोभाञ्जने पु० अमरः। ३कदल्यां ४शाल्मलिवृक्षे ५नीलीवृक्षे, च स्त्री मेदि० टाप्।

**मोचक** पु० मुच-ण्वुल्। १मोक्षे २कदल्यां ३शोभाञ्जने च ४वैराग्यवति त्रि० हेमच० ५मुष्ककवृक्षे राजनि०।

**मोचन** न० मुच-णिच्-वा भावे ल्युट्। १मुक्तौ २मोचने दाने ४त्यागे च। मुच्यते रोगात् अनया मुच-करणे ल्युट्। ५कण्टकार्य्यां स्त्री जटा० ङीप्। [राजनि०।

**मोचरस** पु० ६त०। शाल्मलिनिर्यासे स्वनामख्याते पदार्थे

**मोचाट** पु० मुच-णिच्-अच् मोचाय रोगमोचनाय अटति अट-अच्। १कृष्णजीरके २रक्तचन्दने ३मलयोद्भवे च मेदि०

**मोटक** न० मुट-ण्वुल्। श्राद्धे पितृदानार्थे १कुशत्रयपत्त्रकृते २रागिणीभेदे स्त्री सङ्गी० ङीप्।

**मोटा** स्त्री मुट-अच्। बलायाम् राजनि०।

**मोट्टायित** न० "कान्तस्मरणवार्त्तादौ हृदि तद्भावभावतः। प्राकट्यमभिलाषस्य मोट्टायितमुदीर्यते" उज्ज्वलमण्युक्ते स्त्रीणामभिलाषभेदे।

**मोद** पु० मुद-घञ्। हर्षे शब्दर०।

**मोदक** पु० मोदयति मुद-णिच्-ण्वुल्। १खाद्यभेदे (मोया) अमरः। शूद्रायां क्षत्रियाज्जाते २वर्णसङ्करजातिभेदे (मयरा) स्मृतिः। [राजनि०।

**मोदमोदिनी** स्त्री मोद इव मोदयति मुद-णिनि। जम्बाम्

**मोदयन्ती** स्त्री मुद-णिच्-शतृ ङीप्। वनमल्लिकायाम् (काठमल्लिका) शब्दर०। [राजनि०।

**मोदा** स्त्री मोदयति अजान् मुद-णिच्-अच्। अजमोदायाम्

**मोदाढ्या** स्त्री मोदः आजमोदस्येवाढ्या। १अजमोदायाम् २हर्षयुक्ते त्रि० राजनि०।

**मोदिनी** स्त्री मोदयति मुद-णिच्-णिनि । १अजमोदायाम् २मल्लिकायाम् ३यूथिकायां ४कस्तूर्यां ५मदिरायाञ्च राजनि० ।

**मोरट** न० मुर-अटन् । १इक्षुमूले, २अङ्कोटपुष्पे ३सप्तरात्रोषितक्षीरे च मेदि० । ४मूर्वालतायां स्त्री अमरः । ५क्षीरमोरटायां पु० राजनि० ।

**मोषक** पु० मुष्णाति मुष-ण्वुल् । तस्करे चौरे अमरः ।

**मोषण** न० मुष-ल्युट् । १लुण्ठने २छेदने, ३वधे च ।

**मोह** पु० मुह-घञ् । १मूर्च्छायाम् भ्रान्तिसाधने २अज्ञाने मेदि० ३वेदान्तोक्ते अविद्यावृत्तिभेदे ३दुःखे शब्दर० ४देहादिष्वात्माभिमाने च ।

**मोहन** पु० मोहयति मुह-णिच्-ल्यु । १धुस्तूरे राजनि० कन्दर्पस्य २शरभेदे च त्रिका० । ३मोहकारके त्रि० स्त्रियां टाप् । सा च ४त्रिपुरमालीपुष्पे रत्नमा० । ५मत्स्याक्ष्यां शब्दमा० । ६उपोदक्यां स्त्री राजनि० । ७वटपत्र्यां भावप्र० उभयत्र गौरा० ङीष् ।

**मोहरात्रि** स्त्री ब्रह्मणो निजपरिमाणेन पञ्चाशद्वर्षे गते प्रलयभेदे "कालरात्रिर्महारात्रिर्मोहरात्रिश्च" चण्डी

**मोहिनी** स्त्री मुह-णिनि । १अप्सरोभेदे यस्याः शापात् ब्रह्मणोऽपूज्यत्वं तत्कथा ब्रह्मवै० ज० ख० ३१अ० । अमृतमन्थनकाले दैत्यानां मोहनाय स्त्रीरूपिणि भगवदवतारभेदे च ।

**मौक्तिक** न० मुक्तैव स्वार्थे ठक् । मुक्तायाम् अमरः ।

**मौक्तिकप्रसवा** स्त्री मौक्तिकं प्रसूते प्र+सू-अच् । मुक्तास्फोटे शुक्तौ राजनि० ।

**मौक्तिकशुक्ति** स्त्री ६त० । मुक्तास्फोटे शुक्तौ राजनि० ।

**मौञ्जी** स्त्री मुञ्जस्येयम् अण् । कटिसूत्रे त्रिरावृत्तमुञ्जकृतायां मेखलायाम् मनुः । [राजनि० ।

**मौञ्जीपत्री** स्त्री मौञ्ज्या इव पत्रमस्याः । वल्वजायाम्

**मौञ्जीबन्ध** पु० मौञ्ज्या मेखलाया बन्धोऽत्र । १उपनयनसंस्कारे "मौञ्जीबन्धः शुभः प्राक्तनेन मीनगते रवावि"ति ज्यो० । ल्युट् मौञ्जीबन्धन तत्रार्थे न० । "द्वितीयं मौञ्जीबन्धनम्" मनुः । ६त० । २तद्बन्धने च ।

**मौढ्य** न० मूढस्य भावः ष्यञ् । १मोहे हेम० २बाल्ये च ।

**मौद्गल्य** पु० मुद्गलस्य मुनेर्गोत्रापत्यं गर्गा० यञ् । मुद्गलगोत्रापत्ये मुनिभेदे । [च्चले अमरः ।

**मौद्गीन** न० मुद्गानां भवनं क्षेत्रं खञ् । मुद्गभवनयोग्ये

**मौन** न० मुनेर्भावः । वाग्व्यापाररहित्ये "उच्चारे मैथुने चैव प्रस्रावे दन्तधावने । स्नाने भोजनकाले च षट्सु मौनं समाचरेत्" इति स्मृतिः ।

**मौनिन्** त्रि० मौनमस्त्यस्य इनि । १वाग्व्यापाररहिते । २मुनौ पु० जटा० । [राजनि० ।

**मौनेय** पु० मुनेः कश्यपपत्नीभेदस्यापत्यम् ढक् । गन्धर्वभेदे

**मौरजिक** त्रि० मुरजस्य वादनं शिल्पमस्य ठक् । मृदङ्गवादनशीले अमरः ।

**मौर्ख्य** न० मूर्खस्य भावः ष्यञ् । १जाड्ये हेमच० २मूर्खतायाञ्च

**मौर्वी** स्त्री मूर्वा लता तत्तन्तुना निर्वृत्ता अण् । १धनुर्गुणे अमरः । २अजशृङ्ग्याञ्च रत्नमा० ।

**मौल** त्रि० मूलं वेत्ति मूलादागतो वा अण् । भूम्यादेरामनादिमूलज्ञे, "यं परम्परया मौलाः सामन्ताः स्वामिनं विदु"रिति स्मृतिः २मूलादागते च ।

**मौलि** पुंस्त्री० मूलस्यादूरभवः इञ् । १चूडायां २किरीटे ३संयतकेशेषु अमरः ४मस्तके हेमच० । ५अशोकवृक्षे पु० । ६भूमौ स्त्री मेदि० वा ङीप् ।

**मौषल** न० मुषलस्येदम् तदधिकृत्य वा अण् । १मुषलसम्बन्धिनि २मुषलद्वारा निधने "गङ्गायां मौषलं स्नानं महापातकनाशनम्" इति पुराणम् । मुषलमधिकृत्य कृतो ग्रन्थः अण् । महाभारतान्तर्गते "मुषलं कुलनाशनम्" इत्यादिप्रतिपादके षोडशे १पर्वणि ।

**मौहूर्त्त** पु० मुहूर्त्तं तत्प्रतिपादकं शास्त्रं वेत्त्यधीते वा अण् । ज्योतिःशास्त्रज्ञे । ठक् । मौहूर्त्तिक तत्रैव अमरः ।

**म्ना** अभ्यासे भ्वा० पर० सक० सेट् । मनति अम्नासीत् मम्नौ ।

**म्रक्ष** संयोजने छेदने च चु० उभ० सक० सेट् । म्रक्षयति ते अमम्रक्षत् त । [अम्रक्षीत् ।

**म्रक्ष** संघाते अक० संयोजने सक० भ्वा० पर० सेट् । म्रक्षति

**म्रक्षण** न० म्रक्ष-भावे ल्युट् । १संयोजने २राशीकरणे, ३तैले हेमच० ।

**म्रद** मर्द्दे भ्वा० आ० सक० सेट् । म्रदते अम्रदिष्ट । घटा० म्रदयति । मित् अङ् म्रदा । [म्रदुत्वे ।

**म्रदिमन्** पु० मृदोर्भावः मृदु+इमनिच् ऋत् ऋतोरः ।

**म्रदिष्ठ** त्रि० अतिशयेन मृदुः इष्ठन् ऋत् ऋतोरः । अतिमृदुत्ववति । ईयसुन् । म्रदीयस् तत्रार्थे त्रि० स्त्रियां ङीप् ।

**म्रुच** गतौ भ्वा० पर० सक० सेट् । म्रोचति इरित् अम्रुचत् अम्रोचीत् मुम्रोच । उदित् क्त्वा वेट् ।

**म्रुन्च** गतौ सर्वं म्रुचवत् । म्रुञ्चति अम्रुचत् अम्रुञ्चीत् ।

म्लेट(ड) उन्मादे भ्वा० पर० सक० सेट्। म्लेट(ड)ति अमेटी(डी)त्। ऋदित् चङि न ह्रस्वः।

म्लच्छ चु० म्लेच्छवत् सर्वम्। म्लच्छयति ते। अमम्लच्छत् त।

म्लान त्रि० म्लै कान्तिक्षये-क्त तस्य नः। १मलिने हेमच० २म्लानियुक्ते च।

म्लानि स्त्री म्लै-क्तिन्। कान्तिक्षये। [२म्लाने च त्रि०मेदि०

म्लिष्ट न० म्लेच्छ-क्त नि०। १अविस्पष्टवाक्ये २तद्वाक्ययुक्ते

म्लुच गतौ भ्वा०पर०सक०सेट्। म्लोचति। इरित् अम्लुचत् अम्लोचीत्। उदित् क्त्वा वेट्।

म्लुन्च गतौ म्लुचवत् सर्वम्। म्लुञ्चति अम्लुचत् अम्लुञ्चीत्

म्लेच्छ अपशब्दे वा चु० उभ० पक्षे भ्वा० पर० अक० सेट्। म्लेच्छयति ते म्लेच्छति अमम्लेच्छत् त अम्लेच्छीत्

म्लेच्छ पु० म्लेच्छ-घञ्। १अपशब्दे "म्लेच्छो ह वा नाम यदपशब्द" इति श्रुतिः। कर्त्तरि अच्। २पामरजातौ, ३नीचजातौ च पुंस्त्री० स्त्रियां ङीष् "गोमांसखादको यस्तु विरुद्धं बहु भाषते। सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते" बौधायनः। ४पापरते त्रि० मेदि०। ५हिङ्गुले न० राजनि०।

म्लेच्छकन्द पु० म्लेच्छप्रियः कन्दः शा०त०। लशुने राजनि०

म्लेच्छजाति स्त्री म्लेच्छाभिधा जातिः। गोमांसादिभक्षके किरातादिजातिभेदे अमरः।

म्लेच्छदेश पु० म्लेच्छाधारो देशः। चातुर्वर्ण्याचाररहिते देशे अमरः। "चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते। म्लेच्छदेशः स विज्ञेय आर्य्यावर्त्तस्ततःपरम्"।

म्लेच्छभोजन न० म्लेच्छैर्भुज्यते भुज-कर्मणि ल्युट्। १यावके अन्नभेदे शब्दर०। २गोधूमे पु० त्रिका०।

म्लेच्छमण्डल न० ६त०। म्लेच्छदेशे हेमच०।

म्लेच्छमुख न०म्लेच्छानां मुखमिव रक्तत्वात्। ताम्रे अमरः। म्लेच्छाश्यमप्यत्र हारा०।

म्लेच्छित न० म्लेच्छ-क्त। अपशब्दे असंस्कृतशब्दे हारा०।

म्लेट(ड) उन्मादे भ्वा० पर० सक० सेट्। म्लेट(ड) ति अम्लेटी(डी)त्। ऋदित् चङि न ह्रस्वः।

म्लेव सेवने भ्वा० आ० सक० सेट्। म्लेवते अम्लेविष्ट। ऋदित् चङि न ह्रस्वः। [मम्लौ म्लानः म्लानिः।

म्लै कान्तिक्षये भ्वा० पर० सक० अनिट्। म्लायति अम्लासीत्

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलिते वाचस्पत्ये मकारादिशब्दार्थसङ्कलनम्।

---

# य

यकारः व्यञ्जनवर्णभेदः स्पर्शवर्णोष्मवर्णयोर्मध्यस्थत्वात् अन्तःस्थवर्णभेदः तस्योच्चारणस्थानं तालु जिह्वाग्रेण तालुन ईषत्स्पर्शेनोच्चारणादस्योच्चारणे ईषत्स्पर्श आभ्यन्तरप्रयत्नः "अचोऽस्पृष्टायणस्त्वीषत्" शिक्षोक्तेः। बाह्यप्रयत्नाः संवारनादघोषा अल्पप्राणश्च। वर्णाभिधानेऽस्य वाचकशब्दा उक्ता यथा "यो वायौ वसुधा वायुर्विकृतिः पुरुषोत्तमः। युगान्तः श्वसनः शीघ्रो धूमार्च्चिः प्राणिसेवकः। शङ्खो भ्रमो जटी लोला वायुवेगी यशस्करी। सङ्कर्षणः चपा बालो हृदयं कपिला प्रभा। आग्नेयो व्यापकस्त्यागो मोहो याता प्रभा सुखम्। चण्डः सर्वेश्वरी धूम्रा चामुण्डा सुमुखेश्वरी। त्वगात्मा मलयो माता हंसिनी भृङ्गिनायकः। ॐ नमः शोषको मीनो धनिष्ठा नर्मवेदिनी। शिष्टः सोमः पङ्क्तिनामा पापहा प्राणसंज्ञकः"। अस्याधिष्ठातृदेवताध्यानं यथा "धूम्रवर्णां महारौद्रीं षड्भुजां रक्तलोचनाम्। रक्ताम्बरपरीधानां नानालङ्कारभूषिताम्। महामोक्षप्रदां नित्यामष्टसिद्धिप्रदायिनीम्। एवं ध्यात्वा यकारन्तु तन्मन्त्रं दशधा जपेत्"। अस्य ध्येयस्वरूपं यथा "यकारं शृणु चार्वङ्गि! चतुष्कोणमयं सदा। पलालधूमसङ्काशं स्वयं परमकुण्डलीम्। पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा। त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं तथा। प्रणमामि सदा वर्णं मूर्त्तिमन्मोक्षमव्ययम्" कामधेनुतन्त्रम्। मातृकान्यासे अस्य हृदयन्यास्यता। काव्यादौ अस्य प्रथमप्रयोगे लक्ष्मीलाभः फलम् "यो लक्ष्मीं रस्तु दाहम्" वृ०र०टी०।

य पु० या-ड। १वायौ २यशसि ३योगे, ४गतौ च ५यातरि त्रि० शब्दरत्ना०। यम-ड। ६संयमे। ७आदिलघुशेषगुरुके जलदैवते लक्ष्मीफलके यगणे च।

यकार पु० य+स्वरूपे कार। यस्वरूपे वर्णे।

यकृत् न० यं संयमं करोति कृ-क्विप् तुक् च। १कुक्षौ दक्षिणभागस्थे मांसपिण्डे अमरः। २तद्वृद्धौ रोगभेदे च "अधो दक्षिणतश्चापि हृदयात् यकृतः स्थितिः। तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम्" भावप्र०। तद्रोगनिदानादि तत्रोक्तं यथा "प्लीहामयस्य हेत्वादि समस्तं यकृदामये। किन्तु स्थितिस्तयोर्ज्ञेया वामदक्षिणपार्श्वयोः"। अस्य शमादौ भक्ते च यकृदारिः।

**यक्षदामिका** स्त्री यक्षतद्दयात्मा स्वरूपं यस्याः कप्। तैल-पायिकायाम् (तेलापोका) शब्दच०। [इति शब्दच०।

**यक्षवैरिन्** पु० यक्षतो रोगभेदस्य वैरी हन्तृत्वात्। रोहितक-

**यक्ष** पूजायां चु० आ० सक० सेट्। यक्षयते अययक्षत।

**यक्ष** पु० यक्ष्यते यक्ष–कर्मणि घञ्। १देवयोनिभेदे २तदीश्वरे कुवेरे मेदि०३इन्द्रगृहे सारस्वतः। भावे घञ् ४पूजने च।

**यक्षकर्दम** पु०यक्षप्रियः कर्दम इव। "कुङ्कुमागुरुकस्तूरी कर्पूरं चन्दनं तथा। महासुगन्धमित्युक्तं नामतो यक्षकर्दम" इत्युक्ते समभागेन मिश्रिते कुङ्कुमादौ धन्व-न्तरिः।कुङ्कुमस्थाने कक्कोलस्तत्रम् [यक्षपङ्कादयोऽप्यत्र।

**यक्षतरु** पु० यक्षाणां वासयोग्यस्तरुः। वटवृक्षे राजनि०

**यक्षधूप** पु०यक्षे पूजने योग्यो धूपः।(धुना) सर्जरसे अमरः

**यक्षराज** पु० यक्षाणां राजा टच् समा०। कुवेरे। यक्षेषु राजते राज-क्विप्। यक्षराड़प्यत्र पु०।

**यक्षरात्रि** स्त्री० यक्षप्रिया रात्रिः शा०त०। कार्त्तिकपूर्णिमा-रात्रौ त्रिका०। [शब्दमा०।

**यक्षामलक** न० यक्षाणामामलकमिव। पिण्डखर्जूरफले

**यक्षावास** पु० ६त०। यक्षाणामावासः। वटवृक्षे राजनि०।

**यक्षोडुम्बुरक** न० यक्षाणामुडुम्बरमिव इवार्थे कन्। अश्वत्थफले त्रिका०। [शब्दमा०।

**यक्षघ्नी** स्त्री० यक्ष्माणं हन्ति हन–टक् ङीप्। द्राक्षायाम्

**यक्ष्मन्** पु०यक्ष–मनिन्। रोगभेदे अमरः। तन्निदानादि यथा "वेगरोधात् क्षयाच्चैव साहसाद्विषमाशनात्। त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात्"। वेगोऽत्र वातमूत्र पुरीषाणां। "वातमूत्रपुरीषाणि निग्टह्णाति यदा नरः" इति चरकवचनात्। क्षयात् क्षीयतेऽनेनेति क्षयः तेनातिव्यवायानशनेर्ष्यादयो धातुक्षयहेतवः क्षय शब्देनोच्यन्ते। साहसात् बलवता समं मल्लयुद्धा दितः। विषमाशनात् "बहु स्तोकमकाले वा तज्ज्ञेयं विषमाशनम्" तस्मात्। त्रिदोषः सान्निपातिकः। हेतु-चतुष्टयात् अन्येऽपि हेतवः हेतुचतुष्टय एवान्तर्भवन्ति। यक्ष्मणः पर्य्यायाः राजयक्ष्मक्षयशोषाः। यक्ष्मादीनां शब्दानां निरुक्तिमाह "वैद्यो व्याधिमतां यस्मात् व्याधेर्यत्नेन यक्ष्यते। स यक्ष्मा प्रोच्यते लोके शब्द शास्त्रविशारदैः"। यक्ष्यते पूज्यते। "राज्ञश्चन्द्रमसो यस्मादभूदेष किलामयः। तस्मात्तं राजयक्ष्मेति केचिदाहुर्मनीषिणः। क्रियाक्षयकरत्वाच्च क्षय इत्युच्यते बुधैः। संशोषणाद्रसादीनां शोष इत्यभि-धीयते"। संप्राप्तिमाह "कफप्रधानैर्दोषैस्तु रुद्धेषु रस-वर्त्मसु। अतिव्यवायिनो वापि क्षीणे रेतस्यनन्तराः। क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः"। कफ-प्रधानैर्दोषैः रसवर्त्मसु रुद्धेसु अनन्तराः सर्वे धातवः क्षीयन्ते ततो मानवः शुष्यति। कारणभूतस्य रसस्य क्षये कार्य्याणां रक्तादीनामनुक्रमेण क्षीयमाणत्वात्" भावप्र०।

**यज** देवपूजने, दाने, सङ्गतौ च भ्वा० उभ० यजादि० अनिट्। यजति ते अयाक्षीत् अयष्ट इयाज ईजतुः।

**यजति** पु० यज–अतिच्। यागभेदे। "यजतिषु ये यजा-महे नानुयाजेषु" श्रुतिः। तल्लक्षणमुक्तं कात्या० श्रौ० १।२।६ "तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोऽनु-वाक्यावन्तो यजतयः" सू०। "उच्यन्त इति शेषः। तिष्ठता होमो येषु ते तिष्ठद्धोमाः वषट्कारेण प्रदानं येषु ते वषट्कारप्रदानाः तथा याज्यावन्तः पुरोऽनुवाक्यावन्तश्च ये ते यजतयः उच्यन्ते" कर्कः।

**यजत्र** न० यज–अत्र। १अग्निहोत्रे उणादि० २तद्वति त्रि०।

**यजन** न० यज–ल्युट् होतादिना पशुसोमाज्यादिभिः मन्त्र-पूर्वकं वह्नौ प्रक्षेपरूपे यागे। यजनस्य स्वा० वि० देवलोक्तं यथा "पशुसोमाज्यपुरो-डाशसोमौषधिवनस्पतिहविर्भिः खदिरपलाशाश्वत्थ-न्यग्रोधोडुम्बरप्रभृतिभिः समिद्भिः स्रुक्स्रुवोदूखल-मुषलकुठारखनित्रयूपदारुदर्भचर्मपात्रयवत्रिभाजनादिभि-र्दृव्योपकरणैरुद्गातृहोत्रध्वर्युब्रह्मादिभिः ऋत्विग्भिः काम्यनैमित्तिकानां पश्वादिपूर्वकाणां यथोक्तदक्षिणानां समापनं यजनम्"। ल्यु। उत्तरपदस्थः समभिव्या-हृतदेवादेर्यष्टरि त्रि०आधारे ल्युट्। ३यागाधिकरणे न०। यथा देवयजनम्। [कर्मफलयुते। ४महादेवमूर्त्तिभेदे च।

**यजमान** पु० यज–शानच्। होतादेर्नियोक्तरि प्रधान-

**यजि** पु० यज–इन्। १यष्टरि उणा०।२यागे ३यजधातौ च।

**यजुर्वेद** पु० यजुषां ऋक्सामभिन्नानां मन्त्राणां प्रतिपादको वेदः। वेदभेदे स च शुक्लकृष्णभेदेन द्विधा तद्विवरणं चरणव्यूहे भाग० १२।६अध्याये च दृश्यम्।

**यजुस्** न० यज–उसि। ऋक्सामभिन्ने पदच्छेदरहिते मन्त्रभेदे अमरः। तल्लक्षणम् "वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि" सा० भा० उक्तम्।

**यज्ञ** पु० यज–भावे न। यागे अमरः। स त्रिविधः "अफला-काङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते। यष्टव्यमेवेति मनः समाधाय स सात्त्विकः॥। अभिसन्धाय तु फलं दम्भार्थ-

अपि चैव यत् । इज्यते भरतश्रेष्ठ ! तं यज्ञं विद्धि राजसम् २। विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते” गीता १७अ०। स च नानाविधः । “द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे । स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः” गीता ४अ०। पञ्चमहायज्ञकर्त्तव्या यज्ञा यथा “अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्” गारुडे ११५अ०। २विष्णौ च

**यज्ञपति** पु० ६त०। विष्णौ “यज्ञो यज्ञपतिर्यज्वा” विष्णुस०।

**यज्ञपशु** पु० इज्यते हविर्दीयतेऽत्र याज्यार्थकयजेर्भावे आधारे वा न यज्ञः यज्ञार्थः पशुः । १अश्वे २छागादौ च ।

**यज्ञपात्र** न० ६त० । यागसाधने पात्रे तच्च दर्व्यादि कात्या०श्रौ०उक्तं पात्रशब्दे ४२०० पृ० दर्शितम् ।

**यज्ञपुरुष** पु० यज्ञरूपः पुरुषः । वराहरूपे विष्णौ हेमच०। क्रतुपुरुषशब्दे २२८४पृ० दृश्यम् । [राजनि० ।

**यज्ञभूषण** पु० यज्ञम् भूषयति भूष-णिच्-ल्यु । श्वेतदर्भे

**यज्ञयोग्य** पु० यज्ञे योग्यः । १उडुम्बरवृक्षे राजनि० । तत्समिदादिभिर्हि यज्ञः साध्यते ।२यज्ञाङ्गे विप्रादौ च ।

**यज्ञवल्ली** स्त्री० यज्ञार्था वल्ली । सोमवल्ल्याम् राजनि० ।

**यज्ञवराह** पु० यज्ञरूपो वराहः । आदिवराहे भगवदवतारभेदे । क्रतुपुरुषशब्दे २२८४पृ० दृश्यम् । वराहदेहस्य शिवेन विदारणेन यज्ञभेदरूपत्वं सम्पादितं यथोक्तं कालिकापु० ३० अ० “विदारिते वराहस्य काये भर्गेण तत्क्षणात् । ब्रह्मविष्णुशिवा देवाः सर्वैश्च प्रमथैः सह । निन्युर्जलात् समुद्धृत्य तत् शरीरं नभः प्रति । तद्विभेजुः शरीरन्तु विष्णोश्चक्रेण खण्डशः । तस्याङ्गसन्धितो यज्ञा जातास्ते वै पृथक् पृथक् । यस्माद् यस्माच्च ये यज्ञास्तत् शृण्वन्तु महर्षयः । भ्रूनासासन्धिना जातो ज्योतिष्टोमो महाध्वरः । हनुश्रवणसन्ध्योस्तु वह्निष्टोमो व्यजायत । चक्षुर्भ्रुवोः सन्धिना तु व्रात्यस्तोमो व्यजायत । वायुः पौनर्भवस्तोमस्तस्य पोत्रोष्ठसन्धिना । उक्थस्तोम बृहत्स्तोमौ जिह्वामूलादजायत । अतिरात्रं सर्वराजमथो जिह्वान्तरादभूत् । अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् । स्नानं तर्पणपर्य्यन्तं नित्ययज्ञाश्च सर्वशः । कण्ठसन्धेः समुत्पन्ना, जिह्वातो विधयस्तथा । वाजिमेधो महामेधो नरमेधस्तथैव च । प्राणिहिंसाकरा येऽन्ये ते जाताः पादसन्धितः । राजसूयोऽथ कारीरी वाजपेयस्तथैव च । पृष्ठसन्धौ समुत्पन्ना ग्रहयज्ञास्तथैव च । प्रतिष्ठोत्सर्गयज्ञाश्च दानश्राद्धादयस्तथा । हृत्पृष्ठतः समुत्पन्ना सावित्रीयज्ञ एव च । सर्वेषां साधका यज्ञाः प्रायश्चित्तकराश्च ये । ते मेढ्रसन्धितो जाता यज्ञास्तस्य महात्मनः । रक्षःसत्रं सर्पसत्रं सर्वञ्चैवाभिचारिकम् । गोमेधो वृक्षयागश्च खुरेभ्यो ह्यभवन्निमे । मायेष्टिः परमेष्टिश्च गोष्पतिर्भौमसम्भवः । लाङ्गूलसन्धौ संजाता ह्यग्निष्टोमस्तथैव च । नैमित्तिकाश्च ये यज्ञाः संक्रान्त्यादौ प्रकीर्त्तिताः । लाङ्गूलसन्धौ ते जातास्तथा द्वादशवार्षिकम् । तीर्थप्रयोगसामौघः यजुः सङ्कर्षणस्तथा । आर्कमाथर्वणञ्चैव नाभिसन्धेः समुद्गताः । बलोत्कर्षः सेतुयज्ञः पशुमार्गोऽतियोजनः । लिङ्गसंस्थानचैत्ययज्ञा जाताश्च जानुनि । एवमष्टाधिकं जातं सहस्रं द्विजसत्तमाः ! । यज्ञानां सततं लोकाद्यैर्भाव्यन्तेऽधुनापि च । स्रुगस्य पोत्रात् संजाता नासिकायाः स्रुवोऽभवत् । अन्ये स्रुक्स्रुवभेदा ये ते जाताः पोत्रनासयोः । पौत्रभागेन तस्याभून् प्राग्वंशो मुनिसत्तमाः ! । इष्टापूर्त्ते यजुर्धर्मौ जाताः श्रवणरन्ध्रतः । दंष्ट्राभ्योऽह्यभवन् यूपाः कुशा रोमाणि चाभवन् । उद्गाता च तथाध्वर्य्युर्होता शमित्र एव च । अग्रदक्षिणपश्चाङ्गपश्चात्पादेषु सम्भूताः । पुरोडाशाः सचरवो जाता मस्तिष्कसञ्चयात् । कर्णनेत्रयुगाज्जाता यज्ञोत्सवा सुरात् । मध्यभागोऽभवद्वेदी मेढ्रात् कुण्डमजायत । रेतोधारास्तथैवाज्यं स्तनात्मन्त्राः समुद्गताः । यज्ञालयः पृष्ठभागात् हृत्पद्मात् यज्ञ एव च । तदात्मा यज्ञपुरुषो मुख्याः कचात् समुद्गताः । एवं यावन्ति यज्ञानां भाण्डानि च हवींषि च । तानि यज्ञवराहस्य शरीरादेव चाभवन् । एवं यज्ञवराहस्य शरीरं यज्ञतामगात् । यज्ञरूपेण सकलमाप्यायितमिदं जगत् ।”

**यज्ञवाट** पु० ६त० । यज्ञस्थाने हेमच० ।

**यज्ञवृक्ष** पु० यज्ञार्थः वृक्षः । वटवृक्षे राजनि० । [राजनि० ।

**यज्ञश्रेष्ठा** स्त्री यज्ञेषु तत्साधनेषु श्रेष्ठा । सोमवल्ल्याम्

**यज्ञसार** पु० यज्ञेषु यज्ञसाधनेषु सारः श्रेष्ठः । यज्ञोडुम्बरवृक्षे राजनि० ।

**यज्ञसूत्र** न० यज्ञार्थं योग्यं संस्कृतं वा सूत्रं शाक०त० । यज्ञोपवीते जटा० । तत्स्वरूपादि यथा “ऊर्द्ध्वं तु त्रिवृतं सूत्रं सधवानिर्मितं शनैः । तन्तुत्रय-

मधोवृत्तं यज्ञसूत्रं विदुर्बुधाः। त्रिगुणं तद्ग्रन्थियुक्तं वेदप्रवरसम्मितम्। शिरोधरान्नाभिमध्यात् पृष्ठार्द्धपरिमाणकम्। यजुर्विदां नाभिमितं सामगानामयं विधिः। वामस्कन्धेन विधृतं यज्ञसूत्रं बलप्रदम्” कालिकापु०४अ०। “उपवीतमाह गोभिलः “यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वा अपि वा कुशरज्जुमेव”। यज्ञोपवीत विशिष्टविन्यासधारणकर्मतया कुरुते। किं तत्सूत्रं विशेषयति छन्दोगपरिशिष्टम् “ऊर्द्ध्वन्तु त्रिवृतं कार्य्यं तन्तुत्रयमधोवृतम्। त्रिवृतञ्चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते”। वामावर्त्तवलितं तन्तुत्रयं त्रिगुणं कृत्वा दक्षिणावर्त्तवलितं कार्य्यम् एवं त्रिवृतं त्रिवृतम् उपवीतं स्यात् एकोग्रन्थिरिति नानात्वनिषेधार्थम्। तथा च बौधायनः “क्षौमं सूत्रं त्रिस्त्रिवृतं यज्ञोपवीतमानाभेः”। क्षौमं क्रमकाशोद्भवं पट्टसूत्रादिमयमित्यर्थः। सौत्रं कार्पासोद्भवम्। तथाच मनुः “कार्पासमुपवीतं स्यात् विप्रस्योर्द्धवृतं त्रिवृत्। शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम्”। त्रिस्त्रिवृतमित्युक्तत्वात् मनुवचनेऽपि त्रिवृन्मात्रं त्रिरावृत्तत्वेन विशेष्यम्। यत्तु पैठीनसिवचनम् “कार्पासमुपवीतं षट्तन्तु त्रिवृतं ब्राह्मणस्य। क्षौमं राजन्यस्य आविकं वैश्यस्य”। तन्नवतन्त्वसम्भवे षट्तन्तुविधायकम्। नवतन्तुत्वं व्यक्तमाह देवलः “यज्ञोपवीतं कुर्वीत सूत्राणि नवतन्तुभिः। एकेन ग्रन्थिना तन्तुर्द्विगुणस्त्रिगुणोऽथवा”। एकेन ग्रन्थिना युक्त इति शेषः। द्विगुणस्त्रिगुणोऽथ वेति तन्तुत्वेन द्विसरो त्रिसरो वा कर्त्तव्यः। द्विसरत्वं त्रिसरत्वासम्भवे। गोभिले वा शब्दो विकल्पार्थः। अपिशब्दो वस्त्रकुशरज्ज्वोः सूत्रानुकल्पत्वप्रदर्शनार्थः। एवकारोऽत्रिसरत्वव्यवच्छेदार्थः। द्वितीयो वाशब्दोऽनुक्तशौक्षवालादिसमुच्चयार्थः। तथा च निगमपरिशिष्टम् “वाससा यज्ञोपवीतानि कुरुते तदभावे त्रिवृता सूत्रेण कुशशणवालप्रतिसरज्जुभिर्वा। वालोऽत्र गोवालः यथाह देवलः “कार्पासक्षौमगोवालशणवल्कतृणोद्भवम्। सदा सम्भवतो धार्य्यमुपवीतं द्विजातिभिः”। तदभाव इतिकरणाद्वस्त्राभावे कुशरज्जुभिरिति बोद्धव्यम्” आ०त०।

**यज्ञाङ्ग** पु० यज्ञस्याङ्गं साधनत्वेनास्त्यस्य अच्। १यज्ञोडुम्बरे अमरः। २खदिरे राजनि०। ३ब्रह्मयष्टिकायाञ्च शब्दच०। ते हि समित्पत्रादिना यज्ञं सम्पादयन्ति। ४सोमवल्कयां स्त्री राजनि० टाप्। ६त०। ५यागाङ्गमात्रे न०।

**यज्ञान्त** पु० ६त०। १अवभृथे यज्ञसमाप्तौ स्नानादिक्रियाभेदे २यज्ञशेषे च हेम०।

**यज्ञायज्ञीय** न०यज्ञायज्ञा इत्यनेन शब्देन युक्तायामृचि गेयम् छ। १अग्निष्टोमे गेये सामभेदे ताण्ड्य० ब्रा० ४।२।२० ज्योतिष्टोमे गेये २सामभेदे च सा०सं०भा०उपोद्घाते।

**यज्ञिक** पु० यज्ञः यज्ञाङ्गं साध्यत्वेनास्त्यस्य ठन्। पलाशे जटा०। तत्समिदादिभिर्हि यज्ञो निष्पाद्यते।

**यज्ञिय** त्रि० यज्ञाय हितः घ। १यज्ञकर्म्मयोग्ये अमरः। २द्वापरयुगे पु० त्रिका०।

**यज्ञियदेश** पु० कर्म०। यज्ञकर्मयोग्यदेशे “कृष्णसारस्तु चरति मृगो यत्र स्वभावतः। स ज्ञेयो यज्ञियोदेशः” मनूक्ते देशे। [राजनि०, २यागसम्बन्धिनि त्रि०।

**यज्ञीय** पु० यज्ञाय हितः तस्येदं वा छ। १यज्ञोडुम्बरे

**यज्ञीयब्रह्मपादप** पु० कर्म०। विकङ्कतवृक्षे (वइँचि-) राजनि०। “वैकङ्कतीं स्रुचमादत्ते” इति श्रुतौ तदीयस्रुवविधानात् तस्य तथात्वम्।

**यज्ञेश्वर** पु०यज्ञस्य प्रवर्त्तयिता ईश्वरः। विष्णौ। [यज्ञके त्रि०

**यज्ञेष्ट** न० ७त०। १दीर्घरोहितहणे राजनि०। ६ब०। २य-

**यज्ञोडुम्बर** पु० यज्ञार्थं उडुम्बरः। स्वनामख्याते वृक्षे शब्दर०

**यज्ञोपवीत** न० यज्ञेन संस्कृतमुपवीतम्। यज्ञसूत्रे उपनयनसंस्कारेण पवित्रीकृते त्रिवृति ऊर्द्धवृते वामस्कन्धात् दक्षिणकुक्षितो लम्बमानतया धृते सूत्रभेदे। यज्ञसूत्रशब्दे दृश्यम्। [२विष्णौ च यज्ञपतिशब्दे दृश्यम्।

**यज्वन्** पु० यज-भूते क्वनिप्। विधानेन १कृतयागे अमरः।

**यत** ताडने उपस्कारे च चु० उ० सेट्। यातयति। अयीयतत् त। निर्+परीवर्त्ते प्रतीकृपशोधने च।

**यत** यत्ने भ्वा० आत्म० अक० सेट्। यतते अयतिष्ट ईदित् निष्ठायामनिट् यत्तः।

**यतम** त्रि० एषां मध्ये यः यद्+डतमच्। एषां मध्ये यदर्थे। [यदर्थे।

**यतर** त्रि०। अनयोर्मध्ये यः यद्+डतरच्। अनयोर्मध्ये

**यतस्** अव्य० यद्+तसिल्। यस्मादित्यर्थे।

**यति** पु०यतते मोक्षाय यत-इन्। १परिव्राजके संन्यासिनि अमरः। यम्यते जिह्वा यत्र यम-क्तिन्।२छन्दोग्रन्थविख्याते जिह्वाया २विश्रामस्थाने उच्चारणकालविच्छेदे स्त्री। सा च “क्वचित् छन्दस्यास्ते यतिरभिहिता पूर्वकृतिभिः पदान्ते सा शोभां व्रजति पदमध्ये त्यजति च” इत्याद्युक्तरीत्या सुप्तिङन्तपदान्त एव छन्दोग्रन्थानुसारेण जिह्वायाः

विश्रामहरणाश्चारणाभावरूपा। ३विधवायां ४रागे ५यत्ने च शब्दच० ६पाठविच्छेदे मेदि०। ७निकारे ८विष्णौ हेमच०। ९वाद्याङ्गप्रबन्धभेदे सङ्गीतदा०। यद्+परिमाणे-डति। १०यत्परिमाणे त्रि० ब०व०।

**यतिचान्द्रायण** न० यतिनेव कर्त्तव्यं चान्द्रायणं व्रतभेदः। "अष्टावष्टौ समश्नीयात् पिण्डान् मध्यदिने गते। नियतात्मा हविष्याशी यतिचान्द्रायणं चरन्" मनूक्ते व्रतभेदे।

**यतिन्** पु० यम-भावे क्त यतं यमनं यतमनेन इनि। १संन्यासिनि परिव्राजके अमरः। २विधवायां स्त्री ङीप् शब्दरत्ना०। [शब्दर०।

**यतु(तू)का** स्त्री यत-उक ऊक वा। जिनपत्रिकावृक्षे

**यत्न** पु०यत-भावे नङ्।१आयासे २उद्योगे वैशेषिकोक्ते प्रवृत्तिनिवृत्तिजीवनयोनिरूपत्वैविध्यापन्ने ३गुणभेदे च। स च आत्मगुणः इति नैयायिकादयः चित्तगुण इति सांख्यवेदान्तिकाः।

**यत्र** अव्य० यद्+त्रल्। यस्मिन्नित्यर्थे।

**यत्र** सङ्कोचने वा चु०उभ०पक्षे भ्वा०पर०सक० सेट् इदित्। यन्त्रयति ते यन्त्रति अययन्त्रत् त अयन्त्रीत्।

**यथा** अव्य०यद्+प्रकारे थाल्। १येन प्रकारेणेत्यर्थे २सादृश्ये ३योग्यतायाम् ४आनुरूप्ये ५पदार्थानतिवृत्तौ च सि०कौ०।

**यथाकाम** अव्य० काममनतिक्रम्य अव्ययी०। १स्वाच्छन्द्ये २यथेष्टतायाञ्च। [स्वेच्छाचारिणि जने स्त्रियां ङीप्।

**यथाकामिन्** त्रि० यथाकामं स्वाच्छन्द्यमस्त्यस्य इनि।

**यथाक्रम** अव्य० क्रमस्य आनुरूप्यं तस्यानतिक्रमो वा अव्ययी०। १क्रमानुरूप्ये २क्रमानतिक्रमे च।

**यथाजात** त्रि० जातं समयविशेषमनतिक्रम्य यथाजातं तदस्त्यस्य अच्। १मूर्खे अमरः। २नीचे जटा०।

**यथातथ** अव्य० तथामनतिक्रम्य अनतिवृत्तौ अव्ययी०। याथार्थ्ये यस्य वस्तुनो यद्रूपं भवितुमुचितं तथारूपभावे हारा० यथायथमप्यत्रार्थे।

**यथार्थ** अव्य० अर्थमनतिक्रम्य अव्ययी०। १सत्यतायाम् अर्थस्याव्यभिचारे सत्यस्वरूपे। अर्श आद्यच्। २सत्ये त्रि०।

**यथार्ह** अव्य० अर्हं योग्यतामनतिक्रम्य अव्ययी०। १यथायोग्यत्वे ततः अर्श आद्यच्। २सत्यभूते पदार्थे त्रि०।

**यथार्हवर्ण** पु० यथार्हं यथायोग्यं वर्णयति वर्ण-अण्। चरे अमरः। [२शास्त्रानुसारे।

**यथाशक्ति** अव्य० शक्तेरानुरूप्यम् अव्ययी०। १शक्तेरानुरूप्ये

**यथाशास्त्र** अव्य० शास्त्रस्यानुरूप्यम् अनतिक्रमो वा अव्ययी०। १शास्त्रानुसारे २शास्त्रानतिक्रमे च।

**यथास्थित** अव्य०यथा येन रूपेण स्थातुं योग्यं तथास्थितम् योग्यतायाम् अव्ययी०।१सत्यतायाम् हेमच०अर्श आद्यच्। २सत्ये त्रि०। [आद्यच्। २यथार्थे त्रि०अमरः।

**यथास्व** अव्य० स्वस्यानतिक्रमः अव्ययी०।१याथार्थ्ये। अर्श

**यथेप्सित** अव्य० ईप्सितस्यानतिक्रमः अव्ययी०। १स्वाच्छन्द्ये अमरः। अर्श आद्यच्। २यथाभीष्टे त्रि० यथेष्टमप्यत्र।

**यथोचित** अव्य० उचितस्यानतिक्रमः अव्ययी०। १औचित्ये अमरः। अर्श आद्यच्। २उचिते त्रि०।

**यद्** त्रि०यज-अदि डिच्च। (ये)१इत्येवं बुद्धिविशेषविषये। अस्य उक्तार्थे सर्वनामता। अयञ्च शब्दः तच्छब्दार्थनित्यापेक्षी उत्तरवाक्यस्थस्तु न तदपेक्षी इति काव्यप्र०, यत्तच्छब्दयोरन्वये च न समानविभक्तिकत्वनियमः इत्याकरे स्थितम्। २यस्मादित्यर्थे अव्य०। ३गर्हायाम् ४अवधृतौ च मेदि०।

**यदा** अव्य० यद्+काले दाच्। यस्मिन् काले इत्यर्थे।

**यदि** अव्य० यद्+णिच्-इन् णिलोपः। १पक्षान्तरे अमरः। २सम्भावनायाम् ३गर्हायां ४विकल्पे च मेदि०।

**यदु** पु० ययातिन्नृपतेः १ज्येष्ठपुत्रे यस्य वंशे श्रीकृष्णावतारः। तस्य गोत्रापत्यमण् बहुषु तस्य लुक्। २यदुवंश्ये ३दशार्हदेशे च ब०व० हेमच०। [यदुपत्यादयोऽप्यत्र।

**यदुनाथ** पु० यदूनां नाथो रक्षकत्वात्। श्रीकृष्णे हेमच०।

**यदृच्छा** स्त्री यद्+ऋच्छ-अ-टाप्। १स्वातन्त्र्ये, २स्वैरतायाम् अमरः। "यदृच्छालाभसन्तुष्टः" इति गीता।

**यदृच्छाशब्द** पु० जात्याद्यवाचके डित्थादिसंज्ञाशब्दे "अव्युत्पादयतः कञ्चिदर्थं जातिक्रियागुणैः। यदृच्छाशब्दवत् पुंसः संज्ञायै जन्म केवलम्" भाष्यः।

**यद्युवा** अव्य० यदि च उ च वा च द्व०। यद्यर्थे पक्षान्तरद्योतने "यद्युवाल्पतरसम्भारस्तर्हि पशुनैव" इति "यद्युवा-उभयं चिकीर्षेदिति" च गोभिलः।

**यद्वा** अव्य० यच्च वा च द्व०। १पक्षान्तरे "यद्वाभ्युदययोग्यता" भर्तृहरिः २बुद्धौ संक्षिप्तसा०। [२संयमयुक्ते त्रि०हेमच०

**यन्तृ** पु० यम-तृच्। १सारथौ २हस्तिपके च अमरः।

**यन्त्र** न० यन्त्रि-अच्। १संयमने तन्त्रोक्ते देवाद्यधिष्ठाने २चक्रभेदे ३औषधपाकार्थपात्रभेदे, ज्योतिश्चक्रादिवेधसाधने ४पदार्थभेदे, ५जलधारादेर्दीर्घवेधकादौ (ठरविन्) (भमर) पदार्थे।६कम्न्यादेः क्षेपणसाधने पदार्थे आग्नेयन्त्रम् (कामान बन्दुक)।

औषधपाकपात्रं च नानाविधं भावप्र० दर्शितं यथा वालुकायन्त्रम् "भाण्डे वितस्तिगम्भीरे मध्ये निहितकूपिके । कूपिकाकण्ठपर्य्यन्तं वालुकाभिश्च पूरिते । भेषजं कूपिकासंस्थं वह्निना यत्र पच्यते । वालुकायन्त्रमेतद्धि यन्त्रतन्त्रबुधैः स्मृतम्" ।

दोलायन्त्रम् "निबद्धमौषधं सूतं भूर्जे तत्त्रिगुणाम्बरे । रसपोटलिकां काष्ठे दृढं बद्ध्वा गुणेन हि । सन्धानपूर्णे कुम्भान्तः स्वावलम्बनसंस्थितम् । अधस्ताज्ज्वालयेदग्निं तत्तदुक्तक्रमेण हि । दोलायन्त्रमिदं प्रोक्तं स्वेदनाख्यं तदेव हि"। सन्धानं काञ्जिकादि ।

विद्याधरयन्त्रम् "स्थाल्युस्थालीमुखे बद्धे वस्त्रे स्वेद्यं निधाय च । विधाय पच्यते यत्र तद्यन्त्रं स्वेदनं परम् । अधःस्थाल्यां रसं क्षिप्त्वा संनिदध्यात्तथोपरि । स्थालीमूर्द्धमुखीं सम्यक् निरुध्य मृदुमृत्स्नया । ऊर्द्ध्वस्थाल्यां जलं क्षिप्त्वा चुल्ल्यामारोप्य यत्नतः । अधस्तात् ज्वालयेदग्निं यावत् प्रहरपञ्चकम् । स्वाङ्गशीतं ततो यन्त्रात् गृह्णीयाद्रसमुत्तमम् । विद्याधराभिधं यन्त्रमेतत्तज्ज्ञैरुदाहृतम्" ।

भूधरयन्त्रम् "वालुकासु समस्ताङ्गं गर्त्ते मूषाः रसान्विताः । दीप्तोपलैः संवृणुयाद्यन्त्रं भूधरनामकम्" ।

डमरुयन्त्रम् "यन्त्रं डमरुसंज्ञं स्यात्तत्स्थाल्योर्मुद्रिते मुखे" कालज्ञानार्थे सू० सि० उक्ते ह्युपदार्थभेदे यथोक्तं "कालसंसाधनार्थाय तथा यन्त्राणि साधयेत् । एकाकी योजयेद्बीजं यन्त्रे विस्मयकारिणि । शङ्कुयष्टिधनुश्चक्रैश्छायायन्त्रैरनेकधा । गुरूपदेशाद्विज्ञेयं कालज्ञानमतन्द्रितैः" सू० । "शङ्कुयष्टिधनुश्चक्रैः प्रसिद्धैश्छायायन्त्रैश्छायासाधकयन्त्रैरनेकधा नानाविधगणितप्रकारैर्गुरूपदेशात् स्वाध्यापकस्य निर्व्याजकथनादतन्द्रितैरभ्रमैः पुरुषैः कालज्ञानं दिनगतादिज्ञानं विज्ञेयं सूक्ष्मत्वेनावगम्यम् । एतत् सर्वं सिद्धान्तशिरोमणौ भास्कराचार्य्यैः सटीकितम्

शङ्कुयन्त्रम् "समतलमस्तकपरिधिर्भ्रमसिद्धो दन्तिदन्तजः शङ्कुः । तच्छायातः प्रोक्तं ज्ञानं दिग्देशकालानाम्" ।

यष्टियन्त्रम् "त्रिज्याविष्कम्भार्धं वृत्तं कृत्वा दिगङ्कितं तत्र । दत्त्वाऽग्रां प्राक्पश्चात् द्विज्यावृत्तं च तन्मध्ये । तत्परिधौ षष्ट्यङ्कं यष्टिर्नष्टद्युतिस्ततः केन्द्रे । त्रिज्याङ्गुला निधेया यष्ट्यग्राग्रान्तरं यावत् । यावत्या जीवा तद्द्वितीयवृत्ते धनुर्भवेत् तत्र । दिनगतशेषा नाड्यः प्राक् पश्चात् स्युः क्रमेणैवम्" ।

चक्रयन्त्रम् "चक्रं चक्रांशाङ्कं परिधौ स्वयम्हङ्कवादिवाधारम् । धात्री आधारात् कक्ष्या भार्धेऽत्र खार्धं च । तन्मध्ये सूक्ष्माक्षं चित्राकाभिमुखनेमिकं धार्यम् । भूमेरुन्नतभागास्तन्मध्यच्छायया भुक्ताः । तत्खार्धान्तरगता उन्नतलवसङ्ख्यं द्युदलम् । द्युदलोन्नतांशभक्ता नाड्यः स्थूलाः परैः प्रोक्ताः" ।

धनुर्यन्त्रम् "दलीकृतं चक्रमुशन्ति चापम्" इति ।

अत्र ग्रन्थविस्तरभयादेतेषां निरूपणविस्तरो गणिताद्विचारश्चोपेक्षित इति मन्तव्यम् । अथ घटीयन्त्रादिभिश्चमत्कारियन्त्रैर्वा सर्वोपजीव्यं कालं सूक्ष्मं साधयेदिति कालसाधनमुपसंहरति" रङ्ग० । "तोययन्त्रकपालाद्यैर्मयूरनरवानरैः । ससूत्ररेणुगर्भैश्च सम्यक् कालं प्रसाधयेत्" सू० "तोययन्त्रं च तत् कपालं च कपालाख्यं जलयन्त्रं वक्ष्यमाणं तदाद्यं प्रथमं येषां तैर्यन्त्रैर्वालुकायन्त्रप्रभृतिभिः सापेक्षघटीयन्त्रैर्मयूरनरवानरैः । मयूराख्यं स्वयंवहयन्त्रं निरपेक्षं नरयन्त्रं शङ्क्वाख्यं छायायन्त्रं पूर्वोद्दिष्टं वानरयन्त्रं स्वयंवहं निरपेक्षमेतैः ससूत्ररेणुगर्भैः सूत्रगर्भिता रेणवो धूलयो गर्भे मध्ये येषां तैः सूत्रप्रोताः [illegible] कुट्टिका मयूरोदरस्था सुखात् घटिकान्तरेण स्रुत एव निःसरन्तीति लोकप्रसिद्धा तादृशैर्यन्त्रैरित्यर्थः । यद्वा सूत्राकारेण रेणवः सिकतांशा गर्भे उदरे यस्य तादृशं यन्त्रं वालुकायन्त्रं प्रसिद्धम् । तेन सहितैर्मयूरादियन्त्रैर्मयूराद्युक्तयन्त्रैर्वालुकायन्त्रेण चेति सिद्धोऽर्थः । चकारस्तोययन्त्रकपालाद्यैरित्यनेन समुच्चयार्थकः । कालं दिनगतादिरूपं सम्यक् सूक्ष्मं प्रसाधयेत् । प्रकर्षेण सूक्ष्मत्वेनातिसूक्ष्मत्वेनेत्यर्थः । जानीयादित्यर्थः । ननु मयूरादिस्वयंवहयन्त्राणि कथं साध्यानीत्यतस्तत्साधनप्रकारा बहवो दुर्गमाश्च सन्तीत्याह रङ्ग० ।

"पारदाराम्बुसूत्राणि शुल्बतैलजलानि च । बीजानि पांशवस्तेषु प्रयोगास्तेऽपि दुर्लभाः" सू० । "तेषु मयूरादियन्त्रेषु स्वयंवहार्थमेते प्रयोगाः प्रकर्षेण योज्याः । प्रकर्षस्तु यावद्गमनसिद्धिः । ते के इत्यत आह । पारदाराम्बुसूत्राणीति । पारदयुक्ता आराः । तथा च सिद्धान्तशिरोमणौ "लघुकाष्ठजसमचक्रे समसुषिराराः समान्तरा नेम्याम् । किञ्चिद्वक्रा योज्याः सुषिरस्यार्धं पृथक् तासाम् । रसपूर्णे तच्चक्रं द्व्याधाराक्षस्थितं स्वयं भ्रमति" । अम्बु जलस्य प्रयोगः । सूत्राणि सूत्रसाधनप्रयोगः ।

शुल्वं शिल्पनैपुण्यम्। तैलजलानि तैलयुक्तजलस्य प्रयोगः। चकारात् तयोः पृथक् प्रयोगोऽपि। तथाच सिद्धान्तशिरोमणौ "ताम्रादिमनेमिमथ वा परितो यद्नेन संलग्नम्। तदुपरि तावद्वाद्यं कृत्वा सुषिरे रसं क्षिपेत् तावत्। यावद्रसैकपार्श्वे छिद्रमलं न च्यतो याति। पिहितच्छिद्रं तदतश्चक्रं भ्रमति स्वयं जला-क्रष्टम्। ताम्रादिमयस्याङ्कुशरूपनलस्याम्बुपूर्णस्य। एकं कुण्डजलान्तर्द्वितीयमग्रं त्वधोमुखं च बहिः। युगप-न्मुक्तं चेत् तं नलेन कुण्डाद्बहिः पतति। नेम्यां बद्धा घटिकाश्चक्रं जलयन्त्रवत् तथा धार्यम्। नलकप्रच्युत-सलिलं पतितं यथा तद्घटीमध्ये भ्रमति। ततस्तत् सततं पूर्णघटीभिः समाकृष्टम्। चक्रच्युतं तदुदकं कुण्डे याति प्रणालिकया"। इति। बीजानि केवलं तद्बीज प्रयोगः। पांसवो धूलिप्रयोगाः कृत्रिमाः प्रयोगाः। अपिशब्दात् प्रयोगेषु सुगमतरा इत्यर्थः। दुर्लभाः अन्या-धारकत्वेन बहुधा कर्तृमयतया इत्यर्थः। अन्यथा प्रतिष्ठितं स्वयंवहानां प्राक्पर्यापतेः। इदं स्वयंवह-विद्या समुद्रान्तर्निवासिजनैः फिरङ्गाख्यैः समय-भ्यसेति। कुहकविद्यात्वादत्र विस्तारादुद्योग इति संक्षेपः" रङ्ग०।

अथ कपालाख्यं जलयन्त्रम्

"ताम्रपात्रमधश्छिद्रं न्यस्तं कुण्डेऽमलाम्भसि। षष्टिमज्ज-त्यहोरात्रे स्फुटं यन्त्रं कपालकम्" सू० "यत् ताम्रघटितं पात्रमधश्छिद्रमधोभागे छिद्रं यस्य तत्। अमलाम्भसि निर्मलं जलं विद्यते यस्मिन् तादृशे कुण्डे हस्तद्वयके न्यस्तं धारितं सदहोरात्रे नाक्षत्राहोरात्रे षष्टिः षष्टि-वारमेव न न्यूनाधिकं मज्जति। अधश्छिद्रमार्गेण जलागमनेन जलपूर्णतया निमग्नं भवति। तत् कपालकं घटखण्डानां कपालपदवाच्यत्वात् घटाधस्तनाधाकारं यन्त्रं घटीयन्त्रं स्फुटं सूक्ष्मम् तद्घटनं तु "शुल्वस्य दिग्भिर्विहितं पलैर्यत् षडङ्गुलोच्चं द्विगुणायतास्यम्। तदम्भसा षष्टिपलैः प्रपूर्णं पात्रं घटार्धप्रतिमं घटी स्यात्। स्वर्णग्रमाषत्रयनिर्मिता या हेम्नः शलाका चतुरङ्गुला स्यात्। विद्धं तया प्राक्तनमत्र पात्रं प्रपूर्यते नाडिकयाम्बुभिस्तत्" सू०। इति व्यक्तम्। भगवता तु सूक्ष्ममुक्तम्। अथ शङ्कुयन्त्रं दिवैव कालमानार्थं मान्य देवाह रङ्ग०। "नरयन्त्रं तथा साधु दिवा च विमले रवौ। छायासंसाधनैः प्रोक्तं कालसाधनमुत्तमम्" सू०।

देवताभेदे पूजाधारयन्त्राणि धारणयन्त्राणि च तन्त्रसा-रोक्तानि द्रष्टव्यानि। तल्लेखनद्रव्याणि तन्त्रोक्तानि यथा "काश्मीररोचनालाक्षागोमृगमदचन्दनैः। विलिखे-द्धेमलेखन्या यन्त्राण्येतानि देशिकः। सौवर्णे राजते पत्रे भूर्जे वा सम्यगालिखेत्। अथ वा ताम्रपत्रे वा गुटिकीकृत्य धारयेत्। यावज्जीवं सुवर्णे स्यात् रौप्ये विंशतिवार्षिकम्। भूर्जे द्वादशवर्षाणि तदर्धं ताम्र-पट्टके"। द्रव्यभेदस्यैव तत्र तस्याधार्यतोक्ता यथा "भूमिस्पृष्टं भस्मस्पृष्टं यन्त्रं निर्माल्यसङ्कुलम्। वि-दीर्णं वर्जितं मन्त्री यन्त्रं नैव च धारयेत्"।

**यन्त्रक** न० यन्त्रमिव स्वार्थे कन्। (कुंद) दारुमयमाकरयन्त्रभेदे

**यन्त्रगृह** न० 6त०। तैलिकयन्त्रालये (घानिघर) हेमच०।

**यन्त्रगोल** पु० यन्त्रमिव ज्योतिश्चक्राकृतिगोलयन्त्रमिव गोलःवर्तुलः। कलायभेदे (मटर) शब्दच०।

**यन्त्रण** न० यत्रि-ल्युट्। 1नियमने 2रक्षणे 3बन्धने च मेदि० युच्। 4पीडायाम् स्त्री टाप्।

**यन्त्रपेषणी** स्त्री यन्त्रमेव पिष्यतेऽनया पिष-करणे ल्युट् ङीप्। (जाँता) पेषणयन्त्रे जटा०।

**यभ** मैथुने भ्वा०पर०सक० अनिट्। यभति अयाप्सीत्।

**यम** उपरतौ भ्वा० पर० सक० अनिट् यच्छति अयंसीत् उदित् क्त्वा वेट्। यमित्वा यत्वा यतः। आ+दीर्घीकरणे आत्म०। उप+विवाहे आत्म०।

**यम** परिवेषणे चु० उभ० सक० सेट् वा घटा०। यमयति यामयति अयीयमत् त अययामत् त।

**यम** पु० यम-घञ्। "अहिंसा सत्यवचनं ब्रह्मचर्यमकल्कता। अस्तेयमिति पञ्चैते यमाख्यानि व्रतानि च" इत्युक्ते 1अहिंसादौ तच्च देहसाध्यम् आवश्यकमवश्यकार्यं नित्यं कार्यमिति अमरः इन्द्रियादीनां 2संयमने च। यमयति अच्। प्राणिनां शुभाशुभकर्मानुसारेण दण्ड-विधायके ईश्वरनियुक्ते दक्षिणस्याः 3देवभेदे पु० अमरः। तत्स्वामिकत्वात् 4काके च। आत्मत्वेन यमसम्बन्धिनि 5यमौ द्वेकगर्भजायमाने यमजे त्रि० मेदि०। 6द्वित्व-संख्यायां 7यमदेवताके भरणीनक्षत्रे ज्यो०।

दिक्पालयमभेदाः चतुर्दश भविष्यपु० उक्ता यथा "यमाय धर्मराजाय मृत्यवे चान्तकाय च। वैवस्वताय कालाय सर्वभूतक्षयाय च। औडुम्बराय दध्नाय नीलाय परमेष्ठिने। वृकोदराय चित्राय चित्रगुप्ताय वै नमः"। योगाङ्गयमाः पात० सू० भा० उक्ता यथा

"यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि" सू०। "यथाक्रमं एतेषाम् अनुष्ठानं स्वरूपञ्च वक्ष्यामः" भा०। तत्र "अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहा यमाः" सू०। "तत्राहिंसा सर्वथा सर्वदा सर्वभूतानामनभिद्रोहः। उत्तरे च यमनियमास्तन्मूलास्तत्सिद्धिपरतया तत्प्रतिपादनाय प्रतिपाद्यन्ते तदवदातरूपकरणायैवोपादीयन्ते। तथाचोक्तं "स खल्वयं ब्राह्मणो यथा यथा व्रतानि बहूनि समादित्सते तथा तथा प्रमादकृतेभ्यो हिंसानिदानेभ्यो निवर्त्तमानस्तामेवावदातरूपामहिंसां करोति"। सत्यं यथार्थे वाङ्मनसे यथादृष्टं यथानुमितं यथाश्रुतं तथा वाङ्मनश्चेति परत्र स्वबोधसंक्रान्तये वागुक्ता सा यदि न वञ्चिता भ्रान्ता वा प्रतिपत्तिवन्ध्या वा भवेत् इत्येषा सर्वभूतोपकारार्थं प्रवृत्ता न भूतोपघाताय यदि चैवमप्यभिधीयमाना भूतोपघातपरैव स्यात् न सत्यं भवेत् पापमेव भवेत् तेन पुण्याभासेन पुण्यप्रतिरूपकेन कष्टं तमः प्राप्नुयात् तस्मात् परीक्ष्य सर्वभूतहितं सत्यं ब्रूयात्। स्तेयमशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणं तत्प्रतिषेधः पुनरस्पृहारूपमस्तेयमिति। ब्रह्मचर्य्यं गुप्तेन्द्रियस्योपस्थस्य संयमः। विषयाणामर्जनरक्षणक्षयसङ्गहिंसादोषदर्शनादस्वीकरणमपरिग्रह इत्येते यमाः" भा०।

गारुडे तु तस्य दशविधत्वमुक्तं यथा "ब्रह्मचर्य्यं दयाक्षान्तिर्ध्यानं सत्यमकल्कता। अहिंसाऽस्तेय माधुर्य्ये दमश्चेते यमाः स्मृताः" १०५ अ०।

**यमक** न० शब्दालङ्कारभेदे अलङ्कारशब्दे ३८८ पृ० दृश्यम्।

**यमकोटि** पुंस्त्री० भूगोलस्य चतुर्थपादान्तरिते लङ्कातः पूर्वस्यां स्थितायां देवनिर्मितायां पुर्य्याम् "लङ्का कुमध्ये यमकोटिरस्याः प्राक्" इति सिद्धान्तशिरोमणिः।

**यमघण्ट** पु० योगविशेषे। "द्वे मघापूर्वफल्गुन्यौ पुष्याश्लेषार्कचन्द्रयोः। ज्येष्ठानुराधा भरणी चाश्विनी कुजवासरे। हस्तार्द्रा चन्द्रजे मूला पूर्वाषाढ़ा च रेवती। जीवे ह्युत्तरभाद्रश्च शुक्राह्ने स्वातिरोहिणी। शनिवारे शतभिषा श्रवणा यमघण्टकः" सारसंग्रहः।

**यमदग्नि** पु० जमदग्नौ मुनिभेदे।

**यमज** त्रि० द्वि० व०। यमौ एकदा एकत्र गर्भे सहचरौ सन्तौ जायेते जन-ड। एकदा एकगर्भजातयोः मेदि०।

**यमदशन** पु० ६त०। यमस्य दशना इव चर्वणसाधनत्वेन हिंसकत्वात्। "कार्त्तिकस्य दिनान्यष्टौ चाद्याग्रहायणस्य च। यमस्य दशना एते लघ्वाहारी स जीवति" वैद्यकोक्ते शौरदिनषोड़शके। यमदन्तशब्दोऽप्युक्तार्थे।

**यमदूतिका** स्त्री यमस्य दूतीव इवार्थे कन्। १तिन्तिड़ीवृक्षे अमरः। यमस्य दूत इव कायति कै—क। यमदूतक २काके पुंस्त्री० शब्दरत्ना० स्त्रियां ङीष्।

**यमद्रुम** पु० यमस्य द्रुमः इव। यमद्वारस्थद्रुमतुल्ये शाल्मलिवृक्षे तत्तुल्यलौहमयकीलाकीर्णवृक्षेण हि नारकिपीड़नात्तस्य यमद्रुमत्वम्।

**यमद्वितीया** स्त्री ६त०। कार्त्तिकशुक्लद्वितीयायाम् "तथा यमद्वितीयायां यात्रायां मरणम्" ति०त०।

**यमधार** पु० यमसंस्थाका धाराऽस्य। उभयपार्श्वे धारायुक्ते अस्त्रे (किरीच)। [यति ल्यु। २यमे पु० मेदि०।

**यमन** न० यम-ल्युट्। १बन्धने २उपरमे च मेदि०। यम-

**यमप्रिय** पु० ६त०। वटवृक्षे शब्दर०।

**यमराज** पु० यमानां चतुर्दशानां राजा यमनियामको राजा वा टच्समा०। प्रेतानां राजनि धर्मराजे हेमच०। यमेषु राजते राज-क्विप्। यमराडप्यत्र अमरः।

**यमल** न० यमं योगं लाति ला-क। १युग्मे अमरः द्वन्द्वा-वनस्ये २हस्तभेदे च। "तस्य लक्षणःपदा यमस्य" हरिवं०।

**यमलपत्त्र** पु० यमलानि युग्मानि पत्त्राणि यस्य। १अश्मन्तकवृक्षे २कोविदारवृक्षे राजनि०।

**यमवाहन** पु० यमं वाहयति स्थानात् स्थानान्तरं नयति वह-स्वार्थे णिच्-ल्यु। महिषे हेमच०।

**यमानी** स्त्री यच्छति अग्निमान्द्यमनया यम-करणे ल्युट् पृषो० आत्वम्। १अजमोदायाम् शब्दमा० स्वार्थे क। यमानिका तत्रैव स्त्री।

**यमुना** स्त्री यम-उनन्। १कालिन्द्यां नद्यां २यमभगिन्याम् सूर्य्यसुतायाम् अमरः। ३दुर्गायाञ्च देवीपु०।

**यमुनाभ्राट** पु० ६त०। यमे अमरः।

**ययाति** पु० यस्य वायोरिव यातिः गतिः रथगतिरस्य। नहुषात्मजे राजभेदे। [मेदि०।

**ययु** पु० या-कु द्वित्वञ्च। १अश्वमेधीयेऽश्वे २अश्वमात्रे च

**यव** पु० यु-अच्। १स्वनामख्याते शूकधान्यभेदे अमरः। "वसन्ते सर्वशस्यानां जायते पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः" इति मीमांसा। २अङ्गुलिस्थे यवाकारे रेखाभेदे सामुद्रकम् तत्फलमुक्तं तत्रैव "तर्जनीमूलसंपृक्तौ यवौ मुक्तार्थदौ क्रमात्। मध्यमायां यवश्चैवाङ्गुष्ठेऽपूर्वधनप्रदः। मध्यमायां यदि यवो दृश्यते च शुभोभनः। तदान्यवाञ्छितं द्रव्यं प्राप्नोत्यङ्गुष्ठके

क्षेत्रे। यत्रापि चक्रमङ्कुशं यवपूर्वञ्च दृश्यते। तदा पितामहादीनामर्जितं लभते धनम्” इति सामुद्रकम्। ६भट् सर्षपात्मके परिमाणभेदे शब्दच०। [चेत्रे अमरः।

**यवक्य** न० यवानां भवनं क्षेत्रं यत् कुक् च। यवभवने

**यवक्षार** पु० यवजातः क्षारः। यवजातक्षारे क्षारभेदे शब्दर०

**यवज** पु० यवात् जायते जन–ड। १यवक्षारे रत्नमा० २यवान्याञ्च राजनि०। [राजनि०।

**यवतिक्ता** स्त्री यवाकारं तिक्तं फलं यस्याः। शङ्खिन्यां

**यवन** पु० यु–युच्। १देशभेदे सोऽभिजनोऽस्य तस्य राजा वा अण् बहुषु तस्य लुक्। २तद्देशस्थेषु जनेषु ३तन्नृपेषु ब०व०। ४वेगे ५अधिवेगयुताश्वे मेदि० ६गोधूमे ७गर्जरतृणे ८तुरष्कजातौ राजनि० ययातिशप्तस्य तत्पुत्रस्य तुर्वसोर्वंश्ये जातिभेदे च पुंस्त्री० स्त्रियां ङीप्। १०वेगवति त्रि०।

**यवनद्विष्ट** पु० यवनैर्द्विष्टः द्विष–क्त। गुग्गुले राजनि०

**यवनप्रिय** न० ६त०। मरिचे हेमच०।

**यवनाचार्य्य** पु० ताजकादिज्योतिःशास्त्रकारके पण्डितभेदे

**यवनानी** स्त्री यवनानां लिपिः ङीप् आनुक् च। यवनानां लिप्याम् सि० कौ०।

**यवनारि** स्त्री यवनस्यारिः। श्रीकृष्णे त्रिका०।

**यवनाल** पु० यवस्येव नाला (काण्ड) यस्य। (देधान) धान्यभेदे हेमच०। [यवक्षारे हेमच०।

**यवनालज** पु० यवस्य नालात् काण्डात् जायते जन–ड।

**यवनिका** स्त्री युवन्त्यस्यां यु–ल्युट् ङीप् स्वार्थे क अत इत्वम्। (कानात्) जवनिकायाम् अमरः।

**यवनी** स्त्री यु–ल्युट् ङीप्। १यवानीनामकौषधौ मेदि० ङीप्। २यवनभार्य्यायाम्। “यवनीमुखपद्मानाम्” रघुः।

**यवनेष्ट** न० ६त०। १सीसके हेमच०। २मरिचे ३पलाण्डौ ४लशुने ५राजपलाण्डौ ६निम्बे च पु०। खर्जूर्य्यां स्त्री राजनि० टाप्।

**यवफल** पु० यव इव फलमस्य। १वंशे अमरः २कुटजे यस्य फलमिन्द्रयवः। ३जटामांस्याञ्च मेदि० ४पलाण्डौ शब्दर०।

**यवमध्य** न० यव इव मध्यं यस्य। चान्द्रायणभेदे प्रथमदिनादापञ्चदशदिनमेकैकग्रासवृद्ध्या, तदुत्तरं च आपञ्चदशदिनं क्रमेणैकैकग्रासह्रास्या साध्ये व्रते तस्य मध्यदिवसानां हि बहुलग्रासवत्त्वेन यवमध्यतुल्यत्वम्।

**यवलास** पु० यवेन लस्यते संज्ञायां कर्त्तरि घञ्। यवक्षारे शब्दच०।

**यवशूक** पु० यवानां शूकः कारणत्वेनास्त्यस्य अच्। यवक्षारे त्रिका० यवशूकजादयोऽप्यत्र राजनि०।

**यवस** न० यु–असच्। १घासे २तृणे च अमरः।

**यवागू** स्त्री यूयते मिश्र्यते यु–आगू। षड्गुणजलपक्वे द्रवभेदे (जाउ) अमरः। “मण्डश्चतुर्दशगुणे यवागूः षड्गुणेऽम्भसि” वैद्यकपरिभाषा।

**यवाग्रज** पु० यवस्याग्रात् शूकात् जायते जन–ड। १यवक्षारे अमरः। २यवान्याञ्च राजनि०।

**यवानी** स्त्री दुष्टो यवः ङीप् आनुक् च। (जोयानि) पदार्थे राजनि०। “यवानी पाचनी रुच्या तीक्ष्णोष्णा कटुका लघुः। दीपनी च तथा तिक्ता पित्तला शुक्रशूलहृत्। वातश्लेष्मोदरानाहगुल्मप्लीहकृमिप्रणुत्” भावप्र०।

**यवापत्य** न० यवस्यापत्यमिव तज्जातत्वात्। यवक्षारे राजनि०

**यवाम्लज** न० यवजातादम्लाज्जायते जन–ड। सौवीरके काञ्जिकभेदे राजनि०।

**यवास** पु० यु–आस। १दुरालभायाम् अमरः। २खदिरभेदे च शब्दमा० ३शुक्लासिनी तृणे स्त्री राजनि० टाप्। स्वार्थे क। यवासक तत्रैव। [तदर्थे।

**यविष्ठ** त्रि० अतिशयेन युवा युवन्–इष्ठन् यवादेशः। अति-

**यवीयस्** त्रि० अतिशयेन युवा युवन्+ईयसुन् यवादेशः। १अतितरुणे २कनिष्ठे च “अंशमंशं यवीयसः” स्मृतिः। स्त्रियां ङीप्।

**यवोत्थ** न० यवादुत्तिष्ठति उद्+स्था–क। सौवीरके राजनि०।

**यव्य** न० यवानां भवनं क्षेत्रं यत्। यवभवनयोग्ये क्षेत्रे अमरः। गुणचन्द्राकोवत्र यत्। २चान्द्रे मासे पु०। “यव्यद्वयं श्रावणादि सर्वा नद्यो रजस्वलाः” प्रा०त०।

**यशःपटह** पु० यशःख्यापकः पटहः शा० त०। ढक्कायाम् वाद्यभेदे अमरः। [शेषादयोऽप्यत्र।

**यशःशेष** त्रि० यश एव शेषोऽस्य। मृते हेमच०। कीर्त्ति-

**यशद** न० येन वायुना शीयते शद–अच्। (दस्ता) ख्याते धातुभेदे “यशदं रङ्गसदृशं रीतिहेतुश्च तन्मतम्। यशदं तुवरं तिक्तं शीतलं कफपित्तहृत्। चक्षुष्यं परमं मेहान् पाण्डुं श्वासञ्च नाशयेत्” भावप्र०।

**यशस्** न० अश–असुन् धातोः युट् च। शौर्य्यादिभूते ख्यातिपरपर्य्याये पदार्थे अमरः।

**यशस्या** स्त्री यशसे हिता यशस्+यत्। १जीवन्त्याम् ऋद्धिनामौषधौ च राजनि०। २यशःसाधने त्रि०। “धर्म्यं यशस्यमायुष्यम्”।

**यशस्वत्** त्रि० यशस्+अस्त्यर्थे मतुप् मस्य वः। यशोविशिष्टे

**यशस्विन्** त्रि० यशस्+अस्त्यर्थे विनि। १यशोयुते स्त्रियां ङीप्। सा च २ज्योतिष्मतीलतायां ३यवतिक्तायां राजनि० ४वनकार्पास्यां शब्दर०।

**यशोद** पु० यशो ददाति दा—क। १पारदे राजनि० २यशोदातरि त्रि०।३नन्दगोपपत्न्यां स्त्री।"नन्दगोपगृहे जाता यशोदागर्भसम्भवा" देवीमा०।

**यष्टृ** पु० यज—तृच्। यागशीले।

**यष्टि** पु० यज—क्तिन् नि० न सम्प्रसारणम्। १ध्वजादिदण्डे २भुजाद्यवलम्बने दण्डे च मेदि० क्तिच्। ३तन्तौ शब्दमा०। ४हारलतायां ५भार्ग्यां ६मधूकायां (यष्टिमधु) स्त्री वा ङीप्। ७शस्त्रभेदे च मेदि०।

**यष्टिमधु** न०यष्टौ मधु यस्य। स्वनामख्याते लताभेदे हेमा०। कप् तत्रार्थे स्त्री अमरः।

**यष्टीक** न०यष्ट्या कायति कै-क। यष्टीमधौ लताभेदे भावप्र०

**यष्टीपुष्प** पु० यष्टीव पुष्पमस्य। पुत्रजीववृक्षे भावप्र०।

**यष्टीमधु** पु० यष्ट्यां मधु यस्य। (यष्टिमधु) स्वनामख्याते लताभेदे राजनि०।

**यस** यत्ने दिवा० पक्षे भ्वा० वा श्यन् पर०सक०सेट्। यस्यति यसति संयस्यति संयसति अनुयस्यति। इरित् अयसत् अयासीत् अयसीत्। अयं पुषादिरित्यन्ये उदित् क्त्वा वेट्। यसित्वा यस्त्वा यस्तः।

**यस्क** पु० यस—क नेत्त्वम्। मुनिभेदे तस्य गोत्रापत्यं शिवा० अण्। यास्क तदपत्ये पुंस्त्री० निरुक्तकारके मुनिभेदे पु०। बहुषु अणो लुक्। यस्काः।

**या** गतौ अदा० पर० सक० अनिट्। याति अयासीत् ययौ

**याग** पु०यज—घञ्। मन्त्रकरणके यज्ञाद्यधिकरणे देवोद्देशेन हविस्त्यागरूपे यज्ञे अमरः। तद्भेदाः कात्यायनादिश्रौतसूत्रादौ दृश्याः।

**याच** याचने भ्वा०उभ०द्विक०सेट्। याचति ते अयाचीत् अयाचिष्ट। ऋदित् चङि न ह्रस्वः। ह्वित् अथ याचथुः। द्वित् याचित्वम्। गौणेऽस्य कर्मणि लकारादयः।

**याचक** त्रि० याच—ण्वुल्। याच्ञाकारके अमरः।

**याचन** न० याच—ल्युट्। याच्ञायाम्। युच्। याचना तत्रार्थे स्त्री।

**याचनक** त्रि० याच—ल्यु स्वार्थे क। याचके अमरः।

**याचित** न० याच—भावे क्त। याचनवृत्तौ अमरः। २याच्ञाया। कर्मणि क्त। ३मार्गिते त्रि०।

**याचितक** न० याचितेनाधिगतम् कन्। याच्ञया धनस्वामिनो गृहीते (चाओया) द्रव्ये अमरः।

**याच्ञा** स्त्री याच—नङ्। प्रार्थनायाम् अमरः।

**याजक** पु० याजयति यज-णिच्-ण्वुल्। धनादिलाभाय परार्थं यज्ञकर्तरि ऋत्विगादौ।

**याजन** न० यज—णिच्—ल्युट्। दक्षिणार्थमन्यस्य यागसम्पादने "यजनं याजनं तथा" मनुः।

**याज्ञवल्क्य** पु० १धर्मशास्त्रकर्त्तरि तत्संहिता आचारव्यवहारप्रायश्चित्तात्मकाध्यायत्रयान्विता।२शुक्लयजुःप्रवर्त्तके मुनिभेदे तत्कथा शाम० १२ स्क०।

**याज्ञसेनी** स्त्री यज्ञसेनस्य द्रुपदराजस्यापत्यं स्त्री अत इञ् ङीप्। द्रौपद्यां पाण्डवभार्यायाम् हेमच०।

**याज्ञिक** पु० यज्ञाय हितः यज्ञः प्रयोजनमस्य वा ठक्। १दर्भभेदे शब्दर०।२याजके ऋत्विगादौ ३खदिरे ४पलाशे ५अश्वत्थे राजनि०। ६यजमाने च।

**याज्य** न० इज्यतेऽत्र यज—वा ण्यत्। १यागस्थाने २देवप्रतिमायाञ्च "याज्यं लेखमलङ्कारम्" इति स्मृतिव्याख्यायां दायभागे "याज्यं यागस्थानं देवताप्रतिमा वेत्युक्तम्। ३याजनीये त्रि०। करणे ण्यत्। ४ऋग्विशेषे स्त्री। तदुच्चारणविशेषः आश्व०श्रौ० १।४५ सू० उक्तः।

**यातना** स्त्री यु० यत—युच्। तीव्रवेदनायाम् अमरः।

**यातयाम** त्रि० यातो गतो याम उचितसमयो यस्य।१जीर्णे २परिभुक्ते च अमरः।३पर्युषिते "यातयामं गतरसम्" इति गीता। ४उच्छिष्टे मेदि०। ४पुनःपुनःप्रयुज्यमाने च "संवत्सरसाध्ये गवामयने प्रत्यहं बृहद्रथन्तरसाम्नोः पुनः पुनः प्रयोगात् तस्य तथात्वम् ता० ब्रा० ४।२।१९ भाष्ये दृश्यम्। [१यातौ २गन्तव्ये त्रि०।

**यातव्य** पु० यायतेऽसौ या—तव्य। अपायां युद्धार्थमभिगम्ये

**यातायात** न० यातञ्चायातञ्च या—भावे क्त। आ+या-भावे क्त समाहार द्व०। गमनागमनयोः।

**यातु** न० या-तु। १राक्षसे अमरः। २गन्तरि त्रि० उणा०। ३काले पु० ४अध्वगे त्रि० सि० कौ०। ५वायौ संक्षिप्तसा० यत—णिच्—उण्। ६यातयितरि प्रवर्त्तयितरि च "यातुर्यथेति" ताण्ड्य०ब्रा० "यातुर्यातयिता प्रवर्त्तयितेति" भा०। [राजनि०।

**यातुघ्न** पु०यातं राक्षसं गन्धेन हन्ति हन—टक्। १गुग्गुलौ

**यातुधान** पुंस्त्री० यातु इति धीयतेऽभिधीयते धा-ल्युट्। राक्षसे अमरः स्त्रियां जातौ ङीष्।

**यातृ** स्त्री या-तृच्। १देवरपत्न्याम् (या) अमरः। यातरौ यातरः। ऋन्। २गन्तरि त्रि॰। यातारौ यातारः।

**यात्रा** स्त्री या-ष्ट्रन्। १जिगीषया राज्ञां गमने अमरः २गमनमात्रे ३देवोद्देशेनोत्सवभेदे रथयात्रादौ ४यापने च मेदि॰। ५उपाये विश्वः यात्राहिनादिकं मु॰चि॰ यात्राप्रकरणे दृश्यम्। [हिते नवयात्रादौ च।

**यात्रिक** त्रि॰ यात्रायै हितम्। १उत्सवे २उपाये ३गमन-

**याथातथ्य** न॰ तथा तद्रूपस्यौचित्यम् अव्ययी॰ तस्य भावः ष्यञ्। यद्वस्तु यथा भवितुं युक्तं तस्य तथाभावे।

**याथार्थ्य** न॰यथार्थस्य भावः। सत्यत्वे वास्तविकत्वे। [अमरः

**यादःपति** पु॰ यादसां जलजन्तूनां पतिः। १वरुणे २समुद्रे

**यादव** पु॰ यदोर्गोत्रापत्यम् अण्। १यदुवंश्ये स्त्रियां ङीप्। २तत्प्रधाने श्रीकृष्णे पु॰ शब्दर॰। यदूनामिदमृ अण् ३गोधनादिरूपादिके धने न॰अम॰।४दुर्गायां स्त्री त्रिका॰ङीप्

**यादस्** न॰ या-असुन् दुक् च। जलजन्तुमात्रे अमरः।

**यादसांनाथ** पु॰ ६त॰ अलुक्समा॰। १वरुणे हला॰ २समुद्रे च अमरः। यादसांपत्यादयोऽप्यत्र।

**यादृश(क्ष)(श्)** त्रि॰ यस्येव दर्शनमस्य यद्+दृश-कञ् (ट) क्विप् वा। यत्सदृशे यथाविधे। टान्तात् स्त्रियां ङीप्।

**यादृच्छिक** त्रि॰ यदृच्छया आगतः ठक्। यथेच्छया प्राप्ते।

**यान** न॰ या-भावे ल्युट्। १गमने उपचितशक्तेः राज्ञः मूलराष्ट्रादिरक्षां कृत्वा रिपोराक्रन्दनाय २गमने च अमरः। करणे ल्युट्। ३गमनसाधने रथादौ अमरः।

**यापन** न॰ या-णिच्-ल्युट्। १कालादेः क्षेपणे हेमच॰। २निरसने च मेदि॰।

**याप्य** त्रि॰ या-णिच्-यत्। १निन्द्ये २अधमे अमरः। ३क्षेपणीये मेदि॰। निःशेषप्रतिकार्ये उपशमनीये ४रोगभेदे च भावप्र॰ तत्र तल्लक्षणादिकमुक्तं यथा "यापनीयन्तु तं विद्यात् क्रियां धारयते हि यः। क्रियायान्तु निवृत्तायां सद्यो यश्च विनश्यति। प्राप्ता क्रिया धारयति सुखिनं याप्यमातुरम्। प्रपतिष्यदिवागारं स्तम्भो यत्नेन योजितः। साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा। घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम्"।

**याप्ययान** पु॰ याप्यं क्षेप्यं कुत्सितं वा पदशून्यत्वात् इतरवाह्यत्वाद्वा यानम्। (मड़ापाला) शिविकायाम् अमरः।

**याम** पु॰ यम-घञ्। १यमे मेदि॰ २प्रहरे च अमरः। "यामो यातस्तथापि नायातः" इति सा॰ द॰।

**यामघोष** पुंस्त्री॰यामे घोषोऽस्य। १कुक्कुटे शब्दच॰ स्त्रियां ङीप्। २घटिकायन्त्रभेदे स्त्री त्रिका॰।

**यामल** न॰ यमल+स्वार्थे अण्। १युगले हेमच॰। २तन्त्रशास्त्रभेदे च। "सृष्टिश्च ज्योतिषाख्यानं नित्यकृत्यप्रदीपनम्। क्रमसूत्रं वर्णभेदो जातिभेदस्तथैव च। युगधर्मश्च संख्यातो यामलस्याष्टलक्षणम्"। तच्च षड्विधम् "आदियामलं१ ब्रह्मयामलं२ विष्णुयामलं३ रुद्रयामलं४ गणेशयामलम्५ आदित्ययामलम्६ च इति वाराहीतन्त्रम्। अस्य वर्ण्यादित्वमपि तत्रार्थे।

**यामवती** स्त्री यामाः बहवः त्रित्वसंख्यायुताः सन्त्यस्यां भूम्नि मतुप् मस्य वः ङीप्। १रात्रौ राजनि॰ २हरिद्रायाञ्च

**यामातृ** पु॰जायां माति तृच् पृषो॰। जामातृशब्दार्थे शब्दर॰

**यामि** स्त्री यम-इन्। १कुलस्त्रियां २भगिन्यां जन्तः स्त्र-यादौ रभसः। "या(जा)मयोयानि गेहानीति" मनुः। ३रात्रौ शब्दर॰। ४धर्मपत्नीभेदे वह्निपु॰ "अरुन्धती वसुर्यामिर्लम्बा भानुर्मरुत्वती। सङ्कल्पा च मुहूर्ता च साध्या विश्वा च नामतः। धर्मपत्न्यो दश त्वेतास्तास्वपत्यानि मे शृणु"।

**यामित्र** न॰ ज्योतिषोक्ते लग्नराशिभ्यां सप्तमे स्थाने।

**यामित्रवेध** पु॰यामित्रे सप्तमस्थाने वेधः पापग्रहसंयोगः। विवाहादौ वर्ज्ये "पापात् सप्तमगः शशी" इत्याद्युक्ते योगभेदे उपयमशब्दे १२६७ पृ॰ दृश्यम्।

**यामिनी** स्त्री यामाः त्रिसंख्याताः सन्त्यस्य बाहुल्ये इनि। १रात्रौ २हरिद्रायाञ्च अमरः। [रजनीशादयोऽप्यत्र।

**यामिनीपति** पु॰ ६त॰। १चन्द्रे शब्दर॰ २कर्पूरे च।

**यामी** स्त्री यमस्येयम् यमो देवताऽस्या वा तस्येदं वा अण् ङीप्। १दक्षिणस्यां दिशि २यमसम्बन्धिन्यां यातनायां ३भरणीतारायां च। यामि+वा ङीप्।४यामिशब्दार्थे च।

**यामुनेष्टक** न॰ यमुनायां भवं यामुनं तदिवेष्टकम्। सीसके जटा॰ तस्य कृष्णत्वात् यामुनजलतुल्यत्वात्तथात्वम्।

**याम्य** पु॰ यामी दिक् निवासोऽस्य यत्। १अगस्त्ये २चन्दनद्रुमे च मेदि॰। यमोदेवताऽस्य तस्येदं वा यत्। ३यमसम्बन्धिनि त्रि॰ ४भरणीनक्षत्रे च ज्यो॰ ५दक्षिणदेशस्थे त्रि॰।

**याम्यायन** न॰ याम्यायाम् अयनं सूर्यस्य गतिः। सूर्यस्य दक्षिणायने तदाधारेषु रवेः कर्कसंक्रान्तितः परेषु षट्सु मासेषु च। [राजनि॰।

**याम्योद्भूत** पु॰ याम्ये दक्षिणदेशे उद्भूतः। श्रीताबृक्षे

**यायजूक** पु० यज–यङ्–ऊक। पुनःपुनर्यागशीले अमरः।

**यायावर** पु० देशाद्देशान्तरं याति या यङ्–वरच्। १अश्वमेधीयाश्वे जटा०। तस्य नानादेशगमनशीलत्वात्तथात्वम् २जरत्कारुमुनौ च त्रिका०। ३भ्रमणशीले त्रि०।

**याव** पु० यु–अप् स्वार्थे अण्। १अलक्ते अमरः स्वार्थे क। यावक तत्र। याव इव कन् (कुलथीकलाइ) २व्रीहिधान्यभेदे अमरः।

**यावत्** त्रि० यत् परिमाणमस्य मतुप्। १यत्परिमाणे स्त्रियां ङीप्। या–वति। २साकल्ये ३अवधौ ४व्याप्तौ ५माने ६अवधारणे च अव्य० अमरः। एतच्छब्दयोगे द्वितीया।

**यावत्तावत्** अव्य० यावच्च तावच्च द्व०। बीजगणितप्रसिद्धे अव्यक्तमानानयनाय कल्प्ये प्रथमे राशौ।

**यावतिथ** त्रि० यावतां पूरणः यावत्+डट् इथुक् च। यावत् परिमाणपूरणे।

**यावन** पु० यु–णिच्–ल्यु। सिह्लाख्यगन्धद्रव्ये अमरः।

**यावनाल** पु० यवनाल एव स्वार्थे अण्। धान्यभेदे (जनार) राजनि०।

**यावनालशर** पु० यवनाल इव शरः। शरभेदे राजनि०।

**यावनाली** स्त्री० यवनालस्य विकारः अण् ङीप्। यवनालभवायां शर्करायाम् राजनि०।

**यावशूक** पु० यवशूकस्य विकारः अण्। यवक्षारे रत्नमा०।

**याष्टीक** पु० यष्टिः प्रहरणमस्य ठक्। यष्ट्या योद्धरि अमरः। [भावे घञ्। २प्रयासे।

**यास** पु० यस–कर्त्तरि संज्ञायां घञ्। १दुरालभायाम् अमरः

**यु** मिश्रणे अमिश्रणे च अदा० पर० सक० सेट्। यौति अयावीत्।

**यु** बन्धे क्र्या० उभ० सक० अनिट्। युनाति युनीते अयौषीत् अयौष्ट।

**यु** निन्दने चु० आत्म० सक० सेट्। यावयते अयीयवत्।

**युक्त** त्रि० युज–क्त। १मिलिते मेदि०। २अभ्यासवशात् सदा सर्वविषयकज्ञानयुते योगिनि पु० भाषा०। ३उचिते ४न्यायागतद्रव्यादौ च न० अमरः। ५(एलानी) वृक्षभेदे स्त्री रत्नमा०। [रुकी) अमरः।

**युक्तरसा** स्त्री० युक्तो रसो यस्याः। रास्नायां (रासन-

**युक्ति** स्त्री० युज क्तिन्। १न्याये मेदि०। २व्यवहारे ३अनुमाने ४अनुमानाङ्गलिङ्गज्ञानादौ साधकबाधकप्रमाणोपन्यासे तर्के च। व्यवहारे कानिचित् देशस्थितानि नारदेनोक्तानि यथा "उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः। केशाकेशिगृहीतश्च युगपत् पारदारिकः। कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः। तथा कुठारहस्तश्च वनच्छेत्ता प्रकीर्त्तितः। प्रत्यक्षचिह्नैर्विज्ञेयो दण्डपारुष्यकृन्नरः। असाक्षिप्रत्यया ह्येते पारुष्ये तु परीक्षणम्"। "युक्तिरर्थावधारणम्" सा०द० उक्ते ५नाटकाङ्गविशेषे च। तत्र न्याये "श्रुतौ विरोधे न्यायस्तु बलवानर्थनिर्णये। युक्तिहीनविचारे तु धर्महानिः प्रजायते" मीमांसकाः।

**युगि** वर्जने भ्वा० पर० सक० सेट् इदित्। युङ्गति अयुङ्गीत्।

**युग** न० युजि अच् पृषो० नलोपः। १युग्मे द्वित्वसंख्यान्विते सत्यत्रेताद्वापरकलिरूपे २कालविशेषे ३वृद्धिनामौषधे ४हस्तचतुष्कपरिमाणे ५रथादेरङ्गभेदे पु० (जोयाल) मेदि०। [काष्ठखण्डभेदे अमरः।

**युगकीलक** पु० ६त०। रथाद्यङ्गयुगधारणार्थे कीलकाख्ये

**युगन्धर** पु० युगं रथस्य युगकाष्ठं धरति धृ खच्। रथस्य युगकाष्ठाधारे कूबराख्ये १काष्ठभेदे अमरः। २पर्वतभेदे च शब्दर०। [अमरः।

**युगपद्** अव्य० युगमिव पद्यते पद–क्विप्। एककाले इत्यर्थे

**युगपत्त्र** पु० युगमिव संहतं पत्त्रमस्य। कोविदारवृक्षे शेखर० वा कप्। तत्रैव। शिंशपावृक्षे स्त्री त्रिका० टाप् अत इत्त्वम्।

**युगपार्श्वग** पु० युगपार्श्वे गच्छति गम–ड। दम्यः सार्थे लाङ्गलपार्श्वे बद्धे वृषे अमरः। [न्विते अमरः।

**युगल** न० युगं द्वित्वं लाति ला–क। युग्मे द्वित्वसंख्या-

**युगलाख्य** पु० युगलेन वराक्षेन व्यञ्जनवर्णद्वयेनाख्यायते आ+ख्या–क। १बर्वुरवृक्षे राजनि०। २युगलनामके त्रि०।

**युगान्त** पु० युगानां सत्यादीनामन्तस्तदुपलक्षितो वा कालः। १प्रलये २तत्काले च हला०।

**युग्म** न० युज–मक् पृषो० जस्य गः। १द्वित्वसंख्यान्विते (जोड़) युगले। "युग्माग्निकृतभूतानि षण्मुन्योर्वसुरन्ध्रयोः। रुद्रेण द्वादशी युक्ता चतुर्दश्याथ पूर्णिमा। प्रतिपदाप्यमावस्या तिथ्योर्युग्मं महाफलम्" इत्युक्ते २तिथिविशेषयुगे ३समराशिषु च ४मिथुनराशौ च ज्यो०।

**युग्मपत्त्र** पु० युग्मानि पत्त्राण्यस्य। १रक्तकाञ्चनवृक्षे रत्नमा० युग्मपर्णादयोऽप्यत्र। संज्ञायां कन्। २शिंशपावृक्षे स्त्री शब्दर० टाप् अत इत्त्वम्। [२वृश्चिकाल्यां च राजनि०।

**युग्मफला** स्त्री० युग्मानि फलानि यस्याः। १इन्द्रचिर्भट्यां

**युग्य** न० युग्ममर्हति युग+यत्। १वाहने याने। युगं वहति यत्। २युग्यवाहकेऽश्वादौ त्रि० अमरः।

**युच्छ** प्रमादे भ्वा० पर० सक० सेट् । युच्छति अयुच्छीत् ।

**युज** युतौ रु० उ० सक० अनिट् । युनक्ति युङ्क्ते इरित् अयुजत् अयौक्षीत् अयुक्त युयोज युयुजे ।
अजन्तोपसर्गात् उदश्च परस्मात् आत्म० ।
अनु+प्रश्ने सक० आ० । अनुयुङ्क्ते अनुयोगः ।
अभि+व्यवहारेणाक्रान्दने (नालिशकरा) सक० आत्म० अभियुङ्क्ते अभियोगः ।
उद्+आयोजने सक० उद्यमे अक० उद्युङ्क्ते उद्योगः ।
उप+भोजने सक० सम्बन्धभेदे अक० आत्म० उपयुङ्क्ते उपयोगः ।
नि+प्रेरणे सक०आत्म०नियुङ्क्ते । नियोगः । [पर्य्यनुयोगः ।
परि+अनु+दूषणाय प्रश्ने आत्म० सक० । पर्य्यनुयुङ्क्ते
प्र+उच्चारणे व्यवहारभेदे च सक० आत्म० प्रयुङ्क्ते प्रयोगः
प्रति+प्रतिरूपे योगे सक० आ० प्रतियुङ्क्ते प्रतियोगः ।
सम्+संयोगे सक० प० संयुनक्ति संयोगः ।

**युज** निन्दायां चु० आ० सक० सेट् । योजयते अयूयुजत ।

**युज** समाधौ दि० आत्म० अनिट् । युज्यते । युयुजे ।

**युज** बन्धने युतौ च मा चु० उभ० पक्षे भ्वा० पर०सक०सेट् । योजयति ते योजति । अयूयुजत् त । अयोजीत् ।

**युज्** त्रि० दि०युज क्विप् । १समाधिमति । युक् युजौ । रु० युज क्विप् । २संयोगवति त्रि०युङ् युञ्जौ युञ्जः इति भेदः चु० युज-निन्दे भावे क्विप् । ३निन्दायाम् अव्य० ।

**युञ्जान** पु० युज-शानच् । १योगविशेषवति भावनाप्रकारेण सर्वपदार्थज्ञातरि भाषा० । २रथवारथौ ३विप्रे च मेदि० ।

**युत** दीप्तौ भ्वा०आ०अक०सेट् । योतते । अयोतिष्ट । ऌदित् चङि न ह्रस्वः । [४हस्तचतुष्टयमाने न०मेदि० ।

**युत** त्रि० यु-क्त । १संयुक्ते २मिलिते ३अमिलिते च ।

**युतक** न० यु-क्त युत-क वा ततः स्वार्थे क । १संशये २युगे ३स्त्रीवसनाञ्चले ४चरणाग्रे ५यौतके धने मेदि० । ६मैत्रीकरणे शब्दर० । ७संश्रवे ८सूर्पाग्रे च नानार्थमा० । ९स्त्रीवस्त्रभेदे हेम० । १०संयुक्ते त्रि० ।

**युतवेध** पु० विवाहादौ वर्ज्ये चन्द्रेण सह पापग्रहयोगे उपयमशब्दे १२६७पृ० वचनवाक्यं दृश्यम् ।

**युद्ध** न० युध-भावादौ क्त । १परस्पराभिघातार्थं शस्त्रादिक्षेपणव्यापारे योधने २तदाधारे संग्रामे अमरः । ज्योतिषोक्ते ग्रहाणां गतिभेदकृते योधनरूपे ३परस्परमिलनविशेषे च । ग्रहयुद्धशब्दे २७६६ पृ० दृश्यम् ।

**युध** युद्धे दिवा० आ० सक० अनिट् । युध्यते अयुद्ध युयुधे ।

**युध्(धा)** स्त्री युध-सम्प० क्विप् वा टाप् । १युद्धे योधने २संग्रामे च अमरः । [२५अ० ।

**युधाजित्** पु० क्रोष्टुनृपपुत्रे माद्रीगर्भजाते नृपभेदे हरिवं०

**युधान** पु० युध-उणा०कान । १क्षत्रिये उणादिको० ।

**युधिष्ठिर** पु० युधि युद्धे स्थिरः "गवियुधिभ्यां स्थिरः" पा० षत्वम् । पाण्डवश्रेष्ठे । [अयोपीत् ।

**युप** विमोहे दिवा०पर०अक० सेट् । युप्यति इरित् अयुपत्

**युयुधान** पु० युध-कानच् द्वित्वम् । १इन्द्रे सात्यकिनामनि यादवे क्षत्रियभेदे त्रिका० । २क्षत्रियमात्रे च संक्षिप्तसा० ।

**युवखलति** स्त्री युवतिरेव खलतिः पुंवत् । (टाक्) रोगवत्याम् युवत्याम् । [शब्दर० ।

**युवगण्ड** पु० ६त० । यूनो गण्डस्थव्रणभेदे । (वयस्फोड़ा)

**युव(ति)ती** स्त्री युवन्+ति ङीप् वा । १यौवनवत्यां स्त्रियाम् शब्दर० । युवन्-ङीप् । यूनीत्यप्यत्र । २स्त्रीमात्रे भागुरिः ३हरिद्रायां शब्दच० ।

**युवतीष्टा** स्त्री युवतीनामिष्टा । स्वर्णयूथिकायाम् राजनि० ।

**युवन्** त्रि० यु-कनिन् । १श्रेष्ठे २निसर्गबलवति मेदि० । "आषोड़शाद्भवेद् बालस्तरुणस्तत उच्यते" इत्युक्तवयस्के ३तरुणे च । "जीवति तु वंश्ये युवा" पा० उक्तैरुक्ते पौत्रादेरपत्ये ४चतुर्थादौ काकादिस्वरेषु ५स्वरभेदे ।

**युवनाश्व** पु० सूर्य्यवंश्ये मान्धातृपितरि नृपभेदे ।

**युवराज** पु० युवैव राजा टच्समा० । राजयोग्यकार्यकारे १राजपुत्रे अमरः । २बुद्धभेदे त्रिका० । [युष्मद्

**युष** भजने सौ०पर०सक०सेट् । योषयति अयोषीत् । योषा

**युष्मद्** त्रि० सौ० युष-मदिक् । संबोध्यचेतने भवच्छब्दार्थे । उक्तार्थेऽस्य सर्वनामता त्रिषु लिङ्गेषु समरूपता च ।

**यूक** पुंस्त्री० यु-क्विप् क । मत्कुणे (उकुण) स्त्रीत्वे टाप् ।

**यूति** स्त्री यु-क्तिन् नि० दीर्घः । मिश्रीकरणे ।

**यूथ** न० यु-थक् पृषो० दीर्घः । सजातीयसमुदाये अमरः ।

**यूथनाथ** पु० ६त० । वन्यगजादीनां प्रधाने अमरः । यूथपादयोऽप्यत्र ।

**यूथिका** स्त्री यु-थक् पृषो० दीर्घः स्वार्थे क अत इत्वम् टाप् । १अम्लानके मेदि० २पाठायां राजनि० । ३यूथ्याञ्च (युइ) अमरः । [अमरः ।

**यूथी** स्त्री यु-थक् पृषो० दीर्घः ङीप् । (युइ) पुष्पप्रधाने वृक्षे

**यूप** पुंन० यु-पक् पृषो० दीर्घः । १यज्ञीयपशुबन्धनकाष्ठभेदे तल्लक्षणं यज्ञपार्श्वे दृश्यम् । यागसमाप्तिचिह्नार्थे २स्तम्भे च अमरः ३जयस्तम्भे पु० उणादिको० ।

**यूपकटक** पु० ६त० । यज्ञसमाप्तिसूचककाष्ठस्य शिरःस्थे वलयाकारे काष्ठमये पदार्थे चषाले अमरः ।

**यूपद्रु** पु० यूपाय द्रुः प्रकृतिविकृतिभावात् ४त० । खदिरवृक्षे यूपद्रुमादयोऽप्यत्र त्रिका० ।

**यूष** वधे भ्वा० पर० सक० सेट् । यूषति अयूषीत् युयूष ।

**यूष** पुंन० यूष-क । १मुद्गादिक्वाथे अमरः ।

"अष्टादशगुणे नीरे शमीधान्यस्तोरसः । विरलात्त्वे घनः किञ्चित् पेयातो यूष उच्यते । उक्तः स एव निर्यूहो क्वचिदत्र विशेषतः" । यूषस्य प्रकारान्तरमाह कलककुडवपलं शुण्ठीं पिप्पलीश्चार्द्धकार्षिकीं । वारिप्रस्थेन विपचेत्तज्ज्ञवो यूष उच्यते" ।

"यूषो बल्यो लघुः पाके रुच्यः कण्ठ्यः कफापहः" । अथ मुद्गयूषविधिः "मुद्गानां द्विपलं तोये स्तनमर्द्धाढकोन्मिते । पादस्थं मर्दितं पूतं दाडिमस्य पलेन तत् । युक्तं सैन्धवविश्वाङ्कधान्यकैः पादकार्षिकैः । कणाजीरकयोश्चूर्णांशकेनावचूर्णितम् । संस्कृतो मुद्गयूषोऽयं पित्तश्लेष्महरो मतः" । अथ तस्य गुणाः "मुद्गानामुत्तमो यूषो दीपनः शीतलो लघुः । प्रणोर्ध्वजत्रुगदाहकफपित्तज्वरास्रहृत्" । अथ मुद्गामलकयूषगुणाः "मुद्गामलकयूषस्तु भेदी पित्तानिलापहः । तृड्दाहशमनः शीतो मूर्च्छाश्रममदापहः" भावप्र० ।

२अश्मदारुवृक्षे पु० शब्दर० । [चक्रि न ङ्गसः ।

**येष** यत्ने भ्वा० आ० अक० सेट् । येषते अयेषिष्ट । ऋदित्

**योक्त्र** न० युज्यतेऽनेन यज–ष्ट्रन् । ईषादण्डादौ युगबन्धनार्थे दामनि (योत) अमरः ।

**योग** पु० युज–भावादौ घञ् । संयोगे १मेलने २उपाये ३वर्माादिधारणे ४ध्याने ५युक्तौ च अमरः । "योगश्चित्तवृत्तिनिरोधः" इति पातञ्जलोक्ते ६सर्वविषयेभ्योऽन्तःकरणवृत्तेर्निरोधे "संयोगं योगमित्याहुर्जीवात्मपरमात्मनोः" इत्युक्ते ७जीवात्मपरमात्मनोरैक्ये । ८अलब्धार्थलाभचिन्तायाम् ९देहस्थैर्ये १०शब्दादीनां प्रयोगे ११भेषजे १२विश्वासघातके १३द्रव्ये कार्मणे च मेदि० । १४समुदायशब्दस्यावयवार्थसम्बन्धे "योगबलं समाख्या" इति मीमांसकाः । "योगः कर्मसु कौशलम्" इत्युक्ते १५यथास्थितवस्तुनोऽन्यथारूपप्रतिपादने यथा संसारबन्धहेतोरपि कर्मणोऽबन्धमोचहेतुत्वम् । १६ज्योतिषोक्तेषु रविचन्द्रयोगाधीनेषु विष्कुम्भादिषु सप्तविंशतौ पदार्थेषु । तिथिवारनक्षत्राणाम् अन्यतरान्यतमानां १७सम्बन्धविशेषेषु सिद्धियोगः अमृतयोगः अर्द्धोदययोग इत्यादि । १८कूले च "योगाधमनविक्रीतमिति" स्मृतिः । १९नैयायिके २०धने हेमच० २१चारे २४सूत्रे त्रिका० । चित्तवृत्तिनिरोधरूपयोगश्च द्विविधः । राजयोगो हठयोगश्च । तत्र राजयोगः पतञ्जलिनोक्तः । हठयोगस्तु तन्त्रशास्त्रोक्तः । तस्य प्रकारान्तरेण त्रैविध्यम् भाग० ११।२० अ० उक्तं यथा "श्रीभगवानुवाच "योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया । ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् । निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु । तेष्वनिर्विण्णचित्तानां कर्मयोगश्च कामिनाम् । यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् । न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः । तावत् कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते । स्वधर्मस्थो यजन् यज्ञैरनाशीःकाम उद्धव ! । न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत् । अस्मिंल्लोके वर्त्तमानः स्वधर्मस्थोऽनघः शुचिः । ज्ञानं विशुद्धमाप्नोति मद्भक्तिञ्च यदृच्छया" । २२ज्योतिषोक्ते लग्नादिस्थग्रहविशेषे ग्रहभेदयोगे यथा राजयोगः नाभसयोग इत्यादि । यात्रायां यात्रालग्नात् केन्द्रत्रिकोणस्थिते बुधजीवशुक्राणामेकस्मिन् यथोक्तं मु० चि० "एकोऽपि ज्ञयवितेषु पञ्चमतपःकेन्द्रेषु योगस्तथा द्वौ चेत्तेष्वधियोग एषु सकला योगाधियोगः स्मृतः" । योगे क्षेमप्राधियोगगमने "क्षेमं रिपूणां वधः"

**योगक्षेम** न० योगश्च क्षेमश्च समाहारः द्व० । अलब्धलाभचिन्तासहिते लब्धपरिरक्षणे "योगक्षेमं वहाम्यहम्"

**योगज** न० योगात् जायते जन–ड । १अगुरुचन्दने भावप्र० । २योगजातमात्रे त्रि० । ३न्यायाद्युक्ते प्रत्यक्षसाधने अलौकिकसन्निकर्षभेदे पु० ।

**योगदान** न० योगेन छलेन उपधिना वा दानम् । "योगदानप्रतिग्रहम्" इति स्मृत्युक्ते सोपधिके दाने ।

**योगनिद्रा** स्त्री योगरूपा निद्रा । प्रलये परमेश्वरस्य सर्वजीवसंहारेच्छया योगरूपे १व्यापारे "योगनिद्रामुपेयुषः" देवीमा० २तदधिष्ठात्र्यां दुर्गायाञ्च ।

**योगपट्ट** न० योगाभ्यासार्थं पट्टम् । योगिधार्य्ये पट्टवस्त्रभेदे योगपट्टकमप्यत्र । "त्रिविधं योगपट्टकमाद्यं व्याघ्राजिनोद्भवम् । द्वितीयं मृगचर्माढ्यं तृतीयं तन्तुनिर्मितम् । चतुर्मात्रप्रविस्तारं दैर्घ्यं च यज्ञसूत्रवत्" सिद्धान्तशेखरः । चतुर्मात्रं चतुरङ्गुलमात्रम् वीरमि० ।

**योगपीठ** पुंन० योगयोग्यं पीठमासनम्। देवादीनामासनभेदे

**योगमाया** स्त्री योग एव माया। भगवतो जगत्सर्जनार्थायां शक्तौ "योगमायामुपाश्रितः" इति भाग०१०स्क० रासारम्भे तदधिष्ठात्र्यां २दुर्गायाञ्च।

**योगरङ्ग** पु० योगेन रङ्गोऽत्र। (नारङ्ग) जम्बीरभेदे राजनि०

**योगरूढ** पु० योगोऽवयवशक्तिः रूढिः समुदायशक्तिः एते स्तोऽस्य अच्। अवयवशक्त्या समुदायशक्त्या च अर्थबोधके पङ्कजशब्दादौ। तत्र हि उभयशक्त्या पङ्कजनिकर्त्तृत्वरूपावयवार्थविशिष्टपद्मत्वविशिष्टस्य बोधः। उभयार्थबोधनाच्च पङ्कजाते कुमुदादौ स्थलजाते पद्मे च न तत्पदप्रयोगप्रसङ्गः।

**योगरूढि** स्त्री योगेन सहिता रूढिः। शब्दस्य वृत्तिभेदे यथा पङ्कजनिकर्तृत्वविशिष्टपद्मस्य बोधः। [च हेमच०।

**योगवाहिन्** पु० योगेन वहति वह–णिनि। १पारदे २क्षारभेदे

**योगाचार** पु० बौद्धभेदे तन्मतञ्च बुद्धशब्दे ४५८१ पृ० दृश्यम्

**योगाधमन** न० योगेन छलेनोपधिना वाऽऽधमनम्। सोपधिके छलहेतुके च बन्धकदाने। "योगाधमनविक्रीतम्" इति स्मृतिः।

**योगारूढ** पु० योगमारूढः आ+रुह–क्त। "यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते। सर्वसंकल्पसन्न्यासी योगारूढस्तदोच्यते" इत्युक्ते योगिभेदे "योगारूढस्य तस्यैव शमः कारणमुच्यते" इति गीता।

**योगासन** न० योगार्थमासनम्। १योगशास्त्रोक्ते स्वस्तिकादौ आसनभेदे हेमच०। "अथ योगासनं वक्ष्ये यत् कृत्वा योगिवद्भवेत्। ऊर्वोः पादतलद्वन्द्वं स्वाङ्के बद्ध्वा करद्वयम्" इति रुद्रजा० उक्ते २आसनभेदे च।

**योगिन्** त्रि० युज–घिनुण्। "आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुनः। सुखं वा यदि वा दुःखं स योगी परमो मतः" गीताद्युक्तयोगयुक्ते २संयोगवति च त्रि० स्त्रियां ङीप्। सा च तत्र ३दुर्गायां ४तच्छक्तिभेदेषु ब्राह्म्यादिषु चतुःषष्टिप्रकारेषु देवताप्रतिमाशब्दे १९९५ पृ० दृश्यम्। "प्रतिपन्नवमी पूर्वे रामरुद्रौ च पावके। शरस्त्रयोदशी याम्ये वेदमासौ च नैरृते। षष्ठी चतुर्दशी पश्चात् वायव्यां मुनिपूर्णिमे। द्वितीया दशमी यक्षे ऐशान्यां चाष्टमी कुहूः" इत्युक्तेषु पूर्वादिदिग्भेदाद् ५तिथिभेदेषु तत्फलं वामे शुभकरी प्रोक्ता पृष्ठे सर्वार्थसाधिनी" ज्यो०त०। आवश्यकत्वे यामार्द्धभेदे तस्याः शुभत्वं समयामृते उक्तं यथा "यस्यां दिशग्रुदयं याति ततो यामार्द्धभुक्तिका। भ्रमन्ती तेन मार्गेण भवेत्तत्कालयोगिनी। तेन "प्राचीधनेश्वरहुताशनकौणपेशवायव्यवारुणयमाधिपशङ्करेषु। एषु क्रमाद्विवसति प्रतिपन्नवम्योः पृष्ठे स्थिता शुभकरी गिरिराजपुत्री"। ६मङ्गलापिङ्गलादिदशाभेदे च दशाशब्दे ३४८४ पृ० दृश्यम्। [७दुर्गायां स्त्री ङीप्।

**योगीश्वर** पु० ६त०। १याज्ञवल्क्यमुनौ २योगिनां श्रेष्ठे च।

**योगेश्वर** पु० ६त०। १श्रीकृष्णे "योगेश्वर! ततो मे त्वं दर्शयात्मानमव्ययम्" गीता। २दुर्गायां च ३वन्ध्याकर्कोट्यां स्त्री भावप्र० ङीप्।

**योगेष्ट** न० योगाय योजनार्थमिष्टम्। सीसके अमरः।

**योग्य** त्रि० योगमर्हति यत् युज–ण्यत् वा। १योगार्हे २उचिते ३निपुणे ४शक्ते च। ५पुष्यनक्षत्रे पु० मेदि०। ६ऋद्धिनामौषधे न० अमरः।

**योग्यता** स्त्री योग्यस्य भावः तल्। १सामर्थ्ये २शाब्दबोधसाधने "पदार्थे तत्र तद्वत्ता योग्यता परिकीर्त्तिता" भाषा० उक्ते ३तत्पदार्थे तत्पदार्थवत्तारूपे ४परस्परान्वये बाधाभावरूपे वार्थे च।

**योग्या** स्त्री योगमर्हति यत् युज–ण्यत् वा कृत्यम्। १अभ्यासे सूर्यस्त्रियाञ्च मेदि० ३शास्त्राभ्यासे हेमच०।

**योग्यानुपलब्धि** स्त्री योग्यस्य प्रत्यक्षादिना उपलब्धुमर्हस्यानुपलब्धिरज्ञानम्। न्यायाद्युक्ते अभावग्राहके साधनभेदे। तथाहि घटादिशून्ये तत्र घटाभावो नानुपलभ्यते तस्य प्रतियोगिनो घटादेः सत्त्वेन तत्प्रत्यक्षकारणसामग्रीसत्त्वेन तत्प्रत्यक्षस्याभावात् किन्तु घटाद्यभावो गृह्यते पिशाचाद्यभावस्य तु न प्रत्यक्षता तत्प्रतियोगिपिशाचादेर्दर्शनायोग्यत्वात्। वेदान्तिमते इयं प्रमाणान्तरम् वेदान्तप० ६प०।

**योजन** न० युज–भावादौ ल्युट्। १संयोगे णिच–ल्युट्। २संयोगकरणे। ३चतुर्षु क्रोशेषु। "स्याद् योजनं क्रोशचतुष्टयेन" "प्रथममगमदङ्गा योजने योजनेशः" इति च लीला०। ४परमात्मनि च मेदि०। ५अङ्गुलौ निघ०। युज–णिच–युच्। यस्यार्थस्य यत्रान्वयः तद्वाचकशब्दस्य तद्वाचकशब्देन ६आसत्तिसम्पादने स्त्री।

**योजनगन्धा** स्त्री योजनं व्याप्य गन्धो यस्याः। १कस्तूर्याम् २सीतायां ३व्यासमातरि सत्यवत्याञ्च मेदि०। स्वार्थे कप् अत इत्त्वम् तत्रैवार्थे। [त्वात्। मञ्जिष्ठायाम् रत्नमा०।

**योजनपर्णी** स्त्री योजनं व्याप्य पर्णान्यस्याः विस्तीर्णपर्ण-

**योजनवल्ली** स्त्री योजनं व्याप्य वल्लीव । मञ्जिष्ठायाम् अमरः स्वार्थे क ह्रस्वः टाप् । तत्रैव राजनि० ।

**योटक** त्रि० युट-ण्वुल् । १मेलके विवाहमेलकस्य उप-यमशब्दे १२४८ पृ० दृश्यः ।

**योत्र** न० यु-ष्ट्रन् । योक्त्रे (योत) अमरः ।

**योद्धृ** पु० युध-तृच् । युद्धकर्त्तरि अमरः । [२युद्धे ।

**योध** पु० युध-अच् । १युद्धकारके अमरः । भावे घञ् ।

**योधन** न० युध-भावे ल्युट् ।१युद्धे । करणे ल्युट् ।२अस्त्राद्यायुधे । कर्त्तरि ल्यु । ३युद्धकर्त्तरि पु० ।

**योधसंराव** पु० योधस्य युद्धाय संरावः आह्वानम् ४अर्थे ६त० । योधानां युद्धार्थं परस्पराह्वाने अमरः ।

**योनल** पु० यवस्य नल इव काण्डोऽस्य पृषो० अत्वम् । (देधान) शस्यभेदे हेमच० ।

**योनि** पुंस्त्री० यु-नि । १मत्स्यादीनामुत्पत्तिस्थाने आकरे मेदि० । २कारणे ३जले हेम० । ४स्त्रीणामसाधारणचिह्ने अमर० । ५तद्देवताके पूर्वफल्गुनीनक्षत्रे ज्यो० । स्त्रीत्वे वा ङीप् । ६उत्पत्तिस्थानमात्रे त्रिका० ।

**योनिज** न० योनिस्थानात् जायते जन-ड । देहभेदे १जरायुजे २अण्डजे च देहे ।

**योनिमुद्रा** स्त्री योन्याकारा मुद्रा । तन्त्रोक्ते देवताविशेष-पूजाङ्गे प्रदर्शनीये अङ्गुलीसन्निवेशविशेषे तल्लक्षणन्तु "मिथः कनिष्ठिके बद्ध्वा तर्जनीभ्यामनामिके । अनामिकोर्ध्वसंश्लिष्टे दीर्घमध्यमयोरधः । अङ्गुष्ठाग्रद्वयं न्यस्य योनिमुद्रेयमीरिता" तन्त्रसा० । २मूलबन्धरूपे योने-र्बन्धभेदे तल्लक्षणादिकं पदार्थादर्शे "पार्ष्णिभागेन सं-संपीड्य योनिमाकुञ्चयेद् गुदम् । अपानमूर्ध्वमाकर्षेत् मूलबन्धो निगद्यते । गुदमेढ्रान्तरं योनिस्तामाकुञ्च्य प्रबन्धयेत् । युवा भवति वृद्धोऽपि सततं मूलबन्धनात्" । (योनिस्थानसङ्कोचनात् योनिमुद्रात्वमस्याः) "सेयं मयोक्ता खलु योनिमुद्रा बन्धस्य देवैरपि दुर्लभोऽस्य । अनेन बन्धेन न साध्यते यत्तस्यैव तत्साधकपुङ्गवस्य" ।

**योनिरोग** पु० ६त० । षोडशविधे भगरोगभेदे "उदावर्त्ता१तथा वन्ध्या२विप्लुता३च परिप्लुता४ । वातला५ योनिजो रोगो वातदोषेण पञ्चधा । पञ्चधा पित्तदोषेण तत्राद्या लोहिताक्षरा१ । प्रस्रंसिनी२ वामनी३च पुत्रघ्नी४ पित्तला५तथा । अत्यानन्दा१ कर्णिनी२ च चरणा३नन्द-पूर्विका४ । अतिपूर्वापि५सा ज्ञेया श्लेष्मला५च कफादिमाः । षण्ढ्य१ण्डिनी२ च विवृता३ सूचीवक्त्रा४ त्रिदोषिणी५ । पञ्चैता योनयः प्रोक्ताः सर्वदोषप्रकोपतः" । अथ तासां लक्षणान्याह "सफेनिलमुदावर्त्ता१ रजः कृच्छ्रेण मुञ्चति । वन्ध्या२ निरार्त्तवा ज्ञेया विप्लुता३ नित्यवेदना । परिप्लुतायां४ भवति ग्राम्यधर्मे रुजा भृशम् । वातला५ कर्कशा स्तब्धा शूलनिस्तोदपीडिता । चतसृष्वपि चाद्यासु भवन्त्य-निलवेदनाः" । अनिलवेदनास्तोदादयः वातलायां त्वति वातवेदना बोद्धव्या वातलेत्यन्वयात् । "सदाह क्षरते रक्तं यस्याः सा लोहिताक्षरा१ । प्रस्रंसिनी२ स्रंसते च क्षोभिता दुष्प्रजायिनी" । क्षोभिता विमर्हिता स्रंसते स्वस्थानाच्च्यवते दुष्प्रजायिनी दुःप्रजननशीला । सतत स्थितिरेदीर्य्य वामनी३ रजसा युतम् । स्थितं हि पातयेद्-गर्भं पुत्रघ्नी४ रक्तसंस्रवात्" । पुत्रशब्दोऽत्रापत्योपलक्षकः । "अत्यर्थं पित्तला५ योनिर्दाहपाकज्वरान्विता । चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत्" । अत्यानन्दा१न सन्तोषं ग्राम्यधर्मेण विन्दति । कर्णिन्यां२ कर्णिका योनौ श्लेष्मा-सृग्भ्यां प्रजायते" । कर्णिका मांसस्य कर्णिकाकारो-ग्रन्थिः । "मैथुने चरणा३ पूर्वं पुरुषादतिरिच्यते । अति-रिच्यते रजोमुञ्चतीत्यर्थः । बहुशश्चातिचरणा४ तयोर्बीजं न तिष्ठति" । बहुशः वारंवारमतिरिच्यते तयोः चरणा-तिचरणयोः । "श्लेष्मला५ पिच्छिला योनिः कण्डूयुक्तातिशीतला । चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रयो भवेत् । अनार्त्तवाऽस्तनी षण्ढी१ खरस्पर्शा च मैथुने" । अस्तनी ईषत्स्तनी यस्याः सा अत एव षण्ढी । महामेढ्र-गृहीतायाः बालाया अण्डिनी२ भवेत् । महामेढ्रः पुरुषस्तेन गृहीतायाः बालायाः सूक्ष्मयोनिच्छिद्रायाः । अण्डिनी२ अण्डवल्लम्बमाना योनिर्भवति" । विवृतां सूची-वक्त्राञ्चाह "विवृता३ च महायोनिः सूचीवक्त्रातिसंवृता४ । त्रिदोषजामाह सर्वलिङ्गसमुत्थानं सर्वदोषप्रकोपजम् । चतसृष्वपि चाद्यासु सर्वलिङ्गनिदर्शनम्" । असाध्यां योनिमाह । "पञ्चासाध्या भवन्तीह योनयः सर्वदोषजाः । पञ्च षण्ढीप्रभृतयः" अथ योनिकन्दस्य निदानमाह । "दिवास्वप्नादतिक्रोधात् व्यायामादतिमैथुनात् । क्षताच्च नखदन्ताद्यैः वाताद्याः कुपिता यथा" । यथास्वनिदानं कुपिता वाताद्याः । रूपमाह "पूयशोणितसङ्काशं लकुचा-कृतिसन्निभम् । जनयन्ति यदा योनौ नाम्ना कन्दः स योनिजः" । लकुचाकृतिसन्निभं लकुचाकारं गुडकमल-विशेष्यं बोध्यम्" । वातजादिभेदेन रूपमाह । "रूक्षं विवर्णं स्फुटितं वातिकं तं विनिर्दिशेत् । दाहराग-

ज्वरयुतं विद्याद्वपित्तात्मकं तु तम्। तिलपुष्पप्रतीकाशं कण्डूमन्तं कफात्मकम्। सर्वचिह्नसमायुक्तं सन्निपातात्मकं वदेत्"।

**योषा** स्त्री युष-अच् टाप्। स्त्रियाम् नार्य्याम् अमरः।

**योषित्** स्त्री युष-इति। नार्य्याम् अमरः। कृदन्तत्वाद्वा टाप्। योषितात्यत्र शब्दर०। [प्रियमाने त्रि०।

**योषित्प्रिया** स्त्री ६त०। १हरिद्रायां भावप्र०। २नारी-

**यौक्तिक** त्रि० युक्तित आगतः ठक्। १युक्तिसिद्धे २योग्ये च। युक्तौ अधिकृतः ठक्। ३नर्मसचिवे पु० शब्दर०।

**यौगिक** त्रि० योगात् प्रकृतिप्रत्ययार्थसम्बन्धात् आगतः ठक्। प्रकृतिप्रत्ययलभ्यार्थवाचके शब्दे यथा पाचकादिशब्दः पाककर्तृवाचकः। योगाय प्रभवति ठक्। २योगयोग्ये

**यौट** संबन्धे भ्वा० पर० सक० सेट्। यौटति अयौटीत्। ऋदित् चङि न ह्रस्वः।

**यौड़** यौटवत् सर्वम्। यौड़ति अयौड़ीत् ऋदित्।

**यौतक** न० युते विवाहकालेऽधिगतम् वुञ्। विवाहकाले लब्धे धने हला०। इति दायभागानुसारिणः। वीरमि० तु "यु मिश्रणे इति धात्वनुसारात् विवाहकाले एकासनोपविष्टयोर्वधूवरयोर्यद् बन्धुभिर्दीयते तद्युतयोरिदं यौतकमिति व्युत्पत्त्या यौतकमित्युच्यते" इत्युक्तम् अत एव निघण्टौ युतयोर्यौतकमित्युक्तम्। अन्ये तु विवाहे स्त्रीपुंसावेकशरीरतया मिश्रितौ भवत इति "अस्थिभिरस्थीनि मांसैर्मांसानि" इत्यादिश्रुत्या तयोक्तेः विवाहेन युतयोरिदम्" इत्याहुः। वस्तुतः विवाहकालोत्तरमेकासनोपविष्टयोरेव दत्तं धनं यौतकं लोकप्रसिद्धं वीरमि०उक्तं साधीयः। "मातुश्च यौतकं यत् स्यात् कुमारी भाग एव सः" मनुः।

**यौतव** न० यु-तु योतुः तस्य भावः अण्। १परिमाणे अमरः।

**यौतुक** न० योतुर्योगकालस्तत्र लब्धं कण्। विवाहकाले लब्धे धने यौतकशब्दे दृश्यम्।

**यौधाजय** न० ऊहगाने १प्र० दर्शिते सामभेदे "रौरवयौधाजये वार्हते भवतः" श्रुतिः।

**यौधेय** पु० योध एव आयुधजीविसंघत्वात् स्वार्थे ढक्। १योद्धरि। २उत्तरस्थदेशभेदे पु० बृ० सं० १४ अ०। युधायाः अपत्यम् "द्व्यचः" पा०ढक्। २युधाया अपत्ये। ततःस्वार्थे अञ् शाङ्गर० स्त्रियां ङीन्। यौधेयी।

**यौन** त्रि०योनितः योनिसम्बन्धात् आगतम् अण्। १योनितः प्राप्ते। योनेरयमण्। २वैवाहिकसम्बन्धे पु०। प्रा० वि० बौधायनः "संवत्सरेण पतति पतितेन सहाचरन्। याजनाध्यापनाद् यौनात् सद्यो हि शयनासनात्"। सुमन्तुः "यश्चैतैर्यौनमौखस्रौवादीनां सम्बन्धानामन्यतमेन सह सम्पर्कमियात् तस्याप्येतदेव प्रायश्चित्तं विदध्यादिति"।

**यौवत** न० युवतीनां समूहः अण्। युवतिसमुदाये अमरः।

**यौवन** न० यूनो भावः अण्। १तारुण्ये "आ षोडशाद् भवेद् बालस्तरुणस्तत उच्यते। वृद्धः स्यात् सप्ततेरूर्ध्वम्" इत्युक्ते २अवस्थाभेदे। [फोडा)व्रणभेदे शब्दमा०

**यौवनकण्टक** पुंन० यौवनस्य कण्टक इव चिह्नम्। (ब्रणस्

**यौवनदशा** स्त्री कर्म०। तारुण्ये अवस्थाभेदे।

**यौवनलक्षण** न० ६त०। १स्तने २लावण्ये च मेदि०।

**यौष्माक** त्रि० युष्माकमिदम् युष्मद्+अण् युष्माकादेशः। युष्मत्सम्बन्धिनि। खञ्। यौष्माकीनोऽप्यत्र त्रि०।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्य
सङ्कलिते वाचस्पत्ये यकारादि-
शब्दार्थसङ्कलनम्।

---

## र

रकारः व्यञ्जनवर्णभेदः स्पर्शवर्णोष्मवर्णयोर्मध्यस्थत्वात् अन्तःस्थवर्णः। अस्योच्चारणस्थानं मूर्द्धा। जिह्वाग्रेण मूर्द्धस्थानस्येषत्स्पर्शेनोच्चारणादस्य आभ्यन्तरप्रयत्न ईषत्स्पृष्टम्। बाह्यप्रयत्नाश्च संवारनादघोषा अल्पप्राणश्च। वर्णाभिधाने अस्य वाचकशब्दा उक्ता यथा "रो रक्तः क्रोधिनी रेफः पावकस्तैजसो मतः। प्रकाशी दर्शनो दीपो रक्तकृष्णा परं वली। भुजङ्गेशो मतिः सूर्य्यो धातु रक्तप्रकाशकः। व्यापको रेवती दानं कृशांसो वह्निमण्डलम्। उग्ररेखा स्थूलदण्डो वेदकर्णोपवाम्बरा। प्रकृतिः सुगतो ब्रह्मशब्दश्च गायको धनः। श्रीकण्ठ अंसा हृदयं सुरस्रो त्रिपुरसुन्दरी। सविन्दुर्योनिजो ज्वाला श्रीशैलो विश्वतोमुखी"। अस्य ध्येयरूपं यथा "रेफञ्च चञ्चलापाङ्गि! कुण्डलीहयसंयुतम्। रक्तविद्युल्लताकारं पञ्चदेवात्मकं सदा। पञ्चप्राणमयं वर्णं

त्रिबिन्दुसहितं सदा” कामधेनुत० । “अस्याधिष्ठातृदेवतारूपं यथा “ललज्जिह्वां महारौद्रीं रक्तास्यां रक्तलोचनाम् । रक्तवर्णामष्टभुजां रक्तपुष्पोपशोभिताम् । रक्तमाल्याम्बरधरां रक्तालङ्कारभूषिताम् । महामोक्षप्रदां नित्यामष्टसिद्धिप्रदायिकाम् । एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्”। मातृकान्यासेऽस्य दक्षांसे न्यास्यता । काव्यादौ प्रयोगे “रस्तु दाहम्” वृ० र० टीकोक्तेः दाहः फलम् ।

र पु० रा–ड । १वह्नौ २वह्नौ मेदि० । ३कामानले च शब्दर० । ४छन्दःशास्त्रप्रसिद्धे लघुमध्ये आद्यन्तगुरुयुते रगणे काव्यादौ तस्य प्रथमप्रयोगे मरणं फलम् अस्य दैवताऽग्निः ।

रंह गतौ भ्वा० चु० उभ० सक० सेट् । रंहयति ते अररंहत् त ।

रंहस् न० रंह–असुन् । वेगे अमरः । [अरीरकत् त

रक आदे प्राप्तौ च चु० उभ० सक० सेट् । राकयति-ते

रक्त न० रन्ज–करणे क्त । १कुङ्कुमे २ताम्रे ३प्राचीनामलके मेदि० । ४सिन्दूरे ५हिङ्गुले ६पद्मके राजनि० । ७शरीरस्थे रसपाकजन्ये मांसहेतौ रुधिराख्ये धातुभेदे अमरः । ८कुसुम्भे ९हिज्जले १०रोहितवर्णे च पु० ११तद्वति त्रि० अमरः । १२पराणे कर्त्तरि क्त । १३अनुरक्ते मेदि० १४क्रीडारते च शब्दर० । कर्मणि क्त । १५नील्यादिभीरञ्जिते त्रि० । करणे क्त । १६मञ्जिष्ठायां १७लाक्षायां १८गुञ्जायाञ्च स्त्री राजनि० टाप् । भावे क्त । २०रागे न० । धातुभेदरक्तस्वरूपादिकं भावप्र० उक्तं यथा “यदा रसो यकृद्याति तत्र रञ्जकपित्ततः । रागं पाकं च संप्राप्य स भवेद्रक्तसंज्ञकः । रक्तं सर्वशरीरस्थं जीवस्याधारमुत्तमम् । स्निग्धं गुरु चलं स्वादु विदग्धं पित्तवद्भवेत्” । जीवस्याधारमुत्तममिति, यत आह । “जीवो वसति सर्वस्मिन्देहे तत्र विशेषतः । वीर्य्ये रक्ते मले यस्मिन् क्षीणे याति क्षयं क्षणादिति” । वीर्य्ये रक्ते मले च शरीरारम्भके वाग्भटोक्तपरिमाणमिते शुद्धे जीवो वसति न तु दुष्टे यतः रक्तस्य वर्णोपदेशस्य वैयर्थ्यप्रसङ्गात् । पित्तवद्भवेत् अम्लवद्भवेदित्यर्थः । अथ रक्तस्य स्थानमाह “यकृत् प्लीहा च रक्तस्य मुख्यस्थानत्वयोः स्थितम् । अन्यत्र संस्थितवतां रक्तानां पोषकं भवेत्” । शब्दकल्पद्रुमे ५५८ पृ० दृश्यम् ।

रक्तक पु० रक्तं रुधिरमिव कायति कै–क स्वार्थे कन् वा । १बन्धूकवृक्षे २जम्बूकवृक्षे मेदि० । ३रक्तशोभाञ्जने ४रक्तैरण्डे च राजनि० । ५रुधिरे ६रक्तवस्त्रे च न० । ७अनुरागिणि मेदि० ८विनोदिनि च त्रि० ।

रक्तकन्द पु० रक्तवर्णः कन्दोऽस्य । १विद्रुमे प्रवाले हेमच० २रत्नालौ ३रक्तपलाण्डौ च राजनि० ।

रक्तकमल न० रक्तं कमलमिव । रक्तवर्णोत्पले राजनि० । पुण्डरी० । रक्तकम्बलमप्यत्र न० । [स्वार्थे क तत्रार्थे ।

रक्तकरवीर पु० कर्म० । रक्तवर्णपुष्पककरवीरवृक्षे राजनि०

रक्तकाञ्चन पु० कर्म० । रक्तवर्णपुष्पककाञ्चनवृक्षे शब्दच० ।

रक्तकाण्डा स्त्री रक्तः काण्डोऽस्याः । रक्तपुनर्नवायाम् राजनि० । [कैरवरक्तकोकनदे अप्यत्र न० जटा० ।

रक्तकुमुद न० कर्म० । १रक्तवर्णपुष्पककैरवे जटा० । २रक्त-

रक्तकुसुम पु० रक्तानि कुसुमान्यस्य । पारिभद्रे (पालदामादार) राजनि० । [२पुन्नागवृक्षे च रत्नमा० ।

रक्तकेसर पु० रक्ताः केसरा अस्य । १पारिभद्रे राजनि० ।

रक्तखदिर पु० सारतो रक्तवर्णः खदिरः । रक्तवर्णसारके खदिरवृक्षे राजनि० ।

रक्तगन्धक न० रक्तेन गन्धकमिव । बोले (गन्धरस) राजनि०

रक्तघ्न पु० रक्तं हन्ति हन-टक् । १रोहितकवृक्षे जटा० । २दूर्वायां स्त्री शब्दच० ।

रक्तचन्दन न० कर्म० । स्वनामख्याते चन्दनभेदे अमरः । “रक्तं (चन्दनम्) शीतं गुरु स्वादु छर्दितृष्णास्रपित्तनुत् । पित्तनेत्रहितं वृष्यं ज्वरव्रणविषापहम्” भावप्र०

रक्तचित्रक न० कर्म० । (लालचिता) क्षुपभेदे राजनि० ।

रक्तचूर्ण न० कर्म० । १सिन्दूरे हारा० २रक्तवर्णचूर्णमात्रे च

रक्तझिण्टी स्त्री कर्म० । (लालझाटि) पुष्पप्रधानवृक्षभेदे अमरः ।

रक्ततुण्ड पु० रक्तं तुण्डमस्य । १शुकपक्षिणि राजनि० । २रक्तमुखके त्रि० कप् । रक्ततुण्डक भूनागे राजनि० ।

रक्ततृणा स्त्री रक्तं तृणं यस्याः । गोमूत्रिकायाम् राजनि०

रक्तत्रिवृत् (ता) स्त्री कर्म० । (लालतेओडि) वृक्षभेदे राजनि०

रक्तदन्तिका स्त्री रक्ता दन्ता अस्याः कप् अत इत्त्वम् । दाडिमीस्थे दुर्गाशक्तिभेदे “भक्षयन्त्याश्च तानुग्रान् वैप्रचित्तान् महासुरान् । रक्ता दन्ता भविष्यन्तीति” उपक्रमे” ततो मां देवताः स्वर्गे मर्त्यलोके च मानवाः । स्तुवन्तो व्याहरिष्यन्ति सततं रक्तदन्तिकाम्” देवीमा० । इति तन्नामनिरुक्तिः । [राजनि० ।

रक्तदला स्त्री रक्तानि दलान्यस्याः । नालिकायाम् (नालते)

रक्तदृश् पु० रक्ता दृक् नेत्रमस्य । कपोते । रक्तनेत्रादयोऽप्यत्र

**रक्तधातु** पु० कर्म० । गैरिके त्रिका० । २ताम्रे च राजनि० देहस्थे रुधिररूपे रसधातुजाते मांसधातुहेतौ ३धातुभेदे च अहङ्कारशब्दे ५१८ पृ० दृश्यम् ।

**रक्तनाल** पु० रक्तो नालोऽस्य । जीवशाके राजनि० ।

**रक्तप** पुंस्त्री० रक्तं पिबति पा-क । १राक्षसे मेदि० । स्त्रियां ङीष् । २रक्तपानकर्त्तरि त्रि० । ३जलौकायां ४डाकिन्याञ्च स्त्री मेदि० टाप् ।

**रक्तपत्रिका** स्त्री रक्तानि पत्राण्यस्याः कप् अत इत्वम् । १नाकुल्यां २रक्तपुनर्नवायाञ्च राजनि० ।

**रक्तपल्लव** पु० ६ब० । १अशोकवृक्षे राजनि० । कर्म० । २रक्तवर्णपल्लवे अस्त्री० ।

**रक्तपाकी** स्त्री रक्तः पाकः फलं यस्याः ङीप् । बृहत्याम् राजनि० ।

**रक्तपाद** पु० ६ब० । १शुकपक्षिणि हेमच० । २लज्जालुलतायां ३हंसपद्याञ्च स्त्री राजनि० ङीष् पद्भावश्च ।

**रक्तपायिनी** स्त्री रक्तं पातुं शीलमस्याः पा+णिनि ङीप् । जलौकायाम् (जोंक) राजनि० ।

**रक्तपारद** न० कर्म० । हिङ्गुले हारा० । तदर्थे पु० जटा० ।

**रक्तपित्त** न० रोगभेदे । तल्लक्षणादिकं भावप्र० उक्तं यथा "धर्मव्यायामशोकाध्वव्यवायैरतिसेवितैः । तीक्ष्णोष्णक्षारलवणैरम्लैः कटुभिरेव च । पित्तं विदग्धं स्वगुणैर्विदहत्याशु शोणितम्" । तीक्ष्णं मरिचादि । उष्णमग्नितापादि । क्षारो यवक्षारादिः । विदग्धं स्वगुणैः स्वकारणैः गुणैस्तीक्ष्णादिभिः । गुणैरिति बहुत्वेन तीक्ष्णत्वलवणकटूष्णधर्मादयो गृह्यन्ते विदहति दूषयति । अथ रक्तपित्तस्य सामान्यं लक्षणमाह "ततः प्रवर्त्तते रक्तमूर्द्ध्वञ्चाधो द्विधाऽपि वा" । अत्र रक्तमित्युपलक्षणम् । तेन संसृष्टं पित्तञ्च । अतएव रक्तञ्च पित्तञ्च रक्तपित्तमिति द्वन्द्व इति सुश्रुतः । रक्तञ्च तत् पित्तं चेति रक्तपित्तं रागप्राप्तं पित्तं रक्तमित्युच्यते रक्तं पित्तं कर्मधारयश्च इति चरकः । उभयत्रापि न दोषः कारणत्रयात् । कारणत्रयमाह "संयोगात् दूषणात् तत्तु सामान्यात् गन्धवर्णयोः । रक्तस्य पित्तमाख्यातं रक्तपित्तं मनीषिभिः" । मार्गानाह "ऊर्द्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः । कुपितं रोमकूपैश्च समस्तैस्तत् प्रवर्त्तते" । कुपितं पित्तम् । पूर्वरूपमाह "सदनं शीतकामित्वं कण्ठधूमायनं वमिः । लोहगन्धिश्च निश्वासो भवत्यस्मिन् भविष्यति" । त्रिविधरूपमाह "सान्द्रं सपाण्डु सस्नेहं पिच्छिलं च कफान्वितम्" । वातिकमाह "श्यावारुणं सफेनञ्च तनु रूक्षञ्च वातिकम्" । पैत्तिकमाह "रक्तपित्तं कषायाभं कृष्णं गोमूत्रसन्निभम् । मेचकागारधूमाभमञ्जनाभञ्च पैत्तिकम्" । मेचकम् चिक्कणं कृष्णवर्णम् । अञ्जनं स्रोतोऽञ्जनं तदाभम् । संसर्गविशेषेण मार्गभेदमाह "संसृष्टं लिङ्गसंसर्गात् त्रिलिङ्गं सान्निपातिकम् । ऊर्द्ध्वगं कफसंसृष्टमधोगं मारुतानुगम् । द्विमार्गं कफवाताभ्यामुभाभ्यां तत् प्रवर्त्तते" । उपद्रवानाह "दौर्बल्यं श्वासकासज्वरवमथुमदाः पाण्डुतादाहमूर्च्छा भुक्ते घोरो विदाहस्त्वधृतिरपि सदा हृद्यतुल्या च पीड़ा । तृष्णा कोष्ठस्य भेदः शिरसि च तपनं पूतिनिष्ठीवनत्वं भक्तेऽविपाको विकृतिरपि भवेद्रक्तपित्तोपसर्गाः" । विकृतिः मांसप्रक्षालनाभतादिः । साध्यादिकमाह "एकदोषानुगं साध्यं द्विदोषात् याप्यमुच्यते । यत्त्रिदोषमसाध्यं स्यान्मन्दाग्नेरतिवेगवत् । ऊर्द्ध्वं साध्यमधो याप्यमसाध्यं युगपद्गतम् । व्याधिभिः क्षीणदेहस्य वृद्धस्याऽनश्नतश्च यत्" । अथ साध्यमाह "एकमार्गं बलवतो नातिवेगं नवोत्थितम् । रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम्" । सुखे काले हिमशिशिरयोः । असाध्यमाह "मांसप्रक्षालनाभं क्वथितमिव च यत्कर्दमाम्भोनिभं वा मेदःपूयास्रकल्पं यकृदिव यदि वा पक्वजम्बूफलाभम् । यत् कृष्णं यच्च नीलं भृशमपि कुणपं यत्र चोक्ता विकारास्तद्वर्ज्यं रक्तपित्तं सुरपतिधनुषा यच्च तुल्यं विभाति" । उक्ता विकारा दौर्बल्यादयः । सुरपतिधनुषा तुल्यं नानावर्णम् । "येन चोपहतो रक्तं रक्तपित्तेन मानवः । पश्येद्दृश्यं वियच्चापि तदसाध्यमसंशयम्" । येन रक्तपित्तेनोपहतः मनुष्यः दृश्यं घटपटादिकं रक्तं पश्यति च नश्यति वियच्चापि रक्तमपीत्यर्थः । अथारिष्टमाह । "लोहितं छर्दयेद्यस्तु बहुशो लोहितेक्षणः । लोहितोद्गारदर्शी च म्रियते रक्तपैत्तिकः" । लोहितोद्गारदर्शी व्याधिमहिम्नोद्गारमपि लोहितं पश्यतीत्यर्थः" ।

**रक्तपुष्प** न० कर्म० । १रक्ते कुसुमे रक्तं पुष्पमस्य । २करवीरे जटा० ३रोहितकवृक्षे ४रक्तकाञ्चनवृक्षे ५दाड़िमवृक्षे ६रक्तवकवृक्षे रत्नमा० ७बन्धूकवृक्षे ८पुन्नागवृक्षे च राजनि० ९शाल्मलीवृक्षे स्त्री जटा० टाप् । रक्तपुष्पक पलाशवृक्षे रोहितकवृक्षे च जटा० । पर्पटे शाल्मलिवृक्षे च राजनि० ।

**रक्तपुष्पिका** स्त्री रक्तानि पुष्पाणि यस्याः कप् अत इत्वम् । १लज्जालुलतायाम् शब्दच० २रक्तपुन-

नेवायाम् ३भूमिपाटल्यां च राजनिघण्टुः ।

**रक्तपुष्पी** स्त्री रक्तानि पुष्पाण्यस्याः ङीप् । १पाटलिवृक्षे (पारुल) २जवायाम् ३आवर्त्तकीलतायाम् ४नागदमन्याम् ५करुणीवृक्षे ६चक्राङ्ग्यां च राजनि० ।

**रक्तपूरक** न० रक्तं रुधिरं पूरयति सेवनात् पूर–ण्वुल् । वृक्षाम्ले राजनि० । [म्लाने च राजनि० ।

**रक्तप्रसव** पु० रक्तवर्णः प्रसवः पुष्पमस्य । १करवीरे २रक्ता-

**रक्तफल** पु० रक्तानि फलान्यस्य । १वटवृक्षे जटा० । २बिम्बिकायां (तेलाकुचा) स्त्री अमरः टाप् ।

**रक्तबालुक** न० कर्म० । सिन्दूरे त्रिका० रक्तबालुकाप्यत्र स्त्री

**रक्तमञ्जर** पु० रक्तवर्णा मञ्जरी अस्यस्य अच् । निचुलवृक्षे त्रिका० । [राजनि० ।

**रक्तमूला** स्त्री ६त०, लज्जालुलतायाम् । कप् । देवसर्षपे पु०

**रक्तमेह** पु० कर्म० । प्रमेहरोगभेदे "विस्रमुष्णं सलवणं रक्ताभं रक्तमेहतः" भावप्र० ।

**रक्तमोक्षण** न० ६त० । रुधिरस्रावणे ।

"वेदनोपशमायाथ तथाऽपाकशमाय च । अचिरोत् पतिते शोफे शोणितस्रावणञ्चरेत्" । चरेत् कुर्यात् । "एकतस्तु क्रियाः सर्वा रक्तमोक्षणमेकतः । रक्तं हि वेदनामूलं तच्चेन्नास्ति नचापि रुक् । विवर्णे कठिने श्यावे व्रणे चात्यन्तवेदने । सविशेषे विशेषेण जलौकोभिः पदैरपि" । शोणितस्रावणञ्चरेदित्यनेनान्वयः" भावप्र०

**रक्तयष्टि** स्त्री रक्तवर्णा यष्टिरस्याः । मञ्जिष्ठायाम् जटा० । कप् । रक्तयष्टिका तत्रैव ।

**रक्तरेणु** पु० रक्ता रेणवोऽस्य । १पलाशकलिकायाम् २सिन्दूरे च मेदि० ३पुन्नागे राजनि० ।

**रक्तलशुन** न० कर्म० । (लालरसुन) मूलभेदे राजनि० ।

**रक्तला** स्त्री रक्तं रुधिरं हेलत्वेनास्त्यस्याः अच् तत् लाति सेवनात् ला–क वा । काकतुण्ड्याम् राजनि० ।

**रक्तवटी** स्त्री रक्तवर्णा वटीव । मसूरिकायाम् त्रिका० ।

**रक्तवर्ग** पु० रक्तानां वर्गः समुदायः । दाडिमकिंशुकलाक्षाबन्धूकहरिद्राद्वयजवाकुसुमपुष्पमञ्जिष्ठालाक्षकरूपे समूहे राजनि० । [कर्म० । २रोहितकमे पु० ३तद्वति त्रि० ।

**रक्तवर्ण** पु० रक्तो वर्णोऽस्य । १इन्द्रगोपकीटभेदे राजनि० ।

**रक्तवर्द्धन** पु० रक्तं रुधिरं वर्द्धयति भोजनात् वृध–णिच्–ल्यु । वार्त्ताकौ शब्दच० । [याम् राजनि० ।

**रक्तवर्षाभू** पु० वर्षायां भवति भू–क्विप् कर्म० । रक्तपुनर्नवा-

**रक्त(बी)वीज** पु० रक्तवर्णानि बी(वी)जान्यस्य । १दाडिमे राजनि० रक्तं रुधिरमेव बी(व)जमुत्पत्तिः कारणं यस्य । "रक्तबिन्दुर्यदा भूमौ पतत्यस्य शरीरतः । समुत्पतति मेदिन्यास्तत्प्रमाणस्तदाऽसुरः" देवीमा० उक्ते असुरभेदे [शब्दच०

**रक्तवृन्ता** स्त्री रक्तं वृन्तं यस्याः । शेफालिकायाम्

**रक्तवृष्टि** स्त्री ६त० । दैवकृतोपद्रवभेदे रुधिरवर्षणे "कार्याचिन्तामणौ "रक्ते शस्त्रोद्योगो मांसास्थिवसादिभिर्मरकः । धान्यहिरण्यत्वक्फलकुसुमाद्ये वर्षिते भयं विद्यात्" ज्यो० त० । [शब्दे १८७६ पृ० दृश्यम् ।

**रक्तशालि** पु० कर्म० । (लालधान) धान्यभेदे भावप्र० । धान्य-

**रक्तशिग्रु** पु० कर्म० । (लालसजना) वृक्षभेदे राजनि० ।

**रक्तशीर्षक** पु० रक्तं शीर्षमस्य कप् । १सरलद्रुमे रत्नमा० । २रक्तमस्तके त्रि० ।

**रक्तशृङ्गिक** न० रक्तं शृङ्गमिवास्त्यस्य ठन् । विषभेदे राजनि०

**रक्तसन्ध्यक** न० रक्ता सन्ध्येव कन् । रक्तवर्णे कह्लारे अमरः

**रक्तसरोरुह** न० कर्म० । रक्तपद्मे अमरः ।

**रक्तसर्षप** पु० कर्म० । (राइसर्षा) राजिकायाम् राजनि० ।

**रक्तसहा** स्त्री रक्तं सहते सह–अच् । रक्तम्लाने राजनि०

**रक्तसार** न० रक्तः सारोऽस्य । १रक्तचन्दने २अम्लवेतसे पु० राजनि० ।

**रक्तसौगन्धिक** न० कर्म० । (लालसुँदि) रक्तवर्णकह्लारे जटा०

**रक्ताकार** पु० रक्तवर्ण आकारो मूर्त्तिरस्य । १प्रवाले राजनि० २रक्तमूर्त्तिके त्रि० ।

**रक्ताक्ष** पु० रक्ते अक्षिणी यस्य षच्समा० । १पारावते २महिषे ३चकोरे राजनि० ४रक्तनेत्रवति क्रूरे जने च त्रि० ५सारसे च मेदि० । स्त्रियां जातौ सर्वत्र ङीप् ।

**रक्ताङ्ग** न० रक्तमङ्गं यस्य यस्माद्वा । १कुङ्कुमे २मङ्गलग्रहे ३कम्पिल्ले (ङहरकरमचा) च पु० ४प्रवाले पुंन० मेदि० । ५जीवन्त्याम् ६मञ्जिष्ठायाञ्च स्त्री भावप्र० ङीप् ।

**रक्ताति(ती)सार** पु० रक्तमिश्रितोऽति(ती)सारः । वैद्यकप्रसिद्धे रोगभेदे । "पित्तकृत् यदात्यर्थं द्रव्यमश्नाति पैत्तिके । तद्दोषाज्जायते शीघ्रं रक्तातीसार उल्वणः" भावप्र० । अति(ती)सारशब्दे १०६ पृ० दृश्यम् ।

**रक्ताधार** पु० ६त० । देहावरके चर्मणि राजनि० ।

**रक्तापह** न० रक्तं रुधिरमपहन्ति अप+हन–ड । गन्धरसे बोले राजनि० ।

**रक्तापामार्ग** पु० कर्म० । (लाल आपाङ्) क्षुपभेदे राजनि०

**रक्ताम्र** पु० नित्यक० । कोषाम्रे राजनि० ।

**रक्ताम्लान** पु० कर्म० । रक्तमहासहाख्यतायाम् राजनि० ।
**रक्तार्बुद** पु० रोगविशेषे । तल्लक्षणं भावप्र० उक्तं यथा "दोषप्रदुष्टा रुधिरं सिराश्च संकोच्य संपीड्य गतस्त्वपाकम् । सास्रावमुन्नह्यति मांसपिण्डं मांसाङ्कुरैराचितमाशुवृद्धिम् । स्रवत्यजस्रं रुधिरं प्रदुष्टमसाध्यमेतद्रुधिरात्मकन्तु । रक्तक्षयोपद्रवपीडितत्वात् पाण्डुर्भवेदर्बुदपीड़ितश्च" । दोषोऽत्र पित्तं, रुधिरं सिराश्च सङ्कोच्य संपीड्य संहतीकृत्य मांसाङ्कुरोः सर्वेष्वर्बुदेषु दुष्टत्वं, रक्तजे तु विशेषतो रक्तदुष्टिः एवं मांसार्बुदे विशेषतो मांसदुष्टिर्बोद्धव्या । ततो मांसपिण्डमुन्नह्यति उद्गतं करोति । अपाकं ईषत्पाकं यथा स्यादेवमिति क्रियाविशेषणम् । ईषत्पाकश्चैकदेशपाकेन । रक्तक्षयोपद्रवपीड़ितत्वात् रक्तक्षयोपद्रवाः सुश्रुतेनोक्ताः । तैः पीड़ितत्वात् अर्बुदपीड़ितः" । शातातपीयकर्मविपाके "रक्तार्बुदविसर्पाद्या उपपापोद्भवा गदाः" इत्युक्तम् ।
**रक्तार्शस्** न० अर्शोरोगभेदे । तल्लक्षणं भावप्र० उक्तं यथा "रक्तोल्बणा गुदे कीलाः पित्ताकृतिसमन्विताः । वटप्ररोहसदृशा गुञ्जाविद्रुमसन्निभाः । तेऽत्यर्थं दुष्टमुष्णञ्च गाढविड्भिः प्रपीड़िताः । स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः । भेकाभः पीड्यते दुःखैः शोणितक्षयसम्भवैः । हीनवर्णबलोत्साहो हतौजाः कलुषेन्द्रियः । विट् श्यावं कठिनं रूक्षमधोवायुर्न वर्त्तते । तनु चारुणवर्णञ्च फेनिलञ्चासृगर्शसम् । कट्यूरुगुदशूलञ्च दौर्बल्यं यदि चाऽधिकम् । तत्रानुबन्धो वातस्य हेतुर्यदि च रूक्षणम् । शिथिलं श्वेतपीतञ्च विट् स्निग्धं गुरु शीतलम् । यद्यर्शसां घनञ्चासृक् तन्तुमत् पाण्डु पिच्छिलम् । गुदं सपिच्छं स्तिमितं गुरु स्निग्धञ्च कारणम् । श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः । गुदे कीला अर्शांसि पित्ताकृतिसदृशाः । दुःखैः रोगैः त्वक्पारुष्याम्बुशीतप्रार्थनादिभिः । कलुषेन्द्रियः व्याकुलसर्वेन्द्रियः । रक्तजस्यापि वातोल्बणस्य लक्षणमाह । तत्र रक्तार्शसि अनुबन्धः उल्बणत्वम् । रूक्षणं रूक्षयतीति रूक्षणं रूक्षं द्रव्यम् । पित्तोल्बणस्य लक्षणम् "रक्तोल्बणा गुदे कीलाः पित्ताकृतिसमन्विताः" इत्यादिनैवोक्तम् रक्तपित्तयोः समानलिङ्गत्वात् । कफोल्बणस्य लक्षणमाह । सपिच्छं पिच्छिलाक्तं स्तिमितमार्द्रचर्मावगुण्ठितमिव" ।
**रक्तालु** पु० कर्म० । (शकरकन्द) आलुभेदे राजनि० ।

**रक्तिका** स्त्री रक्तैव कन् अत इत्वम् । १गुञ्जायां २राजिकायां राजनि० ३परिमाणभेदे रत्तिकापरिमाणे च ।
**रक्तेक्षु** पु० कर्म० । (काजला) इक्षुभेदे राजनि० ।
**रक्तैरण्ड** पु० कर्म० । (लालभेरण्डा) वृक्षभेदे राजनि० ।
**रक्तोत्पल** न० कर्म० । कोकनदे लोहितवर्णे पद्मे अमरः । रक्तोत्पलमिव पुष्पमस्त्यस्य अच् । २शाल्मलिवृक्षे (शिमुल) पु० राजनि० । रक्तमुत्पलमिव । ३गैरिके न० हारा० ।
**रक्तोत्पलाभ** पु० रक्तोत्पलस्य कोकनदस्येवाभा यस्य । १रक्तकृष्णे जटा० २तद्वति त्रि० ।
**रक्ष** पालने भ्वा० पर० सक० सेट् । रक्षति अरक्षीत् ररक्ष । [समूहे अमरः ।
ओीत् रक्षितो वर्त्तते ।
**रक्षःसभ** न० रक्षसां राक्षसानां सभा क्लीवत्वम् । राक्षस-
**रक्षक** त्रि० रक्ष-ण्वुल् । रक्षाकर्त्तरि स्त्रियां टाप् अत इत्वम्
**रक्षणि(णी)** स्त्री रक्ष-अनि वा ङीप् । त्रायमाणालतायाम् राजनि० । [अमरः ।
**रक्षस्** न० रक्ष्यते हविरस्मात् रक्ष-अपादानेऽसुन् । राक्षसे
**रक्षा** स्त्री रक्ष-भावे अ टाप् । १रक्षणे २तदर्थे रक्षासूत्रे च "रक्षे० ! मा चल मा चल" रक्षाबन्धमन्त्रः । रक्षति रक्ष अच् टाप् । ३लाक्षायां मेदि० । ४भस्मनि च स्त्री शब्दर० । ५रक्षके त्रि० ।
**रक्षापत्र** पु० रक्षार्थं पत्रमस्य । भूर्जपत्रवृक्षे राजनि० ।
**रक्षित** त्रि० रक्ष्यतेऽस्म रक्ष-क्त । १त्राते । २वैद्यभेदे पु० ।
**रक्षिवर्ग** पु० रक्षिणां वर्गः । रक्षकसैन्यादिगणे (पहरिगण)
**रक्षोघ्न** न० रक्षो हन्ति हन-टक् । १काञ्जिके हेमच० । २हिङ्गुनि राजनि० । तद्गन्धस्य ग्राणसम्बन्धात् रक्षसामपसरणम् । ३भल्लातकवृक्षे पु० त्रिका० । ४श्वेतसर्षपे पु० रत्नमा० । ऋग्वेदप्रसिद्धे "कृणुष्व पाजः" इत्यादिके ऋ० ४।४।१० । ५सूक्तभेदे न० । ६वचायां स्त्री । ७राक्षसघातकमात्रे त्रि० ङीप् ।
**रक्षोहन्** पु० रक्षो हन्ति हन+क्विप् । १गुग्गुलौ राजनि० तद्गन्धघ्राणाद्धि रक्षसामपसरणम् । २श्वेतसर्षपे पु० । ३राक्षसहन्तरि त्रि० । "रक्षोहणं वलगहनम्" यजु० ५.२२
**रक्ष्ण** पु० रक्ष-नङ् । त्राणे अमरः । [रक्ष्यते ।
**रख** सर्पणे भ्वा० पर० सक० सेट् इदित् । रङ्खति अरङ्खीत्
**रख** सर्पणे भ्वा० पर० सक० सेट् । रखति अरखीत् अराखीत् । [घटा० रगयति ।
**रग** शङ्कायाम् भ्वा० प० सक० सेट् । रगति एदित् अरगीत्
**रग** गतौ भ्वा० पर० सक० सेट् इदित् । रङ्गति अरङ्गीत् ।

**रग** स्वादे आप्तौ च चु० उभ० सक० सेट्। रागयति शरीरगत् त। [कारकृत् त।

**रघ** दीप्तौ चु० उभ० सक० सेट् इदित्। रङ्घयति ते

**रघ** गतौ भ्वा० आ० सक० सेट् इदित्। रङ्घते अरङ्घिष्ट।

**रघु** पु० लघ-उ नलोपः रत्वम्। सूर्यवंश्ये दिलीपसूनौ १नृपतिभेदे रघोरपत्यम् बहुषु लुक्। रघुवंश्येषु अज-प्रभृतिषु २क्षत्रियेषु ब०व०। तान् अधिकृत्य कृतो ग्रन्थः अण् आख्यायिकार्थां तस्य लुक्। कालिदासप्रणीते ऊनविंशतिसर्गात्मके महाकाव्यभेदे पु०।

**रघुनन्दन** पु० रघून् नन्दयति नन्द-णिच् ल्यु। दशरथस्य ज्येष्ठपुत्रे १श्रीरामे त्रिका० २भरतादौ च।

**रघुनाथ** पु० रघूणां नाथः रक्षकत्वात् श्रेष्ठत्वाद्वा। श्रीरामे शब्दर०। रघुपत्यादयोऽप्यत्र।

**रघुवंश** पु० ६त०। रघुकुले। तमधिकृत्य कृतो ग्रन्थः आख्यायिकार्थां तस्य लुक्। कालिदासप्रणीते ऊनविंशतिसर्गात्मके महाकाव्यभेदे पु०। [पुत्रे श्रीरामे।

**रघुवंशतिलक** पु० रघुवंशे तिलक इव। दशरथनृपस्य ज्येष्ठ-

**रघुवर** पु० रघुषु वरः श्रेष्ठः। श्रीरामे।

**रघूद्वह** पु० रघुषु उद्वहः रक्षादिभारधारकः उद्+वह-अच्। दशरथनृपस्य ज्येष्ठपुत्रे श्रीरामे शब्दर०।

**रङ्क** त्रि० रकि-अच्। १कृपणे २मन्दे च मेदि०। [राजनि०

**रङ्कु** पु० रकि-उ। १मृगविशेषे अमरः। २शबलपृष्ठे मृगे

**रङ्ग** पु०न०रगि-अच्।१धातुभेदे (राङ) राजनि०। रन्ज-भावे घञ्। २रागे। आधारे घञ्। ३रणभूमौ ४नाट्यस्थाने च अमरः। करणे घञ्। ५नृत्ये मेदि०। ६टङ्कणे (सो-हागा) ७खदिरसारे च राजनि०। रङ्गधातोः शो-धनप्रकारो भावप्र० उक्तो यथा "र(व)ङ्गनागौ प्रतप्तौ च गलितौ तौ निषेचयेत्। त्रिधा त्रिधा विशुद्धिः स्याद्रवि दुग्धेऽपि च त्रिधा"। तैलतक्रकाञ्जिकगोमूत्रकुलत्थकाथेषु प्रत्येकं त्रिधा त्रिधा। अथ रङ्गस्य मारणविधिः। "मृत्पात्रे द्राविते र(व)ङ्गे चिञ्चाश्वत्थत्वचोरजः। क्षिप्त्वा र(व)ङ्गचतुर्थांशमयोदर्व्या प्रचालयेत्"। चिञ्चा(अमिली) त्वचश्चूर्णम्। अयोदर्वी (करछुली)। "ततोऽविवामपात्रेण र(व)ङ्गं भस्म प्रजायते। अथ भस्मसमं तालं क्षिप्त्वाम्लेन विमर्दयेत्। ततो गजपुटे पक्त्वा पुनरम्लेन मर्दयेत्। तालेन दशमांशेन याममेकं ततः पुटेत्। एवं दशपुटैः पक्वं र(व)ङ्गं भवति मारितम्। एवं मारितस्य र(व)ङ्गस्य गुणाः। "रङ्गं लघु सरं रूक्षं कुष्ठमेहकफक्रमीन्। निहन्ति पाण्डुं सश्वासं नेत्रमीषत्तु पित्तलम्। सिंहोगजौघन्तु यथा निहन्ति तथैव र(व)ङ्गोऽखिलमेहवर्गम्। देहस्य सौख्यं प्रबलेन्द्रियत्वं नरस्य पुष्टिं विदधाति नूनम्"। तस्याशुद्धस्य दोषमाह "रङ्गोविधत्ते खलु शुद्धिहीनस्तथा ह्यपक्वश्च किलासगुल्मौ। कुष्ठानि-शूलं किल वातशोथं पाण्डुं प्रमेहञ्च भगन्दरञ्च। विशेषतः रक्तविकारवृन्दं श्वासञ्च कासञ्च कफज्वरञ्च। मेहाश्मरीविद्रधिमुख्यरोगानामानपि कुर्यात् कथितान् विकारान्" तद्भेदो यथा। "श्वेतं मृदु लघु स्वच्छं स्निग्धमुष्णसहं द्विकम्। खुरकम्मिश्रकं कान्तं लघु-श्रेष्ठमुदाहृतम्। खुरकं मिश्रकञ्चापि द्विविधं र(व)ङ्ग-मुच्यते। उत्तमं खुरकं तत्र मिश्रकं त्वहितं मतम्"। राजनि०।

**रङ्गज** न० रङ्गात् रङ्गधातोर्जायते जन-ड। सिन्दूरे रत्नमा०

**रङ्गजीवक** पु० रङ्गेण रञ्जनेन जीवति जीव-ण्वुल्। (रङ्गरेज)१चित्रिभेदे चित्रकरे शब्दर०।२नाट्यजीविनि च

**रङ्गद** पु० रङ्गं रञ्जनं रागं ददाति दा-क। १टङ्कणे २ख-दिरसारे च ३स्फटिकायां स्त्री राजनि०।

**रङ्गदायक** पु० रङ्गं ददाति दा-ण्वुल्। १कङ्कुष्ठे (काङ्कुनी) २धान्यभेदे राजनि०।

**रङ्गपत्री** स्त्री रङ्गाय पत्रमस्याः ङीप्। नीलीवृक्षे राजनि० तत्पत्ररसादिना हि नीलरागसम्भवः। [हस्थे राजनि०।

**रङ्गपुष्पी** स्त्री रङ्गं पुष्प्यति पुष्प अण् गौरा०ङीष्। नीली०

**रङ्गभूमि** स्त्री रज्यतेऽत्र रन्ज-आधारे घञ् कर्म०। १नाट्यभूमौ शब्दर०। "रङ्गभूमिं समागतः" इति भा० ह्य०। २मल्लभूमौ च।

**रङ्गमाता** स्त्री रङ्गस्य रागस्य मातेवोत्पादिका। १लाक्षायाम् २कुट्टिन्याञ्च मेदि०। सा हि नायकयोर्वार्त्ताहरणादिद्वारा रागं वर्द्धयति।

**रङ्गलासिनी** स्त्री रङ्गं रागं लासयत्युल्लासयति हल्लरवेन लस-णिच्-णिनि। शेफालिकायाम् शब्दच०।

**रङ्ग(वी)वीज** न० रङ्गं वी(बी)जमुत्पत्तिसाधनं यस्य। रजते शब्दर०। अग्निमध्यस्थ पारदयोगात् रङ्गजम् रजतशब्दे दृश्यम्।

**रङ्गशाला** स्त्री ६त०। (नाचघर) नाट्यस्थले शब्दर०।

**रङ्गाजीव** पु० रङ्गं रञ्जनं नाट्यस्थानं वा आजीवति आ+जीव-अच्। (रङ्गरेज) १चित्रिभेदे चित्रकरे अमरः। २नटे च हेमच०।

**रङ्गारि** पु० रङ्गस्यारिरिव मारकत्वात् । करवीरे रत्नमा० । तद्रसंसर्गाद्धि रङ्गस्य जीर्णता वैद्यकप्रसिद्धा ।

**रङ्गावतारक** पु० रङ्गे नाट्यस्थानेऽवतरति वेशान्तरपरिग्रहेण अव+तॄ–ण्वुल् । १नटे शैलूषे जटा० । चिनि । उक्तार्थे हेमच० । तदन्नभोजननिषेधो मनुनोक्तो यथा "कर्मारस्य निषादस्य रङ्गावतारकस्य च । सुवर्णकर्त्तुर्वेणस्य शस्त्रविक्रयिणस्तथा । त एतेऽन्ये त्वभोज्यान्नाः क्रमशः परिकीर्त्तिताः । तेषान्त्वगस्थिरोमाणि वदन्त्यन्नं मनीषिणः । भुक्त्वातोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम् । मत्या भुक्त्वा चरेत् कृच्छ्रं रेतोविण्मूत्रमेव च" ।

**रङ्गिणी** स्त्री रङ्गमिव शुभ्राणि मूलानि सन्त्यस्याः इनि । १शतमूल्याम् जटा० । २कैवर्त्तिमुस्तके च राजनि० । ३रङ्गयुक्ते त्रि० ।

**रङ्हस्** न० रघि–असुन् । वेगे अमरे पाठान्तरम् । [न ।

**रच** रचनायां अद०चु०उभ०सक०सेट् । रचयति ते अररचत्

**रचना** स्त्री रच–युच् । रचने १पुष्पपत्रादेर्विन्यासे अमरः । भावे ल्युट् । तत्रैवार्थे न० ।

**रज** न० रन्ज–क । १स्त्रीकुसुमे शब्दर० । २परागे ३रेणौ ४गुणभेदे च पु० जान्ते शब्दच० ।

**रजक** पुंस्त्री० रजति रन्ज–ण्वुल् नलोपः । वस्त्रादेः रागकारके जातिभेदे (धोपा) अमरः । स च तीवरकन्यायां धीवराज्जातः ब्रह्मवै० । स्त्रियां ङीष् । सा च कुलनायिका "रजकी नापिताङ्गना" तन्त्रम् ।

**रजत** रन्ज–अतच् नलोपः । १रूप्ये अमरः । २गजे ३दन्ते ४रुधिरे ५हारे ६धवले ७स्वर्णे ८धवले च हेमच० । ९शुक्लगुणवति त्रि० ।

रूप्यधातोरुत्पत्त्यादि भावप्र० उक्तं यथा "त्रिपुरस्य वधार्थाय निर्निमेषैर्विलोचनैः । निरीक्षयामास शिवः क्रोधेन परिपूरितः । अग्निस्तत्कालसम्पन्नस्तस्यैकस्माद्विलोचनात् । ततो रुद्रः समभवद्वैश्वानर इव ज्वलन् । द्वितीयादपतन्नेत्रादश्रुविन्दुस्तु वामकात् । तस्माद्रजतमुत्पन्नमुक्तकर्मसु योजयेत् । कृत्रिमञ्च भवेत्तद्धि वङ्गादिरसयोगतः । रूप्यन्तु रजतं तारञ्चन्द्रकान्ति सितप्रभम् । गुरु स्निग्धं मृदु श्वेतं दाहे छेदे घनं क्षमम् । वर्णाढ्यं चन्द्रवत् स्वच्छं रूप्यं नवगुणं शुभम् । कठिनं कृत्रिमं रूक्षं रक्तं पीतदलं लघु । दाहच्छेदघनैर्नष्टं रूप्यं दुष्टं प्रकीर्त्तितम् । तारं शरीरस्य करोति तापं शुद्धं घनं यच्छति शुक्रनाशम् । वीर्य्यं बलं हन्ति तनोश्च पुष्टिं महागदान् पोषयति ह्यशुद्धम्" । स्थानान्तरे तत्रैव

तस्य शोधनविधिः "पत्लीकृतपत्राणि तारस्याग्नौ प्रतापयेत् । निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके । गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा । एवं रजतपत्राणां विशुद्धिः सम्प्रजायते" । अथाशुद्धस्य रूप्यस्य दोषमाह "रूप्यं त्वशुद्धं प्रकरोति तापं विबन्धकं वीर्य्यबलक्षयञ्च । देहस्य पुष्टिं हरते तनोति रोगांस्ततः शोधनमस्य कुर्य्यात्" । अथ रूप्यमारणविधिः "भागैकं तालकं मद्यं याममम्लेन केनचित् । तेन भागत्रयं तारपत्राणि परिलेपयेत् । धृत्वा मूषापुटे रुद्ध्वा पुटेत् त्रिंशद्वनोपलैः । समुद्धृत्य पुनस्तालं दत्त्वा रुद्ध्वा पुटे पचेत् । एवं चतुर्दशपुटैस्तारं भस्म प्रजायते" । अथान्यप्रकारः "स्नुहीक्षीरेण संपिष्टं माक्षिकं तेन लेपयेत् । तालकस्य प्रकारेण तारपत्राणि बुद्धिमान् । पुटेच्चतुर्दश पुटैस्तारं भस्म प्रजायते" । एवं मारितस्य रूप्यस्य गुणः "रौप्यं शीतं कषायञ्च स्वादु पाकरसं सरम् । वयसः स्थापनं स्निग्धं लेखनं वातपित्तजित् । प्रमेहादिकरोगांश्च नाशयत्यचिराद् ध्रुवम्" ।

**रजताचल** पु० रजतकल्पितोऽचलः । दानार्थं कल्पिते रजतमये पर्वते मत्स्यपु० ७७अ० तद्विधिर्दृश्यः । रजतमिव शुभ्रोऽचलः । २कैलासपर्वते रजतगिर्य्यादयोऽप्यत्र पु० ।

**रजन** न० रन्ज–क्युन् । १रागे सि०कौ० । २कुसुम्भे ३हरिद्रायां ४रात्रौ च स्त्री उज्ज्वलः गौरा० ङीष् ।

**रजनि(नी)** स्त्री रज्यतेऽत्र रन्ज–कनि वा ङीप् । १रात्रौ २हरिद्रायां ३जतुकायाञ्च अमरः ।

**रजनीकर** पु०रजनीं करोति कृ–ट रजन्यां करः किरणोऽस्य वा । १चन्द्रे शब्दर० २कर्पूरे च । [पुष्पप्रधाने क्षुपे ।

**रजनीगन्धा** स्त्री रजन्यां गन्धो यस्याः । स्वनामख्याते

**रजनीचर** पुंस्त्री०रजन्यां चरति चर–ट । १राक्षसे शब्दर० स्त्रियां ङीप् । २चौरे ३यामिकभेदे च ।

**रजनीजल** न० रजन्या जलमिव । नीहारे हारा० ।

**रजनीपुष्प** पु० रजन्या हरिद्राया इव पुष्पमस्य । (पूतिकरञ्चा) करञ्जभेदे राजनि० ।

**रजनीमुख** न० ६त० । प्रदोषे सूर्य्यास्तकालात् चतुर्दण्डात्मके मुहूर्त्तात्मके वा काले अमरः । प्रदोषशब्दे दृश्यम् ।

**रजनीहासा** स्त्री रजन्यां हासो विकाशो यस्याः । शेफालिकायाम् शब्दर० ।

**रजस्** न॰ रन्ज-असुन् नलोपः ।१कुङ्कुमे अमरः । २पुष्परेणौ ३पराने ४धूलौ मेदि॰ शास्त्रोक्ते चलनादियुते ५प्रकृति-गुणभेदे च "सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः" सा॰ का॰ । "सत्त्वतमसी स्वयमक्रियतया स्वस्व-कार्य्यप्रवृत्तिं प्रत्यवसीदन्ती रजसोपष्टभ्येते अवसादात् प्रच्याव्य स्वकार्य्ये ते उत्साहं प्रयत्नं कार्य्येते तदिद-मुक्तमुपष्टम्भकं रज इति । कस्मादित्यत उक्तं चलमिति । तदनेन रजसः प्रवृत्त्यर्थत्वं दर्शितम्" त॰कौ॰ । ६पृथिव्यां स्त्री ङीप् निघण्टुः ।

**रजस्वल** त्रि॰ रजोऽस्त्यस्य वलच् । १रजोयुक्ते २महिषे पुंस्त्री॰ मेदि॰ स्त्रियां ङीष् । आर्त्तववत्यां स्त्रियां स्त्री टाप् अमरः ।

**रजोरस** न॰ रजस इव रसोऽनुभवोऽस्य । अन्धकारे त्रि॰ ।

**रजोबल** न॰रज इव बलति । बल-अच् । अन्धकारे त्रिका॰

**रज्जु** स्त्री सृज-उ नि॰ १बन्धनसाधने दामनि अमरः (दडि) २वेण्याञ्च मेदि॰ ।

**रञ्जक** न॰ रञ्जयति रन्ज-णिच्-ण्वुल् । १हिङ्गुले राजनि॰ २प्रीतिकारके त्रि॰ । ३काम्पिल्लवृक्षे पु॰ (डहरकरमचा) राजनि॰ ।

**रञ्जन** न॰ रज्यतेऽनेन रन्ज-करणे ल्युट् । १रक्तचन्दने २हिङ्गुले ३मुञ्जतृणे राजनि॰ ४मञ्जिष्ठायां ५नील्यां ६गृञ्जरोचनिकायां (कमलागुडि) स्त्री मेदि॰ ङीप् । ६शेफालिकायां शब्दच॰ । ७हरिद्रायां दयर्णटश्च स्त्री राजनि॰ ङीप् । भावे ल्युट् । ८रागे । णिच् कर्त्तरि ल्यु । १०रागजनके त्रि॰ । संज्ञायां कन् ।११कटफले पु॰राजनि॰

**रट** भाषणे भ्वा॰ पर॰ सक॰सेट् । रटति अराटीत् अरटीत् रेटतुः "माघे मासि रटन्त्यापः" मल॰त॰ ।

**रटन्ती** स्त्री रट-वा॰भाष॰ ङीप् ।"माघे मास्यसिते पक्षे रट-न्त्याख्या चतुर्द्दशी । तस्यां प्रदोषसमये पूजयेत् मुण्ड-मालिनीम्" इत्युक्तायां माघकृष्णचतुर्द्दश्याम् । [रेठतुः ।

**रठ** भाषणे भ्वा॰ पर॰ सक॰ सेट् । रठति अराठीत् अरठीत्

**रण** गतौ भ्वा॰ पर॰ सक॰सेट् । रणति अराणीत् अरणीत् रेणतुः । घटादि॰ । रणयति । [रेणतुः ।

**रण** रवे भ्वा॰ पर॰ अक॰ सेट् । रणति अराणीत् अरणीत्

**रण** पुंन॰ अर्द्धर्चा॰ रण-"क्वणिरणयोः"वार्त्ति॰ अप् । १युद्धे अमरः । भावे अप् । २शब्दे ३क्वणे पु॰ मेदि॰ ४गतौ च पु॰ शब्दर॰ ।

**रणरणक** पु॰ रणः शब्दस्तत्प्रकारः प्रकारे द्वित्वम् ततः संज्ञायां कन् । १उद्वेगे हेमच॰ २अतिशये च ।

**रणसङ्कुल** न॰ रणमेव सङ्कुलम् । तुमुलयुद्धे अमरः ।

**रण्ड** पु॰ रम-ड तस्य नेत्त्वम् । १धूर्त्ते २विफले अवाङ्क्रवि-शिष्टतया ३छिन्नावयवे त्रि॰संक्षिप्तसारः । ४मूषिकपर्ण्यां स्त्री अमरः । ५विधवायाञ्च स्त्री । स्वार्थे क । अफलवृ-क्षादौ शब्दच॰ ।

**रण्डाश्रमिन्** पु॰ रण्डः विफलः प्रजाहीनत्वात् आश्रमः अस्यास्य इनि । "चत्वारिंशद्वत्सराणां साष्टानाञ्च परे यदि । स्त्रिया वियुज्यते कश्चित् स तु रण्डाश्रमी मतः" इत्युक्तवयसि स्त्रीवियुक्ते पुरुषे ।

**रत** न॰ रम-भावे क्त । १रमणे स्त्रीपुंसयोः सङ्गमे मैथुने अमरः ।२गुह्ये च मेदि॰। कर्त्तरि क्त । ३अनुरक्ते त्रि॰।

**रतक्रिया** स्त्री रतये रतिरूपो वा क्रिया व्यापारः । स्त्री-पुंससङ्गमसाध्ये मैथुने ।

**रतगुरु** पु॰ ७त॰। पत्यौ त्रिका॰। [कामदेवपत्न्यां च मेदि॰।

**रति** स्त्री रम-क्तिन् । १रागे २गुह्ये ३रमणे ४तदधिष्ठात्र्यां

**रतिपति** पु॰ ६त॰ । कन्दर्पे अमरः । रतिकान्तादयोऽप्यत्र ।

**रतिप्रिय** पु॰६त॰। १कामदेवे शब्दर॰। ६ब॰।२रमणप्रिये त्रि॰

**रतिबन्ध** पु॰ रतौ बन्धः । रतिमञ्जर्य्युक्ते षोडशप्रकारे रमणबन्धभेदे "न भवन्ति यदा नार्य्यस्तुष्टा बाह्यरतेन ताः । नानाविधैस्तदा बन्धै रन्तव्या कामिभिः स्त्रियः । पद्मासनो १ नागपाशो२ [लतावेष्टो३ऽर्द्धसंपुटम् ४ । कुलिशं५ सुन्दरं६ चैव तथा केशर७ एव च । हि-ल्लोलो८ नरसिंहो९ऽपि विपरीत१० स्तथाऽपरः । ११क्षुब्धो वै धेनुक१२श्चैवमुत्कण्ठ१३स्तु ततः परम् । सिंहासनो१४ रतिनागो१५ विद्याधर१६स्तु षोडशः" रति-मञ्जरी । तत्तल्लक्षणं तत्र दृश्यम् । [चिह्ने च जटा॰ ।

**रतिमन्दिर** न॰ ६त॰ । १रतिस्थाने २स्त्रीणामसाधारण-

**रतिरमण** पु॰ रतिं रमयति रम-णिच्-ल्यु । कामदेवे ।

**रतिसर्व्व** न॰ रतेर्वश्यं पदम् । मैथुने हारा॰ ।

**रतिसत्वरा** स्त्री रतिं सत्वरयति सत्वरा+करोत्यर्थे णिच्-अण् । (पिडिङ्ग) शाके शब्दच॰ ।

**रत्न** न॰ रमतेऽत्र रम-न तान्तादेशः । १माणिक्यादिप्रस्तरे अमरः । २स्वस्वजातिषु श्रेष्ठे मेदि॰ ३माणिक्ये ४ही-रके च राजनि॰ । तद्धेदादिकं ह॰स॰द॰ख॰ उक्तं यथा "रत्नेन शुभेन शुभं भवति नृपाणामनिष्टमशुभेन । यस्मादतः परीक्ष्यं दैवं रत्नाश्रितं तज्ज्ञैः । द्विपहय-वनितादीनां स्वगुणविशेषेण रत्नशब्दोऽस्ति । इह तु

पुष्परत्नानामधिकारो वज्रपूर्वाणाम । रत्नानि बलाद्दै-त्याद् दधीचितोऽन्ये वदन्ति जातानि । केचिद्भुवः स्वभावाद् वैचित्र्यं प्राहुरुपलानाम् । वज्रेन्द्रनील-मरकतकर्केतनपद्मरागरुधिराख्याः । वैदूर्यपुलकवि-मलकराजमणिस्फटिकशशिकान्ताः । सौगन्धिकगोमेद-कशङ्खमहानीलपुष्परागाख्याः । ब्रह्ममणिज्योतीरसशस्य-कमुक्ता प्रवालानि" । [शब्दर० ।

**रत्नकन्दल** पु० रत्नेषु कन्दल इव रक्तत्वात् । प्रवाले

**रत्नकूट** पु० रत्नमयः कूटः शृङ्गमस्य । पर्वतभेदे शब्दर० ।

**रत्नगर्भ** पु० रत्नयुक्तं गर्भं मध्यं यस्य बा० त० । १समुद्रे राजनि० २कुवेरे च त्रिका० । ३पृथिव्यां स्त्री हेमच० ४सत्पुत्रायां नार्यां च स्त्री ।

**रत्नद्वीप** पु'न० । रत्नमयो द्वीपः । तन्त्रोक्ते सुधासमुद्रमध्य-स्थिततया ध्येये रत्नमयेऽन्तरीपे ।

**रत्नधेनु** स्त्री रत्नकल्पिता धेनुः । महादानार्थं कल्पितायां रत्ननिर्मितायां धेन्वाम् । मत्स्यपु० २८७अ० दृश्यम् ।

**रत्नपारायण** न० रत्नानां पारायणं साकल्येन स्थानम् । सर्वरत्नाधारे "रत्नपारायणं नाम्ना लङ्का" भट्टिः ।

**रत्नमुख्य** न० रत्नेषु मुख्यम् । हीरके अमरः ।

**रत्नवती** स्त्री रत्नानि सन्त्यस्याः मतुप् मस्य वः । १पृथिव्याम् शब्दर० । २रत्नयुक्ते त्रि० ।

**रत्नसानु** पु० रत्नानि सानावस्य । सुमेरुपर्वते अमरः ।

**रत्नसू** स्त्री रत्नानि सूते सू—क्विप् । पृथिव्याम् हेमच० ।

**रत्नाकर** पु० ६त० । १समुद्रे अमरः । रत्नोत्पत्तिस्थाने २मणिखनौ च ।

**रत्नाचल** पु० रत्ननिर्मितः अचलः । दानार्थं कल्पिते रत्ननि-र्मिते पर्वते मात्स्यशैवशब्दे १८८१पृ०दृश्यम् । [भूषणभेदे ।

**रत्नाभरण** न० रत्नघटितमाभरणम् शाक०त० । (जड़ाओ)

**रत्नावली** स्त्री ६त० । १रत्नसमूहे तद्घटितहारे २वत्स-राजपत्नीभेदे च रत्नावलीमधिकृत्य कृतः ग्रन्थोऽच् आख्यायिकायां तस्य लुक् । श्रीहर्षकृते चतुरङ्कात्मके ४नाटिकाभेदे । [स्त्रीत्वे वा ङीप् ।

**रत्नि** पुंस्त्री० ऋ-क्त्निच् । बद्धमुष्टिहस्तपरिमाणे अमरः ।

**रथ** पु० रम्यतेऽनेन अत्र वा रम—कथन् । १स्वनामख्याते यानभेदे अमरः । २देहे च "आत्मानं रथिनं विद्धि शरीरं रथमेव च" इति गीता । अत्र रूपकमित्यन्ये ३पादे ४वेतसवृक्षे विश्वः ५तिनिशवृक्षे राजनि० । यानरूपरथभेदादिकं हेमच० उक्तं यथा

"युद्धार्थे चक्रवद्याने शताङ्गः स्यन्दनो रथः । संक्री-ड़ार्थः पुष्परथो देवार्थस्तु, मरुद्रथः । योग्यारथो वैन-यिकोऽध्वरथः पारियात्रिकः । कर्णीरथः प्रवहणं डयनं रथगर्भकः । अनस्तु शकटोऽथ स्याद्गन्त्री कम्बलि वाह्यकम् । अथ काम्बलवास्त्राद्यास्तैस्तैः परिवृते रथे । स पाण्डुकम्बली यः स्यात् संवीतः पाण्डु-कम्बलैः । स तु द्वैपो वैयाघ्रश्च वृतो यो द्वीपिचर्मणा । ज्योतिर्विदाभरणे तत्करणादि उक्तं यथा "लोल-मैत्रवसुजिष्णुकमेषु स्यन्दनाखिलविधानमथाङ्गः । सेन-सद्द्रुमु बलाम्बुतपःस्थैः साधुराशिमति साधुभिरङ्के । रथचक्रभागमाह "उच्चाङ्गुलिकरकर्णयुगात्साङ्गे यक्ष्यवलयं वलयस्य । सव्यभागनिचितभ्रममग्रादादिमध्यमनसो नव-भागम् । अपभे भवति षड्गुलिरन्त्रः कूबरोङ्गुनि जयोऽथ रथाङ्गे । सन्धिभेऽर्धकृतिरन्तरमन्त्री भीति-रिष्टमनसो नहु गर्भे । अथ रथकृत्यमुहूर्त्ते "पुष्ये पुनर्वसुज्येष्ठानुराधारेवतीदये । अश्वन्यादिलिभे हस्त-त्रितये रोहिणीमृगे । सार्कें सौम्यदिने सौम्यविलग्ने रथकर्म सत्" । [अमरः

**रथकड्या** स्त्री रथानां समूहः रथ+कड्यच् । रथसमूहे

**रथक(का)र** पु० रथं करोति कृ—अच्—अण् वा । १रथ-निर्माणकारके (सूत्रधार) २वर्णसङ्करभेदे करण्यां माहिष्याज्जाते पुस्त्री० । [अमरः ।

**रथकुटुम्बिन्** पु० रथस्य कुटुम्बीव पालकत्वात् । सारथौ

**रथगर्भक** पु० रथस्य गर्भमिव इवार्थे कन् । १कर्णीरथे २स्कन्धवाह्ययाने (पालकी) हेमच० ।

**रथगुप्ति** स्त्री रथस्य गुप्तिः शस्त्रवारणार्थं रक्षा उपचारात् तत्स्थानम् । रथस्य शस्त्रवारणार्थं गुप्तस्थाने अमरः ।

**रथचरण** पु० रथस्य चरण इव गतिहेतुत्वात् । १रथचक्रे तन्नामनामके २चक्रवाकविहगे पुंस्त्री० शब्दर० स्त्रियां ङीष् । रथपादादयोऽप्यत्र । [वृक्षे अमरः ।

**रथद्रु** पु० रथनिर्माणाय द्रुः रथनामको वा द्रुः । तिनिश-

**रथन्तर** त्रि० रथेन तरति तॄ-खच् सुम् च । १रथनेतरि । "अभित्वा शूर" इत्यस्यामृचि गीते २सामभेदे न० । "स्वरादिविशेषानुपूर्वीमात्रस्वरूपे ऋगक्षरव्यतिरिक्तं यत् गानम् तद्रथन्तरम्" सामार्चिकभाष्यम् । "वामदेव्यं बृहत् साम ज्येष्ठसाम रथन्तरम्" इत्युपक्रमे "पश्चिमे द्वार-पालौ तु पठेतां सामगाविति" वि० पा० ।

**रथयात्रा** स्त्री रथेन यात्रा । आषाढ़शुक्लद्वितीयायां जग-

साधस्य रथेन २यात्रायां ३तत्र कर्त्तव्ये उत्सवभेदे च ।

**रथाङ्ग** न० अङ्ग्यते गम्यतेऽनेन अगि करणे घञ् इत० । १चक्रे । रथाङ्गशब्दः वाचकत्वेनास्त्यस्य अच् । २चक्रवाके पुंस्त्री० अमरः स्त्रियां ङीष् ।

**रथाङ्गपाणि** पु० रथाङ्गं चक्रं सुदर्शनं पाणौ यस्य । चक्रधरे विष्णौ हला० । [वृत्ते शब्दर० ।

**रथाभ्र** पु० रथ इवाभ्रियतेऽसौ आ+भृ—मूल० क । वेतस-

**रथाभ्रपुष्प** पु० अभ्रमिव पुष्पमस्य रथनामकोऽभ्रपुष्पः कर्म० । वेतसवृक्षे भरतः । [२रथेन युद्धकारके च हेमच० ।

**रथारोहिन्** पु० रथमारोहति आ+रुह णिनि । १रथिनि

**रथिक** पु० रथो युद्धसाधनत्वेनास्त्यस्य ठन् । १रथिनि २तिनिशवृक्षे च राजनि० । इर । रथिर । इन । रथिन । इनि । रथिन् एतेऽप्यत्र । [उपाविशत्" गीता ।

**रथोपस्थ** न० रथस्य उपस्थ इव । रथमध्ये । "रथोपस्थ

**रथ्य** पुंस्त्री० रथं वहति यत् । १रथवाहके घोटके अमरः स्त्रियां ङीष् । रथस्येदं यत् । २रथसम्बन्धिनि चक्रादौ त्रि० हेमच० । ब्राह्मणः "यद्रथ्यं स्यादायोरिति चर्मणा प्रतिष्ठहीयात्" "रथ्यं रथसम्बन्धि चर्मगय्यं लोहहिरण्यादिनिर्मितम्" ताण्ड्य०ब्रा०१।७।२भा० । रथस्य तद्गमनस्य योग्या यत् । ३प्रशस्तपथे अभ्यन्तरमार्गे स्त्री अमरः । रथानां समूहः यत् । ४रथसमूहे च स्त्री अमरः । ५आवर्त्तन्यां स्त्री मेदि० । ६मार्गमात्रे ७चत्वरे च स्त्री हेमच० । [रेदतुः ।

**रद** उत्खाते भ्वा० प०सक०सेट् । रदति अरादीत् अरदीत् ।

**रद** पु० रदति उत्खनति रद-अच् । १दन्ते । भावे वा० अप् । २उत्खनने मेदि० ।

**रदच्छद** पु० द्वि०व० । रदान् छादयति छद-णिच्-घ ह्रस्वः । ओष्ठयोः हारा० । रदनादिच्छदादयोऽप्यत्र ।

**रदन** पु० रद-करणे ल्यु । १दन्ते अमरः । भावे ल्युट् । २विदारणे । [ञ्चत् अदित् वेट् रधिता रद्धा ।

**रध** हिंसने पाके च दि० पर० सक० । रध्यति इरदित् अर-

**रन्ज** रागे (वर्णान्तराधाने) सक० आसक्तौ अक० भ्वा० उभ० अनिट् । रजति ते अराङ्क्षीत् अरङ्क्त । घटा०रञ्जयति मृगरमणे तु रजयति ।

**रन्ज** रागे आसक्तौ दिवा० उभ० सक० अनिट् । रज्यति रज्यते अराङ्क्षीत् अरङ्क्त । घटा० रञ्जयति रजयति ।

**रन्तिदेव** पु०रम—संज्ञायां तिक् कर्म० । १विष्णौ मेदि० । २चन्द्रवंश्ये नृपभेदे ३कुक्कुरे च पुंस्त्री०शब्दर० । स्त्रियां ङीष् ।

**रन्तु** पु० रम-आधारे तुन् । १वर्त्मनि २नद्याञ्च मेदि० ।

**रन्धन** न० रध-पाके ल्युट् नुमागमः । "पाके सुरहर ! रन्धनसमये" इत्युद्भटः । "रन्धनाय स्थाली" सि०कौ० ।

**रन्ध्र** न० रम-क्विप् धृ—मूल० क कर्म० । १छिद्रे २दूषणे मेदि० ज्योतिषोक्ते ३लग्नतोऽष्टमस्थाने च । [वृक्षे राजनि० ।

**रन्ध्रकण्ट** पु० रन्ध्रे रन्ध्रे कण्टः कण्टकोऽस्य । लालवर्ब्बुरक-

**रन्ध्रबभ्रु** पु० रन्ध्रे गर्त्ते बभ्रुरिव । उन्दुरौ त्रिका० ।

**रन्ध्रवंश** पु० रन्ध्रबहुलो वंशः शाक०त० । (नलतावाँश) वंशभेदे । "वंशौ त्वम्लौ कषायौ च किञ्चित्तिक्तौ च शीतलौ । मूत्रकृच्छ्रप्रमेहार्शःपित्तदाहास्रनाशनौ । विशेषात् रन्ध्रवंशस्तु दीपनोऽजीर्णनाशकः । रुचिकृत् पाचनो हृद्यः शूलघ्नो गुल्मनाशनः" राजनि० । [रराप रेपतुः ।

**रप** व्यक्तवाक्ये भ्वा०प०सक०सेट् । रपति अरापीत् अरपीत्

**रफ** गतौ हिंसे च भ्वा०प०सक०सेट् । रफति । अरफीत्-अराफीत् । इदित्ययम् । रम्फति अरम्फीत् रम्फ्यते ।

**रब** गतौ सक० प० शब्दे अक० आ० भ्वा० सेट् इदित् । रम्बति-ते अरम्बीत् अरम्बिष्ट ।

**रभ** औत्सुक्ये भ्वा०आ०अक० अनिट् । रभते अरब्ध रेभे आ+आरम्भे सक० । अलिट्यजादौ आर्द्धधातुके नुम् । आरम्भः आरम्भणम् । लिटि तु आरेभे ।

**रभ** शब्दे भ्वा० आ० अक०सेट् इदित् । रम्भते अरम्भिष्ट ।

**रभस** पु० रभ—असच् । १वेगे २हर्षे मेदि० ३औत्सुक्ये ४पौर्वापर्य्याविचारे च अमरः । अर्श आद्यच् । ५वेगादियुक्ते त्रि० ६कोषकारकभेदे पु० । ७महति त्रि० निघ० ।

**रम** क्रीडायां भ्वा० आ० अक० अनिट् । रमते विरमति उपरमति अरंस्त उपारंसीत् । क्त्वा वेट् । णिचि रमयति । ज्वला० च रमः रामः ।

**रम** पु० रम—अच् । १कान्ते २अशोकवृक्षे ३कामदेवे च मेदि०

**रमठ** न०रम—अठन् । हिङ्गुनि स्वार्थे अण् । अत्रैव न०अमरः

**रमठध्वनि** पु० रमठ इतिशब्देन ध्वन्यते ध्वन—इन् । हिङ्गुनि शब्दच० ।

**रमण** पु० रमयति—रम—णिच् ल्यु । १कामदेवे २पत्यौ । "रमण ! त्वामनुयामि यद्यपि" कुमा० । ३गर्दभे पुंस्त्री० हेमच० स्त्रियां ङीष् । ४वृषणे शब्दच० ५महारिष्टे (निम्ब)राजनि० । जम्बुद्वीपान्तर्गते ६रम्यकनाम्नि वर्षे च । रम-भावे ल्युट् । ७सुरते न० । करणे ल्युट् । ८पटोलमूले न० मेदि० । ९जघने न० हेमच० । रम्यतेऽनया ल्युट् ङीप् । १०नार्य्याम् ११उत्तमनार्य्याम् स्त्री

मेदि०। १२वाचाख्यहच्चे च स्त्री शब्दचन्द्रिकाकोषः।

**रमणीय** त्रि० रम्यतेऽत्र रम—आधारे-अनीयर्। सुन्दरे। ततो भावे वुञ्। रामणीयक तद्भावे न०।

**रमति** पु० रम-अतिच्। १नायके २स्वर्गे मेदि०। ३कामे शब्दर० ४काले ५कामदेवे सि०कौ०।

**रमल** न० ज्योतिःशास्त्रभेदे यत्र पाशकक्षेपणेन लग्ननिर्णयद्वारा प्रश्नादिफलप्रतिपादनम्।

**रमा** स्त्री रमयति रम-अच्। १लक्ष्म्याम् मेदि० २कल्किभार्य्यायां कल्किपु०। ३शोभायां राजनि०।

**रमापति** पु० ६त०। नारायणे रमानाथतत्कान्तादयोऽप्यत्र

**रमाप्रिय** न० ६त०। १पद्मे शब्दच०। २विष्णौ पु०।

**रम्भ** पु० रभि-अच् मुम्। १वेणौ २असुरभेदे च मेदि०। स च महिषासुरजनकः कालिकापु०।४कदल्याम् ५अप्सरोभेदे स्त्री मेदि० ६वेश्यायां धरणिः। ७गवां ध्वनौ हेमच०। दगौर्य्याञ्च स्त्री शब्दर०। ९उत्तरस्यां दिशि निघण्टुः।

**रम्भातृतीया** स्त्री रम्भा गौरी ६त०।१मार्गशीर्षशुक्लतृतीयायाम् उपचारात् तत्र कर्त्तव्ये गौरीपूजाङ्के २व्रतभेदे च।

**रम्य** त्रि० रम्यतेऽत्र यत्। १सुन्दरे मेदि०, २बलकरे जटा०। ३चम्पके पु० मेदि० ४बकवृक्षे पु० शब्दच०। ५पटोलमूले न० मेदि०। संज्ञायां कन्। ६प्रधानधातौ शुक्रे न० जटा०। जम्बुद्वीपस्थेषु नवसु वर्षेषु मध्ये "दक्षिणेन सुमेरोस्तु श्वेतस्य चोत्तरेण च वायव्यं रम्यकं नाम" इत्युक्ते ७वर्षभेदे।

**रम्यपुष्प** पु० रम्याणि पुष्पाण्यस्य। शाल्मलीवृक्षे राजनि०।

**रम्या** स्त्री रम्यतेऽत्र यत्। १स्थलपद्मिन्याम् राजनि०। २रात्रौ च मेदि०। [अरविध्वम्।

**रय** गतौ भ्वा०आ०सक०सेट्। रयते अरयिष्ट। अरयिढम्

**रय** पु० रय-अच्। १वेगे अमरः। २प्रवाहे च।

**रयि** न० रय-इन्। १जले २धने च निघण्टुः। [५।२१

**रराट** न० ललाट+पृषो०। ललाटे "विष्णोरराटमसि" यजु०

**रलक** पु० रम-क्विप् मलोपे तुक् ला-क कर्म०। १मृगभेदे मुकुटः। २कम्बले अमरः ३नेत्रलोम्नि च भूभृतिः।

**रव** गतौ भ्वा० पर० सक०सेट् इदित्। रवति अरविष्ट।

**रव** पु० रु-ध्वनौ अप्। शब्दे अमरः।

**रवण** पुंस्त्री० रु—युच्।१कोकिले सि०कौ० २उष्ट्रे च हेमच० स्त्रियां ङीष्। ३कांस्ये न० हेमच०। ४शब्दकारके ५तीक्ष्णे ६चञ्चले ७भण्डके च त्रि० शब्दर०।

**रवि** पु० अव—इन् रुट् च्। १सूर्य्ये शब्दर०। २अर्कवृक्षे च "अचिरात्तु प्रकाशेन अवनात् स रविः स्मृतः" मत्स्यपु० तन्नामनिरुक्तिः। ३द्वादशसंख्यायाम्।

**रविज** पु० रवेर्जायते जन—ड। १शनौ २सावर्णिमनौ ३वैवस्वते मनौ ४सुग्रीवे वानरे ५यमे च ६यमुनायां स्त्री रवितनयादयोऽप्यत्र। [च शब्दच०।

**रविनाथ** न० रविर्नाथः प्रकाशकत्वात् यस्य। १पद्मे २अम्बूके

**रविनेत्र** पु० रविर्नेत्रं यस्य। विष्णौ रविलोचनादयोऽप्यत्र। "चक्षुः सूर्य्यो अजायत" पुरुषसू० उक्तेस्तस्य तथात्वम्।

**रविप्रिय** न० ६त०। १रक्तकमले २ताम्रे च ३करवीरे पु० राजनि० ४आदित्यपत्त्रे ५लकुचे पु० शब्दच०।

**रविरत्न** न० रवेः प्रियं रत्नम् शा०त०। माणिक्ये राजनि०।

**रविलोह** न० रवेः प्रियं लोहं धातुः। ताम्रे राजनि०।

**रश** स्वने भौ० पर० अक० सेट्। रशति अराशीत् अरशीत्

**रशना** स्त्री अश—युच् रशादेशः। १काञ्च्याम् २जिह्वायाञ्च शब्दर०।३दामनि च "इमामगृभ्णन् रशनामृतस्य" श्रुतिः तत्रार्थे दन्त्यमध्य एवेत्यन्ये।

**रश्मि** पु० अश-मि धातोरुट् रश-मि वा। १किरणे २अश्वादिदामनि ३पक्ष्मणि न०मेदि०।

रवेः रश्मिभेदादिकार्य्यं मत्स्यपु० १०२ अ० उक्तं यथा "तेजोभिः सर्वलोकेभ्यो आदत्ते रश्मिभिर्जलम्। समुद्राद्वायुसंयोगाद्वहन्त्यापो गभस्तयः। ततस्तु पयसां काले परिवर्त्तन् दिवाकरः। नियच्छत्यपो मेघेभ्यः शुक्लाशुक्लैस्तु रश्मिभिः"।

कूर्मपु० ४अ० विस्तरेणोक्तं यथा "एवमेव महादेवो देवदेवः पितामहः। करोति नियतं कालं कालात्मा ह्यैश्वरी तनुः। तस्य ये रश्मयो विप्राः सर्वलोकप्रदीपकाः। तेषां श्रेष्ठाः पुनः सप्तरश्मयो ग्रहयोनयः। सुषुम्णो हरिकेशश्च विश्वकर्मा तथैव च। विश्वव्यचाः पुनश्चान्यः सम्पद्वसुरतः परः। अर्वाग्वसुरिति ख्यातः स्वराडन्यः प्रकीर्त्तितः। सुषुम्णः सूर्य्यरश्मिस्तु पुष्णाति शिशिरद्युतिम्। तिर्य्यगूर्द्ध्वप्रचारोऽसौ सुषुम्णः परिगीयते। हरिकेशस्तु यः प्रोक्तो रश्मिर्नक्षत्रपोषकः। विश्वकर्मा तथा रश्मिर्बुधं पुष्णाति सर्वदा। विश्वव्यचास्तु यो रश्मिः शुक्रं पुष्णाति नित्यदा। सम्पद्वसुरिति ख्यातं स पुष्णाति च लोहितम्। बृहस्पतिं प्रपुष्णाति रश्मिरर्वाग्वसुः प्रभोः। शनैश्चरं प्रपुष्णाति सप्तमस्तु स्वराट् तथा। एवं सूर्य्यप्रभावेन सर्वा नक्षत्रतारकाः। वर्द्धन्ते वर्द्धिता

नित्य 'नित्यमाप्याययन्ति च। दिव्यानां पार्थिवानाञ्च नैशानाञ्चैव सर्वशः। आदानान्नित्यमादित्यस्तेजसा तमसां प्रभुः। आदत्ते स तु नाड़ीनां सहस्रेण समन्ततः। नादेयांश्चैव सामुद्रान् कूप्यांश्चैव सहस्रकम्। स्थावरान् जङ्गमांश्चैव यच्च कुल्यादिकं पयः। तस्य रश्मिसहस्रन्तु शीतवर्षोष्णनिस्रवम्। तासां चतुःशतं नाड्यो वर्षन्ते चित्रमूर्त्तयः। चन्दनाश्चैव वाह्याश्च कौतनाभूतनास्तथा। अमृता नामतः सर्वा रश्मयो वृष्टिसर्जनाः। हिमोद्वहाश्च ताभ्यो रश्मयस्त्रिशतं पुनः। वश्यो मेध्यश्च पैध्यश्च ह्रादिन्यो हिमसर्जनाः। चन्द्राख्या नामतः सर्वाः पीताभाः स्युर्गभस्तयः। शुक्लाश्च ककुभश्चैव गावो विश्वभृतस्तथा। शुक्लास्ता नामतः सर्वास्त्रिविधा घर्मसर्जनाः। समं बिभर्त्ति ताभिः स मनुष्यपितृदेवताः। मनुष्यानौषधेनेह स्वधया च पितॄनपि। अमृतेन सुरान् सर्वान् त्रिषु त्रीस्तर्पयत्यसौ। वसन्ते ग्रीष्मके चैव शतैः सन्तपति त्रिभिः। शरद्यपि च वर्षासु चतुर्भिः स प्रवर्षति। हेमन्ते शिशिरे चैव हिमसुत्सृजति त्रिभिः। वरुणो१ माघमासे तु सूर्यः पूषा२ तु फाल्गुने। चैत्रे३ मासि भवेदंशो धाता४ वैशाखतापनः। ज्यैष्ठमासे भवेदिन्द्र५ आषाढ़े सविता६ रविः। विव७स्वान् श्रावणे मासि प्रौष्ठपद्यां भगः८ स्मृतः। पर्जन्यो९ऽश्वयुजि त्वष्टा१० कार्त्तिके मासि भास्करः। मार्गशीर्षे भवेन्मित्रः११ पौषे विष्णुः सनातनः। पञ्चरश्मिसहस्राणि वरुणस्यार्ककर्मणि। षड्भिः सहस्रैः पूषा तु देवेशः सप्तभिस्तथा। धाता ष्टभिः सहस्रैस्तु नवभिस्तु शतक्रतुः। विवस्वान् दशभिः पाति पात्येकादशभिर्भगः। सप्तभिस्तपते मित्रस्त्वष्टा चैवाष्टभिस्तपेत्। अर्य्यमा दशभिः पाति पर्जन्यो नवभिस्तपेत्। षड्भीरश्मिसहस्रैस्तु विष्णुस्तपति विश्वधृक्। वसन्ते कपिलः सूर्य्यो ग्रीष्मे काञ्चनसंप्रभः। श्वेतो वर्षासु वर्णेन पाण्डुरः शरदि प्रभुः। हेमन्ते ताम्रवर्णः स्यात् शिशिरे लोहितो रविः। ओषधीषु बलं धत्ते स्वधामपि पितृष्वथ। सूर्य्योऽमरत्वममृतत्रयं त्रिषु नियच्छति। अन्ये चाष्टौ ग्रहाः ज्ञेयाः सूर्य्येणाधिष्ठिता द्विजाः!। चन्द्रमाः सोमपुत्रश्च शुक्रश्चैव बृहस्पतिः। भौमो भानुसुतो राहुः केतुमानपि चाष्टमः। सर्वे ध्रुवे निबद्धा वै ग्रहास्ते वातरश्मिभिः। भ्राम्यमाणा यथायोगं भ्रमन्त्यनुदिवाकरम्"।

**रस** स्वने भ्वा० प०अक०सेट्। रसति अरासीत् अरसीत्। ररास रेसतुः।

**रस** आस्वादे अ०चु० उ० सक० सेट्। रसयति ते अररसत् त

**रस** पु० रस्यते रस–अच्। आस्वादो रसनेन्द्रियग्राह्ये १मधुर्य्यादिगुणभेदे २देहस्थे भुक्तान्नादेः प्रथमपरिणामे ३सारे च "ओषधीनां रसः" इति ताण्ड्यब्रा० "रसः सारः" भा०। ४धातुभेदे पारदे ५माधुर्य्यादरसवति गुड़ादौ त्रि० ६पुष्पस्य मधुनि ७अलङ्कारोक्ते विभावानुभावसञ्चारिभावव्यङ्ग्ये रत्यादिस्थायिभावके शृङ्गारादौ। ८विषे ९वीर्य्ये १०रागे ११द्रवे अमरः १२जले च १३गन्धरसे पुंन० मेदि० १४अन्ने च निघण्टुः।

पारदशब्दे ४३११ पृष्ठादौ रसशोधनादि दृश्यम्।

देहस्थधातुहेतुरसस्वरूपादि भावप्र० उक्तं यथा "यस्माद्यो रसधातुर्यस्ततोऽभवदयं रसः। सद्रवं सकलं देहं रसतीति रसः स्मृतः।" अथ रसस्य स्वरूपमाह "सम्यक् पक्वस्य भुक्तस्य सारो निगदितो रसः। स तु द्रवः सितः शीतः स्वादुः स्निग्धश्चलो भवेत्। सारो यथा गुड़मधूकपुष्पगुड़त्वगवदरीमूलादिभवः सारो मदिरा। अथ रसस्य स्थानमाह "सर्वदेहचरस्यापि रसस्य हृदयं स्थलम्। समानमरुता पूर्वं सदयं हृदये धृतः।" अथ रसस्य कर्माण्याह "आरस्य धमनीर्गत्वा धातून् सर्वानयं रसः। पुष्णाति तदनु स्वीयैर्व्याप्नोति च तनुं गुणैः।" गुणैः शीतस्निग्धपोषकत्वगुणैः शीतस्निग्धपोषकत्वैः "मन्दवह्निविदग्धस्तु कटुर्वाम्लो भवेद्रसः। स कुर्य्याद्बहुजान् रोगान् विषत्वं करोत्यपि।" अलङ्कारशब्दे दृश्यम्।

अलङ्कारशास्त्रोक्तो रसो नवविधः। "शृङ्गारहास्यकरुणरौद्रवीरभयानकाः। बीभत्सोऽद्भुत इत्यष्टौ रसा शान्तस्तथा मतः।" सा० द० तल्लक्षणं तत्रैव यथा "विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा। रसतामेति रत्यादिः स्थायी भावः सचेतसाम्"। "विभावादयो वक्ष्यन्ते। सात्त्विकाश्चानुभावरूपत्वात् न पृथगुक्ताः। व्यक्तो दध्यादिन्यायेन रूपान्तरपरिणतः व्यक्तीकृत एव रसो न तु दीपेन घट इव पूर्वसिद्धो व्यज्यते। तदुक्तं लोचनकारैः "रसाः प्रतीयन्त इति त्वोदनं पचतीतिवद्व्यवहार इति"। अत्र च रत्यादिपदोपादानादेव प्राप्ते स्थायित्वे पुनः स्थायिपदोपादानं रत्यादीनामपि रसान्तरेष्वस्थायित्वप्रतिपादनार्थम्। ततश्च हासक्रोधादयः

शृङ्गारवीरादौ व्यभिचारिण एव । तदुक्तम् "रसावस्थः परं भावः स्थायितां प्रतिपद्यते" इति । अस्य स्वरूपकथनगर्भं आस्वादप्रकारः कथ्यते । "सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः । वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः । लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः । स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः । रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते" इत्युक्तप्रकारो बाह्यमेयविमुखतापादकः कश्चनान्तरो धर्मः सत्त्वं तस्योद्रेक- रजस्तमसी अभिभूयाविर्भावः । अत्र च हेतुस्तथाविधालौकिककाव्यार्थपरिशीलनम् । अखण्ड इत्येक एवायं विभावादिरत्यादिप्रकाशसुखचमत्कारात्मकः । अत्र हेतुं वक्ष्यामः । स्वप्रकाशत्वाद्यपि वक्ष्यमाणरीत्या । चिन्मय इति स्वरूपार्थे मयट् । चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्य्यायः । तत्प्राणत्वञ्चास्मद्वृद्धप्रपितामहसहृदयगोष्ठीगरिष्ठकविपण्डितमुख्यश्रीमन्नारायणपादैरुक्तं । तदाह धर्मदत्तः स्वग्रन्थे

"रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते । तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः । तस्मादद्भुतमेवाह कृती नारायणो रसमिति" । "कैश्चिदिति प्राक्तनपुण्यशालिभिः तदुक्तं "पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिमिति" यद्यपि "स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः" इत्युक्तदिशा रसस्यास्वादानतिरिक्तत्वमुक्तं तथापि "रसः स्वाद्यते" इति काल्पनिकं भेदमुररीकृत्य कर्मकर्त्तरि वा प्रयोगः । तदुक्तम् "रस्यमानतामात्रसारत्वात् प्रकाशशरीरादनन्य एव हि रसः" इति । एवमन्यत्राप्येवंविधस्थलेषूपचारेण प्रयोगा ज्ञेयाः । नन्वेतावता रसस्याज्ञेयत्वमुक्तं भवतीति व्यञ्जनायाश्च ज्ञानविशेषत्वाद् द्वयोरैक्यमापतितम् ततश्च "स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः । यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकात्" इत्युक्तदिशा घटप्रदीपवद् व्यङ्ग्यव्यञ्जकयोः पार्थक्यमेवेति कथं रसस्य व्यङ्ग्यतेति चेत् सत्यमुक्तम् अत एवाहुः "विलक्षण एवायं कृतिज्ञप्तिभेदेभ्यः स्वादनाख्यः कश्चिद्व्यापारः । अत एव हि रसनास्वादनचमत्करणादयो विलक्षणा एव व्यपदेशा इति अभिधादिविलक्षणव्यापारतायाः प्रसाधनपर्य्यैरस्माभी रसादीनां व्यङ्ग्यत्वमुक्तं भवतीति । ननु तर्हि करुणादीनां रसानां दुःखमयत्वाद्रसत्वं न स्यादित्युच्यते" "करुणादावपि रसे जायते यत् परं सुखम् । सचेतसामनुभवः प्रमाणं तत्र केवलम्" । आदिशब्दाद् बीभत्सभयानकादयः । तथाप्यसहृदयानां मुखमुद्रणाय पक्षान्तरमुच्यते । "किञ्च तेषु यदा दुःखं न कोऽपि स्यात्तदुन्मुखः" । न हि कश्चित् सचेता आत्मनो दुःखाय प्रवर्त्तते करुणादिषु च सकलस्यापि साभिनिवेशप्रवृत्तिदर्शनात् । अनुपपत्त्यन्तरमाह । "तथा रामायणादीनां भविता दुःखहेतुता" । "करुणरसस्य दुःखहेतुत्वात् करुणरसप्रधानरामायणादिप्रबन्धानामपि दुःखहेतुत्वप्रसङ्गः स्यात् । ननु कथं दुःखकारणेभ्यः सुखोत्पत्तिरित्याह "हेतुत्वं शोकहर्षादेर्गतेभ्यो लोकसंश्रयात् । शोकहर्षादयो लोके जायन्तां नाम लौकिकाः । अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात् । सुखं संजायते तेभ्यः सर्वेभ्योऽपीति का क्षतिः" । ये खलु रामवनवासादयो लोके दुःखकारणानि इत्युच्यन्ते त एव हि काव्यनाट्यसमर्पिता अलौकिकविभावनव्यापारवत्तया कारणशब्दवाच्यत्वं विहायालौकिकविभावशब्दवाच्यत्वं भजन्ते । तेभ्यश्च सुरते दन्तघातादिभ्य इव सुखमेव जायते । अतश्च लौकिकशोकहर्षादिकारणेभ्यो लौकिकशोकहर्षादयो जायन्ते इति लोक एव प्रतिनियमः । काव्ये पुनः सर्वेभ्योऽपि विभावादिभ्यः सुखमेव जायते इति नियमान्न कश्चिद्दोषः । कथं तर्हि हरिश्चन्द्रादिचरितस्य काव्यनाट्ययोरपि दर्शनश्रवणाभ्यामश्रुपातादयो जायन्त इत्युच्यते । "अश्रुपातादयस्तद्वद्द्रुतत्वाच्चेतसो मताः" । तर्हि कथं काव्यतः सर्वेषामीदृशी रसाभिव्यक्तिर्न जायत इत्याह "न जायते तदास्वादो विना रत्यादिवासनाम्" । वासना चेदानीन्तनी प्राक्तनी च रसास्वादहेतुः । तत्र यदि आद्या न स्याच्छ्रोत्रियजरन्मीमांसकादीनामपि सा स्यात् । यदि द्वितीया न स्याद् यद्रागिणामपि केषाञ्चिद्रसोद्बोधो न दृश्यते तन्न स्यात् । उक्तञ्च धर्मदत्तेन "सवासनानां सभ्यानां रसस्यास्वादनं भवेत् । निर्वासनास्तु रङ्गान्तःकाष्ठकुड्याश्मसन्निभाः" इति । ननु कथं रामादिरत्याद्युद्बोधकारणैः सीतादिभिः सामाजिकरत्याद्युद्बोध इत्युच्यते "व्यापारोऽस्ति विभावादेर्नाम्ना साधारणीकृतिः । तत्प्रभावेन यस्यासन् पाथोधिप्लवनादयः । प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते"। "ननु कथं मनुष्यमात्रस्य समुद्रलङ्घनादावुत्साहोद्बोध इत्युच्यते "उत्साहादिसमुद्बोधः साधारण्याभिमानतः ।

न्यामपि समुद्रादिलङ्घनादौ न दुष्यति"। रत्यादयोऽपि साधारण्येन प्रतीयन्त इत्याह साधारण्येन रत्यादिरपि तद्वत् प्रतीयते"। रत्यादेरपि ह्यात्मगतत्वेन प्रतीतौ सभ्यानां व्रीडातङ्कादिर्भवेत् परगतत्वेन त्वरस्तापात. विभावादयोऽपि प्रथमतः साधारण्येन प्रतीयन्त इत्याह "परस्य न परस्येति ममेति न ममेति च। तदास्वादे विभावादेः परिच्छेदो न विद्यते"। ननु तथापि कथमेवमलौकिकत्वमेतेषां विभावादीनामित्युच्यते "विभावनादिव्यापारमलौकिकमुपेयुषाम्। अलौकिकत्वमेतेषां भूषणं न तु दूषणम्"। आदिशब्दादनुभावनसञ्चारणे। तत्र विभावनं रत्यादेर्विशेषेणास्वादाङ्कुरणयोग्यतानयनम्। अनुभावनमेवम्भूतस्य रत्यादेः समनन्तरमेव रसादिरूपतया भावनम्। सञ्चारणं तथाभूतस्यैतस्य सम्यक्चारणम्। विभावादीनां यथासङ्ख्यं कारणकार्यसहकारित्वे कथं त्रयाणामपि रसोद्बोधे कारणत्वमित्युच्यते "कारणं कार्यसञ्चारिरूपा अपि हि लोकतः। रसोद्बोधे विभावाद्याः कारणान्येव ते मताः"। ननु तर्हि कथं रसास्वादे तेषामेकः प्रतिभास इत्युच्यते "प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते। ततः संवलितः सर्वो विभावादिः सचेतसाम्। प्रपानकरसन्यायाच्चर्व्यमाणो रसो भवेत्"। यथा खण्डमरिचादीनां संमेलनादपूर्व इव कश्चिदास्वादः प्रपानकरसे संजायते विभावादिसंमेलनादिहापि तथेत्यर्थः। ननु यदि विभावानुभावव्यभिचारिभिर्मिलितैरेव रसस्तत् कथं एकस्य द्वयोर्वा सद्भावेऽपि स स्यादित्युच्यते "सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत्। झटित्यन्यसमाक्षेपे तदा दोषो न विद्यते"। अन्यसमाक्षेपश्च प्रकरणादिवशात्। यथा "दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः संक्षिप्तं निविडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव। मध्यः पाणिमितो नितम्बि जघनं पादावुदग्राङ्गुली छन्दो नर्त्तयितुर्यथैव मनसः सृष्टं तथास्या वपुः"। "अत्र मालविकामभिलषतोऽग्निमित्रस्य मालविकारूपविभावमात्रवर्णने सञ्चारिणामौत्सुक्यादीनामनुभावानाञ्च नयनविस्तारादीनामौचित्यादेवाक्षेपः। एवमन्याक्षेपेऽप्यूह्यम्। "अनुकार्यगतो रसः" इति वदतः प्रत्याह "पारिमित्याल्लौकिकत्वात् सान्तरायतया तथा। अनुकार्यस्य रत्यादेरुद्बोधो न रसो भवेत्"। सीतादिदर्शनादिजो रामादिरत्याद्युद्बोधो हि परिमितो लौकिको, नाट्यकाव्यदर्शनादेः

सान्तरायश्च। तस्मात् कथं रसरूपतामियात्। रसस्यैतद्धर्मत्रितयविलक्षणधर्मकत्वात्। अनुकर्त्तृगतत्वञ्चास्य निरस्यति "शिक्षाभ्यासादिमात्रेण राघवादेः स्वरूपतम्। दर्शयन् नर्त्तको नैव रसस्यास्वादको भवेत्"। किञ्च काव्यार्थभावने नायमपि सभ्यपदास्पदम्। यदि पुनर्नटोऽपि काव्यार्थभावनया रामादिरूपतामात्मनो दर्शयेत् तदा सोऽपि सभ्यमध्य एव गण्यते"।

द्रव्यगतमधुरादिरसकारणादिकं सुश्रुते उक्तं यथा "अथातो रसविशेषविज्ञानीयमध्यायं व्याख्यास्यामः। आकाशपवनदहनतोयभूमिषु यथासङ्ख्यमेकोत्तरपरिवृद्धाः शब्दस्पर्शरूपरसगन्धाः। तस्मादाप्यो रसः परस्परसंसर्गात् परस्परानुग्रहात् परस्परानुप्रवेशाच्च सर्वेषु सर्वेषां सान्निध्यमस्त्युत्कर्षापकर्षात्तु ग्रहणम्। स खल्वाप्यो रसः शेषभूतसंसर्गाद्विदग्धः षोढा विभज्यते। तद्यथा मधुरोऽम्लो लवणः कटुकस्तिक्तः कषाय इति। ते च भूयःपरस्परसंसर्गात् त्रिषष्टिधा भिद्यन्ते। तत्र भूम्यम्बुगुणबाहुल्यान्मधुरः१। भूम्यग्निगुणबाहुल्यादम्लः२। तोयाग्निगुणबाहुल्याल्लवणः३ वाय्वग्निगुणबाहुल्यात् कटुकः४। वाय्वाकाशगुणबाहुल्यात्तिक्तः५। पृथिव्यनिलगुणबाहुल्यात् कषायः६इति। तत्र मधुराम्ललवणा वातघ्नाः। मधुरतिक्तकषायाः पित्तघ्नाः। कटुतिक्तकषायाः श्लेष्मघ्नाः तत्र वायुरात्मनैवात्मा पित्तमाग्नेयं श्लेष्मा सौम्य इति। त एव रसाः स्वयोनिवर्द्धना अन्ययोनिप्रशमनाश्च"।

**रसकर्पूर** न॰ रसेन कर्पूरमिव। (रसकपुर) कर्पूररसे तत्पाकादिशुया भावप्र॰ उक्ताः कर्पूररसशब्दे १७४३पृ॰ दृश्याः। [शब्दार्थ॰।

**रसकेसर** न॰रसेन केशरमिव नामकेशरसुगन्धित्वात्। कर्पूरे

**रसगन्ध** पुंन॰ रसे गन्धोऽस्य। १बोले गन्धरसे त्रिका॰। कप तत्रार्थे शब्दच॰ २गन्धके च राजनि॰।

**रसगर्भ** न॰ रसो गर्भे यस्य। पित्तलधातुद्रवजे १रसाञ्जने अमरः। २हिङ्गुले च राजनि॰। [राजनि॰।

**रसघ्न** पु॰ रसं पारदं हन्ति हन-टक्। टङ्कणे (सोहागा)

**रसज** न॰ रसात् भुक्तान्नसारात् प्रथमधातोर्जायते जन-ड। १रुधिरे शब्दच॰ असृक्करशब्दे दृश्यम्। रसात् इक्षुप्रभृतेः द्रवात् जायते जन-ड। २गुडे पु॰ राजनि॰। ३मद्यकीटे च पु॰ हेमच॰। २रसभवादयोऽप्यत्र।

**रसज्ञा** स्त्री रसं जानाति अनया ज्ञा-करणे घञर्थे क।

१जिह्वायाम् रसज्ञानसाधने जिह्वाख्यस्येन्द्रिये अमरः स्त्री—क । रसज्ञातरि त्रि०।

**रसज्येष्ठ** पु० रसेषु ज्येष्ठः श्रेष्ठः। १मधुररसे हेमच० २शृङ्गाररसे च। [हेमच०।

**रसतेजस्** न० रसस्य भुक्तान्नसारस्य तेजः सारः। रुधिरे

**रसदालिका** स्त्री रसार्थं दल्यते दल-कर्मणि घञ् गौरा० ङीष् स्वार्थे क ह्रस्वः। पुण्ड्रेक्षौ (पुंडि आख) राजनि०।

**रसधातु** पु० रसाख्यो द्रवरूपो वा धातुः। पारदे राजनि०

**रसधेनु** स्त्री दानार्थं कल्पितायाम् इक्षुरसनिर्मितायां धेनौ धेनुशब्दे ३६०६ पृ० दृश्यम्।

**रसन** न०रस-ल्युट्।१स्वादे २ध्वनौ च करणे ल्युट्। जिह्वायां च मेदि० "पिस्तेन दूने रसने सितापि" नैषधम्।

**रसना** स्त्री रस्यतेऽनया रस—करणे ल्युट् अजा० टाप्। १जिह्वायाम् अमरः। २रास्नायां मेदि०। ३काञ्च्यां हेमच०। ४रज्जौ च। [जिह्वायाम् हेमच०।

**रसनेत्रिका** स्त्री रसो नेत्रमिव अस्त्यस्याः ठन्। मनः-

**रसपाकज** पु० रसपाकेन जायते जन—ड।१गुडे राजनि० २रुधिरधातौ च मधुरादिरसवदे दृश्यम्।

**रसफल** पु० रसो जलं फले यस्याः। नारिकेलवृक्षे शब्दर०।

**रसमाणिक्य** न० रसेन पारदेन माणिक्यमिव तत् पाकजत्वात्। स्वनामख्याते पदार्थे।

**रसराज** पु० रसेषु रसो वा राजेव श्रेष्ठत्वात् रसः द्रुव इव राजते वा। १पारदे रसनाथादयोऽप्यत्र। २रसाञ्जने च राजनि०। [मत्व वः ङीप्। पाकस्थाने अमरः।

**रसवती** स्त्री रस आस्वाद्यद्रव्यमन्नादि अस्त्यस्याम् मतुप

**रसशोधन** न० रसं पारदं द्रवीभूतं द्रव्यं स्वर्णादि वा शोधयति शुध—णिच्—ल्यु। १टङ्कणे (सोहागा) हेमच० द्वित०। २पारदशोधने च।

**रसस्थान** न० रसस्य पारदस्य स्थानम्। हिङ्गुले शब्दच०।

**रससिन्दूर** न० रसजातं सिन्दूरम्। पारदजाते सिन्दूरभेदे तत्पाकविधिः भावप्र० उक्तो यथा

"शुद्धसूतस्य भल्लीयादू त्रिगुणभागचतुष्टयम्। शुद्धगन्धस्य भागैकं तावत् कल्पितगन्धकम्। अथ वा पारदाख्यार्द्धं शुद्धगन्धकमेव हि। तयोः कज्जलिकां कुर्याद्दिनमेकं विमर्दयेत्। मृत्तिकां वाससा सार्द्धं लुडयेदतियत्नतः। तथा वारत्रयं सम्यक् काचकूपीं प्रलेपयेत्। मृत्तिकां शोषयित्वा तु कूप्यां कज्जलिकां क्षिपेत्। तां कूपीं वालुकायन्त्रे स्थापयित्वा रसं पचेत्। अग्निं निरन्तरं दद्यात् यावद्दिनचतुष्टयम्। भल्लीयादूर्ध्वसंलग्नं सिन्दूरसदृशं रसम्"।

**रसा** स्त्री पाकजः रसो माधुर्यादिरूपोऽस्त्यस्याः अच्। पृथिव्याम् अमरः। [रसाञ्जने राजनि०।

**रसाग्रज** न० रसस्य पित्तलधातुद्रवस्याग्रात् जायते जन-ड।

**रसाञ्जन** न० रसजातं पित्तलधातुजमञ्जनम्। स्वनामख्याते "रीत्यान्तु ध्मायमानायां तत्किट्टन्तु रसाञ्जनम्। तदभावे तु कर्त्तव्यं दार्वीक्वाथसमुद्भवम्" इत्युक्ते १पदार्थे राजनि० तद्विधिश्च भावप्र० उक्तो यथा

"दार्वीक्वाथसमं क्षीरं पादं पक्त्वा यथा घनम्। तदा रसाञ्जनाख्यं तन्नेत्रयोः परमं हितम्। रसाञ्जनं कटु श्लेष्मविषनेत्रविकारहृत्। उष्णं रसायनं तिक्तं छेदनं व्रणदोषहृत्"।

**रसाढ्य** पु० रसेन मधुररसेनाढ्यः। १आम्रातके राजनि०। २रसवति त्रि०। [भागे अमरः।

**रसातल** न० रसायास्तलम्। पातालभेदे सप्तमे भूमेरधो-

**रसाधिक** पु० रसाय द्रवाय स्वर्णादिद्रावणाय अधिकः आदीयमानत्वात्। १टङ्कणे रसेनाधिका। २काकोडुम्बरिकायां स्त्री राजनि०। ३रसेनाधिके त्रि०। [रसे

**रसान्तर** न० अन्यो रसः मयूर० नि०। प्रकृतरसादन्यस्मिन्

**रसाभास** पु० रस इव आभासते आ+भास—अच्। "अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः" सा० द० उक्ते पश्वादिपरनायकादिगतशृङ्गारादौ रसे।

"अनौचित्यञ्चात्र रसानां भरतादिप्रणीतलक्षणानां सामग्रीरहितत्वे सत्येकदेशयोगित्वोपलक्षणपरं बोध्यं तच्च बालव्युत्पत्तये एकदेशतो दर्श्यते। "उपनायकसंस्थायां मुनिगुरुपत्नीगतायाञ्च। बहुनायकविषयायां रतौ तथाऽनुभयनिष्ठायाम्। प्रतिनायकनिष्ठत्वे तद्वदधमपात्रतिर्यगादिगते। शृङ्गारेऽनौचित्यं रौद्रे गुर्वादिगतकोपे शान्ते च हीननिष्ठे गुर्वाद्यालम्बने हास्ये। ब्रह्मवधाद्युत्साहेऽधमपात्रगते तथा वीरे। उत्तमपात्रगतत्वे भयानके ज्ञेयमेवमन्यत्र"। [(सुकपालक)।

**रसाम्ल** न०रसेनाम्लम्।१वृक्षाम्ले राजनि०।२चुक्रे च भावप्र०

**रसायन** न० रसस्यायनमिव। १तक्रे हेमच० २कटाम् राजनि० ३विषभेदे वैद्यकप्रसिद्धे ४औषधभेदे च ५गरुडे ६विडङ्गे च पु० मेदि०। द्वित०। ७रसस्थाने च। औषधभेदलक्षणादि भावप्र० उक्तं यथा

"यज्जराव्याधिविध्वंसि वयसःस्तम्भकन्तथा। चाक्षुष्यं बृंहणं वृष्यं भेषजं तद्रसायनम्"। रसायनस्य फलमाह "दीर्घमायुः स्मृतिर्मेधामारोग्यं तरुणं वयः। देहेन्द्रियबलं कान्तिं नरो विन्देद्रसायनात्"। तद्विधिमाह "पूर्वे वयसि मध्ये वा मनुष्यस्य रसायनम्। प्रयुञ्जीत भिषक् प्राज्ञः स्निग्धशुद्धतनोः सदा। नाविशुद्धशरीरस्य युक्तो रसायनो विधिः। न भाति वाससि क्लिष्टे रङ्गयोग इवाहितः"। "शीतोदकं पयः क्षौद्रं घृतमेकैकशो द्विशः। त्रिशः समस्तमथ वा प्राक् पीतं स्थापयेद्वयः। मण्डूकपर्ण्याः स्वरसः प्रभाते प्रयोज्य यष्टीमधुकस्य चूर्णम्। रसो गुडूच्यास्तु समूलपुष्प्याः कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः। आयुःप्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्द्धनानि। मेध्यानि चैतानि रसायनानि मेध्या विशेषेण च शङ्खपुष्पी"। मण्डूकपर्णी ब्राह्मी। (बरमी) इति लोके, तदलाभे मञ्जिष्ठापि ग्राह्या तस्या अपि रसायनत्वात्। "माक्षिकेण तुगाक्षीर्या पिप्पल्या लवणेन च। त्रिफला सितया वापि युक्ता सिद्ध रसायनम्। सिन्धूत्थं शर्करा शुण्ठी कणामधुगुडैः क्रमात्। वर्षादिष्वभया प्राश्या रसायनगुणैषिणा। पुनर्नवस्यार्द्धपलं नवस्य पिष्टं पिबेद् यः पयसार्द्धमासम्। मासद्वयं तत्त्रिगुणं समां वा जीर्णोऽपि भूयः स पुनर्नवः स्यात्। ये मासमेकं स्वरसं पिबन्ति दिने दिने भृङ्गरजः समुत्थम्। क्षीराशिनस्ते बलवीर्ययुक्ताः समाशतं जीवनमाप्नुवन्ति। शतावरी मुण्डितिका गुडूची सहस्तिकर्णी सह तालमूली। एतानि कृत्वा समभागयुक्ताऽन्याज्येन किं वा मधुनाऽवलिह्यात्। जरारुजामृत्युविमुक्तदेही भवेन्नरो वीर्यबलादियुक्तः। विभाति देवप्रतिमः स नित्यं प्रभामयो भूरिविशुद्धबुद्धिः। पीताश्वगन्धा पयसार्द्धमासं घृतेन तैलेन सुखाम्बुना वा। वीर्यस्य पुष्टिं वपुषो विधत्ते बालस्य शस्यस्य यथाम्बुवृष्टिः। अयःपलं गुग्गुलुरत्र योज्यः पलत्रयं व्योषपलानि पञ्च। पलानि चाष्टौ त्रिफलारजश्च कर्षं लिहन् यात्यमरत्वमेव। न केवलं दीर्घमिहायुरश्नुते रसायनं योविविधं निषेवते। गतिं स देवर्षिनिषेवितां शुभां प्रपद्यते ब्रह्म तथैव चाक्षयम्"।

**रसायनफला** स्त्री रसायनमौषधविशेष इव फलं व्याधिघातकत्वात् यस्याः। हरितक्याम् त्रिका०।

**रसायनश्रेष्ठ** पु० रसायनेषु औषधभेदेषु श्रेष्ठः। पारदे राजनि०।

**रसायनी** स्त्री रसायनं रसस्थानमस्त्यस्या अच् गौ० ङीष्। १गुडूच्याम् २काकमाच्यां ३महाकरञ्जे ४गोरक्षदुग्धायाम् ५मांसच्छदायाञ्च राजनि०।

**रसाल** न० रसमाळाति आ+ला—क इत०। १सिह्लके २गन्धरसे मेदि०। ३शिखरिण्याम् (पेयभेदे) तत्पाकविधिः शताव्यशब्दे २१८४ पृ० भाविप्र० उक्तो दृश्यः। ४रसनायां ५दूर्वायां ६विदार्य्यां ७द्राक्षायाञ्च स्त्री मेदि०। ८आम्रे "रसालः सालः समदृश्यताऽमुना" नैषधम्। ९इक्षौ अमरः। १०पनसे शब्दर०। ११गोधूमे १२पुण्ड्रकेक्षौ च पु० राजनि०।

**रसालिहा** स्त्री रसां भूमिं लेढि स्पृशति लिह—क (चाकुलिया) क्षुपभेदे शब्दच०। (आख) इक्षुभेदे राजनि०।

**रसाली** स्त्री रसमाळाति आ+ला—क गौरा० ङीष्। (पुण्ड्र-

**रसाश्वासा** स्त्री रसां भूमिमाश्वासयति दलैः आ+श्वस-णिच् अण्। पलाशीलतायाम् राजनि०।

**रसास्वादिन्** पु० रसं पुष्परसमास्वदते आ+स्वद—णिनि। १भ्रमरे शब्दमा०। २मधुरशृङ्गारादिरसास्वादके त्रि० स्त्रियां ङीप्।

**रसिक** पुंस्त्री० रसं वेत्ति अनुभवति ठन्। १सारसपक्षिणि राजनि० २अश्वे ३गजे सारस्वतः। स्त्रियां जातित्वात् ङीष्। ४रसज्ञे त्रि०। रसोऽस्त्यस्य ठन्। ५रसवति च त्रि० मेदि०। ६रसालायाम् ७इक्षुरसे च स्त्री मेदि० ८काञ्च्यां ९रसनायां स्त्री विश्वः।

**रसित** न० चु० रस—भावे क्त। १मेघादिशब्दे २विहगादिशब्दे च अमरः। कर्त्तरि क्त। ३शब्दवति कर्मणि-क्त ४आस्वादिते च त्रि०। [तत्रैव स्वार्थे क। तत्रार्थे।

**रसुन** पु० रस—उनन्। लशुने शब्दच०। शोनन् रसोन

**रसेन्द्र** पु० रस इन्द्र इव। पारदे राजनि०।

**रसेश्वर** पु० रसः पारद ईश्वर इव तद्देहरसजातत्वात्। १ईश्वरतुल्ये रसे। तत्त्वज्ञानार्थं देहस्थैर्य्यसम्पादनद्वारा मुक्तिहेतुत्वमस्य माहेश्वरभेदाः प्रतिपेदिरे तन्मतञ्च सर्वदर्शनसंग्रहे प्रदर्शितं यथा

"अपरे माहेश्वराः परमेश्वरतादात्म्यवादिनोऽपि पिण्डस्थैर्य्ये सर्वाभिमता जीवन्मुक्तिः सेत्स्यतीत्याश्रित्य पिण्डस्थैर्य्योपायं पारदादिपदवेदनीयं रसमेव सङ्गिरन्ते रसस्य पारदत्वं संसारपरपारप्रापणहेतुत्वेन तदुक्तम्

इतःपरः ग्रन्थः पारदशब्दे ४११२ पृष्ठे प्रदर्शितः।

"प्रकारान्तरेणापि जीवन्मुक्तौ नेयं वाचोयुक्ति-र्युक्तिमतीति चेन्न षट्स्वपि दर्शनेषु देहपातानन्तरं मुक्तेरुक्ततया तत्र विश्वासानुपपत्त्या निर्विचिकित्स-प्रवृत्तेरनुपपत्तेः। तदप्युक्तं तत्रैव "षड्दर्शनेऽपि मुक्तिस्तु दर्शिता पिण्डपातने। करामलकवत्सापि प्रत्यक्षा नोपलभ्यते। तस्मात्तं रक्षयेत् पिण्डं रसैश्चैव रसा-यनैरिति"। गोविन्दभगवत्पादाचार्य्यैरपि "इति धन-शरीरभोगान्मत्वाऽनित्यान् सदैव यतनीयम्। मुक्तौ सा च ज्ञानात् तच्चाभ्यासात् स च स्थिरे देहे"इत्युक्तम्। ननु विनश्वरतया दृश्यमानस्य देहस्य कथं नित्यत्वमवसीयते इति चेन्मैवं मंस्थाः,षाट्कौशिकस्य शरीरस्यानित्यत्वेऽपि रसाभ्रकपदाभिधेयहरगौरीसृष्टिजातस्य नित्यत्वोपपत्तेः तथाच रसहृदये "ये चात्यक्तशरीरा हरगौरीसृष्टि-जान्तरं प्राप्ताः। वन्द्यास्ते रससिद्धा मन्त्रगणः किङ्करो येषामिति"। तस्माज्जीवन्मुक्तिं समीहमानेन योगिना प्रथमं दिव्यतनुर्विधेया। हरगौरीसृष्टिसंयोगजनितत्वञ्च रसस्य हरजत्वेनाभ्रकस्य गौरीसम्भवत्वेन तत्तदात्म-कत्वमुक्तम् "अभ्रकस्तव बीजन्तु मम बीजन्तु पारदः। अनयोर्मेलनं देवि! मृत्युदारिद्र्यनाशनमिति"। अत्यल्प-मिदमुच्यते देवदैत्यमुनिमानवादिषु बहवो रससामर्थ्याद्दिव्यं देहमाश्रित्य जीवन्मुक्तिमाश्रिताः श्रूयन्ते रसेश्वरसि-द्धान्ते "देवाः केचिन्महेशाद्या दैत्याः काव्यपुरःसराः। मुनयो बालखिल्याद्या नृपाः सोमेश्वरादयः। गोविन्द-भगवत्पादाचार्य्यो गोविन्दनायकः। चर्वटिः कपिलो व्यालिः कापालिः कन्दलायनः। एतेऽन्ये बहवः सिद्धा जीवन्मुक्ताश्चरन्ति हि। तनुं रसमयीं प्राप्य तदात्मक-कथाचणाः" इति। अयमेवास्यार्थः परमेश्वरेण परमेश्वरीं प्रति प्रपञ्चितः"।

इतःपरो ग्रन्थः पारदशब्दे ४११२ पृ० दर्शितः।

तत्प्रपञ्चस्तु गोविन्दभगवत्पादाचार्य्यसर्वज्ञरामेश्वरभट्टा-रकप्रभृतिभिः प्राचीनैराचार्य्यैर्निरूपित इति ग्रन्थ-भूयस्त्वभयादुदास्यते। न च रसशास्त्रं धातुवादार्थ-मेवेति मन्तव्यं देहवेधद्वारा मुक्तेरेव परमप्रयोजनत्वात् तदुक्तं रसार्णवे "लोहवेधस्त्वया देव! यद्दत्तं परमो-षितः।। तं देहवेधमाचक्ष्व येन स्यात् खेचरी गतिः। यथा लोहे तथा देहे कर्त्तव्यः सूतकः सता। समानं कुरुते देवि! प्रत्ययं देहलोहयोः। पूर्वं लोहे परी-क्षेत पश्चाद्देहे प्रयोजयेत्"इति। ननु सच्चिदानन्दात्मक-परतत्त्वस्फुरणादेव मुक्तिसिद्धौ किमनेन दिव्यदेहसम्पा-दनप्रयासेनेति चेत्तदेतदवार्त्तं वार्त्तं शरीरालाभे तद्वा-र्त्ताया अयोगात्। तदुक्तं रसहृदये "गलितानल्पवि-कल्पः सर्वाध्वविवर्जितश्चिदानन्दः। स्फुरितोऽप्यस्फुरित-तनोः करोति किं जन्तुवर्गस्येति। यं जरया जर्जरितं कासश्वासादिदुःखविशदञ्च। योग्यं तं न समाधौ प्रतिहतबुद्धीन्द्रियप्रसरम्। बालः षोडशवर्षो विषय-रसास्वादलम्पटः परतः। यातविवेको वृद्धो मर्त्यः कथमाप्नुयान्मुक्तिमिति"। ननु जीवत्वं नाम संसारित्वं तद्विपरीतत्वं मुक्तत्वं तथाच परस्परविरुद्धयोः कथ-मेकायतनत्वमुपपन्नं स्यादिति चेत्तदनुपपन्नं विकल्पानुप-पत्तेः मुक्तिस्तावत् सर्वतीर्थकरसम्मता सा किं ज्ञेयपदे निविशते न वा चरमे शशविषाणकल्पा स्यात् प्रथमे न जीवनं वर्जनीयमजीवतो ज्ञातृत्वानुपपत्तेः। तदुक्तं रसेश्वरसिद्धान्ते "रसाङ्कमेवमार्गोक्तं जीवमोक्षोऽस्त्यघो-मनाः। प्रमाणान्तरवादेषु युक्तिभेदावलम्बिषु। ज्ञान-ज्ञेयमिदं विद्धि सर्वतन्त्रेषु सम्मतम्। नाजीवन् ज्ञा-स्यति ज्ञेयं यदतोऽस्त्येव जीवनम्" इति। न चेदमदृष्ट-चरमिति मन्तव्यं विष्णुस्वामिमतानुसारिभिः नृपञ्चास्य-शरीरस्य नित्यत्वोपपादनात्। तदुक्तम् साकारसिद्धौ "सच्चिन्नित्यनिजाचिन्त्यपूर्णानन्दैकविग्रहम्। नृपञ्चास्य-महं वन्दे श्रीविष्णुस्वामिसम्मतम्" इति। नन्वेतत् सावयवं रूपवदवभासमानं नृकण्ठीरवाङ्गं सदिति क-थमुच्यत इत्यादिनाक्षेपपुरःसरं सनकादिप्रत्यक्षेण"सहस्र-शीर्षा पुरुषः" इत्यादिश्रुत्या "तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधम्" इत्यादिपुराणवचनेन प्र-माणत्रयेण सिद्धं नृपञ्चाननाङ्गं कथमसत् स्यादिति। सदादीनि विशेषणानि गर्भश्रीकान्तमिश्रैः विष्णुस्वामि-चरणपरिणतान्तःकरणैः प्रतिपादितानि। तस्मादस्म-दिष्टदेहनित्यत्वमत्यन्तादृष्टं न भवतीति पुरुषार्थकाङ्क्षिभिः पुरुषैरेष्टव्यम्। अत एवोक्तम् "आयतनं विद्यानां मूलं धर्मार्थकाममोक्षाणाम्। श्रेयः परं किमन्य-च्छरीरमजरामरं विहायैकमिति"। अजरामरीकरण-समर्थश्च रसेन्द्र एव तदाह "एकोऽसौ रसराजः शरीर-मजरामरं कुरुते" इति। किं वर्ण्यते रसस्य माहात्म्यं यस्य दर्शनस्पर्शनादिनापि महत् फलं भवति। तदुक्तं रसा-र्णवे"दर्शनात् स्पर्शनात्तस्य भक्षणात् स्मरणादपि। पूजना-

रसदानाच दृश्यते बहुविधं फलम्। केदारादीनि लिङ्गानि पृथिव्यां यानि कानिचित्। तानि दृष्ट्वा तु यत्पुण्यं तत् पुण्यं रसदर्शनादित्यादिना"। अन्यत्रापि "काश्यादिसर्वलिङ्गेभ्यो रसलिङ्गार्चनं शिवम्। प्राप्यते येन तल्लिङ्गं भोगारोग्यामृतात्मकम्" इति। रसनिन्दायाः प्रत्यवायोऽपि दर्शितः "प्रमादाद्रसनिन्दायाः श्रुतायेनं स्मरेत् सुधीः। द्राक् त्यजेन्निन्दकं नित्यं निन्दया पूरिताशुभम्" इति। तस्मादुक्तया रीत्या दिव्यं देहं सम्पाद्य योगाभ्यासवशात् परतत्त्वे दृष्टे पुरुषार्थप्राप्तिर्भवति। तदा "भ्रूयुगमध्यगतं यत् शिखिविद्युत्सूर्यवज्जगद्भासि। केषाञ्चित् पुण्यदृशामुन्मीलति चिन्मयं ज्योतिः। परमानन्दैकरसं परमं ज्योतिःस्वभावमविकल्पम्। विगलितसकलक्लेशं ज्ञेयं शान्तं स्वसंवेद्यम्। तस्मिन्नाधाय मनः स्फुरदखिलं चिन्मयं जगत् पश्यन्। उत्सन्नकर्मबन्धो ब्रह्मत्वमिहैव चाप्नोतीति"। श्रुतिश्च "रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवतीति"। तदित्थं भवे नान्योदुःखपरतरणोपायो रस एवेति सिद्धम्। तथाच रसस्य परब्रह्मणा साम्यमिति प्रतिपादकः श्लोकः "यः स्यात् प्रावरणाविमोचनधियां साध्यः प्रयत्नात् पुनः सम्पन्नो वहते न दीव्यति परं वैश्वानरे जायति। जातो यत्परं न वेदयति च स्वस्मात् स्वयं द्योतते यो ब्रह्मैव स दैन्यसंसृतिभयात् पायादसौ पारदः" इति।

**रसोत्तम** पु० रस उत्तमो यस्य। मुद्गे राजनि०।

**रसोद्भव** न० रसः पारद उद्भवत्वस्मात् उद्+भू–अप् उद्भवो यस्य। १हिङ्गुले राजनि०। ५त०। २रसजाते त्रि०।

**रसोपल** न० रसः पारद इव उपलीयते शुभ्रत्वात् उप+ली–ड। मौक्तिके त्रिका०।

**रस्न** न० रस न। द्रव्ये उज्ज्वलद०।

**रस्य** न० रसाद्भुक्तान्नपरिणामादागतः यत्। १रुधिरे शब्दच० रस्यते आस्वाद्यते रस–यत्। २आस्वाद्ये त्रि०। रस्याः, "स्निग्धाः स्थिरा हृद्याः" गीता। ३पाठायां ४रास्नायाञ्च स्त्री राजनि०।

**रह** गतौ भ्वा० पर० सक० सेट् इदित्। रंहति अरंहीत् "तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः" शारीरकसूत्रम्

**रह** त्यागे भ्वा० प० सक० सेट्। रहति अरहीत्।

**रह** त्यागे अद० चु० उभ०सक०सेट्। रहयति ते अररहत्-त

**रहस्** न० रह–असुन्। १निर्जने अमरः। २गोप्ये ३स्वाय्यें ४रमणे च मेदि०। ५निर्जने अव्य० अमरः। रहन्तो ऽस्मिन् रह–असुन् मस्य रः। ६विश्वासयोग्यदेशे उज्ज्वलद०।

**रहस्य** त्रि० रहसि भवः यत्। १गोप्ये "रहस्यमस्याः स महद्दिति" नैषधम्। २निर्जनभवे च ३पाठायां ४रास्नायाञ्च स्त्री राजनि० टाप् ५नदीभेदे स्त्री मेदि०।

**रहित** त्रि० रह–त्यागे कर्मणि क्त। वर्जिते।

**रा** दाने यत्ने च अदा०पर०सक०अनिट्। राति अरासीत्।

**रा** स्त्री रा–सम्प० भावे क्विप्। १विभवे २दाने एकाक्षरकोषः। कर्मणि क्विप्। ३स्वर्णे शब्दर०।

**राका** स्त्री रा–क तस्य नेत्त्वम्। १प्रतिपद्युक्तायां पूर्णमास्यां सम्पूर्णेन्दुतिथौ २नदीभेदे ३नवजातरजस्कायां नार्यां ४कच्छुरोगे च मेदि०। ५आङ्गिरसः कन्याभेदे कुहूशब्दे २१६२ पृ० दृश्यम्।

**राक्षस** पु० रक्ष एव स्वार्थे अण्। "क्वचित् स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते" इति भाष्योक्तेः पुंस्त्वम्। स्वनामख्याते निकषात्मजे १जातिभेदे अमरः जातौ ङीष्। २राक्षसजातिस्त्रियाम् स्त्री। रक्षस इदम् अण्। ३राक्षससम्बन्धिनि त्रि०स्त्रियां ङीप्। "राक्षसी रात्रिरन्यत्र" त्रि०त०। ४दंष्ट्रायां हेमच० ५चण्डिकायां ६चोरनामगन्धद्रव्ये च स्त्री मेदि० ङीप्।

**राक्षसेन्द्र** पु०राक्षस इन्द्र इव श्रेष्ठत्वात्। विश्रवसः ज्येष्ठपुत्रे निकषात्मजे रावणे त्रिका०।

**राक्षा** स्त्री रक्ष्यतेऽनया रक्ष–कर्मणि–घञ् पृषो० इत्त्वम्। लाक्षायाम् अमरः।

**राख** शोषणे भूषणे निवारणे च सक० सामर्थ्ये अक० भ्वा० पर० सेट्। राखति अराखीत्। ऋदित् चङि न ह्रस्वः।

**राग** पु० रञ्ज–भावे घञ् नि० नलोपकुत्वे। १रञ्जने २कुङ्कुमादिवर्णे ३प्रीतौ ४अनुरागे ५क्लेशे ६मालवादिनामभिः प्रसिद्धे निषादादिस्वरयोनिके स्वरभेदे मेदि० ७चन्द्रे ८नृपे च शब्दर०। करणे घञ्। ९लोहितवर्णे १०तद्विशिष्टलाक्षादौ च "तेन रक्तं रागात्" पा० अनुरागलक्षणम् उज्ज्वलमणिनोक्तं यथा "सुखमप्यधिकं चित्ते सुखत्वेनैव रज्यते। यतस्तु प्रणयोत्कर्षात् स राग इति कथ्यते"। स्वरभेदनिरुक्तिर्यथा "यैस्तु चेतांसि रज्यन्ते जगत्त्रितयवर्त्तिनाम्। ते रागा इति कथ्यन्ते मुनिभिर्भरतादिभिः" तेषां भेदाः संगीतदा० मतभेदे नाना तत्र प्रसिद्धाः षड्भेदा यथा

"आदौ मालवरागेन्द्रस्ततो मल्लारसंज्ञितः। श्रीरागश्च ततः पश्चात् वसन्तस्तदनन्तरम्। हिन्दोलश्चाथ कर्णाट एते रागाः षडेव तु" सङ्गीतदा०। भरतमते तु "भैरवः कौशिकश्चैव हिन्दोलो दीपकस्तथा। श्रीरागो मेघरागश्च रागाः षडिति कीर्त्तिताः"।

**रागचूर्ण** पु० रागस्य रतेश्चूर्ण इव। १कामे। रागाय चूर्ण्यते-ऽसौ चूर्ण-घञ्। २खदिरे च मेदि०। ३लाक्षायां राजनि० ४रागयुक्तचूर्णे पु० (फाग) शब्द्य०।

**रागदालि** पु० दल्यतेऽसौ दल-णिच्-इन् पृषो० हृद्धिः रागेण रक्ततया युक्तो दालिर्वा। मसूरे राजनि०।

**रागपुष्प** पु० रागयुक्तं रक्तवर्णं पुष्पमस्य। १बन्धूके २रक्ताम्लाने च ३जवायां स्त्री राजनि० ङीप्।

**रागप्रसव** पु० रागयुक्तो रक्तवर्णः प्रसवोऽस्य। १बन्धूके २रक्ताम्लाने च राजनि०।

**रागयुज्** पु० रागेण रक्तवर्णेन युज्यते युज-कर्मणि क्विप्। १माणिक्ये राजनि० २रक्तवर्णयुक्ते त्रि०।

**रागसूत्र** न० रागयुक्तं सूत्रम्। पट्टसूत्रे ३तुलासूत्रे च मेदि०। [राजनि० ३त०। रागाख्यफल स्त्री।

**रागाङ्गी** स्त्री रागयुक्तमङ्गं यस्याः ङीप्। मञ्जिष्ठायाम्

**रागिणी** स्त्री रागोऽस्त्यस्याः इनि। १गौतक्रे खरभेदे रागपत्न्यां सङ्गीतदा०। २विदग्धनार्यां जटा०। ३मेनकाकन्यायां रागवति ४अनुरक्ते ५कामुके त्रि० विश्वः रञ्ज-घिणुन्। ६रतियुक्ते च त्रि०। ६देवधान्यभेदे मेदि०। एकैकरागे षट् रागिण्य इति षट्सु रागेषु रागिणीभेदाश्च षट्त्रिंशत् यथा

"षट्त्रिंशद्रागिणीभेदाः क्रमशः कथिता मया। धानसी१ मालसी२ चैव रामकीरी३ च सिन्धुड़ा ४। आसावरी५ भैरवी६ च मालवस्य (१) प्रिया इमाः। वेलावली१ पुरवी२ च कानडा३ माधवी४ तथा। कोडा५ केदारिका६ चापि मल्लार(२)दयिता इमाः। गान्धारी१ सुभगा२ चैव गौरी३ कौमारिका४ तथा। वेलोयारी५ च वैरागी६ श्रीरागस्य (३) प्रिया इमाः। तुडी१ च पञ्चमी२ चैव ललिता३ पठमञ्जरी४। गुर्जरी५ च विभाषा६ च वसन्तस्य (४) प्रिया इमाः। मायूरी१ दीपिका२ चैव देशकारी३ च पाहिडी४। वराडी५ मोरहाटी६ च हिन्दोलस्य(५) प्रिया इमाः। नाटिका चाथ भूपाली२ रामकेली३ गडा४ तथा। कामोदा५ चाथ कल्याणी६ कर्णाटस्य (६) प्रिया इमाः"।

सङ्गीतदा०। तद्गानकालभेदाः तत्पुत्राद्यश्च तत्रैव दृश्याः।

**राघ** शक्तौ भ्वा० आ० अक० सेट्। राघते अराघिष्ट। ऋदित् चङि न ह्रस्वः।

**राघव** पु० रघोर्गोत्रापत्यम् अण्। १रघोर्वंश्ये २तत्प्रधाने श्रीरामे च ३महामत्स्यभेदे ४समुद्रे च मेदि०।

**राङ्कव** न० रङ्कोरयं विकारो वा तल्लोमजातत्वात् अण्। मृगविशेषलोमजाते वस्त्रभेदे अमरः।

**राज** दीप्तौ भ्वा० उभ० अक० सेट्। राजति ते-अराजीत् अराजिष्ट फणादि० रेजतुः रराजतुः। ऋदित् चङि न ह्रस्वः।

**राजक** न० राज्ञां समूहः कन्। १नृपसमुदाये अमरः। राजेव क। २नृपे पु०। राज-ण्वुल्। ३दीप्तिमति त्रि०। [मेदे जटा०।

**राजकदम्ब** पु० कदम्बानां राजा राजद० परनि०। कदम्ब-

**राजकल्प** पु० ईषदूनमाप्तो राजा राजन्+कल्पप्। राज-तुल्ये। [धाम् राजनि०।

**राजकर्कटी** स्त्री राजते राज-अच् कर्म०। चीनाकर्क-

**राजकशेरु** पु० कशेरूणाम् राजा राजद०। भद्रमुस्तायाम् राजनि०। [र्कटौ।

**राजकीय** त्रि० राज्ञ इदम् छ कुक् च। राजसम्बन्धिका-

**राजकुमार** पु० राज्ञः कुमारः। अप्राप्तवयस्के युवराज-कार्यानारूढ़े राजपुत्रे। [ज्याम् जटा०।

**राजकुष्माण्ड** पु० राज्ञः कुष्माण्ड इव प्रियत्वात्। वार्त्ता-

**राजकोषातकी** स्त्री राजप्रिया कोषातकी। (घियाझिङ्गा) लताभेदे मदनविनोदः।

**राजक्षवक** पु० क्षवत्वनेन क्षु-अप् राजते राज-अच् कर्म० स्वार्थे क। राजसर्षपे (राइसर्षो) राजनि०।

**राजखर्जूरी** स्त्री राजप्रिया खर्जूरी। खर्जूरीभेदे (पिण्ड-खेजुर) राजनि०। [२शाकभेदे राजनि०।

**राजगिरि** पु० राजाश्रमो गिरिः। १मगधस्थे पर्वतभेदे

**राजघ** त्रि० राजानं हन्ति हन-क नि०। १राजहन्तरि, २तीक्ष्णे च जटा०"रराज नीराजनया स राजघः" नैष०

**राजजम्बू** स्त्री राज्ञः जम्बूरिव। १पिण्डखर्जूरे मेदि० राजते अच् कर्म०। २महाजम्बाम् राजनि०।

**राजज(य)क्ष्मन्** पु० राज्ञः चन्द्रस्य क्षयकारको ज(य)क्ष्मा। रोगभेदे यक्ष्मनृशब्दे दृश्यम्"राज(य)क्ष्मेव रोगाणाम्" माघः। [इक्षे २आरग्वधे च राजनि०।

**राजतरु** पु० तरूणां राजा राजद० परनि०। १कर्णिकार-

**राजताल** पु० राजस्ताल इव प्रियः। १गुवाकवृक्षे शब्दर०। स्त्रीत्वमपि तत्र ङीप्। "राजतालीवनध्वनिः" रघुः।

**राजदन्त** पु० दन्तानां राजा परनि०। ऊर्द्ध्वपङ्क्तिस्थे मध्यवर्त्तिदन्तद्वये हेमच०। [तुल्ये राजकल्पे।

**राजदेश्यीय** पु० ईषदूनो राजा राजन्+देशीयर्। राज-

**राजधुस्तूरक** पु० धुस्तूराणां राजा राज० पर० स्वार्थे क। हृद्धुस्तूरे राजधुस्तूरकोऽप्यत्र पु० राजनि०।

**राजधर्म्म** पु० राज्ञो धर्म्मः। राज्ञामवश्यकर्त्तव्ये प्रजापालनादौ कर्मणि। तमधिकृत्य कृतो ग्रन्थः अण्। भारतशान्तिपर्वान्तर्गते व्यासप्रणीते ग्रन्थभेदे। राजधर्माश्च मनु मानवे ७ अ० च उक्ता दृश्याः।

**राजधानी** स्त्री राजा धीयतेऽस्यां धा—आधारे ल्युट् ङीप्। राजावासे महानगर्य्याम् शब्दर०। [धान्ये राजनि०।

**राजधान्य** न०धान्येषु राजा राज०पर०। (श्यामा) श्यामाक-

**राजन्** पु० राज-कनिन् रञ्जयति रन्ज-कनिन् नि० वा। १नृपे, "राजा प्रकृतिरञ्जनात्" रघुः। २चन्द्रे, ३प्रभौ, ४क्षत्रिये, ५यक्षे ६इन्द्रे, च मेदि०। उत्तरस्थपदः पूर्वपदस्य समभिव्याहृतपदार्थश्रेष्ठवाचकः। यथा राजमाषः मुनिराज इत्यादि। ७पृथुनृपे च। "पिता न रञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः। अनुरागात्ततस्तस्य नाम राजेत्यभाषत" विष्णु पु०।

**राजनीति** स्त्री राज्ञां नीतिः। १राजधर्मे सामाद्युपाये, २उपचारात् तत्प्रतिपादके शास्त्रे च। सा च कामन्दकीयनीतिशास्त्रादौ दृश्या।

**राजन्य** पु० राज्ञोऽयम् यत्, जातौ नलोपः। राज—अन्य वा। १क्षत्रिये अमरः। २राजपुत्रे ३अग्नौ, उणादिको०। ४क्षीरिकावृक्षे जटा०। [समूहे अमरः।

**राजन्यक** न०राजन्यानां क्षत्रियाणां समूहः कन्। क्षत्रिय-

**राजन्वत्** त्रि० प्रशस्तो राजाऽस्त्यस्य प्राशस्त्ये मतुप् मस्य वः न नलोपः। सुन्दरराजयुते देशे अमरः अन्यत्र राजवत् इत्येव। [२मधुरपटोल्यां राजनि०।

**राजपटोल** पु० राजप्रियः पटोलः। १पटोले रत्नमा०।

**राजपट्ट** पु० राज्ञः पट्ट इव। मणिभेदे त्रिका०।

**राजपथ** पु० पथां राजा राजगमनयोग्यो वा पन्थाः अच् समा०। "धनूंषि दश विस्तारे श्रीमान् राजपथः स्मृतः। नृवाजिरथनागानामसंबाधः सुसञ्चरः" इत्युक्ते राजमार्गे देवीपु०। [वर्षपलाण्डौ राजनि०।

**राजपलाण्डु** पु० पलाण्डूनां राजा श्रेष्ठत्वात् राजद०। रक्त-

**राजपीलु** पु० राजप्रियः पीलुः। महापीलुवृक्षे राजनि०।

**राजपुत्र** पु०राज्ञश्चन्द्रस्य, नृपस्य वा पुत्रः। १बुधग्रहे शब्दर० २नृपकुमारे ३वर्णसङ्करभेदे (रजपुत) "वैश्यादम्बष्ठकन्यायां राजपुत्रस्य सम्भवः" इति पराशरः। ४महाराजचूतवृक्षे राजनि०।

**राजपुत्री** स्त्री राज्ञश्चन्द्रस्य पुत्रीव। १कटुतुम्ब्याम् २रेणुकायां ३नृपरीतौ, ४जातौ ५कुछुन्दर्य्यां च। ५मालत्याञ्च राजनि०। ६त०। ६नृपकन्यायाम्। संज्ञायां कन्। ७अराटिखगे जटा०।

**राजपुष्प** पु० राजा चन्द्र इव शुभ्रत्वात् पुष्पमस्य। नागकेशरवृक्षे शब्दच०। २करुणीवृक्षे स्त्री राजनि० ङीप्।

**राजफणिज्झक** पु०राज-अच् कर्म०। नागरङ्गवृक्षे शब्दमा०

**राजफल** न० राजप्रियं फलमस्य। १पटोले त्रिका०। २राजप्रियं फलमस्याः। २जम्ब्वाम् स्त्री राजनि० टाप्।

**राजबदर** न० राज्ञो बदरमिव प्रियत्वात्। १रक्ताम्लके २लवणे च मेदि० बदराणां राजा राजद० प०। ३उत्तमकोलौ पु० राजनि०। [मादाल) लताभेदे अमरः।

**राजबला** स्त्री राज—अच राजं बलं यस्याः ५ब०। (गन्ध-

**राजभद्रक** पु० राज्ञो भद्रं यस्मात् कप्। १कृष्णे (कुड़) २निम्बे च राजनि० ३पारिभद्रवृक्षे भावप्र०।

**राजभूय** न० राज्ञो भावः राजन्+भू—क्यप्। राज्ञोऽसाधारणधर्मे राजत्वे।

**राजभोग्य** न० राज्ञा भोक्तुं योग्यम् भुज—ण्यत् कुत्वम्। १जातीकोषे २पियालवृक्षे पु० शब्दच०। ३नृपतेर्भोग्यवस्तुमात्रे त्रि०।

**राजमार्ग** पु० राजयोग्यः मार्गः। १राजपथे राजनि०।

**राजमाष** पु० माषेषु कलायेषु राजा श्रेष्ठत्वात् राजद०पर०। १माषभेदे हेमच०। (बरबटी) २व्रीहिभेदे राजनि०।

**राजमुद्ग** पु०मुद्गेषु राजा राज०प०नि०। (सगानि) मुद्गभेदे।

**राजरङ्ग** न० राजयोग्यं रङ्गम्। रजते शब्दर०।

**राजराज** पु० राज्ञामपि राजा प्रभूतधनत्वात् टच् समा०। १कुबेरे, अमरः। २सार्वभौमनृपे, ३चन्द्रे च मेदि०।

**राजर्षि** पु० राजा ऋषिरिव श्रेष्ठत्वात् संयतत्वाच्च। १राजश्रेष्ठे, २यतात्मनि नृपे च। [भेदे पुंस्त्री०।

**राजवंश्य** त्रि० राजवंशे भवः यत्। १राजवंशोद्भवे। २जाति-

**राजवर्त्मन्** न० राजयोग्यं वर्त्म। १राजशब्दोक्तलक्षणे राजपथे हेमच०। ६त०। राज्ञः २कर्त्तव्यकर्म्मणि च।

**राजवल्लभ** पु० ६त०। १प्रियाले २राजबदरे ३राजाम्रे

राजनि० दूष्यगुणप्रतिपादके तन्त्राणविहितकृते ४धान्यभेदे च । ५राज्ञः प्रिये त्रि० । [(उच्छा) लताभेदे रत्नमा० ।

**राजवल्ली** स्त्री राजते राज–अच् राजा वल्ली कर्म० ।

**राजवत्** त्रि० राजा राजमात्रं विद्यतेऽस्य मतुप् मस्य वः । राजमात्रवति देशे अमरः ।

**राजवीजिन्** त्रि० राजा बीजी कारणं यस्य । राजवंश्ये ।

**राजवृक्ष** पु० वृक्षाणां राजा राजद० परनि० । १आरग्वधे (सोन्दाल) अमरः । राजप्रियो हस्तस्तत्फलबीजजातवड्डुकस्य राजप्रियत्वात् । २प्रियाले मेदि०।३वड्डाख्यवृक्षे (वड्डाविक) शब्दच० । [शब्दमा०।

**राजशफ** पु० राज–अच् राजः शफः कर्म० । पट्टे (पाट)

**राजशाक** पु० शाकानां राजा राज० परनि०। वास्तूकशाके राजनि० । [वार्त्ते त्रिका०।

**राजशृङ्ग** न० राज्ञां शृङ्गमिव ऊर्द्ध्वस्थितत्वात् । राजचिह्न-

**राजस** त्रि० रजसा निर्मितः अण् । रजोगुणात् जाते १कर्मेन्द्रियादौ "येनाक्षिनु कर्मणा लोके ख्यातिमाप्नोति पुष्कलाम् । न च शोचत्यसम्पत्तौ तद्विज्ञेयन्तु राजसम्" इत्युक्ते ख्याते क्रियमाणे २कर्मणि च । रजःप्रधानतयास्त्यस्य अण् । ३रजःप्रधाने । सर्वेषां वस्तूनां त्रिगुणात्मकत्वेऽपि "भूयस्त्वात्तद्व्यपदेशः" इत्युक्तेः कस्यचित् तत्प्रधानत्वेन व्यपदेशः । ४दूर्वायां स्त्री ङीप् शब्दमा०।

**राजसभ** न० राज्ञां सभायां सभा । सभासमाजे अमरः ।

**राजसर्षप** पु० सर्षपाणां राजा श्रेष्ठत्वात् राजद०। (राइ-सर्षा) १सर्षपभेदे हेमच०। "तेऽष्टौ त्रिया तु तासिको राजसर्षप उच्यते" उक्ते २परिमाणभेदे च विश्वः ।

**राजसारस** पुंस्त्री० राज्ञः सारस इव । मयूरे शब्दमा० स्त्रियां ङीष् ।

**राजसूय** पु० राज्ञा सूयते सु–कर्मणि क्यप्। राजमात्रकर्त्तव्ये यज्ञभेदे शब्दच० । "राजा राजसूयेन यजेत" श्रुतिः ।

**राजस्व** न० राज्ञे देयं स्वं करख्यम् धनम् । १राजदेये करे हेम० । २राजधने च । [[illegible] राजनि० ।

**राजस्वर्ण** पु० स्वर्णानां धुस्तूराणां राजा० राजद० परनि० ।

**राजहंस** पुंस्त्री० हंसानां राजा श्रेष्ठत्वात्राजद०पर०। रक्तवर्णचञ्चुचरणयुक्ते श्वेतपक्षके हंसभेदे अमरः ।२कलहंसे च मेदि०। उभयार्थे स्त्रियां ङीष् । राजा हंस इव सारग्राहित्वात् । ३नृपश्रेष्ठे । [तगरपुष्पे राजनि० ।

**राजहर्षण** न० राज्ञः नृपात् हर्षयति हृष–णिच्–ल्यु ।

**राजातन** पु० राजार्थमातनोति फलबीजम् आ+तन–अच् । (चीरञ्जीति) ख्यातबीजहेतुफलके पियाले शब्दमा० ।

**राजादन** पु० राज्ञा अद्यते तत्फलबीजजातवड्डुकः अद–कर्मणि ल्युट् ।१पियालवृक्षे अमरः। यस्य फलबीजं (चिरञ्जि) तेन हि वड्डुकं कृत्वा राज्ञा भुज्यते । २क्षीरिकायां (खीरई) ३किंशुके च मेदि०। ४क्षीरिण्यां स्त्री ङीप् भरतः। [राजनि०।६म०। २नृपपालिकाख्ये च

**राजान्न** न० अन्नानां राजा राजद० । १अन्ध्रदेशजधान्यभेदे

**राजाम्र** पु० आम्राणां राजा श्रेष्ठत्वात् राजद० १आम्रभेदे "राजाम्रं तुवरं स्वादु विशदं शीतलं गुरु । ग्राहि रूक्षं विवन्धाध्मानवातकृत् कफपित्तनुत्" भावप्र०। [राजनि०।

**राजाम्ल** पु० अम्लानां राजा श्रेष्ठत्वात् राजद० । अम्लवेतसे

**राजार्क** पु० अर्काणां राजा श्रेष्ठत्वात् राजद० । श्वेतार्कवृक्षे (श्वादा आकन्द) राजनि० ।

**राजार्ह** न० राजानमर्हति अर्ह–अच् ।१अगुरुचन्दने २राजयोग्ये त्रि० राजनि० ३जम्ब्वां स्त्री मेदि० । [मदनवि० ।

**राजालाबू** स्त्री राजते राजा अलाबूः कर्म०। मिष्टालाब्वाम्

**राजावर्त्त** पु० राजानमावर्त्तयति अनुकूलयति आ–वृत–णिच्–अण् । १उपरत्नभेदे राजनि० । २विराटदेशीयहीरके हेमच० ।

**राजाहि** पु० नित्यक० । द्विमुखसर्पे शब्दर० ।

**राजि(जी)** स्त्री राज–इन् वा ङीप् । १श्रेण्याम् पङ्क्तौ २रेखायां च मेदि० । स्वार्थे क । रेखायाम् । राजते राज–ण्वुल् । राजिका राजसर्षपे स्त्री मेदि० ।

**राजिकाफल** पु० राजिकाया इव फलमस्य । श्वेतसर्षपे राजनि० ।

**राजि(जी)फला** स्त्री राजिभूतानि श्रेणिभूतानि फलानि यस्याः । १चीनाकर्कट्याम् राजनि० २पटोले पु०राजनि०

**राजिल** पुंस्त्री० राज–इलच् । डुण्डुभसर्पे (ढोड़ासाप) अमरः स्त्रियां ङीष् ।

**राजीव** न० राजी दलराजी अस्त्यस्य व । १पद्मे अमरः । "राजीवराजीवशलोलेति" माघः । २हरिणभेदे ३मत्स्यभेदे च पुंस्त्री० मेदि० "राजीवसिंहतुण्डांश्च" मनुः । ४गजे त्रिका० ५सारसपक्षिणि च पुंस्त्री० अमरः सर्वत्र जातौ स्त्रियां ङीष् ।

**राजेन्द्र** पु० राजा इन्द्र इव श्रेष्ठत्वात् । "चतुर्योजनपर्य्यन्तमधिकारी नृपो भवेत् । यो राजा तच्छतगुणः स एव मण्डलेश्वरः । तस्माद्दशगुणो राजा राजेन्द्रः" इत्युक्ताधिकारवति भूपतिभेदे ब्रह्मवै० ज०ख० ८६अ० ।

**राज्ञी** स्त्री राज्ञः पत्नी ङीप् स्वयं वा राजते राज–कनिन् ङीप् वा। (राणी) १राजपत्न्याम् २स्वयं राजकर्मकर्त्र्याम् ३सूर्यपत्न्यां मेदि० ४कांस्ये हेमच०।

**राज्य** न० राज्ञो भावः कर्म वा राजन्+यत् नलोपः। १राजकर्मणि २राजभावे च ३जनपदे शब्दर०। "प्रजाधिपत्यं राज्यं स्यात् साम्राज्यं ट्पचक्र्के। मतचक्रे महेशानि! महाराजाज्यमुच्यते"वरदातन्त्रोक्ते ४प्रजाप्रामाधिपत्ये च। [प्रजापालनादौ।

**राज्यधुरा** स्त्री ६त०। अच्समा०। राज्यभारे राजकर्त्तव्य

**राज्याङ्ग** न० ६त०। स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलप्रकृतिरूपेषु अष्टसु राज्यस्योपायेषु। "परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते। अमात्यराष्ट्रं दुर्गाणि कोषो दण्डश्च पञ्चमः। एताः प्रकृतयस्तद्वत् विजिगीषोरुदाहृताः। एताः पञ्च तथा मित्रं सप्तमं पृथिवीपतिः। सप्तप्रकृतिकं राज्यमित्युवाच बृहस्पतिः। पौरश्रेणी तदङ्गं च ब्रुवते शब्दवेदिनः" शब्दर०।

**राटि** पु०रट–इञ्। (यराव) १विग्रहे अमरः। २युद्धे स्त्री हेमच० वा ङीप्। पृषो० टस्य डत्वम्। राडिरप्यत्रार्थे

**राढ़** पु० रड–घञ् पृषो० ढत्वम्। देशभेदे (राढ़) स्वार्थे क तत्रैव।

**राढ़ा** स्त्री रड–घञ् पृषो०ढत्वम्। पुरीभेदे "गौडं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढा पुरीति"प्रबोधचन्द्रोदयः।

**राढ़ीय** त्रि० राढ़ो निवासोऽस्य "वृद्धाच्छः" पा०छ। राढदेशोद्भवे।

**रात्रि(त्री)** स्त्री रा–त्रिप् वा ङीप्। १रजन्यां क्षपां स्वस्वदेशापेक्षया सूर्यमण्डलस्य अदर्शनयोग्ये काले २हरिद्रायाञ्च अमरः। "मासेन च मनुष्याणां पितृणां तदहर्निशम्। कृष्णपक्षे दिनं प्रोक्तं शुक्ले रात्रिः प्रकीर्त्तिताः" उक्ते पितॄणां ३शुक्लपक्षरूपे काले "उत्तरायणे दिनं प्रोक्तं रात्रिः स्यात् दक्षिणायने" इत्युक्ते देवानां दक्षिणायनरूपे ४काले च।

**रात्रिकर** पु० रात्रिं करोति कृ–अच् रात्रौ करः किरणोऽस्य वा। १चन्द्रे हेमच० २कर्पूरे च।

**रात्रि(त्री)चर** पुंस्त्री० रात्रौ चरति चर–ट अच् सम् वा। राक्षसे अमरः। १जातित्वात् स्त्रियां स्त्री ङीप्। २निशाचारिणि त्रि० टान्तस्य स्त्रियां ङीप्।

**रात्रिजागर** पुंस्त्री० रात्रौ जागर्त्ति अच्।१कुक्कुटे हेमच० स्त्रियां ङीप् २निशाजागरणकर्त्तरि त्रि०। ७त०। ३रात्रौ जागरणे पु०। [कीटभेदे राजनि०।

**रात्रिजागरद** पु० रात्रौ जागरं ददाति दा–क। मशके

**रात्रिपुष्प** न० रात्रौ पुष्प्यति पुष्प–अच् ७त०। उत्पले राजनि०। [हारा०। २कर्पूरे च।

**रात्रिमणि** पु० रात्रौ मणिरिव दीप्तिमत्त्वात्। १चन्द्रे

**रात्रिवासस्** न०रात्रेर्वास इवाच्छादकम्।१अन्धकारे शब्दमा० रात्रौ परिधेयं वासः शाक०। २रात्रौ परिधेये वस्त्रे च।

**रात्रिविगम** पु० ६त०। १रजन्यवसाने तदुपलक्षिते २प्रभातकाले च शब्दमाला।

**रात्रिविश्लेषगामिन्** पु० रात्रौ विश्लेषं विच्छेदं गच्छति गम–णिनि। चक्रवाके राजनि० तत् स्त्रियां स्त्री ङीप्। [अच्। कुक्कुटे शब्दच०स्त्रियां ङीप्।

**रात्रिवेद** पुंस्त्री०रात्रिं रात्रिशेषं वेदयति एवेच विद–णिच्

**रात्रिसत्त्र** न० रात्रिषु त्रयोदशाहादिदिनेषु विहितं सत्त्रम्। त्रयोदशाहादिषु विहिते यागभेदे तत्र फलार्थवादिकं फलं प्रतिष्ठादिकम् न विश्वजिन्न्यायात् स्वर्गफलमिति जै० ४।३। १७।१८ सूत्रे वर्णितम्। "यद्यपि रात्रिशब्देन अत्रैव ज्योतिरन्येन गौरित्यादिवाक्येन विहितानि चौलादिकर्मस्वग्न्ये द्वादशाहादूर्ध्वभाविमयोदशरात्रपर्यन्तदशरात्रादयश्च सत्त्रविशेषाः रात्रिसत्त्रपदवाच्याः त्रयोदशसंख्यका रात्रयो यस्मिन् सत्त्रविशेषे स त्रयोदशरात्र इति व्युत्पत्तेः तथापि बहुवचनान्तरात्रिशब्देन रात्रिसत्त्रमुच्यते "एता विंशतिं रात्रीः इति श्रवणात्" त० को०। "फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्" जै० सू०। निर्देशादर्थवादेन फलस्य निर्देशात् फलमर्थवादोक्तम् आत्रेय आह अश्रुतौ प्रत्यार्थवादादिषु फलाश्रुतिस्थलानुमानं स्वर्गफलकल्पनम्" इ० "निर्देशात्तु प्रतिष्ठैव फलत्वेन विधीयते" तथा च प्रतिष्ठाकाम आयुषा यजेत प्रतिष्ठाकामो ज्योतिषा यजेत"इत्यादिश्रुतिपदघटिता एव विधयः कल्प्यन्ते लाघवात् न तु स्वर्गकामादिपदघटिताः" तत्त्वबो०। रात्रिसत्त्रन्यायोऽपि आर्थवादिकफलात्मयार्थः।

**रात्रिहास** पु०रात्रेर्हास इव शुक्लत्वात्। श्वेतोत्पले शब्दच०

**रात्रान्ध** त्रि० रात्रावन्धः दृष्टिक्षययुक्तः। १निशादृष्टिशून्ये काकादौ। २रात्रौ रोगकृतदृष्टिशून्ये (रातकाणा) च।

**राद्ध** त्रि०राध–कर्त्तरि कर्मणि वा क्त।१सिद्धे २पक्वे च हेम०

**राद्धान्त** पु० राद्धः सिद्धः अन्तो निर्णयो यस्मात् ५ब०। संशयविषये वादिदर्शितपक्षनिराकरणपूर्वकयथार्थपक्षप्रतिपादके २वाक्ये अमरः।

राध सिद्धौ अक० निष्पादने पाके च सक० स्वादि० दिवा० च पर० अनिट् । राध्नोति राध्यति अरात्सीत् अराद्ध रेधतुः रराधतुः । शुभाशुभालोचने च । तद्योगे शुभाशुभस्वामिनः सम्प्रदानता । "गर्गो राध्यति रामाय" वोपदेवः । अप+दोषकरणे "यनृमहामपराध्यति" म.घः ।

राध पु० राधा विशाखा तत्समीपस्था अनुराधा च तद्युक्ता पौर्णमासी अण् ङीप् राधी सा यत्र मासे पुनरण् । १चान्द्रे वैशाखे मासि । साहसे २पच्चे ३गुरुवर्षे च कार्त्तिकशब्दे दृश्यम् । ४तत्पूर्णिमायां स्त्री ङीप् ।

राधन न० राध–ल्युट् । १साधने २प्राप्तौ मेदि०। ३तोषे च हेम० । राध–णिच्-युच् । पूजने स्त्री टाप् ।

राधस् न० राध–असुन् । अन्ने निघण्टुः ।

राधा स्त्री राध–अच् । १विशाखानक्षत्रे रिरंसया रमणीदेहत्वेनाविर्भूते गोलोकस्थे परमेश्वराद्धाङ्गस्वरूपे २शक्तिभेदे तत्रैव श्रीदामशापात् वृन्दावने जातायां वृषभानुसुतायां ३प्रधानगोपिकायाम् ४कर्णस्य पालयित्र्यां मातरि च ।५वैशाखपौर्णमास्यां स्त्री ङीप् । [दयोऽप्यत्र

राधाकान्त पु० राधायाः कान्तः । श्रीकृष्णे राधावल्लभा-

राधातनय पु० राधायास्तनयः । कर्णे स हि कन्यावस्थायां कुन्त्याः कुन्तीगर्भजातत्वात् त्यक्तः राधया सूतपत्न्या पालित इति भारतप्रसिद्धम् । [पालितत्वात् ढक् । कर्णे

राधेय पु० राधाया अपत्यम् पुत्रत्वेन परिग्रहणेन तत्-

राम पु० रम–कर्त्तरि घञ् ण वा । १परशुरामे २दशरथज्येष्ठपुत्रे श्रीरामे ३बलरामे च "भार्गवो राघवो गोपवंशजो रामाः प्रकीर्त्तिताः" वह्निपु० । रामशब्दनिरुक्तिः "राशब्दो विश्ववचनो मश्चापीश्वरवाचकः । "विश्वानामीश्वरो यो हि तेन रामः प्रकीर्त्तितः" ब्रह्मवै० जन्मख० ११०अ० । ४मनोहरे ५सिते ६असिते च त्रि० मेदि० । ७वास्तूकशाके ८कुष्ठे (कुड़) न० मेदि० ९तमालपत्रे न० राजनि० ।

रामकर्पूरक पु० रामं मनोहरं कर्पूरमिव कन् । सौगन्धिके स्वनामख्याते तृणभेदे शब्दर० ।

रामगिरि पु० रामाश्रितः गिरिः । चित्रकूटपर्वते स हि रामेण वनवासगमनकाले प्रथममाश्रितः ।

रामचन्द्र पु० रामश्चन्द्र इवाह्लादकत्वात् । दशरथज्येष्ठपुत्रे श्रीरामे शब्दर० । [मदनवृक्षे (मयनागाछ) भावप्र० ।

रामच्छर्दनक पु० राममभिरामं छर्दयति छृद–णिच्–ण्वुल् ।

रामजननी स्त्री ६त० । १वसुदेवपत्न्यां रोहिण्यां २जमदग्निपत्न्यां रेणुकायां ३दशरथपत्न्यां कौशल्यायाञ्च ।

रामठ न० रमठ+स्वार्थे अण् ।१हिङ्गुनि अमरः । तत्तुल्यगन्धके २अङ्कोठवृक्षे रत्नमा० । नाडीहिङ्गुनि स्त्री राजनि० ङीप् ।

रामण पु० रमयति रम-णिच् ल्यु पृषो० वृद्धिः । १गिरिनिम्बे २तिन्दुके च (तँद) राजनि० ।

रामणीयक न० रमणीयस्य भावः रमणीयमेव वा योपधत्वात् वुञ् । १रमणीयत्वे "मणिहारावलिरामणीयकम्" नैष० २रमणीये च ।

रामतरुणी स्त्री रामा अभिरामा तरुणीव । (सेओती) १पुष्पवृक्षे राजनि० ६त० । २सीतायां ३रेवत्याञ्च ।

रामदूत पु० रामस्य दूतः वार्त्ताहरः । हनूमति स हि रामवार्त्तां वहन् सीताया आजहार ।

रामदूती स्त्री रामा अभिरामा दूतीव गन्धद्वारा प्रचारात् । तुलसीभेदे (रामतुलसी) शब्दच० ।

रामनवमी स्त्री रामस्य जन्माधारो नवमी । चैत्रशुक्लनवम्याम् । "चैत्रे मासि नवम्यान्तु जातो रामः स्वयं हरिः" अगस्त्यसंहिता । "प्राप्ते श्रीरामनवमीदिने मर्त्यो विमूढधीः । उपोषणं न कुरुते कुम्भीपाकेषु पच्यते" ति० त० ।

रामपूग पु० रामः अभिरामः पूगः । गुवाकभेदे त्रिका० ।

रामबाण पु० रसभेदे भावप्र० ।

"पारदामृतलवङ्गगन्धकं भागयुग्ममरिचेन मिश्रितम् । तत्र जातिफलमर्द्धभागिकं तिन्तिडीफलरसेन मर्द्दितम् । वह्निमान्द्यदशवक्त्रनाशनो रामबाण इति विश्रुतो रसः । संग्रहग्रहणिकुष्ठकर्षकामवातखरदूषणं जयेत् । दीयते तु लवणानुपानतः सद्य एव जठराग्निदीपनः । रोचकः कफकुलान्तकारकः श्वासकासवमिजन्तुनाशनः" भावप्र० ।

रामभद्र पु० राम एव भद्रः मङ्गलदायकत्वात् । श्रीरामे "रामेति रामचन्द्रेति रामभद्रेति वा स्मरन्निति" पद्मपु० ।

रामलवण न० कर्म० । शाम्भरिलवणे रत्नमा० ।

रामवल्लभ न० रामस्य वल्लभं प्रियम् । १भूर्जपत्रे राजनि० तद्धि रामेण वनवासाश्रमे प्रियतया धृतम् । २तत्प्रिये त्रि० । [बाणहेतुत्वात् मनोहरः ।

रामशर पु० कर्म० । शरतृणभेदे राजनि० स हि काण्डद्वारा

रामसख पु० ६त० टच् । सुग्रीवे वानरराजे शब्दच० ।

रामा स्त्री रमतेऽनया रम-करणे घञ् । १सीतादिस्वाभिप्रायां नार्य्यां २नारीमात्रे भावप्र०३नद्याम् ४हिङ्गुनि मेदि० ५हिङ्गुले पु० ६श्वेतकण्टकार्य्यां ७अङ्गकन्यायां ८अशोके

६गोरोचनायां १०बालायां ११गैरिके च स्त्री शब्दच० ।

**रामायण** न० रामस्यायनं चरितमधिकृत्य कृतो ग्रन्थोऽण् । रामचरितप्रतिपादके वाल्मीकिकृते महाकाव्यभेदे तच्च सप्तकाण्डात्मकम् ब्रह्मलोके कोटिश्लोकात्मकं मनुष्यलोके च चतुर्विंशतिसाहस्रं पञ्चशतसर्गयुतम् ।

तत्प्रतिपाद्यविषयाश्च गरु०पु० १४८ अ० उक्ता यथा "मनोरिक्ष्वाकुवंश्योऽभूद् वंशे राजा रघुः स्मृतः । रघोरजस्ततो जातो राजा दशरथो बली । तस्य पुत्रास्तु चत्वारो महाबलपराक्रमाः । कौशल्यायामभूद्रामो भरतः कैकयीसुतः । सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रायां बभूवतुः । रामो भक्तः पितुर्मातुर्विश्वामित्रादवाप्तवान् । अस्त्रग्रामं ततो यज्ञे ताड़कां प्रजघान ह । विश्वामित्रस्य यज्ञे तु सुबाहुं न्यवधीद्बली । जनकस्य क्रतुं गत्वा उपयेमेऽथ जानकीम् । ऊर्मिलां लक्ष्मणो वीरो भरतो माण्डवीं सुताम् । शत्रुघ्नो वै कीर्त्तिमतीं कुशध्वजसुते च ते । पित्रादिभिरयोध्यायां गत्वा रामादयः स्थिताः । युधाजित मातुलस्य शत्रुघ्नभरतौ गतौ । गतयोर्न्नृपवर्य्येण राज्यं दातुं समुद्यतम् । रामाय ज्येष्ठपुत्राय कैकेय्या प्रार्थितं तदा । चतुर्दश समावासो वने रामस्य वाञ्छितः । रामः पितृहितार्थन्तु लक्ष्मणेन च सीतया । राज्यं च तृणवत् त्यक्त्वा शृङ्गवेरपुरं गतः । रथं त्यक्त्वा प्रयागञ्च चित्रकूटं गिरिं गतः । रामस्य तु वियोगेन राजा स्वर्गं समाश्रितः । संस्कृत्य भरतश्चागात् रामं मातृसमन्वितः । अयोध्यान्तु समागत्य राज्यं कुरु महामते ! । स नैच्छत् पादुके दत्त्वा राज्याय भरताय तु । विसर्ज्जितोऽथ भरतो रामराज्यमपालयत् । नन्दिग्रामे स्थितो भक्तो ह्ययोध्यां नाविशद् व्रती । रामोऽपि चित्रकूटाच्च अत्रेराश्रममाययौ । नत्वा सुतीक्ष्णं चागस्त्यं दण्डकारण्यमागतः । तत्र शूर्पणखा नाम राक्षसी भक्षुमागता । निकृत्य कर्णौ नासे च रामेणाथ पराहृता । तत्प्रेरितः खरश्चागाद् दूषणस्त्रिशिरास्तथा । चतुर्दशसहस्रैश्च रक्षसान्तु बलेन च । रामोऽपि प्रेषयामास बाणैर्यमपुरञ्च तान् । राक्षसा प्रेरितोऽभ्यागात् रावणो हरणाय हि । मृगरूपं स मारीचं कृत्वाग्रेऽथ त्रिदण्डधृक् । सीतया प्रेरितो रामो मारीचं प्रजघान ह । म्रियमाणः स च प्राह हा सीते ! लक्ष्मणेति च । सीतोक्तो लक्ष्मणोऽप्यागाद्रामश्चापि ददर्श तम् । उवाच राक्षसी माया नूनं सीता हृतेति सः । रावणोऽन्तरमासाद्य अङ्कमादाय जानकीम् । जटायुषं विनिर्जित्य ययौ लङ्कां ततो बली । अशोकवृक्षच्छायायां रक्षितां तामधारयत् । आगत्य रामः शून्याञ्च पर्णशालां ददर्श ह । शोकं कृत्वाथ जानक्या मार्गणं कृतवान् प्रभुः । जटायुषञ्च संस्कृत्य तदुक्तो दक्षिणां दिशम् । गत्वा सख्यं ततश्चक्रे सुग्रीवेण च राघवः । सप्ततालान् विनिर्भिद्य किष्किन्ध्यायां हरीश्वरम् । सुग्रीवं कृतवान् राम ऋष्यमूके स्वयं स्थितः । सुग्रीवः प्रेषयामास वानरान् पर्वतोपमान् । सीताया मार्गणं कर्त्तुं पूर्वादौ सुमहाबलान् । प्रतीचीमुत्तरां प्राचीं दिशं गत्वा समागताः । दक्षिणान्तु दिशं ये च मार्गयन्तोऽथ जानकीम् । वनानि पर्वतान् द्वीपान् नदीनां पुलिनानि च । जानकीं ते ह्यपश्यन्तो मरणे कृतनिश्चयाः । सम्पातिवचनात् गत्वा हनूमान् कपिकुञ्जरः । शतयोजनविस्तीर्णं पुप्लुवे मकरालयम् । अपश्यज्जानकीं तत्र अशोकवनिकास्थिताम् । भर्त्सितां राक्षसीभिश्च रावणेन च रक्षसा । भव भार्येति वदता चिन्तयन्तीश्च राघवम् । अङ्गुलीयं कपिर्दत्त्वा सीतां कौशल्यमब्रवीत् । रामस्य तस्य दूतोऽहं शोकं मा कुरु मैथिलि ! । अभिज्ञानञ्च मे देहि येन रामः स्मरिष्यति । तत् श्रुत्वा प्रददौ सीता वेणीरत्नं हनूमते । यथा रामो नयेत् शीघ्रं तथा वाच्यं त्वया कपे । तथेत्युक्त्वा तु हनुमान् वनं दिव्यं बभञ्ज तत् । हत्वाक्षं राक्षसांश्चान्यान् बन्धनं स्वयमागतः । बद्धैरिन्द्रजितो वाक्यैर्द्दृष्ट्वा रावणमब्रवीत् । रामदूतोऽस्मि हनुमान् देहि रामाय मैथिलीम् । एतत् श्रुत्वा प्रकुपितो दीपयामास पुच्छकम् । कपिर्ज्ज्वलितलाङ्गूलो लङ्कां देहे महाबलः । दग्ध्वा लङ्कां समायातो रामपार्श्वं स वानरः । जग्ध्वा फलं मधुवने दृष्टा सीतेत्यवेदयत् । मणिरत्नञ्च रामाय रामो लङ्कां ययौ पुरीम् । ससुग्रीवः सहनुमानङ्गदाद्यैः सलक्ष्मणः । विभीषणोऽपि संप्राप्तः शरणं राघवं प्रति । लङ्कैश्वर्य्ये स्वयं विकृत्वाऽभ्यर्च्य रावणानुजम् । रामो नलेन सेतुञ्च कृत्वाब्धौ चोत्तितायतम् । सुवेलावस्थितश्चैव पुरीं लङ्कां ददर्श ह । अथ ते वानरा वीरा नीलाङ्गदनलादयः । धूम्रधूम्राक्षवीरेन्द्राजाम्बवत्प्रमुखास्तदा । मैन्दद्विविदमुख्यास्ते पुरीं लङ्कां बभञ्जिरे । राक्षसांश्च महाकायान् कालाञ्जनचयोपमान् । रामः सलक्ष्मणो हत्वा सकपिः सर्वराक्षसान् । विद्युज्जिह्वञ्च धूम्राक्षं देवा-

न्तकनरान्तकौ। महोदरमहापार्श्वातिकायं महाबलम्। कुम्भं निकुम्भं मत्तञ्च मकराक्षं ह्यकम्पनम्। प्रहस्तं वीरमुन्मत्तं कुम्भकर्णं महाबलम्। रावणं ब्रह्मशिरश्छित्त्वा ह्यस्त्रदो राघवो बली। निकृत्य बाहुशृङ्गाणि रावणन्तु व्यपातयत्। सीतां शुद्धां गृहीत्वाथ विमाने पुष्पके स्थितः। सवानरः समायातो ह्ययोध्यां प्रवरां पुरीम्। तत्र राज्यं चकाराथ पुत्रवत् पालयन् प्रजाः। दशाश्वमेधानाहृत्य गयाशिरसि पातनम्। पिण्डानां विधिवत् कृत्वा दत्त्वा दानानि राघवः। पुत्रौ कुशलवौ दृष्ट्वा तौ च राज्येऽभ्यषेचयत्। एकादशसहस्राणि रामो राज्यमकारयत्। शत्रुघ्नो लवणं हत्वा शैलूषं भरतः स्थितः। अगस्त्यादिमुनीनाञ्च श्रुत्वोत्पत्तिञ्च रक्षसाम्। स्वर्गं गतो जनैः सार्द्धमयोध्यस्थैः कृतान्तकः"। अन्यदपि व्यासप्रणीते पद्मपु० अध्यात्मरामायणं वाल्मीकिकृतमद्भुतरामायणं चास्ति।

**रामालिङ्गनकाम** पु० रामायाम् स्त्रीणामालिङ्गनस्य कामोऽत्र। रक्तम्लाने राजनि०।

**रामोपाख्यान** न० ६त०। १रामस्योपाख्याने। तदधिकृत्य कृतो ग्रन्थः अण्। २भारतवनपर्वान्तर्गते तदुपाख्यानप्रतिपादकेऽवान्तरपर्वणि च। [वंशभवे दण्डभेदे।

**राम्भ** पु० रम्भो वेणुस्तस्य विकारोऽण्। व्रतभेदे धार्य्ये

**राल** पु० रा-कलच्। शालवृक्षनिर्य्यासे (धुना) भावप्र०। "रालो हिमो गुरुस्तिक्तः कषायो ग्राहको हरेत्। दोषास्रस्वेदवीसर्पज्वरव्रणविपादिकाः। ग्रहभग्नाग्निदग्धांश्च शूलातीसारनाशनः" भावप्र०।

**रालकार्य्य** पु० रालः कार्य्यो यस्य। शालवृक्षे राजनि०।

**राव** पु० रु-घञ्। शब्दे हारा०।

**रावण** पु० रवणस्यापत्यम् शिवा० अण्। रावयति शत्रून् णिच्-ल्यु वा। लङ्काधिपतौ विश्रवसः पुत्रे राक्षसे।

**रावणगङ्गा** स्त्री रावणनिर्म्मिता गङ्गा नदी। सिंहलदेशस्थे नदीभेदे गरुडपु० ७ अ०।

**रावणारि** पु० ६त०। श्रीरामे जटा० रावणान्तकादयोऽप्यत्र।

**रावणि** पु० रावणस्यापत्यम् इञ्। मेघनादाख्ये रावणज्येष्ठपुत्रे हेमच०। [चङि न ह्रस्वः।

**राश** शब्दे भ्वा० आ० अक० सेट्। राशते अराशिष्ट अरराशत्

**राशि** पु० अश्नुते व्याप्नोति अश्-इञ् धातो रुडागमश्च। धान्यादीनां १पुञ्जे अमरः। ज्योतिश्चक्रस्य द्वादशांशे २मेषादौ, "दशमे राशिप्रविष्टे" इति लीलावतीप्रसिद्धे ३व्यक्ताव्यक्तगणभेदे यथा त्रैराशिकपञ्चराशिकादिशब्दे।

**राशिचक्र** न० राशिघटितं चक्रं वृत्तम्। मेषादिद्वादशराशियुक्ते गोलाकारे वायुवशेन पूर्वतः पश्चात् अनिशं वंभ्रम्यमाणे ज्योतिर्मये "सप्तविंशतिभिर्ज्योतिश्चक्रं स्तिमितवायुगम्" इत्युक्ते ज्योतिश्चक्रे खगोलशब्दे दृश्यम् मन्त्रशुद्ध्यङ्गराशिचक्रं तन्त्र चक्रशब्दे २८०पृष्ठे दृश्यम्।

**राशिभोग** पु० राशीनां स्वस्वगत्या ग्रहैर्भोगः भुज-घञ् कुत्वम्। रव्यादीनां स्वस्वगत्यनुसारेण राशिषु गतिभेदे। खगोलशब्दे दृश्यम्।

**राशी(शि)कृत** पु० अराशिः राशिः कृतः राशि+अभूततद्भावे च्वि तदर्थे समासो वा। (ढेरी) पुञ्जीकृते एकत्रस्थीकृते।

**राष्ट्र** न० राज-ष्ट्रन्। जनपदे 'गौडं राष्ट्रमनुत्तमम्" इति प्रबोधचन्द्रोदयः। २उपद्रवे अमरः।

**राष्ट्रिका** स्त्री राज-ष्ट्रन् षित्त्वात् ङीष् स्वार्थे क। कण्टकारिकायाम् अमरः।

**राष्ट्रिय** पु० राष्ट्रे भवः घ। नाट्योक्तौ १राजश्याले। छ राष्ट्रीय तत्रार्थे। उभावपि २राष्ट्रभवे त्रि०।

**रास** शब्दे भ्वा०आ०अक० सेट्। रासते अरासिष्ट अररासत् चङि न ह्रस्वः। रासभः। अयं तालव्यान्त इत्यन्ये।

**रास** पु० रस-घञ् रास-घञ् वा। १शब्दे, २ध्वनौ शृङ्खलाबन्धवत् द्वयोर्द्वयोर्मध्यस्थितत्वा ३क्रीडाभेदे, ४कोलाहले च मेदि०।

**रासक** न० दृश्यकाव्यभेदे "नाट्यं रासकमेकाङ्कं बहुतालसयस्थिति। उदात्तनायकं तद्वत् पीठमर्दोपनायकम्। हास्योऽङ्ग्यत्र सशृङ्गारो नारी वासकसज्जिका। मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च। केचित् प्रतिमुखं सन्धिमिह नेच्छन्ति केवलम्" सा०द०।

**रासभ** पुंस्त्री० रास-अभच्। गर्द्दभे अमरः स्त्रियां ङीष्।

**रासभवन्दिनी** स्त्री रासभस्य वन्दिनीव। मल्लिकायाम् शब्दच०।

**रासमण्डल** न० रासार्थं शृङ्खलाबन्धवत् द्वयोर्द्वयोर्मध्यस्थित्या क्रीडाभेदार्थं मण्डलं मण्डलाकारेण भ्रमणं यत्र। १गोलोकस्थे रासक्रीडाधारस्थाने। तत्रत्य मण्डलप्रमाणञ्च ब्रह्मवै० जन्मख० ८४ अ०। श्रीकृष्णस्य तदुत्सवाङ्गे २मण्डपभेदे च।

**रासयात्रा** स्त्री ६त०। कार्त्तिकपौर्णमास्यां भगवदुत्सवभेदे ब्रह्मवै० प्र० २५ अ०। भगवद्रासश्च भा० १०स्क० २८अ० आदौ दृश्यः।

**रासेरस** पु० ६त० अलुक् स०। १गोष्ठ्यां, २रासे, ३शृङ्गारे ४रसविद्वौ, ५रसाशये, ६षष्ठीजागरे च मेदि०। ७उत्सवे शब्दच० ८परिहासे जटा०।

**रासेश्वरी** स्त्री ६त०। राधिकायाम्।

**रास्ना** स्त्री रस-नन्। १स्वनामख्यातायां लतायाम् (कॉटा आमरूल)। तत्पर्य्यायगुणा भावप्र० उक्ता यथा "रास्ना युक्तरसा रस्ना सुवहा रसना रसा। एलापर्णी च सुरसा सुस्निग्धा श्रेयसी तथा। रास्नाऽऽमपाचनी तिक्ता गुरूष्णा कफवातजित्। शोथश्वाससमीरास्रवातशूलोदरापहा। कासज्वरविषाशीतिवातिकामयसिध्महृत्" भावप्र०। २नाकुल्यां भावप्र० तत्पर्य्यायगुणा उक्ता यथा "नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली। नकुलेष्टा भुजङ्गाक्षी सर्पाक्षी विषनाशिनी। नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत्। भोगिलूताद्दश्चिकाखुविषज्वरक्रमिव्रणान्"।

**राहु** पु० रह-उण्।१त्यागे, २त्यक्तरि, ज्योतिषमते सूर्य्यकिरणावरणकर्मभावेन जायमानपृथिवीच्छायारूपे ३तमसि तदधिष्ठातरि ४ग्रहभेदे, ५सिंहिकासुते दानवे च। तमःशब्दे दृश्यम्।

**राहुच्छत्त्र** न० राहोर्मण्डलं छत्त्रमिव। आर्द्रके राजनि०।

**राहुदर्शन** न० राहोर्दर्शनं यत्र। चन्द्रसूर्य्ययोरुपरागरूपे १ग्रहणे "स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने" इति ति०त०। तेन उपरोक्ते एव चन्द्रे सूर्य्ये च तस्य दृश्यता नान्यदा तस्य छायारूपत्वात्।

**राहुमूर्द्धभिद्** पु० राहोः सिंहिकासुतस्य मूर्द्धानं भिनत्ति भिद-क्विप्। विष्णौ। अमृतपानकाले देवपङ्क्तौ देवरूपेण स्थित्वाऽमृतं पिबन्तं दृष्ट्वा विष्णुना तस्य शिरश्छिन्नमिति भाग० ८।९ अ०।

**राहुरत्न** न० राहोः प्रियं रत्नम्। गोमेदमणौ राजनि०।

**राहुस्पर्श** पु० राहोः स्पर्शः छादितभूच्छायाद्वारा यत्र। चन्द्रसूर्य्ययोः उपरागरूपे ग्रहणे हलायुधः।

**राह्वच्छिष्ट** पु० ६त०। लशुने त्रिका०।

**राह्वत्सृष्ट** पु० ६त०। लशुने हारा०।

**रि** गतौ तु० पर० सक० अनिट्। रियति अरैषीत् रिराय।

**रिक्त** न० रिच-क्त। १शून्ये २वने मेदि०। ३निर्धने च त्रि० शब्दर०। स्वार्थे क। तत्रैव त्रि०।

**रिक्तभाण्ड** न० रिक्तं भाण्डम्। तैलादिशून्ये भाण्डे।

**रिक्तहस्त** त्रि० रिक्तो धनादिशून्यो हस्तो यस्य। १निर्धने, भूरिदानादिना २व्ययितधने च। [तिथिषु ज्यो०त०।

**रिक्ता** स्त्री रिच-क्त। उभयपक्षयोश्चतुर्थीनवमीचतुर्दशी-

**रिक्थ** न० रिच-थक्। १धने अमरः। २पितापितामहाद्युक्तेऽर्जितधने दाये च "स्वामी रिक्थक्रयसंविभागेत्यादि" गौतमस्मृतिः।

**रिक्थग्राहिन्** त्रि० रिक्थं दायं गृह्णाति। ग्रह-णिनि। दायहारिणि पुत्रादौ। अण्। रिक्थग्राहोऽप्यत्र।

**रिक्थिन्** त्रि० रिक्थं पाद्यत्वेनास्त्यस्य इनि। दायहारिणि दायादे "उभयोरप्यसौ रिक्थी" इति मनुः।

**रिख** सर्पणे भ्वा० पर० सक० सेट् इदित्। रिङ्खति अरिङ्खीत्। अनिदिदयमपीत्यन्ये रेखति अरेखीत्।

**रिग** गतौ भ्वा०पर०सक०सेट् इदित्। रिङ्गति अरिङ्गीत्।

**रिङ्गण** न०रिगि-ल्युट्। स्खलने। रिखि ल्युट्। रिङ्खणमप्यत्र

**रिच** सम्पर्के वियोगे च वा चु०उभ० पक्षे भ्वा०पर०सक०सेट्। रेचयति ते रेचति। अरीरिचत् त अरेचीत्।

**रिच** विरेके (खालिकरा पुरीषोत्सर्गे) रुधा०उभ०सक०अनिट्। रिणक्ति रिङ्क्ते इरित् अरिचत् अरैक्षीत् अरिक्त।

अति+अतिक्रम्य स्थिते आधिक्येन स्थितौ अक०। अतिरेकः

वि+अति भेदे तद्वत्त्वे तद्वत्त्वरूपे पदार्थे च व्यतिरेकः।

**रिज** भर्जने भ्वा० आ०सक० सेट्। रेजते अरेजिष्ट।

**रिपु** पु० रप-उन् पृषो०।१शत्रौ अमरः। २चोरनामगन्धद्रव्ये राजनि०। ज्योतिषोक्ते लग्नापेक्षया ३षष्ठस्थाने च। देहिस्थेषु षट्सु ४कामक्रोधादिषु। "कामः क्रोधश्च मोहश्च मात्सर्य्यं मदलोभकौ। देहिस्था रिपवश्चैति" पुरा०

**रिपुघातिनी** स्त्री रिपुं हन्ति हन-णिनि। (कुंचुह) लताभेदे शब्दच०। २शत्रुघातके त्रि०। [३ग्रहभेदे पुं०।

**रिपुञ्जय** त्रि० रिपुञ्जयति जि-खच् मुम्। १शत्रुजयिनि,

**रिन्फ** वधे तु० प० सक० सेट्। रिम्फति अरिम्फीत् रिम्फते

**रिप्फ** पु०रिन्फ-अच् पृषो०। लग्नापेक्षया द्वादशे स्थाने ज्यो०

**रिफ** कत्थने भ्वो० पर० सक० सेट्। रेफति अरेफीत्।

**रिफ** हिंसायां निन्दायां योधने च सक० दानायाम् अक० तु० पर० सेट्। रिफति अरेफीत्।

**रिबि** गत्यां भ्वा०पर०सक०सेट् इदित्। रिम्बति अरिम्बीत्।

**रिभ** रवे भ्वा० पर० सक० सेट्। रेभति अरेभीत्।

**रिवि** गतौ भ्वा०पर०सक०सेट् इदित्। रिण्वति अरिण्वीत्।

**रिश** हिंसायां तु०पर०सक०अनिट्। रिशति अरिक्षत्।

**रिष्ट(ष्य)** स्त्री रिष्य(ष्ट)ते रिष(श)-क्यप्। क्षुपभेदे त्रिका० स्त्रियां योपधत्वात् टाप्। ऋश्यजलार्थे शब्दर०।

**रिष** वधे भ्वा०पर०सक०सेट् । रेषति अरेषीत् । रिरेष ।

**रिष्ट** न० रिष-क्त । १मङ्गले २अशुभे ३पापे च अमरः । भावे क्त । ४नाशे, ५अशुभादिमति त्रि० । उपचारात् । ६खड्गे, ७रक्षोविशेषे च पु० मेदि० । स्वार्थे क । तत्रैव ।

**रिष्टि** स्त्री० रिष-रिश-वा क्तिन् । १अशुभे, २मङ्गलभेदे खड्गे पु०मेदि०। क्तिच् । ३रक्षसि पु०। सा च ह०जा०दृश्या

**रिह** वधे भ्वा० पर० सक० सेट् । रेहति अरेहीत् ।

**री** क्षरणे दि० आ० अक० अनिट् । रीयते अरेष्ट ओदित् निष्ठातस्य नः । रीणः । [ रयाति अरैषीत् ।

**री** गतौ वधे च सक० रवे अक० क्र्या० प्वा० अनिट् । रि०

**रीठा** स्त्री री-ठक् ठस्य नेत्वम् । रीठाकरञ्जे "रीठाकरञ्जस्तिक्तोष्णः कटुकश्च वातकृत् । कफकुष्ठविषहृत् कर्णविस्फोटनाशनः" राजनि० ।

**रीठाकरञ्ज** पु० कर्म० । स्वनामख्याते वृक्षे राजनि० ।

**रीढा** स्त्री रिह-क्त नि० ढत्वमात्रः । अवज्ञायाम् अमरः ।

**रीण** त्रि० री-क्त । क्षरिते च्युते अमरः ।

**रीति** स्त्री री क्तिच् ।१पित्तले । क्तिन् ।२प्रचारे,३स्रवणे अमरः ४लौहकिट्टे, मेदि० । ५दग्धसुवर्णादिमले रत्ना० । ६सीमायां, ७गतौ, ८स्वभावे, हेमच०। अलङ्कारोक्ते ९गौड्यादिरचनाभेदे च "गौडीपाञ्चालवैदर्भ्यो रीतयः परिकीर्त्तिताः" सा० द० । [तन्नार्थे स्त्री शब्दर०

**रीतिक** न०रीत्या पित्तलेन कायति कै-क । पुष्पाञ्जने राजनि०

**रीतिपुष्प** न० रीतेः पुष्पमिव । कुसुमाञ्जने अमरः ।

**रीव** ग्रहणे, संवरणे च भ्वा०उभ० सक० सेट् । रीवति ते अरीवीत् अरीविष्ट । ऋदित् चङि न ह्रस्वः ।

**रु** ध्वनौ अदा०पर०अक०सेट् । रौति-रवीति अरावीत्-अरौषीत् । लिटि नित्येट् रुरविथ । [रुरविथ ।

**रु** वधे गतौ च भ्वा० आ० सक० अनिट् । रवते अरोष्ट ।

**रुक्प्रतिक्रिया** स्त्री रुजः प्रतिक्रिया प्रतिकारः प्रति+कृ-भावे श ६त० । चिकित्सायाम् अमरः ।

**रुक्म** न० रुच-मन् नि० कुत्वम् । १काञ्चने, २धत्तूरे, अमरः ३लौहे, मेदि० ४नागकेसरे च राजनि० ।

**रुक्मकारक** पु० रुक्मं तन्निमित्तभूषणं करोति कृ० ण्वुल् । स्वर्णकारे अमरः ।

**रुक्मिन्** त्रि० रुक्मं विद्यतेऽस्य इनि । १स्वर्णयुक्ते २भीष्मकराजस्य ज्येष्ठपुत्रे पु०राजभेदे भाग०१०।५२ । ३रुक्मिराजकन्यायां श्रीकृष्णपत्न्यां स्त्री ङीप् ।

**रुक्ष** त्रि०रुह-क्स ।१अचिक्कणे २नि:स्नेहे ३कठोरे च अमरः

**रुग्ण** त्रि०रुज-क्त । १रोगान्विते राजनि० २भग्ने च अमरः

**रुच** प्रीतौ प्रकाशे च भ्वा० आ० अक० सेट् । रोचते लुङि द्युतादि० अरुचत् अरोचिष्ट । एतद्योगे प्रीयमाणस्य सम्प्रदानता "नारदाय रोचते कलहः" सि०कौ० ।

**रुचक** न० रुच-क्वुन् । १स्वर्णालङ्कारे, माङ्गल्ये २द्रव्ये, ३अश्वभूषणे, ४माल्ये ५सौवर्चले, ६उत्कटे त्रि० मेदि० ७प्रासादाग्ररसे, शब्दच० ८रोचनायाम्, ९विडङ्गे न० हेमच० १०लवणे न० हारा० । ११बीजपूरे, १२दन्ते, १३निष्के पु० १४कपोते च पुंस्त्री०मेदि० स्त्रियां ङीष् । १५स्वर्णपात्रभेदे च ।

**रुच्(चा)** स्त्री रुच सम्प० क्विप् वा टाप् । १दीप्तौ, २शोभायां, ३प्रकाशे, ४शारिकाखगवाचि च शब्दर० ।

**रुचि(ची)** स्त्री रुच-कि वा ङीप् । १अनुरागे २आसक्तौ ३स्पृहायाम् ४अभिलाषे ५किरणे अमर । ६शोभायां मेदि० ७बुभुक्षायां हेमच०। ८गोरोचनायां च राजनि०। ९प्रजापतिभेदे पु०मार्क०पु०।१०आलिङ्गनभेदे कामशास्त्रम्।

**रुचिर** त्रि० रुचिं राति ददाति रा-क । १मनोहरे सुन्दरे १मधुरे च अमरः । २मूलके ३कुङ्कुमे ४लवङ्गे च न० ५गोरोचनायां स्त्री राजनि० ।

**रुचिराञ्जन** पु० अज्यतेऽनेन अन्ज-करणे ल्युट् रुचिरः शोभायुक्तोऽञ्जनः । शोभाञ्जने (सजिना) राजनि० ।

**रुच्य** त्रि०रुचये हितः यत् ।१सुन्दरे २रुचिकरे च अमरः । २सौवर्चले न० राजनि०। ३पत्यौ पु०हेमच०। ४कतकवृक्षे ५शालिधान्ये च पु० राजनि० ।

**रुच्यकन्द** पु० रुच्यः रुचिकरः कन्दो मूलमस्य । सूरणे (ओल) राजनि० । [निष्ठातस्य नः । रुग्णः ।

**रुज** भञ्जने तु०प०सक०अनिट् । रुजति अरौक्षीत् ओदित्

**रुज** हिंसायां चु० उभ०सक०सेट् । रोजयति ते अरूरुजत् त रोगकर्तृकस्यास्य योगे कर्मणि षष्ठी । रुजयति चौरस्य रोगः

**रुज्(जा)** स्त्री रुज-सम्प० क्विप् वा टाप् रुज-अङ् वा । १रोगे २भङ्गे मेदि० रुज-क । ३मेष्यां हेमच० । ४कुष्ठे च (कुड़) राजनि० । एतद्योगे कर्मषष्ठ्या न समासः ।

**रुजाकर** न० रुजां रोगं करोति कृ-अच् । १कर्मरङ्गफले (कामराङ्गा) शब्दच० २रोगकारके त्रि० । ३व्याधौ पु० हेमच० ।

**रुट** चौर्य्ये भ्वा० पर०सक०सेट् इदित् । रुण्टति अरुण्टीत् ।

**रुट** रोधे सक० दीप्तौ अक०चु० उभ० सेट् । रोटयति ते अरूरुटत् त ।

दिना। येन भूषितवङ्गानि तद्रूपमिति कथ्यते"।

**रूपक** न० रूपयत्यस्य रूप-ण्वुल्। १अभिनयप्रदर्शके दृश्यकाव्यभेदे, "रूपारोपात्तु रूपकम्" तद्दृश्यं काव्यं नटै रामादिस्वरूपारोपात् रूपकमित्युच्यते" सा०द०। तच्च दशविधम् "नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः। ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश" सा०द०। दशरूपकग्रन्थेऽस्य विवृतिः। रूपमस्त्यस्य कन्। २मूर्त्ते त्रि० मेदि० रूप+स्वार्थे क। ३शुक्लादिवर्णे, ४आकारे च ५अर्थालङ्कारभेदे, सा०द० अलङ्कारशब्दे ४०२पृ० दृश्यम्। ६गुञ्जात्रयपरिमाणे "यवाभ्यां प्रोच्यते गुञ्जा ताभिस्तो रूपकं भवेत्" शुक्लिच०।

**रूपतन्मात्र** न० सांख्यमतादिसिद्धे तेजःपदार्थारम्भके सूक्ष्मभूतभेदे तन्मात्रशब्दे ३२२६ पृ० दृश्यः।

**रूपधारिन्** त्रि० रूपं धारयति धारि णिनि। १रूपवति, २सौन्दर्यान्विते, ३वेषान्तरग्राहिणि नटे च।

**रूपवत्** त्रि० रूप+मतुप् मस्य वः। १शुक्लादिरूपविशिष्टे, २सौन्दर्ययुक्ते ३आकारविशिष्टे च।

**रूपाजीवा** स्त्री रूपं सौन्दर्यमाजीवो जीविका यस्याः। वेश्यायाम् अमरः।

**रूपिका** स्त्री रूपमस्त्यस्य ठन्। श्वेतार्कवृक्षे रत्नमा०।

**रूप्य** न० रूपाय आहन्यते स्वर्णादि यत्। अलङ्कारादिनिर्माणाय आहन्यमाने १स्वर्णे २रजते च अमरः। स्वार्थे यत्। ३रजतमात्रे रजतशब्दे ४७८६ पृ० दृश्यम्। ४सुन्दरे त्रि० मेदि०।

**रूप्याध्यक्ष** पु० रूप्येषु अध्यक्षः। कोषाध्यक्षे अमरः।

**रूष** भूषादिना मिश्रीकरणे अद०चु०उभ०सक० सेट्। रूषयति ते अरुरूषत् त। [कारके त्रि०।

**रूषक** पु० रूष-ण्वुल्। १वासके वृक्षे जटा०। २मिश्री-

**रूषित** त्रि० रूष-क्त। १धूल्यादिभिर्मिश्रिते, २अवच्छो-लिते च अमरः।

**रे** अव्य० रा-के। नीचाह्वाने सम्बोधने हेमच०।

**रेक** शङ्कायां भ्वा० आ० स० सेट्। रेकते अरेकिष्ट। ऋदित् चङि न ह्रस्वः।

**रेक** पु० रिच-घञ्। १विरेचने। रेक-अच्। २शङ्कायां, ३नीचे मेदि० ४भेके पुंस्त्री० जटा०। स्त्रियां ङीष्। रेक-भावे अ। ५सन्देहे स्त्री हेमच० टाप्।

**रेक्णस्** न० रिच-असुन् णिच्च नेत्र कुत्वं नुट्। धने निघ०।

**रेखा** स्त्री लिख-अच् लस्य रः। १अल्पे, २छद्मे, ३आभोगे, बिन्दुपुञ्जकृते दण्डाकारे ४चिह्नभेदे (दाडि) (रेखा) विश्वः। ५सुमेरुलङ्कयोर्मध्यस्थसूत्रगस्थलभेदे च।

**रेखागणित** न० रेखायाः गणितं प्रमाणरूपादि यत्र। जगन्नाथपण्डितकृते गणितग्रन्थभेदे क्षेत्रशब्दे तदुपरिभाषादिकं २३८६ पृ० उक्तम्।

**रेखापुर** न० भुवो मध्यरेखस्थः पुरम्। "राक्षसालयदेवौकःशैलयोर्मध्यसूत्रगाः। रोहितकमवन्ती च तथा सन्निहितं सरः" सू०सि० उक्ते पुरे। "राक्षसालयं लङ्का देवौकःरूपः पर्वतो मेरुस्तयोर्मध्ये सूत्ररूपं तत्र स्थिता देशा रेखाख्याः लङ्कादेशावच्छिन्नस्यास्तदुपयुक्तत्वात् तत्स्थान अतुल्यागोचरत्वादिति नोक्ताः। स्थानान्युदाहरति। रोहीतकमिति। यथा रोहीतकं नगरमवन्त्युज्जयिनी सन्निहितं सरः कुरुक्षेत्रम्। चकारस्तदन्यनगरः। तथान्यानि परस्परं सन्निहिततया ज्ञेयानि" रङ्ग०।

**रेचक** न० रेचयति रिच-णिच्-ण्वुल्। १कङ्कुष्ठे राजनि० २यवक्षारे, पु० त्रिका०। ३जयपाले, ४तिलकवृक्षे पु० राजनि०। ५पुरीषनिःसारके त्रि०। कोष्ठार्थजलनिःसारयन्त्रे न०(पिचकिरी) राजनि०। ६कोष्ठस्थ वायोर्निःसारके व्यापारभेदे कुम्भकशब्दे २११४ पृ०दृश्यम्।

**रेचन** न० रिच्-ल्युट्। १मलभेदनेन तन्निःसारणे। २कोष्ठात् वायोर्नासिकया निःसारणे च।

**रेचनक** पु० रिच्यतेऽनेन ल्युट् संज्ञायां कन्। १काम्पिल्लवृक्षे। कनभावे वा ङीप्। रेचनी तत्रार्थे शब्दर०। २दन्तीवृक्षे ३काकाङ्गयां राजनि०। ४श्वेतत्रिवृतायाम् स्त्री मेदि० टाप्। ५काम्पिल्लवृक्षे स्त्री शब्दर०।

**रेची** स्त्री रेचयति अच् गौ० ङीष्। १काम्पिल्लवृक्षे २अङ्कोटे च राजनि०। [दित् चङि न ह्रस्वः।

**रेज** दीप्तौ भ्वा० आत्म० अक० सेट्। रेजते अरेजिष्ट। ऋ-

**रेजते** स्त्री रज+अते। उत्तरस्यां दिशि निघण्टुः।

**रेट** याचने वाचि च द्वि० भ्वा० उभ० सेट्। रेटति ते अरेटीत् अरेटिष्ट। ऋदित् चङि न ह्रस्वः।

**रेणु** पुंस्त्री० री-णु। १परागे २धूलौ च अमरः। ३रेणुकायां स्त्री ४पर्पटे पु०। ५पांशौ च राजनि०।

**रेणुका** स्त्री रेणुना कायति कै-क। मरिचाकृतौ १गन्धद्रव्ये अमरः "रेणुका कटुका पाके तिक्तोष्णा मधुः कटुः। पित्तला दीपनी मेध्या पाचनी गर्भपातिनी। बलासवातश्लेष्महृत् कण्डू विषदाहनुत्" भावप्र०। २जमदग्निपत्न्यां ३परशुराममातरि च।

रेणुकासुत पु० ६त० । परशुरामे रेणुकात्मजादयोऽप्यत्र ।
रेणुरूषित स्त्री रेणुभिः रूषितः । १गर्द्दभे त्रिका० स्त्रियां ङीष् । २धूलिधूसरे त्रि० ।
रेणुसार पु० रेणुरिव सारोऽस्य । १कर्पूरे त्रिका० । कप् । तत्रैवार्थे । [भावप्र० ।
रेतजा स्त्री रेत इव जायते जन-ड पृषो० । वालुकायां
रेतस् न० री-असुन् तुट् च । पुंसो रक्तादिपरिपाकजन्ये देहस्थे गर्भहेतुके चरमधातौ १शुक्रे शिववीर्य्ये २पारदे च मेदि० । [मेदि०।
रेत्र न०री-त्र । १रेतसि २पीयूषे ३पटवासे ४सुगन्धे च
रेप शब्दे अक० गतौ सक० भ्वा० आत्म० सेट् । रेपते अरेपिष्ट ऋदित् चङि न ह्रस्वः ।
रेप त्रि० रेप-अच् । १निन्दिते २क्रूरे ३कृपणे च मेदि० ।
रेफ पु० र+इफ । १रकारात्मके वर्णे । रिफ-अच् । २कुत्सिते त्रि० अमरः । [३कृपणे च शब्दर० ।
रेफस् त्रि० रेप-असुन् पस्य फः । १क्रूरे २अधमे, ३दुष्टे
रेव(व) गतौ सक० प्लुतौ अक० भ्वा० आ० सेट् । रेव(व)ते अरेवि(वि)ष्ट । ऋदित् चङि न ह्रस्वः ।
रेभ शब्दे भ्वा०आत्म०अक०सेट् । रेभते अरेभिष्ट । ऋदित् चङि न ह्रस्वः । [१ककुद्मिराजपुरे राजभेदे हरिवं०।
रेवत पु० रेव-अतच् । १जम्बीरे जटा० २आरग्वधे शब्दचि०
रेवती स्त्री रेवतस्यापत्यम् रेवत्यादीति निर्देशात् न ढक् । १रेवतराजकन्यायां बलदेवपत्न्याम् । रेव-अतच् गौ० ङीष् । अश्विन्यवधितः सप्तविंशतिसंख्याते २नक्षत्रे,३तत्संख्यायां, ४मातृकाभेदे मेदि० ५गव्याम् अजयपा० ६नदीभेदे, ७दुर्गायाञ्च देवीपु० । ८रेवतीपदघटितायां ऋचि च "इतस्येव रेवतीषु वारवन्तीयम्" श्रुतिः । ६पञ्चमनक्षत्राम् । [४६२१पृ० दृश्यम् ।
रेवतीभव पु० ७त० । शनैश्चरे हेमच० । भरदैवतशब्दे
रेवतीरमण पु० रेवतीं रमयति रम-णिच्-ल्यु । बलरामे । ६त० । रेवतीशादयोऽप्यत्र । [वशब्दे दृश्यम् ।
रेवत्यादि पु० अपत्यार्थे ठक्प्रत्ययनिमित्ते शब्दगणे । पा०ग०
रेवन्त पु०रेव-झच् ।१गुह्यकाधिपतौ २सूर्य्यपुत्रभेदे च वह्निपु०।
रेवा स्त्री रेव-अच् ।१नर्मदाख्यनद्याम् अमरः । २कामपत्न्यां ३नीलीवृक्षे च मेदि० ४दुर्गायां देवीपु० ।
रेष हेषायां (घोटकशब्दे) भ्वा० आत्म० अक० सेट् । रेषते अरेषिष्ट । ऋदित् चङि न ह्रस्वः ।
रै शब्दे भ्वा० पर० अक० अनिट् । रायति अरासीत् ।
रै पु० रा-डै । १धने २स्वर्णे अमरः । ३शब्दे शब्दर० अस्य हलादौ सुपि आत्वम् राभ्यामित्यादि । [पाल्यादौ ।
रैत्य त्रि० रीतेः पित्तलस्य विकारः रीति+ष्यञ् । पित्तलमये
रैवत पु० रेवत्या नद्या अदूरो देशः अण् । द्वारिकासमीपस्थे १पर्वतभेदे २स्वर्णालुकायां, ३शिवे मेदि० । ४दैत्यभेदे धरणिः । रेवत्यां भवः अण् । ५चतुर्दशस्य मनुषु पञ्चमे मनुभेदे । ६शनैश्चरे च । [रैवतकशब्दे न० राजनि० ।
रैवतक पु० रैवतएव स्वार्थे क । १रैवतपर्वते हेमच० २पा-
रोक न० रुच-अन् तस्य नेत्त्वम् । १छिद्रे अमरः "तस्मै रोकं च योकश्चेति" ति०त० । २नौकायाम् ३चले त्रि० मेदि० रुच-घञ् नि० कुत्वम् । क्रयकाले मूल्यदानेन क्रयात्मके ४क्रयभेदे ५दीप्तौ च पु० मेदि० ।
रोग पु० रुज-घञ् । १धातुवैषम्यजाते व्याधौ राजनि० २कुष्ठौषधे च (कुड़) मेदि०। [च २रोगनाशके त्रि०।
रोगघ्न न० रोगं हन्ति हन-टक् । १औषधे, २वैद्यकशास्त्रे
रोगराज पु० ६त० टच् समा० । राजयक्ष्मव्याधौ राजनि० ।
रोगलक्षण न०रोगो लक्ष्यते ज्ञायतेऽनेन लक्ष-करणे ल्युट् । रोगानुमापके धातुवैषम्यहेतुके चिह्नभेदे निदाने राजनि० "रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता । रोगा दुःखस्य दातारो ज्वरप्रभृतयो हि ते । ते च स्वाभाविकाः केचित्केचिदागन्तवः स्मृताः । मानसाः केचिदाख्याताः कथिताः केऽपि कायिकाः" । तत्र स्वाभाविकाः शरीरस्वभावादेव जाताः क्षुत्पिपासानिद्राजरामृत्युप्रभृतयः अथ वा स्वस्वभावादुत्पत्तेर्जाता स्वाभाविकाः सहजा इति यावत् । ते च जन्मान्धत्वादयः । आगन्तवोऽभिघातादिजनिताः । अथ वा जन्मोत्तरभाविनः कामक्रोधलोभमोहभयाभिमानदैन्यपैशुन्यशोकविषादेर्ष्यासूयामात्सर्य्यप्रभृतयः । अथ वा उन्मादापस्मारमूर्च्छाभ्रममोहतमःसंन्यासप्रभृतयः । कायिकाः पाण्डुरोगप्रभृतयः "कर्म्मजाः कथिताः केचिद्दोषजाः सन्ति चापरे । कर्म्मदोषोद्भवाश्चान्ये व्याधयस्त्रिविधाः स्मृताः" । तत्र कर्म्मजा व्याधयः यत्प्राक्तनदुष्कर्म्म प्रबलदुःखसंभोगनाश्यम् प्रायश्चित्तनाश्यं वा ततो जाताः न तु दुष्ट वातादिदोषेण जनितास्तथा । "यथाशास्त्रन्तु निर्णीतो यथाव्याधि चिकित्सितः । न शमं याति यो व्याधिः स ज्ञेयः कर्म्मजो बुधैः" । दोषजाः । मिथ्याहारविहारप्रकुपितवातपित्तकफजाः । नतु मिथ्याहारविहारित्वाभावेऽपि प्राक्तनदुष्कर्म्मणा नैरुज्यं दृश्यते

एव। ततो दोषजेष्वपि प्राक्तनं दुष्कर्मैव कारणम् तत् कथं दोषजा इत्युच्यते। दोषजेष्वपि वस्तुतः आदि कारणं दुष्कर्म वर्त्तत एव किन्तु तत्र मिथ्याहारविहार दूषिता दोषा हेतवो दृश्यन्त इति दोषजा इत्युच्यन्ते इति समाधिः। कर्मदोषोद्भवाः "स्वल्पदोषा गरीयांसो-ऽधमांस्ते कर्मदोषजाः"। अत्र कारणं दुष्कर्म प्रबलं यतो दोषाल्पत्वेऽपि व्याधेर्गरीयस्त्वन्तत्कर्मक्षयादेव क्षीणं भवति। दोषाः स्वल्पा अपि निदानत्वेनोक्ता दृश्यन्त एवेति दोषाणां कारणता मन्यन्त इति। "कर्मक्षयात् कर्मजता दोषजाः स्वस्वभेषजैः। कर्मदोषोद्भवा यान्ति कर्मदोषक्षये क्षयम्"। दोषजाः स्वस्वभेषजैरिति दोष-जेष्वादिकारणं दुष्कर्म तद्भोगजार्थं द्रव्यक्षयादिजनित दुःखभोगेन कटुतिक्तकषायाद्यहृद्यभक्षणादिजनित-दुःखभोगेन च क्षयं यान्ति। येषां दुष्टा हेतवो दोषास्ते स्वस्वभेषजैः क्षयं यान्तीत्यर्थः। "साध्या याप्या असाध्याश्च व्याधयस्त्रिविधाः स्मृताः। सुखसाध्यः कष्टसाध्यो द्विविधः साध्य उच्यते"। याप्यलक्षणमाह "यापनीयन्तु तं विद्यात् क्रिया धारयते स्थिरम्। प्रपतिष्यदिवा-गारं स्तम्भो यत्नेन योजितः। साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतान्तथा। घ्नन्ति प्राणानसाध्यास्तु नराणा-मक्रियावताम्"। अक्रियावतां चिकित्सारहितानाम्। अथोपद्रवस्य लक्षणम्। "रोगारम्भकदोषस्य प्रकोपादुप-जायते। योऽन्यो विकारः स बुधैरुपद्रव इतीरितः"।

**रोगशिला** स्त्री रोगाय तच्छिदत्तये शिला। मनःशिलायाम् राजनि०। [क्विप् रोगहन्। रोगहन्तरि-वैद्यादौ त्रि०।

**रोगघ्न** न० रोगं हन्ति हन-क। १औषधे शब्दच०। हन-

**रोगहर** त्रि० रोगं हरति हृ-अच्। व्याधिनाशके द्रव्यादौ तच्च सुश्रुतादौ दृश्यम्।

**रोगहारिन्** पु० रोगं हरति हृ-णिनि। १चिकित्सके वैद्ये अमरः। २रोगनाशके त्रि०।

**रोगितरु** पु० रोगिप्रियस्तरुः शाक०। अशोकवृक्षे राजनि०।

**रोगिन्** त्रि० रोग+अस्त्यर्थे इनि रुज-घिनुण् वा। व्याधियुक्ते राजनि० स्त्रियां ङीप्।

**रोचक** त्रि० १रुचिकारके। २क्षुधायां हेमच०। ३कदल्यां शब्दर०।४राजपलाण्डौ ५अस्थंशे (चाटनि)च राजनि० ६ग्रन्थिपर्णभेदे विश्वः।

**रोचन** पु० रुच-ल्यु रोचयति वा ल्यु। १कूटशाल्मलिवृक्षे २श्वेतशोभाञ्जने,३पलाण्डौ ४दाडिमे च राजनि०।५क-रञ्जे,६अङ्कोठे,७आरग्वधे च मेदि०।८उत्तमायां नार्यां ९रक्तकह्लारे स्त्री मेदि० टाप्। ११रुचिकारके त्रि०।

**रोचनक** पु० रोचनाय रुचिजननाय कायति कै-क। ज-म्बीरे राजनि०। [म्बीरभेदे २चिर्भट्यां स्त्री राजनि०

**रोचनफल** पु० रोचनं रुचिकरं फलमस्य। १बीजपूरके ज-

**रोचनी** स्त्री रोचयतीति कर्त्तरि ल्युट् गौरा० ङीष्। १मनःशिलायाम् हेमच० २गोरोचनायां ३आमलक्याम, राजनि० ४श्वेतत्रिवृति, ५गन्धद्रव्यभेदे च (गुडारोचना) अमरः। [२रुचियुक्ते त्रि०।

**रोचमान** पु० रुच-शानच्। १अश्वग्रीवास्थरोमावर्त्ते त्रिका०।

**रोचिष्णु** त्रि० रुच-इष्णुच्। १दीप्तिशीले २रुचिशीले च।

**रोचिस्** न० रुच-इसुन्। प्रभायाम् अमरः।

**रोची** स्त्री रोचयति रुच्-णिच्-अच् गौरा०ङीष्। हिल-मोचिकायाम् शब्दर०।

**रोटिका** स्त्री रुट-ण्वुल्। गोधूमादिचूर्णनिर्मिते पिष्टकभेदे (रुटी) भावप्र० कृतान्नशब्दे २१८१ पृ०दृश्यम्।

**रोड** अनादरे भ्वा०पर०सक०सेट्। रोडति अरोडीत् ऋदित् चङि न ह्रस्वः।

**रोदन** न० रुद-ल्युट्। १क्रन्दने २अश्रुणि मेदि०। करणे ल्युट् ङीप्। ३दुरालभायाम् अमरः। संज्ञायां कन् अत इत्त्वम्। रोदनिका ४यवासायाम् अमरः।

**रोदस्** न० रुद-असुन्। १स्वर्गे २भूमौ च अमरः। गौरा० ङीष् रोदसीत्यप्यत्र।२द्यावाभूम्योः स्त्री द्वि०व०अमरः। ३पृथिव्यां निघण्टुः। [भरतः।

**रोध** पु० रुध-घञ्। १रोधने २आवरणे च ३नदीतीरे

**रोधन** त्रि० रुणद्धि रुध-ल्यु। १रोधकर्त्तरि। भावे ल्युट्। २प्रतिबन्धे न०।

**रोधस्** न० रुध-असुन्। नद्यादिकूले अमरः।

**रोधवक्रा** स्त्री रोधेन तीरेण वक्रा। नद्यां निघण्टुः। रोधोवक्राऽप्यत्र त्रिका०।

**रोध्र** न० रुध-रन्। १पापे २अपराधे ३लोध्रवृक्षे पु० मेदि०।

**रोध्रपुष्प** पु० रोध्रस्य लोध्रस्येव पुष्पमस्य। मधूकवृक्षे (मौल) राजनि०। [धातकीवृक्षे (धाइफुल) राजनि०।

**रोध्रपुष्पिणी** स्त्री रोध्र इव पुष्प्यति पुष्प विकाशे णिनि।

**रोप** पु० रुह-णिच्-हस्व पः कर्मणि अच्। १वाणे अमरः भावे अच्। २रोपणे धान्यादेर्जननाय ३अङ्कुरारोपणे च मेदि० ४छिद्रे न० हेमच०।

**रोपण** न० रुह–णिच्–ह्रस्व पः ल्युट् । १जनने २अञ्जनभेदे रुप-ल्युट् । ३विमोहने ४अन्यथाभूतस्य वस्तुनोऽन्यथा ज्ञाने । अञ्जनभेदप्रकारादि भावप्र० उक्तं यथा "शिलायां रसकं पिष्ट्वा सम्यक् संप्लाव्य वारिणा । स्तूलोसारमलं सर्वं त्यजेच्छूर्णमधोगतम् । शुष्कञ्च तज्जलं सर्वं पर्पटीवल्लिभं भवेत् । विचूर्ण्य भावयेत् सम्यक् त्रिफलं त्रिफलारसैः । कर्पूरस्य रसं तत्र दशमांशेन निक्षिपेत् । अञ्जयेन्नयने तेन नेत्राखिलगदच्छिदः" ।

**रोपणीवर्त्ति** स्त्री नेत्राञ्जनवटीभेदे भावप्र०तत्प्रकार उक्तो यथा "अशीतिस्तिलपुष्पाणि षष्टिः पिप्पलितण्डुलाः । जातीपुष्पाणि पञ्चाशन्मरिचानि च षोडश । सूक्ष्मं पिष्ट्वाम्बुना वर्त्तिः कृता कुसुमिकाभिधा । तिमिरार्जुनशुक्राणां नाशिनी मांसवर्द्धिनुत् । एतस्या अञ्जने मोक्षा भाता इव हरेच्छुका" । (कुसुमिका वटी) ।

**रोपित** त्रि० रुह–णिच्–ह्रस्व पः क्त । १वृक्षादेर्जननाय कृताङ्कुरारोपणे अन्यथास्थिते अन्यरूपेण निर्दिष्टे यथा मुखं चन्द्र इत्यादौ मुखस्य चन्द्ररूपेण निर्देशः ।

**रोमक** न० रोमेव निबिडं कायति कै-क । (रुम) १नगरे स०वि० । २पांशुलवणे ३अयस्कान्ते च राजनि० ।

**रोमकन्द** पु० रोमभिः युक्तः कन्दो मूलमस्य । पिण्डालौ राजनि० ।

**रोमकपत्तन** न० कर्म० । (रुम) नगरभेदे स०सि० ।

**रोमकूप** पु० रोम्णां कूप इव । रोमाधारे विवरे "न रोमकूपौघमिषाज्जगत्कृता" नैषधम् ।

**रोमकेसर** न० रोमभिः केसरः सिंहजटेव । चामरे त्रिका० ।

**रोमगुच्छ** न० रोमभिर्गुच्छं स्तवकमिव । रोमसमुदायात्मके चामरे स्वार्थे क । अत्रैवार्थे हेमच० ।

**रोमन्** न० रु–मनिन् । देहजाते अङ्कुराकारे केशतुल्ये पदार्थे (रोंया) अमरः ।

**रोमन्थ** पु० रोम मथ्नाति मन्थ-अण् पृषो० मलोपः । भुक्तस्य घासादेः पशुभिरुद्गीर्य चर्वणे । रोमन्थमभ्यसति क्यङ् । रोमन्थायते ।

**रोमभूमि** स्त्री ६त० । चर्मणि राजनि० ।

**रोमलता** स्त्री रोमाणि लतेव । रोमराजौ हेमच० ।

**रोमविकार** पु० ६त० । रोमोद्गमे रोमाञ्चे हला० ।

**रोमश** त्रि० रोमाणि सन्त्यस्य श । १प्रचुररोमयुक्ते २मेषे पुंस्त्री० हेमच० स्त्रियां ङीष् । ३पिण्डालौ ४शूकरे पुंस्त्री स्त्रियां ङीष् । ५कुम्भ्याञ्च पु० (पाना) राजनि० ।

**रोमहर्ष** पु० रोम्णः हर्ष इव तद्व्यञ्जकत्वात् । रोमाञ्चे हर्षभीत्यादिभिः रोमकूपे जायमाने कण्टकाकारे पदार्थे हारा० । ल्युट् । रोमहर्षणमप्यत्र अमरः ।

**रोमहर्षण** पु० रोमाणि हर्षयति हृष-णिच्-ल्यु । १विभीतकवृक्षे मेदि० २लोमहर्षणे सूतभेदे च । [अमरः ।

**रोमाञ्च** पु० रोम्णामञ्चः उद्गमः अनुच-अच् । रोमहर्षे

**रोमाञ्चित** त्रि० रोमाञ्चः जातोऽस्य तार०इतच् । जातपुलके त्रिका० । [ वस्त्रायाञ्च शब्दमा० ।

**रोमाली** स्त्री ६त० । १रोमावलौ नद्धस्तनबाधने ताङ्कपात्र-

**रोमालु** पु० रोमयुक्त आलुः शाक० । १पिण्डालौ राजनि० रोम+आलुच् । २रोमवति त्रि० । [वृक्षे राजनि० ।

**रोमालुविटपिन्** स्त्री रोमालुः रोमयुक्तः विटपी । कुम्भी-

**रोमावलि(ली)** स्त्री ६त० । १रोमश्रेणौ २नाभेरूर्द्ध्वस्थरोमपङ्क्तौ तदुपलक्षिते ३ताद्दशावस्थायाञ्च हेमच० ।

**रोमोद्गम** पु० रोम्णामुद्गमः उद्-गम अप् । रोमहर्षे हला० । रोमोद्भेदादयोऽप्यत्र ।

**रोरुदा** स्त्री रुद-यङ् भावे अ टाप् । अतिशयरोदने ।

**रोल** पु० रु-लच् । पानीयामलके शब्दच० ।

**रोलम्ब** पुंस्त्री रौति रु-विच् रौः सन् लम्बते गच्छति लम्ब-अच् कर्म०, रोड अम्बच् डस्य लो वा । भ्रमरे त्रिका० स्त्रियां ङीष् ।

**रोष** पु० रुष-घञ् । क्रोधे अमरः ।

**रोषण** पु० रुष-युच् । १पारदे, २निकषप्रस्तरे, मेदि० । ३ऊषरभूमौ ४क्रोधशीले त्रि० हेमच० ।

**रोह** पु० रुह-अच् । १अङ्कुरे हेमच० २रोहणकर्त्तरि त्रि० ।

**रोहण** पु० रुहन्तेऽस्मै रुह-ल्युट् । १पर्वतभेदे जटा० । भावे ल्युट् । २प्रादुर्भावे न० करणे ल्युट् ।३शुक्रे राजनि० ।

**रोहन्त** पु० रुह-झच् । १वृक्षभेदे, २वृक्षमात्रे च । ३लताभेदे, ४लतायाञ्च स्त्री उणादि० गौरा० ङीष् ।

**रोहि** पु० रुह-इन् । १बीजे, २वृक्षे च उणादि० । ३धार्मिके त्रि० सि० कौ० ।

**रोहिण** न० रुह-इनन् । पञ्चदशधा विभक्तदिनस्य नवमे भागे "कुर्याद्रौहिणे बुधः" इति श्रुतिः । रोहिणी देवताऽस्य अण् । रौहिणमप्यत्र । २वटवृक्षे, ३रोहितकवृक्षे ४भूतृणे च पु० राजनि० ।

**रोहिणी** स्त्री रुह-इनन् गौरा०ङीष् । १स्त्रीगव्याम् अमरः अश्विन्यवधिके चतुर्थे २नक्षत्रे ज्यो० ३वसुदेवपत्न्यां बलभद्रमातरि, ४विद्युति, ५कटुलम्ब्याम्, ६सोमवल्के

च मेदि०। रोहित+स्त्रियां ङीप् तस्य नत्वे णत्वम्। ७रक्तवर्णवत्यां स्त्रियाम्। सा च ८हरितक्याम्, ९काश्मर्याम्, १०मञ्जिष्ठायाञ्च राजनि०। ११सुरभिकन्यायां कालिकापु० “अष्टवर्षा भवेत् गौरी नववर्षा च रोहिणी” इत्युक्तायां नववर्षायां १२कन्यायां १३गलरोगभेदे भावप्र० “रोहिणीनामकगलरोगाणां नामानि संख्याश्चाह “रोहिण्यो पञ्चधा प्रोक्ता कण्ठशालूक एव च। अधिजिह्वश्च वलयोऽलासनामैकवृन्दकः। ततो वृन्दः शतघ्नी च गिलायुः कण्ठविद्रधिः। गलौघः स्वरघ्नश्च मांसतानस्तथैव च। विदारी कण्ठदेशे तु रोगा ह्यष्टाविति स्मृताः”। तत्र पञ्चानामपि रोहिणीनां सामान्यसंप्राप्तिमाह “गलेऽनिलः पित्तकफौ च मूर्च्छितौ प्रदूष्य मांसञ्च तथैव शोणितम्। गलोपसंरोधकरैस्तथाङ्कुरैर्निहन्त्यसून् व्याधिरियं हि रोहिणी”। अनिलः मूर्च्छितः पृथक् कफपित्तौ च मूर्च्छितौ पित्तं वा मूर्च्छितं कफो वा मूर्च्छितः न तु त्रयोऽपि मूर्च्छिताः” पृथक्दोषजाया अविवक्षमाणत्वात्। तत्र वातजायाश्च लक्षणमाह “जिह्वासमन्तादृभृशवेदनास्तु मांसाङ्कुराः कण्ठविरोधनाः स्युः। सा रोहिणी वातकृता प्रदिष्टा वातात्मकोपद्रवगाढ़युक्ता”। जिह्वासमन्तात् जिह्वायाः सर्वतः। “वातात्मकोपद्रवगाढ़युक्ता स्तम्भादिभिरतिशयेन युक्ता। पित्तजामाह “क्षिप्रोद्गमा क्षिप्रविदाहपाका तीव्रज्वरा पित्तनिमित्तजाता”। श्लेष्मजामाह “स्रोतोनिरोधिन्यपि मन्दपाका गुर्वी स्थिरा सा कफसम्भवा तु। स्रोतोऽत्र कण्ठस्रोतः। सन्निपातजामाह “गम्भीरपाकिन्यनिवार्यवीर्या त्रिदोषलिङ्गा त्रिभवा भवेत् सा”। रक्तजामाह “स्फोटैश्चिता पित्तसमानलिङ्गा साध्या प्रदिष्टा रुधिरात्मिका तु”। एतासामसाध्यतामाह मारकत्वावधिमाह “सद्यस्त्रिदोषजा हन्ति त्र्यहात् कफसमुद्भवा। पञ्चाहात् पित्तसम्भूता सप्ताहात् पवनोत्थिता”। [गाधाद्रयोऽप्यत्र।

**रोहिणीपति** पु० ६त०। १चन्द्रे, २वसुदेवे च रोहिणी-

**रोहिणीव्रत** न० रोहिणीयुक्ताष्टम्यां व्रतम्। रोहिण्युपलक्षितायां भाद्रकृष्णाष्टम्यां कर्त्तव्ये उपवासरूपे व्रते। कृष्णाष्टमीशब्दे २२२०पृ०दृश्यम्। [२४२२ पृ०दृश्यम्।

**रोहिणीशकट** न० ६त०। व्योमस्थे ताराभेदे खगोलशब्दे

**रोहित्** पु० रुह-इति। १सूर्ये मेदि० २वर्णभेदे च ३मत्स्यभेदे पु०शब्दच०। ४लताभेदे ५कन्यायां स्त्री ङीप् मेदि०।

**रोहित** न० रुह-इतच्। १रुधिरे २कुङ्कुमे ३ऋजौ इन्द्रचापे मेदि०। ४रोहितकवृक्षे पु० खनामख्याते ५मत्स्यभेदे पुंस्त्री० स्त्रियां ङीष् मेदि०। “रक्तोदरो रक्तमुखो रक्ताक्षो रक्तपक्षतिः। कषपक्षो भृशश्वेतो रोहितः कथितो बुधैः। रोहितः सर्वमत्स्यानां वरो वृष्योऽर्द्दितार्त्तिजित्। कषायानुरसः स्वादुर्वातघ्नो नातिपित्तकृत्। अर्द्धजत्रुगतान् रोगान् हन्याद्रोहितमस्तकम्” भावप्र०। ६रक्तवर्णे पु० ७तद्वति त्रि० अमरः। स्त्रियां ङीष् तस्य नत्वे णत्वम्। ८अग्निवाहने मृगभेदे निघण्टुः। स्वार्थे क। रोहितक उक्तार्थे ९वृक्षभेदे अमरः।

**रोहिताश्व** पु० रोहितो मृगभेद अश्व इव गतिसाधनम् यस्य। वह्नौ निघण्टुप्रकाशः।

**रोहितेय** पु० रोहित एव स्वार्थे ढ। रोहितकवृक्षे रत्नको०

**रोहिन्** पु० रोहति पुनःपुनश्छिन्नोऽपि प्रादुर्भवति रुह-णिनि। १रोहितकवृक्षे २वटवृक्षे ३अश्वत्थवृक्षे च। मेदि०। ४रोहणवति त्रि० स्त्रियां ङीप्।

**रोहिष** पु० रुह-इषन्। खनामख्याते कत्तृणे मेदि०।

**रौक्ष्य** न० रूक्षस्य भावः ष्यञ्। १पारुष्ये २अचिक्कणतायाञ्च।

**रौचनिक** त्रि० रोचनया रक्तः ठण्। रोचनया रक्ते।

**रौच्य** पु०। त्रयोदशे मनुभेदे मत्स्यपु० ९ अ०।

**रौट(ड)** अनादरे भ्वा० पर० सक० सेट्। रौट(ड)ति अरौ(डौ)टीत्। ऋदित् चङि न ह्रस्वः।

**रौद्र** न० रुद्रो देवतास्य अण्। १सूर्य्यतापे, २उग्ररसे च। ३तद्वति मेदि० ४भीषणे च त्रि० ५रसभेदे अमरः। “रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः। आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम्। मुष्टिप्रहारपतनविकृतच्छेदावदारणैश्चैव। संग्रामसम्भ्रमाद्यैरस्योद्दीप्तिर्भवेत् प्रौढ़ा। भ्रूविभङ्गोष्ठनिर्दंशबाहुस्फोटनतर्जनाः। आत्मावदानकथनमायुधोत्क्षेपणानि च। अनुभावास्तथाक्षेपक्रूरसन्दर्शनादयः। उग्रतावेगरोमाञ्चस्वेदवेपथवो मदः। मोहामर्षादयस्तत्र भावाः स्युर्व्यभिचारिणः” सा० द०।

६५दुर्गायां ७रुद्रजटावृक्षे च स्त्री ङीप् मेदि०।

**रौप्य** न० रूप्यमेव स्वार्थे ष्यञ्। रजते राजनि०।

**रौम** न० रुमायां लवणखनिभेदे भवः अण्। साम्भरिलवणे। स्वार्थे क। तत्रैवार्थे अमरः।

**रौरव** पु० रोरूयतेऽत्र रु-यङ्-क्विप् तेन प्राप्यः तस्यायं वा अण्। १नरकभेदे अमरः। २चञ्चले, ३धूर्त्ते, ४घोरे च त्रि० शब्दर०। ५सामभेदे न०। तच्च साम ऊहगाने

३प्र० दर्शितम्। "रौरवयौधाजले वाह्नते तथे भवतः" ता०ब्रा०। रौरवनरकस्वरूपादिकमुक्तं मार्कपु० १०अ० "रौरवे कूटसाक्षी तु याति यस्मान्नतो नरः। तस्य स्वरूपं गदतो रौरवस्य निशामय। योजनानां सहस्रे द्वे रौरवो हि प्रमाणतः। जानुमात्रप्रमाणश्च ततः श्वभ्रः सुदुस्तरः। तत्राङ्गारचयोमेतं कृतम् धरणीतलम्। जाज्वल्यमानतीव्रेण तापिताङ्गारभूमिकम्। तन्मध्ये पापकर्माणं विसृजन्ति यमानुगाः। स दह्यमानस्तीव्रेण वह्निना तत्र धावति। पदे पदे च पादोऽस्य शीर्यते जीर्यते पुनः। अहोरात्रेणोद्धरणं पादन्यासं च गच्छति। एवं सहस्रं विस्तीर्णे योजनानां विमुच्यते"।

**रौहिष** पु० रुह-इषन् स्वार्थे अण्। १चन्दनभेदे त्रिका०। २रोहिषमृगार्थे च।

**रौहिणेय** पु० रोहिण्यां भवः ढक्। १बुधग्रहे, २बलरामे, च अमरः। ३मरकतमणौ न० राजनि० ४गोवत्से पुंस्त्री मेदि० ५शनैश्चरे पु० भगदैवतमह्दे ३६३१ पृ०दृश्यम्।

**रौहिष** न० रुह-इषन् स्वार्थेऽण्। १कत्तृणे मेदि० २मृगभेदे पुंस्त्री०अमरः। ३रोहितमत्स्ये च जटाधरः। ४दूर्वायां, ४रोहितकन्यायां स्त्री ङीप्।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य सङ्कलिते वाचस्पत्ये रकारादि-शब्दार्थसङ्कलनम्।

---

## ल

**लकारो** व्यञ्जनवर्णभेदः। तस्योच्चारणस्थानं दन्तमूलम्। स्पर्शोष्मवर्णयोर्मध्यस्थत्वादयमन्तःस्थवर्णः। अस्योच्चारणे आभ्यन्तरप्रयत्नः जिह्वाग्रेण दन्तमूलस्य ईषत्स्पर्शस्तेनास्य ईषत्स्पृष्टता। बाह्यप्रयत्नाश्च संवारनादघोषाः अल्पप्राणश्च। मातृकान्यासेऽस्य ककुदि न्यस्यता। काव्यादौ प्रथमप्रयोगे व्यसनं फलम्। "व्यसनमथ लवौ"वृ०र०टी०। तस्य स्वरूपं यथा "लकारं चञ्चलापाङ्गि! कुण्डलीत्रयसंयुतम्। पीतविद्युल्लताकारं सर्वरत्नप्रदायकम्। पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा। त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा। आत्मादिसहितं वर्णं हृदि-भावय पार्वति"कामधेनुतन्त्रम्। तत्पर्य्यायाः वर्णाभिधाने उक्ता यथा "लश्चन्द्रः पूतना पृथ्वी माधवी शक्रवाचकः। बलानुजः पिनाकीशो व्यापको मांससंज्ञकः। परात्मा ककुद्धन्त्रं खड्गी नादोऽमृतं दिवि। लवणं वारुणी-पीतशिखा वाणी क्रियाऽर्जिता। ज्वालिनी वेगिनी-नादः प्रद्युम्नः श्रीधरो हरिः। विश्वात्मन्द्रायणी चेतो मेरुर्गिरि कठोरवः"। तस्याधिष्ठातृध्येयरूपं यथा "चतुर्भुजां पीतवस्त्रां रक्तपङ्कजलोचनाम्। सर्वदां वरदां भीमां सर्वालङ्कारभूषिताम्। योगीन्द्रसेवितां नित्यं योगिनीं योगरूपिणीम्। चतुर्वर्गप्रदां देवीं नागहारोपशोभिताम्। एवं ध्यात्वा लकारन्तु तन्मन्त्रं दशधा जपेत्" वर्णोद्धारतन्त्रम्।

**ल** पु० ला—क। १इन्द्रे मेदि० तन्त्रोक्ते भूमिदैवताके २मन्त्रभेदे न० ३एकलघुके वर्णे। लडादिदशसु लकारादि तिङ्प्रत्ययेषु "लः कर्मणि च भावे चाकर्मकेभ्यः" पा०।

**लक** आस्वादे प्राप्तौ च चु० उभ०सक० सेट्। लाकयति ते अलीलकत् त।

**लकच** पु० लक-बा०अचन्। विकुचवृक्षे (मांदार) शब्दर०।

**लकुच** पु० लक—उचन्। (मांदार) वृक्षभेदे अमरः। "लकुचः स्वुद्रपनसो त्रिकुचो डहुरित्यपि। आमं लकुचमुष्णञ्च गुरु विष्टम्भकृत्तथा। मधुरञ्च तथाम्लञ्च दोषत्रितयरक्तकृत्। शुक्राग्निनाशनञ्चापि नेत्रयोरहितं स्मृतम्। सुपक्वं तत्तु मधुरमम्लं वातपित्तकृत्। कफवह्निकरं रुच्यं वृष्यं विष्टम्भकञ्च तत्" भावप्र०। "लकुचं गुरु विष्टम्भि स्वाद्वम्लं रक्तपित्तकम्। श्लेष्मकारि समीरघ्नमुष्णं शुक्राग्निनाशनम्" वैद्यक०।

**लक्तक** पु० लक—क्त नि० संज्ञायां कन्। १अलक्तके (आलता) शब्दर०। २जीर्णवस्त्रखण्डे (नेकड़ा) अमरः। [शब्दच०

**लक्तकर्मन्** पु० लक्तं करोति कृ—मनिन्। रक्तवर्णलोध्रे

**लक्तिका** स्त्री गोधायां त्रिकाण्डः। [अलक्षत् त।

**लक्ष** दर्शने अङ्कने च चु०उभ०सक०सेट्। लक्षयति ते अल-

**लक्ष** न० लक्ष—अच्। १पदे २चिह्ने ३व्याजे ४शरव्ये च। ५दशायुतसंख्यायां स्त्री०न० मेदि०।

**लक्षक** त्रि० लक्षयति लक्ष्यार्थम् लक्ष—ण्वुल्। लक्ष्यार्थबोधके शब्दे। तल्लक्षणं सा० प्र० उक्तं यथा "वाच्यार्थस्य सम्बन्धयति यस्तन्तु यद्भवेत्। तत्र तल्लक्षकं नाम तच्छक्तिविधुरं यदि"। "वाच्यार्थसम्बन्धयति यन्नाम शब्देति तदेव वाच्यार्थे लक्षकं यदि वाच्यार्थे

शक्तिशून्यं भवेत्। सैन्धवादयश्च शब्दास्तुरगादिसम्बन्धिनि लवणादाविव तुरगादावपि शक्ता एव। गङ्गादयस्तु तीरादावसङ्केतिताः तत्सम्बन्धिनीरादिशक्तत्वेन गृहीता एव तीराद्यन्वयं बोधयन्तीति तत्र लक्षका एव शक्तत्वे पूर्वपूर्वप्रयुक्तत्वापत्तेः तस्य तद्व्याप्यत्वात् कथञ्चित्तीरादिसम्बन्धित्वेन गृहीतादपि गङ्गादिपदात्तीरादेरन्वयबोधेन तीराद्यशक्तत्वे सति तत्सम्बन्धितामात्रन्तु न लक्षणा गङ्गागङ्गायां घोष इत्यादावपि गङ्गागङ्गेतिभागस्य निरूढलक्षणायाः सत्त्वेन वैयर्थ्याभावप्रसङ्गाच्च। एतेन तीराद्यशक्तत्वे सति तीरादिपरत्वं तीरादिसम्बन्ध्यनुभावकत्वं वा तल्लक्षकत्वमित्यपि प्रत्युक्तम् अपभ्रंशस्यापि लक्षकत्वापाताच्च नचेष्टापत्तिः शक्तिलक्षणान्यतरवृत्तिमत्त्वे तस्य साधुत्वापत्तेः पदसाधुतायां वृत्तिमत्त्वस्यैव तन्त्रत्वात्। किञ्चानुभावकत्वं तदा घोषादिपदसाकाङ्क्षस्य गङ्गादिपदस्य तीरलक्षकता न स्यात् तेन तीरसम्बन्धिनो नीरस्यानुभवजननात् स्वरूपयोग्यत्वन्तु गङ्गायामिति वाक्यस्य दुर्वारं तस्याप्याधेयताधर्मिकनीरानुभवं प्रति नीरार्थकनामोत्तरसप्तमीत्वेन तथात्वात् नीराधेयत्वस्य च तीरसम्बन्धित्वानपायात्।" अधिकं लक्षणाशब्दे दृश्यम्।

**लक्षण** न० लक्ष्यतेऽनेन लक्ष-करणे ल्युट्। १इतरभेदानुमापके चिह्ने "अयवेऽपि पदार्थानां नान्तं यान्ति पृथक्त्वतः। लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः"। यथा पृथिव्या गन्धो लक्षणं स हि पृथिवीं परस्मात् भिन्नतया अनुमापयति। तच्च द्विविधम् "स्वरूपं तटस्थं द्विधा लक्षणं स्यात् स्वरूपे प्रविष्टं स्वरूपाद्विभिन्नम्" इत्युक्तेः स्वरूपलक्षणं तटस्थलक्षणं च यथा आकाशो विभुः सच्चिदानन्दो ब्रह्मेति स्वरूपलक्षणम्। काकवत् गृहम् जगज्जन्मादिकर्तृ ब्रह्मेति तटस्थलक्षणम्। २स्वरूपे यथा घटलक्षणं वस्तु। ३नाम्नि व्यवहारोपयोगिनि ४चिह्ने च मेदि०। कर्त्तरि ल्यु। ५स्वरूपप्रतिपादके "चोदनालक्षणार्थो धर्मः" इति जैमिनिसूत्रम् चोदना विधिवाक्यमेव लक्षणं स्वरूपज्ञापिका यस्य तादृशोऽर्थः धर्मः इति तदर्थः। ६शब्दसाधुताप्रतिपादके व्याकरणादिसूत्रे च न० "लक्षणं तत्रभिन्नानाम्" अमरः। कर्मणि ल्युट्। ७प्रतिपाद्ये यथा "इत्थं द्वादशलक्षणीति" माधवीयन्यायमाला द्वादशानां लक्षणानां प्रतिपाद्यविषयाणां समाहारः इति तदर्थः। लक्ष युच्। शब्दनिष्ठे वाच्यार्थसम्बद्धार्थबोधकतारूपे "मुख्यार्थबाधे तद्योगे ययान्योऽर्थः प्रतीयते। रूढेः प्रयोजनाद्वापि लक्षणा शक्तिरर्पिता" इत्युक्ते वृत्तिभेदे स्त्री। यथा गङ्गायां घोषः प्रतिवसतीत्यादौ गङ्गाशब्दस्य जलप्रवाहरूपे स्वार्थेऽन्वयासम्भवात् तत्सम्बद्धतीरादिबोधकता। ८लक्ष्मणे रामानुजे पु० ९सारसपक्षिणि पुंस्त्री० तत् स्त्रियां राजनि० ङीष् टाप्। लक्षणाभेदादिकं शब्दशक्तिप्रकाशिकायामुक्तं यथा "जहत्स्वार्थाजहत्स्वार्थानिरूढाधुनिकादिकाः। लक्षणा विविधास्ताभिर्लक्षकं स्यादनेकधा"। काचिल्लक्षणा शक्यावृत्तिरूपेण बोधकतया जहत्स्वार्थेत्युच्यते यथा तीरत्वादिना गङ्गादिपदस्य। काचिच्छक्यलक्ष्योभयवृत्तिना शक्यवृत्तिनैव वा रूपेणानुभावकत्वादजहत्स्वार्था यथा द्रव्यत्वादिना नीलघटत्वादिना च घटपदस्य। काचिच्छक्यतावच्छेदकीभूततद्रूपेण पूर्वपूर्वप्रत्यायकत्वात् निरूढा यथा त्वाचत्वादिप्रकारेण तदाश्रयद्रव्यानुभावकत्वाद्दहणादिपदस्य। काचिच्च पूर्वपूर्वं तादृग्रूपेणाप्रत्यायकत्वादाधुनिकी यथा घटत्वादिना पटादिपदस्य। आदिना शक्यसदृशत्वप्रकारेण बोधकतया गौण्युपगृह्यते यथा अग्निर्माणवक इत्यादावग्निसदृशत्वादिना अग्न्यादिपदस्य। तदेवं विविधलक्षणावत्त्वात् लक्षकं नानापि जहत्स्वार्थादिभेदादनेकविधमित्यर्थः। स्यादेतत् यदि तीरादिलक्षकतया गङ्गादिपदस्य ज्ञानं तीराद्यनुभवे भवेत्तर्हि भवेदप्युक्तरूपेण लक्षकानां विभागः नत्वेतदस्ति तीराद्यन्वयबोधं प्रति तीरादिशक्तत्वेनैव पदज्ञानस्य लाघवेन हेतुतया लक्षकाणामननुभावकत्वात् पुरुषाणामग्नौ शैत्यं स्पृशेदित्यादौ शक्येन दहनादिनेव गङ्गायां घोष इत्यादौ लक्षितेन तीरादिना सार्द्धमगृहीतासंसर्गकस्यैव सप्तम्यर्थाधेयत्वादेरन्वयबोधप्रविष्टत्वादिति चेन्न प्रकृत्यर्थांशच्छिन्नस्यैव प्रत्ययार्थस्य धर्म्यन्तरेऽन्वयबुद्ध्युत्पन्नतया तीराद्यविशेषितस्य तदवधेयत्वादेर्घोषादावन्वयबोधायोगात्। न च शक्तस्यैव पदस्य समाकाङ्क्षपदान्तरोपस्थाप्यार्थान्वितस्वार्थधर्मिकान्वयबोधं प्रति हेतुत्वादन्वयबुद्धौ लक्ष्यार्थस्याप्रवेशः, कुन्ताः प्रविशन्तीत्यादौ लक्ष्यस्य कुन्तधरादेरन्वयविशेष्यत्वानुपपत्तेः कुमतिः पशुरित्यादौ शक्यलक्ष्यार्थयोरन्वयबोधस्याप्यनुभविकत्वाच्च। तस्माच्छक्तेरिव भक्तेरपि ज्ञानमनुभावकं भवत्येव कार्य्यतावच्छेदकस्य सङ्कोचाच्च न व्यभिचारः"। सा च बहुधा विस्तरस्तु सा० द० २प० दृश्यः।

**लक्षित** त्रि० लक्ष-कर्म्मणि क्त । १लक्षणया बोधितेऽर्थे, २ज्ञाते, ३अनुमिते च कर्त्तरि क्त । ४लक्षणार्थे लक्षकशब्दे च ।

**लक्षितलक्षणा** स्त्री लक्षणाभेदे यथा द्विरेफपदेन वक्रज्ञोच्चिलक्षणयोपस्थापितात् रेफद्वययुक्तभ्रमरपदात् तदभिधेयस्य भृङ्गोपस्थितिः । अत्र न रूढिर्नास्ति प्रकृते तु रूढिप्रयोजनाभावादेयार्थत्वं इत्येव लक्षितलक्षणेति वाच्यम्" । यत्र लक्षिताच्छब्दात्तदर्थाभिधानं तत्रैव लक्षितलक्षणायाः परिभाषितत्वात्" सा० द० टी० ।

**लक्ष्मन्** न० लक्ष-मनिन् । १चिह्ने २प्रधाने च अमरः । स्वार्थे अण् पृषो० न वृद्धिः । ३सारसपक्षिणि पुंस्त्री० हेमच० दशरथपत्न्याः सुमित्रायाः ४अपत्ये लक्ष्मणे च पु० । ५श्वेतकण्टकार्य्यां हेमच० स्त्री टाप् ६सारसपक्षिस्त्रियाम् ७ओषधिभेदे च स्त्री मेदि० टाप् ।

**लक्ष्मी** स्त्री लक्ष-ई-मुट् च । १विष्णोःपत्न्याम् अमरः । २शोभायां, ३कान्तौ, ४सम्पत्तौ, ५ऋद्ध्यौषधे, ६वृद्धिनामौषधे, ७फलिनीवृक्षे च मेदि० । ८स्वर्णयूथिकायाम् ९हरिद्रायां, १०शम्यां, ११मुक्तायां १२वृद्धौ च राजनि० १३पीडायां १४वारयोषिति च शब्दच० ।

लक्ष्मीपूजाकालादि स्कन्दपु० उक्तं यथा

"पौषे चैत्रे तथा भाद्रे पूजयेयुः स्त्रियः श्रियम् । सिंहे धनुषि मीने च स्थिते कल्पतरुक्रमे । मलवृद्धं पूजये लक्ष्मीं शुक्लपक्षे सुरोर्दिने । नापराह्णे न रात्रौ च नास्थिते न बृहस्पतौ । द्वादश्यां चैव नन्दायां रिक्तायाञ्च निरंशके । त्रयोदश्यां तथाऽऽस्यां कमलां नैव पूजयेत् । न पूजयेत् शनौ भौमे न बुधे नैव भार्गवे । पूजयेत्तु सुरोर्वारे चाप्राप्ते रविसोमयोः । गुरुवारे हि पूर्णा च यत्नेन यदि लभ्यते । तत्र पूज्या तु कमला धनपुत्रविवर्द्धिनी । न कुर्य्यात् प्रचने वापि नैव कुर्य्याद्विसर्जनम् । न घण्टां वादयेत्तत्र नैव स्त्रिष्टीं प्रदापयेत् । पौषे च दशमी ख्याता चैत्रके पञ्चमी तथा । नभस्ये पूर्णिमा ज्ञेया गुरुवारे विशेषतः । आढकं धान्यसंपूर्णं नानाभरणभूषितम् । कमलाशुक्लपक्षे च शुक्लपक्षे विशेषतः । पौषे तु पिष्टकं दद्यात् परमान्नञ्च चैत्रके । पिष्टकं परमान्नञ्च नभस्ये तु विशेषतः । गुरुवारसमायुक्ता नभस्ये पूर्णिमा शुभा । कमलां पूजये तत्र पुनर्जन्म न विद्यते । यत्नेन क्रमशेनैव कमलां पूजयेद् यदि । इह लोके सुखं प्राप्य परत्र केशवं व्रजेत्" । लक्ष्मीचरित्रे तु "न कृष्णपक्षे रिक्तायां दशमी द्वादशीषु च । अश्वत्थादिचतुष्के तु लक्ष्मीपूजां न कारयेत्" । दशमीनिषेधः पौषातिरिक्तपरः प्रागुक्तैकवाक्यत्वात् । दीपान्वितामावास्यायां तत्पूजादिकं दीपान्वितशब्दे ३६०७पृ० दृश्यम् । कोजागरलक्ष्मीपूजा कोजागरशब्दे २२६२ पृ० दृश्या । माघशुक्लपञ्चम्यां श्रीपूजनं "पञ्चम्यां श्रीरपि श्रियम्" ति० त० विहितम् । "पञ्चम्यां श्रियं पूजयेत्" कल्पतरुरपि तत्परा । मत्स्यपु० ११४ अ० लक्ष्म्यास्त्यागकारणतोक्ता यथा

"कुचेलिनं दन्तमलोपधारिणं बह्वाशिनं निष्ठुरवाक्यभाषिणम् । सूर्य्योदये चास्तमये च शायिनं विमुञ्चति श्रीरपि चक्रपाणिनम् । नित्यं छेदस्तृणानां धरणिविलिखनं पादयोरल्पमार्ष्टिर्दन्तानामल्पशौचं वसनमलिनता रूक्षता मूर्द्धजानाम् । द्वे सन्ध्ये चापि निद्रा विवसनशयनं ग्रासहासातिरेकः स्वाङ्के पीठे च वाद्यं निधनमुपनयेत् केशवस्यापि लक्ष्मीः । तथा भाजनहेतुता तत्रोक्ता यथा "शिरः सुधौतं चरणौ सुमार्जितौ वराङ्गनासेवनमल्पभोजनम् । अनग्नशायित्वमपर्वमैथुनं चिरप्रनष्टां श्रियमानयन्ति षट् । यस्य कस्य तु पुष्पस्य पाण्डुरस्य विशेषतः । शिरसा धार्य्यमाणस्य अलक्ष्मीः प्रतिहन्यते । दीपस्य पश्चिमाच्छाया छाया शय्यासनस्य च । रजकस्य तु यत्तीर्थमलक्ष्मीस्तत्र तिष्ठति" ।

**लक्ष्मीकान्त** पु० ६त० । १विष्णौ, २राजनि च लक्ष्मीपत्यादयोऽप्यत्र । "विहाय लक्ष्मीपतिलक्ष्मकार्मुकम्" किरा० । लक्ष्मीपतिस्तु लवङ्गे पुगवृक्षे च त्रिका० ।

**लक्ष्मीजनार्दन** न० शालग्रामभेदे । तस्य लक्षणं यथा "एकद्वारे चतुश्चक्रं नवीननीरदोपमम् । लक्ष्मीजनार्दनं ज्ञेयं रहितं वनमालया" ब्रह्मवै० प्र० ।

**लक्ष्मीनारायण** पु० शालग्रामभेदे तस्य लक्षणं यथा "एकद्वारे चतुश्चक्रं वनमालाविभूषितम् । नवीननीरदाकारं लक्ष्मीनारायणाभिधम्" ब्रह्मवै० प्र० ।

**लक्ष्मीनृसिंह** न० शालग्रामभेदे तस्य लक्षणं यथा "द्विचक्रं विस्तृतास्यञ्च वनमालासमन्वितम् । लक्ष्मीनृसिंहं विज्ञेयं गृहिणाञ्च सुखप्रदम्" ब्रह्मवै० प्र० ।

**लक्ष्मीपुत्र** पु० ६त० । १कामदेवे, २अश्वे मेदि० ३कुशे लवे च शब्दच० । ४गन्धर्वभेदे ।

**लक्ष्मीफल** पु० लक्ष्म्यै फलमस्य । श्रीफले बिल्ववृक्षे राजनि० ।

**लक्ष्मीवत्** पु० लक्ष्मीः शोभाऽस्त्यस्य मतुप् मस्य वः । १पनसे

शब्दच० । २श्रीयुक्ते त्रि० अमरः स्त्रियां ङीप् ।
३श्वेतरोहितकवृक्षे पु० राजनि० ।

**लक्ष्मीसहज** पु० लक्ष्म्या सह क्षीराब्धौ जायते जन-ड ।
१चन्द्रे, शब्दच० २उच्चैःश्रवसि ३कर्पूरे च ।

**लक्ष्य** न० लक्ष-यत् । १वेधार्थमुद्दिश्यमाने शरव्ये अमरः ।
२लक्षणयाबोध्ये ऽर्थे, ३उद्देश्ये, ४ज्ञेये, ५अनुमेये च त्रि० ।

**लक्ष्यासन** न० रुद्रया० उक्ते आसनभेदे । "अथ लक्ष्यासनं
वक्ष्ये विन्यस्योर्ध्वं तु तद्द्वयम् । पुरुदेशे करयुग्मं तथा-
भ्यामन्वयेत् भुवि" ।

**लख** गतौ भ्वा० पर०सक० सेट् । लखति । अलखीत्-अला-
खीत् । इदित्त्वपक्षम् लङ्खति अलङ्खीत् ।

**लग** श्लेषीभावे अक०गतौ सक०भ्वा०प०सेट् । लगति अलगीत

**लग** सङ्गे भ्वा० पर० सक० सेट् । लगति घटादि अलगीत्
घटा० लगयति । "काचेन तस्मा लगति च पश्चात्" नैष० ।

**लग** आस्वादे प्राप्तौ च सक०चु०उभ०सेट् । लागयति ते अली-
लगत् त ।

**लगित** त्रि० लग-क्त । संसक्ते ।

**लगुड(ल)(र)** पु० लग-उलच् लस्य डरौ वा । दण्डाकारे
काष्ठनिर्मिते पदार्थे (लाठी) अमरः ।

**लग्न** न० लस्ज-क्त तस्य नः । १मेषादिराशीनामुदये अमरः ।
२लज्जिते त्रि० । लग-क्त पृषो० । ३संसक्ते त्रि० ।
४स्तुतिपाठके पु० त्रिका० । लग्न इव इवार्थे कन् ।
५प्रतिभुवि । (जामिन) "दातको वित्तहीनः स्यात्
लग्नको वित्तवान् यदि" इति स्मृतिः । मेषादिराश्युदय-
रूपलग्नपदार्थश्च देशभेदे कालमानं ज्योतिषशब्दे ३१५२ ।
५३पृ०दर्शितम् । इष्टकाले लग्नसाधनञ्च ३८०२ पृ०दृश्यम् ।

**लग्निका** स्त्री नग्नेव लग् पृषो० । अदृष्टरजस्कायां स्त्रियाम्
अमरटीका ।

**लघ** अभोजने सीमातिक्रमे गतौ च भ्वा०आ०सक०सेट् इदित् ।
लङ्घते अलङ्घिष्ट । "लङ्घोविनीवधुमदुत्तरङ्ग" मङ्कापा० ।

**लघ** शोषे भ्वा० पर० सक०सेट् इदित् । लङ्घति अलङ्घीत् ।

**लघ** प्रकाशे चु०उभ०स०सेट् इदित् । लङ्घयति ते अललङ्घत् त

**लघ** आस्वादने चु०उभ०सक०सेट् । लाघयति-ते अलीलघत्-त

**लघट्(टि)** पु०लघि-शोषे "लङ्घेर्नलोपश्च"उणा०अटिः इकार
उच्चारणार्थः उज्ज्वल० पाराय्ये तु न तथा । वायौ ।

**लघिमन्** पु० लघोर्भावः इमनिच् डिच्च । १लघुत्वे लाघवे,
येनोर्ध्वगतिसञ्चरः । २ऐश्वर्यभेदे च ।

**लघिष्ठ** त्रि० अतिशयेन लघुः इष्ठन् डित् । अतिशय-
लघुत्वयुक्ते । ईयसुन् । लघीयानप्यत्र स्त्रियां ङीप् ।

**लघु** न० लघि-कु नि०नलोपः । १शीघ्रे अमरः । २कृष्णागुरुणि
मेदि० । ३वीरणमूले राजनि० । ४पृक्कानामौषधौ
स्त्री मेदि० । ५निःसारे, ६ह्रस्वस्वरयुक्तमात्रिके, ७तुच्छे,
८मनोहरे च त्रि० मेदि० । व्याकरणोक्ते स्वल्पसंज्ञके
९अकारादौ वर्णे, ज्योतिषोक्तेषु "पुष्याश्विहस्ता लघुः"
इत्युक्तेषु १०पुष्यादिनक्षत्रेषु च पु० । ११लघुतावत्यां
स्त्रियां स्त्री वा ङीप् । तत्करोति णिच् लघयति ।

**लघुकाय** पुंस्त्री० लघुः कायो यस्य । १छागे त्रिका० स्त्रियां
योपधत्वात् टाप् । कर्म० । २क्षुद्रशरीरे पुंन० ।

**लघुकाश्मर्य्य** पु० नित्यकर्म० । कट्फले वृक्षे राजनि० ।

**लघुचिर्भिटा** स्त्री नि०कर्म० । मृगेर्वारौ कर्कटीभेदे राजनि० ।

**लघुदन्ती** स्त्री कर्म० । क्षुद्रदन्तीवृक्षे ।
"दन्तीद्वयं सरं पाके रसे च कटु दीपनम् । गुदाङ्कुराश्म-
शूलाशमशकृत्कुष्ठविड्डाहनुत् । तीक्ष्णोष्णं हन्ति पि-
त्तास्रं कफशोथोदरक्रिमीन्" "क्षुद्रदन्तीफलन्तु स्यान्म-
धुरं रसपाकयोः । शीतलं शूलविध्वंसं मलशोध
कफापहम्" भावप्र० ।

**लघुद्राक्षा** स्त्री कर्म० । काकलीद्राक्षायाम् राजनि० ।

**लघुनामन्** पु० लघुवर्णयुक्तं नाम वाचकशब्दो यस्य । अ-
गुरुचन्दने शब्दच० ।

**लघुपत्रक** पु० लघूनि ह्रस्वानि पत्राण्यस्य कप् । (गुड़ारो-
चना) लताभेदे शब्दच० । कन भावे ङीप् । लघुपत्री
स्त्री २अश्वत्थवृक्षे राजनि० ।

**लघुपुष्प** पु० लघु पुष्पं यस्य । भूमिकदम्बे राजनि० । [ङीप् ।

**लघुबदर** पु० कर्म० । १क्षुद्रकोले । २भूबदर्य्याम् स्त्री राजनि०

**लघुब्राह्मी** स्त्री कर्म० । क्षुद्रब्राह्म्याम् राजनि० ।

**लघुमन्थ** पु० । अग्निमन्थः मन्थः पूर्वपदलोपः कर्म० । क्षुद्रा-
ग्निमन्थे राजनि० ।

**लघुलय** न० लघु शीघ्रं लीयते ली-अच् । वीरणमूले अमरः

**लघुसटाफला** स्त्री सटा फलं यस्याः कर्म० । क्षुद्रोदुम्बरि-
कायाम् (छोट डुमुर) राजनि० ।

**लघुहेमदुग्धा** स्त्री कर्म० । क्षुद्रोदुम्बरे (छोट डुमुर) राजनि०

**लघूदुम्बरिका** स्त्री कर्म० । क्षुद्रोदुम्बरभेदे राजनि० ।

**लङ्का** स्त्री लक-अच् मुम् च । स्वनामख्यातायां १पुर्य्याम् ।
"सा च भूगोलस्य याम्ये भूतलपादविवरे समुद्रमध्ये
स्थिता" सि० शि० । २शाखायां ३वेश्यायां ४शाका-
याम् त्रिका० ।

लड विलासे भ्वा० पर० अक० सेट् । लडति अला(ड)डीत्

लड उत्क्षेपने सक० जिह्वाचालने अक० भ्वा० पर० सेट् । लडति अलाडीत्-अलडीत् जटा० । लडयति ।

लड अवलम्बने चु०उभ०सक०सेट् । लाडयति-ते अलीलडत् त ।

लड आप्तौ चु०उभ०सक०सेट् । लाडयति-ते अलीलडत् त ।

लड भाषणे द्विक० वा चु० उभ०पक्षे भ्वा० पर० सेट् इदित् । लण्डयति-ते लण्डति । अललण्डत्-त अलण्डीत् ।

लड उत्क्षेपणे वा चुरा० उभ०पक्षे भ्वा०पर०सक०सेट् इदित् । लण्डयति-ते लण्डति । अललण्डत्-त अलण्डीत् ।

लड क्षेपणे अद०चु०उभ०सक० सेट् । लडयति ते अललडत् त

लड्डुक पु० लड-उ तस्य नेत्त्वम् स्वार्थे क । तैलादिपक्वे गोधूमादिचूर्णनिर्मिते (लाडु) मिष्टान्नभेदे "प्रभुलड्डुकलनीति" नैषधम् स्त्रीत्वमप्यस्य ।

लण्ड पु० लडि रन् । (लण्डन) इति ख्याते देशभेदे ।

लत आघाते सौ०पर०सक०सेट् । लतति अलातीत् अलतीत् ।

लता स्त्री लत-अच् । शाखाविस्तृते १गुडूच्यादौ अमरः । २शाखायां ३प्रियङ्गौ ४पृक्कायाम् ५असनपत्र्यां च अमरः । ६ज्योतिष्मत्यां ७लताकस्तूरिकायां ८माधवीलतायां ९दूर्वायाञ्च मेदि० । १०कैवर्त्तिकायां ११सारिवायां च राजनि० ।

लताकरञ्ज पु० लताख्यः करञ्जः । करञ्जभेदे राजनि० ।

लताकस्तूरिका स्त्री लतायां कस्तूरीव सुगन्धत्वात् स्वार्थे कन् । कस्तूरीगन्धयुक्तपत्रयुतायां लतायाम् राजवल्ल० । "लताकस्तूरिका तिक्ता स्वादुः शीताश्वरोगहृत्" ।

लताजिह्व पुंस्त्री०लतेव जिह्वा यस्य । सर्पे शब्दमा० स्त्रियां ङीष् ।

लतातरु पु० लतेव दीर्घस्तरुः । १तालतरौ २नागरङ्गतरौ च शब्दच० । ३शालतरौ राजवल्ल० । लताद्रुमादयोऽप्यत्र ।

लतापनस पु० लतायां पनस इव स्थूलं फलमस्य । (तरमुज) लताभेदे त्रिका० । [शब्दच० ।

लतापृक्का स्त्री लतेव विस्तीर्णा पृक्का । (पिडिङ्ग) शाकभेदे

लताफल न० लतायां फलमस्य । पटोले ।

लतामरुत् स्त्री लतायां मरुत् वायुर्यस्याः । पृक्कायां शब्दच० तल्लतासेवने हि वायुवृद्धिरिति वैद्यकप्रसिद्धम् ।

लतायष्टि स्त्री लतापि यष्टिरिव । मञ्जिष्ठायाम् शब्दमा० ।

लतायावक न० लताया यावकमिव । प्रवाले हारा० ।

लतार्क पु० लतयाऽर्क इव । हरितपलाण्डौ अमरः ।

लतावेष्ट पु० "बाहुभ्यां पादयुग्माभ्यां वेष्टयित्वा स्त्रियं रमेत् । कुचविक्षुब्धताडनं योनौ लतावेष्टमुच्यते" रसम० उक्ते आलिङ्गनभेदे । [वेष्टितकं तथा" शब्दमा० ।

लतावेष्टितक न० आलिङ्गनभेदे । "उद्घृष्टपीडितं लता-

लप कथने भ्वा०पर० द्विक० सेट् । लपति । अलापीत्-अलपीत् । कदित् चर्कि न लुक् ।

लपन न० लप्यते उच्यतेऽनेन लप-करणे ल्युट् । १मुखे अमरः । भावे ल्युट् । २कथने च । [न० अमरः ।

लपित त्रि० लप-कर्मणि क्त । १कथिते । भावे क्त । २कथने

लप्सिका स्त्री खाद्यभेदे कृताकृतशब्दे २१८१ पृ० दृश्यम् ।

लब आलम्बने सक० शब्दे अक० भ्वा० आत्म० सेट् इदित् । लम्बते अलम्बिष्ट ।

लब्ध त्रि० लभ-कर्मणि क्त । १प्राप्ते अमरः । २नायिकाभेदे स्त्री जटा० । भावे क्त । प्राप्तौ ३लाभे न० । "अञ्जलाधिकं लब्धम्" गीत० स्मृति ।

लब्धवर्ण पु० लब्धो वर्णो वर्णनं प्रशंसा ज्ञानवत्त्वेन येन । पण्डिते अमरः ।

लभ शब्दे सक०भ्वा०आत्म०सेट् इदित् । लम्भते अलम्भिष्ट ।

लभ प्राप्तौ सक० भ्वा० आत्म० अनिट् । लभते । अलब्ध । लिप्सु लिप्सितः । भिद् लभा । अचिण्णजादावार्द्धधातुके नुम् । आलम्भः उपालम्भः । अनुपसर्गात् क्वचित्तु न लाभः । खलि च सर्वथा दुर्लभः ।

आ+स्पर्शे वधे च उप+ज्ञानभेदे उप+आ+तिरस्कारे ।

लभस न० लभ-असच् कि०नुम् । वाजिबन्धने उज्ज्वल० ।

लभ्य त्रि०लभ-कर्मणि यत् । १प्राप्तव्ये मेदि०२न्याय्ये अमरः

लमक पु० रम-क्वुन् रस्य लः । १प्रिये जारे त्रिका० ।

लम्पट पु० रम-अटन् पुक् च रस्य लः । परस्त्रीषु १लोलुपे, मेदि० । २आसक्ते च ।

लम्ब पु० लबि-अच् । १नर्त्तके २कान्ते ३अङ्गे च उणा० । ४उत्कोचे हेमच० अङ्कशास्त्रोक्ते त्रिभुजादिक्षेत्रे भुजकर्णयोर्मध्यस्थे लम्बमाने ५छले च "आबाधाभुजकर्णयोरन्तरमूलं प्रजायते लम्बः । लम्बगुणं भूम्यर्द्धं स्पष्टं त्रिभुजे फलं भवति" लीला० । ७दीर्घे ८लम्बमाने च त्रि० ।

लम्बकर्ण पु० लम्बः कर्णो यस्य । १छागे मेदि० २अङ्कोटवृक्षे पु० ३हस्तिनि ४राक्षसे च पुंस्त्री०शब्दच० ५श्येनपक्षिणि राजनि० । ६लम्बश्रोत्रयुते त्रि० । कर्म० । ७लम्बमाने श्रोत्रे पु० । सर्वत्र स्त्रियां जातित्वात् ङीष् ।

लम्बकेश त्रि० लम्बः दीर्घः केशो यस्य । दीर्घायतकेशे कुशमये

विष्टरे । "ऊर्ध्वकेशो भवेत् ब्रह्मा लम्बकेशस्तु विष्टरः । दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः" सं० त० । "केशोऽलायम्" रघु० । २दीर्घकेशयुक्ते त्रि० । कर्म० । ३दीर्घे केशे च पु० ।

**लम्बदन्ता** स्त्री लम्बो दीर्घः दन्त इव बीजकण्टको यस्य । १सिंहलद्वीपभवपिप्पल्याम् राजनि० । २दीर्घदन्तयुक्ते त्रि० कर्म० । ३दीर्घे दन्ते पु० ।

**लम्बन** न० लबि- ल्यु । नाभिदेशपर्य्यन्तं १लम्बमाने माल्यादौ अमरः । भावे ल्युट् । २आश्रयणे न० ।

**लम्बबीजा** स्त्री लम्बं दीर्घं बीजं यस्याः । सिंहलदेशजातपिप्पल्याम् राजनि० ।

**लम्बा** स्त्री लम्बते लबि-अच् । १तिक्तालाब्वां (तितलाउ) २लक्ष्म्यां ३गौर्य्याञ्च मेदि० ४दक्षकन्याभेदे ५हिमालयकन्याभेदे च हरिवं० ।

**लम्बोदर** पु० लम्बं दीर्घमुदरं यस्य ।१गणेशे अमरः ।२तारानाम्न्यां देव्यां स्त्री तन्त्रम् ङीप् । ३दीर्घोदरादौ त्रि० ।

**लम्बो(म्बौ)ष्ठ** पुं स्त्री० लम्बौ ओष्ठौ यस्य । उष्ट्रे त्रिका० स्त्रियां ङीष् । [लवयितुम् अर्वाचीनम् ।

**लय** गतौ भ्वा० आत्म० सक० सेट् । लयते अलयिष्ट ।

**लय** पु० ली-अच् । १संश्लेषे २विनाशे ३नृत्यगीतवाद्यानामेकतानतारूपे साम्ये च मेदि० । लीयतेऽत्र । ४सर्वभूतहरके ४प्रलयकाले शब्दर० ५ईश्वरे च । पञ्चलयभेदाश्च "द्विपदी स्यादुत्कलिका भ्रमरिका किलकपिडका । वाम भुवस्ततोऽस्कन्दा खण्डधारा फड्क्ककः । जम्भाटिकाकलितक खण्डकः क्षुरिकस्तथा । कथितस्तुरकोऽर्द्धचतुरस्रोऽथ नर्त्तकः । ततः भ्रमुन्दालगावकहमन्दघटीत्यपि । कादम्बवर्णरी चट्टा मिश्रोऽर्द्धवलिता ततः । अतिचित्रः समपश्च वलितोऽर्द्धदलस्तथा । आविद्धस्तु टङ्कककस्ततश्चित्रविचित्रकौ । आन्ती विकृतधारा च सुकुलोऽथ विलोलकः । रमणीयस्ततश्चैव करकण्टकसंज्ञकः । चत्वारिंशदिमे प्रोक्ता लया लयविशारदैः । लयेन वश्यो भगवान् लये लीनो जनार्दनः" सङ्गीतदा० ।

**लर्व** गतौ भ्वा० पर० सक० सेट् । लर्वति अललर्वीत् ।

**लल** इच्छायां चु० उभ० सक० सेट् । लालयति-ते अलीललत् त

**लल** इच्छायां अद० चु० उभ० सक० सेट् । ललयति ते अलललत् त

**ललज्जिह्व** पु० लडन्ती आस्वादाद्यास्वादनाय चलन्ती जिह्वा यस्य डस्य लः । १कुक्कुरे, २उष्ट्रे, ३हिंस्रसत्त्वे त्रि० मेदि० स्त्रियां जातित्वात् ङीष् । ४चलद्रसनायुक्ते त्रि० । स्त्रियां टाप् ।

**ललन** न० लड-ल्युट् डस्य लः । १चालने । २केलौ हेमच० ३बाले ४सालवृक्षे ५पियालवृक्षे च पु० राजनि० । चु० लल-ल्यु । ६जिह्वायां ७नार्य्याञ्च स्त्री मेदि० ।

**ललनाप्रिय** पु० कर्म० । १कदम्बे ।२ह्रीवेरे न० राजनि० । ३जिह्वाप्रिये, ४रमणीवल्लभे च त्रि० ।

**ललन्तिका** स्त्री लड-झच् स्वार्थे क अत इत्वम् डस्य लः । नाभिदेशपर्य्यन्तं लम्बमाने १माल्यादौ अमरः । २गोधायां शब्दच० ।

**ललाट** न० लड-अच् डस्य लः ललमटति अट-अण् । अलकाधःस्थेऽङ्गभेदे (कपाल) अमरः ।

**ललाटन्तप** पु० ललाटं तापयति तप-णिच् खच्-ह्रस्व । १सूर्ये सि० कौ० । २ललाटतापके त्रि० "लिपिर्ललाटन्तपनिष्ठुराक्षरा" नैषधम् ।

**ललाटपट्ट** पु० ललाटं पट्टमिव विस्तीर्णत्वात् । प्रशस्तललाटे ललाटफलकादयोऽप्यत्र ।

**ललाटिका** स्त्री ललाटे आवध्यते ठन् ।१ललाटभूषणे (टीका) अमरः २ललाटस्थे चिह्ने च ।

**ललाम** न० लल-अच् तमम अति अम-अण् । १प्रधाने, २ध्वजे ३शृङ्गे ४बालधौ ५चिह्ने ६भूषायां ७रम्ये ८तिलके ९घोटके १०प्रभावे च मेदि० । नान्तत्वमप्यस्य रुद्रः ।

**ललामक** न० ललाम तिलकमिव इवार्थे कन् । ललाटपर्य्यन्तं सम्मुखन्यस्ते माल्यभेदे अमरः ।

**ललित** न० लल-क्त । १शृङ्गारानुगुणे चेष्टाभेदे "सुकुमारतयाऽङ्गानां विन्यासो ललितं भवेत्" सा० द० । २सुन्दरे, ३ईप्सिते च त्रि० अमरः ४स्वरभेदे पु० सङ्गी० लड क्त डस्य लः । ५चालने न० ६कस्तूर्य्यां ७नार्य्यां च स्त्री राजनि० । ८नदीभेदे सा च नदी कालिकापु० ८१ अ० उक्ता । ९दुर्गायाम् "या दुर्गा सैव ललिता" पद्मपु० पाता० । १०राधासखीभेदे च ।

**ललितासप्तमी** स्त्री ललिताप्रिया सप्तमी । ललितापूजाङ्गे १भाद्रशुक्लसप्तम्याम्, तद्दिनकर्त्तव्ये २व्रतभेदे च ।

**लव** पु० लू-अप् । १लेशे २विनाशे ३छेदने ४श्रीरामपुत्रे मेदि० ५कालपरिमाणभेदे काष्ठाद्ये हेमच० ६गोलाङ्गूललोम्नि, ७बाले केशे च ८जातीफले न० शब्दच० ।९लवङ्गे १०रामज्जके ११ईषदर्थे राजनि० । १२लावपक्षिणि पुंस्त्री० राजनि० ।

**लवङ्ग** न॰ लू-अङ्गच्। स्वनामख्याते द्रव्ये अमरः। "लवङ्गं कटुकं तिक्तं लघु नेत्रहितं हिमम्। दीपनं पाचनं रुच्यं कफपित्तास्रनाशनम्। तृष्णां छर्दिं तथाध्मानशूलमाशु विनाशयेत्। कासं श्वासं च हिक्कां च क्षयं क्षिपति तद्ध्रुवम्" भावप्र॰। स्वार्थे क तत्रैव शब्दर॰।

**लवङ्गकलिका** स्त्री लवङ्गं कलिकेव। लवङ्गे राजनि॰।

**लवण** पु॰ लू-ल्युट् पृषो॰ णत्वम्। १रसभेदे "लवणः शोधनो रुच्यः पाचनः कफपित्तदः। पुंस्त्ववातहरः कायशैथिल्यमृदुताकरः। चक्षुर्नासास्रजलदः कपोलगलदाहकृत्। सोऽतियुक्तोऽक्षिपाकास्रपित्तकोठक्षतादिकृत्। वलीपलितखालित्यं कुष्ठवीसर्पतृट्प्रदः" भावप्र॰। तत्प्रधाने २सैन्धवसौवर्चलविडादिरूपे पदार्थे च न॰। तदुत्पत्तिस्थाने ३सिन्धुदेशे ४समुद्रे ५मधुदैत्यसुते असुरभेदे च पु॰। ६लवणरसयुक्ते मेदि॰ ७लावण्यवति च त्रि॰ ८नदीभेदे ९दीप्तौ च स्त्री मेदि॰।

**लवणकिंशुका** स्त्री लवणरसान्वितं किंशुकं पत्रं यस्याः। महाज्योतिष्मत्याम् राजनि॰।

**लवणक्षार** पु॰ लवणमयः क्षारः। लवणसंयुक्ते क्षारे [राजनि॰

**लवणखनि** स्त्री ६त॰। शाम्भरिलवणोत्पत्तिस्थाने हेमच॰।

**लवणधेनु** स्त्री दानार्थं कल्पितायां लवणनिर्मितायां धेनौ वराहपु॰। [धान्यशैलशब्दे १८८१पृ॰ दृश्यम्।

**लवणाचल** पु॰ दानार्थं कल्पिते अचलाकारे लवणस्तूपे।

**लवणाब्धि** पु॰ लवणमयोऽब्धिः। लवणप्रचुरसमुद्रे। लवणसमुद्रादयोऽप्यत्र। [(करकचलवण) राजनि॰।

**लवणाब्धिज** न॰ लवणाब्धेर्जायते जन-ड। सामुद्रलवणे

**लवणोत्तम** न॰ लवणेषु उत्तमम्। सैन्धवलवणे रत्नमा॰।

**लवणोद** पु॰ लवणमयमुदकं यस्य उदादेशः। लवणसमुद्रे अमरः।

**लवन** न॰ लू-भावे कर्मणि च ल्युट्। १छेदने अमरः (कोना काता) २क्षत्रे स्त्री गौरा॰ ङीष्। [क्षत्रे राजनि॰।

**लवली** स्त्री॰ लवं लेशं लाति ला-क गौ॰ ङीष्। (नोयाड़)

**लवित्र** न॰ लूयतेऽनेन लू-इत्र। १दात्रे अमरः।

**लश(ष)(स)** शिल्पयोगे चु॰उभ॰सक॰सेट्। लाश(ष)(स)यति ते अललाश(ष)(स)त् त।

**लशु(सु)न** न॰ अश-उनन् उनन् वा धातोरादेर्लश्च। (रशुन)। रसोने भावप्र॰। तस्योत्पत्तिगुणादि भावप्र॰ उक्तं यथा "लशुनन्तु रसोनः स्यादुग्रगन्धो महौषधम्। अरिष्टो म्लेच्छकन्दः स्यात् यवनेष्टो रसोनकः। यदामृतं वैनतेयो जहार सुरसत्तमः। तदा ततोऽपतद्विन्दुः स रसोनोऽभवद्भुवि। पञ्चभिश्च रसैर्युक्तो रसेनाम्लेन वर्जितः। तस्माद्रसोन इत्युक्तो द्रव्याणां गुणवेदिभिः। कटुकश्चापि मूलेषु तिक्तः पत्रेषु संस्थितः। नाले कषाय उद्दिष्टो नालाग्रे लवणः स्थितः। वीजे तु मधुरः प्रोक्तो रसस्तद्गुणवेदिभिः। रसोनो वृंहणो वृष्यः स्निग्धोष्णः पाचनः सरः। रसे पाके च कटुकस्तीक्ष्णो मधुरको मतः। भग्नसन्धानकृत् कण्ठ्यो गुरुपित्तास्रवृद्धिदः। बलवर्णकरो मेधाहितो नेत्र्यो रसायनः। हृद्रोगजीर्णज्वरकुक्षिशूलविबन्धगुल्मारुचिकासशोफान्। दुर्नामकुष्ठानलसादजन्तुसमीरणश्वासकफांश्च हन्ति। मद्यं मांसं तथाम्लञ्च हितं लशुनसेविनाम्"। दीर्घमध्य शब्दर॰।

**लष** स्पृहायां दिवा॰ भ्वा॰च उभ॰सक॰सेट्। लष्यति-ते लषति ते अलषीत् अलाषीत् अलषिष्ट ललाष लेषे।

**लस** श्लेषे क्रीडायां दीप्तौ च अक॰भ्वा॰पर॰सेट्। लसति अलासीत् अलसीत्।

**लसा** स्त्री लसति लस-अच्। हरिद्रायाम् हारा॰।

**लसिका** स्त्री लस-अच् टाप् अत इत्वम्। लालायां शब्दच॰।

**लसज** व्रीडायां भ्वा॰आ॰अक॰सेट्। लज्जते अलज्जिष्ट। ईदित् निष्ठायामनिट् ओदित् निष्ठातस्य नः। लग्नः।

**लस्त** त्रि॰ लस-क्त नि॰ इडभावः। १श्लिष्टे, क्रीडिते, २शिल्पयुक्ते च। संज्ञायां कन्। धनुर्मध्यभागे पु॰अमरः

**लहरि(री)** स्त्री लेन-इन्द्रेण ह्रियते अङ्गुगमनाय हृ-कर्मणि इन् वा ङीप्। महातरङ्गे हेमच॰।

**ला** आदाने अदा॰ पर॰ सक॰ अनिट्। लाति अलासीत्।

**लाक्षणिक** त्रि॰लक्षणया बोधयति ठक्। १लक्षणया अर्थबोधके शब्दे। अस्त्यर्थे ठन् स्वार्थे अण्। २लक्षणयुक्ते च।

**लाक्षण्य** त्रि॰ लक्षणं वेत्ति ष्यञ्। १शुभाशुभलक्षणज्ञे। अस्त्यर्थे बा॰ ष्यञ्। २लक्षणयुक्ते।

**लाक्षा** स्त्री लक्ष्यतेऽनया लक्ष-अच् पृषो॰वृद्धिः। (ला)ख्याते पदार्थे अमरः। २रञ्जनद्रव्ये।

**लाक्षातरु** पु॰ लाक्षायोनिस्तरुः। (ला) द्रव्यसाधने वृक्षे शब्दच॰। लाक्षावृक्षादयोऽप्यत्र।

**लाक्षादितैल** न॰लाक्षादिभिः पक्वं तैलम् शा॰त॰। वैद्यकप्रसिद्धे तैलभेदे तच्च द्विविधं स्वल्पं वृहच्चेतिभेदात् तत्र स्वल्पं यथा "लाक्षा हरिद्रा मञ्जिष्ठाकल्कैस्तैलं विपाचितम्।

तद्गुणेनारनालेन टाहशीतज्वरापहम्”। वृहत् यथा “लाक्षारसाढके प्रस्थं तैलस्य विपचेत् भिषक्। मस्तु-ढकसमायुक्तं पिष्ट्वा चात्र समावपेत्। शतपुष्पां हरिद्राञ्च मूर्वां कुष्ठं हरेणुकाम्। कटुकां मधुकां रास्नामश्वगन्धाञ्च दारु च। मुस्तकं चन्दनं चैव पृथगक्ष-समानकैः। द्रव्यैरेतैश्च संसिद्धमभ्यङ्गात् मारुतापहम्। विषमाख्यान् ज्वरान् सर्वानाश्वेव प्रशमं नयेत्। कासं श्वासं प्रतिश्यायं कण्डूं दौर्गन्ध्यगौरवम्। त्रिकपृष्ठ-ग्रह शूलं गात्राणां स्फुटनं तथा। पापालक्ष्मीप्रशमनं सर्वग्रहनिवारणम्। अश्विभ्यां निर्मितं सम्यक् तैलं लाक्षादिकं महत्” सुखबोधः। [राजनि०

**लाक्षाप्रसाद** पु० लाक्षायां प्रसादो यस्य। पट्टिकालोध्रे

**लाक्षाप्रसाधन** न० प्रसाध्यते भूष्यतेऽनेन ल्युट् लाक्षा तद्रस एव प्रसाधनमस्य। १रक्तलोध्रे अमरः।

**लाक्षारस** पु० लाक्षानिःसृतो रसः द्रवः। अलक्तकरसे।

**लाख** शोषे भूषणे दाने वारणे च सक० सामर्थ्ये अक०भ्वा० पर०सेट्। लाखति अलाखीत् ऋदित् चङि न ह्रस्वः।

**लाघ** सामर्थ्ये भ्वा० आ० सक०सेट्। लाघते अलाघिष्ट। ऋदित् चङि न ह्रस्वः।

**लाघव** न० लघोर्भावः अण्। १लघुत्वे आरोग्ये च राजनि०

**लाङ्गल** न० लगि–कलच् पृषो० वृद्धिः। स्वनामख्याते १भूमिकर्षके पदार्थे अमरः। २लिङ्गे त्रिका० ३पुष्पभेदे ४तालवृक्षे ५गृहदारुणि च मेदि०। [(हेल) अमरः।

**लाङ्गलदण्ड** पु० ६त०। लाङ्गलमध्यस्थे काष्ठमये दण्डे

**लाङ्गलपद्धति** स्त्री लाङ्गलखाता पद्धतिः रेखा। सीतायाम् लाङ्गलखातक्षेत्रस्थभूमिरेखायाम् अमरः।

**लाङ्गलिकी** स्त्री लाङ्गलमिवाकारोऽस्त्यस्याः ठन् गौ० ङीष्। (विषलाङ्गला) १वृक्षभेदे अमरः। तत्र भवः अण्। २विषभेदे पु० हेमच०।

**लाङ्गलिन्** पु० लाङ्गलं प्रहरणसाधनत्वेनास्त्यस्य इनि। १बल-रामे शब्दर०। लाङ्गलदण्ड इव दीर्घः आकारोऽस्त्यस्य इनि। २नारिकेलवृक्षे अमरः।

**लाङ्गली** स्त्री लाङ्गलाकारः पुष्पमस्त्यस्याः अच् गौरा०ङीष् (काँचड़ा) शाकभेदे अमरः।

**लाङ्गूल** न० लगि–ऊलच् पृषो०। पशूनां पश्चाद्भागिनि रोम-गुच्छे मारसुन्दरी २शेफे मेदि० ३कुमूले त्रिका०।

**लाङ्गूलिका** स्त्री लाङ्गूलाकारोऽस्त्यस्याः ठन्। पृश्निपर्ण्याम् राजनि० [तदाकारपुष्पयुते २वृषभौषधे च राजनि०।

**लाङ्गूलिन्** पु० लाङ्गूलमस्त्यस्य इनि। १वानरे शब्दच०

**लाछ** अङ्कने भ्वा०पर०सक०सेट् इदित्। लाञ्छति अला-ञ्छीत्। [दयथयम्। लाञ्छति अलाञ्छीत्।

**लाज** भर्त्सने भ्वा०पर०सक०सेट्। लाजति अलाजीत्। इदि-

**लाज** न० लाज–अच्। १उशीरे २आर्द्रतण्डुले पु० मेदि०। ३भृष्टधान्ये (खइ) पु०ब०व०अमरः। स्त्रीत्वमप्यत्र मेदि०।

**लाञ्छन** न० लाञ्छ्यते लाछि–कर्मणि ल्युट्। १चिह्ने २नामनि च मेदि० भावे ल्युट्। ३अङ्कने।

**लाट** पु० लट–संज्ञायां घञ्। १देशभेदे २वस्त्रे अमरः ३जीर्णालङ्कारे शब्दर०। ४विदग्धपुरुषे च शब्दा०।

**लाटानुप्रास** पु० अलङ्कारोक्ते शब्दालङ्कारभेदे अनुप्रासशब्दे १७८९पृ० अलङ्कारशब्दे च ३९८ पृ० दृश्यम्।

**लाड** क्षेपे अद०चु०उभ०सक०सेट्। लाडयति ते।

**लाभ** पु० लभ्यते लभ–कर्मणि घञ्। १मूलधनादितोऽधिके लभ्यमाने धने अमरः। भावे घञ्। २प्राप्तौ।

**लामज्जक** न० लायते ला–क्विप् लाः आदीयमानः मज्जा सारो यस्य कप्। वीरणमूले अमरः।

**लालन** न० चु०लल–ल्युट्। स्नेहपूर्वकपालने।

**लालसा** स्त्री लस–स्पृहायां यङ् लुक् भावे अ। १अतिश-येच्छायाम् अमरः। २गर्भिणीदोहदे हेमच०।३याच्ञायां औत्सुक्ये च मेदि०। कर्त्तरि अच्।४लोले त्रि०हेमच०।

**लाला** स्त्री चु०लल–णिच् अच्–टाप्। मुखजजलस्रावे अमरः

**लालाटिक** त्रि० ललाटं प्रभोर्भाग्यं पश्यति ठञ्। १प्रभु-भाग्यापजीविनि कार्याक्षमे अमरः। ललाटात् ललाटस्थभाग्यात् आगतः तस्येदं वा ठञ्। २भाग्या-धीने त्रि० “प्राप्तिस्तु लालाटिकी” इत्युद्भटः। ३ललाट-सम्बन्धिनि त्रि०।

**लालाविष** पु० लालायां विषमस्य। १लूतादौ कीटे हेमच० कीटशब्दे २०५६ पृ०दृश्यम्। [हेमच०।

**लालास्राव** लालां स्रावयति स्रु णिच्–अण्। लूताकीटे

**लालित्य** न० ललितस्य भावः ष्यञ्। १सौन्दर्ये २मनो-हरत्वे “नैषधे पदलालित्यम्” इत्युद्भटः।

**लाव** पुंस्त्री० लू–कर्त्तरि संज्ञायां घञ्। १पक्षिभेदे अमरः। स्त्रियां ङीष्। स्वार्थे क। तत्रैव भावे घञ्। २छेदने।

**लावण** न० लवणेन संस्कृतम् अण्। लवणसंस्कृते औषधादौ

**लावणिक** न० लवणेन संस्कृतम् ठण्। १लवणेन संस्कृतौषधादौ हेमच०। लवणं पण्यमस्य ठञ्। २लवणविक्रयोपजी-विनि वणिग्भेदे च।

**लावण्य** न० लवणस्य भावः ष्यञ्। उज्ज्वले "मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते" उज्ज्वलमणुक्तो देहसौन्दर्य्यभेदे च।

**लासिका** स्त्री लस–ण्वुल्। नर्त्तक्याम् अमरः। पुंयो० नामकीत्यपत्र तट्टीका।

**लास्य** न० लस–ण्यत्। १नृत्ये अमरः। २वाद्यान्वितगीतिकानृत्ये मेदि०। "स्त्रीनृत्यं लास्यमुच्यते" इत्युक्ते ३स्त्रीनृत्ये च। स्वार्थे क। तत्रैव।

**लिकुच** पु० लकुच–पृषो० इत्वम्। (माँदार) वृक्षे अमरः।

**लिक्षा(क्षा)** स्त्री लिष–गतौ क्स वडुकइत्वानि पृषो० वा कश। १यूकाण्डे शब्दर०। "जालान्तरगते भानौ यच्चाणु दृश्यते रजः। तैश्चतुर्भिर्भवेल्लिक्षा" इत्युक्ते परिमाणभेदे च।

**लिख** लेखने तुदा०पर०सक०सेट्। लिखति अलेखीत्। कुटादिरयम् तेन लिखनमिति सिद्धम्।

**लिख** गतौ भ्वा०पर०सक०सेट् इदित्। लिङ्खति अलिङ्खीत्।

**लिखन** न० कु० लिख–भावादौ ल्युट्। १लेखने २लिपौ च।

**लिखित** न० लिख–भावे क्त। १लेखने। आधारे क्त। २लिपौ अमरः। विवादे अर्थसाधके ३पत्रे च "प्रमाणं लिखितं भुक्तिः" स्मृतिः। लेख्यशब्दे दृश्यम्। ४स्मृतिकारके शङ्खमुनिभ्रातरि मुनिभेदे पु०।

**लिग** गतौ भ्वा०पर०सक०सेट् इदित्। लिङ्गति अलिङ्गीत्।

**लिग** चित्रीकरणे चुरा०उभ०सक०सेट् इदित्। लिङ्गयति ते अलिलिङ्गत् त।

**लिङ्ग** पु० लिगि–अच्। १चिह्ने २पुंसोऽसाधारणचिह्ने उपस्थेन्द्रिये अमरः। ३अनुमानसाधने हेतौ ४सांख्योक्ते प्रधाने तस्याऽविवेकहेतुत्वात् तथात्वम्। ५शिवमूर्त्तिभेदे मेदि०। ६व्याप्ये ७व्यक्तौ शब्दनिष्ठे पदसाधुताप्रयोजके ८धर्मभेदे लिका० ९अर्थप्रकाशनसामर्थ्ये च। "समता च लिङ्गमिति" मीमांसकाः।

शब्दधर्मलिङ्गं चास्माभिः शब्दार्थरत्ने निरूपितं यथा "लिङ्गत्वञ्च प्राकृतगुणगतावस्थात्मको धर्म एव तद्विशेषश्च पुंनपुंसकत्वादिः। तथा हि सर्वेषां त्रिगुणप्रकृतिकार्य्यतया शब्दानामपि तथात्वेन गुणगतविशेषावस्थेषु लिङ्गानीव इति कल्प्यते स च विशेषः शास्त्रे दर्शमप्यधायि। "विकृतसत्त्वादीनां तुल्यरूपेणावस्थानात् नपुंसकत्वं सत्त्वस्याधिक्ये पुंस्त्वम् अल्पत्वे (रज आधिक्ये) स्त्रीत्वमिति"। एवञ्च लिङ्गस्य शब्दधर्मत्वेऽपि शब्देन सहार्थाभेदारोपात् असति बाधके अर्थेऽपि साक्षात् तत्पारतन्त्र्येण वा सर्वत्र तस्य विशेषणत्वम् शाब्दबोधे शब्दभानस्योक्तत्वाच्च शब्दस्य नामार्थतावत् तद्गतलिङ्गस्यापि नामार्थतौचित्यात् "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इति हर्य्युक्तेः "शब्दोऽपि यदि भेदेन विवक्षा स्यात्तदा तथा। नो चेत् श्रोत्रादिभिः सिद्धोऽप्यसावर्थेऽवभासते" हर्य्युक्तेश्च शब्दानां नामार्थतावगतेः। तथा प्रातिपदिकार्थाभेदविवक्षायां तु श्रोत्रादिभिरेव सिद्धः स्यात् ननु कथं प्रकारतया भासते इति तदर्थः। युक्तञ्चैतत् पुंलिङ्गः शब्द इति व्यवहारात् "स्वमोर्नपुंसकादिति" पा०सूत्रे शब्दस्यैव नपुंसकत्वव्यपदेशात् दारानित्यादौ पुंस्त्वान्वयबाधाच्च लिङ्गस्य शब्दधर्मत्वमन्यथैतेषु लिङ्गाद्यनन्वयापत्तेर्व्यवहारसूत्रनिर्देशासङ्गत्यापत्तेश्च। तथा अर्थभेदाच्छब्दभेदवत् लिङ्गभेदादपि शब्दभेद इति कल्प्यते प्रागुक्तधर्मविशेषरूपभेदकसद्भावात्। उक्तञ्च भाष्ये "एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वमिति"। एवञ्च तटादिशब्दानामनेकलिङ्गत्वव्यवहारः समानानुपूर्वीकत्वेनैव वस्तुतस्तेषां भिन्नानामेव भिन्नलिङ्गत्वमिति दिक्"।

अर्थप्रकाशनसामर्थ्यरूपलिङ्गन्तु द्वितीयादिश्रवणे तत्तन्मन्त्रप्रकाश्यार्थे विनियोगसाधकं यथा "बर्हिर्देवसदनं दामीति" अत्र दामीति पदस्य दा लवने इत्यस्माज्जातो लिङ्गस्य च्छेदनप्रकाशनसामर्थ्यात् बर्हिरित्यस्य चास्तृतदर्भप्रकाशनसामर्थ्यात् दर्भच्छेदने तस्यैतन्मन्त्रस्य विनियोगोऽवगम्यते" तत्त्वबोध०। प्रत्यक्षद्वितीयाश्रवणे तु लैङ्गिकविनियोगस्त्वज्यते "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" जै० सू०। यथा "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" श्रुतिः ऐन्द्री च ऋक् "कदाचन स्तरीरसि नेन्द्र! सश्चसि दाशुषे" अस्य मन्त्रस्य इन्द्रप्रकाशनसामर्थ्यम् तदेतत् निरूपितं तत्त्वबोधन्याम् "तथा हि गार्हपत्यमिति द्वितीयारूपप्रत्यक्षश्रुत्या गार्हपत्याग्निगतं क्रियाजन्यप्रीतिफलाश्रयत्वरूपं कर्मत्वं साक्षाद्बोधितं तथा च तस्य देवतात्वं श्रुतिप्राप्तं क्रियाजन्यप्रीतिभागित्वेनोद्देश्यस्यैव देवतात्वादिति गार्हपत्याग्नेरुपस्थानस्य शेषितावगम्यते ऐन्द्र्येति तृतीयया ऋचः करणत्वबोधनादुपस्थानशेषत्वमवगम्यते मन्त्रलिङ्गेनेन्द्रस्यापि शेषत्वमित्युभयोरुपस्थानं देवतात्वञ्चावगम्यते। तथा च विरोधः न ह्यन्यप्रकाशकमन्त्रेणान्योपस्थानं

विहितमिति तत्परीहाराय मन्त्रस्येन्द्रपदे विधिवाक्यस्थगार्हपत्यपदे वा एकत्र लक्षणावश्यकी। तत्र गार्हपत्यपदस्य इन्द्रे न लक्षणा गार्हपत्यदेवतात्वस्य लिङ्गानिरपेक्षश्रुतिप्राप्तत्वात् इन्द्रदेवतात्वन्तु लिङ्गेन विलम्बबोध्यम्। तथा हि इन्द्रप्रकाशनसामर्थ्यान्यथानुपपत्त्या इन्द्रस्तूपतिष्ठते इति कल्प्यते इति इन्द्रस्य देवतात्वं विलम्बगम्यमिति शीघ्रबोधकत्वेन श्रुतिरेव बलवतीति लिङ्गं दुर्बलम्। अतएव न समुच्चयः न वा इन्द्रस्यैवेति नियमः लिङ्गस्य दुर्बलत्वेन इन्द्रोपस्थानस्याप्राप्तत्वात्। एवञ्च श्रुतितोऽग्न्युपस्थाने सिद्धे कथमित्याकाङ्क्षायामैन्द्र्येति। ततश्च मन्त्रस्येन्द्रप्रकाशकत्वात् तेनाग्न्युपस्थानानुपपत्तेः न ह्यन्योपस्थापकमन्त्रेणान्यस्योपस्थानं युक्तमित्यनुपपत्त्या मन्त्रस्येन्द्रपदस्य इदि परमैश्वर्य्ये इति धात्वनुसारादैश्वर्य्यगुणयोगादग्नौ लक्षणा" "यावदेव हि मन्त्रार्थो मन्त्रेण प्रतिपाद्यते। मन्त्रार्थं मन्त्रतो बुद्ध्वा पश्चाच्छक्तिर्निरूप्यते। मन्त्राकाङ्क्षावशेऽन्येन्द्रशेषत्वश्रुतिकल्पना। श्रुत्या प्रत्यक्षया पूर्वं गार्हपत्यार्थतां गते। लिङ्गस्य हि प्रमाणत्वं मन्त्राकाङ्क्षानिबन्धनम्। तां च श्रुतिर्विरुध्यन्ती ह्यविरोधेन गच्छति। विरोधे च श्रुतिर्लिङ्गं बलीयस्त्वेन बाधते"। लियं लयं गच्छति इण्गौ०। १०सांख्योक्ते महत्तत्त्वे देहशब्दे ३७५४ पृ० दृश्यम्। ११सप्तदशावयवे लिङ्गदेहे। "सप्तदशैकं लिङ्गम्" सा० सू० "सूक्ष्मशरीरमप्याधाराधेयभावेन द्विविधं भवति तत्र सप्तदश मिलित्वा लिङ्गशरीरं तच्च सर्गादौ समष्टिरूपमेकमेव भवतीत्यर्थः। एकादशेन्द्रियाणि पञ्च तन्मात्राणि बुद्धिश्चेति सप्तदश। अहङ्कारस्य बुद्धावेवान्तर्भावः। चतुर्थसूत्रवक्ष्यमाणप्रमाणादेतान्येव सप्तदशलिङ्गं मन्तव्यम्। न तु सप्तदश एकं चेत्यष्टादशतया व्याख्येयम् उत्तरसूत्रेण व्यक्तिभेदस्योपपाद्यतयात्र लिङ्गैकत्वे एकशब्दस्य तात्पर्य्यावधारणाच्च। "कर्मात्मा पुरुषो योऽसौ बन्धमोक्षैः स युज्यते। स सप्तदशकेनापि राशिना युज्यते च सः" इति मोक्षधर्मादौ लिङ्गशरीरस्य सप्तदशत्वसिद्धेश्च सप्तदशावयवा अत्र सन्तीति सप्तदशको राशिरित्यर्थः। राशिशब्देन स्थूलदेहस्यावयवित्वं निराकृतम् अवयविरूपेण द्रव्यान्तरकल्पनायां गौरवात्। स्थूलदेहस्य चावयवित्वमेकतादिप्रत्ययानुरोधेन कल्प्यत इति। अत्र च लिङ्गदेहे बुद्धिरेव प्रधानेत्याशयेन लिङ्गदेहस्य भोगः प्रागुक्तः। प्राणश्चान्तःकरणस्यैव वृत्तिभेदः। अतो लिङ्गदेहे प्राणपञ्चकस्याप्यन्तर्भाव इत्यस्य सप्तदशावयवकस्य शरीरत्वं स्वयं वक्ष्यति "लिङ्गशरीरनिमित्तक इति सनन्दनाचार्य्यः" इति सूत्रेण। अतो भोगायतनत्वमेव मुख्यं शरीरलक्षणम्। तदाश्रयतया त्वन्यत्र शरीरत्वमिति पश्चाद्व्यक्तीभविष्यति। चेष्टेन्द्रियार्थाश्रयः शरीरमिति तु न्यायेऽपि तस्यैव लक्षणं कृतमिति" भा०। "तदधिष्ठानाश्रये देहे तद्वादात् तद्वादः" सा० सू०। "तस्य लिङ्गस्य तदधिष्ठानमाश्रयो वक्ष्यमाणभूतपञ्चकं तस्याश्रये षाट्कौशिकदेहे तद्वादो देहवादस्तद्वादात् तस्याधिष्ठानशब्दोक्तस्य देहस्य वादादित्यर्थः लिङ्गसम्बन्धादधिष्ठानस्य देहत्वमधिष्ठानाश्रयत्वाच्च स्थूलस्य देहत्वमिति पर्य्यवसितोऽर्थः"। अधिष्ठानशरीरं च सूक्ष्मं पञ्चभूतात्मकं वक्ष्यते तथा च शरीरत्रयं सिद्धम्" "वासना भूतसूक्ष्मं च कर्मविद्ये तथैव च। दशेन्द्रियं मनोबुद्धिरेतल्लिङ्गं विदुर्बुधाः" इति वाशिष्ठादिवाक्येभ्यः। अत्र लिङ्गशरीरप्रतिपादनेनैव पुर्य्यष्टकमपि व्याख्येयमित्याशयेन बुद्धिधर्माणामपि वासनाकर्मविद्यानां पृथगुपन्यासः। भूतसूक्ष्मं चात्र तन्मात्रा, दशेन्द्रियाणि च ज्ञानकर्मेन्द्रियभेदेन पुरद्वयमित्याशयः। यत् तु मायावादिनो लिङ्गशरीरे तन्मात्रस्थाने प्राणादिपञ्चकं प्रक्षिपन्ति पुर्य्यष्टकं चान्यथा कल्पयन्ति तदप्रामाणिकमिति" भा०। वेदान्तिनये "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्" इत्युक्तं सप्तदशावयवं लिङ्गशरीरमिति भेदः।

**लिङ्गक** पु० लिङ्गेन कायति कै—क। कपित्थवृक्षे शब्दच०।

**लिङ्गपुराण** पु० व्यासप्रणीते महापुराणभेदे लिङ्गपुराणप्रतिपाद्यविषया यथा "ब्रह्मोवाच "शृणु पुत्र! प्रवक्ष्यामि पुराणं लिङ्गसंज्ञितम्। पठतां शृण्वताञ्चैव भुक्तिमुक्तिप्रदायकम्। यच्च लिङ्गाभिधे तिष्ठन् वह्निलिङ्गे हरोऽभ्यधात्। मह्यं धर्मादिसिद्ध्यर्थमग्निकल्पकथाश्रयम्। तदेव व्यासदेवेन भागद्वयसमाचितम्। पुराणं लिङ्गमुदितं बह्वाख्यानविचित्रितम्। तदेकादशसाहस्रं हरमाहात्म्यसूचकम्। परं सर्वपुराणानां सारभूतं जगत्त्रये। पुराणोपक्रमे प्रश्नः सृष्टिसंक्षेपतः पुरा"। तत्र पूर्वभागे "योगाख्यानं ततः प्रोक्तं कल्पाख्यानं ततः परम्। लिङ्गोद्भवस्तदर्चा च कीर्त्तिता हि ततःपरम्। सनत्कुमारशैलादिसंवादश्चाथ पावनः। ततो दधीचिचरितं युगधर्मनिरूपणम्। ततो भुवनकोषाख्या

स्वर्य सोमान्वयस्ततः। ततश्च विस्तरात् धर्मं त्रिपुराख्या-नकं तथा। लिङ्गप्रतिष्ठा च ततः पशुपाशविमोचनम्। शिवव्रतानि च तथा सदाचारनिरूपणम्। प्रायश्चित्ता-न्यरिष्टानि काशीश्रीशैलवर्णनम्। अन्धकाख्यानकं पश्चा-द्वाराहचरितं पुनः। नृसिंहचरितं पश्चाज्जलन्धरवध-स्ततः। शैवं सहस्रनामाथ दक्षयज्ञविनाशनम्। कामस्य दहनं पश्चात् गिरिजायाः करग्रहः। ततो विनायका-ख्यानं नृत्याख्यानं शिवस्य च। उपमन्युकथा चापि पूर्वभाग इतीरितः"। उत्तरभागे "विष्णुमाहात्म्यकथनमम्ब-रीषकथा ततः। सनत्कुमारनन्दीशसंवादश्च पुनर्मुने!। शिवमाहात्म्यसंयुक्तस्नानयागादिकं ततः। सूर्य्यपूजाविधि-श्चैव शिवपूजा च मुक्तिदा। दानानि बहुधोक्तानि श्राद्धप्रकरणन्ततः। प्रतिष्ठा तत्र गदिता ततोऽघोरस्य कीर्त्तनम्। व्रजेश्वरी महाविद्या गायत्रीमहिमा ततः। त्र्यम्बकस्य च माहात्म्यं पुराणश्रवणस्य च। एतस्योप-रिभागस्ते लैङ्गस्य कथितो मया। व्यासेन हि निब-द्धस्य रुद्रमाहात्म्यसूचिनः। लिखित्वैतत् पुराणन्तु तिलधेनुसमन्वितम्। फाल्गुन्यां पूर्णिमायां यो दद्या-द्भक्त्या द्विजातये। यः पठेच्छृणुयाद्वापि लैङ्गं पापा-पहं नरः। स भुक्तभोगो लोकेऽस्मिन्नन्ते शिवपुरं व्रजेत्। लिङ्गानुक्रमणीमेतां पठेद् यः शृणुयात् तथा। तावुभौ शिवभक्तौ तु लोकद्वयसुभोगिनौ। जायेतां गिरिजाभर्त्तुः प्रसादान्नात्र संशयः" नार०पु० १०२अ०।

**लिङ्गवर्द्धिनी** स्त्री लिङ्गं पुरुषचिह्नभेदं वर्द्धयति वृध-णिच्-णिनि। अपामार्गे शब्दच०।

**लिङ्गवृत्ति** पु० लिङ्गं संन्यासादिवेशधारणमेव वृत्तिः जी-विका यस्य। जीविकार्थसन्न्यासचिह्नादिधारिणि कपट-परिव्राजके अमरः।

**लिङ्गिन्** त्रि० लिङ्गमस्त्यस्य इनि। १चिह्नवति, २जीवि-कार्थसंन्यासादिचिह्नवति, ३प्रशस्तलिङ्गवति गजे च पु० जटा०। ४लिङ्गज्ञानसाध्ये साध्ये ५पक्षे च। "तल्लिङ्गलिङ्गिज्ञानपूर्वम्" सा० का० व्याख्याने लिङ्गि-पदस्यावर्त्तनीयं तेन लिङ्गमस्यास्तीति पक्षधर्मताज्ञान-मपि दर्शितम्" त० कौ०। [गुरिया) लताभेदे राजनि०।

**लिङ्गिनी** स्त्री लिङ्गमिवाकारोऽस्त्यस्याः इनि ङीप्। (पंच-

**लिङ्गोपहित** पु० लिङ्गेन हेतुना उपहितः विशिष्टः। सा-ध्यानुमानाङ्गहेतुयुक्ते पक्षे। आचार्य्यमते लिङ्गोप-हित एव पक्षे लैङ्गिकस्य साध्यस्य भानम्। तथा हि वह्निव्याप्यो हि धूमो वह्नेर्लिङ्गं तद्वति पक्षे वह्नेर्भानम् वह्निव्याप्यधूमवान् पर्वत इति परामर्शोत्तरं जायमाना-नुमाने ज्ञानलक्षणया तादृशपक्षभानस्यावश्यकत्वात्। तथा च वह्निव्याप्यधूमवान् पर्वतो वह्निमान् इत्येव तत्रानुमानप्रकारः। [अलिपत् अलिपत अलिप्त।

**लिप** लेपने, तुदा० उभ० मुचा० सक० अनिट्। लिम्पति ते

**लिपि(पी)** स्त्री लिप–इक् वा ङीप्। १लिखिताक्षरके पत्रे, अमरः २लेखने च। [लेखके अमरटी०।

**लिपिक(का)र** पु० लिपिं करोति कृ–अच् अण् वा।

**लिप्त** त्रि० लिप-क्त। १भुक्ते, २कृतचन्दनादिलेपे अमरः ३मिलिते सि०कौ० ४विषदिग्धे च मेदि०। ज्योतिषोक्ते राशेः षष्टिभागात्मके कलारूपे ५भागे स्त्री। "लिप्तार्द्धहीनं यदि पूर्वमेतत्" इति नी० ताजकम्। स्वार्थे क अत इत्त्वम्। लिप्तिका इत्यप्यत्रार्थे।

**लिप्तक** पु० कुत्सितं लिप्तम् कन्। विषाक्तशरे अमरः।

**लिप्सा** स्त्री लभ सन्-भावे अ। १लाभेच्छायाम् २इच्छायां अमरः। "लिप्सायाश्च तृतीयवर्षे द्रव्यार्जननियमस्य कृत्यर्थत्वमापादितं गुरुणा" मिता०। [२खरे च शब्दर०।

**लिम्पाक** पु० लिप-आकन् पृषो०। १जम्बीरभेदे (पातिलेबु)

**लिवि(वी)** लिप-इक् पृषो० पस्य वः वा ङीप्। लिपि-शब्दार्थे अमरः। लिविकराद्योऽपि लिपिकराद्यर्थे।

**लिश** क्षेपे अल्पीभावे च दि० अक० आत्म०अनिट्। लिश्यते अलिक्षत।

**लिश** गतौ तु० पर० सक० अनिट्। लिशति अलिक्षत्।

**लिह** आस्वादने अदा० उभ० सक० अनिट्। लेढि लीढे। अलिक्षत् त। [ओदित् निष्ठातस्य नः। लीनः।

**ली** श्लेषे दिवा० आ० अक० अनिट्। लीयते अलेष्ट।

**ली** श्लेषे क्र्या०प्वा० पर० अक० अनिट्। लिनाति अलैषीत्।

**ली** द्रावणे वा चुरा० उभ० सक० सेट् पक्षे भ्वा० पर० अ-निट्। लीनयति ते लाय(प)यति ते घृतम् लयति। अत्र द्रावणे लीङ् विलापयतीत्येव। प्रलम्भने अभिभवे पूजायाञ्च सक० आत्म०। तत्र नित्यमात्वे पुक्। जटा-भिर्लापयते पूजामधिगच्छतीत्यर्थः। श्येनो वर्त्तिकामु-ल्लापयते अभिभवतीत्यर्थः। बालमुल्लापयते वञ्चयतीत्यर्थः। अलीलनत् त अलील(प)यत् त। अलैषीत्। अलासीत्।

**लीढ** त्रि० लिह-आस्वादे क्त। १आस्वादिते, २स्पृष्टे च।

**लीला** स्त्री ली-क्विप् लियं लाति ला–क। १केलौ, २विलासे ३शृङ्गारादिजातचेष्टायाम् मेदि०। "अप्राप्तवल्लभसमा-

गमनाधिकायाः, सख्याःपुरोऽस्व निजचित्तविनोदबुद्ध्या, आलापवेशगतिहास्यविलोकनाद्यैः प्राणेश्वरानुकृतिमाकलयन्ति लीलाम्" उज्ज्वलमण्युक्ते ४प्रियानुकरणे च ।

**लीलावती** स्त्री लीला+अस्त्यर्थे मतुप् मस्य वः । १विलासवत्यां स्त्रियां, भास्कराचार्यस्य २पुत्र्यां, तत्कृते ३अङ्कग्रन्थभेदे मल्लनाचार्यस्य ४भार्यायां तन्नामके व्याकरणस्वप्रसिद्धे "नाथः स्वजतीत्यादिके" व्याख्यातविवृतपदार्थ प्रतिपादके ५ग्रन्थभेदे, पुराणप्रसिद्धे ६वेश्याभेदे च लि० न० मतुप्स्पु० । [२देवयवे च त्रिका०।

**लीलोद्यान** न० लीलार्थमुद्यानम् । १क्रीडनार्थे आरामे,

**लुञ्चायित** त्रि० लुच्यते लुनृच-अपनयने क्विप् लुक् कायो यस्य तादृश इवाचरति लुक्काय+क्विप्-क्त । अन्तर्हितदेहे

**लुज** कथने बहुधातोरर्थे च चुरा० उभ०सक० सेट् इदित् । लुञ्जयति ते अलुलुञ्जत् त ।

**लुञ्चित** त्रि० लुनृच-णिच्-क्त । अपसारिते दूरीकृते ।

**लुट** दीप्तौ अक० प्रतिघाते सक० भ्वा० आत्म० सेट् । लोटते ऌदित् लुङि उभ० अलुटत् अलोटिष्ट ।

**लुट** हरणे भ्वा०पर०सक०सेट् इदित् । लुण्टति अलुण्टीत् ।

**लुट** दीप्तौ चु०उभ०सक०सेट् । लोटयति ते अलूलुटत् त ।

**लुट** विलोडने, हरणे च दिवा० सक० पर०सेट् । लुट्यति अलुटत् । ऌदित् चङि वा लुप्तः ।

**लुट** विलोडने सम्बन्धे च दिवा० सक०पर०सेट् । लुट्यति अलोटीत् । बलार्थे भ्वादिरपि । लोटति ।

**लुट** गतौ चौर्ये च सक० खञ्जीभावे आलस्ये च अक० भ्वा० पर० सेट् इदित् । लुण्टति अलुण्टीत् ।

**लुठ** प्रतिघाते भ्वा० आ० लुङि उभ० सक० सेट् । लोठते । अलुठत् अलोठिष्ट । ऌदित् चङि न लुप्तः ।

**लुठ** उपघाते भ्वा० पर० सक० सेट् । लोठति अलोठीत् ।

**लुठ** लोठे तु० कु० प० अक० सेट् । लुठति अलुठीत् ।

**लुठ** चौर्ये चु० उभ०सक०सेट् । लोठयति ते अलूलुठत् त ।

**लुठन** न० कु० लुठ-ल्युट् । अश्वादेर्भूम्यादौ श्रमापनयनार्थं पुनः पुनरङ्गचालने (लोटा) त्रिका० ।

**लुठित** त्रि० लुठ-क्त । भूमौ कृतभूरिदेहपरावर्त्तने ।

**लुड** मन्थने भ्वा०पर०सक०सेट् । लोडति अलोडीत् ।

**लुड** संवृतौ सक० क्षेपे अक० तु० कु० पर० सेट् । लुडति अलुडीत् । लुडनम् ।

**लुण्ट** अवज्ञाय चौर्ये च वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । लुण्टयति ते लुण्टति अलुलुण्टत् त अलुण्टीत् । कर्मणि लुण्ट्यते ।

**लुण्टक** पु० लुण्ट-ण्वुल् । (नटिया) शाकभेदे शब्दच० ।

**लुण्टाक** त्रि० लुटि-षाकन् । चौरे स्त्रियां ङीप् ।

**लुण्ठक** त्रि० लुठि-ण्वुल् । चौरे ।

**लुण्ड** चौर्ये चु०उ०सक०सेट् । लुण्डयति ते अलुलुण्डत् त

**लुथ** वधे सक० क्लेशे अक० भ्वा० पर० सेट् इदित् । लुन्थति अलुन्थीत् ।

**लुनृच** अपनयने भ्वा०पर०सक०सेट् । लुञ्चति अलुञ्चीत् ।

**लुप** छेदने विनाशने च तु०मुचा०उभ०सक० अनिट् । लुम्पति ते अलुपत् अलुप्त । ऌदित् चङि वा लुप्तः । अलूलुपत् त अलुलोपत् त । [अलोपीत् नित्यमङ् इत्यन्ये ।

**लुप** आकुलीभावे दिवा० पर० अक० सेट् । लुप्यति अलुपत् ।

**लुप्त** न० लुप-क्त । १अपहृतधने । २छिन्ने ३नष्टे त्रि० ।

**लुब** अर्द्दने वा चु० उभ० पक्षे भ्वा० पर० सक०सेट् इदित् । लुम्बयति ते लुम्बति । अलुलुम्बत् त अलुम्बीत् ।

**लुब्ध** पु० लुभ-क्त । १व्याधे । २लम्पटे शब्दर० ३लोलुपे च मेदि० । स्वार्थे क । तत्रैव । लुब्ध इव कायति कै-क । लुब्धक व्याधाकारताराभेदे खगोलशब्दे २४२२पृ०दृश्यम् ।

**लुभ** विमोहने तु० पर० अक० सेट् । लुभति अलोभीत् ।

**लुभ** आकाङ्क्षायां दि० पर० सक० सेट् । लुभ्यति । इरित् अलुभत्-अलोभीत् ।

**लुल** विमर्दने चौ० पर० सक० सेट् । लोलति । अलोलीत् ।

**लुलाप** पुंस्त्री० लुल धर्षणे क तमाप्नोति आप् । महिषे अमरः स्त्रियां ङीप् । [लुलितपतत्त्रिकाक्षम्" भट्टिः ।

**लुलित** त्रि० लुल क्त । १आन्दोलिते, २चालिते च "अव

**लुष** चौर्ये भ्वा० पर० सक० सेट् । लोषति अलोषीत् ।

**लुष** हिंसायां चौ० पर० सक० सेट् । लोषति अलोषीत् ।

**लुह** आकाङ्क्षायां भ्वा० पर० सक० अनिट् । लोहति अलुक्षत् । [लावीत् ।

**लू** छेदने क्र्या०प्वा० उभ० सक० सेट् । लुनाति लुनीते अ-

**लूता** स्त्री लू-तक् । कीटभेदे (माकड़सा) अमरः । स्वार्थे क अत इत्वम् । तत्रैव । २पिपीलिकायां ३रोगभेदे (मर्म्मव्रणे) मेदि० ।

**लून** त्रि० लू-क्त निष्टातस्य नः । छिन्ने अमरः ।

**लूम** न० लू-मक् । लाङ्गूले अमरः । [लूषत् ।

**लूष** वधे स्तेये च चु० उभ० सक० सेट् । लूषयति ते अलू-

**लेख** पु० लिख्यते पूजार्थं चित्रादिपटेऽसौ लिख-कर्मणि घञ् । १देवे अमरः । भावे घञ् । २लेखने । कर्मणि घञ्

३लेख्ये त्रि॰ मेदि॰ । आधारे घञ् । ४लेखनाधारे पत्रे "निर्द्धारितेऽर्थे लेखेन" इति माघः ।

**लेखक** पु॰ लिख-ण्वुल् । लिपिकरे अमरः । लेखकलक्षणादि मत्स्यपु॰ १८६ अ॰ उक्तं यथा "सर्वदेशाक्षराभिज्ञः सर्वशास्त्रविशारदः । लेखकः कथितो राज्ञः सर्वाधिकरणेषु वै । शीर्षोपेतान् सुसम्पूर्णान् समश्रेणिगतान् समान् । अक्षरान् वै लिखेद् यस्तु लेखकः स वरः स्मृतः । उपायवाक्यकुशलः सर्वशास्त्रविशारदः । बह्वर्थवक्ता चाल्पेन लेखकः स्याद् नृपोत्तम ! । वाक्याभिप्रायतत्त्वज्ञो देशकालविभागवित् । अनाहार्य्यो नृपे भक्तो लेखकः स्याद् नृपद्विज" । "सकृदुक्तगृहीतार्थो लघुहस्तो जिताक्षरः । सर्वशास्त्रसमालोकी प्रकृष्टो नाम लेखकः" चाणक्यः राजलेखकलक्षणं तु पत्रकौमुद्यामुक्तं यथा "ब्राह्मणो मन्त्रणाभिज्ञो राजनीतिविशारदः । नानालिपिज्ञो मेधावी नानाभाषासमन्वितः । मन्त्रणाचतुरो धीमान् नीतिशास्त्रार्थकोविदः । सन्धिविग्रहभेदज्ञो राजकार्य्ये विचक्षणः । सदा राज्ञो हितान्वेषी राजसन्निधिसंस्थितः । कार्य्याकार्य्यविचारज्ञः सत्यवादी जितेन्द्रियः । स्वल्पवादी शुद्धात्मा धर्मज्ञो राजधर्मवित् । क्षमादिगुणैर्युक्तः स एव नृपलेखकः । नृपानुवर्त्ती सततं नृपविश्वासरक्षकः । नृपतेर्हितकाम्येषी स एव राजलेखकः" । "लेखकानपि कायस्थान् लेख्यकृत्ये विचक्षणान्" पराशरेणोक्तं कायस्थस्य लेखकत्वं विवादान्तर्गतविषयलेखने एव न पुस्तकादौ अब्राह्मणलिखितपुस्तकस्य पाठनिषेधात् ।

**लेखन** न॰ लिख-ल्युट् । १पत्रादौ वर्णादिविन्यासे, २छर्दने च । आधारे ल्युट् । ३भूर्जपत्रे मेदि॰ । लिख्यतेऽनया ल्युट् । ४काशे राजनि॰ ५लेखनसाधने (कलम) स्त्री ङीप् । "मस्याधारं लेखनीञ्च" इति ति॰त॰ । ६रोगोत्सारणार्थशस्त्रभेदे स्त्री ७अञ्जनाङ्गे व्यापारभेदे ८चूर्णभेदे च न॰ । ९लेखनसाधनवर्त्तिभेदे स्त्री भावप्र॰ तत्र लक्षणक्रियां तत्साधनलेखनीप्रमाणञ्चोक्तं यथा "लेखनं क्षारतीक्ष्णाम्लरसैरञ्जनमुच्यते । नेत्रवर्त्मशिराजालस्रोतःशृङ्गाटकस्थितम् । मुखनालाक्षिभिर्दोषमुत्क्लेश्य स्रावयेच्च तत्" । तद्वर्त्तिमानं तत्रैव "एरण्डमात्रावर्त्तिस्तु लेखनी स्यात् प्रमाणतः । चूर्णं तु लेखनं वैद्यैर्द्विशलाकं प्रदीयते" । तस्य शलाकास्वरूपादि तत्रैव "मुखे मुकुलमाकारा कलायपरिमण्डला । अष्टाङ्गुला शलाका स्यादश्मजा धातुजाऽथ वा" कलायपरिमण्डला अग्रे कलायवद् वर्तुला । "ताम्रलोहाश्मसञ्जाता शलाका लेखने मता" । चन्द्रोदयाख्या लेखनी वर्त्तिश्च तत्रोक्ता यथा "शङ्खनाभिविभीतस्य मज्जा पथ्या मनःशिला । पिप्पली मरिचं कुष्ठं वचा चेति समांशकम् । छागक्षीरेण संपिष्य वर्त्तिं कुर्य्यात् यवोन्मिताम् । एरण्डमात्रां संपिष्य जलैः कुर्य्याद्यथाञ्जनम् । तिमिरं मांसवृद्धिञ्च काचं पटलमर्बुदम् । रात्र्यन्ध्यं वार्षिकं पुष्पं वर्त्तिश्चन्द्रोदया हरेत्" । रसक्रिया लेखनी तत्रैवोक्ता यथा "तुत्थमाक्षिकसिन्धूत्थसिताशङ्खमनःशिला । गैरिकं सिन्धुफेनञ्च मरिचं चेति चूर्णयेत् । संयोज्य मधुना कुर्य्यादञ्जनार्थं रसक्रियाम् । वर्त्मरोगार्मतिमिरकाचशुक्रहरीं पराम्" । चूर्णलेखनञ्च तत्रोक्तं यथा "दक्षाण्डत्वक्शिलाकाचशङ्खचन्दनसैन्धवैः । अञ्जनं हरते नित्यं सर्वानक्षिगदान् बलात्" दक्षः कुक्कुटः" । अक्षरलेखनीप्रमाणादि योगिनीतन्त्रोक्तं यथा "वंशजया लिखेद् यस्तु तस्य हानिर्भवेद् ध्रुवम् । ताम्रसूच्या तु विभवो भवेत्तत्क्षयो भवेत् । महालक्ष्मीर्भवेन्नित्यं सुवर्णस्य शलाकया । इस्पातस्य सूच्या वै नातिवृद्धिः प्रजायते । तथा अग्निमयैर्देवि ! पुत्रपौत्रधनागमः । रैत्येन विपुला लक्ष्मीः कांस्येन मरणं भवेत् । अष्टाङ्गुलप्रमाणेन दशाङ्गुलेन वाथ वा । चतुरङ्गुलसूच्या वा यो लिखेत् पुस्तकं शुभे ! । तत्तदक्षरसंख्याते कल्पायुर्याति वै दिने ।"

**लेखनिक** पु॰ लेखनं शिल्पमस्य ठन् । लिपिकरे मेदि॰ ।

**लेखर्षभ** पु॰ लेख ऋषभ इव श्रेष्ठत्वात् । इन्द्रे अमरः ।

**लेखहार** पु॰ लेखं हरति हृ-अण् । १पत्रवाहके । ण्वुल् । लेखहारकोऽप्यत्र ।

**लेखा** स्त्री लिख-अ टाप् । १रेखायां, २पङ्क्तौ च । आधारे संज्ञायां घञ् टाप् । ३लिपौ मेदि॰ ।

**लेख्य** त्रि॰ लिख-ण्यत् । १लेखनीये । २व्यवहारे स्वत्वाद्यावेदके पत्रभेदे न॰ । तल्लक्षणादि वीरमि॰ उक्तं यथा "अथ लेख्यं निरूप्यते । तत्र बृहस्पतिः "साक्षिणामेष निर्दिष्टः संख्यालक्षणनिश्चयः । लिखितस्याधुना वच्मि विधानमनुपूर्वशः । षाण्मासिकेऽपि समये भ्रान्तिः सञ्जायते नृणाम् । धात्राक्षराणि सृष्टानि पत्रारूढान्यतः पुरा । राजलेख्यं स्थानकृतं स्वहस्तलिखितन्तथा । लेख्यन्तु त्रिविधमोक्तं भिन्न-

बहुधा पुनः। भागदानक्रयाधानसंविद्दासऋणादिभिः। सप्तधा लौकिकं लेख्यं त्रिविधं राजशासनम्"। मरीचिरपि "स्थावरे विक्रयाधाने विभागे दान एव च। लिखितेनाप्नुयात् सिद्धिमविसंवादमेव च" विभागो दायभागः आधानमाधीकरणम् संविन्नियमः आदिशब्देन विशुद्ध्यादिपरिग्रहणम्। भागपत्रादीनां लक्षणमाह बृहस्पतिः "भ्रातरः संविभक्ता ये स्वरुच्या तु परस्परम्। विभागपत्रं कुर्वन्ति १भागलेख्यं तदुच्यते। भूमिं दत्त्वा तु यत्पत्रं कुर्याच्चन्द्रार्ककालिकम्। अनाच्छेद्यमनाहार्य्यं दानलेख्यं तु२ तद्विदुः। गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम्। पत्रं कारयते यत्तु ३क्रयलेख्यं तदुच्यते। जङ्गमं स्थावरं बन्धं दत्त्वा लेख्यं करोति यः। गोप्यभोग्यक्रियायुक्तमाधिलेख्यं४ तदुच्यते। ग्रामे देशे च यत्कुर्य्यात् सत्यलेख्यं परस्परम्। राजाविरोधिधर्म्मार्थं संवित्पत्रं५ वदन्ति तत्। वस्त्रान्नहीनः कान्तारे लिखितं कुरुते तु यः। कर्म्माणि ते करिष्यामि दासपत्रं६ तदुच्यते। धनं वृद्ध्या गृहीत्वा तु स्वयं कुर्य्याच्च कारयेत्। उद्धारपत्रं तत्प्रोक्तमृणलेख्यं७ मनीषिभिरिति"। विशुद्धिपत्रलक्षणं कात्यायनेन "अभिशापे समुत्तीर्णे प्रायश्चित्ते कृते बुधैः। विशुद्धिपत्रकं ज्ञेयं तेभ्यः साक्षिसमन्वितम्"। सन्धिपत्रमप्याह स एव "उत्तमेषु समस्तेषु अभिशापे समागते। वृत्तानुवादलेख्यं यत् तज्ज्ञेयं सन्धिपत्रकम्"। अन्याधिपत्रमाह प्रजापतिः "धनी धनेन तेनैव परमाधिं नयेद् यदि। कृत्वा तदाधिलिखितं पूर्वं वाऽस्य समर्पयेत्"। पूर्वमाधिपत्रम्। सीमापत्रमप्याह कात्यायनः "सीमाविवादे निर्णीते सीमापत्रं विधीयते" इति। ऋणशोधने कृते ऋणपत्रनाशादौ सति प्राप्तिपत्रमुत्तमर्णेनाधमर्णाय देयमित्याह याज्ञवल्क्यः "दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै वान्यत्तु कारयेत्"। अत्र लौकिकं सप्तविधं लेख्यं स्वकृतान्यकृतभेदेन द्विविधं नारदेनोक्तम् "लेख्यन्तु द्विविधं प्रोक्तं स्वहस्तान्यकृतन्तथा"। स्वकृते साक्ष्यनियमोऽन्यकृते तन्नियम इत्याहोत्तरार्द्धेन स एव "असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोरिति"। असाक्षिमदपीत्यर्थः। याज्ञवल्क्यः "विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितञ्च यत्। तत्प्रमाणं स्मृतं सर्वं बलोपधिकृतादृते"। इत्यपिशब्दः प्रागुक्तबलोपधिकृतत्वपर्य्युदासः सर्वलेख्यविषयो न स्वकृतमात्रविषयः। तथा च मनुः "बलाद्भुक्तं बलाद्दत्तं बलाद् यच्चापि लेखितम्। सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत्"। नारदोऽपि "मत्ताभियुक्तस्त्रीबालबलात्कारकृतञ्च यत्। तदप्रमाणं लिखितं भयोपधिकृतन्तथेति"। अन्यकृते विशेषान्तरमाह योगीश्वरः "यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम्। लेख्यन्तु साक्षिमत्कार्य्यं तस्मिन्धनिकपूर्वकम्। समामासतदर्द्धाहर्नामजातिस्वगोत्रकैः। सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम्"। धनिकनामपूर्वकमित्यनेनोत्तमर्णनामोपरि लेख्यमधमर्णनाम तदध इत्यर्थः। एतदधमर्णपत्रादिविषयमन्यत्राऽसम्भवात्। समामासादि यथासम्भवमन्यत्रापि सब्रह्मचारिकं बह्वृचादिशाखाप्रयुक्तगुणनाम बह्वृचः कठ इत्यादि। वशिष्ठोऽपि "कालं निवेश्य राजानं स्थानं निवसनन्तथा। दायकं ग्राहकञ्चैव पितृनाम्ना च संयुतम्। जातिङ्गोत्रञ्च शाखाञ्च द्रव्यमाधिं सवृद्धिकम्। वृद्धिं ग्राहकहस्तञ्च विदितार्थौ च साक्षिणौ"। स्थानं जनपदः। निवसनं पुरग्रामादिकं ग्राहकोऽधमर्णः। तन्निवेशनप्रकारमाह योगीश्वरः "समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत्। मतं मेऽमुकपुत्त्रस्य यदत्रोपरि लेखितमिति"। साक्षिणामित्यनेन द्वयोरभ्यनुज्ञानात् अवरत्वनियमो नाधिकत्वनियमस्तु न भवत्येवेति। अत्र साक्षिलेखकाभ्यां स्वहस्तचिह्नं कार्य्यमित्याह स एव "साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम्। अत्राहममुकः साक्षी लिखेयुरिति ते समाः। उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना। लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत्"। समा इत्यनेन गुणसाम्यं सङ्ख्यासाम्यञ्च वैषम्यानियमाय विवक्षितम्। असमा इत्यकारप्रश्लेषस्तु वैषम्यस्य सामान्यत एव साक्षिषु प्राप्तेर्नोपादेयः। ऋणिसाक्षिणोः सर्वथा लिप्यनभिज्ञत्वे नारद आह "अलिपिज्ञ ऋणी यः स्यात् स्वमतं स तु लेखयेत्। साक्षी वा साक्षिणान्येन सर्वसाक्षिसमीपतः" इति।

त्रिविधं राजशासनमित्युक्तम् तत्त्रैविध्यं विविनक्ति बृहस्पतिः "दत्त्वा भूम्यादिकं राजा ताम्रपट्टे पटेऽथ वा। शासनं कारयेद्धर्म्यं स्थानवंशादिसंयुतम्। मातापित्रोरात्मनश्च पुण्यायामुकसूनवे। दत्तं मयामुकायाद्य दानं सब्रह्मचारिणे। चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयानुगम्। अनाच्छेद्यमनाहार्य्यं सर्वभागविवर्जितम्। दातुः पालयितुः स्वर्ग्यं हर्त्तुर्नरकमेव च। षष्टिं

षष्टिवर्षसहस्राणि दानाच्छेदफलं लिखेत्। ज्ञातं मयेति लिखितं सन्धिविग्रहलेखकैः। समुद्रं वर्षमासादिधनाध्यक्षाक्षरान्वितम्। एवंविधं राजकृतं शासनं समुदाहृतम्। देशादिकं यस्य राजा लिखितेन प्रयच्छति। सेवाशौर्यादिना तुष्टः प्रसादलिखितं तथा। पूर्वोत्तरक्रियावादनिर्णयान्ते यदा नृपः। प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते"। ब्रह्मचारिणे अमुकशाखाध्यायिने। सर्वभागविवर्जितम् सकलराजकुलग्राह्यादिदेयरहितम्। योगीश्वरः शासनपत्रमाह "भूमिं दत्त्वा निबन्धं वा कृत्वा लेख्यन्तु कारयेत्। आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः। पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम्। अभिलेख्यात्मनोऽवंश्यानात्मानञ्च महीपतिः। प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम्। स्वहस्तकालसम्पन्नं शासनं कारयेत् स्थिरमिति"। इयन्ति पर्वणकुतुकभारादावियन्ति पर्वणकुतुकादीन्यस्मै देयानीति राज्ञो नियतदानाय निबन्धं कारयेत् सन्धिविग्रहाद्यधिकारिद्वारेत्यर्थः। तथा च व्यासः "राज्ञा तु स्वयमादिष्टः सन्धिविग्रहलेखकः। ताम्रपट्टे पटे वापि प्रलिखेद्राजशासनमिति"। प्रतिगृह्यत इति प्रतिग्रहो भूम्यादिस्तत्परीमाणं प्रतिग्रहपरीमाणं उपवर्णस्य दीवौ वाक्षकः। दीयत इति दानम् भूम्यादि तस्य च्छेदः क्षेत्रादेर्मर्यादा तदुपवर्णनं तन्निर्देशम्। आत्मवंश्यादीनभिलिखेत्यन्वयः। इदञ्च साधुशब्दैरेव लेखनीयं न लौकिकवत्तदनियमः। तथा च संग्रहकारः "राजा स्वहस्तचिह्नेन राजादेशेन संयुतम्। युक्तं राजाभिधानेन लक्षितं राजमुद्रया। सुविभक्तपदश्लोकि सम्यगवयवाक्षरम्। शासनं राजदत्तं स्यात् सन्धिविग्रहलेखकैः"। सत्कुलपादोत्तरं लिखितमिति शेषः। तस्मिन्नेव लौकिके देशभाषादिप्रतिषेधो नेत्याह नारदः "देशाचाराविरुद्धं यद्व्यक्ताधिविधिलक्षणम्। तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरमिति"। शासने राज्ञा स्वहस्तेन स्वसम्मतं लेख्यमित्यप्याह व्यासः "लिखितेन प्रमाणञ्च स्वहस्तेन लिखेत्स्वयम्। मतम्मेऽमुकपुत्रस्य अमुकस्य महीपतेः"। सन्निवेशं प्रमाणञ्चेत्यस्य पूर्ववाक्ये मलिखेदित्यत्रान्वयः तयोराजस्वहस्तलिखनानियमात्। इदञ्च राज्ञा प्रतिग्रहीत्रे समर्पणीयमित्याह विष्णुः "पटे वा ताम्रपट्टे वा लिखितं स्वमुद्राङ्कमागामिनृपतिपरिज्ञानार्थं दद्यादिति"। अतएव दत्त्वापहारदोषप्रतिपादनमपि भाविनृपप्रत्यायनार्थं तत्रावश्यकमित्यप्याह व्यासः "षष्टिवर्षसहस्राणि दानच्छेदफलन्तथा। आगामिनृपसामन्तबोधनायाभिलेखयेत्" इति। षष्टिवर्षसहस्राणीत्यादि पुराणवचनप्रसिद्धन्दानाच्छेदयोः दानापहारयोः स्वर्गादिनरकादिफलं लेखयेद्राजेत्यर्थः।"

**लेख्यपत्त्र** पु० लिख्यतेऽत्र ण्यत् लेख्यं पत्त्रं यस्य। १तालवृक्षे भरतः। कर्म०। २लेख्ये पत्त्रे न०

**लेप** गमने भ्वा० आत्म० सक० सेट् ऋदित् चङि न ह्रस्वः। [लेपते अलेपिष्ट।

**लेप** पु० लिप लेप-वा घञ्। १भोजने, २लेपने च मेदि०। कर्मणि घञ्। ३सुधायाम् (चालिचुन) त्रिका०। ४पिण्डदत्तपिण्डशेषे "लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः" स्मृतिः। [मलनपुङ्के पु० अमरः।

**लेपक** त्रि० लिम्पति लिप-ण्वुल्। १लेपनकर्त्तरि २जातिभेदे

**लेपन** न० लिप-ल्युट्। (लेपा) इति ख्याते १व्यापारे। कर्मणि ल्युट्। २तुरुष्कनामगन्धद्रव्ये राजनि०।

**लेय** पु० सिंहराशौ ज्यो० त०।

**लेलिहा** स्त्री सर्वदेवजीवन्यासाङ्गे मुद्राभेदे तल्लक्षणं यथा "तर्जनीमध्यमाऽनामाः समं कुर्यादधोमुखीः। अनामायां क्षिपेद् वृद्धामृज्वीं कृत्वा कनिष्ठिकाम्। लेलिहा नाम मुद्रेयं जीवन्यासे प्रकीर्त्तिता" तन्त्रसा०।

**लेलिहान** पु० लिह यङ् लुक् ताच्छील्ये चानश्। १शिवे शब्दर० २सर्पे पुंस्त्री० हेमच०। ३पुनःपुनर्लेहनकर्त्तरि त्रि० ताराद्देवतापूजाङ्गे षडङ्गन्यासादिसन्निवेशविशेषरूपे ४मुद्राभेदे स्त्री। तल्लक्षणं यथा "वक्त्रं विस्तारितं कृत्वाप्यधो जिह्वां च चालयेत्। पार्श्वस्थं मुष्टियुगलं लेलिहानेति कीर्त्तिता" तन्त्रसा०। [२व्यक्तत्वे च।

**लेश** पु० लिश-अल्पीभावे घञ्। १अल्पे २लवे अमरः।

**लेष्टु** पु० लिश-तुन्। लोष्टे अमरः। [लोष्टुभेदनेऽप्यत्र।

**लेष्टुघ्न** पु० लोष्टुं हन्ति हन-क। लोष्टभेदके मुद्गरे शब्दच०

**लेह** पु० लिह-घञ्। १आहारे २आस्वादे जिह्वया रसादानव्यापारभेदे (चाटा) च हेमच०। भावे ल्युट्। लेहनमप्यत्र न०।

**लेहिन** पु० लिह-इनन्। टङ्कणे (सोहागा) हेमच०।

**लेह्य** त्रि० लिह-ण्यत्। जिह्वया १आस्वाद्ये। २अमृते न० शब्दच०।

**लैङ्ग** न० लिङ्गमधिकृत्य कृतो ग्रन्थः अण्। अष्टादशसु महापुराणेषु एकादशे १महापुराणे। लिङ्गं तदाकारः

अस्त्यस्याः फलेषु अच् ङीप्। २लिङ्गिनीवृक्षे स्त्री राजनि॰ तस्येदमण्। ३लिङ्गसम्बद्धे त्रि॰ स्त्रियां ङीप्।

**लैङ्गिक** त्रि॰ लिङ्गेनानुमापकचिह्नादिना आपादितमत आगतो वा ठञ्। लिङ्गादिभिः १कल्पिते २अनुमिते साध्ये लिङ्गोपहितलैङ्गिकभानमित्याचार्याः। अर्थप्रकाशसामर्थ्यलिङ्गेन कल्पिते ३मन्त्रादीनां तत्तत्कर्मादिविनियोगे च।

**लोक** दीप्तौ चु॰ उभ॰ सक॰ सेट्। लोकयति ते अलुलुकत् त।

**लोक** दर्शने भ्वा॰ आ॰ सक॰ सेट्। लोकते अलोकिष्ट लुलोके। ऋदित् चङि न ह्रस्वः। अलुलोकत् त।

**लोक** पु॰ लोक्यतेऽसौ लोक-घञ्। १भुवने भुवनशब्दे दृश्यम्। २जने च अमरः। भावे घञ्। ३दर्शने।

**लोककान्ता** स्त्री ६त॰। १ऋद्धयौषधे राजनि॰ २लोककामिनि ३लोकप्रिये च त्रि॰। [अमरः।

**लोकजित्** पु॰ लोकं लोकाचारं जितवान् जि-क्विप्। बुद्धे

**लोकपाल** पु॰ लोकान् पालयति पा-णिच्-अण्। १लोकपालके नृपे, २इन्द्रादिदिक्पाले, ३'वनायकादिषु पञ्चसु। ४लोकरक्षकमात्रे त्रि॰। लोकनाथादयोऽप्यत्र।

**लोकबान्धव** पु॰ लोकानां बान्धवः सर्वकर्मप्रवर्त्तकत्वात्। सूर्ये जटा॰। [लोकबहिर्भूते।

**लोकबाह्य** त्रि॰ बहिर्भवति बहिस्+ष्यञ् टिलोपश्च ५त॰।

**लोकमातृ** स्त्री लोकानां मातेव रक्षित्री। १लक्ष्म्याम् अमरः ६त॰। लोकानां मातरि त्रि॰।

**लोकलोचन** पु॰ लोकैर्लोच्यतेऽनेन लुच ल्युट्। १सूर्ये शब्दर॰ लोकस्य लोचनमिव। सूर्ये न॰। लोकनेत्रादयोऽप्यत्र न॰

**लोकायत** न॰ लोकेषु आयतम् विस्तीर्णम् अनायाससाध्यत्वात्। चार्वाकमतविरुद्धशास्त्रे शब्दच॰।

**लोकायतिक** पु॰ लोकायतं तन्त्रतम् अस्त्यस्य ठन्। चार्वाके।

**लोकालोक** पु॰ लोक्यतेऽसौ लोकः न लोक्यतेऽसौ कर्म॰। स्वनामख्याते सूर्यकिरणसम्पर्कसीमापर्वते। तस्य च पार्श्वयोरातपानातपसम्बन्धात्तथात्वम्।

**लोकेश** पु॰ ६त॰। १ब्रह्मणि अमरः। २क्षपतौ ३पारदे च राजनि॰ बुद्धभेदे त्रिका॰। [न ह्रस्वः। अलुलोचत् त।

**लोच** दीप्तौ चु॰ उभ॰ सक॰ सेट्। लोचयति ते ऋदित् चङि

**लोच** दर्शने भ्वा॰ आत्म॰ सक॰ सेट्। लोचते अलोचिष्ट। ऋदित् चङि न ह्रस्वः।

**लोचक** न॰ लोच-ण्वुल्। १मांसपिण्डे, २अक्षितारके ३कज्जले ४स्त्रीणां ललाटाभरणे, ५नीलवस्त्रे, ६कर्णपूरे, ७कदल्यां, ८मूर्व्यां ९निर्वृत्ते भ्रूलवचर्मणि मेदि॰ १०सर्पकञ्चुके शब्दर॰।

**लोचन** न॰ लोच्यतेऽनेन लोच-करणे ल्युट्। १नेत्रे अमरः। भावे ल्युट्। २दर्शनक्रियायाम्। युच्। ३दर्शने ४आलोचने च स्त्री टाप् अमरः। ३महाप्राणिकीटे स्त्री राजनि॰ ङीप्।

**लोचनहिता** स्त्री ६त॰। (तुत्थाञ्जने तुँते) राजनि॰।

**लोचमस्तक** पु॰ लोचयते लोच मस्तकं यस्य। मयूरशिखायाम् अमरः।

**लोट(ड)** उन्मादे भ्वा॰ पर॰ सक॰ सेट्। लोट(ड)ति। अलोटी(डी)त्। ऋदित् चङि न ह्रस्वः।

**लोणा** स्त्री लवणमस्त्यस्याः भक्षणसमये अपेक्ष्यत्वेन अच्। १चुक्रायाम् राजनि॰। लोणाम्लाप्यत्र स्त्री राजनि॰

**लोणार** न॰ लवणमृच्छति कारणत्वेन ऋ-अण् उप॰ स॰। पृषो॰ लवणजे क्षारभेदे राजनि॰।

**लोत** न॰ लू-तन्। १चोरितधने, लोप्त्र (वमाल) जटाधरः ३चिह्ने सि॰ कौ॰। ४नेत्राम्बुनि त्रिका॰ ५लवणे च

**लोत्र** न॰ लू-ष्ट्रन्। १अश्रुजले, २चोरितधने च संक्षिप्तसा॰।

**लोध** पु॰ रुध-अच् रस्य लः। स्वनामख्याते वृक्षे रत्नमा॰।

**लोध्र** पु॰ रुध-रन् रस्य लः। (लोध) ख्याते वृक्षे अमरः। "लोध्रो ग्राही लघुः शीतश्चक्षुष्यः कफपित्तनुत्। कषायो रक्तपित्तासृग्ज्वरातीसारशोथहृत्" भावप्र॰।

**लोप** पु॰ लुप-भावे घञ्। १विनाशे २छेदने, ३आकुलीभावे, ४व्याकरणोक्ते अदर्शनरूपे नाशे च। लोपयति लोपं रूपगर्वम् अच्। २अगस्त्यमुनिपत्न्यां स्त्री जटा॰।

**लोपापक** पुंस्त्री॰ लोपमदर्शनमाप्नोति क्रुतम् आप-ण्वुल्। शृगाले शब्दमा॰ स्त्रियाम् जला॰ टाप् अत इत्वम्।

**लोपामुद्रा** स्त्री मुदं राति रा-क कर्म॰। अगस्त्यमुनिपत्न्याम् अमरः।

**लोप्त्र** न॰ लुप-ष्ट्रन्। स्तेयधने स्त्रीत्वमपीच्छति तत्पक्षे ङीप्।

**लोभ** पु॰ लुभ-आकाङ्क्षायां भावे घञ्। परद्रव्येषु अतिशयिताभिलाषे "रत्नवित्तादिकं दृष्ट्वा नेत्रं यो हृदि जायते। अभिलाषो द्विजश्रेष्ठ! स लोभः परिकीर्त्तितः" पद्मपु॰।

**लोभिन्** त्रि॰ लुभ-णिनि। परद्रव्येषु अतितृष्णावति जटा॰।

**लोभ्य** पु॰ लुभ-कर्मणि यत्। १मुद्गे हेमच॰। २लोभनीयपदार्थे त्रि॰। [अमरः। ततप्रधाने ३वाक्ये न॰ जटा॰।

**लोम** न॰ लू-मन्। देहजाते केशाकारे १रोमाख्ये द्रव्ये

**लोमकर्ण** पुंस्त्री लोमबहुलः कर्णौ यस्य शब्द॰। शशके

हेमच० तत्कर्णस्य लोमशत्वात्तथात्वम् स्त्रियां ङीप्।

**लोमकूप** पु० लोम्नां कूप इव। रोमाधारे १विन्दाकारे गर्त्ते

**लोमघ्न** न० लोमानि हन्ति हन–टक्। (टाक) रोगभेदे।

**लोमन्** पु० लू–मनिन्। देहस्थे केशतुल्य (रो॰या) पदार्थे अमरः। [नृपभेदे रामा०

**लोमपाद** पु० लोमयुक्तौ पादावस्य शा०त०। कङ्कदेशस्थे

**लोमश** पु० लोमानि बाहुल्येन सन्त्यस्य श। १मुनिभेदे २मेषे ३लोमयुक्ते त्रि० मेदि०। ४काकजङ्घायां ५जटामांस्यां, ६वचायाम् ७शुकशिम्ब्याम् ८महामेदायां ९कासीसे १०शाकिनीभेदे च स्त्री मेदि० ११शणपुष्प्याम् १२अतिबलायां च स्त्री विश्वः। १३गन्धमांस्यां स्त्री राजनि०। [राजनि०।

**लोमशकाण्डा** स्त्री लोमश इव काण्डोऽस्याः। कर्कट्याम्

**लोमशपर्णिका** स्त्री लोमशानीव पर्णानि यस्याः कप् अत इत्वम्। माषपर्ण्याम् शब्दच०। [राजनि०।

**लोमशपुष्पक** पु० लोमशमिव पुष्पमस्य कप्। शिरीषवृक्षे

**लोमशातन** न० लोमानि शातयति शद–णिच् नन्द्यादित्वात् ल्यु। लोमशातने औषधभेदे गरु० पु० १८५ अ० तदौषधमुक्तं यथा “हरितालशङ्खचूर्णं कदलीदलभस्मना। एतद्द्रव्येण चोद्वर्त्य लोमशातनमुत्तमम्। लवणं हरितालञ्च तण्डुलाश्च फलानि च। लाक्षा रससमायुक्तं लोमशातनमुत्तमम्। सुधा च हरितालञ्च शङ्खश्चैव मनःशिला। तैलवेन समेकत्र कामलेन पेषयेत्। तत्प्रलेपोद्वर्त्तनादेव लोमशातनमुत्तमम्”।

**लोमहर्षण** न० लोम्नां हर्षणं हर्षजनकव्यापार इव उद्भेद इति यावत्। १रोमाञ्चे। लोमानि हर्षयति उत्तमश्लोककथया हृष-णिच-ल्यु। व्यासशिष्ये सूतवंश्ये स्वनामख्याते २पौराणिके पु० “प्रख्यातो व्यासशिष्योऽभूत् सूतो वै लोमहर्षणः। पुराणसंहितां तस्मै ददौ व्यासो महामुनिः” विष्णुपु०।

**लोमहृत्** पु० लोमानि हरति हृ–क्विप् तुक् च। १हरिताले हेमच०। लोमशातनशब्दे तस्य तथात्वं दृश्यम्।

**लोल** त्रि० लोड–अच् डस्य लः। १सतृष्णे २चञ्चले च अमरः च ३जिह्वायां ४लक्ष्म्याञ्च स्त्री मेदि०।

**लोलार्क** पु० काशीस्थे अर्कमूर्त्तिभेदे काशीख० ४६ अ०।

**लोलिका** स्त्री लोडयति सेवने दन्तान् लोड-ण्वुल् डस्य लः। १चाङ्गेर्य्याम् (चुकोपालङ्ग) जटा०।

**लोलित** त्रि० लुल–विमर्दे णिच् क्त। चालिते।

**लोलुप(भ)** त्रि० लुभ-यङ्-अच् पृषो० भस्य वा पः। अतिलोभयुक्ते अमरः। [अलोडिष्ट।

**लोष्ट** संहतौ राशीकरणे भ्वा० आ० सक० सेट्। लोष्टते

**लोष्ट** पुंन० लोष्ट-अच्। १मृत्पिण्डे (ढेला) अमरः। २लोहमले राजनि०।

**लोष्टघ्न** पु० लोष्टं हन्ति मर्दयति हन०क। लोष्टभेदने मुद्गरादौ भरतः। [भेदनसाधके मुद्गरादौ भरतः।

**लोष्टभेदन** पु० लोष्टं भिनत्ति विमर्दयति भिद–ल्यु। लोष्ट-

**लोष्टु** पु० लोष्ट-उन्। लोष्टे हेमच०।

**लोह** पुंन० लू विच् लोभं जहाति हा–क। १धातुभेदे अमरः। २धातुमात्रे मेदि० ३रुधिरे राजनि०। ४अगुरुचन्दने न० अमरः। धातुभेदस्वरूपादि भावप्र० उक्तं यथा “अथ लोहस्योत्पत्तिनामलक्षणगुणाः “पुरा लोमिलदैत्यानां निहतानां सुरैर्युधि। उत्पन्नानि शरीरेभ्यो लोहानि विविधानि च। लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी। शुक्ताहतोत्थितोदकफदाहस्य कारिता। अशुद्धदोषः सुदुर्मन्तो दोषाः शमायवस्य तु। लोहं तिक्तरसं शीतं मधुरं तुवरं गुरु। रूक्षं वयस्यं चक्षुष्यं लेखनं वातलं जयेत्। कफं पित्तं गरं शूलं शोथार्शःप्लीहपाण्डुताः। मेदोमेहकृमीन् कुष्ठं तत्किट्टं तद्वदेव हि। पाण्डुत्वकुष्ठामयकृत् दद्भवेद् हृद्रोगशूलौ कुरुतेऽश्मरीञ्च। नानारुजाश्चापि तथा प्रकोपं करोति हृल्लासमशुद्धलोहम्। जीवहारि मदकारि चायसं चेदशुद्धिमदसंस्कृतं ध्रुवम्। पाटवं न तनुते शरीरके दारुणां हृदि रुजाञ्च यच्छति। कुष्माण्डं तिलतैलञ्च माषान्नं राजिकां तथा। मद्यमम्लरसञ्चापि त्यजेल्लोहस्य सेवकः”। तत्र सारलोहस्य लक्षणं गुणाश्च “लमाभं खरराकाराघ्रल्लात्ततेन लेपयेत्। लोहे सुरंत लक्ष्माणि तत्सारमभिधीयते। लोहसारो ह्ययं हन्यादुग्रहणीमतिसारकम्। अर्द्धसर्वाङ्गजं वातं शूलञ्च परिणामजम्। कार्दिञ्च पीनसं पित्तं श्वासं कासं व्यपोहति”। अथ कान्तलोहस्य लक्षणं गुणाश्च। “यत् पात्रेण प्रसरति जले तैलविन्दुः प्रतप्ते हिङ्गुर्गन्धं त्यजति च निजं तिक्ततां निम्बकल्कः। तप्तं दुग्धं भवति शिखराकारकं नैति भूमिं कृष्णाङ्गः स्यात् सजलचणकः कान्तलोहं तदुक्तम्। गुल्मोदरार्शःशूलाममामवातं भगन्दरम्। कामलाशोथकुष्ठानि क्षयं कान्तमयो हरेत्। प्लीहान-

अम्लपित्तञ्च यक्ष्मापि शिरोरुजम्। सर्वान् रोगान् विजयते कान्तलौहं न संशयः। बलं वीर्य्यं वपुःपुष्टिं कुरुतेऽग्निं विवर्द्धयेत्"। अथ किट्टस्य "ध्मायमानस्य लोहस्य मलं मण्डूरमुच्यते। लोहसिंहानिका किट्टं सिंहानञ्च निगद्यते। यल्लोहं यद्गुणं प्रोक्तं तत्किट्टमपि तद्गुणम्"। अथ लोहस्य दोषशान्तये शोधनमभिधीयते "पत्त्रीकृतपत्त्राणि लोहस्याग्नौ प्रतापयेत्। निषिञ्चेत् तप्ततप्तानि तैले तक्रे च काञ्जिके। गोमूत्रे च कुलत्थानां कषाये च त्रिधात्रिधा। एवं लोहस्य पत्त्राणां विशुद्धिः संप्रजायते"। अथ लोहस्य मारणविधिः "शुद्धलोहभवं चूर्णं पातालगरुड़ीरसैः। मर्दयित्वा पुटेद्वह्नौ दद्यादेवं पुटद्वयम्। पुटत्रयं कुमार्य्याश्च कुठारच्छिन्निकारसैः। पुटषट्कं ततो दद्यादेवं तीक्ष्णमृतिर्भवेत्"। अन्यच्च। "क्षिपेद्द्वादशमांशेन दरदं तीक्ष्णचूर्णतः। मर्दयेत् कन्यकाद्रावैर्यामयुग्मं ततः पुटेत्। एवं सप्तपुटैर्मृत्युं लोहचूर्णमवाप्नुयात्। सत्याऽनुभूतो योगीन्द्रैः क्रमोऽन्यो लोहमारणे। कथ्यते रामराजेन कौतुहलधियाऽधुना। सूतकाद्द्विगुणं गन्धं दत्त्वा कुर्य्याच्च कज्जलीम्। द्वयोः समं लोहचूर्णं मर्द्दयेत् कन्यकाद्रवैः। यामयुग्मं ततः पिण्डं कृत्वा ताम्रस्य पात्रके। घर्मे धृत्वा रुवकस्य पत्रैराच्छादयेद्बुधः। यामद्वयाद्भवेदुष्णं धान्यराशौ न्यसेत्ततः। दत्त्वोपरि शरावञ्च त्रिदिनान्ते समुद्धरेत्। पिष्ट्वा च गालयेद्वस्त्रादेवं वारितरं भवेत्। दाड़िमस्य दलं पिष्ट्वा मञ्चतुर्गुणवारिणा। तद्रसेनायसञ्चूर्णं सचीयात् प्लावयेदपि। आतपे शोषयेत्तच्च पुटेदेवं पुनः पुनः। एकविंशतिवारैस्तन्म्रियते नात्र संशयः। एवं सर्वाणि लोहानि स्वर्णादीन्यपि मारयेत्"। एवं मारितलोहस्य गुणाः "लोहं तिक्तं सरं शीतं कषायं मधुरं गुरु। रूक्षं वयस्यं चक्षुष्यं लेखनं वातलं जयेत्। कफं पित्तं गरं शूलं शोफार्शःप्लीहपाण्डुताः। मेदोमेहकृमीन् कुष्ठं तत्किट्टं तद्वदेव हि। गुञ्जामेकां समारभ्य यावत् स्युर्नव रक्तिकाः। तावल्लोहं समश्नीयाद्यथादोषानलं नरः। कुष्माण्डं तिलतैलञ्च माषान्नं राजिकां तथा। मद्यमम्लरसञ्चैव वर्जयेल्लोहसेवकः" भावप्र०। "यदा तु आयसे पात्रे पक्वमश्नाति वै द्विजः। स पापिष्ठोऽपि भुक्त्वाऽन्नं रौरवे परिपच्यते" मत्स्यपु०। "अयःपात्रे पयःपानं गव्यं सिद्धान्नमेव च। भक्ष्यादिकं मधु गुड़ं नारिकेलोदकं तथा। फलं मूलञ्च यत् किञ्चिदभक्ष्यं मनुरब्रवीत्" ब्रह्मवै०।

**लोहकण्टक** पु० लोहमिव कठिनः कण्टको यस्य। १मदनवृक्षे शब्दच०। २लोहमयकण्टके च।

**लोहकार** पु० लोहं तन्मयं शस्त्रादि करोति कृ-अण्। कर्मकारे। ण्वुल्। लोहकारकोऽप्यत्र। "गोपालात् तन्तुवाय्यां वै कर्मकारोऽभवत् सुतः" पराशरोक्ते जातिभेदे पुंस्त्री०।

**लोहकिट्ट** न० ६त०। लोहमले। (लोहार गु)। राजनि०

**लोहचूर्ण** न० ६त०। (लोहाचुर) ख्याते १पदार्थे २लोहमले राजनि०।

**लोहज** न० लोहात् लोहाभ्यां वा जायते जन-ड। १लोहमले राजनि० २धातुद्वयजे कांस्ये च हेमच०।

**लोहद्राविन्** पु० लोहानि धातुद्रव्याणि द्रावयति द्रु-णिच् णिनि। १टङ्कणे (सोहागा) राजनि०। २धातुद्रावके त्रि०। [अमरः स्त्रियां ङीप्।

**लोहपृष्ठ** पुंस्त्री० लोहमिव कठिनं पृष्ठमस्य। कङ्कपक्षिणि

**लोहमारक** पु० लोहं मारयति जारयति मृ-णिच्-ण्वुल्। शालिञ्चशाके त्रिका०। [२लोहपाचके त्रि०।

**लोहल** पु० लोहमिव लाति ला-क। १अव्यक्तवचने अमरः

**लोहवर** न० लोहेषु सर्वधातुषु मध्ये वरम्। स्वर्णे मेदि०।

**लोहश्लेषण** न० लोहानि स्वर्णादीनि श्लेषयति योजयति श्लिष-णिच्-ल्यु। टङ्कणे (सोहागा) हेमच०।

**लोहसङ्कर** न० लोहानां धातुद्रव्याणां सङ्करो यत्र। मिश्रितधातौ १रीत्यादौ २वर्त्तलोहे च राजनि०।

**लोहाभिसा(हा)र** पु० लोहं तन्मयशस्त्रम् अभिसा(ह्रि)-यतेऽत्र अभि+सृ-(हृ)-वा आधारे घञ्। राज्ञां युद्धयात्रादौ शस्त्रनीराजनाविधौ अमरः।

**लोहार्गल** पु० १तीर्थभेदे वराहपु०। २लोहकीले च।

**लोहित** न० रुह-इतन् रस्य लः। १कुङ्कुमे २रक्तचन्दने ३रक्तगोशीर्षकभेदे मेदि०। ४पत्तङ्गे ५हरिचन्दने शब्दच०। ६हटकुङ्कुमे ७रुधिरे च राजनि० ८युद्धे हेमच०। ९नदभेदे १०मर्दने ११रक्तवर्णे च पु० मेदि०। १२रक्ततायुते त्रि०। १३मृगभेदे १४रोहितमत्स्ये १५सर्पे १६देवभेदे भरतः। १७मङ्गले शब्दच० १८रक्तशालौ १९रक्तशालौ राजनि०। २०वनभेदे २१सरोवरभेदे ब्रह्मपुत्रशब्दे दृश्यम्। सर्वत्र जातौ स्त्रियां ङीप्। वर्णे तु स्त्रीत्वे ङीप् तस्य नः। लोहिनी लोहितवर्णयुतस्त्रियाम्। रुह-इतन् रस्य लः। रोहणकर्त्तरि स्त्रियां टाप्।

**लोहितक** न० लोहितमिव कायति कै-क । १पित्तले राजनि० । लोहित+इवार्थे कन् । २पद्मरागमणौ पु० हेमच० । ३मङ्गलग्रहे पु० शब्दमाला ।

**लोहितचन्दन** न०कर्म०। १कुङ्कुमे अमरः २रक्तचन्दने च ।

**लोहितपुष्पक** पु० लोहितानि रक्तानि पुष्पाण्यस्य कप् । दाडिमवृक्षे भावप्र० । २रक्तवर्णपुष्पयुते त्रि० ।

**लोहितमृत्तिका** स्त्री कर्म०। १गैरिके (गेरिमाटी) रत्नमा० २रक्तमृदि च ।

**लोहिता** स्त्री दृश-इतच् रश्च लः । १वराहक्रान्तायां शब्दच० २रक्तपुनर्नवायां राजनि० । ३रक्तवर्णायां स्त्रियाञ्च ।

**लोहिताक्ष** पु०लोहिते अक्षिणी यस्य अच् समा० । १विष्णौ शब्दच० २कोकिले च पुंस्त्री० शब्दच० । ३रक्तनेत्रयुते त्रि० स्त्रियां ङीष् । [त्रिपुष्परक्ते च राजनि० ।

**लोहिताङ्ग** पु०लोहितमङ्गमस्य । १मङ्गलग्रहे अमरः २का-

**लोहितानन** पुंस्त्री० लोहितमाननमस्य । १नकुले राजनि० स्त्रियां ङीष् । २रक्तमुखे त्रि० स्त्रियां टाप् । [त्रिका०।

**लोहितायस्** न० लोहितं वर्णमेति इण्-असुन् । ताम्रे

**लोहितायस** न० लोहितमयः अच् स० । १ताम्रे २रक्तवर्णायोजातिभेदे च ।

**लोहोत्तम** न० लोहेषु धातुषूत्तमम् । स्वर्णे हेमच० ।

**लौकायतिक** न० लोकायतं चार्वाकशास्त्रं वेत्त्यधीते वा ठक् । चार्वाकमताभिज्ञे ।

**लौकिक** त्रि० लोके विदितः प्रसिद्धो हितो वा ठञ् । १लोकविदिते २लोकप्रसिद्धे । ३लोकहिते च ।

**लौकिकाग्नि** पु० कर्म० । विधानेन संस्कारशून्ये वह्नौ ।

**लौड** उन्मादे भ्वा० पर० सक० सेट् । लौडति अलौडीत् । ऋदित् चङि न ह्रस्वः । [२धातुमात्रे च ।

**लौह** पु०लोह एव स्वार्थे अण् । (लोया) १धातुभेदे भरतः ।

**लौहज** न० लोहात् लौहाभ्यां जायते वा जन-ड ।१मण्डूरे रत्ना० । धातुद्वयजे कांस्यपित्तलादौ च ।

**लौहभाण्ड** पु० लोहस्य विकारः अण् कर्म० । (हामानदिस्ता) २लौहमये पात्रभेदे शब्दच० । ३लौहमयपात्रमात्रे न० ।

**लौहमल** न० लोहस्येदमण् कर्म० । लोहकिट्टे राजनि० ।

**लौहित्य** न०लोहितस्य भावः ष्यञ् स्वार्थे ष्यञ् वा । १रक्तवर्णे २रक्तत्वे"लोहितात् सरसो जातो लौहित्यस्तु ततोऽभवत्" उक्ते ३नदभेदे ।"तीर्णलौहित्य"रघुः ।

**ल्वी** छेदे क्र्या० प्वा० पर० सक० अनिट् । लुनाति अल्वैषीत् । [षीत् ।

**ल्वी** गतौ क्र्या० प्वा० पर० सक० अनिट् । लिनाति अल्वै-

## इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्यसङ्कलिते वाचस्पत्ये लकारादिशब्दार्थसङ्कलनम् ।

---

## व

वकारः अन्तस्थवर्णभेदः । व च अर्धोष्ठ्यवर्णयोरन्तःस्थितत्वात् अन्तःस्थवर्णभेदः अस्योच्चारणस्थानं दन्तोष्ठौ "दन्त्योष्ठ्यो वः स्मृतो बुधैः" शिक्षोक्तेः । अस्योच्चारणे जिह्वाग्रेण दन्तोष्ठयोरीषत्स्पर्शात् ईषत्स्पृष्टता आभ्यन्तरप्रयत्नः। बाह्यप्रयत्नाश्च संवारनादघोषा अल्पप्राणश्च । अस्य दन्त्योष्ठ्यत्वात् दन्त्यत्वं कचिच्च ओष्ठ्यत्वमाश्रित्य कार्यं भेदस्तेन संयुक्तेऽतोल्वादौ ओष्ठ्यत्वमाश्रित्य वः अपरः । दन्त्यत्वमाश्रित्य च अनुस्वारस्थाने अनुनासिको वो वा पक्षे अनुस्वारस्थितिः । अस्य मातृकान्यासे वामस्कन्धे न्यस्तता । काव्यादौ प्रयोगे "अवनवम वसौ" इ० र० टी० उक्तेः अवनं फलम् । वर्णाभिधाने अस्य वाचकशब्दा उक्ता यथा "वो वारुणो वाकणौ पाशी बवनो मेदसंज्ञकः । सङ्खेशो ज्वालिनी वक्त्रं वरुणो वारिवाचकः । उत्कारी शालिनी शान्ता वातः स्थिरः सागरः शुचिः । इन्दुधारा च वामांसः करमूलं च नर्त्तकः । जलज्ञानी वारिणो च देवोऽर्थिलोऽनिलकः । गिरिराजो निधारात्मा अञ्जना नन्दिनी करः" अस्य ध्येयस्वरूपं यथा "वकारं चञ्चलापाङ्गि ! कुण्डली मोक्षमव्ययम् । पञ्चप्राणमयं वर्णं त्रिविन्दुसहितं सदा । त्रिविन्दुसहितं वर्णमात्मादितत्त्वसंयुतम् । पञ्चदेवमयं वर्णं पीतविद्युल्लतोपमम् । चतुर्वर्गप्रदं वर्णं सर्वसिद्धिप्रदायकम्" कामधेनुत० "अस्याधिष्ठातृध्येयस्वरूपं यथा "कुन्दपुष्पप्रभां देवीं द्विभुजां पङ्कजेक्षणाम् । शुक्लमाल्याम्बरधरां रत्नहारोज्ज्वलां पराम् । साधकाभीष्टदां सिद्धां

शिखिदां शिवसेविताम्। एवं ध्यात्वा वकारं तु तन्मन्त्रं दशधा जपेत्” वर्णोद्धारतन्त्रम्।

**व** पु॰ वा–ड। १वायौ २वरुणे ३सान्त्वने ४मन्त्रणे मेदि॰ ५राहौ ६कल्याणे ७वर्सति ८वसतौ ९समुद्रे च शब्द च॰ १०व्याघ्रे ११वसने १२शालूके १३वन्दने च एकाक्षर-को॰। १४सादृश्ये अव्य॰ मेदि॰ “शातवं व यशः पपुः” रघुः। १५वरुणे न॰मेदि॰। १६वरुणबीजे मान्तमव्ययम्।

**वंश** पु॰ वमति उद्गिरति वम-श तस्य नेत्त्वम्। १पुत्रपौत्रा-द्युपत्यवर्गे २तृणजातिभेदे (बाँश) अमरः।

“वंशः सरो हिमः स्वादुः कषायो वस्तिशोधनः। छेदनः कफपित्तघ्नः कुष्ठास्रव्रणशोथजित्। तत्करीरः कटुः पाकरसे रूक्षो गुरुः सरः। कषायः कफकृत् स्वादुर्विदाही वातपित्तलः। तद्यवास्तु सरा रूक्षाः कषायाः कटुपाकिनः। वातपित्तकरा उष्णा बद्धमूत्राः कफापहाः” भावप्र॰। ३कुलावयवे ४वर्गे च मेदि॰ ५इक्षौ ६शालवृक्षे च राजनि॰। ७वाद्यभेदे पुंस्त्री॰ शार्ङ्गरवः स्त्रीत्वे गौरा॰ ङीष् “वंशीरवेण वंशिजेन” इति छन्दोऽवनपक्षः। तद्विवृतिर्यथा

“तालेन राजते गीतं तालो वादित्रसम्भवः। गरीय-स्तेन वादित्रं तच्चतुर्विधमुच्यते। ततं शुषिरमानद्धं घनमित्थं चतुर्विधम्। ततं तन्त्रीगतं वाद्यं वंशाद्यं शुषिरं तथा। चर्मावनद्धमानद्धं घनं तालादिकं मतम्”। तत्र शुषिरं यथा “वंशोऽथ पारी मधुरी तित्तिरी शङ्खकाहला। तोड़ही मुरली बुक्का शृङ्गिका स्वरनाभयः। शृङ्गं कापालिकं वंशचर्मवंशस्तथा परः। एते शुषिरभेदास्तु कथिताः पूर्वसूरिभिः। वर्त्तुलः सरलश्चैव सर्वदोषविवर्जितः। वैणवः खादिरो वापि रक्तचन्दनजोऽथ वा। श्रीखण्डजोऽथ सौवर्णो दन्ति-दन्तमयोऽपि वा। राजतस्ताम्रजो वापि लौहजः स्फाटिकोऽथ वा। कनिष्ठाङ्गुलिविस्तारेण गर्भरन्ध्रेण शोभितः। शिल्पविद्याप्रवीणेन वंशः कार्य्यो मनोहरः। वंशेनैव मतःप्रीतिः मतङ्गमुनिनोदितम्। ततोऽन्येऽपि तदाकारा वंशा एव प्रकीर्त्तिताः। तत्र त्यक्त्वा शिरो-देशादधोऽधिमितमङ्गुलम्। फुत्काररन्ध्रं कुर्वीत मित-मङ्गुलिपर्वणा। पञ्चाङ्गुलानि संत्यज्य ताररन्ध्राणि कारयेत्। कुर्य्यात्तथान्तररन्ध्राणि सप्तसंख्यानि कौशलात्। बदरीबीजतुल्यानि संत्यज्यार्द्धाङ्गुलम्। प्रान्तयो-र्द्वयं कार्यं स्वराद्यैर्नादकेतवे। शिरस्थेन कला देया तेन सुस्वरता भवेत्। षडङ्गुलोऽयं वंशः स्यादेकैका-ङ्गुलिवर्द्धितः। षडङ्गुलानि नाम्ना स्यात् यावदष्टादशा-ङ्गुलम्। फुत्कारताररन्ध्रस्य यावदङ्गुलिमन्तरम्। तदेव नाम वंशस्य वांशिकैः परिकीर्त्त्यते। एकाङ्गुलो द्व्यङ्गुलश्च त्र्यङ्गुलश्चतुरङ्गुलः। अतितारतरत्वेन वांशिकैः समुपे-क्षितः। त्रयोदशाङ्गुलो वंशोऽपरः पञ्चदशाङ्गुलः। नि-न्दितो वंशतत्त्वज्ञैस्तथा सप्तदशाङ्गुलः। महानन्दस्तथा-नन्दो विजयोऽथ जयस्तथा। चत्वार उत्तमा वंशा मतङ्ग-मुनिसम्मताः। दशाङ्गुलो महानन्दोऽनन्द एकादशा-ङ्गुलः। द्वादशाङ्गुलमानस्तु विजयः परिकीर्त्तितः। चतुर्दशाङ्गुलमितो जय इत्यभिधीयते। ब्रह्मा रुद्रो रविर्विष्णुः क्रमादत्र व्यवस्थिताः। नैविड्यं प्रौढ़ता-चापि सुस्वरत्वञ्च शीघ्रता। माधुर्य्यमिति पञ्चामी फुत्-कारेषु गुणाः स्मृताः। शीत्कारबहुलः स्तब्धो विस्वरः स्फुटितो लघुः। अमधुरश्च विज्ञेयाः षड्दोषाः फुत्कृते क्रमात्। तथा प्रयोगबाहुल्यमलसता गीतवादने। एभिर्दोषैर्युतोऽतीव निन्दितो वांशिको मतः। स्थानका-दिरवाभिज्ञो गमकाख्यः स्फुटाक्षरः। शीघ्रहस्तः कलाभिज्ञो वांशिको रत्न उच्यते। प्रयुक्तिर्वंशमुक्तिश्च युक्तिश्चेत्यङ्गुले गुणाः। स्वस्थानत्वं सुस्वरत्वमङ्गुलो-च्चारक्रिया। घनत्वमनत्वं रागरागाङ्गभेदिता। क्रियाभाषाविभाषासु दक्षता गीतवादने। स्वस्थाने चापि दुःस्थाने नादनिर्वाहकौशलम्। गातृणां स्थान-दातृत्वं तद्दोषाच्छादनं तथा। वांशिकस्य गुणा एते मया संक्षिप्य दर्शिताः” सङ्गीतदा॰।

**वंशक** पु॰ वंश इव कायति कै–क। (सोमशाड़ा) १इक्षुभेदे रत्नमा॰ २मत्स्यभेदे (राउत) शब्दमा॰। ३अगुरुचन्दने न॰ हारा॰। [वंशरोचनायाम् राजनि॰।

**वंशकर्पूररोचना** स्त्री कर्पूरमिव रोचते रुच–ल्यु इत॰।

**वंशक्षीरी** स्त्री वंशस्य क्षीरमिवास्त्यस्याः अच् गौरा॰ ङीष्। वंशरोचनायाम् राजनि॰।

**वंशज** पु॰ वंशात् जायते जन–ड। १वंशस्वजाते यवाकारे वेणुयवे राजनि॰ २सत्कुलजाते त्रि॰। ३वंशरोचनायां स्त्री टाप् शब्दर॰। [राजनि॰।

**वंशतण्डुल** पु॰ इत॰। वेणुजाते तण्डुलाकारे वेणुयवे

**वंशधर** त्रि॰ वंशं धरति। कुलाविच्छेदकारके सन्ताने। धृ–णिच ल्यु। वंशवर्द्धनोऽप्यत्र।

**वंशनेत्र** न॰ वंशस्येव नेत्रमस्य। इक्षुमूले राजनि॰।

वंशपत्र पु० वंशस्य पत्रमिव पत्रमस्य । १नलनामके तृणे राजनि०। हृत०। २वंशदले न० । कप् तत्रैव । ३नाडीहिङ्गौ स्त्री राजनि० गौरा० ङीष् ।

वंशपत्रपतित न० अष्टदशाक्षरपादके छन्दोभेदे । "दिङ्मुनि वंशपत्रपतितं भरनभनलगैः" छन्दो०।

वंशपीत पु०वंशपत्रपत्रमिव पीतः । कनकगुग्गुलौ राजनि०।

वंशपुष्पा स्त्री वंशस्य पुष्पमिव पुष्पमस्याः । सहदेवीलतायाम् राजनि० ।

वंशपूरक न० वंशस्येव पूरकं यस्य । इक्षुमूले राजनि० ।

वंशरो(लो)चना स्त्री वंशेषु रोचते रुच—ल्यु वा रस्य लः । वंशपर्वस्थिते श्वेतवर्णे कर्पूराकारे द्रव्ये । (वंशलोचन) । "वंशजा वृंहणी वृष्या बल्या स्वाद्वी च शीतला । तृष्णाकासक्षयश्वासज्वरपित्तास्रकामला: । हरेत् कुष्ठं व्रणं पाण्डुं कषायवातकृच्छ्रजित्" भावप्र० ।

वंशशर्करा स्त्री वंशस्य शर्करेव । (वंशलोचन) पदार्थे राजनि० । [हेमच० ।

वंशशलाका स्त्री० वंशस्य शलाकेव कठिनत्वात् । वीरणमूले

वंशस्तनित न० । द्वादशाक्षरपादके वंशस्थविलापरपर्याये छन्दोभेदे शब्दा: । [वंशस्थविलं जतौ जरौ" छन्दो०

वंशस्थविल न० । द्वादशाक्षरपादके छन्दोभेदे । "वदन्ति

वंशाग्र न० वंशस्य अग्रं मूलम् । वंशाङ्कुरे (कोँड़)राजनि०

वंशाङ्कुर पु० हृत० । (कोँड़) इति ख्याते पदार्थे राजनि०

वंशिक न० वंशोऽस्त्यस्य ठन् वंश इव वा कन् । १अगुरुचन्दने अमरः २वंश्यां स्त्री शब्दच० टाप् ।

वंशीधर पु० वंशीं वंशजवाद्यभेदं धरति धृ—अच् । श्रीकृष्णे

वंश्य त्रि० वंशे सत्कुले जातः यत् । सत्कुलजाते ।

वक कौटिल्ये अक० गतौ सक०भ्वा०आ०सेट् इदित् । वङ्कते अववङ्किष्ट ।

वक पुंस्त्री० वकि—अच् पृषो० नलोपः । स्वनामख्याते विहगे अमरः स्त्रियां ङीष् । २स्वनामख्याते पुष्पवृक्षे "अगस्तिकुसुमं शीतं चातुर्थकनिवारकम् । नक्तान्ध्यनाशनं तिक्तं कषायं कटुपाकि च । पीनसश्लेष्मपित्तघ्नं वातघ्नं ऋषिभिर्मतम्"भावप्र०। ३औषधादिपाचनयन्त्रभेदे"जलकच्छपपातालदोलाभूधरवालुकाः । वकाद्या यन्त्रभेदाः स्युर्वेज्ञाद्याश्च मूषिकाः" शब्दच०। अस्य लक्षणं यथा "दीर्घकण्ठकाचकुप्या गिलयेत् खल्लभाण्डकम् । तिर्य्यक् कृत्वा पचेत् चुल्ल्यां वकयन्त्रमिति स्मृतम् ।" वैद्यकम् । ४कुवेरे ५राक्षसभेदे मेदि० यो भीमेन हतः भा०व० ११ अ० । श्रीकृष्णेन हते दैत्यभेदे च भाग०१०।११ अ० ।

वकजित् पु० वकं जितवान् जि—क्विप् हृत० । १श्रीकृष्णे २भीमसेने च वकान्तकादयोऽप्यत्र ।

वकधूप पु० वक इव शुभ्रो धूपः । कृकधूपे अमरः ।

वकपञ्चक न० । कार्त्तिकशुक्लपक्षस्यैकादश्यादितिथिपञ्चके । तत्र मत्स्यादर्वकैरपि मत्स्यत्यागेन व्रताचरणात् तथात्वम्

वकपुष्प पु० वक इव कुटिलं पुष्पमस्य । स्वनामख्याते पुष्पवृक्षे शब्दच० ।

वकवृत्ति पु० वकस्येव स्वार्थपरा वृत्तिर्वेष्टा यस्य । "अधोगदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च वकव्रतिरुदाहृतः"इत्युक्तलक्षणे परञ्चके जने ।

वकव्रतधर पु० वक इव व्रतं धारयति धृ—अच् । "अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च वकव्रतधरो द्विजः" इत्युक्ते स्वार्थसाधनतत्परे वञ्चके विप्रादौ । [व्रतधरे ।

वकव्रतिन्(क) पु० वकव्रत+अस्त्यर्थे इनि ठन् वा । वक-

वकुल पु० वकि—कुलच् नलोपः । १स्वनामख्याते पुष्पवृक्षे अमरः । २कटुकायां स्त्री राजनि० टाप् । काकोल्यां ङीप् पृषो० । वकुलोऽपि वकुले पु० ।

"वकुलो मधुरश्च शिङ्कोकेसरकस्तथा । वकुलस्तुवरोऽनुष्णः कटुः पाके रसे गुरुः । कफपित्तविषश्वित्रि क्रिमिदन्तगदापहः"भावप्र० । अस्य खोऽत्राद्वित्वमित्यन्ये ।

वक्क गतौ भ्वा०आत्म०सक०सेट् । वक्कते अवक्किष्ट ।

वक्तव्य त्रि० वच—तव्य । १कुत्सिते २हीने ३दुष्टे च मेदि० "दिवा वक्तव्यता पात्रे" स्मृतिः । ४कथनीये च । भावे क्त । ५कथने ६दूषणे च न० ।

वक्तृ त्रि० उचितं वक्तुं वक्ति वच—तृच् । १उचितवक्त्रादिनि अमरः स्त्रियां ङीप् । २पण्डिते पु० मेदि० ।

वक्त्र न० वक्त्यनेन वच-करणे ष्ट्रन् । १मुखे अमरः । २तगरमूले शब्दर० । ३वसनभेदे मेदि०। वक्त्रं "नाद्यात्रसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम्" वृ० र० उक्ते ४छन्दोभेदे च ।

वक्त्रभेदिन् पु० वक्त्रं भिनत्ति भिद-णिनि । १तिक्तरसे हेमच० । २मुखविदारके त्रि० स्त्रियां ङीप् ।

वक्त्रवास पु० वक्त्रं वासयति सुरभीकरोति वासि—अण् उप० स० । १नागरङ्गे हेमच०। हृत० २मुखगन्धे पु० ।

वक्त्रशोधिन् पु० वक्त्रं शोधयति शुध—णिच्—णिनि । १जम्बीरे २मुखशोधके ३ताम्बूलादौ त्रि० स्त्रियां ङीप् ।

**वक्रासव** पु० वक्र आसव इव । अधररसे त्रिका० ।

**वक्र** न० वकि—रन् पृषो० नलोपः । १नदीवक्रे अमरः २शनैश्चरे पु०मेदि० ३मङ्गलग्रहे पु०हेम० ४रुद्रे ५त्रिपुरासुरे पु० धरणिः ६पर्पटे कुटिलगतौ च स्त्री। तद्वति त्रि० । ग्रहाणां वक्रगतिकारणं सूर्यगतिशब्दे उक्तम् ॥ सामान्यतः ज्यो० त० उक्तं यथा “वक्राः स्युः पञ्च षष्ठेऽर्के अतिवक्रा नगाष्टगे । नवमे दशमे चैव जायते ऋजुता गतिः । द्वादशैकादशे सूर्ये भजन्ते शीघ्रतां पुनः । रविस्थित्यंशकाद् यावद् संख्यात्र कल्पते । न तु राश्यन्तरस्थत्वात् पञ्चमादिनिरूपणम् । राहुकेतू सदा वक्रौ” ।

**वक्रकण्टक** पु० वक्रः कुटिलः कण्टकः कण्टकोऽस्य । बदरवृक्षे राजनि०। ततः संज्ञायां कन् । खदिरवृक्षे राजनि० ।

**वक्रखड्ग** पु० कर्म० । करवाले राजनि० ।

**वक्रग्रीव** पुंस्त्री० वक्रा ग्रीवा यस्य । १उष्ट्रे त्रिका० स्त्रियां ङीष् । २कुटिलग्रीवायुते त्रि० स्त्रियां टाप् ।

**वक्रपुच्छ** पुंस्त्री० वक्रं पुच्छं यस्य । १कुक्कुरे त्रिका० स्त्रियां ङीष् । वक्रलाङ्गूलादयोऽप्यत्र ।

**वक्रपुष्प** न० वक्राणि पुष्पाण्यस्य । १बकवृक्षे शब्दर० २पलाशवृक्षे च राजनि० । [वृक्षे राजनि० ।

**वक्रशल्या** स्त्री वक्रं शल्यमिव पत्रादि यस्याः । कुटुम्बिनी-

**वक्राङ्ग** पुंस्त्री० वक्राण्यङ्गान्यस्य । १हंसे स्त्रियां ङीष् । २कुटिलावयवयुते त्रि० स्त्रियां वा ङीप् । कर्म० ३कुटिले देहे न० ।

**वक्रिमन्** पु०वक्रस्य भावः इमनिच् । कौटिल्ये “वशितवक्रिम शेखितम्” मालतीमाधवम् । पृषो० । वङ्क्रिमोऽप्यत्र ।

**वक्रोक्ति** स्त्री कर्म० । १कुटिलोक्तौ “अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद्यदि । अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा” सा० द० उक्ते २अर्थालङ्कारभेदे ३काकुवचने च ।

**वक्ष** रोषे भ्वा० पर० सक० सेट् । वक्षति अवक्षीत् ।

**वक्षस्** न० वह—असुन् सुट् च । १हृदये २उरसि च अमरः ।

**वक्षः(क्ष)स्थल** न० वक्षःस्थलमिव वा विसर्गलोपः । प्रशस्तवक्षसि । [श०र०।

**वक्षोज** पु०वक्षसि जायते जन—ड । १स्तने “वक्षोजयोर्मन्दता”

**वक्षोरुह** पु० वक्षसि रोहति रुह-क । स्तने त्रिका० ।

**वख** गतौ भ्वा० पर० सक० सेट् इदित् । वङ्खति अवङ्खीत् अनिदित्त्वपक्षे वखति अवखीत् अवाखीत् ।

**वग** खञ्जे भ्वा०पर०अक०सेट् इदित् । वङ्गति अवङ्गीत् ।

**वगाह** पु० अव+गाह—घञ् अवातो लोपः । अवगाहने ।

**वघ** गतौ निन्दायाम् आरम्भे च सक०जवे अक० भ्वा०आत्म० सेट् इदित् । वङ्घते अवङ्घिष्ट ।

**वङ्क** पु० वकि—घञ् । १नदीवक्रे भरतः । २पर्य्याणे (पालान) स्त्री त्रिका० टाप् ।

**वङ्क्रि** स्त्री वकि—रि । १पार्श्वास्थि हेमच० । २वाद्यभेदे पुंन० उणादिको० । ३छद्दारुणि पुंन० सि०कौ० ।

**वङ्ग** न० वगि—अच् । धातुभेदे (राङ) रङ्गशब्दे दृश्यम् । “रङ्गाकारं समारभ्य ब्रह्मपुत्रान्तगं प्रिये ! । वङ्गदेश इति प्रोक्तः” उक्ते देशभेदे पु०ब०व०। २चन्द्रवंश्ये नृपभेदे पु० शब्द०र० । ४वार्त्ताकौ ५कार्पासे च पु० मेदि० ।

**वङ्गज** न०वङ्गात् धातोः जायते जन—ड । १सिन्दूरे रत्नमा० २वङ्गदेशजाते त्रि० ।

**वङ्गन** पु० वगि—ल्यु । वार्त्ताकौ शब्दर० ।

**वङ्गशुल्वज** न० वङ्गशुल्वाभ्यां रङ्गताम्राभ्यां जायते जन—ड । रङ्गताम्रमिश्रितजाते कांस्ये धातौ हेमच० ।

**वङ्गसेन** पु० वङ्गमिव शुभ्रा सेना पुष्पमस्य । बकवृक्षे त्रिका०

**वङ्गारि** पु० ६त० । हरिताले हेमच० तस्य वङ्गधातुजारकत्वात् तथात्वम् ।

**वङ्क्षण** पु० वच-ल्युट् पृषो०नुम् । ऊरुसन्धौ (कुचकी) अमरः

**वच** सन्देशे सक०कथने द्विक० चुरा०उभ० सेट् । वाचयति ते

**वच** कथने अदा० द्विक० पर० अनिट् । वक्ति । “न हि वचिरन्तिपरः प्रयुज्यते” अभियुक्तोक्तेरस्य अन्ति” अवोचत् त । उवाच ऊचतुः वक्ता वक्तः ।

अनु+उक्तस्य पुनःकथने अनुवादे ।

निर्+अवयवार्थकथने निरुक्तिः निर्वचनम् ।

प्र+प्रकर्षेण कथने व्याख्यानार्थमुक्तस्य कथने प्रवचनम् ॥

**वचन** न० वच-ल्युट् । १कथने २वाक्ये अमरः ३शुण्ठ्याम् शब्दच० कर्त्तरि ल्यु । व्याकरणोक्ते संख्यार्थके सुप्तिङन्तरूपे प्रत्यये च । “सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु वचनेषु च” । [स्थिनि । वचने स्थिते वशीभूते अमरः ।

**वचनग्राहिन्** त्रि०वचनं गृह्णाति तदनुसारेणाचरति ग्रह—

**वचनीय** त्रि० वच—अनीयर् । १कथनीये २निन्दनीये लोकापवादे न० “वचनीयमिदं व्यवस्थितम्” कुमारः ।

**वचनेस्थित** त्रि० वचने वाक्ये तदुपदिष्टाचारे तिष्ठति स्था—क अलुक्स०। वाक्यप्रतिपालके वशीभूते अमरः । [मेदि०

**वचर** पुंस्त्री०वच—अरन् । १कुक्कुटे स्त्रियां ङीष् । २शठे त्रि०

**वचस्** न॰ वच–असुन् । वाक्ये वाक्पदार्थे अमरकोषः ।

**वचसांपति** पु॰ ६त॰ अलुक्स॰ । वृहस्पतौ दीपिका ।

**वचस्कर** त्रि॰ वचः करोति कृ–अच् कस्कादि॰ । वाक्यप्रतिपालके वश्ये ।

**वचा** स्त्री वच–अच् । (वच) इति ख्याते द्रव्ये ।

“वचोग्रगन्धा कटुका तिक्तोष्णा वान्तिवह्निकृत् । विबन्धाध्मानशूलघ्नी शकृन्मूत्रविशोधनी । अपस्मारकफोन्मादभूतजन्त्वनिलान् हरेत्” । (खुरासानी वचा)। “पारसीकवचा शुक्ला प्रोक्ता हैमवतीति सा । हैमवत्युदिता तद्वत् भूतं हन्ति विशेषतः । ”अथ (महाभरी) वचा। अस्या लोके (कुलीवच इति) नामान्तरम् । “सुगन्धाप्युग्रगन्धा च विशेषात् कफकासनुत् । सुस्वरत्वकरी रुच्या हृत्कण्ठमुखशोधिनी” । अपरा सुगन्धा स्थूलग्रन्थिर्यस्या लोके महाभरा इति नाम । “स्थूलग्रन्थिः सुगन्धान्या ततो हीनगुणा स्मृता” । (चोपचीनीति) लोके प्रसिद्धा । तस्या गुणाः “द्वीपान्तरवचा कट्वी तिक्तोष्णा वह्निदीप्तिकृत् । विबन्धाध्मानशूलघ्नी शकृन्मूत्रविशोधनी । वातव्याधीनपस्मारमुन्मादं तनुवेदनाम् । व्यपोहति विशेषेण फिरङ्गामयनाशिनी” भावप्र॰ ।

**वज** गतौ भ्वा॰ पर॰ सक॰ सेट् । वजति । अवाजीत्–अवजीत् ववजतुः । [ति अवीवजत् त ।

**वज** शरसंस्कारे गतौ च चुरा॰ उभ॰ सक॰ सेट् । वाजयति

**वज्र** पुंन॰ वज–रन् । १हीरके २इन्द्रस्यास्त्रभेदे च । तच्च दधीचिमुन्यस्थितो जातम् भाग॰५।१०अ॰ उक्तम् ३बालके ४धात्र्याम् न॰ मेदि॰ ४काञ्जिके जटा॰ ५वज्रपुष्पे शब्दर॰। ६स्नोहभेदे ७अस्त्रभेदे न॰ भावप्र॰ ज्योतिषोक्ते विष्कुम्भादिषु सप्तविंशतौ योगेषु मध्ये पञ्चदशे योगभेदे च न॰ । ९कोकिलाक्षवृक्षे १०श्वेतकुशे पु॰ राजनि॰। ११श्रीकृष्णस्य प्रपौत्रे यदुवंश्ये नृपभेदे च पु॰ भाग॰। १२सेहुण्डवृक्षे भावप्र॰ । हीरकवज्रलक्षणादि ह॰ स॰ ८०अ॰ उक्तं यथा “रत्नानि बलाद्दैत्याद्दधीचितोऽन्ये वदन्ति जातानि । केचिद्भुवः स्वभावाद्वैचित्र्यं प्राहुरुपलानाम् । इत्युपक्रमे ।”

“वेणातटे विशुद्धं शिरीषकुसुमोपमं च कौशलकम् । सौराष्ट्रकमाताम्रं कृष्णं सौर्पारकं वज्रम् । ईषत्ताम्रं हिमवति मतङ्गजं वल्लपुष्पसङ्काशम् । आपीतं च कलिङ्गे श्यामं पौण्ड्रेषु सम्भूतम् । ऐन्द्रं षडश्रि शुक्लं याम्यं सर्पास्यरूपमसितं च । कदलीकाण्डनिकाशं वैष्णवमिति सर्वसंस्थानम् । वारुणमबलागुह्योपमं भवेत् कर्णिकारपुष्पनिभम् । शृङ्गाटकसंस्थानं व्याघ्राक्षिनिभं च हौतभुजम् । वायव्यं च यवोपममशोककुसुमप्रभं समुद्दिष्टम् । स्रोतः खनिः प्रकीर्णकमित्याकरसम्भवस्त्रिविधः । रक्तं पीतं च शुभं राजन्यानां सितं द्विजातीनाम् । शैरीषं वैश्यानां शूद्राणां शस्यतेऽसिनिभम् । सितसर्षपाष्टकं तण्डुलो भवेत्तण्डुलैस्तु विंशत्या । द्वे लक्षे मूल्यं द्विद्व्यूनिते चैतत् । पादत्र्यंशार्धोनं त्रिभागपञ्चांशषोडशांशाश्च । भागश्च पञ्चविंशः शतिकः साहस्रिकश्चेति । सर्वद्रव्याभेद्यं लघ्वम्भसि तरति रश्मिवत् स्निग्धम् । तडिदनलशक्रचापोपमं च वज्रं हितायोक्तम् । काकपदमक्षिकाकेशधातुयुक्तानि शर्करविद्धम् । द्विगुणाश्रि दग्धकलुषत्रस्तविशीर्णानि न शुभानि । यानि च बुद्बुददलिताग्रचिपिटवासीफलप्रदीर्घाणि च । सर्वेषां चैतेषां मूल्याद्भागोऽष्टमो हानिः । वज्रं न किञ्चिदपि धारयितव्यमेके पुत्रार्थिनीभिरबलाभिरिच्छन्ति तज्ज्ञाः । शृङ्गाटकत्रिपुटधान्यकमध्यसंस्थितं यच्छ्रोणीनिभं च शुभदं तनयार्थिनीनाम् । स्वजनविभवजीवितक्षयं जनयति वज्रमनिष्टलक्षणम् । अशनिविषभयारिनाशनं शुभसुखभोगकरं च शुभलक्षणम् ।” हीरकोत्पत्त्यादि गारुडे ६८अ॰ उक्तं यथा

“तस्या(बलस्या)स्थिलेशो निपपात येषु भुवः प्रदेशेषु कथञ्चिदेव । वज्राणि वज्रायुधनिर्जिगीषोर्भवन्ति नानाकृतिमन्ति तेषु । हैममातङ्गसौराष्ट्राः पौण्ड्रकालिङ्गकोशलाः । वेणातटाः ससौवीरा वज्रस्याष्टाविहाकराः । आताम्रा हिमशैलजाश्च शशिभा वेणातटीयाः स्मृताः सौवीरे त्वसिताब्जमेघसदृशास्ताम्राश्च सौराष्ट्रजाः । कालिङ्गाः कनकावदातरुचिराः पीतप्रभाः कोशले श्यामाः पुण्ड्रभवा मतङ्गविषये नात्यन्तपीतप्रभाः । अत्यर्थं लघु वर्णतश्च गुणवत् पार्श्वेषु सम्यक् समं रेखाबिन्दुकलङ्ककाकपदकत्रासादिभिर्वर्जितम् । लोकेऽस्मिन् परमाणुमात्रमपि यत् वज्रं क्वचिद्दृश्यते तस्मिन् देव ! समाश्रयो ध्रुवितयस्तीक्ष्णाग्रधारं यदि । वज्रेषु वर्णयुक्त्या देवानामपि परिग्रहः प्रोक्तः । वर्णेभ्यश्च विभागः कार्यो वर्णाश्रयादेव ! । हरितपीतपिङ्गश्यामाताम्राः स्वभावतो रुचिराः । हरिन्मरुच्चन्द्रकृतवह्निपितृपतिमरुतां स्वावर्णाः । विप्र

शङ्खकुमुदस्फटिकावदातः स्यात् क्षत्त्रियस्य शशबभ्रुविलोचनाभः । वैश्यस्य कान्तकदलीदलसन्निकाशः शूद्रस्य धौतकरवालसमानदीप्तिः । द्वौ वज्रवर्णौ पृथिवीपतीनां सद्भिः प्रदिष्टौ न तु सार्व्वजन्यौ । यः स्याज्जवाविद्रुमभङ्गशोणो यो वा हरिद्रारससन्निकाशः । ईशत्वात् सर्व्ववर्णानां गुणवत् सार्व्ववर्णिकम् । कामतो धारयेद्राजा नत्वन्योऽन्यत् कथञ्चन । अधरोत्तरवृत्त्या हि यादृक् स्याद्वर्णसङ्करः । ततः कष्टतरो वज्रो वर्णानां सङ्करो मतः । न च मार्गविभागमात्रवृत्त्या विदुषा वज्रपरिग्रहो विधेयः । गुणवद्गुणसम्पदां विभूतिर्विपरीतो व्यसनोदयस्य हेतुः । एकमपि यस्य शृङ्गं विदलितमवलोक्यते विशीर्णं वा । गुणवदपि तन्न धार्य्यं वज्रं श्रेयोऽर्थिभिर्भवने । स्फुटिताग्रविशीर्णशृङ्गदेशं मलवर्णैः पृषतैरुपेतमध्यम् । न हि वज्रभृतोऽपि वज्रमाशु श्रियमन्यामवलम्बनं न कुर्य्यात् । यस्यैकदेशः क्षतजावभासो यद्वा भवेल्लोहितवर्णचित्रम् । न तत् कुर्य्याद्वज्रमाशु स्वच्छन्दमृत्योरपि जीवितान्तम् । कोट्यः पार्श्वानि धाराश्च षडष्टौ द्वादशेति च । उत्तुङ्गसमतीक्ष्णाग्रा वज्रस्याकरजा गुणाः । षट्कोटिशुद्धममलं स्फुटतीक्ष्णधारं वर्णान्वितं लघु सुपार्श्वमपेतदोषम् । इन्द्रायुधांशुविसृतिच्छुरितान्तरीक्षमेवंविधं भुवि भवेत् सुलभं न वज्रम् । तीक्ष्णाग्रं विमलमपेतसर्व्वदोषं धत्ते यः प्रयततनुः सदैव वज्रम् । तद्वित्तं प्रतिदिनमेति यावदायुः स्त्रीसम्पत्सुतधनधान्यगोपशूनाम् । व्यालवह्निविषव्याधितस्करोम्बुभयानि च । दूरात्तस्य निवर्त्तन्ते कर्म्माण्याथर्व्वणानि च । यदि वज्रमपेतसर्व्वदोषं बिभृयात्तण्डुलविंशतिं गुरुत्वे । मणिशास्त्रविदो वदन्ति तस्य द्विगुणं रूपकलक्षमग्र्यमूल्यम् । त्रिभागहीनार्द्धतदर्द्धशेषं त्रयोदशं त्रिंशदतोऽर्द्धभागाः । अशीतिभागोऽथ शतांशभागः सहस्रभागोऽल्पसमानवेशः । यत्तण्डुलैर्द्विदशभिः कृतस्य वज्रस्य मूल्यं प्रथमं प्रदिष्टम् । द्वाभ्यां क्रमाद्धानिमुपागतस्य त्वेकावसानस्य विनिश्चयोऽयम् । न चापि तण्डुलैरेव वज्राणां धारणक्रमः । अष्टाभिः सर्षपैर्गौरैस्तण्डुलं परिकल्पयेत् । यत्तु सर्व्वगुणैर्युक्तं वज्रं तरति वारिणि । रत्नवर्गे समस्तेऽपि तस्य धारणमिष्यते । अनेनापि हि दोषेण लक्ष्यालक्ष्येण दूषितम् । स्वमूल्यात् दशमं भागं वज्रं लभति मानवः । प्रकटानेकदोषस्य स्वल्पस्य महतोऽपि वा । स्वमूल्याच्छतशोभागो वज्रस्य न विधीयते । स्पष्टदोषमलङ्कारे वज्रं यद्यपि दृश्यते । रत्नानां परिकर्म्मार्थं मूल्यं तस्य भवेल्लघु । प्रथमं गुणसम्पदाभ्युपेतं प्रतिबद्धं समुपैति तच्च दोषम् । स्वलमाधरणेन तस्य राज्ञो गुणहीनोऽपि मणिर्न भूषणाय । नार्य्या वज्रमधार्य्यं गुणवदपि सुतप्रसूतिमिच्छन्त्या । अन्यत्र दीर्घचिपिटकत्वाद्गुणैर्विरक्ताच्च । अयसा पुष्परागेण तथा गोमेदकेन च । वैदूर्य्यस्फटिकाभ्याञ्च काचैश्चापि पृथग्विधैः । प्रतिरूपाणि कुर्व्वन्ति वज्रस्य कुशला जनाः । परीक्षा तेषु कर्त्तव्या विद्वद्भिः सुपरीक्षकैः । क्षारोल्लेखनशाणाभिस्तेषां कार्य्यं परीक्षणम् । पृथिव्यां यानि रत्नानि ये चान्ये लोहधातवः । सर्व्वाणि विलिखेद्वज्रं तच्च तैर्न विलिख्यते । गुरुता सर्व्वरत्नानां गौरवाधारकारणम् । वज्रे तान्वैपरीत्येन सूरयः परिचक्षते । जातिभिरजातिं विलिखन्ति वज्रकुरुविन्दाः । वज्रैर्वज्रं विलिखति नान्येन लिख्यते वज्रम् । वज्राणि मुक्तामणयो याश्च काश्चन जातयः । न तेषां प्रतिबद्धानां भा भवत्यूर्द्ध्वगामिनी । तिर्य्यक्क्षतत्वात् केषाञ्चित् कथञ्चिद्यदि दृश्यते । तिर्य्यगालिख्यमानानां वा पार्श्वेष्वपि हन्यते । यद्यपि विशीर्णकोटिः सबिन्दुरेखान्वितो विवर्णो वा । तदपि धनधान्यपुत्रान् करोति सेन्द्रायुधो वज्रः । सौदामिनीविस्फुरिताभिरामं राजा यथोक्तं कुलिशं दधानः । पराक्रमाक्रान्तपरप्रतापः समस्तसामन्तभुवं भुनक्ति” । ४ विद्युदग्नौ तन्निवारणहेतुर्यथा “प्रचण्डपवनाघाते मेघेषु स्तनितेषु यः । त्रिःपठेज्जैमिनीयोऽस्मि प्राङ्मुखो वाप्युदङ्मुखः । तस्य मा भूद्भयं घोरं विद्युतोऽयमीदृति” ब्रा० त० धृतब्रह्मपुराणम् । “मुनेः कल्याणमित्रस्य जैमिनेश्चापिकीर्त्तनात् । विद्युदग्निभयं नास्ति पठिते च गृहोदरे” । “लिखिते च गृहोदरे” इति वा पाठः । जैमिनिश्च सुमन्तुश्च वैशम्पायन एव च । पुलस्त्यः पुलहश्चैव पञ्चैते वज्रवारकाः” पुराणम् ।

तत्पर्य्यायादि भावप्र० उक्तं यथा

“हीरकः पुंसि वज्रोऽस्त्री चन्द्रो मणिवरश्च सः । स तु श्वेतः स्मृतो विप्रो लोहितः क्षत्त्रियः स्मृतः । पीतो वैश्योऽसितः शूद्रश्चतुर्व्वर्णात्मकश्च सः । रसायने मतो विप्रः सर्व्वसिद्धिप्रदायकः । क्षत्त्रियो व्याधिविध्वंसी जरामृत्युहरः स्मृतः । वैश्यो धनप्रदः प्रोक्त

तथा देहस्य दार्ढ्यकृत्। सूते नाशयति व्याधीन् वयःस्तम्भं करोति च। पुंस्त्रीनपुंसकानीह लक्षणीयानि लक्षणैः। सुवृत्ताः फलसंपूर्णास्तेजोयुक्ता बृहत्तराः। पुरुषास्ते समाख्याता रेखाबिन्दुविवर्जिताः। रेखाबिन्दुसमायुक्ताः षडस्रास्ते स्त्रियः स्मृताः।" षडस्राः षट्कोणाः। "त्रिकोणाश्च सुदीर्घास्ते विज्ञेयाश्च नपुंसकाः। तेषु स्युः पुरुषाः श्रेष्ठा रसबन्धनकारिणः। स्त्रियः कुर्वन्ति कायस्य कान्तिं स्त्रीणां सुखप्रदाः। नपुंसकास्त्ववीर्य्याः स्युरकामाः सत्त्ववर्जिताः। स्त्रियः स्त्रीभ्यः प्रदातव्याः क्लीवं क्लीवे प्रयोजयेत्। सर्वेभ्यः सर्वदा देयाः पुरुषाः वीर्य्यवर्द्धनाः। अशुद्धं कुरुते वज्रं कुष्ठं पार्श्वव्यथान्तथा। पाण्डुतां पङ्गुतां तस्मात् संशोध्य मारयेत्।" तच्छोधनविधिर्यथा

"कुलत्थकोद्रवक्वाथे दोलायन्त्रे विपाचयेत्। व्याघ्रीकन्दगतं वज्रं त्रिदिनं तद्विशुध्यति"। व्याघ्री कण्टकारिका। अन्यः शोधनविधिः। "गृहीत्वाह्नि शुभे वज्रं व्याघ्रीकन्दोदरे क्षिपेत्। माहिषीविष्ठया लिप्ता करीषाग्नौ विपाचयेत्। त्रियामयां चतुर्यामं यामिन्यन्तेऽश्वमूत्रके। सेचयेत्पाचयेदेवं सप्तरात्रेण शुध्यति।" अथ वज्रस्य मारणविधिः "हिङ्गुसैन्धवसंयुक्ते क्षिपेत् क्वाथे कुलत्थजे। तप्तं तप्तं पुनर्वज्रं भवेद्भस्म त्रिसप्तधा"। अन्योऽस्य मारणप्रकारः "मेषशृङ्गभुजङ्गास्थिकूर्मपृष्ठाम्लवेतसम्। शशदन्तं समं पिष्ट्वा वज्रीक्षीरेण गोलकम्। कृत्वा तन्मध्यगं वज्रं म्रियते ध्मातमेव हि।" मारितस्य वज्रस्य गुणाः "आयुःपुष्टिं बलं वीर्य्यं वर्णं सौख्यं करोति च। सेवितं सर्वरोगघ्नं मृतं वज्रं न संशयः।" अभ्रभेदा तद्गुणाश्च भावप्र० उक्ता यथा

"पुरा बधाय वृत्रस्य वज्रिणा वज्रमुद्धृतम्। विस्फुलिङ्गास्ततस्तस्य गगने परिसर्पिताः। ते निपेतुर्घनध्वानाच्छिखरेषु महीभृताम्। तेभ्य एव समुत्पन्नं तत्तद्गिरिषु हीरकम्। तद्वज्रं वज्रजातत्वादभ्रमम्बरकोद्भवात्। गगनात् स्खलितं यस्माद्गगनञ्च ततो मतम्। विप्रक्षत्रियविट्शूद्रभेदात्तत् स्याच्चतुर्विधम्। क्रमेणैषां सितं रक्तं पीतं कृष्णञ्च वर्णतः। प्रशस्यते सितन्तारं रक्तं तत्तु रसायने। पीतं हेमनि, कृष्णन्तु गदेषु द्रुतयेऽपि च। पिनाकं दर्दुरं नागं वज्रञ्चेति चतुर्विधम्। मुक्तमग्नौ विनिःक्षिप्तं पिनाकन्दलसञ्चयम्। अज्ञानाद्भक्षणं तस्य महाकुष्ठप्रदायकम्। दर्दुरं त्वग्निनिःक्षिप्तं कुरुते दर्दुरध्वनिम्। गोलकान् बहुशः कृत्वा स मृत्युप्रदायकः। नागन्तु नागवद्वह्नौ फुत्कारं परिमुञ्चति। तद्भक्षितमवश्यन्तु विदधाति भगन्दरम्। वज्रन्तु वज्रवत्तिष्ठेन्नाग्नौ विकृतिं व्रजेत्। सर्वाभ्रेषु वरं वज्रं व्याधिवार्द्धक्यमृत्युहृत्। अभ्रमुत्तरशैलोत्थं बहुसत्त्वं गुणाधिकम्। दक्षिणाद्रिभवं स्वल्पसत्त्वमल्पगुणप्रदम्। अभ्रं कषायं मधुरं सुशीतमायुष्करं धातुविवर्द्धनञ्च। हन्यात् त्रिदोषं व्रणमेहकुष्ठप्लीहोदरग्रन्थिविषक्रमींश्च। रोगान् हन्ति दृढयति वपुर्वीर्य्यवृद्धिं विधत्ते तारुण्याढ्यं रमयति शतं योषितां नित्यमेव। दीर्घायुष्कान् जनयति सुतान् विक्रमैः सिंहतुल्यान् मृत्योर्भीतिं हरति सततं सेव्यमानं मृताभ्रम्।"

**वज्रकण्टक** पु० वज्रमिव कठिनं कण्टकमस्य। १स्नुहीवृक्षे जटा०। २कोकिलाक्षे राजनि०। [राजनि०

**वज्रचर्मन्** वज्रमिव कठिनं चर्म यस्य। गण्डके खड्गिनि।

**वज्रतुण्ड** पु० वज्राकारं तुण्डमस्य। १गरुडे २मशके त्रिका० ३गणके ४गृध्रे च राजनि०।

**वज्रदन्त** पु० वज्रमिव कठिनो दन्तोऽस्य। १शूकरे २मूषके च शब्दमा० वज्रदशनादयोऽप्यत्र।

**वज्रद्रु** पु० वज्राकारो द्रुः। स्नुहीवृक्षे अमरः। वज्रद्रुमादयोऽप्यत्र। [वज्रवृक्षादयोऽप्यत्र।

**वज्रधर** पु० वज्रं धरति धृ–अच्। १इन्द्रे हला० २पेचके च

**वज्रनिर्घोष** पु० ६त०। वज्रस्तनितशब्दादौ हला० वज्रनिष्पेषोऽप्यत्र। [वज्रहस्तादयोऽप्यत्र।

**वज्रपाणि** पु० वज्रं पाणौ यस्य। १इन्द्रे २पेचके च त्रिका०

**वज्रपुट** न० वज्रमिव कठिनं पुटमस्य। औषधपाकपात्रभेदे

**वज्रपुष्प** न० वज्रमिव पुष्पम्। तिलपुष्पे अमरः।

**वज्रपुष्पा** स्त्री वज्रमिव पुष्पं यस्याः। शतपुष्पायाम् राजनि०

**वज्रमय** त्रि० वज्रात्मकम् मयट्। अतिकठिने स्त्रियां ङीप्।

**वज्रमूली** स्त्री वज्रमिव कठिनं मूलमस्याः ङीप्। माषपर्ण्याम् राजनि०। [अस्थिसंहारलतायाम् शब्दच०।

**वज्रवल्ली** स्त्री वज्रमिव कठिना वल्ली। (हाड़जोड़ा) अस्थि-

**वज्रबीजक** पु० वज्रमिव कठिनं बीजमस्य कप्। लताकरञ्जे राजनि०। [राजनि०।

**वज्रवृक्ष** पु० वज्रमिव कठिनो वृक्षः। सेहुण्डवृक्षे (सेकोड़ा)

**वज्रा** स्त्री वज्र–रक्। १गुडूच्याम् २स्नुह्याञ्च मेदि० ३दुर्गायां देवीपु० ४स्नुहीभेदे क्षीरकाकोल्यामपि मेदि०।

वञ्जाकृति पु० वञ्जस्येवाकृतिरस्य । तिक्तापूतीकरञ्जवृक्षे वर्षभेदे ।

वञ्जाङ्घ्री स्त्री वञ्जमिवाङ्घ्रि र्यस्याः । गवेधुकाधान्यभेदे (गड़गड़े) शब्दच० २लताभेदे (हाड़जोड़ा) भावप्र० ।

वञ्जास्थिशृङ्खला स्त्री वञ्जमिवास्थि शृङ्खला यस्याः । कोकिलाक्षवृक्षे राजनि० । [१गुरौ मेदि० ।

वञ्जिन् पु० वञ्जमस्त्यस्य इनि । १इन्द्रे अमरः २वेधके च ।

वञ्चक पुंस्त्री० वन्च-णिच्-ण्वुल् । १शृगाले अमरः स्त्रियां ङीष् २गृहबभ्रौ च । ३खले ४प्रतारके च त्रि० मेदि० ।

वञ्चन न० वन्च-ल्युट् । प्रतारणे अन्यथास्थितस्य वस्तुनोऽन्यथाकृत्वेन कथनादिनाऽन्यमोहोत्पादने । युच् । वञ्चनाप्यत्र स्त्री ।

वञ्चुक त्रि० वन्च-उकञ् । वञ्चनाशीले शब्दर० ।

वञ्जुल पु० वन्च-उलच् पृषो० चस्य जः । १तिनिशवृक्षे २अशोकवृक्षे अमरः । ३वेतसवृक्षे मेदि० ४स्थलपद्मवृक्षे शब्दच० । ५पक्षिभेदे च जटा० । ६बहुदुग्धायां गवि स्त्री हेमच० । ७वञ्जे त्रि० वञ्जुलप्रियः ।

वञ्जुलद्रुम पु० वञ्जुलाख्यः द्रुमः । अशोकवृक्षे राजनि० ।

वञ्जुलप्रिय पु०वञ्जुलं प्रीणाति प्री-क । वेतसे रत्नमा०

वट वेष्टने भागे च अद०चुरा०उभ०सक०सेट् । वटयति ते । अववटत् त । [ववटतुः ।

वट वेष्टने भ्वा० पर० सक०सेट् । वटति । अवटीत् अवाटीत्

वट विभाजने वा चुरा०उभ०पक्षे भ्वा०पर०सक०सेट् इदित् । वण्टयति ते वण्टति । अववण्टत् त अवण्टीत् ।

वट कथने भ्वा० पर० द्विक० सेट् घटा० । वटयति अवाटीत् अवटीत् । ववटतुः ।

वट स्तेये सौ०पर०सक०सेट् इदित् । वण्टति अवण्टीत् ।

वट पु० वट-अच् । १स्वनामख्याते वृक्षे अमरः २वटनिर्मिततन्तौ च त्रि० । (वँटे) मेदि० ।

वटवृक्षस्य वटवृक्षसम्भवशब्दे ५१७ पृ० उक्तम् ।

"वटः शीतो गुरुर्ग्राही कफपित्तव्रणापहः । वर्ण्यो विसर्पदाहघ्नः कषायो योनिदोषहृत्" भावप्र० । ३साम्ये हेमच० । ४वराटे ५गोले ६भक्ष्यभेदे (वड़ा) मेदि० ।

वटक पु० वट-कुन् । पिष्टकभेदे (वड़ा) भावप्र० कृतान्नशब्दे २१८२पृ० दृश्यम् ।

वटपत्र पु० वटस्येव पत्रमस्य । १सिताजकवृक्षे राजनि० । २पाषाणभेदीलतायां स्त्री ङीप् भावप्र० । "वटपत्री कषायोष्णा योनिमूत्रगदापहा" ३त्रिपुरमालीवृक्षे रत्नमा० टाप् । [त्रि० शब्दर० ।

वटर पुंस्त्री० १कुक्कुटे स्त्रियां ङीप् । २शठे ३चञ्चले ४चौरे

वटी स्त्री वट-अच् गौरा०ङीष् । १रज्जौ अमरः गोलाकारे (वड़ी) पदार्थे भावप्र० स्वार्थे क कुत्सः । वटिकाप्यत्र "वटिका अथ कथ्यन्ते तन्नाम गुटिका वटी । मोदको वटिका पिण्डी गुडो वर्त्तिस्तथोच्यते । लेहवत् साध्यते वह्नौ गुडो वा शर्करापि वा । गुग्गुलुर्वा क्षिपेत्तत्र चूर्णं तन्निर्मिता वटी ।" तत्र वह्निसिद्धे गुडादौ । "कुर्यादवह्निसिद्धेन क्वचिद्गुग्गुलुना वटी"। द्रवेण मधुना वापि गुटिकां कारयेद्बुधः । सिता चतुर्गुणा देया वटीषु द्विगुणो गुडः । चूर्णे चूर्णसमः कार्यो गुग्गुलुर्मधु तत्समम् ।" तत्समम् चूर्णसमम् "द्रवं तु द्विगुणं देयं मोदकेषु भिषग्वरैः"। द्रवं द्रवरूपद्रव्यम् । "कर्षप्रमाणं तन्मात्रा बलं दृष्ट्वा प्रयुज्यते" । बलमिति बालादेरनुपकल्प्यम्" । नदीवटाख्ये २वृक्षभेदे राजनि० ।

वटु पु० वट-उ । १बालके २ब्रह्मचारिणि च हेमच० ।

वटुक पु० वट-उक । १बालके शब्दर० २भैरवभेदे च तन्त्रम्

वठ असहायकरणे भ्वा० आत्म० अक० सेट् इदित् । वण्ठते अवण्ठिष्ट । [ववण्ठे ।

वठ सामर्थ्ये भ्वा०पर०अक०सेट् । वठति । अवाठीत् अवठीत्

वठर पु० वठ-अरन् । १मूर्खे उणादि० २अम्बष्ठे हेमच० ३शठे ४मन्दे च त्रिका० ।

वड विभजने चुरा० उभ० सक० सेट् इदित् । वण्डयति ते अववण्डत् त । [अवण्डिष्ट ।

वड वेष्टने विभागे च भ्वा० आ० सक० सेट् इदित् । वण्डते

वड आरोहणे सौ० पर० सक० सेट् । वडति अवाडीत् अवडीत् । ववडतुः ।

वडभि(भी) स्त्री वध्यते आवध्यतेऽत्र वड-अभि वा ङीप् । १गृहचूडायाम् (छाउनि) अमरः २प्रासादाग्रस्थगृहे च (चिलेघर) रत्नमा० ।

वडा स्त्री वड-अच् । स्वनामख्याते पिष्टकभेदे शब्दच० ।

वडिश न० वड-इन् वडिं श्यति शो-क । मत्स्यधारणार्थे वक्रलौहकण्टकयुक्ते पदार्थे अमरः । "वडिशेन मत्स्योरिवाशान्" वृन्दावनचम्पूः ।

वड्र त्रि० वल-रक् लस्य डः । वड्रति (वड़) अमरः ।

वण शब्दे भ्वा० पर० सक० सेट् । वणति अवाणीत् अवणीत् । ऋदित् चङि वा ह्रस्वः ।

वण्ट विभाजने अद० चुरा० उभ० सक० सेट् । वण्टयति

ते अवनटर् न । [१अकृतोद्वाहे च । (डेङ्गो) शब्दमा०

**वण्ट** पु० वण्ट–अच् । १भागे २दात्रादेः धारकस्थाने(वांठ)

**वण्टक** पु० वण्ट–घञ् स्वार्थे क । १भागे अमरः
ण्वुल् । २विभाजके त्रि० [१अकृतोद्वाहे च मेदि०।

**वण्ठ** त्रि० वण–ठ तस्य नेत्त्वम् । १खर्वे (बेंटे) ।२कुन्तायुधे

**वण्ठर** पु० वठि–अरन् । १खनित्रकारज्जौ २कुकुरलाङ्गूले
३करीरकोषे ४तालस्य पल्लवे ५पयोधरे च मेदि०। अत्र
औणादिरपि तत्रार्थे ।

**वण्ड** त्रि०वडि–अच् ।१अकृतोद्वाहे २हस्तपादादिविकले (बेंडे)
३अनावृतमेढ्रे हेमच० ४पांशुलायां स्त्रियां स्त्री मेदि० ।

**वण्डाल** पु० वडि–आलच् । १शूरयुद्धे २नौकायां खनित्रे
च मेदि० । [आर्थे अव्य०राजवत् शूद्रवत् इत्यादि ।

**वत्** अव्य० वा–डति । सादृश्ये अमरः वतिप्रत्ययान्तोऽप्य-

**वत** अव्य० वन–क्त । १खेदे २अनुकम्पायाम् ३हर्षे ४वि-
स्मये ५आमन्त्रणे च अमरः ।

**वतंस** पु० अव+तन्स–घञ् अवाल्लोपः । १कर्णभूषणभेदे
२शेखरे ३शिरोभूषणे मेदि० ४भूषणमात्रे च ।

**वतण्ड** पु० अव+तडि–अच् अवाल्लोपः । मुनिभेदे उणादि० ।

**वतोका** स्त्री अवगतं तोकं यस्याः प्रा०ब०अवाल्लोपः । अपत्य-
हीनायां स्त्रियाम् अमरः ।

**वत्स** न० वद–स । १वक्षःस्थले अमरः । २गवादिशिशौ त्रि-
व० । ३वत्सरे पु० अमरः । ४चन्द्रवंश्ये राजभेदे च पु० ।

**वत्सक** न० वत्स इव इवार्थे कन् । १पुष्पकासीसे राजनि०
२कुटजे अमरः । ३इन्द्रयवे च राजनि० ।

**वत्सकबीज** न०वत्सकस्य कुटजस्य बीजम्। इन्द्रयवे राजनि०

**वत्सतर** पुंस्त्री० क्षुद्रः वत्सः अल्पत्वे तरप् । १क्षुद्रवत्से
अप्राप्तदमनकाले गवादौ अमरः स्त्रियां ङीप् । वत्सतरी

**वत्सनाभ** पु० वत्सान् पशुशिशून् नभ्यति हिनस्ति नभ-
अण् वत्सस्य नाभिराकारोऽस्त्यस्य अच् वा । स्थावरे
विषभेदे अमरः । तल्लक्षणादि भावप्र० उक्तं यथा
"सिन्धुवारसदृकपत्रोवत्सनाभ्याकृतिस्तथा । यत्
पार्श्वे न तरोर्वृद्धिर्वत्सनाभः स भाषितः । तस्य सामान्य
गुणा यथा । "विषं प्राणहरं प्रोक्तं व्यवायि च विकाशि
च । आग्नेयं वातकफहृद्योगवाहि मदावहम्" ।
व्यवायि सकलकायव्यापनपूर्वकपाकगमनशीलम् । वि-
काशि ओजसःशोषणपूर्वकं सन्धिबन्धशिथिलीकरणशी-
लम् । आग्नेयम् अधिकाग्निगुणं योगवाहि संसर्ग-
गुणग्राहकम् मदावहं तमोगुणाधिक्येन बुद्धिविध्वंस-
कम् । "तदेव युक्तियुक्तं तु प्राणदायि रसायनम् ।
योगवाहि त्रिदोषघ्नं बृंहणं वीर्य्यवर्द्धनम् । ये दुर्गुणा
विषेऽशुद्धे ते स्युर्हीना विशोधनात् । तस्माद्विषं प्रयो-
गेषु शोधयित्वा प्रयोजयेत्" भावप्र० ।

**वत्सपत्तन** न० वत्सस्य वत्सराजस्य पत्तनम् । उत्तरदेश-
स्थायां कौशाम्ब्यां नगर्य्याम् हेमच० ।

**वत्सपाल** पु० वत्सान् पालयति पाल–अण् । १श्रीकृष्णे
२बलदेवे च । [दशत्रम् ।

**वत्सर** पु० वस–सरन् । द्वादशमासात्मके काले अब्दशब्दे

**वत्सराज** पु०चन्द्रवंश्ये नृपभेदे । "वत्सराजचरितम्" रत्ना०

**वत्सरान्तक** पु०वत्सरस्यान्तं करोति अन्त+णिच्–ण्वुल् ।
फाल्गुनमासे राजनि० वत्सरस्य चैत्रादिकत्वात् फाल्गु-
नस्य तदन्तकालत्वात्तथात्वम् ।

**वत्सल** त्रि० वत्सं लाति ला–क । १स्नेहयुक्ते २वात्सल्ये
रसे पु० ३तद्वति त्रि० ४विष्णौ पु० विष्णुस० ।

**वत्साक्षी** स्त्री वत्सस्याक्षीवाक्षि अस्य षच्समा० । गो-
डुम्बायाम् (गोमक) जटा० ।

**वत्सादनी** स्त्री वत्सैरद्यते प्रियत्वेन अद–ल्युट् ङीप् ।
१गुडूच्याम् अमरः । वत्सः अदनमस्य । २वृके पुंस्त्री०
राजनि० स्त्रियां ङीष् । [अवन्दिष्ट ।

**वद्** स्तुतौ अभिवादने सक० भ्वा० आ० सेट् इदित् । वन्दते

**वद्** वाक्ये सन्देशे च भ्वा० उभ० सक० सेट् । वदति ते
अवादीत् अवदिष्ट । ज्ञानयत्नादावात्मनेपदीत्यन्ये ।

**वद्** वाचि भ्वा० पर० सक० सेट् यजा० । वदति अवादीत्
उवाद ऊदतुः उदितः ।
भासने उपसान्त्वने आत्म० शास्त्रे वदते भासमानो
वदतीत्यर्थः भृत्यानुपवदते सान्त्वयतीत्यर्थः । ज्ञानादुपाधौ
च आत्म०। तत्र ज्ञाने शास्त्रे वदते । यत्ने क्षेत्रे वदते ।
विमतौ क्षेत्रे विवदन्ते । उपच्छन्दने उपवदते प्रार्थयते
इत्यर्थः सि०कौ० । व्यक्तवाचां समुच्चारणे आत्म०
प्रवदन्ते विप्राः । अति+मर्य्यादातिक्रमेणोक्तौ प०
अतिवदति । अनु+उक्तस्य पर्य्यायान्तरेण कथने अनुवादः
अकर्मकात् व्यक्तवाचामनुवादे तु आत्म० अनुवदते कठः
प्रलापस्य" सि०कौ० अव्यक्तवाचि तु प० अनुवदति वीणा
सकर्मकात्तु पर० उक्तमनुवदति । विरुद्धोक्तौ व्यक्तायां
वाचि वा आत्म० विप्रवदन्ते ऽन्ये वैद्याः । [विशेषविधिः
अप+निन्दायाम् । अपवादः । विशेषविधाने च अपवादः
परि+निन्दायां मिथ्यादूषणे च पर०। परिवदति परिवादः ।

प्रति+विवदृतयोक्तौ पर० प्रतिवदति प्रतिवादः प्रतिवादी प्रत्युत्तरोक्तौ च ।

वि+विवदोक्तौ पचप्रतिपचयदृचेनोक्तौ आत्म० विवदन्ते पण्डिताः वादिप्रतिवादिनश्च ।

**वद** वाचि सन्देशे च सक० चुरा० उभ० सेट् । वादयति ते अवीवदत् । अभि+प्रणामे ।

**वद** त्रि० वदति वद–अच् । वक्तरि अमरः ।

**वदन** न० उद्यतेऽनेन वद–करणे ल्युट् । १मुखे अमरः । २वचनेन्द्रिये भावे ल्युट् । ३वचने न०। [अमरः ।

**वदा(द)न्य** पु० वद–अन्य पृषो० वा दीर्घः । भूरिदानशीले

**वदाम** न० वद–आमन् । (वादाम) वातादे फलभेदे भावप्र०। "वातादो वातवैरी स्यात्नेत्रोपमफलस्तथा । वातादः उष्णः सुस्निग्धो वातघ्नः शुक्रकृद्गुरुः । वातादमज्जा मधुरो वृष्यः पित्तानिलापहः । स्निग्धोष्णः कफकृत् नेष्टो रक्तपित्तविकारिणाम्" भावप्र० ।

**वदाल** पुंस्त्री० वद–आल । पाठीनमत्स्ये (बोयाल) त्रिका० स्त्रियां ङीष् । स्वार्थे क तत्रार्थे । [अमरः ।

**वदावद** पु० अत्यन्तं वदति वद–अच् नि० । बहुवक्तरि

**वधू** स्त्री उह्यते पितृगेहात् पतिगृहं वह–ऊ धुकच् । १भार्यायाम् २नवोढ़ायां ३पुत्रजायायाम् अमरः । ४शठ्याञ्च मेदि० । अस्य ओष्ठ्यादित्वमित्यन्ये

**वधूजन** पु० कर्म०। नारीजने त्रिका० ।

**वधूटी** स्त्री अल्पा वधूः टी। अल्पवयस्कायाम् नार्यां "गोपवधूटी दुकूलेति" भाषापरि०। [नीत् अववनीत् ववनतुः ।

**वन** सेवने सक० शब्दे अक० भ्वा० पर०सेट् । वनति अवा-

**वन** व्यापारे भ्वा० पर० सक० सेट् । वनति अवानीत् अवनीत् । ज्वला०वनः वानः । घटा०वनयति । [निरु० ।

**वन** याचने दिक० तना० आ० सेट् क्त्वा वेट् । वनुते अव-

**वन** उपकारे उपतापे च सक० शब्दे अक० वा चु० उभ० पक्षे भ्वा० पर० सेट् । वानयति ते वनति । अवीवनत् त । अवनीत् अवानीत् ।

**वन** न० स्त्री वन–अच् । १प्रवसदावालके अरण्ये अमरः स्त्रीत्वे ङीष् । "सुवनी समवत्तृषिकाणि का" नैष०। २जले ३निवासे ४आलये च मेदि० । ५प्रस्तरणे हेमच०।

**वनकदली** स्त्री ७त० । काष्ठकदल्याम् राजनि० ।

**वनकन्द** पु० वनजातः कन्दः । अरण्यजाते सूरणे राजनि०

**वनकार्पासी** स्त्री वनोद्भवा कार्पासी । (वनकापास) क्षुपभेदे रत्नमा० ।

**वनकोलि** पु० वनोद्भवः कोलिः । (वनकुल) वृक्षे ।

**वनचन्दन** न० वनजातं चन्दनम् शा०त० । १अगुरुचन्दने २देवदारुणि च विश्वः ।

**वनचन्द्रिका** स्त्री वने चन्द्रिकेव । मल्लिकायाम् राजनि० ।

**वनचम्पक** पु० ७त० । (वनचाँपा) चम्पकभेदे राजनि० ।

**वनच्छाग** पु० वने जातश्छागः । (वनछागल) १छागभेदे राजनि० । वने छाग इव । २शूकरे पुंस्त्री० शब्दमा० स्त्रियां ङीष् ।

**वनज** न० वने जलेऽरण्ये वा जायते जन–ड । १पद्मे २मुस्तकभेदे ३वनसूरणे पु० राजनि० ४गजे विश्वः । ५अश्वगन्धायां ६गन्धपत्रायां ७वनकार्पास्यां ८वनोपोदक्याम् ९मिश्रेयायां १०ऐन्द्रे स्त्री राजनि०। ११मुद्गपर्ण्यां च स्त्री मेदि० । १२वनजातमात्रे त्रि० ।

**वनतिक्त** पु० वनेषु वनजातेषु मध्ये तिक्तः । १हरीतक्याम् शब्दमा० । २पाठायां (आकनादि) च स्त्री रत्नमा०। स्वार्थे क तत्रैव अमरः ।

**वनदीप** पु० वनस्य दीप इव । वनचम्पके राजनि० ।

**वनपल्लव** पु०वनमिव निविड़ः पल्लवोऽस्य । शोभाञ्जने जटा०।

**वनपुष्पा** स्त्री वनमिव बहुलं पुष्पं यस्याः । शतपुष्पायाम् राजनि० । [पूरकः । वनबीजपूरके राजनि० ।

**वनपूरक** पु० पूरकः बीजपूरकः पूर्वपदलोपः वनोद्भवः

**वनप्रिय** पुंस्त्री० वनं वनस्थं प्रीणाति प्री–क । १कोकिले स्त्री मेदि० स्त्रियां योपधत्वात् टाप् २अरण्यप्रियमात्रे त्रि० । ३त्वचे न० राजनि० ।

**वनभुज** पु० वनं भुङ्क्ते भुज–क्विप् । १वृषभे २तन्नामौषधे शब्दच० । [अमरः ।

**वनमक्षिका** स्त्री वनोद्भवा मक्षिका । दंशे कीटभेदे (डाँश)

**वनमल्ली** स्त्री वनोद्भवा मल्ली । अरण्यमल्लिकायाम् शब्दर०।

**वनमाला** स्त्री "आजानुलम्बिनी माला सर्वर्त्तुकुसुमोज्ज्वला । मध्ये स्थूलकदम्बाढ्या वनमालेति कीर्त्तिता" इत्युक्तायां मालायाम् ।

**वनमालिन्** पु० वनमालाऽस्त्यस्य इनि । १श्रीकृष्णे अमरः २वाराहीवृत्तायाम् स्त्री मेदि० ङीष् ३द्वारकापुर्यां स्त्री त्रिका० । [२मुद्गपर्ण्यां स्त्री राजनि०गौरा० ङीष् ।

**वनमुद्ग** पु० वनोद्भवः मुद्गः । १मुद्गभेदे (मुगानि) अमरः ।

**वनमूर्द्धजा** स्त्री वनस्य मूर्द्धजं श्मश्रुमिवास्त्यस्याः अच् । (काकड़ाशिङ्गी) कर्कटशृङ्ग्याम् राजनि० ।

**वनमोचा** स्त्री वनोद्भवा मोचा । काष्ठकदल्याम् राजनि०।

**वनलक्ष्मी** स्त्री वनस्य लक्ष्मीरिव तदधिष्ठानत्वात्। कद-
लीवृक्षे राजनि०। [राजनि०।

**वनवर्वर** पु० वनोद्भवः वर्वरः। कृष्णार्जके। (वनवावुइ) ख्याते

**वनवासिन्** पु० वनं वासयति सुरभीकरोति वासि-णिनि।
१मुष्ककवृक्षे २वाराहीकन्दे ३शाल्मलीकन्दे ४नील-
महिषकन्दे ५ऋषभनामौषधे च राजनि०। वने वसति
वस-णिनि। ६वनवासकर्त्तरि त्रि० स्त्रियां ङीप्।

**वनवीज** पु० वीजो वीजपूरकः उत्तरपदलोपः ७त०। वन-
वीजपूरे राजनि०। [राजनि०।

**वनवृन्ताकी** स्त्री वनस्य वृन्ताकी वार्त्ताकी। वृहत्याम्

**वनव्रीहि** पु० वनस्य व्रीहिः। नीवारे (उड़िधान) हेमच०।

**वनशूकरी** स्त्री वनस्य शूकरीव रोमयुक्तत्वात्। १कपिकच्छ्वाम्
राजनि०।७त०। २वनवराहे पु०३वनशूकरयोषिति स्त्री।

**वनशृङ्गाट** पु० वनस्य शृङ्गाट इव कण्टकावृतत्वात्। गोक्षुरे
अमरः। स्वार्थे क। तत्रैवार्थे। [शब्दच०।

**वनशोभन** न० वनं जलं शोभयति शुभ-णिच् ल्यु। पद्मे

**वनसङ्कट** पु० सम्+कट-अच् ६त०। मसूरे शब्दच०।

**वनसरोजिनी** स्त्री वनस्य सरोजिनी पद्मिनीव शोभाकर-
त्वात्। वनकार्पास्याम् शब्दर०।

**वनस्पति** पु० वनस्य पतिः नि० सुट्। पुष्पं विना जाय-
मानफले १अश्वत्थादौ वृक्षे अमरः। २वृक्षमात्रे मेदि०।

**वनहास** पु० वनस्य हास इव प्रकाशकत्वात्। काशवृक्षे
राजनि०।

**वनाखु** पु० वने आखुरिव। शशके त्रिका०।

**वनाखुक** पु० वन+खन-उकञ् पृषो० नलोपः। मुद्गे त्रिका०।

**वनाटु** पु० वनमटति अट-उन्। १वर्वणायां नीलमक्षिका-
याम् शब्दच०। २अपानदेशे उज्ज्व०।

**वनामल** पु० वनस्यामल आमलक इव। करमर्द्दे शब्दमा०।

**वनाम्र** पु० वनस्य आम्र इव। कोषाम्रे राजनि०।

**वनायु** पु० वन-आयुच्। प्रशस्तघोटकोद्भवदेशभेदे (आरव)
राजनि०। [(आरवि) शब्दर०।

**वनायुज** पु० वनायुदेशे जायते जन-ड। प्रशस्तघोटके

**वनारिष्टा** स्त्री वनस्य न रिष्टं यस्याः। वनहरिद्रायाम्
राजनि०। [पुत्रजीवतायाम् हारा०।

**वनालिका** स्त्री वनमलति भूषयति अल-ण्वुल्। हस्ति-

**वनि** पु० वन-इन्। १अग्नौ सि०कौ० २राशौ उज्ज्वल०।
३याचने पु० ४याचके त्रि०। [रक्षायां स्त्रियाम् मेदि०।

**वनिता** स्त्री वन-याचने कर्मणि वा०क्त। १योषिति २अनु-

**वनिन्** पु०वनम् आश्रयत्वाऽस्त्यस्य इनि। वानप्रस्थाश्रमयुक्ते

**वनिष्णु** त्रि० वन-इष्णुच्। याचके।

**वनीपक** वनीयक+पृषो० यस्य पः। याचके उज्ज्वल०।
"कृपण इव वनीपकोपसेवितपर्वतः श्रेयात्" पतञ्जलि च

**वनीयक** स्त्री वन-इन् आत्मनो वनिं याचनमिच्छति क्यच्
ण्वुल्। याचके अमरः पृषो० यलोपः। वनीकोऽप्यत्र
सारसुन्दरी।

**वनेक्षुद्रा** स्त्री ७त० अलुक्स०। करञ्जे रत्नमा०।

**वनेचर** त्रि० वने चरति चर-ट अलुक्स०। चरगट०
चारिणि व्याधादौ स्त्रियां ङीप्।

**वनेसर्ज** पु० सृजति-सृज-अच् ७त० अलुक्स०। असनवृक्षे
रत्नमा०। [कार्पास्याम् रत्नमा० २वनजाते त्रि०।

**वनोद्भवा** स्त्री वन एव उद्भवति उद्+भू-अच् ७त०। १वन-

**वनौकस्** पु० वनमेव ओकः स्थानं यस्य। १वानरे अमरः।
२वनवासिनि त्रि०।

**वन्च** प्रतारणे भ्वा०पर०सक०सेट् क्त्वा वेट्। वञ्चति अवञ्चीत्

**वन्दन** न० वदि-ल्युट्। १स्तवने २प्रणामे च। युच्।
वन्दनाप्यत्र स्त्री। ३वदने न० शब्दच०।

**वन्दनीय** त्रि० वदि-अनीयर्। १नमनीये २स्तवनीये च
३पीतभृङ्गराजे पु०राजनि०।४गोरोचनायां स्त्री त्रिका०।

**वन्दा** स्त्री वदि-कर्मणि घञ्। (परगाछा) लताभेदे अमरः
२भिक्षुक्यां ३लताभेदे च मेदि०।

**वन्दाका** स्त्री वदि-आकन्। वन्दायाम् शब्दच०। गौरा०
ङीष् तत्रार्थे स्त्री शब्दर०। तत्रार्थे पु० भावप्र०
"वन्दाकः शीतलस्तिक्तः कषायो मधुरे रसे। मङ्गल्यः
कफवातास्ररक्षोव्रणविषापहः"।

**वन्दारु** त्रि० वदि-आरु। वन्दनशीले शब्दर०।

**वन्दि(न्दी)** स्त्री वदि-इन् वा ङीप्। १कारावद्धमनुष्यादौ
(कएदी) शब्दर०२वन्दने ३स्तुतौ च।४सोपानके उणा०।

**वन्दिग्राह** पु० वन्दिमिव-गृह्णाति ग्रह-अच्। बलावष्टम्भेन
घातके (डाकाइत) मिता०। "वन्दिग्राहांस्तथा वाजि-
कुञ्जराणां च हारिणः" मनुः।

**वन्दिपाठ** पु० ६त०। स्तुतिपाठे त्रिका०।

**वन्दिन्** पु० वन्दते स्तौति वदि-णिनि। राजादेः १स्तुति-
पाठके अमरः। [भावप्र० २वन्दायां शब्दच०।

**वन्द्य** त्रि० वदि यत्। १वन्दनीये। २गोरोचनायाम् स्त्री

**वन्द्र** न० वन्द-रन्। कल्याणे सि०कौ०।२पूजके त्रि०उणादि०

**वन्य** न० वने भवः यत्। १त्वचे (दारचिनि) राजनि०।

२वनम्सूरणे ३वाराहीकन्दे ४दैवनले पु॰राजनि॰। ५वन-जातमात्रे त्रि॰। ६मुद्गपर्ण्यां ७गोपालकर्कट्यां ८मु-ञ्जायां ९मिश्रेयायां १०भद्रमुस्तायां ११मन्थपत्रायां स्त्री राजनि॰। वनानामरण्यानां जलानां वा समूहः वत्। १३जलसमूहे १४वनसमूहे च स्त्री मेदि॰।

**वप** बीजवपने तन्तुवयने मुण्डने च सक॰ भ्वा॰ उभ॰ अनिट् यजा॰। वपति ते अवाप्सीत् अवप्त उवाप ऊपतुः। ङित् उप्तिमः। पित्रादिपिण्डदाने "पिण्डनिर्वपनं चरेत्" स्मृतिः।

**वपन** न॰ वप-ल्युट्। १केशमुण्डने २बीजाधाने ३तन्त्वा-धाने च मेदि॰। "प्रयागे भास्करक्षेत्रे पितृमातृ-वियोगतः। आधाने सोमपाने च वपनं पञ्चसु स्मृतम्" प्रा॰ त॰।

**वपनी** स्त्री उप्यतेऽनया अत्र वा वप-ल्युट् ङीप्। १नापि-तालये २तन्तुशालायां (तान्तघर) हेमच॰ ३तन्तुवयन-यन्त्रभेदे (माकु) च।

**वपा** स्त्री वप-अच्। १मेदसि (चर्वि) "वपाया हविषः" इति श्रुतिः। ३छिद्रे च अमरः।

**वपुन** पु॰ वप-उनन्। देवतायां शब्दर॰।

**वपुषा** स्त्री वप-वा उषन्। छवुषायाम् भावप्र॰।

**वपुष्मा** स्त्री अतिशयेन वपुः प्रशस्ताकृतिः तमप् मत्वम्। १पद्मचारिण्याम् लतायाम् जटा॰। २काशीपतिकन्यायां ३जनमेजयपत्न्यां च।

**वपुस्** न॰ उप्यन्ते देहान्तरभोगसाधनबीजीभूतानि कर्माण्यत्र वप-उसि। १शरीरे अमरः। २प्रशस्ताकारे च मेदि॰।

**वप्तृ** पु॰ वप-तृच्। १जनके २कवीवले च मेदि॰ ३बीजादि-वापके त्रि॰।

**वप्र** पुं न॰ उप्यतेऽत्र रन्। १दुर्गनगरादौ परिखाया उद्धृत-मृत्तिकास्तूपे अमरः। २क्षेत्रे ३रेणौ ४तटे मेदि॰। ५सीसके न॰ हेमच॰। ६जनके ७प्राचीरे पु॰ विश्वः। ८प्रजापतौ च पु॰ संक्षिप्तसा॰। ९मञ्जिष्ठायां स्त्री राजनि॰। [१०समुद्रे च संक्षिप्तसा॰।

**वप्रि** पु॰ वप-रि १क्षेत्रे केदारे सि॰ कौ॰। २दुर्गतौ

**वभ्र** गतौ भ्वा॰ पर॰ सक॰ सेट्। वभ्रति अवभ्रीत्।

**वम** उद्गारे भ्वा॰पर॰ सक॰ सेट्। वमति अवमीत्। ट्वित् वमथुः। ज्वला॰ वमः वामः। वमयति वामयति उप-सृष्टस्य नित्यं ह्रस्वः। फणा॰ वेमतुः ववमतुः। उदित् क्त्वित्वा वान्त्वा वान्तः।

**वमथु** पु॰ वम-अथुच्। वमने उद्गिरणे अमरकोषः।

**वमन** न॰ वम ल्युट्। १मर्दने २छर्दने मेदि॰ ३आहुतौ विश्वः ४निःसारणे च "खमौभिष्यन्दवमनम्" कुमारः। ५शणे पु॰। ६जलौकायां स्त्री राजनि॰ गौरा॰ ङीष्।

**वमि** स्त्री वम-इन्। १छर्दौ छर्दिशब्दे २९८८ पृ॰ दृश्यम्। २अग्नौ पु॰ मेदि॰ ३धूर्त्ते त्रि॰ शब्दर॰।

**वमित** पु॰ वम-णिच् क्त। छर्दितोद्गारे। [यि(ढ्)ध्वम्।

**वय** गतौ भ्वा॰ आ॰ सक॰ सेट्। वयते अवयिष्ट। अव॰

**वयस्** न॰ अज-असुन् वीभावः। १विहगे २बाल्याद्यवस्था-याम् अमरः "वयोऽतिपातोद्गतवातेति" नैष॰। ३यौवने च विश्वः।

**वय(यः)स्थ** पुंस्त्री॰ वयसि यौवने तिष्ठति स्था—क खर्परे शरि वा विसर्गलोपः। १तरुणे २विभीतक्यां स्त्री अमरः। "वयस्था नागराच्छ्रात्" वैद्यकम्। ३आमलक्यां ४हरी-तक्यां ५सोमवल्ल्यां स्त्री अमरः। ६गुडूच्यां ७सूक्ष्मैलायां ८काकोल्याम् ९आलौ स्त्री मेदि॰। १०शाल्मलौ स्त्री हेमच॰। ११चीरकाकोल्याम् भावप्र॰ १२अत्यम्लपर्ण्यां १३मत्स्याक्ष्यां १४युवतौ च स्त्री राजनि॰।

**वयस्य** पु॰ वयसा तुल्यः यत्। १समानवयस्के अमरः। २सख्यां स्त्री अमरः।

**वयुन** न॰ वय-उनन्। १ज्ञाने भाग॰ १०।८॰ श्रीधरः। २देवागारे त्रिका॰। देवागारे पु॰ उणादि॰।

**वयोधस्** पु॰ वयो यौवनं धत्ते धा—असुन्। तरुणे उणा॰।

**वयोरङ्ग** न॰ वयसा रङ्गमिव। सीसके राजनि॰।

**वर** ईप्से अद॰ चु॰उभ॰सक॰सेट्। वरयति ते अववरत् त।

**वर** न॰व्रियते वृ—कर्मणि अप्, वरि-अच् वा। १कुङ्कुमे २मना-गभीष्टे अमरः "वरं प्राणान् परित्यज्ये" इति तन्त्रम्। भावे अप् अच् वा। ३इच्छायाम् ४याचने ५आवरणे ६वेष्टने च। वृ-कर्मणि अप्। ७अभीष्टे ८श्रेष्ठे च त्रि॰ अमरः। ९जारे १०जामातरि शब्दर॰ ११गुग्गुलौ शब्दच॰ १२पत्यौ च पु॰ हेमच॰। "तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः" इत्युक्ते १३पदार्थे।

**वरक** पु॰ वृ—वुन्। १वनमुद्गे हेमच॰ २पर्पटे ३तृण-धान्यभेदे (चीना) च राजनि॰। ४पोताच्छादनवस्त्रे न॰ हारा॰।

**वरचन्दन** न॰ कर्म॰। १कालीये २देवदारुणि च मेदि॰।

**वरट** न॰ वृ-अटन्। १कुन्दपुष्पे शब्दर॰। २कीटभेदे (बोलता) ३हंसे पुंस्त्री॰मेदि॰। स्त्रियाम् अजादि॰ टाप् अमरः।

ङीप् मेदि०। ४कुङ्कुमबीजे भावप्र०। सा च ५गन्धोल्यां मेदि०।

**वरण** न० वृ—ल्युट्। कन्यादिदानाय जामात्रादेरभ्यर्थनानुकूले १व्यापारभेदे २वेष्टने मेदि०। ऋत्विगादेः क्रियासु नियोगाय ३पूजनादौ ५वरुणे पुंस्त्री० हारा०। ६प्राकारे ७वरुणवृक्षे च। (साँको) ख्याते ८पदार्थे च ९काशीस्थे नदीभेदे स्त्री शब्दर०। वरुणशब्दे दृश्यम्।

**वरण्ड** पु० वृ—अण्डच् (वयसफोड़ा) १मुखरोगभेदे मातङ्गयुद्धार्थे २मध्यवेदौ च मेदि०।

**वरण्डक** पुंन० वृ—अण्डच् संज्ञायां क। १वरण्डशब्दार्थे २वर्तुले मेदि०। ३भित्तौ हेमच०। ४विशाले ५भयार्ते ६भीते च त्रि० शब्दर०।

**वरण्डालु** पु० वरण्ड इवालुः। एरण्डवृक्षे त्रिका०।

**वरतिक्त** पु० वरः श्रेष्ठस्तिक्तो रसो यस्य। कुटजवृक्षे राजनि०। २पाठायाम् (आकनादि) स्त्री राजनि० स्वार्थे क तत्रैव।

**वरत्रा** स्त्री वृ—अत्रच्। हस्तिकक्ष्यारज्जौ अमरः।

**वरत्वच** पु० वरा त्वचा यस्य। १निम्बवृक्षे रत्नमा०। २श्रेष्ठत्वग्युते त्रि०।

**वरद** त्रि० वरं ददाति दा—क। १अभीष्टदातरि अमरः। २प्रसन्ने च मेदि० ३तच्चिह्नसूचके हस्तादिविन्यासरूपे मुद्राभेदे न० "अभयं वरदञ्चैव" ध्यानमाध्यानम्। ४कन्यायाम् स्त्री मेदि०। ५अश्वगन्धायाम् स्त्री भावप्र० ६आदित्यभक्तायां स्त्री राजनि० ७दुर्गायाञ्च स्त्री।

**वरदाचतुर्थी** स्त्री माघशुक्लचतुर्थ्याम्। तामधिकृत्य "चतुर्थी वरदा नाम तस्यां गौरी सुपूजिता" ति०त० भविष्यपु०।

**वरदारु** पु० दा—उन् ६त०। भूमीवृक्षे वृक्षे राजनि०।

**वरपर्ण** पु० वराणि पर्णान्यस्य। चीरकसुकीवृक्षे रत्नमा०।

**वरप्रदा** स्त्री वरं प्रददाति दा—क। लोपामुद्रायां हेमच०। २वरप्रदातरि त्रि०।

**वरफल** पु० वरं फलमस्य। १नारिकेले वृक्षे शब्दच०। कर्म०। २श्रेष्ठे फले न०। [द्रव्ये शब्दच०।

**वरमुखी** स्त्री वरं मुखं यस्याः ङीप्। रेणुकानामगन्ध-

**वरम्** अव्य० वृ—अमु। ईषदभीष्टे मेदि०।

**वरम्बरा** स्त्री वरं वृणोति वृ—खच् मुम्। (चाकुलिया) १चक्रपर्ण्याम् शब्दच०। २पतिम्वरायां कन्यायाञ्च।

**वररुचि** त्रि० वरा रुचिर्यस्य। १श्रेष्ठप्रीतियुते। २पाणिनिसूत्रवार्त्तिककारे कात्यायनमुनौ त्रिका०। ३विक्रमादित्यसभास्थे पण्डितभेदे च। नवरत्नशब्दे ३९८९पृ० दृश्यम्।

**वरल** पु० वृ—कलच्। १वरटे त्रिका०। २कीटभेदे शब्दमा० स्त्रियां गौरा० ङीष् वरटायां स्त्री जटा० अजा० टाप्

**वरलब्ध** पु० वरः उत्कर्षः पुष्पेषु लब्धो येन परनि०। १चम्पके त्रिका० २प्राप्तवरे त्रि०।

**वरवर्णिनी** स्त्री वरः श्रेष्ठो वर्णः प्रशंसाऽस्त्यस्याः इनि। उत्तमस्त्रियाम् अमरः। २लाक्षायां ३हरिद्रायां ४रोचनायां ५फलिन्यां ६साध्व्यां स्त्रियां मेदि०। ७गौर्यां ८लक्ष्म्यां ९पार्वत्यां च शब्दर०।

**वरवाह्लीक** न० कर्म०। कुङ्कुमे अमरः।

**वरा** स्त्री वृ—अच्। हरितक्यामलकीवयस्थारूपे फलत्रिके मेदि०। २रेणुकानामगन्धद्रव्ये शब्दच०। ३गुडूच्याम् ४मेदायां ५ब्राह्म्याम् ६विडङ्गे ७पाठायाम् ८हरिद्रायाञ्च राजनि०।

**वराक** पु० वृ—आकन्। १शिवे मेदि०। २युद्धे न० हेमच०। ३अवरे त्रि०शब्दर०। ४शोचनीये च त्रि० मेदि० स्त्रियां ङीप्।

**वराङ्ग** न० कर्म०। १मस्तके। व्रियते आव्रियते गुप्यते वृ—अच्। २गुह्ये अमरः। ३योनौ ४गुडत्वचि च त्रिका०। ६ब०। ५गजे पुंस्त्री० त्रिका० स्त्रियां ङीष् ६विष्णौ विष्णुस०। ७कामदेवे च पु०। ८श्रेष्ठावयवयुक्ते त्रि०। ९हरिद्रायाम् स्त्री राजनि०। गौरा० ङीप्। संज्ञायां कन्। गुडत्वचि (दारचिनि) न० अमरः।

**वराङ्गिन्** पु० वराङ्गमस्त्यस्य इनि। १अम्लवेतसे रत्नमा०। २श्रेष्ठाङ्गयुते त्रि० स्त्रियां ङीप्।

**वराट** पु० वरमल्पमटति अट—अच्। १कपर्दे राजनि०। २रज्जौ च पु० रत्नको०। स्वार्थे क। तत्रार्थे "वराटकानां दशकद्वयं यत्" लीला० अट—ण्वुल्। वराटक पद्मबीजाधारे कोषे पु० अमरः। [शब्दमा०।

**वराटकरजस्** पु० वराटके इव रजोऽस्य। नागकेशरे वृक्षे

**वराण** पु० वृ—आनन्। १इन्द्रे त्रिका०। २वरुणवृक्षे शब्दर०।

**वरादन** न० वरैर्न्दैरद्यते अद—ल्युट्। राजादने (पियाशाल) शब्दच०।

**वराम्र** पु० वरः आम्र इव। करमर्दे रत्नमा०।

**वरारोह** पु० वर आरोहो मध्यं यस्य। १हस्तिनि ‘विश्वः २प्रशस्तनितम्बवत्यां स्त्रियां स्त्री अमरः।

**वरालिका** स्त्री वरानामाबिर्यस्याः कप्। दुर्गायां त्रिका०।

**वराशि** पु०वरमावरणमश्नुते अश—इन्। स्थूलवस्त्रे अमरः।

**वरासन** न० वराय वरणीयायास्यते क्षिप्यते अस–ल्युट् । १जवापुष्पे शब्दमा० । कर्म० । २उत्तमे आसने न० । वरं पतिमस्यति अस–ल्यु । ३षिड्गे जारे पु० । वरान् श्रेष्ठानपि अस्यति दूरीकरोति ल्यु । ४द्वारपाले च पु० विश्वः । [२खड्गधरे च धरणिः ।

**वरासि** पु० वरायावरणायास्यते अस–इन् । १स्थूलवस्त्रे

**वराह** पुंस्त्री० वराय अभीष्टाय मुस्तादिलाभाय आहन्ति खनति भूमिम् आ+हन–ड । १शूकरे अमरः स्त्रियां ङीष् । २यज्ञवराहाख्ये भगवतोऽवतारभेदे पु० ३पर्वतभेदे ४मुस्तके ५मानभेदे मेदि० ६शिशुमारे ७वाराहीकन्दे पु० राजनि० ८अष्टादशद्वीपमध्ये द्वीपभेदे च ।

"गन्धर्वो वरुणः सौम्यो वराहः कङ्कु एव च । कुमुदश्च कसेरुश्च नागो भट्टारकस्तथा । चन्द्रेन्द्र मलयाः शङ्ख यवाङ्कश्च गभस्तिमान् । ताम्राङ्कश्च कुमारी च तत्र द्वीपा दशाष्टभिः" शब्दमा० ।

**वराहकन्द** पु० वराहप्रियः कन्दः शा०त० । स्वनामख्याते कन्दभेदे राजनि० । [शब्दर० ।

**वराहकान्ता** स्त्री वराहाणां कान्ताऽभीष्टा । वराहकन्दे

**वराहक्रान्ता** स्त्री वराहेण क्रान्तेव । १लज्जालुलतायाम् शब्दच० २वाराह्यां (चामरालु) सुभूतिः ।

**वराहिका** स्त्री वराहो भक्षकत्वेनास्त्यस्याः ठन् । कपिकच्छ्वाम् राजनि० ।

**वराही** स्त्री वराहो भक्षकत्वेनास्त्यस्या अच् गौरा० ङीष् । १भद्रमुस्तायाम् २वराहकन्दे च राजनि० ।

**वरिवस्** न० वृ+असुन् दट् च ।१पूजने २धने च निघण्टुः ।

**वरिवसि(स्ति)त** त्रि० वरिवः पूजनं करोति क्यच्–क्त वा यलोपः । पूजिते अमरः । [२शुश्रूषायाम् अमरः ।

**वरिवस्या** स्त्री वरिवस्+क्यच् क्यच्–भावे अ । १पूजने

**वरिष्ठ** त्रि० अतिशयेन उरुः इष्ठन् वरादेशः । १उत्तमे २तित्तिरिविहगे पुंस्त्री० स्त्रियां ङीष् ३नागरङ्गवृक्षे पु०राजनि० । ४ताम्रे न० अमरः । ५मरिचे न० मेदि० ६ववृषे अजयः । ७आदित्यभक्तायां स्त्री राजनि० ।

**वरी** स्त्री वरी शतावरी पूर्वपदलोपः । १शतावर्य्याम् अमरः २सूर्यपत्न्याञ्च त्रिका० ।

**वरीयस्** त्रि० अतिशयेन उरुः श्रेष्ठः ईयसुन् वरादेशः । १उत्तमे विष्कम्भादिषु मध्ये २अष्टादशे योगभेदे पु० ज्यो०त० । [३श्रमे अमरः ।

**वरी(ली)वर्द्द** पु० वृध–यङ्–लुक् कच् पृषो० रस्य वा लः ।

**वरुट** पुंस्त्री० म्लेच्छजातिविशेषे स्त्रियां ङीष् । "पुलिन्दा नाहला निष्ट्याः शबरा वरुटा भटाः । माला: भिल्ला: किरातास्च सर्वेऽपि म्लेच्छजातयः" हेमच० ।

**वरुड** पु० वृ–उडन् । अन्त्यजजातिभेदे स्त्रियां ङीष् । "रजकश्चर्मकारश्च नटोवरुड एव च" मनुः ।

**वरुण** पु० वृ–उनन् । पश्चिमाशापतौ १जलेशे स्वनामख्याते देवभेदे अमरः । २जले मेदि०३सूर्ये च विश्वः । ४द्वीपभेदे वराहशब्दे दृश्यम् । ५काशीस्थे नदीभेदे स्त्री । काशीस्थनदीभेदस्योत्पत्त्यादिकं वामनपु० ३अ० उक्तं यथा "प्रयागे वसते नित्यं योगशायी तु विश्रुतः । चरणाद्दक्षिणात्तस्य विनिर्याता सरिद्वरा । विश्रुता व(र)रणेत्येवं सर्वपापहरा शुभा । सव्यात् पादात् द्वितीया च असिरित्येव विश्रुता । ते उभे च सरित्श्रेष्ठे लोकपूज्ये बभूवतुः । तयोर्मध्ये तु यो देशस्तत्क्षेत्रं योगशायिनः । त्रैलोक्यप्रवरं तीर्थं सर्वपापप्रमोचनम् । न तादृशोऽस्ति गगने न भूम्यां न रसातले । तत्रास्ति नगरी पुण्या ख्याता वाराणसी शुभा" ।

७स्वनामख्यातवृक्षभेदे पु०अमरः "वरुणः पित्तलो भेदी श्लेष्मकृच्छ्राश्ममारुतान् । निहन्ति गुल्मवाताम्रक्रिमींश्चोष्णोऽग्निदीपनः । कषायो मधुरस्तिक्तः कटुको रूक्षको लघुः" भावप्र० ।

**वरुणात्मजा** स्त्री वरुणस्य जलस्यात्मजेव जन्यत्वात् । जलभवे मद्ये अमरः । [पत्न्याम् जटा० ।

**वरुणानी** स्त्री वरुणस्य पत्नी ङीष् आनुक् च । वरुण-

**वरुत** न० वृ–उत । उत्तरीयवस्त्रे सि० कौ०

**वरूथ** न० वृ–ऊथन् । तनुत्राणे हेमच० २चर्मणि मेदि० । ३रथगुप्तिस्थाने परप्रहाररक्षार्थमाहते स्थाने पु०अमरः ।

**वरूथिनी** स्त्री वरूथोऽस्त्यस्याः इनि । सेनायाम् अमरः ।

**वरेण्य** न० वृ–एन्य । १कुङ्कुमे राजनि० २प्रधाने ३प्रार्थनीये च त्रि० अमरः । [वारेन्द्र विप्रभेदे ।

**वरेन्द्री** स्त्री गौड़देशे त्रिका० । साभिजनोऽस्य अण् ।

**वरोट** न० वराण्युटानि दलान्यस्य । मरुवकपुष्पे अमरः ।

**वरोल** पुंस्त्री०वृ–ओल । वरटे कीटभेदे त्रिका० । स्त्रियां ङीष्

**वर्क्कर** पु० वृक–अरन् । १तरुणपशौ अमरः २मेषशावके भरतः ।३छागमात्रे पुंस्त्री०स्त्रियां ङीष् ४परिहासे मेदि०

**वर्ग** पु० वृज–घञ् । १सजातीयसमूहे अमरः । यथा मनुष्यवर्गः पशुवर्गः । समानधर्मिभिः प्रागप्राप्तिभिः कृते २संघे च यथा कवर्गः चवर्गः । अत्र कतवर्गसत्वादिना

विजातीयत्वेऽपि स्थानसाम्यमस्ति । ३ग्रन्थपरिच्छेदे यथा स्वर्गवर्गः पातालवर्गः । ४अङ्कशास्त्रोक्ते समानाङ्कद्वयस्य परस्परगुणने यथा द्विकस्य चत्वारि, त्रिकस्य नव, चतुष्कस्य षोडश इत्यादि । "स्थाप्योऽन्त्यवर्गः" "वर्गं मूलं पदं कृतिम्" इति च लीला० । वृज–घञ् । ५त्यागे । ग्रन्थपरिच्छेदाश्च बहुविधाः यथा "सर्गो वर्गपरिच्छेदोद्घाताध्यायाङ्कसंग्रहाः । उच्छ्वासः परिवर्त्तश्च पटलः काण्डमस्त्रियाम् । स्थानं प्रकरणं पर्वाह्निकञ्च ग्रन्थसन्धयः" त्रिका० ।

**वर्गप्रकृति** बीजगणितोक्ते गणनाप्रकारभेदे तत्र दृश्यम् ।

**वर्गमूल** न० वर्गस्य समद्विघातात्मककृतेः मूलम् । अङ्कशास्त्रप्रसिद्धं समाङ्कद्वयेन हताङ्कसङ्ख्यायाः यन्मूलं घातसाधनं तत्र । यथा षोडशानां चत्वारि नवानां त्रयः चतुर्णां द्वौ इत्यादि ।

**वर्गोत्तम** पु० वर्गेषु षट्सु क्षेत्रादिषु उत्तमः नवांशः । "चराणां प्रथमे चांशे स्थिराणां पञ्चमे तथा । द्व्यात्मकानाञ्च नवमे वर्गोत्तम इति स्मृतः" इति ज्योतिषोक्ते त्रिंशांशकालकरांशेनवांशभेदे ।

**वर्च** दीप्तौ भ्वा० आत्म० अक० सेट् । वर्चते अवर्चिष्ट ।

**वर्चस्** न० वर्च–असुन् । १रूपे २शुक्रे ३तेजसि ४विष्ठायाञ्च मेदि० । ५चन्द्रपुत्रे पु० "रोहिण्यामभवद्यो वर्चस्वो येन चन्द्रमा" वह्निपु० । स्वार्थे क । विष्ठायाम् अमरः ।

**वर्चस्विन्** त्रि० वर्चस्+अस्त्यर्थे विनि । तेजस्विनि स्त्रियां ङीप् ।

**वर्जन** न० वृज-ल्युट् । १त्यागे २हिंसायां च ३मारणे मेदि०

**वर्ण** स्तुतौ विस्तारे शुक्लादिवर्णकरणे उद्योगे दीपने च चुरा० उभ० सक० सेट् । वर्णयति ते अववर्णत् त ।

**वर्ण** वर्णने चु० उभ० सक० सेट् । वर्णयति ते अववर्णत् त ।

**वर्ण** न० वर्ण–अच् । १कुङ्कुमे न० २स्वर्णे ३व्रते ४शुक्लादिरूपे ५अकाराद्यक्षरे ६भेदे ७गीतक्रमे ८चित्रे ९तालभेदे १०अङ्गरागे पु० हेमच० । ११गजचित्रकम्बले पु० अमरः १२यशसि १३गुणे १४स्तुतौ पु० मेदि० । भेदे रूपे अक्षरे पु० न० मेदि० । १५ब्राह्मणादिजातौ पु० अमरः । "चातुर्वर्ण्यं मया सृष्टम्" गीता ।

तत्र विप्रादिवर्णानां सृष्टिः तद्धर्मश्च मनुना उक्ता यथा "लोकानान्तु विवृद्ध्यर्थं मुखबाहूरुपादतः । ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयत्" । "मुखबाहूरुपज्जानां पृथक् कर्म्माण्यकल्पयत् । अध्यापनमध्ययनं यजनं याजनन्तथा" "ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत" यजु० ३१।११ तेषां ब्राह्मणस्य श्रैष्ठ्ये कारणं मनुनोक्तं यथा "ऊर्द्ध्वं नाभेर्मेध्यतरः पुरुषः परिकीर्त्तितः । तस्मान्मेध्यतमं त्वस्य मुखमुक्तं स्वयम्भुवा । उत्तमाङ्गोद्भवात् ज्यैष्ठ्यात् ब्रह्मणश्चैव धारणात् । सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः" वर्णधर्माश्च जातिधर्मशब्दे ३१०५ पृ० दृश्याः ।

तत्र अक्षररूपवर्णोत्पत्तिक्रमः तद्भेदाश्च शब्दार्थरत्नेऽभिहिता यथा

"अथ वर्णोत्पत्तिप्रकारस्तावदभिधीयते । चेतनेन ज्ञातार्थविवक्षया तद्बोधकशब्दनिष्पादनाय प्रेरितमन्तःकरणं मूलाधारस्थितमनलं चालयति तच्चालितश्चानलः तत्स्थलस्थानिलचालनाय प्रभवति तच्चालितेन चानिलेन तत्रैव सूक्ष्मरूपेणोत्पादितः शब्दः परा वागित्यभिधीयते । ततो नाभिदेशपर्य्यन्तं चलितेन तेन तद्देशसंयोगादुत्पादितः शब्दः पश्यन्तीति व्यवह्रियते एतद्द्वयस्य सूक्ष्मसूक्ष्मतरतया ईश्वरयोगिमात्रगम्यता नास्मदीयश्रुतिगोचरता । ततस्तेनैव हृदयदेशं परिसरता हृदयसंयोगेन निष्पादितः शब्दो मध्यमेत्युच्यते सा च स्वकर्णपिधानेन ध्वन्यात्मकतया सूक्ष्मरूपेण कदाचिदस्माकमपि समधिगम्या । ततो मुखपर्य्यन्तमागच्छता तेन कण्ठदेशं प्राप्य आहत्य मूर्द्धानं तत्प्रतिघातेन परावृत्य च मुखविवरे कण्ठादिषु तत्तत्स्थानेषु स्वाभिघातेनोत्पादितः शब्दो वैखरीत्युच्यते । तदुक्तं शिक्षायाम् "आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया । मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् । सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णान् जनयते तेषां विभागः पञ्चधा मतः । स्वरतः कालतः स्थानात् प्रयत्नानुप्रदानतः" इति । संस्काररूपेण स्वगतानर्थान् बुद्ध्या बुद्धिवृत्त्या समेत्य विषयीकृत्यार्थः । तथा । "प्राणापानान्तरे देवी वाग्वै नित्यं हि तिष्ठति । स्थानेषु विकृते वायौ कृतवर्णपरिग्रहा । वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धिनी । केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी । प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्त्तते । अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा । स्वरूपज्योतिरेवान्तः परा वागनपायिनीति" भारतेऽप्युक्तम् । अत्र प्राणापानान्तरे इत्यधिकरणनिर्दे-

र्शादीकाशस्थायिता नित्यमित्यभिधानात् यावत्प्रलयपर्य्यन्तस्थायिता प्राणापानादेरपि तथैव नित्यत्वाभ्युपगमात् । न तु चणिकता मध्ये उत्पत्तिविनाशकल्पने गौरवात् शब्दार्थयोर्नित्यसम्बन्धस्वीकारादनित्येन शब्देन नित्यार्थसम्बन्धस्वीकारेऽयुक्तत्वापत्तेश्च । नित्यत्वेऽपि तेषां व्यञ्जकसद्भावाभावाभ्यां प्रत्ययाप्रत्ययावित्यन्यत्र विस्तरः । स्थानेषु कण्ठताल्वाद्यष्टस्थानेषु वायौ मूलाधारस्थे विलग्ने विवक्षाप्रेरितमनोनियुक्ताग्निसंक्षोभाद्वलिते इत्यर्थः । अतवर्णपरिपेदा वर्णभावापन्ना, तत्र स्थानेष्विति अवस्थितेनान्वितम् । प्राणवृत्तिनिवर्त्तिनीत्यनेन प्राणवृत्तेर्वायोस्तत्तद्देशपर्य्यन्तगमनमभिहितं, केवलमित्यनेन कण्ठताल्वादिस्थानानपेक्षाभिहिता । बुद्ध्युपादानेत्यनेन हृदयस्थानगमनमुक्तं बुद्धेर्हृदयस्थत्वात् । सर्वतः संहृतक्रमेत्यनेन हृदयस्थानगमनानपेक्षाभिहिता । अविभागेत्यनेन मध्यमाया विभागहेतुविशेषस्य कर्णपिधानेन श्रवणात् पश्यन्त्यास्तु तदभ्युदासः । अनपायिनी स्वस्थानादचलिता प्राणापानान्तरे मूलाधारस्थितेति यावत् । अतो यथाप्रदर्शितं परादीनां विभागं प्रतिपादयतीदं महाभारतीयवचनं विस्तरेण ।"

"अभिघातस्थानानि चाष्टविधानि सामान्यतो वेदितव्यानि "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु चेति" शिक्षोक्तेः । वर्णाश्च मतभेदेन त्रिषष्टिश्चतुःषष्टिर्वा शिक्षाशास्त्राभिहिता वेदितव्याः । यथा "चतुःषष्टिस्त्रिषष्टिर्वा वर्णाः शम्भुमते मताः । स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः । यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः । अनुस्वारो विसर्गश्च ✠क ✠पौ चापि पराश्रितौ । दुःस्पृष्टश्चेति विज्ञेयो लृकारः प्लुत एव चेति" । अस्यार्थः अ इ उ ऋ इत्येषां ह्रस्वदीर्घप्लुताः कालकृता द्वादश भेदाः लृकारस्यैको भेदोऽस्य दीर्घाभावात् प्लुतस्तूत्तरं प्रतिपादितः । एचां चतुर्णां ह्रस्वाभावात् दीर्घप्लुतभेदेनाष्टौ भेदाः इत्येकविंशतिः स्वराः । स्पर्शाः कादयो मावसानाः पञ्चविंशतिः । यादयो हान्ता अष्टौ । यमाः वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये पूर्वसदृशाः प्रातिशाख्ये प्रसिद्धाश्चत्वारो वर्णाः । यथा पलिक्क्नी चख्ख्नतुः । अग्ग्निः । घ्घ्नन्ति प्राध्ना इत्यादौ । अनुस्वारादयश्चत्वारः स्पष्टाः । ✠क ✠पौ चापि पराश्रितावित्युक्तिस्तु कखयोः परयोरेकविधः पफयोः परयोरन्यविधः कण्ठ्योष्ठ्यत्वभेदादिति ज्ञापनाय । दुःस्पृष्टः ईषत्स्पृष्टः लृकारः । "अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलस्तथा" इत्यनेन प्रतिपादितस्य यण्पदाभिधेयवर्णधर्मस्य ईषत्स्पृष्टत्वस्य लृकारे कथनात् लृकारस्य स्वरत्वयणत्वोभयधर्मसमावेशात् द्विविधता इति त्रिषष्टिर्भेदाः । लृकारस्य प्लुतत्वे चतुःषष्टिर्भेदाः । एवं वर्णानां सामान्यतो भेदे बोधिते एतेषामुत्पत्तिस्थानानि बाह्याभ्यन्तरप्रयत्नभेदाश्च प्रदर्श्यन्ते । तत्र स्थानानि "हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् । औरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम् । कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू । स्युर्मूर्द्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः । जिह्वामूले तु कुः प्रोक्तः दन्त्योष्ठ्यो वः स्मृतो बुधैः । ए ऐ तु कण्ठ्यतालव्यावोऔ कण्ठ्योष्ठजौ स्मृतौ । अर्द्धमात्रा तु कण्ठ्या स्यादेकारैकारयोर्भवेत् । ओकारौकारयोस्तद्वदिति" । "अनुस्वारयमानाञ्च नासिका स्थानमुच्यते । अयोगवाहा विज्ञेया आश्रयस्थानभागिन इति शिक्षोक्तानि वेदितव्यानि । यद्यपि सर्वेषां वर्णानामुच्चारणे कण्ठव्यापार आवश्यकस्तथापि चकाराद्युच्चारणे ताल्वादिव्यापारोऽप्यपेक्षित इति तत्तत्स्थानाश्रितत्वेन वर्णानां वैलक्षण्यम् । "जिह्वामूले तु कुः प्रोक्तः" इति पाणिनिशिक्षाभिधानात् कवर्गस्य कण्ठ्यत्वव्यवहारस्तु कण्ठशब्दस्य कण्ठमूलपरतया भाक्त एव तवर्गस्य दन्तमूलीयत्वेन दन्त्यत्ववत् अन्यथा अभ्यन्तरस्य तदुच्चारापत्तेः । जिह्वामूलीयस्य आश्रयस्थानभागित्वेन तदाश्रयस्य कोरपि जिह्वामूलस्थानत्वौचित्यात् । दन्त्योष्ठ्योव इत्यादावुभयोरेव प्रत्येकं वकारस्थानत्वं न तु समुदितयोः तथा सति दन्तोष्ठ्य इत्येव परिशिष्येत । अतस्तस्य दन्त्योष्ठ्योभयकार्य्यनिमित्तता एवमग्रेऽपि द्रष्टव्यम् । यमानां प्रातिशाख्यप्रसिद्धानां कादिचतुष्टयानां पूर्वोदितानां यमसंज्ञाबोधितानाञ्च नासिकापि स्थानमधिकमुपदिश्यते । तत्र च यमेत्युपलक्षणम् । "अमोऽनुनासिका नह्रौ" इत्युक्त्या हकाररकारभिन्नानामभानां नासिका स्थानत्वाभिधानात् नासामनुगतः स्थानत्वेनेत्यनुनासिकशब्दव्युत्पत्त्या नासिकास्थानत्वप्राप्तेश्च । तत्र नह्राविति पुनः हकाररकारयोः पर्य्युदासः । "मुखनासिकावचनोऽनुनासिकः" इति पा० सूत्रे मुखपदस्य कण्ठादितत्तत्स्थानपरतया

श्वासनादोभयस्थानत्वम्। अयोगवाहा विसर्गो जिह्वामूलीयोपध्मानीययोरपि विसर्गविशेषरूपत्वेनाश्रयस्थानभागित्वम्। आश्रयस्थानभागित्वञ्च यमाश्रित्यैते उच्चार्य्यन्ते तत्स्थानभागित्वमतः विसर्गस्य कखयोः परयोर्जिह्वामूलोच्चार्य्यमाणयोराश्रयत्वेन तत्स्थानभागित्वात् जिह्वामूलीयरूपान्वितनामता समुचिता। पफयोः परयोरोष्ठोच्चार्य्यमाणयोराश्रयत्वेनोपध्मानीयता। उप समीप आध्मायेते अनेन स्थानेनेति व्युत्पत्तेः उपाध्मान शब्द ओष्ठवचनः। तत्स्थानयोग्यत्वादन्वितनामता अवसेया। अतएव कौमुद्यां जिह्वामूलीयस्य जिह्वामूलमुपध्मानीयस्योष्ठावित्युक्तम्। यद्यपि सर्वेषां वर्णानामाकाशस्थानत्वं करणत्वञ्च कण्ठादीनां तदुत्पत्तौ युक्तं तथापि तेषां स्थानत्वव्यवहारो वर्णाभिव्यञ्जकतात्वादौ वर्णजनकवायुसंयोगाधारे वर्णाधारत्वारोपेण भाक्त एव। तत्तत्स्थानेषु जिह्वाग्रादिसम्बन्धेन वर्णोत्पत्त्या जिह्वाग्रादिस्थिते तत्सम्बन्धजनकप्रयत्नविशेषे आभ्यन्तरप्रयत्नशब्दे स्पृष्टतादावेव करणत्वव्यवहारः समुचितः। वर्णाभिव्यक्त्यनन्तरभाविनस्तु आन्तरतम्यपरीक्षोपयुक्ताः कण्ठविवरविकाशादेराश्रयच्छेदेनावच्छिन्नकार्य्यस्य जनका बाह्या यत्ना गुणशब्देनोच्यन्ते इत्यादिकं शेखरादौ स्पष्टम्। आभ्यन्तरप्रयत्नास्तु वर्णोत्पत्तेः प्राग्भाविनो बाह्यास्तु तदुत्पत्तेः पश्चाद्भाविन इति विवेकः। तथाहि नाभिदेशात् प्रयत्नप्रेरितः प्राणवायुरूर्द्ध्वमाक्रमन् उरःप्रभृतीनि स्थानान्याहन्ति अस्मात् उत्पादयति च ततो वर्णान् तदभिव्यञ्जकध्वनींश्च तत्र वर्णोत्पत्तेः प्राक् जिह्वाग्रोपाग्रमध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानं तात्वादिकं यदा सम्यक् स्पृशन्ति तदा स्पृष्टता प्रयत्नो यदा ईषत् स्पृशन्ति तथा ईषत्स्पृष्टता समीपावस्थाने संवृतता दूरावस्थाने विवृतता इत्येवमाभ्यन्तरप्रयत्नभेदात् वर्णानां भेदाः। अतएव इचयशानां तालव्यत्वाविशेषेऽपि चवर्गोच्चारणे कर्त्तव्ये तालुस्थानेन सह जिह्वाग्रादीनां सम्यक् स्पर्शः, यकारोच्चारणे तु ईषत् स्पर्शः शकारेकारोच्चारणे दूरसमीपावस्थानमिति। एतेषां आभ्यन्तरत्वं ओष्ठप्रभृतिकाकलीजनककाकलस्थानपर्य्यन्तरूपास्यान्तर्गततत्स्थानेषु जिह्वाग्रादीनां स्पर्शादिचतुष्टयरूपाभ्यन्तरकार्य्यकारित्वात् वर्णोत्पत्त्यव्यवहितप्राग्भावित्वाच्च बोध्यम्। विवारसंवारौ तु गलबिलस्य विकाशाविकाशात्मकौ बाह्यौ प्रयत्नौ विवृतसंवृताभ्यां भिन्नावेव तयोः समीपदूरावस्थानात्मकत्वादिति विवेक्तव्यम्। ते च आभ्यन्तराः प्रयत्नाः केषां वर्णानामित्यत्र तावदभिधीयते। कादिमावसानानां स्पृष्टता अतएव तेषां सम्यक्स्पर्शवत्त्वेन स्पर्शपदवाच्यता। यणः ईषत् स्पृष्टता। तेषाञ्च स्पृष्टविवृतयोर्मध्यस्थितत्वेन लौकिकव्यवहारेष्वपि यकारादीनां वर्णानाञ्च मध्यस्थितत्वेन चान्तःस्थवर्णत्वम् अन्तःस्थामिव संयुतमित्युक्तेरन्तःस्थाशब्दः स्यादन्तः। शषसहानां अचाञ्च विवृतता। शषसहानाञ्च उष्मशब्दाभिधेयवायुप्रधानत्वात् उष्मशब्दवाच्यता। अचाञ्च स्वयं राजमानत्वात् उदात्तादिस्वरवत्त्वाच्च स्वराभिधेयता। "अचः स्वयं विराजन्ते" इत्युक्तेः "उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः। ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि" इत्युक्तेश्च। तत्र ह्रस्वस्य संवृतता। "संवृतं त्वेकमात्रं स्यात् विवृतन्तु द्विमात्रकम्" इत्युक्तेः ह्रस्वस्यैकमात्रतया प्रयोगे संवृतता प्रक्रियायान्तु विवृततैव। तत्र मूलं "अचोऽस्पृष्टा यणस्त्वीषत् नेमस्पृष्टाः शलस्तथा। शेषाः स्पृष्टा हलः प्रोक्ता" इति शिक्षावाक्यमेव बोध्यम्। अत्राचः स्पर्शाभावरूपविवृतत्ववन्तः अचः यरलवस्त्वीषत् स्पृष्टा इत्यर्थः। नेमशब्दोऽर्द्धवाची। शलः शषसहा नेमस्पृष्टा अर्द्धस्पृष्टा अर्थाद्विवृताः। "स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्" इत्येकवाक्यत्वात्। एते च स्थानप्रयत्नाः सवर्णसंज्ञायामुपयुक्ताः बाह्यप्रयत्नास्तु आन्तरतम्यपरीक्षायामेवोपयोगिन इति "तुल्यास्यप्रयत्नं सवर्णमिति" पा॰सूत्रभाष्यादौ स्पष्टम्। तेन तकारस्थाने विवारश्वासाघोषाल्पप्राणरूपबाह्यप्रयत्नसाम्येन चकारटकारादेशः "स्थानेऽन्तरतमः" इति पा॰सूत्रभाष्ययोः स्पष्टम्। बहुसमानधर्मत्वमेवान्तरतम्ये हेतुरिति बोध्यम्।" "बाह्याःप्रयत्नाश्चाष्टविधाः काकलकाधःस्थलगलबिलसङ्कोचविकाशश्वासोत्पत्तिध्वनिविशेषघोषाल्पघोषप्राणाल्पत्वमहत्त्वरूपकार्य्यकरा यथाक्रमं विवारसंवारश्वासनादघोषाल्पघोषाल्पप्राणमहाप्राणनामानो मन्तव्याः। प्रयत्नप्रेरितो वायुर्वर्णानभिव्यञ्जन् यत्नविशेषेण गलबिलविकाशादीनपि सम्पादयति अतो गलबिलविकाशादिकरत्वादास्यबहिर्देशकार्य्यकरत्वात् चैते बाह्या इति। ते च "खयां यमाः खयः +क +पौ विसर्गः शर एव च। एते श्वासानुप्रदाना अघोषाश्च विवृण्वते। कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः। अयुग्मा वर्गयमगा यणश्चा-

श्वासवः स्मृताः" इति सिद्धान्तकौमुद्युक्तदिशावसेयाः। स्पर्शानां स्थाने जाता ये यमाः पूर्वोक्ताः प्रातिशाख्ये प्रसिद्धाः। खयः, शरः शषसहाः। एते श्वासानुप्रदाना अघोषाः कण्ठं विवृण्वते च। अन्ये एतद्भिन्नाः सर्वे वर्णा घोषसंवारनादबाह्यप्रयत्नवन्तः। वर्गीयप्रथमतृतीय-पञ्चमवर्णाः प्रथमतृतीयवर्गजातयमाश्च पूर्वोक्ताः यणश्च एते अल्पप्राणास्तद्भिन्नाः सर्वे महाप्राणा इति विवेकः।" "तथा उदात्तानुदात्तस्वरितरूपास्त्रिविधाः स्वरा ह्रस्वदीर्घप्लुतकालभेदाश्च स्वराणां विशेषाधाने हेतवो वेदितव्याः। तथा हि "विभागः पञ्चधा मतः" इत्युपक्रम्य "स्वरतः कालतः स्थानात् प्रयत्नानुप्रदानतः" इति स्वरकालस्थानप्रयत्नानुप्रदानाभिधेयबाह्यप्रयत्नान् वर्णविभाजकान् पञ्च सामान्यतो निर्दिश्य शिक्षाकृता उदात्तश्चानुदात्तश्चेत्यादिना पञ्चैव स्वरकालयोर्विभाजकताऽभिहिता। तत्र ताल्वादिषु स्थानेषूर्द्ध्वभागे निष्पन्नोऽजुदात्तः नीचैरुच्चार्यमाणोऽनुदात्तः प्रथमार्द्ध-मुदात्ततयोच्चार्य्य उत्तरार्द्धमनुदात्ततयोच्चार्य्यमाणः स्वरितः इति "उच्चैरुदात्तः नीचैरनुदात्तः समाहारः स्वरितः तस्य आदित उदात्तमर्द्धह्रस्वमिति" पाणिनि-सूत्रजातेभ्यः। तदेवं परस्परविभाजकस्थानबाह्या-भ्यन्तरप्रयत्नस्वरकालकृतविशेषात् वर्णानां परस्परविशेष-रूपता। सर्वे हि वर्णाः पुरुषा इव किञ्चिद्विशेषं विशेषताभाजो भवन्तीति।"

विवाहोपयोगिनि नक्षत्रविशेषकृते १६वर्णकूटे उद्वाह-शब्दे वर्णकूटोक्तौ १२४६ पृ० दृश्यम्।

**वर्णक** न० वर्णयति वर्ण-ण्वुल्। १हरिताले रत्नमा०।२अनु-लेपनयोग्ये अमरः ३पिष्टे ४दृष्टे वा चन्दनादौ द्रव्ये च। ५हिङ्गुलादौ पुंस्त्री० भरतः ६मण्डने शब्दर०। एकस्यैव सूत्रादेः पक्षान्तरव्याख्यानरूपे ७ग्रन्थभेदे न० "त्रिमुखाङ्कस्य तृतीयवर्णके"मिता०। ८चारणे पु०मेदि०।

**वर्णकूपिका** स्त्री वर्णानामक्षराणां लेखनाय कूपः कूपी सैव कन्। मस्याधारे त्रिका०।

**वर्णचारक** पु० वर्णं शुक्लादिरूपं चारयति चर-णिच्-ण्वुल्। चित्रकरे शब्दमा०।

**वर्णज्येष्ठ** पु० वर्णेषु ज्येष्ठः प्रथमसृष्टत्वात्। १अग्रजे विप्रे। स्ववर्णापेक्षया २श्रेष्ठवर्णकूटयुते त्रि०। "वर्ण-ज्येष्ठा च या नारी" स्मृतिः।

**वर्णतूलि(ली)** स्त्री वर्णानां लेखनसाधनं तूलिः। लेख-न्याम् शब्दर०स्वार्थे क। अत्रैव [जटा०।२वर्णप्रदे त्रि०

**वर्णद** न० वर्णं ददाति दा-क। १कालीयके गन्धद्रव्ये।

**वर्णदात्री** स्त्री वर्णं रूपं ददाति दा-तृच् ङीप्। १हरि-द्रायाम् राजनि० २वर्णदातरि त्रि०।

**वर्णदूत** पु० वर्णा एव दूतो यत्र। लिपौ त्रिका०।

**वर्णधर्म्म** पुंन० ६त०। विप्रादीनामसाधारणे धर्मे यथा विप्रस्य याजनाध्यापनप्रतिग्रहादिः। क्षत्रियस्य प्रजा-पालनादिः पु० जातिधर्मशब्दे दृश्यम्।

**वर्णमातृ** स्त्री ६त०। वर्णानां मातेव। लेखन्यां हारा०।

**वर्णमातृका** स्त्री सरस्वत्यां शब्दच०।

**वर्णमाला** स्त्री ६त० १जातिमालायां २अक्षरश्रेण्यां ३अन्तर्यागकर्मणि पञ्चाशद्वर्णात्मकमाल्यभेदे। अक्षमाला शब्दे ४२पृ० दृश्यम्।

**वर्णरेखा** स्त्री वर्णान् लिखत्यनया लिख-करणे घञ् रस्य वः। कठिन्यां (खड़ि) त्रिका०।

**वर्णवती** स्त्री वर्ण+मतुप् मस्य वः। १हरिद्रायां जटा०। २वर्णविशिष्टे त्रि०स्त्रियां ङीप्।

**वर्णविलोडक** पु० १लोकचौरे २सन्धिचौरे मेदि०

**वर्णसङ्कर** पु० सम्+कॄ-अप् वर्णतः सङ्करः। विप्रादिभ्यो वर्णेभ्योऽनुलोमजाते प्रतिलोमजाते मूर्द्धावसिक्तादौ मागधादौ च जातिभेदे "जायते वर्णसङ्करः" गीता। जातिशब्दे ३०६१ तद्भेदादिकं दृश्यम्।

**वर्णसि** पु० वर्ण-असिच्। जले उणादि०।

**वर्णा** स्त्री प्रशस्तवर्णोऽस्त्यस्याः फलपुष्पादौ अच्। आढ-क्याम् शब्दच०। [लेखन्याम् शब्दच०।

**वर्णाङ्का** स्त्री वर्णा अक्षराणि अङ्क्यन्तेऽनया अङ्कि-अच्।

**वर्णात्मन्** पु० वर्ण आत्मा स्वरूपं यस्य। ध्वन्यात्मकाहित-लक्षणे अकाराद्यक्षरे शब्दभेदे जटा०।

**वर्णार्ह** पु० वर्णं स्तुतिमर्हति अर्ह-अच्। मुद्गे राजनि०।

**वर्णिका** स्त्री वर्णा अक्षराणि लेख्यत्वेन सन्त्यस्याः ठन्। १लेखन्याम् २कठिन्यां हारा० ३मस्यां त्रिका०।

**वर्णित** त्रि० वर्ण-क्त। १स्तुते अमरः २कृतवर्णने ३रूपा-न्तरापादिते च।

**वर्णिन्** पु० वर्णोऽस्त्यस्य इनि। १चित्रकरे २लेखके ३ब्रह्म-चारिणि मेदि०। "अथाह वर्णी विदितो महेश्वरः" कुमारः। ४विप्रादिजातौ च "वर्णिनां हि वधो यत्र" स्मृतिः। [हरिद्रायाम् अमरः।

**वर्णिनी** स्त्री वर्णः अस्त्यस्याः प्राशस्त्ये इनि ङीप्।

**वर्त्तु** पु॰ वृत-तुन् । १नदभेदे उणादि॰ २आदित्ये संक्षिप्त॰।

**वर्त्तक** पु॰ वृत-ण्वुल् । (भारुइ) १पक्षिभेदे वर्त्तकाप्यत्र । २अश्वस्य खुरे च अमरः । ३वर्त्तलोहे न॰ हेमच॰।

**वर्त्तन** न॰ वृत-ल्युट् । १वृत्तौ २स्थितौ अमरः । णिच्-भावे ल्युट् । २स्थापने णिच् करणे ल्युट् । ३जीवनोपाये स्त्री ङीप् । ४तर्कुपीठे न॰मेदि॰ । ल्यु । ६वर्त्तिमति वर्त्तिष्णौ च त्रि॰ अमरः । ७वामने त्रि॰ मेदि॰ । दलाधारवर्त्तुले न॰ शब्दर॰ ।

**वर्त्तनी** स्त्री वर्त्त्यते पादाभ्याम् वृत-णिच् आधारे ल्युट् । १पथि २पेषणे शब्दर॰। पृषो॰ ह्रस्वः पूर्वदेशे त्रिका॰ ।

**वर्त्तमान** पु॰ वृत-शानच् । कालभेदे शब्दप्रयोगाधारे आरब्धापरिसमाप्ते १काले २तत्कालवृत्तौ त्रि॰ ।

वर्त्तमानकालश्च चतुर्विधः । यथा "प्रवृत्तोपरत१-श्चैव वृत्ताविरत२ एव च । नित्यः प्रवृत्तः३ सामीप्यो४ वर्त्तमानश्चतुर्विधः । क्रमेणोदाहरणानि । मांसं न खादति श्राद्धे प्रवृत्तं मांसभोजनं निवर्त्तयतीत्यर्थः । इह कुमाराः क्रीडन्ति २तदानीन्तनक्रीडनाभावेऽपि पूर्वक्रीडानां वृत्तौ वर्त्तमानत्वात् । पर्वतास्तिष्ठन्ति ३नित्यप्रवृत्तत्वात् । किन्तु पर्वतानां स्थितत्वेन वर्त्तमानत्वेऽपि भूतभविष्यत्कालाभ्यां सम्बन्धविवक्षया पर्वतास्तस्थुः स्थास्यन्ति इत्यपि स्यात् । सामीप्यो४ द्विविधः । भूतसामीप्यो भविष्यत्सामीप्यश्च यथा कदा आगतोऽसि इतिप्रश्ने अध्वखेदादेर्वर्त्तमानत्वात् एषोऽहमागच्छामि इति आगतोऽपि वदति । भविष्यत्सामीप्यो यथा । कदा गमिष्यसि इति प्रश्ने एषोऽहं गच्छामि इति गमने क्रियमाणोद्योगोऽपि वदति" दुर्गादासः ।

**वर्त्तरूक** पु॰ १नदीभेदे २काकोलभेदे ३जलावर्त्ते मेदि॰ । ४द्वारपाले त्रिका॰। [आवर्त्तनयोग्ये लौहभेदे ।

**वर्त्तलोह** न॰ वर्त्त्यते वृत-णिच्-कर्मणि अच् कर्म॰ ।

**वर्त्ति(र्त्ती)** स्त्री वृत-इन् वा ङीप् । १लेखे २नयनाञ्जने ३गात्रानुलेपने ४दीपदशायां ५भिषजां निर्मितौषधभेदे (वाति) "कतकस्य फलं शङ्खः सैन्धवं त्र्यूषणं वचा । फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला । एषा वर्त्तिर्हन्ति काचं तिमिरं पटलं तथा" गरुड़पु॰१९८अ॰। ६दीपे च मेदि॰ ।

**वर्त्तिक** पुंस्त्री वृत-तिकन् । (वटेर) १विहगभेदे राजनि॰ स्त्रियां ङीप् । वर्त्मनि वर्त्तते वृत-अच् वर्त्तः तत्र साधुः हितो वा ठन् । (भारुइ) २खगे अमरः। ३अजशृङ्ग्यां स्त्री॰ राजनि॰ ४दीपदशायां स्त्री सा च पञ्चविधा यथा "पद्मसूत्रभवा दर्भगर्भसूत्रभवाऽथ वा । शाणजा बादरी वापि फलकोषोद्भवाथ वा । वर्त्तिकादीपकार्येषु सदा पञ्चविधा स्मृता" कालिकापु॰६८अ॰ ।

**वर्त्तिन्** त्रि॰ वृत-णिनि । वर्त्तनशीले ।

**वर्त्तिष्णु** त्रि॰ वृत-इष्णुच् । वर्त्तनशीले ।

**वर्त्तिष्यमाण** पु॰ वृत-शानच् लृटः सद्वेति स्यट् । भविष्यत्काले । २तद्वृत्तौ त्रि॰ ।

**वर्त्तुल** त्रि॰ वृत-उलच् । १गोलाकारे पदार्थे अमरः । २गृञ्जने न॰ राजनि॰ । ३कलायभेदे पु॰ शब्दमा॰ । ४तर्कुपीठ्याम् स्त्री हारा॰५गजपिप्पल्याम् स्त्री राजनि॰ ङीप् ।

**वर्त्मन्** न॰ वृत-मनिन् । १पथि अमरः २आचारे "आ मनोर्वर्त्मनः" रघुः ३नेत्रच्छदे च मेदि॰। अक्षिशब्दे ४५पृ॰ दृश्यम्। वर्त्मलक्षणं तद्गतरोगभेदाश्च सुश्रुते उक्ता यथा "द्व्यङ्गुलं सर्वतः सार्द्धं भिषङ्नयनबुद्बुदम् । सुवृत्तं गोस्तनाकारं सर्वभूतगुणोद्भवम् । पलं भुवोऽग्नितो रक्तं वातात् कृष्णं सितं जलात् । आकाशादश्रुमार्गाश्च जायन्ते नेत्रबुद्बुदे । दृष्टिश्चात्र तथा वक्ष्ये यथा ब्रूयाद्विशारदः । नेत्रायामत्रिभागन्तु कृष्णमण्डलमुच्यते । कृष्णात् सप्तममिच्छन्ति दृष्टिं दृष्टिविशारदाः । मण्डलानि च सन्धींश्च पटलानि च लोचने । यथाक्रमं विजानीयात् पञ्च षट् च षडेव च । पक्ष्मवर्त्मश्वेतकृष्ण॰ दृष्टीनां मण्डलानि तु । अनुपूर्वन्तु ते मध्याश्चत्वारोऽन्त्या यथोत्तरम् । पक्ष्मवर्त्मगतः सन्धिर्वर्त्मशुक्लगतोऽपरः । शुक्लकृष्णगतस्त्वन्यः कृष्णदृष्टिगतोऽपरः । ततः कनीनकगतः षष्ठश्चापाङ्गगः स्मृतः । द्वे वर्त्मपटले विद्यात् चत्वार्य्यन्यानि चाक्षिणि । जायन्ते तिमिरं येषु व्याधिः परमदारुणः ।"

"पृथग्दोषाः समस्ताश्च यदा वर्त्मव्यपाश्रयाः । सिराव्याप्यावतिष्ठन्ते वर्त्मस्वधिकमूर्च्छिताः । विवर्द्ध्य मांसं रक्तञ्च तदा वर्त्मव्यपाश्रयान् । विकारान् जनयन्त्याशु नामतस्तान्निबोधत । उत्सङ्गिन्यथ कुम्भीका पोथक्यो वर्त्मशर्करा । तथाऽर्शोवर्त्म शुष्कार्शस्तथैवाञ्जननामिका । बहलं वर्त्म यच्चापि व्याधिर्वर्त्मावबन्धकः । क्लिष्टकर्दमवर्त्माख्यौ श्याववर्त्म तथैव च । प्रक्लिन्नमपरिक्लिन्नं वर्त्मवातहतन्तु यत् । अर्बुदं निमिषञ्चापि शोणितार्शश्च यच्च तत् । लगणो बिसनामा च

पक्ष्मकोपस्तथैव च। एकविंशतिरित्येते विकारा वर्त्मसंश्रयाः। नामभिस्ते समुद्दिष्टा लक्षणैस्तान् प्रचक्ष्महे। पिडकाभ्यन्तरमुखी बाह्यतो वर्त्मसंश्रया। विज्ञेयोत्सङ्गिनी१ नाम तद्रूपपिडकान्विता। कुम्भीकबीजप्रतिमाः पिडकाः पक्ष्मवर्त्मनोः। आध्मायन्ते तु भिन्ना याः कुम्भीकपिडकास्तु ताः२। कण्डूषावान्विता गुर्व्यो रक्तसर्षपसन्निभाः। पिडकाश्च रुजावत्यः पोथक्य३ इति संज्ञिताः। पिडकाभिः सुसूक्ष्माभिर्घनाभिरभिसंवृता। पिडका या खरा स्थूला सा ज्ञेया वर्त्मशर्करा४। सूक्ष्माः खराश्च वर्त्मस्थास्तदर्शोवर्त्म५ कीर्त्यते। दीर्घोऽङ्कुरः खरः स्तब्धो दारुणो वर्त्मसम्भवः। व्याधिरेष समाख्यातः शुष्कार्श६ इति संज्ञितः। दाहतोदवती ताम्रा पिडका वर्त्मसम्भवा। मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साऽञ्जननामिका७। वर्त्मोपचीयते यस्य पिडकाभिः समन्ततः। सवर्णाभिः समाभिश्च विद्याद्बहलवर्त्म८ तत्। कण्डूमताल्पतोदेन वर्त्मशोफेन यो नरः। न समं छादयेदक्षि भवेद्बन्धः९ स वर्त्मनः। मृद्वल्पवेदनं ताम्रं तद्वर्त्म सममेव च। अकस्माच्च भवेद्रक्तं क्लिष्टवर्त्म१० तदादिशेत्। क्लिष्टं पुनः पित्तयुक्तं विदहेच्छोणितं यदा। तदा क्लिन्नत्वमापन्नमुच्यते वर्त्मकर्दमम्११। यद्वर्त्म बाह्यतोऽन्तश्च श्यावं शूनं सवेदनम्। दाहकण्डूपरिक्लेदि श्याववर्त्मेति१२ तन्मतम्। अरुजं बाह्यतः शूनमन्तः क्लिन्नं स्रवत्यपि। कण्डूनिस्तोदभूयिष्ठं क्लिन्नवर्त्म१३ तदुच्यते। यस्य धौतानि धौतानि सम्बध्यन्ते पुनः पुनः। वर्त्मान्यपरिपक्वानि विद्यादक्लिन्नवर्त्म१४ तत्। विमुक्तसन्धि निश्चेष्टं वर्त्म यस्य न मील्यते। एतद्वातहतं१५ विद्यात् सरुजं यदि वाऽरुजम्। वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम्। विज्ञेयमर्बुदं१६ पुंसां सरक्तमवलम्बितम्। निमेषणीः सिरा वायुः प्रविष्टो वर्त्मसंश्रयाः। चालयेदतिवर्त्मानि निमेषः१७ स गदो मतः। छिन्नाश्छिन्ना विवर्द्धन्ते वर्त्मस्था मृदवोऽङ्कुराः। दाहकण्डूरुजोपेतास्तेऽर्शःशोणितसम्भवाः१८। अपाकः कठिनः स्थूलो ग्रन्थिर्वर्त्मभवोऽरुजः। सकण्डूः पिच्छिलः कोलप्रमाणो लगण१९स्तु सः। शूनं यद्वर्त्म बहुभिः सूक्ष्मैश्छिद्रैः समन्वितम्। विषमन्तर्जलमिव विषवर्त्मेति२० तन्मतम्। पक्ष्माशयगता दोषास्तीक्ष्णाग्राणि खराणि च। निर्वर्त्तयन्ति पक्ष्माणि तैर्घृष्टञ्चाक्षि दूयते। उत्पाटितैः पुनः शान्तिः पक्ष्मभिश्चोपजायते। वातातपानलद्वेषी पक्ष्मकोपः २१ स उच्यते।" तच्चिकित्सा तत्र दृश्या।

**वर्त्मनि** स्त्री वृत-अनि सुट् च। पथि उज्ज्वा०।

**वर्द्ध** छेदने पूरणे च चु० उभ० सक० सेट्। वर्द्धयति ते अववर्द्धत् त। [भावे अच्। २पूरणे ३छेदे च।

**वर्द्ध** पु० वृध-अच। १सीसके (सीसा) शब्दच०। २बर्द्धकी (बामनहाटि) जटा० वर्द्ध-

**वर्द्धक** पु० वृध-ण्वुल्। १ब्राह्मणयष्टौ (बामनहाटी) अमरः वृध-वा वर्द्ध-ण्वुल्। २पूरके ३छेदके ४वृद्धिकारके च त्रि०।

**वर्द्धकि** पु० वर्द्ध-छेदने अच् कम-ङि कर्म०। त्वष्टरि (छुतार) अमरः। [जातिभेदे शब्दर०।

**वर्द्धकिन्** पु० वर्द्धकः वर्द्धोऽस्त्यस्य इनि। त्वष्टरि (छुतार)

**वर्द्धन** न० वृध-वर्द्ध-भावे ल्युट्। १छेदने २पूरणे च मेदि०। वृध णिच्-ल्यु। ३वृद्धिकारके त्रि०। "करोमि क्षितिवर्द्धनम्" भट्टिः। वृध-ल्यु। ४वृद्धियुक्ते त्रि०।

**वर्द्धनी** स्त्री वर्द्ध्यतेऽनया वृध-णिच्-ल्युट् ङीप्। १संमार्जन्याम् २खर्व्यां मेदि०। ३जलाधारपात्रभेदे च (बदना) जटा०।

**वर्द्धमान** पु० वृध-शानच्। १एरण्डवृक्षे अमरः। २वृद्धिशीले त्रि०। ३शरावे ४मृत्पात्रभेदे ४विष्णौ ५पशुभेदे च मेदि०। ६जिनभेदे हेमच०। ७धनिनां गृहभेदे हला०। ८देशभेदे वृ० सं० १४अ० कूर्मविभागशब्दे दृश्यम्। ९नगरभेदे च। १०वृद्धियुक्ते त्रि०।

**वर्द्धापन** न० वर्द्ध छेदं करोति वर्द्ध+णिच्-आप् च ततो भावे ल्युट्। नाडीच्छेदनकर्माङ्गे संस्कारभेदे ति०त० रघु०।

**वर्द्धित** न० वर्द्ध-क्त। १छेदिते २पूरिते ३प्रस्तुते च।

**वर्द्धिष्णु** त्रि० वृध-इष्णुच्। वृद्धिशीले। [भरतः ङीष्।

**वर्ध्र** न० वृध-ष्ट्रन्। १चर्मणि उणादिको०। २चर्मरज्जौ स्त्री

**वर्पस्** न० वृ-असुन् पुक्। रूपे निघण्टुः।

**वर्फ** गतौ वधे च भ्वा० पर० सक० सेट्। वर्फति अवर्फीत्।

**वर्म्मकण्टक** पु० वर्म्म इव कण्टकोऽस्य। पर्पटे राजनि०।

**वर्म्मकषा** स्त्री वर्म-कषति अच्। (चामकषा) सप्तलायाम् शब्दर०।

**वर्म्मन्** न० वृ-मनिन्। १कवचे सन्नाहे अमरः। २वलिवोपाधौ पु०। "वर्म्मान्तं क्षत्रियस्य तु" शातातपः।

**वर्म्महर** पु० वर्म्म हरति हृ-अच्। सन्नाहधारणयोग्ये अवस्थाभेदे तरुणे। "वर्म्महरः कुमारः" रघुः।

**वर्म्मि** पु० वृ-बा० मिन्। (बानि) मत्स्यभेदे राजनि०।

**वर्म्मित** त्रि० वर्म करोति णिच्-क्त। १कृतसन्नाहे २उद्युक्ते च

**वर्य्य** त्रि० वृ-यत्। १प्रधाने श्रेष्ठे च अमरः। २कामदेवे

३पतिम्बरायां कन्यायां अमरः। ४कन्यामात्रे च स्त्री।

**वर्वणा** स्त्री वरिति वर्बति शब्दायते वर्व—ल्युच्। (भनभने) मक्षिकाभेदे अमरः। अयमोष्ठ्यादिरित्यन्ये।

**वर्वर** न॰ वृ—अरच् बुट् च। १हिङ्गुले २पीतचन्दने ३गन्धरसे च राजनि॰। ४पामरे ५मूर्खे च त्रि॰। "बलमिच्छन्ति वर्वरा" इत्युद्भटः। ६केशभेदे (बाबरी) ७देशभेदे कृष्णार्जके (कालबाबुइ) वृक्षे च पु॰राजनि॰। ८मक्षिकाभेदे पुंस्त्री॰शब्दर॰(बाबुइ) १०वृक्षे स्त्री टाप् ङीप् वा "वर्वरी वरवी तुङ्गी खरपुष्पाजगन्धिका। पर्णासस्तत्र कृष्णे तु कठिञ्जरकुठेरकौ। कालमारः करालश्च सलूकः कृष्णमल्लिका। तत्र शुक्लोऽर्जकः प्रोक्तो वटीपत्रस्ततोऽपरः। वर्वरीत्रितयं रूक्षं शीतं कटु विदाहि च। तीक्ष्णं रुचिकरं हृद्यं दीपनं लघुपाकि च। पित्तलं कफवातास्रदद्रुक्रिमिविषापहम्" भावप्र॰। संज्ञायां कन्। वर्वरिका चन्दनभेदे पुष्पभेदे स्त्री मेदि॰।

**वर्वरीक** पु॰ वृ-ईकन् फर्फरीका॰ नि॰। १ब्राह्मणयष्टिके २कुटिलकेशे उज्ज्वा॰। ३अजगन्धिकायां (बाबुइतुलसी) शब्दच॰ ४गुडाकाले हेमच॰।

**वर्वा** स्त्री वृ-व तस्य नेत्वम्। (बाबुइ) वृक्षभेदे शब्दच॰।

**वर्वुर** पु॰ वृ-उरच् बुट् च। (बाबला) वृक्षभेदे राजनि॰। ओष्ठ्यादिरित्यन्ये।

**वर्ष** पु॰ वृष—भावे घञ् कर्त्तरि अच् वा। १वृष्टौ २जम्बुद्वीपांशभेदे पुन॰ अमरः। "लङ्कादेशाद्धिमगिरिरुदग्घेमकूटोऽथ तस्मात् तस्मादन्यो निषध इति ते सिन्धुपर्यन्तदैर्घ्याः। एवं सिद्धादुदगपि पुराच्छृङ्गवच्छुक्लनीला वर्षाण्येषां लघुरिह बुधा अन्तरे प्रोचिरे यान्। भारतवर्षमिदं ह्युदगस्मात् किन्नरवर्षमतो हरिवर्षम्। सिद्धपुराच्च तथा कुरु तस्मादपि हिरण्मयरम्यकवर्षे। माल्यवांश्च यमकोटिपत्तनाद्रोमकाच्च किल गन्धमादनः। नीलशैलनिषधावधी च तावन्तरालमनयोरिलावृतम्। माल्यवज्जलधिमध्यवर्ति यत् तत्तु भद्रतुरगं जगुर्बुधाः। गन्धशैलजलराशिमध्यगं केतुमालकमिलाकलाविदः। निषधनीलसुगन्धसुमाल्यकैरलमिलावृतमावृतमावभौ। अमरकेलिकुलायसमाकुलं रुचिरकाञ्चनचित्रमहीतलम्" सि॰शि॰। "अत्र भूगोलस्यार्धमुत्तरं जम्बूद्वीपम्। तस्य क्षाराब्धेश्च सन्धिर्निरक्षदेशः। तत्र लङ्का रोमकं सिद्धपुरं यमकोटिरिति पुरचतुष्टयं भूपरिधिचतुर्थांशान्तरे किल कथितम्। तेभ्यः पुरेभ्यो यस्यां दिशि मेरुः सोत्तरा। अतो लङ्काया उत्तरतो हिमवान् नाम गिरिः पूर्वापरसिन्धुपर्यन्तदैर्घ्योऽस्ति। तस्योत्तरे हेमकूटः। सोऽपि समुद्रपर्यन्तदैर्घ्यः। तथा तदुत्तरे निषधः। तेषामन्तरे द्रोचिदेशा वर्षसंज्ञाः। तत्रादौ भारतवर्षम्। तदुत्तरं किन्नरवर्षम्। ततो हरिवर्षमिति। एवं सिद्धपुरादुत्तरतः शृङ्गवान् नाम गिरिः। ततः श्वेतगिरिः। ततो नीलगिरिरिति। तेऽपि सिन्धुपर्यन्तदैर्घ्याः। तेषामन्तरे च वर्षाणि। तत्रादौ कुरुवर्षम्। तदुत्तरे हिरण्मयम्। ततो रम्यकमिति। अथ यमकोटेरुत्तरतो माल्यवान् नाम गिरिः। स तु निषधनीलपर्यन्तदैर्घ्यः। तस्य जलधेश्च मध्ये भद्राश्वं वर्षम्। एवं रोमकादुत्तरतो गन्धमादनः। तस्य जलधेश्च मध्ये केतुमालवर्षम्। एवं निषधनीलमाल्यवद्गन्धमादनैरावृतमिलावृतं नाम नवमं वर्षम्। सा स्वर्गभूमिः। अतस्तत्र देवक्रीडास्थानानि"। ३द्वादशमासात्मके काले ४जम्बुद्वीपे च पु॰मेदि॰। कर्त्तरि अच्। ५मेघे पु॰ हेमच॰ ६प्रभवादिषु षष्टिवत्सरेषु पु॰।

**वर्षकरी** स्त्री वर्षं तत्सूचनं करोति रवेण कृ-ट। झिल्लिकायां हेमच॰। [२वर्षाचले।

**वर्षकेतु** पु॰ वर्षस्य वृष्टेः केतुरिव। १रक्तपुनर्नवायाम् राजनि॰

**वर्षकोष** पु॰ वर्षस्य कोष इव। १दैवज्ञे शब्दर॰। २मासे हेमच॰। [४वर्षणे संक्षिप्तसा॰।

**वर्षणि** स्त्री वृष—अनि। १कृतौ २वर्त्तने उज्ज्वा॰। ३कृतौ

**वर्षपर्वत** पु॰ वर्षाणां चिह्नभूतः सीमाभूतो वा पर्वतः। "हिमवान् हेमकूटश्च निषधो मेरुरेव च। चैत्रः कर्णी च शृङ्गी च सप्तैते वर्षपर्वताः" इत्युक्तेषु पर्वतेषु हारा॰। द्वीपभेदेऽन्येऽपि वर्षपर्वता कुलपर्वतशब्दे २११२ पृ॰ दर्शिताः। सि॰शि॰ उक्ता जम्बूद्वीपपर्वता वर्षशब्दे दर्शिताः। तत्र नाममात्रे भेदः कल्पभेदात्।

**वर्षपाकिन्** पु॰ वर्षेण पाकोऽस्त्यस्य इनि। आम्रातकवृक्षे हेमच॰ तस्य हि मुकुलोद्गमात् प्रायेण वत्सरानन्तरफलपाकः। [राजनि॰।

**वर्षपुष्पा** स्त्री वर्षकाले पुष्पमस्याः। सहदेवीलतायाम्

**वर्षप्रिय** पुंस्त्री॰ वर्षः प्रियोऽस्य। चातकपक्षिणि त्रिका॰ स्त्रियां योपधत्वात् टाप्।

**वर्षवर** पु॰ वर्षं रेतोवर्षणं वृणोति आवृणोति वृ—अच्। "ये त्वल्पसत्त्वाः प्रथममात्मीयाः स्त्रीस्वभाविनः। जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृताः" इत्युक्तलक्षणे

रोमामलःपुरश्चके मयूखे (खोजा) अमरः। "नष्ट वर्षवरैरिति" रत्नावली।

**वर्षवृद्धि** पु० वर्षस्य वृद्धिरधिकता यस्मिन्। १जन्मतिथौ २तद्दिनकर्त्तव्ये मृत्याद्रौ च। "युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया। रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता" ति०त०। "तत्कृत्यं च मलमासे न कर्त्तव्यं चान्द्रमासीयत्वेन आवश्यकत्वात् न च सौरमासीयं तथात्वे तस्मिन् कदाचिदप्राप्तौ तदर्थं तत्कृत्यलोपापत्तेः न चेष्टापत्तिः "प्रतिसंवत्सरं चैव कर्त्तव्यश्च महोत्सवः" ब्रह्मपु० प्रतिसंवत्सरं तद्विधानात् ति० त० रघु०। अधिकं जन्मतिथिशब्दे दृश्यम्।

**वर्षा** स्त्री ब०व०। वर्षन्ति मेघा यत्र। श्रावणभाद्राख्ये ऋतौ "नभश्च नभस्यश्च वार्षिकावृतू" वसु०श्रुतिः "वर्षासु च मघासु च" मनुः।

**वर्षाङ्गी** स्त्री वर्षासु अङ्गमस्याः। पुनर्नवायाम् शब्दर०।

**वर्षापगम** पु० वर्षाणामपगमो यत्र। १शरत्काले हेम०। २वर्षासमाप्तौ।

**वर्षाभव** पु० वर्षासु भवति भू—अच्। रक्तपुनर्नवायाम् राजनि०

**वर्षाभू** पु० वर्षासु भवति भू—क्विप्। १भेके अमरः २इन्द्रगोपे राजनि० ३महौषधावाम् मेदि० ४पुनर्नवायां ५भेक्यां स्त्री मेदि० अमरे भेक्याम् गौरा० ङीष् वर्षाभ्वोश्चेव ६वर्षाभवमात्रे त्रि०। [ङीष्।

**वर्षामद** पुंस्त्री० वर्षासु माद्यति मद—अच्। मयूरे स्त्रियां

**वर्षिष्ठ** त्रि० अतिशयेन वृद्धः इष्ठन् वर्षादेशः। अतिशयवृद्धे

**वर्षीयस्** त्रि० अतिशयेन वृद्धः वृद्ध+ईयसुन् वर्षादेशः। अतिवृद्धे अमरः स्त्रियां ङीप्।

**वर्षुक** त्रि० वृष—उकञ्। वर्षणशीले। [अमरः।

**वर्षोपल** पु० वर्षस्य इष्टं उपलः प्रस्तर इव। करकायां (शिल)

**वर्ष्मन्** न० वृष-मनिन्। १देहे २प्रमाणे च अमरः। ३अतिसुन्दरे त्रि०। [अववर्हेत् त।

**वर्ह** वधे सक० दीप्तौ अक० चु० उभ० सेट्। वर्हयति-ते

**वर्ह** उत्कर्षे भ्वा० आ० सक० सेट्। वर्हते अववर्हिष्ट।

**वर्ह** न० वर्ह—अच्। मयूरपिच्छे अमरः अस्य पुंस्त्वमपि "कं हरेदेष वर्हः" विक्रमो०प्रयोगात्। २ग्रन्थिपर्णे दले भरतः। ३पत्रे शब्दर०।

**वर्हि(र्हिः)कुसुम** न० वर्हिःवह्निरिव कुसुममस्य इसो० वा सलोपः। ग्रन्थिपर्णे शब्दमा०।

**वर्हिःपुष्प** न० वर्हिः वह्निरिव पुष्पमस्य। ग्रन्थिपर्णे भरतः

**वर्हिःशुष्मन्** पु० वर्हिः कुशः शुष्म बलमस्य। १वह्नौ अमरः कुशेन हि वह्निरुद्दीप्यते।

**वर्हि(र्हिः)ष्ठ** न० वर्हिरिव तिष्ठति स्था-क वा विसर्गलोपः षत्वम्। ह्रीवेरे अमरः। [र्हीन। वर्हीश्चषत।

**वर्हिण** पुंस्त्री० वर्हमस्त्यस्य इन। मयूरे अमरः स्त्रियां ङीष्

**वर्हिर्ज्योतिस्** पु० वर्हिषा कुशेन ज्योतिरस्य। वह्नौ हेम०

**वर्हिर्मुख** पु० वर्हिर्वह्निर्मुखं यस्य। देवे अमरः। तद्द्वारेव हि देवा हविरश्नन्ति।

**वर्हिषद्** पु० ब०व० वर्हिषि विप्रपाणिस्थेऽग्नौ सीदन्ति वर्हिस् सद्—क्विप् षत्वम्। पितृगणभेदे "अग्निष्वात्ता वर्हिषद आज्यपा आज्यपास्तथा" मनुः। [वह्नौ।

**वर्हिष्केश** पु० वर्ह—दीप्तौ इसुन् वर्हिः दीप्तिमान् केशो यस्य

**वर्हिस्** स्त्री वर्ह-इसुन् नि० नलोपश्च। १वह्नौ मेदि० "वर्हिषि रजतं न देयम्" श्रुतिः। २ग्रन्थिपर्णे ३चित्रके च (चिते) अमरः। ३कुशे पु०न० "वर्हिर्देवसदनम्" श्रुतिः वर्ह-दीप्तौ इसुन्। ४दीप्तियुक्ते त्रि०। [वा प्रटा०।

**वल** संवरणे भ्वा०आत्म०सक०सेट्। वलते अवलिष्ट। ववलदः

**वल** न०वलतेऽनेन वल—क। सैन्ये रायमु० बलशब्दार्थे च।

**वलक्ष** पु० वल-क्विप् अक्ष—अच् कर्म०। १धवले वर्णे २तद्वति त्रि० अमरः।

**वलन** न० वल—भावे ल्युट्। १सम्वरणे त्रि०वि० उक्ते ग्रहकोटिसंस्कारार्थे २कदम्बयाम्योत्तरयोरन्तर तत्स्वरूपादिकं तत्रोक्तं प्रदश्यते

"दृक्ताजाद्यौ हि संपाते विषुवत्क्रान्तिवृत्तयोः। ज्ञातौ याम्योत्तरे भिन्ने परक्रान्त्यन्तरे च ते। आवनं वलनं तत्र जिनांशज्यामितं ततः। एकैकायनसंधौ तु तयोः साहृत्विषोत्तरा। एकैव तद्वशात् प्राची तत्र नो वलनं ततः। तदन्तरेऽनुपातेन खेटकोटिक्रमज्यका। जिनज्याप्ती द्युजीवाप्तायनदिग्वलनं भवेत्। एवमेव हि संपाते विषुवन्मण्डलयोः। उन्मण्डलं भवेत् तत्र विषुवद्दृक्विषोत्तरा। क्षितिजं समवृत्तस्य पक्ष्या च तदन्तरम्। क्षितिजेऽक्षज्यया तुल्यमक्षजं वलनं ततः। तयोरेव याम्योदङ्न मध्ये वलनं ततः। नतक्रमज्यया वाध्यमन्तरे तत्फलं ततः। नतं खाङ्काहतं भक्तं द्युदलेनाप्तभागकैः। क्रमज्याक्षज्यया गुणा द्युज्याभक्ताक्षजं भवेत्। प्राक् सौम्यं पश्चिमे याम्यं तत्पार्श्वेक्यान्तरात् स्फुटम्। एवमेव च संपातो यः क्रान्तिसमहलयोः। परम तत्र तत्त्वतो व्यवलनैक्यान्तरं स्फुटम्।

अयतः पृष्ठतस्तस्मात् क्रान्तिवृत्ते त्रिभेऽन्तरे । तयो-र्याम्योत्तरैकत्वात् तत्र नो वलनं स्फुटम् । न स्फुट-वलनाभावस्तत्र स्यादुत्क्रमज्यया । क्रमज्यया ततः कार्यं दाढ्यार्थं कथ्यते पुनः । सर्वतः क्रान्तिसूत्राणां ध्रुवे योगो भवेद्यतः । विषुवन्मण्डलप्राच्या ध्रुवे याम्या तथोत्तरा । सर्वतः क्षेपसूत्राणां ध्रुवाज्जिनलवान्तरे । योगः कदम्बसंज्ञोऽयं ज्ञेयो वलनबोधकृत् । तत्रापमण्डलप्राच्या याम्या सौम्या च दिक् सदा । कदम्बभ्रमवृत्तं च बध्नीयात् परितो ध्रुवात् । गोले तु जिनतुल्यांशैस्तत्र ज्या क्रान्तिशिञ्जिनी । सर्वतः समवृत्तान्न याम्योदक्जसंगमे । तत्तिर्यग्गतसूत्राणां योगः स खसंज्ञकः । समध्रुवकदम्बानामुपरि ह्युपरा न्यसेत् । सूत्राणि वृत्तरूपाणि वलनानि तदन्तरे । अक्षजं वलनं मध्ये स्यात् समध्रुवसूत्रयोः । कदम्बध्रुवसूत्रान्तरायनं च त्रिभे ग्रहात् । कदम्बसमसूत्रान्तः स्फुटं सर्वदिशां च तत् । अथ वा परितः खेटात् स्वाङ्कभागान्तरे न्यसेत् । त्रिज्यावृत्तं ततस्तत्र विषुवत्समवृत्तयोः । मध्येऽक्षवलनं विद्याद्विषुवत्क्रान्तिवृत्तयोः । अन्तरं चायनं क्रान्तिसमवृत्तान्तरे स्फुटम् । तत्रापमण्डलं प्राची तस्मा याम्योत्तरः शरः । वलनानयने क्षेपः क्षिप्तो यैस्ते कुबुद्धयः । नक्रादिस्थ कदम्बस्य स्यातां याम्योत्तरे समम् । आयनं वलनं तस्मादायनादौ प्रजायते । ततो भ्रमति गोले स मकरादिर्यथा यथा । तथा तथा भ्रमत्येव कदम्बो निजमण्डले । कुम्भादावथ मीनादौ याम्योदग्वलयस्थिते । जायते वलनं तद्वत् सौम्यसूत्रकदम्बयोः । अन्तरं शिञ्जिनीरूपं कदम्बभ्रममण्डले । अयनाद्गतकालांशक्रमक्रान्तिज्यका हि सा । उत्क्रमज्या यतो बाणः शिञ्जिनी तु क्रमज्यका । सत्रिभार्कात् क्रमक्रान्तिज्यातो वलनमायनम् । यैरुक्तमुत्क्रमक्रान्त्या भ्रान्त्या तैर्नोदितं हि तत् । युक्त्यानयैव विज्ञेयमक्षजं च क्रमज्यया । परोक्तेरन्यथा ब्रूयाद्बुधः परान् न प्रदूषयेत् । तस्यैव दूषणं तद्धि न दोषोऽतोऽन्यदूषणे । उत्क्रमज्यानिरासोऽयमन्यथा वाथ कथ्यते । जिनांशैर्जिनवृत्ताख्यं कदम्बात् परितो न्यसेत् । क्रान्तियाम्योत्तरं वृत्तं कदम्बद्वयकीलयोः । प्रोतं कृत्वा चलं न्यस्तं दम्बान्ते स्याद् ध्रुवोपरि । दम्बान्ताच्चाल्यतेऽग्रैर्यैस्तैरेव चलति ध्रुवात् । जिनवृत्ते तदंशानां तत्र ज्या क्रान्तिशिञ्जिनी । चायनं चैव वलनं द्युज्यापे जायते ग्रहात् । पञ्चध्रुवान्तरे यस्माद्द्युज्या चापांशकाः सदा । त्रिज्यावृत्ते यतो देयं तस्मात् परिणाम्यते । एवमक्षांशकैर्वृत्तं समात्स्यात् परितो न्यसेत् । समकीलकयोः प्रोतं तथा याम्योत्तरं चलम् । तत्तत्खेटोपरि न्यस्तं यैरंशैः खार्धतो नतम् । समवृत्तेऽक्षवृत्ते च तैरेव स्यान्नतं ध्रुवात् । समवृत्तनतांशज्याक्षज्यापरिणताक्षजम् । द्युज्याचापे वलनं प्राग्वत् त्रिज्याचापे परिणाम्यते । अपमत्यागमयात्मज समवृत्तनतांशजम् । वलनं स्यात् तथा वध्ये स्वाहोरात्रनतादपि । अपान्तरवयोर्योगः समदिक्लेऽन्यथान्तरम् । तत्त्रिज्यावर्गविश्लेषपदं भक्तास्यशिञ्जिनी । नताद्दोर्ज्यया क्षुण्णा वलनं चाक्षजं स्फुटम् । नतं खाङ्काहतं भक्तं द्युदलेनाप्तभागकैः । क्रमज्याक्षज्यया क्षुण्णा स्थूलं वा द्युज्यया कृता । द्युज्याहृत्तापवृत्तैक्ये न्यसेद्वा रविमण्डलम् । बिम्बचापे वलनं तद्वदन्तरं वृत्तयोस्तयोः । बिम्बान्तविम्बमध्योत्थक्रान्त्योर्व्यस्तदन्तरम् । अर्कादीभोस्यमण्डलं बिम्बाद्यं तच्चदक्षकृत् । जिनज्याघ्नं त्रिभज्याप्तमेव स्यादन्तरं हि तत् । बिम्बार्धकृत् त्रिभज्याप्तमेव त्रिज्या नतं भवेत् । गुणहारकबिम्बार्धत्रिज्यानाशे कृते सति । भोग्यमण्डलं जिनांशज्यागुणं तच्चाङ्कभाजितम् । सत्रिभार्कात् क्रमक्रान्तेस्तत् तुल्यं जायतेऽथ वा । क्रमक्रान्तेरिदं वीक्ष्य भ्रान्तिं त्यजत बालिशाः ! । नामितं क्वचद्बिम्बं तिर्यक् क्रान्तिस्तु सा समा । अत्र द्युज्यानुपातो यस्तिर्यक्करणाय स" मू० । "अथ वलनेषु दृक्कर्मणि चोत्क्रमज्यानिराकरणाय मूलसूत्रेऽपि बहूक्तं तथापि किञ्चिदिहोच्यते । विषुवद्वृत्तं समवृत्तं प्रकल्प्य दक्षिणोत्तरवृत्तस्थे ग्रहे आयनवलनस्योपपत्तिप्रतीत्यर्थं पृथग्दर्शयेत् । अपमण्डलप्राच्यपराया एकः कदम्बो याम्या अन्यः सौम्या दिक् । एवं विषुवद्वृत्तप्राच्यपराया ध्रुवौ । यदा मकरादिर्याम्योत्तरवृत्ते तदैव कदम्बोऽपि । अतो विषुवत्क्रान्तिवृत्तयोरेकैव याम्योदक् । तथा दक्षिणोत्तरवृत्तस्य कुम्भादेश मध्ये स्वाहोरात्रवृत्ते पञ्चगुणाङ्कचन्द्रा १९३५ असवो वर्त्तन्ते । ते षड्भृताः कालांशाः स्युः ३२।१५ । अथ कुम्भादिर्यावद्दक्षिणोत्तरवृत्तं नीयते तावत् कदम्बो निजमण्डले चक्रांशाङ्किते तावद्भिरेव कालांशैः ३२ । १५ दक्षिणोत्तरवृत्तसंपाताद्भ्रमणमवाप्यते । कदम्बयाम्योत्तरसूत्रयोरन्तरं वलनम् । सा च तेषामंशानां कदम्बवृत्ते ज्या । अतः क्रमज्या ।

उत्क्रमज्या तु बाणरूपा भवति। कदम्बवृत्ते या ज्या सा क्रान्तिज्या। अतस्तेषामंशानां क्रमक्रान्तिज्या वलनम्। अथ वैकराशेः क्रमक्रान्तिज्या त्रिज्यागुणा द्युज्याहृता तथापि सैव भवति। अथ वान्यप्रकारेणोत्क्रमज्यानिराकरणं द्युज्यानुपातस्य प्रतिपाद्यते। क्रान्तिवृत्तेऽर्कस्थानेऽर्कबिम्बं मुद्रिकाकारं विन्यस्य बिम्बपरिधौ यत्र स्वाहोरात्रवृत्तं लग्नं यत्र च क्रान्तिवृत्तं तयोरन्तरं यद्दक्षिणोत्तरं तत् तत्र बिम्बे प्राच्यपरयोर्वलनम्। तच्चार्कक्रान्तेर्बिम्बार्धकलायुतस्यार्कस्य क्रान्तेश्चान्तरम्। अतस्तस्यानयनम्। रविदोर्ज्यायां क्रियमाणायां यद्भोग्यखण्डं तेन मानार्धकला गुण्याः शरद्विदस्रैः २२५ भाज्याः। फलं दोर्ज्ययोरन्तरं स्यात्। तत्र तावत् स्फुटभोग्यखण्डस्यानयनायानुपातः। यदि त्रिज्यातुल्यायां कोटौ प्रथमं ज्यार्धं शरद्विदस्रा भोग्यखण्डं तदाभिमतायामस्यां किमिति फलं स्फुटं भोग्यखण्डम्। तेन गुणितं बिम्बार्धं शरद्विदस्रैर्भाज्यम्। एवं स्थिते शरद्विदस्रमितयोर्गुणकहारयोर्नाशे कृते बिम्बार्धस्य कोटिज्या गुणस्त्रिज्या हरः। फलं दोर्ज्ययोरन्तरम्। ततः क्रान्त्यर्थमनुपातः। यदि त्रिज्यया जिनज्या लभ्यते तदानेन दोर्ज्यान्तरेण किमिति। फलं क्रान्त्यन्तरम्। तद्बिम्बव्यासार्धवृत्ते वलनम्। अथान्योऽनुपातः। यदि बिम्बव्यासार्धवृत्ते एतावद्वलनं तदा त्रिज्याव्यासार्धवृत्ते किमिति। अत्र त्रिज्यातुल्ययोर्गुणकहरयोस्तथा बिम्बार्धमितयोश्च तुल्यत्वान्नाशे कृते कोटिज्याया जिनांशज्या गुणस्त्रिज्या हरः। फलं कोटिक्रमक्रान्तिज्या। तत् त्रिज्यावृत्ते वलनम्। एवं विषुवद्वृत्तस्थित एव ग्रहे। यतो भूमध्यात् स्वस्वस्तिकस्थबिम्बमध्यं प्रति यत् सूत्रं नीयते तत् त्रिज्यासूत्रं दण्डवत्। तदुपरिस्थं बिम्बं छत्रवत् समन्तात् सममेव। यत् तत्परितस्त्रिज्यावृत्तं तत्र च वलनज्या देया तदपि भूसममेव स्थितम्। अतस्तत्र यथागतमेव वलनम्। यदा किल मेषान्ते ग्रहस्तदा तत्क्रान्त्या स्वस्वस्तिकादुत्तरे नतं बिम्बं स्यात्। त्रिज्यासूत्रं तदा कर्णरूपम्। बिम्बमध्याच्च लम्बसूत्रं ध्रुवयष्ट्यन्तं द्युज्या। सा तत्र कोटिः। क्रान्तिज्या भुजः। यथा किञ्चित् कर्णस्थिते छत्रे दण्डे छत्रमपि तत्स्पर्शिन्यां दिशि कर्णरूपं भवति। तत्र वलनज्ययापि कर्णरूपिण्या भवितव्यम्। यत् पूर्वमानीतं क्रान्त्यन्तरं लम्बसूत्रप्रतिस्पर्धि तत् कोटिरूपं जातम्। तस्य कर्णकरणायानुपातः। यदि द्युज्याकोट्या त्रिज्या कर्णस्तदाऽनया किमिति। पूर्वं कोटिज्याया जिनज्या गुणस्त्रिज्या हरः। इदानीं त्रिज्या गुणो द्युज्या हरः। अत्रापि त्रिज्यातुल्ययोर्गुणहरयोर्नाशे कृते कोटिज्या जिनज्यागुणा द्युज्यया भक्ता वलनं स्यादित्युपपन्नम्। युक्त्यानयैव विद्येयमत्तजं च क्रमज्ययेति। यथायनवलनस्यानार्थं ध्रुवात् परितो जिनभागैः कदम्बभ्रमवृत्तं निबद्धं तथा याम्योत्तरक्षितिजयोर्यः संपातः स समसंज्ञकः। तस्मादप्यक्षांशैः परितोऽक्षवलनस्यानार्थं वृत्तं बध्नीयात्। तत् किलाक्षवलयसंज्ञम्। तदपि भांशैरङ्कितम्। तत्राक्षवलनोपपत्तिर्दर्शनीया। तद्यथा मध्याह्नेऽर्कात् समचिह्नं प्रति नीयमानं वृत्ताकारं सूत्रं ध्रुवचिह्नलग्नं याति। अतस्तत्र विषुवत्समवृत्तयोरैक्ये याम्योत्तरा वलनाभाव इत्यर्थः। अथ यदि दिनार्धान्तरं सूर्यं मत्वा समचिह्नात् सूर्यं प्रति नीयमानं सूत्रं यत्र सममण्डले लगति तत्स्वस्वस्तिकयोर्मध्ये यावन्तोंऽशास्तावन्त एवाक्षवृत्ते समसूत्रध्रुवयोर्मध्ये भवन्ति। यतस्तत्समवृत्तानुकारं बद्धम्। तेषां भागानामक्षवलये यावती क्रमज्या तावदेव समसूत्रध्रुवयोरन्तरम्। अथ क्षितिजस्थेऽर्के क्षितिजमेव समसूत्रम्। तत्राक्षवृत्ते च नवतिर्नतांशाः। तेषां ज्याऽक्षवलयेऽक्षज्यातुल्या स्यात्। अतः सममण्डलगतैर्नतांशैर्वलनं साधयितुं युज्यते। ते तु महायासेन सायन्ते। न तु सुखेन। अतस्तज्ज्ञानार्थं स्थूलोऽनुपातः सुखार्थं कृतः। यदि दिनार्धतुल्येन स्वाहोरात्रनतेन नवतिः सममण्डलनतांशा लभ्यन्ते तदेष्टेन किमिति। लब्धनतांशानां या क्रमज्या साऽक्षज्यावृत्ते परिणाम्यते। यदि त्रिज्यावृत्ते एतावती ज्या तदाक्षज्यावृत्ते कियतीति। लब्धं किल वलनज्या स्यात्। परं सा द्युज्याग्रे, न त्रिज्याग्रे। यतः समसूत्रध्रुवयोरन्तरं तत्। ग्रहध्रुवयोर्मध्ये द्युज्याचापांशा एव सन्ति। यदि द्युज्यावृत्त एतावती तदा त्रिज्यावृत्ते कियतीति। एवं सति पूर्वत्रैराशिके त्रिज्या हरः। इदानीं गुणः। तुल्यत्वात् तयोर्नाशे कृते नतांशज्याया अक्षज्या गुणो द्युज्या हरः। फलं स्थूला वलनज्या स्यात्। अथ सूक्ष्माप्युच्यते। ग्रहवशात्कालोऽर्कस्य शङ्कुः शङ्कुतलमपि च साध्या। अथ शङ्कुतलयोः समदिशोरैक्यमन्यथान्तरं स किल बाहुः पूर्वं प्रतिपादित एव।

मध्यसमसूत्रयोरन्तरं ज्याख्यं दक्षिणोत्तरं बाहुवलनं स्यात्। यथा विषुवद्वृत्तादुत्तरतो दक्षिणतो वा क्रान्तिज्यान्तरे द्युज्यावृत्तं तथा समवृत्तादपि बाहुवशादुत्तरतो दक्षिणतो वा बाहुवलनस्यान्तरे उपवृत्तं कल्प्यम्। तदपि भांशैरङ्क्यम्। बाहुवर्गोनत्रिज्यावर्गस्य पदं तस्मिन् वृत्ते द्युज्यावद्व्यासार्धम्। अथ द्युज्यावृत्तोपवृत्तयोर्यौ प्राक्पश्चात्संपातौ तयोर्जीवावत् सूत्रं निबध्यते तस्यार्धमुपवृत्ते नतांशानां ज्या। सैवाहोरात्रवृत्ते नतांशानां भुजज्या। अथ वलनानयनम्। नतांशानां या भुजजीवा सा द्युज्यावृत्ते परिणाम्यते। यदि त्रिज्यावृत्ते एतावती तदा द्युज्यावृत्ते कियतीति। स्वोपवृत्तनतांशज्या भवति। ततो यद्युपवृत्तव्यासार्धे एतावती तदाक्षज्याव्यासार्धे कियतीति। ततो द्युज्याग्रे एतावती वलनज्या तदा त्रिज्याग्रे कियतीति। अत्र प्रथमेऽनुपाते त्रिज्या हरो द्युज्या गुणः। तृतीयेऽनुपाते त्रिज्या गुणो द्युज्या हरोऽततुल्यत्वात् तयोर्नाशे कृते नतांशानां भुजज्याक्षजीवया गुणितोपवृत्तव्यासार्धेन भक्ता वा स्फुटा वलनज्या स्यात्। अत उक्तमग्रान्तरयोर्योग इत्यादि। अथ दृष्टान्तः। यत्र किल वृषभान्तक्रान्तितुल्योऽक्षः २०।१८ तत्र वृषभान्तस्थोऽर्को दिनार्धे खस्वस्तिके भवति। तदा क्रान्तिवृत्तं दृङ्मण्डलाकारं स्यात्। वृश्चिकाद्योऽर्को राशिपञ्चकं सिंहान्तः। स च तदा क्षितिजे वर्त्तते। तत्र प्राक्परयोरन्तरं क्षितिजे प्रत्यक्षं वलनं दृश्यते। सा च सिंहान्तस्याग्रा। तत् कथं वृश्चिकाद्यार्कोत्क्रमक्रान्तिर्वलनम्। अतोऽसत्। अक्षादानयनं विना नेदमपाकृतं वलनमतस्यात इत्यर्थः। अथान्यो महान् दृष्टान्तः। यत्र देशे षट्षष्टिभागाः ६६ अक्षः। तत्र मेषादौ क्षितिजस्थे सर्वेऽपि राशयः समकालमेव क्षितिजस्था भवन्ति। तदा क्रान्तिवृत्तमेव क्षितिजं भवतीत्यर्थः। तत्र मेषादौ वृषभादौ मिथुनादौ वा स्थिते रवौ परमं त्रिज्यातुल्यमेव स्फुटं वलनं स्यात्। अतः क्रान्तिवृत्तप्राच्युत्तरा जाता। तथा विक्षेपाभावे सति तदा रवेर्दक्षिणस्यां दिशि स्पर्शः। चन्द्रस्योत्तरस्यामित्यर्थः। एतदुक्तं भवति। तत्र देशे तस्मिन् काले तस्य त्रिज्यातुल्यस्य वलनस्यान्यथानुपपत्त्यास्मदीयमेव वलनानयनं समीचीनम्। तत्र देशेऽक्षज्या ३१४०। मेषादिगे रवौ द्युज्या ३४३८। चरज्याग्रः ०। क्षितिजस्थेऽर्के नतघटिकाः १५। आयनवलनचापांशाः २४। आक्षवलनचापांशाः ६६। स्फुटवलनस्य चापांशाः ९०। वृषादिगे रवौ द्युज्या ३२६६। चरज्याग्रः १६७०। नतघटिकाः १९।२८। आयनवलनचापांशाः २१।४। आक्षजस्य ६८।५६। स्फुटवलनस्य चापांशाः ९०। मिथुनादिगे द्युज्या ३१३८। चराग्रः २४६५। नतघटिकाः २४।१७। आयनवलनांशाः २१।३२। आक्षजस्य ७७।२८। स्फुटस्य ९०। एवं सर्वत्र।"

**वलभि(भी)** स्त्री वल्यते आच्छाद्यते वल–अभि वा ङीप्। वडभीशब्दार्थे गोपानस्याम् अमरटी०।

**वलय** पुंन० वल–अयन्। १कङ्कणादिकटकादौ अमरः। उत्तरपदस्थः तदाकारवेष्टने यथा भूवलयम्। २वेष्टन-भूमौ ४गोले च। ५गलरोगभेदे प्रावप्र० "कफात् यवा-यतक्षतश्च शोथं करोत्यन्नगतिं निवार्य। तं सर्वथैवाप्रतिवार्यवीर्यं विवर्जनीयं वलयं वदन्ति"। ६वेलायां ७कङ्कणे जटा०। [अमरः।

**वलयित** त्रि० वलयमिव आचरितम् वलय+क्विप्–क्त। वेष्टिते

**वला** स्त्री वल–अच्। (वेड़ेला) ओषधिभेदे रायमुकुटः। २बलाशब्दार्थे च। [अजा० टाप्।

**वलाक** पुंस्त्री० वल–आकन्। वकपक्षिणि अमरः स्त्रियां

**वलाहक** पु० वारि वहति पृषो०। १मेघे २मुस्तके च अमरः। ३पर्वते ४दैत्यभेदे ५नागभेदे मेदि० ६श्रीकृष्णस्य हयभेदे "स्यन्दनस्तु सदानन्दः सारथिर्वास्य दारुकः। तुरङ्गाः शैव्यसुग्रीवमेघपुष्पवलाहकाः" त्रिका०।

**वलि** पु० वल–इन्। उपहारद्रव्ये कोष्ठ्रादित्वमित्यन्ये।

**वलिर** त्रि० वल–सञ्जौ क वलसंवरणमस्त्यस्य इरन्। केकरे अमरः।

**वलिश** न० वलिना उपहारद्रव्येण श्यति मत्स्यान् शो–क। वडिशशब्दार्थे। [पटले जटा०।

**वलीक** न० वल्यते संव्रियतेऽनेन ईकन्। वलीकशब्दार्थे

**वलूक** न० वल–वा ऊक। १[illegible] २पक्षिभेदे सि०कौ०।

**वल्क** भाषणे चु०उभ०द्वि०सेट्। वल्कयति ते अववल्कत् त।

**वल्क** न० वल–संवरणे क अस्य नेत्त्वम्। १वृक्षादीनां त्वचि वल्कले २मत्स्यानां त्वचि शल्के (आंइस) मेदि०। ३खण्डे च विश्वः। ४पट्टिकालोध्रे पु० राजनि०।

**वल्कतरु** पु० वल्कप्रधान तरुः शा०त०। गुवाकवृक्षे राजनि०।

**वल्कद्रुम** पु० वल्कप्रधानो द्रुमः। भूर्जपत्रवृक्षे राजनि०।

वल्कल न॰ वल-कलन् कस्य नेत्त्वम् । १त्वचे (दारचिनि) इचे राजनि॰ २त्वचि (छाल) पुंन॰ अमरः । ३शिला-वल्कायां स्त्री राजनि॰ ।

वल्कलोध्र पु॰ वल्कभवो लोध्रः । पट्टिकालोध्रे राजनि॰ ।

वल्ग गतौ लुतगतौ च भ्वा॰ पर॰ सक॰सेट् । वल्गति अवल्गीत् । [हेमच॰

वल्गा स्त्री वल्ग-अच् । (लागाम) अश्वमुखस्थे रज्जुभेदे

वल्गित न॰ वल्ग-भावे क्त । १अश्वस्य गतिभेदे लुतगतौ अमरः । २गमने ३वक्रभाषणे च ।

वल्गु पु॰ वल—संवरणे उ-गुक् च । १छागे २मनोहरे त्रि॰ मेदि॰ । संज्ञायां कन् । वल्गुक चन्दने वने पणे च न॰ । चारुणि सुन्दरे च त्रि॰ अजयः । अशो-कयादिस्वमित्यन्ये ।

वल्गुपत्र पु॰ वल्गूनि पत्राणि यस्य । वनमुद्गे शब्दर॰।

वल्गुला स्त्री वल्ग-उल । १वागुच्यां सोमराज्यां २खगभेदे राजनि॰संज्ञायां कन् । वल्गुलिका तैलपायिकायां हेमच॰

वल्भ भक्षणे भ्वा॰ आत्म॰ सक॰ सेट् । वल्भते अवल्भिष्ट ।

वल्मिकि पु॰ वल-इकि मुट् च । कीटविशेषकृते मृत्तिका-स्तूपे (उइर ढिपि) शब्दर॰। वल-इक मुट् च । वल्मिक तत्रार्थे भरतः ।

वल्मीक पुंन॰वल-ईक मुट् च । क्षुद्रकीटकृतमृत्स्तूपे अमरः तन्मृदा शौचनिषेधो विष्णुपु॰ उक्तो यथा

"वल्मीकमृषिकोत्खातां मृदमन्तर्जलां तथा । शौचाव-शिष्टां गेहाच्च नादद्यात् लेपसम्भवाम्" । देवप्रतिमायाः शिल्पिदोषशान्तये तन्मृदा प्रतिमाक्षालनं विहितं यथा "वल्मीकमृत्तिकाभिश्च गोमयेन समन्ततः । क्षालयेत् शिल्पिसंस्पर्शदोषाणामुपशान्तये" देवप्र॰ त॰ ।

तेन देवमूर्त्तीनां स्नापनमपि देवप्र॰ त॰ विहितं यथा "स्नापयेत् प्रथमं देवं तोयैः पञ्चविधैरपि । पञ्चामृतैः पञ्चगव्यैः पञ्चत्वग्भिस्तथैरपि । मृत्तिका करिदन्तस्य पर्वताग्रखुरस्य च । कुशवल्मीकसम्भूता मृत्पञ्चक-मुदीरितम्" देवप्र॰ त॰ । तत्राविर्भूते प्राचेतसे मुनाम-ख्याते रामायणकर्त्तरि २मुनिभेदे ३रोगभेदे च विश्वः । तद्रोगनिदानादि भावप्र॰ उक्तं यथा

"पीवांसकक्षाकरपाददेशे सन्धौ गले वा निचितैव दोषैः । ग्रन्थिः स वल्मीकवदक्रियाणां जातः क्रमे-णैव गतप्रवृद्धिः । मुखैरनेकैस्तुतितोदवद्भिः विसर्पवत् सर्पति चोन्नताग्रैः । वल्मीकमाहुर्भिषजो विकारम् निष्प्रत्यनीकं चिरजं विशेषात्" । वल्मीकवदत्विन्नेन प्र-करोषित्वरत्वमुत्वलमवगाढमूलत्वञ्च सूच्यते निष्प्रत्यनीक-मुपचारायोग्यम्" । ततः भवार्थे ढञ् । वाल्मीकि वल्मीकभवे प्राचेतसे मुनौ शब्दरत्ना॰ ।

वल्मीकशीर्ष न॰वल्मीकस्य शीर्षमिव । स्रोतोऽञ्जने राजनि॰

वल्मीकूट न॰ वल्मीकं कूटमिव प्रशो॰ । वल्मीके हेमच॰

वल्य (ल्यू)ल छेदने पवित्रताकरणे च अद॰ चुरा॰ उभ॰सक॰ सेट् । वल्यु(ल्यू)लयति ते अववल्यु(ल्यू)लत् त ।

वल्ल संवरणे भ्वा॰ आत्म॰ सक॰ सेट् । वल्लते अवल्लिष्ट ।

वल्ल पु॰ वल्ल-अच् । १गुञ्जात्रयपरिमाणे "वल्लस्त्रिगुञ्ज" लीला॰ २गुञ्जाद्वये वैद्यकम् ।३सार्द्धगुञ्जामाने "गोधूमद्वितयोन्मितस्तु कथिता गुञ्जा तया सार्द्धया वल्लः" राजनि॰ ।

वल्लकी स्त्री वल्ल-क्वुन् गौरा॰ ङीष् । १वीणायाम् अमरः । २शल्लकीवृक्षे च राजनि॰ ।

वल्लभ पु॰ वल्ल-अभच् । १दयिते २अध्यक्षे अमरः । ३उत्त-माश्वे च मेदि॰ । ४दयितायां स्त्री हेमच॰ ।

वल्लभपाल पु॰ वल्लभं पालयति पाल-अण् । अश्वपाले

वल्लर न॰ वल्ल अरन् । १कृष्णागुरुणि मेदि॰ २गहने ३कुञ्जे च राजनि॰ । ४मञ्जर्यां शब्दर॰ ।

वल्लरि(री) स्त्री वल्ल—अरि वा ङीप् । १मञ्जर्याम् अमरः । २मेथिकायां ३चित्रमूले च राजनि॰ ।

वल्लव पुंस्त्री॰ वल्लु-अच् तं वाति वा-क । १गोपे अमरः स्त्रियां ङीष् । २पाचके अमरः ३भीमसेने मेदि॰ ।

वल्लि(ल्ली) स्त्री वल्ल-इन् वा ङीप् । १लतायाम् अमरः । २पृथिव्याञ्च शब्दच॰ दीर्घान्तस्तु ३अजमोदायां मेदि॰ ४कैवर्त्तिकायाम् ५चव्ये च राजनि॰ ।

वल्लीज न॰ वल्ल्यां जायते जन-ड । मरिचे राजनि॰ ।

वल्लीदूर्वा स्त्री वल्लीरूपा दूर्वा । मालादूर्वायाम् राजनि॰ ।

वल्लीबदरी स्त्री वल्लीरूपा बदरी । भूमिबदर्याम् राजनि॰।

वल्लीमुद्ग पु॰ वल्लीप्रधानः मुद्गः । वनमुद्गे (मुगानि) राजनि॰

वल्लीवृक्ष न॰ वल्लीव दीर्घो वृक्षः । सालवृक्षे राजनि॰ ।

वल्लूर न॰ वल्ल-ऊरन् । १कुञ्जे २मञ्जर्यां ३क्षेत्रे ४निर्जन-स्थाने ५शाद्वले हेमच॰। ६गहने च मेदि॰ वल्ल-अरन्। वल्लर तत्रार्थे न॰ शब्दर॰ ।

वल्लूर त्रि॰ वल्लु-ऊरन् । आतपादिना १शुष्कमांसे अमरः २शूकरमांसे मेदि॰ ३वनक्षेत्रे ४वाहने ५ऊषरभूमौ च हेमच॰ ।

वल्ल्या स्त्री वल्ल-यत् । धात्रीवृक्षे राजनि॰ ।

**वल्वज** पु० वलते अन्नं वेष्टयति वल-क्विप् तादृशः सन् वजति गच्छति वज-अच् । १वल्वजे तृणभेदे अमरः । (वाबुइ) २इक्षुभेदे स्त्री राजनि० ।

**वल्ह** दीप्तौ चु० उभ०अक०सेट् । वल्हयति अववल्हत् त

**वल्ह** उत्कर्षे भ्वा० आ० सक० सेट् । वल्हते अवल्हिष्ट ।

**वव** पु० वा इ प्रकारे द्वित्वम् । ज्योतिषोक्ते तिथ्यर्द्धात्मके प्रथमे करणे । वस्य बौद्धत्रादित्वमित्यन्ये ।

**वश** स्पृहायाम् अदा०पर०सक०सेट् । वष्टि उष्टः उशन्ति । अवट् अवाशीत् अवशीत् उवाश ऊशतुः ।

**वश** पुंन० वश-भावे अप्, कर्त्तरि अच् वा । १आयत्तत्वे २प्रभुत्वे च आयत्ते त्रि० शब्दर० ।

**वशंवद** त्रि० वशं वशकरं मधुरं, वशोऽहमिति वा वदति वद-खच् मुम् च । १प्रियवाक्यवादिनि २मधुरवादिनि (तवाहं वशः) इति ३वादिनि च । [करणे ।

**वशक्रिया** स्त्री वशस्य क्रिया करणं कृ—भावे श । वशी-

**वशग** त्रि० वशं गच्छति गम-ड । वशीभूते ।

**वशवर्त्तिन्** त्रि० वशे वर्त्तते वृत-णिनि । वशीभूते ।

**वशा** स्त्री वश-अच् । १वन्ध्यायां २योषायां ३सुतायां ४कपृरिण्यां ५गोगव्याञ्च मेदि० । अनेन जातेः समासे परनि० गोवशा । [चन्दने स्त्री ।

**वशिक** त्रि० वशोऽस्त्यस्य ठन् । १शून्ये अमरः २अगुरु-

**वशित्व** न०वशिनो भावः त्व । १स्वातन्त्र्ये २ईश्वरस्य ऐश्वर्यभेदे च । तल् । वशितायत्र स्त्री । [स्वतन्त्रे च ।

**वशिन्** त्रि० वशोऽस्त्यस्य इनि । १जितेन्द्रिये २स्वाधीने

**वशिर** न० वश—इरन् । १सामुद्रलवणे अमरः । २गजपिप्पल्याम् ३चव्ये च पु० राजनि० ।

**वशिष्ठ** अतिशयेन वशी इष्ठन् इनेर्लुक् । अतिशयजितेन्द्रियतायुक्ते मुनिभेदे ।

**वशीकरण** न० अवशः वशः क्रियतेऽनेन वश-च्वि-कृ-ल्युट् । तन्त्रादुक्ते वशतासम्पादके मणिमन्त्रादौ ।

**वशीर** पु० वश-ईरन् । गजपिप्पल्याम् जटा० ।

**वश्य** न०वश-यत् ।१लवङ्गे शब्दर०। २आयत्ते त्रि० अमरः

**वष** वधे भ्वा० पर० सक० सेट् । वषति अवषीत् अवाषीत् । ववषतुः ।

**वषट्** अव्य० वह-डषटि । देवोद्देश्यकहविस्त्यागे अमरः ।

**वषट्कार** पु० वषट्+कृ-घञ् । १देवोद्देशकत्यागरूपे यज्ञे २वषडिति करणे यजतिशब्दे कात्या०वाक्यं दृश्यम् ।

**वषट्कृत** त्रि० वषट् इति कृतम् कृ-क्त । हुते अमरः ।

**वष्क** गतौ भ्वा० आत्म० सक० सेट् । वष्कते अवष्किष्ट ।

**वष्कय** पु० वष्क-अयन् । एकहायने वत्से अमरः ।

**वष्कयणी** स्त्री वष्कयमेकहायनवत्सं नयति स्थानान्तरं नी-ड गौरा० ङीष् णत्वम् । चिरप्रसूतायां गवि अमरः । जात्या समासेऽस्य परनि० गोवष्कयणी ।

**वष्कयिणी** स्त्री वष्कय एकहायनो वत्सोऽस्त्यस्या इनि । चिरप्रसूतायां गवि अमरः वष्कयणीति वा पाठः । "वष्कयिण्यास्त्रिदोषघ्नं तर्पणं बलकृत्पयः" भावप्र० ।

**वस** छेदे छेदने वधे च सक० चु० उभ० सेट् । वासयति ते अवीवसत् त । अधि+गन्धादिनासंस्कारे सक० ।

**वस** स्तम्भे दिवा०पर०सक०सेट् । वस्यति इरित् अवसत् अवासीत् उदित् क्त्वा वेट् ।

**वस** निवासे भ्वा०पर०सक०अनिट् यजा० । वसति अवात्सीत् उवास ऊषतुः उषितः उषित्वा । अधि+अनु+उप—आ+वा वसतेराधारस्य कर्मता अधिवसति वैकुण्ठं हरिः सि०कौ० अनुवसति उपवसति आवसति । उप+ अभोजने तत्र नाधारस्य कर्मता "एकादश्यामुपवसेत्" इत्यादि ।

**वस** आच्छादने अदा० आ० सक० सेट् । वस्ते अवसिष्ट ।

**वस** वासने सुरभीकरणे अद०चु०उभ०सक०सेट् । वसयति ते अववसत् त ।

**वसति(ती)** स्त्री वस-अति वा ङीप् । १वासे २यामिन्याम् "वसतीर्वसित्वा" रघुः । ३निकेतने मेदि० ४स्थाने च ५शिबिरे त्रि० कौ० ।

**वसतिवरी** स्त्री क०व० सोमयज्ञनार्थासु अप्सु । "अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरीग्रहणं स्यन्दमानानामनस्तमिते" कात्या० श्रौ० ८।९।७। "सोमार्थां आपो वसतीवरीशब्देनोच्यन्ते" कर्क० । अथ सोमाभिषवोपयुक्तानां वसतीवरीसंज्ञानामपां ग्रहणमभिधीयते" वेददी० यजु० ६।२३ ।

**वसन** न० वस—आच्छादने कर्मणि ल्युट् । १वस्त्रे अमरः । भावे ल्युट् । २छादने मेदि० वस-वासे आधारे ल्युट् । ३निवासे ४स्त्रीकटीभूषणे च शब्दर० ।

**वसन्त** पु० वस-झ । मधुमाधवात्मके ऋतुभेदे "मधुश्च माधवश्च वासन्तिकावृतुः" यजु श्रुतिः । २अतिसारे शब्दर०। ३नाट्ये विदूषकोपाधौ । ४रागभेदे च । "आन्दोलिता च देशाख्या लोला प्रथममञ्जरी । मन्दारी चेति रागिण्यो वसन्तस्य सदानुगाः" इत्युक्ता अस्य षड् रागिण्यः षट् इत्यन्ये रागिणीशब्दे दृश्याः ।

न्तस्य गानकालः। "श्रीपञ्चमीं समारभ्य यावत् स्याच्छयनं हरेः। तावद्वसन्तरागस्य गानमुक्तं मनीषिभिः" सङ्गीतदा०। ४तालविशेषे। "जयमङ्गलगन्धर्वमकरन्दत्रिभङ्गमाः। रतितालो वसन्तश्च जगझम्पोऽथ गारुषिः" वसन्तताले कर्त्तव्यो नगणो मगणस्तथा" सङ्गीतदा०।

**वसन्तक** पु० वसन्ते कायति कै—क। श्योनाकवृक्षे शब्दमा०

**वसन्तकुसुम** पु० वसन्ते कुसुमं यस्य। सेलुवृक्षे शब्दमा०।

**वसन्तकुसुमाकर** पु० प्रमेहरोगनाशके औषधभेदे। "प्रवालरसमौक्तिकाभ्रकमिदं चतुर्भागभाक् पृथक् पृथगेव खते रजतहेमतो द्व्यंशके। अयोभुजगरङ्गकं त्रिकमकं विमर्द्याखिलं शुभेऽहनि विभावयेत् भिषगिदं धिया सप्तधा। द्रवैर्वृषनिशेक्षुजैः कमलमालतीपुष्पजैः पयःकदलिकन्दजैर्मलयजैर्घनाम्बुद्भवैः। वसन्तकुसुमाकरोरसपतिर्द्विवल्लोऽर्पितः समस्तगदहृद्भवेत् किल सिताज्यपानैरयम्" वृद्धयोगतरङ्गिण्यो।

**वसन्तजा** स्त्री वसन्ते जायते जन—ड। माधवीलतायाम् [राजनि०।

**वसन्ततिलक** न० "ज्ञेयं वसन्ततिलकं तभजा जगौ गः" छन्दो० उक्ते चतुर्दशाक्षरपादके छन्दोभेदे

**वसन्तदूत** पु० वसन्तस्य दूत इव। १कोकिले २आम्रवृक्षे ३पञ्चमरागे च विश्वः। ४माधवीलतायाम् ५पाटलीवृक्षे स्त्री मेदि० गौ० ङीष्। ६गणिकारिकायां ७पिकायाञ्च स्त्री ङीष् राजनि०।

**वसन्तद्रु** पु० वसन्तस्य द्रुः। आम्रवृक्षे शब्दर० तत्काले तस्य जायमानमुकुलत्वात् तथात्वम् वसन्तद्रुमादयोऽप्यत्र।

**वसन्तसख** पु० वसन्तस्य सखा अच् समा०। कामदेवे हला०

**वसा** स्त्री वस—अच्। १मांसजाते देहस्थे धातुभेदे मेदसि अमरः। अस्य करणादि ५५८पृ० दृश्यम्। २मांसरोहिण्यां लतायाञ्च राजनि०। [त्रिका०।

**वसाढ्य** पुंस्त्री० वसाभिः आढ्यः। प्रचुरमेदस्के शिशुमारे

**वसि** पु० वस—इन्। वसने उज्ज्वल०। [धरणिः।

**वसिर** न० वस—इरन्। १सामुद्रलवणे २गजपिप्पल्यां च

**वसिष्ठ** पु० वरिष्ठ+पृषो०। ब्रह्मणः मानसपुत्रेषु सप्तर्षिषु मुनिभेदे भा० अनु० अन्याऽपि तन्निरुक्तिर्यथा "वरिष्ठोऽस्मि वसिष्ठोऽस्मि वसे वासगृहेष्वपि। वरिष्ठत्वाच्च वासाच्च वसिष्ठ इति विद्धि माम्"।

**वसु** न० वस—उ। १धने २रत्ने अमरः ३वृद्ध्यौषधे ४श्यामे मेदि०। ५स्वर्णे विश्वः ६जले च सि०कौ०। ७बकवृक्षे ८हृक्के ९वह्नौ १०रश्मौ ११गणदेवताभेदे च पु० अमरः। "धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनलः। प्रत्यूषश्च प्रभासश्च वसवोऽष्टाविति स्मृताः" भा० आ० ६६अ०। १२अष्टसङ्ख्यायाञ्च १३मधुरे १४शुष्के च त्रि० हेमच०। १५दीप्तौ १६वृद्ध्यौषधौ च स्त्री शब्दच०। १७वसुदेवताके धनिष्ठानक्षत्रे पु० ज्यो०त०। १८वैदिराजाख्ये देवभेदे

**वसुक** पु० वसुना सूर्य्यनाम्ना कायति कै—क। १अर्कवृक्षे अमरः। २बकवृक्षे च मेदि०।

**वसुकीट** पु० वसूनि धने कीट इव। याचके हारा०।

**वसुच्छिद्रा** स्त्री वसुसङ्ख्यातानि पुष्पे छिद्राण्यस्याः। महामेदायाम् रत्नमा०। [देवे क्षत्रियभेदे अमरः।

**वसुदेव** पु० वसुना दीव्यति दिव-अच्। श्रीकृष्णजनके यादवे

**वसुदेवभू** पु० वसुदेवात् भवति भू-क्विप्। श्रीकृष्णे वसुदेवसुतादयोऽप्यत्र। [दधाति धा—क वा। पृथिव्याम् अमरः

**वसुधा** स्त्री वसूनि धीयन्तेऽस्यां धा-घञर्थे आधारे क, वसूनि

**वसुधारा** स्त्री वसोर्वैदिराजस्य प्रियार्थं धारा घृतादिसन्ततिः। माङ्गल्येषु वैदिराजवसुद्देशेन दीयमानायां घृतादिधारायाम्। "कुड्यलग्नां वसोर्धारां सप्त वारान् घृतेन तु। कारयेत् पञ्च वारान् वा नातिनीचां न चोच्छ्रिताम्। आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः। षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत्" छन्दोगप०। २जिनशक्तिभेदे हेमच०। ३कुबेरपुर्य्यां शब्दमा०।

**वसुन्धरा** स्त्री वसूनि धारयति धृ-खच् मुम् ह्रस्वश्च। पृथिव्याम् अमरः।

**वसुप्राण** पु० वसुर्दीप्तिः प्राण इव यस्य। अग्नौ शब्दर०।

**वसुमती** स्त्री वसूनि सन्त्यस्यां मतुप्। पृथिव्याम् अमरः।

**वसुरोचिस्** पु० वसुने धनाय रोचते रुच-इसुन्। यज्ञे सि०कौ०

**वसुल** पु० वसु दीप्तिं लाति ला—क। देवे त्रिका०।

**वसुहट्ट** पु० वसूनां दीप्तीनां हट्ट इव। बकवृक्षे जटा०।

**वस्त** वध गतौ च सक० याचने द्वि० चु० उभ० सेट्। वस्तयति ते अववस्तत् त। [अमरः स्त्रियां ङीष्।

**वस्त** पुंस्त्री वस्यते बध्यते यज्ञार्थं वस्त—कर्म्मणि घञ्। छागे

**वस्तक** न० वस्त इव कायति कै—क। कृत्रिमलवणे हेमच०।

**वस्तकर्ण** पु० वस्तस्य कर्णः पत्राकारेऽस्त्यस्य अच्। शालवृक्षे राजनि०।

**वस्तगन्धा** स्त्री वस्तस्येव गन्धोऽस्याः। अजगन्धायाम् राजनि०। [राजनि०।

**वस्तमोदा** स्त्री वस्तस्येव मोदो यस्याः। अजमोदायाम्

**वस्ति** पु० वस्ते आच्छादयति मूत्रम् वस–तिच्। नाभेरधोभागे मूत्राधारे १स्थाने २वासे च ३वस्त्रदशायां पुंस्त्री ब०व० अमरः ( पिचकारी ) औषधदानार्थे द्रव्यभेदे पु० तद्विधिः भावप्र०

"वस्तिर्द्विधानुवासाख्यो निरूहश्च ततः परम्। यः स्नेहैर्दीयते सः स्यादनुवासननामकः। कषायक्षीरतैलैर्यो निरूहः स निगद्यते। वस्तिभिर्दीयते यस्मात्तस्माद्वस्तिरिति स्मृतः।" वस्तिभिः छागादीनां मूत्राशयैः "तत्रानुवासनाख्यो हि वस्तिर्यः सोऽत्र कथ्यते। अनुवासनभेदश्च मात्रावस्तिरुदीरितः। पलद्वयन्तस्य मात्रा तस्मादर्द्धापि वा भवेत्। अनुवास्यस्तु रूक्षः स्यात्तीक्ष्णाग्निः केवलानिली। नानुवास्यस्तु कुष्ठी स्यान्मेही स्थूलस्तथोदरी। नास्थाप्या नानुवास्याश्च जीर्णोन्मादतृडर्दिताः। शोषमूर्च्छारुचिभयश्वासकासक्षयातुराः। नेत्रं कार्य्यं सुवर्णादिधातुभिर्वृक्षवेणुभिः। नलैर्दन्तैर्विषाणाग्रैर्मणिभिर्वा विधीयते।" नेत्रं नाडी तथा चोक्तं विश्वप्रकाशे "नेत्रं मन्थगुणे वस्त्रे तरुमूले विलोचने। नेतृवच्चे च नाड्याञ्च नेता नेतरि भेद्यवत्" इति। "एकवर्षात्तु षड्वर्षं यावन्मानं षडङ्गुलम्। ततो द्वादशकं यावन्मानं स्याद्दशसम्मितम्। ततः परं द्वादशभिरङ्गुलैर्नेत्रदीर्घता। मुद्गच्छिद्रं कलायाभं छिद्रं कोलास्थिसन्निभम्। यथावत्तत्र भवेन्नेत्रं च तस्य गोपुच्छसन्निभम्। गोपुच्छसन्निभं मूले तस्मात् क्रमात् क्रमात् कृशम्"। मुद्गच्छिद्रादिप्रमाणं नेत्रं क्रमेण षड्वर्षो यद्वा द्वादशवर्षो यद्वा तदूर्द्ध्वं वर्षीय ज्ञेयाः। "आतुराङ्गुष्ठमानेन मूले स्थूलं विधीयते। कनिष्ठिकापरीणाहमग्रे च गुटिकामुखम्।" परिणाहोऽत्र स्थौल्यम् "तन्मूले कर्णिके द्वे च कार्य्ये भागाच्चतुर्थकात्।" कर्णिका गवादिकर्णवत् "योजयेत्तत्र वस्तिञ्च बन्धद्वयविधानतः। मृगाजशूकरगवां महिषस्यापि वा भवेत्।" वस्तिरिति शेषः। "मूत्रकोषस्य वस्तिस्तु तदलाभे तु चर्म्मणः। कषायरक्तः सुमृदुर्वस्तिः स्निग्धो दृढो हितः। व्रणवस्तेस्तु नेत्रं स्यात् श्लक्ष्णमष्टाङ्गुलोन्मितम्। मुद्गच्छिद्रं गृध्रपक्षनालिका परिणाहि च। शरीरोपचयं वर्णं बलमारोग्यमायुषः। कुरुते परिवृद्धिञ्च वस्तिः सम्यगुपासितः। दिवा शीते वसन्ते च स्नेहवस्तिः प्रदीयते। ग्रीष्मवर्षाशरत्काले रात्रौ स्यादनुवासनम्। न चातिस्निग्धमशनं भोजयित्वानुवासयेत्। मदं मूर्च्छाञ्च जनयेद्द्विधा स्नेहः प्रयोजितः।" द्विधा भोजने वस्तौ च। "रूक्षं भुक्तवतोऽत्यन्नं बलं वर्णञ्च हापयेत्। युक्तस्नेहमतो जन्तुं भोजयित्वानुवासयेत्"। युक्तस्नेहं यथोचितस्नेहं भोज्यं भोजयित्वेत्यर्थः। "हीनमात्रावुभौ वस्ती नातिकार्य्यकरौ स्मृतौ। अतिमात्रौ तथानाहक्लमातीसारकारकौ" उभौ वस्ती अनुवासननिरूहाख्यौ। "उत्तमा स्यात्पलैः षड्भिर्मध्यमा स्यात्पलैस्त्रिभिः। पलाद्यर्द्धेन हीना स्यादुक्ता मात्रानुवासने। शताह्वासैन्धवाभ्याञ्च देयं स्नेहे च चूर्णकम्। तन्मात्रोत्तममध्यान्त्या षट्चतुर्द्वयमाषकैः। विरेचनात्सप्तरात्रे गते जातबलाय च। भुक्तान्नायानुवास्याय वस्तिर्देयोऽनुवासनः। अथानुवास्यं स्वभ्यक्तमुष्णाम्बुस्वेदितं शनैः। भोजयित्वा यथाशास्त्रं कृतचङ्क्रमणं ततः। उत्सृष्टानिलविण्मूत्रं योजयेत्स्नेहवस्तिना" उष्णाम्बुस्वेदितम् उष्णाम्बुना स्नापितम्। "सुप्तस्य वामपार्श्वेन वामजङ्घाप्रसारिणः। कुञ्चितापरजङ्घस्य नेत्रं स्निग्धे गुदे न्यसेत्। बद्ध्वा वस्तिमुखं सूत्रैर्वामहस्तेन धारयेत्। पीडयेद्दक्षिणेनैव मध्यवेगेन धीरधीः। जृम्भाकासक्षवादींश्च वस्तिकाले न कारयेत्। त्रिंशन्मात्रामितः कालः प्रोक्तो वस्तेस्तु पीडने। ततः प्रणिहिते स्नेहे उत्तानो वाग्यतो भवेत्। स्वजानुनः करावर्त्तं कुर्य्याच्छोटिकया युतः। एषा मात्रा भवेदेका सर्वत्रैवेष निश्चयः। निमिषोन्मेषणं पुंसामङ्गुल्या छोटिकाथ वा। गुर्वक्षरोच्चारणं वा मात्रेयं स्मृता बुधैः। प्रसारितैः सर्वगात्रैर्यथावीर्य्यं प्रसर्पति" यथावीर्य्यं स्नेहादि। "ताडयेत्तलयोरेनं त्रींस्त्रीन्वारान् शनैः शनैः। स्फिजोश्चैव तथा त्रींस्त्रीन् शय्यां चैवोत्क्षिपेत्ततः। स्फिजोश्चैनं करपाणिभ्यां पूर्ववत्ताडयेद्बुधः। शय्याञ्च पादतस्तस्य त्रीन् वारानुत्क्षिपेत्ततः। जाते विधाने तु ततः कुर्य्यान्निद्रां यथासुखम्। सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य तु। उपद्रवं विना शीघ्रं स सम्यगनुवासितः। जीर्णान्नमथ सायाह्ने स्नेहे प्रत्यागते पुनः। लघ्वन्नं भोजयेत्कामं दीप्ताग्निस्तु नरो यदि। अनुवासिताय दातव्यमितरेऽह्नि सुखोदकम्। धान्यशुण्ठीकषायं वा स्नेहव्यापत्तिनाशनम्"। सुखोदकमुष्णोदकं व्यापत्तिर्व्याधिः। "अनेन विधिना षड्वा सप्त चाष्टौ नवापि वा। विधेया वस्तयस्तेषामन्ते चैव निरूहणम्। दत्तस्तु प्रथमो वस्तिः स्नेहयेद्वस्तिवङ्क्षणौ। सम्यग्दत्तो द्वितीयस्तु मू-

भृगोः शशिदिने, क्लेशः सदा भूमिजे, वस्त्राणां बहुता बुधे, सुरगुरौ विद्यागमः सम्पदः। नानाभोगसुतप्रमोद शयनं विद्याङ्गना भार्गवे, शौरौ स्युः खलु रोगशोककलहा वस्त्रे धृते नूतने" कर्मलोचनम्। वस्त्र क्षारसंयोग निषिद्धदिनानि यथा। "नन्दभञ्चषष्ठीषु द्वादश्यां श्राद्धवासरे। वस्त्राणां क्षारसंयोगात्दहत्यासप्तमं कुलम्।" श्रा०त०।

परकीयवस्त्रधारणनिषेधो यथा "आसनं वसनं शय्या जाया-पत्यं कमण्डलुः। आत्मनः शुचिरेतानि न परेषां कदाचन"। ईषद्धौतादिवस्त्रस्य पश्चिमाग्रादिप्रसारितवस्त्रस्य च अधौतत्वं यथा "ईषद्धौतं स्त्रिया धौतं यद्धौतं रज-कस्य तु। अधौतं तद्विजानीह्यशाद्दक्षिणपश्चिमे।" कर्मलोचनम्। शङ्खलिखितौ: "प्रागग्रमुदग्रं वा धौतं वस्त्रं प्रसारयेत्। पश्चिमाग्रं दक्षिणाग्रं पुनः प्रक्षा-लनात् शुचि" अन्नाग्रं दशा इत्यर्थः। प्रचेताः "स्वयं धौतेन कर्त्तव्या क्रिया धर्म्या विपश्चिता। न च रजक-धौतेन नाधौतेन भवेत् क्वचित्। पुत्रमित्रकलत्रेण स्वजातिबान्धवेन च। दासवर्गेण यद्धौतं तत् पवित्र-मिति स्थितिः"। स्नानोत्तरं उष्णीषवस्त्रस्य धार्य्यत्वं यथा उष्णीषधारणं शिरोजलापनयनाय। तेन स्नानानन्तरं धार्य्यम्। तथा च महाभारतम् "आप्लुत-स्याधिवासेन जलेन च सुगन्धिना। राजहंसनिभं प्राप्य उष्णीषं शिथिलार्पितम्। जलक्षयनिमित्तं वै वेष्टया-मास मूर्द्धनि"। शिथिलार्पितम् अगाढ़बद्धम्। निषिद्ध-वस्त्राणि यथा भारते "न स्यूतेन न दग्धेन पार-क्येण विशेषतः। मूषिकोत्कीर्णजीर्णेन कर्म कुर्य्याद्विच-क्षणः।" नारसिंहे "न रक्तमुल्वणं वासो न नीलञ्च प्रशस्यते। मलाक्तञ्च दशाहीनं वर्जयेदम्बरं बुधः। उल्वणम् उत्कटरक्तविशेषम्। आचाररत्ने उशना "दशाहीनेन वस्त्रेण कुर्य्यात् कर्माण्यभावतः"। विष्णु-धर्मोत्तरे "वस्त्रं नान्यधृतं धार्य्यं न रक्तं मलिनं तथा। जीर्णं वाऽपदशञ्चैव श्वेतं धार्य्यं प्रयत्नतः। उपानहं नान्यधृतां ब्रह्मसूत्रञ्च धारयेत्। न जीर्णमलव-द्वासा भवेच्च विभवे सति।" योगियाज्ञवल्क्यः "स्नात्वैवं वाससी धौते अक्लिन्ने परिधाय च। प्रक्षा-ल्योरू मृदद्भिश्च हस्तौ प्रक्षालयेत्ततः। अभावे धौत-वस्त्राणां शाणक्षौमाविकानि च। कुतपो योगपट्टं वा द्विवासा येन वा भवेत्। अधौतेन च वस्त्रेण नित्यनैमि-त्तिकीं क्रियाम्। कुर्वन् फलं न चाप्नोति दत्तं भवति निष्फलम्"। कुतपो नेपालकम्बलः। तत्रापवादः "राङ्कवे पट्टसूत्रे च सूचीविद्धं न दुष्यति" विधानपा० "नीलीरक्तं न दुष्यति" इति मिता०पाठः। तर्पणात् पूर्वं स्नानवस्त्र निष्पीड़ने निषेधो यथा "निष्पीड़यति यः पूर्वं स्नानवस्त्रन्तु तर्पणात्। निराशास्तस्य गच्छन्ति देवाः पितृगणैः सह"। जावालिः "स्नानं कृत्वार्द्रवासास्तु विण्मूत्रं कुरुते यदि। प्राणायामत्रयं कृत्वा पुनः स्नानेन शुध्यति। नार्द्रमेकञ्च वसनं परिदध्यात् कथञ्चन"। हारीतः "आर्द्रञ्च समवाताहतमपि शुद्धमिति"।

संक्रान्त्यादौ वस्त्रनिष्पीड़ननिषेधो यथा षट्त्रिंशन्मत-निगमौ "संक्रान्त्यां पञ्चदश्याञ्च द्वादश्यां श्राद्धवासरे। वस्त्रं न पीड़येत्तत्र न च क्षारेण योजयेत्" ति०त०।

**वस्त्रकुट्टिम** न० वस्त्रनिर्मितं कुट्टिमं यत्र। १वस्त्रगृहे (ताम्बु) २छत्रे त्रिका०। [निर्मिते गृहे त्रिका०।

**वस्त्रगृह** न० वस्त्रनिर्मितं गृहम् शब्द०। (ताम्बु) वस्त्र-

**वस्त्रग्रन्थि** पु० ६त० नीव्याम् त्रिका०।

**वस्त्रपुत्रिका** स्त्री वस्त्रनिर्मिता पुत्रिका। वस्त्रनिर्मितपुत्त-लिकायाम् शब्दमा०। [२शाकरञ्जकवृक्षे च राजनि०।

**वस्त्रभूषणा** स्त्री वस्त्रस्य भूषणं यस्याः ५ब०। १मञ्जिष्ठायाम्

**वस्त्रयोनि** स्त्री ६त०। त्वक्फलकृमिरोमादौ अमरः।

**वस्त्ररञ्जन** पु० वस्त्रं रञ्जयति रन्ज-णिच्-ल्यु। कुसुम्भे राजनि०।

**वस्न** न० वस-नन्। १वेतने २मूल्ये ३वस्त्रे ४द्रव्ये च विश्वः ५धने ६मृत्यौ च अमरटीकायां रमानाथः। मूल्ये पु० अमरः।

**वस्नसा** स्त्री वस्नं स्यति सो-क। स्नायौ अमरः।

**वस्वौकसारा** स्त्री वसूनामोकसां सारो यत्र। १इन्द्रनगर्य्याम् २इन्द्रनद्यां ३कुबेरपुर्य्यां ४कुबेरनद्याञ्च हेम०।

**वह** दीप्तौ चु० उभ० सक० सेट् इदित्। वंहयति ते अवं-हिष्ट।

**वह** प्रापणे भ्वा० उभ० द्विक० यजा० अनिट्। वहति ते अवाक्षीत् अवोढ़ उवाह ऊहे ऊढः। अस्य प्रधानकर्म-ण्येव लकारादयः।

**वह** पु० उह्यतेऽनेन वह-अच्। १वृषस्कन्धदेशे अमरः। वह-कर्त्तरि अच। २घोटके ३वायौ ४पथि त्रिका० ५नद्यां स्त्री हेमच०।

**वहत** पु० वह-अतच्। १वृषे २पान्थे च उणादिकोषः

**वहति** पु॰ वह–अति । १वायौ उणा॰ । २गवि ३सचिवे च मेदि॰ । [४गमने च ।

**वहन** न॰ वह-भावे ल्युट् । १पुरभेदे त्रिका॰ २प्रापणे ।

**वहन्त** पु॰ वह–झ । वायौ सि॰कौ॰ २बाले उणा॰ ।

**वहल** पु॰ वह–कलन् । १पोते हारा॰ २दृढे त्रि॰ हेम॰ ।

**वहलगन्ध** न॰ वहलो दृढो गन्धो यस्य । शम्बरचन्दने राजनि॰ ।

**वहलचक्षुस्** पु॰वहलानि चक्षुषीव पुष्पाण्यस्य । मेषशृङ्ग्यां (गाड़रशिङ्गा) रत्नमा॰ । [राजनि॰ ।

**वहलत्वच** पु॰ वहला दृढा त्वचा यस्य । श्वेतलोध्रे

**वहला** स्त्री वहलानि पुष्पादीनि सन्त्यस्य अर्श आद्यच् । १शतपुष्पायां राजनि॰ । २स्थूलैलायां भावप्र॰।

**वहित्र** न॰ वह–इत्र । १पोते जलयाने त्रिका॰ । स्वार्थे क । वहित्रकाप्यत्रार्थे ।

**वहिरङ्ग** न॰ वहिः प्रकृतेर्वाह्यमङ्गं यस्य । व्याकरणोक्ते प्रत्ययादिनिमित्तके प्रकृत्यवयवादिकार्य्ये । "असिद्धं वहिरङ्गमन्तरङ्गे" व्या॰ परिभाषा ।

**वहिरिन्द्रिय** न॰ वहिर्देहाद्वाह्यस्य पदार्थस्य ग्राहकमिन्द्रियम् । शब्दादिवाह्यविषयग्राहकेषु श्रोत्रादिषु ।

**वहिर्द्वार** न॰ वहिःस्थं द्वारम् । तोरणे अमरः ।

**वहिर्मुख** त्रि॰ वहिः वाह्यविषये मुखं प्रवणता यस्य । वाह्यविषयासक्तमनस्के विषयासक्ते १जने २विमुखे च ।

**वहिस्** अव्य॰ वह–इसुन् । वाह्ये अमरः ।

**वहेडक** पु॰वह–अच् वहः एडक इव इहत् काण्डो यस्य । विभीतकवृक्षे (वहेड़ा) राजनि॰ ।

**वह्नि** पु॰ वह–नि । १अग्नौ २चित्रकवृक्षे अमरः ३भल्लातके ४निम्बूके राजनि॰ । तन्त्रोक्ते ५रकारे च । "वर्गाद्यं वह्निसंस्थम्" इति श्यामास्तोत्रम् । वह्निभेदादिकं यथा

"जृम्भको दीपकश्चैव विभ्रमभ्रमशोभनाः । आवसथ्याहवनीयौ दक्षिणाग्निस्तथैव च । अन्वाहार्य्यो गार्हपत्य इत्येते दश वह्नयः" । अन्यैरन्यथोक्तानि यथा "भ्राजको रञ्जकश्चैव क्लेदकः स्नेहकस्तथा । धारको बन्धकश्चैव द्रावकाख्यश्च सप्तमः । व्यापकः पावकश्चैव श्लेष्मको दशमः स्मृतः" । शरीरस्थवह्नेः नामानि यथा "वह्नयो दोषदुष्येषु संलीना दश देहिनः" । दोषदुष्याश्च यथा "वातपित्तकफा दोषाः दुष्याः स्युः सप्तधातवः" शा॰ ति॰ । "मुख्याग्नयो यथा "गार्हपत्यो दक्षिणाग्निस्तथैवाहवनीयकः । एतेऽग्नयस्त्रयो मुख्याः शेषाश्चोपसदस्त्रयः" वह्निपु॰ । तत्र निषिद्धकर्माणि यथा "नाशुद्धोऽग्निं परिचरेत् न देवान् कीर्त्तयेदृषीन् । न चाग्निं लङ्घयेद्धीमान् नोपदध्यादधः क्वचित् । न चैनं पादतः कुर्य्यात् मुखेन न धमेद्बुधः । अग्नौ न निःक्षिपेदग्निं नाद्भिः प्रशमयेत्तथा । न वह्निं मुखनिश्वासैर्ज्वालयेन्नाशुचिर्बुधः । स्वमग्निं नैव हस्तेन स्पृशेन्नाप्सु चिरं वसेत् । नापक्षिपेन्नोपधमेत् न सूर्पेण च पाणिना । मुखेनाग्निं समुन्धीत मुखादग्निरजायत" कूर्मपु॰१५अ॰ । अग्निवैकृत्यं तस्य शान्तिश्च यथा "अनग्निर्दीप्यते यत्र राष्ट्रे यस्य निरिन्धनः । न दीप्यते चेन्धनवान् स राष्ट्रः पीड्यते नृपैः । प्रज्वलेदप्सु मांसं वा तथार्द्रञ्चापि किञ्चन । प्रासाद तोरणद्वारं नृपवेश्म सुरालयम् । एतानि यत्र दह्यन्ते तत्र राजभयं भवेत् । विद्युता वा प्रदह्यन्ते तत्रापि नृपतेर्भयम् । धूमवानग्निजो यत्र तत्र विद्यान्महद्भयम् । विनाग्निं विस्फुलिङ्गाश्च दृश्यन्ते यत्र कुत्रचित् । त्रिरात्रोपोषितस्तत्र पुरोधाः सुसमाहितः । समिद्भिः क्षीरवृक्षाणां सर्षपैस्तु घृतेन च । दद्यात् सुवर्णञ्च तथा द्विजेभ्यो गाश्चैव वस्त्राणि तथा भुवञ्च । एवं कृते पापमुपैति नाशं यदग्निवैकृत्यभवं द्विजेन्द्र" । वह्निपु॰१०५अ॰। ६तद्दैवताके कृत्तिकानक्षत्रे ज्योतिषम् ।

**वह्निकरी** स्त्री वह्निं देहस्थवह्निं करोति उद्दीपयति कृ–ट ङीप् । १धातकीवृक्षे (धाइफुल) शब्द॰ । २वह्न्युद्दीपके त्रि॰ । [दाहागुरुणि राजनि॰ ।

**वह्निकाष्ठ** न॰ वह्नेर्दीप्तदाहायानुकूलं काष्ठम् शा॰ त॰ ।

**वह्निगन्ध** पु॰ वह्नौ दाहकाले गन्धो यस्य । यक्षधूपे शब्दच॰

**वह्निगर्भ** पु॰ वह्निर्गर्भे यस्य । १वंशे २शमीवृक्षे स्त्री शब्दर॰

**वह्निज्वाला** स्त्री वह्नेर्ज्वालेव पीडाकारकत्वात् । १धातकीवृक्षे राजनि॰ ६त॰ । २वह्निशिखायाम् ।

**वह्निदीपक** पु॰ वह्निं देहस्थवह्निं सेवनाद्दीपयति दीप–णिच्-ण्वुल् वह्निरिव दीप्यति दीप–ण्वुल् वा । १कुसुम्भे शब्दर॰ । २अग्न्युद्दीपके त्रि॰ । ३अजमोदायाम् स्त्री राजनि॰ । [ङीष् । जटामांस्याम् रत्नमा॰ ।

**वह्निनी** स्त्री वह्निं तत्कान्तिं नयति नी–ड गौरा॰ ।

**वह्निपुष्पी** स्त्री वह्निरिव तापकं पुष्पं यस्याः ङीप् । धातकीवृक्षे राजनि॰ ।

**वह्निभोग्य** न॰ ६त॰ । घृते शब्दच॰ ।

**वह्निमन्थ** पु० वह्नये वह्निजननाय मथ्यतेऽसौ मन्थ—कर्मणि घञ्। १गणिकारीवृक्षे जटा०। हेम०। २वह्नेर्मन्थने राजनि०। (तत्रैव न०।

**वह्निमित्र** पु० वह्निर्मित्रं यस्य। १वायौ शब्दच० हेम०।

**वह्निरेतस्** पु० वह्नौ निषिक्तं रेतो येन। १शिवे वह्नौ हि निषिक्तात् शिववीर्य्यात् गङ्गादिसंक्रमेण कार्त्तिकेयोत्पत्तिः पुराणप्रसिद्धम्। हेम०।२काञ्चने च। [राजनि०।

**वह्निलोहक** न० वह्नेः प्रियं लोहं धातुः स्वार्थे क। कांस्ये

**वह्निवधू** स्त्री हेम०।१अग्निभार्य्यायां स्वाहायाम् २स्वाहात्मके मन्त्रे च। वह्निजायादयोऽप्यत्र।

**वह्निवर्ण** न० वह्नेरिव वर्णोऽस्य। रक्तोत्पले शब्दच०। [त्रिका०

**वह्निवल्लभ** पु० वह्नेर्वल्लभ उद्दीपकत्वात्। सर्जरसे (धुना)

**वह्निवीज** न० वह्नेर्देहस्थवह्नेर्बीजमिव उद्दीपकत्वात्। १जीरके हेम०। वह्निदेवताके तन्त्रोक्ते २रकारे च। ३निम्बूके राजनि० ४ हेमच०।

**वह्निशिख** न० वह्नेरिव रक्तत्वात् शिखाऽस्य। १कुङ्कुमे अमरः। २कलिकार्य्यां ३कलिकारीवृक्षे ४धातक्यांश्च स्त्री राजनि० हेम०। ५अग्निशिखायां स्त्री। [राजनि०।

**वह्निसख** पु० हेम०। १वायौ। देहस्थवह्नेरुद्दीपके २जीरके

**वह्य** न० वह—यत्। १शकटे २वाहनमात्रे च हेमच०। ३मुनिपत्न्यां स्त्री उज्ज्वा०।

**वा** उत्थाने अक० गतौ सेवने च सक० चुरा० उभ० सेट्। वापयति ते अवीवपत् त। [वाति अवासीत्।

**वा** गमने हिंसने (सुचने) च अदा० पर० सक० अनिट्।

**वा** अव्य० वा—क्वा। १विकल्पे २सादृश्ये ३अवधारणे ४समुच्चये अमरः। एष्वर्थेषु गणरत्ने उदाहृतं यथा (विकल्पे) यवैर्वा व्रीहिभिर्वा यजेत। (उपमाने) शिष्टो वाधो मण्डलं गोर्वा रसः” इन्द्रे (अवधारणे) “सा वा शम्भोस्तदीया वा मूर्त्तिर्जलमयी मम”न तृतीयेत्यर्थः। (समुच्चये) वायुर्वा दहनो वा ।५वितर्के ६पादपूरणे च मेदि० [जटा०

**वांशिक** पु० वंशो तद्वादनं शिल्पमस्य ठक्। वंशीवादनशीले

**वांशी** स्त्री वंशे भवः अण् ङीप्। वंशरोचनायाम् राजनि०

**वाक** पु० वच—घञ्। १वचने “नमोवाकं प्रशास्महे” उत्तररामचरितम्। पृषो० सान्तत्वम्। ग्रन्थभेदे “वाकोवाक्येतिहासेत्यादि” छान्दोग्यम्। “वाकोवाक्यम् उक्तिप्रत्युक्तिरूपम्” भा०। वकस्येदम् तेषां समूहो वा अण्। ३वकसम्बन्धिनि त्रि०। ४वकसंघे न० अमरः।

**वाकुची** स्त्री वाति क्विप् वाः कुच—सङ्कोचे क गौरा०ङीष् कर्म०। (हाकुच) १ओषधिभेदे २सोमराज्यां राजनि०।

**वाक्कीर** पु० वाचा कौतुकवाचा कीर इव प्रियत्वात्। श्यालके शब्दर०।

**वाक्छल** न० गौत० सूत्रोक्ते छलभेदे “अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पनम् वाक्छलम्” गौ० सू०। शक्त्या एकार्थशाब्दबोधतात्पर्य्यकशब्दस्य शक्त्याऽर्थान्तरबोधतात्पर्य्यकत्वकल्पना वाक्छलम्” वृत्तिः। यथा नेपालादागतोऽयं नवकम्बलवत्त्वात् इत्युक्ते कुतोऽस्य नवसंख्यकाः कम्बला इत्युक्तिः।

**वाक्पति** पु० हेम०। १वृहस्पतौ अमरः २पुष्यनक्षत्रे च वाचः पतिरिव। ३निर्दोषोद्भूतवचनयुक्ते राजमुकुटः।

**वाक्पथ** पु० वाचः पन्थाः विषयः अच्समा०। वाक्यविषये

**वाक्पारुष्य** न० वाचा कृतं पारुष्यम्। १वाक्यकृते पारुष्ये तद्विषयके २विवादभेदे च। तद्विवृतिः वीरमि०उक्ता यथा “तस्य च स्वरूपमाह नारदः “देशजातिकुलादीनामाक्रोशं न्यङ्गसंयुतम्। यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते” इति। आक्रोशः आक्षेपः भर्त्सनमिति यावत् कलहप्रियाः गौडा इति देशाक्रोशः। अत्यन्तलोलुपा ब्राह्मणा इति जात्याक्रोशः। “क्रूरचरिता वैश्वामित्रा इति कुलाक्षेपः। न्यङ्गं निकृष्टाङ्गमवद्यस्त तदुभययुक्तं यदुद्वेगजननार्थं वाक्यं तद्वाक्पारुष्यमित्यर्थः। तच्च त्रैविध्यमाह स एव “निष्ठुराश्लीलतीव्रत्वादपि तत् त्रिविधं स्मृतम्। गौरवानुक्रमात्तस्य दण्डोऽपि स्यात् क्रमाद्गुरुरिति” निष्ठुरादीनां स्वरूपमाह स एव “साक्षेपनिष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंयुतम्। पतनीयैरुपाक्रोशैस्तीव्रमाहुर्मनीषिणः” इति। धिङ्मूर्ख! जाल्म! इत्यादि साक्षेपभाषणं निष्ठुरम्। न्यङ्गसंयुतं अवद्याङ्गभगिन्यादिगमनसंयुतम् अश्लीलम्। पतनीयैः सुरापानादिभिरुपाक्रोशैस्तीव्रं वाक्पारुष्यमित्यर्थः। कात्यायनोऽपि “यत्त्वसत्यैर्व्यतिरेकैः परमाक्षिपति क्वचित्। अभूतैर्वाथ भूतैर्वा निष्ठुरा वाक् स्मृता तु सा। न्यग्भावकरणं वाचा क्रोधात्तु कुरुते यदा। वृत्तदेशकुलानान्तु अश्लीला सा बुधैः स्मृता। महापातकयोक्त्री च रागद्वेषकरी च या। जातिभ्रंशकरी वाथ तीव्रा सा प्रथिता तु वागिति।” कल्पतरौ न्यग्भावमूरणमिति पठित्वा निकृष्टाङ्गप्रकाशनेन तिरस्करणमिति व्याख्यातम्। न्यग्भावकरणमिति तु माधवादिसंमतः पाठः। प्रथममध्यमोत्तमभेदेन त्रैविध्यमाह वृहस्पतिः “देश

ग्रामकुलादीनां क्षेपः पापेन योजनम् । द्रव्यं विना तु प्रथमं वाक्पारुष्यं तदुच्यते । भगिनीमातृसम्बन्धमुपपातकशंसनम् । पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः । अभक्ष्यापेयकथनं महापातकदूषणम् । पारुष्यमुत्तमं प्रोक्तं तीव्रं मर्माभिघट्टनमिति ।" द्रव्यं विनेत्यत्र द्रव्यशब्दोऽभिधेयपरः । तेनोच्यमानार्थव्यतिरेकेणैव विधमभिधानं वाक्पारुष्यमित्यर्थः इति कल्पतरौ । द्रव्यं विना द्रव्यवैशिष्ट्यं विनेति मदनरत्ने । अभिघट्टनं उत्पाटनम् । निष्ठुराक्रोशे दण्डमाह याज्ञवल्क्यः "सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम् । क्षेपं करोति चेद्दण्ड्यः पणानर्द्धत्रयोदशानिति । अन्यथास्तोत्रैर्निन्दास्तुतिः । न्यूनाङ्गाः करादिरहिताः । न्यूनेन्द्रियाः नेत्रादिरहिताः । रोगिणः कुष्ठ्यादयः अर्द्धत्रयोदशान् अर्द्धाधिकद्वादशपणानित्यर्थः । एतत् सवर्णविषयम् । अतएव वृहस्पतिः "समजातिगुणानान्तु वाक्पारुष्ये परस्परम् । विनयोऽभिहितः शास्त्रे पणा अर्द्धत्रयोदशाः" इति । "विष्णुरपि "सवर्णाक्रोशे द्वादश पणान्दण्ड्य इति" । परस्परमिति शेषः । मनुनारदावपि "समवर्णे द्विजातीनां द्वादशैव व्यतिक्रमे । वादेष्ववचनीयेषु तदेव द्विगुणं भवेदिति" । शङ्खलिखितावपि "समवर्णव्यतिक्रमे द्वादशपणा यथाक्रमविशिष्टाक्षेपेषु विशिष्टस्य चतुर्विंशतिरविशिष्टस्यातिक्रमे विशिष्टस्य ततोऽर्द्धमिति । अत्र द्वादशार्द्धद्वादशयोरुत्कृष्टापकृष्टत्वेन व्यवस्था । कात्यायनोऽपि" "यो गुणान् कीर्त्तयेत् क्रोधान्निर्गुणे वा गुणवताम् । अव्यक्तानिग्रहोऽजी च वाग्दुष्टं तन्नरं विदुरिति" "नारदोऽपि "दुष्टस्यैव तु यो दोषान् कीर्त्तयेत् क्रोधकारणात् । अन्यायदेशवादी च वाग्दुष्टं तन्नरं विदुरिति" "अत्र क्रोधकारणादित्यनेन दुष्टपरित्यागार्थं दोषकीर्त्तने न दोष इति सूचितम् । अतएवोक्तं कात्यायनेन "यत्र स्यात्परिहारार्थं पतितस्तेन कीर्त्तितः । वचनात्तत्र न स्यात्तु दोषो यत्र विभावयेदिति" "वचनात् दोषकीर्त्तनात् । यत्राभियोगादौ पातित्यादिकं साधयेत्तत्रापि वचनाद्दोषो न स्यादिति यत्र विभावयेदित्यस्यार्थ उक्तः स्मृतिचन्द्रिकायाम् । अत्रापि दण्डपारुष्यन्यायेन युगपत्प्रवृत्तयोर्दण्डतुल्यत्वं अयुगपत्प्रवृत्तयोः पूर्वप्रवृत्तस्य दण्डाधिक्यमिति द्रष्टव्यम् । जातिगुणकृते विशेषे दण्डवैषम्यमाह वृहस्पतिः "समानयोः समो दण्डो न्यूनस्य द्विगुणोदमः । "उत्तमस्याधिकः प्रोक्तो वाक्पारुष्ये परस्परमिति" । हीनस्योत्तमाक्षेपे द्विगुणः उत्तमस्य हीनाक्षेपेऽर्द्धपरिमितो दण्ड इत्यर्थः । याज्ञवल्क्योऽपि "अर्द्धोऽधमेषु द्विगुणः परस्त्रीषूत्तमेषु च । दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैरिति" "अर्द्धः सार्द्धद्वादशपणात्मक इत्यर्थः पूर्ववाक्ये "पञ्चविंशतिको दम" इति पञ्चविंशतेः प्रकृतत्वात् । वर्णा ब्राह्मणादयः । जातयो मूर्द्धावसिक्तादयः । ते च ते उत्तराधराश्च वर्णजात्युत्तराधरास्तैरन्योन्याक्षेपे क्रियमाणे दण्डस्य प्रणयनमूहनीयं ज्ञातव्यम् । उत्तराधरभावमालोच्य दण्डः कल्पनीय इत्यर्थः । तमेव कल्पनीयं दण्डं प्रदर्शयति मनुः "शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति । वैश्योऽध्यर्द्धशतं द्वे वा शूद्रस्तु बधमर्हति । विप्रः पञ्चाशतं दण्ड्यः क्षत्रियस्याभिशंसने । वैश्ये स्यादर्द्धपञ्चाशच्छूद्रे द्वादशको दम इति ।" वृहस्पतिरपि क्षिपन् विप्रादिकं दद्यात् पञ्चाशत्पणिकं दममिति" । शङ्खलिखितावपि "आक्रोशे ब्राह्मणस्य क्षत्रियः पणशतं दण्ड्यः, शतार्द्धं वैश्यस्य पञ्चविंशतिं शूद्रस्येति" । वृहस्पतिरपि । "विप्रः शतार्द्धं दण्ड्यस्तु क्षत्रियस्याभिशंसने । विशस्तथार्द्धं पञ्चाशच्छूद्रस्यार्द्धत्रयोदश । सच्छूद्रस्याप्युदितो विनयोऽनपराधिनः । गुणहीनस्य पारुष्ये ब्राह्मणो नापराप्नुयात् । वैश्यस्तु क्षत्रियाक्रोशे दण्डनीयः शतम्भवेत् । तदर्द्धं क्षत्रियो वैश्यं क्षिपन् विनयमर्हति । शूद्राक्रोशे क्षत्रियस्य पञ्चविंशतिको दमः । वैश्यस्य चैतद्द्विगुणः शास्त्रविद्भिरुदाहृतः । वैश्यमाक्षारयन् शूद्रोदाप्यः स्यात् प्रथमं दमम् । क्षत्रियं मध्यमञ्चैव विप्रस्तूत्तमसाहसमिति ।" जिह्वाच्छेदनरूपोऽप्युत्तमसाहसो द्रष्टव्यः । तथा च स एव "धर्मोपदेशकर्त्ता च वेदोदाहरणान्वितः । आक्रोशकस्तु विप्राणां जिह्वाच्छेदेन दण्ड्यते" इति । शूद्र इत्यनुषङ्गः । आपस्तम्बोऽपि "जिह्वाछेदनं शूद्रस्यार्य्यं धार्मिकमाक्रोशतः" इति । गौतमोऽपि "शूद्रो द्विजातीनभिसन्धायाभिहत्य च वाग्दण्डपारुष्याभ्यामङ्गमोच्यो येनोपहन्यादिति" । अभिसन्धाय बुद्धिपूर्वं वाचातिक्रम्य अभिहत्य उपेत्य दण्डेन ताड़यित्वा अङ्गमोच्यो येनाङ्गेनाभिहन्यते तेन वियोजनीय इत्यर्थः । गुर्वाद्याक्रोशे त्वाहतुः शङ्खलिखितौ "तथाऽधिक्षतान् विप्रान् गुरूंश्च निर्वासनमुण्डनं ताड़नं वा गोमयानुलेपनं

खरारोहणं दर्पहरणं वा दण्डो वेति । दण्डः कार्षापणशतरूपः । अतएव विष्णुः "गुरूनाचारयन् कार्षापणशतमिति" । पुत्रादिभिर्मात्रादीनामाक्रोशे दण्डमाह मनुः "मातरं पितरं जायां भ्रातरं श्वशुरं गुरुम् । आचारयन् शतन्दाप्यः पन्थानञ्चाददद्गुरोरिति" । भ्रातरं ज्येष्ठभ्रातरम् । एतच्च वाक्पारुष्ये मात्रादिषु निरपराधायां जायायामिति मिताक्षरायामभाणि । श्मश्र्वाद्यधिक्षेपे दण्डमाह बृहस्पतिः "क्षिपन् श्मश्र्वादिकं दद्यात् पञ्चाशत्पणिकं दममिति ।" बाह्वादिच्छेदन निष्ठुरभाषाभिभाषणे दण्डमाह याज्ञवल्क्यः "बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः । शत्यस्तदर्द्धिकः पादनासाकर्णकरादिष्विति ।" बाह्वादिविनाशे वाचिके करिष्यामीति वाचा प्रतिपादिते शत्यः शतपरिमितो दण्डः । पादादिभङ्गं करिष्यामीत्याक्षेपे पञ्चाशत्परिमितो दण्ड इत्यर्थः । एवंवादिनोऽशक्तस्य दमप्रथा दण्डनीया इत्याह स एव "अशक्तस्तु वदन्नेवं दण्डनीयः पणान्दशेति ।" यः पुनः शक्तोऽशक्तस्य बाह्वादिभङ्गाक्षेपं करोति न केवलं स दण्ड्यः किन्तु अशक्तक्षेमार्थं प्रतिभुवमपि दापनीय इत्याह स एव "तथा शक्तः प्रतिभुवन्दाप्यः क्षेमाय तस्य त्विति" । अश्लीलभाषणे दण्डमाह स एव "अभिगन्तास्मि भगिनीं मातरं वा तवेति ह । शपन्तन्दापयेद्राजा पञ्चविंशतिकं दममिति ।" तीव्राक्रोशे दण्डमाह स एव "पतनीय कृते क्षेपे दण्डमध्यमसाहसम् । उपपातकयुक्ते तु दाप्यः प्रथमसाहसमिति ।" पतनीयैः पातित्यहेतुभिर्ब्रह्महत्यादिभिः । उपपातकानि गोवधादीनि । मनुरपि "ब्राह्मणक्षत्रियाभ्यान्तु दण्डः कार्यो विजानता । ब्राह्मणे साहसः पूर्वः क्षत्रिये त्वेव मध्यमः । विट्शूद्रयोस्त्वेवमेव स्वजातिं प्रति तत्त्वतः । छेदवर्जं प्रणयनं दण्डस्येति विनिश्चयः । पापोपपातवक्तारो महापातकशंसकाः । आद्यमध्योत्तमान्दण्डान्दद्युस्ते ते यथाक्रममिति ।" विष्णुरपि "परस्परपतनीये क्षेपे कृते तूत्तमसाहसं उपपातकयुक्तन्तु मध्यमम् त्रैविद्यवृद्धानां क्षेपे जातिपूगानाञ्च ग्रामदेशयोः प्रथममिति" । देशाद्याक्रोशे दण्डमाह बृहस्पतिः "देशादिकं क्षिपन्दाप्यः पञ्चार्द्धन्त्रयोदश । पापेन योजयन् दर्पाद्दाप्यः प्रथमसाहसम् । एष दण्डः समाख्यातः पुरुषापेक्षया मया । समन्यूनाधिकत्वेन कल्पनीयो मनीषिभिरिति ।" याज्ञवल्क्योऽपि "मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोरिति ।" राज्ञ आक्रोशे दण्डमाह नारदः "अवक्रुश्य च राजानं वर्त्मनि स्वे व्यवस्थितम् । जिह्वाच्छेदाद्भवेच्छुद्धिः सर्वस्वहरणेन वेति ।" याज्ञवल्क्योऽपि "राज्ञोऽनिष्टप्रवक्तारन्तस्यैवाक्रोशकन्तथा । तन्मन्त्रस्य च भेत्तारञ्छित्त्वा जिह्वाम्प्रवासयेदिति ।" सत्यदोषाभिधानेऽपि वाक्पारुष्यदण्डोऽस्त्येव तथा च नारदः "पतितं पतितेत्युक्त्वा तथा चौरेति वा पुनः । वचनात्तुल्यदोषः स्यान्मिथ्याद्विर्दोषतां व्रजेदिति ।" मनुनारदावपि "काणं वाप्यथ वा खञ्जमन्यं वापि तथाविधम् । तथ्येनापि ब्रुवन्दाप्यो दण्डङ्कार्षापणावरमिति ।" विष्णुरपि "काणखञ्जादीनान्तथ्यवाच्यपि कार्षापणद्वयमिति ।" एतच्च दुष्टत्वविषयमिति माधवीये विद्यारण्यश्रीपादैरभ्यधायि । मिथ्यावदनशीलानां दण्डमाह कात्यायनः "अनृतास्थानशीलानाञ्जिह्वाच्छेदो विधीयनमिति ।" हारीतोऽपि "मिथ्याभाषिणां मेलकानाञ्च राजा जिह्वाच्छिन्द्याद्दण्डयेद्वेति" मेलको भक्षकः । कस्यचिद्वाक्पारुष्यकृतोऽपि दण्डमाहोशनाः "मोहात् प्रमादात्संहर्षात् प्रीत्या वोक्तं मयेति यः । नाहमेवं पुनर्वक्ष्ये दण्डार्द्धन्तस्य कल्पयेदिति ।"

**वाक्य** न० वच–ण्यत् चस्य कः । "वाक्यं स्याद् योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः" इत्युक्ते १पदसंघे सा०द० । २स्वार्थबोधसमाप्ते पदसमुदाये वैयाकरणाः । [अवाङ्गीव ।

**वाक्ष** स्पृहायां भ्वा० पर० सक० सेट् इदित् । वाङ्क्षति

**वागीश** पु० वाचामीशः । १बृहस्पतौ "वागीशाद्याः सुमनस" इति न्यायमाला । २सरस्वत्यां स्त्री "वागीशा हृदये यस्य" इति भाग०टीकोपक्रमे श्रीधरः । ३ब्रह्मणि च

**वागीश्वर** पु० ६त० । १बृहस्पतौ २गुरौ च ३तत्पत्न्यां स्त्री ङीप् "वागीश्वरीसुतस्नातां फुल्लेन्दीवरलोचनाम् । वागीश्वरेण संयुक्ताम्" इति तन्त्रम् । ४सरस्वत्यां स्त्री ङीप् ५मञ्जुघोषे पु० त्रिका० । [सोमराजश्च अमरः ।

**वागुजी** स्त्री वाचा गुज्यते ध्वन्यते गुज–क गौरा० ङीष् ।

**वागुरा** स्त्री वा–हिंसने उरच् मुट् च । मृगयार्थं मृगबन्धनपाशादौ अमरः । [यस्य । व्याधे ।

**वागुरावृत्ति** पु० वागुरा मृगबन्धनपाशादिरेव वृत्तिर्जीविका

**वागुरिक** पु० वागुरा प्रहरणं यस्य वागुरयाचरति वा ठक् । व्याधे अमरः ।

**वागुद** पु० स्त्री० पक्षिभेदे त्रिका० गुडहरणे तज्जातिप्राप्ति-

मनुनोक्ता "गोधा गां वाग्दुष्टो गुरुम्" इत्येति शेषः

**वागलि** पु० राज्ञां ताम्बूलदातरि रत्नमाला।

**वागडम्बर** पु० ६त०। १वाक्याटोपे २वक्तृत्ववाक्ये च।

**वाग्दण्ड** पु० वाचो वागिन्द्रियस्य दण्डः संयमनम्। १मित-२भाषणे २वाक्यसंयमे च।

**वाग्दत्ता** स्त्री वाचा दत्ता। विधिना वाक्यमात्रेण दातुं कृतसङ्कल्पायां कन्यायाम् "वाचा दत्ता मनोदत्तेति उद्वा०त०

**वाग्दरिद्र** त्रि० ६त०। मितभाषिणि शब्दमा०।

**वाग्दान** न० ६त०। कन्याया वाङ्मात्रेण दाने "ततो वाग्दानपर्य्यन्तं यावदेकाहमेव च" शु०त०।

**वाग्दुष्ट** त्रि० वाचा दुर्वचनेन दुष्टः। शुद्धेऽपि वस्तुन्यशुद्धरूपतया कथनेन दूषिते। "वाग्दुष्टं भावदुष्टं च वर्जयेदिति" स्मृतिः।

**वाग्देवता** स्त्री वाचां देवता। सरस्वत्यां "वाग्देवता चरितचित्रितचित्तसद्मा" जयदेवः। वाग्देव्यादयोऽप्यत्र।

**वाग्मिन्** त्रि० वाच्+अस्त्यर्थे ग्मिनि चस्य कः तस्य लोपः। १प्रशस्तवाक्यवक्तरि अमरः। २वृहस्पतौ पु० मेदि०। ४विष्णौ पु० विष्णुस०। [२निर्वेदे ३कल्ये अजयः।

**वाग्य** त्रि० वाचं यच्छति यम-ड। १वाग्दरिद्रे शब्दमा०

**वाग्यत** त्रि० वाक् वागिन्द्रियव्यापारो यता येन। मौनधारिणि मुनौ अमरः "वाग्यतस्त्रिषवणं चरेत्" स्मृतिः।

**वाग्यम** त्रि० वाचं तद्व्यापारं यच्छति यम-अच्। मुनौ अमरः।

**वाग्मती** स्त्री "हिमाद्रेस्तुङ्गशिखरात् प्रोद्भूता वाङ्मती नदी" इत्युक्ते नदीभेदे। सा च मिथिलादेशसन्निकृष्टतया वहति।

**वाङ्मय** त्रि० वाक्स्वरूपम् मयट् चस्य कः तस्य ङः। १वाक्यस्वरूपे शास्त्रे। २वाक्यजनिते पापभेदे च। "पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्वशः। असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम्" मनुः। तथा "परुषवचनमपवादः पैशुन्यमनृतं वृथालापो निष्ठुरवचनम् वाङ्मयानि षट्। परेषां देशजातिकुलविद्याशिल्परूपवृत्ताचारपरिच्छदशरीरकर्मजीविनां प्रत्यक्षदोषवचनं परुषम्। "यच्चान्यत् क्रोधसन्तापत्रासंजननं वचः। परुषं तच्च विज्ञेयं यच्चान्यच्च तथाविधम्। चक्षुष्मानिति कुष्ठाढ्यं चाण्डालं ब्राह्मणेति च। प्रशंसानिन्दनं देषात् परुषाच्च विशिष्यते"। तेषामेव परुषवचनानामपरोक्षमुदाहरणम् अपवादः। गुरुन्टपतितबन्धुभ्रातृमित्रसम्बन्धार्थे कर्मोपघातार्थं दोषोपाख्यानं पैशुन्यम्। अनृतं द्विविधं असत्यमसंवादश्चेति "देशराष्ट्रप्रसङ्गाच्च परार्थपरिजल्पनात्। नर्महासप्रसङ्गाच्च भाषणं वृथाभाषणम्। गुह्यानाक्तमैथ्यसंज्ञानां भाषणं निष्ठुरं विदुः। यदन्यद्वा वचो नीचस्त्रीपुंसोर्मिथुनाश्रयम्। इत्येवं षड्विकल्पस्य दुष्टवाक्यस्य भाषणात्। इह चामुत्र च क्रूरमनर्थं प्रतिपद्यते"। प्रशंसयानिन्दनं प्रशंसानिन्दनम्। अत्र चतुर्विधषड्विधयोरविरोधः। असत्यासमत्वभेदानादरेण पारुष्यापवादयोरैक्यात् निष्ठुरस्य परुषान्तर्भावाच्च। असम्बद्धप्रलापवृथाभाषणयोः पर्य्यायत्वान्नार्थान्तरम्" ति०त०।

**वाङ्मुख** न० ६त०। उपन्यासे प्रथमवाक्योपक्रमे अमरः।

**वाचंयम** त्रि० वाचं यच्छति वाचा+यम-ख मुम् ह्रस्वश्च। १मितभाषिणि। २मौनावलम्बिनि मुनौ पु० अमरः।

**वाच** पुंस्त्री० वच-णिच्-अच्। (वाचा) इति ख्याते मत्स्यभेदे राजवल्लभः स्त्रियां ङीष्।

**वाचक** त्रि० वक्ति अभिधावृत्त्या बोधयति वच-ण्वुल्। "साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचकः" इत्युक्ते १शब्दभेदे २कथके त्रि०। वाचयति वच-णिच्-ण्वुल्। ३पुराणादिपाठके पु० "वाचकः पूजितो येनेति" पुरा० "ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात्। श्रुत्वान्यवर्णजाद्राजन्! वाचकान्नरकं व्रजेत्"। तथा "देवार्च्चां नयतः कृत्वा ब्राह्मणानां विशेषतः। यन्त्रिञ्च शिथिलं कुर्य्याद्वाचकः कुरुनन्दन!। पुनर्बध्नीत तत्सूत्रं न मुक्त्वा धारयेत् क्वचित्। हिरण्यं रजतं गाश्च तथा कांस्योपदोहनाः। दत्त्वा तु वाचकायेह श्रुतस्याप्नोति तत्फलम्"। कांस्योपदोहनाः कांस्यक्रोड़ाः "वाचकः पूजितो येन प्रसन्नास्तस्य देवताः"। तथा "ज्ञात्वा पर्वसमाप्तिञ्च पूजयेद्वाचकं बुधः। आत्मानमपि विक्रीय य इच्छेत् सुकलं कृतम्"। तथा "विस्पष्टमद्रुतं शान्तं स्पष्टाक्षरपदं तथा। कलस्वरसमायुक्तं रसभावसमन्वितम्। बुध्यमानः सदार्थं ग्रन्थार्थं कृत्स्नशो नृप!। ब्राह्मणादिषु सर्वेषु ग्रन्थार्थं चार्पयेन्नृप!। य एवं वाचयेद् ब्रह्मन् स विप्रो व्यास उच्यते"। तथा "सप्तस्वरसमायुक्तं काले काले विशाम्पते!। प्रदर्शयन् रसान् सर्वान् वाचयेद् वाचको नृप" ति०त०।

वाचकलक्षणादि हेमा० दा० नन्दिपु० उक्तं यथा

"वाचको ब्राह्मणः प्राज्ञः श्रुतशास्त्रो महामनाः। अभ्यस्ताक्षरविन्यासो हृत्तशास्त्रविशारदः। शब्दार्थवित्

प्रमलभ्य विनीतो मेधया पुनः। गीनिष्ठो वाक्यसुस्राव्य स्वरेणाखिलभाषकः” इत्युपक्रमे सर्वविधानतो वाच्यं वाचकेन विपश्चिता। तपःशमात्मकं सर्वं स्वर्गादिफलसाधकम्। सर्वैर्विबोध्य वै वाच्यमध्यात्मादि च यद् भवेत्। क्रुद्धोक्तिमुखसंक्षोभं धारावर्त्तेन (वेगेन) वाचयेत्। स्वरागं ललितैर्वाक्यैर्वाचयेद् हृदयङ्गमे। नानाहृत्तानुरूपेण लालित्येन च वाचयेत्। सर्गाध्याये समाप्ते च कथायर्व्वन्त एव वा। प्रसङ्गशब्दसंयोगे कुर्यादिति विरामणम्। समाप्तौ वाचको भीष्म! ब्रूयादेवं विचक्षणः। अवधार्य्य जगच्छान्तिमन्ते शान्त्युदकं क्षिपेत्। सुखतं सुखतं ब्रूयादस्तु व्याख्यातमित्यदः। लोकः प्रवर्त्ततां धर्मे राजा चास्तु सदा जनी। धर्मवान् धनसम्पन्नो गुरुवाल निरामयः। इति प्रोच्य यथाऽऽम्नातं मन्तव्यं च विधानतः।

**वाचन** न०वच-णिच्-स्वार्थे वा णिच्-ल्युट्। १पठने २कथने च युच्। पठने स्त्री। [पापादौ।

**वाचनिक** त्रि० वचनेन निर्वृत्तम् ठक्। वाक्यनिष्पादिते

**वाचस्पति** पु० ६त०अलुक्समा०। १वृहस्पतौ २पुष्यनक्षत्रे च

**वाच्(चा)** स्त्री उच्यतेऽसौ अनया वा वच-क्विप् नि० वा टाप्। १वाक्ये अमरः २वागिन्द्रिये च।

**वाचाट** त्रि० वाक्+कुत्सायां वाहुल्येऽर्थे आटच् भत्वात् न कः। कुत्सितबहुभाषिणि अमरः। आलच्। वाचालोऽप्यत्र।

**वाचिक** त्रि० वाचा कृतम् वाच्+ठक भत्वात् न कः। वाक्यनिष्पादिते पापादौ वाङ्मयशब्दे दृश्यम्। २वाक्यारम्भभेदे। “आलापश्च विलापश्च संलापश्च प्रलापकः। अनुलापोऽपलापश्च सन्देशश्चातिदेशिकः। अपदेशोपदेशौ च निर्देशो व्यपदेशकः। कीर्त्तिता वचनारम्भा द्वादशामी मनीषिभिः” उज्ज्वलमणिः। [निर्मल्ये च।

**वाचोयुक्ति** स्त्री ६त० अलुक्स०। १वाचादर्शितयुक्तौ २वाक्य-

**वाच्य** न० वच—भावे ण्यत् न कः। १दूषणे २प्रतिपादने भरतः। ३कथने च। कर्मणि ण्यत्। ४दूष्ये ५प्रतिपाद्ये अभिधया बोध्यार्थे च सा० द० ६ “नचाल्पत्वबहुत्वाभ्यां प्रयोगाणां विशिष्यते। वाच्यवाचकभावोऽयमपपादादिशब्दवत्। विभीतकेऽक्षशब्दो यद्यप्यन्यैः प्रयुज्यते। तथापि वाचकस्तस्य ख्यायते शकटाक्षवत्” म०त०भट्टवा०। [भावे—अ। वाञ्छा।

**वाञ्छ्** कामे भ्वा०पर०सक०सेट इदित्। वाञ्छति अवाञ्छीत्।

**वाज** न० वज—घञ्। १पक्षे २घृते ३जले ४यज्ञे च मेदि०। ५शरपक्षे अमरः ६वेगे पु० ७निस्वने ८पक्षे पु० मेदि० ९मुनौ पु०विश्वः। [काल्या०श्रौ०तत्प्रकारादि दृश्यम्।

**वाजपेय** पुंन० वाजमन्नं घृतं वा पेयमत्र। यागभेदे

**वाजपेयिन्** पु० वाजपेय+अस्त्यर्थे इनि। १वाजपेययाग० कर्त्तरि उपचारात् २तदंशजे च।

**वाजसन** पु० वाजमन्नं सनोति ददाति सन—अच्। १विष्णौ विष्णुस०। २शिवे भा० आनु० १७अ०।

**वाजसनि** पु० राज्ञस्यान्नस्य सनिर्दानं येन। सूर्ये “आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः” इत्युक्तेस्तस्य वृष्टिद्वारा अन्नदातृत्वात् तथात्वम्।

**वाजसनेय** पु० वाजसनेः सूर्यस्य छात्रः ढक्। याज्ञवल्क्ये “आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते” वृहदारण्य० श्रुतिः। तदर्थः। आदित्यादधीतान्यादित्यानि शुक्लानि शुद्धानि। इयमत्र आख्यायिका। व्यासशिष्यो वैशम्पायनो याज्ञवल्क्यादिभ्यः स्वशिष्येभ्यो यजुर्वेदमध्यापयत्। तत्र दैवात् केनापि हेतुना क्रुद्धो वैशम्पायनो याज्ञवल्क्यं प्रत्युवाच मदधीतं त्यजेति। स योगसामर्थ्यान् मूर्त्तां विद्यां विद्यायोद्‌वाम। वान्तानि यजूंषि गृह्णीतेति गुरूक्ता अन्ये वैशम्पायनशिष्यास्तित्तिरयो भूत्वा यजूंष्यभक्षन्। तानि यजूंषि बुद्धिमालिन्यात् कृष्णानि जातानि। ततो दुःखितो याज्ञवल्क्यः सूर्यमाराध्यान्यानि शुक्लानि यजूंषि प्राप्तवान्। तानि च जाबालगौधेयकाण्वमाध्यन्दिनादिभ्यः पञ्चदशशिष्येभ्यः पाठितवान्” वेददी०। “एवं स्तुतः स भगवान् वाजिरूपधरो रविः। यजूंष्ययातयामानि मुनयेऽदात् प्रसादतः। यजुर्भिरकरोच्छाखा दशपञ्चशतैर्विभुः। जगृहुर्वाजसन्यस्ताः। काण्वमाध्यन्दिनादयः” भाग० १२।६।६७ श्लो०

**वाजसनेयिन्** पु० ब०व०। वाजसनेयेन प्रोक्तमधीयते इनि। यजुर्वेदशाखाभेदाध्यायिषु विप्रादिषु। २तदुक्तरीत्या कर्मार्हेषु शूद्रेषु च “शूद्रा वाजसनेयिनः” म०मा०त०।

**वाजिदन्त** पु०वाजिनां दन्त इव पुष्पमस्य। १वासके रत्नमा० कप्। वाजिदन्तक तत्रैव।

**वाजिन्** पु० वाजः वेगः पक्षो वा अस्त्यस्य इनि। १घोटके २वाणे ३वासके च शब्दर०। ४वेगवति त्रि० स्त्रियां ङीप्। सा च ५अश्वगन्धायाञ्च ६घोटक्याञ्च स्त्री

राजनि० । ७देवभेदे पु० । वाजिनशब्दे दृश्यम् ।

**वाजिन** पु० वाजिभ्यो देवम् अण् । आमिक्षानिःसृतजले "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इति श्रुतिः ।

**वाजिपृष्ठ** पु० वाजिन इव पृष्ठमस्य । वल्कानद्धे शब्दच० ।

**वाजिभक्ष** पु० भक्ष्यते भक्ष-कर्मणि घञ् ६त० । चणके राजनि० । [मुद्गे राजनि० ।

**वाजिभोजन** पु० वाजिभिर्भुज्यते भुज-कर्मणि ल्युट् ।

**वाजीकरण** न० अवाजी वाजीव क्रियतेऽनेन वाजिन्+च्वि कृ-ल्युट् । "यद्द्रव्यं पुरुषं कुर्यात् वाजिवत् सुरतक्षमम् । तद्वाजीकरणं ख्यातम्" इत्युक्ते वीर्यवृद्धिकरणे औषधभेदे । सुश्रुते दृश्यम् ।

**वाञ्छा** स्त्री वाछि-अ । इच्छायाम् इष्टसाधनताधीजन्ये-ऽभीष्टविषये चित्तवृत्तिभेदे अमरः ।

**वाट** पु० वट-अण् । १पथि २वृतिस्थाने च मेदि०गौरा०ङीष् ४वास्तुभूमौ ५कुटग्रां स्त्री मेदि० । ६वाट्याह्वके शब्दर० ।

**वाटिका** स्त्री वट-ण्वुल् । १वास्तुभूमौ (बेड़ियाला) २क्षुपे ३हिङ्गुपत्र्यां च शब्दच० । [क्षुपभेदे रत्नमा० ।

**वाट्या** स्त्री वाटं वृतिं तत्र साधुर्वा यत् । (बेड़ियाला)

**वाट्याल** पु० वाटीमलति भूषयति अल-अण् । (बेड़ियाला) क्षुपभेदे शब्दर० गौरा० ङीष् तत्रैव स्त्री । ण्वुल् । वाट्यालक तत्रार्थे पु० शब्दर० । [यवाढिष ।

**वाड** आप्लावे भ्वा० आ० अक०सेट् चङि न ह्रस्वः । वाडते

**वाढ** न० वह-क्त नि० । १अतिशये २तद्युक्ते त्रि० अमरः । द्रुयो० तम् । वाढम् ३प्रतिज्ञायां ४स्वीकारे च अव्य० अमरः ।

**वाण** पु० वण-घञ् । १शरे अमरः २गवां स्तने ३दैत्यभेदे ४केवले मेदि० ५वह्नौ त्रिका० ६काण्डावयवे विश्वः ७भद्रमुञ्जे राजनि० कादम्बरीग्रन्थकारके ८कविभेदे च "पञ्चवाणस्तु वाणः" इति प्रसन्नराघवम् ।९नीलझिण्ट्यां पुंस्त्री० अमरः । अस्योष्ट्रादित्वमित्यन्ये । [शब्दर० ।

**वाणपुर** न० ६त० । शोणितपुरे (कोटरी) पुराख्ये पुरभेदे

**वाणवार** पु० वाणं परसैन्यशरं वारयति चु० वृ-अण् । योधादेर्धार्यमाणे वक्षःछादे कवचे शब्दच० ।

**वाणहन्** पु० वाणं तन्नामासुरं हतवान् हन-ताडने भूते क्विप् । श्रीकृष्णे वाणजिदादयोऽप्यत्र ।

**वाणि** स्त्री वण-इञ् वा ङीप् । १वयने अमरः २वयनदण्डे वेमनि हेमच० । ५वाक्ये ६तद्देवतायाञ्च अमरः ङीप् ।

**वाणिनी** स्त्री वण-णिनि ङीप् । १नर्त्तक्यां २छेके ३मत्तस्त्रियाम् हेमच० । वाण+अस्त्यर्थे इनि । ४शरयुते त्रि० ।

**वात** गतौ सेवायां सुखीकरणे च सक० अद० चु०उभ०सेट् । वातयति ते अववातत् त ।

**वात** पु० वा-क्त । स्पर्शमात्रविशेषगुणके भूतभेदे १पवने अमरः । अनिलशब्दे १६४पृ० दृश्यम् । २देहस्थे धातुभेदे च । ३गन्तरि त्रि० । जारे ५दुष्टनायके च "प्रभातवाता हतीति" भट्टिः । ६वातजन्ये रोगभेदे भावप्र० यथा "कषायकटुतिक्तकप्रमितरूक्षभक्ष्याहृतः पुरःपवनधारणप्रतरणातिजागरणश्रमैः । दिवाशनशनात् तथा निधुवनाच्च धातुक्षयात् मलादिरयधारणात् मदनशोकचिन्ताभयैः । अतिशीतजलमोक्षणात् गदकृतातिमर्षणक्षयादतीव वमनात् क्षयामतिविरेचनादामतः । पयोदसमये दिनक्षयदयोस्तृतीयांशकोर्जरामतिगतेऽपिते शिशिरसंज्ञकालेऽपि च । देहे स्रोतांसि रिक्तानि पूरयित्वाऽनिलो बली । करोति विविधान् रोगान् सर्वाङ्गैकाङ्गसंश्रयान्" । प्रमितशब्दात् वैपरीत्ये प्रायशर्मत्वेन अपरिमितमित्यर्थः । प्रकर्षेण मितमल्पं वा तच्चभक्ष्यम् अतिपुराणं शाल्यादि । कतिचिदन्नानि यान्यपि वातलानि यत आह गुणरत्नमालायाम् "नीवारत्रिपुटः सतीनचणकः श्यामाकमुद्गाढकीनिष्पावाश्च मकुष्टकश्च वरटामकुल्यकः कोद्रवः" । एते वातकरा इति शेषः । नीवारः प्रसाधिका (चीना) इति लोके । त्रिपुटः (खसारी) । सतीनः कलायः । निष्पावो राजमाषः । (बरबटी) इति लोके । मकुष्टकः (माठा) इति लोके । वरटा वरटिका (बरै) इति लोके । मकुल्यकः (मसूरी) इति लोके । पुरःपवनः प्राग्वातः, आमतः आमेन मार्गावरणात् । यत उक्तम् वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन चेति" । पयोदसमये वर्षासु । जरामतिगतेऽपिते भुक्तेऽजीर्णताङ्गते । देहे स्रोतांसीत्यादिना संप्राप्तिरुक्ता । कषायादिभिर्हेतुभिर्वर्षादौ समये हेतुभते बली अनिलः प्रवृद्धो वायुः करोति विविधान् रोगान् । ते रोगाः कथ्यन्ते "शिरोग्रहोऽलसैश्वत्वं जृम्भात्वं हृद्ग्रहः । जिह्वास्तम्भो गद्गदत्वं सिक्तिनत्वञ्च मूकता । वाचालता प्रलापश्च रसानामनभिज्ञता । बाधिर्य्यं "कर्णनादश्च सर्वाङ्गत्वं तथार्दितम् । मन्यास्तम्भोऽत्र भणितो बाहुशोषोऽपबाहुकः । वर्णिता चैव विश्वाची अर्द्दश त उदीरिता

आध्मानञ्च प्रत्याध्मानं वाताष्ठीला प्रत्यष्ठीला।"तूनी च प्रतितूनी च वह्निवैषम्यमेव च। आटोपः पार्श्वशूलञ्च त्रिकशूलं तथैव च। मुक्तत्वं मूकत्वं मलनिग्रहो मलगाढता। पुरीषस्याप्रवृत्तिश्च स्तम्भश्च ततः परम्। कलायखञ्जता चापि खञ्जता पङ्गुता तथा। क्रोष्टुशीर्षक खल्वी च वातकण्टक एव च। पादहर्षो पाददाह आक्षेपो दण्डकाभिधः। वातपित्तकृताक्षेपस्तथा दण्डापतानकः। अभिघातकृताक्षेप आयामो द्विविधः स्मृतः। आन्तरश्च तथा बाह्यो धनुर्वातश्च कुब्जकः। अपतन्त्रापतानस्य पक्षाघातोऽखिलाङ्गकः। कम्पस्तम्भो व्यथातोदो भेदश्च स्फुरणं तथा। रौक्ष्यं कार्श्यञ्च कार्ष्ण्यञ्च शैत्यं लोमाञ्च हर्षणम्। अङ्गमर्दोऽङ्गविभ्रंशः शिरासङ्कोच एव च। अङ्गशोषाश्च भीरुत्वं मोहश्चञ्चलचित्तता। निद्रानाशः स्वेदनाशो बलहानिस्तथैव च। शुक्रक्षयो रजोनाशो गर्भनाशः परिश्रमः। एत अशीतिसंख्यारोगा योगेन रूढितः। वातव्याधीतिनामानो मुनिभिः परिकीर्त्तिताः"। एत एव शिरोग्रहादय एव। योगेन वातेन वाताद्व्याधिर्वातव्याधिरिति निरुक्त्या तदा वातज्वरादिष्वपि प्रसक्तः स्यादत आह रूढितः प्रसिद्धितः शिरोग्रहादयोऽशीतिरेव वातव्याधिसंज्ञाः प्रसिद्धा न तु वातज्वरादयः"। तल्लक्षणादिकं तत्र दृश्यम्।

**वातक** पु॰ वात इव चञ्चलः इवार्थे कन्। १असनपर्णाम् स्वार्थे क। २जारे च।

**वातकर्म्मन्** न॰ वातानां कर्म। अपानेन मरुत्त्यागे पर्दने।

**वातकिन्** त्रि॰ वातोऽस्त्यस्य इनि कुक् च। वातरोगयुक्ते अमरः स्त्रियां ङीप्।

**वातकेतु** पु॰ वातस्य केतुरिव। धूलौ रजसि त्रिका॰।

**वातगुल्म** पु॰ वातेन गुल्म इव। १वात्यायां त्रिका॰। २वातनिमित्ते गुल्मरोगभेदे गुल्मशब्दे २६७६ पृ॰ दृश्यम्।

**वातघ्नी** स्त्री वातं रोगभेदं हन्ति—हन-टक् ङीप्। १शालपर्णाम् (सालपानि) २अश्वगन्धायां ३शिमुडीक्षुपे च राजनि॰।

**वातचक्र** न॰ वृ॰स॰ २७अ॰उक्ते पूर्वादिवातानां कालभेदेन शुभाशुभसूचके चक्रभेदे

"पूर्वः पूर्वसमुद्रवीचिशिखरप्रस्फालनाघूर्णितश्चन्द्रार्कांशुघटाभिघातकलितो वायुर्यदाकाशतः। नैकान्तस्थितनीलमेघपटलां शारद्यधान्याञ्चितां वासन्तोत्कटसस्यमण्डिततलां विद्यात्तदा मेदिनीम्। यदाग्नेयो वायुर्मलयशिखरास्फालनपटुः प्रवात्यस्मिन्योगे भगवति पतङ्गे प्रवसति। तदा नित्योद्दीप्ता ज्वलनशिखरालिङ्गिततला स्वगात्रोष्मोच्छ्वासैर्वमति वसुधा भस्मनिकरम्। तालीपत्रलताविताननरुभिः शाखाम्रगान्नर्त्तयन् योगेऽस्मिन् प्रवति ध्वनन्सुपरुषो वायुर्यदा दक्षिणः। सर्वोद्योगसमुन्नताश्च गजवत्ताबाङ्कशैर्घट्टिताः कीनाशा इव मन्दवारिकणिकान्मुञ्चन्ति मेघास्तदा। स्फूर्ज्जैलावलवङ्गलीलमृदुनिचयान् व्याघूर्णयन् सागरे भानोरस्तमये प्रवात्यविरतो वायुर्यदा नैर्ऋतः। तुल्यादृतमातुषास्यसकलप्रस्तारभारस्तदा मत्ता प्रेतवधूरिवोग्रचपला भूमिस्तदा लक्ष्यते। यदा रेणूत्पातैः प्रविकटसटाटोपचपलः प्रवातः पश्चार्धे दिनकरकरापातसमये। तदा सस्योपेता प्रवरन्धरावद्धसमरा धरा स्थाने स्थानेऽप्यविरतवसामांसरुधिरा। आषाढीपर्वकाले यदि किरणततेरस्तकालोपपत्तौ वायव्यो बहुवेगः प्रवति घनरिपुः पन्नगादानुकारी। आनीयाद्दारिधाराप्रमुदितमुदितां सस्यमण्डूककण्ठां सस्योल्लासैकचिह्नां सुखबहुलतया भाग्यसेनामिवोर्वीम्। मेरुप्रस्तमरीचिमण्डलतले पौष्यावसाने रवौ वात्यामोदिकदम्बगन्धसुरभिर्वायुर्यदा चोत्तरः। विद्युद्भ्रान्तिसमस्तकान्तिकलनामत्तास्तदा तोयदा उन्मत्ता इव नष्टचन्द्रकिरणां गां पूरयन्त्यम्बुभिः। ऐशानो यदि शीतलाऽमरगणैः संसेव्यमानो भवेत् पुन्नागागुरुपारिजातसुरभिर्वायुः प्रचण्डध्वनिः। आपूर्णोदकयौवना वसुमती सम्पन्नसस्याकुला धर्मिष्ठाः प्रणतारयो नृपतयो रक्षन्ति वर्षास्तदा"।

**वाततूल** न॰ वातेन उड्डीयमानं तूलम्। (वुडिरसुता) आकाशे उड्डीयमाने सूत्रे हारा॰। [२धूलौ।

**वातध्वज** पु॰ वातो ध्वज इव यस्य १मेघे शब्दमा॰। हे॰।

**वातपोथ** पु॰ वातं रोगभेदं पुथ्यति हिनस्ति पुथ-अण्। पलाशवृक्षे अमरः। [मृगे (वाखोटा) अमरः।

**वातप्रमी** पुंस्त्री॰ वातं प्रमिणोति प्र+मा-ई किच्च। १शीघ्रगे

**वातमज** पुंस्त्री॰ वातमनुलक्ष्य अजति अज-अच् व्यभावः। मृगभेदे जटा॰ स्त्रियां ङीष्। [जटा॰ स्त्रियां ङीष्।

**वातमृग** पुंस्त्री॰ वातानुगो मृगः शाक॰। शीघ्रगे मृगभेदे

**वातरक्त** न॰ वातजं दुष्टं रक्तम रुधिरं यत्र। रोगभेदे

"लवणाम्लकटुक्षारस्निग्धोष्णाजीर्णभोजनैः। क्लिन्नशुष्काम्बुजानूपमांसपिण्याकमूलकैः। कुलत्थमाषनि-

लवणाकादिपलवैतुभिः । दध्यारनालसौवीरशुक्ततक्रसुरासवैः । विरुद्धाध्यशनक्रोधदिवास्वप्नप्रजागरैः । प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् । स्थूलानां सुखिनाञ्चापि प्रकुप्येद्वातशोणितम् । हस्त्यश्वोष्ट्रैर्गच्छतश्चाश्नतश्च विदाह्यन्नं सविदाहाशनस्य" । क्षारो यवक्षारादिः । अजीर्णभोजनैः अजीर्णाय भोजनैः अतिमात्रभोजनैरित्यर्थः । क्लिन्नादीनि मांसस्य विशेषणानि । क्लिन्नं शटितम् । शुष्कमातपे शोषितम् । अम्बुजं मत्स्यादिमांसम् । आनूपं गौड़ादिपूर्वदेशजं मांसम् । पिण्याकं तिलखलिः । मूलकं प्रसिद्धमेव । निष्पावः (वोड़ा) शाकम् । शाकं पत्रशाकम् । आदिशब्देन हस्ताकादीनि फलशाकानि गृह्यन्ते । पललं शटितत्वादिदोषरहितमपि मांसं वातशोणितं प्रकोपयेत् । शटितादि तु मांसं विशेषतो वातशोणितं प्रकोपयेत् । आरनालं सन्धानभेदः । शुक्तं सन्धानभेदः । सौवीरं सन्धानभेदः । तक्रं चतुर्थांशजलयुक्तं वस्त्रपूतं दधि । सुरा सन्धानभेदः । आसवः सन्धानभेदः । विरुद्धं क्षीरमत्स्यादि । अध्यशनम् । "अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते" । अतिजागरो निशि । प्रायशः बाहुल्येन । सुकुमाराणाम् अल्पतरकायव्यापाराणाम् । अथ वा । मिथ्याहारविहारिणाम् अयथाहारविहाराभ्यां स्थूलानां सुखिनाञ्च रक्तवृद्ध्या हस्त्यश्वोष्ट्रैर्गच्छतः यतो वायुर्विवर्त्तते रुधिरस्याधो गच्छति । हस्त्यादय उपलक्षणानि । पद्भ्यामप्यतिचलतः । अश्नतः विदाह्यन्नम् । विदाहि निष्पावकुलत्थसर्षपशाकादि । सविदाहाशनस्य । सविदाहेऽशनं यस्य भुक्ते विदग्धे तदुपरि भुञ्जानस्येत्यर्थः । अध्यशनसञ्ज्ञाप्येतदशनं विदग्धाजीर्णभोजनस्य विशेषतो हेतुत्वार्थम् । पश्चात् वातशोणितं प्रकुप्येदित्यनेनान्वयः । एतेषां कारणानां मध्ये केनचिद्वायुः केनचिदुभयमपि प्रकुप्येत् । संप्राप्तिमाह "तस्य रक्तं विदहत्याशु तच्च दुष्टं स्रुतं पादयोश्चीयते तु । तत् संपृक्तं वायुना दूषितेन तत् प्राबल्यादुच्यते वातरक्तम्" । पूर्वोक्तहेतुभिः तस्य समस्तं रक्तं विदहति अत्र दहधातुरविवक्षितकर्मकः । तेन विदहति विदग्धं भवतीत्यर्थः । तच्च दुष्टरक्तम् । स्रुतम् अधोगतम् पादयोश्चीयते सञ्चितं भवति । तद्रुधिरं दूषितेन स्वहेतुना संपृक्तं मिलितं वातरक्तम् उच्यते । ननु चैतस्य संप्राप्तिरुक्ता सुश्रुतेन "शीघ्रं रक्तं दुष्टिमायाति तच्च वायोर्मार्गं संरुणद्ध्याशु वातः । क्रुद्धोऽत्यर्थं मार्गरोधात् स वायुरत्युद्रिक्तं दूषयेद्रक्तमाशु" । अत्र प्रथमं रक्तस्य दुष्टिरतो रक्तवातमिति व्यपदेष्टुमुचितं भवत्यत आह तत्प्राबल्यादिति । तस्य वातस्य दोषत्वेन प्राधान्याद्वातरक्तमिति व्यपदिश्यते । पूर्वरूपमाह "स्वेदोऽत्यर्थं न वा कार्ष्ण्यं स्पर्शाज्ञत्वं क्षतेऽतिरुक् । सन्धिशैथिल्यमालस्यं सदनं पिड़कोद्गमः । जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु । निस्तोदः स्फुरणं भेदो गुरुत्वं सुप्तिरेव च । कण्डूः सन्धिषु रुग्भूत्वा भूत्वा नश्यति चासकृत् । वैवर्ण्यं मण्डलोत्पत्तिर्वातासृक्पूर्वलक्षणम्" । अथाधिकवातस्य रक्तस्य लक्षणमाह "वातेऽधिकेऽधिकं तत्र शूलस्फुरणतोदनम् । शोथस्य रौक्ष्यं कृष्णत्वं श्यावतावृद्धिहानयः । धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक् । शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः" । तत्र पादयोः शूलादिकमधिकम् यत आह सुश्रुतः "स्पर्शोद्विग्नौ तोदभेदप्रशोषौ स्वापोपेतौ वातरक्तेन पादाविति" । अत्र सुप्तिः स्पर्शाज्ञता । अधिकरक्तं वातरक्तमाह "रक्ते शोथोऽतिरुक् तोदस्ताम्रश्चिमिचिमायते । स्निग्धरूक्षैः शमं नैति कण्डूक्लेदसमन्वितः" । अधिकपित्तं तदाह "पित्ते विदाहः संमोहः स्वेदो मूर्च्छा मदस्तृषा । स्पर्शासहत्वं रुग्दाहः शोथपाकौ भृशोष्मता" । विदाहश्च पादयोरेव बोद्धव्यः यत आह सुश्रुतः "पित्तासृग्भ्यामुग्रदाहौ भवेतामत्युष्णौ रक्तशोथौ मृदू च" । पादाविति शेषः । अधिककफं तदाह "कफाधिक्ये तु गुरुता सुप्तिः स्निग्धत्वशीतता" । गुरुतादयः पादयोरेव यत आह सुश्रुतः "कण्डूमन्तौ स्वेदशीतौ सशोथौ पीनस्तब्धौ श्लेष्मदुष्टे तु रक्ते" । अप्रतिक्रियमाणवातरक्तस्य उपद्रवानाह "अस्वप्नारोचकश्वासमांसकोथशिरोग्रहाः । मूर्च्छा च मन्दरुक् तृष्णाज्वरमोहप्रवेपकाः । हिक्का पाङ्गुल्यवीसर्पपाकतोदभ्रमक्लमाः । अङ्गुलीवक्रतास्फोटदाहमर्मग्रहार्बुदाः" मांसकोथो मांसगलनम् । असाध्यत्वादिकमाह "एतैरुपद्रवैर्वर्ज्यं मोहेनैकेन वापि यत् । अकृत्स्नोपद्रवं याप्यं साध्यं स्यान्निरुपद्रवम् । एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् । त्रिदोषजमसाध्यं स्याद्यस्य च स्युरुपद्रवाः" ।

**वातरक्तघ्न** पु॰ वातरक्तं रोगभेदं हन्ति हन–टक्। कुक्कुर-द्रुमे (कुकुरशोङा) शब्दच॰। [शब्दच॰।

**वातरक्तारि** पु॰ ६त॰। (गुलञ्च) ख्यातायां गुडूच्याम्

**वातरङ्ग** पु॰ वातस्येव सततं रङ्गश्चलनमस्य। चलदले अश्वत्थ-वृक्षे अमरः।

**वातरायण** पु॰वा-क्विप् ततस्तरप् वातरमयनं यस्य चलम्। १उन्मत्ते २प्रयोजनशून्ये पुरुषे ३काण्डे ४करपात्रे ५कूटे ६परसंक्रमे मेदि॰। ७शरलद्रुमे च शब्दर॰।

**वातरूष** पु॰ वातेन रूष्यते रूष-घञ्। १वातुले २उत्कोचे ३इन्द्रचापे च मेदि॰।

**वातर्द्धि** पु॰ वातस्य ऋद्धिर्यतः। १काष्ठलोहनिर्मितपात्रे त्रिका॰ ६त॰। २वायुवृद्धौ स्त्री।

**वातल** पु॰ वातं रोगभेदं लाति ला–क। १चणके शब्दच॰। २वायुकारके द्रव्ये त्रि॰।

**वातव्याधि** पु॰ वातेन देहस्थधातुभेदेन जनितो व्याधिः शाक॰। वातरोगे वातशब्दे दृश्यम्।

**वातशीर्ष** न॰ वातस्य शीर्षमिव। वस्तौ राजनि॰।

**वाताटः** पु॰ वात इवाटति अट्–अच्। १सूर्य्याश्वे त्रिका॰ २वातमृगे शब्दर॰।

**वाताण्ड** पु॰ मुष्करोगविशेषे तस्य लक्षणं यथा “दुष्टयो दूषयेद्वायुः श्लेष्मणा यस्य संहतः। तस्य मुष्कस्यैकस्य रोगो वाताण्डसंज्ञकः” माधवकरः।

**वाताद** पु॰ वाताय वातनिवृत्तयेऽद्यतेऽसौ अद्–घञ्। (बादाम) फलप्रधानवृक्षे भावप्र॰।

**वातापि** पु॰अगस्त्यनाशिते इल्वमातरि असुरभेदे। “वातापिर्भक्षितो येनवातापिश्च महाबलः। समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु” इति भोजनान्ते पाठ्यमन्त्रः।

**वातापिसूदन** पु॰ वातापिं सूदयति हिनस्ति सूद–ल्यु। अगस्त्ये मुनौ त्रिका॰भा॰व॰१९८॰अ॰ तत्कथा दृश्या।

**वातामोदा** स्त्री वातेनामोदो यस्याः। कस्तूर्य्याम् शब्दमा॰

**वातायन** न॰ वातस्यायनं गतिर्येन। १गवाक्षे अमरः। वातस्येव शीघ्रमयनं गतिरस्य। २अश्वे पुंस्त्री॰ त्रिका॰ स्त्रियां ङीष्।

**वातायु** पु॰ वातमयते अय–उण्। हरिणे अमरः

**वातारि** पु॰ वातस्य रोगभेदस्यारिः। १एरण्डवृक्षे २शतमूल्यां ३शेफालिकायां ४यवान्यां ५भार्ग्यां ६स्नुह्यां ७विडङ्गे ८स्नूरणे ९भल्लातके १०अजशृङ्ग्यां ११पुत्रदात्रीवृक्षे च राजनि॰।

**वाताश्व** पु॰ वात इव शीघ्रगोऽश्वः। आजानेये उत्तमे हये त्रिका॰।

**वाति** पु॰ वा–क्तिच्। १वायौ २सूर्य्ये ३चन्द्रे च रभसः।

**वातिक** पु॰ वाताद्गागतः ठक्। देहस्थधातुजन्ये रोगभेदे राजनि॰।

**वातिग** पु॰ वातिं वायुं गच्छति गम-ड। १वार्त्ताकौ २धातुवादिनि त्रि॰मेदि॰। गम–अच्। वातिगमोऽप्यत्र शब्दर॰

**वातिङ्गण** पु॰ वातिं देहस्थवातं सेवनात् गणयति गण–खच् मुम् च। वार्त्ताकौ त्रिका॰।

**वातीय** न॰ वाताय वातनिवृत्तये हितः छ। काञ्जिके शब्दच॰

**वातुल** पु॰ वातानां समूहः उलच्। वातसमूहे भरतः।

**वातुलि** पुंस्त्री॰ वा–उलि वुट् च। (वादुड) ख्याते खगे हारा॰।

**वातूल** त्रि॰ वात+अस्त्यर्थे ऊलच्। १वातरोगयुक्ते उन्मत्ते अमरः। समूहार्थे ऊलच्। २वातसमूहे न॰ भरतः।

**वातोना** स्त्री वातमूनयति ऊन–अण्। १गोजिह्वाक्षुपे राजनि॰ वातेनोनः। २वायुहीने त्रि॰।

**वात्या** स्त्री वातानां समूहः यत् १वातसमूहे अमरः “वितत्य वात्यामयचक्रचङ्क्रमान्” नैष॰।

**वात्सक** न॰ वत्सानां समूहः वुञ्। वत्ससंघे अमरः।

**वात्सल्य** न॰ वत्सलस्य भावः ष्यञ्। पुत्रादिस्नेहानुगुणे रसभेदे उज्ज्वलमणिः “यशोदा वत्सले स्मृता”।

**वात्स्य** पु॰ वत्सस्यापत्यं यञ्। गोत्रप्रवर्त्तके मुनिभेदे।

**वात्स्यायन** पु॰ वत्सस्य गोत्रापत्यं युवा वत्स+यञ् ततो यूनि फक्। १यूनि वत्सगोत्रापत्ये। २न्यायसूत्रभाष्यकारके पक्षिलाख्ये मुनौ पुं त्रिका॰।

**वाद** पुं स्त्री वद्–घञ्। १तत्त्वबुभुत्सया कथने “प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः” इति २गौतमोक्ते विचारात्मके वाक्यभेदे। “वादः प्रवदतामहम्” गीता।

**वादन** न॰ वद्–णिच्–कर्मणि ल्युट्। १मृदङ्गादिवाद्ये भावे ल्युट्। मृदङ्गादिताडनरूपे २व्यापारे।

**वादर** न॰ वदरायाः कार्पास्याः विकारः अण्। कार्पाससूत्रनिर्मिते वस्त्रादौ। वदरशब्दस्य श्रोत्रादित्वमित्यन्ये।

**वादरङ्ग** पु॰ वादरं वदराख्यत्रिपत्रादिसादृश्यं गच्छति गम खच् डिच्च। अश्वत्थवृक्षे त्रिका॰।

**वादरत** त्रि॰ वादे विवादे रतः रम–क्त। बहुदिनविवादशीले।

**वादरा** स्त्री वातं वायुं राति ददाति रा—क पृषो० तस्य दः [कार्पास्याम् शब्दर०।

**वा(बा)दरायण** पु० व(ब)दरीप्रधानं स्थानं बादरं तदयनं स्थानं यस्य। नित्यं व(ब)दरिकाश्रमवासिनि १वेदव्यासे। स्वार्थे इञ्। वा(बा)दरायणिरप्यत्र शब्दच०। अपत्ये इञ्। वा(बा)दरि व्यासपुत्रे शुकदेवे। [मधुपर्णी शब्दच।

**वादल** न० वातं लाति गृह्णाति ला—क पृषो० तस्य दः।

**वादाम** न० वातमपति हिनस्ति अप—अच् पृषो० तस्य मः। स्वनामख्याते फलभेदे भावप्र०।

**वादि** त्रि० वद—इन्। विदुषि उणादिकोषः। [शब्दर०।

**वादिर** न० वद—णिच्—किरच्। व(ब)दरीसदृशफलके वृक्षे

**वादित्र** न० वद-णिच्-इत्र। मृदङ्गादिवाद्ये अमरः।

**वादिन्** त्रि० वदति वद—णिनि। १वक्तरि २अर्थिनि ३वादकथाकर्त्तरि विचारस्थले ४प्रथमपक्षप्रतिपादके च।

**वाद्य** न० वद-णिच्-यत्। वादनीये मृदङ्गादौ अमरः। संगीतशब्दे ततादिभेद उक्तस्तत्र

ततं यथा "अलावनी ब्रह्मवीणा किन्नरी लघुकिन्नरी। विपञ्ची वल्लकी ज्येष्ठा चित्रा घोषवती जया। हस्तिका कुब्जिका कूर्मी शारङ्गी परिवादिनी। त्रिशवी शतचन्द्री च नकुलौष्ठी च ढंसवी। औडम्बरी पिनाकी च निबन्धः शुष्कलस्तथा। गदावारणहस्तश्च रुद्रोऽथ स्वरमण्डलः। कपिलासी मधुस्यन्दी घोषेत्यादि ततं भवेत्"। अलावनी यथा "कनिष्ठिकापरिध्यर्द्धं मध्यच्छिद्रेण संयुतः। दशवितस्तितो दण्डः खादिरो-वैणवोऽथ वा। अधःकरभवानूर्द्ध्वं क्रमावल्याभिशो-भितः। नवाङ्गुलादधश्छिद्रो परिचन्द्रार्द्धसन्निभाम्। निवेश्य तुम्बिकां भद्रां लाबुखण्डं निवेशयेत्। द्वादशा-ङ्गुलविस्तारं इदृक्कं मनोहरम्। तुम्बिकावेधमध्येन दण्डच्छिद्रे तु निर्मिताम्। अलावुमध्यगां डोवीं कृत्वा खल्लान्तु काष्ठिकाम्। तथा संवेष्ट्य तन्मध्ये काष्ठिकां भ्रामयेत्ततः। यथा स्यात्सुस्थिरालावुर्बन्धस्य करभो-परि। पञ्चाङ्गुलिषु संत्यज्यालावुं खल्लायां बन्धयेत्। कौशाम्लनिर्मिता पट्टमयी सूत्रलताथ वा। समा सूक्ष्मा दृढा तत्र तन्त्री देया विचक्षणैः। एतद्गुणगणसंयो-गिन्यलावनी प्रकीर्त्तिता। विन्दुना न समुपेतं तुम्बं निःक्षिप्य वक्षसि। मध्यमानामिकाभ्याञ्च वाद्या दक्षिणपाणिना। तारे मन्द्रे च घोषे च त्रिस्थाने विन्दुरिष्यते। तुम्बीमूलं समुद्धृत्य वामाङ्गुष्ठेन धारयेत्। ततस्ताभिस्तु सर्वाभिः स्वरव्यक्तिर्विधी-यते। त्रिस्वरो दक्षिणः पार्श्वे वामतश्च चतुःस्वरः। अलावन्यां स्थिता ज्ञेयाः सप्त षड्जादयः स्वराः। रागव्यक्तिर्यथा रागे भवेत् षड्जादिभेदतः। कंसन्यास विभेदाश्च तथात्रापि विधीयते। इयमलावनी प्रोक्ता मनः-श्रवणरञ्जनी। प्रत्यक्षा शारदा देवी वीणारूपेण सं-स्थिता"। शुषिरं वंशशब्दे उक्तम्। आनद्धं यथा

"आनद्धे मर्द्दलः श्रेयान् इत्युक्तं भरतादिभिः। मुरजपटहढक्काविश्वकोदर्पवाद्यं पणवघनसरब्बाला-वजाह्लिवल्यः। करटकमठभेरी स्यात् कुडक्का हुडुक्का अनघमुरलिझल्लीढुक्कलीदौण्डिमाना। डम-रुटमुकिमड्डु कुण्डलीस्तुङ्गनामा दृषभकिघटवाद्यं दुन्दुभी च रञ्ज। कचिदपि ढुढुकी स्यात् दर्दुरं चाप्युपाङ्गं प्रकटितमनुमत्वं वाद्यमित्थं जगत्याम्। त्रिपुरमथनकर्तुस्ताण्डवे तत् प्रयाणे ततमथ शुषि-रञ्चानद्धमित्थं घनञ्च। मर्द्दलः खादिरः श्रेष्ठो हीनः स्यादन्यदारुजः। रक्तचन्दनजो वाद्यो गभीरध्वनि हस्तकैः। सार्द्धहस्तप्रमाणन्तु दैर्घ्यं तस्य विधीयते। त्रयोदशाङ्गुलं वाममथ वा द्वादशाङ्गुलम्। दक्षिणञ्च भवेद्धीनमेकेनार्द्धाङ्गुलेन वा। करपानन्दवदनो मध्ये चैव पृथुर्भवेत्। पश्चात्पासीयो भवेत् ... करणं मतम्। मृत्तिकानिर्म्मितश्चैव मरद्धः परिकीर्त्तितः। घातयेत् चर्म्मणी वाद्ये वादनार्थञ्च मर्द्दले। विभूतिगै-रिकं भक्तं केन्दुकेन च संयुतम्। यद्वा चिपीटकं देयं जीवनीसत्त्वमिश्रितम्। सर्व्वमेकत्र पिण्डत्वेपः स-रन्धिरुच्यते। वामाख्ये पूरिकां कृत्वा तेनं दद्याच्च द-क्षिणे। एवं मर्द्दलकः प्रोक्तः सर्ववाद्योत्तमो मतः। अस्य संयोगमासाद्य सर्वं वाद्यञ्च शोभते। एतदङ्गं वीजकाष्ठं दशमाङ्गं विदुः"। मर्द्दलः त्रयोदशाङ्गुल-वाममुखो द्वादशाङ्गुलदक्षिणमुखः। मुरजस्त्वष्टादशाङ्गुल-वाममुखः सप्तदशाङ्गुलदक्षिणमुखः अनयोर्मुरजयोरयं भेदः। घनं यथा। "अनुरक्तं विरक्तञ्च द्विविधं घन-वाद्यकम्। गीतानुगमनुरक्तं विरक्तं तालसंश्रयम्। करतालः कांस्यतालो जयघण्टोऽथ शुक्तिका। कण्ठिका पट्ट वाद्यञ्च पट्टतोयं च घर्घरम्। झञ्झातालश्च मञ्जीरकर्त्तर्युत्तूर इत्यपि। द्वादशैते मुनीन्द्रेण कथिता घनसंज्ञकाः। त्रयोदशाङ्गुलव्यासौ शुद्धकांस्यविनि-र्मितौ। मध्यमुखौ स्तनाकारौ तन्मध्ये रज्जुगुम्फितौ।

पद्मिनीपत्रसदृशौ कराभ्यां रज्जुयन्त्रितौ । कर-
तालावुभौ वाद्यौ पार्टेकण्टकैरिति । यद्वा लवोदयव-
ख्याम वक्रयवोन्मितम् । यवप्रकुक्तगम्भीरं मध्ये च
यवसप्तकम् । निम्नतं वर्त्तुलं निम्नं यवत्रयमितं
ततः । पृष्ठतो मध्यदेशे च शिवलिङ्गसमाकृति । च-
त्वस्त्रपेष्टौनिर्दम्भ्यगुडकांस्यविनिर्मितम् । संरक्ताङ्कुलि
सुस्निग्धसुदीर्घमधुरध्वनिम् । घनानुसारि संरक्तं
दृढं शुष्कं मनोहरम् । काश्मीरादिसमुद्भूतं ताल-
मानुसारिनेमिषः । तृनादं द्विविधं तालं ततो चीनस्य
नामकम् । कुर्वीत तदृद्वयं कार्यं तर्ज्जन्यङ्गुष्ठयोगतम् ।
वामहस्तस्यतालस्य मध्यमं दक्षिणादितम् । तिर्यगद-
क्षिणतालस्य परिघ्यंशेन ताडयेत् । ताडादौ वाद-
येद्वेव श्रुतदीर्घसद्रुतैः" । अन्येषां लक्षणं
विस्तरभयान्नोक्तम् । "दक्षिणाः शतभागायाः कालि-
न्दोमितविन्ध्ययोः । आवन्तया वाञ्जलिला स-
ह्यमाभद्रयोरपि । कृष्णसारमृगीभीर्वा पुरोडाश-
महोत्सवे । ततं सुषिरमानद्धं घनस्य युगपद्ध्वनाः ।
समादयवसंख्यातमिति पौराणिकी श्रुतिः । ततं
वाद्यन्तु देवानां गन्धर्वाणाञ्च सौषिरम् । आनद्धं राक्ष-
सानान्तु किन्नराणां घनं विदुः" सङ्गीतदा०

**वाद्यभाण्ड** न० कर्म० । वादनीयपात्रे ।

**बा(वा)ध** विघाते भ्वा०आत्म०सक०सेट् । बा(वा)धते अबा-
(वा)धिष्ट । षष्ठि न लुक्ष्यः ।

**ब(बा)ध** पु० बा(वा)ध-घञ् । १प्रतिरोधे २प्रतिबन्धे न्या-
योक्ते साध्याभाववत्त्वेन ज्ञाने ३हेत्वाभासभेदे । भावे च ।
बा(वा)धायाम् २पीडायाञ्च स्त्री अमरः ल्युट् । बा-
(वा)धनमप्यत्रार्थे न० शब्दच० ।

**वाधूक्य** न० वध्वां साधु यत् कुक् च । विवाहे त्रिका० ।

**वार्ध्रीणस** पु० वार्ध्री नस+पृषो० । वार्ध्रीनसे खड्गिनि च ।

**वान** न० वन–घञ् । १शुष्कफले अमरः । २शुष्के त्रि०मेदि० ।
वनस्येदं तत् समूहो वा अण् । ३वनसम्बन्धिनि त्रि० । ४तत्-
संघे न० । वे–भावकर्मादौ ल्युट् । ५सीवनकर्मणि
हेकट । वा–भावादौ ल्युट् । ७गतौ मेदि० । द्रज-
स्रुतमातोमौ दस्तरङ्गायां १०सौरभे हेमच० ११गोत्वरजे
१२नवक्षीरे राजनि० । १३वर्त्तिकालगे स्त्री जटा० ।

**वानप्रस्थ** पु० वाने वनसमूहे प्रतिष्ठति स्था–क । १मधूकवृक्षे
२पलाशवृक्षे । वनप्रस्थ एव स्वार्थे अण् । "ब्रह्मचर्यन्तु
सदा प्रसेत् वयोपचितमानसः । पुत्रेषु दारान् नि-
क्षिप्य वनं गच्छेत् सहैव वा" इत्युक्ते ३आश्रमभेदे मेदि० ।
स च द्विविधः पचमानः अपचमानश्च । तत्र पचमानः
कपालकृत् । अपचमानस्तु दन्तोलूखलिकः ।
तस्य धर्मो यथा "मूला मूलफलाशित्वं स्वाध्यायस्तप
एव च । संविभागो यथान्यायं धर्मोऽयं वनवासिनः ।
तपस्यति योऽरण्ये यजेद्देवान् जुहोति च । स्वा-
ध्याये चैव निरतो वनस्थस्तापसो मतः । तपसा
कर्षितोऽत्यर्थं यस्तु ध्यानपरो भवेत् । सन्न्यासीह
स विज्ञेयो वानप्रस्थाश्रमे स्थितः" गारुडे ४९अ०
याज्ञवल्क्य उवाच "वानप्रस्थाश्रमं वक्ष्ये तत् शृण्वन्तु
महर्षयः । पुत्रेषु भार्यां निःक्षिप्य वनं गच्छेत् सहैव
वा । वानप्रस्थो ब्रह्मचारी साग्निः सोपासनः क्षमी ।
अफालकृष्टेनाग्नींश्च पितृदेवातिथींस्तथा । भृत्यांस्तु
तर्पयेत् श्मश्रुजटालोमभृद्दात्मवान् । दान्तः त्रिष-
वणस्नायी निवृत्तश्च प्रतिग्रहात् । स्वाध्यायवान् ध्यान-
शीलः सर्वभूतहिते रतः । अह्नो मासस्य वर्षस्य वा
कुर्याद्धान्यपरिग्रहम् । कृत्वा त्यजेदाश्वयुजे भवेत्
कालं अतादिना । पक्षे मासि तु वाश्नीयाद्दन्तोलूख-
लिको भवेत् । चान्द्रायणी स्वपेद्भूमौ कर्म कुर्यात्
फलादिना । ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिले-
शयः । आर्द्रवासास्तु हेमन्ते योगाभ्यासाद्दिनं नयेत् ।
१०२ अ० । "जटिलत्वमग्निहोत्रित्वं भूशय्याऽजिनधारणम् ।
वने वासः पयोमूलनीवारफलवृत्तिता । प्रतिग्रहा-
निवृत्तिश्च त्रिस्नानं व्रतधारिता । देवतातिथिपूजा
च धर्मोऽयं वनवासिनः । २१५ अ० । "एवं गृहाश्रमे
स्थित्वा द्वितीयभागमायुषः । वानप्रस्थाश्रमं गच्छेत्
सदारः साग्निरेव च । निःक्षिप्य भार्यां पुत्रेषु गच्छे-
द्वनमथापि । दृष्ट्वाऽपत्यस्य चापत्यं जर्जरीकृतविग्रहः ।
शुक्लपक्षस्य पूर्वाह्णे प्रशस्ते चोत्तरायणे । गत्वाऽरण्यं
नियमांस्तपः कुर्यात् समाहितः । फलमूलानि प-
वित्राणि नित्यमाहारमाहरेत् । यदाहारो भवेत्तेन
पूजयेत् पितृदेवताः । पूजयेदतिथिं नित्यं स्नात्वा
चाभ्यर्चयेत् सुरान् । ग्रामादाहृत्य वाश्नीयादष्टौ
ग्रासान् समाहितः । जटाश्च विभृयान्नित्यं नखरो-
माणि नो त्यजेत् । स्वाध्यायं सर्वदा कुर्यात् नियच्छे-
द्वाचमन्यतः । अग्निहोत्रञ्च जुहुयात् पञ्च यज्ञान् समा-
चरेत् । मुन्यन्नैर्विविधैर्मेध्यैः शाकमूलफलेन वा । चीर-
वासा भवेन्नित्यं स्नायात् त्रिषवणं शुचिः । सर्व-

भूतानुकम्पी स्यात् प्रतिग्रहविवर्जितः। दर्शेन पौर्णमासेन यजेत नियतं द्विजाः!। ऋक्षेष्ट्या आग्रयणे चैव चातुर्मास्यानि चाहरेत्। उत्तरायणञ्च क्रमशो दक्षस्यायनमेव च। वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः। पुरोडाशं चरुं चैव द्विविधं निर्वपेत् पृथक्। देवताभ्यश्च तद्धुत्वा वन्यं मेध्यतरं हविः। शेषं समुपभुञ्जीत लवणञ्च स्वयं कृतम्। वर्जयेन्मधुमांसादि भौमानि कवकानि च। भूस्तृणं शिग्रुकञ्चैव श्लेष्मातकफलानि च। न फालकृष्टमश्नीयात् उत्सृष्टमपि केनचित्। न ग्रामजातान्यार्त्तो वा पुष्पाणि च फलानि च। श्रावणे चैव विधिना वह्निं परिचरेत् सदा। न द्रुह्येत् सर्वभूतानि निर्द्वन्द्वो निर्ममो भवेत्। न नक्तं किञ्चिदश्नीयात् रात्रौ ध्यानपरो भवेत्। जितेन्द्रियो जितक्रोधस्तत्त्वज्ञानविचिन्तकः। ब्रह्मचारी भवेन्नित्यं न पत्नीमपि संश्रयेत्। यस्तु पत्न्या वनं गत्वा मैथुनं कामतश्चरेत्। तद्व्रतं तस्य लुप्येत प्रायश्चित्ती भवेत् द्विजः। तत्र यो जायते गर्भो न संस्पृश्यो द्विजातिभिः। न हि वेदाधिकारोऽस्य तत्त्व-मप्येवमेव हि। अधः शयीत सततं सावित्रीजपतत्परः। शरण्यः सर्वभूतानां संविभागपरो भवेत्। परीवादं मृषावादं निद्रालस्यं च वर्जयेत्। एकाग्निरनिकेतः स्यात् प्रोक्षितां भूमिमाश्रयेत्। मृगैः सह चरेद्वासं तैः सहैव च संवसेत्। शिलायां शर्करायां वा शयीत सुसमाहितः। सद्यःप्रक्षालको वा स्यात् माससञ्चयिकोऽपि वा। षण्मासनिचयो वा स्यात् समानिचय एव वा। नक्तञ्चान्नं समश्नीयात् दिवा वाहृत्य शक्तितः। चतुर्थकालिको वा स्यात् स्याद्वा चाष्टमकालिकः। चान्द्रायणविधानैर्वा शुक्ले कृष्णे च वर्त्तयेत्। पक्षे पक्षे समश्नीयात् यवागूं क्वथितां तथा। पुष्पमूलफलैर्वापि केवलैर्वर्त्तयेत् सदा। स्वाभाविकैः स्वयं शीर्णैर्वैखानसमते स्थितः। भूमौ वा परिवर्त्तेत तिष्ठेद्वा प्रपदैर्दिनम्। स्थानासनाभ्यां विहरेत् न क्वचिद्धैर्यमुत्सृजेत्। ग्रीष्मे पञ्चतपाश्च स्याद् वर्षास्वभ्रावकाशिकः। आर्द्रवासास्तु हेमन्ते क्रमशो वर्द्धयंस्तपः। 'उपस्पृश्य त्रिषवणं पितॄन् देवांश्च तर्पयेत्। एकपादेन तिष्ठेत मरीचीन्वा पिबेत् सदा। पञ्चाग्निधूमपो वा स्यादुष्मपः सोमपोऽथ वा। पयः पिबेत् शुक्लपक्षे कृष्णपक्षे तु गोमयम्। शीर्णपर्णाशनो वा स्यात् कृच्छ्रैर्वा वर्त्तयेत् सदा। योगाभ्यासरतो वा स्याद् रुद्राध्यायी भवेत् सदा। अथर्वशिरसोऽध्येता वेदान्ताभ्यासतत्परः। यमान् सेवेत सततं नियमांश्चाप्यतन्द्रितः। कृष्णाजिनी सोपवीतः शुक्लयज्ञोपवीतवान्। अथ वाग्नीन् समारोप्य स्वात्मनि ध्यानतत्परः। अनग्निरनिकेतः स्यान्मुनिर्मोक्षपरो भवेत्। तापसेष्वेव विप्रेषु यात्रिकं भैक्षमाहरेत्। गृहमेधिषु चान्येषु द्विजेषु वनवासिषु। ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान् वने वसन्। प्रतिगृह्य पुटेनैव पाणिना शकलेन वा। विविधाश्चोपनिषद आत्मसंसिद्धये जपेत्। विद्याविशेषान् सावित्रीं रुद्राध्यायं तथैव च। महाप्रास्थानिकञ्चासौ कुर्यादनशनन्तु वा। अग्निप्रवेशमन्यद्वा ब्रह्मार्पणविधौ स्थितः। ये तु सम्यगिममाश्रमं शिवमाश्रयन्त्यशुभपुञ्जनाशनम्। ते विशन्ति परमैश्वरं परं यान्ति चैव जगतोऽस्य संस्थितिम्" कूर्मपु० २६ अ०

**वानर** पुंस्त्री० वानं वनसम्बन्धिफलादिकं राति गृह्णाति रा-क। स्वनामख्याते पशुभेदे अमरः स्त्रियां ङीप्।

**वानरप्रिय** पु० ६त०। क्षीरिवृक्षे रत्नमा०।

**वानराघात** पु० वानराणामाघातो यत्र। लोध्रवृक्षे शब्दच०

**वानरी** स्त्री वानरस्य प्रियम् भक्ष्यत्वात् अण् ङीप्। १शूकशिम्ब्याम् शब्दर०। वानर+स्त्रियां ङीष्। २वानरयोषिति। [२वानराधीशे वानरनाथादयोऽप्यत्र।

**वानरेन्द्र** पु० वानर इन्द्र इव। १सुग्रीवे शब्दर० ६त०।

**वानल** पु० वानं वनभावं निविडतां लाति ला-क। (बावुइ) तृणभेदे शब्दच०।

**वानस्पत्य** पु० वनस्पतेरयम् प्रतिकृतः पुष्पाज्जातफलत्वात्। पुष्पजातफलके आम्रादौ वृक्षे अमरः।

**वानायु** पु० वनायु+पृषो०। देशभेदे (आरव) शब्दर०।

**वानायुज** पुंस्त्री० वानायुदेशे जायते जन-ड। घोटकभेदे च (आरवी) अमरः स्त्रियां ङीष्। [अमरः।

**वानीर** पु० वन-ईरन् स्वार्थेऽण्। १वेतसे २वञ्जुलवृक्षे

**वानीरक** पु० वानीर इव इवार्थे कन्। मुञ्जतृणे राजनि०

**वानेय** न० वने जले भवः ढक्। कैवर्त्तीमुस्तके अमरः।

**वान्त** त्रि० वम-क्त। उद्गीर्णे "वान्ताशीत्युच्यते बुधैः" उद्भटः।

**वान्तिहृत्** पु० वान्तिं वमनरोगं हरति हृ-क्विप्। (मयना) ख्याते वृक्षे शब्दच०। [राजनि०

**वान्तिदा** स्त्री वान्तिं रुचिं ददाति दा-क। कटभीवृक्षे

**वाप** पु० वप-घञ्। १तन्त्वादेर्बीजादेश्च २वपने ३मुण्डने च।

**वापदण्ड** पु० उप्यतेऽनेन वप–करणे घञ् कर्म० । वेमनि तन्तुवपनदण्डे अमरः । [३धान्यभेदे न० राजनि० ।

**वापित** त्रि० वप–णिच् क्त । १बीजाकृते २मुण्डिते मेदि० ।

**वापि(पी)** स्त्री वप–इञ् वा ङीप् । "दृष्ट्वात् इगमुषा वापी" इत्युत्तलक्षणे १जलाशयभेदे जलाशयशब्दे दृश्यम् २जलाशयमात्रे च "वापीं स्नातुमितो गतासि" इति काव्यप्र० । "यो वापीमथ वा कूपं देशे वारिविवर्जिते । खानयेत् स दिवं याति बिन्दौ बिन्दौ शतं समाः" कल्पतरौ वायुपु० तज्जलगुणाः "वाप्यं गुरु कटुक्षारं पित्तलं कफवातजित्" राजवल्लभ । "वापीकूपतडागं वा प्रासादं वा निकेतनम् । न कुर्याद्द्विकामस्तु अनलानिलनैरृते । आग्नेय्यां मनस्तापो नैरृते कूरकर्म कृत् । वायव्यां बलवित्तघ्नं पीयमाने जले प्रिये ! । स्थानस्य पापके भागे वापीकूपतडागकम् । अग्निदाह सदा कुर्यात् समानुमवतुष्पदाम् । नैरृते पीयमानन्तु आत्मना दुःखितो भवेत् । कन्यापि तज्जलं पीत्वा पतिं त्यजति कामतः" देवीपु० ।

**वापीह** पुंस्त्री० वापीं तत्रस्थजलं जहाति हा–क । चातके विहगे त्रिका० स्त्रियां ङीष् ।

**वाप्य** न० वाप्यां भवः यत् । १कुष्ठौषधे अमरः । २वापीभवे वप–ण्यत् । ३वपनीये च त्रि० ।

**वाम** न० वा–मन । १धने मेदि० २वाल्कूके जटा० । ३मनोहरे ४प्रतिकूले ५सव्यभागस्थे त्रि०मेदि० । ६अधमे त्रि० सि०कौ० ७सव्यदेहे न० । ८कामदेवे ९महादेवे तन्त्रोक्ते वेदाचारविरुद्धे १०मद्यादिपानरूपाचारे च पु० कुलाचारशब्दे २१२४पृ० दृश्यम् ।।११स्तोमाते स्त्री अमरः १२दुर्गायां स्त्री । "वामं विरुद्धरूपन्तु विपरीतन्तु गीयते । वामेन सुखदा देवी वामा तेन मता बुधैः" देवीपु०४५अ० । "वामान्तु वामदाक्षिण्यभावाभ्यामपि पूजयेत् । श्मशानभैरवीं देवीमुग्रतारां तथैव च । छिन्नमस्तभैरवीं चण्डीं तारां त्रिपुरभैरवीम् । एतास्तु वामभावेन यजेत् त्रिपुरभैरवीम् । सर्वत्र पितृदेवादौ यस्माद्भवति दक्षिणः । देवी च दक्षिणा यस्मात्तस्मात् दाक्षिण्यमुच्यते । या पुनः पूज्यमाना तु देवादीनां तु पूर्वतः । वामभागं स्वयं धत्ते सा वामा तु प्रकीर्त्तिता" कालिकापु० ७७अ० ।

**वामदेव** पु० कर्म० । महादेवमूर्त्तिभेदे अमरः ।

**वामन** त्रि० वम–णिच्–ल्युट्–ल्यु वा । १दक्षिणदिग्गजे अमरः । २अङ्कोटवृक्षे ४बलिवञ्चनार्थं प्रादुर्भूते हरेरवतारभेदे मेदि० तत्कथा हरिवं० २६१ अ० दृश्या । पाणिनिसूत्रस्य काशिका वृत्तिकारके ५पर्वतभेदे च । ६ह्रस्वे त्रि०अमरः स्त्रियां ङीप् । "वामनीं मूर्त्तिमाददे" ।

**वामलूर** पु० वामं लुनाति लू–रक् । वल्मीके अमरः ।

**वामलोचना** स्त्री वामे सुन्दरे लोचने यस्याः । स्त्रीभेदे अमरः ।

**वामवेध** पु० वामः प्रतिकूलो वेधः । ज्योतिषोक्ते गोचरस्य ग्रहाणां स्वस्वराश्यवधिकस्थानविशेषस्थग्रहभेदकृते योगभेदे "वामवेधविधिना त्वशोभना अपशी" इति ज्योतिषम् गोचरशब्दे २६८२ पृ० दृश्यम् ।

**वामाचार** पु० वामः वेदादिविरुद्धः आचारः । तन्त्रोक्ते मद्यमांसादिसेवनरूपे आचरणे । कुलाचार[illegible] दृश्यम्

**वामापीडन** पु० वामं यथा तथा आ[illegible]तेऽनेन आ+पीड–ल्युट् । पीलुवृक्षे शब्द[illegible]

**वामावर्त्त** त्रि०वामेनावर्त्तते आ–वृत–अच् । १वामेनावर्त्तिनि पदार्थे । भावे घञ् । २वाममार्गेणावृत्तौ पु० ।

**वामिल** त्रि० वाम+अस्त्यर्थे स्वार्थे वा इलच् । १दाम्भिके २वामे च मेदि० ।

**वामी** स्त्री वाम–गौरा० ङीष् । १अश्वाम् "अथोष्ट्रवामीशतवाहितार्थः" रघुः । २शृगाल्यां ३रासभ्यां ४करभ्याञ्च मेदि० । [ रयुतायां नार्याम् ।

**वामोरू** स्त्री वामौ सुन्दरौ ऊरू यस्याः ऊङ् । प्रशस्त-

**वाय** पु० वे–घञ् । वयने (बोना) । [वापदण्डे द्विरूपकोषः ।

**वायदण्ड** पु० वायतेऽनेन वे–करणे घञ् कर्म० । वेमनि

**वायवी** स्त्री वायोरियं अण् स्त्रियां ङीप् यलोपः । १वायुसम्बन्धिन्यां स्त्रियां २तन्त्रोक्ते ३उत्तरपश्चिमायां दिशि च जटा० ।

**वायव्य** त्रि०वायुर्देवताऽस्य वायु+यत् । १वायुदेवताके पश्वादौ "वायव्यं श्वेतमालभेत" श्रुतिः । २वायुसम्बन्धिनि च

**वायस** त्रि० वय इव अण् । १काके वायं वयनं स्यति सो–क । २अगुरुवृक्षे ३श्रीवासे च मेदि० ।

**वायसविद्यिक** त्रि० वायसविद्यां वेत्ति ठक् । काकचेष्टाभेदेन शुभाशुभाभिज्ञे ।

**वायसादनी** स्त्री वायसैः काकैरद्यते अद–ल्युट् ङीप् । १काकतुण्ड्यां २महाज्योतिष्मत्याञ्च राजनि० ।

**वायसाराति** पु० ६त० । पेचके अमरः ।

**वायसी** स्त्री वायसस्येवास्य प्रियत्वात् । १काकोडुम्बरिका-

याम् २काकमाच्यां च मेदि० ३महाज्योतिष्मत्यां ४काकनासायां ५काकतुण्ड्यां च राजनि० ।

**वायसेक्षु** पु० वायसानामिक्षुरिव प्रियः । काशतृणे राजनि०

**वायसोली** स्त्री वायसमोहते ओल-उन्मेषे अच् डस्य लः शक० गौरा० ङीष् । काकमाच्याम् शब्दर० । स्वार्थे क तत्रैव ।

**वायु** पु० वा-उण् । १स्पर्शगुणके पञ्चभूतमध्ये भूतभेदे उत्तरपश्चिमदिगधिपतौ २देवभेदे ३देहस्थधातुभेदे च अनिलशब्दे १६४ पृ० दृश्यम् ।

**वायुगुल्म** पु० वायुना गुल्म इव । जलभ्रमे त्रिका०

**वायुदारु** पु० वायुना दीर्य्यतेऽसौ दृ-उण् । मेघे त्रिका० ।

**वायुपुत्र** पु० ६त० । १हनुमति २भीमे च वायुसुतादयोऽप्यत्र

**वायुफल** न० वायुना फलति प्रतिफलति फल-अच् । १इन्द्रचापे २करकायां च मेदि० ।

**वायुभक्ष** पुंस्त्री० वायुं भक्षति भक्ष-अण् । १सर्पे राजनि० । स्त्रियां ङीप् । स्यु । वायुभक्षणोऽप्यत्र । वायुर्भक्ष्योऽस्य । वायुभक्ष्य तत्रार्थे पुंस्त्री० स्त्रियां टाप् । [शब्दर० ।

**वायुवर्त्मन्** न० । वायोर्वर्त्म सञ्चारमार्गो यत्र । आकाशे

**वायुवाह** पु० वायुना उह्यते वह-घञ् । धूमे हेमच० ।

**वायुवाहिनी** स्त्री वायुं देहस्थवायुं वाहयति सञ्चारयति वह-णिच्-णिनि । वायुसञ्चारिण्यां देहस्थशिरायाम्—कायशब्दे १८१६ पृ० दृश्यम् । [भरतः ।

**वायुसख** पु० वायोः सखा सहचरः अच्समा० । अग्नौ

**वायुसखि** पु० वायुः सखा यस्य । अग्नौ अमरः ।

**वाय्वास्पद** न० ६त० । वायुसञ्चारस्थाने आकाशे धनञ्जयः ।

**वार्** न० वृ० वृ-क्विप् । अप्सु अमरः ।

**वार** पु० वृ-घञ् । १सङ्घे २अवसरे अमरः । ३स्वोपयुक्तकाले (पाला) "वारोऽङ्गराजस्य" सा० द० । ४द्वारे ५शिवे ६कुब्जवृक्षे ७क्षणे मेदि० । वार्+वले अच् । ८जलसङ्घे न० सूर्य्यादिग्रहाधिकृते ६दिने पु० यथा रविवारः रविस्वामिकं दिनम् । तदानयनञ्च सू० सि०

"मन्दादधः क्रमेण स्युश्चतुर्था दिवसाधिपाः । वर्षाधिपतयस्तद्वत् तृतीयाश्च प्रकीर्त्तिताः । ऊर्द्ध्वक्रमेण शशिनो मासानामधिपाः स्मृताः । होरेशाः सूर्य्यतनयादधोऽधःक्रमशस्तथा ।" रङ्ग० "शनेः सकाशादधःकक्षाक्रमेण चतुर्थसङ्ख्याका ग्रहा दिनाधिपतयो वारेश्वरा भवन्ति । यथा शनिरविचन्द्रभौमबुधगुरुशुक्रा इति । वर्षस्य षष्ट्यधिकशतत्रयदिनात्मकस्य स्वामिनस्तद्वन्मन्दादधः क्रमेण तृतीयसङ्ख्याका ग्रहा उक्ताः । चः समुच्चयार्थे । तत्क्रमश्च यथा शनिभौमशुक्रचन्द्रगुरुसूर्य्यबुधा इति । चन्द्रात् सकाशादूर्द्ध्वकक्षाक्रमेण ग्रहा मासानां त्रिंशद्दिनात्मकानां स्वामिनः कथिताः । तत्क्रमश्च चन्द्रबुधशुक्ररविभौमगुरुशनय इति । शनेः सकाशादधोधः क्रमतः अधःक्रमेण होरेशाः "होरेति लग्नं भगणस्य चार्द्धम्" इत्युक्तलग्नार्द्धभागात्मकहोराणां दिने द्वादश रात्रौ द्वादशेत्यहोरात्रे चतुर्विंशतिहोराणामित्यर्थः । होरा सार्द्धदिनाडिका । इति षष्टिघटिकात्मकेऽहोरात्रे चतुर्विंशतिहोराणामित्यन्ये स्वामिनस्तथा मासेश्वरवद्व्यवहिताः कथिताः । यथा तत्क्रमः शनिगुरुभौमरविशुक्रबुधचन्द्रा इति । अत्र शनेः सर्वोर्द्ध्वस्थत्वाच्चन्द्रस्य सर्वाधः स्थत्वात् ताभ्यामध ऊर्द्ध्वक्रमः क्रमेणोक्तः अन्यग्रहस्यावधित्वाभ्युपगमे विनिगमनाविरहापत्तेः । न तु शनेरवधित्वेन सृष्ट्यादौ दिनवर्षहोराणां स्वामित्वं न वा चन्द्रस्यावधित्वेन सृष्ट्यादौ मासेशत्वं पूर्वखण्डोक्तानीतनदोषैर्विरोधापत्तेः । कल्पोपपत्तेः । होराद्धपलग्नानां क्रान्तिवृत्तेऽधःक्रमेण मेषादीनां कक्षावादूर्द्ध्वकक्षातोऽधः क्रमेण होरेशत्वं युक्तम् । एकमहोरात्रे चतुर्विंशतिहोराः । अतएव त्र्यो होरेशा गताः चतुर्थो होरेशो द्वितीयदिनारम्भे स एव प्रथमहोरेशत्वाद् द्वितीयदिने होरेशः एवमुत्तरत्रापि । एवमेतद्वारक्रमेण सावनवर्षे त्रयो वारा अधिका इति पूर्ववर्षेशाद्वर्त्तमानवर्षेशाऽधःकक्षाक्रमेण तृतीय उत्तरोत्तरम् । एवं सावनमासे द्वौ वारौ वारक्रमेण मासेशत्वाधिकाविति कक्षोर्द्ध्वक्रमे वारक्रमेणैकान्तरितत्वात् कक्षोर्द्ध्वक्रमेण मासेश्वर उत्तरोत्तरमित्युपपन्नं मन्दादित्यादि श्लोकद्वयम्" रङ्गनाथः ।

वारप्रवृत्तिश्च देशभेदात् भिन्नकालीना यथोक्तं सि० शि० "अर्कोदयादूर्द्ध्वमधश्च ताभिः प्राच्यां प्रतीच्यां दिशि तत्प्रवृत्तिः । ऊर्द्ध्वं तथाऽधश्च कलाभिराभिरवागुदग्दक्षिणगोलमात्रे" मू० । "प्राच्यां ताभिर्घटीभिर्दिनवारप्रवृत्तिरर्कोदयादूर्द्ध्वम् भवति प्रतीच्यां तु तस्मादधः । यतो लङ्कोदये वारादिः अतएव च वारादुत्तरगोलस्थे चरोर्द्ध्वघटिकाभिरूर्द्ध्वम् यतस्तदा उन्मण्डलं क्षितिजादूर्द्ध्वम् । दक्षिणे त्वधः अतस्तत्रोदयादधः वारप्रवृत्तिः" प्रमिता० । "जगति तमोभूतेऽस्मिन् सृष्ट्यादौ भास्करादिभिः

स्फुटैः । यत्राहर्द्दिनपतेर्द्दिनवारोऽर्कोदयात् तस्मात्” । श्रीपतिरपि “स्फुटैर्खे ध्वान्तमयेऽपि विम्बे यहेषु स्फुटेष्विनपूर्वकेषु । दिनप्रवृत्तिस्तदधीश्वरस्य वारस्य तस्मादुदयप्रवृत्तिः । लङ्कोदगवाच्यस्वरात् प्रथममपरतः पूर्वदेशे च पश्चात् स्वाभोत्थाभिर्घटीभिः सवितुरुदयतो वासरे वा प्रवृत्तिः । श्रेया सूर्योदयात् प्राक् चरशकलभवैश्चासुभिर्याम्यगोले पश्चात् तैः सौम्यगोले युतिवियुतिवशाद्व्ययोः स्वदेशाः” । अन्योऽप्याह “केचिद्वारं सवितुरुदयात् प्राहुरन्ये दिनार्द्धात् भानोरर्द्धास्तमयसमयादूचिरे केचिदेवम् । वारस्यादिं यवननृपतिर्द्दिङ्मुहूर्त्ते निशाया लाटाचार्य्यः कथयति पुनश्चार्द्धरात्रे स्वतन्त्रे”। एवं मतभेदे व्यवस्था मलमा॰ उक्ता यथा “द्वौ तिथ्यन्तावेकवारे यत्र स स्यात् दिनक्षयः” कूर्म्मपु॰ “एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा। तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम्” वशिष्ठः। सौमेत्यादिवशिष्ठवचनैकवाक्यतया सावनदिनवत् वारप्रवृत्तिः सूर्य्योदयावधिरेव सूर्य्यसि॰ “सूतकानां परिच्छेदो दिनमासाब्दपास्तथा । मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तिता” । अत्र दिनाधिपस्य रव्यादेर्भोग्यं दिनं वाररूपं सावनमानवात्मकम् यत्, “रेखापूर्व्वापरयोः कृत्यादिना कथितं वारप्रवृत्तिरुक्ता तत् ज्योतिषशास्त्रोक्तहोराज्ञानार्थम्” । वाराणां कार्य्यविशेषविधानार्थं संज्ञाभेदा यथा “चरः सौम्यो गुरुः क्षिप्रो लघुः शुक्रो रविर्ध्रुवः । शनिश्च दारुणो ज्ञेयो भौम उग्रः शशी समः । चरक्षिप्रैः प्रयातव्यं प्रवेष्टव्यं ध्रुवैः । दारुणोग्रैश्च योद्धव्यं क्षत्रियैर्युद्धकाङ्क्षिभिः” । इति सामान्यतोऽभिधाय “नृपाभिषेकोऽग्निकार्य्यञ्च सूर्य्यवारे प्रशस्यते । सोमे तु लेपयानं च कुर्य्याच्चैव गृहादिकम् । सैनापत्यं शौर्य्ययुद्धं शस्त्राभ्यासः कुजे तथा । सिद्धिकार्य्यञ्च मन्त्रञ्च यात्रां चैव बुधे तथा । पठनं देवपूजा च वस्त्रदानं गुरौ । कन्यादानं गजारोहः शुक्रे स्यात् समवः स्त्रिया । स्थाप्यं गृहप्रवेशश्च गजबन्धः शनौ शुभः” गरुड़पु॰ १२२ अ॰

**वारक** त्रि॰ वारयति वृ–णिच्–ण्वुल् । १प्रवृत्तिनिरोधके । २अश्वभेदे ३अश्वगतिविशेषे च पु॰ मेदि॰ । ४कष्टस्थाने ५ह्रीवेरे न॰ हेमच॰ ।

**वारकिन्** पु॰ वारकः कष्टस्य इनि । १विलासे २पर्णाशोपाने (वारद) ३समुद्रे ४शत्रौ च मेदि॰ ।

**वारकीर** पु॰ वारे कीर इव । १श्यालके त्रिका॰ वारग्राहके ३वाड़वे ४यूकायां ५वेणिवेधिन्यां ६नीराजितहये च मेदि॰ ।

**वारङ्ग** पु॰ वृ॰ वृ–अङ्गच् । खड्गादिमुष्टौ (मुट) सि॰कौ॰ ।

**वारट** न॰ वृ॰ वृ–अटच् । १क्षेत्रे त्रिका॰ २क्षेत्रसमूहे शब्दर॰ ३हंस्यां स्त्री हेमच॰ टाप् ।

**वारण** न॰ वृ॰–वृ–ल्युट् । प्रवृत्तिप्रतिरोधे १निषेधे मेदि॰ २हस्त्यादिवारणे च जटा॰ । ३गजे पुंस्त्री॰ अमरः स्त्रियां ङीष् । ४वाणवारे कवचे पुंन॰ शब्दच॰ ।

**वारणबुषा** स्त्री वारणं पुष्णाति पुष–क पृषो॰ षस्य वः । कदल्याम् अमरः ।

**वारणवल्लभा** स्त्री ६त॰ । कदल्याम् त्रिका॰ ।

**वारमुख्या** स्त्री वारे वेश्याद्वन्द्वे मुख्या । बहुजनसत्कृतायां वेश्यायाम् अमरः ।

**वारंवारम्** अव्य॰ वृ–णमुल् द्वित्वम् । पौनःपुन्ये ।

**वारयितृ** पु॰ वृ॰ वृ–तृच् । १पत्यौ हला॰ । २वारणकर्त्तरि त्रि॰ ।

**वारयोषा** स्त्री वारस्य जनसमूहस्य योषा साधारणत्वात् । वेश्यायाम् । ६त॰ । वारवध्वादयोऽप्यत्र हेमच॰ ।

**वारलीक** पु॰ वार्जलम् अलीकं यत्र । (वाबुइ तुलसी) क्षुपे शब्दर॰ । [कवचे अमरः ।

**वारवाण** पुंन॰ वार्य्यते वृ-घञ् वारो वार्य्यो बाणो यस्य ।

**वारवाणि** स्त्री वारं समूहं वणते वण–इण् वा ङीप् । वेश्यायाम् त्रिका॰ । [२कदल्यां शब्दर॰ ।

**वारवुषा** स्त्री वारं जलसंघं वर्षत्यत्र वृष–क । १धान्ये

**वारवेला** स्त्री ६त॰ । सूर्य्यादिदिनविशेषे वर्ज्ज्यकालभेदे “सूत४मुनि७यम२शर५मङ्गल८राम३रस६ भास्करादियामार्द्ध” । प्रवर्त्तते हि वारवेला न शुभा शुभकार्य्यकरणाय ज्यो॰त॰ । [कि अलुक् समा॰ । समुद्रे शब्दर॰ ।

**वारांनिधि** स्त्री वारां जलराशीनां निधिराधारः नि+धा-

**वाराणसी** स्त्री वरणा च असी च सीमत्वेनास्त्यस्या अण् पृषो॰ काशीपुर्य्यां हेम॰। पृषो॰ वराणस्यप्यत्र । वरणाशब्दे ४८४८पृ॰ दृश्यम् । [राजनि॰ ।२वराहसम्बन्धिनि त्रि॰।

**वाराह** पु॰ वराहस्येदं प्रियत्वात् अण् । १महापिण्डीतकवृक्षे

**वाराहकर्णी** स्त्री वराहस्यायं वाराहः इव कर्णः पत्रमस्याः ङीप् । अश्वगन्धायाम् राजनि॰ ।

**वाराहपत्री** स्त्री वाराहस्तत्कर्ण इव पत्रमस्याः ङीप् । अश्वगन्धायाम् राजनि॰ ।

**वाराहाङ्गी** स्त्री वाराहमिवाङ्गमस्याः ङीप्। दन्तीवृक्षे भावप्र०।

**वाराही** स्त्री वराहस्येयम् अण् ङीप्। अष्टमातृकामध्ये १वराहशक्तौ "यज्ञवराहमतुलं रूपं या बिभ्रतो हरेः। शक्तिः साप्याययौ तत्र वाराहीं बिभ्रती तनुम्" देवीमा० "वाराही नारसिंही च" मन्त्रमातृस्तवः। २योगिनीभेदे हरचन्द्रिकेश्वरपु०। ३वराहक्रान्तायाम् अमरः ४वराहयोषिति च ५मुस्तामाक्षगे राजनि०।

**वाराहीकन्द** पु०(चामराल) ख्याते कन्दभेदे "वाराहीकन्द एवान्यैश्चर्मकारालुको मतः। अनूपे स भवेद्देशे वराहइव लोमवान्" भावप्र०।

**वारि** न० वृ—इञ्। १जले अमरः २ह्रीबेरे च हेमच०। वार्यतेऽनया वृ-णिच्-इन् वा ङीप्। ३गजबन्धन्याम् अमरः। "वार्यर्गलाभङ्ग इव प्रवृत्तः" रघुः। ४वाचि ५सरस्वत्याम् च स्त्री शब्दरत्नः ६कलस्यां धरणिः ७वन्दौ च मेदि०।

**वारिकण्टक** पुंन० वारिणः कण्टक इव। शृङ्गाटके शब्दा०

**वारिकर्णी** स्त्री वारिणि कर्ण इव पत्रमस्याः ङीप्। १कुम्भ्याम् (पाना) शब्दर० स्वार्थे क। तत्रैव।

**वारिकर्पूर** पुंस्त्री वारिणि कर्पूर इव। इल्लिशमत्स्ये त्रिका० स्त्रियां ङीप्।

**वारिकुब्ज** पु० वारिणि कुब्ज इव वक्राकृतित्वात्। शृङ्गाटके शब्दर०। स्वार्थे क। तत्रैव त्रिका०।

**वारिक्रिमि** पु०६त०। जलौकायां त्रिका०। [कायाम् त्रिका०।

**वारिचत्वर** पु० वार्येव चत्वररूपमस्याधारत्वात्। कुम्भि-

**वारिचर** पुंस्त्री० वारिषु चरति चर-अच्। १मत्स्ये २जलचरजन्तुमात्रे त्रि० स्त्रियां ङीप्। [शैवाले त्रिका०

**वारिचामर** न० वारिणश्चामरमिव शोभाहेतुपुच्छाकृतित्वात्।

**वारिज** न० वारिणि जायते जन-ड। १पद्मे २लवङ्गे ३गौरसुवर्णे ४लवणभेदे च राजनि०। ५शङ्खे हेमच० ६शम्बूके पु० शब्दच०। ७जलजातमात्रे त्रि०।

**वारितस्कर** पु०वारिणः तस्कर इवापहारकत्वात्। १सूर्ये २मेघे शब्दमा०। ३सुशके च।

**वारित्रा** स्त्री वारिणस्त्रायते त्रै-क। छत्रे त्रिका०।

**वारिद** न० वारि ददाति दा-क। १मेघे २मुस्तके च अमरः। ३जलदातरि त्रि० ४वालायां स्त्री शब्दच०।

**वारिधि** पु० वारीणि धीयन्तेऽस्मिन् धा-आधारे कि। १समुद्रे शब्दर० वारिनिध्यादयोऽप्यत्र जलाधारे २घटादौ च

**वारिपर्णी** स्त्री वारिणि पर्णान्यस्याः ङीप्। कुम्भिकायाम् (पाना) अमरः।

**वारिपालिका** स्त्री वारीणि पालयति आवरणेन पाल-ण्वुल्। कुम्भिकायाम (पाना) शब्दमा०।

**वारिपृश्नी** स्त्री वारिणि पृश्निः पर्णमस्याः ङीप्। कुम्भिकायाम् (पाना) शब्दमा०। [त्रिका०।

**वारिबदरा** स्त्री वारिसमीपभवा बदरेव। प्राचीनामलके

**वारिबालक** न० वारिणो बालक इव। ह्रीबेरे हारा०।

**वारिभव** न० वारिणो नेत्रजलाय वारिणि वा भवति प्रभवति वा भू-अच्। १स्रोतोऽञ्जने राजनि०। २जलभवमात्रे त्रि०

**वारिमसि** पु० वारि जलं मसिरिव नीलतापादकं यस्य। १मेघे त्रिका० २मुस्तके च। [(पाना) त्रिका०।

**वारिमूली** स्त्री वारिणि मूलमस्याः ङीप्। कुम्भ्याम्

**वारिरथ** पु०वारिणि रथ इव गमनसाधनत्वात्। भेलके त्रिका०

**वारिराशि** पु० वारीणां राशयोऽत्र। १समुद्रे त्रिका०। ६त०। २जलसमूहे च। [२जलजातमात्रे त्रि०।

**वारिरुह** न० वारिणि रोहति रुह-क। १पद्मे राजनि०

**वारिवदन** न० वारियुक्तं वदनं यस्मात्। प्राचीनामलके तत्सेवने हि मुखे वारिनिस्रावः।

**वारिवर** न० वारि वृणोति वृ-अच्। करमर्दके जटा०।

**वारिवल्लभा** स्त्री वारि वल्लभमस्याः जनकत्वात्। विदार्याम् राजनि०। [च अमरः। शिव। वारिवाड़प्यत्र भत्ते वार्यूहः।

**वारिवाह** पु० वारीणि वहति वह-अण्। १मेघे २मुस्तके

**वारिश** पु०वारिणि समुद्रजले शेते शी-ड। विष्णौ त्रिका०।

**वारीश** पु० ६त०। १समुद्रे २वरुणे च। वारिनाथादयोऽप्यत्र।

**वारु** पु० वारयति रिपून् वारि-उण्। विजयकुञ्जरे हारा०।

**वारुण** न० वरुणस्येदमण्। १जले २वरुणसम्बन्धिनि त्रि०। स देवताऽस्य अण्। ३वरुणदेवताके त्रि०। ४शततारके न०।

**वारुणि** पु० वरुणस्यापत्यम् इञ्। अगस्त्यमुनौ त्रिका०।

**वारुणी** स्त्री वरुणो देवताऽस्य वरुणस्येदं वा अण् ङीप्। १पश्चिमदिशि २मदिरायाम् हेमच०। ३शतभिषातारायां। ४गण्डदूर्वायाम् ५दूर्वायां मेदि०। ६इन्द्रवारुण्यां राजनि० ७वरुणस्त्रियां ८शतभिषानक्षत्रयुक्तचैत्रकृष्णत्रयोदश्यां च स्कन्दपुराणे। "वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी। गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समा" वारुणं शतभिषा। "शनिवारसमायुक्ता सा महावारुणी स्मृता। गङ्गायां यदि लभ्येत कोटि

सूर्यग्रहैः समा । शुभयोगसमायुक्ता शनौ शतभिषा यदि । महामहेति विख्याता त्रिकोटिकुलमुद्धरेत्” “अत्र संज्ञाविधेः सार्थकत्वाय निमित्तत्वेन मासपक्ष-तिथ्युल्लेखानन्तरं महावारुणीमहामहावारुण्याद्युल्ले-खनीये स्यात् फाल्गुन्यादिसंज्ञोल्लेखवत् पौर्णमास्यमावा-स्ययोः पश्चादुल्लेखश्च ति॰त॰। अत्र च दैवदिनत्वात् सावन-दिनमेव ग्राह्यम् “सूतकानां परिच्छेदो दिनम सावनपा-त्तय । मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तितः” सू॰सि॰ उक्तेः । कौमराख्योः “द्वौ तिथ्यन्तावेकवारे यत्र स्यात् स दिनक्षयः” । वशिष्ठः “एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा । तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम्” इत्येतयोर्वचनयोरेकवाक्यतयापि तथावगम्यते । रेखापूर्वपरयोरित्यादिकन्तु ज्योतिः-शास्त्रोक्तं कालहोरादिज्ञानार्थमिति । अत्र “संक्रा-न्तिषु व्यतीपाते ग्रहणे चन्द्रसूर्ययोः । पुष्ये स्नात्वा च गङ्गायां कुलकोटीः समुद्धरेत्” । इति ब्रह्मा-ण्डपुराणात् ग्रहणमात्रे त्रिकोटिकुलोद्धरणवि-धानात् ततोऽधिकेषु वारुण्यादिषूत्तरोत्तरगुरुषु महा-महावारुण्यादिषु यत् त्रिकोटिकुलोद्धरणफलं तदुद्ध-रणगततारतम्येनाविरुद्धम् “यं यं क्रतुमधीते च तस्य तस्याप्नुयात् फलम्” याज्ञवल्क्योक्ताध्ययनात् यथा तत्तद्यागकरणेऽधिकफलम् अतएव पिण्डाना-मादरोऽपि तथेति । नचात्र “स्नानं कुर्वन्ति याना-र्यं चन्द्रे शतभिषां गते । सप्तजन्म भवेयुस्ता दुर्भगा विधवाध्रुवम्” । “त्रयोदश्यां तृतीयायां दशम्याञ्च विशेषतः । शूद्रविट्क्षत्रियाः स्नानं नाचरेयुः कथ-ञ्चन” इति प्रचेतोजाबालिवचनाभ्यां स्त्रीणां शूद्रा-दीनाञ्च स्नाननिषेध इति वाच्यम् “भोगाय क्रियते यत्तु स्नानं यादृच्छिकं नरैः । तन्निषिद्धं दशम्यादौ नित्य नैमित्तिके न तु” इति हेमाद्रिधृतवचनेन रागप्राप्त-स्नान एव निषेधात् नक्षत्रेऽपि तथाकल्पनात् । अत्र त्रयोदश्यां पूर्णायां पूर्वाह्णेतरकाले नक्षत्रादिसत्त्वे परदिने पूर्वाह्णे तिथिनक्षत्रलाभेऽपि पूर्वदिन एव स्नानम् । तथा च कालमाधवीये नारदीयम् “आदि-त्योदयवेलाया आरभ्य षष्टिनाडिकाः । तिथिस्तु सा हि शुद्धा स्यात् सार्वतिथ्यो ह्ययं विधिः” अत्र पूर्वतिथेः शुद्धत्वाभिधानात् तत्परतिथेरशुद्धत्वाभिधानं प्रतीयते । रात्रावपि वारुण्यादिषु गङ्गायां स्नानम् । “दिवा रात्रौ च सन्ध्यायां गङ्गायाञ्च प्रसङ्गतः । स्नात्वाऽश्वमेधजं पुण्यं गृहेऽप्युद्धृतवज्जलैः” । गङ्गावाक्यावल्यां देवलः “महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम् । तस्यां स्नानं न कर्त्तव्यं काम्यनैमित्तिकादृते” । अत्र महा-निशायामपि काम्यनैमित्तिकं स्नानं प्रतीयते” । ति॰त॰रघु॰

**वारेन्द्री** स्त्री देशभेदे (वारेन्द्रभूमि) (राजशाही) वङ्गदेश प्रदेशभेदे ।

**वार्चर** त्रि॰ वारि चरति चर–ट । जलचरे हंसादौ ।

**वार्णिक** पु॰ वर्णस्तल्लेखनं शिल्पमस्य ठञ् । लेखके शब्दच॰

**वार्त्त** न॰ वृत्ति+अण् । १आरोग्ये २असारे ३निरामये ४वृत्तिशीले च त्रि॰ अमरः । ५दुर्गायां “पश्वादिपालनाद्देवी कृषिकर्मान्तकारणात् । वर्त्ताकारणाद्वापि वार्त्ता सैव प्रगीयते” देवीपु॰ । ६वृत्तौ कृषिकर्मणि ७जनश्रुतौ अमरः । ८वृत्तान्ते ९वार्त्ताकुणे मेदि॰ । १० कालकर्त्तृके भूतनाशने च स्त्री “अस्मिन् महामोहमये कटाहे सूर्याग्निना रात्रिदिनेन्धनेन । मासर्त्तुदर्वीपरिघट्टनेन भूतानि कालः पचतीति वार्त्ता” इति भा॰व॰ यक्षप्रश्नः ।

**वार्त्ताक** पु॰ वार्त्तमारोग्यमाकयति गमयति आक–अच–अण् । वार्त्ताकौ त्रिका॰ । भावप्र॰ स्त्रीत्वमप्युक्तं ङीप्

**वार्त्ताकु** स्त्री वार्त्तमारोग्यमाकयति गमयति आक–पिच्–उण् । वृन्ताके (वेगुन) शब्दच॰ । “अग्निप्रदा१ मारुत-नाशिनी२ च शुक्रप्रदा३ शोणितवर्द्धिनी४ च । हृल्लास-कासारुचिनाशिनी च ५।६।७। वार्त्ताकुरेषा गुणसप्त-युक्ता । सा बाला कफवातघ्नी पक्वा सक्षारपित्तला । सदाफला त्रिदोषघ्नी रक्तपित्तप्रसादनी । अङ्गारपक्वा वार्त्ताकुः किञ्चित् पित्तकरी मता । कफमेदोऽनिल-हरा परा लघुतरा परा” राजनि॰ । “वृन्ताकं स्वादु तीक्ष्णोष्णं कटुपाकमपित्तलम् । ज्वरवातबलासघ्नं दी-पनं शुक्रलं लघु । तद्बालं कफपित्तघ्नं वृद्धं पित्त-करं गुरु । वृन्ताकं पित्तलं किञ्चिदङ्गारोपरिपाचि-तम् । कफमेदोऽनिलामघ्नमत्यन्तं लघु दीपनम् । तदेव हि गुरु स्निग्धं सतैलं लवणान्वितम् । अपरं श्वेत-वृन्ताकं कुक्कुटाण्डसमं भवेत् । तदर्शःसु विशेषेण हितं हीनञ्च पूर्वतः” भावप्र॰ । तत्रार्थे पु॰ त्रिका॰ ।

**वार्त्तायन** पु॰ वार्त्तया अयनं येन । प्रवृत्तिज्ञे चरे हेमच॰

**वार्त्तावह** पु॰ वार्त्तामावहति आ+वह–अण् । १कृषि-वाणिज्याजीविनि वणिग्भेदे अमरः २वृत्तान्तवाहके त्रि॰

**वार्त्तिक** न॰ वृत्तिरूपेण कृतो ग्रन्थः ठक् । “उक्तानुक्त-

दुरुक्तार्थव्यक्तकारि तु वार्त्तिकम्” इत्युक्ते सूत्रानुक्ताद्यर्थाविष्कारके १ग्रन्थभेदे हेमच० । वार्त्तायां तद्वरणे नियुक्तः ठक् । २चरे त्रि० । वृत्तिः कृष्यादिः प्रयोजनमस्य ठञ् । ३वैश्ये ४वर्त्तिकाखगे पुंस्त्री० स्त्रियां ङीष् । राजनि० ५वार्त्ताकौ शब्दर० । ६खगभेदे (वटेर) स्त्री हारा० ।

**वार्द्दर** न० वारे जलाय दीर्य्यते दृ—अप् । १दक्षिणावर्त्तशङ्खे २काकचिञ्चायाम् ३कृष्णजावीज ४भारत्यां मेदि० ५कृमिजे ६आम्रवीजे च । वारेव दरम् । ७जले च विश्वः ।

**वार्द्दल** न० वार्दल्यतेऽत्र दल—आधारे क । १दुर्दिने २मसीधारे पु० मेदि० ।

**वार्द्धक** न० वृद्धानां समूहः तस्य भावः कर्म वा वुञ् । १वृद्धसमूहे वृद्धत्व २भावे ३कर्मणि च मेदि० ।

**वार्द्धक्य** न० वृद्धस्य भावः कर्म वा ष्यञ् कुक् च । वृद्धत्वे अमरः । [त्रिका० ।

**वार्द्धि** पु० वारि जलानि धीयन्तेऽत्र धा–कि उप० । समुद्रे

**वार्द्धिभव** न० वार्द्धौ समुद्रे भवति भू–अच् । समुद्रलवणे राजनि० । २समुद्रभवमात्रे त्रि० ।

**वार्द्धुषि** पु०वृद्ध्या जीवति इण् वृद्धेर्द्धुषिनादेशः । वृद्ध्याजीवे अमरः । स्वार्थे क तत्रैव । “समार्घं धान्यमादाय महार्घं यः प्रयच्छति । स वै वार्द्धुषिको नाम हव्यकव्यबहिष्कृतः” स्मृतिः । वृद्धिश्च वृद्धिशब्दे वक्ष्यते तत्रोक्तनियमातिक्रमेण अनापदि स्वयमन्यद्वारा वा स्वाश्रयान्येन यो व्यवहरति तस्यैव प्रायश्चित्तम् आपदि तु स्वयं करणे नियमातिक्रमे च न दोषः” प्रा० वि० ।

**वार्द्धुषिन्** त्रि० वृद्धि+अस्त्यर्थे इनि प्रकृतेः नि० वार्द्धुषिभावः । वृद्ध्याजीविनि भा० आ० ४८२६ श्लो० ।

**वार्द्धुष्य** न० वार्द्धुषेर्भावः ष्यञ् । धान्यादिवर्द्धनोपाये (वाड़िदेया) त्रिका० ।

**वार्द्धीनस** पुंस्त्री० वारि जलानि धयति धा–क्विप् वार्धीः नासा नासिका यस्य नसादेशः । १गण्डके त्रिका० स्त्रियां ङीष् । “त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् । वार्द्धीनसः प्रोच्यतेऽसौ हव्ये कव्ये च सत्कृतः” इत्युक्ते २छागभेदे “वार्द्धीनसस्य मांसेन तृप्तिर्द्वादशवार्षिकी” मनुः । ३पक्षिभेदे च “रक्तपादो रक्तशिरा रक्तचञ्चुर्विहङ्गमः । कृष्णो वर्णेन च तथा पक्षी वार्द्धीनसो मतः” मार्क०पु०श्राद्धकल्पम् । वक्ष्यदानाख्ये कालिकापु० ६६अ० उक्तो यथा “नीलग्रीवो रक्तशीर्षः कृष्णपादः सितच्छदः । वार्द्धीनसः स्यात् पक्षीशो मम विष्णोरतिप्रियः” । पृषो० वाध्रीणसोऽप्यत्र ।

**वार्भट** पुंस्त्री०वारि भट इव कुम्भीरे त्रिका० स्त्रियां ङीष् ।

**वार्मण** न० वर्मणां समूहः अण् न टिलोपः । कवचसमूहे अमरः । [समूहे शब्दर० ।

**वार्मिण** न० वर्मिणां समूहः अण् न टिलोपः । कवचि-

**वार्मुच** पु० वारि जलानि मुञ्चति मुच–क्विप् । १मेघे शब्दर० २मुस्तके च ।

**वार्य्यिला** स्त्री वाजीता शिला शाक० । करकायां शब्दच० ।

**वार्षक** न० पृथिवीभागभेदे । “दशधा विभजन् क्षेत्रमकरोत् पृथिवीमिमाम् । इल्लाकुज्यद्वायाद्यो मध्यदेशमवाप्तवान् । कोष्ठके वार्षकं चैतं रचाष्टिर्वभूव ह” अग्निपु० ।

**वार्षिक** त्रि० वर्षे वर्षासु वा भवः ठञ् । १वत्सरभवे २वर्षाकालभवे च । ३त्रायमाणलतायां न० मेदि० तत्रार्थे स्त्री राजनि० स्त्रीत्वे ङीप् । ४वर्षे वर्षे कर्त्तव्यायां पूजायां स्त्री ङीप् । “शरत्काले महापूजा क्रियते या च वार्षिकी” देवीमा० । [अमरः ।

**वार्हत** न० वृहत्याः फलम् अण् तस्य न लुप् । वृहतीफले

**वार्हद्रथ(थि)** पु० वृहद्रथस्यापत्यम् अण् इञ् वा । वृहद्रथराजपुत्रे जरासन्धे नृपे त्रिका० अणन्तः शब्दर० ।

**वार्हस्पत्य** न० वृहस्पतिना प्रोक्तमधीते पत्यन्तत्वात् यक् । १चार्वाके रत्नमा० । तेन प्रोक्तं तस्येदं वा यक् । २नीतिशास्त्रे ३बौद्धागमे च । ४वृहस्पतिसम्बन्धिनि त्रि० । ५वर्षभेदे गुरुवर्षशब्दे २६१८४०ष्ठ्याम् स देवताऽस्य अण् । ६तद्देवताके त्रि० ७पुष्यनक्षत्रे न० शैषिकोऽण् । वार्हस्पत तत्सम्बन्धिनि त्रि० स्त्रियां ङीप् ।

**वालव** पु० वल–घञ् वालसत्त्वं वाति गच्छति वा–क । तिथ्यर्द्धात्मके द्वितीये करणे ज्यो०त० । [लुकल अप्यत्र न०

**वाल्क** न० वल्कैन निर्वृत्तमण् । वल्कजातेवस्त्रे । वा-

**वाल्मिकि** पु० वल्मीके भवः इञ् पृषो० । रामायणग्रन्थकर्त्तरि मुनिभेदे द्विरूपको० ।

**वाल्मीक(कि)** पु० वल्मीके भवः अण् इञ् वा । भार्गवे प्राचेतसे मुनिभेदे जटा० । [अमरः ।

**वावदूक** त्रि० वद–यङ् लुक्–ऊकञ् । बहुवदनशीले वक्तरि

**वावय** पु० वय–यङ्लुक्–अच् । (वाबुइ) तुलसीभेदे शब्दच० ।

**वावृत** संभक्तौ दि० आत्म० सक० सेट् क्त्वा वेट् । वावृत्यते अवावर्त्तिष्ट । “ततो वावृत्यमाना सा” भट्टिः ।

**वावृत्त** त्रि० वावृत–क्त । कृतवरणे ।

**वाश** तिरश्चां शब्दे अक० आह्वाने सक० दि० आत्म० सेट् ऋदित् चङि न ह्रस्वः । वाश्यते अवाशिष्ट । "उद्वाश्यमानः पितरम्" भट्टिः ।

**वाशा** स्त्री वां कामवर्तं श्यति शो–क । वासके शब्दर० स्वार्थे क ह्रस्वे अत इत्त्वम् । वाशिका तत्रार्थे शब्दच० ।

**वाशित** न० वाश–भावे क्त । १तिरश्चां शब्दे अमरः २आह्वाने च ।

**वाशिता** स्त्री वाश–क्त । १करिण्याम् २स्त्रीमात्रे च अमरः

**वा(वा)शिष्ठ** न० वशि(सि)ष्ठस्येदम् अण् तेन प्रोक्तं वा अण् । वशिष्ठप्रणीते १उपपुराणभेदे २योगशास्त्रभेदे च । ३वशि(सि)ष्ठसम्बन्धिनि त्रि० । ४गोमत्यां नद्यां स्त्री हेमच० ङीप् । [मेदि० ।

**वाश्र** न० वाश–रक् । १गृहे २चतुष्पथे च । ३दिवसे पु०

**वाष्प(स्प)** पु० वा–प ष्(स्)क् च । १ऊष्मणि २लौहे मेदि० ३चक्षुर्जले च अमरः । संज्ञायां कन् । ४मारिषशाके (नटिया) पुंस्त्री०शब्दर० वा गौ०ङीष् । वाष्पी+(स्पी)–स्वार्थे क । वाष्पि(स्पि)काप्यत्र अमरः ।

"मारिषो वाष्पको मार्षः श्वेतो रक्तश्च स स्मृतः । मारिषो मधुरः शीतो विष्टम्भी पित्तहृद् गुरुः । वातश्लेष्मकरो रक्तपित्तहृद् विषमाग्निजित् । रक्तमर्षो गुरुर्नातिसधारो मधुरः सरः । श्लेष्मलः कटुकः पाके स्वल्पदोष उदीरितः" भावप्र० । [अववासत् त ।

**वास** सुरभीकरणे अद० चु० उभ० सक० सेट् । वासयति ते

**वास** पु० वस–निवासे आच्छादने वा आधारकर्मादौ घञ् । १गृहे २वस्त्रे ३अवस्थाने हेमच० । वास–अच् । ४वासके शब्दर० । तत्रार्थे स्त्रीत्वमपि तत्र टाप् । ५सुगन्धे च । स्थानभेदेऽवस्थाननिषेधो यथा

"तस्मात् सङ्कीर्णहृत्तेषु वासो मम न रोचते । पुंसो ये नाभिनन्दन्ति वृत्तेनाभिजनेन च । न तेषु च वसेत् प्राज्ञः श्रेयोऽर्थी पापबुद्धिषु । ये त्वेनमभिजानन्ति वृत्तेनाभिजनेन च । तेषु साधुषु वस्तव्यं स वासः श्रेयसे मतः" मातृस्य २८अ० । "धार्मिकैरावृते ग्रामे न व्याधिबहुले भृशम् । न शूद्रराज्ये निवसेत् न पाषण्डजनैर्वृते । हिमवद्विन्ध्ययोर्मध्यं पूर्वपश्चिमयोः शुभम् । मुक्त्वा समुद्रयोर्देशं नान्यत्र निवसेत् द्विजः । अर्द्धक्रोशान्नदीकूलं वर्जयित्वा द्विजोत्तमः । नान्यत्र निवसेत् पुण्यं नान्त्यजग्रामसन्निधौ । न संवसेच्च पतितैर्न चण्डालैर्न पुक्कसैः । न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः" कूर्मपु० १५अ० । "धनिनः श्रोत्रियो राजा नदी वैद्यश्च पञ्चमः । पञ्च यत्र न विद्यन्ते तत्र वासं न कारयेत्" चाणक्यः

**वासक** पु० वास–ण्वुल् । स्वनामख्याते वृक्षे "येन तेन प्रकारेण वासकः कासनाशकः" इति वैद्यकम्

"वासकः कासहृत् स्वर्यः कफपित्तास्रनाशनः । तिक्तस्तुवरको हृद्यो लघुः शीतस्तृडर्त्तिहृत् । श्वासकासज्वरच्छर्दिमेहकुष्ठक्षयापहः" भावप्र० । २गानाङ्गविशेषे यथा "मनोहरोऽथ कन्दर्पश्चारुनन्दन एव च । चत्वारो वासकाः प्रोक्ताः शङ्करेण स्वयं पुरा" । केषाञ्चिन्मते नामान्तरम् । "विनोदो वरदश्चैव नन्दः कुमुद एव च । चत्वारो वासकाः प्रोक्ता गीतवाद्यविशारदैः" सङ्गीतदा० ।

**वासकसज्जा** स्त्री "कुरुते मण्डनं या तु सज्जिते वासवेश्मनि । सा तु वासकसज्जा स्यात्" इत्युक्तलक्षणे नायिकाभेदे वाससज्जाप्यत्र सा० द० ।

**वासकर्णी** स्त्री वासं देववासं कर्णयत्यत्र कर्ण–आधारे अच् गौरा० ङीष् । यज्ञशालायाम् शब्दर० ।

**वासगृह** न० वासयोग्यं गृहम् शाक० । मध्यगृहे अमरः ।

**वासत** पुंस्त्री० वास–अतच् । गर्दभे शब्दर० । स्त्रियां ङीष् ।

**वासतेयी** स्त्री वसतये हिता ढक् । १रात्रौ त्रि० । २वसतियोग्ये त्रि० "वनेषु वासतेयेषु" भट्टिः । स्त्रियां ङीप् ।

**वासन** न० वास–ल्युट् । १सुरभीकरणे २धूपने ३वारिधान्याम् ४वस्त्रे मेदि० ५वासस्थाने शब्दर० ६ज्ञाने च धरणिः वस–णिच्–ल्युट् । ७निक्षेपाधारे निक्षेपार्थे मुद्राङ्किते पात्रे च । "वासनस्थमनाख्याय समुद्रं यन्निधीयते" नारदः । "वासनं निक्षेपाधारभूतं सम्पुटादिकं समुद्रमन्थ्यादियुक्तम्" व्य०त० रघु० । वस–णिच् भावे ल्युट् । ८क्षेपणे च ।

**वासना** स्त्री वासि–युच् । १प्रत्याशायां २ज्ञाने मेदि० ३स्मृतिहेतौ संस्कारे जटा० । ४सुरभीकरणे च । मिथ्याज्ञानजन्ये ५संस्कारभेदे दोषशब्दार्थे । ६आलयविज्ञानानामेकसन्तानवर्त्तिनां तत्तत्प्रवृत्तिविज्ञानजननशक्तौ बौद्धाः । ७गणितशास्त्रप्रसिद्धे पद्यस्तीकरणाद्युपयोगिनि संस्कारभेदे च ।

**वासन्त** पुंस्त्री० वसन्तस्येदम् वसन्ते भवः वा अण् । वसन्तप्रिये १उष्ट्रे मेदि० । २कोकिले च राजनि० । स्त्रियां ङीष् । वसन्तभवे ३मलयवायौ ४मुद्गे त्रिका० । ५कृष्णमुद्गे हेमच० । ६मदनवृक्षे च शब्दर० । ७तत्कालभवे त्रि० ।

स्त्रियां ङीप् सा च दूर्य्यां ८माधवीलतायां धरणिः। १०पाटलायां विश्वः ११नवमल्लिकायां भावप्र०। "वासन्ती शीतला लघ्वी तिक्ता दोषत्रयापजित्" भावप्र०। १२वसन्तकाले कर्त्तव्यदुर्गापूजायाम्। भविष्यपु० "मीनराशिस्थिते सूर्य्ये शुक्लपक्षे नराधिप!। सप्तमीं दशमीं यावत् पूजयेदम्बिकां सदा" भविष्योत्तरे "चैत्रे मासि सिते पक्षे सप्तम्यादिदिनत्रये। पूजयेद्विधिवद् दुर्गां दशम्यान्तु विसर्जयेत्" कालकौमुद्यां जाबालिः "चैत्रे मासि सिते पक्षे सप्तम्यादिदिनत्रये। पूजयेद्विविधैर्द्रव्यैर्नवकुसुमैस्तथा। नानाविधैश्च बलिभिर्मांसादैर्दोषवर्जितैः। विचित्राभरणैः पार्थ! पट्टवस्त्रादिभिस्तथा। एवं यः कुरुते पूजां वर्षे वर्षे विधानतः। ईप्सितान् लभते कामान् पुत्रपौत्रादिकान् प!" इति। अत्र निरुपपदमासशब्दश्रुतात् भविष्यपुराणवचने मीनराशिस्थित इति मीनस्थरव्यारब्धचान्द्रमासीयतिथिपरम्। सौररव्यारब्धे कदाचित् सप्तम्यादितिथित्रयाभावात् तद्वर्षे तत्फललोपः स्यात् न चेष्टापत्तिः भविष्यपुराणे सदापदोपादानात् जाबालिवचने वर्षे वर्षे इत्युपदानाच्च नित्यत्वम्। एतद्धितं कालविवेके। एवं जाबालिप्रभृतिवचनपराणां पुत्रादिरूपफलश्रवणात् काम्यत्वञ्च। ततश्च काम्यतया पूजने कृते प्रत्यवायाच्चित्यसिद्धिः। "सिताष्टम्यान्तु चैत्रस्य पुष्पैस्तत्कालसम्भवैः। अशोकैरपि यः कुर्य्यात् मन्त्रेणानेन पूजनम्। न तस्य जायते शोको रोगो वाप्यथ दुर्गतिः" इति कालिकापुराणवचनात् केवलाष्टमीकल्प उक्तः। चैत्रमासमधिकृत्य "नवम्यां पूजयेद्देवीं महिषासुरमर्दिनीम्। कुङ्कुमागुरुकस्तूरीधूपान्नध्वजतर्पणैः। दमनैश्चरपत्रैश्च विजयाख्यपदं लभेत्" इत्यनेन केवलनवमीकल्प उक्तः। व्यवस्था तु शारदीयपूजाप्रकरणोक्ता ग्राह्या। विशेषस्तत्र बोधनप्रक्रिया नास्ति बाधितया बोधनासम्भवात् इति प्रागभिहितम्। होमादिकञ्च पूर्ववज्ज्ञेयमिति दिक्" दुर्गोत्सवविवेकः। तत्कालपूज्यत्वात् दुर्गापि वासन्तीत्युच्यते।

**वासयोग** पु० वासेन गन्धेन योगो यत्र (आबिर) चूर्णभेदे अमरः। [पु०मेदि०।

**वासर** पुंन०। वस–अरच्। १दिवसे अमरः। २नागभेदे

**वासव** पु० वसुरेव स्वार्थेऽण् वसूनि सन्त्यस्य अण् वा। १इन्द्रे वसोरपत्यं स्त्री अण् ङीप्। २व्यासमातरि मत्स्यगन्धायाम् स्त्री हेमच०। ३धनिष्ठानक्षत्रे न० ज्यो०

**वासवदत्ता** स्त्री वासवदत्तामधिकृत्य कृतो ग्रन्थः अण् आख्यायिकायां तस्य लुक्। १वासवदत्ताचरिताख्यापके ग्रन्थभेदे शब्द०। २इन्द्रदत्ते त्रि०। [भेदे राजनि०।

**वासस्** न०वस-आच्छादने असि णिच्च। १वस्त्रे अमरः २पत्र-

**वासाखण्ड** न० चक्रदत्तोक्ते औषधभेदे "तुलामादाय वासायाः पचेदष्टगुणे जले। तेन पादावशेषेण पाचयेदाढकं भिषक्। पथ्यानामभयानाञ्च खण्डाच्छतद्वयं तथा शतम्। द्वे पले पिप्पलीचूर्णात् सिद्धशीते च माक्षिकात्। कुडवं पलमात्रन्तु चातुर्जातं सुचूर्णितम्। क्षिप्त्वा विलोडितं खादेद्रक्तपित्ती क्षतक्षयी। कासश्वासपरीतश्च यक्ष्मणा च प्रपीडितः"

**वासाखण्डकुष्माण्डक** न० चक्रदत्तोक्ते औषधभेदे "पञ्चाशच्च पलं स्विन्नं कुष्माण्डात् प्रस्थमानतः। वासा तु पलशतं क्वाथं वासाकाथाढके पचेत्। मुस्ताधात्री-शुभाभार्गी-त्रिसुगन्धैश्च कार्षिकैः। ऐलेयविश्वधन्याकमरिचैश्च पलांशिकैः। पिप्पलीकुडवञ्चैव मधुमानीं प्रदापयेत्। कासं श्वासं क्षयं हिक्कां रक्तपित्तं हलीमकम्। हृद्रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति"

**वासागार** न० वासयोग्यमगारम् शाक०। वासयोग्ये गृहे गृहमध्ये त्रिका०।

**वासाघृत** न० चक्रदत्तोक्ते घृतभेदे "वासां सशाखां सपलाशमूलां कृत्वा कषायं कुसुमानि चास्याः। प्रदाय कल्कं विपचेद् घृतं तत् सक्षौद्रमाश्वेव निहन्ति रक्तम्"।

**वासाद्यघृत** न० चक्रदत्तोक्ते घृतभेदे "वासां गुडूचीं त्रिफलां त्रायमाणां यवासकम्। पक्वा तेन कषायेण पयसा द्विगुणेन च। पिप्पलीमूलमृद्वीकाचन्दनोत्पलनागरैः। कल्कीकृतैश्च विपचेत् घृतं जीर्णज्वरापहम्"। [उणादि०।

**वासि(सी)** स्त्री वस–इञ् वा ङीप्। १कुठारभेदे (वाइस)

**वासित** त्रि० वास-क्त। १सुरभीकृते अमरः। वाश–क्त पुंशब्दे०। २ह्रते न०मेदि०। ३ज्ञानमात्रे हेमच०। ४खगशब्दे विश्वः ५करिण्यां ६स्त्रीमात्रे स्त्री अमरे पाठान्तरम् वा गौरा० ङीष्। ७ख्याते ८वस्त्रवेष्टिते च त्रि०धरणिः।

**वासिनी** स्त्री वासोऽस्त्यस्याः इनि। शुक्लझिण्ट्याम् शब्दच०। [नक्षत्रे च उणादिको०।

**वासु** पु० वस–उण्। १विष्णौ त्रिका०। २विश्वरूपे ३पुनर्वसु-

**वासुकि** पु० वसुना शिरस्थरत्नेन कायति कै-क स एव स्वार्थे अण् । १सर्पराजे "भगिनी वासुकेस्तथा" मनसाशब्दे दृश्यम् ।

**वासुदेव** पु० वसुदेवस्यापत्यम् अण् । १विष्णौ अमरः ।
अन्यापि तन्नामनिरुक्तिः विष्णुपु० दर्शिता यथा "सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततः स वासुदेवेति विद्वद्भिः परिपठ्यते" । विष्णुस० भाष्ये तु द्विधा पठितयोः वासुदेवशब्दयोर्द्विधा व्युत्पत्तिर्दर्शिता तत्र प्रथम वसुदेवापत्यरूपार्थिका द्वितीया यथा "वसति वासं गच्छति वा वासुः दीव्यति क्रीडति जिगीषते व्यवहरति द्योतते स्तूयते मुमुक्षुभिर्वा गच्छतीति वा देवः । वासुश्चासौ देवश्च वासुदेवः । "छादयामि जगद्विश्वं भूत्वा (मायया) सूर्य इवांशुभिः । सर्वभूताधिवासश्च वासुदेवस्ततः स्मृतः" "वसनात् सर्वभूतानां वासुत्वाद् देवयोनितः । वासुदेवस्ततो ज्ञेयो योगिभिस्तत्त्वदर्शिभिः" भा० उ० । स च चतुर्व्यूहस्य नारायणाख्यस्य परमात्मनः अंशभेदः इति वैष्णवामन्यन्ते
"एकांशेन जगत् कृत्स्नं व्याप्य नारायणः स्थितः । चतुर्द्धावस्थितो व्यापी सगुणो निर्गुणोऽपि वा । एका भगवतोमूर्त्तिर्ज्ञानरूपा शिवाऽमला । वासुदेवाभिधाना सा गुणातीता सुनिष्कला । द्वितीया कालसंज्ञान्या तामसी शेषसंज्ञिता (सङ्कर्षणाख्या)। निहन्ति सकलांश्चान्ते वैष्णवी परमा तनुः । सत्त्वोद्रिक्ता तृतीयाऽन्या प्रद्युम्नेति च संज्ञिता । जगत् स्थापयते सर्वं सा विष्णुप्रकृतिर्ध्रुवा । चतुर्थी वासुदेवस्य मूर्त्तिर्ब्राह्मी समाश्रिता । राजसी चानिरुद्धाख्या प्राद्युम्नी सृष्टिकारिका । यः स्वपित्यखिलं हृत्वा प्रद्युम्नेन सह प्रभुः । नारायणाख्यो ब्रह्मासौ प्रजासर्गकरो हि सः । या सा नारायणतनुः प्रद्युम्नाख्या मुनीश्वराः ! । तया संमोहयेद्विश्वं सदेवासुरमानुषम् । सैव सर्वजगत् सूते प्रकृतिः परिकीर्त्तिता । वासुदेवो ह्यनन्तात्मा केवलो निर्गुणो हरिः । प्रधानं पुरुषः कालस्तत्त्वत्रयमनुत्तमम् । वासुदेवात्मकं नित्यमेतत् विज्ञानमुच्यते" कूर्मपु० ४८ अ० ।

**वासुदेवप्रियङ्करी** स्त्री ६त० । १शतावर्य्याम्, राजनि०

**वासुरा** स्त्री वस-उरण् । १स्त्रीमात्रे २करिण्यां ३रात्रौ ४भूमौ च हेमच० ।

**वासू** स्त्री वस-ऊ । नाट्योक्तौ बालायाम् स्त्रियाम् अमरः ।

**वास्तव** न० वस्त्वेव अण् । सत्यभूते पदार्थे । [पदार्थे ।

**वास्तविक** त्रि० वस्तुतो निर्वृत्तम् ठक् । स्वतःसिद्धे सत्यभूते

**वास्तव्य** त्रि० वसति वस-तव्य नि० । १वासकर्त्तरि, २वासयोग्ये स्थाने, ३वसतौ च न० ।

**वास्तु** पु०न० वस-तुण् । वासयोग्यभूमौ अमरः । गृहशब्दे २६२२पृ० दृश्यम् । स्वार्थे क । स्वनामख्याते शाके राजनि० । तत्रार्थे न० भावप्र० ।

**वास्तूक** न० वास्तु स्वार्थे क पृषो० दीर्घः । (बेतुया) १शाके भावप्र० २चिल्लीशाके स्त्री गौरा० ङीष् राजनि० ।
"वास्तूकं वास्तुकं च स्यात् क्षारपत्रञ्च शाकराट् । तदेव तु बृहत् पत्रं रक्तं स्याद् गौडवास्तुकम् । प्रायशो यवमध्ये स्यात् यावत् शाकमतः स्मृतम् । वास्तूकद्वितयं स्वादु क्षारं पाके कटूदितम् । दीपनं पाचनं रुच्यं लघु शुक्रबलप्रदम् । सरं प्लीहास्रपित्तार्शःकृमिदोषत्रयापहम्" भावप्र० । [त्रिनि २वासयोग्ये च ।

**वास्तेय** त्रि० वस्तेरिदम् वस्तये हितं वा ढक् । १वस्तिसम्ब-

**वास्तोष्पति** पु०६त० अलुक् सुमा० । १इन्द्रे, अमरः २वास्तुभूमिपतौ च । [रथे अमरः ।

**वास्त्र** पु० वस्त्रेणावृतो रथः अण् । वस्त्रेण सम्वृते

**वास्त्रेय** पु० वास्त्राय हितं ढक् । नागकेशरे रत्ना० ।

**वाह** यत्ने भ्वा० आ० अक० सेट् ऋदित् चङि न ह्रस्वः । वाहते अवावाहत् ।

**वाह** पुंस्त्री० उह्यतेऽनेन असौ वा गवादिना वा वह-घञ् । १अश्वे "वाहो भारचतुष्टयम्" इत्युक्ते २परिमाणभेदे च अमरः । ३भुजे ४वायौ पु० ५वृषे च पुंस्त्री० शब्दर० स्त्रियां जातित्वे ङीष् । ।अमरः वाहरिपाठयोऽप्यत्र ।

**वाहद्विषत्** पु० वाहाय द्वेष्टि द्विष-शतृ ६त० । महिषे

**वाहन** न० वाहयति वह-णिच्-ल्यु । रथादौ याने ।
देवभेदे वाहनभेदो यथा "विष्णुब्रह्मशिवैर्देवैर्ध्रियते या जगन्मयी । सितप्रेतो महादेवो ब्रह्मा लोहितपङ्कजः । हरिर्हरिस्तु विज्ञेयो वाहनानि महौजसः । स्वमूर्त्या वाहनत्वन्तु तेषां यस्मान्न युज्यते । तस्मान्मूर्त्यन्तरं कृत्वा वाहनत्वं गतास्त्रयः । यस्मिन् यस्मिन् महामाया प्रीयाति सततं शिवा । तेन तेनैव रूपेण आसनान्यभवन् त्रयः" कालिकापु० ५७अ० । देवदानवानां वाहनानि यथा । पुलस्त्य उवाच "शृणुष्व कथयिष्यामि सर्वेषामपि नारद ! । वाहनानि समासेन एकैकस्यानुपूर्वशः । रुद्रहस्ततलोत्पन्नं महाकायं महागजम् । श्वेतवर्णं महावीर्य्यं देवराजस्य वाहनम् । रौद्रौजःसम्भवं भीमं कृष्णवर्णं मनोजवम् । पौण्ड्रकं नाम माहिषं

धर्मराजस्य नारद ! । वट्टमानसमद्भूतं श्यामं जलधिसम्भवम् । शिशुमारं दिव्यगतिं वाहनं वरुणस्य च । रौद्रं शकटचक्राक्षं शैलाकारनरोत्तमम् । अम्बिकापादसम्भूतं वाहनं धनदस्य तु । एकादशानां रुद्राणां वाहनानि महात्मने । गन्धर्वाश्च महावीर्या भुजगेन्द्राः सुदारुणाः । श्वेतानि सौरभेयाणि वृषाण्युग्रजवानि च । रथं चन्द्रमसश्चार्द्धं सहस्रहंसवाहनम् । हयोद्रथवाहाश्च आदित्या मुनिसत्तम ! । कुञ्जरस्थाश्च वसवो यक्षाश्च नरवाहनाः । किन्नरा भुजगारूढा हयारूढौ तथाश्विनौ । सारङ्गाधिष्ठिता ब्रह्मन् ! मरुतो घोरदर्शनाः । शुकारूढाश्च कवयो गन्धर्वाश्च पदातिनः । आरुह्य वाहनान्येवं स्वानि स्वान्यमरोत्तमाः । सवस्य निर्वबुर्हृष्टा युद्धाय सुमहौजसः” वामनपु० ९अ० । निवहटौ देवभेदे वाहननामभेदा उक्तास्तत्र द्रष्टव्याः ।

**वाहस** पु० वाहं गतिं स्यति सो-क । १अजगरे अमरः । २सुनिषण्णके (सुषनि) शाके ३परिमाणे च मेदि० ।

**वाहिक** पु०वह-णिच्-इक । १ढक्कायां २गोवाहे (वलदे) ३शकटादौ धरणिः । ४भारवाहके त्रि० “गोवाहिकः” वा० द० । [ हुपो० । गजकुम्भाधःस्थभागे अमरः ।

**वाहित्थ** न० वहतीति णिनि वाही-तस्मिन् तिष्ठति स्था-क

**वाहिनी** स्त्री वाहोऽस्त्यस्याः इनि ङीप् । १सेनायां, २हस्त्यश्वादिसंख्याभेदान्विते सैन्यभेदे अक्षौहिणीशब्दे १६९पृ०दृश्यम् । वहति वह-णिनि । २नद्याम् अमरः । “वाहिन्यः पार्श्वमेता न जहति भवतः” काव्यप्रकाशः ।

**वाहिनीपति** पु० ६त० । १सेनापतौ अमरः । २समुद्रे च शब्दच० ।

**वाहीक** पु० वह-ईकण् । १जर्त्तिके जातिभेदे (जाट) । २देशभेदे च हेमच० ।

“वाहीकदेशं मद्रांश्च कुत्सयन् वाक्यमब्रवीत् । पञ्चानां सिन्धुषष्ठानां नदीनां येऽन्तराश्रिताः । तान् धर्मबाह्यानशुचीन् वाहीकान् परिवर्जयेत् । शाकलं नाम नगरमापगा नाम निम्नगा । जर्त्तिका नाम वाहीकास्तेषां वृत्तं सुनिन्दितम्” भा० कर्ण० ४० अ० ।

**वाह्य** न० वाहं वाहनमर्हति यत्, वह-ण्यद्वा । १अश्वादौ याने हेमच० । बहिर्भवः ष्यञ् टिलोपः । ३बहिर्भवे त्रि० । ३एतत्परत्वे श्रोत्रादिभिन्नेन्द्रिये ।

**वाह्येन्द्रिय** न० वाह्यपदार्थानां शब्दादीनां ग्रहणयोग्यमिन्द्रियम् शाक० । शब्दादिग्राहके श्रोत्रादौ इन्द्रिये ।

**वाह्नि(ह्री)क** पु० । वह्नि-ठिण् स्वार्थे क । १देशभेदे भरतः । तद्देशजाते-कुङ्कुमे, २हिङ्गुनि न० मेदि० ।

**वि** अव्य० वा-कि । १नियोगे, २विशेषे, ३निश्चये, ४असहने, ५निग्रहे, ६हेतौ, ७अव्याप्तौ, ८ईषदर्थे, ९परिभवे, १०अवलम्बने, ११ज्ञाने मेदि० १२विशेषेण गतौ, १३आलस्ये, १४पालने च शब्दच० । १५विहगे पु० अमरः । गणरत्ने अस्यार्थभेदास्तत्र क्रमेणोदाहृतं यथा “विनानावियोगातिशयव्ययमोहेषवाक्स्थधर्मेशुन्यासरणभूमेषदर्थाभिमुख्यानवस्थाऽऽसुखस्थैर्यदर्शनेषु” । विचित्र १ वियुक्तः२ विकीर्णः३ वितटा नदी४ विमनस्कः५ । विभु:६ विवदति७ विगायति८ विस्मृतः९ विमूर्छितः१० विलोपितः११ विसृष्टः१२ विभ्रान्तः१३ विदृष्टः१४ विभ्रान्तः विलोकयति१५” । [गतिसङ्ख्यापूर्यते तस्मिन् ।

**विंश** त्रि०विंशतेः पूरणः विंशति+ड तिलोपः । येन विं-

**विंशक** न०विंशतेरवयवः कुन् तिलोपः । विंशतिसंख्यायाम् । विंशतिरधिका दीयतेऽस्मिन् शते आयो लाभो वृद्धिर्वा-कुन् । प्रतिशतं विंशत्यधिकलाभादौ “वाहद्या विंशकं शतम्” इति याज्ञ० ।

**विंशति** स्त्री द्वे दशती नि० । १द्विदशकसंख्यायां, तत्सङ्ख्याते च त्रिलिङ्गक० । सङ्ख्याविशेषार्थे तु द्वि०व०व० । द्वे विंशती त्रिंशो विंशतयः इति ।

**विंशतिक** त्रि० विंशतिमर्हति कन् । विंशतिसंख्यायोग्ये ।

**विंशतितम** त्रि० विंशतेः पूरणः तमप् । विंशशब्दार्थे स्त्रियां ङीप् । [संख्यायाम् ।

**विंशिन्** पु० विंशति+संख्यायां डिनृ तिलोपः । विंशति-

**विक** न० विरूद्ध विगतं वा कं जलं सुखं वा यत्र । सद्यःप्रसूताया गोःक्षीरे पेयूषे शब्दच० । २विगतसुखे ३विगतजले च त्रि० । [टफलं पक्वं मधुरं सर्वदोषनुत्” भावप्र० ।

**विकङ्कट** पु०वि+कङ्कि—अटन् । गोक्षुरे शब्दमाला० । “विकङ्-

**विकङ्कत** पु० वि+कङ्कि अतच् । (वैंइंची) १वृक्षे अमरः २अतिबलायां स्त्री राजनि० ।

**विकच** पु० विगतः कचो यस्य । १क्षपणे बुद्धसंन्यासिनि । विशिष्टः कचो यत्र । २ध्वजे केतौ मेदि० । वि+कच-अच् । ३विकासिते अमरः । ६व० । ४केशशून्ये त्रि०मेदि० । ५महाश्रावणिकायाम् स्त्री राजनि० ।

**विकट** पु० वि+कट-अच् । १विस्फोटके शब्दरत्ना० २वाककक्षे च राजनि० । वि+कटच् । ३विशाले त्रि०मेदि० । ४विकृते त्रि० त्रिका० ५सुन्दरे त्रि० विश्वः ६दन्तुरे त्रि०

घरघिकोषः ७मायादेव्यां स्त्री त्रिकाण्डशेषः ।

**विकण्टक** पु॰विगतः कण्टकोऽस्य । १यवासे जटा॰ । २शत्रुहीने त्रि॰ । [कर्त्तरि युच् तत्कर्त्तरि त्रि॰ ]

**विकत्थन** न॰ वि+कत्थ-ल्युट् । आत्मश्लाघायाम् हेमच॰ ।

**विकर्त्तन** पु॰ वि+कृत ल्यु । १सूर्य्ये २अर्कवृक्षे च अमरः ।

**विकर** पु॰वि+कृ-अच् । १रोगे शब्दच॰ । २आरस्वतदेशे हेमच॰

**विकर्म्मस्थ** पु॰ त्रि॰ विकर्म्मणि निन्दिताचारे तिष्ठति स्था-क । कुत्सिताचाररते विष्णु पु॰ ।

**विकर्ष** पु॰ वि+कृष-कर्म्मणि घञ् । शरे वाणे त्रिका॰ ।

**विकल** त्रि॰ विगता कला यस्य । १विह्वले, २स्वभावहीने त्रिका॰ । ३कलाहीने च । ४ऋतुमत्यां स्त्रियां स्त्री रत्नमा॰ वा ङीष् । विभक्ता कला यया प्रा॰व॰स॰ । ५कलाषष्टिभागे स्त्री "विकलानां कला षष्ट्या" ज्यो॰त॰ । [विकाङ्क्षे अमरः ।

**विकलाङ्ग** त्रि॰ स्वभावहीनमङ्गमस्य । स्वभावतो न्यूना-

**विकल्प** पु॰ विभिन्नः कल्पः । १भ्रान्तिज्ञाने २कल्पने मेदि॰ ३विविधकल्पने ४संशयारोपणे, ५पक्षतः प्राप्तौ च ।

विकल्पश्च द्विविधः व्यवस्थितः ऐच्छिकश्च । सोऽप्याकाङ्क्षाविरहे युक्तः तथा च भविष्ये "सतिशास्त्रे विकल्पस्तु आकाङ्क्षापूरणे सति" । इच्छाविकल्पेऽष्टदोषाः यथा "प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पना । प्रत्युज्जीवनहानिभ्यां प्रत्येकमष्टदोषता" । व्रीहिभिर्यजेत यवैर्यजेत" इति श्रूयते । तत्र व्रीहिप्रयोगे प्रतीतयवप्रामाण्यपरित्यागः । अप्रतीतयवाप्रमाण्यपरिकल्पनम् । इदन्तु पूर्वस्मात् पृथक् वाक्यम् अन्यथा यवद्वेषेऽपि यागसिद्धिः स्यात् । अतएव विकल्पे न उभयम् शास्त्रार्थ इत्युक्तम् । प्रयोगान्तरे यवे उपादीयमाने परित्यक्तयवप्रामाण्योज्जीवनं स्वीकृतयवाप्रामाण्यहानिरिति चत्वारो दोषाः । एवं व्रीहावपि चत्वारः इत्यष्टौ दोषा इच्छाविकल्पे । तथा चोक्तम् । "एवमेवाष्टदोषाश्च यद् व्रीहियववाक्ययोः । विकल्प आश्रितस्तत्र गतिरन्या न विद्यते" इति । विविधं कल्प्यते इति विकल्पः । तस्मादष्टदोषभिया उपोष्य द्वे तिथी इत्यत्र न इच्छाविकल्पः किन्तु व्यवस्थितविकल्पः" एता॰ त॰ रघु॰ । पातञ्जलोक्तेः ६चित्तवृत्तिभेदे यथा "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" सू॰ । "स न प्रमाणोपारोही न विपर्य्ययोपारोही वस्तुशून्यत्वेऽपि शब्दज्ञानमाहात्म्यनिबन्धनो व्यवहारो दृश्यते । तद् यथा चैतन्यं पुरुषस्य स्वरूपमिति यदा चितिरेव पुरुषः तदा किमत्र केन व्यपदिश्यते भवति च व्यपदेशे वृत्तिः यथा चैत्रस्य गौरिति । तथा प्रतिषिद्धवस्तुधर्मा निष्क्रियः पुरुषः । तिष्ठति वाणः स्थास्यति स्थित इति गतिनिवृत्तौ धात्वर्थमात्रं गम्यते । तथानुत्पत्तिधर्मा पुरुष इति उत्पत्तिधर्मस्याभावमात्रमवगम्यते न पुरुषान्वयी धर्मः तस्माद्विकल्पितः स धर्मस्तेन चास्ति व्यवहार इति । भा॰ "ननु शब्दज्ञानानुपाती चेदागमप्रमाणान्तर्गतो विकल्पः प्रसज्येत निर्वस्तुकत्वे वा विपर्य्ययः स्यादित्यत" आह । स नेति । न प्रमाणविपर्य्ययान्तर्गतः कस्माद् यतो वस्तुशून्यत्वेपीति प्रमाणान्तर्गतिं निषेधयति । शब्दज्ञानमाहात्म्यनिबन्धन इति विपर्य्ययान्तर्गतिम्" । तदुक्तं भवति क्वचिदभेदे भेदमारोपयति क्वचित् पुनर्भिन्नानामभेदं ततो भेदस्याभेदस्य च वस्तुतोऽभावात् तदाभासो विकल्पो न प्रमाणं नापि विपर्य्ययो व्यवहाराविसंवादादिति । शास्त्रप्रसिद्धमुदाहरणमाह तद् यथेति । किं विशेष्यं केन व्यपदिश्यते विशेष्यते, नाभेदे विशेष्यविशेषणभावो न हि गवा गौर्विशेष्यते । किन्तु भिन्नेन चैत्रेण तदिदमाह । भवति च व्यपदेशे वृत्तिः । व्यापदेश्यव्यापदेशकयोर्भावो व्यपदेशो विशेषणविशेष्यभाव इति यावत् तस्मिन् वृत्तिर्वाक्यस्य, यथा चैत्रस्य गौरिति । शास्त्रीयमेवोदाहरणान्तरं समुच्चिनोति तथेति प्रतिषिद्धवस्तुनः पृथिव्यादेः धर्मः परिस्पन्दो यस्य स तथोक्तः कोऽसौ निष्क्रियः पुरुषः । न खलु साङ्ख्यीये राद्धान्तेऽभावो नाम कश्चिदस्ति वस्तुधर्मो येन पुरुषो विशेष्येतेत्यर्थः । क्वचित् पाठं प्रतिषिद्धवस्तुधर्मा इति तस्यार्थः प्रतिषेधव्याप्त्या प्रतिषिद्धाभावो न वस्तुधर्माणां तद्रूपता भावाभावयोरसम्बन्धाद्य च तथा प्रतीतिरिति । लौकिकमुदाहरणमाह तिष्ठति वाण इति । पचति भिनत्तीत्यत्र पूर्वापरीभूतया पाकादिक्रिययेव स्थानक्रियया वाणाङ्कितया वाणस्य व्यपदेश इति गतिनिवृत्तौ धात्वर्थमात्रं गम्यते । गतिनिवृत्तिरेव तावत् कल्पिता तस्या अभावरूपत्वम् । तत्रापि पूर्वापरीभाव इत्यहो कल्पनापरम्परेत्यर्थः । अभावः कल्पितो भाव इव चानुगत इव च सर्वपुरुषेषु गम्यते न पुरुषाद् व्यतिरिक्तो धर्मः कश्चिदित्युदाहरणान्तरमाह । तथानुत्पत्तिधर्मेति । प्रमाणविपर्य्ययाभ्यामन्या न विकल्पवृत्तिरितिवादिनो बहवः प्रतिपेदिरे तत्प्रतिबोधनायोदाहरणप्रपञ्च" विव॰ ।

ज्ञाने प्रकारताख्यविषयताभेदे यथा सविकल्पकं सप्रकारताकं ज्ञानम्। निर्विकल्पकं निष्प्रकारताकं ज्ञानमित्यादि २वैचित्र्ये तस्य क्वचित् सत्त्वं क्वचिदसत्त्वम्। यथा "साध्यदृष्टान्तयोर्धर्मविकल्पात्" गौ॰ सू॰ वृत्तौ दृश्यम्।

**विकल्पसम** पु॰ गौ॰ उक्ते जात्युत्तरभेदे। स च कस्यचित् धर्मस्य कस्यचिद्व्यभिचारदर्शनेन धर्मत्वाविशेषात् प्रकृतहेतोः प्रकृतसाध्यं प्रति व्यभिचारापादनरूपः यथा शब्दोऽनित्यः कृतकत्वादित्यत्र कृतकत्वस्य गुरुत्वव्यभिचारदर्शनात् गुरुत्वस्यानित्यत्वव्यभिचारदर्शनात् अनित्यत्वस्य मूर्त्तत्वव्यभिचारदर्शनात् धर्मत्वाविशेषात् कृतकत्वमप्यनित्यत्वं व्यभिचरेदिति" वृत्तिः। वा॰भाष्ये तु "साधनधर्मयुक्ते दृष्टान्ते धर्मान्तरविकल्पात् साध्यधर्मविकल्पं प्रसजतो विकल्पसमः। यथा क्रियाहेतुगुणयुक्तं किञ्चिद् गुरु यथा लोष्टः किञ्चिद् लघु यथा वायुः। एवं क्रियाहेतुगुणयुक्तं किञ्चित् क्रियावत् स्यात् यथा लोष्टः। किञ्चिदक्रियं यथात्मा। विशेषो वा वाच्यः" इत्युक्तम्।

**विकश्व(स्व)र** त्रि॰ वि+कश(स)-वरच्। १प्रकाशशीले अमरः २रक्तपुनर्नवायाञ्च राजनि॰।

**विकषा(सा)** स्त्री विशेषेण कष्यतेऽसौ कष(सा)-घञर्थे क। १मञ्जिष्ठायाम् अमरः। २मांसरोहिण्यां राजनि॰।

**विक(श्र)सित** त्रि॰ वि+कश(स)-क्त। प्रकाशयुक्ते।

**विकार** पु॰ वि+कृ-घञ्। प्रकृतेरन्यरूपे परिणामे। "विकारस्य यदात्मकं द्रव्यं मृद्वा सुवर्णं वा तस्यात्मनोऽन्वये पूर्वो व्यूहो निवर्त्तते व्यूहान्तरं चोपजायते। तं विकारमाचक्ष्महे" वा॰ भा॰ २।२।४६ सूत्रे उक्तः। स्वरूपत्यागेन रूपान्तरापत्तिरूपः। स्वरूपस्य विनाशे अविनाशे वा द्रव्यान्तरारम्भकत्वरूपः यथा दुग्धादेर्दध्यारम्भकत्वम् बीजादेर्वाऽऽरम्भकत्वरूपो वा" गौ॰सू॰वृत्त्युक्तो वा। स्वरूपनाशोऽपि विकारो भावविकारशब्दे दृश्यः। काष्ठादेरवयवनाशेन तस्योत्पादनात् तस्यापि काष्ठविकार एव कर्मन्शब्दे विकार्यनिरूपणे दृश्यम्।

**विकार्य्य** त्रि॰ वि+कृ-ण्यत्। १विकारजन्ये द्रव्ये व्याकरणोक्ते कर्मभेदे कर्मन्शब्दे १७२१ पृ॰ दृश्यम्।

**विकाल** पु॰ विरुद्धः दैवपैत्रादिकर्मानर्हः कालः। १राक्षसीनामकवेलायाम् २दिवसान्त्यकाले त्रिका॰।

**विकालिका** स्त्री विज्ञात. कालोऽनया कप् अत-इत्त्वम्। कालज्ञापके घटीयन्त्रभेदे (ताँबी) ताम्र्यां त्रिका॰।

**विकाश** न॰ विरुद्धः काशः। १रहसि २विशिष्टे काशे प्रकाशे च अमरः। [अमरः।

**विकाशिन्** त्रि॰ वि+काश-णिनि। प्रकाशशीले विकस्वरे

**विकिर** पुंस्त्री॰ वि+कॄ-क। १विहगे अमरः स्त्रियां ङीष्। २वृक्षे त्रिका॰। विकीर्य्यते घञर्थे क। ३विघ्नोपशान्तये उत्क्षिप्यमाणसर्षपादौ "लाजचन्दनसिद्धार्थभस्मदूर्वाङ्कुराक्षताः। विकिरा इति सन्दिष्टा सर्वविघ्नौघनाशनाः" तन्त्रसा॰। ४अग्निदग्धादीनां पित्तनिर्वपने "असंस्कृतप्रमीतानां योगिनां कुलयोषिताम्। उच्छिष्टं भागधेयं स्यात् दर्भेषु विकिरश्च यः" श्रा॰ त॰। "पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते। स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते" श्रा॰त॰।

**विकिरण** न॰ वि+कॄ-ल्युट् नि॰ इत् रपरत्वम्। १क्षेपणे २हिंसने, ३ज्ञाने च। ४अर्कवृक्षे पु॰ अमरः। ६ब॰। ५किरणशून्ये त्रि॰।

**विकीर्ण** त्रि॰ वि+कॄ-क्त। विक्षिप्ते।

**विकुर्वाण** त्रि॰ वि+कृ-शानच्। हर्षहेतुना जातरोमहर्षादौ अमरः। २विकृतिप्राप्ते च। [११ अ॰।

**विकुक्षि** पु॰ सूर्य्यवंश्ये इक्ष्वाकुराजपुत्रे नृपभेदे हरिवं॰।

**विकुस्त्र** पु॰ वि+कुस-रक्। चन्द्रे उणादिकोषः।

**विकूणिका** स्त्री वि+कू-रक्च् स्वार्थे क, अत इत्त्वम्। नासायां हेमच॰।

**विकृत** त्रि॰ वि+कृ-क्त। १बीभत्से २मलिनीकृते, ३रोगयुक्ते ४विकारयुते।
"होमानेष्ट्यादिभिर्यत्र नोच्यते स्वं विवक्षितम्। व्यज्यते चेष्टयैवेदं विकृतं तद्विदुर्बुधाः" उज्ज्वलमण्युक्ते ५भावभेदे न॰ प्रभवादिषु ६षष्टिवर्षमध्ये वर्षे पु॰ प्रभवादिशब्दे ४४७४पृ॰ तदानयनं दृश्यम्। "सर्वाः प्रजाः प्रपीड्यन्ते व्याधिः शोकश्च जायते। शिरोवल्याऽक्षिरोगाश्च पापाद्धि विकृते जनाः" ज्यो॰त॰। गुरुवर्षशब्दे २६२२ पृ॰ दृश्यम्। [क्तिच् नित्यं ङीप्। २रोगे, ३हिंस्रे हेमच॰

**विकृति** स्त्री वि+कृ-क्तिन् वा। १विकारशब्दार्थे अमरः।

**विकेशी** स्त्री विगतः केशो यस्याः ङीष्। १केशशून्यायां स्त्रियां २पटचर्यां च धरणिः। ३महीरूपस्य शिवस्य पत्न्याम् "सूर्यो जलं मही वह्निर्वायुराकाशमेव च। दीक्षितो ब्राह्मणः सोमः इत्येतास्तनवः क्रमात्। सुवर्चला तथैवोमा विकेशी चापरा शिवा। स्वाहा दिशस्तथा दीक्षा रोहिणी च यथाक्रमम्। सूर्यादीनामिमाः पत्न्यो रुद्राद्यैर्नामभिः सह" मार्क॰ पु॰।

**विक्रोश** पु॰ हृष्णासुरपुत्रभेदे भाग॰ २१ अध्याये दृश्यम् ।

**विक्क** पु॰ विक्कयति वि+कक-अच । करिशावके त्रिका॰ ।

**विक्रम** पु॰ विशेषेण क्रामति वि+क्रम-अच । १अति-विक्रमे, २विष्णौ, "मेधावी विक्रमः क्रमः" विष्णु स॰ । ३विक्रमादित्यनृपे "रत्नानि वै वररुचिर्नव विक्रमस्य" ज्योतिर्विदाभरणम् । भावे घञ् । ४क्रमणे मेदि॰ । करणे घञ् । ५चरणे, त्रिविक्रमः । ६शौर्य्यातिशये, ७सामर्थ्ये च राजनि॰ । षष्टिवर्षमध्ये "सर्वं मधु गन्धश्च महार्घं विक्रमे प्रिये !" इत्युक्तलक्षणे वत्सर-भेदे मेदि॰ । प्रभवादिशब्दे ४४७४ पृ॰ दृश्यम् ।

**विक्रमादित्य** पु॰ विक्रमेणादित्य इव । स्वनामख्याते नृपभेदे विक्रमार्कोऽप्यत्र "नो दृष्टः श्रुत एव वा क्षितितले श्रीविक्रमार्कोपमः" त्रिका॰ ।

**विक्रमिन्** पु॰ वि+क्रम-णिनि । १सिंहे, राजनि॰ २विष्णौ विष्णु पु॰ । ३विक्रमयुक्ते त्रि॰ स्त्रियां ङीप् ।

**विक्रय** पु॰ वि+क्री-अच् । मूल्यग्रहणेन परस्वत्वापादके व्यापारे अमरः ।

विक्रये विहिताविहितनक्षत्राणि यथा "पूर्वाहिगस्त्र-त्रिकृत्ताग्नपूर्वा नेष्टाः क्रये विक्रयणे प्रशस्ताः । पौष्णाश्वि-चित्राशतविष्णुवाताः क्रये हिता विक्रयणे निषिद्धाः" । ज्योतिःसारः । क्रयविक्रयनिर्णयो यथा "मूल्यं दास्या-मीति नियमं कृत्वा ग्रहणादपि क्रयसिद्धिः । तथाच वि-वादचिन्तामणौ कात्यायनः "पण्यं गृहीत्वा यो मूल्य-मदत्त्वैव दिशं व्रजेत् । ऋतुत्रयस्योपरिष्टात् तद्धनं वृद्धिमाप्नुयात्" । अतएव वृहस्पतिः "स्वल्पकेनादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम् । पत्रं कारयते यत्तु क्रय-लेख्यं तदुच्यते" । क्रयविक्रये समयविशेषाभ्यन्तरे पश्चा-त्तापान्निवृत्तिः । यथाह मनुः "क्रीत्वा विक्रीय वा कि-ञ्चित् यस्येहानुशयो भवेत् । सोऽन्तर्दशाहे तद्द्रव्यं दद्याच्चैवाददीत वा" । एतद्याज्ञवल्क्योक्तेतरपरम् । यथा याज्ञवल्क्यः "दशैकपञ्चसप्ताहमासत्र्यहार्द्ध-मासिकम् । बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परी-क्षणं । अत्र वृहस्पतिः "क्रीतोऽर्धीक पण्यदोषस्तु यदि संजायते क्वचित् । विक्रेतुः प्रतिदेयन्तत् क्रेता मूल्य-मवाप्नुयात्" । अतस्तद्द्रव्यपरीक्षणकालात् । कात्या-यनः "अविज्ञातन्तु यत् क्रीतं दुष्टं पश्चाद्विभावितम् । क्रेता तत् स्वामिने देयं पण्यं कालेऽन्यथा न तु" । काले प्रागुक्तपरीक्षाकालाभ्यन्तरे । परीक्षिते तु वृह-स्पतिः "परीक्षेत स्वयं पण्यं अन्येषाञ्च प्रदर्शयेत् । परीक्षितं बहुमतं गृहीत्वा न पुनस्त्यजेत्" । अत्र विशेषः-वति नारदः "क्रीत्वा मूल्येन यो द्रव्यं दुष्क्रीतं म-न्यते क्रयी । विक्रेतुः प्रतिदेयं तत् तस्मिन्नेवाह्न्य-विक्षतम् । द्वितीयेऽह्नि ददत् क्रेता मूल्यात्त्रिंशांश-माहरेत् । द्विगुणन्तु तृतीयेऽह्नि परतः क्रेतुरेव तत्" । आहरेत् दद्यात् विक्रेत्रे इति शेषः । द्विगुणं त्रिंशा-शस्य । याज्ञवल्क्यः "राजदैवोपघातेन पण्ये दोष-मुपागते । हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः" । नारदः "उपहन्येत वा पण्यं दह्येतापह्रियेत वा । विक्रेतुरेव सोऽनर्थो विक्रीयासंप्रयच्छतः । दीयमानं न गृह्णाति क्रीतं पण्यन्तु यः क्रयी । स एवास्य भवेद्दोषो विक्रेतुर्योऽप्रयच्छतः" प्राय॰ त॰ । "न्यासं कृत्वा परत्राधिं कृत्वा वाधिं करोति च । विक्रयं वा क्रिया तत्र पश्चिमा बलवत्तरा" । न्यासं कृत्वा आधिं करोति आधिं कृत्वा वा विक्रयं करोति । विक्रयपदं सम्पूर्ण-सत्त्वात् दानं लक्षयति तत्र परा क्रिया सिद्धेत्यर्थः । एवञ्च विक्रेतृदानोभयत्वादिना आध्युद्धारे विक्रयदाने तत्कर्त्तृतुल्यस्वत्वजननात् तत्र तत्क्रेतृप्रतिग्रही-तृभ्यामाध्युद्धारः कार्य्यः इति । न च "स्थावरस्य समस्तस्य गोत्रसाधारणस्य च । नैकः कुर्य्यात् क्रयं दानं परस्परमतं विना । विभक्ता अविभक्ता वा सपिण्डाः स्थावरे समाः । एको ह्यनीशः सर्वत्र दानाधम-नविक्रये" इति व्यासवचनाभ्यामेकस्य दानबन्धक-विक्रयानधिकारः इति वाच्यं यथेष्टविनियोगार्हत्वरूपस्य स्वत्वस्य द्रव्यान्तर इवात्राप्यविशेषात् वचनस्य स्वामित्वेन दुर्वृत्तपुरुषगोचरविक्रयादिना कुटुम्बविरोधादधर्म-ज्ञापनार्थनिषेधकं न तु विक्रयाद्यनिष्पत्त्यर्थमिति" दाय-भागः । एवञ्च "स्थावरे विक्रयो नास्ति कुर्य्यादाधि-मनुज्ञया" इति स्थावरस्य केवलविक्रयप्रतिषेधात् एवं "भूमिं यः प्रतिगृह्णातीत्यादिवचने दानप्रशंसादर्श-नाच्च विक्रयेऽपि कर्त्तव्ये सहिरण्यमुदकं दत्त्वा दान-रूपेण स्थावरविक्रय इति" विज्ञानेश्वरः । वस्तुतस्तु स्थावरविक्रयनिषेधः अविभक्तस्थावरविषयः । तत्रापि यदि विक्रयं विना अवस्थितिर्न भवति तदा विक्रयः क-र्त्तव्यः । पूर्वपुरुषार्जितनष्टोद्धारे विशेषयति मिताक्ष-रायाम् "स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितम् । असम्भूय सुतान् सर्वान् न दानं न च विक्रयः" इ-

स्मादि। अत्रापवादमाह "एकोऽपि स्थावरे कुर्य्याद्दानाधमनविक्रयम्। आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः" दायतत्त्वे रघु०। द्रव्यविशेषविक्रयनिषेधो यथा स्मृतिः "विक्रीणन् मद्यमांसानि ह्यभक्ष्यस्य च भक्षणम्। कुर्वन्नगम्यागमनं शूद्रः पतति तत्क्षणात्। कपिलाक्षीरपानेन ब्राह्मणीगमनेन च। वेदाक्षरविचारेण शूद्रश्चाण्डालतां व्रजेत्" कालिकापु०। "विक्रयं सर्ववस्तूनां कुर्वन् शूद्रो न दोषभाक्। मधु चर्म सुरां लाक्षां त्यक्त्वा मांसञ्च पञ्चमम्" मनुः। "सद्यः पतति मांसेन लाक्षया लवणेन च। त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्। अशक्तौ भेषजस्यार्थे यज्ञहेतोस्तथैव च। यद्यवश्यन्तु विक्रेयास्तिला धान्येन तत्समाः" आह्नि० त०। "गवां विक्रयकारी च गवां मोक्षं कृमिर्भवेत्" इति यमवचनम्। "गोवधोऽयाज्यसंयाज्यपारदार्य्यात्मविक्रयाः। तडागारामदाराणामपत्यस्य च विक्रयः। व्रात्याध्ययनादानमपण्यानाञ्च विक्रयः" मनुः।

**विक्रयानुशय** पु० विक्रयस्यानुशयः पश्चात्तापः। विक्रीतपदार्थस्य परावर्त्तिफलके १अनुतापे तन्निमित्ते २विवादभेदे

**विक्रयिक** पु० विक्रयः अस्त्यस्य ठन्। विक्रेतरि अमरः।

**विक्रयिन्** त्रि० वि+क्री-ताच्छील्ये इनि। विक्रयशीले शब्दच०। स्त्रियां ङीप्। [भावे क्त। १विक्रमे।

**विक्रान्त** पु० वि+क्रम-क्त। १सिंहे राजनि० २शूरे च अमरः।

**विक्रिया** स्त्री वि+कृ-भावे श। १विकारे अन्यथास्थितस्य वस्तुनोऽन्यथा परिणामे।

**विक्रीयासम्प्रदान** न० विक्रीय न सम्प्रदानं क्रेत्रे यत्र। अष्टादशविवादान्तर्गते विवादविशेषे तत्स्वरूपादिकं वीरमि० उक्तं यथा

"अथ विक्रीयासम्प्रदानाख्यव्यवहारपदम्। तत्स्वरूपमाह नारदः "विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रदीयते। विक्रीयासम्प्रदानं तद्विवादपदमुच्यते इति" तत्र विक्रेयद्रव्यस्य द्वैविध्यषड्विधत्वे क्रमेणाह स एव "लोकेऽस्मिन् द्विविधम्पण्यं जङ्गमं स्थावरं तथा। षड्विधस्तस्य च बुधैर्दानादानविधिः स्मृतः। गणितन्तुलितं मेयं क्रियया रूपतः श्रियेति"। दानं विक्रयः आदानं क्रयः। गणयित्वा यस्य क्रयः तद्गणितम्। गणितं संख्येयं क्रमुकफलादिकम् एवं तुलिमादिकं तुलिमन्तुलाधृतं हेमचन्दनादिकम्। मेयं ब्रीह्यादिकम् क्रियया वाहनदोहनादिरूपया युक्तमिति शेषः। रूपतः रूपेण युक्तं वस्तु पण्याङ्गनादि। श्रिया दीप्त्या युक्तं पद्मरागादिकम्। यदा विक्रेता मूल्यं गृहीत्वा याचमानाय क्रेत्रे विक्रीतं वस्तु न ददाति तदा यत्कर्त्तव्यं तदाह स एव "विक्रीय पण्यं मूल्येन क्रेतुर्यो न प्रयच्छति। स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलमिति" यो गृहीतमूल्यो विक्रेता अजातानुशयाय क्रेत्रे प्रार्थयमानाय नार्पयति तच्च पण्यं यदि स्थावरात्मकं तदा क्षयेण सहितमसौ दाप्यः। यदा तु जङ्गमात्मकं तदा क्रियाफलेन सहितम् इत्यर्थः। विक्रयानन्तरं जात उपभोगोऽत्र क्षयः क्रियाफलं दोहनादिक्रियाफलं क्षीरादिकम्। इदञ्च क्रयकालापेक्षया अर्पणकाले मूल्याधिक्ये वेदितव्यम्। मूल्यह्रासे त्वन्यथाभिधानात्। तथा च स एव "अर्घश्चेदपहीयेत सोदयम्पण्यमावहेदिति"। अर्वाक् चेदपचीयेतेति कल्पतरौ पाठः। अर्वाक् विक्रीतस्य क्रेत्रे समर्पणात् पूर्वं अपचीयेत हीनमूल्यं भवेत्सोदयम्पण्यमावहेत्। विक्रयकाले यावन्मूल्यं गृहीतं तावता मूल्येनार्पणसमये मूल्यह्रासवशाद्यावदुपचयसहितं लभ्यते तावद्दद्यादित्यर्थः। यदा तु मूल्यसाम्यं तदा पण्योपचयरूपस्याभावात् "निक्षेपं वृद्धिशेषञ्च क्रयं विक्रयमेव च। याच्यमानमदत्तश्चेद्वर्द्धते पञ्चकं शतमिति" वचनोक्तवृद्धिसहितम्पण्यं दाप्यः। अतएव याज्ञवल्क्यः "गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति। सोदयं तस्य दाप्योऽसौ दिग्लाभं वा दिगागते" इति। गृहीतमूल्यम्पण्यं विक्रेता यदि प्रार्थ्यमानाय स्वदेशवणिजे क्रेत्रे न समर्पयति तच्च पण्यं यदि क्रयकाले बहुमूल्यं कालान्तरे अल्पमूल्येनैव लभ्यते तदा सोदयं वृद्ध्या सहितं विक्रेता क्रेत्रे दापनीयः। यदा मूल्यह्रासकृतः पण्यस्योदयो नास्ति किन्तु क्रयकाले यावता मूल्येन लब्धं यावत्पण्यमिति प्रतिपन्नं तावदेव तदा तत्पण्यमादाय तस्मिन् देशे विक्रीतस्य यो लाभस्तेनोदयेन सहितं दापनीयः वचनस्यास्यार्थः। चतुर्थस्य तु यो देशान्तरात् क्रयणार्थमागत्य क्रीणाति तस्मै देशान्तरे तत्पण्यविक्रये यो लाभस्तेन सहितं तत्पण्यं दापनीय इत्यर्थः। देशान्तरलाभसहितपण्यदानञ्च केवलमादांशमात्र एव किन्तु मूल्यस्य ह्रासे क्षयेऽपीत्याह नारदः "स्वामिनामेव नियमो दिग्लाभं दिग्विचारिणामिति"।

स्थायिनां विक्रेतृदेशस्थायिनाम् एष नियमः स्थावरस्य त्वयं दाप्य इत्यादिवचनोक्तो नियम इत्यर्थः। विष्णुर्विक्रेतुर्दण्डमप्याह "गृहीतमूल्यं यः पण्यं क्रेतुर्नैव दद्यात्तस्य सोदयं दाप्यो राज्ञा च पणशतं दण्ड्यः" इति। एतच्चानुशयरहितत्प्रविक्रेतृविषयमिति मदनरत्ने। यस्तु विक्रीयानुशयवशाच्चार्पयति यश्च क्रीत्वाऽनुशयवशान्न गृह्णाति तौ प्रत्याह कात्यायनः "क्रीत्वा प्राप्तान्न गृह्णीयाद्यो न दद्याददूषितम्। स मूल्याद्दशभागन्तु दत्त्वा स्वद्रव्यमाप्नुयात्"। अप्राप्तेऽथ क्रियाकाले क्रते नैव प्रदापयेत्। एष धर्मो दशाहात्तु परतोऽनुशयो नास्तीति"। अदूषितं जलादिनेति शेषः। दोह्यवाह्यादिपण्यस्य दोहनवाहनादिरूपः कालोऽत्र क्रियाकालस्तस्मिन्नप्राप्ते सति अपहरणेऽदाने वा क्रते सति न दशमभागं प्रदापयेत् किन्तु तमदत्त्वैव स्वीयं द्रव्यं प्राप्नुयादिति। एष धर्मो दशाहात्प्राग्वेदितव्यः ततः ऊर्द्ध्वमनुशयो न कर्त्तव्यः। विक्रीयासम्प्रयच्छतो यद्विक्रीतं पण्यं विक्रेतुः पार्श्वे स्थितं तस्य यदि नाशः स्यात्तदा विक्रेतुरेव हानिरित्याह याज्ञवल्क्यः "राजदैवोपघातेन पण्ये दोषमुपागते। हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः" इति। अत्र याचितस्येति विशेषणोपादानात् याचनाभावे न विक्रेतुर्हानिरित्यर्थाद्गम्यते। नारदोऽपि "उपहन्येत वा पण्यं दह्येतापह्रियेत वा। विक्रेतुरेव सोऽनर्थो विक्रीयासम्प्रयच्छतः" इति। यथा याचितस्याप्रयच्छतो विक्रेतुर्हानिस्तथा दीयमानं पण्यमगृह्णतः क्रेतुरपीत्याह स एव "दीयमानञ्च गृह्णाति क्रीतम्पण्यञ्च यः क्रयी। स एवास्य भवेद्दोषी विक्रेतुर्योऽप्रयच्छतः" इति। अप्रयच्छतः विक्रेतुर्यो दोषः स एवास्य भवेदित्यन्वयः। क्रेतुर्दोषाभिधानस्य फलं पण्यस्य मूल्यं क्रेत्रे विक्रेता न प्रत्यर्पणीयमिति। दीयमानञ्च गृह्णातीति वदता दीयमानग्रहणे न मूल्यहानिरिति दर्शितम्। क्रयानन्तरं क्रेता न याचितं विक्रेता च न समर्पितं जातञ्चौराद्युपद्रवस्तत्र द्वयोः समा हानिः। क्रेतृविक्रेत्रोरुभयोरपि याचनानर्पणशैथिल्येन सापराधत्वादित्युक्तं देवलभट्टैः स्मृतिचन्द्रिकायाम्। याज्ञवल्क्योऽपि "हानिश्चेत् क्रेतृदोषेण क्रेतुरेव हि सा भवेदिति" क्रेतृदोषः दीयमानस्याग्रहणम्। यत्र पुनर्जातानुशयः क्रेता विक्रेता दीयमानञ्च गृह्णाति तत्राप्याह नारदः "दीयमानञ्च गृह्णाति क्रीत्वा पण्यं च यः क्रयी। विक्रीणानस्तदन्यत्र विक्रेता नापराध्नुयादिति"। क्रयी जातानुशय इति शेषः। याज्ञवल्क्योऽपि "विक्रीतमपि विक्रेयं पूर्वं क्रेतर्यगृह्णतीति"। यस्त्वदुष्टं पण्यं दर्शयित्वा सदोषं विक्रीणीते यश्चान्यहस्ते विक्रीतं तत्क्रेतुरनुशयाभाव एवान्यत्र विक्रीणीते तयोः समानो दण्ड इत्याह नारदः "निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति। स मूल्याद्द्विगुणं दाप्यो विनयं तावदेव तु। तथान्यहस्ते विक्रीय योऽन्यस्मै तत्प्रयच्छति। द्रव्यन्तद्द्विगुणं दाप्यो विनयं तावदेव त्विति"। याज्ञवल्क्योऽपि "अन्यहस्ते च विक्रीतं दुष्टं वाऽदुष्टवद्यदि। विक्रीणीते दमस्तस्य मूल्यात्तु द्विगुणो भवेदिति" बुद्धिपूर्वविषयमेतत्। "ज्ञात्वा सदोषं यः पण्यं विक्रीणीते विचक्षणः। तदेव द्विगुणं दाप्यस्तत्सम विनयं तथेति" बृहस्पतिनोक्तत्वात्। अबुद्धिपूर्वक विक्रये तु क्रयपरावर्त्तनमेव। अन्यत्रापि विषयविशेषे परावर्त्तनमाह बृहस्पतिः "मत्तोन्मत्तेन विक्रीतं हीनमूल्यं भयेन वा। अस्वतन्त्रेण मूढेन त्याज्यन्तस्य पुनर्भवेदिति"। एतत्सर्वं दत्तमूल्ये पण्ये द्रष्टव्यम्। अत एव नारदः। "दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्त्तितः" इति। यत्र पुनर्मूल्यं न दत्तं तत्रापि स एवाह "अदत्तेऽन्यत्र समयान्न विक्रेतुरविक्रयः" इति। अदत्तमूल्ये तु पण्ये वाङ्मात्रेण क्रये क्रते न परावर्त्तनीयमित्येवमादिसमयाभावे सति प्रवृत्तौ निवृत्तौ न कश्चिद्दोष इत्यर्थः। यत्र पुनर्वाङ्मात्रक्रयपरिहारार्थं विक्रेतुर्हस्ते क्रेता किञ्चिद्द्रव्यं दत्तं तत्र क्रेतृदोषवशेन क्रयासिद्धौ त्वाह व्यासः "सत्यङ्कारं च यो दत्त्वा यथाकालं न दृश्यते। पण्यं भवेन्निसृष्टन्तद्दीयमानमगृह्णतः" इति। निसृष्टं भवेत् उत्सृष्टं भवेदित्यर्थः। अत्र पण्यद्रव्यस्योत्सर्गः सत्यङ्कारद्रव्योत्सर्गोऽभिमतः। अन्यथा वाङ्मात्रक्रयकर्तृतुल्यत्वेन विक्रेतुः सत्यङ्कारद्रव्यापहारकत्वकृतमन्यत्र विक्रयणाद्यपराधनिमित्तं सत्यङ्कारद्रव्यस्य द्वैगुण्येन प्रतिदानं न स्यात्। अत्रापि विक्रीतमपि विक्रेयमित्यनुसन्धेयम्। क्वचिच्च विषये विक्रेतृदोषवशेन क्रयासिद्धौ त्वाह याज्ञवल्क्यः "सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिदापयेदिति" सत्यङ्कारः सत्यापनं कृतस्य क्रयस्य सत्यताकरणमिति यावत्। "क्लीवे सत्यापनं सत्यङ्कारः सत्याकृतिः स्त्रियाम्" इत्यमर

कोषाभिधानात्। वल्कदाराय क्रतं वर्णितं वल्कदारक्रतं वृथं वल्कं कर्त्तुं यद्विक्रेतुरुक्तो क्रतमित्यर्थः"।

**विक्रेय** त्रि॰ वि+क्री-यत्। विक्रयणीये पदार्थे। [२व्याकुलत्वे

**विक्लव** त्रि॰ वि+क्लु-अच्। १व्याकुलभूते अमरः। भावे अप्

**विक्लित्ति** स्त्री वि+क्लिद-क्तिन्। अवतैलःसंयोगाद्यावयवयवीयत्वे पूर्वारम्भकसंयोगनाशानन्तरमितिवसंयोगापत्तौ।

**विक्लिन्न** त्रि॰ वि+क्लिद-क्त। १आर्द्रे २शीर्णे ३जीर्णे च मेदि॰। ४विक्लेदयुक्ते। [शब्दे च वैद्यकम्।

**विक्षाव** पु॰ वि+क्षु अप्। १शब्दे अमरः। २कासादिरोगजशब्दे

**विक्षिप्त** त्रि॰ वि+क्षिप-क्त। १विशेषेण क्षिप्ते २योगशास्त्रोक्ते चित्तस्य भूमिभेदे न॰। तयोक्तं पातञ्जलभाष्यविवरणयोः "क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तभूमयः। तत्र विक्षिप्ते चेतसि विक्षेपोपसर्जनीभूतः समाधिर्न योगपक्षे वर्त्तते" भा॰। "क्षिप्तं सदैव रजसा तेषु तेषु विषयेषु क्षिप्यमाणम् अत्यन्तमस्थिरं, मूढन्तु तमःसमुद्रेकान्निद्रावृत्तिमत्। क्षिप्ताद्विशिष्टं विक्षिप्तं विशेषोऽस्य सत्त्वबहुलस्य कादाचित्कः स्था वा सहजः सत्त्वबहुलता आगन्तुको वा व्याधिस्त्यानादन्तरायजनिता वा" विव॰।

**विक्षीर** पु॰विविधं विगतं वा क्षीरमस्य। १अर्कवृक्षे राजनि॰ २विगतक्षीरे त्रि॰।

**विक्षेप** पु॰वि+क्षिप-घञ्। १त्यागे २प्रेरणे ३दूरीकरणे च। "चित्तस्य विक्षेपा नवविधाः पात॰ सूत्रभाष्ययोर्दर्शितास्ते च चित्तविक्षेपशब्दे २८३१पृ॰ अन्तरायशब्दे च दृश्याः। वेदान्तसिद्धचित्तविक्षेपाः २०० पृ॰ उक्ताः। विषुवद्वृत्ते यत् ग्रहस्थानं तस्य क्रान्तिवृत्ताद्‌ यत् तिर्यगन्तरं स विक्षेपः" सि॰शि॰ उक्ते ४शरे च। "मृणालसूत्ररचना इवा विक्षेपमेवाम्भसम्। इत्यत्रासावमीषां विक्षेपो दयितान्विते" सा॰ द॰ उक्ते स्त्रीणां ५सत्त्वजालङ्कारभेदे।

६कथाविच्छेदरूपे निग्रहस्थानभेदे "कार्य्यव्यासङ्गात् कथाविच्छेदो विक्षेपः" गौ॰सू॰ "यत्र कर्त्तव्यं व्यासज्य कथां व्यवच्छिनत्ति। इदं मे करणीयं विद्यते तस्मिन्नवसिते कथयिष्यामि इति विक्षेपो नाम निग्रहस्थानम्। एकनिग्रहावसानायां कथायां स्वयमेव कथान्तरं प्रतिपद्यते इति" वा॰भा॰। "असम्भवत्कालान्तरकलेनारोपितं कार्य्यव्यासङ्गमुद्भाव्य कथाविच्छेदनमा" वृत्तिः।

**विक्षेपशक्ति** स्त्री विक्षेपस्य जनिका शक्तिः। वेदान्तोक्ते अविद्याशक्तिभेदे। "विक्षेपशक्तिस्तु यथा रज्ज्वज्ञानं स्वावृतरज्जौ स्वशक्त्या सर्पादिकमुद्भावयति एवमज्ञानमपि स्वावृतात्मनि स्वशक्त्या आकाशादिप्रपञ्चमुद्भावयति तादृशं सामर्थ्यम्। तदुक्तम् "विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत्सृजेदिति"। वेदान्तसा॰।

**विख** त्रि॰ विगता नासिका यस्य खादेशः। गतनासिके। अमरः। स्वादेशः। विख्योऽप्यत्र त्रिका॰।

**विखुर** पु॰स्त्री॰ १राक्षसे त्रिका॰ स्त्रियां ङीष्। २चौरे संक्षिप्त॰

**विख्यात** विशेषेण ख्यातः प्रसिद्धः वि+ख्या-क्त। प्रसिद्धे

**विगणन** न॰ विशेषेण गणनम् गण-ल्युट्। ऋणशोधनार्थे सङ्ख्यागणने।

**विगत** त्रि॰वि+गम-क्त। १प्रभादरहिते अमरः। २विशेषगते शब्द॰ ३अपगते च हेमच॰। ६त॰। ४अगमने न॰। "विगतं विगतम्" भट्टिः। [स्त्रियां स्त्रियाम् शब्दरत्ना॰।

**विगतार्त्तवा** स्त्री विगतमार्त्तवं रजो यस्याः। गतरजसि

**विगन्धक** पु॰ विरुद्धः गन्धोऽस्य कप्। १इङ्गुदीवृक्षे राजनि॰। २हपुषायां स्त्री॰ टापि अत इत्वम्।

**विगम** पु॰ वि+गम-अप्। १नाशे, २अपाये च।

**विगर्हण** न॰ वि+गर्ह-ल्युट्। निन्दने।

**विगर्हित** त्रि॰ वि+गर्ह-क्त। १निन्दिते २निषिद्धे च। भावे-क्त। ३निन्दायाम् न॰।

**विगाढ़** त्रि॰ वि+गाह-क्त। १स्नाते, २कृतावगाहने च।

**विगान** न॰ वि+गै-ल्युट्। निन्दायाम् हेमच॰।

**विगीत** त्रि॰ वि+गै-क्त। निन्दिते।

**विगीति** स्त्री वि+गै-क्तिन्। निन्दायाम्।

**विगुण** त्रि॰ विरुद्धो गुणोऽस्य। गुणरहिते।

**विगूढ़** त्रि॰ वि+गुह क्त। १गर्हिते, २गुप्ते च मेदि॰।

**विगृहीत** त्रि॰ वि+ग्रह-क्त। १गृहीते, व्याकरणोक्ते विग्रहवाक्यस्थे १पदे च।

**विग्र** त्रि॰ विगता नासिकाऽस्य ग्रादेशः। विगतनासिके अमरः

**विग्रह** पु॰ वि+ग्रह-अच्। १देहे, २विस्तारे, ३युद्धे पुं न॰ अमरः। ४समासादिवृत्तिसमानार्थकवाक्यभेदे, ५विभेदज्ञाने च "अविग्रहा गतादिस्था यथा प्राप्तादिकर्मभिः" हरि॰।

**विघटिका** स्त्री विभक्ता घटिका यया प्रा॰व॰। घटिकाषष्टिभागे पलात्मके काले राजनि॰। वि+घट-ण्वुल्। २वियोजके त्रि॰

**विघटित** त्रि॰ वि+घट-क्त । १वियोजिते २विशेषेण रचिते च
**विघट्टित** त्रि॰ वि+घट्ट-क्त । १चालिते २वियोजिते च ।
**विघस** पु॰ वि+अद-घञ् । भोजनशेषे मेदि॰ २आहारे च शब्दच॰ । ३सिक्थके न॰ राजनि॰ । ४देवपैतृदत्तशेषे
**विघसाशिन्** त्रि॰ विघसं देवतादिदत्तावशेषमश्नाति अश-णिनि । देवपैतृकार्य्यानन्तरं तदवशिष्टभोजिनि ।
**विघात** पु॰ वि+हन-क्त । १व्याघाते २आघाते च ।
**विघातिन्** त्रि॰ वि+हन-णिनि । १निवारके । २नाशके, ३नाशप्रतियोगिनि च "नित्यस्यायं वहुनिमित्तो विघाती" इति व्याकरणका॰ । ण्वुल् । विघातकोऽप्यत्र ।
**विघ्न** पु॰ वि+हन-क । १व्याघातके अन्तराये अमरः । २क-ण्पापाकफलायां शब्दच॰ । [गणेशे शब्दर॰ ।
**विघ्ननायक** पु॰ विघ्नानामुत्पत्त्यनुत्पत्त्योः नायकः । विघ्नेशे
**विघ्नकारिन्** त्रि॰ विघ्नं करोति कृ-णिनि । १घोरदर्शने २विघातके च मेदि॰ । स्त्रियां ङीप् । [ऽप्यत्र ।
**विघ्ननाशक** पु॰ ६त॰ । गणेशे शब्दच॰ ल्यु । विघ्ननाशनादयो-
**विघ्नराज** पु॰ विघ्ने राजते राज-अच् । गणेशे अमरः । ६त॰ । विघ्नेशादयोऽप्यत्र ।
**विघ्नहारिन्** पु॰ विघ्नं हरति हृ-णिनि । गणेशे त्रिका॰ ।
**विघ्नित** त्रि॰ विघ्नो जातोऽस्य इतच् । जातविघ्ने ।
**विघ्नेशानकान्ता** स्त्री ६त॰ । श्वेतदूर्वायाम् राजनि॰ ।
**विच** पृथक्करणे रु॰ जु॰ वा उ॰ सक॰ अनिट् । विनक्ति वि-वेक्ति विङ्क्ते विविक्ते । इरित् अविचत् अवैक्षीत् ।
**विचकिल** पु॰ विच+क किल-क कर्म॰ । १मदनवृक्षे । २मल्लीभेदे मेदि॰ । [२नागदन्त्यां स्त्री राजनि॰ टाप् ।
**विचक्षण** पु॰ वि+चक्ष-ल्यु न ख्यादेशः । १पण्डिते अमरः
**विचक्षुस्** त्रि॰ वि+चक्ष-उसि न ख्यादेशः । १विमनस्के त्रिका॰ । विगतं चक्षुर्यस्य । २नेत्रशून्ये त्रि॰ । [चयने च ।
**विचयन** न॰ वि+चि-ल्युट् । १अन्वेषणे शब्दच॰ । २पुष्पादि-
**विचर्चिका** स्त्री वि+चर्च-ण्वुल् । पामनि रोगभेदे अमरः । सा च क्षुद्रकुष्ठविशेषः । "एकं कुष्ठं स्मृतं पूर्वं गजचर्म ततः स्मृतम् । ततश्चर्मदलं प्रोक्तं ततश्चापि विचर्चिका । विपादिकाभिधा सैव पामा कच्छूस्ततः परा । ततो दद्रुश्च विस्फोटः किटिमश्च ततः परम् । ततश्चालसकं प्रोक्तं शताहश्च ततः परम् । क्षुद्रकुष्ठानि चैतानि कथितानि भिषग्वरैः । सकण्डूः पिडका श्यावा बहुस्रावा विचर्चिका" पिडका क्षुद्रपिडका । "दाल्यते त्वक् खरा कण्वा-त्यन्तोर्ध्वं या विचर्चिका । पादे विपादिका ज्ञेया स्यान्मेदादिश्चर्चिका" । "केचिद्विचर्चिकातो विपादिकां भिन्ना-माहुः" भावप्र॰ । कुष्ठशब्दे २११४पृ॰ दृश्यम् ।
**विचार** पु॰ वि+चर-घञ् । १तत्त्वनिर्णये सन्दिग्धे वस्तुनि प्रमाणेन तत्त्वपरीक्षायां २तदनुगुणे वाक्यस्तोमे च । "विपरीतोद्भावकपरविजिगीषया न्यायप्रयोग इति" केचित् प्राहुः । यथा परार्थानुमानस्थले पर्वतो वह्नि-मान् धूमवत्त्वादित्यादि । अत्र च पर्वते वह्नौ साधनीये प्रतिवादिना च पर्वतो न वह्निमानित्यादि विपरीतवाक्ये प्रयुक्ते मध्यस्थस्य संशयो जन्यते । तन्निरासार्थं वादिना पर्वतो वह्निमानित्यादिप्रतिज्ञादिघटितवाक्यप्रयोगरूपः विचारः क्रियते इति । ४विगतचारो यस्मात् प्रा॰ब॰, चार-शून्ये च "विचारदृक्चारदृगप्यवर्त्तत" ।
**विचारण** न॰ वि+चर-णिच्-ल्युट् । १विचारे शब्दर॰ । युच् । तत्रैव स्त्री अमरः । २मीमांसाशास्त्रे हेमच॰
**विचारित** त्रि॰ विचारो जातोऽस्य इतच् । कृतविचारे ।
**विचाल** त्रि॰ वि+चल-कर्त्तरि ण । १अभ्यन्तरे २अन्त-राले-हेमच॰ । वि+चल-णिच् भावे अच् । ३अन्यथा स्थितस्य वस्तुनो विशेषरूपतापादने "अधिकरणविचाले च" पा॰ "द्रव्यस्य संख्यान्तरापादने संख्याया धा स्यात् । एकं राशिं पञ्चधा कुरु" सि॰कौ॰ । [ङीप् ।
**विचि(ची)** पुंस्त्री विच-इक् । तरङ्गे भरतः । स्त्रीत्वपक्षे वा
**विचिकित्सा** स्त्री वि+कित-स्वार्थे सन् अ । सन्देहे अमरः ।
**विचित्र** न॰ विशेषेण चित्रम् । १कर्बुरवर्णे । २तद्वति त्रि॰ शब्दच॰ ३आश्चर्य्ये त्रि॰ । ४कर्केटी स्त्री राजनि॰ । ५अर्थालङ्कारभेदे न॰ अलङ्कारशब्दे ४०२ पृ॰ दृश्यम् । संज्ञायां कन् । भूर्जपत्रवृक्षे पु॰ राजनि॰ ।
**विचित्रवीर्य्य** पु॰ शान्तनुनृपात्मजे नृपभेदे भा॰आ॰१०६ अ॰
**विचित्राङ्ग** पुंस्त्री॰ विचित्रमङ्गं यस्य । (चिते) १व्याघ्रभेदे शब्दच॰ २मयूरे पुंस्त्री॰ शब्दर॰ उभयत्र स्त्रियां ङीष् ३आश्चर्य्यदेहे त्रि॰ ।
**विचेतस्** त्रि॰ विरुद्धं दुष्टं विशिष्टं वा चेतो यस्य । १दुष्ट-चित्ते २विशिष्टचित्ते च । ३दुर्मनस्के हेमच॰ ।
**विचेष्टित** त्रि॰ विगतं चेष्टितमस्य । १चेष्टाशून्ये, वि+चेष्ट-भावे क्त । २विशेषेण चेष्टायाम् न॰ ।
**विच्छ** दीप्तौ चु॰उभ॰सक॰सेट् । विच्छयति ते अविविच्छत् त
**विच्छ** गतौ तु॰ पर॰ स्वार्थे आय, आयपक्षे उ॰सक॰ सेट् । विच्छायति विच्छायते विच्छति । अविच्छायीत् अविच्छा-यिष्ट अविच्छीत् ।

**विच्छन्दक** पु० विशिष्टः छन्दो यत्र कप्। ईश्वरसद्मे अमरः "उपर्य्युपरि यद्गेहं तद्विच्छन्दकसंज्ञितम्"।

**विच्छाय** न० वीनां पक्षिणां छाया नपुंसकत्वम्। पक्षिसमूहच्छायायाम् अमरः। विगता छाया यस्य। २छायारहिते त्रि० मेदि०। ३विशिष्टकान्तियुते मणौ भरतः।

**विच्छित्ति** स्त्री वि+छिद-क्तिन्। १अङ्गरागे २हारभेदे ३विच्छेदे मेदि०। ४छेदे ५विनाशे ६स्त्रीणां चेष्टाभेदे च। "स्तोकाप्याकल्परचना विच्छित्तिः कान्तिपोषकृत्" सा०द०

**विच्छिन्न** त्रि० वि+छिद-क्त। १विभक्ते २समालब्धे च मेदि० ३कुटिले हेमच०। भावे-क्त। ४छेदने न०।

**विच्छेद** पु० वि+छिद—भावे घञ्। १वियोगे २सन्ततिराहित्ये ३विभागे च।

**विज** पृथक्करणे जु० उभ० सक० अनिट्। वेवेक्ति वेविक्ते इरित् अविजत् अवैक्षीत् अविक्त।

**विज** भये कम्पे च रु० पर०अक०सेट्। विनक्ति अविजीत्। ईदित् ओदित् विग्नः। [ईदित् ओदित् क्त-विग्नः।

**विज** भये कम्पे च तु०आ०अ०अनिट्। विजते अविजिष्ट।

**विजन** त्रि० विगतो जनो यस्मात् प्रा०ब०। निर्जने अमरः।

**विजनन** न० वि+जन-ल्युट्। १गर्भमोचने प्रसवे हेमच० २उद्भवे शब्दच०।

**विजपिल** न० विज—क पिल—क कर्म०। पङ्के त्रिकाण्डशे।

**विजन्मन्** त्रि० विरुद्धं जन्म यस्य। जारजे।

**विजय** पु० वि+जि-कर्त्तरि अच्। १अर्जुने मेदि०। "अभिप्रयामि संग्रामे यदहं युद्धदुर्मदान्। नाजित्वा विनिवर्त्तामि तेन मां विजयं विदुः" भा० वि० ४४अ०। २विमाने हेमच० ३यमे च। ४विष्णोरनुचरभेदे। जयशब्दे ३०५० पृ० दृश्यम्। तच्छब्दशब्दे दर्शिते ५छन्दभेदे ६कल्किपुत्रभेदे कल्किपु० १२अ०। भावे अच्। जये ८परिभवपूर्वकपहरणे च।

**विजयकुञ्जर** पु०विजयाय कुञ्जरः। राजवाहनगजे त्रिका०।

**विजया** स्त्री १आश्विनशुक्लपक्षीयदशम्याम् २उमायाः सखीभेदे वामनपु० ४अ० "कथयतु विजया" इति मुद्राराक्षसम्। ३दुर्गायां हेमच० "विजित्य पद्मनाभानं दैत्यराजं महाबलम्। विजया तेन सा देवी लोके चैवापराजिता" देवीपु०४५अ०। ४जयन्त्यां ५शेफालिकायां ६मञ्जिष्ठायां ७शमीभेदे, ८अग्निमन्थे राजनि०। ९भङ्गायाम् (सिद्धि) हेमच० तत्पर्य्यायगुणादि भावप्र० उक्तं यथा "भङ्गा गञ्जा मातुलानी मादिनी विजया जया। भङ्गा कफहरी तिक्ता ग्राहिणी पाचनी लघुः। तीक्ष्णोष्णा पित्तला मोहमदवाग्वह्निवर्द्धिनी" भावप्र०। अष्टद्वादशीमध्ये "यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत्। तदा सा तु महापुण्या द्वादशी विजया स्मृता" इत्युक्ते १०द्वादशीभेदे "शुक्लपक्षस्य सप्तम्यां सूर्य्यवारो यदा भवेत्। सप्तमी विजया नाम" इत्युक्ते सप्तमीभेदे च। ११यमभार्य्यायां १२हरितक्यां जटा०। १३पथ्यायां रत्नमा०। १४अस्त्रविद्याभेदे "विद्याभयेन विजयां जयाञ्च" भट्टिः।

**विजल्प** पु० "व्यक्तयाऽसूयया गूढ़मानमुद्रान्तरालया। अघद्विषि कटाक्षोक्तिर्विजल्पो विदुषां मतः" उज्ज्वलमण्युक्ते वाक्यभेदे।

**विजात** त्रि० विरुद्धं जातः। १जारजाते विशेषेण जाता। २जातापत्यायां स्त्रियां स्त्री हेमच०। [धर्म्माविशिष्टे वर्त्तिनि।

**विजातीय** त्रि० विभिन्नां जातिं धर्ममर्हति छ। विभिन्न-

**विजिगीषा** स्त्री विजेतुमिच्छा वि+जि—सन् भावे अ। १श्रोदरपूरणेच्छया निन्दनीयकर्मादौ प्रवृत्तौ २तन्निन्दाऽगणने रमा० ३विजयेच्छायाञ्च। उ। विजिगीषु अपेक्षावति त्रि० शब्दच०।

**विजिगीषाविवर्जित** त्रि ३त०। औदरिके अमरः।

**विजिन(ल)** न० विज-इनच् इलच् किच्च। सरसव्यञ्जने "पाकद्रवरसासक्ते व्यञ्जने तु भवेत् त्रयम्। तैलशाकसुसंस्कारे प्रशस्तमुपसंस्कृतम्। विजिनं लावणीकञ्च विजिलं विज्जिलञ्च तत्" शब्दर०।

**विजुल** पु० विज-उलच् किच्च। शाल्मलीकन्दे राजनि०।

**विजृम्भण** न० वि जृभि-ल्युट्। १विकाशे २मुखविकाशहेतुभूते वायुव्यापारभेदे (हाइतोला)। अ विजृम्भा स्त्री।

**विजृम्भित** त्रि० वि+जृभि-क्त। १विकशिते मेदि० २जृम्भायुक्ते भावे क्त। ३प्रकाशे ४चेष्टायां ५जृम्भायां च मेदि०।

**विज्जन** न० विद्—वेधनं जनयति जन—अच्। बाणे त्रिका०।

**विज्जल** न० व्यध—ताड़े क्विप् विदा जडयति जडि—अच् डस्य लः। १बाणे त्रिका०। २विजिले हेमच०।

**विज्जुल** न० विज-उलच् जुट्। त्वचे (दारचिनि) राजनि०

**विज्जुलिका** स्त्री विज्जुल+संज्ञायां कन् कापि अत इत्त्वम्। जतुकायां राजनि०। [विड्भृते पु० राजनि०।

**विज्ञ** त्रि०विशेषेण जानाति वि+ज्ञा—क। १प्रवीणे अमरः। २प-

**विज्ञात** त्रि० वि+ज्ञा-क्त। १ख्याते अमरः। २ज्ञाते च।

**विज्ञान** न० वि+ज्ञा-ल्युट्। १ज्ञाने २कर्म्मणि मेदि० ३शि-

ज्ञातिज्ञाने अमरः । ४वेदान्तोक्ते अविद्यावृत्तिभेदे च । ५बौद्धमतसिद्धे आलयरूपे ज्ञाने च । "चतुर्दशानां विद्यानां धारणं हि यथार्थतः । विज्ञानमितरत् विद्यात् येन धर्मो विवर्द्धते" कूर्मपु० १४अ० उक्ते ६चतुर्दशविद्याज्ञाने च ।

**विज्ञानमयकोष** पु० विज्ञानात्मकः कोष इवावरकत्वात् । ज्ञानेन्द्रियसहिते बुद्धिपदार्थे ।

**विज्ञानस्कन्ध** पु० बौद्धमतसिद्धेषु रूपविज्ञानवेदनासंज्ञासंस्काररूपेषु स्कन्धेषु आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहे ।

**विज्ञानिक** त्रि० विज्ञानमस्त्यस्य ठन् । विज्ञानयुक्ते भरतः ।

**विज्ञोली** स्त्री विज—वल—पृषो० । पङ्क्तौ त्रिका० ।

**विट** आक्रोशे सक० स्वने अक० भ्वा० पर० सेट् । वेटति अवेटीत् ।

**विट** पु० विट क । १विड्गे खारे अमरः । २शृङ्गाररसालम्बनानुचरे "सम्भोगहीनसम्पद् विटस्तु धूर्त्तः कलैकदेशज्ञः । वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम्" सा० द० । ३धूर्त्ते, "विट ! विटपममुं ददस्व तस्यै" माघः ४पर्वतभेदे ५मूषिकभेदे ६खदिरभेदे ७नारङ्गे च मेदि० । दनारङ्गवृक्षे शब्दमाला ।

**विटङ्क** न० वि+टकि—अच् । कपोतपालिकायां प्रासादाद्यग्रे काष्ठनिर्मिते कपोतावासस्थाने । (पायराखोप) अमरः ।

**विटप** पुंन०। विटं विस्तारं वा पाति पिबति वा पा-क ।१शाखायां,२पल्लवविस्तारे अमरः ।३स्तम्बे ४पल्लवे च शब्दर० ५विटपालके ६तद्‌पायिनि च मेदि० "पिबति च पाति च यासकौ रहस्त्वाद् विट ! विटपममुन्ददस्व तस्यै" माघः । ७आदित्यपत्रे पु० राजनि० । दस्कन्धवङ्क्षणान्तरस्थाने हेमच० ९विटाधिपे मेदि० । [वृक्षे राजनि० ।

**विटपिन्** पु० विटप+अस्त्यर्थे इनि । १वृक्षे अमरः । २वट-

**विटप्रिय** पु० ६त० । मुद्गरवृक्षे राजनि० ।

**विटमाक्षिक** पु० विटप्रियः माक्षिकः । धातुभेदे हेमच० ।

**विटि(टी)** स्त्री विट—कि वा ङीप् । पीतचन्दने शब्दमाला ।

**विट्खदिर** पु० विडिव दुर्गन्धः खदिरः । (गुयेबाबला) वृक्षे अमरः । [अमरः स्त्रियां ङीप् ।

**विट्चर** पुंस्त्री विषि-विष्ठायां चरति चर-अच् । ग्राम्यशूकरे

**विट्पति** पु० विश्यते विश-क्विप् विशः कन्यायाः पतिः । जामातरि जटाधरः । [पक्षिभेदे जटा० ।

**विट्सारिका** स्त्री विडिव दुर्गन्धः सारिका । (गुयेसालिक)

**विड** आक्रोशे भ्वा० पर० सक० सेट् । वेडति अवेडीत् ।

**विड** न० विड—क । लवणभेदे अमरः । "विडं सक्षारमूर्ध्वाधःकफवातानुलोमनम्" ऊर्ध्वं कफमधोवातं सञ्चारयतीत्यर्थः । "दीपनं लघु तीक्ष्णोष्णं रूक्षं रुच्यं व्यवायि च । विबन्धानाहविष्टम्भशूलगौरवशूलनुत्" भावप्र० ।

**विडङ्ग** पुंन० विड—अङ्गच् ।१खनामख्याते औषधभेदे अमरः । "विडङ्गं कटु तीक्ष्णोष्णं रूक्षं वह्निकरं लघु । शूलाध्मानोदरश्लेष्मक्रिमिवातविबन्धनुत्" भावप्र० । २अभिज्ञे त्रि० मेदि० ।

**विडम्बन** न० वि-डबि+ल्युट् । १तिरस्करणे २अनुकरणे च । युच् । विडम्बनाप्यत्र स्त्री । "स्वयञ्च तेऽन्या पुरतो विडम्बनेति" कुमारः ।

**विडाल** पुंस्त्री विड-कालन् । स्वनामख्याते १पशुभेदे अमरः स्त्रियां ङीष् । २नेत्रपिण्डे मेदि० ३नयनौषधभेदे च भावप्र० ४विदार्यां स्त्री राजनि० ङीष् । संज्ञायां कन् । हरिताले न० । स्वार्थे क । विडाले पशौ पु० स्त्री० । संज्ञायां कन् । नेत्रौषधभेदे तद्विधिः भावप्र० उक्तो यथा "विडालको बहिर्लेपो नेत्रे पक्ष्मविवर्जिते । तस्य मात्रा परिज्ञेया मुखालेपविधानवत्" । मुखालेपस्तु "अङ्गुलस्य चतुर्थांशो मुखालेपः कनिष्ठकः । मध्यमस्तु त्रिभागः स्यादुत्तमोऽर्द्धाङ्गुलो भवेत्" । लिप्तिकाचोऽपि तस्योक्तो यावत् शुष्को न शुष्यति । तेनापि शुष्कहीनः स्यात्तथा दूषयति त्वचम्" । स च "यष्टीगैरिकसिन्धूत्थदार्वीतार्क्ष्यैः समांशकैः । जलपिष्टैर्बहिर्लेपः सर्वनेत्रामयापहः" । तार्क्ष्यं रसाञ्जनम् । "रसाञ्जनेन वा लेपः पथ्याबिल्वदलैरपि । वचाहरिद्राविश्वैर्वा तथा नागरगैरिकैः" ।

**विडालपदक** न० कर्षपरिमाणे भावप्र० कर्षशब्दे १७७४ पृ० दृश्यम् । [शब्दे २४१४ पृ० दृश्यम् ।

**विडीन** न० वि+डी—क्त । पक्षिणां गतिभेदे जटा० खगगति-

**विडुल** पु० विड-कुलच् । वेतसवृक्षे हेमच० ।

**वि(डो)डौजस्** पु० विश-क्विप् विट् व्यापकमोजो यस्य पृषो० वा औत् । इन्द्रे अमरः ।

**विड्गन्ध** न० विष इव गन्धोऽस्य । विड्लवणे रत्नमाला ।

**विड्लवण** न० विडिव दुर्गन्धं लवणम् । स्वनामख्याते लवणभेदे रत्नमाला ।

**विड्वराह** पुंस्त्री० विट्प्रियो वराहः शाक० ।१ग्राम्यशूकरे जटा० स्त्रियां ङीष् । "वसनं विड्वराहस्य" इति स्मृतिः ।

**वितंस** पु० वि+तन्स-घञ्। पक्षिणां बन्धनसाधने रज्ज्वादौ भरतः।

**वितण्डा** स्त्री वि+तडि-भावे अ। स्वपक्षाव्यवस्थापनेन परपक्षमात्रनिराकरणे कथाभेदे अमरः। २कच्चीशाके लाङ्गल्यां ४करव्यां मेदि० ५दर्व्यां हारा०।

वितण्डाकथालक्षणं गौ० सू० उक्तं यथा "स प्रतिपक्षस्थापनाहीनो वितण्डा" सू० "स जल्पो वितण्डा भवति किंविशेषणः। प्रतिपक्षस्थापनया हीनः। यौ तौ समानाधिकरणौ विरुद्धौ धर्मौ पक्षप्रतिपक्षावित्युक्तौ तयोरेकतरं वैतण्डिको न स्थापयतीति परपक्षप्रतिषेधेनैव प्रवर्त्तत इति। अस्तु तर्हि प्रतिपक्षहीनो वितण्डा यद्वै खलु तत्परप्रतिषेधलक्षणं वाक्यं स वैतण्डिकस्य पक्षः न त्वसौ साध्यं कञ्चिदर्थं प्रतिज्ञाय स्थापयतीति तस्मात् यथान्यासमेवास्तु" वा०भा०। वृत्तौ तु सूत्रमन्यथा व्याख्यातं यथा "क्रमप्राप्तां वितण्डां लक्षयति स इति। यद्यपि तच्छब्देन जल्पो न परामृष्टः" शक्यते जल्पस्य स्थापनाद्वयवतः प्रतिपक्षस्थापनाहीनत्वस्य विरुद्धत्वात् तथापि स्थापनाद्वयवत्त्वं विहाय जल्पैकदेशः परामृश्यते प्रतिपक्षो द्वितीयपक्षः तथाच प्रतिपक्षस्थापनाहीना विजिगीषुकथा वितण्डेति। न च स्वस्य स्थापनीयाभावात् कथमियं कथा प्रवर्त्ततामिति वाच्यम् परपक्षदूषणेनेन जयस्यैवोद्देश्यत्वात्। परे तु परपक्षदूषणेनैव स्वपक्षार्थोऽव सिद्धिसद्भावाभावेऽपि न प्रवृत्त्यनुपपत्तिरिति वदन्ति"।

**वितथ** त्रि० वि+तन-क्थन्। मिथ्याभूते पदार्थे अमरः। स्वार्थे यत्। वितथ्य तत्रैव। [उणादिको०

**वितद्रु** स्त्री वि+तन-द्रु दाक्षदेशः। पञ्जाबदेशस्थे नदीभेदे

**वितरण** न० वि+तॄ-ल्युट्। दाने अमरः।

**वितर्क** पु० वि+तर्क-भावे घञ्। १सन्देहे २ऊहे च मेदि०। ३ज्ञानस्वभावे शब्दर०। ४अर्थालङ्कारभेदे अलङ्कारशब्दे ४०२ पृ० दृश्यम्।

**वितर्दि** स्त्री वि+तर्द-इन् वा ङीप्। वेदिकायाम् अमरः। पृषो० वितर्द्धिरप्यत्र स्त्री भरतः वा ङीप्।

**वितल** न० विशेषेण तलम्। पातालभेदे शब्दर०। पातालशब्दे ४२९९ पृ० दृश्यम्। २तलशून्ये त्रि०।

**वितस्ति** पुंस्त्री० वि+तस-क्तिच्। द्वादशाङ्गुलपरिमाणे विस्तृत कनिष्ठाङ्गुष्ठमध्यकुञ्चितपरिमाणे अमरः।

**वितान** न० वि+तन-कर्मणि भावादौ घञ्। १वृत्तिभेदे मेदि० २अवसरे विश्वः। ३यज्ञे ४विस्तारे अमरः। ५चन्द्रातपे पुंन० ६तुच्छे ७मन्दे च त्रि०अमरः। ८शून्ये त्रि० धरणिः। स्वार्थे क। चन्द्रातपे। संज्ञायां कन्। ९आहवनीयादौ राजनि०। १०आहवनीयाद्यग्नीनां विस्तारे। वितानेन निर्वृत्तः ठक्। वैतानिक वितानसाध्ये अग्न्याधेयप्रभृतौ त्रि० "अग्न्याधेयप्रभृतीन्याह वैतानिकानि" आश्व० श्रौ० २सू०। "वितानेषु भवानि वैतानिकानि वितानसाध्यानीत्यर्थः। वितानशब्दोऽत्र सूत्रे भावचनोऽग्नीनां विस्तारवचनः" नारा०। वितायन्तेऽग्नयोऽस्मिन् वि+तन न० आधारे घञ्। ११अग्निहोत्रादिकर्मणि। "अथैतस्य समाम्नायस्य वितानेयोगापत्तिं व्याख्यास्यामः" आ० श्रौ० १सू०। "वितताः अग्नयो यस्मिन्निति श्रौतकर्मजातमग्निहोत्रादि वितानशब्देनोच्यते" नारा०। तत्र साधु ठक्। वैतानिक अग्निहोत्रादि कर्मसाधने अग्नौ पु०। "वैतानिकेऽग्नौ कुर्वीत" मनुः।

**वितानमूलक** न० वितानाय मूलमस्य कप्। उशीरे राजनि०।

**वितुन्न** न० वि+तुद क्त। १सुनिषण्णके अमरः संज्ञायां कन्। २धान्यके ३शैवाले च न० अमरः। ४भूम्यामलक्यां स्त्री राजनि०। संज्ञायां कन्। ५तामलक्यां पु० अमरः।

**वित्त** त्यागे अद० चु० उभ० सक० सेट्। वित्तयति ते अविवित्तत् त वित्तापयतीत्यपि।

**वित्त** न० विद्यते लभ्यते विद-क्त। १धने अमरः। विद-क्त वा दस्य न नः। २ख्याते, ३विचारिते ४ज्ञाते हेमच० ५लब्धे च त्रि०।

**वित्ति** स्त्री विद-क्तिन्। १ज्ञाने २लाभे ३विचारे च मेदि०।

**वित्तेश** पु० ६त०। कुबेरे।

**वित्सन** पु० विद्—लाभे क्विप् तां सनोति सन—दाने अच् वृषभे शब्दच०। [अवेविद।

**विथ** याचने भ्वा० आ० द्विक० सेट् चङि न ह्रस्वः। वेथते

**विथुर** पु० विथ—उरच् किच्च। १चौरे २राक्षसे च उज्ज्वा०।

**विथ्या** स्त्री विथ—यत्। गोजिह्वायाम् शब्दच०।

**विद** सुखादानुभवे आख्याने, वादे च सक० वासे अक० चु० उभ० सेट्। वेदयति ते अवीविदत् त।

**विद** लाभे तु० उभ० सक० अनिट् मुचादि। विन्दति ते। लृदित् अविदत् अवित्त। विवेद विविदे। वित्तं वित्तम्।

**विद** मीमांसे रुधा० आ० सक० अनिट्। विन्ते अवित्त।

**विद** भावे, दिवा० आ० अक० अनिट्। विद्यते अवित्त।

**विद** ज्ञाने अदा॰ पर॰ सक॰ सेट् । वेत्ति-वेद । अवेदीत् ।

**विद्** पु॰ विद-क्विप् । १पण्डिते अमरः २बुधग्रहे च ज्यो॰ ।

**विद** पु॰ विद-क । १पण्डिते अमरः २बुधग्रहे च ज्यो॰ ।

**विदंश** पु॰ विदश्यतेऽनेन वि+दन्श करणे घञ् । अवदंशे (चाटनि) राजनि॰ ।

**विदग्ध** त्रि॰वि+दह-क्त । १नागरे त्रिका॰ २निपुणे राजनि॰ ३पण्डिते च शब्दच॰ । ४नायिकाभेदे स्त्री रसमञ्जरी । परकीयाशब्दे ४२२२ पृ॰ दृश्यम् । ५विशेषेण दग्धे त्रि॰ ।

**विदथ** पु॰ विद-कथच् । १योगिनि, २कृतिनि च मेदि॰ ।

**विदर** न॰वि+दृ-अच् ।(फणिमनसा) इत्ये शब्दर॰ । भावे अप् २विदलीकरणे पु॰ शब्दर॰ । प्रा॰ब॰ । ३विगतभये त्रि॰ ।

**विदर्भ** पुंस्त्री॰ विगताः दर्भाः कुशा यतः । देशभेदे कुण्डिननगरे (बड़नागपुर) ।

**विदल** त्रि॰ विशेषेण दल्यते दल-बाहुले क । १द्विधाभूते २दाड़िमफलत्वे ३वंशादिपात्रे ४स्वर्णादेरवयवे च न॰ । ५कलायादौ न॰ अमरभरतौ ६रक्तकाञ्चने ७पिष्टके न॰ शब्दच॰ । दलिहति (तेओड़ि) स्त्री राजनि॰ । प्रा॰ब॰ । ८दलशून्ये त्रि॰ ।

**विदा** स्त्री विद-अङ् । १ज्ञाने २बुद्धौ च मेदि॰ ।

**विदादि** पु॰अपत्यादौ "विदादिभ्योऽञ्" पा॰अञ्प्रत्ययनिमित्ते शब्दगणे स च गणः पा॰ गणसूत्रे दृश्यः ।

**विदार** पु॰ वि+दृ-णिच् भावादौ अच् । १विदारणे २जलोच्छ्वासे च मेदि॰। ३युद्धे हेमच॰ । ४द्विधाकरणे ।

**विदारक** पु॰वि+दृ-णिच्-ण्वुल् । १जलमध्यस्थतरुशिलादौ अमरः। २विदारणकर्त्तरि त्रि॰ ३शुष्कनद्यादेर्जलधारणयोग्ये गर्त्ते न॰ सर्वधरः । ४जलबन्धके शब्दर॰ ।

**विदारण** न॰वि+दृ णिच्—भावादौ ल्युट् ।१भेदने २विजृम्भे च मेदि॰ । ३मारणे शब्दर॰ । ४युद्धे पुंस्त्री॰ मेदि॰ । ५कर्णिकारवृक्षे पु॰ शब्दच॰ ।

**विदारिणी** स्त्री वि+दृ-णिनि ङीप् । काश्मर्याम् राजनि॰

**विदारी** स्त्री वि+दारि+कर्मणि अच् गौ॰ ङीष् । १शालपर्ण्याम् । (शालपान) मेदि॰ ।२भूमिकुष्माण्डे च अमरः "विदारी वातपित्तघ्नी बल्या वृष्या रसायनी" राजव॰ । ३कण्ठरोगभेदे भावप्र॰ "सदाहतोदं श्वयथुं सताम्रमन्तर्गले पूतिविशीर्णमांसम् । पित्तेन विद्यात् वदने विदारीं पार्श्वे विशेषात् स तु येन शेते" स तु पुरुषो येन पार्श्वेन विशेषात् बाहुल्येन शेते तस्मिन् पार्श्वे सा विदारी भवतीत्यर्थः" ।

**विदारीगन्धा** स्त्री विदार्याः भूमिकुष्माण्डस्येव गन्धो यस्याः । शालपर्ण्याम् (शालपान) अमरः ।

**विदाह** पु॰ वि+दह-घञ् । १करचरणादि २करचरणे हेमच॰ ।

**विदाहिन्** न॰ वि+दह-णिनि । दाहजनकद्रव्ये ।

**विदित** त्रि॰ विद-क्त । १ज्ञाते अमरः २प्रार्थिते च मेदि॰ ३कवौ पु॰ जटा॰ । भावे-क्त । ४विख्यातौ ४उपगमे शब्दच॰ ५ज्ञाने च । तदस्यास्ति अच् । ६ज्ञातरि त्रि॰ । "विदितः समाययाविति" किरा॰ ।

**विदिश्** स्त्री विगता दिशौ । दिशोर्मध्ये अग्निनिरृतिवायव्यैशानकोणचतुष्टये अमरः ।

**विदु** पु॰ विद-कु । हस्तिकुम्भमध्यभागे अमरः ।

**विदुर** त्रि॰ विद-कुरच् । १नागरे २धीरे ३कौरवाणां मन्त्रिणि दासीगर्भजाते धर्मावतारभेदे च मेदि॰ भा॰आ॰ १०६अ॰ ४ज्ञातरि च अमरः ।

**विदुल** पु॰ विद-कुलच् । १वेतसे २जलवेतसे मेदि॰ ३गन्धरसे च रत्नमा॰ । ४ऋषिभेदे भा॰ उ॰ ।३२ अ॰ ।

**विदूर** न॰ विशिष्टं दूरम् । १अतिदूरे २तद्युक्ते पदार्थे त्रि॰ "विदूरे केयूरे कुरु" इति सा॰द॰ ३परि॰ । ३वैदूर्यमणिसमुत्पत्तिस्थाने पु॰ "विदूरभूमिर्नवमेघशब्दात्" कुमारः ।

**विदूरज** न॰ विदूरे देशभेदे जायते जन-ड । वैदूर्यमणौ ।

**विदूरथ** पु॰१दशमस्य मनोः पुत्रभेदे २पौरवे नृपभेदे विष्णुपु॰२२अ॰

**विदूराद्रि** पु॰ विदूरे देशेऽद्रिः पर्वतः । पर्वतभेदे । यत्र वैदूर्यमणिरुत्पद्यते ।

**विदूषक** पु॰ विदूषयति वि+दूष-णिच्-ण्वुल् । १शृङ्गारसहायभेदे २परनिन्दके त्रि॰ मेदि॰ । "शृङ्गारस्य सहाया विटचेटविदूषकाद्याः स्युः । भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः । कुसुमवसन्ताद्यभिधः कर्मवपुर्वेशभाषाद्यैः । हास्यकरः, कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः" सा॰ द॰ ३प॰ ।

**विदेश** पु॰ विभिन्नो देशः । देशान्तरे "को विदेशः सविद्यानाम्" चाणक्यः ।

**विदेह** पु॰ विगतो देहः देहसम्बन्धो यस्य । १जनकाख्ये नृपे "अस्मात् ततो यज्ञे वशिष्ठस्तमशपद्विदः । तं दृष्ट्वा कुपितः प्राह मयाख्यातोऽसि पार्थिव ! । यस्मात् तस्मात् शपेयं त्वां विदेहस्त्वं भविष्यसि" वह्निपु॰ । तदीये २जनपदे च स च देशः मिथिलादेश इति ख्यातः । कूर्मविभागे बृ॰सं॰१४अ॰उक्तः । कूर्मविभागशब्दे दृश्यम् । २तद्देशस्थे नृपे ब॰व॰च ३कौशल्यायाम् ४देहसम्बन्धशून्ये

च त्रि० ४मिथिलायां स्त्री हेमच० । ५देहशून्ये देवे धात० सूत्रभाष्यादौ देवस्य विदेहत्वं समर्थितं यथा "भवप्रत्ययो विदेहप्रकृतिलयानाम्" सू० ।

"स खल्वयं द्विविध उपायप्रत्ययो भवप्रत्ययश्च तत्रोपाय प्रत्ययो योगिनां भवति" भवप्रत्ययो विदेहप्रकृतिलयानाम्" विदेहानां देवानां भवप्रत्ययः ते हि स्वसंस्कारमात्रोपयो(भो)गेन चित्तेन कैवल्यपदमनुभवन्तः स्वसंस्कारविपाकं तथाजातीयकमतिवाहयन्ति" भाष्यम् । "भवन्ति जायन्तेऽस्यां जन्तव इति भवोऽविद्या स खल्वयं भवः प्रत्ययः कारणं यस्य निरोधसमाधेः स भवप्रत्ययः । तत्र तयोर्मध्ये उपायप्रत्ययो योगिनां मोक्षमाणानां भवति विशेषविधानेन शेषस्य मुमुक्षुसम्बन्धं निषेधति । केषां तर्हि भवप्रत्ययः । इत्यत्र सूत्रेणोत्तरम् । विदेहाश्च प्रकृतिलयाश्च तेषामित्यर्थः । तद् व्याचष्टे विदेहानां देवानां भवप्रत्ययः भूतेन्द्रियाणामन्यतममात्मत्वेन प्रतिपद्यानामुपासनया तद्वासनावासितान्तःकरणाः पिण्डपातानन्तरमिन्द्रियेषु भूतेषु वा लीनाः संस्कारमात्रावशेषतया षाट्कौषिकशरीररहिताः विदेहाः ते हि संस्कारमात्रोपयोगेन चित्तेन कैवल्यपदमिवानुभवन्तः प्राप्नुवन्तः विदेहाः । अहत्तिकत्वञ्च कैवल्येन सारूप्यम् । साधिकारसंस्कारशेषता च वैरूप्यम् । संस्कारमात्रोपभोगेनेति क्वचित् पाठः तस्यार्थः संस्कारमात्रमेवोपभोगो यस्य न तु चित्तवृत्तिरित्यर्थः । मायावधयः संस्कारविपाकं तथाजातीयकमतिवाहयन्ति अतिक्रामन्ति पुनरपि संसारे विशन्ति तथा च वायु प्रोक्तं "दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः । भौतिकास्तु शतं पूर्णम्" विवरणम् । तेषां देवानां मध्ये यस्य विवेकसाक्षात्कारस्तस्य कैवल्यप्राप्तिः "यो यो देवानां प्रत्यबुध्यत स विमुच्यते" इति श्रुतेः । मीमांसासिद्धे देहशून्ये ६अचेतने मन्त्रात्मके देवे च । अधिपद्शब्दे ४५१ पृ० दृश्यम् ।

**विदेहकैवल्य** न० कर्म० । "न तस्य प्राणा उत्क्रामन्ति इहैव समवलीयन्ते" श्रुत्युक्ते जीवन्मुक्तस्य देहपतनान्तरं निर्वाणमोक्षे ।

विदेहकैवल्यनिष्पत्तिप्रकारादि शा० सू० भाष्ययोरुक्तं यथा "भोगेन त्वितरे क्षपयित्वा सम्पद्यते" सू० । "अनारब्धकार्ययोः पुण्यपापयोर्विद्यासामर्थ्यात् क्षय उक्तः इतरे त्वारब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वा ब्रह्म सम्पद्यते "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति । "ब्रह्मैव सन् ब्रह्माप्येति" इति चैवमादिश्रुतिभ्यः । ननु सत्यपि सम्यग्दर्शने यथा प्राग्देहपाताद् भेददर्शनं द्विचन्द्रदर्शनन्यायेनानुवृत्तमेवं पश्चादप्यनुवर्त्तेत न, निमित्ताभावात् उपभोगशेषक्षपणं हि तत्रानुवृत्तिनिमित्तं न च तादृशमस्ति किञ्चित् कारणम् । नन्वपरः कर्माशयोऽभिनवमुपभोगमारप्स्यते न, तस्य दग्धबीजत्वात् । मिथ्याज्ञानावष्टम्भं हि कर्मान्तरं देहपाते उपभोगान्तरमारभते तच्च मिथ्याज्ञानं सम्यग्दर्शनेन दग्धमिति साध्वेतत् आरब्धकार्यक्षये विदुषः कैवल्यम्" भा० । तत्रैव ४पादे च सू०भाष्ययोरुक्तं यथा "सम्पद्याविर्भावः स्वेनशब्दात्" सू० "एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" श्रुतिविषयवाक्यं तत्र पूर्वपक्षं दर्शयित्वा सिद्धान्तितं भाष्यकृता यथा "केवलेनैवात्मनाविर्भवति न धर्मान्तरेणेति कुतः ? स्वेन रूपेणाभिनिष्पद्यते इति स्वशब्दात्" भा० "मुक्तः प्रतिज्ञानात्" सू० । "योऽत्राभिनिष्पद्यते इत्युक्तः स पूर्वबन्धविनिर्मुक्तः शुद्धेनैवात्मनावतिष्ठते" कुत ? प्रतिज्ञानात् । "एतं त्वेव ते भूयोऽनुव्याख्यास्यामः" इति प्रतिज्ञातस्य "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति चोपन्यस्य स्वेनरूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" इति (श्रुतिः) भा० । "अविभागेन दृष्टत्वात्" सू० । "अविभक्त एव परेणात्मना मुक्तोऽभिनिष्पद्यते कुतः ? दृष्टत्वात्" "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति" एवं मुनेर्विजानतः आत्मा भवति गौतम !" इत्येवमादीनि मुक्तस्वरूपनिरूपणपराणि वाक्यान्यविभागमेव दर्शयन्ति नदीसमुद्रादिनिदर्शनानि च" भा० । विवेकचू० अप्युक्तं यथा "पाषाणवृक्षतृणधान्यकटाम्बराद्या दग्धा भवन्ति हि मृदेव यथा तथैव । देहेन्द्रियासुमनआदिसमस्तदृश्यम् ज्ञानाग्निदग्धमुपयाति परात्मभावम् । विलक्षणं यथा ध्वान्तं लीयते भानुतेजसि । तथैव सकलं दृश्यं प्रज्ञात्मनि विलीयते । घटे नष्टे यथा व्योम व्योमैव भवति स्फुटम् । तथैवोपाधिविलये ब्रह्मैव ब्रह्मवत् स्वयम् । क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं जले । संयुक्तमेकतां याति तथात्मन्यात्मविन्मुनिः । एवं विदेहकैवल्यं सन्मात्रत्वमखण्डितम् । ब्रह्मभावं प्रपद्यैव यतिर्नावर्त्तते पुनः । सदात्मकत्वविज्ञानदग्धाऽविद्यादिवर्ष्म च । अमुष्य ब्रह्मभूतत्वात् ब्रह्मणः कुत उद्भवः" ।

योग्यश्च यद्यस्य तत्तस्य प्रतिपादयेत्"। ततः पुस्तकलेखनप्रकारस्तद्दानविधिश्च विस्तरेणोक्तस्तत्र द्रष्टव्यः। विद्योपयोगिद्रव्यादिदानेऽपि विद्यादानं भवति यथोक्तं हेमा०दा० देवीपु० "आत्मवित्तानुसारेण विद्यादानं करोति यः। असाध्यं फलमाप्नोति आचन्द्रार्कं न संशयः। स्त्री तथानेन विधिना विद्यादानफलं लभेत्। भर्त्रा चैवाननुज्ञाता विधवा च तदुद्दिशेत्"। विधानमाह "विद्यार्थिने सदा दद्याद् वस्त्राभ्यङ्गञ्च भोजनम्। कलिका शुद्धकं दीपं यस्मात्तैलं विना न सः। लेखनीघटितं तीक्ष्णं मसीपात्रन्तु लेखनीम्। दत्त्वा तु लभते वत्स! विद्यादानमनुत्तमम्। पुस्तकस्तरणं दत्त्वा सुप्रमाणं सुशोभनम्। विद्यादानमवाप्नोति फलवन्तञ्च बुद्धिमान्। यन्त्रकं त्वासनञ्चैव दत्त्वाद्यासनमथापि वा। विद्यावाचनशीलाय दत्तं भवति राज्यदम्। अञ्जनं नेत्रपादानां दत्तं विद्यापरायणे। भूमिष्ठस्य चोक्तस्य स्वर्गराज्यफलप्रदम्। यस्य भूम्यां स्थितो नित्यं विद्यादानं प्रवर्त्तयेत्। तस्यापि भवति स्वर्गस्तत्प्रभावान्न संशयः"। "येऽपि पत्रं मसीपात्रं लेखनीं सम्पुटादिकम्। ददुः शास्त्राभियुक्ताय तेऽपि विद्याप्रदायिनाम्। यान्ति लोकान् शुभान् मर्त्त्याः पुण्यभाजो नराधिप!"। नन्दिपु० "विद्यादानमवाप्नोति प्रदानात् पुस्तकस्य च। शिल्पानि शिक्षयेद् यस्तु पौण्डरीकफलं लभेत्। शिल्पभाण्डप्रदानेऽपि तद्विद्यादानजं फलम्। अर्हितेषु प्रवृत्तस्य तथा कृत्वा निवारणम्। विद्यादानफलं प्रोक्तं नात्र कार्य्या विचारणा। पापवृत्तस्य च तथा दत्त्वा चैव परां गतिम्। विद्यादानफलं प्राप्य स्वर्गलोके महीयते। येन जीवति भाण्डेन तस्मै तद्भाण्डदायकः। सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते" विष्णुधर्मो०। तत्रैव स्कन्दपु० विद्यादानोपक्रमे "पुस्तकस्तरणं दत्त्वा सहस्रं तत्प्रमाणतः। तदासनं वितानं वा शिवलोके महीयते। यः श्रीपर्णसमुद्भूतं निम्नखातं सुलक्षणम्। दद्यात् सम्पुटकं कृत्वा चर्मणा वापि निर्मितम्। शिवज्ञानाभियुक्ताय तदध्ययनहेतुना। सुकृत्स्नं फलकं वापि विद्यादानफलं लभेत्। यः सौवर्णं सुसम्पूर्णं सर्वरत्नोपशोभितम्। सपिधानं समकूटं विद्याकोषसमाश्रयम्। कारयेद्वापि रौप्येण ताम्रेण चतुरस्रकम्। कांस्यारकूटं लौहं वा दारुवंशादिनिर्मितम्। सकषायातिरक्तेन कर्कशामिलनेन च। अन्तर्बहिश्च मठयेत् विद्यादाने नवं गृहम्। सुदृढं कटकोपेतं दृढस्तम्भनिवेशनम्। कुर्य्यात्तालकसंयुक्तं विद्यावर्त्तिकरण्डकम्। एवं वित्तानुसारेण कारयित्वा गृहं नृपः। विद्यासिंहासनं तत्र संपूज्य विधिवद्बुधः। तस्मिन् पुण्याहशब्देन विद्याकोषगृहं न्यसेत्। एवं यः शिवविद्यायाः कुर्य्यादायतनं शुभम्। स मुक्तः पातकैः सर्वैर्विद्यादानफलं लभेत्। विद्यामण्डलकं कृत्वा विद्याव्याख्यानमण्डपे। तत्राभ्यर्च्य शिवां विद्यां तद्व्याख्यां शृणुयात्ततः। सोऽपि याति शिवस्थानं कार्य्यकालसमन्वितम्। अनेन विधिना ज्ञानं यः शृणोति प्रयत्नतः। स साम्राज्यश्रियं सौख्यं देहान्ते मुक्तिमाप्नुयात्"। तत्रैव देवीपु० "तस्मात् सर्वप्रयत्नेन विद्या देया सदा नरैः। इहैव कीर्त्तिमाप्नोति मृतो याति परां गतिम्। यस्तु देव्या गृहे नित्यं विद्यादानं प्रवर्त्तयेत्। स भवेत् सर्वलोकानां पूज्यः पूज्यपदं व्रजेत्"। वराहपु० "लेखयित्वा तच्छास्त्रं देयं गुणवते सदा। तपस्विने, धर्मरते प्रतिपालनतत्परे। वस्त्रयुग्मेन संवीतं पुस्तकं प्रतिपादयेत्। वाचकं पूजयेच्चापि वस्त्रालङ्कारभूषणैः। अनेनैव विधानेन विद्यादानफलं लभेत्"।

**विद्याधन** न० विद्यया लब्धं धनम्। विद्यया लब्धे "उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्वकम्। विद्याधनन्तु त० द्विद्यात्" इति, "शिष्यादार्त्विज्यतः प्राप्तं सन्दिग्धप्रश्ननिर्णयात्। स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत्। विद्याधनन्तु तत् प्राहुः" इति "शिल्पिष्वपि हि धर्मोऽयम्" इत्युपक्रम्य "परं निरस्य वादेन विद्यया द्यूतपूर्वकम्"। विद्याधनं तु तद्विद्यादित्युक्तं च धने।

विद्याधनविभागे विशेषः "विद्याधनं तु यद् यस्य तत्तस्यैव धनं भवेत्। कुटुम्बं बिभृयाद् भ्रातुर्यो विद्यामधिगच्छतः। भागो यवीयसां तत्र यदि विद्यानुपालिनः" दायभा०। दायतत्त्वे तु "भागं विद्याधनात्तस्मात् स लभेताश्रुतो सन्" इति पाठः। दायभा० नारदवाक्ये "देयं वैद्येन तद्धनम्" पाठः। "परभक्तोपयोगेन विद्या प्राप्ताऽन्यतस्तु या। तया लब्धं धनं यत्तु विद्यालब्धं तदुच्यते" दाय०त० कात्यायनः। "अन्यतः पितृमातृकुलव्यतिरिक्तात्" रघु०। "नाविद्यानां तु वैद्येन देयं विद्याधनात् क्वचित्। समविद्याधिकानां तु देयं वैद्येन तद्धनम्" "कुले विनीतविद्यानां भ्रातॄणां

पितृतोऽपि वा। शौर्य्यप्राप्तं तु यद्वित्तं तद्विभाज्यं बृहस्पतिः” दायत०।

**विद्याधर** पु० विद्यां मन्त्रादिकं धरति धृ-अच्। १देवयोनिभेदे अमरः। २विद्याधारके त्रि०।

**विद्यारम्भ** पु० ६त०। पञ्चमवर्षे शिशोः कर्त्तव्ये विद्याया आरम्भे तत्कालादि० ज्यो० त० उक्तं यथा “संप्राप्ते पञ्चमे वर्षे अप्रसुप्ते जनार्दने। षष्ठीं प्रतिपदञ्चैव वर्जयित्वा तथाष्टमीम्। रिक्तां पञ्चदशीं चैव सौरिभौमदिनं तथा। एवं सुनिश्चिते काले विद्यारम्भं तु कारयेत्। पूजयित्वा हरिं लक्ष्मीं देवीञ्चापि सरस्वतीम्। स्वविद्यासूत्रकारांश्च स्वाञ्च विद्यां विशेषतः” विष्णु ध०। “अयनदशिरमूलाधोमुखत्वाष्ट्रपौष्णश्रविणुषु च हरिबोधे शुक्रजीवार्कवारे। उदितवति च जीवे केन्द्रकोणेषु सौम्ये रपठनदिनवर्जं पाठयेत् पञ्चमेऽब्दे” दीपिका। “विद्यारम्भे गुरुः श्रेष्ठो मध्यमौ भृगुभास्करौ। मरणं शनिभौमाभ्यामविद्या बुधसोमयोः” मदनपा०। “विद्यारम्भः सुरगुरुसितज्ञैर्मोऽष्टार्थदायी कर्त्तृश्चायुश्चिरमपि करोत्यंशुमान् मध्यमोऽत्र। नीहारांशौ भवति जडता पञ्चता भूमिपुत्रे छायासूनावपि च तनयः कीर्त्तयन्त्येवमाद्याः” रत्नेषु रोहिण्यां तत्क्षेऽर्केऽप्यौन्दुर्गते। गुर्व्वर्केन्दुयुतौ च विद्यारम्भः प्रशस्यते”। “प्राङ्मुखो गुरुरासीनो वरुणाभिमुखं शिशुम्। अध्यापयेत्तु प्रथमं द्विजाशीर्भिः समन्वितम्। बृहस्पतिः। तद्विधिः क्षयतत्त्वे दृश्यः। अविद्या बुधसोमयोरिति धनुर्विद्याविषयम् यथोक्तं दीपिकायाम् “अदितिसुतयमार्कस्वातिचित्राश्विपैष्णश्रवहरिवसुमूलाश्वोन्दुभाग्यान्त्यमेषु। विशनिशशिबुधार्हे विष्णुबोधे त्रिपौषे सुसमयतिथियोगे चापविद्याप्रदानम्” तत्राचरणहस्ते विद्यारम्भे च लग्नशुद्धिरावश्यकीत्याह पी० धा० नृसिंहः “शुभाः पापाश्च रन्ध्रस्थाः सर्वे नेष्टाः सदा ग्रहाः। व्याष्टषष्ठायकर्मस्थाः पापाः सर्वे शुभावहाः। शुभाः केन्द्रत्रिकोणस्थाः धनव्याष्टमताः शुभाः। सर्वे कामे प्रशस्ताः स्युरक्षरग्रहणे शिशोः”। अक्षरग्रहणं विद्योपलक्षणम्” उभयत्रापि उत्तरायणस्यैव आस्था। “उदग्गते भास्वति पञ्चमेऽब्दे” वसिष्ठोक्तेः।

**विद्युत्** स्त्री विद्योतते वि+द्युत-क्विप्। १तडिति अमरः २सन्ध्यायाञ्च विगतायुर् यस्य प्रा०ब०। ३निष्प्रभे त्रि०मेदि०। विद्युतश्च चतुर्विधाः “अरिष्टनेमिपत्नीनामपत्यानीह सौदुरु। बहुपुत्रस्य विदुषश्चतस्रो [illegible]स्तताः”। ताश्च “वाताय कपिला१ विद्युदातपाय[illegible]लोहिता२। पीता३ वर्षाय विज्ञेया दुर्भिक्षायासिता४ [illegible]” ज्यो०। आन्तरिक्षोपद्रवविद्युत्कारणञ्च श्रीप[illegible] यथा “निर्घातोल्कापतनसुरधनुर्विद्युतश्च भुवायो[illegible]यान्ते खनगरपरोवेषपूर्वास्तथान्ये” “तुषवजवा[illegible]ध्ये वाडवोऽम्भिः स्थितोऽस्मात् सलिलभरनिमग्नात् [illegible]द्युतस्तत्स्फुलिङ्गाः”। तदग्निपातश्चवज्राग्निपातस्याकारणं अवश्यादैद्युतं तेजः पार्थिवांशकमिश्रितम्। वात्यावत् भ्रमदाघाते प्रतिकूलानुकूलयोः। वाय्वोस्तत् पतति प्रायो द्युवायप्राप्यवर्षणे। यतः प्रावृषि नैवेते पांशवः प्रचरन्ति हि। तत् मेघा पार्थिवं चाम्बं तैजसं तत्तदुत्थितम्। गतो निर्भरदाहेन भूमिस्थैरनुभूयते”।

**विद्युत्प्रिय** न० ६त०। विद्युदाकर्षके कांस्ये धातौ हेमच०।

**विद्युन्माला** स्त्री अष्टाक्षरपादके छन्दोभेदे। “मो मो गो गो विद्युन्माला” छन्दोम०। [प्रसिद्धे २राक्षसभेदे च।

**विद्युन्मालिन्** पु० राक्षसभेदे भाग०१।७ अ०। १रामायण-

**विद्रु** न० व्यध-रक् दान्तादेशः। छिद्रे सत्त्व०।

**विद्रधि** पु० वेत्त्यनेन विद् हृदयं रुणद्धि रुध-कि पृषो०। रोगभेदे। तल्लक्षणादि भावप्र० उक्तं यथा “तत्र विद्रधेः सम्प्राप्तिपूर्वकं सामान्यं लक्षणमाह। “त्वक्रक्तमांसमेदांसि प्रदूष्यास्थिसमाश्रिताः। दोषाः शोथं शनैर्घोरं जनयन्त्युच्छ्रिता भृशम्। महामूलं रुजावन्तं वृत्तं चाप्यथ वायतम्। स विद्रधिरिति ख्यातो विज्ञेयः षड्विधश्च सः” अस्थिसमाश्रिता दोषा इति वक्ष्यमाणयोगाद् विद्रधेर्भेदार्थम्। यतो व्रणशोथे दोषाणामस्थिसमाश्रयनियमो नास्ति इति व्रणशोथात् दारुणम्। आयतं दीर्घम्। षड्विधत्वं विवृणोति। “पृथग् दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा। षण्णां तेषां तु लक्षणं सम्प्रचक्षते” अथ विशिष्टानि लक्षणानि। तत्र वातिकस्य लक्षणमाह “कृष्णोऽरुणो वा विषमो भृशमत्यर्थवेदनः। चिरोत्थानप्रपाकश्च विद्रधिर्वातसम्भवः” विषमो भवन् अयमल्पः क्वचं महान्। चिरोत्थानप्रपाकः चिरादुत्थानमुद्गतिः प्रपाकश्च यस्य सः। अथ पैत्तिकमाह “पक्वोदुम्बरसङ्काशः श्यावो वा ज्वरदाहवान्। क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसम्भवः”। अथ श्लैष्मिकमाह। “शरावसदृशः पाण्डुः शीतः स्निग्धोऽल्पवेदनः। चिरोत्थान-

प्रवालश्च विद्रधिः कफसम्भवाः। तनुपीतासिताश्चैवास्रावाः कफशोणिताः”। अथ सान्निपातिकमाह। “नानावर्णरुजास्रावो घाटालो विषमो महान्। विषमं पच्यते वापि विद्रधिः सान्निपातिकः”। नाना अनेकविधाः वर्णाः कृष्णरक्तपाण्डुरूपाः। रुजा तोददाहकण्ड्वादिरूपाः स्रावा: तनुपीतसिताः यस्य सः। घाटालः घाटाकोटिः सास्यास्तीति घाटालः अस्य्रुक्छ्राय इत्यर्थः। विषमः निम्नोन्नतः। विषमं पच्यते चिराचिरगम्भीरोत्तानोद्दीनद्वैधेन विषमं यथा स्यात्तथा पच्यते। अथाभिघातजस्यागन्तोः विद्रधेः सम्प्राप्तिपूर्वकं लक्षणमाह। “तैस्तैर्भावैरभिहते क्षते वाऽपथ्यकारिणाम्। क्षतोष्मा वायुविक्षिप्तः सरक्तं पित्तमीरयेत्। ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिनः। आगन्तुर्विद्रधिर्ह्येषः पित्तविद्रधिलक्षणः”। तैस्तैर्भावैः काष्ठलोष्ट्रपाषाणादिभिः अभिहते यदा रक्तस्रावो भवति। तथाभिहते क्षते क्षते वा अथ वा खड्गशस्त्रादिभिः क्षते यथा रक्तस्रावो भवति तथा क्षते क्षते क्षतोष्मा। अत्र क्षतशब्देन क्षतमात्रं उच्यते तेनाभिहतक्षतयोरुभयोरप्यूष्मा वायुना विक्षिप्तः अभिघातात् क्षते रक्तक्षयात् कुपितेन वायुना प्रक्षिप्तः। ईरयेत् कोपयेत्। अथ रक्तजमाह “कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाज्वरः। पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते” अधिष्ठानविशेषेण लिङ्गविशेषं बोधयितुमाभ्यन्तरान् विद्रधीनाह “आभ्यन्तरानतस्तूर्ध्वं विद्रधीन् परिचक्षते। गुर्वसात्म्यविरुद्धान्नशुष्कशाकान्नभोजनाः। अतिव्यवायव्यायामवेगाघातात्यम्लविदाहिभिः। पृथक् सम्भूय वा दोषाः कुपिता गुल्मरूपिणम्। वल्मीकवत्समुन्नद्धमन्तः कुर्वन्ति विद्रधिम्। गुदे वस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा। वृक्कयोः प्लीह्नि यकृति हृदि वा क्लोम्नि चाप्यथ। एषां लिङ्गानि जानीयाद्वाह्यविद्रधिलक्षणैः” सम्भूय वा मिलित्वा वा। समुन्नद्धं समन्तादुन्नतम्। स्थानविशेषेण रूपविशेषमाह “गुदे वातनिरोधस्तु वस्तौ कृच्छ्राल्पमूत्रता। नाभ्यां हिक्का तथाटोपः कुक्षौ मारुतकोपनम्। कटिपृष्ठग्रहस्तीव्रो वङ्क्षणोत्थे तु विद्रधौ। वृक्कयोः पार्श्वसङ्कोचः प्लीह्न्युच्छ्वासावरोधनम्। सर्वाङ्गप्रग्रहस्तीव्रो हृदि कासश्च जायते। श्वासो यकृति हिक्का च क्लोम्नि पेपीयते पयः” स्रावमार्गमाह “नाभेरुपरिजाः पक्का यान्त्यूर्ध्वमितरे त्वधः” वक्षआदिजाताः यान्ति स्रवन्ति ऊर्ध्वमुखात्, इतरे वस्त्यादिजाः अधः गुदात्। नाभिजस्तूभाभ्यां मार्गाभ्याम्। तथा च हारीतः ऊर्ध्वं प्रभिन्नेषु मुखात्मरान्ध्रां प्रवर्ततेऽसृक्कफदूषितो हि पूयः। अधः प्रभिन्नेषु तु पायुमार्गाद् द्वाभ्यां प्रवृत्तिस्त्विह नाभिजेषु” अथ साध्यत्वादिकमाह “अधःस्रुतेषु जीवेत्तु स्रुतेषूर्ध्वं न जीवति। हृन्नाभिवस्तिवर्ज्येषु तेषु भिन्नेषु वाह्यतः। जीवेत्कदाचित् पुरुषो नेतरेषु कदाचन”। हृन्नाभिवस्तिवर्जेषु प्लीहक्लोमादिजाः तेषु तथाभिन्नेषु न जीवेत् हृदादीनां मर्मत्वात्। अतएव भोजः “असाध्यो मर्मजो ज्ञेयः पक्वोऽपक्वश्च विद्रधिः। सन्निपातोत्थितोऽप्येवं पक्व एव हि वस्तिजः। त्वग्जो नाभेरधोजश्च साध्यो यश्च समीपजः। अपक्वश्चैव पक्वश्च साध्यो नोपरि नाभितः। आध्मानं बद्धनिष्यन्दं छर्दिहिक्कातृषान्वितम्। रुजाश्वासमायुक्तं विद्रधिर्नाशयेन्नरम्” अथ वाह्यविद्रधीनां साध्यासाध्यत्वमाह “साध्या विद्रधयः पञ्च विवर्ज्यः सान्निपातिकः। आमपक्वविदग्धत्वं तेषां ज्ञेयञ्च शोथवत्” शोथवत् वक्ष्यमाणव्रणशोथवत्”।

**विद्रधिनाशन** पु० विद्रधिं नाशयति नश-णिच्-ल्यु। शोभाञ्जने त्रिका०। [२वरणे च राजनि०।

**विद्र(द्रा)व** पु० विद्रु-अप् घञ् वा। १पलायने अमरः

**विद्रुत** त्रि० वि+द्रु-क्त। १पलायिते २द्रवीभूते च अमरः।

**विद्रुम** पु० विशिष्टो द्रुमः। १प्रवालरत्ने२तद्वृक्षे मेदि०।

**विद्रुमलता** स्त्री विद्रुमस्य लतेव। नलीनामगन्धद्रव्ये मेदि० स्वार्थे क अत इत्वम्। विद्रुमलतिका तत्रैव। [द्रुमे विद्रुमि

**विद्वत्कल्प** त्रि० ईषदसमाप्तो विद्वान् विद्वस्+कल्पप्। ईष-

**विद्वत्तम** पु० अतिशयेन विद्वान् विद्वस्+तमप्। अतिपण्डिते तरप्। विद्वत्तरोऽप्यत्र। [विद्वत्कल्पे

**विद्वद्देशीय** त्रि० ईषदसमाप्तो विद्वान् विद्वस्+देशीयर्।

**विद्वस्** त्रि० विद-क्वसु। १प्राज्ञे स्त्रियां ङीप् सम्प्र० “विदुषी मूर्धनि या बिभर्ति यान्” नैष०। २पण्डिते पु० ३आत्मज्ञानयुक्ते। [क। विद्विषोऽप्यत्र।

**विद्विष्** पु० विशेषेण द्वेष्टि वि+द्विष-क्विप्। शत्रौ अमरः।

**विद्वेष** पु० वि+द्विष-घञ्। वैरिभावे शत्रुतायाम् अमरः।

**विद्वेषण** न० वि+द्विष-णिच्-ल्युट्। तन्त्रोक्ते अभिचारकर्मभेदे येन शत्रूणां परस्परविद्वेषो भवति तस्मिन् व्यापारे। वि+द्विष-ल्युट्। २विद्वेषे। [विधति। अवेधीत्

**विध** विधाने छिद्रकरणे छेदने च तु० पर० सक० सेट्।

**विध** पुंस्त्री विध-क अच् वा। १विधाने २गजभक्ष्यान्ने ३प्रकारे

४वेधे ५छिद्रे रभसः ६चेतने मेदि० ७कर्मणि च स्त्री हेमच० । तदर्थे वेधने च स्त्री त्रिका० ।

**विधवा** स्त्री विगतो धवो यस्याः । मृतपतिकायां स्त्रियाम् अमरः ।

विधवाधर्मास्त शु०त० उक्ता यथा विष्णु स० "मृते भर्त्तरि ब्रह्मचर्य्यं तदन्वारोहणं वा" । ब्रह्मचर्य्यं मैथुनवर्जनं ताम्बूलादिवर्जनञ्च यथाह प्रचेताः "ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम् । यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्" । अभ्यञ्जनमायुर्वेदोक्तम्" रघु० । काशीख० विस्तरेण ४अ० उक्ता यथा

"अनुयाति न भर्त्तारं यदि दैवात् कदाचन । तथापि शीलं संरक्ष्यं शीलभङ्गात् पतत्यधः । तद्वैगुण्यादपि स्वर्गात् पतिः पतति नान्यथा । तस्याः पिता च माता च भ्रातृवर्गस्तथैव च । पत्यौ मृते च या योषिद्वैधव्यं पालयेत् क्वचित् । सा पुनः प्राप्य भर्त्तारं स्वर्गभोगान् समश्नुते । विधवाकवरीबन्धो भर्त्तबन्धाय जायते । शिरसो वपनं तस्मात् कार्य्यं विधवया सदा । एकाहारः सदा कार्य्यो न द्वितीयः कदाचन । त्रिरात्रं पञ्चरात्रं वा पक्षव्रतमथापि वा । मासोपवासं कुर्य्याद्वा चान्द्रायणमथापि वा । कृच्छ्रं पराकं वा कुर्य्यात् तप्तकृच्छ्रमथापि वा । यवान्नैर्वा फलाहारैः शाकाहारैः पयोव्रतैः । प्राणयात्रां प्रकुर्वीत यावत् प्राणः स्वयं व्रजेत् । पर्य्यङ्कशायिनी नारी विधवा पातयेत् पतिम् । तस्माद्भूशयनं कार्य्यं पतिसौख्यसमीहया । नैवाङ्गोद्वर्त्तनं कार्य्यं स्त्रिया विधवया क्वचित् । गन्धद्रव्यस्य सम्भोगो नैव कार्य्यस्तया पुनः । प्रत्यहं तर्पणं कार्य्यं भर्त्तुः कुशतिलोदकैः । तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्व्वकम् । विष्णोस्तु पूजनं कार्य्यं पतिबुद्ध्या न चान्यथा । पतिमेव सदा ध्यायेद्विष्णुरूपधरं परम् । यद्यदिष्टतमं लोके यच्च पत्युः समीहितम् । तत्तद्गुणवते देयं पतिप्रीणनकाम्यया । वैशाखे कार्त्तिके माघे विशेषनियमांश्चरेत् । स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं मुहुः । वैशाखे जलकुम्भाश्च कार्त्तिके घृतदीपकाः । माघे तिलैस्तथोत्सर्गः स्वर्गलोके महीयते । प्रपा कार्य्या च वैशाखे देवे देया गलन्तिका । उपानद्व्यजनं चापि सूक्ष्मवासांसि चन्दनम् । सकर्पूरन्तु ताम्बूलं पुष्पदानं तथैव च । जलपात्राण्यनेकानि तथा पुष्पगृहाणि च । पानानि च विचित्राणि द्राक्षारम्भाफलानि च । देयानि द्विजमुख्येभ्यः पतिर्मे प्रीयतामिति । ऊर्जे यवागूमश्नीयादेकान्नमथ वा पुनः । वृन्ताकं शूरणञ्चैव शूकशिम्बीञ्च वर्जयेत् । कार्त्तिके वर्जयेत्तैलं कार्त्तिके वर्जयेन्मधु । कार्त्तिके वर्जयेत् कांस्यं कार्त्तिके चापि सन्धितम् । कार्त्तिके मौननियमे घण्टां चारु प्रदापयेत् । पत्रभोजी कांस्यपात्रं घृतं पूर्णं प्रयच्छति । भूमिशय्याव्रते देया शय्या श्लक्ष्णा सतूलिका । फलत्यागे फलं देयं रसत्यागे च तद्रसः । धान्यत्यागे च तद्धान्यमथ वा शालयः स्मृताः । धेनुं दद्यात् प्रयत्नेन सालङ्कारां सकाञ्चनाम् । एकतः सर्व्वदानानि दीपदानं तथैकतः । कार्त्तिके दीपदानस्य कलां नार्हन्ति षोडशीम् । किञ्चिदभ्युदिते सूर्य्ये माघस्नानं समाचरेत् । यथाशक्त्या च नियमान्माघे स्नानं समाचरेत् । पक्वान्नैर्भोजयेद्विप्रान् यतीनपि तपस्विनः । लड्डुकैः फाणितैश्चापि वटकैरण्डरिकादिभिः । घृतपक्वैः समरिचैः शुचिकर्पूरवासितैः । गर्भे शर्करया पूर्णैर्नेत्रानन्दैः सुगन्धिभिः । शुष्केन्धनानां भारांश्च दद्याच्छीतापनुत्तये । कञ्चुकं तूलगर्भञ्च तूलिकां सोपवीतिकाम् । मञ्जिष्ठारक्तवासांसि तथा तूलवतीं पटीम् । ऊर्णामयानि वासांसि यतिभ्योऽपि प्रदापयेत् । जातीफललवङ्गैश्च ताम्बूलानि बहून्यपि । कम्बलानि च चित्राणि निर्वातानि गृहाणि च । मृदुलाः पादरक्षाश्च सुगन्ध्युद्वर्त्तनानि च । घृतकम्बलपूजाभिर्महास्नानपुरःसरम् । संस्नाप्य शाम्भवं लिङ्गं पूजयेद्दृढभक्तितः । कृष्णागुरुप्रभृतिभिर्गर्भागारे प्रधूपनैः । तूलवर्त्तिप्रदीपैश्च नैवेद्यैर्विविधैस्तथा । भर्त्तृरूपो भगवान् प्रीयतामिति चोच्चरेत् । एवंविधैश्च विधवा विविधैर्नियमैर्व्रतैः । वैशाखान् कार्त्तिकान् माघानेवमेवातिवाहयेत् । नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि । कञ्चुकं न परीदध्याद्वासो न विकृतं वसेत् । अपृष्ट्वा सुतान् किञ्चिन्न कुर्य्याद्भर्त्तृतत्परा । एवं धर्म्मपरा नित्यं विधवापि शुभा मता । इति धर्म्मसमायुक्ता विधवापि पतिव्रता । पतिलोकानवाप्नोति न भवेत् क्वापि दुःखिता" ।

ब्रह्मवै० ज० ख० ८३अ० कश्चिद्विशेष उक्तो यथा

"ब्राह्मणी पतिहीना या भवेन्निष्कामणी सदा । एकभक्ता दिनान्ते सा हविष्यान्नरता सदा । न धत्ते दिव्यवस्त्रञ्च गन्धद्रव्यं सुतैलकम् । स्रजञ्च चन्दनं चैव शङ्खं सिन्दूरभूषणम् । त्यक्ता मलिनवस्त्रा स्यात् नित्यं नारा-

वर्षं चरेत्"। "पुत्रतुल्यस्य पुरुषं यदा पश्यति धर्मतः। मिष्टान्नं न च भुङ्क्ते सा न कुर्य्याद्विभवे व्रजम्। एकादश्यां न भोक्तव्यं कृष्णजन्माष्टमीदिने। श्रीरामस्य नवम्याञ्च शिवरात्रौ पवित्रया। अघोरायाञ्च प्रेतायां चन्द्रसूर्य्योपरागयोः। अष्टद्रव्यं परित्याज्यं भुज्यते परमेव च। ताम्बूलं विधवास्त्रीणां यतीनां ब्रह्मचारिणाम्। सन्न्यासिनां च गोमांससुरातुल्यं श्रुतौ श्रुतम्। रक्तशाकं मसूरञ्च जम्बीरं पर्णमेव च। अलाबूवर्त्तुलाकारा वर्जनीया यतेरपि। पर्य्यङ्कशायिनी नारी विधवा पातयेत् पतिम्। यानस्यारोहणं कृत्वा विधवा नरकं व्रजेत्। न कुर्य्यात् केशसंस्कारं गात्रसंस्कारमेव च। केशावली जटारूपा न क्षौरं तीर्थकं विना। तैलाभ्यङ्गं न कुर्वीत न हि पश्यति दर्पणम्। मुखञ्च परपुंसां च यात्रां नृत्यं महोत्सवम्। नर्त्तकं गायकञ्चैव सुवेशं पुरुषं शुभम्"।

**विधातृ** पु० वि+धा-तृच्। १प्रजापतौ ब्रह्मणि अमरः। २कामदेवे मेदि०। ३मदिरायां राजनि०। ४स्वगुणनिपुणभेदे भाग०। ५विधानकर्त्तरि त्रि० स्त्रियां ङीप् सा च ६पिप्पल्यां शब्दर०। ७अधर्मे पु० "द्वौ धाता च विधाता च पौराणौ जगतां पती। द्वौ नाशकारौ त्रिलोकेऽस्मिन् धर्माधर्मौ प्रकीर्त्तितौ" अग्निपु०। [२मरीच्यादौ च।

**विधातृभू** पु० विधातुर्भवति भू-क्विप्। १नारदमुनौ त्रिका०।

**विधातायुस्** पु० विधातुरायुः प्रमाणं यस्मात्। सूर्य्ये शब्दच० सूर्य्यक्रियां विना वत्सरादिमानाज्ञानात् सूर्य्यस्य तथात्वम्। ६त०। तस्य वयःकाले २अष्टाकल्पे च। तदायुःकालश्च आयुस्शब्दे ७८२ पृ० दृश्यः।

**विधान** न० वि+धा ल्युट्। १करणे २कर्मणि। ३विधौ, जटा० ४गजभक्ष्यासे च हारा० संज्ञायां कन्। अथायां न० शब्दर०। [णे त्रि०।

**विधानज्ञ** पु० विधानं जानाति ज्ञा-क। १पण्डिते। २विधि-

**विधायक** त्रि० वि+धा-ण्वुल्। विधानकर्त्तरि।

**विधि** पु० वि+धा-कि। १जगत्स्रष्टरि ब्रह्मणि, २भाग्ये ३क्रमे अमरः "चिकीर्षाकृतिसाध्यत्वहेतुधीविषयो विधिः" शब्दश० उक्ते प्रवर्त्तनारूपे ४नियोगे तज्जनके ५वाक्ये हेमच०। ६विष्णौ हलायु० ७कर्मणि त्रिका०। ८गजभक्ष्यान्ने जटा०। ९वैद्ये राजनि०। १०अप्राप्तप्रापकरूपे वाक्यभेदे, व्याकरणोक्ते ११सूत्रभेदे। तत्र व्याकरणविधिर्निरूप्यते। "संज्ञा च परिभाषा च विधिर्नियम एव च। अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणमित्युक्तेः षट् विधिभेदाः तत्र "तुल्यास्यप्रयत्नं सवर्णम्" पा० सवर्णसंज्ञा परिभाषा तच्छब्दे ४२४६पृ० उक्ता। अप्राप्तप्रापको विधिः यथा "अकः सवर्णे दीर्घः" पा० इत्यादि। अत्र सवर्णे परे पूर्वस्य दीर्घस्याप्राप्तस्य तत्प्रापकत्वात् तथात्वम्। स च द्विविधः वर्णोत्पादकोऽभावरूपश्च। तत्र वर्णोत्पादक उक्तः अभावोऽपि द्विविधः लोपरूपो निषेधरूपश्च तत्र "लोपोऽभ्यासस्येति" पा० नाशरूपः। "नाभ्यस्ताच्छतुरित्यादौ" निषेधरूपः। सामान्यप्राप्तस्य विशेषावधारको नियमः यथा "रात्सस्यैव" पा० इत्यादि। अन्यधर्मस्यान्यत्रारोपणविधिरतिदेशविधिः यथा पुंवद्भावादिः। पूर्वसूत्रस्थपदादेरन्यत्रोपस्थितिरधिकारविधिः। स च त्रिविधः "सिंहावलोकितं चैव मण्डूकप्लुतमेव वा। गङ्गाप्रवाहवच्चापि ह्यधिकारस्त्रिधा मतः"। अधिकारशब्दे १२७पृ० दृश्यम्। विधिश्च विनियोगरूपतया शब्दश० प्र० निरूपितो यथा

"नेह कृत्यात्मकं विधानम्। आख्यातमात्रस्य तद्बोधसमर्थत्वात् किन्तु प्रवर्त्तकचिकीर्षायां यत्प्रकारकज्ञानस्य हेतुत्वं स तथा, तादृशञ्च कृतिसाध्यत्वमिष्टसाधनत्वम् बलवदनिष्टाननुबन्धित्वञ्च प्रत्येकमेव, यागपाकादिधर्मिकतन्निश्चयादेव यागादिधर्मिकचिकीर्षोत्पत्त्या तत्र प्रवृत्तेः। एवञ्च यजेतेत्यादौ यागः कृतिसाध्यः इष्टसाधनं बलवदनिष्टाननुबन्धी चेत्याकारको बोधः" अधिकं तत्र दृश्यम्। मीमांसकमते विधिस्वरूपभेदादिकं लौगाक्षिभास्करेण दर्शितं यथा

"तत्राज्ञातार्थज्ञापको वेदभागो विधिः। स च तादृशप्रयोजनवदर्थविधानेनार्थवान् तादृशं चार्थं प्रमाणान्तरेणाप्राप्तं विधत्ते। यथाग्निहोत्रं जुहुयात् स्वर्गकाम इति विधिर्मानान्तरेणाप्राप्तस्वर्गप्रयोजनवद्धोमं विधत्ते। अग्निहोत्रहोमेन स्वर्गं भावयेदिति वाक्यार्थबोधः"। "यत्र कर्म मानान्तरेण प्राप्तं, तत्र तदुद्देशेन गुणमात्रं विधत्ते। यथा दध्ना जुहोतीत्यत्र होमस्याग्निहोत्रं जुहुयादित्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्रविधानं दध्ना होमं भावयेदिति। यत्र तूभयमप्राप्तं तत्र विशिष्टं विधत्ते : यथा सोमेन यजेतेत्यत्र सोमयागयोरप्राप्तत्वात् सोमविशिष्टविधानम्। सोमपदे मत्वर्थलक्षणया सोमवता यागेनेष्टं भावयेदिति वाक्यार्थबोधः। न चोभयविधाने वाक्यभेदः प्रत्ये-

कतुभयस्याविधानात्। न च ज्योतिष्टोमेन स्वर्गकामो यजेतेति विधिप्राप्तोद्देशेन सोमरूपगुणविधानमेवास्तु सोमेन यागं भावयेदिति, किं मत्वर्थलक्षणयेति वाच्यम्। तस्याधिकारविधित्वेनोत्पत्तिविधित्वासम्भवात्। नन्वुद्भिदा यजेत पशुकाम इत्यत्रेव ज्योतिष्टोमेनेत्यत्राप्युत्पत्त्यधिकारविधित्वमस्त्विति चेन्न, दृष्टान्ते उत्पत्तिवाक्यान्तराभावेनान्यथानुपपत्त्या तथात्वाश्रयणात्। किञ्च ज्योतिष्टोमेनेत्यस्योभयविधित्वे तेनैव यागस्तस्य फलसम्बन्धोऽपि बोधनीय इति स्फुटो वाक्यभेदस्तद्वरं सोमपदे मत्वर्थलक्षणया विशिष्टविधानम्। स च विधिश्चतुर्विधः उत्पत्तिविधिर्विनियोगविधिः, अधिकारविधिः, प्रयोगविधिश्चेति। तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः। यथाग्निहोत्रं जुहोतीति। अत्र च विधौ कर्मणः करणत्वेनान्वयः अग्निहोत्रहोमेनेष्टं भावयेदिति। ननु यागस्य द्वे रूपे द्रव्यं देवता च। तयोश्च रूपाश्रवणे अग्निहोत्रं जुहोतीति कथमुत्पत्तिविधिः अग्निहोत्रपदस्य च तत्प्रख्यन्यायेन नामधेयत्वादिति चेन्न, रूपाश्रवणेऽप्यस्योत्पत्तिविधित्वात्। अन्यथा रूपश्रवणाद्दध्ना जुहोतीति अयमेवोत्पत्तिविधिः स्यात्। तथा चाग्निहोत्रं जुहोतीति वाक्यमनर्थकं स्यात्। अङ्गप्रधानसम्बन्धबोधको विधिर्विनियोगविधिः। यथा दध्ना जुहोतीति। स हि तृतीयया प्रतिपन्नाङ्गभावं दध्नो होमसम्बन्धं विधत्ते दध्ना होमं भावयेदिति। गुणविधौ च धात्वर्थस्य साध्यत्वेनैवान्वयः। क्वचिदाश्रयत्वेनापि यथा दध्नेन्द्रियकामस्य जुहुयादित्यत्र दधिकरणत्वेनेन्द्रियं भावयेत् तच्च किंनिष्ठमित्याकाङ्क्षायां सन्निधिप्राप्तहोम आश्रयत्वेनान्वेति। एतस्य विधेः सहकारिभूतानि षट् प्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि। एतत्सहकृतेनानेन विधिनाङ्गत्वं परोद्देशप्रवृत्तकृतिसाध्यत्वरूपं पारार्थ्यापरपर्य्यायं ज्ञाप्यते” ततः तत्सहकारीणि श्रुत्यादीनि निरूपितानि तत्र द्रष्टव्यानि “तदेवं निरूपितानि सङ्क्षेपतः श्रुत्यादीनि षट् प्रमाणानि। एतत्सहकृतेन विनियोगविधिना समिदादिभिरुपकृतस्य “दर्शपूर्णमासाभ्यां यजेत” इत्येवं रूपेण यानि विनियुज्यन्ते तान्यङ्गानि द्विविधानि सिद्धरूपाणि, क्रियारूपाणि चेति। तत्र सिद्धानि जातिद्रव्यसंख्यादीनि तानि च दृष्टार्थान्येव। क्रियारूपाणि च द्विविधानि। गुणकर्माणि प्रधानकर्माणि च। एतान्येव सन्निपत्योपकारकाणि आरादुपकारकाणीति चोच्यते। कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म सन्निपत्योपकारकम्। यथाऽवघातप्रोक्षणादि। तच्च दृष्टार्थमदृष्टार्थं दृष्टादृष्टार्थं चेति। दृष्टार्थमवघातादि अदृष्टार्थं प्रोक्षणादि। दृष्टादृष्टार्थं पशुपुरोडाशादि। स हि द्रव्यत्यागांशेनादृष्टं देवतोद्देशेन च देवतास्मरणं दृष्टं करोति। द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म त्वारादुपकारकम्। यथा प्रयाजादि। आरादुपकारकञ्च परमापूर्वोत्पत्तावेवोपयुज्यते। सन्निपत्योपकारकन्तु द्रव्यदेवतासंस्कारद्वारा यागस्वरूपेऽप्युपयुज्यते। इदमेव चाश्रयिकर्मेत्युच्यते। तदेवं निरूपितः सङ्क्षेपतो विनियोगविधिः। प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः। स चाङ्गवाक्यैकवाक्यतापन्नः प्रधानविधिरेव। स हि साङ्गं प्रधानमनुष्ठापयन्विलम्बे प्रमाणाभावादविलम्बापरपर्य्यायं प्रयोगप्राशुभावं विधत्ते। न च तदविलम्बेऽपि प्रमाणाभाव इति वाच्यं विलम्बे ह्यङ्गप्रधानविध्येकवाक्यतावगतसाहित्यानुपपत्तिः विलम्बेन क्रियमाणयोः पदार्थयोः इदमनेन सहकृतमिति साहित्यव्यवहाराभावात्। स चाविलम्बो नियते क्रमे आश्रिते भवति। अन्यथा हि किमेतदनन्तरमेतत् कर्त्तव्यमेतदनन्तरं वेति प्रयोगविक्षेपापत्तेः। अतः प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते। अत एवाङ्गानां क्रमबोधको विधिः प्रयोगविधिरित्यपि लक्षणम्”।

“तदेवं संक्षेपतो निरूपितः षड्विध क्रमनिरूपणेन प्रयोगविधिः। कर्मजन्यफलस्वाम्यबोधको विधिरधिकारविधिः। कर्मजन्यफलस्वाम्यं च कर्मजन्यफलभोक्तृत्वम्। स च यजेत स्वर्गकाम इत्यादिरूपः, स्वर्गमुद्दिश्य यागं विदधतानेन स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते “यस्याहिताग्नेरग्निर्गृहान्दहेत्सोऽग्नये क्षामवतेऽष्टाकपालं पुरोडाशं निर्वपेत्” इत्यादिना दाहादौ निमित्ते कर्म विदधता निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते। एवम् “अहरहः सन्ध्यामुपासीत” इत्यादिना शुचिविहितकालजीविनः सन्ध्योपासनाजन्यप्रत्यवायपरिहाररूपफलस्वाम्यं बोध्यते। तच्च फलस्वाम्यं तस्यैव योऽधिकारविशिष्टः। अधिकारश्च स एव यद्विधिवाक्ये पुरुषविशेषणत्वेन श्रूयते। यथा काम्ये कर्मणि फलकामना। नैमित्तिके कर्मणि निमित्तनिश्चयः।

नित्ये सन्ध्योपासनादौ शुचिविहितकालजीवित्वम् अत एव "राजा राजसूयेन स्वाराज्यकामो यजेत" इत्यनेन विधिवाक्येन स्वाराज्यमुद्दिश्य राजसूयं विदधता न स्वाराज्यकाममात्रस्य फलभोक्तृत्वं प्रतिपाद्यते किन्तु राज्ञः सतः स्वाराज्यकामस्यैव राजसूयस्यापि अधिकारिविशेषणत्वेन श्रवणात्। किञ्चित् तु पुरुषविशेषणत्वेनाश्रुतमप्यधिकारिविशेषणं यथाध्ययनविधिसिद्धा विद्या क्रतुविधीनामर्थज्ञानापेक्षत्वेनाध्ययनविधिसिद्धार्थज्ञानवन्तं प्रत्येव प्रवृत्तेः। एवमग्निसाध्यकर्मसु आधानसिद्धाग्निमता अग्निसाध्यकर्मणामग्न्यपेक्षत्वेन तद्विधीनामाधानसिद्धाग्निमन्तं प्रत्येव प्रवृत्तेः। एवं सामर्थ्यमपि आम्नातानामर्थं अश्रुतं शक्तिः सहकारिणीति न्यायात् समर्थं प्रत्येव विधिप्रवृत्तेः। तदेवं निरूपितो विधिः"।

विधिरसायने च विधिभेदोऽन्यथा दर्शितो यथा

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते" तत्तच्छब्दे विशेषो दृश्यः। १२अर्थालङ्कारभेदे च। अलङ्कारशब्दे ४०२पृ० दृश्यम्।

**विधिज्ञ** त्रि० विधिं क्रमं जानाति ज्ञा-क। विधानक्रमज्ञे।

**विधित्सा** स्त्री विधातुमिच्छा वि+धा-सन् भावे अ। विधानेच्छायाम्।

**विधिदेशक** पु० विधिं विधानं दिशति दिश+ण्वुल्। विधिदर्शिनि १सदस्ये अमरः २पुरोहिते च।

**विधिवत्** अव्य० विधिमर्हति विधि+वति। विध्यनुसारे

**विधु** पु० व्यध-कु। १चन्द्रे २कर्पूरे ३विष्णौ मेदि०। ४ब्रह्मणि शब्दर०। ५शङ्करे ६राक्षसे विश्वः। ७वायौ ८युधि च संक्षिप्तसा०।

**विधुत** त्रि० वि+धु-क्त १कम्पिते। २त्यक्ते च अमरः।

**विधुनन** न० वि+धु-णिच्-नुक्च। चालने जटा०।

**विधुन्तुद** पु० विधुं तुदति तुद-खश् मुम्च। राहौ अमरः

**विधुपिञ्जर** पु० विधोः पिञ्जर इव। १खड्गे शब्दर०।

**विधुर** त्रि० विगता धूर्यस्य अच्समा०। १विश्लिष्टे अमरः। २विकले च मेदि०। विगता धूः। ३वैकल्ये ४विश्लेषे च न० त्रिका०। ५रसालायां स्त्री मेदि०।

**विधुवन** न० वि+धु-ल्युट्। कम्पने अमरः।

**विधूत** त्रि० वि+धू-क्त। १कम्पिते २त्यक्ते च हेमच०। "विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्" स्मृतिः।

**विधेय** त्रि० वि+धा-यत्। १विधातुं योग्ये २वचनस्थे आयत्ते अमरः। ३विधिना बोध्ये च। ४उद्देश्यप्रकारतया ज्ञायमाने विलक्षणविषयतायुते पदार्थे यथा पर्वतो वह्निमानित्यादौ वह्निर्विधेयः। पचतीत्यादौ पाककृतिः आख्यातार्थस्य विधेयस्यैव बोधस्वीकारात्। विधेयता तु विलक्षणविषयता अनुवाद्यभिन्ननिष्ठा "अनुवादमनुक्त्वा च न विधेयमुदीरयेत्" इति आलङ्कारिकनियमः। प्रत्यक्षादिप्रमितविशेष्यतावच्छेदकताभिन्ना विशेष्यतानिरूपिता च सेत्यन्ये।

**विधेयाविमर्श** पु० विधेयस्याविमर्शो यत्र। अविमृष्टविधेयांशरूपे काव्यदोषभेदे दोषशब्दे ३७६२ पृ० तस्य स्वरूपादिकं दृश्यम्। [४०२ पृ० दृश्यम्।

**विध्याभास** पु० अर्थालङ्कारभेदे सा० द० अलङ्कारशब्दे

**विध्वंस** पु० वि+ध्वन्स घञ्। नाशे।

**विनत** त्रि० वि+नम-क्त। १प्रणते २भुग्ने ३शिक्षिते च मेदि०। गरुड़मातरि ४कश्यपपत्नीभेदे ५पिटकाभेदे च स्त्री मेदि०। [नतात्मजाद्योऽप्युभयत्र।

**विनतासूनु** पु० ६त०। १अरुणे २गरुड़े च जटा०। वि-

**विनद** पु० विशेषेण नदति नद-अच्। (छातियान) इति ख्याते वृक्षे शब्दच०। [राजनि०।

**विनम्रक** न० विशेषेण नम्रमिव इवार्थे कन्। तगरपुष्पे

**विनय** पु० वि+नी-भावे अच्। १शिक्षायां २प्रणामे ३अनुनये च मेदि०। वि+नी-कर्त्तरि अच्। ४विनययुक्ते, जने, विनयश्च शास्त्रज्ञानजन्यसंस्कारभेदः इन्द्रियसंयमो वा। ४निभृते, ५क्षिप्ते, ६जितेन्द्रिये च। ७वणिग्जने पु० अमरः। ८दत्ते अव्य० त०। ९शाखोटके स्त्री मेदि०।

**विनयग्राहिन्** त्रि० विनयं शिक्षां गृह्णाति ग्रह-णिनि। वचनस्थिते आयत्ते अमरः। स्त्रियां ङीप्।

**विनयस्थ** त्रि० विनये तिष्ठति स्था-क। वचनग्राहिणि आयत्ते हेमच०।

**विनशन** न० वि+नश-ल्युट्। १विनाशे। विनश्यति अदर्शनं गच्छति सरस्वत्यत्र वि-नश+आधारे ल्युट्। २कुरुक्षेत्रस्थे तीर्थभेदे त्रिका०। "हिमवद्विन्ध्ययोर्मध्यं यत् प्राग् विनशनादपि" मनुः। स च सरस्वत्यन्तर्धानदेश एव प्रभासतीर्थसन्निकृष्टनिषादपुरसमीपस्थः यथोक्तं भा० व० १३०अ०।

"एषा सरस्वती रम्या दिव्या चौघवती नदी। एतद्विनशनं नाम सरस्वत्या विशाम्पते!। द्वारं निषादराष्ट्रस्य येषां दोषात् सरस्वती। प्रविष्टा पृथिवीं वीर! मा निषादा हि

मां विदुः"। "शुक्लपक्षसप्तम्यां दीक्षा सरस्वतीविनशने" कात्या॰श्रौ॰ २४।५।१०। "सरस्वतीविनशने सरस्वती समुद्रसङ्गमे प्रभासे सारस्वतसत्रार्थं दीक्षा भवति" कर्कः "यत्र सरस्वत्यन्तर्भवति तद्विनशनमुच्यत" इत्यग्निस्वामिनः। "सरस्वती नाम नदी प्रत्यक्स्रोता प्रवहति तस्याः प्रागपरभागौ सर्वलोकप्रत्यक्षौ मध्यमस्तु भागो भूम्यन्तर्निमग्न प्रवहति नासौ केनचित् दृश्यते तद्विनशनमुच्यत" इति लाट्या॰ १०।१५।१ माधवाचार्य्यः।

**विनष्ट** त्रि॰ वि+नश–क्त। १विनाशप्रतियोगिनि २पतिते च "विनष्टे वाप्यमरणे पितर्युपरतस्पृहे" नारदः। "विनष्टे पतिते" दायभा॰।

**विना** अव्य॰वि+ना। १वर्ज्जने २अन्तरेणेत्यर्थे च। एतद्योगे २द्वितीया तृतीया पञ्चमी च। [२रहिते च त्रिका॰।

**विनाकृत** त्रि॰ विनेति कृतम् विना+कृ–क्त। १त्यक्ते

**विनाडिका** स्त्री विभक्ता नाडिका यया। "दश गुर्वक्षरः प्राणः षड्भिः प्राणैर्विनाडिका। तत्षष्ठ्या तु भवेन्नाडी" सू॰ सि॰ उक्ते दण्डषष्टिभागात्मके पलरूपे काले।

**विनायक** पु॰ वि+नी–ण्वुल्। १गणेशे २बुद्धे अमरः ३विघ्ने ४गुरौ च। हेम॰। ५गरुडे मेदि॰। ६गरुडपत्न्यां स्त्री शब्दमा॰ टाप् कापि अत इत्वम्।

विनायकश्च कर्मविघ्नसिद्ध्यर्थमीश्वरेण नियुक्तः देवभेदः यथोक्तं याज्ञवल्क्येन "विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः। गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा" "कर्मणां पुरुषार्थसाधनानां विघ्नसिद्ध्यर्थं स्वरूपफलसाधनत्वविघातसिद्ध्यर्थं नियोजितो नियुक्तः" मिता॰। तेनोपसृष्टस्य लक्षणान्याह स एव "तेनोपसृष्टो यस्तस्य लक्षणानि निबोधत। स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति। कषायवाससश्चैव क्रव्यादांश्चाधिरोहति। अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठति। व्रजन्नपि तथात्मानं मन्यतेऽनुगतं परैः" तस्य प्रत्यक्षलक्षणान्याह स एव "विमना विफलारम्भः संसीदत्यनिमित्ततः। तेनोपसृष्टो लभते न राज्यं राजनन्दनः। कुमारी न च भर्त्तारमपत्यं गर्भमङ्गना। आचार्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं तथा। वणिग्लाभं न चाप्नोति कृषिं चापि कृषीवलः" तच्छान्तिविधिस्तत्रोक्तो दृश्यः। "विनायका विघ्नकारा महोग्राः" रक्षामन्त्रः।

**विनारुहा** स्त्री विना मूलं विना रोहति रुह–क। त्रिपर्णिकायां राजनि॰।

**विनाश** पु॰ वि+नश-घञ्। १ध्वंसे २अदर्शने च।

**विनाशोन्मुख** त्रि॰ विनाशाय उन्मुखः उद्यतः। १भट्टप्राये २पक्वे च अमरः। [पिधाने शब्दच॰।

**वि(वी)नाह** पु॰ वि+नह-घञ् वा उपसर्गदीर्घः। कूपमुख-

**विनिद्र** त्रि॰विगता निद्रा यस्य।१प्रकाशिते शब्दमा॰।२निद्राहीने च। तस्य भावः। त्व। विनिद्रत्व प्रबोधे न॰हेमच॰।

**विनिपात** पु॰ वि+नि+पत–घञ्। १निपाते २दैवादिकृते व्यसने मेदि॰ ३अपमाने च हेमच॰।

**विनिमय** पु॰ वि+नि+मि-अच्। परिवर्त्ते १तुल्यद्रव्यदानेन द्रव्यान्तरग्रहणे शब्दच॰। २बन्धके च शब्दमा॰।

**विनियोग** पु॰ वि+नि–युज–घञ्। क्रियासु प्रवर्त्तने "अनेनेदन्तु कर्त्तव्यं विनियोगः प्रकीर्त्तितः इत्युक्ते २अनुष्ठानक्रमविधाने च "आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव चेति" योगियाज्ञ॰। [देवगणभेदे पु॰ वह्निपु॰।

**विनिर्भय** त्रि॰ विनिर्गतं भयं यस्मात्। १भयशून्ये साध्य-

**विनीत** त्रि॰वि+नी–क्त। १विनययुक्ते २कृतदण्डे ३क्षिप्ते अमरः ४अपनीते ५निभृते च। ६जितेन्द्रिये ७हृते च मेदि॰। ८सुशिक्षिताश्वे अमरः। ९मदनवृक्षे च पु॰ १०शिक्षितवृषादौ राजनि॰ ११वणिजि पु॰ मेदि॰।

**विनीय** पु॰ वि+नी–क्यप्। १कल्के २पापे च। ल्यप् शिक्षयित्वेत्याद्यर्थे अव्य॰।

**विनेतृ** त्रि॰ वि+नी–तृच्। १शिक्षके २नृपे पु॰ मेदि॰।

**विनेय** त्रि॰ वि+नी–यत्। १शिक्षणीये २प्राप्ये च।

**विनोक्ति** स्त्री अर्थालङ्कारभेदे अलङ्कारशब्दे ४०२पृ॰दृश्यम्।

**विनोद** पु॰ वि+नुद–घञ्। १कौतूहले हला॰। २क्रीडायां ३अपनने च। ४गृहभेदे "दीर्घं नयोदयहस्ताः प्रसारतो द्वौ प्रशितौ। विनोद एष द्वाराणि त्रिंशत्कोष्ठद्वयं भवेत्" युक्तिक॰।

**विन्ध्य** पु॰ विध–यत् पृषो॰ नुम् च। १पर्वतभेदे अमरः। २व्याधे च। ३अवनीष्टत्वे स्त्री मेदि॰। ४सूक्ष्मैलायां हेमच॰। ५आवन्त्ये नृपभेदे पु॰ अनुविन्ध्यशब्दे १८५पृ॰ दृश्यम्।

**विन्ध्यवासिनी** स्त्री विन्ध्येऽचले वसति वस–णिनि ङीप्। यशोदागर्भजातायां दुर्गायाम्। "सहस्राक्षोऽपि तां (यशोदागर्भजकन्याम्) दृष्ट्वा विन्ध्यं वेगाज्जगाम ह। तत्र गत्वा तथोवाच तिष्ठस्वात्र महावने। पूज्यमाना सुरैर्नाम्ना ख्याता त्वं विन्ध्यवासिनी" वामनपु॰ ५१अ॰। "ततस्तां नामभिन्राम विन्ध्याचलनिवासिनी" देवीमा॰।

२व्याडिमुनौ पु० हेमच० । विन्ध्यस्थोऽप्यत्र जटा० ।

**विन्ध्याचल** पु० कर्म० । विन्ध्यपर्वते ।

**विन्ध्याटवी** स्त्री विन्ध्यस्य अटवी । विन्ध्यपर्वतस्थे वनभेदे ।

**विन्ध्यावली** स्त्री बाणासुरमातरि त्रिका० ।

**विन्न** त्रि० विद–कर्मणि क्त । १विचारिते २प्राप्ते अमरः । ३ज्ञाते ४स्थिते च विश्वः । [शब्दच० ।

**विन्याक** पु० वि+नि+अक–घञ् । वृक्षभेदे (ढालियान)

**विन्यास** पु० वि+नि+अस–घञ् । १स्थापने २रचने तन्त्रोक्ते मन्त्राद्युच्चारणपूर्वकं हृदयादिषु अङ्गुल्यादीनां स्पर्शन-भेदे च ।

**विप** क्षेपे चु० उभ० सक० सेट् । वेपयति–ते अवीविपत् त ।

**विपक्तिम** त्रि० विपाकेन निर्वृत्तः वि+पच–क्त्रि मपच् । विपाकाधीनजाते "विपक्तिमज्ञानगतिर्मनस्वी" भट्टिः ।

**विपक्ष** त्रि०विरुद्धः पक्षो यस्य । १शत्रौ अमरः । २प्रतिकूल-पक्षावलम्बिनि च । विरुद्धः पक्षः प्रा० स० । ३प्रतिकूले पक्षे विवादे अर्थिकल्पितपक्षस्य विरुद्धे ४पक्षे च ।

**विपञ्ची** स्त्री वि+पचि–अच् गौरा० ङीष् । १वीणायाम् अमरः । २केलौ मेदि० । स्वार्थे क ह्रस्वः । विपञ्चिका तत्रैव ।

**विपण** पु० वि+पण–व्यवहारे क । विक्रये अमरः ।

**विपणि(णी)** पुंस्त्री० वि+पण–इन् स्त्रीत्वपक्षे वा ङीप् । १पण्यविक्रयशालायाम् (हाटचाला) २हट्टे च अमरः । क्रये मेदि० ।

**विपणिन्** पु० वि+पण–आ०इनि । विक्रेतरि वणिजि जटा०

**विपत्ति** स्त्री वि+पद–क्तिन् । आपदि अमरः । २नाशे ३यातनायाञ्च मेदि० । "यस्मिन् राशौ गते भानौ विपत्तिं यान्ति मानवाः" स० त० ।

**विपथ** पु० विरुद्धः पन्थाः अच् समा० । निन्दितमार्गे अमरः

**विपद्(दा)** स्त्री वि+पद–सम्प० क्विप् वा टाप् । १विपत्तौ ज्यो० उक्ते जन्मताराततः तृतीयद्वादशैकविंशतिसंख्याके नक्षत्रे च "विपत्तारे गुडं दद्यात्" ज्यो०त० ।

**विपन्न** त्रि० वि+पद–क्त । १विपद्युक्ते मेदि० २नष्टे च शब्दच० । ३सर्पे पुंस्त्री० मेदि० स्त्रियां ङीष् ।

**विपरीत** त्रि०वि+परि+इण–क्त । १प्रतिकूले जटा० । २व्यत्ति-क्रमे च ३कामुक्यां स्त्री ४नारीणां पुरुषायितरतभेदे नं "स-म्भ्रमाकुलेन च सवं विपरीतरतातुराम्" कर्पूरस्तवः । "पाद-मेकमूरौ कृत्वा द्वितीयं कटिसंस्थितम् । नारीषु रमते कामी विपरीतस्तु बन्धकः" रतिम० उक्ते ५रतिबन्धभेदे । संज्ञायां कन् । "पादमेकमूरौ कृत्वा द्वितीयं स्कन्धसंस्थि-तम् । कामिनीं कामयेत् कामी बन्धः स्यात् विपरीतकः" स्मरदीपिकोक्ते रतिबन्धभेदे ।

**विपर्णक** पु० विगतानि पर्णान्यस्य कप् । १पुष्पप्रधाने प-लाशवृक्षे शब्दच० । २अल्पपत्रके त्रि० ।

**विपर्य्यय** पु० वि+परि+इण–अच् । व्यतिक्रमे । २अतस्मिं-स्तद्बुद्धौ च । पात० उक्ते ३चित्तवृत्तिभेदे "विपर्य्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" पात० सू० । "संशयस्यापि विपर्य्ययत्वमतद्रूपप्रतिष्ठानत्वात् तस्य तद्धर्मिकभावाभावगोचरतया एकांशे अतद्रूपप्रतिष्ठत्वान-पायात् । स कस्मात् न प्रमाणम् ? । यतः प्रमाणेन बा-ध्यते भूतार्थविषयत्वात् प्रमाणस्य, तत्र प्रमाणेन बाध-नमप्रमाणस्य दृष्टम् । तद्यथा द्विचन्द्रदर्शनं सद्विषयेणैक-चन्द्रदर्शनेन बाध्यते" भा० । "स च पञ्चविधः अविद्या-ऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः" पात० सू० । इति पञ्च विपर्य्ययाः । इत्यादि भा० । [द्वृत्ते च

**विपर्य्यस्त** त्रि०वि+परि+अस–क्षेपे क्त । १व्यतिक्रान्ते २परा-

**विपर्य्यास** पु० वि+परि+अस–घञ् । १वैपरीत्ये २व्यति-क्रमे ३छद्मवेषे च । ४विपर्य्यये भ्रान्तौ च ।

**विपल** न०विभक्तं पलं येन प्रा०ब० । पलषष्टिभागे कालभेदे । "तन्नवटस्तपलं द्विष्टं तत्संख्यं क्रमतः पलम् । विपलं च रवेर्भोग्यमेव कलनमलभे" ज्यो०त० । [पण्डिते अमरः ।

**विपश्चित्** पु० विप्रकृष्टं चेतति वि+प्र+चित–क्विप् पृषो० ।

**विपाक** पु० वि+पच–भावे घञ् । १पाके २स्वेदे च । कर्मणि घञ् । ३कर्मफलपरिणामे जात्यायुर्भोगरूपे पदार्थे । "सति मूले तद्विपाको जात्यायुर्भोगाः" पात०सू० "सत्सु क्लेशेषु (अविद्यादिषु) कर्माशयो विपाकारम्भी भवति नो-च्छिन्नक्लेशमूलोऽपि । यथैव तुषावनद्धाः शालितण्डुलाः अदग्धबीजभावाः प्ररोहसमर्था भवन्ति नापनीततुषा-दग्धबीजभावा वा तथा क्लेशावनद्धः कर्माशयो विपाक-प्ररोही भवति नापनीतक्लेशो न प्रसंख्यानदग्धबीजभावो वेति । स च विपाकस्त्रिविधो जातिरायुर्भोगश्चेति" भा० ।

**विपाश(शा)** स्त्री विगतः पाशो वशिष्ठस्य यस्याः । स्वनामख्याते नदीभेदे अमरः । विपाशयति विमुक्तपाशं वशिष्ठं करोति विपाश+णिच–क्विप् । तत्रार्थे अमरः । तस्या-ख्यानकथा भा०आ०१७७अ० । "अथ पाशैस्तदात्मानं गाढं बद्ध्वा महामुनिः (वशिष्ठः) तस्या जले महानद्या निममज्ज सुदुःखितः । अथ छित्त्वा नदी पाशांस्तस्यारिबलसूदन !।

**विप्रुष्** स्त्री॰ ब॰ व॰ वि+प्रुष—क्विप् । १विन्दुषु २वेदपाठकाले मुखनिर्गतजलविन्दुषु अमरः ।
"नाचिका विप्रुषश्छाया गौरश्वः सूर्यरश्मयः । रजो भूर्वायुरग्निश्च सर्वमेध्यानि निर्दिशेत्" शु॰त॰ । आचमनकाले मुखनिःसृतानां तासां नोच्छिष्टदोषजनकता यथाह "नोच्छिष्टं कुर्वते मुख्या विप्रुषोऽङ्गं नयन्ति याः । दन्तवद् दन्तलग्नेषु जिह्वास्पर्शेऽशुचिर्भवेत्" कूर्म॰उ॰ १७अ॰ ।

**विप्रोषित** त्रि॰ वि+प्र+वस—क्त । गतप्रवासे ।

**विप्लव** पु॰ वि+प्लु—अप् । १परचक्रपतिराष्ट्रादितो भये । २राष्ट्रोपद्रवे च अमरः । [प्लावे च ।

**विप्लाव** पु॰वि+प्लु—घञ् । अश्वस्य १गतिभेदे २जलप्लावनात् जल-

**विप्लुत** त्रि॰वि+प्लु—क्त । १व्यसनयुक्ते हेमच॰ २उपद्रुते च "अविप्लुतब्रह्मचर्य्य" श्रुतिः । [तक्यां स्त्री॰ राजनि॰ ।

**विफल** त्रि॰विगतं फलमस्य । १निरर्थके २फलरहिते च ३के-

**विबन्ध** पु॰ विगतो बन्धो गमनं गतिर्यस्मात् । संरुद्धोतधान्यतत्तदुवाद्दी "निरुद्धविन्धारेति" ति भावः सुश्रो॰ । दोषैः दोषघ तत्रार्थे विन्धः । [कारके रोगभेदे अमरः ।

**विबन्ध** पु॰ विबध्नाति बध्न् वि+बन्ध—अच् । मलबन्ध-

**विबुध** पु॰ वि+बुध—क । १पण्डिते मेदि॰ २देवे अमरः "विबुधसखः" भट्टिः । ३चन्द्रे च हेमच॰ ।

**विभक्त** त्रि॰ वि+भज—क्त । १पृथक्कृते २विभिन्ने कृतविभागे च ३भावे क्त । ४विभागे ४भेदे न॰ । "पञ्चमी विभक्ते" पा॰ यस्य विभागः कृतः ५ताहशे धने "अविभक्तं स्थावरं यत् सर्वेषामेव तत् भवेत् । विभक्तं स्थावरं प्राप्तं नान्योऽर्हैः कथञ्चन" बमरवचनम् । तद्व्याख्या च । येन धनस्य विभागःकृतस्तस्मिन् ६जने तत्र । विभक्तधर्मादिकं दायभागादौ दर्शितं यथा
"भ्रातॄणां जीवतोः पित्रोः सहवासो विधीयते । तदभावे विभक्तानां धर्मस्तेषां विवर्द्धते" "विभक्तानां स्वातन्त्र्येण वैदिककर्म्मानुष्ठानात्धर्मत्वेन तद्वृद्धिः" दाय॰त॰ रघु॰ । "दानग्रहणपश्वन्नगृहक्षेत्रपरिग्रहाः । विभक्तानां पृथग् ज्ञेयाः पाकधर्मागमव्ययाः । साक्षित्वं प्रातिभाव्यञ्च दानं ग्रहणमेव च । विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम् । येषामेताः क्रिया लोके प्रवर्त्तन्ते स्वरिक्थतः । विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान्" नारदः "भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि । प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तद् भवेत्" याज्ञ॰ । "बन्धूनामविभक्तानां भोगं नैव प्रदापयेत्" कात्या॰ "भ्रातॄणामविभक्तानामेको धर्मः प्रवर्त्तते । विभागे सति धर्मोऽपि भवेत् तेषां पृथक् पृथक्" कात्या॰ "अविभक्ता विभक्ता वा कुर्युः श्राद्धं दैविकम् । मघासु च तथान्यत्र नाधिकारः पृथग् विना" श्रा॰ त॰ धृतवचनम् । "बहवः स्युर्यदा पुत्राः पितुरेकत्रवासिनः । सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत् कृतम् । द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्" शु॰ त॰ । "अविभक्ता विभक्ता वा सपिण्डाः स्थावरे समाः । एको ह्यनीशः सर्वत्र दानाधमनविक्रये" नारदः । "एतत् दुर्बलपुरुषविक्रयविषयमिति" दाय॰त॰ रघु॰ ।

**विभक्ति** स्त्री वि+भज—क्तिन् । १विभागे "संख्याकारकबोधयित्री" सामान्ये भक्तिमान् प्रत्ययस्तु यः । सा विभक्तिर्द्विधा प्रोक्ता सुप् तिङ् चेति प्रभेदतः" श॰श॰प्र॰उक्तलक्षणे २प्रत्ययभेदे च । "सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु" "विशेष्यस्यैव यल्लिङ्गं विभक्तिवचने च । ये तानि सर्वाणि योज्यानि विशेषणपदेष्वपि" व्या॰ का॰ ।

**विभव** पु॰ वि+भू—अच् । १धने २मोक्षे सर्वमूर्त्तसंयोगरूपे ३ऐश्वर्य्ये मेदि॰ । षष्टिसंवत्सरमध्ये "दुर्भिक्षं क्षेममारोग्यं सर्वे व्याधिविवर्जिताः । प्रयान्ता मानवास्तत्र बहुशस्या वसुन्धरा । हृष्टाः पुष्टाः जनाः सर्वे विभवेऽब्दे वरानने !" इत्युक्तफलके ४वर्षभेदे पु॰ ।

**विभा** स्त्री वि+भा—अच् । १किरणे हेमच॰ २शोभायां ३प्रकाशे च राजनि॰ ।

**विभाकर** पु॰ विभां प्रकाशं करोति कृ-अच् । १सूर्य्ये २अर्कवृक्षे च । ३चित्रकवृक्षे अमरः ४अग्नौ मेदि॰ ।

**विभाग** पु॰ वि+भज—भावे घञ् । १भागे पूर्वस्वामिस्वत्वनाशोत्तरं तत्सम्बन्धाधीनजातस्वत्वस्य २व्यञ्जके व्यापारभेदे दायभागादि । सामान्यधर्मयुतानां बहूनां परस्परविरुद्धतद्व्याप्यधर्मप्रकारेण ५प्रतिपादने श्रीकण्ठाः । वैशेषिकोक्ते ४गुणभेदे तल्लक्षणविभागादि कणा॰ सू॰ । उ॰ दर्शितं यथा
"एतेन विभागो व्याख्यातः" कणा॰ सू॰ । "विभागे संयोगोत्पत्तिप्रकारमतिदिशन्नाह संयोगवद्विभागोऽप्यन्यतरकर्मज १उभयकर्मजो २विभागजश्च ३ग्रयनकर्मव्याख्याणुक्षमविभागः १संयुक्तयोर्मल्लयोर्मेषयोर्वा कर्मभ्यां तदुभयविभागः २अपाय कर्मोत्पत्त्यव्यवहितक्षणोत्पत्तिकः कर्मेणस्तीयान्तराभावात् तदुक्तं "संयोगविभागयोरनपेक्षकारणं कर्म इति विभागे जननीये आश्रमः" सं-

योगे च जननीये पूर्वसंयोगनाशस्यापेक्षणीय इति चेन्न स्वोत्पत्त्यनन्तरोत्पत्तिकभावभूतानपेक्षत्वस्य कर्मणो निरपेक्षत्वात्। विभागजस्तु विभागो द्विविधः कारणमात्रविभागजकारणाकारणविभाग१भेदात् कारणाकारणविभागजकार्य्याकार्य्यविभाग२भेदाच्च तत्र कारणमात्रविभागात् कारणाकारणविभागो यथा कपालद्वयविभागात् कपालाकाशविभागः १कारणाकारणविभागाच्च कार्य्याकार्य्यविभागो २यथाऽङ्गुलीतरुविभागाद्धस्ततरुविभागस्ततः शरीरतरुविभाग इति। ननु विभाग एव न प्रमाणं संयोगाभाव एव विभागव्यवहारादिति चेन्न संयोगाभावोऽत्यन्ताभावश्चेत् गुणकर्मणोरपि विभागव्यवहारप्रसङ्गात् द्रव्ययोर्वर्त्तमानः संयोगात्यन्ताभावो विभक्तप्रत्ययहेतुरिति चेन्नावयवावयविनोरपि प्रसङ्गात् अकार्य्यकारणभूतयोर्द्रव्ययोरिति चेत् विन्ध्यहिमवतोरपि स्यात् भवत्येव तत्रेति चेन्न आत्मनः गुणकर्मणोरपि भावात् आत्मानमधिकृत्य व्यवहारस्य चिन्त्यमानत्वात् संयोगविनाशो विभाग इति चेत् एकतरसंयोगिनाशेन नष्टे संयोगे तद्व्यवहारप्रसङ्गात् संयोगिनोर्विद्यमानयोरिति चेत् एकसंयोगनाशानन्तरं पुनः संयुक्तयोः कुण्डामलकयोः संयोगदशायामपि विभक्तप्रत्ययप्रसङ्गात् यावत्संयोगनाशस्त्वथेति चेदेकसंयोगनाशे तदभावप्रसङ्गात् तत्र यावदर्थाभावात्। तस्मादस्ति विभागोऽर्थान्तरम् स च गुणः विरोधिगुणान्तरनाश्यः विरोधिनं समानाधिकरणं गुणमन्तरेण तत्राश्रये गुणनाशानुपपत्तेः कर्मैव संयोगनाशकं स्यादिति चेन्न विरोधिनो गुणस्य गुणनाशकत्वात्। किञ्च यत्राङ्गुलीहस्तभुजशरीराणां कलकर्मणा तरुसंयोगस्तत्राङ्गुलीमात्रे समुत्पन्नेन कर्मणाऽङ्गुलीतरुसंयोगनाशसम्भवेऽपि हस्ततरुभुजतरुशरीरतरुसंयोगानामनाशप्रसङ्गात् हस्तादीनामक्रियत्वात् अङ्गुलीकर्मणश्च व्यधिकरणत्वात् व्यधिकरणस्यापि कर्मणः संयोगनाशकत्वे क्वचिदप्युत्पन्नेन कर्मणा युगपदेव सर्वसंयोगनाशापत्तेः। त्वन्मते तत्र का गतिरिति चेत् अङ्गुलीतरुविभागेन जनितो हस्ततरुविभागो हस्ततरुसंयोगनाशक इत्यभ्युपगमात्। व्यधिकरणेनाङ्गुलीकर्मणैव हस्ततरुसंयोगनाशोऽस्तु न चातिप्रसङ्गः आश्रयाश्रित परम्परासंयोगस्यैव व्यधिकरणकर्मनाश्यत्वाभ्युपगमादिति सर्वज्ञेन यदुक्तं तदपि न युक्तं विरोधिनः समानाधिकरणस्यैव सर्वत्र नाशकत्वानुभवात् बाधकमन्तरेण तदुपरित्यागानुपपत्तेः। शब्दविभागौ च विभागकार्य्यौ तत्र विभागस्य शब्दासमवायिकारणत्वं न व्याख्यायते न हि वंशे पाट्यमाने दले च चरणावस्थायावस्थे दलान्तरे चोपरिलग्ने यः शब्दो जायते तत्र दलाकाशविभागादन्यदसमवायिकारणं पश्यामः। न च दलद्वयदह्यमानस्फुटद्वेणौत्कारे विभागातिरिक्तमसमवायिकारणं पश्यामः। कारणाकारणविभागाच्च कार्य्याकार्य्यविभागमनुमन्यामहे कथमन्यथा स्वकर्मजनिताङ्गुलीतरुसंयोगभुजतरुसंयोगशरीरतरुसंयोगानामङ्गुलीमात्रोत्पन्नकर्मणाऽङ्गुलीतरुविभागे सति अङ्गुलीतरुसंयोगनाशे सत्यपि हस्ततरुसंयोगादीनां नाशः तत्र हि विभागजविभागपरम्परैव तत्तत्संयोगनाशिकेत्युक्तत्वात् कारणद्वयविभागपूर्वके तु कारणाकारणविभागे न संप्रत्ययः यतोऽवयवे यदुत्पन्नं कर्म तेन द्रव्यान्तरविभागवदाकाशादिविभागस्यापि जननसम्भवात् यावद्भिः कर्म तद्दलं संयुक्तमासीत् तावद्भिस्तत्कर्मणा विभागस्य दर्शनात् नखाङ्गुल्यसमुत्पन्नेन कर्मणाऽङ्गुल्यन्तरविभागवदाकाशादिदेशेभ्योऽपि विभागा न जन्यन्ते। कमलदलेषूत्पन्नेन कर्मणा दलान्तरविभागवदाकाशादिदेशेभ्यो वा न विभागा आरभ्यन्ते द्रव्यारम्भकसंयोगाविरोधिनः सततमपि विभागानेकं कर्मारभताम्। ननु कर्म द्रव्यारम्भकसंयोगविरोधिनं विभागमारभते न तु द्रव्यारम्भकसंयोगाविरोधिनमपि यत्र द्रव्यारम्भकसंयोगाविरोधिनं तत्र द्रव्यारम्भकसंयोगविरोधिनमिति ब्रूमः। कुत एतदिति चेत् कार्य्यवैचित्र्ये च कारणवैचित्र्यस्यावश्यकत्वात्। नतु कर्मणि वैचित्र्यमावश्यकं तथाचैकं कर्म द्रव्यारम्भकसंयोगविरोधिनं विभागं जनयतु यथा विकसत्कमलकुड्मलादावपरञ्च द्रव्यारम्भकसंयोगविरोधिनमविरोधिनञ्चोभयमिति मैवं कार्य्यविरोधो हि कारणवैचित्र्यकल्पनामूलं स च विरोधः एकस्य द्रव्यारम्भकसंयोगप्रतिद्वन्द्वित्वेन अपरस्य तु तदप्रतिद्वन्द्वित्वेनेति तथैव वैचित्र्यस्यापि कल्पनौचित्यात् तस्मेदं वंशदले वर्त्तमानं कर्म दलद्वयविभागमात्रं जनयति स च विभागोऽग्रे आकाशादिदेशविभागं द्रव्यारम्भकसंयोगाप्रतिद्वन्द्विनं विभागमारभते तस्य च निरपेक्षस्य विभागजनने कर्मत्वापत्तिरिति द्रव्यनाशविशिष्टं कालमपेक्षते। ननु तदानीमपि कर्मैव तज्जनयतु अतीतकालत्वात् विभागजनने कर्मणः स्वोत्पत्त्यनन्तर एव काले तस्यैवं विभागेन जनिते विभागान्तरे कर्म

प्रदेशान्तरसंयोगमपि न जनयेत्, न संयोगजनकं प्रति-
कर्मणोऽनतीतकालत्वात् इत्यथा कर्म न नश्येदेव तत्रो-
त्तरसंयोगमात्रनाश्यत्वात् । सोऽयं विभाग उत्तरसंयोग
नाश्यः इत्युत्तरस्थायी कश्चिद्द्रव्यनाशनाश्यः तद्-
यथा तन्तोरवयवेंऽशौ कर्म तदनन्तरमंशुद्वयविभागस्तदेव
तन्त्वन्तरे कर्म ततोंऽशुद्वयविभागेन तन्त्वारम्भकसंयोग-
नाशस्तन्तुकर्मणा च विभागस्ततो द्रव्यारम्भकसंयोगना-
शात्तन्तुकर्मणो नाशस्तस्मान्न तन्त्वन्तरकर्मजन्यविभाग-
नाशः । तस्येवं तन्त्वन्तरोत्पन्नस्य कर्मणो न नाशः का-
दिनाशकाभावात्, उत्तरसंयोगेन हि तन्नाश्यत इति विभागे
च नष्टे नोत्तरसंयोग इति चेन्न तन्तौ यत् कर्मो-
त्पन्नं तेन यथा विनश्यद्द्रव्यान्तरगतोर्विभागो जनि-
तस्तथा तद्देशेरपि विभागो जननीयः सोऽप्यार-
म्भकसंयोगविरोध्येव तेनांशुतन्तुविभागेन तन्त्वाकाश-
विभागस्तेन चोत्तरसंयोगस्तेन ततः कर्मनाशः । यदा-
यत तन्तौ यदा कर्म तदांशावपि तदेव कर्म तत्र कर्म-
विनश्यद्द्रव्यान्तरगतोऽवयवाकाशादिदेशाद्युगपदेव विभा-
गानारभते सर्वेषां विभागानामारम्भकसंयोगविरोधि-
त्वात् तथा च कारणकर्मशुरकारणाकाशादि तद्विभागात्
कार्यस्य तन्तोरकार्यैराकाशादिना यो विभाग उत्पद्य-
तदनन्तरोत्पत्तिकेन संयोगेन तन्तुकर्मतस्य कर्मणो
विनाश इति । कश्चिदुभाभ्यां तद् यथा तन्तुवीरणयोः
संयोगे सति तन्त्ववयवेंऽशौ कर्म वीरणे च कर्मैककः
कालः अंशुकर्मणांऽशन्तरविभागस्तेन च संयोगस्य
तन्त्वारम्भकस्य विनाशः वीरणकर्मणा च तन्तुवीरण-
विभागस्तन्तुवीरणसंयोगनाशश्च तन्त्वारम्भकसंयोगनाशा-
नन्तरं तन्तुनाशस्तन्तुवीरणसंयोगनाशानन्तरं वीरणस्य
प्रदेशान्तरसंयोगस्ताभ्यामाश्रयनाशसंयोगाभ्यां विभाग-
नाशः" उप० वृत्तिः । कर्मणि घञ् । ५अंशे अवयवे च ।

विभज्य त्रि० विभक्तुं शक्यते इति वि+भज-कर्मणि यत् ।
विभागयोग्ये विभजनीये धनादौ ।
"कुले विनीतविद्यानां भ्रातॄणां पितृतोऽपि वा । शौर्य-
प्राप्तं तु यद्वित्तं विभाज्यं तद्बृहस्पतिः" ।

विभाण्डक पु० ऋष्यशृङ्गपितरि मुनिभेदे रामा० ।

विभाण्डी स्त्री० विभाण्ड+गौरा० ङीष् । आवर्त्तकीलतायां
राजनि० ।

विभात न० वि+भा-क्त । प्रभाते शब्दरत्ना० ।

विभाव पु० वि+भू-घञ् । १परिचये अलङ्कारोक्ते रस-
स्योद्दीपके २आलम्बनादौ "रत्याद्युद्बोधकालोके
विभावाः काव्यनाट्ययोः । आलम्बनोद्दीपनाख्यौ तस्य
भेदावुभौ स्मृतौ" । ये हि लोके रामादिगतरति-
हासादीनामुद्बोधकारणानि सीतादयस्त एव काव्ये
नाट्ये च निवेशिताः सन्तः विभाव्यन्ते आस्वादा-
ङ्कुरप्रादुर्भावयोग्याः क्रियन्ते सामाजिकरत्यादिभावा
एभिरिति विभावा उच्यन्ते" सा० द० ३प० ।
"विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा" सा०३प० ।

विभावना स्त्री अर्थालङ्कारभेदे अलङ्कारशब्दे ४०४पृ० दृश्यम् ।

विभावरी स्त्री वि+भा-क्वनिप् ङीप् वनो र च । १रात्रौ
अमरः । २हरिद्रायां ३कुट्टन्याम् ४वक्रयोषिति ५वि-
वादवस्तहस्त्र्यां मेदि० । ६मुखरस्त्रियाम् शब्दर० । ७मेदा-
ख्ये च रत्नमा० ।

विभावसु विभायुक्तं वसवोऽस्य । १सूर्ये २अर्कवृक्षे ३वह्नौ
चित्रकवृक्षे अमरः । ५चन्द्रे ६हारभेदे च हेमच० ।

विभाषा स्त्री विरुद्धा भाषा वि+भाष-अ वा । व्याकरणोक्ते
पाक्षिकप्राप्तिफलके "नवेति विभाषा" इत्युक्तलक्षणे
विकल्पविधाने । [भक्तौ च ।

विभिन्न त्रि० वि+भिद-क्त । १प्रकाशिते २विदलिते ३वि-

विभीतक पु० विशेषेण भीत इव इवार्थे कन् । (बयड़ा)
वृक्षे अमरः । "विभीतकं स्वादुपाकं कषायं कफपित्तनुत् ।
उष्णवीर्यं हिमस्पर्शं भेदनं कासनाशनम् । रूक्षं
नेत्रहितं केश्यं कृमिवैस्वर्यनाशनम् । विभीतमज्जा
तृड्छर्दि कफवातहरो लघुः । कषायो मदकृच्चाथ धात्री-
मज्जापि तद्गुणः" भावप्र० । काभावे विभीतोऽप्यत्र ।

विभीषण पु० विशेषेण भीषयते शत्रून् भी-णिच्-षुक् च
ल्यु । १रावणभ्रातरि राक्षसे रामा० । २नलतृणे
राजनि० । ३भयकारके त्रि० । [ल्युट् । भयप्रदर्शने

विभीषिका स्त्री वि+भी-णिच्-षुक् च धात्वर्थनिर्देशे

विभु पु० वि+भू-डु । सर्वमूर्त्तसंयुक्ते १आकाशादौ २ब्रह्मादेवे
३प्रभौ च मेदि० । ४भृत्ये त्रिका० । ५विष्णौ शब्दमा०
६व्यापके ७नित्ये दर्शनादेषे हेमच० । ८दृढे त्रि० अजयः ।
१०परमशक्तयुते त्रि० शब्दा० ।

विभूति स्त्री वि+भू-क्तिन् । १अणिमा "अणिमा लघिमा
प्राप्तिः प्राकाम्यं महिमा तथा । ईशित्वं च वशित्वञ्च
तथा कामावसायिता" इत्युक्ते २ऐश्वर्ये च । ऐश्वर्य-
शब्दे १५४८ पृ० दृश्यम् ।

विभूषा स्त्री वि+भूष-अ । १शोभायां हेमच० २भूषणे च ।

**विभ्रम** पु० वि+भ्रम–घञ्। १स्त्रीणां शृङ्गाराङ्गे चेष्टाभेदे "विभ्रमस्त्वरयाऽकाले भूषास्थानविपर्य्ययः" इत्युक्ते २त्वरया भूषास्थानवैपरीत्ये च "यत्राप्सरो विभ्रममण्डनानाम्" कुमारः। विशेषेण ३भ्रान्तौ मेदि० ४शोभायां ५सन्देहे हेमच०। ७भ्रमणे शब्दरत्ना०। "चित्तवृत्त्यनवस्थानं शृङ्गाराद् विभ्रमो भवेत्" उक्ते दृश्शृङ्गाराच्चित्तवृत्त्यनवस्थाने। "क्रोधं स्मितञ्च कुसुमाभरणादि यास्त्या तद्वर्जनञ्च सहसैव विभ्रमण्डनञ्च। आहिय कान्तवचनं श्रपनं सखीभिर्निष्कारणोत्थितमतं वद विभ्रमं तत्" इत्युक्ते स्त्रीणां ८चेष्टाभेदे च।

अत्यर्थे अच्। १वार्द्धक्यावस्थायां स्त्री शब्दरत्ना०।

**विभ्राज्** त्रि० वि+भ्राज–क्विप्। भूषणादिना दीप्ते अमरः

**विमत** त्रि० वि+मन–क्त। विरुद्धमतियुक्ते १विषमे २शत्रौ च। [व्याकुलचित्ते अमरः।

**विमनस्(स्क)** त्रि० विक्षिप्तं मनो यस्य वा कप्। चिन्तादिना

**विमर्द** पु० विमृद्यतेऽसौ वि+मृद–घञ्। (कालकासुन्दिया) १वृक्षे रत्नमा०। संज्ञायां कन्। चक्रमर्द्दके राजनि०। भावे घञ्। २मर्द्दने ३कुङ्कुमादिमर्द्दने च।

**विमर्शन** न० वि+मृश–ल्युट्। १परामर्शे न्यायोक्ते साध्यव्याप्यहेतुमत्त्वेन पक्षनिश्चये २वितर्के च हेम०। घञ् विमर्श तत्रैवार्थे पु०।

**विमर्ष** पु० वि+मृष–घञ्। १विचारे जटा० २नाटकाङ्गसन्धिभेदे च। स च "यत्रैकार्थसम्बन्धः सन्धिरेकान्वये सति। मुखं प्रतिमुखं गर्भो विमर्ष उपसंहृतिः। इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते" इति विभज्य "यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः। शापाद्यैः सान्तरायश्च स विमर्ष इति स्मृतः" इति सा० द० लक्षितः। तदङ्गानि च तत्रोक्तानि यथा "अपवादोऽथ सम्फोटो व्यवसायोद्रवोद्युतिः। शक्तिःप्रसङ्गखेदश्च प्रतिषेधो विरोधनम्। प्ररोचना प्रकर्षं स्यादादानं छादनं तथा"।

**विमल** त्रि० विगतो मलो यस्मात्। १स्वच्छे निर्मले अमरः। विगतो मलो यस्याः ५ब०। (चामकषा) २सप्तलायाम् अमरः। जगन्नाथक्षेत्रस्थे ३देवीभेदे स्त्री तन्त्रसा०। ४दुर्गामूर्त्तिभेदे देवीपु०। ५उपरत्नभेदे न० राजनि०। ६जिनदेवे पु० ७चारुणि त्रि० शब्दर०। "चेतसा सत्त्वयुक्तेन दानं यद्धि विमलं स्मृतम्" गरुडपु० उक्ते दशाक्षिके दानभेदे न०।

**विमातृ** स्त्री विरुद्धा माता। मातृसपत्न्याम्। "मातुः पितुः कनीयांसं न नमेद्वयसाधिकः। नमस्कुर्यात् गुरोः पत्नीं भ्रातृजायां विमातरम्" म० त० स्मृतिः। तत्रैव कूर्म्मवचनात् "स्त्रियो नमस्या वृद्धाश्च वयसा पत्युरेव ताः"। "यतः पत्युर्वयसा ताः स्त्रियो वृद्धा अतः कनिष्ठा अपि अपि नमस्याः" म०त०रघु०। [अमरः।

**विमातृज** पु० विमातुर्जायते जन–ड। सापत्ने भ्रातरि

**विमान** पुंन० वि+मन–घञ् वि+मा–ल्युट् वा। १देवयाने रथे अमरः। २सार्वभौमसद्मभेदे च ३यानमात्रे ४अश्वे पु० मेदि० ५परिमाणे च न०।

**विमार्ग** पु० विरुद्धो मार्गः। १कुपथे २निन्दिताचारे च।

**विमुख** त्रि०विरुद्धगमनानुकूलं मुखमस्य।१वहिर्मुखे २निवृत्ते च

**विमुद्र** त्रि० विगता मुद्रा कुड्मलीभावो यस्य। १विकसिते हेमच०। २मुद्रारहिते च।

**विम्ब** पुंन०। वी+वन्–सम्प्रसारणौ। १दर्पणादौ भासमानप्रतिविम्बाश्रये २कमण्डलौ च संक्षिप्तसा०। ३सूर्य्यादिमण्डले अमरः। ४ककलासे पुंस्त्री०मेदि०स्त्रियां ङीष्। विम्बायाः फलम् अण् तस्य लुप्। ५विम्बिकाफले न०।

**विम्बजा** स्त्री विम्बं फलं जायतेऽस्याः जन–ड १विम्बिकालतायां (तेलाकुचा) शब्दच०।

**विम्बट** पु० विम्बमटति अट–अच् शक०। सर्षपे शब्दच०।

**विम्बा(म्बी)** स्त्री विम्बमस्त्यस्याः अच् वा गौरा० ङीष्। (तेलाकुचा) १लताभेदे शब्दर० "विम्बीफलं स्वादु शीतं गुरु पित्तास्रवातजित्। स्तम्भनं लेखनं रुच्यं विबन्धाध्मानकारकम्" भावप्र०। स्वार्थे क कापि अत इत्त्वम् तत्रार्थे। सूर्य्यादिमण्डले पु०न० नात इत्त्वम्।

**वियत्** न० वि+यम–क्विप् मलोपे तुक्। आकाशे अमरः।

**वियद्गङ्गा** स्त्री वियतस्था गङ्गा शाक०। स्वर्गङ्गायां मन्दाकिन्याम् अमरः।

**वियद्भूति** स्त्री वियतो भूतिरिव। अन्धकारे त्रिका०।

**वियन्मणि** पु० वियतो मणिरिव प्रकाशकत्वात् भूप्रकत्वाद्वा। द्युमणौ सूर्य्ये हारा०।

**वियम** पु० वि+यम–घञ्। १संयमे अमरः। २दुःखे क्षीरस्वामी। पक्षे वृद्धिः। वियाम तत्रार्थे।

**वियात** त्रि० वि+या–क्त याति अच् वा। १धृष्टे २निर्लज्जे च अमरः। तस्य भावः ष्यञ्। वैयात्य निर्लज्जत्वे न० "वैयात्यमुरतेष्वपि" माघः।

**वियोग** पु० वि+युज–घञ्। १विच्छेदे हेमच० ६त०

२पक्षियोगे च गणितप्रसिद्धे ३राश्योर्व्यवकलने च।

**वियोगिन्** पु० वि+युज–घिनुण्। १चक्रवाके पक्षिणि शब्दच०। २विच्छेदवति। ३पक्षिवियोगवति च त्रि०। स्त्रियां ङीप् "वियोगिनीमैक्षत दाडिमीमसौ" नैष०।

**विरक्त** त्रि० वि+रन्ज–क्त। १विच्छिन्ने २अननुरक्ते ३दुर्भगायां स्त्रियां स्त्री त्रिका०।

**विरङ्ग** पु० वि+रन्ज–घञ्। कङ्कुष्ठे राजनि०।

**विरचित** त्रि० वि+रच–क्त।१कृते २निर्मिते च। [अमरः।

**विरजस्तमस्** त्रि० विगते रजस्तमसी यतः। सत्त्वगुणप्रधाने

**विरजस्(स्का)** स्त्री विगतं रजो यस्याः वा कप्। १गतार्त्तवायां स्त्रियाम् जटा०। २रजोगुणहीने त्रि०।

**विरजा** स्त्री विशेषेण रज्यतेऽत्र रन्ज–घञर्थे क। १दूर्वायां हारा०गोलोकस्थे २राधासखीभेदे तच्छापाज्जायमाने ३नदीभेदे च ब्रह्मवै० ज० ख० २५ अ०। ४कपित्थानीवृक्षे रत्नमा०। ५ययातिमातरि कूर्मपु० २०अ०। सा च नदी उत्कलदेशस्था जगन्नाथसन्निकृष्टा "उत्कले नाभिदेशश्च विरजाक्षेत्र उच्यते। विमलाऽत्र महादेवी जगन्नाथस्तु भैरवः" पीठनिर्णयः। तत्र मुण्डनोपवासौ न कार्यौ "मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः। वर्जयित्वा गयां गङ्गां विशालां विरजां तथा" प्रा०त०।

**विरञ्च(ञ्चि)** पु० वि+रच–अच् इन् वा नुम् च। जगत्स्रष्टरि ब्रह्मणि हेम०। [शब्दर०।

**विरण** न० विशिष्टो रणो मूलमस्य। उशीरे (बेणारमूल)

**विरत** त्रि० वि+रम–क्त। निवृत्ते। [पाराभावे च अमरः।

**विरति** स्त्री वि+रम–क्तिन्। १निवृत्तौ २विषयसेवाद्य्या-

**विरल** त्रि० वि+रा–कलन्। १अवकाशे २विच्छिन्ने अमरः। ३अनिविड़े च। ४दध्नि न०राजनि०।

**विरलजानुक** त्रि० ब०व्री०। वक्रजानुके हेमच०।

**विरलद्रवा** स्त्री ब०व्री०। श्लक्ष्णायां यवाग्वां जटा०।

**विरह** पु० वि+चु० रह–अच्। १विच्छेदे २अभावे शृङ्गाररसस्य विप्रलम्भाख्ये ३अवस्थाभेदे च हेमच०।

**विरहित** त्रि० वि+रह–क्त। १त्यक्ते २हीने च।

**विरहिन्** त्रि० वि+रह णिनि। १विरहयुते स्त्रियां ङीप्। सा च २स्त्रतौ शब्दमा०।

**विरहोत्कण्ठिता** स्त्री "आगन्तुं कृतचित्तोऽपि दैवान्नायाति यत्प्रियः। तदनागमदुःखार्त्ता विरहोत्कण्ठिता तु सा" सा०द०३प० लक्षिते नायिकाभेदे।

**विराग** पु० वि+रन्ज–घञ्। १रागाभावे। विगतो रागो यस्य। २रागशून्ये त्रि०। "विषयेभ्यस्तु संरागो मानसो मल उच्यते। तेष्वेव तु विरागो हि नैर्मल्यं समुदाहृतम्" प्रा० त०। वैराग्यशब्दे दृश्यम्।

**विराज्** पु० विशेषेण राजते क्विप्। १क्षत्रिये ब्रह्माण्डात्मकस्थूलदेहाभिमानिनि २आदिपुरुषे ३छन्दोभेदे च। वेदे द्वाभ्यामक्षराभ्यां गायत्र्यादीनां समष्टावधिकत्वे विराट् छन्दो भवति छन्दःशब्दे २९७८ पृ० कात्यायनवाक्यं दृश्यम्। "समष्टिरूपस्थूलशरीराभिमानी चेतनः विराट्संज्ञो वेदान्तादौ प्रसिद्धः। तस्योत्पत्तिः तद्रूपञ्च भागवतादौ दृश्यम्। अच्। विराजोऽपि समष्टिस्थूलाभिमानिनि चेतने। ४स्वायम्भुवमनौ च। "ततः कालेन महता तस्य पुत्रोऽभवन्मनुः। स्वायम्भुव इति ख्यातः स विराडिति नः श्रुतम्" मत्स्यपु०३अ०। "मानवे तु स्वायम्भुवस्य विराट्पुत्रत्वमभिहितम्। यथा "द्विधा कृत्वात्मनो देहमर्द्धेन पुरुषोऽभवत्। अर्द्धेन नारी तस्यां स विराजमसृजत् प्रभुः। तपस्तप्त्वाऽसृजद् यन्तु स स्वयं पुरुषो विराट्। तं मां वित्तास्य सर्वस्य स्रष्टारं द्विजसत्तमाः!"। [च। भा० विराटपर्वणि दृश्यम्।

**विराट** पु०विशेषो राटो यत्र। १देशभेदे, तद्देशाधिपे २नृपे

**विराध** पु० राक्षसभेदे। स च तुम्बुरुनामा गन्धर्वः कुबेरशापात् राक्षसत्वमाप्तः रामेण मोचितः तत्कथा वह्निपु० "तुम्बुरुर्नाम गन्धर्वः प्रविष्टो राक्षसीं तनुम्। अभिशापादहं घोरं प्राप्तो वैश्रवणेन वै"।

**विराधन** न० वि+राध–ल्युट्। पीड़ायाम्। शब्दर०।

**विराम** पु० वि+रम–घञ्। १अवसाने,२विरतौ,३निवृत्तौ च जटा०। ४मध्ये त्रिका०।५व्याकरणोक्ते परवर्णाभावे च।

**विराल** पुस्त्री० वि+डल–घञ् डस्य रः। विड़ाले पशुभेदे अमरः स्त्रियां ङीप्। [२विगतरवे त्रिका०।

**विराव** पु० वि+रु–घञ्। १शब्दे अमरः। प्रादि० ब०व्री०।

**विरिञ्च** पु० वि+रिच–अच् नुम् च। १विष्णौ २जगत्स्रष्टरि वेधसि, ३शिवे च शब्दर०। इन् विरिञ्चि तत्रैवार्थे अमरः।

**विरुद्ध** त्रि० वि+रुध–क्त। विरोधयुक्ते २हेत्वाभासभेदे "अनैकान्तो विरुद्धश्चेत्यादिना विभज्य "यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः" भाषा०लक्षितः। "एवकारेण साध्यवत्त्वावच्छेदेन हेत्वभाव इति सूचितम् तथा च साध्यव्यापकाभावप्रतियोगित्वं तदर्थः सि०मुक्ता०" गौतम १।४७ सू० अन्यथा लक्षितो यथा "सिद्धान्तमभ्युपेत्य

तद्विरोधी विरुद्धः" "तं (सिद्धान्तं) विरुणद्धीति तद्विरोधी अभ्युपगतं सिद्धान्तं व्याहन्तीति। यथा सोऽयं विकारो व्यक्तेरपैति नित्यत्वप्रतिषेधात् अपेतोऽप्यस्ति विनाशप्रतिषेधात् न नित्यो विकार उपपद्यते इत्येवं हेतुर्व्यक्तेरपेतोऽपि विकारोऽस्तीत्यनेन स्वसिद्धान्तेन विरुध्यते। कथं? व्यक्तिरात्मलाभः अपायः प्रच्युतिः यद्यात्मलाभात् प्रच्युतो विकारोऽस्ति नित्यत्वप्रतिषेधो नोपपद्यते यत् व्यक्तेरपेतस्यापि विकारस्यास्तित्वं तत् खलु नित्यत्वमिति। नित्यत्वप्रतिषेधो नाम विकारस्यात्मलाभप्रच्युतेरुपपत्तिः। यद् आत्मलाभात् प्रच्यवते तदस्ति इह यदस्ति न तदात्मलाभात् प्रच्यवते। अस्तित्वं चात्मलाभात् प्रच्युतिरिति तद्विरुद्धौ एतौ न सह सम्भवतः। स चायं हेतुर्यं सिद्धान्तमाश्रित्य प्रवर्त्तते तमेव व्याहन्तीति" वा० भा०।

इत्तौ त्विदमन्यथा व्याख्यातं यथा "क्रमप्राप्तं विरुद्धं लक्षयति सिद्धान्तमिति अत्र च सिद्धान्तं साध्यं प्रतिज्ञायां हि विरुद्धस्य पक्षस्यान्ते साध्यमभिधीयते तथा च साध्यमभ्युपेत्य उद्दिष्टः प्रयुक्तस्तद्विरोधी साध्याभावव्याप्त इति फलितार्थः। यथा वह्निमान् ह्रदत्वादिति। एतस्य साध्याभावानुमितिहेतुतया साध्यानुमिति प्रतिबन्धो दूषकताबीजम्। न च सत्प्रतिपक्षाविशेषः तत्र हेत्वन्तरं साध्याभावसाधकम्। इह तु हेतुरेव साध्याभावसाधकः साध्यसाधकत्वेन त्वयोपन्यस्त इत्युपस्थितिविशेषोद्भावकत्वेन विशेषात्"। इदन्तु नावश्यं विरुद्धोदाहरणम् व्यभिचारादेः सत्त्वात्। किन्तु उपाधेयसङ्करेऽप्युपाधेरसङ्करादित्युक्तेरस्य दूषकताबीजसत्त्वाबोदाहरणत्वं बोध्यम्।

**विरुद्धमतिकृत्** पु० "विपरीतार्थधीर्यस्मात् विरुद्धमतिकृन्मतम्" उक्ते काव्यदोषभेदे १७६१पृ० दृश्यम्। [रिते च मेदि०।

**विरूढ़** त्रि० विशेषेण रोहति वि+रुह–क्त। १जाते २अङ्कु-

**विरूप** त्रि० विकृतं रूपमस्य। १दुष्टरूपयुक्ते २निन्दिते च। ३पिप्पलीमूले न० राजनि०। ४अतिविषायां, ५दुरालभायाञ्च स्त्री० राजनि०।

**विरूपाक्ष** पु० विरूपे विकटे अक्षिणी यस्य षच् समा०। १महादेवे अमरः। २विकटनेत्रे त्रि०।

**विरूपिन्** त्रि० विकृतं रूपमस्त्यस्य इनि। १कुरूपे त्रिका०। २जाहकजन्तौ पु० राजनि०। [व्द्र०। २अतिरेके च।

**विरेक** पु० वि+रिच–घञ्। १मलादेरधोनिःसरणे, म-

**विरेचन** न० वि+रिच–णिच्–ल्युट्। १मलादेर्निःसारणे, तद्विधिः भावप्र० उक्तो यथा

"स्निग्धस्विन्नाय वान्ताय दद्यात्सम्यग्विरेचनम्। अवान्तस्य त्वधःस्रस्तो ग्रहणीं छादयेत्कफः। मन्दाग्निं गौरवं कुर्याज्जनयेद् वा प्रवाहिकाम्। अथ वा पाचनैरामं बलासं परिपाचयेत्। शरदि वसन्ते च देहशुद्धौ विरेचयेत्। अन्यदात्ययिके कार्ये शोधनं शीलयेद् बुधः"। आत्ययिके प्राणसङ्कटे। "पित्ते विरेचनं युञ्ज्यादामोद्भूते गदे तथा। उदरे च तथाध्माने कोष्ठशुद्धौ विशेषतः। दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः। शोधनैः शोधिता ये तु न तेषां पुनरुद्भवः। बालो वृद्धो भृशं स्निग्धः क्षतक्षीणो भयान्वितः। श्रान्तस्तृषार्त्तः स्थूलश्च गर्भिणी च नवज्वरी। नवप्रसूता नारी च मन्दाग्निश्च मदात्ययी। शल्यार्दितश्च रूक्षश्च न विरेच्या विजानता। जीर्णज्वरी गरव्याप्तो वातरोगी भगन्दरी। अर्शःपाण्डूदरग्रन्थिहृद्रोगारुचिपीडिताः। योनिरोगप्रमेहार्त्तौ गुल्मप्लीहव्रणार्दिताः। विद्रधिच्छर्दिविस्फोटविसूचीकुष्ठसंयुताः। कर्णनासाशिरोवक्त्रगुदमेढ्रामयान्विताः। प्लीहशोथाक्षिरोगार्त्ताः कृमिक्षारानिलार्दिताः। शूलिनो मूत्रघाताश्च विरेकार्हा नरा मताः। बहुपित्तो मृदुः प्रोक्तो बहुश्लेष्मा च मध्यमः। बहुवातः क्रूरकोष्ठो दुर्विरेच्यः स कथ्यते। मृद्वी मात्रा मृदौ कोष्ठे मध्यकोष्ठे च मध्यमा। क्रूरे तीक्ष्णा मता द्रव्यैर्मृदुमध्यमतीक्ष्णकैः। मृदुर्द्राक्षापयश्चञ्चुतैलैरपि विरेच्यते। मध्यमस्त्रिवृतातिक्ताराजवृक्षैर्विरिच्यते। क्रूरः कुक्कुपयसा हेमक्षीरीदन्तीफलादिभिः"। चञ्चुतैलम् एरण्डतैलम्। राजवृक्षः (वनवहेरा) हेमक्षीरी (चोक) दन्तीफलम् इङ्गुदीफलम् जयपालेति प्रसिद्धम् "मात्रोत्तमा विरेकस्य त्रिंशद्वेगैः कफान्तक। वेगैर्विंशतिभिर्मध्या हीनोक्ता दशवेगिका। द्विपलं श्रेष्ठमाख्यातं मध्यमं च पलं भवेत्। पलार्द्धञ्च कषायाणां कनीयस्तु विरेचनम्। कल्कमोदकचूर्णानां कर्षमध्वाज्यलेहतः। कर्षद्वयं पलं वापि वयोरोगाद्यपेक्षया। पित्तोत्तरे त्रिवृच्चूर्णं द्राक्षाक्वाथादिभिः पिबेत्। त्रिफलाक्वाथगोमूत्रैः पिबेद्व्योषं कफार्दितः। त्रिवृत्सैन्धवशुण्ठीनां चूर्णमम्लैः पिबेन्नरः। वातार्दितो विरेकाय जाङ्गलानां रसेन वा। एरण्डतैलं त्रिफला-

काथेन द्विगुणेन वा। युक्तं पीतं पयोभिर्वा न चिरेण विरेच्यते"। शीघ्रमेव विरेच्यत इत्यर्थः "त्रिवृता कौटजं बीजं पिप्पली विश्वभेषजम्। समृद्वीकारसं क्षौद्रं वर्षाकाले विरेचनम्। त्रिवृद्दुरालभामुस्तशर्करोदीच्यचन्दनम्। द्राक्षाम्बुना सयष्ट्याह्वशीतलञ्च घनात्यये"। उदीच्याम्बालाः घनात्यये शरदि। "पिप्पलीं नागरं सिन्धुं श्यामां त्रिवृतया सह। लिह्यात् क्षौद्रेण शिशिरे वसन्ते च विरेचनम्"। श्यामा (कृष्णाचाक्र) (त्रिवृता शर्करा तुल्या ग्रीष्मकाले विरेचनम्। अभयामरिचं शुण्ठीविडङ्गामलकानि च। पिप्पली पिप्पलीमूलं त्वक्पत्रं मुस्तमेव च। एतानि समभागानि दन्ती च त्रिगुणा भवेत्। त्रिवृताष्टगुणा ज्ञेया षड्गुणा चात्र शर्करा। मधुना मोदकान् कृत्वा कर्षमात्रान् प्रमाणतः। एकैकं भक्षयेत्प्रातः शीतञ्चानु पिबेज्जलम्। तावद्विरेच्यते जन्तुर्यावदुष्णं न सेवते। पानाहारविहारेषु भवेन्निर्यन्त्रणः सदा। विषमज्वरमन्दाग्निपाण्डुकासभगन्दरान्। पृष्ठपार्श्वोरुजघनजङ्घोदररुजं जयेत्। देहाभ्यङ्गं रोगं च दिनमेकं सुधीस्त्यजेत्। सततं शीलनादेव पलितानि प्रणाशयेत्। अभया मोदका ह्येते रसायनपराः स्मृताः"। इति अभयादिमोदकः "पीत्वा विरेचनं शीतजलैः संसिच्य चक्षुषी। सुगन्धि किञ्चिदाघ्राय ताम्बूलं शीलयेद् बुधः। निवातस्थो न वेगांश्च धारयेन्न शयीत च। शीताम्बु न स्पृशेत् क्वापि कोष्णनीरं पिबेन्मुहुः। बलासौषधपित्तानि वायुर्वान्ते यथा व्रजेत्। रेकात्तथा मलं पित्तं भेषजञ्च कफो व्रजेत्। दुर्विरिक्तस्य नाभेस्तु स्तब्धता कुक्षिशूलकृत्। पुरीषवातसङ्गश्च कण्डूमण्डलगौरवम्। विदाहोऽरुचिराध्मानं भ्रमश्छर्दिश्च जायते। तं पुनः पाचनैः स्नेहैः पक्त्वा स्निग्धन्तु रेचयेत्। तेनास्योपद्रवा यान्ति दीप्ताग्निर्लघुता भवेत्। विरेकस्यातियोगेन मूर्च्छा भ्रंशो गुदस्य च। शूलं कफातियोगः स्यान्मांसधावनसन्निभम्। मेदोनिभं जलाभासं रक्तञ्चापि विरेच्यते। तस्य शीताम्बुभिः सिक्त्वा शरीरं तण्डुलाम्बुभिः। मधुमिश्रैस्तथा शीतैः कारयेद्वमनं मृदु। सहकारत्वचः कल्को दध्ना सौवीरकेण वा। पिष्टा नाभिप्रलेपेन हन्त्यतीसारमुल्वणम्। सौवीरं तु यवैरामैः पक्वैर्वा निस्तुषैः कृतैः"। सौवीरं काञ्जिकम् "छागाक्षीरं रसञ्चापि वैष्किरं हारिणं तथा। शालिभिः षष्टिकैस्तुल्यैर्मसूरैर्वापि भोजयेत्। वर्त्तिकालावविष्किरकपिञ्जलकतित्तिराः। चकोरक्रकराद्याश्च विष्किराः समुदाहृताः"। कपिञ्जल इति ख्यातो लोके कपिशतित्तिरः। क्रकरः। (कराट) इति लोके। हरिणस्ताम्रवर्णः मृगः। "शीतैः संग्राहिभिर्द्रव्यैः कुर्य्यात् संग्रहणं भिषक्। लाघवे मनसस्तुष्टावनुलोमङ्गतेऽनिले। सुविरिक्तं नरं ज्ञात्वा पाचनं पाययेन्निशि। इन्द्रियाणां बलं बुद्धेः प्रसादो वह्निदीप्तता। धातुस्थैर्यं वयस्स्थैर्य्यं भवेद्रेचनसेवनात्। प्रवातसेवां शीताम्बु स्नेहाभ्यङ्गमजीर्णताम्। व्यायामं मैथुनञ्चैव न सेवेत विरेचितः। शालिषष्टिकमुद्गाद्यैर्यवागूं भोजयेत् कृताम्। जाङ्गलविष्किराणां वा रसैः शाल्योदनं हितम्। राजीवः पृषतश्चैव जाङ्गलाः शरभादयः"। विरेचयति वि+रिच-णिच्-ल्यु। २पीलुवृक्षे पु० राजनि०। ३भेदकमात्रे त्रि०। स्वार्थे क। विरेचक तदर्थे त्रि०।

**विरेफ** पु० वि+रिफ-अच्। नदमात्रे धनञ्जयः। प्रादि०ब० २रकारवर्णशून्ये त्रि०। [२सूर्यकिरणे पु० हेमच०।

**विरोक** पु० न० वि+रुच-घञ् चस्य कः। १छिद्रे त्रिका०।

**विरोचन** पु० वि+रुच-युच्। १सूर्य्ये २अर्कवृक्षे अमरः। ३बलिपितरि प्रह्लादतनयेऽसुरभेदे ४चन्द्रे ५वह्नौ च मेदि०। विरोचयति वि+रुच-णिच्-ल्यु। ६रोहितकवृक्षे ७श्योनाकवृक्षे दृतकरञ्जे च पु० राजनि०। ८दीप्तिकारके त्रि०।

**विरोध** पु० वि+रुध-घञ्। १वैरे २विरुद्धतायाम् न्यायोक्ते साध्याभावसामानाधिकरण्यरूपे ३हेतुदोषे यथा वह्निमान् जलादित्यत्र जलरूपहेतोर्वह्निना सामानाधिकरण्यं नास्ति अतस्तस्य दुष्टत्वम्। ४अर्थालङ्कारभेदे अलङ्कारशब्दे ४०४ पृ० दृश्यम्। ५विपरीतार्थकत्वे च। "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" जैमि० प्रभवादिषु "विश्वस्य जगत् सर्वं विरोधे भयसंप्लवम्। विकारः सर्वतोऽपायः" इत्युक्तफलके ६वर्षभेदे।

**विरोधन** न० वि+रुध-ल्युट्। वैरे अमरः।

**विरोधिन्** पु० वि+रुध-णिनि। १रिपौ अमरः। षष्टिसंवत्सरमध्ये "जायते मानुषे कष्टं विरोधिनि न संशयः" इत्युक्तफले २वत्सरभेदे च। ३विरोधकारके त्रि०।

**विरोधाभास** पु० विरोधः इवाभासते आ+भास-अच्। अर्थालङ्कारभेदे अलङ्कारशब्दे ४०४ पृ० दृश्यम्।

**विरोधोक्ति** स्त्री परवचनविरोधिवचने अमरः।

**विल** वृतौ तु० पर० सक० सेट् । विलति अवेलीत् ।

**विलक्ष** पु० वि+लक्ष-अच् । विस्मययुक्ते अमरः ।

**विलक्षण** त्रि० विशिष्टं लक्षणमस्य प्रा०ब० । १विभिन्ने जटा० २विशेषणयुक्ते च । ३निष्प्रयोजनस्थितौ च न० भागुरिः ४दानार्थं कल्पितकाञ्चनपुरुषमूर्त्तियुतशय्याभेदे स्त्री । "अशौचान्तात् द्वितीयेऽह्नि शय्यां दद्यात् विलक्षणाम् । काञ्चनं पुरुषं तद्वत् फलपुष्पसमन्वितम् । संपूज्य द्विजदाम्पत्यं नानाभरणभूषणैः" शु०त० मत्स्यपु० ।

**विलग्न** त्रि० विशेषेण लग्नं लस्ज—क्त तस्य नः जस्य गः । १संलग्ने मेदि० । "मध्येन सा वेदि विलग्नमध्या" कुमा० २मध्यभागे हेमच० । ३कटौ अमरः । ४उदितमेषादि राशौ च न० "गोचरे वा विलग्ने वा" इति ज्योतिषम् ।

**विलम्ब** पु० वि+लबि-घञ् । विलम्बने अयौगपद्ये प्रतीक्षणीय काले १प्रभवादिषु "तस्करैः पार्थिवैश्चैव अभिभूतमिदं जगत् । अर्घो भवति सामान्यो विलम्बे तु भयं महत्" ज्यो० त० उक्तलक्षणे वर्षभेदे ।

**विलम्बित** त्रि० वि+लबि—क्त । १दीर्घे, २मन्दे च विलम्बन्ते कण्ठकरचरणादयः प्रत्येकं प्रदर्शनाय करविशेषज्ञानाय वा यत्र आधारे क्त । मध्यकालेन परिच्छेदे ३नृत्ये ४गीते च ।५विलम्बयुते त्रि० । तत्र भेदपाठे कालभेदे विलम्बवृत्तिः याज्ञवल्क्योक्ता यथा "द्रुतामभ्यसने वृत्तिं प्रयोगार्थे तु मध्यमाम् । शिष्याणामुपदेशार्थे विलम्बितां समाचरेत्" ।

**विलम्भ** पु० वि+लभ-घञ् नुम् । अतिदाने अमरः ।

**विलय** पु० वि+ली—अच् । १प्रलये शब्दर० २नाशे च ।

**विलला** स्त्री० वि+लल-अच् । श्वेतवचायाम् रत्नमा० ।

**विलाप** पु० वि+लप-घञ् । परिदेवनोक्तौ अमरः ।

**विलास** पु० वि+लस-घञ् । "तत्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु" इत्युक्ते १स्त्रीणां शृङ्गारचेष्टाविशेषे २दीप्तौ च । "गतिस्थानासनादीनां मुखनेत्रादिकर्मणाम् । विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना" उक्ते स्त्रीणां ३सात्त्विकभावभेदे सा०द० । "यद्रूपं तदभेदेन स्वरूपेण विराजते । आकल्पादिभिरन्यादृक् स तदैकात्मरूपकः । स विलासः स्वांश इति धत्ते भेदद्वयं पुनः । स्वरूपमन्याकारं यत्तस्य भाति विलासतः । प्रायेणात्मसमं शक्त्या स विलासो निगद्यते" ४भागवतामृतोक्ते पदार्थे

**विलासिका** स्त्री उपरूपकरूपे नाटिकाभेदे "शृङ्गारबहुलैकाङ्का दशलास्याङ्गसंयुता । विदूषकविटाभ्याञ्च पीठमर्देन भूषिता । हीना गर्भविमर्शाभ्यां सन्धिभ्यां हीननायका । स्वल्पवृत्ता सुनेपथ्या विख्याता सा विलासिका" सा० द० ६प० ।

**विलासिनी** स्त्री० विलासोऽस्त्यस्याः भूम्ना इनि ङीप् । १नार्य्यां राजनि० । २वेश्यायां धरणिः । ३भोगवति त्रि० ।४सर्पे ५अग्नौ ६वह्नौ च पु० मेदि० ७चन्द्रे ८स्मरे, ९महादेवे पु० शब्दर० । [२विशिष्टे ३नष्टे च ।

**विलीन** त्रि० वि-ली-क्त । १प्राप्तद्रवीभावे घृतादौ, अमरः ।

**विलेपन** न० विलिप्यतेऽनेन करणे ल्युट् । गात्रानुलेपनद्रव्ये १पिष्टे २घृष्टे वा चन्दनकुङ्कुमादौ । कर्मणि ल्युट् ङीप् । ३यवाग्वां ४सुवेशायां स्त्रियाञ्च स्त्री० मेदि० ।

**विलेप्य** पु० वि+लिप—यत् । १यवाग्वाम् शब्दर० । २विलेपनीये त्रि० ।

**विलोचन** न० वि+लुच—करणे ल्युट् । १नेत्रे जटा० । भावे ल्युट् । २दर्शने । [डिते त्रि० ।

**विलोडित** न० वि+लोड—क्त । १तक्रे राजनि० । २आलो-

**विलोम** त्रि० विगतं लोम यत्र अच्समा० । १विपरीते हेमच० २अरघट्टे न० ३सर्पे ४कुक्कुरे पुंस्त्री० स्त्रियां ङीप् ५वरुणे च पु० मेदि० । ६व्यस्तत्रैराशिकफलज्ञापके क्रियाभेदे "व्यस्तविधिर्विलोमे" लीला० । ७व्युत्क्रमान्विते यथा अकारादिहकारान्तवर्णानां व्युत्क्रमेण हकाराद्यकारान्ततया जपः । सप्तशतीप्रयोगभेदे मार्कण्डेय उवाचेत्यादिकस्य सावर्णिर्भविता मनुरित्यन्तस्य मालामन्त्रस्य व्युत्क्रमेण पाठः ।

**विलोमकर्म्मन्** कर्म० । विपरीतकर्मणि "छेदं गुणं गुणं छेदं वर्गं मूलं पदं कृतिम् । ऋणं स्वं स्वमृणं कुर्य्यात् दृश्ये राशिप्रसिद्धये" लीला० उक्ते व्यक्तराशेर्मानज्ञानार्थे क्रियाभेदे ।

**विलोमजिह्व** पुंस्त्री० विलोमा विपरीता जिह्वा यस्य । गजे स्त्रियां ङीप् । तस्य तथात्वकथा भा०आनु०८५अ० यथा "इत्युक्त्वा तांस्ततो देवाः पुनरेव महीमिमाम् । परीयुर्ज्वलनस्यार्थे न चाविन्दन् हुताशनम् । अथ तान् द्विरदः कश्चित् सुरेन्द्रद्विरदोपमः । अश्वत्थस्थोऽग्निरित्येवमाह देवान् भृगूद्वह ! । शशाप ज्वलनः सर्वान् द्विरदान् क्रोधमूर्च्छितः । प्रतीपा भवतां जिह्वा भवितेति भृगूद्वह !" ।

**विलोमवर्ण** पु० विलोमजः स्वल्पवृत्ततया व्युत्क्रमजो वर्णः । प्रतिलोमजाते उत्तमस्त्रियामधमवर्णेन जनिते

षष्ठ्योर्थे वर्षे। [गौरा० ङीष्। आमलक्याम् मेदि०।

**विलोमी** स्त्री विशिष्टं लोम केशो यस्याः ५ब० अच्समा०

**विलोल** त्रि० वि+लुल–अच्। १चञ्चले २विशेषलटणे च।

**विवर** न० वि+वृ–अच्। १छिद्रे अमरः २दोषे च मेदि०।

**विवरण** न० वि+वृ–ल्युट्। १व्याख्याने हेमा० व्याख्यान-ग्रन्थव्याख्याने २ग्रन्थभेदे च। मा० भा० टीकापञ्चपादिकोपरि विवरणम्। पातञ्जलभाष्योपरि वाचस्पत्य विवरणम्। कैयटोपरि नागेशकृत विवरणमित्यादि।

**विवरनालिका** स्त्री विवरयुक्तं नालमस्त्यस्याः ठन्। वेणौ (बाँश) त्रिका०। [२मलिने च।

**विवर्ण** त्रि० विरुद्धो वर्णोऽस्य। १अधमे २नीचे च अमरः

**विवर्त्त** पु० वि+वृत–घञ्। १नर्त्ते २समुदाये ३अपवर्त्तने वेदान्तोक्ते कारणात् विषमसत्ताकतया उत्पद्यमाने ४कार्ये च। यथा रज्ज्वात् रजतम् ब्रह्मणो जगत्। वेदान्तिभिः विवर्त्तवाद एवाश्रितः। न परिणामवादः।

**विवश** त्रि० विगतो वशः आयत्तता यस्य। १अस्वतन्त्रे २व्याकुले ३अरिष्टदुष्टबुद्धौ मेदि०।

**विवस्वत्** पु० वि+वस+क्विप् अस्त्यर्थे मतुप् मस्य वः। १सूर्ये २अर्कवृक्षे अमरः। ३अरुणे शब्दर०। ४देवे च मेदि०।

**विवाक** पु० वि+वच–संज्ञायां कर्त्तरि घञ्। विवेचके प्राड्विवाकशब्दे पु० दृश्यम्।

**विवाद** पु० विरुद्धो वादः। "ऋणादिदानकलहे द्वयोर्बहुतरस्य वा। विवादो व्यवहारश्च" इत्युक्तलक्षणे व्यवहारे व्यवहारशब्दे दृश्यम्। २कलहे च।

**विवाह** पु० वि+वह–घञ्। दारपरिग्रहे तज्जनके व्यापारे च। उद्वाहशब्दे उपयमशब्दे च दृश्यम्। "भार्यात्वसम्पादकग्रहणं विवाहः" इति उद्वा० रघु०। भार्यात्वस्योपलक्षणतया निवेशः। तेन नान्योन्याश्रयः "चरमसंस्कारो विजातीयसंस्कारो वा विवाहः" इत्यन्ये।

**विवाहित** पु० विवाहो जातोऽस्य तार० इतच्। जातविवाहे। [वाह्ये च।

**विवाह्य** त्रि० वि+वह–ण्यत्। १विवाहयोग्ये २विशेषेण

**विविक्त** त्रि० वि+विच–क्त। १निर्जने २पवित्रे अमरः ३असंयुक्ते च। ४कर्त्तरि–क्त। ४विवेकिनि त्रि० मेदि० ५दुर्भगायां स्त्रियां स्त्री त्रिका०।

**विविध** त्रि० विभिन्ना विधा यस्य। नानाप्रकारे।

**विवीत** पु० विशिष्टं वीतं गवादिप्रचारस्थानं यत्र। प्रचुरतृणघासादियुक्ते देशे। "पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते" याज्ञवल्क्यस्मृतिव्याख्याने मिताक्षराधृत्।

**विवृत** त्रि० वि+वृ–क्त। १विस्तृते मेदि० २व्याख्याते च। ३मुद्गरभेदे स्त्री मेदि०।

**विवृताक्ष** पुंस्त्री० विवृते अक्षिणी यस्य षच्समा०। कुक्कुटे हेमच०। स्त्रियां जातित्वात् षित्त्वाच्च ङीष्।

**विवृति** स्त्री वि+वृ–क्तिन्। १विस्तारे मेदि० २व्याख्याने च। "वाक्यस्य शेषादिष्टतेर्दन्ति" शक्तिवादकसमानम्।

**विवृत्त** त्रि० वि+वृत क्त। १तिर्यक्चलिते २प्रकटिते ३चक्षूरोगभेदे स्त्री भावप्र०। "विवृत्तास्यां सहादाद्यां पक्षोत्क्षरवविमाम्। विवृत्तामिति तां विद्यात् पित्तोत्थ परिमण्डलम्" परितः शोथवतामिति शेषः"।

**विवेक** पु० वि+विच–घञ्। १याथार्थ्येन वस्तुस्वरूपावधारणे २प्रकृतिपुरुषयोर्भेदज्ञाने च जटा०। ३अन्योन्यधर्मव्यावर्त्तनेन वस्तुस्वरूपावधारणे। विवेकभूतत्प्रकारो दृश्यः। ४विचारे ५जलद्रोण्याम् मेदि०। संज्ञायां कर्त्तरि घञ्। ६विचारके च प्राड्विवेकः।

**विवेकिन्** त्रि० वि+विच–घिनुण्। विवेकशीले भेरवबंशे देवसेनपुत्रभेदे पु० कालिपु० ८४अ०।

**विवोढृ** पु० वि+वह–तृच्। १जामातरि २पत्यौ च हेमच०

**विव्वोक** पु० वि+वा–क्त तस्य ओकः स्थानम्। "गर्वाभिमानादिष्टेऽपि विव्वोकोऽनादरक्रिया" इत्युक्तलक्षणे स्त्रीणां शृङ्गारचेष्टाभेदे।

**विश** प्रवेशे तु० पर० सक० अनिट्। विशति अविक्षत्।

अधि+उपवेशने।

अभि+नि+मनसः स्थितिहेतुसंयोगभेदे आत्म०एतदर्थे आधारस्य कर्मता धर्मममभिनिविशते अन्यत्रार्थे न कर्मता। "या या संज्ञा यस्मिन् यस्मिन्नभिनिविशते" भाष्यम्। "क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते" व्या० परिभाषा।

उप+आसनादौ स्थितिभेदे।

नि+स्थितिभेदे आत्म० "निविशते यदि शूकशिखा पदे" नैष०।

निर्+उपभोगे "क्रीड़ारसं निर्विशतीव बाल्ये" कुमा० "निर्वेशो भृतिभोगयोः" अमरः "निर्विष्टविषयस्नेहः" रघु०।

प्र+अभ्यन्तरगमने।

**विश्** पु० विश–क्विप्। १मनुजे २वैश्ये च अमरः।

**विश** न० विश–क। १मृणाले रायमु०। २प्रवेशकर्त्तरि त्रि०।

**विश(ष)(स)कण्ठा** स्त्री विशं(षं)(सं) मृणालमिव कण्ठोऽस्याः। बलाकायां राजनि० समध्यः समध्योऽप्यत्र।

**विशङ्कट** त्रि० वि+शङ्कटच्। विशाले अमरः।

**विशद्** पु० वि+शद-अच् । १शुभ्रवर्णे २तद्वति त्रि० अमरः । ३विमले हेम० । ४व्यक्ते च त्रि० मेदि० । [मीमांसा ।

**विशय** पु० वि+शी-अच् । संशये "विषयो विशयश्चैवेति"

**विशर** पु० वि+शॄ-अप् । १वधे अमरः । प्रादि०व० । २विगतबाणे त्रि० ।

**विशल्यकृत्** पु० विशल्यं शस्त्रप्रहारवेदनानिवृत्तिं करोति कृ-क्विप् । (ह्रापरमाली) १वृक्षे रत्नमा० । २विशल्यकारके त्रि० ।

**विशल्यकरणी** स्त्री विशल्यं क्रियतेऽनया कृ-ल्युट् ङीप् । ओषधिभेदे "पूर्वं तु कथिता याऽसौ वीर ! जाम्बवता तव । दक्षिणे शिखरे जातां महौषधिमिहानय । विशल्यकरणीं नाम्ना सावर्ण्यकरणीं तथा । संजीवकरणीं वीर ! सन्धानीञ्च महौषधिम्" रामा० लङ्का० १०२स० ।

**विशल्या** स्त्री विगतं शल्यं शस्त्रप्रहारवेदना यस्याः ५ब० । १अग्निशिखावृक्षे २दन्तीवृक्षे ३गुडूच्याम् अमरः ४त्रिपुटायाम् ५अजमोदायाञ्च राजनि० ।

**विशसन** न० वि+शस-हिंसने ल्युट् । १मारणे अमरः । करणे ल्युट् । २खड्गे पु० त्रिका० "असिर्विशसनः खड्गः" खगडपूजामन्त्रः ।

**विशस्त** त्रि० वि+शस-अविनये न इट् अन्यत्र इट् । धृष्टे सि० कौ० । इटि विशसित । मारिते त्रि० ।

**विशस्तृ** पु० वि+शस-तृच् न इट् । चण्डाले संक्षिप्त० ।

**विशाकर** पु० विशाकः विगतशाकः सन् राजते राज-बा० ड । भद्रचूडे (बड़ाविज) शब्दच० । तस्य शाकशून्यत्वात् तथात्वम् ।

**विशाख** पु० विशिष्टा शाखाऽस्य । १कार्त्तिकेये २धन्विनां वितस्त्यन्तरालपादावस्थाने अमरः । ३पुनर्नवायां राजनि० ४याचके च मेदि० । ५स्कन्दांशजाते देवभेदे तन्नामनिरुक्तिः भा०व०२२६अ० उक्ता यथा "वज्रप्रहारात् स्कन्दस्य संजातः पुरुषोऽपरः । युवा काञ्चनसन्नाहः शक्तिधृग् दिव्यकुण्डलः । यद्वज्रवेशनाज्जातो विशाखस्तेन कीर्त्तितः" । ६स्कन्दानुजभ्रातरि "अग्नेः पुत्रः कुमारस्तु श्रीमान् शरवनालयः । तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजः" भा० आ० ६६अ० । ७शिवे भा०आ० १७अ० ।

**विशाखज** पु० विशिष्टा शाखा यस्य तथा सन् जायते जन-ड । नारङ्गे शब्दच० [शब्दमालोक्ते धन्विनामवस्थानभेदे ।

**विशाखल** न० "विशाखान्तरविन्यस्ते पादयुग्मे विशाखलम्"

**विशाखा** स्त्री विशिष्टा शाखा प्रकारो यस्याः । १नक्षत्रमालकेऽश्विन्यवधिके षोडशे नक्षत्रे अमरः । "विशाखयोर्मध्यगतः सम्पूर्ण इव चन्द्रमा" रामा० प्रयोगात् तस्य द्विवचनान्तत्वमपि । "नक्षत्रो विशिखायु" भा० अनु० ८ उक्तेर्बहुत्वं नक्षत्रतारकात्वेनेति बोध्यम् । नक्षत्रशब्दे ४९७ पृ०दृश्यम् । २कठिल्लके मेदि० ।

**विशाय** पु० वि+शी-पर्याये अच् । प्रहरिणां पर्यायेण शयने अमरः ।

**विशारण** न० वि+शॄ-स्वार्थे णिच्-ल्युट् । मारणे हेमच० ।

**विशारद** पु० विशालं ददाति दा-क लस्य रः । १बकुलवृक्षे २लुद्दुरालभायां स्त्री राजनि० । ३पण्डिते पु० ४प्रगल्भे त्रि० अमरः ५श्रेष्ठे च त्रि० अजय० ।

**विशाल** त्रि० वि+शालच् । १विस्तीर्णे २महति च अमरः । ३मृगभेदे ३खगभेदे पुंस्त्री० मेदि० स्त्रियां ङीष् । ४नृपभेदे पु० ५वृक्षभेदे शब्दर० । ६इन्द्रवारुण्याम् स्त्री अमरः । ७माहेन्द्रवारुण्याम् ८उपोदक्यां च स्त्री राजनि० । ९उज्जयिनीनगर्यां स्त्री मेदि० । १०नदीभेदे च स्त्री "विशालां विरजां तथा" सकलनोपवासपर्युदासः विरजाशब्दे दृश्यः । [२इक्ष्वाकौ शब्दर०

**विशालता** स्त्री विशालस्य भावः तल् । १पार्श्वविस्तारे अमरः

**विशालतैलगर्भ** पु० विशालं विस्तीर्णं तैलं गर्भे फलमध्ये यस्य । अङ्कोटवृक्षे राजनि० । [अमरः ।

**विशालत्वच्** पु० विशाला त्वक् यस्य । सप्तच्छदवृक्षे ।

**विशालपत्र** पु० विशालं पत्रमस्य । १कालाली, २श्रीतालवृक्षे च राजनि० ।

**विशालाक्ष** पु० विशाले अक्षिणी यस्य षच्समा० । १महादेवे, २गरुडे, ३विष्णौ च ४वृहच्चक्षुषि, त्रि० मेदि० । ५पार्वत्यां ६नागदन्त्यां च स्त्री राजनि० ङीष् । ७वरस्त्रियां स्त्री विश्वः । ८योगिनीभेदे स्त्री । [राजनि० ।

**विशाली** स्त्री० वि+शालच् गौरा० ङीष् । अजमोदायाम् ।

**विशिख** पु० विशिष्टा विगता वा शिखा यस्य प्रादि० ब० । १शरवृक्षे राजनि० । २वाणे अमरः । ३तोमरे च मेदि० । ४शिखारहिते त्रि० । ५खनित्रां ६नालिकायाम् ७रथ्यायाञ्च स्त्री० मेदि० ।

**विशिप** न० विश-इपक् । मन्दिरे उणादिको० [युक्ते च ।

**विशिष्ट** त्रि० वि+शिष-क्त । १युक्ते २विलक्षणे ३विशेषण-

**विशिष्टबुद्धि** स्त्री ६त० । विशेषणवतो विशेष्यस्य ज्ञाने यथा घट इत्यादिकं ज्ञानम् अत्र घटत्वस्य विशेषणतया भास-

भानस्य घटे विशिष्ये भानम् एतत्प्रकारकस्य विशेषणज्ञानं तदनुरोधेनैव अयं घट इत्यादिप्रत्यक्षसिद्ध्यर्थं तत्प्रकारकस्य घटत्वज्ञानस्य पूर्वं सत्त्वार्थं घटघटत्वे इति निर्विकल्पकज्ञानमपि भवतीत्यङ्गीकृतं नैयायिकैः।

**विशिष्टवैशिष्ट्यज्ञान** न० ६त०। विशेषणविशिष्टे वैशिष्ट्यस्य संसर्गस्य ज्ञाने यथा रूपवान् घट इत्यादि ज्ञानं तत्र घटत्वविशिष्टे रूपादेः संसर्गस्य भानम्। तच्च द्विविधम् विशेषणोपलक्षितप्रतियोगिकवैशिष्ट्यावगाहि विशेषणविशिष्टप्रतियोगिकवैशिष्ट्यावगाहि च। आद्ये विशेषणज्ञानासंसर्गयोः कारणता द्वितीये तु विशेषणतावच्छेदकप्रकारकविशेषणज्ञानस्य कारणता। यथाकारणं च तयोर्बोधवैलक्षण्यम्। तत्र क्वचित् विशेष्ये यद्विशेषणं तत्रापि विशेषणान्तरमिति रीत्या ज्ञानं जायते यथा दण्डवान् पुरुष इति ज्ञानम् अत्र ज्ञाने पुरुषांशे दण्डो दण्डांशे दण्डत्वं विशेषणतया भासते। तत्र विशेष्योपस्थितिः प्रयोजिका। क्वचिदेकत्र द्वयमिति रीत्या बोधः। यथा दण्डवान् पुरुष इति ज्ञानम् अत्र च ज्ञाने एकस्यां व्यक्तौ पुरुषे पुरुषत्वं दण्डश्चेत्युभयं विशेषणतया भासते नतु विशेषणविशेष्यतावच्छेदकभावेन। क्वचित् विशिष्टवैशिष्ट्यावगाहि ज्ञानं भवति यथा दण्डवान् पुरुष इति ज्ञानमत्र च ज्ञाने विशेषणतावच्छेदकप्रकारकं विशेषणज्ञानं कारणम्। तत्र दण्डरूपविशेषणावच्छिन्नप्रतियोगिकवैशिष्ट्यरूपः संसर्गः पुरुषांशे संसर्गतया भासते। अतएव विशेषणविशिष्टसंसर्गावगाहि तदिति उपलक्षितज्ञानात् विशेषः। क्वचिच्च विशिष्टज्ञानं यथा अयं दण्डीति ज्ञानम् अत्र च ज्ञाने इदमर्थे विशेष्ये दण्डात्मकविशेषणप्रतियोगिकः संसर्गः संसर्गतया भासते उपलक्षणे तु न तत्प्रतियोगिकतया संसर्गस्य भानमिति भेदः। विशिष्टवैशिष्ट्यशाब्दबोधे त्वयं भेदः व्युत्पत्तिवैचित्र्येण उद्देश्यतावच्छेदकविधेयतावच्छेदकयोः पारतन्त्र्येण परस्परं प्रयोज्यप्रयोजकभावेनान्वयः। यथा धनवान् सुखीत्यत्र धनप्रयोज्यत्वस्य सुखे, सुरापः पततीत्यत्र सुरापानस्य पतने प्रयोज्यत्वस्यान्वयः।

**विशिष्टाद्वैत** न० रामानुजाद्युक्ते प्रकृतिविशिष्टस्य ब्रह्मणोऽद्वयत्वे। रामानुजशब्दे दृश्यम्।

**विशिष्टाभाव** पु० ६त०। विशेषणविशिष्टस्याभावे स च क्वचित् विशेषणाभावप्रयुक्तः क्वचिच्च विशेष्याभावप्रयुक्तः क्वचिदुभयाभावप्रयुक्तः।

**विशीर्ण** त्रि० वि+शॄ-क्त। १शुष्के, २जरावस्थापन्ने।

**विशीर्णपर्ण** पु० विशीर्णं पर्णमस्य। निम्बवृक्षे राजनि०।

**विशुद्ध** त्रि० वि+शुध-क्त। १दोषरहिते, २विशदे च। तन्त्रोक्ते कण्ठस्थे ३चक्रभेदे चक्रशब्दे २८०८पृ० दृश्यम्।

**विशुद्धाद्वैत** न० ६त०। वल्लभाचार्य्यमतप्रसिद्धे दोषरहितस्य ब्रह्मणोऽद्वयत्वे।

**विशुद्धि** स्त्री० वि+शुध-क्तिन्। १शोधने २दोषराहित्ये च।

**विशृङ्खल** त्रि० विगता शृङ्खला पद्धतिर्यस्याः। परिपाटीशून्ये

**विशेष** पु० वि+शिष-घञ्। १प्रभेदे, २प्रकारे, जटा०। ३व्यक्तौ हेमच०। ४तिलके, हारा०। "अन्त्योनित्यद्रव्यवृत्तिर्विशेषः परिकीर्त्तितः" इति भाषा०उक्ते ५पदार्थभेदे "अन्ते अवसाने तिष्ठतीति अन्त्यः यदपेक्षया विशेषो नास्तीत्यर्थः। घटपटादीनां द्व्यणुकपर्य्यन्तानां तत्तदवयवभेदात् परस्परं भेदः। परमाणूनां भेदको विशेष एव स तु स्वत एव व्यावृत्तः तेन तत्र विशेषान्तरापेक्षा नास्तीति" सि०मुक्ता०। अयञ्च नित्यद्रव्ये समवायेन तिष्ठति "तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तितः" भाषायां चकारेण नित्यद्रव्येषु विशेषसम्बन्धस्य समवायताया ग्रहणात्। "द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्" कणा० सू० उद्दिश्य लक्षितं यथा "अन्यत्रान्त्येभ्यो विशेषेभ्यः" सू०। "अन्त्या विशेषा नित्यद्रव्यवृत्तयो येऽभिहितास्तान् वर्जयित्वा सामान्यविशेषाभिधानमित्यर्थः। अन्ते अवसाने भवन्तीत्यन्त्याः यतो न व्यावर्त्तकान्तरमस्तीत्याचार्य्याः उत्पादविनाशयोरन्तेऽवसाने भवन्तीत्यन्त्यानि नित्यद्रव्याणि तेषु भवन्तीत्यन्त्या विशेषाः इति वृत्तिकृतः ते हि विशेषा एव व्यावृत्तबुद्धिहेतवः न तु सामान्यरूपा अपि" उप० सू०। नित्यैकमात्रवृत्तय इति फलितार्थः। "अन्योन्याभावविरोधिसामान्यरहितः समवेतो विशेषः" सर्व०औ०माधवः। ६व्याप्यधर्मे। यथा नीलघटः इत्यादौ घटत्वव्याप्यधर्मः नीलत्वादिविशिष्टघटत्वादिः। ७अर्थालङ्कारभेदे च अलङ्कारशब्दे ४०५ पृ० दृश्यम्।

**विशेषक** पुंन० विशेषयति वि+शिष-णिच्-ण्वुल्। १ललाटकृते तिलके अमरः। २विशेषकर्त्तरि त्रि० मेदि०। "त्रिभिः श्लोकैर्विशेषकम्" इत्युक्ते एकवाक्यतापन्ने ३श्लोकत्रये न०। ४तिलवृक्षे राजनि०।

**विशेषगुण** पु० कर्म०। "बुद्ध्यादिषट्कं रूपादिचतुष्कं

च्छेदभावने। स्वाभाविकद्रवत्वञ्च स्नेहः शब्द एव च" भाषा० उक्तेषु गुणभेदेषु।

**विशेषण** न० विशिष्यतेऽनेन वि+शिष-ल्युट्। भेदकधर्मे गुणक्रियादौ यथा नीलम् उत्पलं चलो गौरित्यादौ गुणक्रियादिर्भेदकधर्मः।

विशेषणञ्च त्रिविधं व्यावर्त्तकं विधेयं हेतुगर्भञ्च। तत्राद्यं नीलो घट इत्यादौ नीलः, द्वितीयं पर्वतो वह्निमान्" अत्र वह्निर्विधेयविशेषणम्। "न्वकारो ह्ययमेव मे यदरयः" इत्यादौ त्वकारो विधेयः। तृतीयं यथा सुरापः पततीत्यादौ सुरापानं हेतुगर्भविशेषणम्। तस्य भावः तत्। विशेषणताप्रकारताख्यविषयताभेदे स्वरूपसम्बन्धविशेषे च स्त्री। स च तत्पदजन्यबोधविषयत्वेन शक्तिविषयत्वरूपः। अभावप्रत्यक्षे सन्निकर्षभेदे च। यथा घटाभाववद् भूतलमित्यादि चाक्षुषप्रत्यक्षे भूतलांशे घटाभावस्य विशेषणता सन्निकर्षः। "विशेषणतया तद्वदभावानां ग्रहो भवेत्" भाषा०। सा च नानाविधा यथोक्तं

"यद्यपि विशेषणता नानाविधा तथाहि भूतलादौ घटाभावः संयुक्तविशेषणतया गृह्यते, संख्यादौ रूपत्वाद्यभाव. संयुक्तसमवेतविशेषणतया, संख्यात्वादौ रूपाद्यभावः संयुक्तसमवेतविशेषणतया, शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया। कत्वादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया। एवं कत्वावच्छिन्नाभावे खत्वाभावादिकं विशेषणविशेषणतया। एवं घटाभावादौ पटाद्यभावः संयुक्तविशेषणविशेषणतया। एवमन्यदप्यूह्यं तथापि विशेषणतात्वरूपेणैकैव सा गण्यते। अन्यथा षोढा सन्निकर्ष इति प्राचां प्रवादो व्याहन्येतेति" सि० मुक्ता०। "प्रत्यक्षं समवायस्य विशेषणतया भवेत्" भाषा० उक्तेः समवायप्रत्यक्षसन्निकर्षभेदे च।

**विशेषणासिद्ध** पु० विशेषणेनासिद्धः। हेत्वाभासभेदे यो हेतुः विशेषणविशिष्टः सन् पक्षे न तिष्ठति तादृशे हेतौ यथा शब्दो नित्यः द्रव्यत्वे सत्यस्पार्शत्वात् इत्यादौ द्रव्यत्वरूपविशेषणस्य शब्दे बाधात् तथात्वम्।

**विशेषविधि** पु० विशेषे विधिः। सामान्यविशेषयोर्मध्ये विशेषगोचरे विधाने यथा ब्राह्मणेभ्यो दधि दीयतां कौण्डिन्याय तक्रमित्यत्र कौण्डिन्यस्य ब्राह्मणविशेषत्वेन तद्विषये दधिदानापवादेन तक्रदानविधिः। "अल्पः स्याद् विषयो यस्य स विशेषविधिर्मतः" व्या०का०। [क्ते च।

**विशेषित** त्रि० वि+शिष-णिच्-क्त। १भेदिते २विशेषणयुक्ते

**विशेषोक्ति** स्त्री अर्थालङ्कारभेदे अलङ्कारशब्दे ४०५ पृ० दृश्यम्।

**विशेष्य** त्रि० विशिष्यते भेद्यते गुणादिभिरसौ वि+शिष-कर्मणि यत्। गुणादिभिर्भेद्ये १व्यवच्छेद्ये पदार्थे २धर्मिणि च। तस्य भावः तल्। विशेष्यता विषयताविशेषे स च तज्ज्ञानीययत्किञ्चित्प्रकारतानिरूपितः संसर्गविषयताभिन्नः विषयताविशेषः इति प्राञ्चः। तत्र समानाधिकरणा प्रकारता विशेष्यता च एकैवेति जगदीशः। तयोर्भिन्नत्वम् अवच्छेद्यावच्छेदकभावश्चेति गदाधरः। यथा घटाभाववद् भूतलमित्यादौ घटनिष्ठप्रकारतानिरूपिता या अभावनिष्ठा विशेष्यता सैव तदवच्छेद्या वा या अभावनिष्ठा प्रकारता तन्निरूपिता भूतलनिष्ठविशेष्यतेति प्राञ्चः। स्वरूपसम्बन्धविशेष इत्यन्ये।

**विशेष्यासिद्ध** पु० स्वरूपासिद्धे हेत्वाभासभेदे। यो हेतुः स्वघटकविशेष्यस्वरूपः पक्षे न तिष्ठति तादृशे हेतौ यथा-शब्दो नित्योऽस्पार्शत्वे सति द्रव्यत्वादित्यादौ अत्र अस्पार्शत्वविशिष्टं द्रव्यत्वं हेतुः तत्र विशेष्यं द्रव्यत्वं शब्देऽसिद्धमिति स्वरूपासिद्धो हेतुः।

**विशोक** पु० विगतः शोकः यस्मात् यस्य वा। १अशोकवृक्षे राजनि०। २शोकरहिते त्रि०। योगशास्त्रोक्ते ३चित्तवृत्तिभेदे स्त्री। "विशोका वा ज्योतिष्मती" पात०सू०। "विशोका विविधविषयवतीति" विवरणम्।

**विशोधनी** स्त्री विशुध्यतेऽनया शुध-ल्युट् ङीप्। १दन्तीवृक्षे राजनि०। भावे ल्युट्। २शोधने न०। वि+शुध-ल्यु। ३शोधनकारके त्रि०। "प्रायश्चित्तं विशोधनम्" स्मृतिः।

**विशोधिन्** त्रि० वि+शुध-णिच्-णिनि। १शोधनकारके २नागदन्त्यां राजनि० स्त्री ङीप्।

**विश्न** पु० विश-दीप्तौ भावे नङ्। दीप्तौ सि०कौ०। [अमरः

**विश्र(श्रा)णन** न० वि+श्रण-णिच्-ल्युट् वा वृद्धिः। दाने

**विश्रब्ध** त्रि० वि+श्रन्भ-क्त। विश्वस्ते "विश्रब्धं परिचुम्ब्यजातपुलका" सा०द०। २शान्ते ३अनुद्धते त्रि० हेमच० ४गाढ़े त्रि० मेदि०। [वृत्तव्यापारस्यावसाने च भरतः।

**विश्र(श्रा)म** पु० वि+श्रम-घञ् वा वृद्धिः। १विरामे प्र-

**विश्रम्भ** पु० वि+श्रन्भ-घञ्। १विश्वासे अमरः। २प्रणये ३केलिकलहे मेदि० ४वधे च विश्वः।

**विश्राव** पु० वि+स्रु-घञ्। १प्रसिद्धौ अमरः २ख्यातौ च।

**विश्रुत** पु० वि+श्रु-क्त। १विख्याते अमरः। २विशेषेण श्रुते च

**विश्लिष्ट** त्रि॰ वि+श्लिष-क्त। १वियुक्ते २शिथिले च।

**विश्लेष** पु॰ वि+श्लिष-घञ्। १वियोगे २शैथिल्ये च मेदि॰।

**विश्व** न॰ विश-व। १जगति संसारे। २तदभिमानिनि जीवे पु॰। व्यस्तस्थूलदेहे प्रवेशात्तस्य तथात्वम् वेदान्तसारे उक्तम्। ३श्राद्धदेवविशेषे पु॰ ब॰ व॰। ४सकले त्रि॰ ३तदर्थेऽस्य सर्वनामता। श्राद्धदेवाश्च दशविधाः गणदेवताभेदाः यथोक्तम् "वसुसत्यौ क्रतुदक्षौ कालकामौ धुरिः कुरुः। पुरूरवा माद्रवाश्च विश्वे देवाः प्रकीर्त्तिताः" दैवशब्दे ३७५७ पृ॰ दशनम्। ५नागरे विश्वः ६दक्षकन्याभेदे विश्वदेवमातरि स्त्री मत्स्यपु॰ ५अ॰। ७अतिविषायां स्त्री अमरः। ८शतावर्य्यां स्त्री राजनि॰ ९विंशपलपरिमाणे स्त्री। "गुञ्जाः पञ्चवतिः स्तोमो दशस्त्र तत्पलं भवेत्। विश्वा विंशत्पलं प्रोक्ता" ज्योतिस्तुती। अयं परिमाणभेदः कंसवणिक्प्रसिद्धः। १०विष्णौ न॰ विष्णुस॰। ११देहे न॰चक्रशब्दे २८०८पृ॰दृश्यम्।

**विश्वकद्रु** पु॰ विश्वकं द्रवति द्रु-डु। १मृगयाकुशलकुक्कुरे अमरः। २शब्दे पु॰ ३खले त्रि॰ मेदि॰।

**विश्वकर्मन्** पु॰ विश्वेषु कर्म व्यापारो यस्य। १सूर्य्ये २देवशिल्पिनि अमरः। ३मुनिभेदे मेदि॰ ४परमेश्वरे च।

**विश्वकृत्** पु॰ विश्वं करोति कृ-क्विप्। १विश्वकर्मणि २परमेश्वरे च

**विश्वकेतु** पु॰ विश्वे केतवोऽस्य। अनिरुद्धे अमरः।

**विश्व(ष्व)क्सेन** विषु(ष्व)ची सेना यस्य। १विष्णौ अमरः २प्रियङ्गुवृक्षे स्त्री ३विष्णोर्निर्माल्यधारके तदीयगणभेदे "निर्माल्यधारी विष्णोस्तु विश्व(ष्व)क्सेनश्चतुर्भुजः" कालिकापु॰ ८२अ॰। ४त्रयोदशमनौ मत्स्यपु॰ ९अ॰। षमध्यपवेष्वर्षेषु पा॰ सम्मतः भरतस्तु षमध्यतामाह तन्मूलं चिन्त्यम्। [च राजनि॰।

**विश्वगन्ध** न॰ विश्वतो गन्धोऽस्य। १बोले गन्धरसे २पलाण्डौ

**विश्वगन्धा** स्त्री विश्वे सकला गन्धा यस्याम्। पृथिव्याम् शब्दच॰। [राजनि॰।

**विश्वग्रन्थि** स्त्री विश्वतो ग्रन्थिर्यस्याः। हंसपदीलतायाम्

**विश्व(ष्व)च्** अव्य॰ विषु विश्वं वा अञ्चति क्विप् पृषो॰ विश्वस्य विषुः ततः सप्तम्याद्यर्थे असि तस्य लुक्। १सर्वत इत्यर्थे। असेरभावे। २सर्वत्रगामिनि त्रि॰ स्त्रियां विषूची भत्वे विषू(शू) च इत्यादि। अद्र्यागमे विष्वद्र्यच् उक्तार्थे। भत्वे विष्वद्रीच इत्यादि। षमध्यतां भरत आह तन्मूलं मृग्यम्।

**विश्वचक्र** न॰ द्वादशे महादानभेदे मत्स्यपु॰ तद्विधिर्यथा "अथातः संप्रवक्ष्यामि महादानमनुत्तमम्। विश्वचक्रमितिख्यातं सर्वपातकनाशनम्। तपनीयस्य शुद्धस्य विश्वचक्रन्तु कारयेत्। श्रेष्ठं पलसहस्रेण तदर्द्धेन तु मध्यमम्। तस्यार्द्धेन कनिष्ठं स्याद्विश्वचक्रमुदाहृतम्। अन्यद्विंशत्पलादूर्द्ध्वमशक्तोऽपि निवेदयेत्। षोड़शारं ततश्चक्रं भ्रमिनेम्यष्टकावृतम्। नाभिपद्मे स्थितं विष्णुं योगारूढं चतुर्भुजम्। शङ्खचक्रे च पार्श्वे तु देव्यष्टकसमावृतम्। द्वितीयावरणे तद्वत् पूर्वतो जलशायिनम्। अत्रिर्भृगुर्वशिष्ठश्च ब्रह्मा काश्यप एव च। मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः। रामो रामश्च रामश्च बुद्धः कल्की च ते दश। तृतीयावरणे गौरी मातृभिर्वसुभिर्युता। चतुर्थे द्वादशादित्या वेदाश्चत्वार एव च। पञ्चमे पञ्च भूतानि रुद्राश्चैकादशैव तु। लोकपालाष्टकं षष्ठे दिङ्मातङ्गास्तथैव च। सप्तमेऽस्त्राणि सर्वाणि मङ्गल्यानि च कारयेत्। अन्तरान्तरतो देवान् विन्यसेदष्टमे पुनः। तुलापुरुषवत् शेषं समन्तात् परिकल्पयेत्। ऋत्विङ्मण्डपसंभारभूषणाच्छादनादिकम्। विश्वचक्रं ततः कुर्य्यात् कृष्णाजिनतिलोपरि। तथाष्टादश धान्यानि रसाश्च लवणादयः। पूर्णकुम्भाष्टकञ्चैव वस्त्राणि विविधानि च। माल्येक्षुफलरत्नानि वितानं चापि कल्पयेत्। ततो मङ्गलशब्देन स्नातः शुक्लाम्बरो गृही। होमाधिवासनान्ते तु गृहीतकुसुमाञ्जलिः। इममुच्चारयेन्मन्त्रं त्रिः कृत्वा तु प्रदक्षिणम्। नमो विश्वमयायेति विश्वचक्रात्मने नमः। परमानन्दरूपी त्वं पाहि नः पापकर्दमात्। तेजोमयमिदं यस्मात् सदा पश्यन्ति योगिनः। हृदि तत्त्रिगुणातीतं विश्वचक्रं नमाम्यहम्। वासुदेवस्थितश्चक्रं चक्रमध्ये च माधवम्। अन्योन्याधाररूपेण प्रणमामि स्थिताविह। विश्वचक्रमिदं यस्मात् सर्वपापहरं परम्। आयुधञ्चाधिवासश्च भवादुद्धर मामितः"।

**विश्वजित्** पु॰ विश्वं जयति जि-क्विप्। १विष्णौ २सर्वस्वदक्षिणे यज्ञभेदे "विश्वजिता यजेत" श्रुतिः। ३तदधिकारेण अश्रुतफलत्वे स्वर्गफलकल्पकन्यायभेदे मीमां॰।

**विश्वदेवा** स्त्री विश्वतो दीव्यति दिव-अच्। १सुलमवेणुकायाम् (गोरक्षचाकुलिया) जटा॰। २नागबलायां ३रक्तपुष्पदण्डोत्पले च रत्नमाला। कर्म॰। ४विश्वाख्यदेवगणे पु॰

**विश्वधारिणी** स्त्री विश्वं धारयति धृ-णिनि। पृथिव्याम्

**विश्वपर्णी** स्त्री विश्वतः पर्णान्यस्याः। भूम्यामलक्यां राजनि॰

**विश्वप्सन्** पु॰ विश्वं प्साति भक्षयति प्सा-कनिन्। १सर्वभक्षके वह्नौ

२चन्द्रे हेमच०। ३देवे ४विश्वकर्मणि ५मुनौ संक्षिप्तसा० ६चर्ये शब्दर०।

**विश्वभेषज** न० विश्वेषां भेषजम्। शुण्ठ्याम् अमरः।

**विश्वमटा** स्त्री विश्वस्य मटो यस्याः। अग्निजिह्वाभेदे शब्दमा०

**विश्वम्भर** पु० विश्वं बिभर्त्ति भृ-खच् मुम् च। १इन्द्रे अमरः २विष्णौ च। ३पृथिव्यां स्त्री।

**विश्वरूपक** न० विश्वं रूपमस्य कप्। कृष्णागुरुणि राजनि०

**विश्वरेतस्** पु० विश्वं रेतोरेतोऽन्नं यस्य। चतुर्मुखे ब्रह्मणि हेमच०। [विश्वाके त्रिका०।

**विश्वरोचन** पु० विश्वान् रोचयति रुच-णिच्-ल्यु। नाड़ी-

**विश्ववेदस्** पु० विश्वं वेत्ति विद-असुन्। १इन्द्राद्रौ देवे २सर्वज्ञे च। [(फणिमनसा)२सर्पे पु० शब्दच०।

**विश्वसार** न० विश्वेषां सारम्। १तन्त्रभेदे। संज्ञायां कन्।

**विश्वसृज** पु० विश्वं सृजति सृज-क्विन्। चतुर्मुखे ब्रह्मणि अमरः। कृन्नादौ कुः विश्वसृक् विश्वसृग्भ्यामित्यादि

**विश्वस्त** त्रि० वि+श्वस-क्त। १जातविश्वासे। २विधवायां स्त्रियां स्त्री अमरः। वा इट्। विश्वसित त्रि०जातविश्वासे

**विश्वस्था** स्त्री विश्वतः तिष्ठति स्था-क। शतावर्य्याम् राजनि०

**विश्वाची** स्त्री विश्वमञ्चति अन्च-क्विप्। १अप्सरोभेदे वह्निपु०। २वातरोगभेदे भावप्र० तल्लक्षणादि० तत्रोक्तं यथा "अथ विश्वाचीलक्षणमाह "तलं प्रत्यङ्गुलीनां या कण्डरा बाहुपृष्ठतः। बाह्वोः कर्मक्षयकरी विश्वाची सा निगद्यते"। कण्डरा महास्नायुः तलं हस्त कोर्परमागः तलशब्दोऽत्र पर्यन्तवाचकः यथा भूमितलमिति। तेनायमर्थः बाहुपृष्ठतः बाह्वोः पृष्ठं बाहुपृष्ठमारभ्य तलं प्रति कृतं तलं वाऽङ्गुलीनां अङ्गुलीनां काण्डरास्ताः सन्दूष्य बाह्वोः प्रसारणाकुञ्चनादिकर्मक्षयकरी भवति सा इह वातव्याधिषु विश्वाचीत्युच्यते न स्त्रीरिति दिस्त्वं सम्प्रवपरम्। एकस्मिन्नपि बाहौ विश्वाची भवति" भावप्र०।

**विश्वात्मन्** पु० विश्वमात्मा यस्य। विष्णौ विष्णुस०।

**विश्वधामन्** पु० विश्वं दधाति पालयति धा-मनिन् चित्र पूर्वदीर्घः। देवे त्रिका०।

**विश्वानर** पु० अग्निजनके विप्रभेदे वैश्वानरशब्दे दृश्यम्।

**विश्वामित्र** पु० विश्वं मित्रमस्य पूर्वपददीर्घः। गाधिसुते ऋषिभेदे हरिवं०२८अ०।

**विश्वामित्रप्रिय** पु० ६त०। १नारिकेले शब्दर०२भीरामे च

**विश्वा(श्व)राज्** पु० विश्वेषु राजते राज-क्विप्। १विश्वेषां राजनि। २परमेश्वरे च अस्य झलादावेव रूपमन्यत्र विश्वराजावित्यादि। [भेदे २रात्रौ स्त्री मेदि०।

**विश्वावसु** पु० विश्वेषां वसु यस्मात् पृषो० दीर्घः। १गन्धर्व-

**विश्वास** पु० वि+श्वस-घञ्। इदमित्थमेवेत्याकारे १चित्तवृत्तिभेदे प्रत्यये अमरः। २श्रद्धायाञ्च "नखिनाञ्च नदीनाञ्च शृङ्गिणां शस्त्रपाणिनाम्। स्त्रीषु राजकुलेषु च विश्वासो नैव कर्त्तव्यः" चाणक्यः

**विश्वेदेव** पु० ब०व० कर्म० अलुक्स०। "क्रतुर्दक्षो वसुः सत्यः कामः कालस्तथा धुरिः। रोचनोमाद्रवाश्चैव तथा चान्यः पुरूरवाः। विश्वे देवा भवन्त्येते दश श्राद्धेषु पूजिताः" इत्युक्ते श्राद्धदेवभेदे। २वह्नौ पु० संक्षिप्त०।

**विश्वेश** पु० ६त०। शिवे, विश्वेश्वरादयोऽप्यत्र।

**विश्वौषध** न० विश्वेषु रोगेषु औषधम्। शुण्ठ्याम्। राजनि०

**विष व्याप्तौ** जु० उभ० सक० अनिट्। वेवेष्टि वेविष्टे इरित् अविषत् अविक्षत् त। विष्णुः।

**विष** विप्रयोगे क्र्या० पर० सक० अनिट्। विष्णाति अविक्षत्

**विष** सेचने भ्वा०पर०सक०अनिट्। वेषति अविक्षत्। [र्पतिः।

**विष्** स्त्री विष-क्विप्। १विष्ठायाम् अमरः २कन्यायां च विट्-

**विष** न० विष-क। १जले अमरः २पद्मकेशरे, राजसकुटः। ३गन्धरसे बोले ४वत्सनाभे-विषे च ५गरलमात्रे पुं न० राजनि०। ६कलाचे पु० अमरः। गरलरूपविषस्य नाम लक्षणादिकं भावप्र०उक्तं यथा "विषं तु गरलः क्ष्वेड़स्तस्य भेदानुदाहरे। वत्सनाभः सहारिद्रः सक्तुकश्च प्रदीपनः। सौराष्ट्रिकः शृङ्गिकश्च कालकूटस्तथैव च। हालाहलो ब्रह्मपुत्रो विषभेदा अमी नव"। तत्र वत्सनाभस्य स्वरूपनिरूपणम्। "सिन्दुवारसदृक्पत्रो वत्सनाभ्याकृतिस्तथा। यत्पार्श्वे न तरोर्वृद्धिर्वत्सनाभः स भाषितः"। अथ हारिद्रस्य स्वरूपनिरूपणम् "हरिद्रातुल्यमूलो यो हारिद्रः स उदाहृतः"। अथ सक्तुकस्य स्वरूपम् "यद्ग्रन्थिः सक्तुनेव पूर्णमध्यः स सक्तुकः"। अथ प्रदीपनस्य स्वरूपम् "वर्णतो लोहितो यः स्याद्दीप्तिमान् दहनप्रभः। महादाहकरः पूर्वैः कथितः स प्रदीपनः"। अथ सौराष्ट्रिकस्य स्वरूपम् "सुराष्ट्रविषये यः स्यात् स सौराष्ट्रिक उच्यते"। अथ शृङ्गिकस्य स्वरूपम् "यस्मिन् गोस्तनके बद्धे दुग्धम्भवति लोहितम्। स शृङ्गिक इति प्रोक्तो द्रव्यतत्त्वविशारदैः"। अथ कालकूटस्य स्वरूपम् "देवासुररणे देवैर्हतस्य पृथुमालिनः। दैत्यस्य रुधिराज्जातस्तरुरश्वत्थसन्निभः। निर्यासः कालकूटोऽस्य मुनिभिः परिकी-

र्त्तिताः । सोऽहिच्छत्रे शृङ्गवेरे कोङ्कणे मलये भवेत्" । अथ हालाहलस्य लक्षणम् "गोस्तनाभफलो गुच्छस्तालपत्रच्छदस्तथा । तेजसा यस्य दह्यन्ते समीपस्था द्रुमादयः । असौ हालाहलो ज्ञेयः किष्किन्धायां हिमालये । दक्षिणाब्धितटे देशे कोङ्कणेऽपि च जायते" । अथ ब्रह्मपुत्रस्य लक्षणम् "वर्णतः कपिलो यः स्यात्तथा भवति सारतः । ब्रह्मपुत्रः स विज्ञेयो जायते मलयाचले । ब्राह्मणः पाण्डुरस्तेषु क्षत्रियो लोहितप्रभः । वैश्यः पीतोऽसितः शूद्रो विषः उक्तश्चतुर्विधः । रसायने विषं विप्रं क्षत्रियं देहपुष्टये । वैश्यं कुष्ठविनाशाय शूद्रं दद्यात् वधाय हि" । (एते च स्थावरविषाः) तेषां शोधनविधिः तत्रैव स्थानान्तरे "गोमूत्रे त्रिदिनं स्थाप्य विषं तेन विशुद्ध्यति । रक्तसर्षपतैलाक्तं तथा धार्य्यन्तु वासरे । ये गुणा गरले प्रोक्तास्ते स्युर्हीना विशोधनात् । तस्माद्विषं प्रयोगे तु शोधयित्वा प्रयोजयेत्" । अथ विषस्य गुणाः "विषं प्राणहरं प्रोक्तं व्यवायि च विकाशि च । आग्नेयं वातकफहृत् योगवाहि मदावहम्" । व्यवायि सकलकायगुणव्यापनपूर्वकपाकगमनशीलम् । विकाशि ओजःशोषणपूर्वकसन्धिबन्धशिथिलीकरणशीलम् । आग्नेयम् अधिकाग्न्यंशम् । योगवाहि संसर्गिगुणग्राहकम् । मदावहं तमोगुणप्राधान्येन बुद्धिविध्वंसकम् । "तदेव युक्तियुक्तन्तु प्राणदायि रसायनम् । योगवाहि परं वातश्लेष्मजित् सन्निपातहृत्" । अथोपविषाणां निरूपणम् "अर्कक्षीरं स्नुहीक्षीरं लाङ्गली करवीरकः । गुञ्जाहिफेनो धत्तूरः सप्तोपविषजातयः" । एतेषां शोधनं चिन्त्यं गुणास्तत्र तत्र द्रष्टव्याः" ।

तत्र विषस्य द्वैविध्यमाह "स्थावरं जङ्गमञ्चैव द्विविधं विषमुच्यते । दशाधिष्ठानमाद्यं तु द्वितीयं षोडशाश्रयम्" । स्थावरविषस्य दशाश्रयानाह "मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सारमेव च । निर्यासो धातवः कन्दः स्थावरस्याश्रया दश" । तद्यथा मूलविषं करवीरादि । पत्रविषं विषपत्रिकादि, फलविषं कर्कोटकादि, पुष्पविषं वेत्रादि, त्वक्सारनिर्यासविषाणि करम्भादीनि क्षीरविषं स्नुह्यादि धातुविषं हरितालादि कन्दविषं वत्सनाभसक्तुकादि । जङ्गमविषस्य षोडशाश्रयानाह "दृष्टिनिःश्वासदंष्ट्रा च नखमूत्रमलानि च । शुक्रं लालानखस्पर्शः सदंशं स्वावमर्दितम् । गुदास्थिपित्तशूकाणि दश षट् जङ्गमाश्रयाः" । तद्यथा दृष्टिनिःश्वासविषाः दिव्याः सर्पाः, दंष्ट्राविषाः भौमसर्पाः दंष्ट्रानखविषा व्याघ्रादयः, मूत्रपुरीषविषाः चटकगोधिकादयः शुक्रविषा मूषिकादयः, लालाविषाः उच्चिटिङ्गादयः, लालास्पर्शमूत्रपुरीषार्त्तवशुक्रमुखसन्दंशदंष्ट्रास्पर्शावमर्दितगुदपुरीषविषाश्चित्रशीर्षादयः, अस्थिविषाः सर्पादयः, पित्तविषाः शकुलमत्स्यादयः, शूकविषाः भ्रमरादयः । स्थावरविषाणां सामान्यानां कार्य्याण्याह । तत्र मूलविषस्य कार्य्यमाह "उद्वेष्टनं मूलविषैर्मोहः प्रलपनं तथा" । पत्रविषस्य कार्य्यमाह "जृम्भणं वेपनं श्वासो नृणां पत्रविषैर्भवेत्" । फलविषस्य कार्य्यमाह "मुष्कशोथः फलविषैर्दाहोद्वेगश्च भोजने" । पुष्पविषस्य कार्य्यमाह "भवेत् पुष्पविषैश्छर्द्दिराध्मानं मूर्च्छनं तथा" । त्वक्सारनिर्यासकार्य्याण्याह "त्वक्सारनिर्यासविषैरुपभुक्तैर्भवन्ति हि । आस्यदौर्गन्ध्यपारुष्यशिरोरुक्कफसंश्रयाः" । क्षीरविषकार्य्यमाह "फेनागमः क्षीरविषैर्विड्भेदो गुरुजिह्वता" । धातुविषकार्य्यमाह "हृत्पीडनं धातुविषैर्मूर्च्छा दाहश्च तालुनि । प्रायेण कालघातीनि विषाण्येतानि निर्दिशेत्" । एतानि मूलविषाणि नव कालघातीनि कालान्तरे मारकाणि । कन्दविषस्य कार्य्यमाह । "कन्दजान्युग्रवीर्य्याणि यान्युक्तानि त्रयोदश । सर्वाण्येतानि कुशलैर्ज्ञेयानि दशभिर्गुणैः । स्थावरं जङ्गमं वापि कृत्रिमं चापि यद्विषम् । सद्यो निहन्ति तत् सर्वं गुणैश्च दशभिर्युतम्" । तान् दशगुणानाह "रूक्षमुष्णं तथा तीक्ष्णं सूक्ष्ममाशु व्यवायि च । विकाशि विशदञ्चैव लघ्वपाकि च ते दश" तैर्गुणैर्विषस्य कार्य्यमाह "तद्रौक्ष्यात् कोपयेद्वायुमौष्ण्यात् पित्तं सशोणितम् । तैक्ष्ण्यान्मतिं मोहयति मर्म्मबन्धान् छिनत्ति हि । शरीरावयवान् सौक्ष्म्यात् प्रविशेद्विकरोति च । आशुत्वादाशु तत् प्रोक्तं व्यवायात् प्रकृतिं हरेत् । विकाशित्वात् क्षपयति दोषान् धातून्मलानपि । अतिरिच्यते वैशद्यात् दुश्चिकित्स्यं च लाघवात् । दुर्जरं चाविपाकित्वात् तस्मात् क्लेशयते चिरम्" । विषदिग्धशस्त्रहतस्य लक्षणमाह "सद्यः पाकं याति यस्य क्षतं तत् स्रवेद्रक्तं पच्यते चाप्यभीक्ष्णम् । कृष्णीभूतं क्लिन्नमत्यर्थपूति क्षतान्मांसं शीर्य्यते यस्य चापि । तृष्णातापौ दाहमूर्च्छे च यस्य दिग्धं विद्धं तं मनुष्यं व्यवस्येत् । लिङ्गान्येतान्येव कुर्य्यादमित्रैर्दत्तः स्नेहो वा भक्ते यस्य चापि" । पच्यते चाप्यभीक्ष्णं पुनः पुनः

पाकमेति तापः वहिःस्थितः, दाहोऽभ्यन्तरे। यः कुर्य्या-दित्यत्र यत् कर्तृपदं बोद्धव्यम्। प्रायेण राजादी-नामन्यादौ शत्रवो विषं ददति। तेषां ज्ञानार्थं लक्षण-माह “इङ्गितज्ञो मनुष्याणां वाक्चेष्टामुखवैकृतैः। जानीयाद्विषदातारमेभिर्लिङ्गैश्च बुद्धिमान्। न ददात्यु-त्तरं पृष्टो विवक्षुर्मोहमेति च। अपार्थं बहु सङ्कीर्णं भाषते चापि मूढवत्। अङ्गुलीः स्फोटयेदुर्वीं विलिखेच्च प्रहसेदपि। वेपथुश्चास्य भवति त्रस्तश्चैकैकमीक्षते। विवर्णवक्त्रः श्यामश्च नखैः किञ्चिच्छिनत्ति च। आलभेता-सकृद्दीनः करेण च शिरोरुहान्। निर्यियासुरपद्वारैः वीक्षते च पुनः पुनः। वर्त्तते विपरीतं च विषदाता विचेतनः”। इङ्गितमभिप्रायसूचकम् आकारं मुखवै-कृतं मुखवैवर्ण्यादि एभिर्लिङ्गैर्वक्ष्यमाणैः न ददात्यु-त्तरं पृष्टः स्वीयासत्कर्मजनितव्यामोहात् सङ्कीर्णम् अ-स्फुटं भयजनितपर्वव्यथापनोदायाङ्गुलीः स्फोटयेत् प्रह-सेत्। अहेतावपि श्यामः दग्धसमानवर्णः, आलभेत स्पृशेत् विपरीतं यथा स्यादेवं वर्त्तते। जङ्गमविषाणां सामान्यानां कार्य्यमाह “निद्रां तन्द्रां क्लमं दाहं स-म्पाकं लोमहर्षणम्। शोथं चैवातिसारं च कुरुते जङ्गमं विषम्”। जङ्गमेषु तीक्ष्णतरेषु सर्पानाह “वात-पित्तकफात्मानो भोगिमण्डलिराजिलाः। यथाक्रमं स-माख्याता द्व्यन्तरा द्वन्द्वरूपिणः। फणिनो भोगिनो ज्ञेया संख्यातास्तेऽत्र विंशतिः। मण्डलैर्विविधैश्चित्राः पृथवो मन्दगामिनः। षट् ते मण्डलिनो ज्ञेया ज्व-लनार्कविषाः स्मृताः। स्निग्धा विविधवर्णाभिस्तिर्य्यगू-र्ध्वं च राजिभिः। चित्रिता इव ये भान्ति राजिलास्ते हि तेऽपि षट्”। एते यथाक्रमं वातपित्तकफात्मानः द्व्यन्तराः द्वे अन्तरे भेदौ येषां ते द्व्यन्तराः यथा भो-गिनो मण्डलिन्यां जाताः इत्यादि। भोगिप्रभृति-क्षतदंशदेशलक्षणमाह “दंशो भोगिकृतः कृष्णः सर्व-वातविकारकृत्। पीतो मण्डलिनः शोथो मृदुः पित्त-विकारवान्। राजिलोत्थो भवेद्दंशः स्थिरशोथश्च पि-च्छिलः। पाण्डुः स्निग्धोऽतिसान्द्रासृक्सर्वश्लेष्मविकार-वान्”। देशविशेषे कालविशेषे च दष्टस्यासाध्यत्वमाह “अश्वत्थदेवायतनश्मशानवल्मीकसन्ध्यासु चतुष्पथेषु। याम्ये च पित्र्ये परिवर्जनीया ऋक्षे नरा मर्मसु ये च दष्टाः”। याम्ये भरण्यां पित्र्ये मघायाम् “दर्वी-कराणां विषमाशु हन्ति सर्वाणि चोष्णे द्विगुणीभवन्ति”।

उष्णे उष्णसंयोगे। दर्वीकरलक्षणमाह “रथाङ्गलाङ्ग-लच्छत्रस्वस्तिकाङ्कुशधारिणः। ज्ञेया दर्वीकराः सर्पाः फणिनः शीघ्रगामिनः”। अपरेषु येषु विषमाशु मारकं भवति तानाह “अजीर्णपित्तातपपीड़ितेषु बालेषु वृद्धेषु बुभुक्षितेषु। क्षीणे क्षते मेहिनि कुष्ठजुष्टे रूक्षे बले गर्भवतीषु चापि। शस्त्रक्षते यस्य न रक्तमस्ति राज्यो लताभिश्च न सम्भवन्ति। शीताभिरद्भिश्च न रोमहर्षो विषाभिभूतं परिवर्जयेत्तम्। जिह्मं मुखं यस्य च केश-शातो नासावसादश्च सकण्ठभङ्गः। कृष्णश्च रक्तः श्वय-थुश्च दंशे हन्वोः स्थिरत्वञ्च विवर्जनीयम्”। केशशातः आकर्षणात्, नासावसादः नासायाः नतत्वं कण्ठभङ्गः ग्रीवाधारणाशक्तिः हन्वोः स्थिरत्वं हनुद्वयस्तम्भः। अ-परञ्च “वर्त्तिर्घना यस्य निरेति वक्त्राद्रक्तं स्रवेदूर्द्धमधश्च यस्य। दंष्ट्रानिपातांश्चतुरश्च पश्येद् यस्यापि वैद्यैः परि-वर्जनीयः”। वर्त्तिः रुधिरस्य, यस्य च नासामुखलिङ्गगु-दादिभ्यो रक्तं स्रवेत् “उन्मत्तमत्यर्थमुपद्रुतं वा हीनस्वरं वा-प्यथ वा विवर्णम्। सारिष्टमत्यर्थमवेगिनञ्च जह्यान्नरं तत्र न कर्म कुर्य्यात्”। अत्यर्थमुपद्रुतं वा ज्वरातिसारादिभि-रतिशयेनोपद्रुतं हीनस्वरं वक्तुमक्षमं विवर्णं कृष्ण-वर्णं सारिष्टं नासाभङ्गादियुक्तम्। अवेगिनं वेगो विषवेगः। (लहरि) इति लोके तद्रहितम्। स्थावरं जङ्गमं च विषमेव जीर्णत्वादिभिः कारणैः दूषीविष-संज्ञां लभते तदाह “जीर्णं विषघ्नौषधिदूषितं वा दावाग्निवातातपशोषितं वा। स्वभावतो वा गुणविप्र-हीनं विषं हि दूषीविषतामुपैति”। जीर्णम् अति-पुराणं विषघ्नौषधिदूषितं विषघ्नाभिरोषधीभिर्वीर्य्यहीनीकृतं स्वभावतो वा गुणविप्रहीनं स्वभावादेव दशानां गुणानां मध्ये एकद्वित्र्यादिगुणहीनम्। दूषीविषस्य कार्य्यमाह “वीर्य्याल्पभावान्न निपातयेत् तत् कफान्वितं वर्षगणानुबन्धि। तेनार्दितो भिन्नपुरीषवर्णो विगन्धि-वैरस्ययुतः पिपासी। मूर्च्छां भ्रमं गद्गदवाग्वमिञ्च विचेष्टमानोऽरतिमाप्नुयाद्वा”। न निपातयेत् न मार-यति कफान्वितं कफेन मन्दीकृतौष्ण्यादिगुणं वर्षगणा-नुबन्धि कफेनाग्निमान्द्यादीषत्पाकाच्चिरस्थायि तथा दूषीविषजदद्रुरोगवतां भिन्नपुरीषवर्णश्च भिन्नपुरीषो-त्सृतमलः भिन्नवर्णो विवर्णः। विचेष्टमानः विरुद्धां चेष्टां कुर्वन् मूर्च्छादीन् व्याधीन् लभते। स्थानविशेषस्थिते दूषीविषे लिङ्गविशेषमाह। “आमाशयस्थे कफवात-

रोगी पक्वाशयस्थेऽनिलपित्तरोगी। भवेत् सत्तद्ध्वस्तशिरोऽङ्गरुहट्को विलूनपक्षश्च यथा विहङ्गः"। सत्तद्ध्वस्तशिरोऽङ्गरुहकः सत्तद्ध्वस्ताः शिरोरुहाः केशाः अङ्गरुहः लोमानि यस्य सः एतदपि लिङ्गं पक्वाशयस्थे दूषीविषे बोद्धव्यम् "स्थितं रसादिष्वथ तद्यथोक्तान् करोति धातुप्रभवान् विकारान्"। तत् दूषीविषं यथोक्तान् सुश्रुते व्याधिसमुद्देशीयोक्तान्। दूषीविषस्य प्रकोपसमयमाह "कोपं तु शीतानिलदुर्दिनेषु यात्याशु पूर्वं शृणु तस्य रूपम्"। कुपितस्य दूषीविषस्य पूर्वरूपमाह "निद्रा गुरुत्वञ्च विजृम्भणञ्च विश्लेषहर्षावथ वाङ्गमर्दः"। विश्लेषः गात्रशैथिल्यं हर्षः रोमाञ्चः। रूपमाह "ततः करोत्यन्नमदाविपाकावरोचकं मण्डलकोठजन्म। मांसक्षयं पाणिपदाभिशोषं मूर्च्छां तथा छर्दिमथातिसारम्। दूषीविषं श्वासतृषौ ज्वरांश्च कुर्य्यात् प्रवृद्धिं जठरस्य चापि" अन्नमदः अन्ने भुक्ते पूगफलेनेव मदः। अविपाकः अजरणम्। दूषीविषभेदेन विकारानाह "उन्मादमन्यज्जनयेत्तथान्यदानाहमन्यत् क्षपयेच्च शुक्रम्। गाद्गद्यमन्यज्जनयेच्च कुष्ठं तांस्तान्विकारांश्च बहुप्रकारान्"। अन्यत् दूषीविषं तांस्तान् विकारान् विसर्पविस्फोटादीन्। दूषीविषस्य निरुक्तिमाह "दूषितं देशकालान्नदिवास्वप्नैरभीक्ष्णशः। यस्मात् संदूषयेद्धातूंस्तस्माद्दूषीविषं स्मृतम्"। देशः अनूपादिः कालः दुर्दिनादिः अन्नं कुलत्थतिलमद्यादि धातुदूषकत्वाद्दूषीविषम्। दूषीविषस्य साध्यत्वादिकमाह "साध्यमात्मवतः सद्यो याप्यं संवत्सरोत्थितम्। दूषीविषमसाध्यं स्यात् क्षीणस्याहितसेविनः"। कृत्रिमं विषं द्विविधम् एकं सविषं दूषीविषसंज्ञम् अपरमविषं तदेव गरसंज्ञं तथा च काश्यपसंहितायाम् "संयोगजञ्च द्विविधं द्वितीयं विषमुच्यते। दूषीविषं तु सविषमविषञ्चर उच्यते"। संयोगजं कृत्रिमं विषं द्वितीयं स्वाभाविकं तच्च द्विविधम्। तत्र दूषीविषमभिधाय गरं दर्शयितुमाह "सौभाग्यार्थं स्त्रियः स्वेदरजोनानाङ्गजान् मलान्। शत्रुप्रयुक्तांश्च गरान् प्रयच्छन्त्यन्नमिश्रितान्"। गरकार्य्यमाह "तैः स्यात् पाण्डुः कृशोऽल्पाग्निर्ज्वरश्चास्योपजायते। मर्मप्रधमनाध्मानं हस्तयोः शोथसम्भवः। जठरग्रहणीरोगा यक्ष्मागुल्मक्षयो ज्वरः"। तैः गरैः स्वेदरजःप्रभृतिभिः ज्वरश्चास्योपजायत इति अपाकात्। मर्मप्रधमनं मर्मव्यथा क्षयो धातुक्षयः। लूतानां जन्तुविशेषाणामुत्पत्तिं निरुक्तिञ्चाह "वसिष्ठं नन्दिनीं प्राप्य मुनेः प्रस्वेदबिन्दवः। तेभ्यो जातास्तथा लूता इति ख्यातास्तु षोडश"। अत्र सुश्रुतः "विश्वामित्रो नृपवरः कदाचिदृषिसत्तमम्। वशिष्ठं कोपयामास गत्वाऽऽश्रमपदं किल। कुपितस्य मुनेस्तस्य ललाटात् स्वेदबिन्दवः। अपतद्दर्शनादेव शुष्कस्तार्णोपरिचयः। लूने तृणे महर्षेस्तु धेन्वर्थं सम्भृतेऽपि च। ततो जातास्त्विमे घोरा नानारूपा महाविषाः। तासामष्टौ कष्टसाध्या वर्ज्यास्तावत्य एव हि"। तत्र त्रिमण्डलप्रभृतयोऽष्टौ कष्टसाध्याः सौवर्णिकप्रभृतयोऽष्टावसाध्याः। तासां सामान्यानां दंशलक्षणमाह "ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च। ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः। पिडका विविधाकारा मण्डलानि महान्ति च। शोथा महान्तो मृदवो रक्ताः श्यावाश्चलास्तथा। सामान्यं सर्वलूतानामेतद्दंशस्य लक्षणम्"। दंशकोथः दंशमध्ये पूतिभावः। "दंशमध्ये तु यत्कृष्णं श्यावं वा जालकावृतम्। दग्धाकृति भृशम्पाकं क्लेदशोथज्वरान्वितम्। दूषीविषाभिर्लूताभिस्तद्दष्टमिति निर्दिशेत्"। सौवर्णिकाद्योऽष्टावसाध्याः प्राणहरास्तासां लक्षणमाह "शोथः श्वेता सिता रक्ता पीता च पिडका ज्वरः। प्राणान्तिको भवेद्दाहः श्वासहिक्काशिरोग्रहः"। आखुदूषीविषलक्षणमाह "आदंशाच्छोणितं पाण्डुमण्डलानि रोऽरुचिः। लोमहर्षश्च दाहश्चाप्याखुदूषीविषार्दिते" प्राणहरमूषिकविषकार्य्यमाह "मूर्च्छाङ्गशोथवैवर्ण्यं क्लेदशब्दाश्रुतिज्वराः। शिरोगुरुत्वं लालासृक्छर्दिश्चासाध्यमूषकात्"। अङ्गशोथोऽत्र मूषकाकारो बोद्धव्य इति। तन्त्रान्तरे कृकलासदष्टस्य लक्षणमाह "शोथस्य कार्ष्ण्यमथ वा नानावर्णत्वमेव च। मोहोऽथ वर्च्चसो भेदो दष्टस्य कृकलासकैः"। वृश्चिकविषस्य लक्षणमाह "दहत्यग्निरिवादौ तु भिनत्तीवोर्द्ध्वमाशु च। वृश्चिकस्य विषं याति पश्चात् दंशेऽवतिष्ठते"। असाध्यस्य वृश्चिकदष्टस्य लक्षणमाह "दष्टोऽसाध्यैस्तु हृद्घ्राणरसनोपहतो नरः। मांसैः पतद्भिरत्यर्थं वेदनार्त्तो जहात्यसून्"। असाध्यैर्वृश्चिकैस्तेषामेवानुवृत्तेः हृदादिषु उपहतः हृदादिकार्य्यरहितो भवति अत्यर्थं वेदनार्त्त इत्यन्वयः। कणभदष्टस्य लक्षणमाह "विसर्पः श्वयथुः शूलं ज्वरश्छर्दिरथापि वा। लक्षणं कणभैर्दष्टे दंशश्चैवावशीर्य्यते"। कणभः कीटविशेषः। उच्चिटिङ्गदष्टस्य लक्षणमाह "हृष्टलोमोच्चिटिङ्गेन स्तब्धलिङ्गो-

स्यार्त्तिमान्। दष्टः शीतोदकेनेव सिक्तान्यङ्गानि म-
न्यते"। कृष्णलोमा अधिकतरकृष्णरोमा उच्चिटिङ्ग-
(चीटा) कीटविशेषः। अविषमण्डूकदष्टस्य लक्षणमाह
"एकदंष्ट्रार्दितः शूनः सरुजः पीतकः सतृट्। छर्दि-
निद्रे च दंशात् दष्टो मण्डूकैः सविषैर्भवेत्"। एकदंष्ट्रार्दितः
स्वभावादेकयैव दंष्ट्रया दष्टो भवति। मत्स्यविषस्य कार्य्य-
माह "मत्स्यास्तु सविषाः कुर्युर्दाहं शोथं रुजं तथा"।
जलौकाविषकार्य्यमाह "कण्डूं शोथं ज्वरं मूर्च्छां स-
विषास्तु जलौकसः"। कुर्युरिति शेषः। गृहगोधिका
विषकार्य्यमाह "विदाहं श्वयथुं तोदं प्रस्वेदं गृह-
गोधिकाः"। कुर्युरिति शेषः। शतपदीविषकार्य्यमाह
"दंशे स्वेदं रुजं दाहं कुर्य्याच्छतपदीविषम्" शतपदी (कि-
न्नाई) इति लोके। मशकविषकार्य्यमाह "कण्डूमा-
न्मशकैरीषच्छोथः स्यान्मन्दवेदनः"। असाध्यमशक-
लक्षणमाह "असाध्यकीटसदृशमसाध्यं मशकक्षतम्"।
असाध्यकीटसदृशं असाध्यैः कीटैर्नागादिभिः क्षतं यत्
क्षतं तत् सदृशवेदनम्। मक्षिकादंशलक्षणमाह "सद्यः
संस्राविणी श्यावा दाहमूर्च्छाज्वरान्विता। पिडका
मक्षिका दंशे तासान्तु स्थगिका हरेत्"। तासामित्यादि
तासां कुस्ततीक्ष्णानां षण्णां मक्षिकाणां मध्ये स्थगिका-
नाम्नी शीघ्रं प्राणं हरतीत्यर्थः। व्याघ्रादिविषाणां
कार्य्यमाह "चतुष्पाद्भिर्द्विपाद्भिर्वा नखैर्दन्तैश्च यत् क्षतम्।
शूयते पच्यते तच्च स्रवति ज्वरयत्यपि"। चतुष्पाद्भिः
व्याघ्रादिभिः द्विपाद्भिः वनमनुष्यादिभिः शूयते शूनो
भवति। विषोज्झितस्य लक्षणमाह "प्रसन्नदोषं प्रकृति-
स्थधातुमन्नाभिकाङ्क्षं सममूत्रविट्कम्। प्रसन्नवर्णेन्द्रिय-
चित्तचेष्टं वैद्योऽवगच्छेदविषं मनुष्यम्"। प्रसन्नदोषं
प्रकृतिस्थदोषं शेषं सुगमम्"। [वन्ध्याकर्क्कोट्याम् राजनि०

**विषकण्टकिनी** स्त्री विषयुक्तं कण्टकमस्त्यस्याः इनि।

**विषकण्ठ** पु० विषं कण्ठे यस्य। शिवे। [शब्दच०।

**विषघ्ना** स्त्री विषं हन्ति हन–टक् नि० कुत्वम्। गुडूच्याम्

**विषघातिन्** पु० विषं हन्ति हन–णिनि। शिरीषवृक्षे
शब्दमाला। २विषनाशके त्रि०।

**विषघ्न** पु० विषं हन्ति हन–टक्। १शिरीषवृक्षे शब्दच०। २यवासे
३विभीतके राजनि०। ४चम्पकवृक्षे च जटा०। ५हिलमो-
चिकायां(हेलेञ्चा) स्त्री ङीप्। ६इन्द्रवारुण्याम् ७वनवर्व्व-
रायाम् ८भूम्यामलक्याम् ९रक्तपुनर्नवायाम् १०हरि-
द्रायाम् ११वृश्चिकाल्याम् १२कहलाकन्दे च १३अ-
जमफलायां स्त्री राजनि० ङीप्। १४विषनाशके त्रि०।

**विषजिह्व** पु० विषयुक्ता जिह्वेव पत्रमस्याः। देवताडवृक्षे
रत्नमा०। [शब्दर०। स्त्रियां ङीष्।

**विषज्वर** पुंस्त्री० विषमिव प्राणहन्ता ज्वरो यस्य। १महिषे

**विषण्ड** न० विशेषेण षण्डम्। मृणाले शब्दर०।

**विषतिन्दु** पु० विषयुक्तस्तिन्दुः। १कुपीलौ भावप्र०। २कारस्कर-
वृक्षे राजनि०। [वर्षे पु०। ३तद्वति त्रि० अमरटीका।

**विषद** न० वि+षद–अच्। १पुष्पकासीसे राजनि०। २शुक्ल-

**विषदंष्ट्रा** स्त्री विषयुक्ता दंष्ट्रा। १सर्पदंष्ट्रायाम्। विषस्य
दंष्ट्रेव नाशकत्वात्। २सर्पकङ्कालीलतायां रत्नमा०।

**विषदन्तक** पुंस्त्री० विषं दन्ते यस्य कप्। १सर्पे शब्दच०
स्त्रियां ङीष्। [चकोरखगे हेमच०। स्त्रियां ङीष्।

**विषदर्शनमृत्युक** पुंस्त्री० विषस्य दर्शनेन मृत्युरस्य कप्।

**विषद्रुम** पु० विषयुक्तो द्रुमः। कारस्करवृक्षे राजनि०।

**विषधर** पुंस्त्री० विषं धरति धृ–अच्। १सर्पे अमरः स्त्रियां
ङीष्। "विषधरविषमं वनं भविता" उद्भटः।

**विषधर्म्मन्** पु० विषस्येव धर्मोऽस्य अनिच् समा०। (आलकुशी)
लतायाम् शब्दच०। [वृक्षे हारा०। २विषनाशके त्रि०।

**विषनाशन** पु० विषं नाशयति नश–णिच्–ल्यु। १शिरीष-

**विषनाशिनी** स्त्री विषं नाशयति नाशि–णिनि ङीप्।
सर्पकङ्कालीलतायां शब्दच०।

**विषनुद्** पु० विषं नुदति नुद–क्विप्। श्योनाकवृक्षे शब्दच०।

**विषपुष्प** न० विषमिव नीलं पुष्पमस्य। १नीलपद्मे श-
ब्दमा० २कदनवृक्षे (मनफल) रत्नमा० कप्। मदनवृक्षे
भावप्र०।

**विषम** त्रि० विगतो विरुद्धो वा समः। १असमे २अयुग्मे
(वियोड़) ३उन्नतानते ४दारुणे ५सङ्कटे च "भिन्नचिह्न-
चतुष्पादं विषमं परिकीर्त्तितम्" इत्युक्ते ६पद्यभेदे न०।
"ओजोऽथ युग्मं विषमः समश्च" ज्यो०त०उक्ते ७मेषमिथुना-
द्ययुग्मराशौ पु०। ८तालभेदे पु० "चतुर्विधः परिज्ञेयस्तालः
कङ्कणनामकः। पूर्णः१ खण्डः२ समः३श्चैव विषमः४श्चैव
कथ्यते। न चतुष्कं गणौ पूर्णे१ खण्डे२ बिन्दुद्वयं गुरुः।
यगणस्तु समे३ ज्ञेयस्त्रयट्गणो विषमे भवेत्" सङ्गीत०।
विषमादागतः विषमय, रूप्य, विषमरूप्य च, विषमीय
विषमादायते त्रि० सि०कौ०। [च्छदे(छातिम) अमरः।

**विषमच्छद** पु० विषमाणि अयुग्मानि सप्त छदाः यस्य। सप्त-

**विषमज्वर** पु० विषमः उग्रो ज्वरः। ज्वरभेदे। यथोक्तं भावप्र०
"तत्र विषमज्वरस्य निदानकथनपूर्विकां संप्राप्तिमाह

"दोषोऽल्पोऽहितसम्भूतो ज्वरोत्सृष्टस्य वा पुनः। धातुमन्यतमं प्राप्य करोति विषमज्वरम्"। अयमर्थः ज्वरोत्सृष्टस्य ज्वरेण त्यक्तस्य। अहितसम्भूतमाह। दोषः अल्पः, ज्वरेण त्यक्तस्य अल्पोऽपि। विषमत्वे हेतुमाह। अहितमाहारविहारादि तेन सम्भूतः सम्पूर्णोजातः अन्यतमम् धातुं रसरक्तादिकम् प्राप्य दूषयित्वा पुनर्विषमज्वरं करोति ज्वरोत्सृष्टस्य वेति वाशब्देनेति बोध्यते। प्रथमतो विषमज्वरो भवति यत उक्तम्। "आरम्भाद्विषमो यस्तु" इत्यादिकम् रसादिकमाश्रित्य दूषयित्वा कं विषमज्वरं करोति इत्यपेक्षायामाह "सन्ततं रसरक्तस्थः सततं रक्तधातुगः। दोषः कुर्य्यात् ज्वरं पुंसां सोऽन्येद्युः पिशिताश्रितः। मेदोगतस्तृतीयेऽह्नि अस्थिमज्जागतः पुनः। कुर्य्याच्चातुर्थिकं घोरमन्तकं रोगसङ्करम्"। अन्तकमिव मारकत्वात्। अथ विषमज्वरस्य सामान्यलक्षणमाह "यः स्यादनियतात् कालात् शीतोष्णाभ्यां तथैव च। वेगतश्चापि विषमो ज्वरः स विषम स्मृतः"। यः स्यादनियतात् कालादित्यस्यायमर्थः। यथा वातिको ज्वरः सप्त दिनानि, पैत्तिको दश दिनानि, श्लैष्मिको द्वादशदिनानि, दोषाणां प्राबल्ये वातिकश्चतुर्दशदिनानि, पैत्तिको विंशतिदिनानि, श्लैष्मिकश्चतुर्विंशतिदिनानि स्यात्। तथा विषमज्वरो नियतं कालं प्राप्य न स्यादित्यर्थः। शीतोष्णाभ्यां तुल्याभ्यां स्यात्। "वेगतश्चापि विषमः कदाचिदतिवेगवान्"। कदाचिच्चाल्पवेगः। विषमज्वरस्य भेदानाह "सन्ततः सततोऽन्येद्युष्कस्तृतीयकचतुर्थकौ"। तत्र सन्ततस्य लक्षणमाह "सप्ताहं वा दशाहं वा द्वादशाहमथापि वा। सन्तत्या योऽविसर्गी स्यात् सन्ततः स निगद्यते"। विकल्पो वातिकादिभेदात्। सन्तत्या नैरन्तर्य्येण अविसर्गी अपरित्यागी। ननु सन्तानुबन्धित्वं विषमत्वमिति विषमलक्षणम् तदत्र न घटत इति कथमयं विषमेषु पठ्यते"। घटत एवेति न दोषः। यत उक्तं चरकेण "विसर्गं द्वादशे कृत्वा दिवसे व्यक्तलक्षणम्। दुर्लभोपशमः कालं दीर्घमेवानुवर्त्तते" इति। यत्तु खरनादेनोक्तम् "ज्वराः पञ्च तु ये प्रोक्ताः पूर्वं सन्ततकादयः। चत्वारः सन्ततं हित्वा ज्ञेयास्ते विषमज्वराः" इति तच्चिरेण त्यागाभिप्रायेण। सततकलक्षणमाह "अहोरात्रे सततको द्वौ कालावनुवर्त्तते"। द्वौ कालौ अहन्येककालं रात्रावेककालम्। इतो दोषाणामहोरात्रे प्रत्येकं द्वौ द्वौ प्रकोपकालौ। यत उक्तं वाग्भटेन "वयोऽहोरात्रिभुक्तानामन्तमध्यादिकाः क्रमादिति"। अन्येद्युष्कलक्षणमाह। "अन्येद्युष्कस्त्वहोरात्रादेककालं प्रवर्त्तते"। एककालं दोषापेक्षया एककालमपि न द्वितीयं, प्रथमकाले हृदयेन दोषस्थितेः। तृतीयकचतुर्थकयोर्लक्षणमाह। "तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः"। तृतीयेऽह्नि इत्यागमनदिनं गृहीत्वा यत उक्तम् "दिनमेकमतिक्रम्य यो भवेत् स तृतीयकः। दिनद्वयन्त्वतिक्रम्य यः स्यात् स हि चतुर्थकः" इति। अत्राह सुश्रुतः "कफस्थानविभागेन यथासङ्ख्यं करोति हि। सततान्येद्युष्कत्र्याख्यचतुर्थकप्रलेपकान्। अहोरात्रादहोरात्रात् स्थानात् स्थानं प्रपद्यते। दोष आमाशयं प्राप्य करोति विषमज्वरम्"। अयमर्थः आमाशयोरःकण्ठशिरःसन्धयः पञ्च कफस्थानानि एषु तिष्ठन् दोषो यथासङ्ख्यं सततादीन् करोति। तत्र आमाशये स्थितो दोषः सततं करोति द्वौ कालौ, अहोरात्रे कालद्वये दोषप्रकोपात्। हृदये स्थितो दोष आमाशयमागत्य अन्येद्युष्कं करोति एककालं नैकस्यादेकस्मिन्नेवाहोरात्रे दोष आमाशयमागत्य अन्येद्युष्कं करोति। तत्र द्वौ दोषप्रकोपकालौ एकस्मिन् काले हृदये तिष्ठत्यपरस्मिन्नामाशय इति। कण्ठस्थितो दोषोऽहोरात्रात् हृदयमायाति। तृतीये दिने आमाशयमागत्य स्वप्रकोपकाले तृतीयकं ज्वरं करोति एककालं न तु द्वौ कालौ स्वभावात्। एवमेव शिरःस्थितो दोषः अहोरात्रात् कण्ठमायाति ततः पुनरहोरात्रात् हृदयमायाति चतुर्थे दिने आमाशयमागत्य स्वप्रकोपकाले चतुर्थकं ज्वरं करोति एककालमतु द्वौ कालौ स्वभावादेव। ननु दोषस्यागमन क्रमेण निजस्थानगमनक्रमात् कथं तृतीयचतुर्थदिवसयोर्ज्वरागमनम्। उच्यते। दोषो हि प्रकोपसमये वेगवत्तया लाघवात् स्वस्थानन्तु वेगदिन एव याति। यत आह "दोषः प्रकोपकाले हि वेगवत्त्वेन लाघवात्। वेगकाल एवायं स्वस्थानमधिगच्छति"। सन्धिषु स्थितः प्रलेपकं करोति। सन्धयश्चामाशयेऽपि सन्ति तेषु स्थितः प्रलेपकं सर्वदा करोति "निवृत्तः पुनरायाति विषमो नियते दिने। स्वभावः कारणं तत्र मन्यन्ते मुनिपुङ्गवाः"। स्वभावस्य कारणत्वे कफस्थानविभागनिरपेक्षा चतुर्थकादिविपर्य्यया अपि ज्वराः स्वस्वकाले प्रभवन्ति "काधिशेते यथा भूमिं बीजं काले

शरीरहति। अधिशेते तथा धातून् दोषः काले प्रकुप्यति”। सुश्रुतोऽप्याह “स चापि विषमं देहं न कदाचित् प्रमुञ्चति। ग्लानिगौरवकार्श्येभ्यः स यस्मान्न प्रमुच्यते। वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते। धात्वन्तरेषु लीनत्वात् सौक्ष्म्याच्चैवोपलभ्यते”। द्विदोषोल्वणस्य तृतीयकस्य लक्षणमाह “कफपित्तात् त्रिकग्राही पृष्ठाद्वातकफात्मकः। वातपित्ताच्छिरोग्राही त्रिविधः स्यात् तृतीयकः”। त्रिकग्राही वेदनया त्रिकं गृह्णातीत्यर्थः। ननु कफपित्तात् त्रिकग्राही वेदनया त्रिकव्यापी त्रिकं तु वातस्थानं तत्कथं तद्गृह्णीतः पित्तकफौ अन्यस्थानगत्वेन दुर्बलत्वात् दुर्बलौ च कथं वेगं कुरुतः, दोषाणां स्थाननियमः न तु कुपितानां तथा च सुश्रुतः “कुपितानां हि दोषाणां शरीरे परिधावति। यत्र सङ्गः स वैगुण्यात् व्याधिस्तत्रोपजायते”। एवमन्यस्थानगत्वेन चतुर्थको वाच्यः। वातकफात्मकः पृष्ठात् व्यथया पृष्ठं व्याप्य भवतीत्यर्थः। “ल्यब्लोपे कर्मण्यधिकरणे च” पा० इत्यनेन पञ्चमी। कफोल्वणस्य वातोल्वणस्य चतुर्थकस्य लक्षणमाह “चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः। जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरसोऽनिलसम्भवः। मध्यकायस्तु गृह्णाति पूर्वं यस्तु स पित्तजः। विषमज्वर एवान्यश्चतुर्थकविपर्ययः”। श्लैष्मिकः श्लेष्मोल्वणः। तथा अनिलसम्भवो वातोल्वणः सन्ततादीनां त्रिदोषजत्वम्। यत उक्तं चरके “प्रायशः सन्निपातेन पञ्च स्युर्विषमज्वराः” इति। प्रायशोग्रहणादेकदोषजा द्विदोषजा अपि भवन्तीति जेज्जटः। पूर्वं प्रथमं जङ्घाभ्याम् व्यथया जङ्घे व्याप्य पश्चात् सकलं शरीरं व्याप्नोति। एवमुल्वणवातजातः शिरसः पूर्वं व्यथया शिरो व्याप्य सकलं शरीरं व्याप्नोतीत्यर्थः। “विषमज्वर एवान्यश्चातुर्थकविपर्ययः। अस्थिमज्जगतो दोषश्चातुर्थकविपर्ययः। जायते भिषजा ज्ञेयो विषमज्वर एव सः”। अन्यः सन्ततादिपञ्चकादपरः चातुर्थकविपर्ययाख्यो ज्वरः सोऽपि विषमज्वर एव वैद्येन ज्ञातव्यः। स किं धातुस्थ इत्यपेक्षायामाह अस्थीत्यादि। तस्य चातुर्थकविपर्ययस्य लक्षणमाह “स मध्ये ज्वरयत्यह्नो आद्यन्ते च विमुञ्चति”। चतुर्थकविपर्ययः इत्युपलक्षणम् सन्ततादिविपर्ययोऽपि बोद्धव्यः। यथा अहोरात्रे द्वौ कालौ मुञ्चति शेषं सर्वमहोरात्रं तिष्ठतीति सततविपर्ययः। अहोरात्रे एककालं मुञ्चति शेषं सर्वमहोरात्रं तिष्ठति अन्येद्युष्कविपर्ययः मध्ये एकं दिनं ज्वरयति आद्यावन्ते च मुञ्चतीति तृतीयकविपर्ययः। एते विषमज्वरोपलक्षकाः अन्ये रात्रिज्वरादयोऽपि विषमज्वरा बोद्धव्याः यथा “समौ वातकफौ यस्य क्षीणपित्तस्य देहिनः। रात्रौ प्रायो ज्वरस्तस्य दिवा हीनकफस्य तु”। प्रायः बाहुल्येन। सन्ततादीनां शीतपूर्वत्वे दाहपूर्वत्वे च हेतुमाह “त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरम्। तयोः प्रशान्तयोः पित्तमन्ते दाहं करोति च”। शीतं शीतसहितम्। प्रशान्तयोः प्रशान्तवेगयोः अन्तः अभ्यन्तरे। “करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च। तस्मिन् प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः”। अन्ततः हस्तपादादितः। शीतादिदाहादिज्वरयोः त्रिदोषजत्वमाह “द्वावेतौ दाहशीतादिज्वरौ संसर्गजौ स्मृतौ। दाहपूर्वस्तयोः कष्टः सुखसाध्यतमोऽपरः”। संसर्गजौ सान्निपातिकौ। कष्टः कष्टसाध्यः। विषमज्वरविशेषमाह “विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते। तेनार्द्धं शीतलं देहमर्द्धमुष्णं प्रजायते”। अन्नरसे विदग्धे आहारजे रसे दुष्टे, देहे श्लेष्मपित्ते व्यवस्थिते दुष्टे स्थिते। तेन हेतुना शीतलं कफेन उष्णं पित्तेन, अर्द्धत्वं चार्द्धनारीश्वराकारेण नरसिंहाकारेण वा। “काये दुष्टं यदा पित्तं श्लेष्मा चान्ते व्यवस्थितः। तेनोष्णत्वं शरीरस्य शीतत्वं हस्तपादयोः”। अन्ते हस्तपादादौ “काये श्लेष्मा यदा दुष्टः पित्तं चान्ते व्यवस्थितम्। शीतत्वं तेन गात्रे स्यादुष्णत्वं हस्तपादयोः”। विषमज्वरविशेषस्य प्रलेपकस्य लक्षणमाह “प्रलिम्पन्निव गात्राणि घर्मेण गौरवेण च। मन्दज्वरविलेपी च स शीतः स्यात् प्रलेपकः”। गौरवेण उपलक्षितः। मन्दज्वरविलेपी मन्दवेगस्य विलेपः सदा सम्बन्धोऽस्यास्तीति मन्दज्वरविलेपी। अयं विषमज्वरः। तथा च सुश्रुतः “प्रलेपकाख्यो विषमः प्रायशः क्लेशशोषिणाम्। ज्वराश्च विषमाः सर्वे प्रायः क्लेशाय शोषिणाम्”।

**विषमनयन** पु० विषमाणि अयुग्मानि त्रीणि नयनान्यस्य। त्रिनेत्रे शिवे। विषमनेत्रादयोऽप्यत्र।

**विषमर्दनी** स्त्री विषं मृद्यतेऽनया मृद–ल्युट् ङीप्। गन्धनाकुल्याम्। स्वार्थे क। विषमर्दनिका तत्रैव राजनि०।

**विषमस्थ** त्रि० विषमे उन्नतानते सङ्कटे वा तिष्ठति स्थाक। १अपद्ग्रस्ते २सङ्कटस्थे ३उन्नतानतदेशस्थे च।

**विषमशिष्ट** न० विषमं शिष्टं शासनम्। अनुचितशासने।

**विषमायुध** पु० विषमाणि अयुग्मानि पञ्च आयुधानि वाणा यस्य। पञ्चशरे कामे हला०विषमेष्वादयोऽप्यत। [राजनि०

**विषमुष्टि** पु०विषं मुष्णाति मुष–क्तिच्। क्षुपभेदे (विषटोडि)

**विषमृत्यु** पु०विषात् विषदर्शनात् मृत्युरस्य। चकोरखगे जटा०

**विषय** पु० विषिण्वन्ति स्वात्मकतया विषयिणं निरूपयन्ति संबध्नन्ति वा वि+षि–अच्। इन्द्रियगोचरे १शब्दादौ २देशे च अमरः। ३भोगसाधने "विषयो द्व्यणुकादिस्तु ब्रह्माण्डान्त उदाहृतः"। "शिर्स्तुहिनादिर्विषयो मतः"। "प्राणादिस्तु महावायुपर्य्यन्तो विषयो मतः" भाषा०। "अत्र विषयः भोगसाधनं सर्वमेव हि कार्य्यमदृष्टाधीनं यत्र कार्य्यं यददृष्टाधीनं तत् तदुपभोगं साक्षात्परम्परया जनयत्येव न हि बीजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्ति तेन द्व्यणुकादिब्रह्माण्डान्तं सर्वमेव विषयो भवतीत्यर्थः" सि० मुक्ता०। "विषिण्वन्ति विषयिणं बध्नन्ति स्वेन रूपेण निरूपणीयं कुर्वन्तीति विषयाः पृथिव्यादयः सुखादयश्च अस्मदादीनामविषयाश्च तन्मात्रलक्षणाः योगिनामूर्ध्वस्रोतसां च विषयाः" सांख्य०त० कौ०। ४नित्यसेविते अमरः। ५अव्यक्ते ६शुक्रे च अजयपालः। ७कान्तादौ ८उपभोग्ये शब्दरत्ना० इतिवाचके "विषयो हि निःशेषार्थं सिनोतिर्वन्धनार्थकः। विशेषेण सिनोतीति विषयो ऽतो नियामकः" भट्टका०। ९आरोपाश्रये "आरोपान्यालयत्नोक्ता विषयो विषयी तथा। विषयन्त्यःकृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका" काव्यप्र०। १०विचाराङ्गवाक्ये अधिकरणावयवभेदे "विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्। निर्णयश्चेति सिद्धान्तः शास्त्रेऽधिकरणं स्मृतम्" मीमांसा०। [शनि०।

**विषयाज्ञान** न० विषयाणां न ज्ञानं यत्र। तन्द्रायाम् रा-

**विषयिन्** न० विषयोऽस्त्यस्य इनि। १ज्ञाने "विषयी यस्य तस्यैव" भाषा० २इन्द्रिये च। ३विषयासक्ते त्रि०मेदि०। ४राज्ञि ५कामदेवे पु० मेदि०। विषयिणो भावः तल्। विषयिता ज्ञाननिष्ठे विषयनिरूपिते पदार्थभेदे स्वरूपसम्बन्धभेदे च स्त्री। सा च त्रिविधा विशेष्यनिरूपिता विशेष्यिता, विशेषणनिरूपिता प्रकारिता, संसर्गनिरूपिता संसर्गिता इति गदाधरादयः। गदाधरमते विषयितैव प्रतिबध्यकतावच्छेदिका। जगदीशमते विषयतैवेति भेदः।

**विषरूपा** स्त्री विषं रूपयति अतिक्रामति रूप–क। अतिविषायाम् (आतइच) राजनि०। [राजनि०

**विषलता** स्त्री विष-व्याप्तौ अच् कर्म्म०। इन्द्रवारुण्याम्।

**विषविद्या** स्त्री विषाय तन्निरसनाय विद्या। विषघ्नमन्त्रज्ञाने

**विषविधि** पु० दिव्यभेदे दिव्यशब्दे ३५८८ पृ० दृश्यम्।

**विषवैद्य** पु० विषे विषापहारे वैद्यश्चिकित्सकः। विषमन्त्रविद्यायुते अमरः। [राजनि०।

**विषशालूक** पु० विषस्य जलस्य शालूकः। पद्मकन्दे

**विषशृङ्गिन्** पु० विषं शृङ्गमिवास्त्यस्य इनि। शृङ्गरोगे जटा०। [हेमच० स्त्रियां ङीप्।

**विषसूचक** पुंस्त्री० विषं सूचकं हिंसकमस्य। चकोरखगे

**विषसृक्कन्** पु० विषं सृक्केव यस्य। शृङ्गरोगे त्रिका०।

**विषहन्त्री** स्त्री विषं हन्ति हन–तृच् ङीप्। १अपराजितायाम् राजनि०। २विषहारके त्रि०।

**विषहरी** स्त्री विषं हरति हृ–अच् गौरा० ङीष्। १मनसादेव्यां शब्दच०। २विद्याभेदे तन्त्रसा० [ज्ञनि०।

**विषहा** स्त्री विषं हन्ति हन–ड। देवदालीलतायाम् रा-

**विषा** स्त्री विषं मुखेऽस्ति विषं नाशयत्वेनास्त्यस्याः अच्। (आतइच) १अतिविषायाम् अमरः २बुद्धौ च उणादि०

**विषाण** न० विष–आ० कानच्। १पशुशृङ्गे २हस्तिदन्ते ३कुष्ठौषधे मेदि०। ४वराहदन्ते हेमच०५क्षीरकाकोल्याम् ६अजशृङ्ग्यां स्त्री मेदि०गौरा० ङीप्। सा च ७वृश्चिकाल्यां स्त्री राजनि०। इतिन्तिड्यां स्त्री शब्दच०।

**विषाणिका** स्त्री विषाणमस्त्यस्याः ठन्। १मेषशृङ्ग्याम् (गाड़रशिङ्गा) रत्नमा०। २कर्कटशृङ्ग्याम् ३आवर्त्तक्यां ४सातलायां राजनि०।

**विषाणिन्** पु० विषाणमस्त्यस्य इनि। १शृङ्गिणि २हस्तिनि च अमरः। ३शृङ्गाटके ४ऋषभौषधे च पु० राजनि०।

**विषाद** पु०वि+षद–घञ्। १अवसादे हेमच० २जडतायाञ्च।

**विषादनी** स्त्री विषाय तन्निरसनाय अद्यतेऽसौ अद–ल्युट्। पलाशीलतायाम् राजनि०। [२विषहरे त्रि०।

**विषान्तक** पु० विषस्यान्तक इव। १शिवे हेमच० ३त०।

**विषापहा** स्त्री विषमपहन्ति अप+हन–ड। १सुक्कलक्वे राजनि०। २इन्द्रवारुण्यां ३निर्विषायां राजनि०। ४नागदमन्यां भावप्र०। ५अर्कमूलायाञ्च (इशरमूल) ६सर्पकङ्कालिकायां रत्नमा०। [ङीष्।

**विषार** पुंस्त्री० विषमृच्छति ऋ–अण्। सर्पे शब्दच० स्त्रियां

**विषाराति** पु० ६त०। १कृष्णधुस्तूरे राजनि०। २विषनाशके च।

"यस्मात् विश्वमिदं सर्वं तस्य शक्त्या महात्मनः । तस्मा-
देवोच्यते विष्णुर्विशधातोः प्रवेशनात्" इत्युक्तेः विश-प्रवेशे
नु प्रत्यो० इत्यपि बोध्यम् । २वह्नौ ३शुद्धे ४वसुदेवतायां
धरण्याः । ५धर्मशास्त्रकारके मुनिभेदे च "मन्वत्रिवि-
ष्णुहारीते"ति याज्ञ० ६तद्दैवते श्रवणनक्षत्रे ज्यो०त० ।

**विष्णुकन्द** पु० विष्णुप्रियः कन्दः शा०त० । मूलभेदे राजनि०

**विष्णुक्रान्ता** स्त्री ३त० विष्णुस्तद्वर्णः क्रान्तो वा यया । अ-
पराजितायाम् अमरः तस्याः विष्णुतुल्यवर्णत्वात् विष्णु-
पादाक्रान्तत्वाच्च तथात्वम् ।

**विष्णुगुप्त** पु० १चाणक्ये मुनौ अयमेव वात्स्यायनत्वेन
प्रसिद्धत्वेन प्रसिद्धः त्रिका० । ३त० विष्णुना गुप्ते कन्यादौ
२देवादौ ३कन्दभेदे राजनि० ।

**विष्णुतैल** न० वैद्यकप्रसिद्धे तैलभेदे तच्च द्विविधं स्वल्प-
वृहद्भेदात् तत्तैलपाकप्रकारः भैषज्यरत्ना० उक्तो यथा
तत्र स्वल्पविष्णुतैलम् "शालपर्णी पृश्निपर्णी बलागोर-
क्षतण्डुलाः । एरण्डस्य च मूलानि वृहत्योः पूतिकस्य
च । शतावरी सहचरी पचेदेतैः पलोन्मितैः । तैलप्रस्थं
पयोदत्त्वा गव्यं वाऽऽजं चतुर्गुणम् । अस्य तैलस्य पक्वस्य
शृणु वीर्य्यमतः परम् । वातार्त्ता नरनागाश्च पीत्वा
स्युस्तुरगत्वचः । कृत्पार्श्वमूले वाताख्ये गलग्रहे-
ऽर्द्दिते अवे । शर्कराश्मरिपाण्डुत्वकामलार्द्धावभेदके ।
क्षीणेन्द्रियेऽल्पशुक्रे च जराजर्जरिते हितम् । स्त्रीणा-
मप्रजरोगाणां गर्भस्थितिकरं परम् । एतदक्षरं तैलं
विष्णुना परिकीर्त्तितम्" । तण्डुलः गोरक्षतण्डुलः ।
वृहत्योर्वृहतीकण्टकार्य्योः । पूतिकं नाटाकरञ्जः ।
सहचरी झिण्टी । अत्र क्वाथान्तराभावात् क्षीरस्य चतु-
र्गुणं जलं कश्चिद्ददाति । "स्नेहक्षीरमांसरसैः पाको
यत्रेरितः क्वचित् । जलं चतुर्गुणं तत्र वीर्य्याधानार्थ-
मावपेत्" इति परिभाषाबलात् । क्वचिदिति पाठात्
क्वाथान्तररहिते केवलक्षीरादिसहिततैलादिपाके ज्ञातव्यं
न तु सर्वत्र । "एलाचन्दनकुङ्कुमागुरुसरालक्कोल
मांसी शटी श्रीवासक्षदर्य्यान्वितमुरनखत्वचौ श्रीमजोशी-
रकम् । कस्तूरीनखपूतिपत्रजलमुक्सैधोलवङ्गादिकम् ।
मन्त्रद्रव्यमिदं प्रदेयमखिलं श्रीविष्णुतैलादिषु" । अथ
वृहद्विष्णुतैलम् "जलधरमश्वगन्धा जीवकर्षभकौ शटी ।
काकोली क्षीरकाकोली जीवन्ती मधुयष्टिका । मधूरिका
देवदारु पद्मकाष्ठञ्च सैन्धवम् । मांसी चैला त्वचं कुष्ठं रक्त-
चन्दनशैलजम् । मञ्जिष्ठा मृगनाभिश्च श्वेतचन्दनकु-
ङ्कुमम् । पर्णी कुन्दुरु स्थौणेय नखिकश्च नखी तथा ।
एतेषां पालिकैर्भागैस्तैलस्यापि तथाढकम् । शतावरी-
रसतमं दुग्धञ्चापि समं भवेत् । विष्णुतैलवरं श्रेष्ठं
सर्ववातविकारनुत् । ऊर्द्ध्ववाते ह्यधोवाते कक्षविसर्प
एव च । शिरोमध्यगता ये च मन्यास्तम्भे गलग्रहे ।
यस्य शुष्यति चैकाङ्गं गतिर्यस्य च विह्वला । ये वात-
प्रभवा रोगा ये च पित्तसमुद्भवाः । सर्वांस्तान्नाशयत्याशु
सूर्य्यस्तम इवोदितः" ।

**विष्णुदैवत(त्य)** त्रि० विष्णुर्दैवतं(त्यं) यस्य । विष्णुदेवताके
द्रव्यादौ "शृण्वन्तु सर्वदैवत्यं यदनुक्तं द्विजोत्तमाः ! ।
तज्ज्ञेयं विष्णुदैवत्यं सर्वं वा विष्णुदैवतम्" पु० त०
विष्णु० । २श्रवणनक्षत्रे च ।

**विष्णुधर्म** पु० विष्णूपासनायोग्यो धर्मः शाक० । विष्णूपा-
सनोचिते १नियमभेदे उपचारात् तत्प्रतिपादके २ग्रन्थे च

**विष्णुधर्मोत्तर** न० विष्णुधर्म उत्तरः प्रधानः वर्ण्यत्वेन
यस्य । संहिताभेदे ।

**विष्णुपद** न० विष्णोः पदमिव व्यापकत्वात् । १आकाशे अ-
मरः । ६त० । २क्षीरार्णवे मेदि० ३पद्मे च हेमच०
४विष्णोश्चरणे कर्म० । ५विष्णुरूपस्थाने च "तद्विष्णोः
परमं पदम्" ऋ० विष्णुसूक्तम् ।

**विष्णुपदी** स्त्री० विष्णुपदं कारणत्वेनास्त्यस्याः अच् गौरा०
ङीष् । १गङ्गायाम् "निर्गता विष्णुपादाब्जात् तेन
विष्णुपदी स्मृता" ब्रह्मवै० प्र०८अ० । २वृषसिंहवृश्चिक-
कुम्भराशौ रवेः संक्रान्तौ च । "वृषवृश्चिककुम्भेषु सिंहे
विष्णुपदी स्मृता" "पुण्यायां विष्णुपद्याञ्च प्राक्पश्चादपि
षोडश" ज्यो०त० । "अयने कोटिगुणितं लक्षं विष्णुपदीषु
च" ति०त० "तदन्तरेषु संक्रान्तिद्वितयं द्वितयं पुनः ।
नैरन्तर्य्यात् च संक्रान्त्योर्ज्ञेयं विष्णुपदीद्वयम्" सू०सि० ।
"तदन्तरेषु विषुवायनान्तरालेषु । अन्तान्तरालानां चतुः-
स्थाने सद्भावात् बहुवचनम् । संक्रान्तिद्वितयं द्वितयं
पुनाराश्यादिभागे पञ्चाशमाक्रमणं वारद्वयं भवति
तदन्तराले राश्यादिभागौ द्वौ भवत इत्यर्थः । तथा हि
मेषाख्यविषुवकर्काख्यायनयोरन्तराले वृषमिथुनयोरादौ ।
कर्कतुलयोरन्तराले सिंहकन्ययोरादौ । तुलामकरयोर-
न्तराले वृश्चिकधनुषोरादौ । मकरमेषयोरन्तराले कुम्भ-
मीनयोरादौ इति । एवं विषुवानन्तरं संक्रमणद्वयमन-
न्तरमयनं तदनन्तरं संक्रान्तिद्वयं तदनन्तरं विषुवमन-
न्तरं संक्रान्तिद्वयमनन्तरमयनमित्यादि पौनःपुन्येन

ज्ञेयमित्यर्थः। संक्रान्तिद्वयमध्ये प्रथमसंक्रान्तौ विशेषमाह। नैरन्तर्यादिति। निरन्तरतया सम्भूतायाः संक्रान्तेः सकाशाद्विष्णुपदोदयं तदन्तराच्च इत्यर्थः” रघु०

**विष्णुपुराण** न० व्यासप्रणीते महापुराणभेदे तत्प्रतिपाद्यविषयाश्च वृहन्नारदीये ९४ अ० उक्ता यथा

“शृणु वत्स! प्रवक्ष्यामि पुराणं वैष्णवं महत्। त्रयोविंशतिसाहस्रं सर्वपातकनाशनम्। यत्रादिभागे निर्दिष्टाः षडंशाः शक्तृजेन ह। मैत्रेयायादिमे तत्र पुराणस्यावतारिका”। तत्र प्रथमभागस्य प्रथमांशे “आदिकारणसर्गश्च देवादीनाञ्च सम्भवः। समुद्रमथनाख्यानं दक्षादीनां कथाचयः। ध्रुवस्य चरितं चैव पृथोश्चरितमेव च। प्राचेतसं तथाख्यानं प्रह्लादस्य कथानकम्। पृथुराज्याधिकाराख्यः प्रथमोऽंश इतीरितः। पातालनरकाख्यानं सप्तसर्गनिरूपणम्। सूर्य्यादिचारकथनं पृथग्लक्षणसंगतम्। चरितं भरतस्याथ मुक्तिमार्गनिदर्शनम्। निदाघऋतसंवादो द्वितीयोऽंश उदाहृतः”। प्रथमभागस्य तृतीयांशे “मन्वन्तरसमाख्यानं वेदव्यासावतारकम्। नरकोद्धारकं कर्म गदितञ्च ततः परम्। सगरस्यौर्वसंवादे सर्वधर्मनिरूपणम्। श्राद्धकल्पं तथोद्दिष्टं वर्णाश्रमनिबन्धने। सदाचारश्च कथितो मायामोहकथा ततः। तृतीयोऽंशोऽयमुदितः सर्वपापप्रणाशनः”। प्रथमभागस्य चतुर्थांशे “सूर्य्यवंशकथा पुण्या सोमवंशानुकीर्त्तनम्। चतुर्थेऽंशे मुनिश्रेष्ठ! नानाराजकथाचितम्”। प्रथमभागस्य पञ्चमांशे “कृष्णावतारसंप्रश्नो गोकुलीया कथा ततः। पूतनादिवधो बाल्ये कौमारेऽघादिहिंसनम्। कैशोरे कंसहननं माथुरं चरितं तथा। ततस्तु यौवने प्रोक्ता लीला द्वारवतीभवा। सर्वदैत्यवधो यत्र विवाहाश्च पृथग्विधाः। यत्र स्थित्वा जगन्नाथः कृष्णो योगेश्वरेश्वरः। भूभारहरणं चक्रे परस्वहननादिभिः। अष्टावक्रीयमाख्यानं पञ्चमोऽंश इतीरितः”। प्रथमभागस्य षष्ठांशे “कलिजं चरितं प्रोक्तं चातुर्विध्यं लयस्य च। ब्रह्मज्ञानसमुद्देशः खाण्डिक्यस्य निरूपितः। केशिध्वजेन चेत्येषः षष्ठोऽंशः परिकीर्त्तितः”। तस्य द्वितीयभागे “अतःपरन्तु सूतेन शौनकादिभिरादरात्। पृष्टेन चोदिताः शश्वद्विष्णुधर्मोत्तराह्वयाः। नानाधर्मकथाः पुण्या व्रतानि नियमा यमाः। धर्मशास्त्रं चार्थशास्त्रं वेदान्तं ज्योतिषं तथा। वंशाख्यानं प्रकरणात् स्तोत्राणि मनवस्तथा। नानाविद्याश्रयाः प्रोक्ताः सर्वलोकोपकारकाः। एतद्विष्णुपुराणं वै सर्वशास्त्रार्थसंग्रहः”

तत्फलश्रुतिः “वाराहकल्पवृत्तान्तं व्यासेन कथितं त्विह। यो नरः पठते भक्त्या यः शृणोति च सादरम्। तावुभौ विष्णुलोकं हि व्रजेतां भुक्तभोगकौ। तल्लिखित्वा च यो दद्यादाषाढ्यां घृतधेनुना। सहितं विष्णुभक्ताय पुराणार्थविदे द्विज!। स याति वैष्णवं धाम विमानेनार्कवर्चसा। यश्च विष्णुपुराणस्य समनुक्रमणीं द्विज!। कथयेच्छृणुयाद्वापि स पुराणफलं लभेत्”।

**विष्णुमाया** स्त्री ६त०। विष्णोः परमेश्वरस्य माया। १अघटनघटनपटीयस्याम् ईश्वरस्याविद्याशक्तौ २तदधिष्ठात्र्यां दुर्गायाञ्च।

**विष्णुयशस्** पु० कल्किपितरि कल्किपु०।

**विष्णुरथ** पु० विष्णोः रथ इव गतिहेतुत्वात्। १गरुडे अमरः। ६त०। २विष्णोः रथे च।

**विष्णुरात** पु० विष्णुना रातः विष्णुर्वा रायाञ्जीवनमस्मै रा–क्त वा। परीक्षिदाख्ये नृपे स हि गर्भस्थ एव अश्वत्थाम्नास्त्रेण दग्धो मृतः सन् प्रसन्नान्तरस्थविष्णुना पुनर्जीवितः तत्कथा भा० आश्व० ७० अध्याये। तन्नामनिरुक्तिः भाग० १।१२ अ० यथा

“दैवेनाप्रतिघातेन शुक्ले (वंशे) संस्थामुपेयुषि। रातो वोऽनुग्रहार्थाय विष्णुना प्रभविष्णुना। तस्मान्नाम्ना विष्णुरातो लोके ख्यातिं गमिष्यति”।

**विष्णुवल्लभा** स्त्री ६त०। १तुलस्याम् राजनि० २अग्निशिखाख्ये च शब्दच०। ३लक्ष्म्याम्।

**विष्णुवाहन** पु० विष्णुं वाहयति स्थानान्तरं नयति वह–णिच्–ल्यु। गरुड़े हेमच०।

**विष्णुवाह्य** पु० विष्णुर्वाह्योऽस्य। गरुड़े शब्दच०।

**विष्फार** पु० वि+स्फुर–णिच्–अच् अच आत् षत्वम्। धनुर्ज्याकर्षणशब्दे टङ्कारे अमरः।

**विष्य** त्रि० विषेण वध्यः विष+यत्। विषेण वध्ये अमरः।

**विष्वक्सेनप्रिया** स्त्री ६त०। १लक्ष्म्याम् (चामर आलु) २वाराह्याम् अमरः।

**विष्वणन** न० वि+स्वन–ल्युट् षत्वणत्वे। भोजने जटा०।

**विष्वाण** पु० वि+स्वन–घञ् षत्वणत्वे। भोजने हेमच०।

**विस** न० वि+शो–क। मृणाले अमरः। वादित्यमित्यन्ये

**विस** उत्क्षेपे दि० पर० सक० सेट्। विस्यति अवेसीत्।

**विसंवाद** पु० वि+सम्+वद–घञ्। १विप्रलम्भे अमरः। २वचने अन्यथा स्थितस्य वस्तुनोऽन्यथा कथनादौ च।

**विसकुसुम** न० विसयुक्तं कुसुमम्। पद्मे राजनि०।

**विसङ्कट** पु० विशिष्टः सङ्कटो यस्मात्। १सिंहे शब्दच० २इङ्गुदीवृक्षे च राजनि०। [समूहे च त्रिका०।

**विसनाभि** स्त्री विसं नाभिरिव यस्याः। १पद्मिन्याम् २पद्म०

**विसर** पु० वि+सृ–अप्। १समूहे अमरः। २विस्तारे च मेदि०

**विसर्ग** पु० वि+सृज–घञ्। १दाने २त्यागे ३मलत्यागे ४विसर्जनीयाख्ये ५वर्णभेदे ६सूर्यस्यायनभेदे ७मोक्षे हला०। ८प्रलये ९विशेषसृष्टौ शब्दरत्ना० "विश्वसर्गविसर्गादिनवलक्षणलक्षितमिति" श्रीधरः।

**विसर्जन** न० वि+सृज–ल्युट्। १दाने अमरः २त्यागे च। वि+सृज–णिच् ल्युट्। ३प्रेरणे मेदि०।

**वि(वी)सर्प** पु० वि+सृप–घञ् वा दीर्घः। रोगभेदे तल्लक्षणादि भावप्र० उक्तं यथा तत्र विसर्पविषयकनिदानं संख्यां निरुक्तिञ्चाह "लवणाम्लकटूष्णादिसेवनाद्दोषकोपतः। विसर्पः सप्तधा ज्ञेयः सर्वतः परिसर्पणात्" आदिशब्दात् कोलत्थहरितशाकमद्यशाकीप्रभृतीनां ग्रहणम्। सप्तधात्वं विवृणोति "वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः। चत्वारः एते वीसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रयः। आग्नेयो वातपित्ताभ्यां ग्रन्थ्याख्यः कफवातजः। यस्तु कर्दमको घोरः स पित्तकफसम्भवः"। विसर्पदोषदूष्याणि संख्याह "रक्तं लसीकात्वङ्मांसं दूष्यं दोषास्त्रयो मलाः। विसर्पाणां समुत्पत्तौ ज्ञेयाः सप्त धातवः"। त्रयो मलाः वातपित्तकफाः दोषा दूषका इत्यर्थः। अन्यथा दोषाणां दूष्यत्व पुनरुक्तिदोषो लगिष्यते। वातिकस्य लक्षणमाह "तत्र वातात्परीसर्पो वातज्वरसमव्यथः। शोफस्फुरणनिस्तोदभेदायामार्तिहर्षवान्"। परीसर्पो विसर्पः। वातज्वरसमव्यथः शिरोरुङ्निद्राशोषादियुक्तः। भेदः विदारणेनेव व्यथा। आयामः आकर्षणेन व्यथा। पैत्तिकमाह "पित्ताद्द्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः"। द्रुतगतिः शीघ्रप्रसरणशीलः। अथ श्लैष्मिकमाह "कफात्कण्डूयुतः स्निग्धः कफज्वरसमानरुक्"। सान्निपातिकमाह "सन्निपातसमुत्थश्च सर्वरूपसमन्वितः"। वातपैत्तिकमाह "वातपित्ताज्ज्वरच्छर्दिमूर्च्छातीसारतृड्भ्रमैः। अस्थिभेदोऽग्निसदनतमकारोचकैर्युतः। करोति सर्वमङ्गञ्च दीप्ताङ्गारावकीर्णवत्। यं यं देशं विसर्पश्च विसर्पति भवेत् स सः। शान्ताङ्गारासितो नीलो रक्तो वा रूपचीयते। अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद् द्रुतश्च सः। मर्मानुसारी वीसर्पः स्याद्वातोऽतिबलस्ततः। व्यथेताङ्गं हरेत् संज्ञां निद्राञ्च श्वासमीरयेत्। हिक्काञ्च स गतोऽवस्थामीदृशीं लभते नरः। क्वचिच्छर्मारतिग्रस्तो भूमिशय्यासनादिषु। चेष्टमानस्ततः क्लिष्टो मनोदेहश्रमोद्भवाम्। दुःप्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते"। स्फोटैः रूपचीयत इत्यन्वयः। "मर्मानुसारी वृद्धहृदयाद्यनुसारी हरेत् विसर्प इत्यन्वयः हिक्कां हिक्काम् ईरयेत् उपर्युपरि प्रेरयेत्। मनोदेहश्रमोद्भवां निद्रां मरणरूपाम्। अश्नुते प्राप्नोति। वातश्लैष्मिकं ग्रन्थिविसर्पमाह "कफेन रुद्धः पवनो भित्त्वा तं बहुधा कफम्। रक्तं वा वृद्धरक्तस्य त्वक्सिरास्नायुमांसगम्। दूषयित्वा तु दीर्घाणुवृत्तस्थूलखरात्मनाम्। ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुग्ज्वराम्। श्वासकासातिसारास्यशोषहिक्कावमिभ्रमैः। मोहवैवर्ण्यमूर्च्छाङ्गभङ्गाग्निसदनैर्युतः। इत्ययं ग्रन्थिवीसर्पो वातश्लेष्मप्रकोपजः"। कफेन स्वहेतुदुष्टेन पवनोऽपि स्वहेतुदुष्टः। तेनायं वातश्लैष्मिकः। तं कफं बहुधा भित्त्वा रक्तं वा दूषयित्वेत्यन्वयः। त्वगादिकमिति रक्तस्य विशेषणम्। अथ पित्तश्लैष्मिकं कर्दमाख्यं विसर्पमाह "कफपित्तज्वरस्तम्भनिद्रातन्द्राशिरोरुजाः। अङ्गावसादविक्षेपप्रलापारोचकभ्रमाः। मूर्च्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवा। आमोपवेशनं लेपः स्रोतसाञ्च विसर्पति। प्रायेणामाशयं गृह्णन्नेकदेशं न चातिरुक्। पीडकैरवकीर्णोऽतिपीतलोहितपाण्डुरैः। स्निग्धोऽसितो मेचकाभो मलिनः शोफवान् गुरुः। गम्भीरपाकः प्राज्योष्मा स्पृष्टः क्लिन्नोऽवदीर्यते। पङ्कवत्शीर्णमांसश्च स्पष्टस्नायुसिरागणः। शवगन्धी च वीसर्पः कर्दमाख्यमुशन्ति तम्"। स च सर्पति एकदेशमित्यन्वयः। पीडकैः पीडाकारिभिः। अवकीर्णः व्याप्तः। असितः कृष्णः। मेचकः स्निग्धकृष्णः। प्राज्योष्मा प्रचुरोष्मा। स्पृष्टः क्लिन्नोऽवदीर्यते। स्पृष्टः सन्नार्द्रो भवति विदीर्यते। पङ्कवत् कर्दमवर्णत्वक् यत्र सः। शीर्णमांसः गलितमांसः। अत एव स्पष्टस्नायुसिरागणः। सान्निपातिकमाह "सन्निपातसमुत्थस्तु सर्वरूपसमन्वितः"। अथ क्षतजं विसर्पमाह "बाह्यहेतोः क्षतात् क्रुद्धः सरक्तं पित्तमीरयन्। विसर्पं मारुतः कुर्यात् कुलत्थसदृशैश्चितम्। स्फोटैः शोथज्वरुग्दाहाढ्यं श्यावशोणितम्"।

भावाद्धेतोः शस्त्रप्रहारत्वाचदलनस्वाद्यामनुहेतोः। श्याववर्णोषितं तद्वर्णरक्तम्। उपद्रवानाह "ज्वरातिसारौ वमथुस्त्वङ्मांसदरणक्लमाः। अरोचकविपाकौ च विसर्पाणामुपद्रवाः"। साध्यत्वादिकमाह "सिध्यन्ति वातकफपित्तकृता विसर्पाः सर्वात्मकः क्षतकृतश्च न सिद्धिमेति। पित्तात्मकोऽञ्जनवपुश्च भवेदसाध्यः कृच्छ्राश्च मर्मसु भवन्ति हि सर्व एव"।

**विसर्पण** न० वि+सृप-ल्युट्। प्रसारे अमरः।

**विसल** न० विस-कलच्। पल्लवे त्रिका०। [मरः स्त्रियां ङीप्।

**विसार** पुंस्त्री० विसरति सर्पति वि+सृ-ण। मत्स्ये अ-

**विसारिन्** त्रि० वि+सृ-णिनि। १प्रसरणशीले २मत्स्ये पु० ३माषपर्ण्यां स्त्री राजनि० ङीप्।

**विसिनी** स्त्री बिसानां समूहः तद्युक्तो देशो वा इनि। १पद्मसमूहे २पद्मलतायाम् ३मृणाले राजनि०।

**विसूचिका** स्त्री विशिष्टा सूचीव इवार्थे कन्। रोगभेदे तस्य निरुक्तिर्यथा "सूचीभिरिव गात्राणि तुदन् सन्तिष्ठतेऽनिलः। यस्याजीर्णेन सा वैद्यैर्विसूचीति निगद्यते। तस्य निदानमाह "न तां परिमिताहारा लभन्ते विदितागमाः। मूढास्तामजितात्मानो लभन्तेऽशनलोलुपाः। विदितागमा ज्ञातायुर्वेदाः। तस्यालक्षणमाह "मूर्च्छातिसारौ वमथुः पिपासा शूलं भ्रमोद्वेष्टनजृम्भदाहाः। वैवर्ण्यकम्पौ हृदये रुजश्च भवन्ति तस्यां शिरसश्च भेदः"। उद्वेष्टनं करपादयोः, शिरसोभेदः शिरःशूलम्। तस्या उपद्रवानाह "निद्रानाशोऽरतिः कम्पो मूत्राघातो विसंज्ञता। अमी उपद्रवा घोरा विसूच्याः पञ्च दारुणाः। अमी उपद्रवा घोराः अमी निद्रानाशादय उपद्रवाः सर्वेषामेव रोगाणां घोराः भयङ्कराः। विसूच्याः पञ्च दारुणाः विसूच्यास्तु पञ्चापि यदि स्युस्तदा दारुणाः प्राणभयङ्कराः। तस्या अरिष्टमाह "यः श्यावदन्तौष्ठनखोऽल्पसंज्ञश्छर्द्यर्दितोऽभ्यन्तरयातनेत्रः। क्षामस्वरः सर्वविमुक्तसन्धिर्यायान्नरः सोऽपुनरागमाय"। सर्वविमुक्तसन्धिः सर्वे विमुक्ताः शिथिलीभूताः सन्धयो यस्य सः" भावप्र०।

**विसृत** त्रि० वि+सृ-क्त। विस्तीर्णे अमरः। [स्त्रियां ङीप्।

**विसृत्वर** त्रि० वि+सृ-क्वरप्। प्रसरणशीले अमरः।

**विसृमर** त्रि० वि+सृ-क्मरच्। विसरणशीले अमरः।

**विसृष्ट** त्रि० वि+सृज-क्त। १प्रेरिते "रघवे विसृष्टः" इति रघुः। २विक्षिप्ते जटा० ३त्यक्ते च।

**विस्त** पु०न० विस-उत्सर्गे क्त नि० न इट्। १सुवर्णकर्षे २अशीतिरत्तिकापरिमाणे च अमरः।

**विस्तर** पु० वि+स्तॄ-अप्। १शब्दसमूहे अमरः। २वाक्यभङ्गे ३विस्तारे ४प्रणये ५समूहे च। आधारे अप्। ६पीठे शब्दरत्ना०।

**विस्तार** पु० वि+स्तॄ-संज्ञायां कर्त्तरि घञ्। १विटपे भावे घञ्। २विस्तीर्णतायाम् समासवाक्यस्ये ३पदसमूहे च अमरः। ४स्तम्बे मेदि०।

**विस्तीर्ण** त्रि० वि+स्तॄ-क्त। १विपुले २विस्तारयुक्ते ३विशाले च जटा०। [शब्दच०।

**विस्तीर्णपर्ण** न० विस्तीर्णानि पर्णान्यस्य। मानके कन्दभेदे

**विस्तृत** त्रि० वि+स्तृ-क्त। विस्तारयुक्ते।

**विस्फुलिङ्ग** पु० विस्फुरति वि+स्फुर-ड ताहृशं लिङ्गमस्य। १वह्निकणे २विषभेदे च हेमच०।

**विस्फोट** पु० विस्फोटयति वि+स्फुट-णिच्-अच्। (विषफोड़ा) व्रणभेदे स्वार्थे क। स्फोटकभेदे "विस्फोटकभयापहा" शीतलास्तोत्रम्। तद्रोगनिदानादि भावप्र० उक्तं यथा "तत्र विस्फोटस्य विप्रकृष्टं निदानपूर्विकां संप्राप्तिमाह "कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्षारैरजीर्णाध्यशनातपैश्च। तथर्त्तुदोषेण विपर्ययेण कुप्यन्ति दोषाः पवनादयस्तु। त्वचमाश्रित्य ते रक्तं मांसास्थीनि प्रदुष्य च। घोरान् कुर्वन्ति विस्फोटान् सर्वान् ज्वरपुरःसरान्"। ऋतुदोषेण ऋतुहेतुकशीतोष्णादीनामतियोगेन। विपर्ययेण ऋतुचिताहारविहारवैपरीत्येन। त्वचमाश्रित्य त्वचि विस्फोटान् कुर्वन्तीत्यर्थः। ज्वरपुरःसरान् ज्वरपूर्वान्। पूर्वरूपमाह "अग्निदग्धा इव स्फोटाः सज्वरा रक्तपित्तजाः। क्वचित् सर्वत्र वा देहे विस्फोटा इति ते स्मृताः"। रक्तपित्तजाः एतेन सर्वेषु विस्फोटकेषु रक्तपित्तयोः प्रधानकारणत्वम् यथा शूलेषु वातस्य, तथा वातानुगतिरपि बोद्धव्या। तथा च भोजः "यदा रक्तञ्च पित्तञ्च वातेनानुगतं त्वचि। अग्निदग्धनिभान् स्फोटान् कुरुतः सर्वदेहगान्"। अथ वातिकमाह "शिरोरुक्शूलभूयिष्ठं ज्वरतृट्पर्वभेदनम्। सकृष्णवर्णता चेति वातविस्फोटलक्षणम्"। शूलं तोदरूपम्। अथ पैत्तिकमाह "ज्वरदाहरुजापाकस्रावतृष्णासमन्वितम्। पीतलोहितवर्णञ्च पित्तविस्फोटलक्षणम्"। श्लैष्मिकमाह "छर्द्यरोचकजाड्यानि कण्डूकाठिन्यपाण्डुताः। यश्चिमरुक् चिरात् पाकः स विस्फोटः कफात्मकः"। जाड्यम् जड़त्वमङ्गा-

लाम्। कफपैत्तिकमाह “कण्डूर्दाहो ज्वरश्छर्दिरेतैस्तु कफपैत्तिकः”। अथ वातपित्तजमाह “वातपित्तकृतोयस्तु तत्र स्यात्तीव्रवेदना”। वातश्लैष्मिकमाह “कण्डूस्तै-मित्यगुरुभिर्जानीयात् कफवातिकम्”। सान्निपातिकमाह “मध्ये निम्नोन्नतान्तश्च कठिनः स्वल्पपाकवान्। दाहरा-गतृषामोहच्छर्दिमूर्च्छारुजाज्वराः। प्रलापो वेपथुस्तन्द्रा सोऽसाध्यश्च त्रिदोषजः”। मोहो विपरीतं ज्ञानम् मूर्च्छा सर्वथा ज्ञानशून्यता। रक्तजमाह “वेदितव्याश्च रक्तेन पैत्तिकेन च हेतुना। गुञ्जाफलसमा रक्ता रक्ताभा विद्रधिभिः। न ते सिद्धिं समायान्ति सिद्धैर्योग-शतैरपि”। पैत्तिकेन हेतुना पित्तस्य हेतुना कट्वादिना-रक्तपित्तस्य तुल्यत्वात् सिद्धैर्योगशतैरपि ते सिद्धिं न समायान्ति। विस्फोटकभेदानाह “एते चाष्टविधा साध्या मस्तरोऽपि भवेदसम्। तस्मिन्नन्तर्यथा तीव्रा ज्वर युक्ताभिजायते। यस्मिन् बहिर्गते स्वास्थ्यं न वातस्य बहिर्गतिः। तत्र वातिकविस्फोटक्रिया कार्य्या विजानता” तथोपद्रवानाह “तृट्श्वासमांससङ्कोचदाहहिक्कामद-ज्वराः। विसर्पमर्मसंरोधास्तेषामुक्ता उपद्रवाः”। मांस-सङ्कोचः मांसस्य ग्रथितम्। मर्मसंरोधो मर्मव्यथा। तेषां विस्फोटानां केचिदुपद्रवाणां वचनान्तरं पठन्ति“हिक्का-श्वासोऽरुचिस्तृष्णा साङ्गमर्दो हृदिव्यथा। विसर्पज्वरहृ-ल्लासाः विस्फोटानामुपद्रवाः”। साध्यत्वादिकमाह “एक-दोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः। सर्वरूपा-न्वितो घोरो ह्यसाध्यो भूर्य्युपद्रवः”। २कुष्ठभेदे “स्फोटाः श्यावारुणाभासा विस्फोटास्तु तनुत्वचः” भावप्र०।

**विस्मय** पु० वि+स्मि—अच्। १आश्चर्य्ये अमरः। २अद्भुत-स्थायिभावके रसभेदे सा०द०। “विविधेषु पदार्थेषु लोक-सीमातिवर्त्तिषु। विस्फारश्चेतसो यस्तु स विस्मय उदा-हृतः” सा०द०। ३दर्पे मेदि०४सन्देहे शब्दर० [अमरः।

**विस्मयान्वित** त्रि० ३त०। १विस्मययुक्ते २आश्चर्य्ययुक्ते च

**विस्मापन** पु० वि+स्मि—णिच्-अच-आत् वा पुक् च ल्यु। १कुहके २कामदेवे च। ३गन्धर्वपुरे न० मेदि०। भाव-भावे विस्मायनमप्यत्र।

**विस्मित** पु० वि+स्मि—क्त। विस्मययुक्ते।

**विस्मृत** त्रि० वि+स्मृ—क्त। स्मरणाविषये अमरः।

**विस्मृति** स्त्री वि+स्मृ—क्तिन्। स्मरणाभावे।

**विस्र** न० विस—रक्। आमगन्धौ १चिताधूमादौ २अपक्व-मांसगन्धे भरतः। ३कामगन्धे च

**विस्रंस** पु० वि+स्रन्स—भावे—घञ्। १पतने २अवस्रंसे च।

**विस्रगन्धा** स्त्री विस्रो गन्धोऽस्याः। हपुषायाम् राजनि०।

**विस्रगन्धि** पु० विस्रस्येव गन्धोऽस्य इत्‌समा०। हरिताले हेमच०। [च अमरः।

**विस्रम्भ** पु० वि+स्रन्भ—घञ्। १विश्वासे २प्रणये ३परिचये

**विस्रम्भिन्** त्रि० वि+स्रन्भ—णिनि। १विश्वासयुक्ते २प्रण-यिनि च।

**विस्रसा** स्त्री वि+स्रन्स—क। जरायाम् अमरः। [जनि०।

**विस्रा** स्त्री विस्रमामगन्धोऽस्त्यस्याः अच्। हपुषायाम् रा-

**विहग** पुंस्त्री० विहायसा गच्छति गम—ड नि०। १पक्षिणि अमरः स्त्रियां ङीष्। २बाणे ३सूर्य्ये ४चन्द्रे ५मेघे च पु० शब्दरत्ना०। ६ग्रह्यादिपक्षे पु० धरणिः।

**विहङ्गम** पुंस्त्री०विहायसा गच्छति गम—खच् नि०। पक्षिणि अमरः स्त्रियां ङीष्। २भारद्वाजी स्त्री (बाँक) शब्दच०।

**विहङ्गराज** पु० ६त०अच् समा०। गरुडे हला० “विहङ्ग-राजाङ्गरुहैरिवाततैः” माघः। [२हिंसायाञ्च मेदि०।

**विहनन** न०विहन्यते वि+हन—ल्युट्। १तूलपिञ्जुले २विघ्ने

**विहर** पु०वि+हृ—अप्। विहारे ल्युट्। विहरण तत्रैव न०।

**विहसित** न० वि+हस—क्त। मध्यमहास्ये अमरः।

**विहस्त** त्रि० विगतो हस्तो हस्तावलम्बनं यस्य। १व्याकुले अमरः। २पण्डिते मेदि० ३षण्ढे च पु० शब्दच०। प्रा० ६त०। ४हस्तशून्ये त्रि०।

**विहा** अव्य० वि+हा—आ। स्वर्गे सि०कौ०।

**विहापित** न० वि+हा—णिच् क्त। दाने अमरः।

**विहायस्** पु०न० वि+हय—असुन् नि० वृद्धिः। १आकाशे २पक्षिणि पु० अमरः। स्वार्थे अच्। विहायसमप्या-काशे न० खगे पु०। आदन्तमव्ययम् आकाशे हेमच०।

**विहार** पु० वि+हृ-घञ्। क्रीडार्थं पादाभ्यां १गमने अमरः २भ्रमणे ३स्कन्धे ४लीलायां ५बौद्धदेवालये मेदि० ६वैजन्ते च शब्दमा० ७विन्दुरेखकखगे पुंस्त्री०शब्दच०।

**विहित** त्रि० वि+धा—क्त। १कृते विधिना २बोधिते च।

**विहीन** त्रि० वि+हा—क्त। १त्यक्ते २वर्जिते च।

**विहृत** न० वि+हृ—भावे क्त। १विहारे २स्त्रीणां चेष्टाभेदे हेमचन्द्रे “लीलाविलासो विच्छित्तिर्विव्वोकः किलकिञ्चि-तम्। मोट्टायितं कुट्टमितं ललितं विहृतं तथा। विभ्रम-श्चेत्यलङ्काराः स्त्रीणां स्वाभाविका दश” विहृतमित्यत्र पाठः” सा०द० स्त्रीणां सात्त्विकस्वाभाविकालङ्कार-मध्ये विकृतमित्येव पठित्वा “वक्तव्यकालेऽप्य-

यथो श्रीहृषा विकृतं मतमिति" लक्षितम् विक्लवशब्दे ४८८१पृ० दर्शितेन उज्ज्वलमणिवाक्येन लक्षितविक्लवस्य तुल्यार्थत्वात् अतस्तत्र विकृतमित्येव पाठो युक्तः ।

**विहेठन** न० वि+हेठ-भावे ल्युट् । १हिंसायां २मर्दने ३विडम्बने मेदि० ४विबाधायां त्रिका० । [२विलोने च हेमच० ।

**विह्वल** त्रि० वि+ह्वल-अच् । १भयादिना व्याकुले अमरः ।

**वी** कान्तौ जनने च अक० गतौ व्याप्तौ क्षेपे भोजने च सक० अदा० पर० अनिट् । वेति अवेषीत् ।

**वीक** पु० अज-कक् व्यादेशः । १वायौ २खगे च उज्ज्वल० । ३मनसि संक्षिप्तसा० । [२प्रकाशे च अमरः ।

**वी(वि)काश** पु० वि+काश-घञ् वा दीर्घः । १रहसि

**वीक्षण** न० वि+ईक्ष-करणे ल्युट् । १नेत्रे । भावे ल्युट् । २दर्शने ।

**वीक्षा** स्त्री वि+ईक्ष-अच् । १ज्ञानविशेषमात्रम् । भावे अ । २गतिभेदे ३दर्शने ४अद्भुतविभेदे ५सत्त्वौ च शब्दच० ।

**वीचि(ची)** पुंस्त्री० वे-डीचि ङीत्ते वा ङीप् । १तरङ्गे अमरः २अवकाशे ३सुखे मेदि० । ४अल्पे हेमच० । ५किरणे च जटाध० ।

**वीचितरङ्ग** पु० वीचेरिव तरङ्गो यत्र । वीचितो यथा उत्तरोत्तरं तरङ्गजननमेवं स्वजन्यजन्यादिक्रमेण प्रसारिविषये न्यायभेदे न्यायशब्दे ४१६८पृ० दृश्यम् । [हेमच० ।

**वीचिमालिन्** पु० वीचीनां माला अस्त्यस्य इनि । समुद्रे

**वीज** व्यजने अद० चुरा० उभय० सक० सेट् । वीजयति ते अविवीजत्-त । "वीज्यते स हि संसुप्तः" इति कुमारः ।

**वीज** न० वी-क्विप् जन-ड कर्म० । १कारणे २शुक्रे अमरः । ३अङ्कुरे ४तत्त्वावधाने मेदि० । ५मज्जनि राजनि० । ६अव्यक्तगणितभेदे "पूर्वं प्रोक्तं व्यक्तमव्यक्तवीजं प्रायः प्रश्ना नो विना व्यक्तयुक्त्या । ज्ञातुं शक्या मन्दधीभिर्नितान्तं यस्मात्तस्माद् वच्मि वीजक्रियाञ्च । ७मन्त्रभेदे तन्त्रसा० । "वीजन्ते मातरेतत् त्रिपुरहरवधु ! त्रिः कृतं ये जपन्ति" कर्पूरस्तवः । ८धान्यादेः फलादौ च ।

**वीजक** पु० वीजेन कायति कै-क । १मातुलुङ्गे जटा० २पीतसारे (विजयासार) भावप्र० ।

**वीजकृत्** न० वीजं शुक्रवृद्धिं करोति कृ-क्विप् । वाजीकरणे राजनि० । [वराटके अमरः ।

**वीजकोश** पु० वीजानां कोश इवाधारः । पद्मवीजाधारे

**वीजगर्भ** पु० वीजानि गर्भे यस्य । पटोले राजनि० ।

**वीजगुप्ति** स्त्री वीजानां गुप्तिर्यस्याम् । शिम्बायाम् राजनि० ।

**वीजन** न० वीज-भावे ल्युट् । १व्यजने । करणे ल्युट् । २चामरादौ ३वस्तुनि पु० ४चक्रवाके ५जीवञ्जीवविहगे च पुंस्त्री० शारस्वतः । स्त्रियां ङीष् ।

**वीजपादप** पु० वीजप्रधानः पादपः । १भल्लातकवृक्षे राजनि० वीजजातः पादपः शा०त० । २वीजजाते वीजप्ररोहिवृक्षे च । [मेदि० ।

**वीजपुष्प** न० वीजात् पुष्पं यस्य । १मरुवके २मदनवृक्षे च

**वीजपूर** पु० पूर्यते पूर+घञ् ३त० । (टावा लेबु) जम्बीरभेदे वीजपूर्णोऽप्यत्र ।
"वीजपूरफलं स्वादु रसेऽम्लं दीपनं लघु । रक्तपित्तहरं कण्ठजिह्वाहृदयशोधनम् । श्वासकासारुचिहरं हृद्यं तृष्णाहरं स्मृतम्" । तद्भेदमधुकर्कटी गुणा यथा "वीजपूरोऽपरः प्रोक्तामधुरा मधुकर्कटी । मधुकर्कटिका स्वादी रोचनी शीतला गुरुः । रक्तपित्तक्षयश्वासकासहिक्काभ्रमापहा" भावप्र० ।

**वीजपेशिका** स्त्री वीजस्य शुक्रस्य पेशिकेव । अण्डकोषे राजनि० । [राजनि० ।

**वीजफलक** पु० वीजानि फले यस्य कप् । वीजपूरे जम्बीरे

**वीजमातृका** स्त्री वीजानां मातेव इवार्थे कन् । पद्मवीजाधारा० ।

**वीजरत्न** न० वीजं रत्नमिवास्य । माषकलाये हेमच० ।

**वीजरुह** पु० वीजेन रोहति रुह-क । वीजमात्रजाते धान्यादौ "कुरण्टाद्या अग्रवीजा मूलजास्तूत्पलादयः । पर्वयोनय इक्ष्वाद्याः स्कन्धजाः शल्लकीमुखाः । शाल्यादयो वीजरुहाः संमूर्च्छजास्तृणादयः । स्युर्वनस्पतिकायस्य षड्भेदा मूलजातयः" हेमच० ।

**वीजरेचन** न० वीजं रेचयति रिच-णिच्-ल्यु । वीजेषु मध्ये रेचके जयपालवीजे राजनि० ।

**वीजवपन** न० वीजानि उप्यन्तेऽत्र वप-आधारे ल्युट् । १क्षेत्रे । भावे ल्युट् । २वीजस्य उत्पादनार्थं क्षेत्रे क्षेपणे च । तद्दिनादि दीपिकायामुक्तं यथा "पूर्वात्रियाम्यफणिपित्र्यशिवान्यभेषु रिक्ताष्टमीविगतचन्द्रतिथिं विहाय । द्व्यङ्गाज्जिगोसहृदये त्रिकुजार्किवारे शस्तोन्दुयोगकरणेषु हलप्रवाहः । हलप्रवाहवद्वीजवपनस्य विधिः स्मृतः । चित्रायाञ्च शुभे केन्द्रे स्थिरलग्नतनूदये । हेमशारिविक्षिप्तश्च वीजमोप्ययतः शुचिः । इन्द्रं चित्ते निधायाथ स्वयं मुष्टित्रयं वपेत् । कृत्वा धान्योत्पत्तिकाङ्क्षं मन्त्रो जप्तव्यः । प्राङ्मुखः कलसं स्थाप्य इमं मन्त्र

उदीरयेत् । त्वं वै वसुन्धरे ! सीते बहुपुष्पफलप्रदे । नमस्ते मे शुभं नित्यं कृषिं मेधां शुभे कुरु ! । रोहन्तु सर्वशस्यानि काले देवः प्रवर्षतु । कर्षकास्तु भवन्त्वग्र्या धान्येन च धनेन च" । "दत्वा बीजन्तु तत्रैव भोक्तव्यं बान्धवैः सह"। पराशरः "वैशाखे वपनं श्रेष्ठं मध्यमं रोहिणीरवौ । अतः परन्तु वपनं न चाति श्रावणे शुभम्"। कृषिशब्देऽधिकं दृश्यम्। ज्योतिषे "पूर्वभाद्रपदामूलं रोहिण्युत्तरफल्गुनी। विशाखा शतभिषा चाथ धान्यादिरोपणे वरा। सदोक्ता रजनीं नीत्वा पुत्रवित्तैर्वियुज्यते । स्वयंजाते पुनस्ते द्वे पालयन् नैव दुष्यति । आरामे स्थलमध्ये वा मोक्षात् वर्षमावपन् । पराभवं रिपुर्याति यथाधनधनक्षयम् । निशा नीली यवाश्च पिष्टा श्वेतापराजिता । कोविदारश्च सर्वेषु बीजं निघ्नन्ति मङ्गलम्" । निशा हरिद्रा कोविदारको रक्तकाञ्चनः । "हेमाम्बुना दत्तबीजं स्नातो मन्त्रेण रोपयेत् । वसुधेति सुशीतेति पुण्यदेति धरेति च । नमस्ते सुभगे ! नित्यं द्रुमोऽयं वर्द्धतामिति" ज्यो॰त॰ "एतेषु स्मृतिवारुणादितिविशाखोडूनि भौमं विना बीजोप्तिर्गदिता शुभा स्वशुभतोऽष्टाग्नीन्दुरामेन्दवः । रामेन्द्वग्नियुगाब्धयश्च भकराद्युप्तौ ह्यहेऽर्कोज्झिता-द्वाद्वामाष्टनवाष्टभानि मुनिभिः प्रोक्तान्यसत् सन्ति च" मु॰चि॰ । "एतेष्विति । स्मृतिः श्रवणः वारुणं शतताराका अदितिः पुनर्वसुः विशाखा प्रसिद्धा एतैश्चतुर्भिर्नक्षत्रैर्विकैतेषु पूर्वोक्तनक्षत्रेषु मूलमघाध्रुवमृदुक्षिप्रधनिष्ठास्वातीषु पञ्चदशनक्षत्रेषु बीजोप्तिर्बीजवपनं शुभम् । उक्तञ्च रत्नमालायाम् "हस्ताश्विपुष्योत्तररोहिणीषु चित्रानुराधाश्रवरेवतीषु । स्वातौ धनिष्ठासु मघासु मूले बीजोप्तिरुत्कृष्टफलप्रदिष्टा" । वशिष्ठेनाप्येतावन्त्येव नक्षत्राण्युक्तानि "धातृद्वये कौष्णपपैत्रपुष्ये हस्तत्रये भाग्युत्तरमैत्रभेषु । पौष्णे धनिष्ठास्वथ वासवीभे बीजोप्तिरुत्कृष्टफलप्रदा स्यादिति" । कौष्णपो मूलं नारदेनाप्युक्तानि "मृदुध्रुवक्षिप्रभेषु पितृवायुवसूडुषु । समूलभेषु बीजोप्तिरत्युत्कृष्टफलप्रदा" । कश्यपेनापि "वसुवायुभनैर्ऋत्यक्षिप्रध्रुवमृदूडुषु । सीतां स्तुत्वाथ बीजोप्तिरत्युत्कृष्टफलप्रदा" । अत्र मघा नोक्ता । अथ भौमो मङ्गलवारो निषिद्धः अर्थात् सूर्यचन्द्रबुधगुरुशुक्रशनीनां वारेषु बीजोप्तिः शुभा । अत्र विनायके द्वितीया यमेन्द्रश्रुतिवारुणेषु कुजे बीजोप्तिर्व्यवहारतस्ते उक्तत्वात् नेष्टा अविरित्यतो भकारोऽत्रानुवर्त्तते तेन बीजोप्तिर्नेष्टेत्यर्थः । अत्र कालविशेषनिषेधो राजमार्त्तण्डे "रवौ रौद्राद्यपादस्थे भूमेः संजायते रजः । तस्माद्दिनत्रयं तत्र बीजवापं परित्यजेत्" इति । अथ बीजोप्तौ फणिचक्रमुच्यते । अशुभतो न विद्यन्ते गावः किरणा यस्यासावगुः स्वरूपाभावः तस्य कृतस्तारो किरणाः तादृशोऽगू राहुस्तस्य भं नक्षत्रं तस्मादित्यर्थः । राह्वधिष्ठितनक्षत्रादष्टौ भानि [illegible] तत्त्रीणि शुभानि तत एकमशुभं ततस्त्रीणि शुभानि ततोऽप्येकमशुभं ततस्त्रीणि शुभानि ततोऽप्येकमशुभं ततस्त्रीणि शुभानि ततश्चत्वार्यशुभानि । एवं बीजोप्तौ अष्टाविंशतिनक्षत्राणां शुभाशुभत्वमुक्तं उक्तञ्च नारदेन "भवेद्वितयं मूर्ध्नि धान्यनाशाय राहुभात् । गले त्रयं कज्जलाय वृद्धै द्वादश चोदरे । निःसत्त्वत्वं लाङ्गूले च चतुष्टयमीरितम् । नाभौ बहिःपञ्चके स्याद्बीजोप्तावितिं चिन्तयेदिति । राहुर्यत्र नक्षत्रेऽस्ति तत्रारभ्य नक्षत्रत्रयं मूर्ध्नि मस्तके स्थाप्यं धान्यनाशकरं भवति । नक्षत्रत्रयं गले स्थाप्यं कज्जलाय श्यामिकासंपादकं स्यात् । ततो द्वादश भानि वह्निमण्डलरहितानि उदरे स्थाप्यानि तानि धान्यवृद्धये स्युः ततो नक्षत्रचतुष्टयं पुच्छे निःसत्त्वकरं स्यात् ततोऽवशिष्टं बहिर्नक्षत्रपञ्चकं धान्यनाशकरं स्यात् । रत्नमालायामपि "मूर्ध्नि त्रीणि गले त्रयं च जठरे धिष्ण्यानि च द्वादश स्यात् पुच्छे च चतुष्टयं बहिरतो भानां स्थितं पञ्चकम् । ऋक्षे कज्जलसस्यवृद्धिरधिकानिःसत्त्वता क्रमात् स्यादीतिभयं भयं च फणिभाद्बीजोप्तिकाले स्फुटम्" इति । अत्र केचित् फणिभात् सूर्यनक्षत्रादिति व्याचक्षते तत्र युक्तिः "सूर्यभादुरगः स्थाप्यः" इति स्वरोदयवाक्यैकवाक्यभावात् । तत्र नारदवाक्ये राहुग्रहणादिष्टत्वात् "राहुधिष्ण्यात् समारभ्य धिष्ण्यत्र्यष्टक निरूपणमिति" कश्यपोक्तेश्च । "सूर्यभादुरगः स्थाप्यः" इति तु स्वरोदयवचनं देशभेदव्यवस्थितम् । बीजवापने लग्नशुद्धिमाह वशिष्ठः "भवरिपुसहजे पापैस्त्रिकोणकेन्द्रस्थितैश्च शुभैः । कथितेषु च धिष्ण्येष्वपि शुभलग्ने बीजवापनं कार्यमिति" पी॰धा॰ ।

**बीजवृक्ष** पु॰ बीजमात्राज्जातो वृक्षः । असनवृक्षे राजनि॰ ।

**बीजसञ्चय** पु॰ बीजानां वपनयोग्यधान्यादीनां चयः सं-चयः सम्+चि—अच् । वपनयोग्यधान्यादिसञ्चये ।

"हस्ताचित्रादितिस्वातिरेवत्यां श्रवणद्वये । स्थिरे लग्ने गुरौ शुक्रे वीजं धार्य्यं घटान्तरे । माघे वा फाल्गुने वापि सर्ववीजानि संग्रहेत् । शोषयेत्तापयेद्रौद्रे रात्रौ चोपनिधापयेत् । ततश्च पुटिकां बद्ध्वा शोषयेच्च पुनःपुनः । स्थापयेच्च प्रयत्नेन यथा भूमिस्तु न स्पृशेत् । दीपाग्निना च संस्पृष्टं दृष्ट्वा चोपहृतञ्च यत् । वर्जनीयं तथा वीजं यत् स्यात् कीटसमन्वितम्" ज्यो॰ त॰ ।

**वीजसू** पु॰ वीजं सूते सू-क्विप् । पृथिव्याम् हेमच॰ ।

**वीजस्थापन** ६त॰ । धान्यादिस्थापने तन्मुहूर्त्तादिकं ज्यो॰ त॰ उक्तम् "याम्याग्निरुद्राहिविशाखपूर्वमाहेन्द्रपित्र्येतरभैः शुभाहे । धान्यादिसंस्थापनमेव शस्तं स्वर्गास्थिरद्व्यङ्गलग्नोदयेषु । सौम्यादितिमघाज्येष्ठाद्युत्तरेषु च कारयेत् । मीने लग्ने शुभे चन्द्रे निधने क्रूरवर्जिते । क्षेमश्च कोष्ठके धान्यं गर्गो वदति सर्वदा" ।

**वीजाक्रान्त** त्रि॰ वीजेन सह कृष्टम् आ+क्रम-क्त । वीजेन सह कृष्टे क्षेत्रे ।

**वीजाम्ल** न॰ वीजेनाम्लमिव । वृक्षाम्ले राजनि॰ ।

**वीजिन्** पु॰ वीजमस्त्यस्य इनि । १उत्पादके पितरि हेमच॰ २वीजविशिष्टे त्रि॰ स्त्रियां ङीप् । [त्रिका॰ ।

**वीजोदक** न॰ वीजमिव कठिनत्वादुदकं यत्र । करकायां

**वीज्य** त्रि॰ विशेषेण इज्यः वि+यज-क्यप् वा । कुलीने अमरः

**वीटि(टी)** स्त्री वि+इट-इन् वा ङीप् । (पानेर वीड़ा) सज्जितताम्बूले । स्वार्थे क । वीटिका तत्रैव । "कञ्चुलिकाग्रन्थौ च "तद्वीटिकासंस्पृशि" सा॰द॰ ।

**वीणा** स्त्री अज-नक् वीभावः पृषो॰ णत्वम् । स्वनामख्याते १वाद्यभेदे अमरः । वाद्यशब्दे दृश्यम् । २विद्युति मेदि॰

**वीणादण्ड** पु॰ ६त॰ । वीणावाद्यस्थालावूपरिस्थे काष्ठदण्डे अमरः ।

**वीणावाद** त्रि॰ वीणां वादयति वद-णिच्-अण् । वीणा- [वादके अमरः ।

**वीत** न॰ वि-इण्-क्त । १युद्धासमर्थे हस्त्यश्वादिसैन्ये अमरः २अङ्कुशकर्मणि मेदि॰ । ३न्यायाद्युक्ते अनुमानभेदे च । अवीतशब्दे ४६५ पृ॰ दृश्यम् । ४शान्ते ५गते च त्रि॰ हेमच॰ ।

**वीतंस** पु॰ वि+तनस-घञ् दीर्घः । १मृगपक्षिणां बन्धनोपकरणे दामप्रभृतौ अमरः । २तेषां विश्वासहेतुप्रावरणे मेदि॰ ।

**वीतन** पु॰ विविष्टं तनोति तन-अच् पृषो॰ दीर्घः । कृकपार्श्वद्वये "कृकस्तु कन्धरा मध्यं कृकपार्श्वौ तु वीतनौ" हेमच॰ ।

**वीतशोक** पु॰ पु॰ वीतः विगतः शोको यस्मात् यस्य वा । १अशोकवृक्षे शब्दच॰ । २शोकहीने त्रि॰ ।

**वीति** स्त्री वी-क्तिन् । १गतौ २दीप्तौ ३भोजने ४प्रजनने ५धारणे च मेदि॰ ।

**वीतिहोत्र** पु॰ वीतये पुरोडाशादिभक्षणाय हूयन्ते देवा अत्र हु-आधारे त्र । १वह्नौ अमरः २सूर्य्ये मेदि॰ ।

**वीथि(थी)** स्त्री विथ-इन् वा ङीप् । १पङ्क्तौ २श्रेण्यां ३गृहाङ्गे ४वर्त्मनि ५दृश्यकाव्यभेदे च मेदि॰ ।
तल्लक्षणादि सा॰द॰ ६प॰ उक्तं यथा "वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते । आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः । सूचयेद्भूरिशृङ्गारं किञ्चिदन्यान् रसानपि । मुखनिर्वहणे सन्धी अर्थप्रकृतयोऽखिलाः" । कश्चिदित्युत्तमो मध्यमोऽधमो वा । शृङ्गारबहुलत्वाच्चास्याः कैशिकीवृत्तिबहुलत्वम् । "अस्यास्त्रयोदशाङ्गानि निर्दिशन्ति मनीषिणः । उद्घात्यकावलगिते प्रपञ्चस्त्रिगतं छलम् । वाक्केल्यधिबले गण्डमवस्यन्दितनालिके । असत्प्रलापव्याहारमृदवानि च तानि तु" । तत्रोद्घात्यकावलगिते प्रस्तावनाप्रस्तावे सोदाहरणं लक्षिते "मिथो वाक्यमसद्भूतं प्रपञ्चो हास्यकृन्मतः" । यथा विक्रमोर्वश्याम् । वसन्तोत्सवविदूषकचेट्योरन्योन्यवचनम् "त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः" । यथा तत्रैव राजा "सर्वक्षितिभृतां नाथ ! दृष्टा सर्वाङ्गसुन्दरी । रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया" । नेपथ्ये तत्रैव प्रतिशब्दः । राजा कथं दृष्टेत्याह । अत्र प्रश्नवाक्यमेवोत्तरत्वेन योजितम् "नटादित्रितयविषयमेवेदमिति" कश्चित् "प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य छलनाच्छलम्" यथा वेण्याम् "भीमार्जुनौ" "कर्त्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम् । कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः क्वास्ते दुर्य्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः" "अन्ये त्वाहुश्छलं किञ्चित् कार्य्यमुद्दिश्य कस्यचित् । उदीर्य्यते यद्वचनं वञ्चना हास्यरोषकृत्" । "वाक्केलिर्हास्यसम्बन्धो द्वित्रिप्रत्युक्तितो भवेत्" । द्वित्रीत्युपलक्षणं यथा "भिक्षो ! मांसनिषेवणं प्रकुरुषे किं तेन मद्यं विना मद्यञ्चापि तव प्रियं प्रियमहो वाराङ्गनाभिः सह । वेश्याप्यर्थरुचिः, कुतस्तव धनं द्यूतेन चौर्य्येण वा चौर्य्यद्यूतपरिग्रहोऽपि भवतो, नष्टस्य

कान्ता मतिः"। "केचित् प्रक्रान्तवाक्यस्थ साकाङ्क्षस्यैव निर्वचनोक्तिमित्याहुः"। अन्ये च "अनेकस्य प्रश्नस्यैकमुत्तरम्"। "अन्योन्यवाक्याधिक्योक्तिः स्पर्द्धयाधिबलं मतम्"। यथा मम प्रभावत्यां वज्रनाभः "अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया। लीलयोन्मूलयिष्यामि भुवनद्वयमद्य वः"। प्रद्युम्नः। अरेरे असुरापसद! अलममुना वक्कुप्रलापेन मम खलु "अद्य प्रचण्डभुजदण्डसमर्पितोरुकोदण्डनिर्गलितकाण्डसमूहपातैः। आस्तां समस्तदितिजक्षतजोक्षितेयं क्षोणिः क्षणेन पिशिताशनलोभनीया"। "गण्डं प्रस्तुतसम्बन्धिभिन्नार्थं सत्वरं वचः"। यथा वेण्यां "राजा" अध्यासितुं तव चिराज्जघनस्थलस्य पर्याप्तमेव करभोरु! ममोरुयुग्मम्"। अनन्तरं प्रविश्य कञ्चुकी। "देव भग्नं भग्नमित्यादि"। अत्र रथकेतनभङ्गार्थं वचनमूरुभङ्गार्थं सम्बन्धे गण्डम्। "व्याख्यानं स्वरसोक्तस्यान्यथावस्यन्दितं भवेत्"। यथा छलितरामे सीता। जाद कल्लं क्खु अओज्झाए गन्तव्वं तहिं सो राआ विणएण पणमिदव्वो। लवः। अथ किमावाभ्यां राजोपजीविभ्यां भवितव्यं। सीता। जाद सो तुह्माणं पिदा। लवः। किमावयोः रघुपतिः पिता। सीता। साशङ्कं मा अण्णधा संकधं ण क्खु तुह्माणं सअलाए ज्जेव पुहवीए त्ति"। "प्रहेलिकैव हास्येन युक्ता भवति नालिका"। संवरणकार्युत्तरं प्रहेलिका। यथा रत्नावल्यां "सुसङ्गता "सहि जस्स कदे तुमं। यं चित्तफलअस्स"। अत्र त्वं रघुः कृते आगतेत्यर्थः संवृतः। "असत्प्रलापो यद्वाक्यमसम्बद्धं तथोत्तरम्। अगृह्णतोऽपि मूर्खस्य पुरो यच्च हितं वचः"। तत्राद्यं यथा मम प्रभावत्याम् प्रद्युम्नः सहकारवल्लीमवलोक्य सानन्दम् अहो सा कथमिहैव। "अलिकुलमञ्जुलकेशी परिमलबहुला रसावहा तन्वी। किसलयपेशलपाणिः कोकिलकलभाषिणी प्रियतमा मे"। एवमसम्बद्धोत्तरेऽपि। तृतीयं यथा वेण्यां दुर्य्योधनं प्रति गान्धारीवाक्यम्। "व्याहारो यत्परस्यार्थे हास्यलोभकरं वचः"। यथा मालविकाग्निमित्रे। लास्यप्रयोगावसाने मालविका निर्गन्तुमिच्छति। "विदूषकः। मा दाव उवदेससुद्धा गमिस्ससि इत्युपक्रमे गणदासः। विदूषकं प्रति आर्य्य! उच्यतां यस्त्वया क्रमभेदो लक्षितः। विदूषकः। पढमं बम्हणपूआ भोदि सा इमाए लङ्घिदा। मालविका "स्मयते" (सता इति पाठान्तरम्) इत्यादिना नायकस्य विशुद्धनायिकादर्शनप्रयुक्तेन हास्यलोभकारिणा वचसा व्याहारः। "दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत्"। क्रमेण यथा "प्रियजीवितता क्रौर्य्यं निःस्नेहत्वं कृतघ्नता। भूयस्तद्दर्शनादेव ममैते गुणतां गताः। तस्यास्तद्रूपसौन्दर्य्यं भूषितं यौवनश्रिया। सुखैकायतनं जातं दुःखायैव ममाधुना"। इति वाक्याङ्गानि नाटकादिषु सम्भवन्त्यपि वीथ्यामवश्यं विधेयानि। विस्पष्टतया नाटकादिषु विनिविष्टान्यपीहोदाहृतानि नानारसानामङ्गानां वाक्यरूपतया स्थितत्वाद्वीथीयम्" सा० द० ६प०।

**वीथ्यङ्ग** पु० वीथ्या दृश्याङ्गमस्य। १दृश्यकाव्यभेदे। ६त०। २तदङ्गे वीथिशब्दे दृश्यम्। [संक्षिप्तसा०।

**वीध्र** त्रि० वि-इन्ध-रक्। १निर्मले २नभसि ३वायौ ४वह्नौ

**वीनाह** पु० वि-नह घञ् दीर्घः। कूपादिमुखबन्धनसाधने (पाट) ख्याते पदार्थे अमरः।

**वीप्सा** स्त्री वि+आप-सन्-अच-ईत्-च अभ्यासलोपश्च। व्याप्तौ

**वीय** गौर्य्ये अद०चु०आत्म० अक०सेट्। वीययते अवीवीयत।

**वीभ** शौर्य्ये हेलके स्लाघे विकत्थने च भ्वा० अक० सेट्। ऋदित् चङि न ह्रस्वः। वीभते अवीभिष्ट।

**वीर** न०वीर-अच्। १शृङ्गिणि २नडे मेदि० ३मरिचे ४पद्ममूले ५काञ्जिके ६उशीरे ७आरुके राजनि०। ८शौर्य्यविशिष्टे शूरे त्रि० अमरः। ९जिने १०भटे पु० हेमच०। ११विष्णौ पु० विष्णुस०। तन्त्रोक्ते १२कुलाचारयुते त्रि० कुलाचारशब्दे पु० दृश्यम्। १३नड्वीये १४वराहकन्दे १५लताकरञ्जे १६करवीरे १७अर्जुने पु० राजनि० १८यज्ञाग्नौ भरतः वीरहा। १९उत्तरे २०सुभटे च मेदि०। २१श्रेष्ठे त्रि० हेमच०। २२पत्यौ २३पुत्रे च "अवीरा निष्पति सुता" अमरः। २४रसभेदे "उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः। महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः। आलम्बनविभावास्तु विजेतव्यादयो मताः। विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनरूपिणः। अनुभावास्तु तत्र स्युः सहायान्वेषणादयः। सञ्चारिणस्तु धृतिमतिगर्वस्मृतितर्करोमाञ्चाः। स च दानधर्म्मयुद्धैर्दयया च समन्वितश्चतुर्द्धा स्यात्"। स च वीरः। दानवीरो धर्म्मवीरो दयावीरो युद्धवीरश्चेति चतुर्विधः" सा०द० ३प०।

**वीरक** पु० वि+ईर-ण्वुल्। करवीरे राजनि०।

**वीरण** न० वि+ईर-ल्युट्। उशीरे (वेणारमूल) शब्दच०।

**वृक्षभवन** न० ७त०। वृक्षस्य कोटरे शब्दरत्नावली।

**वृक्षभक्षा** स्त्री वृक्षो भक्ष्यो वेष्टकत्वात् भोजनीय इव यस्याः। वन्दायाम् (परगाछा) भावप्र०।

**वृक्षभेदिन्** पु० वृक्षं भिनत्ति भिद–णिनि। वृक्षभेदके १अश्मभेदे अमरः। २टङ्के हेमच०। [शब्दच०।

**वृक्षरुह्** पु० वृक्षस्य रुहि भूमौ भवति भू–क्विप्। अश्वत्थे

**वृक्षरुहा** स्त्री वृक्षे रोहति रुह–क। १वन्दायाम् अमरः २अमृतस्रवायाञ्च राजनि०।

**वृक्षवाटिका** स्त्री वृक्षैर्वाटीव संहतत्वात् इवार्थे कन्। अमात्यगणिकोपसेव्ये स्वगृहसमीपस्थे उपवने अमरः।

**वृक्षादन** पु० वृक्षमत्ति भिनत्ति अद–ल्यु। १कुठारास्त्रे (नेहाणि) अमरः। वृक्षान्तरमत्ति भिनत्ति। २अश्वत्थवृक्षे ३मधुच्छत्रे ४कुठारे च मेदि०। ५पियाले धरणिः। ६वृक्षविदारके त्रि० ७वन्दायां स्त्री गौरा० ङीष्।

**वृक्षाम्ल** न० वृक्षजातमम्लम्। (तेतुल) १वृक्षजाताऽम्लप्रधाने वृक्षे अमरः। २चुक्राम्ले च।
"वृक्षाम्लमामकन्तोष्णं वातघ्नं कफपित्तलम्। पक्वन्तु गुरु संग्राहि कटुकं तुवरं लघु। वृक्षाम्लं रोचनं रूक्षं दीपनं कफवातनुत्। तृष्णार्शोग्रहणीगुल्मशूलहृद्रोगजन्तुजित्" भावप्र०।

**वृक्षार्हा** स्त्री० वृक्षेषु अर्हा पूज्या। महामेदायां राजनि०।

**वृक्षाश्रयिन्** पु० वृक्षमाश्रयति आ+श्रि–इनि। १खगे २क्षुद्रोलूके राजनि०।

**वृक्षोत्पल** पु० वृक्षे उत्पलमिव। कर्णिकारवृक्षे रत्नमा०।

**वृच** वृतौ रु०पर०सक०सेट्। वृणक्ति। अवर्चीत्। ईदित् निष्ठा अनिट् वृक्णः।

**वृज** त्यागे अदा०आत्म०सक०सेट् ईदित्। वृक्ते वर्जिष्ट नेदिदयवम्। वृक्ते अवर्जिष्ट ईदित् निष्ठा अनिट् वृक्णः।

**वृज** त्यागे वा चु० उभ० पक्षे भ्वा०पर०सक० सेट्। वर्जयति ते वर्जति। अववर्जत्–अवीवृजत्। अवर्जीत् ईदित्। वर्जितः भ्वा० निष्ठा अनिट्। वृक्णः।

**वृज** वृतौ, त्यागे च रु०पर०सक०सेट्। वृणक्ति। अवर्जीत्। ईदित् निष्ठा अनिट्। वृक्णः।

**वृजन** न० वृज्यतेऽत्र वृज–क्यु। १पापे उणादि० २आकाशे सि०कौ०। ३केशे पु० ४कुटिले त्रि० उणादि०।

**वृजिन** न० वृज–इनच् किच्च। १पापे अमरः। २भुग्ने त्रि० हेमच०। ३केशे पु० ४कुटिले त्रि० मेदि०।

**वृण** भक्षणे तना०उभ०सक० सेट्। वृणोति वर्णोति वृणुते अवर्णीत् अवर्णिष्ट। उदित् क्त्वा वेट्। [कवकल्प० त।

**वृत** दीप्तौ चु० उभ० सक० सेट्। वर्तयति ते अवीवृतत् त

**वृत** वर्त्तने भ्वा० आत्म० लुङि लृटि लृङि च उभ० अक० सेट्। वर्त्तते। अवृतत् अवर्त्तिष्ट लृटि लृङि च पर० नेट् वर्त्स्यति वर्त्तिष्यते। सनि च तथा विवृत्सति, विवर्त्तिषते। उदित् क्त्वा वेट्।

**वृत** संभक्तौ, वरणे च दि० आत्म० सक० सेट्। वृत्यते अवर्त्तिष्ट। उदित् क्त्वा वेट्। [धातुपाठः।

**वृत्** त्रि० वृत+भूते–क्विप्। वृत्ते अतीते "वृत् वृतादि" पा०

**वृत** त्रि० वृ–क्त। १प्रार्थिते २वर्त्तुले ३कर्मादौ मार्थनादिना कृतनियोगे ४स्वीकृते च अमरः। [राजनि०।

**वृतपत्रा** स्त्री वृतम् आवृतं पत्रं यस्याः। पृश्निपर्ण्यां लतायां

**वृति** स्त्री वृ–क्तिन्। वेष्टने (बेड़ा) "वृतिञ्च तत्र कुर्वीत" वाच०

**वृतिङ्कर** पु०वृतिङ्करोति कृ–खच्। विकङ्कते (बइचि) शब्दच०

**वृत्त** न० वृत–भावे क्त। "गुरुपूजा दया शौचं सत्यमिन्द्रियनिग्रहः। प्रवर्त्तनं हितानाञ्च तत्सर्वं वृत्तमुच्यते" इत्युक्ते १चरित्रभेदे २पद्यभेदे "पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा। वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत्। सममर्द्धसमं वृत्तं विषमञ्चेति तत्त्रिधा" छन्दो०। ३वृतौ च। वृत–कर्त्तरि क्त। ४अतीते ५दृढे ६वर्त्तुले ७अवृतावरणे च त्रि० भरतः। ८अधीते ९मृते मेदि० १०जाते च त्रि० ११कूर्मे पु० राजनि०। १२रेणुकायां १३प्रियङ्गौ १४रोहिण्यां १५मञ्जिष्ठारिटलतायां स्त्री राजनि०। तत्र वर्त्तुलाकारवस्तु यथा "वृत्तानि चाङ्गुलीयकमुद्रा कनकमालाप्रमोदकाः। रथ कुण्डलकङ्कणकुण्डलहस्तवलयादयः। कर्णपाशभुजापाशकटचापघटाननम्। मुद्रिकापरिखाद्योगपट्टहाराङ्गदादयः" कविकल्प०। १६गोवाकारे क्षेत्रभेदे न० लीला०क्षेत्रशब्दे २४००पृ० दृश्यम्।

**वृत्तगन्धि** न० वृत्तस्य पद्यभेदस्य इव गन्धो लेशोऽत्र इत् समा०। "भवन्तु लालिकाप्रायं समासाढ्यं हृदाहृतम्। वृत्तैकदेशसम्बन्धात् वृत्तगन्धि पुनः स्मृतम्" इत्युक्ते गद्यभेदे

**वृत्ततण्डुल** पु०वृत्तो वर्त्तुलस्तण्डुलोऽस्य। यावनाले राजनि०।

**वृत्तनिष्पाविका** स्त्री वृत्ता वर्त्तुला निष्पाविका। नखनिष्पाव्याम् राजनि०।

**वृत्तपर्णी** स्त्री वृत्तानि पर्णान्यस्याः ङीष्। १महापत्रपुष्पिकायाम् २पाठायाञ्च (आकनादि) राजनि०।

**वृत्तपुष्प** पु० वृत्तानि वर्त्तुलानि पुष्पाण्यस्य। १शिरीषवृक्षे २कदम्बे ३वानीरे ४कुब्जके ५मुद्गरे च राजनि०।

**वृत्तफल** न० वृत्तं फलमस्य । १मरीचे २दाड़िमे ३बदरे च । ४वार्त्ताक्याम् ५आमलक्याञ्च स्त्री टाप् राजनि०।

**वृत्तमल्लिका** स्त्री वृत्ता मल्लिकेव । १श्वेतार्के २मोदिन्यां लतायां च राजनि०। [स्त्री राजनि० ।

**वृत्तबीज** पु० वृत्तानि बीजान्यस्य । १शिम्बिकायाम् २आढ़क्याम्

**वृत्तस्थ** त्रि० वृत्ते गुरुपूजादौ चरिते तिष्ठति स्था-क। वृत्तशब्दोक्तगुरुपूजादिचारिवरते ।

**वृत्तान्त** पु० वृत्तो जातोऽन्तोनिर्णयो यस्मात् । १संवादे २वार्त्तिकसंदेशे च अमरः ।२प्रक्रियायां ३कात्स्न्ये ४प्रस्तावे च मेदि०। ५अवसरे ६भावे ७एकान्ते च विश्वः ।

**वृत्ति** स्त्री० वृत-क्तिन् । १वर्त्तने २स्थितौ ३विवरणे च मेदि० । करणे क्तिन् ४जीविकायाम् अमरः । ५कैशिकीवाग्वतीभारत्यारभव्याख्ये नाटकरचनाभेदे "शृङ्गारे कैशिकी, वीरे सात्वत्यारभटी पुनः । रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती । चतस्रो वृत्तयो ह्येताः सर्वनाट्यस्य मातृकाः" सा०द०। ६वेदान्तोक्ते अन्तःकरणादेः परिणामभेदे च । अन्तःकरणवृत्तिस्वरूपप्रयोजनादिक वेदा०प०दर्शितं यथा तड़ागोदकं छिद्रान्निर्गत्य यथा कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति तथा तैजसमन्तःकरणं चक्षुरादि द्वारा घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते स एव परिणामो वृत्तिरित्युच्यते । अनुमित्यादिस्थले तु अन्तःकरणस्य न वह्न्यादिदेशगमनं वह्न्यादेश्चक्षुराद्यसन्निकर्षात्" १प०। इन्द्रियजन्यवृत्तेश्च आवरणभङ्गार्था सम्बन्धार्था इति मतद्वैधं यथोक्तं तत्रैव ७प० । "सा चान्तःकरणवृत्तिरावरणाभिभवार्थेत्येकं मतम् तथा हि अविद्योपहितचैतन्यस्य जीवत्वपक्षे घटाद्यधिष्ठानचैतन्यस्य जीवरूपतया जीवस्य सर्वदा घटभानप्रसक्तौ घटाद्यवच्छिन्नचैतन्यावरकमज्ञानं मूलाविद्यापरतन्त्रमवस्थापदवाच्यमभ्युपगन्तव्यम् । एवं सति न सर्वदा घटादेर्भानप्रसङ्गः । अनावृतचैतन्यस्यैव भानप्रयोजकत्वात् तस्य चावरणस्य सदातनत्वे कदाचिदपि घटभानं न स्यादिति तद्भङ्गे वक्तव्ये तद्भङ्गजनकं न चैतन्यमात्रं तत्साधकस्य तदनिवर्त्तकत्वात् नापि वृत्त्युपहितचैतन्यं, परोक्षस्थलेऽपि तन्निवृत्त्यापत्तेरिति परोक्षव्यावृत्तवृत्तिविशेषस्य तदुपहितचैतन्यस्य वा आवरणभञ्जकत्वमित्यावरणाभिभवार्था वृत्तिरित्युच्यते । सम्बन्धार्था वृत्तिरित्यपरं मतम् । तत्राविद्योपाधिकोजीवोऽपरिच्छिन्नः स च घटादिप्रदेशे विद्यमानोऽपि घटाद्यपरोक्षवृत्तिविरहदशायां न घटादिमवभासयति घटादिना समं तस्य सम्बन्धाभावात् तत्तदाकारवृत्तिदशायां तु भासयति तदा सम्बन्धसत्त्वात्" । अतएवोक्तं "बुद्धितत्स्थचिदाभासौ द्वावेतौ व्याप्नुतो घटम् । तत्राज्ञानं धिया नश्येत् आभासात्तु घटः स्फुरेत्" इदन्तु प्रथमताभिप्रायम् अन्तःकरणवृत्तीनां भेदादिकं पातञ्जलादिदर्शितमन्तःकरणशब्दे १८५ पृ० दृश्यम् । "अज्ञानस्याननाशाय वृत्तिव्याप्तिरपेक्षिता" वे०सा०। विप्रस्य जीविकरूपवृत्तिहरणे दोषो यथा "स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत्तु यः । स तावत् इति येयः फलं तत् शृणु भूमिप ! । यावन्तोरेणवः सिक्ता विप्राणां नेत्रविन्दुभिः । तावद्वर्षसहस्रञ्च कृतपाके स तिष्ठति । तप्ताङ्गारञ्च तद्भक्ष्यं पानञ्च तप्तमूत्रकम् । तप्ताङ्गारे च शयनं ताड्यते यमकिङ्करैः । तदन्ते च महापापी विष्ठायां जायते कृमिः । षष्टिवर्षसहस्राणि देवमानेन भारते । ततो भूमिविहीनश्च प्रजाहीनश्च मानवः । दरिद्रः कृपणो रोगी शूद्री निन्द्यस्ततः शुचिः" ब्रह्मवै० प्र० ४९अ० ।

**वृत्तिकर्षित** त्रि० वृत्त्या कर्षितः । १विपन्ने २अन्नाभाववृत्तिके च । [२शरटे पु० स्त्री राजनि० स्त्रियां ङीष् ।

**वृत्तिस्थ** त्रि० वृत्तौ तिष्ठति स्था-क । १सत्कर्मानुष्ठायिनि

**वृत्र** पु० वृत-रक् । १अन्धकारे २रिपौ त्वष्टृपुत्रे ३दानवभेदे ४मेघे ५पर्वतभेदे मेदि०। ६इन्द्रे विश्वः । ७शब्दे शि०को०

**वृत्रद्विष्** पु० वृत्र०। इन्द्रे हेमच० । वृत्ररिपादयोऽप्यत्र ।

**वृत्रहन्** पु० वृत्रं हतवान् हन-क्विप् । इन्द्रे अमरः ।

**वृथा** अव्य० वृ-थाल् किच्च । निरर्थके अमरः ।

**वृथादान** न० कर्म० । १निष्फलदाने स्मृतिप्रदर्शिते देवपित्राद्यर्थभिन्नेषु कार्येषु २दानभेदे च ।

"देवपितृविहीनं यदीश्वरेभ्यः स्वदोषतः । दत्त्वानुकीर्त्तनाच्चैव वेदाक्षिप्तत्यागिने । अन्यायोपार्जितं दानं व्यर्थं ब्रह्महणे तथा । गुरवेऽव्रतवत्नाय स्तेनाय पतिताय च । कृतघ्नाय च यद्दत्तं सर्वदा ब्रह्मविद्विषे । याजकाय च सर्वस्य दम्भात्वा:सतये तथा । परिचारकाय मत्याय वञ्चने पिशुनाय च । इत्येतानि तु राजेन्द्र ! वृथादानानि षोड़श" वह्निपु० । "न्यायमार्गेण यद्दत्तं तत्सप्तविधमपि पुनर्नापहर्त्तव्यं यत् पुनरन्यायेन दत्तं तददत्तं षोड़शप्रकारमपि प्रत्याहर्त्तव्यमेव इत्यर्थादुक्तं भवति । नारदेन च "दत्तं सप्तविधं प्रोक्तमदत्तं षोड़शात्मकम्" इति प्रतिपाद्य दत्तादत्तयोः स्वरूपं विवृतं यथा

"पात्रमल्पं भ्रतिलुब्धा स्नेहात् प्रत्युपकारतः । स्त्रीशूद्रकानुकम्पार्थेञ्च दत्तं दानविदो विदुः । अदत्तन्तु भयक्रोधशोकवेगरुजान्वितैः । तथोत्कोचपरिहासव्यत्यासच्छलयोगतः । बालमूढ़ास्वतन्त्रार्त्तमत्तोन्मत्तापवर्जितम् । कर्त्ता ममेदं कर्मेति प्रतिलाभेच्छया च यत् । अपात्रे पात्रमित्युक्ते कार्य्ये वा धर्म्मसंहिते । यद्दत्तं स्यादविज्ञानाददत्तमिति तत् स्मृतम्" मिता० अदत्तशब्दे द्रष्टव्यम् ।

**वृथामांस** न० वृथाभूतं मांसम् शाक० । देवाद्युद्देशेन हतपशूनां मांसे ।

**वृद्ध** न० वृध–क्त । १शैलजनामगन्धद्रव्ये अमरः । २वृद्धदारके वृक्षे पु० राजनि० । ३वृद्धियुक्ते त्रि० ४गतयौवने वृद्धावस्थायुक्ते । बाल्यादिवयःकालभेदश्च भावप्र० उक्तो यथा "बाल्यादेरवधिमाह सुश्रुतः "वयस्तु त्रिविधं बाल्यं मध्यमं वार्द्धकं तथा । ऊनषोड़शवर्षस्तु नरो बालो निगद्यते । त्रिविधः सोऽपि दुग्धाशी दुग्धान्नाशी तथान्नभुक् । दुग्धाशी वर्षपर्य्यन्तं दुग्धान्नाशी शरद्द्वयम् । तदुत्तरं स्यादन्नाशी एवं बालस्त्रिधा मतः । मध्ये षोड़शसप्तत्योर्मध्यमः कथितो बुधैः । चतुर्था मध्यमं प्राहुर्युवा द्वात्रिंशतो मतः । चत्वारिंशत् समा यावत्तिष्ठेद्वीर्य्यादिपूरितः । ततः क्रमेण क्षीणः स्याद् यावद् भवति सप्ततिः" । वीर्य्यादीत्यादिशब्देन रसादिसर्वधात्विन्द्रियबलोत्साहा उच्यन्ते । क्षीणः सर्वधात्विन्द्रियबलोत्साहैर्हीनः "ततस्तु सप्ततेरूर्द्ध्वं क्षीणधातुरसादिकः । क्षीयमाणेन्द्रियबलः क्षीणरेता दिने दिने । बलीपलितखालित्ययुक्तः कर्मसु वाक्षमः । कासश्वासादिभिः क्लिष्टो वृद्धो भवति मानवः । बाल्ये विवर्द्धते श्लेष्मा पित्तं स्यान्मध्यमेऽधिकम् । वार्द्धक्ये वर्द्धते वायुर्विचार्य्यैतदुपक्रमेत्" । उपक्रमेत् चिकित्सेत् । तन्त्रान्तरे तु "बाल्यं वृद्धिश्छविर्मेधा त्वग्दृष्टिः शुक्रविक्रमौ । बुद्धिः कर्मेन्द्रियं चेतो जीवितं दशतो ह्रसेत्" । ५पण्डिते पु० मेदि० ।

**वृद्धकाक** पु० कर्म० । द्रोणकाके हेमच० ।

**वृद्धगङ्गा** स्त्री कर्म० । नदीभेदे "अस्ति नाटकशैले तु सरोमानससन्निभम् । यत्र सार्द्धं शैलपुत्र्या जलक्रीड़ां सदा हरः । कुरुते नरशार्दूल ! स्वर्णपङ्कजशोभिते । तस्य पश्चान्मध्यपूर्वभागेष्वत्र सरित्त्रयम् । अंशतोयं प्रवाल्येव दक्षिणं सागरं प्रति । तस्य पश्चिमभागे तु नदी दिक्करिकाह्वया । दिग्गजाः सेवसंजाताः तेन दिक्करिका स्मृता । मध्यभागात् स्रुता या तु शङ्करेणावतारिता । वृद्धगङ्गाह्वया सा तु गङ्गेव फलदायिनी । या निःसृता पूर्वभागात् तस्माद्दिव्यरात् नदी । स्वर्णप्रोवेति विख्याता सा गङ्गासदृशी फले" कालिकापु० ८२अ० ।

**वृद्धदारक** पु० वृद्धं दारयति दृ–णिच्–ण्वुल् । वीरताड़वृक्षे भाव० । वृद्धदार तन्त्रार्थे राजवल्लभः । "रसायनो वृद्धदारः शोथवातामवातजित्" ।

**वृद्धदारु** न० वृद्धं दारयति दृ–णिच्–उण् । वृद्धदारकवृक्षे राजनि० "वृद्धदारुद्वयं तौल्यं पिच्छिलं कफवातनुत् । बल्यं कासामयेदोघ्नं द्वितीयं स्वल्पवीर्य्यदम्" राजनि० [अमरः ।

**वृद्धनाभि** त्रि० वृद्धा नाभिरस्य । (गाँड़) वृद्धनाभियुक्ते

**वृद्धप्रपितामह** पु० वृद्धः प्रपितामहात् राज० । प्रपितामहजनके । [महस्य पितरि ।

**वृद्धप्रमातामह** पु० वृद्धः प्रमातामहात् राज० । प्रमाता०

**वृद्धबला** स्त्री वृद्धं बलं यस्याः ५ब० । महासमङ्गायाम् राजनि० । तस्यावलवृद्धिकरत्वात्तथात्वम् ।

**वृद्धविभीतक** पु० वृद्धः विभीतक इव । आम्रातके शब्दचा०

**वृद्धश्रवस्** पु० वृद्धेभ्यः शृणोति श्रु–असुन्, वृद्धेषु श्रवो यशो यस्येति वा । इन्द्रे अमरः । [हारा०

**वृद्धसूतक** न० कर्म० संज्ञायां कन् । कृष्णतुले (वुड़िसुता)

**वृद्धा** स्त्री वृध–क्त । १गतयौवनायां स्त्रियाम् । २अङ्गुष्ठे शब्दच० । ३महाश्रावणिकायां राजनि० ।

स्त्रीणां वयःकालविभागो यथा

"आषोड़शाद् भवेद्बाला तरुणी त्रिंशता मता । पञ्चपञ्चाशतः प्रौढ़ा वृद्धा भवति तत्परम्" इति काशिदासः । "बालेति गीयते नारी यावद्वर्षाणि षोड़श । ततस्तु तरुणी ज्ञेया द्वात्रिंशद्वत्सरावधि । तदूर्द्ध्वमधिरूढ़ा स्यात् पञ्चाशद्वत्सरावधि । वृद्धा तत्परतो ज्ञेया सुरतोत्सववर्जिता" भावप्र० । तस्याः सम्भोगे दोषो यथा "बाला तु प्राणदा प्रोक्ता युवती प्राणहारिणी । प्रौढ़ा करोति वृद्धत्वं वृद्धा मरणमादिशेत् । निदाघशरदोर्बाला प्रौढ़ा वर्षावसन्तयोः । हेमन्ते शिशिरे योग्या न वृद्धा कापि शस्यते । नार्वाक् तु षोड़शाद्वर्षात् सप्तत्याः परतो न च । आयुष्कामो नरः स्त्रीभिः संयोगं कर्त्तुमर्हति । पञ्चपञ्चाशतो नारी सप्ततिप्रतिकः पुमान् । द्वावेतौ न प्रसूयेते प्रसूयेते विपर्य्ययात्" राजवल्लभः । "शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि । प्रभाते

मैथुनं निद्रा सद्यः प्राणहराणि षट्” चाणक्यनीतिसारः

वृद्धि स्त्री वृध–क्तिन् । १वर्द्धने २अभ्युदये मेदि० ३सम्पत्तौ ४समूहे च । वृध–कर्त्तरि क्तिच् । ५ओषधिविशेषे ऋद्धिशब्दे १४४७ पृ० तल्लक्षणादि दृश्यम् ।
(कोरन्द) ६रोगविशेषे तन्निदानादि भावप्र० उक्तं यथा “तत्र वृद्धेर्निदानं संख्याञ्चाह ‘दोषास्रमेदोमूत्रान्त्रैः सवृद्धिः सप्तधा मता । मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलः । वृद्धिं करोति कोषस्थः फलकोषाभिवाहिनीम् । कृत्वा प्रकुपितो वायुर्धमनीः शुक्रगामिनीः” । तत्र वातिकमाह “वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक्” । अहेतुरुक् अत्र मध्ये नञ् । तेन स्वल्पादपि विप्रकृष्टात् कारणात् रुक् पीड़ा यत्र सः । अथ पैत्तिकमाह “पक्वोदुम्बरसङ्काशः पित्ताद्दाहोष्मपाकवान्” । दाहः अभ्यन्तरः ऊष्मा बहिस्तप्तता । अथ श्लैष्मिकमाह “कफाच्छीतो गुरुः स्निग्धः कण्डूमान् कठिनोऽल्परुक्” । अथ रक्तजमाह “कृष्णस्फोटावृतः पित्तवृद्धिलिङ्गश्च रक्तजः” । कृष्णस्फोटावृत इति पैत्तिकोद्भवः । मेदोजमाह “कफवन्मेदसो वृद्धिर्मृदुस्तालफलोपमः” । नीलवर्त्तुलः । मूत्रजमाह “मूत्रधारणशीलस्य मूत्रजः स तु गच्छतः । अम्भोभिः पूर्णदृतिवत् क्षोभं याति सरुङ् मृदुः । मूत्रकृच्छ्रमधः कुर्य्यात् चलनन् फलकोषयोः” । चलनम् फलकोषयोरधः मूत्रकृच्छ्रं मूत्रेण व्यथां कुर्य्यादित्यर्थः । अथान्त्रवृद्धिमाह “वातकोपिभिराहारैः शीततोयावगाहनैः । धारणेरणभाराध्वविषमाङ्गप्रवर्त्तनैः । क्षोभणैः क्षोभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा । पवनो विगुणीकृत्य स्वनिवेशादधो नयेत् । कुर्य्याद् वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा” । धारणम् उपस्थितस्य वेगस्य । ईरणम् अनुपस्थितस्य वेगस्य प्रेरणम् । विषमाङ्गप्रवर्त्तनं वक्रत्वेनाङ्गमोटनम् । अन्यानि क्षोभणानि बलवद्विग्रहकठोरधनुराकर्षणादीनि तैः क्षोभितः सन्दुष्य सञ्चलितः पवनः यदा क्षुद्रान्त्रावयवं विगुणीकृत्य स्वनिवेशादधो नयेत् । तदा वङ्क्षणसन्धिस्थः अन्त्रवृद्धिरोगः । तस्यावस्थामाह । “उपेक्ष्यमाणस्य च मुष्कवृद्धिमाध्मानरुक् स्तम्भवतीं स कुर्य्यात् । प्रपीडितोऽन्तः स्वनवान् प्रयाति प्रध्मापयन्नेति पुनश्च मुक्तम्” । तत्राध्मानमुदरे रुक् वृद्धयोर्मुष्कयोः स्तम्भो गात्रे तद्युक्तां कुर्य्यादित्यर्थः । भोजोऽप्याह “अन्त्रं विगुणमादाय वायुर्नयति वङ्क्षणम् । वङ्क्षणात् तद्गुणायुक्तं फलकोषं प्रपद्यते” इति । स मुष्कवृद्धिरोगः अन्तः उदरे प्रध्मापयन् आगमनमार्गं निरुद्धं कुर्वन् एति आयाति । अथासाध्यमाह स कीदृक् स्यादित्याकाङ्क्षायामाह “यस्मान्त्रावयवाश्लेषो मुष्कयोर्वातसञ्चयात् । अन्त्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः” । वातवृद्धिसमाकृतिरिति योऽन्त्रवृद्धिरोगः सोऽसाध्यो वातवृद्धिसमाकृतिः” । अन्त्रवृद्धिशब्दे २०८ पृ० सुश्रुतोक्तं दृश्यम् नीतिशास्त्रादि त्रिवर्गान्तर्गते ७वर्गषट्कपदार्थे “क्षयः स्थानञ्च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्” अमरः । “कृषिर्वणिक् पथो दुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकरबलादानं शून्यानाञ्च निवेशनम्” एतेषामष्टानामन्यतमस्य चयं स्यात् वृद्धिरित्यर्थः । ८कलान्तरे (सुद) वृद्धिस्वरूपभेदादिकं वीरमि० उक्तं यथा नारदः “वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधाऽन्यैः प्रकीर्त्तिता । षड्विधाऽन्यैः समाख्याता तत्त्वतस्तां निबोधत” इति । षड्विधा मे इति क्वचित् पाठः तत्र मे मते । तान् प्रकारान् स एवाह “कायिका१ कालिका२ चैव चक्रवृद्धिस्ततोऽपरा३ । कारिता४ च शिखा५ वृद्धिर्भोगलाभस्तथैव च६ इति” । एतेषां स्वरूपमाह “कायिका कर्मसंयुक्ता मासग्राह्या तु कालिका । वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता । प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा स्मृता । गृहाद्यैः फलं क्षेत्राद् भोगलाभः प्रकीर्त्तितः” इति । कायिका कर्मसंयुक्ता यत्र बन्धकीकृतस्य गवाश्वादेर्दोहनवाहनादिकं कर्म वृद्धित्वेन परिकल्पितं तत्र सा कायिकेत्यर्थः । तथा च व्यासः “दोह्यवाह्यकर्मयुता कायिका समुदाहृतेति” । मदनरत्ने तु भोग्याधितया स्थापितस्य यो दोहनवाहनादिकर्मरूपो भोगस्तत्कालिका या वृद्धिः सा कायिकेत्युक्तम् । मासग्राह्या तु कालिका प्रतिमासं ग्राह्या या वृद्धिः सा कालिकेत्यर्थः । “प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका मतेति” नारदवचनात् । वृद्धेर्वृद्धिश्चक्रवृद्धिः । वृद्धेरपि प्रतिमासं मूलभावेन पुनर्वृद्धिरित्यर्थः । “वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृतेति” नारदवचनात् । कारिता ऋणिना कृता । ऋणिनाऽधमर्णेन स्वेच्छया कृता वृद्धिः कारितेत्यर्थः । “वृद्धिः सा कारिता नाम यर्णिकेन स्वयं कृतेति” नारदवचनात् । अधमर्णकारितैव वृद्धिर्देया नोत्तमर्णकारिता तथा च वृहस्पतिः “ऋणिकेन तु या वृद्धिरधिका सम्प्रकल्पिता । आपत्कालकृता नित्यं दातव्या सा तु का-

रिता । अन्यथा कारिता वृद्धिर्न दातव्या कथञ्चनेति" । उत्तमर्णप्रलोभनार्थम् आपत्काले शास्त्रोक्ताद्धिका स्वयं कल्पिता कारिता या सा वृद्धिर्दातव्या न पुनरनेवंविधा धनिकेन कारिता दातव्येत्यर्थः । "प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा स्मृता" । प्रतिदिनवर्द्धमानशिखासादृश्याच्छिखावृद्धिरिति व्यपदिश्यत इत्यर्थः । किं पुनः शिखासादृश्यं वृद्धेरित्याकाङ्क्षायां वृहस्पतिरेवाह "शिखेव वर्द्धते नित्यं शिरश्छेदान्निवर्त्तते । मूले दत्ते तथैवैषा शिखावृद्धिस्तु सा स्मृतेति"। प्रत्यहं गृह्यत इति च धर्म्यप्रतिश्रुतदिनसंख्यया वृद्धिग्रहणकालोपलक्षणम् । तथा च कात्यायनः "प्रतिकालन्ददात्येव शिखावृद्धिस्तु सा स्मृतेति"। "गृहात्क्षेत्रः फलं चैवाद् भोगलाभः प्रकीर्त्तितः" । बन्धीकृताद् गृहात्क्षेत्राद्वासादिजनितः सस्योदः । क्षेत्रात् शस्यादिफलञ्च भोगलाभाख्यो वृद्धिप्रकार इत्यर्थः । गृहक्षेत्रग्रहणं स्थावरात्मकभोग्याधेरुपलक्षणार्थम् । अतएव कात्यायनः "आधिभोगस्त्वशेषो यो वृद्धये परिकल्पितः । प्रयोगे यत्र चैवं स्यादाधिभोगः स उच्यते" इति । यस्मिन् ऋणादानप्रयोगे स्थावराधित्वेन परिकल्पिता या वृद्धिस्तत्र सा वृद्धिराधिभोग इत्युच्यते इत्यर्थः । अपराकौ "गृहात् क्षेत्रः शदः क्षेत्रादिति पाठः"। क्षोभो भाटक इति कल्पतरौ । शदः शस्यादिफलम् । वृद्धेः परिमाणं दर्शयति मनुः "वशिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्द्धिनीम् । अशीतिभागं गृह्णीयात् मासाद्वार्द्धुषिकः शते" इति । निष्कशते प्रयुक्ते मासस्य सपादनिष्कपरिमितां वृद्धिं वार्द्धुषिको वृद्ध्यर्थं गृह्णीयादित्यर्थः । एतत्सबन्धकविषयम् । अतएव याज्ञवल्क्यः "अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके । वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथेति" । सबन्धके प्रयुक्तस्य द्रव्यस्याशीतितमो भागो वृद्धिः पणशते प्रयुक्ते सपादः पणः प्रतिमासं वर्द्धत इत्यर्थः । अन्यथा बन्धकराहित्ये वर्णक्रमात् ब्राह्मणादिवर्णक्रमेण द्वित्रिचतुःपञ्चकं शतन्न्याय्यं भवति । द्वौ वा त्रयो वा चत्वारो वा इति द्वित्रिचतुःपञ्चा यस्मिन् शते वृद्धिर्दीयते इति द्वित्रिचतुःपञ्चकं शतम् । "तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते" पा० कन् । तथा चायमर्थः । बन्धकरहिते पणशतं प्रति प्रतिमासं ब्राह्मणात् पणद्वयं क्षत्रियात् पणत्रयं वैश्यात् पणचतुष्टयं शूद्रात् पणपञ्चकं ग्राह्यम् । यत्तु मनुनोक्तम् । "द्विकं शतं वा गृह्णीयात् शतावरमनुस्मरन्निति" तदुभयव्यवस्थितविकल्पविषयम् । अतएव व्यासः "सबन्धे भाग आशीतः षाष्टभागः सलग्नके । निराधाने द्विकशतं मासलाभ उदाहृतः" इति । सबन्धे आधिसहिते । आशीतः अशीतितमः । षाष्टः षष्टितमः । लग्नकः प्रतिभूः । निराधाने बन्धकरहिते । आधानग्रहणं प्रतिभुवोरप्युपलक्षणम् । कल्पतरौ षाष्टभाग इति पठित्वा सलग्नके अशीतितमो भागः षष्टिबन्धकसहितो मासवृद्धिरित्युक्तम् "द्विकन्त्रिकञ्चतुष्कञ्च पञ्चकञ्च शतं समम् । मासस्य वृद्धिं गृह्णीयाद् वर्णानामनुपूर्वशः" इति । द्विकं द्वौ वृद्धिर्दीयते यस्मिन् धने तत् तथा । एवं त्रिकाद्यपि समकालं मासं नाधिकम् । विष्णुरपि "अथोत्तमर्णोऽधमर्णकाद्यथादत्तमर्थं गृह्णीयात् । द्विकन्त्रिकञ्चतुष्कं पञ्चकं शतं वर्णानुक्रमेण प्रतिमासमिति" । अधमर्णविशेषेऽप्याह याज्ञवल्क्यः "कान्तारगास्तु दशकं सामुद्रा विंशकं शतमिति" । अर्थं गृहीत्वा कान्तारं महावनन्तद्गच्छन्तीति कान्तारगा दुर्गस्थलगन्तारो वस्त्रादिक्रयकारिणः पणशतस्य दशकं प्रतिमासं दशपणान् दद्युरित्युत्तरवाक्यस्थस्यानुषङ्गः । समुद्रन्तरन्तीति सामुद्राः समुद्रगन्तारः प्रतिमासं विंशकं शतं दद्युरित्यर्थः । कारितायान्तु न नियम इत्याह स एव "दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिष्विति" । सर्वे ब्राह्मणादयोऽधमर्णाः सबन्धकेऽबन्धके वा सर्वासु जातिषूत्तमर्णभूतासु स्वयमङ्गीकृतां वृद्धिं दद्युरित्यर्थः । द्रव्यविशेषे वृद्धिविशेषमाह स एव "सन्ततिस्तु पशुस्त्रीणां रसस्याष्टगुणा परा । वस्त्रधान्यहिरण्यानाञ्चतुस्त्रिद्विगुणा परेति" । पशुस्त्रीणां गोमहिषीस्त्रीप्रभृतीनां वृद्ध्यर्थं प्रयुक्तानान्तदीया सन्ततिरेव वृद्धिः । रसस्य घृतादेरष्टगुणा । वस्त्राणाञ्चतुर्गुणा धान्यानान्त्रिगुणा । हिरण्यानां द्विगुणा परेति प्रत्येकं सम्बध्यते । परा परमा । अतःपरमधिका वृद्धिर्नास्तीत्यर्थः । न च गवादीनाम् ऋणत्वेन दानस्य सम्भवतीति वाच्यम् । तत्क्षीरवाद्युपभोगस्य तत्पुरीषसन्तत्याद्यर्थिनो दानसम्भवात् । वृषभन्तु वीरवाहनसेवार्थिनः । वृहस्पतिरपि "हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके । धान्ये चतुर्गुणा प्रोक्ता शदवाह्यलवेषु च । उक्ता पञ्चगुणा शाके वीजेक्षौ षड्गुणा स्मृता । लवणस्नेहमद्येषु वृद्धिरष्टगुणा मता । गुडे मधुनि चैवोक्ता प्रयुक्ते चिरकालिके"

इति । कुप्यं त्रपुसीसकादिकम् । शदः क्षेत्रफलम् । तच्च गोबलीवर्द्दन्यायाद्धान्यव्यतिरिक्तं पुष्पमूलफलादिकम् । वाह्योऽश्वादिः । लवो मेषोर्णाचमरीकेशादिः । अत्र चिरकालशब्देन प्रतिश्रुतायाः अशीतिभागायाः वृद्धेर्यस्मिन् समये द्वैगुण्यादिप्रापकत्वं सम्भवति । ततोऽधिकः कालो गृह्यते । यत्तु "धान्ये शदे लवे वाह्ये इत्यादिमनुनोक्तं तत्प्रत्यर्पणसमये सम्पन्नाधमर्णविषयम् । षाड्गुण्यनिषेधपरमिति मदनरत्ने । यत्तु वशिष्ठवचनम् "द्विगुणं हिरण्यं त्रिगुणं धान्यं धान्येनैव रसा व्याख्याताः । पुष्पमूलफलानि च तुलाधृतमष्टगुणमिति" तत्त्रिगुणमेव धान्यादिकं दातव्यमिति यत्र देशे स्थितिस्तद्विषयम् । दरिद्राधमर्णविषयं वा एवमन्यत्रापि न्यूनाधिकपरमवृद्धिप्रतिपादकानि वचनानि देशविशेषविषयतया दरिद्रादिविषयतया वा व्यवस्थापनीयानि । व्यासोऽपि "वदन्त्यष्टगुणान् काले मद्यान् स्नेहरसासवानिति" स्नेहस्तैलादिः । रसः क्षीरादिः । कात्यायनोऽपि "तैलानाञ्चैव सर्वेषां मद्यानां मधुसर्पिषाम् । वृद्धिरष्टगुणा ज्ञेया गुडस्य लवणस्य चेति" । विष्णुरपि "हिरण्यस्य द्विगुणा वृद्धिस्त्रिगुणा वस्त्रस्य धान्यस्य चतुर्गुणा रसस्याष्टगुणा सन्ततिः स्त्रीपशूनामिति" । व्यासोऽपि "शाकपाषाणबीजेक्षौ षड्गुणा परिकीर्त्तितेति" । वशिष्ठोऽपि "वज्रशुक्तिप्रवालानां हेम्नश्च रजतस्य च । द्विगुणा त्विष्यते वृद्धिः कृतकालानुसारिणीति" । शुक्तिशब्देनात्र मुक्ताफलं लक्ष्यते वज्रसाहचर्यात् । अतएव कात्यायनः "मणिमुक्ताप्रवालानां सुवर्णरजतस्य च । तिष्ठतो द्विगुणा वृद्धिः फलकैटाविकस्य चेति" । कैटं कीटाङ्गजम् पट्टसूत्रादि । आविकं कम्बलादिकम् । वशिष्ठोऽपि "ताम्रायःकांस्यरीतीनां त्रपुणः सीसकस्य च । त्रिगुणा तिष्ठतो वृद्धिः कालाच्चिरकृतस्य तु" इति । रीतिरारकूटम् । देशभेदेन परां वृद्धिं दर्शयति नारदः "ऋणानां सार्वभौमोऽयं विधिर्वृद्धिकरः स्मृतः । देशाचारस्थितिस्त्वन्या यत्रर्णमवतिष्ठते । द्विगुणं त्रिगुणञ्चैव तथान्यस्मिंश्चतुर्गुणम् । तथाष्टगुणमन्यस्मिन् तत्तु देशेऽवतिष्ठते" इति । यत्र वृद्धिविशेषो न श्रूयते तत्र द्विगुणैव ग्राह्येत्याह विष्णुः "अनुक्तानां द्विगुणेति" अयञ्च द्वैगुण्यादिरूपो वृद्ध्युपरमः सकृत्प्रयोगे सकृदाहरणे वेदितव्यः तथा च मनुः "कुषीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहितेति" । उपचयार्थं प्रयुक्तं द्रव्यं कुषीदं तस्य वृद्धिः कुषीदवृद्धिर्द्वैगुण्यन्नात्येति नातिक्रामति । यदि सकृदाहिता सकृत् प्रयुक्ता पुरुषान्तरसंक्रमणादिना प्रयोगान्तरकरणेन तस्मिन्नेव वा पुरुषे रेकसेकाभ्यां प्रयोगान्तरकरणे द्वैगुण्यमतिक्रम्य पूर्ववद्वर्द्धत एवेत्यर्थः । द्वैगुण्यग्रहणं त्रैगुण्यादीनामुपलक्षणम् । सकृदाहृतेति पाठे यदि प्रतिमासं प्रतिवत्सरं वा न गृह्यते किन्तु सकृद् गृह्यते तदा द्वैगुण्यन्नातिक्रामतीत्यर्थः । गौतमोऽपि "चिरस्थाने द्वैगुण्यं प्रयोगस्येति" । प्रयोगस्येत्येकवचननिर्देशात् प्रयोगान्तरकरणे द्वैगुण्यातिक्रमः चिरस्थान इति निर्देशात् शनैः शनैर्वृद्धिग्रहणे द्वैगुण्यातिक्रमो भवतीति सूचितम् । एतस्य वृद्ध्युपरमस्य क्वचिद् द्रव्यविशेषेऽपवादमाह बृहस्पतिः "तृणकाष्ठेष्टकासूत्रकिण्वचर्मास्थिवर्मणाम् । हेतिपुष्पफलानाञ्च वृद्धिस्तु न निवर्त्तते" । किण्वं सुराद्रव्योपादानकारणभूतो मलविशेषः चर्म शरादिनिवारकफलकः वर्म कवचम् । हेतिरायुधम् । पुष्पफलयोर्वृद्धेरनिवृत्तिः प्रतिदानवेलायामत्यन्तासमर्थाधमर्णविषया देशविशेषविषया वा वेदितव्या । अन्यथा त्रिगुणवृद्धिप्रतिपादकव्यासवचनविरोधः स्यात् । विष्णुरपि "किण्वकार्पाससूत्रवर्मचर्मायुधेष्टकाङ्गाराणामक्षयेति" । कार्पासे तु षड्गुणवृद्धिविधायकव्यासवचनविरोधः पूर्ववत्परिहरणीयः । वशिष्ठोऽपि "दन्तचर्मास्थिशृङ्गाणां मृण्मयानान्तथैव च । अक्षया वृद्धिरेतेषां पुष्पमूलफलस्य च" इति । अक्षया मूलप्रतिपादनाभावे शतगुणापि वर्द्धत एवेत्यर्थः । भिक्षावृद्ध्यादीनामनुपरममाह बृहस्पतिः "भिक्षावृद्धिर्दायिकाञ्च भोगलाभं तथैव च । धनी तावत् समादद्याद् यावन्मूलन्न शोधितम्" । न शोधितञ्च प्रतिदानरूपेणेत्यर्थः क्वचिदनङ्गीकृतापि वृद्धिर्भवतीत्याह विष्णुः "यो गृहीत्वा ऋणं पूर्वं श्वो दास्यामीति सामकम् । न दद्याल्लोभतः पश्चात्तदह्नाद् वृद्धिमाप्नुयात्" इति । श्व इति प्रतिश्रुतस्य प्रतिदानकालावधेरुपलक्षणम् । समकमेव सामकम् अवृद्धिकमिति यावत् । योऽमुकस्मिन् दिने समकमेवाहं त्वदीयं धनं पूर्णं समग्रं दास्यामीति प्रतिज्ञाय ऋणं गृहीत्वा पश्चाल्लोभाद्विलम्बं कुर्य्यात् सोऽवधिदिनमारभ्य वृद्धिं दद्यादित्यर्थः । कालावध्यनङ्गीकारेण गृहीतस्य धनस्य षण्मासादूर्द्ध्वं वृद्धिर्भवतीत्याह नारदः "न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित् । अना-

कारितमप्यूर्द्ध्वं वत्सराद्विविवर्द्धते” इति । अनाकारिता अनङ्गीकृता । प्रीतिदत्तानां प्रतियाचनप्रतिदानदिनानिर्देशमूल्यानामिति शेषः । अनाकारितेत्यादेरयमर्थः । वृद्धिमकृत्वा गृहीतमपि षण्मासादूर्द्ध्वं प्रीतिदत्तं वृद्धिं प्राप्नोतीति । प्रतियाचितस्य प्रीतिदत्तस्याऽदाने वृद्धिविशेषमाह कात्यायनः “प्रीतिदत्तन्तु वर्द्धेत यावन्न प्रतियाचितम् । याच्यमानमदत्तञ्चेद्वर्द्धते पञ्चकं शतम्” इति । पञ्चकं पञ्चाधिकम् प्रतियाचनदिनमारभ्य पणशतस्य पणपञ्चकं प्रतिमासं वर्द्धते इत्यर्थः । याचितकं गृहीत्वा अप्रतिदत्त्वैव देशान्तरगमने विशेषमाह कात्यायनः “यो याचितकमादाय तमदत्त्वा दिशं व्रजेत् । ऊर्द्ध्वं संवत्सरात्तस्य तद्धनं वृद्धिमाप्नुयात्” इति । एतच्चाप्रतियाचितविषयम् । प्रतियाचिते याचितकमदत्त्वा यदि देशान्तरं गच्छति तदा विशेषमाह स एव “कृतोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत् । ऊर्द्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात्” इति । कृतोद्धारं याचितकं गृहीत्वा याचितोऽप्यदत्त्वेत्यन्वयः । देशान्तरगमनाभावे तु याचितकालमारभ्य याचितकस्य वृद्धिविशेषमाह स एव “स्वदेशेऽपि स्थितो यस्तु न दद्यात् याचितः क्वचित् । तं ततो कारितां वृद्धिमनिच्छन्तञ्च दापयेत्” इति । ततः प्रतियाचनकालादारभ्येत्यर्थः । एतत्कञ्चिदवधिमपरिकल्प्य याचञ्चाप्राप्तेऽयम् । अवधि स्वीकृत्य तदतिक्रमे त्वतिक्रमदिनमारभ्य तद्धनस्य वृद्धिर्ज्ञेया । “तदूर्द्ध्वाद्वृद्धिमाप्नुयादिति” न्यायसाम्यात् । गृहीतपण्यो मूल्यमदत्त्वा देशान्तरगमने वृद्धिविशेषमाह स एव “पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत् । ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात्” इति । एतच्चाप्रतियाचितविषयम् । प्रतियाचने त्वेतस्य निक्षिप्तवृद्धिशेषवत् तद्दिनमारभ्य प्रतिमासं शते पञ्चकं वर्द्धत इत्याह स एव “निःक्षिप्तं वृद्धिशेषञ्च क्रयविक्रय एव च । याच्यमानमदत्तञ्चेद्वर्द्धते पञ्चकं शतम्” इति । नन्वकृतायां वृद्धौ परिमाणविशेषस्यानुक्तेः किं परिमाणं ग्राह्यमिति चेत् । अशीतिभागो वृद्धिः स्यादित्यादि याज्ञवल्क्याद्युक्तपरिमाणं ग्राह्यमिति ब्रूमः । अतएव विष्णुः “वृद्धिं दद्युर्वत्सरातिक्रमे यथाभिहितामिति” । वत्सरातिक्रम इति यत्र यदतिक्रमे वृद्धिरुक्ता तस्योपलक्षणम् । यथाभिहितां धर्मशास्त्रे इति शेषः । धर्मशास्त्रे यथोक्तां तथाविधामित्यर्थः । ननु यथाभिहितामित्यस्यार्थिप्रत्यर्थिनोरन्यतरेण मध्यस्थेन वाभिहितां दद्यादित्यर्थः कस्मान्न भवति अतिप्रसङ्गापत्तेः । “कृतानुसारादधिका व्यतिरिक्ता न सिद्ध्यति । कुसीदपथमाहुस्तं पञ्चकं शतमर्हतीति मनूक्तेश्च । अस्यार्थः । शास्त्रविधिनियमितशास्त्रकृतवृद्ध्यनुसारी यो वृद्धिग्रहणे लौकिकानां समाचारः तस्मादधिका वृद्धिरुत्तमर्णेरकृतवृद्धौ न सिद्ध्यति यतः सा व्यतिरिक्ता धर्मशास्त्रबाह्या । अतएव कुसीदपथमाहुस्तन्न धर्मपथमिति । पञ्चकं शतमर्हतीति प्रतियाचितविषयमिति स्मृतिचन्द्रिकायाम् । पूर्वोक्ताच्छास्त्रानुसारादधिकाऽधमर्णेनाकृता वृद्धिर्न सिद्ध्यति । यतः कुसीदपथमाहुस्तम् । यदा तु व्यवहारावष्टम्भादुत्तमर्णोऽधिकमधमर्णेनाकारितं लाभमिच्छति तदा ब्राह्मणे पञ्चकं शतं ग्रहीतुमर्हति न ततोऽधिकमधमर्णाकारितमित्यर्थमाह रत्नाकरः । अकृतवृद्धेरपवादमाह नारदः “पण्यमूल्यं भृतिन्यासो दण्डो यश्च प्रकल्पितः । वृथादानाक्षिकपणा वर्द्धन्ते नाविवक्षिताः” इति । पण्यस्य वस्त्रादेर्मूल्यम् । भृतिर्वेतनम् । न्यासो निक्षेपः । वृथादानं वेश्यादिभ्यः प्रतिश्रुतम् । आक्षिकपणो द्यूतद्रव्यम् । अविवक्षिताः । अत्र पण्यमूल्यस्य वृद्धेरभावोक्तिः प्रवासप्रतियाचनयोरभावे वेदितव्या अन्यथा पूर्वोक्तकात्यायनवचनेन विरोधः स्यात् । न्यासस्य च वृद्ध्यभाववचनं प्रतियाचनाभावे “न वृद्धिः स्त्रीधने लाभे निःक्षिप्ते च यथास्थिते । सन्दिग्धे प्रातिभाव्ये च यदि न स्यात् स्वयंकृतम्” इति संवर्त्तवाक्ये यथास्थितमिति विशेषणोपादानाद्व्यवहारान्यथाकरणाभावे च ज्ञातव्यम् । तथा च निक्षिप्तं वृद्धिशेषञ्चेत्यादि पूर्वोक्तकात्यायनवचनविरोधो न । कात्यायनोऽपि “वर्णस्यासवद्यूते पण्यमूल्ये च सर्वदा । स्त्रीशुल्केषु न वृद्धिः स्यात् प्रातिभाव्यागतेषु च” इति । सर्वदेत्यनेन प्रतियाचनादेः परस्तादपि वृद्धिरकृता नास्तीत्युक्तम् । यद्यपि सर्वदेति सर्वशेषत्वात् पण्यमूल्येऽपि प्रतियाचनादेः परस्तादकृतवृद्ध्युपरमः प्रतिभाति । तथापि पूर्वोक्तकात्यायनवचनविरोधात् न तच्छेषता सर्वदेत्यस्य । एवञ्च पूर्वोक्त एव परिहारः । एवं वस्त्रयोऽपि वृद्ध्यभावोक्तिः प्रतियाचनाभावे तथा च न तच्छेषतापि । एवञ्च न पूर्वोक्ताचारवृद्धिप्रतिपादकवसिष्ठादिवचनविरोधः । अन्यत्रापि वृद्ध्यभावं व्यास आह “प्रातिभाव्यमृतस्वमगृही-

तस्य द्विगुणतः। न वर्धते प्रयुक्तस्य दमः शुल्कं प्रतिश्रुतम्” इति। भुक्तबन्धमित्यनेन स्थापितस्य सुवर्णादेरलङ्काराद्युपभोगे वृद्धिर्न भवतीत्युक्तम्। अतएव गौतमः “भुक्ताधिर्न वर्द्धते वस्त्रालङ्कारादिरिति” अस्पष्टीतस्य द्विगुणतः प्रतिदातुमिच्छोरधमर्णादुत्तमर्णोवृद्धिलोभादिवशान्न यदा गृह्णाति तदा तस्य कृतापि वृद्धिस्तद्दिनादारभ्य न देयेत्यर्थः। तथा च याज्ञवल्क्यः “दीयमानं न गृह्णाति प्रयुक्तं यत् स्वकंधनम्। मध्यस्थस्थापितं तत्स्याद्वर्द्धते न ततःपरम्” इति। मध्यस्थस्थापितमिति विशेषणेनाधमर्णो यदि स्वनिकटे स्थापयति तदा भवत्येव वृद्धिरिति”। ६ग्रहभेदे ७द्रव्ये पु०। १०धने च राजनि०।

**वृद्धिका** स्त्री वृद्धि+स्वार्थे क। वृद्धिनामकौषधे शब्दच०।

**वृद्धिजीविका** स्त्री वृद्धिरूपा जीविका। ऋणदानादिना प्रयुक्तधनेभ्यो लब्धजीविकायाम्।

**वृद्धिश्राद्ध** वृद्धौ अभ्युदयाय श्राद्धम्। पुत्रादीनां संस्काराङ्गे पार्वणविधिके नान्दीश्राद्धे नान्दीश्राद्धशब्दे दृश्यम्

**वृद्धोक्ष** पु० कर्म० अच् समा०। जरद्गवे अमरः।

**वृद्ध्याजीव** त्रि० वृद्धिम् अधमर्णतः प्रयुक्तद्रव्याधिकलाभमाजीवति आ+जीव-अच्। वार्धुषिके अमरः।

**वृध** दीप्तौ अ० उभ० अक० सेट्। वर्द्धयति ते अवीवृधत् त अववर्द्धत् त।

**वृध** वृद्धौ भ्वा० आत्म० लुङि लृटि लृङि च उभ० अक० सेट् वृता०। वर्द्धते अर्दित् अवृधत् अवर्द्धिष्ट वृतवत् वर्त्स्यति वर्द्धिष्यते। उदित् क्त्वा वेट्।

**वृधसान** पुंस्त्री० वृध-आन असुक् च। मनुष्ये निरु०कौ०। स्त्रियां ङीप्। [ उणादि०।

**वृधसानु** पु० वृध-आनु असुक् च। १पुरुषे २पत्रे ३क्रतौ च

**वृन्त** न० वृ-क्त नि० मुम् च। (बोँटा)फलपत्रादिबन्धने अमरः

**वृन्ताक** पुंस्त्री० वृन्तमकति अक-अण्। वार्त्ताकौ शब्दच०। स्त्री राजनि० स्त्रीत्वे गौरा० ङीष्।

**वृन्तिता** स्त्री वृन्तं जातमस्याः तार०इतच्। कटुकायां शब्दच०

**वृन्द** न० वृणुते वृणुते वा—वृण—वृत वा दन् नि०। १समूहे अमरः। २दशार्बुदसंख्यायां ज्योति० ३केदारकन्यायां ४तवक्षां स्त्री शब्दच०। ५राधिकायां स्त्री वृन्दावनम्।

**वृन्दार** त्रि० वृन्दमृच्छति ऋ-अण्। मनोहरे शब्दच०।

**वृन्दारक** पु० वृन्देन कायति कै-क। १देवे अमरः। स्वार्थे क। २मुख्ये ३मनोहरे च त्रि० ४यूथपतौ पु०स्या०डि०।

**वृन्दावन** स्त्री वृन्दायाः तपस्यार्थं तत्क्रीडार्थं वा वनम् शा० त०। मथुरासन्निकृष्टे वैष्णवे १तीर्थभेदे गोलोकस्थे धामभेदे च “कमलांशा तस्य (केदारस्य) कन्या नाम्ना वृन्दा तपस्विनीत्युपक्रमे “वृन्दा यत्र तपस्तेपे तत्तु वृन्दावनं स्मृतम्। वृन्दया तत्र कृता क्रीडा तेन वा मुनिपुङ्गव!। राधाषोडशनाम्नां च वृन्दा नाम श्रुतौ श्रुतम्। तस्याः क्रीडा वनं रम्यं तेन वृन्दावनं स्मृतम्” ब्रह्मवै० जन्म० १७अ०। “नित्यं वृन्दावनं धाम ब्रह्माण्डोपरि संस्थितम्। पूर्णब्रह्मसुखैश्वर्यं नित्यमानन्दमव्ययम्। वैकुण्ठादि तदंशांशं स्वयं वृन्दावनं भुवि। गोलोकैश्वर्यं यत् किञ्चित् गोकुले तत् प्रकीर्त्तितम्। वैकुण्ठादिवैभवं यत् द्वारकायां प्रकाशयेत्। यद्ब्रह्म परमैश्वर्यं नित्यं वृन्दावनाश्रयम्। तस्मात् त्रैलोक्यमध्ये तु पृथ्वी धन्येति विश्रुता। यत् स्थानाद्गुरुकं धाम विष्णोरेकान्त वल्लभम्। स्वस्थानमधिकं नाम धेयं माथुरमण्डलम्। निगूढं परमं स्थानं पुर्य्यभ्यन्तरसंस्थितम्। सहस्रपत्रकमलाकारं माथुरमण्डलम्। विष्णुचक्रं परिभ्रामधाम वैष्णवमद्भुतम्। कर्णिकापत्रविस्तारं रहस्यक्रमभीरितम्। प्रधानं द्वादशारण्यं माहात्म्यं कथितं क्रमात्। भद्र१श्री२लौह३भाण्डीर४महा५ताल६खदीरकाः७। बहुल८कुमुद९काम्य१०मधु११वृन्दावनं१२ तथा। द्वादशैता वने संख्याः कालिन्द्याः सप्त पश्चिमे। पूर्वं पञ्च वनं प्रोक्तं तत्रास्ति गुह्यमुत्तमम्। महावनं गोकुलाख्यं रम्यं मधुवनं तथा। पूर्वे तु पञ्च भद्राद्यास्तालाद्याः सप्त पश्चिमे। अन्यच्चोपवनं प्रोक्तं कृष्णक्रीडारसस्थलम्। कदम्बखण्डिकं नन्दवनं नन्दीश्वरं तथा। नन्दानन्दखण्डञ्च पलाशाशोककेतकम्। सुगन्धिमादनं कैलासामृतं भोजनस्थलम्। सुखप्रसाधनं वत्सहरणं शेषशायनम्। श्यामपूर्व दधिग्रामं चक्रभानुपुरं तथा। सङ्केतं विपटञ्चैव बालक्रीडञ्च धूसरम्। कैमुद्रुमं सरोवीरमुत्सुकञ्चापि नन्दनम्। इत्यमेव वने संख्यास्त्रिंशच्चोपवने कृता। पूर्वोक्तं द्वादशारण्यं प्रधानं वनमुत्तमम्। तन्मोत्तरे चतुर्थस्य वनस्य समुदाहृतम्। नाना विधरसक्रीडानानालीलामयस्थलम्। द्वात्रिंशत् विस्ताररहस्यक्रमभीरितम्। सहस्रपत्रकमलं गोकुलाख्यं महत् पदम्। तत्रोपरि स्वर्णपीठे मणिमण्डप मण्डितम्। तत्र तत्र क्रमाद्दिक्षु विदिक्षु दलमीरितम्। यद्दलं दक्षिणे प्रोक्तं परं गुह्योत्तमोत्तमम्। यस्मिन्

दले महापीठं निगमागमदुर्गमम्। योगीन्द्रैरपि दुष्प्रापं सर्वात्मा यत्र गोकुले। द्वितीयं दलमाग्नेयं तद्रहस्य द्विधा तथा। निकुञ्जकुटीवीरकुटीरौ तद्दले स्थितौ। पूर्वदलं तृतीयं यत् प्रधानं स्थानमुच्यते। गङ्गादिसर्वतीर्थानां स्पर्शाच्छतगुणं भवेत्। चतुर्थदलमैशान्यां सिद्धपीठेप्सितप्रदम्। कामयन् तत्र गोपी तत्र कृष्णरतिं लभेत्। वस्त्रालङ्कारहरणं तद्दले समुदाहृतम्। उत्तरे पञ्चमं प्रोक्तं दलं सर्वदलोत्तमम्। द्वादशादित्यमत्रैव दलस्य कर्णिकासमम्। वायव्यन्तु दलं षष्ठं तत्र कालीह्रदः स्मृतः। दलोत्तमोत्तमञ्चैव प्रधानस्थानमुच्यते। सर्वोत्तमदलं श्रेष्ठं पश्चिमे सप्तमं दलम्। यज्ञपत्नीमथानाञ्च तदीप्सितवरप्रदम्। अघासुरस्य निर्वाणं चक्रे त्रिदशदर्शितम्। ब्रह्ममोहनमत्रैव दलं ब्रह्मह्रदावहम्। नैर्ऋत्यान्तु दलं प्रोक्तमष्टमं व्योमघातनम्। शङ्खचूडवधस्तत्र नानाकेलिरसस्थलम्। स्मृतमष्टदलं प्रोक्तं वृन्दारण्यान्तरस्थितम्। श्रीमद्वृन्दावनं धन्यं यमुनायाः प्रदक्षिणम्। शिवलिङ्गमधिष्ठाता हरो गोपीश्वराभिधः। तद्बाह्ये षोड़शदलं श्रिया पूर्णं तदोदितम्। सर्वासु दिक्षु यत् प्रोक्तं प्रादक्षिण्याद्दु यथाक्रमम्। महत् पदं महद्धाम प्रधानं षोड़शं दलम्। प्रथमैकदलं श्रेष्ठं माहात्म्यं कर्णिकासमम्। तस्मिन् मधुवनं प्रोक्तं तत्र प्रादुरभूत् स्वयम्। चतुर्भुजो महाविष्णुः सर्वकारणकारणम्। तत्राधिष्ठिततदेवं मुनिश्रेष्ठ सनातनम्। दलं द्वितीयमाख्यातं किञ्चिल्लीलारसस्थलम्। खदिरारण्यमत्रैव दलस्य समुदाहृतम्। सर्वश्रेष्ठदलं प्रोक्तं माहात्म्यं कर्णिकासमम्। तत्र गोवर्द्धने रम्ये नित्यानन्दरसाश्रये। कर्णिकायां महालीला तल्लीलारससागरे। यत्र कृष्णो नित्यवृन्दाकाननस्य पतिर्भवेत्। कृष्णो गोविन्दतां प्राप्तः किमन्यैर्बहुभाषितैः। दलं तृतीयमाख्यातं सर्वश्रेष्ठोत्तमोत्तमम्। चतुर्थदलमाख्यातं महाद्भुतरसस्थलम्। हरिर्यस्य पतिः साक्षान्नित्यं गोवर्द्धनं स्वयम्। कदम्बखण्डी तत्रैव पूर्णानन्दरसाश्रयः। स्निग्धं हृद्यं प्रियं रम्यं दलस्य समुदाहृतम्। नन्दीश्वरदलं रम्यं तत्र नन्दालयः स्मृतः। कर्णकादलमाहात्म्यं पञ्चमं दलमुच्यते। अधिष्ठातात्र गोपाला धेनुपालस्ततः परम्। दलं षष्ठं यदाख्यातं तत्र नन्दवनं स्मृतम्। सप्तमं बकुलारण्यं दलं रम्यं प्रकीर्त्तितम्। दलाष्टमं तालवनं तत्र धेनुवधः स्मृतः। नवमं कुमुदारण्यं दलं रम्यं प्रकीर्त्तितम्। काम्यारण्यं दलं हृद्यं दशमं सर्वकारणम्। ब्रह्मप्रसादनं तत्र विष्णुवन्द्यं प्रदर्शितम्। कृष्णक्रीड़ारसस्थानं प्रधानं दलमुच्यते। दलमेकादशं प्रोक्तं भक्तानुग्रहकारणम्। निर्बाणं सेतुबन्धस्य नानारसमयस्थलम्। भाण्डीरं द्वादशदलं वनं रम्यं मनोहरम्। कृष्णक्रीड़ारसस्तत्र श्रीदामादिभिरावृतः। त्रयोदशदलं श्रेष्ठं तत्र भद्रवनं स्मृतम्। चतुर्दशदलं प्रोक्तं सर्वसिद्धिप्रदं स्थलम्। श्रीवनं तत्र रुचिरं सर्वैश्वर्यस्य कारणम्। कृष्णलीलामयदलं श्रीकीर्त्तिकान्तिवर्द्धनम्। पञ्चदशं दलं श्रेष्ठं तत्र लोहवनं स्मृतम्। कथितं षोड़शदलं माहात्म्यं कर्णिकासमम्। महावनं तत्र गीतं तत्रास्ति गुह्यमुत्तमम्। बालक्रीड़ारसस्तत्र वत्सपालैः समावृतः। पूतनादिवधस्तत्र यमलार्जुनभञ्जनम्। अधिष्ठाता तत्र बालगोपालः पञ्चमाब्दिकः। नाम्ना दामोदरः प्रोक्तः प्रेमानन्दरसार्णवः। दलं प्रसिद्धमाख्यातं सर्वश्रेष्ठदलोत्तमम्। कृष्णक्रीड़ा च किञ्जल्के विहारस्थलमुच्यते। सिद्धिप्रधानं किञ्जल्कं दलस्य समुदाहृतम्" पद्मपु० पा०ख०।

**वृन्दिष्ठ** त्रि० अतिशयेन वृन्दारको मुख्यः इष्ठन् वृन्दादेशः। अतिशयमुख्ये "वृन्दिष्ठमाशीर्वसुधाधिपानाम्" इति भट्टिः। ईयसुन् वृन्दीयानप्यत्र त्रि० स्त्रियां ङीप्।

**वृश** वृतौ दिवा०पर०सक० सेट्। वृश्यति अवृशत् अवर्शीत् पुषादिरयमित्येके तेन अवृशदित्येव।

**वृश** पु० वृश–क। १वासकवृक्षे भरतः। २उन्दुरे पुंस्त्री० शब्दच० स्त्रियां ङीष्। ३ओषधिभेदे स्त्री उणादि०।

**वृश्चिक** पु० व्रश्च–किकन्। (विछा) १कीटभेदे राजनि०। कीटशब्दे दृश्यम्। २शूककीटे (शुयापोका) अमरः। मेषादितः ३अष्टमे राशौ ज्यो० ४ओषधिभेदे मेदि०। ५मदनवृक्षे ६कर्कटे ७गोमयकीटे च भरतः। ८नालिके संक्षिप्तसारः।

द्वादशराशिस्य २१६०० कलात्मकस्य राशिचक्रस्य १२६०० कलोपरि १८०० कलात्मकः विशाखाशेषपादानुराधाज्येष्ठानक्षत्रात्मकः स च शीर्षोदयः श्वेतवर्णः जलराशिः उत्तरदिक्पतिः कफप्रकृतिः जलमयः बहुपुत्रः बहुस्त्रीसङ्गः चित्रवर्णः विप्रवर्णः सौम्यः अङ्गनारूपः समराशिः स्थिरः पुष्करसंज्ञः सरीसृपजातिः ग्राम्यः" वृहज्जातके दृश्यम्।

**वृश्चिकप्रिया** स्त्री वृश्चिकस्य शुककीटस्य प्रिया। पूतिकायाम् शब्दच०।

**वृश्चिककर्णी** स्त्री वृश्चिकस्य कर्ण इव पत्रं यस्याः। आखुकर्ण्याम् राजनि०। [भेदे राजनि०।

**वृश्चिका** स्त्री वृश्चिकः तद्विषमस्त्यस्या अच्। (विछाती) क्षुप-

**वृश्चिकाली** स्त्री वृश्चिक इवालति पर्य्याप्नोति स्पर्शने वेदनायै अच् गौरा० ङीष्। (विछाती) क्षुपभेदे रत्नमा०।

**वृश्चिपत्री** स्त्री वृश्चिक इव पत्रं विषाक्तमस्य पृषो० कलोपः ङीष्। वृश्चिकाल्याम् रत्नमा०।

**वृश्चीर** पु० व्रश्च-कीरच्। श्वेतपुनर्नवायाम् रत्नमा०।

**वृष** सेचने सक० भ्वा० पर० प्रजननसामर्थ्ये ऐश्वर्य्ये अक० सेट्। वर्षति अवर्षीत्। उदित् क्त्वा वेट्।

**वृष** प्रजननसामर्थ्ये ऐश्वर्य्ये चुरा० आत्म० सक० सेट्। वर्षयते अवीवृषत-अववर्षत।

**वृष** पु० वृष-क। १वृषभे पुङ्गवे अमरः २मेषादितो द्वितीये राशौ ज्यो०त०। ३पुरुषभेदे ४एकादशमनुकालीने ५इन्द्रे ६धर्मे गरुडपु० ८१अ०। ७शृङ्गिमात्रे ८मूषिके ९शुक्रयुक्ते १०वास्तुस्थानभेदे ११वासकवृक्षे मेदि०। १२शत्रौ जटा०। १३कामे १४बलयुक्ते त्रि०विश्वः १५ऋषभनामौषधौ राजनि०। १६मयूरपिच्छे १७श्रीकृष्णे च त्रिका०। वृषराशिश्च २१६०० कलात्मकस्य राशिचक्रस्य १८००कलोपरि १८०० कलात्मकः। कृत्तिकाशेषत्रिपादरोहिणीमृगाशिरोऽर्द्धात्मकः स च सौम्यः अङ्गना समः स्थिरः पुष्करांशः चतुष्पाद् निशाख्य याम्यः दिवारण्यः ह्रस्वः दक्षिणदिगीशः रात्रिसंज्ञः पृष्ठोदयः शीतस्वभावः वातप्रकृतिः शुक्रभूस्वामी श्वेतवर्णः वैश्यजातिः महाशब्दकरः मध्यमस्त्रीसङ्गः मध्यमप्रजश्च इत्यादि ज्यो० मूलं दृश्यम्। पुरुषविशेषलक्षणञ्च ''बहुगुणबहुबन्धः शीघ्रकामी नताङ्गः सकलरुचिरदेहः सत्यवादी वृषो ना'' रतिम० उक्तम्। १८अरिष्टासुरे स हि वृषाकारेण वृन्दावने गोहनने प्रवृत्तः कृष्णेन हतः। तत्कथा हरिवं० ७८अ०। वृषस्य शुभाशुभलक्षणं गोलक्षणशब्दे २७१८ पृष्ठादौ दर्शितम्। वृषादि०आद्युदात्तः।

**वृषकर्णी** स्त्री वृष इव सुदर्शनः कर्णोऽस्या ङीष्। (सुदर्शन गुलञ्च) ख्यातायां लतायाम् रत्नमा०।

**वृषगन्धा** स्त्री वृषस्य गन्धो लेशो यत्र। वस्तान्त्र्यां राजनि०।

**वृषण** पु०वृष-क्यु। १अण्डकोषे अमरः। २शौर्य्यान्विते त्रि०। "स्थूललिङ्गो दरिद्रः स्यात् दुःस्थः कृशवृषणोभवेत्। विषमे स्त्रीचपलो वै न्यूपः स्यात् वृषणे समे। प्रलम्बवृषणोऽल्पायुर्निर्द्रव्यो मणिभिर्भवेत्" गरुडपु० ६२अ०।

**वृषणश्व** पु० कर्म० शक०। सामर्थ्ययुक्ते इन्द्राश्वे त्रिका०।

**वृषण्वत्** त्रि० वृषन्+मतुप् मस्य वः न नलोपः णत्वम्। वर्षणयुते स्त्रियां ङीप्। [प्रकरणे रथादौ जटा०।

**वृषण्वसु** त्रि० वृषा वसु यस्य न नलोपः णत्वम्। इन्द्रस्तो-

**वृषदंशक** पुंस्त्री० वृषान् मूषिकान् दशति दन्श-ण्वुल्। बिडाले अमरः स्त्रियां ङीष्।

**वृषध्वज** पु०वृषो वृषभो मूषको धर्मो वा ध्वजो यस्य। १शिवे अमरः वृषकेतनादयोऽप्यत्र। २हेरम्बे ३पुण्यकर्मयुते च विश्वः। [गौरा० ङीष्। नागरमुस्तायाम्।

**वृषध्वाङ्क्षी** स्त्री वृषो बलवान् ध्वाङ्क्षः काको यस्याः ५त०।

**वृषन्** पु० वृष-कनिन्। १इन्द्रे २कर्णे ३दुःखे ४वेदनाज्ञाने मेदि०। ५वृषे ६अश्वे च हेमच०।

**वृषनाशन** पु० वृषान् मूषिकान् नाशयति नश-णिच् ल्यु। १विडङ्गे शब्दमा०। २अरिष्टरूपवृषनाशके श्रीकृष्णे हरिवं० ७८अ०।

**वृषपर्णी** स्त्री वृषस्य मूषिकस्य कर्णइव पर्णमस्याः। (उन्दूरकाणी) १आखुकर्ण्याम् रत्नमा०। २सुदर्शनीवृक्षे राजनि०।

**वृषपर्वन्** पु० वृषे पर्व उत्सवो यस्य। १शिवे २दैत्यभेदे च। वृषं बलकरं पर्व यस्य। ३भृङ्गराजवृक्षे ४कसेरौ च विश्वः।

**वृषभ** पु० वृष-अभच् किच्च। १वृषे २श्रेष्ठे ३वैदर्भीरीतिभेदे मेदि०। ४जिनभेदे हेमच०। ५कर्णच्छिद्रे ६ऋषभनामौषधौ च शब्दादि०। [दयोऽप्यत्र।

**वृषभगति** पु० वृषभेण गतिरस्य। शिवे हारा० वृषभयाना-

**वृषभध्वज** पु० वृषभो ध्वजोऽस्य। शिवे वृषभकेतनादयोऽप्यत्र

**वृषभाक्षी** स्त्री वृषभस्य अक्षीव पुष्पमस्याः षच् समा०ङीष्। इन्द्रवारुण्याम् राजनि०।

**वृषभानु(नु)** पु०राधिकायाः पितरि। ब्रह्मवै० ज० १७अ०।

**वृषभानु(नु)सुता** स्त्री ६त०। राधिकायाम्। [त्रिका०।

**वृषभासा** स्त्री वृषाः इन्द्रेण भासते भास-अच्। अमरावत्यां

**वृषल** पु० वृष-कलच्। १शूद्रे २तुरङ्गमे ३चोरके ४चन्द्रगुप्ते नृपे च मेदि०। ५अधार्मिके जटा०।

**वृषली** स्त्री "पितुर्गेहे च या नारी रजः पश्यत्यसंस्कृता। भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता" इत्युक्तायां पितृगेहे दृष्टरजस्कायामनूढायां १कन्यायाम्। वृषल+भार्य्यायां जातौ वा ङीष्। २वृषलजातिस्त्रियां

जायते तोयं तोयात् शस्यानि शाखिनः। तेभ्योऽन्नानि फलान्येव तेभ्यो जीवन्ति जीविनः। सूर्यपक्वञ्च नीरञ्च काले तस्मात् समुद्भवः। सूर्यो मेघादयः सर्वे विधात्रा ते नियोजिताः। यस्मादब्दे यो जलधरो मनश्च सागरोमरुत्। शस्याधिपो नृपो मन्त्री विधात्रा ते निरूपिताः। जलाढ़कानां शस्यानां तृणानाञ्च निरूपितम्। अब्देऽब्देऽस्यैव तत् सर्वं कल्पे कल्पे युगे युगे। शक्रो समुद्रादादाय करेण जलमीप्सितम्। दद्यात् मुनाय तद्व्याहातेन प्रेरितो घनः। स्थाने स्थाने पृथिव्याञ्च काले काले यथोचितम्। ईश्वरेच्छाविभूतं पूर्वं तत्प्रतिबन्धकम्। भूतं भव्यं भविष्यञ्च यत् कुड्ञ्च मध्यमम्। धात्रा निरूपितं कर्म केन तात! निवार्य्यते" ब्रह्मवै०जन्म० १अ०। "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजा" गीता। काकवृष्टिसूचकानि यथा "मयूराः स्तनयित्नूनां शब्देन हर्षिता मुहुः। केकायन्ति प्रतिवने सततं वृष्टिसूचकाः। मेघागमकानां मधुरवातकानां मनोहरः। कूजितार्त्तिमत्तानां वृष्टिसन्निधिसूचकः। गगने शक्रचापेन क्षतं वाक्यतमास्तदम्। धाराधारगरैश्चापं क्षेत्तुं प्रति समुद्गतः" कालिकापु० १५अ०।

**वृष्टिघ्नी** स्त्री वृष्टिं हन्ति कारणत्वेन अस्याति हन—क ङीप्। सूक्ष्मैलायाम् शब्दच०।

**वृष्टिजीवन** त्रि० वृष्टिः वृष्टिजलमेव जीवनं पालनोपायो यस्य। १वृष्टिजलमात्राजीविनि धान्ये। २देवमातृके देशे हेमच०। [हारा०। २वृष्टिभवे त्रि०।

**वृष्टिभू** पु० वृष्टौ तदुपलक्षिते काले भवति भू—क्विप्। १भेके

**वृष्टिवैकृत** न० ६त०। उपद्रवसूचके वृष्टिविकारे यथोक्तं वृ० स० ४६अ०

"दुर्भिक्षमनावृष्ट्यामतिवृष्ट्यां क्षुद्भयं सपरचक्रम्। रोगो ह्यकालभवायां नृपवधोऽनभ्रजातायाम्। शीतोष्णविपर्य्यासे नो सम्यग्भवतु च समस्तेषु। अन्यर्त्तावृत्तुभयं रोगभयं दैवजनितं च। अन्यर्त्तौ सप्ताहं प्रबन्धवर्षे प्रधानन्दपमरणम्। रक्ते शस्त्रोद्योगो मांसास्थिवसादिभिर्मरकः। धान्यहिरण्यत्वक्फलकुसुमाद्यैर्वर्षितैर्भयं विद्यात्। अङ्गारपांशुवर्षे विनाशमायाति तन्नगरम्। उपला विना जलधरैर्विकृता वा प्राणिनो यदा सृष्टाः। छिद्रं वाप्यतिवृष्टौ शस्यानामीतिसञ्जननम्। क्षीरघृतक्षौद्राणां दध्नो रुधिरोष्णतोयोर्वा वर्षे। देशविनाशो ज्ञेयोऽसृग्वर्षे चापि नृपयुद्धम्। यद्यमलेऽर्के छाया न दृश्यते दृश्यते प्रतीपा वा। देशस्य तदा सुमहद्भयमायातं विनिर्दिश्यम्। व्यभ्रे नभसीन्द्रधनुर्दिवा यदा दृश्यतेऽथ वा रात्रौ। प्राच्यामपरस्यां वा तदा भवेत् क्षुद्भयं सुमहत्। सूर्य्येन्दुपर्जन्यसमीरणानां योगः स्मृतो वृष्टिविकारकाले। धान्यार्घगोकाञ्चनदक्षिणाभिर्देवाश्रयः शान्तिमुपैति पापम्"।

**वृष्णि** पु० वृष—नि किच्च। १यादववंशेऽ नृपभेदे शब्दच०। २श्रीकृष्णे ३मेषे अमरः। ४चण्डे ५पाषण्डे च त्रि० शब्दर०।

**वृष्णिगर्भ** पु० वृष्णिः यादवकुलं गर्भो यस्य। श्रीकृष्णे हारा०

**वृष्य** पु० वृषाय हितो यत् वृष—क्यप् वा। १माषे हेमच०। २शुक्रवृद्धिकारके त्रि० भावप्र०। ३वाजीकरणे न० ४आमलक्यां ५शतावर्य्यां ५ऋषभनामौषधौ च स्त्री राजनि०। ७ऋद्धिनामौषधौ रत्नमा०। [राजनि०।

**वृष्यकन्दा** स्त्री वृष्यः शुक्रवर्द्धकः कन्दो यस्याः। विदार्य्याम्

**वृष्यगन्धिका** स्त्री वृष्यः शुक्रवर्द्धको गन्धो यस्याः कप् अत इत्त्वम्। अतिबलायाम् राजनि०। कवभावे वृष्यगन्धा वृद्धदारके स्त्री शब्दच०। [वृष्यवल्लिका तत्रैव स्त्री।

**वृष्यवल्ली** स्त्री कर्म०। १विदार्य्याम् राजनि०। स्वार्थे क सुश्रुतः।

**वृह** दीप्तौ वा चु० उभ०सक० पक्षे भ्वा० पर० इदित्। वृंहयति ते अववृंहत् त। वृंहति अवृंहीत्।

**वृह** वृद्धौ शब्दे च अक० भ्वा० पर० सक० सेट्। वर्हति इरित् अवृहत् अवर्हीत्। [इदित्। वृंहति अवृंहीत्

**वृह** ध्वनौ करिध्वनौ वृद्धौ च भ्वा०पर० पर०अक० सेट्।

**वृह** वृद्धौ भ्वा०पर०सक० सेट्। वर्हति अवर्हीत्।

**वृह** उद्यमे तु०पर०सक०सेट्। वृहति। अवर्हीत् अवृक्षत्।

**वृह** वृद्धौ भ्वा०आत्म० सक० सेट् इदित्। वृंहते अवृंहिष्ट।

**वृहच्चञ्चु** पु० वृहती चञ्चुरिव मञ्जरी यस्य। महाचञ्चुशाके राजनि०। [१फलपूरे शब्दार्थच०। २उदारचित्तयुते त्रि०।

**वृहच्चित्त** पु० वृहत् उदारं चित्तं यस्मात् ५ब०व्रत वा ६ब०।

**वृहच्छल्क** पु० वृहत् शल्कोऽस्य। चिङ्गटमत्स्ये जटा०।

**वृहत्** त्रि० वृह—अति। महति अमरः स्त्रियां गौरा० ङीष्।

**वृहती** स्त्री वृहत्+गौरा० ङीष्। १महत्यां स्त्रियां २वृहद्वार्त्ताक्याम् राजनि०। ३वारिधान्यां ४वाचि ५कण्टकारिकायाम् मेदि०। ६नवाक्षरपादके छन्दोभेदे वृ०र०। संज्ञायां कन् ह्रस्वः। उत्तरीयवस्त्रे स्त्री अमरः।

**बृहतीपति** पु० बृहतीनां वाचां पतिः । बृहस्पतौ हेमच० ।

**बृहत्कन्द** पु० बृहत् कन्दो यस्य । १गृञ्जने रत्नमा० । २विष्णुकन्दे च राजनि० ।

**बृहत्काश** पु० कर्म० । ( खागड़ा ) तृणभेदे हारा० ।

**बृहत्कालशाक** पु० कर्म० । ( बड़ कालकासुन्दे ) शाकभेदे लिङ्गा० ।

**बृहत्कुक्षि** पु० बृहत् कुक्षिर्यस्य । तुन्दिले (भुँडे) अमरः ।

**बृहत्ताल** पु० कर्म० । हिन्ताले राजनि० ।

**बृहत्तिक्ता** स्त्री कर्म० । पाठायाम् (आकनादि) राजनि० ।

**बृहत्तृण** पु० बृहत्तृणं यत्र । वंशे शब्दच० ।

**बृहत्त्वच्** पु० बृहती त्वक् यस्य । (छातियान) वृक्षे रत्नमा०

**बृहत्पत्र** पु० बृहत् पत्रमस्य । १हस्तिकन्दे (हातिकान्दा) राजनि० । २सिंघाड़िकायां स्त्री राजनि० ।

**बृहत्पाटलि** पु० च० पट–अलि कर्म० । धुस्तूरवृक्षे त्रिका० ।

**बृहत्पाद** त्रि० बृहत् पादो मूलमस्य । वटवृक्षे शब्दच० ।

**बृहत्पालिन्** पु० बृहतः पालयति पाल–णिनि । वनजीरके राजनि० ।

**बृहत्पीलु** पु० कर्म० । महापीलौ राजनि० ।

**बृहत्फला** स्त्री बृहत् फलं यस्याः । १कटुतुम्ब्याम् २महेन्द्रवारुण्यां ३कुष्माण्ड्यां ४महाजम्ब्वां च राजनि० ।

**बृहत्साम** न० कर्म० । "त्वामिद्धि हवामहे" इत्यस्यामृचि गीयमाने साम्नि "बृहत्साम तथा साम्नाम्" गीता ।

**बृहदङ्ग** पुंस्त्री० बृहदङ्गमस्य । गजे शब्दच० स्त्रियां ङीष् ।

**बृहदम्ल** पु० कर्म० । (कामराङ्गा) वृक्षे शब्दच० ।

**बृहदेला** स्त्री कर्म० । स्थूलैलायाम् राजनि० ।

**बृहद्गृह** पु० कारूषदेशे त्रिका० । स च हिमालयस्य पश्चाद्भागस्थः मालवदेशसन्निकृष्टः ।

**बृहद्गोल** न० कर्म० । ( तरमुज ) लताफले शब्दच० ।

**बृहद्दल** पु० बृहत् दलमस्य । १पट्टिकालोध्रे २हिन्ताले च राजनि० ।

**बृहद्बल** न० कर्म० । महाबालुके त्रिका० । [च अमरः ।

**बृहद्भानु** पु० बृहद्भानुः किरणो यस्य । १वह्नौ २चित्रकवृक्षे

**बृहद्रथ** पु० बृहत् रथोऽस्य । १इन्द्रे २यज्ञपात्रभेदे ३राजभेदे च । [जनि० ।

**बृहद्राविन्** पु० बृहत् रौति–रु–णिनि । क्षुद्रोलूके रा-

**बृहद्वल्क** पु० बृहत् वल्कमस्य । पट्टिकालोध्रे राजवल्लभः ।

**बृहद्वात** पु० बृहत् वातो धातुभेदो यस्मात् ५ब० । (देधान) वृक्षे रत्नमाला ।

**बृहद्वारुणी** स्त्री कर्म० । महेन्द्रवारुण्याम् राजनि० ।

**बृहद्वीज** पु० बृहत् बीजमस्य । आम्रातके शब्दच० ।

**बृहन्नल** पु० बृहत् नलो यस्य । महापोटगले मेदि० ।

**बृहन्नला(डा)** पुंस्त्री० बृहत् नलो यस्य वा लस्य डः । अर्जुने हेमच० विराटपर्वणि तत्कथा दृश्या ।

**बृहस्पति** पु० बृहत्याः वाचः पतिः पृषो० नि० । १जीवे देवाचार्ये अमरः २ग्रहभेदे ज्यो०सि०खगोलशब्दे तत्कक्षादिमानं तद्गत्यादि च ग्रहयज्ञशब्दे दृश्यम् । बृहस्पतिना च बौद्धधर्मः प्रवर्त्तितो यथोक्तं मत्स्यपु०२४अ० "ततो बृहस्पतिः शक्रमकरोद्बलदर्पितम् । ग्रहशान्तिविधानेन पौष्टिकेन च कर्मणा । गत्वाथ मोहयामास रजिपुत्रान् बृहस्पतिः । जिनधर्मं समास्थाय वेदबाह्यं स वेदवित् । वेदत्रयी परिभ्रष्टांश्चकार धिषणाधिपः । वेदबाह्यान् परिज्ञाय हेतुवादसमन्वितान् । जघान शक्रो वज्रेण सर्वधर्मबहिष्कृतान्" । बृहस्पतिसवः यज्ञभेदः ।

**वृ** वरणे क्र्या० प्रा० उभ० सक० सेट् । वृणाति वृणीते अवारीत् अवरिष्ट–अवरीष्ट अवृत्त । ववरतुः ।

**वे** सूतौ भ्वा०उभ०यजा०सक० अनिट् । वयति ते अवासीत् अवास्त वा वयादेशः उवाय ऊयतुः ऊवतुः ।

**वेग** पु० विज–घञ् । १प्रवाहे हेमच० २जवे अमरः ३महाकालफले मेदि० ४रेतसि हेमच० । ५मूत्रविष्ठादिनिःसारयत्ने इत्याद्युक्ते संस्कारभेदे च "स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः" । "क्षितिर्जलं तथा तेजः पवनो मन एव च । परापरत्वमूर्तत्वक्रियावेगाश्रया अमी" भाषा० तस्य क्षित्यादिगुणतोक्ता । "स्वभावतः प्रवृत्तानां मलादीनां जिजीविषुः । न वेगं धारयेद्धीरः कामादीनाञ्च धारयेत्" राजनि० ।

**वेगसर** पुंस्त्री० वेगेन सरति सृ–ट । वेगगामिनि १अश्वतरे हेमच० । स्त्रियां ङीप् । २वेगगामिमात्रे त्रि० स्त्रियां ङीप् । [२वेगवति त्रि० अमरः स्त्रियां ङीप् ।

**वेगिन्** पु० वेग+अस्त्यर्थे इनि । १श्येनविहगे राजनि० ।

**वेचा** स्त्री विच–पृथक्त्वे अच । वेतने हला० ।

**वेजानी** स्त्री विज–अच तमानयति आ–नी–ड गौरा० ङीष् सोमराज्याम् शब्दच० ।

**वेड** न० विड–अच । १मन्त्रनिष्कृतद्रव्यस्थने हेमच० २नौकायां स्त्री हेमच० ।

**वेडमिका** स्त्री रोटिकाभेदे भावप्र० कृतान्नशब्दे दृश्यम् ।

**वेण** निशामने वाद्यादाने गतौ ज्ञाने चिन्तायाञ्च भ्वा० उभ०

सक० सेट्। वेणति ते। अवेणीत् अवेणिष्ट। ऋदित् चङि न ह्रस्वः।

**वेण** पु० वेण—अच्। १वर्णसङ्करजातिभेदे "वैदेहकेन त्व म्बष्ठ्यामुत्पन्नो वेण उच्यते" मनुः। २पृथुराजपितरि नृपभेदे "सत्पुत्रेण तु जातेन वेणोऽपि स्वर्गोभेदे स्वो। त्रिदिवं ययौ" विष्णुपु०। तत्कथा च बहुशो ज्ञेया।

**वेणि(णी)** स्त्री वेण—इन् वा ङीप्। १केशरचनाभेदे अमरः २जलप्रवाहे जटा०। ३तत्प्रवाहे हेमच०। ४देवताडवृक्षे अमरः। ५नदीभेदे तदुत्पत्तिकथा पद्मोत्तर० १६६अ०। ६गङ्गायमुनासरस्वतीमेलनस्थाने च। प्रयागशब्दे दृश्यम्।

**वेणीर** पु० वेण—ईरन्। अरिष्टवृक्षे (निम) शब्दच०।

**वेणु** पु० वेण—उण्। १वंशे अमरः। २तद्विकारे वंशीवाद्ये च शब्दच०। "मा पुरय वेणुम्" इत्युद्भटः। ३नृपभेदे मेदि०।

**वेणुक** न० वेणुरिव वेणोर्विकारो वा कन्। तोत्त्रे हेमच०। (पाचनवाड़ि)।

**वेणुकर्कर** पु० वेणुरिव कर्करः। करवीरवृक्षे त्रिका०।

**वेणुज** पु० वेणुतो जायते जन—ड। १वेणुजाते यवाकारे तण्डुले राजनि०। २वंशजाते दण्डादौ त्रि०।

**वेणुध्म** पु० वेणुं वंशीं धमति ध्मा—क। वेणुवादके अमरः।

**वेणुन** न० वेण—उनन्। मरिचे रत्नमा०।

**वेणुपत्री** स्त्री वेणोरिव पत्त्रमस्याः। वंशपत्रीवृक्षे रत्नमा०।

**वेणुयव** पु० वेणुजातो यव इव। १वंशजाते २तण्डुलाकारे पदार्थे राजनि०। [ख्युल्। वेणुवादक तत्रैव त्रि०।

**वेणुवाद** त्रि० वेणुं वादयति वद—णिच—अण्। वेणुवादके

**वेणुवीज** न० इत०। वेणुजाते यवाकारे पदार्थे राजनि०।

**वेतन** न० अज—तनन् वीभावः। १कृतकर्मणोमूल्ये अमरः। भृतिशब्दे दृश्यम्। २जीवनोपाये हेमच०।

**वेतनादानपाकर्म्मन्** न० इत०। व्यवहारभेदे तत्स्वरूपादिकं वीरमि० उक्तं यथा

नारदः "भृतानां वेतनस्योक्तो दानादानविधिक्रमः। वेतनस्यानपाकर्म तद्विवादपदं स्मृतम्"। वेतनं कर्ममूल्यं तस्यानपाकर्म भृत्याय समर्पणं समर्पितस्य वा परावर्त्तनम्। तत्र समर्पणे विशेषमाह स एव "भृत्याय वेतनं दद्यात् कर्मस्वामी यथाक्रमम्। आदौ मध्येऽवसाने तु कर्मणो यद्विनिश्चितम्"। तुभ्यमेतावद्दं दास्यामीति यद्वेतनं परिभाषातो निश्चितं तत्त्रिधा विभज्य कर्मण आदिमध्यान्तेषु त्रिषु कालेष्वन्यतमकाले वा दद्यादित्यर्थः। एतावद्वेतनं दास्यामीति भाषायाः अभावे अस्वस्थे त्वाह स एव "भृतावनिश्चितायां तु दशभागमवाप्नुयुः। लाभं गोवीर्यशस्यानां वणिग्गोपकृषीवलाः" इति। दशभागं दशममंशमधिकमेव्यः पाल्यमानगवादिभवक्षयोदध्यादि। यदि कर्मस्वामी भृत्याय दशमभागम प्रयच्छति तदाऽसौ राज्ञा दाप्य इत्याह याज्ञवल्क्यः "दाप्यस्तु दशमं भागं वाणिज्यपशुशस्यतः। अनिश्चित्य भृतिं यस्तु कारयेत् स महीक्षिता" इति। यस्तु स्वामी वेतनपरिच्छेदमकृत्वैव भृत्यं कर्म कारयति स तस्मात् वाणिज्यपशुशस्यलक्षणात् कर्मणः सकाशात् उत्पन्नं तस्य दशमं भागं भृत्याय महीक्षिता राज्ञा दापनीय इत्यर्थः। यत् तु "त्रिभागं पञ्चभागं वा गृह्णीयात् सीरवाहकः" इति बृहस्पतिवचनं तद्भक्ताच्छादनाभ्यामसन्तोष-विषयम्। व्यवस्थितविकल्पश्चायम्। कथमस्य भक्ताच्छादनापेक्षायामाह स एव "भक्ताच्छादभृतः सीरी भागं गृह्णीत पञ्चमम्। जातशस्यात्त्रिभागं तु प्रगृह्णीयादभृतः" इति। अशनाच्छादनाभ्यां भृतः कृषीवलो जातशस्यात्पञ्चमभागं गृह्णीयात्। ताभ्यामभृतस्तु तृतीयं भागमित्यर्थः। अथ वा यदेतावद्दास्यामीति नास्ति परिभाषा तत्र बृहस्पत्युक्तं दृष्टव्यम् "समुद्रयानकुशला देशकालार्थदर्शिनः। नियच्छेयुर्भृतिं यान्तु सा स्यात् प्रामाण्यता तदा" इति। एतावद्दास्यामीति परिभाषितेऽपि क्वचित्ततो न्यूनमपि स्वामिनावपरिकल्पितं देयं क्वचित्ततोऽधिकमपि देयमित्याह याज्ञवल्क्यः "देशं कालञ्च योऽतीयाल्लाभं कुर्याच्च योऽन्यथा। तत्र स्यात् स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके" इति। यो भृत्यः स्वाम्यनुज्ञां विना स्वातन्त्र्येण वाणिज्यादिकर्मणः फलसाधकत्वमपादकं देशं कालं चातिक्रामति लाभं वा बहुतरं व्यस्तेन व्यसनं करोति तस्मै पूर्वपरिभाषितभृतिमध्ये स्वामी स्वेच्छानुसारेण किञ्चिद् दद्यात्। यस्तु स्वातन्त्र्येण बहुलाभं करोति तस्मै परिभाषितमूल्यादधिकं किञ्चिद्देयं स्वामिना पारितोषिकमित्यर्थः। अनेकभृत्यसाध्यकर्मणि वेतनार्पणप्रकारमाह स एव "यो यावत् कुरुते कर्म तावत् तस्य तु वेतनम्। उभयोरप्यसाध्यं चेत् साध्ये कुर्याद् यथाश्रुतम्" इति। उभयोरथैकस्यापि ना बहूनां मध्ये यस्य कस्यचित् कर्म कृते भवतामेतावद्दास्यामीति परिभाषिते द्वित्रैरारब्धं कर्म यदि व्याध्यादिक-

यावत् समापितं तदा तेषु यो यावत् कर्म करोति तस्मै तत्कर्मानुसारेण मध्यस्थपरिकल्पितं वेतनं देयम्। न तु साम्येन दानञ्च परिसमाप्त्यभावाददानम्। यदि तैः समापितं तदा यथा परिभाषितं देयञ्च तु प्रत्येकं कृत्स्नं दातव्यं नापि कर्मानुसारेण परिकल्प्य दातव्यमित्यर्थः। यस्तु वेतनं गृहीत्वा समर्थोऽपि न कर्म करोति तं प्रत्याह बृहस्पतिः "गृहीतवेतनः कर्म न करोति यदा भृतः। समर्थश्चेद्दमं दाप्यो द्विगुणं तच्च वेतनम्" इति। दमं शक्त्यनुसारेण राज्ञा दाप्यः। गृहीतञ्च वेतनं द्वैगुण्येन स्वामिने दद्यादित्यर्थः। नारदोऽपि "भृतिं गृहीत्वाऽकुर्वाणो द्विगुणां भृतिमावहेत्" इति। याज्ञवल्क्योऽपि "गृहीतवेतनः कर्म त्यजन् द्विगुणमावहेत्" इति। अस्मिन्नेव विषये यावता वेतनेन स्वत्वमङ्गीकृतं तावदेव स्वामिने देयञ्च तु राज्ञे दण्डमित्यर्थः। यद्यङ्गीकृतां भृतिं दत्त्वा बलात्कारयितव्य इत्याह नारदः "कर्माकुर्वन् प्रतिश्रुत्य कार्यो दत्त्वा भृतिं बलात्" इति। प्रतिश्रुत्येति प्रारम्भस्याप्युपलक्षणार्थम् अतएव कात्यायनः "कर्मारम्भं तु यः कृत्वा सिद्धिं नैव तु कारयेत्। बलात्कारयितव्योऽसावकुर्वन् दण्डमर्हति" इति। कियद् द्रव्यं दण्ड्य इत्यपेक्षायामाहतुर्मनुबृहस्पती "प्रतिश्रुत्य न कुर्याद् यः स कार्यः स्याद् बलादपि। स चेन्न कुर्यात् तत्कर्म प्राप्नुयाद् द्विशतं दमम्" इति। द्विशतं कार्षापणद्विशतमित्यर्थः। यत्तु मनुवचनम् "भृतोऽनार्त्तो न कुर्याद् यो दर्पात् कर्म यथोदितम्। स दण्ड्यः कृष्णलान्यष्टौ न देयं तस्य वेतनम्" इति। तदल्पदण्डत्वात् क्षुद्रकार्यविषयमिति स्मृतिचन्द्रिकायाम्। अल्पन्यूनकर्मकरणविषयमिति मदनरत्ने। किञ्चिन्न्यूनकर्मकरणे त्वाह स एव "यथोक्तमार्त्तः सुस्थो वा यस्तत्कर्म न कारयेत्। न तस्य वेतनं देयमल्पोनस्यापि कर्मणः" इति। सुस्थो वा कर्म कारयेदिति वदता सुस्थोऽपि स्वयं कर्त्तृत्वनियमो नास्तीति दर्शयति। आर्त्तो यदि आर्त्युपशमानन्तरं आङ्गीकृतं कर्म करोति तदार्त्तो दीर्घकालतया कालक्षेपेऽपि भृत्यदोषाभावाद्वेतनमविवादं लभत इत्याह स एव "आर्त्तस्तु कुर्यात् सुस्थः सन् यथाभाषितमादितः। सुदीर्घस्यापि कालस्य तल्लभेतैव वेतनम्" आदितः आदौ यथाभाषितं यथाप्रतिज्ञातं तथा कुर्यादित्यर्थः। सुदीर्घस्यापि कालस्य अतिक्रमेऽपीति शेषः।

यस्तु कालविशेषावधिकं कर्म प्रतिश्राव्य तत्कालापूर्त्तावेव कर्म त्यजति तं प्रत्याह नारदः "कालेऽपूर्णे त्यजन् कर्म भृतिनाशमवाप्नुयात्"। अत्र दण्डमप्याह विष्णुः "भृतकश्चापूर्णे काले त्यजन् सकलमेव मूल्यं जह्यात् राज्ञे च पणशतं दद्यादिति"। मूल्यं वेतनम्। स्वामिदोषात्त्यागे तु यावति काले कर्म कृतं तत्कालानुसारेण कल्पितं वेतनं लभत इत्याह नारदः "स्वामिदोषादपक्रामन् यावत् कृतमवाप्नुयात्" इति। स्वामिदोषो विनापराधं निष्ठुरभाषणादिः। अत्र दण्डमप्याह विष्णुः "स्वामी चेद्भृतकमपूर्णे काले जह्यात् तस्य सर्वमेव मूल्यं दद्यात् पणशतञ्च राजन्यत्र भृतदोषात्" इति। स्वामिद्रव्यस्य भृत्यदोषेण नाशे यत् कर्त्तव्यं तदाह स एव। "तद्दोषेण यद्विनश्येत्तत् स्वामिने देयमन्यत्र दैवोपघातादिति"। दैवोपघातो राजकृतस्याप्युपलक्षणम्। स्वामिने देयं मूल्यद्वारेणेति शेषः। अत्र दोषविशेषाद्विशेषमाह बृहन्मनुः "प्रमादान्नाशितं दाप्यः समं द्विद्रोहनाशितम्" इति। प्रमादान्नाशितमनवधानतानाशितं सममेव दद्यात्। द्रोहनाशितं तीव्रप्रयत्नादिना द्रोहेण नाशितं द्विदाप्यो द्विगुणं दाप्य इत्यर्थः। भृत्यदोषाभावे यदन्यत एव नष्टं तन्न देयमित्याह स एव "न तु दाप्यो हृतं चौरैर्दग्धमूढं जलेन वा"। ऊढं नीतम्। यस्तु वाहको वाह्यं द्रव्यं प्रज्ञाहीनत्वादिना स्वदोषेण नाशयति तं प्रत्याह नारदः "भाण्डं व्यसनमागच्छेद्यदि वाहकदोषतः। दाप्यो यत्तत्र नश्येत्तु दैवराजकृतादृते" इति। भाण्डं वहनीयं द्रव्यं वस्त्रादि व्यसनं नाशम्। अत्र भाण्डवाहकयोर्ग्रहणं बलीवर्दकर्षकयोरुपलक्षणमिति मदनरत्ने। अत्रापि "प्रमादान्नाशितं दाप्यः समं द्विद्रोहनाशितमिति" बृहन्मनूक्तो विशेषोऽवगन्तव्यः। यस्तु वाहकः स्वदोषेण प्रस्थानविघ्नं करोति स द्विगुणां भृतिं दाप्य इत्याह कात्यायनः "विघ्नं यो वाहको दाप्यः प्रस्थाने द्विगुणां भृतिम्" इति। विघ्नं करोतीति शेषः। वाहकग्रहणं प्रदर्शनार्थं न तु विवक्षितमन्यायुधीयादेरपि विघ्नकारिणोऽप्येवमिति मन्तव्यम्। अतएव नारदः "द्विगुणां तु भृतिं दाप्यः प्रस्थाने विघ्नमाचरन्" इति सामान्येनोक्तवान्। याज्ञवल्क्योऽपि "प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम्" इति। एतच्च भृत्यान्तरसम्पादनकालाक्षमत्वविषयम्। अङ्गीकृतकर्मकरणस्यापि यदा यथा-

वेद् वस्तुभिर्वापि दापयेत्। शुल्कं योऽष्टगुणं दाप्यो विनयं तावदेव तु” इति। वेश्यायाश्चापराधे दण्डादिकं मत्स्यपुराणे दर्शितम् “गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति। तां दण्डं दापयेद्द्व्यादितरस्यापि भाटकम्” इति। इतरस्य दत्तशुल्कस्य। तत्रैव विशेषान्तरमुक्तम् “अन्यमुद्दिश्य वेश्यां यो नयेदन्यस्य कारणात्। तस्य दण्डो भवेद्राज्ञः सुवर्णस्य च माषकम्। नीत्वा भोगञ्च यो दद्यात् दाप्यो द्विगुणवेतनम्। राज्ञश्च द्विगुणं दण्डं तथा धर्मो न हीयते। बहूनां व्रजतामेकां सर्वे तद् द्विगुणं धनम्। तस्यै दद्युः पृथक् राज्ञे दण्डञ्च द्विगुणम्परम्” इति। अत्र निर्णेतृनाह नारदः “वेश्याःप्रधाना यास्तत्र कामुकास्तद्गृहोषिताः। तत्समुत्थेषु कार्य्येषु निर्णयं संशये विदुः” इति।

**वेतस** पु॰ अज—असुन् तुक् च वीभावः। (वेत) वृक्षभेदे अमरः। स्त्रीत्वमपि शब्दच॰ तत्र गौरा॰ ङीष्।

**वेतसाम्ल** पु॰ वेतस इव अम्लः। अम्लवेतसे जटा॰।

**वेतस्वत्** त्रि॰ वेतसाः सन्त्यत्र भूम्ना वेतस+ड्मतुप्। बहुवेतसयुक्ते देशे अमरः।

**वेताल** पु॰ अज—णिच् वीभावः तल—घञ् कर्म॰। १मल्लविशेषे २भूताधिष्ठितशवभेदे अमरः ३शिवानुचरे भैरवभेदे कालिकापु॰। ४द्वारपाले च शब्दर॰।

**वेतालभट्ट** पु॰ विक्रमादित्यसभास्थे नवरत्नान्तर्गते कविभेदे

**वेत्तृ** त्रि॰विद—तृच्। १ज्ञातरि २वोढरि ३लब्धरि च राजनि॰

**वेत्र** पु॰ अज—त्रल् वीभावः। (वेत) वेतसवृक्षे राजनि॰।

**वेत्रकीय** त्रि॰वेत्र+छ—कुक् च। १वेत्रसमूहे २तद्युक्तदेशादौ च सि॰ कौ॰। [यष्टिधारकाले त्रि॰।

**वेत्रधर** पु॰ वेत्रं धरति धृ—अच्। १द्वारपाले हला॰ २वेत्र-

**वेत्र(त्रा)वती** स्त्री वेत्रा बाहुल्येन सन्त्यस्याः मतुप् मस्य वः वा दीर्घः। १मालवदेशस्थे नदीभेदे “शरावती वेत्रवती चन्द्रभागा सरस्वती”। २वृत्रासुरमातरि वराहपु॰।

**वेत्रासन** न॰वेत्रनिर्मितमासनम्। वेत्रनिर्मिते आसने (मोड़ा)

**वेत्रासुर** पु॰ सिन्धुद्वीपात्मजेऽसुरभेदे वराहपु॰।

**वेथ** याचने भ्वा॰ आत्म॰ द्वि॰ सेट् ऋदित् चङि न ह्रस्वः। वेथते अवेथिष्ट।

**वेद** पु॰ विद—अच् घञ् वा। १विष्णौ विष्णुसं॰। २ज्ञाने ३शास्त्रज्ञाने तत्साधने धर्मब्रह्मप्रतिपादके मन्त्रब्राह्मणात्मके ग्रन्थभेदे ४शास्त्रोक्ते चरित्रे च मेदि॰। ५यज्ञाङ्गे नानार्थमा॰ ६कुशमुष्टिकृते पदार्थभेदे “वेदं कृत्वा वेदिं कुर्य्यात्” श्रुतिः वेदयति विद—अच् विच—अच् विद्-अच् वा। ७ज्ञापके इद्धारि च त्रि॰ “वेदोऽसि येन त्वं देव! वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूयाः” यजु॰ २।२१ “यतो वेदं प्रतिष्ठापि वेदोऽसीति “हे कुशमुष्टिनिर्मितपदार्थ! त्वं वेदोऽसि ज्ञानाद्यात्मकोऽसि यद्वा वेत्तीति वेदः ज्ञातासि। देवेभ्यो देवानां वेदोऽभवः ज्ञापकोऽभूः” कर्क॰। तल्लक्षणञ्च अपौरुषं वाक्यं वेद इति मीमांसकाः। पौरुषेयत्वे पूर्वपक्षं दूषयित्वाऽपौरुषेयत्वं माधवेनोपन्यस्य समर्थितं यथा “अलौकिकेन वस्तुकरोगानुभवाधनं वेद इति” वेदलक्षणस्य मन्वादिस्मृत्यादावतिव्याप्तिमाशङ्क्य “अपौरुषेयत्वे सतीति विशेषणाददोष इति चेत् वेदस्यापि परमेश्वरनिर्मितत्वेन पौरुषेयत्वात् शरीरधारिजीवनिर्मितत्वाभावादपौरुषेयत्वमिति चेत् “सहस्रशीर्षा पुरुषः” इत्यादिश्रुतिभिरीश्वरस्यापि शरीरित्वात्। कर्मफलरूपशरीरधारिजीवनिर्मितत्वाभावमात्रेणापौरुषेयत्वं विवक्षितमिति चेत् न जीवविशेषैरग्निवाय्वादित्यैर्वेदानामुत्पादितत्वात्। “ऋग्वेद एवाग्नेरजायत, यजुर्वेदो वायोः, सामवेद आदित्यादिति श्रुतेः” (ईश्वरस्याग्न्यादिप्रेरकत्वेन निर्मातृत्वं द्रष्टव्यम्)। ततः मन्त्रब्राह्मणात्मकत्वं वेदलक्षणमुक्तं “मन्त्रब्राह्मणयोर्वेदनामधेयम्” इत्यापस्तम्बवचनं प्रमाणतयोपन्यस्तं ततश्च मन्त्रलक्षणमुक्त्वा तदितरत् ब्राह्मणमित्युक्तम्। तत्रैवोत्तरत्र नन्वेवमपि वेदस्य पौरुषेयत्वेन विप्रलम्भकवाक्यवदप्रामाण्यं स्यात् पौरुषेयत्वं च १पादे पूर्वपक्षत्वेन जैमिनिरसूत्रयत् यथा “वेदांश्चैके सन्निकर्षं पुरुषाख्येति” सू॰ “एके वादिनो वेदान् प्रति सन्निकर्षं मन्यन्ते। यथा रघुवंशादयः कालिदासप्रणीता इदानीन्तनास्तथा वेदोऽपि न तु वेदा अनादयः अतएव वेदकर्तृत्वेन पुरुषा आख्यायन्ते वैयासिकं भारतं वाल्मीकीयं रामायणमित्यत्र यथा भारतादिकर्तृत्वेन व्यासादय आख्यायन्ते तथा काठकं कौथुमं तैत्तिरीयमित्येवं तत्तद्वेदशाखाकर्तृत्वेन कठादीनामाख्यातत्वात् वेदाः पौरुषेयाः। ननु नित्यानामेव सतां वेदानामुपाध्यायसम्प्रदायप्रवर्त्तकत्वेन कठादिसमाख्या स्यादित्याशङ्क्य युक्त्यन्तरं सूचयति “अनित्यदर्शनाच्चेति” सू॰ अनित्याजननमरणवन्तो ववरादयो वेदार्थाः श्रूयन्ते “ववरः प्रावाहणिरकामयत कुसुरुविन्दु

ऽभोदाच किरकामयतेति” तथा सति ववरादिभ्यः पूर्वमभावादनित्या वेदाः। विमतं वेदवाक्यं पौरुषेयं वाक्यत्वात् कालिदासादिवाक्यवत् इत्यनुमानसूचकश्चकारः” इति पूर्वपक्षे सिद्धान्तयति। “उक्तं तु शब्दपूर्वत्वम्” सू० “तुशब्दो वेदानामनित्यत्वं वारयति। शब्दस्य वेदरूपस्य कठादिपुरुषेभ्यः पूर्वत्वमनादित्वम् प्राचीनेष सूत्रैरुक्तम्। “औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः” इत्यत्र औत्पत्तिकशब्देन सर्वेषां शब्दानां वेदानां तदर्थानां तदुभयसम्बन्धस्य च नित्यत्वं प्रतिज्ञाय उत्तराभ्यां शब्दाधिकरणवाक्याधिकरणाभ्यामुपपादितम। का तर्हि काठकाद्याख्याया गतिरित्याशङ्क्य संप्रदायप्रवर्त्तनात् सेयमुपपद्यते” इत्युत्तरसूत्रयति “आख्याः प्रवचनादिति” सू० “अस्त्वियमाख्यायिकाया गतिः (एवं प्रवचनरूपा संप्रदायप्रवर्त्तनेत्यर्थः”) ववराद्यनित्यदर्शनं यदुक्तं तस्य किमित्युत्तरमित्याशङ्क्याह “परं तु श्रुतिसामान्यमात्रम्” सू० यत्परं ववरादिकं तत् तच्छब्दसामान्यमेव। न तु मनुष्यो ववरनामकोऽत्र विवक्षितः ववरध्वनियुक्तप्रवहणस्वभावस्य वायोरत्र वक्तुं शक्यत्वात्। पूर्वपक्षोक्तस्य वाक्यत्वहेतोः पराहतेः। तस्मान्नास्ति वेदस्य पौरुषेयत्वम्। अत्र संग्राहकश्लोकौ “पौरुषेयं न वा वेदवाक्यं स्यात् पौरुषेयता। काठकादिसमाख्यानात् वाक्यत्वाच्चान्यवाक्यवत्। समाख्यानं प्रवचनात् वाक्यत्वं तु पराहतम्। तत्कर्त्रनुपलम्भेन स्यात्ततोऽपौरुषेयता”। ननु भगवता वादरायणेन वेदस्य ब्रह्मकार्यत्वं सूत्रितं “शास्त्रयोनित्वादिति”। ऋग्वेदादिशास्त्रकारणत्वात् ब्रह्म सर्वज्ञमिति सूत्रार्थः (तदेतस्य महाभूतस्य निःश्वसितं यदृग्वेदो यजुर्वेद इत्यादि” श्रुतिः “अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा” स्मृतिश्च तन्मूलम्) वाढं नैतावता पौरुषेयत्वं भवति मनुष्यनिर्मितत्वाभावात्। ईदृशमपौरुषेयत्वमभिप्रेत्य व्यवहारदशायामाकाशादिवन्नित्यत्वं वादरायणेनैव देवताधिकरणे सूत्रितम् “अतएव च नित्यत्वमिति”। वेदा०प० पौरुषेयत्वापौरुषेयत्वे अन्यथा निरुक्ते “यथा ननु उत्पत्तिमत्त्वाभावेऽपि वियदादिवदादिमत्त्वेन परमेश्वरकर्तृकतया पौरुषेयत्वादपौरुषेयत्वं वेदानामिति तव सिद्धान्तोभज्येतेति चेन्न न तावत्पुरुषेणोच्चार्यमाणत्वं पौरुषेयत्वं गुरुमतेऽपि पौरुषेयत्वापत्तेः (पाठ्यमान वेदानामिति शेषः) नापि पुरुषाधीनोत्पत्तिमत्त्वं पौरुषेयत्वं नैयायिकाभिमतपौरुषेयत्वानुमानेऽस्मादादीनां सिद्धसाधनापत्तेः किन्तु सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं तथा च सर्गाद्यकाले परमेश्वरः पूर्वसर्गसिद्धवेदसमानानुपूर्वीकं वेदं विरचितवान् न तु तद्विजातीयं वेदमिति न सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं पौरुषेयत्वं वेदस्य, भारतादीनान्तु सजातीयोच्चारणमनपेक्ष्यैवोच्चारणमिति तेषां पौरुषेयत्वम्”। शब्दचिन्तामणिकृता तु वेदलक्षणमन्यथा निरुच्य पौरुषेयत्वमीदृशमेव समर्थितं यथा “अथ वेदः पौरुषेयो वाक्यत्वात् भारतादिवत् इति चेत् कोऽयं वेदः अनुगतधर्माभावेन तस्य शास्त्रानुनानार्थत्वात् तथा हि न सुप्तवेदप्रयोगविषयो वेदः सुप्ताऽकथनात् नापि शाखासमुदायः तस्य वेदनिरूप्यत्वात् समुदायस्याप्रतिपादकत्वेन वाक्यत्वासिद्धेः। नापि स्वर्गकामो यजेतेत्यादिवाक्यं स्मृतिभारतादेरपि तथात्वात्” इत्यादिवेदलक्षणे पूर्वपक्षमुक्त्वा पौरुषेयत्वसाध्ये तमाह “पौरुषेयत्वं न तदर्थधीजन्यत्वं तदुच्चारणधीप्रभवत्वं वा अध्यापकाध्येतृधीजन्यत्वेन सिद्धसाधनात् स्वतन्त्रपुरुषप्रणीतजातीयत्वं यदि साध्यं तदाद्यभारते स्मृतौ च वाक्यत्वमनैकान्तिकम्” इत्यादिना। अतोत्तरमुक्तं यथा “शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वं वेदत्वम्। ईश्वरप्रमाया अजन्यत्वात् वेदार्थस्यानुमानविषयत्वेऽप्यनुमानादेर्वेदोपजीवकतया स्मृतीनां भारतादिभागस्य च वेदसमानार्थकत्वेऽपि शब्दजन्यधीजन्यत्वात् वेदार्थं प्रतीत्यैव तत्प्रणयनात्” (अग्निर्हिमस्य भेषजमित्यादिवेदवाक्यसंग्रहाय सत्यन्तं लक्षणप्रविष्टसत्यन्तं तु अदृष्टार्थकताबाहुल्यज्ञापनार्थमिति बोध्यम्)। मथुरानाथेनैतद्विवृतं तत्र दृश्यम्। साध्यं च पौरुषेयत्वं सजातीतोच्चारणानपेक्षोच्चरितजातीयत्वमिति निर्णीतमधिकं तत्र दृश्यम्।

वेदाश्च चत्वारः तेषां शाखाविभागः चरणव्यूहे उक्तः तत्र ऋग्वेदशाखाविभागः ऋग्वेदशब्दे १६११पृ० दर्शितः। “यजुर्वेदस्य षडशीतिर्भेदा भवन्ति। तत्र चरकाणां द्वादश भेदा भवन्ति। चरकाः१ आह्वरकाः२ कठाः३ प्राच्यकठाः४ कपिष्ठलकठाः५ औपमन्यवाः६ आष्टकठाः७ चारायणीयाः८ पारायणीयाः९ वार्त्तान्तवेयाः१० श्वेताश्वतराः११ (श्वेताश्वततरा इति वा पाठः)। मैत्रायणीयाः१२श्चेति। तत्र मैत्रायणीयानां सप्त भेदा भवन्ति। मानवाः१ दुन्दुभाः२ चैकेयाः३ वाराहाः४ हा-

द्वाराय मुक्तेरमिततेजसे। ऋग्यजुःसामभूताय त्रयीधामवते नमः”। श्रीपराशर उवाच “इत्येवमादिभिस्तेन स्तूयमानः स वै रविः। वाजिरूपधरः प्राह व्रियतामभिवाञ्छितम्। याज्ञवल्क्यस्ततः प्राह प्रणिपत्य दिवाकरम्। यजूंषि तानि मे देहि यानि सन्ति न मे गुरौ” श्रीपराशर उवाच “एवमुक्तो ददौ तस्मै यजूंषि भगवान् रविः। अयातयामसंज्ञानि यानि वेत्ति न तद्गुरुः। यजूंषि यैरधीतानि तानि विप्रैर्द्विजोत्तम!। वाजिनस्ते समाख्याताः सूर्य्योऽश्वः सोऽभवद्यतः। शाखाभेदास्तु तेषां वै दश पञ्च च वाजिनाम्। काण्वाद्याः सुमहाभाग! याज्ञवल्क्यप्रवर्त्तिताः” विष्णुपु० ३अंशे ५अ०। सामवेदस्य संहिता यथा “सामवेदतरोः शाखा व्यासशिष्यः स जैमिनिः। क्रमेण येन मैत्रेय! बिभेद शृणु तन्मम। सुमन्तुस्तस्य पुत्रोऽभूत् सुत्वानस्यापि वै सुतः। अधीतवन्तावेकैकां संहितां तौ महामती। सहस्रं संहिताभेदं सुकर्म्मा तत्सुतस्ततः। चकार तञ्च तच्छिष्यौ जगृहाते महाव्रतौ। हिरण्यनाभः कौशल्यः पौष्यिञ्जिश्च द्विजोत्तमः। उदीच्याः सामगाः शिष्यास्तस्य पञ्चशतः स्मृताः। हिरण्यनाभात्तावत्यः संहिता यैर्द्विजोत्तम!। गृहीतास्तेऽपि चोच्यन्ते, पण्डितैः प्राच्यसामगाः। लोकाक्षिः कुथुमिश्चैव कुशीदिर्लाङ्गलिस्तथा। पौष्यिञ्जिशिष्यास्तद्भेदैः संहिता बहुलीकृताः। हिरण्यनाभशिष्यश्च चतुर्विंशतिसंहिताः। प्रोवाच कृतिनामासौ शिष्येभ्यः सुमहामतिः। तैश्चापि सामवेदोऽसौ शाखाभिर्बहुलीकृतः”। अथर्ववेदस्य संहिता यथा। “अथर्वणामथो वक्ष्ये संहितानां समुच्चयम्। अथर्ववेदं स मुनिः सुमन्तुरमितद्युतिः। शिष्यमध्यापयामास कबन्धं सोऽपि तं द्विधा। कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान्। वेददर्शस्य शिष्यास्तु मोदो ब्रह्मबलिस्तथा। शौल्कायनिः पिप्पलादस्तथान्यो मुनिसत्तमः। पथ्यस्यापि त्रयः शिष्याः कृता यैर्द्विज संहिताः। जाजलिः कुमुदादिश्च तृतीयः शौनको द्विज। शौनकस्तु द्विधा कृत्वा ददावेकान्तु बभ्रवे। द्वितीयां संहितां प्रादात् सैन्धवायनसंज्ञिने। सैन्धवो मुञ्जिकेशाय भिन्दन् भेदं द्विधा पुनः। नक्षत्रकल्पो वेदानां संहितानां तथैव च। चतुर्थः स्यादाङ्गिरसः शान्तिकल्पश्च पञ्चमः। श्रेष्ठास्त्वाथर्वणामेते संहितानां विकल्पकाः”। विष्णुपु० ३अंशे ६अ०।

हेमाद्रि दा०ख० देवीपु० ७अ० वेदविभागोऽप्युक्तो यथा “किं वेदरूपं मानञ्च उपाङ्गसंख्याभेदतः। अङ्गानि चैव वेदानां तन्मे ब्रूहि सनातन!”। ब्रह्मोवाच “ओङ्कारप्रभवा वेदा गायत्री वेदसम्भवा। षडङ्गास्ते समाख्याता षडुपाङ्गास्तथैव च। छन्दोलक्षणसंयुक्ता मातृकागर्भजाः स्मृताः। एक एव भवेद्वेदश्चतुर्वेदः पुनः कृतः। शाखार्थमल्पयुक्तानां ग्रहणायातिविस्तरात्। संविभक्ता मया वत्स! ऋग्यजुःसामाथर्वकाः। तस्य भेदास्तु ऋग्वेदे दश चैव प्रकीर्त्तिताः। आत्रेयाः शाङ्खचर्णाश्च बाष्कला चर्चकास्तथा। आरणीयाःक्रमाख्याः अट्क्रमाःषडनुक्रमाः। इत्यष्टावेति समासेन पुनरेकैव पारणा। शाखाश्च त्रिविधा भूप! शाकला-वाष्कल-माण्डुकाः। तेषामध्ययनं प्रोक्तं मण्डलानि च सप्ततिः। चर्चानां वरसङ्ख्या तु चतुर्विंशच्छतानि च। ऋचां दश सहस्राणि ऋचां पञ्च शतानि च। ऋक्षामशीतिः पादश्च एतत् पारणमुच्यते। ऋग्वेदे तु भवेत्संख्या यजुर्वेदस्य श्रूयताम्। षडशीतिविभेदेन यस्य भिन्नाः शिवाश्रया। तद्यथा चरकाख्याश्च आह्वरकाहारिद्रवीयाः, कठाः प्राच्यकठाश्चैव कपिष्ठलकठास्तथा। नारायणीयाः श्वेताश्च श्वेताश्वतरमैत्रायणाः। पुनः सप्त विभेदेन मैत्रायण्यः प्रकीर्त्तिताः। मानवा दुन्दुभा वाराहाः छागेया हारिद्रवीयाः, श्यामाः श्यामायनीयाश्च तेषामध्ययनमुच्यते। अष्टादश सहस्राणि पाठा वेदविदोऽविदन्। द्विगुणं पदपाठीयास्त्रिगुणं क्रमपारगाः। षडङ्गानि पठाधीते स षडङ्गविदुच्यते। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दोज्योतिषम्। षडङ्गानि भवन्त्येतान् उपाङ्गानि शृणुष्व भोः। प्रतिपदमनुपदं छन्दो भाषाधर्म्मान्वितम्। मीमांसा-न्यायतर्कश्च उपाङ्गाः परिकीर्त्तिताः। परिशिष्टाश्च संख्याता अष्टादश शृणुष्व तान्”। यूपलक्षणं छागलक्षणं प्रतिज्ञानुवाकसङ्ख्या-चरणव्यूह-श्राद्ध-कल्प-शुल्बानि पार्षद-ऋग्यजुष-इष्टकापूरणं प्रवराध्यायोक्थशास्त्रं क्रतुसंख्या निगमा यज्ञपार्श्वं होत्रकम्। प्रसवोत्थानकूर्म्मलक्षणसंयुतम्। कथिताः परिशिष्टास्तु ह्यूनविंशतिसंख्यया। कठानां पुनर्ध्यान्याङ्गचत्वारिंशद्युतान्। प्राच्योदीच्या निरुक्ताश्च वाजसनेयास्तु पञ्च च। दशभेदविभिन्नाश्च दृष्टव्या मुनिपुङ्गव!। जाबाला-बौधेयाःकाण्वामाध्यन्दिनाश्च शापेयाः। तापायिनः कपालाः पौण्ड्रवत्साः आवटिकाः। परमावटिकाः पाराशरा

कह्वा बौधायनीयाः । अयोध्या अवोधेयाश्च तेषामध्ययनानि च । हिरण्यके शतन्यूने वेदे वाजसनेयके । ऋग्गणाख्यं प्रसंख्यातमतोऽन्यानि यजूंषि च"। एतत्प्रमाणं यजुषां हि केवलम् "सखिलं सशुक्रियं परिसंख्यातं ब्राह्मणम् । चतुर्गुणन्तु जानीयात्तैत्तिरीया द्विधा पुनः । ऋचेयाः खाण्डिकेयाश्च खाण्डिकाः पञ्चधा पुनः । कालेया बौधायनीया हिरण्यकेशास्तथैव च । भारद्वाजापस्तम्बाश्च तेषां भेदाः प्रकीर्त्तिताः । अध्ययनं सौप्तिकञ्चैव प्रवचनीयं तथापरम् । सामवेदस्तु विज्ञेयः सहस्रभेदयः पुरा । अनध्यायेष्वधीयानाः तदा इन्द्रेण धीमता । वज्रेण निहताः शेषांस्तान्बच्मि शृणु सत्तम ! । राणायनीयाः कौथुमास्तत्र भेदान् पुनः शृणु । राणायनीयाः सप्तैव सुप्रख्यातास्तथापरे । कालेया महाकालेयाः लाङ्गलवैदुताः । कौथुमानामपि सप्त असुरायणराजकाः । प्राञ्जलादैनम्लाश्च परियोन्याः परिकायणाः । अध्ययनमपि तेषान्तु यथावत् कथितं शृणु । अष्टौ सामसहस्राणि सामानि च चतुर्दश । अष्टौ शतानि नवतीः दश सवालखिल्यकाः । ससुपर्णाश्च प्रख्याश्च एतं सामगणं विदुः । अथो अथर्ववेदस्य नव भेदा भवन्ति हि । पिप्पलादा वर्णदाश्च भूतायनाः कातयस्तथा । जज्वला ब्रह्मवेदाश्च शौनकी करन्धी तथा । वेदस्पर्शीरविद्या तेषामध्ययनं शृणु" । पञ्चकल्पा भवन्ति "नक्षत्रकल्पो वैतानः संहिताविधिः आङ्गिरसम् । शान्तिकल्पश्च अथर्वणो भवन्ति ह । ऋग्वेदस्यात्रेयं गोत्रं वासुदेवं विदुर्बुधाः । काश्यपञ्च यजुर्वेदं रुद्रदैवन्तु तं विदुः । सामवेदोऽपि गोत्रेण भारद्वाजः पुरन्दरम् । अधिदेवं विजानीयात् वैतानन्तु अथर्वणः" ।

**वेदगर्भ** पु० वेदो गर्भे यस्य । सर्ववेदस्य प्रथमं कर्त्तरि १हिरण्यगर्भे २विप्रे च हेमच० । ३विष्णौ विष्णुस० ।

**वेदन** न० विद–ल्युट् । १ज्ञाने २सुखदुःखाद्यनुभवे ३विवाहे च "वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने" इति मनुः । युच् । वेदनापि अत्रार्थेषु स्त्री । सा च वेदमते सुखस्य पञ्चकाल्लार्गतस्कन्धभेदे बौद्धशब्दे दृश्यम् ।

**वेदनिन्दक** पु० ६त० । १नास्तिके जटा० २बौद्धे च ।

**वेदपारग** पु० वेदानां पारमन्तं सीमां गच्छति गम–ड । समस्तवेदाध्यायिनि । [वेदरहस्यवक्तृत्वात्तथात्वम् ।

**वेदमातृ** स्त्री ६त० गायत्र्यां मन्त्रभेदे तस्याः समस्तपाठेन

**वेदवत्** पु० वेदोऽभ्यस्ततेनास्त्यस्य मतुप् मस्य वः । १वेदाभ्यासरते द्विजे । २कुशध्वजराजकन्यायां सीतादिरूपेणाविर्भूतायां स्त्री । "कृते युगे वेदवती कुशध्वजसुता शुभा । त्रेतायां रामपत्नी सा सीतेति जनकात्मजा । तच्छाया द्रौपदी देवी द्वापरे द्रुपदात्मजा । त्रिहायणीति सा प्रोक्ता विद्यमाना युगत्रये" ब्रह्मवै०प्र०१२अ० ।

**वेदवास** पु० ६त० । ब्राह्मणे तस्य तत्पाठतदुक्ताचाराश्रयत्वात् तथात्वम् वेदावासादयोऽप्यत्र । [दन्त्य लि० ।

**वेदविद्** पु० वेदं वेत्ति विद–क्विप् । १विष्णौ विष्णुस० २वे-

**वेदव्यास** पु० वेदान् व्यस्यति विभिन्नशाखत्वेन पृथक् करोति वि+अस–अण् । पराशरपुत्रे सत्यवतीगर्भजे १मुनिभेदे तथा भूतेषु अन्येषु २मुनिषु च ।

युगभेदे तद्भेदाश्च विष्णुपु० ३अं ३अ० उक्ता यथा पराशर उवाच "यस्मिन् मन्वन्तरे व्यासा ये ये तांस्तान् निबोध मे । यथा च भेदः शाखानां व्यासेन क्रियते मुने ।। अष्टाविंशतिकृत्वो वै वेदा व्यस्ता महर्षिभिः । वैवस्वतेऽन्तरे तस्मिन् द्वापरेषु पुनःपुनः । वेदव्यासा व्यतीता ये अष्टाविंशतिसत्तमाः । चतुर्द्धा यैः कृतो वेदो द्वापरेषु पुनःपुनः । द्वापरे प्रथमे व्यस्ताः स्वयं वेदाः स्वयम्भुवा१। द्वितीये द्वापरे चैव वेदव्यासः प्रजापतिः२ । तृतीये चोशनाः३व्यासश्चतुर्थे तु बृहस्पतिः४ । सविता५ पञ्चमे व्यासो मृत्युः६ षष्ठे स्मृतः प्रभुः । सप्तमे च तथैवेन्द्रो७ वशिष्ठश्चाष्टमे स्मृतः । सारस्वतश्च९ नवमे त्रिधामा१० दशमे स्मृतः । एकादशे च त्रिवृषो११ भरद्वाज१२स्ततः परम् । त्रयोदशे चान्तरीक्षो१३ धर्मी१४ चापि चतुर्दशे । त्रय्यारुणः१५ पञ्चदशे षोडशे तु धनञ्जयः१६ । क्रतुञ्जयः१७ सप्तदशे ऋणज्यो१८ऽष्टादशे स्मृतः । ततो व्यासो भरद्वाजो१९ भरद्वाजात्तु गौतमः२० । गौतमादुत्तरं व्यासो हर्यात्मा२१ योऽभिधीयते । अथ हर्यात्मनो वेणः स्मृतो वाजश्रवास्तु२२ यः । सोमो शुष्मायणस्तस्मात् तृणविन्दुः२३रिति स्मृतः । ऋक्षोऽभूद्भार्गवस्तस्मात् वाल्मीकि२४र्योऽभिधीयते । तस्मादस्मत् पिता शक्तिः२५ व्यासस्तस्मादहं२६(पराशरः) मुने ! । जातूकर्णो२७ऽभवन्मत्तः (पराशरादनन्तरम्) कृष्णद्वैपायन२८स्ततः । (ततो जातूकर्ण्यात्परम् अष्टाविंशतिमे युगे) "अष्टाविंशतिरित्येते वेदव्यासाः पुरातनाः । एको वेदश्चतुर्द्धा तु तैः कृतो द्वापरादिषु । भविष्ये द्वापरे चैव द्रौणिर्व्यासो भविष्यति । व्यतीते मम पुत्रेऽस्मिन् कृष्णद्वैपायने मुने" ।

**वेदस्** पु० विद–असुन् । वेत्तरि । जातवेदाः विश्ववेदाः ।

**वेदाङ्ग** न० वेदस्याङ्गमिव। "शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः। ज्योतिषामयनञ्चैव वेदाङ्गानि षडेव तु" इत्युक्तेषु शिक्षादिषु षट्सु शास्त्रेषु। तेषामङ्गविशेषरूपत्वं शिक्षायामुक्तं यथा
"छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते। ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते। शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्। तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते"।

**वेदादि** पु० वेदस्यादिरिव तत्पाठे प्रथमोच्चार्य्यमाणत्वात्। प्रणवे

**वेदाधिप** पु० ६त०। "ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिपो भृगुः। सामवेदाधिपो भौमः शशिजोऽथर्ववेदपः" इत्युक्तेषु जीवादिषु २विष्णौ च विष्णु स०।

**वेदान्त** पु० ६त०। वेदशिरोभागे ब्रह्मप्रतिपादके उपनिषद्रूपे १ग्रन्थभेदे तदुपकारके २शारीरकसूत्रभाष्यादौ च उत्तरामीमांसाशब्दे १०८७पृ० दृश्यम्। शारीरकसूत्रस्य बहुभिराचार्य्यैः स्वस्वमतानुसारेण व्याख्यातं तत्र रामानुजपूर्णप्रज्ञमध्वयोस्तत्तन्मतं प्रदर्शितं शाङ्करमतानुसारि मतस्य सिद्धान्तबिन्दुप्रदर्शितस्य सङ्क्षेपोऽत्र प्रदर्श्यते
"वेदान्तिमते सामान्यतः द्विविध एव पदार्थः दृग्दृश्यश्च तत्रैव सर्वपदार्थान्तर्भावात्। तत्र दृक्पदार्थ आत्मा। स च सर्वदैकरूपोऽप्यौपाधिकभेदात् त्रिविधः ईश्वरः जीवः साक्षी चेति। तत्र कारणीभूताज्ञानोपाधिरीश्वरः। अन्तःकरणतत्संस्काराविच्छिन्नाज्ञानोपहितो जीवः। जीवेश्वरानुगतसर्वानुसंधाह चैतन्यं साक्षी। तत्रेश्वरोऽपि त्रिविधः स्वोपाधिभूताविद्यावृत्तिसत्त्वादिगुणत्रयभेदेन विष्णुब्रह्मरुद्रभेदात्। तत्र कारणीभूतसत्त्वगुणावच्छिन्नो विष्णुः पालयिता। तथा रज उपहितो ब्रह्मा स्रष्टा। हिरण्यगर्भस्तु महाभूतकारणाभावान्न ब्रह्मा। तथापि स्थूलभूतस्रष्टृत्वेन कश्चिद् ब्रह्मेत्युपचर्य्यते। तथा तम उपहितो रुद्रः संहर्त्ता। एवञ्चैकस्यैव तस्य चतुर्भुजचतुर्मुखाद्याः पुमाकाराः श्रीभारतीभवान्याद्याश्च स्त्र्याकारा मत्स्यकूर्मादयोऽप्यवतारा लीलयैवाविर्भवन्ति। तथा जीवोऽपि त्रिविधः स्वोपाधिजाग्रदाद्यवस्थात्रयभेदेन विश्वतैजसप्राज्ञभेदात्। तत्राविद्यान्तःकरणस्थूलशरीरावच्छिन्नो जाग्रदभिमानी विश्वः। स एव स्थूलशरीराभिमानरहित उपाधिद्वयोपहितः स्वप्नावस्थाभिमानी तैजसः। अयमेव शरीरद्वयान्तःकरणोपाधिरहितोऽन्तःकरणसंस्काराविच्छिन्नोऽविद्यामात्रोपहितः सुषुप्त्यवस्थाभिमानी प्राज्ञः। साक्षी तु सर्वानुसन्धाता सर्वानुगतस्तुरीयाख्य एकविध एव।
अविद्यातत्कार्य्यात्मकप्रपञ्चो दृश्यपदार्थः तस्यापारमार्थिकत्वेऽपि व्यावहारिकत्वाभ्युपगमात् स्वप्नादिवदतात्त्विकत्वम्। दृश्योऽपि त्रिविधः अव्याकृतमूर्त्तामूर्त्तभेदात्। तत्र चिदाभाससहिताऽविद्या मूर्त्तामूर्त्तप्रपञ्चस्य मूलबीजशक्तिरनादिरव्याकृतमित्युच्यते। इयञ्चाव्याकृताख्याऽविद्येश्वरोपाधिः। सा च स्वयं जडाप्यजडेन चिदाभासेनोज्ज्वलिता पूर्वपूर्वसंस्कारजीवकर्म्मभ्यां प्रयुक्ता सती शब्दस्पर्शरूपरसगन्धाश्रयाण्याकाशवायुतेजोजलपृथिव्यात्मकानि पञ्च सूक्ष्ममहाभूतानि जनयति। तत्र पूर्वपूर्वभूतभावापन्नाया एवाविद्याया उत्तरोत्तरभूतं प्रति कारणत्वात् पूर्वपूर्वभूतगुणानामुत्तरोत्तरभूतेष्वनुप्रवेशात् भूतानामेकैकवृद्धिभूतगुणशालित्वं तथा चाकाशस्य शब्दो गुणः, वायोः शब्दस्पर्शौ, तेजसः शब्दस्पर्शरूपाणि, जलस्य तानि रसश्च, पृथिव्यास्तानि गन्धश्चेति। आकाशस्यैव दिग्व्यवहारजनकत्वेन दिशो न पृथक्पदार्थता। कालस्य चिज्जडसम्बन्धरूपतया तदाधाराविद्यात्मकतया च न पार्थक्यम्। तानि च सूक्ष्माणि पञ्च भूतानि अमूर्त्ताख्यानि कारणाभेदाच्च सत्त्वरजस्तमोगुणात्मकानि सत्त्वरजोऽंशप्राधान्येन ज्ञानक्रियाशक्त्यात्मकमेकं स्वच्छद्रव्यं चित्स्वरूपमिव मिलित्वा जनयन्ति। तच्च समस्तं द्रव्यं ज्ञानशक्तिप्राधान्येऽन्तःकरणं तदपि द्विविधं मनोबुद्धिभेदात् चतुर्विधं मनोबुद्ध्यहङ्कारचित्तभेदादित्यन्ये। तदेव क्रियाशक्तिप्राधान्ये प्राणः। स च पञ्चधा प्राणादिभेदात्। एवमेकैकभूतेभ्यो ज्ञानक्रियाशक्तिभेदात् प्रत्येकं ज्ञानकर्मेन्द्रियद्वयं जायते। यथाकाशात् श्रोत्रवाचौ, वायोस्त्वक्पाणी, तेजसश्चक्षुःपादौ, अद्भ्यो रसनापायू, पृथिव्या घ्राणोपस्थौ चोत्पद्येते। तत्र शब्दस्पर्शरूपरसगन्धग्राहकाणि श्रोत्रत्वक्चक्षुःरसनाघ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि वचनादानगतिविसर्गानन्दजनकानि वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि। एतच्च सर्वं मिलित्वा सप्तदशकं लिङ्गशरीरम्। तच्च ज्ञानशक्तिप्राधान्येन समष्टौ हिरण्यगर्भ इति क्रियाशक्तिप्राधान्येन समष्टौ सूत्रमिति चोच्यते। अयं मूर्त्तपदार्थः कार्य्यत्वात्। समष्टिव्यष्टिजीवोपाधिसूक्ष्मभूतानि तु भोगायतनं शरीरं भोग्यविषयञ्चान्तरेण भोगं जनयितुमसमर्थानीति जीवकर्मप्रयुक्तानि तानि स्थौल्यार्थं पञ्चीकृतानि सं-

पुष्पः । चाम्मातिमुक्तकुड्मः अभिषव्यमनः आतृक शठकी च सबदेशज एव वृक्षः । वेल्लन्तरो रसे पाके तिक्तस्तु व्याकफापहः । मूत्राघातं मूत्रजत् याण्डी योनि मूत्रानिलार्त्तिं हरेत्” भावप्र० । [जटा० ।

**वेल्लहल** पु० वेल्लं ह्लनयति ह्लन–अच्–पृषो० । केलिनागरे

**वेल्लि** स्त्री वेल्ल–इन् । लतायां शब्दर० ।

**वेल्लित** न० वेल्ल–भावे क्त । १गमने मेदि० । कर्त्तरि क्त । २कम्पिते ३कुटिले च त्रि० अमरः ।

**वेल्लि(ल्ली)** स्त्री वेल्ल–इन् वा ङीप् । लतायाम् शब्दच० । संज्ञायां कन् वेल्लिका । (वेलट्ठ) वृक्षे शब्दच० ।

**वेवी** कान्तौ गतौ व्याप्तौ क्षेपे भोजने च सक० प्रजनने अक० अदा० आत्म० सेट् जक्षादि० वैदिक एवायम् । वेवीते अवेविष्ट । अस्य क्वचिदपि गुणवृद्धी न स्तः ।

**वेश** पु० विश–घञ् । अलङ्कारादिना कृततद्रूपान्तरे १नेपथ्ये च कर्मणि च अमरः । २वेश्यागृहे ३गृहमात्रे मेदि० ४प्रवेशे

**वेशधारिन्** पु० वेशं धारयति धृ–णिनि । छलेन रूपान्तरधारिणि १क्षत्रपक्षिप्रभृतौ शब्दच० । २वेशकारके नटादौ च । त्रिका० ।

**वेशन्त** पु० विश–झच् । १क्षुद्रसरोवरे अमरः । २अग्नौ उ०

**वेशर** पु० वेशं राति रा–क । अश्वतरे त्रिका० ।

**वेश्मन्** न० विश–मनिन् । गृहे अमरः ।

**वेश्मभू** स्त्री ६त० । गृहकरणयोग्ये स्थाने अमरः ।

**वेश्य** न० विश–ण्यत् वेशाय हितं वा यत् । १वेश्यालये मेदि० २पाठायाम् (आकनादि) ३वारयोषिति च स्त्री अमरः । “पतिव्रता चैकपत्नी द्वितीये कुलटा स्मृता । तृतीये धर्षिणी ज्ञेया चतुर्थे पुंश्चली स्मृता । वेश्या च पञ्चमे षष्ठे जुङ्गी च सप्तमेऽष्टमे । तत ऊर्द्ध्वं महावेश्या साऽस्पृश्या सर्वजातिषु । यो द्विजः कुलटां गच्छेत् धर्षिणीं पुंश्चलीमपि । जुङ्गीं वेश्यां महावेश्यामवटोदं प्रयाति सः । शतावदं कुलटागामी धृष्टागामी चतुर्गुणम् । षड्गुणं पुंश्चलीगामी वेश्यागामी गुणाष्टकम् । जुङ्गीगामी दशगुणं वसेत्तत्र न संशयः । महावेश्यागामुकश्च ततः शतगुणं वसेत् । तद्वेष सर्वगामी चेत्येवमाह पितामहः । तत्रैव यातनां भुङ्क्त्वा यमदूतेन ताडितः स तित्तिरिः कुलटागामी धृष्टागामी च वायसः । कोकिलः पुंश्चलीगामी वेश्यागामी वृकस्तथा । जुङ्गीगामी शूकरस्य सप्तजन्मसु भारते । महावेश्यागामुकश्च जायते शाल्मलिस्तरुः” ब्रह्मवै०प्र०ख०२८अ० ।

**वेष** पु० विष–अच् घञ् वा । भूषणादिना १रूपान्तरकरणे २वेश्याजनालये च भरतः ।

**वेषण** पु० विष–करणे ल्युट् । १कासमर्दे (कासकासुन्दे) हारा० । २धन्याकवृक्षे स्त्री रत्नमा० । [यवि(व)वेष्टत न ।

**वेष्ट** वेष्टने भ्वा० आत्म० सक० सेट् । वेष्टते अवेष्टिष्ट । चङि त

**वेष्ट** पु० वेष्ट–घञ् अच् वा । १वेष्टने २श्रीवेष्टे राजनि० ३वृक्षनिर्यासे च (आटा) वैद्यकम् ।

**वेष्टक** न० वेष्ट–ण्वुल् । (पागड़ी) १उष्णीषे शब्दर० २कुष्माण्डे राजनि० । ३प्राचीरे पु० हेमच० । ४वेष्टनकारके त्रि० ।

**वेष्टन** न० वेष्ट–करणे ल्युट् । १कर्णशष्कुल्याम् २उष्णीषे ३मुकुटे च ४गुग्गुलौ शब्दच० । भावे ल्युट् । ५वृतौ मेदि० ।

**वेष्टवंश** पु० वेष्ट–अच् कर्म० । (वेडुवाँश) वंशभेदे शब्दच० ।

**वेष्टसार** पु० वेष्टस्य सारः । श्रीवेष्टे राजनि० ।

**वेष्टित** त्रि० वेष्ट–क्त । प्राचीरादिना १आवृते अमरः । २रुद्धे ३लासके ४करणान्तरे न० मेदि० । [अवेवीत् ।

**वेस** गतौ भ्वा० पर० सक० सेट् ऋदित् चङि न ह्रस्वः । वेसति

**वेसन** न० वेस–ल्युट् । “द्विदलदलजकानान्तु निस्तुषा यन्त्रपेषिताः । तच्चूर्णं वेसनं प्रोक्तम्” इत्युक्ते १चणकादिद्विदलचूर्णे २गमने च ।

**वेसर** पु० वेस–अरन् । अश्वतरे हेमच० ।

**वेसवार** पु० वेसं वारयति वृ–अण् । (वाटना) पिष्टधन्याकसर्षपादौ अमरः । “निरस्थि पिशितं पिष्टं स्विन्नं गुडघृतान्वितम् । कृष्णमरिचसंयुक्तं वेसवार इति स्मृतम्” इत्युक्ते २मांसभेदे अस्य गुणाः “वेसवारो गुरुः स्निग्धो बलोपचयवर्द्धनः” राजवल्लभः । अस्य मध्यत्वं चमध्यत्वं वा रायमुकुट आह । [अवेहिष्ट ।

**वेह** यत्ने भ्वा० आत्म० अक० सेट् चङि न ह्रस्वः । वेहते

**वेहत्** स्त्री वि+हन अति नलापः । गर्भोपघातिन्यां स्त्रियाम् अमरः । जात्या समासे परनि० । गोवेहत् सि०कौ०

**वेहार** पु० वि+हृ–घञ् पृषो० । स्वनामख्याते देशभेदे [ह्रस्वः

**वेह्ल** गतौ भ्वा० पर० सक० सेट् । वेह्लति अवेह्लीत् चङि न

**वै** शोषे भ्वा० पर० अक० सेट् अनिट् । वायति अवासीत् । ओदित् निष्ठातस्य नः । वानः निर्वाणः ।

**वै** अव्य० वा–डै । १पादपूरणे २अनुनये ३सम्बोधने अमरः ।

**वैकक्ष** न० विशेषेण कक्षति व्याप्नोति अण् । तिर्य्यक्कक्षावलम्बिनि हारभेदे हेमच० । वुन् । वैकक्षक उत्तरीय उपवीताकारेण धृते माल्यभेदे अमरः ।

**वैकङ्कत** पु॰ विकङ्कत+स्वार्थेऽण् । (बैँचि) १वृक्षभेदे । तस्ये-टमण् । २विकङ्कतसम्बन्धिनि त्रि॰ । [२पद्मभवे च ।

**वैकल्पिक** त्रि॰विकल्पेन प्राप्तः तत्र भवो वा ठक् । १पक्षप्राप्ते

**वैकल्य** न॰ विकलस्य भावः ष्यञ् । विकलत्वे ।

**वैकुण्ठ** पु॰ विकुण्ठायां भवः अण् विविधा कुण्ठा माया यस्य स्वार्थेऽण् वा । १विष्णौ २इन्द्रे मेदि॰ ३सितार्जके राजनि॰ "चाक्षुषस्यान्तरे देवो वैकुण्ठः पुरुषोत्तमः । विकुण्ठाया-मसौ जज्ञे दैवतैः सह" विष्णुपु॰ "विविधा कुण्ठा गतेः प्रतिहतिस्तस्याः कर्त्ता इति वैकुण्ठः । जगदारम्भे विश्लिष्टानि भूतानि परस्परं संश्लेषयन् तेषां गतिं प्रत्य-बध्नादिति वा वैकुण्ठः । "मया संश्लेषिताभूमिरद्भि-र्व्योम्ना च वायुना । वायुश्च तेजसा साद्धं वैकुण्ठत्वं ततो मम" भा॰शान्तिप॰। विष्णुस॰ भा॰ । "कुण्ठं जडञ्च विश्वेषं विशिष्टञ्च करोति वा । विकुण्ठां प्रकृतिं वेदाश्चत्वारश्च वदन्ति ताम् । गुणाश्रयेन भगवान् तस्यां जातः स्वसृष्टये । परिपूर्णतमं तेन वैकुण्ठञ्च विदु-र्बुधाः" । ४विष्णुधामभेदे "उपरिष्टात् चितेरष्टौ को-टयः सत्यमीरितम् । सत्यादुपरि वैकुण्ठो योजनानां प्रमाणतः । भूर्लोकात् परिसंख्यातः कोटिरष्टादश प्रभो ! । यत्रास्ते श्रीपतिः साक्षात् सर्वेषामभयप्रदः" पद्मपु॰स्व॰ ६ अ॰।

**वैकृत** न॰ विकृतस्य भावः अण् । १विकारे २बीभत्सरसे तदा लम्बनमांसशोणितादौ विकृतित आगतः अण् । ३वि-कृतितो जाते त्रि॰ "वैकृतास्तु तथा देवाः" ।

**वैक्रान्त** न॰ स्वार्थे अण् । मणिभेदे विक्रान्तशब्दे दृश्यम् ।

**वैखरी** स्त्री विशेषेण खं राति रा—क स्वार्थे अण् । अर्थ-बोधके कण्ठादिष्वूच्चार्यमाणे वर्णात्मके शब्दविशेषे । वर्ण-शब्दे ४८५॰ पृ॰ दृश्यम् ।

**वैखानस** पु॰ वि+खन—ड खन—असुन् कर्म॰ स्वार्थे अण् । वानप्रस्थे तापसभेदे "वैखानसेभ्यः श्रुतराजवार्त्ताः" भट्टिः

**वैगुण्य** न॰ विगतो विरुद्धो वा गुणोऽस्य तस्य भावः ष्यञ् । यत्र यदुचितं तस्य १रूपान्तरतापादने २अन्यायत्वे ३अ-सम्पन्नत्वे च । [चपलत्वे च ।

**वैचित्र्य** न॰ विचित्रस्य भावः ष्यञ् । १नानारूपत्वे २वित्त-

**वैजयन्त** पु॰ विजयते वि+जि—झ स्वार्थे अण् । १इन्द्रप्रा-सादे अमरः । २इन्द्रे मेदि॰। ३गृहे शब्दच॰। ४इन्द्र-ध्वजे मेदि॰। ५अग्निमन्थवृक्षे राजनि॰ ६पताकायाम् स्त्री अमरः । ७वैजन्तीवृक्षे च स्त्री मेदि॰ ।

**वैजिक** न॰ वीजेन निर्वृत्तं ठक् । १शिग्रुतैले मेदि॰। वीजाय हितम् स्वार्थे ठक् वा । २कारणे । ३आत्मनि शब्दमा॰ तस्येदं वीजादागतं वा ठञ् । ४सद्योजाता-ङ्कुरे मेदि॰ ५वीजसम्बन्धिनि त्रि॰ ।

**वैज्ञानिक** पु॰ विज्ञानाय साधु ठक् । १निपुणे अमरः । वि-ज्ञानमधिकृत्य कृतो ग्रन्थः ठक् । २बौद्धागमे ३तदध्ये-तरि ४तत्सम्बन्धिनि च त्रि॰ ।

**वैडालव्रत** न॰विडालस्येदम् अण् तदिव व्रतम् "यस्य धर्म-ध्वजो नित्यं शक्रध्वज इवोच्छ्रितः । प्रच्छन्नानि च पा-पानि वैडालं नाम तद्व्रतम्" इत्युक्ते प्रकारेण धर्मा-चरणेन शुभ्रपापाचारे ।

**वैडालव्रतिक** पु॰ वैडालव्रतमस्त्यस्य ठन् । छलेन धर्मचा-रिणि छद्मतापसे त्रिका॰। इनि । वैडालव्रतिन् तत्रार्थे "छद्मना चरितं तस्य व्रतं रक्षांसि गच्छति । अलिङ्गी लि-ङ्गवेषेण यो लिङ्गमुपजीवति । स लिङ्गिनां हरेत् पापं तिर्य्यग्योनौ च जायते" । वैडालव्रतिनः पापाः सर्वध-र्मविनाशकाः । सद्यः पतन्ति पापेषु कर्मणस्तस्य तत् फलम्" कूर्मपु॰ ५ अ॰ ।

**वैणव** न॰वेणूनां फलम् अण्,तस्य न लुप् तस्येदं वा अण् । १वेणु फले वेणुयवे अमरः । २वेणुसम्बन्धिनि त्रि॰स्त्रियां ङीप् ।

**वैणविक** त्रि॰ वेणोर्विकारः अण् वैणवं वेणुवाद्यं शिल्प-मस्य ठक् । वंशीवादके अमरः । [अमरः ।

**वैणिक** त्रि॰ वीणा तद्वादनं शिल्पमस्य ठक् । वीणावादके

**वैणुक** न॰ वेणोर्विकारः ठक् । १गजचालनार्थे लौहशुले वंशदण्डे अमरः । वेणुस्तद्वादनं शिल्पमस्य ठक् । २वेणु-वादके त्रि॰ शब्दच॰ । [नृपभेदे जटा॰ ।

**वैण्य(न्य)** पु॰ वेण(न)स्यापत्यम् यञ् । १वेणसुते पृथुनामके

**वैतंसिक** त्रि॰ वितंसेन मृगपक्ष्यादिबन्धनोपायेन चरति ठक् । मांसविक्रयोपजीवके व्याधे अमरः । [भृत्यादौ अमरः ।

**वैतनिक** त्रि॰ वेतनेन जीवति ठक् । वेतनोपजीवके कर्मकरे

**वैतरणि(णी)** स्त्री वितरणेन दानेन लङ्घ्यते अच् ङीप् वा पृषो॰ ह्रस्वः । यमद्वारस्थे नदीभेदे "नदी वैतरणी नाम दुर्गन्धा रुधिरावहा । उष्णतोया महावेगा अस्थिकेशतरङ्गिणी" प्रा॰वि॰ जमदग्निः । तस्या उत्-पत्त्यादि कालिकापु॰ १८ अ॰ उक्तं यथा

"शनैश्चरोऽपि भूतेशमासाद्यान्तर्हितस्तदा । वाग्वृष्टिं दुराधर्षामवजग्राह मायया । यदा स नाशकत् वाग्बाणान् सम्वारयितुमर्कजः । तदा महागिरौ चिप्त्वा वाग्बाणै

जलधारके । लोकालोकस्य निकटे जलधाराह्वयो गिरिः । पुष्करद्वीपपृष्ठस्थस्तोयसागरपश्चिमे । स तु सर्वप्रमाणेन मेरुपर्वतसन्निभः । तस्मिन् विन्यस्तवान् वाप्यान् न धर्तुं क्षम ईश्वरः । विदीर्णस्तैस्तु वाप्योघैर्मध्योऽभवद्द्रुतम् । ते वाप्याः पर्वतं भित्त्वा विविशुस्तोयसागरम् । सागरोऽपि गृहीतुं तान् यथाक्रमं स्थातुमिति । ततस्तु सागरं मध्ये भित्त्वा वाप्याः समागताः । तोयधेः प्राग्भवां वेलां स्वर्गमार्गाद्विभेद ताम् । विभिद्य वेलां ते वाप्याः पुष्करद्वीपमध्यगाः । नदी वैतरणी भूत्वा पूर्वसागरगाऽभवत् । जलधारस्य वेगेन संसर्गात् सागरस्य च । अवाप्य सौम्यतां किञ्चित् वाप्यास्ते नाभिदन् क्षितिम् । तदाप्यव्याकुला पृथ्वी विदीर्णा स्यात् येऽकनिः । अवजग्राह तान् वाप्यान् सोऽपि क्षप्तोऽभवद्धठात् । शनैश्चरेण तं वोढुमसमर्थेन लोतकैः । छिन्नैर्विदारितः सोऽसौ जलधारो महागिरिः । विभिद्य पर्वतं यस्मीवाप्यास्ते सागरं ययुः । वैवस्वतपुरद्वारे योजनद्वयविस्तृता । अद्यापि तिष्ठत्यापगा हरत्युत्कलकाम्बया । भित्त्वा वेलां ततः पृथ्वीं विभिद्याशु तरङ्गिणीम् । यच्च वैतरणीं नाम पूर्वसागरगामिनीम् । नानायानविमानेन न द्रष्टुं स्वन्दनेन च । तर्त्तुं शक्या सा तु नदी तप्ततोया विभीषणा । दुःखेन तां तु पृथिवी विमर्त्ति महताधुना । यदा चोर्द्धं गतैस्तैर्विक्षिपन्ति नभश्चरान् । तस्या उपरि नो यान्ति देवा अपि भयातुरात् । यमद्वारं समाहृत्य योजनद्वयविस्तृता । नित्यं वहति संपूर्णा भीषयन्ती जगत्त्रयम्" २पितृकन्याभेदे "अयज्वानश्च यज्वानः पितरो ब्रह्मणः सुताः । अग्निष्वात्ता बर्हिषदो द्विधा तेषां व्यवस्थितिः । तेभ्यः स्वधा, स्वधा जज्ञे मेनां वैतरणीं तथा" कूर्मपु० १२अ० । वितरत्यनया तॄ-करणे ल्युट् ङीप् । ३आसन्नमृत्युकाले दातव्यायां ३गवि च "आसन्नमृत्युना देया गौः सवत्सा च पूर्ववत् । तदभावे च गौरेका नरकोद्धारणाय वै । तदा यदि न शक्नोति दातुं वैतरणीं गाम् । शक्तोऽन्योऽरुक् तदा दत्त्वा श्रेयो दद्यात् तस्य च" । पूर्ववत् हेमशृङ्गादिना सह सवत्सा चेति चकारश्रवणात् एकादशाहेऽपि वैतरणीदानाचारः" शु०त०रघु० । "यमद्वारे महाघोरे तप्ता वैतरणी नदी । तां च तर्त्तुं ददाम्येनां कृष्णां वैतरणीञ्च गाम्" शु०त० ।

**वैतस** पु० वेतस एव स्वार्थे अण् । अम्लवेतसे जटा० ।

**वैतानिक** पु० वितानस्यायम् ठक् । १श्रौतविधिनाऽग्निस्थापने २वितानसम्बन्धिनि च "दाहादूर्द्धमशौचं स्यात् यस्य वैतानिको विधिः" स्मृतिः । वितानशब्दे ४८६९पृ० दृश्यम् ।

**वैतालिक** त्रि० विविधस्तालः मङ्गलगीतादिशब्दस्तेन व्यवहरति ठक् । मङ्गलस्तुत्यादिभिः राज्ञां प्रबोधकारके मागधादौ अमरः ।

**वैतालीय** पु० मात्रावृत्तभेदे । "षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समाऽत्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः" वृ०र० ।

**वैदग्ध** न०स्त्री विदग्धस्य चतुरस्य भावः अण् वा स्त्रीत्वं पक्षे ङीप् । १चातुर्ये २भङ्गौ च । ष्यञ् । वैदग्ध्यमप्यत्र न० ।

**वैदर्भ** पु० विदर्भाणां जनपदानां राजा अण् । १विदर्भदेशाधिपे २वाक्यस्य कौटिल्ये न० "माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका । अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते" इत्युक्ते ३काव्यरचनाभेदे स्त्री सा०द० ङीप् । विदर्भे भवा अण् । ४नलराजपत्न्यां दमयन्त्याम् स्त्री ङीप् । ५अगस्त्यपत्न्यां ६श्रीकृष्णमहिषीभेदे च स्त्री हरिव० ।

**वैदल** न० विदलस्य विकारः अण् । १भिक्षुकस्य भिक्षापात्रभेदे अमरः । २पिष्टकभेदे पु० शब्दच० ।

**वैदिक** पु० वेदं वेत्त्यधीते वा ठञ् । १वेदज्ञे ब्राह्मणे वेदेषु विहितः ठक् । २वेदोक्ते कर्मणि त्रि० । स्त्रियां ङीप् "वैदिकी तान्त्रिकी सन्ध्या यथानुक्रमयोगतः" तन्त्रम् ।

**वैदुष्य** न० विदुषो भावः विद्वस्+ष्यञ् सम्प्र० । पाण्डित्ये ।

**वैदूर्य्य** न० विदूरे गिरौ भवः ञ्य । कृष्णपीतवर्णे विडालनेत्रतुल्य वर्णे मणिभेदे केतुरत्ने ( लहसुनिया ) राजनि० । "मुक्ताविद्रुमवज्रेन्द्रवैदूर्य्यस्फटिकादिकम् । मणिरत्नं सरं शीतं कषायं स्वादु लेखनम् । चाक्षुष्यं धारणात्तच्च पापालक्ष्मीविनाशनम्" राजवल्लभः । तच्छायालक्षणं यथा "एकं वेणुपलाशकोमलरुचा मायूरकण्ठत्विषा मार्जारेक्षणपिङ्गलच्छविजुषा ज्ञेयं त्रिधा च्छायया । यद्गात्रं गुरुतां दधाति नितरां स्निग्धन्तु दोषोज्झितं वैदूर्य्यं विमलं वदन्ति सुधियः स्वच्छञ्च तच्छोभनम् । तस्य कुलक्षणं यथा "विच्छायं मृच्छिलागर्भं लघु रूक्षञ्च सक्षतम् । सत्रासं परुषं कृष्णं वैदूर्य्यं दूरतो नयेत्" । तत्परीक्षा यथा । "घृष्टं यदात्मना स्वच्छं स्वच्छायां निकषाश्मनि । स्फुटं प्रदर्शयेदेतद्वैदूर्य्यं जात्यमुच्यते" । राजनि० "वैदूर्य्यपुष्परागाणां कर्केतभीष्मके वदे । परीक्षां ब्रह्मणा प्रोक्तां व्यासेन कथितां द्विज ! । कल्पान्तकालक्षुभिताम्बुराशिनिर्ह्रादकल्पाद्दितिजस्य नादात् ।

वैदूर्य्यमुत्पन्नमनेकवर्णं शोभाभिरामं द्युतिवर्णबीजम्। अविदूरे विदूरस्य गिरेरुत्तुङ्गरोधसः। कामभूतिकसीमानमनु तस्याकरोऽभवत्। तस्य नादसमुत्थत्वादाकरः सुमहागुणः। अभूदुत्तरितो लोके लोकत्रयविभूषणः। तस्यैव दानवपतेर्निनदानुरूपप्रावृट्पयोदरवदर्शितचारुरूपाः। वैदूर्य्यरत्नमणयो विविधावभासास्तस्मात् स्फुलिङ्गनिवहा इव संबभूवुः। पद्मरागमुपादाय मणिवर्णा हि ये स्थिताः। सर्वांस्तान् वर्णः शोभाभिर्वैदूर्य्यमनुगच्छति। तेषां प्रधानं शिखिकण्ठनीलं यद्वा भवेद्वेणुदलप्रकाशम्। चाषाग्रपत्रप्रतिमश्रियो ये न ते प्रशस्ता मणिशास्त्रविद्भिः। गुणवान् वैदूर्य्यमणिर्योजयति स्वामिनं वरभाग्यैः। दोषैर्युक्तो दोषैस्तस्मात् यत्नात् परीक्षेत। गिरिकाचशिशुपालौ काचस्फटिकाश्च भूमिनिर्भिन्नाः। वैदूर्य्यमणेरेते विजातयः सन्निभाः सन्ति। लिखाभावात् काचं लघुभावाच्छैशुपालकं विद्यात्। गिरिकाचमदीप्तित्वात् स्फटिकं वर्णोज्ज्वलत्वेन। यदिन्द्रनीलस्य महागुणस्य सुवर्णसंख्यातुलितस्य मूल्यम्। तदेव वैदूर्य्यमणेः प्रदिष्टं पलद्वयोन्मापितगौरवस्य। जात्यस्य सर्वेऽपि मणेस्तु यादृक् विजातयः सन्ति समानवर्णाः। तथापि नानाकरणानुमेयभेदप्रकारः परमः प्रदिष्टः। सुखोपलक्ष्यश्च सदा विचार्य्यो ह्ययं प्रभेदो विदुषा नरेण। स्नेहप्रभेदो लघुता मृदुत्वं विजातिलिङ्गं खलु सार्वजन्यम्। कुशलाकुशलैः प्रयुज्यमानाः प्रतिबद्धाः प्रतिमत्क्रिया प्रयोगैः। गुणदोषसमुद्भवं लभन्ते मणयोऽर्थान्तरमूल्यमेव भिन्नाः। क्रमशः समतीतवर्त्तमानाः प्रतिबद्धा मणिबन्धनेन यस्मात्। यदि नाम भवन्ति दोषहीना मणयः षड्गुणमाप्नुवन्ति मूल्यम्। आकरान् समतीतानामुदधेस्तीरसन्निधौ। मूल्यमेतत् खनीनान्तु न सर्वत्र महीतले। सुवर्णो मनुना यस्तु प्रोक्तः षोडशमाषकः। तस्य सप्ततिमो भागः संज्ञारूपं करिष्यति। शाणस्य त्रिंशमांशो माषकः पञ्चकृष्णलः। पलस्य दशमो भागो धरणः परिकीर्त्तितः। इति मानविधिः प्रोक्तो रत्नानां मूल्यनिश्चये"। गारुडे ७२ अ०। "सितस्य धूम्रस्य च्छायमीषत्कृष्णसितं भवेत्। वैदूर्य्यंनाम तद्रत्नं रत्नविद्भिरुदाहृतम्। ब्रह्मक्षत्रियविट्शूद्रजातिभेदाच्चतुर्विधाः। सितनीलो भवेद्विप्रः सितरक्तस्तु बाहुजः। पीतनीलस्तु वैश्यः स्यात् नील एव हि शूद्रकः"। अथ गुणाः "मार्ज्जारनयनप्रख्यं रश्मिप्रतिमं हि वा। कलिलं निर्मलं व्यङ्गं वैदूर्य्यं देवभूषणम्। सुतारं घनमत्यच्छं कलिलं व्यङ्गमेव च। वैदूर्य्याणां समाख्याता एते पञ्च महागुणाः"। "उद्गिरन्निव दीप्तिं योऽसौ सुतार इतीर्य्यते। प्रमाणतोऽल्पं गुरु यद् घनमित्यभिधीयते। कलङ्कादिविहीनं तदत्यच्छमिति कीर्त्तितम्। ब्रह्मसूत्रकलाकारसूत्रो यत्र दृश्यते। कलिलं नाम तद्रत्नं सर्वसम्पत्तिकारकम्। विच्छिन्नाङ्गन्तु वैदूर्य्यं व्यङ्गमित्यभिधीयते। कर्करं कर्कशं त्रासः कलङ्को देह इत्यपि। एते पञ्च महादोषा वैदूर्य्याणामुदीरिताः। शर्करायुक्तमिव यत् प्रतिभाति च कर्करम्। स्पर्शेऽपि यत्तु जर्जरं च कर्कशं बन्धुनाशनम्। भिन्नकान्तिकरस्त्रासः स कुर्य्यात् कुलसंक्षयम्। विरूपवर्णो यस्याङ्गे कलङ्कः क्षयकारकः। मलदिग्ध इवाभाति देहो देहविनाशनः। जयति यदि सवर्णत्यागहीनो यदा वा बहुविधमणिकारी भूपतिर्वा यतिर्वा। तदपि हृतदोषं जातु वैदूर्य्यरत्नं प्रतिहतफलरूपः पातमेवाप्नुयात् स्यात्"। युक्तिकल्पतरुः।

**वैदेह** पु० विशेषेण देह उपचयो यस्य स्वार्थे प्रज्ञाद्यण् विदेहे भवः अण् वा। १वणिग्जने भरतः। शूद्रात् वैश्यजाते २जातिभेदे पुंस्त्री०मेदि० स्त्रियां ङीप्। ठक्। वैदेहिकोऽपि वणिजि। विदेहानां राजा अण्। ३विदेहराजे जनके नृपे।

**वैदेही** स्त्री विदेहेषु मिथिलादेशेषु भवा अण्। १सीतायाम् जनकात्मजायाम् २हरिद्रायाम् ३पिप्पल्यां ४वणिक्स्त्रियाञ्च मेदि०।

**वैद्य** पु०विद्याऽस्त्यस्य अण्। १पण्डिते "नाविद्यानान्तु वैद्येन देयं विद्याधनात् क्वचित्" दायभा०। २भिषजि अमरः। तदुपकारके ३वासकवृक्षे च शब्दच०। वैद्योत्पत्तिश्च "वैद्योऽश्विनीकुमारेण जातश्च विप्रयोषिति। वैद्यवीर्य्येण शूद्रायां बभूवुर्बहवो जनाः। ते च ग्रामगुणज्ञाश्च मन्त्रौषधिपरायणाः। तेभ्यश्च जाताः शूद्रायां ते व्यालग्राहिणो भुवि"। शौनक उवाच "कथं ब्राह्मणपत्न्यान्तु सूर्य्यपुत्रोऽश्विनीसुतः। अहो केन विपाकेन वीर्य्याधानं चकार सः"। सौतिरुवाच "गच्छन्तीं तीर्थयात्रायां ब्राह्मणीं रविनन्दनः। ददर्श कामुकीं कान्तः पुष्पोद्याने मनोहरे। तया निवारितो यत्नात् बलेन बलवान् सुरः। अतीव सुन्दरीं दृष्ट्वा वीर्य्याधानं चकार सः। द्रुतं तत्याज गर्भं सा पुष्पोद्याने मनोरमे

सद्यो बभूव पुत्रश्च तप्तकाञ्चनसन्निभः। सपुत्रा स्वामिनो गेहं जगाम व्रीड़िता तदा। स्वामिनं कथयामास यस्माद्दैवादिसङ्कटम्। विप्रो रोषेण तत्याज तञ्च पुत्रं स्वकामिनीम्। सरिद्बभूव योगेन सा च गोदावरी स्मृता। पुत्रं चिकित्साशास्त्रञ्च पाठयामास यत्नतः। नानाशिल्पञ्च मन्त्रञ्च स्वयं स रविनन्दनः। विप्रश्च ज्योतिर्गणनात् वेदनाच्च निरन्तरम्। वेदधर्मपरित्यक्तो बभूव गणको भुवि"। ब्रह्मवै॰पु॰ १० अ॰। नरकभोगान्ते वैद्यजन्म यथा "यः करोत्यपहारञ्च देवब्राह्मणयोर्धनम्। पातयित्वा स्वपुरुषान् दश पूर्वान् दशापरान्। स्वयं याति च धूमान्धं धूमध्वान्तसमन्वितम्। धूमक्लिष्टो धूमभोगी वसेत्तत्र चतुर्युगम्। ततो मूषिकजातिश्च शतजन्मानि भारते। ततो नानाविधाः पक्षिजातयः कृमिजातयः। ततो नानाविधाः वृक्षजातयश्च ततो नरः। भार्य्याहीनो वंशहीनः शवरो व्याधिसंयुतः। ततो भवेत् स्वर्णकारः स सुवर्णवणिक् ततः। ततो यवनसेवी च ब्राह्मणो गणकस्ततः। विप्रो देवलोपजीवी वैद्यजीवी चिकित्सकः"। "लाक्षालौहादिव्यापारी रसादिविक्रयी च यः। स याति नागवेष्टञ्च सर्पवेष्टित एव च। वसेत् स लोममामावद्दं तत्रैव नागदंशितः। ततो भवेत् स गणको वैद्यश्च सप्तजन्मसु। गोपश्च कर्मकारश्च रङ्गकारस्ततः शुचिः"। ब्रह्मवै॰पु॰ २८अ॰। राजवैद्यस्य लक्षणं यथा "धर्मं पारङ्गतो यः स्यादष्टाङ्गे तु चिकित्सिते। अनाहार्य्यः स वैद्यः स्याद्धर्मात्मा च कुलोद्गतः। प्राणाचार्य्यः स विज्ञेयो वचनं तस्य भूभुजः। राजन्! राज्ञा सदा कार्य्यं यथाकार्य्यं पृथग्जनैः"। मात्स्ये १८९ अ॰। "चिकित्सां कुरुते यस्तु स चिकित्सक उच्यते। स च यादृक् समीचीनस्तादृशोऽपि निगद्यते। तत्त्वाधिगतशास्त्रार्थो दृष्टकर्मा स्वयं कृती। लघुहस्तः शुचिः शूरः सज्जोपस्करभेषजः। प्रत्युत्पन्नमतिर्धीमान् व्यवसायी प्रियंवदः। सत्यधर्मपरोयश्च वैद्य ईदृक् प्रशस्यते"। दृष्टकर्मा दृष्टा परेण कृता चिकित्सा येन सः। स्वयं कृती स्वयं चिकित्साकुशलः। लघुहस्तः क्षिप्रहस्तः। निषिद्धवैद्यो यथा "कुचेलः कर्कशः स्तब्धः ग्रामीणः स्वयमागतः। पञ्च वैद्या न पूज्यन्ते धन्वन्तरिसमा अपि"। कर्कशः अप्रियवादी। स्तब्धः साभिमानः। ग्रामीणः अव्यवहारचतुरः। अथ वैद्यस्य कर्म आह "व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः। एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः" भावप्र॰ "सत्यत्रेताद्वापरेषु युगेषु ब्राह्मणाः किल। ब्राह्मणक्षत्रियविट्शूद्रकन्यका उपयेमिरे। तत्र वैश्यसुतायां ये जज्ञिरे तनया अमी। सर्वे ते मुनयः ख्याता वेदवेदाङ्गपारगाः। तेषां मुख्योऽमृताचार्य्यस्तस्यावम्बाकुले हि यत्। अम्बष्ठ इत्यसावुक्तस्ततो जातिप्रवर्त्तनात्। परे सर्वेऽपि चाम्बष्ठा वैश्याब्राह्मणसम्भवाः। जननीतो जनुर्लब्ध्वा यज्जाता वेदसंस्कृतैः। अम्बष्ठास्तेन ते सर्वे द्विजा वैद्याः प्रकीर्त्तिताः। अथ रुक्प्रतिकारित्वाद्भिषजस्ते प्रकीर्त्तिताः। सत्ये वैद्याः पितृतुल्यास्त्रेतायाञ्च तथा स्मृताः। द्वापरे भ्रातृवत् प्रोक्ताः कलौ वैश्योपमाः स्मृताः" कुलच॰। आयुर्वेदशब्दे दृश्यम्।

**वैद्यक** न॰ वैद्यं चिकित्सकमधिकृत्य कृतो ग्रन्थः कन्। आयुर्वेदे "ऋग्यजुःसामाथर्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः। विचिन्त्य तेषामर्थञ्चैवायुर्वेदं चकार सः। कृत्वा तु पञ्चमं वेदं भास्कराय ददौ विभुः। स्वतन्त्रां संहितां तस्माद्भास्करश्च चकार सः। भास्करश्च स्वशिष्येभ्य आयुर्वेदं स्वसंहिताम्। प्रददौ पाठयामास ते चक्रुः संहितास्ततः। तेषां नामानि विदुषां तन्त्राणि तत्कृतानि च। व्याधिप्रणाशबीजानि साध्वि! मत्तो निशामय। धन्वन्तरिर्दिवोदासः काशीराजस्तथाश्विनौ। नकुलः सहदेवार्कौ च्यवनो जनको बुधः। जावालो जाजलिः पैलः करथोऽगस्त्य एव च। एते वेदाङ्गवेदज्ञाः षोडश व्याधिनाशकाः। चिकित्सातत्त्वविज्ञानं नाम तन्त्रं मनोरमम्। धन्वन्तरिश्च भगवांश्चकार प्रथमे सति!। चिकित्सादर्पणं नाम दिवोदासश्चकार सः। चिकित्साकौमुदीं दिव्यां काशीराजश्चकार सः। चिकित्सासारतन्त्रञ्च भ्रमघ्नं चाश्विनौ सुतौ। तन्त्रं वैद्यकसर्वस्वं नकुलश्च चकार सः। चकार सहदेवश्च व्याधिसिन्धुविमर्दनम्। ज्ञानार्णवं महातन्त्रं यमराजश्चकार सः। च्यवनो जीवदानञ्च चकार भगवानृषिः। चकार जनको योगी वैद्यसन्देहभञ्जनम्। सर्वसारं चन्द्रसुतो जावालस्तन्त्रसारकम्। वेदाङ्गसारं तन्त्रञ्च चकार जाजलिर्मुनिः। पैलो निदानं करथस्तन्त्रं सर्वधरं परम्। द्वैधनिर्णयतन्त्रञ्च चकार कुम्भसम्भवः। चिकित्साशास्त्रबीजानि तन्त्राण्येतानि षोडश। व्याधिप्रणाशबीजानि बलाधानकराणि च। मथित्वा

ज्ञानमन्यानैरायुर्वेदयो निधिम्। ततकन्त्वागम्य उद्धरन् नवनीतानि कोविदाः। एतानि क्रमशो दृष्ट्वा दिव्यां भास्करसंहिताम्। आयुर्वेदसर्ववीज सर्वं जानामि सुन्दरि!" ब्रह्मवै० पु० १६ अ०।

**वैद्यनाथ** पु० देशविशेषे "करवीरे महालक्ष्मीरुमा देवी विनायके। अरोगा वैद्यनाथे तु महाकाले महेश्वरी" मात्स्ये। "वैद्यनाथं समारभ्य भुवनेशान्तगं शिवे!। तावद्वङ्गाभिधो देशो यात्रायां न हि दुष्यति" शक्तिसङ्गमतन्त्रे ७प०। २भैरवविशेषे "हार्दपीठं वैद्यनाथे वैद्यनाथस्तु भैरवः। देवता जयदुर्गाख्या नेपाले जानुनी मम" तन्त्रचूड़ा०। ३शिवलिङ्गभेदे "हरिद्रानगरे यत्र वैद्यनाथो महेश्वरः। तत्राश्रयो विल्वरक्षः स्वर्णरक्षः उदाहृतः" वृहद्धर्मपु० ११अ०। "भारखण्डे वैद्यनाथो वक्रेश्वरस्तथैव च। वीरभूमौ सिद्धिनाथो राढ़े च तारकेश्वरः" इति महालिङ्गेश्वरतन्त्रे।

**वैद्यबन्धु** पु० ६त०। आरग्वधवृक्षे शब्दर०।

**वैद्यमातृ** स्त्री वैद्यस्य मातेव। १वासके अमरः तस्य वैद्यजीविकाप्रयोजकरोगशान्तिकरत्वेन तदुपोषकत्वात् तन्मातृतुल्यत्वम्।

**वैद्यसिंही** स्त्री वैद्यस्य सिंहीव। वासकवृक्षे शब्दच०।

**वैद्या** स्त्री वैद्यः पाल्यत्वेनास्त्यस्याः अच्। काकोल्याम् शब्दच०।

**वैध** त्रि० विधित आगतः अण्। विधिप्रतिपाद्ये।

**वैधहिंसा** स्त्री कर्म०। वेदविहितहिंसायाम् "या वेदविहिता हिंसा नियताऽस्मिंश्चराचरे। अहिंसामेव तां विद्यात् वेदात् धर्मो हि निर्बभौ" मनुः। अत्र नियतेत्युपादानात् नित्ये पश्विष्ट्यादौ हिंसाया अहिंसात्वं न तु काम्येऽपीति सम्प्रदायविदः। पिष्टपशुमीमांसायाञ्च तथैवोक्तं "कुर्यात् घृतपशुं सङ्गे कुर्यात् पिष्टपशुं तथा" मनुना सङ्गे कामनायां पिष्टपशूनामेव विधानात्। विशेषतः कलौ "मांसदानं तथा श्राद्धे" "अश्वालम्भं गवालम्भम्" इति च कलिवर्ज्येषूक्तेः काम्यबलिदानादिनिषेधः। हिंसाया अनर्थसाधनत्वेऽपि वैधहिंसाया अर्थसाधनत्वम् वैद्यकोक्तसंस्कारभेदेन विषस्येवेति बोध्यम्। ति०त०मतभेदेन च वैधहिंसा उभयरूपत्वं निरूपितं यथा "मा हिंस्यात् सर्वाभूतानि" इत्यत्र सर्वशब्दस्य व्यापकार्थपरतया एतद्विधिमतुलङ्घ्य "वायव्यं श्वेतमालभेत" इत्यादिविधेर्विषयाप्राप्तेरगत्या वैधातिरिक्तविषयत्वं सर्वा सर्वाणि कन्दृषि वेत्यनेन तदुपष्टम्भितम्। यदपि नानादर्शनटीकाकृद्भिर्वाचस्पतिमिश्रैस्तत्त्वकौमुद्यामभिहितं "न च मा हिंस्यात् सर्वा भूतानि" इति सामान्यशास्त्रं विशेषशास्त्रेण "अग्नीषोमीयं पशुमालभेत" इत्यनेन बाध्यते इति वाच्यं विरोधाभावात् विरोधे हि बलीयसा दुर्बलं बाध्यते। न चास्ति विरोधः भिन्नविषयत्वात्। तथा हि मा हिंस्यादिति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न पुनरक्रत्वर्थत्वमपि। अग्नीषोमीयं पशुमालभेतेत्यनेन तु पशुहिंसायाः क्रत्वर्थत्वमुच्यते न त्वनर्थहेतुभावस्तथा सति वाक्यभेदप्रसङ्गात्। न चानर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिदस्ति विरोधः। हिंसा हि पुरुषस्य दोषमावक्ष्यति क्रतोश्चोपकरिष्यतीत्यन्तेन, तदपि सांख्यनये। मीमांसकमते तु विरोध एव तथा हि गुरुनये न खलु सर्वभूतहिंसाभावविषयकं कार्य्यम् इति निषेधविध्यर्थस्य बाधं विना अग्नीषोमीयपश्वालम्भनविषयकं कार्य्यमिति भावविध्यर्थ उपपद्यते। भट्टनये तु अङ्गं यथा तथास्तु। न च मुख्यपशुयागे पुरुषार्थपशुहिंसनस्यार्थसाधनत्वमनर्थसाधनत्वञ्चोपपद्यते विरोधात्। वस्तुतस्तु अङ्गेऽपि विरोधोऽस्त्येव कुतो? विधेरेष स्वभावो यत् स्वविषयस्य साक्षात् परम्परया वा पुरुषार्थसाधनत्वमवगमयति अन्यथाऽङ्गानां प्रधानोपकारकत्वमपि नाङ्गीक्रियेत। अर्थसाधनत्वं बलवदनिष्टाननुबन्धीष्टसाधनत्वम् अनर्थसाधनत्वं बलवदनिष्टसाधनत्वं न चानयोरेकत्र समावेश इति। अतएवोक्तं "तस्माद्यज्ञे बधोऽबधः" इति। नन्वेवं "श्येनेनाभिचरन् यजेत" इत्यत्र श्येनस्य शत्रुबधरूपेष्टसाधनत्वमवगतम् "अभिचारो मूलकर्म च" इति मनुना उपपातकगणमध्ये पाठादनिष्टसाधनत्वमवगतम्। तदेतत् कथमुपपद्यतामिति चेन्नैवं "आततायिनमायान्तं हन्यादेवाविचारयन्" इत्येकवाक्यतया आततायिस्थले इष्टसाधनत्वम् अनाततायिस्थले तूपपातकत्वेन बलवदनिष्टसाधनत्वमित्यविरोध इति गुरुचरणाः"।

**वैधात्र** पु० विधातुरपत्यम् अण्। सनत्कुमारादौ १मुनिभेदे अमरः। २ब्राह्म्यां (वामनहाटि) स्त्री राजनि०।

**वैधृति** पु० विगता धृतिर्यस्मात् पृषो० वृद्धिः। विष्कम्भादिषु मध्ये १अन्तिमे योगे। सूर्य्यचन्द्रयोः क्रान्तिसाम्येनानीते अशुभसूचके २वाङ्गभेदे तत्र वैधृतशब्दोऽपि प्रयोग

सू०सि० "एकायनगतौ स्यातां सूर्याचन्द्रमसौ यदा। तद्युते मण्डले क्रान्त्योस्तुल्यत्वे वैधृताभिधः"। पातशब्दे ४३८९ पृ० विस्तरो दृश्यः। उपयमशब्दे १२६५ पृ० दृश्यम्। [मूर्खे अमरः।

**वैधेय** त्रि० विधीयतेऽसौ वि+धा-यत् ततः स्वार्थे अण्।

**वैधर्म्य** न० विरुद्धो धर्मो यस्य तस्य भावः ष्यञ्। १विरुद्धधर्मत्वे २अन्यलक्षणे च। [मसह्यवेदनम्" इति कुमारः।

**वैधव्य** न० विधवाया भावः ष्यञ्। पतिविरहे "नववैधव्य-

**वैनतेय** पु० विनतायाः अपत्यं ढक्। १गरुडे अमरः २अरुणे च मत्स्यपु०। [हेमच०।

**वैनयिक** त्रि० विनये रतः ठक्। शास्त्रज्ञानादिना विनयरते

**वैनायिक** पु० विनायं खण्डनमधिकृत्य कृतो ग्रन्थः ठक्। १बौद्धागमे त्रिका० उपचारात् २तदभिज्ञे त्रि०।

**वैनाशिक** पु० विनाशमधिकृत्य कृतो ग्रन्थः ठक्। सर्वेषां क्षणभङ्गुरताप्रतिपादके १बौद्धागमे २तदभिज्ञे त्रि०। विनाशाय हितम् ठक्। ज्योतिषोक्ते नक्षत्रचक्रस्थे जन्मनक्षत्रावधिकत्रयोविंशे ३नक्षत्रे ४क्षपणके ५परतन्त्रे च त्रि० ६ऊर्णनाभे पु० मेदि०।

**वैनीतक** पु०न०। विशेषेण नीतं नयनं तेन कायति कै-क स्वार्थे अण्। परम्परया वाहने शिविकादौ अमरः।

**वैपरीत्य** न० विपरीतस्य भावः ष्यञ्। १विपर्य्यये हेमच०। २लज्जालौ लतायां स्त्री राजनि०।

**वैभव** न० विभोर्भावः अण्। १विभुत्वे २विभूतौ।

**वैभ्राज** न० विभ्राज इदम् अण्। देवोद्यानभेदे त्रिका०। तच्च मेरोः पश्चिमदिक्स्थविपुलपर्वतस्थं विपुलशब्दे ४९१२ पृ० दृश्यम्। [२तथाभूतभगिन्यां स्त्री ङीप्।

**वैमात्र** पु० विमातुरपत्यम् अण्। १सापत्ने भ्रातरि अमर०

**वैमात्रेय** पु० विमातुरपत्यं ढक्। १सापत्ने भ्रातरि अमरः २तथाभूतभगिन्यां स्त्री ङीप्।

**वैमुख्य** न० विमुखस्य भावः ष्यञ्। विमुखत्वे।

**वैमेय** पु० वि+मि-यत् स्वार्थे अण्। विनिमये हेमच०।

**वैयधिकरण्य** न० व्यधिकरणस्य भावः ष्यञ्। असमानाधिकरणत्वे। [भिन्ने।

**वैयाकरण** त्रि० व्याकरणं वेत्त्यधीते वा अण्। व्याकरणा-

**वैयाघ्र** पु० व्याघ्रचर्मणा परिवृतो रथः अण्। व्याघ्रचर्मपरिवृते रथे अमरः।

**वैयाघ्रपद्य** पु० व्याघ्रपदस्यापत्यं यञ्। गोत्रकारके मुनिभेदे "वैयाघ्रपद्यगोत्रायेति" भीष्मतर्पणमन्त्रः।

**वैयात्य** न० वियातस्य भावः ष्यञ्। निर्लज्जत्वे "वैयात्यसुरतेष्वपि" माघः। [शुकदेवे।

**वैयासकि** पु० व्यासस्यापत्यम् इञ् अकङ् च। व्यासस्यापत्ये

**वैयासिकी** स्त्री व्यासेन प्रोक्ता ठञ् ङीप्। व्यासप्रणीतायां संहितायाम्।

**वैर** न० वीरस्य भावः अण्। विरोधे विद्वेषे अमरः। "वैरं पञ्चसमुत्थानं मुनिभिः परिकीर्त्तितम्। स्त्रीकृतं वास्तुजं वाग्जं सापत्नापराधजम्"। तत्र स्त्रीकृतं कृष्णचैद्ययोः। वास्तुजं कुरुपाण्डवयोः। वाग्जं द्रोणद्रुपदयोः। सापत्नं नैसर्गिकमहिनकुलयोः। अपराधजं पूजनीब्रह्मदत्तयोः।

**वैरकर** त्रि० वैरं करोति कृ-ट। विरोधकारके।

**वैरक्त्य** न० विरक्तस्य भावः ष्यञ्। विरागे।

**वैराङ्गिक** त्रि० विरङ्गं विरागं नित्यमर्हति ठञ्। विरागार्हे हेमच०। वैरागिक तत्रार्थे सि०कौ०।

**वैरनिर्यातन** न० वैरस्य वैरकृतापकारस्य निर्यातनम् निर्+यत-णिच् ल्युट्। वैरकृतापकारप्रतीकारे अमरः।

**वैरप्रतीकार** पु० ६त०। वैरकृतापकारस्य तत्तुल्यापकारकरणेन तस्य शोधने वैरप्रतिक्रियाप्यत्र स्त्री।

**वैरशुद्धि** स्त्री ६त०। वैरप्रतीकारे अमरः।

**वैराग्य** न० विरागस्य भावः ष्यञ्। विषयवासनाराहित्ये ऐहिकामुष्मिकविषयरागराहित्ये च।

वैराग्यस्य मोक्षहेतुत्वादि विवेकचूडामणौ दर्शितं यथा "मोक्षस्य हेतुः प्रथमो निगद्यते वैराग्यमत्यन्तमनित्यवस्तुषु। ततः शमश्चापि दमस्तितिक्षा न्यासः प्रसक्ताखिलकर्मणां भृशम्। ततः श्रुतिस्तन्मननं सतत्त्वध्यानं चिरं नित्यनिरन्तरं मुनेः। ततो विकल्पं परमेत्य विद्वानिहैव निर्वाणसुखं समृच्छति। यद्बोद्धव्यं तवेदानीमात्मानात्मविवेचनम्। तदुच्यते मया सम्यक् श्रुत्वात्मन्यवधारय। मज्जास्थिमेदःपलरक्तचर्मत्वगाह्वयैर्धातुभिरेभिरन्वितम्। पादोरुवक्षोभुजपृष्ठमस्तकैरङ्गैरुपाङ्गैरुपयुक्तमेतत्। अहंममेति प्रथितं शरीरं मोहास्पदं स्थूलमितीर्य्यते बुधैः। नभोनभस्वद्दहनाम्बुभूमयः सूक्ष्माणि भूतानि भवन्ति तानि। परस्परांशैर्मिलितानि भूत्वा स्थूलानि च स्थूलशरीरहेतवः। मात्रास्तदीया विषया भवन्ति शब्दादयः पञ्च सुखाय भोक्तुः। य एषु मूढा विषयेषु बद्धा रागोरुपाशेन सुदुर्दमेन। आयान्ति निर्यान्त्यध ऊर्द्धमुच्चैः स्वकर्मदूतेन जवेन

गीता:। शब्दादिभिः पञ्चभिरेव पञ्च पञ्चत्वमापुः स्वगुणेन बद्धाः। कुरङ्गमातङ्गपतङ्गमीनभृङ्गा, नरः पञ्चभिरञ्चितः किम्?। दोषेण तीव्रो विषयः कृष्णसर्पविषादपि। विषं निहन्ति भोक्तारं द्रष्टारं चक्षुषाप्ययम्। विषयाशा महापाशात् यो विमुक्तः सुदुस्त्यजात्। स एव कल्पते मुक्त्यै नान्यः षट्शास्त्रवेद्यपि। आपातवैराग्यवतो मुमुक्षून् भवाब्धिपारं प्रतियातुमुद्यतान्। आशाग्रहो मज्जयतेऽन्तराले निगृह्य कण्ठे विनिवर्त्य वेगात्। विषयाख्यग्रहो येन सुविरक्त्यसिना हतः। स गच्छति भवाम्भोधेः पारं प्रत्यूहवर्जितः। विषमविषयमार्गैर्गच्छतोऽनच्छबुद्धेः प्रतिपदमभियातो मृत्युरप्येष विद्धि। हितसुजनगुरूक्त्या गच्छतः स्वस्य युक्त्या प्रभवति फलसिद्धिः सत्यमित्येव विद्धि। मोक्षस्य काङ्क्षा यदि वै तवास्ति त्यजातिदूराद्विषयान् विषं यथा। पीयूषवत्तोषदयाक्षमार्जवप्रशान्तिदान्तीर्भज नित्यमादरात्"।

**वैराट** त्रि० विराटस्येदम् अण्। १विराटसम्बन्धिनि। वीर इव अटति अट–अच् स्वार्थे अण्। २इन्द्रगोपकीटे हेमच०।

**वैरातङ्क** पु० वीरस्य अर्जुनस्यातङ्कार्थं यद्वा वे साधु–अण्। अर्जुनवृक्षे राजनि०। [सुखपकारके २वैरानुगते च।

**वैरानुबन्धिन्** त्रि० वैरं विद्वेषमनुबध्नाति णिनि। १विद्वेषाकार्थे सूर्ये

**वैरिन्** त्रि० वैरमस्त्यस्य इनि। शत्रौ अमरः।

**वैरूप्य** न० विरूपस्य भावः ष्यञ्। १विरूपत्वे २अननुरूपत्वे ३अयथाभावे ४वस्तुनोविकारभेदे च।

**वैरोच(म)नि** पु० विरोचनस्यापत्यम् बिवाद्य इञ् वा। १बलिपुत्रे २सूर्यपुत्रे ३बलिराजपुत्रे दानवभेदे च ४बुद्धभेदे ५सिद्धभेदे शब्दर०।

**वैलक्षण्य** न० विलक्षणस्य भावः ष्यञ्। विलक्षणत्वे वैशिष्ट्ये

**वैलक्ष्य** न० विलक्षस्य भावः ष्यञ्। १लज्जायाम् अमरः २स्वभावविपर्यये च "वैलक्ष्यहेतोर्गतिभेदरोषाम्" नैष०।

**वै(ब)वधिक** त्रि० वी(ब)वधेन धान्यादिसंग्रहेण व्यवहरति ठक्। वार्तावहे नैवसे (दोकानि) अमरः।

**वैवर्ण्य** न० विवर्णस्य भावः ष्यञ्। विवर्णत्वे मालिन्ये।

**वैवस्वत** पु० विवस्वतोऽपत्यम् तस्येदं वा अण्। १यमे अमरः २अग्नौ ३रुद्रभेदे च जटा०। ४तत्सम्बन्धिनि त्रि० "वैवस्वतकरक्रिया" इत्युद्भटः। ५दक्षिणदिशि स्त्री ङीप्। ६सप्तमे मनुभेदे "मनुर्विवस्वतः पुत्रः श्राद्धदेव इति श्रुतः। सप्तमो वर्तमानोऽयस्तदपत्यानि मे शृणु॥ इक्ष्वाकुर्नभगश्चैव धृष्टः शर्यातिरेव च। नरिष्यन्तोऽथ नाभागः सप्तमो दिष्ट उच्यते। करूषश्च पृषध्रश्च दशमो वसुमान् स्मृतः। मनोर्वैवस्वतस्यैते दश पुत्राः परन्तप!। आदित्या वसवो रुद्रा विश्वे देवा मरुद्गणाः। अश्विनौ ऋभवो राजन्! इन्द्रस्तेषां पुरन्दरः। कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रश्च गोतमः। जमदग्निर्भरद्वाज इति सप्तर्षयः स्मृताः। अत्रापि भगवज्जन्म कश्यपाददितेरभूत्। आदित्यानामवरजो विष्णुर्वामनरूपधृक्। संक्षेपतो मयोक्तानि सप्त मन्वन्तराणि ते" भाग० ८।१३अ०।

**वैवाहिक** त्रि० विवाहाय हितं साधु वा ठक्। १विवाहयोग्ये "वैवाहिकीं तिथिं पृष्टाः" इति कुमारः। २विवाहेन सम्बद्धे कन्यापुत्रयोः श्वशुरे ३विवाहसम्बन्धिनि च त्रि० "पञ्चमे सप्तमे वापि येषां वैवाहिकी क्रिया" स्मृतिः।

**वैशम्पायन** पु० व्यासशिष्ये भारतवक्तरि मुनिभेदे। स च व्यासादिष्टः जनमेजयाय भारतं श्रावितवान् यथोक्तं भा०आ०१अ० "जनमेजयेन पृष्टः सन् ब्राह्मणैश्च सहस्रशः। शशास शिष्यमासीनं वैशम्पायनमन्तिके। स सदस्यैः सहासीनः श्रावयामास भारतम्। कर्मान्तरेषु यज्ञस्य चोद्यमानः पुनःपुनः"। स च यजुर्वेदे तस्य शिष्यः यथाह "अथ शिष्यान् प्रजग्राह चतुरो वेदपारगान्। जैमिनिञ्च सुमन्तुञ्च वैशम्पायनमेव च। पैलं तेषां चतुर्थञ्च पञ्चमं मां महामुनिः। ऋग्वेदश्रावकं पैलं जग्राह स महायशाः। यजुर्वेदप्रवक्तारं वैशम्पायनमेव च" कौर्मपु० ४९अ०। [वके च।

**वैशस** न० विशसस्य भावः स्वार्थे वा अण्। १हिंसने २हिंसा

**वैशाख** पु० विशाखानक्षत्रयुक्ता पौर्णमासी वैशाखी सा यत्र मासे पुनः अण्। स्वनामख्याते चैत्रतो द्वितीये १चान्द्रमासे २मुद्गरभेदे च कार्त्तिकशब्दे १९४९ पृ० दृश्यम्। चान्द्रवैशाखलक्षणं तु मेषस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तत्रिंशत्तिथिकत्वम्। मेषस्थरविके ३सौरमासे "तुलामकरमेषेषु प्रातःस्नानं विधीयते। हविष्यं ब्रह्मचर्यञ्च महापातकनाशनम्"। तस्यायम् ४पौर्णमास्यां स्त्री ङीप्। विशाखा प्रयोजनमस्य अण्। ५मन्थानदण्डे पु० ६धनुर्द्धराणामवस्थानभेदे न० अमरः। [वेश्याभिगन्तरि नायकभेदे रत्नम०।

**वैशिक** पु० वेशे वेश्यालये भवं स्वरात् वेश्यायां प्रसक्तः ठक्।

**वैशिष्ट्य** न० विशिष्टस्य भावः ष्यञ्। विशेष्यविशेषण-

सम्बन्धिनि विशिष्टबुद्धिनियामके १सम्बन्धे २भेदे च।

**वैशेषिक** न० विशेषं पदार्थभेदमधिकृत्य कृतो ग्रन्थः ठञ्। कणादप्रणीते १शास्त्रभेदे। तदधीते अण्। २काणादशास्त्राभिज्ञे त्रि०। तस्येदम् अण्। ३काणादशास्त्रसम्बन्धिनि त्रि०। [शेषग्राहकाद:" शा०स्ू०।

**वैशेष्य** न० विशेषस्य भावः ष्यञ्। १वैशिष्ट्ये २भेदे च "वै-

**वैश्य** पुंस्त्री विशति उपभुङ्क्ते विश–क्विप् स्वार्थे ष्यञ्। वर्णभेदे ब्रह्मण ऊरुजाते जातिभेदे अमरः स्त्रियां टाप्। "विशत्याशु पशुभ्यश्च कृष्यादानरुचिः शुचिः। वेदाध्ययनसम्पन्नः स वैश्य इति संज्ञितः" पद्मपु०स्व०२६अ०।

**वैश्यवृत्ति** स्त्री ६त०। कृषिवाणिज्यादौ "वैश्यस्तु कृतसंस्कारः कृत्वा दारपरिग्रहम्। वार्त्तायां नित्ययुक्तः स्यात् पशूनाञ्चैव रक्षणे। प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून्। ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः। न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति। वैश्ये चेच्छति नान्येन रक्षितव्याः कथञ्चन। मणिमुक्ताप्रवालानां लोहानां तान्तवस्य च। गन्धानाञ्च रसानाञ्च विद्यादर्घबलाबलम्। बीजानामुप्तिविच्च स्यात् क्षेत्रदोषगुणस्य च। मानयोगञ्च जानीयात् तुलायोगांश्च सर्वशः। सारासारञ्च भाण्डानां देशानाञ्च गुणागुणान्। लाभालाभञ्च पण्यानां पशूनां परिवर्द्धनम्। भृत्यानाञ्च भृतिं विद्याद् भाषाश्च विविधा नृणाम्। द्रव्याणां स्थानयोगांश्च क्रयविक्रयमेव च। धर्मेण च द्रव्यवृद्धावातिष्ठेद् यत्नमुत्तमम्। दद्याच्च सर्वभूतानामन्नमेव प्रयत्नतः" मनुः। "वैश्यस्य च प्रवक्ष्यामि यो धर्मो वेदसम्मतः। दानमध्ययनं शौचं यज्ञश्च धनसञ्चयः। पालयेच्च पशून् वैश्यः पितृवत्कर्ममर्जयन्। विकर्म तद्भवेदन्यत् कर्म यत् स समाचरेत्। रक्षया स हि तेषां वै महत् सुखमवाप्नुयात्। प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे प्रजाः। ब्राह्मणेभ्यश्च राज्ञे च सर्वाः परिददे प्रजाः। तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम्। षण्णामेकां पिबेद्धेनुं शताच्च मिथुनं भवेत्। लब्धाच्च सप्तमं भागं तथा षष्ठं कलक्षुरे। शस्यानां सर्ववीजानि एषा सांवत्सरी भृतिः" भा०शा०२६अ०।

**वैश्रवण** पु० विश्रवसोऽपत्यम् अण् विश्रवःणादेशः। कुबेरे अमरः। [वैश्रवणावासादयोऽप्यत्र।

**वैश्रवणालय** पु० ६त०। १वटवृक्षे हेमच० २कुबेरपुर्याञ्च।

**वैश्वदेव** पु० विश्वेभ्यो देवेभ्यो देयो बलिः अण्। वैश्वदेवोद्देशेन दीयमाने बलौ।

**वैश्वानर** पु० विश्वेषां नराणामयम् कुक्षिस्थत्वात् अण् पूर्वदीर्घः। १वह्नौ २चित्रकवृक्षे। ३चेतने च विश्वानरस्यापत्यम् अण्। अग्निलोकाधिपे ४वह्नौ काशीख०१०अ० तत्कथा दृश्या। सर्वदेहाभिमानिनि ५सर्वान्तर्यामिनि परमेश्वरे तदुपासनप्रकारः छान्दो० ६प्र० दर्शितो यथा "एष वै रयिरात्मा वैश्वानरः" इत्युपक्रमे "तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" "तान् यथोक्तवैश्वानरदर्शनवतो ह उवाच। एते यूयं वै खल्वित्यनर्थकौ यूयं पृथगिवापृथक् सन्तमिममेकं वैश्वानरं विद्वांसोऽन्नमत्थ परिच्छिन्नात्मबुद्ध्या एतद्धस्तिदर्शन इव जात्यन्धाः। यस्त्वेतमेवं यथोक्तावयवैर्द्युमूर्द्धादिभिर्विशिष्टमेवं प्रादेशमात्रं प्रादेशैर्द्युमूर्द्धादिभिः पृथिवीपादान्तैरध्यात्मं मीयते ज्ञायत इति प्रादेशमात्रम्। मुखादिषु वा करणेष्वत्तृत्वेन मीयत इति प्रादेशमात्रः। द्युलोकादिपृथिव्यन्तप्रदेशपरिमाणो वा प्रादेशमात्रः। प्रकर्षेण शास्त्रेणादिश्यन्त इति प्रादेशा द्युलोकादय एव तत्परिमाणः प्रादेशमात्रः। शाखान्तरे तु "मूर्द्धादिचिबुकप्रतिष्ठः" इति प्रादेशमात्रं कल्पयन्ति। इह तु न तथाभिप्रेतः। "तस्य ह वा एतस्यात्मनः" इत्याद्युपसंहारात्। प्रत्यगात्मतयाऽभिविमीयतेऽहमिति ज्ञायत इत्यभिविमानस्तमेतमात्मानं वैश्वानरं विश्वान्नरान्नयति पुण्यपापानुरूपां गतिम्। सर्वात्मेश्वरो वैश्वानरो विश्वो नर एव वा सर्वात्मत्वात्। विश्वैर्वा नरैः प्रत्यगात्मतया प्रविभज्य नीयत इति वैश्वानरः। तमेवमुपास्ते यः सोऽदनमत्तादो सर्वेषु लोकेषु द्युलोकादिषु सर्वेषु भूतेषु चराचरेषु सर्वेष्वात्मसु शरीरेन्द्रियमनोबुद्धिषु तेषु ह्यात्मकल्पनाव्यपदेशः प्राणिनामन्नमत्ति। वैश्वानरवित् सर्वात्मा सन्नन्नमत्ति। न यथाज्ञः पिण्डमात्राभिमानः सन्नित्यर्थः"।

**वैषम्य** न० विषमस्य भावः ष्यञ्। विषमत्वे वैलक्षण्ये।

**वैषयिक** त्रि० विषयेण निर्वृत्तः ठक्। विषयनिर्वृत्ते सुखादौ

**वैष्टुत** न० विष्टुत्या निर्वृत्तम् अण्। १होमभस्मनि हेमच०। २विष्टुतिसाध्ये यागादौ त्रि०। [४विष्णौ च संक्षिप्तसा०।

**वैष्ट्र** न० विष–ष्ट्रन् किच्च। १पिष्टपे उणादि० २स्वर्गे ३वायौ

वैष्णव त्रि० विष्णुर्देवताऽस्य तस्येदं वा अण्। १विष्णूपासके २विष्णुसम्बन्धिनि च स्त्रियां ङीप्। ३वैष्णव्यां यज्ञौ "वैष्णवो धमरे चैनम्" देवीमा०। "गायत्री वैष्णवी ज्ञेया" स्मृतिः। ४विष्णुधामनि न०। विष्णुमधिकृत्य कृतो ग्रन्थः अण्। ५महापुराणभेदे न० विष्णुपुराणशब्दे ४९२६ पृ० दृश्यम्।

वैसारिण पुंस्त्री० विसरति वि+सृ-णिनि स्वार्थे अण्। मत्स्ये अमरः स्त्रियां जातित्वात् ङीष्।

वैहार्य्य त्रि० विहारं परिहासमर्हति ष्यञ्। परिहासार्हे श्यालकादौ "यथा बालेषु नारीषु वैहार्य्येषु तथैव च। सुहृत्सु निपातेषु तथापद्गमनेषु च। अनृतं नोक्तपूर्वं मे" भा०उ० १२अ०।

वैहासिक पु० विहासेऽभिरतस्तं करोति वा ठक्। नाटकादौ प्रसिद्धे श्रृङ्गाररसनायकसहचरे १विदूषके हेमच० (भाँड़) इति २ख्याते लोके च।

वोढ्र पुंस्त्री० वा-वा० ढन्। १गोनसर्पे (बोड़ाबाड़) त्रिका० २मत्स्यभेदे मेदि०। स्त्रियां जातित्वात् ङीष्। सा च ३पलचतुर्थांशे (बुड़ि) मेदि०। [अन्यः।

वोढु पु० वह-तृन्। मुनिभेदे "वोढुः पञ्चशिखस्तथा" तर्पण०

वोढृ त्रि० वह-तृच्। १वाहके २स्थानान्तरप्रापके "भागीरथी निर्झरशीकराणां वोढा" कुमारः। ३पाणिग्राहके पु० "पितृवदा वोढारेव ते" स्मृतिः। ४भारवाहके ५मूढे च त्रि० शब्दच०। ६वृषभे पु० राजनि०। ७सूते पु० मेदि०। [अवस्तातोलोपः। व्याड़ि त्रिका०।

वोद त्रि० आर्द्रविशेषकं यत्र प्रा०ब० उदकस्योदादेशः

वोदाल पुंस्त्री० वोद आर्द्रः सन् अलति अल-अच्। मत्स्यभेदे (बोआल) शब्दर०। स्त्रियां ङीष्।

वोरक पु० अवगतं लेखनकार्ये उरो यस्य प्रा०ब० अप अवस्यातो लोपः पृषो० सलोपः। लेखके त्रिका०। [इत्यर्थे त्रिका०।

वोरट पु० वोरति रटन्ति भृङ्गा यत्र रट-अधिकरणे घ। कुन्द-

वोरव पु० वा-उर वोरं वाति वा-क। (वोरो) धान्यभेदे "वोरवस्तु बुधैः प्रोक्तस्त्रिदोषस्य प्रकोपकः। मधुराम्लपाकश्च व्रीहिः पित्तकरो गुरुः" राजवल्लभ०।

वोल पु० वा-उलच्। गन्धरसे गन्धद्रव्यभेदे। "वोलस्तु कटुतिक्तोष्णः कषायो रक्तदोषनुत्। कफपित्तामयान् हन्ति प्रदरादिरुजापहः" राजवल्लभः। स्वार्थे क। तत्रार्थे पु० अमरः।

वोलाह पुंस्त्री० श्वेतकेशरवाक्सुयुते अश्वे हेमच०।

वौग्नि स्त्री उभयचरशब्दे १२६१पृ० दर्शिते जन्मकाले सूर्य्यात् द्वितीयस्थे विचन्द्रग्रहे। तदपेक्षया द्वादशस्थे तु वेशी।

वौषट् अव्य० वह-डौषट्। देवोद्देशेन हविस्त्यागे अमरः।

व्यंशक पु० विशिष्टोऽशोऽवयवोऽस्य। पर्वते त्रिका०।

व्यंसक पु० विगतोऽसः स्कन्धो यस्य कप्। १धूर्ते हेमच० २स्कन्धशून्ये। "मयूरव्यंसकादयश्च" पाणिनिसूत्रम्।

व्यंसित त्रि० वि+अंस-क्त। १वञ्चिते २प्रतारिते त्रिका०।

व्यक्त त्रि० वि+अनूज-क्त। १स्फुटे २प्रकाशिते मेदि०। ३प्राज्ञे अमरः। ४स्थूले "व्यक्ताव्यक्तज्ञविज्ञानात्" सा० का०। ५विष्णौ पु० विष्णुस०। [साक्षिणि त्रिका०।

व्यक्तदृष्टार्थ पु० व्यक्तं स्फुटं दृष्टोऽर्थो येन। साक्षाद्द्रष्टरि

व्यक्तरूप पु० व्यक्तानि स्थूलानि भूतान्येव रूपं यस्य। विष्णौ विष्णुस०। तस्य विश्वाद्यूपेण सर्वभूतात्मकत्वात्तथात्वम्।

व्यक्ति स्त्री वि+अनूज-क्तिन्। १प्रकाशे स्त्रिच। २जने हेम०। पृथगात्मतायाम् एकैकविशेषे च अमरः। अभिव्यक्तिशब्दे दृश्यम्। [विशिष्टमग्रं यस्य। ३विष्णौ पु० विष्णुस०।

व्यग्र त्रि० विगतमग्रं यस्य। १व्याकुले २व्यासक्ते च अमरः।

व्यङ्ग न० विगतं विकलं वाङ्गं प्रादि कर्म०। १विकलाङ्गे विगतमङ्गं यस्य। २अङ्गहीने त्रि० ३भेके पुंस्त्री० मेदि० स्त्रियां ङीष्। ४मुखरोगभेदे तल्लिङ्गादि माधवनिदाने उक्तं यथा "क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः। सहसामुखमागत्य मण्डलं विसृजत्यतः। नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत्"।

व्यङ्ग्य त्रि० वि+अनूज-ण्यत्। १व्यञ्जनया वृत्त्या बोध्येऽर्थे "वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः। व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः" सा०द०। २प्रकाश्ये च। [विचीत् विव्याच विविचतुः व्यचाः।

व्यच व्याजे अक०सम्बन्धे सक०तु०कु०पर०सेट्। विचति अ०

व्यजन न० वि+अज-ल्युट् न व्यादेशः। तालवृन्ते अमरः। "मूर्च्छादाहतृषावमेर्ष्वमनुत् व्यजनानिलः। तालव्यजनजो वायुस्त्रिदोषशमनो लघुः। वंशव्यजनजो वायुरूक्षोष्णो वातपित्तलत्। वेत्रवस्त्रकेकिपुच्छव्यजनोत्थस्त्रिदोषहृत्। वालव्यजनजो वायुर्मक्षिकादिनिवारकः। तेजस्करोऽसौ विज्ञेयो विद्वद्भिर्भिषजां वरैः" राजव०।

व्यञ्जक पु० वि+अनूज-णिच्-ण्वुल्। १स्फुटतमभावादिप्रकाशके अभिनये अमरः। २व्यञ्जनवृत्त्यर्थबोधके शब्दे च सा०द० व्यञ्जनशब्दे दृश्यम्। ३प्रकाशकमात्रे त्रि०।

व्यञ्जन न० विशेषेणाज्यते वि+अनूज-ल्युट्। १सूपशाकादौ

ओदनभोजनोपकरणे राजनि० । "व्यञ्जनं शाकसूप-स्वाद्यं हृद्यं हृष्यञ्च पुष्टिदम् । द्रव्येण येन येनेह व्यञ्जनं सम्भवन्ति यत्राः । तत्र तत्र तथार्थे नद्ध्याद्यैर्विभावयेत्" राजव० । वि+अन्ज–णिच्–ल्युट् । २चिह्ने ३श्मश्रुणि ४अवयवे ५दिने मेदि० । ६उपस्थे ७यज्ञ मालाकावेनोक्ताश्र्ये हलवर्णे च धरणिः "व्यञ्जनं चार्द्धमात्रकम्" शिक्षा० । ८अलङ्कारप्रसिद्धे शब्दस्य वृत्तिभेदे च युच् । ९उक्तार्थे स्त्री "विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः । सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च । अभिधालक्षणामूलाशब्दस्य व्यञ्जना द्विधा" सा० द० । तत्र अभिधामूला तच्छब्दे २९० पृ० दृश्या ।

"लक्षणामूलामाह "लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम् । यया प्रत्याय्यते सा स्यात् व्यञ्जना लक्षणाश्रया" । (गङ्गायां घोषः) इत्यादौ जलमयाद्यर्थबोधनादभिधायां विरतायां तटाद्यर्थबोधनाच्च लक्षणायां विरतायां यया शीतत्वपावनत्वाद्यतिशयादिर्बोध्यते सा लक्षणामूला व्यञ्जना । एवं शाब्दीं व्यञ्जनामुक्त्वाऽऽर्थीं व्यञ्जनामाह "वक्तृबोद्धव्यवाक्यानामन्यसन्निधिवाच्ययोः । प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च । वैशिष्ट्यादन्यमर्थं या बोधयेत् साऽर्थसम्भवा" । व्यञ्जनेति सम्बध्यते । तत्र वक्तृवाक्ययोस्तावद्देशकालवैशिष्ट्ये यथा मम "कालो मधुः कुपित एष च पुष्पधन्वा धीरा वहन्ति रतिखेदहराः समीराः । केलीवनीयमपि वञ्जुलकुञ्जमञ्जुर्दूरे पतिः कथय किं करणीयमद्य" । अत्रैतं देशं प्रति शीघ्रं प्रच्छन्नकामुकस्त्वया प्रेष्यताम्" इति सखीं प्रति कयाचित् द्योत्यते । बोद्धव्यवैशिष्ट्ये यथा "निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः । मिथ्यावादिनि ! दूति ! बान्धवजनस्याज्ञातपीडागमे वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्" । अत्र तदन्तिकमेव गतासीति विपरीतलक्षणया लक्ष्यम् । तच्च रन्तुमिति व्यङ्ग्यं प्रतिपाद्यदूतीवैशिष्ट्याद्बोध्यते । अन्यसन्निधिवैशिष्ट्ये यथा "उअ णिच्चल णिप्पन्दा भिसिणीपत्तम्मि रेहइ बलाआ । णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्ति व्व" । अत्र बलाकाया निस्पन्दत्वेन विश्वस्तत्वं तेनास्य देशस्य विजनत्वमतः सङ्केतस्थानमेतदिति कयापि सन्निहितप्रच्छन्नकामुकं प्रत्युच्यते । अत्रैव स्थाननिर्जनत्वरूपव्यङ्ग्यार्थवैशिष्ट्यं प्रयोजनम् । "भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते" । इत्युक्तप्रकारायाः काकोर्भेदा आकरादिभ्यो ज्ञातव्याः । एतद्वैशिष्ट्ये यथा "गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम् । अलिकुलकोकिलललिते नैष्यति सखि ! सुरभिसमयेऽसौ" । अत्र नैष्यति अपि तु एष्यत्येवेति काक्वा व्यज्यते । चेष्टावैशिष्ट्ये यथा "सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया । हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्" । अत्र सन्ध्या सङ्केतकाल इति पद्मनिमीलनादिचेष्टया कयाचित् द्योत्यते । एवं वक्त्रादीनां व्यस्तसमस्तानां वैशिष्ट्ये बोध्यम् । "त्रैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता" । अर्थानां वाच्यलक्ष्यव्यङ्ग्यत्वेन त्रिरूपतया सर्वा अप्यनन्तरोक्ता व्यञ्जनास्त्रिविधाः । तत्र वाच्यार्थस्य व्यञ्जना यथा "कालो मधुः" इत्यादि । लक्ष्यार्थस्य यथा "निःशेषच्युतचन्दनम्" इत्यादि । व्यङ्ग्यार्थस्य यथा "उअ णिच्चलेत्यादि" । प्रकृतिप्रत्ययव्यञ्जनत्वन्तु प्रपञ्चयिष्यते "शब्दबोध्यो व्यनक्त्यर्थं शब्दोऽप्यर्थान्तराश्रयः । एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता" । यतः शब्दो व्यञ्जकत्वेऽर्थान्तरमपेक्षते अर्थोऽपि शब्दं, तदेकस्य व्यञ्जकत्वे अन्यस्य सहकारिताऽवश्यमङ्गीकार्या । "अभिधादित्रयोपाधिवैशिष्ट्यात्त्रिविधो मतः । शब्दोऽपि वाचकस्तद्वल्लक्षको व्यञ्जकस्तथा" । अभिधोपाधिको वाचकः । लक्षणोपाधिको लक्षकः । व्यञ्जनोपाधिको व्यञ्जकः" सा० द० २प० ।

**व्यञ्जित** त्रि० वि+अन्ज–णिच्–क्त । १प्रकाशिते "अव्यञ्जितहर्षलक्षणः" कुमारः । २व्यञ्जनाख्यया बोधितेऽर्थे च ।

**व्यडम्बक** पु० इवि–ण्वुल् विशेषेण न डम्बकः । एरण्डवृक्षे अमरः । [मेदि० ।

**व्यतिकर** पु० वि+अति–कॄ–अप् । १व्यतिषङ्गे २व्यसने च

**व्यतिक्रम** पु० वि+अति+क्रम–घञ् न वृद्धिः । १विपर्यये "विवाहे च व्यतिक्रमः" उ०त० । २विशेषतोऽतिक्रमे च ।

**व्यतिरिक्त** त्रि० वि+अति+रिच–क्त । भिन्ने "न हवृत्तिव्यतिरिक्तसाधनम्" इति कुमारः ।

**व्यतिरेक** पु० वि+अति+रिच–घञ् । १विशेषेण अतिक्रमे ३अभावे ४विनेत्यर्थे ५अर्थालङ्कारभेदे च अलङ्कारशब्दे ४०४ पृ० दृश्यम् । न्यायोक्ते ६तदसत्त्वे तदसत्त्वरूपे कारणताग्राहके पदार्थभेदे ७साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपे व्याप्तिभेदे च ।

**व्यतिरेकिन्** न० वि+अति+रिच–णिनुण् । न्यायोक्ते सा-

ध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्याप्तिहेतुके १अ-नुमानभेदे "तच्चानुमानं त्रिविधं केवलान्वयिकेवलव्यति-रेक्यन्वयव्यतिरेकिभेदात्" चिन्तामणिः। यथा पृथिवी इतरभिन्ना गन्धवत्त्वात् इत्यादि। व्यतिरेकिदृष्टान्तश्च यन्नैवं तन्नैवमित्यादि। २अतिक्रामके च स्त्रियां ङीप्।

**व्यतिषक्त** त्रि० वि+अति+सन्ज–क्त। १मिलिते २ग्रथिते च

**व्यतिषङ्ग** पु० वि+अति+सन्ज–घञ्। परस्परमेलने।

**व्यति(ती)हार** पु० वि+अति+हृ–घञ् वा दीर्घः। परी-वर्त्ते हेमच०। २परस्परैकजातीयक्रियाकरणे।

**व्यतीत** त्रि० वि+अति+इण्-क्त। अतीते "व्यतीतकालस्त्व-हमभ्युपेतः" इति रघुः।

**व्यतीपात** पु० वि+अति+पत-घञ् दीर्घः। १महोत्पातभेदे २अपमाने मेदि० विष्कम्भादिषु मध्ये ३योगभेदे ज्यो०त० "श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके। यद्यमा रविवारेण व्यतीपातः स उच्यते" इत्युक्ते ४तिथ्यादियोगभेदे च पातशब्दे ४२९७पृ० दर्शिते सूर्य्यसि० उक्ते क्रान्तिसा-म्यात्मके योगवियोगरूपे ५वाक्भेदे "व्यतीपातत्रयं घोरं गण्डान्तत्रितयं तथा। एतद् भसन्धित्रितयं सर्वकर्मसु वर्जयेत्" ज्यो०नि० "व्यतीपा-तानां त्रयं योगवियोगात्मकौ क्रान्तिसाम्यरूपौ द्वौ व्य-तीपातौ विषुवत्सन्निधौ क्रान्तिसाम्यान्तरेण व्यतीपात-त्रयोरेव भेदः न पृथक्। पश्चाद्गान्तर्गतयोगान्तर्गत व्यतीपातश्चेति त्रयम्" रघु०। भविष्यपु० "चतुर्दश्यां यदा योगो व्यतीपातेन चार्क वा। तदा पुण्यतमः कालो देवानामपि दुर्लभः। तदा यः स्नाति गङ्गायां भक्त्या तत् फलमाप्नुयात्। यत्र तत्र विपन्नो हि गङ्गायामरणान्तु यः" प्रा०त० उक्ते ६तिथ्यादियोगभेदे। "निरंशं दिवसं विष्टिं व्यतीपातञ्च वैधृतिम्। केन्द्रं वापि शुभैर्हीनं पापाक्रा-न्तमपि वर्जयेत्। परिघस्य त्यजेदर्द्धं शुभकर्म ततःपरम्। गण्डव्याघातयोः षट् च नव शूलस्य वज्रयोः। वैधृति व्यतीपातौ च समस्तं परिवर्जयेत्"। अस्य प्रतिप्रस-वमाह भीमपराक्रमे "न विष्कम्भो न वा गण्डो न व्य-तीपातवैधृती। चन्द्रताराबले प्राप्ते दोषाणामल्पसं-श्रयाः। नवस्पष्टकरो विष्टिः शनैश्चरदिनं तथा। व्य-तीपातो न दुष्टश्च यस्यार्कौ दक्षिणे स्थितः। यदि विष्टिव्यतीपातौ दिनं वाप्यशुभं भवेत्। हन्यतेऽन्यत-योगेन भास्करेण तमो यथा" ज्यो० त०। [अमरः।

**व्यत्यय** पु० वि+अति+इण्-अच्। १व्यतिक्रमे २विपर्य्यये च

**व्यत्यास** पु० वि+अति+अस–घञ्। विपर्य्यये अमरः।

**व्यथ** भये चलने दुःखानुभवे च भ्वा०आत्म०अक०सेट्। व्यथते अव्यथिष्ट मित् घटा०। व्यथयति मित् अङ् व्यथा।

**व्यथा** स्त्री व्यथ-भावे अङ्। १पीडायाम् २दुःखे च अमरः।

**व्यध** ताडने दि०पर०सक०अनिट्। विध्यति अव्यात्सीत् विव्याध विविधतुः। [३भेदने च।

**व्यध** पु० व्यध–अच्। १वेधे अमरः भावे अप्। २छिद्रीकरणे

**व्यध्व** पु० विरुद्धः अध्वा अच्समा०। कुपथे अमरः।

**व्यप** क्षये चुरा०उभ०सक०सेट्। व्यापयति-ते अविव्यपत्-त।

**व्यपदेश** पु०वि+अप+दिश-घञ्। १कथने २संज्ञायां त्रिका०। ३कापट्ये हेमच०। ४मुख्यव्यवहारे च।

**व्यपदेशिन्** त्रि० निमित्तसद्भावाद् विशिष्टोऽपदेशो मुख्यो व्यवहारोऽस्यास्ति इनि। मुख्यव्यवहारविषये पदार्थे "व्यपदेशिवदेकस्मिन्" व्या० प०। व्यपदेशेन तुल्यं वर्त्तते इति वति। कार्य्यं प्रति एकस्मिन्नव्यवहार्येऽपि तत् कार्य्यं कर्त्तव्यमिति तदर्थः। [२उत्पाटने।

**व्यपरोपण** न० वि+अप+रुह-णिच्-ल्युट् हस्य पः। १छेदने

**व्यपरोपित** त्रि० वि+अप+रुह-णिच्-क्त हस्य पः। १छिन्ने २उत्पाटिते च। [२अस्वीकारे ३निह्नवे च।

**व्यपाकृति** स्त्री वि+अप+आ+कृ–क्तिन्। १निराकरणे

**व्यपाश्रय** पु० वि+अप+आ+श्रि–अच्। आश्रये।

**व्यपेक्षा** स्त्री वि+अप+ईक्ष-अ। अपेक्षायां व्याकरणोक्ते अ-वयवार्थापेक्षणे च।

**व्यभिचार** पु० वि+अभि+चर–घञ्। १निन्दिताचारे २स्त्रियाः परपुरुषसंगे ३पुंसश्च परस्त्रीसङ्गमे न्यायादि-प्रसिद्धे ४हेतुदोषभेदे च।

हेतुदोषभेदश्च अनैकान्तरूपः। "साधारणासाधारणानु-पसंहारित्वामन्यतमत्वं च अनैकान्तिकत्वम्" सि० मु० "आद्यः साधारणस्तु स्यादन्योऽसाधारणो मतः। तथैवानुपसंहारी त्रिधा नैकान्तिको भवेत्" भाषा०। "साधारणः साध्यवदन्यवृत्तिर्हेतुः। तेन च व्याप्ति-ग्रहप्रतिबन्धः क्रियते। असाधारणः साध्यासमा-नाधिकरणो हेतुः। तेन साध्यसामानाधिकरण्यग्रहः प्रतिबध्यते। सत्प्रतिपक्षे तु प्रतिहेतुः साध्याभाव-साधकः। अत्र तु हेतुरेवेति विशेषः। साध्याभावसा-धक एव साध्यसाधकत्वेन उपन्यस्त इत्यसाधारणस्य व्याप्यत्वाच्च विशेषः। सत्प्रतिपक्षः साध्याभावव्याप्य-वान् पक्षः। अगृहीताप्रामाण्यकसाध्यसाध्यवत्त्वेनोप-

स्थितिकालीनसाध्याभावव्याप्यवत्त्वेनोपस्थितिविषयसाधा इत्यन्ये। अत्र च परस्पराभावव्याप्यवत्ताग्रहात् पर-स्परानुमितिप्रतिबन्धः फलम्” चि०मु०। नवीनास्तु साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वम्” अनैकान्तिकत्वमिति लक्षितम्।

**व्यभिचारिन्** पु० वि+अभि+चर–णिनि। १अलङ्कारोक्ते रसप्रादुर्भावाङ्गे निर्वेदादौ कार्यारम्भे तत्तल्लक्षणभेदादिकं सा०द० उक्तं यथा “विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः। स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच्च तद्भिदाः। निर्वेदावेगदैन्यश्रममदजडता औग्र्यमोहौ विबोधः स्वप्नापस्मारगर्वामरणमलसतामर्षनिद्रावहित्थाः। औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्याधिसन्त्रासलज्जा हर्षासूयाविषादाः सधृतिचपलता ग्लानिचिन्तावितर्काः” इति विभज्य लक्षिता यथा “तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः१ स्वावमानना। दैन्यचिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वसितादिकृत्। आवेगः२ सम्भ्रमस्तत्र वर्षजे पिण्डिताङ्गता। उत्पातजे स्रस्तताङ्गे धूमाद्याकुलताग्निजे। राजविद्रवादेस्तु शस्त्रनागादियोजनम्। गजादेः स्तम्भकम्पादिः पांश्वाद्याकुलतानिलात्। इष्टाद्धर्षाः शुचोऽनिष्टाज्ज्ञेयाश्चान्ये यथायथम्। दौर्गत्याद्यैरनौजस्यं दैन्यं३ मलिनतादिकृत्। खेदो रत्यध्वगत्यादेः श्वासनिद्रादिकृच्छ्रमः४। सम्मोहानन्दसम्भेदो मदो५ मद्योपयोगजः। अमुना चोत्तमः शेते मध्यो हसति गायति। अधमप्रकृतिश्चापि परुषं वक्ति रोदिति। अप्रतिपत्तिर्जडता६ स्यादिष्टानिष्टदर्शनश्रुतिभिः। अनिमिषनयननिरीक्षणतूष्णीम्भावादयस्तत्र। शौर्यापराधादिभवं भवेच्चण्डत्वमुग्रता७। तत्र स्वेदः शिरःकम्पतर्जनाताडनादयः। मोहो८ विचित्तता भीतिदुःखावेगानुचिन्तनैः। मूर्च्छनाज्ञानपतनभ्रमणादर्शनादिकृत्। निद्रापगमहेतुभ्यो विबोधश्चेतनागमः। जृम्भाङ्गभङ्गनयनमीलनाङ्गावलोककृत्। स्वप्नो१० निद्रामुपेतस्य विषयानुभवस्तु यः। कोपावेगभयग्लानिसुखदुःखादिकारकः। मनःक्षेपस्त्वपस्मारो११ ग्रहाद्यावेशनादिजः। भूपातकम्पप्रस्वेदफेनलालादिकारकः। गर्वो१२ मदः प्रभावश्रीविद्यासत्कुलतादिजः। अवज्ञासविलासाङ्गदर्शनाविनयादिकृत्। शराद्यैर्मरणं१३ जीवत्यागोऽङ्गपतनादिकृत्। आलस्यं१४ श्रमगर्भाद्यैर्जाड्यं जृम्भासितादिकृत्। निन्दाक्षेपापमानादेरमर्षो१५ऽभिनिविष्टता। नेत्ररागशिरःकम्पभ्रूभङ्गोत्तर्जनादिकृत्। चेतःसम्मीलनं निद्रा१६ श्रमक्लममदादिजा। जृम्भाक्षिमीलनोच्छ्वासगात्रभङ्गादिकारणम्। भयगौरवलज्जादेर्हर्षाद्याकारगुप्तिरवहित्था१७। व्यापारान्तरसक्त्यन्यथाभाषणविलोकनादिकरी। इष्टानवाप्तेरौत्सुक्यं१८ कालक्षेपासहिष्णुता। चित्ततापत्वरास्वेददीर्घनिःश्वसितादिकृत्। चित्तसम्मोह उन्मादः१९ कामशोकभयादिभिः। अस्थानहासरुदितगीतप्रलपनादिकृत्। परक्रौर्यात्मदोषाद्यैः शङ्का२०ऽनर्थस्य तर्कणम्। वैवर्ण्यकम्पवैस्वर्यपार्श्वालोकास्यशोषकृत्। सदृशज्ञानचिन्तादैर्भ्रूसमुन्नयनादिकृत्। स्मृतिः२१ पूर्वानुभूतार्थविषयज्ञानमुच्यते। नीतिमार्गानुसृत्यादेरर्थनिर्धारणं मतिः२२। स्मेरता धृतिसन्तोषौ बहुमानश्च तद्भवाः। व्याधिः२३ ज्वरादिर्वाताद्यैर्भूमीच्छोत्कम्पनादिकृत्। निर्घातविद्युदुल्काद्यैस्त्रासः२४ कम्पादिकारकः। धार्ष्ट्याभावो व्रीडा२५ वदनानमनादिकृद् दुराचारात्। हर्षस्त्विष्टावाप्तेर्मनःप्रसादोऽश्रुगद्गदादिकरः। असूया२७ऽन्यगुणर्द्धीनामौद्धत्यादसहिष्णुता। दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादिकृत्। उपायाभावजन्मा तु विषादः२८ सत्त्वसङ्क्षयः। निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत्। ज्ञानाभीष्टागमाद्यैस्तु सम्पूर्णस्पृहता धृतिः२९। सौहित्यवचनोल्लाससहासप्रतिभादिकृत्। मात्सर्यद्वेषरागादेश्चापल्यं३० त्वनवस्थितिः। तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः। रत्यायासमनस्तापक्षुत्पिपासादिसम्भवा। ग्लानिः३१ निष्प्राणताकम्पकार्श्यानुत्साहतादिकृत्। ध्यानं चिन्ता३२ हितानाप्तेः शून्यताश्वासतापकृत्। तर्को३३ विचारः सन्देहाद् भ्रूशिरोऽङ्गुलिनर्तकः। रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः। शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः। शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः। इत्याद्यन्यत्समुन्नेयं तथा भावितबुद्धिभिः”। न्यायोक्ते २व्यभिचाररूपदोषवति हेतुपदार्थे च। ३परपुरुषगामिन्यां स्त्रियां स्त्री ङीप्। “हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम्। परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम्”। “सोमः शौचं ददौ तासां गन्धर्वश्च शुभां गिरम्। पावकः सर्वभक्षत्वं मेध्या वै योषितो ह्यतः” इति तु स्त्रीसामान्यविषयम्। “व्यभिचारादृतौ शुद्धिर्गर्भे त्यागो विधीयते। गर्भभर्तृवधे तासां तथा महति पातके” गरुड़े ९५अ०। तस्याः परित्यागादि हेतुमाह हारीतः

“गर्भिणीमधीवर्णां शिष्यसुतगामिनीं पापव्यसनासक्तां धनधान्यक्षयकरीं वर्जयेत्”। यमः “स्वच्छन्दगा हि या नारी तस्यास्त्यागो विधीयते। न चैव स्त्रीवधः कार्य्यो न चैवाङ्गवियोजनम्”। वृहस्पतिः “हीनवर्णोपभुक्ता या त्याज्या वध्यापि वा भवेत्”। विशेषयति मिताक्षरायां स्मृतिः “ब्राह्मणक्षत्रियविशां भार्य्याः शूद्रेण सङ्गताः। अप्रजातास्ताविशुध्यन्ति प्रायश्चित्तेन नेतराः”। एतत् बलात्कारविषयम् उद्वा० त०।

**व्यय** गतौ त्यागे कद०चु०उभ०सक० सेट्। व्यययति ते अवव्ययत् त। [व्ययिष्ट अव्ययिढम् (ध्वम्)।

**व्यय** गतौ भ्वा० उभ० सक० सेट्। व्ययति ते अव्ययीत् अ-

**व्यय** नोदे चु० उभ०सक० सेट्। व्याययति ते अविव्ययत् त।

**व्यय** पु० वि+इण्–अच्। १विगमे २धनादेस्त्यागे शब्दर०। ज्योतिषोक्ते लग्नात् ३द्वादशस्थाने च ज्यो०त०।

**व्यर्थ** त्रि०विगतोऽर्थः प्रयोजनं यस्य। १निष्प्रयोजने २विफले जटा० ३अर्थशून्ये च।

**व्यलीक** न० वि+अल-ईकन्। १अकार्य्ये २वैलक्ष्ये मेदि० ३अपराधे हेमच० ४अप्रिये ५कष्टे च अमरः। ६तद्वति त्रि०। ७प्रतारणायां हला० दर्शितविपर्य्यये भरतः।

**व्यवकलन** न० वि+अव–कल-ल्युट्। १वियोजने हेमच० २विगमने ३हीनतासम्पादने च “व्यवकलनमार्गेऽपि कुशला” लीला०।

**व्यवकलित** त्रि० वि+अव+कल-क्त। वियोजिते। [त्रिका०।

**व्यवच्छिन्न** त्रि० वि+अव+छिद-क्त। १छिन्ने २विशेषिते च

**व्यवच्छेद** पु० वि+अव+छिद्–घञ्। १पृथक्करणे २विशेषकरणे ३मोचने च ४वाणमुक्तौ हेमच०।

**व्यवधा** स्त्री वि+अव+धा–अ। व्यवधाने अमरः।

**व्यवधान** न० वि+अव+धा-ल्युट्। १तिरोधाने २द्रव्यान्तरेण द्रव्यान्तरस्याच्छादने च हेमच०। [२आच्छादके च

**व्यवधायक** त्रि० वि+अव+धा–ण्वुल्। १व्यवधानकर्त्तरि

**व्यवधि** पु० वि+अव+धा-कि। व्यवधाने शब्दच०।

**व्यवसाय** पु०वि+अव+सो-घञ्। १उद्यमे “मरणव्यवसायबुद्धिम्” कुमारः। २उपजीविकायाम् ३अनुष्ठाने ४अवधारणे च “व्यवसायात्मिका बुद्धिः” गीता। ५विष्णौ विष्णुस०।

**व्यवस्था** स्त्री वि+अव+स्था–अङ्। १शास्त्रविहितस्य विषयान्तरपरिहारेण विषयविशेषे स्थापने २शास्त्रमर्य्यादायाञ्च

**व्यवस्थान** न०वि+अव+स्था-ल्युट्। १व्यवस्थायाम्। कर्त्तरि ल्यु। २विष्णौ पु० विष्णुस०।

**व्यवस्थित** त्रि० वि+अव+स्था–क्त। विषयान्तरपरिहारेण विषयविशेषे अवस्थिते १शास्त्रविहिते पदार्थे २अवस्थितमात्रे च।

**व्यवस्थितविभाषा** स्त्री कर्म०। व्याकरणोक्ते विषयान्तर परिहारेण विषयविशेषेऽवस्थितरूपे विकल्पे।

**व्यवहर्त्तृ** त्रि० वि+अव+हृ–तृच्। व्यवहारकर्त्तरि।

**व्यवहार** पु० वि+अव+हृ-घञ्। १अर्थविशेषबोधनाय शब्दविशेषप्रयोगे २ऋणादानादिष्वष्टादशसु विवादेषु ३सहासनभोजनादौ च

विवादरूपव्यवहारलक्षणं वीर० मि० उक्तं यथा

“अथ कोऽयं व्यवहारः प्रमाणतर्कोपष्टब्धः पक्षप्रतिपक्षपरिग्रहः इति चेन्न वादादेरपि तत्त्वापत्तेः। लिखितादिः प्रमाणविशेषः परिच्छेद्यत इति चेत् तत्रापि तत्प्रवृत्त्यविरोधात्। अनुमानाद्यवहिर्भावाच्च तेषामव्यावर्त्तकत्वात्। अतएवाव्यविरोधेन स्वसम्बन्धितया कथनमित्यपि परास्तम्। प्रमाणान्तर्भावेण स्वरूपनिरूपणानौचित्याच्च कथनादेर्व्यवहारपदवाच्यत्वे “व्यवहारान् नृपः पश्येदित्याद्यनन्वयाच्च। उच्यते। ऋणादानादिलौकिकार्थविषया कथैव व्यवहारः। कथाव्यपदेशाभावस्तु शास्त्रीयपदार्थाविषयत्वात् अधिकरणादिव्यपदेशो यथा वैदिकार्थविषयककथायान्तयात्तव्यवहारव्यपदेशः। अतएव यथायथं छेलाभावनिग्रहस्थानादियोजनमपि युक्तम्। तच्च तत्र तत्र प्रदर्शयिष्यते। चतुष्पात्त्वमपि तस्य तदविरोध्येवोपपादयिष्यते। यत् तु गोपालेन तत्त्वनिर्णयेषु कथात्वाद्वादत्वमेवास्येति भिन्नमतत्वेनोपन्यस्य जयभङ्गफलकत्वात् स्थापनावत्त्वाच्च जल्पएवायमिति तन्निरस्तम्। तस्यैकविधत्वमयुक्तम्। शङ्कातत्त्वाभियोगभेदेन उभयरूपत्वस्यैव युक्तत्वात्। वैतण्डिकस्य व्यवहारायोग्यत्वादस्य वितण्डात्वम्परमसम्भवि। अन्यविरोधेन स्वसम्बन्धितया कथनमिति विज्ञानयोगिवचोऽप्येवं सति नायुक्तम्। न च पश्येदित्यनन्वयः निर्णयार्थकथनतया सर्वनिबन्धृभिस्तद्व्याख्यानात्। “स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः। आवेदयति चेद्राज्ञे व्यवहारपदं हि तत्” याज्ञवल्क्यवचनं यद्यपि व्यवहारपदान्यृणादानादीनि सामान्येन लक्षयति तथापि व्यवहारसामान्यलक्षणमपि समानसम्बन्धिसंवेद्यतया ततः प्रतीयते। तस्यायमर्थः स्मृत्याचारादिधर्मप्रमाणातिक्रान्तरीत्याऽन्यैरभिभूतः पुरुषो-

राजादिभ्यो व्यवहारदर्शिभ्यो यद्यावेदयति तर्हि तदाऽऽवेद्यमानत्वविशिष्टाद्व्यवहारस्य पदं विषयः। इति प्रतिबद्धर्णादानादिलक्षणत्वेन मन्वाद्युक्तमुपच्छिन्नमिति। एवञ्चार्थिनस्त्वार्थित्वमाधर्षकस्य प्रत्यर्थित्वं तयोर्विवादश्च व्यवहार इति प्रतीयते। इदमेव च मिताक्षरायामन्यविरोधेनेत्यादिना निष्कृष्टमुक्तम्। अन्यविरोधेनेत्यनुक्तौ प्रश्नोत्तरादिरूपेण स्वसम्बन्धिकथनमपि व्यवहारः स्यात्। स्वसम्बन्धितयेत्यनुक्तौ एकसम्बन्धितया साक्षिणा कथनमन्यविरोधि भवत्येवेत्यस्याप्यर्थित्वापत्तिरतः स्वसम्बन्धितयेति। इदं चोत्तरचतुष्टयेऽप्यनुमतम्। न च सम्प्रतिपत्तावव्याप्तिः तत्रापि साध्यतया वादिना निर्दिष्टस्य सिद्धतया निर्देशे तद्विरोधपर्यवसानात् अन्यथोत्तरत्वभङ्गप्रसङ्गात्। यत्रापि द्वावपि भाषावादिनौ तत्रापि परस्परविरोधावश्यम्भावान्नाव्याप्तिः। इदं चाग्रे व्यक्तीभविष्यति। यच्च कात्यायनेनोक्तम् "प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे। साध्यमूलस्तु यो वादो व्यवहारः स उच्यते" इति एतच्च व्यवहारहेतुव्यवहारस्वरूपोक्तिपरतया, माधवीयपारिजातादिष्वेवं व्याख्यातम् "विहिताचरणनिषिद्धवर्जनादिप्रयत्नसाध्ये धर्माख्ये वस्तुनि विच्छिन्ने विप्लुते सतीति व्यवहारहेतुरुक्तः धर्मार्जनविप्लवस्यैव व्यवहारहेतुत्वात्। तथा च नारदः "मनुः प्रजापतिर्यस्मिन् काले राज्यमभूभुजत्। धर्मैकतानाः पुरुषास्तदासन् सत्यवादिनः। तदा न व्यवहारोऽभून्न द्वेषो नापि मत्सरः। नष्टे धर्मे मनुष्येषु व्यवहारः प्रवर्त्तते" इति। बृहस्पतिरपि "धर्मप्रधानाः पुरुषाः पूर्वमासन्न हिंसकाः। लोभद्वेषाभिभूतानां व्यवहारः प्रवर्त्तते" इति। न्यायेत्यादिना व्यवहारस्वरूपमुक्तम्। तत्र माधवीयव्याख्यानम्। न्यायः शिष्टसम्मतिपन्नं लौकिकमाचरणं तस्य विस्तरः इदं युक्तमिदमयुक्तमिति उपपत्तिपुरःसरो निर्णयः। तस्मिन् विषयभूते तत्प्रवर्त्तकोऽर्थिप्रत्यर्थिनोः साध्यमूलः साध्यस्यर्णादानादिपदं तन्मूलस्तद्विषयको यो विवादः स व्यवहार इति। मदनरत्ने तु न्यायः प्रमाणं तस्य विस्तरः प्रदर्शितं यत्र तस्मिन् विषय इति। साध्यमूलेत्यादि तुल्यम्। मदनरत्नाकरस्मृतिचन्द्रिकाकल्पतरुकारैः सर्वमेवेदं वचनं व्यवहारस्वरूपपरतयापि व्याख्यातम्। प्रयत्नसाध्ये कष्टसाध्ये पराभिभवेन स्वेच्छया भोक्तुमशक्ये गृहक्षेत्रादौ सति न्यायः प्रमाणं विस्तार्यते प्रपञ्च्यते यस्मिन् तस्मिन् धर्माधिकरणे सदसि साध्यमूलेत्यादि पूर्ववत्। तेनापि प्रागुक्तमेव विवक्षितमतस्तत्स्वलक्षणव्याख्याने नातीव यतितव्यम्। वयन्तु सर्वं सम्प्रस्थानसामानाधिकरण्येन व्याचक्ष्महे। विहितानुष्ठानादिगोचरप्रयत्नसाध्ये धर्माख्ये न्यायविस्तरे नीयतेऽर्थोऽनेनेति न्यायः प्रमाणं श्रुतिस्मृत्यादि विस्तार्यते प्रवर्त्ततेऽस्मिन् श्रुत्यादिप्रमेय इत्यर्थः। विच्छिन्ने प्रमाणापरिज्ञानतात्पर्यानवधारणादिना लुप्ते सति। यद्वा। धर्मं व्याख्यायतेऽनेनेति धर्माख्यो धर्मप्रतिपादक इति यावत्। न्यायविस्तरे प्रमाणसमूहे श्रुतिस्मृत्यादौ प्रमादादिना विच्छिन्ने लुप्तप्राये सति साध्यमूलेत्यादि गतार्थमिति। हारीतः "स्वधर्मस्य यथा प्राप्तिः परधर्मस्य वर्जनम्। न्यायेन क्रियते यत् तु व्यवहारः स उच्यत" इति। न्यायेन प्रमाणेन। एतस्यापि पूर्वोक्त एव तात्पर्यम्"। तन्निरुक्तिर्भेदाश्च तत्र दर्शिता यथा

"निरुक्तिमपि व्यवहारपदस्याऽसुमेवार्थमुपवर्णयति। सा च कात्यायनेनोक्ता "वि नानार्थेऽव सन्देहे हरणं हार उच्यते। नानासन्देहहरणाद् व्यवहार इति स्मृत" इति। अथ व्यवहारभेदानाह नारदः "सोत्तरोऽनुत्तरश्चेति स विज्ञेयो द्विलक्षणः। सोत्तरोऽभ्यधिको यत्र विलेखपूर्वकः पणः" इति। यदि पराजयेऽहं तदा पराजयदण्डमभ्यधिकमेतावद्राज्ञे दास्यामीति यत्र लेखनपूर्वकं प्रतिज्ञायते स सोत्तर इत्यर्थः। तद्रहितोऽनुत्तर इत्यर्थादुक्तं भवति। स एव त्रयोदशप्रकारान् निबन्धनान्तरभेदाद्विध्य विहितवान् यथा "चतुष्पाच्च चतुःस्थानश्चतुःसाधन एव च। चतुर्हितश्चतुर्व्यापी चतुष्कारी च कीर्त्तितः। त्रियोनिर्द्व्यभियोगश्च द्विद्वारो द्विगतिस्तथा। अष्टाङ्गोऽष्टादशपदः शतशाखस्तथैव च। धर्मश्च व्यवहारश्च चरित्रं राजशासनम्। चतुष्पाद् व्यवहारोऽयमुत्तरः पूर्वसाधकः। तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु। चरित्रं तु लोकरणे राजाज्ञायान्तु शासनम्। सामाद्युपायसाध्यत्वाच्चतुःसाधन उच्यते। चतुर्णामपि वर्णानां रक्षणाच्च चतुर्हितः। कर्त्तॄनथो साक्षिणश्च सभ्यान् राजानमेव च। व्याप्नोति पादशो यस्माच्चतुर्व्यापी ततः स्मृतः। धर्मस्यार्थस्य यशसो लोकपङ्क्तेस्तथैव च। चतुर्णां करणादेव चतुष्कारी प्रकीर्त्तितः। कामात् क्रोधाच्च लोभाच्च

लिप्यो यस्मात् प्रवर्त्तते । लियोगिः कीर्त्यते तेन व्यवहारविवादकृत् । इत्यभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः । शङ्काऽसतान्तु संसर्गात्तत्त्वं होढाभिदर्शनात् । पक्षद्वयाभिसम्बन्धात् द्विमतिः समुदाहृतः । पूर्ववादस्तयोः पक्षः प्रतिपक्षस्तदुत्तरः । भूतच्छलानुसारित्वात् द्विमतिः समुदाहृतः । भूतन्तत्त्वार्थसंयुक्तं प्रमादाभिहितं छलम् । राजा१ सप्रकृव: सभ्याः२ शास्त्रं३ गणकलेखकौ४ ५ । हिरण्यह्‌ग्न्यम्बु७हृदकदष्टाङ्गः समुदाहृतः । ऋणादानं १ह्य पनिधिः२ सम्भूयोत्थानं३मेव च । दत्तस्य पुनरादानं४मशुश्रूषाभ्यु५पेत्य च । वेतनस्यानपाकर्म६ तथैवास्वामिविक्रयः७। विक्रीयासम्प्रदानं८ च क्रीत्वानुशय९एव च । समयस्यानपाकर्म१० विवादः क्षेत्रज११ स्तथा । स्त्रीपुंसयोश्च सम्बन्धो१२ दायभागो१३ऽथ साहसः१४ । वाक्पारुष्यं१५ तथैवोक्तं दण्डपारुष्य१६मेव च । द्यूतं१७प्रकीर्णकं१८ चैव अष्टादशपदः स्मृतः । क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते” इति ।

**व्यवहारपद** न० ६त० । व्यवहारविषये ।

**व्यवहारमातृका** स्त्री व्यवहारस्य विवादनिर्णयस्य मातेव बोधकत्वात् परिच्छेदकत्वाद्वा स्वार्थे कन् । व्यवहारनिर्णयार्थं प्राड्विवाकादिकार्ये क्रियासमुदाये “व्यवहारान् नृपः पश्येत्” इत्युक्तो व्यवहारः कोऽयमित्यं चतुष्पाच्चतुरंशकल्पनया विवादेषु ऋणादानादिष्पदर्शितो वर्णितः “तत्र प्रत्यर्थिनोऽग्रतो लेख्यम्” इति भाषापादः प्रथमः । “श्रुतार्थस्योत्तरं लेख्यम्” इत्युत्तरपादो द्वितीयः । “ततोऽर्थी लेखयेत्सद्यः” इति क्रियापादस्तृतीयः । “तत्सिद्धौ सिद्धिमाप्नोति” इति साध्यसिद्धिपादश्चतुर्थः । यथोक्तम् “परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु । वाक्यान्न्यायाद्व्यवस्थानं व्यवहार उदाहृतः । भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः । आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयते” इति । सम्प्रति प्रत्युत्तरे तु साधनानिर्देशाङ्गानार्थस्यासाध्यत्वाच्च न साध्यसिद्धिलक्षणः पादोऽस्तीति द्विपात्त्वमेव । उत्तराभिधानानन्तरं सभ्यानामर्थिप्रत्यर्थिनोः कस्य क्रिया स्यादिति परामर्शलक्षणस्य प्रत्याकलितस्य योगीश्वरेण व्यवहारपादत्वेनानभिधानात् व्यवहर्तृसम्बन्धाभावाच्च न व्यवहारपादत्वमिति स्थितम् इति व्यवहारमातृका । एवं सर्वव्यवहारोपयोगिनीं व्यवहारमातृकामभिधायाधुना कचित् व्यवहारविशेषे कश्चिद्विशेषं दर्शयितुमाह” मिता० ।

**व्यवहारिक** त्रि०व्यवहारः प्रयोजनतयाऽस्त्यस्य ठन् । १व्यवहारयोग्ये लोकप्रसिद्धे घटपटादौ स्त्रियां ङीप् । २इङ्गुदवृक्षे ३लोकयात्रायां ४सम्मार्ज्जन्यां स्त्री मेदि० ।

**व्यवहारिकसत्ता** स्त्री कर्म० । १व्यवहारोपयिके सत्त्वे वेदान्तकल्पिते ब्रह्मभिन्नपदार्थमात्रस्य वस्तुतोऽसत्त्वेऽपि व्यवहारयोग्ये सत्त्वे येन घटादि व्यवह्रियते । तत्कार्यकरणोपयोगित्वेन कल्पिते घटादेरर्थक्रियाकारित्वलक्षणे २सत्त्वे च ।

**व्यवहार्य्य** त्रि० वि+अव+हृ-ण्यत् । इदमित्थमेवेत्येवंरूपेण १व्यवहारविषये येन सह भोजनादिकमेकपङ्क्तौ क्रियते २तस्मिंश्च जने ।

**व्यवहित** त्रि० वि+अव+धा-क्त । व्यवधानवति पदार्थे ।

**व्यवाय** पु०वि+अव+इण-घञ् । १ग्राम्यधर्मे मैथुने अमरः । २अन्तर्द्धाने च ३तेजसि न० मेदि०। ४शुद्धौ पु० जटा०।

**व्यवायिन्** त्रि० वि+अव+इण-णिनि । ग्राम्यधर्मकारके स्त्रियां ङीप् ।

**व्यसन** न० वि+अस-ल्युट् । १विपत्तौ २भ्रंशे कामजाते कोपजाते च स्त्रीभोगमद्यपानादौ ३दोषे ४दैवादिकृते उपद्रवे च ५पापे ६निष्फलोद्यमे मेदि० ।

“व्यसनान्याहु मनुः कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः । वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु । मृगया१क्षो२ दिवास्वप्नः३ परीवाद४स्त्रियो५ मदः६ । तौर्य्यत्रिकं७,८,९ वृथाट्या१० च कामजो दशकोगणः । पैशुन्यं१ साहसं२ द्रोहः३ ईर्ष्या४ऽसूया५र्थदूषणम्६ । वाग्दण्डजञ्च पारुष्यं७।८ क्रोधजोऽपि गणोऽष्टकः” । तौर्य्यत्रिकं नृत्यगीतवाद्यानि त्रीणीति द्व । पैशुन्यमविज्ञातपरदोषाविष्करणम् । साहसं साधोर्बन्धनादिना निग्रहः । द्रोहो जिघांसा । ईर्ष्या अन्यगुणासहिष्णुता । असूया परगुणेषु दोषाविष्करणम् । अर्थदूषणम् अर्थानामपहरणं देयानामदानञ्च” मल्लि०रघु० ।

**व्यसनार्त्त** त्रि० व्यसनेनार्त्तः । २दैवाद्युपद्रवयुक्ते ।

**व्यसनिन्** त्रि० व्यसनमस्यास्ति इनि । १व्यसनयुक्ते कामजादिमद्यपानादिरूपदोषयुक्ते २दैवाद्युपद्रुते च हेमच० ।

**व्यसु** त्रि० विगताः असवो यस्य । १मृते “प्रेते जातो भवेद्व्यसुः” ज्योतिषम् ।

**व्यस्त** त्रि० वि+अस-क्त । १व्याकुले २व्याप्ते मेदि० ३विभक्ते च “व्यस्तराशिरिव स्थिते” कुमारः । ४विपरीते “एतद्व्यस्तं महाजारम्” ति०त०। “व्यस्तविधिर्विलोमे” लीला०

५सहुदितपदार्थमध्ये एकैकस्मिन्। “एते व्यस्ताः समस्ता वा” विश्वामित्रः। ६समस्तभिन्ने च भावे क्त। ७व्यतिक्रमे त्रि०

**व्याकरण** पु० व्याक्रियन्ते व्युत्पाद्यन्ते अर्थवत्तया प्रतिपाद्यन्ते शब्दा येन वि+आ+कृ-करणे ल्युट्। वेदाङ्गे शब्दसाधुताबोधके १शास्त्रभेदे वेदान्तोक्ते नामरूपाभ्यां २जगतोविकाशने च

“अथ व्याकरणं वक्ष्ये कात्यायन! समासतः। सिद्धशब्दविवेकाय बालव्युत्पत्तिहेतवे। सुप्तिङन्तं पदं ख्यातं सुपः सप्त विभक्तयः। स्वौजसः प्रथमा प्रोक्ता सा प्रातिपदिकार्थके। सम्बोधने च लिङ्गादावुक्ते कर्मणि कर्त्तरि। अर्थवत् प्रातिपदिकं धातुप्रत्ययवर्ज्जितम्। अमौट्शसो द्वितीया स्यात् तत्कर्म क्रियते च यत्। द्वितीया कर्मणि प्रोक्ता उक्तानुक्ताविभेदतः। टाभ्यांभिसस्तृतीया स्यात् करणे कर्त्तरीरिता। येन क्रियते तत्करणं तत्कर्त्ता यः करोति सः। ङेभ्यांभ्यसश्चतुर्थी स्यात् सम्प्रदाने च कारके। यस्मै दित्सा धारयते रोचते सम्प्रदानकम्। पञ्चमी स्यात् ङसिभ्यांभ्योह्यपादाने च कारके। यतोऽपैति समादत्ते अपादानं भयं यतः। ङसोसामश्च षष्ठी स्यात् स्वामिसम्बन्ध उच्यते। ङ्योस्सुपश्च सप्तमी स्यात् सा चाधिकरणे भवेत्। आधाराधिकरणं रक्षार्थानां प्रयोगतः। ईप्सितं चानीप्सितं यत्तदपादानकं स्मृतम्। पञ्चमी पर्य्युपाङ्योग इतरर्त्तेऽन्यदिङ्मुखे। एनब्योगे द्वितीया स्यात् कर्मप्रवचनीयकैः। लक्षणवीप्सेत्थंभूतेऽभिभागे च परिप्रती। अनुरेषु सहार्थे च हीनेऽनूपौ च कीर्त्तितौ। द्वितीया च चतुर्थी स्याच्चेष्टायां गतिकर्मणि। अप्राणे हि विभक्ती द्वे मन्यकर्मण्यनादरे। नमःस्वस्तिस्वधास्वाहालंवषट्योग ईरिता। चतुर्थी चैव तादर्थ्ये तुमर्थाद्भाववाचिनः। तृतीया सहयोगे स्यात् कुत्सितेऽङ्गे विशेषणे। काले भावे सप्तमी स्यादेतैर्योगे च षष्ठ्यपि। स्वामीश्वराधिपतिभिः साक्षिदायादसूतकैः। निर्द्धारणे द्वे विभक्ती षष्ठी हेतुप्रयोगके। स्मृत्यर्थकर्मणि तथा करोतेः प्रतियत्नके। हिंसार्थानां प्रयोगे च कृति कर्मणि कर्त्तरि। न कर्त्तृकर्मणोः षष्ठी निष्ठादौ प्रतिपादिता। द्विविधं प्रातिपदिकं प्रातिपदिकमच्छलम्। भुवादिभ्यस्तिङो लः स्याल्लकारा दश वै स्मृताः। तिप्तसन्तयः प्रथमो मध्यः सिप्थस्थास उत्तमः। मिब्वस्मसः परस्मै तु पदानाञ्चात्मनेपदम्। तआताअन्ता प्रथमो मध्यस्थासाथाध्वं तथा। उत्तम इड्वहिमह्ये ङितः कर्त्तरि धातुतः। नाम्नि प्रयुज्यमानेऽपि प्रथमः पुरुषो भवेत्। मध्यमो युष्मदि प्रोक्त उत्तमः पुरुषोऽस्मदि। भुवाद्या धातवः प्रोक्ताः सनाद्यन्तास्तु धातवः। लडीरितो वर्तमाने स्मेनातीते च धातुतः। भूतानद्यतने लिट् च लिङाशिषि च धातुतः। विध्यादावेवानुमतौ लिङ्विधिर्मन्त्रणे भवेत्। निमन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु तथाऽऽशिषि। लिङतीते परोक्षे स्याल्लङ् लुङ्, लृट्, लृङ् भविष्यति। स्यादद्यतने लुट् च भविष्यति च धातुतः। धातोर्लृङ् क्रियातिपत्तौ लिङर्थे लोट् प्रकीर्त्तितः। कृतस्त्रिष्वपि वर्तन्ते भावे कर्मणि कर्त्तरि। शतृ शानच् तव्यण्यत् अनीयर् क्य तृजादयः” गारुड़े २०९अ०।

**व्याकुल** त्रि० वि+आ+कुल-क। रोगादिना इतिकर्त्तव्यतानिश्चयविहीने अमरः। [प्रकटीकृते।

**व्याकृत** त्रि० वि+आ+कृ-क्त। १प्रकाशिते २नामरूपाभ्यां

**व्याकृति** स्त्री वि+आ+कृ-क्तिन्। १भक्तौ हेमा०२प्रकाशने। करणे क्तिन्। ३व्याकरणे च। स व्याक्रिया तत्रार्थे “व्याक्रियाव्यञ्जनीया वा जातिः कापीह साधुता” हरिका०

**व्याकोश(ष)** त्रि० वि+आ+कुश(ष) अच् आगतः कोशा(षा)त् प्रा०स०वा। १प्रफुल्ले अमरः “व्याकोशे(षे)न्दीवराक्षी” इति तन्त्रम्। [इरूपे १पन्थभेदे २कथने च।

**व्याख्या** स्त्री वि+आ+ख्या-अङ्। विवरणात्मके शब्दसमू-

**व्याख्यात** त्रि० वि+आ+ख्या-क्त। १कथिते २विवृते च।

**व्याघात** त्रि० वि+आ+हन-घञ्। १अन्तराये २प्रहारे मेदि० ३अर्थालङ्कारभेदे अलङ्कारशब्दे ४०५पृ० दृश्यम्। ४प्रतिबन्धे “व्याघातावधिराशङ्का” कुसुमाञ्जलिः। विष्कम्भादिसप्तविंशतियोगमध्ये ५त्रयोदशे योगे च।

**व्याघ्र** पुंस्त्री० वि+आ+घ्रा-क। १जन्तुभेदे अमरः स्त्रियां ङीष्। २रक्तैरण्डे ३करञ्जे च पु० मेदि०। [शब्दच०।

**व्याघ्रदल** पु० व्याघ्रस्तत्पाद इव दलमस्य। एरण्डवृक्षे

**व्याघ्रनख** न० व्याघ्रस्य नख इवाग्रमस्य आकारे अच्। १नखीनामगन्धद्रव्ये अमरः। व्याघ्रस्य नख इव दलान्यस्य। २स्नुहीवृक्षे शब्दच०। ३कन्दभेदे। ४नखक्षते च मेदि० हेम०। ५व्याघ्रस्य नखे।

**व्याघ्रनाशक** पुंस्त्री० व्याघ्रं नयति स्थानान्तरं प्रापयति पश्चात् क्रोशनेन नी-ण्वुल्। शृगाले (फेउ) राजनि० तस्य पश्चात्क्रोशनेन व्याघ्रस्य स्थानान्तरप्रापकत्वेन तथात्वं स्त्रियां ङीष्।

**व्याघ्रपाद(द्)** पु० व्याघ्रस्य पाद इव मूलमस्य वा अन्त्यलोपः । १विकङ्कतवृक्षे अमरः । २मुनिभेदे च ३विकङ्कटवृक्षे राजनि० । [अमरः । १न० । २व्याघ्रनखाख्ये च ।

**व्याघ्रपुच्छ** पु० व्याघ्रस्य पुच्छमिव दलमस्य । १एरण्डवृक्षे

**व्याघ्राट** पुंस्त्री० व्याघ्र इवाटति अट-अच् । भरद्वाजखगे अमरः स्त्रियां ङीष् । [याम् अमरः ।

**व्याघ्रादनी** स्त्री व्याघ्रैरद्यते अद-ल्युट् ङीप् । मिहता-

**व्याघ्रास्य** पुंस्त्री० व्याघ्रस्येवास्यं यस्य । विड़ाले शब्दच० । स्त्रियां टाप् ।

**व्याघ्री** स्त्री व्याघ्रस्येवाकारः कण्टकोऽस्त्यस्याः अच् गौरा० ङीष् । १कण्टकारिकायाम् अमरः । जातौ ङीष् । २व्याघ्रयोषिति ।

**व्याज** पु० वि+अज+घञ् वीभावाभावः । १कपटे वञ्चनारूपे २अन्यव्यवहारे कारणान्तरेण ३प्रवृत्तस्य कारणान्तरत्वेनोद्भावनरूपे अपदेशे च अमरः ।

**व्याजनिन्दा** स्त्री ६त० । १कपटनिन्दायाम् २अर्थालङ्कारभेदे च अलङ्कारशब्दे ४०४ पृ० दृश्यम् ।

**व्याजस्तुति** स्त्री० ६त० । १कपटस्तुतौ २अर्थालङ्कारभेदे च अलङ्कारशब्दे दृश्यम् । [अलङ्कारशब्दे ४०४पृ०दृश्यम् ।

**व्याजोक्ति** स्त्री ६त० । १छलेनोक्तौ २अर्थालङ्कारभेदे च

**व्याड** पु० वि+आ+अड-अच् । १मांसभक्षके व्याघ्रादौ पशौ २सर्पे अमरः । ३इन्द्रे शब्दच० । ४वञ्चके त्रि० रायमु० ।

**व्याडायुध** न० व्याडस्य व्याघ्रस्यायुधं नख इवाकारोऽस्य अच् । व्याघ्रनखाख्ये गन्धद्रव्ये अमरः । [च ३मुनिभेदे त्रिका०

**व्याडि** पु० व्याकरणस्य संग्रहाख्यग्रन्थकारके १कोषकारके

**व्यात्युक्षी** स्त्री वि+अति+उक्ष-भावे व्यतिहारे णच् स्वार्थे अण् ङीप् । परस्परसेचनरूपे जलक्रीड़ाभेदे ।

**व्यादिश** पु० वि+आ+दिश-क । १विष्णौ विष्णुस० २विशेषेण आदेशके त्रि० ।

**व्याध** पुंस्त्री० व्यध-ण । मृगहिंसके क्षत्रियात् शूद्रक्षत्रपत्न्यां जाते १सङ्कीर्णजातिभेदे पुंस्त्री० स्त्रियां ङीष् । "मापितात् गोपकन्यायां सर्वस्वी तस्य योषिति । क्षत्राद् बभूव व्याधश्च बलवान् मृगहिंसकः" ब्रह्मवै०ब्र० १०अ० । २दुष्टे त्रि० मेदि० । भावे घञ् । ३वेधने ४पीड़ने च ।

**व्याधभीत** पुंस्त्री० व्याधाद्भीतः भी-क्त । मृगे शब्दच० । स्त्रियां ङीष् । [वज्रे हेमच०।

**व्याधाम** पु० व्याधेन पीड़नेन अमयति अम-णिच्-अच् ।

**व्याधि** पु० वि+आ+धा-कि । १रोगे व्याधिश्च योगान्तरायभेदः चित्तविक्षेपशब्दे २९४१ पृ० दृश्यम् । २कुष्ठरोगे अमरः । ३कामकृते नायकयोरवस्थाभेदे सा०द० ।

**व्याधिघात** पु० व्याधिं हन्ति-हन-अण् । आरग्वधे (सोन्दाल) अमरः । [अमरः ।

**व्याधित** त्रि० व्याधिर्जातोऽस्य तार० इतच् । व्याधियुक्ते

**व्याधिहन्तृ** पु० व्याधिं हन्ति हन-तृच् । १वाराहीकन्दे राजनि० २रोगनाशके त्रि० स्त्रियां ङीप् ।

**व्याधु(धू)त** त्रि० वि+आ+धु-(धू)-क्त । कम्पिते शब्दर० ।

**व्यान** पु० वि+अन-घञ् । देहस्थे सर्वशरीरव्यापके प्राणादिमध्ये वायुभेदे "विव्यननवान् वायुर्व्यान इत्यभिधीयते" वेदान्तमतम् "व्यानो व्यानयत्यस्य सर्वव्याधिप्रकोपनः । महारजतसुप्रख्यो ह्यानोपादानकारणम् । स चाक्षिकर्णयोर्मध्ये कट्यां वै गुल्फयोरपि । प्राणे गलेऽस्फगुह्ये तिष्ठत्येव निरन्तरम् । खात्मयत्नपरं वस्तु गात्रेनेत्रे प्रकोपनः" पदार्थादर्शः ।

**व्यापक** त्रि० विशेषेणाप्नोति वि+आप-ण्वुल् । १अधिकदेशवृत्तौ "व्यापकत्वात् परापि स्यात्" भाषा० । न्यायोक्ते स्वाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगिनि च २पदार्थे ३तन्त्रोक्ते सर्वाङ्गसम्बन्धिनि न्यासभेदे पु० "अङ्गुलिव्यापकन्यासौ" तन्त्रसा० । ४आच्छादके त्रि० अमरः । [च अमरः ।

**व्यापन्न** त्रि०वि+आ+पद-क्त । १मृते हेमच० २विपद्युक्ते

**व्यापाद** पु० वि+आ+पद-घञ् । १द्रोहचिन्तने हेमच० ।

**व्यापादन** न०वि+आ+पद-णिच्-ल्युट् । १मारणे हेमच० २परानिष्टचिन्तने अमरः ।

**व्यापार** पु० वि+आ+पृ-घञ् । "व्यापारो भावना सैवोत्पादना सैव च क्रिया" हर्युक्तायां १भावयितुः उत्पादनक्रियायाम् । न्यायज्ञो २व्यवसाये च ।

करणजन्ये करणजन्यक्रियाजनके ३पदार्थे यथा दात्ररूपकरणजन्यः तज्जन्यच्छेदजनकः छेद्यसंयोगादिः एवमिन्द्रियस्य व्यापारः विषयसंयोगः । "विषयेन्द्रियसंयोगो व्यापारः सोऽपि षड्विधः" भाषा० । एवं यागादेः व्यापारः अदृष्टम् । व्यापारवत् कारणं करणमिति । "क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्" हरिकारिका ।

**व्यापारिन्** त्रि० व्यापारोऽस्त्यस्य इनि । १व्यापारवति करणादौ "न हि व्यापारेण व्यापारिणोऽन्यथा सिद्धि" । ३व्यवसायवति वणिग्जने पु० । [२विष्णौ पु० विष्णुस० ।

**व्यापिन्** त्रि० वि+आप-णिनि । १व्यापके स्त्रियां ङीप् ।

**व्यापृत** त्रि० वि+आ+पृ–क्त । १व्यापारयुक्ते २कर्मसचिवे हेमच० ।

**व्याप्त** त्रि० वि+आप+–क्त । १पूर्णे हेमच० । २समाक्रान्ते ३ख्याते च मेदि० । ४स्थापिते ५व्याप्तियुते च “समेन यदि नो व्याप्तः” उदयनाचार्यः ।

**व्याप्ति** स्त्री वि+आप–क्तिन् । १ऐश्वर्यभेदे न्यायमते तद्भाववति अविद्यमानत्वरूपे २पदार्थे यथा वह्नेरभाववति जलादौ धूमो नास्तीति धूमादौ वह्नेर्व्याप्तिः । “व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः । अथ वा हेतुमन्निष्ठविरहाप्रतियोगिना । साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते” भाषा० । प्रमेयत्वव्यक्तिवत्ताप्रविष्टे द्वितीयलक्षणमुक्तम् । प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति द्वितीयलक्षणार्थः । व्याप्तिश्च द्विविधा अन्वयव्याप्तिर्व्यतिरेकव्याप्तिश्च तत्रान्वयव्याप्तिः पूर्वोक्ता । “साध्याभावव्यापकत्वं हेत्वभावस्य यत् भवेत्” भाषा० उक्ता अपरा सा च साध्याभावव्यापकीभूताभावप्रतियोगितारूपा । तत्रान्वयव्याप्तिज्ञाने व्यभिचारज्ञानाभावः सहचारज्ञानञ्च कारणम् । व्यतिरेकव्याप्तिज्ञाने च साध्याभावे हेत्वभावस्य सहचारज्ञानं व्यभिचारज्ञानाभावश्च कारणम् । “व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा । हेतुर्व्याप्तिग्रहे, तर्कः क्वचिच्छङ्कानिवर्त्तकः । द्वैविध्यन्तु भवेत् व्याप्तेरन्वयव्यतिरेकतः” भाषा० । धूमो यदि वह्निव्यभिचारी स्यात् तदा वह्निजन्यो न स्यादित्यादितर्केण व्यभिचारशङ्का निवर्त्त्यते इत्याकरे दृश्यम् । उपाधिस्तु व्यभिचारोन्नायकतया व्याप्तिज्ञानविघटकतया अनुमितिविरोधी उपाधिशब्दे १२४८ पृ० दृश्यम् ।

**व्याप्य** त्रि० वि+आप–ण्यत् । १व्याप्ते २अल्पदेशवृत्तौ “व्याप्यत्वात्परापि च” भाषा० । ३अनुमितिसाधने लिङ्गे न० ४साधनमात्रे ५कुष्ठौषधौ च अमरः ।

**व्याम** पु० वि+अम–घञ् । तिर्य्यक्पार्श्वतो विस्तृतयोर्बाह्वोरन्तरालपरिमाणे हेमच० ।

**व्यायत** त्रि० वि+आ+यम–क्त । १दीर्घे २व्यापृते ३दृढे ४अतिशये च मेदि० । भावे–क्त । ५दैर्घ्ये ६व्यायामे च न० मेदि० ।

**व्यायाम** पु० वि+आ+यम–घञ् । १श्रमे २श्रमसाधने व्यापारे ३पौरुषे ४दुर्गसञ्चारे ५विषमे मेदि० ६मल्लानां श्रमकारके व्यापारे (कुस्ति) ७व्यामपरिमाणे च हेमच० ।

**व्यायोग** पु० वि+आ+युज–घञ् । दृश्यकाव्यभेदे सा०द० तल्लक्षणमुक्तं यथा “ख्यातेतिवृत्तोव्यायोगः स्वल्पस्त्रीजनसंयुतः । हीनोगर्भविमर्षाभ्यां नरैर्बहुभिराश्रितः । एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः । कैशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः । राजर्षिरथवा दिव्यो भवेद्धीरोद्धतश्च सः । हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः” यथा सौगन्धिकाहरणधनञ्जयविजयादि ।

**व्याल** पुंस्त्री० वि+अड–अच् डस्य लः । १सर्पे २हिंसकपशौ अमरः । स्त्रियां ङीष् । ३दुष्टगजे च मेदि० ४चित्रके व्याघ्रे पुंस्त्री० राजनि० स्त्रियां ङीष् । न्टपे पु० ५मधुरेशः । ६शठे त्रि० अमरः ७क्रूरे त्रि० । [राजनि० ।

**व्यालगन्धा** स्त्री व्यालस्येव गन्धो लेशोऽस्याः । नाकुल्याम्

**व्यालग्राह** पु० व्यालान् सर्पान् गृह्णाति ग्रह–अण् । (सापुड़े) सर्पधारिणि भरतः । णिनि । अत्रैव शब्दर० । “व्यालग्राही यथा व्यालं बलादुद्धरते बिलात्” शु०त० काशीख० । [समङ्गायाम् राजनि० ।

**व्यालजिह्वा** स्त्री व्यालस्य सर्पस्य जिह्वेव पत्रमस्याः । महा

**व्यालदंष्ट्र** पु० व्यालस्य व्याघ्रस्य दंष्ट्रेव कण्टकमस्य । गोक्षुरे राजनि० । [खदलोऽप्यत्र ।

**व्यालनख** पु० व्यालस्य व्याघ्रस्य नख इव । गन्धद्रव्यभेदे व्या-

**व्यालपत्रा** स्त्री व्यालस्य पाद इव पत्रमस्याः । एर्वारौ कर्कटीभेदे राजनि० ।

**व्यालम्ब** पु० विशेषेण आलम्बते वि+आ+लवि–अच् । १रक्तैरण्डे वैद्यकम् । विशेषेण २लम्बमाने त्रि० ।

**व्यालायुध** न० व्यालस्य व्याघ्रस्यायुधं नख इव । १नखीनामगन्धद्रव्ये मथुरेशः । २व्याघ्रनखाख्ये गन्धद्रव्ये पु० राजनि०

**व्यावक्रोशी** स्त्री वि+अव+क्रुश–णच् स्वार्थे अण् ङीप् । परस्पराक्रोशे । [भिकण्टके शब्दर० ।

**व्यावर्त्त** पु० विशेषेण आवर्त्तते वि+आ+वृत–अच् । ना-

**व्यावहारी** स्त्री वि+अव+हृ–णच् स्वार्थे अण् ङीप् । परस्परहरणे । [परहसने ।

**व्यावहासी** स्त्री वि+अव+हस–णच् स्वार्थेऽण् ङीप् । पर-

**व्यावृत्त** त्रि० वि+आ+वृत–क्त । १वृते हेमच० २निवृत्ते च “व्यावृत्तगतिरुद्याने” कुमारः ।

**व्यावृत्ति** स्त्री वि+आ+वृत–क्तिन् । निवारणे ।

**व्यास** पु० व्यस्यति वेदान् वि+अस–घञ् । १पराशरसुते मुनिभेदे व्यासस्य नारायणस्य पञ्चकलावतारभेदः यथोक्तं

ब्रह्मवै०पु० ४अ० "व्यासः पुराणसूत्रञ्च पप्रच्छ वाल्मिकं यदा । मौनीभूतः स सस्मार त्वामेव जगदम्बिकाम् । तदा चकार सिद्धान्तं त्वद्वरेण मुनीश्वरः । संप्राप निर्मलं ज्ञानं भ्रमान्धध्वंसदीपकम् । पुराणसूत्रं श्रुत्वा स व्यासः पञ्चकलोद्भवः । त्वां सिषेवे प्रदध्यौ च शतवर्षञ्च पुष्करे । तदा त्वत्तोवरं प्राप्य स कवीन्द्रो बभूव ह । तदा वेदविभागञ्च पुराणञ्च चकार ह"। स च कन्याकाले सत्यवत्यां पराशराज्जातः कानीनशब्दे १९८१पृ०दृश्यम् वेदव्यासशब्दोक्तेषु मुनिभेदेषु च २समासादिसमानार्थके विग्रहवाक्ये ३विस्तारे अमरः ४वृत्तक्षेत्रस्य मध्यस्थरेखायाम् "व्यासे भनन्दाग्निहृते" लीला० क्षेत्रशब्दे २४०१ पृ० दृश्यम् । "यएवं वाचयेद्विप्रा स ब्रह्मन् ! व्यास उच्यते" इत्युक्ते ५पुराणपाठके विप्रे च ६मानभेदे शब्दर० । [कर्म्मणि च ।

**व्यासक्त** त्रि० वि+आ+सन्ज–क्त । १आसक्ते तत्परे २सं-

**व्यासङ्ग** पु० वि+आ+सन्ज–घञ् । १कार्य्यान्तरत्यागेनैकपरत्वे २आसक्तौ च । [२निषिद्धे च ।

**व्यासिद्ध** त्रि० वि+आ+सिध–क्त । १राजाज्ञयावरुद्धे मेदि०

**व्याहत** त्रि० वि+आ+हन–क्त । आघातयुक्ते ।

**व्याहार** पु० वि+आ+हृ–घञ् । १वाक्ये २उक्तौ अमर ।

**व्याहृति** स्त्री वि+आ+हृ–क्तिन् । १उक्तौ २भूर्भुवःस्वरादिषु सप्तसु भूर्भुवःस्वरादिलोकसप्तात्मकेषु मन्त्रभेदेषु च सप्त लोकाः पुनरेताः सप्त व्याहृतय एवेति योगयाज्ञवल्क्येन प्रतिपादितम् यदाह "भूराद्याश्चैव सत्यान्ता सप्त व्याहृतयस्तथा । लोकास्ता एव सप्तैते उपर्य्युपरिसंस्थिताः"। तथा"सप्त व्याहृतयः प्रोक्ताः पुरा व स्तु स्वयम्भुवा । ता एव सप्त छन्दांसि लोकाः सप्त प्रकीर्त्तिताः" यया च वासनया सप्त व्याहृतयः सप्त लोकाः सा च वासना योगियाज्ञवल्क्येनैव निरुक्त्या विविच्य प्रतिपादिताः यदाह "भवन्ति चास्मिन् भूतानि स्थावराणि चराणि च । तस्माद्भूरिति विज्ञेया प्रथमा व्याहृतिः स्मृता । भवन्ति भूयो भूतानि उपभोगक्षये पुनः । कल्पान्ते उपभोगाय भुवस्तस्मात् प्रकीर्त्तिता । शीतोष्णवृष्टितेजांसि जायन्ते तानि वै सदा । आलयः सततीनाञ्च स्वर्लोकः स उदाहृतः । अधरोत्तरलोकेभ्या महांस्तु परिकल्पितः । हृदयं सर्वलोकानां महत्त्वेन निगद्यते । कल्पदाहप्रदीनास्तु प्राणिनस्तु पुनः पुनः । जायन्ते तु [illegible] सर्गे जनस्तेन निगद्यते । सन-

काद्यास्तपःसिद्धा ये चान्ये ब्रह्मणः सुताः । अधिकारनिवृत्ताश्च तिष्ठन्त्यस्मिंस्ततस्तपः । सत्यन्तु सप्तमो लोको ब्रह्मणसदनन्तरम् । सर्वेषाञ्चैव लोकानां मूर्ध्नि संतिष्ठते सदा । ज्ञानकर्मसु निष्ठानां तथा सत्यस्य भाषणात् । प्राप्यते चोपभोगार्थं प्राप्य न च्यवते पुनः । ततसत्यं सप्तमो लोकस्तस्मादूर्द्ध्वं न विद्यते" । [च हेमच० ।

**व्युत्क्रम** पु० वि+उद्+क्रम–घञ् । १क्रमवैपरीत्ये २अतिक्रमे

**व्युत्थान** न० वि+उद्+स्था–ल्युट् । १विरोधकरणे २स्वातन्त्र्यकरणे मेदि० ३प्रतिरोधने ४योगशास्त्रोक्ते समाध्यवस्थाप्रच्यवे हेमच० ५नृत्यभेदे शब्दच०। ६विशेषेण उत्थाने च । वि+उद्+स्था–क्तिन् । व्युत्थितिरप्यत्र स्त्री ।

**व्युत्पत्ति** स्त्री वि+उद्+पद–क्तिन् । १विशेषेण उत्पत्तौ शास्त्रजन्ये शब्दार्थज्ञानादिरूपाद्ये संस्कारभेदे ३शब्दानामर्थावबोधकशक्तौ च ।

**व्युत्पन्न** त्रि० वि+उद्+पद–क्त । १व्युत्पत्तियुक्ते शब्दे तत्संस्कारयुक्ते २पुरुषे च । ३विशेषेणोत्पन्ने च ।

**व्युदस्त** त्रि० वि+उद्+अस–क्त । निराकृते ।

**व्युदास** पु० वि+उद्+अस+घञ् । निराकरणे ।

**व्युष्ट** त्रि० वि+उष–क्त वा० इडभावः । १दग्धे २पर्युषिते ३प्रभाते च ४फले ५दिवसे च न० हेमच० ।

**व्युष्टि** स्त्री वि+उष–क्तिन् । १समृद्धौ २स्तुतौ ३फले च मेदि० व्युष्टिविरात्रं यागभेदः गुह्यरोक्षादि ।

**व्यूढ** त्रि०वि+वह–क्त । १निवेशनविशेषेण स्थापिते व्यूहयुक्ते सैन्यादौ "व्यूढां द्रुपदपुत्रेण" गीता । २विन्यस्ते ३संहते अमरः "व्यूढोरस्को वृषस्कन्धः" रघुः । ४पृथुले त्रि० मेदि० ५परिहिते ६विवाहिते च त्रि० "व्यूढा काचन कन्यका" प्रबोधचन्द्रोदयः । [कवचे अमरः ।

**व्यूढकङ्कट** त्रि० व्यूढःपरिहितः कङ्कटः वर्म येन । सन्नद्ध-

**व्यूत** त्रि०वि+वे–क्त । तन्तुभिर्ग्रथिते । [पदार्थे अमरः ।

**व्यूति** स्त्री वि+वे–क्तिन् । १वस्त्रादिवयनकर्मणि२तद्वेतने(वानि)

**व्यूह** पु० वि+ऊह–घञ् । १समूहे २निर्माणे च ३सम्यक्तर्के ४देहे ५सैन्ये ६युद्धार्थं सैन्यस्य विन्यासविशेषे अमरः । "समस्तस्य तु सैन्यस्य विन्यासः स्थानभेदतः । स व्यूह इति विख्यातो युद्धेषु पृथिवीभुजाम् । व्यूहभेदाश्च चत्वारो दण्डभोगस्तु मण्डलम् । असंहतश्च निर्णीता नीतिसारादिसम्मताः । अन्येऽपि प्रकृतिव्यूहाः क्रौञ्चचक्रादयः क्वचित् । तिर्य्यग्वृत्तिस्तु दण्डः स्याद् भोगोऽन्वावृत्तिरेव च । मण्डलः सर्वतो वृत्तिः पृथग्वृत्तिरसं-

हत:" शब्दर० । शुक्रनीतिसारे तद्भेदादिकमुक्तं यथा
"नद्यद्रिवनदुर्गेषु यत्र यत्र भयं भवेत् । सेनापतिस्तत्र
तत्र गच्छेद् व्यूहीकृतैर्बलैः । यायाद् व्यूहेन महता म-
करेण पुरोभये । श्येनेनोभयपक्षेण सूच्या वा वीर-
वक्त्रया । पश्चाद्भये तु शकटं पार्श्वयोर्वज्रसंज्ञकम् ।
सर्वतः सर्वतोभद्रं चक्रं व्यालमथापि वा । यथादेशं
कल्पयेद् वा शत्रुसेनाविभेदकम् । व्यूहरचनसङ्केतान्
वाद्यभाषासमीरितान् । स्वसैनिकैर्विना कोऽपि न जा-
नीयात् तथाविधान् । नियोजयेच्च मतिमान् व्यूहान्
नानाविधान् सदा । अश्वानाञ्च गजानाञ्च पदातीनां पृथक्
पृथक् । उच्चैः संश्रावयेद् व्यूहसङ्केतान् सैनिकान्
नृपः । वामदक्षिणसंस्थो वा मध्यस्थो वाऽग्रसंस्थितः ।
श्रुत्वा तान् सैनिकैः कार्य्यमनुशिष्टं यथा तथा । सम्मी-
लनं प्रसरणं परिभ्रमणमेव च । आकुञ्चनं तथा यानं
प्रयाणमपयानकम् । पर्य्यायेण च साम्मुख्यं समुत्थानञ्च
लुण्ठनम् । संस्थानं चाष्टदलवच्चक्रवद्गोलतुल्यकम् । सू-
चीतुल्यं शकटवदर्द्धचन्द्रसमन्तु वा । पृथग्भवनमल्पाल्पैः
पर्य्यायैः पङ्क्तिवेशनम् । शस्त्रास्त्रयोर्धारणञ्च सन्धानं
लक्ष्यभेदनम् । मोक्षणञ्च तथाऽस्त्राणां शस्त्राणां परि-
घातनम् । द्राक् सन्धानं पुनः पातो ग्रहो मोक्षः पुनः
पुनः । स्वगूहनं प्रतीघातः शस्त्रास्त्रपदविक्रमैः । द्वाभ्यां
त्रिभिश्चतुर्भिर्वा पङ्क्तितो गमनं ततः । तथा प्राग्-
भवनं चापसरणं तूपसर्जनम् । अपसृत्यास्त्रसिद्ध्यर्थ-
मुपसृत्य विमोक्षणम् । प्राग्भूत्वा मोचयेदस्त्रं व्यूहस्थः
सैनिकः सदा । आसीनः स्याद्विसृष्टास्त्रः प्राग्वा चाप-
सरेत् पुनः । प्रागासीनं तूपसृतो दृष्ट्वा स्वास्त्रं विमो-
चयेत् । एकैकशो द्विशो वापि सङ्घशो बोधितो यथा ।
क्रौञ्चानां खे गतिर्यादृक् पङ्क्तितः सम्प्रजायते । तादृक्
सञ्चारयेत् क्रौञ्चव्यूहं देशबलं यथा । सूक्ष्मग्रीवं
मध्यपुच्छं स्थूलपक्षन्तु पङ्क्तितः । बृहत्पक्षं मध्यगल-
पुच्छं श्येनं मुखे तनु । चतुष्पान्मकरो दीर्घस्थूल-
वक्त्रो द्विरोष्ठकः । सूची सूक्ष्ममुखो दीर्घसमदण्डान्तर-
न्ध्रयुक् । चक्रव्यूहश्चैकमार्गो ह्यष्टधा कुण्डलीकृतः ।
चतुर्दिक्ष्वष्टपरिधिः सर्वतोभद्रसंज्ञकः । अमार्गश्चाष्टवलयी
गोलकः सर्वतोमुखः । शकटः शकटाकारो व्यालो
व्यालाकृतिः सदा । सैन्यमल्पं बृहद्वापि दृष्ट्वा मार्गं रण-
स्थलम् । व्यूहैर्व्यूहेन व्यूहाभ्यां सङ्करेणापि कल्प-
येत्" ।

**व्यूहपार्ष्णि** पु० ६त० । युद्धार्थमवस्थानविशेषेण स्थितसैन्यानां
पश्चाद्भागे अमरः ।

**व्यृद्धि** स्त्री विरुद्धा ऋद्धिः । विरुद्धसम्पत्तौ तदर्थे अव्ययी० ।
दुर्य्यवनम् यवनानां विरुद्धसम्पत्तौ सि० कौ० ।

**व्ये** स्यूतौ वृतौ च भ्वा० उभ० सक० अनिट् यजा० । व्ययति
ते अव्यासीत् अव्यास्त विव्याय विव्यतुः । क्तजतः ।

**व्यो** अव्य० व्ये–डो । १वीजे ओकारः २वीजे च ।

**व्योकार** पु० व्यो+कृ–अण् । लौहकारके अमरः ।

**व्योमकेश** पु० व्योमैव केशो यस्य । शिवे महादेवे अमरः ।

**व्योमकेशिन्** पु० व्योमाकारः केशोऽस्त्यस्य इनि । महादेवे

**व्योमचारिन्** पु० व्योम्नि चरति चर–णिनि । १विहगे
२देवे ३पक्षमद्वादौ च ४आकाशगामिनि त्रि० व्योम-
चारिपुरं सौभनगरम् ।

**व्योमधूम** पु० व्योम्नः धूमइव नीलत्वात् । मेघे त्रिका० ।

**व्योमन्** न० व्ये–मनिन् पृषो० । १आकाशे अमरः । २अभ्रके
(आव) राजनि० । ३जले च ४सूर्य्यार्च्चास्थाने मेदि० ।

**व्योममण्डल** न० व्योम मण्डलमिव । मण्डलाकारे १आ-
काशे । व्योम्नो मण्डलमिव । २पताकायाम् शब्दच० ।

**व्योममुद्गर** पु० व्योम्नो मुद्गर इव आघातहेतुत्वात् । गग-
नात् अकस्मादुत्थिते वात्योर्मिपाते हारा० । [अमरः ।

**व्योमयान** न० ७त० । आकाशगमनयोग्ये वाहने विमाने

**व्योष** न० वि+उष–अच् । शुण्ठीमरीचपिप्पलीरूपे त्रिक-
टुनि अमरः ।

**व्रज** गतौ भ्वा० पर० सक० सेट् । व्रजति अव्राजीत् । [जत् ।

**व्रज** संस्कारे गतौ च चु० उ० सक० सेट् । व्राजयति ते अविव्र-

**व्रज** पु० व्रज–घञर्थे क । १समूहे अमरः । २गोष्ठे ३पथि
मेदि० मथुरासमीपस्थे देशभेदे च

मात्स्ये "व्रजमण्डलभूगोलं शेषनागफणाम्बरम् ।
कुशादाख्यं महाश्चेदं सर्वेषां मध्यसंस्थितम् । तस्यो-
परिस्थितं लोकं सर्वस्थानं महाफलम् । कृष्णलीला
विहारार्थमुच्चस्थानविराजितम् । चतुरष्टक८४क्रोशेन प-
रिपूर्णविराजितम् । अस्य प्रदक्षिणां कुर्वन् धनधान्यसुखं
लभेत् । दामान्नीवासतो लोको विष्णुलोकमवाप्नु-
यात् । आवसन् म्रियते चेत्तु पुनर्जन्म न विद्यते । पुण्यं
लक्षगुणं लब्ध्वा कृतेऽस्मिन् व्रजमण्डले । कृष्णेन नि-
र्मितास्तीर्थाः सार्द्धद्वयसहस्रकाः" । तत्रादौ वनोपवन
प्रतिवनाधिवनान्यष्टचत्वारिंशत् तानि चतुरष्टक्रोशपरि-
माणस्थितानि चतुर्भागयोऽभ्यन्तरस्थितानि क्रमश आह ।

पाद्मे "वनानि द्वादशान्याहुर्यमुनोत्तरदक्षिणे। महावनं१ महाश्रेष्ठं वरं काम्यवनं२ शुभम्। कोकिलाख्यं तृतीयञ्च३ तुर्य्यं तालवनं४ तथा। पञ्चमं कुमुदाख्यञ्च५ षष्ठं भाण्डीरसंज्ञकम्६। नाम्ना छत्रवनं७ श्रेष्ठं सप्तमं परिकीर्त्तितम्। अष्टमं खदिरं८ प्रोक्तं नवमं लोहजं वनम्९। नाम्ना भद्रवनं१० श्रेष्ठं दशमं बहुपुण्यदम्। एकादशं समाख्यातं बहुलावनसंज्ञकम्११। नाम्ना बिल्ववनं१२ श्रेष्ठं द्वादशं कामनाप्रदम्। इति द्वादशसंज्ञानि वनानि शुभदानि च"। द्वादशोपवनान्याह वाराहे "आदौ ब्रह्मवनं१ नाम द्वितीयं त्वप्सरोवनम्२। तृतीयं विह्वलं३ नाम कदम्बाख्यं४ चतुर्थकम्। नाम्ना स्वर्णवनं५ श्रेष्ठं पञ्चमं परिकीर्त्तितम्। सुरभीवननामाऽपि षष्ठमाह्लादवर्द्धनम्। श्रेष्ठं प्रेमवनं७ नाम सप्तमं शुभदं नृणाम्। मयूरवननामाऽपि अष्टमं परिकीर्त्तितम्। मानेङ्गितवनं९ श्रेष्ठं नवमं मानवर्द्धनम्। शेषशायिवनं१० श्रेष्ठं दशमं पापनाशनम्। एकादशं समाख्यातं नारदाख्यं११ शुभोदितम्। द्वादशं परमानन्दवनं१२ सर्वार्थदायकम्। इति द्वादशसंज्ञानि वनान्युपवनानि च"। द्वादशप्रतिवनानि भविष्ये "आदौ रङ्कवनं१ श्रेष्ठं पुरसंज्ञाविराजितम्। वार्त्तावनं२ द्वितीयञ्च करहाटं३ तृतीयकम्। चतुर्थं काम्यनामापि४ वनं कामप्रदं नृणाम्। वनमञ्जननामापि५ पञ्चमं सौख्यप्रदम्। नाम्ना कर्णवनं६ श्रेष्ठं षष्ठं स्वप्नवरप्रदम्। कृष्णाक्षिपणकं७ नाम वनं सप्तमकीर्त्तितम्। नन्दप्रेक्षणकृष्णाख्यं वनं नन्दनदष्टमम्। वनमिन्द्रवनं९ नाम नवमं कृष्णपूजितम्। शिक्षावनं१० शुभं प्रोक्तं दशमं नन्दभाषितम्। चन्द्रावलीवनं११ श्रेष्ठमेकादशमुदाहृतम्। नाम्ना लोहवनं१२ श्रेष्ठं द्वादशं शुभदं नृणाम्। इति प्रतिवनान्याहुर्मार्गे वामे च दक्षिणे। इति द्वादशसंज्ञास्ते देवावासफलप्रदाः"। द्वादशाधिवनान्याह विष्णुपु॰ "मथुरा१ प्रथमं नाम राधाकुण्डं२ द्वितीयकम्। नन्दग्रामस्तृतीयश्च३ गुडस्थानं४ चतुर्थकम्। पञ्चमं ललिताग्रामं५ वृषभानुपुरं६ च षट्। सप्तमं गोकुलं स्थानं७ अष्टमं बलदेवकम्८। गोवर्द्धनवनं९ श्रेष्ठं नवमं कामनाप्रदम्। वनं जावटं१० नाम दशमं परिकीर्त्तितम्। शुभं वृन्दावनं११ श्रेष्ठमेकादशं प्रकीर्त्तितम्। सङ्केतवटकं१२ स्थानं वनं द्वादशं कीर्त्तितम्। इति द्वादशसंज्ञानि वनान्यधिवनानि च। वनानामधिपाः प्रोक्ता व्रजमण्डलमध्यगाः। एषां नैव विलोकेन वनयात्रा च निष्फला। एषाञ्च दर्शनेनैव वनयात्रा शुभप्रदा। आदौ लीलां यदा पश्येद्वनयात्रां ततश्चरेत्। सर्वान् कामानवाप्नोति विष्णुलोकमवाप्नुयात्। सर्वत्र विजयी भूयाद्वनयात्राप्रभावतः"।

**व्रजनाथ** पु॰ ६त॰। श्रीकृष्णे व्रजपालादयोऽप्यत्र। [श्रीकृष्णे

**व्रजमोहन** पु॰ व्रजान् व्रजस्थान् मोहयति मुह-णिच्-ल्यु।

**व्रजवर** पु॰ व्रजानां तत्स्थानां वरः प्रार्थनीयः। श्रीकृष्णे।

**व्रजवल्लभ** पु॰ ६त॰। श्रीकृष्णे।

**व्रजाङ्गना** स्त्री ६त॰। व्रजस्य स्त्रियां गोप्याम्।

**व्रज्या** स्त्री व्रज-क्यप्। १पर्य्यटने २गमने ३जिगीषोर्युद्धार्थं प्रयाणे च अमरः।

**व्रण** शब्दे भ्वा॰पर॰सक॰सेट्। व्रणति अव्राणीत् अव्रणीत्।

**व्रण** अङ्गचूर्णने अद॰चु॰उ॰सक॰सेट्। व्रणयति ते अवव्रणत् त

**व्रण** पु॰न॰ चु॰ व्रण-अच्। क्षते अमरः। तत्स्वरूपनिदानादि भावप्र॰ उक्तं यथा "व्रणो द्विधा परिज्ञेयो दोषजागन्तुभेदतः। दोषजो दुष्टदोषैः स्यादन्यः शस्त्रादिसम्भवः"। तत्र वातिकस्य लक्षणमाह "स्तब्धः कठिनसंस्पर्शो मन्दस्रावो महारुजः। तद्युतः स्फुटितश्यावो व्रणो मारुतसम्भवः"। स्तब्धः अचलः। पैत्तिकमाह "तृष्णामोहज्वरक्लेददाहदुःखावदारणैः। व्रणं पित्तकृतं विद्यात् स्रावैर्गन्धैश्च पूतिकैः"। क्लेद आर्द्रता। दुःखं व्यथारूपम्। अवदारणं व्रणे विदारणवत् पीडा। श्लैष्मिकमाह "बहुपिच्छो गुरुः स्निग्धस्तिमितो मन्दवेदनः। पाण्डुवर्णोऽल्पसंक्लेदश्चिरपाकी कफव्रणः"। बहुपिच्छः बहुपिच्छिलः। अल्पसंक्लेद ईषदार्द्रः। रौधिरं द्वन्द्वजं सान्निपातिकमाह "रक्तो रक्तस्रुतीरक्ताद् द्विलिङ्गः स्यात् तदन्वयः"। तदन्वयः द्विलिङ्गदोषलिङ्गसम्बन्धः। शुद्धव्रणलिङ्गमाह "जिह्वातलाभोऽतिमृदुः श्लक्ष्णः स्निग्धोऽल्पवेदनः। सुव्यवस्थो निरास्रावः शुद्धव्रण इति स्मृतः। जिह्वातलाभः तलशब्दोऽत्र स्वरूपार्थः तेन जिह्वावद्रक्तः। सुव्यवस्थः उच्चनतारहितः। दुष्टव्रणलिङ्गमाह "पूतिपूयादिदुष्टासृक्स्राव्युत्सङ्गी चिरस्थितिः। दुष्टव्रणोऽतिगन्धादिः शुद्धलिङ्गविपर्य्ययः"। उत्सङ्गी कोटरवान्। अतिगन्धादिः आदिशब्देन स्राववेदनाविवर्णतादयः संगृह्यन्ते। संरोहिव्रणस्य लिङ्गमाह "कपोतवर्णप्रतिमा यस्यां तावोदवर्जिताः। स्थिराश्च पिडका-

वन्तो रोहन्तीति तमादिशेत्"। कपोतवर्णप्रतिमः पाण्डुधूसरः। स्थिराः विदीर्णतारहिताः। पिडकावन्तः संरोहणार्थो ये मांसाङ्कुरास्तद्युक्ताः। संरूढलिङ्गमाह "रूढवर्त्मानमग्रन्थिमशूनमरुजं व्रणम्। त्वक्सवर्णं समतलं सम्यग्रूढं विनिर्दिशेत्"। रूढवर्त्मानं संरूढस्रावमार्गम्। समतलं अनिम्नम्। सुखसाध्यत्वादिकमाह "त्वङ्मांसजः सुखे देशे तरुणस्यानुपद्रवः। धीमतोऽभिनवः काले सुखे साध्यः सुखव्रणः"। सुखे देशे मर्मरहिते। अनुपद्रवः ज्वरतृष्णाश्वासकासारोचकादिरहितः। धीमतः पथ्यसेविनः। सुखे काले हेमन्ते शिशिरे च। "गुणैरन्यतरैर्यैर्हीनः ततो व्रणः स्मृतः। सर्वैर्विहीनो विज्ञेयस्त्वसाध्यो निरुपक्रमः"। एभिस्त्वङ्मांसजत्वादिभिः। निरुपक्रमः अनुपक्रान्तः चिरमुपेक्षित इति यावत्। "वसामेदोऽथमज्जानं मस्तुलुङ्गं च यः स्रवेत्। आगन्तुजो व्रणः सिध्येन्न सिध्येद्दोषसम्भवः"। मस्तुलुङ्गं मस्तकाभ्यन्तरस्नेहः। "कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम्। व्रणाः कृच्छ्रेण सिध्यन्ति येषां चापि व्रणे व्रणः"। अरिष्टमाह "दह्यन्ते चान्तरत्यर्थं बहिःशीताश्च ये व्रणाः। दह्यन्ते बहिरत्यर्थं भवन्त्यन्तश्च शीतलाः। प्राणमांसक्षयश्वासकासारोचकपीड़िताः। प्रवृद्धपूयरुधिरा व्रणा ये चापि मर्मसु। क्रियाभिः सम्यगारब्धा न सिध्यन्ति च ये व्रणाः। विवर्जयेत्तु तान् वैद्यः संरक्षन्नात्मनो यशः। मद्यागुर्वाज्यसुमनःपद्मचन्दनचम्पकैः। सगन्धा दिव्यगन्धाश्च समूर्च्छा व्रणाः स्मृताः"। मर्मसु पायुनाभिहृदयादिषु। सुमना जातिः। दिव्यगन्धाः पारिजातादिगन्धाः। अथागन्तुव्रणस्य निदानमाह "नानाधारामुखैः शस्त्रैर्नानास्थाननिपातितैः। भवन्ति नानाकृतयो व्रणास्तांस्तान्निबोध मे"। नाना धारा मुखानि येषां तैः शस्त्रैः अर्द्धचन्द्रखड्गभल्लकुन्तसूचकरादिभिः। नानाकृतयः बह्वाकृतयः। ता आकृतीराह "छिन्नं भिन्नं तथा विद्धं क्षतं पिच्चितमेव च। घृष्टमाहुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणम्"। तत्र छिन्नस्य लक्षणमाह "तिर्यक्छिन्न ऋजुर्वापि यो व्रणश्चायतो भवेत्। गात्रस्य पातनं तद्धि छिन्नमित्यभिधीयते"। यो व्रणः तिर्यक्छिन्नः खड्गादिकृततिर्यक्छेदयुतः। ऋजुर्वापि अथवा खड्गादिकृतऋजुः व्रणः आयतः दीर्घः। आयत इति तिर्यक्छिन्नस्य ऋजोश्च विशेषणम्। गात्रस्य पातनं गात्रस्यैकदेशस्य छेदेन पृथक्करणं वा छिन्नमित्यभिधीयते। भिन्नमाह "शक्तिकुन्तेषुखड्गाग्रविषाणैराशयो हतः। यत् किञ्चित् प्रस्रवेत्तद्धि भिन्नमित्यभिधीयते"। आशयः कोष्ठः। कोष्ठभेदस्य लक्षणमाह "स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च। हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते। तस्मिन् भिन्ने रक्तपूर्णे ज्वरो दाहश्च जायते। मूत्रमार्गगुदास्येभ्यो रक्तं घ्राणाच्च गच्छति। मूर्च्छा श्वासस्तृषाध्मानमभक्तच्छन्द एव च। विण्मूत्रवातसङ्गश्च स्वेदस्रावोऽक्षिरक्तता। लोहगन्धित्वमास्यस्य गात्रदौर्गन्ध्यमेव च। हृदि शूलं पार्श्वयोश्च विशेषमभिधीयते"। तस्मिन् कोष्ठे। भिन्ने शक्त्यादिभिः। रक्तपूर्णे कोष्ठे तस्मादन्ताच्छिन्नात् स्रुतेन रक्तेन पूर्णे वा ज्वरादयो जायन्ते। आमाशये पक्वाशये च रक्तपूर्णे लक्षणभेदमाह "आमाशयस्थे रुधिरे रुधिरं छर्दयत्यपि। आध्मानमतिमात्रञ्च शूलञ्च भृशदारुणम्। पक्वाशयगते रक्ते रुजा गौरवमेव च। अधःकाये विशेषेण शीतता च भवेदिह"। रुजा शूलम्। गौरवं पक्वाशये। अधःकाये नाभेरधोदेशे विशेषेण गौरवमित्यन्वयः। शीतता च भवेदिह इह नाभेरधोदेशे शीतता च स्यात् वा च व्याधिस्वभावात्। विद्धमाह "सूक्ष्मास्यशल्याभिहतं यदङ्गं त्वाशयं विना। उत्तुण्डितं निर्गतं वा तद्विद्धमिति निर्दिशेत्"। आशयं विना कोष्ठं विना। उत्तुण्डितं अनिर्गतशल्यम्। निर्गतं वा निर्गतशल्यं वा। सशल्यस्य व्रणस्य लक्षणमाह। "श्यावं सशोथं पिडकायुतञ्च मुहुर्मुहुः शोणितवाहिनञ्च। मृदूद्गतं बुद्बुदतुल्यमांसं व्रणं सशल्यं सरुजं वदन्ति"। मुहुर्मुहुःशोणितवाहिनं यदा यदा शल्यं चलितं तदा तदा रुधिरं वहति। उद्गतं उच्छ्रितमुखम्। कोष्ठस्थितस्य शल्यस्य लक्षणमाह "त्वचोऽतीत्य शिराटीनि भित्त्वा वा परिहृत्य वा। कोष्ठे प्रतिष्ठितं शल्यं कुर्यादुक्तानुपद्रवान्"। त्वचः अस्रादि अतिक्रम्य उक्तानुपद्रवान् आटोपानाहौ व्रणमुखेनान्नपुरीषदर्शनञ्च। असाध्यस्य कोष्ठस्थरक्तस्य पुरीषस्य लक्षणमाह "कोष्ठान्तर्लोहितं पाण्डु शीतपादकराननम्। शीतोच्छ्वासं रक्तनेत्रमानद्धञ्च विवर्जयेत्"। आनद्धं आनाहवन्तम्। क्षतमाह "नातिच्छिन्नं नातिभिन्नमुभयोर्लक्षणान्वितम्। विषमं व्रणमङ्गे यत्तत् क्षतं परिकी-

र्त्तितम्”। नातिच्छिन्नं नातिदीर्घघातम्। नातिभिन्नं नातिगम्भीरघातम्। उभयोश्छिन्नभिन्नयोः विषमं प्रणमङ्गं यत् यद्व्रणमङ्गवैषम्यकरम्। पिच्चितमाह “प्रहारपीडनाभ्यान्तु यदङ्गं पृथुतां गतम्। सास्थि तत् पिच्चितं विद्यान्मज्जपरिप्लुतम्”। प्रहारो मुद्गरादिना। पीडनं कपाटादिना। पृथुतां चिपिटताम्। घृष्टमाह “घर्षणादपि घाताद्वा यदङ्गं विगतत्वचम्। उष्मस्रावान्वितं तत्तु घृष्टमित्यभिधीयते। घर्षणात् कर्कशेष्टकापाषाणादिभिः। मांसशिरास्नायुसन्ध्यस्थिमर्मसु क्षतेषु सामान्यलक्षणमाह “भ्रमः प्रलापः पतनं प्रमोहो विचेष्टनं ग्लानिरथोष्णता च। स्रस्ताङ्गता मूर्च्छनमूर्द्ध्ववातस्तीव्रा रुजो वातकृताश्च ताश्ताः। मांसोदकाभं रुधिरञ्च गच्छेत् सर्वेन्द्रियार्थोपरमस्तथैव। दशार्द्धसंख्येष्वथ विक्षतेषु सामान्यतो मर्मसु लिङ्गमुक्तम्”। पतनं भूमौ। विचेष्टनं विरुद्धं चेष्टनं हस्तपादादिप्रक्षेपणादिकम्। मूर्च्छनं इन्द्रियमोहः। प्रमोहो मनोमात्रमोहः। तीव्रा रुजो वातकृताश्च ताश्ताः दण्डापतानकादयः। रुधिरञ्च गच्छेत् मेहनभगगुदास्यघ्राणेभ्यः स्रवेत्। सर्वेन्द्रियार्थोपरमः इन्द्रियाणां कार्य्यनाशः। अथ मर्मशिरास्नायुसन्ध्यस्थ्नां विद्धानां पृथग्लक्षणमाह “इन्द्रगोपप्रतिमं प्रभूतं रक्तं स्रवेत्तत्क्षयजश्च वायुः। करोति रोगान् विविधान् यथोक्तान् शिरासु विद्धास्वथ वा क्षतासु”। इन्द्रगोपो वार्षिकोत्थितकीटविशेषः। (वीरबहुटी) इति लोके प्रसिद्धः। प्रभूतं बहु। रोगान् शिरोभितापान्धताक्षेपकादीन्। विद्धासु शरादिना। क्षतासु खड्गादिना। “कौब्जं शरीरावयवावसादः क्रियास्वशक्तिस्तुमुला रुजा च। चिराद्व्रणो रोहति यस्य चापि तं स्नायुविद्धं पुरुषं वदन्ति। कौब्जं विद्धस्याङ्गस्य वक्रता। तुमुला महती”। “शोथातिवृद्धिस्तुमुला रुजश्च बलक्षयः सर्वत एव शोथः। क्षतेषु सन्धिष्वचलाचलेषु स्यात् सन्धिकर्मोपरमश्च लिङ्गम्”। सर्वत एव शोथः सर्वसन्धीन् व्याप्य शोथः। उपरमः नाशः। “घोरा रुजो यस्य निशादिनेषु सर्वास्ववस्थासु न चैति शान्तिम्। विषग्विपश्चिद्विदितार्थसूत्रस्तमस्थिविद्धं पुरुषं वदन्ति”। सर्वास्ववस्थासु शयनासनादिकासु। विदितार्थसूत्रः ज्ञातशल्यतन्त्रः। अथ मर्मशिरादिविद्धलिङ्गानि पृथगभिधाय मर्मशिरादीनां विद्धानां पृथक्लिङ्गान्यतिदेशेनाह “यथास्वमेतानि विभावयेच्च लिङ्गानि मर्मस्वपि ताडितेषु”। यथास्वं शिरादीनां विद्धानाम् एतानि लिङ्गानि पृथगुक्तानि लिङ्गानि चकारात् भ्रमप्रलापादीनि च। मर्मस्वपि शिरादिषु ताडितेषु विद्धेषु विभावयेत् जानीयात्। सर्वव्रणानामुपद्रवानाह “विसर्पः पक्षघातश्च शिरास्तम्भोऽपतानकः। मोहोन्मादौ व्रणे पीडा ज्वरस्तृष्णा हनुग्रहः। कासश्छर्दिरतीसारो हिक्का श्वासः सवेपथुः। षोडशोपद्रवाः प्रोक्ता व्रणानां व्रणचिन्तकैः”। अथाग्निदग्धस्य निदानमाह “तत्राग्निर्द्विविधो ज्ञेयः स्निग्धरूक्षप्रभेदतः। स्नेहस्तत्र तु तैलादि रूक्षं लोहादि कथ्यते”। अग्निदग्धं चतुर्विधमाह “अग्निदग्धं चतुर्द्धा स्यात् प्लुष्टं दुर्दग्धमेव च। सम्यग्दग्धं तथातिदग्धञ्च परिकीर्त्तितम्”। तेषां लक्षणमाह “यद्विवर्णं भतिप्लुष्टं तत्प्लुष्टमभिधीयते। तीव्रदाहो व्यथावन्तो यत्र स्फोटा भवन्ति हि। चिरेण ते प्रशाम्यन्ति तद्दुर्दग्धमुदाहृतम्। ताम्रवर्णमगम्भीरं दाहपीडासमन्वितम्। सुसंस्थितञ्च कथितं सम्यग्दग्धं भिषग्वरैः। त्वङ्मांसं यत्र दग्धं स्याद्विश्लेषो वपुषस्तथा। शिरास्नाय्वस्थिसन्धीनां तं वदन्त्यतिदग्धकम्। अत्यर्थं वेदनादाहो ज्वरस्तृण्मूर्च्छया सह। स्याद्व्रणस्तु चिराद्रोहेत् रूढ़ो याति विवर्णताम्”। दुष्टव्रणनाड़ीव्रणशब्दयोस्तद्भेदौ दृश्यौ। व्रणशब्दनिरुक्तिः सुश्रुते उक्ता यथा “दृणोति यस्माद्रूढ़ोऽपि व्रणवांस्तु न नश्यति। आदेहधारणात्तस्मात् व्रण इत्युच्यते बुधैः”। सुश्रुतोक्ता विशेषाः द्विव्रणशब्दे वृणावणशब्दे च दृश्याः।

**व्रणकृत्** पु॰ व्रणं करोति कृ–क्विप्। १भल्लातके रत्नमा॰। २व्रणकारके त्रि॰। [३व्रणघातके त्रि॰।

**व्रणद्विष्** पु॰ व्रणं द्वेष्टि द्विष–क्विप्। १नाह्मण्यष्टिकायाम्

**व्रणशोथ** पु॰ ६त॰। व्रणस्य स्फीतताकारके रोगभेदे तल्लक्षणादि भावप्र॰ उक्तं यथा

“पृथक् समस्तदोषोत्था रक्तजागन्तुजौ तथा। व्रणशोथाः षडेते स्युः संयुक्ताः शोथलक्षणैः” शोथलक्षणैः पूर्वोक्तैः। विशिष्टं रूपमाह “विषमं पच्यते वातात् पित्तोत्थश्चाचिरस्थिरम्। कफजः पित्तवच्छोथो रक्तागन्तुसमुद्भवौ”। अपक्वस्य व्रणशोथस्य लक्षणमाह “मन्दोष्मताऽल्पशोथत्वं काठिन्यं त्वक्सवर्णता। मन्दवेदनया चाऽपि शोथस्यामस्य लक्षणम्”। तस्य पच्यमानस्य लक्षणमाह “द-

ह्यते दहनेनेव क्षारेणेव प्रपच्यते । पिपीलिकागणेनेव दश्यते छिद्यते तथा । भिद्यते चैव शस्त्रेण दण्डेनेव च ताड्यते । पीड्यते पाणिनेवान्तःसूचीभिरिव तुद्यते । अधरोष्ठी विवर्णः स्यादङ्गुल्या वावपीड्यते । आसने शयने स्थाने शान्तिं वृश्चिकविद्धवत् । न गच्छेदाततः शोथो भवेदाध्मातवस्तिवत् । ज्वरस्तृष्णाऽरुचिश्चैतत् पच्यमानस्य लक्षणम्" । छिद्यते द्विधा क्रियत इव । भिद्यते विदार्य्यत इव । अधोदाहः । शोथः पार्श्वस्याग्निनेव सन्तापः तार्भ्यां युक्तः आततः त्वक्सङ्कोचरहितः वस्तिर्मूत्राशयश्चर्मपुटो वा । पक्वस्य लक्षणमाह "वेदनोपशमः शोथो लोहितोऽल्पो न चोन्नतः । प्रादुर्भावो बलीनाञ्च तोदः कण्डूर्मुहुर्मुहुः । उपद्रवाणां प्रशमो निम्नता स्फुटनन्त्वचाम् । वस्ताविवाम्बुसञ्चारः स्याच्छोथेऽङ्गुलिपीडिते । पूयस्य पीडयेदेकमन्तमन्ते च पीडिते । भुक्त्वा वृणोऽग्र भवेत् पक्वस्य लक्षणम्" । वेदनोपशमः दाहादिदुःखोपशमः । अल्पलोहित इत्यन्वयः । न चोन्नतः पच्यमानापेक्षया । उपद्रवाणां ज्वरादीनाम् । निम्नता स्वरूपतोऽङ्गुलिपीडनाद्वा अवनतत्वम् । स्फुटनम् किञ्चिद्विदारणम् । वस्ताविवेत्यादि शोथेऽङ्गुलीपीडिते सति अङ्गुलिपीडितदेशादन्यदेशे अम्बुसञ्चारः किञ्चित् । वस्तौ चर्मपुटके । एवम् अन्यतरदेशे पीडिते एक मन्तमपरमन्तमापूर्य पीडयति । एकदोषारब्धेऽपि शोथे पाककाले सर्वदोषसम्बन्धमाह "कतेऽनिलाद्वेदना न विना न पित्तं पाकः कफञ्चापि विना न पूयः । तस्माद्धि सर्वं परिपाककाले पचन्ति शोथांस्त्रिभिरेव दोषैः" । पचन्ति पाकं प्रापयन्ति । एवशब्दोऽप्यर्थः अव्ययानामनेकार्थत्वात् । पाके मतान्तरमाह "कालान्तरे नाभ्युदितन्तु पित्तं कृत्वा वशे वातकफौ प्रसह्य । पचत्यतः शोणितमेव पाको मतः परेषां विदुषां द्वितीयः" । वशे कृत्वा हीनौजस्त्वं शोणितं कर्म पूर्वकं कफात् पूयोऽत्र शोणितात् पूय इति भेदः । गम्भीरपाके शोथे पाकज्ञानार्थंलक्षणान्तरमाह सुश्रुतः "कफजेषु च शोथेषु गम्भीरं पाकमेत्यसृक् । पक्वलिङ्गं ततः स्पष्टं यतः स्याच्छोथशीतता । त्वक्सावर्ण्यं रुजोऽल्पत्वं घनस्पर्शत्वमश्मवत्" । कफजेषु च शोथेषु गम्भीरमसृक् पाकमेति तत्र कथं पाकज्ञानमित्याह तत्र ततः कारणात् पक्वलिङ्गं स्पष्टम् । अतः यच्छ्रुपानावस्थान्तर्गतरामदाहव्यथावनान्तरे शोथ शीतादयो भवन्ति । घनस्पर्शत्वं स्पर्शे व्यथायुक्तत्वम् । अनिर्हृतस्य पूयस्य दोषमाह "कक्षं समासाद्य यथैव वह्निर्वातेरितः सन्दहति प्रसह्य । तथैव पूयोऽप्यविनिःसृतस्तु मांसं सिरा स्नायुमपीह खादेत्" । कक्षं तृणवनम् । शोथस्यामपक्वलक्षणज्ञानाज्ञाने भिषजां गुणदोषावाह "आमं विदह्यमानञ्च सम्यक्पक्वन्तु यो भिषक् । जानीयात् स भवेद्वैद्यः शेषास्तस्कर वृत्तयः" । विदह्यमानं विपच्यमानम् । तस्करवृत्तयः तेषां तस्कराणामिव द्रव्यलाभमात्रप्रयोजनं भवति । न तु धर्मयशोमैत्रीलाभः "यश्छिनत्त्याममज्ञानाद्यश्च पक्वमुपेक्षते । श्वपचाविव विज्ञेयौ तावनिश्चितकारिणौ" ।

**व्रणास्राव** पु० ६त० । सुश्रुतोक्ते व्रणस्य पूयादिक्षरणे । तद्विज्ञानं च तत्रोक्तं यथा

"अथातो व्रणास्रावविज्ञानीयमध्यायं व्याख्यास्यामः । "त्वङ्मांससिरास्नाय्वस्थिसन्धिकोष्ठमर्माणीत्यष्टौ व्रणवस्तूनि । अत्र सर्वव्रणसन्निवेशः । तत्राद्यैकवास्तुसन्निवेशो त्वग्भेदी व्रणः सुप्रचरः शेषाः स्वयमवदीर्य्यमाणा दुरुपचाराः । तत्रायतचतुरस्रो वृत्तस्त्रिपुटक इति व्रणाकृतिसमासः । शेषास्तु विकृताकृतयो दुरुपक्रमा भवन्ति । सर्व एव व्रणाः क्षिप्रं संरोहन्त्यात्मवतां सुभिषग्भिरुपक्रान्ताः । अनात्मनामज्ञैरुपक्रान्ताः प्रवर्द्धन्ते दोषाधिक्यात् । तत्रातिसंवृतोऽतिविवृतोऽतिकठिनोऽतिमृदुरुत्सन्नोऽवसन्नोऽतिशीतोऽत्युष्णः कृष्णरक्तपीतशुक्लादीनां वर्णानामन्यतमवर्णो भैरवः पूतिपूयमांससिरास्नायुप्रभृतिपूर्णः पूतिपूयस्राव्युन्मार्ग्युत्सङ्ग्यमनोज्ञदर्शनगन्धोऽत्यर्थं वेदनावान् दाहपाकरागकण्डूशोथपिडकोपद्रुतोऽत्यर्थं दुष्टशोणितस्रावी दीर्घकालानुबन्धी चेति दुष्टव्रणलिङ्गानि । तस्य दोषोच्छ्रायेण षट्त्वं विभज्य यथास्वं प्रतीकारे प्रयतेत । अत ऊर्द्ध्वं व्रणास्रावान् वक्ष्यामः । तत्र त्वङ्भागे छिन्नासु वा त्वक्षु स्फोटेषु भिन्नेषु विदारितेषु वा सलिलप्रकाशो भवत्यास्रावः किञ्चिद्विस्रः पीतावभासश्च । मांसगतः सर्पिःप्रकाशः सान्द्रः श्वेतः पिच्छिलश्च । सिरागतः सद्यश्छिन्नासु सिरासु रक्तातिप्रवृत्तिः पक्वासु च तोयनाडीभिरिव तोयागमनं पूयस्रावश्चात्र तनुर्विच्छिन्नः पिच्छिलोऽवलम्बी श्यावोऽवश्यायप्रतिमश्च । स्नायुगतः स्निग्धो घनः सिङ्घाणकप्रतिमः सरक्तश्च । अस्थिगतोऽस्थ्न्यभिहते स्फुटिते भिन्ने दोषावदारिते वा दोषाव-

ष्ठितत्वादस्थिनिःसारं शुक्तिधौतमिवाभाति। स्रावश्चात्र मज्जमिश्रः सरुधिरः स्निग्धश्च। सन्धिगतश्च पीड्यमानो न प्रवर्त्तते आकुञ्चनप्रसारणोन्नमनविनमनप्रधावनोत्कासनप्रवाहणैश्च स्रवति। स्रावश्चात्र पिच्छिलोऽवलम्बी सफेनपूयरुधिरोन्मथितश्च। कोष्ठगतोऽसृङ्मूत्रपुरीषपूयोदकानि स्रवति। मर्म्मगतस्त्वगादिष्ववरुद्धत्वान्नोच्यते। तत्र त्वगादिगतानां स्रावाणां यथाक्रमं पारुष्यश्यावावश्यायदधिमस्तुक्षारोदकमांसधावनपुलाकोदकसन्निभत्वानि मारुताद्भवन्ति। पित्ताद्गोमेदोगोमूत्रभस्मशङ्खकषायोदकमाध्वीकतैलसन्निभत्वानि। पित्तवद्रक्तादतिविस्रत्वञ्च। कफान्नवनीतकासीसमज्जपिष्टतिलनारिकेलोदकवराहवसासन्निभत्वानि। सन्निपातात्तु नारिकेलोदकैर्वारुकरसकाञ्जिकवसादारुकोदकप्रियङ्गुफलयकृन्मुद्गयूषवर्णत्वानीति। "श्लोकौ चात्र भवतः। पक्वाशयादसाध्यस्तु पुलाकोदकसन्निभः। क्षारोदकनिभः स्रावो वर्ज्यो रक्ताशयात् स्रवन्। आमाशयात् कलायाम्भोनिभश्च त्रिकसन्धिजः। स्रावानेतान् परीक्ष्यादौ ततः कर्म्माचरेद्भिषक्"। अत ऊर्द्ध्वं सर्व्वव्रणवेदना वक्ष्यामः। तोदनभेदनताडनच्छेदनायमनमन्थनविक्षेपणचुमुचुमायननिर्द्दहनावभञ्जनस्फोटनविदारणोत्पाटनकम्पनविविधशूलविश्लेषणविकिरणपूरणस्तम्भनस्वप्नाकुञ्चनाङ्कुशिकाः सम्भवन्ति। अनिमित्तविविधवेदनाप्रादुर्भावो वा मुहुर्मुहुर्यत्रागच्छन्ति वेदनाविशेषास्तं वातिकमिति विद्यात्। ओषचोषपरिदाहधूमायनानि यत्र गात्रमङ्गारावकीर्णमिव पच्यते यत्र चोष्माभिवृद्धिः क्षते क्षारावसिक्तवच्च वेदनाविशेषास्तं पैत्तिकमिति विद्यात्। पित्तवद्रक्तसमुत्थं जानीयात्। कण्डूर्गुरुत्वं सुप्तत्वमुपदेहोऽल्पवेदनत्वं स्तम्भः शैत्यञ्च यत्र तं श्लैष्मिकमिति विद्यात्। यत्र सर्व्वासां वेदनानां समुत्पत्तिस्तं सान्निपातिकमिति। अत ऊर्द्ध्वं व्रणवर्णान् वक्ष्यामः। भस्मकपोतास्थिवर्णः परुषोऽरुणः कृष्ण इति मारुतजस्य। नीलः पीतो हरितः श्यावः कृष्णो रक्तः कपिल इति रक्तपित्तसमुत्थयोः। श्वेतः स्निग्धः पाण्डुरिति श्लेष्मजस्य। सर्व्ववर्णोपेतः सान्निपातिकस्य इति। भवति चात्र "न केवलं व्रणेषूक्तो वेदनावर्णसंग्रहः। सर्व्वशोथविकारेषु व्रणवल्लक्षयेद्भिषक्"।

**व्रणहन्** पु० व्रणं हन्ति हन–ड। १एरण्डवृक्षे २गुडूच्याम् स्त्री शब्दच०।

**व्रणाश** पु० व्रणमश्नाति अश–अण्। १बोले गन्धरसे २अगस्त्यवृक्षे च राजनि०।

**व्रत** न० व्रज–घ जस्य तः। १भक्षणभेदे उणादि० २पुण्यसाधने ३उपवासादिनियमभेदे च

व्रतञ्च सम्यक्सङ्कल्पजनितानुष्ठेयक्रियाविशेषरूपं तच्च प्रवृत्तिनिवृत्त्युभयरूपं तत्र द्रव्यविशेषभोजनपूजादिकं प्रवृत्तिरूपम् उपवासादिकञ्च निवृत्तिरूपं तच्च नित्यं नैमित्तिकं काम्यञ्च। नित्यमेकादश्यादिव्रतम् नैमित्तिकं चान्द्रायणादिव्रतं काम्यं तत्तत्तिथ्युपवासादिरूपं "सम्यक् संसाधनं कर्म कर्त्तव्यमधिकारिणा। निष्कामेण महावीर! काम्यं कामान्वितेन च" भविष्यपु०। सम्यक् प्रथमकल्पादिना संसाधनं यथाविहितं साधनं यस्य। अधिकारिणा अर्थिना समर्थेन विदुषा चेत्यर्थः। तत्र व्रतारम्भकालः हेमा०व्र० दर्शितो यथा

अथ व्रतारम्भकालः। तत्र सत्यव्रतः "उदयस्था तिथिर्या हि न भवेद्दिनमध्यभाक्। सा खण्डा न व्रतानां स्यादारम्भे च समापने" इति। एतद्व्यतिरिक्तायामखण्डायां प्रारम्भमाह वृद्धवशिष्ठः "अखण्डव्यापिमार्त्तण्डा यद्यखण्डा भवेत्तिथिः। व्रतप्रारम्भणन्तस्यामनष्टगुरुशुक्रगिति"। तिथिर्यद्यनष्टगुरुशुक्रयुक् अनस्तमितगुरुशुक्रयुक्ता तस्यां व्रतमारम्भणीयमित्यर्थः, इदमुपलक्षणम्। गुरुशुक्रयोर्बाल्ये वार्द्धक्येऽपि व्रतमारम्भणीयमित्यर्थः। तथा च वृद्धमनुवृहस्पती "अग्न्याधानं प्रतिष्ठाञ्च यज्ञदानव्रतानि च। वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः। माङ्गल्यमभिषेकञ्च मलमासे विवर्जयेत्। बाले वा यदि वा वृद्धे शुक्रे वास्तङ्गते गुरौ। मलमास इवैतानि वर्जयेद्देवदर्शनम्" इति। गार्ग्योऽपि "नामान्नप्राशनञ्चौड़ं विवाहं मौञ्जिबन्धनम्। निष्क्रमं जातकर्म्मापि काम्यं वृषविसर्जनम्। अस्तगे च गुरौ शुक्रे बाले वृद्धे मलिम्लुचे। उद्यापनमुपारम्भं व्रतानां नैव कारयेत्" इति। लल्लः "नीचस्थे वक्रसंस्थे व्यतिचरणगते बालवृद्धास्तगे वा संन्यासो देवयात्रा व्रतचरणविधिः कर्णवेधस्तु दीक्षा। मौञ्जीबन्धोऽथ चूडा परिणयनविधिर्वास्तुदेवप्रतिष्ठा वर्ज्याः सद्भिः प्रयत्नात् त्रिदशपतिगुरौ सिंहराशिस्थिते च" इति। नीचलक्षणन्तु ज्योतिःशास्त्रे "सूर्य्यादितुङ्गमजगोमकराः क्रमात् स्युः। स्त्रीकर्किमीनवणिजोऽसगमश्च नीचम्" इति। उच्चस्थानात् सप्तमं नीचमित्यर्थः। तथा च

नीचस्थे गुरौ मकरगते इत्यर्थः । शौनकः "पूर्त्तागारविवाहयानगमनं चौराद्यकर्णव्यध विद्यादेवविलोकनोपनयनं दीक्षापरीक्षा व्रतम् । स्नानं तीर्थमखं रथं पुरमहादानप्रतिष्ठापनम् । सिंहस्थे विबुधार्चिते न शुभदं कर्त्तुं तथा क्ष्यगे" । अन्यवचनन्तु ब्रह्मसिद्धान्ते "रविपार्श्वस्थितस्यैषां ग्रहाणामस्त उच्यते । ततोऽर्वाक् वार्द्धकं विद्यादूर्द्ध्वं बाल्यं प्रकीर्त्तितम्" इति । एतयोरवधिः ज्योतिःशास्त्रेऽनेकविधो दर्शितः "बालः शुक्रो दिवसदशकं पञ्चकञ्चैव वृद्धः पश्चादस्तास्तमयमुदितः पक्षमौढ्यः क्रमेण । जीवो वृद्धः शिशुरपि सदा पक्षमन्ये त्विमौ तौ वृद्धौ प्रोक्तौ दिवसदशकस्थापरैः सप्तरात्रम्" इति । एतेषां पक्षाणां व्यवस्था देशान्तरविषया आपद्विषया वा । तथा च गार्ग्यः "शुक्रो गुरुः प्राक्परवाक् चैव बालो विन्ध्ये दशावन्तिषु सप्तरात्रम् । वङ्गेषु हूणेषु च षट् च पञ्च शेषे च देशे त्रिदिनं वदन्ति" इति । वराहमिहिरोऽपि "बहवो दर्शिताः काला ये बाल्ये वार्द्धकेऽपि च । ग्राह्यास्त्वत्राधिकाः शेषा देशभेदादुतापदि" इति ।

व्रतानां मानसादिभेदस्तत्र दर्शितो यथा वराहपुराणे "अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यमकल्मषम् । एतानि मानसान्याहुर्व्रतानि व्रतधारिणाम् । एकभक्तं तथा नक्तमुपवासादिकञ्च यत् । तत्सर्व्वं कायिकं पुंसां व्रतं भवति नान्यथा" । उपवासोऽत्राहोरात्राभोजनम्, आदिशब्दादयाचितादि । तथा "किञ्चिद् व्रतं वा क्रियते पूज्यते यत् त्रिलोचन ! । विप्रेभ्यो दीयते सर्व्वमेतज्जन्मतरोः फलम्" ।

व्रतभेदफलादिकं तत्रोक्तं यथा गरुड़पुराणे "तपोगतिर्हि भूतानां तप एव परायणम् । तपसा विजिता लोकास्तपसा निर्वृतिः सताम् । तपसा धूतपाप्मानो निर्वाणं परमङ्गताः । तपसा परमायुश्च शान्तिं वापि तथाप्नुयात् । तपसा विन्दते लोकानखिलानपि पूरुषः । तपसा परमप्नुवन्ति निर्वाणमपि शाश्वतम् । तपसा चैन्द्रीं सिद्धिं विपुलामपि विन्दति । अमरत्वं च सुतादींस्तु तपसा मर्त्त्यजातयः । अतएव धनकामाः पुत्रसम्पन्नाश्च नरा भुवि । व्रतोपवासनियमैः शरीरोत्तापनन्तपः । उषितस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि । एतद्वीरासनं प्रोक्तं महापातकनाशनम् । एकभक्तेन नक्तेन तथैवायाचितेन च । उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः" । कूर्म्मपुराणे "व्रतोपवासनियमैर्होमैर्ब्राह्मणतर्पणैः । आराधय महायोगयोगिनां हृदि संस्थितम्" । ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव द्विजोत्तम ! । अर्च्चयन्ति महादेवं यज्ञदानसमाधिभिः । व्रतोपवासनियमैर्होमैः स्वाध्यायतर्पणैः । तेषां वै रुद्रसायुज्यं सामीप्यञ्चातिदुर्लभम् । सलोकता च सारूप्यं जायते तत्प्रसादतः" । गरुड़पुराणे "धुन्धुमारस्तु राजर्षिर्लेभे पुत्रशतं पुरा । दानेन नियमेनैव तपसा च व्रतेन च । सगरो नाम राजर्षिर्दिक्षु सर्व्वासु विश्रुतः । पुत्राणाञ्च शतं प्राप्तं तेन राज्ञा महात्मना । तथा दशरथो राजा व्रतेषु निरतः सदा । यज्ञदानतपोयोगैः सन्तुष्टः पुरुषोत्तमः । स्वयं पुत्रत्वमापेदे तस्य राज्ञो महात्मनः । जनको नाम राजर्षिस्तपोव्रतनिधिः स्वयम् । ऐश्वर्य्यमतुलं प्राप्य योगिनां गतिमाप्तवान् । एवमेव महाराज ! राजानो ब्राह्मणास्तथा । ऐश्वर्य्यलक्षणां प्रापुर्गतिं वै व्रतवैभवात् । अतः कुरुष्व सततं तपःसञ्चयमात्मवान् । व्रतोपवासनिरतस्तीर्थानि नृपसत्तम !" । तथा "विनिग्रहश्चेन्द्रियाणां कुर्व्वीत नियमात्मवान् । उपवासजप, ध्यानतीर्थस्नानादिकैरपि । व्रतैर्यज्ञेन दानेन तपसा तीर्थसेवया । अनेकजन्मसंसिद्धिमेनःक्षपयति द्विजः" । व्रतादीनां चातुर्व्वर्ण्यसाधारणत्वाभिधानात् द्विजपदग्रहणमत्र वर्णमात्रोपलक्षणार्थम् । न चैवं सति शूद्रस्य यज्ञेऽनधिकाराद्यज्ञशब्दविरोध इति वाच्यम् । यजेरनेकार्थत्वेन देवतापूजाद्यर्थसम्भवात् । "कायिकं मानसञ्चैव वाचिकञ्च त्रिधा व्रतम् । यज्ञो दानं तपश्चैव वदतस्तच्छृणुष्व मे । अहिंसा व्रतचर्य्या च तपः कायिकमुच्यते । वाचिकं सत्यवचनं भूतद्रोहविवर्जितम् । मानसं मनसः शान्तिः सर्व्ववैराग्यलक्षणम्" । आदित्यपुराणे "व्रतोपवासान् खलु यो विधत्ते दारिद्र्यपाशं स भिनत्ति चाशु । व्रतोपवासेषु रतस्य पुंसस्त्वापदः शान्तिमुपयान्ति तज्ज्ञाः" ।

व्रतसामान्यधर्म्मास्तदधिकारिणश्च तत्र दर्शिता यथा स्कन्दपुराणे "निजवर्णाश्रमाचारनिरतः शुद्धमानसः । व्रतेष्वधिकृतो राजन्नन्यथा विफलः श्रमः । अलुब्धः सत्यवादी च सर्व्वभूतहिते रतः । व्रतेष्वधिकृतो राजन्नन्यथा विफलः श्रमः । श्रद्धावान् पापभीरुश्च मदम्भविवर्जितः । व्रतेष्वधिकृतो राजन्नन्यथा विफलः श्रमः । समः सर्व्वेषु भूतेषु मितभक्तो जितेन्द्रियः । व्रतेष्वधिकृतो राजन्नन्यथा विफलः श्रमः । पूर्व्वं निश्चित्य शास्त्रार्थं

यथावत् कर्म्मकारकः । अवेदनिन्दको धीमानधिकारी व्रतादिषु" । महाभारते "श्राद्धकर्म तपश्चैव सत्यमक्रोध एव च । स्वेषु दारेषु सन्तोषः शौचं नित्यानसूयता । आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप !" देवलोऽपि "व्रतोपवासनियमैः शरीरोत्तापनैस्तथा । वर्णाः सर्व्वेऽपि मुच्यन्ते पातकेभ्यो न संशयः" इति । तदेवं वचनसन्दर्भेणोक्तनियमवतां चतुर्णामपि वर्णानां स्त्रीपुंसाधारण्येन व्रतेष्वधिकार इति प्रतिपाद्यते । तथा च भारते(गीता) "मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्" इति । तत्रायं परोविशेषो यत् स्त्रीणां भर्त्त्राद्याज्ञां विना न स्वातन्त्र्येण व्रतादिष्वधिकार इति । तथा च मार्कण्डेयपुराणे "नास्ति स्त्रीणां पृथग् यज्ञो न व्रतं नाप्युपोषणम् । भर्तृशुश्रूषयैवैता लोकानिष्टान् व्रजन्ति हि । यद्देवेभ्यो यच्च पित्रादिकेभ्यः कुर्य्याद्भर्त्ताभ्यर्च्चनं सत्क्रियाञ्च । तस्याद्र्धं वै सा फलं नान्यचित्ता नारी भुङ्क्ते भर्तृशुश्रूषयैव । धर्म्मार्थकामसंसिद्धौ भवेद्भर्तुः सहायिनी" । आदित्यपुराणे "नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् । पतिं शुश्रूषते यत्तु तेन स्वर्गे महीयते । पत्युरभ्यधिकं नारी नोपवासव्रतञ्चरेत् । अनायुष्यं द्विजश्रेष्ठ ! प्रत्युतस्यास्तदुच्यते । देवताराधनं कुर्य्यात् कामं वा ब्राह्मणोत्तमः । नारी पतिव्रता नाम प्राप्यानुज्ञान्तु भर्त्तृतः । नारी खल्वननुज्ञाता पित्रा भर्त्त्रा सुतेन वा । विफलं तद्भवेत्तस्या यत्करोत्यौर्द्ध्वदेहिकम्" । पित्रेति कन्यात्वे । भर्त्त्रेति सौभाग्यदशायाम् । सुतेनेति वैधव्यदशायाम् । और्द्ध्वदेहिकं व्रतादि । "अथ वा सर्व्वमुत्सृज्य पतिपूजनतत्परा । केशवाराधनं कुर्य्यात् साध्वी स्त्री पुरुषर्षभ ! । तेनैव स्वर्गमाप्नोति यत् किञ्चिन्मनसेच्छति । अफलं सर्व्वमेव स्यात् भर्त्त्राज्ञां विना व्रतम् । केशवाराधनं यच्च तथापि सफलं स्त्रियः" । हरिवंशे "सतीत्वधर्म्मचरणं यस्या नित्यमखण्डितम् । पुण्यकानां विधिस्तस्याः पुराणे परिकीर्त्तितः । दानोपवासपुण्यानि सुकृतान्यप्यरुन्धति ! । निःफलान्यसतीनां हि पुण्यकानि तथा शुभे" । पुण्यकानि व्रतानि । "या नार्च्चयन्ति भर्त्तारं योनिदुष्टाश्च याः स्त्रियः । योनिदोषात् पुण्यफलं नाश्नन्ति निरयङ्गताः । साध्व्यो जगद्धारयन्ति सुशीलाः पतिदेवताः । अनन्यधर्म्मनित्याश्च सतां पन्थानमाश्रिताः । अवाग्दुष्टाः शौचयुक्ताः धृतिमत्यः शुचिव्रताः । सततं साधुवादिन्यो धारयन्ति जगत् खलु । व्याधितः पतितो वापि निर्द्धनो वा कथञ्चन । न वक्तव्यः स्त्रिया भर्त्ता धर्म्म एष सनातनः । अकार्य्यकारिणं वापि निर्गुणं स्त्री पतिं तथा । तारयत्येव साध्वी सा तथात्मानं शुभानने ! । योनिदुष्टस्त्रियो नास्ति प्रायश्चित्तं हतैव सा । वाग्दुष्टे विहितं सद्भिः प्रायश्चित्तं पुरातनैः । भर्त्तुश्छन्देन कर्त्तव्यं व्रतकं सर्व्वदा स्त्रिया । उपवासोऽपि वा सत्ये ! काङ्क्षन्त्या तु शुभां गतिम् । कल्पान्तरसहस्रेषु न स्त्री सा लभते गतिम् । तिर्य्यग्योनिसहस्रेषु पच्यते योनिविभ्रमात् । यदि स्याद्बाममानुष्यं स्त्री लभेदसती सती । चण्डालयोनौ दुर्मेधा जायते कुक्कुरानना । भर्त्ता देवः सदा स्त्रीणां स्त्रीभिर्दृष्टः सनातने । यस्या हि तुष्यते भर्त्ता सा सती धर्म्मचारिणी । कौतूहलहतानान्तु स्त्रीणां लोको न शोभनः । भर्त्तर्य्येव मनो यासां सद्भावेन व्यवस्थितम् । कर्म्मणा मनसा वाचा पतिं नातिचरन्ति याः । तासां पुण्यफलं सौम्ये ! पुण्यकैः समुदाहृतम् । पुण्यकानां विधिं कृत्स्नं स्वर्लोकं प्रति शोभने ! । निबोध स हि सर्व्वो हि दृष्टोऽयं तपसा मया । स्नात्वा स्त्री प्रातरुत्थाय पतिं विज्ञापयेत् सती । उपवासार्थमथ वा व्रतकार्य्यं धृतव्रते ! । स्पृष्ट्वा कराभ्यां चरणौ सततं सत्तमस्य च । गृहीत्वोदुम्बरं पात्रं सकुशं साक्षतं तथा । गोशृङ्गं दक्षिणासिच्य प्रतिगृह्णीत तज्जलम् । ततो भर्त्तुः सती दद्यात् स्नातस्य प्रयतस्य च । आत्मनोऽथ निषेक्तव्यं ततः शिरसि तज्जलम् । त्रैलोक्ये सर्व्वतीर्थेषु स्नानमेतदुदाहृतम् । उपवासेषु कर्त्तव्यमेतद्धि व्रतकेषु च । स्नानमेतद्धि सामान्यं स्त्रीणां पुंसाञ्च भामिनि ! । अरुन्धति ! मया दृष्टं तपसा हरतोषकम् । अशून्यं विद्धि शयनमासनञ्च तथाविधम् । स्वयं प्रक्षालनं चापि पादयोरनुशब्दितम्" । अनुशब्दितं व्रतोपयोगितया कथितम् । "अश्रुप्रपातो रोषश्च कलहश्च क्षतिः सति ! । उपवासात् व्रताद्वापि सद्योभ्रंशयति स्त्रियम् । शुक्लमेव सदा वासः प्रशस्तं चन्द्रसम्भवे ! । अन्तर्व्वासोऽपरञ्चैव उपवासव्रते तथा । पादुकार्थस्तु यैः कार्य्यः सर्व्वदा व्रतके सति ! । उपवासेऽपि च विधिरेष एव प्रकीर्त्तितः । अञ्जनं रोचनञ्चापि गन्धान् सुमनसस्तथा । व्रतके चोपवासे च नित्यमेव विवर्ज्जयेत्" । "रोचनं कुङ्कुमादिना, मुखोज्ज्वलीकरणम् । "दन्तकाष्ठं

शिरःस्नानमुद्वर्त्तनमथापि वा। विवर्जितां स्मृतं सर्वां शौचार्थन्तु विधीयते। तिलामलकफलैर्नित्यं श्रीफलैश्च समाचरेत्। प्रक्षालनञ्च शिरसः सदा स्वर्णाम्भितैर्जलैः। शिरसोऽभ्यञ्जनं सौम्ये! नैवमेतत् प्रशस्यते। न पादयोर्न गात्रस्य स्नेहेनेति स्थितिः स्मृता। गोयानमुष्ट्रयानञ्च कर्णाङ्गुदपि नाचरेत्। खरयानञ्च सततं व्रते चाप्युपवासके। नदीजलं प्रस्रवजं शस्तं वै सोमनन्दिनि!। शुभे तड़ागे वाप्यादौ विस्तीर्णे जलजाप्लुते। गत्वा स्नानं प्रशस्तन्तु सदैव खलु सर्वथा। अलाभे स्वगृहे स्त्री घटस्नानं समाचरेत्। नवैश्च कुम्भैः स्नातव्यं विधिरेष सनातनः। स्नानञ्च कार्य्यं शिरसा तपःफलमवाप्नुयात्"। भविष्यत्पुराणे "क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः। देवपूजाग्निहवनं सन्तोषः स्तेयवर्जनम्। सर्वव्रतेष्वयं धर्मः सामान्यो दशकः स्थितः"। अत्र क्षमादीनां स्वतन्त्रतया चतुर्वर्गसाधनत्वेन विहितानां व्रताङ्गतयाऽभिधानं खादिरं वीर्य्यकामस्येत्यादिवत् संयोगपृथक्त्वन्यायादुपपन्नम्। मत्स्यपुराणे "तस्मात् क्षतोपवासेन स्नानमभ्यङ्गपूर्वकम्। वर्जनीयं प्रयत्नेन रूपघ्नं तत्परं नृप!"। यन्नूक्तं गरुड़पुराणे "गन्धालङ्कारवस्त्राणि पुष्पमाल्यानुलेपनम्। उपवासे न दुष्यन्ति दन्तधावनमञ्जनम्" इति यच्च व्यासोक्तम् "दन्तधावनपुष्पाणि व्रतेऽपि कृष्ण दुष्यति"। तदेतत्सभर्त्तृकोपवासविषयम्। भविष्यत्पुराणे "अञ्जनञ्च सताम्बूलं सिन्दूरं रक्तवाससी। विष्टयात्सोपवासापि अवैधव्यकरं परम्। विधवा यतिमार्गेण कुमारी वा यदृच्छया" पद्मपुराणे "गर्भिणी सूतिकादिश्च कुमारी वाथ रोगिणी। यदा शुद्धा तदान्येन कारयेत् प्रयता स्वयम्"। गर्भिण्यादिरुपवासे कर्त्तव्ये नक्तं कुर्य्यात्। सूतकादिभिरशुद्धा अन्येन व्रतं कारयेत्। प्रयता शुद्धा, स्वयं कुर्य्यात्, पुंसोऽप्येष विधिः लिङ्गस्याविवक्षितत्वात् तदेवं स्त्रीणां कन्यादशायां पित्रादेराज्ञया, विवाहितानां भर्त्तुराज्ञया, विधवानां पुत्राद्याज्ञयैव व्रताधिकारो नान्यथेति सिद्धम्"। अग्निपुराणे "व्रीहिषष्टिकमुद्गाश्च कलायाः सलिलं पयः। श्यामाकाश्चैव नीवारा गोधूमाद्या व्रते हिताः। कुष्माण्डालावुवार्त्ताकीपालङ्क्यौ पूतिकां त्यजेत्। चरुभैक्ष्यं शक्तुकणाः शाकन्दधि घृतं मधु"। श्यामाकाः शालिनीवारा शाकं मूलफलादिकम्। "हविष्यव्रतनक्तादावग्निकार्य्यादिकं हितम्। मधु मांसं विहायान्यद् व्रते च हितमीरितम्"। व्रं॰ख॰ दयादीनामुपवासगुणतयातदङ्गत्वम् एका॰त॰ दर्शितं यथा व्रते गुणानाह गौतमः "दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहा चेति"। दयादिलक्षणान्याह बृहस्पतिः "परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा। आत्मवद्वर्त्तितव्यं हि दयैषा प्रकीर्त्तिता"। परे उदासीने। आपत्सु रक्षितव्यन्त्विति कल्पतरौ पाठः। आत्मवदितिव्यक्तमाह दक्षः "यथैवात्मा परस्तद्वद्द्रष्टव्यः सुखमिच्छता। सुखदुःखानि तुल्यानि यथात्मनि तथा परे"। बृहस्पतिः "बाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित्। न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तिता। न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि। नान्यदोषेषु रमते साऽनसूया प्रकीर्त्तिता। अभक्ष्यपरिहारस्तु संसर्गश्चाप्यनिन्दितैः। स्वधर्मे च व्यवस्थानं शौचमेतत् प्रकीर्त्तितम्। शरीरं पीड्यते येन सुशुभेनापि कर्मणा। अत्यन्तं तन्न कुर्वीत अनायासः स उच्यते। प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम्। एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः। स्तोकादपि च दातव्यमदीनेनैव चात्मना। अहन्यहनि यत् किञ्चिदकार्पण्यं हि तत् स्मृतम्। यथोत्पन्नेन सन्तोषः कर्त्तव्योऽप्यल्पवस्तुना। परस्य चिन्तयित्वार्थं साऽस्पृहा परिकीर्त्तिता"। देवीपुराणम्। "तद्ध्यानं तज्जपः स्नानं तत्कथाश्रवणादिकम्। उपवासकृतो ह्येते गुणाः प्रोक्ता मनीषिभिः"।

व्रतकालविवेकेऽत्र विशेष उक्तो यथा "दीर्घकालानुपालनीयतत्तद्दितिकर्त्तव्यताकलापोपहितनियतसङ्कल्पविषयो व्रतमिति व्रतलक्षणम्। व्रतानां सङ्कल्पसम्भवत्वमाह मनुः "सङ्कल्पमूलः कामो वै यज्ञाः सङ्कल्पसम्भवाः। व्रता-(पुंस्त्वमार्षम्)नियमधर्माश्च सर्वे सङ्कल्पजाः स्मृताः"। व्रतारम्भप्रतिष्ठाकालमाह ज्योतिषम् "गुरोर्भृगोरस्तबाल्ये वार्द्धक्ये सिंहगे गुरौ। गुर्वादित्ये दशाहे तु वक्रिजीवाद्यविंशके। दिने, प्राप्याप्रनायातातिचारिगुरुवत्सरे। प्राप्याधिगन्तृजीवस्य चातिचारे त्रिपक्षके। कन्याद्यकुत सप्ताहे नीचस्थेऽप्यमलिम्लुचे। आनतर्क्षिकृतके मासि क्षये राहुयुते गुरौ। पौषादिकचतुर्मासे चरणाङ्कितवर्षके। एकेनाह्ना चैकदिने द्वितीयेन दिनत्रये। तृतीयेन तु सप्ताहे माङ्गल्यानि जिजीविषुः। विद्यारम्भकर्णवेधौ चूड़ोपनयनोद्वहान्। तीर्थयानमनाद्यं तथा

नादिशुद्धेरेव च । परीक्षाराधयन्त्रांश्च पुरश्चरणदीक्षणे । व्रतारम्भप्रतिष्ठे च स्त्रीहारम्भप्रवेशने । प्रतिष्ठारम्भणे देवकूपादेर्वर्जयन्ति च । द्वाविंशद्दिवसस्यास्ते जीवस्य भार्गवस्य च । द्वादशप्रतिर्मर्हन्त्यस्ते पादास्ते द्वादश क्रमात् । अस्तात् प्राक् पश्चयोः पक्षं गुरोर्वार्द्धकबालते । पक्षं वृद्धो पश्चादस्ते तु भृगुर्बालो दशाहिकः । पादास्ते तु दशाहानि वृद्धो बालो दिनत्रयम्" । सिंहस्थ गुरौ विशेषस्तु ज्योतिःकौमुद्याम् "गङ्गाया उत्तरे तीरे गिरिराजस्य दक्षिणे । सिंहस्थं मकरस्थञ्च गुरुं यत्नेन वर्जयेत्" इति । अथ व्रतानुष्ठानं तत्र देवलः "अभुक्त्वा प्रातराहारं स्नात्वाचम्य समाहितः । सूर्यादिदेवताभ्यश्च निवेद्य व्रतमाचरेत्" । अत्र प्रातर्व्रतमाचरेदित्यन्वयः ततश्चाहारमभुक्त्वा इति पूर्वदिने एकभक्तं कृत्वा इत्यर्थकम् दिवारात्रिभोजनद्वयस्यैकतरनिवृत्त्यैकतरस्यावशीयमानत्वात् । स्वीकृतव्रताकरणे छागलेयः "यो गृहीत्वा व्रतं मोहात् नाचरेत् काममोहितः । जीवन् भवति चाण्डालो मृतः श्वा चैव जायते" । अत्र प्रायश्चित्तमाह शाम्बपुराणम् "क्रोधात् प्रमादात् लोभाद्वा व्रतभङ्गो भवेद्यदि । उपवासत्रयं कुर्य्यात् कुर्य्याद्वा केशमुण्डनम् । प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत्" । वाशब्दः समुच्चये तेन मुण्डनञ्च कुर्य्यादित्यर्थः । प्रमादात् व्रतदकरणे प्रतिप्रसवमाह देवलः "सर्वभूतभयं व्याधिः प्रमादो गुरुशासनम् । अव्रतघ्नानि कथ्यन्ते सकृदेतानि शास्त्रतः" । आरम्भानन्तरमशौचं न प्रतिबन्धकम् "व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्च्चने जपे । आरब्धे सूतकं न स्यादनारब्धे तु सूतकम्" विष्णूक्तेः । व्रतारम्भः सकृत्त्व एव तत्रैवोक्तः । आरब्धव्रतस्य समापनं विना मरणे तत्फलप्राप्तिरपीत्याहाङ्गिराः "योयदर्थं चरेद्धर्ममसमाप्य मृतो यदि । स तत्पुण्यफलं प्रेत्य प्राप्नोति मनुरब्रवीत्" । प्रेत्य परलोके । अशक्तौ जलादिपाने दोषाभावमाह बौधायनः "अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः । हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्" । गर्भिण्यादौ विशेषमाह शाम्बपुराणम् "गर्भिणी सूतिका नक्तं कुमारी च रजस्वला । यदा शुद्धा तदान्येन कारयेत् क्रियते तदा" । अशुद्धा पूजादिकं कारयेत् कायिकमुपवासादिकं सदा अशुद्धाशुद्धा वा स्वयं कुर्य्यात् । उपवासाशक्तौ नक्तं कुर्वीत । "उपवासेष्वशक्तानां नक्तं भोजनमिष्यते" इति वचनात् । व्रतदिने वर्ज्यान्याह हारीतः "पतितपाषण्डनास्तिकसम्भाषानृताभिधानादिकमुपवासदिने वर्जयेत्" । तथा कूर्मपुराणम् "बहिष्पांसान्त्यजं सूतिं पतितञ्च रजस्वलाम् । न स्पृशेन्नाभिभाषेत नेक्षेत हरिवासरे" । व्रतानुष्ठानकालश्च तत्तत्तिथिविहितपूजाप्रधानकालपूर्वाह्णे प्राप्ततिथ्योर्ह्या यथा नरसिंहपुराणम् "दैवकृत्यन्तु पूर्वाह्णे मनुष्याणाञ्च मध्यमे । अपराह्णे पितॄणाञ्च कार्य्याण्येतानि यत्नतः" इति तथा श्रुतिरपि "पूर्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणामिति" । उभयदिने पूर्वाह्णलाभे विशेषवचनं विना युग्मादिवचनाद्व्यवस्था" । संक्रान्तिनिमित्तं तत्तत्संक्रान्तिपुण्यकाल एव कार्य्यम् । "त्रुटेः सहस्रभागो यः स कालो रविसंक्रमः" इत्युक्तेः संक्रान्तिकालस्यातिसूक्ष्मत्वेन कर्मानर्हतया संक्रान्तिपदस्य लक्षणया तत्परत्वात् । अत्र तु "वृश्चिकस्थे तु संक्रान्त्यां पुत्त्रकामा व्रतं चरेत्" इति भविष्यपुराणीयेन कार्त्तिकेयव्रतस्य संक्रान्तिविहितत्वेऽपि "सायंकाले समारोप्य प्रातःकाले विसर्जयेत्" इति भविष्यपुराणीयेन पूजाया रात्रिमात्रकर्त्तव्यत्वाभिधानात् तदङ्गोपवासस्य चाहोरात्रसाध्यतया पुण्यकाले तदसम्भवात् तद्युक्ताहोरात्र एव कर्त्तव्यम् । ततश्च संपूर्णाहोरात्रात् परं वृश्चिकसंक्रान्तौ परदिने पूर्व्वयामद्वयस्य पुण्यकालत्वेन तद्युक्ताहोरात्र एव कार्त्तिकेयव्रतं कर्त्तव्यम् दिवा तदङ्गस्नानादेः व्रतत्वेन प्रातरारम्भार्हत्वात् तदङ्गोपवासस्य प्रातरारम्भार्हत्वाच्च । अन्यान्यव्रतेषु युग्मवचनेन शुक्लकृष्णपक्षादिभेदेन वा तिथिविवेकोक्ता व्यवस्थाऽनुसरणीया ।

व्रतप्रतिष्ठाकालश्च पूर्वोक्तेन "गुरोर्भृगोरस्तवाल्ये वार्द्धक्ये सिंहगे गुरौ" इत्यादिवचनेनोक्तगुरुशुक्रास्तमयादिभिन्नः शुद्धसमय एव कालः । तत्र "सर्व्वेषूक्तेषु कर्त्तव्या प्रतिष्ठा विधिना बुधैः । फलार्थिभिरप्रतिष्ठं यस्मान्निष्फलमुच्यते" इति हयशीर्षपञ्चरात्रीयवचनेऽकरणे निष्फलत्वश्रुतेः प्रतिष्ठा नित्या सा च न व्रताङ्गं किन्तु कर्मान्तरम् । "समाप्ते तु व्रते तत्र प्रतिष्ठा तदनन्तरम्" ब्रह्मपुराणात् । इत्यञ्च तद्दिनेऽशौचादौ यथा न व्रतानुष्ठानं तथा समयाशुद्धावपि नानुष्ठानम् । यत्तु "समाप्ते तु व्रते तत्र प्रतिष्ठा तदनन्तरम् । न कालनियमस्तत्र विप्रे परार्द्धिके" इति तत्सम्पूर्णदिवसे समयाशुद्धावपि प्रतिष्ठाविधायकं वचनं तत् कामधेनुकल्पतरुकारादिभिरलिखितत्वादनाकरम् । यदेव व्रतं

मासपक्षादिकालविशेषनियन्त्रितं काम्यं तस्यैव प्रतिष्ठा यत् पुनर्नित्यं कालविशेषानियन्त्रितन्तु न तस्य प्रतिष्ठा पूर्वोक्तहयशीर्षे काम्यफलार्थिभिरित्यनेन काम्यस्यैव प्रतिष्ठाविधानात् कालविशेषानियन्त्रिते तदसम्भवात्" ।

व्रतभेदाश्च नानापुराणोक्तास्तत्र हेमा० व्र० खण्डोक्ता अकारादिवर्णाद्यक्षरपूर्वकशब्दानुसारेणात्र कर्त्तव्यकालसहिताः प्रदर्श्यन्ते तेषामितिकर्त्तव्यता तु तत्र दृश्या

अक्षयतृतीयाव्रतं भविष्योत्तरोक्तम् । "वैशाखस्य सितामेकां तृतीयामक्षयां शृणु । तस्यां स्नानं जपो होमः स्वाध्यायः पितृतर्पणम् । दानञ्च क्रियते किञ्चित् तत् सर्वं स्यादिहाक्षयम् । आदिः कृतयुगस्येयं युगादिस्तेन कथ्यते । सर्वपापप्रशमनी सर्वसौख्यप्रदायिनी" ।

अक्षयफलावाप्तिकवैशाखतृतीयाव्रतं विष्णुधर्मोत्तरोक्तम् । "वैशाखशुक्लपक्षे तु तृतीयायामुपोषितः । अक्षयं फलमाप्नोति सर्वस्य सुकृतस्य तु । सा तथा कृत्तिकोपेता विशेषेण च पूजिता । तत्र दत्तञ्च जप्तञ्च सर्वमक्षयमुच्यते । अक्षया सा तिथिस्तस्मात्तस्यां सुकृतमक्षयम् । अक्षतैः पूजितोविष्णुस्तेन सा चाक्षया स्मृता । अक्षतैस्तु नरः स्नातो विष्णोर्दत्त्वा तथाऽक्षतान् । सक्तून् सुसंस्कृतांश्चैव हुत्वा चैव तथाक्षतान् । विप्रेषु दत्त्वा तानेव तथा सक्तून् सुसंस्कृतान् । यथान्नभुक् महाभाग ! फलमक्षयमश्नुते । एकामप्युक्तां कृत्वा च तृतीयां यदुनन्दन ! । एतावत्तु तृतीयानां सर्वासान्तु फलं लभेत्" ।

अखण्डैकादशीव्रतं वामनपु० उक्तम् । "मासि चाश्वयुजे ब्रह्मन् ! यदा पद्मजसन्निधिः । नाभ्यां निर्याति जगतामीशितुश्चक्रधारिणः । तस्मिन् रम्ये शुभे काले या शुक्लैकादशी भवेत् । तस्यां सम्यग्यजेद्विष्णुं येन अखण्डं प्रपूर्य्यते" । येन विष्णुप्रपूजनेन अखण्डमसम्पूर्णं धर्मादिभिः परिपूर्णम्भवतीत्यर्थः" ।

अग्निचतुर्थीव्रतं विष्णुधर्मोत्तरोक्तम् । "इदमन्यत् प्रवक्ष्यामि चतुर्मूर्त्तिव्रतं तव ।। चतुरात्मा हरिः प्रोक्तश्चत्वारश्च हुताशनाः । आहिताग्निर्द्विजो यस्य विद्यतेऽग्निचतुष्टयम् । सोपवासश्चतुर्थ्यान्तु शुक्लपक्षस्य फाल्गुने । अभ्यर्च्य चतुरात्मानं वासुदेवमतन्द्रितम् । तत्रैव दद्याद् द्विजेन्द्राय तिलप्रस्थानि षोडश । सुवर्णञ्च सुवर्णञ्च वस्त्र घृततुलामपि" । सुवर्णं कर्षोन्यूनम् "एवं संवत्सरं कृत्वा व्रतमेतदतन्द्रितः । सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते" ।

अघोराख्यचतुर्दशीव्रतं भविष्योत्तरे "भाद्रे मास्यसिते पक्षे अघोराख्या चतुर्दशी । तामुपोष्य नरो याति शिवलोकमतन्द्रितः" ति०त० ।

अङ्गारकचतुर्थीव्रतं मत्स्यपु० उक्तम् । "चतुर्थ्यङ्गारकदिने यदा भवति भारत ! । मृदा स्नानं तदा कुर्य्यात् पद्मरागविभूषितः । अग्निर्मूर्द्धा दिवो मन्त्रं जपंस्तिष्ठेदुदङ्मुखः । शूद्रस्तूष्णीं जपन् जोषमास्ते भोगविवर्जितः" ।

अचलासप्तमीव्रतं भविष्योत्तरोक्तम् । "माघस्य सितसप्तम्यां सर्वकामफलप्रदम् । रूपसौभाग्यजननं स्नानं कुरु वरानने ! । कृत्वा षष्ठ्यामेकभक्तं सप्तम्यां निश्चलं जलम् । रात्र्यन्ते चालयेयास्तु दत्त्वा शिरसि दीपकम् । माघस्य सितसप्तम्यामचलत्वाज्ज्वलितश्च यत् । एकभक्तेन सन्तिष्ठेत् षष्ठ्यां सम्पूज्य भास्करम् । सप्तम्यां तु व्रजेत् प्रातः सुगम्भीरजलाशयम्" ।

अदारिद्र्यषष्ठीव्रतं स्कन्दपु०उक्तम् । "षष्ठी नाम तिथिर्याऽस्या मान्या दैवतैरपि । एकभक्तेन नक्तेन तथैवायाचितेन च । उपवासेन दानेन तैलक्षारविवर्जितः । अयं हि भगवान् देवो भास्करस्य परद्युतिः । येन शीघ्रेण हन्यते तद्गुह्यं कथयाम्यहम् । गोपनीयं व्रतं दिव्यमिह लोके फलप्रदम् । यस्मिन् कृते व्रते चैव दरिद्रो न भवेत् कुले । षष्ठीतिथिं समुद्दिश्य ब्राह्मणस्य च भोजनम् । शाल्योदनञ्च पयसि कृत्वा च शर्करायुतम् । बाहुल्यघृतसंयुक्तं वर्षमेकं प्रदापयेत् । कुले तस्यैव ये जाता ये भविष्यन्ति मानवाः । इह तस्यैव ये सन्ति तान् दारिद्र्यं न गच्छति" ।

अनघाष्टमीव्रतं भविष्योत्तरोक्तम् । "कृष्णाष्टम्यां मार्गशीर्षे दाम्पत्यं दर्भनिर्मितम् । अनघं चानघीञ्चैव बहुपुत्रैः समन्वितम् । स्थापयित्वा शुभे देशे गोमयेनानुलेपिते । स्नात्वा समर्चयेत् पुष्पैः सुगन्धैश्चानुलेपनैः । ऋग्वेदोक्तमन्त्रैश्च दशकं मनसा स्मरन् । अनघं वासुदेवन्तु पत्नी तस्याप्यसम्भवा । प्रद्युम्नादिपुत्रवर्गं हरिवंशे यथोदितम् । वर्षमेकं ततः कृत्वा दृष्टं तदनघं स्मृतम्" ।

अनङ्गत्रयोदशीव्रतं भविष्योत्तरोक्तम् । "अनङ्गो भगवान् शम्भुस्तेजोमूर्त्तिरगोचरः । स एव देवोयेनास्यां तेनानङ्गत्रयोदशी । प्रसिद्धा समनुप्राप्ता नित्या सर्वफलप्रदा । मार्गशीर्षेऽमले पक्षे त्रयोदश्यां समाहितः । स्नानं नद्यां तडागे वा गृहे वा कूपतोऽपि वा । कृत्वाभ्यर्च्य महादेवं विप्रानाकर्षिपूजयम् । लिङ्गं स्वायम्भुवं भूतमभावे

यत्प्रतिष्ठितम्। तदनङ्गमिति प्रोक्तं पूजयेद्भक्तितोव्रती"। एतत् व्रतं तदेशघि वर्षसाध्यम्।

अनङ्गत्रयोदशीव्रतं कालोत्तरोक्तम्। "चैत्रशुक्लत्रयोदश्यामनङ्गं तु पटे लिखेत्। नीलदूर्वाङ्कुरश्यामं कृतमानं प्रमाणतः। रतिप्रीत्युभयोपेतं पौष्पसायकचापधृक्। पटेषु सुस्थितः कार्य्यः सर्वैश्चापशरैर्गणैः"।

अनन्तचतुर्दशीव्रतं भविष्योक्तम् "अनन्तव्रतमप्यन्यच्छिणवाख्यामनुत्तमम्। सर्वपापहरं नृणां स्त्रीणां चैव युधिष्ठिर!। शुक्लपक्षे चतुर्दश्यां मासि भाद्रपदे भवेत्। तस्यानुष्ठानमात्रेण सर्वपापाद्व्यपोहति"।

अनन्ततृतीयाव्रतं पद्मपु० उक्तम्। "शृणुष्वावहिता देवि! तथैवानन्तपुण्यकृत्। नराणामथ नारीणामाराधनमनुत्तमम्। नभस्ये वाथ वैशाखे मार्गशीर्षेऽथ वा पुनः। शुक्लपक्षे तृतीयायां स्नातः सन् गौरसर्षपैः। गोरोचनाऽथ गोमूत्रं मुस्तागोशकृतं दधि। चन्दनेन च संमिश्र्य ललाटे तिलकं न्यसेत्। सौभाग्यारोग्यकृद्यस्मात् सदा च ललिताप्रियम्। प्रतिपक्षतृतीयायां पुमान् वाथ सुवासिनी। धारयेद्रक्तवस्त्राणि कुसुमानि सितानि च"।

अनन्तद्वादशीव्रतं विष्णुरहस्योक्तम्। "द्वादश्यां शुक्लपक्षे च मासि भाद्रपदे नरः। नैवेद्यगन्धपुष्पाद्यैरर्चयेच्छेषशायिनम्। न चाऽऽलपेद्विकर्मस्थान् पाषण्डान् पतिताश्च यान्। स्नात्वा जपन्ननन्तेति शतमष्टोत्तरं बुधः। व्रजंस्तिष्ठन् स्वपन् भुञ्जन् बुध्यन् प्रस्खलिते क्षुते। वेदनार्त्तः स्मरेन्नित्यमनन्तं मनसा गिरा। व्रतमेतद्विधानेन कुर्य्यात् संवत्सरं नरः"।

अनन्तपञ्चमीव्रतं स्कन्दप्रभासोक्तम्। "यो नरः पूजयेद्‌ नागं पञ्चम्यां फाल्गुने सिते। पञ्चोपचारविधिना मिताहारो जितेन्द्रियः। न तं दशन्ति फणिनो दश वर्षाणि पञ्च च। विषं न क्रमते तस्य कुले मातृकुलेऽपि च। तस्मात् तं पूजयेद्‌ यत्नात् पञ्चम्यान्तु विशेषतः"।

अनन्तफलसप्तमीव्रतं भविष्योक्तम्। "शुक्लपक्षे तु सप्तम्यां मासि भाद्रपदेऽच्युत!। प्रणम्य शिरसा देवं पूजयेत् सहस्राचनम्। पुष्पधूपादिभिर्वीरः कृतपानाञ्च तर्पणैः"। कृतपानां, ब्राह्मणादीनाम्। "पाषण्डादिभिरालापम-कुर्वन्नियतात्मवान्। विप्राय दक्षिणां दत्त्वा नक्तं भुञ्जीत वाग्यतः। तिष्ठन् व्रजन् प्रस्थितश्च क्षुतप्रस्खलितादृते। आदित्यनामस्मरणं कुर्य्याद्वुच्चारणं तथा। अनेनैव विधानेन मासान् द्वादश वै क्रमात्। उपोष्य पारणे पूर्वं समभ्यर्च्य जगद्गुरुम्। पुण्येन श्रवणेनेह प्रथमेत् पुष्टिमाप्नुयात्। एवं यः पुरुषः कुर्य्यादादित्याराधनं शुचिः। नारी वा स्वर्गमभ्येत्य सानन्त्यं फलमश्नुते"।

अनोदनसप्तमीव्रतं भविष्योक्तम्। "शुक्लपक्षे तु वैशाखे षष्ठ्यां सम्यगुपोषितः। पूजयेद्‌ भास्करं भक्त्या पुष्पधूपादिलेपनैः। येन तत् पूजयेद्देवं स विधिः कथ्यते तव। तदा वैश्रवणो येन विधिनाऽपूजयन्नृप। दन्तखाद्यं भवेद्‌ यद्धि तदोदनमिति स्मृतम्। भक्ष्यं चूष्यं तथा लेह्यमोदनाख्यैः प्रकीर्त्तितम्। तोयं चाऽनोदनं प्रोक्तं तस्मात् तत्परिवर्ज्जयेत्। तत् परिवर्जयेदिति तच्छब्देन ओदनः परामृश्यते तस्मादोदनमेव वर्जयेन्न तु पेयमपि तस्यानोदनत्वात्"। "इत्येषानोदना नाम सप्तमी भरतर्षभ!। यामुपोष्य नरो भक्त्या धनधान्यमवाप्नुयात्"।

अपराजितासप्तमीव्रतं भविष्यपु० "मासि भाद्रपदे शुक्ला सप्तमी या गणाधिप!। अपराजितेति विख्याता महापातकनाशिनी। चतुर्थ्यामेकभक्तन्तु पञ्चम्यां नक्तमादिशेत्। उपवासस्तथा षष्ठ्यां सप्तम्यां पारणं भवेत्। पारणान्यत्र चत्वारि कथितानि मनीषिभिः। पुष्पाणि करवीराणि तथा रक्तञ्च चन्दनम्। धूपक्रिया गुग्गुलुना नैवेद्यं गुडपूपकाः। नभस्यादिषु मासेषु विधिरेष प्रकीर्त्तितः"। इदं व्रतं वर्षसाध्यम्।

अमावस्याव्रतं कूर्मपु० उक्तम्। "अमावस्यामनुप्राप्य ब्राह्मणाय कुटुम्बिने। यत् किञ्चित् देवदिशे दद्यादुद्दिश्य शङ्करम्। प्रीयतामीश्वरः सोमो महादेवः सनातनः। सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति"।

अभीष्टसप्तमीव्रतं विष्णुधर्मोत्तरोक्तम्। सप्तम्यामुपक्रमे "पूजयित्वा समुद्रांश्च द्वीपांश्च तदा नरः। पातालांश्च महाभाग! भुवमाप्नोत्यभीप्सिताम्"।

अमुक्ताभरणसप्तमीव्रतं भविष्योक्तम्। "भद्रे! भाद्रपदे मासि सप्तम्यां सलिलाशये। स्नात्वा शिवं मण्डलके लेखयित्वा तथाम्बिकाम्। भक्त्या सम्पूज्य समयं कुर्य्याद्बद्ध्वा करे गुणम्। यावज्जीवं मयात्मा तु शिवस्य विनिवेदितः"।

अरुन्धतीव्रतं स्कान्दपु० उक्तम्। "अरुन्धतीव्रतं वक्ष्ये सदा सौभाग्यदायकम्। येन चीर्णेन वै सम्यक् नारी सौभाग्यभाजनम्। जायते रूपसम्पन्ना पुत्रपौत्रसमन्विता। वसन्तर्त्तुं समासाद्य तृतीयायां सुरर्षभ!। स्नानं कृत्वा

तु विधिवच्चिरात्रोपोषिता सती । मिथुनानि च चत्वारि समाहूय व्रतव्रता । पूजयेत् पुष्पताम्बूलैश्चन्दनैश्च तथाक्षतैः" ।

अर्कव्रतं भविष्योक्तम् । "सप्तम्यां च तथा षष्ठ्यां पक्षयोरुभयोरपि । योऽब्दमेकं नक्तभोजी नियतात्मा जितेन्द्रियः । यत्पुण्यं परमं प्रोक्तं सततं सत्रयाजिनाम् । सत्यवादिषु यत् पुण्यं यत् पुण्यं तीर्थगामिनाम् । तत्फलं सकलं प्राप्य मम लोकमुपैति सः" ।

अर्कसप्तमीव्रतं ब्रह्मपु० उक्तम् । "अर्कसंपुटसंयुक्तमुदकप्रसृतिं पिबेत् । क्रमाद् दद्याच्चतुर्विंशमेवैकं क्रियते पुनः । द्वाभ्यां संवत्सराभ्यां तु समाप्य नियमो भवेत् । सर्वकामप्रदा ह्येषा प्रसीदत्यर्कसप्तमी" ।

अर्कसम्पुटसप्तमीव्रतं भविष्यपु० "फाल्गुनामलपक्षस्य षष्ठ्यां सम्यगुपोषितः । पूजयेद्भास्करं स्नात्वा पुष्पगन्धानुलेपनैः । अर्कपुष्पैर्महाबाहो ! गुग्गुलेन सुगन्धिना । सितेन भूषयन् देवं चन्दनेन दिवाकरम् । गुडोदनञ्च नैवेद्यं पक्वान्नं विहितं रवेः । एवं पूज्य दिवा भानुं रात्रौ तस्याग्रतः स्वपेत्" ।

अर्काष्टमीव्रतं भविष्योत्तरोक्तम् । "यदाष्टम्यां शुक्लपक्षे रविवारोऽभिजायते । उपोष्या सा प्रयत्नेन तेनैव विधिना नृप ! । अर्चयेद्देवदेवेशं सह देव्या महेश्वरम् । विशेष एव एतस्य शिवस्य नयनेश्वितम् । भानुं सम्पूजयेद् भक्त्या गन्धपुष्पाक्षतैः शुभैः । शिवञ्च सितपुष्पैस्तु रक्तपुष्पैस्तथाम्बिकाम् । रक्तैरक्तासितैर्दिव्यैर्भक्तिमानर्चयेद्विभुम् । कुङ्कुमेनार्चयेद्देवीं चन्दनेन महेश्वरम्" ।

अर्कश्रावणिकाव्रतं ब्रह्माण्डपु० उक्तम् । "प्राप्ते तु श्रावणे मासि शुक्लपक्षे मनोहरे । संस्थाप्य पार्वतीं देवीं पूजयेद्भक्तियुक्तितः । नाम श्रावणिकामतः संस्मरन् पार्वतीं हृदि । श्वेतार्घ्यैः श्वेतकुसुमैः श्वेतचन्दनकेन च । गन्धैर्धूपैश्च नैवेद्यैर्यथाकालोद्भवैः फलैः । अर्घ्यं दद्यात् फलेनैव कुसुमाक्षतचन्दनैः । नमोऽर्कश्रावणि ! देवि ! सर्वपापक्षयङ्करि ! । गृहाणार्घ्यं हि देवेशि ! शङ्करेण समं मम" ।

अर्द्धोदयव्रतं स्कन्दपु० उक्तम् । "माघामायां व्यतीपात आदित्ये विष्णुदैवते । अर्द्धोदयं तमित्याहुः सहस्रार्कग्रहैः समम् । पुराकृतं वशिष्ठेन जामदग्न्येन सुव्रत ! । सनकाद्यैर्मुनिश्रेष्ठैर्बहुभिर्ब्राह्मणैस्तथा । अन्यैः शतसहस्रैश्च दृष्टं भवति कुम्भज ! । दानानां सर्वतीर्थानां फलं येन कृतं भवेत् । माघमासे कृष्णपक्षे पञ्चदश्यां रवेर्दिने । वैष्णवेन च ऋक्षेण व्यतीपाते सुदुर्लभे" । वैष्णवर्क्षं श्रवणम् "पूर्वाह्णे सङ्गमे स्नात्वा शुचिर्भूत्वा समाहितः । सर्वपापविशुद्ध्यर्थं नियतस्त्वो महेश्वरः । त्रिदैवत्यं व्रतं देवाः करिष्ये भुक्तिमुक्तिदम् । भवन्तु सन्निधौ मेऽद्य त्रयो देवास्त्रयोऽग्नयः" ।

अलवणतृतीयाव्रतं भविष्योक्तम् । "एवंविधा प्रियमुक्ता शुचिरल्पभोजना सती । सोपवासा तृतीयायां लवणं परिवर्जयेत्" । सोपवासेति व्रतारम्भे द्वितीयायां कृतोपवासा तृतीयायां लवणं परिवर्जयेत् "सा संकल्प्य वै भक्त्या व्रतमामरणान्तिकम् । गौरी ददाति सन्तुष्टा रूपसौभाग्यमेव च । लावण्यलवणं हृद्यं श्लाघ्यं पुंसां मनोऽनुगम् । पतिं मनोरमं नारी भर्त्ता भार्य्यां मनोरमाम् । गौरीव्रतेन लभते राजन् ! लवणवर्जनात्"

अविघ्नविनायकचतुर्थीव्रतं वराहपु० "कथं विघ्नहरं राजन् ! कथयामि तवानघ ! । येन सम्यक् कृतेनेह न विघ्नमुपजायते । चतुर्थ्यां फाल्गुने मासि ग्रहीतव्यं व्रतान्त्विदम् । नक्ताहारेण राजेन्द्र ! तिलान्नं पारणं स्मृतम्" । पारणं नक्तभोजनम् "तदेव वह्नौ होतव्यं ब्राह्मणाय च तद्भवेत् । चतुर्मासव्रतञ्चैव कृत्वेत्थं पञ्चमे तथा । सौवर्णं राजतं वापि कृत्वा विप्राय दापयेत्" ।

अवियोगतृतीयाव्रतं कालिकापु० उक्तम् । "अवैधव्यप्रदं स्त्रीणामवियोगव्रतन्त्विदम् । मार्गशीर्षे सिते पक्षे स्नाता शुक्लाम्बरान्विता । दृष्ट्वा चन्द्रं द्वितीयायां नक्तं भुञ्जीत पायसम् । आचम्य च शुचिर्भूत्वा दद्याच्छङ्करमर्चयेत् । सुदान्विता नमस्कृत्य विज्ञाप्य परमेश्वरम्" ।

अवियोगद्वादशीव्रतं भविष्यपु० "शुक्ले प्रौष्ठपदे मासि द्वादश्यां समुपोषितः । स्नात्वा जलाशये सम्यक् शुक्लाम्बरधरः शुचिः । जलान्ते मण्डलं कृत्वा गोमयेनातिशोभनम् । गोधूमचूर्णैः कल्प्य सलक्ष्मीकं जनार्दनम् । लेखयित्वा हरं गौरीं सावित्रीं ब्रह्मणा सह । राज्ञा (चन्द्रेण) सह रविं राजंस्त्रैलोक्योद्द्योतकारकम् । गन्धपुष्पैस्तथा धूपैर्नैवेद्यैर्भक्तितोऽर्चयेत् । अवियोगव्रतं पार्थ ! कल्येयानेन तत्कृतः । अवियोगाद्दृढमना शिरश्चाधाय केशवम्" ।

कुक्कुटसप्तमीव्रतं भविष्यपु० "शुक्लपक्षे तु सप्तम्यां मासि भाद्रपदेऽच्युत ! । प्रणम्य शिरसा देवं पूजयेत् त्रिलोचनम् । पुष्पधूपादिभिर्वीर ! कृतपानाद्य तर्पणैः ।

५

पाषण्डादिभिरालापमकुर्व्वन्नियतात्मवान् । विप्राय द-क्षिणां दत्त्वा नक्तं भुञ्जीत वाग्यतः । तिष्ठन् व्रजन् प्रस्खलंश्च क्षुतप्रस्खलितादिषु । आदित्यनामस्मरणं कुर्य्याद्दुच्चारणं तथा । अनेनैव विधानेन मासान् द्वादश वै क्रमात् । उपोष्य पारणे पूर्णे समभ्यर्च्य जगद्गुरुम् । पुण्येन श्रवणेनेह प्रणमेत् पुष्टिमाप्नुयात् । एवं यः पुरुषः कुर्य्यादादित्याराधनं शुचिः । नारी वा स्वर्गमभ्येत्य सानन्त्यं फलमश्नुते" । शुक्लपक्षे समभ्यर्च्य पुष्पधूपादिभिः शुचिः । श्रावणे मासि सप्तम्यां देवाग्र्यं सप्तवाहनम् । प्राप्येह विपुलं देवं धर्मानन्तरमव्ययम् । अमूत्र लोकमायाति दिव्यं खगपतेः शुभम्" । इत्यादि ।

अशून्यशयनद्वितीयाव्रतं भविष्यपु० "चातुर्मास्ये भवेद्राजन् ! वर्षायां व्रतमुत्तमम् । श्रावणस्य द्वितीयायां कृष्णपक्षे नराधिप ! । श्रावणादिकार्त्तिकान्तं कुर्य्यात् तत् व्रतमुत्तमम् । पुष्पं धूपञ्च नैवेद्यं दीपमालां विशेषतः" । "ततो भाद्रपदे मासे यवदानं ददाति च । ततश्चाश्विद्वितीयायां शय्यादानं विशेषतः । न तस्य शून्यं शयनमपुत्रो न भवेन्नरः । ततश्च कार्त्तिके मासि द्वितीयायां नराधिप ! । शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च । उपहारं भगवते दद्यात् सर्वं प्रयत्नतः" इत्यादि ।

अशोकत्रिरात्रव्रतं भविष्योत्तरोक्तम् । "तच्छृणु त्वमशोकाख्यं त्रिरात्रव्रतमुत्तमम् । मासि मार्गशिरे चैव ज्यैष्ठे भाद्रपदे तथा । शुक्लपक्षे पञ्चदश्यामेकभक्तन्तु कारयेत् । ततः प्रातः समुत्थाय स्नानं कुर्य्यात् ततो व्रती" ।

अशोकपूर्णिमाव्रतं विष्णुधर्मोत्तरोक्तम् । "अशोकपूर्णिमामेतां शृणुष्व गदतो मम । उपोष्य यस्यां नरः शोकं नाप्नोति स्त्री तथापि वा । फाल्गुनामलपक्षस्य पौर्णमास्यां नृपोत्तम ! । मृज्जलेन नरः स्नात्वा दत्त्वा शिरसि वै मृदम् । मृत्प्राशनं ततः कृत्वा कृत्वा च स्थण्डिलं मृदा । पुष्पैर्गन्धैः समभ्यर्च्य भूधरं नाम नामतः । धरणीञ्च तथा देवीमशोकेति च कीर्त्तयेत् । यथा विशोका धरणिः कृतवत्या जनार्द्दनात् । तथा मां सर्वशोकेभ्यो मोचयाशेषधारिणि !" ।

अशोकप्रतिपद्व्रतं भविष्योत्तरोक्तम् "अश्वयुक्शुक्लपक्षस्य प्रथमेऽह्नि दिनोदये । अशोकं पूजयेत् वृक्षं प्ररूढशुभपल्लवम् । प्ररूढैः सप्तधान्यैश्च गुडकैर्मोदकैः शुभैः । फलैः कालोद्भवैर्दिव्यैर्नारिकेलैः सदाडिमैः । धूपदीपादिना तत्र पूजयेत्तरुमुत्तमम् । अशोकं पाण्डवश्रेष्ठ ! शोकं नाप्नोति कुत्रचित् । पितृभ्रातृपतिश्वश्रूसुत जामातृणां तथा" ।

अशोकाष्टमीव्रतं लिङ्गपुराणोक्तम् "अशोककलिकाश्चाष्टौ ये पिबन्ति पुनर्वसौ । चैत्रे मासि तथाष्टम्यां न ते शोकमवाप्नुयुः" । अत्र पुनर्वसुयोगः प्राशस्त्यार्थः । कूर्मपुराणेऽपि "अशोकस्याष्टकलिका मन्त्रेणोक्तेन भक्षयेत् । शोकं नैवाप्नुयान्मर्त्त्यो ह्युपवासानपि जायते" । "शुक्लाष्टम्यां तु संप्राप्ते मासि भाद्रपदे तथा । दूर्वाप्रतानं ह्युत्तरस्यां दिशि गामिनम् । पूजयेदुद्धृत्यानीय गन्धमाल्यानुलेपनैः । फलमूलैस्तथा चैव दीपं धूपैर्विसर्जयेत् । अग्निपक्वं तथा सर्वं निवेद्य च कथञ्चन । भोक्तव्यञ्च तथा ब्रह्मन् ! वह्निपक्वविवर्जितम् । दूर्वाङ्कुरस्त्वां सम्पूज्य विधिना यौवने प्रियम् । यौवनं स्थिरमाप्नोति यत्र यत्राभिजायते । अष्टमीषु च सर्वासु पूजनीयाप्यशोकिका । गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । तस्मिन्नहनि या भुङ्क्ते नक्तमिन्दुविवर्जिते । भवत्यथो विशोका सा यत्र यत्राभिजायते । अष्टमीषु च सर्वासु नचेत् करोति वै सुते । प्रोष्ठपद्यामतीतायां या स्यात् कृष्णाष्टमी द्विज ! । तस्यामवश्यं कर्त्तव्यं देवीं पूज्य यथाविधि" । इदं व्रतान्तरम् ।

अहिंसाव्रतं पद्मपु० "वर्जयित्वा पुमान्मांसमब्दान्ते गोप्रदो भवेत् । तद्वद्धेमरूगं दत्त्वा सोऽश्वमेधफलं लभेत् । अहिंसाव्रतमित्युक्तं कल्पान्ते भूपतिर्भवेत्" ।

आग्नेयव्रतं भविष्योत्तरोक्तम् । "सप्तनवम्यां भक्तेन पूजयेद्विन्ध्यवासिनीम् । पुष्पैर्धूपैस्तथा दीपैर्नैवेद्यैर्विविधैरपि । पूजयित्वा ततो विद्यात् पञ्जरं शुकसंयुतम् । हेमं विप्राय दद्याद्यः स वाग्मी जायते नरः । सप्तव्रतेन नक्तेन अग्निलोकप्रदायकम्" ।

आज्ञासंक्रान्तिव्रतं स्कान्दपु० "सङ्क्रान्तिदिवसे पुण्ये प्रारभेन्नियमं व्रते । पद्ममष्टदलं कृत्वा कुङ्कुमेन तु भास्करम् । पूजयेन्मन्त्रमुच्चार्य्य विधिवद्गुरुसन्निधौ । आज्ञा तेजस्करी यत्ते प्रसादीप्रियमस्करी । आज्ञां सर्वत्रगां देव ! मम देहि नमोऽस्तु ते । पूज्यैवं कुङ्कुमेनाथ दद्याद्विप्राय भोजनम् । उद्यापने तु चण्डांशुं सौवर्णं सरथं तथा । एकचक्रञ्च सप्ताश्वमरुणेन समन्वितम् । यः कुर्य्याद्विधिनानेन आज्ञासंक्रान्तिमुत्तमाम् । अथाज्ञाऽस्खलिता लोके सूर्य्यतस्तस्य जायते" ।

आदित्यव्रतं भविष्यपुराणोक्तम् "योऽब्दमेकं प्रकुर्वीत नक्तं

हि मद्दिने नरः । ब्रह्मचारी जितक्रोधो ममार्चनं-परः खग ! । संवत्सरान्तमासाद्य सप्तम्यां द्विजो-त्तमान् । भोजयित्वा व्रती ब्रूयात् प्रीयतां मे दिवाकरः । यश्च भक्तिसमायुक्तो मम लोकं स गच्छति । स च भानुकृतं लोकं ध्रुवं समाप्नुयान्नरः । ये त्वादित्य-दिने प्राप्ते श्राद्धं कुर्वन्ति मानवाः । सप्तजन्मानि ते प्राप्ताः सम्भवन्ति विरोगताम् । वैराग्यमिह वै प्राप्य मम लोकं व्रजन्ति ते । उपवासन्तु कुर्वन्ति ये त्वादित्य-व्रते सदा । जपन्ति तु महाश्वेतामीप्सितं लभते फलम् । विशेषादादित्यदिने जपमानो गणाधिपान् । षडक्षरं महाश्वेतं जपन् वैरोचनं पदम्" ।

आदित्यशयनव्रतं आदित्यपु० "आदित्यशयनं नाम यथावच्छङ्कराचनम् । येषु नक्षत्रयोगोऽत्र पुराणज्ञाः प्रचक्षते । यदा हस्तेन सप्तम्यामादित्यस्य दिनं भवेत् । सूर्य्यस्य वाथ संक्रान्तौ सा तिथिः सर्वकामिकी । उमामहेश्वरस्यार्च्चामर्चयेत् सूर्य्यनामभिः । सूर्य्यार्च्चां शिवलिङ्गञ्च उभयं पूजयेत्ततः । उमापते रवेर्वापि न भेदः क्वचिदिष्यते । यस्मात् तस्मान्नृपश्रेष्ठ ! स्वगृहे शम्भुं समर्च्चयेत्" इत्यादि ।

आदित्यनन्दादिव्रतं भविष्यपु० "द्वादशैते ह्यभे वारो आदित्यस्य महात्मनः । नन्दो भद्रस्तथा सौम्यः कामदः पुत्रदस्तथा । जयो जयन्तो विजय आदित्यानामुपास्थितः । हृदयो रोगहा चैव महारोगविनाशनम् । मालतीकुसुमानीह श्वेतचन्दनमुत्तमम् । धूपं गुग्गुलुश्रेष्ठेन नैवेद्यं यूपमेव तु । दत्त्वा पूपांस्तु विप्राय ततो भुञ्जीत वाग्यतः" ।

आनन्दव्रतं मत्स्यपु० "चैत्रादिचतुरो मासान् जले कुर्य्यादयाचितम् । व्रतान्ते मणिकन्दद्याद्वस्त्रसमन्वितम् । तिलपात्रं हिरण्यञ्च ब्रह्मलोके महीयते । कल्पान्ते भूपतिर्नाम्ना ह्यानन्दव्रतमुच्यते" ।

आनन्दपञ्चमीव्रतं भविष्यपु० "पञ्चमी दयिता राजन् ! नागानां नन्दवर्द्धिनी । पञ्चम्याः किल नागानां भवतीत्युत्सवो महान् । वासुकिस्तक्षकश्चैव कालियो मणिभद्रकः । धृतराष्ट्रश्चैरावतः कर्कोटकधनञ्जयौ । एते प्रयच्छन्त्यभयं प्राणिनां प्राणदाः सदा । पञ्चम्यां स्नापयन्तीह नागान् क्षीरेण ये नराः । तेषां कुले प्रयच्छन्ति अभयं प्राणदक्षिणाम्" ।

आनन्दानवमीव्रतं भविष्यपु० "आनन्दा नन्दिनी नन्दा महानन्दा महीपते ! । तथाद्या नवमी पुण्या पञ्चमी महती स्मृता । फाल्गुनामलपक्षस्य नवमी या महीपते ! । आनन्दा सा महापुण्या सर्वपापहरा शुभा । कृत्वैकभक्तं पञ्चम्यां षष्ठ्यां नक्तं तथा नृप ! । अयाचितन्तु सप्तम्यामुपवासः परेऽहनि । य एवं पूजयेद्भक्त्या नवम्यां विधिवन्नृप ! । सोपवासोऽर्च्चयेद्देवीं धूपं दद्यात् तथागुरुम् । मांसैश्चतुर्भिराद्यीयं द्वितीयं पारणं स्मृतम्" । आद्यीयम् आद्यम् "भोजयेद्विप्रकन्याश्च नवम्यां त्रिहायणिकाः । मासि मासि महाबाहो ! यथा शक्त्या यथाविधि । आषाढ़े श्रावणे मासि मासि भाद्रपदे तथा । तथाचाश्वयुजे मासि पूज्या भगवती विभो ! । कृत्वैकभक्तं पञ्चम्यां षष्ठ्यां नक्तं तथा नृप ! । अयाचितं तु सप्तम्यामुपवासः परेऽहनि । सोपवासो नवम्यां तु पूजयेद्विधिवच्छिवाम् । सोऽश्वमेधफलं प्राप्य विष्णुलोके महीयते" ।

आयुधव्रतं विष्णुधर्म्मोत्तरोक्तम् । "इदमन्यत् प्रवक्ष्यामि चतुर्मूर्त्तिव्रतन्तव । शङ्खचक्रगदापद्मचतुरात्मा प्रकीर्त्तितः । वासुदेवः स्मृतः शङ्खः चक्रं सङ्कर्षणस्तथा । प्रद्युम्नश्च गदा पद्ममनिरुद्धो जगद्गुरुः । श्रावणादिषु मासेषु वह्निःस्नातस्तु नक्तभुक् । तेषान्तु पूजनं कुर्य्यात् प्रतिमासमनुक्रमात् । गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । ततस्तु कार्त्तिकस्यान्ते समाप्ते तु तथा व्रते । ब्राह्मणान् भोजयेद्भक्त्या दद्याच्छक्त्या च दक्षिणाम् । कांस्यपात्रञ्च सद्रतं सहवर्णं तथैव च । कृत्वा व्रतं मासचतुष्टयञ्च प्राप्नोति लोकं त्रिदशेश्वरस्य । मानुष्यमासाद्य तथैव पश्चात् वसुन्धरेशो भवतीह वीरः" ।

आरोग्यव्रतं विष्णुधर्म्मोत्तरोक्तम् । "प्रोष्ठपद्यामतीतायां प्रतिपत्प्रभृति क्रमात् । यावच्च दिवाऽश्वीयामनिरुद्धं प्रपूजयेत् । पूर्व्वोक्तेन विधानेन यावदाश्वयुजी भवेत्" । पूर्व्वोक्तेन रूपावाप्तिव्रतोक्तेन "सारसैरर्च्चयेद्देवं जातीपुष्पैर्दिने दिने" । सारसैः कमलैः "घृतेन जुहुयाद्वह्निं घृतं दद्याद्द्विजातये । भोजनं गोरसप्रायं तथा विप्रांश्च भोजयेत् । त्रिरात्रोपोषितः सम्यगाश्वयुज्यान्ततो नरः" ।

अपरं वराहपु० "अथापरं महाराज व्रतमारोग्यसंज्ञितम् । कथयामि परं पुण्यं सर्वपापप्रणाशनम् । तस्यैव माघमासस्य सप्तम्यां समुपोषितः । पूजयेद्भास्करं देवं विश्वरूपं सनातनम् । आदित्य ! भास्कर ! रवे ! भानो ! सूर्य्य ! दिवाकर ! । प्रभाकरेति संपूज्यो देवः सर्वेश्वरो विभुः । षष्ठ्यां चैव कृताहारः सप्तम्यामुपवासकृत् । अष्टम्याञ्चैव भुञ्जीत एष एव विधिः क्रमः । अनेन वत्सरं

पूर्णं विधिना योऽर्चयेद्रविम् । तस्यारोग्यं धनं धान्यमिह जन्मनि जायते । परत्र च सुखं स्थानं यद्गत्वा न निवर्त्तते"।

आरोग्यदशमीव्रतं गरुडपु० "व्रतमेतन्महाबुद्धे ! कार्य्यमारोग्यमिच्छता । सर्वकार्य्यार्थमेतद्धि विपश्चिता जीवितं चिरम् । उपवासश्च कर्त्तव्यो नवम्यामिह सुव्रत । दशम्यां तु कृतस्नानो मङ्गलायतनं हरिम् । देवमिन्दिरया सार्द्धं ध्यात्वा च जगतां पतिम् । शङ्खचक्रगदापद्मशार्ङ्गासिवरसत्तमम्" । इन्दिरया लक्ष्म्या "फलैर्धूपैश्च पुष्पैश्च पायसेन समर्चयेत्" ।

आयुर्व्रतं गरुडपु० "व्रतसङ्क्रान्तिजननमायुःप्रदमनाकुलम् । सर्वसौख्यप्रदं भद्रं तादृगव्रतमिहोच्यते । चतुर्दश्यां शुचिः स्नात्वा दन्तधावनपूर्वकम् । पौर्णमास्यां तथा कृत्वा देवपूजां समाचरेत् । मण्डलं चतुरस्रन्तु कारयेत् कुसुमाक्षतैः । तस्मिन् श्रीशं श्रियं देवीमर्चयेत् सुसमाहितः"।

आयुःसंक्रान्तिव्रतं स्कन्दपु० "अथान्यां सम्प्रवक्ष्यामि आयुःसंक्रान्तिमुत्तमाम् । संक्रान्तिदिवसे पूज्य पूर्ववच्च दिवाकरम् । कांस्यं क्षीरघृतं दद्यात् सहिरण्यं स्वशक्तितः । मन्त्र एव पृथग्दाने पूजा सैव प्रकीर्त्तिता । सक्षीरं सुरभीजातं पीयूषसमरूपकम् । आयुरारोग्यमैश्वर्य्यं मम देहि द्विजार्पितम् । अनेन विधिना सम्यक् सर्वं दद्यादतन्द्रितः" ।

आशादित्यव्रतं स्कन्दपु० "मासमाश्वयुजं प्राप्य यदादित्यदिनं भवेत् । तदा व्रतमिदं ग्राह्यं नरैः स्त्रीभिर्विशेषतः । यावत् संवत्सरं तावद्विधिनानेन पुत्रक ! । गोमयेन क्षितौ कुर्य्यात् मण्डलं वर्त्तुलं पुनः । रक्तपुष्पैरक्षताद्यैरर्घ्यं तत्र प्रदापयेत् । यथाशा विमलाः सर्वाः सूर्य्य ! भास्कर भानुभिः । तथाशां सफलां मह्यं कुरु नित्यं मयार्चितः । एवं यः कुरुते सम्यग् व्रतमेतदनुत्तमम् । आशादित्येति विख्यातं तस्य पुण्यफलं महत् । इत्यादि

आश्रमव्रतं विष्णुधर्मोत्तरोक्तम् । "इदमन्यत् प्रवक्ष्यामि चतुर्मूर्त्तिव्रतं तदा । चैत्रस्यामलपक्षे तु सोपवासो जितेन्द्रियः । चतुर्थ्यां वासुदेवस्य कृत्वा संपूजनं शुभम् । काञ्चनं दक्षिणां दद्यात् द्विजाय ब्रह्मचारिणे । तथा सङ्कर्षणं देवं पूजयित्वा जगद्गुरुम्" ।

आषाढ़व्रतानि महाभारते "आषाढ़मेकभक्तेन स्थित्वा मासमतन्द्रितः । बहुधान्यो बहुधनो बहुपुत्रश्च जायते । आषाढमेकभक्तेन पूजयेद्विष्णुतत्परः" ।

इन्द्रपौर्णमासीव्रतं भविष्योत्तरोक्तम् । "लिंगत्संपूज्य दम्पत्यान्युपवासी विभूषणैः । पौर्णमास्यामवाप्नोति सौख्यमिन्द्रव्रतादिह" ।

ईशानव्रतं कालिकापु० "अथो पौषस्य चतुर्दश्यां गुरोर्दिने । पूजयेद्विधिनानेन लिङ्गं शार्वं निबोध मे । ब्रह्माणः पश्चिमे भागे वामे लिङ्गस्य वै हरिम् । खखोलकं दक्षिणे रौद्रमीश्वरं प्राग्दिशि स्थितम्" । खखोलकमर्कम् ।

ईश्वरव्रतं भविष्यपु० "ईश्वरस्य चतुर्दश्यां सर्वैश्वर्य्यसमन्वितः । बहुपुत्रो बहुधनस्तथा स्यान्नात्र संशयः । मूलमन्त्रस्वसंज्ञाभिरङ्गमन्त्राश्च कीर्त्तिताः । पूर्ववत् पद्मपत्रस्थः कर्त्तव्यश्च तिथीश्वरः । गन्धपुष्पोपहारैश्च यथाशक्ति विधीयते । पूजाऽशाठ्येन शाठ्येन कृतापि तु फलप्रदा । आज्यधारासमिद्भिश्च दधिक्षीरान्नमाक्षिकैः । पूर्वोक्तफलदो होमः कृतः शान्तेन चेतसा" । एतद्व्रतं वैश्वानरप्रतिपद्व्रतवद्व्याख्येयम्" ।

उदकसप्तमीव्रतं भविष्यपु० "उदकप्रसृतं पीत्वा क्रियते या तु सप्तमी । सा ज्ञेया सुखदा वीर ! सदैवोदकसप्तमी" ।

उभयद्वादशीव्रतं भविष्योत्तरोक्तम् । "श्रेष्ठं व्रतानां सर्वेषामुभयद्वादशीव्रतम् । तत्तेऽहं संप्रवक्ष्यामि समाहितमनाः शृणु ! । ततोऽपराह्णे सन्तर्प्य कृतसन्ध्यादिकः शुचिः । प्राप्याज्ञां वेदविदुषः पुराणज्ञात् जितेन्द्रियात् । संपूज्य देवदेवेशं दन्तधावनपूर्वकम् । कुर्य्याच्च नियमं पार्थ गुरुदेवाग्निसन्निधौ । एकादश्यां निराहारः स्थित्वाहमपरेऽहनि । भोक्ष्यामि पुण्डरीकाक्ष ! शरणं मे भवाच्युत ! । इत्युक्त्वाथ गुरुं नत्वा पूजयित्वा जनार्द्दनम् । भूमौ स्वपेज्जितक्रोधः शब्दादिविषयोज्झितः । अनेन विधिना मासि तस्मिन् कृष्णामुपोषयेत् । द्वादशीं पुरुषव्याघ्र ! ध्यायन् सङ्कर्षणं विभुम् । प्राग्वत्सर्वं ततः कृत्वा ब्राह्मणाय निवेदयेत्" । इदञ्च व्रतं मार्गशीर्षादिकार्त्तिकान्तद्वादशमाससमाप्यं तच्च उभयपक्षयोः कार्य्यम् ।

उभयनवमीव्रतं भविष्यपु० "योऽब्दमेकं प्रकुर्वीत नवम्यां नक्तमादरात् । इह भोगानवाप्याथ परत्र च दिवं व्रजेत् । पौषे मासे च सम्प्राप्ते यः कुर्यान्नक्तभोजनम् । जितेन्द्रियः सत्यवादी कामक्रोधविवर्जितः । पक्षयोर्नवमीं यत्नादुपवासेन पालयेत्" । इदं व्रतं वर्षसाध्यम् ।

उभयसप्तमीव्रतं भविष्यपु० "पौषे मासे च सप्तम्यां यः कुर्यान्नक्तभोजनम् । जितेन्द्रियः सत्यवादी स्नातो गोमूत्रगोरसैः । पक्षयोः सप्तमीं यत्नादुपवासेन यो नयेत् ।

मिसन्ध्यामर्च्चयेद्भानुं शास्तिकलेवस्तु सुव्रत !”। तदवधिवर्ष-साध्यम्। व्रतान्तरं विष्णुधर्म्मोत्तरोक्तम् “अनेनैव विधानेन प्रतिमासन्तु यो नरः। सप्तमीद्वितयं कुर्य्याद्यावत् संवत्सरं रवेः। सोऽश्वमेधमवाप्नोति सूर्य्यलोकं च गच्छति। कुलमुद्धरते राजन् ! सर्व्वान् कामानुपाश्नुते”।

उमामाहेश्वरतृतीयाव्रतं भविष्योत्तरोक्तम्। “लोके हितार्थं पार्व्वत्या उमामाहेश्वरव्रतम्। समाख्यातं पुरा पार्थ ! नाद्यापि प्रथितं भुवि। मार्गशीर्षे सिते पक्षे तृतीयायां समाहिता। कृतोपवासा राजेन्द्र ! सर्व्वभोगविवर्जिता। संवेष्ट्य श्वेतवस्त्रेण शिवं रक्तेन चाम्बिकाम्। पश्चाद्रूपं दहेन्नारी भक्तिभावेन भाविता। भोजयेच्छिवभक्तांश्च ब्राह्मणान् वेदपारगान्। भक्तेभ्यो दक्षिणां दद्याद्भक्त्या शाठ्यविनाकृताम्”। कृतोपवासा सङ्कल्पितोपवासा “हैमीमुमां रजतपिष्टमयं महेशम् रोप्ये सुरूपवृषभे समुपस्थितौ तौ। संपूज्य रक्तसितवस्त्रयुगोपगूढौ नारी भवत्यविधवा सुतसौख्ययुक्ता। पौर्णमास्याममावास्यां चतुर्द्दश्यष्टमीषु च। नक्तमब्दन्तु कुर्व्वीत हविष्यैर्ब्रह्मचारिणी। उमामहेशप्रतिमां हेम्ना कृत्वा सुशोभनाम्। राजतीं वापि कर्म्माङ्गं स्थापयित्वा घृतादिभिः। गन्धपुष्पैरलङ्कृत्य वस्त्रयुग्मैश्च शोभनैः। भक्ष्यभोज्यैरशेषैश्च वितानध्वजचामरैः। भोजयेच्छिवभक्तांश्च दीनानाथान् प्रतर्पयेत्”। व्रतान्तरं शिवधर्म्मोत्तरोक्तम्। “अष्टम्याञ्च चतुर्द्दश्यां नियतब्रह्मचारिणी। वर्षमेकं न भुञ्जीत सहीभोगजिगीषया। वर्षान्ते प्रतिमां कृत्वा पूर्व्ववद्विधिमाचरेत्। स्नानाद्यैस्तद्व्रतं प्राप्य पूर्व्वोक्तांस्तु गुणान् लभेत्”। अत्राप्युमामहेश्वर प्रतिमा कर्त्तव्या। पूर्व्ववदिति पूर्व्वव्रतोक्तवदित्यर्थः। देवीपु० व्रतान्तरं “यदीच्छसि शुभर्त्तारमिह जन्मन्यथापरे। कन्या कुर्य्यान्नृपश्रेष्ठ ! विष्णुना कथितं व्रतम्। सर्व्वपापहरं पुण्यं सर्व्वकामफलप्रदम्। उमामहेश्वरं नाम कर्त्तव्यं विधिना यथा। प्रोष्ठाश्विने तथा मासे कृष्णे भाद्ये १२ऽथ वा मुने !। मैत्रे १७शाक्रे १८ऽथ वा कार्य्यमष्टम्याञ्चाथ शाङ्करे ६। व्रतान्तरं भृगुसंहितोक्तम्। “उमामाहेश्वरं नाम या च स्त्री कुरुते व्रतम्” इत्युपक्रमे “उमामाहेश्वरी कार्य्या प्रतिमा काञ्चनोद्भवा। त्रिकर्षस्य तदर्द्धस्य कर्षस्यापि मितस्य च। वित्तशाठ्यं न कर्त्तव्यं सर्व्वथा फलकाङ्क्षया। स्थापयेत् श्वेतवस्त्राद्ये राजते वृषभे शुभे। व्याघ्राजिने सुविस्तीर्णे संस्थाप्याभ्यर्च्य यत्नतः। सोपवासा च कुर्व्वीत चतुर्द्दश्यां समाहिता। शैवं षाडक्षरं होमं गौर्य्याः होमञ्च यत्नतः। प्राप्ते प्रभातसमये स्नात्वा संपूज्य पूर्व्ववत्। आहूय वेदविद्वांसं ब्राह्मणं पूज्य भक्तितः !। अर्च्चयेत् प्रतिमां शम्भोः कर्म्मदोषापशान्तये। वाक्येन ब्राह्मणं तोष्य ततः पारणमाचरेत्”।

उल्कानवमीव्रतं भविष्योत्तरोक्तम्। “उल्काख्या नवमी राजन् ! कथयामि निबोध ताम्। या काश्यपेन कथिता तारकस्यार्त्तिनाशिनी। अश्वयुक्शुक्लपक्षे या नवमी लोकविश्रुता। नद्यां स्नात्वा समभ्यर्च्य पितृदेवान् यथाविधि। पश्चात् संपूजयेद्देवीं चामुण्डां भैरवप्रियाम्। पुष्पैर्धूपैः सनैवेद्यैः मांसमत्स्यसुरासवैः। पूजयित्वा स्तवं कुर्य्यान्मन्त्रेणानेन मानवः”। सौरपु० “व्रतेन येन देवेन्द्र ! प्रसीदत्याशु पार्व्वती। तच्चोल्कानवमीव्रतं शृणु ! सर्व्वफलप्रदम्। तस्यां नवम्यां सर्व्वाणी महिषादीन् महासुरान्। जघान समरे शत्रून् तेन सा नवमी प्रिया। अश्वयुक्शुक्लस्य नवम्यां प्रयतात्मवान्। स्नात्वाभ्यर्च्य पितॄन् देवान् मनुष्यांश्च यथाक्रमम्। जपेत् पश्चान्महादेवीं महिषासुरघातिनीम्। पुष्पैर्धूपैः सनैवेद्यैः पयोदधिफलादिभिः। भक्त्या संपूजयित्वैवं देवीं सम्प्रार्थयेत्ततः”।

ऋतुव्रतं विष्णुधर्म्मोत्तरोक्तम्। “अथातः संप्रवक्ष्यामि षण्मूर्त्तेरर्च्चनं परम्। वसन्ते पूजयेन्नित्यं द्वौ मासौ मुनिपुङ्गव !। फलैः पुष्पैः कषायैस्तु ग्रीष्मे पैष्टैश्च पूजयेत्। मधुरेण महाराज ! प्रावृट्काले ऋतुं यजेत्। अनेन पूजयेन्नित्यं शरदं लवणेन च। कट्वम्लेन च हेमन्तं तिक्तेन शिशिरं तथा। नक्ताशनस्तथा तिष्ठेत् पञ्चकं वर्जयेद्रसम्। ब्राह्मणान् भोजयेच्चापि प्रभूतवसनादिभिः। संवत्सरमिदं कृत्वा व्रतं परमपावनम्। अश्वमेधमवाप्नोति राजसूयञ्च विन्दति। चैत्रे समारभ्य सिते तु षष्ठीं संपूजयेद्यस्त्वृतुषट्कमेवम्। कृतोपवासः स नरो यथोक्तं लभेत् फलं शाश्वतमेव शीघ्रम्”।

ऋषिपञ्चमीव्रतं ब्रह्माण्डपु० “शृणु राजन् ! प्रवक्ष्यामि व्रतानामुत्तमं व्रतम्। ऋषिपञ्चमीति विख्यातं सर्व्वपापहरं परम्। नभस्ये शुक्लपक्षे तु यदा भवति पञ्चमी। नद्यादिषु तदा स्नानं कृत्वा नियममेव च। विधाय नित्यकर्म्मादि गत्वा द्वारवतीमृषीन्। स्नापयेद्दधिवद्भक्त्या पञ्चामृतरसैः शुभैः”। द्वारवतीं, अग्निहोत्रशालां धूमनिर्गमद्वारैर्बहुभिर्युतत्वात्”। अथयोऽस्य समर्थनः।

एकभक्तव्रतं विष्णुधर्मोक्तम् । "चैत्रं विष्णुपरो मासमेकभक्तेन यः क्षिपेत् । सुवर्णमणिमुक्ताढ्यं गार्हस्थ्यं समवाप्नुयात् । अहिंस्रः सर्वभूतेषु वासुदेवपरायणः । नमोऽस्तु वासुदेवायेत्यहन्यष्टशतं जपेत् । अतिरात्रस्य यज्ञस्य ततः फलमवाप्नुयात् । यस्तु संवत्सरं पूर्णमेकभक्तो भवेन्नरः । अहिंसः सर्वभूतेषु वासुदेवपरायणः । नमोऽस्तु वासुदेवायेत्यहन्यष्टशतं जपेत् । पौण्डरीकस्य यज्ञस्य ततः फलमाप्नुयात् । दश वर्षसहस्राणि स्वर्गलोके महीयते । तत्क्षयादिह चागत्य माहात्म्यं प्रतिपद्यते" ।

ऐश्वर्यतृतीयाव्रतं विष्णुधर्मोक्तम् । "तृतीयायां तथाभ्यर्च्य ब्रह्मविष्णुमहेश्वरान् । पृथक् पृथक् नाममन्त्रैर्नैवेद्यादि निवेदयेत् । त्रीन् लोकांश्च तदा नाम सम्यक् संपूजयेन्नर । ऐश्वर्यं महदाप्नोति गतिमग्र्याञ्च विन्दति" ।

कदलीव्रतं भविष्योत्तरोक्तम् । "शुक्ले पक्षे चतुर्दश्यां मासि भाद्रपदे नृप ! । देयमर्घ्यं वरस्त्रीभिः फलैर्नानाविधैस्तथा । विरूढैः सप्तधान्यैश्च दीपालक्तकचन्दनैः । दधिदूर्वाक्षतैर्वस्त्रैर्नैवेद्यैश्च तथाचितैः । जातीफलैः पूगफलैर्लवङ्गकदलीफलैः । तस्मिन्नहनि दातव्यं स्त्रीभीरव्याभिरप्यलम् । मन्त्रेणानेन चैवार्घ्यं तच्छृणुष्व नराधिप ! । चित्तस्था कदली नित्यं कदली कामदायिनी । शरीरारोग्यलावण्यं देहि देवि ! नमोऽस्तु ते" ।

कन्दचतुर्थीव्रतं देवीपु० "माघमासे तु सम्प्राप्ते चतुर्थी कन्दसंज्ञिता । सोपोष्या तु कुरुश्रेष्ठ ! ततो राज्यं भविष्यति । सर्वोपहारसम्पन्नं सर्वोपस्करमाहरेत् । कन्दुपक्वं फलं शाकं लवणं गुडशर्करा । लवङ्गं कुस्तुम्बरी जीरं धान्यानि विविधानि च । दातव्यानि रघुश्रेष्ठ ! कन्यकानान्तु भक्तितः" ।

कपिलाषष्ठीव्रतं स्कन्दपु० "प्रौष्ठपदेऽसिते पक्षे षष्ठी भौमेन संयुता । व्यतीपातेन रोहिण्या सा षष्ठी कपिला स्मृता" । प्रौष्ठपदो, भाद्रपदस्य स चात्र दर्शान्तोग्राह्यः, रोहिणीयोगस्य तत्रैव सम्भवात्" ।

"द्वितीया (अन्या) तु महापुण्या दुर्लभा व्रतिनः क्वचित् । षष्ठी संवत्सरस्यान्ते सा पुनस्तेन संयुता । चैत्रवैशाखयोर्मध्ये सिते पक्षे शुभोदया । वैशाखेऽपि च राजेन्द्र ! द्वारवत्यां परा स्मृता । यदि हस्ते सहस्रांशुस्तदा कार्यं व्रतं बुधैः । अस्यां चैव कृतं दत्तं यत्किञ्चित् प्रतिपादितम् । तस्य सर्वस्य पुण्यस्य संख्यां वक्तुं न शक्यते । यस्मिन् काले भवेदेतैर्गुणैः षष्ठी युता तदा । पञ्चम्यामेकभक्तन्तु कुर्यात्तत्र विचक्षणः । षष्ठ्यां प्रातः समुत्थाय कृत्वादौ दन्तधावनम्" इत्यादि ।

करणव्रतं ब्रह्माण्डपु० "शृणु राजन् ! प्रवक्ष्यामि करणव्रतमुत्तमम् । ववाख्यं बालवञ्चैव कौलवन्तैतिलङ्गरम् । वणिजं विष्टिरित्याहुः करणानि पुराविदः । माघमासे तु सम्प्राप्ते शुक्लपक्षे यदा भवेत् । ववाभिधानकरणमुपवासस्तदा भवेत् । एवं सप्त विधेयानि ववाख्यान्यथ सप्तमे । ववे तु करणे प्राप्ते पूर्वं पूर्वं समाचरेत् । ब्राह्मणान् भोजयेत्तत्र सप्तसंख्यान् सदक्षिणम् । अथैवं बालवादीनि विष्ट्यन्तानि यथाक्रमम् । उषित्वा सप्त सप्तैव पूर्वोक्तविधिना नृप ! । समापयेद्व्रतं भूरिगोभूहेमादिदानतः । एवंकृते व्रते राजन् ! राजसूयाश्वमेधयोः । समस्तं फलमाप्नोति सुखं कीर्त्तिं महाश्रियम्" ।

कमलसप्तमीव्रतं पद्मपु० "अतःपरं प्रवक्ष्यामि व्रतं कमलसप्तमीम् । यस्य संकीर्त्तनादेव तुष्यतीह दिवाकरः । वसन्तामलसप्तम्यां स्नातः सन् गौरसर्षपैः । तिलपात्रे तु सौवर्णं निधाय कमले रविम् । वस्त्रोपवीताभरणगन्धपुष्पैरथार्चयेत्" ।

कल्किद्वादशीव्रतं धरणिव्रतोक्तम् "तद्वद्भाद्रपदे मासि शुक्लपक्षे तु द्वादशीम् । सङ्कल्प्य विधिना देवमर्चयेत् परमेश्वरम् । नमोऽस्तु कल्किने पादौ हृषीकेशाय वै कटिम् । म्लेच्छप्रध्वंसनायोरू जगन्मूर्त्तिं तथोदरम् । श्रीकण्ठायेति कण्ठन्तु खड्गपाणीति वै भुजौ । स्वनाम्ना शङ्खचक्रे तु विश्वमूर्त्ते तथा शिरः । एवमभ्यर्च्य मेधावी प्रागवत्तस्याग्रतो घटम् । विन्यस्य कल्किनं देवं सौवर्णं तत्र धारयेत्" ।

कल्पवृक्षव्रतं पद्मपु० "त्र्यहं पयोव्रते स्थित्वा काञ्चनं कल्पपादपम् । पलादूर्द्ध्वं यथाशक्त्या तण्डुलं सूर्पसंस्थितम्" । सूर्पं द्रोणद्वयम् "दत्त्वा ब्रह्मपदं याति कल्पवृक्षव्रतं स्मृतम्" ।

कल्याणसप्तमीव्रतं पद्मपु० "सौरधर्मं प्रवक्ष्यामि पार्थ ! कल्याणसप्तमीम् । तस्या विधानं वक्ष्यामि यथावदनुपूर्वशः । यदा तु शुक्लसप्तम्यामादित्यस्य दिनं भवेत् । सा तु कल्याणिनी नाम विजया च निगद्यते । प्रातर्गव्येन पयसा स्नानमस्यां समाचरेत् । शुक्लाम्बरधरः पद्ममक्षतैः परिकल्पयेत् । प्राङ्मुखोऽष्टदलं मध्ये तद्वद्वृत्तञ्च

सर्वकामिकम् । सर्वेष्वपि द्रव्येष्वीश विन्यसेत् पूर्वतः क्रमात्” इत्यादि ।

काञ्चनपुरीव्रतं मत्स्यपु० “काञ्चनाख्या पुरी नाम व्रतं त्रैलोक्यपावनम् । शुक्लतृतीया कृष्णा च एकादश्यथ पूर्णिमा । संक्रान्तिर्वा महाभागे कुर्य्याद्वा चाष्टमी तिथिः । पर्वस्वेतेषु दातव्या काञ्चनाख्या पुरी शुभा” ।

कामव्रतं भविष्यपु० “पुष्यादितस्त्रयोदश्यां कृत्वा मन्त्रं मधौ मधौ । अशोकाञ्चनं दद्यादिक्षुयुक्तं दयान्वितम् । विप्राय वस्त्रसंयुक्तं प्रद्युम्नः प्रीयतामिति । कल्पं विष्णुपुरे स्थित्वा विशोकः स्यात् पुनान् नृप ! । एतत् कामव्रत नाम सदा शोकविनाशनम्” ।

कामदावाप्तिव्रतं भविष्योत्तरोक्तम् । “फाल्गुनामलपक्षस्य सप्तम्यां च सनातन ! । उपोषितो नरो नारी समभ्यर्च्य तमोपहम् । सूर्यनाम जपन् भक्त्या भावयुक्तो जितेन्द्रियः । तिलस्तु परितः संचेव सर्वमेवानुकीर्त्तयेत् । ततोऽन्यदिवसे प्राप्ते अष्टम्यां नियतो रविम् । स्नात्वा सम्यक् समभ्यर्च्य दद्याद्विप्राय दक्षिणाम्” ।

कामदेवव्रतं विष्णुधर्मोक्तम् । “शुक्लपक्षे महाराज ! त्रयोदश्यामुपोषितः । पूजयेत् कामदेवन्तु वैशाखात् प्रभृति प्रभो ! । गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । दद्यात् व्रतान्ते विप्राय मत्स्ययुग्मं तथा” । “कृत्वा व्रतं वत्सरमेतदिष्टमाप्नोति कामं रुचिरं मनुष्यः । नानुप्रसादात् भवत्परोगः सुखान्वितोऽप्युपलक्षितस्व” ।

कामधेनुव्रतं वह्निपु० “कार्त्तिकः खलु मासो वै सर्वदेवमयो महान् । कृष्णपक्षे विशेषेण तत्र पञ्च दिनानि तु । पुण्यानि तेषु वहुलमलयं सर्वकामिकम्” इत्युपक्रमे अमावस्यादिषु तत्र विशेषवक्त्रा “नन्दा सुनन्दा सुरभी सुशीला सुमनास्तथा । निर्गता मथ्यमानाब्धौ अतः स्नानं शुभप्रदम्” । कामधेनोराविर्भावभावितस्वदेहात् अतः प्रशस्तमित्यर्थः “तत्र स्नात्वा समभ्यर्च्य धेनुं पूज्य प्रयत्नतः । गोदानफलमाप्नोति नरो विगतकल्मषः । एकादश्यामुपोष्याथ नरो दिनचतुष्टयम् । घृतेन स्नापयेद्विष्णुं गव्येन पयसापि वा । नक्ताशी गोरसैर्द्रव्यैः पूजयेन्मधुसूदनम् । गन्धपुष्पैः सुनैवेद्यैरस्त्वालङ्कारकुण्डलैः । तथात्यमनवैव च कामधेनुं दद्यात् सर्वाभिधान्य तु वैष्णवन्तु । विप्राय वै सर्वसुखाय यत कृत्वा व्रतं तत्फलतो हरेत्तु” ।

कामव्रतं पद्मपु० “कामं पूज्य त्रयोदश्यां शुक्लपो वासते ध्रुवम् । रूपां रूपवतीं भार्य्यां लभेत् कामांश्च पुष्कलान् । मूलमन्त्राः स्वसंज्ञाभिरङ्गमन्त्राश्च कीर्त्तिता” ।

कामषष्ठीव्रतं वराहपु० “कामव्रतं महाराज ! शृणु मे गदतोऽधुना । येन कामाः सम्पद्यन्ते मनसा चिन्तिता अपि । षष्ठ्यां फलाशनो यस्तु वर्षमेकं व्रतं चरेत् । माघमासे सिते पक्षे षष्ठ्यां नक्तभोजनः । षष्ठ्यान्तु प्राशयेद्वीमान् ! फलमेवन्तु पार्थिव ! । ततो भुञ्जीत यत्नेन वाग्यतः शुद्धमोदनम् । ब्राह्मणैः सह राजेन्द्र ! अथ वा केवलं फलम् । तमेकं दिवसं स्थित्वा सप्तम्यां पारणं नृप ! । अग्निकार्य्यं च कुर्वीत गुरुरूपेण केशवम् । पूजयित्वा विधानेन वर्षमेकं व्रतं चरेत्” ।

कामावाप्तिव्रतं विष्णुधर्मोत्तरोक्तम् । “कृष्णपक्षे चतुर्दश्यां महाकालमथार्च्चयेत् । तस्मात् काममवाप्नोति यथेष्टं नात्र संशयः” ।

कार्त्तिकमासव्रतं नारदोक्तम् । “माहात्म्यमभिधास्यामि मास स्यास्य वरानने ! । येन ते जायते भक्तिर्भक्त्या येनार्च्यते हरिः । कार्त्तिके नक्तसेवी यः प्राजापत्यरतोऽपि वा । एकाहादश्यास्त्रं पक्ष वा मासं वा वरवर्णिनि ! । उपवित्वा नरो याति तद्विष्णोः परमं पदम् । एकभक्तोऽथ वा नक्तं तथा शम्भु ! अयाचिते । कृते नरैः राज्याप्तिर्भवेद् वै दीपमालया । तस्मिन् हरिदिने पुण्यं तथा वै भीष्मपञ्चकम् । प्रबोधनीं नरः कृत्वा जागरेण समन्विताम् । न मातुर्जठरे याति अपि पापान्वितो नरः” ।

कार्त्तिकेयषष्ठीव्रतं भविष्योत्तरम् “मार्गशीर्षे सिते पक्षे षष्ठी भरतसत्तम ! । पुण्या पापहरा प्रोक्ता शिवप्रीता गुहप्रिया । निहत्य तारकं षष्ठ्यां गुहस्तारकराजवत् । रराज तेन दयिता कार्त्तिकेयस्य वा तिथिः । स्नानदानादिकं कर्म तस्यामक्षयमुच्यते । येऽस्यां पश्यन्ति गाङ्गेयं दक्षिणापथं समाश्रितम् । ब्रह्महत्यादिपापेभ्यो मुच्यन्ते नात्र संशयः । तस्यादसौ सोपवासः कुमारं पर्वासम्भवम् । राजतम् महाराज स्वर्णमयञ्चाथ दारुजम् । कारयित्वार्थसारेण कामामर्षविवर्जितः । अपराह्णे ततः स्नात्वा सम्यगाचम्य बुद्धिमान् । पद्मासनस्थं गाङ्गेयं ध्यायन्तिष्ठेत् यन्त्रितः” ।

कालरात्रिव्रतं कालिकापु० “साधु भक्तोऽसि धर्मज्ञ ! कालरात्रिव्रतं मम । शृणु ! वक्ष्याम्यहन्तेऽद्य कर्त्तव्यं विधिवद्यथा । मासि चाश्वयुजेऽष्टम्यां शुक्लपक्षे जितेन्द्रियः । सत्यवाक् स्थिरचित्तात्मा निरमत्सी

भवेत्सुधीः । कालीव्रतमिदं ख्यातं कर्त्तव्यं सत्कुलोद्भवैः" । कालरात्रि काली ।

कालाष्टमीव्रतं वामनपु० "नभस्ये मासि च तथा या स्यात् कृष्णाष्टमी शुभा । युक्ता मृगशिरसैव सा तु कालाष्टमी स्मृता । तस्यां सर्वेषु लिङ्गेषु तिथौ स्वपिति शङ्करः । वसन्नसन्निधाने तु तत्र पूजाऽक्षया स्मृता" । इदं व्रतं भाद्रादिवर्षसाध्यम् ।

कीर्त्तिव्रतं पद्मपु० "अश्वत्थं भास्करं गङ्गां प्रणम्यैकत्र वाग्यतः । एकभक्तं नरः कुर्य्यादष्टम्यां वै विमत्सरः । व्रतान्ते विप्रमिथुनं पूज्य धेनुत्रयान्वितम् । वृक्षं हिरण्मयं दद्यात् सोऽश्वमेधफलं लभेत् । दिवि देवविमानस्थो गीयतेऽप्सरसाङ्गणैः । एतत्कीर्त्तिव्रतं नाम भूमिकीर्त्तिप्रदायकम्" ।

कुक्कुटीव्रतं भविष्योक्तं २०६२ पृ० ति०त० द्रष्टव्यम् ।

कुबेरतृतीयाव्रतं भविष्यपु० "तृतीयायान्तु वित्तेशं वित्ताढ्यो जायते ध्रुवम्" । पूजयित्वेति शेषः "क्रयादिव्यवहारे च लाभो द्विगुणो भवेत्" ।

कुमारषष्ठीव्रतं कालोत्तरोक्तम् । "चैत्रशुक्लात् समारभ्य व्रतार्थमनुनोच्यते । उपोष्य विधिना षष्ठीं विशेषात् षण्मुखं यजेत्" ।

कुम्भीव्रतं स्कन्दपु० "एकादश्यां कार्त्तिकस्य शुक्लपक्षे तु कारयेत् । कुम्भ्यादिनरकेभ्यस्तु उद्धरेत् स्वमजेनतः । प्रयत्नात् कार्त्तिके मासि विष्णोरग्रे तु जागरम् । सुशुक्लैकादशीं रात्रौ विशेषादर्चयन्ति च । चतुरस्रं चतुर्द्वारं गोमयेनोपलिप्य च । चतुर्भिः शालिगोधूमवर्णकैरुपशोभितम् । स्नात्वा नारायणं पूज्य स्थण्डिले प्रतिमासु च । कृत्वा दिशां बलिं दत्त्वा विधानमवधारयेत् । दीपमालान्वितं गन्धपुष्पाद्यैः पूजयेत्ततः । कुम्भीं देवमयीं ध्यात्वा मुच्यते सर्वकिल्बिषैः" ।

कूर्म्मद्वादशीव्रतं धरणीव्रतोक्तम् "पौषमासस्य या पुण्या द्वादशी शुक्लपक्षतः । तस्यां प्रागिव सङ्कल्पं कुर्य्यात् स्नानादिकाः क्रियाः । निर्वर्त्याराधयेद्बालावेकादश्यां जनार्द्दनम् । पृथङ्मन्त्रैर्द्विजश्रेष्ठ ! देवदेवं जनार्द्दनम् । कूर्म्माय पादौ प्रथमन्तु पूज्य नारायणायेति कटिं हरेस्तु । सङ्कर्षणायेत्युदरं हरेस्तु उरो विशोकाय भवाय कण्ठम् । सुबाहवे चैव भुजौ शिरश्च नमो विशालाय रथाङ्गशङ्खौ । स्वनाममन्त्रैश्च सुधूपमग्न्यैर्नानाविधैर्विविधैः फलैश्च । अभ्यर्च्य देवं कलशं तदग्रे संस्थाप्य माल्यास्तृतदामकण्ठम् । तं रत्नगर्भन्तु पुरेव कृत्वा स्वशक्तितो हेममयञ्च देवम् । समन्दरं कूर्म्मरूपेण कृत्वा संस्थापयेत्ताम्रपात्रे घृतस्य । पूर्णे घटे पश्चिम सन्निवेश्याथो ब्राह्मणायैव सर्वं तु दद्यात्" । घृतस्य पूर्णे ताम्रपात्रे समन्दरं कूर्म्मरूपं विधाय घटोपरि निवेश्य प्रभाते दद्यादित्यर्थः" ।

कृच्छ्रव्रतानि विष्णुरहस्ये "सुपुण्ये कार्त्तिके मासि देवर्षिपितृसेविते । क्रियमाणे व्रते नृणां स्वल्पेऽपि स्यान्महाफलम् । क्रतुभ्यः संवत्सरः पुण्यस्तस्मादपीह पूजितः । वर्षायाः कार्त्तिकः पुण्यः कार्त्तिकाद्भीष्मपञ्चकम् । नैवेद्यं पुष्पधूपञ्च अर्च्चनं सुविलेपनम् । दत्त्वैककार्त्तिके विष्णोः फलं सांवत्सरं लभेत् । अतः कार्त्तिकमासाद्य सदैव शुभकाङ्क्षिभिः । हरिमुद्दिश्य कर्त्तव्यं स्वशक्त्या सुकरं व्रतम् । कार्त्तिकस्यासिते पक्षे वायुभक्षश्चतुर्दशीम् । समुपोष्य नरो भक्त्या पूजयेद् गरुड़ध्वजम् । उपवासस्तु कर्त्तव्यो वारिमध्ये स्थितेन च । जलकृच्छ्रमिदं कृत्वा विष्णुलोकं व्रजेन्नरः । दशम्यां पञ्चगव्याशी एकादश्यामुपोषितः । अर्च्चयेच्चाच्युतं देवं नियतश्च व्रतञ्चरेत् । कार्त्तिकस्यासिते कृत्वा नरो देवव्रतञ्चरेत् । दामोदरं समभ्यर्च्य देवो वैमानिको भवेत् । अपः क्षीरं दधि घृतं सप्तम्यादिचतुर्द्दिनम् । कार्त्तिकस्यासिते पीत्वा एकादश्यामुपोषितः । कृच्छ्रं पैतामहं नाम कुर्व्वन् संपूजयेद्धरिम् । प्राप्नोति परमं विष्णोः स्थानं त्रैलोक्यपूजितम् । त्रिरात्रं पयसः पानमुपवासपरस्य च । पक्षादौ कार्त्तिके शुक्ले कृच्छ्रो माहेन्द्र उच्यते" इत्यादि ।

कृच्छ्रचतुर्थीव्रतं स्कन्दपु० "मार्गशीर्षे शुभे मासि सिते पक्षे तु गजमुखम् । चतुर्थ्यां नियमं कृत्वा विघ्नेशं पूज्य भक्तितः । पुष्पैर्गन्धैश्च नैवेद्यैः लड्डुकैश्च सुसंस्कृतैः । पल्लवैस्तिलपिष्टैश्च तथा मोदकैः प्रभुम् । पूजयित्वा विधानेन प्रार्थयेत्तत्र मानवः" ।

कृत्तिकाव्रतं भविष्योत्तरोक्तम् । "कार्त्तिक्यां पौर्णमास्यान्तु प्रकुर्य्यात् कृत्तिकाव्रतम् । षट् मासांस्तु व्रतं यावदिदं सञ्चिन्त्य चेतसि । पारणे पारणे चापि पुराणज्ञे द्विजोत्तमे । उद्यापनं प्रयच्छेत यथा विभवसारतः । कृत्तिकासु स्वयं सोमः कृत्तिकासु बृहस्पतिः । यदा स्यात् सोमवारेण सा महाकार्त्तिकी स्मृता । ईदृशी बहुभिर्वर्षैर्बहुपुण्यैर्न लभ्यते । तस्यापि न वृथा नेया कृ-

दीक्षेच्छेय आत्मनः। अन्यापि कार्त्तिकी पार्थ! समुपोष्या विधानतः। तस्या विधानं राजेन्द्र! शृणुष्वैकाग्रमानसः। कार्त्तिके शुक्लपक्षस्य पौर्णमास्यां दिनोदये। नक्तेन नियमं कुर्य्याद्दन्तधावनपूर्व्वकम्। उपवासेन वा शक्त्या ततः स्नात्वा जलाशये" इत्यादि।

कृष्णचतुर्द्दशीव्रतं भविष्यपु० "बालवृद्धातुराणाञ्च भोगिनां स्त्रीषु वालिशे। विधानन्तु वक्ष्यामि शृणुते ते यथा सुत!। भूतायां फाल्गुने कुर्य्यात् कृष्णपक्षेऽतिभक्तितः। दरिद्राणामनाथानामक्षमाणां विशेषतः। सर्व्वकामप्रदं कृष्णचतुर्द्दश्यां शिवव्रतम्। रात्रौ विशेषपूजा तु महास्नपनसंयुता। महादीपद्वयं देयं शतमष्टोत्तरं पुनः। घृतं गुग्गुलं धूपं शिवं पशुपतिं यजेत्। खण्डखाद्यान्यनेकानि भक्ष्याणि विविधानि च। यथा समर्पयेत् भक्त्या वित्तशाठ्यं विना सुत!। रात्रौ जागरणं कार्य्यं शिवस्याग्रे शिवं जपेत्"। शिवधर्म्मोक्तम् "नारी चोपवसेदब्दं कृष्णामेकाञ्चतुर्द्दशीम्। वर्षान्ते प्रतिमां कृत्वा शालिपिष्टमयीं शुभाम्। गीतानुलेपनैर्माल्यैः पीतवस्त्रैस्तु पूजयेत्। पूर्व्वोक्तमखिलं कृत्वा शिवाय विनिवेदयेत्"।

कृष्णद्वादशीव्रतं वराहपु० "एकभक्तेन नक्तेन तथैवायाचितेन च। उपवासेन दानेन न निर्द्वादशिको भवेत्। मार्गशीर्षस्य मासस्य श्रुतं सर्व्वं त्वया बुध!। अन्नीयान्माहिमास्येवं कुर्य्यात्संवत्सरं व्रती। नामानि देवदेवस्य केशवस्य पृथक् पृथक्। कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्द्दनः। उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः। योगेशः पुण्डरीकाक्षो मासनामान्यनुक्रमात्"। विष्णुधर्म्मोत्तरोक्तम् "माघ्यान्तु समतीतायां द्वादशी या भवेन्नृप!। ततः प्रभृति कर्त्तव्यं व्रतमेतदुपोषिता। द्वादशीषु च कृष्णासु नाम कृष्णस्य कीर्त्तयेत्। तेनैव नाम्ना कर्त्तव्यौ जपहोमौ तथैव च। तिलैर्निवेदनं कार्य्यं होमः कार्य्यस्तथा तिलैः। पौष्यान्तु समतीतायां कृष्णा या द्वादशी भवेत्। तस्यां व्रतावसाने तु तिलान् दद्याद् द्विजातिषु। सुवर्णञ्च महीपाल! रक्तवस्त्रं तथैव च। संवत्सरमिदं कृत्वा व्रतं मनुजपुङ्गव!। तिर्य्यग्योनिं न चाप्नोति स्वर्गलोकञ्च गच्छति। यावज्जीवं व्रतमिदं यः करोति समाहितः। न स दुःखमवाप्नोति नारकं मनुजोत्तम!। यत्र वैतरणी दुर्गा क्षुरधारा सपर्व्वता। पापानां यातना यत्र तत्रासौ न गमिष्यति"।

कृष्णव्रतं पद्मपु० "एकादश्यां तु नक्ताशी मञ्चकं विनिवेदयेत्"। विप्रायेति शेषः "कृत्वा मत्स्यं च सौवर्णं स विष्णोः पदमाप्नुयात्। एतत् कृष्णव्रतं नाम कल्पान्ते सुखलाभकृत्"।

कृष्णषष्ठीव्रतं भविष्योत्तरोक्तम्। "कृष्णषष्ठ्यां प्रयत्नेन कृत्वा नक्तं विधानतः। मासो मार्गशिरस्याद्यान् शुभानिति पूजयेत्। विधिवत् प्राश्य गोमूत्रमनाहारो निशि स्वपेत्। अतिरात्रस्य यज्ञस्य फलं प्राप्नोति मानवः"। इत्यादि तद्वधिवर्षसाध्यमिदम्।

कृष्णाष्टमीव्रतं देवीपु० "कृष्णाष्टम्यां विधानं वै निखिलं क्रियते यथा। क्रमेण मे तथा ब्रूहि तत् कर्त्तव्यं सुरेश्वर"। ईश्वर उवाच "हेमन्ते त्वथ सम्प्राप्ते मासि मार्गशिरे तथा। नक्तं कृत्वा शुचिर्भूत्वा गोमूत्रं प्राशयेन्निशि"। नक्तं कृत्वा नक्तमनुकल्पम् "आहरेद्वाशनं यत्र यथा च तथाशयेत्। तेन नक्तं समुद्दिष्टं प्राशिता प्राशितेन च" इति। तेन नक्तं समुद्दिष्टं प्राशितेन चेति क्वचित्प्राशितेन क्वचिदप्राशितेनेत्यर्थः। "कृष्णाष्टम्यां विधानं वै शङ्करं पूज्य भक्तितः। अतिरात्रस्य यज्ञस्य फलमष्टगुणं भवेत्। स्वपेच्च शाङ्करं नाम सायं रात्रौ दिवा यथा" इत्यादि। तद्वधि वर्षसाध्यम् "कृष्णाष्टम्यां चैत्रमासे स्नातो नियतमानसः। कृष्णमभ्यर्च्य पूजाञ्च देवक्यां कुरुते तु यः। निराहारो जपन्नाम कृष्णस्य जगतः पतेः। उपविश्य जपन् स्नातः च्युतप्रस्खलितादिषु। पूजायाञ्चापि कृष्णस्य सप्तवारान् प्रकीर्त्तयेत्। पाषण्डिनो विकर्म्मस्थान् नालपेन्नैव नास्तिकान्। प्रभाते वाम्बुना स्नातो दद्याद्विप्राय दक्षिणाम्। भुञ्जीत कृतपूजश्च कृष्णस्यैव जगत्पतेः" इत्यादि। इदं तद्वधि वर्षसाध्यम्। भविष्योत्तरोक्तम्। "कृष्णाष्टमीव्रतं पार्थ! शृणु पापहरं परम्। धर्म्मस्य जननं लोके रुद्रप्रीतिकरं परम्। मार्गशीर्षेऽथ वै मासि दन्तधावनपूर्व्वकम्। उपवासस्य नियमं कुर्व्वन्नक्तस्य च व्रती"। समर्थासमर्थभेदेन व्यवस्थितो विकल्पः। इत्यादि तद्वधि वर्षसाध्यमिदम्। व्रतान्तरं कृष्णाष्टमीशब्दे द्रष्टव्यम्।

कृष्णैकादशीव्रतं विष्णुधर्म्मोत्तरोक्तम्। "एकादशी तथा कृष्णा फाल्गुने मासि भार्गव!। स्कन्दोदेवस्य कर्त्तव्या पूजा धर्म्मभृताम्वर। पूजनात्स्कन्ददेवस्य येनायं गुणवर्जितम्। न प्राप्नोति तथा प्रीतिं गुणवन्तं न संशयम्"।

कोकिलाव्रतं भविष्योत्तरोक्तम्। "आषाढपौर्णमास्यान्तु सन्ध्याकाले ह्युपस्थिते। सङ्कल्पयेन्मासमेकं श्रावणीप्रभृति

ह्वयम् । स्नानं करिष्ये नियता ब्रह्मचर्य्ये स्थिता सती । भोक्ष्यामि नक्तं भूशय्यां करिष्ये प्राणिनां दयाम् । इति सङ्कल्प्य पुरुषो नारी वा ब्राह्मणान्तिके । प्राप्यानुज्ञान्ततः प्राह्णे सर्व्वपापविसंयुतः" इत्यादि ।

कोटीश्वरीतृतीयाव्रतं स्कन्दपु० "शृणु भद्रे ! परं गुह्यं सर्व्वकामफलप्रदम् । दुर्भगानाञ्च नारीणां सौभाग्यकरणं परम् । कोटीश्वरीति विख्यातं ततः कोटीश्वरीव्रतम् । तृतीया शुक्लपक्षे तु माघि भाद्रपदे भवेत् । तस्यां व्रतं तु संग्राह्यं यावद्वर्षचतुष्टयम् । उपवासेन कर्त्तव्यं वर्षे वर्षे तु सुन्दरि ! । अक्षतानां लक्षमात्रां तिलानां वा सुलोचने ! । वह्नावेकं विरच्याथ क्षिपेत् पर्व्वणि शोभने । क्षीरसंमिश्रितैः कार्य्या देव्यामूर्त्तिः सुलोचना । कृत्वा तु पुष्पप्राकारं पुष्पमालाभिमण्डितम् । संस्थाप्य पार्व्वतीं देवीं पूजयेत्सुसमाहितः" इत्यादि ।

कौमुदीव्रतं विष्णुरहस्योक्तम् । "मासि चाश्वयुजे शुक्ल एकादश्यामुपोषितः । गृह्णीयात् तु व्रतं श्रेष्ठं कौमुदाख्यं महाफलम् । अहिंसकः शुचिर्भूत्वा धौतवासा जितेन्द्रियः । द्वादश्यामर्च्चयेत् स्नात्वा वासुदेवं जगद्गुरुम्" ।

क्षेमव्रतं विष्णुधर्म्मोत्तरोक्तम् । "यक्षाणां राक्षसानाञ्च चतुर्दश्याञ्च पूजनम् । कृत्वा क्षेममवाप्नोति क्रियायाः फलमेव च" ।

गणपतिचतुर्थीव्रतं भविष्यपु० "चतुर्थ्यान्तु महाराज ! निराहारो व्रतान्वितः । दत्त्वा तिलान्नं भुङ्क्ते यः स्वयं भुङ्क्ते तिलोदकम्" । दिवा निराहारो रात्रौ भुङ्क्ते इति विरोधपरिहारः । "वर्षद्वये समाप्तिञ्च व्रतस्य तु यदा भवेत् । विनायकस्तस्य तुष्टो ददाति फलमीप्सितम्" ।

गन्धव्रतं शिवधर्म्मोक्तम् "पौर्णमास्यामुपवसेदब्दमेकं समन्वितः । वर्षान्ते सर्व्वगन्धाढ्यां प्रतिमां विनिवेदयेत् । सुविचित्रैर्महावासैर्दिव्यगन्धविभूषितैः । युगकोटिशतं साग्रं शिवलोके महीयते" ।

गवन्तिकाव्रतं शिवरहस्योक्तम् "पवित्रतोययुक्तैर्यः कुम्भैः पौषे शिवोपरि भावयेद्यः पयोधारां स ब्राह्मपदमश्नुते" ।

गायत्रीव्रतं गरुड़पु० "अथोत्तमं परं ब्रह्मव्रतं शृणु ! भद्रदम् । चतुर्दश्यां महाभाग ! सर्व्वरोगापशान्तये । ज्वरगुल्मप्लीहत्वक्कुष्ठातिसारसंयुतः । कार्य्यं नित्यमिदं कार्य्यं तदार्त्तिव्याधिशान्तये । स्नात्वा तु कृतसङ्कल्पः सर्व्वकामविवर्ज्जितः । आदित्यमुपतिष्ठेत गायत्रीञ्च जपन्नृजुः । उदयात् पूर्व्वमारभ्य यावदस्तं गतो रविः । निराहारो जितक्रोधो तावत्तिष्ठेत् समाहितः । रवावस्तङ्गते देवमर्च्चयेत् पुरुषोत्तमम् । उपोष्य विधिवत् स्नात्वा तथा पर्व्वणि सुव्रतः" । पर्व्वणि, पौर्णमास्याम् । एतच्च शुक्लचतुर्दशीव्रतं, पुराणे शुक्लपक्षस्य व्रतप्रकरणे पठितत्वात् ।

गुड़तृतीयाव्रतं भविष्यपु० "गुड़पूपास्तु दातव्या मासि भाद्रपदे तु वा । तृतीया पायसेनापि वामदेवस्य प्रीतये" ।

गुणावाप्तिव्रतं विष्णुपु० "अतःपरं प्रवक्ष्यामि चतुर्मूर्त्तिव्रतं तव । द्विधा तु देवदेवस्य मूर्त्तिर्भवति यादव ! घोरा सौम्या शिवा चान्या घोरा भवति पावका । शिवा चाग्निपतिर्य्यस्मादग्नीषोमात्मकं जगत् । द्विधा घोरा विनिर्दिष्टा द्विधा सौम्या ततः पुनः । घोरा वह्निश्च सूर्य्यश्च सौम्या सोमजलाधिपौ । तेषां च पूजनं कार्य्यं प्रतिपत्प्रभृति क्रमात् । शुक्लपक्षात् तथारभ्य फाल्गुनस्य द्विजोत्तम ! । आदित्यं पूजयेद्राजन् ! प्रथमेऽह्नि परः शुचिः । द्वितीयेऽह्नि तथा वह्निं तृतीयेऽह्नि जलाधिपम् । चतुर्थेऽह्नि शशाङ्कञ्च यथावन्मानवोत्तम" ।

गुरुव्रतं भविष्योक्तम् "अनुराधासमायाञ्च देवानां पूज्य भक्तितः । पूर्व्वोक्तक्रमयोगेन सप्त नक्तान्याचरेत् । हैमं हेममये पात्रे स्थापयेच्च बृहस्पतिम् । पीताम्बरयुगच्छन्नं पीतयज्ञोपवीतकम् । पादुकाच्छत्रसहितं सदण्डं सकमण्डलुम् । संपूज्य पुष्पनिकरैर्धूपदीपाक्षतादिभिः । सवस्त्राच्छोपहारञ्च द्विजाय प्रतिपादयेत्" ।

गुर्व्वष्टमीव्रतं भविष्यपु० "मासि भाद्रपदे राजन् ! शुक्लपक्षे महाष्टमी । गुरुवारेण संयुक्ता या तिथिः सर्व्वकामिनी । सम्पूज्या सर्व्वपापघ्नी प्रेतयोनिविनाशनी । गृह्णीयान्नियमं सम्यक् दन्तधावनपूर्व्वकम् । एकभक्तेन राजेन्द्र ! तस्यां देवी बृहस्पतिः । स्नानं नद्यां तड़ागे वा ह्रदे वा नियतात्मना । सौवर्णं कारयेच्छ्रीवं राजतं वा नरोत्तम ! तदभावे यथाशक्त्या श्रीवृक्षेणापि कारयेत्" ।

गुह्यकद्वादशीव्रतं भविष्योत्तरे "द्वादश्यां गुह्यकाध्यक्षं पञ्चबाणसंयुतैः । हैमं विप्राय वै दद्यादुपवासपरायणः । एतद्गुह्यकं प्रोक्तं व्रतं पापहरं शुभम्" ।

गुहपञ्चमीव्रतं भविष्योत्तरे "सर्व्वौषध्युदकस्नातः पञ्चम्यां पूज्य षण्मुखम् । सर्व्वोपहारदानञ्च यः करोति षड़ानने । षड़ाननोद्भवं रूपं शिवां कालीञ्च पश्यति" ।

म्हाटः पेषणयन्त्रमुदूखलं धान्यकण्डनम् । "उदकुम्भञ्च पूर्णञ्च एतेषामनुगञ्च यत् । एतानि स्त्रीणां गेहे प्रस्थाप्य पुरुषोत्तम ! । उपस्करहते नारी न सीदति कदाचन । एतद्दुष्टहव्रतं नाम सर्वसौख्यप्रदायकम्" ।

गोपद्मत्रिरात्रव्रतं भविष्योक्तम् "पार्थ ! भाद्रपदे मासि शुक्लपक्षे दिनोदये । तृतीयायां चतुर्थ्याञ्च श्रद्धया परिवत्सरम् । उपवासेन स्नायीत व्रत नाम्ना तु गोपदम् । स्नात्वा नरोऽथ नारी वा पुष्पधूपविलेपनैः । दध्ना च घृतमिश्रेण पिष्टकैर्वनमालया । अभ्यर्च्येद्गवां स्कन्धे मपुच्छे चैव भारत ! । दद्यादृशाङ्गिकं भक्त्या वासः पूर्वापराह्णयोः । अनग्निपक्वं भुञ्जीयात् तैलक्षारविवर्जितम्" ।

गोपालनवमीव्रतं गरुडपु० "तथा समुद्रगामिन्यां नवम्यां स्नानमाचरेत् । शुचौ तत्पुलिने तीरे सिकताभिरलङ्कृते । वसुदेवसुतं विष्णुं गोपीजननिषेवितम् । वनमालाचितोरस्कं वन्यपुष्पैरलङ्कृतम् । बर्हिबर्हकृतापीडं पीतकौषेयवाससम् । समानवेषैरनुगैः क्रीड़द्भिरितरेतरम् । वृतं गोपकुमारैश्च गोवत्सकुञ्चितमूर्द्धजम् । ध्यात्वा देवं परं विष्णुं सर्वलोकेश्वरेश्वरम् । वन्यपुष्पैश्च गन्धाद्यैः शुचिभिश्च यथाविधि" ।

गोमयादिसप्तमीव्रतं भविष्यपु० "यः क्षिपेद्गोमयाहारः द्वादश सप्तमीः क्रमात् । राजेन्द्र ! यावकाहारः शीर्णपर्णाशनोऽपि वा । क्षीराशी वैकभक्तो वा भिक्षाहारोऽथ वा पुनः । जलाहारोऽथ वा भूत्वा पूजयित्वा दिवाकरम् । पुष्पोपहारैर्विविधैः पद्मसौगन्धिकोत्पलैः । नानाप्रकारैर्गन्धैस्तु धूपैर्गुग्गुलचन्दनैः । शर्करापायसाद्यैश्च विचित्रैश्च विभूषणैः । अर्च्चयित्वा नरश्रेष्ठ ! हिरण्यान्नादिभिर्नरः । यथोक्तफलमाप्नोति क्रतुभिर्भूरिदक्षिणैः । तदत्र प्राप्यते वीर ! सप्तम्यां केवलं रवेः" ।

गौरीचतुर्थीव्रतं पद्मपु० "उमाचतुर्थ्यां माघे तु शुक्लायां योगिनीगणैः । प्रागमर्च्चयित्वा दृष्टा च भूयः स्वाङ्गात स्वकैर्गुणैः । तस्मात् सा तत्र संपूज्या नरैः स्त्रीभिर्विशेषतः । कुन्दपुष्पैः प्रयत्नेन सम्यग्भक्त्या समाहितैः । कुङ्कुमालक्तकाभ्याञ्च रक्तसूत्रैः सकङ्कणैः । अर्घैः पुष्पैस्तथा धूपैर्दीपैर्वलिभिरेव च । गुडार्द्रकाभ्यां पनसलवणीभ्याञ्च पावकैः । पूज्याः स्त्रियश्च विधवास्तथा विप्राश्च शोभनाः । सौभाग्यवृद्धये पश्चात् भोक्तव्यं बन्धुभिः सहेति" ।

गौरीव्रतं कालोत्तरोक्तम् "गौरीव्रतमथो वक्ष्ये स्त्रीणां सौभाग्यवर्द्धनम् । चैत्रशुक्लतृतीयायां गौरीव्रतं समाचरेत् । उपोष्य तु प्रयत्नेन विधानमिदमाचरेत्" ।

गोवत्सद्वादशीव्रतं भविष्योत्तरे "संप्राप्ते कार्त्तिके मासि शुक्लपक्षे नृपोत्तम ! । द्वादश्यां कृतसङ्कल्पः स्नात्वा शुद्धे जलाशये । नरो वा यदि वा नारी नक्तं सङ्कल्प्य चेतसि । ततो मध्याह्नसमये कृत्वा देवार्चनादिकम् । प्रतीक्षेतागमं भक्त्या गवां गोष्ठानतत्परः । सवत्सां तुल्यवर्णाञ्च शीलिनीं गां पयस्विनीम् । चन्दनादिभिरालिप्य पुष्पमालाभिरर्चयेत्" ।

गोविन्दद्वादशीव्रतं विष्णुरहस्ये "द्वादश्यां भोजयेद्विप्रान् तेभ्यो दद्याच्च दक्षिणाम् । प्रतिमासं तिथौ तस्यां ज्ञात्वा दद्याद्दशाङ्गिकम् । गवां क्षीरेण संयुक्तं दध्ना वाऽथ घृतेन वा । स्वपात्रे च समश्नीयाद्‌क्षारलवणं व्रती । संवत्सरमुपोष्यैव गोविन्दद्वादशीं नरः । पुनर्गोभ्यो यथा शक्त्या भूयो दद्याद्दशाङ्गिकम् । गोविन्दद्वादशी या तु उपोष्य विधिवन्नरः । प्राप्नोति विधिवद्दत्त्वा गोसहस्रस्य यत् फलम्" ।

चण्डिकाव्रतं भविष्योत्तरोक्तम् "अष्टम्याञ्च चतुर्दश्यां पक्षयोरुभयोरपि । योऽन्नमेकं न भुञ्जीत चण्डिकाराधने रतः । स याति परमं स्थानं यत्र सा चण्डिका स्थिता" ।

चतुर्दशीजागरणव्रतं कालिकापु० "कार्त्तिके शुद्धभूतायां हरं स्नाप्य घृतादिभिः" । शुद्धभूतायां शुक्लचतुर्दश्याम् "समालभ्य न्यसेद्भूयः सौवर्णं वा प्रपञ्चकम् । सुरभिभिस्ततः पुष्पैरभ्यर्च्य गुग्गुलं दहेत् । नैवेद्यञ्च पुनर्दत्त्वा बलिं बाह्ये विनिःक्षिपेत् । वितानं दीपमादर्शं वस्त्रयुग्मं ध्वजास्तथा । धूपोत्क्षेपञ्च घण्टाञ्च दत्त्वा देवाय शम्भवे । प्रदक्षिणं ततः कुर्य्याद्दण्डवत्प्रणतैरथ हि । ततस्तत्रोपविष्टश्च जागरं परिकल्पयेत्" ।

चतुर्दशीव्रतं भविष्योत्तरे "चतुर्दश्यां निराहारः समभ्यर्च्य त्रिलोचनम् । पुष्पधूपादिनैवेद्यै रात्रौ जागरणेन च । पञ्चगव्यं निशि प्राश्य स्वपेद्भूमौ विमत्सरः" ।

चतुर्दश्यष्टमीनक्तव्रतं भविष्योत्तरे "शृणु ! नक्तोपवासस्य विधानं पाण्डुनन्दन ! । येन विज्ञानमात्रेण नरो मोक्षमवाप्नुयात् । येषु केषु च मासेषु शुक्लपक्षे चतुर्दशीम् । ब्राह्मणं भोजयित्वा तु प्रारभेत् श्रुतितो व्रतम् । मासि मासि भवन्ति द्वे अष्टमी च चतुर्दशी । शिवार्चनरतो भूत्वा शिवध्यानैकमानसः । वसुधां भाजनं कृत्वा भुञ्जीयात्तक्तभोजनम् । उपवासात्परं भैक्ष्यं भैक्ष्या°

त्तूपरमयाचितम् । अयाचितात् परं नक्तं तस्मान्नक्तेन भोजयेत् । देवैश्च भुक्तं पूर्वाह्ने मध्याह्ने मुनिभिस्तथा । अपराह्णे च पितृभिः सन्ध्यायां गुह्यकादिभिः । सर्ववेलामतिक्रम्य नक्तभोजी सदा भवेत् । हविष्यभोजनं स्नानं सत्यमाहारलाघवम् । अग्निकार्यमधःशय्यां नक्तभोजी सदा भवेत्” ।

चतुर्मासी(चातुर्मास्य) व्रतं भविष्योत्तरे “शृणु पार्थ ! प्रवक्ष्यामि गोविन्दशयनव्रतम् । कटिदानं समुत्थानं चतुर्मासीव्रतक्रमम् । मिथुनस्थे सहस्रांशौ स्थापयेन्मधुसूदनम् । तुलां प्राप्ते महाराज ! पुनरुत्थापयेच्च तम् । अधिशयिते च देवे एष एव विधिक्रमः । नान्यथा स्थापयेत् कृष्णं नान्यथोत्थापयेत्तथा । आषाढस्य सिते पक्षे एकादश्यामुपोषितः । स्थापयेत् प्रतिमां विष्णोः शङ्खचक्रगदाधराम् । काञ्चनीं राजतीं ताम्रमयीं पित्तलजां तथा । पीताम्बरधरां सौम्यां पर्यङ्के चास्थिते शुभे । शुक्लवस्त्रपटच्छन्ने सोपधाने सुपूजिते । प्रभातेऽग्रतो विष्णोः कृताञ्जलिपुटस्तथा । चतुरो वार्षिकान् मासान् देवस्योत्थापनावधि । इमं करिष्ये नियमं निर्विघ्नं कुरु मेऽच्युत ! । स्त्री वा नरो वा मद्भक्तो धर्मार्थं सुदृढव्रतः । गृह्णीयान्नियमानेतान् दन्तधावनपूर्वकान् । तेषां फलानि वक्ष्यामि तत्कर्तॄणां पृथक् पृथक् । मधुस्वरो भवेद्राजा ! पुरुषो गुडवर्जनात् । तैलस्य वर्जनादेव सुन्दराङ्गः प्रजायते । कटुतैलपरित्यागाच्छत्रुनाशमवाप्नुयात् । मधूकतैलत्यागेन सौभाग्यमतुलं लभेत् । योगाभ्यासी भवेद्यस्तु स ब्रह्मपदमाप्नुयात् । कटुकाम्लतिक्तमधुरक्षारकषायरसुमम् । यो वर्जयेत् स वैरूप्यं दौर्गन्ध्यं नाप्नुयात् क्वचित् । ताम्बूलं वर्जयेत् भोगी रक्तकण्ठश्च जायते । घृतत्यागाच्च लावण्यं सर्वस्निग्धतनुर्भवेत् । फलत्यागाच्च मतिमान् बहुपुत्रश्च जायते । शाकपत्राशनाद्रोगी अपक्वादमलो भवेत् । पादाभ्यङ्गपरित्यागाच्छिरोऽभ्यङ्गं विवर्जयेत् । दीप्तिमान् दीप्तकायेन सोऽपि चोद्रपतिर्भवेत् । दधिदुग्धैकनियमी गोभक्तो गोपतिर्भवेत् । इन्द्रातिथित्वमाप्नोति स्थालीपाकस्य वर्जनात् । लभते सन्ततिं दीर्घां तैलपक्वस्य वर्जनात् । भूमौ प्रस्तरशायी च विप्रो मुनिवरो भवेत् । सदा मुनिः सदा योगी मधुमांसस्य वर्जनात् । निर्व्याधिर्नीरोगश्च सुरामद्यं विवर्जयन् । लवणादिपरित्यागात् धर्मः स्यात् अरिमर्दन ! । एकान्तरोपवासेन ब्रह्मलोके महीयते । धारणात्रखरोम्णाञ्च गङ्गास्नानफलं लभेत् । मौनव्रती भवेद्यस्तु तस्याज्ञाऽस्खलिता भवेत् । अयं चातुर्मास्यव्रतारम्भो गुर्वस्तमयादावपि कार्यः । यदाह बृहस्पतिः “न शैशवञ्च मौढ्यञ्च शुक्रगुर्वोर्न बाधते” । “अखण्डं चिन्तयेत्रादौ चातुर्मास्यविधौ नरः । पादाभिवन्दनाद्विष्णोर्लभेद्गोदानजं फलम् । भूमौ भुङ्क्ते सदा यस्तु स पृथिव्याः पतिर्भवेत् । नमोनारायणायेति जपन्नृयज्ञफलं लभेत् । विष्णुपादाब्जसंस्पर्शाद्दिनपापात् प्रमुच्यते । पादोदकाभिषेकाद् वै गङ्गास्नानं दिने दिने । पर्णेषु च नरो भुङ्क्ते कुरुक्षेत्रफलं लभेत् । नित्यं शास्त्रसमाख्यानाल्लोकान् यस्तु प्रबोधयेत् । व्यासस्तुष्यति तस्याशु विष्णुलोकं स गच्छति । कृत्वा प्रदक्षिणां विष्णोर्हंसयुक्तरथं लभेत् । तीर्थाम्बुस्नापनाद्विष्णोर्निर्मलं देहमाप्नुयात् । पञ्चगव्याशनात् पार्थ ! चान्द्रायणफलं लभेत् । अयाचितेन प्राप्नोति पुत्रान् धर्म्यानशेषतः । षष्ठान्नकालभोक्ता यः कल्पस्थायी भवेद्दिवि” । षष्ठान्नकालभोक्ता उपवासद्वयान्तरैकभक्तः “शिलोञ्छेन भुञ्जानः प्रयागस्नानमाप्नुयात् । विष्णुदेवकुले कुर्य्यादुपलेपनमार्जने । कल्पस्थायी भवेद्राजा स नरो नात्र संशयः । प्रदक्षिणशतं यस्तु करोति स्तुतिपाठकः । हंसयुक्तविमानेन स तु विष्णुपुरं व्रजेत् । गीतवाद्यकरो विष्णोर्गान्धर्वं लोकमाप्नुयात् । यामद्वयं जलत्यागाच्च रोगैरभिभूयते । गुडव्रती नरो दद्याद्गुडं ताम्रभाजनम् । सहिरण्यं नृपश्रेष्ठ ! लवणस्यायं विधिः” ।

चतुर्मूर्त्तिचतुर्थीव्रतं विष्णुधर्मोत्तरोक्तम् “इदमन्यत् प्रवक्ष्यामि चतुर्मूर्त्तिव्रतं तव । वासुदेवांशकात् जाताः सर्वे देवगणा नृप ! । अधिकेन तु लेशेन साध्या जातास्तथा सुराः । तस्यापि चाधिकांशेन चतुरात्मा हरिः स्मृतः । नरो नारायणश्चैव हरिः कृष्णश्च वीर्यवान् । चतुरात्मा हरिर्जातो धर्मस्य यादव ! । आदित्येषु तु यावुक्तौ मित्रावरुणसंज्ञकौ । तावेव नान्यौ जानीहि हरिकृष्णौ च यादव । आदित्येषु यावुक्तौ शक्रविष्णू सुरोत्तमौ । तावेव सिद्धसाध्येषु नरनारायणौ पुनः । चैत्रशुक्लचतुर्थ्यान्तु सोपवासस्तु पूजयेत् । देवेशं चतुरात्मानं वित्तशक्त्या नराधिप ! । व्रतमेतन्नरः कृत्वा पूर्वाद्दादशवत्सरम् । न दुर्गतिमवाप्नोति मोक्षोपायञ्च विन्दति” ।

चतुर्युगव्रतं विष्णुधर्मोक्तम् “इदमन्यत् प्रवक्ष्यामि चतुर्युगव्रतं तव । कृतादिकं चतुर्युगं पूजयेत् सुसमाहितः । प्रथमे

चैत्रशुक्लस्य दिने पूज्यं कृतं युगम्। श्वेतेन वस्त्रयुग्मेन गन्धमाल्यादिना तथा। चैत्रशुक्लसमारम्भे प्रथमेऽहनि पूजयेत्। कृतं शुक्लेन सर्व्वञ्च गन्धमाल्यादिना द्विज!। द्वितीयेऽहनि रक्तेन तथा त्रेतान्तु पूजयेत्। तृतीयेऽहनि पीतेन द्वापरं पूजयेद् बुधः। चतुर्थेऽहनि कृष्णेन तिष्यं संपूजयेद् युगम्। सिताद्यैः कुङ्कुमेन तथैव च हरिद्रया। तथैवाञ्जनकैः स्नानमन्त्रैर्दिवसक्रमात्। क्षीरेण प्राशयानान्तु कुर्य्यात् प्रत्यहमेव च। कृत्वा व्रतं वत्सरमेतदेकं चतुर्युगं मोदति नाकपृष्ठे। संपूज्य देवं युगमूर्त्तिसंज्ञं चतुर्युगं प्राप्य महीं समग्राम्"।

चन्द्रव्रतं वराहपु० "चन्द्रव्रतं पञ्चदश्यां शुक्लायां नक्तभोजनम्। दश पञ्च च वर्षाणि व्रतमेतत् समाचरेत्। अश्वमेधसहस्राणि राजसूयशतानि च। इष्टानि तेन राजेन्द्र! एतद्व्रतं समाचरेत्"। पद्मपु० "चान्द्रायणञ्च यः कृत्वा हैमचन्द्रं निवेदयेत्। चन्द्रव्रतमिदं प्रोक्तं चन्द्रलोकप्रदायकम्"।

चन्द्ररोहिणीशयनव्रतं पद्मपु० "रोहिणीचन्द्रशयनं सोमव्रतमिहोत्तमम्। तस्मिन्नारायणस्यार्च्चामर्च्चयेदिन्दुनामभिः। यदा सोमदिने शुक्ला भवेत् पञ्चदशी क्वचित्। अथ वा ब्रह्मनक्षत्रं पौर्णमास्यां प्रजायते। तदा स्नानं नरः कुर्य्यात् पञ्चगव्येन सर्षपैः"।

चन्द्रार्कव्रतं विष्णुधर्म्मोत्तरोक्तम् "अमावास्यान्तवेलायां सोपवासो नरोत्तम!। पक्षद्वये पूजयन्ति चन्द्रार्कैकराशिगौ। आदित्यमण्डलके शशिनं सोऽङ्गारके। आदित्यं सर्वरक्तेन चन्द्रं शुक्लेन यादव!। माल्यादिना महाभाग! होमयेत् तिलतण्डुलान्। घृतक्षीरयुतान् राजन्! तथार्च्चयेद्यथाविधि। व्रतान्ते ब्राह्मणेन्द्राय कनकं प्रतिपादयेत्। रजतं वा महाभाग! यथाशक्ति जितात्मनः। कृत्वा व्रतं वत्सरमेतदिष्टं दद्याच्च दीपान् विधिवत् प्रभूतान्। चान्द्रं पदं प्राप्य विवर्त्तते सदा धनान्वितः स्यात् त्रिदिवे इहैव"।

चम्पाषष्ठीव्रतं स्कन्दपु० "यदि लभ्येत जीवेऽह्नि दैवेन नृपसत्तम!। षष्ठी भाद्रपदे शुक्ला वैधृतेन समन्विता। विशाखा भौमयोगेन सा चम्पेतीह विश्रुता। देवासुरमनुष्याणां दुर्लभा षष्टिहायनी। कृते त्रेतायां पञ्चाशद्धायनी द्वापरे पुनः। चत्वारिंशत् कलौ त्रिंशद्धायनी दुर्लभा ततः"।

चान्द्रायणव्रतं ब्रह्मपु० "अथ शुक्लचतुर्दश्यां पौषमासे समाहितः। चान्द्रायणव्रतं मासं चाहयेत् सर्वपापजित्। पूर्णेन्दुपौर्णमास्यान्तु पूजयेत् प्रत्यहं जलैः"।

चित्रभानुसप्तमीव्रतं भविष्यपु० "सप्तम्यां पूज्य चात्मेशं चित्रभानुं दिवाकरम्। रक्तैश्च गन्धकुसुमैर्महदारोग्यमाप्नुयात्"।

चैत्रकृष्णतृतीयाव्रतं भविष्योत्तरे "चैत्रे मासि तृतीयायां दन्तधावनपूर्व्वकम्। उपवासस्य नियमान् कुर्य्याद्भक्तिभावतः। अञ्जनं च सताम्बूलं सिन्दूरं रक्तवाससी। विश्वयात् सोपवासापि सर्व्वधन्यकरं परम्। विधवा मतिमार्गेण कुमारी च यदृच्छया। कुर्य्यादाचार्य्यचेनविधिं च यथाबलं च क्रमः। विधिभाद्रपदे चैव सर्व्वसौख्यप्रदायकः। सप्तधान्यविधानेन शूर्प्पस्थां पूजयेदुमाम्"

चैत्रशुक्लप्रतिपदादिकृतं तिलकव्रतम् भविष्यपु० "वसन्ते किंशुकाशोकशोभिते प्रतिपत्तिथिः। शुक्ला तस्यां प्रकुर्व्वीत स्नानं नियमसंयुतः। नारी नरो वा राजेन्द्र! संतर्प्य पितृदेवताः। नद्यास्तीरे तडागे वा स्वगृहे वा तदलाभतः। पिष्टातकेन विलिखेद्वत्सरं पुरुषाकृतिम्। ततः प्रभृत्यनुदिनं तिलकालङ्कृतं शुभम्। धार्य्यं संवत्सरं यावच्छशिनेव नभस्तलम्। एवं नरो वा नारी वा व्रतमेतत् समाचरेत्। सदैव पुरुषव्याघ्र! भोगान् भुवि भुनक्त्यसौ"।

जयन्तीसप्तमीव्रतं भविष्यपु० "माघस्य शुक्लपक्षे तु सप्तमी या त्रिलोचना। जयन्ती नाम सा प्रोक्ता पुण्या पापहरा तथा। उपोष्या येन विधिना शृणु तं पार्वतीप्रिय! पारणानि तु चत्वारि कथितानि च पण्डितैः। पञ्चम्यामेकभक्तन्तु षष्ठ्यां नक्तं प्रकीर्त्तितम्। उपवासस्तु सप्तम्यामष्टम्यां पारणं भवेत्" इत्यादि इदं वर्षसाध्यम्।

जयपौर्णमासीव्रतं भविष्यपु० "पौर्णमासी महाराज! सोमस्य दयिता तिथिः पूर्णमासो भवेद् यस्यां पूर्णमासी ततः स्मृता। तस्यां तु स्रोतसि स्नात्वा सन्तर्प्य पितृदेवताः। आलिख्य मण्डले सोमं नक्षत्रैः सहितं विभुम्। पूजयेत् कुसुमैर्धूपैर्नैवेद्यैस्तथार्चितैः। शुक्लवस्त्रैर्दक्षिणाभिः पूजयित्वा क्षमापयेत्। शाकाहारेण शुक्लसैन्नैस्तु भुञ्जीत वाग्यतः" इत्यादि।

जयाष्टमीव्रतं भविष्यपु० "माहात्म्यमपि वक्ष्यामि यदस्यास्तव भारत!। जयेति या च विख्याता व्रतिनां जयदा-

यिनी। यस्माज्जया जयायर्द्धं कुर्वन्ति व्रतिनो बुधाः। परिपूर्णं व्रतं यस्यां सा ज्ञेया जयपञ्चमी। जया च विजया चैव जयन्ती पापनाशिनी” जया, कार्त्तिकशुक्लपञ्चमी”।

जयावाप्तिव्रतं विष्णुधर्म्मोत्तरोक्तम् “आश्वयुज्यामतीतायां प्रतिपत्प्रभृतिक्रमात्। पूर्ववत् पूजयेद्देवं लोकनाथं त्रिविक्रमम्”। पूर्ववदिति रूपावाप्तिव्रतवत् “त्रिरात्रान्ते तु कार्त्तिक्यां यथाह भगवत्युत्तमम्। सर्वमङ्गलरक्ता भक्त्या रत्नैरलङ्कृतम्। कृत्वा व्रतं मासमिदं यथोक्तं प्राप्नोति लोकं सुचिरं मनीर। तत्रोऽपि कालं सुचिरं मनुष्यः प्राप्नोति सर्वत्र जयं त्रिलोक्याम्”।

जयासप्तमीव्रतं भविष्यपु० “जया च विजया चैव जयन्ती चापराजिता। महाजया च नन्दा च भद्रा चाष्टमी प्रकीर्त्तिता। शुक्लपक्षस्य सप्तम्यां नक्षत्रं पञ्चतारकम्। यदा भवेत् तदा ज्ञेया जयानाम्नेति सप्तमी”। पञ्चतारकमिति रोहिण्यादिनामधारकत्वात्। तस्यां दत्तं हुतं जप्तं तर्पणं देवपूजनम्। सर्वं शतगुणं प्रोक्तं पूजाद्यापि दिवाकर। पूर्वे फलकमारूढ़े शुक्ला वा सप्तमी यदा”। पंचः सर्व्वैः “वर्षमेकन्तु कर्त्तव्यं विधिनानेन भास्करम्। सौवर्णं कारयेद्भक्त्या द्विभुजं पद्मधारिणम्। पापजनितं तस्यां क्रियते गोपतेः पुरः”।

जातिस्मरणव्रतं भविष्योत्तरे “ज्येष्ठे मासि च कर्त्तव्यं तयोदश्यान्तु पाण्डव!। त्रिवर्ग पद्मोतव्य चाचाय्यां तुल्या ततः। कृत्वैकभक्तं द्वादश्यामुपवासमथाचरेत्। मण्डपं कारयेत् तत्र सपताकं मनोहरम्। तत्र जातिः प्रकर्त्तव्या सर्व्वोद्भवकारतः। रौप्यपुष्पाणि कार्य्याणि वंशपात्रे निधापयेत्। तत्र देवास्रयः पूज्या ब्रह्मविष्णुमहेश्वराः। सपत्नीकाः शुभैः पुष्पैः फलैश्च विविधैस्तथा”।

जातिस्मरद्वादशीव्रतं धर्म्मव्रतोक्तम् “वैशाखस्यैवमेवन्तु एकभक्तविधिना नरः। नद्यां स्नानं सदा कृत्वा ततो देवालयं व्रजेत्। तत्राराध्य हरिं भक्त्या पश्चिमर्म्मैर्विचक्षणः। जातिस्मरत्वाय पादौ तु उदरं सर्वधारिणे” इत्यादि।

ज्ञानावाप्तिव्रतं विष्णुधर्म्मोक्तम् “भगवन्! कर्म्मणा केन बुद्धियुक्तो भवेन्नरः। एतदेव मनुष्याणां मनुष्यत्वमुदाहृतम्”। मार्कण्डेय उवाच। “चैत्र्यान्तु समतीतायां यावन्मासं दिने दिने। पूर्ववत् पूजयेद्देवं नृसिंहमपराजितम्”। पूर्ववदिति चैत्रमासोक्तरूपावाप्तिव्रतवद्देवभक्तबहिःस्नानभूषणादिकं कर्त्तव्यमित्यर्थः। “होमश्च नवकं कुर्य्यात् तथा तिलार्थमैन्द्रं च!। ब्राह्मणान् भोजयेश्चात्र तथा त्रिमधुरं नृप!”। त्रिमधुरं मधुघृतशर्करा: “वैशाख्यां कनकं दद्यात् त्रिरात्रोपोषितो नरः। ज्ञानावाप्तिप्रदत्वेतद्व्रतं बुद्धिविवर्द्धनम्। कृत्वा व्रतं मासमिदं यथोक्तमासाद्य नाकं सुचिरं मनुष्यः। मानुष्यमासाद्य तु बुद्धियुक्तो ज्ञानेन युक्तश्च तथा भवेत्”।

ज्येष्ठाव्रतं भविष्योत्तरे “मासि भाद्रपदे शुक्लपक्षे ज्येष्ठा यदा भवेत्। रात्रौ जागरणं कृत्वा गीतवादित्रनिःस्वनैः। एवंविधविधानेन पश्चिमर्म्मैः सुपूजयेत्। ज्येष्ठे हि त्वं महाभागे! सुरासुरनमस्कृते!। ज्येष्ठे त्वं सर्वदेवानां सन्निधौ सदा भव”।

ज्यैष्ठव्रतानि महाभारते “ज्येष्ठामूलन्तु वै मासमेकभक्तस्तु यः क्षिपेत्। ऐश्वर्यमतुलं श्रेष्ठं पुमान् स्त्री वाभिजायते”। विष्णुधर्म्मे “कृष्णार्पितमना ज्यैष्ठमेकभक्तेन यः क्षिपेत्। अहिंसः सर्वभूतेषु वासुदेवपरायणः”।

तपश्चरणसप्तमीव्रतं भविष्योत्तरे “श्रृणुष्वावहितो भूत्वा युधिष्ठिर! तपोव्रतम्। मार्गशीर्षादिमासेषु कर्त्तव्यं भूतिमिच्छता। तस्मिन् स्थितो व्रते विप्रो बहुधा वेदपारगः। ब्रह्मवित् कृष्णसप्तम्यां दद्यादर्घ्यं महीतले। कार्य्ये दर्भमितयं पठित्वा सूर्यवल्लभम्” इत्यादि।

तपोव्रतं पद्मपु० “माघे निशाद्रवासाः स्यात् सप्तम्यां गोप्रदो भवेत्। स्वर्गलोकमवाप्नोति तपोव्रतमिहोच्यते”।

ताम्बूलसंक्रान्तिव्रतं स्कन्दपु० “अथान्यां सम्प्रवक्ष्यामि ताम्बूलाख्यामनुत्तमाम्। विधानं पूर्ववत् कुर्य्यात् तत्र संक्रान्तिवासरे। ताम्बूलं चन्दनाढ्यञ्च प्रदद्यात्तां द्विजोत्तमात्। यावत् संवत्सरं पूर्णं रात्रौ रात्रौ ततः परम्। ताम्बूलं भक्षयेद् विप्रान् कारयेच्चैव नान्तरम्। वत्सरान्ते तु कमलं कृत्वा चैव तु काञ्चनम्। पत्रकोषञ्च कुर्वीत तथा पूगीफलान्वयम्” इत्यादि।

तारकद्वादशीव्रतं भविष्योत्तरे “कथं तत् कृष्ण! कर्त्तव्यं तारकद्वादशीव्रतम्। पापोऽपि सद्गतिं प्राप्नो यत्प्रभावात् खगध्वज!”। कृष्ण उवाच “मार्गशीर्षे सिते पक्षे गृहीत्वा द्वादशीव्रतम्। अर्कास्तमे जले स्नानमपराह्णे समाचरेत्। प्रथमं भास्करं भक्त्या कृत्वा देवार्चनं तथा”।

तिथिनक्षत्रवारव्रतानि कालोत्तरे “नक्षत्रतिथियोगेन तिथीनां वारयोगतः। पुनरेव प्रवक्ष्यामि व्रतानि तु यथास्थितम्। रोहिण्याष्टमीयोगो यदा भवति सौम्यके। विशेषपूजा कर्त्तव्या पुत्रकामेन यत्नतः। पुण्य

शुक्लचतुर्दश्यां गुरुयोगो यदा भवेत्। अथ वा सोमसंयोगो विशेषात् पूज्य शङ्करम्। पायसं घृतसंयुक्तं शिवाय विनिवेदयेत्। धूपदीपोपहाराद्यैः पूर्ववत् पूजयेच्छिवम्। प्राशनन्तु घृतं कार्य्यं सर्वकामप्रदं व्रतम्। आदित्यरेवतीयोगश्चतुर्दश्यां यदा भवेत्। अष्टम्यां वा मघायोगो शिवं संपूज्य पूर्ववत्। तिलास्तु प्राशने शस्ता आदित्यव्रतमीरितम्। आरोग्यं जायते तस्य पुत्रबन्धुगणैः सह। रोहिणीचन्द्रयोगश्च चतुर्दश्यां यदा भवेत्। अष्टम्यां सोमसंयोगात् तदा चन्द्रव्रतं चरेत्। प्रागुक्तेन विधानेन शिवं संपूज्य यत्नतः। दधि क्षीरन्तु नैवेद्यं प्राशनं क्षीरमेव च। कीर्त्तिमारोग्यमैश्वर्यं प्राप्नुयाच्चान्दतं वचः। अश्विनीभौमसंयोगश्चतुर्दश्यां यदा भवेत्। अष्टम्यां भरणीयोगस्तदा भौमव्रतं चरेत्। संपूज्य परया भक्त्या शिवं पञ्चोपचारतः। रक्तोत्पलप्राशनन्तु साम्राज्यं प्राप्नुयाच्छुभम्। रोहिणीबुधसंयोगश्चतुर्दश्यां यदा भवेत्। अष्टम्यां वा समासेन बुधव्रतं समाचरेत्। शिवा पूज्या विधानेन महास्नानपुरःसरम्। महावर्त्तिसमीपे तु प्राशनं पायसंहृतम्। पुत्रार्थदाराश्च यशो वर्द्धते तस्य नान्यथा। रेवतीगुरुसंयोगश्चतुर्दश्यां यदा भवेत्। अष्टम्यां तिष्यसंयोगाद्गुरुव्रतं तदा चरेत्। प्राशनं कपिलाज्यन्तु ब्रह्मारससमन्वितम्। वागीशत्वमवाप्नोति व्रतस्यास्य प्रभावतः। श्रवणं भार्गवयुतं चतुर्दश्यां यदा भवेत्। शुक्रव्रतं तदा विद्धि पुनर्वस्वष्टमी यदा। संपूज्य परमेशानं यथाविभवविस्तरैः। प्राशनं मधु चैवात्र कर्त्तव्यं संयतात्मना। महाफलमवाप्नोति व्रतस्यास्य प्रभावतः। भरणीशनियोगस्तु चतुर्दश्यां यदा भवेत्। आर्द्रायोगस्तथाष्टम्यां तदा शनिव्रतं चरेत्। शिवं संपूज्य विधिवत् प्राशनं सक्तुमेव च। शनिरेकादशस्थो हि फलं यच्छति शोभनम्। विरुद्धं नश्यते वत्स! तदर्थं व्रतमाचरेत्। हेमकुप्यवाकञ्च कम्बलन्तु क्रमेण च। शङ्खञ्च तीक्ष्णलौहञ्च क्रमाद्यत्नेन दापयेत्। यथा सम्भवता वत्स! आचार्य्याय प्रयत्नतः"।

तिथियुगलव्रतं यमस्मृतौ "द्वे चाष्टम्यौ तु मासस्य चतुर्द्दश्यौ तु द्वे तथा। अमावस्यापौर्णमास्यौ सप्तम्यौ द्वादशीद्वयम्। संवत्सरमभुञ्जानः सततञ्च जितेन्द्रियः। ब्रह्मचर्य्यं फलं यच्च यत्फलं सत्ययाजिनाम्। क्रतुनापि फलं यच्च तदवाप्नोत्यभोजनात्"

तिन्दुकाष्टमीव्रतं भविष्यपु० "ज्यैष्ठे मासि द्विजश्रेष्ठ! शुक्लाष्टम्यां त्रिलोचनम्। यः पूजयति देवेशमीशलोकं व्रजन्नरः। ज्यैष्ठे मासि तथाषाढे श्रावणे च तथा परे। पूजयेच्चतुरो मासान् नीलोत्पलकदम्बकैः। त्रिपुरान्तकरं शम्भुं त्र्यम्बकान्धकसूदनम्। मण्डानाञ्च कदम्बेन धूपयेत् गुग्गुलेन च। टेम्बुरुकफलं विप्र! प्राशयेत् कायशोधनम्" टेम्बुरुकन्तिन्दुकफलम्।

तिलदाहीव्रतं स्कन्दपु० "विधिना केन कर्त्तव्यं तिलदाहीव्रतोत्तमम्। कस्मिन्मासे तिथौ चैव विधिना केन तद्भवेत्" श्रीभगवानुवाच "पौषमासे च या कृष्णा तिथिरेकादशी शुभा। तामुपोष्य तदा स्नानं कृत्वा नारायणं जपेत्" इत्यादि।

तिलद्वादशीव्रतं विष्णुधर्मोक्तम् "माघमासे तु सम्प्राप्ते आषाढर्क्षं भवेद्यदि। मूलं वा कृष्णपक्षस्य द्वादश्यां नियतव्रतः। व्यत्तीयात् पुण्यफलदं विधानं तस्य मे शृणु!। देवदेवं समभ्यर्च्य सुस्नातः प्रयतः शुचिः। कृष्णनाम्ना तु सम्पूज्य एकादश्यां महामतिः। उपोषितो द्वितीयेऽह्नि पुनः सम्पूज्य केशवम्। संस्तूय नाम्ना तेनैव कृष्णाख्येन पुनः पुनः। दद्यात्तिलांस्तु विप्राय कृष्णो मे प्रीयतामिति। स्नानप्राशनयोः शस्तास्तथा कृष्णतिला मुने!। विष्णुप्रीणनमन्त्रैश्च सम्प्राप्ते वर्षपारणे। कृष्णकुम्भास्तिलैः सार्द्धं पक्वान्नेन च संयुताः। छत्रोपानद्युगैः सार्द्धं संवीता रत्नगर्भिणः। ब्राह्मणानां प्रदेयास्ते यथावच्चाससंख्यया" इत्यादि। विष्णुधर्मे व्रतान्तरम् "माघ्यान्तु समतीतायां श्रवणेन तु संयुता। द्वादशी या भवेत् कृष्णा प्रोक्ता सा तिलद्वादशी। तिलैः स्नानं तिलैर्होमं नैवेद्यं तिलमोदकैः। दीपश्च तिलतैलेन तथा देयं तिलोदकम्। तिलाश्च देया विप्रेषु तस्मिन्नहनि पार्थिव!। उपवासदिने राजन्! हातव्याश्च तथा तिलाः। उपोषितेनापरेऽह्नि होतव्यश्च विशेषतः। इन्धनञ्च प्रदातव्यं ब्राह्मणेषु तथानघ!। तिलप्रस्थं तदा हुत्वा सोपवासो जितेन्द्रियः। न दुर्गतिमवाप्नोति नात्र कार्य्या विचारणा" इत्यादि।

तीव्रव्रत सौरपु० "अथात्मचरणौ भित्त्वा शिवक्षेत्रे वसेन्नरः। देहान्ते शिवसायुज्यं लभते नात्र संशयः"।

तुरगसप्तमीव्रतं विष्णुधर्मोत्तरे "चैत्रमासस्य सप्तम्यां शुक्लपक्षे नराधिप!। गोमयेनोपलिप्ते तु स्थले कुर्य्यात्तु मण्डलम्। तत्राष्टपत्रं कमलं कर्त्तव्यं वर्णकैः शुभैः।

कृतोपवासस्तन्मध्ये भास्करं पूजयेन्नरः। व्रते समाप्ते दातव्यास्तुरगा ब्राह्मणाय तु। प्राप्याश्वमेधस्य फलं यथावल्लोकानवाप्याथ पुरन्दरस्य। उपोष्य राजन्! सुचिरञ्च कालं सायुज्यमायाति दिवाकरस्य”।

तुष्टिप्राप्तितृतीयाव्रतं विष्णुधर्म्मोत्तरे “तृतीया श्रावणे कृष्णा या च श्रवणसंयुता”। श्रावणोऽत्र पौर्णमास्यन्तोमासो ग्राह्यः अतःश्रवणकृष्णतृतीयायाः श्रवणयुक्तत्वं न दुर्घटम्। “तस्यां संपूज्य गोविन्दं तुष्टिमप्र्यामवाप्नुयात्”।

तेजःसंक्रान्तिव्रतं स्कान्दपु० “अथान्यां सम्प्रवक्ष्यामि तेजःसंक्रान्तिमुत्तमाम्। संक्रान्तिवासरं प्राप्य स्नानं कृत्वा विचक्षणः। शालितण्डुलसंयुक्तं कारणं कारयेच्छुभम्। तन्मध्ये दीपकं स्थाप्य प्रज्वलन्तं स्वतेजसा। तन्मुखे मोदकं स्थाप्य ब्राह्मणाय निवेदयेत्। अर्घ्यञ्च पूर्ववत् कार्य्यमेकभक्तन्तु पूर्ववत्। संवत्सरे तु सम्पूर्णे कुर्य्यादुद्यापनं बुधः” इत्यादि।

त्रयोदशद्रव्यवर्ज्जसप्तमीव्रत भविष्योत्तरे “माघोद्दिने सिते पक्षे अतीते चोत्तरायणे। सर्व्वोद्भिन्निलयवान् सह माषमुद्गगोधूममांसमधुमैथुनकांस्यपात्रैः। अभ्यञ्जनाञ्जनशिलातलचूर्णितानि षष्ठीव्रती परिहरेद्दहनोष्ट-विद्धं। देवान् पितॄन् मुनिगणान् सजलाञ्जलीभिः सन्तर्प्य पूज्य गगनाङ्गनहंसदीपम। हुत्वानले तिल-यवान् बहुशोघृताक्तान् भूमौ स्वपेत् हृदि निधाय दिनेशबिम्बम्। यानि त्रयोदशदिनैरिह वर्ज्जितानि द्रव्याणि तानि परिहृत्य दिने च सप्तम्याम्। संप्राप्य शुद्धचरणानिह वर्षमेकं प्राप्नोति भारत! पुमान् मनसेप्सितानि”।

त्रिगतिसप्तमीव्रतं भविष्यपु० “सप्तम्यां शुक्लपक्षे तु फाल्गुन्यां वा यजेन्नरः। जपेद्ब्रवीति नाम भक्त्या पुनः पुनः। देवार्च्चनं वाष्टशतं कृत्वैवं तु जपेच्छुचिः। स्नातः प्रस्थानकाले तु उत्थाने स्खलिते क्षुते। पाषण्डान्! पतितांश्चैव तथैवान्त्यावसायिनः। नालापयेत् तथा भानुमर्च्चयेच्छ्रद्धयान्वितः। इदञ्चोच्चारयेद्भानोर्म-न्त्रं ध्यानतत्परः। हंस हंस कृपालो! त्वं अगतीनां गतिर्भव। संसारार्णवमग्नानां त्राता भव दिवाकर। एवं षष्ठ्याद्योपवासं कृत्वा नियतमानसः। पूर्व्वोक्त एव वान्येद्युः सकृत् प्राश्याज्र्जुनीयकम्” आर्ज्जुनीयक, गोशकृन्मयम्।

त्रिविक्रमतृतीयाव्रतं विष्णुधर्म्मोत्तरे “शुक्लपक्षे तृतीयायां सोपवासो जितेन्द्रियः। मण्डलत्रितयं कुर्य्याद् वर्णकेन पृथक् पृथक्। मण्डलं दक्षिणे भागे श्वेतं कुर्य्यात् ततो नरः। रक्तं मध्ये रवेः कुर्य्यात् तादृक्श्वेतं ध्रुवस्य तु। विष्णोः पदत्रयं तेषु पूज्यं स्यात् मण्डलेन तु। भूमौ तु प्रथमं पादं द्वितीयं सूर्य्यमण्डले। तृतीये तु ध्रुवे देवे पूजयेत् प्रयतः शुचिः”।

व्रतान्तरं विष्णुधर्म्मोत्तरे “द्वितीयञ्च प्रवक्ष्यामि शृणु! त्रैविक्रमं व्रतम्। भूमिस्तु प्रथमः पादः अन्तरीक्षं तथा परः। तृतीयो दिवि विज्ञेयो देवदेवस्य चक्रिणः। भुवः पतिः स्मृता वह्निरन्तरीक्षस्य चानलः। दिशांपतिस्तथा सूर्य्यस्तस्य विष्णोः पदत्रयम्। ज्यैष्ठ-शुक्लतृतीयायां सोपवासो जितेन्द्रियः। कल्ये कूपजले स्नाता वह्निं संपूजयेन्नरः। एतत् संवत्सरं कृत्वा नरस्त्रैविक्रमं व्रतम्। सर्व्वकामसमृद्धस्य यज्ञस्य फलमश्नुते”।

व्रतान्तरं विष्णुधर्म्मोत्तरे “वक्ष्यामि ते महाभाग! तव त्रैविक्रमव्रतम्। तृतीयं यदुशार्द्दूल! तन्मे निगदतः शृणु!। ज्यैष्ठे शुक्लतृतीयायां नरः स-म्यगुपोषितः। भुवः सम्पूजनं कुर्य्याद् गन्धमाल्यानुलेपनैः। दीपैः रत्नैश्च विविधैर्दद्याद् विप्रेषु दक्षिणाम्। बीज-पूर्णानि पात्राणि सहिरण्यानि भक्तितः। पूजैवमन्तरिक्षस्य माघाषाढे विधीयते। दक्षिणा तत्र दातव्या तथा वासोयुगं द्विजे। दिवः पूजा च कर्त्तव्या श्रावणे प्राग्वदेव तु। छत्रञ्चोपानहं युग्मं दक्षिणां तत्र दापयेत्। एवं मासत्रयेणेह पारणं प्रथमं भवेत्। मासत्रयेण चान्येन ततो मासत्रये पुनः। ततो मास-त्रये चान्यदेवमन्यच्चान्यथा। विद्धि ह्येवमित्थं धर्म्मज्ञ पार-णानां चतुष्टयम्” इत्यादि।

त्रिविक्रमत्रिरात्रशतव्रत विष्णुरहस्ये “त्रिरात्रशतं कुर्य्यात् समुद्दिश्य जनार्द्दनम्। कुलानां शतमादाय स याति भवनं हरेः। नवम्यादिसिते पक्षे नरो मार्गशिरस्य च। प्रारभेत त्रिरात्राणां शतं तु विधिवत् व्रती। श्रद्दधानो जितक्रोधो नित्यस्नायी क्षमान्वितः। अभ्यर्च्चयेत् सदा विष्णुं कर्म्मणा मनसा गिरा। अष्टोत्तरसहस्रन्तु शतं वानुदिनं जपेत्। अष्टम्यामेकभक्ताशी दिनत्रयमुपा-वसेत्। एकादश्यां शुचि स्नातो वासुदेवार्च्चने रतः। द्वा-दश्यां पूजयेद्देवं गन्धमाल्यविलेपनैः। नैवेद्यधूपदीपा-द्यैर्गीतिनृत्यैश्च केशवम्। अनेन विधिना कृत्वा त्रिरा-त्राणां शतं नरः। निर्व्वापयेत् ततो भक्त्या विशेषवि-

धिना व्रतम्। संप्राप्ते कार्त्तिके मासि व्रतमेतदनुत्तमम्”। प्रतिमासं त्रिरात्रद्वयमिति पञ्चाशता मासैः व्रतं तन्माधिमासद्वतयोमासचतुर्भिर्वर्षैरिति कार्त्तिके समाप्तिः।

त्रिविक्रमव्रतं विष्णुधर्म्मोत्तरे “करोति केशवप्रीत्यै कार्त्तिकं मासमाप्लवान्। पूर्वं वयसि यत्तेन जानताऽजानतापि वा। पापमाचरितं तस्मान्मुच्यते नात्र संशयः। अनेनैव विधानेन मार्गशीर्षेऽपि माधवम्। समभ्यर्च्यैकभक्तं वै वर्षिभ्यो यः प्रयच्छति” इत्युपक्रमे। “त्रैमासिकं व्रतमिदं यः करोति नरेश्वर!। स विष्णुप्रीणनात् पापैर्मुक्तः परिमुच्यते। द्वितीये वत्सरे राजन्! मुच्यते चोपपातकैः। तद्वत् तृतीयेऽपि कृतं महापातकनाशनम्। व्रतमेतन्नरैः स्त्रीभिस्त्रिभिर्मासैरनुष्ठितम्। त्रिभिः संवत्सरैश्चैव प्रददाति फलं नृणाम्। त्रिभिर्मासैस्त्र्यवस्थाभिस्त्रिविधात् पातकान्नृप!। त्रीणि नामानि देवस्य मोचयन्ति त्रिवार्षिकैः। यतस्ततो व्रतमिदं त्रिविक्रममुदाहृतम्। सर्वपापप्रशमनं केशवाराधनं परम्”।

सौरत्रिविक्रमव्रतं भविष्योत्तरे “समभ्यर्च्य जगन्नाथं देवमर्कमथापि वा। एकमश्नाति यो भक्तं द्वितीयं ब्राह्मणार्पणम्। करोति भास्करप्रीत्यै कार्त्तिकं मासमाप्लवान्। पूर्वं वयसि यत्तेन जानताऽजानताऽपि वा। पापमाचरितं तस्मान्मुच्यते नात्र संशयः। व्रतमेतन्नरैस्त्रीभिस्त्रिभिर्मासैरनुष्ठितम्। त्रिभिः संवत्सरैश्चैव प्रददाति फलं नृणाम्। त्रिभिर्मासैस्त्र्यवस्थास्तु त्रिविधात् पातकान्नृप!। त्रीणि नामानि देवस्य मोचयन्ति त्रिवार्षिकात्। यतस्ततो व्रतमिदं त्रिविक्रममुदाहृतम्। सर्वभूतप्रशमनं भास्कराराधनं परम्”।

त्र्यम्बकव्रतं पद्मपु० “चतुर्दश्यान्तु नक्ताशी समान्ते गोयुगप्रदः। स शैवं पदमाप्नोति व्रजन्त्वैयम्बकं व्रतम्”।

दशादित्यव्रतं ब्रह्माण्डपुरा० “वक्ष्ये सौरव्रतं पुण्यं दुःखशान्तकरं परं। दशाकरं हि भक्तानां मनोरथकरं परं। भानुवारे सिते पक्षे दशम्यां चैव नारद!। प्रातःकालेऽथ मध्याह्ने स्नानं कुर्य्याद्यथाविधि” इत्यादि।

दशावतारव्रतं विष्णुपु० “एकादश्यां निराहारो द्वादश्यां पुरुषोत्तमम्। अर्च्चयेद् ब्राह्मणमुखे स गच्छेत्परमं पदम्। एषा तिथिर्वैष्णवी स्याद्द्वादशी शुक्लपक्षगा। तस्यामाराधयेद्देवं प्रयत्नेन जनार्द्दनम्”।

दाम्पत्याष्टमीव्रतं भविष्यपु० “कार्त्तिके मासि विप्रेन्द्र! पुत्रकामो नरोत्तमे!। अष्टम्यां कृष्णपक्षस्य पूजयेद्विधिवद्द्विज!। उमाञ्च तां सतीं देवीं विधिवद्द्विजसत्तम!। य एतत् कुरुते भक्त्या उमामहेश्वरं व्रतम्। सकैकमेवं विप्रेन्द्र! स याति परमां गतिम्”। समेमेकं संवत्सरम् “चतुर्भिः पारणैरेवं समैकमेव कीर्त्तितं बुधैः। प्रथमन्तु त्रिभिर्मासैः पारणं कार्त्तिकादिभिः। कार्त्तिके मार्गशीर्षे तु पौषे मासि तथा परे। उत्पलकस्य पुष्पैस्तु फलैर्नैवेद्यैरनेकशः”।

दिवाकरव्रतं भविष्यपु० “आदित्यवारं हस्तेन युक्तं गृह्णीत पाण्डव!। ततः प्रत्यादित्यदिनं सप्त वारान् प्रपूजयेत्। एकभक्तेन नक्ताशी ब्राह्मणान् पूजयेत् दिवा। दक्षिणां तु यथा शक्त्या दद्यात् विप्राय भक्तितः”।

दीप्तिव्रतं पद्मपु० “सन्ध्यादीपप्रदो यस्तु समां तैलस्य वर्जयेत्। समान्ते दीपकान् दद्याच्चक्रं शूलञ्च काञ्चनम्। वस्त्रयुग्मञ्च विप्राय स तेजस्वी भवेदिह। रुद्रलोकमवाप्नोति दीप्तिव्रतमिदं स्मृतम्”।

दुर्गन्धदौर्भाग्यनाशनत्रयोदशीव्रतं भविष्योत्तरे “ज्यैष्ठे मासि सिते पक्षे त्रयोदश्यां युधिष्ठिर!। स्नात्वा पुष्पनदीतोये पूजयेत्पुष्परेवजम्” इत्यादि।

दुर्गानवमीव्रतं भविष्यपु० “नवम्यां तु सिते पक्षे नियतः संयतेन्द्रियः। मासि चाश्वयुजे वीर! कार्त्तिके कार्त्तिकोत्तरे। पुष्पैश्च पूजयेद् दुर्गां जातिपुष्पैर्विधानतः। धूपार्थं गुग्गुलं दद्यान्नैवेद्यं गुडपूपकान्। दुर्गेति नाम जप्तव्यं प्रवतोऽष्टशतं नृप!। माघे च फाल्गुने मासि चैत्रे चैत्रोत्तरे नृप!। शुक्लपक्षे तु अष्टम्यामुपवासपरायणः” इत्यादि वर्षसाध्यम्।

दुर्गाव्रतं देवीपु० “देवीव्रतं प्रवक्ष्यामि सर्वकामप्रसाधनम्। श्रावणे शुक्लपक्षे तु अष्टम्यां वायुभोजनः। स्नात्वा प्राङ्मुखो भूत्वा जितक्रोधः क्रियान्वितः। देवीं संस्नाप्य तोयेन पुनःक्षीरेण वारिणा। ततो गुग्गुलधूपञ्च घृतं रम्यन्तु दापयेत्” इत्यादि तदवधिवर्षसाध्यम्।

दूर्वागणपतिचतुर्थीव्रतं सौरपु० “चीर्णमेतद् व्रतं सर्वैः पुराकल्पे षडानन!। चतुर्थी या भवेच्छुक्ला नभोमासस्य पुण्यदा। तस्यां व्रतमिदं कुर्य्यात् कार्त्तिक्यां वा षडानन!। गजाननं चतुर्बाहुमेकदन्तं विपाटिनम्। तथा हैमीमयी दूर्वां तदाधारे व्यवस्थिताम्”। तदाधारे, विघ्नशासने “संस्थाप्य विघ्नहन्तारं कलसे ताम्रभाजने। वेष्टितं रक्तवस्त्रेण सर्वतो भद्रमण्डले। पूजयेच्च कुसुमैः पत्रिकाभिश्च पञ्चभिः। विल्वपत्रमपामार्गः शमी दूर्वा हरिप्रिया। सोपोषत्या तु हरस्येष!

ततो राज्यं भविष्यति । सर्वोपहारसम्पन्नं सर्वोपस्करमाहरेत् । कन्दपक्वं फलं शाकं लवणं गुडशर्करा । खण्डं कुसुम्भरी क्षीरं धान्यानि विविधानि च । दातव्यानि रघुश्रेष्ठ ! वन्ध्यकाले तु भक्तितः” ।

दूर्वात्रिरात्रव्रतं पद्मपु० “शृणु ! दूर्वात्रिरात्रस्य विधिं कार्त्स्न्येन सुव्रत ! । मासि भाद्रपदे चैव शुक्लपक्षे त्रयोदशीम् । त्रिरात्रं समुपोष्यन्तु यावत् पूर्णा तिथिर्भवेत् । उमामहेश्वरं देवं सावित्रीं धर्ममेव च । दूर्वामूले तु संस्थाप्य मण्डपं कारयेत्ततः” इत्यादि ।

दूर्वाष्टमीव्रतं भविष्यपु० “ब्रह्मन् ! भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः । पूजयेच्छङ्करं भक्त्या यो नरः श्रद्धयान्वितः । स याति परमं स्थानं यत्र देवस्त्रिलोचनः । गणेशं पूजयेद्यस्तु दूर्वया यो हि तं मुने ! । तस्योपवासं सम्प्राप्यमष्टम्यां पूजयेच्छिवम् । दूर्वाष्टमेतं विप्रेन्द्र ! दध्यक्षतफलैः शुभैः” । व्रतान्तरं दूर्वाष्टमीशब्दे द्रष्टव्यम् ।

देवमूर्तिव्रतं विष्णुधर्मोत्तरोक्तम् “ईशानस्य तथा वह्नेर्विहयाश्च समीरणम् । जानीहि यदुशार्दूल ! देवमूर्तिचतुष्टयम् । तेषान्तु रूपनिर्माणं कृत्वा तान् पूजयेद् बुधः । गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । चैत्रशुक्ले महाभाग ! प्रतिपत्प्रभृतिक्रमात् । कौप-नादेय-ताडागकासारैः स्नानमाचरेत् । दध्ना तिलैर्यवैर्होमो घृतेन च तथा भवेत् । कर्पूरं कुङ्कुमञ्चैव तथैवागुरुचन्दनम् । ब्राह्मणेभ्यः प्रदातव्यं तथा राजन् ! दिनक्रमात् । दिनत्रयं तथाऽश्नीयात् सायं प्रातरयाचितम् । दिनमेकन्तु नाश्नीयात् व्रतचारी नरोत्तमः । एतत् संवत्सरं कृत्वा व्रतं पुरुषसत्तम । सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते” ।

देवव्रतं पद्मपु० “अक्षमष्टकुरिता तु गवा सार्द्धं कुटुम्बिने । हैमचक्रं त्रिशूलञ्च दद्याद्विप्राय वाससी । प्रणम्य भक्त्या शक्रश्च प्रियतां शिवकेशवौ । एतद्देवव्रतं नाम महापातकनाशनम् । यस्तु संवत्सरं पूर्णमेकभक्तो भवेन्नरः । अहिंसः सर्वभूतेषु वासुदेवपरायणः । नमोऽस्तु वासुदेवायेत्यहन्यहन्यष्टशतं जपेत् । पौण्डरीकस्य यज्ञस्य ततः फलमवाप्नुयात् । दशवर्षसहस्राणि स्वर्गलोके महीयते । ततश्चापि इह चागत्य माहात्म्यं प्रतिपद्यते” । कालोत्तरे व्रतान्तरं “बृहस्पतिकयायोगश्चतुर्दश्यां यदा भवेत् । उपोष्य पूजयेत्तस्यां देवदेवं महेश्वरम् । महास्नानप्रकारेण महावर्त्तिपुरःसरम् । कुङ्कुमागरुचन्दनेन शुक्लपुष्पैः प्रपूजयेत् । धूपश्च सफलो देयः मधुना चन्द्रसंयुतः । सितवस्त्राणि वस्त्रञ्च आचार्याय प्रदापयेत् । जातीफलैः प्राशनञ्च रात्रौ जागरणं हितम् । एतद्देवव्रतं नाम आयुःश्रीकीर्त्तिवर्द्धनम्” ।

देवीव्रतं पद्मपु० “पयोव्रतं पञ्चदश्यां व्रतान्ते गोयुगप्रदः । रुद्रलोकमवाप्नोति देवीव्रतमुदाहृतम्” देवीपु० व्रतान्तरं “क्षीराशी कार्त्तिके यस्तु देव्या भक्तिरतो नरः । शाकयावकभक्षाशी प्रातःस्नायी शिवारतः । पूजयेत्तिलहोमस्तु मधुक्षीरघृतादिभिः । कार्यस्तु देवीमन्त्रेण शृणु पुण्यफलं हरे” इत्यादि ।

द्वादशसप्तमीव्रतं भविष्योत्तरे “माघमासात् समारभ्य शुक्लपक्षे युधिष्ठिर ! । सप्तम्यां व्रतसङ्कल्पो वर्षमेकं व्रती भवेत्” मासभेदे नियमभेदास्तत्रोक्ता द्रष्टव्याः ।

द्वादशसाध्यतृतीयाव्रतं विष्णुधर्मोत्तरे “मनोऽनुमन्ता प्राणश्च नरयानश्च वीर्यवान् । चित्तिर्हयो नयश्चैव हंसो नारायणस्तथा । प्रभवो विष्णुर्विभुश्च साध्या द्वादश जज्ञिरे । तृतीयायां महाभाग ! पूजयेत्तानुपोषितः” । प्रत्येकतृतीयायां यावद्वर्षं सोपवास इति शेषः ।

द्वादशादित्यव्रतं विष्णुधर्मोत्तरे “धाता मित्रोऽर्यमा पूषा शक्रोऽंशो वरुणो भगः । त्वष्टा विवस्वान् सविता विष्णुर्द्वादशकस्तथा । पूजयेद् द्वादशादित्यान् शुक्लपक्षे उपोषितः । मार्गशीर्षादिमारभ्य द्वादश्यां नियतव्रतः” ।

द्वादशीव्रतं कूर्मपु० “एकादश्यां निराहारो द्वादश्यां पुरुषोत्तमम् । अर्चयेद् ब्राह्मणमुखे स गच्छेत्परमं पदम् । एषा तिथिर्वैष्णवी स्याद् द्वादशी शुक्लपक्षगा । तस्यामाराधयेद्देवं प्रयत्नेन जनार्दनम्” ।

द्वीपव्रतं विष्णुधर्मोत्तरे “अथातः संप्रवक्ष्यामि द्वीपव्रतमनुत्तमम् । चैत्रशुक्लात्समारभ्य प्रत्यहं दिनसप्तकम् । जम्बूशाककुशक्रौञ्चशाल्मलिद्वीपसंज्ञितम् । गोमेदं पुष्करञ्चैव प्रत्यहं पूजयेत् क्रमात् । नित्यमेव सदा स्नानं बहिरेव समाचरेत् । अधःशायी भवेन्नित्यं तद्देव दिनसप्तकम्” इत्यादि ।

धनसंक्रान्तिव्रतं स्कन्दपु० “धनसंक्रान्तिमाहात्म्यं शृणु स्कन्द ! विधानतः । यत्कृत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः । संक्रान्तिवासरं प्राप्य शुचिर्भूत्वा समाहितः । कलसं निर्व्रणं स्नात्वा वारिपूर्णं निधापयेत् । सुवर्णयुक्तन्तं कृत्वा प्रतिमाञ्च दापयेत् । विधिनानेन वर्षान्ते प्रीयतां मे दिवाकरः” ।

धनावाप्तिव्रतं धर्मोत्तरोक्तम् “भगवन् ! कर्मणा केन धनवान्

पुत्रभो भवेत् । पुत्रवान् देवलोकेषु पूज्यो भवति मानवः"। इति प्रश्ने "आषाढ्यां समतीतायां प्रतिपत्प्रभृति क्रमात्। पूर्ववत् पूजयेद्विष्णुं देवं सङ्कर्षणं विभुम्" इत्यादि।

धन्यव्रतं वराहपु० "अथातः सम्प्रवक्ष्यामि धन्यव्रतमनुत्तम ! । येन सद्यो भवेद्धन्यो ह्यधन्योऽपि हि यो भवेत् । मार्गशीर्षेऽमले पक्षे प्रतिपद् या तिथिर्भवेत् । तस्यां नक्तं प्रकुर्वीत रात्रौ विष्णुञ्च पूजयेत्" इत्यादि ।

धराव्रतं पद्मपु० "यो विंशतिपलादूर्द्धं मही कृत्वा तु काञ्चनीम् । दिनं पयोव्रतं दद्याद्रुद्रलोके महीयते । धराव्रतमिदं प्रोक्तं सप्तकल्पशतानुगम्" । दिनं देवानामुत्तरायणम्। पयोव्रतमित्यनन्तरं कृत्वेत्यनुषङ्गः। रुद्रो देवता धरादानं पारणम्" इत्यादि ।

धर्मव्रतं विष्णुधर्मोत्तरे "शुक्लपक्षे दशम्यां तु सोपवासस्तु मानवः । धर्मं सम्पूजयेद् देवं सर्वलोकसुखावहम्" ।

धान्यव्रतं स्कान्दपु० "अथातः संप्रवक्ष्यामि धान्यव्रतमनुत्तमम् । यत् कृत्वा हि नरो राजन् ! सर्वकामानवाप्नुयात् । अयने विषुवे चैव स्नानं कृत्वा विचक्षणः । व्रतस्य नियमं कुर्य्याज्ज्ञात्वा देवं दिवाकरम् । रविं ध्यात्वा ततो दद्याद्धान्यप्रस्थं द्विजातये । प्रतिमासं पुनस्तद्वत् पूज्यो देवः सहस्रपात् । एवं सदा प्रदातव्यं धान्यप्रस्थं द्विजन्मने । एवं संवत्सरे पूर्णे कुर्य्यादुद्यापनक्रियाम्" ।

धान्यसप्तमीव्रतं भविष्यपु० "संपूज्य सितसप्तम्यां भानुं धान्यानि सप्त च । ददाति नक्तभुक् गार्हं वस्त्रेण समन्वितम्" । गार्हं गृहस्थोपकरणम् "स तारयति सप्तान्यान् कुल्यानात्मानमेव च । सुत ! धान्यव्रतं नाम व्रतं धान्यसुखप्रदम्" ।

धामत्रिरात्रव्रतं पद्मपु० "त्रिरात्रोपोषितो दद्यात् फाल्गुन्यां भवनं शुभम् । आदित्यलोकमाप्नोति धामव्रतमिदं स्मृतम्" ।

धाराव्रतं भविष्योत्तरोक्तम् "चैत्रारम्भात् पिबंस्तोयं जलधारां प्रपातयेत् । वर्षान्ते घृतसंपूर्णान्दद्याद्वर्द्धनिकां नवाम् । एतद्धाराव्रतं नाम सर्वोद्वेगहरं परम् । कान्तिसौभाग्यजननं सपत्नीदर्पनाशनम्" ।

ध्वजनवमीव्रतं भविष्योत्तरे "पौषस्य शुक्लपक्षे तु नवमी शङ्करी स्मृता । तस्यां स्नात्वा शुभैः पुष्पैरर्चनीया हरेः स्वसा । कुमारी भगवान् देवी सिंहस्कन्धगामिनी । ध्वजान् नानाविधान् कृत्वा पुरतस्तस्य पूजयेत् । मालतीकुसुमैर्दीपैर्गन्धधूपविलेपनैः । बलिभिः पशुभिर्मेध्यैः सुरामांससमाप्लवैः । दधिचन्दनचूर्णैश्च फलैर्नानाविधापाचितैः । देवीं स्वर्णमयीं कृत्वा सिंहारूढां चतुर्भुजाम् । खड्गशक्तिधरां शूलधरां नेत्रत्रयान्विताम्" । (पूजयेत्)

ध्वजव्रत विष्णुधर्मोत्तरोक्तम् "चैत्रे तु प्रत्यहं मासि गरुड़ं पूजयेन्नरः । पीतेन गन्धनैवेद्यमाल्यवस्त्रादिना द्विज ! । वैशाखे च तथा मासि तालं संपूजयेत् सदा । नीलेन गन्धनैवेद्यमाल्यवस्त्रादिना द्विज ! । ज्यैष्ठे च प्रत्यहं मासि मकरं पूजयेत् सदा । श्वेतेन गन्धनैवेद्यमाल्यवस्त्रादिभिर्द्विज ! । ऋश्यं संपूजयेद्देवं मास्याषाढे यथाविधि । रक्तेन गन्धनैवेद्यमाल्यवस्त्रादिना द्विज ! । बहिः स्नानं तथा कुर्य्याद्वह्निसंपूजनं तथा । नित्यञ्च कुर्य्याद्धर्मज्ञ ! तथा ब्राह्मणभोजनम् । पारणार्थं तथा कुर्य्यान्नक्तं तैलविवर्जितम् । अधःशायी तथा च स्याद् ब्रह्मचारी सदा भवेत् । व्रतमेतन्नरः कुर्य्यात् सम्यङ्मासचतुष्टयम् । ब्राह्मणान् पूजयेच्छक्त्या आषाढे चरमेऽहनि । वस्त्रायुग्मानि धर्मज्ञ ! दद्याद्विप्रेषु दक्षिणाम् । कृत्वैकं पारणं राजन् ! स्वर्गलोके महीयते । द्वितीयं पारणं कृत्वा शक्रलोके महीयते । तृतीयं पारणं कृत्वा ब्रह्मलोके महीयते । कृत्वा तुर्य्यं पारणन्तु रुद्रलोके महीयते । विष्णुलोकमवाप्नोति कृत्वा द्वादशपारणम् । ध्वजव्रतं द्वादश वत्सराणि कृत्वा नरो भार्गववंशमुख्य ! । सायुज्यमायाति जनार्दनस्य देवस्य विष्णोः परमेश्वरस्य"।

नक्तचतुर्थीव्रतं स्कान्दपु० "विनायकचतुर्थ्याख्यं व्रत वक्ष्यामि तेऽनघ ! । धन्यं यशस्यमायुष्यं समीहितफलप्रदम् । विघ्नोपशमनायालं सर्वसिद्धिप्रदायकम् । प्रियं गणपतेर्नित्यमृषिभिस्साध्युपासितम् । मार्गशुक्लचतुर्थ्यान्तु ग्राह्यं व्रतमिदं महत् । नक्ताहारेण विप्रेन्द्र ! तिलान्नं पारणं स्मृतम् । तदेव वह्नौ होतव्यं ब्राह्मणाय ददेत् सदा । नद्यां नदे वा नैवेद्य विघ्नराजाय संयमी । पूजयेत् गणपतिं रात्रौ गन्धैः पुष्पैर्यथाक्रमम्"

नक्षत्रपुरुषव्रतं मत्स्यपु० "नक्षत्रपुरुषं नाम परं नारायणार्चनम् । पादौ हि कुर्य्याद्विधिवद्विष्णुनामानि कीर्त्तयेत् । प्रतिमां वासुदेवस्य मूलर्क्षाद्यभिपूजयेत् । चैत्रमासं समासाद्य कृत्वा ब्राह्मणवाचनम्। मूले नमो विश्वधराय पादावनन्तदेवाय च रोहिणीषु । जङ्घे च पूज्ये वरदाय चैवं द्वे जानुनी चाश्विकुमारकर्क्षे । पूर्वोत्तराषाढयुगे च पादौ नमः शिवायेत्यभिपूजनीयौ" इत्यादि ।

नक्षत्रार्थव्रतं देवीपु० "अतःपरं प्रवक्ष्यामि रूपसौभाग्यकारकम् । नक्षत्रविधिना वत्स ! यथा तुष्यति शङ्करो । मृगादारभ्य मूलेन पादौ जातिस्मरा पुरा । पूजयेत्सोपवासस्तु नक्षत्रान्ते तु पारणम् । यवान्नं हविषा सिद्धं आग्नेये जङ्घे प्रपूजयेत्" इत्यादि ।

नदीव्रतं विष्णुधर्म्मोत्तरे "चैत्रशुक्लाद्यथारभ्य प्रत्यहं दिनसप्तकम् । ह्लादिनीं ह्लादिनीञ्चैव पावनीं चैव पूजयेत् । सीतां चेक्षुं तथा सिन्धुं तथा भागीरथीं क्रमात् । बहिःस्नानं तथा कुर्य्यान्नित्यं नक्ताशनो भवेत् । जले च जुहुयात् क्षीरं शान्तात्मा च दिने दिने । क्षीरपूर्णाश्च दातव्या वारिधान्यो द्विजातिषु । क्षीराशनश्च तिष्ठेत तत्तथा दिनसप्तकम् । एवं संवत्सरं कृत्वा पूर्णे संवत्सरे नरः । द्विजातिषु ततो दद्याद्रजतस्य फलं शुभम् । फाल्गुनस्यासिते पक्षे सप्तम्यां दिवसे क्रमात् । तं लोकमवाप्नोति नरो यत्र पायसकर्दमाः" इत्यादि ।

नन्दव्रतं विष्णुधर्म्मोत्तरे "शुक्लपक्षे महाराजं त्रयोदश्यामुपोषितः । फाल्गुनात्तु समारभ्य नित्यं संपूजयेन्नरः" । महाराजन्तु धनदम् । "गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । सवर्णं ब्राह्मणेन्द्राय व्रतान्ते प्रतिपादयेत् । कृत्वा व्रतं वत्सरमेतदिष्टं पक्षेषु राजन् ! सुचिरं ह्युपोष्य । मानुष्यमासाद्य धनान्वितः स्यात् सौभाग्ययुक्तश्च तथा विरोगः" ।

नन्दादिव्रतं भविष्योत्तरे "यस्त्वादित्यगृहेशस्य वारो देवस्य सुव्रतः । पूजयेत् स प्रियो नित्यं स्यातो भांस्तुतिभूषणः (शिवः) । यस्तु संपूजयेन्नित्यं पतङ्गं पन्नगाधिपम् । गन्धपुष्पादिधूपैस्तु स्तोत्रैर्वा विविधैस्तथा । सोपवासो महाश्वेत ! आदित्यग्रहणे शुचिः । जपमानो महाश्वेतां यथाख्योक्तग्रहाधिपम् । ब्राह्मणान् भोजयित्वा तु ततो भुञ्जीत वाग्यतः । आदित्यग्रहयुक्तेऽस्मिन् वारे त्रिपुरसूदनः । तत्र कर्म कृतं पुण्यं तत्सर्वं शुभदं भवेत्" ।

नन्दाव्रतं देवीपु० "मासे नभसि संप्राप्ते नक्ताहारो जितेन्द्रियः । प्रातःस्नायी सदाध्यायी अग्निकार्य्यपरायणः । देवीं सपूजयेद्वत्स ! बिल्वपुन्नागचम्पकैः । धूपन्तु गुग्गुलं दद्यान्नैवेद्यं घृतपाचितम् । क्षीरान्नं दधिभक्तञ्च अथवा शाकयावकम् । जपञ्च कुर्य्यान्मन्त्रस्य सहस्रमथवा शतम् । दिव्यास्तत्र समर्थैस्तत् यावत् पूर्णं व्रतम्भवेत्" ।

नन्दसप्तमीव्रतं भविष्योत्तरे "या तु मार्गशिरे मासि शुक्लपक्षे तु सप्तमी । नन्दा सा कथिता वीर ! सर्वानन्दकरी शुभा । पञ्चम्यामेकभक्तं तु षष्ठ्यां नक्तं प्रकीर्त्तितम् । सप्तम्यामुपवासञ्च कीर्त्तयन्ति मनीषिणः । मालतीकुसुमानीह सुगन्धं चन्दनं तथा । कर्पूरागुरुसंमिश्रं धूपञ्चात्र विनिर्दिशेत् । दध्योदनं सखण्डञ्च नैवेद्यं भास्करप्रियम् । तदेव दद्याद्विप्रेभ्यो ह्यश्नीयाच्च स्वयं यथा" ।

नयनप्रदसप्तमीव्रतं भविष्यपु० "या मार्गशीर्षे सितसप्तमेऽह्नि हस्तर्क्षयोगे जगतः प्रसूतिम् । संपूज्य भानुं विधिनोपवासी स्रग्गन्धधूपान्नवनोपहारैः । स्त्रीतगन्धं प्रतियत्नपूजादानादियुक्तं व्रतमष्टमेकम्" इत्यादि ।

नरकपूर्णिमाव्रतं विष्णुधर्म्मोत्तरोक्तम् "प्रतिमासन्तु नामानि पञ्चदश्यां जगत्पतेः । कृतोपवासः सुस्नातः पूजयित्वा जगद्गुरुम् । उच्चारयन्नरो याति सुसुखेनैव गच्छति । यद्वा मासमतं नाम प्रीयतामिति कीर्त्तयेत् । केशवं मार्गशीर्षे तु पौषे नारायणं तथा । माधवं माघमासे तु गोविन्दमपि फाल्गुने । चैत्रे विष्णुञ्च वैशाखे कीर्त्तयेन्मधुसूदनम् । ज्यैष्ठे त्रिविक्रमं देवं तथाषाढे च वामनम् । श्रीधरं श्रावणे मासि हृषीकेशं ततःपरम् । नाम भाद्रपदे तद्वत् ज्ञायते पुण्यकाङ्क्षिभिः । तद्वदश्वयुजे मासि पद्मनाभेति कीर्त्तयेत् । दामोदरं कार्त्तिके च सर्वान्तरति दुर्गतिम् । एवं मासक्रमेणैव यदि दातुं न शक्यते । तदा संवत्सरस्यान्ते दद्याच्चैव समागतम्" ।

नरसिंहचतुर्दशीव्रतं नरसिंहपु० "वैशाखशुक्लपक्षे तु चतुर्दश्यां समाचरेत् । मज्जन्मसम्भवं पुण्यं व्रतं पापप्रणाशनम् । वर्षे वर्षे तु कर्त्तव्यं मम सन्तुष्टिकारकम् । महापुण्यमिदं श्रेष्ठमानुषैर्भवभीरुभिः । तेनैव क्रियमाणेन सहस्रद्वादशीफलम् । जायते मत्सख्या वच्मि मानुषाणां महात्मनाम् । स्वातीनक्षत्रयोगेन शनिवारेण संयुते । सिद्धियोगस्य संयोगे वाणिजे करणे तथा । पुण्यसौभाग्ययोगेन लभ्यते दैवयोगतः । सर्वैरेतैस्तु संयुक्तं हत्याकोटिविनाशनम् । एतदन्यतरे योगे तद्दिनं पापनाशनम् । केवलेऽत्र प्रकर्त्तव्यं मद्दिने व्रतमुत्तमम् । अन्यथा नरकं याति यावच्चन्द्रदिवाकरौ । यथा यथा प्रवृत्तिः स्यात्पातकस्य कलौ युगे । तथा तथा प्रणश्यन्ति मद्व्रतस्य प्रभावतः । मद्व्रतस्य प्रभावेन मतिर्न स्याद् दुरात्मनाम् । विचार्य्येत्यं प्रकर्त्तव्यं माधवे मासि मद्व्रतम्" ।

नरसिंहत्रयोदशीव्रतं नरसिंहपु० "गुरुवारे त्रयोदश्यामपराह्णे जलस्थितः । तर्पयित्वा देवपितॄन् ऋषींश्च तिलतण्डुलैः । नरसिंहं समभ्यर्च्य यः करोत्युपवासकम् । सर्वपापविनिर्मुक्तो विष्णुलोके महीयते" ।

नरसिंहव्रतं गरुडपु० "अथाष्टमीव्रतं ब्रह्मन् ! प्रोच्यमानमिदं शृणु ! । भवविध्वंसनं नृणां सर्वार्त्तिहरणं परम् । राजा वा राजपुत्रो वा यदि चेद्रिपुनाशनम् । मठाग्रस्यान्तु सुस्नातो यवाग्रञ्च प्रकारयेत् । कुर्य्यादष्टदलं पद्मं तण्डुलैर्वा प्रसूनकैः । कर्णिकायामथेशानं नरसिंहाकृतिं न्यसेत्" इत्यादि ।

नवम्याद्युपासव्रत मत्स्यपु० "नवमी चाष्टमी चैव पौर्णमासी चतुर्दशी । यो भुङ्क्ते द्विज ! नैतेषु सुपर्वसु नरः स माम् । गाणपत्यं स लभते निःसपत्नमनिन्दितम्" ।

नवरात्रिव्रतं देवीपु० "सौभाग्यार्थं स्त्रिया कार्य्यमार्यैश्च धनकाङ्क्षिभिः । महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम् । कर्त्तव्यं देवराजेन्द्र ! देवीभक्तिसमन्वितैः । कन्यासंस्थे रवौ शक्र ! शुक्लादारभ्य नन्दिकाम्" । नन्दिकाम् प्रतिपदम् "अयाचीत्यथवैकाशी नक्ताशीत्यथ वा पुनः । प्रातःस्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः । जपहोमसमायुक्तः कन्यका भोजयेत् सदा । अष्टम्यां नवगेहानि दारुजानि शुभानि च । एकं वा द्विविभागेन कारयेत् सुरसत्तम ! । तस्मिन् देवी प्रकर्त्तव्या हैमी वा राजती च वा । शुद्धकालजयोपेतखड्गशूलेन पूजयेत् । सर्वोपहारसम्पन्नवस्त्ररत्नफलादिभिः । कारयेद्रथदोलादिपूजाञ्च बलिदैविकीम्" इत्यादि ।

नागदष्टोद्धरणपञ्चमीव्रतं भविष्योत्तरे "उपोष्य पञ्चमीं सम्यक् नागानां कुलवर्द्धनम् । एकैकमेकं यावच्च विधानं शृणु भारत ! । एकैकं संवत्सरम् "मासि भाद्रपदे राजन् ! शुक्लपक्षे तु पञ्चमी । सापि पुण्यतमा प्रोक्ता याद्याशीर्गतिकाम्यया । चतुर्थ्यामेकभक्तञ्च तस्यां नक्तं प्रकीर्त्तितम्" । तस्यां पञ्चम्यामुपोष्येति दिवा भोजनवर्जनात् "कुर्य्याच्चान्द्रमसं नागमथ वा कलधौतजम् । अथ दारुमयं भव्यं मृण्मयं वाप्यशक्तितः । चान्द्रमसं सौवर्णं कलधौतजं रूप्यमयम् । पञ्चम्यामर्च्चयेद्भक्त्या नागं पञ्चफणान्वया । करवीरैस्तथा पद्मैः जातीपुष्पैः सुगन्धिभिः । गन्धैर्धूपैः सनैवेद्यैः आज्यक्षीरादिभिर्नृप ! । ब्राह्मणान् भोजयेत्पश्चात् घृतपायसमोदकैः । अनन्तं वासुकिं शङ्खं पद्मं कम्बलमेव च । तथा कर्कोटकं नागं नागमश्वतरं नृप ! । धृतराष्ट्रं शङ्खपालं कालियं तक्षकं तथा । पिङ्गलञ्च महानागं मासि मासि क्रमाद्यजेत्" ।

नागपञ्चमीव्रतं भविष्यपु० "नागाभिद्या तु पञ्चम्यां न विषैरभिभूयते । स्त्रियं च लभते पुत्रं परमां श्रियमाप्नुयात् । मनुमन्त्राः स्वसंज्ञाभिरङ्गमन्त्राश्च कीर्त्तिताः । पूर्ववत् पद्मपत्रस्थः कर्त्तव्यश्च तिथीश्वरः" । तिथीश्वरोऽत्र नागः "गन्धपुष्पाद्युपहारैश्च यथाशक्ति विधीयते । पूजाऽशाठ्येन शाठ्येन कृतापि तु फलप्रदा । आज्यधारासमिद्भिश्च दधिक्षीराज्यमाक्षिकैः । पूर्वोक्तफलदो होमो यतः शान्तेन चेतसा । एतद्व्रतं वैश्वानरप्रतिपद्व्रतवद्व्याख्येयम्" ।

नागव्रतं कूर्मपु० कार्त्तिकशुक्लपक्षमुपक्रम्य "तिथौ युगाह्वयायान्तु समुपोष्य यथाविधि । शङ्खपालादिनागानां शेषस्य च महात्मनः । पूजा कार्य्या पुष्पगन्धक्षीराप्यायनपूर्वकमिति" । युगाह्वयायाञ्चतुर्थ्यां प्रातर्मध्याह्नव्यापिन्याञ्च कर्त्तव्यम्" तथा च स्कन्दपुराणे "प्रातर्मध्यन्दिने तत्र तत्रोपोष्य फणीश्वरान् । क्षीरेणाप्याय्य पञ्चम्यां पारयेत् प्रयतो नरः । विषाणि तस्य नश्यन्ति न तं हिंसन्ति पन्नगाः" ।

नानाफलपूर्णिमाव्रतं विष्णुधर्मोत्तरे "प्राप्य पञ्चदशीं राम ! तथा शुक्लाञ्च कार्त्तिकीम् । धारागृहभित्तिं वै उमेशौ च समालिखेत् । तस्य द्वारि गृहे चापि नानावर्णैस्तु वर्णिकम् । गृहोपकरणं भक्त्या तयोश्चैवाभितो लिखेत् । गीतं वाद्यसमाक्रान्तं सकटीसुखनालिकम् । ततस्तौ पूजयेन्नारी स्नात्वा भर्त्तृपरा शुचिः" ।

नामतृतीयाव्रतं भविष्योत्तरे "उपवासस्य नियमं गृह्णीयात् भक्तिभाविता । देवीं संवत्सरं यावत् तृतीयायामुपोषिता । प्रतिमासं करिष्यामि पारणञ्चापरेऽहनि । तदविघ्नेन मे यातु समाप्तिं व्रतमुत्तमम् । शरणं त्वां प्रपन्नास्मि सौभाग्यादुद्धरस्व माम् । एवं सङ्कल्प्य विधिवत् कौन्तेय ! कृतनिश्चया । भक्त्या नारी ध्यानपरा स्नानं कृत्वा जितेन्द्रिया । नद्यां तडागे वाप्यां वा गृहे वा नियतेन्द्रिया । पूजयेत् पार्वतीं नाम्ना रात्रौ प्राश्य कुशोदकम् । प्रभाते भोजयेत् विप्रान् शिवभक्तान् विशेषतः । पौषे मासे तृतीयायां गिरिजां नाम पूजयेत् । गोमूत्रं प्राशयेद्रात्रौ प्रभाते भोजयेद्द्विजान्" इत्यादि । भविष्यपु० अतान्तरम् "गौरी

काली२ उमा३ भद्रा४ दुर्गा५ कान्तिः६ सरस्वती७ । म-ङ्गला८ वैष्णवी९ लक्ष्मीः१० शिवा११ नारायणी१२ क्रमात् । मार्गतृतीयामारभ्य पूजयेत् स्वर्गभाक् भवेत्” । मार्गशीर्ष-तृतीयामारभ्य प्रतिमासमेकैकेन नाम्ना पूजयेदित्यर्थः “अर्द्धनारीश्वरं रुद्रमथ वा उमाशङ्करम् । पूजयेद्विधि-वन्नारी अवियोगमवाप्नुयात्” ।

मासद्वादशीव्रतं विष्णुरहस्ये “मार्गशीर्षे शुभे मासि शुक्ल-पक्षे यतव्रतः । प्रथमञ्चैव गृह्णीयात् द्वादशीं विधि-वन्नरः । कारयेच्च हरेर्यज्ञमाचार्योक्तविधानतः । अर्च-यित्वा हरिं तत्र ब्राह्मणान् द्विजसत्तमः” इत्यादि ।

मासनवमीव्रतं भविष्यपु० “नवम्यां शुक्लपक्षे तु कृते नक्ते विशेषतः । मासि चाश्वयुजे वीर ! दुर्गादेवीति पूजयेत् । बिल्वपत्रैस्तथाब्जैश्च द्रोणपुष्पैस्तु सर्वशः । गुग्गुलेनाथ दुग्धेन भक्ष्यभोज्यैरनेकशः । परमान्नेन दध्ना च अपि-कालैर्विधानतः । बलोपहारं तथा कुर्यात् देव्या वै भक्ति-मान्नरः । भोजयित्वा नवम्यां तु ब्राह्मणानां तु क-न्यकाः । ब्राह्मणानां तृप्तिश्च यथा भवति शक्तितः । पञ्चगव्यं ततः प्राश्य नक्तं भुञ्जीत वाग्यतः । य एवं पूजयेदत्र दुर्गां भक्त्या समन्वितः । सोऽश्वमेधफलं-सम्यक् फलं प्राप्य दिवं व्रजेत् । कार्त्तिमास्विनवत् सर्वं कार्त्तिकेऽपि हि यजन ! । कृत्वोपवासमष्टम्यां मासि मार्गशिरे नृप ! । नवम्यां पूजयेद्देवीं भक्त्या भगवतीं बुधः” इत्यादि । वर्षसाध्यमिदम् ।

मासषष्ठीव्रतं भविष्योत्तरे “चैत्रात् प्रभृति कर्त्तव्या सर्वदा मासषष्ठी । धातेति मधुमासे तु पूजनीयो दिवाकरः । अर्यमेति च वैशाखे ज्यैष्ठे मित्रः प्रकी-र्त्तितः । आषाढ़े वरुणो ज्ञेय इन्द्रो नभसि कथ्यते । विवस्वांश्च नभस्ये तु पर्जन्योऽश्वयुजि स्मृतः । पूषा कार्त्तिकमासे च मार्गशीर्षे तु कथ्यते । अंशः, पौषे विवस्वांश्च त्वष्टा माघे तु कथ्यते । विष्णुस्तु, फाल्गुने मासि पूज्यो मन्त्रस्य भास्करः । सप्तम्यां चैव सप्तम्यां भोजयेद्ब्राह्मणान् बुधः” ।

मिथुनार्कसप्तमीव्रतं प्रथमं भविष्यपु० “सूर्यभक्ता तु या नारी ध्रुवं या पुरुषो भवेत् । स्त्री चैवाप्नुयात् मासं यत् कृत्वा लभते ध्रुवम् । मिथुनार्कव्रतं भानोः सदा प्रीतिविवर्द्धनम् । अवियोगकरं वीर ! सर्वका-मार्थसाधकम् । सप्तम्यामथ षष्ठ्यां वा संक्रान्तौ भानवे दिने । हविषा हविषा होमं सोपवासः समाचरेत् ।

मिथुनार्कश्च चैवाष्टौ कृत्वा स्वर्णमयीं शुभाम् । रा-जतीं वाथ ताम्रीं वा स्थापयेच्च घृतादिभिः” । मिथुना सूर्यपक्षो तया वह्नितोऽर्कः । द्वितीयम् “या नारी-पक्षेदेवं कृष्णामेकान्तु सप्तमीम् । सा गच्छेत् परमं स्थानं मानोरमिततेजसः । वर्षान्ते प्रतिमां कृत्वा शा-लिपिष्टमयीं शुभाम् । पीतानुलेपनैर्माल्यैः पीतवस्त्रैः प्रपूजयेत् । पूर्वोक्तं निखिलं कृत्वा भास्कराय निवेदयेत् । सम्भूमौ महीपालो शातकुम्भसमप्रभः । वर्षकोटिसह-स्राणि सूर्यलोके महीयते” । तृतीयम् “सप्तम्यां वा निराहारा भवेदवनिर्यान्विता । गजं पिष्टमयं कृत्वा वर्षान्ते विनिवेदयेत् । विधाय राजतं पद्मं सुवर्णकृत-कर्णिकम् । भक्त्या विन्यस्य तत्पृष्ठे सर्वं पूर्ववदाचरेत् । कामतोऽपि कृतं पापं भ्रूणहत्यादि यद्भवेत् । तत् सर्वं गजदानेन क्षीयते नात्र संशयः” । चतुर्थम् “कृष्णपक्षे तु माघस्य सप्तम्यां या दृढ़व्रता । वर्षैकमुपवासेन सर्व-भोगविवर्जिता । वर्षान्ते सर्वगन्धोत्थं मिथुनार्कं नि-वेदयेत्” ।

मिथुनैकादशीव्रतं भविष्योक्तम् “पुष्यस्थे मिथुनस्थेऽर्के शुक्ला चैकादशी भवेत् । ज्यैष्ठे मासि प्रयत्नेन सोपोष्या जनवर्जितैः । स्नाने चाचमने चैव वर्जयित्वोदकं बुधः । उपभुञ्जीत दैवाद्दुग्धतभक्त्योऽन्यथा भवेत् । उदयादु-दयं यावद्वर्जयित्वा जलं बुधः । अप्रयत्नादवाप्नोति द्वा-दश्यां द्वादशीफलं । ततः प्रभाते विमले द्वादश्यां स्ना-नमाचरेत् । जलं सुवर्णं दत्त्वा तु द्विजातिभ्यो यथा-विधि । भुञ्जीत कृतकृत्यस्तु ब्राह्मणैः सहितो वशी । एवं कृते तु यत् पुण्यं भीमसेन ! शृणुष्व तत् । संवत्स-रस्य या मध्ये एकादश्यो भवन्त्युत । तासां फलमवा-प्नोति अत्र मे नास्ति संशयः” ।

नीराजनद्वादशीव्रतं भविष्योत्तरे “कार्त्तिके शुक्लपक्षस्य द्वा-दश्यां रजनीमुखे । समुत्थिते विनिद्रे तु देवे दामो-दरे तथा । दीपान्ते नरमालाभिरन्ये स्त्री वा सुर-न्तिके । जनयित्वा नवं विष्णुं कृत्वा मन्त्रैर्हि जो-त्तमैः । वर्द्धमानतपुष्पाभिर्दीपिकाभिश्च तापनम् । कृत्वा महाजनाः सर्वे हरिं नीराजयेच्छनैः । पुष्पैरर्घ्यं चार्चितं देवं समालभ्य च चन्दनैः । वटैः कर्वरैश्चैव मधुपैः-रिक्षुभिस्तथा । मन्त्रैः पुष्पैरलङ्कारैर्वस्त्रैरन्नैश्च पूजितैः । तस्यैवानुगतां लक्ष्मीं ब्रह्माणं चण्डिकां तथा । आ-दित्यं शङ्करं गौरीं यक्षं गणपतिं ग्रहान् । मातरः

पितरो गावः सर्वा नीराजयेत् क्रमात् । सर्वां नीराजनं कुर्यात् महिष्याद्येव मङ्गलम् । आमवेत्राय-वेणुवंशघण्टावादनवाद्नैः" ।

नृसिंहद्वादशीव्रतं धरणीव्रतोक्तम् "तद्वत् फाल्गुने मासि कृष्णपक्षे तु द्वादशी । तयाख्या प्रोक्तविधिना हरिमावाहयेद् बुधः । नरसिंहाय पादौ तु गोविन्दायोदरं तथा । कटिं विश्वभुजे तद्वदनिरुद्धाय चोदरम् । कण्ठन्तु शितिकण्ठाय पिङ्गकेशाय वै शिरः । असुरध्वंसनायेति चक्रतोद्धात्मने तथा । शङ्खमित्येव सम्पूज्य गन्धपुष्पफलैस्तथा । रत्नगर्भं घटे स्थाप्य तं संपूज्य विधानतः । द्वादश्यां वेदविदुषे ब्राह्मणाय निवेदयेत् । एवं कृते फलं प्राप्तं यत् पुरा पार्थिवेन च" इत्यादि ।

पञ्चाग्निव्रतं पद्मपु० "प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रदः । वैश्वानरपुरं याति व्रतं वैश्वानरन्त्विदम् । पृथिवीं भाजनं कृत्वा यो भुङ्क्ते पञ्चवह्निषु । अहोरात्रेण चैकेनातिरात्रफलमश्नुते" ।

पञ्चघटपूर्णिमाव्रतं भविष्योत्तरे "पञ्च पञ्चदशीः स्थित्वा एकभक्तेन मानवः । संपूज्य पूर्णिमां देवीं लिखितां चन्दनादिना" । पूर्णिमाप्रतिमा तु परिभाषायां द्रष्टव्या । "ततः पञ्च घटान् पूर्णान् पयोदधिघृतेन च । मधुना सितखण्डेन ब्राह्मणायोपपादयेत् । मनोरथान् पूरयस्व यथा त्वं पूर्णिमा ह्यसि । पञ्चकुम्भप्रदानेन भूतानां तुष्टिरस्तु मे । इत्यानेवं नमस्कृत्य सर्वान् कामानवाप्नुयात् । एतत् पञ्चघटं नाम व्रतं तुष्टिप्रदायकम्" ।

पञ्चपिण्डिकागौरीव्रतं स्कन्दपु० नागरख० "नभस्ये च सिते पक्षे तृतीयादिवसे स्थिते । प्रातरुत्थाय यत्नाद्वै भक्षयेत् दन्तधावनम् । ततश्च नियमं कुर्यादुपवाससमुद्भवम् । गौरीनाम समुद्दिश्य श्रद्धापूतेन चेतसा । ततो निशागमे प्राप्ते कृत्वा गौरीचतुष्टयम् । मृण्मयं याद्भवेव तद्दिव्यैकमनाः स्थितः ! । एका गौरी प्रकर्त्तव्या पञ्चपिण्डा यथोचिता । प्रहरे प्रहरे प्राप्ते तस्य पूजां रेत्'' ।इत्यादि

पञ्चमहापापनाशनद्वादशीव्रतं भविष्यपु० "यत् कृत्वा मुच्यते जन्तुर्महतः पञ्चपातकात् । पञ्चपातकिनः प्रेतान् पितॄंस्तारयते तथा । निशाकृद्दाम्यावनश्च पूर्णिमादेवता स्मृताः । जगन्नाथो महीधारी देवेन्द्रो देवकीसुतः । चतुर्मुखो गदापाणिः सुरमीयः सुलोचनः । सर्वगतश्चक्रपाणिः श्रुरवाग्मसुरान्तकः । श्रीवत्स द्वादश इमा देवताः परिकीर्त्तिताः । स्वाहाकारान्वितैरेतैश्चतुर्थ्यन्तैश्च नामभिः । श्रावणादौ देवतानां पूजां च कुरुते व्रती । श्रावणादेव कुर्वीत द्वादश्यां परिकीर्त्तिता । पूर्णिमायान्तु देवेभ्यः पायसञ्च प्रयोजतः । अमावास्यां देवतानां तिलतण्डुलोदकम् । पञ्च रत्नानि देयानि पञ्चपातकनाशने । पञ्चमूर्त्तिं स्वर्णमयीं पञ्चास्त्रसमन्वितम् । भोजयेद् ब्राह्मणान् राजन् ! पञ्चद्वादशसंख्यया" ।

पञ्चमहाभूतपञ्चमीव्रतं विष्णुधर्मोक्तम् "अतःपरं प्रवक्ष्यामि पञ्चमूर्त्तेस्तथार्चनम् । पृथिव्यापस्तथातेजो वायुराकाशमेव च । एता वै देवदेवस्य कथिताः पञ्च मूर्त्तयः । चैत्रे तु पञ्चमीं शुक्लां समासाद्य विचक्षणः । सोपवासो हरिं देवं पञ्चात्मानं समर्चयेत् । पञ्चमण्डलकाः कार्याः पञ्चभिर्वर्णकैः पृथक् । पार्थिवं मण्डलं कार्यं नीलवर्णं महीपते ! । वारुणञ्च तथा श्वेतं रक्तमाग्नेयमिष्यते । पीतं भवति वायव्यं कृष्णमाकाशदैवतम् । समानवर्णगन्धैश्च पुष्पैस्तानर्चयेत् पृथक् । धूपा च धूपदीपाद्यैर्यथालाभमरिन्दम ! । यवैर्मौर्वैस्तिलैश्चैव हुतायसेन च" ।तेन

पञ्चमूर्त्तिव्रतं विष्णुधर्मोत्तरे "अथापरं प्रवक्ष्यामि पञ्चमूर्त्तिव्रतं तव । शङ्खचक्रगदापद्म पृथिवीश्च महाभुज ! । गर्भसम्पुटिकां कृत्वा पञ्च पञ्चसु पूजयेत् । चैत्रशुक्लादिनं प्राप्य पञ्चमीप्रभृति नरः । सोपवासो बहिःस्नातःकृत्वा शुक्लाम्बरः शुचिः । गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । सर्वेषां पूजनं कृत्वा जुहुयाज्जातवेदसि । सर्वेषामेव देवानां नामभिस्तु तथा स्वहान् । ब्राह्मणान् भोजयेच्चात्र तदा च सुरभोजनम् । संवत्सरमिदं कृत्वा व्रतान्ते वस्त्रपञ्चकम् । पञ्च वेदविदां दद्यात् पञ्चवर्णं नराधिप ! । व्रतेनानेन चीर्णेन राजसूयफलं लभेत्" ।

पञ्चाग्निसाधनरम्भातृतीयाव्रतं भविष्योत्तरे "भद्रे कुरुष्व यत्नेन रम्भाव्रतमनुत्तमम् । मनोऽभिलषितं कामं येन प्राप्नोति शङ्करम् । ज्यैष्ठशुक्लतृतीयायां स्नाता नियमतत्परा । कुरु ! पार्श्वेषु पञ्चाग्नीन् ज्वालामालाकुलाकृतीन् । गार्हपत्यं दक्षिणाग्निं सभ्यकाह्वनीयकम् । पञ्चमं भास्करं तेज ईक्ष्यते यत्र नक्रयः । इत्येषां मध्यमा भूत्वा तिष्ठ पूर्वमुखी सती । चतुर्भुजं ध्यायमानं पद्मजापरिसंस्थितम् । मृगाजिनच्छन्नकुचां जटावल्कलधारिणीम् । सर्वाभरणसम्पन्नां देवीमभिसंस्तु कुरु !" ।

पत्रव्रतं भविष्योत्तरे "ताम्बूलमल्लवाटी वा गौरीपत्रं ददाति च"। गौरीपत्रं ताम्बूलपत्रम् "पूगचूर्णसमायुक्तं स्त्रियो वा पुरुषस्य वा। वर्षस्यान्ते तु सौवर्णं फलपत्रन्तु राजतम्। मुक्ताफलमयं चूर्णं सम्पूर्णं वा प्रयच्छति। न सा प्राप्नोति दौर्भाग्यं न दौर्गन्ध्यं मुखस्य वा। एतत्पत्रव्रतं नाम गौरीलोकप्रदायकम्"।

पदार्थव्रतं विष्णुधर्मोत्तरे "शुक्लपक्षे दशम्यां तु सोपवासस्तथा नरः। मार्गशीर्षे तथारभ्य यावत् संवत्सरं भवेत्। गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा। दिक्पालपूजनं कुर्य्यात् दिशां संपूजनं तथा। गां वत्सरान्ते दद्याच्च तथैव च पयस्विनीम्। ब्राह्मणाय महाभाग ! तथा च मनुजोत्तम !। एतद्व्रतं नरः कृत्वा यत्र क्वचन गच्छति। तत्रेष्टं काममाप्नोति पुत्रेष्टफलमश्नुते। वाणिज्यसक्तश्च नरः सुसिद्धिं यायात् तथान्यां विजीगीषवश्च। विद्यार्थिनो वा रिपुनाशनं वा हितं पदार्थव्रतमेतदिष्टम्"।

पद्मनाभद्वादशीव्रतं "तदाश्वयुजे मासि द्वादशीं शुक्लपक्षिकाम्। सङ्कल्प्याभ्यर्चयेद्देवं पद्मनाभं सनातनम्। पद्मनाभाय पादौ तु कटिं वै पद्मयोनये। उदरं सर्वदेवाय पुष्कराक्षाय वै उरः। अव्ययाय तथा बाहू प्राग्वद्दस्त्राणि पूजयेत्। प्रभवाय शिरः पूज्य प्राग्वद्दत्त्वा घटं न्यसेत्। तस्मिन् हेममयं देवं पद्मनाभं तु विन्यसेत्"। पद्मनाभस्तु दक्षिणाधोहस्तादारभ्य सव्येन च शङ्खपद्मगदाचक्रधारी कार्य्यः"।

पयोव्रतं पद्मपु० "वर्षमेकं भवेद्यस्तु पञ्चदश्यां पयोव्रतः"। पञ्चदश्याममावास्यायां पुराणान्तरसंवादात् "समान्ते ब्राह्मणे दद्यात् यश्च पञ्च पयस्विनीः। वासांसि च पिशङ्गानि जलकुम्भयुतानि च। स याति वैष्णवं लोकं पितॄणां तारयेच्छतम्। जन्मान्तरे भवेद्राजा ! पयोव्रतमिदं स्मृतम्"।

पर्वनक्तव्रतं भविष्यपु० "योऽब्दमेकं प्रकुर्वीत नक्तं पर्वसु पर्वसु"। पर्व पञ्चदशी "ब्रह्मचारी जितक्रोधः शिवार्चनरतः सदा। वत्सरान्ते च विप्रेन्द्र ! शिवभक्तान् समाहितान्। भोजयित्वा ततो ब्रूयात् प्रीयतां भगवान् प्रभुः। एवंविधिसमायुक्तः शिवलोकञ्च गच्छति"।

पर्णभाजनव्रतं पद्मपु० "पृथिवीभाजने भुङ्क्ते नित्यं पञ्चसु यो नरः। अतिरात्रफलं देवि ! अहोरात्रेण विन्दति"। पृथिवीभाजने भूभाजनं निधायेत्यर्थः शिवोऽत्र देवता"।

पातालव्रतं विष्णुधर्मोत्तरे "चैत्रमासादथारभ्य कृष्णपक्षे दिने दिने। पातालपूजनं कुर्य्यात् प्रतिपत्प्रभृतिक्रमात्। रौक्मं भौमं स्निग्धभौमं पातालं नीलकान्तिकम्। रक्तभौमं पीतभौमं श्वेतकृष्णेतरावपि। सुवर्णगन्धमाल्यैश्च नैवेद्येन च भूरिणा। घृतदीपप्रदानेन वह्निसन्तर्पणेन च। एवं नक्ताशनः कृत्वा व्रतं संवत्सरं सदा। व्रतावसाने दद्यात् तु दीपकान् द्विजवेश्मसु"।

पात्रव्रतं नरसिंहपु० "उपपत्रे कार्त्तिकीं शुक्लां माघमासेऽथ पूर्णिमाम्। कुर्य्याद्विधिविधं सम्यक् सदा तत्र व्रजेत् पदम्। तद्दृहिद्रूपप्रदश्चैतद्व्रत सौभाग्यदायकम्। पुरा वेदसदश्चैव विधिना चरितं त्विदम्। व्रतञ्चाद्य प्रवक्ष्यामि समयुक्तं गुणान्वितम्। पूजयेद्भिक्षामोऽथ पादुकाद्यैः सुभावितः। स्वकनाज्ययुतञ्चाथ पात्रं नीलाञ्च मार्गपि। अभावे च तथा हेम्नः कर्षार्द्धेन तु राजतम्। वस्त्रयुग्मं नवं सूक्ष्मं पुष्पप्रकरचित्रितम्। आश्रित्य तत्र तत् पात्रं शुचौ देशे निवेशयेत्। ततो जागरणं कुर्य्यात् गीतवाद्यादिमङ्गलैः। प्रभाते तु नयेत्पात्रं हरेरायतनं महत्। स्नाप्य क्षीरादिभिर्द्रव्यैः विष्णुं सम्पूज्य वै स्वयम्। निवेदयेत् तु तत्पात्रं प्रीयतामित्युदीरयेत्"।

पापनाशनीसप्तमीव्रतं भविष्यपु० "शुक्लपक्षस्य सप्तम्यां यदा करकरो भवेत्। तदा पुण्यतमा प्रोक्ता सप्तमी पापनाशिनी"। करो, हस्तः अयं हि योगो बहुधा श्रावणे मासि सम्भवति। "तस्यां सम्पूज्य देवेशं चित्रभानुमहङ्करम्। सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः। यस्तोपवासं कुरुते तस्यां नियतमानसः। सर्वपापविनिर्मुक्तः सूर्य्यलोके महीयते। दानं यद्दीयते किञ्चित् समुद्दिश्य दिवाकरम्। होमो वा क्रियते तत्र तत् सर्वञ्चाक्षयं भवेत्। करर्क्षे सप्तमी कृष्णा तेनोक्ता पापनाशिनी। अस्यां समभ्यर्च्य रविं याति सौमनसं पुरम्"।

पापमोचनव्रतं सौरपु० "विल्ववृक्षं समाश्रित्य द्वादशाहमभोजनम्। यः कुर्य्याद्भ्रूणहा पापान्मुक्तो भवति नारद !"।

पापाक्रान्तसंक्रान्तिव्रतं स्कन्दपु० "वक्ष्याम्यपापसंक्रान्तिं शृणु स्कन्द ! विधानतः। संक्रान्त्यां नियतो भूत्वा तिलैः श्वेतैः समन्वितैः। करकं वर्द्धमानञ्च प्रतिमाञ्च निवे

द्भवेत्" । वर्द्धमानः शरणं । "मन्त्रेणानेन तु छाया-ग्रन्थमावसमन्वितः । तिस्रो मामात् पापेभ्यस्त्व देव प्रसादतः । त्वञ्च मां रक्ष देवेश ! वाङ्मनःकायकर्म-णात् । उद्यापने च देवस्य सौवर्णमाषकेण तु । द्वि-भुजा प्रतिमा कार्य्या रजतेनाथ कारयेत्" ।

पालीचतुर्दशीव्रतं भविष्योत्तरे "मासि भाद्रपदे पक्षे शुक्ले-भूततिथौ नृप ! । तदा भक्त्या प्रदातव्यं वरणाद्या-र्घ्यं कुत्तमम् । आम्रादिभिः फलैर्दिव्यैः पुष्पैः शोभितस्तथैव च । फलपुष्पैस्तथा वस्त्रैर्दीपाद्यक्षतचन्दनैः । विरूढैः सप्तधान्यैश्च दधिपिष्टाक्तचन्दनैः । अनग्निपाकसिद्धैश्च क्षिप्तसत्तुसमन्वितैः । खर्जूरैर्नारिकेलैश्च बीजपूरैर्यथा-क्रमात्" । आद्यम् (यात्) फलविशेषः "दूर्वाद्यर्ध्यसम-न्वितं पुष्पैश्चापि प्रपूजयेत् । संवत्सरसमन्वितानिवालां वि-ज्ञानां पालीमुपेत्य वृद्धाभिस्तनुभिः कृताञ्जलिम् । ये पूजयन्ति वदन्ति वरदं फलम् इहैव भवति भूतिरमन्दगाधा" ।

पाशुपतव्रतं वह्निपु० "शिवं ये पूजयिष्यन्ति दानं दास्यन्ति सुव्रताः । सर्वपापविनिर्मुक्ता दिवमेष्यन्ति ते द्विजाः । यथा पशुपतिर्नित्यं कृत्वा सर्वमिदं जगत् । न लि-प्यते पुनः सोऽपि यो नित्यं व्रतमाचरेत् । इह जन्म कृतं पापं पूर्वजन्म कृतञ्च यत् । व्रतं पाशुपतं नाम कृत्वा हन्ति द्विजोत्तम ! द्वादश्यामेकभक्ताशी त्रयोदश्या-मयाचितम् । चतुर्दश्यां तथा नक्तं उपवासं परेऽहनि" । कालवर्णितोक्तम् "रहस्यं यत् प्रवक्ष्यामि सर्वपापनिकृ-न्तनम् । व्रतं पाशुपतं श्वेतं मया च विरिञ्चि (वेदे) श्रुतम् । कालकर्मप्रयोगमासी देवः शिवपरिग्रहः ! सेवारामादिरम्यो वा प्रशस्तः शुभलक्षणः । तत्र पूर्व-त्रयोदश्यां स्नातस्तु कृताह्निकः । अनुज्ञाय समा-चार्य्यं संपूज्य प्रणिपत्य च । पूजां सम्यक्त्विकीं कृत्वा शुक्लाम्बरधरः स्वयम् । शुक्लयज्ञोपवीती च शुक्लमा-ल्यानुलेपनम् । दर्भासने समासीनो दर्भमुष्टिं प्रगृह्य च । प्राणायामत्रयं कृत्वा प्राङ्मुखोवाऽप्युदङ्मुखः । ध्यात्वा देवञ्च देवीञ्च भूतविज्ञानवर्त्मना । व्रतमेतत् करो-मीति भवेत्सङ्कल्प्य दीक्षितः । यावत् शरीरपातञ्च द्वादशाब्दमथापि वा । तदर्द्धं वा तदर्द्धं वा माष-दामकन्तु वा । तदर्द्धं वा तदर्द्धं वा मासमेकमथापि वा । दिनद्वादशकं वाथ व्रतसङ्कल्पनं विधिः" । व्रतान्तरं मत्स्यपोदनं विष्णुपु० "कृत्वा कनीयसं विष्णुं स्नाप्य चन्दनवारिणा । चैत्रमासादि विप्रेन्द्राः शिवविष्णुव्रतं

शुभम् । कृत्वा हैमं शुभं पद्मं कर्णिकाकेशरान्वितम् । नवरत्नैस्तु खचितमष्टपत्रं यथाविधि । कर्णिकायान्त्र-शैलिकं स्फाटिकं पीठसंयुतम् । तत्र भक्त्या यथा-न्यायमर्चयेद्बिल्वपत्रकैः" ।

पितृव्रतं विष्णुधर्मोत्तरे "अतःपरं प्रवक्ष्यामि सप्तमूर्तिव्रतं तव । चैत्रमासादथारभ्य प्रतिपत्प्रभृति क्रमात् । सुभा-स्वरा बर्हिषदोऽग्निष्वात्तास्तथैव च । क्रव्यादाद्युपहूता-स्तथैव आज्यपाश्च सुकालिनः । पूजयेत् प्रत्यहं राजन् ! गन्धमाल्यानुलेपनैः । नैवेद्यं कृशरं कुर्यात् तिलानग्नौ च होमयेत् । कृशरं भोजयेद्विप्रान् तिलान् दद्याच्च दक्षिणाम् । नक्ताशनस्तथा तिष्ठेद्धविष्याशी नराधिप ! संवत्सरमिदं कृत्वा व्रतं पुरुषसत्तम ! । व्रतावसाने दद्यात्तु रजतस्य फलं द्विजे । व्रतेनानेन चीर्णेन मनु-लोकगतिर्भवेत् । त्रिदशैः पूज्यमानस्तु कामचारी विहङ्गमः" । [कार्य्यम् ।

पिपीतकीद्वादशीव्रतं ति० त० उक्तं वैशाखशुक्लद्वादश्यां

पुण्डरीकप्राप्तिव्रतं विष्णुधर्मोत्तरे "द्वादश्यां देवदेवेशं पू-जयित्वा जलाधिपम् । पुण्डरीकमवाप्नोति वरुणं याद-साम्पतिम्" ।

पुत्रकामव्रतं पद्मपु० "नभस्यमासस्य तु पौर्णमास्याम् । भार्य्याहितीयः सहसा य एव पुत्रेप्सिताद्यौ सम्प्रेऽपि कृत्वा । गन्धेस्ततः सर्वसमृद्धियुक्तो होमैः सजाप्यैर्व-लिना च रुद्रम् । शैलेन्द्रकन्यागजवक्त्रयुक्तम् षडाननज्ञात्वा प्यथ वार्च्चयित्वा । संपूज्य विप्रानथ देवपूर्वान् कृतोप-वासो जितरोषदोषः । ततः सहायानपि भोजयित्वा भार्य्यासु पश्चात् स्वयमन्न भुङ्क्ते । तस्माच्च भार्य्यामथ गोपयित्वा प्रदक्षिणीकृत्य गुहां सुगुप्ताम् । तद्दांश्च सप्तोत्तरपूर्वकामो तथः प्रहृष्टः कृतभोजनश्च । क-थाश्च दिव्यास्तथ नन्दिनीश्च भार्य्यां ततः श्रावयतोः प्रयुक्ताम् । क्षीरोदनं त्रिदिनं भोजयेच्च वन्ध्यास्तु भार्य्या-मपि पुत्रकामाम् । ततो हृष्टे सर्वसमृद्धिकामः सन्तर्प्य भार्य्यां प्रयतो विधाय । उमां शिवं नन्दिनं चार्चयित्वा ततो भवेत् पुत्रवती च वन्ध्या" । व्रतान्तरं हस्तिकसंक्रान्त्यां कार्त्तिकपूजाह्वयम् ।

पुत्रप्राप्तिव्रतं विष्णुधर्मोत्तरे "वैशाखमासादारभ्य पञ्चम्यां तु उपोषितः । भवन्तं पूजयेत् षष्ठ्यां संवत्सरमतन्द्रितः । पुत्रार्थी प्राप्नुयात् पुत्रान् धनकामो धनी भवेत् । स्वर्गार्थी प्राप्नुयात् स्वर्गमपि हृष्टो समाहितः । सोमे च

च मदीयेन ये लोपयन्ति नराः प्रभो ! । लोकद्वयेऽपि ते कामान् प्राप्नुवन्ति मनःप्रियान् । कुमारश्च तथा स्कन्दो विशाखश्च गुहस्तथा । चतुरात्मा विनिर्दिष्टो भगवान् क्रौञ्चसूदनः । तमभ्यर्च्य नरः षष्ठ्यां पुत्रान् प्राप्नोत्यभीप्सितान्" ।

पुत्रप्राप्तिव्रतं देवीपु० "अश्लाघ्या यो विधिः शक्र कथितो विजयावहः । जयेति पूर्णिमा तात ! श्रावणस्य शुभावहा" । शक्र उवाच "विजया या समाख्याता सर्वकामप्रसिद्धये । तामहं श्रोतुमिच्छामि तत्त्वतः सुरसत्तम !" । ब्रह्मोवाच "पुत्रार्थं राज्यविद्यार्थं यशःसौभाग्यतोऽपि वा । विजयार्थं च कामो जयां कुर्वीत पूर्णिमाम् । हैमं वा राजतं वापि खड्गं वा अथ पादुके । प्रतिमां वापि कुर्वीत सर्वलक्षणसंयुताम्" । मातृमूर्त्यां इति शेषः "तामादाय शुभे कान्ते शुक्लवस्त्रविभूषिताम् । यवशाल्यङ्कुरोपेतां पायसान्नविभूषिताम् । दीर्घां सुशोभनां वस्त्रैः कल्पयेत्तत्र विन्यसेत्" ।

पुत्रसप्तमीव्रतं वराहपु० "मासि भाद्रपदे प्राप्ते शुक्लपक्षे सुरेश्वरः ! । सप्तम्यामुपवासेन पुत्रप्राप्तिप्रदं व्रतम् । षष्ठ्यां चैव सुसंकल्प्य सप्तम्यां पूजयेद्धरिम्" ।

पुत्रीयव्रतं विष्णुधर्मोत्तरे "प्रौष्ठपद्यामतीतायां कृष्णपक्षाष्टमी तु या । सोपवासो नरोऽस्यां योषिद्वा तनयार्थिनी । स्नाता वरचि धर्मज्ञा तोयेऽवाप्य वारसे । पूजनं वासुदेवस्य यथा कुर्यात्तथा शृणु !" ।

पुत्रीयसप्तमीव्रतं विष्णुधर्मोत्तरे "मार्गशीर्षे शुभे मासि शुक्लपक्षे द्विजोत्तम ! । पुत्रीयां सप्तमीं राम ! मुपल्लीयात् प्रयतः शुचिः । अथ वा पुत्रकामस्य विधिना येन तत् शृणु" । पुत्रीयां पुत्रदाम् । "हविष्याशी शिरःस्नानं कृत्वा भास्करपूजनम् । अधःशायी द्वितीयेऽह्नि गोमयाम्बोदकेन तु । स्नात्वा संलिप्य च तथा शुभे देशे तु मण्डलम् । तत्राष्टपत्रकमलं विन्यसेत् वर्णकैः शुभैः । तस्यैव कर्णिकामध्ये भास्करं चन्दनेन तु । रक्तेन पूजयेद्देवं गन्धमाल्यानुलेपनैः" ।

पुत्रोत्पत्तिव्रतं आदित्यपु० "कृत संवत्सरं स्नानं श्रवणे श्रवणे मुने ! । सोऽपि पुत्रानवाप्तो चकार श्रद्धयान्वितः । पाराशर्यः सुतं लेभे व्रतस्यास्य प्रभावतः । एवमन्योऽपि राजेन्द्रस्तावत् सिद्धिमवाप्नुयात् । पुत्रान् पौत्रांश्च लभते सुखञ्चात्यन्तमश्नुते" ।

पुरश्चरणसप्तमीव्रतं स्कन्दपु० नागरखण्डे "माघमासे वरे पक्षे मकरस्थे दिवाकरे । सप्तम्यां सूर्यवारेण व्रतमेतत् समाचरेत् । पापखण्डैः पतितैः सार्द्धं तस्मिन्नहनि वर्जयेत् । ततः स्नात्वा नृपश्रेष्ठ ! प्रभाते दन्तधावनम् । मन्त्रेणानेन पानाञ्च कर्त्तव्यो नियमो नृप ! । पुरश्चरणकृत् पापात् सप्तम्यां दिवसाधिप ! । उपवासं करिष्यामि अद्य त्वं शरणं मम । ततोऽपराह्णसमये स्नात्वा धौताम्बरः शुचिः । प्रतिमां पूजयेद्भक्त्या दिनाधिपसमुद्भवाम् । रक्तैः पुष्पैर्मन्दारवीरपाटौ सम्पूजयेत्ततः" ।

पुष्पद्वितीयाव्रतं भविष्यपु० "कार्त्तिके शुक्लपक्षे तु द्वितीयायां नराधिप ! पुष्पाहारो वर्षमेकं वसेत् सुनियतात्मवान्" । कार्त्तिकशुक्लपक्षद्वितीयायां व्रतमारभ्यान्यास्वपि शुक्लपक्षद्वितीयास्वेव वर्षपर्यन्तं पुष्पाहारव्रतं कुर्यादित्यर्थः । "कालप्राप्तानि यानि स्युर्हविष्यकुसुमानि तु । भुञ्जीत तानि दत्त्वा तु ब्राह्मणेभ्यो नराधिप !" । हविष्यकुसुमानि पूजार्हाणि भक्ष्ये चाविरुद्धानि अश्विनौ चात्र नाममन्त्रेण पूजनीयौ तयोः फलदातृत्वेन श्रवणात् । "सुवर्णस्य च पुष्पाणि यथा शक्त्या ददाति यः । व्रतान्ते तस्य सन्तुष्टौ देवौ त्रिभुवनेश्वरौ । दत्तः कामांस्तथा दिव्यान्विमानमपि तैजसम् । सुचिरं देवनारीभिर्लोके रमयतोऽश्विनौ" ।

पूर्णिमाव्रतं विष्णुधर्मोत्तरे "या प्रेरयति कर्माणि लोकेषु द्विजसत्तम ! । तस्याः संपूजनं कार्य्यं शुक्लपञ्चदशीं सदा । माल्यानुलेपनैः शुक्लैर्धूपेन च सुगन्धिना । रक्तवस्त्रप्रदानेन दीपदानेन चाथ वा । नैवेद्यैश्च तथा भक्ष्यैरपूपैश्च तथैव च । पूजयित्वा च तां देवीं भोक्तव्यं निशि भार्यया । यदि पञ्चदशीं सर्वां न शक्नोति कथञ्चन । देव्याः संपूजनं कार्य्यं अवश्यमपि कार्त्तिके । एवान्तु पूजयेद्या तु सा तु नारी पतिव्रता । सदा धर्मरता नारी लोके भवति भार्गव !" । वह्निपु० व्रतान्तरम् "श्रावण्यां पौर्णमास्याञ्च सोपवासो जितेन्द्रियः । प्राणायामव्रतं कृत्वा मुच्यते सर्वकिल्बिषैः" ।

पृथिवीपञ्चमीव्रतं विष्णुधर्मोत्तरे "पञ्चम्यां पृथिवीं शुक्ले देवीं संपूजयेन्नरः । तामवाप्नोति यत्नेन नात्र कार्य्या विचारणा" ।

पौरन्दरपञ्चमीव्रतं भविष्योत्तरे "तिलपिष्टमयं कृत्वा गजं हैमविभूषितम् । कलाङ्कुशयुतं तद्दारोहकसमन्वितम्" । तद्दिति अनन्तव्रतोक्तमत्र गजस्वरूपं गृह्यते । "नक्षत्रमालासहितं चामरापीडधारिणम् । दृष्टनाग-

चक्रनेमं रक्तवस्त्रयुगावृतम् । ताम्रपात्रां कुम्भके वा घृतदुग्धापयोदकम् । प्रदद्याद् द्विजदम्पत्योः पूज्य माल्यविभूषणैः । कर्णाभरणकं दद्यात् वस्त्रञ्च व्रणवर्जितम् । कान्तारतारकं ह्येतत् कथितं हि युधिष्ठिर ! । कान्तारगिरिदुर्गेषु तारयत्यपि दुःखितान् । इह लोके परे चैतद्याम कार्य्या विचारणा । ये कुर्वन्ति दिने पुण्ये व्रतं पौरन्दराह्वयम् । तेषां पौरन्दरे लोके वासः स्यात् सुचिरं नृप ।" दिने पुण्ये, पञ्चम्यां प्रकरणवशात् ।

प्रकृतिपुरुषद्वितीयाव्रतं विष्णुधर्मोत्तरे "पुरुषः प्रकृतिश्चोभौ जगत् सर्वं प्रकीर्त्तितम् । अग्नीषोमात्मकं सर्वं तथा तच्च प्रकीर्त्तितम् । वासुदेवश्च लक्ष्मीश्च तावेव परिकीर्त्तितौ । चैत्रशुक्लद्वितीयायां सोपवासो जितेन्द्रियः । पौरुषेण च सूक्तेन वह्निं संपूजयेन्नरः" । सोपवास इति प्रतिपदि कृतोपवासो द्वितीयायां वह्निं पूजयेदित्यर्थः उपरिष्टाच्च क्षीरघृतभोजनस्य विहितत्वात् "गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । लक्ष्मीश्च वरद देवं पूजयेद्वरदं हरिम् । श्रीसूक्तेन च धर्मज्ञ ! तथा चैत्रशुक्लोत्तमम्" । हरिश्चोभौ वह्निं अवकल्पञ्च प्रतिष्ठाप्य पुरुषमग्निं वासुदेवस्यैवोपरि पूजयेत्" इत्यादि ।

प्रजापतिव्रतं "अथ वटोर्व्रतम् इत्युपक्रमे "नैवेतोद्यन्तमादित्यमित्यादिकमुक्तम्" ।

प्रतिपत्क्षीरपानव्रतं भविष्यपु० "कार्त्तिक्यामथ सप्तम्यां वैशाख्यां वा युगादिषु । नियमोपवासं प्रथमं चाहरेत विधानवित्" । कार्त्तिके वैशाखे वा मासि प्रतिपत्तिथौ व्रतस्यारम्भः । युगादितिथिव्रतस्य माघवैशाखभाद्रपद कार्त्तिकेष्वन्यतमे आरम्भः "या तिथिर्नियमं कर्त्तु शक्त्या समनुगच्छति । तस्यां तिथौ विधानं च तन्निबोध जनाधिप ! । नियमोपवासं प्रथमं चाहरेद्विधिवन्नरः । यदा वै प्रतिपद्यादौ गृह्णीयान्नियमं नृप ! । चतुर्दश्यां कृताहारः सङ्कल्पं परिकल्पयेत् । अमावास्यां न भुञ्जीत स्निग्धान्नं स्नानमाचरेत् । पवित्राणि जपेन्नित्यं गायत्रीं शिरसा सह । अर्च्चयित्वा विधानेन गन्धमाल्यैर्द्विजोत्तमान् । यज्ञात्मा क्षीरं प्रदद्यात् तु अग्नौ मे प्रीयतां विभुः । ततो भुञ्जीत गोक्षीरमनेन विधिना नृप ! । एष एव विधिः प्रोक्तः सर्वासु तिथिषु नृप !" ।

प्रतिमाव्रतं कालोत्तरे "अधुना तु प्रवक्ष्यामि प्रतिमाव्रतमुत्तमम् । महाकालं महावर्त्तिदीपमालाव्रतं तथा । विलेपनं कुङ्कुमेन धूपं वै गुग्गुलेन तु । घृतेनाष्टोत्तरेणैव नैवेद्यं पयसा घृतम् । कामपाला चतुर्विंशत् त्रिनेत्रा च चतुर्भुजा । मुक्ताविद्रुमधवलीया नानाभरणभूषिता । शालिपिष्टमयी कार्य्या सुपुष्टे च शोभना । चामरैर्वीज्यमानन्तु शिवं तत्र प्रकल्पयेत् । दर्पणञ्चैव ताम्बूलं व्यजनं पादुकासनम् । वैजयन्तीध्वजं यानमाचार्य्याय प्रदापयेत् । मासि मासि प्रकर्त्तव्यं चतुर्दश्यां दिने दिने । कार्त्तिकन्तु समारभ्य यावदाश्वयुजावधि । एतद् व्रतोत्तमं नाम प्रतिमाव्रतमीरितम्" ।

प्रदोषव्रतं भविष्यपु० "त्रयोदश्यामथो रात्रौ सोपहारं त्रिलोचनम् । दृष्ट्वेशं प्रथमे यामे मुच्यते सर्वपातकैः" ।

प्रभाव्रतं पद्मपु० "पक्षोपवासी यो दद्याद्विप्राय कपिलाद्वयम् । ब्रह्मलोकमवाप्नोति देवासुरसुपूजितः । तदन्ते राजराजः स्यात् प्रभाव्रतमिदं स्मृतम्" ।

प्राजापत्यव्रतं पद्मपु० "कृच्छ्रान्ते गोयुगं दद्यात् भोजनं शक्तितः पदम् । विप्राणां शाङ्करं याति प्राजापत्यमिदं स्मृतम्" शाङ्करं पदं यातीत्यन्वयः । कृच्छ्रशब्दे द्रष्टव्यम् ।

प्राप्तिव्रतं पद्मपु० "वत्सरं त्वेकभक्ताशी सभक्ष्यफलकुम्भदः । शिवलोके वसेत्कल्पं प्राप्तिव्रतमिदं स्मृतम्" ।

फलव्रतं पद्मपु० "महाफलानि यस्त्यक्त्वा चतुर्मासीं द्विजातये । हैमानि कार्त्तिके दद्याद् गोयुगेन समं नरः । सितवस्त्रयुगेनाथ सम्यक्पाकयुतेन च । एतत् फलव्रतं नाम सर्वकामफलप्रदम्" ।

फलतृतीयाव्रतं पद्मपु० प्रभासख० "फलतृतीयां या नारी कुरुते तत्र भाविता । वर्षमेकं सिते पक्षे देवीं पूज्य विधानतः । फलानि ब्राह्मणे दद्यादभीष्टानि च यानि तु । फलानि वर्जयेत् नक्तमश्नाति वरसुन्दरि ! । निष्पावानाढकीं मुद्गान् माषांश्चैव कुलत्थकान् । मसूरान् राजमाषांश्च गोधूमांस्तिलपुटांस्तथा । चणकान् वर्त्तुलान् वापि सकुटान् शक्तितोऽस्ति यः । नरो वा यदि वा नारी शाकक्षीरीव्रतं चरेत् । तस्याः पुण्यफलं वक्ष्ये कथ्यमानं शृणुष्व मे । धनं धान्यं गृहे तस्य न कदाचित् क्षयं व्रजेत् । दुःखिता दुर्भगा दीना सदा जन्मनि नो भवेत् । कथानकञ्च श्रोतव्यं देव्या माहात्म्यसंयुतम् । व्रतपालनायाय सर्वकामसमृद्धये" ।

फलषष्ठीव्रतं भविष्योत्तरे "अन्यामपि प्रवक्ष्यामि फलषष्ठीं शुभां तथा । यामुपोष्य नरः पापैर्विमुक्तः फलभाग् भवेत् । मार्गशीर्षे सिते पक्षे पञ्चम्यां नियमस्थितः ।

कृत्वा दन्तधावनं तु स्वपेद्रात्रौ विमत्सरः। ततः प्रभाते विमले कारयित्वा तु काञ्चनम्। कमलञ्च फलञ्चैकं स्वशक्त्या शाठ्यवर्जितः। ततस्तु सङ्गमे स्नातो मध्याह्ने कृतनित्यकः। आगत्य भवनं देवं पूजयित्वा जगद्गुरुम्। कृत्वा तु कमलं पात्रे सफलं शर्करान्वितम्। औडुम्बरे स्वर्णमये वा यथाशक्त्या नृपोत्तम!। पूजयेत् पुष्पधूपाद्यैर्नैवेद्यैर्विविधैः फलैः" इत्यादि।

फलसंक्रान्तिव्रतं स्कान्दपु० "अथान्यामपि ते वच्मि फलसंक्रान्तिमुत्तमाम्। संक्रान्तिवासरं प्राप्य स्नानं कृत्वा तु पूर्ववत्। संपूज्य पूर्ववद्भानुं पुष्पधूपादिना तथा। शर्करासहितं पात्रं फलाष्टकसमन्वितम्। संक्रान्तिवासरं प्राप्य ब्राह्मणाय निवेदयेत्। तदन्ते तु रविं कुर्य्यात् सुवर्णेन च नारद!। कुम्भस्योपरि संस्थाप्य गन्धपुष्पैः प्रपूजयेत्। फलाष्टकं ततो दद्याद् भक्ष्यभोज्यसमन्वितम्"।

फलसप्तमीव्रतं भविष्यपु० "अथ भाद्रपदे मासि सिते पक्षे महीपते!। कृत्वोपवासं सप्तम्यां विधिवत् पूजयेद्रविम्। माहेश्वरेण विधिना पूजयेदथ भास्करम्। अष्टम्यां तु पुनः प्रातः पूजयित्वा दिवाकरम्। दद्यात् फलानि विप्रेभ्यो मार्त्तण्डः प्रीयतामिति। खर्ज्जूरं नारिकेलञ्च मातुलुङ्गफलानि च। ब्राह्मणान् भोजयित्वा तु फलाहारः स्वयं भवेत्। पूर्वमेकन्तु सम्प्राश्य सुस्वादु फलमादरात्। मन्त्रेण भरतश्रेष्ठ! ततः शेषाणि भक्षयेत्"। पद्मपु० "अन्यामपि प्रवक्ष्यामि नाम्ना तु फलसप्तमीम्। यामुपोष्य नरः पापैर्विमुक्तः स्वर्गभाग्भवेत्। मार्गशीर्षे शुभे मासि पञ्चम्यां नियतव्रतः। षष्ठ्यामुपोष्य कमलं कारयित्वा तु काञ्चनम्। शर्करासंयुतं दद्यात् ब्राह्मणाय कुटुम्बिने। रूपन्तु काञ्चनं कृत्वा फलस्यैकस्य धर्मवित्। दद्याद्विकालवेलायां भानुर्मे प्रीयतामिति। भक्त्या तु विप्रान् संपूज्य सप्तम्यां क्षीरभोजनम्। कृत्वा कुर्य्यात् फलत्यागं यावत्स्यात् कृष्णसप्तमी। तामुपोष्य विधिं कुर्य्यादनेनैव क्रमेण तु। तद्वद्धेमफलं दद्यात् सुवर्णकमलान्वितम्। शर्करापात्रसंयुक्तं वस्त्रमाल्यविभूषितम्। संवत्सरमनेनैव विधिनोभयसप्तमीम्। उपोष्य दद्यात् क्रमशः सूर्य्यमन्त्रमुदीरयेत्" इत्यादि।

फाल्गुनव्रतं महाभारते "भगदैवन्तु योमासमेकभक्तेन विक्षिपेत्। ऐश्वर्य्यमतुलं श्रेष्ठं पुमान् स्त्री वा प्रपद्यते। स्त्रियो वल्लभतां यान्ति तस्याश्चैव भवन्ति ते"। विष्णुधर्मे "क्षपयेदेकभक्तेन शुभ्रपक्षञ्च फाल्गुने"। शुश्रूषुः विष्णुशुश्रूषापरः "सौभाग्यं स्वजनानाञ्च सर्वेषामेव सोऽर्हति। अहिंस्रः सर्वभूतेषु वासुदेवपरायणः। नमोऽस्तु वासुदेवायेत्यहन्यष्टशतं जपेत्। अतिरात्रस्य यज्ञस्य ततः फलमवाप्नुयात्"।

वाणिज्यलाभव्रतं विष्णुधर्मोत्तरे "काम्यं कर्म समाचक्ष्व वाणिज्यं येन सिध्यति। कृषिश्च बहुलाश्चैव कर्मणा केन वाप्नुते"। पुष्कर उवाच "मूलेनोपोषितः कुर्य्यादिदं कर्म पुरोहितः। उपोषितस्य धर्मज्ञ! यजमानस्य नित्यशः। प्राप्तासु पूर्वाषाढ़ासु प्राङ्मुखं स्नापयेन्नरम्। कुम्भैर्वैतसमूलैश्च शङ्खमुक्ताफलैस्तथा। मणिभिश्च यथालाभं कनकेन तथैव च। अकालमूलैः कलशैश्चतुर्भिर्भृगुनन्दन!। कृत्वैतत् सिद्धिमाप्नोति वाणिज्ये नात्र संशयः। समुद्रयाने च तथा कर्षणे च न सीदति। नीलानि सप्त वासांसि दक्षिणा चात्र शस्यते। शङ्खं सुवर्णं रूप्यञ्च तथा मुक्ताफलानि च। इतं वतं द्विजेभ्यस्तु सर्वमेतद्विधीयते"।

बुधद्वादशीव्रतं धरणीव्रते "एवमेव श्रावणे तु मासि संकल्प्य द्वादशीम्। अर्चयेत् परमेशानं गन्धपुष्पनिवेदनैः। बुधाय पादौ संपूज्य श्रीधरायेति वै कटिम्"। "एवमभ्यर्च्य मेधावी तस्याग्रे पूर्ववद्घटम्। स्थापयेत्तत्र सौवर्णं बुधं कृत्वा विचक्षणः"। बुधस्वरूपमुक्तं पुराणान्तरे "बुधस्तु द्विभुजः कार्य्यो ध्यानस्तिमितलोचनः" इति। "तमर्च्यैवन्तु संपूज्य ब्राह्मणाय निवेदयेत्। अनेन विधिना पूर्वं द्वादशी समुपोषिता। शुक्लोदनेन, बुधोऽभूत् स्वयं पुत्रो जनार्दनः। महतीञ्च श्रियं प्राप्तः पुत्रपौत्रसमन्वितः। भुक्त्वा राज्यश्रियं सोऽथ गतिं परमिकां गतः"।

बुधव्रतं भविष्योत्तरे "विशाखासु बुधं प्राप्य सप्त नक्तानि चाचरेत्। बुधं हेममयं कृत्वा स्थापितं कांस्यभाजने। शुक्लमाल्याम्बरधरं शुक्लगन्धानुलेपनम्। गुडौदनोपहारन्तु ब्राह्मणाय निवेदयेत्"।

बुधाष्टमीव्रतं भविष्योत्तरे "शृणु पाण्डव! यत्नेन बुधाष्टम्यां विधिं शुभम्। यदा यदा सिताष्टम्यां बुधवारो भवेद्यदि। तदा तदैव सा ग्राह्या एकभक्ताशनैर्नृभिः। स्नात्वा नद्यां तु पूर्वाह्णे गृहीत्वा करकं नवम्। जलपूर्णं सहेमानं कृत्वा खाद्यैः समन्वितम्। दद्याद्विप्राय तं गत्वा गृहं चैव क्रमेण तु। अष्टम्यष्टविधानेन विचित्राद्यैः पृथक् पृथक्। प्रथमा मोदकैर्भक्ष्यैः द्वितीया घामकैस्तथा। तृतीया घृतपूरैश्च चतुर्थी वटकैरपि।

पञ्चमी शुष्ककासारैः षष्ठी मोदककैः शुभैः । अशोकवर्त्तिभिः शुभ्रैः सप्तमी चातिवाहयेत् । अष्टमी फलपिष्टानां पूर्णैः खण्डवेष्टैर्युधिष्ठिर ! । एवं क्रमेण कर्त्तव्याः सुहृत्स्वजनबन्धवैः । सहैकस्थ स्थितैर्भोज्यं भोक्तव्यं प्रीतिपूर्ब्बकम् । उपाख्यानान्तमासाद्य भोजनं सहसा त्यजेत् । तावदेव हि भोक्तव्यं यावत् सा कथ्यते कथा । ततोभूत्वा बुधस्याग्रे आचम्य च समाहितः । विप्राय वेदविदुषे वाचकाय प्रदापयेत् । साक्षतं सहिरण्यं च जातरूपमयं शुभम् । अर्च्चितं चार्च्चितं गन्धैः पुष्पैर्धूपैः सुगन्धिभिः । पीतवस्त्रैः समाच्छन्नं बुधं सोमात्मजं तथा । माषकेण सुवर्णस्य तदर्द्धेन वा कृतम्” इत्यादि

ब्रह्मव्रतं भविष्यपु० “ब्राह्मणस्तु द्वितीयायां संपूज्य ब्रह्मचारिणम् । भोजयित्वा तु विधिना सर्व्वासां पारगो भवेत् । मूलमन्त्रा स्वसंज्ञाभिरङ्गमन्त्राश्च कीर्त्तिताः । पूर्ब्बवत्पद्मपत्रस्थः कर्त्तव्यश्च तिथीश्वरः” । तिथीश्वरो ब्रह्मा ।

ब्रह्मकूर्च्चव्रतं ब्रह्मपु० “उपोषितश्चतुर्द्दश्यां पञ्चदश्यामनन्तरम् । पञ्चगव्यं समश्नीयाद्धविष्याशी त्वनन्तरम् । ब्रह्मकूर्च्चमिदं कुर्य्यादुक्तप्रशमनाय वै । पक्षान्ते तत्र वा कार्य्यं मासमध्येऽथ वा पुनः । ब्रह्मकूर्च्चं नरः कुर्य्यात् पौर्णमासीषु यः सदा । तस्य पापं क्षयं याति दुर्भुक्तादि न संशयः । मासेन द्विजवरः कृत्वा ब्रह्मकूर्च्चं समाहितः । सर्व्वपापविनिर्मुक्तो यथेष्टाङ्गतिमाप्नुयात् । ब्रह्मभूतममावास्यां पौर्णमास्यां तथैव च । योगभूतं परिचरन् केशवं महदाप्नुयात्” ।

ब्रह्मगत्प्राप्तिव्रतं विष्णुधर्म्मोत्तरे “इदमन्यत् प्रवक्ष्यामि चतुर्म्मूर्त्तिव्रतं तव । सङ्कर्षणादिकर्षणाध्यक्षा यदूत्तम ! । चतुरात्मा विनिर्द्दिष्टो वासुदेवो जगत्पतिः । तेषान्तु रूपनिर्म्माणं कृत्वा तानर्च्चयेद्बुधः । गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । आद्येऽह्नि चैत्रशुक्लस्य यजेत त्रिदशेश्वरम् । द्वितीयेऽह्नि यमं देवं तृतीये सलिलाधिपम् । चतुर्थेऽह्नि धनाध्यक्षं प्रत्यहं स्नानमाचरेत् । नदीप्रदेशमासाद्य देवादिक्प्रवहक्रमात् । यवैस्तिलैस्तथाज्येन होमः स्यात् तिलतण्डुलैः । रक्तं पीतं तथा कृष्णं श्वेतं वस्त्रं दिनक्रमात् । शुभमेतद्व्रतं कृत्वा पूर्णं संवत्सरं नरः । नाकलोकमवाप्नोति यावदाभूतसंप्लवम्” ।

ब्रह्मव्रतं पद्मपु० “ब्रह्माण्डं काञ्चनं कृत्वा तिलराशिसमन्वितम् । त्र्यहं तिलप्रदो भूत्वा वह्निं सन्तर्प्य च द्विजान् । संपूज्य विप्रदम्पत्यं माल्यवस्त्रविभूषितम् । शक्तितस्त्रपलादूर्द्ध्वं विश्वात्मा प्रीयतामिति । पुण्येऽह्नि दद्यात्स परं ब्रह्म यात्यपुनर्भवम् । एतद्ब्रह्मव्रतं नाम निर्व्वाणफलदं नृणाम्” ।

ब्रह्मसावित्रीव्रत भविष्योत्तरे “श्रूयतां पाण्डवश्रेष्ठ ! सावित्रीव्रतमादरात् । कथयामि यथा चीर्णं तया सत्या युधिष्ठिर ! । इत्युपक्रमे “त्रयोदश्यां भाद्रपदे दन्तधावनपूर्ब्बकम् । त्रिरात्रं नियमं कुर्य्यादुपवासस्य भक्तितः । अशक्ता च त्रयोदश्यां नक्तं कुर्य्याज्जितेन्द्रिया । अयाचितं चतुर्द्दश्यां पौर्णमास्यामुपोषणम् । नित्यं स्नात्वा महानद्यां तडागे निर्झरेऽपि वा । विशेषतः पूर्णमास्यां स्नानं सर्षपमृज्जलैः । गृहीत्वा बालुकां पात्रे प्रस्थमात्रां युधिष्ठिर ! । अथ वा धान्यमादाय यवशालितिलादिकम् । ततो वंशमये पात्रे वस्त्रयुग्मेन वेष्टिते । सावित्रीप्रतिमां कृत्वा ब्रह्मणश्चैव शोभनम् । सौवर्णीं मृण्मयीं वापि स्वशक्त्या रौप्यनिर्म्मिताम् । रक्तवस्त्रयुगं दद्यात् सावित्र्या, ब्रह्मणः सितम् । सावित्रीं ब्रह्मणा सार्द्धमेवं भक्त्या प्रपूजयेत्” इत्यादि ।

ब्राह्मण्यावाप्तिव्रतं प्रभासख० “ज्यैष्ठस्य पौर्णमास्यान्तु दम्पती यस्तु भोजयेत् । परिधाय यथा शक्त्या दौर्भाग्यैर्मुच्यते नरः । गन्धपुष्पोपहारैश्च पौर्णमास्यान्तु योऽर्च्चयेत् । ब्राह्मण्यं जायते तस्य सप्तजन्मनि सुन्दरि !” ।

भर्त्तृप्राप्तिव्रतं भविष्यपु० “वसन्ते शुक्लपक्षस्य द्वादशी या भवेच्छुभा । तस्यामुपोष्य विधिवत् सश्रीकं हरिमर्च्चयेत् । पर्य्यङ्कास्तरणं कृत्वा नानास्तरणसंयुतम् । तत्र लक्ष्म्या युतं देवं रौप्यं कृत्वा निवेदयेत् । तस्योपरि ततः पुष्पैर्मण्डपं कारयेद्बुधः । नृत्यवादित्रगीतैश्च जागरं तत्र कारयेत् । एवं कृत्वा प्रभाते तु दापयेद्ब्राह्मणाय तम् । वेदवेदाङ्गयुक्ताय संपूर्णाङ्गाय धीमते । ब्राह्मणांश्च तथा भोज्य व्रतमेतत् समाप्यते । व्रतस्यान्ते ततो विष्णुर्भर्त्ता वै भवति ध्रुवम्” ।

भद्रकालीव्रतं विष्णुधर्म्मोत्तरे “नवम्यां सोपवासस्तु भद्रकालीं प्रपूजयेत् । शुक्लपक्षे महाराज ! कार्त्तिकात् प्रभृति क्रमात् । गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा । संवत्सरान्ते संपूज्य व्रतान्ते ब्राह्मणाय तु । वस्त्रयुग्मं नरो दत्त्वा यथेष्टं काममाप्नुयात् । विधिना पूजयेत् कन्यां भद्रकालीं नराधिप ! । नवम्यामाश्विने मासि शुक्लपक्षे

नरोत्तम !" । पुष्कर उवाच "पूर्वोत्तरे तु दिग्भागे विलिखेत् वास्तुमनोहरे । भद्रकालीं स्वपञ्चस्थं चित्रवस्त्रैरलङ्कृतम् । भद्रकालीं पटे कृत्वा तत्र सम्पूजयेद्द्विज !" ।

भद्रचतुष्टयव्रतं भविष्यपु० "शृणु राजन्नवहितो भद्राणां विस्तरं परम् । कथयिष्ये न कथितं मया कस्यचित् पुरा । शुक्ला मार्गशिरस्यादौ चतस्रस्तिथयो वराः । द्वितीया च तृतीया च चतुर्थी पञ्चमी तथा । एकभक्ताशनस्तिष्ठेत् प्रतिपदि जितेन्द्रियः । प्रभाते तु द्वितीयायां कृत्वा यत् करणीयकम् । प्रहरे वै समधिके गते स्नानं समाचरेत् । सर्वौषधं तु संस्थाप्य मन्त्रैरभिविचक्षणः" । "स्नात्वा चैव ततो नाम द्वितीयादौ चतुर्दिने । नमः कृष्णाच्युतानन्तहृषीकेशेति च क्रमात् । चतुर्दिने द्वितीयादि देवमभ्यर्चयेद्व्रती । प्रथमेऽह्नि स्मृता पूजा पादयोश्चक्रपाणिनः । नाभिपूजा द्वितीयेऽह्नि कर्त्तव्या विधिवन्नरैः । पुरद्विषस्तृतीयेऽह्नि पूजां वक्षसि विन्यसेत् । चतुर्थेऽह्नि जगद्धातुः पूजां शिरसि विन्यसेत्" इत्यादि ।

भद्रातृतीयाव्रतं पद्मपु० "कार्त्तिकादि तृतीयायां प्राश्य गोमूत्रयावकम् । नक्तञ्चरेदब्दमेकं तदन्ते गोप्रदो भवेत् । गौरीलोके वसेत् कल्पं ततो राजा भवेदिह । एतद्भद्राव्रतं नाम सर्वकल्याणकारकम्" ।

भद्रासप्तमीव्रतं भविष्यपु० "शुक्लपक्षे तु सप्तम्यां नक्षत्रं सवितुर्भवेत् । यदा प्राजापत्येन तदा तां भद्रतां व्रजेत् । सवितृनक्षत्रं हस्ता । "चतुर्थ्यामेकभक्तन्तु पञ्चम्यां नक्तमादिशेत् । षष्ठ्यामयाचितं प्रोक्तमुपवासस्ततः परम्" । "अनेन विधिना यस्तु कुर्य्याद्वै भद्रसप्तमीम् । भद्रा ददाति सप्तम्यां भद्रं तस्य व्रतं भवेत् । तस्य भद्राः सर्व एव गच्छन्ति ज्ञातयः सदा । तदशक्तः फलं तस्यां विधिना केन दीयते । श्रीमभद्रामिति प्रोक्तं देवचिह्नं मनोरमम् । शालिपिष्टमयं प्रोक्तं चतुःकोणं मनोरमम् । गव्येन सर्पिषा युक्तं खण्डशर्करयान्वितम् । चतुर्जातकचूर्णेन द्राक्षाभिश्च विशेषतः" ।

भवानीतृतीयाव्रतं मत्स्यपु० "आलेपनञ्च यः कुर्य्यात् तृतीयायां शिवालये । समान्ते धेनुदो याति भवानीव्रतमित्युत" ।

भवानीव्रतं लिङ्गपु० "पौर्णमास्याममावस्यां वर्षमेकमतन्द्रिता । उपवासरता नारी नरो वा द्विजसत्तमाः ! । वर्षान्ते सर्वगन्धाढ्यां प्रतिमाञ्च निवेदयेत् । सा भवान्यास्तु सायुज्यं सारूप्यं वाथ सुव्रता । लभते नात्र सन्देहः सत्यं सत्यं मुनीश्वराः !" ।

भाद्रपदव्रतं महाभारते "प्रौष्ठपादन्तु यो मासमेकाहारो भवेन्नरः । धनाढ्यः स्फीतमतुलमैश्वर्य्यं प्रतिपद्यते । राजसूयस्य यज्ञस्य फलं दशगुणं लभेत्" ।

भानुव्रतं मत्स्यपु० "सप्तम्यां नक्तभुक् दद्यात् समान्ते गां सकाञ्चनाम् । सूर्य्यलोकमवाप्नोति भानुव्रतमिदं स्मृतम्" ।

भास्करव्रतं कालिकापु० "कृतोपवासः षष्ठ्यान्तु सप्तम्यां यस्तु मानवः । करोति विधिवत् श्राद्धं भास्करः प्रीयतामिति । सर्वरोगविनिर्मुक्तः स्वर्गलोकमवाप्नुयात्" ।

भीमद्वादशीव्रतं पद्मपु० "यद्यष्टम्यां चतुर्दश्यां द्वादश्यामथ भारत ! । अन्येष्वपि दिनर्क्षेषु न शक्तस्त्वमुपोषितुम् । ततः पुण्यामिमां भैमीं सर्वपापप्रणाशनीम् । उपोष्य विधिनानेन गच्छ विष्णोः परं पदम् । माघमासस्य दशमी यदा शुक्ला भवेत्तदा । घृतेनाभ्यञ्जनं कृत्वा तिलैः स्नानं समाचरेत् । तथैव विष्णुमभ्यर्च्य नमो नारायणेति वै" इत्यादि । "शृणु राजन् ! प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् । यामुपोष्य न दुःखानां भाजनं भजते जनः । माघमासे सिते पक्षे द्वादशी पावनी स्मृता । तस्यां जलार्द्रवसन उपोष्य सुखभाग् भवेत्" । "भीमाख्या द्वादशी चेति कृतकृत्या नरा यतः । इयं पुलस्त्यमुनिना कथिता कुरुनन्दन ! । यश्चैनां कथितां यत्नात् कुर्य्याद्वा भक्तिभावतः । सर्वपापविनिर्मुक्तो विष्णुलोके महीयते । दारिद्र्येणापि वा पार्थ ! वित्तशाठ्यं विवर्जयेत् । विष्णुभक्तेन कर्त्तव्या संसारभयभीरुणा । भीमेन या किल पुरा समुपोषितत्वाद्गाढा गतस्थिरतृषीतजवारिधारा । तां द्वादशीं त्रिदशवैद्यसुखां स्मरेद्यः सम्यक् समाचरति याति स विष्णुलोकम्" ।

भीमव्रतं पद्मपु० "मासोपवासी यो दद्याद्धेनुं विप्राय शीलिनाम् । सर्वेश्वरपदं याति भीमव्रतमिदं स्मृतम्" ।

भीष्मपञ्चकव्रतं नारदपु० "प्रवक्ष्यामि महापुण्यं व्रतं व्रतवतां वर ! । भीष्मेणैतद्यतः प्राप्तं व्रतं पञ्चदिनात्मकम् । सकाशाद्वासुदेवस्य तेनोक्तं भीष्मपञ्चकम् । व्रतस्यास्य गुणान्वक्तुं कः शक्तः केशवादृते । व्रतमेतन्महापुण्यं महापातकनाशनम् । अतो नरैः प्रयत्नेन कर्त्तव्यं भीष्मपञ्चकम् । कार्त्तिकस्यामले पक्षे स्नात्वा सम्यग्यतव्रतः । एकादश्यान्तु गृह्णीयाद्व्रतं पञ्चदिनात्मकम् । प्रातः स्नात्वा विधानेन मध्याह्ने च तथा व्रती । नद्यां निर्झरगर्त्ते वा समादाय तु गोमयम् । यवव्रीहितिलैः सम्यक्

पितॄन् सन्तर्पयेत् क्रमात् । स्नात्वा मौनं ततः कृत्वा धौतवासा दृढव्रतः” । इत्यादि “अर्च्चयित्वा हृषीकेश-मेकादश्यां समाहितः । निःप्राश्य गोमयं सम्यक् एकादश्यामुपावसेत् । गोमूत्रं मन्त्रवद्यो द्वादश्यां पूजयेद् व्रती । क्षीरञ्चैव त्रयोदश्यां चतुर्दश्यां तथा दधि । संप्राश्य कायशुद्ध्यर्थं लङ्घनीयञ्चतुर्द्दिनम्” । प्राशनं, होममन्त्रेण च । “पञ्चमे तु दिने स्नात्वा विधिवत् पूज्य केशवम् । भोजयेद् ब्राह्मणान् भक्त्या तेभ्यो दद्याच्च दक्षिणाम् । तथोपदेष्टारमपि पूजयेद् वस्त्रभूषणैः । ततो नक्तं समश्नीयात् पञ्चगव्यपुरःसरम् । एवं सम्यक् समाप्यं स्यात् यथोक्तं व्रतमुत्तमम् । सर्वपापहरं पुण्यं प्रख्यातं भीष्मपञ्चकम् । जन्मप्रभृति यत्पापं त्यक्त्वा पुण्यमवाप्नुयात् । तत्फलं समवाप्नोति संत्यज्य भीष्मपञ्चके । मद्यपो यः पिबेन्मद्यं जन्मतोमरणान्तिकम् । तद्भीष्मपञ्चके त्यक्त्वा समाप्नोत्यधिकं फलम्” ।

भूभाजनव्रतं पद्मपु० “संवत्सरन्तु यो भुङ्क्ते नित्यमेव ह्यतन्द्रितः । निवेद्य पितृदेवेभ्यः पृथिव्यामेकराड्भवेत्” यो भुङ्क्ते पृथिव्यामित्यन्वयः ।

भूमिव्रतं काशीखण्डे “शुक्लपक्षे चतुर्दश्यां यदा तिथ्यर्क्षसङ्क्रमः । पूजयेत् पूर्वविधिना उपवासेन भूमिजम्” । पूर्वविधिना विघ्नव्रतोक्तेनेत्यर्थः । “कुङ्कुमेनाङ्कुरान्तु गन्धपुष्पैः प्रपूजयेत् । पायसं घृतसंयुक्तं कुर्य्यात् प्रस्थप्रमाणतः । भूमिदानं प्रकर्त्तव्यं विप्रभक्ताय यत्नतः । अनेन व्रतमुख्येन पृथ्वीपालत्वमाप्नुयात् । एतद्भूमिव्रतं नाम पृथ्वीपालस्तु कारयेत्” ।

भोगसंक्रान्तिव्रतं स्कन्दपु० “वक्ष्येऽहं भोगसंक्रान्तिं सर्वलोकविवर्द्धनीम् । सङ्क्रान्तिवासरं प्राप्य योषितस्तु समाह्वयेत् । कुङ्कुमं कज्जलञ्चैव सिन्दूरं कुसुमानि च । सुगन्धीनि च सर्वाणि ताम्बूलं गन्धसंयुतम्” । गन्धसंयुतं कर्पूरसंयुतम् “तण्डुलान् फलसंयुक्तान् प्रदद्याच्च विचक्षणः । अन्यान्यपि हि वस्तूनि भोगसाधनकानि च । दद्यात् प्रहृष्टमनसा मिथुनेभ्यः प्रयत्नतः । भोजयित्वा यथा भक्त्या वस्त्रयुग्मं प्रदापयेत् । एवं संवत्सरस्यान्ते रविं सम्पूज्य पूर्ववत् । स्वर्णश्रृङ्गीं रौप्यखुरां सर्वोपस्करसंयुताम् । धेनुं च दक्षिणां दद्यात् सार्व्वाय द्विजातये । एवं यः कुरुते भक्त्या भोगसंक्रान्तिमादरात् । स्यात् सुखी सर्वमर्त्त्येषु भोगी जन्मनि जन्मनि” ।

भोगावाप्तिव्रतं विष्णुधर्म्मोत्तरे “ज्यैष्ठ्यान्तु समतीतायां प्रतिपत्प्रभृतिक्रमात् । पूर्ववत् पूजयेद्देवं विश्वरूपधरं हरिम्” । अत्रापि पूर्ववदिति रूपावाप्तिव्रतवदित्यर्थः “कृत्वा वृताख्ये च तथा विराज्य दत्त्वा सुयुक्तं शयनं द्विजाय । स्वर्लोकमासाद्य चिरं नरेन्द्र ! मानुष्यमासाद्य च भोगवान् स्यात्” ।

भौमवारव्रतं स्कन्दपु० “भौमोऽवमेश्वरः पुत्रः पृथिव्यां जनितो महान् । रूपेणैव सदा रम्यो वरदानादिहर्षोकसाम् । अस्यैव दिवसे प्राप्ते ताम्रपात्रं सुशोभनम् । परिपूर्णं गुडेनैव वर्षमेकं प्रदापयेत्” ।

भौमव्रतं भविष्योत्तरे “स्वात्वाङ्गारकं स्मृत्वा क्षपयेन्नक्तभोजनः । सप्तमे त्वथ संप्राप्ते स्थापितं ताम्रभाजने । हैमं रक्ताम्बरच्छन्नं कुङ्कुमेनानुलेपनम् । नैवेद्यं गुडकसारं पूज्य पुष्पाक्षतादिभिः । मन्त्रेणानेन तं दद्यात् ब्राह्मणाय कुटुम्बिने” । पद्मपु० “ग्रहाणामधिपं भौमं पूजयेद्भौमवासरे । मङ्गलो भूमिपुत्रश्च ऋणहर्त्ता धनप्रदः । स्थिरासनो महाकायः सर्वकामार्थसाधकः । लोहितो लोहिताक्षश्च सामगानां कृपाकरः । धरात्मजः कुजो भौमो भूतिदो भूमिनन्दनः । अङ्गारको यमश्चैव सर्वरोगापहारकः । वृष्टिकर्त्ता प्रहर्त्ता च सर्वकामफलप्रदः । एतानि कुजनामानि प्रातरुत्थाय यः पठेत् । ऋणं न जायते तस्य धनं प्राप्नोत्यसंशयम् । त्रिकोणञ्च सदा कार्य्यं मध्ये छिद्रं प्रकल्पयेत् । कुङ्कुमेन सदा लेख्यं रक्तचन्दनकेन च । कोणे कोणे प्रकल्प्यानि त्रीणि नामानि भूमिप ! । आरं वक्रं भूमिजञ्च रक्तगन्धैश्च पूजयेत्” ।

मङ्गलाव्रतं देवीपु० “आश्विने चाथ माघे वा चैत्रे वा श्रावणेऽपि च । कृष्णादारभ्य कर्त्तव्यं व्रतं शुक्लावधिं चरेत्” । शुक्लावधिं शुक्लपक्षावधिम् । एतच्चोक्तमासेष्वेव वक्ष्यमाणप्रकारेण कृष्णाष्टम्यामारभ्य शुक्लाष्टमीं यावत् कर्त्तव्यम् “अष्टमीमाश्विनीं कृष्णामेकभक्तेन कारयेत् । मङ्गलारूपिणीं देवीमथ वा दुर्गार्त्तिनाशिनीम् । पूजयेन्नवभेदेन गन्धमाल्यनिवेदनैः । नवभेदेन नवकृत्वो गन्धार्पणेन । “कन्यका भोजयेद् वत्स ! देवीभक्तांश्च मानवान् । अथ वा नवरात्रञ्च सप्तपञ्चत्रिक द्वि वा । एकभक्तेन नक्तेनायाचितोपोषितैः क्रमात्” । नवरात्रमेकभक्तेन सप्त नक्तेन पञ्चायाचितेन त्रिरुपवासेनेति क्रमः । अष्टमीमन्ते कृत्वा नवादिगणनं पूर्व-

सायमर्घं ददेत पश्चात् "जपयेताश्विने भक्त ! यावत्कृष्णा तु अष्टमी । पूजयेन्मङ्गलां तत्र मण्डले विधिवद्व्रते । सर्वसम्भारसम्पन्ने सर्वसिद्धिविधायके । सर्वकामानवाप्नुयात्" इत्यादि ।

मङ्गल्यसप्तमीव्रतं गुरुडपु० "मङ्गल्यं परमिच्छन्ती मङ्गलायतनं हरिम् । अर्चयेद्वनिता देव सप्तम्यां समुपोषिता । माङ्गल्यं परमिच्छन्ती व्रतेनानेन चाप्नुयात् । पुमानपि यशः कीर्त्तिं बलमायुश्च विन्दति" ।

मत्स्यद्वादशीव्रतं धरणीव्रते "मार्गस्य शुक्लपक्षे तु दशम्यां नियतात्मवान् । स्नात्वा देवार्चनं कृत्वा अग्निकार्य्यं यथाविधि । शुचिवासाः प्रसन्नात्मा हव्यं चान्नं सुसंस्कृतम् । भुक्त्वा पञ्चपदं गत्वा पुनः शौचं तु पादयोः । कृत्वाऽष्टाङ्गुलमानन्तु क्षीरवृक्षसमुद्भवम् । भक्षयेद्दन्तकाष्ठं तु तत आचम्य यत्नतः । स्पृष्ट्वा खानि तथाद्भिश्च चिरं ध्यात्वा जनार्दनम्" । खानीन्द्रियाणि "शङ्खचक्रगदाधारिं पीतवस्त्रं किरीटिनम् । प्रसन्नवदनं देवं सर्वलक्षणलक्षितम् । ध्यात्वा जलं गृहीत्वा तु भानुरूपं जनार्दनम् । हस्तार्घ्यं दापयेत् पश्चात् करतोयेन मानवः । एवमुच्चारयेद्वाक्यं तस्मिन् काले महामुने ! । एकादश्यां निराहारो भूत्वाहमपरेऽहनि । भोक्ष्यामि पुण्डरीकाक्ष ! शरणं मे भवाच्युत ! । तेषां मध्ये शुभं पीठं स्थापयेद्वस्त्रसंयुतम् । तस्मिंश्च रौप्यं सौवर्णं ताम्रं वा दारवं तथा । अलाभतस्तोयपूर्णं कृत्वा पात्रं ततो न्यसेत्" । अलाभतः सौवर्णादीनामलाभे दारवमपि कुर्य्यादित्यर्थः "सौवर्णं मत्स्यरूपेण कृत्वा देवं जनार्दनम् । वेदवेदाङ्गसंयुक्तं श्रुतिस्मृतिविभूषणम्" । तोयपूर्णं पात्रं कृत्वा तत्र मत्स्यरूपं जनार्दनं न्यसेदित्यन्वयः "तत्रानेकविधैर्भक्ष्यैः फलैः पुष्पैश्च शोभितम् । गन्धैरन्यैश्च धूपैश्च अर्चयित्वा यथाविधि । रसातलगता वेदा यथा देव त्वयाऽऽहृताः । मत्स्यरूपेण तद्वन्मां भवादुद्धर केशव ! । एवमुच्चार्य्य तस्याग्रे जागरं तत्र कारयेत् । यथाविभवसारेण प्रभाते विमले तथा । चतुर्णां ब्राह्मणानां च चतुरो दापयेत् घटान्" ।

मदनद्वादशीव्रतं मत्स्यपु० "चैत्रे मासि सिते पक्षे द्वादश्यां नियतव्रतः । स्थापयेदव्रणं कुम्भं सिततण्डुलपूरितम् । नानाफलयुतं तद्वदिक्षुदण्डसमन्वितम् । सितवस्त्रयुगच्छन्नं सितचन्दनचर्चितम् । नानाभक्ष्यरसोपेतं सहिरण्यं तु शक्तितः । ताम्रपात्रं गुडोपेतं तस्योपरि निवेशयेत् । तदभावे कृशां कुर्य्यात् कामकेशवयोर्नरः । कामनाम्ना हरेरर्च्चां स्नापयेद्गन्धवारिणा । शुक्लपुष्पाक्षततिलैरर्च्चयेदिति केशवम् । अनेन विधिना सर्वं मासि मासि समाचरेत् । उपवासी त्रयोदश्यामर्च्चयेद्विष्णुमव्ययम् । फलमेकञ्च सम्प्राश्य द्वादश्यां भूतले स्वपेत् । ततस्त्रयोदशे मासि घृतधेनुसमन्विताम् । शय्यां दद्याद्द्विजेन्द्राय सर्वोपस्करसंयुताम् । काञ्चनं कामदेवं च शुक्लां गाञ्च पयस्विनीम् । वासोभिर्द्विजदाम्पत्यं पूज्य शक्त्या विभूषणैः । सर्वगन्धादिकं दद्यात् प्रीयतामित्युदीरयेत्" ।

मधूकतृतीयाव्रतं भविष्योत्तरे "फाल्गुनस्य सिते पक्षे तृतीयायामुपोषिता । स्नाता स्थिता ब्रह्मचर्य्ये ततोऽन्यस्मिन् दिने पुनः । व्रजेन्मधुवनं, गौरीं पूजयेत् मधुमानसा । मन्त्रेणानेन ध्यायन्ती पार्वतीप्रतिमां शुभाम् । मृगाजिनावृतकुचां जटामुकुटशोभिताम् । मौधारणगतां देवीं रुद्रध्यानपरायणाम् । पूजयेत् गन्धकुसुमैर्दीपालक्तकचन्दनैः । पर्य्यङ्कुलमुखरालिकुलोपगीतं दत्त्वा फलाक्षतयुतं मधुपादपस्य । गौरीव कामसदृशा भवतीह नारी" इत्यादि ।

मनोरथद्वादशीव्रतं पद्मपु० "फाल्गुनामलपक्षस्य एकादश्यामुपोषितः । नरो वा यदि वा नारी समभ्यर्च्य जगत्पतिम् । हरेर्नाम जपन् भक्त्या सप्त वारान् जनेश्वर ! । उत्तिष्ठन् प्रस्वपंश्चैव हरिमेवानुकीर्त्तयेत् । अतः प्रभाते विमले द्वादश्यां नियतो हरिम् । स्नात्वा सम्यक् समभ्यर्च्य दत्त्वा विप्राय दक्षिणाम् । हरिमुद्दिश्य चैवाग्नौ घृतहोमं समाचरेत् । फाल्गुनश्चैत्रवैशाखौ ज्यैष्ठमासश्च पार्थिव ! । चतुर्भिः पारणं मासैरेभिर्निष्पादितं भवेत् । रक्तपुष्पैश्च चतुरो मासान् कुर्वीत चार्च्चनम् । जातीपुष्पाणि धूपश्च गव्यः सर्जरसेन तु । प्राश्य दर्भोदकं चात्र शाल्यन्नं च निवेदयेत् । स्वयमेव तदश्नीयाच्छेषं पूर्ववदाचरेत् । कार्त्तिकादिषु मासेषु गोमूत्रं कायशोधनम् । सुगन्धं स्वेच्छया धूपं पूजां भङ्गारकेण च" । भङ्गारको माकन्दः "घृतं चात्र नैवेद्यं भुञ्जीयात्तच्च वै स्वयम् । प्रतिमासञ्च विप्राय दातव्या दक्षिणा तथा । प्रीणनं देवदेवस्य पारणे पारणे गते" वर्षसाध्यमिदम् ।

मनोरथपूर्णिमाव्रतं विष्णुधर्मोत्तरे "कार्त्तिक्यान्तु तथारभ्य संपूर्णं शशलक्षणम् । पूजयेदुदये राजन् ! सदा नक्ता-

शनौ भवेत् । तावत्तां मण्डलं कृत्वा चन्दनेनानुलेपितम् । द्विदिग्गनक्षत्रसंहितं ततः सोमन्तु पूजयेत्"। लवणं सैन्धवलवणकृतम् "कृत्तिकारोहिणीयुक्तं कार्त्तिके मासि पूजयेत् । सौम्यार्द्रासहितं राजन्! मासि सौम्ये तथैव च । आदित्यपुष्यसहितं मासि पौषे च यादव!। मघासर्पयुतं माघे फाल्गुने शृणु पार्थिव!। आर्य्यम्णेनाऽथ सावित्रैः सहितं पूजयेद्विभुम् । चित्रास्वातियुतञ्चैव वैशाखे शृणु पार्थिव!। विशाखया च मैत्रेण युतं संपूजयेत्तथा । ज्येष्ठामूलयुतं ज्यैष्ठे आषाढे सलिलोत्तरे । श्रावणे श्रवणोपेतं वारुणेन श्रविष्ठया । तथा भाद्रपदे पौष्ण्या अजाहिर्बुध्न्यसंयुतम् । अश्विनी भरणीयुक्तं तथा चाश्वयुजे विभुम्" इत्यादि ।

मनोरथसंक्रान्तिव्रतं स्कन्दपु० "अतः परं प्रवक्ष्यामि संक्रान्तिषु मनोरथान् । गुडेन पूर्णकुम्भञ्च वस्त्रञ्च स्वशक्तितः । सङ्क्रान्तिवासरे दद्याद्ब्राह्मणाय कुटुम्बिने । एवं संवत्सरे पूर्णे स्वशक्त्योद्यापनं शुभम् । गुडेन पर्व्वतं कार्य्यं वस्त्ररत्नैश्च भूषितम् । अयने चोत्तरे दद्याद्वित्तशाठ्यं न कारयेत् । यं यं प्रार्थयते कामं तं तं प्राप्नोति पुष्कलम् । सर्व्वपापविनिर्मुक्तः सूर्य्यलोके महीयते" ।

मन्दारषष्ठीव्रतं भविष्योत्तरे "शृणु पार्थ! प्रवक्ष्यामि सर्व्वपापप्रणाशिनीम् । सर्व्वकामप्रदां पुण्यां षष्ठीं मन्दारसंज्ञिताम् । माघस्यामलपक्षे तु पञ्चम्यां लघुभुक् नरः । दन्तकाष्ठं ततः कृत्वा स्वपेद्भूमौ जितेन्द्रियः । सर्व्वभोगविहीनस्तु षष्ठीमुपवसेन्नरः । प्राश्याहुतं द्विजश्रेष्ठात् मन्दारं प्रार्थयेन्निशि" इत्यादि ।

मन्दारसप्तमीव्रतं पद्मपु० "अथातः सम्प्रवक्ष्यामि सर्व्वपापप्रणाशिनीम् । सर्व्वकामप्रदां पुण्यां नाम्ना मन्दारसप्तमीम् । माघस्यामलपक्षे तु पञ्चम्यां लघुभुक् नरः । दन्तकाष्ठं ततः कृत्वा षष्ठीमुपवसेन्नरः । विप्रान् सम्यग् भोजयित्वा तु मन्दारं प्राशयेन्निशि । ततः प्रभाते उत्थाय कुर्य्यात् स्नानं पुनर्द्विजान् । भोजयेच्छक्तितः कृत्वा मन्दारकुसुमाष्टकम्"। मन्दारो राजार्कः "सौवर्णं पुरतस्तद्वत् पद्महस्तं सुशोभनम् । पद्मं कृष्णतिलैः कृत्वा ताम्रपात्रेऽष्टपत्रकम् । हैमं मन्दारकुसुमं स्थाप्य मध्ये च पूजयेत्" इत्यादि वर्षाध्यम् ।

मरीचसप्तमीव्रतं भविष्यपु० "तथा संपूज्य देवेशं भानुं कामप्रदं नृप!। भोजयित्वा यथाशक्ति ब्राह्मणांश्च विशेषतः । सप्तम्यां प्राशयेच्चापि मरीचं मनुजाधिप । गृहीत्वा मरीचशतमव्रणं सुदृढं परम् । मरीचं प्राशयेद्राजन् मन्त्रेणानेन वा स्मरन्" इत्यादि ।

मरुत्सप्तमीव्रतं विष्णुधर्म्मोत्तरे "चैत्रस्य शुक्लपक्षे तु सम्यक् षष्ठ्यामुपोषितः । सप्तम्यामर्चनं कुर्य्यान्मरुतां तत्र तत्र च । तत्र श्रेणीगतं सप्तमण्डलं नृप! कारयेत् । श्रेणी तथा कार्य्यसमा सप्तमण्डलकान्विता" । इत्यादि वर्षाध्यम् ।

मल्लद्वादशीव्रतं भविष्योत्तरे "मल्लैर्विशेषतः कार्य्यास्तथान्यैरपि भक्तितः । पूजयन्ति क्रमेणैव मासि मासि तन्मम । मार्गशीर्षादिभिः पार्थ! पूजयेन्मासनामभिः । पारणे पारणे दद्यान्मल्लिकानि द्विजातये । गन्धैः पुष्पैस्तथा दीपैर्गीतवाद्यैर्मनोहरैः । मल्लयुद्धैश्च विविधैर्जागरं कारयेन्निशि । घृतदानैः क्षीरदानैर्दधिदानैः पृथक् पृथक् । सर्व्वत्र देवदेवेशः कृष्णो मे प्रीयतामिति । एवमेव विधिः प्रोक्तो मन्त्रदानसमन्वितः । द्वादशीयं मयाद्यापि क्रियते बलवृद्धये । मल्लानां जयदा यस्मान्मल्लद्वादशिसंज्ञिता । तस्मान्मल्लैः प्रकर्त्तव्या मल्लयुद्धजयार्थिभिः । अन्येषामपि कौन्तेय! सर्व्वार्थजयदायिनी । इमां चीर्त्वा पापसङ्घैर्मुच्यते नात्र संशयः । भाण्डीरपादपतले मिलितैर्महद्भिर्मल्लैरनाकुलबलाकुलबलं नियुद्धैः । सम्पूजितः सपदि यत्र तिथौ ततश्च सा द्वादशी भुवि गता बलमल्लसंज्ञा" ।

महाजयासप्तमीव्रतं भविष्यपु० "शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः । महाजया तदा स्याद्वै सप्तमी भास्करप्रिया । स्नानं दानं जपो होमः पितृदेवाभिपूजनम् । सर्व्वं कोटिगुणं प्रोक्तं तपनेन महौजसा । यस्त्वेतां मानवो भक्त्या घृतेन स्नापयेद्रविम् । सोऽश्वमेधफलं प्राप्य ततः सूर्य्यपदं व्रजेत्" ।

महातपोव्रतं महाभारते "मासि मासि त्रिरात्राणि कृत्वा तु नियतेन्द्रियः । गणाधिपत्यं प्राप्नोति निःसपत्नमनाविलम् । यस्तु संवत्सरं पूर्णमेकाहारो भवेन्नरः । अतिरात्रस्य यज्ञस्य स वै फलमुपाश्नुते । दशवर्षसहस्राणि स्वर्गलोके महीयते । तत्क्षयादिह चागत्य माहात्म्यं प्रतिपद्यते । यस्तु संवत्सरं पूर्णं चतुर्थं भक्तमश्नुते । अहिंसानिरतो नित्यं सत्यवाग्विजितेन्द्रियः । वाजपेयस्य यज्ञस्य स फलं समुपाश्नुते । त्रिंशद्वर्षसहस्राणि सुराणां दिवि मोदते । अष्टमेन तु भक्तेन जीवेत् संवत्-

सरं नरः। सर्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः। हंससारसयुक्तेन विमानेन स गच्छति। पञ्चाशत्तु सहस्राणि वर्षाणि दिवि मोदते। पक्षे पक्षे गते राजन्! योऽश्नीयाद्दर्भमेव तु। षण्मासानशनन्तस्य भगवानङ्गिराब्रवीत्। षष्टिवर्षसहस्राणि दिवमावसते स च। यश्नीयाद्द्वितीये पक्षे यस्तु सर्वदिनेष्विति। वीणानां वल्लकीनाञ्च वेणूनाञ्च विशाम्पते!। सुघोषैर्मधुरैः शब्दैः स सुप्तः प्रतिबुध्यते। संवत्सरमिहैकन्तु मासि मासि पिबेत् पयः। फलं विश्वजितस्तात! प्राप्नोति स नरोत्तमः। सिंहव्याघ्रप्रयुक्तेन विमानेन स गच्छति। शतञ्चाष्टौ सुरकन्या रमयन्ति च तन्नरम्। सप्ततिञ्च सहस्राणि वर्षाणां दिवि मोदते। मासादूर्द्ध्वं नरव्याघ्र! नोपवासो विधीयते"।

महाफलद्वादशीव्रतं विष्णुरहस्ये "पौषे कृष्णे विशाखासुयुक्ता चैकादशी भवेत्। तस्यां संपूजयेद्विष्णुमुपोष्य विधिवन्नरः। सुगन्धपुष्पनैवेद्यैर्वस्त्रभूषणसम्भवैः। मासानुमासम्पूजयेत् विधिना जगतीपतिम्। प्राशनञ्चाप्युद्यर्थं कार्य्यं मासक्रमेण तु। गोमूत्रमुदकं सर्पिराचम्य कामतः परम्। ततोदूर्वादधिव्रीहितिलांश्चैव यवांस्तथा। जलमर्ककरैस्तप्तं दर्भांश्च क्षीरमेव च। द्वादश्यां भोजयेद्विप्रान् दधिक्षीरगुडौदनैः। मासक्रमेण विप्रेभ्यो दद्यात्सम्यक्कृते व्रते। घृतं तिलव्रीहियवसुवर्णसंयुतं घटम्। मोदकैश्च युतं कुम्भमातपत्रन्तु पायसम्। फाणितं चन्दनं माला सुगन्धाश्चेति दक्षिणाः। व्रतमेतन्महापुण्यं दृष्टादृष्टफलप्रदम्। कर्त्तव्यं धर्मनिरतैर्विष्णुपूजनतत्परैः। व्रतमेतन्नरः कृत्वा विप्राणां प्रवरे कुले। सुजन्मा जायते धीमान् वेदवेदाङ्गपारग."।

महाफलव्रतं भविष्यपु° "शृणु कौरव! कर्माणि तिथिशुद्धाश्रितानि तु। श्रुत्वैव पापहानिः स्यात् कृत्वानन्तं फलं लभेत्। क्षीराशनः प्रतिपदि। पुष्पाहारो द्वितीयायाम्। लवणवर्जितं तृतीयायाम्। तिलान्नाशी चतुर्थ्याम्। क्षीराशनः पञ्चम्याम्। फलाशनः षष्ठ्याम्। शाकाशनः सप्तम्याम्। विल्वाहारोऽष्टम्याम्। पिष्टाशनो नवम्याम्। अनग्निपक्वाहारो दशम्याम्। एकादश्यामुपवासः। घृताशनो द्वादश्याम्। पायसाहारस्त्रयोदश्याम्। यावाचाहारश्चतुर्दश्याम्। गोमूत्राहारः कुशोदकप्राशनः पौर्णमास्याम्। एवं प्राशनविधिः। उक्तानि प्राशनान्येवं विधिपूर्वमुदाहृतम्। क्षीरं प्रतिपदायान्तु सर्वासु च विधीयते"।

महत्तमव्रतं स्कान्दपु° "वैदिकेन विधानेन व्रतं पुण्यं महत्तमम्। कस्मिंस्तिथौ तु कर्त्तव्यं विधानं तद्वदस्व मे"। स्कन्द उवाच "मासि मासि भाद्रपदे शुक्ले च प्रतिपत्तिथौ। नैवेद्यन्तु पचेन्मौनी षोडशानिगुणानि च। फलानि पिष्टपक्वानि दद्याद्विप्राय षोडश। देवाय षोडशैतानि दातव्यानि प्रयत्नतः। भुञ्जते षोडश तथा व्रतस्य नियमाश्रयात्। सौवर्णं कारयेद्देवं यथा शक्त्या हिरण्मयम्" इत्यादि।

महाराजव्रतं स्कान्दपु° "यदागस्त्य! चतुर्दश्यामाश्वौ भाद्रपदाय वा। सितायामसितायां वा न विशेषो यथा शिव। तदा लब्धैकभूर्भूत्वा त्रयोदश्यां यथाविधि। सर्वव्रतं महाराजं तदा संकल्पयेन्नरः। चतुर्दश्यां ततः कुर्य्यात्तिलगोमूत्रगोमयैः। रुद्राय गन्धगव्येन स्नानं शुद्धात्मना ततः। शिवसंकल्पमन्त्रस्य ततो दशशतं पठेत्"। शिवसंकल्पमन्त्रो यज्जाग्रतो दूरमित्यादिर्यजुःशाखाप्रसिद्धः "पञ्चाक्षरस्तु शूद्रस्य जन्मकोटिकृतैस्ततः। मुच्यते पातकैः सर्वैस्तत्कृत्वा नात्र संशयः"।

महालक्ष्मीव्रतं स्कान्दपु° "महाराज! निबोधेदं महालक्ष्मीव्रतं शुभम्। भद्र! भाद्रपदे मासि शुक्लाष्टम्यां नरोत्तम!। स्नात्वाभ्यर्च्य महालक्ष्मीमेकभक्तं प्रकल्प्य च। कुङ्कुमाक्तदृतं सूत्रं षोडशग्रन्थिसंयुतम्। तन्तुभिस्तत्प्रमाणैश्च बध्नीयात्तु करे शुभम्। दूर्वाक्षतप्रवालानां षोडशैव तु षोडश। पुनरेवाश्विने मासि कृष्णाष्टम्यां दिने शुभे। उत्सवं कारयेद्व्यास्तु त्यौपचनादितम्"।

महाव्रतं कालिकापु° "महाव्रतमथो वक्ष्ये येनारोहति तत् पदम्। सुरासुरमुनीनाञ्च दुर्लभं विधिना शृणु। पर्वणाश्वयुजस्यान्ते पायसञ्च घृतप्लुतम्। नक्तं भुञ्जीत शुद्धात्मा चन्दनञ्चैवाम्बितम्"। आश्वयुजस्यान्ते कार्त्तिके। सर्वेषु अमावस्यायां कार्त्तिकयन्त इत्यर्थः। रेखव इत्युरसः। लिङ्गपु° "अष्टम्याञ्च चतुर्दश्यां पक्षयोरुभयोरपि। वर्षमेकं ततो भुक्त्वा नक्तं यः पूजयेच्छिवम्। सर्वयज्ञफलं प्राप्य स याति परमाङ्गतिम्"। विष्णुधर्मोत्तरे "सोमभूतं हरिं देवं चातुर्मास्यमुपोषितम्। अर्चयेत् पौर्णमास्यान्तु सोऽश्वमेधफलं लभेत्"। योगभूतं सकलम् "अग्निभूतममावास्यां पूजयेत्तामुपोषितः। राजसूयमवाप्नोति कुलसहरति सकलम्"।

ब्रह्मभूतं निष्कलम् "ब्रह्मभूतममावास्यां पौर्णमास्यां तथैव च। योगभूतं परिचरन् केशवं महदाप्नुयात्। च-न्वयं प्रीतिमाप्नोति मासपक्षांशयोः सदा। पूजितः सोपवासेन भक्त्या देववरो हरिः। महाव्रतमिदं ख्यातं सर्वकल्मषनाशनम्। संवत्सरमिदं कृत्वा नाकपृष्ठे महीयते" इत्यादि।

महाजयसप्तमीव्रतं भविष्यपु॰ "मासस्य शुक्लपक्षे तु यस्यास्य कुरूद्वह!। एकमक्तं समाख्यातं षष्ठ्यां नक्तमुदाहृतम्। सप्तम्यामुपवासन्तु केचिदिच्छन्ति सुव्रत!। षष्ठ्यां केचि-दुपवासं सप्तम्यां पारणं विदुः। कृतोपवासः षष्ठ्यान्तु पूजयेद् भास्करं बुधः। रक्तचन्दनमिश्रैस्तु करवीरैः समाहृतैः। गुग्गुलेन महाबाहो! धूपं दद्याच्च सुव्रत!। पूजयेद्देवदेवेशं षष्ठ्यां भास्करं रविम्"। मास्करं संवत्सर-मित्यर्थः "एवं हि चतुरो मासान् माघादीन् पूजयेद्रविम्। प्राशनञ्चापि शुद्ध्यर्थं प्राशनं गोमयस्य च। स्नानञ्च गोमयेनेह कर्त्तव्यमात्मशुद्धये। ब्राह्मणान् दि-जमीमांश्च भोजयेच्चापि भक्तितः"। दिवि देवकुले भवाः दिव्या इतरे भौमाः। "ज्यैष्ठादिष्वपि मासेषु श्वेतचन्द-नमुच्यते। श्वेतानि चापि पुष्पाणि शुभगन्धान्वितानि वै। कृष्णागुरु तथा धूपं नैवेद्यं पायसं स्मृतम्। तेनैव ब्राह्मणान् साधून् भोजयेच्च महामते!। प्राशयेत् पञ्च-गव्यन्तु स्नानं तेनैव सुव्रत!। कार्त्तिकादिषु मासेषु अगस्तिकुसुमैः स्मृतम्। पूजनं कुरुयाद्र्व! धूपश्चा-पराजितः। नैवेद्यं गुडपूपाश्च तथैवेक्षुरसः स्मृतः। तेनैव ब्राह्मणान् स्नातो भोजयेच्च स्वभक्तितः। कुशोदकं प्राशयेच्च स्नानञ्च कुरु शिद्धये। इतीयं पारणस्यान्ते माघे मासि महामते!। भोजनं तत्र दानञ्च द्विगुणं समुदाहृतम्। देवदेवस्य पूजा च कर्त्तव्या भक्तितो बुधैः। रथस्य चापि दानन्तु रथयात्रा च सुव्रत!। रथस्य प्राप्तिहेतोर्वै कर्त्तव्या विभवे सति। दानं सुवर्ण-रथस्येह यथोक्तं विभवे सति। इत्येषा कथिता पुत्र! रथाङ्गसप्तमी शुभा। सप्तमीति महाख्याता महापुण्या महोदया। यामुपोष्य धनं पुत्रान् कीर्त्तिं विद्यां समश्नुते"।

महेश्वरव्रतं विष्णुधर्मोत्तरे "शुक्लपक्षादथारभ्य फाल्गुनस्य नराधिप!। पूजयेत् तु चतुर्दश्यां सोपवासो महेश्व-रम्। गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा। व्रतान्ते गां तथा दत्त्वा वह्निष्टोमफलं लभेत्। एतदेव व्रतं कृत्वा शुक्लपक्षे तु वत्सरम्। पौण्डरीकमवाप्नोति कुलमुद्धरति स्वकम्। चतुर्दशीद्वयश्चैतत् कृत्वा संवत्-सरं नरः। मासि मासि यथाशक्त्या सर्वान् कामा-नवाप्नुते। प्राप्नोति कामांश्च महेश्वरस्य तत्रापि कालं सुचिरञ्च राजन्!। सायुज्यमायाति महेश्वरस्य सर्वे-श्वरस्याप्रतिमस्य तस्य"।

महेश्वराष्टमीव्रतं विष्णुधर्मोत्तरे "शुक्लपक्षात्तथारभ्य सौम्या-ष्टम्यां नराधिप!। पूजयेत् सोपवासस्तु देवदेवं त्रि-लोचनम्"। सौम्याष्टम्यां मार्गशीर्षाष्टम्याम् "विप्रे वाथव चाग्नौ वा कमले यदि वा स्थले। इक्षुक्षीराभि-षेकेन स्नातेन विविधेन वा। गन्धमाल्यनमस्कारदीप-धूपान्नसम्पदा। गीतेन वाद्यवाद्येन वह्निसन्तर्पणेन च। ब्राह्मणानाञ्च पूजाभिर्वत्सरमनुजोत्तम!। व्रतावसाने दत्त्वा तु तथा धेनुं पयस्विनीम्। पौण्डरीकमवाप्नोति स्वर्गलोकञ्च गच्छति"।

महोत्सवव्रतं स्कन्दपु॰ "प्राक्षिप्तपुष्पैर्दीपैः पञ्चभिर्नव-भ-स्तथा। कुर्यादारात्रिकं शम्भोः स्वर्णपात्रैः समुज्ज्वलैः। विचित्रवस्त्रपूजा च कर्त्तव्या महती शिवे। पुष्पमण्ड-लिकां चित्रां वितानोज्ज्वलां शुभाम्। महोत्सवेन विधिवद्गेयं तूर्यरवेण च। विविधैर्भक्ष्यभोज्यैश्च नै-वेद्यञ्चोपकल्पयेत्। सम्यक् सम्पादनीया स्यात् रथयात्रा पिनाकिनः। प्रेक्षणीयैस्तथा नृत्यैर्वाद्यैर्यन्त्रैश्च शोभनैः। पूजयेच्छिवभक्तांश्च विप्रानन्यांश्च भक्तितः। प्रीयतां शिव इत्युक्त्वा नक्तं भुञ्जीत च स्वयम्। वर्षे वर्षे प्रकर्त्तव्य एतच्चैवोत्सवं महत्। शिवभक्तैस्तथान्यैश्च कीर्त्ति-श्रेयोविवृद्धये"।

माघमासव्रतं भविष्योत्तरे "एतस्मात् कारणात् पुत्र! माघ-स्नानं विशिष्यते। अहन्यहनि दातव्यास्तिलाः शर्क-रयान्विताः। त्रिभागस्तु तिलानां हि चतुर्थः शर्करा-न्वितः। अनेनैव वरारोहे सर्वं मासं नयेद्व्रती। प्रत्यर्थं मे प्रीयतां देवो विष्णुर्मूर्त्तिनिरञ्जनः। माघाव-साने सुभगे! षड्रसं सम्प्रदापयेत्। दम्पत्योर्वाससी शुक्ले सप्तधान्यसमन्विते। त्रिंशत्तु मोदका देयाः कृतास्तिल-मयाः शुभाः। मरिचैर्निर्मिताः स्वच्छाः नारङ्गाणि च दापयेत्"।

मातृनवमीव्रतं भविष्योत्तरे "मातरश्चैव संपूज्याः यथा भक्त्या प्रयत्नतः। तदग्रे शिवभक्तांस्तु भक्ताश्चार्च्या विशे-षतः। एवं कृत्वा विधानेन सर्वत्र जयमाप्नुयात्"।

इत्युपक्रमे मातृनामान्यभिधाय उक्तम् "नवम्यां पूजयेद् यस्तु मासि चाश्वयुजे सदा । तस्येप्सितप्रभावस्तु भवते नात्र संशयः" ।
मातृव्रतं वराहपु० "मातृणामष्टमी दत्ता ब्रह्मणा तिथिरुत्तमा । एताः समापयेद्भक्त्या निराहारो नरः सदा । तस्य ताः परितुष्टास्तु क्षेमारोग्यं ददत्यपि" ।
मार्गशीर्षव्रतं महाभारते "मार्गशीर्षन्तु यो मासमेकभक्तेन संक्षिपेत् । भोजयेच्च द्विजान् भक्त्या मुच्यते व्याधिकिल्विषैः । सर्वकल्याणसम्पूर्णः सर्वदुःखविवर्जितः । उपोष्य व्याधिरहितो वीर्यवानभिजायते । कृषिभागी बहुधनो बहुधान्यश्च जायते" ।
मार्त्तण्डसप्तमीव्रतं भविष्यपु० "मार्त्तण्डसप्तमीं कृष्ण ! अथान्यां वच्मि तेऽनघ ! । पौषमासे सिते पक्षे सप्तम्यां समुपोषितः । सम्यक् संपूज्य मार्त्तण्डं मार्त्तण्ड इति वै जपन् । पूजयेत् कृतपं भक्त्या श्रद्धया परयान्वितः" । कृतपः सूर्यः "पुष्पधूपोपहाराद्यैरुपचारैः यथाहितः । मार्त्तण्डेति जपंश्चाथ पुनस्तद्गतमानसः । विप्राय दक्षिणां दद्यात् यथाशक्त्या खगध्वज । द्वितीयेऽह्नि पुनः स्नात ! तथैवाभ्यर्च्चनं रवेः । तेनैव नाम्ना संबोध्य दत्त्वा विप्राय दक्षिणाम् । ततो भुञ्जीत गोदोहसमुद्भवसमन्वितम् । एवमेवाखिलान् मासान् उपोष्य प्रयतः शुचिः । दद्याद्वार्षिकं विद्वान् प्रतिमासञ्च शक्तितः । पारिते च पुनर्वर्षे यथापूर्वं गवाह्निकम् । दत्त्वा परगवे भूयः स्वर्गं वद फलमश्नुते । सर्वमश्वाः पञ्चगावः सहस्र हुतभास्करः । प्रतिमासं द्विजातिभ्यो दत्त्वा यत् फलमश्नुते । तदाप्नोत्यखिलं सम्यग्व्रतमेतदुपोषितः । तस्य लोकमवाप्नोति मार्त्तण्डो यत्र तिष्ठति" ।
मासव्रतं देवीपु० "मासे रसोत्तमं दद्याद् घृतं पौषे महाफलम्" । रसोत्तमं लवणम् "तिलान्माघे मुनिश्रेष्ठ ! सप्त धान्यानि फाल्गुने । विचित्राणि च वस्त्राणि चैत्रे दद्याद् द्विजातये । वैशाखे द्विज ! गोधूमान् ज्यैष्ठे तोयभृतं घटम् । आषाढे चन्दनं देयं सकर्पूरं महाफलम् । नवनीतं नभोमासि छत्रं प्रौष्ठपदे शुभम् । गुडशर्करयोर्षणान् बहुलुकानाश्विने मुने ! । दीपदानं महापुण्यं कार्त्तिके यः प्रयच्छति । सर्वकामानवाप्नोति क्रमेण तु उदाहृतम्" ।
मासोपवासव्रतं विष्णुधर्मोत्तरे "आश्विनस्यामले पक्षे एकादश्यामुपोषितः । व्रतमेतत् तु गृह्णीयाद् यावत् त्रिंशद्दिनानि तु । वासुदेवं समुद्दिश्य कार्त्तिकं सकलं नरः । मासमुपवसेद्यस्तु स मुक्तिफलभाग्भवेत् । अच्युतस्नापये भक्त्या त्रिकालं कुसुमैः शुभैः । मालतीन्दीवरैः पद्मैः कमलैः सुगन्धिभिः । कुङ्कुमोशीरकर्पूरैर्विलिप्य वरचन्दनैः । नैवेद्यधूपदीपाद्यैरर्चयेत जनार्दनम्" इत्यादि ।
मुक्तिद्वारसप्तमीव्रतं मत्स्यपु० "अश्वमेधादियज्ञानां शतकोटिशतैरपि । तत् फलं लभ्यते पुंसा मुक्तिद्वारव्रतेन यत् । योगमार्गमनभ्यस्य यथेष्टाचारवानपि । अयुक्तो मृतवापि व्रतेनानेन मुच्यते । सप्तमीं प्राप्य शुक्लेन दन्तधावनमाचरेत् । नमोऽर्कायेत्युदीर्य्याथ अर्ककाष्ठेन भक्तिमान् । अथ वा पुष्यकलेन जलेनाप्लावनं तथा । कृत्वा पवित्रं देवानां मन्त्राधैरभिसंस्थितम् । रक्तचन्दनपद्मन्तु विलिखेद्गोमयशालिका । प्राक्कृते षोडशदलं सगर्भदलकर्णिकम्" इत्यादि ।
मुखव्रतं पद्मपु० "मुखवासं परित्यज्य समान्ते गोप्रदो भवेत् । यक्षाधिपत्यमाप्नोति मुखव्रतमिहोच्यते" ।
मुनिव्रतं विष्णुधर्मोत्तरे "सप्तम्यां मुनिशार्दूल ! दृष्टानभ्यर्चयेन्मुनीन् । स्वाध्यायफलमाप्नोति तल्लाभफलमश्नुते" ।
मृगशीर्षव्रतं पद्मपु० "श्रावणे मासि कृष्णे च शङ्करः प्रथमेऽहनि । त्रिपर्णया त्रिशल्येन त्रिमुखेन शरेण च । मुखानि त्रीणि चिच्छेद यज्ञस्य मृगरूपिणः । तैः शिरोभिस्तपस्तप्त्वा वरः प्राप्तोऽथ शङ्करात्" । त्रिशल्येन त्रिमुखेन शल्यत्रयविशिखेनेत्यर्थः । मृगरूपिणश्छिन्नयज्ञमृगरूपिण इत्यर्थः "स्त्रीभिः पूज्यानि तानीति न मनुष्यैः कदाचन । मृगशीर्षं ततः कृत्वा त्रिकूटाकारन्तु हेममयम् । क्षीरेण तपनीयं वै पूजनीयं यथाविधि । अर्घैः पुष्पैश्च धूपैश्च नैवेद्यैर्विविधैरपि । शालैः सौवर्णकाभिश्च कृतैः पिष्टमयैः शुभैः" । सौवर्चलाभिः अतसीनिष्पिष्टविकृतिभिः । "कांस्यभाजनवाद्यैश्च पश्चात् कार्य्यं तु भोजनम्" ।
मेघपालीतृतीयाव्रतं भविष्यपु० "अश्वयुक्शुक्लपक्षे च तृतीयायां युधिष्ठिर ! । मेघपाली प्रदातव्या भक्त्या स्त्रीभिर्द्विभक्तया । अर्घैः विरूढैर्गोधूमैः सप्तधान्यसमन्वितैः । तिलतण्डुलमिश्रैश्च दातव्या धर्मलिप्सुभिः" । युधिष्ठिर उवाच "कीदृशी सा भवेद्देव मेघपाली जनार्दन ! । लक्षणं कीदृशं तस्याः को मन्त्र इति मे वद" । श्रीकृष्ण उवाच "ताम्बूलसदृशैः पत्रैरक्ता वल्ली

समञ्जरी। वाटीषु या न मार्गेषु प्रोचिता पर्वतेषु वा। यत्र वा दृश्यते राजन्! शुचौ देशे समास्थिता। सैषपाली समभ्यर्च्या फलैः पुष्पैस्तथाक्षतैः। खर्ज्जूरैर्नारिकेरैश्च नारङ्गैर्दाडिमैस्तथा। वीजपूरैः कपित्थैश्च सप्तधान्यैर्विरूढकैः”।

मौनव्रतं स्कान्दपु० “नभस्य व्यतिक्रान्ते नभस्ये च प्रवर्त्तिते”। नभाः, श्रावणः, नभस्यो भाद्रपदः तौ चात्र पूर्णिमान्तौ ग्राह्यौ। “एवं कालक्रमेणैव श्रावणी पूर्णिमा गता। तद्दिनं प्राप्य विप्रेण्येत्यप्रेक्षाभिधानात्। ‘व्रतमेतत् तु कर्त्तव्यं षोडशैव दिनानि तु। एतच्छ्रुत्वा ततो देवी प्रहृष्टा वाक्यमब्रवीत्”। पार्व्वत्युवाच ‘किं विधानं पुरा प्रोक्तं व्रतं मौनव्रतात्मकम्। तत्समस्तं समाचक्ष्व प्रसादं कुरु मे प्रभो!”। ईश्वर उवाच ‘तद्दिनस्तु व सम्प्राप्य सभार्य्यः सह बान्धवैः। गत्वा प्रभातसमये स्नानार्थं जलसन्निधौ। तडागे वा नदीदेशे गत्वा प्रस्रवणेऽथ वा। स्नानं कार्य्यं तदा सर्वैः शिवध्यानपरायणैः। दूर्वाकाण्डं सुसंस्थाप्य षोडशग्रन्थिसंयुतम्। तत्सूत्रञ्च करे न्यस्य स्त्रिया वामे तु दक्षिणे। एवंविधानं कर्त्तव्यं यावत् स्यात् प्रतिपद्दिनम्। तद्दिने चैव संप्राप्ते समाप्त्यर्थं व्रतस्य तु। मौनेनैवानयेत्तोयं मौनात् गोधूमपेषणम्। मौनेनैव च कर्त्तव्यं नैवेद्यं भोजनादिकम्। सर्वोपस्करमादाय गत्वा च जलसन्निधौ। स्नानं कार्य्यं तदा तत्र नित्यकर्म्म ततः परम्। देवर्षिमनुजानाञ्च पितॄणाञ्चैव तर्पणम्। पश्चाद्देवाधिदेवेशं मन्त्रैः सम्पूजयेत् ततः”।

यमचतुर्थीव्रतं कूर्मपु० “भरण्यान्तु चतुर्थ्यान्तु शनैश्चरदिने यमम्। पूजयन् सप्तजन्मोत्थैर्मुच्यते पातकैर्नरः”।

यमद्वितीयाव्रतं भविष्योत्तरे “कार्त्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर!। यमो यमुनया पूर्वं भोजितः स्वगृहे सदा। द्वितीयायां महोत्सर्गे नारकीयाश्च तर्पिताः। पापेभ्योऽपि विमुक्तास्ते मुक्ताः सर्वनिबन्धनात्। आशिताश्चातिसन्तुष्टाः स्थिताः सर्वे यदृच्छया। तेषां महोत्सवो वृत्तो यमराष्ट्रसुखावहः। अतो यमद्वितीया सा प्रोक्ता लोके युधिष्ठिर! अस्यां निजगृहे पार्थ! न भोक्तव्यमतो बुधैः। स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम्”।

यमव्रतं भविष्यपु० “दशम्यां यमराडिष्टः सर्वव्याधिहरो ध्रुवम्। मूलमन्त्राः स्वसंज्ञाभिरङ्गमन्त्राश्च कीर्त्तिताः। पूर्ववत् पद्मपत्रस्थः कर्त्तव्यश्च तिथीश्वरः”। इदं व्रतं दैत्यान्तरप्रतिपद्व्रतवद्व्याख्येयम्। कूर्मपु० “उपोषितश्चतुर्द्दश्यां कृष्णपक्षे समाहितः। यमाय धर्मराजाय मृत्यवे चान्तकाय च। वैवस्वताय कालाय सर्वभूतक्षयाय च। प्रत्येकं तिलसंयुक्तान् दद्यात् सप्तोदकाञ्जलीन्। स्नात्वा नद्यान्तु पूर्वाह्णे मुच्यते सर्वपातकैः”। महाभारते “यजिष्णुः पञ्चमीं षष्ठीं यमान् यो भोजयेद् द्विजान्। अष्टमीमथ कौन्तेय! शुक्लपक्षे चतुर्दशीम्। उपोष्य व्याधिरहितो रूपवानिति जायते”। विष्णुधर्मोत्तरे “यत्र क्वचन नद्यान्तु यत्र कृष्णा चतुर्दशी। अनकाभ्युदिते काले देवं सम्पूजयेद् यमम्। धूमवर्णं चित्रगुप्तं कालपाशञ्च यादव!। कृत्वं स्वर्णञ्च धर्मज्ञं गन्धमाल्यानुसम्पदा। यमोद्धार इत्युक्त्वा तिलांश्च जुहुयात् ततः। नमो यमायेति तथा स्त्रोन्मृत्यु विधीयते। कृसरं भोजयेद्विप्रान् यथाशक्ति नरोत्तमः। दद्याद् व्रतान्ते विप्राय तथैव च पयस्विनीम्। कृत्वा व्रतं वत्सरमेतदिष्टं न याति राजन्! नरकं मनुष्यः। पापक्षयं प्राप्य स याति नाकं मानुष्यमासाद्य स धर्मवान् स्यात्”।

यमादर्शनत्रयोदशीव्रतं भविष्योत्तरे “पूर्वाह्णे मार्गशीर्षादौ वर्षमेकं निरन्तरम्। त्रयोदश्यां सौम्यदिने सूर्य्याङ्गारकवर्जिते। मम नाम्ना द्विजानष्टौ पञ्च चैव समाह्वयेत्। पुराणवेदतत्त्वज्ञान् स्वाचारांस्तत्त्वदर्शनान्। सूर्य्यैकशरणात् साधून् सर्वभूतहिते रतान्। शुचौ देशे शुभे पट्टे प्राङ्मुखानुपवेशयेत्। अन्तर्वाससोयुतान् भक्त्या यत्नेनाभ्यञ्जयेत तान्। त्रयोदश्यां त्रयोदश्यां ये करिष्यन्ति भूतले। एकभक्तेन नक्तेन उपवासेन वा पुनः। यमादर्शननाम्ना वै व्रतं सर्वव्रतोत्तमम्। ते सर्वपापनिर्मुक्ता विमानेनार्कवर्चसा। यास्यन्तीन्द्रपुरीं रम्यामप्सरोगणसंकुलाम्”।

युगादिव्रतम् आदिपु० “वैशाखस्य तृतीयायां श्रीसमेतं जगद्गुरुम्। नारायणं पूजयेथाः पुष्पधूपविलेपनैः। वस्त्रालङ्कारसम्भारैर्नैवेद्यैर्विविधैस्तथा। ततस्तस्याग्रतो धेनुर्लवणस्याढकेन तु। कार्य्या कुरुकुलश्रेष्ठ! चतुर्भागेन वत्सकम्। अविषमोपरि स्थाप्य कल्पयित्वा विधानतः। शास्त्रोक्तक्रमयोगेन ब्राह्मणायोपपादयेत्। श्रीधरः श्रीपतिः श्रीमान् श्रीशः संप्रीयतामिति। अनेन विधिना दत्त्वा धेनुं विप्राय भारत!। गोसहस्रप्रदानस्य फलं प्राप्नोत्यसंशयम्। तथैव कार्त्तिके मासि नवम्यां

नक्तभुग् नरः। स्नात्वा नद्यां तडागे वा देवखातेऽथ वा पुनः। उमासहायं वरदं नीलकण्ठमथार्च्चयेत्। पुष्पधूपादिनैवेद्यैर्दीपगन्धादिभिस्तथा। धेनुं तिलमयीं दद्यात् पुराणोक्तविधानतः। अष्टमूर्त्तिर्नीलकण्ठः प्रीयतामिति कीर्त्तयेत्। तदनु प्राप्यते पुण्यं पार्थ! न केन वर्ण्यते। दत्त्वा तिलमयीं धेनुं शिवलोकमवाप्नुयात्। त्रयोदश्यां नभस्ये या पितॄन् तत्र समर्च्चयेत्। पितॄन् पायसदानेन मधुनोऽभिष्टतेन च। भोजयेद् ब्राह्मणान् भक्त्या वेदवेदाङ्गपारगान्। पितॄनुद्दिश्य दातव्या सवत्सा कांस्यदोहना। प्रत्यक्षा गौर्महाभाग! तरुणी सुपयस्विनी। पिता पितामहश्चैव तथैव प्रपितामहः। मातामहास्त्रयश्चैवात्र त्रयो मम। प्रीयन्ताङ्गोप्रदानेन इति दत्त्वा विसर्जयेत्। कृतेनानेन राजेन्द्र! यत् पुण्यं प्राप्यते पुनः। तदन्येन न शक्यन्तु वक्तुं वर्षशतैरपि। पुत्रांश्च पौत्रांश्च धनं सर्वं सुमहदीप्सितम्। इहैवाप्नोति पुरुषः परत्र च पराङ्गतिम्। पञ्चदश्यान्तु माघस्य पूजयित्वा पितामहम्। गायत्र्या सहितं देवं वेदवेदाङ्गभूषितम्। नवनीतमयीं धेनुं फलैर्नानाविधैर्युताम्। सहिरण्यां सवत्सान्तु ब्राह्मणाय निवेदयेत्। कीर्त्तयेत् प्रीयतां मेऽद्य ब्रह्मयोनिः पितामहः। यत्स्वर्गे यच्च पाताले यन्मर्त्त्ये किञ्चिद्दुर्लभम्। तदवाप्नोत्यसन्दिग्धं पद्मयोनेः प्रसादतः। यानि चान्यानि दानानि दीयन्ते सुबहून्यपि। युगादिषु महाराज! अक्षयाणि भवन्ति हि। वित्तहीनः स्वशक्त्या यो ददाति स्वल्पकं वसु। तदप्यक्षयतां याति नात्र कार्य्या विचारणा"।

युगावतारव्रतं भविष्यपु० "मासि प्रौष्ठपदे यत् तु कृष्णपक्षे त्रयोदशी। अवतीर्णं युगं तस्यां त्रेतायान्तु समाहित!"। त्रेतायां विनिवृत्तायां एतस्यां तिथौ युगमवतीर्णमिति सम्बन्धः अर्थाद् द्वापरमिति लभ्यते "गोमूत्रं गोमयं दूर्वां समालभ्य च मृत्तिकाम्। स्नायाद्ध्रदे तडागे वा तिथौ तस्यां समाहितः। कृतन्तेन भवेच्छ्राद्धं गयायान्तु न संशयः। युगादौ यस्त्रिलोकेशं स्नापयेद्गरुडध्वजम्। घृतक्षीरजलैः पुण्यैः स गच्छेद्वैष्णवीं पुरीम्। स्नापितोऽथ विलिप्तोऽथ पूजितोऽथ नमस्कृतः। युगादौ युगकर्त्ता तु नृणां मुक्तिप्रदो हरिः। व्रते वै सर्व्वयत्नेन युगादौ जगतीपतिः। पूजनीयो जनैर्भक्त्या सर्व्वदुःखहरो हरिः"।

योगव्रतं भविष्योत्तरोक्तम् "विष्कुम्भादिषु योगेषु भवेदेकाशनो नरः। यो ददाति क्रमात् पार्थ! घृततैलप्रलेचवंम्। यवगोधूमवरणं निष्पावाञ्छालितण्डुलान्। लवणं दधि दुग्धञ्च वस्त्रं कनकमेव च। कम्बलं गोवृषं छत्रमुपानद्युगलं तथा। कर्पूरं कुङ्कुमञ्चैव चन्दनं कुसुमानि च। लौहं ताम्रञ्च कांस्यञ्च रौप्यञ्चेति युधिष्ठिर!। स्नातः स्वशक्त्या विधिवत् सर्व्वपापैः प्रमुच्यते। न वियोगमवाप्नोति योगव्रतमिदं स्मृतम्"।

योगेश्वरद्वादशीव्रतं धरणीव्रते "शृणुष्व भक्तितो राजन्! कार्त्तिकैकादशीं तथा। उपोष्य विधिना येन सर्व्वांमां प्राप्नुयात् फलम्। प्राग्विधानेन संकल्प्य तद्वत् स्नानं समाचरेत्। त्रिलोमेनार्च्चयेद्देवं नारायणमकल्मषम्"।

रक्षाबन्धनपौर्णमासीव्रतं भविष्योत्तरे "घनाहतेऽम्बरे पार्थ! शाद्वले धरणीतले। संप्राप्ते श्रावणे मासि पौर्णमास्यां दिनोदये। स्नानं कुर्व्वीत मतिमान् श्रुतिस्मृतिविधानतः। ततो देवान् पितॄंश्चैव तर्पयेत् परमाम्भसा। उपाकर्म्मादि चैवोक्तमृषीणाञ्चैव तर्पणम्। कुर्व्वीत ब्राह्मणः श्राद्धं वेदानुद्दिश्य सुव्रत!। शूद्राणां मन्त्ररहितं स्नानं दानञ्च शस्यते। ततोऽपराह्णसमये रक्षापोटलिकां शुभाम्। कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेमभूषिताम्। वस्त्रैर्विचित्रैः कार्पासैः क्षौमैर्वा मलवर्जितैः। दूर्व्वावर्णसहितैस्सिता दुरितोपशमनाय। उपलिप्ते गृहोद्देशे दत्तचतुष्के न्यसेत् कुम्भम्। पीठं दत्त्वोपरि विशेत् राजामात्यैर्युतस्तु सुमुहूर्त्ते। वेश्याजनेन सहितो मङ्गलशब्दैः समुच्छ्रितैश्चिह्नैः। रक्षाबन्धः कार्य्यः शान्तिध्वनिना नरेन्द्रस्य। देवद्विजातिशस्त्राण्यस्त्रे रक्षाभिरर्च्चयेत् प्रथमम्। तदनु पुरोधा नृपतेः रक्षां बध्नीत मन्त्रेण" इत्यादि।

रथनवमीव्रतं भविष्यपु० "कृत्वैवाश्वयुजे मासि कृष्णपक्षे नराधिप!। नवम्यामुपवासन्तु दुर्गादेवीं प्रपूजयेत्। पुष्पधूपोपहारैस्तु ब्राह्मणानां च तर्पणैः। पूजयित्वा रथं कृत्वा नानावस्त्रोपशोभितम्। शोभितं ध्वजमालाभिः छत्रचामरदर्पणैः। नानापुष्पस्रजाभिश्च सिंहैर्युक्तं मनोरमम्। कृत्वा स्वर्णमयीं दुर्गां महिषासनशोभिताम्। विन्यस्य रथमध्ये तु पूजयेत् कृतलक्षणम्। तं रथं राजमार्गेण शङ्खभेर्य्यादिनिस्वनैः। नगर्य्यां भ्रामयित्वा तु नयेत् दुर्गालयं नृप!। तत्र जागरपूर्व्वन्तु प्रदीपाद्युपशोभितम्। नानाप्रक्षेपकैर्वीर!

मभ्यर्च्य विधिवत् घृतकुम्भं प्रकल्पयेत् । श्लक्ष्णवस्त्रयुगच्छन्नौ सौवर्णौ रामलक्ष्मणौ” इत्यादि ।

राजराजेश्वरव्रतं कालोत्तरे “बुधस्वात्याश्विनीयोगो यदाऽष्टम्यां प्रजायते । उपोषितस्तु विधिना महास्नानपुरःसरम् । सम्पूजयेद्दिक्पालमङ्गरागं चतुःसमम् । महावर्त्तिद्वयं दीपदीपं साष्टोत्तरं शतम् । बकुलं मधूकञ्च सितपुष्पैस्तु पूजयेत् । खण्डखाद्यान्यनेकानि नैवेद्यानि प्रकल्पयेत् । आचार्य्याय शिवस्याग्रे ग्रैवेयकमुकुटादिकम् । रत्नकुण्डले चैव कङ्कणं मुद्रिकाद्वयम् । वाहनन्तु गजञ्चैव तदभावाद्धयोत्तमम् । सम्पूज्य परया भक्त्या अश्वञ्च शर्कराघृतम् । राजराजेश्वरपदं प्राप्नुयाच्छ्रीमदाज्ञया । राजराजेश्वरं तेन व्रतमेतत् प्रकाशितम्” ।

राज्यतृतीयाव्रतं विष्णुधर्मोत्तरे “ज्यैष्ठे शुक्लतृतीयायां निराहारो नरः शुचिः । त्रिमूर्त्तिपूजनं कृत्वा तृतीयायां यथाविधि” । त्रिमूर्त्तिपूजनं तिसृणां मूर्त्तीनां वायुसूर्य्यचन्द्रमसां पूजनम् । “कूपनदतडागाद्यैर्मन्त्रैः प्रातः शुचिर्जलैः । प्रत्यूषे पूजयेद्वायुमन्तरिक्षे शुभस्थले । गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । होमं कुर्य्याद्यवैर्वस्त्रं दद्याद् द्विजातये । मध्याह्ने पूजयेद्वह्नौ तथा सूर्य्यमतन्द्रितः । तिलैश्च जुहुयाद्वह्नौ दद्याद्विप्रेषु काञ्चनम् । सूर्य्यास्तमनवेलायां जले चन्द्रञ्च पूजयेत्” । जले चन्द्रमसमभिध्याय पूजयेदिति । वह्नावभिध्याय मध्याह्ने सूर्य्यं प्रपूजयेदिति यावत् “घृतेन होमं कुर्वीत रजतं दक्षिणा स्मृतम् । नक्तं भुञ्जीत धर्मज्ञ तैलहीनं ततो नरः । पूर्णे संवत्सरे कृत्वा व्रतमेतदतन्द्रितः । स्वर्गलोकमवाप्नोति सहस्रं परिवत्सरम् । मानुष्यमासाद्य ततो राजा भवति भूतले । व्रतं कृत्वा महाभाग ! पूर्णं संवत्सरत्रयम् । षड्वर्षसहस्राणि स्वर्गलोके महीयते” ।

राज्यद्वादशीव्रतं धनुर्धर्मे “इष्टप्रावहितो राजन् ! द्वादशीं राज्यदां शिवाम् । यामुपोष्य नरो लोके राज्यमाप्नोत्यकण्टकम् । मार्गशीर्षस्य मासस्य शुक्लपक्षे नराधिप ! । दशम्यां प्रयतः शुद्धः स्नानसङ्कल्पपूर्वकम् । हविष्यभुक् प्रयतात्मा दन्तधावनपूर्वकम् । उपवासस्य सङ्कल्पं शोभनस्य तु कारयेत् । देवाग्रे कुशसंस्तीर्णामेकवस्त्रोत्तरच्छदाम् । अध्यासीत महीं तत्र तां रात्रिं संयतो नयेत् । द्वितीयेऽह्नि ततः कुर्य्याद्द्विः स्नानमतन्द्रितः । पूजनं चैव सर्वस्य सर्वयत्नेन कारयेत्” इत्यादि ।

राज्याप्तिदशमीव्रतं विष्णुधर्मोत्तरे “क्रतुर्दक्षो वसुः सत्यः कालः कामो वसुस्तथा । कुरवान् मनुजो विप्रो रोचमानश्च ते दश । विश्वेदेवाः समाख्याता दशात्मा केशवो विभुः । तस्य सम्पूजनं कार्य्यं सितपक्षे नराधिप ! । आरभ्य कार्त्तिकान्मासाद्दशम्यां नृपपुङ्गव ! । मण्डलेष्वथ पुष्पेषु यष्टिं वाञ्छेत यादव ! । गन्ध, माल्य, नमस्कार, दीप, धूपान्न, सम्पदा” ! अत्रौ प्रतिमा सा च यथासम्भवं सुवर्णादिधातुमयी विधेया “व्रतान्ते कनकं दद्याद् यथाशक्ति द्विजातये । कृत्वा व्रतं केवलमेतदिष्टं प्राप्नोति तेषां सुचिरन्तु लोकान् । तस्माच्च लोके पुरुषोत्तमस्य राजा भवेद् ब्राह्मणपुङ्गवो वा” ।

रामनवमीव्रतं अगस्त्यसंहितोक्तम् “चैत्रे नवम्यां प्राक्पक्षे दिवा पुण्ये पुनर्वसौ । उदये गुरुगौरांश्वोः स्वोच्चस्थे ग्रहपञ्चके । मेषे पूषणि सम्प्राप्ते लग्ने कर्कटकाह्वये । आविरासीत् सकलया कौशल्यायां परः पुमान् । तस्मिन् दिने तु कर्त्तव्यमुपवासव्रतं सदा । तत्र जागरणं कुर्य्याद्रघुनाथपरो भुवि । प्रातर्दशम्यां कृत्वा तु सन्ध्याद्याः कालिकीः क्रियाः । संपूज्य विधिवद्रामं भक्त्या वित्तानुसारतः । ब्राह्मणान् भोजयेद्भक्त्या दक्षिणाभिश्च तोषयेत् । गोभूतिलहिरण्याद्यैर्वस्त्रालङ्करणैस्तथा । रामभक्तान् प्रयत्नेन प्रीणयेत्परया मुदा । एवं यः कुरुते भक्त्या श्रीरामनवमीव्रतम् । अनेकजन्मसिद्धानि पातकानि बहून्यपि । भस्मीकृत्य व्रजत्येव तद्विष्णोः परमं पदम्” ।

राशिव्रतं भविष्यपु° “कार्त्तिक्यां नक्तभुक् दद्यान्मेषं हेमविनिर्म्मितम् । मार्गशीर्षे वृषं पश्चान्मिथुनं तद्वदेव हि” इत्यादि । एवं क्रमेण यो दद्याद्राशीन् वस्त्रविभूषितान् । पौर्णमास्यां पौर्णमास्यां कौन्तेय ! सदक्षिणान् । एतद्राशिव्रतं नाम ग्रहोपद्रवनाशनम् । सर्वाशापूरकं तद्वत् सोमलोकप्रदायकम्” ।

रुक्मिण्यष्टमीव्रतं स्कान्दपु° “मासि मार्गशिरे कृष्णपक्षेऽष्टम्यां षडानन ! । रुक्मिण्यष्टमीसंज्ञा वा सर्वकामफलप्रदा । तस्यां प्रातः शुचिर्भूत्वा नारी नियमकारिणी । वर्षे च प्रथमे कुर्य्यादेकद्वारं गृहं सदा । गृहोपकरणं सर्वं तस्मिन्निक्षिप्य सादरम् । व्रीहीन् कूपप्रकारांश्चैतादीन् रसांस्तथा । वस्त्रैः काष्ठैस्तथा

दन्तैश्चित्रेण लिखितास्तथा । कार्य्याः पुत्तलिकास्तत्र तासां नामानि मे शृणु ॥ रुक्मिणी सत्यभामा च बलदेवश्च रेवती । प्रद्युम्नश्चैव तद्भार्य्या अनिरुद्ध उषा तथा । देवकीवसुदेवादीन् सर्व्वांस्तत्र प्रकल्पयेत् । ततोऽनुपूजयेत् सर्व्वान् गन्धपुष्पाक्षतादिभिः । चन्द्रोदये तु सञ्जाते दद्यादर्घ्यं तदिन्दवे । "अर्घ्यं दत्त्वा तु भुञ्जीत मित्रस्वजनबन्धुभिः । ततः प्रभातसमये कुमार्य्यै तद्गृहं शुभम् । दद्यात् प्रीतेन मनसा सर्व्ववस्तुप्रपूरितम् । ततो द्वितीये अब्दे तु कुर्य्याद् द्विमुखमन्दिरम् । पूर्व्ववत् पूरितं कृत्वा कुमार्य्यै विनिवेदयेत् । ततस्तृतीये अब्दे तु कृत्वा त्रिमुखमन्दिरम् । सम्पूर्णं पूर्व्ववत् कृत्वा कुमार्य्यै विनिवेदयेत् । ततश्चतुर्थे अब्दे तु कृत्वा मुखचतुष्टयम् । पञ्चमेऽब्दे पञ्चद्वारं षष्ठे षण्मुखसंयुतम् । कृत्वा दद्यात् प्रयत्नेन कुमार्य्यै तच्च मन्दिरम् । ततस्तु सप्तमे वर्षे कुर्य्याद्दद्यात्तु शुभम् । सप्तद्वारं गृहं कृत्वा सुधाधवलितं महत् । शय्यां तूलीं यानं च छत्रोपानहमेव च । आदर्शं चामरञ्चैव मुषलोलूखलं तथा । कांस्यभाजनपात्राणि ताम्रस्य तु महान्ति च । नानाविधानि वस्त्राणि तथैवाभरणानि च । गृहोपकरणं सर्व्वं गृहे निक्षिप्य सर्व्वतः । रुक्मिणीञ्चैव प्रद्युम्नञ्च मनोहरम् । कृत्वा स्वर्णमयान् भक्त्या पीतवस्त्रावगुण्ठितान् । पूजयित्वोपवासेन रात्रिजागरणेन च । ततः प्रभातसमये तद्गृहे समुपागतम् । सपत्नीकं द्विजं पूज्य वस्त्रालङ्कारभूषणैः । तस्मादेतद्गृहं दद्याद्गार्हस्थ्याय सुशीलिनीम्" ।

रुद्रव्रतं पद्मपु० "यस्त्वेकभक्तेन समां क्षिपेत्तु हेमान्विताम् । धेनुं तिलमयीं दद्यात् स पदं याति शाङ्करम् । एतद्रुद्रव्रतं नाम पापशोकविनाशनम्" । ज्यैष्ठे पञ्चतपाः सायं हेमधेनुप्रदो दिवम् । यात्यष्टमीचतुर्दश्यो रुद्रव्रतमिदं स्मृतम्" । अष्टमीचतुर्दश्याविति च चत्वारि दिनानि पञ्चाग्निसाधनं तच्चतुर्थे दिने सायं सुवर्णधेनुं दद्यात्" ।

रूपनवमीव्रतं भविष्यपु० "पौषे मासि महाबाहो ! चतुर्दन्तं गजं शुभम् । कृत्वा रुक्ममयं भक्त्या न्यस्य पात्रे हिरण्मये । इन्द्राणीं विधिवद्दद्यान्नानाभरणविभूषितम् । एवं पूजयते भक्त्या इन्द्राणीं विधिवत्ततः । स ऐरावतमारूढ़ः सोमलोके महीयते" ।

रूपसत्रव्रतं विष्णुधर्म्मोत्तरोक्तम् "फाल्गुन्यां समतीतायां कृष्णपक्षाष्टमी तु या । समूलां तां तु संप्राप्य व्रतं गृह्णीत मानवः । उपोषितव्यं नक्षत्रं नक्षत्रस्य च दैवतम् । वरुणञ्च तथा चन्द्रं पूजयेद्विधिना नरः । पूजयेद्देवदेवञ्च भगवन्तं जनार्द्दनम् । उपोष्याङ्गानि देवस्य प्रयत्नेन च पूजयेत् । ततोऽग्निहवनं कृत्वा पूजयित्वा तथा गुरुम् । उपवासस्तु कर्त्तव्यो द्वितीयेऽह्नि पार्थिव । उपोष्य ऋक्षे विगते स्नात्वा संपूज्य केशवम् । कृत्वाग्निहवनं भक्त्या पूजयित्वा द्विजोत्तमान् । हविष्यञ्चैव भोक्तव्यं शृणु चाङ्गक्रमं मम । पादयोः कथितं मूलं प्राजापत्यन्तु जङ्घयोः । अश्विनौ जानुयुगलं ऊरुयुग्मे च पार्थिव ! । सहिते द्वे तथाषाढ़े गुह्यञ्च सहिते स्मृते । पूर्व्वोत्तरे च फाल्गुन्यौ कृत्तिका च कटिर्भवेत् । पार्श्वयोः कुक्षियुतयोर्नक्षत्रितयं समम् । उभे प्रोष्ठपदे राजन् ! रेवती च तथा भवेत् । उरोऽनुराधास्तु पृष्ठं धनिष्ठास्तु प्रकीर्त्तितम् । भुजौ ज्ञेयौ विशाखास्तु हस्तौ प्रोक्तौ तथा करौ । अङ्गुल्यश्च तथा प्रोक्ता राजसिंह ! पुनर्व्वसौ । अश्लेषायां नखाः प्रोक्ता ज्येष्ठायां नृप ! कन्धरः । श्रवणे श्रवणौ ज्ञेयौ मुखं पुष्यं प्रकीर्त्तितम् । दन्ताः स्वातौ शतभिषा हनुः प्रोक्ता तथा नृप ! । मघायां नासिके प्रोक्ते मृगशीर्षे च लोचने । चित्रा ललाटे विज्ञेया भरण्याञ्च तथा शिरः । शिरोरुहास्तथार्द्रास्तु व्रतस्यान्ते नराधिप ! । चैवरुद्रावसाने तु सर्व्वं परिसमाप्यते" ।

रूपसंक्रान्तिव्रतं स्कान्दपु० "अथान्यदपि ते वच्मि रूपसंक्रान्तिसत्तमाम् । संक्रान्तिवासरे स्नानं तैलं कृत्वा विचक्षणः । हैमपात्रे घृतं कृत्वा हिरण्येन समन्वितम् । स्वरूपं वीक्ष्य तत्पात्रं ब्राह्मणाय निवेदयेत् । एकभक्तं ततः कृत्वा भक्त्या चैव समन्वितम् । व्रतान्ते काञ्चनं दद्याद्घृतधेनुसमन्वितम् । अश्वमेधसहस्राणां फलमाप्नोति मानवः" ।

रूपावाप्तिव्रतं विष्णुधर्म्मोत्तरे "फाल्गुन्यां समतीतायां प्रतिपत्प्रभृति क्रमात् । यावच्चैत्री महाराज ! तावत्स्नातो दिने दिने । वह्निः संपूजयेद्देवं केशवं भोगशायिनम् । एकभक्ताशनो नित्यमधःशायी तथा भवेत् । त्रिरात्रोपोषितः पूजाञ्चैत्र्यां कुर्य्यात्तथैव च । स्वशक्त्या रजतं दद्याद्वस्त्रयुग्मं तथैव च । रूपार्थिनो मासमिदं मयोक्तं व्रतोत्तमं नित्यमदीनसत्त्वम् । कृत्वा तु नाकं मनुजस्त्ववाप्य मानुष्यमासाद्य च रूपवान् स्यात्" ।

रोहिणीद्वादशीव्रतं भविष्योत्तरे "प्रवृत्ते श्रावणे मासि

कृष्णपक्षे समाहितः । एकादश्यां शुचिर्भूत्वा स्नात्वा सर्वौषधीजलैः । माषचूर्णेन राजेन्द्र ! कुर्य्यादिन्दुरिकायतम् । शाटकांश्च तथा पञ्च घृतप्रस्थः सुनिर्मलः । आत्मोपयोगमुद्दिश्य ततो गत्वा जलाशयम् । दुष्टग्राहविरहितं स्वच्छोपेतजलैर्युतम् । तस्यैव पुलिने रम्ये अवान्ते गोमयादिना । कृत्वा मण्डलकं वृत्तं पिष्टकादिभिरर्च्चितम् । अर्च्चितं गन्धकुसुमैर्धूपदीपाक्षतैः शुभैः । तत्र चन्द्रं लिखेत् पार्श्वे रोहिण्या सहितं भुवि । अर्च्चयीत शुभाङ्गेन मन्त्रेणानेन भक्तितः । एवमुत्थार्घ्यं तद्दत्वा तज्जलं स्वयमाविशेत् । "कण्ठान्तं जघनान्तं वा जानुगुल्फान्तमेव वा । ध्यायते सोमराजस्य रोहिणीसहितं विभुम् । अवस्त्रमेव भुञ्जीत स्वयमिन्दुरिकायतम् । ये रोहिणी सविस्मृता विह्वला हिता च यत् कारणं शृणु नरेन्द्र ! निवेदयामि । यत्पिष्टमार्द्दितेन्दुरिकायतं वस्त्रं जले शुभहतेन फलं तदेव" ।

रोहिणीव्रतं स्कन्दपु० "रोहिणी जन्मभं साक्षाद् देवस्य चक्रिणः । ताम्रकमयीं कृत्वा पञ्चरत्नेन संयुताम् । स्थापयेद्वस्त्रयुग्मेन पुष्पधूपैः प्रपूजयेत् । कालोद्भवफलैर्दिव्यैर्नैवेद्यैस्तथाचितैः । द्वितीयेऽह्नि समाप्यैतद्ब्राह्मणायोपपादयेत् । श्रोत्रियाय दरिद्राय भिक्षुकाय कुटुम्बिने । अथ नक्तेन भुञ्जीत रोहिण्या दर्शने कृते । एवंविधं व्रतं दिव्यं दिवि देवाश्च चक्रिरे । वर्षे वर्षे समायाते देवाश्चाद्यापि कुर्वते । यं यं काममभिध्यायन् तं तमाप्नोत्यसंशयम् ।

लक्ष्म्याद्रीव्रत मत्स्यपु० "अस्ति वत्स ! व्रतस्यैकं तिथिनक्षत्रयोगतः । नभस्ये मासि राजेन्द्र ! यदार्द्रा जायते तदा । व्रतमेतद्विधातव्यमुमामाहेश्वरं भुवि । आरोग्यैश्वर्य्यसौभाग्यरूपसम्पत्प्रदायकम् । कारयित्वा यथाशक्ति सौवर्णं मिथुनं तयोः । गौरीगिरिशयोर्भक्त्या नक्तं वस्त्रस्त्र पूजयेत् । नभस्ये वस्त्रदानस्यामेवं यः कुरुते व्रतम् । लक्ष्म्यार्द्रेति विख्यातमिदं तस्य फलं शृणु । सर्वपापविशुद्धात्मा सर्वैश्वर्य्यसमन्वितः । भुक्त्वा भोगान्महेशेन ततः कालविपर्य्यये । राजा भवति धर्मात्मा वाक्सौर्य्यसमन्वितः । माद्रार्द्रचर्तुताप्त्यौ भवति या कन्या नभस्ये तदा सौवर्णं मिथुनं गिरिजागिरिशयो रूपं तयोर्वंशयैः । पूर्वं पिष्टमयैर्ददाति गुरवे साज्यं रसैर्भोजनं भुक्त्वा योगयुतोत्सवं पदमयो यात्यीशजेन्माधवम्" ।

लक्ष्मीनारायणव्रतं विष्णुधर्मोत्तरे "पञ्चदश्यां शुक्लपक्षे फाल्गुनस्य नरोत्तम ! । पाषण्डपतितांश्चैव तथैवान्यावसायिनः । नास्तिकान् भिन्नवृत्तांश्च पापिनश्चापि च नालपेत् । नारायणे गतमनाः पुरुषो नियतेन्द्रियः । तिष्ठन् व्रजन् प्रस्खलंश्च क्षुते चापि जनार्दनम् । कीर्त्तयेत् सर्व्वक्रियाकाले सर्व्वं कृत्वा पुनः पुनः । लक्ष्म्या समन्वितं देवमर्च्चयेत जनार्दनम् । सन्ध्यायां परमे चन्द्रस्वरूपं हरिमीश्वरम् । रात्रिञ्च लक्ष्मीं सञ्चिन्त्य खगगर्भेण चिन्तयेत् । श्रीनिशा चन्द्ररूप ! त्वं वासुदेव ! जगत्पते ! । मनोऽभिलषितं देव ! पूरयस्व नमोनमः । मन्त्रेणानेन दत्त्वार्घ्यं देवदेवस्य भक्तितः । नक्तं भुञ्जीत मौनेन तैलक्षारविवर्जितम् । तथैव चैत्रवैशाखे ज्यैष्ठे च मुनिसत्तम ! । अर्च्चयेत् यथाप्रोक्तं मासि मासि च तद्दिने । निष्पादितं भवेदेकं पारणं दानवघ्न ! भक्तितः । द्वितीयं तत्र वक्ष्यामि पारणन्तत् निबोध मे । आषाढे श्रावणे मासि मासि भाद्रपदे तथा । तथैवाश्वयुजेऽभ्यर्च्य श्रीधरञ्च श्रिया सह । वत्यक चन्द्रसत्कृत्वा भुञ्जीतार्च्य यथाविधि । द्वितीयमेतदाख्यातं तृतीयं पारणं शृणु । कार्त्तिकादिषु मासेषु तथैवाभ्यर्च्य केशवम् । भूत्या समन्वितं दद्याच्चन्द्रायार्घ्यं निशि । भुञ्जीत च यथाख्यातं तृतीयमपि पारणम् । प्रतिपूज्य ततो दद्यात् ब्राह्मणेऽभ्यर्च्य दक्षिणाम् । प्रतिमासं च वक्ष्यामि प्राशनं कायशुद्धये । प्रथमं चतुरो मासान् पञ्चगव्यमुदाहृतम् । कुशोदकं तथैवान्यदुक्तं मासचतुष्टयम् । गीतवाद्यादिकं रात्रौ तथा कथाः शुभाः । कारयेद्देवदेवस्य पारणे पारणे गते । जनार्दनं सलक्ष्मीकमर्च्चयेत् प्रथमं तथा । सपत्नीकं श्रीधरं तद्वत् तृतीये भूतिकेशवम् । एवं संपूज्य विधिवत् सपत्नीकं जनार्दनम् । नाप्नोतीष्टवियोगार्त्तिं पुमान्नार्य्यपि वा पुनः" ।

लक्ष्मीपञ्चमीव्रतं यमपु० "लक्ष्मीमभ्यर्च्य पञ्चम्यामुपवासी भवेन्नृपः । समान्ते हेमकमलं दद्याद्धेनुसमन्वितम् । स वैष्णवं पदं याति लक्ष्मीर्जन्मनि जन्मनि । एतल्लक्ष्मीव्रतं नाम दुःखशोकविनाशनम्" ।

ललितातृतीयाव्रतं भविष्योत्तरे "माघमासे सिते पक्षे तृतीयायां यतव्रता । पादौ प्रक्षाल्य हस्तौ च मुखञ्चैव समाहितः । उपवासस्य नियमं दन्तधावनपूर्वकम् । मध्याह्ने तु नदीं गत्वा तिलैरामलकैः शुभैः । स्नात्वोत्तीर्य्य जलात् शुक्ले वाससी परिधाय च । सुगन्धैश्च

अनेन विधिना स्थाप्य पूजयेद्व्रतमत्सरा” इत्यादि ।

वरचतुर्थीव्रतं स्कन्दपु० “चतुर्थ्यां मार्गशीर्षे तु शुक्लपक्षे नृपोत्तम ! प्रारभ्य प्रतिमासन्तु चतुर्थ्यां गणनायकम् । संपूज्य विधिना कुर्य्यादेकभक्तं समाहितः । अब्दारम्भं त्वेवं पूर्व्वसंवत्सरे व्रतः । द्वितीये वत्सरे चाथ नक्तं प्रतिचतुर्थि च । कुर्य्यादयाचमथ्यर्व्यं तृतीयेऽयाचितं तथा । एवमेव प्रकुर्व्वीत चतुर्थे स्यादुपोषणम् । ततश्चतुर्थं संपाद्य तदुद्यापनमाचरेत् । इदं वरचतुर्थ्याख्यं व्रतं सर्व्वार्थसाधकम्” ।

वरव्रतं पद्मपु० “सप्तरात्रोषितो दद्यात् घृतकुम्भं द्विजातये । वरव्रतमिदं प्रोक्तं ब्रह्मलोकप्रदायकम्” ।

वराटिकासप्तमीव्रतं भविष्यपु० “या काचित् सप्तमी प्रोक्ता तत्रो वक्ष्यामि शोभनम् । वराटिकात्रयक्रीतं यत् किञ्चित् प्राशयेन्नरः । अनेन देहि मूल्येन यद्भक्ष्यं तच्च भक्षयेत् । अभक्ष्यं वापि भक्ष्यं वा नात्र कार्य्या विचारणा । अनेन विधिना कार्य्या वराटकाह्वयसप्तमी” ।

वराहद्वादशीव्रतं धरणीव्रते “एवं माघे सिते पक्षे द्वादशी धरणीधृतः । वराहस्य समुद्दिष्टा पुण्यां परमधार्म्मिकः । प्रागुक्तेन विधानेन सङ्कल्प्य स्नानमेव च । कृत्वा देवं समभ्यर्च्य एकादश्यां विचक्षणः । पुष्पैर्नैवेद्यगन्धैश्च हर्षयित्वाच्युतं नरः । यथाशक्त्यापतः कुम्भमग्रपूर्णन्तु विन्यसेत् । एवं विधानतो दद्यात् हरिं वाराहरूपिणम् । ब्राह्मणाय च तद्दद्यात् फलं तस्य निशामय । इह जन्मनि सौभाग्यं श्रीः कान्तिस्तुष्टिरेव च । ज्ञानवान् वित्तवान् भोगी चतुरः पुत्रवान् भवेत्” ।

वसुव्रतं पद्मपु० “निशि कृत्वा जले वासं प्रभाते गोप्रदो भवेत् । वारुणं लोकमाप्नोति वरुणव्रतमुच्यते” ।

वसुव्रतं विष्णुधर्म्मोत्तरे “ध्रुवोऽध्वरश्च सोमश्च आपश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च अष्टौ ते वसवः स्मृताः । अष्टात्मा वासुदेवोऽयं प्रभावेनोद्भवेन च । अष्टम्यां पूजयेद्वस्तु सोपवासो नराधिप ! । चैत्रमासादथारभ्य शुक्लपक्षात् यादव ! । अष्टकेऽप्यथ वार्चित्वा अनेन मनुजाधिप ! । गन्धमाल्यनमस्कारदीपधूपाद्यसम्पदा । बहिःस्नानेन राजेन्द्र ! तथाधःशयनेन च । व्रतान्ते तु सदा दद्याद्धेनुं विप्राय भक्तितः” । पद्मपु० “यश्चाष्टसु दद्यात् प्रभूतकनकान्विताम् । दिनं पयोव्रती तिष्ठेत् स याति परमं पदम् । एतद्वसुव्रतं नाम पुनरावृत्तिदुर्लभम्” ।

वस्त्रत्रिरात्रव्रतं भविष्योत्तरोक्तम् “चैत्रे तु कुसुदेवं त्रिभिः प्रयतमानसः । त्रिरात्रं तत्र वस्त्राणि दद्यात् स्नात्वा द्विजातये । पयस्विनीरथाः पञ्च प्रदद्यात् च सुवर्णकाः । न जायते पुनरसौ जीवलोके कदाचन । एतद्वस्त्रव्रतं प्रोक्तं सर्व्वव्याधिविनाशनम्” ।

वह्निव्रतं विष्णुपु० “कृष्णपक्षे चतुर्दश्यां चैत्रादारभ्य यादव ! । वह्निसंपूजनं कृत्वा गन्धमाल्यादिसम्पदा । तिलहोमस्तथा कुर्य्यात् मन्त्रैः वह्नेर्नराधिप ! । संवत्सरान्ते दद्याच्च सुवर्णं ब्राह्मणाय च । कृत्वा व्रतं वत्सरमेतदिष्टं प्राप्नोति वित्तं सततं प्रभव । धर्मं सतीरूपमनुत्तमञ्च कामान् यथेष्टान् पुरुषप्रधानः” ।

वामनद्वादशीव्रतं धरणीव्रते “एवमेव मुने ! मासि चैत्रे संकल्प्य द्वादशीम् । उपोष्य धारयेद्भक्त्या देवदेवं जनार्द्दनम् । वामनायेति पादौ तु विष्णवे कटिमर्च्चयेत् । वासुदेवाय जठरं उरः सङ्कर्षणाय च । कण्ठं विश्वभृते पूज्य शिरो वै व्योमरूपिणे । बाहू विश्वजिते पूज्य स्वनाम्ना शङ्खचक्रके । अनेन विधिनाभ्यर्च्य देवदेवं जनार्द्दनम् । प्राग्वत्तेनोदरं कुम्भं सकुम्भं पुरतो न्यसेत्” । पुष्पं वस्त्रयुग्मम् । “प्रागुक्तपात्रे संस्थाप्य वामनं काञ्चनं बुधः । यथाशक्तिकृतं शुक्लं सितयज्ञोपवीतिनम् । कुण्डिकां स्थापयेत् पार्श्वे छत्रिकापादुके तथा । अक्षमालाञ्च संस्थाप्य वृषिकां च विशेषतः । एतैरुपस्करैर्युक्तं प्रभाते ब्राह्मणाय तु । दापयेत् प्रीयतां विष्णुः ह्रस्वरूपीति कीर्त्तयेत् । मासनाम्ना तु संयुक्तं प्रादुर्भावाभिधानकम् । प्रीयतामिति सर्व्वत्र विधिरेष प्रकीर्त्तितः । माघनाम्ना मार्गशीर्षादिमासेषु शालिनाम्ना प्रादुर्भावाभिधानकं मत्स्यरूपी कूर्म्मरूपीत्येवमादि” ।

वायुव्रतं विष्णुधर्म्मोत्तरे “शुक्लपक्षे चतुर्द्दश्यां ज्यैष्ठादारभ्य यादव ! । वायुं सम्पूजयेद्देवं सोपवासो जितेन्द्रियः । गन्धमाल्यनमस्कारदीपधूपाद्यसम्पदा । संवत्सरान्ते दातव्यं वस्त्रयुग्मं द्विजातये । कृत्वा व्रतं वत्सरमेतदिष्टमासाद्य लोकं सुचिरं मनुष्यः । इहागत्य भुक्ता सुचिरं महीयो मानुष्यमासाद्य भवेत्पुरोगः” ।

वार्त्तिव्रतं पद्मपु० “चैत्रादिचतुरो मासान् जले कुर्य्यादयाचितम् । ज्यैष्ठाषाढे तथा माघे पौषे वा राजसत्तम ! । व्रतान्ते मणिकं दद्यादन्नवस्त्रसमन्वितम् । तिलपात्रं

विजयासप्तमीव्रतं भविष्योत्तरे "शुक्लपक्षे तु सप्तम्यां यदादित्यदिनं भवेत्। सप्तमी विजया नाम तत्र दत्तं महाफलम्। स्नानं दानं जपो होम उपवासस्तथैव च। सर्वं विजयसप्तम्यां महापातकनाशनम्। प्रदक्षिणं यः कुरुते फलैः पुष्पैर्दिवाकरम्। स सर्वगुणसम्पन्नं पुत्रं प्राप्नोत्यसंशयम्। प्रथमा नारिकेरैस्तु द्वितीया बीजपूरकैः। तृतीया सकनारङ्गैश्चतुर्थी कदलीफलैः। पञ्चमी कर्कटुम्बाण्डैः षष्ठी पक्वैश्च तेन्दुकैः। मल्लाकैः सप्तमी ज्ञेया शतेनाष्टोत्तरेण तु। मौक्तिकैः पञ्चरागैस्तु तिलैः कर्कटकैस्तथा। गोमेदैर्वैजवैदूर्यैः शतेनाष्टाधिकेन तु। इक्षुदैर्वदरैर्बिल्वैः करमर्दैः सचिर्भटैः। आम्रातकैश्च जम्बीरैर्जम्बुकर्कटिकैः फलैः। पुष्पैर्धूपैः फलैः पत्रैर्मोदकैश्च तथाचितैः। एभिर्विजयसप्तम्यां भानोः कुर्य्यात् प्रदक्षिणम्। अन्यैः फलैश्च कालोत्थैरखण्डैर्व्रणवर्जितैः। रवेः प्रदक्षिणं देयं फलेन फलमादिशेत्। नारी वा कुरुते या तु सापि तत्फलभागिनी। नित्यं महीतलजयप्रतिपादयित्री या सप्तमी मुनिवरैः प्रवरा तिथीनाम्। सा भानुपादकमलार्चनचित्तकानां पुंसां सदैव विजया विजयं ददाति"। भविष्योत्तरे "माघे मासि सिते पक्षे सप्तम्यां कुरुनन्दन!। निराहारो रविं भक्त्या पूजयेद्विधिना नृप!। पूर्वोक्तेन समेत्याथ देवस्य पुरतः स्थितः। शुद्धकायमना राजन्! जितक्रोधो जितेन्द्रियः"। इत्यादि "एवं संवत्सरं यावत् कुर्य्याद्विजयसप्तमीम्। स लभेदीप्सितान् कामान् सूर्य्यलोकं स गच्छति"। भविष्यपु० "शुक्लपक्षस्य सप्तम्यां सूर्य्यवारो भवेद् यदि। सप्तमी विजया नाम तत्र दत्तं महाफलम्। स्नानं दानं जपो होम उपवासस्तथैव च। सर्वं विजयसप्तम्यां महापातकनाशनम्। पञ्चम्यामेकभक्तं स्यात् षष्ठ्यां नक्तं प्रचक्षते। उपवासस्तु सप्तम्यामष्टम्यां पारणं भवेत्। उपवासपरः भक्त्या भवत्सु पूजयेद्रविम्"। उपवासपरः विजयसप्तम्यामुपवासं करिष्यन्। "गन्धपुष्पोपहारैश्च भक्त्या श्रद्धासमन्वितः। प्रकल्प्य पूजां भूमौ च देवस्य पुरतः स्थपेत्। जपमानस्तु गायत्रीं सौरसूक्तमथापि वा। त्र्यक्षरं वा सहाभेतं षडक्षरमथापि वा। विनिवृत्तस्य सप्तम्यां कृत्वा स्नानं गवाधिपम्। पद्मैरेवं पूजयित्वा तु होमं कृत्वा विधानतः। ब्राह्मणान् भोजयेत् पश्चाद्भक्त्या च यथान्यायकम्। शाल्योदनमपूपांश्च खण्डवेष्टांश्च शक्तितः। दत्त्वा तु दक्षिणां भक्त्या ततो विप्रान् विसर्जयेत्। इत्येषा कथिता देव! पुण्या विजयसप्तमी। यामुपोष्य नरो गच्छेत् परं वैरोचनं पदम्।

विजयासप्तमीसङ्कल्पव्रतं भविष्यपु० "नैमित्तिकान् ततो वक्ष्ये यत्तोत्सवात् समाहितः। सप्तम्यां पक्षसे चैव संक्रान्तिषु विशेषतः"। नैमित्तिकान् ततो वक्ष्ये इत्यनेन श्लोकेन पक्षसंक्रान्तिषु साधारण्येन व्रतप्रतिज्ञा कृता तत्र सप्तमीव्रतं तावदाह शुक्लपक्षस्येत्यादिना "शुक्लपक्षस्य सप्तम्यां हविर्भुक्त्वा कटा दिवा। सम्यगाचम्य सन्ध्यायां वरुणं प्रणिपत्य च"। वरुणोऽत्र सूर्य्यः "इन्द्रियाणि तु संयम्य स तं ध्यात्वा स्वपेद् बुधः। दर्भशय्यागतो रात्रौ प्रातः स्नातः सुसंयुतः। सर्वमादौ तथैवान्ते पूर्ववद्वरुणं यजेत्। जुहुयाद्दत्त्वचरुमग्निं सूर्य्याग्निं परिकल्प्य वै। सूर्य्याग्निकरणं वक्ष्ये तर्पणं च समासतः। वस्त्रेणोङ्कारसंलिख्य सावित्र्याभ्युक्ष्य वानले"। वरुणमन्त्रेण सावित्र्या सर्वगायत्र्या एतच्च सर्वं निम्नभावप्रक्षालनेवार्भिहितं वेदितव्यम्। "प्रक्षिप्यासीयं दर्भांश्च देशे भूमौ यथेप्सितम्। प्रागग्रैरुदगग्रैश्च पात्राण्यासाद्य चक्रवत्। पवित्रे द्विगुणे कृत्वा स्थाप्य प्रादेशसम्मितम्। तेन पात्राणि संप्रोक्ष्य संशोध्य च विलोक्य च। उदगभागस्थिते पात्रे साग्निना चोलसुकेन च। पर्य्यग्निकरणं कृत्वा ततश्चोत्पवनं त्रिधा। परिस्तीर्य्य स्रुचादीन् दर्भैः प्रोक्षितैश्च तैः। जुहुयात् प्रोक्षिते वह्नौ तत्रार्कं पूर्ववद् यजेत्। भूमौ स्थितेन पात्रेण विस्तरेण तु पाणिना। वामेन वद्धुपादुं च। नान्तरिक्षे तु हूयते"। अन्तरिक्षे स्थिताद् "दक्षिणेन स्रुचौ तस्य जुहुयात्पावकं बुधः। हृदयेन क्रियाः सर्वाः कर्त्तव्याः पूर्वचोदिताः"। हृदयेन हृदयमन्त्रेण "अनेन हुत्वा सन्मार्गं दद्यात् पूर्णाहुतिं ततः। वरुणायादरान्माघे सप्तम्यां वरुणं यजेत्। यथा भक्त्या तु विप्रेभ्यः प्रदद्यात् खण्डवेष्टकान्। दद्याच्च दक्षिणां भक्त्या प्राप्यते आगतं फलम्। एवञ्च फाल्गुने सूर्य्यं चैत्रे चैवांशुमालिनम्। वैशाखे मासि धातारं इन्द्रं ज्यैष्ठे यजेद्रविम्। आषाढ़े श्रावणे मासि भगं भाद्रपदे तथा। आश्विने चापि पर्जन्यं त्वष्टारं कार्त्तिके यजेत्। मार्गशीर्षे तु मित्रञ्च पौषे विष्णुं यजेद् यदि। संवत्सरेण यत् प्रोक्तं फलमिह दिने दिने। तत् सर्वं प्राप्नुयात् क्षिप्रं भक्त्या श्रद्धा-

समन्वितः । एवं संवत्सरे पूर्णे कृत्वा वै काञ्चनं रथम् । सप्तभिर्वाजिभिर्युक्तं नानारत्नोपशोभितम् । आदित्यप्रतिमां मध्ये सुवर्णेन कृतां शुभाम् । रत्नैरलङ्कृतां कृत्वा हेमपद्मोपरिस्थिताम् । तस्मिन् रथवरे कृत्वा सारथिं चाग्रतः स्थितम् । दत्तं द्वादशभिर्विप्रैः क्रमाचाराधिपालिभिः । सर्वं कल्पसमाचार्य्य पूजयित्वा रथाग्रतः" । मासाधिपाः प्रतिमासोक्ताः सूर्य्याः । अतश्च-क्रिभाविलेद्वादशभिर्विप्रैस्तमाचार्य्य पूजयेदित्यर्थः ।

विद्याप्रतिपद्व्रतं गरुडपु० "अथ त्वं प्रतिपत्कल्पं शृणु सम्पत्कर व्रतम् । यत् कुर्व्वाणः श्रियं विन्देद्दुर्लभं मानुषैरिह । याचितस्तु वसंविते पक्षके चतुरक्षके । श्रीशं श्रियमथावाह्य पूजयेत् चतुरःसरम् । अपक्वधान्यदलैः पद्मै रचितैस्तं प्रपूजयेत् । अपक्वचरुदलैः विचित्रैः वहकैर्वा यथायोगं पयसा पायसेन च । ततश्च विधिनाभ्यर्च्य पार्श्वे देवीं सरस्वतीम् । पश्चात् पूजयेदिन्दुं गुरुं पश्चादनन्तधीः । परिवारनियोगेन तांश्च सत्कारयेदथ" । प्रार्थनामन्त्रः "मम विद्यां प्रदिशतु देवो वागीश्वरो हरिः । विद्याधिदैवतं देवी विद्यां दिशतु मे स्थिराम् । सरस्वती प्रदिशतु वागबुद्धिमतिशालिनीम्" इत्यादि । "यस्त्वेवं कुरुते विद्यते विद्वान् विद्याव्रतमन्यधीः । समस्तविद्यानिपुणो वैष्णवं पदमश्नुते" ।

विद्यावाप्तिव्रतं विष्णुधर्म्मोत्तरे "पौषस्यान्तु समतीतायां प्रतिपत्पञ्चतिक्रमात् । प्राप्य तु पूजयेद्देवं तुरङ्गशिरसं हरिम्" । प्राप्यदिति रूपावाप्तिव्रतोक्तविधिवत् तुरङ्गशिरसं हयग्रीवम् । "तिलांश्च जुहुयाद् वह्नौ तिलैर्द्देवं समर्च्चयेत् । निराहारोपोषितो मासं तिलान् कनकमेव च । दद्याद् ब्राह्मणमुख्याय सम्यक्प्रयतमानसः । गुरुवान् यज्ञोपवीतांश्च प्रभूतमपि चन्दनम् । कृत्वा व्रतं मासमिदं यथोक्तं विद्यान्वितः स्यात् पुरुषः सदैव । स्वर्लोकमासाद्य सुखानि भुक्त्वा कामानभीष्टान् पुरुषोऽश्नुते च" ।

विधानद्वादशसप्तमीव्रतम् आदित्यपु० "निरुक्तसप्तमीनान्तु शृणु नारद ! निर्णयम् । यः प्राप्तिमधिगच्छेत सर्वस्मात् सर्व्वकिल्विषैः । यातनां सर्व्वपापानां यातनां नमतां विदुः । तस्योपवासविधिना धातारं य उपासते । चैत्रमासे तु सप्तम्यामतिरात्रफलं लभेत् । वैशाखमासे सप्तम्यां पर्ज्जन्यं यस्तु पूजयेत् । चातुर्मास्यस्य यज्ञस्य फलं प्राप्नोति तत्र वै । विभा विभावसोर्दृष्टा आयन्तो आप्रिदीप्तिषु । विभावासु निरुक्तासु तथैव विभावसोः । सप्तम्यां ज्यैष्ठमासन्तु वरुणं यः समर्च्चयेत् । आप्नोत्यनिद्रयानान्तु फलं विन्दति मानवः । अस्तताद्यै यदा देवा जयशब्देन निर्ययुः । पूजयन्ति जयां देवास्ततस्तस्याः तत् स्मृतम् । आषाढ़मासे सूर्य्यन्तु सप्तम्यां पूजयेन्नरः । अश्वमेधमवाप्नोति कुलञ्चैव समुद्धरेत् । सप्तम्यां निर्जिता देवैरसुरा दानवास्तथा । समाराध्य सुरैः सेन्द्रैः संग्रामे तारकामये । त्रैलोक्ये विजयप्राप्ते तस्मादिजयसप्तमी । यः पूजयति मां भक्त्या तस्मिन्नहनि मानवः । स्नात्वा सम्यगुपस्थाय शुक्लवासाः कृताञ्जलिः । सदा यज्ञोपवीती च ब्रह्मचारी जितेन्द्रियः । अक्रोधनो ह्यचपलः स्थिरचित्तः समाहितः । ध्यायमानस्तथा साम्ब ! तत्परः सजितेन्द्रियः" इत्यादि ।

विभूतिद्वादशीव्रतं मत्स्यपु० "शृणु राजन् ! प्रवक्ष्यामि विष्णोर्व्रतमनुत्तमम् । विभूतिद्वादशी नाम सर्व्वामरप्रपूजिता । कार्त्तिके चाथ वैशाखे मार्गशीर्षेऽथ फाल्गुने । आषाढ़े वा दशम्यान्तु शुक्लायां लघुभुङ्नरः । कृत्वा सायन्तनीं सन्ध्यां गृह्णीयान्नियमं बुधः । एकादश्यां निराहार समभ्यर्च्य जनार्द्दनम् । द्वादश्यां द्विजसंयुक्तः करिष्ये भोजनं ततः । तदविघ्नेन मे यातु साफल्यं मधुसूदन ! । ततः प्रभाते चोत्थाय कृत्वा स्नानजपं शुचिः । पूजयेत् पुण्डरीकाक्षं शुक्लमाल्यानुलेपनैः" ।

वि(बि)ल्वत्रिरात्रव्रतं स्कान्दपु० "ज्यैष्ठे मासि च संप्राप्ते पूर्णमास्यां द्विजोत्तम ! । ज्यैष्ठाक्षादिने कुर्य्यात् सिद्धार्थैः स्नानमुत्तमम् । श्रीहस्तं विलुयेत् पश्चाद्गन्धपुष्पैश्च पूजयेत् । वत्सरान्त्वेकभक्तन्तु हविष्यान्नेन कारयेत् । शूकरखरादीनां दर्शने भोजनं त्यजेत् । अनेन विधिना सम्यक् मासि मासि समाचरेत् । ततः संवत्सरे पूर्णे गत्वा वि(बि)ल्वसमीपतः । गृहीत्वा वालुकां पात्रे प्रस्थमात्रं महामुने ! । अथ वा धान्यमादाय यवशालितिलादिकम् । ततो वंशमये पात्रे वस्त्रयुग्मेन वेष्टयेत् । उमामहेश्वरं हैमं शक्त्या कुर्य्यात् सुभूषितम्" इत्यादि ।

विशोकद्वादशीव्रतं पद्मपु० "पुण्ये चाश्वयुजे मासि विशोकद्वादशीव्रतम् । यत्कृत्वा शोकदौर्गत्यभाजनं न नरो भवेत् । दशम्यां लघुभुक् रात्रौ कृत्वा वै दन्तधावनम् । उदङ्मुखो प्राङ्मुखो वा वाक्यमेतदुदीरयेत् । एकादश्यां निराहारः समभ्यर्च्य च केशवम् । श्रियं च जगतां मूर्तिं भोक्ष्यामीत्यपरेऽहनि । एवं नियम-

मास्थाय सुप्या रात्रौ जितेन्द्रियः । प्रभाते विमले गत्वा मध्याह्ने तु जलाशयम् । स्नानं सर्व्वौषधैः कुर्य्यात् पञ्चगव्यजलेन च । शुक्लमाल्याम्बरधरः समभ्यर्च्य स्वगृहं ततः । पूजयेज्जगतां नाथं लक्ष्मीदयितमुत्पलैः” इत्यादि ।

विशोकषष्ठीव्रतं भविष्योत्तरे “विशोकषष्ठीमधुना वक्ष्यामि मनुजोत्तम ! । यामुपोष्य नरः शोकं न कदाचिदिह स्पृशेत् । माघे कृष्णतिलैः स्नानं पञ्चम्यां शुक्लपक्षतः । कृताहारः कृशरया दन्तधावनपूर्व्वकम्” । कृशरया, तिलतण्डुलाद्येन “उपवासव्रतं कृत्वा ब्रह्मचारी भवेन्निशि । ततः प्रातः समुत्थाय कृतस्नानजपः शुचिः । कृत्वा तु काञ्चनं पद्ममर्कोऽयमिति पूजयेत् । करवीरेण रक्तेन रक्तवस्त्रयुगेन च । यथा विशोकं भुवनमुदिते त्वयि जायते । तथा विशोकता मे स्यात्त्वद्भक्तेः प्रतिजन्मनि । एवं सम्पूज्य षष्ठ्यान्तु द्विजान् भक्त्या प्रपूजयेत् । सुप्यात्संप्राश्य गोमूत्रं समुत्थाय ततः शुचिः । सम्पूज्य विप्रान् दानेन गुडपात्रेण संयुतम् । वस्त्रपात्राद्यं गुरवे सर्व्वमेतन्निवेदयेत्” इत्यादि ।

विशोकसंक्रान्तिव्रतं स्कान्दपु० “अतःपरं प्रवक्ष्ये विशोकसंक्रान्तिमुत्तमाम् । अयने विषुवे पुण्ये व्यतीपातो भवेद्यदि । एकभक्तं नरः कुर्य्यात्तिलैः स्नानन्तु कारयेत् । काञ्चनं भास्करं कृत्वा यथाविभवशक्तितः । स्नापयेत्पञ्चगव्येन गन्धपुष्पैः सुपूजयेत् । वेष्टयेद्रक्तवस्त्राभ्यां ताम्रपात्रे निधापयेत्” इत्यादि ।

विशोकसप्तमीव्रतं भविष्यपु० “विशोकसप्तमीं तद्वत् वक्ष्यामि मुनिपुङ्गव ! । यामुपोष्य नरः शोकं न कदाचिदिहाश्नुते । माघे कृष्णतिलैः, स्नातः पञ्चम्यां शुक्लपक्षतः । कृताहारः कृशरया दन्तधावनपूर्व्वकम् । उपवासव्रतं कृत्वा ब्रह्मचारी भवेन्निशि । ततः प्रभाते चोत्थाय कृतस्नानजपः शुचिः । कृत्वा तु काञ्चनं पद्ममर्कोऽयमिति पूजयेत् । करवीरेण पुष्पेण रक्तवस्त्रयुगेन च । यथा विशोकं भुवनं त्वयैवादित्य ! सर्व्वदा । तथा विशोकता मे चास्तु त्वद्भक्तेः प्रतिजन्मनि । एवं संपूज्य षष्ठ्यां तु भक्त्या संपूजयेद् द्विजान् । सुप्त्वा संप्राश्य गोमूत्रमुत्थाय कृतनित्यकः । संपूज्य विप्रं यत्नेन गुडपात्रसमन्वितम् । तत्सर्व्वं वस्त्रसंयुक्तं ब्राह्मणाय निवेदयेत् । अतैललवणं भुङ्क्ते सप्तम्यां मौनसंयुतः । ततः पुराणश्रवणं कर्त्तव्यं भूतिमिच्छता । अनेन विधिना सर्व्वमुभयोरपि पक्षयोः । कुर्य्यात् यावत् पुनर्म्माघशुक्लपक्षस्य सप्तमीम् । व्रतान्ते कलसं दद्यात् सुवर्णकमलान्वितम्” ।

विश्वव्रतं भविष्यपु० “एकादश्यां यथोद्दिष्टा विश्वेदेवाः प्रपूजिताः । प्रजां पशून् धनं धान्यं प्रयच्छन्ति महीं तथा । मूलमन्त्रः स्वसंज्ञाभिरङ्गमन्त्राः प्रकीर्त्तिताः । पूर्व्ववत् पद्मपत्रस्थः कर्त्तव्यश्च तिथीश्वरः । गन्धपुष्पोपहारैश्च यथाशक्ति विधीयते । पूजाऽशाठ्येन शाठ्येन कृतापि तु फलप्रदा । आज्यधाराशमिद्भिश्च दधिक्षीराज्यमाक्षिकैः । पूर्व्वोक्तफलदो होमः कृतः शान्तेन चेतसा” । एतद्व्रतं वैश्वानरप्रतिपद्व्रतवद्व्याख्येयम्” ।

विश्वरूपव्रतं कालोत्तरे “रेवतीशनियोगस्तु सिताष्टम्यां यदा भवेत् । भूतायां वा महासेन ! तदा जातमिदं शृणु ! महास्नानं प्रकर्त्तव्यं नित्यकृत्यादनन्तरम् । चन्द्रं चैवाङ्गरागन्तु रत्नपूजान्तु कल्पयेत् । सितपद्मानि देयानि भूषणानि बहून्यपि । चन्द्रमेवं दहेद्धूपं नैवेद्यं पायसघृतम् । श्वेतान्तरणं सौम्यं शिवाय विनिवेदयेत् । अश्वाष्टमं कुञ्जरञ्च आचार्य्याय प्रदापयेत् । ऋग्यजुःसामाथर्व्वाश्च प्रत्यक्कुञ्जरं तथा । राज्यार्थी लभते राज्यं यावदाहूतसम्प्लवम् । पुत्त्रार्थी लभते पुत्त्रान् वायुतुल्यपराक्रमान् । भोगार्थी लभते भोगान् विद्यातत्त्वेन शाश्वतान् । यान् यान् कामयते कामान् तांस्तान् कामानवाप्नुयात् । विश्वरूपमनन्तेन व्रतमेतदुदाहृतम् । कुशोदकप्राशनन्तु रात्रौ जागरणं ततः” ।

विष्टिव्रतं भविष्योत्तरे विष्टिस्वरूपमुक्त्वा “एवमेषा समुत्पन्ना विष्टिरिष्टविनाशिनी । तस्याश्चरेण कौन्तेय ! वर्ज्जनीया फलार्थिना । येनोपवासविधिना व्रतेन च युधिष्ठिर ! । पूजिता तोषमायाति तदेव कथयामि ते । यस्मिन् दिने भवेद्विष्टिस्तस्मिन्नहनि भारत ! । उपवासस्य नियमं कुर्य्यान्नारी नरोऽथ वा । यदि रात्रौ भवेद्विष्टिरेकभक्तं दिनद्वयम् । कार्य्यस्तेनोपवासः स्यादिति पौराणिको विधिः । प्रहरस्योपरि यदा स्याद्विष्टिः प्रहरत्रयम् । उपवासस्तदा कार्य्य एकभक्तमतोऽन्यथा । सर्व्वौषधिजलस्नानं सुगन्धामलकैस्तथा । नद्यान्तडागेऽथ गृहे स्नानं सर्व्वत्र शस्यते । देवान् पितॄन् समभ्यर्च्य ततो दर्भमयीं शुभाम् । विष्टिं कृत्वा पुष्पधूपनैवेद्यादिभिरर्च्चयेत् । होमन्तु नामभिर्विष्टेः शतमष्टोत्तरं नृप ! । भुञ्जीत दत्त्वा विप्राय तिलान् पायसमेव च । सतैलं कृशरं भुक्त्वा पश्चाद्भुञ्जीत कामतः । छायासूर्य्यसुते ! देवि ! विष्टिरिष्टार्थनाशिनि ! । पूजितासि यथाशक्त्या

भद्रे ! भद्रप्रदा भव । उपोष्य विधिनानेन दश सप्त यथा क्रमात् । उद्यापनं ततः कुर्य्यात् पूर्ववत् पूज्य भामिनीम् । स्थापयित्वायसे पीठे कृशरान्नं निवेद्य च । परिधाय कृष्णवस्त्रयुगं मन्त्रेण तं पुनः । ब्राह्मणाय पुनर्द्दद्यात् लौहतैलं तिलांस्तथा । कृष्णां सवत्सां गामेकान्तथैव कृष्णकम्बलाम् । दक्षिणाञ्च यथाशक्त्या दत्त्वा भद्रां विसर्जयेत् । य एवं कुरुते पार्थ ! सम्यग्भद्राव्रतं नरः । विघ्नं न जायते तस्य कार्य्यारम्भे कथञ्चन" ।

विष्णुदेवकीव्रतं विष्णुधर्म्मोत्तरे "प्रथमे कार्त्तिकस्याह्नि सम्प्राप्ते देवकि ! स्वयम् । पञ्चगव्यकृतस्नानः पञ्चगव्यकृताशनः । वाणपुष्पैः समभ्यर्च्य वासुदेवमजं विभुम् । दत्त्वा च चन्दनं धूपं परमान्नं निवेदयेत् । घृतं निवेदयेद्विप्रे गृह्णीयाच्च ततो व्रतम् । अद्यप्रभृत्यहं मासं विरतः प्राणिनां वधात् । असत्यवचनात्स्तेयान्मधुमांसादिभक्षणात् । स्वपन् विबुध्यन् गच्छंश्च स्मरिष्याम्यहमच्युतम् । परापवादं पैशून्यं परपीडाकरन्तथा । सच्छास्त्रदेवतायज्ञनिन्दाः सन्त्यज्य वा भुवि । न वक्ष्यामि जगत्स्वामिन् पश्यन् सर्व्वगतं हरिम् । अशक्तो वाऽधिशक्तोऽपि यस्मिन् वोढुं यशस्विनि ! । कुर्व्वीत नियमं तस्य त्यागो धर्म्मोपवृद्धये । कृत्वैवं पुरतो विष्णोर्निवृत्तिं पापतः शुभे । नैवेद्यं स्वयमश्नीयान्मौनी नित्यमुदङ्मुखः । मार्गशीर्षे तथा मासि जातीपुष्पैर्जनार्द्दनम् । समभ्यर्च्य पुनर्धूपं चन्दनञ्च निवेदयेत् । परमान्नञ्च देवाय विप्राय च पुनर्घृतम् । दत्त्वा तथैव गृह्णीयान्नियमो योऽस्य रोचते । तथैव नक्तं भुञ्जीत नैवेद्यं कुलनन्दिनि ! । सर्व्वेष्वेव चतुर्मासं पञ्चगव्यादिकं समम् । पुष्पधूपोपहारेषु विशेषो दक्षिणासु च । स्नानप्राशनयोः साम्यं तथैव नक्तभोजनम् । अर्च्चयेत् प्रतिमासञ्च यैः पुष्पैस्तानि मे शृणु ! । ये च धूपाः प्रदातव्या नैवेद्यानञ्च यत्तथा । वार्षेण जातिकुसुमैः तथैव च सकुन्दजैः । कुन्दातिमुक्तकै रक्तै रक्तसारैश्च रक्तकैः । श्वेतैः शुक्लैर्मल्लिकायास्तथा मल्लिकया ततः । दधिपद्मःभवैतक्याः पद्मरक्तोत्पलेन च । क्रमेणाभ्यर्च्चितो विष्णुर्द्ददाति मनसि स्थितम् । कार्त्तिके मार्गशीर्षे च धूपं पौषे च चन्दनम् । माघफाल्गुनचैत्रेषु दद्याद्विष्णोस्तथाऽगुरुम् । वैशाखादिषु मासेषु त्रिषु देवकि ! भक्तिमः । कर्पूरं देवदेवाय गुग्गुलं श्रावणादिषु । कार्त्तिकादिषु मासेषु परमान्नं शुभे ! त्रिषु । कासारं माघपूर्व्वेषु यवाचश्च ततस्त्रिषु । घृतं तिलान् जलघटं हि रगरमथ वा व्रती । प्रतिमासं तथा दद्याद् ब्राह्मणाय शुभव्रते ! । यथोक्तनियमानाञ्च ग्रहणं प्रतिमासिकम् । कुर्व्वन् जगत्पतिर्विष्णुः प्रीयतामिति मानवः । योषिद्व्यथवाप्रज्ञा व्रतमेतद् यथाविधि । करोति मासान् सकलान् अवाप्नोति मनोरथान् । व्रतेनाराधितो विष्णुरनेन जगतः पतिः । ददात्यभिमतान् कामान् क्षिप्रकालेन भामिनि ! । धन्यं यशस्यमायुष्यं सौभाग्यारोग्यदन्तथा । व्रतमेतत् प्रियतरं व्रतेभ्योऽव्यक्तजन्मनः" ।

विष्णुपदव्रतं विष्णुधर्म्मोत्तरे "आचष्ट दुःखशमदं व्रतं विष्णुपदत्रयम् । सर्व्वारम्भविनिष्पत्तिकारकं पापनाशनम् । संसारोच्छेदकैर्धीरैर्यदिष्टं स्थिरबुद्धिभिः । तदहं तव राजेन्द्र ! व्रतानामुत्तमोत्तमम् । कथयामि समाचष्ट यथापूर्व्वं समासतः । आषाढे मासि राजेन्द्र ! पूर्व्वाषाढासु पार्थिव ! । समभ्यर्च्य जगन्नाथमच्युतं नियतः शुचिः । पुष्पैर्धूपैस्तथा दीपैर्गन्धैः सागुरुचन्दनैः । यथाविभवतश्चान्यै रत्नैर्वासोभिरेव तु । क्षीरस्योपस्थितं तद्वद्द्रव्यैर्विष्णुपदत्रयम् । समभ्यर्च्य यथाशक्त्या केशवस्याग्रतो न्यसेत् । यवांश्च दद्याद्विप्राय श्रीपतिः प्रीयतामिति । नक्तं भुञ्जीत राजेन्द्र ! हविष्यान्नं सुशोभनम् । तथैवोत्तराषाढासु श्रावणे मासि मानवः । तथैवाभ्यर्च्य गोविन्दं तथा विष्णुपदत्रयम् । विप्रायाज्यं घृतं दत्त्वा प्रीणयित्वा भुवःपतिम् । भुञ्जीत गोरसप्रायं मानवो मौनमास्थितः । स्त्री वा राजेन्द्र ! पूर्व्वासु तथा भाद्रपदासु वै । फाल्गुने फाल्गुनीपूर्व्वा भवेदिति यदा नृप ! । त्रिविक्रमं तदा देवं पूर्व्वोक्तविधिनार्च्चयेत् । पदत्रयन्तु देवस्य समभ्यर्च्य तु पार्थिव ! । हिरण्यं दक्षिणां दद्यात् स्वर्गतिः प्रीयतामिति । नक्तं भुञ्जीत राजेन्द्र ! क्षारपाकविवर्ज्जितम् । एष एवोत्तरायोगे चैत्रे मासि विधिः स्मृतः । अपुत्रो लभते पुत्रमपतिर्लभते पतिम् । समागमं प्रवासाच्च तथा प्राप्नोति बान्धवैः । भद्रमैश्वर्य्यमारोग्यं सौभाग्यं चानुरूपताम् । प्राप्नुयाद्दक्षिणानेतान् पूजयित्वा पदत्रयम् । यान् यान् कामान्नरः स्त्री वा हृदयेनाभिवाञ्छति । तांस्तानाप्नोति निष्कामो विष्णुलोकं प्रपद्यते । पूर्व्वं कृत्वापि पापानि नरः स्त्री वा नराधिप ! । पदत्रयव्रतं कृत्वा मुच्यते सर्व्वकिल्विषैः" ।

विष्णुप्राप्तिद्वादशीव्रतं भविष्यपु० "द्वादश्यामुपवासन्तु ये वै कुर्व्वन्ति ते नराः । मामेव प्रतिपद्यन्ते मम भक्तिपरा-

यथाः । कृत्वा चैवोपवासन्तु गृहीत्वा च जलाञ्जलिम् । नमो नारायणायेति चादित्यं चावलोकयेत् । यावन्तो विन्दवः केचित् पतन्त्यञ्जलितो जलात् । तावद्वर्षसहस्राणि स्वर्गलोके महीयते । तथैव तस्यां द्वादश्यां कृत्वा कर्म यथाविधि । पाण्डुरैश्चैव पुष्पैस्तु गृष्टैर्गन्धैश्च धूपनैः । य एवं कारयेद्भूमे ! तस्यापि शृणु यां गतिम्" इत्यादि ।

विष्णुव्रतं भविष्यपु॰ "द्वादश्यां विष्णुमिष्ट्वेह सर्व्वदा विजयी भवेत् । पूज्यश्च सर्व्वलोकानां यथा गोपतिगोकरः" । गोपतिः सूर्य्यो गोकरो नेत्ररश्मिर्यस्य स गोपतिगोकरो विष्णुः "मूलकन्दाः स्वर्गामिरस्तु कन्दाश्च कीर्त्तिताः । पूर्व्ववत् पद्मपत्रस्थः कर्त्तव्यश्च त्रियोश्वरः । गन्धपुष्पोपहारैश्च यथाशक्ति विधीयते । पूजाऽप्यात्रेन भावेन कृतापि तु फलप्रदा । आज्यधारसमिद्भिश्च दधिक्षीरान्नमाषकैः पूर्व्वोक्तफलदो होम कृतः शान्तेन चेतसा" । एतत्तु व्रतं वैश्वानरप्रतिपद्व्रतवद्व्याख्येयम् । पद्मपु॰ "द्वादश द्वादशीर्व्वस्तु समाप्योपोषणैर्नरः । गोवत्सं काञ्चनं विप्रानर्च्चयेद्भक्तितः । परं पदमवाप्नोति विष्णुव्रतमिदं स्मृतम्" । विष्णुधर्म्मोत्तरे "विष्णुव्रतमिति ख्यातं दर्शितं विष्णुना स्वयम् । पौषशुक्लद्वितीयादि कृत्वा मासचतुष्टयम् । षण्मासपारणप्रायं गृह्णीयात् परमं व्रतम् । पूर्व्वं सिद्धार्थकैः स्नानं ततः कृष्णतिलैः स्मृतम् । वचया च तृतीयेऽह्नि सर्व्वौषध्या ततःपरम् । नाम्ना कृष्णाच्युतानन्त तथा नं तेन पूजयेत् । तथैव च चतुर्थेऽह्नि हृषीकेशं च केशवम् । देवमभ्यर्च्च्य पुष्पैश्च पत्रैर्धूपानुलेपनैः । शशाङ्कस्य च बालेन्दोर्दद्यादर्घ्यं समाहितः । पुष्पैः पत्रैः फलैश्चैव सर्व्वधान्यैश्च भक्तितः । दिनक्रमेण चैतानि चन्द्रनामानि कीर्त्तयेत् । शशी चन्द्रः शशाङ्कश्च निशापतिरिति क्रमात् । नक्तं भुञ्जीत सततं यावत्तिष्ठति चन्द्रमाः । अस्तङ्गते न भुञ्जीत व्रतभङ्गभयान्मुने ! । एवं सर्व्वेषु मासेषु ज्यैष्ठान्तेषु यशस्विनि ! । कर्त्तव्यं वै व्रतमेतं द्वितीयादिचतुर्द्दिनम् । विप्राय दक्षिणां दद्यात् पञ्चम्यां च यशस्विनि ! । एवं समापयेन्मासैः षड्भिः प्रथमपारणम् । पारणान्ते च देवस्य प्रीणनं भक्तितः शुभैः । यथाशक्त्या तु कर्त्तव्यं वित्तशाठ्यं विवर्जयेत् । आषाढादिद्वितीयासु षण्मासेन तपोधन ! । पारणं वै समाख्यातं व्रतस्यास्य शुभप्रदम्" ।

वृषव्रतं पद्मपु॰ "कार्त्तिक्यां यो वृषोत्सर्गं कृत्वा नक्तं समाचरेत् । शैवं पदमवाप्नोति वृषव्रतमिदं स्मृतम्" ।

वेदव्रतं विष्णुधर्म्मोत्तरे "इदमन्यत् प्रवक्ष्यामि चतुर्मूर्त्तिव्रतं तव । विद्याकामेन यत्कार्य्यं नरेण सुविपश्चिता । बहिःस्नानं नरः कृत्वा कृतऋग्वेदपूजनः । ऋग्वेदं स्तुवन् मासद्वयमतन्द्रितः । चैत्रादारभ्य धर्म्मज्ञ ! नित्यं नक्ताशनो भवेत् । ततो नृपवर ! प्राप्ते ज्यैष्ठस्य चरमेऽहनि । वासोयुगं हिरण्यञ्च तथा धेनुं पयस्विनीम् । घृतपूर्णं कांस्यपात्रं सहिरण्यन्तु दक्षिणाम् । आषाढादिषु मासेषु यजुर्व्वेदव्रतं चरेत् । आश्विनादिषु मासेषु सामवेदव्रतं चरेत् । तथाथर्व्वव्रतं नाम पौषादिषु विधीयते । सर्व्वेषु सर्व्वं कर्त्तव्यमृग्वेदव्रतकीर्त्तितम् । वेदात्मनो वासुदेवस्य पूजां कृत्वा नरो द्वादशवत्सराणि । विष्णोर्लोकं याति लोकैर्विशिष्टं यस्मिन् प्राप्ते सर्व्वदुःखं जहाति" । वेदपठनार्थं वेदव्रतं विधानपा॰ द्रष्टव्यम् ।

वेश्याव्रतं पद्मपु॰ "अथाप्यन्यत् व्रतं सम्यक् उपदेक्ष्यामि तत्त्वतः । अविचारेण सर्व्वाभिरनुष्ठेयञ्च तत् पुनः । संसारोत्तारणायालमेतद्वेदविदो विदुः । यदा सूर्य्यदिने हस्तः पुष्योऽथवा पुनर्व्वसुः । भवेत् सर्व्वौषधीस्नानं सम्यक्कुर्व्वी समाचरेत् । तदा पञ्चशरस्यापि सन्निधानमिहेष्यते । अर्च्चयेत् पुण्डरीकाक्षमनङ्गस्यापि कीर्त्तनम् । तस्माद्विप्राय दातव्यं हृष्यन्तु प्रीयतामिति । यथेच्छाहारभुग्नक्तं तमेव द्विजसत्तमम् । रत्यर्थं कामदेवोऽयमिति चित्तेन धारयेत् । यद्यदिच्छति विप्रेन्द्रस्तत्तत् कुर्य्यात् विलासिनी । सर्व्वभावेन चात्मानमर्पयेत् स्मितभाषिणी । एवमादित्यवारेण सदा तद्व्रतमाचरेत् । तण्डुलप्रस्थदानादि यावन्मासास्त्रयोदश । ततस्त्रयोदशे मासि संप्राप्ते तस्य कामिनी । विप्रस्योपस्करैर्युक्तां शय्यां दद्याद्विलक्षणाम् । सोपधानकविन्यासं स्वास्तरावरणां शुभाम् । दीपकोपानच्छत्रपादुकासनसंयुताम् । सपत्नीकमलङ्कृत्य हेमसूत्राङ्गुलीयकैः । सूक्ष्मवस्त्रैः सकटकैर्धूपमाल्यानुलेपनैः । कामदेवं सपत्नीकं गुडकुम्भोपरिस्थितम्" । कामदेवरूपन्तु मदनत्रयोदशीव्रतोक्तं विज्ञेयम् । "ताम्रपात्रासनगतं हैमसूक्ष्मपटावृतम् । सुकांस्यभाजनोपेतमिक्षुदण्डसमन्वितम् । दद्यादनेनोक्तविधिना तथैकां गां पयस्विनीम्" ।

वैतरणीव्रतं भविष्योत्तरे "एकादशी तिथिः कृष्णा मार्गशीर्षगता नृप ! । तामासाद्य नरः सम्यक् गृहो-

याचियमं शुचिः। एकादशी तिथिः कृष्णा नाम्ना वैतरणी शुभा। सा व्रतेन मया कार्य्या वर्षं नक्तपरा यथः। मध्याह्ने तु नरः स्नात्वा नित्यं निर्वर्त्तित-क्रियः। रात्रौ सुरभिमानीय कृष्णामर्च्चेत् यथाविधि। पुरीभिस्तूर्य्यपि धातव्या कृष्णा गौर्विप्रभूतये। अग्रपादादितः पूज्या पश्चात्पादद्वयावधि। गोपुच्छन्तु समासाद्य कुर्य्यात् वै पितृतर्पणम्। ततः पूजा प्रकर्त्तव्या शास्त्रदृष्टविधानतः। गाश्चैव श्रद्धया युक्तश्चन्दनेनानुलेपयेत्। गन्धतोयेन चरणौ शृङ्गे प्रक्षाल्य भक्तितः। ततोऽनुपूजयेद्भक्त्या पुष्पैर्गन्धादिवासितैः। मन्त्रैः पुराणसम्प्रोक्तैर्यथास्थानं यथाविधि"। "मार्गशीर्षादिके मासं यावन्मासचतुष्टयम्। अन्नं मासचतुष्कन्तु यावकाशनमेव च। श्रावणादिषु मासेषु चतुर्ष्वद्याच्च पायसम्। तद्वच्च त्रयोभागाः गोगुरुस्वार्थमेव च। नैवेद्यं हि मया दत्तं सुरभी प्रीयतामिति। द्वितीयं गुरवे दद्यात् तृतीयं स्वयमेव च। मासाष्टकं प्रकुर्वीत माघादादयकं व्रतम्। उद्यापनन्ततः कुर्य्यात् पूर्णे संवत्सरे तदा। श्वेता सद्विविका भार्य्यादिमयी परिधानकम्। सवत्सा कृष्णवर्णा तु धेनुः कार्य्या पयस्विनी। सौवर्णीं सुरभीं कृत्वा स्थापयेत् तुलिकोपरि। सुरभीं पूजयेन्मन्त्रैः पूर्वोक्तैर्भक्तिसंयुतैः। ततस्तु गुरवे दद्यात् सर्वं तत्र समापयेत्। नारी वा पुरुषो वापि व्रतस्यास्य प्रभावतः। राज्यं बहुविधं भुक्त्वा स्वर्गलोके महीयते। भारो लोकस्य दातव्यः कार्य्योऽसौ श्रोत्रसम्मितः। वैतरण्याः समाप्त्यर्थं ब्राह्मणाय कुटुम्बिने"।

वैनायकचतुर्थीव्रतं भविष्योत्तरे "चतुर्थ्यां नक्तभुग्दद्यादब्दान्ते हेमवारणम्"। वारणः, करी। "व्रतं वैनायकं नाम सर्वविघ्नोपशान्तिदम्"।

वैशाखव्रतानि पद्मपु० "वैशाखे पुष्पलवणं वर्जयित्वा तु गोप्रदः। विष्णुलोकमवाप्नोति ततो राजा भवेदिह"। महाभारते "निरन्तरैकभक्तेन वैशाखं यो जितेन्द्रियः। नरो वा यदि वा नारी ज्ञातीनां श्रेष्ठतां व्रजेत्"। विष्णुधर्मोत्तरे "यः क्षिपेदेकभक्तेन वैशाखं पूजयेद्धरिम्। नरो वा यदि वा नारी ज्ञातीनां श्रेष्ठतां व्रजेत्। अहिंसः सर्वभूतेषु वासुदेवपरायणः। नमोऽस्तु वासुदेवायेत्यहन्यष्टशतं जपेत्। अतिरात्रस्य यज्ञस्य ततः फलमवाप्नुयात्"।

वैश्वानरप्रतिपद्व्रतं भविष्योत्तरे। "अग्निमिष्ट्वा हुत्वा च प्रतिपद्यामिति स्मृतम्। हविषा सर्वधान्यानि प्राप्नुयादक्षतं धनम्"। इष्ट्वा पूजयित्वा। प्रतिपद्यां प्रतिपदि। इति सूत्र कामानुसारेण हिरण्यरेतस्कतया विदितम्। हविषा घृतेन। सर्वधान्यानि हुत्वेत्यन्वयः। "मूलमन्त्राः स्वसंज्ञाभिरङ्गमन्त्राश्च कीर्त्तिताः। पूर्ववत् पद्मपत्रस्थः कर्त्तव्यश्च तिथीश्वरः"। मूलमन्त्राः प्रधानमन्त्राः अङ्गमन्त्राः परिवारदेवतामन्त्राः अग्नये हृदयाय नम इत्येवमादयः। स्वसंज्ञाभिः ओं अग्नये नम इत्यादिपूजायाम्। ओं अग्नये स्वाहा इत्यादि होमे। पूर्ववत् सूर्य्यव्रतवत्। पद्ममध्यस्थः कर्णिकायां स्वमूर्त्त्यां पत्रेषु परिवारमूर्त्त्यां स्थितः। तिथीश्वरोऽत्र वह्निः। स च श्मश्रुधारी त्रिलोचनो रक्ताङ्गश्चतुर्बाहुः दक्षिणे स्रुवं तदपरे ज्वाला। चतुर्भुजगतायाः अक्षपात्रहस्तायाः स्वाहायाः स्कन्धे च न्यस्तकरोऽपरो वरः। चत्वारः शुका रथस्य वोढारः। वायुः सारथिरित्येवं विष्णुधर्मोत्तराभिहितो वेदितव्यः। "गन्धपुष्पोपहारैश्च यथाशक्ति विधीयते। पूजाऽशाठ्येन शाठ्येन कृतापि तु फलप्रदा। अशाठ्येन अकपटेन शाठ्येनेति स्मृतिः। आज्यधारासमिद्भिश्च दधिक्षीराद्यमार्च्चकैः। पूर्वोक्तफलदो होमो विहितः शान्तचेतसा"। आज्यधारादिभिः षड्भिः पृथक्कृतो होमः पूर्वोक्तफलदो धनदः। माक्षिकं मधु। आदौ पूजा ततो घृतान्नधान्यहोमस्ततो आज्यधारादिहोमः"।

वैश्वानरव्रतं पद्मपु० "यस्त्वेवं नन्दिद्वीपे वर्षादिचतुरस्तु ठत्। घृतधेनुप्रदोऽन्ते च स परं ब्रह्म गच्छति। वैश्वानरव्रतं नाम सर्वपापप्रणाशनम्"।

वैष्णवव्रतं पद्मपु० "आषाढादिचतुर्म्मासान् प्रातः स्नायी भवेन्नरः। विप्राय भोजनं दत्त्वा कार्त्तिक्यां गोप्रदो भवेत्। घृतकुम्भं तथा दद्यात् सर्वकामानवाप्नुयात्। वैष्णवव्रतमित्युक्तं विष्णुलोकप्रदायकम्"।

व्यतीपातव्रतं वराहपु० "शुभे व्यतीपातदिने विगाहयेत् स पञ्चगव्येन महानदीजलम्। उपावसेद्वै पवमानजापको जपेत्तु शुद्धो व्यतिपात! ते नमः। आदित्ते ताम्रपात्रे च शर्करापूरिते घटे। काञ्चनाब्जे प्रतिष्ठाप्य हैममष्टभुजं नरम्"। अष्टभुजं अष्टादशभुजम् उत्पत्तिवाक्ये व्यतीपातमूर्त्तेरष्टादशभुजत्वात् उत्पत्तिवाक्यानुसारत्वाच्च विनियोगवाक्यस्य यथा भवन्तीत्यत्र "चत्वारोऽमनवस्थेति" चत्वारश्चतुर्दश। "गन्धपुष्पान्नतैर्धूपदीपवस्त्रनिवेदनैः।

भक्ष्यैर्भोज्यैः फलैश्चित्रैर्मासि मार्गशिरेऽर्च्चयेत् । नमस्तेऽस्तु व्यतीपात ! सूर्य्यसोमसुत ! प्रभो ! । यद्दानादि कृतं किञ्चित् तदनन्तमिहास्तु मे । इत्युक्त्वा पञ्चरत्नाढ्यं सपुष्पाक्षतमञ्जलिम् । प्रक्षिप्य तत्क्षणादेव सर्व्वपापक्षयो भवेत् । यदि द्वितीयेऽपि दिने व्यतीपातो भवेन्मुने ! । तदा पूर्व्वोपवासस्तु दद्याच्चत् सकलं गुरोः । पारणं व्यतिपातान्ते कुर्य्यात् संप्राश्य गोमयम् । अथैकस्मिन्नेव दिने व्यतीपातो भवेद् यदि । तत्रैवाह्नि तदा दत्त्वा उपवासं समाचरेत् । कुर्य्यादेवं मासि मासि व्यतीपातस्त्रयोदश । व्यतीपाते तु संप्राप्ते कुर्य्यादुद्यापनं बुधः । व्यतीपाताय स्वाहेति चाष्टोत्तरशतसमन्वितम् । आज्यक्षीरतिलानाञ्च होतव्यं वै शतं शतम्" । नारदीयपु० "व्यतीपातव्रतस्यास्य विधानं शृणु तत्त्वतः । माघे वा फाल्गुने वापि अन्यस्मिन्नपि वा भवेत् । व्यतीपातो दिने यस्मिन् प्रारभेद्व्रतमुत्तमम् । तिलैः पूर्णं शरावञ्च सगुडं गुरवेऽर्पयेत् । एवं द्वितीये दातव्यं तृतीये तु समापयेत् । घृतं पायसञ्चैव दातव्यं चोत्तरोत्तरम् । एवं संवत्सरस्यान्ते देवस्याचान्तु कारयेत् । शङ्खचक्रगदापाणिं पद्महस्तं हिरण्मयम् । वस्त्रयुग्मेन संवेष्ट्य पूजयेद्गरुडध्वजम् । गोक्षीरेण च संपूर्णं कांस्यभाजनमुत्तमम् । स्थापयेद्देवदेवस्य स्थानमत्रैव कल्पयेत् । शय्या च सन्निधौ तस्य स्थाप्या देवमनुस्मरन् । अनन्तशायिनं देवमनन्तफलदं शुभम् । लक्ष्म्या सहान्वितं विष्णुं भक्त्या संपूजयेद्व्रती । वैदिकेनैव मन्त्रेण जातीपुष्पैः समर्च्चयेत् । पायसेनैव नैवेद्यं शर्करासंयुतेन च । दत्त्वा निवेद्य देवस्य प्रार्थनं प्रार्थयेद्व्रती" ।

व्योमव्रतं भविष्यपु० अमस्याघ्यदानानन्तरम् "सितचन्दनतोयेन व्योम स्नाप्य विलिप्य च । कर्णिकाकल्पितैः पद्मैः संपूज्य प्रणिपत्य च" । कर्णिकाकल्पितैः कर्णिकामण्डितैः "बकुले विमले सौम्ये निश्छिद्रे पुष्पिते सति" । पुष्पिते विकसिते । "मध्ये केशरजालस्य व्योम स्थाप्यं सुशोभनम् । अङ्गुष्ठपर्व्वमात्रन्तु सर्व्वगन्धसमन्वितम् । अपि संस्थापयित्वा च भास्करस्य सुरोत्तम ! । पूजयेत् करवीरैस्तु तथा रक्तैश्च चन्दनैः । धूपञ्च गुग्गुलं दद्यात् प्रणम्य शिरसा रविम् । कुङ्कुमं पूर्व्वभागे तु दद्याद्व्योम्नः समाहितः । दक्षिणे चागुरुं दत्त्वा पश्चिमे चन्दनं सितम् । पत्रःसमस्योत्तरे तु दद्याद्व्योमविचक्षणः । दद्यान्मध्ये शुभं पुष्पं रक्तचन्दनमादरात् । पूजयेद्विविधैः पुष्पैस्तथा साऽगुरुचन्दनैः । धूपं कृष्णागुरुं दद्यात् घृतं वापि गुग्गुलुम् । वासांसि च सुसूक्ष्माणि विचित्राणि निवेदयेत् । पायसं घृतसंयुक्तं घृतदीपांश्च दापयेत् । सर्व्वं निवेद्य मन्त्रेण ततो गच्छेत् प्रदक्षिणम् । प्रणम्य शिरसा भानुस्तवाद्येन क्षमापयेत् । सर्व्वोपहारसंयुक्तं बलिं देवाय चाहरेत् । खखोल्कायेति मन्त्रेण सूर्य्यायामिततेजसे । अनेन विधिवद्देवमभ्यर्च्चयित्वा पुरा रविम् । अहं ब्रह्मत्वमापन्नः प्रसादाद्भास्करस्य तु" ।

व्योमषष्ठीव्रतं भविष्यपु० "भाजनं तत्र संपूर्णं मधुना च समन्वितम् । दद्यात् कृष्णतिलानां तु प्रस्थमेकन्तु भागशः । वितुषं तण्डुलानां च पृथक् प्रस्थं च कारयेत्" । भाजनं प्रस्थचतुष्टयपूरणीयं पात्रं त्रिगुणं प्रस्थत्रयम् पृथगिति घृतमधुतिलतण्डुलपात्राणि पृथक् कुर्य्यात् । "गन्धपुष्पैस्तथा धूपैर्नानावाद्यैर्विशेषतः । ततः संपूजयेत् सूर्य्यं नानावाद्यसमन्वितम् । सूर्य्यं गगनस्थम् । "पूजयेच्च ततो व्योम बलिं दिक्षु प्रपूजयेत् । व्योमदेवपट्टे चैव सर्व्वभूतानि याजयेत् । व्योमदेवपट्टे तत्र यत्र व्योम प्रतिष्ठितम्" । व्योमनिर्म्माणं विष्णुधर्म्मोत्तरात् "चतुरस्रं भवेन्मूले तत्र हस्तं महाभुज । ततोऽन्यत् चतुरस्रञ्च प्रथमे संस्थितं शुभम् । भद्रपीठमये प्रोक्तो व्योमभागस्तुरीयकः । तस्मै वैश्वानरोऽथास्य मध्यभागः प्रकीर्त्तितः । भद्रपीठवदन्यच्च तत्र पद्मं निवेशयेत् । शुभाष्टपत्रं तन्मध्ये कर्णिकायां दिवाकरः । पत्राष्टके न्यसेत्तस्य दिक्पालान् सर्व्वतो दिशम्" । "य एवं कुरुते षष्ठ्यां सन्ध्याकाले बलिं रवेः । स सूर्य्यलोकमासाद्य मोदते शाश्वतीः समाः" ।

व्रतराजतृतीयाव्रतं देवीपु० "तृतीयायान्तु शुक्लायां लिखेद्वस्त्रयुगे शुभे । रोचनासितकर्पूरैः शिवोमां पूजयेत्ततः । हेमरत्नध्वजेवंश ! मन्त्रयुग्ममुदीरयेत् । समस्तकामफलदं यत्तत् पूर्व्वमुदाहृतम् । ततो जपार्च्चनं होमं कर्त्तव्यं द्विजसत्तम ! । अवियोगाय नारीणां व्रतराजं सदा हितम् । सहेमपुष्परत्नाढ्यं सवस्त्रं दापयेत्तु तम् । महापुण्यं महाभाग्यं सर्व्वकामप्रदायकम् । सुतस्नेहवियोगस्तु न भवेत्तेन भो द्विज ! । न व्याधिर्नोपसर्गाश्च यावत्तन्तुरजो भवेत् । तावत्कालं शिवलोके राजते मोदते चिरम्" ।

शक्रव्रतं विष्णुधर्मोत्तरे "आश्वयुज्यां समुपोष्य पौर्णमास्यां नरो भुवि। सोपवासः सुरेन्द्रञ्च देवं संपूजयेत्तथा। शचीमैरावतं वज्रं मातलिञ्च नराधिपः। गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा। संवत्सरान्ते कनकञ्च दत्त्वा प्राप्नोति लोकं स पुरन्दरस्य। मानुष्यमासाद्य नरेन्द्रपूज्यो राजा भवेद्वा द्विजपुङ्गवो वा"। पद्मपु० "आकाशायी समां दद्याद्धेनुमन्ते पयस्विनीम्। शक्रलोकमवाप्नोति शक्रव्रतमिदं स्मृतम्"।

शङ्करनारायणव्रत देवीपु० "कथितं शङ्करोमाख्यं व्रतं मनसि तुष्टिदम्। ओतुमिच्छाम्यहन्नाथ विष्णुशङ्करसंज्ञितम्"। मनुरुवाच "यथा उमेश्वरव्रात तथा कार्य्यमिदं व्रतम्। किन्तु पीतानि वासांसि केशवाय प्रकल्पयेत्। गन्धपुष्पं तथा धूपं सुगन्धञ्च जनार्दने। कार्य्यं पूजनकाले लड्डुकादिरसं दधि। एवन्तौ पूजयित्वा तु प्रतिमास्थण्डिलेऽपि वा। आहूय ब्राह्मणौ वत्स! वेदवेदाङ्गपारगौ। यती वा व्रतसम्पन्नौ जटाकाषायधारिणौ। तौ भोजयेद्विधानेन शूलपाणिजनार्दनौ। समाप्य विधिना वत्स! सर्वकामप्रसाधकौ। भूमाल्यं दक्षिणां विष्णोर्मौक्तिकं शङ्कराय च। दत्त्वानुव्रजतो लोकौ क्रमाद्धि हृदये ततः"।

शङ्करार्कव्रतं कालिकापु० "अथ चानेन मार्गेण शुभां तामेव चाष्टमीम्। सम्प्राप्यादित्ययोगेन प्राग्विधानेन वा नरः। किन्तु दक्षिणनेत्रस्थं भास्करञ्चार्चयेद्बुधः। पद्मरागेण हैमेन लोचने लेपनं शृणु। नेत्रे न्यस्य ललाटाधः कुङ्कुमं रक्तचन्दनम्। वृत्तन्तु लोचनमध्ये तु कृत्वं पूर्ववदर्चयेत्"। अर्द्धचन्द्राकारं तन्मध्ये वृत्तञ्च कृत्वा हेमनिबद्धं पद्मरागं वृत्तमध्ये निधाय सूर्य्यरूपेणार्चनं कुर्य्यादित्यर्थः। "अभावे पद्मरागादेर्हेम सर्वत्र योजयेत्। रुद्रबीजं परं पूतं यतस्तच्चैव सर्वदा। शुक्लमाल्याम्बरं वल्कं नैवेद्यं च घृतप्लुतम्। शेषः पूर्वविधानेन कर्त्तव्यो विधिविस्तरः। किन्तूपोष्य प्रकुर्वीत सप्तम्यां विजितेन्द्रियः। शङ्करार्कयुतं पूज्य घृतं भक्ष्यञ्च पारयेत्"।

शनिव्रतं भविष्योत्तरे "शनौ शनस्य दिवसे स्नानमभ्यङ्गपूर्वकम्। कार्य्यं देयञ्च विप्राय तैलमभ्यङ्गहेतवे। यस्तु संवत्सरं यावत् प्राप्ते शनिदिने नरः। तैलं ददाति विप्राणां यथाशक्त्यान्यजनस्य तु। ततः संवत्सरस्यान्ते प्राप्ते तस्य दिने पुनः। लोहघटार्पितं तैलं तैलकुम्भे विनिक्षिपेत्। लौहे वा कृष्णमये चाथ कृष्णवस्त्रयुगान्वितम्" इत्यादि।

शर्कराससप्तमीव्रतं पद्मपु० "शर्करासप्तमीं वक्ष्ये सर्वकल्मषनाशिनीम्। आयुरारोग्यमैश्वर्य्यं ययानन्त्यं प्रजायते। माधवस्य सिते पक्षे सप्तम्यां श्रद्धयान्वितः। प्रातःस्नात्वा तिलैः शुक्लैः शुक्लमाल्यानुलेपनः। स्थण्डिले पद्ममालिख्य कुङ्कुमेन सकर्णिकम्। तस्मिन्नमः सवित्रे धूपं पुष्पं निवेदयेत्। स्थापयेदुदकुम्भं शर्करापात्रसंयुतम्। शुक्लवस्त्रेण संवेष्ट्य शुक्लमाल्यानुलेपनैः। सहिरण्यं यथाशक्त्या मन्त्रेणानेन पूजयेत्" इत्यादि।

शाकसप्तमीव्रतं भविष्यपु० "सप्तम्यां सोपवासस्तु रात्रौ भुङ्क्ते तु यो नरः। कृतोपवासः षष्ठ्यां तु पञ्चम्यामेककालभुक्। दत्त्वा तु सकृतं शाकं भक्ष्यभोज्यैः सुसंस्कृतम्। देवाय ब्राह्मणेभ्यश्च रात्रौ भुञ्जीत वाग्यतः। यावज्जीवं नरः कश्चिद्व्रतमेतत्समाचरेत्। तस्य श्रीर्विजयश्चैव त्रिवर्गश्च विवर्द्धते। मृतः स्वर्गमवाप्नोति विमानवरमास्थितः"। "शाकं सुसंस्कृतं कृत्वा भक्ष्यभोज्यसमन्वितम्। दत्त्वा विप्रे यथाशक्त्या पश्चाद्भुङ्क्ते निशि व्रती। कार्त्तिके शुक्लपक्षस्य चाद्योऽयं कुरुनन्दन!। चतुर्भिरपि मासैस्तु पारणं प्रथमं स्मृतम्। अगस्ति कुसुमैश्चात्र पूजा कार्य्या विभावसोः"। कार्त्तिकशुक्लसप्तम्यामारभ्य प्रतिमासं कुर्वता पुनर्मासचतुष्टयम् यावत् शुक्लसप्तमी तस्यां तस्याञ्च पारणं कार्य्यम्। एकस्मिन् वर्षे वारत्रयं पारणं भवति एवमेव वर्षान्तरेषु तादृशं व्रतं यावज्जीवं कर्त्तव्यम्"।

शान्तिचतुर्थीव्रतं भविष्यत्पु० "माघमासि तथा शुक्ला या चतुर्थी महीपते!। सा सर्वशान्तिदा नित्यं शान्तिं कुर्य्यात् सदैव हि। स्नानं दानं बलिः कर्म सर्वमस्यां कृतं विभो!। भवेत्सहस्रगुणितं प्रसादाद्दन्तिनः सदा। कृत्वोपवासं यस्तस्यां पूजयेद्विघ्ननायकम्। तस्यां होमादिकं कर्म भवेत्साहस्रिकं नृप!। लवणं गुडपूपांश्च घृताक्तं तस्य भारत!। दत्त्वा भक्त्या तु विप्रेभ्यः फलं साहस्रिकं लभेत्"।

शान्तितृतीयाव्रतं गरुडपु० "तृतीयायां महाभाग! कर्त्तव्यञ्च व्रतं शृणु। येनानन्तमपारञ्च सेनः क्षपयति द्विज!। महपीडादिकैरन्यैरुपसर्गैः प्रपीडितः। अस्यां शान्तिं प्रकुर्वीत यतवाक्कायमानसः। स्थण्डिलं रचयित्वा तु नरोपीतप्रसूनकैः। चक्राब्जं मण्डलं कुर्य्यादक्षतचित-

तण्डुलैः । तत्र चावाहयेद्देवं नरसिंहाकृतिं विभुम् । प्रसन्नमधुरोदारवीक्षणक्षपितार्त्तिकम् । अशेषभयविध्वंसचतुरं पुरुषं हरिम् । अभयं भयतप्तानां ददतं ददतं वरम्" इत्यादि । "होमाच्च द्विगुणं प्राङ्कजपं मन्त्रनिश्चयः । तस्य तद्द्विगुणं प्राङ्कजप एष विधिक्रमः । नियोगारम्भसमये नियमान् प्रतिपालयेत् । अयं चाहरहः कुर्व्वन् नक्तकालं समापयेत्" । नियमान् मौनादीन् । अयञ्चाहरहः पूर्व्वं नक्तकालं समापयेत् । अयं होमतर्पणजपान् अहरहः प्रतिदिनं संख्या च सङ्कल्पितहोमसंख्यापेक्षया । "हविष्याशी जितक्रोधो यतवाक्कायमानसः । नित्यं त्रिःषवणं स्नायात् सदाचाररतो मुनिः । न चान्तकथोऽनन्ति ब्रह्मचारी जितश्रमः" । यस्त्वेतत् कुरुते मर्त्त्यः श्रद्धाभक्तिसमन्वितः । स सर्व्वार्त्तिविनिर्मुक्तो शान्तिमाप्नोति नैष्ठिकीम्" ।

शान्तिपञ्चमीव्रतं भविष्यपु० "तद्वद्भाद्रपदे मासि पञ्चम्यां श्रद्धयान्वितः । आलिख्य नरो नागान् कृष्णवर्णादिवर्णकैः । पूजयेद्गन्धधूपैस्तु सर्पिर्गुग्गुलपायसैः । तस्य तुष्टिं समायान्ति पन्नगास्तक्षकादयः । आसप्तमात् कुलात्तस्य न भयं नागतो भवेत् । तस्मात् सर्व्वप्रयत्नेन नागान् संपूजयेद्बुधः । तथैवाश्वयुजे मासि पञ्चम्यां कुरुनन्दन ! । कृत्वा कुशमयान्नागानिन्द्राण्या सह पूजयेत् । यस्तस्यां विधिवन्नागान् शुचिर्भक्त्या समन्वितः । पूजयेत् कुरुशार्दूल ! तस्य शेषादयो नृप ! । नागाः प्रीता भवन्तीह शान्तिमाप्नोति वा विभो ! । स शान्तिलोकमासाद्य मोदते शाश्वतीः समाः" ।

शान्तिव्रतं वराहपु० "शान्तिव्रतं प्रवक्ष्यामि शृणुष्वैकमना नृप ! । येन चीर्णेन शान्तिः स्यात् सर्व्वदा गृहमेधिनः । पञ्चम्यां शुक्लपक्षस्य कार्त्तिके मासि पार्थिव ! । आरभ्य वर्षमेकन्तु भुञ्जीयादम्लवर्जितम् । नक्तन्तु पूजयेद्देवं हरिं शेषोपरिस्थितम् । एवं यः कुरुते भक्त्या व्रतमेतन्नराधिप ! । तस्य शान्तिर्भवेन्नित्यं नागेभ्यश्चाभयं तथा । शेषाहिभोगशयनस्थमपांप्रसूतिं संपूज्य यस्य पुरुषं पतगेन्द्रकेतुम् । येनाक्षमक्षमधुरं सितपञ्चमीषु तेषां न नागजनितं भयमस्ति किञ्चित्" ।

शाम्भरायणीव्रतं भविष्योत्तरे "तस्मात् पार्थ ! प्रयत्नेन प्रतिमासं समाहितः । मासि मास्यच्युतं पूज्य भवेथास्तन्मनास्तथा । ये शाम्भरायणिकथाचरितव्रतेन वर्षाणि सप्त विधिना सुधियो नयन्ति । ते स्वर्गलोकमभिलभ्य कृताधिवासाः कल्पायुतं सुतशतैरपि न च्यवन्ति" ।

शिलाचतुर्थीव्रतं भविष्योत्तरे "लवणैर्धान्यकैर्युक्तं जीरकं मरिचानि च । हिङ्गु शुण्ठीं हरिद्राञ्च सर्व्वं परिकरं तथा । चतुर्थ्यामेकभक्ताशी सकृद्दत्त्वा कुटुम्बिने । गृहेषु सप्तसु तथा शिलायुक्तानि भारत ! । एतच्छिलाव्रतं नाम लक्ष्मीलोकप्रदायकम्" ।

शिवचतुर्दशीव्रतं मत्स्यपु० "शृणुष्वावहितो ब्रह्मन् वक्ष्ये माहेश्वरं व्रतम् । त्रिषु लोकेषु विख्यातं नाम्ना शिवचतुर्द्दशी । मार्गशीर्षे त्रयोदश्यां सितायामेकभोजनः । प्रार्थयेद्देवदेवेशं त्वामहं शरणङ्गतः । चतुर्द्दश्यां निराहारः समभ्यर्च्य च शङ्करम् । सुवर्णवृषभं कृत्वा भोक्ष्येऽहमपरेऽहनि । एवं नियमकृत् सुप्त्वा प्रातरुत्थाय मानवः । कृतस्नानजपः पश्चादुमया सह शङ्करम् । पूजयेत् कमलैः शुक्लैः गन्धधूपानुलेपनैः" । "पञ्चदश्यां ततः पूज्य विप्रान् भुञ्जीत वाग्यतः । तद्वत् कृष्णचतुर्द्दश्यामेतत् सर्व्वं समाचरेत् । चतुर्द्दशीषु सर्व्वासु कुर्य्यात् पूर्व्ववदर्च्चनम् । ये तु मासविशेषास्तु तान्निबोध क्रमादिह । मार्गशीर्षादिमासेषु क्रमादेतदुदीरयेत्" । आश्विनान्तेष्विति शेषम् इत्यादि ।

शिवनक्तव्रतं भविष्यपु० "कृष्णाष्टमीं तु नक्तेन कृत्वा कृष्णचतुर्द्दशीम् । इह भोगानवाप्नोति परत्र शिवसद्गतिं" ।

शिवरथव्रतं विष्णुधर्म्मोत्तरे "कृत्वैकभक्तं हेमन्ते माघमासे तु यन्त्रितः । मासान्ते च रथं कुर्य्याच्छिवस्यैवोपशोभितम् । श्वेतैश्चतुर्भिः संयुक्तं वृषभैः समलङ्कृतम् । शोभितं ध्वजमालाभिश्चित्रचामरदर्पणैः । तण्डुलादकपिष्टेन लिङ्गं कृत्वा सवेदिकम् । विन्यस्य रथमध्ये तु पूजयेत् कृतलक्षणम् । तद्रात्रौ राजमार्गे च शङ्खभेर्य्यादिभिः स्वनैः । भ्रामयित्वा ततः पश्चाच्छिवायतनमानयेत् । तत्र जागरपूजाभिः प्रदीपाद्युपशोभिते । प्रेक्षणीयप्रदानैश्च क्षपयेत शनैर्निशाम् । प्रभाते स्नापनं कृत्वा तद्भक्तानाञ्च भोजनम् । दीनान्धकृपणानाञ्च यथाशक्त्या च दक्षिणाम् । रथं शोभासमायुक्तं शिवाय विनिवेदयेत् । भुक्त्वा च बान्धवैः सार्द्धं प्रणम्येशं गृहं व्रजेत्" ।

शिवरात्रिव्रतं स्कन्दपु० नागरखण्डे "माघस्य कृष्णपक्षीय तिथिर्या चैव चतुर्द्दशी । तस्या रात्रिः समाख्याता शिव-

रात्रिरिति द्विजाः ! । तस्यां सर्वेषु लिङ्गेषु सदा संक्रमते हरः । विशेषादमरैः सर्वैः ख्याता सैव कलेश्वरे । माघनामस्य कृष्णायां चतुर्दश्यां सुरेश्वर ! । अहं यास्यामि भूपिष्ठ रात्रौ नैव दिवा कलौ । लिङ्गेषु च समस्तेषु चलेषु स्थावरेषु च । प्रपूजयेत् सम्यग्दृक्षुः सर्वपापविशुद्धये । तस्यां रात्रौ हि मे पूजां यः करिष्यति मानवः । मन्त्रैरेतैः सुरश्रेष्ठ ! विपाप्मा स भविष्यति" । स्कन्दपु० "माघमासे तु या कृष्णा फाल्गुनादौ चतुर्दशी । सा तु पुण्या तिथिर्ज्ञेया सर्वपापविनाशिनी । शान्तात्मा क्रोधहीनस्तु तपस्वी ज्ञानसंयुतः । तस्मै देयमिदं देवि ! गुरुपादानुगे सदा । अन्यथा यो ददातीदं स दाता नरकं व्रजेत् । वर्षे वर्षे महादेवि ! नरो नारी पतिव्रता । वीक्षयामि जगत् सर्वं कोमां भक्त्या प्रपूजयेत् । शिवमन्त्रैर्जपं कृत्वा होममर्चनदीपनम् । जागरं शिवरात्र्यान्तु शिवं पश्येत् समाहितः । मम भक्तो नरो देवि ! शिवरात्रेरुपोषकः । गणत्वमक्षयं दिव्यमक्षयम् शिवशासनम् । सर्वं कृत्वा तु भजते भोगानद्भुतसम्भवान् । एवं द्वादश वर्षाणि शिवरात्रेरुपोषकः । यो मां जागरते रात्रिं मनुजः स्वर्गमाप्नुयात् । अज्ञात्वा मां न जानाति व्रतमेतदुदाहृतम् । शिवञ्च पूजयित्वा यो जागर्त्ति च चतुर्दशीम् । मातुः पयोधररसं न पिबेत् स कदाचन । यदीच्छेच्छाश्वतान् भोगान् दिवि देवसम पुमान् । आगमोक्तविधिं कृत्वा प्राप्नोति सकलं फलम्" ।

शिवलिङ्गव्रतं शिवधर्मोत्तरे "सितचन्दनतोयेन स्नाप्य लिङ्गं विलेप्य च । श्वेतैर्विकसितैः पद्मैः संपूज्य प्रणिपत्य च । पङ्कजे विमले सौम्ये निश्छिद्रे पुष्पिते घने" । सौम्ये रम्ये "मध्ये केशरजालस्य स्थाप्य लिङ्गं कनीयसम् । अङ्गुष्ठमात्रं विधिवत् सर्वगन्धमयं शुभम् । स्थाप्य दक्षिणमूर्त्तौ तु बिल्वपत्रैः समर्चयेत् । एवं योऽर्चयते लिङ्गं पद्मे गन्धमयं शुभम् । सर्वपापविनिर्मुक्तः शिवमेवाभिगच्छति । एतद्व्रतोत्तमं गुह्यं शिवलिङ्गं महाव्रतम् । भक्तस्य ते मयाख्यातं न देयं यस्य कस्यचित्" ।

शिवव्रतं कालोत्तरे "अतःपरं प्रवक्ष्यामि व्रतानान्तु यथाक्रमम् । अष्टम्यान्तु चतुर्दश्यां पक्षयोरुभयोस्तथा । उपोष्य संयतो भूत्वा त्रिविधेनान्तरात्मना । ततोऽपराह्णे शुचिना विशेषात् पूजयेच्छिवम् । पूर्वोक्तेन विधानेन जपहोमादिमाचरेत् । पूजयेत् परया भक्त्या गुरुवाक्साधनादिकैः । ततस्तु पञ्चगव्यञ्च प्राशयेच्चुलुकत्रयम् । अमत्तश्चोपसंस्पृश्य हविष्यान्नेन वर्त्तनम् । अनेन विधिना यत्नाद् यावज्जीवं व्रत चरेत् । पिता पितामहश्चैव तथैव प्रपितामहः । वसन्ति शिवलोकेषु शिवव्रतप्रभावतः । एतच्छिवव्रतं नाम व्रतानामुत्तमोत्तमम्" । तत्रैवान्यत्र "पौषमासे तु सम्प्राप्ते पक्षयोरुभयोः सुत ! । चतुर्दश्यामथाष्टम्यां पौर्णमास्यामथापि वा । नित्यं निवर्त्य विधिवत् ततः काम्यं समाचरेत् । विशेषपूजा तत्रैव कर्त्तव्या शुद्धचेतसा । नैवेद्यं यावकप्रस्थं खण्डक्षीराज्यसंस्कृतम् । रुद्रसंख्यांस्तु वै विप्रान् भोजयेच्चैव दक्षयेत् । वितस्तिमात्रां प्रकृतिं यावपिष्टेन निर्म्मिताम् । षड्ङ्गुस्वराङ्गकृतभूषान्तु कारयेत् । शिवाय तु प्रदातव्या कपिला गुरवे ततः । सवाहनसमायुक्ता व्रतपुण्यमतः शृणु !" । वर्षसाध्यम् "अनेन विधिना माघे खड्गं पिष्टमयं शिवे । समर्प्य च विधानेन चक्रवर्त्तिपदं लभेत् । फाल्गुने तु तथा चक्रं निवेद्य तत्पदं लभेत् । चैत्रे शिवं पिष्टमयं निवेद्य च शिवाग्रतः । स मुञ्चति ब्रह्महत्यां शिवलोकमवाप्नुयात् । वैशाखे मासि हयाद्यं शिवस्याग्रे निवेदयेत् । हयाद्यं पिष्टकं कार्यं पूजान्ते तु निवेदयेत् । मुच्यते सर्वपापेभ्यो रुद्रलोके महीयते । ज्यैष्ठे पिष्टमयं खड्गं शिवाय विनिवेदयेत् । मुच्यते तु कृतघ्नत्वाद्रुद्रलोके तु गच्छति । आषाढे पिष्टजं पात्रं शिवाय विनिवेदयेत् । मुच्यते दुष्कृतैः सर्वैरिह जन्मनि सञ्चितैः । ध्वजं पिष्टमयं यस्तु शिवस्याग्रे निवेदयेत् । श्रावणे तु विधानेन सोऽक्षय मोक्षमाप्नुयात् । मासि भाद्रपदे यस्तु गदां पिष्टमयीं ददेत् । निधीशत्वं स सम्प्राप्य शिवलोके महीयते । मासि चाश्वयुजे शूलं दत्त्वा पिष्टसम्भवम् । शिवाय पुरतो देयं भ्रूणहत्यां व्यपोहति । कार्त्तिके तु गदाचक्रं शिवस्याग्रे निवेदयेत् । सप्तजन्मकृतं पापं दहत्यग्निरिवेन्धनम् । मासे वै मार्गशीर्षे तु कमलं पिष्टसम्भवम् । शिवाय विधिना देयं सर्वैश्वर्यमवाप्नुयात् । सर्वेषाञ्चैव नक्तन्तु व्रतानां कीर्त्तितं मया । नित्यपूजान्तु निर्वर्त्य काम्यपूजान्तु कारयेत्" । तत्रैवान्यत्र "अश्वं वै मार्गशीर्षे तु यस्तु पिष्टमयं ददेत् । शिवं सम्पूज्य विधिवत् सूर्य्यलोके महीयते । दिव्यं वर्षसहस्रन्तु तदन्ते स्यान्महीपतिः । पौषे पिष्टमयी दन्ती शिवस्याग्रे निवेद्यते । त्रिःसप्तकुलसंयुक्तः शिवलोके महीयते ।

दिव्यं वर्षसहस्रन्तु तदन्ते स्यान्महीपतिः। चक्रवर्त्ती महावीरः सर्व्वैश्वर्य्यसमन्वितः। माघे चाम्बरं यस्तु शिवाय विनिवेदयेत्। उद्धरेत्सोऽपि नरकात् स्वपितॄन् रौरवादितः। शिवलोके तु वसति दिव्यवर्षायुतत्रयम्। तदन्ते तु महीं कृत्स्नां न च खण्डां भुनक्ति सः। फाल्गुने वृषयूथन्तु पिष्टोत्थं रुद्रसंख्यया। निवेद्य तु शिवस्याग्रे त्रैलोक्याधिपतिर्भवेत्। दिव्यं वर्षसहस्रन्तु तदन्ते स्यान्महीपतिः। चक्रवर्त्ती महावीरः सर्व्वैश्वर्य्यसमन्वितः। चैत्रे स्वर्णमिन्दुमयं दासदासीसमन्वितम्। गृहोपकरणैर्युक्तं विचित्राङ्गणचर्चितम्। पूजान्ते परया भक्त्या शिवाय विनिवेदयेत्। दिव्यवर्षशतान्यष्टौ रुद्रलोके महीयते। जातिस्मरस्तदन्ते तु चक्रवर्त्तित्वमाप्नुयात्। मासि वैशाखसंज्ञे तु सप्तव्रीहिशरावकान्। शिवाय पुरतो दद्यात् पूजान्ते प्रीतचेतसा। स याति शिवसायुज्यं बन्धुभिः सहितो नरः। पलानां द्वे शते यस्तु गुग्गुलन्तु दहेत् सुधीः। ज्यैष्ठे मासि शिवस्याग्रे पूजान्ते भक्तिसंयुतः। त्रिःसप्तकुलसंयुक्तः शिवलोके महीयते। तदन्ते पृथिवीं भुङ्क्ते न च खण्डां ससागराम्। बलिमण्डलकं कार्य्यं आषाढ़े शूलपाणिनः। नानाभक्ष्यैर्विरचितं नानाभक्ष्यसमन्वितम्। नानाचित्रसनाकीर्णं कर्त्तव्यं बलिमण्डलम्। संपूज्य परमेशानं ततस्तस्य निवेदयेत्। पितॄन् पितामहांश्चैव उद्धृत्य प्रपितामहान्। पुत्रपौत्रसमायुक्तः शिवलोके महीयते। दिव्यवर्षसहस्राणि तदन्ते पृथिवीपतिः। श्रावणे मासि देवस्य विमानं पुष्पसम्भवम्। पूजावसाने दातव्यं विचित्ररचनाकुलम्। वर्षायुतप्रमाणन्तु रुद्रलोके महीयते। योगीशो जायते शान्तो येन मोक्षं व्रजेत्तु सः। मासि भाद्रपदे यस्तु रुद्रपूजां चरेत् तदा। गुग्गुलं प्रथमं धूपं सुरदारु ततो दहेत्। बिल्वबीजं घृतं तद्वत् तथा नानाघृतान्वितम्। पञ्चमं ह्यगुरुं दद्यात् धूपं सर्वात्मना विभोः। मासमेकन्दहेद् यस्तु नैरन्तर्य्येण भक्तितः। याति सायुज्यतां शम्भोः सपुत्रः सहबान्धवः। यस्त्वर्कपत्रपुटकं पूरयेत् क्षीरसर्पिषा। मासमश्वयुजं शम्भोर्नैरन्तर्य्येण भक्तितः। तस्य पुण्यफलं वक्तुं न शक्नोमि षड़ानन!। तत्कुले पतिता ये तु डिम्भाडिम्भाहता पुनः। ते प्रयान्ति महाभागा रुद्रलोके यथासुखम्। वर्षायुतायुतं साग्रं तदन्ते तु नरेश्वराः। जायन्ते शिवभक्ताश्च ज्ञानिनो वीतकल्मषाः। शिवदीक्षां समासाद्य ते यान्ति परमाङ्गतिम्। वस्त्रपूतमिक्षुरसं घटकन्तु शिवाग्रतः। पूजान्ते दापयेद् यस्तु मासि प्राप्ते च कार्त्तिके। देहान्ते रुद्रलोके तु मोदते सह बान्धवैः। व्रतान्ते चैव संपूज्य शिवभक्तान् यथाविधि। हेमवस्त्रान्नपानैश्च वित्तशाठ्यं विना सुत!"। पद्मपु० "आषाढ़ादिचतुर्मासं वर्जयेत्सस्यकन्तनम्। कृत्वाक्षभक्ष्यञ्चैव मधुसर्पिर्घटान्वितम्। कार्त्तिक्यान्तु पुनर्हैमं ब्राह्मणाय निवेदयेत्। रुद्रलोकमवाप्नोति शिवव्रतमनुत्तमम्"।

शिवाचतुर्थीव्रतं भविष्यपु० "शिवा शान्ता सुखी राजन्! चतुर्थी त्रिविधा स्मृता। मासि भाद्रपदे शुक्ला शिवा लोकेशपूजिता। तस्यां स्नानं तथा दानमुपवासो जपस्तथा। क्रियमाणं शतगुणं प्रसादाद्दन्तिनो नृप!। गुड़लवणघृतानां दानं शुभकरं स्मृतम्। गुड़ापूपास्तथा वीर! पुण्यं ब्राह्मणभोजनम्। चतुर्थ्यां नरशार्दूल! पूजयेत सदा स्त्रियः। गुड़लवणपूजाभिः श्वश्रूश्वशुरमातरः। ताः सर्वाः सुभगाः स्युर्वै विघ्नेशस्यानुमोदनात्। कन्यकाश्च विशेषेण विधिनानेन पूजयेत्"।

शिवापवीतव्रतं शिवधर्मोत्तरे "पौर्णमास्यां तथाषाढ़्यां शिवं संपूज्य यत्नतः। उपवीतं शिवे दद्याच्छिवभक्तांश्च भोजयेत्। पुनरेव च कार्त्तिक्यां पूज्य शम्भुं क्षमापयेत्। यतीनां दक्षिणां दत्त्वा स्नानवस्त्रादिपूर्विकाम्। यः कुर्य्यात् सकृदप्येवं चातुर्मास्यं पवित्रकम्। कल्पकोटिसहस्राणि रुद्रलोके महीयते"।

शीलतृतीयाव्रतं पद्मपु० "अनग्निपक्कमश्नाति तृतीयायान्तु यो नरः। गां दत्त्वा शिवमभ्येति पुनरावृत्तिदुर्लभम्। इहदानन्दकृत् पुंसां शीलव्रतमिदं स्मृतम्"।

शीलावाप्तिव्रतं विष्णुधर्मोत्तरे "भगवन्! कर्म्मणा केन शीलवान् पुरुषो भवेत्। कुलजातिश्रुतेभ्यस्तु शीलमेव विशिष्यते"। मार्कण्डेय उवाच "आग्रहायण्यतीते तु मासमेकं दिने दिने। पूर्ववत् पूजयेद्देवं वराहमपराजितम्। घृतेन स्नापयेद्देवं घृतेन जुहुयाद्धरिम्। घृतं द्विजेभ्यो दद्याच्च घृतमेव निवेदयेत्। त्रिरात्रोपोषितः पौष्यां घृतपात्रेण च द्विजम्। पूजयेच्च सुवर्णेन यथाशक्ति नराधिप!। कृत्वा व्रतं मासमिदं यथोक्तमासाद्य नाकं सुचिरं मनुष्यः। मानुष्यमासाद्य च शीलवान् स्यात् प्राप्नोति पुष्टिं चिरजीवितञ्च"।

शुक्रव्रतं भविष्योत्तरोक्तम् "शुक्रं ज्येष्ठासु संप्राप्य पूजये-

नक्तभोजनः । पूर्वोक्तक्रमयोगेन दिक्सन्तर्पणेन तु । सप्तमे त्वथ संप्राप्ते सौवर्णं कारयेद्व्रतम् (शुक्रम्) । रौप्ये वा ताम्रपात्रे वा स्थापयित्वा भृगोः सुतम् । संपूज्य परया भक्त्या श्वेतवस्त्रानुलेपनैः । तस्मै तत्र प्रदातव्यं पायसं घृतसंयुतम्" ।

शुद्धिव्रतं वह्निपु० "एवं वा द्वादश मासानुपोष्यैकादशीं बुधः । स यः करोति शुद्धात्मा कृतकृत्यः सुखी भवेत् । सुनामद्वादशी पुण्या नाम्ना द्वादशभिस्तथा । द्वादश धेनवो देया हरिः कामान् प्रयच्छति । दिवि देवाः स देवेन्द्राः कृत्वा कर्माण्यनेकशः । पश्चादाराधयन्तीह हरिं शुद्धिव्रतेन हि" ।

शुभद्वादशीव्रतं वराहपु० "शृणु राजन् ! महाभाग ! शुभव्रतमनुत्तमम् । येन सम्प्राप्यते विष्णुः शुभेनैव न संशयः । मासि मार्गशिरे पुण्ये प्रथमाद्दात् समाचरेत् । एकभक्तं सिते पक्षे यावत् स्याद्दशमी तिथिः । ततो दशम्यां मध्याह्ने स्नात्वा केशवमर्चयेत् । भुक्त्वा सङ्कल्पतः प्रागवत् द्वादश्यां शुद्धमानसः । केशवेति हरिं पूज्य दद्यात्तत्प्रीतये तिलान् । सहिरण्यं तथा कृष्णद्वादश्यां प्रयतो नृप ! । तामथैवमुषित्वा च यवान् दद्यात् द्विजातये । कृष्णायेति हरिर्वाच्यो दाने होमे तथार्चने । चातुर्मास्यामथैवन्तु क्षपित्वा राजसत्तम ! । चैत्रादिषु पुनस्तद्वदुपोष्य प्रयतः शुचिः । सक्तुपात्राणि विप्राणां सहिरण्यानि दापयेत् । श्रावणादिषु मासेषु तद्वद्गोविन्दमर्चयेत् । त्रिषु मासेषु यावत्तु कार्त्तिकः स्यादिहागतः । तमप्येवं क्षपयित्वा दशम्यां प्रयतः शुचिः । अर्चयित्वा हरिं भक्त्या मासनाम्ना विचक्षणः" ।

शुभसप्तमीव्रतं पद्मपु० "अन्यामपि प्रवक्ष्यामि शोभनां शुभसप्तमीम् । यामुपोष्य नरो रोगात् शोकदुःखात् प्रमुच्यते । शुक्ले चाश्वयुजे मासि कृतस्नानजपः शुचिः । वाचयित्वा द्विजश्रेष्ठानारभेच्छुभसप्तमीम् । कपिलां पूजयेद्भक्त्या गन्धमाल्यानुलेपनैः । नमामि सूर्यसम्भूतामशेषभुवनालयाम् । त्वामहं सर्वकल्याणशरीरां सर्वसिद्धये । अथाहृत्य तिलप्रस्थं ताम्रपात्रे कृतं नवम् । काञ्चनं वृषभं तद्वद्वस्त्रमाल्यगुडान्वितम् । फलैर्नानाविधैर्भक्ष्यैः सर्वोपस्करसंयुतैः । दद्याद्विकालवेलायामर्यमा प्रीयतामिति । पञ्चगव्यं तु संप्राश्य स्वपेद्भूमौ विमत्सरः । ततः प्रभाते सुस्नातो भक्त्या सन्तर्पयेद् द्विजान् । अनेन विधिना दद्यात् मासि मासि सदा नरः । वाससी वृषभं हैमं तद्वच्छन्दोऽश्वपृष्ठकम् । वत्सरान्ते च शयनमिक्षुदण्डगुडान्वितम् । सोपधानकविश्रामभाजनासनसंयुतम् । ताम्रपात्रे तिलप्रस्थं सौवर्णवृषभैर्युतम् । दद्याद्वेदविदे सर्वं विश्वात्मा प्रीयतामिति" ।

शूलदानव्रतं शिवधर्मोत्तरे "अमावस्यां निराहारः षड्मेकं नियमान्वितम् । शूलं पिष्टमयं कृत्वा वर्षान्ते विनिवेदयेत् । शिवाय राजतं पद्मं सौवर्णकृतकर्णिकम् । भक्त्या च विन्यसेत् मूर्ध्नि शेषं पूर्ववदाचरेत् । कामतोऽपि कृतं पापं भ्रूणहत्यादिकञ्च यत् । तत् सर्वं शूलदानेन नश्यत्येव न संशयः । महापद्मविमानेन नरो नारीसमन्वितः । युगकोटिशतं साग्रं शिवलोके महीयते" ।

शैलव्रतं विष्णुधर्मोत्तरे "अथातः संप्रवक्ष्यामि तव शैलव्रतं शुभम् । महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवानपि । विन्ध्यश्च पारिपात्रश्च सप्तैते कुलपर्वताः । चैत्रशुक्लमारभ्यात् प्रत्यहं दिनसप्तकम् । तेषां संपूजनं कृत्वा बहिःस्नानं समाचरेत् । गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा । यवैर्होमं तथा कुर्य्याद् दद्याद्विप्रे यवानपि । नित्यं यवान्नमश्नीयात् कुर्य्यात् संवत्सरं व्रतम् । तस्यावसाने दद्यात्तु यवप्रस्थांश्च विंशतिम् । वाचकाय द्विजेन्द्राय सुवर्णं काञ्चनस्य तु" ।

शैवनक्षत्रपुरुषव्रतं विष्णुधर्मोत्तरे "उपवासेष्वशक्तानां नक्तं भोजनमिष्यते । यस्मिन् व्रते तदप्यत्र श्रूयतामयं महत् । शिवनक्षत्रपुरुषं शिवभक्तिमतां नृणाम् । तस्मिन्नक्षत्रयोगे च पुराणज्ञाः प्रचक्षते । फाल्गुनस्यामले पक्षे यदा हस्तः प्रजायते । तदा ग्राह्यं व्रतं चैतन्नक्तेनाभ्यर्च्य शूलिनम् । शिवायेति च हस्तेन पादौ संपूजयेद्विभोः" ।

शैवमहाव्रतं विष्णुधर्मोत्तरे "प्रतिमासं प्रवक्ष्यामि शैवव्रतमनुत्तमम् । धर्मकामार्थमोक्षार्थं नरनार्य्यादिदेहिनाम् । पौषे मासे तु सम्प्राप्ते यः कुर्य्यान्नक्तभोजनम् । सत्यवादी जितक्रोधः शालिगोधूमगोरसैः । पक्षयोरष्टमीं यत्नादुपवासेन वर्त्तयेत् । त्रिसन्ध्यमर्चयेदीशमग्निकार्य्यञ्च भक्तितः" । वर्षसाध्यम् "त्रिस्नानञ्चाग्निहवनं भूशय्या नक्तभोजनम् । पक्षयोरुपवासेन चतुर्दश्यष्टमीं क्षिपेत् । इत्येवमादिनियमैराचरेत शिवव्रतम् । शिवभक्त्या तु या नारी ध्रुवं सा पुरुषो भवेत् । स्त्रीत्वमत्युत्तमं सा चेत् काङ्क्षते स्त्वणुयाद्व्रतम्" ।

शैवोपवासव्रतं भविष्यपु० "चतुर्द्दश्यां तथाष्टम्यां पक्षयोः शुक्लकृष्णयोः । योऽब्दमेकं न भुञ्जीत शिवार्च्चनरतो नरः । यत् पुण्यमक्षयं प्रोक्तं सततं सत्रयाजिनाम् । तत् पुण्यं सकलं तस्य शिवलोकञ्च गच्छति" ।

शौर्य्यव्रतं वराहपु०"अतःपरं प्रवक्ष्यामि शौर्य्यव्रतमनुत्तमम् । येन भीरोरपि महत् शौर्य्यं भवति तत्क्षणात् । मासि चाश्वयुजे शुद्धा नवमी समुपोषिता । सप्तम्यां कृतसङ्कल्पः स्थित्वाष्टम्यां निरोदनः । नवम्यां प्राशयेत् पिष्टं प्रथमं भक्तितो नृप ! । ब्राह्मणान् भोजयेद्भक्त्या देवीञ्चैव तु पूजयेत् । दुर्गां देवीं महाभागां महामायां महाप्रभाम् । एवं संवत्सरं यावदुपोष्य विधिवन्नृप ! । व्रतान्ते भोजयेद्धीमान् यथाशक्त्या कुमारकान् । हेमवस्त्रादिभिः स्नातान् पूजयित्वा तु भक्तितः । पश्चात् क्षमापयेत्तांस्तु देवी मे प्रीयतामिति । एवं कृत्वा भ्रष्टराज्योऽलभेद्राज्यं न संशयः । अविद्यो लभते विद्यां भीरुः शौर्य्यञ्च विन्दति" ।

श्रद्धाव्रतं पद्मपु० "कृत्वोपलेपनं शम्भोरग्रतः केशवस्य च । स सर्व्वपापनिर्म्मुक्तः शिवलोके महीयते । राजा भवति सम्भूतः सार्व्वभौमो महेश्वरः । एतत् श्रद्धाव्रतं नाम बहुकल्याणकारकम्" ।

श्रवणद्वादशीव्रतं भविष्योत्तरे "एकादशी यदा शुक्ला श्रवणेन समन्विता । विजया सा तिथिः प्रोक्ता भक्तानां विजयप्रदा । एकादश्यां सोपवासो रात्रौ संपूजयेद्धरिम् । सौवर्णे रौप्यपात्रे वा दारवंशमयेऽपि वा । आच्छाद्य पात्रं वासोभिरक्षतैः फलसंमितैः । सागरपर्णैश्च गन्धैश्च भक्त्या वा यत्नप्रेक्षया । तिलाढकेन वित्ताढ्यः प्रस्थेन कुडवेन वा । अलाभे यवगोधूमैः फलैः शुद्धतिलैर्भवेत् । पुष्पैर्गन्धैः फलैर्धूपैः कालोत्थैरर्च्चयेद्धरिम् । नानाविधैश्च नैवेद्यैर्भक्ष्यभोज्यैर्गुडौदनैः । अवित्तशाठ्यसारेण यच्चिरण्यञ्च कारयेत् । मन्त्रेण तु शतगुणं भक्त्या सहस्रगुणोत्तरम् । भक्तिमन्त्रगुणोपेतं कोटिकोटिगुणोत्तरम् । एभिर्मन्त्रपदैस्तत्र पूजयेद्गरुड़ध्वजम् । उपहारैर्नरश्रेष्ठ ! शुचिर्भूत्वा समाहितः" । "एषा व्युष्टिः समाख्याता एकादश्यां मया तव । पूर्व्वमेव समाख्याता द्वादशी श्रवणान्विता । उपोष्यैकादशीं पश्चाद् द्वादशीमप्युपोषयेत् । नचात्र विधिलोपः स्यादुभयोर्देवता हरिः" । एकादश्यां द्वादश्यां चान्यतरस्यां वा श्रवणयुक्तायां श्रवणयुक्तोपवासेनैव व्रतद्वयसिद्धिः एकस्मिन् व्रते पूर्व्व-

स्यां तिथिमुपोष्य पश्चादपारयित्वा नान्योपोष्या इति यो विधिलोपः स एकदेवताकत्वेन न भवतीत्यर्थः । "बुध श्रवणसंयुक्ता द्वादशी सङ्गमोदकम् । स्नानं दध्योदनं सम्यगुपवासः परो विधिः । सगरेण ककुत्स्थेन धुन्धुमारेण गाधिना । एतैश्चान्यैश्च राजेन्द्र ! कामाद्द्वादशीव्रतम् । सा द्वादशी बुधयुता श्रवणेन सार्द्धं सा सौजयेति कथिता ऋषिभिर्नभस्ये । तामादरेण समुपोष्य नरोऽमरत्वमाप्नोति पार्थ ! अणिमादिगुणोपपन्नम्" । विष्णुधर्म्मोत्तरे "उपवासासमर्थानां किं स्यादेकमुपोषितम् । महाफलं महादेव ! तन्ममाचक्ष्व पृच्छतः" । कृष्ण उवाच "या राम ! श्रवणोपेता द्वादशी महती तु सा । तस्यामुपोषितः स्नातः पूजयित्वा जनार्दनम् । प्राप्नोत्ययत्नात् धर्म्मज्ञ ! द्वादशद्वादशीफलम् । दध्योदनयुतं तस्यां जलपूर्णं घटं द्विजे । वस्त्रसंवेष्टितं दत्त्वा छत्रोपानद्युगमेव च । न दुर्गतिमवाप्नोति जातिमग्र्याञ्च विन्दति । अक्षय्यं स्थानमाप्नोति नात्र कार्य्या विचारणा । श्रवणद्वादशीयोगे बुधवारो भवेद्यदि । अत्यन्तं महती नाम द्वादशी सा प्रकीर्त्तिता । स्नानं जप्यं तथा दानं होमः श्राद्धं सुरार्च्चनम् । सर्व्वमक्षयमाप्नोति तस्यां भृगुकुलोद्वह ! । तस्मिन् दिने तथा स्नातो यत्र क्वचन सङ्गमे । स्वर्गङ्गास्नानजं राम ! फलं प्राप्नोत्यसंशयम् । श्रवणे सङ्गमाः सर्व्वे परपुष्टिप्रदाः सदा । विशेषात् द्वादशीयुक्ते बुधयुक्ते विशेषतः । तथैव द्वादशी प्रोक्ता बुधश्रवणसंयुता । तृतीया च तथा प्रोक्ता सर्व्वकामफलप्रदा । तथा तृतीया धर्म्मज्ञ ! तथा पञ्चदशी शुभा" ।

श्रीपञ्चमीव्रतं गरुड़पु० "यदिन्द्रेण पुरा चीर्णं श्रीवियुक्तेन पार्थिव ! । श्रीसम्बृद्धिकरं तद्धि शृणु श्रीपञ्चमीव्रतम् । मार्गशीर्षे सिते पक्षे पञ्चम्यां पक्षगोत्सवे । उपवासस्य नियमं कुर्य्यात् पद्मां स्मरेद्धृदि । स्वर्णरौप्यां यथा शक्त्या ताम्रां मृत्काष्ठजामथ । चित्रपट्टगतां देवीं लक्ष्मीं भूपाल ! कारयेत् । पद्मासनां पद्महस्तां पद्मां पद्मदलेक्षणाम् । दिग्गजेन्द्रैः स्नाप्यमानां काञ्चनैः कलशोत्तमैः" । लक्ष्मीरूपनिर्माणन्तु विष्णुधर्म्मोत्तरोक्तं वेदितव्यम् । तद्यथा "सुस्थिता श्रीः कर्त्तव्या शङ्खाम्बुजकरा शुभा । सुखासिता महाभाग ! पद्मे पद्मकरा शुभा । द्विभुजा चारुसर्व्वाङ्गी सर्व्वाभरणभूषणा । द्वौ च मूलकरौ मूर्द्ध्नि कार्य्यौ विद्याधरौ शुभाविति । ततो

यामद्वये याते निम्नगाया ह्रदाय वा । स्नानं कुर्य्यात् संभ्रान्तः शक्तिमदुपचारतः । देवान् पितॄंश्च सन्तर्प्य ततो देवगृहं व्रजेत् । तत्रस्थां पूजयेद्देवीं पुष्पैस्तत्काल-सम्भवैः । फलानि च यथालाभं विरूढं धान्यसञ्चयम् । ततः सुवासिनी पूज्या कुङ्कुमैः कुसुमेन च । भोजयेन्मधुरान्नेन प्रणिपत्य विसर्जयेत् । ततस्तु तण्डुलप्रस्थं घृतपात्रेण संयुतम् । ब्राह्मणाय प्रदातव्यं श्रीर्मे प्रीयतामिति । निर्वर्त्तितद्विशेषेण ततो भुञ्जीत वाग्यतः । मासानुमासं कर्त्तव्यं विधिनानेन भारत ! । श्रीर्लक्ष्मीः कमला सम्पत् पद्मा नारायणी तथा । पद्मा धृतिः स्थितिः पुष्टिस्तुष्टिः सिद्धिः क्षमा क्रमात् । मासानुमासं राजेन्द्र ! प्रीयतामिति कीर्त्तयेत् । वस्त्रमण्डपिकां कृत्वा पुष्पगन्धादिवासिताम् । शय्यायां स्थापयेल्लक्ष्मीं सर्वोपस्करसंयुताम् । सौभाग्याष्टकसंयुक्तां नेत्रपट्टावृतस्तनीम् । सप्तधान्यसमोपेतां रसधातुसमन्विताम् । पादुकोपानहच्छत्रभाजनासनसंस्कृताम् । देवीं संपूज्य विधिवद् ब्राह्मणाय कुटुम्बिने । व्यासाय वेदविदुषे यस्मै वा रोचते स्वयम् । सोपस्करां सवत्साञ्च धेनुं दत्त्वा क्षमापयेत् । यः पञ्चमीव्रतमिदं दयितं मुरारेर्भक्त्या समाचरति पूज्य सरोरुहाजाम् । राज्यश्रियं स भुवि भव्यजनोपभोग्यं भुक्त्वा प्रयाति भवनं मधुसूदनस्य । बाहाल्यमपि वक्ष्यामि पञ्चम्यास्तव भारत ! । जयेति या च विख्याता व्रतिनां जयदायिनी । यस्माज्जया जयायाद्यं करोति व्रतिनो बुधाः ! । परिपूर्णं व्रतं यस्मात् सा ज्ञेया जयपञ्चमी । जया च विजया चैव जयन्ती पापनाशिनी" । जया, कार्त्तिकशुक्लपञ्चमी "श्रवणेन यदा युक्ता शुक्लपक्षे तु पञ्चमी । उत्तराफाल्गुनी यस्माद्भिन्द्वारसमागमः । आरभेत नरस्तस्यां व्रत पूर्व्वमुपोषितः । चतुर्थ्यामेकभक्ताशी ब्रह्मचारी जितेन्द्रियः । धृतिमान् कृतसंकल्पो भवेन्नियमवान्नरः । ततःकल्यं समुत्थाय स्नात्वा नियतमानसः । घृतसङ्कुल्यया पत्न्या कुर्य्याद् बिल्वस्य चार्च्चनम् । बिल्वमूले ततः कुर्य्याद् वेदिं पुष्पाक्षतैर्युताम् । स्थापयेत् कलसानष्टौ तस्यामष्टसु दिक्षु वा । तन्मध्ये बिल्वमूले तु स्थापयेच्च महाघटम् । सौवर्णं राजतं ताम्रं मार्त्तिकं वा शुभान्वितम्" इत्यादि ।

श्रीप्राप्तिव्रतं विष्णुधर्म्मोत्तरोक्तं "श्रीविहीनस्य लोकेऽस्मिन् जीवितस्यापि किं फलम् । तस्माद्व्रतं समाचक्ष्व येन स्याच्छ्रीयुतो नरः" । मार्कण्डेय उवाच "चैत्रास्यां मासतीतायां प्रतिपत्प्रभृति क्रमात् । पूर्ववत् पूजयेद्देवं श्रीसहायं दिने दिने" । पूर्व्वमिति चैत्रादिरूपावाप्तिव्रतवत् । "पुष्पमूलैः फलैश्चैव जुहुयादक्षतानि च । बिल्वांश्च वह्नौ सततं गोरसैर्भोजयेद् द्विजान् । त्रिरात्रोपोषितो ज्यैष्ठ्यां कनकं प्रतिपादयेत् । वस्त्रयुग्मञ्च राजेन्द्र ! तेन साफल्यमश्नुते । कृत्वा व्रतं मासमिदं यथोक्तमासाद्य मासं सुचिरं मनुष्यः । मनुष्यमासाद्य विशुद्धतेजाः श्रिया युतः स्याज्जगति प्रधानम्" ।

श्रीवृक्षनवमीव्रतं भविष्योत्तरे "तस्माद्भाद्रपदे चैव शुक्लपक्षे कुरूत्तम ! । नवम्यामर्चयेद्भक्त्या दैवतृष्ण्योदयेऽनघ ! । श्रीवृक्षं विविधैरन्नैरग्निपतितैः फलैः । तिलपिष्टान्नगोधूमैर्धूपगन्धानुलेपनैः । दैवज्ञानुकराक्रान्त ! श्रीतरो वै नमस्तुभ्यं । मन्त्रेणानेन राजेन्द्र ! पूजयेद्भक्तिसंयुतः । सप्रकृत्वस्ततोऽभ्यर्च्य श्रीवृक्षं प्रणिपत्य च । ब्राह्मणान् भोजयेद्भक्त्या श्रीदेवी प्रीयतां मम । ततो भुञ्जीत मौनेन तैलाहारविवर्जितम् । अनग्निपक्वं स्वल्पान्नं दधिधान्यफलं शुभम् । एवं यः कुरुते पार्थ ! श्रीवृक्षाभ्यर्चनं नरः । नारी वा दुःखशोकाभ्यां मुच्यते नात्र संशयः" ।

श्रीव्रतं विष्णुधर्म्मोत्तरे "चैत्रशुक्लस्य पञ्चम्यां पूजयित्वा तथा श्रियम् । सकलैवाप्नुयादेतत् फलं संवत्सरोदितम्" । "अथातः संप्रवक्ष्यामि श्रीव्रतं नाम ते व्रतम् । चैत्रशुक्लतृतीयायां स्नानमभ्यङ्गपूर्व्वकम् । कृत्वा शुक्लाम्बरो राजन् कुङ्कुमाल्यानुलेपनः । तिष्ठेद् घृतोदनाहारो भूमौ सुप्यान्निशां च ताम् । चतुर्थ्याञ्च तथा स्नानं बहिरेव समाचरेत् । पञ्चम्याञ्च विशेषेण शुक्लाम्बरधरः शुचिः । लक्ष्मीं संपूजयेत् पद्मैः कृतकेऽकृतकेऽपि वा । शुक्लेन गन्धमाल्येन घृतदीपेन वाप्यथ" इत्यादि ।

षष्ठीव्रतं ब्रह्मपु० "कृतोपवासः पञ्चम्यां षष्ठ्यां योऽर्च्चयते रविम् । नियमव्रतचारी च रवेर्भक्तिसमन्वितः । सप्तम्यां वा महाभाग ! सोऽश्वमेधफलं लभेत्" । विष्णुधर्म्मोत्तरे "षष्ठ्याञ्च शुक्लपक्षस्य ये नरा भौमवासरे । व्रतञ्चरति यत्नेन तथा तासां पृथक् पृथक् । न तेषां दुर्लभं किञ्चित् भविष्यति सुरोत्तम ! । द्वियोगे हि गुणं तेषां फलं स्यान्न ! भविष्यति । त्रियोगे पूजनं कृत्वा मासेषु सुरसत्तम ! । कश्चयं जायते पुण्यं नाल कार्य्या विचारणा" ।

संवत्सरव्रतं विष्णुधर्म्मोत्तरे "इदमन्यत् प्रवक्ष्यामि पञ्च-

मूर्त्तिव्रतं तव । संवत्सरः स्मृतो वह्निस्तथार्कः परिवत्सरः । इदापूर्वस्तथा सोमो ह्यनुपूर्वः प्रजापतिः । उत्पूर्वश्च तथा प्रोक्तो देवदेवो महेश्वरः । तेषां मण्डलविन्यासः प्राग्वदेव विधीयते" । प्राग्वदिति नीलश्वेतरक्तपीत कृष्णकैः मण्डलविन्यासाः कर्त्तव्याः "प्राग्वत् प्रपूजनं कार्य्यं होमः कार्य्यो यथाविधि । तिलैर्व्रीहियवैश्चैव घृतेन वितथर्जितैः । तल्लिङ्गैरथ वा मन्त्रैर्नामभिः प्रत्यहं क्रमात् । नक्ताशनस्तथा तिष्ठेत् प्राग्वद्दिवसपञ्चकम् । चैत्रशुक्लं समारभ्य पञ्चमीप्रभृतिक्रमात् । संवत्सराख्ये वर्षे तु व्रतमेतत् समाचरेत् । पूजावसाने दातव्याः सुवर्णाः पञ्च यादव ! । चतुर्वेदविदे देयं शाखाभेदेन यादव ! । एकैकं पञ्चकं देयं यथाकालमिदं भवेत् । वह्नेर्लोकमवाप्नोति कामचारी विहङ्गमः" ।

सङ्कटकव्रतं वराहपु० "शृणुष्वैकमना भद्रे ! सङ्कटकमिदं व्रतम् । कथयामि महापूर्वं ब्रह्मणा कथितं मम । आरभ्य कार्त्तिकस्यापि शुक्लप्रतिपदं व्रतम् । स्त्रीयादेकभक्तन्तु कृत्वा दन्तादिशोधनम् । सायं सङ्कल्पमाधाय द्वितीयायामुपावसेत् । तृतीयायामपि तथा चतुर्थ्यां पारणं भवेत् । शिवं संपूजयेद्भक्त्या उपवासद्वयेऽपि च । यत्र विनोपचारेण रात्रौ दद्यात्ततो भुवि । स्वपेत् प्रातः समुत्थाय स्नात्वा देवं समर्चयेत्" ।

सन्तानदव्रतं भविष्योत्तरोक्तम् "कार्त्तिक्यामुपवासी यः कन्यां दद्यात् स्वलङ्कृताम् । स्वकीयां परकीयां वा नदीसङ्गमके शुभे । एतत् सन्तानदं नाम व्रतं सुमतिदायकम्" ।

सन्तानाष्टमीव्रतं विष्णुधर्मोत्तरे "कृष्णाष्टम्यां चैत्रमासे स्नातो नियतमानसः । कृष्णमभ्यर्च्य पूजाञ्च देवक्याः कुरुते च यः । निराहारो नरः पश्चात् कृष्णस्य जगतः पतेः । उपोषितो जपन्नाम रात्रौ प्रयतमानसः । पूजायाञ्चापि कृष्णस्य सप्त वारान् प्रकीर्त्तयेत् । सायित्वनोविकर्मस्थान् वैडालान् बकनासिकान् । प्रभाते च ततः स्नातो दत्त्वा विप्राय दक्षिणाम् । भुञ्जीत व्रत पूजस्तु कृष्णस्यैव जगत्पतेः । वैशाखज्यैष्ठयोश्चैव पारणं हि त्रिमासिकम् । उपोष्य देवदेवेशं घृतेन स्नापयेद्धरिम् । आषाढे श्रावणे चैव मासि भाद्रपदे तथा । उपोषितो द्वितीयं वै पारणं पूर्ववद्भवेत् । आश्विने कार्त्तिके सौम्ये तृतीयं पारणं तथा । पौषे माघे फाल्गुने च चतुर्थं द्विजसत्तम ! । पारणे पारणे पूर्वं घृतेन स्नापयेद्धरिम् । ब्राह्मणेभ्यो घृतं दद्यात्तथैव प्रतिपारणम् । कृत्वा व्रतं नाकमनुप्रयाति मानुष्यमासाद्य च निर्वृतः स्यात् । सन्तानवृद्धिश्च तथास्य तेऽसौ यावन्मही सागरमेखलान्ता ।

सप्तर्षिव्रतं विष्णुधर्मोत्तरे "चैत्रशुक्लादथारभ्य प्रत्यहं दिनसप्तकम् । मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम् । वशिष्ठञ्च महाभागं पूजयेत् दिवसक्रमात् । कालोद्भवैः फलैः पुष्पैः गोरसैश्च फलान्वितैः । आचरेत् प्रत्यहं स्नानं बहिर्नक्ताशनो भवेत् । महाव्याहृतिभिर्होमं तिलैर्नित्यं समाचरेत् । तर्पयेद्ब्राह्मणांश्चात्र फलमूलैश्च गोरसैः । वारिधान्यश्च दातव्याः क्षीरपूर्णा द्विजातिषु । एवं संवत्सरं कृत्वा व्रतान्ते चाऽऽहिताग्नये । दद्यात् कृष्णाजिनं राजन् ! यथापूर्वं मयेरितम् । व्रतमेतन्नरः कृत्वा मोक्षोपायञ्च विन्दति" ।

सप्तसारस्वतव्रतं विष्णुधर्मोत्तरोक्तम् "चैत्रशुक्लादथारभ्य प्रत्यहं दिनसप्तकम् । सुप्रभां काञ्चनाक्षीञ्च विशालां मानसोद्भवाम् । मेघनादां सुवेणुञ्च तथैव विमलोदकाम् । नित्यं संपूजयेद्भक्त्या बहिःस्नानं समाचरेत् । तासाञ्च प्रत्यहं नाम्ना दध्ना होमं समाचरेत् । ब्राह्मणान् भोजयेच्चात्र दध्ना युक्तं सुभोजनम् । घृतोदनं तथाश्नीयात्तद्वदेव तथा निशि । एवं संवत्सरं कृत्वा व्रतं सारस्वतं नरः । तत्रोष्य सुचिरं कालं मानुष्ये जायते यदा" इत्यादि ।

सप्तसुन्दरकव्रतं भविष्योत्तरोक्तम् "एकभक्ता च सप्ताहं गौरिश्चीरत्न भोजयेत् । संपूज्य पार्वतीं भक्त्या गन्धपुष्पविलेपनैः । ताम्बूलसिन्दूरवरैर्नारिकेलफलेन च । प्रीयतां कुमुदा देवी प्रणिपत्य विसर्जयेत् । एकैकां पूजयेद्देवीं सप्ताहं यावदेव तु । पुनश्च सप्तमे प्राप्ते ताः सप्तैव निमन्त्रयेत् । षड्रसैः सम्भोजयित्वाथ यथाशक्त्या विभूषणैः । भूषयित्वा माल्यवस्त्रैः कर्णवेष्टाङ्गुलीयकैः । कुमुदा माधवी गौरी भवानी पार्वती उमा । अम्बिका चेति संपूज्या दर्पणं दापयेत् पृथक् । ब्राह्मणं पूजयेत्तेकं वाच्यं सम्पन्नमस्तु मे । सप्तसुन्दरकं नाम व्रतं पापहरं शुभम् । कृत्वा प्राप्नोति सौन्दर्य्यं सौभाग्यमतुलं तथा" ।

समुद्रव्रतं विष्णुधर्मोत्तरे "अथातः संप्रवक्ष्यामि समुद्रव्रतमेव ते । चैत्रशुक्लादथारभ्य प्रत्यहं दिनसप्तकम् । लवणं क्षीरं घृतं दधिमण्डं सुरोदकम् । तथैवेक्षुरसोदञ्च

स्थादुदकेनैव पूजयेत् । आचरेत् प्रत्यहं स्नानं शुचिर्भूत्वा तथा बहिः । घृतेन होमं कुर्वीत सप्तम्याञ्च प्रदापयेत् हविष्याशी भवेन्नक्तं कुर्य्यात् संवत्सरं व्रतम् । संवत्सरान्ते दद्याच्च तथा धेनुं पयस्विनीम् । व्रतेनानेन चीर्णेन सप्तसागरमेखलाम् । भुनक्ति वसुधां राजा ! सप्तजन्मान्तराणि तु" ।

सम्पूर्णव्रतं भविष्योत्तरे "संपूर्णं नाम तच्चापि व्रतं सम्यक् फलप्रदम् । यच्चीर्णं नरनारीभिर्य्यावत् संपूर्णकालकम् । अवश्यन्तच्च कर्त्तव्यं संपूर्णफलकाङ्क्षिभिः । किञ्चिद्भग्नं प्रमादेन यद्व्रतं व्रतिनां भवेत् । तत् संपूर्णं भवेत् सर्वं व्रतेनानेन पाण्डव ! । उपद्रवैर्बहुविधैर्महारोगैश्च पार्थिव ! । यद्भग्नं किञ्चिदेव स्यात् व्रतं विघ्नविनायकैः । तत् संपूर्णं भवेत् सर्वं सत्यं सत्यं न संशयः । काञ्चनं रौप्यकं रूपं शिल्पिना तु घटापयेत् । भग्नव्रतस्य योदेवस्तत् स्वरूपं सुनिर्मितम् । रूपं स्त्रीपुंसयोर्वापि प्रारब्धं तद्व्रतं किल । न च निष्पादितं किञ्चिद्दैवात् सर्वं तथा स्थितम् । द्विभुजं पङ्कजारूढं सौम्यं प्रहसिताननम्" । द्विभुजादीनि स्त्रीपुंसयोरूपस्य विशेषणम् तत्र रूपमज्ञातेषु व्रतेषु, जन्मान्तरकृतानां विस्मृतानाञ्च ज्ञातत्वे तेष्वपीदं प्रायश्चित्तमिति । "निष्पादितं शिल्पिना च तस्मिन्नेव दिने पुनः । तस्मान्मासे पुनः प्राप्ते ब्राह्मणो विधिना स्वके । स्नापयेत् पयसा दध्ना घृतक्षीररसाम्बुभिः । गन्धचन्दनपुष्पैस्तु पूजयेत् कुसुमादिना । तोयपूर्णस्य कुम्भस्य मुखे विन्यस्य चन्दनैः । धूपदीपाक्षतैर्वस्त्रैर्नानावल्युपहारकैः । अर्घ्यं दद्याच्च तन्नाम्ना मन्त्रेणानेन पाण्डव ! । उपवासेन हीनस्य प्रायश्चित्तं कृताञ्जलेः । शरणञ्च प्रपन्नस्य कुरुष्वाद्य दयां पुनः । परत्र भयभीतस्य भग्नवर्ज्यव्रतस्य च । कुरु प्रसादं संपूर्णमस्तु मे त्वत्प्रसादतः" ।

सम्भोगव्रतं भविष्यपु॰ "द्वे पञ्चम्यौ हि मासस्य द्वे च प्रतिपदौ नरः । सोपवासः सुगन्धाढ्यः शयीत प्रियया सह । स्वर्गनिश्चलचित्तस्तु रतिप्रीतिविवर्जितः" । स्वर्गनिश्चलचित्तः सूर्य्यध्यानपरः "समस्य व्रतिशीलस्य तस्य पुण्यफलं शृणु । दिव्यं वर्षसहस्रं तु दिव्यं वर्षशतं तथा । ततस्तु भावयत्येनं महादेवं न संशयः" ।

सर्पपञ्चमीव्रतं भविष्यपु॰ "पयोव्रतन्तु पञ्चम्यां दत्त्वा नागं द्विजातये । सौवर्णं सर्पजनितं भयं तस्य न जायते । एतत् सर्पव्रतं प्रोक्तं सर्पसौख्यकरं परम्" ।

सर्पविषापहपञ्चमीव्रतं स्कन्द॰ प्रभासख॰ "श्रावणे मासि पञ्चम्यां शुक्लपक्षे वरानने ! । द्वारस्योभयतो लेख्याः गोमयेन विषोल्बणाः । कृत्वा च कौसुमान्नागानिन्द्राणीं च प्रपूजयेत् । घृतोदकाभ्यां पयसा स्नापयित्वा वरानने ! । गोधूमैः पयसा पूज्य लाजाद्यैर्विविधैस्तथा । पूजयेत् विधिवद्देवि ! दधिदूर्वाङ्कुरैः क्रमात् । गन्धपुष्पोपहारैश्च ब्राह्मणानाञ्च तर्पणम् । अथ वा श्रावणे मासि पञ्चम्यां श्रद्धयान्वितः । यस्त्वालेख्य नरो नागान् कृष्णवर्णादिवर्णकैः । गुरुकल्पान् तथा वीथ्यां स्वगृहे विलिखेत् बुधः । पूजयेद्गन्धधूपैश्च पयसा पायसेन च । तस्य तुष्टिं समायान्ति पन्नगास्तक्षकादयः । आसप्तमात् कुलं तस्य न भयं नागतो भवेत् । प्रजप्यते तत्र मन्त्रो विषस्य प्रतिषेधकः । तस्य प्रजपमात्रे तु न विषं क्रमते सदा" ।

सर्वकामव्रतं विष्णुधर्मोत्तरोक्तम् "अङ्गारकं तथा सूर्य्यं निर्ऋतिं वा खगेश्वरम् । भवनं वेश्वरं स्तुत्यं कपालकषकिङ्किणीम् । तत्र चैकादशान् यस्तु देवान् त्रिभुवनेश्वरान् । एकादश्यां सोपवासः सोमं सम्पूजयेत्तथा । गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । मार्गशीर्षादथारभ्य यावत् संवत्सरं भवेत् । संवत्सरान्ते दद्याच्च ब्राह्मणाय पयस्विनीम् । कृत्वा व्रत वत्सरमेतदिष्टं रुद्रसमाप्नोति नरस्तु राजन् ! । रुद्रेण सार्द्धं सुचिरं वसित्वा कामानप्राप्नोति मनोऽभिरामान् । तथा सर्वगतान् रुद्रान् सदा सर्वत्र पूजयेत् । सर्वकामानवाप्नोति सर्वगानपराजितान्" । विष्णुधर्मोत्तरे "माघमासे चतुर्दश्यां कृष्णपक्षे विशेषतः । तथा पितृगणान् राजन् ! क्षीणचन्द्रे च पूजयेत् । सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते । श्राद्धं कृत्वा तथा राजन् ! सर्वकामानवाप्नुयात्" ।

सर्वकामाप्तिव्रतं विष्णुधर्मोत्तरे "कृत्तिकास्वर्चयेद्देवं कार्त्तिकीप्रभृतिक्रमात् । यावत् स्यात् कार्त्तिकी भूयो नरसिंहमुपोषितः । अनुलेपनपुष्पाद्यैः सर्वरत्नैः सदैव तु । व्रतावसाने दद्याद्गां तथा श्वेतां द्विजातये । श्वेतवत्सयुताञ्चैव रजतस्य तथा नृप ! । उपोषितः सदा कुर्य्याद्व्रतं स्वाच्छन्द्यवर्जितः" ।

सर्वव्रतं सौरपु॰ "मन्दवारयुता पुण्या शुक्लपक्षे त्रयोदशी । तस्यामुपोष्य विधिवत् सम्पूज्य गिरिजापतिम् । ब्रह्महत्यादिभिः पापैर्मुक्तो भवति मानवः" ।

सर्वाप्तिसप्तमीव्रतं भविष्यपु॰ "कृष्णपक्षे तु माघस्य सर्वाप्ति

सप्तमीं शृणु । यामुपोष्य समाप्नोति सर्व्वान् कामान् धराधर ! । पाषण्डादिभिरालापमकुर्व्वन् भानुतत्परः । पूजयेत् प्रयतो देवमेकाद्यमतिरं शुभम् । माघादि पारणं मासैः षड्भिः शुच्यन्तकं स्मृतम्” । शुच्यन्तकम् आषाढ़ान्तकम् । “मार्त्तण्डः प्रथमं नाम द्वितीयोऽर्कः प्रकीर्त्तितः । तृतीयं चित्रभानुस्तु विभावसुरतःपरम् । भगेति पञ्चमो ज्ञेयः षष्ठो हंसः प्रकीर्त्तितः । पूर्व्वेषु षट्सु मासेषु स्नानप्राशनयोस्तिलाः । श्रावणादिषु मासेषु पञ्चगव्यमुदाहृतम् । स्नाने च प्राशने चैव प्रशस्तं पापनाशनम् । प्रतिमासन्तु देवस्य कृत्वा पूजां यथाविधि । विप्राय दक्षिणां दद्यात् श्रद्दधानः समाहितः । पारणान्ते च देवस्य प्रीणनं भक्तिपूर्व्वकम् । कुर्व्वीत शक्त्या विधिवद्धविं भक्त्या दिवस्पतिम्” ।

सर्व्वाप्तिव्रतं विष्णुधर्म्मोत्तरोक्तम् “इदमन्यत् प्रवक्ष्यामि चतुर्म्मूर्त्तिव्रतं तव । बलं ज्ञानं तथैश्वर्य्यं शक्तिश्च यदुनन्दन ! । विख्यातं देवदेवस्य तस्य मूर्त्तिचतुष्टयम् । यदेव रूपं कूर्म्मस्य बलस्योक्तं तथैव तु । रूपं ज्ञानस्य ते प्रोक्तं नारसिंहं तथा नृप ! । रुद्ररूपं तथैश्वर्य्यं कथितन्तु मया तव । पूर्व्वं बलमुखं तस्य वासुदेवमुखं भवेत् । दक्षिणं वदनं ज्ञानं देवं सङ्कर्षणं विदुः । ऐश्वर्य्यं पश्चिमं वक्त्रं रौद्रं पापहरं तथा । वाराहञ्च तथा वक्त्रमनिरुद्धं प्रकीर्त्तितम् । त्रिरात्रोपोषितश्चैत्रे पूर्व्वं संपूजयेन्नृप । शुक्लपक्षप्रतिपदि वैशाखे चापि दक्षिणम् । ज्यैष्ठे च पश्चिमं वक्त्रमाषाढ़े च तथोत्तरम् । स्नेहोपयोगि दातव्यं चैत्रे मासे द्विजातये । रसोपयोगि दातव्यं वैशाखे यादवोत्तम ! । योगोपयोगि दातव्यं ज्यैष्ठे चापि द्विजातये । वस्त्रोपयोगि दातव्यं माघाषाढ़े तथैव च । व्रतमेतन्नरः कृत्वा पूर्व्वमासचतुष्टयम् । पारणं प्रथमं कृत्वा स्वर्गलोके महीयते । श्रावणादिषु मासेषु द्वितीयं पारणं भवेत् । दशवर्षसहस्राणि स्वर्गं भुक्त्वा यथोदितम् । सौभाग्यादिषु भोगेषु तृतीयं पारणं भवेत् । तृतीयं पारणं कृत्वा भोजयेद्ब्राह्मणाञ्छुचिः । भोजनं गोरसप्रायं शष्कुलीकाशर्करायुतम् । प्राप्ते द्वितीये व्रतपारणे तु प्राप्नोति देवस्य सलोकतां सः । स्वर्गेन्द्रलोके च यथोक्तकालं भुङ्क्ते सुखं सर्व्वसमृद्धिकामः” ।

सर्षपसप्तमीव्रतं भविष्यपु० “संपूज्य विधिवद्देवं पुष्पधूपादिभिर्बुधः । यथाशक्ति ततः पश्चान्नैवेद्यं भक्तितो न्यसेत् । पुष्पाणां प्रवरा जातिर्धूपानां विजयः परः । गन्धानां कुङ्कुमं श्रेष्ठं लेपानां रक्तचन्दनम् । दीपदाने घृतं श्रेष्ठं नैवेद्यं मोदकं परम् । एतैस्तुष्यति देवेशः सान्निध्यं चापि गच्छति । एवं संपूज्य विधिवत् कृत्वा चापि प्रदक्षिणम् । प्रणम्य शिरसा देव ! देवदेवं दिवाकरम् । सुखासीनस्ततः पश्चाद्रवेरभिमुखस्थितः । एवं सिद्धार्थकं कृत्वा हस्ते पानीयसंयुतः” । सिद्धार्थकं पश्चेदित्यन्वयः “कामं यथेष्टं हृदये कृत्वा तं वाञ्छितं नरः । पिबेत् सन्तोषयन् विप्रनस्पृशन् दशनैः सकृत्” । रात्राविति शेषः “द्वितीयायान्तु सप्तम्यां द्वौ गृहीत्वा तु सुव्रत ! । तृतीयायां तु सप्तम्यां पातव्यास्त्रय एव हि । चतुर्थ्यां वापि चत्वारः पञ्चम्यां पञ्च एव च । षट् पिबेच्चापि षष्ठ्यां तु इतीयं वैदिकी श्रुतिः । सप्तम्यां वारिसंयुक्तान् सप्त चैव पिबेन्नरः” । वारिशब्दः द्रववाची पञ्चगव्यस्य वक्ष्यमाणत्वात् “उदकप्रभृतिं यावत् पञ्चगव्येन सप्तमी । एकं तोयेन सहितं द्वौ वापि घृतसंयुतौ । तृतीयं मधुना सार्द्धं दध्नापि च चतुष्टयम् । युक्तास्तु पयसा पञ्च षट् च गोमयसंयुताः । पञ्चगव्येन वै सप्त पिबेत् सिद्धार्थकान् द्विज ! । अनेन विधिना यस्तु कुर्य्यात् सर्षपसप्तमीम् । बहुपुत्रो बहुधनः सिद्धार्थश्चापि सर्व्वदा । इह लोके नरो भूत्वा प्रेत्य याति विभावसुम्” ।

सागरव्रतं विष्णुधर्म्मोत्तरोक्तम् “इदमन्यत् प्रवक्ष्यामि चतुर्म्मूर्त्तिव्रतन्तव । नित्यश्चतुर्षु मासेषु श्रावणाद्येषु यादव ! । चतुःसागरचिह्नानि पूर्णकुम्भांस्तु पूजयेत् । चतुरात्मा हरिर्ज्ञेयः सागरात्मा विचक्षणैः । स्नानं समाचरेन्नित्यं नदीतोयेन यादव ! । होमञ्च प्रत्यहं कुर्य्यात् सततं तैलवर्जितम् । कार्त्तिकस्यावसानाच्च पूजयित्वा द्विजोत्तमान् । तैलं दत्त्वा तु विप्राय नाकपृष्ठे महीयते । सर्व्वकामसमृद्धस्य यज्ञस्य लभते फलम्” ।

साध्यव्रतं विष्णुधर्म्मोत्तरोक्तम् “मनोमनस्तथा प्राणो नरो जातश्च वीर्य्यवान् । वीतिर्हयोऽनयश्चैव हंसो नारायणस्तथा । विभुश्चापि प्रभुश्चैव साध्या द्वादश कीर्त्तिताः । पूजयेच्छुक्लपक्षे तान् द्वादश्यां मार्गशीर्षतः । कृत्वा व्रतं वत्सरमेतदिष्टं प्राप्नोति तेषां तु स सलोकमेव । तस्मोष्य कालं सुचिरं मनुष्यो राजा भवेद्द्विजपुङ्गवो वा” ।

सामव्रतं पद्मपु० “घृतेन स्नापनं कृत्वा केशवस्य शिवस्य च । ब्रह्मणो भास्करस्यापि गौर्य्या लम्बोदरस्य च । कृत्वा तैश्च शुभं कुर्य्यात् पद्मं गोमयमण्डले । समान्ते हेमकमलं तिलधेनुसमन्वितम्” । समा वर्षम् । “शुद्धमेदा-

कुम्भं दद्याच्छिवलोके महीयते । साम गायतश्चैतत् सामव्रतमिहोच्यते" ।

सारस्वतपञ्चमीव्रतं पद्मपु० "सम्यक् पृष्टं त्वया राजन् ! शृणु सारस्वतं व्रतम् । यस्य सङ्कीर्त्तनादेव तुष्यतीह सरस्वती । यो यद्भक्तः पुमान् कुर्य्यादेतद्व्रतमनुत्तमम् । तद्वासरादौ संपूज्य विधानेनैतत् समारभेत् । अथवादित्यवारेण पञ्चताराबलेन च । पायसं भोजयित्वा तु कुर्य्याद् ब्राह्मणवाचनम् । शुक्लवस्त्राणि दद्याच्च सहिरण्यानि शक्तितः । गायत्रीं पूजयेद्भक्त्या शुक्लमाल्यानुलेपनैः । एभिर्मन्त्रपदैः पश्चात् सर्वं कुर्य्यात् कृताञ्जलिः । एवं संपूज्य गायत्रीं वीणाक्षमणिधारिणीम् । शुक्लपक्षेऽथ तैर्भक्त्या सकमण्डलुपुस्तकाम् । मौनव्रतेन भुञ्जीत सायं प्रातश्च धर्मवित् । पञ्चम्यां प्रतिपक्षे च पूजयित्वा सुवासिनीः । तस्यां तु तण्डुलप्रस्थं घृतपात्रेण संयुतम् । क्षीरं दद्यात् हिरण्यञ्च गायत्री प्रीयतामिति । सन्ध्यायाञ्च तथा मौनमेतत् कुर्वन् समारभेत् । नान्तरा भोजनं कुर्य्याद् यावन्मासास्त्रयोदश । समाप्ते तु व्रते दद्यात् भोजनं शुभतण्डुलैः । पूर्णं सवस्त्रयुग्मन्तु गां सवत्सां सुशोभनाम् । विप्राय वेदविदुषे । वाचकायाथ पार्थिव ! अनेन विधिना यस्तु कुर्य्यात् सारस्वतं व्रतम् । विद्यावान् धनयुक्तश्च रक्तकण्ठश्च जायते । सरस्वत्याः प्रसादेन व्यासवत् स कविर्भवेत् । नारी वा कुरुते या तु सापि तत्फलभागिनी" ।

सारस्वतव्रतं पद्मपु० "सन्ध्यामौनं नरः कृत्वा समाप्ते घृतकुम्भकम् । वस्त्रयुग्मं तिलान् घण्टां ब्राह्मणाय निवेदयेत् । लोकं सारस्वतं याति पुनरत्रैव जायते । एतत् सारस्वतं नाम रूपविद्याप्रदायकम्" ।

सार्वभौमव्रतं वराहपु० "सार्वभौमव्रतं चान्यत् कथयामि समासतः । येन सम्यक्कृतेनाशु सार्वभौमो भवेन्नरः । कार्त्तिकस्य तु मासस्य दशमी शुक्लपक्षगा । तस्यां नक्ताशनो मर्त्त्यो दिक्षु शुद्धबलिं हरेत्" । शुद्धबलिः पवित्रद्रव्यैः पूजोपहारः । "विचित्रैः कुसुमैर्भक्त्या पूजयेच्च द्विजांस्तथा । सर्वा भवत्यः सिध्यन्तु मम जन्मनि जन्मनि । एवमुक्त्वा बलिं तासु दत्त्वा शुद्धेन चेतसा । ततो द्विपक्वं भुञ्जीत दध्यन्नञ्च सुसंस्कृतम् । सर्वं पश्चाद्दयश्चैव एवं संवत्सरं नृपः । यः करोति नृपो नित्यं तस्य दिग्विजयो भवेत्" ।

सितसप्तमीव्रतं विष्णुधर्मोत्तरे "मार्गशीर्षस्य मासस्य शुक्लपक्षे नराधिप ! । सोपवासस्तु सप्तम्यां कमलैः पूजयेद्रविम् । अर्च्चायां वा स्थले वापि शुक्लैः पुष्पैर्यथाविधि । चन्दनेन तु शुक्लेन वटकैः पूरकेण च" ।

सिद्धार्थकादिसप्तमीव्रतं भविष्यपु० "वैनतेय ! शृणुष्व त्वं विधानं सप्तमीव्रतम् । एतद्धि परमं गुह्यं रवेराराधनं परम् । सिद्धार्थकैस्तु प्रथमा द्वितीया चार्कसम्पुटे । तृतीया मरिचैः कार्य्या चतुर्थी निम्बसप्तमी । खड्युता पञ्चमी कार्य्या षष्ठी च फलसप्तमी । सप्तम्यनोदना वीर ! सप्तमी परिकीर्त्तिता" । खड्युता इति सिद्धार्थकादिभिः प्रकारैर्युता" । इत्येताः सप्तसप्तम्यः कर्त्तव्या भूतिमिच्छता । तथा चानुक्रमेणासां कुरुष्व कथयाम्यहम् । माघे वा मार्गशीर्षे वा कार्य्या शुक्ला तु सप्तमी । न च व्यात्रियमभ्यंशः पक्षमासकृतो भवेत्" । आर्त्तिवशादन्यस्मिन् मासे पक्षे च कार्य्यत्वम्." इत्यादि ।

सिद्धिविनायकचतुर्थीव्रतं स्कन्दपु० "गजवक्त्रन्तु शुक्लायां चतुर्थ्यां पूजयेन्नृप ! । यदा वीत्स्यन् भक्तानां पूज्यो गणाधिपः । प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप ! । स्वशक्त्या गणनाथस्य स्वर्णगौर्य्यां तथाकृतिम् । कृत्वा पूजां प्रयत्नेन स्थाप्य पश्चाद्धृतैः पृथक्" इत्यादि ।

सुकलत्रप्राप्तिव्रतं विष्णुधर्मोत्तरे "वर्षं परिसमाप्ताद्य नारीह सुखमेधते । दुःशीलेऽपि हि कामार्थी नारी प्राप्नोति भर्त्तरि । अनाहारा जगन्नाथं सर्वलोकेश्वरं हरिम् । समाप्नोति चेन्नारी सर्वलोकगुणान्वितम् । सुकलत्रयुतस्त्वाद्व्रतमच्युततुष्टिदम् । कर्त्तव्यं श्रवणं तस्य श्रूयतां वरवर्णिनि ! । यच्चीर्त्वा सर्वनारीणां श्रेयः प्राप्नोत्यसंशयम् । ऐहिकञ्च सुखं प्राप्य स्मृता स्वर्गसुखान्यपि । अनुज्ञाप्य स्वपितरौ मातरञ्च कुमारिका । पूजयेत्तु जगन्नाथं भक्त्या पापहरं हरिम् । त्रिषूत्तरेष्वथर्क्षेषु पतिकामा कुमारिका । माधवायेति वै नाम जपेन्नित्यमतन्द्रिता । प्रियङ्गुणा रक्तपुष्पैर्मधुकैः कुसुमैस्तथा । समभ्यर्च्याच्युते दद्यात् कुङ्कुमेनानुलेपनम् । सर्वौषधिभिः सुस्नाता समाराध्य जगत्पतिम् । नमोऽस्तु माधवायेति होमयेन्मधुसर्पिषा । सदैवमुत्तरायोगे समभ्यर्च्य जनार्दनम् । शोभनं पतिमाप्नोति प्रेत्य स्वर्गञ्च गच्छति । अतिबाल्ये च यत्किञ्चित् तया पापमनुष्ठितम् । तस्माद्विमुच्यते पापात् सुखिनी चैव जायते । अब्देनैकेन तन्वङ्गि ! व्रतं प्राप्य यदृच्छति । तदेव प्रा-

गुयाद्भद्रे ! नारायणपरायणा । पञ्चमासप्रोषणं कार्य्यं यथाशक्त्या च वै हरेः । पारणान्ते महाभागे ! भोजयेद् ब्राह्मणोत्तमान्" ।

सुकुलत्रिरात्रव्रतं विष्णुधर्म्मोत्तरे "त्र्यहस्पृग्दिवसं प्राप्य त्रिरात्रोपोषितो नरः । मार्गशीर्षात्तथारभ्य पूजयेत्तु त्रिविक्रमम् । त्रिवर्णैः कुसुमैर्देवं त्रिभिः प्रयतमानसः" । त्रिवर्णैः श्वेतपीतरक्तैः "त्रयोऽनुलेपना देयास्त्रिवारं धूपमेव च" । त्रिवारं गुग्गुलुकट्वङ्गश्रीवेष्टकाः "बलिं त्रिमधुरं दद्यात् त्रींश्च दीपान्नरोत्तम ! । यवैस्तिलैस्तथा होमः कर्त्तव्यः सर्षपान्वितैः । दद्यात्त्रिलोहञ्च तथा द्विजेभ्यः ताम्रं सुवर्णं रजतञ्च राजन् ! । न केवलं सुकुलदं व्रतन्तु सर्वेष्टकामाप्तिकरं प्रदिष्टम्" ।

सुकृतद्वादशीव्रतं विष्णुधर्म्मोत्तरे "तथैव द्वादशी शस्ता कृष्णा सुकृतकर्म्मणाम् । यामुपोष्य द्विजश्रेष्ठ ! न याति नरकं नरः । फाल्गुनामलपक्षस्य एकादश्यामुपोषितः द्वादश्याञ्च द्विजश्रेष्ठ ! पूजयेन्मधुसूदनम् । एकादश्यां समुत्तिष्ठन् विष्णोर्नामानुकीर्त्तनम् । पूजायां वासुदेवस्य कुर्व्वीत सुसमाहितः" ।

सुखव्रतं भविष्यपु० "कृष्णाष्टमीं तु नक्तेन यस्तु कृष्णां च सप्तमीम्" । उपवसेदिति शेषः "इहैव सुखमाप्नोति परत्र च शुभां गतिम्" । विष्णुधर्म्मोत्तरे "देवानां मानवानां वा तत्पक्षाये तथा परे । तेषां संपूजनं कृत्वा चतुर्द्दश्यां सुखी भवेत्" । भविष्यपु० चतुर्थी तु चतुर्थी तु यदाङ्गारकसंयुता । उपोष्य तत्र तत्रैव प्रदेयो विधिवत् कुजः । उपोष्य नक्तेन विभो ! चतस्रः कुजसंयुताः । चतुर्थ्यान्तु चतुर्थ्यान्तु विधानं शृणु यादृशम्" । एकचतुर्थीशब्दः तिथिविशेषवचनः, अपरस्तु संख्यापर इति "दशसौवर्णिके शक्त्या दद्यादर्द्धमथापि वा । सौवर्णपात्रे रौप्ये वा भक्त्या ताम्रमयेऽपि वा । विंशत्पलानि पात्राणि विंशत्यर्द्धपलानि च । विंशत् कर्षाणि वा वीर ! अतोहीनं न कारयेत् । शक्त्या वित्तस्य भक्त्या च पात्रे ताम्रमयेऽपि वा । प्रतिष्ठाप्य कुजपात्रे रक्तवस्त्रेण वेष्टयेत् । पुष्पमण्डपिकां कृत्वा दिव्यैर्धूपैस्तु धूपिताम् । तत्रस्थमर्च्चयेद्देवं पूर्व्वमन्त्रैः क्रमेण तु" ।

सुखप्रश्नीव्रतं विष्णुधर्म्मोत्तरे "स्त्रीणां पूजनं कृत्वा भक्त्या सुखमवाप्नुयात्" ।

सुखसुप्तिव्रतं आदित्यपु० "अमावास्यान्तु देवाश्च कार्त्तिके मासि केशवम् । अभयं प्राप्य सुप्तास्तु सुखार्त्ताः क्षीरोदसानुषु । लक्ष्मीर्दैत्यभयान्मुक्ता सुखं सुप्ता भुजोदरे । चतुर्भुजस्य हस्तान्ते ब्रह्मा सुप्तस्तु पङ्कजे । अतोऽर्थं विधिवत् कार्य्या मनुष्यैः सुखसुप्तिका । दिवा तत्र न भोक्तव्यमृते बालातुरान् जनान् । प्रदोषसमये लक्ष्मीं पूजयित्वा ततः क्रमात् । दीपवृक्षाश्च दातव्याः शक्त्या देवगृहेषु च । चतुष्पथे श्मशानेषु नदीपर्व्वतवेश्मसु । वृक्षमूलेषु गोष्ठेषु चत्वरेषु गुहासु च । वस्त्रैः पुष्पैः शोभितव्याः क्रयविक्रयभूमयः । दीपमालापरिक्षिप्ते प्रदेशे तदनन्तरम् । ब्राह्मणान् भोजयित्वादौ विभज्य च बुभुक्षितान् । अलङ्कृतेन भोक्तव्यं नववस्त्रोपशोभिना । स्निग्धैर्मुग्धैर्विदग्धैश्च बान्धवैर्निष्टतैः सह । शङ्करस्तु पुरा द्यूतं ससर्ज सुमनोहरम् । कार्त्तिके शुक्लपक्षे तु प्रथमेऽहनि सुव्रत ! । जितश्च शङ्करस्तत्र जयं लेभे च पार्व्वती । अतोऽर्थं शङ्करो दुःखी उमा नित्यं सुखोषिता । तस्माद् द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः । तस्मिन् भवेज्जयो यस्य तस्य संवत्सरं शुभम् । पराजये विरुद्धन्तु लब्धनाशस्ततो भवेत् । श्रोतव्यं गीतवाद्यादि स्वनुलिप्तैः स्वलङ्कृतैः । विशेषवच्च भोक्तव्यं प्रशस्तैर्बान्धवैः सह । तस्यां निशायां कर्त्तव्यं शय्यास्थानं सुशोभनम् । गन्धपुष्पैस्तथा वस्त्रै रत्नैर्माल्यैरलङ्कृतम् । दीपमालापरिक्षिप्तं तथा धूपेन धूपितम् । दयिताभिश्च सहितैर्नेया सा च भवेन्निशा । नवैर्वस्त्रैश्च संपूज्य द्विजसम्बन्धिबान्धवान्" इत्यादि ।

सुगतिव्रतं पद्मपु० "नक्ताशी त्वष्टमीषु स्याद् वत्सरान्ते तु गोप्रदः । पौरन्दरपदं याति सुगतिव्रतमुच्यते" ।

सुगतिद्वादशीव्रतं विष्णुधर्म्मोत्तरे "एकादश्यां शुक्लपक्षे फाल्गुने मासि यो नरः । जपन् कृष्णेति देवस्य नाम भक्त्या पुनः पुनः । देवार्च्चनं वाष्टशतं कृत्वैतत्तु जपेच्छुचिः । स्नाने प्रस्थानकाले च उत्थाने स्खलिते क्षुते । पाषण्डान् ! पतितांश्चैव तथैवान्त्यावसायिनः । नालपेत्तु तथा देवमर्च्चयेच्छ्रद्धयान्वितः । इदञ्चोदाहरेत् मन्त्रं मनसाधाय तत्परः । चैत्रवैशाखयोश्चैवं तद्वज्ज्यैष्ठे च पूजयेत् । मर्त्त्यलोके गतिं श्रेष्ठां दाल्भ्य ! प्राप्नोति वै नरः । उत्क्रान्तिकाले कृष्णस्य स्मरणञ्च तथाप्नुयात् । आषाढ़े श्रावणे चैव मासि भाद्रपदे तथा । तथैवाश्वयुजे देवमनेन विधिना नरः । उपोष्य संपूज्य तथा

केशवेति च कीर्त्तयेत् । गोमूत्रप्राशनात् पूतः स्वर्गलोके महीयते । आराधितस्य जगतामीश्वरस्य महात्मनः । उत्क्रान्तिकाले स्मरणं केशवस्य तथाप्नुयात् । क्षीरस्य प्राशनं श्रेष्ठं विधिनेदं यथोदितम् । कार्त्तिकादि यथान्यायं कुर्य्यान्मासचतुष्टयम् । तेनैव विधिना ब्रह्मन् ! तत्र विष्णुं प्रकीर्त्तयेत् । स याति विष्णुसालोक्यं विष्णुं स्मरति तत्क्षये । प्रतिमासं द्विजातिभ्यो दद्याद्दानं यथेच्छया । सुगतिद्वादशीमेतां श्रद्दधानस्य यो नरः । उपोष्येति तथा नारी प्राप्नोति त्रिविधां गतिम्" ।

सुजन्मद्वादशीव्रतं विष्णुधर्मोत्तरे "पौषे मासि सिते पक्षे द्वादश्यां शक्रदैवते । नक्षत्रयोगगे विष्णुं प्रथमं तु समर्च्चयेत् । ततः प्रभृति विप्रेन्द्र ! मासि मासि जनार्दनम् । उपोषितः पूजयेत यावत् संवत्सरं गतम् । मासे च मासे विधिनोदितेन तस्यां तिथौ दानमिति ब्रवीमि । प्राश्यं यथावद्विधिवत् क्रमेण तदुच्यमानं निखिलं निबोध । घृतं तथा व्रीहियवं हिरण्यं यवाद्ममन्नप्रमाणकाभ्यपानम् । छत्रं पयोऽन्नं गुड़फाणिताद्यं सुचन्दनं वस्त्रमनुक्रमेण । एकैकमासोक्तमथैकदानं गोमूत्रमम्भो घृतमामशाकम् । दुग्धं दधिव्रीहियवं तिलांश्च सूर्य्यांशुतप्तं जलमम्बु दार्भम्" ।

सुजन्मावाप्तिव्रतं विष्णुधर्मोत्तरे "मेषसंक्रमणे भानोः सोपवासो नरोत्तम ! । पूजयेद्भार्गवं देवं रामं शक्त्या यथाविधि । वृषसंक्रमणे प्राप्ते तथा कृष्णञ्च पूजयेत् । तथा मिथुनसंक्रान्तौ पूजयेद्गोपशायिनम् । तथा कुलीरसंक्रान्तौ वराहमपराजितम् । नरसिंहं तथा देवं सिंहसंक्रमणे विभुम् । कन्यासंक्रमणे देवं तथाश्वशिरसं यजेत् । तुलासंक्रमणे कूर्मं पूजयेत् भक्तिभावतः । अलिसंक्रमणे कल्किं देवं संपूजयेत् नरः । धनुःसंक्रमणे बुद्धं देवमभ्यर्चयेत् बुधः । तथा मकरसंक्रान्तौ रामं दशरथात्मजम् । कुम्भसंक्रमणे राजन् ! रामं यादवनन्दनम् । मीनसंक्रमणे मत्स्यं वासुदेवन्तु पूजयेत् । पटे वा यदि वार्च्चायां गन्धमाल्यान्नसम्पदा । प्रादुर्भावस्य नाम्ना च होमं कुर्वीत पार्थिव ! । व्रतान्ते जलधेनुन्तु कलोपानत्समन्विताम् । वस्त्रयुग्मयुतां दद्यात् प्रतिमासं सकाञ्चनाम् । रात्रौ तु दीपमालाभिर्देवदेवं प्रपूजयेत् । कृत्वा व्रतं वत्सरमेतदिष्टं म्लेच्छेषु तिर्य्यक्षु न चापि जन्म । प्राप्नोत्यवाप्नोति चिरञ्च नाकं कामन्तथाप्नोति मनोऽभिरामम्" ।

सुदर्शनषष्ठीव्रतं गरुड़पु० "अथ षष्ठ्यान्तु राजन्यः समुपोष्य यथाविधि । चक्राब्जमण्डलं कृत्वा कर्णिकायां सुदर्शनम् । दलेषु लोकपालानामायुधानि समर्च्चयेत्" । चक्राब्जं चक्रनाभिघटिताब्जम् । "स्वान्यायुधानि पुरतः प्रतिष्ठाप्य प्रपूजकः । रक्तचन्दनसिद्धार्थरक्तपद्माङ्कुरैरपि । रक्तवस्त्रैः सुगन्धाद्यैर्भूषणादिभिरर्च्चयेत्" इत्यादि ।

सुनामद्वादशीव्रतं वह्निपु० "शृणुष्वैकमना भूप ! सुनामद्वादशी शुभा । सर्वपापहरा रम्या भुक्तिमुक्तिप्रदायिका । मनसा च चिकीर्षन्ति द्वादशीं ये नरोत्तमाः । तेऽपि घोरं न पश्यन्ति पुनः संसारसागरम् । आद्यं सर्वव्रतानां तु वैष्णवानां नृपोत्तम ! । नरैरिदमिह कर्त्तव्यं विष्णोस्तुष्टिकरं परम् । मार्गशीर्षे शुभे मासि शुक्लपक्षे यतव्रतः । प्रथमञ्चैव गृह्णीयाद् द्वादशीं विधिवन्नरः । मनोवाक्कायचेष्टाभिः सुविशुद्धो जितेन्द्रियः । दशम्यां नियतः स्नात्वा प्रणिपत्य जनार्दनम् । हविष्यान्नकृताहारः स्थण्डिलशायी भवेद्व्रती । उपविष्टे शुचौ देशे भक्षयेद्दन्तधावनम् । उपोष्यैकादशीं सम्यक् पूजयित्वा जनार्दनम् । सुनामद्वादशीं देव ! अहं भोक्ष्ये परेऽहनि । एवं सङ्कल्प्य नियमं प्रणम्य गरुड़ध्वजम् । दशम्यामेकभक्ताशी संयतः संवसेन्निशाम् । एकादश्यां ततः प्रातरेकचित्तः समाहितः । पूर्वं संपूजयेत् सूर्यं ततो देवं प्रपूजयेत्" वर्षसाध्यमिदम् ।

सुरूपद्वादशीव्रतम् उमामहेश्वरसंवादे "पौषमासं तु संप्राप्य पुष्यर्क्षे तु सुपोषयेत् । तस्यां रात्रौ संयतात्मा ध्यात्वा विष्णुं सनातनम् । श्वेता गौरेकवर्णा च तस्या ग्राह्यञ्च गोमयम् । अन्तरिक्षात् प्रपतितं शुचिभिर्नमवास्थितः । तस्याः कृत्वाऽऽहुतीनाञ्च शतमष्टोत्तरं तिलैः । प्रतीच्यैकादशीं कृष्णामुपवासपरायणैः । भाव्यं नियमसंयुक्तैर्विशेषात् संयतात्मभिः । स्नात्वा नद्यां तड़ागे वा विष्णुमेवाथ चिन्तयेत् । सौवर्णकं हरिं कृत्वा रौप्यं वासः स्वशक्तितः । तिलपात्रोपरिस्थे च न्यसेत् कुम्भे सुरूपके" इत्यादि । "एवं यः कुरुते देवि ! सुरूपद्वादशीव्रतम् । नरो वा यदि वा नारी तस्य पुण्यं शृणुष्व मे । दौर्भाग्यं नश्यते तस्य अपि जन्मान्तरार्जितम् । अपि भुव्यस्य सम्पर्को जायते कारणान्तरात् । तस्यापि न भवेद्दुःखं वैरूप्यं तस्य जन्मनि" ।

सूर्यव्रतं विष्णुधर्मोत्तरे "शिरसोवपनं कृत्वा योऽर्च्चयेत

दिवाकरम् । तपनस्तोषमायाति वह्निष्टोमञ्च विन्दति । अपूपैः सगुडैर्भक्त्या तथा लवणपाचितैः । सहिरण्यैः समभ्यर्च्च्य वह्निष्टोमफलं लभेत् । सूर्य्याह्नि यस्तु नक्ताशी संपूजयति भास्करम् । इष्टान् कामानवाप्नोति सूर्य्य-लोकञ्च गच्छति" । कालोत्तरे "आश्विन्यादित्यवारे तु यदि शुक्ला चतुर्द्दशी । स्नानं विशेषतः कार्य्यं शिवस्य परमात्मनः । अङ्गरागं रोचनया रक्तपुष्पैः प्रपूजयेत् । कपिलाज्यं तथा क्षीरं नैवेद्यं परिकल्पयेत्" । पद्मपु० "माघमास्युषसि स्नानं कृत्वा दम्पत्यमर्च्चयेत् । भोजयित्वा यथाशक्त्या माल्यवस्त्रविभूषणैः । सौभाग्यप्रदमाप्नोति श-रीरारोग्यमुत्तमम् । सूर्य्यलोकप्रदं नूनं सूर्य्यव्रतमिदं स्मृतम्" । भविष्यपु० "कृत्वैकभक्तं हेमन्ते माघमास-मतन्द्रितः । मासान्ते च रथं कुर्य्याच्चित्रवस्त्रोपशोभि-तम् । श्वेतैश्चतुर्भिर्युक्तन्तु तुरगैः समलङ्कृतम् । श्वेत ध्वजपताकाभिः छत्रचामरदर्पणम् । तण्डुलाढकपिष्टेन कृत्वा भानुं नराधिप ! । विन्यस्य तं रथस्थं संज्ञया सह भूपते ! तं रात्रौ राजमार्गेण शङ्खभेर्य्यादिभिः स्वनैः । भ्रामयित्वा शनैः पश्चात् सूर्य्यायतनमानयेत् । तत्र चाशु-रुपिष्टेन प्रदीपाद्युपशोभितम् । प्रेक्षणीयप्रदानैश्च च-षयित्वा शनैः शनैः । प्रभाते स्नपनं कृत्वा पयसा वा घृतेन वा । दीनान्धकृपणानाञ्च यथाशक्त्या च दक्षि-णाम् । रथं संवाहनोपेतं भास्कराय निवेदयेत् । भुक्त्वा च ब्राह्मणैः सार्द्धं प्रणम्यार्कं स्वकं व्रजेत्" । सौर-धर्म्मोत्तरे "शृणु राजन् ! प्रवक्ष्यामि वहुशं व्रतमुत्तमम् । सर्व्वकामप्रदं पुंसां कुष्ठादिव्याधिनाशनम् । भानोस्तुष्टि-करं राजन् ! भुक्तिमुक्तिप्रदायकम् । तस्य देवस्य व-क्ष्यामि व्रत राजन् ! सविस्तरम् । पूजार्घ्यप्राशनं दानं नैवेद्यं शृणु तत्त्वतः । सर्व्वतीर्थेषु यत् पुण्यं सर्व्वयज्ञेषु यत्फलम् । सर्व्वदानेन तपसा यत् पुण्यं सम-वाप्यते । प्रातःस्नानेन यत् पुण्यं यत् पुण्यं रविवासरे । मार्गशीर्षादिमासेषु द्वादशस्वपि भूपते ! । सूर्य्यव्रतं करि-ष्यामि यावदर्षं दिवाकर ! । व्रतं संपूर्णतां यातु त्वत्-प्रसादात् प्रभाकर !" इत्यादि ।

सूर्य्यनक्तव्रतं मत्स्यपु० "तस्मादादित्यवारेण सदा नक्ताशनो भवेत् । यदा हस्तेन संयुक्तमादित्यस्य च वासरम् । उत्पद्यते यदा भक्तिर्भानोरुपरि शाश्वती । तदादित्य-दिने कुर्य्यादेकभक्तं विमत्सरः । तदारभ्य सदा कार्य्यं नक्तमादित्यवासरे । नक्तमादित्यवारेण भोजयित्वा द्वि-जोत्तमान् । ततोऽस्तसमये भानो रक्तचन्दनपङ्कजम् । विलिख्य द्वादशदलं पूज्य सूर्य्येति पूर्व्वतः" । "इत्यनेन विधानेन वर्षमेकन्तु यो नरः । नक्तमादित्यवारेण कु-र्य्यात् स नीरुजो भवेत् । धनधान्यसमायुक्तः पुत्रपौत्र-समन्वितः । मर्त्त्ये स्थित्वा चिरं कालं सूर्य्यलोकमवा-प्नुयात्" ।

सूर्य्यषष्ठीव्रतं भविष्योत्तरे "मासि भाद्रपदे शुक्ले एकभक्ता-शनो भवेत् । दन्तधावनपूर्व्वन्तु षष्ठ्यामुपवसेन्नरः । गौ-रसर्षपकल्केन स्नायात् कायविशुद्धये । रोचनाक्षण-गोमूत्रमुस्ताचन्दनगोशकृत् । दधिकालागुरुञ्चैव ललाटे तिलकं न्यसेत् । शिलारक्तदलैश्चैव सौभाग्यारोग्यहेत-यतः । स्रजं कुङ्कुमताम्बूलं सिन्दूरं रक्तवाससी । वितरेत् सोपवासा हि नारी मङ्गल्यवर्द्धनम् । विधवा तु विरक्तानि कुमारी शुक्लवाससी । ततः स्वभवने भानुं पूजयेत् शीतलोदकैः । अपराह्णे ततः स्नात्वा सुमौनी नियतव्रतः । प्रतिमां स्नपयेद्भानोः पञ्चगव्येन वा-रिणा । रक्तचन्दनपङ्केन कुङ्कुमेन समालभेत् । अग-स्त्यकुसुमैरक्तैः करवीरैः प्रपूजयेत्" ।

सूर्य्यसप्तमीव्रतं विष्णुधर्म्मोत्तरे "चैत्रे शुक्लस्य पक्षे तु स-म्यक् षष्ठ्यामुपोषितः । सप्तम्यामर्च्चनं कुर्य्याद्देवदेवस्य भूपते ! । वहिःस्नानं नरः कृत्वा गोमयेनोपलेपितः । लेपयेत्स्थण्डिलं सम्यक् ततो गौरसदा नृप ! । तत्राष्ट-दलकमलं वर्णकैस्तु समं लिखेत्" इत्यादि ।

सोमद्वितीयाव्रतं पद्मपु० "दद्यात्सितद्वितीयायां विम्बोलवण-भोजनम् । समाप्ते गोप्रदो याति विप्राय शिवमन्दिरम्" विप्राय विम्बोलवणभोजनं दद्यादित्यन्वयः । सोमस्यात्र देवता सोमव्रतमिदं स्मृतमिति सोमस्य देवतात्वं गम्यते । "कल्पान्ते राजराजस्य सोमव्रतमिदं स्मृतम्" ।

सोमव्रतं कालोत्तरे "चन्द्राष्टम्यां रोहिण्यां स्यात्तदा चन्द्र व्रतञ्चरेत् । शिवं सम्पूज्य विधिवत् स्नानैः पञ्चामृता-दिभिः । विलेपनन्तु चन्द्रेण चन्दनेन तु वा हितम् । शुक्लवस्त्रैस्तथा पुष्पैः पूजयेत् परमेश्वरम् । नैवेद्यं क्षीर-कुम्भन्तु सितशर्करया युतम् । प्राशनं चन्दनेनैव रात्रौ जागरणं हितम् । आयुःकामैः सदा कार्य्यं कीर्त्ति-श्रीसाधने हितम् । इति चन्द्रव्रतं नामोदारदानेन जा-यते" । कालिकापु० "वारे सोमस्य वाष्टम्यां पक्षोभौ सोम-मर्च्चयेत् । विधिना चन्द्रचूड़ाङ्क प्राज्याच्चेन सचन्द्रकम्" । पक्षोभौ अतोभयत्र पक्षे नियमोऽष्टमीसोमवारयोः संयो-

गमात विवर्चितं, प्राच्याच आत्मवत्सुत्तमम् । "दक्षिणाङ्गे चरन्त्यावेशामोर्द्धन्तु हरिं विभुम्" । इत्यादि "अष्टम्यां पितरावर्च्य विधिनानेन सुव्रत !" । पितरौ तावेव देवौदेवौ "वस्त्रान्तु तदन्ते तु कर्त्तव्यं यांचवोधत । प्रागुक्तविधिना पूज्य सितं पीतं युगद्वयम् । दद्यादितानके चैव पताकाघण्टिके तथा । धूपस्थारके चापि दोपवृक्षौ सुशोभिनौ" । भविष्यपु० "ताम्रपात्रं पयःपूर्णं कृत्वा तत्रस्थञ्च मङ्करम् । ग्रच्छाद्योपरिवस्त्रेण गन्धपुष्पार्चितं महत् । शिवभक्ते द्विजे दद्याद्भोजयित्वा विधानतः । प्राच्यां समुदिते सोमे प्रतीच्याञ्च रवौ गते । पौर्णमास्यां तु वैशाख्यां स्वर्णपात्रं शिवाय तु । प्रीयतां मे महादेवः सोममूर्त्तिर्जगत्पतिः । तस्मै विप्राय तत्पात्रमर्चयेद्भक्तितः शनैः । एवं सोमव्रतं नाम कृत्वा सोमान्तिकं व्रजेत्" ।

सोमवारव्रतं भविष्योत्तरे "तदह्नितास संप्राप्य सोमवारं विचक्षणः । नक्तोक्तविधिना सर्वं कुर्यात् पूजादिकं विभोः । सप्तमे तु ततः प्राप्ते दत्त्वा ब्राह्मणभोजनम् । कांस्यपात्रे तु संस्थाप्य सोमं रजतसम्भवम्" । सोमरूपन्तु चतुर्दशीस्यमहाराजव्रतोक्तं वेदितव्यम् "पात्रे कृत्वा सोमराजं श्वेतवस्त्रैः प्रपूजितम् । पादुकोपानहच्छत्रभाजनासनसंयुतम् । होमं घृततिलैः कुर्यात् सोमनाम्ना तु मन्त्रवित् । समिधोऽष्टोत्तरशतमष्टाविंशतिरेव वा । होतव्या मधुसर्पिभ्यां दध्ना चैव घृतेन तु" इत्यादि ।

सोमाष्टमीव्रतं स्कान्दपु० "वारे सोमस्य चाष्टम्यां पक्षयोरुभयोरपि । विधिवच्चन्द्रचूड़ाभं सोमं सम्पूजयेन्निशि" । सोमं उमासहितम् रूपन्तु कृष्णाष्टम्यामेव व्याख्यातम् । "तिलसर्षपकल्केन स्नातोऽमलजलाशये । स्वगृहे वायतने वापि शिवैकाहितमानसः । ब्रह्मकूर्चेन देवेशं प्राशयित्वा ततो व्रती" । ब्रह्मकूर्चं पञ्चगव्यम् "वामादियामन्त्रैश्च देवं देवीं तथार्चयेत् । चन्दनेनेन्दुयुक्तेन दक्षिणाङ्गं विलेपयेत्" इत्यादि ।

सौख्यव्रतं भविष्यपु० "एकादश्यां माघमासे चतुर्दश्यष्टमीषु च । एकभक्तेन यो दद्यात् चेलकाञ्चनानि च । उपानहौ कम्बलञ्च पात्रं चित्रं तथोदकम् । करपात्रादिकं वत्स ! यथाशक्त्यार्थिने नृप ! । कार्त्तवीर्यपरो नित्यमश्वमेधफलं लभेत् । एतत्सौख्यव्रतं नाम कार्त्तवीर्यकरं परम्" ।

सौगन्ध्यव्रतं पद्मपु० "वर्जयेद्यस्तु पुष्पाणि हेमन्तशिशिरे व्रती । पञ्चतयञ्च फाल्गुन्यां कृत्वा शक्त्या च काञ्चनम् । दद्याद्देकालवेलायां प्रीयेतां शिवकेशवौ । शिरः सौगन्ध्यजननं सदानन्दप्रदं नृणाम् । कृत्वा परं पदं याति सौगन्ध्यव्रतमुत्तमम्" ।

सौभाग्यतृतीयाव्रतं वराहपु० "अतःपरं महाराज ! सौभाग्यकरणं व्रतम् । शृणु येनाशु सौभाग्यं स्त्रीपुंसामभिजायते । फाल्गुनस्य तु मासस्य तृतीया शुक्लपक्षतः । उपोषितेन नक्तेन शुचिना सत्यभाषिणा । सश्रीकञ्च हरिं पूज्य रुद्रं वा उमया सह" इत्यादि । गरुड़पु० "फाल्गुनादितृतीयायां लवणं यस्तु वर्जयेत् । समाप्ते शयनं दद्यात् गृहं सोपस्करान्वितम्" । समाप्ते वत्सरान्ते "संपूज्य विप्रमिथुनं भवानी प्रीयतामिति । गौरीलोकप्रदं नित्यं सौभाग्यव्रतमुच्यते" ।

सौभाग्यव्रतं भविष्यपु० "पौर्णमास्यां तु यः सोमं पूजयेद्भक्तिमान्नरः । सौभाग्यञ्च भवेत्तस्य इति मे निश्चिता मतिः । मूलमन्त्राः स्वसंज्ञाभिरङ्गमन्त्राश्च कीर्त्तिताः" इत्यादि ।

सौभाग्यशयनव्रतं मत्स्यपु० "तथैवान्यत् प्रवक्ष्यामि सर्वकामफलप्रदम् । सौभाग्यशयनं नाम यत् पुराणविदो विदुः" । इत्युपक्रमे "वसन्तमासमासाद्य तृतीयायां जनप्रियाम् । शुक्लपक्षस्य पूर्वाह्णे तिलैः स्नानं समाचरेत् । तस्मिन्नहनि सा देवी किल विश्वात्मना सती । पाणिग्रहणकैः मन्त्रैरुद्रुढ़ा वरवर्णिनी । तया सह देवेशं तृतीयायां समर्चयेत्" इत्यादि । "एवं संवत्सरं यावत् तृतीयायां सदा मनो ! । प्राशने दानमन्त्रे च विशेषोऽयं निबोध मे । गोशृङ्गोदकमाद्यं स्यात् वैशाखे गोमयं पुनः । ज्यैष्ठे मन्दारकुसुमं बिल्वपत्रं शुचौ स्मृतम् । श्रावणे दधि सम्प्राश्य नभस्ये च कुशोदकम् । क्षीरमाश्वयुजे मासि कार्त्तिके पृषदाज्यकम्" । पृषदाज्यं दधिमिश्रं घृतम् "मार्गशीर्षे तु गोमूत्रं पौषे सम्प्राशयेद् घृतम् । माघे कृष्णतिलांस्तद्वत् पञ्चगव्यञ्च फाल्गुने । ललिता विजया भद्रा भवानी कुमुदा शिवा । वासुदेवी तथा गौरी मङ्गला कमला सती । उमा च दानकाले तु प्रीयतामिति कीर्त्तयेत् । मल्लिकाऽशोककमलकदम्बोत्पलमालतीम् । कुब्जकं करवीरञ्च वाणमम्लानकुङ्कुमम् । सिन्दुवारञ्च सर्वेषु मासेषु क्रमतः स्मृतम्" इत्यादि ।

सौभाग्यसङ्क्रान्तिव्रत स्कन्दपु० "अथान्यां प्रवक्ष्यामि सौ

सौभाग्यसंक्रान्तिमुत्तमाम् । शृणु नारद ! यत्नेन धनै-
श्वर्य्यप्रदायिनीम् । अयने विषुवे युक्ते व्यतीपातेन भा-
नुना । संक्रान्तिदिवसे कुर्य्यादेकभक्तं विमत्सरः ।
पूर्ववद्भानुमभ्यर्च्य तथा चैव सुवासिने । सौभाग्याष्टक-
संयुक्तं वस्त्रयुग्मं सयोषिते । विप्राय वेदविदुषे भक्त्या
तत् प्रतिपादयेत् । एवं संवत्सरे पूर्णे कृत्वा ब्राह्मण-
भोजनम् । पर्वतं लवणं कृत्वा यथाविभवसारतः ।
काञ्चनं कमलं कृत्वा भास्करञ्चैव कारयेत् । गन्धपुष्पा-
दिना पूज्य विप्राय प्रतिपादयेत्" ।

सौभाग्यावाप्तिव्रतं विष्णुधर्म्मोत्तरे "माघ्यान्तु समतीतायां
प्रतिपत्प्रभृतिक्रमात् । षष्ठे वा यदि वाष्टम्यां कृष्णं
संपूजयेत् सदा । पूर्व्वोक्तं सकलं कुर्य्यात् विधिं चात्र
नराधिप !" । पूर्व्वोक्तमिति चैत्रमाससम्बन्धिरूपावाप्ति-
व्रतोक्तमित्यर्थः । "नित्यं समाचरेत् स्नानं तथा गन्धप्रिय-
ङ्गुणा । चरुं प्रियङ्गुणा कुर्य्याद्धोमं कुर्य्यात् प्रियङ्गुणा" ।
प्रियङ्गुः कङ्गुरथगन्धद्रव्यम् "फाल्गुन्यान्तु ततो दद्यात्
त्रिरात्रोपोषितो नरः । वस्त्रे च देये नृप ! कुङ्कुमाक्ते
क्षौद्रस्य पात्रञ्च तथैव कांस्यम् । सौभाग्यदं ह्येतदनु-
त्तमन्ते व्रतं मयैतत्कथितं नवीर ।" ।

सौरनक्तव्रतं नृसिंहपु० "हस्तयुक्ते वार्कदिने सौरनक्तं व्रतं
चरेत् । स्नात्वाभ्यर्च्य तु विप्रान् वै विरोगो जायते
नरः" ।

सौरधर्म्मिणीव्रतं पद्मपु० "यश्चोपवासी सप्तम्यां समान्ते हेम-
पङ्कजम् । गाश्चैव शक्तितो दद्याद्धेमान्नं घटसंयुताः ।
एतत् सौरव्रतं नाम सूर्य्यलोकप्रदायकम्" ।

स्त्रीपुत्रकामावाप्तिव्रतं भविष्यपु० "एकभक्तेन या नारी
कार्त्तिकन्तु क्षपेन्नृप ! । क्षमाहिंसादिनियमैः सस्नाता
ब्रह्मचारिणी । गुडान्नमिश्रं शाल्यन्नं भास्कराय नि-
वेदयेत् । पुष्पाणि करवीराणि गुग्गुलं सास्नमादरात् ।
सप्तम्याञ्चाथ षष्ठ्यां वा उपवासरतिर्भवेत् । पत्रवीरुभयो-
रेव श्रद्धया परयान्वितः । इन्द्रनीलप्रतीकाशैर्व्विमानैः
सार्व्वकामिकैः । नारी युगशतं साग्रं सूर्य्यलोके महीय-
ते" वर्षसाध्यमिदम् ।

स्नेहव्रतं पद्मपु० "आषाढादिचतुर्म्मासानभ्यङ्गं वर्ज्जयेन्नरः ।
पारिते च पुनर्दद्यात्तिलतैलयुतं घटम् । भोजनं पायसा-
न्यश्च स याति भवनं विभोः । लोकप्रीतिकरं ह्येतत्
स्नेहव्रतमिहोच्यते" ।

स्वयञ्चक्रमीव्रतं याज्ञिहोत्रे "अपराह्णव्रताज्जातो वासरं हा

मनोजवः । उच्चैःश्रवाः पूजनीयस्तैलतुरङ्गस्य पञ्चमी ।
तत्रैव पूज्या गन्धर्वास्तुरङ्गाणान्तु बान्धवाः । पत्रवाण-
धराः केचित् केचित् पत्रैश्च संयुताः । भीमश्चित्ररथ-
श्चैव विख्यातः सर्व्वविद्यम् । तथा शालिशिराः श्री-
मान् प्रद्युम्नश्च महायशाः । नारदश्च कलिन्दश्च गन्ध-
र्वश्च हाहा हूहूः । सुबाहुस्तुम्बुरुश्चैव तथा चित्र-
रथः प्रभुः । चित्राङ्गदश्च विख्यातश्चित्रसेनश्च वीर्य्य-
वान् । सिद्धपूर्णश्च वटरी पर्णायश्च महायशाः । ब्रह्म-
चारी रतिगुणः सुपर्णोऽतिमलस्तथा । विश्वावसुः सुरे-
न्द्रश्च गन्धर्वोऽतिपराक्रमः । इत्येते पूजनीयाः स्यु-
र्गीतैश्चित्राक्षवाद्यैः शुभैः । मोदकैः पोलिकाभिश्च परमान्नेन
चाक्षतैः । दध्ना गुडेन पयसा शालिपिष्टेन भूरिशः ।
धूपैर्माल्यैस्तथा दीपैर्द्विजानां स्वस्तिवाचनैः । एवं हि
पूजिताः सम्यक् तुरगाणां हि बान्धवाः । बलमायुः
प्रयच्छन्ति संग्रामेष्वपराजयम् । आरोग्यं परमा पुष्टि-
स्तथैव च विधीयते" ।

हरतृतीयाव्रतं स्कन्दपु० "माघे शुक्लतृतीयायामुपवासन्तु
कारयेत् । रात्रौ समारभ्याहूत्य गौरीयागस्य मण्डपे ।
अथ पद्मं लिखेत् पद्मं मण्डपे मुनिपुङ्गव ! । उमा-
महेश्वरं तत्र पूजयेत् सुसमाहितः । पूर्व्वपत्रे न्यसेद्
गौरीमाग्नेय्यां ललितां न्यसेत् । दक्षिणे तु उमां नाम
नैरृत्यां च स्वधां तथा । पश्चिमे वामदेवीन्तु वायव्यां
मूलगौरिकाम् । उत्तरे तु सुभगान्तु ऐशान्यां गिरिजां
तथा । उमामहेश्वरं मध्ये गन्धपुष्पैः प्रपूजयेत् । भद्रा-
दश्चैव संस्थाप्य तण्डुलैः परिपूरयेत् । एवं कृत्वा वि-
धानेन मुने ! वर्षचतुष्टयम् । आराधनन्तु देव्याश्च सौ-
भाग्यजननं परम् । उद्यापनं ततः कुर्य्यात् तस्मिन्नेव
ततो दिने । उमामहेश्वरं हैमं स्वच्छन्दे मण्डपे स्थि-
तम् । वस्त्रैर्गन्धैश्च पूष्पैश्च दीपमालादिभिस्तथा । भक्ष्यै-
र्नानाविधैः सम्यक् पूज्य भक्त्या ततो मुने ! । तद्वच्च
सभार्य्यञ्च पूजयेत् द्विजसत्तमम् । गाञ्चैव गुरवे तद्वत्
वस्त्रालङ्कारसंयुताम् । मिथुनानीह चत्वारि भोजयेत्
सुसमाहितः । उमामहेश्वरं हैमं दत्त्वा भक्त्या क्षमा-
पयेत्" ।

हरव्रतं भविष्यपु० "षष्ठ्यां पूजितो देवो गोमूत्राभरणो
हरः । स्नानं ददाति विपुलां कान्तिं जातिं बलं तथा" ।
गोमूत्राभरणः चक्षुःश्रवोभूषः शिव इत्यर्थः । "मृत्युहा
जातदश्चैव पापहाः च प्रपूजितः । मूलमन्त्रः स्वसत्ताभि-

इत्युमन्त्राश्च कीर्त्तिताः। पूर्व्ववत् पद्मपत्रस्थः कर्त्तव्यश्च-तिर्योश्वर। गन्धपुष्पोपहारैश्च यथाशक्ति विधीयते"।

हरिव्रतं वराहपु० "त्रैलोक्यगामिनी देवी लक्ष्मीस्तेऽस्तु सदा प्रिया। द्वादशी च तिथिस्तेऽस्तु कामरूपी च जायते"। हरिं प्रतीदं वचनम् "हुताशनो भवेद् यस्तु द्वादश्यां तत्परायणः। स स्वर्गवासी भवति पुमान् स्त्री वा विशेषतः"।

हरिकालीव्रतं भविष्योत्तरे "शुक्ले भाद्रपदस्यैव तृतीयायां समाचरेत्। रत्नधान्यैः सर्व्वरूढैः कृत्वा विहितमाइले। खर्ज्जूरैर्नारिकेलैश्च फलैश्च मधुरैस्तथा। मातुलाङ्गकुसुमैर्धान्यकैर्जम्बुकैस्तथा। गन्धैः पुष्पैः फलैर्धूपैर्नैवेद्यैर्मोदकादिभिः। प्रीणयित्वा समासाद्य पद्मरागेण भाविता। अष्टावाद्यादिभिर्गीतैः शुभैर्दिव्यैः कथानकैः। पूजनीया महाराज! मन्त्रेणानेन भक्तितः। हरेर्मिन्नः कलुषघ्ने! हरिकालि! हरिप्रिये!! सर्व्वदा सर्व्वमूर्त्तिस्थे! प्रव्रतार्त्तिहरे! नमः। इत्थं संपूज्य तां देवीं दद्याद्विप्राय दक्षिणाम्। कृत्वा जागरणं रात्रौ प्रभाते किञ्चिदुद्गते। रात्रौ सुवासिनीभिश्च सा नेया तु जलाशये। ततो जलाशये रम्ये मन्त्रेणैव विसर्ज्जयेत्। अर्च्चिता च मया भक्त्या गच्छ देवि! सुरालयम्। मम सौभाग्यनाशाय पुनरागमनाय च। एवं सः पाण्डवश्रेष्ठ! हरिकालीव्रतं चरेत्। प्रतिवर्षं विधानेन नारी वा भक्तितत्परा। नीत्वा यत् फलमाप्नोति तदन्येन न लभ्यते"।

## परिशिष्टम्।

आमलकैकादशीव्रतं स्कन्दपु० प्रभासख० "फाल्गुनस्य सिते पक्षे एकादश्यामुपोषितः। स्नात्वा नद्यां तडागे वा वाप्यां कूपे स्थलेऽपि वा। गत्वा मिरौ वने वापि यत्र सा प्राप्यते शिवा। क्षीरोदे मथ्यमाने तु यदा दृक्षः समुत्थितः। आमर्दन्त्देवदैत्यानां तेन सामलकी स्मृता। तस्मिन् दृक्षे स्थिता लक्ष्मीः सदा पितृस्रेहे नृप!। शिवालक्ष्मीस्थितो दृक्षः सेव्यते सुरसत्तमैः। देवैर्ब्रह्मादिभिः सर्व्वैर्योऽसौ वेष्णवः कृतः। तत्र गत्वा हरिः पूज्यो दृक्षमूलेऽथ वा शिवा। पूज्या पुष्पैः शुभैरात्रौ कार्यं जागरणं नरैः। अष्टाधिकशतैः कार्या फलेकलशाः प्रदक्षिणा। प्रदक्षिणीकृत्य ततो भोक्तव्यं तु फलं नरैः। करकं जलपूर्णं तु कर्त्तव्यं पात्रसंयुतम्। हर्त्तव्याश्चानु कर्त्तव्यं कथाश्रवणतत्परैः। दृश्यन्ते देहिनः पापैः कलिजैः कायसम्भवैः। देहान्ते ये नराः पूर्वं पूज्यन्ते हरिमन्दिरम्"।

एतानि व्रतानि प्रायेण हेमाद्रिव्रतखण्डोक्तानि प्रसङ्गागतान्यपि कानिचिदुक्तानि। अन्यान्यपि व्रताकांटादुक्तानि द्रष्टव्यानि नैमित्तिकानि प्राजापत्यादीनि व्रतानि तु तत्तच्छब्दे उक्तानि द्रष्टव्यानि। [२विस्तारे च अमर०।

**व्रतति** स्त्री व्रत—अति पृषो० वा ङीप्। १लतायाम्।

**व्रतभिक्षा** स्त्री व्रताङ्गं भिक्षा। उपनयनकालविहितभिक्षायां तद्विधिः संस्कारतत्त्वे दर्शितो यथा "अथ भैक्ष्यञ्चरति"। अथ शब्दस्तूष्णीमादित्योपस्थानमग्निप्रदक्षिणस्य ग्रंसति। "प्रतिष्ठत्स्योपस्थितं दण्डमुपस्थाय च भास्करम्। प्रदक्षिणं परीत्याग्निं चरेद्भैक्ष्यं यथाविधि" इति मनुवचनात्। "भिक्षासमूहं भैक्ष्यं तच्चरति आहरति इत्यर्थः। "मातरमेवाग्रे ये चान्ये सुहृदो यावन्तो वा सन्निहिताः स्युः"। याचते इत्यध्याहार्य्यम्। सुहृदः स्निग्धहृदयः स्वसादयः तथाच मनुः "मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्। भिक्षेत भिक्षां प्रथमं याचैनं नावमानयेत्"। सन्निहितासद्देशस्थाः न तु प्रतिस्थहं गत्वा। (भवति! भिक्षां देहीति) ब्राह्मणभिक्षा प्रयोगः। तथा च मनुः "भवत्पूर्वं चरेद् भैक्ष्यमुपनीतो द्विजोत्तमः। भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम्"। "आदिमध्यावसानेषु भवच्छब्दोपलक्षिता। ब्राह्मणक्षत्रियविशां भैक्ष्यचर्य्या यथाक्रमम्" इति याज्ञवल्क्यवचनाच्च। आचार्य्याय भैक्ष्यं प्रतिपाद्य वेदयति (समर्पयति) भोरिति"। "आचार्य्याय निवेद्य प्रतिष्ठेयात्" इति स्मृत्यन्तरवचनात्। भैक्ष्यं भोरिति निवेदनमन्त्रः। भैक्ष्यस्य संस्कारार्थत्वात् आचार्य्याय निवेद्य स्वयं तदेव भुञ्जीत। तथा च मनुः "समाहृत्याथ तद्भैक्ष्यं यावदन्नममायया। निवेद्य गुरवेऽश्नीयात् आचार्य्यः प्राङ्मुखः शुचिः"। आचार्य्यस्तु माणवकाय भैक्ष्यं प्रदाय कर्मशेषं समापयेत्"।

**व्रतसंग्रह** पु० ६त०। व्रतग्रहणार्थं कृतदीक्षायाम्। हेमच०

**व्रतादेश** पु० व्रतमादिश्यतेऽत्र आ+दिश आधारे ल्युट्। उपनयने तत्र हि आचार्य्येण माणवकस्य व्रतमादिश्यते।

**व्रतिन्** पु० व्रतमस्त्यस्य इनि। १व्रतधारके २यजमाने च। अमरः।

**व्रश्च** छेदे तु०पर०सक०जादित् वेट् । वृश्चति अव्रश्चीत् अव्राक्षीत् ।

**व्रश्चन** पु० वृश्च्यतेऽनेन व्रश्च-ल्यु । (छेनि) १स्वर्णादिच्छेदनार्थे अस्त्रभेदे अमरः । भावे ल्युट् । २छेदने न० अमरः ।

**व्रात** पु० वृ-अतच् पृषो० । समूहे अमरः ।

**व्रातीन** त्रि० व्रातेन चरति ख । संघजीविनि । "व्रातीनव्यालदीप्रास्त्रः" भट्टिः ।

**व्रात्य** पु० व्रातात् समूहात् च्यवति यत् । अध्ययनाद्यर्थे, संस्कारहीने, जातिमात्रोपजीविनि, "अत ऊर्द्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः । सावित्रीपतिता व्रात्या भवन्त्यार्य्यविगर्हिताः" मनुः । तत्र प्रायश्चित्त' मिता०उक्तं यथा तत्र व्रात्यतायां मनुनेदमुक्तम् "येषां द्विजानां सावित्री नानूच्येत यथाविधि । तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेदिति" । यत्तु यमेनोक्तम् "सावित्रीपतिता यस्य दश वर्षाणि पञ्च च । सशिखं वपनं कृत्वा व्रतं कुर्य्यात् समाहितः । एकविंशतिरात्रञ्च पिबेत् प्रसृतियावकम् । हविषा भोजयेच्चैव ब्राह्मणान् सप्त पञ्च वा । ततो यावकशुद्धस्य तस्योपनयनं स्मृतम्" इति । तदुभयमपि याज्ञवल्कीयमासपयोव्रतविषयम् । यत्तु वशिष्ठेनोक्तम् "पतितसावित्रीक उद्दालकव्रतञ्चरेत् । द्वौ मासौ यावकेन वर्त्तयेन्मासं पयसा पक्षमामिक्षयाष्टरात्रं घृतेन षड्रात्रमयाचितेन त्रिरात्रमब्भक्षोऽहोरात्रमुपवसेदश्वमेधावभृथगच्छेद्व्रात्यस्तोमेन वा यजेतेति" । तत्रेयं व्यवस्था यस्योपनयने आपद्भावेन तत्कालातिक्रमस्तस्य याज्ञवल्कीयव्रतानामन्यतमत् शक्त्यपेक्षया भवति अनापद्यतिक्रमे तु मानवं त्रैमासिकम् । तत्रैव पञ्चदशवर्षादूर्द्ध्वमपि कियत्कालातिक्रमे उद्दालकव्रतम् व्रात्यस्तोमो वेति । येषान्तु पितादयोऽप्यनुपनीतास्तेषामापस्तम्बोक्तम् "यस्य पिता पितामहावनुपनीतौ स्यातान्तस्य संवत्सरं त्रैविद्यकं ब्रह्मचर्य्यम् । यस्य प्रपितामहादेर्नानुस्मर्यते उपनयनन्तस्य द्वादश वर्षाणि त्रैविद्यकं ब्रह्मचर्य्यमिति" ।

**व्रात्यस्तोम** पु० व्रात्ययोग्यः स्तोमः । यज्ञभेदे "स च यज्ञश्चतुर्विधः" कात्या० श्रौ० २२।४।१ सूत्रादौ दर्शितो यथा

"व्रात्यस्तोमाश्चत्वारः" सू० "व्रात्यस्तोमसंज्ञकाश्चत्वारः क्रतवो भवन्ति व्रात्याः प्रसिद्धा एव त्रिपुरुषं पतितसावित्रीकाः । प्रायश्चित्तार्थत्वाच्च लौकिकेऽग्नौ भवन्ति न ह्याहिताग्नेराधानं प्रयुज्यते अतदङ्गत्वात् तदुक्तमाचार्य्येण स्मपतौष्टिं प्रकृत्य लौकिक इति । "द्वितीय उक्थ्यः" सू० "व्रात्यगणस्य ये सम्पादयेयुस्ते प्रथमेन यजेरन्" सू० सम्पादनं च गायननर्त्तकादीनाम् तेषां प्रथमेऽधिकारः । ये व्रात्या नृत्यगीतवाद्यशस्त्रधारणादौ स्वयं प्रवीणाः सन्त उपदेष्टारो भूत्वा स्वां विद्यां व्रात्यसमूहस्य सम्पादयेयुः शिक्षयेयुः पाठयेयुः ते प्रथमेन यजेरन् । "द्वितीयेन निन्दिता नृशंसाः" सू० । नृशंसत्वेन ये निन्दितास्तेषां द्वितीयेऽधिकारः" सं० । ये नृशंसा निन्दितान्नृभिर्मनुष्यैरभिशंसनेन पापाध्यारोपणेन निन्दिताः गर्हिताः ज्ञातिभिर्वहिष्कृताः ते द्वितीयेन यजेरन्" कर्कः "तृतीयेन कनिष्ठाः" सू० कनिष्ठाः लघवः । "ज्येष्ठाश्चतुर्थेन" सू० अधिक्रियन्ते । ज्येष्ठशब्दार्थमाह "अपेतप्रजननाश्चिरात्तदाख्यास्तेषां ये नृशंसतमः स्याद्दूव्यवत्तमो वानूचानतमो वा तस्य गार्हपत्ये दीक्षेरन्" सू० । "स गृहपतिः कर्त्तव्यः" सं० । अपगतप्रजननेन्द्रियसामर्थ्या यौवनापगमे । निर्वीर्य्यप्रजनाः स्थविरा वृद्धास्तदाख्याः । नृशंसतमः अत्यन्तं क्रूरकर्मा" भा० । [अव्रैषीत् ।

**व्री** वृतौ क्र्या० प्वा० पर० सक० अनिट् । व्रि(व्री)णाति

**व्री** गतौ दिवा० आ०सक० अनिट् । व्रीयते अव्रेष्ट । ओदित् व्रीणः । [अव्रीडिष्ट ।

**व्रीड़** क्षेपे दिवा० पर० सक० लज्जायां अक० सेट् । व्रीड्यते

**व्रीड़** पु०व्रीड्-घञ् । लज्जायाम् । अ । तत्रैव स्त्री अमरः ।

**व्रीस** वधे वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । व्रीसयति ते व्रीसति ।

**व्रीहि** पु० व्री-हि किच्च । १धान्यभेदे २आशुधान्ये च अमरः । तद्भेदादिकं भावप्र० उक्तं यथा

"वार्षिकाः कथिताः शुक्लाः व्रीहयश्चिरपाकिणः । कृष्णव्रीहिः पाटलश्च कुक्कुटाण्डक इत्यपि । शालामुखो जतुमुख इत्याद्याः व्रीहयः स्मृताः । कृष्णव्रीहिः स विज्ञेयो यः कृष्णतुषतण्डुलः । पाटलः पाटलापुष्पवर्णको व्रीहिरुच्यते । कुक्कुटाण्डाकृतिर्व्रीहिः कुक्कुटाण्डक उच्यते । शालामुखः कृष्णशूकः कृष्णतण्डुल उच्यते । लाक्षावर्णं मुखं यस्य ज्ञेयो जतुमुखस्तु सः । व्रीहयः कथिताः पाके मधुरा वीर्य्यतो हिताः । अल्पाभिष्यन्दिनो बद्धवर्चस्काः षष्टिकैः समाः । कृष्णव्रीहिर्वरस्तेषां तस्मादल्पगुणाः परे" । ततः अस्त्यर्थे व्रीह्या० इनिठनौ । व्रीहिन् व्रीहिक तद्विशिष्टे त्रि० बिल्वा० इराउ षष्ठिके अवयवार्थे अण् । व्रैह तदवयवे ।

विजयाभिनन्दनादयस्तयो भविष्यन्ति । तथा हि कलौ षट् शककर्त्तारः तत्रत्यपादि ज्योतिर्वि० १०अ० उक्तं यथा “कलौ भविष्यन्त्यथ भारतावनौ महीभुजो बाहुहतोऽप्यनेकशः । शकास्तथैषामभिषेचनादिकं हितं सदोदीरितकालसाधितम् । धराविभूर्भिन्नशकादिजातिजस्तदासनस्थोऽभिजनैर्नमस्कृतः । स्तुतः स राजाधिजनैः प्रतिष्ठितो न मन्त्रभेदाद्यभिषेचनोचितः । निहन्ति यो भूतलमण्डले शकान् सपक्षकोट्यब्दगणप्रमान् कलौ । स राजपुत्रः शककारको भवेत् नृपाधिराज्ये हि तथाककर्तृ हा” । (तत्र शककारकस्य विक्रमादित्यस्य हननात् शालिवाहनस्य शककर्तृत्वम्) “युधिष्ठिरो विक्रमशालिवाहनौ नराधिनाथौ विजयाभिनन्दनः । इमेऽनु नागार्जुनमेदिनीविभुर्बलिः क्रमात् षट् शककारकाः कलौ”। तत्प्रवृत्तिकालांस्तत्राह “युधिष्ठिरात् वेदयुगाम्बराग्नयः (३०४४) कलम्बविश्वे (१३५) ऽथखखाष्टभूमयः १८००० । ततोऽयुतं १०००० लक्षचतुष्टयं क्रमात् धराद्दगष्टाविति (८२१) शाकवत्सराः । युधिष्ठिरोऽभूत् हि हस्तिनापुरे तथोज्जयिन्यां पुरि विक्रमाह्वयः । शालेयभूमौ प्रति शालिवाहनः सुचित्रकूटे विजयाभिनन्दनः । नागार्जुनो रोहितके क्षितौ बलिर्भविष्यतीन्द्रो भृगुकच्छपत्तने । शकप्रवृत्तिस्त्वदनन्तरं भवेत्तदा भविष्यन्त्यवनीभृतोऽङ्कितः” । अत्र युधिष्ठिरात् प्राक् कलौ शककर्त्रन्तराभावात् कलियुगारम्भकालादेव तस्य शककाल उक्तः वराहसंहितायां १३ अ० तु तद्राज्यावधित एव तच्छककाल इत्यभिप्रायेण “आसन् मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ । षड्द्विकपञ्चद्वियुतः (२५२६) शककालस्तस्य राज्ञश्च” तेन कलेः (५१८) वर्षेषु गतेषु युधिष्ठिरस्य राज्यप्रवृत्तिः। षट् कर्त्तृवत्सरसमष्टिः इति न कलिमानसंख्याविरोधः अतएव ज्योतिर्विदाभरणग्रन्थे ग्रन्थकृतैव “वर्षैः सिन्धुरदर्शनाम्बरगुणैर्याते कलौ सम्मिते” इति कलियुगस्यैव ३०६८ वर्षेषु गतेषु ग्रन्थकरणमुक्तम् ।

| | |
|---|---|
| युधि० | ३०४४ |
| विक्र० | १३५ |
| शालि० | १८००० |
| विजया० | १०००० |
| नागा० | ४००००० |
| बलि० | ८२१ |
| | ४३२००० |

**शकट** पु० न० शक–अटन् । १यानभेदे (गाड़ि) अमरः । २असुराधिष्ठिते नन्दालयस्थे शकटविशेषे शकटभञ्जनः कृष्णः । ३द्विसहस्रपलपरिमाणे हेमच० । स्वार्थे ङीप् । अल्पशकटे स्वार्थे क । शकटिका तत्रैव स्त्री ।

**शकटहन्** पु० शकटमसुराधिष्ठितशकटभेदं हतवान् हन–भूते क्विप् । श्रीकृष्णे तत्कथा हरिवं० ६२अ० ।

**शकटाह्वा** स्त्री शकटाकारत्वात् तदाह्वा यस्याः । रोहिणीनक्षत्रे तस्याः शकटाकारचतुस्ताराात्मकत्वेन तथात्वम् ।

**शकन्धु** पु० ६त० शकन्ध्वा० । पररूपनिपातः शकानां कूपे ।

**शकल** पु० न० शक–कलक् । १खण्डे २एकभागे । ३त्वचि ४वल्कले मेदि० ५शल्के (आँस) च न० ।

**शकलिन्** पु० शकलं शल्कमस्यास्ति इनि । मत्स्ये अमरः ।

**शकाब्द** पु० शककर्तृनृपसंबन्धी अब्दः । १शकप्रवर्त्तकनृपराज्यावधिवत्सरे २तत्संख्यायाञ्च ।

**शकार** पु० “मदमूर्खताभिमानी दुष्कुलतैश्वर्य्यसंयुक्तः । सोऽयमनूढाभ्राता राज्ञः श्यालः शकार उद्दिष्टः” सा०द० उक्तलक्षणे १राज्ञोऽनूढभार्य्याभ्रातरि । श+स्वरूपे–कार । शस्वरूपे २वर्णे च ।

**शकारि** पु० शकानां म्लेच्छजातिभेदानामरिः । विक्रमादित्ये

**शकुन** न० शक–उनन् । १शुभाशुभसूचकनिमित्ते–बाहुस्पन्दनकाकादिदर्शनादौ । दुःशकुनशब्दे ३६१पृ० दृश्यम् २पक्षिमात्रे ३पक्षिभेदे स्त्रियां च पुंस्त्री० मेदि० ।

**शकुनज्ञ** त्रि० शकुनं जानाति ज्ञा–क । १निमित्ताभिज्ञे २ज्येष्ठ्यां स्त्री त्रिका० ।

**शकुनि** पु० शक–उनि । १पक्षिमात्रे अमरः । २चिल्लपक्षिणि हेमच० । ३सुबलराजपुत्रे दुर्य्योधनमातुले च । ४श्यामापक्षिणि स्त्री ङीप् राजनि० । ५ववादिषु करणभेदे पु० ६दुःसहस्यपुत्रे पु० मार्कण्डेयपु० । विकुक्षिनृपपुत्रभेदे पु० वाङ्कपु० ।

**शकुनिप्रपा** स्त्री० ६त० । पक्षिणां पानीयशालायाम् हारा० ।

**शकुन्त** पु० शक–उन्त । १पक्षिमात्रे । २भासपक्षिणि ३कीटभेदे च मेदि० ।

**शकुन्तला** स्त्री० शकुन्तैः लायते ला–घञर्थे–क । मेनकागर्भजातायां विश्वामित्रसुतायाम् सा च जातमात्रा मात्रोत्सृष्टा शकुन्तपालिता पश्चात् कण्वमुनिना प्रतिपालिता दुष्मन्तनृपेण गान्धर्वविधिना व्यूढेति “निर्जने तु वने यस्मात् शकुन्तैः परिपालिता । शकुन्तलेति नामास्याः कृतं चापि ततो मया” भा० आ० ७२अ० । शकुन्तलामधिकृत्य कृतो ग्रन्थः । अण् तस्याख्यायिकायां तस्य वा लुक् । कालिदासप्रणीते शकुन्तलाधिकारेण कृते २नाटकभेदे च अधाऽर्थे कि तु शाकुन्तलं तत्रार्थे न० ।

**शकुन्तलात्मज** पु० ६त० । शकुन्तलासुते भरतनृपे हेमचन्द्र० ।

**शकुन्ति** पु० शक–उन्ति । १पक्षिमात्रे अमरः । २भासपक्षिणि उणादिकोषः ।

**शकुल** पुंस्त्री० शक–उलच् । मत्स्यभेदे (शउल) अमरः । स्त्रियां ङीष् । [याम् राजनि० ।

**शकुलाक्षी** पु० शकुलस्याक्षीव अक्ष समा० ङीष् । गण्डदूर्वा०

**शकुलादनी** स्त्री० शकुलैरद्यते अद–ल्युट् (कट्की) शाकभेदे अमरः । २जटामांस्यां, ३जलपिप्पल्यां, कट्फले च विश्वः । [(गडुइ) मत्स्ये । अमरः ।

**शकुलार्भक** पु० शकुलस्यार्भक इव क्षुद्रत्वात्तदाकारत्वात्।

**शकृत्** न० शक–ऋतन् । विष्ठायाम् अमरः ।

**शकृत्करि** पु० शकृत् किरति कृ–इन् । १गवादीनां २वत्से ३वत्सायां स्त्री ङीप् ।

**शकृद्द्वार** न० ६त० । मलद्वारे अपानस्थाने हेमच० ।

**श(क्क)र** पु० शक–क्विप् ऋ–अच् कर्म० शक–करप् वा । १वृषे मेदि० । चतुर्दशाक्षरपादके २छन्दोभेदे । ३नदीभेदे ४मेखलायाञ्च स्त्री ङीप् । ५अङ्गुलौ सि०कौ० । पृषो० शक्करीत्यपि चतुर्दशाक्षरपादके छन्दसि ।

**शक्त** त्रि० शक–क्त । समर्थे हेमच० ।

**शक्ति** स्त्री शक–क्तिन् । १सामर्थ्ये २स्त्रीदेवतायां देवीमूर्त्तौ । न्यायाद्युक्ते कारणनिष्ठे कार्य्योत्पादनयोग्ये ३धर्मभेदे । ४शब्दनिष्ठे अर्थबोधकतारूपे बोध्यत्वप्रकारकेच्छाविषयत्वरूपे वृत्तिभेदे शब्दशास्त्रे ४अस्त्रभेदे च अमरः । मीमांसकमते शक्तिः पदार्थान्तरम् यथोक्तम् अनुमा०चि० । "स्यादेतत् ईश्वरवत् कार्य्येणैव शक्तिरप्यनुमीयते तथा हि यादृशादेव करानलसंयोगाद्दाहो जायते तादृशादेव सति प्रतिबन्धके न जायते अतो यदभावात् कार्य्याभावस्तदङ्गरादावभ्युपेयं तेन विना तदभावात् यत्सद्भावानुपपत्तेर्व्यतिरेकमुखेन शक्तिसिद्धिः" । न्यायमते तन्निराकरणेनैव ईश्वरवादपन्थे दर्शितो यथा

"तृणारणिमणिफूत्कारादिव्यक्तीनामानन्त्येन प्रतिव्यक्तिभावहेतुजानन्तशक्तिस्वीकारे गौरवं तावदनन्तव्यक्तिजन्यावान्तरवह्निव्यक्तिषु जातित्रयकल्पने लाघवमिति तदेव कल्प्यते । न च जातौ योग्यानुपलब्धिबाधः गोमयप्रभववृश्चिकयोर्वा पाटलत्वकपिलत्वव्यङ्ग्यवैजात्यस्य प्रत्यक्षसिद्धत्वात् तृणजन्यनानावह्निषु तृणजन्यत्वज्ञानानन्तरं तृणजन्यस्त्वाद्दन्त्याऽनुगतबुद्धिरस्ति जातिविषया । तृणजन्यत्वेनोपाधिनाऽस्याविति चेन्न बाधकं विनानुगतबुद्धेस्तद्रूपजातिविषयत्वनियमात् । न च गोमयवृश्चिकप्रभववृश्चिकजातिपरम्परायामनगतजात्यापत्तिः गोमयजन्यवृश्चिकप्रभवत्वजातेः सत्त्वात् वह्निमात्रे च दाहस्पर्शवानवयवः तत्संयोगः सेवनादिश्च कारणानि न तु तृणादिकं विनापि, तदुत्पत्तिप्रसङ्गः विशेषसामग्रीमादायैव साध्यसामग्र्याजनकत्वात्" ।

एवमाधेयशक्तिरपि मीमांसकमतेन पूर्वपक्षीकृत्य तत्र निरस्ता यथा तच्च प्रोक्षणप्रतिष्ठाशब्दयोर्दर्शितम् अधिकं किञ्चिदत्र प्रदर्श्यते यथा

"कामिनीचरणाभिघातदोहदादिभिरशोकपुष्पोत्कर्षदर्शनादपि नाधेयशक्तिः समयविशेषावच्छिन्नचरणदोहादिसंयोगध्वंसस्यैव कारणत्वात् चरणाभिघाताकाशभागान्तजनितवृक्षादेव वा तदुपपत्तिः कालान्तरे पुष्पाद्युत्कर्षात् । दुःखावयवोपचयावश्यम्भावेन हस्तभेदावश्यकत्वात् । नापि ताम्रकांस्यादावम्लभस्मसंयोगादिजन्यशुद्धिरूपाधेयशक्तिः तत्संयोगध्वंसस्य संयोगसमानकालीनास्पृश्यस्पर्शादिप्रतियोगिकयावदनादिसंसर्गाभाववर्जितस्य शुद्धिपदार्थत्वात् । भस्मादिसंयोगजनितः कांस्याद्युपभोक्तृनिष्ठः संस्कार एव शुद्धिरित्यन्ये । अभिमन्त्रितपयःपल्लवादावपि समयविशेषावच्छिन्नाभिमन्त्रणध्वंस एव व्याध्यपनायकः तत्तन्मन्त्रदेवतासन्निधिरेव वा । कलमबीजादीनामापरमाण्वन्तभङ्गे तत्र चावान्तरजात्यभावे नियतकलमजातीयादिसिद्धिरपि । परमाणुपाकजविशेषादेव कार्य्यवृत्तिरूपादि सजातीयस्य पूर्वरूपादिविजातीयस्य परमाणौ पाकजरूपादेरभ्यासिद्धत्वात् यथा हि कमलबीजं यवादिजात्या व्यावर्त्यते तथा तत्परमाणवोऽपि पाकजैरेव । एवं मापकर्षणजनितात् परमाणुपाकपरम्पराविशेषादेव हैमन्तिकशस्योत्पत्तिः । एतेन लाक्षारसावसेकादयो व्याख्याताः । निमित्तविशेषजनितपाकजात्तत्फलविशेषः यथा हारीतमांसं हरिद्रानलसाधितमुपयोगात् सद्योव्यापादयति नान्यथा साधितमित्यादि । यत्र च तोयतेजोवायुषु न पाकजोविशेषस्तत्रोद्भवानुद्भवद्रवकाठिनत्वादयोविशेषास्तत्तदुपनायकादृष्टविशेषादेव । तुलादौ चाधिवासपूर्वकतुलारोहणसामग्री तत्पुरुष सत्यासत्यप्रतिज्ञत्वसहिता प्राचीनाधर्माधर्मफले तज्जयभङ्गौ जनयति । यद्वा अयं निष्पापः पापवान् वेति तुलारूढ़ाभिशस्तज्ञानविशेषसहिता सा तथा, तदाहुः, "तांस्तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः" इति

अथ वा प्रतिज्ञाशुद्ध्यशुद्धी अपेक्ष्य तथा धर्माधर्मौ जन्येते ताभ्यां जयपराजयौ सत्यासत्यप्रत्यभिशाभिशस्ततुलारोहणस्यैहानिष्टफलत्वे नार्थतो विधिनिषेधात्। अभिशस्तः सत्यप्रतिज्ञो विजयकामस्तुलामारोहेदित्यसत्यप्रतिज्ञो न तुलामारोहेदिति श्रुतेरुन्नयनात्। यद्वा तथा देवतासन्निधिः क्रियते तास्तु कर्मानुरूपविक्रममभिव्यञ्जयन्ति"। तत्र च शक्तिपदार्थस्वरूपादिकमुक्तं यथा

"कस्तर्हि शक्तिपदार्थः कारणत्वं तच्च स्वस्वव्याप्येतरसकलसंपत्तौ कार्याभावव्यापकाभावाप्रतियोगित्वम्। अथ वा यत्र कार्याभावव्याप्यता इतराभावावच्छिन्ना तत्कारणबीजे अङ्कुराभावव्याप्यता न बीजत्वेनावच्छिद्यते इतरसमवधाने सति बीजादङ्कुरसत्त्वात्, किन्त्वितराभावेनावच्छिद्यते इतराभावावच्छिन्ना तत्कारणबीजे अङ्कुराभावव्याप्यता न बीजत्वेनावच्छिद्यते इतराभावे बीजसत्त्वाङ्कुराभावनियमात्। शिलाशकलेऽङ्कुराभावव्याप्यता शिलात्वेनैवावच्छिद्यते। यद्वा कत्यासमवधानावच्छिन्नकार्यानुत्पत्तिव्याप्यत्वं कारणत्वं, रासभादेः कार्याभावव्याप्यता अन्यासमवधानस्य वैयर्थ्येनानवच्छेदकत्वात्। अनन्यथासिद्धनियतपूर्ववर्त्तिजातीयत्वं वा तत्त्वम्। अन्यथासिद्धञ्च त्रिधा येन सहैव यस्य यं प्रति पूर्ववर्त्तित्वमवगम्यते, यथा घटं प्रति दण्डरूपस्य,(१) अन्यं प्रति पूर्ववर्त्तित्वे ज्ञाते एव यं प्रति यस्य पूर्ववर्त्तित्वमवगम्यते यथा शब्दं प्रति पूर्ववर्त्तित्वे ज्ञात एव ज्ञानं प्रत्याकाशस्य(२)। अन्यत्र क्लृप्तनियतपूर्ववर्त्तिन एव कार्यसम्भवे तत्सहभूतत्वम्(३) यथा गन्धवति गन्धोत्पत्तादादृगन्धं प्रति तत्प्रागभावस्य नियतपूर्ववर्त्तित्वकल्पनात् पाकजस्थले गन्धं प्रति रूपादिप्रागभावादीनामप्यन्यथासिद्धत्वम् एतत्त्रितयव्यतिरेके नियतपूर्ववर्त्तित्वं कारणत्वम्। यागापूर्वयोस्तु यागपूर्ववर्त्तित्वेऽवगते न तत्समाने यत्र जन्यस्य पूर्ववर्त्तित्वेऽवगते जनकस्य पूर्वभावोऽवगम्यते तत्र जन्येन जनकस्यान्यथासिद्धिः। यत्र च जनकस्य तथात्वेऽवगते जन्यस्य पूर्वभावावगतिस्तत्र तद्द्वारा तस्य जनकत्वमेव। दण्डसंयोगभ्रमणयोस्तु युगपदेव पूर्वभावितत्वग्रहः। स्वज्ञानान्तरोत्पत्तिकसकलसमवधाने सत्यपि यस्याभावात् कार्यं न जायते सति च जायते तज्जातीयं प्रति तदनन्यथासिद्धम्। अनन्यथासिद्धनियतपूर्ववर्त्तित्वं कारणत्वमित्यन्ये तत्र ईश्वरतद्बुद्ध्यादीनामसंग्रहात् तद्व्यतिरेकस्य तत्समवधानव्यतिरेकस्य वाऽभावात्। कार्यस्यान्यथानुपपद्यमानताव्यवस्थाप्यत्वं वाऽनन्यथासिद्धम्। नन्वेवमतिरिक्तशक्तौ साधकबाधकप्रमाणाभावात्तत्र संशयः न च बाधकाभावस्य बाधकत्वं बाधकाभावस्य साधकत्वादिति चेन्न साधकाभावेन वस्त्वन्वय सिध्यतीन्द्रियधर्माभावसाधने लाघवं बाधकाभावेनातीन्द्रियधर्मसाधने गौरवमिति साधकाभावात्तदभाव एव सिध्यतीति"।

"इच्छा क्रिया तथा ज्ञानं गौरी ब्राह्मी तु वैष्णवी। त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति" गोरक्षसं०। सत्त्वरजस्तमोगुणत्रयाधीने ईश्वरस्य क्रमेण ज्ञानेच्छाक्रियारूपे ७शक्तित्रये। "एषा त्रिशक्तिरुद्दिष्टा नरसिद्धान्तगामिनी। एषा श्वेता परा सृष्टिः सात्त्विकी ब्रह्मसंस्थिता। एषैव रक्ता रजसि वैष्णवी परिकीर्त्तिता। एषैव कृष्णा तमसि रौद्री देवी प्रकीर्त्तिता। परमात्मा यथा देव एकएव त्रिधार्पितः। प्रयोजनवशाच्छक्तिरेकैव त्रिविधाऽभवत्" वराहपु०। प्रकृतिशक्तिश्च ईश्वरस्य सृष्टिकर्त्तृत्वप्रवर्त्तिता "शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम्" आनन्द्व०। तन्त्रोक्ते ५पीठाधिष्ठातृदेवताभेदे देवभेदे पीठशक्तयो भिन्नाकान्तधारादौ उक्ताः। राज्ञां प्रभावोत्साहमन्त्रजाते ६बलसामर्थ्ये च अमरः। ८नारीभेदे मेदि० ८खड्गप्रभेदे शब्दमा०।

९शक्तिभेदशक्तिश्च अर्थबोधानुकूलः पदपदार्थसम्बन्धः स च इदं पदममुमर्थं बोधयतु, अस्मात् शब्दादयमर्थो बोद्धव्य इत्येवंरूपः इच्छात्मकः सङ्केतः, घटादिपदार्थविशेष्यक घटादिपदजन्यबोधविषयताप्रकारकेच्छाविषयो वा। मीमांसकास्तु अभिधा नाम पदार्थान्तरं सङ्केतग्राह्यं शक्तिरित्याहुः। पदपदार्थयोः सम्बन्धान्तरं शक्तिरिति शाब्दिकाः। सा च शक्तिस्त्रिविधा रूढिर्योगः योगरूढिश्चेति तत्राद्या घटादिपदेषु, द्वितीया पाचकादिपदेषु, तृतीया पङ्कजादिपदेषु। प्राभाकरमते शक्तिर्द्विविधा अनुभाविका स्मारिका च तत्राद्या कार्यत्वान्विते, द्वितीया तु जातौ। तत्र गवादिपदानां जात्याकृतिविशिष्टव्यक्तौ शक्तिरिति नैयायिकाः। व्यक्तावेव शक्तिरिति नव्याः। जात्याकृतिव्यक्तिषु तिसृषु शक्तिरिति वैयाकरणाः। जातावेव शक्तिर्व्यक्तौ भानं त्वाक्षेपादिति भाट्टादयः। जातौ व्यक्तौ चोभयत्र शक्तिः किन्तु जात्यंशे ज्ञाता व्यक्त्यंशे स्वरूपसती प्रत्यायिकेति। कार्यान्वितव्यक्तौ शक्तिरिति प्राभाकराः। धातोस्तु फलावच्छिन्नव्यापारे शक्तिरिति

नैयायिकाः। फल एव शक्तिरिति मण्डनादयः। व्यापारे शक्तिरिति रत्नकोषकृत्। व्याख्यातस्य कर्त्तौ शक्तिरिति नैयायिकाः। कर्त्तरि शक्तिरिति शाब्दिकाः। व्यापारमात्रे शक्तिरिति मीमांसकाः। चतुर्विधविषयत्वात् तस्याश्चातुर्विध्यं शब्दश०प्र० अलङ्कारिमते दर्शितं यथा

"जातिद्रव्यगुणस्पन्दैर्धर्मैः शब्दप्रवृत्तयः। जातिशब्दादिभेदेन चातुर्विध्यं परे जगुः"। गोगवयादीनां गोत्वादिजात्या, घटपटादीनां डित्थडवित्थादिद्रव्येण, धन्यपिशुनादीनां पुण्यद्वेषादिगुणेन चलपचलादीनाञ्च शब्दानां कर्मणावच्छिन्नशक्तिमत्त्वाच्चातुर्विध्यमेव शब्दानामिति तदुक्तं दण्ड्याचार्यैः "शब्दैरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः। चातुर्विध्यादमीषान्तु शब्द उक्तश्चतुर्विधः" इति।

तदेतन्निराचितं तत्रैव "तदेतज्जडमूकमूकादीनामन्ययूथ्यादीनाञ्च शब्दानामपरिग्रहापत्त्या परित्यक्तमस्माभिः"।

**शक्तिग्रह** पु० ६त०। शक्तेः अर्थबोधकताज्ञप्तसंज्ञाने।

**शक्तिग्राहक** पु० शक्तिं गृह्णाति ग्रह–ण्वुल्। १कार्त्तिकेये शक्तिं ग्राहयति बोधयति ग्रह-णिच् ण्वुल्। "शक्तिग्रहं व्याकरणोपमानात् कोशाप्तवाक्यात् व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः" इत्युक्ते शक्तिबोधके २हेतौ। शक्तिग्रहप्रकारश्च शब्दशक्तिप्रकाशिकायां दर्शितो यथा

"वृद्धेन तस्य ग्रहः पूर्वं वृद्धस्य व्यवहारतः। पश्चादेवोपमानाद्यैः शक्तिधीपूर्वकैरसौ"। प्रथमं वृद्धेषु सङ्केतग्रहोदयस्य व्युत्पन्नस्य शब्दाधीनव्यवहारादेव बालानां तथा हि गामानयेति केनचित्पुरुषेण नियुक्तः कश्चन व्युत्पन्नस्तद्वाक्यतोऽर्थं प्रतीत्य गवानयनं करोति तच्चोपलभमानो बाल इदं गवानयनं ज्ञानगोचरप्रवृत्तिजन्यं चेष्टात्वादस्मदीयस्तनपानादिवदित्यनुमाय सा गवानयनप्रवृत्तिः स्वविषयधर्मिककार्य्यताज्ञानजन्या प्रवृत्तित्वात् मिजप्रवृत्तिवदिति प्रवृत्तेर्गवानयनधर्मिककार्य्यताज्ञानजन्यत्वं प्रसाध्य गवानयनगोचरतज्ज्ञानमसाधारणहेतुकं कार्य्यत्वाद्घटवदित्येवमनुमिन्वानः समुपस्थितत्वाल्लाघवाच्च श्रुतं तद्वाक्यमेव तदसाधारणकारणत्वेनावधारयति तदनन्तरञ्च गवादिपदानां प्रत्येकमावापोद्वापेन गवादिषु शौ जनकत्वमवगत्यानतिप्रसक्तत्वे गवादिसङ्केतस्य तदनुकूलत्वं कल्पयति। पश्चात् क्वचिदुपमानाच्छक्तिग्रहो यथा गवादिपदशक्तिधीशालिव्यक्तेन गोसादृश्यातिदेशवाक्यात् गवयपदवाच्यत्वबोधोत्तरं गवयत्वजात्यवच्छिन्ने गोसादृश्यग्रहात् गवयो गवयपदवाच्य इत्याकारः। क्वचिच्च व्याकरणात् यथा कर्मणि द्वितीया कर्त्तरि परस्मैपदमित्यानुशासनात् कर्मत्वादौ द्वितीयादेः। क्वचित् कोशादपि यथा "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति"। "सुगीवः शिखरो जडः। कर्णं चोरः पशुतिक्तपिङ्गलौ श्वेतमाक्रवे" इत्यादि कोशेभ्यः शैत्यादौ शुक्लादिशब्दस्य। क्वचिद्विवरणादपि यथा पचति पाकं करोतीति तत्त्वार्थकवाक्यात् कृत्यादौ तिङादेः। क्वचित् प्रसिद्धार्थशब्दसामानाधिकरण्यादपि यथा नीलरूपस्पर्शवान् वायुर्निसर्गमूर्त्तिमान् इत्यादौ रूपरूपस्पर्शवदादिषु वाय्वादिपदस्य। वायुत्वादिजातेरतीन्द्रियत्वेन स्वरूपतस्तदवच्छिन्नस्यानुपस्थितत्वा तत्र शक्तिग्रहायोगात् यथा वा "शरत्काले त्वद्भुतां कन्यां ददानः कुमुदः सतः" इत्यादावुक्तरीत्या कन्यादानादिषु कुमुदादिपदस्य। सहकारतरौ मधुरं रौति पिक इत्यादिकन्तु न शुद्धपदलक्षणैव शक्तिग्रहस्योदाहरणं तिलवैं धर्मिग्राहकभेदेन नानार्थान्वयस्याव्युत्पन्नत्वात् प्रत्यक्षसिद्धकोकिलत्वजात्यवच्छिन्न एव लाघवेन पिकशब्दस्य शक्त्यवच्छेदाच्च। क्वचिद्वाक्यशेषादपि यथा यवपदस्य कङ्गुप्रभृतौ म्लेच्छानां दीर्घशूके च शिष्टानां व्यवहारादेकमात्रशक्तेः परिच्छेत्तुमशक्यत्वात् नानार्थस्य चान्याय्यत्वात् यवमयश्चरुर्भवतीतिश्रुतौ यवपदस्यार्थसन्देहे "वसन्ते सर्वशस्यानां जायते पत्रशातनम्। मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः" इति विध्याकाङ्क्षया प्रवृत्तवाक्यशेषाद्दीर्घशूक एव यवपदस्य शक्तिग्रहः। यथा वा स्वर्गकामोऽश्वमेधेन यजेतेत्यादिविधिशेषीभूतेभ्यः "यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्" इत्यादिवाक्येभ्यः स्वरादिपदस्य"।

**शक्तिधर** पु० शक्तिं धरति धृ–अच्। १कार्त्तिकेये २सामर्थ्यधरे त्रि० "शक्तिधरः कुमारः" इति रघुः। भृ–क्विप् ६त०। शक्तिभृदादयोऽप्यत्र।

**शक्तिपर्णं** पु० शक्तिरिव पर्णं यस्य। सप्तपर्णे वृक्षे शब्दच०।

**शक्तिपाणि** पु० शक्तिः पाणौ यस्य। कार्त्तिकेये हला० शक्तिहस्तादयोऽप्यत्र। [शक्त्या योद्धरि।

**शक्तिहेतिक** पु० शक्तिर्हेतिः प्रहरणास्त्रं यस्य कप्।

**श(स)क्तु** पु० व०व० श(स)ञ्च–तुन्। (छातु) भृष्टयवादिचूर्णे

अमरः। शतानन्दशब्दे २१८५ पृ० तच्छेदादि दृश्यम्।

**शक्रफला(ली)** स्त्री शक्रस्य इव फलान्यस्याः वा ङीप्। शमीवृक्षे शब्दच०। [भेदे

**शक्रि(क्तृ)** पु० वशिष्ठमुनेः पुत्रे पराशरस्य पितरि शक्ति-

**शक्नु** त्रि० शक-नु। प्रियभाषिणि अमरः।

**शक्य** त्रि० शक-यत्। १शक्तियुक्ते २शक्त्या बोध्येऽर्थे। ३समर्थनीये। ४साधयितुं योग्ये च।

**शक्यतावच्छेदक** त्रि० ६त०। शक्यपदार्थस्याधारधर्मे येन धर्मेण अर्थस्य शब्दशक्तिविषयता तस्मिन् धर्मे। यथा घटशब्दः घटत्ववन्तं पदार्थं बोधयति अतस्तदसाधारणधर्मो घटत्वं घटशब्दस्य शक्यतावच्छेदकम्।

**शक्र** पु० शक-रक्। १इन्द्रे अमरः। २कुटजवृक्षे ३अर्जुनवृक्षे मेदि०। ४ज्येष्ठानक्षत्रे ५पेचके च। इन्द्रस्य चतुर्दशविधत्वम् मन्वन्तरभेदेन इन्द्रशब्दे दर्शितमतः तत्संख्यासाम्यात् ६चतुर्दशसंख्यायाम्।

**शक्रगोप** पु० शक्रं शक्रधनुर्गोपायति समवर्णत्वात् गुप-अण्। इन्द्रगोपे कीटे जटा०।

**शक्रज** पु० शक्रात् जायते जन-ड। १काके त्रिका०। २इन्द्रजन्ये त्रि०। शक्रजातादयोऽप्यत्र।

**शक्रजित्** पु० शक्रं जितवान् जि-क्विप् तुक् च। १रावणात्मजे मेघनादे राक्षसे। २इन्द्रजेतरि त्रि०।

**शक्रधनुस्** न० ६त०। मेघच्छन्ने धनुराकारे सूर्यकिरणसम्पर्कजे पदार्थभेदे (रामधनुक) अमरः।

**शक्रध्वज** पु० ६त०। भाद्रशुक्लद्वादश्यां पूज्ये इन्द्रदैवते ध्वजाकारे पदार्थे। इन्द्रध्वजशब्दे ९४६ पृ० दृश्यम्।

**शक्रनन्दन** पु० ६त०। अर्जुने जटा०। २इन्द्रनन्दके त्रि०।

**शक्रपर्याय** पु० शक्रस्य पर्यायो नाम नाम यस्य मध्यपदलोपः। १कुटजवृक्षे रत्नमाला ६त०। इन्द्रस्य २वाचकशब्दे च।

**शक्रपादप** पु० ६त०। १देवदारुवृक्षे अमरः। २कुटजवृक्षे राजनि०। [अमरः। स्वार्थे क। तत्रैव रत्नमा०।

**शक्रपुष्पी** स्त्री शक्रस्येव पुष्पमस्याः ङीप्। अग्निशिखावृक्षे

**शक्रभवन** न० ६त०। स्वर्गे त्रिका०। शक्रावासादयोऽप्यत्र।

**शक्रभूभवा** स्त्री शक्रभूरूपभुवि भवति भू-अच्। इन्द्रवारुण्याम् शब्दच०। [२इन्द्रजनन्याम् अदित्याम्।

**शक्रमातृ** स्त्री शक्रस्य मातेव। १भार्ग्याम् राजनि०। ६त०।

**शक्रमूर्द्धन्** पु० शक्रस्येव शिखावान् मूर्द्धा यस्य। १वल्मीके त्रिका०। ६त०। २इन्द्रमस्तके। शक्रशीर्षादयोऽप्यत्र।

**शक्रवल्ली** स्त्री शक्रप्रिया वल्ली। इन्द्रवारुण्याम् राजनि०।

**शक्रवाहन** पु० शक्रं वाहयति वह-णिच्-ल्यु। मेघे शब्दच०। इन्द्रवाहनादयोऽप्यत्र।

**शक्रवीज** न० शक्रस्य कुटजस्य वीजम्। इन्द्रयवे राजनि०।

**शक्रशाखिन्** पु० शक्रनामकः शाखी। कुटजवृक्षे भावप्र०।

**शक्रसारथि** पु० ६त०। इन्द्रसारथौ मातलौ।

**शक्रसुत** पु० शक्रस्य सुतः। १वालिनामके वानरराजे जयन्ते। २इन्द्रपुत्रे अर्जुने च।

**शक्रसुधा** स्त्री शक्रस्य सुधेव। पालङ्क्याम् शब्दच०।

**शक्रसृष्टा** स्त्री ६त०। हरीतक्याम् त्रिका०।

**शक्राख्य** पु० शक्रस्येवाख्या यस्य। १पेचके त्रिका०।

**शक्राणी** स्त्री शक्रस्य पत्नी ङीष् आनुक् च। पुलोमजायामिन्द्रपत्न्याम् शब्दमा०।

**शक्राशन** न० शक्रेणाश्यते अश-कर्मणि ल्युट्। भङ्गायाम् "शक्राशनन्तु तीक्ष्णोष्णं मोहकृत् कुष्ठनाशनम्। बलमेधाग्निदं श्लेष्मदोषहारि रसायनम्" राजव०।

**शक्राशन** पु० शक्रं तदाख्यम् अश्नुते व्याप्नोति अश-ल्यु। कुटजवृक्षे शब्दच०। [संक्षिप्तसारः।

**शक्रि** पु० शक-क्रिन्। १मेघे २वज्रे ३गजे ४पर्वते च

**शक्रोत्थान** न० शक्रस्य तद्ध्वजस्य उत्थानम्। भाद्रशुक्लद्वादश्यां कर्त्तव्ये १शक्रध्वजस्योत्थाने, तदुपलक्षिते २उत्सवे च। इन्द्रध्वजशब्दे ९४६पृ० दृश्यम्।

**शक्व** पु० शक-वन्। गजे सि० कौ०।

**शक्ष** पु० शक-अच् वा+सुम्। शकटादिवाहकवृषे हारा०।

**शङ्कर** पु० शं करोति कृ-अच्। १महादेवे २कल्याणकरे त्रि० ३शिवपत्न्यां स्त्री ङीप्। ४सा च मञ्जिष्ठायां शब्दच०। ५शम्यां राजनि०। [शुभत्वात्। २कर्पूरे राजनि०।

**शङ्करावास** पु० ६त०। १कैलासाचले। शङ्करस्यावास इव

**शङ्का** स्त्री शकि-अ। १भये २वितर्के मेदि० ३संशये च।

**शङ्कित** त्रि० शङ्का जातास्य तार० इतच्। १भीते त्रिका० २सन्दिग्धे ३वितर्किते च।

**शङ्कु** पु० शकि-उण्। १स्थाणौ। २मत्स्यभेदे। ३शल्यास्त्रे अमरः। ४कीलके। ५दशकोटिसंख्यायाम् ६तत्संख्याते। ७महादेवे। ८कलुषे मेदि०। ९पत्रशिरा-जाले १०मेढ्रे हेमच०। ११नखीनामगन्धद्रव्ये जटा०। १२छायापरिमाणार्थे काष्ठादिनिर्मिते, "अर्कोङ्गुला तु छायापा काष्ठी द्व्यङ्गुलमूलिका। शङ्कुसंज्ञा भवेच्चैव तच्छायां परिकल्पयेत्" इत्युक्ते १३कीलभेदे च ज्यो०त०। १४जनमेजयपुत्रभेदे भा० आ० ९५ अ०। १५नवरत्नान्त-

गँतकविभेदे। दिक्साधनार्थं सू० सि० शङ्कुश्च दर्शितो यथा

"शिलातलेऽम्बुसंशुद्धे वज्रलेपेऽपि वा समे। तत्र शङ्कुङ्गुलैरिष्टैः समं मण्डलमालिखेत्। तन्मध्ये स्थापयेच्छङ्कुं कल्पनाद्द्वादशाङ्गुलम्। तच्छायाग्रं स्पृशेद्यत्र वृत्ते पूर्वापरार्द्धयोः। तत्र बिन्दू विधायोभौ वृत्ते पूर्वापराभिधौ। तन्मध्ये तिमिना रेखा कर्त्तव्या दक्षिणोत्तरा। याम्योत्तरदिशोर्मध्ये तिमिना पूर्वपश्चिमा। दिङ्मध्यमत्स्यैः संसाध्या विदिशस्तद्वदेव हि"। तत्र दिक्साधनोपक्रमे प्रथममम्बुसंशुद्धे जलवत् समीकृते शिलाप्रदेशे अपि वाथ वा तदभावेऽन्यत्र वज्रलेपे चत्वरादौ घट्टनादिना समस्थाने कृते शङ्क्वङ्गुलैः शङ्कुस्याङ्गुलविभागमानस्वीकृतैरभीष्टसंख्याकाङ्गुलैर्व्यासार्द्धरूपैः समभक्रमात् लिखेत्। सर्वतः केन्द्राद्वृत्तपरिधिरेखा तुल्या स्यात् तथेत्यर्थः। ततस्तन्मध्ये तस्य वृत्तस्य केन्द्ररूपमध्ये कल्पनया द्वादशसंख्याकाङ्गुलानि तुल्यानि यस्मिंस्तं द्वादशविभागाङ्कितमित्यर्थः। शङ्कुं समतलमस्तकपरिधिकाष्ठदण्डं स्थापयेत्। ततः पूर्वापरार्द्धयोर्दिनस्य प्रथमद्वितीयभागयोस्तच्छायाग्रं स्थापितशङ्कोश्छायान्तप्रदेशो मण्डलपरिधौ यस्मिन् विभागे स्पृशेत्। दिनस्य प्रथमविभागेऽनुक्षणं छायाह्रासात् वृत्ते यत्र प्रविशति दिनस्यापरार्द्धे छायानुक्षणवृद्धेर्वृत्तं यत्र निर्गच्छतीत्यर्थः। तत्र निर्गमनप्रवेशस्थानयोरुभौ द्वौ बिन्दू पूर्वापरसंज्ञौ क्रमेण वृत्ते परिधिरेखायां कृत्वा तन्मध्ये पूर्वापरबिन्द्वन्तरमध्ये तिमिना मत्स्येन रेखा कार्य्या सा दक्षिणोत्तररेखा भवति। मत्स्यस्तु बिन्द्वन्तरालस्वल्पमितेन व्यासार्द्धेन बिन्दुद्वयकेन्द्रकल्पनेन वृत्तद्वयं निष्पाद्य वृत्तद्वयसंयोगाभ्यां वृत्तद्वयपरिधिविभागाभ्यामन्तर्गतं मत्स्याकारं स्थानं भवति। तत्रैकः संयोगो मुखं बाह्यवृत्तभागसम्मार्जनेनापरसंयोगस्तु पुच्छमितरवृत्तभागद्वयसम्मार्जनेन मुखपुच्छावध्यृज्वी रेखा दक्षिणोत्तररेखा। तत्र बिन्दोः सव्यं रेखाग्रं दक्षिणा दिक्। पश्चिमबिन्दोः सव्यं रेखाग्रमुत्तरा दिक्। अनन्तरं पूर्ववृत्तं मत्स्यश्च सम्मार्जनीयः। शङ्कुरपि तत्स्थानान्निष्कास्य इति केवला दक्षिणोत्तररेखा स्थितेति तात्पर्य्यम्। दक्षिणोत्तरदिशोर्मध्यस्थाने तिमिना दक्षिणोत्तररेखामितेन व्यासार्द्धेन दक्षिणोत्तरस्थानाभ्यां पूर्ववत् प्रत्येकं वृत्तं विधाय पूर्ववत् सिद्धेन मत्स्येनेत्यर्थः। पूर्वपश्चिमा रेखा कार्य्या। तत्र पूर्वबिन्दोरासन्नं रेखाग्रं पूर्वा पश्चिमबिन्दोरासन्नं रेखाग्रं पश्चिमेति मत्स्यसम्मार्जने केवला पूर्वापररेखापि सिद्धा। अथ रेखासंयोगस्थानात् दिक्साधनोपक्रमोक्तं पूर्ववृत्तमुल्लिखेत्। तद्वृत्तपरिधौ यत्र रेखा लग्ना तत्र दिशिति तद्वृत्तमध्यस्य दिक्चतुष्टयं वृत्ते सिद्धम्। तद्वत् यथा दक्षिणोत्तराभ्यां पूर्वापरा साधिता तत्प्रकारेणेत्यर्थः। एवकारोऽन्यप्रकारनिरासार्थकः। हि निश्चयेन। विदिशः कोणदिशो दिशां पूर्वादिसिद्धदिशां ये मध्यमत्स्या अव्यवहितदिग्द्वयान्तरोत्पन्ना अधस्तैः संसाध्याः सम्यक्प्रकारेण साध्याः। रेखावृत्तसंयोगस्थत्वेन ज्ञेयाः" रङ्गना०।

छायाशब्दे २९८६ पृ० दृश्यम्।

**शङ्कुकर्ण** पु० शङ्कुरिव कर्णावस्य। १गर्दभे त्रिका०। दानवभेदे हरिवं० ३अ०। ३स्कन्दानुचरभेदे भा० ४७ अ०।

**शङ्कुतरु** पु० शङ्कुयोग्यस्तरुः। शालवृक्षे शब्दर०। शङ्कुवृक्षादयोऽप्यत्र।

**शङ्कुला** स्त्री शकि–उलच्। १उत्पलपत्रिकायाम् संक्षिप्तसा०। पूगच्छेदकास्त्रभेदे (जाँति) शङ्कुलाखण्डः इति सि०कौ०।

**शङ्कोच(चि)** पु० शकि–उच-(उचि) वा। मत्स्यभेदे जटा०।

**शङ्ख** पु०न० शम–ख। १स्वनामख्याते समुद्रजाते पदार्थे अमरः। २ललाटास्थ्नि, ३निधिभेदे, ४नखीनामगन्धद्रव्ये मेदि०, ५कर्णसमीपस्थे–अस्थ्नि, ६नागभेदे, ७हस्तिदन्तमध्ये त्रिका०। ८दशनिखर्वसंख्यायां, ९तत्संख्याते च। तस्य शङ्खचूडासुरास्थितस्तदुत्पत्तिः ब्रह्मवै० प्रकृ० १८अ० उक्ता यथा।

"अथ शम्भुर्हरेः शूलं जग्राह दानवं प्रति। ग्रीष्ममध्याह्नमार्त्तण्डसमानप्रभमुत्तमम्। शूलञ्च भ्रमणं कृत्वा पपात दानवोपरि। चकार भस्मसात्तञ्च सरथञ्चावलीलया। स शिवस्तेन शूलेन दानवस्यास्थिजालकम्। प्रेम्णा च प्रेरयामास लवणोदे च सागरे। अस्थिभिः शङ्खचूडस्य शङ्खजातिर्बभूव ह। नानाप्रकाररूपा च शश्वत् पूता सुरार्चने। प्रशस्तं शङ्खतोयञ्च देवानां प्रीतिदं परम्। तीर्थतोयस्वरूपञ्च पवित्रं शम्भुना विना। शङ्खशब्दो भवेद्यत्र तत्र लक्ष्मीश्च सुस्थिरा। स स्नातः सर्वतीर्थेषु यः स्नातः शङ्खवारिणा। शङ्खे हरेरधिष्ठानं यतः शङ्खस्ततो हरिः। तत्रैव सततं लक्ष्मीर्दूरीभूतममङ्गलम्। स्त्रीणाञ्च शङ्खध्वनिभिः

शूद्राणाञ्च विशेषतः। सीता दृष्टा याति लक्ष्मीः स्थल-मन्यत् स्वस्थानतः” १०मुद्राभेदे तन्त्रसा०।

११प्रस्तरभेदे। युक्तिकल्पतरौ तल्लक्षणादि यथा “क्षीरोदकूलेऽपि सुराष्ट्रदेशे तदन्यतोऽपि प्रभवन्ति शङ्खाः। अव्यक्तवर्णाः शशिशुभ्रभासः सुस्निग्धगात्राः गुरवो महान्तः। ते वामदक्षिणावर्त्तभेदेन द्विविधा मताः। दक्षिणावर्त्तशङ्खस्तु कुर्य्यादायुर्यशोधनम्। तेनैव शिरसा यस्तु श्रद्दधानः प्रतीच्छति। वारि छित्वा स पापानि पुण्यमाप्नोति मानवः। इत्यत्वं स्निग्धताच्छत्वं शङ्खस्येति गुणत्रयम्। आवर्त्तभङ्गदोषो हि हेमयागादिनश्यति। ब्रह्मादिजातिभेदेन स पुनश्चतुर्विधः”।

“ये स्निग्धमसृणाकारा मृदवो लघवस्तथा। ब्राह्मणाः प्रस्तराज्ञेयाः सर्वकर्मसु शोभनाः। ये दृढाङ्गाः सुगुरवस्थानांशांशविभागिनः। अम्लानाः क्षत्रियाज्ञेयाः कर्कशाङ्गास्तथैव च। मृदवो गुरवो ये तु ये च्छेदेनैव रञ्जिताः। ते वैश्याः ख्यविभक्तांशा युज्यन्ते सर्वकर्मसु। ये कर्कराहताङ्गाश्च कर्करा ये प्रतिष्ठिताः। येऽत्यन्तगुरवः स्निग्धास्ते शूद्राः प्रस्तराधमाः। इति प्रोक्तमशेषेण सम्यक् पाषाणलक्षणम्। विचार्य्य मतिमान् कार्य्ये नियोक्तव्यं विचक्षणैः”।

**शङ्खक** न० शङ्खस्य विकारः वुन्। १शङ्खजाते वलयाकारे पदार्थे मेदिनि० २शिरोरोगे पु० तस्य लक्षणादि यथा “पित्तरक्तानिलादुष्टाः शङ्खदेशे विमूर्च्छिताः। तीव्ररुग्दाहरोगं हि शोथं कुर्वन्ति दारुणम्। सशिरोविषवद्वेगान्निरुध्याशु गलं तथा। त्रिरात्राज्जीवितं हन्ति शङ्खको नाम नामतः। त्र्यहात्जीवितमैषज्यं प्रत्याख्येयस्य कारयेत्”। पित्तरक्तानिला इत्यत्र कफोऽपि योज्यः “क्षतानुतापः कफपित्तरक्तैरिति” सुश्रुतवचनात्। विमूर्च्छिताः प्रवृद्धाः त्रिरात्रात् त्रिरात्रमध्ये मारयति” भावप्र०।

**शङ्खकार** पु० शङ्खं तद्विकारं वलयाकारं पदार्थं करोति क-अण्। वर्णसङ्करजातिभेदे (शाँखारी)। स तु शूद्रागर्भे विश्वकर्मतो जातः ब्रह्मवै०। [कायां स्त्रियां ङीप्।

**शङ्खचरी** स्त्री शङ्खे ललाटास्थ्नि चरति चर-ट। ललाटि-

**शङ्खचर्चा** स्त्री शङ्खस्य चर्चा भूषा यतः। ललाटिकायां शब्दर०। [सुभ्रं कृमिहरं परम्” राजव०।

**शङ्खचूर्ण** न० ६त०। शङ्खजाते चूर्णे। “शङ्खचूर्णं कटु क्षार-

**शङ्खद्रावक** पु० औषधविशेषे। तत्पाकादि यथा “अर्क-

नुही तथा चिञ्चा तिलारग्वधचित्रकम्। अपामार्गं भस्मसमं वस्त्रपूतं जलं हरेत्। मृदग्निना पचेत्तत्तु यावत्सुरवताङ्कतम्। लवणेन समौ ग्राह्यौ द्वौ क्षारौ टङ्कणं तथा। सुरङ्गफेनगोदन्तकाशीशं सोरका तथा। हिङ्गुलं पञ्चलवणं मातुलुङ्गरसेन च। काचकूप्यान्तु सम्प्राप्य वालयेद्वह्नियोगतः। शङ्खचूर्णपलं दत्त्वा वारुणी यन्त्रतस्तरेत्। सर्वधातून् हरेच्छीघ्रं वराटीशङ्खकादिकान्। उदरादिकरोगाणां सद्यो हि नाशकः परः” भैषज्यर०। “योगिनीभैरवाभ्याञ्च बलिमादौ प्रदापयेत्। पश्चाद् यन्त्रञ्च कर्त्तव्यमेवाह परमेश्वरी। रसः शङ्खद्रवो नाम शम्भुदेवेन भाषितः। गुह्याद् गुह्यतमं गुह्यमिदानीं कथ्यते मया। शङ्खचूर्णं यवक्षारं सर्जिकाक्षारटङ्कणम्। समञ्च पञ्चलवणं स्फटिकारी नवसादरः। काचकूप्यां ततः क्षिप्त्वा वारुणी यन्त्रतस्तरेत्। वामाङ्गं द्रावयत्येव शङ्खशुक्तिवराटकान्। अर्शांसि नाशयेत् षट् च मूत्रकृच्छ्राश्मरीं तथा। उदराष्टविधं हन्ति गुल्मप्लीहोदराणि च। अजीर्णं नाशयेच्छीघ्रं ग्रहणीञ्च विसूचिकाम्। भुक्तशेषे च भोक्तव्यो मात्रयाल्पोऽरसोत्तमः। क्षणमात्रात्जयेत् भक्तं पुनर्भोक्तुमभिच्छति। प्रत्यहं भोजनान्ते च सर्वेष्वोऽयं रसोत्तमः। न दद्यात् सर्वं क्वापि सत्यं सत्यं वदाम्यहम्। न देयं यस्य कस्यापि सदा गोप्यञ्च कारयेत्। रसः शङ्खद्रवो नाम वैद्यानामुपकारकः”।

**शङ्खद्राविन्** पु० शङ्खं द्रावयति द्रु-णिच्-णिनि। अम्लवेतसे राजनि०।

**शङ्खधरा** स्त्री धृ-अच् ६त०। हिलमोचिकायाम् रत्नमा०।

**शङ्खध्म** पु० शङ्खं धमति ध्मा-क। शङ्खवादके। क्विप्। शङ्खध्मा इत्यप्यत्र।

**शङ्खनख** पु० शङ्खस्य नख इव। १क्षुद्रशङ्खे (जोङ्कुड़ा) अमरः। २नखीनामगन्धद्रव्ये शब्दर०। स्त्रीत्वमपि तत्र ङीप्।

**शङ्खपुष्पी** स्त्री शङ्ख इव पुष्पमस्याः ङीप्। (शङ्खाहुली) वृक्षे राजनि०। “शङ्खपुष्पी तु तीक्ष्णोष्णा मेध्या कृमिविषापहा”। राजवल्लभः “शङ्खपुष्पी सरा मेध्या वृष्या मानसरोगनुत्। रसायनी कषायोष्णा स्मृतिकान्तिबलाग्निदा। दोषापस्मारभूताश्च कुष्ठकृमिविषप्रणुत्” भावप्र०। [हेमच०।

**शङ्खभृत्** पु० शङ्खं बिभर्त्ति भृ-क्विप् तुक् च। विष्णौ

**शङ्खमुख** पुंस्त्री० शङ्खस्य इव मुखमस्य। कुम्भीरे हेमच०। स्त्रियां ङीप्। [ स्वार्थे कन्) क्षुपभेदे शब्दच०।

**शङ्खिका** स्त्री शङ्खस्तदाकारं पुष्पमस्त्यस्याः ठन्। (चोरका-

**शङ्खिन्** पु० शङ्ख+अस्त्यर्थे इनि। १विष्णौ, २समुद्रे च मेदि०।

**शङ्खिनी** स्त्री शङ्खस्तदाकारं पुष्पमस्त्यस्याः इनि। १चोरपुष्प्याम्, अमरः। २श्वेतपुनागे ३विकाः। ४श्वेतबुह्मायां ५श्वेतचुक्रायां, ६यवतिक्तायां, राजनि०। ७स्त्रीभेदे, ८उपदेवताभेदेः, (शाकचिन्नी) ९वनस्पत्यां स्त्रियाञ्च। स्त्रीभेदलक्षणं रतिमञ्जर्यामुक्तं यथा
"दीर्घा सुदीर्घनयना वरसुन्दरी या कामोपभोगरसिका गुणशीलयुक्ता। रेखात्रयेण च विभूषितकण्ठदेशा सम्भोगकेलिरसिका किल शङ्खिनी सा"। "शशके पद्मिनी तुष्टा चित्रिणी रमते मृगे। वृषभे शङ्खिनी तुष्टा हस्तिनी रमते हये"। "पद्मिनी पद्मगन्धा च मीनगन्धा च चित्रिणी। शङ्खिनी क्षारगन्धा स्यात् मदगन्धा च हस्तिनी"। [राजनि०।

**शङ्खिनीफल** पु० शङ्खिन्या इव फलमस्य। शिरीषवृक्षे

**शङ्खिनीवास** पु० ६त०। शाखोटकवृक्षे शब्दच०।

**शच** गतौ भ्वा० आत्म०सक० सेट् इदित्। शञ्चते, अशञ्चिष्ट।

**शच** वाचि भ्वा० आत्म० सक० सेट्। शचते अशचिष्ट।

**शचि(ची)** स्त्री शच-इन् वा ङीप्। १इन्द्रपत्न्याम् अमरः। २करणान्तरे मेदि०।

**शचीपति** पु० ६त०। इन्द्रे अमरः। शचीभर्त्रादयोऽप्यत्र।

**शट(ठ)** श्लाघायां चु० आ० सक० सेट्। शाट(ठ)यते अशीशट(ठ)त। [ शटति। अशाटीत् अशटीत्।

**शट** शाठ्ये सक० रोगजनने गतौ भेदे च सक० पर० भ्वा०

**शट** पु० शटति रुजति दन्तं शट-अच्। १कफे त्रि०को०। २सिंहकेसरे ३जटायाञ्च स्त्री अमरः टाप्।

**शटि(टी)** स्त्री शट-इन् वा ङीप्। (वन आदा) ख्याते ओषधिभेदे
"शटी पलाशी षड्ग्रन्था सुव्रता गन्धमूलिका। गन्धारिका गन्धवधूर्वधूः पृथुपलाशिका। भवेद्गन्धपलाशी तु कषाया ग्राहिणी लघुः। तिक्ता तीक्ष्णा च कटुकाऽनुष्णास्यमलनाशिनी। शोथकासव्रणश्वासशूलाध्मानहिक्काप्रहा" भावप्र०।

**शट्टक** न० शट-क्विप् टक-अच् कर्मधा०। घृतजलमिश्रितशालिचूर्णे। "शालिचूर्णं घृतं तोयं मिश्रितं शट्टकं वदेत्" भावप्र०।

**शठ** वधे सक० कैतवे क्लेशे च अक० भ्वा० पर० सेट्। शठति अशाठीत् अशठीत्।

**शठ** आलस्ये चु०पर०अक०सेट्। शाठयति ते अशीशठत् त।

**शठ** दुष्टवचने अद०चु०उभ०सक०सेट्। शठयति ते अशशठत् त

**शठ** न० शठ-अच्। १तगरे २कुङ्कुमे ३लौहे च राजनि०। ४धुस्तूरे ५मध्यस्थपुरुषे च पु०। "प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम्। व्यक्तापराधचेष्टश्च शठोऽयं कथितो बुधैः" विष्णुपु० उक्ते ६धूर्ते त्रि० मेदि० ७नायकभेदे पु० तल्लक्षणं यथा
"शठोऽयमेकत्र बद्धभावो यः। दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति" सा० द०।

**शठता** स्त्री शठस्य भावः तल्। शाठ्ये वञ्चनायाञ्च। [राजनि०

**शठम्बा** स्त्री शठ-अच् अबि-अच् कर्म० स०। अम्बष्ठायाम्

**शड** संघाते रोगे च अक० भ्वा० पर० सेट् इदित्। शण्डति अशण्डिष्ट। [शब्दार्थे शेषवत्।

**शण** दाने भ्वा० पर०सक० सेट्। शणति अशाणीत् अशणीत्

**शण** पु० शण-अच्। स्वनामख्याते क्षुपभेदे हेमच०।

**शणघण्टिका** स्त्री शणः घण्टेव तत्तुल्यरवफलकत्वात् इवार्थे कन्। घण्टारवतुल्यफलायाम् शणपुष्प्यां राजनि०।

**शणपर्णी** स्त्री शणस्येव पर्णान्यस्याः ङीप्। वसनपर्ण्याम् राजनि०। [शणे स्वार्थे क। तत्रैव।

**शणपुष्पी** स्त्री शणस्येव पुष्पमस्याः ङीप्। (झनझने) वन-

**शणसूत्र** न० शणाज्जातं सूत्रम्। शणजाते जाले अमरः।

**शणालुक** पु० शण इवालुकः। आरेवतवृक्षे (सोनालु) शब्दर०

**शणिका** स्त्री शणस्तत्पुष्पमस्त्यस्याः ठन्। शणपुष्प्यां राजनि०

**शण्ड** न० शडि-अच्। १पद्मादिसमूहे शब्दर०। २नपुंसके ३वृषे च द्विरूपको०। [तस्यापत्यं गर्गा० यञ् शाण्डिल्य।

**शण्डिल** पु० शडि-इलच्। शाण्डिल्यस्य पितरि मुनिभेदे

**शण्ढ** न० शम-ढ तस्य नेत्वम्। १अन्तःपुररक्षके क्लीबक्लीवे २क्लीवमात्रे भरतः। ३वृषे मेदि० ४वन्ध्यपुरुषे जटा० ५उन्मत्ते धनञ्जयः।

**शत** न० एक०व० शो-डतच्। १स्वनामख्यातसंख्यायाम् २बहुसंख्यायां ३तत्संख्याते च। स्वार्थे क। तत्रैव न० शतवाचकशब्दाश्च धार्त्तराष्ट्राः१ शतभिषा तारा२ पुरुषायुषम्३ रावणाङ्गुलिः४ पद्मदलं५ इन्द्रयज्ञः६ अक्षियोजनम्७ "कविकल्पलता। [अवयवे कन्। २शतसंख्यायां न०।

**शतक** त्रि० शतं परिमाणमस्य कन्। १शतसंख्यायुक्ते।

**शतकुम्भ** पु० शतं कुम्भा यत्र। स्वर्णखनिपर्वतभेदे भरतः।

**शतकोटि** पु० शतं कोटयोऽयाणि यस्य । १वज्रे अमरः । शतगुणिता कोटिः शाक० । २शतगुणितकोटिसं-ख्यायां स्त्री ।

**शतक्रतु** पु० शतं क्रतवोऽस्य । इन्द्रे अमरः ।

**शतग्रन्थि** स्त्री शतं ग्रन्थयोऽस्य । दूर्वायाम् राजनि० ।

**शतघ्नी** स्त्री शतं हन्ति हन-टक् । १अस्त्रभेदे "अयःकण्ट-कसंछन्ना शतघ्नी महती शिला" विजयरक्षितः । २वृश्चिकाल्यां ३करञ्जे च मेदि० ।

**शततम** त्रि० शतस्य पूरणः तमप् । शतसंख्यापूरणे ।

**शततारा** स्त्री शतगुणिता ताराः शाक० । शतभिषानक्षत्रे ।

**शतदन्तिका** स्त्री शतं दन्ता इव सन्त्यस्य ठन् । नागद-न्त्याम् राजनि० ।

**शतद्रु** पु० शतधा द्रवति-द्रु-कु नि० । नदीभेदे तन्नामनिरु-क्तिर्यथा "शोके बुद्धिं तदा चक्रे नचैकत्र व्यतिष्ठत । सो-ऽगच्छत् पर्वतांश्चैव सरितश्च सरांसि च । दृष्ट्वा स (वसिष्ठः) पुनरेवार्षिर्नदीं हैमवतीं तदा । चण्डग्राहवतीं भीमां तस्याः स्रोतस्यपातयत् । सा तमग्निसमं विप्रमनुचिन्त्य सरिद्वरा । शतधा विद्रुता यस्माच्छतद्रुरिति विश्रुता । ततः स्थलगतं दृष्ट्वा तत्राप्यात्मानमात्मना । मर्त्तुं न शक्यमीत्युक्त्वा पुनरेवाश्रमं ययौ" भा० आ० १७७ अ० ।

**शतधा** स्त्री शतं धत्ते धा-क । १दूर्वायाम् । शत+प्रकारे धाच् । २शतप्रकारे अव्य० ।

**शतधामन्** पु० शतं धामानि यस्य । विष्णौ जटा० ।

**शतधार** पु० शतं धारा अग्राणि यस्य । १वज्रे त्रिका० । २शतधारायुक्ते त्रि० "वसोः पवित्रमसि शतधारम्" यजुर्वेदः १।३६ । [१खड्गे च विश्वः ।

**शतधृति** पु० शतं धृतयोऽस्य । १इन्द्रे २ब्रह्मणि मेदि०

**शतपत्र** न० शतं बहूनि पत्त्राणि सुमस्यदलान्यस्य । १पद्मे अमरः । २मयूरे ३सारसखगे ४दार्वाघाटखगे मेदि० ५राजकीरे हेमच० ।

**शतपत्त्री** स्त्री शतं पत्त्राणि दलान्यस्याः ङीप् । (सेओति) पुष्पवृक्षभेदे । स्वार्थे क । तत्रैव । [पालकशाकभेदे ।

**शतपथ** पु० शतं पन्थानो यत्र अच्समा० । यजुर्वेदीयब्राह्मणे

**शतपथिक** त्रि० शतपथं वेत्त्यधीते वा ठन् । शतपथब्राह्म-णात्मकग्रन्थाध्यायिनि ।

**शतपद्** न० शतं पदानि यत्र । ज्योतिषोक्ते नक्षत्रपादानु-सारेण नामकरणोपयोगिप्रथमवर्णसूचके १चक्रभेदे चक्र-शब्दे २८१७ पृ० दृश्यम् । शतं पादाः यस्याः पादभावः समा० ङीप् पद्भावः । शतपदी २कीटभेदे (काणकोटारि) स्त्री अमरः । ३शतमूल्यां राजनि० । [रत्नमा० ।

**शतपद्म** न० शतदलयुक्तं पद्मम् । १शतदलकमले २श्वेतपद्मे च

**शतपर्वन्** पु० शतं पर्वाणि ग्रन्थयो यस्य । १वंशे अमरः २इक्षुभेदे च "शतपर्वा भवेत् किञ्चित् कोषकारगुणा-न्वितः । विशेषात् किञ्चिदुष्णश्च सक्षारः पवनापहः" भावप्र० । ३कटुकायां राजनि० । ४वचायां ५दूर्वायां च स्त्री ६भार्य्यां मेदि० । ७कोजागरपूर्णिमायां शब्द-रत्ना० । कप् । तत्र मेदि० ८वचे शब्दर० ।

**शतपादी** स्त्री शतं पादा अस्याः पाद्भावः । कीटभेदे (का-णकोटारि) जटा० । [जटा० । २जलौकायां च शब्दर० ।

**शतपादिका** स्त्री शतं पादा मूलान्यस्याः कप् । १काकोल्यां

**शतपुष्पा** स्त्री शतं पुष्पाणि यस्याः । (सुलफा) १शाकभेदे (मौरी) २क्षुपभेदे च । कप् । तत्रैव । "शतपुष्पा कटुः स्निग्धा तिक्तोष्णा कफवातजित् । वन्ध्या-वक्त्रहिता नेत्र्या बद्धविट् कृमियुक्प्रहृत् । संग्राहि-शीतला तिक्ता दाहतृट् वातला लघुः" भावप्र० । किरा-तार्जुनीयग्रन्थकारके भारविकवौ पु० त्रिका० । [राजनि० ।

**शतप्रसूना** स्त्री शतं प्रसूनानि यस्याः । (सुलफा) शाके

**शतप्रास** पु० शतं प्रासा इव फलानि यस्य । करवीरवृक्षे अमरः

**शतभिषज्** स्त्री शतं भिषज इव ताराः यत्र । शततारा-त्मके अश्विन्यादिषु चतुर्विंशे नक्षत्रे । शतभिषापत्र स्त्री

**शतभीरु** स्त्री शतं बहवो वियोगिनो भीरवो यस्याः ५त० । मल्लिकायाम् अमरः तद्दर्शने हि बहुवियोगिनां कामोद्दीपनात् ततो भीरुत्वम् । [२मेचके च ।

**शतमख** पु० शतं मखा यज्ञा यस्य । १इन्द्रे २उलूके ।

**शतमन्यु** पु० शतं मन्यवो यज्ञा यस्य शते दैत्येषु मन्युः क्रोधो वा यस्य । १इन्द्रे अमरः । २पेचके च ।

**शतमान** पु०न० शतेन मीयते मि-ल्युट् । १रूप्यपले २आ-ढके ३तत्परिमिते च अमरः । [चिकित्सके ।

**शतमारिन्** पु० शतं मारयति मृ-णिच्-णिनि । विशिष्ट-

**शतमुखी** पु० शतं मुखानि यस्याः ङीप् । १संमार्जन्यां २शतसंख्यायुक्ते त्रि० ।

**शतमूला** स्त्री शतं मूलान्यस्याः टाप् । १दूर्वायां २स्वनाम-ख्यातायां लतायाञ्च ङीवन्तः अमरः । [भेदे अमरः ।

**शतयष्टिक** पु० शतं यष्टयो गुच्छा यस्य । शतगुच्छके हार-

**शतरुद्रीय** न० शतं रुद्रानधिकृत्य कृतो ग्रन्थः छ । १शुक्लय-जुर्वेदोक्ते "नमस्ते रुद्र ! मन्यव इत्यादिके रुद्राध्याये ।

**शतरूपा** स्त्री शतं रूपाण्यस्याः। १ब्रह्मणः पत्न्यां २तत्कन्यायां सावित्र्यां च "ततः संजपतस्तस्य भित्त्वा देहमकल्मषम्। स्त्रीरूपमर्द्धमकरोदर्द्धं पुरुषरूपवत्। शतरूपा च सा ख्याता सावित्री च निगद्यते। सरस्वत्यथ गायत्री ब्रह्माणी च परन्तप। दृष्ट्वा तां व्यथितस्तावत् कामबाणार्द्दितो विभुः। उपयेमे स विश्वात्मा शतरूपामनिन्दिताम्। ततः कालेन महता ततः पुत्त्रोऽभवन्मनुः। स्वायम्भुव इति ख्यातः स विराडिति नः श्रुतम्" मात्स्ये ३अ०।

**शतवीर्य्या** स्त्री शतं वीर्य्याणि यस्याः ५ब०। १श्वेतदूर्वायाम् २शतावर्य्यां ३कपिलद्राक्षायां च राजनि०।

**शतवेधिन्** पु० शतं विध्यति विध–णिनि। अम्लवेतसे अमरः

**शतसहस्र** न० शतगुणितं सहस्रं शाक०। लक्षसंख्यायाम्।

**शतसाहस्र** त्रि० शतं सहस्राणि परिमाणमस्य अण् उत्तरपदवृद्धिः। लक्षसंख्याते।

**शतह्रदा** स्त्री शतं ह्रादाः शब्दा यस्याः पृषो० ह्रस्वः। १विद्युति अमरः। २वज्रे मेदि० ३दक्षकन्याभेदे वाह्निपु०

**शताक्षी** स्त्री शतमक्षीणीव पुष्पाण्यस्याः षच् समा० ङीष्। १रात्रौ २शतपुष्पायाम्। शब्दच० ३दुर्गायाञ्च "भूयश्च शतवार्षिक्यामनावृष्ट्यामनम्भसि। मुनिभिः संस्तुता भूमौ सम्भविष्याम्ययोनिजा। ततः शतेन नेत्राणां निरीक्षिष्यामि यन्मुनीन्। कीर्त्तयिष्यन्ति मनुजाः शताक्षीमिति मां ततः" देवीमाहात्म्ये। [दृक्षे च राजनि०।

**शताङ्ग** पु० शतमङ्गान्यवयवा यस्य। १रथे अमरः २तिनिश-

**शतानन्द** पु० शतमानन्दयति अण्। गौतमपुत्त्रे अहल्यागर्भजे १मुनिभेदे। स च जनकराजपुरोहितः। २देवकीनन्दने मेदि० ३ब्रह्मणि हेमच० ४विष्णुरथे त्रिका०। ५शतजनानन्दके त्रि०।

**शतानीक** पु० शतमनीकानि यस्य। १व्यासशिष्ये मुनिभेदे २चन्द्रवंश्ये नृपभेदे मेदि०। ३सुदासराजपुत्त्रे भाग० ९।२२ अ०।

**शतार** न० शतमराण्यस्य। वज्रे त्रिका०।

**शतारुस्** न० शतं अरूंषि यत्र। कुष्ठभेदे "रक्तं श्यावं सदाहार्त्ति शतारुः स्याद् बहुव्रणम्" भावप्र०।

**शतायुस्** त्रि० शतमायुर्वर्षकालोऽस्य। शतवर्षमितवयस्के "शतायुर्वै पुरुषः" श्रुतिः।

**शतावरी** स्त्री शतमावृणोति आ+वृ–अच् गौरा० ङीष्। १शतमूल्याम् अमरः। "शतावरी गुरुः शीता तिक्ता स्वाद्वी रसायनी। मेधाग्निपुष्टिदा स्निग्धा नेत्र्या गुल्मातिसारजित्। शुक्रस्तन्यकरी बल्या वातपित्तास्रशोथजित्" भावप्र०। २इन्द्रभार्य्यायां शब्दच०। ३शच्यां त्रिका०। [वर्त्तते णिनि। तत्रैव। शतावर्त्तिन्।

**शतावर्त्त** पु० शतमावर्त्ता यस्य। विष्णौ हेमच०। शतधा

**शताह्वा** स्त्री शतं शतमूली शतपुष्पा चेति आह्वा यस्याः मध्यपदलोपः। १शतमूल्यां राजनि० २शतपुष्पायाञ्च जटा०

**शतिक** त्रि० शतेन क्रीतः, तस्य विकारः तस्येदं वा ठन्। १शतेन क्रीते पदार्थे। २तद्विकारे ३तत्सम्बन्धिनि च। शतमस्मै वृद्धिः आयः लाभः शुल्कम् उपदा वा दीयते ठन्। ४वृद्ध्यादिरूपेण शतदानसम्प्रदाने। पक्षे यत् शत्य तत्रार्थे। [व्येव क्रीतादौ शतिकशब्दार्थे।

**शत्य** त्रि० शतेन क्रीतः शतिकशब्दवत् यत्। शतसंख्यातद्र-

**शत्रु** पु० शद–त्रुन्। १रिपौ राज्ञां २विषयानन्तरस्थे नृपे अमरः ३ज्योतिषोक्ते लग्नावधिकषष्ठस्थाने ४कामादिषु च। ५शातके त्रि०। [लक्ष्मणानुजे २रिपुनाशके त्रि०।

**शत्रुघ्न** पु० शत्रून् हन्ति हन–क। दशरथात्मजे सुमित्रागर्भजे

**शद** शातने शीर्णतायां भ्वा०पर०सक०अनिट् लृदित्। शीयते अशदत्। शत्स्यति।

**शद** गतौ भ्वा०पर०सार्वधातुके आत्म० सक०अनिट्। शीयते

**शद** पु० शद–अच्। फलमूलादौ सिद्धान्तकौ०।

**शद्रि** पु० शद–क्रि। १मेघे २जिष्णौ मेदिनी० ३गजे उज्ज्वल०

**शद्रु** त्रि० शद–क्रु १पतनकर्त्तरि २गन्तरि च।

**शनकावलि(ली)** स्त्री शनैः कायति कै–क पृषो० तेषामावलिर्यत्र वा ङीप्। गजपिप्पल्यां शब्दच०।

**शनपर्णी** स्त्री शणस्येव पर्णान्यस्याः पृषो० सस्य नः। कटुक्याम् शब्दच०।

**शनि** पु० शो–अनि किच्च। १सूर्य्यपुत्त्रे छायागर्भजाते ग्रहभेदे "शनिर्विहङ्गोऽनिलवन्तवक्त्रो शूद्राङ्गना धातुःसमोस्थिरश्च। क्रूरः प्रतीचोलुवरोऽतिवृद्धोऽकरः स्थितीट् दीर्घतनीलतौहम्"। नील० ताज०। "मन्दोऽलसः कपिलदृक् कृशदीर्घगात्रः स्थूलद्विजः परुषरोमकचोऽनिलात्मा" बृहज्जा०। २तत्स्वामिकदिने च "शनौ वर्ज्यां विजानीयात्" ज्यो० त०। [वारे।

**शनिवार** पु० शनिस्वामिको वारः। सूर्य्यादिवारमध्ये सप्तमे

**शनैश्चर** पु० शनैश्चरति चर–अच्। शनिग्रहे तस्य ग्रहाणां मध्ये सर्वोपरिकक्षस्थितत्वात् बहुकालेनैकैकराशिभोगात् मन्दगतित्वम्। [अमरः।

**शनैस्** अव्य०शण–डैसि पृषो० तुक् च। मन्दे २क्रमेण च

**शन्स** हिंसायां स्तुतौ कथने च भ्वा० पर० सक० सेट् क्त्वा वेट् । शंसति अशंसीत् । [शप्यति ते अशाप्सीत् ।

**शप** आक्रोशे वा भ्वा०पक्षे दिवा०उभ०सक०अनिट् । शपति ते

**शपथ** पु० शप-अथन् । सत्यताकरणाय दिव्यभेदकरणे यथा एतत् यदि मिथ्या स्यात् तदा मे एतदनिष्टं स्यादित्यादि

**शपन** पु० शप-ल्युट् । १शपथे अमरः । २गालौ त्रिका०।

**शप्त** त्रि० शप-क्त । १अभिशापयुक्ते २उलपाख्ये तृणभेदे पु० शब्दच० । [च मेदि०।

**शफ** न०शम-अच् पृषो०मस्य फः । १गवादीनां खुरे २वृक्षमूले

**शफर** पुंस्त्री० शफं राति रा-क । (पुंटी) मत्स्यभेदे अमरः स्त्रियां ङीष् ।

**शफराधिप** पु० ६त० । इल्लिशमत्स्ये त्रिका० । [शब्दत् त ।

**शब्द** शब्दकरणे अ०चु०उभ० सक० सेट् । शब्दयति ते अश-

**शब्द** पु० शब्द-घञ् । १ध्वन्यात्मके २वर्णात्मके च श्रोत्रेन्द्रियग्राह्ये आकाशस्य गुणभेदे ।

**शब्दग्रह** पु० शब्दं गृह्णाति ग्रह-अच् । १श्रोत्रेन्द्रिये षष्ठ्यर्थे अप् ६त० । २शब्दग्राने ।

**शब्दतन्मात्र** न० कर्म० । सांख्यमतसिद्धे आकाशकारणे सूक्ष्मभूतभेदे तन्मात्रशब्दे ३३२८ पृ० दृश्यम् ।

**शब्दन** त्रि० शब्द-ल्यु । शब्दकारके अमरः ।

**शब्दब्रह्मन्** न०शब्दात्मकं ब्रह्म । १वेदात्मके २स्फोटात्मके च नित्ये शब्दरूपे ब्रह्मणि । [१बाणभेदे २अर्जुने त्रिका० ।

**शब्दभेदिन्** पु०शब्दानुसारेण भिनत्ति लक्ष्यम् भिद-णिनि ।

**शब्दवेधिन्** पु० शब्दानुसारेण विध्यति लक्ष्यं विध-णिनि । १बाणभेदे २अर्जुने च धनञ्जयः ।

**शब्दशक्ति** स्त्री ६त० । शब्दानामर्थावबोधकतारूपे अभिधालक्षणादौ वृत्तिरूपे सामर्थ्ये ।

**शब्दाधिष्ठान** न० ६त० । कर्णे हेमच० ।

**शब्दानुशासन** न० अनुशिष्यतेऽनेन अनु+शास-ल्युट् ६त० । शब्दसाधुताज्ञापके व्याकरणे । "अथ शब्दानुशासनम्" महाभाष्यम् ।

**शब्दालङ्कार** पु० शब्दमात्रकृतोऽलङ्कारः । अलङ्कारशास्त्रप्रसिद्धेऽनुप्रासादौ अलङ्कारे । अलङ्कारशब्दे तद्भेदादिकं दृश्यम् ।

**शब्दित** त्रि० शब्द-क्त । आहूते ।

**शम** शान्तौ अक० शान्तीकरणे सक० दि० शमा० पर० सेट् । शाम्यति इरित् अशमत्-अशमीत् । उदित् क्त्वा वेट् । शान्तः । शमयति शामयति ।

**शम** आलोचने चु० उभ० सक० सेट् । शामयति ते शमयति ते अशीशमत् त ।

**शम** पु० शम-घञ् । १शान्तौ अन्तरिन्द्रियदमने अमरः । २मोक्षे त्रिका० ३पाणौ राजाश्रमः । ४उपचारे राजनि०

**शमथ** पु० शम-अथच् । १शान्तौ अमरः । २मन्त्रिणि मेदि० ।

**शमन** पु० शमयति शम-णिच्-ल्यु । लोकानां पुण्यापुण्यफलदातृत्वेन दण्डकारके १यमे अमरः । शम-णिच्-भावे ल्युट् । २शान्तीकरणे न० । ३यज्ञार्थपशुघाते अमरः ४चर्वणे धरणिः ५हिंसायां हेमच० ६मृगभेदे शब्दच० ।

**शमनस्वसृ** स्त्री ६त० । यमुनायाम् अमरः ।

**शमल** न०शम-कलच् । १विष्ठायाम् अमरः । २पापे संक्षिप्त०

**शमि(मी)** स्त्री शम-इन् वा ङीप् । (शांइ) १वृक्षभेदे "शमी तिक्ता कटुः शीता कषाया रेचनी लघुः । कफकासभ्रमश्वासकुष्ठार्शःकृमिजित् स्मृता" भावप्र० । २शिम्बायाम् (शुंटि) हेमच० । ३बाकुच्यां मेदि० ।

**शमिन्** त्रि० शाम्यति शम-णिनि । शान्ते ।

**शमीक** पु०शम-बा० ईक । मुनिभेदे । [२विप्रे च शब्दच०।

**शमीगर्भ** पु० शमीगर्भं आधारत्वेनास्त्यस्य अच् । १वह्नौ

**शमीधान्य** न० शमी शिम्बैव धान्यम् । शिम्बात्मके माषमुद्गादौ धान्ये अमरः ।

"शमीजाः शिम्बिजाः शिम्बा तराः सूप्याश्च वैदलाः । वैदलामधुरा रूक्षाः कषायाः कटुपाकिनः । वातलाः कफपित्तघ्ना बद्धमूत्रमला हिमाः । ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारकाः" । मुद्गमसूरयोरनाध्मानकारित्वमन्यवैदलापेक्षया न तु सर्वथा एतयोरपि किञ्चिदाध्मानकारित्वदर्शनात्" भावप्र० "शूकधान्यं शमीधान्यं समातीतं प्रशस्यते । परतो वातकृद्रूक्षं प्रायेणाभिनवं गुरु । यवगोधूममाषाश्च तिलाश्चाभिनवा हिताः । पुराणाविरसारूक्षा न तथार्थकरा मताः" राजवल्लभः ।

**शमीपत्री** स्त्री शम्या इव पत्त्रमस्याः ङीप् । लज्जालुलतायां जटा० ।

**शमीर** पु० अल्पा शमी अल्पार्थे र "क्वचित् स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते" इति भाष्योक्तेः पुंस्त्वम् । क्षुद्रायां शम्याम् अमरः ।

**शम्पा** स्त्री शं पाति पा-क । विद्युति अमरः ।

**शम्पाक** पु०शं शिवं पाके फले वा यस्य । १आरग्वधे अमरः । २विपाके ३यावके च हेमच० ।

**शम्ब** गतौ भ्वा० पर० सक० सेट् । शम्बति अशम्बीत् ।

**शम्ब** पु॰ शम्ब–अच्। १वज्रे २मूषलापस्थितलौहे मेदि॰। ३लौहकाञ्च्यां हेमच॰। ४अनुलोमकर्षणे भरतः। ५दरिद्रे च संक्षिप्तसा॰ ६भाग्यपति त्रि॰ रामाश्रमः।

**शम्बर** न॰ शम्ब–अरन्। १जले २धने ३व्रते रत्नमा॰। ४चित्रे च ५बौद्धव्रतभेदे हेमच॰। ६मृगभेदे ७दैत्यभेदे पु॰ मेदि॰ ८मत्स्यभेदे ९पर्वतभेदे १०जिनभेदे पु॰ विश्वः। ११युद्धे पु॰ १२श्रेष्ठे त्रि॰ धरणिः १३चित्रकवृक्षे १४लोध्रे १५अर्जुनवृक्षे च पु॰ राजनि॰। [राजनि॰।

**शम्बरकन्द** पु॰ शम्बरः श्रेष्ठः कन्दो यस्य। वाराहीकन्दे

**शम्बरचन्दन** न॰ ६त॰। शम्बरपर्वतजाते चन्दनभेदे राजनि॰

**शम्बरसूदन** पु॰ शम्बरमसुरं सूदयति छिनत्ति सुद–ल्यु। कामदेवे हला॰ तज्जननकथा हरिवं॰ १६३।१६४ अ॰ दृश्या।

**शम्बरारि** पु॰६त॰। कामदेवे अमरः। शम्बररिपादयोऽप्यत्र।

**शम्बरी** स्त्री शम्बरं जलं बाहुल्येनास्त्यस्या अच् गौरा॰ङीष्। १आखुपर्ण्यां मेदि॰। २मायायां शब्दर॰।

**शम्बल** पु॰न॰शम्ब–कलच्। १कूले २पाथेये ३मत्सरे च मेदि॰

**शम्बाकृत** त्रि॰ शम्बं कृष्टमनुलोममाकृष्यते शम्ब+कर्षणार्थे डाच्+कृ–क्त। अनुलोमेन द्विराकृष्टे कृष्टे क्षेत्रे अमरः।

**शम्बु** (म्बू) पुंस्त्री॰ शम्ब–उन् ऊ वा। १जलशुक्तौ (शामुक) हेमच॰ स्वार्थे क। तत्रार्थे। संज्ञायां कन्। गजकुम्भान्तभागे च। रामायणप्रसिद्धे शूद्रतापसे, शङ्खे हेमच॰ दैत्यभेदे च पु॰।

**शम्भ** त्रि॰ शमस्यास्ति शम्+भ। कल्याणयुक्ते।

**शम्भल** पु॰ शम्भं कल्याणदायकं तीर्थं लाति–ला क। १ग्रामभेदे यत्र कल्की भविष्यति तस्मिन्। २कुट्टिन्यां स्त्री अमरः गौरा॰ ङीष्।

**शम्भु** पु॰ शम्+भू–डु। १महादेवे अमरः। २ब्रह्मणि ३अर्हे मेदि॰ ४विष्णौ हला॰ ५सिद्धे शब्दर॰। ६श्वेतार्के शब्दर॰। [म्भु सुतादयोऽप्यत्र।

**शम्भुतनय** पु॰ ६त॰। १गणेशे २कार्त्तिकेये च शब्दमा॰ श-

**शम्भुप्रिया** स्त्री ६त॰। १आमलक्यां हेमच॰ २दुर्गायाञ्च।

**शम्भुवल्लभ** न॰६त॰। १श्वेतपद्मे राजनि॰ २महादेवप्रिये च

**शम्या** स्त्री शम–यत् टाप्। १युगकीलके अमरः। २दक्षहस्तदत्ततालभेदे संगीतदा॰। [४निद्रायां ५पक्षे च विश्वः।

**शय** पु॰ शी–अच्। १हस्ते अमरः। २सर्पे ३शय्यायां मेदि॰

**शयथ** पु॰ शी–अथच्। १अजगरसर्पे २मृत्यौ ३निद्राशीले त्रि॰ हेमच॰। ४वराहे ५मत्स्ये च पुंस्त्री॰संक्षिप्तसारः।

**शयन** न॰ शी–ल्युट्। १निद्रायां २शय्यायाम् अमरः ३मैथुने च मेदि॰।

देवभेदे शयनकालभेदादि वामनपु॰ १६अ॰ उक्तं यथा "मिथुनाभिगते सूर्ये शुक्लपक्षे तपोधन!। एकादश्यां जगत्स्वामिशयनं परिकल्पयेत्। शेषाहिभोगपर्य्यङ्कं कृत्वा संपूज्य केशवम्। कृत्वोपवीतकञ्चैव सम्यक् संपूज्य च द्विजान्। अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयतः शुचिः। लब्ध्वा पीताम्बरधरं स्वस्ति निद्रां समानयेत्। त्रयोदश्यां ततः कामः स्वपते शयने शुभे। कदम्बानां सुगन्धानां कुसुमैः परिकल्पिते। चतुर्दश्यां ततो यक्षाः स्वपन्ति सुखशीतले। सुवर्णपङ्कजकृते सुखास्तीर्णोपधानके। पौर्णमास्यामुमानाथः स्वपते चर्मसंस्तरे। वैयाघ्रे च जटाभारं समुद्ग्रथ्याप्यचर्मणा। ततो दिवाकरे राशिं संप्रयाति च कर्कटम्। ततोऽमराणां रजनी भवते दक्षिणायनम्। ब्रह्मा प्रतिपदि तथा नीलोत्पलदलेऽनघ!। तल्पे स्वपिति देवानां दर्शयन् मार्गमुत्तमम्। विश्वकर्मा द्वितीयायां तृतीयायां गिरेः सुता। विनायकश्चतुर्थ्यान्तु पञ्चम्यामपि धर्मराट्। षष्ठ्यां स्कन्दश्च स्वपिति सप्तम्यां भगवान् रविः। कात्यायनी तथाष्टम्यां नवम्यां कमलालया। दशम्यां भुजगेन्द्राश्च स्वपन्ति वायुभोजनाः। एकादश्यान्तु कृष्णायां साध्या ब्रह्मन् स्वपन्ति हि। एष क्रमस्ते गदितो निशायां शयने मुने!। स्वपत्सु तेषु देवेषु प्रावृट्कालः समाययौ"।

अथ लोकानां शयनप्रकारादि प्रदर्श्यते

"उपास्य पश्चिमां सन्ध्यां हुत्वाग्नींस्तानुपास्य च। भृत्यैः परिवृतो भुक्त्वा नातितृप्तोऽथ संविशेत्। शुचिं देशं विविक्तन्तु गोमयेन तु लेपयेत्। प्रागुदक्प्रवणे चैव संस्वपेत सदा बुधः। प्राक्शिराश्च स्वपेन्नित्यं तथा वै दक्षिणाशिराः। स्वपेदुदक्शिरा नैव तथा प्रत्यक्शिरा न च। न चान्तर्जलहीने तु न तिर्य्यक् च कदाचन। शून्यालये श्मशाने तु एकवृक्षे चतुष्पथे। महादेवगृहे चापि मातृवेश्मनि न स्वपेत्। न यक्षनागायतने स्कन्दस्यायतने तथा। दर्भेषु च विना दीक्षां न स्वपेच्च कथञ्चन। धान्यगेहे च विप्राणां गुरूणाञ्च तथोपरि। नाशुचौ पर्णकीर्णे तु नाशुचिर्नाग्निसंस्तथा। दिने सन्ध्यौ न नग्नश्च नोत्तरापरमस्तकः।

नाकाशे पर्वते शून्ये न च चैत्यद्रुमे तथा। न तु द्वारे-ऽम्भसाकीर्णे नार्द्रपादस्त्वधावितः। पालाशे शयने नैव बहुदारुकृते न च। न दग्धे विद्युता चैव वर्जिद्रुमे जले तथा। न स्वपेत् सन्ध्ययोर्नित्यं न शिवस्यायने कटे। एवं स्वपन् नरो नित्यं सुखमेह परत्र भाक्। अन्यथे च भवेद्दुःखी मृतो नरकमश्नुते" वह्निपु०। यति स्वर्गे शय्या न पातनीया सूर्योदयात् पूर्वमुत्तोलनीयेत्याह स्मृतिः "भास्करादृष्टशय्यानि नित्याग्निर्मलिकानि च। सूर्यैर्विलोकिदीपानि लक्ष्म्या वेश्मानि भाजनम्। आसनं वसनं शय्या जायापत्यं कमण्डलुः। आत्मनः शुचि-र्देतानि न परेषां कदाचन"। न कदाचन दत्तमनुमतिं विना अन्यथाऽऽतिथ्यानुपपत्तेः रघु०। व्यासः "शुचौ देशे विविक्ते तु गोमयेनोपलिप्तके। प्रागुदक्प्रवणे चैव संविशेत्तु सदा बुधः। माङ्गल्यं पूर्णकुम्भञ्च शिरःस्थाने निधापयेत्। वैदिकैर्गारुडैर्मन्त्रै रक्षां कृत्वा स्वपेत्ततः"। गर्गः "स्वगृहे प्राक्शिराः शेते श्वाशुरे दक्षिणाशिराः। प्रत्यक्शिराः प्रवासे तु न कदाचिदुदक्शिराः" मार्कण्डेयपु० "प्राक्शिरःशयने विद्यात् धनमायुश्च दक्षिणे। पश्चिमे प्रबलां चिन्तां हानिं मृत्युं तथोत्तरे" तथा "नमस्कृत्याव्ययं विष्णुं समाधिस्थः स्वपेन्निशि" मार्कण्डेयपु० "शून्यागारे श्मशाने च एकवृक्षे चतुष्पथे। महादेवगृहे चापि शर्करालोष्टपांशुषु। धान्यगोविप्रदेवानां गुरूणाञ्च तथोपरि। न चापि भग्नशयने नाशुचौ नाशुचिः स्वयम्। नार्द्रवासा न नग्नश्च नोत्तरापरमस्तकः। नाकाशे सर्वशून्ये च न च चैत्यद्रुमे तथा"। न स्वपेदित्यर्थः आ० त०। "भुक्त्वा च विधिवत् मन्त्रैर्हि जो भुक्ताऽवशिष्टकम्। सवृद्धबाल्यजनः स्वपेत् शुष्कपदो निशि। नोत्तराभिमुखः स्वप्यात् पश्चिमाभिमुखो न च। न चाकाशे न नग्नो वा नाशुचिर्नासने क्वचित्। न शीर्णायान्तु खट्वायां शून्यागारे न चैव हि। नापि वंशे च पालाशे शयने वा कदाचन" कौर्मपु० "कृतपादादिशौचस्तु भुक्त्वा सायं ततो गृही। गच्छेत् शय्यां सच्छन्नाञ्च अथवा दारुनिर्मिताम्। शाल्मलस्य कदम्बस्य नीपमन्दारकस्य च। किंशुकस्य वटस्याथ तथा कुक्कुरमस्य च। आरोहणात् भवेत् पापं तस्मात्तेषु न च स्वपेत्। प्रशो शय्यां स्थले वा अपके परमेश्वरि!। न शुष्के नापविते च न दग्धे न च भूतले। तूलिकायां तथा वस्त्रे शय्याभावे स्वपेद्गृही। स्वपेत् पट्टवस्त्रे च कम्बले कम्बलेषु च" मत्स्यपु० ४४प०। "श्वासानष्टौ समुत्तानस्तान् द्विःषट्पार्श्वे च दक्षिणे। ततस्तद्द्विगुणान् ३२ वामे पश्चात् स्वप्यात् यथासुखम्। वामदिशायामनलो नाभेरूर्द्धोऽस्ति जन्तूनाम्। तस्मात्तु वामपार्श्वे शयीत भुक्तप्रपाकार्थम्" भावप्र०। [तल्पे च।

**शयनीय** न० शी-आधारे अनीयर्। शय्यायाम् स्वार्थे क।

**शयनैकादशी** स्त्री इत०। आषाढ़शुक्लैकादश्याम्।

**शयालु** त्रि० शी-आलुच्। निद्राशीले अमरः। २अजगरे, ३कुक्कुरे च पु० हारा०। [द्रायां न०।

**शयित** त्रि० शी-कर्त्तरि क्त। १निद्रिते। भावे-क्त। नि-

**शयु** पु० शी-उ। १अजगरे सर्पे अमरः। उणा०। शयुनोऽप्यत्र उणादिको०।

**शय्या** स्त्री शी-आधारे क्यप्। १खट्वायाम् अमरः। भावे क्यप्। २शयने ३गुम्फने मेदि०। "त्रिदोषशमनी खट्वा तूली वातकफापहा। भूशय्या बृंहणी हृद्या काष्ठपट्टी तु वातला"। "भूशय्या वातलातीव रूक्षा पित्तास्रनाशिनी। सुशय्याशयनं हृद्यं पुष्टिनिद्राधृतिप्रदम्। श्रमानिलहरं वृष्यं विपरीत मतोऽन्यथा" भावप्र०। तच्छयनविधानं यथा "कृतपादादिशौचस्तु भुक्त्वा सायं ततो गृही। गच्छेत् शय्यामस्फुटितामपि दारुमयीं नृप!। नाविशालां न वै भग्नां नासमां मलिनां न च। न च जन्तुमयीं शय्यामधिगच्छेदनास्तृताम्"। विष्णुपु० ३अंशे ११अ०।

**शर** न० शृ-अच्। १जले २वाणे ३दधिदुग्धाद्यग्रसारे पु० मेदि०। ४इषुवाधने तृणभेदे पु०। "भद्रमुञ्जः शरो वाणस्तेजनश्चेक्षुवेष्टनः। मुञ्जो मुञ्जातको वाणः स्थूलदर्भः सुमेखलः। मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा। दाहतृष्णाविसर्पास्रमूत्रवस्त्यक्षिरोगजित्। दोषत्रयहरं वृष्यं मेखलासूपयुज्यते" भावप्र०। भावे अप्। ५हिंसायाम्।

**शरकाण्ड** पु० इत०। १शरस्तम्बे २तन्निर्मितकवाणे च।

**शरज** न० शरात् दधिदुग्धसारात् जायते जन-ड। १हैयङ्गवीने हेमच०। शरवणे जाते २कार्त्तिकेये पु०। अग्निकुमारशब्दे ५४४पृ० दृश्यम्।

**शरजन्मन्** पु० शरवणे जन्म यस्य। कार्त्तिकेये अमरः।

**शरट** पु० शृ-अटन्। १कृकलासे अमरः २कुसुम्भशाके च भरतः

**शरण** न० शृ-ल्युट्। १गृहे २रक्षके अमरः। ३रक्षणे ४वधे

मेदि० । ५घातके शब्दच० । ६प्रसारण्यां स्त्री शब्दर०टाप् ।

**शरणागत** त्रि० शरणमागतः आ+गम–क्त । शरणापन्ने ।

**शरणापन्न** त्रि० शरणमापन्नः आ+पद क्त । शरणमागते ।

**शरणार्थिन्** त्रि० शरणमर्थयते अर्थ–णिनि । शरणकामे ।

**श(स)रणि(णी)** स्त्री शृ(सृ)–अनि वा ङीप् । १पथि, ङीबन्तस्तु २प्रसारण्यां शब्दर० । ३जयन्त्याञ्च स्त्री शब्दर० । ४पृथ्व्याम् धरणिः ।

**शरण्ड** पु० शृ–अण्डच् । १खगे कामुके शब्दरत्ना० । २धूर्त्ते ३शरटे ४भूषणभेदे मेदि० । ५चतुष्पदि संक्षिप्तसा० ।

**शरण्य** त्रि० शरणाय साधुः यत् । १शरणागतत्राणकरणयोग्ये २दुर्गायां स्त्री ।
"विपदग्निभयघोरेषु शरणं अरणात् यतः । शरण्या तेन सा देवी पुराणे परिपठ्यते" देवीपु० ।

**शरण्यु** पु० शृ–अन्यु । १मेघे २वाते च त्रिका० । [शब्दर०

**शरत्कामिन्** पु० शरदं कामयते कम–णिनि । कुक्कुरे

**शरत्पद्म** न० शरदिव शुभ्रं पद्मम् । श्वेतपद्मे राजनि० ।

**शरत्पर्वन्** न० ७त० । कोजागरपूर्णिमानिमित्तोत्सवे जटा० ।

**शरद्** स्त्री शृ–अदि । १वत्सरे, २आश्विनकार्त्तिकमासात्मके ऋतौ च अमरः । तद्धर्मगुणाः भावप्र० उक्ता यथा "वर्षासु नाभसं वारि सेवेतौद्भिदमेव वा । सर्वं शरदि हेमन्ते तडागं सारसन्तु वा" । शारदं नानभिष्यन्दि लघु तत् परिकीर्त्तितम् । हैमन्तिकजलं स्निग्धं बल्यं हितं गुरु" राजव० । तन्नोत्तरवायुसेवनं हितं यथा "वसन्ते दक्षिणो वातो भवेत् वर्षासु पश्चिमः । उत्तरः शारदे काले पूर्वो हेमन्तशैशिरे" राजनि० । ऋतुशब्दे दृश्यम् । "शरदृतुस्तु वैद्यकमते भाद्राश्विनमासात्मकः । तत्र वर्णनीयानि चन्द्रपटुता जलसुप्रसन्नता अगस्त्यः हंसः वृषः" कविकल्प० ।

**शरधि** पु० शरा धीयन्तेऽत्र धा–आधारे कि । तूणे हेमच० ।

**शरपुङ्खा** स्त्री शरस्येव पुङ्खो यस्याः । नीलीतुल्याकृतौ क्षुपे पुङ्खाख्ये "शरपुङ्खा यकृत्प्लीहगुल्मव्रणविषापहा । तिक्ता कषाया कासास्रज्वरश्वासहरी लघुः" भावप्र० ।

**शरभ** पु० शृ–अभच् । "अष्टापादूर्द्ध्वनयन ऊर्द्ध्वपादचतुष्टयः" इत्युक्तलक्षणे १मृगभेदे अमरः । २करभे, ३वानरभेदे अमरः । ४उष्ट्रे च जटा० । ५शिशुपालपुत्रभेदे भा० आश्व० ८३ अ० । ६दानवभेदे भा० आ० ६५ अ० । "अष्टापादूर्द्ध्वनयनः शरभो वनगोचरः । तं सिंहं हन्तुमागच्छन्मुनेस्तस्य निवेशनम् । तं मुनिः शरभं चक्रे बलोत्कटमरिन्दमम् । ततः स शरभो वन्यो मुनेः शरभमग्रतः । दृष्ट्वा बलिनमत्युग्रं द्रुतं सम्प्राद्रवद्वनात् । स एवं शरभस्थाने संन्यस्तो मुनिना तदा । मुनेः पार्श्वगतो नित्यं शरभः सुखमाप्नवान् । ततः शरभसन्त्रस्ताः सर्वे मृगगणास्तदा । दिशः सम्प्राद्रवन् राजन् ! भयाज्जीवितकाङ्क्षिणः । शरभोऽप्यतिसंहृष्टो नित्यं प्राणिवधे रतः । फलमूलाशनं कर्त्तुं नैच्छत् स पिशिताशनः । ततो रुधिरतर्षेण बलिना शरभोऽन्वितः । इयेष तं मुनिं हन्तुमकृतज्ञः श्वयोनिजः । ततस्तेन तपःशक्त्या विदितो ज्ञानचक्षुषा । विज्ञाय स महाप्राज्ञो मुनिःश्वानं तमुक्तवान् । श्वा त्वं द्वीपित्वमापन्नो द्वीपी व्याघ्रत्वमागतः । व्याघ्राज्जागो मदपटुर्नागः सिंहत्वमागतः । सिंहस्त्वं बलमापन्नो भूयः शरभतां गतः । मया स्नेहपरीतेन विसृष्टो न कुलान्वयः । यस्मादेवमपापं मां पाप ! हिंसितुमिच्छसि । तस्मात् स्वयोनिमापन्नः श्वैव त्वं हि भविष्यसि । ततो मुनिजनद्वेष्टा दुष्टात्मा प्राकृतोऽबुधः । ऋषिणा शरभः शप्तस्तद्रूपं पुनराप्नवान्" भा० शा० ११७अ० ।

**शरभू** पु० शरे शरवणे भवति भू–क्विप् । कार्त्तिकेये हेमच० ।

**शरमय** त्रि० शरस्य विकारः मयट् । शरजाते पदार्थे ।

**श(स)रयु(यू)** स्त्री शृ–(सृ)–अयु वा ऊङ् । अयोध्यानगरीनिकटवाहिन्यां नद्याम् । तस्यां भवः अण् नि० । सा (शा)रव तत्र भवे त्रि० अमरः ।

**श(स)रल** त्रि० शृ(सृ)–अलच् । १सुगमे, २अकुटिलचित्ते (सरल) ३वृक्षभेदे च ।

**शरवणोद्भव** पु० शरवणम् उद्भवः उत्पत्तिस्थानमस्य । कार्त्तिकेये ।

**शरव्य** न० शरवे वाणक्षेपाय हितं शरु+यत् । लक्ष्ये, शरेण वेधनायोद्देश्ये अमरः ।

**शराटि(डि)(लि)** स्त्री शरमनुलक्ष्य अटति अट–इन् पृषो० टस्य डो लो वा । (शराल) पक्षिभेदे अमरः ।

**शराभ्यास** पु० ६त० । वाणमोचनशिक्षायाम् अमरः ।

**शरारु** त्रि० शृ–आरु । हिंस्रे अमरः ।

**शरारोप** पु० शराः आरोप्यन्तेऽत्र आ+रुह–णिच् । [अण् । धनुषि जटा०

**शराव** पु० शरं दध्यादिसारमवति अव–अण् । १मृण्मये पात्रभेदे, (शरा) अमरः । २कुडवद्वयपरिमाणे च वैद्यकम् ।

**शरावती** स्त्री शराः सन्त्यस्याम् मतुप् मस्य वः पूर्वदीर्घश्च । नदीभेदे अमरः ।

**शराश्रय** पु० ६त० । तूणे हेमच० ।

**शरासन** पु० शराः अस्यन्तेऽनेन अस–ल्युट् । १धनुषि अमरः । शराणामासनम् । २तूणे च ।

**शरिमन्** पु० शॄ–उणा० इमनिच् । प्रसवे सि०कौ० ।

**शरी** स्त्री शीर्य्यते शॄ–ई । एरकातृणे शब्दच० ।

**शरीर** न० शॄ–ईरन् । प्रतिक्षणं शीर्य्यमाणे १देहे ।
तस्य अङ्गप्रत्यङ्गभेदा भावप्र० उक्ता यथा
"गर्भाशयगतं शुक्रमार्त्तवं जीवसंज्ञकः । प्रकृतिः सविकारा च तत् सर्वं गर्भसंज्ञकम् । कालेन वर्द्धितो गर्भो यदाङ्गोपाङ्गसंयुतः । भवेत्तदा स मुनिभिः शरीरीति निगद्यते" । अङ्गोपाङ्गसंयुतः व्यक्ताङ्गोपाङ्गः । "तस्य त्वङ्गान्युपाङ्गानि ज्ञात्वा उच्यन्तयाक्रमतः । मस्तकादभिधीयन्ते शिष्याः ! शृणुत यत्नतः । आद्यमङ्गं शिरः प्रोक्तं तदुपाङ्गानि कुन्तलाः । तस्मान्मस्तुलुङ्गं च ललाटं भ्रूयुगं तथा । नेत्रद्वयं तयोरन्तर्वर्त्तिते द्वे कनीनिके । दृग्द्वयं कृष्णभागौ श्वेतभागौ च वर्त्मनी । पक्ष्माण्यपाङ्गौ गण्डौ च कर्णौ तच्छष्कुलीद्वयम् । शङ्खद्वयं कपोलौ च नासिका च प्रकीर्त्तिता । ओष्ठाधरौ च सृक्कण्यौ मुखं तालु हनुद्वयम् । दन्ताश्च दन्तवेष्टाश्च रसना चिबुकस्तथा । द्वितीयमङ्गं ग्रीवा तु यया मूर्द्धा विधार्य्यते । तृतीयं बाहुयुगलं तदुपाङ्गान्यथ ब्रुवे । तस्योपरिगतौ स्कन्धौ अंसकौ भवतस्त्वधः । कफोणियुग्मं तदधः प्रकोष्ठयुगलं तथा । मणिबन्धौ ततो हस्तौ तयोश्चाङ्गुलयो दश । नखाश्च दश ते ख्याता दश च्छेद्याः प्रकीर्त्तिताः । चतुर्थमङ्गं वक्षस्तु तदुपाङ्गान्यथ ब्रुवे । स्तनौ पुंसस्तथा नार्य्या विशेष उभयोरयम् । यौवनागमने नार्य्याः पीवरौ भवतः स्तनौ । गर्भवत्याः प्रसूतायास्तावेव क्षीरपूरितौ । हृदयं पुण्डरीकेण सदृशं स्यादधोमुखम् । जाग्रतस्तद्विकसति स्वपतस्तु निमीलति । आशयस्तत्तु जीवस्य चेतनास्थानमुत्तमम् । अतस्तस्मिंस्तमोव्याप्ते प्राणिनः प्रस्वपन्ति हि" । चेतनास्थानमुत्तममित्यस्याभिप्रायः "वेदकोषनवाप्य च मतं, द्रव्यगुणैर्विना" इत्युक्तवता चरकेण सकलं शरीरं चेतनास्थानमुक्तम् तदपेक्षया हृदयं विशेषतश्चेतनास्थानमिति "कक्षयोर्वक्षसः सन्धी जत्रुणी समुदाहृते । कक्षे उभे समाख्याते तयोः पार्श्वे च वङ्क्षणौ । उदरं पञ्चमं चाङ्गं षष्ठं पार्श्वद्वयं मतम् । पृष्ठवंशं तु तथा समस्तं सप्तमं स्मृतम् । उपाङ्गानि च कथ्यन्ते तानि जानीहि यत्नतः । शोणिताज्जायते प्लीहा वामतो हृदयादधः । रक्तवाहिशिराणां च मूलं ख्यातो महर्षिभिः । हृदयाद्वामतोऽधश्च फुप्फुसो रक्तफेनजः । अधो दक्षिणतश्चापि हृदयात् यकृतः स्थितिः । तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम् । अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति । जलवाहिशिरामूलं तृष्णाच्छादनकं मतम्" । क्लोम तिलकम् एतच्च वातरक्तजम् । तत्र वाग्भटः "रक्तादनिलसंबद्धात्कालीयकवदुद्भव" इति "मेदःशोणितयोः सारात् वृक्कयोर्युग्मकं भवेत् । तौ तु पुष्टिकरौ प्रोक्तौ जठरस्थस्य मेदसः । उक्ताः सार्द्धास्त्रयो व्यामाः पुंसामन्त्राणि सूरिभिः । अर्द्धव्यामेन हीनानि योषितोऽन्त्राणि निर्दिशेत् । उण्डुकश्च कटी चापि त्रिकं वस्तिश्च वङ्क्षणौ । कक्षराणां शरीरः स्यात् स्थानं तद्वीर्य्यमूत्रयोः । स एव गर्भस्याधानं कुर्य्याद्गर्भाशये स्त्रियाः । शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च कीर्त्तिता । तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता । वृषणौ भवतः सारात्कफासृङ्मांसानां च मेदसाम् । वीर्य्यवाहिशिराधारौ तौ मतौ पौरुषावहौ । गुदस्तु मानं सर्वस्य सार्द्धं स्याच्चतुरङ्गुलम् । तत्र स्युर्वलयस्तिस्रः शङ्खावर्त्तनिभास्तु ताः । प्रवाहिणी भवेत् पूर्व्वा सार्द्धाङ्गुलमिता मता । उत्सर्जनी तु तदधः सा सार्द्धाङ्गुलसम्मिता । तस्याधः संवरणी स्यादेकाङ्गुलमिता मता । अर्द्धाङ्गुलप्रमाणं तु गुदौष्ठं दृढकं मतम् । मलोत्सर्गस्य मार्गोऽयं पायुर्देहे विनिर्मितः । पुंसः प्रोथौ स्फिचौ यौ तु तौ नितम्बौ च योषितः । तयोःकुकुन्दरे जाते सक्थिनी त्वङ्गमष्टमम् । तदुपाङ्गानि च ऊरू जानुनी पिण्डिकाद्वयम् । जङ्घे द्वे घुटिके पार्ष्णीतले च प्रपदे तथा । पादाङ्गुल्यश्च दश तासां नखा दश" ।

**शरीरक** पु० शरीरं कायति आत्मत्वेनाभिमन्यते कै–क । जीवे । स्वार्थे वुञ् । शारीरकोऽप्यत्र ।

**शरीरज** पु० शरीरात् जायते जन–ड । १रोगे २कामदेवे ३पुत्रे च धरणिः । ४देहजातमात्रे त्रि० ।

**शरीरावरण** न० शरीरमावृणोति आ+वृ–युच् । देहव्यापिनि १चर्म्मणि राजनि० । २देहावरके त्रि० । ल्युट् । ३देहाच्छादने न० । [जटा० ।

**शरीरिन्** पु० शरीरमात्माभिमानाश्रयत्वेनास्त्यस्य इनि । जीवे

**शरु** पु० शॄ–उन् । १क्रोधे २वज्रे मेदि० । ३बाणे हेमच० । ४आयुधे च संक्षिप्तसा० ।

**शरेष्ट** पु० शृणाति कामिनं शॄ–अच् शरः कामः तस्य इष्ट इष–क्त । आम्रे जटा० ।

**शर्करक** पु० शर्करायाः रसः अच् इत्यभावः शर्करः रस इव कायति मधुरत्वात् कै–क । मधुरजम्बीरे राजनि० ।

**शर्करजा** स्त्री शर्करात् जायते जन–ड । सिताखण्डे राजनि०

**शर्करा** स्त्री शॄ–करन् कस्य नेत्वम् । १खण्डविकारे (चिनि) अमरः । २उपलखण्डे ३कर्परखण्डे च (खापरा) मेदि० । शर्कराः सन्त्यस्य मतुप् तस्य लुक् । ४वहुशर्करायुते देशे अमरः । ५रोगभेदे अश्मरीशब्दे ४९५ पृ० दृश्यम् । ६शकले च मेदि० । शर्कराभेद गुणा राजनि० उक्ता यथा “स्निग्धा पक्वेक्षुशर्करा हितकरी शीते श्रमेऽरोचके चक्षुष्या बलवर्द्धनी सुमधुरा हृद्या च वंशेक्षुजा । हृद्या तृप्तिबलप्रदा श्रमहरा श्यामेक्षुजा शीतला स्निग्धा कान्तिकरी शरावजनिता रक्तेक्षुजा पित्तजित्” “यावनाली हिमोत्पन्ना हिमाली हिमशर्करा । क्षुद्रशर्करिका क्षुद्रा गुडजा जलबिन्दुजा । हिमजा शर्करा शीत्या शीता· तिक्ताऽतिपिच्छला । वातघ्नी सारिका हृद्या दाहपित्तास्रदाविनी । ‘शीतजान्याकर्करजा माध्वी च मधुशर्करा । माक्षिका शर्करा प्रोक्ता सिताखण्डस्य खण्डकः । सिताखण्डोऽतिमधुरश्चक्षुष्यश्छर्दिनाशनः । कुष्ठव्रणकफश्वासहिक्कापित्तास्रदोषनुत् । सवासशर्करा त्वन्या सुधामोदकमोदकः । तवराजः खण्डसारः खण्डजा खण्डमोदकः” । “मत्स्यण्डीकाः खण्डसिता गुणश्रेष्ठा यथोत्तरम् । विमलाः शीतलाः स्निग्धाः गुर्व्यः स्वादुतराः सराः । हृद्याश्च पावनाः शीतरक्तपित्तानिलापहाः । मत्स्यण्डी पाचिनी बल्या कषाया वातजित् गुरुः । खण्डं गुरु सरं हृद्यं वातघ्नं बलपुष्टिदम् । सितोपला सरा गुर्वी वातघ्नी न कफप्रदा” । पथ्यापथ्यविवेकः “शर्करा ज्वरपित्तास्रहृन्मूर्च्छाच्छर्दितृषापहा । तृष्णाघ्नस्तवराजस्तु ज्वरदाहास्रपित्तनुत् । वर्णिका फाणितगुडखण्डमत्स्यण्डिकासिताः । निर्मला बलदो ज्ञेयाः शीतवीर्या यथोत्तरम् । यथा यथैषां वैमल्यं भवेच्छैत्यं तथा तथा” राजवल्लभः । “खण्डन्तु सिकताकारं सुश्वेतं शर्करा सिता । सिता सुमधुरा रुच्या वातपित्तास्रदाहजित् । मूर्च्छाच्छर्दिज्वरान् हन्ति सुशीता शुक्रकारिणी । भवेन्मधुसिता शीता रक्तपित्तहरी गुरुः । छर्द्यतीसारतृड्दाहरक्तकृत्तुवरा हिमा । यथा यथैषां नैर्मल्यं मधुरत्वं तथा तथा । स्नेहगौरवशैत्यानि सरत्वञ्च तथा तथा” भावप्र० गुणग्रन्थे ।

**शर्कराचल** पु० दानार्थं कल्पिते शर्कराकृते पर्वते । तद्विधिः हेमा० दा० पद्मपुराणे उक्तो यथा “अथातः संप्रवक्ष्यामि शर्कराचलमुत्तमम् । यस्य प्रदानाद्विष्णुर्कंरुद्रास्तुष्यन्ति सर्वदा । अष्टभिः शर्कराभारैरुत्तमः स्यान्महाचलः । चतुर्भिर्मध्यमः प्रोक्तो भाराभ्यामधरः स्मृतः । भारेण वार्द्धभारेण कुर्य्याद्यः स्वल्पवित्तवान् । विष्कम्भपर्वतान् कुर्य्यात् तुरीयांशेन मानवः । धान्यपर्वतवत्सर्वमासाद्यामरसंयुतम् । मेरोरुपरि तद्वच्च स्थाप्य हेमतरुत्रयम् । मन्दारः पारिजातश्च तृतीयः कल्पपादपः । एतद्वृक्षत्रयं मूर्ध्नि सर्वेष्वपि निवेशयेत् । हरिचन्दनसन्तानौ पूर्वपश्चिमभागयोः । निवेश्यौ सर्वशैलेषु विशेषाच्छर्कराचले । मन्दारे कामदेवश्च प्रत्यग्वक्त्रः सदा भवेत् । गन्धमादनशृङ्गे च धनदः स्यादुदङ्मुखः । प्राङ्मुखो वेदमूर्त्तिश्च हंसः स्याद्विपुलाचले । हैमी सुपार्श्वे सुरभी दक्षिणाभिमुखी भवेत् । धान्यपर्वतवत् सर्वमावाहनमखादिकम्” ।

**शर्कराधेनु** स्त्री दानार्थं कल्पिते शर्कराकृते धेन्वाकारे स्तूपभेदे हेमा०दा० स्कन्दपुराणोक्ततद्विधिर्यथा “तद्वच्च शर्कराधेनुं राजन् ! कुर्य्यात् यथार्थतः । अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशोत्तरे । धेनुः शर्करया राजन् ! सदा भारचतुष्टयम् । उत्तमा कथ्यते वह्निचतुर्थांशेन वत्सकः । तदर्द्धं मध्यमा प्रोक्ता चतुर्थांशेन कन्यसा । तद्वद्वत्सं प्रकुर्वीत चतुर्थांशेन मानवः । अथ वा धेनुतः कुर्य्याद्दशांशेन तु वत्सकम् । स्वशक्त्या कारयेद्धेनुं यथात्मानं न पीडयेत् । सर्वबीजानि संस्थाप्य चतुर्दिक्षु समन्ततः । सौवर्णमुखशृङ्गाणि मौक्तिकैर्नयनानि च । गुडेन च मुखं कार्यं जिह्वा पिष्टमयी तथा । कम्बलं पट्टसूत्रेण घण्टाभरणभूषिता । इक्षुपादा रौप्यखुरा नवनीतमयस्तना । प्रशस्तपत्रश्रवणा सितचामरभूषिता । पञ्चरत्नसमायुक्ता दर्भरोमसमन्विता । कांस्योपदोहना सम्यक् गन्धपुष्पैः समन्विता । ईदृक् विधानसंयुक्तां वस्त्रैराच्छादितां तथा । गन्धपुष्पैरलंकृत्य ब्राह्मणाय निवेदयेत्” ।

**शर्करार्बुद** पु० रोगभेदे तल्लक्षणं भावप्र० उक्तं यथा ‘प्राप्य मांसं सिराः स्नायुं मेदः श्लेष्मा तथानिलः । ग्रन्थिं करोत्यसौ भिन्नो मधुसर्पिर्वसानिभम् । स्रवत्याशावसत्यर्थं तत्र वृद्धिं गतोऽनिलः । मांसं विशोष्य

पचितां शर्करां जनयत्यतः । दुर्गन्धक्लिन्नमत्यर्थं नानावर्णं ततः सिराः । स्रवन्ति सहसा रक्तं तं विन्द्याच्छर्करार्बुदम्” । शर्करा बालुकातुल्या” भावप्र० ।

**शर्करावत्** त्रि० शर्कराः सन्त्यस्मिन् मतुप् मस्य वः । बहुशर्करायुक्तदेशे ।

**शर्करासप्तमी** स्त्री वैशाखशुक्लपक्षसप्तम्याम् । तद्विधानं मत्स्यपु० ७२अ० उक्तं यथा “शर्करासप्तमीं वक्ष्ये तद्वत् कलुषनाशिनीम् । आयुरारोग्यमैश्वर्यं ययानन्तं प्रजायते । माधवस्य सिते पक्षे सप्तम्यां शुक्लपक्षतः । प्रातःस्नात्वा तिलैः शुक्लैः शुक्लमाल्यानुलेपनैः । स्थण्डिले पद्ममालिख्य कुङ्कुमेन सकर्णिकम् । तस्मै नमः सवित्रे तु गन्धपुष्पं निवेदयेत्” इत्यादि ।

**शर्करोदक** न० शर्करामिश्रितमुदकम् । (चिनिर पाना) शर्करामिश्रिते जले तत्करणप्रकारगुणादिकं भावप्र०उक्तं यथा “जलेन शीतलेनैव घोलिता शुभ्रशर्करा । एलालवङ्गकर्पूरमरिचैश्च समन्विता । शर्करोदकनाम्नैतत् प्रसिद्धं विदुषां मतम् । शर्करोदकमाख्यातं शुक्रलं शिशिरं सरम् । बल्यं रुच्यं लघु स्वादु वातपित्तास्रनाशनम् । मूर्च्छाच्छर्दितृषादाहज्वरशान्तिकरं परम्” भावप्र०

**शर्करिक** त्रि० शर्कराः सन्त्यस्य ठन् । बहुशर्करायुक्तदेशे इलच् । शर्करिल-तत्रैव उभयत्रामरः ।

**शर्द्ध** पु० शृध-घञ् । अपानवायूत्सर्गे । ल्युट् । तत्रैव न० ।

**शर्द्धञ्जह** पु०शर्द्धमपानवायूत्सर्गं जहाति हा-खश् मुम् च । माषे । तद्भोजने हि अपानवायुर्निःसरतीति तस्य तथात्वम् ।

**शर्ब** हिंसायां गतौ च भ्वा०पर०सक०सेट् । शर्बति अशर्बीत् ।

**शर्मद** त्रि० शर्म ददाति दा-क । १सुखदायके २विष्णौ पु० विष्णुसं० ।

**शर्मन्** शृ-मनिन् । १सुखे २तद्वति त्रि० ३ब्राह्मणोपाधौ पु० “शर्मा देवश्च विप्रस्य वर्मा त्राता च भूभुजः । भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्” यमः । “शर्मान्तं ब्राह्मणस्य स्यात् वर्मान्तं क्षत्रियस्य तु । धनान्तञ्चैव वैश्यस्य दासान्तं चान्त्यजन्मनः” शातातपः ।

**शर्मरा** स्त्री शर्म-राति रा-क । १दारुहरिद्रायां २वस्त्रभेदे पु० धरणिः ३सुखदायके त्रि० ।

शर्या स्त्री शृ-यत् । रात्रौ वाचस्पतिः ।

**शर्याति** पु० वैवस्वतमनोः पुत्रभेदे ।

**शर्व** हिंसे भ्वा० पर० सक० सेट् । शर्वति अशर्वीत् ।

**शर्व** पु० शर्व-अच् । १महादेवे हेमच०। २विष्णौ विष्णुस०।

**शर्वर** पु० शर्व-अरन् । १कामदेवे २तमसि न० उणादि० । ३सन्ध्यायाञ्च संक्षिप्तसा० ४स्त्रियां मेदि० ।

**शर्वरी** स्त्री शृ-वनिप् ङीप् वनो र च । १रात्रौ अमरः । शर्वरीशश्चन्द्रः । २हरिद्रायां विश्वः । [हेमच०।

**शर्वला** स्त्री शर्व-घञ् शर्वं लाति ला-क । तोमरास्त्रे

**शर्वाणी** स्त्री शर्वस्य पत्नी ङीष् आनुक् च । भवान्यां हेमच०

**शल** चलने भ्वा० आत्म० सक० सेट् । शलते अशलिष्ट । अशलिढ्(ध्व)म् शले [ज्वलादि० शलः शालः ।

**शल** गतौ भ्वा० पर० सक० सेट् । शलति अशालीत् ।

**शल** श्लाघायां चु० आत्म०सक०सेट् । शालयते अशीशलत ।

**शल** वेगे भ्वा० पर० सक० सेट् । शलति अशालीत् ।

**शल** न० शल-अच् । १शल्लकीलोम्नि (सजारुकाँटा) अमरः २भृङ्गिणि ३उष्ट्रभेदे ४ब्रह्मणि च पु० मेदि० ५कुन्तास्त्रे त्रिका० ६वक्रे पुंस्त्री० हेमच० स्त्रियां ङीप् ।

**शलक** पु० शल-वुन् । (माकड़सा) कीटभेदे त्रिका० ।

**शलङ्क** पु० शल-अङ्कच् । १लोकपाले २लवणभेदे उणादि० ।

**शलभ** पु० शल-अभच् । कीटभेदे पतङ्गे अमरः ।

**शलल** न० स्त्री शल-कलच् । शल्लकीलोम्नि (सजारुकाँटा) अमरः । स्त्रीत्वे गौरा० ङीष् ।

**शलाका** स्त्री शल-आकन् । १शल्ये २मदनवृक्षे (मयना) ३शारिकायां ४शल्लक्यां ५शरे मेदि० ६चालेख्यतूलिकायां हेमच०। ७अस्थ्नि च शब्दच०। सुश्रुतोक्ते व्रणाद्युद्धारणार्थे यन्त्रभेदे यन्त्रशब्दे दृश्यम् ।

**शलाकापरि** अव्य०अव्ययी०। शलाकासाधनक्रीडायां पराजये

**शलाकापुरुष** पु० हेमचन्द्रोक्ते बौद्धानां त्रिषष्टिदेवपुरुषभेदे

**शलाटु** त्रि० शल-आटु । १अपक्वफले अमरः । २मूलभेदे उणादि० ३बिल्वे च पु० राजनि०।

**शलालु** पु० शल-आलुच् । सुगन्धिद्रव्यभेदे सि०कौ० ।

**शलालुक** त्रि० शलालुना क्रीतं ठन् । शलालुद्रव्येण क्रीते पदार्थे स्त्रियां ङीष् ।

**शल्क** न०शल-क कस्य नेत्त्वम् । १खण्डे २वृक्षवल्कले अमरः । ३मत्स्यत्वचि च (आँस) कोषान्तरम् । [त्वचि च सि०कौ०

**शल्कल** न०शल-कलन् कस्य नेत्त्वम् । १मत्स्यवल्कले २वृक्ष-

**शल्कलिन्** पु० शल्कलमस्त्यस्य इनि । मत्स्ये शब्दर० ।

**शल्किन्** पु० शल्कमस्त्यस्य इनि । मत्स्ये हेमच० ।

**शल्पदा** स्त्री शल-अच् तादृशं पदं मूलं यस्याः । मेदाख्यौषधौ राजनि० ।

**शल्भ** प्रशंसायां भ्वा०आ०सक० सेट् । शल्भते अशल्भिष्ट ।

**श(शा)ल्मलि** पु० शल–मलच् स्वार्थे इन् इञ् वा । शाल्मलिवृक्षे (शिमुल) द्विरूपकोषः स्त्रीत्वमपि तत्र वा ङीप् तत्रार्थे ।

**शल्य** न० शल–यत् । १बाणे २तोमरे ३शङ्कौ मेदि० ४श्वाविकायां विश्वः । ५दुःखदे ६दुर्वाक्ये शब्दर० ७पापे त्रिका० "शल्यं नाम विविधतृणकाष्ठपाषाणपांशुलोहलोष्टास्थिबालनखपूयास्रावान्तर्गर्भशल्योद्धारणार्थं यन्त्रशस्त्रक्षाराग्निप्रणिधानं व्रणविनिश्चयार्थञ्च" सुश्रुतोक्ते चिकित्साङ्गे तन्त्रभेदे ८वास्तु ज्यो०त०। वास्तुभूमिस्थ शल्यज्ञानं प्रश्नाक्षरेण यथा भवति तथोक्तं ज्यो०त०

"सुनिश्चितां मन्दिरभूमिमादौ विस्तार तोयावधि खातनत्वात् । कुर्य्यादिशल्यामय वा समानं खात्वाथ वा प्रश्नवशाद्विधिज्ञः । दूर्वाप्रवालाक्षतपुष्पपाणिः शुचिः शुचिं दैवविदं समेत्य । पृच्छेद्विनीतो मधुरस्वरेण शल्यस्य तत्त्वं भवने तदीयः । ततः प्रश्नाद्दिमो वर्णः सन्ध्यायां वक्रतोऽथ वा । क्रमात् पुष्पायनादेवक्रतानां अ.शाद्यादिकः । अथवो धरणी धारिणी करौ तदनन्तरम् । न मूल्वे नम इत्येष मन्त्रो वह्निप्रियात्मकः" वह्निप्रिया स्वाहा "मन्त्रेणानेन खटिनीमभिमन्त्र्य विभाजयेत् । नवधा सदनक्षेत्रं तथा वर्णाद्विलेखयेत् । अकचत एहाः शपसा नव चेत् प्रश्नाक्षराणि जायन्ते । प्रागादिकोष्ठनवके वर्णोक्ते शल्यमाख्यान्ति । प्रश्ने अकारः पुरतो नरास्थि अनेति शल्यं मरणप्रदायि । खोचोस्यदग्धोरनदेवहस्तुप्रदं ककारः खरशल्यमन्तौ । याम्ये चकारः श्वगास्थिवेश्म प्रभोर्विनाशं प्रकरोति शल्यम् । रक्षोदिशि चास्थि स्टहस्थितानां मत्स्वयं वक्ति सुनिश्चितं तः । एः पश्चिमदिश्यस्थि शिशोर्ब्रवीति स्टत्यु प्रवासाद् स्टहमेव शल्यम् । कौवायुकोणे नरकृपशास्थि दारिद्र्यमित्रक्षयकद्विधत्ते । धनपदिशि शकारः प्राह विप्रास्थि विसन्धयश्चक्रद यकारो वक्ति च्छ्यास्थि भर्त्तौ । तदिह कुलविनाशं गोधनानाञ्च हानिं वितरति स्टहनाथस्यापि शुश्रुस दैवैः । यो मध्यभागे भवितं कपालं कालायसं चाह कुलक्षयाय । यत्नादपास्तान्यधुना प्रमाणं सर्वत्र तथ्यं कथयामि शल्ये । इन्द्रस्योजलेशाने शल्यं चार्द्धकरे कटौ । वह्न्यन्तककुबेरेषु पुरुषे मध्यवातयोः" । देवीपु० "पुरुषाधःस्थितं शल्यं न स्टहे दोषदं भवेत् । प्रासादे दोषदं शल्यं भवेत् यावज्जलान्तकम् । स्टहारम्भे ऽतिकण्डूतिः स्वास्थ्ये यदि जायते । शल्यं त्वपनयेत्तत्र प्रासादे भवनेऽपि वा" । १०मदनवृक्षे ११श्वाविधि च पु० अमरः १२नकुलमातुले मद्राधिपे नृपभेदे पु०१३सीम्नि १४शलाकायां पु० हेमच० १५बिल्ववृक्षे पु० १६मत्स्यभेदे राजनि० । १७शल्यभेदे पु० त्रिका० ।

**शल्यक** पु० शल्य इव कायति कै–क । १मदनवृक्षे (मयना) शब्दच० । २शल्यकीस्वगे च पुंस्त्री० स्त्रियां ङीप् राजनि० ।

**शल्यलोमन्** न० शल्यमिव लोम । शल्यकीलोम्नि राजनि० ।

**शल्यारि** पु० ६त० । शल्यस्यपहन्तरि युधिष्ठिरे तद्धननकथा भा० शल्य० दृश्या ।

**शल्ल** गतौ भ्वा० पर० सक० सेट् । शल्लति अशल्लीत् ।

**शल्ल** न० शल्ल–अच् । १त्वचि २भेके पु० शब्दच० । स्वार्थे क । त्वचि न०। ३शोणवृक्षे पु० जटा० । (सजारु) ४पक्षिभेदे स्त्री गौरा० ङीप् । सा च ५गजभक्ष्यावृक्षे अमरः ।

**शल्लकीद्रव** पु० शल्लक्याद्रव इव स्वादुत्वात् । सिह्लके जटा० ।

**शल्व** पु ०शल–व । शाल्वदेशे उणा०। [अशवीत् ।

**शव** विकारे गतौ च भ्वा०पर०सक० सेट् । शवति-अशावीत्

**शव** पु०न० शव–अच्। स्वतदेहे गतप्राणे १देहे अमरः । २जले न० मेदि० ।

**शवकाम्य** न० शवः काम्यो यस्य । कुक्कुरे शब्दर० ।

**शवयान** न० शववाहनं यानम् शाक० । स्वतदेहवाहनार्थे तल्पे हारा० ।

**शवर** न० शव–अरन् । १म्लेच्छजातिभेदे अमरः । २पानीये ३शिवे च पु० मेदि० ३तत्पत्न्यां स्त्री ङीप् । ४शास्त्रभेदे ५हस्ते पु० शब्दादिको० मीमांसाभाष्यकारके ६विद्वद्भेदे । [शब्दर० ।

**शवरथ** पु० शववाहनार्थं रथः शाक० । शववाहनार्थे याने

**शवरलोध्र** पु० शवरप्रियः लोध्रः । श्वेतलोध्रे रत्नमा०।

**शवरालय** पु० ६त० । शवरावासस्थाने अमरः ।

**शवल** पु० शव–कलन् । १कर्बुरवर्णे २तद्वति त्रि० अमरः । ३तद्वर्णवत्यां धेनौ स्त्री अमरः ।

**शवसान** पु० शव-आनच् सुक् च । पथिके सि०कौ० ।

**शश** प्लु तगतौ भ्वा०पर०सक०सेट् । शशति। अशाशीत्-अशशीत्

**शश** पुंस्त्री० शश–अच् । पशुभेदे (खरगोश) अमरः । स्वार्थे क । तत्रैव ।

"शशः शीतो लघुर्ग्राही रूक्षः स्वादुः सदा हितः । वह्निकृत् कफपित्तघ्नो वातसाधारणः स्मृतः । ज्वरा-

तिसारशोषाश्मश्वासामयहरश्च सः” भावप्र०। श्राद्धे तन्मांस दाने फलभेदः श्रा० त० उक्तो यथा “ऐणरौरव वाराहशाशैर्मांसैर्यथाक्रमम्। मासवृद्ध्याभितृप्यन्ति दत्तेनेह पितामहाः” तन्मांसं विष्णवे देयं यथोक्तं “मार्गं मांसं तथा छागं शाशं समनुभक्ष्यते। एतानि मे प्रियाणि स्युः प्रपन्नानि वसुन्धरे!” वराहपु० २चन्द्राङ्करूपेऽन्तगे धरणिः। ३बोले ४लोध्रे ५नरभेदे मेदि०। तल्लक्षणं यथा “मृदुवचनसुशीलः कोमलाङ्गः सुकेशः सकलगुणनिधानं सत्यवादी शशोऽयम्” रतिम०।

**शशक** पुंस्त्री० शश--स्वार्थे क। (खरगोश) पञ्चनखेषु भक्ष्ये पशुभेदे “शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चमः। भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः” मनुः।

**शशधर** पु० शशं मृगभेदं धरति धृ-अच्। १चन्द्रे २कर्पूरे च अमरः। भृ--क्विप् शशभृदादयोऽप्यत्र।

**शशलाञ्छन** पु० शशः मृगभेदो लाञ्छनं यस्य। १चन्द्रे २कर्पूरे च शशाङ्कादयोऽप्यत्र।

**शशबिन्दु** पु० १राजभेदे २विष्णौ च मेदि०।

**शशशिम्बिका** स्त्री शश इव शिम्बी तया कायति कै-क। जीवन्त्यां राजनि०। [यमुनयोर्मध्यस्थे देशभेदे त्रिका०।

**शशस्थली** स्त्री शशवासयोग्या स्थली। अन्तर्वेद्यां गङ्गा-

**शशाण्डुलि** स्त्री अडि--उलि ६त०वा ङीप्। कर्कटीभेदे राजनि०। “शशाण्डुली तिक्तकटुश्च कोमला कट्वम्लयुक्ता मधुरा कफापहा। पाके तु वाऽम्ला मधुरा विदाहकृत् कफे तु शुष्का रुचिकृच्च दीपनी” राजनि०। [ल्यु। तत्रैव।

**शशाद** पु० शशमत्ति अद्-अण्। श्येनविहगे राजनि०।

**शशिकला** स्त्री ६त०। १चन्द्रस्य षोडशभागे “गुरुनिधनमनुलघुरिह शशिकला” छन्दोम० उक्तलक्षणे २पञ्चदशाक्षरपादके छन्दोभेदे। [मणौ पु० राजनि०।

**शशिकान्त** न० शशी कान्तो यस्य। १कुमुदे २चन्द्रकान्त-

**शशिन्** पु० शशोऽस्त्यस्य इनि। १चन्द्रे २कर्पूरे च शब्दमा०।

**शशिप्रभ** न० शशिना प्रभा स्येव वा प्रभा यस्य। १कुमुदे। २मुक्तायां राजनि०। ६त० ३ज्योत्स्नायां जटा०। [दयोऽप्यत्र।

**शशिभूषण** पु० शशी भूषणं यस्य। १महादेवे शशिमौलना-

**शशिलेखा** स्त्री शशिनो रेखा रस्य लः। १चन्द्रकलायां शशिनो लेखेव अमृतास्पदत्वात्। २गुडूच्यां मेदि०। “मौ मो यौ चेत् भवेतां सप्ताष्टकैश्चन्द्रलेखा” छन्दोम० उक्तलक्षणे ३पञ्चदशाक्षरपादके छन्दोभेदे। [राजनि०।

**शशिवाटिका** स्त्री शशिनो वाटीव इवार्थे कन्। पुनर्नवायां

**शशिशेखर** पु० शशी शेखरं यस्य। महादेवे हला० शशिमूर्द्धादयोऽप्यत्र।

**शशोर्णं** न० ६त०। शशस्य लोम्नि अमरः। [अमरः।

**शश्वत्** अव्य० शश- वति। १नैरन्तर्ये २पुनःपुनरित्यर्थे च

**शष** वधे भ्वा० पर० सक० सेट्। शषति अशाषीत् अशषीत्।

**शष्कुल** पु० शष--कुलच् कस्य नेत्त्वम्। (डहरकरमचा) १मत्स्ये २अपूपभेदे स्त्री शब्दच० गौरा० ङीष्। ३कर्णरन्ध्रे “अवलम्बितकर्णशष्कुली” नैष०। ४वृक्षभेदे च भावप्र० दन्त्यमध्योऽप्ययमत्रार्थे। [मेदि०।

**शष्प** न० शष--पक्। १बालतृणे घासे अमरः २प्रतिभाक्षये पु०

**शस** वधे भ्वा० पर० सक० सेट् उदित् क्त्वा वेट्। शसति अशासीत् अशसीत्।

**शस** आशिषि भ्वा० आत्म० सक० इदित् सेट्। प्रायेणाङ्पूर्वः। आशंसते आशंसिष्ट।

**शस** स्वप्ने अदा० पर०अक०सेट् इदित्। शंस्ति अशंसत्।

**शसन** न० शस--वधे ल्युट्। यज्ञार्थं पशुहनने।

**शस्त** न० शन्स--क्त। १कल्याणे २तद्वति अमरः। ३स्तुते ४प्रशस्ते च त्रि०मेदि०। ५देहे न०त्रिका० संज्ञायां कन्। ६अङ्गुलित्राणे शब्दच०।

**शस्त्र** न० शस--ष्ट्रन्। १लौहे २खड्गादौ अस्त्रे च हेमच० स्वार्थे क। तत्रैव। तत्र स्तुतमप्रगीतकं शस्त्रमिति भेदः शंस--ष्ट्रन्। ३प्रगीते मन्त्रभेदे चिकित्साङ्गशस्त्राणां लक्षणादि सुश्रुतोक्तं यथा

“अथातः शस्त्रावचारणीयमध्यायं व्याख्यास्यामः विंशतिः शस्त्राणि। तद्यथा मण्डलाग्रकरपत्रवृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्द्धधारसूचीकुशपत्राटीमुखशरारीमुखान्तर्मुखत्रिकूर्चककुठारिकाव्रीहिमुखारावेतसपत्रकवडिशदन्तशङ्क्वेषण्य इति। तत्र मण्डलाग्रकरपत्रे स्यातां छेदने लेखने च। वृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्द्धधाराणि छेदने भेदने च। सूचीकुशपत्राटीमुखशरारीमुखान्तर्मुखत्रिकूर्चकानि विस्रावणे। कुठारिकाव्रीहिमुखारावेतसपत्रकाणि व्यधने सूची च। वडिशो दन्तशङ्कुश्चाहरणे। एषण्येषणे आनुलोम्ये च। सूच्यः सेवने इत्यष्टविधे कर्मण्युपयोगः शस्त्राणां व्याख्यातः। तेषामथ यथायोगग्रहणसमासोपायः कर्मसु वक्ष्यते। तत्र वृद्धिपत्रं वृन्तफलसाधारणे भागे गृह्णीयाद्भेदनान्येवं सर्वाणि। वृद्धिपत्रं मण्डलाग्रञ्च किञ्चिदुत्तानपाणिना लेखने बहुशोऽवचार्यं वृन्ताग्रे

विस्रावणानि विशेषेण बालवृद्धसुकुमारभीरुनारीणां राज्ञां राजपुत्राणाञ्च त्रिकूर्च्चकेन विस्रावयेत्। तत्र-प्रच्छादितमुत्पलमकुलप्रदेशिनीभ्यां मौहितसुखम्। कुठारीकां वामहस्तन्यस्तामितरहस्तमध्यमाङ्गुष्ठविष्टब्धयाभिहन्यात्। आराकरपत्रैषण्यौ मूले। शेषाणि तु यथायोगं गृह्णीयात्। तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः। तत्र नखशस्त्रैषण्यावङ्गाङ्गुले सूच्यौ वक्ष्यन्ते। वडिशो दन्तशङ्कुश्चानताग्रे तीक्ष्णकण्टकप्रथमयवपत्रमुखे। एषणी गण्डूपदाकारमुखी। प्रदेशिन्यग्रपर्वप्रदेशप्रमाणा मुद्रिका। दण्डाकुरा शरारीमुखी सा कर्त्तरीति कथ्यते। शेषाणि तु षडङ्गुलानि। तानि सुगृहाणि सुलोहानि सुधाराणि सुरूपाणि सुसमाहितमुखाग्राण्यकरालानि चेति शस्त्रसम्पत्। तत्र वक्रं कुण्ठं खण्डं खरधारमतिस्थूलमत्यल्पमतिदीर्घमतिह्रस्वमित्यष्टौ शस्त्रदोषाः। अतो विपरीतगुणमाददीतान्यत्र करपत्रात्तद्धि खरधारमस्थिच्छेदनार्थम्। तत्र धारा भेदनानां माषूरी। लेखनानामर्द्धमाषूरी। व्यधनानां विस्रावणानाञ्च कैशिकी। छेदनानामर्द्धकैशिकीति। तेषां पायना त्रिविधा क्षारोदकतैलेषु तत्र क्षारपायितं शरशल्यास्थिच्छेदनेषु। उदकपायितं मांसच्छेदनभेदनपाटनेषु तैलपायितं शिराव्यधनस्नायुच्छेदनेषु। तेषां निशाणार्थं श्लक्ष्णशिला माषवर्णा। धारासंस्थापनार्थं शाल्मलीफलकमिति"। भवति चात्र "यदा सुनिशितं शस्त्रं रोमच्छेदि सुसंस्थितम्। सुगृहीतं प्रमाणेन तदा कर्म्मसु योजयेत्"। अनुशस्त्राणि तु त्वक्सारस्फटिककाचकुरुविन्दजलौकाग्निक्षारनखगोजीशेफालिकाशाकपत्रकरीरवालाङ्गुलय इति। "शिशूनां शस्त्रभीरूणां शस्त्राभावे च योजयेत्। त्वक्सारादि चतुर्वर्गं छेद्ये भेद्ये च बुद्धिमान्। आहार्य्यच्छेद्यभेद्येषु नखं शक्येषु योजयेत्। विधिः प्रवक्ष्यते पश्चात् क्षारवह्निजलौकसाम्। ये स्युर्मुखगता रोगानेत्रवर्त्मगताश्च ये। गोजीशेफालिकाशाकपत्रैर्विस्रावयेत्तु तान्। एषण्यलाभे तु वालाङ्गुल्यङ्कुरा हिताः। शस्त्राण्येतानि मतिमान् शुद्धशैक्यायसानि तु। कारयेत्करणैः प्राप्तं कर्म्मारं कर्म्मकोविदम्। प्रयोगमस्य वैद्यस्य सिद्धिर्भवति नित्यशः। तस्मात्परिचयः कार्य्यः शस्त्राणामादितः सदा"। [राजनि०।

**शस्त्रकोषतरु** पु० शस्त्रकोषस्य हितस्तरुः। महापिण्डीतरौ

**शस्त्रजीविन्** पु० शस्त्रेण जीवति जीव–णिनि। शस्त्रव्यापारेण युद्धादिना वृत्तिमति हेमच०।

**शस्त्रपाणि** पु० शस्त्रं पाणौ यस्य। १शस्त्रधारके २आततायिभेदे च "शस्त्रपाणिर्धनापहः" इति स्मृतिः।

**शस्त्रमार्ज्ज** पु० शस्त्रं मार्ष्टि मृज–अण् (शिकलकर) शस्त्रमार्ज्जनकरे शिल्पिभेदे अमरः।

**शस्त्रहत** त्रि० ३त०। १शस्त्रघातेन हते "पक्षिमत्स्यमृगैर्ये तु दंष्ट्रिशृङ्गिनखैर्हताः। पतनानशनप्रायैर्जलाग्निविषवज्रनैः। हता जलप्रवेशेन ते वै शस्त्रहताः स्मृताः" देवीपु० परिभाषिते २खड्गादिहते च। तदाशौचादि शुद्धित० उक्तं यथा "शस्त्रघाते तदग्रगादूर्द्ध्वं यदि कश्चित् प्रमीयते। आशौचं प्राकृतं तत्र सर्व्ववर्णेषु नित्यशः" व्याघ्रः "क्षतेन म्रियते यस्तु तस्याशौचं भवेद्द्विधा। आसप्ताहात् त्रिरात्रं स्यात् दशरात्रमतःपरम्"। अत्र शस्त्रघातपरं क्षतेतरशस्त्रघातपरं पारिभाषिकशस्त्रघातपरञ्च। न च शास्त्रीयव्यवहारेऽन्तरङ्गत्वेन पारिभाषिकस्यैव ग्रहणं युक्तमितिवाच्यम् आद्ये पारिभाषिकापरिभाषिकशस्त्रघातग्रहणवद्वापि तथा युक्तत्वात् पारिभाषिकत्वादेव न प्रकरणनियमः" शु० त० रघु०।

**शस्त्रहतचतुर्दशी** स्त्री शस्त्रहतोद्देश्यकश्राद्धार्हा चतुर्दशी। गौणाश्विनकृष्णपक्षचतुर्दश्यां तत्र कर्त्तव्यं श्राद्धवि० दर्शितं यथा

"अथ शस्त्रहतचतुर्दशी। विष्णुः युद्धहतानां श्राद्धकर्म्मणि चतुर्दशी प्रशस्ता"।

शस्त्रयुद्धहतानामेवेति न नियमार्थम् ब्रह्मपुराणे "प्रायाऽनशनशस्त्राग्निविषोद्बन्धनिनां तथा। चतुर्दश्यां तु कर्त्तव्यं तृप्त्यर्थमिति निश्चयः" प्रायोमहापथगमनम्। वायुपुराणे "युवानस्तु गृहे यस्य मृतास्तेषान्तु दापयेत्। शस्त्रेण च हता ये वै तेषां दद्याच्चतुर्दशीम्"। युवान एव पुत्रादयो मृता इत्यर्थः। मरीचिः "विषशस्त्रश्वापदाहितिर्य्यग्ब्राह्मणघातिनाम्। चतुर्दश्यां क्रिया कार्य्या अन्येषान्तु विगर्हिता"। ब्राह्मणकर्त्तृघातोऽस्यास्तीति ब्राह्मणघाती तेषां, ये च ब्राह्मणैर्हताः" इति ब्रह्मपुराणवचनात् न तु कृतब्रह्मघातस्य पतितत्वात्। अन्येषाम् अशस्त्रादिहतानाम् एतच्च शस्त्रहतश्राद्धं विष्ण्वादिभिः सामान्यप्रकरणलिखनात् सकलकृष्णपक्षसाधारणम् पित्रादीनामिव पार्व्वणविधिप्रकरणात् पार्व्वणविधिना कार्य्यं "सपि-

ण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते। तत्र तत्र त्रयं कुर्य्याद्वर्जयित्वा मृताहनि” इति मनुवचनाच्च। ननु “अन्येषान्तु विगर्हिता” इति श्रवणात् कथं त्रैपुरुषिकपार्वणविधिः न यस्य पुरुषास्त्रय एव शस्त्रहतास्तस्य त्रैपुरुषिकविधिरुपपद्यत एव यस्य द्वौ शस्त्रहतौ एको वा तेनापि द्वैपुरुषिकैकपुरुषिकमेव पार्वणं कर्त्तव्यं यथा मनुः “पिता यस्य तु वृत्तः स्याज्जीवेद्वापि पितामहः। पितुः स नाम संकीर्त्य कीर्त्तयेत् प्रपितामहम्” तथा हारीतः “पितामहोऽपि जीवेद् पितर्य्येव समापयेत्”। नन्वेकोद्दिष्टमात्रं श्रूयते यथाह गार्ग्यः “सपिण्डीकरणादूर्द्ध्वं मृते कृष्णचतुर्दशीम्। प्रतिसंवत्सरादन्यदेकोद्दिष्टं न कारयेत्” यमः “सपिण्डीकरणादूर्द्ध्वं यत् पितृभ्यः प्रदीयते। एकोद्दिष्टविधानेन प्रदेयं शस्त्रघातिने” भविष्यपुराणे “समत्वमागतस्यापि पितुः शस्त्रहतस्य च। चतुर्दश्यां तु कर्त्तव्यमेकोद्दिष्टं न पार्वणम्। चतुर्दश्यां तु यत् श्राद्धं सपिण्डीकरणे कृते। एकोद्दिष्टविधानेन प्रदेयं शस्त्रघातिने” उच्यते। एषां वचनानाममूलत्वात् समूलत्वेऽपि पार्वणाशक्तविषयकाण्येतानि विष्ण्वादिवचनेषु पार्वणावगतेः। स्त्र्यादीनान्तु शस्त्रहतानाम् एकोद्दिष्टविधिना कार्य्यम्। “अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये। तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम्” इत्यापस्तम्बवचने पार्वणनिषेधात्। तच्च न सकलकृष्णपक्षसाधारणं विष्ण्वादिवचने श्राद्धशब्दस्य पार्वणपरत्वोक्तेः। किन्त्वाश्विनमासीयकृष्णपक्षविषयम्। ब्रह्मपुराणे “प्रायानशनेत्यादिना सकलकृष्णपक्षसाधारणं श्राद्धमभिधायाभिने “तर्पणीयाश्चतुर्दश्यां लुप्तपिण्डोदकक्रियाः” इति पुनरभिधानं तच्छस्त्रहतश्राद्धादिविषयम् अतएव तत्रैव “अमावास्यायां पितरः पूज्या नान्दीमुखा अपीति” इव प्रपितामहादीनामपि श्राद्धं दर्शितम्। इयञ्च चतुर्दश्यामशस्त्रहतश्राद्धनिन्दा आश्विनमासीयकृष्णपक्षश्राद्धादिकल्पव्यतिरिक्तसामान्यकृष्णपक्षविहितश्राद्धकाम्यश्राद्धविषया प्रकरणभेदेन श्राद्धकर्मभेदात् सामान्यविशेषन्यायाच्च इतरथा चतुर्दश्यां संक्रान्तिश्राद्धेऽशस्त्रहतनिन्दा स्यात् अतएव “कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीमिति” मनुवचनेऽपि चतुर्दशीवर्जनं पक्षश्राद्धादिव्यतिरिक्तविषयम्। ननु शस्त्रादिहतानां श्राद्धनिषेधः श्रूयते यथा छागलेयः “शस्त्रविषहतानाञ्च शृङ्गिदंष्ट्रिसरीसृपैः। आत्मनस्त्यागिनाञ्चैव श्राद्धमेषां न कारयेत्”। सत्यं बुद्धिपूर्वकमृतानामेव। प्रमादमृतानाञ्च श्राद्धादिकमाह अङ्गिराः “अथ कश्चित् प्रमादेन म्रियतेऽग्न्युदकादिभिः। अशौचं तस्य कर्त्तव्यं कर्त्तव्या चोदकक्रिया”। अबुद्धिपूर्वकमपि शृङ्ग्यादिभिः क्रीड़ां कुर्वतां मृतानां न कर्त्तव्यम्। ब्रह्मपुराणे “शृङ्गिदंष्ट्रिनखिव्यालविषवह्निस्त्रिया जलैः। आदरात् परिहर्त्तव्यः कुर्वन् क्रीड़ां मृतस्तु यः”। परिहर्त्तव्यः श्राद्धादौ। शास्त्रानुमत्या बुद्धिपूर्वकमृतानामपि कर्त्तव्यम्। गर्ग्यः “नष्टशौचव्रतिलुप्तप्रत्याख्यातभिषक्क्रियः। आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनादिभिः। तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः। तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमिष्यते”। एवं क्रीड़ाव्यतिरेकेणाऽबुद्धिपूर्वमृताः शास्त्रानुमत्या च बुद्धिपूर्वकमृता अपि श्राद्धार्हाः। कथम् लुप्तपिण्डोदकत्वम् इति चेत्तेषामिति ब्रूमः बुद्धिपूर्वकमृते पिण्डोदकक्रियालोपात्”।

**शस्त्राभ्यास** पु० ६त०। शस्त्रप्रयोगशिक्षायां त्रिका०।

**शस्त्रायस** शस्त्रयोग्यमयः अच्समा०। लौहभेदे (इस्पात) राजनि०।

**शस्त्रिन्** त्रि० शस्त्रमस्त्यस्य इनि। शस्त्रविशिष्टे।

**शस्त्री** स्त्री स्वल्पं शस्त्रं ङीप्। क्षुरिकायाम् मेदि०।

**शस्प** न० शस–प। बालतृणे घासे अमरे पाठान्तरम्।

**शस्य** न० शस–यत्। वृक्षादीनां फले “शस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते” इत्युक्ते क्षेत्रस्थे धान्यादौ च अस्य दन्त्यादित्वमपि नवशस्यसम्भोगनक्षत्राणि ज्यो० त० उक्तानि यथा “अनुराधा मृगशिरो रेवती चोत्तरात्रयम्। हस्ता चित्रा यथा पुष्या श्रवणा च पुनर्वसुः। रोहिणी नवशस्यादिनवद्रव्याशनादिषु। प्रशस्तं नवपीठादिसम्भोगे पङ्क्तिदूषयेत्”।

**शस्यध्वंसिन्** पु० शस्यं ध्वंसयति ध्वन्स–णिच्–णिनि। १तृवृक्षे (रेंद) शब्दच० २शस्यनाशके त्रि०।

**शस्यमञ्जरी** स्त्री ६त०। अभिनवधान्यादिशीर्षे अमरः।

**शस्यशूक** न० धान्यादेः शीर्षे अमरः।

**शस्यसम्बर** पु० शस्यं संवृणोति सम्+वृ–अच्। सालवृक्षे [अमरः।

**शस्यारु** पु० शस्यमृच्छति ऋ–उण्। क्षुद्रशमीवृक्षे शब्दच०।

**शाक** पु०न० शक–घञ्। १पत्रपुष्पादौ अमरः २द्वीपभेदे पु० (सेगुण) वृक्षे च ३शक्तौ ४शिरीषवृक्षे पु० शब्दरत्ना०। ५शकराज्यावधि वत्सरप्रवर्त्तके राजभेदे ६तदीये वत्सरे च पु० मेदि०। शक्नोति सामर्थ्यं शो–क तस्य नेत्त्वम्।

"मूलपत्रे करीराग्रे फलकाण्डाधिरूढकम् । त्वक्पुष्पं
कवकञ्चैव शाकं दशविधं स्मृतम्" इत्युक्तेषु ७रुहा-
दीनां पत्रादिषु न० । तत्र १मूलं मूलकादेः । २पत्रं
वास्तूकादेः । ३करीरं वंशादेः । ४अग्रं वेत्रादेः । ५फलं
कुष्माण्डादेः । ६काण्डं उत्पलादेः । ७अधिरूढं ताला-
स्थिमज्जादेः । ८त्वक् मातुलुङ्गादेः । ९पुष्पं कोविदा-
रादेः । १०कवकं छत्रिकादेः । भावप्र० अन्यथोक्तं यथा
"पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा । शाकं षड्-
विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम्" । "प्रायः शाकानि
सर्वाणि विष्टम्भीनि गुरूणि च । रूक्षाणि बहुवर्चांसि
सृष्टविण्मारुतानि च । शाकं भिनत्ति वपुरस्थि
निहन्ति नेत्रम् वर्णं विनाशयति रक्तमथापि शुक्रम् ।
प्रज्ञाक्षयं च कुरुते पलितञ्च नूनम् हन्ति स्मृतिं गति-
मिति प्रवदन्ति तज्ज्ञाः" । ८द्वीपभेदे मत्स्यपु० १२१ अ०
तत्प्रमाणाद्युक्तं यथा

"शाकद्वीपस्य वक्ष्यामि यथावदिह निश्चयम् । कथ्यमानं
निबोधध्वं शाकं द्वीपं द्विजोत्तमाः ! । जम्बूद्वीपस्य वि-
स्तारादुद्विगुणस्तस्य विस्तरः । विस्ताराद् द्विगुणश्चापि
परीणाहः समन्ततः । तेनावृतः समुद्रोऽयं द्वितीयो
लवणोदकः । तत्र पुण्या जनपदा चिराच्च म्रियते
जनः । कुत एव च दुर्भिक्षं क्षमातेजोयुतेष्विह ।
तत्रापि पर्वताः शुभ्राः सप्तैव मणिभूषिताः । शाकद्वीपा-
दिषु त्वेषु सप्त सप्त नगास्त्रिषु । ऋज्वायताः प्रति-
दिशं निविष्टाः पर्वतोत्तमाः । रत्नाकराद्रिनामानः
सानुमन्तो महाचिताः । समोदिताः प्रतिदिशं द्वीपवि-
स्तारमानतः । उभयत्रावगाढौ च लवणक्षीरसागरौ ।
शाकद्वीपे तु वक्ष्यामि सप्त दिव्यान् महाचलान् । देवर्षि-
गन्धर्वयुतः प्रथमो मेरुरुच्यते । प्रागायतः स सौवर्ण
उदयो नाम पर्वतः । तत्र मेघास्तु वृष्ट्यर्थं प्रभवन्त्यप-
यान्ति च । तस्यापरेण सुमहान् जलधारो महा-
गिरिः । स वै चन्द्रः समाख्यातः सर्वौषधिसमन्वितः ।
तस्मान्नित्यमुपादत्ते वासवः परमं जलम् । नारदो नाम
चैवोक्तो दुर्गशैलो महाचितः । तत्राचलौ समुत्पन्नौ पूर्वं
नारदपर्वतौ । तस्यापरेण सुमहान् श्यामो नाम महा-
गिरिः । यत्र श्यामत्वमापन्नाः प्रजाः पूर्वमिमाः किल ।
स एव दुन्दुभिर्नाम श्यामपर्वतसन्निभः । शब्दमृत्युः
पुरा तस्मिन् दुन्दुभिस्ताडितः सुरैः । रत्नमालान्तरमयः
शाल्मलश्चान्तरालकृत् । तस्यापरेण रजतो महानस्तो-
गिरिः स्मृतः । स वै सोमक इत्युक्तो देवैर्यत्रामृतं
पुरा । सम्भृतञ्चाहृतञ्चैव मातुरर्थे गरुत्मता । तस्या-
परे चाम्बिकेयः सुमनाश्चैव स स्मृतः । हिरण्याक्षो
वराहेण तस्मिन् शैले निषूदितः । आम्बिकेयात् परो
रम्यः सर्वौषधिनिषेवितः । विभ्राजस्तु समाख्यातः
स्फाटिकस्तु महान् गिरिः । यस्माद्विभ्राजते वह्निर्वि-
भ्राजस्तेन स स्मृतः । सैवेह केशवेत्युक्तो यतो वायुः
प्रवाति च । तेषां वर्षाणि वक्ष्यामि पर्वतानां द्विजो-
त्तमाः । शृणुध्वं नामतस्तानि यथावदनुपूर्वशः । द्वि-
नामान्येव वर्षाणि यथैव गिरयस्तथा । उदयस्योदयं
वर्षं जलधारेति विश्रुतम् । नाम्ना गतभयं नाम वर्षं
तत् प्रथमं स्मृतम् । द्वितीयं जलधारस्य सुकुमारमिति
स्मृतम् । तदेव शैशिरं नाम वर्षं तत् परिकीर्त्तितम् ।
नारदस्य च कौमारन्तदेव च सुखोदयम् । श्यामपर्वत-
वर्षं तदनीचकमिति स्मृतम् । आनन्दकमिति प्रोक्तं
तदेव मुनिभिः शुभम् । सोमकस्य शुभं वर्षं विज्ञेयं
कुसुमोत्करम् । तदेवासितमित्युक्तं वर्षं सोमकसंज्ञितम् ।
आम्बिकेयस्य मैनाकं क्षेमकञ्चैव तत् स्मृतम् । तदेव
ध्रुवमित्युक्तं वर्षं विभ्राजसंज्ञितम् । द्वीपस्य परि-
णाहञ्च ह्रस्वदीर्घत्वमेव च । जम्बूद्वीपेन संख्यातं तस्य
मध्ये वनस्पतिम् । शाको नाम महावृक्षः प्रजास्तस्य
महानुगाः । एतेषु देवगन्धर्वाः सिद्धाश्च सह चारणैः ।
विहरन्ति रमन्ते च दृश्यमानाश्च तैः सह । तत्र पुण्या
जनपदाश्चातुर्वर्ण्यसमन्विताः । तेषु नद्यश्च सप्तैव प्रति-
वर्षं समुद्रगाः । द्विनाम्ना चैव ताः सर्वा गङ्गा सप्तविधा
स्मृता । प्रथमा सुकुमारीति गङ्गा शिवजला शुभा ।
मुनितप्ता च नाम्नैषा नदी सम्परिकीर्त्तिता । सुकुमारी
तपःसिद्धा द्वितीया नामतः सती । नन्दा च पावनी
चैव तृतीया परिकीर्त्तिता । शिविका च चतुर्थी
स्यात् द्विविधा च पुनः स्मृता । इक्षुश्च पञ्चमी ज्ञेया
तथैव च पुनः कुहूः । वेणुका चामृता चैव षष्ठी सम्प-
रिकीर्त्तिता । सुकृता च गभस्ती च सप्तमी परिकी-
र्त्तिता । एताः सप्त महाभागाः ! प्रतिवर्षं शिवोदकाः ।
भावयन्ति जनं सर्वं शाकद्वीपनिवासिनम् । अभिगच्छन्ति
ताश्चान्या नदनद्यः सरांसि च । बहूदकपरिस्रावा
यतो वर्षति वासवः । तासान्तु नामधेयानि परिमाणं
तथैव च । न शक्यं परिसंख्यातुं पुण्यास्ताः सरि-
दुत्तमाः । ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते ।

एते शान्तभयाः प्रोक्ताः प्रमोदा ये च वै शिवाः। आनन्दाश्च सुखाश्चैव क्षेमकाश्च नरैः सह। वर्णाश्रमाचारयुता देशास्ते सप्त विश्रुताः। आरोग्या बलिनश्चैव सर्वे मरणवर्जिताः। अवसर्पिणी न तेष्वस्ति तथैवोत्सर्पिणी पुनः। न तत्रास्ति युगावस्था चतुर्युगकृता क्वचित्। त्रेतायुगसमः कालस्तथा तत्र प्रवर्त्तते। शाकद्वीपादिषु ज्ञेयं पञ्चस्वेतेषु सर्वशः। देशस्य तु विचारेण कालः स्वाभाविकः स्मृतः। न तेषु सङ्करः कश्चित् वर्णाश्रमकृतः क्वचित्। धर्मस्य चाव्यभीचारादेकान्तसुखिनो जनाः। न तेषु माया लोभो वा ईर्ष्यासूया भयं कुतः। विपर्ययो न तेष्वस्ति तद्वै स्वाभाविकं स्मृतम्। कालो नैव च तेष्वस्ति न दण्डो न च दाण्डिकः। स्वधर्मेण च धर्मज्ञास्ते रक्षन्ति परस्परम्”।

**शाकचुक्रिका** स्त्री शाकेषु मध्ये चुक्रिका। चिञ्चायां राजनि०।

**शाकट** न० शकटाय हितम् अण्। १शकटसम्बन्धियुगादौ २शकटयोरुपरि च मेदि०। ३श्लेष्मातके वृक्षे राजनि०। ४धववृक्षे च पु० रत्नमा०।

**शाकटायन** पु० व्याकरणकारके मुनिभेदे “इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः। पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादिशाब्दिकाः” कविकल्पद्रुमः।

**शाकटिक** पु० शकटेन चरति ठञ्। शकटेन गन्तरि।

**शाकटीन** पु० शकटः परिमाणमस्य खञ्। विंशतितुलापरिमाणे हेमच०। [शाकटस्याद्योऽप्यत्र।

**शाकतरु** पु० शाकाख्यः तरुः। (सेगुण) वृक्षे शब्दच०।

**शाकपत्त्र** पु० शाकस्येव पत्त्रमस्य। शिग्रुवृक्षे राजनि०।

**शाकबालेय** पु० बलये हितम् ढक् शाकप्रधानो बालेयः। ब्रह्मयष्टिकायाम् शब्दच०। [क। तत्रैव त्रिका०।

**शाकबिल्व** पु०शाकोऽपि बिल्व इव। वार्त्ताकौ जटा०स्वार्थे

**शाकम्भरी** स्त्री शाकैर्बिभर्त्ति भृ-खच् मुम् च। “भरिष्यामि सुराः शाकैरावृष्टेः प्राणधारकैः। शाकम्भरीति विख्यातिं तदा यास्याम्यहं भुवि” देवीमा० निरुक्तायाम् १दुर्गायाम् ।२रोमकान्तर्गतशाकम्भरनगर्यां न० तत्र भवं छ। शाकम्भरीय लवणभेदे न० “शाकम्भरीयं कथितं गड़ाख्यं रोमकं तथा। गड़ाख्यं लघु वातघ्नमत्युष्णं भेदि पित्तलम्। तीक्ष्णं व्यवायि सूक्ष्मञ्चाभिष्यन्दि कटुपाकि च” भावप्र०।

**शाकयोग्य** पु० शाके तक्षणे योग्यः। धन्याके राजनि०।

**शाकराज** पु० शाकेषु राजते अच्, शाकानां वा राजा टच् समा०। वास्तूकशाके राजनि०।

**शाकल** पु० ब०व० शकलेन ऋषिणा प्रोक्तमधीयते अण्। १शकलर्षिप्रोक्तकल्पादिग्रन्थाध्येतृषु। तेषां संघोऽङ्को घोषो वा पुनरण् वुञ् वा। शाकल शाकलक वा। १तत्समूहे २तदङ्के ३तद्घोषे च पु०। अङ्कः परस्परा सम्बन्धः” सि०कौ०।

**शाकलिक** त्रि० शकलस्येदं ठक् कात्या० वार्त्ति०। शकलसम्बन्धिनि पक्षे अण् शाकल तत्रार्थे। [शाके त्रिका०।

**शाकवीर** पु० शाकेषु वीरः वीर्य्याधायकत्वात्। १वास्तूक-

**शाकशाकट** न० शाकस्य क्षेत्रं शाकटच्। शाकक्षेत्रे। शाकटिनच् शाकशाकटिन अत्रार्थे हेमच०।

**शाकश्रेष्ठ** पु० शाकेषु श्रेष्ठः। १वास्तूकशाके शब्दर०। २जीवन्त्यां ३वार्त्ताकौ स्त्री हेमच०। [क्षुपे राजनि०।

**शाकाङ्ग** न० शाकस्य तक्षणस्याङ्गमुपयोगि। १मरिचे २डोडी-

**शाकाम्ल** न० शाकमेवाम्लम्। वृक्षाम्ले राजनि०।

**शाकाम्लभेदन** न० शाकरूपम् अम्लं भिनत्ति भिद्–ल्यु। १चुक्रे (चुकोपालङ्ग) राजनि०। [वृक्षे राजनि०।

**शाकालाबु** स्त्री शाकप्रधानालाबुः। अलाबुभेदे राजालाबु

**शाकाष्टका** स्त्री शाकेन कर्त्तव्या अष्टका। गौणफाल्गुनकृष्णाष्टम्याम् अष्टकाशब्दे ५१६ पृ० दृश्यम्।

**शाकिनी** स्त्री शाकमस्त्यस्याः उत्पद्यत्वेन इनि ।१शाकभवनयोग्यायां भूमौ स्त्रहवाटिकायाम् २देवीसहचरीभेदे च। “डाकिनी योगिनी चैव खेचरी शाकिनी तथा। दिक्षु पूज्या इमा देव्यः सर्वसिद्धिफलदायिकाः” कात्या०कल्प०। कण्ठदेशस्थे विशुद्धाख्ये चक्रे स्थितायां ३देवीशक्तौ च “विशुद्धाख्ये महाचक्रे षोड़शस्वरसंयुते। सदाशिवं शाकिनीञ्च विन्यसेत् पूर्ववत्ततः” तन्त्रसा०।

**शाकुण** पु० शक–बा० उणन्। परतापके शब्दमा०।

**शाकुन** पु० शकुनं शुभाशुभसूचकं निमित्तमधिकृत्य कृतो ग्रन्थः अण्। शकुनज्ञानसाधने ग्रन्थे (काकचरित)। “शुभाशुभज्ञानविनिर्णयार्थौ हेतुर्नृणां यः शकुनः स उक्तः। गतिस्वरालोकनभावचेष्टां संकीर्त्तयाम्यौद्विपदादिकानाम्। लोकोऽमुना शाकुनसंज्ञकेन ज्ञानेन विज्ञातसमस्तकर्म्मा। नापायकूपे पतति प्रसर्पन् शास्त्रं हि दिव्या दृगतीन्द्रियेषु” वसन्तराजः।

**शाकुनिक** पु० शकुनेन पक्षिवधादिना जीवति ठञ्। पक्षिघातके अमरः।

**शाकुन्तलेय** पु० शकुन्तलाया अपत्यं ढक्। दुष्मन्तात्मजे शकुन्तलागर्भजे भरते नृपे जटा०।

**शाक्त** त्रि० शक्तिर्देवताऽस्य अण्। तन्त्रोक्ते शक्तिदेवतोपासके तस्य प्रशंसा मुण्डमालात० २पटले उक्ता "स्वर्गे मर्त्ये च पाताले नास्ति शाक्तात् परः प्रियः। सौराणां गाणपत्यानां वैष्णवानां तथैव च। शैवानां चैव शाक्तश्च क्रमशः क्रमशः प्रिये!" "शाक्ता एव द्विजाः सर्वे न शैवा न च वैष्णवाः। उपासते यतो देवीं गायत्रीं परमाक्षराम्" निर्वाणत० २पटले। "शक्त्याचाराधनं कृत्वा नान्यस्याराधनं चरेत्। अन्यस्य करणाद् देवि! योगिनी शापमाप्नुयात्" गन्धर्वत०। "तत्कथं रजतं धार्य्यं स्वर्णं धार्य्यमनामया। एष एव क्रमः शाक्तो न दर्भो वन-मन्मथः" श्यामार०। [अमरः।

**शाक्तीक** पु० शक्तिः प्रहरणमस्य ईकक्। शक्त्या योधरि

**शाक्य** पु० शक-यञ् तत्र साधुः यत्। बुद्धे।
शाक्यवंशनिर्णयस्तत्रोक्तो यथा
"शाकवृक्षप्रतिच्छन्नं वासं यस्मात् प्रपेदिरे। तस्मादिक्ष्वाकुवंश्यास्ते भुवि शाक्या इति स्मृताः" भरतधृतवचनम्। इत्यमराख्याविका पितृपक्षाः केचिदिक्ष्वाकुवंश्या गौतमवंशजकपिलमुनेराश्रमे योगाभ्यासाय शाकवृक्षवनवासाः शाक्याः इति ख्यातिमापन्नाः।

**शाक्यमुनि** पु० शाक्यो मुनिः। बुद्धभेदे अमरः।

**शाक्यसिंह** पु० शाक्यवंशे सिंह इव। बुद्धभेदे अमरः।

**शाक्र** त्रि० शक्रस्येदं स देवताऽस्य वा अण्। १इन्द्रसम्बन्धिनि २इन्द्रदेवताके हविरादौ। स्त्रियां ङीप्। शक्रस्य तुल्यपराक्रमः अस्त्यस्याः अण्। ३शक्रतुल्यपराक्रमायां दुर्गायाञ्च "इन्द्राणी इन्द्रजननी शाक्री शक्रपराक्रमा" देवीपु०।

**शाक्वर** पु० शक-ष्वरप् स्वार्थे अण्। वृषे हेमच०।

**शाख** व्याप्तौ भ्वा० पर० सक० सेट् ऋदित् चङि न ह्रस्वः। शाखति अशाखीत्।

**शाख** पु० शाख-अच्। कृत्तिकापुत्रे स्कन्दानुजे १कुमारानुचरगणभेदे "अग्निपुत्रः कुमारस्तु शरस्तम्बे व्यजायत। तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजाः" मत्स्यपु०पु०। २ग्रन्थपरिच्छेदे सर्गस्थानीये ग्रन्थांशभेदे शब्दच०। हस्तांशभेदे (डाब) स्त्री अमरः। ३पक्षान्तरे ४राष्ट्रौ ५वेदैकदेशे च स्त्री मेदि०। ६अन्तिके विश्वः। ७देहांशभेदे च।

**शाखाकण्ट** पु० शाखाव्यापी कण्टः कण्टको यस्य। स्नुही वृक्षे राजनि०। [पुरे अमरः। शाखापुरादयोऽप्यत्र

**शाखानगर** न० शाखेव नगरम्। मूलनगरसमीपस्थे क्षुद्र-

**शाखापित्त** पु० शाखासु पित्तं यतः। पाणिपादादिदेहशाखादाहे राजनि०। [स्त्रियां ङीष्।

**शाखामृग** पुंस्त्री० शाखास्थो मृगः पशुः। वानरे अमरः।

**शाखाम्ला** स्त्री शाखाऽम्लपत्रा। वृक्षाम्ले राजनि०।

**शाखारण्ड** पु० शाखायां वेदशाखायां रण्डः तद्विहितकर्मानाचरणात्। स्वशाखात्यागेनापरशाखोक्तकर्मकर्त्तरि हेमच०। [राजनि०।

**शाखाल** पु० शाखाः बाहुल्येन सन्त्यस्य लच्। वानीरवृक्षे

**शाखाशिफा** स्त्री शाखाछन्ना शिफा मूलम् शाक०। वटादीनां शाखाजाते १मूले अमरः। २शिफामारभ्य शाखायुतायां गुडूच्यादिलतायाम् भरतः।

**शाखिन्** पु० शाखाऽस्त्यस्य इनि। १वृक्षे अमरः। २वेदैकदेशवति, ३नृपभेदे, ४लोकभेदे च मेदि०।

**शाखोट** पु० शाख-आप्तौ ओटन् (शेओड़ा) वृक्षे त्रिका० स्वार्थे क। तत्रैव।

**शाङ्खिक** पुंस्त्री० शङ्खच्छेदनकङ्कणनिर्माणं शिल्पमस्य ठञ्। जातिभेदे (शाँखारी) अमरः स्त्रियां ङीष्। [रत्नमा०

**शाङ्कुष्ठा** स्त्री शङ्कति शो-क शः अङ्कुष्ठ इव यस्याः। गुञ्जायां

**शाट** पु० शट-घञ्। वस्त्रे अमरः। स्त्रीत्वमपि गौरा०ङीष्।

**शाटक** पु०न० शट-ण्वुल्। वस्त्रे अमरः स्त्रीत्वमपि टाप्।

**शाट्यायन** पु० १मुनिभेदे, तेन प्रोक्तम् अण्। २प्रकृतहोमकर्मणि वैगुण्यसमाधनार्थं विहिते होमभेदे न०भवदेवः।

**शाठ्य** न० शठस्य भावः ष्यञ्। शठतायाम्। [चङि न ह्रस्वः।

**शाड** श्लाघायां भ्वा०आ०सक० सेट्। शाडते अशाडिष्ट ऋदित्

**शाण** न० शणेन निर्वृत्तम् अण्। शणसूत्रनिर्मिते १वस्त्रादौ शण-दाने(तेजने) घञ्। (कष्टिपाथर) २कषपाषाणे ३अस्त्रादीनां निकषणे तीक्ष्णकरणयन्त्रभेदे मेदि० ४करपत्रे (करात) विश्वः। ५माषचतुष्कमाने भावप्र०।

**शाणाजीव** पु० शाणमाजीवति आ+जीव-अण्। अस्त्रतीक्ष्णताकारके शिल्पिनि हेमच०।

**शाणि** पु० शण-इण्। १पट्टवस्त्रे शब्दच०। शणेन निर्वृत्ता इञ् वा ङीप्। २शणनिर्मिते पट्टिकावस्त्रे ३सच्छिद्रवस्त्रे च हेमच० ४हस्तकटाक्षादिसूचनायां शब्दर०। ५वस्त्रखण्डे (ताँड) मेदि०।

**शाणित** त्रि० शण-दाने (तेजने) णिच्-क्त। तीक्ष्णीकृते।

**शाणीर** न० शण-बा० ईरन्। शोणनदमध्यस्तटे विश्वः।

**शाण्डिल्य** त्रि० शण्डिलस्यापत्यम् यञ्। गोत्रप्रवर्त्तके भक्तिशास्त्रकारके १मुनिभेदे मेदि०। भक्तिशब्दे तन्मतं दिग्मात्रं दर्शितम्। तत्प्रियत्वात् २बिल्वे अमरः ३वह्निभेदे च मेदि०।

**शात** न०शो-क्त। १सुखे २तद्वति त्रि०अमरः। ३छिन्ने ४कृशे त्रि० विश्वः। ५दुर्बले ६निशिते च त्रि० मेदि०। ७धुस्तूरे पु०अमरः। [अमरः २धुस्तूरे ३करवीरे च पु० मेदि०।

**शातकुम्भ** न० शतकुम्भे गिरौ भवः अण्। १हिरण्ये

**शातकौम्भ** न० शतकुम्भे भवम् अण् द्विपदवृद्धिः। १हिरण्ये २धुस्तूरे च द्विरूपकोषः।

**शातन** न० शो–णिच्-तुक् च ल्युट्। १तनूकरणे २विनाशने च "वसन्ते सर्वशस्यानां जायते पत्रशातनम्" इति अधिकरणमाला। [चन्द्रप्रकाशे शब्दच०।

**शातपत्रक** पु० शतपत्रमिव कायति कै-क स्वार्थे अण्।

**शातभीरु** पु० शाता दुर्बलाः शाखा भीरवो यस्याः ब०। १मल्लिकाभेदे रत्नमाला। [त्रि०कौ०।

**शातमान** त्रि० शतमानेन क्रीतम् अण्। शतमानेन क्रीते

**शातला** स्त्री शातं कार्श्यं लाति ला–क। (चामकषा) वृक्षे भरतः।

**शातातप** पु० स्मृतिकारके मुनिभेदे। तेन प्रोक्तं छ। शातातपीय तत्प्रोक्ते कर्मविपाकग्रन्थे।

**शात्रव** पु० शत्रुरेव स्वार्थेऽण्। १रिपौ अमरः। तस्य भावः तेषां संघो वा अण्। २वैरे ३रिपुसमूहे च न०।

**शाद** पु० शद-घञ्। १कर्दमे २हरिततृणे च अमरः।

**शादहरित** पु०शादेन हरिततृणेन युक्तः। शाद्वले देशे अमरः

**शाद्वल** पु०शादाः सन्त्यत्र ड्वलच्। नडुलहरिततृणयुक्ते देशे अमरः। [अशीशांसीत् अशीशांसिष्ट।

**शान** तेजने भ्वा० उभ०सक०सेट् स्वार्थे सन्। शीशांसति ते

**शान** पु० शान–अच् शो निशाने इत्युक्तेरनित्यः सन्। शस्त्रादीनां तीक्ष्णताकारके यन्त्रभेदे भरतः।

**शानी** स्त्री शान–इन् ङीप्। इन्द्रवारुण्यां शब्दच०।

**शान्त** त्रि० शम-क्त। १शमयुक्ते २अभियुक्ते च शम–णिच्-क्त नि०। ३शान्तिं गमिते त्रि०। ४निर्वेदस्थायिभावके रसभेदे पु० मेदि०। ५लोमपादराजकन्यायाम्, ऋष्यशृङ्गपत्न्यां ६शमीभेदे च स्त्री राजनि०। शान्तरसनिरूपणं सा०द० ३प० यथा "शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः। कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः। अनित्यत्वादिनाऽशेषवस्तुनिःसारता तु या। परमात्मस्वरूपं वा तस्यालम्बनमिष्यते।। पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः। महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः। रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः। निर्वेदहर्षस्मरणमतिभूतदयादयः। निरहङ्काररूपत्वाद्दयावीरादिरेष नो"। दयावीरादौ हि जीमूतवाहनादौ अन्तरा मलयवत्याद्यनुरागादेरन्ते च विद्याधरचक्रवर्त्तित्वाद्याप्तेर्दर्शनादहङ्कारोपशमो न दृश्यते। शान्तस्तु सर्वप्रकारेणाहङ्कारप्रशमैकरूपत्वान्न तत्रान्तर्भावमर्हति। अतश्च नागानन्दे शान्तरसप्रधानत्वमपास्तम्"। ननु "न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा। रसः स शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रधानः" इत्येवंरूपस्य शान्तस्य मोक्षावस्थायामेवात्मस्वरूपापत्तिलक्षणायां प्रादुर्भावात् तत्र सञ्चार्यादीनामभावात् कथं रसत्वमित्युच्यते। "युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः। रसतामेति तदस्मिन् सञ्चार्यादेः स्थितिश्च न विरुद्धा"। यच्चास्मिन् सुखाभावोऽप्युक्तस्तस्य वैषयिकसुखपरत्वान्न विरोधः। उक्तं हि "यच्च कामसुखं लोके यच्च दिव्यं महासुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्। सर्वाकारमहङ्काररहितत्वं व्रजन्ति चेत्। अत्रान्तर्भावमर्हन्ति दयावीरादयस्तदा"। आदिशब्दात् धर्मवीरदानवीरदेवताविषयरतिप्रभृतयः"। [नव" इति तत्पर्यवसन्नः।

**शान्तनव** पु० शान्तनोरपत्यम् अण्। भीष्मे "भीष्मः शान्त-

**शान्तनु** पु० द्वापरयुगभवे चन्द्रवंश्ये प्रतीपराजपुत्रे नृपभेदे

**शान्तम्** अव्य० शान्ति+वा० डम्। निवारणे मेदि०।

**शान्ति** स्त्री शम–क्तिन्। १कामक्रोधादिजये २विषयेभ्यो मनसो निवारणे अमरः। ३उपद्रवनिवारणे ४निवारणे च "यत्किञ्चिद्वस्तु संप्राप्य स्वल्पं वा यदि वा बहु। या तुष्टिर्जायते चित्ते सा शान्तिः कथ्यते बुधैः" पद्मपु० क्रियायो०। उक्ते ५मन्त्रभेदे ६दुर्गायाम् "सर्वेषां सर्वभूतानां शान्तिस्त्वत्कान्तिरुच्यते" देवीपु०। ७पूजाहोमजपदानादिद्वारा गोचरविलग्नादिस्थग्रहदौःस्थ्यदुःस्वप्नादिसूचितैहिकानिष्टहेतुपापनिवृत्तौ च "यथा शस्त्रप्रहाराणां कवचं विनिवारकम्। तथा दैवोपघातानां शान्तिर्भवति वारणम्" मलमासधृतवाक्यम्। सा च मलमासेऽपि कार्य्या नैमित्तिकत्वात् "नैमित्तिकानि काम्यानि निपतन्ति यथा यथा। तथा तथैव कार्य्याणि

न कालस्तु विधीयते” इति मल॰त॰ वाक्यात्। अद्भु-तादिशान्तिश्च हेमाद्रिशान्तिकाण्डे शान्तिमयूखादौ दृश्या।

**शान्तिक** त्रि॰ शान्तये हितं ठक्। शान्तिसाधने होमादौ तत्करणमुहूर्त्तादिकं मु॰चि॰ उक्तं पी॰ ध॰ यथा “चिप्रध्रुवान्त्यचरमैत्रमघासु शस्तं स्याच्छान्तिकञ्च सह मङ्गलपौष्टिकाभ्याम्। खेऽर्कें विधौ सुखगते तनुगे गुरौ, नोमौढ्यादिदुष्टसमये, शुभदं निमित्ते”। “अथ शान्तिकपौष्टिकादिकर्म्मणु मुहूर्त्तं वसन्ततिलकेनाह। चिप्रेति चिप्रादीनि मघान्तानि प्रसिद्धानि तेषु पौष्टिकं मङ्गलं विनायकशान्त्यादि शान्तिकं दुष्टफलदमूलनक्षत्राद्युत्पन्नशान्त्यादि एतानि कर्माणि कार्याणि उक्तञ्च दीपिकायाम्। “मित्रादित्यमघोत्तराश्रुतभिषक्स्वातीविर॰ घ्राच्युतस्तगौवीश्वरपूष्यपौष्णरविषु स्मौते तथार्त्त्यपि। रिक्तां पर्व विहाय सौम्यदिवसे शस्ते नृणां भूतये सर्वैः शान्तिकपौष्टिकं निगदितं गर्गादिभिर्निश्चयात्” अथ लग्नशुद्धिः तत्रार्के ख्यें खे दशमे सति विधौ चन्द्रे सुखगते चतुर्थस्थे गुरौ तनुगे लग्नस्थे सति शान्त्यादिकं कर्म कार्यं उक्तञ्च रत्नमालायाम्। “पूर्णे चन्द्रे केन्द्र४-गेऽर्केऽम्बर१०स्थे लग्ने जीवे, वाक्पतेर्वासरे च। श्रीमत्या-युष्याणि कार्याणि कार्याणीति” नोतच्छान्तिकादि मौढ्ये गुरुशुक्रयोरस्तादिके बाल्यवार्द्धकसिंहस्थ गुर्वादिरूपे दुष्टसमयेऽपि न शुभदम्। तथा निमित्ते केत्वाद्युत्पातदर्शने सति शुभदं उक्तञ्च दीपिकायाम्। शान्तिकर्माणि कुर्वीत रोगे नैमित्तिके तथा। गुरुभार्गवमौढ्येऽपि दोषस्तत्र न विद्यते”। उक्तञ्चैतत् “यतोऽस्तीदं शान्तिकं नैमित्तिकम् “अनिमित्तकृता शान्तिर्निमित्तायोपजायते इति स्म-रणात्। तत्र निमित्ते रोगरूपे केत्वाद्युत्पातान्तरदर्शनरूपे च भवति नैमित्तिकं तत्र बहुदिनव्यापके गुरुशुक्रास्तादिदोषेऽप्यवश्यं विधेयं यतो जन्मान्तरीयदुरदुष्टसूचकमिदं निमित्तमुत्पन्नं तस्य शान्त्या निराशादशुभादृष्टस्यापि निरासः। बहुदिनप्राप्ये निर्दुष्टे काले क्रियमाणं शान्तिकं किञ्चिद्दूरदुष्टनाशकं यद्यपि भवति तथापि तावद्भिर्दिनैर्दुरदुष्टस्य प्राबल्याद् दुःखप्राप्तिः यथाल्पोऽप्यग्निरल्पेनैव जलेन शान्तो भवति तथा सकलनगरदाहको महानग्निर्बहुभिर्युगपद् गृहीतजलपूर्णघटैरेकदेशनिर्वापितोऽपि सकलोऽग्निर्ननिर्वाप्यते इत्यर्थः सर्वथा मौढ्यादिदोषं विनैव यथा कथञ्चित्कथितप्रकारेण दिनशुद्धिमङ्गीकृत्य शान्तिकाद्यवश्यं विधेयम्”।

**शाप** पु॰ शप–घञ्। (अनिष्टं भूयादित्येवम्) १आक्रोशरूपे २शपथे च मेदि॰।

**शापास्त्र** पु॰ शाप एवास्त्रं यस्य। मुनौ त्रिका॰।

**शाब्दबोध** पु॰शब्देन निर्वृत्तः अण् कर्म॰। अन्वयबोधे शब्दज्ञानजन्ये पदार्थस्मृतिद्वारके ज्ञानभेदे न्यायमतम्। शाब्दत्वं त्वनुभवत्वव्याप्यं जातिभेदः तद्बोधप्रकारादि भाषा॰ उक्तं यथा “पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीः। शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी। लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः। आसत्तियोग्यताकाङ्क्षातात्पर्यज्ञानमिष्यते”। भाषा॰ सि॰मु॰ विवृतमेतत् यथा

“शाब्दबोधप्रकारं दर्शयति। पदज्ञानन्त्विति। न तु ज्ञायमानं पदं करणम् पदाभावेऽपि मौनिश्लोकादौ शाब्दबोधात्। पदार्थधीरिति। पदजन्यपदार्थस्मरणं व्यापारः। अन्यथा पदज्ञानवतः प्रत्यक्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः। तत्रापि वृत्त्या पदजन्यत्वं बोध्यम्। अन्यथा घटादिपदात् समवायसम्बन्धेन गगनाकाशस्मरणं जायते तत्राकाशस्यापि शाब्दबोधापत्तेः। वृत्तिः शक्तिलक्षणान्यतरः सम्बन्धः। अतएव शक्तिज्ञानस्योपयोगः। पूर्वं शक्तिग्रहाभावे पदज्ञानेऽपि तत्सम्बन्धेन स्मरणानुपपत्तेः। पदज्ञानस्य सम्बन्धिज्ञानविधयार्थस्मारकत्वम्। शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः। सा चास्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपा। आधुनिके नाम्नि शक्तिरस्त्येव। “एकादशेऽहनि पिता नाम कुर्य्यात्” इतीश्वरेच्छायाः सत्त्वात्। आधुनिके तु सङ्केते न शक्तिरिति सम्प्रदायः। नव्यास्तु ईश्वरेच्छा न शक्तिः किन्त्विच्छैव। तेन आधुनिकसङ्केतेऽपि शक्तिरस्तीति वदन्ति”।

**शाब्दिक** पु॰ शब्दं शब्दसाधुताज्ञापकं शास्त्रं वेत्त्यधीते वा ठक्। व्याकरणशास्त्रभिज्ञे।

**शामित्र** न॰ शम–णिच् इत्र। १पशुबन्धने। शमितुः कर्म–अण्। यज्ञार्थपशुहननकर्तृभावे २तद्धनने च।

**शामीन** न॰शम–ईनञ्।१श्मशाने २स्रुचि स्त्री ङीप् सि॰कौ॰

**शाम्बरी** स्त्री शम्बरेण निर्वृत्ता अण् ङीप्। मायायाम् इन्द्रजालादौ अमरः। [जटा॰।

**शाम्बविक** त्रि॰ शम्बूः पण्यमस्य ठक्। शाङ्खिके (शाँखारी)

**शाम्बु(म्बू)क** पु॰ श(म्बु)म्बूक+स्वार्थे अण्। शम्बुके (शामुक) भरतः।

शाम्भव पु० शम्भोरयम् अण् । १गुग्गुलौ २कर्पूरे ३शिव-मल्लिकायां राजनि०। ४विषभेदे शब्दच० ५शम्भुपुत्रे पु० ६देवदारुणि च न०र०अभि० ७शिवसम्बन्धिनि तद्दुपासके च त्रि०। ८दुर्गायां स्त्री "शाम्भवी कुपिता तस्येति" तन्त्रम्।

शा(सा)यक पु० शो(षो) वा–ण्वुल्। १वाणे खड्गे च जटा०

शार दौर्बल्ये अद० चु० उभ० सक० सेट्। शारयति-ते अशशारत् त।

शार न० शार–अच्, शॄ–घञ् वा। १कर्बुरवर्णे २तद्वति त्रि० अमरः ३वायौ पु० अमरः ४अक्षोपकरणे मेदि०।

शारङ्ग पुंस्त्री० शारं कर्बुरमङ्गं यस्य शक०। १चातकपक्षिणि २हरिणे ३भृङ्गे ४भृङ्गे ५मयूरे च। रायमुकुटः जाति-त्वात् स्त्रियां ङीप्। ६हिंस्रे ७वाद्ययन्त्रभेदे स्त्री ङीप् शब्दार्थचि०।

शारद न०शरदि भवम्-ऋत्वण्। १श्वेतपद्मे राजनि०। २काशे ३बकुले ४हरिन्मुद्गे च पु० राजनि०। ५शरत्कालोत्पन्ने त्रि० स्त्रियां ङीप्। शारदं श्वेतपद्ममस्त्यस्याः अण्। ६सर-स्वत्यां स्त्री त्रिका०। ७नूतने ८अप्रतिभे त्रि० मेदि०। ९अर्वाचीने त्रि० विश्वः। १०दुर्गायां स्त्री टाप् "शरत्काले पुरा यस्मात् नवम्यां बोधिता हरेः। शारदा सा समा-ख्याता पीठे लोके च नामतः" ति०त०। ११वानरभेदे शब्दर०। १२तोयपिप्पल्यां १३सप्तच्छदे स्त्री मेदि० ङीप् एवं १४कोजागरपूर्णिमायां स्त्री शब्दरत्ना० शरत्कालीने पूजादौ त्रि०स्त्रियां ङीप्। "शारदी चण्डिकापूजा त्रि-विधा परिकीर्त्तिता। सात्त्विकी राजसी चैव तामसी चेति तां शृणु" भविष्यपु०। [भवे १आर्द्रे २तत्कालजे रोगे पु०

शारदिक न० शरदि भवं आद्रं रोगो वा ठञ्। शतत्काले

शारदीय त्रि० शरदि भवः छण्। १शरत्काले कर्त्तव्ये उत्सवादौ तथाभूतायां दुर्गापूजायां स्त्री "अदूरे जन-दग्धायाः शारदीयो महोत्सवः"। "शारदीया महा-पूजा चतुःकर्ममयी शुभा" ति०त०।

शारि(री) स्त्री शॄ–इञ् वा ङीप्। १पाशकादिगुटिकायां २अक्षोपकरणे च मेदि०। ३पक्षिभेदे च "शारीं चरन्तीं सखि! मारयेति" नैषधम्। ४युद्धार्थगजपर्य्याणे ५व्यवहारभेदे मेदि०। ६कपटे धरणिः। स्वार्थे क। पक्षिभेदे वीणावादने च हेमच०।

शारिफल पु० न०शारेः फलमिवाधारः। शारिफलके पाश-कक्रीडासाधने २द्रव्ये (छक) अमरः स्वार्थे क। तत्रैव।

शारिवा स्त्री शारिरिव वनति वन-ड। श्यामालतायाम् अमरः। "एकं वै शारिवामूलं सर्व्वव्रणविशोधनम्" वैद्य०।

शारिशृङ्खला स्त्री शारेः शृङ्खलेव। पाशकभेदे तद्भेदाश्च 'चतुरी तिन्तिडी द्यूतं पञ्चमी शारिशृङ्खला। नय पीठी चाष्टकाद्यो नयः स्याज्जयपुत्रकः। एते पाशक-भेदाः स्युर्जयकोलाहलोऽपि च" शब्दर०।

शारीर त्रि० शरीरस्येदम् अण्। १देहसम्बन्धे सुखदुःखादौ तस्येदमस्य पुनः अण्। २वृषे पु० मेदि०। शरीरमात्म-त्वेनाभिमन्यते अण्। ३जीवे। स्वार्थे क। तत्रार्थे। शारीरं जीवं दुःखं वा अधिकृत्य कृतो ग्रन्थः कन्। व्याख्यते वेदान्तसूत्रे चिकित्साङ्गे सुश्रुतग्रन्थाद्येकदेशे च शारीरश्च दुःखं रोगादिकं यथोक्तं विष्णुपु० ६५अ०। "आध्यात्मिकोऽपि द्विविधः शारीरो मानसस्तथा। शारीरो बहुभिर्भेदैर्भिद्यते श्रूयताञ्च सः। शिरोरोग प्रतिश्यायज्वरशूलभगन्दरैः। गुल्मार्शःश्वयथुश्वास च्छर्द्यादिभिरनेकधा। तथाक्षिरोगातीसारकुष्ठाङ्गामय-संज्ञकैः। भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि" इत्युक्तलक्षणतशारीरकस्यानश्च तत्र द्वयम्।

शारीरिक त्रि० शरीरे भवः ठक्। देहजाते दुःखादौ।

शारुक त्रि० शॄ–उकञ्। हिंसके।

शार्कर त्रि० शर्करा अस्त्यस्य अण्। १शर्करायुक्ते देशे शर्क-राया विकारः अण्। २फाणिते ३दुग्धफेणे च पु० मेदि०। शर्करीकन्दोऽस्य अण्। शर्करीकन्दोयुक्ते ४मन्थादौ।

शार्ङ्ग त्रि० शृङ्गस्य विकारः अण्। १शृङ्गजाते पदार्थे। २विष्णुधनुषि ३धनुर्मात्रे च पु० मेदि० ४आर्द्रके न० राजनि०। [स्त्रिमात्रे त्रि०।

शार्ङ्गिन् पु० शार्ङ्गः अस्त्यस्य इनि। १विष्णौ अमरः। २ध-

शार्दूल पुंस्त्री० शॄ–ऊलच् दुक् च। १व्याघ्रभेदे अमरः। २पशुभेदे ३शरभे ४राक्षसभेदे च मेदि० उत्तरपदस्थः। ५श्रेष्ठार्थे अमरः। ६पक्षिभेदे धरणिः ७चित्रके राजनि०। स्त्रियां सर्व्वत्र जातित्वे ङीष्।

शार्दूलललित न० अष्टादशाक्षरपादके छन्दोभेदे तल्लक्षणं यथा "मः सो जः सतसा दिनेशऋतुभिः शार्दूलललि-तम्" छन्दोम०।

शार्दूलविक्रीडित न० ऊनविंशत्यक्षरपादके छन्दोभेदे तल्ल० क्षणं यथा "सूर्य्याश्वैर्मसजस्तताः सगुरवः शार्दूलवि-क्रीडितम्" छन्दोम०।

शार्वर न० शर्वर्य्यां इदं शैषिकोऽण्। १अत्यन्ततमसि।

२शातके च त्रि॰ मेदि॰ । ३शालिसम्बन्धिनि त्रि॰ । "शार्वरस्य तमसो निषिद्धये" किरा॰ अर्थार्थे तु शालाट्-ठञ्" शार्वरिक इत्येव शालिभवे । [शब्दार्थचि॰ ।

**शाल** कथने भ्वा॰आत्म॰सक॰ सेट् घटि न ह्रस्वः । शालते

**शाल** पु॰ शल-घञ् । १मत्स्यभेदे २प्राकारे ३सर्जनामख्याते वृक्षभेदे अमरः । ४वृक्षमात्रे राजनि॰ दन्त्यादिस्तु वृक्षमात्रे "स्कन्धः शाखः समदधत्तामुना" इति नैषधम् । ५वटभेदे शब्दच॰ । ६शालिवाहननृपे विश्वः ।

**शालग्राम** पु॰ शालानां वृक्षाणां ग्रामः समूहो यत्र । १पर्वतभेदे तत्र जातः अच् । तत्र जाते २विष्णोर्मूर्त्तिभेदे गण्डकमल्दे २५११ पु॰ दर्शिते गण्डक्या एकदेशस्य शिलाभेदजाते ३विष्ण्वादिदेवचक्रयुक्तशिलाभेदे च तदुत्पत्ति-वैलक्षण्यभेदेन तन्नामभेदाश्च यथा "कीटयोनिं प्रपद्येथा" इति गण्डक्याः सुरान् प्रतिशापे "तेन कर्म्मविपाकेन जडा त्वञ्च नदी भवेति" देवानां गण्डकीं प्रति शापे च जाते विष्णुना तत्समाधानायोक्तं यथा

"शृणु शङ्कर ! महादेव ! शृणु देव ! गजानन ! । मद्गणो ब्राह्मणो पाठभातको शापतोऽत्र वै । भविष्यतस्तयोर्मोक्षं करिष्यामि कलेवरम् । शैशवं भविष्यति यदा तन्मेदोमज्जसंभवाः पाषाणान्तर्गताः कीटा वज्रास्याः प्रभविष्णुय" इति "कृत्वैव गण्डकी पुण्या गङ्गातुल्या महानदी । गण्डक्यां गिरिराजस्य दक्षिणे दशयोजनम् । विष्णोर्मन्त्रक्षेत्रं पुण्य-क्षेत्रं महीतले । चक्रतीर्थमिति ख्यातं त्रिषु लोकेषु विश्रुतम् । शालग्रामगता देवा देवो द्वारावतीं गतः । उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः । सर्वदेवप्रीति करा भुक्तिमुक्तिप्रदायिनः । भवन्त्वस्यां तु पाषाणा-स्तेतदन्तर्गता सुराः । शार्ङ्गिणं मां विना सर्वे वज्रकीटा भवन्त्विति । अनेनैव तु गण्डक्याः पुत्रत्वं भवतामपि । भविष्यति तदन्तश्च चिह्नं तद्दैवतोद्भवम् । विज्ञाय येऽर्च-यिष्यन्ति प्रीयतां सा च देवता" इति विष्णूक्तौ प्रज्ञाता तल्लक्षणस्य मत्स्ये विष्णूक्तिर्यथा

"स्वीयवर्णा शिला पूज्या ब्राह्मणाद्यैः सुखाप्तये । स्निग्धा शिला मन्त्रसिद्धिं कृत्वाऽसिद्धिं करोति च । मेचका कीर्त्तिदा पीताङ्गारवत् सा यशोहरा । पाण्डुरूपार्द्ध-शमनी मलिना पापघीकरी । पीता पुत्रफलं दद्या-दारवर्णा सुतान् हरेत् । नीला संदिशते लक्ष्मीं धूम्राभा हरते मतिम् । रोगप्रदा रक्तवर्णा सिन्दूराभा महा कविम् । दारिद्र्यकारिणी वक्रा समा सर्वार्थसाधिका । स्थूला निहन्ति चैवायुः सूक्ष्मा स्वल्पमतिं हरेत् । पूजाफलं वाञ्छितया निष्फला लाञ्छनं विना । क-पिला चित्तवैकल्यं नेत्ररोगञ्च कर्बुरा । भग्ना भङ्करो-षेया बहुचक्रापमानदा । वक्त्रान्तरहीना च देवचक्रा वियोगदा । हठन्मुखी कलहिनी वृहच्चक्रा सुतान् हरेत् । संलग्नचक्रा तद्दुःखं बद्धचक्रा महागदम् । भग्न-चक्रा तु दारिद्र्यं सर्वनाशं त्वधोमुखी । कुण्डादिकं व्याकृतमुखी विषमा विविधापदः । विकृतावर्त्तनाभिश्च विकारान् कुरुते बहून् । वंशच्छेदो द्वारस्थानां नार-सिंह्यां प्रजायते । रेखाढ्या दुःखदात्री च यथा स्थूला तथा सुखम् । यथा स्निग्धा तथा लक्ष्मीस्तद्विभेदाननतः शृणु । लक्ष्मीहरिः१ स विज्ञेयो यत्र चक्रं सचक्रकम् । केवला वनमाला च द्वारस्थानामभीष्टदा । वासुदेवः२ स विज्ञेयो यद्द्वारे चक्रयुग्मकम् । निरन्तरं समं चापि स श्वेतः पापनाशनः । सङ्कर्षणः३ स विज्ञेयः प्राक्-पश्चाच्चक्रयुग्मकम् । संलग्नपूर्वभागस्थं महारत्नं सुशो-भनम् । प्रद्युम्नः४ सूक्ष्मचक्रं स्याच्छिद्रं दीर्घं सुवि-स्तरम् । सुषिरान्तर्बहुच्छिद्रः पीत इष्टप्रदायकः । अनिरुद्धस्तु५ नीलाभो वर्त्तुलश्चातिशोभनः । रेखाद्वयं तु तद्द्वारि पृष्ठं पद्मेन लाञ्छितम् । केशवः६ स तु विज्ञेयस्त्वेकं वा द्वयमेव वा । प्राक्का पश्चाच्च चक्रं स्यात् चतुष्कोणः स भाग्यकृत् । नारायणः७ श्यामवर्णो नाभौ चक्रं तथोन्नतम् । दीर्घरेखासमायुक्तं दक्षिणे सुषिरं पृथु । हरिरूपा८ शिला वा स्यात् यथा जद्दं सुखं भवेत् । हरिवद्द दृश्यते द्वारं भुक्तिमुक्तिप्रदा तु सा । परमेष्ठी९ स विज्ञेयः पद्मचक्रान्वितस्तु यः । त्रि-त्वाकृतिश्च शुक्लाभः पृष्ठे च सुषिरं महत् । विष्णुस्तु१० कृष्णवर्णः स्यात् स्थूलचक्रे सुशोभने । हृदोपरि तथा रेखा दृश्यते मध्यदेशतः । नारसिंहस्तु११ कपिलः पृथुचक्रो बृहन्मुखः । त्रयो वा पञ्च वा यत्र बिन्दवो दृश्यन्ते न सन्तु । कपिलनारसिंहस्तु१२ गुडुकाया-निभो भवेत् । स्थूलचक्रद्वयं मध्ये द्वारे रेखा सुशोभना । महानृसिंहो१३ विज्ञेयः पूर्वोक्तैर्लक्षणैर्युतः । रेखाश्च केशराकारा मुखं दीर्घं भयानकम् । लक्ष्मीनृसिंहो१४ विज्ञेयश्चतुश्चक्रः सबिन्दुकः । पूर्वोक्तलक्षणैर्युक्तो वन-मालाविभूषितः । वराहोऽसौ१५ शक्तिलिङ्गे चक्रे च विषमे तथा । इन्द्रनीलनिभः स्थूलस्त्रिरेखालाञ्छ-

ञ्छितो भवेत् । पृथ्वीवराहनामा१६ स या वराहाकृतिः शिला । चामुन्ना चैव रेखैका गतराज्यप्रदायिका । मत्स्याख्या१७ सा शिला ज्ञेया बिन्दुत्रयविभूषिता । कांस्यद्वारा स्वर्णनिभा दीर्घा वा भुक्तिमुक्तिदा । कूर्माख्या१८ तु शिला पृष्ठे वर्त्तुला चोन्नता भवेत् । हरितं वर्णमायाता कौस्तुभेन च चिह्निता । शिलाकूर्म१९ स विज्ञेयः कूर्माकारस्तु यो भवेत् । चक्राङ्किता तथा वृत्ता पूजिता सा पदप्रदा । हयग्रीवो२०ऽङ्कुशाकारो रेखा चक्रसमीपगा । बहुबिन्दुसमायुक्तं पृष्ठं नीरदनीलभम् । ज्ञेयः सौम्यहयग्रीवो२१ हयग्रीवसमा शिला । दीर्घया लेखया युक्ता रेखा वा तादृशी भवेत् । हयशीर्षः२२ स विज्ञेयो मुखं यस्य हयाकृति । पद्माकृति भवेद्वापि साक्षमालं शिरस्तथा । वैकुण्ठ२३श्चैकवर्णाभश्चक्रमेकं तथा ध्वजम् । द्वारोपरि तथा रेखा पुष्पाकारा सुशोभना । श्रीधरस्तु२४ तथा देवश्चिह्नितो वनमालया । कदम्बकुसुमाकारो रेखा पञ्चकभूषितः । वामनः२५ स तु विज्ञेयो योऽतिह्रस्वश्च वर्त्तुलः । अतसीकुसुमप्रख्यो बिन्दुनोपरि शोभितः । दधिवामननामा२६ तु ऊर्द्ध्वाधश्चक्रसंयुतः । महाद्युतिर्नतिह्रस्वः सुभिक्षक्षेमदायकः । सुदर्शन२७स्तथा देवः श्यामवर्णो महाद्युतिः । वामपार्श्वे तथा चक्रं रेखैकैव तु दक्षिणे । सहस्रार्जुननामा२८ऽसौ नानारेखामयो भवेत् । चक्राकारा यन्त्रपङ्क्तिः स नष्टद्रव्यदायकः । स्थूलदामोदरो२९ यस्य मध्ये चक्रं प्रतिष्ठितम् । दूर्वाभो द्वारसंकीर्णः पीतरेखो धनप्रदः । राधादामोदरो३० ज्ञेय ऊर्द्ध्वाधश्चक्रवर्त्तुलम् । नातिदीर्घमुखं मध्ये लम्बरेखः स भोगदः । दामोदरः३१ स विज्ञेयो यश्चक्रद्वयलाञ्छितः । सूक्ष्मं भवेच्चावयवं पूजितः सुखदः सदा । अनन्तो३२ बहुवर्णः स्यान्नागभोगेन चिह्नितः । अनेकचक्रसंभिन्नः सर्वकामफलप्रदः । पुरुषोत्तमनामा३३ऽसौ यस्य दिक्षु विदिक्षु च । ऊर्द्ध्वान्यास्यानि दृश्यन्ते पुरुषार्थफलप्रदः । योगेश्वरः३४ स विज्ञेयो लिङ्गं यस्य शिरोगतम् । ब्रह्महत्यादिपापानां नाशको योगवित्तिदः । पद्मनाभ३५स्तथा रक्तः पङ्कजच्छत्रसंयुतः । तत्स्था पूजितो नित्यं दरिद्रस्त्वीश्वरो भवेत् । रश्मिजालो हिरण्याख्य३६श्चन्द्राभः स्फटिकोपमः । यस्य वा जायते नानास्वर्णरेखाभिरन्वितः । गरुड़३७ स तु विज्ञेयो मध्ये पक्षद्वयान्विते । हृदीर्घा दृश्यते रेखा स

सर्पविषनाशकः । जनार्दनः३८ स विज्ञेयः केवलानि स्फुटानि च । यस्योदरे तु चक्राणि चत्वारि पितृतृप्तिकृत् । लक्ष्मीनारायणो३९ ज्ञेयो वनमालाङ्कितोदरः । सूक्ष्मद्वारश्चतुश्चक्रो भुक्तिमुक्तिप्रदायकः । हृषीकेशः४० स विज्ञेयो योऽर्द्धचन्द्राकृतिर्भवेत् । तमभ्यर्च्य लभेत् स्वर्गं विषयांश्च मनोहरान् । लक्ष्मीनरहरि४१र्ज्ञेयः कृष्णवर्णः सबिन्दुकः । वामपार्श्वे समे चक्रे स्वच्छस्त्वाभीष्टदायकः । त्रिविक्रमस्तु४२ विज्ञेयः श्यामवर्णो महाद्युतिः । वामपार्श्वे चक्रयुग्ममेकरेखा तु दक्षिणे । कृष्णो४३ ज्ञेयः शिला कृष्णा सचक्रा वा विचक्रिका । प्रदक्षिणावर्त्तकृतवनमालाविभूषिता । चतुर्मुखः४४ स विज्ञेयो द्वे चक्रे मध्यदेशतः । चतस्रः पार्श्वगा रेखा वेदशास्त्रागमप्रदः" मेरुत० । शिवादिशिलाभेदास्तत्रैवोक्ता यथा शिवोक्तिः "शालग्रामा मत्स्वरूपाः शृणु तेषान्तु लक्षणम् । यत्सेवनाद्भवेदिष्टमिह लोके परत्र च । शिवनाभः१ स विज्ञेयः सलिङ्गाकारतां गतः । स्वयम्भुलिङ्गाकृतिमान् मन्त्रसिद्धिविधायकः । त्र्यम्बकः२ स तु विज्ञेयो बिन्दूत्तरविभूषितः । शूलाकारा तथा रेखा गतपुंस्त्वप्रदायकः । धूर्जटिः३ स तु विज्ञेयो यस्य रेखा जटासमा । तिस्रो यत्र प्रदृश्यन्ते सोऽर्च्चितो ज्ञानदायकः । शम्भुस्तु४ पाण्डुरो ज्ञेयो बिन्दुः कृष्णस्तु मस्तके । बिल्वप्रमाणस्तेजस्वी पूजितः स्त्रीवशङ्करः । ईश्वरः५ स तु विज्ञेयो रक्तो बिन्दुस्तु मस्तके । एकचक्रो द्विचक्रो वाभ्यन्तरेऽधश्च गोष्पदम् । मृत्युञ्जयः६ स विज्ञेयस्त्वपमृत्युविनाशकः । अधश्चक्रं तदूर्द्ध्वं तु श्वेता रेखा त्रिशूलवान् । चन्द्रशेखर७नामाऽसावर्द्धचन्द्राकृतिस्तु के । मध्ये चक्रद्वयं तस्य सेवनाद्रोगनाशनम् । रुद्र८ स एव विज्ञेयः कपिलो मूर्द्ध्नि लक्षितः । चक्रमध्ये भवेद्रेखा मारयेद्रिपुसन्ततिम्" । "शालग्रामानथो वक्ष्ये शक्तिकीटसमुद्भवान् । येषां पूजनतो देवी भवानी सम्प्रसीदति । श्रीविद्या१ सा तले चक्रमूर्द्धे कलं प्रदृश्यते । बाह्ये घण्टाङ्कितो मूर्द्धा स्निग्धा श्यामाखिलेष्टदा । महाकाली२ तु सा ज्ञेया योनिचिह्नसमन्विता । द्विच्छिद्राढ्या खर्वशिला त्रिकोणेनाङ्किता च या । यदायुधाकृतिश्चोर्द्ध्वं तां देवीं तत्र निर्दिशेत् । देवीशिला सचक्रा या दक्षमार्गेण तां यजेत् । सार्च्चिता वाममार्गेण लोकद्वयसुखावहा । या चक्ररहिता देवीशिलां तां वामतोऽर्च्चयेत्" ।

"सौरी शिला दुर्लभैव प्रायः कलियुगे पुनः । स्फटिकाभा भवेत् सा तु घर्म्मं नित्यं विमुञ्चति । गणेशः स तु विज्ञेयः स्वस्तिपुष्पाङ्कितो भवेत् । शुक्राकारा शिला वापि गजाननसमापि वा । यस्या मध्ये सहस्रञ्च छत्रचक्रञ्च दृश्यते । सा शिला तस्य दिक्पस्य शेषा दृश्यते राज्यदा । अर्द्धचन्द्राकृतिर्यत्र दृश्यते मण्डलम् । सा तु चन्द्रशिला त्र्यस्रयुक्ता भौमशिला मता । बाणाकारेण चिह्नेन ज्ञेया बुधशिला बुधाः ।। दीर्घेण चतुरस्रेण युक्ता गुरुशिला मता । षट्कोणा तु शुक्रस्य चापाकारा शनेर्मता । सर्पाकारा तु राहोः स्यात् केतोस्तु ध्वजरूपिणी" मेरुत० ।

तुलसीं प्रति भगवदुक्तिः "अहञ्च शैलरूपी च गण्डकीतीरसन्निधौ । अधिष्ठानं करिष्यामि भारते तव शापतः । वज्रकीटाश्च कृमयो वज्रदंष्ट्राश्च तत्र वै । तच्छिलाकुहरे चक्रं करिष्यन्ति मदीयकम् । एकद्वारे चतुश्चक्रं वनमालाविभूषितम् । नवीननीरदाकारं लक्ष्मीनारायणाभिधम्१ । एकद्वारे चतुश्चक्रं नवीननीरदोपमम् । लक्ष्मीजनार्द्दनं२ ज्ञेयं रहितं वनमालया । द्वारद्वये चतुश्चक्रं गोष्पदेन समन्वितम् । रघुनाथाभिधं३ ज्ञेयं वेष्टितं वनमालया । अतिक्षुद्रं द्विचक्रन्तु नवीननीरदोपमम् । दधिवामनं४ विज्ञेयं गृहिणाञ्च सुखप्रदम् । अतिक्षुद्रं द्विचक्रञ्च वनमालाविभूषितम् । श्रीधरं देवि ! विज्ञेयं श्रीप्रदं गृहिणां सदा । स्थूलञ्च वर्त्तुलाकारं रहितं वनमालया । द्विचक्रं स्फुटमत्यन्तं ज्ञेयं दामोदराभिधम्६ । मध्यमं वर्त्तुलाकारं द्विचक्रं बाणविक्षतम् । रणरामाभिधं८ ज्ञेयं शरतूणसमन्वितम् । स्थूलं चतुर्द्दशचक्रं नवीनजलदप्रभम् । अनन्ताख्यं९ विज्ञेयं चतुर्वर्गफलप्रदम् । मध्यमं सप्तचक्रञ्च छत्रतूणसमन्वितम् । राजराजेश्वरं१० ज्ञेयं राजसम्पत्करं नृणाम् । चक्राकारं द्विचक्रञ्च सश्रीकं जलदप्रभम् । सगोष्पदं मध्यमञ्च विज्ञेयं मधुसूदनम्११ । सुदर्शनं१२ चैकचक्रं गुप्तचक्रं गदाधरम्१३ । द्विचक्रं हयवक्त्राभं हयग्रीवं१४ प्रकीर्त्तितम् । अतीव विस्तृतास्यञ्च द्विचक्रं विकटं सति ! । नरसिंहाभिधं१५ ज्ञेयं सद्यो वैराग्यदं नृणाम् । द्विचक्रं विस्तृतास्यञ्च वनमालासमन्वितम् । लक्ष्मीनृसिंहं१६ विज्ञेयं गृहिणाञ्च सुखप्रदं सदा । द्वारदेशे द्विचक्रञ्च सश्रीकञ्च समं स्फुटम् । वासुदेवञ्च१७ विज्ञेयं सर्व्वकामफलप्रदम् । प्रद्युम्नं१८ सूक्ष्मचक्रञ्च नवीननीरदप्रभम् । सुषिरे छिद्रबहुलं गृहिणाञ्च सुखप्रदम् । द्वे चक्रे चैकलग्ने तु पृष्ठे यत्र तु पुष्कलम् । सङ्कर्षणन्तु१९ विज्ञेयं सुखदं गृहिणां सदा । अनिरुद्धञ्च२० पीताभं वर्त्तुलमतिशोभनम् । सुखप्रदं गृहस्थानां प्रवदन्ति मनीषिणः" ब्रह्मवै० प्र० १९अ० ।

"शालग्रामशिलाद्वारगतलग्नद्विचक्रधृक् । शुक्लाभो वासुदेवाख्यः१ सोऽव्यात् यः श्रीगदाधरः । लग्नद्विचक्रो रक्ताभः पूर्व्वभागे तु पुष्कलः । सङ्कर्षणो२ऽथ प्रद्युम्नः३ सूक्ष्मचक्रस्तु पीतकः । सुदीर्घशुषिरश्छिद्रः सोऽनिरुद्धस्तु४ वर्त्तुलः । नीलो द्वारि त्रिरेखश्च अथ नारायणो५ऽसितः । मध्ये गदाकृती रेखा नाभिचक्रसमुन्नतः । पृथुचक्रो नृसिंहो(६)ऽथ कपिलोऽव्यात् त्रिविन्दुकः । अथ वा पञ्चबिन्दुस्तत्पूजनं ब्रह्मचारिणाम् । वराहः७ शुभलिङ्गोऽव्यात् विषमस्थद्विचक्रकः । नीलस्त्रिरेखः स्थूलोऽथ कूर्म्ममूर्त्तिः८ सविन्दुमान् । कृष्णः स वर्त्तुलावर्त्तः पातु चोन्नतपृष्ठकः । श्रीधरः९ पञ्चरेखोऽव्यात् वनमाली गदान्वितः । वामनो१० वर्त्तुलो ह्रस्वः वामचक्रः सुरेश्वरः । नानावर्णोऽनेकमूर्त्तिर्नागभोगी त्वनन्तकः११ । स्थूलो दामोदरो१२ नीलो मध्ये चक्रः स नीलकः । संकीर्णद्वारकः सोऽव्यादथ ब्रह्मा१३ सुलोहितः । सुदीर्घरेखाशुषिर एकचक्राम्बुजः पृथुः । पृथुश्छिद्रः स्थूलचक्रः कृष्णो विष्णुस्तु१४ बिन्दुमान् । हयग्रीवो१५ऽङ्कुशाकारः पञ्चरेखः सकौस्तुभः । वैकुण्ठो१६ मणिरत्नाभः एकचक्राम्बुजोऽसितः । मत्स्यो१७ दीर्घाम्बुजाकारो द्वाररेखश्च पातु वः । वामचक्रो द्वाररेखः श्यामो वोऽव्यात् त्रिविक्रमः१८ । एकेन लक्षितो योऽव्यात् गदाधरो सुदर्शनः१९ । एकद्वारे चतुश्चक्रं वनमालाविभूषितम् । स्वर्णरेखासमायुक्तं गोष्पदेन विराजितम् । कदम्बकुसुमाकारं लक्ष्मीनारायणं विदुः" गरुड पु० ४५अ० । पुराणान्तरेष्वपि लक्षणान्तराणि उक्तानि दृश्यानि । तत्र लक्षणभेदस्तु विकल्पार्थः । वराहपु० भूमिं प्रति वराहोक्तिः "स्फटिके शिवहृदयं नार्च्च्यं शालग्रामद्वयं तथा । द्वे चक्रे द्वारकायास्तु नार्च्च्यं सूर्य्यद्वयं तथा । शालग्रामशिला भग्ना पूजनीया सचक्रिका । खण्डिता स्फुटिता वापि शालग्रामशिला शुभा । शालग्रामो न स्पृष्टव्यो हीनवर्णैर्वसुन्धरे ! । स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मतः । मोहात् यः

संस्पृशेत् शूद्रो योषिद्वापि कदाचन । स पतेन्नरके घोरे यावदाहूतसंप्लवम् । यदि भक्तिर्भवेत्तस्य स्त्रीणां वापि वसुन्धरे ! । दूरादेवास्पृशन् पूजां कारयेत् सुसमाहितः" । तत्पूजने तत्स्पर्शे च स्त्रीणां नाधिकारः "न जातुचित् स्त्रिया: कार्यं शालग्रामस्य पूजनम् । भर्तृहीनाऽथ सुभगा स्वर्लोकहितैषिणी । मोहात् स्पृशेत्तु महिला जन्मशीलगुणान्विता । हित्वा पुण्यसमूहं तु सत्वरं नरकं व्रजेत्" ब्रह्मवै० पा० २०अ० ।
"अभक्ष्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम् । शालग्रामशिलास्पर्शात् पावनं तत् भवेत् सदा" ।

"दद्यात् भक्ताय यो देवि ! शालग्रामशिलां नरः । सुवर्णरहितां, पृथ्वी सपर्वतवनान्विता । ससमुद्रा भवेद्दत्ता सपात्रे च वसुन्धरे ! । शालग्रामशिलायास्तु मूल्यमुद्घाटयेत् कश्चित् । विक्रेता क्रयकर्त्ता वा नरके वै पतेत् ध्रुवम्" वराहपु० ।
तस्याकारादिभेदे फलभेदो यथा
"छत्राकारे भवेद्राज्यं वर्तुले च लभेत् श्रियम् । दुःखञ्च शकटाकारे शूलाग्रे मरणं भवेत् । विकृतास्ये च दारिद्र्यं पिङ्गले हानिरेव च । लग्नचक्रे भवेद्व्याधिर्विदीर्णे मरणं ध्रुवम्"। तत्स्पर्शेन मिथ्यादिवादिकरणादौ दोषो यथा "शालग्रामशिलां धृत्वा मिथ्यावाक्यं वदेत्तु च । स याति कूर्मदंष्ट्रञ्च यावद्वै ब्रह्मणो वयः । शालग्रामशिलां धृत्वा स्वीकारं यो न पालयेत् । स प्रयात्यसिपत्रञ्च लक्षमन्वन्तरावधि । तुलसीपत्रविच्छेदं शालग्रामे करोति यः । तस्य जन्मान्तरे कान्ते ! स्त्रीविच्छेदो भविष्यति । शालग्रामञ्च तुलसीं शङ्खञ्चैकत्र एव च । यो रक्षति स च ज्ञानी स भवेत् श्रीहरिप्रियः" ब्रह्मवै०प्र० १६०अ०। "शालग्रामो हरेर्मूर्त्तिर्जगत्त्राणस्य भारतम् । कलेवरसहस्रान्ते याति त्यक्त्वा हरेः पदम्" ब्रह्मवै०प्र० ६अ०। "शालग्रामाः समाः पूज्याः समेषु द्वितयं न हि । विषमा नैव पूज्याः स्युरेकैव विषमेष्वपि" पद्मपु०पा०२०अ०। "शालग्रामशिलारूपी यत्र तिष्ठति केशवः । तत्र देवाऽसुरा यक्षा भुवनानि चतुर्दश" पद्मपु०। "अत्र सर्वसान्निध्यादत्र तेषां पूजा प्रतीयते तत्रावाहनविसर्जने न स्तः "शालग्रामे स्थावरे वा नावाहनविसर्जने" इति राघवभट्टधृतवाक्यात्" दीक्षा० रघु० ।
४क्षेत्रभेदे न० तन्नामकारणं वराहपु० उक्तं यथा
"अथ दीर्घेण कालेन स(शालङ्कायनः)मुनिः संशितव्रतः । तप्यमानो यथान्यायं पश्यते शालमुत्तमम् । विश्रामं कुरुते तत्र द्रष्टुकामोऽथ मां (हरिम्) मुनिः । मायया मम मूढात्मा यत्तो द्रष्टुं न मामभूत् । ततः पूर्वेण पार्श्वेन तस्य शालस्य सुन्दरि ! । वैशाखमासद्वादश्यां मद्दर्शनमुपागतः । दृष्ट्वा मां तत्र स मुनिस्तपस्वी संशितव्रतः । तुष्टाव वैदिकैः सूक्तैः प्रणम्य च पुनःपुनः । ततोऽहं स्तूयमानो वै ऋषिमुख्येन सुन्दरि ! । प्राप्तोऽस्मि परमां प्रीतिं तमवोचं ततो मुनिम् । अस्मात्तमे महाभाग ! स्थित्वा त्वं तपसां निधे ! । मुनेश्च परमप्रीतो मत्क्षेत्रे मत्समो भव । अन्यच्च गुह्यं वक्ष्यामि शालङ्कायन ! तच्छृणु । तव प्रीत्या प्रवक्ष्यामि येनैतत् क्षेत्रमुत्तमम् । शालग्राममिति ख्यातं तन्निबोध मुने ! शुभम् । योऽयं वृक्षस्त्वया दृष्टः सोऽहमेव न संशयः" वराहपु०।

**शालग्रामगिरि** पु० पर्वतभेदे वराहपु० "कथयिष्यामि ते गुह्यं शालग्राममिति स्मृतम् । तस्मिन् क्षेत्रे हरो देवो मत्स्वरूपेण संयुतः । शालग्रामे गिरौ तस्मिन् शिलारूपेण तिष्ठति । अहं तत्रैव तिष्ठामि शिलारूपेण नित्यदा । तस्मिन् शिलाः समग्रास्तु मत्स्वरूपा न संशयः । पूजनीयाः प्रयत्नेन किं पुनश्चक्रलाञ्छिताः । विष्णुरूपेण तु हरस्तत्र देवालये गिरौ । शिवनाभाः शिलास्तत्र चक्रनाभास्तथा शिलाः । सोमेश्वराधिष्ठितस्तु शिवरूपो गिरिः स्मृतः । शालग्रामगिरिर्विष्णुरहं सोमेश्वराभिधः" वराहपु० ।

**शालङ्कायन** पु० ऋषिभेदे शालग्रामशब्दे दृश्यम् ।

**शा(सा)लज** पु० शा(सा)लात् जायते जन-ड । सर्जरसे (धुना) शब्दर० ।

**शालनिर्य्यास** पु० ६त० । सर्जरसे (धुना) रत्नमा० ।

**शालपर्णी** स्त्री शालस्येव पर्णान्यस्याः ङीप् । (शालपानी) वृक्षभेदे राजनि० । "शालपर्णी गरच्छर्दिज्वरश्वासातिसारजित् । शोषदोषत्रयहरी बृंहण्युक्ता रसायनी । तिक्ता विषहरी स्वादुः क्षतकासकृमिप्रणुत्" भावप्र०।

**शालभञ्जिका** स्त्री शालेन भज्यते निर्मीयते भन्‌ज-ण्वुल् । १काष्ठनिर्मितपुत्तलिकायां, २वेश्यायाञ्च जटा० ।

**शालव** पु०शालः तच्चयोस इव वर्त्तते बहिर्गच्छति बल-ड। लोध्रे शब्दर० ।

**शालवेष्ट** पु० शालस्य वेष्ट इव । सर्जरसे (धुना) त्रिका० ।

**शालसार** पु० शालस्य सारः । १हिङ्गुनि शालेषु सारः । वृक्षश्रेष्ठे त्रिका० ।

**शाला** स्त्री शाल–अच्। १गृहे अमरः। टाप् च २स्कन्धशाखायाञ्च। ३गृहैकदेशे (चाल) मेदि०।

**शालाङ्क** पु० पाणिनौ मुनौ जटा०। [यवासे हेमच०।

**शालाजिर** पु० न० शालमजिरमिवाकारोऽस्यास्य अच्।

**शालाञ्चि** पु० शाल इवाञ्चति अन्च–इन्। शाकभेदे (शाञ्च) शब्दच०।

**शालातुरीय** पु० शालातुरे भवः। तद्ग्रामवासिनि पाणिनिमुनौ जटा० शालोत्तरीय इति पाठान्तरम्।

**शालानी** स्त्री शालमानयति आ+नी–ड गौरा० ङीष्। विदार्याम् शब्दच०। [स्त्रियां ङीष्।

**शालामृग** पुंस्त्री० शालायां वृक्षे मृग इव। शृगाले त्रिका०।

**शालावृक** पुंस्त्री० शालायां वृक्षे, शाखायां वा वृक इव वा। १कुक्कुरे २शृगाले अमरः। ३विडाले ४मृगे राजनि० ५वानरे च शब्दच०। सर्वत्र स्त्रियां ङीष्।

**शालि** पु० शल+इञ्। कलमादिधान्ये, २षष्टिकादिधान्ये, अमरः। ३गन्धमार्जारे च मेदि०। शालिभेदादिकं "कण्डनेन विना शुक्लाः हैमन्ताः शालयः स्मृताः" इत्यादि भावप्र० उक्तम्। धान्यशब्दे दृश्यम्।

**शालिका** स्त्री शालिरिव कायति कै–क। विदार्याम्।

**शालिञ्च** पु० शालिं चमति चम–ड पृषो०साधु। शाकभेदे शब्दर०

**शालिनीकरणम्** अशालीनः शालीनः लज्जितः क्रियतेऽनेन शालीन+च्वि–कृ–करणे ल्युट्। तिरस्कारे त्रिका०।

**शालिपर्णी** स्त्री शालेरिव पर्णान्यस्याः ङीष्। माषपर्ण्याम् राजनि०।

**शालिपिष्ट** न० शालेः पिष्टमिव शुभ्रत्वात्। स्फटिके त्रिका०

**शालिवाहन** पु० विक्रमादित्यं हत्वा शकाब्दप्रवर्त्तके नृपभेदे शककर्त्तृशब्दे दृश्यम्।

**शालिहोत्र** पुंस्त्री० शालयो हूयन्तेऽत्र हु–त्रन्। १घोटके त्रिका० स्त्रियां ङीष्। २अश्वशास्त्रप्रवर्त्तके नृपभेदे पु० राजनि०।

**शाली** स्त्री शाल–अच् गौरा० ङीष्। कृष्णजीरके राजनि०

**शालीन** त्रि० शालाप्रवेशमर्हति ख। १धृष्टे अलज्जे, अमरः। २मिश्रेयायां स्त्री राजनि०।

**शालु** न० शाल–उण्। १शालूके शब्दर०। २कषायद्रव्ये, ३चोरनामगन्धद्रव्ये च मेदि०। ४भेके पु० ५वृक्षे हेमच०। [तन्नार्थे अमरः। २जातीफले राजनि०।

**शालु(लू)क** न० शाल–ऊकञ्। कुमुदादिमूले शब्दर०। जकञ्।

**शालूर** पुंस्त्री शाल–ऊरच्। १भेके अमरः स्त्रियां ङीष्।

**शालेय** पु० शालायां भवः ढक्। १मधुरिकायाम् अमरः। २मिश्रेयायां स्त्री राजनि० टाप्।

**शालोत्तर** पु० ग्रामभेदे। [जटा०।

**शालोत्तरीय** पु० शालोत्तरे ग्रामे भवः छ। पाणिनिमुनौ

**शाल्मल** पु० शाल–मलच्। (शिमुल) १वृक्षे शब्दर० २तच्चिह्नितद्वीपभेदे च विष्णु पु०

"शाल्मलस्येश्वरो धीरो वपुष्मांस्तत्सुतान् शृणु। तेषान्तु नामसंज्ञानि सप्त वर्षाणि तानि वै। श्वेतोऽथ हरितश्चैव जीमूतो रोहितस्तथा। वैद्युतो मानसश्चैव सुप्रभश्च महामुने!। शाल्मलेन समुद्रोऽसौ द्वीपेनेक्षुरसोदकः। विस्तारो द्विगुणेनाथं सर्वतः संवृतः स्थितः। तत्रापि पर्वताः सप्त विज्ञेया रत्नयोनयः। वर्षाभिव्यञ्जकास्ते तु तथा सप्तैव निम्नगाः। कुमुदश्चोन्नतश्चैव तृतीयश्च बलाहकः। द्रोणो यत्र महौषध्यः स चतुर्थो महीधरः। कङ्कस्तु पञ्चमः षष्ठो महिषः सप्तमस्तथा। ककुद्मान् पर्वतवरः सरिन्नामानि मे शृणु। योनितोया वितृष्णा च चन्द्रा शुक्ला विमोचनी। निवृत्तिः सप्तमी तासां स्मृतास्ताः पापशान्तिदाः। श्वेतञ्च लोहितञ्चैव जीमूतं हरितं तथा। वैद्युतं मानसञ्चैव सुप्रभं नाम सप्तमम्। सप्तैतानि तु वर्षाणि चातुर्वर्ण्ययुतानि वै। शाल्मलेऽपि च ये वर्णा वसन्त्येते महामुने!। कपिलाश्चारुणाः पीताः कृष्णाश्चैव पृथक् पृथक्। ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव यजन्ति तम्। भगवन्तं समस्तस्य विष्णुमात्मानमव्ययम्। वायुभूतं मखश्रेष्ठैर्यज्विनो यज्ञसंस्थितम्। देवानामत्र सान्निध्यमतीव सुमनोरमे। शाल्मलिश्च महावृक्षो नाम निर्वृतिकारकः। एष द्वीपः समुद्रेण सुरोदेन समावृतः"।

**शाल्मलि(ली)** पुंस्त्री० शाल–मलिच् वा स्त्रीत्वे वा ङीष्। (शिमुल) १वृक्षे २गोत्रभेदे हेमच०।

शाल्मलिगुणादिकं भावप्र० उक्तं यथा

"शाल्मली शीतला स्वाद्वी रसे पाके रसायनी। श्लेष्मला स्निग्धबीजा च बृंहणी रक्तपित्तजित्। शाल्मलीपुष्पशाकन्तु घृतसैन्धवसाधितम्। प्रदरं नाशयत्येव दुःसाध्यञ्च न संशयः। रसे पाके च मधुरं कषायं शीतलं गुरु। कफपित्तास्रजित् ग्राहि वातलं च प्रकीर्त्तितम्। ३नरकभेदे यत्र शाल्मलीकण्टकैर्नारकिणः पीड्यन्ते नरकशब्दे दृश्यम्। [राजनि०।

**शाल्मलिक** पु० शाल्मलिरिव कायति कै–क। रोहितवृक्षे

**शाल्मलीकन्द** पु॰ ६त॰। तद्वृक्षमूले राजनि॰। [राजनि॰।

**शाल्मलीफल** पु॰ शाल्मल्या इव फलमस्य। तेजःफलवृक्षे

**शाल्मलीवेष्ट** पु॰शाल्मलीं वेष्टयति वेष्ट–अण्। शाल्मली-निर्यासे मोचरसे रत्नमा॰। ण्वुल्। तत्रैव। [इत्यन्ये।

**शाल्व** पु॰शाल–व। १देशभेदे हेमच॰ तस्य २नृपे च भारते

**शाल्वण** पु॰ "काकोल्यादिः स वातघ्नः सर्वाम्लद्रव्यसंयुतः। सानूपौदकमांसस्तु सर्वस्नेहैः समन्वितः। स चोष्णः स्यात् लवणः शाल्वणः परिकीर्त्तितः" सुश्रुतोक्ते औषधभेदे।

**शाव** पु॰ शव–घञ्। १शिशौ शब्दर॰। स्वार्थे क। तत्रैव शवस्येदम् अण्। २शवसम्बन्धे त्रि॰ "त्रिरात्रं शावमा-शौचम्" इति स्मृतिः।

**शावर** पु॰ शावयति विकारयति शव–णिच् अरन्। १पापे २अपराधे ३लोध्रद्रुमे च मेदि॰। शबरेण प्रोक्तमण्। ४शबरस्वामिकृते मीमांसाभाष्ये। शबरस्येदम् अण्। ५शबरसम्बन्धिनि त्रि॰।

**शावरभेदाख्य** न॰शावरभेदस्याख्येव अख्या यस्य। स्वार्थे अण्। ताम्रे हेमच॰ तस्य तत्त्वरत्नवर्णत्वात्तथात्वम्।

**शावरी** स्त्री शबरस्य प्रिया अण् ङीप्। १शूकशिम्ब्यां मेदि॰। २विद्याभेदे तन्त्रसा॰। [ङीप्।

**शाश्वत** त्रि॰ शश्वद् भवः अण्। सतते नित्ये अमरः स्त्रियां

**शाष्कुल** त्रि॰ शष्कुलमिव मांसं भक्ष्यमस्य अण्। मांसा-शिनि हेमच॰। [अमरः।

**शाष्कुलिक** न॰ शष्कुलीनां समूहः ठञ्। शष्कुलीसमूहे

**शास** आशीर्वादे अदा॰ आत्म॰ सक॰ सेट् क्त्वा वेट्। प्रायेण आङ् पूर्वः। आशास्ते आशासिष्ट "इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे" उत्तरचरितोक्तेरन्यपूर्वोऽपि।

**शास** शासने अदा॰पर॰द्विक॰सेट् क्त्वा वेट्। शास्ति अशासत्

**शासन** न॰ शास–ल्युट्। निकृष्टस्य हितसाधनादौ १प्रवर्त्तने २राजदत्तभूमौ ३राजलेख्यभेदे ४शास्त्रे च मेदि॰।

**शासनहर** पु॰शासनं हरति हृ–अच्। आज्ञाकारके दूते।

**शासित** त्रि॰ शास–तृच् इट्। शासनकर्त्तरि।

**शास्तृ** त्रि॰ शास–तृच् इडभावः। १शासनकर्त्तरि त्रिका॰। २बुद्धे अमरः ३उपाध्याये ४नृपे ५पितरि शब्दरत्ना॰।

**शास्त्र** न॰ शिष्यतेऽनेन शास–ष्ट्रन्। १हितानुशासने ग्रन्थे शास्त्रं च वेदमूलकं सद्भिरादरणीयं नान्यत् यथोक्तं "अतो वेदविरुद्धार्थशास्त्रोक्तं कर्म संत्यजेत्। स्वबुद्धिरचितैः शास्त्रैः प्रतार्य्येह च बालिशा- [illegible]

यतो मार्गं लोकनाशाय केवलम्। निन्दन्ति देवता वेदांश्चापो निन्दन्ति सद्द्विजान्। तेन ते निरयं यान्ति ह्यसच्छास्त्रनिषेवणात्। श्रुतिस्मृतिसदाचारविहितं कर्म शाश्वतम्। स्वं स्वं धर्मं प्रयत्नेन श्रेयोऽर्थीह समाचरेत्। स्वबुद्धिरचितैः शास्त्रैर्मोहयित्वा जनं नराः। तेन ते निरयं यान्ति कुमार्गं सम्प्रदर्शितम्" पद्मपु॰ १७ अ॰। "पुराणं भारतं वेदधर्मशास्त्राणि यानि च। आयुषः क्षपणायैव धर्मतत्त्वेन चाचरेत्। पुत्रदारादिसंसारः पुंसां संमूढचेतसाम्। विदुषां शास्त्रसम्भारः सद्योगाभ्यासविघ्नकृत्। इदं ज्ञेयमिदं ज्ञेयं यः सर्वं ज्ञातुमिच्छति। अपि वर्षशतेनापि शास्त्रान्तं नाधिगच्छति। विज्ञायाक्षरतन्मात्रं जीवितञ्चापि चञ्चलम्। विहाय शास्त्रजालानि पारलौकिकमाचरेत्। पण्डितोऽपि हि मूर्खोऽसौ शक्तियुक्तोऽप्यशक्तिकः। यः संसाराच्च आत्मानं समुत्तारयितुं क्षमः" वह्निपु॰। नामशब्दे २२७१ पृ॰ दृश्यम्।

"बहुशास्त्रालोकनेऽपि सारादानं षट्पदवत्" सांख्यप्र॰सू॰

**शास्त्रकृत्** पु॰ शास्त्रं करोति कृ–क्विप्। मन्वादिषु ऋषिषु त्रिका॰।

**शास्त्रगत** पु॰ शास्त्रे गत इव। प्रघटाविदि त्रि॰।

**शास्त्रचारण** पु॰ शास्त्रं चारयति प्रचारयति चर–णिच्–ल्यु। शास्त्रोक्ताचरणप्रचारकर्त्तरि शब्दर॰।

**शास्त्रतत्त्वज्ञ** त्रि॰ शास्त्रतत्त्वं जानाति ज्ञा–क। १शास्त्रतात्पर्य्यवेत्तरि २ज्योतिषज्ञे शब्दर॰।

**शास्त्रदर्शिन्** त्रि॰ दृश–णिनि ६त॰। शास्त्रज्ञे शब्दर॰। शास्त्रविदादयोऽप्यत्र।

**शास्त्रशिल्पिन्** त्रि॰ शास्त्रं तज्ज्ञानं शिल्पमिवाऽस्त्यस्य इनि। १शास्त्रज्ञानोपजीविनि २काश्मीरदेशे पु॰ त्रिका॰।

**शास्त्रिन्** त्रि॰ शास्त्रं वेत्त्यधीते वा इनि। शास्त्रज्ञे।

**शास्त्रीय** त्रि॰ शास्त्रेण विहितः छ। शास्त्रोक्ते धर्मादौ।

**शास्य** त्रि॰ शास–ण्यत्। अनुशासनीये शिष्यादौ।

**शि** तेजने स्वा॰ उभ॰ सक॰ अनिट्। शिनोति शिनुते अशैषीत् अशेष्ट।

**शिंशपा** स्त्री शिंशं पाति पा–क पृषो॰। (शिशु) वृक्षे अमरः "शिंशपा कटुका तिक्ता कषाया शोषकारिणी। उष्णवीर्या हरेन्मेदःकुष्ठश्वित्रवमिकृमीन्। वस्तिव्रणविदाहास्रबलासमर्मपातिनी" भावप्र॰।

**शिक्** त्रि॰ शिच्–कु कस्य नेत्त्वम्। अध्यवसायिनि त्रिका॰।

**शि(सि)क्थ** न॰ शिच-थक् कुक् च पृषो॰ सस्य शो वा। (मोम) मधूच्छिष्टे अमरः। स्वार्थे क। तत्रैव।

**शिक्य** न॰ शि-यत् कुक् च। (शिका) रज्जुकृते पदार्थे शब्दर॰

**शिक्यित** त्रि॰ शिक्यं शिक्यस्थं करोति शिक्य+णिच्-कर्मणि क्त। शिक्याधारे स्थापिते पदार्थे।

**शिक्ष** अभ्यासे भ्वा॰ आ॰ सक॰ सेट्। शिक्षते अशिक्षिष्ट।

**शिक्षा** स्त्री शिक्ष-भावे अ। १अभ्यासे २वर्णानामुच्चारणप्रदर्शके वेदाङ्गे ३ग्रन्थभेदे अमरः। ४श्योनाकवृक्षे शब्दच॰। "वर्णस्वराद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षा तथा च तैत्तिरीया उपनिषदारम्भे समामनन्ति। शिक्षां व्याख्यास्यामः। वर्णः स्वरः मात्रा बलं साम सन्तान इत्युक्तः शिक्षाध्याय इति" ऋ॰भा॰। "अथ शिक्षां प्रवक्ष्यामि पाणिनीयमतं यथा। शास्त्रानुपूर्वं तद्विद्याद् यथोक्तं लोकवेदयोः। प्रसिद्धमपि शब्दार्थमविज्ञातमबुद्धिभिः। पुनर्व्यक्तीकरिष्यामि वाच उच्चारणे विधिम्। त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः। प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा। स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः। यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः। अनुस्वारो विसर्गश्च+क+पौ चापि पराश्रितौ। दुःस्पृष्टश्चेति विज्ञेय लृकारः प्लुत एव च। आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्। मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्। प्रातःसवनयोगन्तं छन्दोगायत्रमाश्रितम्। कण्ठे माध्यन्दिनयुतं मध्यमं त्रैष्टुभानुगम्। तारं तार्तीयसवनं शीर्षण्यं जागतानुगम्। सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः। स्वरतः कालतः स्थानात् प्रयत्नानुप्रदानतः। इति वर्णविदः प्राहुर्निपुणास्तं निबोधत। उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः। ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि। उदात्ते निषादगान्धारावनुदात्ते ऋषभधैवतौ। स्वरितप्रभवा ह्येते षड्जमध्यमपञ्चमाः। अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलञ्च दन्ताश्च नासिकौष्ठौ च तालु च। ओभावश्च विवृत्तिश्च श-ष-स-रेफ एव च। जिह्वामूलमुपाध्मानं गतिरष्टविधोष्मणः। यद्योभावप्रसन्धानमुकारादि परं पदम्। स्वरान्तं तादृशं विद्याद् यदन्यद्व्यक्तमूष्मणः। हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम्। औरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम्। कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू। स्युर्मूर्धन्या ऋटुरषा दन्त्या ऌतुलसाः स्मृताः। जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः। एऐ तु कण्ठतालव्यावोऔ कण्ठोष्ठजौ स्मृतौ। अर्द्धमात्रा तु कण्ठ्या स्यादेकारैकारयोर्भवेत्। ओकारौकारयोर्मात्रा तयोर्विवृतसंवृतम्। संवृतं मात्रकं ज्ञेयं विवृतन्तु द्विमात्रकम्। घोषा वा संवृताः सर्वे अघोषा विवृताः स्मृताः। स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्। तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च। अनुस्वारयमानाञ्च नासिका स्थानमुच्यते। अयोगवाहा विज्ञेया आश्रयस्थानभागिनः। अलाबुवीणानिर्घोषो दन्त्यमूलस्वरानुगः। अनुस्वारस्तु कर्त्तव्यो नित्यं ह्रोः शषसेषु च। अनुस्वारो विवृत्यस्तु विरामे चाक्षरद्वये। द्विरोष्ठ्यौ तु विगृह्णीयाद् यत्रौकारवकारयोः। व्याघ्री यथा हरेत् पुत्रान् दंष्ट्राभ्यां न च पीडयेत्। भीतापतनभेदाभ्यां तद्वत् वर्णान् प्रयोजयेत्"। "अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलस्तथा। शेषाः स्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतः। यमोऽनुनासिका न ह्रौ नादिनो हझषः स्मृताः"।

"ईषन्नादा यणो जश्च श्वासिनश्च खफादयः। ईषच्छ्वासांश्चरो विद्याद् गोर्धामैतत् प्रचक्षते। दाक्षीपुत्रपाणिनिना येनेदं व्यापितं भुवि। छन्दःपादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते। ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते। शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम्। तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते"। "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रं यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्। "अनक्षरं हतायुष्यं विस्वरं व्याधिपीडितम्। अक्षता शस्त्ररूपेण वज्रं पतति मस्तके। हस्तहीनन्तु योऽधीते स्वरवर्णविवर्जितम्। ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति" पाणिनिशिक्षा। नारदशिक्षा व्यासशिक्षादयो ग्रन्थाः सन्ति विस्तरभयान्नोक्ताः।

**शिक्षाकर** पु॰ शिक्षां करोति कृ-अच्। १व्यासे शब्दमा॰ २शिष्यशिक्षाकर्त्तरि।

**शिक्षागुरु** पु॰ विद्यादातरि।

**शिक्षित** त्रि॰ शिक्षा जाताऽस्य तार॰ इतच् शिक्ष-क्त वा। १कृताभ्यासे २निपुणे ३विज्ञे च अमरः।

**शिक्षिताक्षर** पु० शिक्षितान्यक्षराणि येन। १छात्रे २शिक्षादातरि गुरौ च त्रिका०।

**शिख** गतौ भ्वा०पर०सक०सेट् इदित्। शिङ्खति अशिङ्खीत्।

**शिखण्ड** पु० शिखामणति अण–ड तस्य नेत्त्वम्, ६त०। शक० वा। १मयूरपिच्छे अमरः। २चूडायाञ्च मेदि०।

**शिखण्डक** पु० शिखण्ड इव कन्। १काकपक्षे अमरः। (काकजुल्फी) स्त्रीत्वमपि तत्र। सा च २चूडायाञ्च हेमच०। [स्त्रियां ङीप्।

**शिखण्डिक** पुंस्त्री० शिखण्डोऽस्त्यस्य ठन्। कुक्कुटे हेमच०।

**शिखण्डिन्** पु० शिखण्डोऽस्त्यस्य इनि। १मयूरे २द्रुपदराजस्य पुत्रभेदे मेदि०। ३मयूरपुच्छे ४कुक्कुटे ५बाणे च हेमच०। ६गुञ्जायां ७स्वर्णयूथिकायां राजनि०। ८विष्णौ विष्णु स० ९यूथिकायां स्त्री ङीप् मेदि०।

**शिखर** न० शिखा अस्त्यस्य अरच् आलोपः। १पर्वताग्रे २वृक्षाग्रे च। ३कक्षाधे पु०न० अमरः। ४पुलके ५मुक्तादौ पक्वदाडिमबीजाभे ६रत्नभेदे ७अग्रभागे मेदि०। ८कोटरे त्रिका०। ९मूर्वायां स्त्री शब्दच०।

**शिखरवासिन्** त्रि०शिखरे वसति वस–णिनि ७त०। पर्वताग्रवासिनि स्त्रियां ङीप्। "देवी शिखरवासिनी" उद्भटः सा च हिमाचलवासिन्यां २दुर्गायां त्रिका०।

**शिखरिन्** पु० शिखरोऽस्त्यस्य इनि। १पर्वते २वृक्षे ३अपामार्गे मेदि०। ४दुर्गे ५कोयष्टौ हेमच०। ६वन्दाके ७कुन्दुरुके दशावनाके ८पर्वटपुष्प्यां राजनि०। १०रसालायां नार्यभेदे स्त्री। ११सप्तदशाक्षरपादके छन्दोभेदे स्त्री "रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी" वृ०र०। १२वल्लिकायां १३रोमावल्यां १४नारीरत्ने च स्त्री मेदि० सर्वत्र ङीप्। [(कुकुरमुता) क्षुपभेदे रत्नमा०।

**शिखलोहित** पु०शिखायामस्य अच् तथाभूतः सन् लोहितः।

**शिखा** स्त्री शी–खक् तस्य नेत्त्वम् पृषो०। १अग्निज्वालायां २मस्तकमध्यकेशगुच्छे च अमरः। "बध्नीयात् सर्वमात्रापि कृतोपलक्षितां बहिः" प्रा०त०। ३शाखायां ४बर्हिचूडायां ५लाङ्गलिक्याम् ६अग्रमात्रे ७चूडामात्रे ८प्रपदे च मेदि०। ९प्रधाने शिफायां १०ज्योतौ हेमच०। ११कामज्वरे शब्दच०।

"शिखी शिखी कर्म कुर्य्यात्" इत्युक्ता शिखावत एव कर्म्मस्वधिकारः तथापि बद्धशिखस्य कर्म्मस्वधिकारः न तच्छिखस्य यथोक्तं "गायत्र्या तु शिखां बद्धा नैरृत्यां ब्रह्मरन्ध्रतः। जूटिकाञ्च ततो बद्धा ततः कर्म समारभेत्"। "नित्यबद्धशिख आसीनो द्विज आचमनं चरेत्। कृतोपवीतं सव्येऽंसे वाङ्मनःकायसंयतः"। मुक्तशिखस्याचमने दोषो यथा "शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा। अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्" आ०त०।

**शिखाकन्द** न० शिखेव कन्दोऽस्य। गृञ्जने राजनि०।

**शिखातरु** पु० शिखाया दीपशिखायास्तरुरिव। दीपवृक्षे (देलको) त्रिका०।

**शिखाधर** पुंस्त्री० शिखां चूडां धरति धृ–अच्। १मयूरे रत्नमा० स्त्रियां ङीष्। २शिखाधारके त्रि० स्त्रियां टाप्। ३मञ्जुघोषे पु० त्रिका०।

**शिखामूल** न०शिखेव मूलमस्य। गृञ्जने (गाँजर) राजनि०

**शिखालु** पु०शिखाऽस्त्यस्य आलुच्। मयूरशिखावृक्षे राजनि०

**शिखावत्** पु० शिखा ज्वालाऽस्त्यस्य मतुप् मस्य वः। १वह्नौ २चित्रकवृक्षे च अमरः। ३केतुग्रहे शब्दच०। ४शिखायुते त्रि०स्त्रियां ङीप्। सा च ५मूर्वायां शब्दच०

**शिखावर** पु० शिखां वृणोति वृ–अच्। पनसवृक्षे शब्दच०

**शिखावल** पुंस्त्री० शिखाऽस्त्यस्य वलच्। १मयूरे अमरः। स्त्रियां ङीष्। २मयूरशिखाख्ये स्त्री राजनि० टाप्।

**शिखावृत्ति** स्त्री प्रतिदिनकालवृद्धौ वृद्धिभेदे उक्तम्।

**शिखिकण्ठ** न० शिखिनो मयूरस्य कण्ठस्य वर्णोऽस्त्यस्य अर्श आद्यच्। तुत्थे (तुँते) रत्नमा०।

**शिखिग्रीव** पु० शिखिनो मयूरस्य ग्रीवा तद्वर्णोऽस्त्यस्य अच्। तुत्थे (तुँते) अमरः।

**शिखिध्वज** शिखिनो वह्नेर्ध्वज इव। १धूमे त्रिका०। शिखी मयूरो ध्वजो यस्य। २कार्त्तिकेये शब्दच०।

**शिखिन्** पु०शिखा अस्त्यस्य इनि। १मयूरे २वह्नौ ३चित्रकवृक्षे अमरः। ४केतुग्रहे ५कुक्कुटे ६वृक्षे ७वृषे ८शरे च मेदि०। ९अश्वे हेमच० १०अजलोमनि रत्नमा० ११पर्वते १२ब्राह्मणे १३सितावरे १४मेथिकायां राजनि० १५शिखायुक्ते त्रि० १६मयूरशिखावृक्षे राजनि०स्त्री ङीप्।

**शिखिप्रिय** पु०शिखिनं प्रीणयति प्री–क। लघुबदरे राजनि०।

**शिखिमण्डल** पु० शिखिनां मण्डलमिव यत्र। वरणवृक्षे शब्दर०। [अजमोदायां राजनि०।

**शिखिमोदा** स्त्री शिखिनः अजलोम्न इव मोदो यस्याः।

**शिखियूप** पु०शिखी शिखावान् यूप इव। श्रीकारिणि मृगे राजनि०। [कुष्माण्डे शब्दर०

**शिखिवर्द्धक** पु० शिखिनं वर्द्धयति वृध–णिच्–ण्वुल्।

**शिखिवाहन** पु० शिखी मयूरो वाहनं यस्य । कार्त्तिकेये अमरः ।

**शिखिव्रत** न० "प्रतिपद्येकभक्ताशी समान्ते कपिलाप्रदः । वैश्वानरपदं याति शिखिव्रतमिदं स्मृतम्" मत्स्यपु० १२८ अ० उक्ते वह्निपददायके व्रतभेदे ।

**शिग्रु** पु० शि–रक् गुक् च । (सजिना) १वृक्षे २शाकमात्रे च अमरः । "शोभाञ्जनो तीक्ष्णगन्धस्तीक्ष्णमक्षो जनप्रियः । मुखमोटः कृष्णशिग्रुश्चक्षुष्यो रुचिराञ्जनः । शोभाञ्जनस्तीक्ष्णकटुः स्वादूष्णः पिच्छिलस्तथा । जन्तुवातार्त्तिशूलघ्नः चक्षुष्यो रोचनः परः । श्वेतशिग्रुः सुतीक्ष्णः स्यात् मधुभङ्गः सिताह्वयः । बहुलः श्वेतमरिचो रोचनो मधुशिग्रुकः । श्वेतशिग्रुः कटुस्तीक्ष्णः शोफानिलविकारनुत् । अङ्गव्यथाहरो रुच्यो दीपनो मुखजाड्यनुत् । रक्तको रक्तशिग्रुः स्यान्मधुरो मधुपत्रकः । दुर्गन्धः केसरी सिंहो वनमारिच प्रकीर्त्तितः । रक्तशिग्रुर्महावीर्यो मधुरश्च रसायनः । शोफाध्मानसमीरार्त्तिपित्तवैषम्यकारकः" राजनि० ।

**शिग्रुज** न० शिग्रुतो जायते जन ड । श्वेतमरिचे शो० भाञ्जनबीजे अमरः इत० । शिग्रुबीजमप्यत्र भरत्ः० ।

**शिघ** आघ्राणे भ्वा० पर० सक० सेट् इदित् । शिङ्घति अशिङ्घीत् ।

**शिङ्घाण** न० शिघि–आनच् पृषो० णत्वम् । १काचपात्रे २लाङ्गले ३नासिकामले स्त्रियां च मेदि० । स्वार्थे क । नासिकामले न० ।

**शिज** अव्यक्तध्वनौ इदित् वा चु० उभ० पक्षे अदा० आत्म० अक०सेट् । शिञ्जयति ते शिङ्क्ते अशिशिञ्जत् त अशिञ्जिष्ट । भ्वादिरप्ययं पर० इत्येके तेन शिञ्जति अशिञ्जीत्

**शिञ्जा** स्त्री शिजि–भावे अ । १भूषणशब्दे शब्दर० । शिजिञ्जा च । २धनुर्गुणे हेमच० ।

**शिञ्जित** न० शिजि–भावे क्त । भूषणध्वनौ अमरः ।

**शिञ्जिनी** स्त्री शिञ्जति शिजि–णिनि । धनुर्गुणे अमरः । २नूपुरे हेमच० ।

**शिट** अनादरे भ्वा०पर०सक० सेट् । शेटति अशेटीत् ।

**शिण्डाकी** स्त्री खाद्यद्रव्यभेदे यथा "शिण्डाकी राजिकायुक्तैः स्यान्मूलकदलद्रवैः । सर्षपस्वरसैर्वापि शालिपिष्टकसंयुतैः । शिण्डाकी रोचनी गुर्वी पित्तश्लेष्मकरी स्मृता" राजनि० ।

**शित** त्रि० शो–क्त । १दुर्बले २शाणिते च मेदि० ३कृशे त्रिकः

**शितद्रु** पु० शतं द्रवति द्रु–कु–नि० । (शतद्रु) नदीभेदे अमर० । [२शोधूमे त्रिका० ।

**शितशूक** पु० शितस्तीक्ष्णः शूकोऽस्य यस्य । १यवे अमरः ।

**शिति** पु० शि–क्तिच् । १भूर्जपत्रवृक्षे २शुक्लवर्णे ३कृष्णवर्णे च मेदि० ४तद्वर्णवति त्रि० । ५सारे पु स्त्री० शब्दर० ।

**शितिकण्ठ** पु० शितिः नीलः कण्ठो यस्य । १शिवे अमरः । २दात्यूहविहगे पु स्त्री० त्रिका० स्त्रियां ङीष् ।

**शितिचार** पु० शितिः सन् चरति चर–ण्वाणां वर्त्तिरस्य । (सुषनि) शाकभेदे जटा० ।

**शितिच्छद** पु० शितिः शुभ्रः छदो यस्य । हंसे शब्दर० ।

**शितिसारक** पु० शितिः शुभ्रः सारो यस्य कप् । तिन्दुकवृक्षे राजनि० ।

**शिथिल** त्रि० श्लथ–किलच् पृषो० । १श्लथे २अदृढे संयोगभेदे ३मन्दे च "शिथिलसंयोगश्च प्रचयः । "प्रचयश्च शिथिलाख्यो यः संयोगस्तेन जन्यते" भाषा० "भूयोऽवयवावच्छेदेनावयवान्तरसंयोगिन्यवयवे वर्त्तमानः संयोगः प्रचयः" इति दीनकरी यथा तूलकादौ ।

**शिनि** पु० शि–निक् । यदुवंश्ये क्षत्रियभेदे यस्य सात्यकिर्नप्ता

**शिपि** पु० शो–क्विप् तां पाति पा–कि पृषो०ह्रस्वः । १रश्मौ २जले न० "शैत्यात् पवनयोगाच्च शिपि वारि प्रचक्षते । तत् पानाद्रश्मयश्चैव शिपयो रश्मयो मताः । तेषु प्रवेशाद्विश्वेशः शिपिविष्ट इहोच्यते" व्यासः ।

**शिपिविष्ट** पु० ७त० । १खलतौ २दुश्चर्मणि च ३महेश्वरे अमरः । ४विष्णौ शिपिशब्दे दृश्यम् । "नैकशृङ्गो वृषाकपिः शिपिविष्ट प्रजापतिः" विष्णुस० । पृषो० शिविविष्ट तत्रार्थे रमानाथः ।

**शिप्र** पु० शि–रक् पुक् च । १सरोवरभेदे २नदीभेदे स्त्री । "एवं विवाह्य विधिवत् सौवर्णे मानसाचले । अरुन्धतीं वशिष्ठस्तु मोदमाप तथा सह । तत्र यत् पतितं तोयं मानसाचलकन्दरे । विवाहावस्नातार्थाय शान्त्यर्थं वसुधातले । ब्रह्मविष्णुमहादेवपाणिभिः समुदीरितम् । तत्तोयं सहसा भूत्वा पतितं मानसाचलात् । हिमाद्रेः कन्दरे सानौ सरश्चाप पृथक् पृथक् । तत्तोयं पतितं शिप्रे देवभव्ये सरोवरे । तेन शिप्रा नदी जाता विष्णुना प्रेरिता क्षितिम्" कालिका० २२अ० ।
"ततो हिमवतः प्रस्थे प्रतीच्यां तत्पुरस्य च । शिप्रं नाम सरः पुण्यं दृष्टाद्रिहिमाद्रयः । तद्दृष्टः स्नानमात्राद्य ब्रह्मशक्रादयः सुराः । उपविष्टा युधान्यायुं

पुरस्कृत्य महेश्वरम्। तं शिप्रसंज्ञकाकारं मनोज्ञं सर्व-
देहिनाम्। शीतामलजलं सर्वैर्गुणैर्मानसमन्वितम्।
दृष्ट्वा च्यवं करस्तस्मिन् शीतळताऽमृतवेधवे। शिप्रां
नाम नदीं तस्माद्विःसृतां दक्षिणोदधिम्। मत्स्यलीयु
ददर्शासौ पावयन्तीं समज्जनात्। तत्रैव १६ अ०।

**शिफा** स्त्री शि-फक्। इत्याथां १जटाकारे मूले। (शिकड़)
अमरः। २नद्यां ३मांसिकायां ४मातरि मेदि०। ५शत-
पुष्पायां ६हरिद्रायां राजनि०। ७पद्मकन्दे मुकुटः।
जटाकारे मूले पु० विद्याविनोदः।

**शिफाक** पु० शिफेव इवार्थे कन्। पद्ममूले शब्दच०।

**शिफाकन्द** पु० शिफेव कन्दः। पद्ममूले अमरः।

**शिफाधर** पु० शिफा अधरा यस्मात्। शाखायां शब्दच०।

**शिफारुह** पु० शिफायां रोहति रुह-क। वटवृक्षे राजनि०

**शिमुड़ी** स्त्री (चङ्गोनि) ख्याते क्षुपभेदे राजनि०।

**शि(सि)म्बा** स्त्री शाम्यति शमति वा शम-षम-वा बा०
डम्बच् पृषो०। (शिमी) ख्याते १पदार्थे शब्दच०। २चक्र-
मर्द पु० शब्दच०।

**शि(म्बि)म्बी** स्त्री शम-बि नि० वा ङीप्। १शिम्बायां
(शिम्) लतायां हेमच० "महापापकरी शिम्बी" ति०त०
२परकायाञ्च भावप्र०। स्वार्थे क। तत्रैव।

**शिम्बीधान्य** न० शिम्बीजातं धान्यं शा०त०। मुद्गादौ
धान्यभेदे भावप्र०। [शब्दर० कप् तत्रैव।

**शिम्बीपर्णी** स्त्री शिम्बीव पर्णमस्याः ङीप्। मुद्गपर्ण्यां

**शिर** न० शॄ-क। १मस्तके जटा० "पिण्डं दद्यात् गयाशिरे"
वायुपु०। २पिप्पलीमूले मेदि०। ३शय्यायाम् ४अजगरे च
संक्षिप्तसा०।

**शिरःफल** पु० शिर इव फलमस्य। नारिकेले त्रिका०। [गारुडे

**शिरःशूल** न० शिरसः शूलमिव तापकत्वात्। शूलरोगभेदे

**शिरज** पु० शिरे जायते जन-ड। केशे शब्दच०।

**शिरस्** न० शॄ-असुन् नि०। १मस्तके २शिखरे अमरः।
३प्रधाने ४सेनाग्रे मेदि०।

**शिरसिज** पु० शिरसि जायते जन ड वा अलुक् समासः।
केशे जटाध० लुकि शिरोजोऽप्यत्र। [केशे शब्दच०।

**शिरसिरुह** पु० शिरसि रोहति रुह-क वा अलुक् समा०।

**शिरस्क** न० शिरसि कायति प्रकाशते कै-क। शिरस्त्राणे हेमच०।

**शिरस्त्र** न० शिरस्त्रायते त्रै-क। शिरोरक्षके उष्णीषे अमरः

**शिरस्त्राण** न० शिरस्त्रायते [illegible] त्रै-करणे ल्युट्। शिरो-
रक्षणे उष्णीषे हेमच०।

**शिरस्य** पु० शिरसि भवः यत्। १निर्मलकेशे अमरः २शिरो-
भवमात्रे त्रि०। [अत्र दन्त्यादित्वमपीत्यन्ये।

**शिरा** स्त्री शॄ-क। नाड्यां (शिर) मेदि०। शॄ-किरच् स्मिच्।

**शिरापत्र** पु० शिरेव पत्रं यस्य। हिन्तालवृक्षे राजनि०।

**शिराल** न० शिरोऽस्त्यस्य लच्। १कर्मरङ्गे शब्दच०। तत्
फलस्य शिरायुक्तत्वात्तथात्वम्। २शिरायुक्ते त्रि०।

**शिरालक** पु० शिरामलति पर्याप्नोति अल-ण्वुल्।
(फाकुचोड़ा) वृक्षभेदे शब्दच०।

**शिरावृत्त** न० शिरेव वर्त्तते वृत-क्त। सीसके राजनि०।

**शिरि** पु० शॄ-क्रि। १खड्गे २शरे ३हिंस्रे त्रि० उणादि०।
४शलभे सि०कौ०।

**शिरीष** पु० शॄ-ईषन् किच्च। स्वनामख्याते वृक्षे अमरः।
"शिरीषो मधुरोऽनुष्णस्तिक्तश्च तुवरो लघुः। दोषशोथ-
विसर्पघ्नः कासव्रणविषापहः." भावप्र०।

**शिरीषपत्रिका** स्त्री शिरीषस्येव पत्रमस्या कप् कापि अत
इत्वम्। श्वेतकिणीवृक्षे राजनि०।

**शिरोगृह** न० शिरःस्थपरिसरं गृहम्। (चिलेघर) चन्द्र-
शालायां हेमच०।

**शिरोग्रह** पु० "रक्तमाश्रित्य पवनः कुर्यात् स्कन्धराः शिराः।
रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्याच्छिरोग्रहः"
भावप्र० उक्ते वातरोगभेदे "स्कन्धरा ग्रीवागताः स
पवनः शिरोग्रहः स्यादित्यन्वयः" भावप्र०। [हेमच०।

**शिरोधरा** स्त्री शिरोमस्तकं धरति धृ-अच्। ग्रीवायां

**शिरोधि** स्त्री शिरो धीयतेऽत्र धा-कि। ग्रीवायाम् अमरः

**शिरोमणि** पुंस्त्री० शिरसि धार्य्यो मणिः शा०त०। शिरोधार्य्य-
रत्ने चूडामणौ शब्दच०। स्त्रीपक्षे वा ङीप्। शिरो-
रत्नादयोऽप्यत्र न०।

**शिरोमर्म्मन्** पु० शिरसि मर्म्म यस्य। शूकरे हेमच०।

**शिरोरुजा** स्त्री शिरो रुजति व्यथयति रुज-क। १शम-
स्थवृक्षे त्रिका०। ६त०। २मस्तकरोगे च।

**शिरोरुह** पु० शिरसि रोहति रुह-क। केशे अमरः।

**शिरोरोग** पु० ६त० सुश्रुतोक्ते मस्तकरोगभेदे तल्लक्षणं यथा
"अथातः शिरोरोगविज्ञानीयमध्यायं व्याख्यास्यामः।
शिरो रुजति मर्त्यानां वातपित्तकफैस्त्रिभिः३। सन्निपा-
तेन४ रक्तेन५ क्षयेण६ क्रिमिभि७स्तथा। सूर्य्यावर्त्ताद्
नन्तवाता८दर्धावभेदकात्० शङ्खकै ११। एकादशप्रकारस्य लक्षणं
संप्रवक्ष्यते। यस्यानिमित्तं शिरसो रुजश्च भवन्ति तीव्रा
निशि चातिमात्रम्। बन्धोपतापैश्च भवेद्विशेषः शिरो-

ऋषिलिङ्गमुदीरितम्"। लिङ्गं च द्विविधमकृत्रिमं कृत्रिमञ्च अकृत्रिमं स्वयम्भूवाणलिङ्गादि स्वयम्भूतम्। कृत्रिमं धातुलिङ्गादिनिर्मितम्। सिद्धान्तशेखरे "तल्लिङ्गं द्विविधं ज्ञेयमचलञ्च चलं तथा। प्रत्येकं त्रिविधं ज्ञेय लिङ्गं तदुभयात्मकम्। प्रासादे स्थापितं लिङ्गमचलं तच्छिलादिजम्। स्थापितमचलं गेहे स्थिरं लिङ्गमयोजिते। पञ्चधा तत्र स्थितं लिङ्गं स्वयम्भु देवपालितम्। आर्षञ्च मानसं लिङ्गं तेषां लक्षणमुच्यते। नानाच्छिद्रसमायुक्तं नानावर्णसमन्वितम्। अदृष्टमूलं यल्लिङ्गं कर्कशं भुवि दृश्यते। तल्लिङ्गन्तु स्वयम्भूतमपरं लक्षणच्युतम्। स्वयम्भुलिङ्गमित्युक्तं तच्च नानाविधं मतम्। शङ्खाममस्तकं लिङ्गं वैष्णवं तदुदाहृतम्। पद्माभमस्तकं ब्राह्मं छत्राभं शाक्रमुच्यते। शिरोयुक्तं तथाग्नेयं त्रिपदं याम्यमीरितम्। खड्गाभं नैर्ऋतं लिङ्गं वारुणं कलशाकृति। वायव्यं ध्वजवल्लिङ्गं कौबेरन्तु गदान्वितम्। ईशानञ्च त्रिशूलाभं बो-कपालादि निःसृतम्। स्वयम्भुलिङ्गमाख्यातं सर्वशास्त्रविशारदैः"। मत्स्यसूक्ते "इदा लिङ्गं महेशस्य स्वयम्भूतस्य पार्वति!। सर्वपापविनिर्मुक्तः परे ब्रह्मणि लीयते"। एतेषां पूजाफलन्तु तत्रैव "विशेषाच्छैलजं सत्यं भुक्तये चानुषङ्गतः। पार्थिवं मुक्तये सत्यं मुक्तये चानुषङ्गतः। एवं वै दारुजं ज्ञेयं धातुलिङ्गं तथा पुनः। स्थिरलक्ष्मीप्रदं ज्ञेयं हैमं राज्यप्रदञ्च तत्। पुत्रवृद्धिकरं ताम्रं राङ्गमायुःप्रवर्द्धनम्" पद्मपु० "पारदञ्च महाभूत्यै सौभाग्याय च मौक्तिकम्। चान्द्रकान्तं मृत्युजित् स्याद्धाटकं सर्वकामदम्"। वी०मि०धृत कल्पोत्तरेऽपि "सर्वा फलप्रदा भूमिर्मण्यश्चादृष्ट हि। अनन्ताद्याः स्मृता ह्यष्टौ नवमो विद्युदुज्ज्वलाः। राज्ञो प्रकाशकाः सर्वे विषाद्याघातकारिणः। नानावर्णास्तु विज्ञेया रत्नगर्भैव रूपतः। वज्राद्याः स्फाटिकाद्याश्च गुडाद्यादिविनिर्मितम्। सर्वकामप्रदं पुंसां लिङ्गं तात्कालिकं मतम्"। लक्षणसमुच्चये "गान्धं सौभाग्यदं लिङ्गं पौष्पं मुक्तिप्रदायकम्"। तथा "नानागुडोद्भवं लिङ्गं नानाकामप्रदायकम्। सैकतं सुखदं लिङ्गं सौभाग्याय च पावनम्। उच्चाटने तु पाषाणं माषं शत्रुक्षयावहम्। तात्कालिकं दारिद्रञ्च कृत्वा भक्त्या समर्चयेत्"। तथा "कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य च। कुङ्कुमस्य त्रयश्चैव शशिना च चतुःसमम्।

एतद्वै गन्धलिङ्गन्तु कृत्वा संपूज्य भक्तितः। शिवसायुज्यमाप्नोति बन्धुभिः सहितो नरः। कार्य्यं पुष्पमयं लिङ्गं हयमश्वसमन्वितम्। नवखण्डां धरां भुक्त्वा गणेशोऽधिपतिर्भवेत्। रजोभिर्निर्मितं लिङ्गं यः पूजयति भक्तितः। विद्याधरपदं प्राप्य पश्चात् शिवसमो भवेत्। श्रीकामो गोशकृल्लिङ्गं कृत्वा भक्त्या प्रपूजयेत्। स्वच्छेन कापिलेनैव गोमयेन प्रकल्पयेत्। कार्य्यं च पिष्टजं लिङ्गं यवगोधूमशालिजम्। श्रीकामः पुष्टिकामश्च पुत्रकामस्तदर्चयेत्। सिताखण्डमयं लिङ्गं कार्य्यमारोग्यवर्द्धनम्। वश्ये लवणजं लिङ्गं तच्च त्रिकटुकान्वितम्। गव्यघृतमयं लिङ्गं संपूज्य बुद्धिवर्द्धनम्। लवणेन च सौभाग्यं पार्थिवं सर्वकामदम्। कामदं तिलपिष्टोत्थं तुषोत्थं मारणे स्मृतम्। भस्मोत्थं सर्वफलदं गुडोत्थं प्रीतिवर्द्धनम्। गन्धोत्थं सुखदं भूरिशर्करोत्थं सुखप्रदम्। वंशाङ्कुरं वंशकरं गोमयं सर्वरोगदम्। केशास्थिसम्भवं लिङ्गं सर्वशत्रुविनाशनम्। क्षौमजं मारणे पिष्टसम्भवं लिङ्गमुत्तमम्। दारिद्र्यदं द्रुमोद्भूतं पैष्टं स्वरतप्रदम्। दधिदुग्धोद्भवं लिङ्गं कीर्त्तिलक्ष्मीसुखप्रदम्। धान्यदं धान्यजं लिङ्गं फलोत्थं फलदं भवेत्। पुष्पोत्थं दिव्यभोगायुर्दात्रै धात्रीफलोद्भवम्। नवनीतोद्भवं लिङ्गं कीर्त्तिसौभाग्यवर्द्धनम्। दूर्वाकाण्डसमुद्भूतमपमृत्युविनाशनम्। कर्पूरसम्भवं लिङ्गं कलायैर्भुक्तिमुक्तिदम्। आयस्कान्तं चतुर्थौ तु ज्ञेयं सामान्यसिद्धिदम्" गरुडपु०। "सर्वं मणिभवं श्रेष्ठं तत्र वाजमरिच्छिदे। यमलिङ्गं महाभूत्यै सौभाग्याय च मौक्तिकम्। पुष्टिमूलं महानीलं ज्योतिर्हीरसमुद्भवम्। स्वर्थकं कुलसम्पत्त्यै तैजसं सूर्यकान्तजम्। चन्द्रापीडं मृत्युजिते स्फाटिकं सर्वकामदम्। शूलाख्यमणिजं शत्रुक्षयार्थं मौक्तिकं तथा। आपत्यं हीरकं ज्ञेयं रोगहृन्मौक्तिकोद्भवम्। शुभकृत् पुष्कलं नीलं वैदूर्यं शत्रुदर्पहृत्। नीलं लक्ष्मीप्रदं ज्ञेयं स्फाटिकं सर्वकामदम्"। सारसंग्रहे "महाभुक्तिप्रदं हैमं राजतं भूतिवर्द्धनम्। आरकूटं तथा कांस्यं त्रपु सामान्यमुक्तिदम्। मृत्युसीसायसं लिङ्गं शत्रूणां नाशने हितम्। कीर्त्तिदं कांस्यजं लिङ्गं राजतं पुत्रवर्द्धनम्। पैत्तलं भुक्तिमुक्त्यर्थं त्रिमजं सर्वसिद्धिदम्" कालोत्तरतन्त्रम्। तत्रैव शिवनारदसंवादे "पितृणां मुक्तये लिङ्गं पूज्यं रजतसम्भवम्। हैमजं सत्यलोकस्य प्रा-

श्रये पूजयेत् सुधीः। पूजयेत्ताम्रजं लिङ्गं पुष्टिकामो हि मानवः"। मत्स्यसूक्ते "ताम्रलिङ्गं कलौ माध्यं रैत्यस्य सीसकस्य च। रक्तचन्दनलिङ्गस्य शङ्खकांस्यायसं तथा"। मातृकाभेदतन्त्रे १२पटले "पार्थिवे शिवपूजायां सर्वसिद्धियुतो भवेत्। पाषाणे शिवपूजायां द्विगुणं फलमीरितम्। स्वर्णलिङ्गे च पूजायां राजसूयं जायते ध्रुवम्। सर्वसिद्धीश्वरो रौप्ये फलं तस्माच्चतुर्गुणम्। ताम्रे पुष्टिं विजानीयात् कांस्ये च धनसंचयः। गङ्गा-सागरे च लक्षगुणं वाप्यायां रोमवान् भवेत्। स्फाटिके सर्वसिद्धिः स्यात् तथा मारकते प्रिये!। लौहलिङ्गे रिपोर्नाशं कामदं भस्मलिङ्गकम्। वालुकायां काम्यसिद्धि-र्गोमये रिपुमर्दनम्। सर्वलिङ्गस्य माहात्म्यं धर्मकामार्थमोक्षदम्। संस्कारेण विना देवि! पाषाणादौ न पूजयेत्"। "मृत्तिकातोलकं ग्राह्यमथ वा तोलकद्वयम्। एतदन्यन्न कुर्वीत कदाचिदपि पार्वति!" मातृकाभेदतन्त्रे ७प०। "मृत्तिकातोलकं ग्राह्यमथ वा तोलकद्वयम्। लिङ्ग-स्यास्य प्रमाणेन घटनं कारयेद् बुधः। अङ्गुष्ठपर्वमानन्तु कृत्वा लिङ्गं प्रपूजयेत्" विश्वसारतन्त्रम्। लिङ्गलोक-रक्षणं कालान्तरे "लिङ्गे वेद्यां तथा पीठे समस्तत-निपातनात्। समस्तैव विजानीयात् लिङ्गलोकरक्ष-णमिदम्"। ताम्रपाषाणादीनां मृत्तिकाभेदेन पूजाफल प्रशंसा तत्रोक्ता यथा "शुक्लं हि पार्थिवं लिङ्गं निर्माय यस्तु पूजयेत्। स एव विप्रो देवेशि! त्रिवर्गफलभाग्-भवेत्। क्षत्रियस्तु वरारोहे! रक्तं निर्माय पार्थि-वम्। पूजयेत् सततं यस्तु त्रिवर्गफलभाग्भवेत्। पीतं तु पार्थिवं देवि! निर्माय यस्तु पूजयेत्। स च वैश्यो महेशानि! त्रिवर्गफलभाग्भवेत्। कृष्णं हि पार्थिवं लिङ्गं निर्माय यस्तु पूजयेत्। स शूद्रः परमेशानि! त्रिवर्गफलभाग्भवेत्। शिलादौ च महेशानि! स्थूलञ्च फलदायकम्। अङ्गुष्ठमानं देवेशि! यदा हेमाद्रिमान-कम्। क्रमेण देवदेवेशि! फलं बहुविधं स्मृतम्। स्थूलात् स्थूलतरं लिङ्गं वदामि परमेश्वरि!। पूजना-कारणादपि फलं बहुविधं स्मृतम्"। स्थूलतरमिति पार्थिवलिङ्गेतरपरम् मृत्तिकातोलकं ग्राह्यमित्या-दिवचनात्। शिलास्फाटिकमरकतादीनां पञ्चसूत्रीकर-णक्रमम् लैङ्गे "शिवलिङ्गस्य यन्मानं तन्मानं दश सव्ययोः। योन्यपरमपि यन्मानं तदधोऽपि तथा भवेत्"। "लिङ्गस्य यादृग्विस्तारः परिणाहोऽपि तादृशः। लिङ्गस्य द्विगुणा वेदी योनिस्तदर्द्धसंमिता। कुर्वीत कुत्रचित् सूत्रं न कदाचिदपि क्वचित्। रत्नादि-शिवनिर्माणे मानानियमतः स्मृतम्"। तन्त्रान्तरम्। लिङ्गशब्दव्युत्पत्तिर्यथा "आकाशं लिङ्गमित्याहुः पृथिवी तस्य पीठिका। आलयः सर्वदेवानां लयना-ल्लिङ्गमुच्यते" स्कन्दपु०।

"एकहस्तेन निर्माय प्रार्थिवं लिङ्गमर्चयेत्। बाणलिङ्ग-पूजनस्य फलमाप्नोत्यसंशयम्। तदेव साङ्गुष्ठगुणं वाम-हस्तेन निर्मितम्। यदाङ्गुष्ठपर्वमादि साधकस्यैव पा-णिना। "एवं कृते तु यद्दृश्यं संसारात् स विमु-च्यते। द्वाविंशकैर्वि यतिपलैर्निर्मितैः शैवं प्रयत्नतः। लिङ्गं निर्माय देवेशि! पूजयेद्भक्तिसंयुतः" तन्त्रसारः।

**शिवलोक** पु० ६त०। कैलासनामके स्थाने।

**शिववल्लभ** त्रि० ६त०। १महादेवप्रिये २शतपत्र्यां स्त्री राजनि०। [२श्वेतपत्र्यां च राजनि०।

**शिववल्ली** स्त्री० शिवप्रिया वल्ली शा०त०। १लिङ्गिनीलतायां

**शिववाहन** न० शिवं वाहयति वह–णिच्–ल्यु। वृषभे राजनि०। [२शिवस्य वृषके च।

**शिववीज** न० ६त०। १पारदे राजनि०। शिववीर्यादयोऽप्यत्र।

**शिवशेखर** पु० शिवस्य शेखर इव। १धुस्तूरे राजनि०। २वकपुष्पे च जटा०।

**शिवसुन्दरी** स्त्री ६त०। दुर्गायां तन्त्रसा०।

**शिवा** स्त्री शी–वन् नि०। १मङ्गलवत्यां स्त्रियां २दुर्गायां "शिवा मुक्तिः समाख्याता योगिनां मोक्षदायिनी। शिवायै या यजेद्देवीं शिवा लोके ततः स्मृता" देवीपु० ४५अ०। ३शम्यां ४शृगाले ५हरीतक्यां ६धवीवृक्षे ७ता-मलक्याम् अमरः। ८आमलक्यां मेदि०। ९हरिद्रायां १०दूर्वायां ११गोरोचनायाञ्च राजनि० १२शृगाल्याम् अमरः। [राजनि०।

**शिवाटिका** स्त्री शिवायाटति अट–ण्वुल्। वंशपत्र्यां

**शिवात्मक** न० शिवो मङ्गल आत्मा यस्य कप्। १सैन्धवे लवणे राजनि०। २शिवमये त्रि०।

**शिवानी** स्त्री शिवं कल्याणमानयति आ+नी–ड गौरा० ङीष्। १जयन्तीवृक्षे शब्दच० २दुर्गायाञ्च।

**शिवाप्रिया** पु० ६त०। १छागे त्रि० २तस्याः प्रियमात्रे त्रि०।

**शिवापीड** पु० ६त०। वकवृक्षे राजनि०। [राजनि०।

**शिवाफला** स्त्री शिवाया इव फलं यस्याः। शमीवृक्षे

**शिवाबलि** पु० शिवाभ्यो देयो बलिः शा०त०। तत्सम्मा-

रविविहिते सन्ध्यायां शिवाभ्यो देये मांसादिबलौ तद्वि- धिस्तन्त्रसारे दृश्यः।

**शिवाराति** पु० शिवायाः शृगालस्यारातिः। १कुक्कुरे शब्दमा० २शिवाशिवयोर्हर्त्तरि पापखण्डे च।

**शिवारुत** न० ६त०। शृगालीशब्दे दिग्भेदे तस्य शुभाशुभ- फलं वसन्तराजशाकुने उक्तं यथा "शोभनं शुभफलाप्तिसूचकं कथ्यते त्ववितथं शिवारुतम्। शान्तदीप्तककुभां विशेषतो ज्ञानमत्र च सदोपयुज्यते। दग्धा दिगुक्ता दिननाथयुक्ता विवस्वताप्ता भवति प्रदीप्ता। सा धूमिता यां त्यजिता प्रयातः शेषा दिगन्ताः किल पञ्च शान्ताः। दग्धा दिगैशी ज्वलिता दिगैन्द्री प्रधूमिता चानलदिक्क्रमेण। आद्ये दिनस्य प्रहरे प्रवृत्ते महेश- देवेशहुताशदिक्षु। शिवा रटन्ती कुरुते नराणां संता- पकायव्ययबन्धनानि। अन्त्ये द्वितीये प्रहरस्य भागे सहस्रनेत्रानलकालदिक्षु। शिवा रटन्ती कुरुते इत्यादि। प्राप्ते तृतीये प्रहरे दिनस्य हुताशवैवस्वतयातुदिक्षु। शिवा रटन्ती कुरुते इत्यादि। समागतेऽह्नः प्रहरे तुरीये प्रेतेशरक्षःपतिपाशिदिक्षु। शिवा रटन्ती कुरुते इत्यादि। आद्ये निशायाः प्रहरे प्रवृत्ते रक्षोऽधियादः- पतिवातदिक्षु। शिवा रटन्ती कुरुते इत्यादि। ततो द्वितीयप्रहरे रजन्यास्तोयाधिनाथानिलसोमदिक्षु। शिवा रटन्ती कुरुते इत्यादि। यामे तृतीयेऽपि च यामवत्याः समीरदोषाकरशम्भुदिक्षु। शिवा रटन्ती कुरुते इत्यादि। समागते रात्रितुरीययामे निशाकरेशानसुरेशदिक्षु। शिवा रटन्ती कुरुते इत्यादि। इतीरितं दिक्त्रय- यामयोगात् फलं विरुद्धं विरुतैः शिवायाः। अमी- ऽथ दिक्पञ्चकयामयोगात् फलानि ब्रुवां क्रमतः शु- भानि। कृतान्तरक्षोवरुणानिलेन्दुदिक्षाद्ययामे रविते: शृगाल्याः। स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धिर्लाभः सु- भिक्षं प्रियलोकसङ्गः। रक्षःप्रचेतोऽनिलसोमशम्भुदिक्षु द्वितीये प्रहरे रुतेन। स्यादिष्टवार्त्ताश्रुतिरित्यादि। जलेशवातेन्दुशिवामरेशादिक्षु रवेण प्रहरे तृतीये। स्यादिष्टवार्त्ताश्रुतिरित्यादि। समीरसोमेशसुरेशवह्निदिक्षु स्वरेण प्रहरे चतुर्थे। स्यादिष्टवार्त्ताश्रुतिरित्यादि। शशा- ङ्करुद्रेन्द्रहुताशकालदिक्षु रवैः पञ्चमयामभागे। स्यादि- ष्टवार्त्ताश्रुतिरित्यादि। ईशानशक्राग्निकृतान्तरक्षोदिक्षु स्वरेण प्रहरे च षष्ठे। स्यादिष्टवार्त्ताश्रुतिरित्यादि। इन्द्राग्निकालास्रपपाशपाणिदिक्षु रवैः सप्तमयामकाले। स्यादिष्टवार्त्ताश्रुतिरित्यादि। अग्न्यन्तकरक्षःपाशिवात- दिक्ष्वष्टमे च प्रहरे रवेण। स्यादिष्टवार्त्ताश्रुतिरित्यादि। "एकादिकानां निधनाष्टमानां शिवारुतानामधुना यद- र्थम्। प्राच्यादिकास्वष्टसु दिक्षु शेषं यद्यत् फलं तत्तदुदीरयामः। धनाप्त्यभीष्टाप्तिमभीष्टलाभं ध्रुवं ततोऽर्थस्य फलं शुभञ्च। भयं सतापं सकलञ्च शो- कमेकादिशब्दैः कुरुते प्रशान्ते। भयान्यनिष्टश्रुति- रर्थहानिरिष्टैर्वियोगो महती च भीतिः। स्याद्वि- पद्धानिर्मरणञ्च दीप्ते त्वेकादिना चेत् क्रतसप्तकेन। ऐशान्यां निनादे प्रथमेऽर्थलाभो भवेद्द्वितीये निधिदर्शनञ्च। कन्यां तृतीये लभते चतुर्थे स्वध्वागमं पञ्चमकेऽथ सि- द्धिम्। षष्ठे रवे कुप्यति भूमिनाथो भीः सप्तमे स्याद्विफ- लोऽष्टमस्तु। आग्नेयोऽग्निभागे प्रथमे द्वितीये नराधिपः कुप्यति भीस्तृतीये। यातश्चतुर्थे नगरस्य शब्दे शिवा- कृते पञ्चमके च युद्धम्। वदन्ति तज्ज्ञाः कलहञ्च षष्ठे भीः सप्तमे स्याद्विफलोऽष्टमस्तु। आद्ये शुभं स्यादशुभं द्वितीये याम्ये महाव्याधिभयं तृतीये। स्वरे चतुर्थे स्व- जनागमः स्यात् पुत्रो भवेत् पञ्चमफेत्कृतेषु। जायेत कन्या रटिते च षष्ठे भीः सप्तमे स्याद्विफलोऽष्टमस्तु। ग्रामस्य घातो दिशि राक्षसानामाद्ये द्वितीयेऽपि च गोकुलस्य। मृत्युस्तृतीये द्विचतुष्पदानां हानिश्चतुर्थे- ऽपि च पञ्चमेऽत्र। चौराद्भयं राजभयञ्च षष्ठे भीः सप्तमे स्याद्विफलोऽष्टमस्तु। शब्दे शिवाया वरुणस्य भागे आद्ये भयं हानिरथ द्वितीये। स्याद्राजदूतागमनं तृतीये वादश्चतुर्थे खलु चौरभीतिः। स्यात् पञ्चमे राजभयञ्च षष्ठे भीः सप्तमे स्याद्विफलोऽष्टमस्तु। वायव्यभागे भय- मेकशब्दे भयातिरेको भवति द्वितीये। वृष्टिस्तृतीये महती चतुर्थे मेघागमे वर्षति पञ्चमे च। क्रोधं वि- धत्ते नृपतेश्च षष्ठे भीः सप्तमे स्याद्विफलोऽष्टमस्तु। दिश्युत्तरस्यां विहिते विरावे म्रियेत कश्चित् प्रथमे द्वि- तीये। महाभयं विप्रवधस्तृतीये धनं चतुर्थे खलु हन्यते च। विट् पञ्चमे षष्ठरवे च शूद्रा भीः सप्तमे स्या- द्विफलोऽष्टमस्तु। राज्ञोऽन्यथा दर्शनमाद्यशब्दे केतो- र्द्वितीये च तथोत्तरेण। उल्काप्रपातस्त्रिषु दुर्दिनञ्च चतुर्षु भद्रं खलु पञ्चमे च। सङ्गो भवेद्वैरिजनैश्च षष्ठे भीः सप्तमे स्याद्विफलोऽष्टमस्तु। आद्ये भवेद्दुर्दि- नमीशदेशे वृष्टिर्द्वितीये च रवे शिवायाः। वातस्तृतीये त्वशनिश्चतुर्थे म्रियेत कश्चित् खलु पञ्चमे च। लभेत

पृथ्वीं निनदे च षष्ठे भीः सप्तमे स्यादिफलोऽष्टमस्तु" "क्षेमलाभपुनरागमनानां निश्चयं समधिगम्य विशङ्कः । येन याति पथिकः परदेशं तं शिवारुतमथ प्रथयामः । यं यं देशं गन्तुमभ्युद्यतानां पुंसां शब्दानुसरन्ती शृगाली । शान्तायां सा दिश्ययं वाञ्छितानां दीप्तायान्तु स्यादभीष्टक्षयाय । प्राचीं दिशं सम्मुखभानुबिम्बं प्रतिष्ठमानस्य नरस्य यस्य । शब्दं शृगाली पुरतः करोति बन्धं वधं वा प्रकरोति तस्य । प्राचीदिगीशाभिमुखस्य पुंसः प्रस्थानकामस्य शिवा सशब्दा । भियेऽर्थनाशाय च दक्षिणा स्याद्वामा पुनर्वाञ्छितकार्य्यसिद्ध्यै । प्रत्यक्कमाशां चलितस्य पूर्वां शिवा विरावं पुरुषस्य यस्य । करोति पृष्ठे प्रकरोति तस्य सर्वप्रकाराभिमतार्थसिद्धिम् । प्रस्थायिनो यस्य च दक्षिणाशां शिवा रुतं मुञ्चति दक्षिणेन । आदित्यहन्त्रा यदि नो तदानीं ध्रुवं भवेत्तस्य महीपतित्वम् । वैवस्वताशाचलितस्य यस्य दिवाकरस्तिष्ठति दक्षिणेन । शिवा च वामा कुरुते विरावं सम्पद्यते तस्य समस्तमिष्टम् । पुमान् यदा याम्यककुप्प्रयायी करोति शब्दं पुरतः शृगाली । आस्ते विवस्वानपि सम्मुखश्चेद् भवेत् तदानीमचिरेण मृत्युः । नरस्य याम्यां ककुभं यियासोः शृगालभार्य्या यदि पृष्ठभागे । फेत्कारमामुञ्चति मानवस्य मृत्युः पुरैव भवत्यवश्यम् । दिशं प्रतीचीं व्रजतः शृगाली नरस्य यस्याभिमुखी विरौति । शान्तास्थिता शान्तफलप्रदात्री दीप्तास्थिता दीप्तफलं तनोति । प्राचेतसीं सञ्चलितस्य काष्ठां शृगालिका जल्पति दक्षिणेन । यदा तदानीं सुबहूननर्थान् करोति चार्थानपि हन्ति पुंसः । दिशं प्रचेतःपरिपाल्यमानां नरस्य यस्य व्रजतः शृगाली । वामा विरावं प्रकरोति शान्ता भवन्त्यभिप्रेतफलानि तस्य । यो वारुणीं याति दिशं मनुष्यः शृण्वन् शिवायारटितानि पृष्ठे । मतस्य तस्याशु हुताशभीतिरसंशयं स्यात् द्रविणक्षयश्च । यशोत्तराशां चलितस्य पुंसः प्राच्यां शिवा मुञ्चति फेत्कृतानि । भानुः प्रतीच्यां विहितस्थितिश्चेदपेक्षितं सिध्यति तत्क्षणेन । सम्प्रत्युदीचीं चलितस्य पृष्ठे शिवा विरावं पुरुषस्य यस्य । आस्ते च मध्ये नभसो विवस्वांस्तस्यार्थहानिर्मरणं प्रदिष्टम् । कुबेरकाष्ठां प्रति यः प्रयाति ज्वालामुखी चाभिमुखी विरौति । तस्याध्वगस्याभिमतार्थसिद्धिर्भवेच्च सम्पत् पुनरागमश्च । तिष्ठति तीव्रकरो दिशि यस्यां फेत् कुरुते यदि तत्र शृगाली । तद्व्रजतः पथिकस्य भवेतां निश्चयतो धनजीवितनाशौ । दक्षिणतः प्रथमं यदि पश्चात् वामगता पथिकस्य शृगाली । फेत् कुरुते कुरुते तदवश्यं क्षेमधनाभिमतेष्टागमनानि । चयास्य शान्तां ककुभं नरस्य वामा शृगाली यदि वा रटन्ती । तदार्थलाभं वितरत्यवश्यमर्थक्षयं दक्षिणतो रटन्ती । वामा प्रदीप्ते ककुभः प्रदेशेऽलाभं तथानर्थमुपादिशन्ति । शिवा रटन्ती पथि दक्षिणा तु क्षिपत्यनर्थानथसङ्कटेषु । शान्ते दिगन्ते यदि वा प्रदीप्ते पृष्ठे प्रयाणे प्रतिषेधयित्री । शब्दायमाना तु शिवा पुरस्तात् निमज्जयत्यापदगाधसिन्धौ । वामेऽपसव्ये पुरतोऽथ पृष्ठे पुंसः शिवा जल्पति यत्र तत्र । आयान्ति चौराः प्रथमे विरावे द्वयोर्भवेत्तस्करदर्शनञ्च । स्वपादरोऽर्थागमनं तृतीये तुर्य्ये क्षतिः पञ्चमकेऽर्थलाभः । वाणिज्यसेवादिफलाय षष्ठे भीः सप्तमे स्यादिफलोऽष्टमस्तु । हाहारवं मुञ्चति हृष्टभावा हाहां तु तस्यास्तदुदाहरन्ति । अग्रे सरा वा पथि या यियासोः सा द्विप्रकारापि मनोरथाप्त्यै । नृपस्य यात्रासमये पुरस्तात् प्रयाति चेद्वर्त्मनि वेदयन्ती । कुर्य्याच्छिवा वैरिपराभवं तज्जयश्रियश्चाभिमतं विदध्यात् । कार्य्यान्तरेष्वप्यनुगम्यमाना श्रेयःप्रदा शान्तदिशि प्रदिष्टा । शिवा प्रदीप्ते तु दिशि प्रदेशे समारटन्ती महते भयाय । भयोद्भमे दीप्तदिशि प्रदीप्तनादैर्व्यथां हन्ति भयानि दैवी । सहान्ति सर्वाण्यपि, शान्तनादा शान्तस्थिता सर्वभयप्रदात्री । यदा च नद्युत्तरगा नराणां शब्दं शृगाली कुरुते कदाचित् । तटद्वये तत्परिरक्षणीयं महद्भयं भावि जलेचरेभ्यः"। "स्थानस्थितानामपि योगभाजां नैमित्तिकानामुपदिश्यते तु । शिवाविरावैरशिवं शिवञ्च सुनिश्चितार्थं मुनिसम्मतेन । करोति फे फे इति सर्वदिक्षु यदा तदा स्थानविघातयुद्धे । शिवा विधत्ते क्षुधिता त्वसंख्यान् रौद्रान् स्वरान् मुञ्चति चेदुपेताम् । निरन्तरं रौति विदिक्षु दिक्षु समन्तकारुण्यस्वरातुरा चेत् । अपत्यमोहेन यदा शृगाली त्यक्तास्पृहा सा कथितेह तज्ज्ञैः । स्थित्वा प्रदीप्ते ककुभो विभागे ज्वालामुखी फेत्कुरुतेऽतिरौद्रम् । ग्रामस्य तस्य प्रकरोति नाशं तस्याथ वा तिष्ठति यस्य मध्ये । ग्रामस्य मध्यं समवाप्य यस्य ज्वालामुखी मुञ्चति फेत्कृतानि । स शून्यतां गच्छति निश्चयेन लोकस्य वा स्यादसुखं प्रभूतम् । ग्रामान्तिके सप्तदिनानि यावत् महाभयोत्पादितफेत्कृतानि । विरौति चेत्तु कुरुते शृगाली तद्वाधिलोकस्य भयं

प्रभूतम् । मध्यंदिने यावद्द्धानि यस्य शिवा समीपे नगरस्य यस्य । विरौति घातं विदधाति तस्य भवच्च वह्निप्रभवं प्रभूतम् । पश्चार्द्धरात्रापि कथञ्चिदेषा क्रूरारवा व्याहरते शृगाली । यस्यान्तिके तं बहवो हठेन मुष्णन्ति चौरा जनसन्निवेशे । स्थानस्य यस्योपगता समीपं दिनानि पञ्चोन्नरति प्रभाते । स्वरेण रौद्रेण शृगालभार्य्या स्थानस्य हानिर्महती नराणाम् । सुरालयस्यापि मनुष्यलक्ष्यैपोमस्य शीघ्रं हरणं विधत्ते । त्रयं दिनानां दिवसावसाने शिवा रटन्ती परुषस्वरेण । दिक्षारटन्ती सकलास रौद्रं भयमखिलं परितः पुरस्य तु । शृगालभार्य्या खलु तद्ब्रवीति युद्धं महत्तत्र महाभिघातम् । ज्वालां विमुञ्चत्यतिरौद्रनादा समाकुला धावति या समन्तात् । कौमारकं या जनयत्यकस्मात् कुर्य्याञ्च्छिवा सा युवराजपातम् । रोमोद्गमं या जनयत्यकस्मात् फेरुत्यतिक्रूररवा नराणाम् । मूत्रं पुरीषन्तु तरङ्गमाणां वा सर्वदा स्यादृशिवा शिवेह । तदृक्षिणोरोधसि सौम्यरूपांस्तीन् यत्र वा सुञ्चति वा निनादान् । शिवां शिवां तां नृपतिस्तदानीं वन्देत देवीमभिवन्दनीयाम् । श्मशानभूमौ दिनमध्यभागे मध्ये रजन्याः स्वग्रहप्रदेशे । या रौति तस्यै बलिमन्न्यंयुक्तं भक्त्या प्रदद्यात्तु यदि भद्रमिच्छेत् । सर्वेषु कार्येषु समुद्यतेषु बलिः शिवाया विनिवेदनीयः । स्थानाति यत्नात् विषयेऽभ्युपेता देवी बलिं जल्पति तत्र सिद्धिम्"

"कथ्यते बलिविधानमिदानीं शाकुनागममतेन शिवायाः । दिव्यमन्त्रबलिशोधितदोषं साधिताखिलसमुद्यतकार्यम् । शून्यालयं चतुष्कं श्मशानं चतुष्पथं मातृस्थं जलान्तम् । सन्ध्यावनिशूलसमेस्माद्या बलिप्रदानाय मताः प्रदेशाः । तेषान्तु मध्यादुचितप्रदेशे विशोधितं मण्डलिकं विदध्यात् । पौराणिकस्तोकपरीचितायाः संस्थ्य गोमैनयसन्तरोचात् । अत्यन्तजीर्णदेहाया वन्ध्यायाश्च विशेषतः । रोगार्तनवसूतायां न गोमौमयमाहरेत् । तस्मिन् विचित्रं विततं विदध्यात् पिष्टात्मकेनाष्टदलं सरोजम् । संपूजयेत् तत्र हुरागिपादीन् क्रमेण सर्वानपि लोकपालान् । मध्ये सुतैः सखिभिरभ्युपेता शिवान्विता पिष्टमयी प्रसन्ना । पूज्या शिवा तत्परति भक्तियोगात् प्रभूतपुष्पाक्षतधूपदीपैः । माल्यगुडौदनमाषकुलत्थैर्यावकपूपलिकामिषमद्यैः । संस्थितस्य नरायनमात्रं बुद्धिमता बलिकर्मणि कार्य्यं । प्राप्याष्टमीं वामचतुर्दशीं वा संकल्प्य मन्त्रेण च सम्यक् ततः । बलं शिवाया निशि निश्चयेन दद्यान्नतुष्यो यदि भद्रमिच्छेत्" ।

**शिवालय** न० शिव आलीयतेऽत्र ली–अच् । १श्मशाने हारा० । २रक्ततुलस्यां शब्दर० । ३महादेवगृहे च पु० ।

**शिवालु** पु० शिवायालति अल–उन् । शृगाले राजनि० ।

**शिवास्मृति** स्त्री शिवायाः स्मृतिर्यस्याः ५ब० । जयन्तीवृक्षे शब्दच० तन्नामोच्चारणे हि जयन्तीनामकदुर्गायाः स्मरणमिति तस्यास्तथात्वम् ।

**शिवाह्लाद** पु० शिवमाह्लादयति आ+ह्लाद–णिच्–अण् । १वकवृक्षे राजनि० । हेम० । २तत्सन्तोषे च ।

**शिवाह्वा** स्त्री शिवस्येवाह्वा यस्याः । रुद्रजटावृक्षे राजनि० हेम० । २महादेवाह्वाने च ।

**शिवि** पु० शि–वि नि० न गुणः । १हिंस्रपशौ त्रिका० । २भूर्जवृक्षे ३उशीनरराजसुते नृपभेदे च मेदि० ।

**शिविका** स्त्री शिवं करोति शिव+णिच्–ण्वुल् अत इत्त्वम् । यानभेदे (डुली) अमरः ।

**शिविर** न० शो+किरच् वुक् च । कटके सैन्यनिवासस्थाने । शिविरलक्षणमुक्तं यथा

"शिविरं परिखायुक्तमुच्चैःप्राकारवेष्टितम् । युक्तद्वादशद्वारञ्च सिंहद्वारपुरस्कृतम् । युक्तं चित्रैर्विचित्रैश्च अभिन्नैश्च कपाटकैः । निषिद्धहस्तरहितं प्रसिद्धैश्च पुरस्कृतम् । सुलक्षणं चन्द्रवेधं प्राङ्गणञ्च तथैव च" । तत्र विहितनिषिद्धवृक्षादि यथा "आम्रमे नारिकेलस्य स्थिताश्च धनप्रदः । शिविरस्य यदीशाने पूर्वे पुत्रप्रदस्तरुः । सर्वत्र मङ्गलार्हेण तरुराजो मनोहरः । रसालवृक्षः पूर्वस्मिन्नृणां सम्पत्प्रदस्तथा । शुभप्रदश्च सर्वत्र सुरकारो निशामय । बिल्वश्च पनसश्चैव जम्बीरो बदरी तथा । प्रजाप्रदश्च पूर्वस्मिन् दक्षिणे धनदस्तथा । सम्पत्प्रदश्च सर्वत्र यतो हि वर्द्धते स्थली । जम्बुवृक्षश्च दाडिम्बः कदल्याम्रातकस्तथा । बन्धुप्रदश्च पूर्वस्मिन् दक्षिणे मित्रदस्तथा । सर्वत्र शुभदश्चैव धनपुत्रशुभप्रदः । हर्षदो गुवाकश्च दक्षिणे पश्चिमे तथा । ऐशाने सुखदश्चैव सर्वत्रैव निशामय । सर्वत्र चम्पकः शुद्धो भुवि भद्रप्रदस्तथा । अलाबुश्चापि कुष्माण्डं मायाम्बुश्च सुखासुखः । खर्ज्जुरी कर्कटी चापि शिविरे मङ्गलप्रदाः । वास्तूकः कारवेल्लश्च वार्त्ताकुश्च शुभप्रदाः । । लताफलञ्च शुभदं सर्वं सर्वत्र निश्चि

नम्। प्रशस्तं कथितं कान्ते! निषिद्धञ्च निशामय। वल्मीकञ्च निषिद्धञ्च शिबिरे नगरेऽपि च। वटो निषिद्धः शिबिरे नित्यं चौरभयं ततः। नगरेषु प्रसिद्धश्च दर्शनात् पुण्यदस्तथा। हे कान्ते! तिन्तिड़ीवृक्षो यत्नात्तं परिवर्जय। ग्रहेण धनहानिः स्यात् प्रजाहानिर्भवेत् ध्रुवम्। शिबिरेऽतिनिषिद्धश्च नगरे किञ्चिदेव च। न निषिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च। इक्षुश्च चणकादीनां धान्यञ्च मङ्गलप्रदम्। ग्रामेषु नगरे चापि शिबिरे च तथैव। इक्षुवृक्षश्च शुभदः सततं शुभदस्तथा। कर्णाकश्च शिरीषश्च कदम्बश्च शुभप्रदाः।। कन्दी हरिद्रा शुभदा शुभदश्चार्द्रकस्तथा। हरीतकी च शुभदा ग्रामेषु नगरेषु च। न वाञ्छा भद्रदा नित्यं तथा आम्रवकी ध्रुवम्। गजानामस्ति शुभदमश्वानाञ्च तथैव च। कल्याणहस्तैःश्च वानां वास्तौ स्थापनकारिणाम्। न शुभप्रदमन्येषामुष्ट्रकारणं परम्। वानराणां नराणाञ्च गर्दभानां गवामपि। कुक्कुराणां शृगालानां मार्ज्जाराणाममङ्गलम्। भेटकानां शूकराणां सर्वेषाञ्चा शुभप्रदम्। ईशाने चापि पूर्वस्मिन् पश्चिमे च तथोत्तरे। शिबिरस्य जलं भद्रमन्यत्राशुभमेव च। दीर्घे प्रस्थे समानञ्च न कुर्य्यान्मन्दिरं बुधः। चतुरस्रे गृहे कान्ते! गृहिणां धननाशनम्। दीर्घप्रस्थः परिमितो नेत्राङ्केनापि संहृतः। शून्येन रहितं भद्रं शून्यं शून्यप्रदं नृणाम्। प्रस्थे हस्तद्वयात् पूर्वं दीर्घे हस्तत्रयं तथा। गृहिणां शुभदं द्वारं प्राकारस्य गृहस्य च। न मध्यदेशे कर्त्तव्यं किञ्चिन्न्यूनाधिके शुभम्। चतुरस्रं चन्द्रवेधं शिबिरं मङ्गलप्रदम्। अभद्रं सूर्य्यवेधञ्च प्राङ्गणञ्च तथैव च। शिबिराभ्यन्तरे भद्रा स्थापिता तुलसी नृणाम्। धनपुत्त्रप्रदात्री च पुण्यदा हरिभक्तिदा। प्रभाते तुलसीं दृष्ट्वा स्वर्णदानफलं लभेत्। मालती यूथिका कुन्दो माधवी केतकी तथा। नागेश्वरं मल्लिका च काञ्चनं बकुलं शुभम्। अपराजिता च शुभदा तेषामुद्यानमीप्सितम्। पूर्वे च दक्षिणे चैव शुभदं नात्र संशयः। ऊर्द्ध्वं षोड़शहस्तेभ्यो नैवं कुर्य्याद्गृहं गृही। ऊर्द्ध्वं विंशतिहस्तेभ्यः प्राकारं न शुभप्रदम्। सूत्रधारं तैलकारं स्वर्णकारञ्च हीरकम्। वाटीमूले ग्राममध्ये न कुर्य्यात् स्थायिनं बुधः। ब्राह्मणं क्षत्त्रियं वैश्यं सच्छूद्रं गणकं शुभम्। भट्टं वैद्यं पुष्पकारं स्थापयेत् शिबिरान्तिके। प्रस्थे च परिखामानं शतहस्तं प्रशस्तकम्। परितः शिबिराणाञ्च सर्व्वोर्द्धं दशहस्तकम्। सङ्केतपूर्ब्बकञ्चैव परिखाद्वारमीप्सितम्। शत्रोरगम्यं मित्रस्य गम्यमेव सुखेन च। शाल्मलीनां तिन्तिड़ीनां छिन्नानां तथैव च। निम्बानां सिन्धुवाराणां उडुम्बराणाममङ्गलम्। धुस्तूराणां वटानाञ्चाप्येरण्डानामशाङ्कितम्। एतेषामतिरिक्तानां शिबिरे काष्ठमीप्सितम्। इष्टकञ्च वज्रहतं दूरतो वर्ज्जयेद्बुधः। पुत्त्रदारधनं हन्यादित्याह कमलोद्भवः” ब्रह्मवै० ख० १०२अ०।

**शिविष्ट** पु० इत०। १बकवृक्षे २दूर्व्वायां स्त्री राजनि०। ३महादेवशिवे त्रि१। [याप्ययाने हारा०।

**शिवीरथ** शिवेर्भुजेङ्गस्य ईः शोभा यत्र तादृशो रथः।

**शिशिर** न० शश—किरच् नि०। १हिमे माघफाल्गुनमासद्वयात्मके २ऋतुभेदे अमरः। तत्र ऋतौ वर्ण्यादिकम् “निःकरीषः धूमः कुन्दः पद्मदाहः शिशिरोत्कर्षः” कविक०ल० ३शीतले स्पर्शे च न० ४तद्वति त्रि० अमरः। [च।

**शिशु** पु० शो–कु सन्वद्भावः द्वित्वम्। १बालके अमरः २स्कन्दे

**शिशुक** पुंस्त्री०शिशुरिव इवार्थे कन्। १जलजन्तुभेदे (शुशुक) राजनि०स्त्रियां ङीष्। २बालके मेदि०। ३वृक्षभेदे हेमच० “जातमात्रः शिशुस्तावत् यावदष्टौ समा वयः। स हि गर्भसमोज्ञेयो व्यक्तिमात्रप्रदर्शकः। भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथाऽनृते। तस्मिन् काले न दोषः स्यात् स यावन्नोपनीयते” मनुः। [शब्दमा०।

**शिशुगन्धा** स्त्री शिशुः स्वल्पो गन्धो यस्याः। मल्लिकाभेदे

**शिशुचान्द्रायण** न० “चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः। चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणं स्मृतम्” मनूक्ते व्रते। [ताऽप्यत्र स्त्री।

**शिशुत्व** न० इत०। शिशोर्भावः त्व। बाल्ये तल्। शिशु-

**शिशुपाल** पु० चेदिदेशीयराजभेदे दमघोषात्मजे त्रिका०।

**शिशुपालहन्** पु० शिशुपालं हतवान् हन–भूते क्विप्। श्रीकृष्णे हेमच०।

**शिशुमार** पुंस्त्री०शिशुं मारयति मृ-णिच्। १जलजन्तुभेदे अमरः स्त्रियां ङीष्। गगनस्थे २ताराचक्रभेदे च “शिशुमारस्तु यः प्रोक्तः स ध्रुवो यत्र तिष्ठति। सन्निवेशञ्च तस्यापि शृणुष्व मुनिसत्तम!। यदह्ना कुरुते पापं दृष्ट्वा तन्निशि मुच्यते। तावत्यश्चैव तारास्ताः शिशुमाराश्रिता दिवि। तावन्त्येव तु वर्षाणि जीवत्यभ्यधिकानि तु। उत्तानपादस्तस्याथ विज्ञेयोऽप्युत्तरो हनुः। यज्ञो-

ऽम्बरश्च विज्ञेयो धर्मो मूर्द्धानमाश्रितः। हृदि नारायणस्यास्ते अश्विनौ पूर्वपादयोः। वरुणश्चार्य्यमा चैव पश्चिमे तस्य सक्थिनी। शिश्नं संवत्सरस्तस्य मित्रोऽपानं समाश्रितः। पुच्छेऽग्निश्च महेन्द्रश्च कश्यपोऽथ ततो ध्रुवः। तारकाः शिशुमारस्य नास्तमेति चतुष्टयम्” विष्णुपु० २अं १२अ०। भाग० २३अ० अन्यथोक्तं यथा “केचिदेतत् ज्योतिरनीकं शिशुमारसंस्थानेन भगवतो वासुदेवस्य योगधारणायामनुवर्णयन्ति। यस्य पुच्छाग्रेऽवाक्शिरसः कुण्डलीभूतदेहस्य ध्रुव उपकल्पितः तस्य लाङ्गूले प्रजापतिरग्निरिन्द्रो धर्म इति। पुच्छमूले धाता विधाता च कट्यां सप्तर्षयः यस्य दक्षिणावर्त्तकुण्डलीभूतशरीरस्य यान्युदगयनानि दक्षिणपार्श्वे नक्षत्राणि उपकल्पयन्ति। दक्षिणानि तु सव्ये यथा शिशुमारस्य कुण्डलाभोगसन्निवेशस्य पार्श्वयोरुभयोरप्यवयवाः समसंख्या भवन्ति। पृष्ठे त्वजवीथी आकाशगङ्गा चोदरतः। पुनर्वसुपुष्यौ दक्षिणवामयोः श्रोण्योरार्द्राश्लेषा च दक्षिणवामयोः पादयोरभिजिदुत्तराषाढ़े दक्षिणवामपार्श्वयोः युञ्जीत। तथैव मृगशीर्षादीन्युदगयनानि दक्षिणपार्श्वे प्रातिलोम्येन प्रतियुञ्जीत। शतभिषाज्येष्ठे स्कन्धयोर्दक्षिणवामयोर्न्यसेत्। उत्तराहनावगस्त्यः अधराहनौ यमः मुखे चाङ्गारकः शनैश्चर उपस्थे वृहस्पतिः ककुदि वक्षस्यादित्यो हृदये नारायणो मनसि चन्द्रो नाभ्यामुशनास्तनयोरश्विनौ बुधः प्राणापानयो राहुर्गले केतवः सर्वाङ्गेषु रोमसु सर्वे तारागणाः। एतदु हैव भगवतो विष्णोः सर्वदेवतामयं रूपम् अहरहः सन्ध्यायां प्रयतो वाग्यतो निरीक्षमाण उपतिष्ठेत” ।

**शिशुवाह** पुंस्त्री० शिशुं वहति वह–ण्वुल्। वनच्छागे हेमच० स्त्रियां ङीष्। शिशुर्वाह्योऽस्य। शिशुवाह्य तत्रार्थे त्रिका०

**शिश्न** पु० शश–नक् नि०। मेढ्रे पुंचिह्नभेदे अमरः।

**शिश्विदान** त्रि० श्विद्–कानच् द्वित्वम्। पापकारके अमरः

**शिष** वधे भ्वा० पर० सक० सेट्। शेषति अशेषीत्।

**शिष** परिशेषीकरणे वा चु० उभ० पक्षे भ्वा० पर०सक०सेट्। शेषयति ते शेषति अशिशिषत् त अशेषीत्। [शिष्टा।

**शिष** विशेषे रुधा०पर०सक०अनिट्। शिनष्टि लृदित् अशिषत्

**शिष्ट** त्रि०शास–क्त शिष–क्त वा। १शान्ते २वेदवाक्ये विश्वासयुते ३सुबोधे ४धीरे च “न पाणिपादचपलो न नेत्रचपलो मुनिः। न च वागङ्गचपल इति शिष्टस्य लक्षणम्” भा०आश्व० “धर्मो नातिगतोयैस्तु वेदः स परिवृंहितः। ते शिष्टा ब्रह्मणा प्रोक्ता नित्यमात्मगुणान्विताः” कूर्म० उप० २४अ०। “विशेषशब्दनिष्ठस्तु शेषः शिष्टः प्रकीर्त्यते। मन्वन्तरेषु ये शिष्टाः इह तिष्ठन्ति धार्मिकाः। मनुः सप्तर्षयश्चैव लोकसन्तानकारणात्। तिष्ठन्तीह च धर्मार्थं तान् शिष्टान् प्रचक्षते। तैः शिष्टैः स्थापितो धर्मः स्थाप्यते वै युगे युगे” मत्स्यपु० १२० अ०। ५कृतशासने ६अवशिष्टे च।

**शिष्टाचार** पु० शिष्टानामाचारः। सद्व्यवहारे “ततः स्मार्त्तः स्मृतो धर्मो वर्णाश्रमविभागशः। एवं वै त्रिविधो धर्मः शिष्टाचारः स उच्यते। त्रयी वार्त्ता दण्डनीतिः प्रजा वर्णाश्रमेज्यया। शिष्टैराचर्य्यते यस्मात् शिष्टाचारः स शाश्वतः। दानं सत्यं तपोऽलोभो विद्येज्या पूजनं दमः। अष्टौ तानि चरित्राणि शिष्टाचारस्य लक्षणम्। शिष्टमाचरन्त्येनं मनुः सप्तर्षयश्च ये। मन्वन्तरेषु सर्वेषु शिष्टाचारस्ततः स्मृतः। श्रुतिस्मृतिभ्यां विहितो धर्मो वर्णाश्रमात्मकः। शिष्टाचारविरुद्धस्तु धर्मः स साधुसम्मतः” मत्स्यपु० १२५अ०। “आचारश्चैव साधूनामिति” मनुना तस्य धर्मे प्रामाण्यमुक्तं स च वेदाविरुद्ध एव प्रमाणम् श्रुतिस्मृत्योर्भिन्नविषयत्वे सदाचारेण तत्र धर्मनिर्णयः। श्रुतिविरोधे स्मृतेरप्रामाण्यवत् स्मृतिविरोधे सदाचारस्य न धर्मनिर्णायकत्वम्। तेन दाक्षिणात्यानां मातुलकन्याविवाहस्य शिष्टैराचर्य्यमाणत्वेऽपि न प्रमाणता। तदेतत् “विरोधे त्वनपेक्षं स्यादसति ह्यनुमानं” जैमि० सूत्रेण निर्णीतम्। वशिष्ठेनापि “तदभावे शिष्टाचारः प्रमाणम्” इत्युक्तम्। ततश्च शिष्टाचारेण मूलस्मृतिरनुमीयते यथा होलकाद्याचारात्। ततः स्मृत्या मूलश्रुतिरनुयातव्येति अधिकरणमाला। अत एव अविगीतशिष्टाचारपरम्पराप्राप्तं मन्वादौ मङ्गलाचरणं मङ्गलवादादौ व्यवस्थापितम्।

**शिष्टि** स्त्री शास–क्तिन्। १आज्ञायां २शासने अमरः। ३ताड़ने च “शिष्यशिष्टिरवधेन” स्मृतिः।

**शिष्य** त्रि० शास–क्यप्। १शिक्षणीये २छात्रे अमरः ३उपदेश्ये च। शिष्यलक्षणादि तन्त्रसा० उक्तं यथा

“शान्तो विनीतः शुद्धात्मा श्रद्धावान् धारणक्षमः। समर्थश्च कुलीनश्च प्राज्ञः सच्चरितो धनी। एवमादिगुणैर्युक्तः शिष्यो भवति नान्यथा। गुरुता शिष्यता वापि तयोर्वत्सरवासतः” तथा चोक्तं सारसंग्रहे “सद्

गुरुं स्वाश्रितं शिष्यं वर्षमात्रं प्रतीक्षयेत् । वर्षैकेन भवेद्योग्यो विप्रो गुणसमन्वितः । वर्षद्वयेन राजन्यो वैश्यस्तु वत्सरैस्त्रिभिः । चतुर्भिर्वत्सरैः शूद्रः कथिता शिष्ययोग्यता" तत्रैव "राज्ञि चामात्यजो दोषः पत्नी पापं स्वभर्त्तरि । तथा शिष्यार्जितं पापं गुरुः प्राप्नोति निश्चितम्" देव्यागमे शिववाक्यं "गुरुशय्यासनं यानं पादुकोपानहं पीठम् । स्नानोदकं तथा छायां लङ्घयेन्न कदाचन । गुरोरग्रे पृथक् पूजामौद्धत्यञ्च विवर्जयेत् । दीक्षां व्याख्यां प्रभुत्वञ्च गुरोरग्रे परित्यजेत्" ।

अथ निषिद्धशिष्याः अगस्त्यसंहितायामुक्ता यथा "अलसा मलिनाः क्लिष्टाः दाम्भिकाः कृपणास्तथा । दरिद्रा रोगिणो रुष्टा रागिणो भोगलालसाः । असूयामत्सरग्रस्ताः शठाः परुषवादिनः । अन्यायोपार्जितधनाः परदाररताश्च ये । अस्ब्रताश्च ये कष्टवृत्तयः पिशुनाः खलाः । बह्वाशिनः क्रूरचेष्टा दुरात्मानश्च निन्दिताः । इत्येवमादयोऽप्यन्ये पापिष्ठाः पुरुषाधमाः । एवंभूताः परित्याज्याः शिष्यत्वेनोपकल्पिताः । पापिने क्रूरचेष्टाय कृपणाय तथैव च । दीनायाचारशून्याय मन्त्रद्वेषकराय च । निन्दकाय च मूर्खाय तीर्थद्वेषपराय च । भक्तिहीनाय देवेशि ! न देया मालिनस्य च" "आचारे स्थापयेद्यस्तु स आचार्य्य उदाहृतः । य आचार्य्यपराधीनस्तद्वाक्यं धार्य्यते हृदि । शासने स्थिरवृत्तिश्च शिष्यः सद्भिरुदाहृतः । एवं लक्षणसंयुक्तं शिष्यं सद्गुणान्वितम् । अध्यापयेद्विधानेन मन्त्ररत्नमनुत्तमम्" पद्मपु० उ० २५ अ० ।

**शि(सि)ह्ल** पु० शिङ्-लक् नि० षस्य शो वा । (शिलारस) गन्धद्रव्यभेदे शब्दच० । स्वार्थे क । तत्रैव अमरः ।

**शी** शयने अदा०आत्म०अक० सेट् । शेते शेरते अशयिष्ट । शीङ् वर्त्तमाने क्त शयितः । शयित्वा ।

**शी** स्त्री शी-भावे क्विप् । १शयने २शान्तौ च शब्दर० ।

**शीक** सेके सर्पणे च भ्वा०आत्म० सक० सेट् । शीकते अशीकिष्ट । ऋदित् चङि न ह्रस्वः ।

**शीक** आमर्षे सेके च वा चु०उभ०पक्षे भ्वा०पर०सक० सेट् । शीकयति ते शीकति अशीशिकत्-त अशीकीत् ।

**शीकर** न० शीक-अरन् । १सरलद्रवे २वायौ पु० मेदि० । ३जलकणे अमरः ।

**शीघ्र** न० शिघि-रक् पृषो० । १विलम्बाभावे २त्वरिते च ३तद्वति त्रि० अमरः । ४दन्तीवृक्षे स्त्री राजनि० ।

**शीघ्रचेतन** पुंस्त्री० शीघ्रा चेतना यस्य । १कुक्कुरे शब्दमा० स्त्रियां ङीष् । २द्रुतचेतनायुते त्रि० ५ब० । ४वर्करुके पु० । ५अतिबलायां स्त्री राजनि० । [शब्दच० ।

**शीघ्रजन्मन्** पु०शीघ्रं जन्म यस्य । करञ्जभेदे (काँटाकरमचा)

**शीघ्रपुष्प** पु० शीघ्रं पुष्पं यस्य । वकवृक्षे राजनि० ।

**शीघ्रवेधिन्** पु० शीघ्रं विध्यति विध-णिनि । शीघ्रलक्ष्यवेधनकर्त्तरि हेमच० ।

**शीत** न०श्यै-क्त सम्प्र० सम्प्र० । १शीतले स्पर्शे २जले शब्दमा० ३हिमे च अमरः ४त्वचे राजनि० ५बहुवारवृक्षे ६वेतसवृक्षे च पु० अमरः । ७असनपर्ण्यां शब्दर० । ८पर्पटे ९निम्बे १०कर्पूरे राजनि० । ११हिमर्त्तौ च पु० १२शीतस्पर्शयुते त्रि० अमरः । १३अलसे त्रि० मेदि० । १४क्वथिते शब्दच० ।

**शीतक** पु०शीतमिव करोति कृ-ड । १दीर्घसूत्रिणि आलस्यहेतुना कार्य्याकरणाय शीतबाधामभिनीय २सुस्थिते मेदि० । शीत+स्वार्थे क । ३शीतपदार्थे ४शीतकाले मेदि० ५वृश्चिके शब्दमा० ६असनपर्ण्यां शब्दर० ।

**शीतकर** पु० शीतः शीतलः करो यस्य । १चन्द्रे २कर्पूरे च शीतकिरणादयोऽप्यत्र त्रि० । शीत करोति कृ-अच् । ३शीतकारके ।

**शीतकाल** पु०६त० । हिमर्त्तौ मार्गपौषमासद्वयात्मके काले

**शीतकुम्भ** पु० शीतं स्कुभ्नाति स्कुन्भ-अच् नि० । १करवीरे रत्नमा० । २जलजवृक्षभेदे स्त्री राजनि० गौरा० ङीष् ।

**शीतकृच्छ्र** पु० "त्र्यहं शीतं पिबेत् तोयं त्र्यहं शीतं पयः पिबेत् । त्र्यहं शीतं घृतं पीत्वा वायुभक्षपरस्त्र्यहम्" यमोक्ते व्रते ।

**शीतक्षार** न० कर्म० । श्वेतटङ्कणे राजनि० ।

**शीतगन्ध** न०शीतः शीतलः गन्धो यस्य । श्वेतचन्दने राजनि०

**शीतगु** पु० शीता गावः किरणाः यस्य । १चन्द्रे २कर्पूरे च

**शीतचम्पक** पु०शीतश्चम्पक इव । १दर्पणे २प्रदीपे च मेदि०

**शीतपर्णी** स्त्री शीतं पर्णं यस्याः ङीप् । अर्कपर्णिकायां रत्नमा० ।

**शीतपल्लवा** स्त्री शीतः पल्लवो यस्याः । भूमिजम्ब्वां रत्नमा०

**शीतपाकिनी** स्त्री शीतं पाकोऽस्त्यस्याः इनि ङीप् । काकोल्यां शब्दच० ।

**शीतपाकी** स्त्री शीतेन पाको यस्याः ङीप् । १वाट्यालके शब्दच० । २काकोल्यां राजनि० ।

**शीतपुष्प** पु० शीतं शीतवीर्य्यकरं पुष्पं यस्याः । १शिरीषवृक्षे

राजनि० । २अतिबलायां स्त्री टाप् । शैलेये न० अर्क-वृक्षे पु० राजनि० ।

**शीतप्रभ** पु० शीतस्य हिमस्येव प्रभा यस्य । कर्पूरे राजनि०

**शीतप्रिय** पु० ६त० । पर्पटे राजनि० । [च राजनि० ।

**शीतफल** पु० शीतं शीतवीर्यकरं फलमस्य । १उदुम्बरे २शेलौ

**शीतबला** स्त्री शीतं बलं वीर्य्यं यस्याः ५ब० । महासम-ङ्गायां राजनि० । [च शब्दर० ।

**शीतभानु** पु० शीताः शीतलाभानवोऽस्य । १चन्द्रे २कर्पूरे

**शीतभीरु** स्त्री ५त० । १मल्लिकायाम् अमरः । २शीतभीते त्रि०

**शीतमञ्जरी** स्त्री शीतकाले मञ्जरी यस्याः न कप् । शेफा-लिकायां राजनि० ।

**शीतमयूख** पु० शीता मयूखा यस्य । १चन्द्रे २कर्पूरे च मेदि० । शीतमरीच्यादयोऽप्यत्र शब्दर० ।

**शीतमूलक** न० शीतं शीतवीर्यकरं मूलमस्य कप् । १उशीरे (वेणारमूल) राजनि० । २शीतलमूलयुते त्रि० ।

**शीतरश्मि** पु० शीतारश्मयोऽस्य । १चन्द्रे २कर्पूरे च ज्यो०त

**शीतल** पु० शीतं लाति ला-क शीतमस्त्यस्य लच् वा । १शी-तस्पर्शे २तद्वति त्रि० । ३मलयोद्भवे चन्दने न० ४शैलेये-५पुष्पकासीसे च मेदि० । ६पद्मके ७मौक्तिके राजनि० । ८वीरणमूले न० शब्दच० । ९असनपर्ण्याम् अमरः । १०अ-श्ववारवृक्षे ११चम्पके १२राले १३चन्द्रे १४कर्पूरे पु० राजनि० । [पु० राजनि० ।

**शीतलक** न० शीतलमिव इवार्थे कन् । १श्वेतोत्पले २मरुवके

**शीतलच्छद** पु० शीतलः शीतलस्पर्शवान् छदोऽस्य । १चम्पके-राजनि० । कर्म० । २शीतले पत्रे पु० ।

**शीतलजल** न० शीतलं जलं यस्मात् ५ब० । १उत्पले राजनि० । कर्म० । २शीतले वारिणि न० ।

**शीतलवातक** पु० शीतलोवातो धातुभेदो यस्मात् कप् । असनपर्ण्यां शब्दच० । तत्सेवने हि वायोः शीतलता ।

**शीतला** स्त्री १देवीभेदे "नमामि शीतलां देवीं रासभस्थां दिगम्बरीम् । मार्जनीकलशोपेतां सूर्पालङ्कृतमस्तकाम्" स्कान्दपु० । सा च विस्फोटकभेदनाशिनी । २आबजवृक्ष-भेदे रत्नमा० तत्र ङीप् । ३कुटुम्बिनीवृक्षे ४आरा-मशीतलायां ५बालुकायां स्त्री राजनि० टाप् ।

**शीतवल्क** पु० शीतः शीतकरः वल्कोऽस्य । उदुम्बरे राजनि०

**शीतवीर्य्यक** पु० शीतं शीतलकरं वीर्यं यस्मात् ५ब० । कप् । १प्लक्षवृक्षे राजनि० । २शीतलवीर्य्यकरे त्रि० ।

**शीतशिव** न० शीतं शीतलमपि शिवम् । १सैन्धवलवणे २शैले-यनामगन्धद्रव्ये अमरः । ३मिश्रेयायां ४शमीवृक्षे च स्त्री राजनि० ५सक्तुफलवृक्षे मेदि० ६मधुरिकायां पु० अमरः ।

**शीतसह** पु० शीतं सहते सह-अच् । १पीलुवृक्षे शब्दच० । २नीलसिन्धुवारे ३वासन्त्यां स्त्री राजनि० टाप् ।

**शीता** स्त्री श्यै-क्त सम्प्र० । १लाङ्गलपद्धतौ भरतः २राम-पत्न्यां शब्दच० ३अतिबलायां ४कुटुम्बिन्यां ५दूर्वायां ६शिल्पिकाख्ये राजनि० ।

**शीतांशु** पु० शीताः अंशवो यस्य । १चन्द्रे २कर्पूरे च राजनि०

**शीताङ्गी** स्त्री शीतमङ्गमस्याः ङीप् । १हंसपदीवृक्षे रा-जनि० २शीतलदेहयुते त्रि० स्त्रियां ङीप् ।

**शीताद** पु० शीतमादत्ते आ+दा-क । दन्तमूलगते रोगभेदे दन्तरोगशब्दे ३४६६ पृ० दृश्यम् ।

**शीतार्त्त** त्रि० शीतेन ऋतः । शीतालौ जटा० ।

**शीतालु** त्रि० शीत+अस्त्यर्थे आलुच् । शीतबाधायुक्ते जटा० ।

**शीतावला** स्त्री शीतमावलयति आ+वल-णिच्-अण् । महासमङ्गायां राजनि० ।

**शीताश्मन्** पु० कर्म० । चन्द्रकान्तमणौ राजनि० ।

**शीतीभाव** पु० शीत+अभूततद्भावे च्वि-भू-भावे घञ् । मोक्षे त्रिका० । तत्र तापत्रयशून्यत्वात्तथात्वम् ।

**शीतोत्तम** न० शीतमुत्तमं यत्र । जले शब्दच० ।

**शीत्कार** पु० शीदित्यस्य कारः शीत्+कृ-घञ् । स्त्रीणां रति काले अव्यक्ते ध्वनिभेदे जटा० । [अमरः ।

**शी(सी)त्य** त्रि० शी(सी)ताम् अर्हति यत् । हलकृष्टे क्षेत्रादौ

**शीधु** पु०न० । शी-धुक् । इक्षुरसजाते मद्यभेदे अमरः ।

**शीधुगन्ध** पु० शीधोरिव गन्धोऽस्य । बकुलवृक्षे त्रिका० ।

**शीन** त्रि० श्यै-क्त सम्प्र० तस्य नः । १घनीभूते घृतादौ २मूर्खे ३अजगरे च पु० मेदि० । [शीभते अयोभिट ।

**शीभ** कथने भ्वा० आत्म०सक० सेट् ऋदित् चङि न ह्रस्वः ।

**शीर** पुं स्त्री० शी-रक् । अजगरसर्पे शब्दच० स्त्रियां ङीष् ।

**शीरिन्** पु० शीरस्तदाकारोऽस्त्यस्य । हरिदर्भे राजनि० ।

**शीर्ण** त्रि० शॄ-क्त । १कृशे २शुष्कताप्राप्ते च मेदि० ३स्थौ णेयके भावप्र० ।

**शीर्णपत्र** पु० शीर्णं पत्रमस्य । १कर्णिकारवृक्षे शब्दच० । २निम्बे ३पट्टिकालोध्रे च राजनि० ४विशीर्णपत्रयुते त्रि० । कर्म० । ५विशीर्णे पर्णे न० ।

**शीर्णपर्ण** पु० शीर्णं पर्णमस्य । १निम्बे राजनि० २विशी-र्णपत्रयुक्ते त्रि० कर्म० । ३विशीर्णे पत्रे न० ।

**शीर्णपाद** पु० शीर्णः पादोऽस्य मातृशापात् । शनैश्चरे

त्रिका० तत्कथा छायाशब्दे २९८६ पृ० दृश्या । शीर्णा-
ङ्घ्रि पञ्चतयोऽप्यत्र ।

**शीर्णपुष्पी** स्त्री शीर्णं पुष्पमस्याः ङीप् । शताकपुष्प्यां शब्दच० वा कप् । शीर्णपुष्पिका तत्रैव ।

**शीर्णमाला** स्त्री शीर्णानां माला यत्र । १पृश्निपर्ण्यां शब्दच० । कर्म० । २विशीर्णे माल्ये ।

**शीर्णवृन्त** न० शीर्णं वृन्तमस्य । (तरमुज) फलवृक्षे शब्दच० ।

**शीर्वि** त्रि० शॄ-क्विन् न वलोपः । १अपकारके २हिंसके च सि०कौ० ।

**शीर्ष** न० शिरस्+पृषो० शीर्षादेशः शॄ-क सुक् च वा । १मस्तके अमरः । २कृष्णागुरुणि राजनि० । शसादौ शीर्ष्णः शीर्ष्णा इत्यादि ।

**शीर्षक** न० शीर्षं कायति कै-क । १शिरस्त्राणे ( टोपर ) २शिरोऽस्थ्नि राजनि० । ३जयपराजयपत्रस्थाप्यदण्डभेदे "शीर्षकस्थोऽभियोक्तारि" याज्ञ० स्मृतिः । स्वार्थे क । ४मस्तके न० । तेन कायति कै-क । ५राहुग्रहे शब्दर० ।

**शीर्षच्छेद्य,दिक** त्रि० शीर्षच्छेदमर्हति यत् ठन् वा । वध्ये "शीर्षच्छेद्यमतोऽहं त्वाम्" भट्टिः ।

**शीर्षण्य** पु० शीर्षे बध्यते शीर्ष+यत् शीर्षन्नादेशः । १शिरस्त्राणे अमरः । शीर्षे भवः यत् । २विशदकचे पु०अमरः ३विशदकचयुते त्रि० ।

**शीर्षरक्ष** न० शीर्षं रक्षति रक्ष-अण् । शिरस्त्राणे हारा० ।

**शील** समाधौ भ्वा० पर०सक० सेट् । शीलति अशीलीत् । "सरसीः परिशीलितुं मया" नैषधम् । समाधिरत्र सेवा तत्र सक० प्रवृत्तिभेदो वा तत्र अक० । क्त वर्त्तमाने क्त । [शीलयति ते अशिशीलत् त ।

**शील** अभ्यासे अतिशायने च अद० चु० उभ० सक० सेट् ।

**शील** न० शील-अच् । १स्वभावे २सद्वृत्ते मेदि० ३चरित्रभेदे ४अजगरसर्पे पुंस्त्री०शब्दच० स्त्रियां ङीष् । सद्वृत्तशीलस्य त्रयोदशविधं हारीतोक्तं यथा "ब्रह्मण्यता१ देवपितृभक्तता२ सौम्यता३ अपरोपतापिता४ अनसूयता५ मृदुता६ अपारुष्य७ मैत्रता८ प्रियवादिता९ कृतज्ञता१० शरण्यता११ कारुण्यता१२ प्रशान्तिश्चेति १३त्रयोदशविधं शीलम् । १४रागद्वेषपरित्यागे मनुटी० गोविन्दराजः । १५कौण्डिन्यमुनिपत्न्यां स्त्री ।

**शीलन** न० शील-ल्युट् । १अभ्यासे २अतिशायने ३प्रवर्त्तने च

**शीलित** त्रि० शील-क्त । १अभ्यस्ते २चीर्णे च त्रिका० ।

**शीवन्** पु० शी-क्वनिप् । अजगरसर्पे सि०कौ० ।

**शुक** गतौ भ्वा० पर० सक० सेट् । शोकति अशोकीत् ।

**शुक** न० शुक-क । १ग्रन्थिपर्णे अमरः । २वस्त्रे ३वस्त्राञ्चले ४शिरस्त्राणे हेमच० । ५व्यासपुत्रे "पराशरकुलोत्पन्नः शुको नाम महायशाः । व्यासादरण्यां संभूतो विधूमोऽग्निरिव ज्वलन्" वह्निपु० । (शुया) इति ख्याते ६खगभेदे पु० स्त्री स्त्रियां ङीष् । शुकदर्शनशुभादिकं वसन्तराजशाकुने उक्तं यथा "वाम पठन् राजशुकः प्रयाणे शुभं भवेद् दक्षिणतः प्रवेशे । वनेचराः काष्ठशुकाः प्रयातुः क्षुर्विविदाः संमुखमापतन्तः" । ७रावणमन्त्रिभेदे ८शिरीषवृक्षे (शेयालकाँटा) ९वृक्षे रत्नमा० १०कश्यपपत्न्याः ताम्रायाः कन्याभेदे स्त्री ङीप् । "काकीं श्येनीं तथा भासीं धृतराष्ट्रीं तथा शुकीम् । ताम्रा तु सुषुवे देवी पञ्चैता लोकविश्रुताः" भा० आ० ६६अ० ।

**शुकच्छद** न० शुकस्य छदइव छदो दलमस्य । ग्रन्थिपर्णे जटा० ।

**शुकजिह्वा** स्त्री शुकस्य जिह्वेव पर्णमस्याः । ( शुयाठोँटी ) वृक्षे रत्नमा० । [द्योऽप्यत्र ।

**शुकतरु** पु० शुकप्रियस्तरुः । शिरीषवृक्षे रत्नमा० । शुकद्रुमा-

**शुकदेव** पु० व्यासपुत्रे मुनिभेदे । [शुकजिह्वावृक्षे रत्नमा० ।

**शुकनामन्** पु० शुकः शुकजिह्वा नामास्य मध्यपदलोपः ।

**शुकनाशन** पु० शुकं नाशयति नश-णिच्-ल्यु । दद्रुघ्ने वृक्षे राजनि० ।

**शुकनास** पु० शुकस्य नासेव पत्रमस्याः । श्योनाकवृक्षे अमरः । २शुकतुल्यनासायुक्ते त्रि० । ३कादम्बरीग्रन्थप्रसिद्धे तारापीडस्य मन्त्रिभेदे पु० । [शब्दच० ।

**शुकपिण्डी** पु० शुकानां प्रिया पिण्डीव । शुकशिम्ब्यां

**शुकपुच्छ** पु० शुकस्य पुच्छइव । १गन्धके हेमच० । ६त० । २शुकस्य पुच्छे पु० । [राजनि० ।

**शुकपुष्प** पु० शुकइव हरित् पुष्पमस्य । १शिरीषवृक्षे

**शुकप्रिय** पु० ६त० । १शिरीषवृक्षे भावप्र० । २जम्ब्वां स्त्री राजनि० ।

**शुकफल** पु० शुकइव फलमस्य । अर्कवृक्षे राजनि० [शब्दच०

**शुकबर्ह** न० शुकस्येव बर्होऽस्य । गन्धद्रव्यभेदे (गाँटियाला)

**शुकवल्लभ** पु० ६त० । १दाडिमवृक्षे राजनि० ६त० । तस्य २प्रिये त्रि० । [शब्दर० ।

**शुकशि(सि)म्बी** स्त्री शुकइव शि(सि)म्बी । कपिकच्छ्वां

**शुकादन** पु० शुकैरद्यते अद-ल्युट् । दाडिमे शब्दच० ।

**शुकानना** स्त्री शुकस्याननमिव पत्रमस्याः । (शुयाठोँटी) वृक्षे रत्नमा० ।

**शुक्तोदर** न० शुक्त्योदरमिव। १तालीशपत्रे राजनि०। ६त०। २शुक्त्योदरे च।

**शुक्त** न० शुच–क्त। १मांसे शब्दच०। २काञ्जिके हारा०। ३अभिषुतद्रवद्रव्यभेदे "कन्दमूलफलादीनि सस्नेहलवणानि च। यद्‌द्रव्ये अभिषूयन्ते तच्छुक्तमभिधीयते" "शुक्तं तीक्ष्णोष्णलवणं पित्तकृत् कटुकं लघु। रूक्षं हृद्यं दराचक्षुद्यार्शोविषकृत्" राजनि० "शुक्तं यन्मधुरं कालवशादम्लत्वमागतम्" इत्युक्ते ४पदार्थे च।
शुक्तभक्षणनिषेधो यथा "अपूपाश्च करम्भाश्च धानावटकसक्तवः। शाकं मांसमपूपं च सूपं कृशरमेव च। यवागूः पायसञ्चैव यच्चान्यत् स्नेहसम्भवम्। सर्वं पर्युषितं भक्ष्यं शुक्तञ्च परिवर्जयेत्" यमः। तत्प्रतिप्रसवो यथा "दधि शुक्तेषु भोक्तव्यं सर्वञ्च दधिसम्भवम्" मनुः। ६निष्ठुरे त्रि०मेदि० ७पूते ८अस्ते त्रि०विश्व०। ९श्लिष्टे १०निर्जने शब्दच० ११चुक्रिकायां स्त्री शब्दर०।

**शुक्ति** स्त्री शुच–क्तिन्। १जलजन्तुभेदे (झिनुक) राजनि० २कपालखण्डे ३शङ्खे ४शङ्खनखे ५नख्याम् ६अर्शोरोगे ७अश्वावर्त्ते च मेदि०। ८नेत्ररोगभेदे हेमच०। चक्षूरोगशब्दे २८४४ पृ० दृश्यम्। ९कर्षद्वयपरिमाणे शब्दमा० १०चतुष्कर्षमाने वैद्यकम्। [२चुक्रियायाञ्च शब्दर०।

**शुक्तिका** स्त्री शुक्तिरेव कन्। (झिनुक) १मुक्तास्फोटे जटा०

**शुक्तिज** न० शुक्तौ जायते जन–ड। मुक्तायां हेमच०।

**शुक्तिमत्** पु० शुक्तिरस्त्यस्य मतुप्। १कुलाचलपर्वतभेदे २नदीभेदे स्त्री ङीप्।

**शुक्र** न० शुच–रक् नि० कुत्वम्। १मज्जजाते २चरमधातौ अमरः। ३नेत्ररोगभेदे २८४४ पृ० दृश्यम्। ५दैत्यगुरौ ग्रहभेदे अमरः। ६अग्नौ ७चित्रकद्रुमे ८ज्येष्ठमासे अमरः विष्कम्भादिषु योगेषु मध्ये ९चतुर्विंशे योगे च पु०ज्यो०त०। धातुभेदशुक्रस्योत्पत्तिकारणस्वरूपादिकं भावप्र० उक्तं यथा "रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते। मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रस्य सम्भवः"।
"ततः स्थूलो भागो रसो मासेन पुंसां शुक्रं स्त्रीणामार्त्तवं शुक्रञ्च भवति। उक्तञ्च सुश्रुते "एवं मासेन रसः शुक्री भवति" 'स्त्रीणाञ्चेति'। चकारात् स्त्रीणामपि शुक्रं भवति। अतएवोक्तं सुश्रुते "यापितोऽपि स्रवत्येव शुक्रं पुंसः समागमे। तत्र गर्भस्य किञ्चित्तु करोतीति न चिन्त्यते"। गर्भस्य शुक्रस्य विकृतस्य तु शुद्धेश्च कारणं तदपि भवति। यत उक्तम् "यदा नार्यावुपेयातां वृषस्यन्त्यौ कथञ्चन। मुञ्चन्त्यौ शुक्रमन्योऽन्यमनस्थि तत्र जायते" इति। एतेन स्त्रीणां सप्तमो धातुरार्त्तवं शुक्रमष्टम इति बोधितम् आशयाधिक्यवत्। "स्त्रीणां गर्भोपयोगि स्यादार्त्तवं सर्वसम्मतम्। तासामपि बलं वर्णं शुक्रं पुष्टिं करोति हि"। एवं रस एव केदारकुल्यान्यायेन सर्वान् धातून् परयन् मासेन नवदलोत्तरेण शुक्रमार्त्तवं च भवतीति सिद्धान्तः। एवं सति रसाद्रक्तमिति सङ्गतमेव। ततो मांसन्ततो रक्तोत्पत्तेरनन्तरं मांसं जायते रसादेवेत्यर्थः। मांसान्मेदः प्रजायत इति। मांसादनन्तरं मेदः प्रजायते रसादेवेत्यर्थः। मेदसोऽस्थि जायते रसादेवेत्यर्थः। एवं ततो मज्जा अपे शुद्धं शुक्रं सम्भवतीत्यर्थः। रसः शरीरे त्रिधा सञ्चरति। तथा चोक्तम् "रसः शरीरे शब्दार्चिर्जलसन्तानवत् त्रिधा। सञ्चरत्यनुरूपोऽयं नित्यमेव हि देहिनाम्"। अस्यायमभिप्रायः। पुरुषास्तीक्ष्णाग्नयो मध्यमाग्नयो मन्दाग्नयश्च भवन्ति। तत्र तीक्ष्णाग्नीनां स रसः शब्दसन्तानवत् शीघ्रं सञ्चरति। मध्यमाग्नीनामर्चिःसन्तानवन्मध्यवेगेन चरति मन्दाग्नीनां जलसन्तानवन्मन्दं चरति। तेन मासेन रसः शुक्रं भवतीति यदुक्तम् तन्मध्यवेगेन चरति। मन्दाग्नीनां जलसन्तानवन्मन्दं चरति। तेन मासेन रसः शुक्रं भवतीति यदुक्तं तन्मध्यमाग्नीनधिकृत्योक्तम्। दीप्ताग्नीनान्तु रसः किञ्चिन्न्यूनेन मासेन शुक्रं भवति। मन्दाग्नेः किञ्चिदधिकेन मासेनेति सिद्धान्तः। तर्हि वाजीकरणानामोषधीनां किं प्रयोजनमित्यत आह "वाजीकरिण्यश्च ओषध्यः स्वप्रभावगुणोच्छ्रयात्। विरेचयन्ति वाः शुक्रं विरेकिद्रव्यवद्‌गुणाम्"। वाजीकरिण्यः याभिः ओषधीभिः पुरुषः शुक्राधिक्यात् स्त्रीषु वाजिवत् सामर्थ्यं प्राप्नोति ताः वाजीकरिण्यः स्वप्रभावगुणोच्छ्रयात्। तत्र काश्चिदोषध्यः स्वप्रभावाधिक्यात्, काश्चित् स्वगुणाधिक्यात्, काश्चित् स्वप्रभावगुणाधिक्यात्। तत्र सङ्कल्पपाटलेपविशिष्टकान्तास्पर्शादयः स्वप्रभावाधिक्यात् शुक्रं विरेचयन्ति। घृतक्षीरादयः स्वगुणाधिक्यात्। स्निग्धत्वाधिक्यात् माषादयः स्वप्रभावस्निग्धत्वादिगुणाधिक्यात्। वाजीकरण्य इति बहुवचनमाद्यार्थानुवर्त्तनम्। बल्या वृष्या जीवनीयगणादयः तद्वद्‌बोद्धव्याः। विरेचयन्ति स्वप्रभावगुणाधिक्यात् शीघ्रमेवं रसाद्युत्पादनद्वैकं शुक्रं जनयित्वा नर्त्तयन्ति। यत आह "दुग्धं

मासाश्च मज्जाः फलमज्जामज्जानि च। अनकानि निगच्छन्ते रेचनानि च रेतसः"। ननु बालानां कथं शुक्रं न दृश्यते इत्यत आह "बालानां शुक्रमस्त्येव किन्तु सौक्ष्म्यान्न दृश्यते। पुष्पाणां मुकुले गन्धो यथा सन्नपि नाप्यते। तेषां तदेव तादृशं पुष्टत्वादुन्मिषतीति हि। कुसुमानां प्रफुल्लानां गन्धः प्रादुर्भवेद्यथा। रोमराज्यादयः पुंसां नारीणामपि यौवने। जायतेऽस्य च यो भेदो ज्ञेयो व्याख्यानतः स च"। व्याख्यानं यथा पुंसां रोमोराजीश्मश्रुप्रभृतयः नारीणान्तु रोमराजीस्तनकान्त्यार्त्तवप्रभृतयः। ननु, मज्जरसो हृद्यस्य धातुवृद्धिं कथं न करोतीत्याह "वार्द्धके वर्द्धमानेन वायुना रसशोषणात्। न तथा धातुवृद्धिः स्यात्ततस्तानिलं जयेत्"। अथ शुक्रस्य स्वरूपमाह "शुक्रं सौम्यं सितं स्निग्धं बलपुष्टिकरं स्मृतम्। गर्भबीजं वपुःसारो जीवस्याश्रय उत्तमः"। जीवस्याश्रय उत्तम इत्याह "जीवो वसति सर्वस्मिन् देहे तत्र विशेषतः। वीर्ये रक्ते मले यस्मिन् क्षीणे याति क्षयं क्षयात्"। अथ गर्भसञ्जननशुक्रस्य लक्षणमाह "स्फटिकाभं द्रवं स्निग्धं मधुरं मधुगन्धि च। शुक्रमिच्छन्ति केचित्तु तैलक्षौद्रनिभञ्च तत्"। अथ शुक्रस्य स्थानमाह "यथा पयसि सर्पिस्तु गूढश्चेक्षौ रसो यथा। एवं हि सकले काये शुक्रं तिष्ठति देहिनाम्"। अत्र सर्पिर्दृष्टान्तो बहुशुक्रेऽल्पमथनेन सर्पिःशुक्रयोर्लाभात्। इक्षुरसदृष्टान्तस्तु स्वल्पशुक्रे पुंसि अतिपीडनेनेक्षुरसशुक्रयोर्लाभात्। अथ शुक्रस्य क्षरणमार्गमाह "द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाप्यधः। मूत्रस्रोतपथे शुक्रं पुरुषस्य प्रवर्त्तते"। इदमेवागभटोऽप्याह "सप्तमी शुक्रधरा द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाप्यधोमूत्रमार्गमाश्रिता सकलशरीरव्यापिनी शुक्रं प्रवर्त्तयतीति। सप्तमी कला। अथ शुक्रक्षरणकारणमाह "तत्स्त्रीदेहस्थितं शुक्रं प्रसन्नमनसस्तथा। स्त्रीषु व्यायच्छतश्चापि हर्षात्तत् सम्प्रवर्त्तते"। स्त्रीषु रतरूपं व्यायामं कुर्वतः। अन्यच्च "शुक्रं कामेन कामिन्या दर्शनात् स्पर्शनादपि। शब्दसंश्रवणात् ध्यानात् संयोगाच्च प्रवर्त्तते"।

दैत्यगुरोः शुक्रनामकारणं काशीख० १७अ०उक्तं यथा "नन्दिनाऽपकृते शुक्रे गिलिते च विषादिना" इत्युपक्रमे "तेन शब्देन महता शुक्रः शम्भूदरे स्थितः। छिद्रान्वेषी भ्रमन् सोऽथ विनिर्गतो यथानियम्। सप्त लोकान् सपातालान् रुद्रदेहे विलोकयन्। ब्रह्मनारायणेन्द्राणां सादित्याप्सरसां तथा। भुवनानि विचित्राणि युद्धञ्च प्रमथासुरम्। वत्सराणां शतं कुक्षौ भवस्य परितो भ्रमन्। ततः स ददृशे रन्ध्रं शुचेरन्ध्रं खला यथा। शाम्भवेनाथ योगेन शुक्ररूपेण भार्गवः। चस्कन्द च सनामापि ततो देवेन भाषितः। जठराद्विनिर्गते शुक्रे देवोऽपि सुसुदेतराम्। मूत्र श्रेयो भवेद् यस्मै न स्थितो जठरे द्विजः। शुक्रवन्नि:सृतो यस्मात्तस्मात्त्वं शुक्रवन्दन। कर्मणानेन शुक्रोऽपि मम पुत्रोऽसि गम्यताम्"।

शुक्रस्य स्वरूपादि बृहज्जातके षड्योन्यध्याये उक्तं दृश्यम्। तत्कक्षादिमानं खगोलशब्दे २४२५पृ०दृश्यम्।

**शुक्रकर** पु० शुक्रं वीर्यं करोति कृ-अच्। मज्जधातौ हेमच०। अलङ्कारशब्दे ५५८पृ० दृश्यम्। वीर्यकारके त्रि०।

**शुक्रभुज** स्त्री शुक्रं भुङ्क्ते भुज-क्विप्। मयूरजातिस्त्रियां शब्दच०। [अलङ्कारशब्दे तद्बहुलता दृश्या।

**शुक्रभू** पु० भवत्यस्मात् भू-अपादाने क्विप्। मज्जधातौ शब्दच०।

**शुक्रला** स्त्री शुक्रं लाति ला-क। उड्डूटाहृत्ते भरतः।

**शुक्रशिष्य** पु० ६त०। दैत्ये असुरे अमरः।

**शुक्रिय** त्रि० शुक्रो देवताऽस्य तस्येदम् वा घ। १शुक्रसम्बन्धिनि २तद्देवते यजुर्वेदीये "अच्छं वाचमि"त्यादिके षट्त्रिंशत्तमे ३यान्त्याध्याये न०।

**शुक्ल** न० शुच-लक् कुत्वम्। १रजते मेदि०। २नवनीते शब्दच०। ३अक्षिरोगभेदे चक्षूरोगशब्दे २८४४पृ०दृश्यम्। ४श्वेतवर्णे ५श्वेतवर्णयुते त्रि० अमरः। ६पक्षे च त्रि०। ७विष्कम्भादिषु योगभेदे मेदि०। ८श्वेतैरण्डे राजनि०। १०शुक्लपक्षे ज्यो०त०। "तत्र पक्षावुभौ मासे शुक्लकृष्णौ क्रमेण हि। चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः" अष्टाविंशतितत्त्वम्। शुक्लवर्णपदार्थास्तु कविकल्पलतायां कतिचित् उक्ता यथा "सुधांशुमेषःश्रवाः शम्भुः कीर्त्तिर्जह्नुतनुजा शरद्घनाः। प्रासादसौधतगरमन्दारद्रु हिमालयः। सूर्येन्दुकान्तकर्पूरकरका रजतं हली। निर्मोकभस्मडिण्डीरचन्दनं करका हिमम्। हारोर्णनाभकान्त्यस्थि स्वर्गङ्गाभरदाम्बकम्। शेषाहिः शर्करा दुग्धं दधि शङ्खा सुधा जलम्। मृणालसिकताहंसबककैरवचामरम्। रम्भागर्भं पुण्डरीकं केतकीशङ्खनिर्झराः। लोध्रर्क्षिह ध्वजच्छत्रं चूर्णशुक्तिकपर्दिकाः। सन्नाक्तकुसुमनखवदन्तगुणयोगमनोगुणाः। कैलासकाशकर्पासहासवासव-

कञ्चराः। नारदः पारदः कुन्दस्फटिकास्फटिकादयः"।

**शुक्लकण्ठ** पुंस्त्री० शुक्लः कण्ठो यस्य। दात्यूहखगे शब्दमाला। स्त्रियां ङीष्।

**शुक्लकन्द** पु० शुक्लः कन्दो यस्य। १महिषकन्दे २अतिविषायां स्त्री राजनि०। कर्म०। ३श्वेते कन्दे।

**शुक्लक्षीरा** स्त्री शुक्लं क्षीरं निर्यासो यस्याः। काकोल्यां राजनि०। [जटा०।

**शुक्लकर्म्मन्** त्रि० शुक्लं शुद्धं कर्म यस्य। पवित्रे शुभचरित्रे

**शुक्लकुष्ठ** न० कर्म०। श्वेतकुष्ठे (धवल)। [निर्यासयुते त्रि०।

**शुक्लदुग्ध** पु० शुक्लं दुग्धमस्य। १शृङ्गाटके शब्दच० २श्वेत-

**शुक्लधातु** पु० कर्म०। कठिन्यां (खड़ि) हेमच० २श्वेतधातौ च

**शुक्लपक्ष** पु० कर्म०। १दर्शानुपद्धचन्द्रकलाक्रियापञ्चदशकालके चान्द्रमासार्द्धे श्वेतच्छदे २बके पुंस्त्री०। स्त्रियां ङीष्।

**शुक्लपुष्प** पु० शुक्लं पुष्पमस्य। १छत्राकवृक्षे २कुन्दवृक्षे ३मरुवके च रत्नमा०। ४श्वेतपुष्पयुते त्रि०। ५नागदन्त्यां ६शीतकुम्भ्यां स्त्री रत्नमा० ङीप्। कर्म०। ७शुभ्रे पुष्पे न०।

**शुक्लपृष्ठक** पु० शुक्लं पृष्ठमस्य कप्। सिन्धुकवृक्षे शब्दच०।

**शुक्लयजुस्** न० कर्म०। इषेत्वेत्यादि चत्वारिंशदध्यायात्मके यजुर्वेदभेदे। [२तद्वति त्रि०। ३तथाभूतवृक्षे पु०राजनि०।

**शुक्लरोहित** पु० वर्णोवर्णेनेति कर्म०। १श्वेतरक्ते वर्णे

**शुक्लला** स्त्री शुक्लं लाति ला–क। वज्रटायां रत्नमा०।

**शुक्लवायस** पुंस्त्री० कर्म०। १बके त्रिका० २श्वेतकाके च। स्त्रियां ङीष्।

**शुक्लशाल** पु० कर्म०। १गिरिनिम्बे राजनि० २श्वेतवर्णवृक्षे च

**शुक्ला** स्त्री शुक्ल+अर्श आद्यच् टाप्। १सरस्वत्यां त्रिका०। २शर्करायां शब्दच०। ३काकोल्यां ४विदार्य्यां ५स्नुह्यां राजनि०। ६श्वेतवर्णवत्यां स्त्रियाम्।

**शुक्लाङ्गी** स्त्री शुक्लमङ्गमस्याः ङीष्। १शेफालिकायां राजनि०। २श्वेताङ्गयुक्ते त्रि०। [स्त्रियां ङीष्।

**शुक्लापाङ्ग** पुंस्त्री० शुक्लः अपाङ्गो यस्य। मयूरे हेमच०।

**शुक्लाम्ल** न० कर्म०। चुक्रशाके राजनि०।

**शुक्लार्म्मन्** न० नेत्ररोगभेदे भावप्र० ४४२८पृ० दृश्यम्।

**शुक्लिमन्** पु० शुक्लस्य भावः इमनिच्। श्वेतवर्णे।

**शुक्लोपला** स्त्री कर्म० व वस्यस्याः अच्। शर्करायां रत्नमा०

**शुङ्ग** पु० शम–ग तस्य नेत्त्वं नि० अत उत्त्वञ्च। १वटवृक्षे २आम्रातके ३शूके च मेदि०। ४पर्पटीवृक्षे ५धान्यादिशूके च स्त्री राजनि०।

**शुङ्गाकर्म्मन्** न० शुङ्गैः वटपल्लवैः क्रिया यस्य कर्म० यत्र। गर्भमासंस्कारभेदे "पुंसवने चन्द्रनाम्ना शुङ्गाकर्म्मापि शोभनः" ति०त०। [२शुङ्गवति त्रि०।

**शुङ्गिन्** पु० शुङ्गोऽस्त्यस्य इनि। १वटवृक्षे २प्लक्षवृक्षे जटा०

**शुच** शोके क्लेदे च दिवा० उभ० अक० सेट्। शुच्यति ते इरित् अशुचत्–अशोचीत् अशोचिष्ट ईदित् शुक्तः। अनु+किञ्चिद्दुःखेन पश्चात्तापे सक०। अनुशोचति।

**शुच** शोके भ्वा० पर० सक० सेट्। शोचति अशोचीत्।

**शुच्** स्त्री शुच–क्विप्। शोके अमरः। वा टाप्। तत्रैव।

**शुचि** पु० शुच–कि। १वह्नौ २चित्रकवृक्षे ३आषाढ़मासे ४शृङ्गाररसे अमरः। ५ज्यैष्ठमासे मेदि० ६शुक्लाचरणे ७ग्रीष्मे ऋतौ ८शुद्धमन्त्रिणि मेदि०। १०अग्निभेदे "पावकः पवमानश्च शुचिरग्निश्च ते त्रयः। निर्मथ्यः पवमानः स्यात् वैद्युतः पावकः स्मृतः। यश्चासौ तपते सूर्य्यः शुचिरग्निस्त्वसौ स्मृतः" कूर्मपु० १२अ०। ११श्वेतवर्णे १२तद्वति त्रि० अमरः। शुचित्वञ्च शौचं शुद्धता वैदिककर्माहत्वप्रयोजकः संस्कारविशेषः। "शुचिस्तु काञ्जीवी कर्म कुर्यात्" श्रुतौ शौचस्य कर्माङ्गत्वं, स च स्नानादिजन्यः पुण्यभेदो वा। १३सूर्य्ये च "तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः" सूर्य्यस्तवः। १४अर्कवृक्षे १५काश्यपपत्न्यास्ताम्रायाः कन्याभेदे स्त्री "षट्सुताश्च महासत्त्वास्ताम्रायाः परिकीर्त्तिताः। शुकी श्येनी च भासी च सुग्रीवी शुचिगृध्रिके" गरुड़पु० ६अ०। १६शुद्धे १७अनुपहते त्रि० मेदि०।

**शुचिद्रुम** पु० कर्म०। अश्वत्थवृक्षे राजनि०।

**शुचिमल्लिका** स्त्री कर्म०। नवमल्लिकायां राजनि०।

**शुच्य** स्नाने अक०अभिषवे सन्धने पीड़ने सन्धाने च सक०भ्वा० पर० सेट् ईदित् निष्ठा अनिट्। शुच्यति अशुच्यीत्।

**शुटीर** पु० शौटीर+पृषो०। वीरे त्रिका०।

**शुठ** गतिविघाते भ्वा०पर०सक० सेट्। शोठति अशोठीत्।

**शुठ** आलस्ये चु०उभ०सक०सेट्। शोठयति ते अशूशुठत् त।

**शुठ** शोषने वा चु० उभ० पक्षे भ्वा०पर० सक० सेट् इदित्। शुण्ठयति ते शुण्ठति अशुशुण्ठत् त अशुण्ठीत्।

**शुण्ठि(ण्ठी)** स्त्री शुठि–इन् वा ङीप्। (सुँट) शुष्कार्द्रके "शुण्ठी रुच्यानवातघ्नी पाचनी कटुका लघुः। स्निग्धोष्णा मधुरा पाके कफवातविबन्धनुत्। इष्या स्वर्य्या च निश्वासश्वासकासहृदामयान्। हन्ति श्लीपदशोथार्शः-स्तोयांश परिशोषयेत्" भावप्र०।

**शुण्ठ्य** न० शठि-यत्। शुण्ठ्याम् शब्दच०।

**शुण्ड** पु० शुन-ड तस्य नेत्त्वम् । १मदनिर्झरे हेमच० । २गजहस्ते पुंस्त्री० स्त्रीत्वे टाप् । ३मद्यपानस्थाने ४वेश्यायां ५सुरायां ६जलहस्तिन्यां स्त्री मेदि० । ७नलिन्यां विश्वः । ८कुट्टिन्याञ्च स्त्री शब्दमा० ।

**शुण्डापान** न० शुण्डा सुरा पीयतेऽत्र पा-आधारे ल्युट् । १मद्यपानस्थाने अमरः । ६त० । २मद्यपाने च ।

**शुण्डार** पु० शुण्डा अस्त्यर्थे र । १शौण्डिके शब्दच० २हस्तिनि च । अपकर्षे र । ३अपकृष्टशुण्डायाम् स्त्री । अच् । शुण्डाल हस्तिनि धनञ्जयः । [शब्दच० ।

**शुण्डिन्** पु० शुण्डाऽस्त्यस्य इनि । १हस्तिनि २शौण्डिके

**शुण्डिमूषिका** स्त्री शुण्डिनो मूषिकेव । छुछुन्दर्य्यां (छुँछ) राजनि० । [(हातिशुँडा) वृक्षे राजनि० ।

**शुण्डी** स्त्री शुण्डाकारोऽस्त्यस्याः अच् गौरा० ङीष् ।

**शुद्ध** न० शुध-क्त । १सैन्धवलवणे २मरिचे च राजनि० । ३केवले ४निर्दोषे ५पवित्रे मेदि० । ६शुभ्रे च त्रि० ।

शुद्ध्यशुद्धी शास्त्रगम्ये संस्काररूपे यथोक्तं

"शुद्ध्यशुद्ध्योः संस्काररूपत्वेन एकपुरुषस्यैकदोभयस्थिति र्घटते । शुद्धेर्भावरूपत्वे अशुद्धेस्तदभावरूपत्वे नैतत् विरोधात् । अतएव मनुः "ततः श्राद्धमशुद्धो ऽपि कुर्य्यादेकादशे तथा । कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः" अशुद्धौ चतुर्थाहादौ । कथमशुद्धौ श्राद्धं ? आशौचाद्योरधिकारिविशेषणत्वादत आह कर्त्तुस्तात्कालिकी शुद्धिरिति । श्राद्धविधानाक्षेपात् तन्मात्रनिष्ठा शुद्धिः कल्प्यते "स पुनरशुद्धः कर्मान्तरे" श्रा०वि० । शुद्धितत्त्वे च "एवं शुद्धेर्भावरूपत्वे अशौचस्य तदभावरूपत्वे विरोधः तथात्वे अशौचसङ्करोऽपि न स्यात् । एकस्मिन् शुद्ध्यभावरूपे अशौचे सत्यपरस्य तद्रूपस्य तदानीं तत्पुरुषीयशुद्धिरूपप्रतियोग्यन्तराभावात् अनुपपत्तेः । तस्मात् शुद्ध्यशुद्ध्योर्भावरूपत्वम् ।

पद्मपु० उत्त०ख०१८अ० कतिचिदशुद्धा उक्ताः । तद्भिन्नस्यैव शुद्धता यथा

"जातके मृतकेऽस्नाते जलौकोभिः क्षते तथा । अपवित्रो द्विजातीनां देहः सन्ध्यादिकर्मसु । अपूतस्तु उत्सर्गे नरो मूत्रपुरीषयोः । अस्पृश्यस्पर्शने चैव ब्रह्मयज्ञजपादिषु । रक्तपाते नखश्मश्रुदन्तखड्गादिभिः क्षते । विषादेरशुचिः कायः शस्त्रास्त्रैः कण्टकादिभिः । भुक्त्वा ह्यस्नाननोच्छिष्टेऽपवित्रः क्षतमैथुने । शयने ब्राह्मणादीनां शरीरं चुरकर्मणि । ज्वरादिभिस्ततःपश्चाद्रोगैर्युक्ता द्विजन्मनाम् । वपुरशुद्धं पूजादानहोमजपादिषु । धूमोद्गारे वमौ श्राद्धपतितान्नादिभोजनैः । तथा च रेतःस्खलने मद्यदेहोऽपवित्रता । अपवित्रं द्विजातीनां वपुः स्यादुःस्वप्नदर्शने । महितदानपङ्क्तौ पतिते पातकादिभिः । अशौचान्तेन शुद्धिः स्यात् जातके मृतकेऽपि च । सर्ववर्णाश्रमादीनां तनोः सन्ध्यादिकर्मसु" । मृतकादिभिश्च स्नानापनेयतेति । अशौचशब्दे द्रव्यशुद्धिशब्दे च दृश्यम् ।

[ङीष् ।

**शुद्धजङ्घ** पुंस्त्री० शुद्धा जङ्घा यस्य । गर्दभे त्रिका० स्त्रियां

**शुद्धमांस** न० २१८४पृ० सूतागशब्ददर्शिते पक्वमांसभेदे [शब्दच० ।

**शुद्धवल्ली** स्त्री कर्म० । १गुडूच्यां शब्दच० २पवित्रायां लतायाञ्च

**शुद्धान्त** पु० शुद्धः निर्दोषः अन्तः पर्यन्तो यस्य । १अन्तःपुरे उपचारात् तत्र स्थितायां २राजयोषिति पुंस्त्री० "शुद्धान्तसम्भागनितान्ततुष्टे" इति नैषधम् । शुद्धं शुद्धिः ६त० ३अशौचान्ते ।

**शुद्धापह्नुति** स्त्री कर्म० । "शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः" चन्द्रालोकोक्ते अर्थालङ्कारभेदे ।

**शुद्धि** स्त्री शुध-क्तिन् । १मार्जने जटा० २नैर्मल्यसम्पादने ३वैदिककर्मयोग्यत्वासम्पादकसंस्कारभेदे च । ४दुर्गायां "स्मरणाच्चिन्तनाद्वापि शोध्यते येन पातकात् । तेन शुद्धि समाख्याता देवी रुद्रतनौ स्थिता" देवीपु०तन्नामनिरुक्तिः

**शुद्धोदनसुत** पु० बौद्धभेदे हेमच० ।

**शुध** शौचे शोधने सक० निःशेषभवने अक० च दि० पर० अनिट् । शुध्यति लृदित् अशुधत् । "भक्तोहरः शुध्यति यद्गुणः स्यादिति" लीला० ।

**शुन** गतौ तु० पर० सक० सेट् । शुनति अशोनीत् ।

**शुन** पु० शुन-क । कुक्कुरे । त्रि । तत्रैव वाचस्पतिः ।

**शुनःशेफ** पु० शुनइव शेफोऽस्य अलुक्स० । विश्वामित्रशिष्ये मुनिभेदे । [राजनि० ।

**शुनक** पु० शुनइव कन् । १मुनिभेदे स्वार्थे क । २कुक्कुरे

**शुनकचञ्चुका** स्त्री शुनकस्येव चञ्चुः पत्रं यस्याः कप् । क्षुद्रचञ्चुपभेदे राजनि० ।

**शुनकचिल्ली** स्त्री शुनकप्रिया चिल्ली । शाकभेदे राजनि० ।

**शुनासीर** पु० शुनःनासीरं यस्य पृषो० । १इन्द्रे २पेचके च पृषो० तस्य रूपत्रयम् द्विरूपकोषे उक्तं यथा

"शुनाशीरो दितालव्यः सुनासीरो द्विदन्त्यकः । तालव्यादिर्दन्त्यमध्यः शुनासीरश्च दृश्यते" ।

**शुनी** स्त्री श्वन्+स्त्रियां ङीष् । १कुक्कुरयोषिति अमरः ।

२कम्पारख्यां लतायां राजनिघण्टुकोषः ।

**शुनीर** पु० शुनी+समूहार्थे र । कुक्कुरीसमूहे त्रिका० ।

**शुन्ध** शुद्धौ अक० शोधने सक० चु० उभ० सेट् । शुन्धयति ते अशुशुन्धत् त ।

**शुन्ध** शुद्धौ अक० शुद्धीकरणे सक० भ्वा० उभ० सेट् । शुन्धति ते अशुन्धीत् अशुन्धिष्ट । "आपः शुन्धन्तु मैनसः" इति सन्ध्यामन्त्रः ।

**शुन्ध्यु** पु० शुन्ध–युच तस्य न अनादेशः । वायौ उणा० ।

**शुन्भ** दीप्तौ अक० मर्दने सक० तु० पर० सेट् । शुम्भति अशुम्भीत् "प्राणप्राप्तमिशुम्भयाम्बधत्" इति वो०च०

**शुन्य** न० शुनीनां समूहः यत् । १कुक्कुरीसंघे त्रिका० शून्य+पृषो० । २रिक्ते जटा० । [अशोभीत् ।

**शुभ** दीप्तौ अक० हिंसने सक० तु० तुदा० पर० सेट् । शुभति

**शुभ** दीप्तौ भ्वा० आ० अक० सेट् । शोभते लुदित् अशुभत् शुशुभे

**शुभ** न० शुभ–क । १मङ्गले २शुभयुक्ते त्रि० अमरः । ३पद्मकाष्ठे राजनि० ४विष्कम्भादिषु मध्ये ज्योतिर्विंशयोगे पु० ५खेचरपुरभेदे न० मेदि० । [शुभंयुः" इति भट्टिः ।

**शुभंयु** त्रि० शुभम्+अस्त्यर्थे युस् । शुभान्विते अमरः "भवितः

**शुभगन्धक** न० शुभोगन्धोऽस्य कप् । १बोले राजनि० २शुभगन्धयुते त्रि० । [वृद्धौधिकचन्द्रे पापग्रहायुक्ते बुधे च ।

**शुभग्रह** पु० शुभः शुभदायकः ग्रहः । १सौम्यग्रहे २गुरौ शुक्रे

**शुभङ्कर** त्रि० शुभं करोति कृ–खच् मुम् च । २मङ्गलकारके २दुर्गायां स्त्री शब्दमा० ङीप् । [२मङ्गलदातरि त्रि० ।

**शुभद** पु० शुभं ददाति दा–क । १अश्वत्थवृक्षे राजनि० ।

**शुभदन्ती** स्त्री शुभा दन्ता यस्याः ङीष् । १सुदत्यां स्त्रियां २पुष्पदन्तदिग्गजयोषिति च मेदि० ।

**शुभपत्री** स्त्री० शुभानि पत्राण्यस्याः ङीष् । (शालपान) क्षुपे वा कप् । शुभपत्रिका तत्रार्थे राजनि० ।

**शुभम्** अव्य० शुभ–कमु । मङ्गले "शुभंयुः" ।

**शुभवासन** पु० शुभं वासयति सुखम् वासि–ल्यु । मुखवासने द्रव्ये शब्दच० ।

**शुभसूचनी** स्त्री देवीभेदे (सुवचनी) "रक्ता पद्मचतुष्टयी त्रिनयना चामीकरालङ्कृता पीनोत्तुङ्गकुचा दुकूलवसना हंसाधिरूढा परा । ब्रह्मानन्दमयी कमण्डलुकराच्चाभीतिहस्ता शिवा ध्येया सा शुभसूचनी त्रिजगतामन्वापदुद्धारिणी" । सा च स्त्रीभिः पूज्या ।

**शुभा** स्त्री शुभ–क । १शोभायां २कान्तौ ३इच्छायां मेदि० । ४राचनायां ५गोरोचनायां ६शम्यां ७प्रियङ्गौ ८श्वेतदूर्वायां राजनि० । ९देवसभायां शब्दच० १०उमासखीभेदे शब्दच० । [सखीभेदे स्त्री शब्दमा० ।

**शुभाचार** त्रि० शुभ आचारोऽस्य । १शोभनाचारयुते २उमा-

**शुभाञ्जन** पु० शुभम्–क शुभम् अञ्जनं यस्मात् ५ब० । शोभाञ्जनवृक्षे शब्दर० ।

**शुभ्र** न० शुभ–रक् । १अभ्रके मेदि० २रौप्ये ३कासीसे ४शुभ्रवर्णे राजनि० । ६चन्दने शब्दच० । ६श्वेतवर्णे पु० ७तद्वति त्रि० अमरः ।

**शुभ्रकर** पु० शुभ्रः करोऽस्य । १चन्द्रे २कर्पूरे च । शुभ्रकिरणशुभ्रांशुप्रभृतयोऽप्यत्र । [ज्योषिति अमरः

**शुभ्रदन्ती** स्त्री शुभ्रो दन्तो यस्याः ङीष् । पुष्पदन्तदिग्गज-

**शुभ्रालु** पु० कर्म० । १महिषकन्दे राजनि० । २श्वेतालौ च ।

**शुभ्रि** पु० शुभ–क्रि । चतुर्मुखे ब्रह्मणि सि०कौ० ।

**शुम्भ** पु० शुन्भ–अच् । दानवभेदे । शुम्भस्य मह्यादपुत्रविरोचनात्कजग्वेदिनः पुत्रः एकः "विरोचनस्य प्राह्रादेः पञ्च तस्यात्मजाः स्मृताः । गवेष्ठी कालनेमिश्च जम्भो बाष्कल एव च । शुम्भश्चैव निशुम्भश्च विष्वक्सेनो महौजसः । गवेष्ठिनः सुता ह्येते" वह्निपु० अपरश्च "कश्यपस्य दनुर्नाम भार्यासीत् द्विजसत्तम ! । तस्यास्तु द्वौ सुतावास्तां सहस्राक्षाद्बलाधिकौ । ज्येष्ठः शुम्भ इति ख्यातो निशुम्भश्चापरोऽसुरः" वामनपु० । देवीमाहा० अपरोऽपि देव्या निहतः । तदन्योऽपि तत्रैव १२अ० "शुम्भो निशुम्भश्चैवान्यावुत्पत्स्येते महासुरौ । ततस्तौ नाशयिष्यामि विन्ध्याचलनिवासिनी" इत्युक्तः ।

**शुम्भमर्दिनी** स्त्री शुम्भं मृद्नाति मृद–णिनि । दुर्गायां हेमच० । हन–णिनि । शुम्भघातिनी शब्दच० ।

**शुम्भपुरी** स्त्री ६त० । (सम्भलपुर) एकचक्राख्ये पुरे त्रिका० ।

**शुर** मारणे स्तम्भने च दि० आ० सक० सेट् । शूर्यते अशोरिष्ट ।

**शुल्क** कथने, सर्जने, वर्जने च चु० उभ० सक० सेट् । शुल्कयति ते अशुशुल्कत् त ।

**शुल्क** पु० न० शुल्क्यते अतिसृज्यते कर्मणि घञ् । १घट्टादिदेये राजकरे मेदि० २राजग्राह्यकरभेदे अमरः । वरपक्षात् कन्यापक्षीयैः ३ग्राह्ये धने ४स्त्रीधनभेदे "भगिनीशुल्कं सोदर्याणाम्" इति स्मृतिः । सम्भोगार्थं स्त्रीभ्यः देये ५धने "अशुल्कोपहृतायास्तु पिण्डदाबोढरेव ते" इति स्मृतिः ६पणे च । [द्रव्यकरादानस्थाने ।

**शुल्कस्थान** न० ६त० । (घाटि) २घट्टे भूपानां क्रयविक्रययोग्य

**शुल्ल** न० शुल–अच् पृषो० । १ताम्रे २रज्जौ च अमरटीका ।

**शुल्व** माने दाने च चु०उभ०सक०सेट् । शुल्वयति ते अशुशुल्वत् त । [४आचारे ५यज्ञकार्ये च मेदि०।

**शुल्व** न०शुल्व–अच् । १ताम्रे २रज्जौ च अमरः ३जलसमीपे

**शुल्वारि** पु० ६त० । १गन्धके हेमच० तस्य ताम्रादिजारकत्वात् तथात्वम् ।

**शुश्रू** स्त्री मातरि "शिशोः शुश्रूषणात् शुश्रूः" भा०आ०अ०

**शुश्रूषण** न० श्रु–सन्–ल्युट् । १सेवायां शब्दच० । युच् । तत्रैव स्त्री २श्रवणेच्छायाञ्च । [च ।

**शुश्रूषा** स्त्री श्रु–सन्–अ । १श्रवणेच्छायाम् २उपासने ३कथने

**शुष** शोषणे दि०पर०सक०अनिट् । शुष्यति लृदित् अशुषत् ।

**शुष** पु० शुष–क । १गर्त्ते २बिले च शब्दरत्ना० ।

**शुषि** स्त्री शुष–कि । १शोषणे २बिले च मेदि० ।

**शुषिर** न०शुष–किरच् । १छिद्रे २वंशप्रभृतिवाद्ये ३सच्छिद्रे त्रि० अमरः ४मूषिके पुंस्त्री० मेदि० स्त्रियां ङीष् । ५वह्नौ पु० विश्वः ; ६चित्रकवृक्षे ७नद्यां स्त्री धरणिः । लवङ्गे नाम गन्धद्रव्ये स्त्री अमरः । [२शोषणे न० ।

**शुष्क** त्रि०शुष+क्त । आतपादिना १कृतशोषणे । भावे क्त ।

**शुष्कपत्र** न० शुष्कं पत्रमस्य । ( नालता ) १शाकभेदे । "शुष्कपत्रं पयोमिश्रं पित्तश्लेष्मज्वरापहम् । तत् शुष्कपत्रं जलदोषनाशनं विशेषतः पित्तकफज्वरापहम् । जलस्य तस्यापि च पित्तहारकम् सुरोचनं व्यञ्जनयोगकारकम्" राजवल्लभः । कर्म० । २शुष्के पर्णे न०

**शुष्कमांस** न० कर्म० । आतपादिना शुष्कमांसे तद्गुणा भावप्र० उक्ता यथा "त्रिदोषकृत् व्याधिजडं शुष्कं शूलकरं गुरु" मांसमित्यनुषङ्गः ।

**शुष्करेवती** स्त्री मातृकाभेदे "अभिरूपा तथा काली रुदा पूर्वं महात्मना । तथा तद्रुधिरं पीतमन्धकानां महात्मनाम् । सा चास्मिन् कथिता लोके नामतः शुष्क रेवती" वह्निपु० १५४अ० ।

**शुष्कल** न० शुष्कं शोषणं लाति ला–क । १शुष्कमांसे । शुष–कलच् किच्च । २आमिषे उणादि० ।

**शुष्कवृक्ष** पु० कर्म० । धवृक्षे राजनि० ।

**शुष्कवैर** न० शुष्कं फलशून्यं वैरम् । उद्देश्यशून्ये कलहे ।

**शुष्कव्रण** पु० कर्म० । (घँटा) किणाख्ये व्रणे त्रिका० ।

**शुष्काक्षिपाक** पु० नेत्ररोगभेदे तल्लक्षणं भावप्र०उक्तं यथा "यत् कूणितं दारुणरूक्षवर्त्म सन्दह्यते चाविलदर्शनं यत् । सुदारुणं यत्प्रतिबोधने च शुष्काक्षिपाकोपहतं तदक्षि" । कूणितं सङ्कोचितं उद्वृत्तमिति यावत् । दारुणरूक्षवर्त्म दारुणं विकृतं रूक्षं च वर्त्म यस्य तत् । इदमञ्जनादिविशेषणं सन्दह्यते बटाङ्कं भवति । आविलदर्शनम् आविलस्य अनच्छस्य दर्शनं येन तत् । तत्प्रतिबोधने उद्घाटने, सुदारुणम् अतिशयेन विकृतम्" ।

**शुष्काङ्ग** पु० शुष्कमङ्गमस्य । १धवृक्षे (धगाछ) २शुष्कावयवयुते त्रि०स्त्रियां ङीष् । सा च ३गोधिकायां शब्दच०

**शुष्कार्द्रिका** न० शुष्कमार्द्रकम् । शुण्ठ्यां (शुँठ) शब्दच० ।

**शुष्म** न० शुष–मन् किच्च । १तेजसि मेदि० २पराक्रमे हेमच० । ३सूर्य्ये पु० मेदि० ४वह्नौ त्रिका० ५चित्रकवृक्षे ६वायौ ७पक्षिणि संक्षिप्तसा० दर्शाचिषि च पु० भरतः ।

**शुष्मन्** न०शुष–ङ्मनिप् । १तेजसि जटा० । २शौर्य्ये हेमच० ३वह्नौ ४चित्रकवृक्षे च पु० अमरः ।

**शूक** पु० न० श्वि–कक् सम्प्र० । (शुङ्गा) १तीक्ष्णाग्रे अमरः । २शिखायां ३दयायां मेदि० ४सविषजलमलोद्भवे जन्तुभेदे भावप्र० तद्दोषाधिकारेण तज्जातरोगास्तत्र दर्शिता यथा "अथ शूकदोषाधिकारः । तत्र शूकदोषस्य निदानमाह "अक्रमाच्छेफसो वृद्धिं योऽभिवाञ्छति मूढधीः । व्याधयस्तस्य जायन्ते दश चाष्टौ च शूकजाः" । अक्रमात् अनुचितवृद्धिक्रमात् । अनुचिता च वृद्धिः भूरिविकारजनकस्य योगेन शूकजाः शूकोजलशूकः सविषो जलजन्तुविशेषः स तु जलमलोद्भवः अलर्कभ्रमरादिकः । तथा शूकप्रधानो लिङ्गवृद्धिकरो वात्स्यायनाद्युक्तो रोगः शूक उच्यते" । शूकदोषा दश चाष्टौ च भवन्ति । तेष्वादौ सर्षपिकामाह "गौरसर्षपसंस्थाना शूकदुर्भगहेतुका । पिडका श्लेष्मवाताभ्यां ज्ञेया सर्षपिका१ तु सा । शूकदुर्भगहेतुका शूकदुष्टयोनिनिमित्ता च । अथाष्ठीलिकामाह "कठिना विषमैर्भग्नैर्वायुनाष्ठीलिका२ भवेत्" । अष्ठीला लौहकारस्य भाण्डविशेषः (निहाइ) इति लोके । तथा कठिनेत्यष्ठीलिका विषमैर्भग्नैरिति वक्ष्यमाणकाठिन्यविशेषणम् । विषमैश्च सदीर्घैः । भग्नैः वक्रैः । ग्रथितमाह "शूकैर्यत् पूरितं शश्वद्ग्रथितं३ नाम तद्भवेत्" । यल्लिङ्गं सदा शूकैः पूरितं तद्ग्रथितत्वाद्ग्रथितम् । कुम्भिकामाह "कुम्भिका४ रक्तपित्तात् स्याज्जाम्बवास्थिनिभा सिता" कुम्भिका कुम्भीफलतुल्यत्वात् । अलजीमाह "अलजी५ स्यात्तथा यादृक् प्रमेहपिडका तथा । सा च रक्तासिता स्फोटाचिता च कथिता बुधैः" । एषा रक्तपित्तनिमित्ता ज्ञेया । मृदितमाह "मृदितं६ पीडितं यत्तु संरब्धं वातकोपतः ।

शूकदोषे जाते पीड़ितं यद्यत् संरब्धम् सशोथं भवति तल्लिङ्गं स्फटितमुच्यते। संमूढपिड़कामाह “पाणिभ्यां श्वगसंमूढे संमूढपिडका७ भवेत्”। शूकदोषे जाते पाणिभ्यां श्वगसंमूढे पिषिते लिङ्गे”। अत्रापि वातकोपत इत्यनुवर्त्तते। अष्ठीलमन्थमाह “दीर्घा वह्व्यश्च पिडका दीर्य्यन्ते मध्यतस्तु याः। सोऽवमन्थः८ कफासृग्भ्यां वेदना रोमहर्षकृत्”। दीर्घा दीर्घाङ्कुराः। पुष्करिकामाह “पिड़का पिडकाव्याप्ता पित्तशोणितसम्भवा। पद्मकर्णिकसंस्थानाट ज्ञेया पुष्करिकेति सा”। पिडकाव्याप्ता पार्श्वतः क्षुद्रपिडकाव्याप्ता। अतएव पद्मकर्णिकसंस्थाना। स्पर्शहानिमाह “स्पर्शहानिन्तु१० जनयेच्छोणितं शूकदूषितम्” अत्र स्पर्शासहत्वमेव लक्षणम्। उत्तमामाह “मुद्गमाषोपमा रक्ता रक्तपित्तोद्भवा च या। एषोत्तमाख्या पिडका११ शूकाजीर्णसमुद्भवा”। शतपोनकमाह “छिद्रैरणुमुखैर्लिङ्गं चितं यस्य समन्ततः। वातशोणितजो व्याधिः विज्ञेयः शतपोनकः१२”। शतपोनकचालनी तत्तुल्यत्वाच्छतपोनकः। त्वक्पाकमाह “वातपित्तकृतो ज्ञेयस्त्वक्पाको१३ ज्वरदाहकृत्”। शोणितार्बुदमाह “कृष्णैः स्फोटैः सरक्ताभिः पिडकाभिर्निपीडितम्। लिङ्गं वास्तुरुजाश्चोग्रा ज्ञेयं तच्छोणितार्बुदम्१४”। वास्तुरुजः स्फोटपिडकाधिष्ठानवेदनाः। अथ मांसार्बुदमाह “मांसदुष्टं विजानीयादर्बुदं मांससम्भवम्१५”। मांसपाकमाह “शीर्य्यन्ते यस्य मांसानि यस्य सर्वाश्च वेदनाः। विद्यात्तं मांसपाकन्तु१६ सर्वदोषकृतं भिषक्”। शीर्य्यन्ते स्खलन्ति। सर्वाश्च वेदनाः वातपित्तकफजाः। अथ विद्रधिमाह “विद्रधिः१७ सन्निपातेन यथोक्तमभिनिर्दिशेत्”। यथोक्तं सान्निपातिकं विद्रधितुल्यं कथयेत्। तिलकालकानाह “कृष्णानि चित्राण्यथवा शुक्लानि सविषाणि तु। पतन्ति पातयन्त्याशु मेढ्रं निरवशेषतः। कालानि भूत्वा मांसानि शीर्य्यन्ते यस्य देहिनः। सन्निपातसमुत्थांश्च तान् विद्यात्तिलकालकान्१८”। चित्राणि नानावर्णानि। शुक्लानि शुक्लवर्णानि मञ्जाः क्रोशन्तीति वत्। सविषाणि सविषशूकाख्यजन्तुविशेषकृतत्वात्। शीर्य्यन्ते गलन्ति। कृष्णतिलतुल्यत्वात्तिलकालकाः। अथासाध्यमाह “तत्र मांसार्बुदं यच्च मांसपाकश्च यः स्मृतः। विद्रधिश्च न सिध्यन्ति ये च स्युस्तिलकालकाः”। [२रसे च मेदि०।

**शूकक** पु० शूकैः जलजन्तुभेदैः कायति कै–क। १प्रावृट्काले

**शूककीट** पु० शूकाकाररोमयुक्तः कीटः शा०त० (शुयापोका) कीटभेदे अमरः। स हि शूकाभरोमवान्।

**शूकधान्य** न० शूकयुक्तं धान्यम् शाक०। यवादौ धान्ये अमरः। “व्रीह्यादिकं यदिह शूकसमन्वितं स्यात् तत् शूकधान्यमथ मुद्गमकुष्ठकादि। शिम्बीनिगूढमिति तत् प्रवदन्ति शिम्बीधान्यं तृणोद्भवमथो तृणधान्यमन्यत्। तत्र त्रिदोषशमनं लघु शूकधान्यं तेजोबलातिशयवीर्य्यविवृद्धिदायि। देशे देशे शूकधान्येषु संख्या ज्ञातुं शक्या नो नरैर्दैवतैर्वा” राजनि०। “शूकधान्यं शमीधान्यं समातीतं प्रशस्यते। परतो वातकृद्रूक्षं प्रायेणाभिनवं गुरु” राजवल्लभः। [शब्दच०।

**शूकपिण्डी** स्त्री शूकस्य पिण्डीव। शूकशिम्ब्याम्

**शूकर** पुंस्त्री० शू इत्यव्यक्तं शब्दं करोति कृ–अच् शूक+अस्त्यर्थे र वा। स्वनामख्याते पशौ अमर. स्त्रियां ङीष्।

**शूकरकन्द** पु० शूकर इव रामशः कन्दोऽस्य। वाराहीकन्दे राजनि०।

**शूकदंष्ट्रक** पु० गुदभ्रंशे क्षुद्ररोगभेदे “सदाहो रक्तपर्य्यन्तस्त्वक्पाकी तीव्रवेदनः। कण्डूमान् ज्वरकारी च स स्याच्छूकरदंष्ट्रकः” भावप्र० तल्लक्षणमुक्तम्।

**शूकरपादिका** स्त्री शूकरस्येव पादाः मूलान्यस्याः कप् अत इत्त्वम्। कोलशिम्ब्यां राजनि०।

**शूकराक्रान्ता** स्त्री शूकरेणाक्रम्यते स्म आ+क्रम–क्त ३त०। वराहक्रान्तायां शब्दच०।

**शूकरी** स्त्री शूकर आक्रामकत्वेनास्त्यस्याः अच् गौरा० ङीष्। १वराहक्रान्तायां शब्दच०। शूकर+जातौ ङीष्। २तज्जातिस्त्रियाञ्च। [द्रव्ये त्रि०।

**शूकरेष्ट** पु० ६त०। १कसेरुनामकन्दे राजनि०। २वराहप्रिय-

**शूकवती** स्त्री शूकोऽस्त्यस्याः मतुप् मस्य वः ङीप्। १कपिकच्छ्वां शब्दच०। २शूकयुते त्रि० स्त्रियां ङीप्।

**शूकशिम्बा** स्त्री शूकयुक्ता शिम्बा शाक०। कपिकच्छ्वां शब्दच०।

**शूकशिम्बि(म्बी)** पु० शूकयुक्ता शिम्बिः शाक० वा ङीप्। कपिकच्छ्वां शब्दच०।

**शूका** स्त्री शूकोऽस्त्यस्याः अच्। कपिकच्छ्वां शब्दच०।

**शूकापुट** पु० तृणमणिभेदे हारा०। [शब्दर०।

**शूतिपर्णी** पु० श्वि–क्तिच् शूति स्फीतं पर्णं यस्य। आरग्वधे

**शूद्र** पुंस्त्री० शुच–रक् पृषो० चस्य दः दीर्घश्च। १चतुर्थे वर्णे स्त्रियां टाप्। शूद्रा शूद्रजातिस्त्रियाम्। पुंयोगे ङीष्। शूद्री शूद्रभार्य्यायाम्। शुचा द्रवति द्रु–ड पृषो०। २शोकहेतुकगतिद्रुते शूद्राधिकरणशब्दे दृश्यम्।

अथ शूद्रधर्मादि "विप्राणामर्च्चनं नित्यं शूद्रधर्म्मो विधीयते। तद्द्वेषी तद्धनप्राही शूद्रश्चाण्डालतां व्रजेत्। दृष्टः कोटिसहस्राणि शतजन्मानि शूकरः। श्वापदः शतजन्मानि शूद्रो विप्रधनापहा। यः शूद्रो ब्राह्मणीगामी मातृगामी स पातकी। कुम्भीपाके पच्यते स यावद्वै ब्रह्मणः शतम्। कुम्भीपाके तप्ततैले दष्टः सर्पैरहर्निशम्। शब्दञ्च विकृताकारं कुरुते यमताडनात्। ततश्चाण्डालयोनिः स्यात् सप्तजन्मसु पातकी। सप्तजन्मसु सर्पश्च जलौकाः सप्तजन्मसु। जन्मकोटिसहस्रञ्च विष्ठायां जायते कृमिः। योनिक्रिमिः पुंश्चलीनां च भवेत् सप्तजन्मसु। गवां व्रणकृमिः स्याच्च पातकी सप्तजन्मसु। योनौ योनौ भ्रमत्येवं न पुनर्जायते नरः" ब्रह्मवै० पु० ८३अ०। "द्विजानां पादशुश्रूषा शूद्रैः कार्य्या सदा त्विह। पादप्रक्षालनं सम्यग्भोज्यमुच्छिष्टमात्मकम्। ते तु चक्रुस्तदा चैव तेभ्यो भूयः पितामहः। शुश्रूषार्थं मया यूयं तुरीये तु पदे कृताः। द्विजानां क्षत्त्रधर्म्माणां वैश्यानाञ्च भवद्विधाः। त्रिभ्यः शुश्रूषणा कार्य्या इत्यथाटोहयत्तदा" पाद्मे स्व०ख० १६अ०। "शुश्रूषैव द्विजातीनां शूद्राणां धर्म्मसाधनम्। कारुकर्म्म तथाऽऽजीवः पाकयज्ञोऽपि धर्म्मतः" मार्क० ४९अ०। "तथा मद्यस्य पानेन ब्राह्मणीगमनेन च। वेदाक्षरविचारेण शूद्रश्चाण्डालतां व्रजेत्" इति शूद्रकमलाकरधृतपराशरवाक्यम्। ब्राह्मणस्य तदन्नभोजननिषेधो यथा "शूद्रान्नं ब्राह्मणोऽश्नन् वै मासं मासार्द्धमेव वा। तद्योनावभिजायेत सत्यमेतद्विदुर्बुधाः। अर्थोदरस्थशूद्रान्नो मृतः श्वा चैव जायते। द्वादश दश चाष्टौ च दृष्टशूकरपुष्कराः। उदरस्थितशूद्रान्नो ह्यधीयानोऽपि नित्यशः। जुह्वन् वापि जपन् वापि गतिमूर्द्ध्वां न विन्दति। अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम्। वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम्। तस्मात् शूद्रं न भिक्षेयुर्यज्ञार्थं सद्द्विजातयः। श्मशानमिव यच्छूद्रस्तस्मात्तं परिवर्जयेत्। कथानामथ वा भिक्षां कुर्य्याच्चातिविकर्षितः। स्वच्छूद्राणां गृहे कुर्वन् तत्पापेन न लिप्यते। विशुद्धान्वयजातो निवृत्तो मद्यमांसतः। द्विजभक्तो वणिग्वृत्तिः शूद्रः सन् परिकीर्त्तितः" वृहत्पराशरः। शूद्रकर्त्तव्यविचारणतत्त्वे मत्स्यपुराणम्

"एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धन्तु सर्व्वदा। नमस्कारेण मन्त्रेण कुर्य्यादामान्नवद्बुधः। दानप्रधानः शूद्रः स्यादित्याह भगवान् प्रभुः। दानेन सर्व्वकामाप्तिरस्य सञ्जायते यतः"। ततो दानमेवापेक्षित न तु भोजनमपि। सामान्यं सर्व्वजनकर्त्तव्यत्वेन प्रतिमासकृष्णपक्षादिविहितश्राद्धम् आभ्युदयिकश्राद्धञ्च एवं द्विजातिवत् शूद्रोऽपि कुर्य्यादित्यन्वयः। नमस्कारेण मन्त्रेण न तु पाठतमन्त्रेण। आमान्नवदित्यनेन जलसेकसिद्धाद्यव्यावृत्तिः "छिन्नमन्नमुदाहृतम्" इति वशिष्ठेन छिन्नस्यैवान्नत्वाभिधानात् कन्दुपक्वस्य अदत्वं न तु छिन्नत्वं हारीतेन स्वेदनभर्जनयोः पृथक्त्वमुक्तं यथा "आदीपनतापनस्वेदनभर्जनपचनादिभिः पञ्चमीति"। अस्यार्थः आदीपनं काष्ठानां, तापनं तोयादेः, स्वेदनं धान्यादेर्भर्जनं यवादेः, पचनं तण्डुलादेः इति पञ्चमी सूना इति कल्पतरुः। अतएव छिन्नधान्येन अन्न उच्यते। "कन्दुपक्वानि तैलेन पायसं दधिसक्तवः। द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि" इति कूर्म्मपुराणवचने शूद्रकर्त्तृक कन्दुपक्वादेर्ब्राह्मणभक्ष्यत्वेन श्राद्धे देयत्वमुक्तम्। कन्दुपक्वं जलापसेकं विना केवलपात्रेण वह्निना पक्वम्। पायसं पाकेन काठिन्यविकारापन्नं दुग्धं परमान्नपरत्वे पुंलिङ्गनिर्द्देशापत्तेः तथा चामरः "परमान्नन्तु पायसः" इति। "दिने नवोदये प्राप्ते पाकेन भोजयेद्द्विजान्। अयं विधिः प्रयोक्तव्यः शूद्राणां मन्त्रवर्जितः" इति श्राद्धचिन्तामणिधृतवराहपुराणवचनमपि कन्दुपक्वपरम् एवन्तु एतद्वचनं सच्छूद्रपरं मैथिलोक्तं हेयम्। एवम् आममांसस्यापि श्राद्धे देयत्वं वामनश्राद्धतत्त्वेऽनुसन्धेयम्। तत्र द्रव्यदेवताप्रकाशार्थं ब्राह्मणेन मन्त्राः पाठ्याः "अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः। अमन्त्रस्य तु शूद्रस्य विप्रोमन्त्रेण गृह्यते" इति वराहपुराणात् अयं श्राद्धेतिकर्त्तव्यताकविधिः शूद्रकर्त्तृकमन्त्रपाठरहितः शूद्रस्य मन्त्रपाठानधिकारसिद्धौ यदमन्त्रस्येति पुनर्व्वचनं तत्स्वस्त्ययनहणार्थं परिभाषार्थञ्च ततश्च तत्कर्म्मकर्त्तव्यस्मिन्मन्त्रेण विप्रस्तदीयकर्म्मकारयितृब्राह्मणो गृह्यते तेन ब्राह्मणेन तत्र मन्त्रः पठनीय इति तात्पर्य्यं तत्र यजुर्व्वेदिका मन्त्राः तथा च स्मृतिः "आर्षक्रमेण सर्व्वत्र शूद्रा वाजसनेयिनः। तस्माच्छूद्रः स्वय कर्म्म यजुर्वेदेन कारयेत्"। आर्षक्रमेण स्वत्यन्तक्रमेण यजुर्व्वेदसम्बन्धिमन्त्रेणादिना "चतुर्णामपि वर्णानां यानि प्रोक्तानि वेधसा। धर्म्मशास्त्राणि राजेन्द्र! शृणु तानि नृपोत्तम!। विशेषतस्तु शूद्राणां पावनानि मनीषिभिः।

अष्टादश पुराणानि चरितं राघवस्य च । रामस्य कुरुशार्दूल धर्मकामार्थसिद्धये । तथोक्तं भारतं वीर ! पाराशर्य्येण धीमता । वेदार्थं सकलं योज्य धर्मशास्त्राणि च प्रभो !" इति भविष्यपुराणवचनात्तेषां पौराणिकादिर्विधिः । योज्य योजयित्वा । अत्र च "श्राद्धं वेदमन्त्रवर्ज्जं शूद्रस्य इति वचने वेदस्योपादानात् श्राद्धे पुराणमन्त्रः शूद्रेण पठनीय इति मैथिलोक्तं तन्न वराहपुराणे "शूद्राणां मन्त्रवर्जित इत्यनेन मन्त्रमात्रनिषेधात् मत्स्यपुराणे नमस्कारेण मन्त्रेण इत्युपादानाच्च पौराणिकस्यापि श्राद्धे निषेधः प्रतीयते । एवं स्नानेऽपि "ब्रह्मक्षत्रविशामेव मन्त्रवत् स्नानमिष्यते । तूष्णीमेव हि शूद्रस्य सनमस्कारकं मतम्" इत्यनेन नमस्कारविधानात् पञ्चयज्ञेऽपि । "शूद्रस्य द्विजशुश्रूषा तया जीवनवान् भवेत् । शिल्पैर्वा विविधैर्जीवेत् द्विजातिहितमाचरन् । भार्य्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियारतः । नमस्कारेण मन्त्रेण पञ्च यज्ञान्न हापयेत्" इति नमस्कारमात्रविधानात् श्राद्धादिषु पौराणिकमन्त्रनिषेधः । ततश्च स्नानश्राद्धतर्पणपञ्चयज्ञेतरत्र शूद्रस्य पौराणिकमन्त्रपाठ प्रतीयते । अत्र "षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले" इति मनुवचनात् "चूड़ा कार्य्या यथाकुलम्" इति याज्ञवल्क्यवचनाच्च संस्कारमात्रे कुलधर्मानुरोधेन कालान्तरस्य नामविशेषोच्चारणस्याभिधानाच्च शूद्रादीनां नामकरणे वह्न्यानयनादिकपद्धतियुक्तनामकरणस्य च प्रतीतेर्वैदिककर्मणि शूद्राणां पद्धतियुक्तानामाभिधानं क्रियते इति" । शूद्रस्याचमने देवतीर्थेन ओष्ठे जलं सकृत्क्षिपेत् न पिबेत् तथा च याज्ञवल्क्यः "हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः । शुध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः" । अन्ततो हृदयादिसमीपेन ओष्ठेन उत्तरोत्तरमपकर्षात् अतएव स्पृष्टाभिरित्युक्तं न तु भक्षिताभिरिति "स्त्रीशूद्रः शुध्यते नित्यं क्षालनाच्च करोष्ठयोः" इति ब्रह्मपुराणवचनाच्च । याज्ञवल्क्यः "ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत्" अत्र द्विजस्याचमने ब्राह्मतीर्थोपादानात् स्त्रीशूद्रयोर्न तेनाचमनम् एवमेव मिताक्षरायां व्यक्तमुक्तं मरीचिना "स्त्रियाश्चैवर्षिकं तीर्थं शूद्रजातेस्तथैव च । सकृदाचमनाच्छुद्धिरेतयोरेव चोभयोः" इति । एतदनन्तरम् इन्द्रियादिस्पर्शनन्तु ब्राह्मणवदेव प्रमाणान्तरन्तु वाजसनेयिब्राह्मणश्राद्धाङ्कतत्त्वयोरनुसन्धेयम्" श्रा॰त॰ रघु॰ ।

**शूद्रकर्म्मन्** न॰ शूद्रस्य शास्त्रविहितं कर्म्म । शूद्रकर्त्तव्ये द्विजसेवादौ शूद्रकृत्यादयोऽप्यत्र ।

**शूद्रप्रिय** पु॰ ६त॰ । पलाण्डौ राजनि॰ ।

**शूद्राधिकरण** शूद्रस्य विद्यायामधिकारोऽस्ति नवेति सन्देहे नाधिकार इति निर्णायके शारीरकसूत्रोक्ते अधिकरणभेदे तच्चाधिकरणं तत्र दर्शितं यथा "शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि" सू॰ "यथा मनुष्याधिकारनियममपोद्य देवादीनामपि विद्यास्वधिकार उक्तस्तथैव द्विजात्यधिकारनियमापवादेन शूद्रस्याप्यधिकारः स्यादित्येतामाशङ्कां निवर्त्तयितुम् इदमधिकरणमारभ्यते । तत्र शूद्रस्याप्यधिकारः स्यादिति तावत् प्राप्तम्, अर्थित्वसामर्थ्ययोः सम्भवात्, "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" इतिवत् शूद्रो विद्यायामनवक्लृप्त इति निषेधाश्रवणात् । यच्च कर्म्मस्वनधिकारकारणं शूद्रस्यानग्नित्वं न तद्विद्यास्वधिकारस्यापवादकम् । न ह्याहवनीयादिरहितेन विद्या वेदितुं न शक्यते । भवति च लिङ्गं शूद्राधिकारस्योपोद्बलकं, संवर्गविद्यायां हि जानश्रुतिं पौत्रायणं शुश्रूषुं शूद्रशब्देन परामृशति "अह हारे त्वा शूद्र ! तवैव सह गोभिरस्तु" इति । विदुरप्रभृतयश्च शूद्रयोनिप्रभवा अपि विशिष्टविज्ञानसम्पन्नाः स्मर्य्यन्ते, तस्मादधिक्रियते शूद्रो विद्यास्वित्येवं प्राप्ते ब्रूमः । न शूद्रस्याधिकारो वेदाध्ययनाभावात् । अधीतवेदो हि विदितवेदार्थो वेदार्थेष्वधिक्रियते, न च शूद्रस्य वेदाध्ययनमस्ति, उपनयनपूर्वकत्वाद्वेदाध्ययनस्य उपनयनस्य च वर्णत्रयविषयत्वात् । यत्त्वर्थित्वं न तदसति सामर्थ्येऽधिकारकारणं भवति । सामर्थ्यमपि न लौकिकं केवलमधिकारकारणं भवति शास्त्रीयेऽर्थे शास्त्रीयस्य सामर्थ्यस्यापेक्षितत्वात् शास्त्रीयस्य च सामर्थ्यस्याध्ययननिराकरणेन निराकृतत्वात् । यच्चेदं शूद्रो यज्ञेऽनवक्लृप्त इति तत् न्यायपूर्वकत्वाद्विद्यायामप्यनवक्लृप्तत्वं द्योतयति न्यायस्य साधारणत्वात् । यत् पुनः संवर्गविद्यायां शूद्रशब्दश्रवणं लिङ्गं मन्यसे न तल्लिङ्गम्, न्यायाभावात् । न्यायोक्ते हि लिङ्गदर्शनं द्योतकं भवति, न चात्र न्यायोऽस्ति कामञ्चायं शूद्रशब्दः संवर्गविद्यायामेवैकस्यां शूद्रमधिकुर्य्यात् तद्विषयत्वात् न सर्वासु विद्यासु, अर्थवादस्थत्वात् न तु क्वचिदप्ययं शूद्रमधिकर्त्तुमुत्सहते । शक्यते चायं शूद्रशब्दोऽधिकृतविषये योजयितुम् । कथमित्युच्यते । "कं वर एनमेतत् सन्त"

सयुग्वानमिव रैक्कमात्थेति कस्मादुक्तवाक्यादात्मनोऽनादरं श्रुतवतो जानश्रुतेः पौत्रायणस्य शुगुत्पेदे तामसौ रैक्कः शूद्रशब्देनानेन सूचयाम्बभूवात्मनः परोक्षज्ञानख्यापनायेति गम्यते, जातिशूद्रस्यानधिकारात्। कथं पुनः शूद्रशब्देन शुगुत्पन्ना सूच्यते इति, उच्यते, तदा द्रवणाच्छुचमभिदुद्राव शुचा वाभिदुद्रुवे शुचा वा रैक्कमभिदुद्रावेति शूद्रावयवार्थसम्भवात् रूढ्यर्थस्य चासम्भवात्। दृश्यते चायमर्थोऽस्यामाख्यायिकायाम्"।

**शूद्रार्त्ता** स्त्री शूद्रेणार्त्ता पीड़िता। प्रियङ्गौ शब्दच०।

**शूद्रावेदिन्** त्रि० शूद्रां विन्दति विद–णिनि उप०। शूद्रजातिस्त्रिया विवाहकर्त्तरि। "शूद्रावेदी पतत्यत्रेः" मनुः "कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः। शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः स्मृते। ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः" इति मनुना कामतश्चातुर्वर्ण्ये विवाहे विहितेऽपि शूद्रावेदीत्यस्याधिकदोषार्थता द्विजातिस्त्रीलाभे शूद्रस्त्रीविवाहनिषेधार्थता च। स च विवाहः युगान्तरविषयः कलौ असवर्णस्त्रीविवाहनिषेधात् कलिशब्दे १८०२ पृ० दृश्यम्।

**शूद्रान्न** न० ६त०। शूद्रस्वामिकान्ने तस्य द्विजैरभक्ष्यत्वं यथा हारीतः "शूद्रान्नेन तु भुक्तेन उदरस्थेन यो मृतः। स वै खरत्वमुष्ट्रत्वं शूद्रत्वञ्चाधिगच्छति" म०त० धृतवाक्यं शूद्रान्नं शूद्रस्वामिकान्नं रघु०। "आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते" इति तत्पक्वान्नस्य सर्वथा निषेधादत्र आमान्नमेव शूद्रस्वामिकान्नं गृह्यते। तद्दत्तमपि भोजनकाले तद्गृहावस्थितं तदपि शूद्रान्नं तदाहाङ्गिराः "शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि। निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतम्" तेन शूद्रवेश्मस्थितक्षीरदध्यादिकमपि शूद्रान्नं पारिभाषिकमिति बोध्यम्। निवृत्तेन शूद्रान्ननिवृत्तेन। तदपीति अपिशब्दात् साक्षाद्दत्ततण्डुलादि न तु तद्दत्तकपर्दकादिना क्रीतमपि। स्वगृहागते शूद्रान्ने अङ्गिराः "यथा यतस्ततो ह्यापः शुद्धिं यान्ति नदीं गताः। शूद्राद्विप्रगृहेष्वन्नं प्रविष्टन्तु सदा शुचि" प्रविष्टं स्वत्वापादकप्रतिग्रहादिनेति शेषः। अतएव पराशरः "तावद्भवति शूद्रान्नं यावन्न स्पृशति द्विजः। द्विजातिकरसंस्पृष्टं सर्वं तद्धविरुच्यते"। स्पृशति प्रतिगृह्णातीति कल्पतरुः। तच्च संप्रोक्ष्य ग्राह्यमित्याह विष्णुपु० "संप्रोक्ष्य प्रतिगृह्णीयाच्छूद्रान्नं गृहमागतम्" तच्च पात्रान्तरे ग्राह्यमित्याहाङ्गिराः "स्वपात्रे यत्तु विन्यस्तं शूद्रो यच्छति नित्यशः। पात्रान्तरगतं ग्राह्यं दुग्धं स्वगृहमागतम्"। एतेन स्वगृहमागतस्यैव शुद्धत्वं प्रतीयते ततश्चैतादृशमपि मुमुक्षुणा शूद्रान्नं सर्वथा न भोक्तव्यम् प्रागुक्तहारीतवचने तन्निन्दाश्रवणात्" शु०त०। "नाद्यात् शूद्रस्य विप्रोऽन्नं मोहाद्वा यदि वान्यतः। स शूद्रयोनिं व्रजति यस्तु भुङ्क्ते ह्यनापदि। षण्मासान् यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम्। जीवन्नेव भवेत् शूद्रो मृतः श्वा चाभिजायते। ब्राह्मणक्षत्रियविशां शूद्रस्य च मनीषिणः। यस्यान्नेनोदरस्थेन मृतस्तद्योनिमाप्नुयात्" व्यासवाक्यम् "आर्द्धिकः कुलमित्रश्च गोपालो दासनापितौ। एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत्। कुशीलवः कुम्भकारः क्षेत्रकर्षक एव च। एते शूद्रेषु भोज्यान्ना दत्त्वा स्वल्पपणं बुधैः। पायसं स्नेहपक्वञ्च यावकञ्चैव सक्तवः। पिण्याकञ्चैव तैलञ्च शूद्राद्ग्राह्यं द्विजातिभिः" कूर्मपु० ७त० भागे १६अ०। "कन्दुपक्वानि तैलेन पायसं दधिसक्तवः। द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि"। "कुलमित्रादीनां भोज्यान्नता तु कलीतरपरा। शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणाम्। भोज्यान्नता गृहस्थस्य तीर्थसेवाऽतिदूरतः" पराशरेण कलौ वर्ज्यत्वोक्तेः शूद्रोऽपि ब्राह्मणद्वारा पक्वान्नेन नैवेद्यं दातुमर्हति वृषोत्सर्गाङ्गचरुपाकादिवत् तत्रापि तस्याधिकार इति ति०त० दुर्गोत्सवप्रकरणे रघुनन्दनेन व्यवस्थापितम् तत्र दृश्यम्।

**शूद्रासुत** पु० शूद्रायाः द्विजातिभिः ऊढायाः सुतः। द्विजातिजाते शूद्रजातिस्त्रियाः सुते पुत्रभेदे।

**शूना** स्त्री श्वि–अधिकरणे–क्त सम्प्र०दीर्घः। १प्राणिवधस्थाने हला० "पञ्च शूना गृहस्थस्य चुल्ली पेषण्युपस्करः। कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन्" मनुः। तद्दोषनिवृत्तये कार्य्या मनुना पञ्च यज्ञा विहिता यथा "अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्। पञ्चैतान् यो महायज्ञान् न हापयति शक्तितः। स गृहेऽपि वसन्नित्यं शूनादोषैर्न लिप्यते"। (आलजिभ) २अधोजिह्वायां हारा०।

**शून्य** त्रि० शूनायै प्राणिवधाय हितम् रहःस्थानत्वात् यत्। १निर्जनस्थाने मेदि०। २आकाशे शब्दच०। ३विन्दुमात्रे हेमच०। ४अभावे च अमरः। ५असम्पूर्णे ६जने ७तुच्छे च त्रि० अमरः। [२शून्यमध्ययुक्ते त्रि०।

**शून्यमध्य** पु० शून्यमाकाशो मध्ये यस्य । १नले राजनि० ।

**शून्यवादिन्** पु० शून्यमभावमात्रं सर्वकारणतया वदति वद–णिनि । बौद्धभेदे बुद्धशब्दे ४५८१ पृ० दृश्यम् ।

**शून्या** स्त्री शून्यमस्त्यस्याः अच् । १नल्यां विश्वः । २मध्या-कराटकिन्याम् । (फणिमनसा) राजनि० । [दिटित् शूर्यः

**शूर** हिंसे स्तम्भे च दि०आ०सक०सेट् । शूर्यते अशूरिष्ट ।

**शूर** विक्रमे अद० चु० उभ० सक० सेट् । शूरयति ते अशुशूरत् त ।

**शूर** पु० शूर–अच् । १वीरे विक्रमवति अमरः । २वसुदेव-नामके यादवे मेदि० ३सूर्ये त्रिका० ४अर्कवृक्षे ५सिंहे ६शूकरे पुंस्त्री० स्त्रियां ङीष् । ७चित्रकवृक्षे ८साले ९निकुचे १०मसूरे च पु० राजनि० ।

**शूरण** पु० शूर–ल्यु । (ओल) १मूलभेदे अमरः "शूरणो दीपनो रूक्षः कषायः कण्डुकृत् कटुः । विष्टम्भी विशदो रुच्यः कफार्शःकृन्तनो लघुः । विशेषादर्शसे पथ्यः प्लीहगुल्मविनाशनः । सर्वेषां कन्दशाकानां शूरणः श्रेष्ठ उच्यते । दद्रूणां रक्तपित्तानां कुष्ठानां न हितो हि सः । सन्धानयोगसंप्राप्तः शूरणो गुणवत्तमः" भावप्र० । २श्योणाकवृक्षे च शब्दमाला । [च ।

**शूरसेन** पु०शूरा सेना यत्र, यस्य वा । १देशभेदे २नृपभेदे

**शूर्प** माने चु०उभ० सक० सेट् । शूर्पयति ते अशुशूर्पत् त ।

**शूर्प** पु०शूर्प्यते धान्यादिकमनेन शूर्प–घञ् । (कुला) धान्या-दिस्फोटके १वंशमयपात्रे २द्रोणद्वयपरिमाणे च शब्दच० ।

**शूर्पकर्ण** पुंस्त्री० शूर्पे इव कर्णौ यस्य । १गजे त्रिका० । स्त्रियां ङीष् । २शूर्पश्रुतिरप्यत्र हारा० ।

**शूर्पणखा**(खी) स्त्री शूर्पे इव नखा अस्याः णत्वम् वा ङीष् । रावणभगिन्यां शब्दमा० । [शब्दच० ।

**शूर्पपर्णी** स्त्री शूर्पं इव पर्णान्यस्याः ङीप् । भिण्डीभेदे

**शूर्पवात** पु० ६त० । शूर्पजवाते फुत्कारे त्रिका० ।

**शू(सू)र्म** पुंस्त्री० ऊर्मिरस्त्यस्याः अच् वा पृषो०सस्य शः । लौ-हप्रतिमायाम् अमरः । [लौहादिप्रतिमायां शब्दच० ।

**शू(सू)र्मि(र्मी)** स्त्री दुष्टु ऊर्मिः यस्याः वा शत्वम् वा ङीप् ।

**शूल** रुजायां भ्वा०पर० अक० सेट् । शूलति अशूलीत् ।

**शूल** पु०न० शूल–क । १रोगभेदे २त्रिशूले च अमरः । ३मृत्यौ ४ध्वजे ५शूलीकृते अयःफाले धरणिः । ६चिह्ने मेदि० । ७शूलिभेदे विष्कम्भादिषु दशमे योगे च पु० । ८विक्रेतव्ये "अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः । केशशूलाः स्त्रियो राजन् ! भविष्यन्ति युगक्षये" भा०व० १८८ अ० । अट्टशब्दे ८५पृ० दृश्यम् । शूलरोगभेद नि-दानादिकं भावप्र० उक्तं यथा

"अथ शूलाधिकारः । तत्र शूलस्य सविकल्पं निदान-माह "दोषैः पृथक्समस्तामद्वन्द्वैः शूलोऽष्टधा भवेत् । सर्वेष्वेतेषु शूलेषु प्रायेण पवनः प्रभुः(कर्त्ता)" । अथ वा-तिकस्य विप्रकृष्टं निदानं सम्प्राप्तिपूर्वकं लक्षणञ्चाह"व्या-यामयानादतिमैथुनाच्च प्रजागराच्छीतजलातिपानात् । कलायमुद्गाढकिकोरदूषादत्यर्थरूक्षाध्यशनाभिघातात् । क-षायतिक्तातिविरूढजान्नविरुद्धवल्लूरकशुष्कशाकैः । विट्-शुक्रमूत्रानिलसन्निरोधाच्छोकोपवासादतिहास्यभाषात् । वायुः प्रवृद्धो जनयेद्धि शूलं हृत्पृष्ठपार्श्वं त्रिकवस्तिदेशे । जीर्णे प्रदोषे च घनागमे च शीते च कोपं समुपैति गाढम् । मुहुर्मुहुश्चोपशमप्रकोपौ विण्मूत्रसंस्तम्भनतोद-भेदैः । संस्वेदनाभ्यञ्जनमर्दनाद्यैः स्निग्धोष्णभोज्यैश्च शमं प्रयाति" । व्यायामो मल्लयुद्धादिः यानं तुरगरथादि मैथुनं स्त्रीसेवा प्रजागरो रात्रौ, एषामतियोगात् शीत-जलप्रभूतपानात् कलायस्त्रिपुटः आढकः तुवरी कोरदूषः कोद्रवः । अतिरूक्षद्रव्यसेवा, अध्यशनं भुक्तस्यो-परि भोजनम् अभिघातो लोष्टादिभिः, कषायतिक्तरस-सेवा विरूढजान्नम् विरूढमङ्कुरितमन्नम् कलायच-णकादि तज्जमन्नं भक्ष्यम् । वल्लूरकं शुष्कमांसम् । तस्य शूलस्य देशमाह हृदादिषु तत्र हृच्छूलस्य पृथगपि लक्षणं पठन्ति "कफपित्तावरुद्धस्तु मारुतो रसमूर्च्छितः । हृदिस्थः कुरुते शूलमुच्छ्वासायावरोधकम् । स हृच्छूल इति ख्यातो रसमारुतकोपजः" । अथ पार्श्वशूलस्यापि लक्षणमाह "कफं निरुध्य पवनः सूचीभिरिव निस्तु-दन् । पार्श्वस्थः पार्श्वयोः शूलं कुर्यादाध्मानसंयुतम् । तेनोच्छ्वसिति वक्त्रेण नरोऽन्नञ्च न काङ्क्षति । निद्राञ्च नाप्नुयादेव पार्श्वशूलः प्रकीर्त्तितः" । वस्तिशूलस्यापि लक्षणमाह "रोधात् कुपितो वायुर्वस्तिं संश्रित्य ति-ष्ठति । वस्तेरध्वनि नाड्यादु ततः शूलोऽस्य जायते । विण्मूत्रवातसंरोधी वस्तिशूलः स उच्यते" । प्रकृत-मनुसरति जीर्णे भुक्ते प्रदोषे रात्र्यागमे रात्रि-भवशीतेन वातप्रकोपात् । घनागमे वर्षासु मेघोदये च तथैव । पैत्तिकमाह "क्षारातितीक्ष्णोष्णविदाहि-तैलनिष्पावपिण्याककुलत्थयूषैः । कट्वम्लसौवीरसुराविका-रैः क्रोधानलायासरविप्रतापैः । ग्राम्यातियोगाद-शनैर्विदग्धैः पित्तं प्रकुप्याशु करोति शूलम् । तृण्मोह-

दाहार्त्तिकरं हि नाभ्यां संस्वेदमूर्च्छाभ्रमशोषयुक्तम् । मध्यंदिने कुप्यति चार्द्धरात्रे निदाघकाले जलदात्यये च । शीते च शीतैः समुपैति शान्तिं सुस्वादुशीतैरपि भोजनैश्च” । निष्पावो राजमाषः । सौवीरं सन्धानभेदः । सुराविकारैः “परिपक्वान्नसन्धानसमुत्पन्ना सुरा मता” । तस्या विकारैः । रविप्रतापः आतपः । व्यायामातियोगो मैथुनाधिक्यम् । विदाहीत्युक्तापि अन्नैर्विदग्धैरिति बोधयति अविदाहिवस्तुनोऽपि पित्तवशाद्विदाहित्वं भवति । जलदात्यये शरदि । शीतैर्वातादिभिः । श्लैष्मिकमाह “आनूपवारिजकिलाटपयोविकारैर्मांसेक्षुपिष्टकृशरातिलशष्कुलीभिः । अन्यैर्बलासजनकैरपि हेतुभिश्च श्लेष्मा प्रकोपमुपगम्य करोति शूलम् । हृल्लासकाससदनारुचिसंप्रसेकैरामाशये स्तिमितकोष्ठशिरोगुरुत्वैः । भुक्ते सदैव हि रुजं कुरुतेऽतिमात्रम् सूर्योदयेऽथ शिशिरे कुसुमागमे च” । आनूपं बहुजलदेशगं मांसम् । वारिजं शम्बूकादि “पक्वं दध्ना समं क्षीरं विज्ञेया दधिकूर्चिका । तक्रेण तक्रकूर्ची स्यात्तयोः पिण्डः किलाटकः” । पयोविकारः पायसादिः पिष्टं माषादिः । अन्यैः गुर्वादिभिः । स्तिमितमार्द्रपटावगुण्ठितमिव यत्कोष्ठं शिरश्च तयोर्गुरुत्वैः सह । सूर्योदय इति त्रिधा विभक्तदिवसप्रथमभागस्योपलक्षणम् । शिशिरे तत्र कफस्यातिसञ्चयात् । कुसुमागमे वसन्ते । द्वन्द्वजमाह “द्विदोषलक्षणैरेतैर्विद्याच्छूलं द्विदोषजम् । सर्वेषु देशेषु च सर्वलिङ्गं विद्याद्भिषक् सर्वभवं हि शूलम् । सुकष्टमेनं विषवज्रकल्पं विवर्जनीयं प्रवदन्ति तज्ज्ञाः” । सर्वेषु देशेषु हृत्पृष्ठपार्श्वत्रिकवस्तिनाभ्यामाशयेषु । सर्वभवं त्रिदोषजम् । आमजमाह “आटोपहृल्लासवमीगुरुत्वस्तैमित्यमानाहकफप्रसेकैः । कफस्य लिङ्गेन समानलिङ्गमामोद्भवं शूलमुदाहरन्ति” । अन्नामशूले जाते पश्चाद् दोषसम्बन्धः अतएवास्य शूलस्याष्टमत्वमुक्तम् । स च प्रथममामाशये भवति पश्चात् सम्बन्धिभिर्दोषैर्वस्तिनाभिहृत्पार्श्वकुक्षिषु भवति यथा दोषसम्बन्धः । आमशूलस्य दोषविशेषेण देशविशेषमाह “वातात्मकं वस्तिगतं वदन्ति पित्तात्मकञ्चापि वदन्ति नाभ्याम् । हृत्पार्श्वकुक्षौ कफसन्निविष्टं सर्वेषु देशेषु च सन्निपातात्” । हृत्पार्श्वकुक्षौ हृत्पार्श्वाभ्यां सहिते कुक्षौ । कफसन्निविष्टं कफेनाविष्टम् “वस्तौ हृत्कटिपार्श्वेषु स शूलः कफवातिकः । कुक्षौ हृन्नाभिमध्ये तु स शूलः कफपैत्तिकः । दाहज्वरकरो घोरो विज्ञेयो वातपैत्तिकः” । तन्त्रान्तरोक्तमामशूलमाह “अतिमात्रं यदा भुक्तं पावके मृदुताङ्गते । स्थिरीभूतन्तु तत्कोष्ठे वायुरावृत्य तिष्ठति । यदान्नं न व्रजेत् पाकं तच्छूलं कुरुते भृशम् । मूर्च्छाध्मानं विदाहञ्च हृत्क्लेशं सविलम्बिकम् । कम्पं वान्तिमतीसारं प्रमेहं जनयेदपि । अविपाकोद्भवं शूलमेतमाहुर्मनीषिणः” अविपाकोद्भवम् आमोद्भवमित्यर्थः । अथ शूलस्योपद्रवानाह “वेदनातितृषा मूर्च्छा आनाहो गौरवारुची । कासः श्वासो वमिहिक्का शूलस्योपद्रवाः स्मृताः” । अथासाध्यत्वादिकमाह “एकदोषानुगः साध्यः कृच्छ्रसाध्यो द्विदोषजः । सर्वदोषान्वितो घोरस्त्वसाध्यो भूर्य्युपद्रवः” । अथारिष्टमाह “वेदनातितृषा मूर्च्छा आनाहो गौरवं ज्वरः । भ्रमोऽरुचिः कृशत्वञ्च बलहानिस्तथैव च । उपद्रवा दशैवैते यस्य शूलेषु, नास्ति सः” । अथ शूलस्यैव भेदं परिणामशूलमाह “स्वैर्निदानैः प्रकुपितो वातः सन्निहितो यदा । कफपित्ते समावृत्य शूलकारो भवेद्बली । भुक्ते जीर्य्यति यच्छूलं तदेव परिणामजम्” । स्वैर्निदानैरित्यादिना निदानपूर्व्विका संप्राप्तिरुक्ता भुक्ते जीर्य्यतीत्यादिना लक्षणमुक्तम् । समावृत्य व्याप्य । तस्य लक्षणमप्यतः समासेनाभिधीयते । “आध्मानाटोपविण्मूत्रविबन्धारतिवेपनैः । स्निग्धोष्णोपशमप्रायं वातिकं तद्वदेद् भिषक् । तृष्णादाहारतिस्वेदकट्वम्ललवणोत्तरम् । शूलं शीतशमप्रायं पैत्तिकं लक्षयेद् बुधः । छर्द्दिहृल्लाससम्मोहस्वल्परुक् दीर्घसन्तति । कटुतिक्तोपशान्तौ च विज्ञेयञ्च कफात्मकम् । संसृष्टलक्षणं बुद्ध्वा द्विदोषं परिकल्पयेत् । त्रिदोषजमसाध्यं स्यात् क्षीणमांसबलानलम्” । अथान्नद्रवाख्यं शूलविशेषमाह “जीर्णे जीर्य्यति चाप्यन्ने यच्छूलमुपजायते । पथ्यापथ्यप्रयोगेण भोजनाभोजनेन वा । न शमं याति नियमात् सोऽन्नद्रव उदाहृतः । नेदं शूलमसाध्यं चिकित्साभिधानात्” ।

अथ शूले पथ्यापथ्ये भावप्र० दर्शिते यथा

“कलाययवगोधूमाः श्यामाकाः कोरदूषकाः । राजमाषाश्च कुलत्थाः कङ्गुशालयः । दधिसुमरसं क्षीरं सर्पिर्गव्यं समाहिषम् । वास्तुकं कारवल्ली च कर्कोटकफलानि च । बर्हिणो हरिणास्तुल्या रोहिताद्याः कपिञ्जलाः । एतानि शूलामये शस्तानि चिकित्सकैः ।

दधिलुप्तरसं दध्ना लुप्तः क्षतो रसो यस्य तत्क्षीरं दधियुक्तं क्षीरमित्यर्थः । "व्यायामं मैथुनं मद्यं लवणं कटुकं रसम् । वेगरोधं शुचं क्रोधं विदलं शूलवान् त्यजेत्" ।

स च उपपातकचिह्नं यथोक्तं शाता० कर्मवि०

"जलोदरयकृत्प्लीहशूलरोगव्रणानि च । श्वासाजीर्णज्वरच्छर्दिभ्रममोहगलग्रहाः । रक्तार्बुदविसर्पाद्या उपपापोद्भवा गदाः" ।

**शूलक** पुंस्त्री० शूल+संज्ञायां कन् । १दुर्विनीताश्वे हेमच० । स्त्रियां ङीष् । स्वार्थे क । २शूलशब्दार्थे ।

**शूलग्रन्थि** पु० शूलाकारः ग्रन्थिरस्य । मालादूर्वायां राजनि०

**शूलघातन** न० शूलं रोगभेदं घातयति हन–णिच्–ल्यु । मण्डूरे शब्दच० ।

**शूलघ्न** पु० शूलं हन्ति हन–क । तुम्बुरुवृक्षे रत्नमा० ।

**शूलद्विष्** पु० द्विष–क्विप् । हिङ्गौ रत्नमाला । [शब्दच० ।

**शूलधन्वन्** पु० शूलं धनुरायुधमस्य अनङ् समा० । शिवे

**शूलधर** पु० शूलं धारयति धारि–अच् धृत्वा । शिवे शब्दच० । [स्त्री ङीप् शब्दच० ।

भृ–क्विप् । शूलभृदप्यत्र ।

**शूलधारिन्** पु० शूलं धरति धृ–णिनि । १शिवे २दुर्गायां

**शूलधृष्** पु० शूलेन धर्षति दैत्यान् धृष–क्विप् । १शिवे २दुर्गायां स्त्री । धृष–क्विन् । शूलधृक् तत्रार्थे ।

**शूलनाशन** न० शूलं नाशयति नश–णिच्–ल्यु । सौवर्चललवणे हेमच० । [राजनि० ।

**शूलपर्णी** स्त्री शूलमिव पर्णं यस्याः ङीप् । शूलोटवे

**शूलपाणि** पु० शूलं पाणौ यस्य । शिवे शूलहस्तादयोऽप्यत्र ।

**शूलशत्रु** पु० शूलस्य रोगस्य शत्रुः । एरण्डवृक्षे शब्दच० ।

**शूलहन्त्री** स्त्री शूलं रोगं हन्ति हन–तृच् ङीप् । यवान्यां राजनि० ।

**शूलहृत्** पु० शूलं रोगं हरति हृ–क्विप् । हिङ्गुनि त्रिका० ।

**शूला** स्त्री शूलं तदाकारोऽस्त्यस्य शूलं स्वयौवनविक्रयतयाऽस्त्यस्या वा अच् । १दुष्टवधार्थकीलके २वेश्यायाश्च त्रिका० ।

**शूलाकृत** त्रि० शूलेन विद्धा कृतं पक्वम् शूल+डाच्+कृ–क्त । लौहादिकीलकेन विद्धा पक्वे मांसे (कावाव) अमरः

**शूलिक** त्रि० शूलं पाकसाधनत्वेनास्त्यस्य ठन् । १शूलाकृते शब्दच० २शशके हेमच० ३शूलयुते त्रि० ।

**शूलिन्** पु० शूलमस्त्यस्य इनि । १शूलरोगयुक्ते २शूलास्त्रधारके त्रि० ३शिवे पु० ४शशके भावप्र० । [वृक्षे शब्दच० ।

**शूलिन** पु० शूलं तदाकारं फलमस्त्यस्य इनन् । माण्डीर-

**शूली** स्त्री शूलं पत्राकारे अस्त्यस्य अच् गौरा० ङीष् । शूलाकारपत्रयुते अनाम्नाते तृणभेदे राजनि० ।

**शूलोत्खा** स्त्री शूलं रोगभेदमुत्खनति उद्+खन–ड । सोमराज्यां शब्दच० ।

**शूल्य** त्रि० शूले संस्कृतं यत् । शूलाकृते मांसे भावप्र० कृतान्नशब्दे तत्पाकादि २१८२ पृ० दृश्यम् ।

**शूष** प्रसवे भ्वा० पर० सक० सेट् । शूषति अशूषीत् ।

**शृ(सृ)गाल** पुंस्त्री० असृजं गाति गा–क पृषो० । (शेयाल) १पशौ अमरः स्त्रियां ङीष् । २दैत्यभेदे मेदि० । ३वासुदेवे ४निष्ठुरे ५खले च पु० सारसुन्दरीतामिधानम् । पृषो० । सृकाल तत्रार्थे शब्दच० । ६भीरौ अमरार्थकोषः । सृगालशब्दशाकुनं शिवारुतशब्दे दृश्यम् ।

**शृगालकण्टक** पु० सृगालस्येव कण्टको यस्य । (शेयालकाँटा) क्षुपभेदे शब्दच० ।

**शृगालकोलि** पु० सृगाल इव कण्टकितः कोलिः । (शेयाकुल) क्षुपभेदे रत्नमाला । [वाच्ये क्षुपभेदे राजनि० ।

**शृगालघण्टी** स्त्री सृगाल इव कण्टकिनी घण्टी । कोकि-

**शृगालजम्बू** स्त्री सृगालप्रिया जम्बुरिव । १गोडुम्बे (गोमुक) २कोलाटफले मेदि० । [राजनि० ।

**शृगालविन्ना** स्त्री सृगालैर्विद्यते विद–क्त । पृश्निपर्ण्यां

**शृगालिका** स्त्री सृगालस्य भार्या ङीष् स्वार्थे क । १सृगालयोषिति सृगालीव इवार्थे कन् । २भयात् पलायने मेदि० ।

**शृगाली** स्त्री सृगालस्तत्पलायनं साहश्येनास्त्यस्य अच् ङीप् । १पलायने त्रिका० । २कोकिलाक्षे ३विदार्यां राजनि० ।

**शृङ्खल** पु० सृङ्गात् प्राधान्यात् खल्यतेऽनेन पृषो० । निगडे २लौहमये ३पादबन्धने च हेमच० । ४कट्याभरणे अमरः ५पुंस्कटीवस्त्रबन्धने मेदि० । तत्रार्थे स्त्रीत्वमपि टाप् ।

**शृङ्खलक** पुंस्त्री० सृङ्खल इव कायति कै–क । १उष्ट्रे राजनि० स्त्रियां जातित्वात् ङीष् स्वार्थे क । २सृङ्खलशब्दार्थे ।

**शृङ्खलित** त्रि० सृङ्खला जाताऽस्य इतच् । बद्धनिगडे धनञ्जयः

**शृङ्खली** स्त्री सृङ्खलः तदाकारोऽस्त्यस्याः अच् गौरा० ङीष् । १कोकिलाक्षे वृक्षे २पुंस्कटीवस्त्रबन्धने च राजनि० ।

**शृङ्ग** न० शॄ–गन् पृषो० मुम् ह्रस्वश्च । १पर्वतोपरिभागे सानौ अमरः । २प्रभुत्वे ३चिह्ने ४जलक्रीडार्थयन्त्रभेदे (पिचकारी) ५पश्वादीनां विषाणे (शिङा) ६उत्कर्षे च मेदि० । ७कटुकं दुग्धीक्षे ८पद्मे च शब्दर० १०अहिम-

शृङ्गनिर्मितवाद्यभेदे (शिङ्गा) ११कामोद्रेके सा०द० शृङ्गारशब्दे दृश्यम् । १२कूर्चशीर्षकद्रव्ये पु० मेदि० १३मुनिभेदे पु० ।

**शृङ्गक** पु० शृङ्गमिव कायति कै–क । जीवकद्रव्ये जटा० ।

**शृङ्गकन्द** पु० शृङ्गमिव कन्दोऽस्य । शृङ्गाटके (पानीफल) राजनि० ।

**शृङ्गज** न० शृङ्गे पर्वताग्रे जायते जन–ड । १अगुरुचन्दने रत्नमा० । २वाणे हेतुद्रव्ये पु० संक्षिप्तसा० ३शृङ्गजातमात्रे त्रि०

**शृङ्गमूल** पु० शृङ्गमिव मूलमस्य । शृङ्गाटके राजनि० ।

**शृङ्गमोहिन्** पु० शृङ्गाय कामोद्रेकाय मोहयति मुह–णिच्–णिनि । चम्पके राजनि० ।

**शृङ्गला** स्त्री शृङ्गं तदाकारफलं लाति ला–क । अजशृङ्ग्यां ( गाडरशिङा ) शब्दच० ।

**शृङ्गवत्** पु० शृङ्गं प्राधान्येनास्त्यस्य मतुप् मस्य वः । १वर्षसीमापर्वतभेदे तन्मानादि भाग० ५।१६ अ० उक्तं यथा "उत्तरोत्तरेणेलावृतं नीलः श्वेतः शृङ्गवान् इति त्रयो रम्यकहिरण्मयकुरूणां वर्षाणां मर्यादागिरयः प्रागायता उभयतः क्षारोदावधयः द्विसहस्रयोजनपृथव एकैकशः पूर्वस्मात् पूर्वस्मादुत्तरोत्तरं दशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति" । २शृङ्गयुते त्रि० ।

**शृङ्गवेर** न० शृङ्गमिव वेरमवयवो यस्य । १आर्द्रके अमरः । २शुण्ठ्यां ३रामसखगुहकचण्डालपुरे च । स्वार्थे क । आर्द्रके हेमच० । [एरकाहठे भावप्र० ।

**शृङ्गवेराभमूलक** पु० शृङ्गवेरेण तुल्यं मूलमस्य कप् ।

**शृङ्गाट** पु० शृङ्गं प्राधान्यमटति अट–अण् । १उत्तरस्य पर्वतभेदे २चतुष्पथे ३जलकण्टकिद्रव्ये च ४तत्फले न० । "शृङ्गाटकं हिमं स्वादु गुरु वृष्यं कषायकम् । ग्राहि शुक्रानिलश्लेष्मप्रदं पित्तास्रदाहनुत्" भावप्र० । स्वार्थे क । तत्र, चतुष्पथे अलङ्कारोक्ते बन्धभेदरूपे शब्दालङ्कारे च । स च पर्वतः कामाख्यादेशस्थः यथोक्तं कालिकापु० ८२अ० यथा "दीर्घवत्याः पूर्वतस्तु शृङ्गाटो नाम पर्वतः । तत्र भर्गस्य देवस्य लिङ्गमेकं प्रतिष्ठितम् । सरित्तु त्रिदा त्रिस्रोता दक्षिणोदधिगामिनी । शृङ्गाटस्य सततं स्यन्दनी प्रावृषि पावनः । दक्षिणं सागरं याति भर्गस्य प्रियकारिणी । पक्वमांसभेदे तत्पाकविधिर्यथा "शुष्कमांसं तमूलस्य कर्त्तितं स्वेदितं जले । लवङ्गं हिङ्गुसहितं वरयार्द्रकसंयुतम् । एलाजीरकधन्याकनिम्बूरससमन्वितम् । घृते सगव्ये तद्भृष्टं पूरणं प्रोच्यते बुधैः । शृङ्गाटकं समितया कृतं पूरणपूरितम् । पुनः सर्पिषि सम्भृष्टं मांसं शृङ्गाटकं वदेत् । मांसं शृङ्गाटकं रुच्यं बृंहणं बलकृत् गुरु । वातपित्तहरं वृष्यं कफघ्नं वीर्यवर्द्धनम्" भावप्र० ।

**शृङ्गार** पु० शृङ्गं कामोद्रेकमृच्छत्यनेन ऋ–अण् । १रसभेदे अमरः । २लवङ्गे ३सिन्दूरे ४चूर्णे च मेदि० । शृङ्गं कारणत्वेन ऋच्छति अण् । ५कालागुरुणि राजनि० ६आर्द्रके शब्दच० । शृङ्गं प्राधान्यमृच्छत्यनेन अण् । ७भूषणे ८गजभूषणे च । स्वार्थे क । सिन्दूरे "पुंसः स्त्रियां स्त्रियाः पुंसि संयोगं प्रति या स्पृहा । स शृङ्गार इति ख्यातो रतिक्रीडादिकारणम्" इत्युक्ते ९स्त्रीपुंसयोरन्योन्यसंयोगं प्रतीच्छाभेदे च रसभेदलक्षणादिकं सा०द० उक्तं यथा "शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः । उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते । परोढां वर्जयित्वात्र वेश्यां चाननुरागिणीम् । आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः । चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम् । भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्त्तितः । त्यक्त्वौग्र्यमरणालस्यजुगुप्सा व्यभिचारिणः । स्थायी भावो रतिः श्यामवर्णोऽयं विष्णुदैवतः" । "शून्यं वासगृहमित्यादि" । अत्र उक्तस्वरूपः पतिरुक्तस्वरूपा च बाला आलम्बनविभावौ । शून्यं वासगृहमुद्दीपनविभावः । चुम्बनमनुभावः । लज्जाहासौ व्यभिचारिणौ । एतैरभिव्यक्तः सहृदयरतिभावः शृङ्गाररूपतां भजते । तद्भेदावाह । विप्रलम्भोऽथ सम्भोग इत्येष द्विविधो मतः" । तत्र विप्रलम्भो विप्रलम्भशब्दे उक्तः सम्भोगस्तु "दर्शनस्पर्शनादीनि निषेवेते विलासिनौ । यत्रानुरक्तावन्योन्यं सम्भोगोऽयमुदाहृतः" । आदिशब्दादन्योन्याधरपानचुम्बनादयः । यथा "शून्यं वासगृहमित्यादि" । "संख्यातुमशक्यतया चुम्बनपरिरम्भणादिबहुभेदात् । अयमेक एव धीरैः कथितः सम्भोगशृङ्गारः । तत्र स्यादृतुषट्कं चन्द्रादित्यौ तथास्तमयः । जलकेलिवनविहारप्रभातमधुपानयामिनीप्रभृतिः । अनुलेपनभूषाद्या वाच्यं शुचि मेध्यमन्यच्च" । तथा च भरतः "यत्किञ्चिल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा तत्सर्वं शृङ्गारेणोपमीयते उपयुज्यते" । किञ्च "कथितश्चतुर्विधोऽसावानन्तर्यात्तु पूर्वरागादेः" । यदुक्तम् "न विना विप्र-

तन्मूलेन सम्भोगः पुष्टिमश्नुते। कथायिते हि वस्त्रादौ भूयानागो विवर्द्धते"।

**शृङ्गारभूषण** न० शृङ्गारे तदर्थं भूषणम्। सिन्दूरे हेमच०।

**शृङ्गारयोनि** स्त्री ६त०। कामदेवे हला०।

**शृङ्गारिन्** पु० शृङ्गारः उद्दीपकत्वेनास्त्यस्य इनि। १पूगे तत्फलभक्षणे हि कामोद्रेक इति तस्य तथात्वम्। २गजे मेदि०। ३सुवेशे त्रि०। ४माणिक्ये पु० राजनि०।

**शृङ्गिक** न० शृङ्गं तदाकारोऽस्त्यस्य ठन्। १विषभेदे २अतिविषायां स्त्री शब्दर०। [स्त्रियां ङीप्।

**शृङ्गिण** पु० शृङ्गं युद्धसाधनत्वेनास्त्यस्य इनन्। मेषे हेमच०

**शृङ्गिन्** पु० शृङ्गमस्त्यस्य इनि। १मेषे २कुलाचलभेदे शृङ्गवच्छब्दे दृश्यम्। ३पर्वतमात्रे ४मुनिभेदे ५वृक्षे च। ६शृङ्गयुक्ते त्रि० मेदि०। ७धेन्वां स्त्री ङीप्। ८ऋषभ ओषधौ ९मल्लिकायां १०ज्योतिष्मत्यां च स्त्री मेदि०। मुनिभेदश्च शमीकर्षिपुत्रः स हि परिक्षितं प्रति तक्षकदंशनशापमदात् इति विष्णुपु० स्थितम्।

**शृङ्गी** स्त्री शृङ्गमस्त्यस्या अच् गौरा० ङीष्। १मद्गुरस्य प्रियायाम् अमरः। पृषो० ह्रस्वः। शृङ्गिरित्यपि तत्रार्थे शब्दर०। २अतिविषायां ३ऋषभौषधौ अमरः। ४कर्कटशृङ्ग्याम् ५स्वर्णे ६विषे च राजनि०। ७भूषणस्वर्णे रत्नकोषः "मद्गुरस्यप्रिया शृङ्गी इत्यमरे मद्गुरसी अप्रियेति नामद्वयम्। तेन (शिङ्गी) मत्स्यस्यैवेदं नाम इति भरतः।

**शृङ्गीकनक** न० अगि—कि बा० सम्य० ङीप् शृङ्गी अलङ्कारस्तदर्थं कनकम्। भूषणार्थस्वर्णे अमरः। [भरः।

**शृ (स्) णि** स्त्री शृ—स्ट वा क्तिन् तस्य निः पृषो०। अङ्कुशे अ-

**शृत** त्रि० शृ—क्त। १पक्वे अमरः २क्वथिते जलादौ च "द्रव्यादुत्क्वथितात्तोयात् वह्निना परितापितात्। निःसृतो यो रसः पूतः स शृतः समुदाहृतः" वैद्यकोक्ते ३द्रव्यक्वाथजे रसे पु०।

**शृध** अपानशब्दे भ्वा० आ० इता० लुङि लृटि लृङि च उभ० अक० सेट् क्त्वा वेट्। शर्द्धते अशृधत् शर्त्स्यति शर्द्धिष्यते।

**शृध** छेदने भ्वा० उभ० सक० सेट् क्त्वा वेट्। शर्द्धति ते अशर्द्धीत् अशर्द्धिष्ट।

**शृध** प्रहणे चु० उभ०सक० सेट्। शर्द्धयति ते अशशर्द्धत् त।

**शृधु** पु० शृध-कु। १बुद्धौ विश्व०। २कुत्सिते ३अपाने संक्षिप्तसा०

**शॄ** हिंसने क्र्या० प० पर० सक० सेट्। शृणाति अशारीत्। शीर्य्यः।

**शेखर** पु० शिखि—गतौ अरन् पृषो०। १शिखायां २मूर्द्धस्थितमाल्ये च अमरः। ३वन्दायां स्त्री शब्दर० ङीप्। ४गीताङ्गे ध्रुवभेदे पु० तल्लक्षणं यथा "द्वादशाक्षरपादः स्यात् स चाप्यशुभकृत् प्रभोः। हास्यके च रसे वीरे गीयते शेखरो ध्रुवः। लघुगुर्व्वभेदेऽथ स भवेल्लघुशेखरः" संगीतदा०। [त्रि०।

**शेप** पु० शी—पन्। १शेफे शिश्ने शब्दच०। २शयनकर्त्तरि

**शेपाल** पु०शेपः शयित इवालति अल-अच्। शैवाले शब्दर०

**शेफ** पु०न०। शी—फन्। १शिश्ने अमरः २शयनकर्त्तरि त्रि०। शुक्रपाते सति शेते शी—असि फुक् च शेफोऽप्यत्र न०। "गोलिङ्गं चिह्नशेफसोः" अमरः। शेफश्शेफसी शेफ शेपौ शेपश्चेति पञ्चशब्दास्तत्रार्थे तत्र पृषो० साधुतेति भरतः। [ङीप्। शेफालिकायां शब्दमा०।

**शेफालि(ली)** स्त्री शेफाः शयनशालिनः अलयो यत्र वा

**शेफालिका** स्त्री शेरते इति शेफाः अलयो यत्र वा कप्। (शिउलि) पुष्पवृक्षे अमरः "शेफालिका कटूष्णा च तिक्ता रूक्षा च वातहृत्। कफाङ्गसन्धिशातघ्नी शूलवातादिदोषहृत्" राजनि०। [अमरः।

**शेमुषी** स्त्री शी—विच् शेः मोहस्तं मुष्णाति मुष-क। बुद्धौ

**शेल** गतौ चालने च भ्वा० पर० सक० सेट्। शेलति अशेलीत्। ऋदित् चङि न ह्रस्वः।

**शेलु** पु० शेल—उण्। बहुवारवृक्षे अमरः।

**शेव** पु० शुक्रपाते सति शेते शी—वन्। पुंचिह्ने २उच्चते ३अर्थ्ये च उणादिकोषः।

**शेवधि** पु० शेः धनादिमोहस्तस्य अवधिः। "पद्मोऽस्त्रियां महापद्मः शङ्खोमकरकच्छपौ। मुकुन्दकुन्दनीलाश्च निधयो नव शेवधि" इत्युक्ते नवविधे निधौ अमरटीका।

**शेवल** न० शी—विच् तथाभूतः सन् वलते वल—अच्। शैवाले (शेयाला) शब्दच०।

**शेवाल** न० शेते विच् शे—सन् वलते वल-संज्ञायां कर्त्तरि घञ्। १शैवाले शब्दर०। २आकाशमांस्यां स्त्री राजनि०।

**शेष** पु०शिष-अच्। १अनन्ते सर्पराजे सर्पभेदे २बलदेवे च मेदि०। ३अवशेषे अमरः। ४गजे ५उपयुक्तेतरवस्तुनि कलापपालः। ६भगवतो कालसंज्ञमूर्त्तौ "एका भगवतो मूर्त्तिर्ज्ञानरूपा शिवामला। वासुदेवाभिधाना सा गुणातीता सुनिष्कला। द्वितीया कालसंज्ञा च तामसी शेषसंज्ञिता। निहन्ति सकलांश्चान्ते वैष्णवी परमा तनुः" कूर्म्मपु० ४८अ०। "शेषे प्रष्ठौ" पा०सू० "उक्तादन्यः

शेषः" भाष्यादयः। परोद्देशेन प्रवर्त्तमाने ऽगुणीभूते अस्य लक्षणविषयादि मीमांसासूत्रभाष्यादौ दर्शितं यथा "शेषः परार्थत्वात्" सू० "इह सूत्रे शेषस्य लक्षणम्, येन च हेतुना शेषः इत्युच्यते, तदुभयमाख्यायते। यः परस्योपकारे वर्त्तते, स शेषः इत्युच्यते, यथा, ये परार्थाः, ते वक्तारो भवन्ति, शेषभूता वयमिह इति। ननु योऽपि प्रधानभूतः सोऽपि कदाचित् परार्थे वर्त्तते, यथा उपाध्यायः प्रधानभूतः शिष्याणां विद्याविनयाधाने वर्त्तते। सत्यं वर्त्तते, यस्तु अत्यन्तं परार्थः, तं वयं शेषः इति ब्रूमः, यथा, गर्भदासः कर्मार्थ एव स्वामिनोऽनन्तं क्रीयते; वक्ष्यति इत्येव। ननु गर्भदासस्यापि स्वामी संविदधानो गुणभावमायात्। न इति ब्रूमः, आत्मन एवासौ संविदधानो गुणभावं गच्छति, नान्तरीयकत्वात् गर्भदासस्योपकरोति, अनडुहो वा, यस्त्वत्यन्तं परार्थः, तं वयं शेषः इति ब्रूमः। अथ तत्र किं लक्षणम्?। यैस्तु द्रव्यं चिकीर्ष्यते गुणः तत्र प्रतीयेत इति, तत्र अपूर्वार्थता व्यावर्त्तिता, दृष्टप्रयोजनानामाम्नातानाम्। इह तु सर्वेषामेव शेषाणां लक्षणमुच्यते" शव०भा०। तस्य कश्चिदित्याह "द्रव्यगुणसंस्कारेषु बादरिः" सू० "बादरिराचार्यः अत्र द्रव्यगुणसंस्कारेष्वेव शेषशब्दः इति मेने, न यागफलपुरुषेषु। द्रव्यं क्रियार्थं, यदि प्रयोजनवती क्रिया, अतः सा द्रव्येण निर्वर्त्तयितव्या, तस्या निर्वृत्तिर्व्यापृते न भवति इति तन्निर्वृत्तये द्रव्यमेषितव्यं भवति, तस्मात् क्रियार्थं द्रव्यम्। गुणः शक्नोति विशिष्टं द्रव्यं चोदितं लक्षयितुम्, लक्षितेन च तेन प्रयोजनम्, विशिष्टस्य क्रियासाधनत्वात्, तस्मात् सोऽपि द्रव्यद्वारेण क्रियाया उपकरोति इति क्रियार्थ एव। संस्कारो नाम स भवति, यस्मिन् जाते पदार्थो भवति योग्यः कस्यचित् अर्थस्य, तेनापि क्रियायां कर्त्तव्यायां प्रयोजनम् इति सोऽपि परार्थः। तस्मात् द्रव्यगुणसंस्काराः परार्थत्वात् शेषभूताः। न तु यागफलपुरुषाः। यागः तावत् कर्त्तव्यः पुरुषस्य, न हि, तस्मिन् निर्वर्त्तिते किञ्चित् अपरमस्ति कर्त्तव्यम्। स हि पुरुषार्थः, यदन्यत् द्रव्यादि, तत् तदर्थं तस्य शेषभूतम्, स तु न किञ्चिदभिनिर्वर्त्तयितुम् क्रियते। फलमपि न तेन क्रियते, तस्मिन् तु कृते स्वयमेव तत् भवति। तस्मिन् कृते फलमस्य भवति इत्येतावत् गम्यते, नास्य शब्दो यागेन क्रियते फलमिति। तस्मात् यागो न शेषभूतः कस्यचित् अर्थस्य। फलमपि न पुरुषं प्रत्युपदिश्यते, यः स्वर्गं कामयते, स यागं कुर्यादित्येतावत् शब्देनोपदिश्यते, नात्मनः परस्य वा इति, स्वर्गं प्रतीच्छामात्रेण स्वर्गकामः इति भवति, तस्मात् पुरुषं प्रति गुणभावेन न श्रूयते स्वर्गः, तस्मात् सोऽपि न शेषभूतः। न चेत् फलयागौ गुणभावेन चोद्येते, कस्य पुरुषः प्रधानभूतो भवति? प्रत्यक्षस्यास्य द्रव्यत्वात् कर्म प्रति गुणभावः। तस्मात् द्रव्यगुणसंस्कारेष्वेव शेषभावं बादरिर्मेने" शव०भा०। "कर्माण्यपि जैमिनिः, फलार्थत्वात्" सू० "जैमिनिस्तु स्वाचार्यः कर्माण्यपि शेषभूतानि मन्यते स्म, न बादरिरिवावधारणामनुमेने, स हि ददर्श, न यागः कर्त्तव्यतया चोद्यते, फलकामस्य तु तत्साधनोपायत्वेन इति। एवं सुतोऽर्थः परिगृहीतो भविष्यति, अर्थवत्त्वोपदेशः। एतमेवार्थं षष्ठेऽध्याये सूत्रैरेव साधयिष्यति। इह तु तत्सिद्धेनैव फलार्थत्वेन शेषभावं यागस्यापादयति स्म। तस्मात् अनवधारणा द्रव्यगुणसंस्काराः शेषभूताः यागोऽपि शेषभूतः फलस्य प्रति" भा०। "फलं च पुरुषार्थत्वात्" सू०। "फलमपि पुरुषं प्रत्युपदिश्यते, यः, स्वर्गो मे भवेत् इत्येवं कामयते, तस्य यागः न यः स्वर्गः, स आत्मानं लभेत इति। आत्मनेपदप्रयोगात्, कर्त्रभिप्राये एतत् भवति, क्रियाफलमनुभवेत् कथं पुरुषः? इति यागः प्रयुज्यते। तस्मात् फलं पुरुषार्थं यागात् श्रूयते नात्मनिर्वृत्त्यर्थम्। तस्मात् शेषभूतम् इति" भा०। "पुरुषश्च कर्मार्थत्वात्" सू०। "पुरुषोऽप्यौदुम्बरीसम्मानादिषु गुणभूतः श्रूयते। तस्मात् अनवधारणा एषा, द्रव्यगुणसंस्कारेषु शेषत्वं बादरिर्मेने इति"। "अथ इदानीमत्राभ्युपगमवान् सूत्रकारः परिनिश्चिकाय, द्रव्यगुणसंस्कारेष्वेव नियतो यज्ञिस्यति शेषभावः, आपेक्षिक इतरेषाम्। यागस्य द्रव्यम्प्रति प्रधानभावः, फलम्प्रति गुणभावः, फलस्य यागम्प्रति प्राधान्यम्, पुरुषम्प्रति गुणता, पुरुषस्य फलम्प्रति प्रधानता, औदुम्बरीसम्मानादिं प्रति गुणत्वम् तस्मात् सम्यता अवधारणा, द्रव्यगुणसंस्कारा यागम्प्रति नियमतो गुणभूता एव" भा० कस्यचित् शेषरक्षणनिषेधो यथा "ऋणशेषं चाग्निशेषं शत्रुशेषं तथैव च। पुनःपुनः प्रवर्द्धन्ते तस्मात् शेषं न कारयेत्" गरुड़पु० "प्रसादाद्विजनिर्माल्यदाने शेषेति कीर्त्तिता" विश्वोक्तौ स्वामिना प्रसाददत्ते दमाल्ये स्त्री "तथेति शेषामिव भर्त्तुराज्ञाम्" कुमारः।

**शेषरात्रि** स्त्री० शेषं रात्रेः एकदेशिस० । रात्रिशेषे शब्दच०

**शेषशयन** पु० शेषः अनन्तः शयनमस्य । नारायणे तच्छयन-प्रकारकालादि कालिकापु० २७अ० उक्तं यथा "अनन्तस्तत्र गत्वा तु यत्र क्षीरोदसागरः । तत्र स्वयं श्रिया युक्तं सुषुप्सन्तं जनार्दनम् । तस्योपधानमकरो दनन्तो दक्षिणां फणाम् । उत्तरां पादयोश्चक्रे उपधानं महाबलः । तालवृन्तं तदा चक्रे स शेषः पश्चिमां फणाम् । स्वयन्तु वीजयामास शेषरूपी जनार्दनम् । शङ्खं चक्रं नन्दकादिविरुधी द्वे महाबलः । ऐशान्या फणया चाथ स दध्रे गरुडं तदा । गदां पद्मञ्च शार्ङ्गं च तथैव विविधायुधम् । यानि चान्यानि तस्यासन्ना-ग्नेय्या फणया दधौ । एवं कृत्वा स्वकं कायं शयनीयं तदा हरेः । भूतभव्यजगन्नाथं परापरगतिं हरिम् । दधार शिरसानन्तः स्वयमेव स्वकां तनुम् । एवं ब्रह्म-दिनस्यैव प्रमाणेन निशां हरिः । सन्ध्यां च समधिप्राप्य शेते नारायणोऽव्ययः" । मनुना "शर्वरी तस्य तावती" इत्युक्तम् । "यदा स देवो जागर्त्ति तदेदं चेष्टते जगत् । यदा स्वपिति शान्तात्मा तदा सर्वं प्रणश्यति" इत्युक्तं तेन प्रलयकाले एव तस्य शयनम् ।

**शैक्ष** पु० शिक्षां तन्नामग्रन्थमधीते वेत्ति वा अण् । १शिक्षा-ग्रन्थाध्यायिनि २तद्वेत्तरि च । वुन् । शैक्षकोऽप्यत्र ।

**शैखरिक** पु० शिखरे प्राचीराद्यग्रे भवः ठक् । अपामार्गे अमरः ।

**शैखरेय** पु० शिखरे भवः ढक् । अपामार्गे रत्नकोषः ।

**शैत्य** न० शीतस्य भावः ष्यञ् । शीतलत्वे ।

**शैथिल्य** न० शिथिलस्य भावः ष्यञ् । अदृढे संयोगभेदे ।

**शैनेय** पु० शिनेर्गोत्रापत्यम् ढक् । सात्यकिनाम्नि यादवे ।

**शैरीय** पु० शिरा+अण् । नीलझिण्ट्यां रत्नमा० । ढकञ् शैरेयक तत्रार्थे ।

**शैल** न० शिलायां भवः अण् । १शैलेये गन्धद्रव्यभेदे । २तार्क्ष्यशैले मेदि० । ३शिलाजतुनि च राजनि० । शिलाः सन्त्यस्य मत्वा० अण् । ४पर्वते पु० अमरः । [राजनि० ।

**शैलगन्ध** न० शैलस्य शैलजस्येव गन्धोऽस्य । शावरचन्दने

**शैलज** न० शैले पर्वते जायते जन–ड । १स्वनामख्याते गन्धद्रव्यभेदे रत्नमा० । २गजपिप्पल्यां ३सैंहल्यां ४दुर्गा-याञ्च स्त्री राजनि० । [३वै त्रिका० ।

**शैलधन्वन्** पु० शैलं गिरितुल्यं धनुरस्य अनङ् स० । महा-

**शैलधर** पु० शैलं गोवर्द्धनं धरति धृ–अच् । श्रीकृष्णे धनञ्जय ।

**शैलपत्त्र** पु० शैलमिव सुगन्धि पत्त्रमस्य । बिल्ववृक्षे राजनि०

**शैलभित्ति** पु० शैलं भिनत्ति भिद्–क्तिच् । टङ्के पाषाण-दारणास्त्रे जटा० । [शैलाधिराजादयोऽप्यत्र ।

**शैलराज** पु० शैलानां नगानां राजा टच् समा० । हिमाचले

**शैलराजसुता** स्त्री ६त० । हैमवत्यां पार्वत्यां "जाता शै-लेन्द्रगृहे सा शैलराजसुता ततः" देवीपु० ४५अ० ।

**शैलवीज** पु० शिलां तत्पर्य्यन्तं दूरं धावति अण् शैलं वीजं यस्य । भल्लातके राजनि० ।

**शैलशिविर** न० शैलानां नगानां शिविरमिव । समुद्रे त्रिका० ।

**शैलसार** न० पु०न० शैलस्य सार इव । शिलाजतुनि राजनि०

**शैलसुता** स्त्री ६त० । १पार्वत्याम् २गङ्गायां च ।

**शैलाग्र** न० शैलस्याग्रम् । पर्वतशृङ्गे त्रिका० । [राजनि० ।

**शैलाज** न० शिलायां जायते जन–ड स्वार्थे अण् । शैलजे

**शैलाट** पुंस्त्री० शैलं पर्वतमटति अट–अण् । १सिंहे २किराते च स्त्रियां ङीष् । ३शुक्लवर्णकाचे ४देवले च पु० मेदि० ।

**शैलादि** पु० शिलादस्यापत्यम् इञ् । शिवपार्श्वचरे नन्दिनि

**शैलालिन्** पु० ब०व० शिलालिना मुनिना प्रोक्तं नटसूत्र-मधीयते णिनि । शैलूषेषु नटेषु अमरः ।

**शैलिक्य** पु० गर्हितं शीलमस्त्यस्य ठन् शीलिकः स्वार्थे ष्यञ् । सर्वलिङ्गिनि पाषण्डे जटा० ।

**शैली** स्त्री० शीलमेव स्वार्थे ष्यञ् ङीपि यलोपः । १चारित्रे २सङ्केतभेदे च त्रिका० "आचार्य्याणामियं शैली यत् सामान्येनाभिधाय विशेषेण विवृणोतीति" प्राञ्चः ।

**शैलूष** पु० शिलूषस्यापत्यम् अण् । १नटे २बिल्ववृक्षे अमरः ३धूर्त्ते ४तालधारके च शब्दर० ।

**शैलूषिक** पु० शैलूषं तद्वृत्तिमन्वेष्टा ठक् । "नृत्यन्वेषी नटानान्तु स तु शैलूषिकः स्मृतः" ब्रह्मपु० उक्ते १नट-नृत्यान्वेषिणि नटप्रधाने २तत्पत्न्यां स्त्री ङीष् "नटीं शैलूषिकीं चैव रजकीं वेणुजीविनीम् । गत्वा चान्द्रा-यणं कुर्य्यात् तथा चर्म्मोपजीविनीम्" संवर्त्तः ।

**शैलेन्द्र** पु० शैलः इन्द्र इव । हिमालये । ६त० शैलेशा-दयोऽप्यत्र । [राजनि० ।

**शैलेन्द्रस्थ** पु० शैलेन्द्रे हिमालये तिष्ठति स्था–क । भूर्जवृक्षे

**शैलेय** न० शिलायां भवः ढक् । १शैलजाख्ये गन्धद्रव्यभेदे हेमच० । "शैलेयं शीतलं हृद्यं कफपित्तहरं लघु । कण्डूकुष्ठाश्मरीदाहविषहृद्गुदरक्तहृत्" भावप्र० । २पर्वतजातमात्रे त्रि० । स्त्रियां ङीप् । ३सिंहे ४भ्रमरे

च पुंस्त्री० शब्दर० स्त्रियां ङीप्। ५शिवातस्थे शब्दर०। ६पार्वत्यां स्त्री ङीप्।

**शैलोद्भवा** स्त्री शैलं पर्वतमुद्दिश्य भवति उद्+भू-अच्। १क्षुद्रपाषाणभेदिनि वृक्षे राजनि० २पार्वत्याञ्च।

**शैव** न० शिवमधिकृत्य कृतो ग्रन्थः अण्। वेदव्यासप्रणीते शिवप्रभाववर्णनात्मके १महापुराणभेदे। शिवो देवताऽस्य अण्। २शिवभक्ते त्रि०। तस्येदमण्। ३शिवसम्बन्धिनि त्रि० ४शैवले न० शब्दच०।

शैवञ्च महापुराणं वायुना प्रोक्तत्वात् वायवीयनाम्नाख्यातम् अतएव "अष्टादश पुराणानि पुराणज्ञाः प्रचक्षते। ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा" हेमा० व्र० विष्णुपु० "शैवं यद्वायुना प्रोक्तम्" तत्रैव कालिकापु० उक्तम्। हेमा०दा० मत्स्यपुराणे तु चतुर्थं वायवीयत्वेन पठित्वा "श्वेतकल्पप्रसङ्गेन धर्मान् वायुरिहाब्रवीत्। तत्र यद्वायवीयं स्याद्रुद्रमाहात्म्यसंयुतम्। चतुर्विंशतिसाहस्रं पुराणं तदिहोच्यते। श्रावण्यां श्रावणे मासि गुडधेनुसमन्वितम्। यो दद्याद्वृषसंयुक्तं ब्राह्मणाय कुटुम्बिने। शिवलोके स पूतात्मा कल्पमेकं वसेन्नरः" तथा च शिवमाहात्म्यवेदकत्वाच्छैवमिति तस्य नामान्तरं विष्णुपु०उक्तम्। वायुना प्रोक्तत्वाच्च वायवीयमिति नामान्तरमिति बोध्यम्। तत्प्रतिपाद्यविषयाश्च नारदीयपु० उक्ता यथा "शृणु वत्स! प्रवक्ष्यामि पुराणं वायवीयकम्। यस्मिन् श्रुते लभेद्धाम रुद्रस्य परमात्मनः। चतुर्विंशतिसाहस्रं तत्पुराणं प्रकीर्त्तितम्। श्वेतकल्पप्रसङ्गेन धर्मानत्राह मारुतः। तद्वायवीयमुदितं भागद्वयसमाचितम्" तत्र पूर्वभागे "सर्गादिलक्षणं यत्र प्रोक्तं विप्र! सविस्तरम्। मन्वन्तरेषु वंशाश्च राज्ञां ये तत्र कीर्त्तिताः। गयासुरस्य हननं विस्तरात् यत्र कीर्त्तितम्। मासानां चात्र माहात्म्यं माघस्योक्तं फलाधिकम्। दानधर्मा राजधर्मा विस्तरेणोदितास्तथा। भूपातालककुब्व्योमचारिणां तत्र निर्णयः। व्रतादीनां च पूर्वोऽयं विभागः समुदाहृतः"। उत्तरभागे "उत्तरे तस्य भागे तु नर्मदातीर्थवर्णनम्। शिवस्य संहिताख्या वै विस्तरेण मुनीश्वर!। यो देवः सर्वदेवानां दुर्विज्ञेयः सनातनः। स तु सर्वात्मना यस्यास्तीरे तिष्ठति सन्ततम्। इदं ब्रह्मा हरिरिदं साक्षाच्चेदं परो हरः। इदं ब्रह्म निराकारं कैवल्यं नर्मदाजलम्। ध्रुवं लोकहितार्थाय शिवेन स्वशरीरतः। शक्तिः कापि सरिद्रूपा रेवेयमवतारिता। ये वसन्त्युत्तरे कूले रुद्रस्यानुचरा हि ते। वसन्ति याम्यतीरे ये लोकं ते यान्ति वैष्णवम्। ओङ्कारेश्वरमारभ्य यावत् पश्चिमसागरम्। सङ्गमाः पञ्च च त्रिंशन्नदीनां पापनाशनाः। दशैकमुत्तरे तीरे त्रयोविंशतिर्दक्षिणे। पञ्चत्रिंशत्तमः प्रोक्तो रेवासागरसङ्गमः। सङ्गमैः सहितान्येवं रेवातीरद्वयेऽपि च। चतुःशतानि तीर्थानि प्रसिद्धानि च सन्ति हि। षष्टितीर्थसहस्राणि षष्टिकोट्यो मुनीश्वर!। सन्ति चान्यानि रेवायास्तीरयुग्मे पदे पदे। संहितेयं महापुण्या शिवस्य परमात्मनः। नर्मदाचरितं यत्र वायुना परिकीर्त्तितम्। लिखित्वेदं पुराणन्तु गुडधेनुसमन्वितम्। श्रावण्यां यो ददेत् भक्त्या ब्राह्मणाय कुटुम्बिने। रुद्रलोके वसेत् सोऽपि यावदिन्द्राश्चतुर्दश। यः श्रावयेद्वा शृणुयात् वायवीयमिदं नरः। नियमेन हविष्याशी स रुद्रो नात्र संशयः"। ५वकुले ६धुस्तूरे पु० राजनि० ७आचारभेदे पु० "अष्टाङ्गयोगसंयुक्तो यजेद्देवीं विधानतः। यावद्ध्यानं समाधिश्च तावत् शैवं प्रचक्षते" आचारभेदतन्त्रम्। तदुपासकभेदाश्च शिवलिङ्गशब्दे वामनपु० उक्ता द्रष्टव्याः।

**शैवल** न० शी–वलञ्। १पद्मकाष्ठे २शैवाले च पु० मेदि०। "वहतो बहुशैवलक्ष्मताम्" नैषधम्।

**शैवलिनी** स्त्री शैवलानि सन्त्यस्याः इनि। नद्याम् अमरः

**शैवाल** न० शी–वालञ्। (शेओयाला) जलजाते पदार्थभेदे अमरः। अस्य पृषो० दन्त्यादित्वमपि "सैवालकाङ्क्षामलतामधुना बिभर्त्ति" इति श्लेषात्।

**शैव्य** पु० शिबिगोत्रापत्यम् अञ्। १शिबिगोत्रजे राजभेदे "शैव्यश्च नरपुङ्गवः" इति गीता; शिबितोऽधिगतः अञ्। २घोटकमात्रे ३श्रीकृष्णस्य घोटके च त्रिका०।

**शैशव** न० शिशोर्भावः अण्। शिशुकाले अवस्थाभेदे अमरः

**शैशिर** पुंस्त्री० शिशिरं प्रियत्वेनास्त्यस्य अण्। १श्यामचटके राजनि० स्त्रियां ङीप्। शिशिरे भवः कालण्। २शिशिरजाते त्रि०। स्वार्थे अण्। ३शिशिरे न०। "तपस्तपस्यौ शैशिरावृतू" श्रुतिः।

**शैष्योपाध्यायिका** स्त्री शिष्योपाध्याययोः कर्म वुञ्। शिक्षाध्यापनायां सि०कौ०।

**शो** तीक्ष्णीकरणे दि०प०सक०अनिट्। श्यति अशात् अशासीत्।

**शोक** पु० शुच–घञ्। इष्टवियोगजाते दुःखानुगुणे चित्तवृत्तिभेदे अमरः। ल्युट् शोचनमप्यत्र न०।

**शोकनाश** पु० शोकं नाशयति नश–णिच्–अण्। १अशोकवृक्षे राजनि०। नश–भावे घञ् ६तत०। २शोकध्वंसे।

**शोकहारी** स्त्री शोकं हरति हृ-अण् ङीप्। वनवर्वरिकायां राजनि०।

**शोकारि** पु० ६त०। कदम्बवृक्षे शब्दच०। [च अमरः।

**शोचिष्केश** पु० शोचिः केशइव यस्य। १वह्नौ २चित्रकवृक्षे

**शोचिस्** न० शुच-इसि। १प्रभायां २रोचिषि च अमरः।

**शोच्य** त्रि० शुच-ण्यत्। १तुच्छे २अवरे शब्दच० ३अनुकम्पनीये च। स्वार्थे क। तत्रैव। [इत्येव पाठः साधुः।

**शोटीर्य्य** न० शुटीरस्य भावः यत्। वीर्य्ये शब्दच०। शौटीर्य्यं

**शोठ** त्रि० शुठ-आलस्ये स्फोटने वा अच्। १मूर्खे २अलसे मेदि०। ३धूर्त्ते ४नीचे ५पारावते पुंस्त्री० शब्दच०। स्त्रियां ङीष्। [ऋदित् चङि न ह्रस्वः।

**शोण** गतौ सक०वर्णे अक०भ्वा०पर०सेट्। शोणति अशोणीत्

**शोण** न० शोण-अच्। १सिन्दूरे २रुधिरे च राजनि०। ३रक्तवर्णे ४शोणाकभेदे राजनि०। ५मङ्गले पद्मे ६वह्नौ ७चित्रके ८नदभेदे स च अमरकण्टकदेशगतः पाटलिपुत्रसन्निकृष्टे गङ्गायां मिलितः। ९रक्तवर्णे पु० १०तद्वति त्रि० मेदि०। ११समुद्रभेदे धरणिः।

**शोणक** पु० शोणइव कायति कै-क। शोणाकवृक्षे अमरः।

**शोणझिण्टिका** स्त्री कर्म०। १शोणझिण्ट्यां २रक्तसैरेये राजनि०। [न्यास्य राजनि०।

**शोणझिण्टी** स्त्री शोणा झिण्टीव। १कुरवके २कण्टकि·

**शोणपत्त्र** पु० शोणं पत्त्रमस्य। १रक्तपुनर्नवायां राजनि०। २रक्तपत्त्रयुते त्रि०। [२रक्तकुसुमान्विते त्रि०।

**शोणपुष्पक** पु० शोणं पुष्पमस्य कप्। १कोविदारे राजनि०

**शोणपुष्पी** स्त्री शोणं पुष्पमस्याः ङीप्। सिन्दूरपुष्प्यां राजनि०

**शोणरत्न** न० कर्म०। पद्मरागमणौ अमरः। [शब्दमा०।

**शोणाक** न० शोणं रक्तवर्णमकति अण्। (शोणा) क्षुपभेदे।

**शोणित** न० शोण-इतच्। १रुधिरे तद्वर्णे २रक्तवर्णे पु० ३तद्वति त्रि० अमरः। ४कुङ्कुमे न० राजनि०।

**शोणितचन्दन** न० शोणितं रुधिरमिव चन्दनम्। रक्तचन्दने राजनि०। [त्रिका०।

**शोणितपुर** न० शोणितमिव रक्तं पुरम्। बाणासुरनगरे

**शोणोपल** पु० कर्म०। माणिक्ये मणौ राजनि०।

**शोथ** पु० शु-थन्। हस्तपादादेः स्फीतताकारके रोगभेदे तस्य लक्षणादिकं भावप्र० उक्तं यथा

"अथ शोथाधिकारः। तत्र शोथस्य विप्रकृष्टं निदानमाह "शुद्ध्यामयाभक्तकृशाबलानां क्षाराम्लतीक्ष्णोष्णगुरूपसेवनात्। दध्यामसृच्छाकविरोधिपिष्टगरोपसृष्टाननिषेवणाच्च। अर्शांस्यचेष्टा वपुषोह्यशुद्धिर्मर्माभिघातो विषमा प्रसूतिः। मिथ्योपचारः प्रतिकर्मणाञ्च निजस्य हेतुः श्वयथोः प्रदिष्टः"। शुद्धिर्वमनविकारेकादिः। आमयाः पाण्डुरोगादयः। अभक्तम् अभोजनम्। आमः अपक्वो भुक्तस्य रसः। पिष्टगरोपसृष्टान्नम् पिष्टो वो गरः संयोगजं विषं तेन संसृष्टमन्नम्। वपुषोह्यशुद्धिः शोधनार्हस्य वपुषोऽशोधनम्। मर्मोपघातः दोषकृत एव ग्राह्यः। बाह्यहेतुकृतस्तु मर्मोपघात आगन्तुजशोथहेतुरेव। विषमा प्रसूतिः आमगर्भपतनादिका। प्रतिकर्मणां वमनादिपञ्चकर्मणाम् मिथ्योपचारः अयथाकरणम्। श्वयथोः शोथस्य निजस्य आत्मीयस्य शरीरजस्य हेतुर्धातात्मकस्योक्तः। अथ शोथस्य संप्राप्तिपूर्वकं सामान्यं लक्षणमाह "रक्तपित्तकफान् वायुर्दुष्टो दुष्टान् बहिःशिराः। नीत्वा रुद्धगतिस्तैर्हि कुर्य्यात्त्वङ्मांससंश्रयम्। उत्सेधं संहतं शोथं तमाहुर्निचयादतः। सगौरवं स्यादनवस्थितत्वं सोत्सेधमुष्माथ शिरातनुत्वम्। सलोमहर्षश्च विवर्णता च सामान्यलिङ्गं श्वयथोः प्रदिष्टम्"। उत्सेधं उन्नतत्वम्। किंविशिष्टमुत्सेधमतः पूर्वोक्तात् निचयात् रक्तपित्तकफवातानां समुदायात् संहतम् घनम्। तमुत्सेधं शोथमाहुरित्यन्वयः। तस्य शोथस्य किं स्यादित्याकाङ्क्षायामाह। अनवस्थितत्वं स्यात् अनियता स्थितिः स्यादित्यर्थः चिकित्साव्यतिरेकेणापि निवृत्तेः। तस्यानवस्थितत्वं सगौरवं स्याद्गौरवमप्यनवस्थितं स्यात्। अथ च सोत्सेधः स्यात्। उन्नतत्वमप्यनवस्थितं स्यादित्यर्थः। वातिकं शोथमाह "चरस्तनुत्वक्परुषोऽरुणोऽसितः प्रसुप्तिहर्षार्तियुतो निमित्ततः। प्रशाम्यति प्रोन्नमति प्रपीडितो दिवा बली स्यात्श्वयथुः समीरणात्"। चरः सञ्चारी। प्रसुप्तिः स्पर्शाज्ञता। हर्षोऽत्र (झिनि झिनी) रोमाञ्चो वा। आर्त्तिः पीडा एतद्युतः दिवा बली विकृतिविषमसमवायारब्धत्वात्। अनयोक्तम् "स्नेहोष्णमर्दनाद्यैर्यः प्रशाम्येत स वातिकः। यश्चाप्यरुणवर्णः स्यात्स शोथो नक्तं प्रशाम्यति"। अथ पैत्तिकमाह "मृदुः सगन्धोऽसितपीतरागवान् भ्रमज्वरस्वेदतृषामदान्वितः। य उष्यते स्पर्शरुगक्षिरागवान् स पित्तशोथो भृशदाहपाकवान्"। उष्यते सन्तप्यते। भृशदाहपाकवान् भृशं पाकस्थूलः। श्लैष्मिकमाह "गुरुः स्थिरः पाण्डुररोचकान्वितः प्रसेकनिद्रावमिवह्निमान्द्यकृत्। सकृच्छ्र·

कृच्छ्रजन्मप्रशमो निपीडितो नचाशुमिड्याविवर्धी कफा-त्मकः"। द्वन्द्वजमाह "निदानाकृतिसंसर्गात् श्वयथुः स्याद् द्विदोषजः"। सान्निपातिकमाह "सर्वाकृतिः सन्निपाता-च्छोथो व्यामिश्रलक्षणः"। व्यामिश्रलक्षण इत्युक्तेः सर्वा-कृतिरिति उक्तवातजादिशोथलक्षणलक्षणनियमार्थम्। अथाभिघातजमाह "अभिघातेन शस्त्रादिच्छेदभेदक्षता-दिभिः। हिमानिलोदध्यनिलैर्भल्लातकपिकच्छुजैः। रसैः शूकैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान्। भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः"। छेदः खड्गा-दिना भेदः पाषाणादिना। क्षतं शरादिना शाड़ीव-चादि च। आदिशब्देन लगुडप्रहारादि गृह्यते। भल्लातजैः रसैः कपिकच्छुजैः शूकैः विसर्पवान् प्रसरणशीलः पित्तलक्षणः पैत्तिकशोथलक्षणः। अथ विषजमाह "विषजः सविषप्राणिपरिसर्पणमूत्रणात्। दंष्ट्रादन्त-नखाघातादविषप्राणिनामपि। विण्मूत्रशुक्रोपहत-मलवद्वस्त्रसङ्करात्। विषवृक्षानिलस्पर्शाद्गरयोगावचूर्ण-नात्। मृदुश्चलोऽवलम्बी च शीघ्रो दाहरुजाकरः"। परिसर्पणात् शरीरोपरि सञ्चरणात्। दंष्ट्रा हिंस्रजीवानां दन्तविशेषः। (चोङ) इति लोके। दन्ता आस्ये भवाः। अविषप्राणिनामपीत्यनेन दंष्ट्रादन्तनखानां स्वभावादेव सविषत्वं किन्तु सर्पादिविषं मारकं भवति अविषप्रा-णिनां दंष्ट्रादिविषं शोथव्यथादिकरं भवतीति वि-शेषः। विण्मूत्रेत्यादि। विड़ाद्युपहतं मलिनञ्च व-स्त्रं तथा सङ्करः [illegible] लिप्तो धूल्यादिः तेषां सम्पर्कात्। गरयोगावचूर्णनात् गरः संयोगजं विषं तस्य योगो यस्य तेन वस्तुनाऽवचूर्णनात्। अव-लम्बी लम्बमानः। अयमप्यागन्तुजस्तथापि सामान्या-गन्तुजशोथापेक्षयाऽस्य विशिष्टचिकित्साभिधा-नाय पृथक् पठितः। यत्र स्थिता दोषा यत्र शोथं कुर्वन्ति तदाह "दोषाः श्वयथुमूर्द्ध्वं हि कुर्वन्त्यामाशये स्थिताः। पित्ताशयस्था मध्ये तु वर्चःस्थानगतास्त्वधः। कृत्स्नं देहमनुप्राप्ताः कुर्युः सर्वसरं तथा"। ऊर्द्ध्वम् उरःप्रभृत्यूर्द्ध्वम्। मध्ये उरःपक्वाशयमध्ये। अधः पक्वाशयादधः। उपद्रवानाह "छर्दिः श्वासोऽरुचिस्तृष्णा ज्वरोऽतीसार एव च। सप्तकः सदौर्बल्यं शोथ एते उपद्रवाः"। तत्र शोथासाध्यत्वमाह "श्वासः पिपासा छर्दिश्च दौर्बल्यं ज्वर एव च। यस्य चान्ने रुचिर्नास्ति शोथिनस्तं विवर्जयेत्"। स्वार्थे क। तत्रार्थे शब्दच०।

**शोथघ्नी** स्त्री शोथं हन्ति हन-टक् ङीप्। १पुनर्नवायाम् अमरः। २शालपर्ण्यां राजनि०। ३शोथनाशके औष-धमात्रे त्रि०।

**शोथजित्, हृत्** पु० शोथं जयति हरति वा जि-हृ-वा क्विप्। भल्लातके रत्नमा०। [वायां त्रिका०।

**शोथजिह्व** पु० शोथे जिह्वः विपरीताचरणशीलो। पुनर्न-

**शोधन** न० शुध-णिच्-ल्युट्। १शौचे २विष्ठायां शब्दच०। ३काशीसे राजनि०। ४मलादिविरेचने ५दोषनिःसारणे ६ऋणादिनिर्यातने च। शुध-णिच्-ल्यु। ७निम्बुके पु० राजनि०। ८शुद्धिकारके त्रि०। शुध्यत्यनया करणे ल्युट् ङीप्। ९सम्मार्जन्याम् स्त्री अमरः। १०ताम्रमूल्यां ११नील्याञ्च स्त्री ङीप्। १२विहिताविहितदा-नादिविचारणे न० "सूर्यग्रहणकालेन समानो नास्ति कश्चन। तत्र यद्यत् कृतं सर्वमनन्तफलदं भवेत्। न स्वातिथिवारादिशोधनं सूर्यपर्वणि" मल०त०। दोष-निवारणाय धातुविशेषस्य द्रव्यान्तरेण संयोजनम् "घन-पीततपत्राणि हेम्नो वह्नौ प्रतापयेत्। निषिञ्चेत् तप्ततप्तानि तैले तक्रे च काञ्जिके। गोमूत्रे च कुल-त्थानां कषाये तु त्रिधा त्रिधा। एवं हेम्न परेषाञ्च धातूनां शोधनं भवेत्" इत्यादिप्रकारेण धात्वादीनां दोषनिवारणम्। १३व्रणादेः क्लेदपूयाद्यपसारणे च "व्रणस्य त्वविशुद्धस्य क्वाथः शुद्धिकरः स्मृतः। पटोल-निम्बपत्रस्य सर्वत्रैव प्रयुज्यते। वातिके दशमूलानां क्षीरिणां पैत्तिके व्रणे। आरग्वधादेः कफजे क्वाथः शोधनं मतम्"। १४पाण्डुलेख्यादेर्दोषनिवारणे भाषा-शब्दे दृश्यम्। १५भाज्याङ्कात् भाजकस्य हरणे।

**शोधनीबीज** न० ६त०। जयपाले राजनि०।

**शोधित** त्रि० शुध-णिच्-क्त। मलाद्यपसारणेन १कृतसं-स्कारे २मार्जिते अमरः।

**शोफ** पु० शु-फन्। शोथे अमरः। शोथशब्दे दृश्यम्।

**शोफघ्नी** स्त्री शोफं हन्ति हन-टक् ङीप्। १शालपर्ण्यां २रक्तपुनर्नवायाञ्च राजनि०। [राजनि०।

**शोफनाशन** पु० शोफं नाशयति नश-णिच्-ल्यु। नीलवृक्षे

**शोफहृत्** पु० शोफं हरति हृ-क्विप्। भल्लातके भावप्र०।

**शोभन** न० शोभते शुभ-ल्यु। १पद्मे शब्दमा०। विष्कम्भा-दिषु २पञ्चमे योगे पु० ज्यो०त०। ३शोभायुक्ते त्रि०। ४सुन्दरे त्रि० ५ग्रहे पु० धरणि०।

**शोभनक** पु० शोभनाय कायति कै-क। शोभाञ्जनवृक्षे शब्दच०

**शोभना** स्त्री शोभयति वेपनात् शुभ–णिच्–ल्यु । १हरिद्रायां २गोरोचनायाञ्च राजनि० ।

**शोभा** स्त्री शुभ–अ । १दीप्तौ "या शोभा रूपभोगाद्यैर्यत् स्यादङ्गविभूषणम् । शोभैव कान्तिराख्याता मन्मथाप्यायनोज्ज्वला" उज्ज्वलमणुक्तायां च ३गोपीभेदे ब्रह्मवै०प्र० ६७अ० । ४हरिद्रायां ५गोरोचनायां राजनि० ।

**शोभाञ्जन** पु० शोभार्थं अज्यते अन्ज–ल्युट् । (सजना) ख्याते अमरः "तद्बीजं श्वेतमरिचं मधुशिग्रुः स कीर्त्तितः । शिग्रुः कटुः कटुः पाके तीक्ष्णोष्णो मधुरो लघुः । दीपनो रोचनो रूक्षः क्षारस्तिक्तो विदाहकृत् । संग्राहो शुक्रलो हृद्यः पित्तरक्तप्रकोपणः । चक्षुष्यः कफवातघ्नो विद्रधिश्वयथुक्रिमीन् । मेदोऽपचीविषप्लीहगुल्मगण्डव्रणान् हरेत् । श्वेतः प्रोक्तगुणो ज्ञेयो विशेषात् दाहकृत् भवेत् । प्लीहानं विद्रधिं हन्ति व्रणघ्नः पित्तरक्तकृत् । रक्तोऽयमुः प्रोक्तगुणो विशेषाद्दीपनः सरः । शिग्रुवल्कलपत्राणां स्वरसः परमार्त्तिहृत् । चक्षुष्यं शिग्रुजं बीजं तीक्ष्णोष्णं विषनाशनम् । अवृष्यं कफवातघ्नं तन्नस्यं तु शिरोऽर्त्तिनुत् । शिग्रुशाकं हिमं स्वादु चक्षुष्यं वातपित्तहृत् । कं रूक्षं शुक्रकृत् स्निग्धं वल्यं मदकृन्मत् । शिग्रोः पुष्पन्तु कटुकं स्निग्धोष्णं स्नायुशोथहृत् । क्रमिहृत् कफवातघ्नं विद्रधिप्लीहगुल्मजित् । शोभाञ्जनफलं स्वादु कषायं कफपित्तहृत् । शूलकुष्ठक्षयश्वासगुल्मघ्नं दीपनं परम्" भावप्र० । कश्चिच्च शिग्रुशब्दे दृश्यम् ।

**शोली** स्त्री शूल–अच् पृषो० ङीष् । वनहरिद्रायां राजनि० ।

**शोष** पु० शुष–घञ् । १वातादिना रसाद्यपहारेण कठिनताकरणे । शोषयति शुष–णिच्–अच् । २यक्ष्मरोगे मेदि० ।

**शोषण** न० शुष–ल्युट् । १शोषणेन रसाकर्षणे हेमच० । २शोषणकर्त्तरि च शोषयति शुष–णिच्–ल्यु । "उन्मादनः शोषणश्च तापनः स्तम्भनस्तथा । मारणश्चेति विज्ञेयाः कामस्य पञ्च शायकाः" इत्युक्ते ३कामशरभेदे जटा० । ४शोणाकवृक्षे भावप्र० । ५शुण्ठ्यां राजनि० ।

**शोषसम्भव** न० सम्भवत्यस्मात् सम्+भू–अप् ६त० । पिप्पलीमूले राजनि० । [राजनि० । २शोषनाशके त्रि० ।

**शोषापहा** स्त्री शोषमपहन्ति अप+हन–ड । १क्षीतनके

**शौक** न० शुकानां समूहः अण् । १शुकसमुदाये अमरः । शुकोऽस्त्यत्र वा । स्त्रियां २करणभेदे राजनि० ।

**शौकर** न० शूकरस्य वराहस्येदम् अण् । १शौकरवे तीर्थभेदे वराहपुराणम् । २शूकरसम्बन्धिनि त्रि० । स्त्रियां ङीप् ।

**शौकरव** न० तीर्थभेदे "परं शौकरवं स्थानं सर्वसंसारमोक्षणम् । यत्र संख्या च मे देवि ह्युद्धृताऽसि रसातलात् । यत्र भागीरथी गङ्गा मम शौकरवे स्थिता" वराहपु० ।

**शौक्तिकेय** न० शुक्तिकायां भवम् ढक् । मुक्तायां राजनि० ।

**शौक्तेय** न० शुक्तौ भवम् ढक् । मुक्तायां राजनि० ।

**शौक्ल्य** पु० शुक्लस्य भावः ष्यञ् । श्वेततायां श्वेतवर्णे ।

**शौच** न० शुचेर्भावः अण् । १शुद्धौ पवित्रतायाम् "अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः । स्वधर्मे च व्यवस्थानं शौचमित्यभिधीयते" इति हमाद्र्युक्ते २धर्मविशेषे च "सर्वेषामेव शौचानामन्नशौचं विशिष्यते । योऽर्थशुचिः स शुचिः शौचात् मृदा वारिणा शुचिः । मनःशौचं मनःशौचं शौचमिन्द्रियनिग्रहः । सर्वभूतदया शौचं जलशौचन्तु पञ्चमम् । यस्य सत्यञ्च शौचं च तस्य स्वर्गो न दुर्लभः" गारुडे ११० अ० ।

मृदादिशौचप्रकारस्तु आ०त० दर्शितो यथा

देवलः "धर्मविद्दक्षिणं हस्तमधः शौचे न योजयेत् । तथैव वामहस्तेन नाभेरूर्द्धं न शोधयेत् । प्रकृतिस्थितिदेशा स्यात् कारणादुभयक्रिया" । कारणाद्रोगादेः । ब्रह्माण्डपु० "उद्धृतोदकमादाय मृत्तिकाञ्चैव वाग्यतः । उदङ्मुखो दिवा कुर्य्यात् रात्रौ चेद्दक्षिणामुखः । सुनिर्णिक्तं मृदं दद्यात् मृदन्ते तथ एव च । दातव्यमुदकं तावद् यावत् स्यात् मृत्तिकाक्षयः" । कुर्य्यात् शौचमिति शेषः । सुनिर्णिक्तं भरद्वाजोक्तकोष्ठादिप्रक्षेपे गुदे । उद्धृतपात्राभावे करेण जलाशयादुद्धृतमुदकमाद्यादित्यपु० "रविमात्रं जलं त्यक्त्वा कुर्य्यात् शौचमनुद्धृते । पश्चाच्च शोधयेत्तीर्थमन्यथा न शुचिर्भवेत्" । यस्मिन् प्रदेशे शौचं कर्त्तव्यं तस्मादरत्निमात्रव्यवहितं जलं तत् स्थानमेव तीर्थं जलसमीपत्वात् । विष्णुपु० "वल्मीकमूषिकोत्खातां मृदमन्तर्जलां तथा । शौचावशिष्टां गेहाच्च नाददात् लेपसम्भवाम् । अन्तःप्राण्यवपन्नाञ्च हलोत्खातां सकर्दमाम्" । मनुदक्षौ "एका लिङ्गे गुदे तिस्रो दश वामकरे तथा । उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता" । उभयोः करयोः । विष्णुपु० "एका लिङ्गे गुदे तिस्रो दश वामकरे तथा । हस्तद्वये च सप्त स्युर्मृदः शौचोपपादिकाः" । यमः "लिङ्गे त्वेका गुदे तिस्रो वामहस्ते चतुर्दश । ततः पुनरुभाभ्याञ्च दातव्याः सप्त मृत्तिकाः" । पैठीनसिः "मृत्तिकां संह्य एका

लिङ्गेऽपाने पञ्च एकस्मिन् हस्ते दश उभयोः सप्त इत्यादि। एतासां संख्यानां दक्षाद्युक्ताधिक्यं गन्धाद्यनुवृत्तिमनुरुध्य व्यवस्थेयम्। वामहस्ते दशदानानन्तरं तत्पृष्ठे षड्दानमाह हारीतः "दश मध्ये च षट् पृष्ठे इति"। शङ्खदक्षौ "तिस्रस्तु मृत्तिका देयाः कृत्वा नखविशोधनम्। तिस्रस्तु पादयोर्देयाः शुद्धिकामेन नित्यशः"। नखशोधनं तृणादिना नखान्तर्मलशोधनम्, तिस्र इति हस्तयोरिति शेषः। पादप्रक्षालनं कांस्ये न कर्त्तव्यमित्याह विष्णुधर्मोत्तरम् "दर्भैर्न मार्जयेत् पादौ न च कांस्ये न धावयेत्"। दक्षः "लिङ्गे तत्र समाम्नाता त्रिपर्वी पूर्य्यते यया। अर्द्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता। द्वितीया च तृतीया च तदर्द्धार्द्धा प्रकीर्त्तिता"। यदा तु उक्तप्रमाणया मृदा गन्धलेपक्षयो न भवति तदा अधिकयापि कर्त्तव्यम्। "गन्धलेपक्षयकरं शौचं कुर्य्यादतन्द्रितः" इति याज्ञवल्क्यात्। मृदादन्वस्य परिमाणमाह यमः "मृत्तिका तु समुद्दिष्टा त्रिपर्वी पूर्य्यते यया"। त्रिपर्वी तर्जनीमध्यमानामिकानामग्रत्रयम्। मूत्रमात्रेऽपि स्मृतिः "एकां लिङ्गे मृदं दद्यात् वामहस्ते तु मृद्द्वयम्। उभयोर्हस्तयोर्द्वे च मूत्रशौचं प्रकीर्त्तितम्"। ब्रह्मपुराणे "पादयोर्द्वे गृहीत्वा च सुप्रक्षालितपाणिमान्। द्विराचम्य ततः शुद्धः स्मृत्वा विष्णुं सनातनम्"। पादयोर्द्वे एकैका। इदं मूत्रोत्सर्गे, पुरीषोत्सर्गे तिसृणां विधानात्। दक्षः "यथोदितं दिवा शौचं अर्द्धं रात्रौ विधीयते। आतुरे तु तदर्द्धं स्यात्तदर्द्धं तु पथि स्मृतम्"। यथोक्तकरणाशक्तावेवेदं न तु निशादिपुरस्कारेणैव वाक्यस्यादृष्टार्थतापत्तेः। आपस्तम्बः "पथि पादस्तु विज्ञेय आर्त्तः कुर्य्याद् यथाबलम्"। एतयोर्विरोध आर्त्तानार्त्ताभ्यां परिहरणीयः। दक्षबौधायनौ "देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम्। उपपत्तिमवस्थाञ्च ज्ञात्वा शौचं प्रकल्पयेत्"। ब्रह्मपुराणे "न यावदुपनीयेत द्विजः शूद्रस्तथाङ्गना। गन्धलेपक्षयकरं शौचं तेषां विधीयते। प्रमाणं शौचसंख्या वा न शिष्टैरुपदिश्यते। यावत् शुद्धिं स मन्येत तावत् शौचं समाचरेत्। न्यूनाधिकं न कर्त्तव्यं शौचं शुद्धिमभीप्सता। प्रायश्चित्तं प्रसज्येत विहितातिक्रमे कृते। शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः"। गन्धलेपक्षये सत्यधिकं न कर्त्तव्यं याज्ञवल्क्यविरोधात्। गन्धलेपाक्षये त्वधिकसंख्ययापि याज्ञवल्क्यवचनमनुपनीतादिपरं वा। व्याघ्रपादः "शौचन्तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरन्तथा। मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम्। गङ्गातोयेन कृत्स्नेन मृद्भारैश्च नगोपमैः। आमृत्योः स्नातकश्चैव भावदुष्टो न शुद्ध्यति"। स्मृतिः "धावन्तञ्च प्रमत्तञ्च मूत्रोच्चारकृतन्तथा। भुञ्जानमाचमनार्हञ्च नास्तिकं नाभिवादयेत्। जन्मप्रभृति यत्किञ्चित् चेतसा धर्ममाचरेत्। सर्वं तन्निष्फलं याति एकहस्ताभिवादनात्"। ऋष्यशृङ्गः "यस्मिन् स्थाने कृतं शौचं वारिणा तद्विशोधयेत्। न शुद्धिस्तु भवेत्तस्य मृत्तिकां यो न शोधयेत्"। शौचानन्तरं हारीतः "गोमयेन मृदा वा कमण्डलुं प्रक्षाल्य पूर्ववदुपस्पृश्य आदित्यं सोममग्निं वा वीक्षेत" इति। अत्र मार्जनानन्तरं क्षालनमन्यत्र तथा दर्शनात्। आचमनानन्तरं सूर्य्यादिदर्शनं यथासम्भवम्"।

**शौट** गर्वे भ्वा॰ पर॰ सक॰ सेट्। शौटति अशौटीत्। ऋदित् चङि न ह्रस्वः। [त्रि॰ सि॰कौ॰।

**शौटीर** पु॰ शौट–ईरन्। १त्यागिनि २वीरे च ३गर्वान्विते

**शौटीर्य्य** न॰ शौटीरस्य वीरस्य भावः ष्यञ्। १वीर्य्ये २पराक्रमे ३गर्वे च। [शौडति अशौडीत्।

**शौड** गर्वे भ्वा॰ पर॰ सक॰ सेट् ऋदित् चङि न ह्रस्वः।

**शौण्ड** त्रि॰ शुण्डायां सुरायामभिरतः अण्। १मत्ते अमरः। २दक्षे च "सप्तमी शौण्डैः" पा॰। ७त॰। दानशौण्ड दानदक्षे।

**शौण्डिक** पु॰ शुण्डा सुरा पण्यमस्य ठक्। १मद्यविक्रेतरि २जातिभेदे पुंस्त्री अमरः स्त्रियां ङीष्। "ततो गान्धिककन्यायां कैवर्त्तादेव शौण्डिकः" पराशरपद्धतिः।

**शौण्डिन्** त्रि॰ शुण्डा सुरैव अण् शौण्डं तत्पण्यमस्त्यस्य इनि। शौण्डिके शब्दर॰।

**शौण्डी** स्त्री शुण्डा करिकरस्तदाकारः अस्त्यस्या अण् गौरा॰ ङीष्। १चव्ये २गजपिप्पल्याञ्च विश्वः।

**शौण्डीर** पु॰ शुण्डा गर्वोऽस्त्यस्य ईरन् स्वार्थे अण्। गर्वान्विते त्रि॰ धनञ्जयः।

**शौद्र** पुंस्त्री शूद्रायां द्विजातिभिरूढायां भवः अण्। द्वादश॰ पुत्त्रमध्ये शूद्राजाते द्विजातिपुत्त्रभेदे पारशवादौ जटा॰। स्त्रियां ङीष्। इदमर्थे अण्। २शूद्रसम्बन्धिनि त्रि॰।

**शौद्धोदनि** न॰ शुद्धोदनस्यापत्यम् इञ्। बौद्धमुनिभेदे अमरः

**शौधिका** स्त्री शोधः शोधनं मलातिरेकस्तस्मै हितः ठक्। रक्तकर्षौ हेमच॰।

**शौनक** पु० शुनकस्यापत्यम् अण् । मुनिभेदे “नैमिषेऽनिमिषक्षेत्रे ऋषयः शौनकादयः” इति भागवतम् १।१।

**शौनिक** पु० शूना प्राणिवधस्थानं प्रयोजनमस्य ठक् । १मांसविक्रेतरि ( कसाइ ) हेमच० । २मृगयायां शब्दमा० । ३मृगयाशीले च ।

**शौभ** न० शोभायै हितम् अण् । १व्योमगामिनि पुरभेदे हरिश्चन्द्रपुरे २देवे पु० त्रिका० । ३गुवाके शब्दमा० ।

**शौभाञ्जन** पु० शोभाञ्जनएव स्वार्थे अण् । (सजना) वृक्षभेदे द्विरूपकोषः । [शब्दमा० ।

**शौभिक** त्रि० शौभं व्योमपुरं शिल्पमस्य ठक् । ऐन्द्रजालिके

**शौरि** पु० शूरस्य यादवभेदस्य वसुदेवस्य सूर्यस्य वा अपत्यम् इञ् । १विष्णौ २शनैश्चरे च अमरः ।

**शौर्य्य** न० शूरस्य भावः ष्यञ् । १वीर्य्ये २शक्तौ ३आरभट्यां च मेदि० । [ठक् । शुल्कादानाधिकृते हेमच० ।

**शौल्किक** पु० शुल्के राजादिदेये करे तदादाने अधिकृतः

**शौल्किकेय** पु० शुल्किकः देशभेदः तत्र भवः ढक् । विषभेदे अमरः ।

**शौल्विक** पुंस्त्री० शुल्वः ताम्रं तन्मयपात्रादि पण्यमस्य ठक् । कांस्यकारे (कांसारी) जातिभेदे अमरः स्त्रियां ङीष् ।

**शौव** न० शुनः सङ्घोषः श्वन्+अण् टिलोपः । शुनः सङ्घोचे अन्यत्र न टिलोपः शौवन इत्येव शुनः सम्बन्धिनि संक्षिप्तसा० । [भाविदिनस्थायिनि पदार्थे ।

**शौवस्तिक** त्रि० श्वः परदिने भवः श्वस्+ठक्-तुट् च ।

**शौवापद** त्रि० श्वापदस्येदम् अण् । श्वापदसम्बन्धिनि

**शौष्कल** पु० शुष्कलं शुष्कमांसं पण्यमस्य अण् । १शुष्कमांसविक्रेतरि मेदि० । तद्भक्षणमस्य अण् । २शुष्कमांसभक्षके त्रि० अमरः । [तत् अश्चोतीत् ।

**श्चुत** क्षरणे भ्वा० पर० अक० सेट् । श्चोतति इरित् अश्चु-

**श्च्युत** क्षरणे भ्वा० पर० अक० आसेचने सक० सेट् । श्च्योतति इरित् अश्च्युतत् अश्च्योतीत् ।

**श्च्योत** पु० श्च्युत-घञ् । समन्तात् सेचने आधारे अमरः ।

**श्मन्** न० शेते शी-मनिन् डिच्च । १मुखे २शवे कालिकापु० अदन्तोऽप्यत्र “सर्वे मान्ताः अदन्ता. स्यु”रित्युक्तेः ।

**श्मशान** न० श्मानः शवाः शेरतेऽत्र शी-आनच् डिच्च । “श्मन् शब्देन शवः प्रोक्तः शानं शयनमुच्यते । निरुच्यन्ति श्मशानार्थं मुने ! शब्दार्थकोविदाः । महान्त्यपि च भूतानि प्रलये समुपस्थिते । शेरतेऽत्र शवा भूत्वा श्मशानञ्च ततोऽभवत्” महाभूतशयस्थाने महाश्मशाने १काशीधाम कालिकापुराणे ३० अ० । २शवदाहस्थाने अमरः ।

**श्मशानकाली** स्त्री श्मशानस्था काली । कालिकाभेदे ।

**श्मशानवासिन्** पु० श्मशाने वसति वस-णिनि । १महादेवे २वटुकभैरवे च । श्मशानवासकर्त्तरि चण्डालादौ त्रि० ।

**श्मश्रु** न० श्म मुखस्य श्रूयते लक्ष्यतेऽनेन श्रु-डु । पुरुषस्य मुखे लोमसङ्घे अमरः । “केशश्मश्रुधारयताम्ग्र्या भवति सन्तति” सु०त० ।

**श्मश्रुमुखी** स्त्री श्मश्रु मुखे यस्याः ङीप् । १पुरुषलक्षणयुक्तायां २घोटाख्यायां स्त्रियां जटा० ।

**श्मश्रुल** पु०श्मश्रु विद्यतेऽस्य लच् । श्मश्रुयुक्ते [क्षुरकर्मकारके ।

**श्मश्रुवर्द्धक** पु० श्मश्रु वर्द्धयति छिनत्ति वृध-ण्वुल् । नापिते

**श्मील** निमेषणे भ्वा०पर०अक०सेट् । श्मीलति अश्मीलीत् ।

**श्यान** त्रि० श्यै-क्त । सङ्कोचविशेषप्राप्ते घनीभूते “पथश्च्यानकर्दमान्” रघुः ।

**श्याम** पु० श्यै-मक् । १वृद्धदारकवृक्षे २प्रयागतीर्थस्थे वटे ३कोकिले ४मेघे ५कृष्णवर्णे ६हरिद्वर्णे च । ७तद्वति त्रि० मेदि० । ८धुस्तूरे ९पीलुवृक्षे १०श्यामाके राजनि० । ११मरिचे १२सिन्धुजलवणे च न० मेदि० । १३दमनकवृक्षे १४मत्स्यवृक्षे पु० विश्वः ।

दैवकृदेऽपि कृष्णश्याममीलादीनाममरादौ पर्य्यायता तत्र कृष्णवस्तूनि कतिचित् कविकल्पलतायां दर्शितानि यथा “कृष्णानि केशवः शौरिचौरं चन्द्राङ्कराघवः । विन्ध्याञ्जनादिदुस्त्राहिवनभैरवराक्षसाः । शिवकण्ठवनद्वैपायनरामधनञ्जयाः । शनिः द्रुपदजा काली कलिकोलववाऽसुराः । केशकज्जलकस्तूरीराजपट्टविदुरजम् । विषकोपकुहूयमागुरुपापतमोनिशाः । मषोपङ्कमदाम्बोधियमुनाधूमकोकिलाः । गोलाङ्गूलाश्रुगुञ्जास्ये कण्ठः खञ्जनकेकिनोः । शवलं तालतापिञ्छतिलेन्दीवरवल्लयः । रसाकृतुरङ्गारौ कटाक्षोऽलिः कनीनिका । नीली जम्बूफलं मुस्ता काककल्याकुकीर्त्तयः । भिल्लच्छाया गजाङ्गारखलान्तःकरणादयः” ।

**श्यामक** न० श्याम+संज्ञायां कन् । १रोहिषतृणे राजनि० । २श्यामाके (शामा) धान्यभेदे पु० हेमच० ।

**श्यामकण्ठ** पु० श्यामः कण्ठोऽस्य । १मयूरे हेमच० । २शिवे ३नीलकण्ठविहगे च ।

**श्यामकन्दा** स्त्री श्यामः कन्दोऽस्याः । अतिविषायां राजनि० । [राजनि० ।

**श्यामकाण्डा** स्त्री श्यामः काण्डोऽस्याः । गण्डदूर्वायां

**श्यामग्रन्थि** स्त्री श्यामो ग्रन्थिरस्याः । गण्डदूर्वायां राजनि० ।

**श्यामपत्र** पु० श्यामानि पत्राणि यस्य । तमालवृक्षे शब्दच० ।

**श्यामल** पु० श्यामवर्णं लाति ला—क । १पिप्पले २कृष्णवर्णयुते त्रि० मेदि० । ३चर्म्मचटकायां ४कट्यां ५जम्ब्वां ६कस्तूर्य्यां च स्त्री राजनि० । ७श्यामवर्णे पु० अमरः ।

**श्यामलचूड़ा** स्त्री श्यामला चूड़ाऽस्याः । गुञ्जायां राजनि० ।

**श्यामलता** स्त्री कर्म० । १स्वनामख्याते शारिवौषधौ शब्दर० । श्यामलस्य भावः तल् । २कृष्णवर्णे ३हरिद्वर्णे च ।

**श्यामलिका** स्त्री श्यामलोवर्णोऽत्यस्याः ठन् । नील्यामोषधौ राजनि० ।

**श्यामलेक्षु** पु० कर्म० । (कालला) इक्षुभेदे राजनि० ।

**श्यामसुन्दर** पु० श्यामोऽपि सुन्दरः । श्रीकृष्णे "श्यामसुन्दर ! ते दास्यः" इति भागवते १०स्क० २२अ० । "ध्यायन्ति योगिनस्तत्र शुद्धं ज्योतिःस्वरूपिणम् । हस्तपादादिरहितं निर्गुणं प्रकृतेः परम् । वैष्णवास्तन्न मन्यन्ते तद्भक्ताः सूक्ष्मदर्शिनः । कुतो बभूव तज्ज्योतिरहो तेजस्विनं विना । ज्योतिरभ्यन्तरे नित्यं शरीरं श्यामसुन्दरम्" ब्रह्मवै० गणपतिख० ४१ अ० ।

**श्यामा** स्त्री श्यै—मन् । १शारिवौषधौ २अप्रसूताङ्गनायां ३प्रियङ्गौ ४यमुनायां ५वागुज्यां ६रात्रौ ७कृष्णत्रिवृति ८नील्यां मेदि० ९गुग्गुलौ १०सोमलतायां ११गुन्द्रायां १२कृष्णायाम् १३कस्तूरिकायां विश्वः । १४गुडूच्यां १५कस्तूर्य्यां १६वटपत्त्र्यां १७वन्दायां १८नीलपुनर्णवायां १९पिप्पल्यां २०हरिद्रायां २१नीलदूर्वायां २२तुलस्यां २३पद्मबीजे २४गवि २५छायायां २६कृष्णशारिकायां २७शिंशपायां २८पक्षिभेदे (श्यामा) राजनि० । "शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला । तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कीर्त्तिता" इत्युक्तलक्षणे २९स्त्रीविशेषे च । ३०हिमालयसुतायां काल्यां च "ततः सा कालिका देवी योगनिद्रा जगन्मयी । पूर्वोक्तमतोरूपा जन्मार्थं मेनकां ययौ । समयस्यानुरूपेण मेनका जठरे शिवा । सम्भूय च समुत्पन्ना सा लक्ष्मीरिव सागरात् । वसन्तसमये देवी नवम्यां मृगयोगतः । अर्द्धरात्रौ समुत्पन्ना गङ्गेव शशिमण्डलात् । तान्तु दृष्ट्वा यथा जातां नीलोत्पलदलप्रभाम् । श्यामां सा मेनका देवी मुदमापातिहर्षिता" कालिकापु० ४० अ० ।

**श्यामाक** पु० श्याम इव कायति कै—क । (श्यामा) धान्यभेदे "श्यामाकः शोषणो रूक्षो वातलः कफपित्तहृत्" भावप्र० ।

**श्यामाङ्ग** पु० श्यामं हरिद्वर्णमङ्गमस्य । १बुधग्रहे त्रिका० । २कृष्णदेहे त्रि० स्त्रियां ङीष् । "श्यामाङ्गीं विगताम्बराम्" तन्त्रम् ।

**श्यामाम्ली** स्त्री कर्म० । नीलाम्लाक्षुपे राजनि० ।

**श्यामिका** स्त्री श्याम+स्वा० भावे ठन् । १श्यामत्वे २स्वर्णादिमालिन्ये च "हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा" रघुः ।

**श्याल** पु० श्यै—कालन् । पत्नीभ्रातरि अमरः । स्वार्थे ठक् । श्यालिकोऽप्यत्र । [पत्नीभगिन्याम् शब्दच० ।

**श्यालिका** स्त्री श्यै—कालन् संज्ञायां कन् । अत इत्वम् ।

**श्याव** पु० श्यै—वन् । १कृष्णपीतमिश्रवर्णे २तद्वति त्रि० अमरः ।

**श्यावदत्** त्रि० श्यावो दन्तो यस्य दत्रादेशः । श्यामवर्णदन्तयुक्ते स्त्रियां ङीप् ।

**श्यावदन्त** पु० कर्म० । १स्वभावतः कृष्णवर्णयुक्ते दन्ते २तद्युक्ते त्रि० "कुनखी श्यावदन्तकः" विष्णुस्मृ० ।

**श्येत** पु० श्यै—इतन् । १शुक्लवर्णे २तद्वति त्रि० स्त्रियां ङीप् तस्य नश्च । श्येनी । [हारा० स्त्रियां ङीप् ।

**श्येतकोलक** पुंस्त्री० श्वेतः कोल इव । (पुँटि) मत्स्यभेदे

**श्येन** पुंस्त्री० श्यै—इनन् । १पक्षिभेदे (बाज) अमरः । २पाण्डुरवर्णे च ३तद्वति त्रि० मेदि० ।

तद्गमनस्य शुभाशुभसूचनं यथा "प्रदक्षिणीकृत्य नरं व्रजन्तो यात्रासु वामेन गताः प्रवेशे । श्येनाः प्रशस्ताः प्रकृतस्वरास्ते शान्ताः प्रदीप्ता विततस्वरास्ते । श्येनो नृणां दक्षिणवामपृष्ठभागेषु भाग्यैः स्थितिमादधाति । तिष्ठन् पुरस्तान्मृत्युं करोति युद्धे जयं क्षत्ररथध्वजस्थः" इति वसन्तराजः । "श्येनेनाभिचरन् यजेत" श्रुतिविहिते २यागभेदे अभिचारयज्ञे इत्यम् ।

**श्येनघण्टा** स्त्री श्येनी घण्टेव । दन्तीवृक्षे राजनि० ।

**श्यै** गतौ भ्वा० आ० सक० अनिट् । श्यायते अश्यास्त ।

**श्यैनम्पाता** स्त्री श्येनस्य पातो यत्र अण् मुम् च । मृगयायाम् अमरः ।

**श्यो(णा)नाक** पु० श्यै—ओना(णा)क । (शोणा) क्षुपभेदे । "श्योनाको दीपनः पाके कटुकस्तुवरो हिमः । ग्राही तिक्तोऽनिलश्लेष्मपित्तकासप्रणाशनः । कटु तस्य फलं बालं रूक्षं वातकफापहम् । हृद्यं कषायं मधुरं रोचनं लघु दीपनम् । गुल्मार्शःकृमिहृत् प्रोक्तं गुरुवातप्रकोपणम्" भावप्र० ।

**श्रक्क** सर्पणे भ्वा० आ० सक० सेट् इदित् । श्रङ्कते अश्रङ्किष्ट ।

**श्रग** गतौ भ्वा० पर० सक० सेट् इदित् । श्रङ्गति अश्रङ्गीत् ।

**श्रण** दाने भ्वा०पर०सक०सेट् । श्रणति अश्राणीत् अश्रणीत् मित् घटादि० श्रणयति ।

**श्रण** दाने चु०उभ०सक० सेट् । श्राणयति ते अशिश्रणत् त ।

**श्रत्** अव्य० श्रो–डति । श्रद्धायाम् । [अशिश्रथत् त ।

**श्रथ** यत्ने अक० प्रतिहर्षे सक० चु०उभ० सेट् । श्राथयति ते

**श्रथ** दौर्बल्ये अ०चु०उ०अक०सेट् । श्रथयति ते अशश्रथत् त ।

**श्रथ** वधे भ्वा०पर०सक० सेट् । श्रथति अश्रथीत् अश्राथीत् ।

**श्रथ** बन्ध मोक्षे वधे च वा चु० उ० पक्षे भ्वा०पर०सक०सेट् । श्राथयति ते श्रथति अशिश्रथत् त अश्रथीत्-अश्राथीत् ।

**श्रथ** शैथिल्ये अक० तत्करणे सक० भ्वा० आ०सेट् इदित् । श्रन्थते अश्रन्थिष्ट ।

**श्रथन** न० श्रथ–ल्युट् । १वधे २यत्ने ३प्रतिहर्षे च ।

**श्रद्धा** स्त्री श्रत्–धा–अङ् । १आदरे २शुद्धौ शब्दच० । ३गुरुवेदान्तवाक्यादिषु विश्वासे वेदान्तसा० ४स्पृहायां ५चित्तप्रसादे "प्रत्ययो धर्मकार्येषु सा श्रद्धेत्यभिधीयते" इति स्मृत्युक्ते धर्मकार्येषु ६प्रत्यये च अमरः । "प्रत्ययो धर्मकार्येषु तथा श्रद्धेत्युदाहृता । नास्ति ह्यश्रद्दधानस्य धर्मकृत्ये प्रयोजनम्" इति स्मृतिः । सा त्रिविधा यथोक्तं गीतायाम् १७अ० । "त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा । सात्त्विकी राजसी चैव तामसी चेति तां शृणु । सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ! । श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः । यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः । प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः" । "श्रद्धापूर्वाः सर्वे धर्माः श्रद्धा मध्यान्तसंस्थिता । श्रद्धा नित्या प्रतिष्ठाश्च धर्माः श्रद्धैव कीर्त्तिताः । श्रुतिमात्ररसाः सूक्ष्माः प्रधानपुरुषेश्वराः । श्रद्धामात्रेण गृह्यन्ते न करेण न चक्षुषा । कायक्लेशैर्न बहुभिस्तथैवार्थस्य राशिभिः । धर्मः संप्राप्यते सूक्ष्मः श्रद्धाहीनैः सुरैरपि । श्रद्धाधर्मः परः सूक्ष्मः श्रद्धा ज्ञानं हुतं तपः । श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धा सर्वमिदं जगत् । सर्वस्वं जीवितं वापि दद्यादश्रद्धया यदि । नाप्नुयात्तत्फलं किञ्चित् श्रद्धादानं ततो भवेत् । एवं श्रद्धान्वयाः सर्वे सर्वधर्माः प्रकीर्त्तिताः । केशवः श्रद्धया गम्यो ध्येयः पूज्यश्च सर्वदा" वह्निपु० । देवलः "अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम् । दानमित्यभिनिर्दिष्टं व्याख्यानन्तस्य वक्ष्यते । श्रुदितं शास्त्रकथिते । देवलेनाप्युक्ता यथा "सत्कृतिश्चानसूया च सदा श्रद्धेति कीर्त्तिता" । अतएव भगवद्गीतासु "अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत् । असदित्युच्यते पार्थ ! न च तत्प्रेत्य नेह च" । हरिवं० "अश्राविय आद्यप्रधानमव्रतं त्वर्च्चणं यद्यमन्त्रविना हुतम् । अश्रद्धया दत्तमसत्कृतं हविर्भागाः षडेते तव दैत्यपुङ्गव !" पु०त० याज्ञवल्क्यः "श्रद्धाविधिसमायुक्तं कर्म यत् क्रियते नृभिः , सुविशुद्धेन भावेन तदानन्त्याय कल्पते" योगियाज्ञवल्क्यः "विधिहीनं भवेद्दुष्टं कृतमश्रद्धया च यत् । तद्धरन्त्यसुरास्तस्य मूढस्य दुष्कृतात्मनः"

**श्रद्धालु** स्त्री श्रद्धा+आलुच् । १स्पृहावत्यां स्त्रियां २श्रद्धायुक्ते त्रि० ।

**श्रन्थ** सन्दर्भे वधे च वा चु० उभ० पक्षे भ्वा०पर०सक० सेट् । श्रन्थयति ते श्रन्थति अशश्रन्थत् त अश्रन्थीत् । [न्थीत्

**श्रन्थ** मोचने प्रतिहर्षे च क्र्या०प०सक०सेट् । श्रथ्नाति अश्र-

**श्रन्थ** पु० श्रन्थ–भावे घञ् । १ग्रथने कर्त्तरि अच् । सन्दर्भविनकर्त्तरि २विष्णौ त्रिका० ।

**श्रन्थन** न० श्रन्थ–ल्युट् । ग्रन्थने ।

**श्रपित** त्रि०चु० श्रा–क्त–णिच्-पुक् स्वरूपे । घृतादिभिर्वे पक्वे मांसादौ जटा० ।

**श्रम** तपसि, आयासे खेदे च अक० भ्वा० शमादि० पर०सेट् उदित् क्त्वा वेट् । श्राम्यति इरित् अश्रमत् अश्रमीत् । श्रान्त्वा श्रमित्वा श्रान्तः । [स्वाध्याये च हेमच० ।

**श्रम** पु० श्रम–घञ् न वृद्धिः । १तपसि २खेदे ३आयासे ४श्र-

**श्रमण** पु० श्रम–युच् । १यतिभेदे २भिक्षाजीविनि त्रि० । ३जटामांस्यां ४कुलटायां ५शबरीभेदे ६सुदर्शनायां स्त्रियां च स्त्री मेदि० ।

**श्रमिन्** त्रि० श्रम–इनि । श्रमयुक्ते । [इत्येके ।

**श्रम्भ** प्रमादे भ्वा० आ०अक०सेट् । श्रम्भते अश्रम्भिष्ट । स्रम्भ

**श्रय** पु० श्रि–अच् । आश्रये । ल्युट् । तत्रैव न० अमरः ।

**श्रव** पु० प्रत्योत्यनेन श्रु–अप् । १कर्णे २श्रुतौ च भरतः ।

**श्रवण** न० श्रूयतेऽनेन श्रु–करणे ल्युट् । १कर्णे शब्दग्राहकेन्द्रियभेदे अमरः । भावे ल्युट् । २श्रुतौ कर्णमन्त्रादिषु हारिभिः ३नक्षत्रे पुंस्त्री० ज्यो०त० ज्ञानतमपि "अभाकर्णपाते श्रवणं यदि स्यादिति" स्मृतिः । ४सुवर्णकारकादस्त्री रत्नमा० ।

**श्रवणद्वादशी** स्त्री श्रवणेन युक्ता द्वादशी शाक० । "आसि भाद्रपदे शुक्ले द्वादशी श्रवणान्विता" इत्युक्तायां भाद्रशुक्लद्वादश्याम् । व्रतमस्त्र इत्यग्रम् ।

**श्रवणशीर्षिका** स्त्री श्रवणमिव शीर्षमस्याः कप् अत इत्त्वम् । श्रावणीवृक्षे राजनि० । [श्रवि । २कीर्त्तौ ।

**श्रवस्** न० श्रूयतेऽनेन श्रु—करणे असि । १कर्णे अमरः । कर्म्मणि

**श्रवाय्य** पु० श्रु—आय्य । यज्ञियपशौ सि०कौ० । शब्दकल्पद्रुमे श्रवाप्य इति पाठकल्पनं प्रामादिकमेव ।

**श्रविष्ठा** स्त्री श्रूयते श्रु—अप् श्रवः प्रसिद्धिरस्त्यस्याः मतुप् ङीप् अतिशयेन श्रववती इष्ठन् मतुपो लुक् । १धनिष्ठानक्षत्रे अमरः २श्रवणनक्षत्रे च ।

**श्रविष्ठाज** पु० श्रविष्ठायां श्रवणनक्षत्रे जायते जन—ड । बुधग्रहे त्रिका० । भगदैवतशब्दे ४६९१पृ० दृश्यम् ।

**श्रा** विकृतौ अदा०पर०अनिट् । श्राति अश्रासीत् ।

**श्रा** पाके अदा०पर०सक० अनिट् घटा० । श्राति अश्रासीत् अश्रपति । [२यवाग्वां स्त्री अमरः ।

**श्राण** त्रि० श्रा—क्त । १घृतादिभिः पक्वे मांसादौ जटा० ।

**श्राद्ध** न० श्रद्धा-हेतुत्वेनास्त्यस्य अण् । "श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते" इत्युक्ते पित्रादिभ्यः श्रद्धया देये १द्रव्ये । अस्त्यर्थे अण् । २श्रद्धायुक्ते त्रि० ।

श्राद्धलक्षणं तत्प्रयोजनञ्च गयाश्राद्धादिपद्धतौ हेमाद्रि श्राद्धकल्पानुसारेणास्माभिः प्रदर्शितं यथा "सम्बोधनपदोपनीतान् पित्रादीन् चतुर्थ्यन्तपदेनोद्दिश्य पुत्रादिभिर्मन्त्रद्वारा श्रद्धयान्नादेर्दानं श्राद्धम्" "अथैतन्मनुः श्राद्धशब्दं कर्म्म प्रोवाचेति" श्राद्धविवेकधृतापस्तम्बवचनेन श्राद्धशब्दस्य कर्म्मसामान्यवचनतावगमात् "संस्कृतं व्यञ्जनाद्यं च पयोदधिघृतान्वितम् । श्रद्धया दीयते यस्मात् तेन श्राद्धं निगद्यते" इति श्राद्धतत्त्वधृतपुलस्त्यवचनेन श्रद्धाहेतुकदानरूपकर्म्मविशेषस्य श्राद्धपदार्थतावगमाच्च । श्राद्धमिति शब्दो वाचको यस्य तत्कर्म्मेत्यर्थ इति श्राद्धविवेकः । तस्मिंश्च कर्म्मणि यागादाविन्द्रादीनामिव पित्रादेर्देवतात्वं तदुद्देशेन मन्त्रद्वारा द्रव्यत्यागात् । तथा च यागादौ मन्त्राहूता इन्द्रादयः शक्तिमत्त्वेन तत्तत्स्थले आविर्भूता यजमानत्यक्तद्रव्यदर्शनेन तृप्यन्तस्तमभीष्टफलं यथा साधयन्ति तथा श्राद्धेऽपि मन्त्राहूताः पित्रादयः समागताः पुत्रादित्यक्तद्रव्यभोगेन तृप्यन्तो विशिष्टफलप्रदा इत्येव कल्पनीयम् । किन्तु सर्वो हि लोकः सफले कर्म्मण्येव प्रवर्त्तते नाफले । तत्र यागादौ यथा देवानां फलदातृत्वमेवं श्राद्धदेवानां पित्रादीनां फलदातृत्वे सम्भवत्येव श्राद्धस्य सफलत्वं भवेत्तदेव नोपपद्यते । तथा हि इन्द्रादयो हि देवाश्चेतना विशिष्टज्ञानक्रियाशक्तिमन्तो मन्त्रमात्राहूताः शक्तिविशेषेण यज्ञदेशे आविर्भवितुं शक्नुवन्ति आविर्भूय च यजमानदत्तद्रव्यदर्शनमात्रेण तृप्यन्तो विशिष्टफलदानाय समर्थाः । नैवं पित्रादयो भवितुमर्हन्ति । ते हि स्वस्वकर्म्मानुसारेण नानायोनिगतवा अतिविप्रकृष्टदेशस्थिताः विशिष्टशक्तिरहिताश्च कथं मन्त्रमात्राहूताः श्राद्धदेशे आगच्छेयुः । आगता वा कुतो न दृश्येयुः देवानामिव तेषामतीन्द्रियत्वाभावात् दर्शनमात्रेण तृप्तेरभावाच्च । भोजनेनैव तेषां तृप्तिसम्भवाच्च भोजनमन्तरेण कथं तृप्येयुः । अतृप्ताश्च कुतो वा फलं दद्युः । पश्वादिगता वा कुतो विशिष्टफलप्रदाः स्युः । अपरञ्च इह दत्तस्य चान्नादेरचेतनतया नेतृपुरुषाभावेनान्यत्र गमनासम्भवः । श्राद्धदत्तद्रव्यस्य यथापूर्वमवस्थानाच्च भोक्तृदेशगमनमित्यनुमीयते । एवमिह दत्तेनान्नेनान्यत्र स्थितानां भोगस्तु नैव सम्भवी । पात्रीयब्राह्मणेन श्राद्धान्नस्य भोजनाच्च पित्रादितृप्तिसम्भवः भोगतृप्त्योः सामानाधिकरण्यनियमात् । किञ्च देवयोनिगतानाममृताशिनां मानुषयोग्येनान्नेन कथं तृप्तिः कथं वा पशुयोनिगतानां तृणाहारयोग्यानां तेन तृप्तिः । तेषां पश्वादिभावमापेदुषां फलदातृत्वासम्भवस्तु विशिष्टशक्तेरभावात् सर्वानुभवसिद्धः । एतेन "यथा गोषु प्रनष्टो वै वत्सो विन्दति मातरम् । एवं श्राद्धेऽन्नमुद्दिष्टं मन्त्रः प्रापयते पितॄन् । नामगोत्रं पितॄणान्तु प्रापकं हव्यकव्ययोः । नाममन्त्रास्तथोद्देशो भवान्तरगतानपि । प्राणिनः प्रीणयन्त्येते तदाहारत्वमागताः । देवो यदि पिता जातः शुभकर्म्मानुसारतः । श्राद्धान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति । दैत्यत्वे भोग्यरूपेण पशुत्वे च तृणं भवेत् । श्राद्धान्नं वायुरूपेण नागत्वेऽप्यनुगच्छति । पानं भवति यक्षत्वे राक्षसत्वे च तथामिषम् । दनुजत्वे तथा मांसं प्रेतत्वे रुधिरोदकम् । मानुषत्वेऽन्नपानादि नानाभोगरसं तथेति च" हेमाद्रिश्राद्धकल्पादिधृतमार्कण्डेयवचनैरिह दत्तान्नादेरेव मन्त्रशक्त्या विप्रकृष्टदेशनयनं पितृप्राप्तयोनियोग्यामृतादिरूपेण परिणामश्च कल्प्यते इत्यपि न विचारसहम् अचेतनानामपि मन्त्राणां चेतनधर्म्मकल्पनापि तदैव साधीयसी स्यात् यदि दत्तान्नादेरिह यथापूर्वमवस्थितिर्न स्यात् स्याच्च पूर्वरूपान्यथाभावः । तथा च एवमादिवचनानां स्तुत्यर्थवादपरतायाः अग्रे दर्शयिष्यमाणत्वान्नाधिककल्पना । किञ्च पात्र-

अन्नाद्येन भोगादिना विनष्टस्य वस्तुनः कथं स्थानान्तरनयनं कथं वा तत्तदाकारतारूपेण परिणामः धर्मिणि सत्येव स्थानान्तरगमनादिसम्भवो न विनष्टस्यातः श्राद्धस्य कथं प्रयोजनवत्त्वमित्येवं स्थिते। उच्यते। ब्राह्मणादिसम्प्रदानक्रियाया इव श्राद्धकर्मण एव स्वजन्यपुण्यद्वारा विशिष्टफलजनकता तत्र च कालान्तरभावितत्तत्फलदानाय तत्कर्माराध्यस्य परमेश्वरस्यैव तत्साधनत्वम्। अतएव भगवद्गीतायाम् “यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति। तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्। स तया श्रद्धया युक्तस्तस्याराधनमीहते। लभते च ततः कामान् मयैव विहितान् हि तान्” इति भक्तानां तत्तदिष्टोत्पादनस्य स्वकर्तृकत्वं भगवतोक्तम्। युक्तञ्चैतत् श्रुतिस्मृत्योरीश्वराज्ञारूपतया तत्तदर्थानुष्ठानेन तदाज्ञाप्रतिपालने ईश्वरस्य सम्माननारूपा तुष्टिस्ततश्चाभीष्टलाभः। तथैवोक्तं गीतायाम् “स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः। स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु। यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः” इति। स्वकर्मणा स्वस्ववर्णाश्रमविहितकर्मानुष्ठानेन, तम् परमेश्वरम् अभ्यर्च्य तदाज्ञाप्रतिपालनेन सम्मान्य तत्सम्मानेन च तत्कृतां सिद्धिम् तत्तद्भोगसिद्धिं लभते इति तदर्थः। अस्मिन् पक्षे च पित्रादीनां श्राद्धान्नादेर्वा न स्थानान्तरगमनकल्पना। अथ वा देवदत्तादिशब्दस्य यथा न केवलं देहमात्रं, न वा जीवमात्रमर्थः किन्तु तत्तद्देहाभिमानी जीव एवार्थः। तथा पित्रादिशब्दस्य तत्तद्देहाभिमानी केवलं जीवोऽपि नार्थः किन्तु वसुरुद्रादित्यदेवाधिष्ठिततादृशजीव एवार्थः, “वसवः पितरो ज्ञेया रुद्रा ज्ञेयाः पितामहाः। प्रपितामहास्तथादित्याः श्रुतिरेषा सनातनी। प्रेतानुद्दिश्य यत् कर्म क्रियते नामगोत्रतः। तृप्यन्ति देवतास्तेन न प्रेताः पितरः स्मृताः”। इति श्राद्धकल्पधृतदेवलवचने पित्रादिपदानां पारिभाषिकत्वोक्तेः। प्रेताः मृताः न पितरः न केवलपितृपदाभिधेयाः किन्तु तदधिष्ठितवस्वादय एव पितृपदाभिधेयास्त एव तृप्यन्तीत्यर्थः। अतएव श्राद्धकाले पित्रादीनां तेन तेन रूपेण ध्येयताऽप्यभिधास्यमानोपपद्यते। एवञ्च वस्वादिदेवानामिन्द्रादिवत् विशिष्टशक्तिमत्त्वसम्पन्नतया मन्त्रमात्रावाहने यागादाविन्द्रादिदेवानामिव अन्नाद्यदर्शनमात्रेण तृप्तिः, “न वै देवा अश्नन्ति पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्तीति” छान्दोग्यवाक्यात्। अतएव भगवद्गीतायाम् “सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः। अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्। देवान् भावयतानेन ते देवा भावयन्तु वः। परस्परं भावयन्तः श्रेयः परमवाप्स्यथेति” प्रजाकर्तृयज्ञेन तृप्तानां देवानां यजमानफलदातृत्वम् प्रजाः प्रति प्रजापतिवचनत्वेनोक्तम्। अनेन यज्ञेन देवान् भावयत तर्पयत ते च यज्ञतर्पिता देवाः वः युष्मान् भावयन्तु तर्पयन्त्वित्यर्थः। यज्ञपदञ्च कर्ममात्रोपलक्षणम्। एवञ्च यथा काचित् गर्भिणी सुहृदा दत्तं दोहदं भुञ्जाना स्वयं तृप्यति स्वाश्रयं गर्भञ्च तर्पयन्ती दोहददातारमप्युपकरोति तथा वस्वादयोऽपि श्राद्धान्नदर्शनमात्रतृप्ताः स्वाधिष्ठितपित्रादिपुरुषान् तर्पयन्तः श्राद्धकर्तुरभीष्टदातारो भवन्ति। प्राशुक्तवचनजातेष्वपि मन्त्रपक्वान्नादेर्देशान्तरनयनकथनस्यापि स्वस्वकर्मानुसारेण पश्वादिभावापन्नपित्रादीनां तदुपभोगयोग्यान्नादिद्रव्यतृप्तिकारकत्वादिपरता तद्दिने भवतीत्येतत्परत्वश्राद्धप्रशंसापरत्वयोः कल्पने न वैयर्थ्यम्। अत्र च वाक्याविरोधेन पित्रादीनां मुक्तत्वम् तत्र वस्वादिमात्रस्यैव तृप्तिर्न विशिष्टस्य, विशेषणस्यासत्त्वे विशेष्यस्यैव विशिष्टकारित्वात् कुण्डलविशिष्टस्य नरस्य कुण्डलापगमेऽपि मनुष्यत्वकारित्वस्याहतिवत्। तथा च त एव तृप्ता विशिष्टफलं दद्युरिति दिक्। श्राद्धस्यार्थवत्ता।

श्राद्धभेदाश्च विश्वामित्राद्युक्ताः प्रा॰वि॰ दर्शिता यथा “नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम्। पार्वणञ्चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम्। कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम्। यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम्”। एतद्भविष्यपुराणे विवृतम्। यथा “अहन्यहनि यत् श्राद्धं तन्नित्यमभिधीयते। वैश्वदेवविहीनं तदशक्तावुदकेन तु। एकोद्दिष्टन्तु यत् श्राद्धं तन्नैमित्तिकमुच्यते। तदप्यदैवं कर्त्तव्यमयुग्मानाशयेद्द्विजान्। कामाय तु हितं काम्यमभिप्रेतार्थसिद्धये। पार्वणेन विधानेन तदप्युक्तं खगाधिप!। वृद्धौ यत् क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते। सर्वं प्रदक्षिणं कार्यं पूर्वाह्णे तूपवीतिना। गन्धोदकतिलैर्युक्तं कुर्य्यात् पात्रचतुष्टयम्। अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्। ये समाना इति द्वाभ्यामेतज्ज्ञेयं

सपिण्डनम्। नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि। अमावास्यां यत् क्रियते तत् पार्वणमुदाहृतम्। क्रियते पर्वणि यत्तत् पार्वणमिति च स्थितिः। गोष्ठ्यां यत् क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते। बहूनां विदुषां सम्पत्सुखार्थं पितृतृप्तये। क्रियते शुद्धये यत्तु ब्राह्मणानान्तु भोजनम्। शुद्ध्यर्थमिति तत् प्रोक्तं वैनतेय! मनीषिभिः। निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च। देवानुद्दिश्य यत् श्राद्धं तद्दैविकमिहोच्यते। हविष्येण विशिष्टेन सप्तम्यादिषु यत्नतः। गच्छन् देशान्तरं यत्तु श्राद्धं कुर्यात्तु सर्पिषा। यात्रार्थमिति तत् प्रोक्तं प्रवेशे च न संशयः। शरीरोपचये श्राद्धमर्थोपचय एव च। पुष्ट्यर्थमेतद्विज्ञेयमौपचारिकमुच्यते"।

वृह० "नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं तथैव च। पार्वणञ्चेति मनुना श्राद्धं पञ्चविधं स्मृतम्"। कूर्मपुराणे "अहन्यहनि नित्यं स्यात् काम्यं नैमित्तिकं पुनः। एकोद्दिष्टञ्च विज्ञेयं वृद्धिश्राद्धञ्च पार्वणम्। एतत् पञ्चविधं श्राद्धं मनुना परिकीर्त्तितम्"। स्वरूपतो द्वादशविधत्वेऽपि पञ्चविधविधानोपाधिभेदात् पञ्चविधत्वं गोष्ठीश्राद्धादीनां पार्वणकाम्यवृद्धिश्राद्धैरपृथग्विधानात् एतेष्वन्तर्भाव इत्यभिप्रायः। सपिण्डीकरणस्यापि यतः पार्वणविधानादंशत एकोद्दिष्टविधेरुभयात्मकत्वात् न पृथक्त्वं नित्यपार्वणात् काम्यञ्च दैवताभेदात् पृथग्विधानम्। वस्तुतः प्रपञ्चार्थमेव द्वादशविधत्वम्। युगाद्यादिश्राद्धानामपि सत्त्वात्। यत्तु मत्स्यपुराणे "नित्यं नैमित्तिकं काम्यं त्रिविधं श्राद्धमुच्यते"। इति तत्र नित्यपदमुक्तार्थमेव नैमित्तिकपदमागन्तुकनिमित्तोत्पन्नत्वेन पार्वणैकोद्दिष्टयोः परिग्रहार्थम्। काम्यपदं दृष्टफलत्वेन तिथिश्राद्धादीनामभ्युदयस्य च सङ्ग्रहार्थमित्यविरोधः। विष्णुना तु नित्यकाम्यरूपतया द्वैविध्यं वक्ष्यते तत्र नित्यपदमावश्यकतया पार्वणैकोद्दिष्टयोरपि परिग्रहार्थम्। काम्यपदमनावश्यकार्थं सर्वेष्टप्राप्तिभेदादिरघुनन्दः"।

श्राद्धे विहिता देशाः श्रा० वि० दर्शिता यथा

तत्र विष्णुः "पुष्करेष्वक्षयं श्राद्धं जपहोमतपांसि च"। "पुष्करे स्नातमात्रस्तु सर्वपापेभ्यः पूतो भवति" इत्यभिधाय "एवमन्येषु तीर्थेषु सरिद्वरासु सङ्गमेषु प्रभवेषु पुलिनेषु निकुञ्जेषु प्रस्रवणेषु उपवनेषु गोमयेनोपलिप्तेषु गृहेषु मनोज्ञेषु च" आह च। प्रभवोऽत्र नदीनामुत्पत्तिदेशः सरिद्वरासु सङ्गमेषु चेति प्रस्तुत प्रभवेष्वित्यभिधानात्। पुलिनं नदीतोयोत्थितप्रदेशः। निकुञ्जो लतादिवेष्टितप्रदेशः प्रस्रवणं निर्झरः। उपवनं गृहवाटिका मनोज्ञं रमणीयम्। देवलः "श्राद्धस्य पूजितो देशो गया गङ्गा सरस्वती। कुरुक्षेत्रं प्रयागश्च नैमिषं पुष्कराणि च। नदीतटेषु तीर्थेषु शैलेषु पुलिनेषु च। विविक्तेषु च तुष्यन्ति दत्तेनेह पितामहाः"। विविक्तं विजनम्। वृहस्पतिः "काङ्क्षन्ति पितरः पुत्रान्नरकापातभीरवः। गयां यास्यति यः कश्चित् सोऽस्मान् सन्तारयिष्यति। करिष्यति वृषोत्सर्गमिष्टापूर्त्तं तथैव च। पालयिष्यति वार्द्धक्ये श्राद्धं दास्यति चान्वहम्। गयायां धर्मपृष्ठे च सदसि ब्रह्मणस्तथा। गयाशीर्षेऽक्षयवटे पितृणां दत्तमक्षयम्। धर्मारण्यं धर्मपृष्ठं धेनुकारण्यमेव च। दृष्ट्वैतानि पितॄंश्चार्च्य वंश्यान् विंशतिमुद्धरेत्"। गयासुपाठाय गयास्थानविशेषोपन्यासोऽधिकफलार्थः। इह श्राद्धदेशत्वेन कथिता नानादेशीयतीर्थविशेषस्वरूपविशेषास्तत्तद्देशनिवासिभ्योऽवगन्तव्याः। अत्र पुष्करेष्वक्षयं श्राद्धमित्यादिविष्ण्वादिवाक्यैः सामान्यतस्तीर्थप्राप्तिनिमित्तेऽमावास्यादिश्राद्धे च प्राप्ते पुष्करादिदेशस्य गुणफलश्राद्धविधिः "गोदोहनेनापः प्रणयेत् पशुकामस्ये"ति वत् न तु विशिष्टश्राद्धान्तरविधानं विधिगौरवापत्तेः अगत्या तु "सोमेन यजेतेत्यादौ" तथा। तथा मनुः "शुचिं देशं विविक्तञ्च गोमयेनोपलेपयेत्। दक्षिणाप्लवनञ्चैव प्रयत्नेनोपपादयेत्। अवकाशेषु चोक्षेषु नदीतीरेषु चैव हि। विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा"। अशुचिमविविक्तमदक्षिणाप्लवं यत्नतः शुचित्वादिना उपपादयेत्। विविक्तं विजनं चोक्षेषु मनोज्ञेषु विविक्तेषु वनादिषु। यमः "दक्षिणाप्लवनं स्निग्धं विविक्तं शुभलक्षणम्। शुचिदेशं परीक्ष्यादौ गोमयेनोपलेपयेत्। आगारेषु विविक्तेषु तीर्थेषु च नदीषु च। विविक्तेषु च तुष्यन्ति देशेषु पितरः सदा। पारक्ये भूमिभागे तु पितृणां निर्वपेत्तु यः। तद्भूमिस्वामिपितृभिः श्राद्धकर्म विहन्यते। तस्मात् श्राद्धानि देयानि पुण्येष्वायतनेषु च। नदीतीरेषु तीर्थेषु स्वभूमौ तु प्रयत्नतः। उपह्वरनितम्बेषु तथा पर्वतसानुषु। गोमयेनोपलिप्तेषु विविक्तेषु गृहेषु च"। स्निग्धं स्तिमितं विविक्तेषु देशेषु स्वभावतो वनादिषु। उपह्वरमत्र पर्वतान्तिकम्"।

श्राद्धनिन्दितदेशास्तत्रोक्ता यथा विष्णुः "न म्लेच्छविषये

श्राद्धं कुर्य्यान्न च गच्छेत्तथा । चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते । तं म्लेच्छदेशं जानीयादार्य्यावर्त्तमतः-परम्” । वायुपुराणे “त्रिशङ्कुं वर्जयेद्देशं सर्वं द्वादशयोजनम् । उत्तरेण महानद्या दक्षिणेन तु कीकटात् । देशस्त्रैशङ्कवो नाम श्राद्धकर्मणि गर्हितः । पारस्कराः कलिङ्गाश्च सिन्धोरुत्तरमेव च । प्रनष्टाश्रमधर्माश्च देशावर्ज्याः प्रयत्नतः” । पारस्करादेर्देशविशेषाः । कीकटोमगधः । सिन्धुर्नदीविशेषः । ब्रह्मपुराणे “परकीयगृहे यस्तु स्वान् पितॄंस्तर्पयेज्जडः । तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात् । अयभागन्ततस्तेभ्यो दद्यात्तु स्यात्तु जीवताम्” । गृह इति भूभागमात्रोपलक्षणं “पारक्ये भूमिभागे च” इति यमवचनात् स्वभूम्यभावे कथं श्राद्धमित्याह अयभागमिति श्राद्धीयद्रव्याद्यैरिति तेभ्यस्तद्भूमिस्वामिपितृभ्य उद्धृत्य देयं जीवतां स्वामिनां मूल्यं वा देयम् । यमः “अटव्यः पर्वताः पुण्या नद्यस्तीर्थानि यानि च । सर्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः” । स्वाम्यभावे हेतुमाह न हि तेष्विति । परिग्रहो दानविक्रयणादियथेष्टविनियोगलक्षणः । तथा “हस्तं कृमियुतं क्लिन्नं संकीर्णानिष्टगन्धिकम् । देशन्त्वनिष्टशब्दञ्च वर्जयेत् श्राद्धकर्मणि” । हस्तं धूलियुतं क्लिन्नं पङ्किलम् अनिष्टगन्धम् अपराभिगन्धम् अनिष्टशब्दं प्रतिकूलशब्दम्” ।

**श्राद्धदेव** पु० श्राद्धोद्देश्यानां पितॄणां देवः शाक० । १यमे अमरः । २वैवस्वतमनौ हरिव० १५अ० ।

**श्राद्धदेवता** स्त्री श्राद्धे देवता त्यक्तव्यद्रव्यस्योद्देश्या । “पितरः श्राद्धदेवता” इति स्मृत्युक्तेषु पितृषु ।

**श्राद्धशाक** न० श्राद्धयोग्यं शाकम् । कालशाके भावप्र० ।

**श्राद्धिक** त्रि० श्राद्धे देयं, श्राद्धं तद्द्रव्यं भक्ष्यत्वेनास्त्यस्य वा ठन् । १श्राद्धदेये भक्ष्ये २श्राद्धदेयद्रव्यभोक्तरि च ।

**श्राद्धिन्** त्रि० श्राद्धं तद्द्रव्यं भक्ष्यत्वेनास्त्यस्य इनि । श्राद्धदेयान्नभोक्तरि सि०कौ० । [हेमच० । भावे क्त । ४श्रमे न० ।

**श्रान्त** त्रि० श्रम-क्त । १श्रमयुक्ते २शान्ते ३जितेन्द्रिये च

**श्रान्तसंवाह** न० श्रान्तस्य श्रमस्य संवाहः दूरीकरणम् । पादाद्यासनादिना श्रमनिवारणे । [मत् त ।

**श्राम** मन्त्रणे अद०चु० उभ०सक० सेट् । श्रामयति ते अशश्राम

**श्राम** पु० श्रम-अच् । १काले २मण्डपे ३मासे च मेदि० ।

**श्रावक** पु०त्रि० श्रु-ण्वुल् । १श्रवणकर्त्तरि २शाक्यमुनिशिष्ये मुनिभेदे ३काके पुंस्त्री० त्रिका० ।

**श्रावण** पु० श्रवणेन युक्ता पौर्णमासी श्रावणी साऽस्मिन् मासे अण् । वैशाखादिषु चतुर्थे श्रावणीयुक्ते चान्द्रे १मासे २तथाभूते पक्षे श्रवणनक्षत्रेण पर्वान्तकाले उदयास्तसम्बन्धात् बार्हस्पत्ये ३वर्षभेदे च । गुरुवर्षशब्दे २६१८ पृ० दृश्यम् उपचारात् कर्कटस्थरविके सौरे ४मासे ५पाषण्डे च मेदि० । श्रवणेन कर्णेन निर्वृत्तः अण् । ६कर्णसाध्ये प्रत्यक्षभेदे श्रवणनक्षत्रेण युक्ता पौर्णमासी अण् ङीप् । ७चान्द्रश्रावणमासीयपौर्णमास्यां स्त्री । सा च (मुलकुडि) ८क्षुपभेदे राजनि० । ९दध्यालीक्षुपे मेदि० टाप् । १०मुण्डितिकाक्षुपे भावप्र० ङीप् । “मुण्डितिका कटुः पाके वीर्य्योष्णा मधुरा लघुः । मेध्या गण्डापचीकृच्छ्र कृमियोन्यर्त्तिपाण्डुनुत् । श्लीपदारुच्यापस्मारप्लीहमेदोगुदार्त्तिहृत् । महामुण्डी च तत्तुल्या गुणैरुक्ता महर्षिभिः” भावप्र० ।

**श्रावणिक** पु० श्रावणी श्रवणनक्षत्रयुक्ता पूर्णिमाऽस्त्यस्मिन् मासे ठन् । १चान्द्रश्रावणमासे अमरः । २तथाभूते पक्षे

**श्रावस्ती** स्त्री श्रु-भिच् पृषो० ङीप् । धर्मपत्तनाख्ये नगरीभेदे त्रिका० ।

**श्रि** सेवने भ्वा०उभ० सक० सेट् । श्रयति ते अशिश्रियत् त ।

**श्रित** त्रि० श्रि-क्त । १सेविते २आश्रिते च ।

**श्रिष** दाहे भ्वा०पर०स० सेट् क्त्वा वेट् । श्रेषति अश्रेषीत ।

**श्री** पाके क्र्या०उ०सक०सेट् । श्रीणाति-ते अश्रायीत् अश्रायिष्ट

**श्री** स्त्री श्रि-क्विप् नि० । १लक्ष्म्यां २लवङ्गे अमरः । ३शोभायां ४वाण्यां ५वेशरचनायां ६सरलद्रुमे ७धर्मार्थकामेषु ८सम्पत्तौ ९प्रकारे १०उपकरणे ११बुद्धौ १२विभूतौ मेदि० । १३अधिकारे १४प्रभायां १५कीर्त्तौ धरणिः । १६वृद्धौ १७सिद्धौ शब्दर० १८कमले १९बिल्वद्रुमे २०वृद्धिनामौषधौ राजनि० “देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम् । सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरयेत्” इत्युक्ते देवादीनां २१नामोच्चारणीयोपाधिभेदे च “सिद्धाधिकारान् स्वर्गगामित्वादिना सिद्धोऽधिकारो येषां नराणां तान् सिद्धाधिकारान् । तेन जीवतां श्रीशब्दादित्वं न मृतानामिति” संस्कारत० रघु० । २२रागभेदे पु० । श्रीरागस्तु सुन्दरपुरुषाकृतिः हेमन्ते अपराह्णे गेयः । तस्य पञ्च रागिण्यः मालश्रीः मारवी धनाश्रीः वसन्तरागिणी आशावरी सङ्गीतदा० ।

पत्रे श्रीशब्दन्यासस्थानभेदाः पत्रशब्दे ४२२०पृ० दृश्याः

**श्रीकण्ठ** पु० श्रीः शोभा कण्ठेऽस्य । १शिवे अमरः सर्वतः श्वेतस्य

वरठे समुत्तरर्यविषयत्निकटे शोमाधिक्यात्तथात्वम् । २ह-स्तिनापुरस्य उत्तरपश्चिमस्ये गङ्गाजात्सुब्धाख्ये देशे च हेमच०

**श्रीकण्ठपदलाञ्छन** पु० भवभूतौ शब्दमाला ।

**श्रीकन्द** स्त्री श्रीः शोभा तया युक्तः कन्दोऽस्याः । वन्ध्या कर्कट्यां राजनि० ।

**श्रीकर** न०श्रियं शोभां करोति कृ-अच् । १रक्तोत्पले त्रिका० २विष्णौ पु० ३दायनिबन्धभेदकारके पण्डितभेदे च पु०। ४शोभाकारके त्रि० । [शब्दच० ।

**श्रीकरण** न०श्रीयुक्तं क्रियतेऽनेन कि-करणे ल्युट् । लेखन्यां

**श्रीकान्त** पु० ६त० । विष्णौ शब्दच० श्रीनाथश्रीपत्यादयो-ऽप्यत्र । श्रीपतिस्तु भूमिपाले च मेदि० ।

**श्रीकारिन्** पु०श्रियं करोति कृ—णिनि । जङ्घाले मृगजन्तौ १कमभेदे राजनि०। २शोभाकारिणि त्रि० स्त्रियां ङीप्।

**श्रीखण्ड** न०श्रियः शोभायाः खण्ड इव यत्र । चन्दने त्रिका०

**श्रीगर्भ** पु० श्रीर्गर्भेऽस्य । १विष्णौ त्रिका० २खड्गे च "श्रीगर्भो विजयश्चैव" इति खड्गनामाष्टकम् ।

**श्रीग्रह** पु० श्रियः गृह इव यत्र । पक्षिणां पानीयपात्रायां हारा० । [जटा० ।

**श्रीघन** पु०श्रिया युक्ता घनः । १बुद्धभेदे अमरः । २दध्नि न०

**श्रीचक्र** न० श्रियाः चक्रं यन्त्रभेदः । "बिन्दुत्रिकोणवसु-कोणदशारयुग्मं मन्वस्रनागदलसङ्कुलषोडशारम् । वृत्त-त्रयञ्च धरणीसदनत्रयञ्च श्रीचक्रमेतदुदितं परदेवतायाः" इति तन्त्रोक्ते त्रिपुरासुन्दरीपूजाङ्गे यन्त्रभेदे । [प्रत।

**श्रीज** पु० श्रियो जायते जन—ड । कामदेवे श्रीनन्दनादयोऽ-

**श्रीताल** पु० श्रीयुक्तस्तालः शाक० । तालसदृशत्वे वृक्षभेदे राजनि० । [दातरि त्रि० ।

**श्रीद** पु० श्रियं धनं ददाति दा-क । १कुबेरे अमरः २धन-

**श्रीधर** पु० श्रियं धरति धृ-अच् । १विष्णौ "अतिशुद्धं द्वि-चक्राङ्कं वनमालाविभूषितम् । श्रीधरं देवि ! विज्ञेयम्" इत्युक्ते २शालग्राममूर्त्तिभेदे न० ।

**श्रीनिकेतन** पु० श्रियं निकेतयति नितरां वासयति नि+कित-णिच्-ल्यु । १विष्णौ शब्दच० ६त० । २श्रीलक्ष्मी निवासे न० । [त्रि० ६त० । २श्रिय आलये च ।

**श्रीनिवास** पु० निवसत्यस्मिन् नि+वस-घञ् ६त० । १विष्णौ

**श्रीपञ्चमी** स्त्री श्रियः पूजाङ्गं पञ्चमी शाक०। माघशुक्ल-पञ्चम्याम् । माघोपक्रमे "चतुर्थी वरदा शुक्ला तत्र गौरी सुपूजिता सौभाग्यमतुलं कुर्यात् पञ्चम्यां श्रीरपि श्रियम्"। सरस्वतीपूजादिनेऽप्यस्याच गौडाचारः । अत्र श्रीपञ्च

म्यामारभ्य प्रतिमासं षड्वर्षमाघं श्रीपञ्चमीव्रतं स्त्रियः कुर्वन्ति तत्प्रमाणं संवत्सरकौमुदीधृतभविष्यपु० । [हारा० ।

**श्रीपथ** पु० श्रीयुक्तः पन्थाः अच् समा० शाक० । राजपथे

**श्रीपर्ण** न० श्रीर्लक्ष्मीः पर्णं दलेऽस्य । १पद्मे श्रीयुक्तं पर्ण-मस्य । २अग्निमन्थवृक्षे पु० मेदि० ।

**श्रीपर्णिका** स्त्री श्रीयुक्तं पर्णमस्याः संज्ञायां कन् अत इत्वम् । कट्फलवृक्षे अमरः ।

**श्रीपर्णी** स्त्री श्रीयुक्तानि पर्णान्यस्याः ङीप् । १गाम्भा-रीवृक्षे अमरः । २कट्फलवृक्षे मेदि०। ३शाल्मलीवृक्षे ४कुटवृक्षे हेमच० । ५अग्निमन्थवृक्षे राजनि०।

**श्रीपिष्ट** पु० श्रिये शोभायै पिष्यते पिष-क्त । सरलवृक्षे रा-मायनः । [२वस्त्रैःश्रवसि अश्वे त्रिका० ३चन्द्रे च ।

**श्रीपुत्र** पु०६त०। १कामदेवे श्रियः पुत्रो भ्राता सहजत्वात्

**श्रीपुष्प** न० श्रीयुक्तं पुष्पम् शाक० । १लवङ्गे राजनि० । २पद्मकाष्ठे रत्नमाला ।

**श्रीफल** पु० श्रीयुक्तं फलमस्य । १बिल्ववृक्षे अमरः । २रा-जादन्याम् राजनि० । ३नील्यां ४क्षुद्रकारवेल्ल्यां स्त्री राजनि० टाप् । स्वार्थे क अत इत्वम् । ५तत्रार्थे रा-जनि०। ६आमलक्यां मेदि० स्त्री गौरा० ङीष् ।

**श्रीभद्रा** स्त्री श्रीयुक्तं भद्रमस्याः । भद्रमुस्तके शब्दच० ।

**श्रीभागवत** न० श्रीमत् भागवतम् शाक०। अष्टादशपुराणेषु मध्ये द्वादशस्कन्धयुक्ते अष्टादशसाहस्रे व्यासप्रणीते पुराणे भागवतशब्दे दृश्यम् । श्रीमद्भागवतमप्यत्र "श्रीम-द्भागवते महामुनिकृते" भाग०१।१ [राजनि०२चन्द्रे च ।

**श्रीभ्रातृ** पु० श्रियः लक्ष्म्याः भ्राता अनुजत्वात् । १अश्वे

**श्रीमत्** पु० श्रीरस्त्यस्य मतुप् । १तिलकवृक्षे अमरः । २अश्व-त्थवृक्षे राजनि० । ३विष्णौ शब्दर०। ४शिवे त्रिका० । ५कुबेरे शब्दच० । ६शोभायुक्ते धनिनि च त्रि० स्त्रियां ङीप् । सा च राधिकायां तुल्यत्वतोऽपि पुंयो० राधिकायाम् नारदपञ्चरात्रम् ।

**श्रीमलापहा** स्त्री श्रिया शोभया मलमपहन्ति अप+हन—ड । भूम्यामलक्यां लतायां राजनि० ।

**श्रीमस्तक** पु०श्रीयुक्तं मस्तकमस्य । रसोने (लशुन)राजनि०

**श्रीमूर्त्ति** स्त्री श्रीपूर्वककथनयोग्या मूर्त्तिः । देवताप्रतिमायां राजनि० । विष्णोर्मूर्त्तिभेदाश्चतुर्विंशति मूर्त्तिशब्दे दृश्याः । श्रीमूर्त्तेश्चाष्टविधा भाग०११स्कन्धे दर्शिता यथा "शैली दारुमयी लौही लेप्या लेख्या च सैकती । मनो-मयी मणिमयी प्रतिमाष्टविधा मता" । ग्रन्थान्तरेति हि-

विधा प्रतिष्ठा जीवमन्दिरम्। श्वाशागाहने न क्षः स्थिरायासद्वयावने। अस्थिरायां विकल्पः स्यात् स्थण्डिले तु भवेत् द्वयम्। स्नपनं त्वविलेप्यायामन्यत्र परिमार्जनम्। गोपालमन्त्राहितत्वात् तस्थौमूर्त्तिरपेक्षिता। तथापि वैष्णवप्रीत्यै लेख्याः श्रीमूर्त्तयोऽखिला.''।

**श्रीरङ्गपत्तन** न० श्रिया रङ्गस्य पत्तनमिव। दाक्षिणात्ये देशभेदे

**श्रीरस** पु० श्रियै रसोऽस्य। श्रीवेष्टे गन्धद्रव्ये राजनि०।

**श्रीराम** पु० श्रीशब्दयुक्तो रामः। दशरथात्मजे भगदवतारभेदे शब्दच०। [च अमरः।

**श्रील** त्रि० श्री+मत्वर्थे लच्। १शोभायुक्ते २सम्पदादियुक्ते

**श्रीलता** स्त्री श्रीयुक्ता लता। महाज्योतिष्मत्यां राजनि०।

**श्रीवत्स** पु० वदति महत्त्वं वद-स श्रीयुक्तो वत्सः। १भगवत्स्ये महत्त्वलक्षणश्वेतरोमावर्त्तविशेषे। स कस्त्रास्य अच्। २विष्णौ हेमच०। ३सुरद्भुमभेदे त्रिका०।

**श्रीवत्सक** पु० श्रीवत्सः चिह्नभेदः तेन कायति कै-क। हृदयस्थश्वेतलोमयुक्ते अश्वभेदे।

**श्रीवत्सभृत्** पु० श्रीवत्सं बिभर्त्ति भृ-क्विप्। विष्णौ हेमच०

**श्रीवत्सलाञ्छन** पु० श्रीवत्सोलाञ्छनं यस्य। विष्णौ अमरः श्रीवत्साङ्कादयोऽप्यत्र। [वराहावतारे त्रिका०।

**श्रीवराह** पु० श्रिया युक्तो वराहः। विष्णोर्देवस्यवतारेषु

**श्रीवल्ली** स्त्री श्रीयुक्ता वल्ली। कण्टकप्रधानवृक्षभेदे राजनि०।

**श्रीवाटी** स्त्री श्रिया वाटीव। नागवल्लीभेदे राजनि०।

**श्रीवारक** पु० श्रियं वारयति कामयते स्तु क। सितावरशाके राजनि०।

**श्रीवास** पु० श्रियै वासयति वस-णिच्-अच्। सरलद्रवरसे (टारपिन)। "श्रीवासः सरलः पूतिः कुन्दुरुर्वृक्षधूपकम्। पिण्डकः परमामांदी देवदारु सुरा नली। सर्वे ऽस्मी परमाऽलक्ष्मीरक्षोघ्ना ज्वरनाशनाः" राजव०। ५त०। २पद्मे ३विष्णौ मेदि० ४शिवे शब्दच०।

**श्रीवासस्** न० श्रियै वासयति वस-णिच् असि। सरलद्रवरसे अमरः। [तन्त्रसा०।

**श्रीविद्या** स्त्री श्रियै त्रिवर्गाय विद्या। त्रिपुरासुन्दर्यां

**श्रीवृक्ष** पु० श्रियः शोभायाः वृक्ष इव। १अश्वस्य हृदयस्थश्वेतरोमावर्त्तभेदे २अश्वत्थवृक्षे हेमच०। श्रीनामकोवृक्षः शाक०। ३बिल्ववृक्षे "श्रीवृक्ष बोधयामि त्वाम्"ति०त०।

**श्रीवेष्ट** पु० श्रियै वेष्टनेऽस्यौ वेष्ट-कर्मणि घञ्। सरलद्रवनिर्यासे (तार्पिन) राजनि०। [ऽप्यत्र।

**श्रीश** पु० ६त०। १विष्णौ २श्रीरामे शब्दच०। श्रीश्वरादयो-

**श्रीसंज्ञ** न० श्रियः संज्ञा संज्ञाऽस्य। लवङ्गे अमरः। [च।

**श्रीसहोदर** पु० ६त०। १चन्द्रे २उच्चैःश्रवसि अश्वे च ३कर्पूरे

**श्रीहस्तिनी** स्त्री श्रीयुक्ता हस्तिनीव। (हातिशुँड़ा) क्षुपभेदे अमरः।

**श्रु** गतौ भ्वा० पर० सक० अनिट्। श्रवति अश्रौषीत्।

**श्रु** श्रवणे भ्वा०पर०सक०अनिट्। शृणोति अश्रौषीत्। णिचि चङि अशिश्रवत्। णिचि सनि शि(शु)श्रावयिषति।

**श्रुघ्न** पु० देशभेदे। [ठञ्। सर्जिकाक्षारे रत्नमा०।

**श्रु(स्रु)घ्निका** स्त्री श्रु(स्रु)घ्नः देशभेदः कारणत्वेनाऽस्त्यस्याः

**श्रुत** न० श्रूयते श्रु-क्त। १शास्त्रे अमरः २तज्ज्ञाने च "श्रुतान्वितः" इति भट्टिः। ३श्रवणेन गृहीते त्रि० मेदि० ४अवधृते च।

**श्रुतकीर्त्ति** स्त्री १कुशध्वजकन्यायां शत्रुघ्नपत्न्याम्। श्रुता विख्याता कीर्त्तिरस्य। २विख्यातयशस्के त्रि०।

**श्रुतदेवी** स्त्री श्रुतस्य शास्त्रस्य देवी। सरस्वत्यां हेमच०।

**श्रुतबोध** पु० श्रुतमात्रं बोधयति बुध-णिच्-अण्। १कालिदासकृते छन्दोग्रन्थभेदे। २सुगमार्थे ग्रन्थे च।

**श्रुतश्रवस** पु० श्रुतं श्रवो यशोऽस्य। शिशुपालपितरि "निर्वतितेऽरिः क्रियया स श्रुतश्रवसः सुतः" इति माघः।

**श्रुतश्रेणि** स्त्री श्रुता विख्याता श्रेणीव। द्रवन्त्यां भावप्र०।

**श्रुताढ़ान** न० ६त०। ब्रह्मवादे हारा०।

**श्रुतायुस्** सूर्यवंश्ये नृपभेदे "नाभागसाम्बरीषोऽभूत् सिन्धुद्वीपस्ततोऽभवत्। ततः श्रुतायुः पुत्रोऽभूत्" मत्स्यपु०।

**श्रुति** स्त्री श्रु-कर्मादौ क्तिन्। १वेदे वेदस्य सर्वैः श्रूयमाणत्वात् श्रुतित्वम्। २कर्णे कर्णस्य श्रवणहेतुत्वात् तथात्वम्। ३श्रवणेन्द्रियकार्ये ज्ञाने च। कङ्कयाख्योक्ते त्रिभुजक्षेत्रादौ भुजकोट्योः संयुक्तमाने ४रेखाभेदे च लीला०। कर्णेश्च शुभाशुभत्वं यथा "रक्ताल्पदन्तप्रसन्नश्रवणैः सुः पाण्डुलवः। निर्मांसचिपिटैर्भोगाः कृपणाः हुस्वकर्णकाः। शङ्कुकर्णाश्च राजानो रोमकर्णैः शतायुषः। हृत्कर्णाश्च राजानो धनिनः परिकीर्त्तिताः" गरुड़पु० ६६अ०। ५श्रवणक्रियायां ६वार्त्तायां मेदि०। ७नक्षत्रनवके षड्ज० दक्षिण रागादिसप्तकावयवे शब्दभेदे मल्लिना० "प्रथम श्रवणाच्छब्दः श्रूयते हुस्वमात्रकः। सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणा"। श्रुतिसंख्यानियमश्च तत्र दर्शितः "चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः। द्वे द्वे निषादगान्धारौ त्रिस्त्रिरृषभधैवतौ"। तन्नामानि तु "नान्दी चालनिका रसा च सुपसी चित्रा विचित्रा घना मातङ्गी

मत्सरीकृता मधुकरी मैत्री शिवा माधवी। बाला शार्ङ्गरवी कला कलरवा माला विशाला जया मात्रेति श्रुतयः पुराणकविभिर्द्वाविंशतिः कीर्त्तिताः”। “श्रुतिस्थाने स्वरान् वक्तुं नालं ब्रह्मापि तत्त्वतः। जले च सुतरां मार्गो मीनानां नोपलक्ष्यते। गगने पक्षिणां यद्वत् तद्वत् स्वरगता श्रुतिः। श्रुतिर्नादरूपा प्रोक्ता तथाढ्या च कला मता। यथा तैलगतं सर्पिर्यथा काष्ठगतोऽनलः। प्रायतेऽलोपदेशेन तथा स्वरगता श्रुतिः। वीणादिषु श्रुतिज्ञानं स्वरज्ञानं तु वंशजम्” संगीतदा०। संगीतरत्नाकरे तु षड्जादिभेदे अन्यविधाः श्रुतय उक्ता यथा “तीव्रा कुमुद्वती मन्दा छन्दोवत्यस्तु षड्जगाः। दयावती रञ्जनी च रतिका ऋषभे स्थिता। रौद्री क्रोधा च गान्धारे वज्रिका च प्रसारिणी। प्रीतिश्च मार्जनीत्येताः श्रुतयो मध्यमाश्रिताः। क्षितिरक्ता च सान्दीपिन्यालापी चैव पञ्चमे। मदन्ती रोहिणी रम्येत्येता धैवतसंश्रयाः। उग्रा च क्षोभिणीति द्वे निषादे वसतः श्रुती”।

**श्रुतिकट** पुंस्त्री० श्रुतिं कर्णं कटति कट–अच्। १सर्पे तस्य चक्षुःकर्णत्वात् तथात्वम् स्त्रियां ङीप्। २प्रायश्चित्ते ३पापशोधने च पु० मेदि०।

**श्रुतिकटु** पु० श्रुतौ श्रवणे कटुः कठोरः। अलङ्कारोक्ते कठोरशब्दविशेषरूपे १काव्यदोषभेदे २कठोरशब्दे च।

**श्रुतिजीविका** स्त्री श्रुतिं जीवयति मूलतयानुसरति जीव-णिच्-ण्वुल्। स्मृतिशास्त्रे शब्दर०।

**श्रुतिधर** त्रि० श्रुत्वा श्रवणमात्रेण धरति धारयति धृ–अच्। श्रवणमात्रेण धारणायुक्ते।

**श्रुतिमूल** न० श्रुतिरेव मूलं धर्मप्रमाणस्य कारणम्। १वेदरूपे धर्मबोधनप्रमाणे ६त०। २अष्टकादौ वेदशास्त्रबोधिते धर्मादौ च ६त०। ३कर्णमूले।

**श्रुतिवर्जित** त्रि० श्रुत्या वेदाध्ययनेन कर्णेन्द्रियेण वा वर्जितः १वेदपाठहीने २बधिरे च जटा०।

**श्रुतिवेध** पु० श्रुतेः कर्णस्य वेधो यत्र। कर्णवेधाख्ये संस्कारभेदे कर्णवेधशब्दे १७१० पृ० दृश्यम्।

**श्रुतिस्फोटा** स्त्री श्रुताविव पत्रे स्फोटो यस्याः। कर्णस्फोटालतायां राजनि०।

**श्रुत्यनुप्रास** पु० श्रूयते इति श्रुतिः शब्दस्तस्यानुप्रासः। अलङ्कारोक्ते शब्दालङ्कारभेदे अनुप्रासशब्दे १७८पृ० दृश्यम्

**श्रुत्युक्त** त्रि० श्रुतौ वेदे उक्तः विहितः। वेदविहिते धर्मादौ।

**श्रुव** पु० श्रूयते क। १यागे जटा० श्रुतिविहितत्वात् तस्य तथात्वम्

**श्रु(स्रु)वा** स्त्री श्रु(स्रु) क। यज्ञपात्रभेदे राजनि०। कात्या० श्रौ० १।३।३८ अयं दन्त्यादितया पुंस्त्वेन चोक्तः “अरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः” सू०। “अरत्निः प्रमाणमस्यासावरत्निमात्रः स्रुवोऽरत्निप्रमाणो भवति अङ्गुष्ठपर्वणो वृत्तमङ्गुष्ठपर्ववृत्तम् अङ्गुष्ठपर्ववृत्तं पुष्करं यस्य असावङ्गुष्ठपर्ववृत्तपुष्करः पर्वशब्दः सन्धिवाची सन्धिर्पर्वणिः तदुक्तम् “अङ्गुष्ठाङ्गुलिमानं तु यत्र यत्रोपदिश्यते। तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयात् बुधः”। अतोऽङ्गुष्ठस्य बृहत्पर्वग्रन्थिप्रमाणं चतुरस्रं कृत्वा तदेव मण्डलं चतुरस्रं चिकीर्षेत्प्रत्युपायेन वृत्तं विधाय तत्प्रमाणं स्रुवस्य पुष्करं नासिकावत् खातं स्यात्” कर्क०। कर्मप्रदीपे कात्या० “खादिरो वाथ पालाशो वितस्तिस्तु स्रुवः स्मृतः। स्रुग्बाहुमात्रा विज्ञेया वृत्तस्तु प्रग्रहस्तयोः। स्रुवाग्रे घ्राणवत् खातं द्व्यङ्गुष्ठपरिमण्डलम्”। [इति राजनि०।

**श्रु(स्रु)वावृक्ष** पु० श्रु(स्रु)वार्थो वृक्षः। (बैंइचि) विकङ्कतवृक्षे।

**श्रेढ़ी** स्त्री श्रेणिवत् राशीकरणाय ढौकते ढौक–ड पृषो० गौरा० ङीष्। भिन्नजातीयद्रव्याणां मिश्रकरणाय लीला० उक्ते गणनाङ्कभेदे।

**श्रेढ़ीव्यवहार** पु० श्रेढ्या व्यवहारः। श्रेढीगणनार्थं लीलावत्युक्ते उपायभेदे। [अमरः।

**श्रेणि(णी)** स्त्री श्रि–णि वा ङीप्। विच्छेदरहितायां पङ्क्तौ

**श्रेयस्** न० अतिशयेन प्रशस्यम् ईयसु श्रादेशः। १धर्मे २मोक्षे अमरः। ३शुभे न०४अतिप्रशस्ते त्रि० मेदि०स्त्रियां ङीप्। सा च ५हरीतक्यां ६पाठायां ७गजपिप्पल्याम् अमरः रास्नायां त्रिकः। ८शुभयुक्ते त्रि० अमरः।

**श्रेष्ठ** पु० अतिशयेन प्रशस्यः इष्ठन् श्रादेशः। १कुबेरे २नृपे ३विप्रे शब्दर० ४विष्णौ विष्णुस०। ५गोदुग्धे न० त्रिका० ६अत्यन्तशस्ते त्रि० अमरः। ७स्थलपद्मिन्यां स्त्री रमेटावाद्य राजनि०।

**श्रेष्ठकाष्ठ** पु० श्रेष्ठं काष्ठमस्य। शाकवृक्षे (सेगुण) राजनि०।

**श्रेष्ठाम्ल** न० श्रेष्ठमम्लमस्य। वृक्षाम्ले राजनि०।

**श्रेष्ठिन्** पु० श्रेष्ठं धनादिकमस्त्यस्य इनि। १शिल्पिवणिजां श्रेष्ठे जटा० “स हि श्रेष्ठिचत्वरे प्रतिवसतीति” मृच्छकटिकटीका। [घटादि० अपयति।

**श्रै** स्वेदे भ्वा०प०अक०अनिट्। श्रायति अश्रासीत्। णिक् श्रौ

**श्रोण** संघाते भ्वा० पर० अक० सेट् ऋदित् चङि न ह्रस्वः। श्रोणति अश्रोणीत्।

**श्रोण** पु० श्रोण–अच् । १पङ्गौ अमरः । २काञ्जिके स्त्री ।
**श्रोणि(णी)** स्त्री श्रोण–इन् वा ङीप् । १कटग्राम् अमरः २पथि शब्दर० । [२कटिपार्श्वे ।
**श्रोणिफलक** न० श्रोणिः फलकमिव । १प्रशस्तकटौ हेम० ।
**श्रोणिसूत्र** न० श्रोणौ स्थितं सूत्रम् । श्रोणिस्थे खड्गादि बन्धनसूत्रे ।
**श्रोतस्** न० स्रु–असुन् तुट् च । १कर्णे २नदीवेगे अमरः । ३इन्द्रिये हेमच० । स्वार्थे टन्यादित्वमित्यन्ये ।
**श्रोत्र** न० श्रूयतेऽनेन श्रु–करणे ष्ट्रन् । १शब्दज्ञानसाधने इन्द्रियभेदे अमरः । २तदाधारे गोलके च कर्णशब्दे १७०६पृ० दृश्यम् ।
**श्रोत्रिय** पु० छन्दो वेदमधीते वेत्ति वा छन्दस्+घ श्रोत्रादेशः । १वेदाध्ययनतत्परे अमरः । "एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य च । षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित्" इत्युक्ते २विप्रभेदे "जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते । विद्याभ्यासी भवेद्विप्रः श्रोत्रियस्त्रिभिरुच्यते" मनूक्तलक्षणे ३ब्राह्मणभेदे च ।
**श्रौत** त्रि० श्रुतौ विहितमण् । १वेदविहिते यागादौ "श्रौतं कर्म स्वयं कुर्यात्" कात्या० स्मृतिः । २गार्हपत्याहवनीयदक्षिणाग्निषु पु० ।
**श्रौत्र** न० श्रोत्र–स्वार्थे अण् । १कर्णे । श्रोत्रियस्य भावः कर्म वा अण् यलोपः । वैदिकस्य भावे "श्रौत्राङ्गनोपलम्भगुंणः" सिद्धान्तकौ० ।
**श्रौषट्** अव्य० श्रु–डौषटि । यज्ञादौ हविर्दाने अमरः ।
**श्लक** सर्पणे भ्वा०आ० सक० सेट् इदित् । श्लङ्कते अश्लङ्किष्ट ।
**श्लक्ष्ण** त्रि० श्लिष–क्स्न नि० । १अल्पे अमरः २चिक्कणे । संज्ञायां कन् । ३मनोहरे उणा० ४पूगे राजनि० ।
**श्लक्ष्णत्वच्** पु० श्लक्ष्णा त्वगस्य । अश्मन्तकवृक्षे राजनि० ।
**श्लग** गतौ भ्वा० पर० सक० सेट् इदित् । श्लङ्गति अश्लङ्गीत् ।
**श्लथ** दौर्बल्ये अद०चु०उ०अक०सेट् । श्लथयति ते अशश्लथत् त
**श्लथ** पु० श्लथ–अच् । १विरलसंयोगे शिथिले जटा० २दुर्बले च
**श्लाख** व्याप्तौ भ्वा०पर० सक० सेट् ऋदित् चङि न ह्रस्वः । श्लाखति अश्लाखीत् । [न ह्रस्वः । श्लाघते अश्लाघिष्ट ।
**श्लाघ** आत्मगुणाविष्करणे भ्वा० आ० अक० सेट् ऋदित् चङि
**श्लाघा** स्त्री श्लाघ–अ । १प्रशंसायां २परिचर्यायाम् ३अभिलाषे च मेदि० । ४निजगुणाविष्करणे ।
**श्लाघ्य** त्रि० श्लाघ–ण्यत् । प्रशस्ते "श्लाघ्यस्त्वत्स्तनु रात्रीरिति" देवीमा० ।

**श्लिकु** न० श्लिष–कु नेत्त्वम् पृषो० । ज्योतिःशास्त्रे उणा० ।
**श्लिक्यु** पु० श्लिष–क्यु नेत्त्वम् पृषो० । १भृत्ये सि०कौ० २जारे उणादि० । [श्लेषीत् ।
**श्लिष** दाहे भ्वा०पर०सक०सेट् उदित् क्त्वा वेट् । श्लेषति अ-
**श्लिष** आलिङ्गने संसर्गे च सक० दि० अनिट् । श्लिष्यति लृदित् अश्लिषत् । आलिङ्गने तु अश्लिक्षत् ।
**श्लिष** श्लेषणे चु०उभ०सक०सेट् । श्लेषयति ते अशिश्लिषत् त ।
**श्लिष्ट** त्रि० श्लिष–क्त । १आलिङ्गिते २संसृष्टे ३श्लेषरूपशब्दालङ्कारयुक्ते शब्दे च ।
**श्लीपद** न० श्रीयुक्तं वृद्धियुक्तं पदमस्मात् पृषो० । (गोद) १रोगभेदे वैद्य० । २तद्रोगयुक्ते त्रिष शिलीपदशब्दे ५१११ पृ०दृश्यम् ।
**श्लीपदप्रभव** पु० श्लीपदाय रोगभेदाय प्रभवति प्र+भू–अच् । आम्रवृक्षे शब्दमा० । तत्फलसेवने रक्तवृद्ध्यात् तद्वृद्धिः ।
**श्लीपदापह** पु० श्लीपदं रोगभेदमपहन्ति अप+हन–ड । पुत्रजीववृक्षे त्रिका० । [तद्विपरीतो हि अश्लीलः ।
**श्लील** त्रि० श्रीरस्त्यस्य लच् पृषो० रस्य लः । शोभायुक्ते
**श्लेष** पु० श्लिष–घञ् । १संसर्गे अमरः । २दाहे ३आलिङ्गने ४शब्दालङ्कारभेदे च अलङ्कारशब्दे ४०५पृ० दृश्यम् ।
**श्लेषघ्ना** स्त्री श्लेष्माणं हन्ति हन–क टाप् । १मल्लिकायां २केतक्याञ्च विश्वः । ३ज्योतिष्मत्यां जटा० ङीप् । सा च ४मल्लिकायां मेदि० ५त्रिकटुनि शब्दच० ।
**श्लेषण** पु० श्लेष्माऽस्त्यस्य न । कफविशिष्टे अमरः ।
**श्लेष्मन्** पु० श्लिष–मनिन् । कफे अमरः । श्लेष्मस्वरूपादिकं भावप्रकाशाद्युक्तं कफशब्दे १६७६पृ० दृश्यम् । तत्प्रकृतिकलक्षणम् "गम्भीरबुद्धिः स्थूलाङ्गः स्निग्धकेशो महाबलः । स्वप्ने जलाशयालोकी श्लेष्मप्रकृतिको नरः" । तत्कर्माणि यथा "श्वैत्यं शैत्यं स्थिरत्वञ्च गौरवं स्वप्नता बलम् । अनाहृतिरबोधश्च कफकर्माविकारजम्" । श्लेष्मकरद्रव्याणि कफकरशब्दे १६७७पृ० दृश्यानि । अन्यानि यथा "भोजनानन्तरं स्नानं जलपानं विना तृषा । तिलतैलं स्निग्धतैलं स्निग्धमांसलकीदृशम् । पर्युषितान्नं तक्रञ्च पक्वरम्भाफलं दधि । माषाक्षुशर्करातोयं सुस्निग्धस्थलसेवनम् । नारिकेलोदकं स्वच्छस्नानं पर्युषितं जलम् । तरस्याःपक्वफलं सुपक्वकर्कटीफलम् । बालस्नानञ्च वर्षासु मूलकं श्लेष्मकारणम् । तप्तजलं तप्तरञ्जु च महावीर्यविनाशनम्" । श्लेष्मनाशकद्रव्याणि कफघ्नशब्दे १६७७पृ० दृश्यानि । अन्यानि च यथा "वह्निस्वेदं

ऽष्टभक्तं पक्वतैलं विशोषकम्। भ्रमणं शुष्कमत्स्यञ्च शुष्कपक्वहरीतकी। पिण्डारकमपक्वञ्च रम्भाफलमपक्वकम्। वेशवारविस्त्रवारमनाहारमयानकम्। कटुतं रोचनाचूर्णं सहतं शुष्कशर्करम्। मरीचं पिप्पलीं शुष्कमार्द्रकं जीरकं मधु। द्रव्याण्येतानि गन्धर्वि! सद्यः श्लेष्महराणि च" ब्रह्मवै॰ब्रह्म॰१६ अ॰। [२हच्चे पु॰ शब्दच॰।

**श्लेष्मल** त्रि॰ श्लेष्म+अस्त्यर्थे लच्। १कफयुक्ते (बहुयार)

**श्लेष्मह** पु॰ श्लेष्माणं हन्ति हन–ड। १कट्फलवृक्षे शब्दच॰ २श्लेष्मनाशके त्रि॰। कफघ्नोषधे १६७७पृ॰ दृश्यम्।

**श्लेष्मात** पु॰श्लेष्मणा अतति अत–अच्। श्लेष्मातकवृक्षे शब्दर॰

**श्लेष्मातक** पु॰श्लेष्मणा स्वसेवनजनितकफेन अतति अत–ण्वुल् (बहुयार) बहुवारवृक्षे अमरः "बहुवारस्तु शीतः स्यादुद्दालो बहुवारकः। सेलुः श्लेष्मातकश्चापि पिच्छिलो भूतवृक्षकः। बहुवारो विषस्फोटव्रणवीसर्पकुष्ठनुत्। मधुरस्तुवरस्तिक्तः केश्यश्च कफपित्तहृत्। फलमामन्तु विष्टम्भि रूक्षं पित्तकफास्रजित्। तत् पक्वं मधुरं स्निग्धं श्लेष्मलं शीतलं गुरु" भावप्र॰।

**श्लेष्मान्तक** पु॰श्लेष्मणा स्वसेवनजकफेन अन्तक इव नाशकत्वात् (बहुयार) वृक्षभेदे राजनि॰। [श्लोकते अश्लोकिष्ट।

**श्लोक** सङ्घे संघाते च भ्वा॰आ॰स॰सेट् ऋदित् चङि न ह्रस्वः।

**श्लोक** पु॰श्लोक–अच्। चतुःपदात्मके कवित्ते १वाक्यभेदे २यशसि च अमरः "क उत्तमश्लोकगुणानुवादात्" भाग॰१।

**श्लोण** संघाते भ्वा॰ पर॰ सक॰ सेट् ऋदित् चङि न ह्रस्वः। श्लोणति अश्लोणीत्।

**श्वःश्रेयस** न॰ श्वः परदिने भाविकाले श्रेयो यस्मात् अच् समा॰। १मङ्गले अमरः २सुखे ३परमात्मनि च मेदि॰। ४कल्याणयुक्ते त्रि॰।

**श्वक** सर्पणे भ्वा॰आ॰ सक॰ सेट् इदित्। श्वङ्कते अश्वङ्किष्ट।

**श्वच** गतौ भ्वा॰आ॰सक॰ सेट्। श्वचते अश्वचिष्ट इदित्ययम्

**श्वठ** गतौ संस्कारे च चु॰उभ॰सक॰ सेट्। श्वठयति॰ते अशिश्वठत् त। इदित्ययम् श्वण्ठयति। [ठत् त।

**श्वठ** दुर्वचने अद॰ चु॰ उभ॰सक॰सेट्। श्वठयति ते अशश्व-

**श्वदंष्ट्रक** [illegible]॰ शुनो दंष्ट्रेव कण्टकोऽस्य कप्। गोक्षुरे क्षुपे राजनि॰। [अमरः।

**श्वदंष्ट्रा** स्त्री शुनो दंष्ट्रेव कण्टकाढ्यत्वात्। गोक्षुरे क्षुपे

**श्वधूर्त्त** पु॰स्त्री॰ शुनि श्वनो वञ्चनार्थं धूर्त्तः। शृगाले शब्दच॰ स्त्रियां ङीष्। [शुनी।

**श्वन्** पु॰ श्वि–कनिन् नि॰। कुक्कुरे तज्जातिस्त्रियां ङीप्

**श्वनिश** न॰ स्त्री शुनां कुक्कुराणां निशा यत्र ह्रस्वः। कुक्कुरनादरात्रौ।

**श्वपच** पुंस्त्री॰ श्वानं पचति भोजनाय पच–अच्। श्वपाके जातिभेदे। स च अन्त्यावसायिसप्तः "चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा। मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः। अन्त्यावसायिनामन्नमश्नीयाद् यस्तु कामतः। स तु चान्द्रायणं कुर्यात् तप्तकृच्छ्रमथापि वा" प्रा॰त॰ अङ्गिराः।

**श्वपाक** पु॰ श्वानं पचति कर्त्तरि संज्ञायां घञ्। जातिभेदे "क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्त्यते" मनुः। तद्धर्मश्च चण्डालशब्दे २८४६ पृ॰ उक्तो दृश्यः।

**श्वफल** पु॰ शुनः प्रियं फलमस्य। वीजपूरवृक्षे रत्नमा॰।

**श्वफल्क** पु॰। वृष्णिवंश्ये अक्रूरपितरि क्षत्रियभेदे विष्णुपु॰

**श्वभीरु** पु॰ श्वभ्यो भीरुः। शृगाले शब्दमा॰।

**श्वभ्र** गतौ छिद्रकरणे सक॰ दीव्ये अक॰चु॰उभ॰ सेट्। श्वभ्रयति ते अशश्वभ्रत् त।

**श्वभ्र** न॰ श्वभ्र–अच्। छिद्रे अमरः।

**श्वयथु** पु॰ श्वि–वृद्धौ अथुच्। शोथे अमरः।

**श्वयीची** स्त्री श्वि–ईचि ङीप्। पीडायाम् सि॰कौ॰।

**श्वल** वेगे भ्वा॰पर॰अक॰ सेट्। श्वलति अश्वालीत्।

**श्वल्क** भाषणे चु॰उ॰स॰सेट्। श्वल्कयति ते अशश्वल्कत् त।

**श्वल्ल** वेगे भ्वा॰पर॰ अक॰ सेट्। श्वल्लति अश्वल्लीत्।

**श्ववृत्ति** स्त्री शुन इव पराधीना वृत्तिः। दास्ये "सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्" मनुः। "दीनदृष्टिसन्दर्शनस्वामिदर्जननीचक्रियादिधर्मयोगात् श्ववृत्त्यामिति" कुल्लू॰ "न श्ववृत्त्या कदाचन" मनुः। [जटा॰।

**श्वव्याघ्र** पु॰ शुनो व्याघ्रः। कुक्कुरघातके व्याघ्रभेदे (चिते)

**श्वशुर** पु॰ शु आशु अश्नुते आशु+अश–उरच् पृषो॰। १पत्युः पितरि २भार्य्यायाः पितरि च अमरः।

**श्वशुर्य्य** पु॰ श्वशुरस्यापत्यम् यत्। १देवरे २श्याले च अमरः।

**श्वश्रू** स्त्री श्वशुरस्य पत्नी ऊङ् उकाराकारलोपश्च। श्वशुरभार्य्यायाम् अमरः। श्वश्रूश्च श्वशुरश्च विग्रहे श्वशुरौ वरा-रुचु॰ उक्तं यथा "एकस्मिन् स पोष्याय ग्रामा नारी सदा धरे। या स्नुषाभिः समं श्वश्रूः विश्वासी भवति कश्चित्। सा च स्नुषा कदाचित् स्यात् या श्वश्रूं जीवतीमिच्छेत्"। [अमरः।

**श्वस्** अव्य॰ आगामि अहः पृषो॰ नि॰। आगामिनि दिवसे

**श्वस** जीवने अदा॰ अचा॰पर॰ अक॰ सेट्। श्वसिति अश्व॰

श्वीत्। "न विश्वसेद्विश्वस्ते इत्यादौ" तु गणव्याख्यानात् श्वादित्वम् निषा वेट्। श्वसितः श्वस्तः।

**श्वस** श्वप्ने अदा० प० सक० वेट्कोऽयम्। श्वसिति अश्वसीत्।

**श्वसन** पु० श्वसित्यनेन श्वस-ल्युट्। १वायौ २मदनद्रुमे च अमरः। भावे ल्युट्। ३निश्वासे न० मेदि०। [स्त्रियां ङीष्।

**श्वसनाशन** पुंस्त्री० श्वसनोवायुरशनमस्य। सर्पे हारा०।

**श्वसनेश्वर** पु० श्वसनो वायुरीश्वरोऽस्य। अर्जुनवृक्षे शब्दच०।

**श्वसनोत्सुक** पुंस्त्री० ७त०। सर्पे शब्दर०। स्त्रियां ङीष्।

**श्वसित** न० श्वस-क्त। निश्वासे मुखनासिकाभ्यां बहिर्गमनरूपे हृदयस्थप्राणवायुव्यापारे।

**श्वसुन** पु० श्वस-उनन्। (कुकुरशोङ्का) इक्षौ शब्दमा०।

**श्वस्तन** त्रि० श्वोभवः श्वस्-ट्यु तुट् च। भाविदिनस्थायि वस्तुनि स्त्रियां ङीप्।

**श्वस्त्य** त्रि० श्वोभवः श्वस्+त्यप्। भाविदिनस्थायिवस्तुनि।

**श्वागणिक** पु० श्वगणेन चरति ठञ्। कुकुरादिना मृगयाकर्त्तरि व्याधे हिंकौ०। [युते।

**श्वादन्त** त्रि० शुन इव दन्तोऽस्य निं० दीर्घ। कुकुरतुल्यदशन-

**श्वान** पुंस्त्री० श्वैव अण् न टिलोपः। कुकुरे शब्दमा०। तज्जातिस्त्रियां ङीष्। [राजनि०।

**श्वानचिल्लिका** स्त्री श्वान इव चिल्लिका। शुनकचिल्ल्याम्।

**श्वापद** पु० शुन इवापदमात् अच्समा०। १हिंस्रपशौ हेमच० २व्याघ्रे च शब्दर०।

**श्वाविध्** पु० शुना आविध्यते आ-व्यध् क्विप् ह्रत०। शल्यके (शजारु)अमरः। क। श्वाविधोऽप्यत्र पु०।

**श्वास** पु० श्वस-घञ्। १वायुव्यापारे २रोगभेदे ३निश्वासे वर्णोच्चारणार्थं बाह्यप्रयत्नभेदे च।

श्वासरोगस्य निदानादि भा०प्र० उक्तं यथा
"श्वासनिदानमाह येरेव कारणैर्हिक्का हेतिभिः सम्प्रवर्त्तते। तैरेव वस्तुभिः श्वासो व्याधिर्घोरः प्रजायते"। श्वासस्य भेदानाह "महोर्द्धच्छिन्नतमकक्षुद्रभेदैस्तु पञ्चधा। भिद्यते स महाव्याधिः श्वास एको विशेषतः"। तस्य पूर्वरूपमाह "प्राग्रूपं तस्य हृत्पीडा शूलमाध्मानमेव च। आनाहो वक्त्रवैरस्यं शङ्खनिस्तोद एव च"। सम्प्राप्तिमाह "यदा स्रोतांसि संरुध्य मारुतः कफपूर्वकैः। विष्वक् व्रजति संरुद्धस्तदा श्वासं करोति सः"। विष्वक् व्रजति सर्वतो विमार्गान् याति संरुद्धः कफादिना रुद्धमार्गः। महाश्वासस्य लक्षणमाह "उद्धूयमानवातोयः शब्दवत् दुःखितो नरः। उच्चैः श्वसिति संरुद्धो मत्तर्षभ इवा-

निशम्। प्रनष्टज्ञानविज्ञानस्तथा विभ्रान्तलोचनः। विकृताक्ष्याननो बद्धमूत्रवर्चा विशीर्णवाक्। दीनस्य श्वसितञ्चास्य दूराद्विज्ञायते भृशम्। महाश्वासोपसृष्टस्तु क्षिप्रमेव विपद्यते"। उद्धूयमानवातः उर्द्ध्वं नीयमानो वातो यस्य सः शब्दवत् सशब्दं यथा स्यात्। कीदृक् स शब्दस्तद्व्यतिरेकमाह मत्तर्षभ इव। उच्चैः श्वसितोऽत्यन्वयः। संरुद्धः आनद्धः आनाहयुक्त इति यावत्। ज्ञानं तत्तदर्थविनिश्चयः। विशीर्णवाक् स्खलितवचनः। दीनः म्लानः। मारकश्चायं महाश्वासः। उर्द्ध्वश्वासमाह "उर्द्ध्वं श्वसिति योऽत्यर्थं न च प्रत्याहरत्यधः। श्लेष्मावृतमुखस्रोतः क्रुद्धगन्धवहार्दितः। उर्द्ध्वदृष्टिर्विपश्यंस्तु विभ्रान्ताक्ष इतस्ततः। प्रमुह्यन् वेदनार्त्तश्च शुष्कास्यो रतिपीडितः। उर्द्ध्वश्वासे प्रकुपिते ह्यधःश्वासो निरुद्ध्यते। मुह्यतस्ताम्यतश्चोर्द्ध्वश्वासस्तस्य निहन्त्यसून्"। सर्वेष श्वासेषु उर्द्ध्वश्वासोऽस्य अत्यर्थमिति विशेषः। न च प्रत्याहरत्यधः न श्वासमधः करोति श्लेष्मावृतेत्यादिश्लेष्मावृत यन्मुखं स्रोतांसि च तैः क्रुद्धो यो गन्धवहस्तेनार्दितः। विपश्यन् इतस्ततः विकृतं यथा स्यादेवं पश्यन् अधःश्वासो निरुद्ध्यते श्वासो नाधः प्रवर्त्तते" इत्यर्थः। मुह्यतो मोहं प्राप्नुवतस्ताम्यतो ग्लानिं प्राप्नुवतश्च उर्द्ध्वश्वासः असून् प्राणान् हन्ति। छिन्नश्वासस्यारिष्टलक्षणमाह "यस्तु श्वसिति विच्छिन्नं सर्वप्राणेन पीडितः। न वा श्वसिति दुःखार्त्तो मर्मच्छेदरुजार्दितः। आनाहस्वेदमूर्च्छार्त्तो दह्यमानेन वस्तिना। विप्लुताक्षः परिक्षीणः श्वसन् रक्तैकलोचनः। विचेताः परिशुष्कास्यो विवर्णः प्रलपन्नरः। छिन्नश्वासेन विच्छिन्नः स शीघ्रं विजहात्यसून्"। विच्छिन्नं सविच्छेदं सर्वप्राणेन सर्वबलेन मर्मच्छेदरुजार्दितः हृदयशिरस्भेदरुजर्दनयेव पीडितः। दह्यमानेन वस्तिना उपलक्षित। विप्लुताक्षः अश्रुपूर्णनेत्रः। विचेताः उद्विग्नचित्तः छिन्नश्वासेन विच्छिन्नः यस्तु श्वसिति विच्छिन्नमित्यादिलक्षणयुक्तो यः स नरः छिन्नश्वासेन विच्छिन्न पीडितो भवति। मारकश्चायं छिन्नश्वासः। तमकश्वासमाह "प्रतिलोमो यदा वायुः स्रोतांसि प्रतिपद्यते। ग्रीवां शिरश्च संगृह्य श्लेष्माणं समुदीर्य च। करोति पीनसं तेन कण्ठे घुर्घुरकं तथा। अतीव तीव्रवेगञ्च श्वासं प्राणप्रपीडकम्। प्रताम्यति स वेगेन तृष्यते सन्निरुध्यते। प्रमोहं कासमानश्च स गच्छति मुहुर्मुहुः। श्लेष्मण्यमुच्यमानेन

भृशं भवति दुःखितः। तस्यैव च विमोक्षान्ते मुहूर्त्तं लभते सुखम्। तथास्योद्ध्वंसते कण्ठः कृच्छ्राच्छक्नोति भाषितुम्। न चापि निद्रां लभते शयानः श्वासपीडितः। पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः। आसीनो लभते सौख्यमुष्णञ्चैवाभिनन्दति। उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमार्त्तिमान्। विशुष्कास्यो मुहुः श्वासी मुहुश्चैवावधम्यते। मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्द्धते। स याप्यस्तमकः श्वासः साध्यो वा स्यान्नवोत्थितः"४। संरुद्ध्य अयथा समुदीर्णं वर्द्धयित्वा। पीनसं नासास्रावं तेन श्लेष्मणा घुर्घुरं घुर्घुरशब्दं प्राणप्रपीडकम्। प्रताम्यति तमसि प्रविशतीव वेगेन श्वासवेगेन सन्निरुध्यते निश्चेष्टो भवतीति चक्रः। सन्निरुध्यते श्वास इति जैय्यटः।। श्लेष्मणा मुच्यमानेन सुखं सुखमिव उद्ध्वंसते शयितो भवति। शयानः शयनविहितात्लोऽवगृह्णाति पीड़यति उष्णञ्चैवाभिनन्दति इत्यनेन तमको वातकफारब्ध इति बोद्धव्यः। उच्छ्रिताक्षः स्थूलाक्षः। ललाटेन स्विद्यता उपलक्षितः अवधम्यते मआहृदयेव सर्वगात्रमुत्क्षाप्यते। तमकस्यैव पित्तानुबन्धजनितज्वरादियोगेन प्रतमकसंज्ञामाह "ज्वरमूर्च्छापरीतस्य विद्यात् प्रतमकं भिषक्"। तस्यैवापरलक्षणमाह "उदावर्त्तरजोऽजीर्णक्लिन्नकायनिरोधजः। तमसा वर्द्धतेऽत्यर्थं शीतैश्चाशु प्रशाम्यति। मज्जतस्तमसीवास्य विद्यात् प्रतमकन्तु तम्"। उदावर्त्तो रोगविशेषः रजो धूलिः अजीर्णमामादिकं क्लिन्नं विदग्धं कायनिरोधः अङ्गवेगानां निरोधः तस्मादुत्पन्नः। क्षुद्रश्वासमाह "रूक्षायासोद्भवः कोष्ठे क्षुद्रो वात उदीरयन्। क्षुद्रश्वासो न सोऽत्यर्थंदुःखेनाङ्गप्रबाधकः। हिनस्ति न स गात्राणि न च दुःखं यथेतरे। न च भोजनपानानां निरुणद्ध्युचितां गतिम्। नेन्द्रियाणां व्यथाञ्चापि काञ्चिदुत्पादयेद्रुजम्। स साध्य उक्तो बलिनः सर्वे चाव्यक्तलक्षणाः"५। क्षुद्रः अल्पनिदानलिङ्गः उदीरयन् ऊर्द्ध्वं गमयन् दुःखः दुःखप्रदः। सर्वे महाश्वासादयोऽपि अव्यक्तलक्षणाः सन्तः साध्याः। श्वासानां साध्यत्वादिकमाह "क्षुद्रः साध्यतमस्तेषां तमकः कृच्छ्र उच्यते। त्रय श्वासा न सिध्यन्ति तमको दुर्बलस्य च। कामं प्राणहरा रोगा बहवो न तु ते तथा। यथा श्वासश्च हिक्का च हरतः प्राणमाशु वै"। बहवो ज्वरादय "यथा यथा श्वासहिक्के हरतो जीवमाशु ते"।

तेषां निदानकर्मविपाकास्तु भगुमार० उक्ता यथा "श्वासरोगो महातुग्रो देहिदेहाभिघातकः। कर्मणा येन भवति तन्मे निगदतः शृणु। महोर्द्ध्वच्छिन्नतमकक्षुद्राभेदोऽस्य पञ्चधा। श्वासः संजायते नृणां पृथक् कर्मानुसारतः। यस्तु यज्ञं समासाद्य पशुश्वासं निरुध्य च। हन्ति खादन्ति वातश्च महाश्वासेन स्पृश्यते१। पौराणिककथा मध्ये यस्तु वाचान्यथा वदेत्। स ऊर्द्ध्वश्वासमासाद्य दुनोत्यहरहर्निशम्२। निषिद्धदानपरत्वाच्छिन्नश्वासेन स्पृश्यते३। मर्त्यः शास्त्रार्थनिर्णीतवाक्यं यो दूषयत्यपि। पीड्यते तमकश्वासैः४ क्षुद्रैः पापस्य विस्तरः५। परस्य कर्मतो देही नरकेषु विपच्यते। नरकान्ते पुनर्व्याधयोनिं सूकरवायसीम्। पृथक् कर्मवशाद्योनौ गत्वा संप्राप्य तप्यते। मानुषत्वमनुप्राप्य पूर्वोक्तेनोपस्पृश्यते"।

**श्वासकास** पु० श्वासयुक्तः कासः। श्वासयुक्ते कासरोगे "पिशुनो नरकस्यान्ते जायते श्वासकासवान्। घृतं तेन प्रदातव्यं सहस्रपलसम्मितम्" शाता० कर्म०।

**श्वासकुठार** पु० श्वासे कुठार इव। श्वासरोगौषधभेदे "रसो गन्धो विषञ्चापि टङ्कणञ्च मनः शिला। एतानि कर्षमात्राणि मरिचञ्चाष्टकर्षकम्। कटुत्रयं कर्षयुग्मं पृथगत्र विनिःक्षिपेत्। रसः श्वासकुठारोऽयं सर्वश्वासनिवारकः" भावप्र०। [धारणव्यापारे प्राणायामे

**श्वासधारण** न० श्वासः प्राणवायुः ध्रियतेऽनेन। प्राण-

**श्वासहेति** स्त्री श्वासस्य हेतिरिव। निद्रायां हेमच०।

**श्वासारि** पु० श्वासस्य रोगभेदस्यारिः नाशकत्वात्। पुष्करमूले राजनि०।

**श्वासिन्** पु० श्वासयति श्वस—णिच् णिनि। वायौ शब्दच०।

**श्वि** गतौ सक० वृद्धौ अक० भ्वा० पर० सक० सेट्। श्वयति अशिवत्-अश्वत्-अश्वयीत्। ड्वित् श्वयथुः ओदित् निष्ठा तस्य नः शूनः। [श्वेतते अश्वितत् अश्वेतिष्ट।

**श्वित** शुक्लतापादने भ्वा० आ० ञिदित् लुङि उभ० अक० सेट्।

**श्वित्र** न० श्वित—रक्। श्वेतकुष्ठभेदे (धवल) अमरः। तन्निदानादि भावप्र० उक्तं यथा "कुष्ठैकसम्भवं श्वित्रं किलासं दारुणं भवेत्। निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम्"। कुष्ठैकसम्भवं कुष्ठेन सह समानो निदानं यस्य तत्। अथ श्वित्रस्य भेदमाह किलासञ्चारुणं भवेत् श्वित्रमेव रक्तमांसाश्रयात् किलाससंज्ञकं भवेदित्यर्थः। नतु कुष्ठात् श्वित्रस्य को भेद

इत्यत आह निर्दिष्टमपरिस्रावीति श्वित्रमपरिस्रावि भवति कुष्ठन्तु स्रावि अथ च त्रिधातूद्भवसंश्रयमिति श्वित्रम् त्रयो धातवो रक्तमांसमेदांसि संश्रयोऽधिष्ठानं यस्य तत्। कुष्ठन्तु सान्निपातिकं सर्वधातुगतं भवतीति भेदः। दोषभेदेन लक्षणभेदान्याह "वाताद्रूक्षारुणं पित्तात् ताम्रं कमलपत्रवत्। सदाहं रोमविध्वंसि कफात् श्वेतं घनं गुरु। सकण्डूकं क्रमाद्रक्तमांसमेदःसु चादिशेत्। वर्णैनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम्"। अरुणमीषल्लोहितम्। कमलपत्त्रशब्दस्थानेन मध्ये श्वेतमन्ते लोहितं बोधयति। घनं पुष्टम्। क्रमाद्रक्तमांसमेदःसु चादिशेत्। तथा च चरकः "अरुणं रक्तगे वाते ताम्रं पित्ते चलक्ष्यते। श्वेतं श्लेष्मणि मेदःस्थे श्वित्रं कुष्ठं परं परम्" इति। उभयं द्विविधमपि श्वित्रं वर्णेन ईदृगेव। अरुणं ताम्रं श्वेतञ्च दोषभेदात्। द्विविधं दोषजं व्रणजं च। तथा च भोजः "श्वित्रं तु द्विविधं विद्याद्दोषजं व्रणजं तथा" इति। श्वित्रं साध्यमसाध्यञ्चाह "अशुक्लरोमाबहलमसंसृष्टं मिथो नवम्। अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा"। अबहलं तनु। अन्यच्च "गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम्। वर्जनीयं विशेषेण किलासं सिद्धिमिच्छता"। गुह्यं मेहनम् भगञ्च तत्रैतत् पदत्रयं सुश्रुतेनान्त्ये जातमिति साध्यतो निर्दिष्टत्वात्। अप्यचिरन्तनम् नवमपि"।

**श्वित्रघ्नी** स्त्री श्वित्रं हन्ति हन–टक् ङीप्। पीतपर्णीम् (विकुती) शब्दच०।

**श्वित्रिन्** त्रि० श्वित्रमस्त्यस्य इनि। श्वेतकुष्ठयुक्ते "श्वित्री वस्त्रं मा रसं च चौरी भवति हारकः" याज्ञ०।

**श्विद्** शुक्लतापादने भ्वा० आत्म०अक० सेट् इदित्। श्विन्दते अश्विन्दिष्ट।

**श्वेत** पु० श्वित–अच् घञ् वा। १द्वीपभेदे २पर्वतभेदे ३कपर्दके हेमच०। ४शुक्रग्रहे ५शुभ्राभ्रे शब्दच०। ६शङ्खे राजनि०। ७जीरके जटा०। ८शुक्लवर्णे ९तद्वति त्रि० अमरः स्त्रियां ङीप् तस्य नश्च श्वेनी। १०कलियुगीयशिवावतारविशेषे यथा "वेदव्यासावताराणि द्वापरे कथितानि तु। महादेवावताराणि कलौ शृणुत सुव्रताः। आद्यो कलियुगे श्वेतो देवदेवो महाद्युतिः। नाम्ना हिताय विप्राणामभूद्वैवस्वतेऽन्तरे। हिमवच्छिखरे रम्ये छगले पर्वतोत्तमे। तस्य शिष्याः शिखायुक्ता बभूवुरमितप्रभाः। श्वेतः श्वेतशिखश्चैव श्वेतास्यः श्वेतलोहितः। चत्वारस्ते महात्मानो ब्राह्मणा वेदपारगाः। सुतारो दमनश्चाथ सुहोत्रः कङ्कणस्तथा। लोकाक्षिरथ योगीन्द्रो जैगीषव्यस्तु सप्तमे। अष्टमे दधिवाहः स्यान्नवमे ऋषभः प्रभुः। भृगुस्तु दशमे प्रोक्तस्तस्मादुग्रः परः स्मृतः। द्वादशेऽत्रिः समाख्यातो बाली चाथ त्रयोदशे। चतुर्दशे गौतमस्तु वेदशीर्षा ततः परम्। गोकर्णश्चाभवत्तस्मात् गुहावासः शिखण्ड्यथ। जटामाल्यट्टहासश्च दारुको लाङ्गली क्रमात्। श्वेतस्तथा परः शूली डिण्डी मुण्डी च वै क्रमात्। सहिष्णुः सोमशर्मा च नकुलीशोऽन्तिमे प्रभुः। वैवस्वतेऽन्तरे शम्भोरवतारास्त्रिशूलिनः। अष्टाविंशतिराख्याता ह्यन्ते कलियुगे प्रभोः" कौर्म ५० अ०। श्वेतपर्वतस्य परिमाणादि यथा "उत्तरोत्तरेणेलावृतं नीलः श्वेतः शृङ्गवान् इति त्रयो रम्यकहिरण्मयकुरूणां मर्यादागिरयः प्रागायताः उभयतः क्षारोदावधयो द्विसहस्रयोजनपृथव एकैकशः पूर्वस्मात् पूर्वस्मादुत्तरोत्तरो दशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति" भाग० ।५।१६। ११राजभेदे वह्निपु०। संज्ञायां कन्। रूप्ये न० राजनि०। कपर्दके पु०। [राजनि०।

**श्वेतकण्टकारी** स्त्री कर्म०। शुभ्रवर्णकण्टकारिकायाम्

**श्वेतकन्दा** स्त्री श्वेतः कन्दोऽस्याः। अतिविषायां राजनि०।

**श्वेतकिणिही** स्त्री कर्म०। गिरिकर्णिकायां क्षुपभेदे राजनि०

**श्वेतकुञ्जर** पु० कर्म०। १ऐरावतगजे शब्दर० २श्वेतगजमात्रे च श्वेतगजादयोऽप्यत्र।

**श्वेतकुश** पु० कर्म०। शुक्लवर्णे कुशभेदे राजनि०।

**श्वेतकेतु** पु० कर्म० १आरुणे केतुग्रहभेदे २छान्दोग्यप्रसिद्धे आरुणौ ऋषिभेदे ३बुद्धे त्रिका०।

"केतवो द्वाम इत्यन्ते वारुणास्त्रय एव ते। कलिकेतुः श्वेतकेतुर्नकेतुस्तु तोयकः। श्वेतकेतुर्यदा दृश्यः श्वेतास्थि कुरुते महीम्। तदा चातुर्मासिकानि भयवन्तीह मानुषाः। क्षुद्रयान्ति जनत् क्षयं चक्रवद्भ्रमते तदा"। अपि च "श्वेतः शस्त्राकुलं कुर्य्यात् लोहितस्त्वग्निजं भयम्। क्षुद्भयं पीतकः कुर्य्यात् कृष्णो रोगमघोल्बणम्"। अन्यच्च "अवन्ती पुष्करारण्यं यावच्छ्वासास्तथापरान्। देशान् कांश्चित् कांश्चिद्रोगदुर्भिक्षैः परिपीडितान्। श्वेताख्यस्तु जटाकारी धूम्रो व्योम त्रिभागगः। निवर्त्ततेऽपसव्येन त्रिभागो कुरुते प्रजाः" इति वसन्तराजधृतवाक्यम्।

**श्वेतकेश** पु० श्वेतः केश इव यस्य। १रक्तशिग्रौ जटा०।

२शुक्लवर्णकेशयुते द्रव्ये त्रि०। कर्म०। ३शुक्ले केशे पु०।
**श्वेतकोल** पुंस्त्री०६त०। शफरमत्स्ये त्रिका०। स्त्रियां ङीष्।
**श्वेतखदिर** पु० कर्म०। शुक्ले खदिरभेदे।
**श्वेतगज** पु०कर्म०। १ऐरावते गजे हेमच० २शुभ्रगजे च।
**श्वेतगरुत्** पु० श्वेतो गरुदस्य। १हंसे अमरः २शुभ्रपत्रयुक्ते त्रि० पृषो० खदन्तोऽप्यत्र। [२५६पृ० द्रष्टव्यम्।
**श्वेतगुञ्जा** स्त्री कर्म०। शुभ्रगुञ्जायां राजनि०। गुञ्जाशब्दे
**श्वेतचिल्ली** स्त्री कर्म०। शाकभेदे (शादाचिबद) राजनि०।
**श्वेतच्छद** पुंस्त्री० श्वेतः छदः पत्रोऽस्य। १हंसे जटा०। स्त्रियां ङीष्। २शुभ्रपत्रयुक्ते त्रि०।
**श्वेतजीरक** पु० कर्म०। शुक्लजीरके राजनि०।
**श्वेतटङ्कण** न० कर्म०। १शुभ्रटङ्कणे २मालतीनदीतीरसम्भवे क्षारभेदे राजनि०।
**श्वेतदूर्वा** स्त्री कर्म०। शुभ्रदूर्वायां राजनि०।
**श्वेतद्वीप** पु० कर्म०। वैकुण्ठाख्यविष्णुधाम्नि क्षीरोदवेष्टितस्य द्वीपभेदे च "क्षीरोदधेरुत्तरतः श्वेतोद्वीपो महाप्रभः। एकान्तिनश्च पुरुषाः श्वेतद्वीपनिवासिनः" भा० शा० ३३८ अ०।
**श्वेतधातु** पु० कर्म०। १खटिकायां २शुभ्रवर्णधातुद्रव्ये च।
**श्वेतधामन्** पु० श्वेतं धाम यस्य। १चन्द्रे २कर्पूरे ३समुद्रफेने च मेदि०। श्वेतकरादयोऽपि। ४कर्पूरे च।
**श्वेतनील** पु० "वर्णोवर्णेन" पा०स०। १श्वेतकृष्णवर्णे २तद्वति त्रि०। ३मेघे शब्दर०। [२शुभ्रपत्रद्वयाभ्यां युक्ते त्रि०।
**श्वेतपत्र** पुंस्त्री० श्वेतं पत्रं पक्षोऽस्य। १हंसे स्त्रियां ङीष्
**श्वेतपत्ररथ** पु० श्वेतपत्रो हंसो रथ इव वाहनं यस्य। चतुर्मुखे ब्रह्मणि शब्दच०।
**श्वेतपद्म** न० कर्म०। सितकमले राजनि०। [त्रनि०।
**श्वेतपर्णा** स्त्री श्वेतं पर्णं यस्याः। वारिपर्ण्यां (पाना) रा-
**श्वेतपर्णास** पु० कर्म०। शुभ्रतुलस्यां रत्नमाला।
**श्वेतपाटला** स्त्री कर्म०, शुभ्रपाटलावृक्षे (पारापारुल)जटा०
**श्वेतपिङ्गल** पुंस्त्री० टेङ्गेन श्वेतः जटया पिङ्गलः "वर्णोवर्णेन"पा०स०। १सिंहे त्रिका० स्त्रियां ङीष्। २श्वेतपिङ्गलवर्णे पु ३तद्युते त्रि०।
**श्वेतपिण्डीतक** पु० कर्म०। महापिण्डीतकवृक्षे राजनि०।
**श्वेतपुष्प** पु० श्वेतं पुष्पमस्य। १सिन्दुवारवृक्षे जटा० २शुभ्रवर्णपुष्पयुक्ते त्रि० कर्म०। ३शुभ्रे पुष्पे न०। ४नागदन्त्यां ५श्वेतकोरण्टे स्त्री राजनि०। ६घोषातक्यां स्त्री रत्नमा०। कन्याया कनू। ७शुभ्रकरवीरे पु० राजनि०।
**श्वेतपुष्पिका** स्त्री श्वेतं पुष्पमस्याः कप् अत इत्वम्। १मत्स्याक्ष्यां २पुत्रदात्र्यां च राजनि०।
**श्वेतप्रसूनक** पु० श्वेतं प्रसूनं यस्य कप्। शाकतरौ राजनि०
**श्वेतभण्डा** स्त्री कर्म०। श्वेतापराजितायां रत्नमा०।
**श्वेतमन्दार** पु० कर्म०। शुभ्रमन्दारे राजनि०।
**श्वेतमरिच** कर्म०। १शोभाञ्जनबीजे अमरः २शुभ्रमरिचे च
**श्वेतरक्त** पु० श्वेतो रक्तः "वर्णो वर्णेनेति" पा०स०। १पाटलवर्णे २तद्वति त्रि० अमरः।
**श्वेतरञ्जन** न०श्वेतं सितमभ्र०रज्यतेऽनेन रन्ज-ल्युट्। सीसके
**श्वेतरथ** पु० श्वेतो रथो यस्य। १शुक्रग्रहे शब्दच० कर्म०। २शुभ्रे रथे। [ङीष्। चर्मकषायां राजनि०।
**श्वेतराजी** स्त्री श्वेतेन वर्णेन राजते राज-अच् गौरा०
**श्वेतरोचिस्** पु०श्वेतं रोचिरस्य। १चन्द्रे २कर्पूरे च हला०
**श्वेतरोहित** पु० "वर्णोवर्णेन"पा०स०। १पाटलवर्णे २तद्वति त्रि० पुष्पे च श्वेतःफलेन लोहितः। ३शुक्लरोहिते वृक्षभेदे राजनि०।
**श्वेतलोध्र** पु० कर्म०। पट्टिकालोध्रे राजनि०।
**श्वेतवचा** स्त्री श्वेता वचेव। अतिविषायां (आतइच) राजनि० "पारसीकवचा शुक्ला प्रोक्ता हैमवतीति सा। हैमवत्युदिता तद्वच्छूलं हन्ति विशेषतः" भावप्र०।
**श्वेतवल्कल** पु० श्वेतं वल्कलमस्य। १उदुम्बरवृक्षे जटा० २शुभ्रत्वग्युते त्रि०।
**श्वेतवाजिन्** पु० श्वेतो वाजी यस्य। १चन्द्रे हेमच० २अर्जुने जटा०। श्वेताश्वादयोऽप्यत्र। ३कर्पूरे च।
**श्वेतवासस्** पु० श्वेतं वासोऽस्य। १सन्न्यासिभेदे २शुक्लवस्त्रयुक्ते त्रि०।
**श्वेतवाह्** पु० श्वेतेन श्वेताश्वेन उह्यते वह-क्विप्। १इन्द्रे २अर्जुने ३चन्द्रे च। ४कर्पूरे। अत्र ऊठ् श्वेतौहः। शस्यादौ अचि ऊठ् श्वेतौहः श्वेतौहिरित्यादि।
**श्वेतवाहन** पु० श्वेतं वाहनं यस्य। १चन्द्रे २इन्द्रे ३अर्जुने च मेदि०। ४कर्पूरे च।
**श्वेतवुह्ना** स्त्री कर्म०। वनतिक्तायां रत्नमाला।
**श्वेतवृत्त** पु० कर्म०। १वरुणवृक्षे राजनि० २शुभ्रवृक्षे च।
**श्वेतवृहती** स्त्री कर्म०। शुभ्रवर्णक्षुद्रवृहत्यां राजनि०।
**श्वेतशिंशपा** स्त्री कर्म०। शुभ्रशिंशपायां राजनि०।
**श्वेतशिग्रु** पु० कर्म०। सितशोभाञ्जने राजनि०।
**श्वेतशुङ्ग** पु० श्वेता शुङ्गाऽस्य। १यवे राजनि०। २शुभ्रवर्णशुङ्गायुक्ते त्रि०।

**श्वेतशूरण** पु० कर्म० । वनशूरणे राजनि० ।

**श्वेतसर्प** पु० श्वेतः सन् सर्पति सृप-अच् । १वरुणवृक्षे जटा० कर्म० २शुभ्रभुजगे पुस्त्री० । स्त्रियां ङीष् ।

**श्वेतसर्षप** पु० कर्म० । गौरसर्षपे ।

**श्वेतसार** पु० श्वेतः सारोऽस्य । शुभ्रखदिरे जटा० ।

**श्वेतसुरसा** स्त्री कर्म० । शुभ्रशेफालिकायाम् अमरः ।

**श्वेतस्पन्दा** स्त्री श्वेता सती स्पन्दते स्पन्द-अच् । सितापराजितायां राजनि० ।

**श्वेतहय** पु० श्वेतोहयः । १उच्चैःश्रवसि हये त्रिका० २सितवर्णयुक्ते हये च । ६ब० । ३अर्जुने हेमच० । ४इन्द्रे च

**श्वेता** स्त्री श्वित-अच् । १वराटिकायां २काष्ठपाटलायां ३शङ्खिन्यां मेदि० । ४अतिविषायां रत्नमा० । ५सितापराजितायां ६शुभ्रकण्टकार्य्यां ७पाषाणभेदिन्यां ८शुभ्रदूर्वायां ९वंशरोचनायां १०शर्करायां ११शिलावल्कलायां १२श्वेतवृहत्यां च राजनि० ।

**श्वेतार्क** पु० कर्म० । शुभ्रवर्णपुष्पके अर्कवृक्षे राजनि० ।

**श्वेतावर** पु० श्वेतं श्वेतवर्णमाप्नोति आ+वृ-अच् । सितावरशाके राजनि० ।

**श्वेताश्वतर** पु० वेदशाखाभेदे ।

**श्वेतेक्षु** पु० कर्म० । शुक्ले इक्षौ राजनि० ।

**श्वेतोदर** पु० श्वेतमुदरं यस्य । कुबेरे त्रिका० ।

**श्वेतौही** स्त्री श्वेतोहः पती ङीष् । इन्द्राण्यां शच्याम् ।

**श्वैत्य** न० श्वेतस्य भावः ष्यञ् । शुभ्रवर्णे ।

**श्वोवसीयस** न० अतिशयेन वसुः प्रशस्तः श्वो वसीयः नि० अच् समा० । १परदिने भाविकाले प्रशस्ते मङ्गले २तद्वति त्रि० ।

## इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलिते वाचस्पत्याभिधाने शकारादिशब्दार्थसङ्कलनम् ।

### अशुद्धशोधनम् ।

६००० पृष्ठावधि ६०२४ पृष्ठपर्य्यन्तपत्राङ्के ९०० नवशताङ्काधिकतयाः प्रमादात् मुद्रिताः तत्र तत्र पृष्ठेषु नवभिः शतैरूनिता अङ्कसंख्या बोध्याः ।

---

## ष

**षकारः** मूर्द्धन्यः ऊष्मवर्णभेदः । अस्योच्चारणस्थानं मूर्द्धा अस्योच्चारणे आभ्यन्तरप्रयत्नः विवृतमङ्कस्पृष्टता “नेमस्पृष्टाः शलस्तथा” शिक्षोक्तेः । बाह्यप्रयत्नाश्च विवाराश्वासाघोषा महाप्राणश्च । ऊष्मरूपवायुप्रधानत्वादस्य ऊष्मवर्णता । अस्य ध्येयस्वरूपं यथा “षकारं शृणु चार्वङ्गि अष्टकोणमयं सदा । रक्तचन्द्रप्रतीकाशं स्वयंपरमकुण्डली । चतुर्वर्गमयं वर्णं सुधानिर्मितविग्रहम् । पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा । रजःसत्त्वतमोयुक्तं त्रिशक्तिसहितं सदा । त्रिबिन्दुसहितं वर्णमात्मादितत्त्वसंयुतम् । सर्वदेवमयं वर्णं हृदि भावय पार्वति !” कामधेनुतन्त्रम् । एतदधिष्ठानदेवताध्यानं यथा “चतुर्भुजां षकाराढ्यां चारुचन्दनचर्चिताम् । शुक्लवर्णां त्रिनयनां वराटाशुचिस्मिताम् । रत्नालङ्कारभूषाढ्यां श्वेतमाल्योपशोभिताम् । देववृन्दैरभिवन्द्यां सेवितां मोक्षकाङ्क्षिभिः । एवं ध्यात्वा षकारन्तु तन्मन्त्रं दशधा जपेत्” वर्णोद्धारतन्त्रम् । अस्य वाचकशब्दा यथा “षः श्वेतो वासुदेवश्च पिता प्रज्ञा विनायकः । परमेष्ठी वामबाहुः श्रेष्ठो गर्भविमोचनः । लम्बोदरो यमोऽजेयः कामधुक् कामधूमकः । कुम्भोद्भवा कृमो लज्जा मदकृत्यः प्रियः शिवः । सूर्य्यात्मा जठरः कोपो माता रक्षोविदारिणी । कलकण्ठो मध्यभिन्ना शुद्धात्मा मरुपूः शिवाः” वर्णाभिधानम् “षकारः श्वेत आख्यातो मूर्द्धन्यो दृषसंज्ञकः । पित्तं शक्तिश्च माया च महायोनिः सबिन्दुमत्” मन्त्राभिधानम् । मातृकान्यासेऽस्य जठरे न्यास्यता । काव्यादौ प्रयोगेऽस्य फलम् खेदः “षः सुखं मस्तु खेदम्” वृ०र०टी० अत्र षादिगणेषु षादितया ये धातवः पठितास्तेषां प्रयोगकाले दन्त्यसादित्वं सति च निमित्ते पुनः षत्वम् यथा षिध-सेधति निषेधति “आदेशप्रत्यययोः” इत्युक्तेः अस्य प्रयोगकाले सत्वे तन्निमित्तटवर्गस्य तवर्गाविर्भावः यथा ष्टु स्तु स्तौति । ष्ठा स्था तस्थौ ष्णा स्ना स्नाति । निमित्ते सति षत्वे च टुत्वे च प्रतिष्ठौति प्रतिष्ठा निष्ठा निष्णाति । तत्र ष्वष्कस्विवान्तु न सादेशस्तेन ष्ठायति ष्वष्कति ष्ठीवतीत्येवेतीति भेदः । स्विपर्युदासे ष्ठीवधातोरपि पर्युदासः ।

**ष** पु० षो-क ष्टषो० षत्वम् । १केशे मेदि० २गर्भविमोचने मानवे च ३सर्वे ४श्रेष्ठे एकाक्षरकोषः । ५विज्ञे च त्रि० मेदि० ।

**षकार** पु० ष+स्वरूपे कार । षरूपवर्णे कामधेनुतन्त्रे उदा० ।

**षग** संवरणे भ्वा० पर० सक० सेट् एदित् सिचि न वृद्धिः । षगति असगीत् मित् घटादि सगयति । ससीषगत् त ।

**षघ** हिंसायां स्वा० पर० सक० सेट् एदित् सिचि न वृद्धिः । सघ्नोति असघीत् ससीषघत् त । [षचत् त ।

**षच** सेचने भ्वा० आत्म० सक० सेट् । सचते असचिष्ट असी-

**षच** समवाये भ्वा॰पर॰सक॰ सेट् । सचति । असचीत्-असाचीत्

**षट** विभाजने भ्वा॰प॰सक॰सेट् । सटति असटीत् असाटीत्

**षट्कर्म्मन्** न॰ षट्प्रकारं कर्म॰ । १तन्त्रोक्तेषु शान्तिवशीकरणस्तम्भनविद्वेषोच्चाटनमारणरूपेषु षट्सु प्रयोगभेदेषु तानि च कर्माणि तन्त्रसारायुक्तानि उच्चाटनशब्दे १०६७ पृ॰ दृश्यानि । तत्तद्भूतमण्डलानि च भूतमण्डलशब्दे ४६८५।८६ पृ॰ दृश्यानि । २यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहरूपेषु षट्सु विप्रकर्मसु च । षट् कर्माणि यस्य । ३यागादियुक्ते विप्रे पु॰ । हठयोगाङ्गे ४षट्क्रियाभेदे यथोक्तं घेरण्डसं॰ १अ॰ । “धौतिर्वस्तिस्तथा नेतिर्नौलिकी त्राटकस्तथा । कपालभातिश्चैतानि षट् कर्माणि समाचरेत् । अन्तर्धौतिर्दन्तधौतिर्हृद्धौतिर्मूलशोधनम् । धौत्यश्चतुर्विधाः प्रोक्ता घटं (देहं) कुर्वन्ति निर्मलम् । वातसारं वारिसारं वह्निसारं बहिष्कृतम् । घटस्य निर्मलार्थाय अन्तर्धौतिश्चतुर्विधा” । “काकचञ्चुवदास्येन पिबेद्वायुं शनैः शनैः । चालयेदुदरं पश्चाद्वर्त्मना रेचयेत् शनैः । वातसारं परं गोप्यं देहनिर्मलकारकम् । सर्वरोगक्षयकरं देहानलविवर्द्धकम् । आकण्ठं पूरयेद्वारि वक्त्रेण च पिबेत् शनैः । चालयेदुदरेणैव चोदराद्रेचयेदधः । वारिसारं परं धौतं देहनिर्मलकारकम् । साधयेद् यः प्रयत्नेन देवदेहं प्रपद्यते । नाभिग्रन्थिं मेरुपृष्ठे शतवारञ्च कारयेत् । उदरामयजं त्यक्त्वा जठराग्निं विवर्द्धयेत् । वह्निसारमिदं धौतं योगिनां योगसिद्धिदम् । काकीं मुद्रां साधयित्वा पूरयेदुदरं मरुत् । धारयेदर्द्धयामन्तु चालयेदधवर्त्मना । इदं धौतं परं गोप्यं न प्रकाश्यं कदाचन । नाभिमग्नजले स्थित्वा शक्तिनाडीं विसर्जयेत् । कराभ्यां क्षालयेन्नाडीं यावन्मलविसर्जनम् । तावत् प्रक्षाल्य नाडीञ्च उदरे वेशयेत् पुनः । इदं प्रक्षालनं गोप्यं देवानामपि दुर्लभम् । केवलं धौतिमात्रेण देवदेहो भवेत् ध्रुवम् । यामार्द्धधारणात् शक्तिं यावन्न साधयेन्नरः । बहिष्कृतमहाधौतिस्तावच्चैव न जायते । दन्तमूलं जिह्वामूलं रन्ध्रे च कर्णयुग्मयोः । कपालरन्ध्रं पञ्चैते दन्तधौतिर्विधीयते” । “खादिरेण रसेनाथ मृत्तिकाभिश्च शुद्धिभिः । मार्जयेद्दन्तमूलञ्च यावत् किल्बिषमाहरेत् । दन्तमूलं परं धौतिर्योगिनां योगसाधने । नित्यं कुर्यात् प्रभाते च दन्तरक्षाय योगवित् । दन्तमूलं धारणादिकार्येषु योगिनां मतः । अथातः संप्रवक्ष्यामि जिह्वाशोधनकारणम् । जरामरणरोगादि नाशयेत् दीर्घलम्बिका । तर्जनीमध्यमानामा अङ्गुलित्रययोगतः । वेशयेद्गलमध्ये तु मार्जयेल्लम्बिकामलम् । शनैः शनैर्मार्जयित्वा कफदोषं निवारयेत् । मार्जयेन्नवनीतेन दोहयेच्च पुनः पुनः । तदग्रं लौहयन्त्रेण कर्षयित्वा पुनः पुनः । नित्यं कुर्यात् प्रयत्नेन रवेरुदयकेऽस्तके । एवं कृते तु नित्ये ऽवलम्बिका दीर्घतां गता । तर्जन्यङ्गुल्यग्रयोगेन मार्जयेत् कर्णरन्ध्रयोः । नित्यमभ्यासयोगेन नादान्तरप्रकाशनम् । वृद्धाङ्गुष्ठेन दक्षेण मार्जयेद्भालरन्ध्रकम् । एवमभ्यासयोगेन कफदोषं निवारयेत् । नाडी निर्मलतां याति दिव्यदृष्टिः प्रजायते । निद्रान्ते भोजनान्ते च दिवान्ते च दिने दिने । हृद्धौतिं त्रिविधां कुर्यात् दण्डवमनवाससा । रम्भादण्डं हरिद्दण्डं वेत्रदण्डन्तथैव च । हृन्मध्ये चालयित्वा तु पुनः प्रत्याहरेत् शनैः । कफपित्तं तथा क्लेदं रेचयेदूर्द्ध्ववर्त्मना । दण्डधौतिविधानेन हृद्रोगं नाशयेत् ध्रुवम्” । हरिद्दण्ड (वटशाखा) “भोजनान्ते पिबेद्वारि चाकण्ठपूरितं सुधीः । ऊर्द्ध्वदृष्टिं क्षणं कृत्वा तज्जलं वमयेत् पुनः । नित्यमभ्यासयोगोऽयं कफपित्तं निवारयेत् । चतुरङ्गुलविस्तारं सूक्ष्मवस्त्रं शनैर्ग्रसेत् । पुनः प्रत्याहरेदेतत् प्रोच्यते धौतकर्मकम् । गुल्मज्वरप्लीहकुष्ठं कफपित्तं विनश्यति । आरोग्यं बलपुष्टिश्च भवेत्तस्य दिने दिने । अपानक्रूरता तावद्यावन्मूलं न शोधयेत् । तस्मात् सर्वप्रयत्नेन मूलशोधनमाचरेत् । पीतमूलस्य दण्डेन मध्यमाङ्गुलिनापि वा । यत्नेन क्षालयेद्गुह्यं वारिणा च पुनः पुनः । वारयेत् कोष्ठकाठिन्यमामाजीर्णं निवारयेत् । कारणं कान्तिपुष्ट्योश्च दीपनं वह्निमण्डलम् । जलवस्तिः शुष्कवस्तिर्वस्ती च द्विविधौ स्मृतौ । जलवस्तिं जले कुर्यात् शुष्कवस्तिं क्षितौ सदा । नाभिमग्नजले पायुं न्यस्तनालोत्कटासनम् । आकुञ्चनं प्रसारञ्च जलवस्तिं समाचरेत् । प्रमेहञ्च गुदावर्त्तं क्रूरवायुं निवारयेत् । भवेत् स्वच्छन्ददेहश्च कामदेवसमो भवेत्” । न्यस्तनालोत्कटासनम् ऊरुद्वये हस्तं दत्त्वा शारङ्गवदुदरं कुर्यादित्यर्थः । “वस्तिं पश्चिमतानेन चालयित्वा शनैः शनैः । अश्विनीमुद्रया पायुमाकुञ्चयेच्च प्रसारयेत् । एवमभ्यासयोगेन कोष्ठदोषो न विद्यते । वर्द्धयेत् जठराग्निञ्च आमवातं विनाशयेत् । वितस्तिमं सूक्ष्मसूत्रं नासानाले प्रवेशयेत् । मुखान्निर्गमयेत्

पश्चात् प्रोच्यते नेतिकर्मकम् । साधनाच्चेतिकर्मणः खेचरीं सिद्धिमाप्नुयात् । कफदोषा विनश्यन्ति दिव्यदृष्टिश्च जायते । आनन्दवेगे तुन्दस्य भ्रामयेद्दष पार्श्वयोः । सर्वरोगान्निहन्तीह देहानलविवर्द्धनम्” इति नौलिकी । “निमेषोन्मेषकं त्यक्त्वा सूक्ष्मलक्ष्यं निरीक्षयेत् । यावदश्रु निपतति त्राटकं प्रोच्यते बुधैः । एवमभ्यासयोगेन शाम्भवी जायते ध्रुवम् । न जायते नेत्ररोगो दिव्यदृष्टिप्रदायकम् । सीत्कृत्य पीत्वा वक्त्रेण नासानालैर्विरेचयेत् । व्युत्क्रमेण व्युत्क्रमेण सीत्क्रमेण विशेषतः । भालभातिस्त्रिधा कुर्य्यात् कफदोषं निवारयेत् । इडया पूरयेद्वायुं रेचयेत् पिङ्गलया पुनः । पिङ्गलया पूरयित्वा पुनश्चन्द्रेण रेचयेत् । पूरकं रेचकं कृत्वा वेगेन न तु धारयेत् । एवमभ्यासयोगेन कफदोषं निवारयेत् । नासाभ्यां जलमाकृष्य वक्त्रेण रेचयेत् पुनः । पायं पायं प्रकुर्वीत श्लेष्मदोषं निवारयेत् । न जायते वार्द्धक्यं ज्वरो नैव प्रजायते” ।

**षट्कूटा** स्त्री भैरवीभेदे तन्त्रसा० ।

**षट्कोण** न० षट् कोणा यस्य । १वज्रे राजनि० । तन्त्रोक्ते त्रिकोणद्वयरूपे यन्त्रभेदे २ज्योतिषोक्ते लग्नतः षष्ठस्थाने च ज्यो०त० ।

**षट्चक्र** न० षण्णां चक्राणां समाहारः पात्रादि० । तन्त्रोक्तेषु देहस्थेषु सुषुम्नानाडीमध्यवर्त्तिषु हृदयचक्रदेशादिषु षट्सु पद्मेषु चक्रशब्दे २८०८ पृ० दृश्यम् । तदधिकृत्य कृतो ग्रन्थः अण् तस्य लुक् । २षट्चक्रप्रतिपादिकग्रन्थभेदे । [१सङ्ख्याभेदे १तत्संख्यान्विते च ।

**षट्चत्वारिंशत्** स्त्री षडधिका चत्वारिंशत् । (छेचाल्लिश)

**षट्चरण** पुंस्त्री० षट् चरणा यस्य । १भ्रमरे शब्दा० स्त्रियां ङीष् । षट्पदादयोऽप्यत्र । २यूकायां राजनि० ।

**षट्** निवासे बले च अक० हिंसायां दाने च सक० चुरा० उभ० सेट् । षट्टयति ते असषट्टत् त । विषट्टयिषति ।

**षट्तिलिन्** पु० षट् तिलाः तिलोद्वर्त्तनादयः कर्म्मत्वेन यस्य । “तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलप्रदः । तिलभुक् तिलवापी च षट्तिली नावसीदति” इत्युक्ते तिलोद्वर्त्तनादिकारिणि । [सङ्ख्याभेदे २तत्संख्यान्विते च ।

**षट्त्रिंशत्** स्त्री षडधिका त्रिंशत् शाक० । (छत्रिश) १सं-

**षट्त्रिंशदुपचार** (छत्रिश) देवपूजाङ्गेषूपचारेषु “आसनाभ्यञ्जनं तद्वदुद्वर्त्तनविलेपने । सम्मार्जनं सर्पिरादिस्नपनावाहने तथा । पाद्यार्घ्याचमनीयञ्च स्नानीयमधुपर्ककौ । पुनराचमनीयञ्च वस्त्रयज्ञोपवीतके । अलङ्कारो गन्धपुष्पे धूपदीपौ तथैव च । ताम्बूलादिकनैवेद्यं पुष्पमाला तथैव च । अनुलेपश्च शय्या च चामरव्यजनं तथा । आदर्शदर्शनञ्चैव नमस्कारोऽथ नर्त्तनम् । गीतवाद्ये च दानानि स्तुतिहोमप्रदक्षिणम् । दन्तकाष्ठप्रदानञ्च ततो देवविसर्जनम् । उपचारा इमे ज्ञेयाः षट्त्रिंशत् सुरपूजने” एका०त० ।

**षट्त्रिंशन्मत** न० “मनुर्विष्णुर्यमो दक्षो ह्यङ्गिरोऽत्रिबृहस्पती । आपस्तम्बश्चोशना च कात्यायनपराशरौ । वशिष्ठव्याससंवर्त्तौ हारीतगौतमावपि । प्रचेताः शङ्खलिखितौ याज्ञवल्क्यश्च काश्यपः । शातातपो लोमशश्च जमदग्निः प्रजापतिः । विश्वामित्रपैठानसी बौधायनपितामहौ । छागलेयश्च जाबालो मरीचिश्च्यवनो भृगुः । ऋष्यशृङ्गो नारदश्च षट्त्रिंशत् स्मृतिकारकाः । एतेषान्तु मतं यत्तु षट्त्रिंशन्मतमुच्यते” इति शङ्खलिखितोक्तस्मृतिभेदमते ।

**षट्पञ्चाशत्** स्त्री षडधिका पञ्चाशत् शाक० । (छाप्पान्न) १सङ्ख्याभेदे २तत्सङ्ख्यान्विते च ।

**षट्पञ्चाशिका** स्त्री षट्पञ्चाशत् परिमाणमस्य ठन् संज्ञायां कन् । वराहमिहिरात्मजपृथुयशोविरचिते प्रश्नग्रन्थभेदे ।

**षट्पदप्रिय** पु० ६त० । नागकेशरे शब्दमा० तस्य हि प्रचुरमधुमत्त्वात् भ्रमरप्रियत्वम् । [त्रिका० ।

**षट्पदातिथि** पु० षट्पदः अतिथिरिव यस्य । आम्रवृक्षे

**षट्पदानन्दवर्द्धन** पु० षट्पदस्यानन्दं वर्द्धयति वृध-णिच्-ल्यु उप० । अशोकवृक्षे राजनि० ।

**षट्पदी** स्त्री षट् पादा अस्याः पादस्य पाद्भावः ङीपि पद्भाव । १यूकायां २भ्रमरयोषिति च । स० द्विगुः । ३षट्चरणयुक्ते छन्दोभेदे च । ४षट्श्लोकात्मकपद्यसंघाते ।

**षट्प्रज्ञ** पु० षट्सु प्रज्ञा यस्य । “धर्मार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि । षट्सु प्रज्ञा तु यस्यासौ षट्प्रज्ञः परिकीर्त्तितः” इत्युक्ते १धर्मार्थाद्यभिज्ञे २लोके ३कामुके त्रिका० ।

**षडङ्ग** न० षण्णामङ्गानां समाहारः पात्रा० । “जङ्घे बाहू शिरो मध्यं षडङ्गमिदमुच्यते” इत्युक्ते १देहावयवषट्कभेदे शब्दच० तन्त्रोक्ते २हृदयाद्यवयवभेदे यत्र हृदयादिषु षट्सु अङ्गेषु मन्त्रविशेषोन्यस्यते तेषु । षट् अङ्गानीव यस्य । “शिक्षाकल्पौ व्याकरणं निरुक्तं छन्दसां चितिः । ज्योतिषामयनञ्चैव षडङ्गो वेद उच्यते” इत्युक्ते ३वे

पु० ६कडुगे...सुरक्षुदे च पु० र ज० न० "गोमलं गोमय क्षीरं सर्पिर्दधि च रोचना । षडङ्गमेतन्माङ्गल्यं पठितं सर्वदा गवाम्" इत्युक्ते रोचनासहिते ५पञ्चगव्ये न० ।

**षड्भिज्ञ** पु० "दिव्यं चक्षुःश्रोतं१ परचित्तज्ञानं२ पूर्वनिवासानुस्मृतिः३ आत्मज्ञानम्४ वियद्गतिः५ कायव्यूहसिद्धिश्चेत्येतानि षट् अभिज्ञा अभिज्ञायमानानि यस्य । बौद्धभेदे अमरः । [ग।३। कर्कपद्धतिः ।

**षड्वक्त्र** न० उभयत्र खातवर्ति वारुके यन्त्रपात्रभेदे काल्या० ।

**षडशीति** स्त्री षड्धिका अशीतिः शाक० । (छेयाशि) १६ संख्यापरे २तत्संख्यान्विते च । अशीतिसंख्यकासु मिथुनकन्याधनुर्मीनेषु रवेः संक्रान्तौ च "अयनविषुवषडौ षडशीतयो विष्णुपदाः षडशीतयः" इति ज्योतिषम् ।

**षडशीतिचक्र** न० मिथुनकन्याधनुर्मीनराशिस्थरवेः संक्रमे शुभाशुभफलज्ञानार्थं नक्षत्रात्मनराकारे चक्रे । यथा "मुखे चैकं करे वेदाः पादयुग्मे द्वयं द्वयम् । क्रोडे वाणास्तथा वेदाः करे चान्येतरेऽपि च । द्वयं द्वयं तथा नेत्रे मस्तके त्रितयं तथा । द्वयञ्चैव तथा गुह्ये षडशीत्यां क्रमे स्थिते । मुखे दुःखं करे लाभः पादयोर्भ्रमणं ध्रुवम् । कान्ता स्यात् क्रोडे वामे हस्ते स्यात् क्षीयभे न्यपाम् । सम्मानो नेत्रयोश्चैव अपमानश्च मस्तके । गुह्ये चैव भवेन्मृत्युः षडशीतिफलस्मृतिः" ज्यो० त० ।

**षडशीतिमुख** न० षडशीतेः तत्तत्संक्रान्तेर्मुखम् । "तुलादिषडशीत्यङ्कात् षडशीतिमुखं क्रमात् । तच्चतुष्टयमेव स्यात् द्विस्वभावेषु राशिषु" "षड्विंशे धनुषो भागे द्वाविंशेऽनिमिषस्य च । मिथुनेऽष्टादशे भागे कन्यायास्तु चतुर्दशे" इति सूर्यसिद्धान्तोक्ते तुलादितः षडशीतिदिनान्तरितकाले ।

**षडष्टक** न० ज्यो०त० उक्ते वरकन्ययोः स्वस्वराश्यपेक्षया परस्परषष्ठाष्टमराशिसम्बन्धे उपयमशब्दे दृ० दृश्यम् ।

**षडानन** पु० षट् आननानि यस्य । कार्त्तिकेये अमरः । षड्वदनादयोऽप्यत्र ।

**षडाम्नाय** पु० षड्गुणित आम्नायः शाक० । शिवस्य षड्वक्त्रविनिर्गते षट्प्रकारतन्त्रभेदे "अथेदानीं प्रवक्ष्यामि आम्नायकथनं पृथक् । पूर्वाम्नायो यदा मन्त्रस्तदा प्राच्यां दिशि स्थितः । सदाशिवोऽहं भगवानाचारः परिकीर्त्तितः । एवं वै दक्षिणाम्नायो दक्षिणस्यां दिशि स्थितः । एवं हि पश्चिमाम्नायः पश्चिमायां दिशि स्थितः । एवमेवोत्तराम्नाय उत्तरस्यां दिशि स्थितः । एवमूर्द्ध्वगतं देवि ! यत् प्रोक्तं तव सन्निधौ । ऊर्द्ध्वाम्नायश्च कथितो देवानामपि दुर्लभः । यदा चाधोमुखं देवि ! यत् प्रोक्तं गिरिजे ! प्रिये ! । अध आम्नाय इत्युक्तः सत्यं सत्यं सुमध्यमे ! । षडाम्नायाश्च कथितास्तेषां भेदक्रमनामतः । यस्मिन् यस्मिंश्च ये देवाः कथितास्तु वरानने ! । तान्देवांश्च प्रवक्ष्यामि साधकानां हिताय वै । श्रीविद्याभेदसहिता तारा च त्रिपुरा तथा । भुवनेशी चान्नपूर्णा पूर्वाम्नाये प्रकीर्त्तिताः । बगलामुखी च वशिनी त्वरिता धनदा तथा" । वशिनी बालभैरवीत्यर्थः "महिषघ्नी महालक्ष्म्यादिःक्षणाम्नायकीर्त्तिताः । महासरस्वती विद्या तथा वाग्वादिनी परा । प्रत्यङ्गिरा भवानी च पश्चिमाम्नायकीर्त्तिताः । कालिका भेदसहिता तारा भेदैश्च संयुता । मातङ्गी भैरवी छिन्ना तथा धूमावती परा । उत्तराम्नायकथिताः कलौ शीघ्रफलप्रदाः । अनन्तभेदसहिताः कालिका याः प्रकीर्त्तिताः । द्वाविंशत्यक्षरी तासां दक्षिणाम्नायकीर्त्तिता । एकजटा षडाम्नाये महामोक्षप्रदायिनी । तत्परा परमा विद्या न विद्यान्तरगोपिता । परप्रधानमन्त्राश्च ऊर्द्ध्वाम्नाये प्रकीर्त्तिताः । ऊर्द्ध्वाम्नायो ह्यधश्चैव केवलं मोक्षदो भवेत् । धर्मार्थकाममोक्षार्थं आम्नायान्यं प्रकीर्त्तिताः । यथोक्तविधिना भद्रे ! कृत्वा फलमवाप्नुयात् । पूर्वाम्नायादिसर्वेषां विधानं शृणु सुन्दरि ! । कृत्वा येनाशु लभते फलं यदुत्तमोत्तमम् । षट्कर्मफलदा ज्ञेया षडाम्नायाः प्रकीर्त्तिताः । उत्तराम्नायो देवेशि ! तेषामाशु फलप्रदः" इति समयाचारतन्त्रे २पटले । आम्नायभेदेनाचारभेद उक्तो यथा "पूर्वाम्नायोदितं कर्म पाशवं कथितं प्रिये ! । यदुक्तं दक्षिणाम्नाये तदेव पाशवं स्मृतम् । पश्चिमाम्नायजं कर्म पशुवीरसमाश्रितम् । उत्तराम्नायजं कर्म दिव्यवीराश्रितं प्रिये ! । दिव्योऽपि वीरभावेन साधयेत् पितृकानने । वीरासनं विना दिव्यः पूजयेत् पितृकानने । ऊर्द्ध्वाम्नायोदितं कर्म दिव्यभावाश्रितं प्रिये !" इति निरुत्तरतन्त्रे १पटले ।

**षडूर्मि** पु० षट् ऊर्मयः बुभुक्षादयोऽस्य । जीवे ऊर्मिशब्दे १३८३ पृ० दृश्यम् ।

**षडूषण** न० षट्संख्यम् ऊषणम् । कटुद्रव्यभेदे "पञ्चकोलं समरिचं षडूषणमुदाहृतम् । पञ्चकोलगुणं तत्तु रूक्षमुष्णं विषापहम्" भावप्र० ।

**षड्गया** स्त्री "गयागजो गयादित्यो गायत्री च गदाधरः ।

गया गयासुरश्चैव षड्गया मुक्तिदायिकाः” वायु० पु० । उक्ते गयागजादि षट्के ।

**षड्गव** त्रि० षड्भिर्गोभिराकृष्टः शकटः हलो वा शाक० अच् समा० । षड्भिर्गोभिराकृष्टे १हलादौ “अष्टागवं धर्म्यं हलं षड्गवं जीविकार्थिनाम्” इति स्मृतिः । षण्णां गवां समाहारः अच्समा० । २षट्सु गोषु न० ।

**षड्गुण** पु० षड्भिः गुणिता गुणाः शाक० । राज्ञां सन्ध्यादिषु षट्सु गुणेषु षाड्गुण्यशब्दे दृश्यम् ।

**षड्ग्रन्था** स्त्री षट् ग्रन्थयः सन्त्यस्या अच् । १वचायां भावप्र० २शट्यां ३महाकरञ्जे ४श्वेतवचायाञ्च राजनि० ।

**षड्ग्रन्थि** न० षट् ग्रन्थयोऽस्य । १पिप्पलीमूले वैद्यकम् । २षट् पर्वयुक्ते त्रि० । ३वचायां स्त्री वा ङीप् । संज्ञायां कन् टाप् अत इत्वम् । शट्यां स्त्री अमरः ।

**षड्ज** पु० षड्भ्यो नासादिस्थानेभ्यो जायते जन–ड । “नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च संश्रितः । षड्भ्यः संजायते यस्मात् तस्मात् षड्ज इति स्मृतः” इत्युक्ते स्वरभेदे “षड्जसंवादिनीः केकाः” इति रघुः । “षड्जं रौति मयूरो हि गावो नर्दन्ति चार्षभम् । अजा विरौति गान्धारं क्रौञ्चो नदति मध्यमम्” भरतः ।

**षड्दर्शन** न० षड्गुणितं दर्शनम् । १आस्तिकमतसिद्धे पूर्वमीमांसावेदान्तसांख्यपातञ्जलन्यायवैशेषिकाख्ये दर्शने शास्त्रभेदे षट्सु २बौद्धदर्शनेषु च ।

**षड्दीर्घ** पु० षड्भिर्गुणिता दीर्घाः । तन्त्रोक्तेषु आ, ई, ऊ, ऐ, औ, अः इत्येवं रूपेषु षट्सु दीर्घेषु ।

**षड्दुर्ग** न० षड्गुणितं दुर्गम् । “धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा । नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत् पुरम्” मनूक्ते दुर्गषट्के ।

**षड्धा** अव्य० षष्+प्रकारे–धाच् । षट्प्रकारे । [त्रिका० ।

**षड्बिन्दु** पु० षड्बिन्दवो यत्र । १कीटभेदे मेदि० । २विष्णौ

**षड्भुजा** स्त्री षट् भुजा इव यस्याः । (खरमुज) फलवताभेदे राजनि० । २षड्हस्तयुक्ते त्रि० । ३रौद्रे ज्वरे पु० “त्रीमांस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः” ब्रह्मवै० ।

**षड्रस** न० षण्णां रसानां समाहारः पात्रा० । “मधुरो लवणस्तिक्तः कषायोऽम्लः कटुस्तथा” इत्युक्तेषु “मधुरं लौल्यमित्याहुरिक्ष्वादौ स च लक्ष्यते । लवणस्तु पटुः प्रोक्तः सैन्धवादौ स दृश्यते । तिक्तस्तु पिचुमर्दादौ व्यक्तमास्वाद्यते रसः । कषायस्तुवरः प्रोक्तः स च पूगीफलादिषु । कटुस्तु तीक्ष्णसंज्ञः स्यात् मरीचादौ स चेष्यते” इत्युक्तस्थानेषु लक्ष्येषु षट्सु रसेषु । षड्गुणितोरसः । तन्नार्थे पु० ।

त्रिका० ।

**षड्लवण** न० षड्गुणितं लवणम् । स्वर्जायुतपञ्चलवणे

**षड्वर्ग** पु० द्वि० त० । १कामक्रोधलोभमोहमदमात्सर्येषु “व्याजेष्ट षड्वर्गमिति” भट्टिः । “क्षेत्रं होराथ द्रेक्काणो नवांशो द्वादशांशकः । त्रिंशांशकश्च षड्वर्गस्त्र्यादिप्राप्त्या फलप्रदः” ज्योतिषोक्तेषु क्षेत्रादिषु षट्सु । स च ज्यो० त० उक्तो यथा

“कुजशुक्रबुधेन्द्वर्कसौम्यशुक्रावनीभुवाम् । जीवार्किभानुजेज्यानां क्षेत्राणि१ स्युरजादयः । विषमर्क्षेषु प्रथमा होराः२ स्युः सहस्ररोचिषः । द्वितीयाः शशिनो युग्मे व्यत्ययाद्गणयेत् सदा । स्वपञ्चनवमानां ये राशीनामधिपा ग्रहाः । ते द्रेक्काणाधिपा राशौ द्रेक्काणास्त्रय एव हि । मेषकेसरिधनुषां मेषाद्याश्च नवांशकाः४ । मृगकन्याद्वषाणाञ्च मृगाद्यास्तु नवांशकाः । तुलामिथुनकुम्भानां तुलाद्याः समुदाहृताः । कर्किवृश्चिकमीनानां कर्कटाद्या नवांशकाः । चराणां प्रथमे चांशे स्थिराणां पञ्चमे तथा । नवमे द्व्यात्मकानाञ्च वर्गोत्तम इति स्मृतः । स्वनवांशस्तु राशीनां वर्गोत्तम इति स्मृतः । सर्वेषां मेषपूर्वाणां स्वाद्या द्वादशांशकाः५ । कुजार्किगुरुसौम्यानां भागाः शुक्रस्य च क्रमात् । पञ्चपञ्चाष्टसप्तेषु ज्ञेयमोजेषु राशिषु । त्रिंशांशाद्द् व्यत्ययादेते युग्मराशिषु कीर्त्तिताः” । त्र्यधिकशुभाशुभप्राप्त्या शुभाशुभद इति बोध्यम् ।

**षण(न)** सम्भक्तौ भ्वा० पर० सक० सेट् षस्य सत्वे णस्य नत्वम् । सनति असनीत् असानीत् । दन्त्यान्तोऽयमित्येके ।

**षण(न)** दाने तना० उभ० सक० सेट् षस्य सत्वे णस्य नत्वम् उदित् । दन्त्यान्त इत्येके सनोति सनु असनीत्–असानीत् असनिष्ट–असात । सिषणिषति सिषासति इत्येके ।

**ष(श)ण्ड** पु० सन–ड डस्य नेत्त्वम् पृषो० षत्वं शत्वं वा । १वृषे अमर. २नपुंसके जटा० । ३पद्मादिसमूहे पु० न० अमरः । [पाठान्तरम् ।

**षण्ढ** पु० सण–ढ तस्य नेत्त्वम् पृषो० षः । नपुंसके अमरे

**षण्मुख** पु० षट् मुखानि यस्य । १कार्त्तिकेये हला० षड्भुजायां स्त्री राजनि० टाप् ।

**षद** गतौ चु० उभ० सक० सेट् । सादयति ते असीषदत् ।

**षद** विषादे आकुलीभावे अक० हिंसायां गतौ च सक० तु० प० अनिट् । सीदति लृदित् असदत् । ज्वला० सदः सादः ।

**षन्च** गतौ भ्वा० पर० सक० सेट् । सञ्चति असञ्चीत् ।

**षस्ज** सङ्गे सम्बन्धे च भ्वा०पर०सक०अनिट्। सजति असाङ्क्षीत्

**षप** सम्बन्धे भ्वा०पर०सक०सेट्। सपति असापीत् असपीत्। असीषपत्। [त। सिषमयिषति।

**षम** वैकल्ये अद० चु० उभ० अक० सेट्। समयति ते अससमत्

**षम्ब** सर्पणे भ्वा० पर० सक० सेट्। सम्बति असम्बीत्।

**षर्ज्ज** सर्जने भ्वा० पर० सक० सेट्। सर्ज्जति असर्ज्जीत्।

**षर्ब(र्व)** गतौ भ्वा०प०सक० सेट्। सर्ब(र्व)ति असर्बीत्(र्वीत्)।

**षर्षपी** स्त्री सर्षप+पृषो०। खञ्जनाकृतौ खगभेदे शब्दर०।

**षल** गतौ भ्वा० पर०सक०सेट्। सलति असालीत् असीषलत्

**षष्** त्रि० ब० व०। सो—क्विप् पृषो०। (छय) सङ्ख्याभेदे व्याकरणोक्ते १डतिप्रत्ययान्तकत्यादौ षान्ते नान्ते सङ्ख्यावाचके च २शब्दे च "ष्णान्ताः षट्" "डति च" पा०। "षड्भ्यो लुक्" पा० "न षट्स्वस्रादिभ्यः" पा० स्त्रियां न ङीप्। "षट्संज्ञकास्त्रिषु समायुष्मदस्मत्तिङव्ययम्" अमरः। त्रिष्वित्यधिकारेण त्रिषु समा इति सिद्धे पुनः कथनं त्रिषु समानरूपताप्रतिपादनार्थम्। तथा हि वैयाकरणमते तिङः प्रथमान्तसामानाधिकरण्यनियमात् विशेष्यविशेषणयोः समानलिङ्गत्वे प्राप्ते ततः स्त्रियां टाबादिप्रसक्तौ तन्निषेधः तेन स्त्री पचति इत्यादौ इकारान्तत्वात् न ङीप्। स्त्रियः अपचन् इत्यादौ च न ङीप्। स्त्री अपचत इत्यादौ न टाप्। कुलं पचते इत्यादौ क्लीवत्वेन न ह्रस्वः। अव्ययस्य लिङ्गशून्यत्वेऽपि तस्य टाबादिशून्यत्वार्थं त्रिषु समानरूपोक्तिः। तेन हाशब्दस्य निन्दनीयपरत्वे हा पापमित्यादौ न ह्रस्वः। कष्टाद्यर्थपरत्वे अहह संसारपारगतिरित्यादौ न टाप् इति बोध्यम् डत्यन्तस्य कति स्त्रियः इत्यादौ न ङीप्।

**षष्टि** स्त्री षड्गुणिता दशतिः नि०। (षाट्) १सङ्ख्याभेदे २तत्सङ्ख्यान्विते च।

**षष्टिक** पु० षष्ट्या अहोभिः पच्यते कन्। (षाटिया) १धान्यभेदे अमरः। तदार्थे स्त्रीत्वमपि "षष्टिका कालशाकञ्च मूलञ्च केमुकेतरत्" ति०त०। षष्ट्या क्रीतः कन्। २षष्टिसंख्यातद्रव्यक्रीते त्रि०।

**षष्टिक्य** न० षष्टिकधान्यस्य भवनं क्षेत्रम् यत्। षष्टिकधान्योत्पत्तियोग्ये क्षेत्रे अमरः। [तस्मिन्। स्त्रियां ङीप्।

**षष्टितम** त्रि० षष्टेः पूरणः तमप्। येन षष्टिसङ्ख्या पूर्य्यते

**षष्टिमत्त** पु० षष्ट्या वर्षैर्मत्तः। षष्टिवयस्के गजे शब्दमा० तदुत्तरं हि तस्य मत्ततायोग्यत्वात् तथात्वम्।

**षष्टिलता** स्त्री षष्ट्या लतेव। भ्रमरमार्य्यां राजनि०।

**षष्टिसंवत्सर** पु० ब० व० षष्टिगुणिता संवत्सराः। ज्योतिषप्रसिद्धेषु १प्रभवादिषु षष्टौ वत्सरेषु। प्रभवादिशब्दे ४७३।४७४ पृ० तदानयनं दृश्यम्। २नारायणादिकेषु षष्टिवर्षेषु गुरुवर्षशब्दे २६२२ पृ० दृश्यम्। षष्ट्यब्दादयोऽप्यत्र।

**षष्टिहायन** पु० षष्टिर्हायना वयोऽस्य। १षष्टिवर्षवयस्के गजे षष्टिदिनपच्यो हायनो व्रीहिः शाक०। २षष्टिकधान्ये च मेदि०। [पूर्य्यते तस्मिन् स्त्रियां ङीप्।

**षष्ठ** त्रि० षण्णां पूरणः षष्+डट् थुक् च। येन षट्संख्या

**षष्ठक** त्रि० षष्ठो भागः कन्। षष्ठे भागे।

**षष्ठांश** पु० कर्म०। रक्षणप्रतिरूपतया प्रजाभ्यो ग्राह्ये उत्पन्नशस्यस्य षष्ठांशरूपे करे।

**षष्ठान्न** त्रि० षष्ठो दिवसस्य षष्ठकालः अन्नस्य तद्भोजनस्य कालो यस्य। दिवसस्य षष्ठभागे अन्नभोजनकालयुते पुरुषे।

**षष्ठान्नकाल** पु० षष्ठे दिवसे भक्ष्यान्नकालो यत्र। व्रतभेदे।

**षष्ठी** स्त्री षण्णां पूरणी डट् थुट् ङीप्। चन्द्रमसः षष्ठकलाया ह्रासवृद्धिरूपक्रियारूपे १तिथिभेदे स्कन्दभार्य्यारूपे २मातृकाभेदे "मातृकासु पूज्यतमा सा च षष्ठी प्रकीर्त्तिता। शिशूनां प्रतिविश्वेषु प्रतिपालनकारिणी तपस्विनी विष्णुभक्ता कार्त्तिकेयस्य कामिनी। षष्ठांशरूपा प्रकृतेस्तेन षष्ठी प्रकीर्त्तिता। पुत्रपौत्रप्रदात्री च धात्री त्रिजगतां सती। सुन्दरी युवती रम्या सन्ततं भर्त्तुरन्तिके। स्थाने शिशूनां परमा वृद्धरूपा च योगिनी। पूजा द्वादशमासेषु यस्या विश्वेषु सन्ततम्। पूजा च सूतिकागारे पुरा षष्ठदिने शिशोः। एकविंशतिमे चैव पूजा कल्याणहेतुकी। शश्वन्नियमिता चैषा नित्या काम्या ततः परा। मातृरूपा दयारूपा शश्वद्रक्षणरूपिणी। जले स्थले चान्तरीक्षे शिशूनां स्वप्नगोचरे" ब्रह्म० वै०प्र० १अ०। "ब्रह्मणो मानसी कन्या देवसेना सुरेश्वरी। इहा मां मनसा धाता ददौ स्कन्दाय भूमिप। मातृकासु च विख्याता स्कन्दभार्य्या च सुव्रता। विश्वे षष्ठीति विख्याता षष्ठांशात् प्रकृतेर्यतः" ४०अ०। "प्रसूत्या द्वादशे मासि सम्यग्ज्याऽपत्यवृद्धये। सुते जाते तथा षष्ठ्यां षष्ठी द्वादशरूपिणी। वैशाखे चान्दनी षष्ठी ज्यैष्ठे चारण्यसंज्ञिता। आषाढे कार्द्दमी ज्ञेया श्रावणे लुण्ठनी तथा। भाद्रे चपेटी विख्याता दुर्गाख्याश्वयुजे तथा। नाड़ाख्या कार्त्तिके मासि मार्गे मूलकरूपिणी। पौषे

मास्यन्नरूपा च शीतला तपसि स्मृता । गोरूपिणी फाल्गुने च चैत्रेऽशोका प्रकीर्त्तिता" स्कान्दपु० । षष्ठीविहितकालव्यवस्था तिथिशब्दे दृश्या ।

**षस** स्वप्ने अदा०पर०अक०सेट् वैदिक । सस्ति असासीत् अससीत्

**षस्ज** सर्पणे भ्वा०पर०सक०सेट् । सज्जति असज्जीत् । अयमात्मनेपदीत्यन्ये "वचोऽपि परुषाक्षरं न च पदेषु संसज्जते" इति शकुन्तला ।

**षस्त** स्वप्ने अदा० स्वपा० पर० अक० सेट् । वैदिकः इदित् । संस्ते असंस्तीत् । [ति सहति असीषहत् असहीत् ।

**षह** क्षमायां वा चु०उभ०पक्षे दि०पर०सक० सेट् । साहयति

**षह** क्षमायां भ्वा० आ०सक०सेट् । सहते असहिष्ट लुता० लुङ् साह्नः । "तीषसहेति" पा० तकारादावार्धधातुके वा इट् । सोढा सहिता । सहितव्यः सोढव्यः । क्त । सोढ इत्येव । इह पक्षे निमित्ते सति न षत्वम् परिषोढा इत्येव पक्षे परिषहितेत्यादौ षत्वम् ।

**षहसानु** पु० सह-आनु असुक् च पृषो० षत्वम् । १यज्ञे २मयूरे च संक्षिप्तसारः । [षंकल्प०।

**षाट्** अव्य० सह-णिच्-पृषो० षत्वं टत्वञ्च । सम्बोधने शब्दा०

**षाडव** पु० षडवति अव-अच् स्वार्थे अण् । १गाने २रसे च मेदि० तयोः तत्संख्यकस्वरादिमत्त्वात् तथात्वम् । ३षट्स्वरमिलितरागे च "औडवः पञ्चभिः प्रोक्तः षड्भिस्तु षाडवः स्मृतः । सम्पूर्णः सप्तभिश्चैव एवं रागास्त्रिधा मताः" संगीतदर्पणः ।

**षाड्गुण्य** न० षट् गुणा एव ष्यञ् । राज्ञां सन्धिविग्रहादिषु षट्सु गुणेषु "षाड्गुण्यमुपयुञ्जते" इति माघः । "षाड्गुण्यमिति यत् प्रोक्तं तन्निबोध युधिष्ठिर ! । सन्धानासनमित्येव यात्रासन्धानमेव च । विगृह्यासनमित्येव यात्रां सम्परिगृह्य च । द्वैधीभावस्तथान्येषां संश्रयोऽथ परस्य च" भा०शा०६९अ० "सन्धानासनं१ सन्धिं कृत्वाऽवस्थितिः यात्रासन्धानं यानम्२ । विगृह्य वैरं कृत्वावस्थानं विग्रहः३ यात्रां सम्परिगृह्यासनं शत्रोर्भयप्रदर्शनार्थं यानं प्रदर्श्य स्वस्थानेऽवस्थानं४ द्वैधीभाव उभयत्र सन्धिकरणं५ परस्याऽन्यस्याश्रयो६ दुर्गादेर्महाराजस्य वा" नी० क० ।

"सन्धिञ्च विग्रहं यानमासनादि वदामि ते । बलवद्विग्रहीतेन सन्धिं कुर्याच्छिवाय च । कपाल उपहारश्च सन्तानः सङ्गतस्तथा । उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः । अदृष्टनर आदिष्ट आत्मामिष उपग्रहः । परिक्रयस्तथा छिन्नस्तथा च परदूषणम् । स्कन्धोपनेयः सन्धिश्च सन्धयः षोडशेरिताः । परस्परोपकारस्तु मैत्रः सम्बन्धकस्तथा । उपहारश्च चत्वारस्तेषु मुख्याश्च सन्धयः । बालो वृद्धो दीर्घरोगस्तथा बन्धुबहिष्कृतः । भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा । विरक्तप्रकृतिश्चैव विषयेष्वतिशक्तिमान् । अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः । दैवोपहतकश्चैव दैवनिन्दक एव च । दुर्भिक्षव्यसनोपेतो बलव्यसनसङ्कुलः । स्वदेशस्थो बहुरिपुर्युक्तः कालेन यश्च ह । सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी । एते सन्धिं न कुर्वीत विगृह्णीयात्तु केवलम् । परस्परापकारेण पुंसां भवति विग्रहः । आत्मनोऽभ्युदयाकाङ्क्षी पीड्यमानः परेण वा । देशकालबलोपेतः प्रारभेतेह विग्रहम् । राज्यस्त्रीस्थानदेशानां ज्ञानस्य च बलस्य च । अपहारो मदो मानः पीडा वैषयिकी तथा । ज्ञानात्मशक्तिधर्माणां विघातो दैवमेव च । मित्रार्थञ्चापमानश्च तथा बन्धुविनाशनम् । भूतानुग्रहविच्छेदस्तथा मण्डलदूषणम् । एकार्थाभिनिवेशित्वमिति विग्रहयोनयः । सापत्न्यं वास्तुजं स्त्रीजं वाग्जातमपराधजम् । वैरं पञ्चविधं प्रोक्तं साधनं प्रशमं नयेत् । किञ्चित्फलं निष्फलं वा सन्दिग्धफलमेव च । तदात्वे दोषजननमायत्याञ्चैव निष्फलम् । आयत्याञ्च तदात्वे च दोषसञ्जननं तथा । अपरिज्ञातवीर्य्येण परेण स्तोभितोऽपि वा । परार्थं स्त्रीनिमित्तञ्च दीर्घकालं द्विजैः सह । अकालदैवयुक्तेन बलोद्धतसखेन च । तदात्वे फलसंयुक्तमायत्यां फलवर्जितम् । आयत्यां फलसंयुक्तं तदात्वे निष्फलं तथा । इतीमं षड्विधं न कुर्य्यादेव विग्रहम् । तदात्वायतिसंशुद्धं कर्म राजा समाचरेत् । हृष्टं पुष्टं बलं मत्वा गृह्णीयाद्विपरीतकम् । मित्रमाक्रन्द आसारो यदा सुदृढभक्तयः । परस्य विपरीतश्च तदा विग्रहमाचरेत् । विगृह्य सन्धाय तथा सम्भूयाथ प्रसङ्गतः । उपेक्षया च निपुणैर्यानं पञ्चविधं स्मृतम् । परस्परस्य सामर्थ्यविघातादासनं स्मृतम् । अरेश्च विजिगीषोश्च यानवत् पञ्चधा स्मृतम् । बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन् । द्वैधीभावेन तिष्ठेत काकाक्षिवदलक्षितः । उभयोरपि सम्पाते सेवेत बलवत्तरम् । यदा द्वावपि नेच्छेतां संश्लेषं जातसंविदौ । तदोपसर्पेत् तच्छत्रुमधिकं वा स्वयं व्रजेत् । उच्छिद्यमानो बलिना निरुपायप्रतिक्रियः । कुलोद्गतं सत्यमार्य्यमासे-

वेत बलोत्कटम्। महर्षनोपासितकता नित्यं तद्भावभाविता। तत्कारितप्रश्रयिता वृत्तं संश्रयिणः स्मृतम्” अग्निपु०२३८अ०। अधिकं कामन्द० नीतिशास्त्रे दृश्यम्।

**षाण्मातुर** पु० षस्णां मातृणामपत्यम् अण् उदादेशे रपरः। कार्त्तिकेये तस्य कृत्तिकाख्यिकं, गङ्गा पृथिवी पार्वती चेति षट् मातरः पुराणेषु प्रसिद्धाः। अग्निकुमारखण्डे तु तस्य षस्णां सप्तर्षिपत्नीनां मातृत्वं दर्शितम्।

**षाल्वण्लिक** त्रि० षत्वणत्वे अधिकृत्य कृतो ग्रन्थः ठक्। षत्वणत्वप्रतिपादके ग्रन्थे सि० कौ०।

**षाण्मासिक** न० षष्ठे मासे भवः ठञ्। मृतस्य एकाहेन षष्ठमासे कर्त्तव्ये श्राद्धभेदे “आद्यं षाण्मासिके तथेति” स्मृतिः “एकाहेन तु षण्मासे तस्य विधानम्”ति०त०रघु०।

**षाध** सिद्धौ स्वा० दि० च पर० अक० अनिट्। साध्नोति साध्यति असात्सीत् सिषाधयिषति। [ति असषात्त्वत् त।

**षान्त्व** सामयुक्तसम्पादने अद०चु०उभ०सक० सेट्। सान्त्वयति

**षि** बन्धे स्वा० क्र्या० च उ०सक० अनिट्। सिनोति सिनुते सिनाति सिनीते असैषीत्। असेष्ट। [षत् त। सिक्तः

**षिच** आर्द्रीकरणे तु०मु०उभ०सक०अनिट्। सिञ्चति ते असि-

**षिट** अनादरे स्वा० पर०सक० सेट्। सेटति असेटीत्।

**षिद्ग** पु० षिट-गन् तस्य नेत्त्वम् पृषो०। १षिटे (लम्पट) २कामुके हेमच०। [षीत्-असैत्सीत्। सिद्धः।

**षिध** माङ्गल्ये अक० शासने सक० उदित् सेट्। सेधति असे-

**षिध** गतौ स्वा०पर०सक० सेट्। सेधति असेधीत् सेधितः।

**षिध** सिद्धौ दिवा० पर० अक० अनिट् क्त्वा वेट्। सिध्यति असैत्सीत् सिधि साधयति। सिषाधयिषति।

आ+राजाज्ञयाऽवरोधे सक०। आसेधः।

उत्+उच्चतायाम् अक०। उत्सेधः।

नि+निवारणे सक०। निषेधः।

परि+निवारणे सक०। परिषेधः।

प्रति+निवारणे सक०। प्रतिषेधः।

वि+आ+विशेषेण निषेधे। व्यासेधः।

वि+प्रति+विरुद्धत्वे व्याघाते। विप्रतिषेधः।

**षिम्भ** हिंसने सक० दीप्तौ अक० स्वा० पर० सेट् क्त्वा वेट्। सिम्भति असिम्भीत्।

**षिम** हिंसने स्वा०पर० सक० सेट्। सेमति असेमीत्।

**षिल** उञ्छ तत्समस्वेनात् अत्र आदाने तुदा०पर०सक० सेट्। सिलति असेलीत्। [षीत् स्यू तः सीवनं सेवनम्।

**षिव** तन्तुविस्तारे दि०प०सक०सेट् क्त्वा वेट्। सीव्यति असे-

**षु** हरात्व्यावनरूपे सन्धाने सोमादेः पीड़ने मन्थने च स्वा० उ० सक०स्नाने अक०अनिट् लुङि पर० सेट्। सुनोति सुनुते असावीत् असोष्ट। सोता

**षु** गतौ भ्वा०उभ०सक०अनिट्। सवति ते असौषीत् असोष्ट।

**षु** प्रसवे ऐश्वर्ये च भ्वा०प०सक०अनिट्। सवति असौषीत्।

**षु** ऐश्वर्ये प्रसवे च अदा० पर० सक० सेट् लिटि नित्येट्। सौति असावीत्-असौषीत्। सुषुविव।

**षु** पु० सु-बा० ड् पृषो० षत्वम्। गर्भविमोचने एकाक्षरकोषः

**षुट्ट** अनादरे चु०उभ० सक० सेट्। सुट्टयति ते असुषुट्टत् त।

**षुन्भ** दीपने अक०हिंसने स०भ्वा०प०सेट्। सुम्भति असुम्भीत्

**षुर** दीप्तौ अक० ऐश्वर्ये स०तु०प० सेट्। सुरति असोरीत्।

**षुह** तृप्तौ अक०क्षमायां सक०दि०पर०सेट्। सुह्यति सुहत् असुहत्। [सुवे असविष्ट असोष्ट।

**षू** प्रसवे गर्भविमोचने च अदा० आत्म० सक० वेट्। सूते

**षू** प्रसवे दि०आ०स०वेट्। सूयते असविष्ट-असोष्ट ओदित् सूनः

**षू** क्षेपे प्रेरणे च तुदा० पर० सक० सेट्। सुवति असावीत्।

**षूद** निवारणे भ्वा०आ० सक० सेट्। सूदते असूदिष्ट।

**षूद** मारणे भ्वा० पर० सक० सेट्। सूदति असूदीत्।

**षूद** क्षरणे अक० प्रतिज्ञायां निरासे च सक० अद०चु० उभ० सेट्। सूदयति ते असुषूदत् त। [रिष्ट ईदित् सूर्णः।

**षूर** क्षमे अक० हिंसने स० दि०आ०सेट्। सूर्यते असू-

**षूर्क्ष** अनादरे भ्वा० पर० सक० सेट्। सूर्क्षति असूर्क्षीत्।

**षूर्ष्य** ईर्ष्यायां भ्वा० पर० सक० सेट्। सूर्ष्यति असूर्ष्यीत्।

**षूष** प्रसवे भ्वा० पर० सक० सेट्। सूषति असूषीत्।

**षृन्भ** हिंसने भ्वा० पर० सक० सेट्। सृम्भति असृम्भीत्।

**षृभ** हिंसने भ्वा० पर० सक० सेट्। सर्भति असर्भीत्। षृन्भ षृभधातू पाणिनीयगणपाठे मूर्द्धन्यादितया पठितौ। तेन सोपदेशत्वात् षति निमित्ते षत्वम्। कविकल्पद्रुमे तु दन्त्यादितया पठितौ। तेन षति निमित्ते न षत्वम्। तन्मतम् अपाणिनीयत्वादुपेक्ष्यम्।

**षेक** सर्पणे भ्वा० आत्म० सक०सेट् ऋदित् चङि न ह्रस्वः। सेकति असेकीत्। [ह्रस्वः। सेकते असेकिष्ट।

**षेल** चालने गतौ च भ्वा० पर० सक० सेट् ऋदित् चङि न

**षेव** आराधने उपभोगे आश्रये च भ्वा० उभ०सक०सेट् ऋदित् चङि न ह्रस्वः। सेवति सेवते असेवीत् असेविष्ट।

**षै** क्षये भ्वा० पर० अक० अनिट्। सायति असासीत्।

**षो** नाशे दि०पर० सक० अनिट्। स्यति असात्-असासीत्।

अव+समाप्तौ अवसानक् स्थाने सक० अवसीयते।

अधि+अव+ उत्साहे अक० निश्चय स्थाने सक० अध्यवस्यति। वि+अव+विशेषेण निश्चये सक० उद्यमे अक० व्यवस्यति। अनु+वि+अव स्थानस्थाने अनुव्यवसायः घटमहं जानामीत्यादिरूपः। [षड्‌दन्तयोग्यवयवस्के वृषादौ।

**षोडत्** पु०षट् दन्ता यस्य दन्तस्य दत् षस्यउत्त्वं दस्य डुत्वम्।

**षोडशन्** त्रि० ब०व० षडधिका दश षस्यउत्त्वं दस्य डुत्वम्। (षोल) १संख्याभेदे २तत्सङ्ख्यान्विते च।

**षोडश** पु० षोडशानां पूरणः डट्। येन षोडशसङ्ख्या पूर्य्यते १तस्मिन्। चन्द्रमण्डलस्य २षोडशभागरूपकलायां ३त्रिपुरासुन्दर्य्याञ्च स्त्री ङीप्। "काली तारा महाविद्या षोडशी भुवनेश्वरी" तन्त्रसा०।

**षोडशक** न० षोडश परिमाणमस्य कन्। षोडशसङ्ख्याते वस्तुनि "भूम्यासनं जलं वस्त्रं प्रदीपोऽन्नं ततः परम्। ताम्बूलच्छत्रगन्धाश्च माल्यं फलमतः परम्। शय्या च पादुका गावः काञ्चनं रजतं तथा। दानमेतत् षोडशकं प्रेतस्योद्दिश्य दीयते" शु०त० उक्तेषु प्रेतोद्देशेन दीयमानेषु २षोडशसु भूम्यादिषु "स्वर्णं रौप्यं तथा ताम्रं कांस्यं गावो गजा हयाः। भूयः भूमिर्द्गृहो वस्त्रं शय्या चैवासपानकौ। दासश्च पितृयज्ञेषु दानं षोडशकं मतम्" इति वायुपुराणोक्तेषु पितृकृत्येषु देयेषु ३स्वर्णादिषु षोडशसु च।

**षोडशभुजा** स्त्री षोडश भुजा यस्याः। दुर्गामूर्त्तिभेदे "यदा तु षोडशभुजां महामायां प्रपूजयेत्। दुर्गातन्त्रेण मन्त्रेण विशेषं तत्र वै शृणु। कन्यायां कृष्णपक्षस्य एकादश्यामुपोषितः। द्वादश्यामेकभक्तन्तु नक्तं कुर्य्यात् परेऽहनि। चतुर्दश्यां महामायां बोधयित्वा विधानतः। गीतवादित्रनिर्घोषैर्नानानैवेद्यवेदनैः। अयाचितं बुधः कुर्य्यात् उपवासं परेऽहनि। एवमेव व्रतं कुर्य्यात् यावद्वै नवमी भवेत्" कालिकापु० ६३अ०।

**षोडशमातृका** स्त्री ब०व० षोडशसंख्या मातरः स्वार्थे क। "गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः। शान्तिः पुष्टिर्धृतिस्तुष्टिः कुलदेवात्मदेवता" इत्युक्तासु गौर्य्यादिषु षोडशसु मातृकासु।

**षोडशर्त्विज्** पु०कर्म०। होत्रादिषु षोडशसु ऋत्विक्षु ते च अच्छावाकशब्दे ८५ पृ० दर्शिताः। तत्साध्यश्च यागः सोमयागादिः सत्रयागश्च।

**षोडशाङ्ग** पु० षोडश द्रव्याणि अङ्गान्यस्य। "गुग्गुलं सरलं दारु पत्रं मलयसम्भवम्। ह्रीवेरमगुरुं कुष्ठं गुडं सर्जरसं घनम्। हरीतकीं नखीं लाक्षां जटामांसीञ्च शैलजम्। षोडशाङ्गं विदुर्धूपं देवे पैत्रे च कर्मणि" इत्युक्ते गुग्गुल्वादिषोडशद्रव्यरचिते धूपे तन्त्रसा०।

**षोडशाङ्घ्रि** पु०षोडश अङ्घ्रयश्चरणा यस्य। कर्कटे हेमच०

**षोडशांशु** पु० षोडश अंशवो यस्य। शुक्रग्रहे शब्दमा०। षोडशार्चिरप्यत्र।

**षोडशार** न०षोडश अराः कोणास्त इव वा यस्य। १षोढशदलयुक्ते कमले तन्त्रोक्ते २यन्त्रभेदे च। तुलादानाद्युक्ते ३चक्रभेदे षोडशारचक्रनिर्माणप्रकारस्तु तुलादानादिपद्धतौ विधानपारिजाताद्युक्तोऽस्माभिर्दर्शितो यथा "गुरुर्वेदिमध्ये त्रिहस्तदीर्घविस्तारं चतुरस्रं प्रसाध्य तत्र प्राक्पश्चिमयोर्दक्षिणोत्तरतश्च नव नव रेखाः कृत्वा चतुःषष्टिकोष्ठकं मण्डलं कुर्य्यात्। तत्र च सर्वाणि कोष्ठानि नवाङ्गुलदीर्घायामानि सम्पद्यन्ते। तत्र बाह्यासु पङ्क्तिषु चतुर्दिक्षु मध्ये पार्श्वयोः द्वे द्वे कोष्ठे परित्यज्य चत्वारि कोष्ठानि मार्जयित्वा चतुःकोष्ठानामेकतां सम्पाद्य तत्तत्संलग्नोपान्त्यपङ्क्तिषु द्वे द्वे मध्यकोष्ठे पार्श्वयोः त्रीणि त्रीणि कोष्ठानि त्यक्त्वा मार्जयेत् न चतुर्दिक्षु षट् षट् कोष्ठात्मकानि चत्वारि द्वाराणि जायन्ते। ततो मध्यस्थानि षोडश कोष्ठानि प्रतिदिशं चत्वारि चत्वारि कोष्ठानि परित्यज्य मार्जयेत्। ततो बाह्यपङ्क्तिषु एकैकं कोणगं कोष्ठमुत्सृज्य कोणकोष्ठद्वारपीठान्तरालवर्त्तीनि पञ्च पञ्च कोष्ठानि प्रतिदिशं मार्जयेत्। तेन मध्यचतुरस्रपीठस्य पादाः भवन्ति। ततो मध्यपीठमारभ्य क्रमशश्चत्वारि वृत्तानि कुर्य्यात्। तत्रादौ चतुरङ्गुलो द्वितीयेऽष्टाङ्गुलस्तृतीये चतुर्विंशत्यङ्गुलः चतुर्थे च षड्‌विंशत्यङ्गुलो व्यासः। तत्रादौ चतुरङ्गुलव्यासकं वृत्तं कर्णिकारूपं पीतेन रजसा पूरयित्वा कर्णिकावधि रेखां सितेन रजसा विदध्यात्। तद्बहिरष्टाङ्गुलव्यासे द्वितीयवृत्ते क्रमेण पीतरक्तसितरजोभिः सम्पादितमध्यमूलाग्राणि षोडश केसराणि कृत्वा केसरावधिरेखां सितेनैव रजसाङ्गुलोन्नतां कुर्य्यात्। ततस्तद्बहिश्चतुर्विंशत्यङ्गुलव्यासे तृतीयवृत्ते अष्टसु दिक्षु अष्टौ पत्राणि सितरजसा विधाय रक्तान्यपि कुर्य्यात्। ततो दलान्तरेषु सितेन रजसा रेखां विधाय दलमध्यानि कृष्णेन रजसा पूरयेत्। तद्बहिरेकाङ्गुलान्तरालं बहिर्वृत्तस्य चतुर्थरेखां सितरजसा संपाद्य तृतीयचतुर्थवृत्तद्वयान्तरस्थानेषु

परितोऽष्टदलायततद्बहिःस्त्रिषु षोडशभिः पत्रैः षोडशधा विभज्य प्रतिभागं यथाकारान् षोडशारान् श्यामपीतारुणश्वेतरजोभिः कल्पयित्वा तन्मध्यं यथायोगं रजोभिः पूरयेत् । तद्बहिः सितपीतारुणश्यामहरिताः पञ्च रेखाः क्रमशो लिखेत् । तद्बहिः पीठसेतच्चतुरस्रं यथाशोभं रजोभिरलङ्कृत्य पीठावधिरेखां सितेन रजसा कृत्वा द्वारसेतूंश्च पूर्वादितः पीतश्वेतश्यामहरितरजोभिः पूरयेत् । तत आग्नेयादिकोणस्थकोणचतुष्टयं क्रमेण लोहितहरितश्यामधवलैः पूरयित्वा आग्नेयादिपीठपादचतुष्टयं पञ्चकोणात्मकं क्रमात् सितरक्तपीतकृष्णरजोभिः पूरयेत् । ततः सितेन रजसाङ्कुशोपेतेन बहिश्चतुरस्ररेखां कुर्य्यात् । ततः प्राच्यां वज्रम्, आग्नेय्यां शक्तिं, दक्षिणे दण्डं, नैरृत्यां खड्गं, पश्चिमायां पाशं, वायव्यां ध्वजं, कौवेर्य्यां गदाम्, ऐशान्यां शूलं तद्वामे चक्रं, पाश्वदक्षिणे पद्मञ्च लिखेत्" ।

**षोड़शिन्** पु॰ षोडश कला विद्यन्तेऽस्य इनि । १सोमे २यज्ञाङ्गे तद्यागसोमरसस्थापनपात्रे च "अतिरात्रे षोडशिनं गृह्णातीति" श्रुतिः "षोडशिनः पात्रं खादिरं चतुरस्रम्" कात्या॰श्रौ॰ ९।२ कर्कधृतिः ।

**षोडशोपचार** पु॰ ब॰ व॰ षोडशसङ्ख्याता उपचाराः । "आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् । मधुपर्काचमस्नानं वसनाभरणानि च । गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथा" इत्युक्तेषु षोडशसु पूजाङ्गद्रव्येषु ।

**षोढा** अव्य॰ षट् प्रकाराः धाच् षषउत्वं धस्य ढुत्वम् । षट्सु प्रकारेषु ।

**षोढान्यास** पु॰ षोढा षट्प्रकारो न्यासः । तन्त्रोक्ते षट्प्रकारन्यासभेदे षोढान्यासप्रकारो यथा वीरतन्त्रे "केवलां मातृकां कृत्वा मातृकां तारसंपुटाम् । मातृकापुटितं तारं न्यसेत् साधकसत्तमः । श्रीबीजपुटितां तान्तु मातृकापुटितं तु तत् । कामेन पुटितां देवीं तत्पुटं काममेव च । शक्त्या च पुटितां देवीं शक्तिञ्च तत्पुटां न्यसेत् । क्लीं द्वन्द्वञ्च पुनर्न्यस्य । कूर्च्चद्वन्द्वञ्च पूर्ववत् । मूलेन पुटितां देवीं तत्पुटं मन्त्रमेव च । अनुलोमविलोमेन न्यस्य मन्त्रं यथाविधि । मूलेनाष्टशतं कुर्य्यात् व्यापकं तदनन्तरम्" । कालीतारादिषोढान्यासास्तन्त्रसारे दृश्याः । [कीत् घटादि॰ स्तकयति ।

**ष्टक** प्रतीघाते भ्वा॰ पर॰ सक॰ सेट् । स्तकति अस्ता(स्त)-

**ष्टग** संवरणे भ्वा॰प॰सक॰ सेट् एदित् सिचि न वृद्धिः घटा॰। स्तगति अस्तगीत् । [नीत् अस्तनीत् स्ता(स्त)नयति ।

**ष्टन** शब्दे भ्वा॰पर॰ अक॰ सेट् वा घटा॰ । स्तनति अस्ता-

**ष्टभ** स्तम्भे अक॰ स्तम्भने सक॰ भ्वा॰ आत्म॰ सेट् इदित् । स्तम्भते अस्तम्भिष्ट ।

**ष्टम** वैकल्ये अद॰ चु॰उ॰अ॰ सेट् । स्तमयति ते अतस्तमत् त

**ष्टम** वैकल्ये अक॰ भ्वा॰ पर॰ सेट् । स्तमति अस्तमीत् ।

**ष्टिघ** आभियोगे स्वा॰आत्म॰सक॰ सेट् । स्तिघ्नुते अस्तेघिष्ट ।

**ष्टिप** क्षरणे भ्वा॰आत्म॰अक॰ सेट् ऋदित् चङि न ह्रस्वः । स्तेपते अस्तेपिष्ट । अतिष्टेपत् त ।

**ष्टिम** क्लेदे दि॰प॰अक॰ सेट् । स्तिम्यति अस्तेमीत् स्तेमनम्

**ष्टीम** क्लेदे दि॰प॰अ॰सेट् । स्तीम्यति अस्तीमीत् स्तीमनम् ।

**ष्टु** स्तुतौ अदा॰उ॰ सक॰अनिट् सिचि सेट् लिटि नित्येट् । स्तौति स्तवीति स्तुतः स्तुवीतः स्तुते स्तुवीते सि॰कौ॰ मुग्धबोधमते आर्धाति न ईट् स्तुते इत्येवेति भेदः । अस्तावीत् अस्तोष्ट । तुष्टुविव । तादावर्द्धधातुके नेट् । स्तोता स्तविता । स्तोष्यति स्तुतः ।

**ष्टुच** प्रसादे अक॰ भ्वा॰ आत्म॰ सेट् । स्तोचते अस्तोचिष्ट ।

**ष्टुभ** स्तम्भे अक॰ स्तम्भने सक॰ भ्वा॰आत्म॰ सेट् क्त्वा वेट् । स्तोभते अस्तोभिष्ट । [अतुष्टूपत् त स्तूपः ।

**ष्टूप** उच्छ्राये अद॰ चु॰ उभ॰ अक॰ सेट् । स्तूपयति ते

**ष्टूप** उच्छ्राये दि॰पर॰अक॰सेट् । स्तूप्यति इरित् अस्तूपत् अस्तूपीत् ।

**ष्टृक्ष** गतौ भ्वा॰प॰स॰सेट् । स्तृक्षति अस्तृक्षीत् नरीष्टृक्ष्यते

**ष्टृह** वधे तु॰प॰सक॰वेट् । स्तृहति अस्तर्हीत् अस्तृक्षत् ।

**ष्टृह** वधे तु॰आत्म॰सक॰वेट् । स्तृहति अस्तृहीत् अस्तृक्षत्

**ष्टेप** क्षरणे भ्वा॰ आ॰ अक॰ सेट् ऋदित् चङि न ह्रस्वः । स्तेपते अस्तेपिष्ट ।

**ष्टै** वेष्टने सक॰ भ्वा॰ पर॰ अनिट् । स्तायति अस्तासीत् ।

**ष्ट्यै** संहतौ ध्वनौ च अक॰ भ्वा॰ पर॰ अनिट् । स्त्यायति । अस्त्यासीत् इत्येके । ष्ट्यायति इत्येवेति ।

**ष्ठग** संवरणे भ्वा॰ पर॰ सक॰ सेट् घटा॰ सिचि न वृद्धिः । स्थगति अस्थगीत् ।

**ष्ठल** स्थितौ भ्वा॰प॰अक॰ सेट् ज्वला॰। स्थलति अस्थालीत् ।

**ष्ठस** निरासे दि॰प॰स॰सेट् । स्थस्यति अस्थासीत्-अस्थसीत् ।

**ष्ठा** गतिनिवृत्तौ भ्वा॰पर॰ अक॰ अनिट् । तिष्ठति अस्थात् ।

अधि+आधारतयावस्थितौ सक॰ ।

अनु+करणे अनुष्ठानम् ।

अव+अवस्थाने अवस्थाने ।

उद्+ऊर्द्ध्वचेष्टायां पा० आसनादुत्तिष्ठति उत्पत्तौ आ० ग्रामादुत्तिष्ठते (उत्पद्यते)।
उप+सेवने सक० आ० उपतिष्ठते देवम्।
नि+नितरां स्थितौ अक० नितष्ठौ मरणे च निष्ठा।
प्र+गमने सक० प्रस्थानम्।
प्रति+सत्कारभेदे प्रतिष्ठा।
प्रति+अव+प्रतिपक्षतयाऽवस्थाने आत्म० प्रत्यवतिष्ठते।
वि+अव+नियमभेदे आ० व्यवतिष्ठते व्यवस्था।
सम+सम्यक् स्थितौ नाशे च संस्था संस्थितः।

**ष्ठिव** निरासे (मुखेन श्लेष्मादेर्वमने) भ्वा० पर० सक० सेट्। ष्ठीवति अष्ठेवीत्। ष्ठे(ष्ठी)वनम् उदित् क्त्वा वेट्। अन्यार्थे दिवादित्वमपि ष्ठीव्यति। मोपदेशपर्युदासे ष्ठस्य दीर्घमध्ययोर्म्मपम्। [ष्ठीवति अष्ठीवीत् ष्ठीवनम्।

**ष्ठीव** निरासे (श्लेष्मादेर्मुखेन वमने) भ्वा० पर०सक०सेट्।

**ष्ठ्यूत** त्रि० ष्ठिव-क्त ऊठ्। १निरस्ते २वान्ते च।

**ष्णस** निरासे दि०पर०सक० सेट् उदित् क्त्वा वेट् वा घटा० मुदित्। स्नस्यति अस्नसत्। स्ना(स्न)सयति।

**ष्णा** शौचने अदा० पर० सक० अनिट्। स्नाति अस्नासीत्।

**ष्णिह** प्रीतौ दि० पर० सक० ऊदित् वेट्। स्निह्यति लृदित् अस्निहत् स्नेहिता स्नेढा स्नेग्धा। [असिष्णिहत् त।

**ष्णिह** स्नेहयुक्तकरणे चु०उभ० सक० सेट्। स्नेहयति ते।

**ष्णु** स्तुतौ अदा०प० सक०सेट्। स्नौति अस्नावीत् अस्नविष्ट।

**ष्णुच** सेवने भ्वा०आ०सक०सेट्। स्नोचते अस्नोचिष्ट सुष्णुचे।

**ष्णुस** भक्षे दि०प०सक० सेट्। स्नुस्यति अस्नोसीत् सुष्णोस।

**ष्णुह** उद्गारे दि०पर० सक० ऊदित् वेट्। स्नुह्यति लृदित् अस्नुहत्। स्नोहित स्नोढा।

**ष्णै** वेष्टे भ्वा०पर०सक० अनिट्। स्नायति अस्नासीत्। ण्यन्तो द्वत्वे ष्णापयति असिष्णपत्। नु(स्नु)पयति उपसृष्टस्य प्रस्नापयति।

**ष्मि** ईषद्धासे भ्वा०आ०अ०अनिट्। स्मयते अस्मेष्ट सिष्मिये। कर्त्तृजन्ये विस्मये णिचि इत आत् पुक् च आ० विस्मापयते तद्भिन्नस्य विस्माययतीत्येव।

**ष्वक्क** सर्पणे भ्वा० आत्म० सक० सेट्। स्वक्कते अस्वक्किष्ट।

**ष्वद** स्वादे छेदने च चु० उभ० सक० सेट्। स्वादयति ते असिष्वदत् त।

**ष्वद** प्रीतौ लेहने च भ्वा०आ०सक०सेट्। स्वदते अस्वदिष्ट।

**ष्वन्ज** आलिङ्गने भ्वा०आ०स० अनिट्। स्वजते अस्वङ्क्त।

**ष्वप** शयने निद्रायाञ्च अदा०स्वपा०जक्षा०पर०अक० अनिट्। स्वपिति अस्वाप्सीत् सुष्वाप। [षुपति ते असिष्वपत् त।

**ष्वर्त्त** गतौ सक० दुःखेन जीवने अक० चु०उ० सेट्। स्वर्त्त-

**ष्वष्क** गतौ भ्वा० आत्म० सक० सेट्। ष्वष्कते अष्वष्किष्ट। षोपदेशपर्युदासे स्वक्कवत् ष्वष्कस्यापि पठनात् ष्वष्कते इत्येवेत्याहुः।

**ष्विद** मोहे स्नेहे च अक० मोचने सक०भ्वा० आ० लुङि उ० सेट्। स्वेदते अस्विदत् अस्वेदिष्ट। [असिष्विदत्।

**ष्विद** गात्रप्रक्षरणे अक०दि०पर० अनिट्। स्विद्यति लृदित्

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य-सङ्कलिते वाचस्पत्याभिधाने षकारादि शब्दार्थसङ्कलनम्।

---

## स

**सकार** जग्घवर्णभेदः तस्योच्चारणस्थानं दन्तमूलं तस्योच्चारणे आभ्यन्तरप्रयत्नः विवृतं जिह्वाग्रेण अर्द्धस्पर्शनेन चोच्चार्यमाणत्वात् अर्द्धस्पृष्टम्। बाह्यप्रयत्ना विवारश्वासाघोषाः महाप्राणश्च अस्य ध्येयरूपं यथा "सकारं शृणु चार्वङ्गि! शक्तिबीजं परात्परम्। कोटिविद्युल्लताकारं कुण्डलीत्रययुतम्। पञ्चदेवमयं देवि! पञ्चप्राणात्मकं सदा। रजःसत्त्वतमोयुक्तं त्रिबिन्दुसहितं सदा" कामधेनुत०। तस्याधिष्ठातृदेवताध्यानं यथा "शुक्लाम्बरां शुक्लवर्णां द्विभुजां रक्तलोचनाम्। श्वेतचन्दनलिप्ताङ्गीं शुक्लहारोपशोभिताम्। गन्धर्वगीयमानाञ्च सदानन्दमयीं पराम्। चतुर्वर्गप्रदां नित्यां भक्तानन्दविवर्द्धिनीम्। एवं ध्यात्वा सकारन्तु तन्मन्त्रं दशधा जपेत्" वर्णोद्धारत०। अस्य वाचकशब्दाः "साहंसः सुयशा विष्णुर्व्योमचन्द्रसंज्ञकः। जगद्बीजं शक्तिनामा सोऽहं वेदवती भृगुः। प्रकृतिरीश्वरः शुद्धः प्रभा श्वेता कुलोज्ज्वलः। दक्षपादोऽङ्गतं ब्राह्मी परमात्मा परोऽव्ययः। सुरूपा च सुयोगो गौः कलकण्ठो हकोदरी। प्राणाद्या च परा देवी लक्ष्मीः सोमो हिरण्यभूः। दुर्गोत्तारणसञ्ज्ञो हि क्रोधो मूर्त्तिर्मनोहरः" वर्णाभिधा०। मातृकान्यासेऽस्य दक्षपादे न्यास्यता। काव्यादौ प्रयोगे फलं सुखम् "सः सौख्यं हस्य खेदम्" इ०र०टी०। मोपदेशधातूनां प्रयोगे दन्त्यादित्वम् "षकारजः सकारस्तु उक्तः सति निमित्ते पुनः षत्वम्।

**स** पु० षो-ड। १विष्णौ एकाक्षरकोषः। २सर्पे ३ईश्वरे शङ्कर० ४विहगे पुंस्त्री० एकाक्षरकोषः। समासे [illegible]

५सहार्थे ६समानार्थे च यथा सपितृक सरूप इत्यादि । "मौऽन्त्यगुरुः कथितोऽन्त्यलघुस्तः" छन्द० शास्त्रोक्ते ७अन्त्यगुरुके आदिलघुद्वयके त्रिवर्णगणे पु० । सगणोऽप्यत्र ।

**संक्षेप** पु० सम्+क्षिप-घञ् । भूयसोऽर्थस्य अल्पवाक्यादिना प्रकाशने भरतः । ल्युट् । तत्रार्थे न० । सर्वत्र समः स्थाने अरिपरे वा परसवर्णः सङ्क्षेपः ।

**संक्षोभ** पु० सम्+क्षुभ-घञ् । चाञ्चल्ये क्षोभे च वा ङ ।

**संग्राहिन्** पु० सम्+ग्रह-णिनि । १कुटजवृक्षे राजनि० । २संग्रहकारके ३धारके च । वा ङ् सङ्ग्राहीति रूपम् ।

**संघ** पु० सम्+हन-ड नि० । १समूहे २जन्तुसमूहे च अमरः अस्य वा ङ । सङ्घ इति वा रूपम् ।

**संघट्ट** पु० सम्+घट्ट-भावे अच् । १अन्योन्यविमर्दे २गठने च "रुद्राक्षरसंघट्ट प्रतिष्ठाज्ञानमेव च" ति०त० । ३लतायां स्त्री शब्दच० । ल्युट् । तत्रार्थे न० ।

**संघर्ष** पु० सम्+घृष-घञ् । १अन्योन्यदृढसंयोगे २स्पर्धायां ३संमर्दने च शब्दर० वा ङ ।

**संज्ञ** न० सम्+ज्ञा-क । १पीतकाष्ठे कालीयके गन्धद्रव्ये शब्दच० । सम्+ज्ञा-अङ् । २चेतनायां ३बुद्धौ ४आख्यायां ५हस्ताद्यैरर्थसूचने च स्त्री अमरः । ६गायत्र्यां ७सूर्यपत्न्याञ्च स्त्री मेदि० । वा ञ । दतंहतजानुके त्रि० शब्दमाला० ।

**संज्ञपन** सम्+ज्ञा-णिच्-पुक् मारणे सुक्षः ल्युट् । १मारणे अमरः । २ज्ञापने न सुक्षः । क्तिन् । संज्ञप्तिरप्यत्र स्त्री हेमच० वा ञ ।

**संज्ञासुत** पु० संज्ञायाः सूर्यपत्न्याः सुतः । शनैश्चरे ।

**संज्ञु** त्रि० सङ्गते जानुनी यस्य जानुस्थाने ज्ञुः । संहतजानुके अमरः । वा ञ ।

**संज्वर** पु० सम्+ज्वर-अप् । अग्निजाते तापे अमरः वा ञ ।

**संमर्द** पु० सम्+मृद-घञ् । अन्योन्यदृढसंयोगरूपे संघर्षे वा ञः

**संय** पु० स+यम्-ड । कङ्काले शब्दमा० ।

**संयत** त्रि० सम्+यम-क्त । १बद्धे अमरः २कृतशास्त्रोक्तनियमे च ।

**संयत्** स्त्री संयम्यतेऽत्र सम्+यम-आधारे क्विप् तुक् च । १युद्धे अमरः । कर्त्तरि क्विप् । २संयमनकर्त्तरि त्रि० ।

**संयत्वर** पु० सम्+यम-करप् तुक् च । १जन्तुसमूहे २वाच्यवत् त्रि० संक्षिप्तसा० ।

**संयद्वर** पु० ६त० । नियन्तॄणां वरे नृपे उज्ज्वलादि० ।

**संयद्वाम** पु० वामं संयाति सम्+या-शतृ पृषो० पूर्वनिपातः । आचार्यभेदे "एतं हि आचक्षते पुरुषं संयद्वाम इत्याचक्षते एतं हि सर्वाणि वामान्यभिसंयन्ति" छान्दो० उप० ।

**संयन्तृ** त्रि० संयच्छति सम्+यम-तृच् । नियन्तरि ।

**संयाम** पु० सम्+यम-घञ् वा वृद्धिः । व्रताङ्गतया पूर्वदिनकर्त्तव्ये १नियमभेदे अमरः २इन्द्रियनिग्रहे ३बन्धने च

**संयमन** न० सम्+यम-ल्युट् । १बन्धने २व्रतभेदे मेदि० ३चतुःशाले गृहे च भरतः । यम-णिच्-ल्यु । ४दमे पु० "वैवस्वतः संयमनः" स्मृतिः ।

**संयमनी** स्त्री संयम्यते बध्यतेऽत्र सम्+यम-आधारे ल्युट् । यमाधिष्ठितपुर्याम् मेदि० "अन्येऽपि ये संयमिन. संयमन्यामुपयान्ति ते" काशीख० ८अ० । यमसभावर्णनं भा०स० ८अ० द्रष्टव्यम् । संयमननगरपरत्वे न० "एतत् संयमनं पुण्यमतीवाद्भुतदर्शनम्" भा०व० १६३अ० ।

**संयमिन्** पु० सम्+यम-णिनि न वृद्धिः । १मुनिभेदे धरणिः २इन्द्रियसंयमयुते त्रि० गीता ।

**संयाव** पु० सम्यक् घृतादिभिर्यूयते मिश्र्यते गोधूमचूर्णाद्यत्र सम्+यु-आधारे घञ् । "संयावस्तु घृतक्षीरगुडगोधूमपाकजः" इत्युक्ते घृतादिना पक्वगोधूमचूर्णे शब्दच० ।

**संयुज्** त्रि० सम्यक् युनक्ति सम्+युज-क्विन् । १गुणादौ सिद्धा० २संयुक्ते च ।

**संयुक्त** त्रि० सम्+युज-क्त । १संयोगयुते पदार्थे २अव्यवधानोच्चारिते हलवर्णे च पा० ।

**संयुग** न० संयुज्यतेऽत्र सम्+युज-क न्यङ्क्वा० कस्य गः । युद्धे अमरः । तत्र साधु० खञ् । सांयुगीन रणसाधौ ।

**संयुत** त्रि० सम्+यु-क्त । संयुक्ते ।

**संयोग** पु० सम्+युज-घञ् । १मेलने क्रियाजन्ये द्रव्याश्रिते गुणभेदे २सम्बन्धमात्रे च "अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः । कीर्त्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः । तथोभयोः कर्मजन्यो भवेत् संयोगजोऽपरः । आदिमः श्येनशैलादिसंयोगः परिकीर्त्तितः । मेषयोः सन्निपातो यः स द्वितीय उदाहृतः । कपालतरुसंयोगात् संयोगस्तरुकुम्भयोः । तृतीयः स्यात् कर्मजोऽपि द्विधैव परिकीर्त्तितः । अभिघातो नोदनञ्च शब्दहेतुरिहादिमः । शब्दाहेतुर्द्वितीयः स्यात्" भाषा० "उदयात् प्राक् दशम्यास्तु योगः संयोग उच्यते । उपरिष्टात् प्रवेशस्तु तस्मात् तत् परिवर्जयेत्" ति०त० उक्ते उदयात् प्राक्दशम्याः योगे च ।

**संयोगपृथक्त्व** न० संयोगेन फलसम्बन्धभेदेन पृथक्त्वं नानारूपत्वं यत्र । एकस्यैव कर्मणो नित्यानित्यत्वप्रतिपादके मीमांसकोक्ते न्यायभेदे स च तन्त्रवा० दर्शितो यथा

"अग्नीषोमीयपशौ श्रूयते "खादिरे पशुं बध्नाति खादिरं वीर्य्यकामस्य यूपं कुर्वीत" । अत्र पशुबन्धनाय यूपो विहितः स च नित्यत्वेनावश्यकः यागसाधनत्वात् पशुकामनावतस्तु अन्यो यूपो विहितः स च कामनाधीनत्वादनावश्यकः । अत्र संशयः किं काम्य एव खादिरो नित्येऽपि स्यात् उत एकः खादिरः क्रतुपुरुषोभयार्थः उत काम्य एव खादिरो नित्यस्त्वन्यकाष्ठनिर्मित इति । तत्र काम्यनित्यप्रयोगाङ्गता न सम्भवति कामनाधीनत्वेन तस्यानावश्यकत्वात् नित्यस्यावश्यकः नह्येकस्यावश्यकत्वमनावश्यकत्वञ्च सम्भवति विरोधात् । तस्मात् काम्य एव खादिरः नित्यस्त्वन्यकाष्ठनिर्मितः । तदुक्तं शास्त्रदीपिकायाम् एतदधिकरणीयोदाहरणान्तरे "दध्ना जुहोति दध्नेन्द्रियकामस्ये"त्यधिकृत्य "पूर्वाधिकरणन्यायात् काम्यत्वेन श्रुतं दधि । अनित्यार्थमुपादेयमतोऽन्यन्नित्यमिष्यताम्" । अन्यद्द्रव्यान्तरं पूर्वाधिकरणन्यायात् प्रागुक्ताप्रणयनन्यायात् । माधवाचार्य्योऽपि "नित्येऽग्निहोत्रे पूर्वाधिकरणन्यायेन दधि न प्रयोक्तव्यं किन्तु अन्यदेव किञ्चित् द्रव्यम्" इत्याह । ननु नित्येऽपि खादिर एव श्रूयते अतो नित्य एकः खादिरः काम्यश्चान्यः खादिर इति यूपद्वयं विधीयते अन्यथा नित्ये खादिरत्वाभिधानं व्यर्थं स्यात् तथा च क विरोधः येनैकस्योभयार्थत्वे विरोधमाशङ्क्य समाहितमिति चेन्न खादिरेण वीर्य्यं कुर्य्यादित्यर्थकत्वपर्य्यवसन्नं खादिरत्वाभिधानं व्यर्थमिति तस्मान्नित्ये खादिराविधानात् काम्य एव खादिरः नित्यस्तु काष्ठान्तरीय इति प्राप्ते आह "एकस्य तूभयत्वे संयोगपृथक्त्वम्" सू॰ संयोगः सम्बन्धः एकस्य खादिरस्य नित्यत्वकाम्यत्वोभयरूपत्वे संयोगस्य पशुसम्बन्धस्य पृथक्त्वं परस्परनिरपेक्षेण पृथगभिधानं नियामकमिति शेषः । अयमाशयः यदि द्वयोरेकस्य साकाङ्क्षा तदा द्वयोरेकवाक्यता इह तु उभयमेव निराकाङ्क्षं तथा हि नित्यवाक्यं यूपस्य पशुबन्धनसम्बन्धे अलौकिकं किमपि नापेक्षते पशुबन्धनदृष्टफलत्वात् काम्यवाक्यमनुपन्यस्याभिधानाच्च । काम्यवाक्यमपि आश्रयसम्बन्धकरं किमपि प्रमाणं नापेक्षते सन्निधानादेवाश्रयलाभे हि तथा स्यात् पृथक्पृथक् संयोगस्य निरपेक्षेण वाक्यद्वयेनाभिधानात् कामनाभावे च खादिरं दृष्टफलद्वारा क्रतोरुपकरिष्यति पुरुषस्य वीर्य्यमप्याधास्यति । किन्त्वयं विशेषः कामनासत्त्वे तत्प्रकारेण पुरुषार्थस्तदभावेन च क्रत्वर्थ इति । तदुक्तम् "द्वयोरेकस्य साकाङ्क्षा भवेद् यदि तयोस्ततः । प्रकल्प्येतैकवाक्यत्वं निराकाङ्क्षमिहोभयमिति" तस्मादुभयार्थो खादिरतेति । ननु नित्य एव खादिरोऽस्तु खादिरमित्यादिनाऽङ्गस्य प्रशंसार्थं फलस्तुत्यर्थवादोऽस्तु यथा यस्य पर्णमयी जुहूर्भवति न स पापश्लोकं शृणोति" इत्यत्रेति किमेकस्योभयार्थत्वाङ्गीकारेणेति चेन्न तत्र जुह्वा प्राप्तावपि तन्निष्पादकद्रव्यविशेषणाभावात् तत्परिचायकत्वेनैव स्तुत्यर्थवादस्यौचित्यात् न चात्र तथा पूर्ववाक्यत एव खादिरत्वप्राप्तौ पुनः खादिरपदोपन्यासेनान्यस्य वीर्यसामर्थ्यकत्वबोधनेनैकप्रयोजनकत्वात् । एवं दध्ना जुहोति दध्नेन्द्रियकामस्य जुहुयादित्यादावपि उभयार्थता दध्नो बोध्या उभयत्र दध्नः कीर्त्तनात्" ।

**संयोगविरुद्ध** न॰ संयोगेन विरुद्धम् । द्रव्यान्तरसंयोगेन विरुद्धगुणाश्रये द्रव्यभेदे तच्च राजवल्लभेन दर्शितं यथा "शाकाम्लफलपिण्याककुलत्थलवणाम्लिकैः । करीरदधिमाषैश्च प्रायः क्षीरं विरुध्यते । प्राणहारी तु हारीतो हरिद्रालवणैः शृतः । करीरैर्लावकैर्भृष्टं विषं मायूरमामिषम् । वराहवसया भृष्टा बलाका तु हरत्यसून् । संयुक्ता सैव वारुण्या कुल्माषैश्च विरुध्यते । अविं क्षीरपाकेन मद्यस्तैलैः कणां त्यजेत् । मांसैरिक्षुविकारांश्च काञ्जिकैस्तिलशष्कुलीम् । कपोतः सार्षपे भृष्टो घृतं कांस्ये दशाहिकम् । विषं घृतसमं क्षौद्रं मधुना गगनाम्बु च । मूलकं माषसूपेन मधुना च न भक्षयेत् । एकत्र सर्वमांसानि विरुध्यन्ते परस्परम् । रात्र्यन्धशोषार्शदकोदराणां विस्फोटिकोन्मादभगन्दराणाम् । मूर्च्छामदाध्मानगलग्रहाणां पाण्ड्वामयस्याऽऽमविषस्य चैव । किलासकुष्ठग्रहणीगदानां शोथातिसारज्वरपीनसानाम् । सन्तानदोषस्य तथैव मृत्योर्विरुद्धमन्नं प्रवदन्ति हेतुम् । विरुद्धाहारजान् रोगान् विनिघ्नन्ति विरेचनम् । वमनं शमनं वापि पूर्वं वा हितसेवनम्" ।

**संयोजन** न॰ सम्+युज-णिच्-आधारादौ ल्युट् । १मैथुने हारा॰ । २सम्यग्योजने च । [नारेण क्षतयोजने पदार्थे

**संयोजित** त्रि॰ सम्+युज-णिच् क्त । क्षतमेलने पदार्थे-

**संरम्भ** पु॰ सम्+रभ-घञ्-मुम् च । १कोपे शब्दर॰ । २आटोपे त्रिका॰ । ३उत्साहे मेदि॰ ४वेगे च "अदृष्टसंरम्भमिवाम्बुवाहम्" इति कुमारः । [चिन्तने च ।

**संराधन** न॰ सम्+राध-ल्युट् । १सम्यक् सेवने २सम्यक्-

**संराव** पु॰ सम्+रु-घञ् । शब्दे अमरः ।

**संरूढ** त्रि० सम्+रुह–क्त । १प्रौढ़े २जाताङ्कुरे च मेदि० ।

**संरोध** पु० सम्+रुध-घञ् । १रोधने २क्षेपे च मेदि० ।

**संलग्न** त्रि० सम्+लग–क्त । मिलिते ।

**संलय** पु० संलीयते इन्द्रियव्यापारोऽत्र सम्+ली–आधारे अच् । १निद्रायां हेमच० । भावे अच् । २प्रलये च ।

**संलाप** पु० सम्+लप-घञ् । १परस्परकथने अमरः । प्रीत्या अन्योन्याक्तिप्रत्युक्तिभ्यां २भाषणे ३रहसि कथने च ।

**संवत्सर** पु० संवसन्ति ऋतवोऽत्र सम्+वस–सरन् । १वत्सरे ज्योतिषोक्ते इदादिपञ्चकान्तर्गते २वत्सरभेदे च । इदावत्सरशब्दे ९०६पृ० दृश्यम् । [राज्यावधिके तत्प्रवर्त्तितवत्सरे ।

**संवत्** अव्य० सम्+वस–क्विप् सलोपे तक् । विक्रमादित्य-

**संवदन** न० सम्+वद-ल्युट् । १आलोचने २वशीकरणे च मेदि० । सम्+वन-ल्युट् । संवननमप्यत्र रामाश्रमः ।

**संवर** न० सम्+वृ–करणे अप् । १जले । कर्त्तरि अच् । २दैत्यभेदे ३मत्स्यभेदे ४मृगभेदे च पुंस्त्री० ।

**संवर्त्त** पु० सम्यक् वर्त्तते परावर्त्ततेऽत्र सम्+वृत-णिच्-आधारे अच् । १प्रलयकाले अमरः । २स्मृतिकारकमुनिभेदे ३कर्कफलवृक्षे मेदि० ४मेघे शब्दच० ५मेघनायकभेदे च । "त्रिपुते याबकर्तं तु चतुर्भिः शोषिते क्रमात् । आवर्त्तं विद्धि संवर्त्तं पुष्करं द्रोणमद्भुतम् । आवर्त्तो निर्जलो मेघः संवर्त्तश्च बहूदकः । पुष्करो दुष्करजलो द्रोणः शस्यप्रपूरकः" ज्यो०त० ।

**संवर्त्तक** न० सम्+वृत–णिच्-ण्वुल् । १बलदेवलाङ्गले २वाडवानले पु० हेमच० । ततः स्वार्थे अच् । ३बलदेवे शब्दर० । [त्रिका० ।

**संवर्त्तकिन्** पु० संवर्त्तकं लाङ्गलभेदोऽस्त्यस्य इनि । बलरामे

**संवर्त्तिका** स्त्री सम्यग्वर्त्तिका सम्+वृत–ण्वुल् टापि अत इत्त्वं वा । १दीपादेः शिखायां २पद्मादेः केसरसमीपस्थे दले अमरः ३नवपत्रे मधुसूदनः ।

**संवर्द्धक** त्रि० सम्+वृध–णिच्-ण्वुल् । १सम्माननाकारिणि हेमच० २वृद्धिकारके च ।

**संवलित** त्रि० सम्+वल–क्त । मिलिते ।

**संवसथ** पु० संवसन्त्यत्र सम्+वस–आधारे अथच् । ग्रामे जनसमूहनिवासस्थाने अमरः ।

**संवह** पु० सम्यक् वहति सम्+वह–अच् । सप्तवायुमध्यवर्त्तिनि वायुभेदे आवहशब्दे १६४पृ० दृश्यम् ।

**संवार** पु० सम्+वृ–घञ् । शिक्षाग्रन्थोक्ते वर्णोच्चारणार्थे गलबिलसंकोचात्मके बाह्यप्रयत्नभेदे २सङ्गोपने च ।

**संवास** पु० संवसत्यत्र सम्+वस-घञ् । १मठे शब्दच० । पुरवासिनां पुराद्बहिर्नीसयोग्ये समाहृते २स्थाने जटा० ।

**संवाह** पु० संवाहयति सम्+वह–णिच्-अच् । अङ्गसंमर्दके भृत्ये जटा० । ण्वुल् । संवाहक तत्रैव ।

**संवाहन** न० सम्+वह–णिच्-ल्युट् । १भारादिवाहने २अङ्गसंमर्दने च मेदि० । [प्राप्त्या भयादिना वा जातोत्कण्ठे ।

**संविग्न** त्रि० सम्+विज-क्त । १उद्विग्ने इष्टवस्तुलाभाव तद्-

**संवित्ति** स्त्री सम्+विद-क्तिन् । १ज्ञाने शब्दमा० २प्रतिपत्तौ ३चेतनायां ४अङ्गीकारे ५बुद्धौ च मेदि० ।

**संविद्** स्त्री सम्+विद–सम्प० क्विप् । १ज्ञाने २प्रतिपत्तौ मेदि० । ३सम्भाषायां ४बुद्धौ ५क्रियाकारे ५युद्धे ६अङ्गीकारे च अमरः । ७नामनि ८आचारे ९सङ्केते १०तोषे ११समाधौ च शब्दच० ।

**संविदा** स्त्री संविद्यतेऽनया सम्+विद–क्विप् टाप् । भङ्गे (सिद्धि) "संविदासवयोर्मध्ये संविदैव गरीयसी" तन्त्रम् ।

**संविदित** त्रि० सम्+विद–क्त । १अङ्गीकृते २सम्यग्ज्ञाते च ।

**संविद्व्यतिक्रम** पु० संविदोऽङ्गीकारस्य व्यतिक्रमो यत्र । कृताङ्गीकारस्योल्लङ्घनहेतुके विवादभेदे वीरमि०तत्स्वरूपञ्च यथा "तस्य स्वरूपं व्यतिरेकमुखेन दर्शयति" नारदः "पाषण्डिनैगमादीनां स्थितिः समय उच्यते । समयस्यानपाकर्म तद्विवादपदं स्मृतमिति" । पाषण्डाः वैदिकमार्गद्वेषिणः क्षपणकादयः । नैगमाः सार्थिका वणिज इति मदनरत्ने । नैगमाः वेदप्रामाण्याभ्युपगन्तारः पाशुपतादय इति मिताक्षरायाम् । आदिशब्देन विद्वद्ब्राह्मणसमूहादीनां ग्रहणम् । समयस्यानपाकर्म व्यतिक्रमः समयापरिपालनमिति यावत् तद्व्यतिक्रमस्याख्यं विवादपदम्भवतीत्यर्थः । तद्रूपयोग्यार्थमाह बृहस्पतिः "वेदविद्याविदो विप्राः तेषां वृत्तिं प्रकल्पयेत्" इति । याज्ञवल्क्योऽपि "राजा कृत्वा पुरे स्थानं ब्राह्मण्यं न्यस्य तत्र तु । त्रैविद्यं वृत्तिमद्ब्रूयात् स्वधर्मः पाल्यतामिति" । ब्राह्मणानां समूहो ब्राह्मण्यम् । "ब्राह्मणमाणववाडवाद्यदिति" पा० सूत्रेण यत् । विद्याः वेदाः तिसृणां विद्यानां समाहारस्त्रिविद्यम् । त्रिविद्यमधीते इति । तेषां वृत्तिं प्रकल्पयेदित्यस्यार्थो बृहस्पतिनैव विवृतः "अनाच्छेद्यकरास्तेभ्यः प्रदद्यात् गृहभूमिकाः । मुक्तभाव्यश्च नृपतिर्लेखयित्वा स्वशासनम्" इति । अनाच्छेद्यकराः अपाहार्यकराः । एतदुक्तम्भवति । आगामिनृपतिभिरपाहार्य-

करा: तेभ्यो विसृष्टकराश्च स्वद्भूमिकाः प्रदद्यादिति। एवं नियुक्तैर्यत्कर्त्तव्यं तदाह याज्ञवल्क्यः "निजधर्माविरोधेन यस्तु सामयिको भवेत्। सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः" इति। निजधर्माविरोधेन श्रौतस्मार्त्तकर्माविरोधेन सामयिकः समयात्सम्पन्नो यो धर्मो गोप्रचारोदकरक्षणदेवगृहपालनादिरूपः सोऽपि यत्नेन रक्षणीयः। यश्च राज्ञा कृतो निजधर्माविरोधेनैव यः सामयिको धर्मो यावत्पथिकभोजनन्देयमस्माद्रात्रिमध्ये तुरगादयो न प्रस्थापनीया इत्येवंरूपः सोऽपि यत्नेन रक्षणीय इत्यर्थः। बृहस्पतिरपि "नित्यं नैमित्तिकं काम्यं शान्तिकं पौष्टिकन्तथा। पौराणां कर्म कुर्युस्ते सन्दिग्धे निर्णयं तथेति"। पौराणां पुरवासिनामित्यर्थः। एवं राजनियुक्तसमुदायविशेषस्य कार्य्यविशेष उक्तः। सर्वसमुदायानाञ्च कार्य्यमाह स एव "पाषण्डिगणानाञ्च सङ्केतः समयक्रिया। बाधाकाले तु सा कार्य्या धर्मकार्य्ये तथैव च। चाटचौरभये बाधाः सर्वसाधारणाः स्मृताः। तत्रोपशमनं कार्य्यं सर्वैर्नैकेन केनचिदिति"। गणानाञ्चेत्यत्र चशब्दः पाषण्डनैगमादीनां समुच्चयार्थः। ततश्च पाषण्डनैगमादीनां मिलनकरणमन्तरेण यद्युपद्रवो दुःपरिहरः धर्मकार्य्यं च दुःसाध्यं तदा पारिभाषिकी समयक्रिया सर्वैः संहतैः कार्य्या। चाटो ठकः। चाटचौरादिभ्यो भये प्राप्ते तदुपशमनं सर्वैः कार्य्यमित्यर्थः। धर्मकार्य्यमपि समूहैः कार्य्यमित्युक्तं तेनैव "सभाप्रपादेवगृहतडागारामसंस्कृतिः। तथाऽनाथदरिद्राणां संस्कारो यजनक्रिया। कुलायननिरोधश्च कार्य्यमस्माभिरंशतः। यत्रैतल्लिखितं पत्रे धर्म्या सा समयक्रिया। पालनीयाः समस्तैस्तैः समर्थो विसंवदेत्। सर्वस्वहरणं दण्डस्तस्य निर्वासनं पुरादिति"। सभा मण्डपः। प्रपा पानीयशालिका। आरामः उपवनम्। संस्कृतिः जीर्णोद्धारः। संस्कार उपनयनादिकः प्रेतदहनादिकश्च। यजनक्रिया सोमयागादिकर्तृभ्यो दानम्। कुलायननिरोधः। कुलायनस्य दुर्भिक्षाद्युपशमपर्यन्तस्य धारणम्। कुल्यायननिरोधश्चेति कल्पतरौ पाठः। कुल्यायननिरोधः कुल्यायाः प्रवर्त्तनसम्प्रतिरोधश्च। एवं कृता समयक्रिया न केवलं समुदायिभिरेव पालनीया अपि तु राज्ञापि इत्याह नारदः "पाषण्डनैगमश्रेणीपूगव्रातगणादिषु। संरक्षेत् समयं राजा दुर्गे जनपदे तथेति"। पाषण्डाः वेदोक्तविरुद्धधारणव्यतिरिक्ताः सर्वे लिङ्गिनः। तेषु विहितभिक्षाचरणाद्याः सन्ति। नैगमाः सार्थिका वणिक्प्रभृतयः। तेषु सकलकुसन्देशहरपुरुषतिरस्कारिणो दण्ड्या इत्येवमादयो बहवः समया विद्यन्ते। अथ वा नैगमाः आप्तप्रणीतत्वेन ये वेदप्रामाण्यमिच्छन्ति पाशुपतादयः। श्रेणयः एकशिल्पोपजीविनः। तास्विदमनयैव श्रेण्या विक्रेयमित्येवमादिकाः समया वरीवर्त्तन्ते। पूगा हस्त्यश्वारोहादयः। व्रातगणशब्दयोरर्थमाह कात्यायनः "नानायुधधरा व्राताः समवेतास्तु कीर्त्तिताः। कुलानां हि समूहस्तु गणः सम्परिकीर्त्तितः" इति। पूगे व्राते वा स्वसुतश्च्युत समरे न गन्तव्यमित्येवमादयः समया वर्त्तन्ते। गणे तु पञ्चमे दिने पञ्चमे वर्षे वा कर्णवेधः कर्त्तव्य इत्येवमादि समयः समस्ति। गणादीत्यत्रादिशब्देन ब्रह्मपुरीनिविष्टस्य महाजनादेः परिग्रहः। तत्र गुरुदक्षिणाद्यर्थमागतो माननीय इत्यादिः समयोऽस्ति। दुर्गे तु धान्यादिकं स्वकीयमन्यत्र न तद्विक्रेयमित्यादिरस्ति समयः। जनपदे तु कश्चिद्विक्रेतव्यकाचाञ्चुलकपहरणमित्याद्यनेकविधः समयो वरीवर्त्तते। तदेवं समयजातं यथा न अपयाति तथा राजा कुर्य्यादित्यर्थः। समूहादिमुख्यविषये विशेषमाह बृहस्पतिः "कोशेन लेख्यक्रियया मध्यस्थैर्वा परस्परम्। विश्वासं कृत्वा यः कुर्युः कार्य्याणि समनन्तरम्" इति। कोशेन देवतास्नानोदकपानेन। लेख्यक्रियया समयपत्रेण। मध्यस्थैः प्रतिभूभिः कार्य्याणि समूहकार्य्याणि। एतदुक्तं भवति। समुदायिभिः परस्परं समयातिक्रमाभावाय कोशादिभिर्विश्वासमुत्पाद्य सामयिककार्य्याणि कर्त्तव्यानीति। कात्यायनोऽपि "समूहानां तु यो धर्मस्तेन धर्मेण ते सदा। प्रकुर्युः सर्वकर्माणि स्वधर्मेषु व्यवस्थिताः" इति। सामयिकधर्मनिजधर्मानतिक्रमेण सर्वकार्य्याणि समुदायिनः कुर्युरित्यर्थः। याज्ञवल्क्योऽपि "निजधर्माविरोधेन यस्तु सामयिको भवेत्। सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः" इति। निजधर्माविरोधेनेत्यनेन निजधर्माविरोधी सामयिको धर्मो यथा सन्ध्यावन्दनवेलायां सर्वैरेव स्वव्यापारपरिहारेण, राजभवनं प्रत्यागन्तव्यं यो नायास्यति प्रथमसाहसं दण्ड्यः इति नासौ रक्ष्य इत्यर्थादुक्तम्। कात्यायनोऽपि "अविरोधेन धर्मस्य निर्जितं राजशासनम्। तस्यैवाचरणं पूर्वं कर्त्तव्यन्तु नृपाज्ञयेति"। धर्मस्य श्रौतस्मार्त्तादि

धर्मस्य निर्जितं कृतमित्यर्थः "राज्ञा प्रवर्त्तितान् धर्मान् यो नरो नानुपालयेत् । गर्ह्यः स पापो दण्ड्यश्च लोपयन् राजशासनम्" इति । विचित्रबुद्धिभिः समुदायिभिरनेकैरैकमत्येन कार्य्यकरणासम्भवात् द्वित्राः पञ्च वा कार्य्यचिन्तकाः कर्त्तव्या इत्याह बृहस्पतिः "द्वौ त्रयः पञ्च वा कार्य्याः समूहहितवादिनः । कर्त्तव्यं वचनन्तेषां ग्रामश्रेणिगणादिभिरिति" । कार्य्यचिन्तकेषु हेयोपादेयान् दर्शयति स एव "विद्वेषिणो व्यसनिनः शालीनाभयभीरवः । लुब्धातिवृद्धबालाश्च न कार्य्याः कार्य्यचिन्तकाः । शुचयो वेदधर्मज्ञाः दक्षा दान्ताः कुलोद्भवाः । सर्व्वकार्य्यप्रवीणाश्च कर्त्तव्यास्तु महत्तमाः" इति । शालीनाः अधृष्टाः कार्य्यचिन्तकाः समुदायकार्य्यसाधकविचारकाः । कार्य्यचिन्तकानामपि समूहहितवादिनां वचनं सर्व्वैः समूहिभिः कार्य्यमित्याह याज्ञवल्क्यः "कर्त्तव्यं वचनं सर्व्वैः समूहहितवादिनाम्" इति । समूहप्रतिकूलस्य प्रथमसाहसं दण्ड इत्याह स एव "यस्तत्र विपरीतः स्यात् स दाप्यः प्रथमं दमम्" इति । प्रथमं पूर्व्वसाहसम् । कात्यायनोऽपि "युक्तियुक्तं वचो हन्याद् वक्तुर्य्योऽनवकाशतः । अयुक्तञ्चैव यो ब्रूयात् स दाप्यः पूर्व्वसाहसम्" इति । बृहस्पतिरपि "यस्तु साधारणं हिंस्यात् क्षिपेत्त्रैविद्यमेव वा । संविक्रियां विहन्याच्च स निर्वास्यस्ततः पुरात्" इति । साधारणम् समुदायस्याहृतं द्रव्यादि द्रव्यम् । हिंस्यात् । दण्डादेः साहाय्यकरणाज्ञाशयेत् क्षिपेत् वा तिरस्कुर्य्यादित्यर्थः । सम्भूय क्रियमाणधर्मेषु द्वेषादिना कार्य्यकरणे दण्डमाह स एव "बाधां कुर्य्युर्य एकस्य सम्भूता द्वेषसंयुताः । राज्ञा तु विनिवार्य्यास्ते शास्या चैवानुबन्धतः" इति । अनुबन्धतः निग्रहतारतम्यानुसारेण । मुख्यानामपराधविशेषे दण्डविशेषमाह याज्ञवल्क्यः "गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः । सर्व्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत्" इति । मुख्यदण्डने समूहस्यैवाधिकारः । अतएव कात्यायनः "साहसी भेदकारी च गणद्रव्यविनाशकः । उच्छेद्याः सर्व्व एवैते विख्याप्यैव नृपे भृगुरिति" । नृपे विख्याप्य गणेनोच्छेद्या इत्यर्थः । समूहाशक्तौ तस्य दण्डो राज्ञा विधेयः । अतएव मनुः "यो ग्रामदेशसङ्घानां कृत्वा सत्येन संविदम् । विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत् । निगृह्य दापयेच्चैनं समयव्यभिचारिणम् । चतुःसुवर्णान् षण्निष्कान् शतमानञ्च राजतम् । एवं दण्डविधिं कुर्य्याद्धार्म्मिकः पृथिवीपतिः । ग्रामजातिसमूहेषु समयव्यभिचारिणाम्" इति । एतेषां प्रवासन-चतुःसुवर्णषण्निष्कशतमानरूपाणाञ्चतुर्णां दण्डानां जातिविद्यागुणाद्यपेक्षया व्यवस्था कल्पनीया । यत्तु कश्चिदेतेषाञ्चतुर्णां दण्डानां क्रमेण ब्राह्मणादिचतुर्व्वर्णविषयत्वमित्याह तदज्ञानविलसितम् । एतादृशव्यवस्थायां प्रमाणाभावात् । ब्राह्मणस्य प्रवासनं क्षत्रियादीनाञ्चतुःसुवर्णादि दण्ड इत्यस्यानुचितत्वाच्च । मर्म्मोद्घाटकादीनां पुरान्निर्व्वासनमेव दण्ड इत्याह बृहस्पतिः "अरुन्तुदः सूचकश्च भेदकृत्साहसी तथा । श्रेणिपूगनृपद्विष्टः क्षिप्रं निर्व्वास्यते ततः" इति । अरुन्तुदः मर्म्मोद्घाटकः । सूचकः पिशुनः । पिशुनो खलसूचकावित्यभिधानात् । भेदकृत् समुदायिषु वैमत्यकृत् । समूहस्यानाभिर्निर्व्वास्यते समूहेनेति शेषः । न च समूहस्य दण्डकरणेऽनधिकारात् समूहेनेति शेषकरणमयुक्तमिति वक्तव्यम् । पूर्व्वोक्तकात्यायनवचनेन समूहस्यैव मुख्यदण्डनेऽधिकारस्य प्रतिपादितत्वात् "पूगश्रेणिगणाध्यक्षाः पुरदुर्गनिवासिनः । वाग्धिग्दण्डपरित्यागं प्रकुर्य्युः पापकारिणाम् । तैः कृतं यत् स्वधर्म्मेण निग्रहानुग्रहं नृणाम् । तद्राज्ञाप्यनुमन्तव्यं निसृष्टार्था हि ते स्मृताः" इति बृहस्पतिनाप्यभिधानाच्च । वाग्दण्डः पापिष्ठोऽसीत्यादि भाषणम् । धिग्दण्डो धिक्त्वामिति भाषणम् । परित्यागोऽसद्व्यवहार्य्यत्वकरणं निर्व्वासनं वा । उभयत्रापि लोके परित्यागशब्दप्रयोगदर्शनात् । एतच्चार्थदण्डादेरुपलक्षणार्थम् । निग्रहानुग्रहमित्येतेन पुनःशब्देनाभिधानात् निसृष्टार्था अप्राप्तकार्य्याः । नारदोऽपि "पृथग्गणांस्तु ये भिन्द्युस्ते विनेया विशेषतः । आवहेयुर्भयं घोरं व्याधिवत्ते ह्युपेक्षिता" इति । गणान् श्रेण्यादिरूपान् । बृहस्पतिरपि "तत्र भेदमुपेक्षां वा यः कश्चित् कुरुते नरः । चतुःसुवर्णं षण्णिष्कांस्तस्य दण्डो विधीयते" इति । सुवर्णचतुष्टयषण्णिष्कयोः शक्त्यादितारतम्यानुसारेण गुणवदगुणवद्विषयत्वेन वा व्यवस्था मन्तव्या । पाषण्ड्यादिसर्व्वसमूहेषु राज्ञा यथा वर्त्तितव्यन्तदाह नारदः "यो धर्म्मः कर्म्म यच्चैषामुपस्थानविधिश्च यः । यच्चैषां वृत्त्युपादानमनुमन्येत तत्तथा" । धर्म्मः सत्यवदनादिः । कर्म्म प्रातःपर्य्युषितभिक्षाटनादिः उपस्थानविधिः समूहकार्य्यार्थं मृदङ्गादिध्वनिमाकर्ण्य समव-

पादौ मेलनम्। मल्युपादानजीवनाय तापसवेषपरिग्रहः। एषां पार्षाण्डनामित्यर्थः। अन्यदपि राजकृत्य माह स एव “प्रतिकूलञ्च यद्राज्ञः प्रकृत्या च मतञ्च यत्। बाधकञ्च यदर्थानां तत्तेभ्योऽपि निवर्त्तयेत्” इति। यद्राज्ञः प्रतिकूलम् “यथा यस्य राजस्तु कुरुते शूद्रोधर्मविवेचनम्। तस्य प्रसुध्यते राष्ट्रं बलं कोषश्च नश्यति” इति। एवञ्च सार्थिकादिशूद्रविवादे धर्मविवेचनं च यद्राज्ञ इत्यस्योदाहरणमन्तव्यम्। प्रकृत्या स्वभावत एव मतम् अवज्ञातार्थं पाषण्डादिषु ताम्बूलभक्षणादिकम्। यच्चार्थानां बाधकमन्ननाशकचौरादिसबाधादिकं तत्तेभ्योऽपि निवर्त्तयेत्। यथा ते न कुर्वन्ति तथा कुर्यादित्यर्थः। अन्यदपि निवर्त्त्यमाह स एव “दोषवत्कारणं यत्स्यादनाम्नायप्रकल्पितम्। प्रवृत्तमपि तद्राजा श्रेयस्कामो निवर्त्तयेत्”। लोभादिदोषवत्कारणं स्मृतिश्रुतिविरुद्धं विधवादौ वेश्यात्वादिकं पाषण्डादिभिः प्रकल्पितम्। तद्दीर्घकालप्रवृत्तमपि राज्ञा निवर्त्तनीयमित्यर्थः। त्रैविद्यानां प्रतिपादितं धर्मं श्रेण्यादिष्वतिदिशति याज्ञवल्क्यः “श्रेणिनैगमपाषण्डिगणानामप्ययं विधिः। भेदञ्चैषां नृपोरक्षेत् पूर्ववृत्तिं च पालयेत्” इति। समूहकार्यार्थमागताय यद्राज्ञा समूहपूजार्थं दत्तन्तद्यदि समूहायासौ न ददाति तदा तद्दत्तं एकादशगुणं दाप्य इत्याह स एव “समूहकार्य आयातान् कृतकार्यान् विसर्जयेत्। सदानमानसत्कारैः पूजयित्वा महीपतिः। समूहकार्यं प्रहितो यल्लभेत तदर्पयेत्। एकादशगुणं दाप्यो यदसौ नार्पयेत् स्वयम्”। इति। यल्लभेत समूहसम्माननार्थमिति शेषः। यतो राजदत्तं सर्वसाधारणमतो यथांशतो विभागं कृत्वा चाद्यं निस्वादिभ्यो वा दातव्यमित्याह बृहस्पतिः “ततो लभ्येत यत्किञ्चित् सर्वेषामेव तत्समम्। षाण्मासिकं मासिकं वा विभक्तव्यं यथांशतः। देयं वा निःस्ववृद्धान्धस्त्रीबालातुररोगिषु। सान्तानिकादिषु तथा धर्म एष सनातनः” इति। एकस्य पुरुषस्य षण्मासनिर्वाहाय पर्य्याप्तं कुटुम्बस्य वैकस्य षण्मासानिर्वाहाय पर्य्याप्तं, लब्धं वा यथांशतः स्वस्वांशानुरूपेण विभजनीयं निस्वादिभ्यो वा देयमिति तात्पर्यार्थः। राजप्रसादलब्धस्यदृष्टान्तमपि सर्वेषां सममित्याह स एव “यत्तैः प्राप्तं रक्षितं वा गणार्थं वा ऋणं कृतम्। राजप्रसादलब्धञ्च सर्वेषामेव तत्समम्” इति। अयमर्थः। तैः समूहकार्यार्थं प्रहितैर्यल्लोभा-

विवादावधिं क्षेत्रारामादिकं धर्माधिकरणे न्यायतः प्राप्तम्। यच्च परैरपह्रियमाणं रक्षितं यच्च समूहप्रयोजनार्थमुपात्तमृणम्, यच्च राजप्रसादलब्धं तत् सर्वं सर्वेषां समुदायिनां सममिति। गणकृतमृणं सर्वेषां सममित्यत्र क्वचित्पदादमाह कात्यायनः “गणमुद्दिश्य यत्किञ्चित् कृत्वर्णं भक्षितं भवेत्। आत्मार्थं विनियुक्तं वा देयं तैरेव तद्भवेत्” इति। तैः सर्वैः। ये तु समुदायानुपघातादूनमौख्यं प्राप्ताः ये च समुदायक्षोभादिना ततो बहिर्भूतास्तान् प्रत्याह स एव “गणानां श्रेणिवर्गाणां गताः स्युर्येऽपि मध्यताम्। प्राक्कृतस्य धनर्णस्य समाभाः सर्वे एवेति। तथैव भोज्यवैभवदानधर्मक्रियासु च। समूहस्थोऽंशभागी स्यात् प्रागगतस्त्वंशभाङ्नवेति”। [१रचनायाञ्च।

**संविधान** न० सम्+वि+धा—ल्युट्। १उपाये २आयोजने

**संविधा** स्त्री संविदितं विधं यथा प्रा०व० धातुजस्य उत्तरपदलोपः। अतिविधायाम् (आतइच) शब्दच०।

**संवीक्षण** न० सम्यग्वीक्ष्यते अन्विष्यते वा सम्+वि+ईक्ष-भावे ल्युट्। १सम्यग्दर्शने २दृष्टवस्तुनोलाभाय अन्वेषणे च।

**संवीत** त्रि० सम्+व्येञ्—क्त। १आवृते २रुद्धे च अमरः। सम्+वि+इण-क्त। ३सङ्गते। [वर्णोच्चारणाभ्यन्तरयत्ने च

**संवृत** त्रि० सम्+वृ-क्त। १आवृते २कृतगोपने ३संवारूपे

**संवेग** पु० सम्+विज—घञ्। १भयादिना त्वरायाम् अमरः २सम्यग्वेगे च। [युच्। संवेदनाप्यत्र स्त्री।

**संवेद** पुं सम्+विद—घञ्। ज्ञाने अमरः। स्वार्थे णिच्—

**संवेश** पु० सम्यक् विशत्यत्र सम्+विश-आधारे घञ्। १निद्रायाम् अमरः। संपूर्वकस्य तस्य निद्रार्थकत्वात्तथात्वम्। यथा “संविष्टः कुशशयने निशां निनायेति” रघुः। २पीठे हेमच० ३स्त्रीरतिबन्धभेदे मेदि०।

**संवेशन** न० सम्+विश—णिच्-ल्युट्। रतिक्रियायां हेमच० तदुत्तरं हि निद्राधिक्येन तस्या निद्राहेतुत्वात्तथात्वम्।

**संव्यान** न० संवीयते सम्+व्येञ्—कर्मणि ल्युट्। १उत्तरीयवस्त्रे अमरः। २वस्त्रमात्रे मेदि०।

**संशप्तक** पु० सम्यक् शपथस्वीकारो यस्य कप्। प्रतिज्ञाय संग्रामादनिवर्त्तिनि सैन्ये नारायणीये सैन्यभेदे च तेषां प्रतिज्ञा यथा “ब्राह्मणांस्तर्पयित्वा च निष्क्रान्त्वा पृथक् पृथक्। मासु वासांसि च पुनः समाभाष्य परस्परम्। प्रज्वाल्य कृष्णवर्त्मानमुपगम्य रणे व्रतम्। तस्मिन्नग्नौ तदा चक्रुः प्रतिज्ञां दृढनिश्चयाः।

शृण्वतां सर्वभूतानामुच्चैर्वाचोऽभ्यभाषिरे। ते च धनञ्जयवधे प्रतिज्ञाञ्चापि चक्रिरे। ये वै लोकाश्चानृतिनां ये च वै ब्रह्मघातिनाम्। मद्यपस्य च लोका ये गुरुदाररतस्य च। ब्रह्मस्वहारिणश्चैव राजपिण्डापहारिणः। शरणागतं वा त्यजतो याचमानं तथा घ्नतः। अगारदाहिनाञ्चैव ये च गां निघ्नतामपि। अपकारिणाञ्च ये लोका ये च ब्रह्मद्विषामपि। स्वभार्यामृतुकालेषु यो मोहाद्वाभिगच्छति। श्राद्धमैथुनिकानाञ्च ये चाप्यात्मापकारिणाम्। न्यासापहारिणां ये च श्रुतं नाशयताञ्च ये। क्लीवेन युध्यमानानां ये च नीचानुसारिणाम्। नास्तिकानाञ्च ये लोका येऽग्निमातृपरित्यजाम्। तानाप्नुयामहे लोकान् ये च पापकृतामपि। यद्यहत्वा वयं सर्वे निवर्त्तेम धनञ्जयम्। तेन चाभ्यर्दितास्त्रासाद्भवेम हि पराङ्मुखाः। यदि त्वदुष्करं लोके कर्म कुर्याम संयुगे। इष्टान् लोकान् प्राप्नुयाम वयमद्य न संशयः। एवमुक्त्वा ततो राजंस्तेऽभ्यवर्त्तन्त संयुगे। आह्वयन्तोऽर्जुनं वीराः पितृजुष्टां दिशं प्रति” भा॰द्रो॰ १७अ॰.

**संशय** पु॰ सम्+शी–अच्। सन्देहे एकस्मिन् धर्मिणि भावाभावयोः, विरुद्धधर्मद्वयस्य वा सन्देहे। यथा पर्वतो वह्निमान्न वा, अयं स्थाणुर्वा पुरुषो वेति। “स संशयो भवेद्यो धीरेकत्राभावभावयोः। साधारणादिधर्मस्य ज्ञानं संशयकारणम्” भाषा॰ “एकधर्मिकविरुद्धभावाभावप्रकारकं ज्ञानं संशयः इत्यर्थः। साधारणेति। उभयसाधारणो यो धर्मस्तज्ज्ञानं संशयकारणम्। यथा उच्चैस्तरत्वं स्थाणुत्वसाधारणं ज्ञात्वा अयं स्थाणुर्न वेति सन्दिग्धे। एवम् असाधारणज्ञानं तत्कारणम्। यथा शब्दत्वं नित्यानित्यव्यावृत्तं शब्दे गृहीत्वा शब्दो नित्यो न वेति सन्दिग्धे। विप्रतिपत्तिस्तु शब्दो नित्यो न वेत्यादिशब्दात्मिका न संशयकारणम्। शब्दव्याप्तिज्ञानादीनाम् निश्चयमात्रजनकत्वस्वाभाव्यात्। किन्तु तत्र शब्देन कोटिद्वयज्ञानं जन्यते। संशयस्तु तत्र मानस एवेति। एवं ज्ञाने प्रामाण्यसंशयाद् विषयसंशय इति। एवं व्याप्यसंशयादपि व्यापकसंशय इत्यादिकं बोध्यम्। किन्तु संशये धर्मिज्ञानं धर्मीन्द्रियसन्निकर्षो वा कारणमिति” सि॰मु॰। “समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः” न्यायसू॰ “समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशय इति स्थाणुपुरुषयोः समानं धर्ममारोहपरिणाहौ पश्यन् पूर्वदृष्टञ्च तयोर्विशेषं बुभुत्समानः किंस्विदित्यन्यतरन्नावधारयति यदनवधारयति तदनवधारणं ज्ञानं संशयः समानयोर्धर्मयोरुपलभे विशेषमन्यतरस्य नोपलभे इत्येषा बुद्धिरपेक्षा संशयस्य प्रवर्त्तिका वर्त्तते. तेन विशेषापेक्षो विमर्शः संशयः। अनेकधर्मोपपत्तेरिति समानजातीयमसमानजातीयञ्चानेकं तस्यानेकस्य धर्मोपपत्तेर्विशेषस्योभयथा दृष्टत्वात् समानजातीयेभ्योऽसमानजातीयेभ्यश्चार्था विशेष्यन्ते। गन्धवत्त्वात् पृथिवी अबादिभ्यो विशेष्यते गुणकर्मभ्यश्च, अस्ति च शब्दे विभागजत्वं विशेषः, तस्मिन् द्रव्यं गुणः कर्म वेति सन्देहः विशेषस्योभयथा दृष्टत्वात् किं द्रव्यस्य सतो गुणकर्मभ्यो विशेष आहोस्विद्गुणस्य सत इति अथ कर्मणः सत इति विशेषापेक्षा अन्यतमस्य व्यवस्थापकं धर्मं नोपलभे इति बुद्धिरिति। विप्रतिपत्तेरिति व्याहतमेकार्थदर्शनं विप्रतिपत्तिः व्याघातो विरोधोऽसहभाव इति। अस्त्यात्मेत्येकं दर्शनम् नास्त्यात्मेत्यपरम्, न च सद्भावासद्भावौ सहैकत्र सम्भवतः, न चान्यतरसाधको हेतुरुपलभ्यते तत्र तत्त्वानवधारणं संशय इति। उपलब्ध्यव्यवस्थातः सच्चोदकमुपलभ्यते तडागादिषु मरीचिषु वाऽविद्यमानमुदकमिति ततः क्वचिदुपलभ्यमाने तत्त्वव्यवस्थापकस्य प्रमाणस्यानुपलब्धेः किं सदुपलभ्यते अथासदिति संशयो भवति। अनुपलब्ध्यव्यवस्थातः सच्च नोपलभ्यते मूलकीलकोदकादि, असच्चानुत्पन्नं विरुद्धं वा, ततः क्वचिदनुपलभ्यमाने संशयः किं सन्नोपलभ्यते उतासदिति संशयो भवति विशेषापेक्षा पूर्ववत्, पूर्वः समानोऽनेकश्च धर्मो ज्ञेयस्थः, उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे, एतावता विशेषेण पुनर्वचनम्, समानधर्माधिगमात् समानधर्मोपपत्तेर्विशेषस्मृत्यपेक्षो विमर्श इति, स्थानवतो लक्षणवचनमिति समानम्” वा॰भा॰। “संशय इति लक्ष्यनिर्देशः विमर्श इत्यत्र विशब्दो विरोधार्थः म्हशिर्ज्ञानार्थः एकस्मिन् धर्मिणीति पूरणीयं तेन एकधर्मिणि विरोधेन भावाभावप्रकारकं ज्ञानं संशयः तत्र कारणमुखेन विशेषलक्षणान्याह समानेत्यादि उपपत्तिर्ज्ञानं तथा च समानस्य विरुद्धकोटिद्वयसाधारणधर्मस्य ज्ञानादित्यर्थः। अनेकधर्मः असाधारणधर्मः तज्ज्ञानादित्यर्थः। तथा च साधारणधर्मवद्धर्मिज्ञानजन्योऽसाधारणधर्मवद्धर्मिज्ञानजन्यश्चेत्यर्थः, विप्रतिपत्तिर्विरुद्धकोटिद्वयोपस्थापकः शब्दस्तस्मादित्यर्थः यद्यपि शब्दस्य न संशायकत्वं तथापि

शङ्काकोटिद्वयोपस्थितौ मानसः संशय इति वदन्ति। उपलब्धेर्ज्ञानस्य अनुपलब्धेर्व्यतिरेकज्ञानस्य याऽव्यवस्था सद्विषयकत्वानिर्द्धारणं प्रामाण्यसंशय इति फलितोऽर्थः, अन्ये तु उपलब्ध्यव्यवस्था प्रामाण्यसंशयः अनुपलब्धिर्वि-रोधिभ्रमः तदव्यवस्था ततः संशय इत्याहुः। वस्तुतस्तु प्रामाण्यसंशयस्य न संशयहेतुत्वं किं त्वन्टहीताप्रामाण्य-कज्ञानस्य विरोधितया सति प्रामाण्यसंशये तज्ज्ञान-स्याविरोधितया साधारणधर्मदर्शनादित एव संशयोत्पत्ति-रिति। उपलब्धीत्यादिकं तादृशस्थले संशयो न भवतीत्ये-तावन्मात्रपरं चकारो व्याप्यसंशयस्य व्यापकसंशयहेतुत्वं समुच्चिनोतीति वदन्ति. विशेषापेक्षः कोटिस्मरणसापेक्षः। वस्तुतस्तु संशयधारावाहिकत्वं स्यादत आह विशेषेति विशेषं विशेषदर्शनम् अपेक्षते निवर्त्तकत्वेन तथा च वि-शेषदर्शननिवर्त्यत्वकथनमुखेन विशेषादर्शदजन्यसंशय इ-त्युक्तम्" वृत्तिः। स च संशयो द्विविधः यथोक्तम् "द्विविधः संशयः बहिर्विषयकोऽन्तर्विषयकश्च बहिर्वि-षयकोऽपि दृश्यमानधर्मिकोऽदृश्यमानधर्मिकश्च तत्र दृश्यमानधर्मिको यथा ऊर्द्धत्वविशिष्टस्य धर्मिणो दर्शनात् अयं स्थाणुः पुरुषो वेति। अदृश्यमानधर्मिको यथा अरण्ये भाटाद्यन्तरिते गोगवयादिविषाणमात्रदर्श-नात् अयं गौर्गवयो वेति। वस्तुतस्तत्रापि विषाणधर्मिक एव सन्देहो विषाणमिदं गोसम्बन्धि गवयसम्बन्धि वेति विवक्षाभावाद्द्वैविध्याभिधानम्। यत् सामान्यं संशयहेतुस्तदनेकत्र दृष्टं संशायकम् एकत्र धर्मिणि वा दृष्टं संशयहेतुरित्यत्र प्रथमां विधामाह" उप० वृत्तिः। "इदन्तु बोध्यं संशयस्य प्रत्यक्षरूपः सन्निकर्षजन्यत्वात् अतएवोक्तं "परोक्षज्ञानमनाहार्यं निश्चयश्चेति सिद्धा-न्तादिति"। संशये च उभयप्रकारतानिरूपिता विशेष्यता एकैव। समुच्चये तु विशेष्यताद्वयमिति" गदाधरः।

**संशयसम** पु० जात्युत्तरभेदे "सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः" न्यायसू०। "अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात् घटवदित्युक्ते हेतौ संशयेन प्रत्यवतिष्ठते सति प्रयत्नानन्तरीयकत्वे अ-स्त्येवास्य नित्येन सामान्येन साधर्म्यमैन्द्रियकत्वमस्ति च घटेनानित्येन। अतो नित्यानित्यसाधर्म्यादनिवृत्तः संशय इति" वा०भा०।

**संशयस्थ** त्रि० संशये तिष्ठति स्था-क। संशययुक्ते।

**संशयात्मन्** पु० संशय आत्मनि यस्य। सन्दिग्धान्तःकरणे "संशयात्मा विनश्यतीति" "संशयात्मा निबध्यते"।

**संशयालु** त्रि०संशय+अस्त्यर्थे आलुच्। संशययुक्ते हेमच०

**संशयितृ** त्रि० सम्+शी-तृच्। संशयकर्त्तरि हेमच०।

**संशरण** न० संशीर्य्यतेऽनेन सम्+शृ-करणे ल्युट्। रणा-रम्भे शब्दमा०। [यत्ते २तद्वति त्रि० सि०कौ०।

**संशित** त्रि०सम्+शो-क्त व्रते इत्त्वम्। १सम्पादितव्रतविषयक-

**संशितव्रत** त्रि० संशितं सम्यक् सम्पादितं व्रतमनेन। स-म्यक्सम्पादितव्रते। [मार्जने च रत्नमा०।

**संशुद्धि** स्त्री सम+शुध-क्तिन्। १सम्यक्शोधने २देहादि-

**संश्चत्** सम्+श्चु-क्विप्-शा वा० डति। कुहके उणादि०।

**संश्यान** त्रि० सम्+श्यै-क्त न सम्प्र०। सङ्कुचिते।

**संश्रय** पु० सम्+श्रि-भावे अच्। आश्रये।

**संश्रव** पु० सम्-श्रु-अप्। अङ्गीकारे अमरः। घञ्। सं-श्रावोऽप्यत्र पु०।

**संश्रुत** त्रि० सम+श्रु-क्त। १अङ्गीकृते अमरः। २सम्यक्श्रुते।

**संश्लिष्ट** त्रि० सम्+श्लिष-क्त। १आलिङ्गिते २सम्बद्धे च।

**संश्लेष** पु० सम्+श्लिष-घञ्। १आलिङ्गने अमरः २सम्बन्ध-भावे च।

**संसक्त** त्रि० सम्+सञ्ज-क्त। १मिलिते २संबद्धे ३अव्यव-हिते अमरः ४समन्ताद्विस्तीर्णे च "प्रान्तेषु संसक्त-नमेरुशाखमिति" कुमारः। [सभायां अमरः।

**संसद्** स्त्री संसीदन्त्यस्याम् सम्+सद-सम्प्र० आधारे क्विप्।

**संसरण** न० सम्+सृ-ल्युट्। अप्रतिहतबहुदेहस्वीकाररूपे १संसारे २असम्बाधसेनागमने ३घण्टापथे अमरः। ४रणारम्भे मेदि०। ५सङ्गतौ शब्दच०।

**संसर्ग** पु० सम्+सृज-घञ्। १सम्बन्धे विभागानन्तरं "यत्तव धनं तन्ममेति" कृतसमयेन एकत्रावस्थानरूपे २धनसम्बन्धे च पापिष्ठसंसर्गस्य पापभेदे कालभेदेन पातित्यादिजन-कत्वं प्रा०वि० दर्शितं यथा

"तत्र पातकिसंसर्गस्य पापहेतुत्वमाह मनुः "ब्रह्म-हत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातका-न्याहुः संसर्गश्चापि तैः सह" इति। नतु तैः सहेति नि-र्द्देशात् महापातकिसंसर्गस्यैव पापहेतुत्वं लभ्यते न तु पातक्यन्तरसंसर्गस्य प्रायश्चित्तमपि महापातकिसंसर्ग एव मनुना दर्शितं यथा मनुः "एषां पापकृतामुक्ता चतुर्णामपि निष्कृतिः। पतितैः सम्प्रयुक्तानामिमाः शृणुत निष्कृतीः। यो येन पतितेनैषां संसर्गं याति मानवः। स तस्यैव व्रतं कुर्य्यात् तत्संसर्गविशुद्धये" इति

अत्र चतुर्णामित्यनेन ब्रह्महत्यादिमहापातकचतुष्टयमुपसंहृत्य यो येन पतितेनेत्युक्तं महापातकपरमेव। उच्यते "प्रायश्चित्तीयतां प्राप्य दैवात् पूर्वकृतेन वा। न संसर्गं व्रजेत् सद्भिः प्रायश्चित्तेऽकृते द्विजः॥ एनस्विभिरनिर्णिक्तैर्नार्थं किञ्चित् समाचरेत्। कृतनिर्णेजनांश्चैव न जुगुप्सेत कर्हिचित्" इति मनुना सामान्येन पापिष्ठसंसर्गस्य निषिद्धत्वात् निषिद्धाचरणात् पापोत्पत्तिः पापिष्ठसंसर्ग एव दर्शिता प्रायश्चित्तमपि सामान्येन दर्शितम् "यो येन पतितेनैषां संसर्गम्" इति निर्देशात् चतुर्णामिति हिंसाऽभक्ष्यभक्षणस्तेयागम्यागमनाख्यप्रकारचतुष्टयानां न तु ब्रह्महत्यादिविशेषाणां लघीयसामपि हिंसाभक्ष्यभक्षणस्तेयागम्यागमनादीनाम् मनुना पूर्वमुक्तत्वात् अपि च संसर्गपापस्तुत्या श्रुतिः कल्प्यमाना पापिष्ठसंसर्गी पापी भवतीति सामान्यश्रुतिरेव कल्पनीया लाघवात् होलाकाधिकरणन्याय एवात्र जागर्त्ति। विष्णुनापि सामान्येनैव स्मृतं "यस्तु येन पापात्मना सह संसृजेत् स तस्यैव प्रायश्चित्तं कुर्य्यात्"। गौतमोऽप्याह "ब्रह्महसुरापगुरुतल्पगमातृपितृयोनिसम्बन्धगस्तेनाभक्ष्यभक्षकनास्तिकानिन्दितकर्माभ्यासिपतितात्यागाऽपतितत्यागिनः पतिताः पातकसंयोजकाश्च तैश्चाब्दं समाचरन्"। अत्र पतितात्यागेति सामान्येनैव दर्शयति। तैश्चाब्दं समाचरन्निति द्वितीयसंसर्गिणोऽपि पतितत्वमुक्तम्। नन्वेकयानासनादिनापि पतितेन संसर्गिणः पतितत्वं स्यात् न संसर्गविशेषाणां निषेधात् निषिद्धपतितसंसर्गात् पततीति श्रुतिः कल्प्या। के ते संसर्गप्रकारा इत्याह बृहस्पतिः "एकशय्यासनं पङ्क्तिर्भाण्डपक्वान्नमिश्रणम्। याजनाध्यापनं योनिस्तथा च सह भोजनम्। नवधा सङ्कर प्रोक्तो न कर्त्तव्योऽधमैः सह। उत्तमैरुत्तमैर्नित्यं कर्त्तव्यस्तु समेन वा" एकशय्याशयनैकपीठाद्युपवेशनैकपङ्क्तिभोजनपक्वान्नादिसम्बन्धिभाण्डमिश्रणपक्वान्नमिश्राख्याः पञ्च लघुसंसर्गाः। तथा याजनं पतितेन ऋत्विजा यजनं यजमानस्य, पतितयजमानार्त्विज्यकरणमृत्विजश्च। अध्यापनं पतितमाणवकवेदाध्यापनमाचार्य्यस्य, पतिताचार्य्याद्वा वेदाध्ययनं माणवकस्य। योनिः योनिसम्बन्धः स च पतितपुरुषसम्भोगः स्त्रियाः, पतितस्त्रीसम्भोगो वा पुरुषस्य, तथा पतितकन्यापरिणयनं वरस्य, पतितवरपरिणयनं वा कन्यायाः। तथा च मनुः "नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित्। ब्राह्मान् यौनांश्च सम्बन्धानाचरेद् ब्राह्मणः सह"। जिकनकल्पतरुकारादयस्तु पतितवराय कन्यादानं दातुः, पतिताद्दातुरादानं वा कन्याया वरस्य, सर्वत्र व्यवहितयोनिसम्बन्धं, योनिसम्बन्धस्य स्त्रीपुरुषमात्रनिष्पाद्यत्वात् नात्र दातृवरयोः साक्षात् योनिसम्बन्धः दानप्रतिग्रहलक्षणोऽप्ययं सम्बन्धो दातृसम्प्रदानयोर्योन्यन्तर्भावात् यौन इत्युच्यते प्रायश्चित्तगौरवार्थः। किन्त्वयमनार्षः प्रायश्चित्तविशेषाश्रवणात् अनुपादेयश्च पतितजाता कन्या पतितैव वक्ष्यते तत्परिणयनं पतितकन्यापरिणयनमेव नात्र व्यवहितयोनिसम्बन्धः। सह भोजनं स्वपात्रस्य परस्य वा एकपात्रे भोजनं नोच्छिष्टभोजनम् उच्छिष्टेन सहोच्छिष्टभोजनात् तस्य लघुत्वात् एते चत्वारो गुरुसंसर्गा भवन्ति एवं मिलित्वा नव संसर्गाः। नन्वेकयानालापगात्रस्पर्शनिश्वाससहाध्ययनादिकमपि संसर्गान्तरमस्ति तत्कथं नवविधत्वं यथा पराशरः "आसनाच्छयनाद्यानात् भाषणात् सह भोजनात्। संक्रामन्ति हि पापानि तैलबिन्दुरिवाम्भसि"। भाषणमपि अन्योन्यसंकथनं सहभोजनमेकपङ्क्तिभोजनं लघुसंसर्गसाहचर्य्यात्। तथा देवलः "संलापस्पर्शनिश्वाससहशय्यासनाशनात्। याजनाध्यापनाद् यौनात् पापं संक्रमते नृणाम्"। सहाशनमेकपङ्क्तिभोजनम्। तथा छागलेयः "आलापात् गात्रसंस्पर्शात् निश्वासात् सहभोजनात्। सहशय्यासनाध्यायात् पापं संक्रमते नृणाम्"। सहाध्यायः पतितेन ब्रह्मचारिणा सहैकस्माद्गुरोरध्ययनम्। सत्यं नवधेत्यत्र प्रकारवाचिना धाप्रत्ययेन प्रकारान्तरं सूचितम् अन्यथा नवेत्युक्तं स्यात्। तेन तदन्नभोजनतत्संस्पृष्टान्नभोजनतत्प्रतिग्रहादीनामुपसंग्रहः। नन्वनेकवचनेषु पापसंक्रान्तिः श्रूयते पूर्वदेशत्यागेन देशान्तरसम्बन्धे संक्रान्तिशब्दस्य मुख्यत्वात् मूलपापकर्त्तुः पापपरिच्छेदे भूते किमर्थं प्रायश्चित्तानुष्ठानमिति। तथा हारीतः "हन्यादशुद्धः शुद्धन्तु शुद्धोऽशुद्धन्तु शोधयेत्। अशुद्धस्य तमोभूतः शुद्धवासेन शुद्ध्यति"। तथा च मनुः "अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्य्यापचारिणी। गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषम्"। मार्ष्टीति मोच्यति संक्रामयतीत्यर्थः। तथा यमः "दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति। यो यस्यान्नमिहाश्नाति स तस्याश्नाति किल्बिषम्"। तस्य

किल्बिषम् अश्नाति इत्यनेनापि पापाभावो गम्यते । उच्यते न पूर्वपापव्यक्तेराश्रयत्यागेन आश्रयान्तरसम्बन्धः सम्भवति गुणस्य तद्रूपादर्शनेनायोग्यत्वात् किन्तु तत्तुल्यव्यक्तिसम्बन्धे गौणोऽयं संक्रान्त्यादिशब्दः । तथा च देवलः "बान्धवोऽपि पृथग् भूत्वा तत्पापं नाप्नुयात् क्वचित् । पृथग्जनोऽपि संयोगात् भजते तुल्यदोषताम्" । तत्पापं तज्जातीयं पापमित्यर्थः । तुल्यदोषतां तत्समानपापतामित्यर्थः । "शुद्धोऽशुद्धन्तु शोधयेदिति" यत्र ब्राह्मणादिसम्पर्क एव पापक्षयहेतुस्तत्र बोद्धव्यम् । यथोशनाः "कृतलक्षणैर्दर्शनस्पर्शनसम्भाषणानि वर्जयेत्" इत्युक्त्वा "सम्भाषणे ब्राह्मणसम्भाषणमित्यादि" । कृतलक्षणो राज्ञा कृतपापचिह्नः । किञ्च यदि पापिष्ठस्यान्यसंसर्गः पापक्षयहेतुस्तदेतरप्रायश्चित्तवदिदमपि केनापि मुनिना प्रायश्चित्तरूपतया पठितः स्यात् प्रत्युत निषेध एव श्रूयते यथा मनुः "प्रायश्चित्तीयतां प्राप्य दैवात् पूर्वकृतेन वा । न संसर्गं व्रजेत् सद्भिः प्रायश्चित्तेऽकृते द्विजः" इति । किञ्च "मिश्रितस्तेन सोऽवदान्ते स्वयञ्च पतितो भवेदिति" देवलवचने चकाराभ्यां मूलपापकर्त्तुरपि पापस्थितिरवगम्यते मूलपापकर्त्ता पतितः स्वयमपि पतति इत्यर्थः । इदानीञ्च कियता कालेन कतमस्य संसर्गस्य पतितत्वापादनमिति निरूप्यते । तत्र देवलः "पतितेन सहोषित्वा जानन् संवत्सरं नरः । मिश्रितस्तेन सोऽवदान्ते स्वयञ्च पतितो भवेत् । याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम् । कृत्वा सद्यः पतन्त्येते पतितेन न संशयः" । यानादिलघुसंसर्गैः ज्ञानकृतैः संवत्सरेण पतति याजनादिभिर्गुरुभिः सद्यः पततीत्यर्थः । तथा बौधायनः "संवत्सरेण पतति पतितेन सहाचरन् । याजनाध्यापनाद् यौनात् सद्यो न शयनाशनात्" । शयनादिना सद्यःपातनिषेधात् साकाङ्क्षस्य संवत्सरेण पततीत्यस्य शयनादिना सम्बन्धः । याजनादिरिदं सहभोजनमप्युपलक्षयति । विष्णुः । "आसंवत्सरात् पतति पतितेन सहाचरन् । सह यानासनाभ्यां यौनात् स्रौवात् मौखात् सम्बन्धात् सद्य एव" । यानासनाभ्यामिति लघुसंसर्गोपलक्षणम् । यौनात् इत्यादि सहभोजनोपलक्षणम् । कूर्मपुराणे व्यासः "ब्रह्महा मद्यपः स्तेनो गुरुतल्पग एव च । महापातकिनस्त्वेते यश्च तैः सह संवसेत् । संवत्सरन्तु पतितैः संसर्गं कुरुते तु यः । यानशय्यासनैर्नित्यं जानन् वै पतितो भवेत्" । एभिर्वचनैर्याजनादिना सद्यःपातो यानादिना ज्ञानतः संवत्सरेणेत्यवगम्यते । ननु याजनादिना संवत्सरेण पतति न तु यानादिनेत्याह मनुर्विष्णुश्च "संवत्सरेण पतति पतितेन सहाचरन् । याजनाध्यापनाद्यौनात् न तु यानासनाशनात्" । यानासनाशनादुत्पन्नसंयोगमाचरन्नित्यर्थः । तथा पैठीनसिः "संवत्सरेण पतति पतितेन सहाचरन् । याजनाध्यापनात् यौनात् नत्वेवं शयनासनात्" । अत्र भवदेवकल्पतरुकारादयः देवलबौधायनादिवचनैर्याजनादीनां सद्यःपातहेतुत्वावगतेः मनुपैठीनसिवचनयोर्नत्विति मध्यपठितस्य पूर्वेण याजनादिना सम्बन्धो न तु परेण यानादिना, याजनाध्यापनात् न तु संवत्सरेण पतति किन्तु यानादिभिरित्याहुः । तदसङ्गतम् सुमन्तुवचनविरोधात् यथा पतितानभिधायाह सुमन्तुः "एषां तैर्यौनस्रौवमौखानां सम्बन्धानामन्यतमेन सह संवत्सरं संस्पर्कमियात् तस्याप्येतदेव प्रायश्चित्तं विदध्यात्" इयात् कुर्यात् एतदेव द्वादशवार्षिकव्रतम् इत्यर्थः । अत्र याजनादीनामन्यतमेन संवत्सरेण पततीत्यवगम्यते । तथा हारीतः "संवत्सरेण पतति पतितेन सहाचरन् । याजनाध्यापनाद्यौनादेकशय्यैकभोजनात्" । एकभोजनमेकपात्रे कालभेदेन भोजनं जलपानञ्च । तथा बृहस्पतिः "षाण्मासिके तु संयोगे याजनाध्यापनादिना । एकत्रासनशय्याभिः प्रायश्चित्तार्द्धमाचरेत् । तथा वत्सरसंसर्गे योनियुक्ते विशेषतः । पूर्वोक्तेन विधानेन पतितव्रतमाचरेत्" । अनेन याजनादिना षाण्मासिकसंसर्गे प्रायश्चित्तार्द्धं वदता वत्सरेण सम्पूर्णप्रायश्चित्तमर्थादुक्तम् उत्तरवचने पुनः स्फुटीकृतम् । योनियुक्तपदेन याजनादीनामप्युपसंग्रहः । एकत्रासनशय्यादिरिति पाठोऽनाकरः रागाऽलिखितत्वात् । जिकनादयस्तु यदि प्रत्येकं विभक्तिनिर्देशात् भोजनं कृत्वा पतति योनिसम्बन्धं कृत्वा पततीति एवं सम्बन्धोऽभिधीयते तदा कृत्वा पततीति पदयोरन्वयाहृतावृत्त्यापत्तिभ्याम् आसक्तां वाक्यभेदः चत्वारि वाक्यानि स्युः । अतः कृत्वेति पदेन तन्त्रेण याजनादिकर्मचतुष्टयमादाय पततीति सम्बन्धे बोधिते न वाक्यभेदः संवत्सरपदेन पृथगुपनीतानामपि कृत्वेति पदेन तन्त्रेणोपनयनात् । दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्राग्नेयादियागषट्कानामिव । अत एकवाक्यतानुरोधाद्याजनादीनां तन्त्रेण

समुच्चितोपनीतानां पततीत्यनेन सम्बन्धे बोधिते याज-
नादीनां समुच्चितानां सद्यः पातहेतुत्वं पूर्व्वोक्तमन्वा-
दिवचनादेकैकेषां संवत्सरेणैव अत्रैव संसर्गद्वये चतुर्भि-
र्मासैः संसर्गद्वयेऽष्टभिर्मासैर्भोगद्वारेण पातहेतुत्वमूह-
नीयम् । तत्र कृत्वेति पदस्य याजनादिकर्त्तृत्वेऽशक्तत्वात्
किन्त्वन्विताभिधानलभ्यं तत् तदा च निरपेक्षाणामेवा-
न्विताभिधानप्राप्तत्वादनुषङ्गाधिकरणन्यायाच्च तन्त्रता
सत्यपि तन्त्रताभिधाने न समुच्चयः सर्व्वेभ्यो दर्शपौर्णमा-
साविन्यत्रेव समुच्चयबोधकस्य द्वन्द्वसमासादेरभावात् । न
वा तन्त्रतायां सह द्वयो नियतः गर्गभोज्यन्नां सप्तदश-
प्राजापत्यान् पशूनालभेदित्यत्र व्यभिचारात् पततीति
पाठस्य दाक्षाऽलिखितत्वाच्च कथं पततीति पदावृत्तिः ।
न च मन्तुवचने याजनादीनामन्यतमेन वत्सरेण पा-
तावगमाद्यौन्मिलितैः सद्यः पात इति कल्पनीयं निर-
पेक्षश्रुतिविरोधात् वक्ष्यमाणप्रकारेण वचनद्वयसामञ्जस्य
सम्भवात् । उच्यते । गुरुलघुभेदेन द्विविधं याजनादिकं
भवति तत्र गुरुणा ज्ञानकृतेन याजनादिना एकैकेन सद्यः
पात. तेनैवाज्ञानकृतेन वारद्वयाभ्यासात् । लघुयाजना-
दावज्ञानकृते वत्सरेण पातः तस्मिन्नेव ज्ञानकृते वत्सरा-
र्द्धेनेति व्यवस्था । तथा हि याजनं योनिसम्बन्धमित्यत्र
देवलवचने पतितेन सहोषित्वा पूर्ववचने जानन्निति
पदसम्बन्धाज्ज्ञानकृतत्वं दर्शितम् । गुरुत्वं च देवलवचने-
नैव याजनाध्यापनयोरुपसंहाराद्दर्शितम् । यथा देवलः
"आचार्य्याद्व्रतनियमशुश्रूषादिभिस्त्रयीविद्योपादानमध्य-
यनं तस्य चाचारान्वयः प्रक्रमसामर्थ्यभक्तिशीलशुश्रूषोप-
नताय शिष्याय प्रदानमध्यापनम् । पशुसोमाज्यपुरो-
डाशसौमधिचरुप्रभृतिभिर्हविर्भिः खदिरपलाशाश्वत्थ-
न्यग्रोधोडुम्बरप्रभृतिभिः समिद्भिः स्रुक्स्रुवोदूखलमुसल-
कुठारखनित्रयूपदारुचर्म्मदर्भग्रावपात्रिपात्रभाजनादिभि-
श्चोपकरणैरुद्गातृहोत्रध्वर्युब्रह्मादिभिश्चर्त्विग्भिः काम्य-
नैमित्तिकानां यज्ञादिपूर्व्वकाणां यथोक्तदक्षिणानां यज्ञानां
समापनं यजनम् एतेन याजनं व्याख्यातम्" । प्रक्रमः उ-
द्यमः । अत्र उपनयनपूर्व्वकमध्यापनं ज्योतिष्टोमादियज्ञानां
याजनं च गुरु, तत्साहचर्य्याद्यौनं परिणयनरूपं गुरु म-
न्त्रहोमादिसाध्यत्वात्, स्तेयादिना पतितान्यब्राह्मण्याग-
मनं वा ब्राह्मणस्य, तदपेक्षया पतितस्त्रब्राह्मणीगमन-
पतितशूद्रागमनयोर्लघुत्वात् । सह भोजनं पतितान्नस्य
पतितेन सहैकपात्रे भोजनं गुरु । उपनयनं विना वेदा-

ध्ययनम्, अष्टकादियज्ञयाजनं पतितस्त्रब्राह्मणीगमनं अ-
पतितान्नस्य पतितेन सहैकपात्रे भोजनं पतितोच्छिष्टभो-
जनं वा पूर्व्वोक्तयाजनाद्यपेक्षया लघु । देवलवचने ज्ञानतो
गुरुणा याजनादिना संवत्सरेण पतनमिति गम्यते ।
ज्ञानतः सकृत्कृतेन येन पतनं तेनाज्ञानतो वारद्वया-
भ्यासेन ; अज्ञानतो वत्सरेण येन पतनं तेन ज्ञानतः
षण्मासैरिति वचनद्वयसामञ्जस्यं तथा च लघुयाज-
नविषये संवर्त्तः "एभिः संसर्गमायाति यः कश्चित्
काममोहितः । षण्मासानवटनेकं वा ब्रह्महत्याव्रत-
ञ्चरेत्" । कल्पतरुकारस्याप्येष स्वरसः । अतएव कूर्म्म-
पुराणं "याजनं योनिसम्बन्धं तथैवाध्यापनं द्विजः ।
कृत्वा सद्यःपतेत् जानन् सह भोजनमेव च । अज्ञाना-
द्य वा मोहात् कुर्य्यादध्यापनं द्विजः । संवत्सरेण पतति
सहाध्ययनमेव च" । अत्र पूर्व्ववचनं गुरुयाजनादिपरं
द्वितीयवचनं लघुयाजनाद्यर्थम् । न च ज्ञानाज्ञानाभ्या-
मेव सद्योवचनसंवत्सरवचनयोः सामञ्जस्यं भविष्यति
किं गुरुलघुव्यवस्थापनेनेति वाच्यं ज्ञानकृतादज्ञानकृत-
स्यार्द्धम् अज्ञानकृताच्च ज्ञानकृतस्य द्वैगुण्यं युक्तं यतः
"अकामतः कृते यत्स्याद्द्विगुणं बुद्धिपूर्व्वके" इति वचनात्
अत्यन्तविप्रकर्षस्यादृष्टत्वाच्च । देवलेन याजनादिवचनस्य
गुरुयाजनादावुपसंहृतत्वान्मनुवचने चार्थाल्लघुयाजनाद्य-
वगतेस्तस्मादुक्तैव व्यवस्था । अथ गुरुसंसर्गकालं निरू-
प्याधुना लघुसंसर्गकालो निरूप्यते । तत्र भवदेवेनोक्तं
याजनादिभ्यो लघूनां यानासनशयनैकपङ्क्तिभोजनानां
चतुर्णां लघुतराणामालापस्पर्शनिश्वासानां मिलित्वा स-
प्तानां ज्ञानतो वत्सरेण पातहेतुत्वमज्ञानतो वत्सरद्वयेनेति
तदेतत्प्रमाणशून्यं द्वन्द्वनिर्देशादेरभावात् । जिकनस्तु
"आसंवत्सरात् पतति पतितेन सहाचरन् । सह याना-
सनाभ्यामिति" विष्णुवचने द्वयोर्द्वन्द्वनिर्देशात् यानास-
नादीनाञ्चतुर्णां मध्याद्येन केनचित् संसर्गद्वयेन वत्स-
रेण पात एकैकस्तु वत्सरद्वयेन एभ्योऽपि संलापादेर्ल-
घुत्वात् सहयानादेर्द्विगुणकालेन साध्यापादकत्वम्
एतच्च ज्ञानतः "जानन् संवत्सरं नर" इति वचनात्
अज्ञानादेतद्द्विगुणकालेनेति । तच्च त्रयाणामपि द्वन्द्वनि-
र्देशात् । यथा मनुः "संवत्सरेण पतति पतितेन सहा-
चरन् । याजनाध्यापनाद्यौनात् न तु यानाशनासनात्" ।
यथा याजनादिना प्रत्येकमज्ञानाद्वत्सरेण पातः तथा न
यानादिभिः एभिश्च मिलितैर्यानादित्वर्थः । तथा च

कूर्मपुराणे "ब्रह्महा मद्यपस्तेनो गुरुतल्पग एव च। महापातकिनस्त्वेते यश्च तैः सह संवसेत्। संवत्सरन्तु पतितैः संसर्गं कुरुते तु यः। यानशय्यासनैर्नित्यं जानन् वै पतितो भवेत्"। तथा वृहस्पतिः "आब्दमासिके तु संयोगे याजनाध्यापनादिना। एकत्रासनशय्याभिः प्रायश्चित्तार्द्धमाचरेत्"। एकत्रासनशय्यापदेन लघुसंसर्गान्तरं लक्ष्यते अन्यथा बहुवचनानुपपत्तेः। यथा प्रोद्गातृणां भक्ष्यः फलचमसः इत्यत्र प्रोद्गातृशब्दस्य प्रोद्गात्रप्रोद्गातृपरत्वमुक्तम्। यदा त्वेकत्रासनशय्यादिरिति पाठस्तदादिशब्दात् संसर्गान्तरलाभः अयन्त्वपपाठः रत्नाऽलिखितत्वात्। उच्यते। यानादीनां लघुसंसर्गाणां समुच्चितानां पातहेतुत्वं द्वन्द्वनिर्देशात् त्रयाणां द्वन्द्वनिर्देशो बहुषु वचनेष्ववगम्यते। अत्र च यानादीनामनियतत्वश्रवणात् न्यायवात् एभिस्त्रिभिः लघुसंसर्गैर्वत्सरेण पततीत्येकैव श्रुतिः कल्पनीया सह यानासनाभ्यामित्यत्र सहशब्दादेककालत्वमवगम्यते एककाले चैकपीठाद्युपवेशनं स्पर्शनिश्वासालापलघुतरसंसर्गत्रयनियतमतस्तदर्थादेव गम्यते एभिस्त्रिभिर्लघुतरसंसर्गैरेको लघुसंसर्गः समानः अतस्तत्रापि लघुसंसर्गत्रयमेव मन्वादिवचनेषु सहशब्दाभावात् कालभेदेन सततपतितोपभुक्तासनाद्युपवेशनं ग्राह्यमतस्त्रिभिर्लघुसंसर्गैर्वत्सरेण साम्यम् एतच्च ज्ञानतः "जानन् संवत्सरम्" इति देवलवचनात् अज्ञानतो वत्सरद्वयेन एकैकशो ज्ञानाद्वत्सरत्रयेण अज्ञानात् वत्सरषट्केन संलापादीनाम् एकैकयानादिसमानत्वात् ज्ञानतो वत्सरत्रयेण पातः। अज्ञानतो वत्सरषट्केन ज्ञानादेकैकशो वत्सरनवकेन। अज्ञानादेकैकशोऽष्टादशभिर्वत्सरैरित्यर्थः। ननु संलापादीनां कथं यानादिभ्यो लघुत्वम्। उच्यते लघु प्रायश्चित्तश्रवणात् यथोशना "ततलक्षणकैर्दर्शनस्पर्शनसम्भाषणादीनि वर्जयेत् दर्शने ज्योतिषां दर्शनं स्पर्शने हृद्यालम्भनं सम्भाषणे ब्राह्मणसम्भाषणमपां स्पर्शनञ्चेति"। क्षतलक्षणकैः पतितैः पदादिचिह्नितैः, दर्शनन्तु न संसर्गः प्रकरणेऽपाठात् पतितस्पर्शनमत्र परम्परया ग्राह्यं साक्षात् स्पर्शने स्नानश्रवणात् तथा मनुः "दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकान्तथा। शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति"। पतितान्नभोजनपतितद्रव्यप्रतिग्रहयोश्च प्रत्येकं ज्ञानतः षड्भिर्मासैरज्ञानाद्वर्षेण पातित्यापादकत्वं यथा पतितानभिधायाह संवर्त्तः "एभिः संसर्गमायाति यः कश्चित् काममोहितः। षण्मासानब्दमेकं वा ब्रह्महत्याव्रतञ्चरेत्"। न चात्र ज्ञानाज्ञानकृतयोर्नसंसर्गविषयत्वम् अविशेषश्रुतेर्यौनतुल्यत्वादेतयोः तथा च पतितान्नभोजनस्य संवत्सरेण पातहेतुत्वमाह देवलः "संवत्सरेण पतति पतितेन सहाचरन्। भोजनासनशय्यादि कुर्वाणः सार्वकालिकम्"। भोजनं तदन्नभोजनं सार्वकालिकमनवच्छिन्नं भोजने च तथा दर्शनात् प्रतिग्रहेऽपि तथात्वमूहनीयं तयोः समानत्वदर्शनात् साम्ये हेतुमाह वृहस्पतिः "पतितानां गृहं गत्वा भुक्त्वा च प्रतिगृह्य च। मासोपवासं कुर्वीत चान्द्रायणमथापि वा"। मासोपवासो ज्ञानाभ्यासे तत्र च पञ्चदश धेनवः। चान्द्रायणमज्ञानाभ्यासे तत्र सार्द्धसप्त धेनवः। गृहं गत्वेति अनेकसंवत्सरेणेति। तथा मनुः "चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च। पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति"। तथा रजकादीनभिधायाह यमः "भुक्त्वा चैषां स्त्रियो गत्वा पीत्वापः प्रतिगृह्य च। कृच्छ्रमब्दं चरेज्ज्ञानादज्ञानादैन्दवद्वयम्"। पतितान्नभक्षणप्रायश्चित्तात् पतितस्पृष्टान्नभक्षणप्रायश्चित्तार्द्धेन ह्रासदर्शनादर्द्धहानिः तेन ज्ञानतः पतितस्पृष्टान्नभोजने संवत्सरेण साम्यमज्ञानतो वत्सरद्वयेनेति। तथा प्रचेताः "पतितान्नन्तु यो भुङ्क्ते सप्ताहमुदके वसेत्। पानीयपानतश्चैव कुशवारि पिबेत्त्र्यहम्"। सप्ताहोदकवासे धेनुद्वयं वक्ष्यते एतत् सकृदज्ञानविषयं सकृज्ज्ञानकृतपतितस्पृष्टान्नभक्षणे शङ्खः "भुक्तोच्छिष्टोऽन्त्यजैः स्पृष्टः प्राजापत्यं समाचरेत्। अर्द्धोच्छिष्टे स्मृतः पादः पादः आमाशने तथा"। "अमेध्यपतितचाण्डालपुक्कशरजस्वलावधूतकुणिकुष्ठिकुनखिस्पृष्टानि भुक्त्वा कृच्छ्रमाचरेत्"। पातकिस्पृष्टपाकान्नभोजने तु संसर्गस्य किञ्चिद्व्यवधानात् पादहानिः तेन ज्ञानतः सपादवत्सरेणाज्ञानतः सार्द्धवत्सरद्वयेन साम्यम्। पातकिसंकीर्णपाकान्नभोजने तु ततोऽपि व्यवहितत्वादपरपादहानिः। तेनात्र ज्ञानकृते सार्द्धवत्सरेणाज्ञानतो वत्सरत्रयेण साम्यम्। पतितामान्नभक्षणे पतितसिद्धान्नभक्षणस्य चतुर्थभागः एवं पतितपानीयपानेऽपि चाण्डालान्नभक्षणे तथा दर्शनात्। "यथा विष्णुः चाण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत् सिद्धान्नं भुक्त्वा पराकः"। इति अत्रान्नमामान्नम् उत्तरत्र सिद्धान्नदर्शनात् पराके च द्वादशोपवासाः। तथा प्रचेताः "पतितान्नन्तु यो भुङ्क्ते सप्ताहमुदके वसेत्। पानीयपानतश्चैव कुशवारि त्र्यहं

पिबेत्”। त्रिरात्रोपवासे चतुर्विंशतिपणद्रव्यं काञ्चनं देयम्। एतदेव कुशवारिपाने किञ्चिदूनं देयम्। पतितोच्छिष्टभक्षणे तु पतितान्नभक्षणाद्द्वैगुण्येन पापाधिक्यम्। यथाङ्गिराः “चाण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे। द्विजः शुध्येत् पराकेण शूद्रः कृच्छ्रेण शुध्यति”। एतत् सकृद्ज्ञानविषयम्। पराके पञ्च धेनवः। सकृद्ज्ञानकृतपतितान्नभोजने धेनुद्वयं प्रचेतोवचने व्याख्यातम्। तेन ज्ञानतः पतितोच्छिष्टान्नभक्षणे मासत्रयेण पतितसाम्यम् अज्ञानतो मासषट्केन। उच्छिष्टान्नभक्षणवदुच्छिष्टप्रोञ्छनेऽपि व्यवस्था “उच्छिष्टभोजनञ्चैव तथा तस्य च मार्जनम्” इति देवलवचने साहचर्यदर्शनादिति। अत्र कृतानेकपातकपुरुषसंसर्गेऽप्येकैव पापव्यक्तिरुत्पद्यते न भिन्ना कल्पनागौरवापत्तेः। पुरुषापराधस्य च संसर्गलक्षणस्य निमित्तकारणस्य तद्विशिष्टात्ममनःसंयोगस्याप्यसमवायिकारणस्यैकत्वात्। प्रायश्चित्तन्तु गुरुसंसर्गस्यैव कर्त्तव्यं गुरुणा प्रायश्चित्तेन लघुनः पापस्य क्षयाभिधानात्। तथानेकमहापातकिपुरुषसंसर्गपापव्यक्तिभेदेऽपि देशकालकर्त्रैक्ये तन्त्रताया उक्तत्वात्तन्त्रेणैव प्रायश्चित्तम्। जितकस्तु युगपदनेकब्राह्मणवधवद्युगपदनेकपातकिसंसर्ग एव तन्त्रता। क्रमकृते तु ब्राह्मणवधवदावृत्तिरेव प्रायश्चित्तस्येति तन्न ब्रह्मवधेऽपि क्रमकृते प्रायश्चित्ततन्त्रताया उक्तत्वात्। युगपदनेकब्रह्मवध एव ज्ञानाज्ञानाभ्यां विशिष्टमरणयावज्जीवव्रतलक्षणप्रायश्चित्तभेदेन तन्त्रताऽभावस्य श्रीमहादेवपादैर्दर्शितत्वात्। इह तु तद्वत् प्रायश्चित्तवैशिष्ट्ये प्रमाणं नास्ति तथा शूद्रस्येव महापातकिनोऽपि पातक्यन्तरसंसर्गे पापमुत्पद्यते एव व्याघ्रतद्ब्रह्मवधवद्दोषे समत्वात्। अन्यथा पातकिनश्चाण्डालान्नभक्षणेऽप्यदोषः स्यात्। तथा प्रतिक्षणं पूर्वपूर्वोत्पन्नपापव्यक्तिसहकृतोत्तरोत्तरसंसर्गादन्यान्या एव पापव्यक्तयो महत्य उत्पद्यन्ते पूर्वापूर्वा चोत्पद्यैव विनश्यति वत्सरेणैव कृत्स्नपापकर्तृपापसमानदुरितापूर्वव्यक्तिरुत्पद्यते। सा च सम्पूर्णनरकफला वत्सराभ्यन्तरेऽल्पाल्पनरकफलिका अतएव प्रायश्चित्तवाक्यमप्येकम्। न तु भिन्नभिन्नाः समानाः पापव्यक्तयः समुदायात् सम्पूर्णनरकं फलम्। सम्पूर्णनरकफलस्य ब्रह्मवधादावेकपापव्यक्तिफलत्वदर्शनादिति”। अत्रेदं बोध्यम्। महापातकिसंसर्गस्यैव कलौ पापहेतुत्वं नान्यपापिसंसर्गस्य यथोक्तं पराशरेण “कृते सम्भाषणात् पापं त्रेतायाञ्चैव स्पर्शनात्। द्वापरे चान्नमादाय कलौ पतति कर्मणा”, कलौ सम्भाषणादिना न पातित्यं किन्तु कर्त्तुरेव कर्ममात्रेणैव पातित्यं न संस्पर्शनादिना। “आलापात् गात्रसंस्पर्शादित्यादि” पराशरवचनं महापातकिविषयमिति पराशरभाष्ये माधवाचार्य्य आह स्म।

**संसर्गाभाव** पु० संसर्गेण सम्बन्धेनावच्छिन्नप्रतियोगिताकोऽभावः। ध्वंसप्रागभावात्यन्ताभावरूपे भेदभिन्ने १अभावे २सम्बन्धाभावे च “प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च। एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते” भाषा०। संसर्गाभावत्वं च अन्योन्याभावभिन्नाभावत्वं तत्र अन्योन्याभावस्य तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावरूपतया तद्भिन्नस्य संसर्गाभावत्वोक्तेः। तादात्म्यातिरिक्तसंसर्गावच्छिन्नप्रतियोगिताकत्वेन संसर्गाभावस्य यौगिकताऽपि। संसर्गप्रतियोगिकाभावत्वं तु न लक्षणं तथात्वे वक्ष्यमाणप्रकारोक्तं दूषणमापतेत् तथा हि अभावस्य संसर्गप्रतियोगिकत्वे घटादिप्रतियोगिकत्वं बाध्येत द्रव्यगुणकर्मणां समवायिकारणेषु संसर्गस्य समवायसम्बन्धरूपतया तस्य नित्यत्वेन ध्वंसाधारे तत्संसर्गाभावस्य असम्भवात्। समवायावच्छिन्नप्रतियोगिताकत्वेन बोधने तु प्रतियोग्यसत्त्वदशायां समवायस्य नित्यत्वेन तद्बुद्धेरसम्भवात्। संसर्गाभावस्य नञादिनिपातेन धातुना च बोध्यते तत्र निपातेन प्रातिपदिकार्थाभावस्य बोधने अनुयोगिनि सप्तम्यपेक्षा यथा गेहे घटो नास्तीति। क्रियार्थसंसर्गाभावस्य धात्वर्थादौ बोधने तु नायं नियमः यथा गगनं न पश्यति न कलञ्जं भक्षयेदित्यादौ तत्र दर्शने गगनकर्मत्वस्य कलञ्जभक्षणे बलवदनिष्टासाधनत्वस्य नञा संसर्गाभावस्य बोधनान्न तत्र सप्तम्यपेक्षेति विवेकः। कणा० सू० वृत्त्योश्चाप्युक्तं यथा

“नास्ति घटो गेहे इति सतो घटस्य गेहसंसर्गप्रतिषेधः” सू०। उप० “गेहे घटस्य यः संसर्गः संयोगस्तस्य प्रतिषेधः स च यदि कदाचिदपि न घटस्तदात्यन्ताभाव एव भविष्यतः प्रागभावो भूतस्य प्रध्वंसाभावः, तर्हि घटसंसर्गो गेहे नास्तीति प्रतीत्या भवितव्यमिति चेत् प्रतीत्या भवितव्यमित्यत्र कोऽर्थः यदि तद्विषयता प्रतीत्या भवितव्यमित्यापादनार्थस्तदेष्टापत्तिः अथ तदुल्लेखिन्येति तदा गेहे इत्यधिकरणोल्लेखस्यैव संसर्गोल्लेखपर्य्यवसानमाधारत्वस्यैव धर्मसम्बन्धाकारत्वात् तत् किं घटसत्ताक्षणेव ? अस्त्येवेति कोऽर्थस्तत्र घटेन संयुक्तो वा

नाद्यः समवेतघटस्य तन्नाभावात् न द्वितीयः संयोगस्य निषेधात् नन्वेवं घटादीनां केवलान्वयित्वप्रसङ्गः ततश्च योगसमवायान्यतरस्यैव सर्वत्र निषेधादिति चेन्न तदुभयनिषेधस्यैव घटनिषेधात्मकत्वात् तत् किं घटस्तत्संयोगश्चेत्येकं तत्त्वं येन घटसंयोगनिषेधो घटनिषेधः स्यात् तत् किं घटस्तत्संयोगसमवायावेकं तत्त्वं येन तद्विधिरेव घटविधिः स्यात् न हि तौ यत्र निषेध्येते तत्र घटान्वयो येन केवलान्वयित्वं तस्य स्यात् तथा च यस्य यो विधिस्तन्निषेध एव तन्निषेध इति । यद्वा घटस्य समवायितया गेहेऽत्यन्ताभाव एव स एव गेहे घटो नास्तीति प्रतीति विषयः कपाले संयोगितयैव । एवं सति केवलान्वयत्वन्ताभावप्रतियोगितया घटोऽसन् स्यादिति चेत् भवेदेवं यदि संयोगित्वसमवायित्वाभ्यां सर्वत्रासन् स्यादिति" ।

**संसर्गिन्** त्रि० सम्+सृज–णिनि । १संसर्गयुक्ते विभागानन्तरम् (यस्य धनं तस्येति) कृतसमयेन एकत्रावस्थानरूपसंसर्गयुक्ते २भ्रात्रादौ ३सम्बद्धे च ।

**संसार** पु० संसरत्यस्मात् सम्+सृ-घञ् । १मिथ्याज्ञानजन्यसंस्काररूपवासनायां २देहारम्भकादृष्टभेदे ३स्वादृष्टोपनिबद्धदेहपरिग्रहे च आधारे घञ् । ४विश्वे । भावे घञ् । ५सङ्गतौ । संसारगतिप्रकारः शा०सू०भा० दर्शितो यथा "तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्" सू० "पञ्चाग्निविद्यामाश्रित्य संसारगतिप्रभेदः प्रदर्श्यते, वैराग्यहेतोस्तस्माज्जुगुप्सेतेति चान्ते श्रवणात् । जीवो मुख्यप्राणसचिवः सेन्द्रियः समनस्को विद्याकर्मपूर्वप्रज्ञापरिग्रहः पूर्वदेहं विहाय देहान्तरं प्रतिपद्यते इत्येतदवगतम् । "अथैनमेते प्राणा अभिसमायन्ति" इत्येवमादेः "अन्यन्नवतरं कल्याणतरं रूपं कुरुते" इत्येवमन्तात् संसारप्रकरणस्थाच्छब्दात्, धर्माधर्मफलोपभोगसम्भवाच्च । स किं देहबीजैर्भूतसूक्ष्मैरसम्परिष्वक्तो गच्छति आहोस्वित् सम्परिष्वक्त इति चिन्त्यते । किन्तावत् प्राप्तं असम्परिष्वक्त इति । कुतः करणोपादानवद्भूतोपादानस्याश्रुतत्वात् । "स एतास्तेजोमात्राः समभ्याददानः" इत्यत्र तेजोमात्राशब्देन करणानामुपादानं सङ्कीर्तयति, वाक्यशेषे चक्षुरादिसङ्कीर्तनात् । नैवम् भूतमात्रोपादानसङ्कीर्तनमस्ति । सुलभाश्च सर्वत्र भूतमात्राः, यत्रैव देह आरब्धव्यस्तत्रैव सन्ति । ततश्च तासां नयनं निष्प्रयोजनं, तस्मादसम्परिष्वक्तो यातीत्येवं प्राप्ते पठत्याचार्यः "तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः" इति । तदन्तरप्रतिपत्तौ देहबीजैर्भूतसूक्ष्मैः सम्परिष्वक्तो रंहति गच्छतीत्यवगन्तव्यम् । कुतः प्रश्ननिरूपणाभ्याम् । तथा हि प्रश्नः "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति । निरूपणञ्च प्रतिवचनं द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपा आहुतीरुक्त्वा "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति। तस्मादद्भिः परिवेष्टितो जीवो रंहति व्रजतीति गम्यते" । सां०का० तत्प्रकारो दर्शितो यथा "संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्" का० "सन्त्वेतदेव शरीरं भोगायतनं पुरुषस्य, कृतं दृश्यमानेन षाट्कौशिकेन शरीरेणेत्यत आह संसरतीति उपात्तमुपात्तं षाट्कौशिकं शरीरं जहाति हायं हायं चोपादत्ते, कस्मात् ? निरुपभोगं यतः षाट्कौशिकं शरीरं विना सूक्ष्मं शरीरं निरुपभोगं, तस्मात् संसरति । ननु धर्माधर्मनिमित्तः संसारः न च सूक्ष्मशरीरस्यास्ति तद्योगः, तत्कथं संसरतीत्यत आह भावैरधिवासितं धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि भावास्तदन्विता बुद्धिः तदन्वितञ्च सूक्ष्मशरीरमिति तदपि भावैरधिवासितं यथा सुरभिचम्पककुसुमसम्पर्कात् वस्त्रं तदामोदवासितम्भवति तस्माद्भावैरेवाधिवासितत्वात् संसरति । कस्मात् पुनः प्रधानमिव महाप्रलयेऽपि तच्छरीरं न तिष्ठतीत्यत आह लिङ्गम् लयं गच्छतीति लिङ्गं हेतुमत्त्वेन चास्य लिङ्गत्वमिति भावः । स्यादेतत् बुद्धिरेव साहङ्कारेन्द्रिया कस्मात् संसरति कृतं सूक्ष्मशरीरेणात्राप्रामाणिकेनेत्यत आह "चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा छाया । तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम्" का० "लिङ्गनात् ज्ञापनात् बुद्ध्यादयो लिङ्गं तत् अनाश्रितं न तिष्ठति । जन्मप्रायणान्तराले बुद्ध्यादयः प्रत्युत्पन्नशरीराश्रिताः प्रत्युत्पन्नपञ्चतन्मात्रवत्त्वे सति बुद्ध्यादित्वात् दृश्यमानशरीरवर्त्तिबुद्ध्यादिवत् । विना विशेषैरिति सूक्ष्मैः शरीरैरित्यर्थः । आगमश्चात्र भवति "अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलादिति" । अङ्गुष्ठमात्रत्वेन सूक्ष्मतामुपलक्षयति आत्मनो निष्कर्षासम्भवेन सूक्ष्ममेव शरीरं पुरुषस्तदपि हि पुरि स्थूलशरीरे शेते" त०कौ० ।

**संसारगुरु** पु० ६त० । १कामदेवे त्रिका० २जगद्गुरौ च ।

**संसारचक्र** न० संसारश्चक्रमिव । पुनःपुनर्जन्ममरणात्मके जीवस्य व्यापारभेदे स्वस्वकर्मणा देहग्रहणानन्तरं तत्रोपभुज्यमानकर्मणो नाशे मरणं तदनन्तरं च स्वकर्मानुसा-

देव देवतिर्य्यगादिभावापत्तिरित्येवं सततमतागतप्रचुरत्वात् संसारस्य चक्रतुल्यत्वात् तथात्वम् । तदेतत् विष्णु पु० संसारचक्रनिरूपणे निरूपितं तत्र दृश्यम् ।

**संसारमार्ग** पु० ६त० । योनिद्वारे त्रिका० । तत एव हि बहिर्निर्गमने मायाहृष्यतेति तस्य तथात्वम् ।

**संसारिन्** त्रि० संसरति अदृष्टवशात् देहभेदमनुगच्छति सम्+सृ–णिनि । शरीराभिमानिनि जीवे ।

**संसिद्ध** त्रि० सम्यक् स्वभावेन वा सिद्धः सम्+सिध–क्त । १स्वभावसिद्धे २सम्यग्निष्पन्ने च ।

**संसिद्धि** स्त्री सम्+सिध–क्तिन् । १स्वभावे प्रकृतौ २सम्यग्निष्पत्तौ । सम्यक्सिद्धिर्यत्र । ३मुक्तौ च "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" गीता । [४मत्तस्त्रियाम् शब्दच०।

**संसृति** स्त्री सम्+सृ–क्तिन् । १संसारे २प्रवाहे च त्रिका० ।

**संसृष्ट** पु० सम्+सृज–क्त । विभागानन्तरं प्रेमतः पुनः स्वस्व नेषु कृतसंसर्गे भ्रात्रादौ "विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः । पितृव्येणाथ वा प्रीत्या स तु संसृष्ट उच्यते" "इहस्पतिपरिगणितव्यतिरिक्तेषु संसर्गकृतो विशेषो नादरणीयः परिगणनानर्थक्यात्" दायभा० । तद्धनविभागस्तत्र दर्शितो यथा "विभक्ताः सह जीवन्तो विभजेरन् पुनर्यदि । समस्तत्र विभागः स्यात् ज्यैष्ठ्यं तत्र न विद्यते" मनुः । "समस्तत्रेति सर्वभ्रातृसंसर्गाभिप्रायेण भ्रातृपत्वसिद्धयोस्तु पूर्वमुपभागानुसारेण भागव्यवस्था बोद्धव्या । पूर्वकृतज्यैष्ठांशनिषेधमात्रपरं हि वचनम् अतएव बृह० "विभक्ता भ्रातरो ये तु संप्रीत्यैकत्र संस्थिताः । पुनर्विभागकरणे तेषां ज्यैष्ठ्यं न विद्यते" इति ज्येष्ठांशमात्रं निषेधति न तु भागसाम्यम्" दायभा० । तत्र भ्रातृविषये विशेषस्तत्रोक्तो यथा "अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यधनं हरेत् । असंसृष्ट्यपि चादद्यात् संसृष्टो नान्यमातृजः" याज्ञ० अस्यायमर्थः । "संसृष्टी पुनरन्योदर्य्यः प्रथमं हरेत् न पुनरन्योदर्य्यमात्रम् । प्रथमं च हरत् सोदरं वाधित्वैव वा तेन सह वैमात्रेयस्यापि असंसृष्ट्यपि सोदरो गृह्णीयात् सोदरपदमनुवर्त्तते ("सोदरस्य तु सोदरः इति वचनात्) । नान्यमातृज एव संसृष्टी गृह्णीयात् संसृष्टपदमेव वा सोदरमभिधत्ते अतएव वृहद्याज्ञ० "सोदरो नान्यमातृजः" इति जितेन्द्रियेण लिखितम् । तथा च पूर्वार्द्धस्य संसृष्टीत्यनुवर्त्तते नु च केवलमन्योदर्य्य एव संसृष्टी गृह्णीयात् किन्त्वसंसृष्ट्यपि सोदरो गृह्णीयादित्यर्थः । तेन असंसृष्टिना सोदरेण संसृष्टिना चासोदरेण विभज्य गृहीतव्यमतएवापि चकारं प्रयुक्तवान्" दायभा० । "तस्मात् सोदरासोदरमात्र सद्भावे सोदराणामेव । सोदराणामेव मध्ये एकस्य संसृष्टत्वे तस्यैव असंसृष्टसोदरसंसृष्टासोदरसद्भावे च द्वयोरेव साधनमात्रसद्भावे प्रथमं संसृष्टस्य तदभावे चासंसृष्टासोदरस्येति" दायभा० एवं भ्रातृपुत्रेऽपि । २वसनादिना संयुक्ते मेदि० ३संयुक्ते च । भावे क्त । ४सख्ये ।

**संसृष्टि** स्त्री सम्+सृज–क्तिन् ।१संसर्गे २अलङ्कारभेदे अलङ्कारशब्दे ४०५ पृ० दृश्यम् । ["संसृष्टस्य तु संसृष्टी" याज्ञ० ।

**संसृष्टिन्** पु० संसृष्टमनेन इष्टा० इनि । संसृष्टभ्रात्रादौ

**संस्कर्त्तृ** त्रि० सम्+कृ–तृच्–सुट् च । १संस्कारकारके २पाचके च "संस्कर्त्ता चोपहर्त्ता च खादते घातकाः स्मृताः" मनुः ।

**संस्कार** पु० सम्+कृ–घञ् सुट् च । सतोगुणान्तराधानरूपे १प्रतियत्ने यथा अलङ्कारादेरश्वादेर्वस्त्रादेश्च उद्दीपननिर्माणमार्जनादयः, दर्पणादेर्निर्मलीकरणादिः व्रीह्यादेश्च यज्ञाङ्गतासम्पादनाय वैदिकमार्गेण प्रोक्षणादिः । स च "संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिषु" कुसुमा० उक्तेः पुरुषस्यैव धर्मः" न्यायमतम् । प्रोक्षिता एव व्रीहयः पुरोडाशाय कल्पन्ते नाप्रोक्षिता इति प्रोक्षणादिजन्यसंस्कारो यज्ञाङ्गपुरडाशेष्विति द्रव्यधर्मः मीमांसकाः । एवं स्नानाचमनादिजन्याः संस्कारा देहे उत्पद्यमाना अपि तदभिमानिजीवे कल्प्यन्ते इति वेदान्तिनः । २स्मृतिहेतौ अनुभवजन्ये आत्मवृत्तिगुणभेदे पृथिव्यादिचतुष्टयस्थे ३वेगाख्ये गुणे, यथावस्थिततयास्थापनप्रयोजके स्थितिस्थापनाख्ये ४गुणभेदे च

"संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने । मूर्त्तमात्रे तु वेगः स्यात् कर्मजो वेगजः क्वचित् । स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि । अतीन्द्रियः स विज्ञेयः क्वचित् स्पन्देऽपि कारणम् । भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः । उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् । स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते" भाषा० "त्रिविधः संस्कारो नास्ति वेगस्तु द्विविधः कर्मजवेगजभेदात् तत्र शरादौ नोदनजनितेन कर्मणा वेगो जन्यते तेन च पूर्वकर्मनाशादुत्तरं कर्म एवमुत्तरोत्तरमपि कर्म जायते । वेगं विना कर्मणः कर्मान्तराजनकत्वात् पूर्वकर्मनाशे उत्तरकर्मोत्पत्तिश्च न स्यात् । यत्र वेगवता कपालेन जनिते घटे वेगो जन्यते तत्र

वेगजो वेगः। स्थितिस्थापकसंस्कारस्त्वतीन्द्रियः क्वा-
चिदृश्याखादीनां परित्यागे यत् पूर्वदेशगमनं तत्र स्थिति-
स्थापको हेतुः। उपेक्षानात्मकनिश्चयेन भावनाख्यसंस्कारो
जन्यते स च स्मरणे प्रत्यभिज्ञायां च हेतुः जीववृत्ति-
रतीन्द्रियश्च स च चरमफलनाश्यः क्वचित् रोगादिनाश्यः
क्वचित् कालनाश्यः” सि॰मु॰ अन्ये तु समानविषयकं
स्मरणमेव संस्कारनाशकम् अतएव “जायते च पुनः-
पुनःस्मरणाद्दृढतरसंस्कारः” इति दीधितिकृत् इत्याहुः।

संस्कारत्वं तु न जातिरिति उपस्कारादौ व्यवस्थापितम्।
२शास्त्राद्युक्तजन्यव्युत्पत्तौ, ३व्याकरणोक्तदिशा शब्दानां
४साधनप्रकारे, विप्रादीनां वैदिककर्मार्हत्वप्रयोजके ५गर्भा-
धानादौ क्रियाकलापे ६पाके च। विप्रादीनां देहसं-
स्काराश्च अष्टाचत्वारिंशत् तच्छब्दे ५१० पृ॰ दर्शिताः।
इदानीन्तनानां तु गर्भाधानाद्याविवाहान्ताः दशविधाः
प्रसिद्धाः। तेषां च देह दोषनाशकता यथोक्तं हारीतेन
“गर्भाधानवदुपेतो ब्रह्मगर्भं संदधाति पुंसवनात् पुंसी-
करोति फलस्थापनात् मातापितृजपाप्मानमपोहति
रेतोरक्तगर्भोपघातः पञ्चगुणो जातकर्मणा प्रथममपो-
हति नामकरणेन द्वितीयं प्राशनेन तृतीयं चूड़ाकर-
णेन चतुर्थं स्नापनेन पञ्चममेतैरष्टाभिः संस्कारैर्गर्भो-
पघातात् पूतो भवति”। “स्नापनं समावर्त्तनम्” उप-
नयनस्य वेदग्रहणार्थत्वम् विवाहस्याग्निसाध्यकार्त्त-
कार्यार्थत्व मतिविवेकः अतो दशविधाः। “गर्भाधानमृतौ
पुंसः करणं स्पन्दनात् पुरा। षष्ठेऽष्टमे वा सीमन्तः
प्रसवे जातकर्म च। अहन्येकादशे नाम चतुर्थे मासि
निष्क्रमः। षष्ठेऽन्नप्राशनं मासि चूड़ा कार्या यथाकु-
लम्। एवमेनः शमं याति बीजगर्भसमुद्भवम्” याज्ञ॰।
अत्र जातकर्मान्नप्राशनैकौ संस्कारौ बीजादिदोषनि-
वारकतयोक्तौ। अग्निस्थापनादेश्च पञ्चविधः शूद्रसंस्कारः
तच्छब्दे दर्शितः [illegible] च समस्त[illegible]नुपलेपन[illegible] धिकतो-
द्धरणमभ्युक्षणेन। दीक्षणीयस्मिन्त्रकमन्त्रसंस्काराश्च
दशविधाः दीक्षा॰ [illegible] दर्शिता यथा
शारदायाम् “मन्त्राणां दश कथ्यन्ते संस्काराः सिद्धि-
दायिनः। जननं जीवनं पश्चात्ताड़नं बोधनं तथा।
अथाभिषेको विमलीकरणाप्यायने तथा। तर्पणं दीपनं
गुप्तिर्दशैता मन्त्रसंस्क्रियाः। मन्त्राणां मातृकायन्त्राद्-
उद्धारो जननं१ स्मृतम्। [illegible] कृत्वा मन्त्रवर्णान्
जपेत् सुधीः। एत[illegible] न्याहुर्मन्त्रतन्त्रविशारदाः।
मन्त्रवर्णान् समालिख्य ताड़येच्चन्दनाम्भसा। प्रत्येकं
वायुना मन्त्री ताड़नं३ तदुदाहृतम्”। वायुना वायु-
वीजेन “यमिल्वनेन तं मन्त्री प्रसूनैः करवीरजैः।
तन्मन्त्राक्षरसंख्यातैर्हन्यात् यान्तेन बोधनम्४”। यान्तेन
रश्मिमनेन इति “स्वतन्त्रोक्तविधानेन मन्त्री मन्त्रार्ण-
संख्यया। अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेद्विशुद्धये। स्वतन्त्रो
विधानेन मूर्ध्नि तोयेन देशिकः। नमोऽन्तं मन्त्रमुच्चार्य
तदन्ते देवताभिधाम्। द्वितीयान्तामहं पश्चादभिषिञ्चा-
म्यनेन तु। तोयैरञ्जलिवद्भिश्चाप्यभिषिञ्चेत् स्वपद्धतिः५”।
स्वतन्त्रोक्तविधानेन पुरश्चर्याप्रकरणोक्तविहिताञ्जलिना
इत्यभिहितेन “संचिन्त्य मनसा मन्त्रं ज्योतिर्मन्त्रेण
निर्दहेत्। मन्त्रे मलत्रयं मन्त्री विमलीकरणं त्विदम्६।
मलत्रयं मायिकं कार्मिणं मानसरूपम् “तारव्योमाग्नि-
मनुयुगदण्डी ज्योतिर्मनुर्मतः”। तारः प्रणवः व्योम ह-
कारः अग्निरेफः मनुरौकारः तद्युक्तोदण्डोऽनुस्वारः।
तेन ओम् ह्रौं इतिमन्त्रः। “कुशोदकेन मन्त्रेण प्रत्यर्णं
प्रोक्षणं मतो”। प्रत्यर्णं प्रत्यक्षरम् “तेन मन्त्रेण विधि-
वदेतदाप्यायनं७ मतम्। मन्त्रेण वारिणा मन्त्रतर्पणं
तर्पणं मतम्”। मन्त्रेण मूलमन्त्रेण। “मूलमन्त्रं स-
मुच्चार्य तदन्ते देवताभिधाम्। द्वितीयान्तामहं पश्चात्
तर्पयामि नमोऽन्तकम्”। इति पुरश्चर्योक्तक्रमेण लिखितम-
न्त्रःधारहृपयन्त्रे। “तारमायारमायोगो मन्त्रोद्दीपनमु-
च्यते”। तारः ओम् माया ह्रीं रमा श्रीम् “जप्यमा-
नस्य मन्त्रस्य गोपनं१०न्त्वप्रकाशनम्। संस्कारा दश-
संख्याताः सर्वतन्त्रेषु गोपिताः। यान् कृत्वा सम्प्र-
दायन्तं मन्त्री वाञ्छितमश्नुते”।

देवप्रतिष्ठाङ्गसंस्काराश्च देवताप्रतिष्ठाशब्दे ३७२३पृ॰ दृश्याः।
अन्येऽपि तत्तत्कर्माङ्गसंस्कारास्तत्तच्छब्दे दृश्याः।

**संस्कारवर्जित** त्रि॰ ३त॰। १गर्भाधानादिसंस्कारहीने
२शास्त्रादौ व्युत्पत्तिहीने च संस्कारहीनादयोऽप्यत्र।

**संस्कृत** त्रि॰ सम्+कृ—क्त सुट् च। १कृतसंस्कारे पदार्थे
व्याकरणलक्षणाधीनसाधनयुक्ते २शब्दे ३पक्वे ४भूषिते
५शास्त्रभेदे मेदि॰ ६शोधिते जटा॰।

**संस्तर** पु॰ सम्+स्तॄ—अप्। १यज्ञे २शय्यायां हेमच॰ ३पल्ल-
वादिरचितशय्यायां च “नवपल्लवसंस्तरे यथेति” कुमारः

**संस्तव** पु॰ सम्+स्तु—अप्। १परिचये अमरः २सम्यक्स्तुतौ च

**संस्ताव** पु॰ संस्तूयतेऽत्र सम्+स्तु—घञ्। यज्ञार्थं संस्ता-
वकविप्राणां वासभूमौ अमरः।

**संस्तुत** त्रि० सम्+स्तु–क्त । १परिचिते २सम्यक्स्तुते च ।

**संस्त्याय** पु० सम्+स्त्यै–घञ् । १संघाते २निविड़संयोग-रूपे सन्निवेशे अमरः । ३विस्तृतौ ४संस्थाने च मेदि० करणे घञ् । ५गृहे हेमच० ।

**संस्थ** त्रि० सम्+स्था–क । १अवस्थिते मेदि० २मृते शब्दर० ३चरे पु० मेदि० ४निवारके ५अवस्थिते ६व्यक्तौ ७क्रतुप्रकारभेदे दशमार्ग च हेमच०। ८प्रकारे "नैमित्तिकः प्राकृतिको नित्य आत्यन्तिकोऽन्वयः । संस्थेति कविभिः प्रोक्तश्चतुर्धाऽस्य स्वभावतः" इत्युक्ते १०प्रलये च ।

**संस्था** स्त्री सम्+स्था–अङ् । १व्यवस्थापथावस्थितौ अमरः । २स्थितौ ३नाशे मेदि० ४यज्ञभेदे ५व्यवस्थायां ६व्यक्तौ ७चाटद्भ्रे दमान्ते च ।

**संस्थान** न० सम्+स्था–ल्युट् । १चतुष्पथे अमरः । २सन्निवेशे मेदि० ३आकारे ४अवयवव्याप्त्यात्मकसंयोगभेदे ५मृतौ ६चिह्ने शब्दच० । ७सम्यक्स्थितौ च ।

**संस्थित** त्रि०सम्+स्था–क्त । १मृते अमरः २सम्यक्स्थिते च

**संस्पर्शा** स्त्री संस्पृश्यते सम्+स्पृश–कर्मणि घञ् टाप् । रजनीगन्धाद्रव्ये अमरः ।

**संस्फाल** पु० सम्यक् स्फालः स्फुरणं यस्य । मेषे त्रिका०।

**संस्फुट** त्रि० सम्+स्फुट–क्त । विकसिते शब्दच० ।

**संस्फेट** न० सम्+स्फुट–आधारे घञ् पृषो० । युद्धे भरतः

**संस्फोट** पु० सम्+स्फुट–आधारे घञ् । युद्धे अमरः ।

**संहत** त्रि० सम्+हन–क्त । १दृढ़सन्धौ अमरः । २मिलिते ३दृढ़े मेदि० । ४परार्थं मिलिते "संहतपरार्थत्वादिति" सांख्यसू०। ४दृढ़संयोगयुक्ते ५सम्यग्हते च । भावे क्त । ६संघाते न० । [मितपार्श्वद्वये अमरः ।

**संहतल** पु० संहतं संहननं तद्युक्तं तलं यस्य । मि-

**संहतपुष्पिका** स्त्री संहतानि दृढ़संयुक्तानि पुष्पाण्यस्याः कप् अत इत्वम् । मिश्रेयायां राजनि० ।

**संहतजानु** त्रि० संहते जानुनी यस्य । सङ्गजानुके अमरः वा कप् । तत्रार्थे ।

**संहति** स्त्री सम्+हन–क्तिन् । १समूहे अमरः । २सम्यग्हनने च । [१देहे अमरः २सङ्घाते ३वधे च ।

**संहनन** न० संहन्यते परार्थं संसृज्यते सम्+हन–ल्युट् ।

**संहर्ष** पु० सम्यक् हर्षः प्रा० सम्+हृष–घञ् वा । १आनन्दे २स्पर्द्धायाञ्च संहृष्यत्यनेन करणे घञ् । ३वायौ मेदि०।

**संहार** पु० सम्+हृ–घञ् । १प्रलये हेमच० २नाशे ३संक्षेपे ४नरकभेदे अमरः । ५विसर्जने ६कालिकाभैरवभेदे च जटा० । "असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्त एव च । कपाली भीषणश्चैव संहारश्चाष्ट भैरवाः" तन्त्रसा० ।

**संहारमुद्रा** स्त्री संहारार्थी विसर्जनार्थी मुद्रा । तन्त्रोक्ते मुद्राभेदे तल्लक्षणम् "अधोमुखे वामहस्ते ऊर्द्ध्वास्यं दक्षहस्तकम् । क्षिप्त्वाङ्गुलीरङ्गुलीभिः संग्रह्य परिवर्त्तयेत् । प्रोक्ता संहारमुद्रेयमर्पणे तु प्रशस्यते" पदार्थां० धृतवाक्यम् । अर्पणे आत्मनि देवार्पणे" ति०त०।

**संहिता** स्त्री सम्यक् हितं प्रतिपाद्यं यस्याः । १मन्वादिप्रणीते धर्मशास्त्रे २पुराणे ३इतिहासादौ ४कर्मकाण्डप्रतिपादके वेदभागे च संहितापाठप्रकारस्तु ति०त० मलमासतत्त्वोक्तः चरणशब्दे २८५० पृ० दर्शितः । "परः सन्निकर्षः संहिता" पा०उक्ते ५पूर्वापरवर्णयोः अत्यन्तसन्निकर्षे तत्र नियमविशेषः अर्थं ते "संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते" । [अमरः ।

**संहृति** स्त्री सम्+हृञ्–क्तिन् । बहुभिः कृते आह्वाने

**संहृत** त्रि० सम्+हृ–क्त । १कृतसंहारे २सङ्कुचिते च ।

**संहृति** स्त्री० सम्+हृ–क्तिन् । संहारे ।

**संह्राद** पु० सम्+ह्रद–घञ् । शब्दभेदे ।

**संह्रादिन्** त्रि० सम्+ह्रद–णिनि । शब्दायमाने ।

**संह्लाद** पु० सम्+ह्लद–घञ् । आनन्दभेदे ।

**सकण्टक** पु०सह कण्टकेन सहस्य सः । १करञ्जभेदे (नाटाकरमचा) रत्नमा० । २शैवाले शब्दच०। ३कण्टकयुक्ते त्रि०

**सकर्ण** त्रि० सह कर्णेन श्रवणेन तद्व्यापारेण वा । १श्रुतिशीले जटा० २कर्णयुक्ते च ।

**सकर्मक** त्रि० सह कर्मणा सहस्य स० कप् । व्याकरणोक्ते कर्मयुक्तक्रियावोधके धातौ "फलव्यापारयोरेकनिष्ठतायामकर्मकः । धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः" इत्युक्तदिशा धातोः सकर्मकत्वमवसेयम् ।

**सकल** त्रि० सह कलया अवयवमात्रया चतुष्षष्ट्या कलाभिर्वा सहस्य सः । १सम्पूर्णे २समस्ते अमरः ३कलान्विते च

**सकारण** त्रि० सह कारणेन । कार्ये । [अन्तिके समीपे ।

**सकाश** पु० कशनं पीडनं काशः कश–घञ् सह काशेन ।

**सकुकाण्ड** पु०सह समानः कुकाण्डेन । शाकशरद्धत्वे राजनि०

**सकुल** पुंस्त्री० सह समानं कुलमस्य । १मत्स्यभेदे (सल) स्त्रीत्वे ङीष् । २समानवंशे त्रि० ।

**सकुल्य** त्रि० समाने कुले भवः यत् । अशौचविधये आसप्तमाद्ब्राधस्तनात्पञ्चपुरुषाभ्य "दशाहेन सपिण्डास्तु शुध्यन्ति

प्रेतस्तते । विरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति बा-
न्धवाः" इत्यु० । सपिण्डशब्दे दृश्यम् । [अन्ये ।

**सकृत्** अव्य० एक+नि० । १एकवारे अमरः । २विष्ठायां स्त्री

**सकृत्प्रज** पुंस्त्री० सकृत् एकवारं प्रजायते प्र+जन—ड ।
१काके अमरः स्त्रियां ङीप् । २एकवारजातापत्ये च ।

**सकृत्फला** स्त्री सकृत् फलति फल—अच् । कदलीवृक्षे राजनि०

**सकृद्गर्भ** पु० सकृद् गर्भो यस्य । खेसरे राजनि० एकवार
गर्भवत्यां स्त्रियां स्त्री ।

**सकृद्वीर** पु० कर्म० । एकवीरवृक्षे राजनि० ।

**सक्त** त्रि० सन्ज—क्त । १आसक्ते २अविरते च हेमच० ।

**सक्तु** पु० सन्ज—तुन् किच्च । भृष्टयवादिचूर्णे (छातु) शब्दच०
"सेघाटो सक्तवो देया वारिपूर्णा च गर्गरी" ति०त० ।

**सक्तुफला(ली)** स्त्री सक्तव इव चूर्णानि फलान्यस्याः वा
ङीप् । शमीवृक्षे अमरः ङीबन्तः तदर्थे शब्दर० ।

**सक्थि** न० सन्ज—क्थिन् । १ऊरौ अमरः २शकटावयव-
भेदे च उणादि० । बहु० स्वाङ्गे षच्—समा० । मृग-
सक्थ इत्यादि । [इन्द्रियत्वादेरत्वादिधर्मः ।

**सखण्डोपाधि** पु० कर्म० । बहुपदार्थघटिते धर्मे यथा

**सखि** त्रि० सह समानं ख्यायते ख्या—डिन् नि० । सौहार्द-
युक्ते अमरः । सखायौ सखा सख्युरित्यादि ।

**सखी** स्त्री सखि+स्त्रीत्वे ङीप् । १सहचर्य्यां हेमच० २वय-
स्यायाम् अमरः ।

**सख्य** न० सख्युर्भावः यत् । १मित्रतायां २सौहार्दे च ।

**सगन्ध** पु०सह गन्धेन लेशेन वा सहस्य सः । १ज्ञातौ त्रिका०
२गन्धयुते त्रि० ।

**सगर** पु० सह गरेण विषेण जातः । १सूर्य्यवंश्ये नृपभेदे
"सगरात् सागरो जातः" इति पुराणम् । स च सुबाहु-
नामराजतः यादव्यां जातः तत्सपत्न्या गरदाने-
ऽपि स न ममार तत्कथा "तस्या (और्वस्य) श्रमे
च सा गर्भं सुषुवे ज्वलनप्रभम् । व्यजायत महाबाहु-
र्गरेणैव सह द्विज !। सगरो नाम तेनाभूत् बालको-
ऽतिमनोहरः" पद्मपु० १२अ० । २विषयुक्ते त्रि० ।

**सगर्भ** पु० सह समानो गर्भोऽस्य । १सहोदरे भ्रातरि
शब्दर० । सह गर्भेण । २गर्भयुक्ते मध्यवर्त्तिसूत्रपत्र
युक्ते कुशदूर्वादौ त्रि० स्त्रियां टाप् । [भ्रातरि ।

**सगर्भ्य** पु० समाने गर्भे भवः यत् सहस्य सः । सहोदरे

**सगोत्र** न० सह समानं गोत्रम् सहस्य सः । १कुले शब्दच०
सह समं गोत्रमस्य । २ज्ञातौ त्रि० अमरः ।

**सग्धि** स्त्री अद—क्तिन् नि०सह ग्धया सहस्य सः । सहभोजने
अमरः ।

**सङ्कट** त्रि० सम्+कटच् सम्+कट—अच् वा । १अल्पावकाशे
स्थाने अमरः । २संबाधे ३दुःखे "नरोमुच्येत सङ्क-
टादिति" देवीमा० । ४देवीभेदे स्त्री ज्योतिषोक्ते दशा-
भेदे च स्त्री टाप् । दशाशब्दे ३४८४पृ० दृश्यम् ।

**सङ्कथा** स्त्री सम्+कथ—भावे अ । परस्परकथने हेमच० ।

**सङ्कटाक्ष** पु०सङ्कटं संबाधमक्षति अक्ष—अण् । धवहक्षे विश्वः

**सङ्कर** पु० सम्+कॄ—कर्मणि अप् । १सम्मार्जन्यादिभिः क्षिप्ते
रजसि अमरः । इतरजातिपुरुषेण इतरजातिस्त्रियां
२जाते जातिभेदे । भावे अप् । ३मिलने ४परस्पराभावसमा-
नाधिकरणयो सत्त्वैकाधिकरणवृत्तित्वे च स च जातिबा-
धकः । "व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः । रूप-
हानिरसंबन्धो जातिबाधकसंग्रह " सि० मु० । यथा
भूतत्वाभाववति मनसि मूर्त्तत्वस्य सत्त्वात् मूर्त्तत्वाभा-
ववति च गगने भूतत्वस्य सत्त्वात् भूम्यादिभूतचतुष्टये
चोभयोः सामानाधिकरण्यात् तयोर्न जातित्वम् । वर्ण-
सङ्करजातिश्च नानाविधा दिङ्मात्रमत्रोच्यते "वक्ष्ये
सङ्करजात्यादि इत्युपक्रमे "विप्रान्मूर्द्धावसिक्तो हि
क्षत्रियायां, विशः स्त्रियाम् । जातोऽम्बष्ठस्तु शूद्रायां
निषादः पारशवोऽपि च" इत्यादि गरु० ६६ अ० । "स्त्रीषु
दुष्टासु वार्ष्णेय ! जायते वर्णसङ्करः" गीता । ५अ-
लङ्कारभेदे अलङ्कारशब्दे ४०५पृ० दृश्यम् । ६संसर्गे
स्पर्शादिसम्बन्धे चण्डालादिसङ्करे भवनादिदहनादि तत्र
च प्रायश्चित्तादि प्रा०वि० उक्तं यथा

"अथ चाण्डालसङ्करप्रायश्चित्तम् । तत्र व्यवनः "चाण्डा-
लसङ्करेषु भवनदहनं पूरणं सर्वभाण्डभेदनं दारवाणाम्
तक्षणं शङ्खशुक्तिरजतचेलानामद्भिः प्रक्षालनं कांस्यता-
म्रायामाकरशुद्धिः सौवीरपयोदधितक्राणां परित्यागः
ग्रेषरसयवसकृद्व्यरक्षणं गोमूत्रयावकाहारो मासं क्षपयेत्
बालवृद्धस्त्रीणामर्द्धं प्रायश्चित्तम् आषोडशाद्बालः सप्त-
त्यूर्द्धं स्थविरः चीर्णे प्रायश्चित्ते ब्राह्मणभोजनं
गोयतञ्च दद्यात्तदभावे सर्वस्वम्" । पूरणं पूर्वमृत्तिकाकर्ष-
णेन मृत्तिकान्तरदानम् तक्षणं वास्यादिनांशवियोज-
नम् भाण्डभेदनं मृण्मयभाण्डभेदनम् । आकरे अग्ना-
विक्षर्थः अग्निसंयोगात्ताम्रादीनामुत्पत्तेः । ग्रेषरसानां
लाक्षादीनां यवसद्रव्याणां च धान्यानां रक्षणम् ।
तथा च पराशरः "आकरे तु भवेच्छुद्धिराकूटे कर्ष-

स्पृष्टे। जलशौचन्तु वस्त्राणां परित्यागस्तु मृण्मये। कुसुम्भगुडकार्पासलवणं सह सर्पिषा। द्वारि कुर्वीत धान्यानि दत्त्वा गेहे हुताशनम्। कृताग्न्यावासंस्पृष्टं शुचि तन्मनुरब्रवीत्"। तेन रक्षणं घृतादीनाम् अग्निज्वालापवित्रीकृतानां कर्त्तव्यम्। एतच्च प्रायश्चित्तं सद्यःपातहेतुयौनादिवर्जितैः संसर्गैर्ज्ञानतो यावता कालेन पातित्यं भवति अज्ञानतस्तावत्कालसंसर्गे सति वेदितव्यम् इति तेन संवत्सरैकशाच्चण्डालसम्बन्धे मासैकगोमूत्रयावकाहारः कर्त्तव्यः। अनेन च द्वादश धेनवो मासोपवासात् पञ्चमभागापकर्षात्। गोशतञ्च दक्षिणा। एतच्च प्रायश्चित्तं ब्राह्मणक्षत्रियविशां तुल्यमेव। तथा चापस्तम्बः "अन्त्यजातिरविज्ञातो निवसेद् यस्य वेश्मनि। स वै ज्ञात्वा तु काले तु कुर्य्यात्तत्र विशोधनम्। चान्द्रायणं पराकं वा द्विजातीनां विशोधनम्। प्राजापत्यन्तु शूद्राणां तथा संसर्गदूषणे। यैस्तत्र भुक्तं पक्वान्नं कृच्छ्रं तेषां विधीयते। तेषामपि च यैर्भुक्तं तदर्द्धं तेषु विद्यते। तेषामपि च यैर्भुक्तं कृच्छ्रपादो विधीयते। कूपैकपानदुष्टानां तथा संसर्गदूषणे। उपवासेन शुद्धिः स्यात् पञ्चगव्येन चैव हि। बालापत्या तथा रोगी गर्भिणी वृद्ध एव यः। तेषां नक्तं प्रदातव्यं बालानां प्रहरद्वयम्। अथ वा क्रियमाणे तु येषामार्त्तिः प्रदृश्यते। शेषं सम्पादयेत्तेषां विपत्तिर्न भवेत् यथा"। तत्र पूर्वोक्तकालादल्पकालसङ्करे चान्द्रायणम्। अल्पतरे पराकः। शूद्रस्य प्राजापत्यम्। कूपैकपानदुष्टानामिति एकस्मिन्नेव कूपे द्विजानां चाण्डालादीनां सहजलपानं कुर्वतां संसर्गदुष्टानां सोपवासपञ्चगव्यं विशोधनमित्यर्थः। संवर्त्तः "चाण्डालसङ्करे विप्रः श्वपाके पुक्कशेऽपि वा। गोमूत्रयावकाहारो मासार्द्धेन विशुध्यति। एतदपि अल्पकालसङ्करविषयं मासार्द्धयावकाहाराशक्तौ षड्धेनवः। सुमन्तुः "अगम्यागमनस्त्रीवधचाण्डालसम्पर्केषु कृच्छ्रत्रयम्"। एतदत्यन्ताल्पकालविषयं कृच्छ्रत्रयाशक्तस्य धेनुत्रयम्। तथा "अविज्ञातस्तु चाण्डालो निवसेद् यस्य वेश्मनि। विज्ञाते तूपसंन्यस्य द्विजाः कुर्य्युरनुग्रहम्" इत्युपक्रम्याह पराशरः "दधिसर्पिःपयो मूत्रं यदा गोमूत्रयावकम्। भुञ्जीत सह भृत्यैस्तु त्रिसन्ध्यमवगाहनम्। त्र्यहं भुञ्जीत गोमूत्रं भोक्तव्यं गोरसस्तम्। त्रिपलं चारदन्नीय पलमेकन्तु सर्पिषः"। तथा "त्रं दुग्धं सह भृत्यैश्च कुर्य्याद्ब्राह्मणभोजनम्। अनडुत्सहितां गाञ्च दद्याद्विप्राय दक्षिणाम्"। दधिसर्पिःपयो मूत्रं यदा गोमूत्रयावकं द्वादशाहं भुञ्जीतेत्यर्थः। तत्र परिमाणमेतेषाम् यथायथानुक्रमम्। चर्मकारादीनामविज्ञातसङ्करे तु चाण्डालसङ्करप्रायश्चित्तस्य षष्ठो भागः करणीयः चाण्डालस्पर्शप्रायश्चित्ताच्चर्मकारादिस्पर्शे प्रायश्चित्तस्य षष्ठभागदर्शनात्। यथा आपस्तम्बः "चाण्डालैः श्वपचैः स्पृष्टो विण्मूत्रे च कृते द्विजः। त्रिरात्रं सम्प्रकुर्वीत भुक्त्वोच्छिष्टः षडाचरेत्"। चर्मकारादिस्पर्शे तु संवर्त्तः "एतैः स्पृष्टस्त्वथोच्छिष्ट एकरात्रं पयः पिबेत्"। देवलः "चाण्डालसंयोगे जातश्चाण्डाल एव स्यात् ब्रह्महत्योद्दिष्टं प्रायश्चित्तं वार्षिकं षाण्मासिकं कृच्छ्रं वा ब्राह्मणस्य। चतुर्ष्वपि यदुक्तं क्रमाशः शेषाणाम्"। अविज्ञातचाण्डालसम्पर्के विद्यमान एव दम्पत्योः संयोगे यो जातो ब्राह्मणः स वार्षिकं ब्रह्महत्याव्रतं प्राजापत्यं वा षाण्मासान् कुर्य्यात् वार्षिकब्रह्महत्याव्रताशक्तौ पञ्चदश धेनवो देयाः। षाण्मासिकब्रह्महत्याव्रताशक्तावपीत्यर्थः। अस्पृश्यस्पर्शनप्रायश्चित्तमभिहितमिदानीं स्पर्श एव निरूप्यते। किं साक्षात् स्पर्श एव स्पर्शशब्दस्यार्थः उत परम्परास्पर्शोऽपि न प्रथमः परम्परया चाण्डालस्पर्शे स्नानाद्यभावप्रसङ्गात् नापि द्वितीयः संयोगे संयुक्तसंयोगे चैकस्पर्शपदप्रवृत्तिनिमित्ताभावात् आकाशादिद्वारेण सर्वेषामेव तत्सम्भवाच्च किञ्चैवम् "औदुम्बरी सर्वा वेष्टयितव्या औदुम्बरीं स्पृष्ट्वोद्गायेत्" इत्यत्र सर्ववेष्टनस्पर्शयोरविरोधः स्यात् उपस्पर्शस्यापि स्पर्शशब्दवाच्यत्वात् तथा च विरोधाधिकरणोदाहरणं भाष्यकारस्याप्यसङ्गतं स्यात्। तथा च वृद्धशातातपः "अशुचिं संस्पृशेद् यस्तु एक एव स दुष्यति। तत्स्पृष्टोऽन्योन दुष्येत सर्वद्रव्येष्वयं विधिः"। तथा संहतानान्तु पात्राणां यद्येकमुपहन्यते। तस्यैव शोधनं प्रोक्तं न तु तत्स्पृष्टिनामपि"। उच्यते। सत्यम् उपस्पर्शो यद्यपि न स्पर्शशब्दार्थस्तथाप्यत्र वचनादेकावयविद्वारकपरम्परास्पर्शोऽपि ग्राह्यः। तथा चापस्तम्बः "एकशाखां समारूढश्चाण्डालादिर्यदा भवेत्। ब्राह्मणस्तत्र निवसन् स्नानेन शुचितामियात्"। शाखाशब्दादुदक्यादीनां ग्रहणम्। शाखाग्रहणमेकावयव्युपलक्षणार्थं तेनैकपाषाणादेरपि ग्रहणम्। तथा स एव "एकवृक्षं समारूढौ चाण्डालब्राह्मणौ यदि। फलं भक्षयतस्तत्र प्रायश्चित्तं कथं भवेत्। ब्राह्मणाननुज्ञाप्य सवासाः स्नानमाचरेत्। अ-

च्छेरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति”। तथा स एव “एकशाखां समारूढः फलान्यश्नात्यसौ यदि। प्रायश्चित्तं त्रिरात्रं स्यात् पञ्चगव्यं विशोधनम्”। अत्र व्यवधानसन्निधानाभ्यामेकरात्रत्रिरात्रे। स्नानविषयं चेतदुभयम्। तथा च ब्रह्मपुराणम् “विप्रश्चाण्डालस-हितो यत्रैकस्मिन् वनस्पतौ। अस्नानात्तु फलं भुङ्क्ते चरेत्तत्राघमर्षणम्”। उपस्पर्शत्वात्। “पाद आसाशने तथेति” पूर्वोक्तापस्तम्बेन न विरोधः। तथाचापस्तम्ब “शूद्रः स्वस्तरे वा संस्पृशन् अप्रयतान् प्रयतो मन्येत”। तृणस्तरादौ चाण्डालादिभिः सहावस्थितोऽपि स्पृश-न्नपि तान् प्रयतत्वमात्मनो शूद्रो मन्येत वस्तुतस्तु अशुचिरेवासौ इति पूर्ववाक्योपात्तं स्नानमेव कुर्यात् तथा “तृणकाष्ठादिषु निखातेषु च”। संक्रमादौ निखा-तेषु तृणकाष्ठेषु चाण्डालेन सहावस्थितोऽप्यशुचिरेव तथा “प्रोक्ष्य वास उपयोजयेत्”। न सचेलं स्नानमित्यर्थः। अयमेव विशेषः साक्षात्स्पर्शादस्य। अतोवचनादेकावय-विद्वारा परम्परास्पर्शे स्नानादिकमिति। नौकादिषु न दोष इत्याह पराशरः। “रथ्याकर्दमतोयानि नावः पन्थास्तृणानि च। स्पर्शनान्न प्रदुष्यन्ति पक्वेष्टकचितानि च”। तृणसमूहः पक्वेष्टकचितानि मठादीनि। नन्वेवं याज्ञवल्क्यवचनविरोधः तद् यथा “उदक्याशौचिभिः स्नायात् संस्पृष्टस्तैरुपस्पृशेत्। अब्लिङ्गानि जपेच्चैव गा-यत्रीं मनसा स्मरन्”। अत्र परम्परयोदक्याया अशु-चिभिश्च स्पर्शे आचमनमवगम्यते। तथा “शवं तत्स्पृष्टि-नञ्चैवेति” मनुवचने तत्स्पृष्टीत्यभिधीयते तदनर्थकं स्यात् चाण्डालादिस्पृष्टस्पृष्टिनोरपि स्नानाभ्युपगमात् “शवस्पृगुपस्पर्शे सर्वोदकस्पर्शाच्छुद्धिरिति” गौतम-विरोधः “शवस्पृशं दिवाकीर्त्तिम्” इत्यादि ब्रह्मपुराणव-चन “शवस्पृश्च स्पृष्ट्वेत्यादिविष्णुवचनाभ्याञ्च विरोधः स्यात् तच्छब्देन सर्वेषामेव चाण्डालादीनां परामर्शात् एषु सर्वेषु शवस्पृष्टिग्रहणात्। उच्यते। एकशाखां समारूढ इत्याद्यापस्तम्बवचनं वर्त्तमानाशुचिसंसर्गिस्पर्श-विषयं याज्ञवल्क्यादिवचनञ्चातीतसंसर्गिस्पर्शविषयमि-त्यविरोधः। अतएव “संस्पृश्याशुचिसंस्पृष्टं तृतीयं वापि मानवः। हस्तौ पादौ च प्रक्षाल्य तोयेनाचम्य शुध्यति” इति देवलवचनमपि वर्त्तमानाशुचिसंसर्गि-स्पृष्टौ मूलभूताशुच्यपेक्षया तृतीयो भवति तं स्पृष्ट्वा आचमनमात्रं चतुर्थे नेत्यर्थः। अतीतविषये द्वितीयमेव स्पृष्ट्वाचमनमिति व्यवस्थितविकल्पवाचिवाशब्दार्थः। तृती-यस्पर्शे न किञ्चित्। चाण्डालादिस्पर्शविषयश्चैतत् अतो-तान्त्यजस्पर्शविषये तु द्वितीय एव नाचमनम्। तथा च शातातपः “अशुचिं संस्पृशेद् यस्तु एक एव स दु-ष्यति। तत्स्पृष्टोऽन्योन दुष्येत्तु सर्वद्रव्येष्वयं विधिः”। एतल्लघुनाद्यशुचिद्रव्याधजद्वोच्छिष्टस्पर्शविषयमपि। अ-त्रापि वर्त्तमानान्त्यजसंसर्गिस्पर्शे साक्षात्स्पर्शे इवाच-मनमेवेति सर्वमुपपन्नम्”।

पराशरेणाऽत्र कश्चिद्विशेष उक्तो यथा

“उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन। अनिधा-यैव तद्द्रव्यमाचान्तः शुचितामियात्। मार्जनोपा-ञ्जनैर्वेश्म प्रोक्षणेन च पुस्तकम्। सम्मार्जनेनाञ्जनेन सेकेनोल्लेखनेन च। दाहेन च भुवः शुद्धिर्वासेनाप्यथ वा गवाम्”। अत्रापि लघुगुरुसंसर्गविषयभेदात् व्यवस्था। “नित्यं शुद्धः कारुहस्तः पण्यं यच्च प्रसारितम्। ब्रा-ह्मणान्तरितं भोज्यमाकराः सर्व एव हि”।

**सङ्करी** स्त्री सङ्कीर्य्यते सम्+कॄ—कर्मणि च गौरा॰ ङीष्। नवदूषितकन्यायां मेदि॰।

**सङ्करीकरण** न॰ सङ्करः क्रियतेऽनेन च्वि+कृ-करणे ल्युट्। पापभेदे तत्स्वरूपप्रायश्चित्तादिकं प्रा॰वि॰ दर्शितं यथा

“अथ सङ्करीकरणापात्रीकरणमलावहप्रायश्चित्तम्। तत्र मनुः “खरोष्ट्राश्वमृगेभानामजाविकवधस्तथा। सङ्क-रीकरणं ज्ञेयं मीनाहिमहिषस्य च। निन्दितेभ्यो ध-नादानं वाणिज्यं शूद्रसेवनम्। अपात्रीकरणं ज्ञेय-मसत्यस्य च भाषणम्। कृमिकीटवयोहत्यामद्यानुगत-भोजनम्। फलैधःकुसुमस्तेयमधैर्य्यञ्च मलावहम्”। मद्यानुगतभोजनं मद्यपानसमये यदुपस्थापितं फलमू-लादि। अधैर्य्यं गीतश्रवणादि “अल्पेऽप्यपचये अत्यन्तवैर-क्लव्यमिति” कल्पतरुः। “सङ्करापात्रकृत्यासु मासं शोध-नमैन्दवम्। मलिनीकरणीये तु तप्तः स्यात् यावक-स्त्र्यहम्”। तथा विष्णुः “ग्राम्यारण्यानां पशूनां हिंसा सङ्कीर्णकरम्। सङ्कीर्णकरणं कृत्वा मासमश्नीत यावकम्। कृच्छ्रातिकृच्छ्रमथ वा प्रायश्चित्तन्तु कारयेत्। निन्दितेभ्यो धनादानं वाणिज्यं कुसीदजीवनम्”। असत्यं शूद्रसेवनमित्यपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुद्ध्यति। “शीतकृच्छ्रेण वा भूयोमाहासान्तपनेन वा”। “पक्षिणां जलचराणाञ्च घातनं कृमिकीटघातनं मद्यानुगतभोजन-मिति मलावहानि” “मलिनीकरणीये तु तप्तकृच्छ्रं स-

माचरेत् । कृच्छ्रातिकृच्छ्रमथ वा प्रायश्चित्तं विशोधनम्"। अत्र सङ्करीकरणे सकृत्करणे मासयावकम् अभ्यासे कृच्छ्रातिकृच्छ्रम्। अत्यन्ताभ्यासे चान्द्रायणम् । अपात्रीकरणे च सकृत्करणे तप्तकृच्छ्रं चतुरहसाध्यम् । शीतकृच्छ्रो वा शीतकृच्छ्रे तप्तकृच्छ्रेतिकर्त्तव्यतैव किन्तु तदेव द्रव्यमत्र शीतलमिति विशेषः । अभ्यासे तु महासान्तपनम् अत्यन्ताभ्यासे चान्द्रायणम् । मलावहे तु सकृदाचरणे त्र्यहयावकम् अभ्यासे तु तप्तकृच्छ्रम् अत्यन्ताभ्यासे कृच्छ्रातिकृच्छ्रमिति यथायोग्यमूह्यम् । एषु च तुषु यत्र यत्र प्रायश्चित्तविशेषो नोक्तस्तत्रैव एव बोद्धव्यः"।

**सङ्कर्षण** पु० संकृष्यते गर्भात् गर्भान्तरं नीयतेऽसौ सम्+कृष-युच् । १बलदेवे अमरः । तत्कथा हरिवं० ५८अ० "सप्तमो देवकीगर्भः योऽंशः सौम्यो ममाग्रजः । स संक्रामयितव्यस्ते सप्तमे मासि रोहिणीम् । सङ्कर्षणात्तु गर्भस्य स तु सङ्कर्षणो युवा । भविष्यत्यग्रजो भ्राता मम शीतांशुदर्शनः" निद्रात्मिकां विष्णुमायां प्रति भगवदुक्तिः। भावे ल्युट् । २आकर्षणे ३स्थानान्तरनयने च न० ।

**सङ्कलन** न० सम्+कल–ल्युट् । १एकत्रीकरणे २योजने (ठिकरीया) लीला० ३संग्रहे च ।

योजनं च नानासङ्ख्यासूचकाङ्कानामेकसङ्ख्यापादकाङ्ककरणं तच्च द्विविधं शुद्धसङ्कलनं भिन्नसङ्कलनञ्च तत्र शुद्धसङ्कलनं तु "कार्य्यः क्रमादुत्क्रमतोऽथ वाङ्कयोगो यथास्थानमथान्तरं वा" लीला० उक्त्या यथास्थानम् एकादिस्थाने एकाद्यङ्कयोग एव दशतादिस्थाने दशताद्यङ्कयोगः । भिन्नसङ्कलनञ्च छेदसहिताङ्कयोजनम् । तत्रांशसवर्णनं तत्रोक्तं यथा "अन्योन्यहाराभिहतौ हरांशौ राश्योः समच्छेदविधानमेवम्" ।

न्यासः $\frac{३}{१}$ $\frac{१}{५}$ $\frac{१}{३}$ समच्छेदे जातम् $\frac{४५}{१५}$ $\frac{३}{१५}$ $\frac{५}{१५}$

"योगोऽन्तरं तुल्यहरांशकानां कल्प्यो हरो रूपमहारराशेः" इत्युक्तदिशा योजने जातम् ५३/१५ एवं प्रभागभागानुबन्धभागापवाहेषु समच्छेदकरणं तत्र द्रष्टव्यम् ।

**सङ्कलित** त्रि० सम्+कल–क्त । १योजिते २रेखादिना संहते अमरः । ३संगृहीते च भावे क्त । ४संयोजने न० ।

**सङ्कलितैक्य** न० ६त० । "सैकपदघ्नपदार्द्धमथैकाद्यङ्कयुतिः किल सङ्कलितैक्यम्" लीला० उक्ते एकाद्यङ्कानां योगे

**सङ्कल्प** पु० सम्+कृप-घञ् गुणे रस्य लः । १अभीष्टसिद्धये (इदमित्थमेव कार्य्यम्) इत्येवंरूपे मनसोव्यापारभेदे अमरः । २कर्मसाधनाय अभिलापवाक्ये "सङ्कल्पेन विना राजन् ! यत् किञ्चित् कुरुते नरः । फलञ्चाल्पाल्पकं तस्य धर्मस्यार्द्धक्षयो भवेत्" ब्रह्मपु० । धर्मस्य अर्द्धक्षयोक्तेः फलस्याल्पाल्पकत्वमप्यर्द्धपरत्वं युक्तं धर्माधीनत्वात् फलस्य । "आशास्य च शुभं कार्यमुद्दिश्य च मनोगतम्" आगस्त्यवचने उक्तम् "मनोगतं शुभफलमाशास्य मनसा सङ्कल्प्य, उद्दिश्य वाचा अभिलप्य, कार्यं कर्मणा उपपाद्यम्" ति०त०रघु०। "मनसा सङ्कल्पयति वाचा अभिलपति कर्मणा चोपपादयति" हारीतः । तत्प्रकारो यथा "शुक्तिशङ्खाश्महस्तैश्च कांस्यरूप्यादिभिस्तथा । सङ्कल्पो नैव कर्त्तव्यो मृण्मयेन कदाचन । गृहीत्वौदुम्बरं पात्रं वारिपूर्णं गुणान्वितम् । दर्भत्रयं साग्रमूलं फलपुष्पतिलान्वितम् । जलाशयारामकूपे सङ्कल्पे पूर्वदिङ्मुखः । साधारणे चोत्तरास्य ऐशान्यां निक्षिपेज्जलम्" भविष्यपु०। अत्र केवलहस्तनिषेधस्तु पात्रान्तरसद्भावविषयः एकहस्तपरो वा एका०त०रघु० । मानससङ्कल्पश्च द्विविधः भावाभावविषयभेदात् तत्राद्यः मयैतत्कर्त्तव्यमित्येवंरूपः द्वितीयः मयैतन्न कर्त्तव्यमित्येवं रूपः । तत्र पूजादिसङ्कल्पो भावविषय उपवासादिसङ्कल्पोऽभावविषय इति भेदः । ध्यम् । "सङ्कल्पमूलः कामो वै यज्ञाः सङ्कल्पसम्भवाः । व्रतानियमधर्माश्च सर्वे सङ्कल्पजाः स्मृताः" एका०त० ।

**सङ्कल्पजन्मन्** पु० सङ्कल्पात् जन्म यस्य । १कामदेवे हला० सङ्कल्पजादयोऽप्यत्र । सङ्कल्पजातमात्रे यज्ञादौ च त्रि०

**सङ्कल्पयोनि** पु० सङ्कल्पोयोनिरुत्पत्तिकारणं यस्य । कामदेवे "सङ्कल्पयोनेरभिमानभूतमिति" कुमारः ।

**सङ्कसुक** त्रि० सम्+कस-उकञ् । १अस्थिरे अमरः । २मन्दे सि०कौ० ३दुर्बले उणादि० । ४सङ्कीर्णे ५अपवादशीले च संक्षिप्तसा० ।

**सङ्कार** पु० सम्+कॄ-कर्मणि वा० घञ् । १सम्मार्ज्जनादिक्षिप्तधूल्यादौ शब्दर० । २नवदूषितकन्यायां स्त्री मेदि० गौरा० ङीष् । भावे घञ् । ३अग्निचटत्कारे मेदि०।

**सङ्काश** त्रि० सम्यक् काशते काश–अच् । १सदृशे "तरुणादित्यसङ्काशमिति" तन्त्रम् । अत्रार्थे निभादिवदस्य नित्यसमासता । २अन्तिके च विश्वः ।

**सङ्किल** पु० सम्+किल–क । वह्निरुल्कायां त्रिका० ।

**सङ्कीर्ण** त्रि० सम्+कॄ–क्त । बहुजनसङ्कर्षेण निरवकाशे १स्थाने भरतः । २मिलितनानाजातीये उणा० ३व्याप्ते ४मिश्रिते ५सङ्कटे अजयः । एकत्र ६मिलितयोः पर-

स्परविजातीययोश्च । इतरवर्णेन इतरवर्णस्त्रियां जाते ७जातिभेदे पु०८मयुक्ते अमरः । ९मिश्रितरागे सङ्कीत०

**सङ्कीर्त्तन** न० सम्+कीर्त्त-ल्युट् । १स्तुतौ २देवादेर्नामोच्चारणे ३गानेन देवगुणाद्युत्कीर्त्तने च "श्रीकृष्णरससङ्कीर्तं वीणाध्वनिसमन्वितम् । कुरु वत्सायुनात्रैव श्टण्वन्तु मुनयः सुराः । गोपीनां वस्त्रहरणं परं रासमहोत्सवम् । ताभिः सार्द्धं जलक्रीडां हरेस्त्कीर्त्तनं कुरु । कृष्णसङ्कीर्त्तनस्थाने ये च नृत्यन्ति वैष्णवाः । तेषां पादरजःस्पर्शात् सद्यः पूता वसुन्धरा" नारदपञ्चरात्रम् ।

**सङ्कुचित** त्रि० सम्+कुच-क्त । १कृतसङ्कोचे २संक्षिप्ते ३अप्रफुल्ले च हेमच० । ४सुप्ते राजनि० ।

**सङ्कुल** न० सम्+कुल-क । १परस्परपराहते "यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता । माता तु मम वन्ध्यैव पुत्रहीनः पितामहः" इत्येवं वाक्ये अमरः । २परस्परहननरूपे युद्धे ३बहुजनादिभिः संबाधेन निरवकाशे स्थाने ४सङ्कीर्णे त्रि० अमरः ।

**सङ्केत** पु० सम्+कित-घञ् । मनोगतभावव्यञ्जनाय कृते हस्तादिचालनरूपे १व्यापारे (इसारा) त्रिका० । "अस्माच्छब्दादयमर्थोबोध्यः, अयं शब्दः अमुमर्थं बोधयतु वा" इत्येवं शब्दनिष्ठे २अर्थबोधनाशक्तिविशेषे सङ्केतश्च जात्यादिचतुष्के इति वैयाकरणाः ।

"शब्दैरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः । चातुर्विध्यादमीषान्तु शब्द उक्तश्चतुर्विधः" काव्यादर्शः । "सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च" हरिः "जातिद्रव्यगुणस्पन्दैर्धर्मैः सङ्केतवत्तया । जातिशब्दादिभेदेन चातुर्विध्यं परे जगुः" वैयाकरणमतम् शब्दश० प्र० उक्तम् । "इदं सङ्केतवन्नाम सैव संज्ञेति कीर्त्यते" शब्दश०। शक्तिशब्दे ५०७६ पृ० दृश्यम् । ३प्रियसङ्गमार्थं गुप्तस्थाने च ।

**सङ्केतित** त्रि० सङ्केतो जातोऽस्य तार० इतच् । सङ्केतयुते वाच्ये अर्थे "साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचकः" काव्यप्र० ।

**सङ्कोच** पु० सम्+कुच-घञ् । बहुविषयकवाक्यस्याल्पविषयकतया १व्यवस्थापने सामान्यशब्दस्य २विशेषपरतायाम् श्राद्धवि० ३जडीभावे ४बोधे ५मत्स्ये च मेदि० । सम्+कुच-अच् । ६मत्स्यभेदे पुंस्त्री० मेदि० स्त्रियां ङीष् । ७कुङ्कुमे न० अमरः । [तायां रत्नमा० ।

**सङ्कोचनी** स्त्री सम्+कुच-ल्यु-गौरा० ङीष् । लज्जालुक-

**सङ्क्रन्दन** पु० सङ्क्रन्दयत्यसुरान् सम्+क्रन्द-णिच्-ल्यु । १इन्द्रे अमरः । भावे ल्युट् । २सम्यक्क्रन्दने न० ।

**सङ्क्राम** पु० सङ्क्रामत्यनेन सम्+क्रम-घञ् वा वृद्धिः । १जलबन्धनस्थाने (साँको) अमरः "आत्मानं सङ्क्रमं कृत्वेति" स्मृतिः । भावे घञ् । २रव्यादेः राश्यन्तरसञ्चारे पर्य्यायः । "त्रुटेः सहस्रभागो यः स कालो रविसंक्रमः" ति०त० । ३ एकत्रस्थितवस्तुनः तत्स्थानत्यागेनान्यत्रगमने च । [राश्यन्तरगमने च ।

**सङ्क्रमण** न० सम्+क्रम-ल्युट् । १सङ्क्रान्तौ २रव्यादीनां

**सङ्क्रान्त** त्रि०सङ्क्रान्तिरस्यास्ति अच्, सम्+क्रम-क्त वा । १सङ्क्रान्तियुक्ते २सङ्क्रमणकर्त्तरि ३प्राप्ते दायरूपेण भर्त्रादित आगते स्त्रिया ४प्राप्तधने च । दायभा० मते स्त्रीणां संक्रान्तधने उपभोगमात्रं तन्मरणे स्वपत्यादिदायादानां तद्धनम् "भुञ्जीतामरणात् क्षान्ता दायादा ऊर्द्ध्वमाप्नुयुः" कात्या० वचनात् । मिता० मते स्वदायादानामिति विवेकः ।

**संक्रान्ति** स्त्री सम्+क्रम-भावे क्तिन् । संक्रमणशब्दार्थे संक्रान्तिपदार्थरविसंक्रान्तिनामभेदफलभेदादि सु० चि० पी०धा० निरूपितं यथा

"घोरा१ऽर्कसंक्रमणमुग्ररवौ हि शूद्रान्, ध्वाङ्क्षी२ विशो, लघुविधौ च चरश्च भौमे । चौरान्, महोदरयुता३ न्टपतीन्, चमैत्रे मन्दाकिनी४ स्थिरगुरौ सुखयेच्च, मन्दा५ । विप्रांश्च, मिश्रभस्तगौ तु पशूंश्च मिश्रा६ तीक्ष्णार्कजेऽन्त्यजसुखा खलु राक्षसी७ च । त्र्यंशे दिनस्य न्टपतीन् प्रथमे निहन्ति मध्ये द्विजानपि विशोऽपरके च शूद्रान् । अस्ते निशाप्रहरकेषु पिशाचकादीन्नक्तञ्चरानपि नटान् पशुपालकांश्च । सूर्य्योदये सकलद्विङ्जिनच्च सौम्ययाम्यायनं मकरकर्कटयोर्निरुक्तम् । षडशीत्याननज्ञापन्त्युक्कन्याझषे भवेत् । तुलाजौ विषुवं, विष्णुपदं सिंहालिगो घटे । संक्रान्तिकालादुभयत्र नाडिकाः पुण्या मताः षोडशषोडशोष्णगोः । निशीथतोऽर्वागपरत्र संक्रमे पूर्वापराह्णान्तिमपूर्वभागकौ । पूर्णे निशीथे यदि संक्रमः स्याद्दिनद्वयं पुण्यमथोदयास्तात् । पूर्वं परस्ताद् यदि याम्यसौम्यायने दिने पूर्वपरे तु पुण्ये । सन्ध्या त्रिनाडीप्रमितार्कबिम्बादर्द्धोदितास्तादध ऊर्द्ध्वमत्र । चेद्याम्यसौम्ये अयने क्रमात्स्तः पुण्यौ तदानीं परपूर्वघस्रौ । याम्यायने विष्णुपदे चाद्या मध्यास्तुलाजयोः । षडशीत्यानने सौम्ये परा नाड्योऽतिपुण्यदाः" मु० चि० ।

"तत्र ग्रहाणां प्राच्याश्रितोऽपरराशौ संक्रमणं संक्रान्तिरिति संक्रान्तिलक्षणं सा च द्विविधा मध्यमा स्पष्टा च। षट्कर्मसंस्कृतो मध्यमग्रहो राश्यन्तरं यदा संक्रामति सा मध्यमसंक्रान्तिरुच्यते। यदा तु स्पष्टीकृतसंस्कारविशिष्टो ग्रहो राश्यन्तरं गच्छेत् सा स्पष्टसंक्रान्तिरुच्यते। तत्र मध्यममानस्य स्पष्टीकरणार्थत्वादेव तज्जनितसंस्कारानुपयोगादत्र तत्त्यागेन स्पष्टसंक्रान्तिरेव स्वीक्रियते। सापि द्विविधा सायनांशा निरयनांशा चेति। तत्र यदा सिद्धान्तगणनागतायनांशसंस्कृता ग्रहा राश्यन्तरगमनमुररीकुर्वते सा सायनांशसंक्रान्तिरुच्यते। यदा त्वयनांशसंस्काररहिता ग्रहा राश्यन्तरगास्तदा निरयनांशा संक्रान्तिरुच्यते। तत्रान्यासां चन्द्रादिसंक्रान्तीनान्तु "देवद्व्यङ्कर्त्तवोऽष्टाष्टौ नाड्योऽङ्काः खनृपाः क्रमात्। वर्ज्या संक्रमणेऽर्कादेः प्रायोऽर्कस्यातिनिन्दिता" इति वर्ज्यघटीत्वमेव विवाहप्रकरणे वक्ष्यति न तु फलकथने आसां संक्रान्तीनां कश्चिदुपयोगः। सूर्यसंक्रान्तीनान्तु नक्षत्रवारसमयभेदेन ववादिकरणभेदेन च शुभाशुभफलकथनयोग्यता पुण्यकालता संक्रान्तिविशेषे वर्ज्यघटीत्व नाधिकमावश्यकीत्यतो बहुवक्तव्यत्वात् स्वतन्त्रमेव सूर्यसंक्रान्तिप्रकरणमारिप्सुर्नक्षत्रवारभेदेन फलं तावत् सार्द्धवसन्ततिलकयाह। घोरेति अर्कस्य सूर्यस्य संक्रमणं निरयनांशा संक्रान्तिरुग्रसंज्ञकनक्षत्रे रविवारेऽर्कवारे वा स्यात् तदा घोरानाम्नी सा शूद्रान् सुखयेत् सुखिन उत्पादयेत्। अत्रार्कसंक्रमणमिति पदोपादानसामर्थ्यात् सूर्यसंक्रान्तिष्वेवायं विचारो नाखिलग्रहसंक्रान्तिष्विति फलितोऽर्थः।

अथ लघुनक्षत्रे विधौ चन्द्रवारे वा सूर्यसंक्रान्तिर्ध्वाङ्क्षीनाम्नी विशो वैश्यान् सुखयेत्। चरर्क्षे चरनक्षत्रे भौमे मङ्गलवारे वा संक्रान्तिर्महोदरयुता महोदरीनाम्नी चोरान् सुखयेत्। समैत्रे बुधे मैत्रसंज्ञकनक्षत्रे वा संक्रान्तिर्मन्दाकिनीनाम्नी नृपतीन् राज्ञः सुखयेत्। स्थिरनक्षत्रे गुरुवारे वा संक्रान्तिर्मन्दानाम्नी विप्रान् सुखयेत्। मिश्रनक्षत्रे भृगुवारे वा संक्रान्तिर्मिश्रनाम्नी पशून् सुखयेत्। तीक्ष्णनक्षत्रे अर्कजे शनिवारे वा संक्रान्तिः खलु निश्चयेन राक्षसीनाम्नी अन्त्यजांश्चाण्डालान् सुखयतीत्यन्त्यजसुखा स्यादित्यर्थः। यदाह कश्यपः "घोराध्वाङ्क्षीमहोदर्यो मन्दा मन्दाकिनी तथा। मिश्रा राक्षसिका सूर्यसंक्रान्तिश्चार्कवासरात्"। वशिष्ठः "घोरोग्रर्क्षे ध्वाङ्क्षी लघुभे चरभे महोदरी मृदुभे। मन्दाकिनी चरर्क्षे मन्दा मिश्रा मिश्रे च राक्षसी तीक्ष्णे"। अत्र छन्दोभङ्गस्त्वार्षः। देवीपुराणे "मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा। क्षिप्रे ध्वाङ्क्षीं विजानीयादुग्रे घोरा प्रकीर्त्तिता। चरे महोदरी ज्ञेया क्रूरेऽप्युग्रेषु राक्षसी। मिश्रिता चैव विज्ञेया मिश्रऋक्षेषु संक्रमे" इति। रत्नमालायाम् "उग्रक्षिप्रचरे मित्रध्रुवमिश्राख्यदारुणैः। ऋक्षैः संक्रान्तिरर्कस्य घोराद्या क्रमशो भवेत्"। नारदकश्यपौ "शूद्रतस्करवैश्याः क्ष्मादेवभूपगवां क्रमात्। अनुक्तानाञ्च सर्वेषां घोराद्याः सुखदाः स्मृताः"। क्ष्मादेवाः ब्राह्मणाः अनुक्तानां चाण्डालादीनाम्। नन्वुक्तं वक्ष्यमाणं वा शुभाशुभफलं सायनांशसंक्रान्तितः कुतो न विचार्यते इति चेत् उच्यते सायनांशसंक्रान्तेः स्नानदानजपादावेव कार्य्यं न सर्वत्र यदाह पुलस्त्यः "स्नानदानजपश्राद्धव्रतहोमादिकर्मसु। सुकृतं चलसंक्रान्तावक्षयं पुरुषोऽश्नुते" इति। चलसंक्रान्तिः सायनांशसंक्रान्तिः। अतश्चलसंक्रान्तेः परिगणितस्नानादिकविषयत्वादेव कृत्यान्तरेषु विवाहादिशुभकर्मसु संक्रान्तिमासाङ्गीकारे शुभाशुभफलकथनस्य नास्या उपयोग इति युक्तमुत्पश्यामः। इदं चाग्रे सम्यक्तया निर्णेष्यते"। "अथ दिनरात्रिविभागेन संक्रान्त्यशुभफलमुत्तरायणदक्षिणायनसंज्ञाञ्च सार्द्धवसन्ततिलकयाह। त्र्यंशे इति अत्रार्कसंक्रमणमित्यनुवर्त्तते दिनप्रमाणं त्रिभिर्भक्तं यस्यात्मकस्तृतीयांशो भवति तत्र दिनस्य प्रथमत्र्यंशेऽर्कसंक्रमणं नृपतीन् हन्ति मध्ये द्वितीयत्र्यंशे द्विजान् ब्राह्मणान् हन्ति अपरके तृतीयत्र्यंशे वैश्यान् इत्येवं सर्वत्र व्याख्येयम्। अस्ते सूर्यास्तसमयेऽर्कसंक्रमणं शूद्रान्। अथ रात्रिसंक्रान्तिफलं तत्र रात्रिप्रथमप्रहरे पिशाचकादीन् आदिशब्देन भूतादीन्। द्वितीयप्रहरे नक्तञ्चरान् राक्षसान्, तृतीयप्रहरे नटान् नर्त्तकान्, चतुर्थप्रहरे पशुपालकान् आभीरान्। सूर्योदयसमयकालेऽर्कसंक्रमणं सकललिङ्गिजनं पाखण्डादिकं हन्तीत्यर्थः "पाखण्डाः सर्वलिङ्गिन" इत्यभिधानात्। यदाहतुर्नारदकश्यपौ "पूर्वाह्ने नृपतीन् हन्ति विप्रान् मध्यदिने विशः। अपराह्णेऽस्तगे शूद्रान् प्रदोषे च पिशाचकान्। निशि रात्रिञ्चराचार्यकारानपररात्रके। गोचारिगणान् सन्ध्यायां लिङ्गिनं रविसंक्रमः" इति। संक्रान्तेः क्रूरसौम्यवारपरत्वेन फलविशेषमाह वशिष्ठः रविरविज-

भौमवारे संक्रान्तौ दिनकरस्य तन्मासे । पित्तकफानिलजामयनरपतिकलहस्तदृष्टिश्च । बुधगुरुसितचन्द्राह्ने सति संक्रान्तावनामयं नृणाम् । क्षितिपतिनिकरक्षेमं शस्यविवृद्धिर्विधर्मिणां पीडा" । अत्र मेषसंक्रान्तौ विशेषमाह कश्यपः "यदा मेषगतः सूर्य्यो भरण्यादिचतुष्टये । सस्यवृद्धिर्भवेत्तत्र वृद्धिरार्द्राचतुष्टये । मघादिदशके हानिः क्षेमं चानुत्तमेषु च" । अस्यार्थः । यस्मिन् दिने मेषसंक्रमस्तद्दिने चन्द्रो यदि भरण्यादिनक्षत्रचतुष्टये स्यात् तदा सस्यवृद्धिः एवमन्योऽपि व्याख्येयम् । अथ जन्मनक्षत्रे संक्रान्तिफलं दीपिकायां "यस्य जन्मर्क्षमासाद्य रविसंक्रमणं भवेत् । तन्मासाभ्यन्तरे तस्य रोगः क्लेशो धनक्षयः" इति । तत्र शान्तिकमपि दीपिकायामुक्तम् "कमरसरोरुहपत्रैरम्भोभिस्सिद्धार्थलोध्रसंयुक्तैः । स्नानं जन्मन्यृक्षे रविसंक्रान्तौ नृणां शुभदमिति" । अथ संक्रान्तिषु दृष्टौ जातायां फलमुक्तम् वशिष्ठेन "अजकन्याभषकर्किणि संक्रान्तौ यदि भवेदर्घम् । अतुलं क्षेमसुभिक्षं नृपसज्जनगोकुलक्षेमम् । घटचापसिंहमिथुनसंक्रान्तौ यदि भवेदर्घम् । आमयडामरभूभृद्युद्धमनर्थं स्वदृष्टिश्च । वृषवृश्चिकतुलमकरे दृष्टिः स्यात् संक्रमे समये । विस्फोटामयतस्करपीडादृष्टिः क्रमात्तु भयमिति" । अथ सौम्येति मकरकर्कटयोः संक्रान्तिश्चेत् तदा क्रमेण सौम्ययाम्यायनं निरुक्तं कथितं मकरे उत्तरायणं कर्कटे याम्यायनं स्यादित्यर्थः । यदाह नारदः "सौम्ययाम्यायने नूनं भवतो मृगकर्किणि" इति । अथावशिष्टाष्टसंक्रान्तीनां षडशीतिमुखादिकाः संज्ञा वक्तुमाह षडशीतीति धनुर्मिथुनकन्यामीनेषु संक्रान्तिश्चेत् तदा षडशीतिमुखानाम्नी संक्रान्तिः, तुलामेषयोः संक्रान्तिर्विषुवनाम्नी । सिंहवृषवृश्चिककुम्भेषु संक्रान्तिर्विष्णुपदाख्या । उक्तञ्च नारदेन "स्थिरभेष्वर्कसंक्रान्तिर्ज्ञेया विष्णुपदाह्वया । षडशीतिमुखं प्रोक्तं द्विस्वभावेषु राशिषु । तुलाधराजयोः प्रोक्तं विषुवं सूर्य्यसंक्रमः" । संज्ञाप्रयोजनञ्च "याम्यायने विष्णुपदे चाद्या मध्यास्तुलाजयोः । षडशीत्यानने सौम्ये परा नाड्योऽतिपुण्यदाः" । इति पश्चाद्दर्प्ये वक्ष्यति । अथ मनुः "संक्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः । तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि । रविसंक्रमणे पुण्ये न स्नायाद्यदि मानवः । सप्तजन्मसु रोगी स्याद् दुःखभागी हि जायते" इति शातातपोक्तेः स्नानदानश्राद्धादिकृत्यस्य संक्रान्तिकालेऽवश्यकर्त्तव्यता प्रतीयते तत्र श्राद्धादेरनेकक्षणसाध्यत्वादनुष्ठानलक्षणप्रामाण्यमापद्येत संक्रान्तिकालस्यातिसूक्ष्मत्वात् तदुक्तम् देवीपुराणे "सुस्थे नरे सुखासीने यावत् स्पन्दति लोचनम् । तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्त्तितः । तस्माच्छततमो भागस्त्रुटिरित्यभिधीयते । त्रुटेः सहस्रभागो यः स कालो रविसंक्रमः" इति । देवलोऽपि "संक्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः" इति पिशितेक्षणैः मनुष्यैः । अतोमुख्यकालानुपलब्धौ गौणकालेऽपि कार्य्यं वचनप्रामाण्यात् । स च गौणकालः प्रतिनिधिरित्यतो गौणकालमुपजातिकाच्छन्दः पूर्वार्द्धेनाह संक्रान्तीति । गणितमार्गेण यः उष्णगोः सूर्य्यस्य संक्रान्तिकाल आगतस्तत उभयत्र पूर्वतः परतश्च षोडश नाड्यः पुण्यसम्पादकत्वात् पुण्या मताः सम्मता सूर्य्यसंक्रान्तिसमयात् पूर्वं षोडश पश्चाच्च षोडशघटिकाः पुण्यकाल इति द्वात्रिंशद्घटिका भवन्तीत्यर्थः । तदाह वशिष्ठः "दिनपतिसंक्रमणात् प्राक् षोडश नाड्यश्च पुण्यकालः सः । परतः षोडश नाड्यः सर्वत्र स्नानदानकार्य्येषु । ब्रह्मसिद्धान्तेऽपि "सक्रान्तेः प्राक्परस्ताच्च षाड्यौ षोडश नाडिकाः । मयस्त्रिंशत् संक्रमस्य पुण्याः सर्वस्य नाडिकाः" । अनेन "संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः" इति स्मृतिवाक्ये "यैः पूर्वतः परतश्चाष्टावष्टौ घटिकाः पुण्यकाल इत्येवं षोडशेति व्याख्यातं तदपास्तं भवति । किञ्चायमर्थोवासनासिद्धः सूर्य्यसिद्धान्तेऽभिहितः "अर्कमानकलाः षष्ट्या गुणिता भुक्तिभाजिताः । तदर्द्धनाड्यः संक्रान्तेरर्वाक् पुण्यं तथा परे" । सिद्धान्तशिरोमणावपि "षष्टिघ्नबिम्बं षड्भुक्तिभक्तं संक्रान्तिनाड्योऽखिलधर्म्मकृत्ये । रवेस्तु ताः पुण्यतमा यतः स्वसंक्रान्तिगोबिम्बफलं विधत्ते" । इति वासना चेयं यदि षड्सुपष्टमितितुल्यकलाभिरहोरात्रमानरूपाः षष्टिघटिकालभ्यन्ते तदा षड्बिम्बकलाभिः किमिति त्रैराशिकेन षष्टे बिम्बकलानां षष्टिगुणबलो षड्भुक्तिभाजको निष्पन्न इत्यर्थः । एवं सर्व्वग्रहाणामपि संक्रान्तिः स्यात् तदुक्तं सिद्धान्त एव । अत्र तु विस्तरभयादनुपयुक्तत्वाच्च नाभाभिरलेखि । अतएव त्रिंशद् एकत्रिंशत्षड्द्वात्रिंशत्त्रयस्त्रिंशदादिभेदेन स्मृतिषु पुण्यघटिकाभिधानं स्पष्टीकृत्या भेदसंभवाच्चित्तं तदेव सामान्यतः संक्रान्तिषु द्वात्रिंशत् घटिकारूपः पुण्यकालो निर्णीतः । देवीपुराणे तु मन्दादिसंज्ञाभेदात् पुण्यकाल-

विशेष एवोक्तः" द्विचतुःपञ्चसप्ताष्टनवद्वादश एव च । क्रमेण घटिकाह्येतास्तत् पुण्यं पारमार्थिकम्" इति । अस्यार्थः मन्दायामन्तरावर्त्ति घटिकाद्वयं मन्दाकिन्याश्चतस्रो घटिकाः ध्वाङ्क्ष्यां पञ्च, घोरायां सप्त, महोदर्यामष्टौ, राक्षस्यां नव, मिश्रायां दश" प्रागभिहितदेवीपुराणोक्तमन्दादिसंज्ञावाक्यात्तत्तल्लनितसंज्ञास मन्दादिष्वयं विचारो न वारप्रयुक्तास्तद्वचनात् एवं संक्रान्तिषु पुण्यकालमभिधाय इदानीं रात्रिसंक्रान्तौ विशेषमुपजाल्लुकराह्णेनाह निशीथत इति । निशीथोऽर्द्धरात्रं तस्मादर्वाक् पूर्वस्य अपरस्य पश्चात् संक्रमे संक्रान्तिकाले सति पूर्वापरयोरह्नोः क्रमेणान्तिमपूर्वभागौ पुण्यौ स्यातां मागकाविति स्वार्थे कः । यद्यर्द्धरात्रात् प्राक्संक्रान्तिस्तदा पूर्वदिनस्योत्तरार्द्धं पुण्यं यद्यर्द्धरात्रादुपरि संक्रान्तिस्तदोत्तरदिनस्य पूर्वार्द्धमेव पुण्यमित्यर्थः । उक्तञ्च ब्रह्मसिद्धान्ते "भवनान्तं बिम्बमध्यं रात्र्यर्द्धात् प्रागुदेति चेत् । स्नानदानादि मध्याह्नात् कुर्यादूर्ध्वं गते दिने । रात्र्यर्द्धादुपरि चेत्तं याति चेदन्ययार्यमा । अह्न्यागामिनि मध्याह्नात् पूर्वं स्नानादि पुण्यदम्" । भवनं राशिः बिम्बमध्यं रवेः, चेत्तं राशिः । वृद्धवशिष्ठोऽपि "अह्निसंक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम् । रात्रौ संक्रमणे भानोर्दिनार्द्धं स्नानदानयोः । अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरिक्रिया । ऊर्द्ध्वं संक्रमणे चोर्द्ध्वमुदयात् प्रहरद्वयम्" इति । ननु रात्रौ शेषदिनसंक्रान्तौ वा रात्रावपि पुण्यकालसत्त्वात् तदा स्नानादि कुतो न क्रियते यदर्थमयमुद्यम आरब्ध उच्यते "रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः" इति सुमन्तुवाक्याद्रात्रौ स्नानाद्यधिकाराभावात् । यत् तु नैमित्तिकं ग्रहणादिप्रयुक्तं तद्भवत्येव "नैमित्तिकञ्च कुर्वीत स्नानं दानञ्च रात्रिषु" इति सुमन्तुवाक्यशेषात् "अर्द्धरात्रसमये संक्रमणे मकरकर्कयोश्च विशेषमुपलातिकयाह । पूर्वे इति । "अर्द्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ" इत्यभिधानादर्द्धरात्रो निशीथशब्दवाच्यः तस्मिन्निशीथे पूर्वे रात्रिद्वितीयप्रहरान्तिमकलावच्छिन्ने यदि संक्रमः स्यात् तदा प्रागपरं दिनद्वये पुण्यमुक्तम् । उक्तञ्च वृद्धवशिष्ठेन "पूर्णे चेदर्द्धरात्रे तु यदा संक्रमते रविः । प्राहुः दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटाविति" । ब्रह्मसिद्धान्तेऽपि "यद्यर्द्धरात्र एव स्यात् संपूर्णे संक्रमो रवेः । तदा दिनद्वयं पुण्यं स्नानदानादिकर्मसु" । अत्र मुक्त्वा मकरकर्कटावित्युक्तं तत्र मकरकर्कटयोस्तु कथमित्यत आह्वाथेति अथानन्तरमुदयास्तात् सूर्य्योदयात् सूर्य्यास्ताच्च पूर्वं परस्ताच्च यदि याम्यसौम्ययने कर्कटमकरसंक्रान्ती भवतस्तदा पूर्वपरदिने पुण्ये स्यातां यदि सूर्य्योदयात् पूर्वं कर्कटसंक्रमणं स्यात् तदा पूर्वदिन एव पुण्यकालो न परदिने । तदाह वृद्धगार्ग्यः "यदास्तमयवेलायां मकरे याति भास्करः प्रदोषे चार्द्धरात्रे वा स्नानं दानं परेऽहनि । अर्द्धरात्रे तदूर्ध्वं वा संक्रान्तौ दक्षिणायने । पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः" इति । अस्तमयवेलायां इति पञ्चम्यन्तं पदं वामस्त्र इवार्थे । भविष्योत्तरपुराणेऽपि "कार्त्तिकन्तु परित्यज्य मृगं संक्रमते रविः । प्रदोषे चार्द्धरात्रे वा कुर्य्यादहनि पूर्वतः" इति । प्रदोषलक्षणं स्कान्दपुराणे "त्रिमुहूर्त्तः प्रदोषः स्याद्रवावस्तं गते सति" इति ।

अथार्द्धोदयास्तादिति वचनस्याप्ययादमिन्द्रवज्राछन्दसाह अर्द्धेति अर्द्धोदितादर्द्धास्ताच्चाध ऊर्द्ध्वं च क्रमात्त्रिघटिकाभिः प्रमिता सन्ध्यासन्ध्याकालः स्यात् अर्द्धोदितार्कबिम्बात्पूर्वं त्रिघटीप्रमिता प्रातःसन्ध्या तथार्द्धास्तादर्कबिम्बादुपरि त्रिनाड़ीप्रमिता सायंसन्ध्येत्यर्थः । तदाह वराहः "अर्द्धास्तमितानुदितात् सूर्यादस्पष्टभं नभो यावत् । तावत् सन्ध्याकालश्चिह्नैरेतैः फलं ब्रूयादिति" । तत्प्रमाणमाह नारदः "अर्द्धास्तमनसन्ध्या हि घटिका त्रयसम्मिता । तथैवार्द्धोदयात् प्रातर्घटिकात्रयसम्मिता" इति । स्कान्दपुराणेऽपि "उदयात् प्राक्तनी सन्ध्या घटिकात्रयमुच्यते । सायंसन्ध्या त्रिघटिका अस्तादुपरि भास्वतः" इति । अत्र सन्ध्यालक्षणे अर्द्धास्तमितानुदितवाक्यस्य स्कान्दपुराणीयवाक्यस्य च व्रीहियववद्विकल्पः । अथ सन्ध्यालक्षणप्रयोजनमाह्वायेति । अथ सन्ध्यायां प्रातःसन्ध्यायां सायंसन्ध्यायां च क्रमाच्चेद् याम्यसौम्ये अयने दक्षिणोत्तरायणे तदानीं परपूर्वौ वा दिवसौ पुण्यौ याम्यसौम्ये अयने इत्यत्र यदि प्रातःसन्ध्यायां दक्षिणायनप्रवृत्तिस्तदा सूर्योदयादनन्तरं सम्पूर्णमहः पुण्यं तथा यदि सायंसन्ध्यायामुत्तरायणप्रवृत्तिस्तदा सूर्यास्तात्पूर्वं सम्पूर्णमहः पुण्यं स्यादित्यर्थः । यदाह नारदः "सूर्य्योदयसन्ध्यायां यदि याम्यायनं भवेत् । तदोदयादहःपुण्यं पूर्वाहः पूर्वतो यदि । सूर्य्यास्तमनसन्ध्यायां यदि सौम्यायनं भवेत् । तदाहः पुण्यकालः स्यात् परतश्चोत्तरेऽहनि" इति । अत्र यद्युदयसन्ध्यातः प्राक्कर्कसंक्रम-

स्तदा प्रागदिन एव पुण्यकालो नोत्तरदिने। तथा यद्यस्तमयात् प्रागतिक्रम्य मकरसंक्रान्तिस्तदोत्तरदिन एव पुण्यकालो नोत्तरदिने इति निष्कृष्टोऽर्थः। अतो वृद्धगार्ग्यादिवाक्यनारदवाक्ययोः प्रदोषसन्ध्यापदोपादानेन सामान्यविशेषभावोऽवगन्तव्यः। यत्तु हेमाद्रौ स्कन्दपुराणीयं वाक्यम् "धनुर्मीनावतिक्रम्य कन्यां च मिथुनं ततः। पूर्वापरविभागेन रात्रौ संक्रमते यदा। दिनान्ते पञ्च नाड्यस्तु तदा पुण्यतमाः स्मृताः। उदये च तथा पञ्च दैवे पित्र्ये च कर्मणि" इति। तदपि सन्ध्याविषयकमेवेत्याहुरभियुक्ताः। विषुवे तु यथाश्रुतम् एवेति, अन्यदपि सन्ध्यालक्षणप्रयोजनं प्राक्सन्ध्यागर्जित इत्यादिषु वक्ष्यति। ननु नायमयनपुण्यकालोक्त्युद्यमः सफलः शास्त्रान्तरविरुद्धत्वात्तथा हि "अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम्। रात्रौ संक्रमणे भानोर्दिनार्द्धं स्नानदानयोः। अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरिक्रिया। ऊर्द्ध्वं संक्रमणे चोर्द्ध्वमुदयात् प्रहरद्वयम्। पूर्णे चेदर्द्धरात्रे च यदा संक्रमते रविः। प्राग्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ" इति वृद्धवशिष्ठेनायनव्यतिरिक्तेषु दशसु संक्रमेषु रात्रिगतेषु "याः याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः" इति कश्यपोक्तसामान्यवाक्याद्रात्रावेवानुष्ठानं प्रसक्तमहः संक्रम इत्यादिनाप्येतद्देवानुष्ठानं विहितं तथापि पर्युदासः क्रियते मुक्त्वा मकरकर्कटाविति तस्मात् मकरकर्कटयोः संक्रमणे रात्रावेवानुष्ठानं कर्त्तव्यमित्युक्तं भवति अतएवाह याज्ञवल्क्यः "राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु। स्नानदानादिकं कार्यं निशि काम्यव्रतेषु च" इति वशिष्ठोऽपि "सुतजनने संक्रान्तावुपरागे चन्द्रसूर्ययोर्नियतम्। रात्रावपि कर्त्तव्यं स्नानं दानं विशेषतो नृणामिति" सुमन्तुश्च "ग्रहणोद्वाहसंक्रान्तियात्रार्त्तिप्रसवेषु च। श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यते" इति। एषु वाक्येषु सामान्यवाचिनोऽपि संक्रातिपदस्य मकरकर्कटसंक्रान्तिपरत्वमवसीयते यत्तु "रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः" इति निषेधः स संक्रान्त्यन्तरे व्यवतिष्ठते अतएवोक्तं कश्यपेन "स्नानं दानं ग्रहणवत् सौम्ययाम्यायनद्वये" इति। तस्मादयनसंक्रमे रात्रौ सत्यां तत्रैव स्नानदानाद्यनुष्ठातव्यमिति। अत्राहुः शास्त्रद्वयेन तुल्यबलत्वाद्विकल्पसिद्धौ तत्तद्देशप्रसिद्धशिष्टाचारेण व्यवस्था द्रष्टव्या। तत्र गौर्जरास्तु कश्यपादिवाक्यमभ्युपेत्य रात्रा-वचनसद्भावे सति रात्रौ एव स्नानदानादिकं कुर्वन्ति। दाक्षिणात्यास्तु वृद्धगार्ग्यादिवाक्यमङ्गीकृत्य दिवस एव स्नानदानादि कुर्वन्तीत्यलमतिप्रसङ्गेन। यदा तु दिने कर्कमकरसंक्रमस्तदा क्रमेण पूर्वोत्तरघटिकानियममाह वृद्धवशिष्ठः "अतीतानागते पुण्ये द्वे उदग्दक्षिणायने। त्रिंशत् कर्कटके नाड्यो मकरे विंशतिः स्मृता" इति। उत्तरायणमतीतं सत् पुण्यं कर्कटायनमागामि पुण्यं तत्र कर्कटसंक्रान्तेः प्राक् त्रिंशत् घटिकाः पुण्याः मकरे तूत्तरविंशतिर्घटिकाः पुण्या इत्यर्थः। अत्र वाक्ये यद्यपि दिनपदानुपादानं तथापि यदास्तमयवेलायामिति रात्रिपरविशेषवाक्यालोचनादिदं दिनपरं प्रतिभाति तथा सति केनापि हेतुना समीपघटीषु स्नानाद्यनुष्ठानासम्भवे परमावधित्वेन त्रिंशदादयो घटिका अत्रानुस्रियन्ते यदा तु प्रतिबन्धस्तदा "याः याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृता" इति कश्यपोक्तेः समीपघटिकास्वेव स्नानादि विधेयं 'सन्निहितपरित्यागे कारणाभावादिति' न्यायविदः। "अथ पूर्वापराः षोडश घटिकाः पुण्या इति पूर्वं सामान्येनोक्तमिदानीं विष्णुपदादिषु संक्रमेषु विशेषमनुष्टुभाह याम्येति। याम्यायने कर्कसंक्रान्तौ तथा विष्णुपदे वृषसिंहवृश्चिककुम्भसंक्रान्तिकाले आद्याः नाड्यः प्रथमाः षोडशघटिकाः अतिपुण्यदाः स्नानदानादावनन्तफलदायिन्यः अधिमास्तु न तथेति निष्कृष्टोऽर्थः। तुलाजयोस्तुलामेषयोः मध्या उभयतः षोडश षोडश घटिकाः पुण्याः अथ वा षोडशैव घटिकाः पुण्या। षडशीत्यानने मिथुनकन्याधनुर्मीनसंक्रान्तिषु तथा सौम्ये मकरसंक्रान्तौ संक्रान्तिकालात्परा अधिमाः षोडश घटिकाः अतिपुण्यदाः प्रथमास्तु न तथेति निष्कृष्टोऽर्थः। यदाह श्रीपतिः "याम्यायने विष्णुपदे तथाद्यौ दानाद्यनन्तं विषुवे च मध्ये। वदन्त्यतीते षडशीतिवक्त्रे महर्षयः स्वल्पयने च सौम्ये"। तत्र कर्के प्रागेव मकरसंक्रान्तौ पश्चादेव पुण्यकाल इति तु प्राङ्निरणायि। विष्णुपदे तु अधिमादिघटीनां पुण्यकाले तरतमभावः "पुण्यायां विष्णुपद्यां च प्राक्पश्चादपि षोडशेति" वृद्धवशिष्ठोक्तेः। विषुवे तु सामान्यनिर्णय एवेति केचित् दीपिकाटीकाकारस्त्वेवमाह "मेषे तुलायां संक्रान्ति मध्य एव संक्रान्तिकालात्पूर्वमष्टौ घटिकाः परतश्चाष्टौ घटिका पुण्या इति"। युक्तं चैतत्। विषुवे च मध्यपदोपादानात् मध्ये षोडश घटिकाः पुण्याः इत्युच्यते कस्मात्

कालात् मध्य इत्यपेक्षायां संक्रान्तिकालादेवेत्यतः पूर्वं पश्चाच्चाष्टौ घटिकाः पुण्या इत्यर्थः । यत्तूक्तं बृहस्पतिना “वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश” इति । तुलामेषसंक्रान्तिकालात् प्राक्पश्चाच्च पञ्च पञ्च घट्यः पुण्या इत्युक्तम् यदप्युक्तम् आद्यन्तसापेक्षत्वात् मध्यशब्दस्य गणितागतपुण्यकालघटिकानां मध्ये विभागः स्थूलदृशा दशघटिकात्मको भवतीति । “याया: सन्निहिता नाड्य” इति कश्यपोक्तेः । षडशीतिमुखेऽप्याद्यान्तिमघटीनां पुण्यकाले तरतमभावः । यत्तु षडशीत्यां व्यतीतायां षष्टिस्तुल्यास्तु नाडिका” इति वृद्धवसिष्ठवाक्यं तत् प्रागघटीषु प्रतिबन्धवशात् श्राद्धादेरसम्भवे सत्यन्तिमघटीषु श्राद्धादिक्रियाभ्यनुज्ञायाः परमावधिकालेयत्तार्थम् । इदं सर्वं दिनसंक्रान्तिविषयं वेदितव्यम् “अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम्” इति सामान्यवाक्यस्य सौम्यायने विष्णुपदे इत्यस्य च विशेषवाक्यस्यैकवाक्यता । अतएव “रात्रौ संक्रमणे भानोर्दिनार्द्धं स्नानदानयोः” इति रात्रिपरविशेषस्य सत्त्वाच्च । एवं निर्णीते पुण्यकाले स्नानदानाद्यवश्यं विधेयमिति फलितोऽर्थः । तत्र स्नानदानाद्यकुर्वतः प्रत्यवायमाह वसिष्ठः “इति सञ्चिन्त्यविनिर्णयमादिष्टव्यं सदैव दैवज्ञैः । विषुवत्ययने ग्रहणे संक्रान्तौ पुण्यदिवसेऽपि । पितृतर्पणं यो न कुरुते दत्त्वा शापं व्रजति तस्य पिता । आगतगतसमयेऽपि च करोति यद्दानजपहोमाद्यम् । ऊषरवापितबीजं यद्वत् तद्वच्च निष्फलं भवतीति” । अयने अयनप्रवृत्त्याख्ये चक्रसंक्रमणे आगतसमये निर्णीते पुण्यकालातिक्रमसमये स्नानादि निष्फलमित्यर्थः । संक्रान्तिषु स्नानदानादेः फलमाह भरद्वाजः “षडशीत्यां तु यद्दानं विषुवद्दिवसे तथा । दृश्यते सागरस्यान्तस्तस्यान्तो नैव दृश्यते” । वृद्धवसिष्ठोऽपि “अयने कोटिः पुण्यानि सहस्रं विषुवे फलम् । षडशीत्यां सहस्रन्तु फलं विष्णुपदेषु च” इत्यलमतिप्रसङ्गेन । इति सूर्यसङ्क्रान्तिनिर्णयः । अथ नायं केवलं सूर्यसङ्क्रमण एव पुण्यकालः किन्तु चन्द्रादीनां ग्रहाणां नक्षत्रसङ्क्रमे राशिसङ्क्रमे च पुण्यकालो भवति सोऽपि सोपपत्तिकः प्रसङ्गतः प्रोच्यते अस्माभिः यदाह जैमिनिः “नक्षत्रराश्यो रविसङ्क्रमे स्युरर्वाक् परत्रापि रसेन्दुनाड्यः१६ । पुण्यास्तथेन्दोस्त्रिशरापलैर्युक् शुभैकनाडी१।१२ मुनिभिः शुभोक्ता । नाड्यश्चतस्रः सपलाः कुजस्य४।१ बुधस्य तिस्रो मनवः पलानि ३।१४। अब्ध्यब्धिनाड्यः पलसप्तयुक्ता गुरौ च४४।७ शुक्रे सपलाश्चतस्रः४।१ । द्विनागनाड्यः पलसप्तयुक्ताः ८२।७ शनैश्चरस्याभिहिताः सुपुण्याः । आद्यन्तमध्ये जपदानहोमं कुर्वन्नवाप्नोति सुरेन्द्रधाम” । अस्यार्थः सूर्यस्य नक्षत्रसंक्रमे राशिसंक्रमे च प्राक्परतश्च षोडश घटिकाः पुण्याः एवं चन्द्रस्यैकघटी त्रयोदश पलानि । भौमस्य चतस्रो घटिका एकं पलम् । बुधस्य तिस्रो घटिकाश्चतुर्दश पलानि, गुरोश्चतुश्चत्वारिंशत्घटिकाः सप्त पलानि शुक्रस्य चतस्रो घटिकाः पलमेकं, शनेर्द्व्यशीतिघटिकाः सप्त पलानि चोभयतः पुण्यकाल इत्यर्थः । अत्रोपपत्तिः । “भानोर्गतिः खदशभागयुतार्द्धिता वा बिम्बं विधोस्त्रिगुणितायुगशैलभक्ता७४ । तिथ्यद्रि७१५हीनशशिभुक्तिरिषुद्वि२५ भक्ता नन्दाश्वि२९ युग्भवति वा विधुबिम्बमेवमिति” सिद्धान्तशिरोमण्युक्तप्रकारेण रविचन्द्रयोर्मानकला आनेयाः “व्यङ्घ्रीषवः सचरणा ऋतवस्त्रिभागयुक्ताद्रयो नव च सत्रिलवेषवश्च । स्युर्मध्यमास्तनुकलाः क्षितिजादिकानां त्रिज्याशुकर्णविवरेण पृथग्विनिघ्नाः । इति तत्रैवोक्ताः भौमादीनां मानकलास्तत्र क्रमेण मानकलाः । तत्र “षष्टिघ्नबिम्बं ग्रहभुक्तिभक्तं संक्रान्तिनाड्योऽखिलधर्मकृत्ये । रवेस्तु ताः पुण्यतमाग्रहः स्वसंक्रान्तिगोमिश्रफलं विधत्ते” इति भास्करोक्तदिशा संक्रान्तिनाड्यः स्युः तत्र ग्रहभुक्तयस्तत्रैवोक्ताः “नन्दाब्धाभुजगा रवेः शशिगतिः खाकाद्रयः स्वाग्नयस्तुङ्गस्याङ्ककलाः कुवेद४४विकलाः पातस्य रामाश्वराः । माहेयस्य महीगुणा रसकरा ग्रह्येन्दुविज्ञारद्राः पञ्चेज्यस्य सितस्य षण्णवमिता अष्टौ शने द्वे कले” इति बुधशुक्रयोस्तु संक्रान्तिघटिकानयने सूर्यगतिरेव हारः कल्प्यस्तद्गतितुल्यत्वात्तयोः, वासनाभाष्ये हि बुधशुक्रौ तु रवेरासन्नावेव कदाचिदग्रतः कदाचित् पृष्ठतस्तस्यानुचराविव सदा भ्रमन्तौ दृश्येते । ततस्तयोरपि रविभगणतुल्या एव भगणा इत्युपपन्नमिति भास्करेणाभिहितत्वात् । पद्यमानानुगतिस्तल्कयोः शीघ्रफलानयनार्थं वासनाविज्ञैः कल्पिता तदेवं ग्रहगतय इमास्त्रिप्रकारेण साधिताः पुण्यकालघटिकाः सूर्यस्य यथा त्रिंशत् घटिकाः एवं चन्द्रस्य द्वे घटिके षड्विंशतिपलानि भौमस्य नवघटिकाश्चत्वारिंशत्पलानि बुधस्य षट्घटिकाः विंशतिपलानि गुरोरष्टाशीतिर्घटिका एवं शुक्रस्य नव घटिका अष्टौ पलानि शनेः सप्ताधिकं शतं घटिकाः । पूर्वापरकालयो

मिलित्वा पुण्यकाल इत्यर्थः। अत्र वासना प्रागुक्ता एतद्वशी नाड्यः प्राक्परतश्च पुण्याः। अत्र गणितागतघटीपलेषु लिखितजैमिनिवाक्ये च क्वचित् किञ्चित्पलभेदो घटिकाभेदश्च सगतिस्पष्टकृतिवशतः। युक्तं चैतत् आकाशे हि वेधादिना स्पष्टा एव खगा दृश्यन्ते न मध्यमाः “दिनद्वयस्पष्टखगान्तरालकालः स्फुटस्तु स्फुटभुक्तिबिम्बैरिति” स्पष्टगत्यैव बिम्बसंक्रान्तिघट्यानयनमुचितम् उक्तञ्च केशवार्केण “कुजादिकानामपि बिम्बलिप्ताः षष्ट्याहताः स्वस्वजवेन भक्ताः। नाड्यादिकः संक्रमणान्तरालकालः स्फुटस्तु स्फुटभुक्तिबिम्बैरिति” अपिशब्दात् सूर्यचन्द्रयोर्ग्रहणं तथा सति मध्यमापेक्षया स्पष्टगतिबिम्बयोरुपचयापचयाभ्यां साम्ये सत्यपि घटिकानामप्युपचयापचयाभ्यामतिक्रमेणापतति तेषां चानियतत्वात्तद्वै उपनिबन्धायोगाज्जैमिनिर्नियतमध्यगत्या सूर्यादीनां ग्रहाणां पुण्यकालघटीरानीयोपनिबन्धः कृतः। अत्र मत्कृतं पद्यम् “नाड्यो रामगुणाः१३ रवेरथ विधोः षट्दोः पलैर्युगद्वयं१।२६ भौमस्याब्धिपलैर्युतानवद्।४ विदो६।२०युक्ताः पलैः खाब्धिभिः। मन्दाद्ब्रोऽष्टगजाष्ट गुरोरथ भृगोर्नेत्राद्८।८ पलैरष्टभिः पुण्याः स्युः खन्दपाः शनेर्१६० उभयतो राश्युभयोः संक्रमे। अतो यो जैमिनिवाक्ये सार्द्धोत्तरः पलद्वययुक्ता गुरोरितिपाठो माधवादिभिरपाठि तथा हेमाद्रिणापि द्विनामनाड्यः इति पदे नागा अष्टौ द्विराहता नागा द्विनागाः षोडशनाडिकाः शनैश्चरसंक्रान्तौ पुण्यकाल इति यत् व्याख्यातवान् तदुभयमपास्तं भवति तथा रामचन्द्राचार्या अपि कालनिर्णयदीपिकायां हेमाद्र्यादिमूलकमसमर्थं स्वपद्येनोपनिबद्धत् अतश्चिन्त्योऽत्रयोग्ये याः। तस्मात्सर्वग्रहाणां राशिगच्चयोः संक्रान्तिषु पुण्यकालतास्त्येव। भास्करोऽपि “रवेस्तु ताः पुण्यतमाः” इतिवदचन्द्रादिसंक्रान्तिषु नाड्यः पुण्या इत्यसूचयत्। अतियायने तमविक्षनाविति पार्थिवनवचनात् “ग्रहः स्वसंक्रान्तिगोमिश्रफलं विधत्ते” इति। सूर्यादिसंक्रान्तिसाधारणं तत्र सकलसंक्रान्तिषु दिनरात्रिविष्णुपदादिभेदेन सूर्यसंक्रमवच्चिन्त्योऽध्येयः। एतत्संक्रान्तिमान्यता हि गुर्जरदेशेऽस्तीत्यलं प्रसक्तानुप्रसक्तेन। इति सकलग्रहसंक्रान्तिनिर्णयः” पी०धा०

करणभेदेऽर्कसंक्रान्तिफलं तत्रैव

नारदः “निविष्टो वणिजे विष्ट्यां बालवे च बवे गरे। कौलवे शकुनौ भानुः किंस्तुघ्ने चोर्द्ध्वसंस्थितः। चतुष्पाते तैतिले नागे सुप्तः क्रान्तिं करोति सः। धान्यार्घवृष्टिषु समं श्रेष्ठं हीनं भवेत्क्रमात्” क्रान्तिं संक्रान्तिम्। रत्नमालायामपि “चतुष्पदे तैतिलनागयोश्च सुप्तो रविः संक्रमणं करोति। विष्ट्यां बवाख्ये च गराह्वये च स बालवाख्ये वणिजे निविष्टः। किंस्तुघ्ननाम्नि शकुनावपि कौलवाख्ये चोर्द्ध्वस्थितस्य खलु संक्रमणं रवेः स्यात्। धान्यार्घवृष्टिषु भवेत् क्रमशस्त्वनिष्टमध्येष्टतेति मुनयः प्रवदन्ति पूर्वे” इति।

“संक्रान्तौ ग्रहणर्क्षं वा जन्मन्युभयपार्श्वयोः। नेष्टं भयं षट्शुभदं पर्य्यायाच्च पुनःपुनः। हानिर्वृद्धिः स्थानहानिस्तथा प्राप्तिरिति क्रमात्” नारदेनोक्तम्।

संक्रान्तेर्यन्नक्षत्रं ग्रहणनक्षत्रं वा यदि जन्मभं भवेदथ वा ताभ्यामुभयपार्श्वगतं जन्मभं भवेत्तदा अनिष्टमेव नक्षत्रमयं निषिद्धं तनो नक्षत्रषट्कं शुभं ततस्त्रिकेऽर्थहानिस्ततः षट्के वृद्धिः ततस्त्रिके स्थानहानिस्ततः षट्सु वृद्धिः षट्सु स्थानप्राप्तिरिति। अतएव पठन्ति दाक्षिणात्याः “संक्रान्त्यधरनक्षत्राद्गणयेज्जन्मभावधि। त्रिकं षट्कं त्रिकं षट्कं त्रिकं षट्कमिति क्रमात्। पन्थाभोगो व्यथा वस्त्रं हानिश्च विपुलं धनम्” इति त्रिकं शुभं षट्कमशुभमिति फलितोऽर्थः” पी०धा० अधिकमयनसंक्रान्तिशब्दे १२८पृ०द्रष्टव्यम्। स्थूलतया मेषादौ रविसंक्रान्तेर्वारदण्डाद्यानयनप्रकारः ज्यो०त० उक्तो यथा

“नवाष्टयुक्ता१४८८हीनेन शकाब्दाङ्केन पूरिताः। भूर्बाणचन्द्रावेकाग्नी कुरामौ वेदयुग्मके। १।५।२१।३१।२४ धुवाः षडुपलादेस्तु षष्ट्या लब्धाङ्कमिश्रिताः। दण्डात् खाग्नी क्षयेद्‌ च ३०।५७ पलाद्भित्वा ततः पुनः। सप्तावशिष्टा वाराः स्युस्ततो दण्डादिकाः परे। मेषसंक्रमणे भानोः सिद्धान्तस्फुटसम्मताः। भुजौ षड्गुणरामाग्नी २। ५६।३३ कालोजातिर्गजावनी। ६।२२।१८ रामचन्द्रोऽग्नियुग्मञ्च ३।१।२३ तर्कोऽङ्कदृक् नवाशुगौ। ६।२९।५९ द्वाङ्कदृग् वेदबाणा २।२९।५४ अब्धिर्वाणशरौ सुराः। ४।५५।३३ षण्नागवेदौ शून्येन्दू ६।४८।१० एकं शैलभुवौ शराः। १।१७।५। द्वौ षडग्नी तथा काला २।३६। ६ अश्वीरामः शरावनी। ४।३।१५। पञ्चाग्नीषू तथा रुद्रा ५।५३।११ मेषसंक्रमवारतः। अङ्केर्योज्या वृषादिषु वाराद्याः संक्रमे रवेः”।

राशिभेदे संक्रान्तिनामभेदः तत्संक्रमकाले स्नानस्नानस्य पुण्यातिसंक्रान्तिचक्रस्थानविशेषस्थितौ फलभेदश्च तत्रोक्तो यथा “मृगकर्कटसंक्रान्ती द्वे उदग्दक्षिणायने। विषुवती तुला

मेषे गोवमध्ये तथापराः। धनुर्मिथुनकन्यासु मीने च षड़शीतयः। वृषवृश्चिककुम्भेषु सिंहे विष्णुपदी स्मृता। मूर्ध्नि सप्त मुखे त्रीणि हृदये पञ्च विन्यसेत्। त्रितयं हस्तपादेषु महाविषुवभक्रमात्। मस्तके भूपतेः सौख्यं वदने पटुता शुभे। हृदये च धनाध्यक्षोऽर्थप्राप्तिर्दक्षिणे करे। वामे करे महद्दुःखं सुखं पादे च दक्षिणे। भ्रमणं वामपादे च कथितं विषुवत् फलम्। षड्मूर्ध्नि वदने पञ्च चत्वारि हृदये तथा। त्रितयं करपादेषु पयोविषुवतः क्रमात्। मानं मूर्ध्नि मुखे वैरं हृदये सुखसम्भवः। दोःपदोर्दक्षयोर्भौमस्त्रासश्च वामयोः स्मृते" जलविषुवफलम्। "शीर्षे पञ्च मुखे त्रीणि हस्तयोश्च भयं तथा। हृदि पञ्च शशी नाभौ गुह्ये च पादयोरथाः। उत्तरायणभाजश्चेयं स्वनक्षत्रस्थितेः फलम्। शीर्षेऽथ नाभौ वदने सुखानि दद्युः करेऽर्कौ हृदये च सौख्यम्। नाभौ शुभं वामकरेऽर्थनाशो गुह्ये भयं वामपदे प्रवासः" उत्तरायणफलम्। "शीर्षे त्रीणि मुखे त्रीणि हृदये पञ्च हस्तयोः। अष्टौ पादद्वयेऽप्यष्टौ दक्षिणायनसंक्रमात्। शीर्षे मानो मुखे विद्या हृदये वित्तसञ्चयः। प्रवासः स्यात् करे वामे भिक्षालाभश्च दक्षिणे। निष्फलं वामपादे च किञ्चिल्लाभश्च दक्षिणे" दक्षिणायनफलम्। "ऋक्षे संक्रमणं यत्र विष्णुपद्यां मुखे तु तत्। चत्वारि दक्षिणे बाहौ त्रीणि त्रीणि पदद्वये। चत्वारि वामबाहौ च हृदये पञ्च निर्दिशेत्। चक्षुर्द्वयं द्वयं योज्यं मूर्ध्नि द्वे चैककं गुदे" "रोगो भोगस्तथा यानं बन्धनं लाभ एव च। ऐश्वर्यं राजपूजा च अपमृत्युरिति क्रमात्" विष्णुपदीफलम् "मुखे चैकं करे वेदाः पादयुग्मे द्वयं द्वयम्। क्रोड़े बाणस्तथा वेदाः करे सव्येतरेऽपि च। द्वयं द्वयं तथा नेत्रे मस्तके त्रितयं तथा। द्वयश्चैव तथा गुह्ये षड़शीत्यां स्मृते स्थिते। मुखे दुःखं करे लाभः पादयोर्भ्रमणं हृदि। कान्ता स्याद्बन्धनं वामे हस्ते स्यात् स्त्रीयभेषणाम्। सम्मानो नेत्रयोश्चैव अपमानश्च मस्तके। गुह्ये चैव भवेन्मृत्युः षडशीतिफलस्मृतिः" षडशीतिफलम्"। गुरुसंक्रान्तिफलमुक्तं ज्यो० त० यथा "शीर्षे चत्वारि राज्यं जलधिरपि करे दक्षिणे चापि सौख्यं चैकं कण्ठे विभूतिं मदनशरमितं वक्षसि प्रीतिसङ्गम्। पादस्याः षट् च पीड़ा पुनरपि जलधिर्वामहस्ते च मृत्युं नेत्रे त्रीणि प्रदद्युः सुखमथ निजभे वाक्पतेः संक्रमर्क्षात्"।

संक्रान्तिपुण्यकालव्यवस्था ति०त० संक्षेपतो दर्शिता यथा "तदयं संक्षेपः। दिनसंक्रमणे कृत्स्नं दिनं पुण्यं मकरशीति मुखे" इत्याद्युक्तं पुण्यतरं मन्दामन्दाकिनीत्यादि रूपेण त्रिचतुरादिघटिकाः पुण्यतमाः। दिनवृत्तोत्तरायणादिविहितविंशतिदण्डादीनां रात्रिप्रविष्टभागस्यापि पुण्यत्वं रात्रिसंक्रमणे तु कलान्यून प्रथमार्द्धगते तद्दिवसीयशेषयामद्वयं पुण्यम्। कालद्वयात्मकमध्यरात्रगते तद्दिवसीयनिशेरभेदे तद्दिवसीयशेषयामद्वयं पुण्यं भेदे तु तद्दिवसीयशेषयामद्वयं परदिवसीयाद्ययामद्वयञ्च पुण्यम्। उभयदिने पुण्यकालेऽपि पूर्वदिनाकरण एव परदिने तद्विहितं कार्य्यम्। तिथिभेदाभेदयोर्दक्षिणायने तद्दिवसीयशेषयामद्वयम् उत्तरायणे तु परदिवसीयाद्ययामद्वयं पुण्यमिति मध्यरात्रीयकलोत्तरशेषार्द्धरात्रसंक्रमणमात्रे तु परदिनाद्ययामद्वयं पुण्यमिति सन्ध्यासंक्रमणे तु दिनदण्डे दिनस्य रात्रिदण्डे रात्रेर्व्यवस्थितिः"। तत्प्रमाणं ति०त० दृश्यम्। संक्रान्तौ कालाशुद्धिदोषादिकं नास्ति,यथोक्तं ति०त०स्कान्दे "एकान्ततो मया प्रोक्ताः कालाः संक्रान्तिसंज्ञकाः। नैतेषु विद्यतेऽनिष्टं यतस्ताक्षयसंमिताः। अन्यस्यापि यद्दत्तं सुपात्रेभ्योऽपि मानवैः। अकालेऽपि हि तत्सर्वं सत्यमक्षयतां व्रजेत्"।

**सङ्ख्या** न० संख्यायते परस्परनामोच्चारणं क्रियतेऽत्र सम्+ख्या-घञर्थे क। १युद्धे अमरः। अङ्। २विचारे स्त्री अमरः। एवं ३सम्यग्बुद्धौ राजनि० ४दृश्याश्रिते एकत्वादित्वादौ गुणभेदे च स्त्री टाप्। एकादिसंख्यावाचकस्य संख्यासंख्येयोभयपरता "द्व्येकयोर्द्विवचनैकवचने" इति पा० महाभाष्ये उक्ता। तेन घटानां पञ्चेत्यपि स्यात् "वार्त्ताकुरेका शुभसम्प्रयुक्ता" इत्यादि वैद्यके संख्यापरतया निर्देशोऽपि साधुः। किन्तु संख्यात्वजातावेव शक्तिः संख्यायुक्ते निरूढ़लक्षणेति विवेकः। तत्र एकादिदशान्ताः शब्दास्त्रिलिङ्गा विंशत्याद्यास्तु नियतस्त्रीलिङ्गादिकाः। तत्रापि विंशत्यादिशब्दानां बहुत्वसंख्यावाचकत्वेऽपि एकवचनान्ततैव। तदावृत्तौ बहुवचनान्ता अपि पञ्च विंशतयः षट् शतानीत्यादि। तेषां विशेषसंज्ञा लीला० दर्शिता यथा "एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः। अर्बुदमब्जं (शङ्कुः) खर्वनिखर्वौ महापद्मशङ्कवस्तस्मात्। जलधिश्चान्त्यं मध्यं परार्द्धमिति दशगुणोत्तराः संज्ञाः संख्याया अव-

व्यवहारार्थं कृताः पूर्वैः"। ब्रह्माण्डपु० नामान्तराण्युक्तानि यथा "एकं दश शतं चैव सहस्रमयुतं तथा। लक्षं च नियुतञ्चैव कोटिरर्बुदमेव च। वृन्दः खर्वो निखर्वश्च शङ्खपद्मौ च सागरः। अन्त्यं मध्यं परार्द्धं च दशवृद्ध्या यथोत्तरम्"। संख्या च गणनव्यवहारे हेतुः यथोक्तं "गणनव्यवहारे तु हेतुः सङ्ख्याभिधीयते। नित्येषु नित्यमेकत्वमनित्येऽनित्यमुच्यते। द्वित्वादयः परार्द्धान्ता अपेक्षाबुद्धिजा मताः। अनेकाश्रयपर्य्याप्ता एते तु परिकीर्त्तिताः। अपेक्षाबुद्धिनाशाच्च तेषां नाशो निरूपितः। अनेकैकत्वबुद्धिर्या सापेक्षाबुद्धिरुच्यते" भाषा० पर्य्याप्तिसम्बन्धेनैव अनेकाश्रिता समवायेन तु प्रत्येकाश्रितेति बोध्यम्।

**सङ्ख्यात** त्रि० सम्+ख्या-क्त। १कृतसङ्ख्ये २गणिते ३सम्यक्ख्याते च तेन रात्रिशब्दस्य समासे अच् सङ्ख्या०। संख्यातरात्रः। [१परिच्छिते अमरः। २संख्यायुक्ते त्रि०।

**सङ्ख्यावत्** पु० संख्या विचारणाऽस्त्यस्य मतुप् मस्य वः।

**सङ्ख्येय** त्रि० संख्यायतेऽसौ सम्+ख्या-यत्। १गणनीये २संख्याकरणयोग्ये।

**सङ्ग** पु०सन्ज-भावे घञ्। १मेलने २सम्बन्धे ३विषयादिरागे च"ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते" गीता।

**सङ्गणिका** सम्+गण-भावे ण्वुच्। असमीक्ष्यकथायां त्रिका०

**सङ्गत** न० सम्+गम-भावे क्त। १सौहार्दे २सङ्गतौ च। कर्त्तरि क्त। ३मिलिते त्रि०। ४सङ्गतियुते ५युक्तिसंसिद्धे अमरः।

**सङ्गति** स्त्री सम्+गम-क्तिन्। १सङ्गमे २मेलने न्यायोक्ते अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषये "सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा। निर्वाहकैककार्य्यत्वे षोढा सङ्गतिरिष्यते" इत्युक्ते ४प्रसङ्गादौ पदार्थे च।

**सङ्गम** पु० सम्+गम-घञ् न वृद्धिः। १सङ्गतौ २स्त्रीपुंसयोः संभोगे पु०न० अमरः। ३नद्यादेर्नद्यादियोगस्थाने च "गङ्गासागरसङ्गमः" इति पुराणम्।

**सङ्गर** पु० सङ्गीर्य्यते सम्+गॄ-भावादौ अप्। १आपदि २प्रतिज्ञायां ३युद्धे च अमरः। कर्त्तरि अच्। ४क्रियाकारके ५विषे मेदि० ६शमीवृक्षफले न० मेदि०।

**सङ्गव** पु० सङ्गता गावो दोहनायात्र काले नि०। "प्रातःकालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु" इति दक्षोक्ते प्रातःकालानन्तरं मुहूर्त्तत्रयात्मके कालभेदे।

**सङ्गिन्** त्रि० सन्ज-घिनुण्। सङ्गयुक्ते स्त्रियां ङीप्।

**सङ्गीत** न० सम्+गै-क्त। १दर्शनार्थे नाट्यगीतवाद्यत्रिके हेमच०। २तत्प्रतिपादकग्रन्थे च। कर्म्मणि क्त। ३सम्यग्गीते त्रि०। सङ्गीतशास्त्राणि च नानाविधानि तत्र मूलग्रन्थकर्त्तारश्चत्वारः भरतहनुमत्सोमेश्वरकल्लिनाथास्तत्र हनूमद्ग्रन्थस्यैव लोकेऽधुना बहुलप्रचारः। तद्ग्रन्थस्य च स्वराध्यायः रागाध्यायः तालाध्यायः नृत्याध्यायः भावाध्यायः कोकाध्यायः हस्ताध्यायश्चेति सप्ताध्यायाः। सङ्गीतसारादौ विस्तरो दृश्यः। [ङ्खा०।

**सङ्गीति** स्त्री सम्+गै-क्तिन्। १सम्यग्गाने २आलापे

**सङ्गीर्ण** त्रि० सम्+गॄ-क्त। स्वीकृते अमरः।

**सङ्ग्रह** पु० सम्+ग्रह-अप्। १सङ्ग्रये २बह्वर्थकवाक्यानामेकत्र सङ्कलने च "विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः। निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः"। ३ग्रहणे ४उत्क्षेपे ५ग्रहणे ६संक्षेपे मेदि० ७हस्तौ विश्वः ८स्वीकारे ९महोद्योगे नानार्थरत्नमा०। १०व्याडिप्रणीते व्याकरणग्रन्थभेदे "सङ्ग्रहेऽस्तमुपागते" वाक्यपदीयम्।

**सङ्ग्रहणी** स्त्री सङ्घिता ग्रहणी। ग्रहणीरोगभेदे।

**सङ्ग्राम** युद्धे अद०चु०उभ०सक० सेट्। सङ्ग्रामयति ते असङ्ग्रामत् त। अस्याकलत्वकर्त्तर्यपि आ० इत्येके

**सङ्ग्राम** पु० सङ्ग्राम-भावे अच्। युद्धे अमरः।

**सङ्ग्रामपटह** पु० ६त०। रणवाद्यभेदे त्रिका०।

**सङ्ग्राह** पु० संगृह्यते सम्+ग्रह-कर्म्मणि घञ्। फलकस्य मुष्टिबन्धनस्थाने अमरः।

**सङ्ग्राहिन्** पु०सम्यक् गृह्णाति मलम् सम्+ग्रह-णिनि। १कुटजवृक्षे राजनि०। २मलावष्टम्भके ३संग्रहकारके च त्रि०। [अमरः। २संहते त्रि०।

**सङ्घ** पु० संघात् सर्वम्। १सजातीयजन्तुसमूहे २समूहे च

**सङ्घचारिन्** पु० सङ्घीभूय चरति चर-णिनि। १मत्स्ये हेमच०। २सङ्घीभूयचारिणि जन्तुमात्रे त्रि०स्त्रियां ङीप्

**सङ्घजीविन्** पु० सङ्घेन जीवति जीव-णिनि। संघोपजीविनि भृतीने हेमच०। [च।

**सङ्घट्ट** पु० सम्+घट्ट-भावे अच्। १परस्परसङ्घर्षणे २गठने कर्त्तरि अच्। ३लतायां शब्दर०। ४चालके त्रि०।

**सङ्घट्टन** न० सम्+घट्ट-ल्युट्। १मेलने २गठने ३रचनायाञ्च। युच्। तत्रैव स्त्री। [द्वये (योड़हात) अमरः

**सङ्घतल** पु० सङ्घे संहते मिलिते तले यत्र। संयोजितप्रतल

**सङ्घपुष्पी** स्त्री सङ्घानि संहातानि पुष्पाण्यस्याः ङीप्। धातकी पुष्पग्राम् (धाइ फुल) राजनि०।

**सङ्घर्ष** पु० सम्+घृष-घञ्। १परस्परस्पर्द्धने २स्पर्द्धायां ३सं-
घर्षे च शब्दर०।

**सङ्घशस्** अव्य० सङ्घ+वीप्सार्थे-शस्। भूरिशः इत्यर्थे।

**सङ्घाटिका** स्त्री सङ्घटयति सम्+घट-णिच्-ण्वुल्। १युग्मे
२कुट्टन्यां ३जलकण्टके मेदि०। ४घ्राणे विश्वः।

**सङ्घात** पु० सम्+हन-घञ्। १समूहे २नरकभेदे अमरः।
३सम्यग्हनने मेदि० ४दृढसंयोगे ५कफे च राजनि०।

**सङ्घातपत्रिका** स्त्री सङ्घातयुक्तं पत्रमस्याः कप् अत
इत्त्वम्। शतपुष्पायां राजनि०।

**सचि(ची)** स्त्री सच-इन् वा ङीप्। इन्द्राण्यां रामाश्रमः

**सचिल्लक** पु० सह क्लिन्नेन सहस्य सः कप् नि०। क्लिन्न-
नेत्रे (पिचुडियुक्तनेत्रे) शब्दच०।

**सचिव** पु० सच-इन् तथा सन् वाति-क। १सहाये २म-
न्त्रिणि अमरः ३२१पृ० दृश्यम्। ३कृष्णधुस्तूरे
राजनि०। [रोगभेदे राजनि०।

**सचिवामय** पु० सचिवः सहाय आमयो यस्य। विसर्पे

**सचीनन्दन** न० ६त०। वैष्णवसम्प्रदायप्रवर्त्तके नवद्वीपावि-
र्भूते वैष्णवाचार्यभेदे तदाविर्भावश्च "शाके मुनिव्योम-
युगेन्दुमाने(१४०७) पुण्ये तिथौ फाल्गुनपौर्णमास्याम्।
त्रैलोक्यभाग्योदयपुण्यकीर्त्तिर्देवः सचीनन्दन आवि-
रासीत्" चैतन्यचन्द्रोदयः। अस्य कलौ पूर्णभगवदवता-
रत्वं वैष्णवामन्यन्ते तत्र न किञ्चित् प्रमाणमुपलभामहे

**सचेतन** त्रि० सह चेतनया सहस्य सः। विशिष्टज्ञानयुक्ते।

**सचेष्ट** पु० सचते सच-अच् तथाभूतः सन् इष्टः। १आम्रे
शब्दमा०। सह चेष्टया सहस्य सः। २चेष्टान्विते त्रि०।

**सच्चारा** स्त्री सन् चारो गात्रानुलेपने विष्वग्गतिरस्याः।
हरिद्रायां शब्दच०।

**सच्चिदानन्द** पु० सन् नित्यः चित् चैतन्यमानन्दः त्रिपद
कर्म०। १नित्यज्ञानसुखमये ब्रह्मणि वेदा०। द्व०।
२तद्युते ईश्वरादौ त्रि० न्यायमतम्।

**सच्छूद्र** पु० कर्म०। गोपनापितादौ शूद्रभेदे "सच्छूद्रौ
गोपनापिताविति" स्मृतिः। [अमरः।

**सजम्बाल** त्रि० सह जम्बालेन सहस्य सः। पङ्कयुक्ते देशे

**सजाति** पु० समाना जातिरस्य समानस्य सः। सवर्णेन सवर्णाया
मूढायाम् उत्पादिते पुत्रे। २तुल्यजातौ त्रि० "सव-
र्णेभ्यः सवर्णासु जायन्ते च सजातयः" मिता०स्मृतिः।

**सजातीय** त्रि० समानां जातिमर्हति छ समानस्य स।
समानधर्मयुक्ते अमरः।

**सजुष्** अव्य० सह जुषते क्विप् सहस्य सः। १सहार्थे जुषा-
दित्वादौ र। सजुः उज्ज्वा०। "सजूः कृत्य रतिं वसेदिति"
भट्टिः। २प्रीतियुक्ते ३सेवायुक्ते च त्रि० ४तापसे संक्षिप्तसा०

**सज्ज** त्रि० सस्ज-अच्। १उद्युक्ते २संनद्धे अमरः। ३सम्भृते
विश्वः ४निश्चिते शब्दर०। भावे अच्। ५आयोजने ६वेशे च
स्त्री सतोजायते जन-ड। ७साधुजाते त्रि०।

**सज्जन** न० सस्ज-णिच्-ल्युट्। १रणार्थं सैन्यस्थापने अमरः
२घट्टे (घाटी) मेदि०, ३आयोजने। सन् जनः। ४सौ-
जन्यवति जने पु० "निजाचारग्राहिणो ये कुर्वन्ति वेदस-
म्मतम्। पापाभिलाषरहिताः सज्जनास्ते प्रकीर्त्तिताः"
पद्मपु० "कुरु सज्जनरञ्जनमिति" उद्भटः। ५सत्कुलोद्भवे
च पु०। सस्ज-णिच्-युच्। ६न्वपादीनामारोहणार्थं
गजभूषाकरणादौ स्त्री अमरः।

**सज्जित** त्रि० सज्जा जातास्य तार० इतच् सस्ज् णिच्-कर्मणि
क्त वा। १कृतवेशे २भूषिते ३संनद्धे च। [देवीपु०।

**सञ्च** सञ्चीयतेऽत्र सम्+चि-ड। लेखनार्थे पत्रभेदे (साँच)।

**सञ्चत्** त्रि० सम्+चत-क्विप्। प्रतारके सि०कौ०।

**सञ्चय** पु० सम्+चि-अच्। १समूहे अमरः। २संघट्टे च।
ल्युट्। सञ्चयन। सङ्ग्रहे न०। [सीदतीति पुराणम्

**सञ्चयिन्** पु० सम्+चि-इनि। सङ्ग्रहकारके "सञ्चयी नाव-

**सञ्चार** पु० सञ्चरत्यनेन सम्+चर-घञर्थे करणे क घञ्
वा। १सेतौ रत्नमा० २देहे हेमच०। भावे घञ्। ३ग्र-
हादेः राश्यन्तरगमने ४सम्यग्गतौ च।

**सञ्चाय्य** पु० सञ्चीयतेऽग्निरत्र सम्+चि-ण्यत् नि०। यज्ञभेदे।

**सञ्चारिका** स्त्री सञ्चारयति नायकयोर्वार्त्ताम् सम्+चर-
णिच्-ण्वुल्। १दूत्याम् अमरः। २कुट्टन्यां ३युग्मे
४घ्राणे च मेदि०।

**सञ्चारिन्** पु० सम्+चर-णिनि। १धूपे त्रिका० २वायौ
शब्दच०। अलङ्कारोक्ते शृङ्गारादिरसाद्यनुगुणे ३भाव-
भेदे च भावभेदश्च व्यभिचारिभावः। "नानाभिनयसम्ब-
न्धात् भावयन्ति रसान् यतः। तस्माद्भावा अमी प्रोक्ता
स्थायिसञ्चारिसात्त्विकाः"। "व्यक्तः सञ्चारिणा रतिः"
सा०द०। ४सञ्चारकारके त्रि० स्त्रियां ङीप्। "सञ्चारिणी
दीपशिखेवेति" रघुः। सा च ५हंसपद्याञ्च राजनि०।

**सञ्चाली** स्त्री सञ्चलति सम्+चल-ण गौरा० ङीष्। गु-
ञ्जायां युक्तिकल्पतरुः।

**सञ्चिका** स्त्री प्रा० स०। मूषिकपर्ण्यां शब्दर० [कर्मभेदे च

**सञ्चित** त्रि० सम्+चि-क्त। १संहृते २अनारब्धफले

**सञ्ज** पु० सम्+जन-ड । चतुर्मुखे १ब्रह्मणि २शिवे च मेदि० ३क्षार्यां स्त्री त्रिका० ।

**सञ्जय** पु० भारतप्रसिद्धे धृतराष्ट्रसारथिभेदे ।

**सञ्जवन** न० सम्+जु-युच् । परस्पराभिमुखतया स्थिते च-तुःशाले गृहे अमरः ।

**सञ्जीवन** न० सम्+जीव-ल्युट् । १चतुःशालगृहे शब्दर०। २सम्यक्प्राणधारणे च । संजीवयति सम्+जीव-णिच्-ल्युट् । ३ओषधीभेदे स्त्री ङीप् ।

**सट** न० स्त्री सठ-अच् पृषो० ठस्य टः । १व्रतिनां जोगसङ्घाते २जटायाम् शब्दर० । ३शिखायां ४सिंहादेः केशरे च मेदि० "सटच्छटाभिन्नघनेनेति" माघः । [ङीष् ।

**सटाङ्क** पुंस्त्री० सटा अङ्को यस्य । सिंहे शब्दर० स्त्रियां

**सटि(टी)** स्त्री सठ-इन् वा ङीप् पृषो०। १शट्यां शब्दरत्ना० स्वार्थे क । २गन्धपलाश्यां राजनि० । सठ-इन् ङीप् । पृषो०। सटीत्यत्र । ठान्तः तत्रार्थे राजनि० ।

**सट्टा** स्त्री सठ-व पृषो० । १पक्षिभेदे २वाद्ये संक्षिप्तसा० ।

**सठ** असार्थे गतौ संस्कारे असंस्कारे च चुरा० उभ० सक० सेट् । साठयति ते मोपदेशत्वमेव न्याय्यम् ।

**सणसूत्र** न० शणसूत्र+पृषो० । शणसूत्रे रायमुकुटः ।

**सण्डिश** पु० संदश+पृषो०। सन्दंशे (साँड़ाशि) "सण्डिशैरप-क्रष्यन्ते नरैर्यास्यैर्दुरात्मभिः" मार्कण्डेयपु० १४अ०।

**सण्डीन** न० सम्+डी-क्त । पक्षिणां सङ्गत्य गमनरूपे गति-भेदे अमरः ।

**सत्** त्रि०अस-शतृ । १सत्ये २साधौ ३पूजिते ४धीरे ५प्रशस्ते ६विद्यमाने च अमरः । स्त्रियां ङीप् । सा च ७पति-व्रतायां स्त्रियां ८दक्षकन्याभेदे "सती सती योगवि-सृष्टदेहेति" कुमारः । ९सौराष्ट्रमृदि हेमच० १०ब्रह्मणि न० "ओंतत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति गीता । ११आदरे अव्य० "सदसती आदरानादरयो-रिति" पाणिनिः उप०स० "सत्कृत्य" सि०कौ० । पतिव्र-तापरत्वे संज्ञात्वात् तस्याभावः त्व "त्वतलोर्गुणवचनस्य" पा०न ह्रस्वः सतीत्वम् "तेन नारद ! नारीणां सतीत्व-मुपजायते" पुराणम् ।

**सतत** न० सम्+तन-क्त समोऽन्त्यलोपः । १निरन्तरे २तद्वति त्रि० अमरः । ["सततत्वताऽन्यथा प्रथा" वेदा०प० ।

**सतत्त्व** न० सह सदृशं तत्त्वेन । १स्वभावे हेमच० २यथार्थे

**सतानन्द** पु० गौतमपुत्रे अहल्यागर्भजे मुनिभेदे शब्दच० ।

**सतीन** पु० सतीं नयति नी-ड । १वंशभेदे शब्दच० (मुट-मटर) २कलायभेदे भरतः । स्वार्थे क । तत्रैव अमरः ।

**सतीर्थ्य** पु० समाने तीर्थे गुरौ वसति यत् समानस्य सः । परस्परैकगुरुके छात्रे अमरः । ड्व०। नियंकारोऽप्यय-मतार्थे । [व्याडिः । २वंशे हारा० ३वायौ रायमु० ।

**सतील** पु० सतीं लक्षयति लक्ष-ड । (मुट्मटर) १कलाये

**सतीलक** पु० सतील इव कायति कै-क, सह तिलेन तिलचि-ह्नेन कप् पृषो० दीर्घः । १वंशे (मुट्मटर) २कलायभेदे च अमरः । [दीर्घः । कलायभेदे (तेओडा) अमरः ।

**सतीला** स्त्री सह तिलेन तिलचिह्नेन सहस्य सः पृषो०

**सतेर** पु० सन-एर तान्तादेशः । सतुषे संक्षिप्तसा० ।

**सत्कदम्ब** पु० नित्यक० । कैलिकदम्बे शब्दच० ।

**सत्कर्त्तृ** पु०सत्+कृ-तृच् । १विष्णौ विष्णुस०२सत्कारके त्रि०।

**सत्कर्मन्** न० कर्म० । वेदादिविहिते यागादौ कर्मणि ।

**सत्काञ्चनार** पु०कर्म० । रक्तकाञ्चने शब्दच०। [स्त्रियां ङीष्

**सत्काण्ड** पुंस्त्री सत्काण्डं शस्त्रव्यापारोऽस्य । चिल्ले शब्दच०

**सत्कार** पु० सत्+कृ-घञ् उप०स० । १सम्मानने २पूजने च ।

**सत्कार्य्यवाद** पु० ६त०। कार्य्यस्य सत्त्वनिर्णायके वादे कथा-भेदे स च वादः उत्पत्तिशब्दे ११०८पृ० दृश्यः ।

**सत्कृत** त्रि० सत्+कृ-क्त । १पूजिते २कृतसम्माने च ।

**सत्क्रिया** स्त्री सत्+कृ-श । १सत्कारे २सम्मानने ३पूजने च

**सत्तम** त्रि० अतिशयेन सन् तमप् । अतिशयसाधौ अमरः ।

**सत्ता** स्त्री सतोभावः तल् । १द्रव्यगुणकर्मवृत्तौ २जातिभेदे "द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते" भाषा०। जाति-शब्दे ३०८३ पृ० दृश्यम् । ३विद्यमानतायाञ्च विद्यमा-नत्वं च कालसम्बन्धः । आत्मधारणानुकूलव्यापार इति शाब्दिकाः "आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते । अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः" हरिः । तत्र विद्यमानता च वेदान्तमते त्रिविधा पारमार्थिकी१ ब्रह्मणः त्रैकालिकाबाध्यत्वरूपा व्यावहारिकी२ घटादीनां सा च तत्त्वज्ञाननाश्या प्रातीतिकी३ शुक्तिरजतादेः सा चाधिष्ठानसाक्षात्कारनाश्या । ब्रह्मसत्तयैव सर्वेषां स-त्ताव्यवहारः सदुपहितत्वात् इति वेदान्तिनः ।

**सत्त्र** न० सद्-ष्ट्रन् । १स्थाने २यज्ञभेदे ३सदादाने ४आच्छा-दने ५अरण्ये ६कैतवे मेदि० ७धने ८तटाके ९दाने १०स-रसि नानार्थकोषः । सदादानञ्च कर्तव्यं सततान्नदानम् । यज्ञभेदश्च द्वादशाहादिसाध्यः ज्योतिष्टोमादिः यथोक्तं कात्या०श्रौ०१२।१।३। सूत्रभाष्यादौ "द्वादशाहः सत्त्र-महीनश्च" सू० "सत्त्ररूपः अहीनरूपश्च भवति द्विविधः ।

आसत उपयन्तीति सत्त्रस्य विकृ यजते इत्यहीनस्य। अत्र विशेषमाह "द्वादशाहस्थिकामा उपेयुरिति तथा त्रयोदशरात्रमासीरन्निति सत्त्रविकृतम् द्वादशाहेन प्रजाकामं याजयेदित्यहीनविकृतम्। अस्यानुकथनप्रयोजनम् सत्त्रे बहुत्वात्मको धर्मो दातृत्वेन प्रवर्त्तते अहीने चाहीनात्मकः। "उभयतोऽतिरात्रं सत्त्रमुपरिष्टादहीनस्य" सू० उभयत इत्यादावन्तेऽतिरात्रौ यस्य तदुभयतोऽतिरात्रम् उपरिष्टात् अन्त एव। "यजमानाः सर्वे सत्त्रेषु" सू०। कर्त्तारो भवन्ति य ऋत्विजस्ते यजमाना इत्यनेनार्त्विज्यीनान् पदार्थान् अनुवाद्य यजमानाः कर्त्तृत्वेन विधीयन्ते। "अदक्षिणानि च स्वामियोगात्" सू०। सत्राणि भवन्ति न हि कश्चिदात्मनैवात्मानं परिक्रीणाति। अत्र हि स्वामिन एवार्त्विज्यम् अनुपपन्नत्वात्परिक्रयः "गृहपतिर्यजमानमयुक्तत्वात्" सू० याजमानं यत्कर्म तद्गृहपतिः करोति कर्मान्तरे तस्यायुक्तत्वात् इतरेषां चाध्वर्य्यवादिषु योगात्। "दर्शनाच्च" सू० दृश्यते चायमर्थः तस्मात् यदि बहवो प्रवसेयुरिति। "सर्वे संस्कारान्" सू० यद्दुपत्संस्कारकं याजमानं यथा वपनादि तत्सर्वे कुर्युः तेन हि यजमानाः संस्क्रियन्ते। "दर्शने वचनात्" सू० यत्तु दर्शनमुक्तम् तद्वचनम् गृहपतये एकस्मै दानमुक्तम् वचनं किमिव न कुर्य्यात्। "अविभवति गृहपत्यन्वारम्भः" सू० न संभवत्यनेककर्तृके पदार्थे वेदस्वन्नाम्यन्त्याधानादौ गृहपतेरन्वारम्भः सर्वैः कर्त्तव्यः। "पदार्थेष्वेकः कृतत्वात्" सू० यत् पुनः कृत्स्नमभिनिर्वर्त्यमेव कर्म यथा पात्रासादनमाज्यावेक्षणं वा तत्रात्मात्मेव कर्त्तव्यम् कृतत्वात् पदार्थस्य। परार्थे यजमानकर्तृके आज्यावेक्षणादौ एको गृहपतिः कुतः कृतत्वात् एकेनापि कृतः कृत एव यतः। "अग्निं चेष्यमाणाः समारोह्य गृहपतिमध्ये मन्थन्त्यथ इतरे दक्षिणोत्तराः" सू० समारोह्येति च पूर्वकालतामात्रे ल्यबादेशो न समानकर्तृकतायाम्। "गृहपत्याहवनीयेऽङ्गारप्रासनम्" सू०। "तत्र प्राजापत्यः पशुः" सू० तत्र विहारे प्राजापत्यः पशुर्भवति। पुनर्यदृच्छाहर्गणे प्राजापत्यस्य नियमः तथा चाश्वमेधे नियमदर्शनं भवति प्राजापत्यमालभेतेति। तत्र साधारणीकृते विहारे। "आज्येन पत्नीसंयाजा गृहपतिवर्जम्" सू०। [तार्थे अमरे पाठान्तरम्।

**सत्त्रम्** अव्य० सद-त्रल्। १सहार्थे जटा०। ता। सत्त्राय-

**सत्त्रशाला** स्त्री ६त०। अन्नजलादेर्दानार्थे कल्पिते स्थले हेमच०। [श्रीकृष्णश्वशुरे सत्यभामाजनके राजभेदे।

**सत्त्राजित्** पु० सत्त्रेणाजयति लोकान् आ+जि—क्विप्।

**सत्त्रि** पु० सद—बा० त्रि। १मेघे २गजे ३जयप्रीते त्रि० उणादिकोषः। [अमरः २गृहस्थे च।

**सत्त्रिन्** पु० सत्त्रं गृहं यज्ञो वा विद्यतेऽस्य इनि। १गृहपतौ

**सत्त्व** न० सतोभावः त्व। १सांख्यसिद्धे प्रकाशादिसाधने प्रकृत्यवयवे पदार्थे प्रकृतिशब्दे दृश्यम् "सत्त्वं लघु प्रकाशकमिष्टम्" सांख्या०। अयं द्वितकारः मुग्धो० एकतकारः। २द्रव्ये ३प्राणेषु ४व्यवसाये ५बले ६स्वभावे ७पिशाचादौ शब्दच० दर्पितस्य भेदि० "सत्त्वे तप्यमाने तत्संक्रान्तः पुरुषोऽपि तप्यत इव" पात० भा०। ८रसे १०आयुषि ११धने। १२आत्मनि च शब्दच० १३सत्तारूपे १४जातिभेदे १५विद्यमानतायाञ्च द्वितकारः। १६जन्तुषु पुं न० अमरः।

**सत्पत्त्र** न० सत् शोभनं पत्त्रम्। १पद्मस्य नवदले शब्दच०। कर्म०। २सुन्दरदले त्रि०। [विहिताचारे च।

**सत्पथ** पु० कर्म० अच्समा०। शोभनमार्गे अमरः २वेदादि-

**सत्पुत्त्र** पु० कर्म०। वेदादिविहितकार्य्यकर्त्तरि पुत्त्रे "पुन्नाम्नो नरकाद् यस्मात्त्रायते पितरं सुतः। सुखवन्मुखदर्शनेनापि तदुत्पत्तौ यतेत सः" इत्युक्त्या पुन्नरकतारणाय "ऋणमस्मिन् सन्नयति अमृतत्वञ्च विन्दति। पिता पुत्त्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्" इति वसिष्ठोक्तर्णापनयनाय च यत् पश्येदिति नियमविधानं तद्कृतपुत्त्रकार्य्यपुत्त्रपरम्। सत्पुत्त्रस्य मुखदर्शनं विनापि नरकनिस्तारकः। तथा च विष्णु पु० "सत्पुत्त्रेण तु जातेन वेनोऽपि त्रिदिवं ययौ। पुन्नाम्नो नरकात्त्रातः स तेन सुमहात्मना"। ब्रह्मपुराणेऽपि "समुत्पन्नेन भो विप्राः सत्पुत्त्रेण महात्मना। त्रातः स (वेनः) पुरुषव्याघ्रः पुन्नाम्नो नरकात्तदा" शु०त०।

**सत्प्रतिग्रह** पु० सन् प्रतिग्रहः। साधुदत्तधनस्य प्रतिग्रहे "सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। विभागः सम्प्रयोगश्च सत्प्रतिग्रह एव च" इति स्मृतिः।

**सत्प्रतिपक्ष** पु० कर्म०। तुल्यविरोधिनि १प्रतियोगिनि २न्यायोक्ते हेतुदोषे हेत्वाभासभेदे। स च बाधोपस्थितिसमर्थपरामर्शकालीनसाध्यसिद्धिसमर्थपरामर्शविषयः। यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते सः। यथा शब्दो-नित्यः श्रावणत्वाच्छब्दत्ववत्। शब्दोऽनित्यः कार्य्यत्वात्

घटवत् । अन्ये तु अगृहीताप्रामाण्यकसाध्यवत्त्वेनोपस्थितिविषय इति वदन्ति । साध्याभावव्याप्यवत्पक्षः । साध्यवदन्यत्वव्याप्यवत्पक्षः । पक्षनिष्ठः साध्याभावव्याप्यः पक्षनिष्ठः साध्यवद्भेदव्याप्यो वा । साध्यवदवृत्तित्वव्याप्यवत्पक्षः । पक्षनिष्ठः साध्यवदवृत्तित्वव्याप्यः । पक्षवृत्त्यभावप्रतियोगित्वव्याप्यवत्साध्यम् । साध्यनिष्ठः पक्षवृत्त्यभावप्रतियोगित्वव्याप्यो वा । "विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता" भाषा० । तुल्यबलयोरेव सत्प्रतिपक्षत्वं नातुल्यबलयोः तेनैकतरत्र तर्कादिबलसत्त्वे तस्यैवान्यतरबाधकतेति बोध्यम् ।

**सत्फल** पु० सन्ति शोभनानि फलान्यस्य । १दाडिमवृक्षे शब्दच० । २सुफलयुते त्रि० ।

**सत्य** न० सते हितं यत् । १सत्ययुगे २शपथे ३याथार्थ्ये च ४तद्वति त्रि० मेदि० । "यथार्थकथनं यच्च सर्वलोकसुखप्रदम् । तत् सत्यमिति विज्ञेयमसत्यं तद्विपर्ययः" पद्मपु० सर्वलोकसुखप्रदमिति न लक्षणघटकं सत्यस्याप्यप्रियत्वे कथननिषेधात् अतएव मनुनोक्तं "सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्" । ५अश्वत्थवृक्षे ६नान्दीमुखश्राद्धीयदेवभेदे च पु० "इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः" श्रा०त०धृतवचनम् । ७सिद्धान्ते शब्दर० । ८शपथरूपसत्यापालने दोषो यथा "सत्यं शपथरूपं यः कृत्वा हन्ति न पालयन् । स कृतघ्नः कालसूत्रे वसेदेव चतुर्युगम् । सप्तजन्मसु काकश्च सप्तजन्मसु पेचकः । ततः शूद्रो महाव्याधिः सप्तजन्मस्वतः शुचिः" ब्रह्मवै० प्र० २८अ० । ८परमात्मनि "सत्यं ज्ञानमनन्तं ब्रह्मेति" श्रुतिः । ९श्रीरामे पु० शब्दर० । १०विष्णौ "चौत्तमेऽन्तरे विष्णुः सत्यैः सह सुधोत्तरैः । सत्यायामभवत् सत्यः सत्यरूपो जनार्दनः" कूर्मपु० ४८अ० । ११तन्मातरि स्त्री । १२तपोलोकादूर्द्ध्वस्थे लोके सत्यलोकशब्दे दृश्यम् । सन्ति पृथिव्यप्तेजांसि च त्यौ वाय्वाकाशौ च समा०द्व० नि०ड सभा(न्)दिहतकारः । १३भूतपञ्चके "यच्च त्यच्च भूतपञ्चकं त सत्यमित्याचक्षते" श्रुतिः । सत्यत्वञ्च त्रिकालाबाध्यत्वमिति वेदान्तिनः यथार्थज्ञानविषयत्वं सत्यत्वमिति नैयायिकाः । सन्धिसन्ध्यांशाभ्यां सहितसत्ययुगमानं दैवमानेन ४८०० वर्षाः मानुषमानेन १७२८००० वर्षाः ।

**सत्यङ्कार** पु० सत्य+कृ–घञ् नि० मुम् । "सत्यैतत् सत्यङ्कुर्य्यामित्येवम्"सत्यकरणे सत्यापने (बायनादेर्वोया) अमरः

**सत्यतपस्** पु० सत्यं तपोऽस्य । मुनिभेदे तस्यैव दुर्वासशो वरेण वेदव्यासरूपेणाविर्भावः तत्कथा वराहपु० ।

**सत्यधृति** पु० शतानन्दपुत्रे ऋषिभेदे मत्स्यपु० ४८अ० ।

**सत्यनारायण** पु० कर्म० । संक्रान्त्यादिषु पूज्ये नारायणमूर्त्तिभेदे स्कन्दपु० रेवा० ४अ० तत्कथा दृश्या ।

**सत्यपुर** न० सत्ययुक्तं पुरम् । विष्णुलोके ।

**सत्यफल** पु० सत्यं सदातनं फलमस्य । बिल्ववृक्षे राजनि० ।

**सत्यभामा** स्त्री सत्राजितोऽपत्यतायां श्रीकृष्णस्य भार्याभेदे शब्दच० ।

**सत्यभारत** पु० वेदव्यासे त्रिका० ।

**सत्यम्** अव्य० सत्+यत् । स्वीकारे ।

**सत्ययुग** न०सत्यप्रधानं युगम् शाक० त० । सत्यप्रचुरे प्रथमे युगे

**सत्ययौवन** पु०सत्यं यौवनमस्य । विद्याधरे देवयोनिभेदे जटा०

**सत्यरत** त्रि० ७त० । सत्यवाक्यासक्ते हरिश्चन्द्रनृपपितरि पु० मत्स्यपु० १२अ० ।

**सत्यलोक** पु० सत्यप्रचुरो लोकः । ऊर्द्ध्वस्थसप्तलोकमध्ये सर्वोपरिस्थे तपोलोकादूर्द्ध्वस्थे लोके ।

"षड्गुणेन तपोलोकात् सत्यलोको विराजते । अपुनर्मारका यत्र ब्रह्मलोकाभिधः स्मृतः" विष्णुपु०२अं ७अ०

**सत्यवचस्** पु० सत्यं वचोऽस्य । १मुनौ अमरः । २सत्यवचनयुक्ते त्रि० । सत्यवचनादयोऽप्यत्र ।

**सत्यवत्** पु० सत्यं विद्यतेऽस्य मतुप् मस्य वः । १सावित्रीपतौ नृपभेदे भा०व०२९३अ० । २मुनिभेदे च । ३सत्ययुक्ते त्रि० स्त्रियां ङीप् । सा च ४व्यासस्य मातरि शब्दर० । ५नारदपत्न्यां ६ऋचीकमुनिपत्न्यां मेदि० कालिकापु० ८४अ० । [शब्दर० ।

**सत्यवतीसुत** पु० ६त० । सत्यवतीपुत्रे व्यासे मुनिभेदे

**सत्यवाच्** पु० सत्या वाक् यस्य । १ऋषौ शब्दच० । २काके त्रिका० । तस्य शब्देन हि शुभाशुभनिश्चयेन तस्य तथात्वम् । ३सत्यवदनशीले त्रि० । [वक्तरि ।

**सत्यवादिन्** त्रि० सत्यं वदति वद–णिनि । यथार्थवाक्य-

**सत्यव्रत** पु० सत्यं व्रतमस्य । १त्रिशङ्कुनामके राजभेदे मत्स्यपु० १२अ० । २सत्यतत्परे त्रि० । [२सत्यप्रतिज्ञे त्रि०

**सत्यसङ्कर** सत्यः सङ्करः प्रतिज्ञा यस्य । १कुबेरे त्रिका० ।

**सत्यसन्ध** त्रि० सत्या सन्धा सन्धानं यस्य । १सत्याभिसन्धौ सत्यसन्धस्य तप्तपरशुग्रहणं छान्दोग्ये दर्शितम्

३श्रीरामे ४तदनुजे भरते ५जनमेजयनृपे च पु०शब्दर०

**सत्या** स्त्री १रामपत्न्यां २व्यासमातरि सत्यवत्यां शब्दर० । ३दुर्गायां ब्रह्मवै०पु० प्र० । ४द्रौपद्यां शब्दच० ।

**सत्याकृति** स्त्री सत्य+डाच्+कृ-क्तिन् । (सत्यङ्कारः अवश्यमेतन्मया-क्रेयम् इत्येवं प्रतिज्ञारूपे सत्यकरणे (बायनादेर्वाया) अमरः ।

**सत्याग्नि** पु० इन्द्र० । अगस्त्यमुनौ शब्दर० । तज्जठरानलस्य समुद्रसमग्रेजलस्वोऽपि असाधितत्वात् तथात्वम् । [अमरः

**सत्यानृत** न० सत्यसहितमनृतं यत्र । वणिग्वृत्तौ वाणिज्ये

**सत्यापन** न० सत्य+णिच्–पुक् च ल्युट् । सत्याकृतौ अमरः युच । सत्यापनाप्यत्र स्त्री ।

**सत्योद्य** त्रि० सत्यमुद्यं यस्य वद-क्यप् । १सत्यवादिनि शब्द-माला कर्म० । २सत्यवाक्ये न० ।

**सत्र** सम्बन्धे सन्ततौ च अद०चु०आ०सक०सेट् । सत्रयते असस-त्रत । सत्रापयते इत्यन्ये अनेकाच्कत्वात् असोपदेशत्वेन षत्व निमित्ते न षत्वम् ।

**सत्र** न० सत्र्यते सन्तन्यते सत्र–अच् घञ् । १बहुदिनसाध्ये यज्ञभेदे २श्रीकृष्णश्वशुरे नृपभेदे च ।

**सत्राजित्** पु० सत्वेण जयति शत्रून् सत्र+जि-क्विप् । श्रीकृष्णश्वशुरे राजभेदे ।

**सत्त्विजातक** न० पक्वमांसभेदे "मांसं सुछिन्नं स्वच्छं चित्वा चोष्णाम्बुना शुद्धः । जीरकाद्यैः समायुक्तं परिपक्वं तदुच्यते । तदेव घृतकाढ्यं सुस्निग्धं सत्विजातकम्" शब्दर० । [अमरः ।

**सत्वर** न० सह त्वरया सहस्य सः । १शीघ्रे २त्वरान्विते त्रि०

**सथूत्कार** न० सह थूत्कारेण सहस्य सः । अव्यक्ते सनिष्ठेवे कथने । [२दंशयुक्ते त्रि० ।

**सदंशक** पु० सह दंशेन सहस्य सः कप् । १कर्कटके राजनि०

**सदंशवदन** पुंस्त्री सह दंशेन दंशाकारेण सहस्य सः तथा-भूतं वदनमस्य । कङ्कविहगे राजनि० स्त्रियां ङीष् ।

**सदञ्जन** न० कर्म० । पुष्पाञ्जने रीतिजाते अञ्जनभेदे शब्दच० ।

**सदन** न० सीदन्त्यस्मिन्+सद-आधारे ल्युट् । १गृहे अमरः । २जले मेदि० । भावे ल्युट् । ३स्थितौ न० ।

**सदय** पु० सन् अयः कर्म० । १साधुशुभावहविधौ । सह दयया । सहस्य सः । २दयान्विते अमरः ।

**सदस्** स्त्री न० । सीदन्त्यस्याम् सद्-असि । सभायाम् अमरः

**सदस्य** पु० सदसि साधुर्वसति वा यत् । यज्ञादौ न्यूनाति-रिक्ततादिपर्य्यपरिहारार्थं १विधानदर्शिनि अमरः । २सभासदि त्रि० अमरः । [इत्यर्थे अमरः ।

**सदा** अव्य० सर्वस्मिन् काले दाच् सादेशः । सर्वस्मिन् काले

**सदागति** पु० सदा गतिरस्य । १वायौ २सर्वदागतियुक्ते त्रि० ३सूर्य्ये ४निर्वाणे ५सदीश्वरे मेदिनिकोषकारः ।

**सदाचार** पु० कर्म० इत० वा "सरस्वतीदृषद्वत्योर्देवनद्योर्य-दन्तरम् । तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते । त-स्मिन् देशे य आचारः पारम्पर्य्यक्रमागतः । वर्णानां सान्तरलानां स सदाचार उच्यते" इति मनूक्तदेशप्रचलिते आचारे "साधवः क्षीणदोषास्तु सच्छब्दः साधुवाचकः । तेषामाचरणं यत्तु सदाचारः स उच्यते" इत्युक्ते सा-धूनां २शुभाचरणे च । सदाचारनिरूपणम् आचारशब्दे ६१२ पृ० दृश्यम् । विप्रस्य चातुराश्रम्यमुक्त्वा "गार्हस्थ्य ब्रह्मचर्य्यञ्च वानप्रस्थं त्रयाश्रमाः । क्षत्रिय-स्यापि गदिता य आचारो द्विजस्य हि । वैखानसत्वं गार्हस्थ्यमाश्रमद्वितयं विशः । गार्हस्थ्यमुत्तमं त्वेकं शूद्रस्य क्षणदाचर ! । स्वानि वर्णाश्रमोक्तानि धर्माणीह न हापयेत् । यो हापयति तस्यासौ परिकुप्यति भा-स्कर । कुपितः कुलनाशाय देहरोगविवृद्धये । वर्णास्तु यतते तस्य नरस्य क्षणदाचर ! । तस्मात् स्वधर्मं न हि सन्त्यजेच्च न हापयेच्चापि तथात्मवंशम् । यः सन्त्यजे-च्चापि निजं हि धर्मं तस्मै प्रकुप्येत दिवाकरस्तु" वाम-नपु० १४अ० । [२नित्ये त्रि० अमरः स्त्रियां ङीप् ।

**सदातन** पु० सदा भवः सदा+ट्यु तुट् च । १विष्णौ त्रिका०

**सदातोया** स्त्री सदा तोयानि पेयानि यस्याम् । १करतोया-नद्याम् २एलापर्ण्याञ्च शब्दच० । सदानीराशब्दे दृश्यम्

**सदात्मन्** त्रि०सन् साधुरात्मा चित्तं यस्य । साधुचित्ते ।

**सदादान** पु० सदा दानं मदजलं त्यागो वा यस्य । १ऐरा-वते गजे २गणेशे ३गजे मेदि० ४सर्वदात्यागिनि त्रि० ।

**सदानन्द** पु० सदा आनन्दो यस्य । १सदाशिवे २अनवरता-नन्दयुक्ते त्रि० ।

**सदानर्त्त** पुंस्त्री० सदा नृत्यति नृत-अच् । १खञ्जनविहगे शब्दच० स्त्रियां ङीष् । २सदा नृत्ययुते त्रि० ।

**सदानीरा** स्त्री सदा नीरं पेयमस्याः । करतोयानद्याम् अमरः । "कर्कटादौ कर्कटे देवी त्र्यहं गङ्गा रजस्वला । सर्वा रक्तवहा नद्यः करतोयाम्बुवाहिनी" स्मृत्युक्तेः तन्नदीजलस्य सदापेयत्वात् तस्यास्तथात्वम् ।

**सदापुष्प** पु० सदा पुष्पं यस्य । १नारिकेलवृक्षे शब्दमा० । २रक्तार्के स्त्री रत्नमा० ङीप् । ३सदापुष्पयुक्ते त्रि० ।

**सदाप्रसून** पु० सदा प्रसूनमस्य । १रोहितकवृक्षे २अर्क-वृक्षे ३कुन्दे च राजनि० ।

**सदाफल** पु० सदा फलमस्य । १नारिकेलवृक्षे २उडुम्बर-

वृक्षे २स्कन्दफलवृक्षे च मेदि० । ४बिल्वे जटा० । ५वार्त्ताकुभेदे स्त्री राजनि० टाप् । "सदाफला त्रिदोषघ्नी रक्तपित्तप्रसादनी । कण्डूकच्छूहरी चैव वार्त्ताकी गुणवत्तमा" राजव० ।

**सदाभद्रा** स्त्री सदा भद्रमस्याः ५ब० । गाम्भारीवृक्षे रत्नमा० ।

**सदायोगिन्** पु० सदा युज्यते युज्-घिनुण् । १विष्णौ त्रिका० २सदायोगयुते त्रि० स्त्रियां ङीप् ।

**सदाशिव** पु० सदा शिवमस्मात् ५ब० । महादेवे ।

**सदुत्तर** न० कर्म० । १व्यवहारे प्रतिज्ञापत्त्रानुसारियथुत्तरे प्रष्टव्य २सम्यगुत्तरे च । ६ब० । ३तद्वति त्रि० ।

**सदृक्ष** त्रि० समानं दर्शनमस्य दृश्+क्स समानस्य सादेशः । तुल्यरूपे अमरः । [तुल्यरूपे अमरः ।

**सदृश्** त्रि० समानं दर्शनमस्य समान+दृश–क्विप् सादेशः ।

**सदृश** त्रि० समानं दर्शनमस्य समान+दृश-टक् । तुल्यरूपे स्त्रियां ङीप् । [५ब० । निष्पन्दे त्रिका० ।

**सदृशस्पन्दन** त्रि०ऋश-गतौ क सत् ऋशं गतं स्पन्दनं यस्मात्

**सदेश** पु० सह देशेन सहस्य सः । १निकटे अमरः २देशान्विते त्रि० ।

**सद्धेतु** पु० कर्म० । न्यायोक्ते हेत्वाभासदोषरहिते हेतौ । पक्षसत्त्वं१ सपक्षसत्त्वं२ विपक्षासत्त्वं३ अबाधितविषयत्वं४ असत्प्रतिपक्षितत्वं५ इति पञ्चरूपोपन्नो हेतुः सद्धेतुः "व्याप्त्यादिविशिष्टो हेतुः सः" नीलकण्ठः "प्रमितव्याप्तिपक्षताको हेतुः सः" गदा० । २वृत्तिमद्धेतौ च "अव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिमाशङ्क्याह" दीधितिः । अत्र सद्धेतौ वृत्तिमति हेतावित्यर्थः गगनादेः संयोगेन वृत्तिमत्त्वाभावात् तत्राव्याप्तिर्न सम्भवतीत्युक्तं सदिति ।

**सद्भाव** पु० सतोभावः, सन् वा भावः । १विद्यमानत्वे २साधुभावे च "सद्भावमागतः" इति भट्टिः ।

**सद्भूत** न० असत् सत् भूतम् सत्+च्वि–भू-क्त । १यथार्थे २तद्वति त्रि० हेमच० । [च मेदि० ।

**सद्मन्** न० सीदत्यस्मिन् सद्–मनिन् । १गृहे अमरः २जले

**सद्यःकृत** त्रि० सद्यस्तत्क्षणात् कृतः कृ-क्त । तत्क्षणकृते ।

**सद्यःप्राणकर** त्रि० सद्योहठात् प्राणं बलम् आयुर्वा शिघ्रं करोति कृ-अच् । "सद्योमांसं नवान्नं च बाला स्त्री क्षीरभोजनम् । घृतमुष्णोदकञ्चैव सद्यःप्राणकराणि षट्" इति चाणक्योक्ते द्रव्यसमूहे ।

**सद्यःप्राणहर** त्रि०सद्यः प्राणमायुर्बलं वा हरति हृ-अच् । "शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि । प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि षट्" इति चाणक्योक्ते शुष्कमांसादिद्रव्यसमूहे । [शब्दच०

**सद्यःशोथा** स्त्री सद्यः शोथो यस्याः ५ब० । कपिकच्छ्वाम्

**सद्यःशौच** न० सद्यः शौचमपनेयमशौचम् । १सद्यस्त्यक्ते शौचनाशके अशौचे ६ब० । २तद्वति शिल्पिन्दपशोत्रियादौ त्रि० । अशौचशब्दे ४८८ पृ० दृश्यम् ।

**सद्यस्** अव्य० समेऽह्नि नि० । १तत्क्षणे अमरः । २समानदिवसे एकस्मिन् दिने इत्यर्थे च ।

**सद्यस्क** त्रि० सद्योभवः कन् कस्का० । सद्योजाते ।

**सद्यस्क्री** पु० सद्यःक्रीणाति सोमम् यत्र क्री-आधारे क्विप् कस्का० । सद्यःसोमक्रयसाध्ये यागभेदे "एकरात्रोऽतिरात्रः सद्यःक्रीः प्रक्रीरुक्थ्यः" अथर्व०११।७।१०। नानायज्ञोक्तौ । भावे क्विप् । २सद्यस्क्रये स्त्री । तया साध्यः अण् । साद्यस्क्र सद्यःसोमक्रयेण एकाहसाध्ये यज्ञभेदे । "साद्यस्क्राः षट्" कात्या०श्रौ०२२।२।८। ते च यथा "षट् साद्यस्क्राः" सू० "स्वर्गकामपशुकामभ्रातृव्यवतां प्रथमः" सू०।१ साद्यस्क्र एषक्रतुर्भवति । "दीर्घव्याधिप्रतिष्ठाकामान्नाद्यकामानां द्वितीयः" सू०। साद्यस्क्रो२ भवति एषामत्राधिकारः । "हीनस्यानुक्रीः" सू० अनुक्रीनाम३ साद्यस्क्रः स हीनस्य भवति यः कर्मणा हीन तस्यासौ भवति । "विश्वजिच्छिल्पः" सू० नाम साद्यस्क्रः४ । "श्येनोऽभिचरतः" सू० श्येनो५ नाम साद्यस्क्रः पञ्चमः सोऽभिचरतो भवति । "एकत्रिकः" सू०षष्ठः६ साद्यस्क्रः । तत्र षट् षष्टिशतं दक्षिणा । साद्यःक्रधर्माः व्याख्यास्यन्त इति सूत्रशेषः । दीक्षादि सद्यः सर्वं क्रियते" भाष्यम् तास्यब्रा० भाष्ये चोक्तं यथा

अथ साद्यस्क्रा नाम पञ्च एकाहास्तेषु प्रथमद्वितीययोर्दीक्षाप्रभृत्यवभृथान्तं, सर्वमेकस्मिन्नेवाहन्यनुष्ठेयं तृतीयस्य तु एकस्मिन् दिवसे दीक्षा परस्मिन् दिवसे सोमक्रयाद्यवभृथान्तं, चतुर्थपञ्चमयोरप्येवं यद्वा एका दीक्षा सोमक्रयप्रभृति उपवसथान्तं द्वितीयेऽहनि सुत्येति एवं सूत्रकारमतं पञ्चस्वपि साद्यस्क्रान्वयात् सद्य एव एकस्मिन्नेवाहनि दीक्षाद्यवभृथान्तं कर्त्तव्यमिति मतान्तरम् । एतत्सर्वं साद्यस्क्रेण वक्ष्यमाणे महाराते प्रातराहुतिं हुत्वेत्यादिना सूत्रकारेण विस्पष्टमुक्तम् । तत्र प्रथमस्य यदुक्तं सर्वं सद्योऽनुष्ठेयमिति तद्विधित्सुराह "आदित्याश्चाङ्गिरसश्चादीक्षन्त ते स्वर्गे लोकेऽस्पर्द्धन्त तेऽङ्गिरस आदित्येभ्यः श्वः सुत्यां प्राब्रुवं

स्त आदित्या एतमपश्यं स्तं सद्यः परिक्रीयायाहुस्तद्धातारं हत्वा तेन स्तुत्वा स्वर्गं लोकमायन्नहीयन्नाङ्गिरसः" ताण्ड्यब्रा० १६।१२।१। "पुरा आदित्याश्चाङ्गिरसश्च यदीयन्त यष्टाय दीक्षां कृतवन्तः ते उभे स्वर्गे लोके स्वर्गलोकप्राप्तिनिमित्तमस्पर्द्धन्त वयं प्रथमं मभिगच्छामो वयं प्रथमं मभिगच्छाम इति स्पर्द्धां कृतवन्तः एवं स्पर्द्धमानास्तेऽङ्गिरस आदित्येभ्यः सुत्यां श्वः परश्वस्तदीयानन्तरदिने करिष्यमाणं सोमयागं प्राब्रुवन् प्रोक्तवन्तः अथ ते आदित्या एवं वक्ष्यमाणयज्ञमपश्यन् तं यज्ञं सद्यः एकस्मिन्नेवाहनि परिक्रीय सोमं क्रीत्वा अयास्यमङ्गिरसमुद्गातारं हत्वा स्तावयित्वा समापयन् दीक्षाद्यवभृथान्तं सर्वं कर्म एकस्मिन्नेवाहनि अन्वतिष्ठन्नित्यर्थः। यज्ञसमाप्त्यनन्तरमेव ते स्वर्गलोकमायन् प्राब्रुवन् आङ्गिरसस्त्वहीयन्त दीक्षानन्तरदिवसे सुत्येति तैरुक्तत्वात् एतस्मिन् दिने दीक्षाद्यवभृथान्तस्य सर्वस्यानुष्ठानेन स्वर्गप्राप्त्यभावात् दीक्षितैरादित्यैः सद्योऽनुष्ठानेन स्वर्गं गतैः हीनाः भूमावेव परित्यक्ता आसन्" भा०।

**सद्योजात** पु० सद्योजायते जन—कर्त्तरि क्त। १वत्से शब्दच०। २शिवमूर्त्तिभेदे च ३आशुजाते त्रि०।

**सद्योभाविन्** पु० सद्योभवति भू-णिनि। १वत्से शब्दच०। २आशुजाते त्रि०। स्त्रियां ङीप्।

**सद्रु** त्रि० सद-गतौ रु। गन्तरि सि०कौ०।

**सद्वृत्त** न० वृत-भावे क्त कर्म०। १साधुस्वभावे जटा० २साधुवर्त्तने। ६त०। ३सच्चरित्रयुते त्रि०। "सद्वृत्तसन्निकर्षो हि क्षणार्द्धमपि शस्यते" इति ति०त०।

**सद्वृत्ति** स्त्री कर्म०। १उत्तमचरित्रे २उत्तमव्याख्यानरूपे ग्रन्थे च सती वृत्तिः यस्य। ३सद्वृत्तियुते त्रि० "सद्वृत्तिः सन्निबन्धनेति" माघ०। [सदश्ये स्त्रियां वा डाप्।

**सधर्म्मन्** त्रि० समानो धर्मोऽस्य अनिच् समा० समानस्य सः।

**सधर्म्मचारिणी** स्त्री सह धर्मं चरति चर-णिनि। सहधर्मचारिण्यां भार्य्यायां हला०।

**सधर्मिन्** त्रि० समानं धर्मं चरति इनि। १तुल्यधर्मचरणकर्त्तरि। स्त्रियां ङीप्। सा च २पत्न्याम् हेमच० [जटा०

**सधवा** स्त्री सह धवेन सहस्य सः। जीवत्पतिकायां स्त्रियां

**सधि** पु० साधयति साधि—इन् पृषो० ह्रस्वः। वह्नौ त्रिका०।

**सधिस्** पु० सह—इसिन् हस्य धश्च। वृषभे सि०कौ०।

**सध्राच्** त्रि० सह—अञ्चति अनृच—क्विप् सहस्य सध्रिः। १सहचरे अमरः भवे सध्रीचः। स्त्रियां ङीप् सध्रीची।

सा च २भार्य्यायां ३सख्याञ्च हेमच०। [स्कान्दे शब्दच०।

**सन** पु० सन-अच्। १घण्टापाटलिवृक्षे। २हस्तिकर्णा-

**सनक** पु० सन—वुन्। ब्रह्मणो मानसपुत्त्रे मुनिभेदे "सनकञ्च सनन्दञ्च सनातनमथात्मभूः। सनत्कुमारञ्च मुनीन् निष्क्रियानूर्द्ध्वरेतसः। तान् बभाषे स्वभूः पुत्त्रान् प्रजाः सृजत पुत्त्रकाः!। तन्नैच्छन्मोक्षधर्माणो वासुदेवपरायणाः" भाग० ३।१२ अ० "धर्मस्य भार्य्या हिंसाख्या तस्यां पुत्त्रचतुष्टयम्। सम्प्राप्तं मुनिशार्दूलं योगशास्त्रविचारकम्। ज्येष्ठः सनत्कुमारोऽभूत् द्वितीयश्च सनातनः। तृतीयः सनको नाम चतुर्थश्च सनन्दनः" वामनपु० ५७। ५८अ० उक्ते धर्मपुत्त्रभेदे। [अव्य० रामाश्रमः।

**सनत्** पु० सन—अति। १चतुर्मुखे ब्रह्मणि त्रिका०। २सदेत्यर्थे

**सनत्कुमार** पु० ६त०। ब्रह्मणः पुत्त्रे मुनिभेदे अमरः। तस्य नित्यकुमारत्वादपि तन्नामता यथोक्तम् "स्वेच्छः पूर्वस्य वयसा यथैव पञ्चहायनः। अचूडोऽनुपवीतश्च वेदसन्ध्याविहीनकः। कृष्णेति मन्त्रं जपति यस्य नारायणो गुरुः। अनन्तकालकल्पञ्च भ्रातृभिश्च त्रिभिः सह। वैष्णवानामग्रणीर्यो ज्ञानिनाञ्च गुरोर्गुरुः" ब्रह्मवै० श्रीकृष्णजन्मख० १२८अ०। [न्दयुक्ते त्रि०।

**सनन्द** पु० सह नन्देन। १सनकभ्रातरि मुनिभेदे २आन-

**सनपर्णी** स्त्री सनस्येव पर्णान्यस्याः ङीप्। असनपर्ण्यां शब्दच०

**सनसूत्र** न० शणस्य सूत्रमस्य अच् पृषो०। मत्स्यधार-

णार्थं शणसूत्रकृते जाले अमरे पाठान्तरम्।

**सना** अव्य० सदा-नि० दस्य नः। सदेत्यर्थे अमरः।

**सनातन** त्रि० सदा+भवार्थे ट्युल् तुट् च नि० दस्य नः। १सदाभवे नित्ये वस्तुनि अमरः। २निश्चले त्रिकाः। स्त्रियां ङीप्। सा च ३दुर्गायां "सर्वकाले सना प्रोक्ता विद्यमाने तनोति च। सर्वत्र सर्वकालेषु विद्यमाना सनातनी" ब्रह्मवै०प्र० ५४अ०। तन्नामनिरुक्तिः। ४सरस्वत्यां ५लक्ष्म्याञ्च शब्दमा०। ६पितृभेदे ७विष्णौ ८ब्रह्मणि ९दिव्यमनुष्ये ब्रह्मणोमानसपुत्त्रभेदे १०पितृव्यातिथौ च पु० हेमच०।

**सनात्** पु० सना नित्यमतति अत—क्विप्। विष्णौ विष्णुस० सदेत्यर्थे अव्य०अमरटीकायां रामाश्रमः। [स्त्रियां स्त्री।

**सनाथ** त्रि० सह नाथेन सहस्य सः। १युक्ते २जीवद्भर्त्तृक-

**सनाभि** पु० समाना नाभिर्यस्य। १ज्ञातौ अमरः। तस्य एकदेहोत्पन्नत्वेन तुल्यनाभितया तथात्वम्। २सध्ययुक्ते ३स्नेहयुक्ते ४तुल्ये च त्रि० मेदि०।

**सनामक** पु॰ सना सदा आमयति आम–ण्वुल् । १शोभाञ्जनवृक्षे शब्दच॰ । तस्य पत्त्रादिभोजनस्य रोगहेतुत्वात्तथात्वम् । सह नाम्ना कप् । २नामयुक्ते त्रि॰ ।

**सनि** पु॰ सन–भावे इन् । १पूजायां २दाने च सि॰कौ॰ । ३सतकारपूर्वकनियोगे पुंस्त्री॰ अमरः स्त्रियां वा ङीप् । ४डीबलः हस्तिकर्णास्फाले शब्दर॰५दिशि स्त्री शब्दमा॰

**सनित** त्रि॰ सन–बा॰ इत । प्रतिपन्ने हेमच॰ ।

**सनिष्ठी(ष्ठे)व** न॰ सह निष्ठी(ष्ठे)वेन । १सष्ठीवच्युतवारिकणे मधूत्कारे अमरः ।

**सनीड** त्रि॰ समानं नीडं सह नीडेन वा शादेशः । १निकटस्थे अमरः । २नीडयुक्ते त्रि॰ ।

**सन्त** पु॰ सन–बा॰ त । संहतले शब्दर॰ ।

**सन्तत** न॰ सम्+तन–क्त । १सतते निरन्तरे । २नैरन्तर्ययुते त्रि॰ अमरः ३विस्तीर्णे च ।

**सन्तति** स्त्री सन्तन्यते सम्+तन–क्तिच् । १गोत्रे अमरः । २पुत्रे ३कन्यायाञ्च विश्वः । भावे क्तिन् । ४विस्तारे ५पङ्क्तौ ६अविच्छिन्नधारायाञ्च विश्वः ।

सन्ततिश्च दैशिकी कालिकी च । तत्र दैशिकी तैलादीनां, कालिकी ज्ञानसुखादीनाम् । तत्र दैशिकसन्ततित्वं स्वाधिकरणदेशीयनानावच्छेदकदृत्तिधर्मत्वं तच्च मूर्त्तानामेव कालिकसन्ततित्वञ्च नानाकालीनकार्यमात्रवृत्तिधर्मत्वम्, कर्त्तिवादे नव्ये यः तच्च मूर्त्तामूर्त्तयोरेतएव इच्छ दु खज्ञानादिसन्ततिर्भवतीति तदुक्तं तत्रैव "देवदत्तदुःखित्वं दुःखत्वं वा कार्यसमानकालीनध्वंसप्रतियोगिवृत्ति कार्यमात्रवृत्तिधर्मत्वात् सन्ततित्वादित्युक्त्वा सन्ततित्वं च नानाकालीनकार्यमात्रवृत्तिधर्मत्वम्" इत्युक्तम् ।

**सन्तप्त** त्रि॰ सम्+तप–क्त । १अध्वगमनादिना परिश्रान्ते २अग्नितप्ते ३तेन विशुद्धे च "सन्तप्तचामीकरवल्गुवज्र"मिति भट्टिः ।

**सन्तमस** न॰ सन्ततं तमः प्रा॰स॰ अच् समा॰ । १गाढान्धकारे अमरः । २महामोहे च मोहस्य सर्वावरत्वात् तमस्त्वेन महामोहस्य गाढान्धकाररूपत्वात्तथात्वम् ।

**सन्तर्पण** न॰ सन्तृप्यत्यनेन सम्+तृप–करणे ल्युट् । "द्राक्षा दाडिमखर्जूरीशर्करामधुसंयुतम् । लाजाचूर्णन्तु साज्यं यत् तच्च सन्तर्पणं विदुः" राजनि॰ उक्ते द्राक्षादिभिर्युते लाजाचूर्णे खाद्यभेदे । सम्+तृप–णिच् ल्यु । २सम्यक्तर्पके त्रि॰ । [इच्छे ३आपत्ये ४विस्तारे च मेदि॰ ।

**सन्तान** पु॰ सम्+तन–घञ् । १वंशे अन्वये अमरः । २कल्पवृक्षे

**सन्तानिका** स्त्री सम्+तन–ण्वुल् टाप् अत इत्वम् । १क्षीरसरे "सन्तानिका गुरुः शीता हृष्याः पित्तास्रवातजित्" राजव॰ । २मर्कटजाले ३फेने ४क्षुरिकाफले च हारा॰ । [२सम्यक्तापे च ।

**सन्ताप** पु॰सम्यक् तापः प्रा॰स॰ । १वह्निजाते तापे अमरः ।

**सन्तापन** पु॰ सन्तापयति सम्+तप–णिच्–ल्यु । कामदेवस्य–१पञ्चशरान्तर्गते शरभेदे त्रिका॰ । २सन्तापकारके त्रि॰ ।

**सन्ति** स्त्री सन–ति । १दाने २अवसाने च मुग्धबोधटीका ।

**सन्तोष** पु॰ सम्+तुष–करणादौ घञ् । १धैर्ये २स्वास्थ्ये च हेमच॰ । ३सम्यक्तुष्टौ "सन्तोषमूलं हि सुखम्" मनुः ।

**सन्दंश** पु॰ सम्+दन्श–अच् । (साँडाशी) यन्त्रभेदे हेमच॰ ।

**सन्दंशपतित** पु॰ सन्दंशे तन्मध्ये पतित इव । मीमांसोक्ते न्यायभेदे न्यायशब्दे ४१६९ पृ॰ दृश्यम् ।

**सन्दर्भ** पु॰ सम्+दृभ–घञ् । १रचनायां हला॰ । २ग्रन्थने ३प्रबन्धे त्रिका॰ "गूढार्थस्य प्रकाशश्च सारोक्तिः श्रेष्ठता गिरा । नानार्थवत्त्वं वेद्यत्वं सन्दर्भः कथ्यते बुधैः" इत्युक्ते ४कथनभेदे ५वक्तृतात्पर्यविषये च ।

**सन्दान** न॰ सम्+दो–करणादौ ल्युट् । १दाम्नि २बन्धने अमरः ३सम्यक्खण्डने च । दा–ल्युट् । ४सम्यग्दाने न॰ ५गजस्याष्ठीवतोरधोभागे पु॰ त्रिका॰ । [राजनि॰ ।

**सन्दानिका** स्त्री सन्दानं संखण्डनमस्त्यस्य ठन् । विट्खदिरे

**सन्दानित** त्रि॰सन्दानं जातमस्य तार॰ इतच् । बद्धे अमरः "रशनासन्दानितचरणे"ति मालविकाग्निमित्रम् ।

**सन्दानिनी** स्त्री सन्दानं बन्धनं मत्वर्थीय बा॰ इनि ङीप् । गोशालायाम् हेमच॰ ।

**सन्दाव** पु॰ सम्+द्रु–भावे घञ् । पलायने अमरः ।

**सन्दाह** पु॰ सम्+दह–करणादौ घञ् । १मुखादिशोषे राजनि॰ । २सम्यग्दाहे च ।

**सन्दिग्ध** त्रि॰ सम्+दिह–कर्त्तरि क्त । १सन्देहयुक्ते । कर्मणि क्त । २सन्देहविषये ३सम्यग्लिप्ते च । भावे क्त । ४सन्देहे ५संलेपे च ।

**सन्दित** त्रि॰ सन्+दो–क्त । बद्धे अमरः ।

**सन्दिष्ट** न॰ सम्+दिश–भावे क्त । १वाचिकार्थकथने वार्त्तायाम् शब्दर॰ । कर्मणि–क्त । २उपदिष्टे त्रि॰ ।

**सन्दिहान** त्रि॰ सम्+दिह–शानच् । सन्देहयुक्ते जटा॰ ।

**सन्दी** स्त्री सम्+दो–ड गौरा॰ ङीष् । खट्वायां त्रिका॰ ।

**सन्दीप्य** पु॰ सन्दीप्यतेऽसौ सम्+दीप–कर्मणि य । मयूरशिखावृक्षे शब्दच॰ ।

**सन्देश** पु० सम्+दिश–घञ्। वाचिकार्थकथने वार्त्तायाम् अमरः। “सदर्थसन्देशमृणालमन्थरः” नैष०।

**सन्देशहर** पु० सन्देशं हरति अभीष्टस्थानं कथनाय नयति हृ–अच्। १दूते “तवैव सन्देशहरादिति” रघुः। ण्वुल्। सन्देशहारकोऽप्यत्र।

**सन्देह** पु० सम्+दिह–घञ्। १संशयशब्दार्थे अमरः। २अलङ्कारभेदे अलङ्कारशब्दे ४०५पृ०दृश्यम्। सन्देहविशेषश्च पक्षतेत्याचार्य्यैः स च प्रकृतपक्षविशेष्यकसाध्यव्याप्यवत्तानिश्चयप्रतिबन्धकतानिरूपितप्रतिबध्यताशालिसंशयः।

**सन्दोह** पु० सम्+दुह–घञ्। १समूहे अमरः। २सम्यग्दोहे कर्मणि घञ्। ३दुग्धे च “सन्दोहवाष्पमेऽहनि” मिता०।

**सन्द्राव** पु० सम्+द्रु–घञ्। पलायने अमरः।

**सन्धा** स्त्री सम्+धा–अङ्। १स्थितौ २प्रतिज्ञायां मेदि०। ३सन्धाने शरोत्पादनानुगुणे व्यापारभेदे शब्दर० ४अनुसन्धाने ५सन्ध्यायां वाचस्पति.।

**सन्धान** न० सम्+धा–ल्युट्। १शरादिसम्पादनानुगुणे व्यापारे २सोमरसकण्डनात्मके अभिषवे ३अनुसन्धाने ४सङ्घट्टने च मेदि०। सन्धाने स्त्रीत्वमपि तत्र ङीप्। सा च ५कुप्यशालायां शब्दर०। सङ्घट्टनं च योजनम्। “यदर्द्धे विच्छिन्नं भवति कृतसन्धानमिव तत्” शकु०। ५काञ्जिके हेम०। ६मदिरायाम् ७अवदंशे ८सौराष्ट्रे राजनि० ९धनुषि शरस्य योजने च।

**सन्धि** पु० सम्+धा–कि। १नृपाणां षड्गुणान्तर्गते मेलनार्थं मैत्रीकरणरूपे व्यापारे

षाड्गुण्यान्तर्गतसन्धिविषयादिकं शुक्रनीतिपरि० उक्तं यथा “बलीयसाऽभियुक्तस्तु नृपोऽनन्यप्रतिक्रियः। आपन्नः सन्धिमन्विच्छेत् कुर्वाणः कालयापनम्। एक एवोपहारस्तु सन्धिरेव मतो हितः। उपहारस्य भेदास्तु सर्वेऽन्ये मैत्रवर्जिताः। अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्त्तते। उपहाराद्दते यस्मात् सन्धिरेव न विद्यते। शत्रोर्बलानुसारेण उपहारं प्रकल्पयेत्। सेवां वापि च स्वीकुर्य्याद् दद्यात् कन्यां भुवं धनम्। स्वसामन्तांश्च सन्धीयात् मन्त्रेणान्यजयाय वै। सन्धिः कार्य्योऽप्यनार्य्येण संप्राप्योत्सादयेद्धि सः। संघातवान् यथा वेणुर्निविडैः कण्टकैर्वृतः। न शक्यते समुच्छेत्तुं वेणुः संघातवांस्तथा। सन्धिश्चातिबले, युद्धं साम्ये, यानन्तु दुर्बले। बलिना सह सन्धाय भये साधारणे यदि”। “आत्मानं गोपयेत् काले बह्वमित्रेषु बुद्धिमान्”। “राजा न गच्छेद्विश्वासं सन्धितोऽपि हि बुद्धिमान्। अद्रोहसमयं कृत्वा वृत्तमिन्द्रः सदाऽवधीत्”। “सन्धायान्यत्र यात्रायां पार्ष्णिग्राहेण शत्रुणा। सन्धाय गमनं प्रोक्तं तज्जिगीषोः फलार्थिनः”।

तद्भेदलक्षणादिकं हितोपदेशे न्यरूपि यथा

“कपाल उपहारश्च सन्तानः सङ्गतस्तथा। उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः। अदृष्टनर आदिष्ट आत्मादिष्ट उपग्रहः। परिक्रयस्तथोच्छिन्नस्तथा च परभूषणः। स्कन्धोपनेयः सन्धिश्च षोडशैते प्रकीर्त्तिताः। इति षोडशकं प्राहुः सन्धिं सन्धिविचक्षणाः। कपालसन्धिर्विज्ञेय, केवलं समसन्धितः। सम्प्रदानाद्भवति य उपहारः२ स उच्यते। सन्तानसन्धिर्विज्ञेयो दारिकादानपूर्वकः। सद्भिस्तु सङ्गतः४ सन्धिर्मैत्रीपूर्व उदाहृतः। यावदायुःप्रमाणस्तु समानार्थप्रयोजनः। सम्पत्तौ वा विपत्तौ वा कारणैर्यो न भिद्यते। सङ्गतः सन्धिरेवायं प्रकृष्टत्वात् सुवर्णवत्। तथान्यैः सन्धिकुशलैः काञ्चनः स उदाहृतः। आत्मकार्य्यस्य सिद्धिं तु समुद्दिश्य क्रियेत यः। स उपन्यासकुशलैरुपन्यास५ उदाहृतः। मयास्योपकृतं पूर्वं ममाप्येष करिष्यति। इति यः क्रियते सन्धिः प्रतीकारः६ स उच्यते। उपकारं करोम्यस्य ममाप्येष करिष्यति। अयं चापि प्रतीकारो रामसुग्रीवयोरिव। एकार्थां सम्यगुद्दिश्य क्रियां यत्र हि गच्छति। सुसंहितप्रमाणस्तु स च संयोग७ उच्यते। आवयोर्योधमुख्यैस्तु मदर्थः साध्यतामिति। यस्मिन् पणस्तु क्रियते स सन्धिः पुरुषान्तरः८। त्वयैकेन मदीयोऽर्थः सम्प्रसाध्यस्त्वसाविति। यत्र शत्रुः पणं कुर्यात् सोऽदृष्टपुरुष९ स्मृतः। यत्र भूम्येकदेशेन पणेन रिपुरूर्जितः। सन्धीयते सन्धिविद्भिः स आदिष्टः१० उदाहृतः। स्वसैन्येन तु सन्धानमात्मादिष्ट११ उदाहृतः। क्रियते प्राणरक्षार्थं सर्वदानादुपग्रहः१२। कोषांशेनार्द्धकोषेण सर्वकोषेण वा पुनः। शिष्टस्य प्रतिरक्षार्थं परिक्रय१३ उदाहृतः। भुवां सारवतीनां तु दानादुच्छिन्न१४ उच्यते। भूम्युत्थफलदानेन सर्वेण परभूषणः१५। परिच्छिन्नं फलं यत्र प्रतिस्कन्धेन दीयते। स्कन्धोपनेयं१६ तं प्राहुः सन्धिं सन्धिविचक्षणाः। परस्परोपकारस्तु मैत्री सम्बन्धकस्तथा। उपहारश्च विज्ञेयश्चत्वारश्चैव सन्धयः। एक एवोपहारस्तु सन्धिरेव मतो मम। उपहारविभिन्नास्तु सर्वे मैत्रविवर्जिताः। अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्त्तते। उपहाराद्दते तस्मात् सन्धिरन्यो न विद्यते”।

सन्धिलक्षणादिकं युक्तिकल्पतरौ प्रदर्शितं यथा "पणबन्धो भवेत् सन्धिः स्वयं हीनस्तमाचरेत् । मर्य्यादोल्लङ्घनं नास्ति यदि यत्नोरिति स्थितिः । मर्य्यादोल्लङ्घनं यत्र यतो संश्रयितं भवेत् । न तं संश्रयितं कुर्य्यादित्युवाच बृहस्पतिः" । षाड्गुण्यशब्दे ५१७८पृ० दृश्यम् २संयोगे अमरः । ३अस्थिद्वयसंयोगस्थाने ४चौरादिकृत सुरङ्गायां "सन्धिं कृत्वा तु ये चौर्य्यमिति" स्मृतिः ।५भगे ६सङ्कटे ७नाटकाङ्गविशेषे दशविकाशे मेदि० ८व्याकरणोक्ते वर्णद्वयजाते ९०वर्णविकारभेदे ११भेदे विश्वः । नाटकाङ्ग सन्धिश्च "अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति" । एकार्थेन सम्बन्धः सन्धिः । तद्भेदानाह "मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः । इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते" सा०द० । मुखादिलक्षणम् तत्तच्छब्दे दृश्यम् । १२सत्यादियुगानामाद्यन्तयोः कालयोः मन्वन्तरशब्दे दृश्यम् "ससन्धयस्ते मनवः कल्पे ज्ञेयाश्चतुर्दश । कृतप्रमाणः कल्पादौ सन्धिः पञ्चदशः स्मृतः" मनुः । तेन सन्धिसंख्यासहितं सत्ययुगमानम् ४८०० दैववर्षाः । "कृताब्दसङ्ख्यस्तान्ते सन्धिः प्रोक्तो जलप्लवः । तत्र युगानामादौ सन्धिः अन्ते सन्ध्यंशः । मन्वन्तराणामादौ सन्धिः कल्पानामन्ते सन्धिरिति भेदः । १३तिथ्यादेराद्यन्तभाग भेदे च उपयमशब्दे १२५८५६ पृ० दृश्यम् ।

**सन्धिका** स्त्री स्वार्थे क । मद्यसन्धाने शब्दच० ।

**सन्धिचौर** पु० सन्धिना कृतसुरङ्गया चौरः । सन्धिं कृत्वा चौर्य्यकारके (सिँधेल) शब्दमाला ।

**सन्धिजीवक** पु० सन्धिना अभिसन्धिना जीवति जीव–ण्वुल् । अन्यायेन परार्थहारके त्रिका० । [क्तिते च ।

**सन्धित** त्रि० सन्धा जाताऽस्य तार० इतच् । १कृतसन्धे २मि-

**सन्धिनी** स्त्री सन्धा वृषभसंयोगस्तज्जगर्भोऽस्त्यस्याः इनि ङीप् । १वृषभसंयोगेन धृतगर्भायां स्त्रीगव्याम् अमरः । २अकालदुग्धायां गवि मेदि० । तद्दुग्धपाननिषेधः "न पिबेत् सन्धिनीक्षीरम्" स्मृतिः ।

**सन्धिपूजा** स्त्री सन्धौ अष्टम्याः शेषे नवम्याश्च आद्ये दण्डे पूजा । आश्विनशुक्लाष्टमीनवमीसन्धिकाले विहितपूजायाम् "अष्टमी नवमीसन्धौ तृतीया खलु कथ्यते । तत्र पूज्या त्वहं पुत्र ! योगिनीगणसंयुता" । ज्योतिषे "अष्टम्यां सन्धियोगे सकलपरिजनैः पूजयेत् सत्प्रभावैः" । कामरूपीय निबन्धे स्मृतिसागरे च "अष्टम्याः शेषदण्डस्य नवम्याः पूर्व एव च । अत्र या क्रियते पूजा विज्ञेया सा महाफला" मत्स्यसूक्तेऽपि "अष्टमीनवमीयोगो रात्रिभागे विशिष्यते । अर्द्धरात्रे दशगुणं सन्ध्यायां त्रिगुणं भवेत्" । आश्विनाधिकारे "अष्टमी नवमीयुक्ता नवमी चाष्टमीयुता । अर्द्धनारीश्वरप्राया उमामाहेश्वरी तिथिः" । इति विष्णुधर्मोत्तरीयमध्ये तद्विषयं न तु महानवमीपूजापरम् । तथा अष्टम्युपवासपरदिनविधानेन सप्तमीवद्युग्मानादरात् । ततश्च सप्तमीपूजावन्महाष्टम्यादिकृत्यमपि षष्ट्यादिपञ्चतिथिकल्पादिरेव न तु परदिनतीय खण्डतिथौ किन्तु पूर्वोक्तसन्ध्यनुरोधात् निषादादिवत् खण्डतिथावपि सन्धिपूजेति । एवञ्च यस्मिन् दिने महाष्टमीपूजा तस्मिन् दिन एव उपवासः । न तु सन्धिपूजा दिने अष्टमीत्वेनोपवासविधेः पूर्वमुक्तत्वात् । एवञ्च पूर्वाह्णस्यामष्टमीपूजा तत्परदिने अष्टमीनवम्योः सन्धौ सन्धिपूजा तत्परदिने महानवमीपूजा प्रागुक्तनन्दिकेश्वरपुराणाद्युक्तोदयगामितिथ्यनुरोधात् तत्परदिने दशम्यां विसर्जनं पूजानुरोधेनाधिकदिनत्वाभावात्" ति०त० ।

**सन्धिबन्ध** पु० सन्धिं बध्नाति संयुनक्ति सम्+बन्ध–अण् । भूमिचम्पके शब्दच० । तद्योगेन हि भग्नसन्धियोजनं वैद्यके प्रसिद्धम् । २रूपायां सन्धग्रन्थिनियमबन्धने च ।

**सन्धिला** स्त्री सन्धिं लाति ला–क । १नद्यां स्वार्थे कन् । २सुरङ्गायां ३मदिरायाश्च मेदि० ।

**सन्धिविग्रहाधिकारिन्** पु० सन्धिविग्रहयोः अधिकरोति अधि+कृ–णिनि । रूपायां सन्धिविग्रहाद्यधिकारिणि मन्त्रिभेदे ।

**सन्धिवेला** स्त्री सन्धियुक्ता वेला समयः । अहोरात्रसन्धिसमये । सन्ध्याशब्दे दृश्यम् । ततः सन्धिवेलादि० भवार्थे अण् नक्षत्राट्ठञ् । सान्धिवेल तत्र भवे त्रि० ।

**सन्धिहारक** पु० सन्धिना सुरङ्गया हरति परद्रव्यम् हृ–ण्वुल् । सन्धिचौरे (सिँधेल) हारा० ।

**सन्धुक्षित** त्रि० सम्+धुक्ष–क्त । उद्दीपिते ।

**सन्धेय** त्रि० सम्+धा–यत् । १संयोज्ये २मेलनीये ३सन्धिकरणयोग्ये च

सन्धेया असन्धेयाश्च हितोप० दर्शिता यथा "सत्यार्य्यौ धार्मिकोऽनार्य्यो भ्रातृसङ्घातवान् बली । अनेकयुद्धविजयी सन्धेयाः सप्त कीर्त्तिताः । सत्योऽनुपालयन् सत्यं सन्धितो नैति विक्रियाम् । प्राणनाशेऽपि सुव्यक्तमार्य्यो नायात्यनार्यताम् । धार्मिकस्याऽभियुक्तस्य सर्व एव हि युध्यते । प्रजानुरागाद्धर्माच्च दुःखच्छेद्यो

ष्ठि धार्मिकः। सन्धिः कार्य्योऽप्यनार्य्येण ६ विनाशे समुपस्थिते। विना तस्याश्रयेणान्यः कुर्य्यान्न कालयापनम्। संहतत्वाद्यथा वेणुर्निविडः कण्टकैर्वृतः। न शक्यते समुच्छेत्तुं भ्रातृसङ्घातवांस्तथा। बलिना सह योद्धव्यमिति नास्ति निदर्शनम्। प्रतिवातं न हि घनः कदाचिदुपसर्पति। जामदग्न्येः गुणस्येव सर्वः सर्वत्र सर्वदा। अनेकयुद्धजयिनः ७ प्रतापादेव भुज्यते। अनेकयुद्धविजयी सन्धानं यस्य गच्छति। तत्प्रतापेन तस्याशु वशमायान्ति शत्रवः"। "बालो वृद्धो दीर्घरोगी तथा ज्ञातिवहिष्कृतः। भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा। विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान्। अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः। दैवोपहतकश्चैव दैवचिन्तक एव च। दुर्भिक्षव्यसनोपेतो बलव्यसनसङ्कुलः। अदेशस्थो बहुरिपुर्युक्तः कालेन यस्य न। सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी। एतैः सन्धिं न कुर्वीत विगृह्णीयात् तु केवलम्। एते विगृह्यमाणा हि क्षिप्रं यान्ति रिपोर्वशम्"

**सन्ध्या** स्त्री सम्+ध्यै–अङ् सन्धौ भवः यत् वा। १पक्षरूपकालोत्तरभाविपररूपकालयोरवकाशभेदे दिवारात्र्योः २मध्यवर्त्तिकाले अमरः। स च दिवाशेषदण्डसहितरात्रिप्रथमदण्डात्मकः कालः तयोश्चतुर्दण्डात्मकः कालश्च "त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टये। नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते" इति दक्षः। "अहोरात्रस्य यः सन्धिः सूर्य्यनक्षत्रवर्जितः। सा च सन्ध्या समाख्यातेति" स्मृतिः। ३सायाह्ने ४सन्ध्याकाले उपास्यदेवताभेदे ५तदुपासनायाम् व्यासः। "सन्ध्यामुपासते ये तु नियतं शंसितव्रताः" इति स्मृतिः "प्रातः सन्ध्यां ततः कृत्वा सङ्कल्प्य बुध आचरेत्" स्मृतिः। "अनर्हः कर्मणां विप्रः सन्ध्याहीनो यतः स्मृतः"। "एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम्। यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते" छन्दोगप०। "अनागतान्तु यः पूर्वां सादित्याञ्चैव पश्चिमाम्। नोपासीत द्विजः सन्ध्यां स शूद्रोऽब्राह्मणः स्मृतः" शा०ता० अत्र सन्ध्यात्रयस्य नित्यत्वाभिधानात् "सर्वकालमुपस्थानं सन्ध्यायाः पार्थिवेष्यते। अन्यत्र सूतकाशौचविभ्रमातुरभीतितः" इति विष्णुपुराणीये सन्ध्याया इत्येकवचनान्तपाठो धर्मकोषोक्तो युक्तः। एवमेव नव्यवर्द्धमानः। सर्वकालं प्रातर्मध्याह्नसायंरूपकालत्रये। अन्यथा तदुपादानं व्यर्थं स्यात् विभ्रमश्चित्तविक्षेपः। तेन ज्वराद्यार्त्ता अपि सन्ध्यामाचरन्ति अतएव याज्ञवल्क्यः "सर्वावस्थोऽपि यो विप्रः सन्ध्योपासनतत्परः। ब्राह्मण्याच्च न हीयते अन्त्यजन्मगतोऽपि सन्"। सर्वावस्था नित्यं सेवकादिकर्मरतोऽपि। यथोचितशौचेऽप्यशक्तोऽपीति रत्नाकरः। अन्त्याद्यवस्थापन्नोऽपीति युक्तम्। सन्ध्यात्रयसाधारणलक्षणमाह योगियाज्ञवल्क्यः "तयाणाञ्चैव देवानां ब्रह्मादीनां समागमः। सन्धिः सर्वसुराणाञ्च तेन सन्ध्या प्रकीर्त्तिता" सन्ध्याद्वयकालस्तु अहोरात्रसन्धिमुहूर्त्तात्मकः। तथाच दक्षः "अहोरात्रस्य यः सन्धिः सूर्य्यनक्षत्रवर्जितः। सा च सन्ध्या समाख्याता मुनिभिस्तत्त्ववादिभिः" सूर्य्यनक्षत्रवर्जितः अर्द्धास्तमिताद्धोदितसूर्य्यमण्डलप्रकृष्टतेजोनक्षत्रवर्जितः। तथा च वराहः "अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका यावत्। तेजःपरिहानिरूपा भानोरर्द्धोदयं यावत्"। अत्र आद्यन्तता उक्ता परिमाणमाह दक्षः "रात्र्यन्तकाले नाड्यौ द्वे सन्ध्यादिः काल उच्यते। दर्शनाद्रविरेखायास्तदन्तो मुनिभिः स्मृतः"। नाड़ी दण्डः योगियाज्ञवल्क्यः "ह्रासवृद्धी च सततं दिनरात्र्योर्यथाक्रमम्। सन्ध्या मुहूर्त्तमाख्याता ह्रासवृद्धौ समा स्मृता"। अत्रोपासनाया अपि सन्ध्यात्वमाह व्यासः "उपास्ते सन्धिवेलायां निशाया दिवसस्य च। तामेव सन्ध्यां तस्मात्तु प्रवदन्ति मनीषिणः"। उपास्ते यदुक्तमार्जनप्राणायामादिक्रियये ति यावत्। तत्काले उपास्यापि देवता सन्ध्या तथा च याज्ञवल्क्यः "सन्ध्ये सन्ध्यामुपासीत नास्तगे नोद्गते रवौ"। उपासनोपक्रममाह संवर्त्तः "प्रातः सन्ध्यां सनक्षत्रामुपासीत यथाविधि। सादित्यां पश्चिमां सन्ध्याम् अर्द्धास्तमितभास्कराम्"। सनक्षत्रामित्यनेन तद्युक्तकाले उपक्रम्य प्रातः सन्ध्यामुपासीत एवमेवार्द्धास्तमितभास्करादर्वां पश्चिमां सादित्यामित्यनेन तद्युक्तकाले उपक्रम्य उपासीतेत्यर्थः। मध्याह्नसन्ध्याया अष्टममुहूर्त्तं कालमाह स्मृतिः "पूर्वापरे तथा सन्ध्ये सनक्षत्रे प्रकीर्त्तिते। समस्तयेऽपि मध्याह्ने मुहूर्त्ते सप्तमोपरि"। साङ्ख्यायनगृह्यम् "अरण्ये समित्पाणिः सन्ध्यामुपास्ते नित्यं वाग्यत उत्तरापराभिमुखोऽन्वष्टमदिग्मानक्षत्रदर्शनात् अतिक्रान्तायां महाव्याहृतीः सावित्रीं स्वस्त्ययनादि जप्त्वा एवं प्रातः प्राङ्मुखस्तिष्ठन् आमण्डलदर्शनादिति"। उत्तरापराभिमुखो वायुकोणाभिमुखः कोणं विदृणोति अन्वष्टममित्यमिति। उभयं दृगष्टमभाग-

मिति यावत्'' आ॰त॰। अधिकं गायत्रीशब्दे दृश्यम्। ६युगसन्धिकाले ७नदीभेदे मेदि॰। ८ब्रह्मपत्नीभेदे स्त्री। ९चिन्तायां १०संश्रवे ११सीमायां १२सन्धाने १३पुष्पभेदे हेमच॰ "चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युगम्। तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः। इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु। एकापायेन वर्त्तन्ते सहस्राणि शतानि च" मनुः। चत्वार्य्याहुरिति चत्वारि वर्षसहस्राणि कृतयुगं कालं मन्वादयो वदन्ति। तस्य तावद्वर्षशतानि सन्ध्या सन्ध्यांशश्च भवति युगस्य पूर्वा सन्ध्या उत्तरश्च सन्ध्यांशः। तदुक्तं विष्णुपुराणे "तत्प्रमाणैः शतैः सन्ध्या पूर्वा तत्राभिधीयते। सन्ध्यांशकश्च तत्तुल्यो युगस्यानन्तरो हि सः। सन्ध्यासन्ध्यांशयोरन्तर्य्यः कालो मुनिसत्तम!। युगाख्यः स तु विज्ञेयः कृतत्रेतादिसंज्ञकः" एकापायेनेति। त्रीणि सहस्राणि त्रेतायुगं त्रीणि शतानि तस्य सन्ध्या सन्ध्यांशश्च। द्वे सहस्रे द्वापरयुगं द्वे शते तस्य सन्ध्या सन्ध्यांशश्च। एकसहस्रं कलियुगमेकशतं तस्य सन्ध्या सन्ध्यांशश्च भवतीत्यर्थः।

१४प्रबोधसम्प्रसादयोः सन्धिभवे स्वप्ने "सन्ध्ये सृष्टिराह हि" शा॰सू॰ "सन्ध्यमिति स्वप्नस्थानमाचष्टे वेदे प्रयोगदर्शनात् "सन्ध्यं तृतीयं स्वप्नस्थानम्" इयोर्लोकस्थानयोः प्रबोधसम्प्रसादस्थानयोः सन्धौ भवतीति सन्ध्यम्" भा॰। "तस्मिन् सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यति इदञ्च परलोकस्थानञ्च" रत्नप्र॰ श्रुतिः सुषुप्तौ सर्वेन्द्रियोपसंहारादेतल्लोकाननुभवे सति वासनामात्रेण इमं लोकं स्मरतः कर्मवशात् हृदये मानसं परलोकस्फूर्त्तिरूपः स्वप्नो भवति सोऽयं लोकद्वयसन्धौ भवतीति सन्ध्यः स्वप्नः" रत्नप्र॰।

**सन्ध्यांश** पु॰ सन्ध्या तत्प्रमाणः सत्ययुगादेरंशः। सत्ययुगादेरंशभेदे तत्प्रमाणम् सन्ध्याशब्दे मनूक्तम् दृश्यम् "सन्ध्यासन्ध्यांशसहितं विज्ञेयं तच्चतुर्युग"मिति मनुः।

**सन्ध्याचल** पु॰ "सन्ध्यां वशिष्ठः कृतवान् तत्र यथाद्विधैः स्तुतः। ततः सन्ध्याचलं नाम तस्य गायन्ति देवताः" कालिकापु॰ ५॰ अ॰ निरुक्ते पर्वतभेदे।

**सन्ध्यानाटिन्** सन्ध्यायां नटति नट-णिनि। १शिवे त्रिका॰

**सन्ध्यापुष्पी** स्त्री सन्ध्यायां पुष्पमस्याः ङीप्। जातिवृक्षे राजनि॰।

**सन्ध्याबल** पुं स्त्री॰ सन्ध्यायां सन्ध्योपलक्षिते रात्रिकाले बलं यस्य। रात्रौ बलयुक्ते राक्षसे त्रिका॰ स्त्रियां ङीष्।

**सन्ध्याभ्र** न॰ सन्ध्याकालीनमभ्रमिव। १सुवर्णगैरिके राजनि॰। २सन्ध्याकालीनमेघे च।

**सन्ध्याराग** पु॰ सन्ध्याया इव रागोऽस्य। १सिन्दूरे राजनि॰। ६त॰। सन्ध्याकालीने २रक्तवर्णे च।

**सन्ध्याराम** पु॰ सन्ध्यायां तदाख्यभार्य्यायां रमते रम-संज्ञायां कर्त्तरि घञ्। चतुर्मुखे ब्रह्मणि शब्दमा॰।

**सन्न** पु॰सीदति सद-क्त। १पियालवृक्षे भरतः। २अवसन्ने त्रि॰ स्वार्थे क। खर्वे भरतः। [२खर्वटृक्षे च।

**सन्नकद्रु** पु॰ सन्न एव सन्नकः कर्म॰। १पियालवृक्षे अमरः।

**सन्नत** त्रि॰ सम्+नम-क्त। १प्रणते २ध्वनियुते च।

**सन्नति** स्त्री सम्+नम-क्तिन्। १प्रणामे २ध्वनौ मेदि॰। ३नम्रतायाञ्च। ४होमभेदे स च अथ॰४।३९। एकादिभिरष्टभिर्मन्त्रैर्विधेयः। तैत्तिरीयब्रा॰३।८।१८।५ विहितश्च।

**सन्नद्ध** त्रि॰ सम्+नह-क्त। १कृतसन्नाहे धृतवर्मणि २व्यूहरचनयावस्थिते सैन्यादौ मेदि॰। ३आततायिनि रायमु॰ ४मन्त्रादियुक्ते शब्दर॰।

**सन्नय** पु॰ सम्+नी-अच्। १समूहे २पृष्ठस्थिते-बले च अमरः

**सन्नहन** न॰ सम्+नह-ल्युट्। १वर्मग्रहणे २उद्योगे ३सम्यग्बन्धने च। [हेमच॰। भावे घञ्। संबन्धने।

**सन्नाह** पु॰सन्नह्यते सम्+नह-कर्मणि घञ् (साँजोया) वर्मणि

**सन्नाह्य** पु॰ सम्+नह-ण्यत्। समरोचिते गजे हेमच॰।

**सन्निकर्ष** पु॰ सम्+नि-कृष-घञ्। १सान्निध्ये हेमच॰ "सद्वसन्निकर्षो हि क्षणार्द्धमपि शस्यते" इति पुराणम् न्यायमते २विषयेन्द्रियसम्बन्धे ज्ञानलक्षणासामान्यलक्षणायोगजधर्मविशेषात्मके ३अलौकिकप्रत्यक्षसाधने उपायभेदे च। "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षम्" गौ॰ सू॰। सन्निकर्षो द्विविधः लौकिकालौकिकभेदात् लौकिकोऽपि षड्विधः अलौकिकस्तु त्रिविधः यथोक्तं भाषाप॰ 'ग्रहणं षड्विधे हेतुरिन्द्रियं करणं मतम्। विषयेन्द्रियसम्बन्धो व्यापारः सोऽपि षड्विधः। द्रव्यग्रहस्तु संयोगात्१ संयुक्तसमवायतः२। द्रव्येषु समवेतानां, तथा तत्समवायतः३। तत्रापि समवेतानां, शब्दस्य समवायतः४। तद्वृत्तीनां समवेतसमवायेन५ तु ग्रहः। विशेषणतया६ तद्वदभावानां ग्रहो भवेत्। यदि स्यादुपलभ्येतत्येवं यत्र प्रसज्यते। प्रत्यक्षं समवायस्य विशेषणतया भवेत्। अलौकिकः सन्निकर्षस्त्रिविधः परिकीर्त्तितः। सामान्यलक्षणा१ ज्ञानलक्षणा२ योगजस्तथा३" भाषा॰ "यद्यपि विशेषणता नानाविधा तथाहि भूतलादौ घटाभावः

संयुक्तविशेषणतया घटवति संख्यादौ रूपाद्यभावः संयुक्तसमवेतसमवेतविशेषणतया, शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया, कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया। एवं कत्वावच्छिन्नाभावे खत्वाभावादिकं विशेषणविशेषणतया। एव घटाभावादौ पटाद्यभावः संयुक्तविशेषणविशेषणतया। एवमन्यदप्यूह्यं तथापि विशेषणतात्वरूपेणैकैव सा गण्यते अन्यथा षोढा सन्निकर्ष इति प्राचां प्रवादो व्याहन्यतेति” सि०मु०।

**सन्निकर्षण** न० सम्+नि+कृष–ल्युट्। सन्निधाने अमरः।

**सन्निकृष्ट** त्रि० सम्+नि+कृष–क्त। १निकटस्थे अमरः २इन्द्रियसम्बन्धविषये च। [उपस्थिते त्रि०।

**सन्निध** न० सम्+नि+धा–क। १नैकट्ये वोपालितः। २समी-

**सन्निधान** न० सम्+नि+धा–ल्युट्। १नैकट्ये सामीप्ये हेमच०। २आश्रये च।

**सन्निधि** पु० सम्+नि+धा–कि। १सामीप्ये अमरः कर्मणि कि। २इन्द्रियविषये मेदि० कर्म०। ३साधुनिधौ ६त०। ४सतां निधौ। [२स्थिते च।

**सन्निपतित** त्रि० सम्+नि–पत–क्त। १मिलिते २उपस्थिते

**सन्निपात** पु० सम्+नि+पत–घञ्। १मेलने “सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति” व्या० परि०। २कफादिधातुत्रयस्य वैषम्यरूपत्रिदोषजे ज्वरभेदे ३नाशे ४उपस्थितौ च। ५तालभेदे “एक एव गुरुर्यत्र सन्निपातः स चेष्यते” सङ्गीतदा०।

ज्वरभेदस्तन्निदानभेदादिकं भावप्र० उक्तं यथा

‘तत्र सन्निपातज्वरस्य विप्रकृष्टसन्निकृष्टकारणकथनपूर्विकां संप्राप्तिमाह “त्रिदोषजनकैर्वातपित्तश्लेष्माणमेहगाः। वह्निर्निरस्य कोष्ठाग्निं रसगाज्वरकारिणः”। पूर्वरूपमाह “प्राग्रूपाणि त्रिदोषाणां स्युस्त्रिदोषज्वरे न्यणाम्”। अथ सन्निपातज्वरस्य सामान्यानि लक्षणान्याह “क्षणे दाहः क्षणे शीतमस्थिसन्धिशिरोरुजा। सास्रावे कलुषे रक्ते निर्भुग्ने चापि लोचने। सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः। तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः। परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परा। ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च। शिरसो लोठनं तृष्णा निद्रानाशो हृदि व्यथा। स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः। कृशत्वं नातिगात्राणां सततं कण्ठकूजनम्। कोठानां श्यावरक्तानां मण्डलानाञ्च दर्शनम्। मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च। चिरात्पाकश्च दोषाणां सन्निपातज्वराकृतिः।” लोचने सास्रावे साश्रुणी कलुषे अस्वच्छे निर्भुग्ने निर्गते कुटिले च कण्ठः शूकैरिवावृतः धान्याग्रैरिवावृतः। जिह्वा परिदग्धा परिदग्धेव जायते।” अथवा परिदग्धा इव कृष्णा दृश्यते स्रस्ताङ्गता शिथिलाङ्गता। ष्ठीवनमित्यादि कफसंयुक्तस्य रक्तस्य ष्ठीवनं शिरसो लोठनमितस्ततश्चालनं कृशत्वन्नातिगात्राणामिति गात्राणाम् अतिशयितं कार्श्यं न व्याधिप्रभावात् सततं निरन्तरं कोठः। “वरटीदंष्ट्रसंस्थानं कोठ इत्यभिधीयते” श्यावः कपिशो वर्णः। मूकत्वमवचनत्वमल्पवचनत्वं वा स्रोतसां कर्णनासादीनाम्।

अथ सामान्यसन्निपातज्वरस्य त्रयोदश विशेषानाह “एकोल्वणास्त्रयस्तेषु द्व्युल्वणाश्च तथेति षट्। तुल्योल्वणश्च भवेदेको विज्ञेयः स तु सप्तमः। प्रवृद्धमध्यहीनैस्तु वातपित्तकफैश्च षट्। सन्निपातज्वरस्यैवं स्युर्विशेषास्त्रयोदश”। तत्र प्रवृद्धवातः मध्यपित्तो हीनकफः १ मध्यवातः प्रवृद्धपित्तो हीनकफः २ हीनवातः प्रवृद्धपित्तो मध्यकफः ३ प्रवृद्धवातः हीनपित्तो मध्यकफः ४ मध्यवातः हीनपित्तः प्रवृद्धकफः ५ हीनवातो मध्यपित्तः प्रवृद्धकफः ६ इति षट्। तेषां नामानि क्रमादाह “विस्फारकस्त्वाशुकारी कम्पनो बभ्रुसंज्ञकः। शीघ्रकारी तथाभल्गुः सम्मुमः कूटपालकः। संमोहकः पालकश्च याम्यः क्रकच इत्यपि। ततः कर्कटकः प्रोक्तस्ततो वैदारिकाभिधः” तन्त्रान्तरे विस्फारक इत्यत्र विस्फोरक इति पाठः। बभ्रुस्थाने बभ्रुरितिपाठः क्वापि बद्ध इति पाठः भल्गुरित्यत्र फल्गुरिति पाठः याम्य इत्यत्र संग्राम इति पाठः कर्कटक इत्यत्र कर्कोटक इति पाठः। तत्र वातोल्वणस्य लक्षणमाह “श्वासः कासो भ्रमो मूर्च्छा प्रलापो मोहवेपथू। पार्श्वस्य वेदना जृम्भा कषायत्वं मुखस्य च। वातोल्वणस्य लिङ्गानि सन्निपातस्य लक्षयेत्। एष विस्फारको१ नाम्ना सन्निपातः सुदारुणः।” अथ पित्तोल्वणस्य लक्षणमाह “अतिसारो भ्रमो मूर्च्छा मुखपाकस्तथैव च। गात्रे च बिन्दवो रक्ता दाहोऽतीव प्रजायते। पित्तोल्वणस्य लिङ्गानि सन्निपातस्य लक्षयेत्। भिषग्भिः सन्निपातोऽयमाशुकारी२ प्रकीर्त्तितः”। अथ कफोल्वणस्य लक्षणमाह “जडता गद्गदा वाणी रात्रौ निद्रा भवत्यपि। प्रस्तब्धे नयने चैव मुख-

माधुर्य्यमेव च । कफोल्वणस्य लिङ्गानि सन्निपातस्य लक्षयेत् । मुनिभिः सन्निपातोऽयमुक्तः कम्पनसंज्ञकः३"। अथ वातपित्तोल्वणस्य लक्षणमाह "वातपित्ताधिकोऽयन्तु सन्निपातः प्रकुप्यति । तस्य ज्वरो मदस्तृष्णा मुखशोषः प्रमीलकः । आध्मानारुचितन्द्राश्च कासश्वासभ्रमश्रमाः । मुनिभिर्विस्फुनामायं४ सन्निपात उदाहृतः ।" अथ वातश्लेष्मोल्वणस्य लक्षणमाह "वातश्लेष्माधिको यस्य सन्निपातः प्रकुप्यति । तस्य शीतज्वरो मूर्च्छा क्षुत् तृष्णा पार्श्वनिग्रहः । शूलमखिद्यमानस्य तन्द्रा श्वासश्च जायते । असाध्यः सन्निपातोऽयं शीघ्रकारीति५ कथ्यते । नहि जीवत्यहोरात्रमनेनाविष्टविग्रहः ।" "अथ पित्तश्लेष्मोल्वणस्य लक्षणमाह "पित्तश्लेष्माधिको यस्य सन्निपातः प्रकुप्यति । अन्तर्दाहो बहिःशीतं तस्य तृष्णा प्रवर्द्धते । तुद्यते दक्षिणे पार्श्वे उरःशीर्षगलग्रहः । ष्ठीवति श्लेष्मपित्तञ्च कृच्छ्रात्-कोठश्च जायते । विड्भेदश्वासहिक्काश्च वर्द्धन्ते सप्रमीलकाः । ऋषिभिर्भल्लुनामायं६ सन्निपात उदाहृतः ।" अथ वातपित्तश्लेष्मोल्वणस्य लक्षणमाह "सर्व्वदोषोल्वणो यस्य सन्निपातः प्रकुप्यति । त्रयाणामपि दोषाणां तस्य रूपाणि लक्षयेत् । व्याधिभ्यो दारुणश्चैव वज्रशस्त्राग्निसन्निभः । केवलोच्छासपरमस्तब्धाङ्गः स्तब्धलोचनः । त्रिरात्रात् परमेतस्य जन्तोर्हरति जीवितम् । तदवस्थन्तु तं दृष्ट्वा मूढा व्याहरते जनः । धर्षितो राक्षसैर्नूनमवेलायां चरन्ति ये । अन्यथा ब्रुवते केचिद् यक्षिणया ब्रह्मराक्षसैः । पिशाचैर्गुह्यकैश्चैव तथान्यैर्मस्तके हतम् । कुलदेवार्च्चनाहीनं धर्षितं कुलदेवतैः । नक्षत्रपीड़ामपरे गरकर्म्मेति चापरे । सन्निपातमिमं प्राहुर्भिषजः कूटपाककम्७ ।" अथ प्रवृद्धमध्यहीनवातादिजनितसन्निपातज्वराणां लक्षणान्याह "प्रवृद्धमध्यहीनैस्तु वातपित्तकफैश्च यः । तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः । प्रलापायाससंमोहकम्पमूर्च्छाऽरतिभ्रमाः । एकपक्षाभिघातश्च तत्राप्येते विशेषत । एष संमोहको८ नाम्ना सन्निपातः सुदारुणः ।" रोगास्तएवोक्ताः उक्ता एव ते रोगाः व्यथावेपथुनिद्रानाशविष्टम्भादयो वातजाः दाहतृष्णोष्णतास्वेदादयः पित्तजाः गौरवाग्निमान्द्योत्कासनिसकासुखप्रसेकादयः कफजाः । तत्रापि प्रलापादयः पञ्च धातान्तां विशेषाद्भवन्ति । ननु वातः प्रवृद्धः सज्वरं

करिष्यति पित्तन्तु मध्यममिति यावत् तत्कथं ज्वरं करिष्यति यत आह "धातवस्तन्मला दोषाः स्युर्नाशायाऽसमास्ततौ । समाः सुखाय विज्ञेया बलायोपचयाय च ।" इति उच्यते । अत्र पित्तं मध्यमपि अप्रकृतमेव यतोऽप्रकृतयोर्वातश्लेष्मणोरपेक्षया मध्यं तेन मध्यकुपितमित्यर्थः । ननु कफक्षीणः स कथं ज्वरं करिष्यति हीनशक्तित्वात् उच्यते दोषाः क्षीणा अपि व्याधीन् कुर्व्वन्त्येव यत आह "वातक्षयेऽल्पचेष्टत्वं मन्दवाक्त्वं विसंज्ञता । पित्तक्षयेऽधिकःश्लेष्मा वह्निर्मन्दः प्रभाक्षयः ।" शिथिलाः सन्धयोमूर्च्छारौक्ष्यं दाहः कफक्षये"। इत्याशङ्काभिप्रायान्तत्राप परत्रापि । "मध्यप्रवृद्धहीनैस्तु वातपित्तकफैश्च यः । तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः । मोहप्रलापमूर्च्छाः स्युर्मन्यास्तम्भः शिरोग्रहः । कासः श्वासो भ्रमस्तन्द्रा संज्ञानाशो हृद्व्यथा । स्रोतोभ्यो रक्तं विसृजति संरक्तं चास्यनेत्रता । तत्राप्येते विशेषाः स्युर्ह्यत्युरवाक् त्रिवासरात् । भिषग्भिः सन्निपातोऽयं कथितः पाकलाभिधः९ । हीनप्रवृद्धमध्यैस्तु वातपित्तकफैश्च यः । तेन रोगास्त एवोक्ता यथारोगबलाश्रयाः । हृदयं दह्यते चास्य यकृत्प्लीहान्त्रफुप्फुसाः । पच्यन्तेऽत्यर्थमूर्द्ध्वाधःपूयशोणितनिर्गमः । शीर्णदन्तश्च मृत्युश्च तत्राप्येतद्विशेषतः । भिषग्भिः सन्निपातोऽयं याम्यो१० नाम्ना प्रकीर्त्तितः । प्रवृद्धहीनमध्यैस्तु वातपित्तकफैश्च यः । तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः । प्रलापायाससंमोहाः कम्पमूर्च्छाऽरतिभ्रमाः । मन्यास्तम्भेन मृत्युः स्यात् तत्राप्येतद्विशेषतः । भिषग्भिः सन्निपातोऽयं क्रकचः११ संप्रकीर्त्तितः । मध्यहीनप्रवृद्धैस्तु वातपित्तकफैश्च यः । तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः । अन्तर्दाहो विशेषोऽत्र न च वक्तुं स शक्यते । रक्तमालक्तकेनेव लक्ष्यते मुखमण्डलम् । पित्तेनाकर्षितः श्लेष्मा हृदयान्न प्रसिच्यते । शूर्पकेनाहतं पार्श्वं तुद्यते खन्यते हृदि । प्रमीलकः श्वासहिक्का वर्द्धते तु दिने दिने । जिह्वा दग्धा खरस्पर्शा गलः शूकैरिवावृतः । विसर्गं नाभिजानाति कूजेच्चापि कपोतवत् । अतीव श्लेष्मणा पूर्णः शुष्कवक्त्रौष्ठतालुकः । तन्द्रानिद्रातियोगार्त्तो हतवाग्निहतद्युतिः । न रतिं लभते नित्यं विपरीतानि चेष्टति । आयम्यते च बहुशो रक्तं ष्ठीवति चाल्पशः । एव कर्कटको१२ नाम्ना

सन्निपातः सुदारुणः । हीनमध्याधिकैस्तु वात-
पित्तकफैश्च यः । तेन रोगास्त्रयोक्ता यथादोषबला-
श्रयाः । अल्पशूलं कटीतोदो मध्ये दाहो रुजा
भ्रमः । भृशं क्लमः शिरोवस्तिमन्याहृदयबाहुजः ।
प्रमीलकः श्वासकासहिक्का जाड्यं विसंज्ञता । प्रथमोत्-
पन्नमेनन्तु साधयन्ति कदाचन । एतस्मिन् सन्निहत्ते तु
कर्णमूले सुदारुणः । पिड़का जायते जन्तोर्यथाकृच्छ्रेण
जीवति । स वैदारिकसंज्ञो१३ऽयं सन्निपातः सुदारुणः ।
निरत्वात् परमेतस्य व्यर्थमौषधकल्पनम् ।" तन्त्रा-
न्तरे वातोल्वणादीनां सन्निपातज्वरविशेषाणां त्रयो-
दशानां शीताङ्गादीनि त्रयोदश नामान्तराणि लक्षणा-
न्तराणि चाह "शीताङ्गस्तिमितोऽङ्गज्वरगणे तन्द्री
प्रलापी ततो रक्तष्ठीवयिता च तत्र गणितः सम्भुग्नने-
त्रस्तथा । साभिन्यासकजिह्वकश्च कथितः प्रागसन्धि
गोऽप्यान्तको रुग्दाहः सहचित्तविभ्रम इह द्वौ
कर्णकण्ठग्रहौ ।" तन्द्री तन्द्रिका प्रलापी प्रलापकः
रक्तष्ठीवयिता रक्तष्ठीवी संभुग्ननेत्रः भुग्ननेत्रः । अभि-
न्यासकः अभिन्यासः कर्णकण्ठग्रहौ कर्णग्रहः कर्णिकः
कण्ठग्रहः कण्ठकुब्जकः । अथ तेषां प्रत्येकं लक्ष-
णानि "हिमशिशिरशरीरः सन्निपातज्वरी यः
श्वसनकसनहिक्कामोहकम्पप्रलापैः । क्लमबहुकफवाता
दाहवत्यङ्गपीड़ाः स्वरविकृतिभिरार्त्तः शीतगा-
त्रः१ स उक्तः । तन्द्रातीव ततस्तृषातिसरणं श्वासो-
ऽधिकः कासरुक् सन्तप्तातितनुर्गले श्वयथुना शार्ङ्गञ्च
कण्डूकफम् । श्यामा रसना क्लमः श्रवणयोर्मान्द्यञ्च
दाहस्तथा यत्र स्यात् स हि तन्द्रिको२ निगदितो दोष-
त्रयोत्थो ज्वरः । यत्र ज्वरे निखिलदोषनितान्तरोष
जाते प्रलापबहुला सहसोत्थिताश्च । कम्पव्यथाप-
तनदाहविसंज्ञताः स्युर्नाम्ना प्रलापकश्३ इति प्रथितः
पृथिव्याम् । निष्ठीवो रुधिरस्य, रक्तसदृशं कृष्णं तनौ
मण्डलम् लौहित्यं नयने तृषाऽरुचिवमिश्वासाति
सारभ्रमाः । आध्मानञ्च विसंज्ञता च पतनं हिक्काङ्ग-
पीड़ा भृशम् । रक्तष्ठीविनि४ सन्निपातजनिते लिङ्गं
ज्वरे जायते । भृशं नयनवक्रताश्वसनकासतन्द्रा भृशम् ।
प्रलापमदवेपथुश्रवणहानिमोहास्तथा । पुरो निखिलदो-
षजे भवति यत्र लिङ्गं ज्वरे पुरातनचिकित्सकैः स
इह भुग्ननेत्रो५ मतः । दोषास्तीव्रतरा भवन्ति बलिनः
सर्वेऽपि यत्र ज्वरे मोहोऽतीव विचेष्टता विकलता
श्वासो भृशं मूकता । दाहश्चक्षुषमाननस्य दहनोऽम-
न्दोबलस्य क्षय सोऽभिन्यास६ इति प्रकीर्त्तितः इह
प्राच्यैर्भिषग्भिः पुरा । त्रिदोषजनिते ज्वरे भवति यत्र
जिह्वा भृशम् हता कठिनकण्टकैस्तदनु निर्भरं मूकता ।
श्रुतिक्षतिबलक्षतिश्वसनकासवन्तप्रयः पुरातनभिषग्वरा-
स्तमिह जिह्वक७मूचते । व्यथातिशयिता भवेच्छ्वयथुसं-
युता सन्धिषु प्रभूतकफता मुखे विगतनिद्रता कासरुक् ।
समस्तमिति कीर्त्तितं भवति लक्ष्म यत्र ज्वरे त्रिदोषज-
निते बुधैः स हि निगद्यते सन्धिगः८ । यस्मिन् क्षणमे
दहन्ति सकलैर्दोषैरुदीर्णे ज्वरेऽजस्रं मूर्द्धविधूननं सकसनं
सर्वाङ्गपीड़ाधिका । हिक्काश्वाससदाहमोहसहिता देहे-
ऽतिसन्तप्तता वैकल्यञ्च वृथा वचांसि मुनिभिः संकी-
र्त्तित सोऽन्तकः९ । दाहोऽधिको भवति यत्र तृषा च
तीव्रा श्वासप्रलापविरुचिभ्रममोहपीड़ाः । मन्याहनुव्य-
थनकण्ठरुजः श्रमश्च रुग् दाहसंज्ञ१० उदित स्त्रिभवो ज्व-
रोऽयम् । गायति नृत्यति हसति प्रलपति विकृतं नि-
रीक्षतेसद्योत् । सदाहव्यथाभयार्त्तो नरस्तु चित्तभ्रमे११
ज्वरे भवति । दोषत्रयेण जनिता किल कर्णमूले तीव्रा
ज्वरे भवति तु श्वयथुर्व्यथा च । कण्ठग्रहो बधिरता
श्वसनं प्रलापः प्रस्वेदमोहदहनानि च कर्णिकाख्ये१२।
कण्ठः शूकशतावरुद्धवदतिश्वासः प्रलापोऽरुचिर्दाहो-
देहरुजा तृषापि च हनुस्तम्भः शिरार्त्तिस्तथा ।
मोहो वेपथुना सहेति सकलं लिङ्गं त्रिदोषज्वरे
यत्र स्यात् स हि कण्ठकुब्ज१३ उदितः प्राच्यैश्चिकि-
त्सकबुधैः । सन्धिगस्तेषु साध्यः स्यात् तन्द्रिकश्चित्त-
विभ्रमः । कर्णिको जिह्वकः कण्ठकुब्जः पञ्चापि कष्ट-
तः । रुग्दाहस्त्वतिकष्टेन संसाध्यस्तेषु भाषितः ।
रक्तष्ठीवी भुग्ननेत्रः शीतगात्रः प्रलापकः । अभिन्या-
सोऽन्तकश्चैते षड़साध्याः प्रकीर्त्तिताः ।" अथ तन्त्रा-
न्तरे वातोल्वणादीनां सन्निपातज्वरविशेषाणां त्रयो-
दशानां कुम्भीपाकादीनि त्रयोदश नामान्तराण्याह "कु-
म्भीपाकः प्रोर्णुनावः प्रलापी ह्यन्तर्दाहो दण्डपातोऽ-
न्तकश्च । एणीदाहश्चाथ हारिद्रसंज्ञो भेदा एते सन्नि-
पातज्वरस्य । अजघोषभूतहासौ यन्त्रापीड़श्च संन्यासः ।
संशोषी च विशेषास्तस्यैवोक्तास्त्रयोदशान्यत्र" । अथैषां
लक्षणानि "घोणाविवरभरद्बहुशोणासितलोहितं सा-
न्द्रम् । विलुठन्मस्तकमभितः कुम्भीपाकेन१ पीड़ित वि-
द्यात् । उत्क्षिप्य यः स्वमङ्गं क्षिपत्यधस्ताद्वितान्तमुत्क्र-

मिति। तं प्रोर्णुनावर जुष्टं विचिन्नकष्टं विजानीयात्। श्लेष्ममाङ्गभेदाः कम्पोद्वष्युर्वेमिर्थ्या कण्ठे। गात्रञ्च गुर्वतीव प्रलापिश्जुष्टस्य जायते लिङ्गम्। अन्तर्दाहः शैत्यं बहिः, श्वयथुररतिरपि तथा श्वासः। अङ्गमपि दग्धकल्पं सोऽन्तर्दाहा४दितः कथितः। नक्तं दिवा न निद्रामुपैति ग्लायति मूढधीर्नैमसः। उत्थाय दण्डपातोऽप्यभमातुरः सर्वतो भ्रमति"। नभसो ग्लायति आकाशात् किञ्चित् ग्रहीतुं करौ प्रसारयतीत्यर्थः। "संपूर्यते शरीरं ग्रन्थिभिरभितस्तथोदरं मरुता। श्वासातुरस्य सततं विचेतनस्यान्तकाद्दर्त्तस्य"। परिधावतीव गात्रे रुकपात्रे भुजङ्गपतङ्गहारिणगणः। वेपथुमतः सदाह-स्य शीतादाह७ज्वरार्त्तस्य"। रुकपात्रे पीडाभाजने गात्रस्य विशेषणमेतत्। "यस्यातिपीतमक्षं नयने सुतरां मल-स्तनोऽप्यधिकम्। दाहोऽतिशीतता बहिरस्य स हारि-द्रकोद वेयः। अगलकसमानगन्धः स्वाम्बरजावाभ्रिरस्य गलरन्ध्रः। अजघोष८ सन्निपातादाताभ्राचः पुमान् भवति। शब्दादीनधिगच्छति न स्वान्वियान् यदि न्द्रियग्रामैः। हसति प्रलपति पश्यं स ज्ञेयो भूतहा-सा१०र्त्तः। येन सुसुर्ज्ज्वरवेगात् यन्त्रे णेवावपीड्यते गात्रम्। रक्तं पीतञ्च वमेद्दुयन्त्रापीड़ः११ स विज्ञेयः। अतिसरति वमति कूजति मालात्यभितश्चिरं नरः क्षि-पति। सन्न्यास।१२सन्निपाते प्रलपत्युत्याजिनग्नलो भवति। सेचकवपुरतिमेचकलोचनयुगलो मलोत्सर्गात्। संगोविषि।१३सित पिङ्कामण्डलयुक्तो ज्वरे नरो भवति। नारायण एव भिषक् भेषजमेतेषु जाङ्गलीनीरम्। नैरुज्यहेतुरेको नित्यं मृत्युञ्जयो ध्येयः।" अथासाध्यस्य सन्निपातज्वरस्य लक्षणमाह "सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः। शोथः संजायते तेन कश्चिदेव प्रमुच्यते।" सुदारुणः मारकत्वात् यतस्तेन शोथेन कश्चिदेव प्रमुच्यते कोऽपि जीवितं लभति इत्यर्थः। "सन्निपातज्वरान् कष्टानसाध्यानपरे जगुः। दोषे प्रवृद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः। सन्निपात ज्वरोऽसाध्यः कष्टसाध्यस्ततोऽन्यथा।" सर्वाणि दाहशीतादीनि सम्पूर्णानि आतुरगतानि प्रोक्तानि याव-ल्लक्षणानि यस्य सः। ततोऽन्यथा दोषे पक्वे अग्नौ दीप्ते स्वल्पलक्षणकः कष्टसाध्य इत्यर्थः।

**सन्निपातज्वर** पु० सन्निपातजो ज्वरः। सन्निपातशब्दोक्ते त्रिदोषजविकारजाते ज्वरे।

**सन्निपातनुद्** पु० सन्निपातं त्रिदोषजविकारं नुदति नुद-क्विप्। नेपालनिम्बे राजनि०।

**सन्निबन्धन** न० सम्यक् निबन्धनं प्रा०स०। १नानास्थानस्थवा-क्यानामेकत्र सङ्कलने २तदुपयोगिग्रन्थभेदे च। ७ब०। ३सम्यग्निबन्धनयुते त्रि० "सद्वृत्तिः सन्निबन्धनेति" माघः

**सन्निभ** त्रि० सम्+नि+भा–क। सदृशे जटा०। निभादि-वदस्य नित्यसमासता।

**सन्निवेश** पु० सम्+नि+विश-आधारे घञ्। १पुरादेर्बाह्यस्थे विहारार्थे देशे अमरः। भावे घञ्। २सम्यक्स्थितौ।

**सन्निहित** त्रि० सम्+नि+धा–क्त। १निकटस्थे "सन्निहित बुद्धिरन्तरङ्गम्" न्यायः "या याः सन्निहिता नाड्य-स्तास्ताः पुण्यतमाः स्मृताः" ति०त०। २सम्यक्स्थापिते च। भावे क्त। ३नैकट्ये न०। [त्यागे ३युक्ते ४अर्पिते च।

**सन्न्यस्त** त्रि० सम्+नि+अस–क्त। १निक्षिप्ते २कृतसम्यक्-

**सन्न्यास** पु० सम्+नि+अस–घञ्। "काम्यानां कर्मणां त्यागं सन्न्यासं कवयो विदुः" गीतोक्ते विहितकर्मणां विधानेन १सम्यक्त्यागे २तदुपयोगिचतुर्थाश्रमे आश्रमशब्दे ८४२ पृ० दृश्यम्। ३चैत्रे मासि क्षत्रियादिकर्त्तव्ये पुराणप्र-सिद्धे शिवव्रतभेदे च। "चैत्रे शिवोत्सवं कुर्य्यात् नृत्य-गीतमहोत्सवैः। स्नायात् त्रिसन्ध्यं रात्रौ च हवि-ष्याशी जितेन्द्रियः। शिवस्वरूपतां याति शिवप्रीति-करः परः। क्षत्रियादिषु यो मर्त्यो देहं संपीड्य भक्तितः। अश्वमेधफलं तस्य जायते च पदे पदे। सर्वकर्मपरित्यागी शिवोत्सवपरायणः। भक्तो जागरणं कुर्य्याद्रात्रौ नृत्य-कुतूहलैः। नानाविधैर्महावाद्यैर्नृत्यैश्च विविधैरपि। नानावेशधरैर्नृत्यैः प्रीयते शङ्करः प्रभुः। किमलभ्यं भगवति प्रसन्ने नीललोहिते। तस्मात् सर्वप्रयत्नेन तोषणीयो महेश्वरः। शङ्खशब्दं शङ्खतोयं वर्जयेत् शिवसन्निधौ। यामादुर्द्धहरिसं शस्मान्नृतवं कारदे-न्दुटा। उपोष्य सुत्वा संक्रान्त्यां व्रतमेतत् समापयेत्" ब्रह्मवैवर्त्तपु० उत्तरख० ४अ०। ४जटामांस्यां शब्दच०।

**सन्न्यासिन्** पु० सम्+नि+अस–णिनि। १सन्न्यासयुते २चतु-र्थाश्रमयुते तेषां धर्मभेदेन नामभेदो यथा

"तीर्थाश्रमवनारण्यगिरिपर्वतसागराः। सरस्वती भा-रती च पुरीति दश कीर्त्तिताः" । तेषां लक्षणानि यथा "त्रिवेणीसङ्गमे तीर्थे तत्त्वमस्यादिलक्षणे। स्नायात्त-त्त्वार्थभावेन तीर्थनामा स उच्यते। आश्रमग्रहणे प्रौढ़ आशापाशविवर्जितः। यातायातविनिर्मुक्त एतदा-

श्रमलक्षणम् २। सुरम्ये निर्झरे देशे वने वासं करोति यः। आशापाशविनिर्मुक्तो वननामा३ स उच्यते। अरण्ये संस्थितो नित्यमानन्दे नन्दने वने। त्यक्त्वा सर्वमिदं विश्वमरण्य४ लक्षणं किल। वासो गिरिवरे नित्यं गीताभ्यासे हि तत्परः। गम्भीराचलबुद्धिश्च गिरिनामा५ स उच्यते। वसेत् पर्वतमूलेषु प्रौढो यो ध्यानधारणात्। सारात्सारं विजानाति पर्वतः६ परिकीर्त्तितः। वसेत् सागरगम्भीरो न च रत्नपरिग्रहः। मर्यादाञ्च न लङ्घेत सागर७ परिकीर्त्तितः। स्वरज्ञानवशो नित्यं स्वरवादी कवीश्वर। संसारसागरे साराभिज्ञो यो हि सरस्वती ८। विद्याभारेण सम्पूर्णः सर्वभारं परित्यजेत्। दुःखभारं न जानाति भारती९ परिकीर्त्तिता। ज्ञानतत्त्वेन सम्पूर्णः पूर्णतत्त्वपदे स्थितः। परब्रह्मरतो नित्यं पुरीनामा१० स उच्यते" इति शङ्करदिग्विजये विद्यारण्यस्वामिधृतम्। ३चैत्ते कर्त्तव्यशिवव्रतकर्त्तरि च। [च

**सपक्ष** पु० समान. पक्षो यस्य। १तुल्यरूपे २निश्चितसाध्यके पक्षे

**सपक्षाकरण** न० सह पक्षेण पक्षेण सपक्षः *तथा क्रियते सपक्ष+डाच्+कृ—ल्युट्। पक्षेण सह शरवेधनरूपे अत्यन्तव्यथने। कर्मणि क्त। सपक्षाकृतः। तथा पीडिते त्रि०। [शरः।

**सपत्न** पु० सह एकार्थे पतति यतते पत—न सहस्य सः। शत्रौ

**सपत्नारि** पु० सपत्नस्य अरिरिव। (वेडवाश) वंशभेदे शब्दच०।

**सपत्नी** स्त्री समानः पतिर्यस्याः ङीप् न च। १एकभर्तृकायां स्त्रियाम् २समस्वामिकायां भूम्यादौ च। तत्र सपतिरित्यपि।

**सपदि** अव्य० सह पद्यते पद—इन् सहस्य सः। तत्क्षणे इत्यर्थे "सपदि मुकुलिताक्षीमिति" कुमारः। [र्य्यीत्।

**सपर** पूजायां कण्ड्वादि० पर०सक० सेट्। सपर्य्यति असप

**सपर्य्या** स्त्री सपर—यक् अ टाप्। पूजायाम् "सोऽहं सपर्य्याविधिभाजनेनेति" रघुः। [हिते २चतुर्थांशसहिते च।

**सपाद** त्रि० सह पादेन चरणेन चतुर्थांशेन वा। १पादस-

**सपिण्ड** त्रि० समानः पिण्डः स्वदेहारम्भकांशभेदः श्राद्धेयपिण्डो वा यस्य समानस्य सः। एकदेहारम्भदेहे ज्ञातिभेदे "असपिण्डा च या मातुरिति" स्मृतिः। ज्ञातीनाञ्च साक्षात् परम्परया अतिपरम्परया वा एकदेहारम्भत्वात्तथात्वम् मिता०। २दातृत्वभोक्तृत्वैकपिण्डयुते दायभा०। एतच्च दायग्रहणोपयोगिसापिण्ड्यमिति। सापिण्ड्यता हि विषयभेदेन त्रिविधा अशौचोपयोगिनी विवाहोपयोगिनी दायोपयोगिनी चेति। तत्र समानदेहसम्बन्धे वा सपिण्डता साऽशौचग्रहणार्थी विवाहार्था च। श्राद्धे देयपिण्डसम्बन्धात् सपिण्डता तु दायग्रहणोपयोगिनीति विवेकः। यथोक्तं शु०त० रघुनन्दनेन "मत्स्यपुराणे *लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः। पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्"। नन्वेवं भ्रात्रादिभिः सह पिण्डतल्लेपभोक्तृत्वासम्भवात् कथं सपिण्डत्वमिति चेदुच्यते तेषामपि पिण्डलेपयोः सम्बन्धोऽस्ति तथाच बौधायनः "प्रपितामहः पितामहः पिता स्वयं, सोदर्य्या भ्रातरः सवर्णायाः पुत्रः पौत्रः प्रपौत्रो वा एतानविभक्तदायादान् सपिण्डानाचक्षते। विभक्तदायादान् सकुल्यानाचक्षते सत्सु अङ्गजेषु तद्गामी ह्यर्थो भवति" इति अस्यार्थः पित्रादिपिण्डत्रयेषु सपिण्डनेन भोक्तृत्वात् पुत्रादिभिस्त्रिभिस्तत्पिण्डदानात्। यश्च जीवन् यस्य पिण्डदाता स मृतः सन् सपिण्डनेन तत् पिण्डभोक्ता एवं सति मध्यस्थितः पुरुषः पूर्वेषां जीवन् पिण्डदाता मृतः सन् तत्पिण्डभोक्ताऽपरेषां जीवतां पिण्डसम्प्रदाता भवेत्। मृतश्च तैः सह दौहित्रादिदेयपिण्डभोक्ता अतो येषामयं पिण्डदाता ये चास्य पिण्डभोक्तारस्तेऽविभक्तं पिण्डरूपं दायमश्नन्तीति अविभक्तदायादाः सपिण्डा इति। इदञ्च सपिण्डत्वं सकुल्यत्वञ्च दायग्रहणार्थम् अशौचाद्यर्थन्तु पिण्डलेपभुजामपि "लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः" इति प्रागुक्तमत्स्यपुराणात्। ब्रह्मपुराणकूर्म्मपुराणमनुलिखितवचनाच्च। पिण्डे यथापरस्परं भोक्तृत्वं तथा लेपे तुल्यन्यायात्। हारलतायां कूर्म्मपुराणम् "सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते। समानोदकभावस्तु जन्मनाम्नोरवेदने। पिता पितामहश्चैव तथैव प्रपितामहः। लेपभाजश्चतुर्थाद्याः सापिण्ड्यं साप्तपौरुषम्"। लेपभागिभ्यस्तूर्द्ध्वं यावज्जन्मनाम्नोरवेदनं यावदमुकनाम्नोऽस्मात् पूर्वपुरुषादयं जात इति विशेषः अयमस्मात् कुले जात इति सामान्यतो वा अवर्यते तावत् समानोदकत्वमिति हारलता। अत्र परवचनेनैव सापिण्ड्यसिद्धौ पूर्ववचनपुरुषे जीवत्पितृकत्वादिना अधिकपुरुषेषु पिण्डलेपसम्बन्धेऽपि सपिण्डतानिवृत्तिज्ञापनाय। सर्वदेशीयाचारोऽपि तथा"। "अथ यः खलु पिण्डान् दत्त्वैव मृतः परतश्चाप्राप्तपितृभावः स कथं सपिण्डः। एकपिण्डदातृत्वभोक्तृत्व-

लक्षणसम्बन्धाभावादिति चेत् तद्योग्यतयेति ब्रूमः। योग्यताप्रयोजकञ्च सामान्यशास्त्रविषयत्वम्। ततश्चात्यन्तवृद्धप्रपितामहावधिकाधस्तनानां षण्णां पुंसां प्रत्येकापेक्षया सप्तानामेकगोत्राणां स्वावधिपरतनानां सप्तानाञ्च सापिण्ड्यं पिण्डलेपयोर्दातृत्वभोक्तृत्वसम्बन्धादिति। स्त्रीणान्तु भर्तृसापिण्ड्येन सापिण्ड्यम् "प्रत्तानां भर्तृसापिण्ड्यमिति" वचनात्। नन्वेवं कन्यायाः कथं सपिण्डतेति चेत् आदिपुराणवचनात् त्रैपुरुषं सापिण्ड्यम्। यथा "सपिण्डता तु कन्यानां सवर्णानां त्रिपौरुषी"। अत्र कन्यानामूढानाम् "अप्रत्तानां त्रिपौरुषमिति" वशिष्ठवचनात्। तेन आत्मपञ्चमे वृद्धप्रपितामहे सापिण्ड्यं निवर्त्तते इति प्रतिपादितम्। अत एव कन्यायाः प्रपितामहभ्रात्रा तत्सन्ततिभिः सह सापिण्ड्याभावात् कन्यामरणजननयोस्तेषां सपिण्डाशौचं नास्ति किन्तु समानोदकनिमित्तमेवाशौचमिति एवं तेषामपि जननमरणयोः कन्यानामिति शूलपाणिमहामहोपाध्यायः। यत्तु कूर्मपुराणम् "अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम्। प्रत्तानां भर्तृसापिण्ड्यं प्राह देवः पितामहः" इति रत्नाकरधृतम्। तद्विवाहे पितृपक्षविषयम्। यथा विष्णुपुराणम् "सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमीम्। उद्वहेत द्विजो भार्य्यां न्यायेन विधिना नृप!" सप्तमीं पञ्चमीं त्यक्त्वेति शेषः। भर्तृसापिण्ड्यमित्यत्र साप्तपौरुषमित्यनुषज्यते। तेन भर्तृसमानसापिण्ड्यमित्यर्थः। शङ्खलिखितौ "सपिण्डता तु सर्व्वेषां गोत्रतः साप्तपौरुषी। पिण्डश्चोदकदानञ्च शौचाशौचं तदानुगम्"। गोत्रतः गोत्रैक्ये तेन मातामहकुले कदाचित् षट्पुरुषपर्य्यन्तं पिण्डसम्बन्धेऽपि न सपिण्डता। तान् सप्तपुरुषान् वा समन्तात् पिण्डादिकमनुगच्छतीति तदानुगम्। एतेन "सपिण्डता एकशरीरावयवान्वयेन भवति तथाहि पितुः शरीरावयवान्वयेन पित्रा सह एवं पितामहादिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात्। एवं मातृशरीरावयवान्वयेन भ्रात्रादिभिरिति। एवं पत्या सह पत्न्या एकशरीरारम्भकतया सापिण्ड्यम्। तथाच गर्भोपनिषदि "एतत् षाट्कौशिकं शरीरं त्रीणि पितृतः त्रीणि मातृतः अस्थिस्नायुमज्जानः पितृतः, त्वङ्मांसरुधिराणि मातृतश्चेति" तत्र तत्रावयवान्वयप्रतिपादनात्। निर्वाप्यपिण्डान्वये तु सापिण्ड्ये भ्रातृपितृव्यादिसापिण्ड्यं न स्यात्।

अतिप्रसङ्गस्तु सप्तान्यतमत्वेन प्रयोगोपाधिना निरसनीयः। यद्येवं मातामहादीनामपि मरणे सपिण्डत्वेन दशाहाशौचं प्राप्नोति, स्यादेतत् यदि मातामहादीनां मरणे "त्रिरात्रं स्यादशौचकम्" इत्यादिविशेषवचनं न स्यात्। यत्र तु विशेषवचनं नास्ति तत्र दशाहमिति मिताक्षरारत्नाकरादिमतमपास्तं लेपभाज इत्यादि वाचनिकेऽर्थे सापिण्ड्ये एकशरीरावयवान्वयरूपस्वकपोलरचितार्थानवकाशात् निर्वाप्यपिण्डसम्बन्धेन भ्रात्रादीनां सापिण्ड्यस्य मत्स्यपुराणबौधायनाभ्यां पूर्व्वमुक्तत्वात् कामधेनुहारलताकल्पतरुपारिजातकारादिभिस्तथैव व्याख्यातत्वाच्च। रेतःशोणितपरिणामरूपत्वाद्दपत्यशरीरस्य भवतु वा तथा पत्या सह पत्न्या एकशरीरारम्भकतायाः प्रत्यक्षबाधितत्वात् कथं सापिण्ड्यं प्रमातामहादीनां विशेषवचनाभावात् सपिण्डत्वेन दशाहाद्यशौचप्रसङ्गाच्च मातामहादौ सापिण्ड्यस्य लोकविरुद्धत्वाच्च। भवतु वा तथा शरीरद्वारा सापिण्ड्यं तथापि वचनात् यथासप्तान्तमेतत्त्वं तन्त्रं तथा "गोत्रतः साप्तपौरुषीति" वचनात् गोत्रैक्यमपि प्रागुक्तवचनात् कन्यायास्त्रीपौरुषम् ऊढायाश्च भर्तृसपिण्डनेन सापिण्ड्यमिति चेत् तदेतन्मतेऽपि व्यवस्थायां न क्षतिरिति अतएव सुमन्तुवचनाभिहितं यद्दशमपुरुषपर्य्यन्तमशौचं तत् सप्तमपुरुषाद्यन्तराशौचान्न्यूनं त्रिरात्रं यथा "ब्राह्मणानामेकपिण्डस्वधानामादशमाद्धर्मविच्छित्तिर्भवति आसप्तमात् अकथविच्छित्तिर्भवति आतृतीयात् स्वधाविच्छित्तिर्भवति" अन्यथा पिण्डशौचक्रियाद्युच्छेदात् ब्रह्महत्यातुल्यो भवति" अस्यार्थः। एका समाना पिण्डस्वधा येषां ते तथा यथैकोद्दिष्टस्य पिण्डे तु अनुशब्दो न युज्यते इत्यत्रानुशब्देनानुशब्दयुक्तमन्त्रो लक्ष्यते अनुयुक्तमन्त्रस्तु "ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा" इति तथा पिण्डस्वधाशब्देन पिण्डसम्बन्धिस्वधाशब्दयुक्तमन्त्रकरणकदेयजलं लक्षितम्। तथा च "ऊर्ज्जं वहन्तीरमृतं घृतं पयःकीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितॄन्" इत्यनेन पिण्डान् सिञ्चेदित्युक्तम्। ततश्च एकपिण्डस्वधानां समानोदकानामित्यर्थः। अतएव मनुः। "जन्मन्येकोदकानान्तु त्रिरात्रात् शुद्धिरिष्यते"। विष्णुपुराणे "मातृपक्षस्य पिण्डेन सम्बद्धाः ये जलेन वा" मातृपक्षस्य मातामहपक्षस्य ये जलेन सम्बद्धाः समानोदका इति" श्राद्धविवेकेऽपि व्याख्यातम्। "असम्बन्धा भवेद् या तु

पिण्डेनैवोदकेन वा” इति विवादेऽप्युक्तम्। अत्र पुत्रिकायाः पार्वणे पिण्डोदकयोः सम्बन्धात् कन्यामात्रेऽपि तद्योग्यतायाः सत्त्वात्। कन्या पिण्डोदकसम्बन्धोच्यते एतदनुसारादपि तस्याः सपिण्डता बोद्धव्या तस्मादेकपिण्डस्वधान्वितत्वेन समानोदकभावः समाख्यातः न तु दशमपर्य्यन्तं, पित्रादिजीवनादिना सापिण्ड्यसम्बन्धेऽपि सापिण्ड्यं विहितं प्रागुक्तयुक्तेः स्वधेत्यस्य तदनुपयुक्तत्वेन वैयर्थ्यापत्तेः। अपुत्रधनाधिकारस्तु सन्निहिततराभावे सप्तमपुरुषपर्य्यन्तं मृतपितृकस्य स्वधोपलक्षितश्राद्धाधिकारः पुरुषत्रयपर्य्यन्तमिति अत्र स्वधाशब्दो मन्त्रपरः पितृभक्तपरोऽपि। तथा च गुणविष्णुधृता श्रुतिः “स्वधा वै पितॄणामन्नमिति।” दशमपुरुषपर्य्यन्तं समानोदकत्वेऽपि न त्रिरात्रं किन्तु पक्षिण्यादि तथाहि उदकक्रियामधिकृत्य पारस्करः “सर्वे ज्ञातयो भावयन्ति आसप्तमाद्दशमाद्वा समानग्रामवासेन यावत् सम्बन्धमनुस्मरेयुर्वा” इति भावयन्ति निष्पादयन्ति अत्र यावत्सम्बन्धमनुस्मरेयुरेककुलजातावयमिति स्मरणं भवतीत्यनेनैव सर्वेषामुदकदाने प्राप्ते यद् आसप्तमाद्दशमादित्युक्तं तत्सन्निकर्षतारतम्येनाशौचभेदेऽप्युदककर्मसमार्थमिति। अशौचभेदस्तु सप्तमपर्य्यन्तं सपिण्डत्वाद्दशाहः। ततश्च दशमपुरुषपर्य्यन्तं त्र्यहः। तथाच विष्णुबृहस्पती। “दशाहेन सपिण्डास्तु शुध्यन्ति मृतसूतके। त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः।” ततश्चतुर्दशपुरुषपर्य्यन्तं पक्षिणी ततश्च जन्मनामस्मृतिपर्य्यन्तमेकाहः। तथाच मिताक्षराविवादचिन्तामण्योर्वृहन्मनुः। “सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते। समानोदकभावस्तु निवर्त्तेताचतुर्दशात्। जन्मनामस्मृतेरेके तत्परं गोत्रमुच्यते।” अत्र समानोदकत्वे द्विविधे प्रथमे गोतमः “पक्षिणीमसपिण्डे” परत्र हारीतः। “मातामहे त्रिरात्रं स्यादेकाहस्त्वसपिण्डके” इति। अत्रैव गोत्रजानामह्नः स्मृतमिति आवालवचनं ततः परं सर्वथा समानोदकतानिवृत्तेः। स्नानमात्रमिति “स्नात्वा शुद्ध्यन्ति गोत्रजाः” इति बृहस्पत्युक्तत्वादिति” ।

तथा च मोक्षक्ये सति पिण्डलेपयोर्दातृत्वभोक्तृत्वान्यतरवत्त्वम् अशौचसापिण्ड्यम्। साक्षात्परम्परया सप्तमपर्य्यन्तदेहसम्बन्धवत्त्वं विवाहसापिण्ड्यं त्रिपुरुषपर्य्यन्तं देयपिण्डदातृत्वभोक्तृत्वान्यतरवत्त्वं दायपक्षे सापिण्ड्यमिति विवेकः मिता० मातृसपत्न्या अपि सापिण्ड्यं स्वीकृत्य धनाधिकारोऽभिहितः तन्मते समानदेहसम्बन्धयोग्यतयैव सापिण्ड्यात्। दायभागमते तु श्राद्धे देयपिण्डदातृत्वभोक्तृत्वाभावात् न तस्याः सापिण्ड्यं तद्योग्यत्वेऽपि स्त्रीमात्रस्य विशेषवचनाभावे धनाधिकारपर्युदासात् इति विवेकः एवं स्नुषाया अपि।

**सपिण्डीकरण** न० सह पिण्डेन सपिण्डः ततः अभूततद्भावे च्वि+कृ-ल्युट्। प्रेतत्वविमोचनाय प्रेतोद्देशेन कर्त्तव्ये पित्रादिपिण्डसमन्वयकरणरूपे श्राद्धभेदे सपिण्डीकरणप्रकारस्तत्कालादिकं श्रा०त० निरूपितं यथा “अथ सपिण्डीकरणम्। तत्र गोभिलः “पूर्णे संवत्सरे षण्मासे त्रिपक्षे यदहर्वा वृद्धिरापद्येत तदहश्चत्वार्युदकपात्राणि सतिलगन्धपुष्पोदकानि पूरयित्वा त्रीणि पितॄणामेकं प्रेतस्य प्रेतपात्रं पितृपात्रेष्वासिञ्चति। ये समानाः समनसः पितरो यमराज्ये तेषां लोकाः स्वधा नमो यज्ञो देवेषु कल्पताम्। ये समानाः समनसो जीवाजीवेषु मामकाः। तेषां श्रीर्मयि कल्पतामस्मिन् लोके शतं समाः” इति एतेनैव पिण्डो व्याख्यातः” इति। पूर्णे संवत्सरे इति मुख्यः कल्पः। तदशक्तौ नवमो मासः “संवत्सरान्ते विज्ञेयं नवमासमित्येके” इति पैठीनसिवचनात्। तदशक्तौ षष्ठो मासः। तत्राप्यशक्तौ त्रिपक्षः तत्राप्यशक्तौ अशौचापगमे प्रथममासस्य द्वादशभिर्दिनैर्द्वादशमासिकानि श्राद्धानि निर्वर्त्त्य त्रयोदशाहः सपिण्डीकरणकालः शूद्रस्य द्वादशाहो न तु त्रयोदशाह एव “मासिकार्थवत् द्वादशाहश्राद्धं कृत्वा त्रयोदशेऽह्नि वा तत्कुर्यान्मन्त्रवर्ज्जं हि शूद्राणां द्वादशेऽह्नीति” विष्णुवचनात्। मासिकार्थवदिति मासिकार्थो मासि मासि क्रियमाणश्राद्धप्रयोजनं प्रेताप्यायनादि तद्युक्तं द्वादशाहक्रियमाणश्राद्धमित्यर्थः। यत्र त्वेकादशमासाभ्यन्तरेऽधिमासपातस्तत्र त्रयोदशसु दिनेषु त्रयोदश मासिकानि कृत्वा चतुर्दशेऽह्नि सपिण्डनं कार्य्यमिति “संवत्सराभ्यन्तरे यद्यधिमासो भवति तदा मासिकार्थं दिनमेकं वर्द्धयेत्” इति विष्णुवाक्यात् शूद्रस्य त्रयोदश दिनेषु त्रयोदश मासिकानि त्रयोदशेऽह्नि सपिण्डनं दृष्टपरिकल्पनान्यायात्। एवञ्च वृद्धिमत्त्वे न दिनवृद्धिरिति मिश्रोक्तं हेयम्। तन्न विष्णुसूत्रे दिनमेकं वर्द्धयेदिति श्रुतेः। श्राद्धाधिक्यमाह शातातपः “संवत्सरस्य मध्ये तु यदि स्यादधिमासकः।

तदा त्रयोदशे श्राद्धं कार्य्यं न्तदधिकं भवेत्"। तत्राप्यशक्तौ प्रथममासस्यैकाह एव द्वादशमासिकसहितसपिण्डीकरणकालः। "मुख्यं श्राद्धं मासिमासि अपर्य्याप्तावृतु प्रति। द्वादशाहेन वा कुर्य्यादेकाहे द्वादशाथ वा" इति मरीचिवचनात्। अपर्य्याप्तौ अशक्तौ ऋतुमासद्वयम्। अत्र कल्पे षण्मासिकदिने पञ्चममासिकं कृत्वा प्रथमषाण्मासिकं कार्य्यं तदानुत्कर्षन्यायात्। न तु तत् पूर्वं षाण्मासिकं व्युत्क्रमापत्तेर्न च पञ्चममासिकमपि पूर्वदिने कृततिथ्यभावात् एवमेव वाचस्पतिमिश्रः। अपकर्षनिमित्तमाह व्याघ्रः "आनन्त्यात् कुलधर्माणां पुंसाञ्चैवायुषः क्षयात्। अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते"। एतच्च द्वादशाहपदं शावाशौचान्ततृतीयदिनमात्रपरमिति प्राचीनमैथिलाः, अजहत्स्वार्थलक्षणया स्वजात्युक्ताशौचान्ततृतीयदिनमात्रोपलक्षकमिति श्राद्धप्रदीपश्राद्धचिन्तामणी। तद्द्वयमप्ययुक्तं "द्वादशाहेन वा कुर्य्यात्" इति मरीचिवचन "द्वादशाहे श्राद्धं कृत्वा त्रयोदशेऽह्नि वा कुर्य्यात्" इति विष्णुवचनाभ्यामेकवाक्यतया द्वादशदिनपरत्वात्। कुलधर्माणामिति कुलधर्मज्योतिरागमादिविघ्नानन्तर्य्याविनाशपरत्वमयोलक्ष्यते क्वचिद्देशगमनादिभिर्निमित्तैरशौचापगमे द्वादश दिनानि षोड़शश्राद्धापकर्षकाल इति स्मृत्युपाध्यायव्याख्यानात् मरीचिनैव"एकाहे द्वादशाथ वेति" सामान्यत एव एकाहविधानाच्च। अतएव एकाहापेक्षया प्राशस्त्याभिधानमपि सङ्गच्छते अतएव प्रथममासस्य एकाह एव द्वादशमासिकसहितसपिण्डीकरणकाल इति श्राद्धविवेकः। अत्र यानि त्वकाहकर्त्तव्यतया द्वादशमासिकश्राद्धान्युक्तानि तानि शूद्रेणापि आद्यमासिकदिन एव कार्य्याणि तत्राद्यमासिकं कृत्वा तत्परदिने एकादश मासिकानीति श्रेयम्। एतच्च तेषामपकर्षे तन्मध्ये तदन्तकाले च कर्त्तव्यतया षण्मासिकद्वयसपिण्डीकरणापकर्षः सिद्ध्यतीति कृष्णमिश्रोक्तम्। अटष्टवां वृद्धिरिति वृद्धिशब्दस्त्र पुंसवनादि। आपद्येत आसन्ना भवति तद्दिनेऽपि सपिण्डीकरणम्। तथाहि "प्रागावर्त्तनादह्नः कालं विद्यात्" इति गोभिलसूत्रस्थलेण पुंसवनादिकस्य षष्ठेऽर्थमङ्गयाभ्यन्तरे विधानात् सपिण्डीकरणस्य चापराह्ने विधानात्तयोः कालयोरबाधाय वृद्धिपूर्वदिने अपकर्ष। ननु सपिण्डीकरणस्यापराह्णिकत्वे किं प्रमाणमिति चेत् "अपराह्णे तु पैतृकम्" इत्युत्सर्गवचनम्।

किञ्च "यद्यप्यदन्तकः पुत्रा पैतृमत्ति सदा च तम्। अग्नीन्द्रेश्वरसाधर्म्यात्तस्य चोऽत्र विधीयते" इति छन्दोगपरिशिष्टवचने यथा बहूनामनुरोधात्तस्य लघवर्नैकानुरोधात् पैत्तकः "विहह्धर्मसमवाये भूयसां स्यात् सधर्मकत्वम्" इति जैमिनिसूत्रात्। तद्वदत्रापि बहुदैवताकपार्वणानुरोधात्"एकोद्दिष्टविधानेन कार्यन्तदपि पार्थिव!" इति विष्णुपुराणीयमेकोद्दिष्टांशे तदितिकर्त्तव्यतापरं न तु तत्कालपरम्। तथा च परिशिष्टप्रकाशधृतम् "श्राद्धद्वयमुपक्रम्य कुर्वीत सहपिण्डताम्। तयोः पार्वणवत् पूर्वमेकोद्दिष्टमथापरम्" इति। एतच्च युक्तितत्त्व लक्षितसुमन्तकोपाख्यानवत् इति निश्चित्य कृतं सपिण्डीकरणं तदानीं विघ्नेन वृद्धाभावेऽपि वृद्ध्यारम्भकालान्तरं पूर्णसंवत्सरं वा प्राप्य पितृत्वप्रापकमिति न सपिण्डनान्तरम्। अत्र "अकर्त्तोति निश्चित्य दाता विप्रान्निमन्त्रयेत्।" इतिवद्विचित्येति उत्कटकोटिकसम्भावनोपलक्षणं भविष्यद्विमित्तस्य कर्मणः प्रत्यक्षहेतुत्वात्। एवञ्च वृद्धिश्राद्धं यदर्थं कृतं तत् कर्म चेत् विघ्नात्तद्दिने न क्रियते तदा दिनान्तरे तत् कर्मणि क्रियमाणे तदङ्गत्वात् पुनर्वृद्धिश्राद्धं कर्त्तव्यमेव। "प्रधानस्याक्रिया यत्र साङ्गं तत्क्रियते पुनः। तदङ्गस्याक्रियायान्तु नावृत्तिर्न च तत्क्रिया" इति छन्दोगपरिशिष्टेन साङ्गकरणाभिधानात्। हेमाद्रिधृतं "पूर्णे संवत्सरे श्राद्धं षोड़शं परिकीर्त्तितम्। तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते।" अत्र पूर्णसंवत्सरक्रियमाणश्राद्धाद्य यथोभयनिर्वाहः तथापकृष्टसपिण्डनादप्युभयनिर्वाहात् पूर्णसंवत्सरे आब्दिकान्तरं कार्य्यम्"। तत्रायं विशेषः तत्रोक्तो यथा "एतच्च पार्वणे प्रागुक्तवचनेन शेषद्रव्येण पिण्डविधानात् तदितिकर्त्तव्यतावपि सपिण्डीकरणे तन्नियमात् यद्यपि शेषाभावेऽपि पिण्डनिर्वृत्तिरायाति तथापि "यथोक्तवस्त्वप्राप्तौ ग्राह्यं तदनुकारि यत्। यवानामिव गोधूमा व्रीहीणामिव शालयः" इति छन्दोगपरिशिष्टवचनात् "मुख्याभावेऽपि प्रतिनिधिः शास्त्रार्थः" इति न्यायाच्च मध्वाद्यभावे गुड़ादिग्रहणवत् द्रव्यान्तरेणापि पिण्डदानं शेषद्रव्यनियमस्तु तत्सम्भवे द्रव्यान्तरत्यागाय। अन्यथा तदङ्गाभावे कर्मवैगुण्यं स्यात् "सहपिण्डक्रियायाम्" इति मनूक्तेः पिण्डस्य प्रेतपिण्डेन सह मिश्रीकरणं यत्तेति सपिण्डीकरणसमाख्यासिद्धत्वं सुतरां तत्र

तथाचरणं प्रतिपत्तिरूपकर्माङ्ग एव प्रतिपाद्याभावे तन्निवृत्तिः पशुयागे “लोहितं निरस्यति स्रुवाच्चिरस्यति” इत्यादावुक्ता । अतएव यज्ञवास्तुरूपप्रतिपत्तियागेऽपि यज्ञो यत्र वसति इति यज्ञवास्तुसमाख्यानुरोधेनाज्यनाशविनाशेऽपि कुशान्तरप्रतिनिधिर्भट्टनारायणेगोभिलभाष्ये उक्तः “प्राक् स्विष्टकृत आवापः” इति गोभिलसूत्रस्य व्याख्यानेऽपि आउप्यते इत्यावापः प्रधानहोमः स तु स्विष्टकृद्धोमात् प्राक् न पश्चादित्यर्थः । एवञ्च मुख्यहोमे त्वकृते यदि चरुर्नष्टो दुष्टो वा भवति तदान्यः पाच्यः मुख्ये कृते चेन्नाशदुष्टौ तदाज्येनैव स्विष्टकृद्धोम इति सरला । एतेन शेषनाशे पिण्डनिवृत्तिरिति वाचस्पतिमिश्रोक्तं हेयम् । एतेनार्घ्यदानविधानेन पिण्डमिश्रणप्रकारो व्याख्यात उक्तः” ।

“पितरि पूर्वं मृते तद्वर्षाभ्यन्तरे पितामहे प्रपितामहे मृते यथा कर्त्तव्यं तथाह छन्दोगपरिशिष्टे कात्यायनः “पितुः सपिण्डनां कृत्वा कुर्य्यान्मासानुमासिकम् । असंस्कृतेन संस्कार्य्यौ पूर्व्वौ पौत्रप्रपौत्रकैः । पितरं तत्र संस्कुर्य्यादिति कात्यायनोऽब्रवीत् । पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा । पितामहेन पितरं कुर्य्यादिति विनिश्चयः” । पितुः सपिण्डनां कृत्वा प्रेतीभूतयोरपि पितामहप्रपितामहयोः स्वस्वे प्रतिमासविहितं पार्व्वणं पितृवृद्धप्रपितामहातिवृद्धप्रपितामहानां कर्त्तव्यं न तु तयोः सपिण्डीकरणापेक्षा कार्य्या ननु सपिण्डनेनासंस्कृताभ्यां सह पिण्डैः कथं सपिण्डनाख्यसंस्कारस्तस्मात्तदर्थं तयोः सपिण्डीकरणमपकर्षणीयं पितुरेव वा सपिण्डनमुत्कर्षणीयमित्यत आह असंस्कृतेनेति । उत्कर्षापकर्षौ न कार्य्यावित्यनेन वचनेनोक्तं कथमसंस्कृतेन सह संस्कार इत्यत आह पापिष्ठमपीति पापिष्ठमकृतसपिण्डीकरणं शुद्धेन कृतसपिण्डीकरणेन पितामहेन पापकृता अकृतसपिण्डीकरणेनापि शुद्धं कुर्य्यादिति शास्त्रनिश्चयः । अतो वचनबलाददोष इति तात्पर्य्यम् । अत्र तु प्रेतीभूतपितामहेन पितुः सपिण्डने पितामहैकोद्दिष्टमेव । “असपिण्डिकृतं प्रेतमेकोद्दिष्टेन तर्पयेत्” इति प्रागुक्तजाबालवचनात् । एवमन्यत्रापि बोध्यं वृद्धप्रपितामहस्य प्रेतत्वे तेन सह न कार्य्यमिति तात्पर्य्यम् । अत्र मातुः सपिण्डने श्वश्र्वार्य्यश्वशुरयोः पित्रोः कुर्य्यादित्याख्यातौ । तथा च गार्ग्यः “पतिनैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः । सा मृता हि मृतैकत्वं कुर्य्यैरन्वयन् पितृन् । श्वशुरश्चापतो यथाविद्धुरःपश्चादन्नक्रिया । पुत्रैर्दौहित्रैश्च सा कार्य्या मातुरभ्युदयार्थिभिः” । अन्तरवन्नीत्यर्थे अन्तरयन्निति लिङ्गव्यत्ययेन पुंस्त्वमिति हलायुधः । परावचनं गोभिलश्राद्धसूत्रभाष्यकृतापि लिखितम् । अतएव प्रव्रजिते पतिते वा पितरि मृतेऽपि न पितामह्यादिभिर्मातुः सपिण्डीकरणं किन्तु पितामह्यादिभिरेव । “स्वेन भर्त्रा सहैवास्याः सपिण्डीकरणं स्त्रियाः । एकत्वं सा गता यस्मात्तस्मात्तद्धर्मिनं व्रतैः । तस्मिन् सति सुताः कुर्य्युः पितामह्या सहैव तु” । इत्यत्र तस्मिन् सतीति श्राद्धानर्हभर्त्तुपलक्षणम् । अतएव “तस्याश्चैव तु जीवन्त्यां तस्याः श्वश्र्वेति निश्चयः” इति लघुहारीतेन श्वश्रूजीवने तस्याः श्वश्र्वोक्तं न तु श्वशुरेणेति कश्चिदप्युक्तम् । एवं पितामह्यादिभिर्मातुः सपिण्डीकरणेऽपि श्वश्रूनैव “ये चात्र त्वामनुयांश्च त्वमनु तस्यै ते स्वधा” इति मन्त्रो न पाठ्यः मन्त्रलिङ्गविरोधात् अतएव श्राद्धविवेके मातृपक्षे श्रीदत्तादिभिर्मन्त्रान्तरं लिखितं न तु ये चात्र त्वामिति वस्तुतस्तु श्राद्धविवेके छन्दोगानां मातृपक्ष एव नास्तीति वक्ष्यते” ।

लघुहारीतः “सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश । पृथङ्नैव सुताः कुर्य्युः पृथग्द्रव्या अपि क्वचित् । प्रेतसंस्कारकर्म्माणि यानि श्राद्धानि षोडश । यथाकालन्तु कार्य्याणि नान्यथा मुच्यते ततः” । पृथग्द्रव्या अपि विभक्तधना अपि पृथक् न कुर्य्युः सुतरामपृथग्धनाः पृथक् न कुर्य्युः किन्त्वपृथक् कुर्य्युः अत्र विशेषयति मरीचिः । “मृते पितरि पुत्रेण क्रिया कार्य्या विधानतः । बहवः स्युर्यदा पुत्राः पितुरेकत्रवासिनः । सर्व्वेषान्तु मतं कृत्वा ज्येष्ठेनैव तु यत् कृतम् । द्रव्येण चाविभक्तेन सर्व्वैरेव कृतं भवेत्” । पुत्रेणेत्यविशेषात् सर्व्वेषामधिकारे प्राप्ते ज्येष्ठस्य साक्षात् कर्त्तृतामाह बहव इति । ज्येष्ठेनापि सर्व्वेषां भ्रातॄणां मतकरणेनैव करणं भवतु इति मतं ज्ञानं कृत्वा विभक्तत्वे द्रव्यसंश्लेषेण च कृतं कर्म्म सर्व्वैरेव कृतमेव भवेत् । तदानीं द्रव्यासंश्लेषेण च तस्मात् द्रव्यं प्राप्तव्यमिति कृत्वा कर्त्तव्यम् । यदि तेन तत्र परिशुध्यते तदा स ऋणी भवति प्रत्यवायी च भवतीति । न तु तेन श्राद्धान्तरं कर्त्तव्यमिति श्राद्धविवेकोक्तं युक्तम् । “पृथङ्नैव सुताः कुर्य्युरित्यनेन पृथक्करणस्य पर्य्युदस्तत्वेनानधिकारात् । यथाकालमिति अशौचान्तद्वितीयदिनद्वादशमासमृततिथि-

ष्येकादृष्ट्यनयमासद्वितीयसंवत्सरेषु। न च विधान-सामर्थ्यादेव तत्तत्कालप्राप्तेरनर्थकमिदमिति वाच्यम् तत्तत्कालानां द्वादशाहाद्यपेक्षया प्राधान्यबोधनार्थत्वात् अत्र "आनन्त्यात् कुलधर्माणां पुंसाञ्चैवायुषः क्षयात्। अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते" इति व्याघ्रवचनोक्तप्रशस्त इत्यनेन कुलाचारज्योतिःशास्त्रादिप्राप्तकर्तिमरणराष्ट्रोपप्लवादिस्तेच्छदेशादिगमनानुसारादेव सपिण्डीकरणापकर्षे द्वादशाहापेक्षया प्रागुक्तनवममासादिगौणकालपरिग्रहः। अत वा यथाकालमिलादेर्मदृष्टौ वृद्धिरापद्येतेत्यनेनावश्यकनामकरणादिवृद्ध्यर्थमेवापकर्षो न त्वनावश्यकेष्टपूर्त्ताद्यर्थापकर्षः कार्य्यं इति तात्पर्य्यम्। अतएव लघुहारीतेन "तथैव कार्य्यं यत् कर्म्म वत्सरात् प्रथमाद्दते" इत्यनेन काम्यस्यापकर्षनिमित्तता नाक्षील्युक्तम्। यदि त्वावश्यकवृद्धिनिमित्तेनापकर्षः कृतस्तदा इष्टापूर्त्तादि काम्यं वत्सराभ्यन्तरेऽपि कर्त्तव्यमिति श्राद्धविवेकोऽप्येवं यद्यपि गोभिलसूत्रादौ सपिण्डीकरणस्यैवापकर्षः प्रागुक्तस्तथापि सपिण्डीकरणापकर्षे तत्पूर्वकर्त्तव्यमासिकानामपि तदादितदन्त्यायादपकर्षः। "सपिण्डीकरणान्ता तु ज्ञेया प्रेतक्रिया बुधैः" इति शातातपवचने प्रेतक्रियायाः सपिण्डीकरणान्तत्वं प्रतीयते। अत्र वृद्धिनिमित्तं विना सपिण्डनापकर्षे कृते पूर्णसंवत्सरकालं प्राप्य प्रेतत्वपरीहारमाह विष्णुधर्मोत्तरम् "कृते सपिण्डीकरणे नरः संवत्सरात् परम्। प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते" वृद्धिनिमित्तकसपिण्डीकरणापकर्षे कृते तत्क्षणादेव प्रेतत्वपरीहारः तदर्थत्वापकर्षात् एतद्वान्यनिमित्तापकर्षे वृद्धिकालं प्राप्य प्रेतत्वपरीहारः तत्कालस्य पूर्णसंवत्सरकालतुल्यत्वात्। "अर्वाक् संवत्सरात् वृद्धौ पूर्णे संवत्सरेऽपि वा। ये सपिण्डीकृताः प्रेता न तेषान्तु पृथक्क्रिया" इति शातातपवचनात्।

**सपिण्डीकृत** त्रि० सह पिण्डैः पित्रादिपिण्डैः सपिण्डः ततः च्वि-कृ-कर्म्मणि क्त। यदुद्देशेन सपिण्डीकरणं श्राद्धं कृतं तस्मिन् मृते जने "ये सपिण्डीकृताः प्रेताः" इति शाता० स्मृतिः। [घोषातकीवृक्षे राजनि०।

**सपीतक** पु० सह समानः पीतकेन सदृश्य यः। राज-

**सपीति** स्त्री पा-क्तिन् पीतिः पानम् सह एकत्र पीतिः। ज्ञात्यादीनां सह भोजने शब्दर०। [तकौवृक्षे राजनि०।

**सपीतिका** स्त्री सह पीतेन कप् अत इत्वम्। हस्तिघोषा-

**सप्तक** न० सप्तानामवयवम् कन्। १सप्तसङ्ख्यायाम्। सप्त प्रमाणमस्य कन्। २सप्तसङ्ख्यान्विते त्रि०। पूरणे कन्। ३सप्तानां पूरणे च। [स्वायाम् अमरः।

**सप्तकी** स्त्री सप्तभिः स्वरैरिव कायति शब्दायते कै-क। मे-

**सप्तचत्वारिंशत्** स्त्री सप्ताधिका चत्वारिंशत् शाक० (सातचल्लिश) १सङ्ख्यायां २तत्संख्यान्विते च। एवं सप्तदशादयः सप्ताधिकतत्तत्संख्यार्या तत्संख्यान्विते च। पूरणे डट्। सप्तचत्वारिंश तत्तत्संख्यापूरणे त्रि० स्त्रियां ङीप् एवं सप्तदशादयोऽपि तत्पूरणे एवं तमप् सप्तचत्वारिंशत्तम तत्पूरणे त्रि० स्त्रियां टाप्।

**सप्तच्छद** पु० सप्त सप्त छदाः प्रतिपत्त्रम् यस्य वृत्तौ संख्याशब्दस्य वीप्सार्थता भाष्योक्ता। (छातिम) वृक्षे राजनि०।

**सप्तजिह्व** पु० सप्त जिह्वा इव आस्वादसाधनानि अर्चींषो यस्य। वह्नौ त्रिका०। "काली कराली च मनोजवा च सुलोहिता चैव सुधूम्रवर्णा। उग्रा प्रदीप्ता च प्रगीटयोनेः सप्तैव लोलाः कथितास्तु जिह्वाः" इत्युक्तानां सप्तानामग्निजिह्वानामेव तच्छिह्वात्वमुक्तम्। वह्निजिह्वानां वर्णभेदः अवस्थानदिग्भेदश्च गणेशविमर्शिन्यां दर्शितो यथा "हिरण्या तप्तहेमाभा त्र्यक्षपार्श्वेर्दिशि स्थिता। वैदूर्य्यवर्णा कनका प्राच्यां दिशि समाश्रिता। तरुणादित्यसङ्काशा रक्ता जिह्वाग्निसंस्थिता। कृष्णा नीलाभ्रसङ्काशा नैरृत्यां दिशि संस्थिता। अतिरक्ता जवाभासा वायव्यां दिशि संस्थिता। बहुरूपा तथा ख्याता दक्षिणोत्तरसंस्थिता"।

**सप्तज्वाल** पु० सप्त कालीप्रादयः ज्वाला यस्य। १वह्नौ हेमच०। २सप्तार्चिरादयोऽप्यत्र अमरः। [वह्नौ अमरः।

**सप्ततन्तु** सप्तभिः भूरादिभिर्व्याहृतिभिस्तन्यते तन-तुन्।

**सप्तति** स्त्री सप्तगुणिता दशतिः नि०। (सत्तर) १संख्यायां २तत्संख्यान्विते च। ततःपूरणे डट्। सप्तत तत्संख्यापूरणे त्रि० स्त्रियां ङीप्।

**सप्ततितम** त्रि० सप्ततेः पूरणः तमप्। येन सप्ततिसंख्या पूर्य्यते तस्मिन् अर्थे स्त्रियां टाप्।

**सप्तद्वीपा** स्त्री सप्त जम्बूप्रभृतयोद्वीपाः यस्याः। जम्बूप्रभृतिसप्तद्वीपयुतायां पृथिव्याम्। जम्बूद्वीपशब्दे ३०४३पृ० दृश्यम्।

**सप्तधा** अव्य० सप्तन्+प्रकारे धाच्। सप्तप्रकारे।

**सप्तधातु** पु० ब०व० सप्तगुणिता धातवः। देहस्थेषु "रसास्रमांसमेदोऽस्थिमज्जानः शुक्रसंयुताः। शरीरस्था इमे ज्ञेयाः पण्डितैः सप्त धातवः" इत्युक्तेषु रसादिषु धातुषु राजनि०।

**सप्तन्** पु० त्रि० । सप—तनिन् । (सात) १संख्यान्विते २तत्सं-
ख्यायां महाभाष्यम् । [पृ० दृश्यम् ।

**सप्तनाड़ीचक्र** न० वृष्टिज्ञानार्थे चक्रभेदे चक्रशब्दे २८४२

**सप्तनामा** स्त्री सप्त नामानि यस्याः डाप् । आदित्यभक्तायाम् राजनि० ।

[राजनि० । २सप्तच्छदवृक्षे च ।

**सप्तपत्र** पु० सप्त सप्त पत्राणि प्रतिपत्रं यस्य । १मुद्गरवृक्षे

**सप्तपदी** स्त्री सप्तानां पदानां समाहारः ङीप् । विवाह-
काले मण्डलिकासु मन्त्रैः सप्तसु पदेषु । तत्प्रकारो
भवदेवभट्टोक्तो यथा "ततो जामाता प्रागुदीच्यां गत्वा वधूं
सप्तभिर्मन्त्रैः सप्तसु मण्डलिकासु सप्त पदानि नयेत् ।
वध्वा दक्षिणपादं नीत्वा पश्चात् वामपादं मण्डलिकां
नयेत् । जामाता च वधूं ब्रूयात् वामेन पादेन दक्षिणं
पादमाक्रमयेति" इत्यादि । अतएव कर्मणो विवाहनिष्ठा-
करत्वमुक्तं मनुना "पाणिग्रहणिकामन्त्रा नियतं दार-
लक्षणम् । तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे" ।

**सप्तपर्ण** पु० सप्त सप्त पर्णान्यस्य प्रतिपर्वम् । (छातिम) वृक्षे
अमरः । "सप्तपर्णो व्रणश्लेष्मवातकुष्ठास्रजन्तुजित् । दी-
पनः श्वासगुल्मघ्नः स्निग्धोष्णस्तुवरः सरः" भावप्र०
तद्गुणा उक्ताः । २लज्जालुलतायां स्त्री रत्नमा०ङीप् ।
"द्राक्षादाडिमखर्जूरकदलीनाञ्च सप्तकरम् । बालाचूर्ण
समध्वाज्यं सप्तपर्णमुदाहृतम्" शब्दच० उक्ते ३खा-
द्यभेदे न० ।

**सप्तपाताल** न० समाहारद्विगुः पातादि० । "अतलं वितल
ञ्चैव नितलञ्च गभस्तिमत् । महातलञ्च सुतलं पातालं
सप्त कीर्त्तितम्" इत्युक्तेषु सप्तसु भूमेरधःस्थलोकेषु ।

**सप्तप्रकृतिविकृति** स्त्री ब०व०सप्तसंख्याताः प्रकृतिविकृतयः ।
सांख्यसिद्धे महदहङ्कारपञ्चतन्मात्ररूपभूतहेतुशब्दादि-
तन्मात्रात्मके पदार्थसप्तके "महदाद्याः प्रकृतिविकृतयः
सप्त" इति सांख्यकारिका । षोडशकपदार्थहेतुत्वात् प्रकृ
तित्वम् प्रकृतिकार्य्यत्वाच्च विकृतित्वमासाम् ।

**सप्तभद्र** पु० सप्तसु स्थानेषु भद्रमस्य । शिरीषवृक्षे शब्दच० ।

**सप्तम** त्रि०सप्तानां पूरणः मट् । येन सप्तसंख्या पूर्य्यते तस्मि-
न्नर्थे स्त्रियां ङीप् । सा च चन्द्रस्य सप्तमकलाया ह्रा-
सवृद्धिरूपायां तिथौ च तिथिशब्दे ३२६१पृ० दृश्यम् ।

**सप्तरक्त** पु० सप्त रक्तानि प्रशस्तान्यस्य । "पाणिपादतले रक्ते
नेत्रान्तरनखानि च । तालुकाधरजिह्वाश्च प्रशस्ता सप्त
रक्तता" इत्युक्तस्थानेषु रक्ततावति जने ।

**सप्तर्षि** पु० ब०व० । सप्त ऋषयः संज्ञात्वात् कर्म० । "मरीचि-
रत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः । वशिष्ठश्च महा-
भाग ! सप्तैते ब्रह्मणः सुताः" इत्युक्तेषु सप्तसु ऋषिषु ।
मन्वन्तरभेदे तेषां नामभेदा ऋषिशब्दे उक्ता १४५२ पृ०
दृश्याः ।

**सप्तर्षिमण्डल** त्रि० ६त० । आकाशे नित्यं ध्रुवनक्षत्रपरि-
भ्रमके नक्षत्रसप्तकात्मके नक्षत्रमण्डलभेदे "सप्तर्षिमण्डलं
तस्मादुदयाते सर्वकोपरीति" पुराणम् । तच्चारादि
ऋषिशब्दे १४५२ पृ० दृश्यम् ।

**सप्तला** स्त्री सप्तधा लाति ला—क । १नवमालिकायाम् अमरः
२चर्मकषायां ३गुञ्जायां ४पाटलायाञ्च मेदि० ।

**सप्तशती** स्त्री सप्तानां शतानां समाहारः । मार्कण्डेयपुरा-
णान्तर्गतसप्तशतमन्त्रसमुदायरूपे देवीमाहात्म्यबोधके त्रयो-
दशाध्यायात्मके ग्रन्थभेदे तन्मन्त्रविभागः चण्डीशब्दे
२८९५ पृ० दृश्यः । "मध्ये सप्तशतीं जपेदिति"
तत्र दर्शितवाक्यम् ।

**सप्तशलाक** पु० सप्त शलाकाकारा रेखा यत्र । ज्योतिषोक्ते
विवाहादौ वर्ज्यदोषसूचके सप्तशलाकाकारितचक्रभेदे
चक्रशब्दे २८२०पृ०दृश्यम् । उपयमशब्दे १२६२पृ०दृश्यम् ।

**सप्तशिरा** स्त्री सप्त शिरा यस्याः । ताम्बूलवल्ल्यां राजनि० ।

**सप्तसप्ति** पु० सप्त सप्तयोऽश्वा यस्य । १सूर्य्ये हेमच० २अर्क-
वृक्षे च । सप्ताश्वादयोऽप्यत्र ।

**सप्तसागर** पु० ब०व० । सप्तसंख्याताः सागराः । "लवणेक्षु-
सुरासर्पिर्दधिदुग्धजलात्मकाः" इत्युक्तेषु सप्तसु सागरेषु
सप्त घृतादिकल्पिताः सागरा इव देयपदार्थाश्च अत्र कप् ।
मत्स्यपुराणोक्ते स्वनामख्याते महादानभेदे मत्स्यपु०
२८६अ० तद्विधानं दृश्यम् ।

**सप्तांशु** पु० सप्त अंशवोज्वाला यस्य । सप्तजिह्वशब्दे "काली-
कराली चेत्याद्युक्तसप्तज्वालायुते वह्नौ । [शब्दे जटा० ।

**सप्तांशुपुङ्गव** पु० सप्तभिरंशुभिः पुङ्गव इव श्रेष्ठत्वात् । शनि-

**सप्तार्चिस्** पु० सप्त अर्चींषि यस्य । १वह्नौ अमरः २चित्रक-
वृक्षे ३शनिग्रहे हेमच० । ४क्रूरनेत्रे त्रि० मेदि० ।

**सप्ताश्व** पु० सप्त अश्वा अस्य । १सूर्य्ये २अर्कवृक्षे अमरः ।

**सप्ताश्ववाहन** पु० सप्त अश्वाः वाहनान्यस्य । १सूर्य्ये २अर्क-
वृक्षे च "शुचिः सप्ताश्ववाहनः" सूर्य्यस्तवः ।

**सप्ति** पु० सप—ति । अश्वे अमरः ।

**सफर** पुंस्त्री० सप—अरन् पृषो० पस्य फः । (पुँटी) मत्स्ये
स्त्रीत्वे ङीष् । "मथ्नन्ती चलसफरीविघट्टितोरूः" माघः
अस्य तालव्यादित्वमप्यन्ये ।

**सफल** त्रि० सह फलेन सहस्य सः। १साफल्ये २फलयुक्ते च जटा०।

**सबल** त्रि० सह बलेन सामर्थ्येन सैन्येन वा सहस्य सः। १सामर्थ्यान्विते २सैन्ययुक्ते ३ज्यो०उक्तबलाढ्ये "सबलेऽव्टपतौ स्वस्थे राज्याप्ति सुखकीर्त्तयः" नील०ता०।

**सब्रह्मचारिन्** पु० समानं ब्रह्म वेदग्रहणकालीनं व्रतं चरति चर-णिनि समानस्य सः। एकगुरुसकाशात् वेदाध्ययनकाले तद्विहितसमानव्रताचारयुते अमरः।

**सभर्तृका** स्त्री सह भर्त्रा पत्या सहस्य सः कप्। विद्यमानपतिकायां स्त्रियाम् अमरः।

**सभा** स्त्री सह भान्ति अभीष्टनिश्चयार्थमेकत्र यत्र गृहे। १बहूनां समावेशनस्थाने २तदधिष्ठातृसुजनसमूहे च अमरः "यस्मिन् देशे निषीदन्ति विप्रा वेदविदस्त्रयः। राज्ञः प्रतिकृतो विद्वान् ब्राह्मणस्तां सभां विदुः"। विद्वत्संघातावपि सभापर्य्यायपरिषच्छब्दमाह "त्रैविद्यो हैतुकस्तर्की निरुक्तो धर्मपाठकः। त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा" मनुः। ३द्यूते ४गृहे मेदि० ५समूहे हेमच०। समूहपरत्वे ह्रत० न०। दासीसभं नृपसभमित्यादि। व्यवहारदर्शनार्थसभास्थानस्य वीरमि० दर्शितं यथा वृहस्पतिः "दुर्गमध्ये गृहं कुर्य्याज्जलवृक्षान्वितं पृथक्। प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्याङ्कल्पयेत्सभाम्। प्रतिमालेख्यदेवैश्च युक्तामम्भ्यम् च तथा" इति लक्षण्यां वास्तुशास्त्रोक्तलक्षणेन लक्षिताम्। अम्भ्यम् नेति सभाकारदन्वः। सभाया धर्माधिकरणत्वं कात्यायन आह "धर्मशास्त्रानुसारेण अर्थशास्त्रविवेचनम्। यत्राधिक्रियते स्थाने धर्माधिकरणं हि तदिति"। तत्र सभ्योपवेशनमाह मनुः "यस्मिन् देशे इत्यादि" प्रागुक्तम् त्रय इत्युपलक्षणम् अधिकानामपि स्वतत्वात्। तत्र वक्ष्यते। अधिकृतो विद्वान् प्राड्विवाकः अत्र प्रविशेत् सभाम् सभामेव प्रविश्येत्यादिवचनात् सभा मुख्यव्यवहारदर्शनस्थानम्। अन्यान्यपुस्थानि व्यवहारस्थानानावाक्याटमन्तव्यानि। "दश स्थानानि वादानां पञ्च चैवाब्रवीद् भृगुः। निर्णयं येन गच्छन्ति विवादं प्राप्य वादिनः। आरण्यास्तु स्वकैः कुर्य्युः सार्थिकाः सार्थिकैस्तथा। सैनिकाः सैनिकैरेव ग्रामेऽप्युभयवासिभि.। उभयानुमतश्चैव स्मर्य्यते स्थानमीप्सितम्। कुलिकाः सार्थमुख्याश्च पुरग्रामनिवासिनः। ग्रामपौरगणश्रेण्यश्चातुर्विद्याश्च वर्गिणः। कुलानि कुलिकाश्चैव नियुक्ता नृपतिस्तथा" इति। स्वकैरारण्यकैः ग्रामेऽपीत्यपिशब्दाद् ये ग्रामेऽरण्यादौ च निवसन्ति ते उभयवासिभिर्निर्णयं कुर्य्युरुभयव्यवहाराभिज्ञत्वात्तेषाम् कुलिकाः कुलश्रेष्ठाः। सार्थो वामदेवयात्रादौ मिलितो जनसङ्घः तन्मुख्याः सार्थवाहादयः। पुरं मुख्यनगरम् तस्मादर्वाचीनो ग्राम इति पुरग्रामनिवासिनोर्भेदः सार्थकुलिकादीनि पञ्च स्थानानि तानि चारण्याकादीनामेव, ग्रामादीनि दश स्थानानि साधारणानि। ग्रामो ग्रामाकारेणावस्थितोजनः। पौरः पुरवासिनां समूहः "श्रेण्यो रजकाद्यष्टादश हीनजातयः। चातुर्विद्यः आन्वीक्षिक्यादिविद्याचतुष्टयोपेतः वर्गिणा गणप्रभृतयः। राज्ञः सभाप्रवेशस्तत्रैव दर्शितः। तत्र मनुः "व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः। मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत् सभाम्। तत्रासीनः स्थितो वापि पाणिमुद्यम्य दक्षिणम्। विनीतवेषाभरणः पश्येत् कार्य्याणि कार्य्यिणाम्। प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः। अष्टादशसु मार्गेषु निबद्धानि पृथक् पृथक्। धर्मासनमधिष्ठाय संवीताङ्गः समाहितः। प्रणम्य लोकपालेभ्यः कार्य्यदर्शनमारभेत्" इति।

**सभाज** सेवने दर्शने च सक० प्रीतौ अ०अद०चु० उभ० सेट्। सभाजयति ते असभाजत्-त। अनेकाच्त्वान्न षोपदेशः

**सभाजन** न० सभाज-भावे ल्युट्। गमनागमनादिकाले सुखानन्दप्रीतिसाधने सम्भाषणे १पूजने च अमरः।

**सभासद्** पु० सभायां सीदति-क्विप्। सामाजिके सभ्ये अमरः तल्लक्षणमाह याज्ञ० "श्रुताध्ययनसम्पन्नाः धर्मज्ञाः सत्यवादिनः। राज्ञा सभासदः कार्य्या रिपौ मित्रे च ये समाः" इति। श्रुतेन मीमांसाव्याकरणादिश्रवणेन वेदाध्ययनेन च सम्पन्नाः। धर्मज्ञाः सत्यवादिनः सत्यवटनशीलाः रिपौ मित्रे च समाः द्वेषरागशून्याः एवंविधा सभासदः सभायां सदसि यथा सीदन्ति तथा दानमानसत्कारैः राज्ञा कर्त्तव्याः सभ्यत्वेन वरीतव्या इत्यर्थः। अतश्चोद्यमपरिवत्वात् स्वाध्यायोऽध्येतव्यो यूपं छिनत्ति पुरोहितस्तं प्रकुर्वीतेत्यादिवत् सत्यपि कर्मत्वेऽनुद्देश्यत्वात् तद्गतैकत्वबहुवचनत्वं विवक्षितम्। तच्च यद्यपि कपिञ्जलन्यायेन त्रित्वमात्रेणापि चरितार्थं तथापि स्मृत्यन्तरोक्तबहुत्वविकल्पपरम्। तथा च वृहस्पतिः "लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा। यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा" इति। मनुना तु त्रय एवोक्ताः।

"यस्मिन् देशे निषीदन्ति विप्रा वेदविदस्त्रय" इति । अत्र त्रिभ्योऽन्यूनाः सप्तभ्योऽधिकाश्च न कार्य्या इत्यत्र तात्पर्य्यं सङ्ख्यावैषम्यन्तु "भूयोऽल्पविरोधे भूयसां स्यात् सधर्मकत्वमिति न्यायेन विप्रतिपत्तावधिकसङ्ख्यावचनस्याद-रणीयं गुणसाम्ये: । तद्वैषम्ये तु शतमप्यन्धानाञ्च पश्य-तीति न्यायेन गुणवत्तरवचनमेवेति प्रदर्शनार्थम् । "यत्तु चत्वारो धर्म्मज्ञाः पर्षत्त्रैविद्यमेव वा । सा ब्रूते यं स धर्म्मः स्यादेको वाऽध्यात्मवित्तमः" इति योगीश्वरेण विषम-सङ्ख्यत्वमपि बहुत्वमपि चानादृतम् । तत्तु पूर्व्वोक्तानां धर्म्मकारकज्ञापकहेतूनां सन्देहनिर्णयविषयं प्रक्रमात् । व्यवहारविषये तु त्र्यवराणां विषमसङ्ख्यानामेव सभ्यत्व विशेषविधानादित्यवसेयम् । एते च ब्राह्मणा एव । मनुबृहस्पतिभ्यां विप्रपदोपदानात् । स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः । धर्म्मशास्त्रार्थकुशलै-रर्थशास्त्रविशारदैरिति" द्विजोत्तमपदस्य च कात्यायने-नोपादानात् । नारदेन "राजा तु धार्म्मिकान् सभ्या-न्नियुञ्ज्यात् सुपरीक्षितान् । व्यवहारधुरं वोढुं ये शक्ताः पुङ्गवा इव । धर्म्मशास्त्रेषु कुशलाः कुलीनाः सत्यवादिनः । समाः शत्रौ च मित्रे च नृपतेः स्युः सभासदः" इति । विचार्य्य श्रेणिभिः कार्य्यं कुलैर्यन्न विचारितम् । ग णैश्च श्रेण्यविज्ञातं गणाज्ञातं नृयुक्तकैः । कुलादिभ्यो-ऽधिकाः सभ्यास्तेभ्योऽध्यक्षोऽधिकः कृतः । सर्व्वेषा-मधिको राजा धर्म्मं यत्तेन निश्चितम् । उत्तमाधम-मध्यानां विवादानां विचारणात् । उपर्य्युपरि बुद्धी-नाञ्चरन्तीश्वरबुद्धयः" वर्णभेदोऽनादृतः ।

शुक्रनीतिपरिशिष्टेऽपि तथैवोक्तं यथा

"यद्वर्णजो भवेद्राजा योज्यस्तद्वर्णजः सदा । तद्वर्ण एव गुणिनः प्रायशः सम्भवन्ति हि । व्यवहारविदः प्राज्ञा वृत्तशीलगुणान्विताः । रिपौ मित्रे समा ये च धर्म्मज्ञाः सत्यवादिनः । निरालसा जितक्रोधकामलोभाः प्रियंवदाः । राज्ञा ते च नियोक्तव्याः स्युः सभ्याः सर्व्वासु जातिषु" "राजा तु धार्म्मिकान् सभ्यान् नियुञ्ज्यात् सु-परीक्षितान् । व्यवहारधुरं वोढुं ये शक्ताः पुङ्गवा इव । लोकवेदज्ञधर्म्मज्ञाः सप्त पञ्च त्रयोऽपि वा । यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा । श्रोतारो वणिजस्तत्र कर्त्तव्याः सुविचक्षणाः । अनियुक्तो नियुक्तो वा धर्म्मज्ञो वक्तुमर्हति । एकः शास्त्रमधीयानो विन्द्याच्च कार्य्यनिर्णयम् । तस्मात् बह्वागमः कार्य्यो विवादेषू-त्तमो नृपैः । स ब्रूते यं स धर्म्मः स्यादेको वाध्यात्म-चिन्तकः । एकद्वित्रिचतुर्वारं व्यवहारानुचिन्तनम् । कार्य्यं पृथक् पृथक् सभ्यै राज्ञा श्रेष्ठोत्तरैः सह । अर्थिप्रत्यर्थिनो सभ्यान् लेखकप्रेक्षकांश्च यः । धर्म्मवाक्यै रञ्जयति स सभास्तारतामियात् । नृपोऽधिकृतसभ्याश्च स्मृतिर्गणकलेखकौ । हेमाग्न्यम्बु स्वं पुरुषः साधना-ङ्गानि वै दश । एतद्दशाङ्गकरणं यस्यामध्यास्य पार्थिवः । न्यायान् पश्येत् कृतमतिः सा सभाऽध्वरसन्निभा" ।

**सभापति** पु० ६त० । सभायाः स्वामिके नृपे "सभापतिश्च नृपतिरेव "दुर्गमध्ये गृहं कुर्य्यादित्यादिना बृहस्पत्या-दिभिः सभानिर्म्माणतद्दक्षिणादेस्तत्र सभ्योपवेशनादेश्च तस्यैव विधानात्" वीरमि० ।

**सभास्तार** पु० सभां स्तृणाति स्तृ—अण् । १सभ्ये अमरः । "अर्थिप्रत्यर्थिनो सभ्यान् लेखकप्रेक्षकांश्च यः । धर्म्म-वाक्यै रञ्जयति स सभास्तारतामियात्" शुक्रनीतिपरि० उक्ते २सभ्यभेदे च । [कारके अमरः ।

**सभिक** पु० सभा द्यूतसभा आश्रयत्वेनास्त्यस्य ठन् । द्यूत-

**सभीक** पु० सभा द्यूतं प्रयोजनमस्य ईक । द्यूतकारे शब्दच०

**सभोचित** पु० सभा उचिता परिचिता यस्य । १पण्डिते धनञ्जयः । २सभायोग्ये त्रि० । [१विज्ञे त्रि०जटा०

**सभ्य** पु० सभायां साधुः यत् । १सामाजिके २द्यूतकारे च

**सम्** अव्य०सो—बा०कमु । १सङ्गत्यर्थे २प्रकर्षे ३सङ्गतौ ४शोभने शब्दच० । ५समुच्चये हेमच० ।

**सम** त्रि० सम—अच् । १समाने तुल्ये २सर्व्वे अमरः ३साधौ मेदि० । (योड़) ४युग्मे "समेऽह्नि ते वर्गः" इति लीला० समतयाख्यातेषु द्वितीयचतुर्थषष्ठादिषु ५राशिषु च । अतुल्येऽस्य सर्व्वनामता । गीतवाद्ययोरेककालभवे गाय-कहस्तादिचालनरूपे ६तालभेदे न० ७अनुमितभिन्ने पक्षे प्रत्यक्षा० अभेदे तृतीया । समेन याति समं यातीत्यर्थः ।

**समक्ष** अव्य० अक्ष्णः समीपम् अव्ययी० अच् । १चक्षुःसन्नि-कर्षे तदस्त्यस्य अच् । २प्रत्यक्षविषये त्रि० ।

**समकोण** त्रि० समः कोणो यस्य । रेखागणितोक्ते सम-कोणयुक्ते त्रिकोणादौ । क्षेत्रशब्दे २१९० पृ० १५अङ्क-चिह्निते दृश्यम् ।

**समकोल** पुंस्त्री० ६त० । सर्पे त्रिका० स्त्रियां ङीष् ।

**समगन्धक** पु० समास्तुल्यभागेन निवेशिता गन्धाः गन्धयुक्त-द्रव्याण्यत्र कप् । कृत्रिमधूपभेदे शब्दमा० ।

**समगन्धिक** पु० समः सर्व्वदा तुल्यरूपः गन्धोऽस्त्यस्य ठन् ।

उशीरे (वेणारमूल) राजनि०। [१सकले अमरः २पूर्णे च

**समग्र** त्रि० समं सकलं यथा स्यात्तथा गृह्यते ग्रह-रङ ।

**समङ्गा** स्त्री समज्यतेऽनया सम्+अनृज-करणे घञ् टाप् । मञ्जिष्ठायाम् अमरः । [तुल्यदर्शके तत्त्वज्ञानिनि ।

**समचित्त** त्रि० समं सर्वत्र समभावं चित्तं यस्य । सर्वत्र

**समज** न०समजत्यत्र सम्+अज-आधारे अप् व्यभावः । १वने मेदि० २समूहे ३पशूनां संघे ४मूर्खवृन्दे च अमरः ।

**समज्ञा** स्त्री समस्मिन् सर्वत्र ज्ञायतेऽनया ज्ञा-क । कीर्त्तौ अमरः । [अमरः २कीर्त्तौ च रमानाथः ।

**समज्या** स्त्री सम्+अज-क्यप् न वीभावः । १सभायाम्

**समञ्जस** त्रि० सम्यक् अञ्ज औचित्यं यत्र अच् समा०। १उचिते अमरः २युक्ते च । प्रा०स०। ३औचित्ये न०।४समाधाने त्रिका० ५अप्रमत्ते अमरः ।

**समण्ठ** पु० गण्डीरे हारा० । [गुडत्वचे राजनि०।

**समत्रय** न० समं त्रयं यत्र। समभागयुते हरीतकीनागर-

**समदर्शिन्** त्रि० समस्मिन् सर्वत्र ब्रह्मभावेनाऽभिन्नतया पश्यति दृश-णिनि । सर्वत्र समदर्शके तत्त्वज्ञानिनि । "विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि। शुनि चैव श्वपाके च पण्डिताः समदर्शिन" इति गीता ।

**समदृष्टि** स्त्री कर्म० । १सर्वत्र तुल्यदर्शने । "दुःखे सुखे च विप्रेन्द्र ! या दृष्टिर्वर्त्तते सदा । तथा शत्रौ च मित्रे च समदृष्टिश्च सा स्मृता" पद्मपु०क्रिया०१६अ० । ६ब० । २समदर्शिनि त्रि० ।

**समधिक** त्रि० सम्यक् अधिकः प्रा० । अत्यन्ताधिके अमरः ।

**समनियत** त्रि० समेन नियतः । व्यापकत्वे सति व्याप्यत्वयुते गदा० । समव्याप्त्यादयोऽप्यत्र ।

**समन्त** पु०सम्यक् अन्तः, स यत्र वा ।१सम्यगन्ते २सीमायाञ्च

**समन्ततस्** अव्य० समन्त+तसिल् । सर्वत्र व्याप्तौ अमरः ।

**समन्तदुग्धा** स्त्री समन्ततो दुग्धमस्याः । स्नुहीवृक्षे अमरः ।

**समन्तपञ्चक** न० समन्तात् पञ्चकं ह्रदपञ्चकं यत्र । कुरुक्षेत्रस्थे तीर्थभेदे "त्रिःसप्तकृत्व. पृथिवीं कृत्वा निःक्षत्रियां प्रभुः । समन्तपञ्चके पञ्च चकार रौधिरान् ह्रदान् । स तेषु तर्पयामास भृगून् भृगुकुलोद्वहः" भा०व०११७अ०। "तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानाञ्च मचक्रुकस्य च । एतत् कुरुक्षेत्र समन्तपञ्चकं पितामहस्योत्तरवेदिरुच्यते" भा०व० ८३अ० ।

**समन्तभद्र** पु० समन्तात् भद्रमस्य । बुद्धे अमरः ।

**समन्तभुज्** पु०समन्तात् भुङ्क्ते भुज-क्विप् । वह्नौ त्रिका०

**समन्तात्** अव्य० समन्त+आति । १समन्ततइत्यर्थे शब्दमा०। २सर्वत्रव्याप्तौ च ।

**समन्वित** त्रि० सम्+अनु+इण-क्त । सङ्गते ।

**समपद** न० समं पद यस्मिन् । धन्विनां समपदनिवेशनपूर्वके "स्थानानि धन्विनां पञ्च" इत्युपक्रम्य "अन्वर्थं स्यात् समपदमि"त्युक्ते अवस्थानभेदे अमरः । २रतिबन्धभेदे पु० "योषित्पादौ हृदि स्थाप्य कराभ्यां पीड़येत् स्तनौ । यथेष्टं ताड़येत् योनिं बन्धः समपदः स्मृतः" रतिमञ्ज० ।

**समभिव्याहार** पु० सम्+अभि+वि+आ+हृ-घञ् । १साहित्ये २पूर्वापरीभावे ३शेषशेषिवाचकयोः सहोच्चारणे च मीमांसकाः । [२सहोच्चरिते । ३अव्यवहिते च ।

**समभिव्याहृत** त्रि० सम्+अभि+वि+आ+हृ-क्त । १सहिते

**समभिहार** पु० सम्+अभि+हृ-घञ् । १पौनःपुन्ये क्रियासातत्ये २भृशार्थे मेदि० "क्रियासमभिहारेण विराध्यन्तं सहेत कः" माघः ।

**समम्** अव्य० सम-अम् । १साहित्ये अमरः । २एकदेत्यर्थे "सममेव समाक्रान्तं द्वयं द्विरदगामिना" रघुः ।

**समय** पु० सम+इण-अच् । १काले २शपथे ३आचारे ४सिद्धान्ते ५अङ्गीकारे च अमरः । ६क्रियाकारके ७निर्देशे ८सङ्केते ९भाषायां मेदि० १०सम्पदि ११नियमे १२अवसरे हेमच० १३कालविज्ञाने शब्दच० । १३नियमबन्धे अस्य शब्दस्येदमभिधेयमित्यभिधानाभिधेयनियमबन्धे" वात्स्या० १४शास्त्रे च ।

**समया** अव्य० सम+इण-आ । नैकट्ये २मध्ये च अमरः ।

**समयाकार** पु० समयस्य सङ्केतस्याकारः । सङ्केते त्रिका० ।

**समयाध्युषित** न० समयः अध्युषितो यत्र । सूर्यतारारहितकाले "तथा प्रभातसमये नष्टे नक्षत्रमण्डले । रवियावन्न दृश्येत समयाध्युषितश्च तत्" कर्म०काला० । "उदितेऽनुदिते चैव समयाध्युषिते तथा" इति मनुः ।

**समयाशुद्धि** स्त्री ६त०। कालाशुद्धौ कालाशुद्धिशब्दे दृश्यम्

**समर** पु० न० सम्+ऋ-आधारे अप् । युद्धे अमरः ।

**समरभ** रतिबन्धभेदे "स्वजङ्घाद्वयसंयुक्तं कृत्वा योषित्पदद्वयम् । स्तनौ धृत्वा रमेत् कामी बन्धः समरभः स्मृतः" रतिमञ्ज० ।

**समरमूर्द्धन्** पु० ६त० । समरस्याग्रे ।

**समर्चन** न० सम्यक् अर्चनं प्रा०स० । सम्यक्पूजने ।

**समर्ण** त्रि० सम्+अर्द-क्त । सम्यक्पीड़िते ।

**समर्थ** त्रि० सम्+अर्थ-अच् । १शक्ते २हिते च अमरः । सम्यगर्थः प्रा० स० । ३प्रशस्ताभीष्टे पु० । सङ्गतोऽर्थो यस्य प्रा०स० । "समर्थः पदविधिः" पा० परिभाषिते सङ्गतार्थे समासादौ समासशब्दे दृश्यम् ।

**समर्थन** न० सम्+अर्थ-ल्युट् । इदमित्थमेवेति निश्चयहेतुन्यासेन निश्चायकव्यापारभेदे अमरः । युच् । तत्र, अशक्तेऽध्यवसाये च स्त्री । [तरि देवादौ अमरः ।

**समर्द्धक** त्रि० समर्द्धयति सम्+ऋध-ण्वुल् । इष्टफलदा-

**समर्य्याद** त्रि० सह मर्य्यादया सहस्य सः । १सीमायुते २समीपे पु० मेदि० ।

**समल** न० सह मलम् । १विष्ठायां शब्दच० । सह मलेन सहस्य सः । २कलुषे त्रि० त्रिका० । [वतरणसोपाने ।

**समवतार** पु० समवतीर्य्यतेऽनेन सम्+अव+तॄ-घञ् । जला-

**समवर्त्तिन्** पु० समं वर्त्तते वृत-णिनि । १यमे धर्मराजे अमरः । २सर्वत्र समभावेन वर्त्तिनि त्रि० ।

**समवकार** पु० सम्+अव+कॄ-आधारे घञ् । नाटकभेदे सा०द० उक्तो यथा
"वृत्तं समवकारे तु ख्यातं देवासुराश्रयम् । सन्धयो निर्विमर्शास्तु त्रयोऽङ्कास्तत्र चादिमे । सन्धी द्वावन्त्ययोस्तद्वदेक एको भवेत् पुनः । नायका द्वादशोदात्ताः प्रख्याता देवदानवाः । फलं पृथक् पृथक् तेषां वीरमुख्योऽखिलो रसः । वृत्तयो मन्दकौशिक्यो नात्र बिन्दुप्रवेशकौ । वीथ्यङ्गानि च तत्र स्युर्यथालाभं त्रयोदश । गायत्र्युष्णिङ्मुखान्यत्र छन्दांसि विविधानि च । त्रिशृङ्गारस्त्रिकपटः कार्य्यश्चायं त्रिविद्रवः । वस्तु द्वादशनाड़ीभिर्निष्पाद्यं प्रथमाङ्कगम् । द्वितीयेऽङ्के च तिसृभिर्द्वाभ्यामङ्के तृतीयके" । नाड़िका घटिकाद्वयमुच्यते । बिन्दुप्रवेशकौ च नाटकोक्तावपि नेह विधातव्यौ । तत्र धर्मार्थकामैस्त्रिविधः शृङ्गारः कपटः पुनः । स्वाभाविकः कृत्रिमश्च दैवजो विद्रवः पुनः । अचेतनैश्चेतनैश्च चेतनाचेतनैः कृतः" । तत्र शास्त्राविरोधेन कृतो धर्मशृङ्गारः अर्थलाभार्थकल्पितः अर्थशृङ्गारः । प्रहसनशृङ्गारः कामशृङ्गारः । तत्र कामशृङ्गारः प्रथमाङ्क एव । अन्ययोस्तु न नियम इत्याहुः । चेतनाचेतना गजादयः । समवकीर्य्यन्ते बहवोऽर्था अस्मिन्निति समवकारः । यथा समुद्रमन्थनम्" ।

**समवाय** पु० सम्+अव+इण-अच् । १समूहे अमरः २मेलने न्यायोक्ते नित्यद्रव्यादिषु जात्यादीनां ३संबन्धभेदे च "घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः । तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तितः" भाषा० "समवायं दर्शयति । घटादीनामिति अवयवावयविनोः जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः सम्बन्धः स स मवायः, समवायत्वं नित्यसम्बन्धत्वं तत्र प्रमाणन्तु गुण क्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात् इत्यनुमाने संयोगादिबाधात् समवायसिद्धिः । न च स्वरूपसम्बन्धेन सिद्धसाधनम् अर्थान्तरं वा, अनन्तस्वरूपाणां सम्बन्धत्वकल्पने गौरवात् लाघवादेकसमवायसिद्धिः । न च समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिप्रसङ्गः तत्र रूपसमवायसत्त्वेऽपि रूपाभावात् । न चैवम् अभावस्य वैशिष्ट्यं सम्बन्धान्तरं सिध्येदिति वाच्यं तस्य नित्यत्वे भूतले घटानयनानन्तरमपि घटाभावबुद्धिप्रसङ्गात् घटाभावसम्बन्धस्य तत्र सत्त्वात् तस्य नित्यत्वात् अन्यथा देशान्तरेऽपि तत्प्रतीतिर्न स्यात् वैशिष्ट्यस्य च तत्र सत्त्वात्, मम तु मते घटे पाकरक्ततादशायां श्यामरूपस्य नष्टत्वान्न तद्वत्ताबुद्धिः । वैशिष्ट्यस्यानित्यत्वे त्वनन्तवैशिष्ट्यकल्पने तवैव गौरवम् इत्यञ्च तत्तत्कालीनतत्तद्भूतलादिकं तत्तदभावानां सम्बन्धः" । अयुतसिद्धयोः सम्बन्धः स इति वैशेषिकाः स च सम्बन्धो नाना नित्यश्चेति नव्यनैयायिकाः प्राभाकरास्त्वाहुः । समवायस्य प्रत्यक्षः "प्रत्यक्षं समवायस्य विशेषणतया भवेत्" भाषा०। अतीन्द्रियोऽनुमेयश्चेति वैशेषिकाः, स्वरूपस्यैव सम्बन्धत्वोपपत्तेः समवायो न पदार्थान्तरमिति भाट्टाः ।

**समवायिजनक** न० कारणभेदे "यत्समवेतं कार्य्यं भवति ज्ञेयं तु समवायिजनकं तत्" "समवायिकारणत्वं द्रव्यस्यैव विज्ञेयम्" भाषा० । इदमेव उपादानकारणमिति साङ्ख्यावेदान्तिनस्त्वाहुः ।

**समवायिन्** त्रि०समवायोऽस्त्यस्य । समवायसम्बन्धानुयोगिनि यथा घटादीनां कपालादि गुणक्रिययोर्द्रव्यादि ।

**समवेत** त्रि० सम्+अव-इण-क्त । १मिलिते २समूहान्विते न्यायोक्ते न समवायसम्बन्धेन ३स्थिते च ।

**समशनीय** पु०सम्यगशनाय हितं छ । विवाहोत्तरं दम्पत्योः सम्यगशनाय विहिते स्थालीपाके" तद्विधानादि सं० त० गोभिलोक्तं यथा "श्वोभूते वा समशनीयं स्थालीपाकं कुर्वीत" "यदि विवाहे यज्ञादिना महानिशा भूता तदा तत्परदिने सम्यगशनार्थं क्रियते इति सम्यगशनीयं स्थालीपाकं कुर्वीत"रघु० । तद्धोमविधानादि तत्र दृश्यम् ।

**समष्टि** स्त्री सम्+अश–व्याप्तौ क्तिन् । १सम्यग्व्याप्तौ २समस्ततायाञ्च । कर्त्तरि क्तिच् । ३संघीभूते समस्ते पदार्थे वेदान्तसा० "समष्टिरीशः सर्वेषां स्वात्मतादात्म्यवेदनात् । तदभावात्ततोऽन्ये तु कथ्यन्ते व्यष्टिसंज्ञया" पञ्चद० ।

**समष्ठि(ष्ठी)ल** पु० समं तिष्ठति स्था–इलच् पृषो० षत्वं वा दीर्घः । (पुँड़िया) शाके अमरः ।

**समसन** न० सम्+अस–ल्युट् । १समासे २संक्षेपे अमरः ।

**समसूत्रपातन्याय** पु० न्यायभेदे समतया सूत्रस्य पातने यस्य तत्तुल्यत्वमेवमुपर्यधःस्थितानां पदार्थानां तत्सूत्रसंलग्नैकदेशकालावच्छेदेन यत्रावस्थानं येन ज्ञाप्यते तादृशे न्याये "परः वह्निकर्षस्य उपर्यधोभावापन्नसमसूत्रपातन्यायेन द्राघ्येकांशावच्छेदेन वृत्त्यावस्थानरूपः" ति०त० रघु० ।

**समस्त** त्रि० सम्+अस–क्त । १संक्षिप्ते २सकले अमरः । ३व्याकरणोक्ते कृतसमासे शब्दभेदे च ।

**समस्थ** त्रि० समं तिष्ठति स्था–क । समभावेन तुल्यतया स्थिते

**समस्थली** स्त्री कर्म० । अन्तर्वेदिदेशे हेमच० ।

**समस्या** स्त्री समस्यते संक्षिप्यतेऽनया सम्+अस–करणे क्यप् । संक्षेपेण उक्तस्य श्लोकपादादेः परकृतेन स्वकृतेन वा अवशेषेण भागान्तरेण संघटनार्थं कृते प्रश्ने अमरः ।

**समा** स्त्री समयति विक्लवयति भावान् सम–अच्–टाप् । वत्सरे अमरकृतास्य नित्यबहुवचनान्तताद्भोक्तता पाणिनिना तु "समांसमां विजायते" इति सूत्रे एकवचनान्तता निर्दिष्टा ।

**समांसमीना** स्त्री समां समां विजायते प्रसूते ख नि० अत्र समांसमामित्यत्र कालाधारे द्वितीया । प्रतिवर्षं प्रसूतायां गवि अमरः ।

**समाकर्षिन्** पु० सम्+आ+कृष–णिनि । १अतिदूरगामिनि गन्धे अमरः । २सम्यगाकर्षणकर्त्तरि त्रि० स्त्रियां ङीप् ।

**समाख्या** स्त्री समाख्यायतेऽनया सम्+आ+ख्या–अङ् । १कीर्त्तौ अमरः २संज्ञायाञ्च । ३योगेनार्थबोधने "स्थानं क्रमो योगबलं समाख्या" इ स्मृदीपिका ।

**समाघात** पु० समाहन्यतेऽत्र सम्+आ+हन–आधारे घञ् । १युद्धे अमरः । भावे घञ् । २सम्यग्घाते च ।

**समाज** पु० सम्+अज–घञ् न वीभावः । पशुभिन्नानां १समूहे अमरः । २सभायां हेमच० ३हस्तिनि नानार्थकोषः ।

**समादान** न० सम्+आ+दा–भावे ल्युट् । १सम्यगादाने कर्मणि ल्युट् । २बौद्धानां निजकर्मणि मेदि० ।

**समाधा** स्त्री सम्+आ+धा–अङ् । १निष्पत्तौ २विवादभञ्जने २पूर्वपक्षस्य सम्यगुत्तरात्तुपुर्वसिद्धान्तानुकूलतर्कादिना सम्यगर्थावधारणे च । ल्युट् । समाधानमप्यत्र न० । तत्र ध्येयवस्तुनि चित्तस्य निरन्तरस्थापनरूपे समाधौ च ।

**समाधि** पु० सम्+आ+धा–कि । १समाधायां ध्येयवस्तुनि एकाग्रतया मनसःस्थापनरूपे २ध्यानभेदे ३वचनाभावे ४नियमे च अमरः । ध्यानभेदश्च समाधिः यथोक्तं पात० सू० "तत्र प्रत्ययैकतानता ध्यानम्" सू० "तस्मिन् देशे ध्येयालम्बनस्य प्रत्ययस्यैकतानता सदृशप्रवाहः प्रत्ययान्तरेणापरामृष्टो ध्यानम्" भा० "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" सू० "ध्यानमेव ध्येयाकारनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति ध्येयस्वभावावेशात्तदा समाधिरित्युच्यते" भा० "ध्यानसाध्यं समाधिं लक्षयितुं व्याचष्टे ध्यानमेवेति । ध्येयाकारनिर्भासमिति ध्येयाकारस्य निर्भासो न ध्यानाकारस्येति अतएवाह शून्यमिति । ननु शून्यं चेत् कथं ध्येयप्रकाशक इत्यत आह इवेति । अत्रैव हेतुमाह ध्येयस्वभावावेशादिति । अत्रापि पुराणम् "तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् । मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते" इति । ध्येयात् ध्यानस्य भेदकल्पना तद्धीनमित्यर्थः" विवर० ।

एकाग्रतात्मकसमाधिलक्षणं पुराणान्तरोक्तं यथा "नित्यं शुद्धं बुद्धियुक्तं सत्यमानन्दमद्वयम् । तुरीयमक्षरं ब्रह्म अहमस्मिपरं पदम् । अहंब्रह्मेत्यवस्थानं समाधिरिति गीयते" गारुडे ४४अ० "द्वादशध्यानपर्य्यन्तं मनो ब्रह्मणि यो नरः । तुष्येत संयतो युक्तः समाधिः सोऽभिधीयते । ध्येयमेव हि सर्वत्र ध्याता तन्मयतां गतः । पश्यति द्वैतरहितं समाधिः सोऽभिधीयते" २४०अ० "इदं गुणसमाहारमनात्मत्वेन पश्यतः । अन्तःशीतलता यस्य समाधिरिति कथ्यते" योगवाशिष्ठे उपशमप्रक० । ५अर्थालङ्कारभेदे अलङ्कारशब्दे ४०६ पृ० दृश्यम । ६इन्द्रियनिरोधे शब्दर० । ७काव्यगुणभेदे मेदि० "श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥ इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः । एषां विपर्य्ययः प्रायो दृश्यते गौड़वर्त्मनि" काव्याद० तस्यौजस्यन्तर्भावः सा०द० उक्तो यथा "श्लेषः समाधिरौदार्य्यं प्रसाद इति ये पुनः । गुणाश्चिरन्तनैरुक्ता ओजस्यन्तर्भवन्ति ते" । समाधिरारोहावरोहक्रमरूपः ।

ष्वारोह उत्कर्षः । अवरोहीऽपकर्षस्तयोः क्रमो वैरस्थानावहो विन्यासः । यथा "चञ्चञ्जेत्यादि" । अत्र पादद्वये क्रमेण वस्तुस्य गाढता । चतुर्थपादे त्वपकर्षः" ।

**समाघ्रात** त्रि॰ सम्+आ+घ्रा–क्त । १सम्यग्गन्धिते २सम्यक्शुङ्घिते च ।

**समान** त्रि॰ सममानयति अन–अण् । १तुल्ये २साधौ ३एकस्मिन्नित्यर्थे "समानतन्त्रसिद्धः" गौत॰ "यत्समानाधिकरणे"ति चिन्तामणिः । सम्+अन–णिच् । भुक्तादेः समीकरणे नाभिदेशस्थे प्राणादिपञ्चकान्तर्गते ४वायुभेदे पु॰

**समानविभक्तिक** त्रि॰ समानाविभक्तिर्यस्मात् कप् । स्वप्रकृतिविभक्तिसजातीयविभक्तिके पदे साजात्यञ्च प्रथमात्वादिना । तेन वेदाः प्रमाणमित्यादौ समानविभक्तिकत्वम् ।

**समानविषयक** त्रि॰समानो विषयो यस्य कप् । तुल्यरूपविशेष्यविशेषणताशालिनि ज्ञाने स च समाननिरूप्यनिरूपकभावापन्नविषयताशाली बोधः समानाकारकोऽप्यत्र ।

**समानाधिकरण** त्रि॰ समानमेकमधिकरणं यस्य । एकाधि१करणवृत्तिके स्वाधिकरणवृत्तिमति पदार्थे । २विभिन्नदिभक्तिराहित्ये सति अभेदेनैकार्थबोधजनकत्वयुते पदे च "लटः शतृशानचावप्रथमासमानाधिकरणे" पा॰ लटोऽपि प्रथमासामाधिकरण्यं विभिन्नविभक्तिराहित्याद्बोध्यम् । "समानाधिकरणस्तत्पुरुषः कर्मधारयः" पा॰ ।

**समानाशौच** न॰कर्म॰। अवधृद्धिकालाभ्यां तुल्ये अशौचे यथा सपिण्डजननाशौचतुल्यं सपिण्डान्तरजननाशौचम् एवं त्रिरात्राद्यन्तस्य स्वत्वसहितसपिण्डमरणाशौचतुल्यं तथाविधसपिण्डान्तरमरणाशौचं, जननमरणाशौचयोर्न तुल्यता नापि स्नानापनेयाद्यन्तस्य स्वत्वयुक्तपुत्रजननाशौचेन सपिण्डजननाशौचस्य तुल्यता न वा यावदशौचाचारत्वयाश्रितायुक्तस्य स्वायुरुमरणाशौचस्य सपिण्डमरणाशौचस्य तुल्यता ।

**समानोदक** पु॰ समानमेकं तर्पणादौ देयमुदकं यस्य । "समानोदकभावस्तु निवर्त्तेत चतुर्दशात्" इत्युक्ते एकादशावधिचतुर्दशपुरुषपर्य्यन्ते ज्ञातिभेदे सपिण्डशब्दे दृश्यम् ।

**समानोदर्य्य** पु॰ समाने उदरे भवः यत् वा न सादेशः । १एकोदरजभ्रात्रादौ २भगिन्यां स्त्री अमरः । [त्रि॰कौ॰]

**समाप** पु॰ सम्यक् आप्यते अच् समा॰ नि॰ देवयजनस्थाने

**समापन** न॰ सम्+आप–ल्युट् । १समाप्तौ परमकाल-सम्बन्धे २परिच्छेदे ३वधे च मेदि॰ ४समाधाने विश्वः । ५लब्धे धरणिः ।

**समापन्न** त्रि॰ सम्+आ–पद–क्त । १समाप्ते २प्राप्ते ३क्लिष्टे ४वधे च विश्वः । भावे क्त । ५समाप्तौ न॰ ।

**समाप्त** त्रि॰सम्+आप–क्त । १अवसानप्राप्ते २सम्यक्प्राप्ते च

**समाप्तपुनरात्तता** स्त्री समाप्ते वाक्यसमाप्तौ पुनरात्तता ग्रहणम् । क्रियान्वयेन निवृत्ताकाङ्क्षस्य विशेष्यवाचकपदस्य विशेषणान्तरार्थान्वयार्थं पुनरुच्चारणरूपे काव्यदोषभेदे दोषशब्दे ३७६४पृ॰ दृश्यम् ।

**समाप्ताल** पु॰ समाप्नाय अलति पर्याप्नोति अल–अच् । पत्यौ संक्षिप्तसा॰ । [१समाप्तौ शब्दच॰ ।

**समाप्ति** स्त्री सम्+आप–क्तिन् । १अवसाने २समर्थने मेदि॰ ।

**समायोग** पु॰ सम्+आ+युज–घञ् । १संयोगसमवायरूपादिसम्बन्धे "तमेदैश्चिसमायोगादिति" पुराणम् । २प्रयोजने मेदि॰ ।

**समालम्बिन्** पु॰ समालम्बते सम्+आ+लबि–णिनि । भूतृणे राजनि॰ । २समालम्बनकर्त्तरि त्रि॰ ।

**समालम्भ** पु॰ सम्+आ+लभ–घञ् सम् च । कुङ्कुमादिना गात्रलेपने अमरः । ल्युट् । तत्रैवार्थे न॰ ।

**समावर्त्तन** न॰ समावर्त्तते गुरुकुलादनेन सम्+आ+वृत–करणे ल्युट् । वेदाध्ययनानन्तरं गार्हस्थ्याय गुरुकुलादागमनहेतुके संस्कारभेदे तद्विधिः संस्कारतत्त्वे गोभिलोक्तो दृश्यः ।

**समाविष्ट** त्रि॰ सम्+आ+विश–क्त । १युक्ते २मनोऽभिनिवेशयुते अभीष्टकर्त्तव्यकर्मणि चित्तैकाग्र्यविशेषयुक्ते च ।

**समावृत्त** पु॰ सम्+आ+वृत–क्त । कृतसमावर्त्तनसंस्कारे "अतःपरं समावृत्तः कुर्य्याद्दारपरिग्रहम्" याज्ञ॰ ।

**समावेश** पु॰ सम्+आ+विश–घञ् । १बहूनामर्थानामेकत्र वाक्यादौ व्यवस्थापने २कर्त्तव्येऽभिनिवेशे च ।

**समावेशित** त्रि॰ सम्+आ+विश–णिच्–क्त । कृतसमावेशने

**समास** पु॰ सम्+अस–घञ् । १संक्षेपे २समर्थने मेदि॰ । ३समाहारे ४व्याकरणोक्ते द्व्यादिपदानामेकपदतासम्पादके पदसाधुतार्थके ५संस्कारभेदे च यथा "समर्थः पदविधिः" पा॰ "समर्थः संसृष्टार्थः सङ्गतार्थ इति यावत् । सामर्थ्यञ्च द्विविधम् व्यपेक्षावत्त्वमेकार्थीभावश्च । तत्र स्वार्थपर्य्यवसायिपदानामाकाङ्क्षादिवशात् य परस्परं सम्बन्धः सा व्यपेक्षा । राज्ञः पुरुषइत्यादौ वाक्ये सत्यामाकाङ्क्षायां यो यो यस्मिन् सन्निहितो योग्यश्च स तेन तेन सम्बध्यते यथा राज्ञः पुरुषोऽश्वश्च राज्ञो देवदत्तस्य च पुरुषः कृष्णस्य राज्ञोऽश्वो धनस्येत्यादि । वृत्तौ तु नैवम् वृत्तौना॰

मेकार्थीभावात्। एकार्थीभावश्च विशेष्यविशेषणभावावगाह्येकोपस्थितिजनकत्वम्। तथा च राजपुरुषादिशब्देन विशिष्टैकार्थबोधकतया न तदेकदेशे ऋद्धादेरन्वयः पुरुषांशे विशेषणतयोपस्थितस्य ऋद्धादिसम्बन्धिता राजादीनाम् जनितान्वयाच्च निराकाङ्क्षतया न देवदत्तादेः स्वामितया पुरुषादावन्वय इति द्रष्टव्यम्। देवदत्तस्य गुरुकुलमित्यादौ देवदत्तादेस्तु प्रधानीभूतकुलादिनैवान्वयः सम्बन्धस्तूपस्थितगुरुद्वारक एव षष्ठ्यर्थः यथोक्तं हरिणा "समुदायेन सम्बन्धो येषां गुरुकुलादिना। संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह" इति। यद्वा सम्बन्धिशब्दार्थस्य पदार्थैकदेशत्वेऽपि भवत्येव केषाञ्चित् सम्बन्धान्वयः तदुक्तं तेनैव "सम्बन्धिशब्दः सापेक्षो नित्यं सर्वं समस्यते। वाक्यवत् सा व्यपेक्षापि वृत्तावपि न हीयते"। अतएव वार्त्तिककृता "सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यत इति वक्तव्यमिति" सामान्यतो वृत्तिमतो विशेषणस्य स्वातन्त्र्येण प्रयोगाभावमभिधाय "अगुरुकुलपुत्रादीनां वक्तव्यम्" इत्यनेन गुरुकुलगुरुपुत्रादीनां विशेषणत्वेऽपि पृथक्प्रयोगाय नञा पर्युदासः कृतः। समानाधिकरणविशेषणस्य तु "समानाधिकरणमसमर्थवद्भवतीत्यनेन सर्वथा स्वातन्त्र्येण सामर्थ्याभावात् प्रयोगाभावो भङ्ग्याऽभिहितः। एतन्मूलकमेव प्राचां गाथा "सापेक्षे प्रत्ययो न स्यात् समासो वा कथञ्चन। सापेक्षं तद्विजानीयादसमस्तविशेषणम्। प्रतियोगिपदादन्यत् यदन्यत् कारकादपि। वृत्तिशब्दैकदेशस्य सम्बन्धस्तेन नेष्यते" इति। अयायं विशेषः भवति प्रधानस्य सापेक्षत्वेऽपि समास इत्युक्तेः प्रधानस्य वृत्त्युपस्थाप्यविशेष्यस्य राजपुरुषादेः सुन्दरादिविशेषणापेक्षायामपि समासः। समासे चावयवशक्त्यैव तत्तदर्थपदार्थोपस्थित्या विशेष्यविशेषणभावाद्यभ्युपगमे सापेक्षत्वादौ समासाभावादिकं वाचनिकं कल्प्यम् तथात्वेऽप्यधिककल्पना स्यादतः समुदायशक्तिकल्पनम् यथोक्तं हरिणा "बहूनां वृत्तिधर्माणां वचनैरेव साधने। स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः। चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम्। कर्त्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितमिति"। तथाहि द्वन्द्वादिविग्रहवाक्ये चकारादि प्रयुज्यते समस्ते तु न तत्र वचनैरेव तन्निषेधः कल्पनीयः समुदायशक्तिपक्षे तु शक्तार्थानामप्रयोग इत्युक्तन्यायादेव सिद्धम्। नानार्थयोरभेदान्वयः क्लृप्तः स च राजपदादुपस्थापितराजादेः पुरुषे स्वस्वामिभावसम्बन्धेनान्वये परित्यक्तः स्यात्। सम्बन्धलक्षणायान्तु किमपराद्धम् विशिष्टलक्षणया। प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थः प्रधानमिति नियमश्च क्लृप्तः स च प्राप्तानन्दादौ भज्येत आनन्दकर्तृकप्राप्तिकर्मत्वार्थबोधकोभयसम्मतत्वेन कर्तृविहितक्तान्तार्थस्य कर्तृविशेष्यतौचित्येन प्रकृते तद्वैपरीत्यात् आनन्दसम्बन्ध्यादिलक्षणास्वीकारे समुदायशक्तिपक्षे एव प्रवेशः। तथा प्राप्त आनन्दो यमिति विग्रहे आनन्दादौ अत्यन्तादिविशेषणयोगवत् समासे तद्वारणाय वृत्तस्य न विशेषणयोग इति वाचनिकत्वकल्पनाऽधिका एतन्मते न्यायसिद्धा इत्यादिबहुविप्लवापत्तिरतः समुदाये शक्तिरित्यन्यत्र विस्तरः। वार्त्तिककृता तु अवश्यं कस्यचित् नञ्समासस्यासमर्थसमासस्य गमकस्य साधुत्वं वक्तव्यमित्युक्तत्वात् असूर्यम्पश्येत्यादौ असमर्थेन नञा बाणेन हतमारीचो राम इत्यादौ बाणादेर्विग्रहार्थस्य गमकत्वात् सापेक्षत्वेऽपि तदर्थबोधकतयैव समास इति द्रष्टव्यम्" मतृकृतसरला।

"पदसम्बन्धो यो विधिः स समर्थाश्रितो बोध्यः" सि०कौ० "पदस्य पदयोः पदानां वा विधिः पदविधिरिति वचनविशेषस्याविवक्षितत्वं द्योतयन्नाह पदसम्बन्धीति। तत्र पदेति किम् वर्णाश्रये कार्य्येऽसमर्थेऽपि यथा स्यात् तथा च तिष्ठतु दधि आनयान्नमित्यत्र दध्यानयेति पदयोः सामर्थ्याभावेऽपि वर्णाश्रयं यणादिकं भवत्येव। सूत्रे समर्थपदं साधुत्विकमिति द्योतयन्नाह समर्थाश्रित इति समर्थेति किं पश्यति कृष्णं श्रितो राममित्यादौ समासो मा भूत् वस्त्रं कृष्णस्य अपत्यं देवदत्तस्येत्यादौ मा भूत् कृष्णशब्दादपत्यार्थकतद्धितः। इयञ्च परिभाषा समासकृत्तद्धितादिवृत्तिमात्रे प्रवर्त्तते इति बोध्यम्" मतृकृतसरला।

स च समासः षड्विधः।

"सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा। सुबन्तेनेति च ज्ञेयः समासः षड्विधो बुधैः" (सुपां सुपा) पदद्वयमपि सुबन्तम्। राजपुरुष इत्यादिः। (सुपां तिङा)। पूर्वपदं सुबन्तमुत्तरं तिङन्तम्। पर्य्यभूषयत्। "गतिमतोदात्तवता तिङापि समासः" इति वार्त्तिकात् समासः। (सुपां नाम्ना) कुम्भकार इत्यादि। "उपपदमतिङ्" इति समासः। स च "गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेरिति" परिभाषया भवति सुबुत्पत्तेः प्राक्। अतोत्तरपदे सुबुत्पत्तेः प्रागि-

त्वर्थः। अन्यथा चर्मक्रीतीत्यादौ नलोपानुपपत्तेः। (सुपां धातुना) उत्तरपदं धातुमात्रं न तिङन्तम्। कटप्रूः आयतस्तूः। "क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्चेति" वार्त्तिकात् समासः। "तिङां तिङा" पिबतखादता। पचतभृज्जतेत्यादि। "आख्यातमाख्यातेन क्रियासातत्ये" इति मयूरव्यंसकाद्यन्तर्गणसूत्रात् समासः "तिङां सुबन्तेन" पूर्वपदं तिङन्तमुत्तरं सुबन्तम्। जहिस्तम्बः। "जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारञ्चाभि दधातीति" मयूरव्यंसकाद्यन्तर्गणसूत्रात् समासः। अयं षड्विधोऽपि समास, "सह सुपा" इत्यत्र योगविभागेन भाष्ये व्युत्पादितः स्पष्टः शब्दकौस्तुभादौ। अयं भाष्यादिसिद्धतत्त्वेदं व्युत्पाद्य प्राचीनवैयाकरणोक्तविभागव्याख्यात्रादिभिस्तल्लक्षणस्य प्रायिकत्वं दर्शयति"।

"समासस्तु चतुर्द्धेति प्रायोवादस्तथाऽपरः। योऽयं पूर्वपदार्थादिप्राधान्यविषयः स च। भीतपूर्व्वात् सोऽपि रेखागवयादिवदास्थितः"। चतुर्धा अव्ययीभावतत्पुरुषद्वन्द्वबहुव्रीहिभेदात्। अयं प्रायोवादः। भूतपूर्वः इनभूः अवतस्तूः वागर्थाविवेत्याद्यसंग्रहात्। तथा पूर्वपदार्थप्रधानोऽव्ययीभावः। उत्तरपदार्थप्रधानस्तत्पुरुषः सर्वपदार्थप्रधानो द्वन्द्वः। अन्यपदार्थप्रधानो बहुव्रीहिरित्यादि लक्षणमपि प्रायिकम्। उन्मत्तगङ्गं सूपप्रति अर्द्धपिप्पली द्वित्राः कुशपलाशमित्यादौ परस्परव्यभिचारात्। तथाहि उन्मत्तगङ्गमित्यव्ययीभावे पूर्वपदार्थप्राधान्याद्बहुव्रीहिलक्षणातिव्याप्तिरव्ययीभावलक्षणाव्याप्तिश्च। "अन्यपदार्थे च संज्ञायामिति" पा० समासः। सूपप्रतीत्यव्ययीभावे उत्तरपदार्थप्राधान्यात् तत्पुरुषलक्षणातिव्याप्तिरव्ययीभावाव्याप्तिश्च। "सुपः प्रतिना मात्रार्थे" पा० समासः। अर्द्धपिप्पलीति तत्पुरुषे पूर्वपदार्थप्राधान्यसत्त्वादव्ययीभावातिव्याप्तिस्तत्पुरुषाव्याप्तिश्च "अर्द्धं नपुंसकमिति" पा० समासः। एवं पूर्वकाय इत्यादौ द्रष्टव्यम्। द्वित्रा इति बहुव्रीहावुभयपदार्थप्राधान्यात् द्वन्द्वातिव्याप्तिः बहुव्रीह्यव्याप्तिश्च। शशकुशपलाशमित्यादिद्वन्द्वे समाहारान्यपदार्थप्राधान्याद्बहुव्रीह्यतिव्याप्तिर्द्वन्द्वाव्याप्तिश्च स्यादिति भावः। सिद्धान्ते त्वव्ययीभावाधिकारपठितत्वमव्ययीभावत्वमित्यादि द्रष्टव्यम्। असम्भवमेवाह भीतपूर्व्वादित्यादि। रेखागवयादिनिष्ठाङ्कुरादेर्वास्तवपञ्चलक्षणत्ववदेतेषामपि न समासलक्षणत्वम्। बोधकता तु तद्वदेव स्यादिति भावः" वैया०।

शब्दशक्तिप्रकाशिकायाम् अन्यथा समासलक्षणादिकमुक्तं यथा "यादृशस्य महावाक्यस्यान्तस्थार्दिर्निजार्थके। यादृशार्थस्य धीहेतुः स समासस्तदर्थकः"। "यादृशमहावाक्योत्तरस्यन्तस्यादिः स्वार्थस्य यादृशार्थावच्छिन्नविषयताशालिबोधे हेतुस्तादृशं तद्वाक्यं तत्र विधार्थे समासः। पाचकादिकन्तु पाककर्त्राद्यर्थकं वाक्यमपि स्वघटकानेकनामसूच्यतादृशार्थकत्वविरहान्न महावाक्यं प्रकृत्यर्थमात्रावच्छिन्नप्रत्ययार्थस्यान्वयबोधं प्रत्ययोग्यत्वं वा प्रकृते वाक्यस्य महत्त्वं वाच्यं तेन उपकुम्भादौ नाव्याप्तिर्न वा नीलघटत्वमित्यादौ नीलघटत्वादिभागेऽतिप्रसङ्गः। क्षीरपायीत्यादिकस्तु प्रकृत्यर्थावच्छिन्नकदर्थस्यान्वयबोधे समर्थोऽपि न प्रकृत्यर्थमात्रावच्छिन्नस्य ततः पानशीलसामान्यस्याप्रत्ययात्। राजन्येव पुरुषभावः प्रतीयते न तु राजपुरुषस्य भावः तद्धितानां प्रकृत्यर्थमात्रान्वितस्वार्थबोधकत्वादतो राज्ञः पुरुषेत्यादिभागे न प्रसङ्गः। घातं पाययमित्यादिघमन्तभागस्तु स्वार्थावच्छिन्नस्य धात्वन्तरार्थस्यैवान्वयबोधको न तु त्वादिप्रत्ययार्थस्य प्रस्थायेत्यादौ समासव्यपदेशोल्यपादिशब्दसंस्कारप्रयोजनको गौणः" विभजते "स चायं षड्विधः कर्मधारयादिप्रभेदतः। यत्रोपपदसंज्ञोऽन्यस्तेनासौ सप्तधा मतः। "स चायं निरुक्तसमासः कर्मधारयद्विगुतत्पुरुषाव्ययीभावबहुव्रीहिद्वन्द्वभेदात् षड्विधः यत्र कुम्भकारादिरप्युपपदसंज्ञकः समासोऽस्ति तेन समं समासः सप्तविधः। बहुव्रीहिनिभनीकाशादीनामिव कारादीनामपि शब्दानामुपपदार्थान्वितस्यैव स्वार्थस्य बोधकतया तथाविधनामान्तमेव चैतस्य समासान्तराद्विशेषः। ननु यदि षड्विधः सप्तविधो वा समासस्तदास्य पञ्चविधत्वोक्तिः प्राचामसङ्गतेत्यतस्तामुपपादयति"। "पूर्वमध्यान्तसर्वान्यपदप्राधान्यतः पुनः। प्राच्यैः पञ्चविधः प्रोक्तः समासो वामटादिभिः। "कश्चित् समासः पूर्वपदार्थधर्मिकान्वयबोधजनकतया पूर्वपदप्रधान उच्यते यथा प्राप्तजायार्द्धपिप्पलीपूर्वकायादिकस्तत्पुरुषः यथा वा उपकुम्भाद्यव्ययीभावः पुरुषसिंहादिकर्मधारयश्च। कश्चिन्मध्यपदार्थधर्मिकधीजनकतयैव मध्यपदप्रधानो यथा पटानधिकरणप्रतियोगितानवच्छेदकेत्यादिकस्तत्पुरुषः पटस्य नाधिकरणमित्यादिविग्रहे मध्यपदार्थस्यैव विशेष्यत्वात् बहुपदे बहुव्रीहिरेवेत्यस्य तत्पुरुषादेर्बहुनामगर्भत्वाभावे तात्पर्यमित्यपि व्युत्पाद्यत्वात्। कश्चिदन्यपदार्थधर्मिकधीहेतुत्वादन्यपदप्रधानः

यथा राजपुरुषादिकस्तत्पुरुषो नीलोत्पलादिकः कर्मधारयो द्विगात्र्यादिरव्ययीभावश्च । कश्चित् सर्वपदार्थधर्मकबुद्धिहेतुत्वात् सर्वपदप्रधानः यथेतरेतरद्वन्द्वो द्वन्द्वमात्रं वा । कश्चित् स्वघटकान्यपदार्थधर्मिकज्ञानजनकत्वादन्यपदार्थप्रधानः यथा बहुव्रीहिः स्वेवयवाद्यव्ययीभावश्च । तदेवं पञ्च भेदानादायैव पञ्चविधत्वं प्राच्यैरुक्तमतो न विरोधः । नित्यानित्यभेदेन समासस्य द्वैविध्यमप्यस्ति यदुक्तं जयादित्येन "विभक्तिमात्रप्रक्षेपाद्विजान्तर्गतनामसु । स्वार्थस्याबोधबोधाभ्यां नित्यानित्यौ समासकाविति ।" स्वान्तर्गतनामसु विभक्तिमात्रप्रक्षेपेण यत्स्वार्थस्याबोधः स नित्यः समासः यथा कृष्णसर्पनिर्मक्षिकासुराटि. कृष्णः सर्पो मक्षिकाया निः न सुर इत्यादितस्तल्लभ्यस्य वैजात्यादेरप्रहात् । यल्लभ्यस्य च बोधः सोऽनित्यो यथा राजपुरुषपूर्वकायादिः तल्लभ्यार्थस्य राज्ञः पुरुषः पूर्वं कायस्येत्यादिवाक्यादपि प्रतीतेः । स्फुरद्बाणो चलद्रत्न इत्यादिकः कर्मधारयोऽप्यनित्य एव समासः स्फुरन्तो बाणोत्यादिविग्रहस्य बाण्यादौ स्फुरदादिविधेयकबोधाजनकत्वेऽपि स्फुरदभिन्नबाणादावेकत्वादिबोधकत्वमादायैव तदर्थप्रकाशकत्वात् स्फुरन्तौ बाणोमित्यादिवाक्यस्यैव तत्र विग्रहत्वसम्भवात् । विग्रह एव समासलभ्यार्थस्य बोधकत्वं तन्त्रं न तु समासे विग्रहार्थस्य । विग्रहलभ्ययोर्लिङ्गसङ्ख्ययोर्व्यञ्जकवैधुर्ये च प्रायशः समासाबोध्यत्वात् । अतएव यत्र समासे तयोर्व्यञ्जकसद्भावस्तत्रावगमोऽपि यथा जरतीचित्रगुर्जनः प्रियतिसा पुरुष इत्यादौ स्त्रीत्वस्य स्त्रीप्रत्ययतिस्रादेशयोस्तदभिव्यञ्जकयोः सत्त्वात् तथा उपपरि प्रिययुवा हस्त्यश्वमित्यादावेकत्वादेः उपशलाकयोरेकत्व एवाव्ययीभावस्य युष्मदस्मदोर्द्वित्व एव युवावाद्यादेशस्य सेनाङ्गानां बहुत्व एव समाहारद्वन्द्वस्य विधानात् । तदुक्तमभियुक्तैः "सङ्ख्या तु व्यञ्जकाभावादव्यक्ता प्रातरादिवत् । यत्र तु व्यञ्जकं किञ्चित्तत्र सङ्ख्या प्रकाशते । शलाकापरि हस्त्यश्वं पूर्वकायोऽर्द्धपिप्पलीति" । पूर्वादेरंशस्य च कस्यैकत्वमन्तर्भाव्यैवावयविना तत्पुरुषस्य व्युत्पन्नत्वात् सरसिजादौ कण्ठेकालादौ चालुक् समासे सुपः सङ्ख्यावगमेऽपि न क्षतिः तत्र व्यञ्जकसुपः सत्त्वेऽपि सङ्ख्या न बुध्यते इति समासशक्तिवादिनः पातञ्जलाः"। अधिकं तत्र दृश्यम्

**समासक्त** त्रि० सम्+आ+सन्ज—क्त । १संयुक्ते २अत्यन्तासक्ते ३अभिनिविष्टे च ।

**समासङ्ग** पु० सम्+आ+सन्ज-घञ् । १संयोगे २सम्यगभिनिवेशे च ।

**समासवत्** पु० समास+अस्त्यर्थे मतुप् मस्य वः । १व्याकरणोक्तसमासयुक्ते शब्दे २संक्षेपयुक्ते त्रि० ३तुन्दहृत्त्वे पु० शब्दच० । समासेन तुल्यं वति । ४समासतुल्यक्रियायां अव्य० । [१निकटस्थिते २प्राप्ते त्रि० ।

**समासादित** त्रि० सम्+आ+सद+णिच्-क्त । १सम्यगाहृते

**समासान्त** पु० ६त० । व्याकरणोक्तसमासस्य शेषावयवे तत्प्रत्योत्तरविहितविधिश्च अनित्यः "समासान्तविधिरनित्यः" परिभा० ।

**समासार्था** स्त्री समासेन संक्षेपेणार्थोऽभिहितो यस्याः । १समस्यायाम् अमर. । ६त० । २समासबोध्यार्थे पु० ।

**समाहार** पु० सम्+आ+हृ—घञ् । १समुच्चये अमरः २बहूनामवयवभेदे समूहे समाहारे द्वन्द्वे तु द्वित्वबहुत्वादिनैव समूहस्य बोधात् समूहत्वमेव प्रवृत्तिनिमित्तम् । द्वन्द्वशब्दे ३७९२ पृ० द्विगुशब्दे च ३८१२ पृ० दृश्यम् ।

**समाहारद्वन्द्व** पु० व्या० उक्ते समासभेदे ३७९२पृ० दृश्यम् ।

**समाहारद्विगु** पु० व्या० उक्ते समासभेदे द्विगुशब्दे ३८१२पृ० दृश्यम् ।

**समाहित** त्रि० सम्+आ+धा-क्त । १कृतसमाधौ २आहिते ३प्रतिज्ञाते मेदि० ४निष्पन्ने धरणिः ५युक्ते शब्दच० । ६कृतसमाधाने । भावे क्त । ६समाधाने न० ।

**समाहृत** त्रि०सम्+आ+हृ-क्त । १संगृहीते २एकत्रस्थीकृते ।

**समाहृति** स्त्री सम्+आ+हृ-क्तिन् । १संक्षेपे २संग्रहे अमरः । ३समुच्चये च ।

**समाह्वय** पु० समाह्वयते सम्+आ+ह्वे—अच् आत्वाभावः । १आह्वाने २प्राणिकरणकद्यूते च "प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वयः" इति मनुः । ३तदाधिकारेण प्रवृत्तविवादभेदे च द्यूतशब्दे ३७७४पृ०दृश्यम् ।

**समाह्वा** स्त्री समा—आह्वा यस्याः । १गोजिह्वाख्ये शब्दच० । प्रा०स० । २समाख्यायाञ्च । [शब्दर० ।

**समिक** न० सम्-इण-डि संज्ञायां कन् । शेलास्त्रे (सड़का)

**समित्** स्त्री समीयतेऽत्र सम्+इण्-आधारे क्विप् । युद्धे अमरः

**समिता** स्त्री सम्+इण्—क्त । १गोधूमचूर्णभेदे "गोधूमा धवला धौताः कुट्टिताः शोषितास्ततः । मर्दिताःस्ता विनिर्मुक्ताशालिनाः समिताः स्मृताः" राजनि० । २सङ्गते त्रि० ।

**समिति** स्त्री सम्+इण-आधारे क्तिन् । १सभायाम् अमर,

२युद्धे ३सङ्गते च मेदि०। आर्हतमतसिद्धे प्राणिपीड़ापरिहारेण सम्यग्गमने सा च पञ्चविधा अर्हत्शब्दे ३८५ पृ० दृश्या। [२आकृतौ शब्दरत्ना०।

**समिथ** पु० सम+इण–थक्। १वह्नौ २युद्धे च सि०कौ०।

**समिध्** स्त्री समिध्यतेऽनया सम्+इन्ध–करणे क्विप्। १काष्ठे २होमीयकाष्ठभेदे च तल्लक्षणं छन्दोग० "नाङ्गुष्ठादधिका नोना समित् स्थूलतया क्वचित्। न निर्मुक्तत्वचा चैव न सकीटा न पाटिता। प्रादेशान्नाधिका नोना न तथा स्याद्विशाखिका। न सपत्रा न निर्वीर्या होमेषु च विजानता" इति। तस्य निषिद्धलक्षणं यथा "विशीर्णा विदला ह्रस्वा वक्राः स्थूला द्विधाकृताः। कृमिदष्टाश्च दीर्घाश्च समिधो नैव कारयेत्" तत्र दोषो यथा "विशीर्णायुःक्षयं कुर्याद्विदला पुत्रनाशिनी। ह्रस्वा नाशयते पत्नीं वक्रा बन्धुविनाशिनी। कृमिदष्टा रोगकरी विद्वेषकरणी द्विधा। पशून् मारयते दीर्घा स्थूला चार्थविनाशिनी" तन्त्रसा०। [त्रिका०।

**समिध** पु० समिध्यते सम्+इन्ध–क। १काष्ठे २वह्नौ च

**समिन्धन** पु० सम्+इन्ध–करणे ल्युट्। १काष्ठे शब्दच०। भावे ल्युट्। २सम्यग्दीप्तौ च।

**समीक** न० सम–ईकक्। युद्धे अमरः।

**समीकरण** न०असमः समः क्रियतेऽनेन सम–च्वि+कृ ल्युट्। वीजगणितप्रसिद्धे अज्ञातसंख्यानां यावत्तावदादीनामव्यक्तराशीनां संख्या ज्ञानार्थे १प्रक्रियाभेदे २तुल्यरूपतापादने च।

**समीक्ष** न० सम्यगीक्ष्यतेऽनेन घञ्। १साङ्ख्यदर्शने त्रिका०। भावे घञ्। २पर्यालोचने ३सम्यग्ज्ञाने च पु०। अ। समीक्ष्यापत्र। ४मत्त्वे ५बुद्धौ मेदि० ६मीमांसाशास्त्र ७यत्ने च स्त्री शब्दच०।

**समीक्ष्यकारिन्** त्रि०समीक्ष्य पर्यालोच्य करोति कृ–णिनि उप०। वस्तुस्वरूपपर्यालोचनपूर्वककार्यकारके।

**समीच** पु०सम्+इण–चट् किन् दीर्घश्च। १संयुक्ते २ह्रदयां स्त्री ङीप् उज्ज्वलद०। ३वन्दनायां स्त्री त्रिका०।

**समीचीन** त्रि० सम्यगञ्चः सम्+अन्च–क्विप् ततः ख समः समिः अञ्चेरकारलोपे पूर्वपददीर्घः। १यथार्थे २साधौ ३सत्ये न० हेमच०। ४सत्ययुते त्रि०।

**समीनिका** स्त्री समां प्राप्य प्रसूते ख ततः स्वार्थे क। प्रतिवर्षं प्रसूतायां समांसमीनायां गवि शब्दच०। [अमर

**समीप** त्रि०सङ्गता आपोऽत्र अच् समा०आत ईत्त्वम्। निकटे

**समीर** पु० सम्यक् ईरयति नोदयति सम्+ईर–अच्। १वायौ अमरः। २शमीवृक्षे राजनि०। पुंसो०। स मरोऽप्यत्र राजनि०। [३पथिके मेदि०। भावे ल्युट्। सम्यग्गतौ न०।

**समीरण** पु० सम्+ईर-ल्यु। १वायौ २मरुवकवृक्षे अमरः

**समीरित** त्रि० सम्+ईर–क्त। १कथिते २उच्चारिते "चतुर्मुखसमीरिता" कुमारः।

**समीहित** त्रि०सम्+ईह–क्त। १अभीष्टे २सम्यक्चेष्टिते न०।

**समुख** त्रि० सह मुखेन मुखव्यापारेण वा सहस्य सःदेशः। १वावदूके हेमच०। २वाग्मिनि च।

**समुचित** त्रि० सम्+उच–क्त। सम्यग् उपयुक्ते सङ्गते।

**समुच्चय** पु०सम्+उद्+चि–अच्। १द्वित्वादीनां राशौ अमरः परस्परनिरपेक्षाणामनेकेषामेकस्मिन् २क्रियादावन्वये च यथा देवदत्तो यज्ञदत्तश्च गच्छतीत्यत्र देवदत्तयज्ञदत्तयोः परस्परसापेक्षताभावेऽपि एकस्मिन् गमने अन्वयः। तद्वाचकश्च प्रायेण चकारः क्वचित् तथादिशब्दोऽपि। ३सङ्गाहारे शब्दच०।

**समुच्चित** त्रि० सम्+उद्+चि–क्त। कृतसमुच्चये "समुच्चितफलकामनानामि"ति विधिस्वरूपे गदाधरः।

**समुच्चार** पु० सम्+उद्+चर–अप् घञ् वा। सम्यगुच्चारणे २सम्यक्त्यागे च। [पाटने च।

**समुच्छेद** पु० सम्+उद्+छिद–घञ्। १विनाशे २समूलोत्

**समुच्छ्र(च्छ्रा)य** पु० सम्+उद्+श्रि–अच् घञ् वा। १अत्युन्नतौ २विरोधे ३उत्सेधे च मेदि०।

**समुच्छ्रित** त्रि० सम्+उद्+श्रि–क्त। अत्युन्नते।

**समुच्छलित** त्रि०सम्यक्+उच्छलितम् सम्+उद्+शल–क्त वा। समन्तात् निःसृते (क्वचिदपि) "समुच्छलितविभ्रमा गतिः" काव्यप्र०। [युक्ते २प्रत्युज्जीविते च।

**समुच्छ्वसित** त्रि० सम्+उद्+श्वस–क्त। १सम्यगुच्छ्वास-

**समुच्छ्वास** पु० सम्+उद्+श्वस-घञ्। मुखनासिकाभ्यां प्राणवायोर्व्यापारे। [गुह्यमने।

**समुज्झित** त्रि० सम्+उज्झ–क्त। त्यक्ते अमरः। [२सम्य-

**समुत्क्रम** पु० सम्+उद्+क्रम–घञ् न वृद्धिः। १ऊर्द्ध्वगमने

**समुत्क्रोश** पुंस्त्री०सम्यग् उत्क्रोशति उच्चैः शब्दायते सम्+उद्+क्रुश–अच् १कुररविहगे शब्दच० स्त्रियां ङीष्। भावे घञ्। २अत्युच्चैःशब्दे [सम्युत्पन्ने २उत्थिते च।

**समुत्थ** त्रि०सम्यगुत्तिष्ठति सम्+उद्+स्था–क सस्य थः। १स-

**समुत्थान** न० सम्+उद्+स्था–करणे ल्युट् सस्य थः। १समुद्योगे २उत्थाने ३व्याधिनिर्णये च मेदि०।

जम्बूद्वीपशब्दे ३०४४पृ० दर्शिताः। भारतवर्षस्याः समुद्रगाश्च "नदीं पिबन्ति विपुलामित्यादिना "इत्युताश्च महानदीमित्यन्तेन" भा०भी०उक्ताः ३०४६ पृ० दर्शिताः। क्षुद्रनदीनामपि महानद्यामिलितानां समुद्रगामित्वं यथोक्तं माघे "वाक्यूयाम्भोधिमभ्येति महानद्या नगापगा"। [त्रिका०।

**समुद्रगृह** न० समुद्र इव प्रचुरजलं गृहम्। जलयन्त्रगेहे

**समुद्रचुलुक** पु० समुद्रश्चुलुकः गण्डूषजलमितजलमिव अनायासेन पीतत्वाद्यस्य। अगस्त्ये मुनौ त्रिका०।

**समुद्रनवनीत** न० समुद्रस्य नवनीतमिव। समुद्रमन्थनोद्भूतसारांशे १अमृते २चन्द्रे च मेदि०।

**समुद्रफल** न० ओषधिभेदे "समुद्रनाम प्रथमं पश्चात् फल शुटीरवेत्। समुद्रफलमित्यादि नाम वाच्यं भिषग्वरैः। फलं समुद्रस्य कटूष्णकारि वातापहं भूतनिरोधकारि। त्रिदोषदावानलदोषहारि कफामयभ्रान्तिविरोधकारि" राजनि० तद्गुणा उक्ताः।

**समुद्रफेन** पु० ६त०। समुद्रस्य फेने अमरः "समुद्रफेनश्चक्षुष्यो लेखनः शीतलश्च सः। कषायो विषपित्तघ्नः कर्णरुक्कफहृल्लघुः" भावप्र० तद्गुणा उक्ताः।

**समुद्रमेखला** स्त्री समुद्रः मेखलेव वेष्टनाकारत्वात् यस्याः। पृथिव्यां त्रिका०। समुद्ररसनादयोऽप्यत्र।

**समुद्रयान** न० यायतेऽनेन या-करणे ल्युट् ६त०। पोते समुद्रतरणसाधने नौकाभेदे वराहपु०।

**समुद्रयात्रा** स्त्री ६त०। समुद्रस्य तीर्थत्वेन गमने। कलौ तन्निषेधः कलिशब्दे १८०४ पृ० दृश्यम्।

**समुद्ररसना** स्त्री समुद्रः रसना इव वेष्टकत्वात् यस्याः। पृथिव्यां हला०।

**समुद्रलवण** न० समुद्रजलजातं लवणम्। (करकच)सामुद्रे लवणे राजनि०। "सामुद्रं यत्तु लवणमक्षीवं वशिरं च तत्। सामुद्रं मधुरं पाके सतिक्तं मधुरं गुरु। नात्युष्णं दीपनं भेदि आक्षीवमविदाहि च। श्लेष्मलं वातनुत्तिक्तमरुच्यं नातिशीतलम्" भावप्र०।

**समुद्रवह्नि** पु० ६त०। समुद्रस्थे अग्नौ वाडवानले हला०

**समुद्रवेला** स्त्री ६त०। समुद्रस्य कूले।

**समुद्रसुभगा** स्त्री ६त०। गङ्गायां राजनि०।

**समुद्रान्त** न० समुद्रस्यान्तः पर्य्यन्तदेशः उत्पत्तिस्थानत्वेनास्त्यस्य अच् समुद्रः अन्तो यस्य वा। १जातीफले शब्दच० २दुरालभायां स्त्री अमरः। ३कार्पास्यां ४पृक्कायां मेदि० ५यवासे स्त्री राजनि०। ६त०। ६समुद्रपर्य्यन्ते त्रि०।

**समुद्राम्बरा** स्त्री समुद्रः अम्बरमिव वेष्टनाकारत्वात् यस्याः। पृथिव्यां त्रिका०। सागराम्बरादयोऽप्यत्र।

**समुद्रार** पु० समुद्रमृच्छति ऋ-कर्त्तरि करणे वा अण्। १कुम्भीरे २सेतुबन्धे ३तिमिङ्गिलमत्स्ये मेदि०। [पटार्थे।

**समुद्रि(द्री)य** त्रि० समुद्र+भवार्थे घ छ वा। समुद्रभवे

**समुद्वह** त्रि० सम्+उद्+वह-अच्। श्रेष्ठे सम्यगुद्वहनकर्त्तरि च। [अमरः।

**समुन्दन** न० सम्+उन्द-ल्युट्। सम्यगार्द्रीभावे (भिजा)

**समुन्न** न०सम्+उन्द-क्त। १क्लिन्ने २आर्द्रे अमरः। [धरणिः

**समुन्नत** त्रि० सम्+उद्+नम-क्त। १अत्युच्चे २सम्प्रभेदे पु०

**समुन्नति** त्रि० सम्+उद्+नम-क्तिन्। १उन्नतायाम् "प्रायः पयोधरसमुन्नतिरत्र हेतुः" उद्भटः। २वृद्धौ ३उन्नत्यां स्त्री-नतायां जटा०।

**समुन्नद्ध** त्रि० सम्+उद्+नह-क्त। १गर्विते २पण्डितम्मन्ये अमरः। ३प्रभौ अजयः। ४समुन्नते मेदि० ५उत्क्षिप्य बद्धे हेमच०। ६समुद्धृते च। भावे क्त। ७उत्तोल्यबन्धने न०। [३उत्क्षेपणे ४समुद्भावने च।

**समुन्नय** पु० सम्+उद्+नी-अच्। १ऊर्द्धनयने २सम्यग्नीतौ

**समुपचित** त्रि० सम्यक् उपचितम् उप+चि-क्त। १सुबद्धीकृते २संवर्द्धिते च। [रामाश्रमः।

**समुपजोषम्** अव्य० सम्+उप+जुष-अम्। आत्मानन्दे

**समुपेयिवस्** त्रि० सम्+उप+इण-क्वसु। समीपगते।

**समुपोढ** त्रि० सम्+उप+वह-क्त। १सङ्गते २रब्धाते च।

**समुल्लेख** पु० सम्+उद्+लिख-घञ्। पादादिना भूम्यादेः खनने।

**समूढ** त्रि० सम्+ऊह+वह-वा क्त। १राशीकृते २अनपप्लुते "समूढमस्य पांसुरे" इति ऋग्वेदः। ३भुग्ने ४सद्योजाते मेदि० ५दमिते ६कृतविवाहे धरणिः ७शोधिते जटा०। सह मूढेन। ८मूढसहिते त्रि०।

**समूरु** पु०सक्थ्नौ सन्धिहीनत्वात् ऊरू यस्य। मृगभेदे अमरः पृषो०। समूर तत्रार्थे पुंस्त्री० हेमच० स्त्रियां ङीप्।

**समूल** त्रि० सह मूलेन। मूलसहिते "समूले उपपदे कषादिभ्यः णमुल् तत्प्रकृतिधातोरनुप्रयोगश्च "समूलकाषं च कष" "समूलघातं न्यवधीत्" इति च भट्टिः।

**समूह** पु० सम्+ऊह-घञ्। १समुदये अमरः। समूहत्वञ्च अपेक्षाबुद्धिविषयविषयत्वं त्रित्वादिपर्य्याप्तसंख्याविशेषो वा। २सम्यग् ऊहे तर्के च।

**समूहनी** स्त्री समुह्यतेऽनया सम्+ऊह–करणे ल्युट् ङीप्। १सम्मार्जन्यां हेमच०। भावे ल्युट्। २सम्मार्जने परिसमूहनशब्दे ४२५८ पृ० दृश्यम्। ३सम्यगूहकरणे च न०।

**समूहालम्बन** त्रि० समूहमालम्बते विषयतया आ+लबि–ल्यु। नानाप्रकारतानिरूपितनानाविशेष्यताशालिनि ज्ञाने। तत्र संशये नानाप्रकारतानिरूपिताया एकविशेष्यतायाः सत्त्वात् न समूहालम्बनत्वम्। धवखदिरौ द्वावित्यादौ दण्डी कुण्डी च देवदत्त इत्यादौ वाक्यजनितबोधस्यापि समूहालम्बनत्वं तत्रोभयनिरूपितयोः विशेष्यतयोर्द्वयोरेवाङ्गीकारात् द्वन्द्वात्परस्य समासशब्दस्य प्रत्येकान्वयनियमेन प्रथमार्थद्वित्वस्य प्रत्येकवृत्तित्वात् तस्य समवायेनैवेति बोध्यम्। अतएव शब्दचिन्तामणौ अधिकृता धवखदिरपलाशांश्छिनत्तीत्यादौ प्रत्येककर्मताया एव विभिन्नक्रियायामन्वय इत्युक्तम्। अत उक्तस्थले विशेष्यताद्वयम्। धवखदिरौ द्वावित्यादावपि द्वित्वस्य सम वायसम्बन्धेन धवादिवृत्तित्वात् विशेष्यताद्वयाङ्गीकारेऽपि नक्षत्यभावात्। तेनैव धवखदिरौ न द्वाविति प्रतीतिवारणसम्भवात्। घटं पटञ्च पश्यतीत्यादौ च दर्शनक्रियायां घटपटयोरन्वयसम्भवे तु न समूहालम्बनमिति भेदः इत्यादिबोध्यम्। यदि च आत्मघटयोर्नास्तित्वमित्यादि प्रयोगसाधुत्वार्थं पर्याप्तिसम्बन्धेनैव द्वित्वादेर्बोधोऽङ्गीक्रियते तदा तस्य न समूहालम्बनत्वम्।

**समूहिन्** त्रि० समूहोऽस्त्यस्य इनि सम्+ऊह–णिनि वा। समूहावयवे प्रत्येकवस्तुनि यथा घटपटसमूहान्तर्गता घटः पटश्च समूही। २सम्यकतर्कयुते त्रि० स्त्रियां ङीप्

**समूह्य** पु० सम्+ऊह–ण्यत्। १यज्ञियाग्नौ अमरः २सम्यक् तर्क्ये त्रि० ३यज्ञाग्निसंस्कारभेदे सि०कौ०।

**समृद्ध** त्रि० सम्यक् ऋद्धः ऋध–क्त। १अधिकसम्पत्तियुक्ते अमरः। २अतिवृद्धे च शब्दमा०।

**समृद्धि** स्त्री सम्यक् ऋद्धिः सम्+ऋध–क्तिन् वा। १अतिसम्पत्तौ अमरः २सम्यगृद्धौ च "मधुसमृद्धिसमेधित या मेधया" माघः।

**समेत** त्रि० सम्+आ–इण क्त। १समागते २सङ्गते च।

**समेधित** त्रि० सम्+एध+णिच्–क्त। संवर्द्धिते "मधुसमृद्धिसमेधितमेधयेति" माघः।

**समोदक** न० समम् अर्द्धभागेन तुल्यमुदकं यत्र। अर्द्धाम्बुसंयोगेन मथितदधिजाते १तक्रभेदे हेमच०। सह मोदकेन सहस्य सः। २मोदकसहिते त्रिकाण्डशेषः।

**सम्पत्ति** स्त्री सम्+पद्–क्तिन्। १अतिविभवे अमरः २अनुरूपात्मभावे यस्य यद्रूपता उचिता तस्य तथाभवने च सि०कौ० ३विभूतौ मेदि०।

**सम्पद्** स्त्री सम्+पद–सम्प० भावे क्विप्। १विभवे २सम्पत्तौ च अमरः। ३गुणोत्कर्षे। करणे क्विप्। ४हारभेदे पु० मेदि०। घञर्थे क। सम्पद तत्रार्थे न० शब्दमा०।

**सम्पन्न** त्रि० सम्+पद्–क्त। १साधिते २सम्पद्युक्ते च मेदि०

**सम्पराय** पु० सम्+परा+इण–आधारे अच्। १युद्धे २आपदि ३उत्तरकाले च अमरः।

**सम्परायिक** न० सम्परायाय आपदे हितम् ठन्। १युद्धे तदर्थं ठण्। २साम्परायिकमप्यत्र अमरः। [मेदि०।

**सम्पर्क** पु० सम्+पृच–घञ्। १सम्बन्धे २रतौ ३मेलके च

**सम्पर्किन्** त्रि० सम्+पृच–घिनुण्। सम्बन्धयुक्ते।

**सम्पा** स्त्री सम्यक् अतर्कितं पतति पत–ड। विद्युति अमरः।

**सम्पाक** पु० सम्यक् पाको यस्मात् ५ब०। आरग्वधवृक्षे अमरः तद्भोजने हि भुक्तान्नादेः सम्यक्पाको भवतीति वैद्यके प्रसिद्धम्। २धृष्टे ३तर्कके मेदि० ४सम्पटे ५अल्पे च त्रि० धरणिः।

**सम्पात** पु० सम्+पत–घञ्। १पक्षिगतिभेदे जटा० २सम्यक्पतने च। ३रेखाद्वयादेः सम्पतने च।

**सम्पाति** पु० सम्+पत–णिच्–इन्। जटायुषो ज्येष्ठभ्रातरि पक्षिभेदे रामा०। स्वार्थे क। तत्रैव। सम्पातिरिव कायति कै–क। सम्पातिक गरुडज्येष्ठतनये शब्दमा०।

**सम्पुट** पु० सम्+पुट–क। १कुङ्कुमकटच्चे अमरः। सम्यक् पुटमिव उभयपार्श्ववर्त्ति यस्य। २एकजातीयपदार्थेन भिन्नजातीयस्य उभयतो व्याप्ते त्रि० "पकारैः सम्पुटोजाप्यः" इति तन्त्रम्।

**सम्पुटक** पु० सम्पुटयति सम्+पुट–अच् स्वार्थे वुन्। समुद्गके मञ्जूषाख्ये (पेटारा) पदार्थविशेषे अमरः।

**सम्पूर्ण** त्रि०सम्+पूर–क्त। १परिपूर्णे २समग्रे च "आदित्योदयवेलायाः प्राङ्मुहूर्त्तद्वयान्विता। एकादशी हि सम्पूर्णे"ति स्मृत्युक्ते ३एकादशीभेदे स्त्री ति०त०। शुद्धे ४षष्टिदण्डात्मकतिथिमात्रे स्त्री तिथिशब्दे ३२९३ पृ०दृश्यम्।

**सम्पृक्त** त्रि० सम्+पृच–क्त। १मिश्रिते हेमच० २सम्बद्धे च

**सम्प्रणयन** न० सम्+प्र+णी–ल्युट्। १सम्यगवज्ञितादेः शोधनाय संस्कारविशेषे २विधाने च। [अमरः।

**सम्प्रति** अव्य० सम्+प्रति+समाहारद्वन्द्वः। इदानीमित्यर्थे

**सम्प्रतिपत्ति** स्त्री सम्+प्रतिपद्यते क्तिन्। १यथार्थवि·

स्वीकरणे “शुल्काभियोगं प्रत्यर्थी यदि तं प्रतिपद्यते। सा तु सम्प्रतिपत्तिः स्यादि”ति २५पृ॰ उक्ते व्यवहारे उत्तरभेदे च “मिथ्या सम्प्रतिपत्तिश्च प्रत्यवस्कन्दनं तथा। प्राङ्न्यायश्चोत्तराः प्रोक्तायत्वारः शास्त्रवेदिभिः” उत्तरशब्दे १०१८ पृ॰ दृश्यम्।

**सम्प्रदात** त्रि॰ सम्+प्र+दा–तृच्। दानकर्त्तरि स्त्रियां ङीप्।

**सम्प्रदान** न॰ सम्+प्र+दा–भावे ल्युट्। सम्यक्प्रदाने। सम्प्रदीयतेऽस्मै ल्युट्। “कर्म्मणा यमभिप्रैति स सम्प्रदानमिति” पाणिन्युक्ते २दानकर्म्मोद्देश्ये। तच्च त्रिविधम्। “अनिराकरणात् कर्त्तुस्त्यागाङ्गकर्मणेप्सितम्। प्रेरणानुमतिभ्याञ्च लभते सम्प्रदानताम्” इत्युक्तेः। तत्र विप्राय वस्त्रं ददातीत्यादौ अनिराकर्त्तृ सम्प्रदानम्, याचकाय धनं ददातीत्यादौ प्रेरयितृ सम्प्रदानम्, गुरवे धनं ददातीत्यादौ अनुमन्तृ सम्प्रदानम्। गौणमुख्यसाधारणे सम्प्रदाने चतुर्थी पा॰। तल्लक्षणं तु शब्दश॰ प्र॰ दर्शितं यथा “गत्यादिभिन्ने धात्वर्थे चतुर्थ्या विभक्त्यर्थया। यः स्वार्थो बोधनीयस्तत्सम्प्रदानत्वमीरितम्”। “गत्यादिभिन्ने यद्यादृशस्यार्थे यादृशार्थे विभक्त्यर्थतया यः स्वार्थो बोधयितुं शक्यते स तद्रूपस्यार्थताद्य क्रियायां सम्प्रदानत्वमुच्यते। ब्राह्मणाय दानं धनस्येत्यादौ ददातेः स्वत्वजनकत्यागोऽर्थस्तद्विशिष्टे च स्वत्वे ब्राह्मणादेः प्रतियोगित्वं निरूपितत्वं वा चतुर्थ्या बोध्यते इति तदेव तत्र सम्प्रदानत्वं ब्राह्मणप्रतियोगिकं ब्राह्मणनिरूपितं वा यदनन्तरं स्वत्वं तज्जनकत्याग इत्येवं तत्र प्रत्ययात् धात्वर्थतावच्छेदकीभूतस्वत्वात्मफलवत्तया धनादेर्दानकर्मत्वात्। न चैवं पशुकामनया यागकरणदशायां चैत्रः स्वात्मने पशुं ददातीत्यपि प्रयोगापत्तिस्तादृशयागस्य चैत्रीयं यत् पशुनिष्ठं स्वत्वं तज्जनकत्यागत्वादिति वाच्यं स्वत्वध्वंसजनकक्रियापर्य्यवसन्नस्य त्यागस्यैकदेशे स्वत्वध्वंसेऽपि द्वितीयाद्यर्थस्यान्वयेन पशुफलकयागे पशुनिष्ठस्य स्वत्वध्वंसस्य जनकत्वविरहादेव तदाकारस्याप्रमाणत्वात्। ग्रामाय गत इत्यादौ विभक्त्यर्थचतुर्थ्या धात्वर्थे बोध्यमपि कर्मत्वं न गत्यादिभिन्ने चतुर्थ्या बोधनीयम्। संवन्धे विप्रमित्यादि तु चतुर्थी न विभक्त्यर्थेति न तत्र प्रसङ्गः। सम्प्रदानशब्दस्तु स्वाश्रयगोचरत्यागजन्यस्वत्वस्य प्रतियोगिन्येव शक्त इति स्वत्वप्रतियोगित्वं सम्प्रदानत्वमित्यादिको न प्रयोगः। न च दानस्य स्वत्वहेतुत्वे प्रमाणाभावः। “स्वं रिक्थागमा-

च्चयौ दायो लाभः क्रयो जयः। विभागः सप्तयोगश्च सत्प्रतिग्रह एव च” इत्यादिमन्वादिवचनैस्तस्य स्वत्वहेतुत्वप्रतिपादनादिति वाच्यं ब्राह्मणाय स्वकीयां गवि गौरियं ब्राह्मणस्य न तु ममेत्यादिव्यवहारजननीप्रतीतेरेव तत्र प्रमाणत्वात् “प्रदानं स्वाम्यकारणमिति” वचनाच्च। अतएव विदेशस्थं पात्रमुद्दिश्य त्यक्तधने स्वीकारमन्तरेणैव पात्रस्य परचनस्येव पितृदायत्वेन तद्धनं पुत्रादिभिर्विभज्य प्रदाते अन्यथा तैरिव उदासीनैरपि तद्धनस्य गन्धकुमारादेरिवोपादाने यथेष्टनियोगे च प्रत्यवायो न स्यात्। नन्वेवं दानादेव स्वत्वमिह दत्तवस्तुनि स्वीकारो व्यर्थ इति चेन्न “लब्ध्वा चाद्गुणं फलम्” इत्यादिभिः प्रतिग्रहीतृप्रदानस्य फलविशेषं प्रतिहेतुत्वेन तादृशफलसम्पत्त्यर्थमेव प्रतिग्रहस्योपयोगात् “याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्ज्जयेदित्यादि” श्रुत्या प्राशुक्तस्वत्वा च प्रतिग्रहस्यापि स्वत्वहेतुत्वबोधनाच्च स्वत्वजनकव्यापारस्यैवार्जनपदार्थत्वात्। दासाय भक्ष्यं ददाति रजकाय वेतनं ददातीत्यादावपि स्वत्वजनकत्यागं प्रतिपादयन् ददातिरमुख्य एव पुण्यजनकन्तु न तादृशं दानमवैधत्वात्। यत्तु स्वीकारजन्यस्य स्वत्वस्य जनकस्त्यागो दानं मनसा पात्रमुद्दिश्य धनत्यागस्तु न दानं किन्तूत्सर्गमात्रं प्रतिग्रहजन्यस्वत्वं प्रति हेतुभूतवैधत्यागस्यैव तथात्वात्, उपेक्षा तु स्वत्वध्वंसमात्रजनकस्त्यागो न तु तत्र स्वत्वजनकत्वमत्यन्तमेव इति मैथिलैरुक्तं तन्न युक्तं लाघवेन स्वत्वजनकत्यागस्यैव दानार्थत्वात्। तिलानस्मै प्रतिश्रुत्य ऋणमस्मै विक्रीणीते इत्यादौ द्रव्यान्तरग्रहणपूर्वकं दानमेव प्रतिदानं मूल्यग्रहणपूर्वकं दानमेव च विक्रय इति तत्रापि मुख्यमेव सम्प्रदानत्वं चतुर्थ्या बोध्यते तिलादिकञ्च न मूल्यं पणपुराणादेरेव शास्त्रे तथात्वोपदेशात्। अदृष्टार्थं दत्तस्यैव च स्वीकारः प्रतिग्रह इति परैव प्रीतिदत्तस्य विक्रीतस्य वा तिलतराणादेः स्वीकारो न दोषावहः। मैत्राय रोचते मोदक इत्यत्र चतुर्थ्या धात्वर्थान्वितमाश्रेयत्वं धातुना च भक्ष्यत्वप्रकारकेच्छोपस्थाप्यते तिन्डा तु प्रशायत इत्यादाविव विषयत्वलक्षणं कर्तृत्वं तथाच मैत्रनिष्ठाया भक्ष्यत्वप्रकारकेच्छाया विषयतावान् मोदक इत्याकारकस्तत्र बोधः। गुरवे गां धारयते इत्यत्र छन्दा बन्धादिस्थितिर्द्वितीयया तदन्वितं कर्तृत्वं चतुर्थ्या च तद्विशिष्टेच्छान्वितं सम्बन्धित्वमुपस्थाप्यते तेन गोकर्तृकाया गुरुसम्बन्धाध्यासाव-

श्लिष्टेरनुकूलव्यापारवानित्याकारस्तत्र बोधः छधातूत्तरणिचा व्यापारबोधनादिति काशकाः। पाणिनीयास्तु "धारेरुत्तमर्णः" इति सूत्रानुसारेण चैत्राय शतं धारयते इत्यादाविव गुरवे गां धारयते इत्यादावपि उत्तमर्णत्वं धारणं दत्तत्वञ्च चतुर्थ्यर्थः तथाच गुरुदत्तां गां ऋणत्वेन स्वकृतीत्याकारस्तत्र वाक्यार्थः पश्चाद्बोध्यत्वेनाङ्गीकृत्य स्वहीतस्य द्रव्यस्यर्णमित्याहुः। पुत्राय राध्यति पुत्रायेक्षते इत्यादौ दैवनिरूपणं धात्वर्थस्तद्विषये च दैवे सम्प्रदानस्य सम्बन्धस्यान्वयत्वेन पुत्रस्य दैवं निरूपयतीत्येव तत्र बोधः। गुरवे गां प्रतिशृणोति आशृणोतीत्यादौ देयत्वेनाभ्युपगमः शृणोतेरर्थस्तत्र गोर्विशेष्यत्वेन तदेकदेशे च दाने गुरोरुद्देश्यत्वेनान्वयत्वेन गुरूद्देश्यकदानकर्मत्वेन गामभ्युपगच्छतीत्येवं तत्र बोधः। होत्रे प्रतिगृणाति अनुगृणातीत्यादौ हर्षानुकूलव्यापारलक्षणं प्रोत्साहनं गृणातेरर्थस्तदेकदेशे च हर्षे होत्रादेरन्वयत्वेन होतृनिष्ठहर्षानुकूलव्यापारवानित्याकारकस्तत्र बोधः। चैत्राय कुप्यति क्रुध्यतीत्यादौ धात्वर्थे उत्कटद्वेषस्तत्र विषयित्वसम्बन्धं सम्प्रदानस्य चतुर्थ्या बोध्यते तेन च चैत्रविषयकोत्कटद्वेषवानित्याकारकस्तत्र बोधः। पुत्रे कोपो न युज्यते इत्यादौ कदन्तस्य कोपपदस्यैवार्थे पुत्र इत्यन्वया न तु धात्वर्थे। पटाय यतते इत्यादावपि धात्वर्थकृतौ सुपा पटस्य विषयित्वं बोध्यते तत्रोद्देश्यत्वमेव चतुर्थ्यर्थः कथमन्यथा पटेच्छया तन्तुनिर्माणद्शायां पटाय यतते इत्यादिकः प्रयोगः इत्यपि वदन्ति। मित्राय द्रुह्यतीत्यत्र हिंसाचरणं द्रोहस्तेन मित्रस्य हिंसाचरतीत्यर्थः। शिष्यायेर्ष्यतीत्यत्रानिष्टानुपेक्षणमीर्ष्या तथाच शिष्यानिष्टं नोपेक्षत इत्यर्थः। पुत्रायासूयतीत्यत्र असूया गुणद्वेषस्तेन पुत्रस्य गुणं द्वेष्टीत्याकारस्तत्र बोधः। मित्रं द्रुह्यति शिष्यमीर्ष्यति पुत्रमसूयतीत्यपि प्रयोगात् द्रुहादिकर्मणः सम्प्रदानत्वं वैकल्पिकमित्युन्नीयते। कोपपूर्वकस्य द्रोहादेर्द्रुहादिधातुवाच्यत्वे तत्कर्मणः सम्प्रदानत्वं द्रोहादिमात्रस्य तद्वाच्यत्वे तु कर्मत्वमेवेति पुनः कौमाराः। सोपसर्गयोस्तु क्रुधद्रुहोः कर्मणः कर्मतैव न तु सम्प्रदानता अतएव शिष्यमभिक्रोधा मित्रमभिद्रोढेत्यादौ तद्योगे कर्मणि षष्ठ्येव प्रमाणम्"।

**सम्प्रदाय** पु० सम्+प्र+दा—भावे घञ्। १गुरुपरम्परागते सदुपदेशे अमरः। उपचारात् २तदुपदेशयुते जने च। ईश्वरस्यैव सर्वसम्प्रदायप्रद्योतकत्वमिति "निर्माणकायमधिष्ठाय सर्वसम्प्रदायप्रद्योतक इति पातञ्जलाः" कुसुमा०। ईश्वरवादे च अविक्षताऽऽशङ्का तथैव व्यवस्थापितं यथा "ननु शरीरात् कथं वेदघटादिसम्प्रदायः उच्यते सर्गादावदृष्टोपगृहीतभूतभेदात्मीनशरीरोत्पत्तावदृष्टवदात्मसंयोगाददृष्टसहकृतप्रयत्नवदीश्वरसंयोगाद्वा सकलवेदार्थगोचरज्ञानाद्विवक्षार्हितात्मीनकलेवरकण्ठताल्वादिक्रियाजन्यसंयोगाद्वेदोत्पत्तिः। एवं कुलालादिशरीरावच्छेदेनादृष्टसहकृतप्रयत्नवदीश्वरसंयोगात्तद्बुद्धीच्छासहितचेष्टोत्पत्तौ सकलघटानुकूलव्यापारो घटोत्पत्तिः। एवं प्रयोज्यप्रयोजकज्ञानाय व्यापाराभिमतशरीरावच्छेदेनापि अदृष्टसहकृतेश्वरज्ञानेच्छाप्रयत्नादेव व्यवहारः, ततस्तदुपयोगी बालो व्युत्पद्यते सोऽयं भूतावेशन्यायः। यत्तु यथा लिप्यादिर्नीरनिक्षाकोऽनुमाय पठ्यते तथा सर्गान्तरोत्पन्नतत्त्वज्ञानवता भोगार्थं सर्गादावुत्पन्नेन मन्वादिना सर्वज्ञेन, ईश्वराभिप्रायस्य वेदः साक्षात्कृत्यानूद्यते ततोऽपि च सम्प्रदायः स एव कायव्यूहं कृत्वा वाग्व्यवहारं करोतीति मतं तन्न प्रतिसर्गाद्यनन्तसर्वज्ञकल्पनायां गौरवात् तेषामेव क्षित्यादिकर्तृत्वसम्भवेन ईश्वरानुमानाच्च। एतेन सर्गादौ सर्गान्तरसिद्धयोगिन एव क्षितिकर्त्तारः सन्त्विति निरस्तं सर्गादावनन्तसर्वज्ञसिद्धिश्च किं प्रमाणान्तरात् क्षित्यादिकर्तृत्वाद्वा नाद्यस्तदभावात् नान्त्यः अनादिद्व्यणुकादिकार्यप्रवाहस्य सकर्तृकत्वानुमानात् लाघवसहकृतादेकस्यैव सर्वज्ञस्य सिद्धेः"।

सम्प्रदायप्रवर्त्तकभेदाश्च पद्मपु० उक्ता यथा "श्रीमन्नारायणो ब्रह्मा नारदो व्यास एव च। श्रीशमध्वः पद्मनाभो नृहरिर्माधवस्तथा। अक्षोभ्यो जयतीर्थश्च ज्ञानसिन्धुर्महानिधिः। विद्यानिधिश्च राजेन्द्रो जयधर्ममुनिस्तथा। पुरुषोत्तमो ब्रह्मण्यो व्यासतीर्थमुनिस्तथा। श्रीमाल्लक्ष्मीपतिः श्रीमान् माधवेन्द्रपुरी तथा। सम्प्रदायविहीना ये मन्त्रास्ते निष्फला मताः। अतः कलौ भविष्यन्ति चत्वारः सम्प्रदायिनः। श्रीमाध्वरुद्रसनका वैष्णवाः क्षितिपावनाः" पद्मपु०। तन्त्रोक्तवैष्णवसम्प्रदाया यथा "श्रीशिव उवाच वैखानसः सामवेदी श्रीराधावल्लभो तथा। गोकुलेशो महेशानि! तथा वृन्दावनी भवेत्। पञ्चरात्रः पञ्चमः स्यात् षष्ठः श्रीवीरवैष्णवः। रामानन्दी हरिव्यासी निम्बार्कश्च महेश्वरि!। ततो भागवतो देवि! दश भेदाः प्रकी-

र्त्तिताः। शिखी मुण्डी जटी चैव द्विविदण्डी क्रमेण च। एकदण्डी महेशानि! वीरशैवस्तथैव च। सप्त पाशुपताः प्रोक्ता दशधा वैष्णवा मताः। एतेषां वाचनं देवि! शृणु यत्नेन शाम्भवि!। वेदेष्टि सर्वं संत्याज्य यस्तिष्ठति स वैष्णवः। वैखानसादिदत्ताद्यैर्भूषितः स्मार्त्तवैष्णवः। श्रीराधावल्लभं देवि! शृणु यत्नेन शाम्भवि!। वैष्णवाचारनिरतो विष्णुतन्त्रैकपारगः। अनन्यचेताः शान्तात्मा विष्णुचिन्तापरायणः। श्रीराधावल्लभो देवि! गोकुलेशं शृणु प्रिये!। नानाभूषणसम्पन्नो नानासुगन्धिभूषितः। गवां कुलं प्रीणयिता केलिकृष्णस्वरूपधृक्। शरीरमर्थं प्राणांश्च संनिवेदतीह यः। अन्तःशक्तिपरो देवि! बहिर्वैष्णवरूपधृक्। मध्यगोचारनिरतो व्रतावेष्टनतत्परः। सम्प्रदायो गोकुलेशः सर्वसिद्धिकरो भुवि। वृन्दावनाख्यं देवेशि! शृणु यत्नेन साम्प्रतम्। विमताशप्रसन्नात्मा विष्णुभक्तिपरायणः। कामिनीसङ्गचपलो वनक्रीडाविनोदधृक्। सौगन्ध्यभूषिततनुः स्वाध्यायैकपरायणः। विष्णुवाङ्मयतत्त्वज्ञः प्रोक्तो वृन्दावनी शिवे!। पाञ्चरात्रो महेशानि तथैव वीरवैष्णवः। पूर्वमेव महेशानि कीर्त्तितः परमेश्वरि!। रामशक्तिरिति विख्याता सः शिवः परिकीर्त्तितः। नटानन्दो शान्तचित्तो प्रसन्नात्मा विचारधृक्। सर्वत्र समरूपा च रामानन्दी प्रकीर्त्तिता। हविष्याशी महेशानि! यथावटत्रधारक। पापसंहरणासक्तो विष्णुभक्तो जितेन्द्रियः। यमादिनियमैर्युक्तो भक्ताचारपरायणः। स्वोपयोगफलत्यागी परकार्यपरायणः। हविष्याशी महेशानि! शिवभक्तिस्वरूपधृक्। निम्बार्काख्यं सम्प्रदायं शृणु यत्नेन साम्प्रतम्। नित्यार्चनक्रमासक्तः स्वतन्त्रैकपरायणः। बाह्यपूजादिनिरतो नान्यभक्तः प्रसन्नधीः। सार्थ्यपत्न्यान्वितः स्वच्छः स्वच्छन्दाचारतत्परः। स्वतन्त्रः स्मार्त्तविद्वेषी निम्बार्को भगवान् हरिः। अथ भागवतं देवि! कथ्यते शृणु साम्प्रतम्। विष्णुभक्त्यैकनिपुणो विजितात्मा प्रसन्नधीः। स्मार्त्तमार्गान्वितो देवि! तदन्याचारतत्परः। सार्थ्यपत्न्यान्वितो देवि! तथा स्वरूपवेशधृक्। शैवद्वेषी तस्य सङ्गात् पुनः स्नानपरायणः। केवलविष्णुतत्त्वज्ञः प्रोक्तो भागवतः शिवे” शक्तिसङ्ग०त०

**सम्प्रधारणा** स्त्री सम्+प्र+धृ—णिच्-युच्। युक्तायुक्तत्वविवेचनार्थसमर्थने अमरः।

**सम्प्रयोग** पु० सम्+प्र+युज—घञ्। १द्रव्यादिलाभेच्छया धनादिविनियोगे “विभाग सम्प्रयोगश्चे”ति स्मृतिः। २रमणे ३निधुवने ४सम्बन्धे ५ब्रर्थिते त्रि० अजयः ६सन्द्रव्ये ७कार्मणे वशीकरणादौ मेदि० ८इन्द्रियविषयसम्बन्धे च

**सम्प्रयोगिन्** त्रि० सम्+प्र+युज—घिनुण्। १कामुके २कलाकेलिकारके २सम्यगलाभार्थं धनादिविनियोजके। ३संप्रयोजके त्रि० मेदि०। [दिरूपम्।

**सम्प्रसन्न** त्रि०। १सम्यक्प्रसन्ने २हृष्टे च सम्प्रसादशब्दे

**सम्प्रसाद** पु० सम्+प्र+सद्-करणे-घञ्। १योगादिशास्त्रोक्तचित्तस्य नैर्मल्यसम्पादके प्रयत्नभेदे। भावे घञ्। २सम्यक्प्रसन्नतायाम्। आधारे घञ्। ३सुषुप्तौ “तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं विजानातीति” श्रुतिः। सम्प्रशब्दे च सुषुप्तशब्दे दृश्यम्।

**सम्प्रसाधन** न० सम्+प्र+साध-णिच् करणे ल्युट्। १कटकादौ भूषणे। भावे ल्युट्। २भूषणक्रियायाम्।

**सम्प्रसारण** न० सम्+प्र+सृ—णिच-ल्युट्। १सम्यग्विस्तारणे व्याकरणोक्ते यणः स्थाने जायमाने २इक्संज्ञकवर्णे च। “इक् यणः सम्प्रसारणम्” पा०।

**सम्प्रहार** पु० सम्प्रह्रियतेऽत्र सम्+प्र+हृ—आधारे घञ्। १युद्धे अमरः। भावे घञ्। २सम्यक्प्रहरणे ३गमने च मेदि०।

**सम्प्राप्ति** स्त्री सम्+प्र+आप—क्तिन्। १सम्यक्प्राप्तौ २वैद्यकोक्ते रोगोत्पत्तिभेदे च तल्लक्षणं भावप्र० उक्तं यथा “अथ सम्प्राप्तेर्लक्षणमाह “यथा दुष्टेन दोषेण यथा चानुविसर्पता। उत्पत्तिर्याऽमयस्यासौ सम्प्राप्तिर्जातिरागतिः”। यथा दुष्टेन दोषेण यथा कारणभेदेन दोषेण यथा चानुविसर्पता अनेकधा दोषाणां विसर्पता मूर्द्धाधस्तिर्यगादिगतिभेदेन तथा च विसर्पता। आमयस्य या उत्पत्तिः असौ सम्प्राप्तिः। शास्त्रव्यवहाराय सम्प्राप्तेः पर्यायावाह जातिरागतिरिति। संप्राप्तेरौपाधिकभेदानाह “सङ्ख्याविकल्पप्राधान्यबलकालविशेषतः। सा भिद्यते यथात्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति”। सङ्ख्यादिकालविशेषान्तेभ्यः सा संप्राप्तिर्भिद्यते भेदवती क्रियत इत्यर्थः। तत्र सङ्ख्यां विवृणोति। यथा ज्वरोऽष्टधा अतीसारः षड्विध इत्यादि विकल्पं विवृणोति। ‘दोषाणां समवेतानां विकल्पोंऽशांश कल्पना” समवेतानां समुदितानां दोषाणाम् अंशांशकल्पनाहीन मध्याधिकभेदैर्भागकल्पना विकल्पः। प्राधान्यं विवृणोति। “स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत्”। व्याधेः

स्वातन्त्र्येण प्राधान्यं पारतन्त्र्येणाप्राधान्यञ्च वर्देदि त्यर्थः । यथा स्वतन्त्रस्य ज्वरस्य प्राधान्यं ज्वराधीनानां श्वासादीनामप्राधान्यम् । बलं विवृणोति "हेत्वादि-कात्स्न्यावयवैर्बलाबलविशेषणम्" । अत्रापि व्याधेरि-त्यनुवर्त्तते हेत्वादीनां हेतुपूर्वरूपरूपाणाम् । कार्त्स्न्येन साकल्येन अवयवैः एकदेशेन व्याधेर्बलाबलयोर्विशेषणम् । विशेषणं बोधः । कालं विवृणोति । "नक्तं दिनर्त्तुभुक्तां-शैर्व्याधिकालो यथामलम्" नक्तमव्ययं रात्रिवाचकम् । एतेनैतदुक्तं यस्मिन्नक्तादिरंशो यस्य दोषस्य प्रकोप उक्तो-ऽस्ति सोऽशस्तस्य दोषजस्य व्याधेः काल इत्यर्थः । नक्ता देरंशेषु वातादिप्रकोप उक्तो वाग्भटेन "ते व्यापिनो-ऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः । वयोऽहोरात्रि भुक्तानामन्तमध्यादिगाः क्रमादिति" ते वातपित्तकफाः । ऋतुषु वातादिको यथा । "वर्षासु शिशिरे वायुः, पित्तं शरदि ग्रीष्मके । वसन्ते तु कफः कुप्येदेषा प्रकृतिरार्त्तवी । संप्राप्तिर्व्याधीनां ज्ञानाय हेतुः, यथा मिथ्याहारविहार-कुपितवाताद्यामाशयगमनरसदूषणकोष्ठाग्निबहिर्निरसन-रूपं ज्वरोत्पत्तिप्रकारं बोधयति । तथा व्याधीनां सं-ख्याद्यंशांशकल्पना प्राधान्यबलकालांश्च बोधयति ।

**स(म्प्रे)म्प्रैष** पु० सम्+प्र+इष–घञ् वा वृद्धिः । १नियोगे २विधौ हेमच० । विधिशब्दे ४६०७ पृ० दृश्यम् ।

**सम्प्रोक्षण** न० सम्+प्र+उक्ष–ल्युट् । जलादिसेचनेन संस्का-रभेदे अभ्युक्षणशब्दे ३१२पृ० दृश्यम् । [स्कारे पदार्थे ।

**सम्प्रोक्षित** त्रि० सम्+प्र+उक्ष–क्त । जलादिसेचनेन कृतसं-

**सम्फाल** पु० सम्+फल–ज्वला० ण । मेषे हेमच० ।

**सम्फुल्ल** त्रि० सम्+फुल्ल–अच् । विकसिते । सम+फल–क्त अत उत्वम् । सम्फुल्ल इति सकारमध्योऽपि तत्रैव ।

**सम्ब** सर्पणे भ्वा०प०स०सेट् । सम्बति असम्बीत् षोपदेशः साधुः

**सम्ब** सम्बन्धे चु०उभ०सक०सेट् । सम्बयति ते असससम्बत् त ।

**सम्ब** न०सम्ब–अच् । १कृष्टक्षेत्रस्य प्रतिलोमकर्षणे २जले जटा०

**सम्बद्ध** त्रि० सम्+बन्ध–क्त । १सम्बन्धिनि । भावे क्त । २सम्य-ग्बन्धने न० ।

**सम्बन्ध** पु० सम्+बन्ध–घञ् । १संयोगादौ २संसर्गे ३सम्बद्धौ अजयः । ४सम्यग्बन्धने ५न्दर्यां संसर्गभेदे च । स च सम्बन्धस्त्रिविधः "सम्बन्धस्त्रिविधः पुंसां विप्रेन्द्र ! जगतीतले । विद्याजो योनिजश्चैव प्रीतिजश्च प्रकीर्त्तितः । सैवन्तु प्रीतिजं प्रोक्तं स सम्बन्धः सुदुर्लभः" ब्रह्मवै० ब्रह्मख० १०अ० । संसर्गश्च नानाविधः "शेषे षष्ठी" पा०

महाभाष्ये दर्शितस्तत्रावगन्तव्यः । न्यायमते संयोगसम-वायादिरुक्तः । सम्यग्बन्धो यतः । ६हिते त्रि०अजयः ।

**सम्बर** न० सम्ब–अरन् । १जले अमरः अयं तालव्यादि अ-जयः । २बौद्धव्रतभेदे मेदि० । ३संयमे त्रि० ४सेतौ हे-मच० ५दैत्यभेदे ६मृगभेदे ७मीनभेदे पुंस्त्री० स्त्रियां ङीष् । ८पर्वतभेदे च पु० शब्दर० । ९जैनभेदे १०जिन-मतप्रसिद्धपदार्थभेदे । स च आस्रवनिरोधरूपः गुप्तिसमि-त्यादिः अर्हत्शब्दे ३८४पृ० तदुद्देशः ३८५पृ० च तल्ल-क्षणं दृश्यम् । संवर इत्येव अन्तस्थवमध्यः पाठः तत्रार्थे ।

**सम्बरारि** पु० सम्बरस्य दैत्यविशेषस्य अरिः । कामदेवे अमरः

**सम्बरी** स्त्री सम्ब–अरन् ङीप् । १मूषिकपर्ण्याम् अमरः । २शतावर्य्यां च तालव्यादिरयमिति भरतः ।

**सम्बल** न० सम्ब–कलच् सम्यक्बलं यतो वा । १जले शब्दर० २पाथेये पु० न० अमरः तालव्यादि तत्रार्थे भरतः ।

**स(श)म्बाकृत** त्रि०स(श)म्बेन प्रतिलोमेन कृष्टं क्षेत्रं स(श)म्ब+डाच्–कृ–क्त । १अनुलोमकर्षानन्तरं प्रतिलोमकृष्टे द्विःकृष्टे क्षेत्रादौ अमरः । भावे क्त । २प्रतिलोमकर्षणे न०

**सम्बाध** न० सम्यक् बाधा यत्र । १नरकवर्त्मभये शब्दमा० । सम्+बाध–भावे घञ् । २अन्योन्यसंघर्षे पु० ३सङ्कटे ४भगे मेदि० ।

**सम्बाधन** पु० सम्+बाध–ल्यु करणे ल्युट् वा । १द्वारपाले २शूलाग्रे ३मदनद्वारे भगे च मेदि० । भावे ल्युट् । ४सम्यक्पीडने । [त्रि० ।

**सम्बुद्ध** पु० प्रा०स० । १बुद्धावतारे त्रिका० । २सम्यग्बोधान्विते

**सम्बुद्धि** स्त्री सम्+बुध–क्तिन् सम्यग्बुद्धिर्यत्र वा । १सम्यग्-बोधे २सम्बोधनशब्दार्थे च । [अजयः ४सम्यक्ज्ञाने च

**सम्बोध** पु० सम्+बुध–घञ् । १क्षेपे २बोधने मेदि० । ३नाशे

**सम्बोधन** न०सम्+बुध–ल्युट् । १सम्यक्ज्ञाने । बुध–णिच्-युच् । तत्रार्थे स्त्री भरतः । ल्युट् । २सम्यग्ज्ञापने "स्थितस्याभिमुखीभावमात्रं सम्बोधनं विदुः । प्राप्ता-भिमुख्यः पुरुषः क्रियासु विनियुज्यते" इति व्याकरणोक्ते अन्यत्रासक्तस्याभिमुखीकरणाय अभीष्टक्रियासु विनियो-गाय ज्ञापनादिरूपे ३व्यापारभेदे न० "सम्बोधनपदं यच्च तत् क्रियाया विशेषणम् । व्रजानि देवदत्तेत्यादौ निघातोऽत्र तथा सति" हरिः । समान-वाक्ये एव निघातस्य (अनुदात्तस्य) विधानात् । व्रजानि देवदत्त इत्यादौ तस्य निघातः । "सम्बोधनान्तं कर्त्तोर्थो कारकं प्रथमो वदेत् । धातुसम्बन्धाधिकारविहितमस-

मैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतारस्तदर्द्धेन २४ मुख्यभागार्द्धेनार्द्धिनोऽर्द्धग्राहिणः, तृतीयिनोऽच्छावाकाग्नीध्रोन्नेतृप्रतिहर्त्तारो मुख्यभागस्य तृतीयांश १६ भाजः। पादिनोऽन्त्याः ग्रावस्तोतृपोतृनेष्टृसुब्रह्मण्याख्या मुख्यभागस्य चतुर्थांश १२ ग्राहिण इत्यर्थः। मुख्यानां चतुर्णां मिथोविभागस्य समः एवं द्वितीयादीनामपि स एव विभागः। तथा च गोशतं दक्षिणेति पक्षमाश्रित्य कात्यायनसूत्रम् "द्वादश द्वादश मुख्येभ्यः षट् षट् द्वितीयेभ्यश्चतस्रश्चतस्रस्तृतीयेभ्यस्तिस्रस्तिस्र इतरेभ्यः" इति। संगृहीतमेतद्बौधायनकारिकायामपि "पञ्चविंशतिधा कृत्वा वर्गीया दक्षिणा क्रमात्। द्वादशैवाथ षट्कं च चतस्रस्तिस्र एव चेति" द्वादशाधिकगोशतरूपाया दक्षिणायाः प्रथमञ्चत्वारो भागाः कर्त्तव्याः। तत्रैको भागो होतृवर्गस्यापरो भागो ब्रह्मवर्गस्यापरोऽध्वर्य्युवर्गस्यापर उद्गातृवर्गस्य। पुनरेकैकस्य भागस्य पञ्चविंशतिर्भागाः कर्त्तव्याः। तेष्वाद्यानां होत्रादीनां द्वादश भागाः, द्वितीयानां षट्, तृतीयानां चत्वारश्चतुर्थानां त्रय इत्यर्थः पशुबन्धादौ तु विषमविभागानभिधानात् "समं स्यादश्रुतत्वादिति" न्यायेन समत्वेनैव विभाग इति मन्तव्यम्। स्वकीयकर्म्मकलापांशकर्तृत्वकृतानुसारेण भागो देय इत्याह मनुः "ऋत्विग्यदि वृतो यज्ञे स्वकर्म्म परिहापयेत्। तस्य कर्म्मानुरूपेण देयोंऽशः सह कर्तृभिः" इति। सहकर्त्तृभिः सम्भूयकारिभिरित्यर्थः। यद्वा कर्तृभिः सह देय दक्षिणाकाले देयो यजमानेनेत्यर्थः। अथ वा कर्म्म परित्यक्तं सह कर्तृभिरित्यर्थः। यदा तु ऋत्विक् कर्म्मैकदेशं दक्षिणादानानन्तरं त्यजति तदाऽवशिष्टं तद्गणवर्त्तिनां मध्ये सन्निहितेनान्येन कारयेदित्याह स एव "दक्षिणासु च दत्तासु स्वकर्म्म परिहापयेत्। कृत्स्नमेव लभेतांशमन्येनैव च कारयन्" इति। कर्म्ममध्ये ऋत्विङ्मरणे कर्त्तव्यमाह नारदः "ऋत्विजां व्यसनेऽप्येवमन्येन कर्म्म निस्तरेत्। लभेत दक्षिणादानं स तस्मात् सम्प्रकल्पितम्" इति। अन्येन स्वस्वगणमध्यवर्त्तिनां मध्ये प्रत्यासन्नेन, येन केनचिदन्येन कार्य्यमाणे त्वध्वर्य्वादिसमाख्याबाधापत्तेरिति ध्येयम्। यत्तु शङ्खलिखितयोर्वचनम् "अथ चेदनुप्राप्ते सवने ऋत्विक् म्रियते तस्य सनाभोऽस्य शिष्यो वा तत्कार्य्यमनुपूरयेत्"। अथ चेदसामर्थ्यात् ततोऽन्यमृत्विजं वृणुयात्" इति। यच्च वृहस्पतिवचनम्। "एवं क्रियाप्रवृत्तानां यदा कश्चिद्विपद्यते। तद्बन्धुना क्रिया कार्य्या सर्व्वैर्वा सहकारिभिः" इति। तदेकाग्निसाध्यदर्शपौर्णमासादियागविषयमित्यभिहितं स्मृतिचन्द्रिकायाम्। जीवत्येव तु ऋत्विजि यजमानेन ऋत्विगन्तरकरणे कस्य दक्षिणेति वीक्षायामाह शङ्खः "अथ ऋत्विजि वृते पश्चादन्यं वृणुयात्पूर्व्वोक्तस्यैव दक्षिणा पश्चादाहृतः किञ्चिल्लभते" इति। यदा त्वकारणमृत्विग् याज्यं त्यजति याज्यो वा ऋत्विजं, तदा तयोर्दण्डमाह मनुः "ऋत्विजं यस्त्यजेद् याज्यो याज्यमृत्विक् त्यजेद् यदि। शक्तं कर्म्मण्यदुष्टञ्च तयोर्दण्डः शतं शतम्" इति। नारदोऽपि "ऋत्विक् च त्रिविधो दृष्टः पूर्व्वजुष्टः स्वयंकृतः। यदृच्छया च यः कुर्य्यादार्त्विज्यं प्रीतिपूर्व्वकम्। ऋत्विग्याज्यमदुष्टं यस्त्यजेदनपकारिणम्। अदुष्टमृत्विजं याज्यो विनेयौ तावुभावपीति"। ये कृषिसाधने असमानास्तैः सह कृषिः कार्य्येत्याह वृहस्पतिः "वाह्यकर्षकबीजाद्यैः क्षेत्रोपकरणेन च। ये समानास्तु तैः सार्द्धं कृषिः कार्य्या विजानता" इति। वाह्याः वाहनादिवाहकाः बलीवर्दाः। कर्षकाः कृष्यर्थं स्वीकृताः पुरुषाः आदिशब्देन कृषिसाधनानामन्येषां ग्रहणम्। सम्भूयकारिणां कृषकाणां कर्त्तव्यमाह वृहस्पतिः "पर्व्वते नगराभ्यासे तथा राजपथस्य च। ऊषरं मूषकव्याप्तं क्षेत्रं यत्नेन वर्जयेत्" इति। पर्व्वते पर्व्वतसमीपे कल्पतरुकृता तु विवीत इति पठित्वा विवीतशब्देन यवसाद्यर्थं रक्षितः प्रदेश इति व्याख्यातम्। नगराभ्यासे नगरसमीपे। राजपथस्य समीप इति शेषः। एतदुक्तं भवति पर्व्वताद्यासन्नमनासन्नमपि ऊषरं मूषकव्याप्तञ्च क्षेत्रं वर्जयेदिति। वाह्येष्वपि वर्जनीयानाह स एव "क्षुधातिवृद्धं क्षुद्रञ्च रोगिणं प्रपलायिनम्। काणं खञ्जञ्च नादद्यादुवाह्यं प्राज्ञः कृषीवलः" इति। काणः एकाक्षः खञ्जः भग्नचरणः। कश्चिदत्रैकस्यैव हानिमाह स एव "वाह्यबीजात्ययाद्यस्य क्षेत्रहानिः प्रजायते। तेनैव सा प्रदातव्या सर्व्वेषां कृषिजीविनामि"ति। सम्भूयकारिणामिति शेषः। वाह्यबीजग्रहणं कृषिसाधनानामुपलक्षणार्थम्। सम्भूयकारिणां शिल्पिनां स्वरूपं दर्शयंस्तेषां लाभविभागेंऽशपरिकल्पनाप्रकारमाह स एव "हिरण्यकुप्यसूत्राणां काष्ठपाषाणचर्म्मणाम्। संस्कर्त्ता तत्कलाभिज्ञः शिल्पी प्रोक्तो मनीषिभिः। हेमकारादयो

यत्र शिल्पं सम्भूय कुर्वते । कर्मानुरूपं निर्वेशं लभेरंस्ते यथांशतः" इति । कुप्यं हेमरूप्यव्यतिरिक्तत्रपुसीसादिकम् । हेमरूप्ये इति प्रस्तुत्य ताभ्यां यदन्यत्तत्कुप्यमित्यमरसिंहेनोक्तत्वात् । निर्वेशो भृतिः । कात्यायनोऽपि "शिक्षकाभिज्ञकुशला आचार्य्याश्चेति शिल्पिनः । एकद्वित्रिचतुर्भागान् हरेयुस्ते यथोत्तरम्" इति । हर्म्यादिनिर्मातृणां मध्ये मुख्यस्य भागद्वयमाह बृहस्पतिः "हर्म्यं देवगृहं वापि वाटिकोपस्कराणि च । सम्भूय कुर्वतां तेषां प्रमुखो द्व्यंशमर्हति" इति । नर्त्तकेष्वपि मुख्यस्यांशद्वयभागित्वमतिदिशन् विशेषान्तरमाह स एव "नर्त्तकानामेष एव धर्मः सद्भिरुदाहृतः । तालज्ञो लभते ऽध्यर्द्धं गायनास्तु समांशिनः" इति । अध्यर्द्धम् अर्द्धाधिकमेकमंशम् । सम्भूयकारिणाञ्चौराणां लाभभागेऽंशपरिकल्पनाप्रकारमाह कात्यायनः "परराष्ट्राद्धनं यत् स्याच्चौरैः स्वाम्याज्ञया हृतम् । राज्ञे दत्त्वांशमुद्धृत्य विभजेरन् यथाविधि । चौराणां मुख्यभूतस्तु चतुरोऽंशांस्ततो हरेत् । शूरोऽंशांस्त्रीन् समर्थौ द्वौ शेषास्त्वेकैकमेव च" इति । एतच्च दुर्बलवैरिदेशादाहृतविषयम् प्रबलवैरिदेशादाहृते त्वाह बृहस्पतिः "स्वाम्याज्ञया तु यच्चौरैः परदेशात् समाहृतम् । राज्ञे दत्त्वा तु षड्भागान् भजेयुस्ते यथांशतः । चतुरोऽंशान् भजेन्मुख्यः शूरस्त्र्यंशमवाप्नुयात् । समर्थस्तु हरेद् द्व्यंशं शेषास्त्वन्ये समांशिनः" इति । समर्थः शक्तः । एतेषां हानिरप्येवमेवेत्याह कात्यायनः "तेषां चेत् प्रसृतानाञ्च ग्रहणं समवाप्नुयात् । तन्मोक्षणार्थं यद्दत्तं वहेयुस्ते यथांशतः" इति । इयमंशपरिकल्पना ऋत्विग्भिन्नसम्भूयकारिणां समयाभावविषया कृते तु समये तदनुसारेणैव । अतएव तेनैवोक्तम् "वणिजां कर्षकाणाञ्च चौराणां शिल्पिनान्तथा । अनिवर्त्यांशकर्तॄणां सर्वेषामेव निर्णयः" इति । अनियम्य लाभहान्योः समयेन प्रतिपुरुषमंशमकृत्वेत्यर्थः" ।

**सम्भृति** स्त्री सम्+भृ-क्तिन् । सम्यक् पोषणे ।

**सम्भेद** पु० संभिद्यते संश्लिष्यतेऽत्र सम्+भिद--आधारे घञ् । १नद्योः सङ्गमस्थाने अमरः । भावे घञ् । २सङ्गमे ३सम्यग्भेदने ४स्फुटने ५मिलने मेदि० ६ऐकरूप्ये च "सम्भेदे नान्यतरवैयर्थ्यम्" इति मीमांसायां न्यायः ।

**सम्भोग** पु० सम्+भुज--घञ् । १सम्यग्भोगे २सुरते ३जिनशासनभेदे मेदि० ४हर्षे शब्दच० ५केलिनागरे जटा० "दर्शनस्पर्शनादीनि निषेवेते विलासिनौ । यत्रानुरक्तावन्योन्यं सम्भोगः स उदाहृतः" उक्तलक्षणे ६शृङ्गारस्यावस्थाभेदे सा०द० ।

**सम्भ्रम** पु० सम्+भ्रम--घञ् न वृद्धिः । १भयादिजनिते वेगे अमरः । २त्वरायां ३तद्धेतुके ४भये ५आदरे मेदि० । ६अतिशयभ्रमे ७दुर्गे अजयः ।

**सम्मति** स्त्री सम्+मन--क्तिन् । १अनुमतौ २अभिलाषे च मेदि० । ३आत्मज्ञाने अजयः । [२हर्षयुक्ते त्रि० ।

**सम्मद** पु०सम्+मद-घञर्थे क । १हर्षे अमरः । कर्त्तरि अच्

**सम्मर्द** पु० संमृद्यतेऽत्र सम्+मृद--आधारे घञ् । १युद्धे । भावे घञ् । २अन्योन्यसंघर्षे च ।

**सम्मातुर** पु० समीच्याः सत्या मातुरपत्यम् अण् उत् रपरः वा० न वृद्धिः । सतीतनये भाद्रमातुरे हेमच० ।

**सम्मान** पु० सम्+मन-घञ् । आदरे । [इते च ।

**सम्मानित** स्त्री सम्+मन--णिच्-क्त । १कृतगौरवे २सम्मा-

**सम्मार्जन** स्त्री सम्+मृज--ल्युट् । संशोधने रत्नमा० ।

**सम्मार्जनी** स्त्री संमृज्यतेऽनया सम्+मृज- करणे ल्युट् ङीप् । धूल्याद्यपसारणार्थे पदार्थे (झाँटा) अमरः । स्वार्थे कन् । सम्मार्जक तदर्थे पु० शब्दर० ।

**सम्मित** त्रि०सम्+मा--क्त । १सदृशे २तुल्यपरिमाणे च जटा०

**सम्मुख** त्रि०सङ्गतं मुखं येन प्रा०ब० । अभिमुखागते त्रिका० ।

**सम्मुखीन** त्रि० सम्मुखं पतति ख । अभिमुखे पातिनि ।

**सम्मूर्च्छज** न० सम्मूर्च्छात् जायते जन-ड । तृणादौ हेमच०

**सम्मूर्च्छन** न० सम्+मूर्च्छ-ल्युट् । १सम्यग्विस्तारे अमरः । २उन्नतौ ३मोहे च मेदि० । ४सम्यक्मूर्च्छने स्वरभेदे ।

**सम्मूर्जनोद्भव** पु० सम्मूर्जनादुद्भवति उद्+भू--अच् ५त० । मत्कुणे हेमच० ।

**सम्मृष्ट** त्रि० सम्+मृज--क्त । १कृतमार्जने अमरः । मक्षिकाद्यपसारणेन २शोधितेऽन्नादौ च भरतः ।

**सम्मोद** पु० सम्+मुद--घञ् । १हर्षे २प्रीतौ च शब्दच० ।

**सम्यच्** अव्य० सम्+अन्च--क्विप् सम्यादेशः । १शोभने २सङ्गते ३मनोज्ञे च मेदि० । ४सत्यवाक्ये न० भरतः ५तद्वति त्रि० मते समीच इत्यादि । स्त्रियां ङीप् समीची ।

**सम्राज्** पु० सम्यक् राजते राज-क्विप् नानुस्वारः । कृतराजसूययज्ञे सर्वभूमीश्वरे नृपतौ अमरः ।

**सय्यँम** पु० सम्+यम--करणे घञ् समो वा परसवर्णोऽनुनासिको यँः पक्षे संयमः । पात०सू० परिभाषिते धारणाध्यानसमाधित्रये "त्रयमेकत्र संयमः" पात०सू० "तदेतस्य

धारणाध्यानसमाधित्रयस्यैकत्र संयमः एकविषयाणि त्रीणि साधनानि संयम इत्युच्यते तदस्य त्रयस्य तान्त्रिकी परिभाषा संयमः इति” भा० ।

**सर** न० सरति सृ–अच् । १सरोवरे शब्दच० । २जले जटा० । ३लवणे ४वाणे च हेमच० । ५दध्यग्रे दधिसारे रत्नमा० । ६तज्जाते नवनीते च । भावे अच् । ७भेदने ८गमने च । कर्त्तरि अच् । ९सारके १०भेदके राजनि० ।

**सरक** पु०न० सृ–वुन् । १मद्यपानपात्रे भरतः २मद्यपरिवेषणे ३इक्षुजमद्ये ४तत्पाने ५अविरलपथिकपङ्क्तौ च मेदि० ६गतिशीले त्रि० शब्दर० । [कायाम् अमरः ।

**सरघा** स्त्री सरं मद्यभेदं हन्ति हन–ड नि० । मधुमक्षि-

**सरङ्ग** पु स्त्री० सृ–अङ्गच् । १चतुष्पाज्जन्तौ २खगे च संक्षिप्तसा० स्त्रियां ङीष् ।

**सरज** न० सरात् जायते जन–ड । नवनीते हारा० ।

**सरजस्** स्त्री सह रजसा सहस्य सः । १ऋतुमत्यां स्त्रियाम् २रजोयुक्ते त्रि० । अव्ययी० अच् समा० । सरजस १रजःसाहित्ये अव्य० अमरः ।

**सरट** पुंस्त्री० सृ–अटन् । कृकलासे ( काँकलास ) अमरः । स्त्रियां ङीष् । देहे तत्प्ररोहणादिफलं यथा “वल्मयाः प्रपाते च फलं सरटस्य प्ररोहणे । शीर्षे राज्यश्रियोऽवाप्तिर्भाले चैश्वर्यमेव च । कर्णयोर्भूषणावाप्तिर्नेत्रयोर्बन्धुदर्शनम् । नासिकायाञ्च सौगन्ध्यं वक्त्रे मिष्टान्नभोजनम् । कण्ठे चैव श्रियोऽवाप्तिर्भुजयोर्विभवो भवेत् । धनलाभो बाहुमूले करयोर्धनसञ्चयः । स्तनमूले च सौभाग्यं हृदि सौख्यविवर्द्धनम् । पृष्ठे नित्यं मही लाभः पार्श्वयोर्बन्धुदर्शनम् । कटिद्वये वस्त्रलाभो गुह्ये स्त्रीसमागमः । जङ्घे चार्यक्षयो नित्यं गुदे रोगभयं भवेत् । ऊर्वोश्च वाहनावाप्तिर्जानुजङ्घेऽर्थसञ्चयः । वामदक्षिणयोः पदोर्भ्रमणं नियतं भवेत् । वल्मयाः प्ररोहणे चैव पतने सरटस्य च । व्यत्यासाच्च फलं चैव तद्वदेव प्रजायते । वल्मयाः प्ररोहणं रात्रौ सरटस्य प्रपातनम् । निधनार्थाय भवति व्याधिपीडाविपर्य्ययौ । पतनानन्तरं चैवारोहणं यदि जायते । पतने फलमुत्कृष्टं रोहणेऽन्यत् फलं भवेत् । आरोहणाद्यो ऊर्द्ध्ववक्त्रे अधोवक्त्रे च पातनम् । भवेदिष्टफलं तस्य तत्फलं जायते ध्रुवम् । स्पृष्टमात्रेण वा सद्यः सचेलं जलमाविशेत् । पञ्चगव्यप्राशनञ्च कुर्य्यादर्कावलोकनम्” दिशाकरः

**सरट्** पु० सृ–अटि । १वायौ २मेघे उणादिकोषः ।

३सरण्यां सिद्धान्तकौमुदी । ४कृकलासे अमरटीका ।

**सरटि** पु० सृ–अटिन् । १वायौ २मेघे च उणादि० ।

**सरटु** पु० सृ–अटु । कृकलासे उणादिकोषः ।

**सरण** न० सृ–ल्युट् । १गमने २लोहमले हेमच० । (गन्धभादाल) ३लतायां स्त्री अमरः टाप् । ४त्रिवृतायां शब्दमा० ।

**सरणि(णी)** स्त्री सृ–अनि वा ङीप् । १पथि २पङ्क्तौ मेदि० ३प्रसारण्यां भरतः । ४त्रिवृतायां स्त्री शब्दमा० ।

**सरण्ड** पु० सृ–अण्डच् । १खगे २कामुके शब्दच० ३धूर्त्ते ४सरटे ५भूषणभेदे मेदि० सर्वत्र जातौ स्त्रियां ङीष् ।

**सरण्यु** सृ–अन्यु । १वायौ २मेघे ३जले शब्दर० ४वसन्ते ५अग्नौ उणादिकोषः । [न० शब्दमाला ।

**सरत्** त्रि० सृ–शतृ । १गन्तरि स्त्रियां ङीप् सरन्ती । २सूत्रे

**सरत्नि** पु० सह रत्निना । रत्निशब्दार्थे अमरटीका ।

**सरपत्त्रिका** स्त्री सरे जले पत्त्रमस्यस्याः ठन् । १पद्मपत्त्रे २पद्मे च शब्दच० ।

**सरमा** स्त्री सह रमते रम–अच् । १कुक्कुरयोषिति २देवशून्यां ३राक्षसीभेदे विभीषणपत्न्याञ्च मेदि० । ४कश्यपपत्निकन्याभेदे “गोलाङ्गूलस्य कोरच सोन्यापत्यं तथैव च । अपत्यं सरमायाश्च गणो वै अमरादयः” वह्निपु० ।

**सरयु** पु० सृ–अयु । १वायौ त्रिका० । ऊङ् । २अयोध्यान्तिकवाहिनदीभेदे स्त्री । तदुत्पत्तिः कालिकापु० २१अ० यथा “एवं विवाह्य विधिवत् सौवर्णे मानसाचले । तत्र यत् पतितं तोयं मानसाचलकन्दरे । तत्तोयं सप्तधा भूत्वा मानसाचलकन्दरात् । हेमाद्रेः कन्दरे सानौ सरस्याञ्च पृथक् पृथक्” इत्युपक्रमे “तेनाभूत् सरयूनाम्ना नदी पुण्यतमा शुभा” । तस्यां भवः अण् नि० । सारव तत्र भवे त्रि० अमरः ।

**सरल** पु० सृ–अलच् । १पीतशाले अमरः “सरलो मधुकस्तिक्तः कटुपाकरसो लघुः । स्निग्धोष्णः कर्णकण्ठाक्षिरोगरक्षोहरः स्मृतः । कफानिलस्वेदयूकादाहकासमलाचिरव्रणापहः” भावप्र० तद्गुणोक्तिः । २धूपकाष्ठभेदे शब्दर० ३उदारे ४ऋजौ च त्रि० मेदि० ५त्रिपुटायां स्त्री अमरः

**सरलद्रव** पु० ६त० । सरलवृक्षनिर्य्यासे (टारपीन) अमरः ।

**सरलाङ्ग** पु० सरलो वृक्षोऽङ्गं साधनं यस्य । श्रीवेष्टे गन्धद्रव्ये राजनि० ।

**सरस्** न० सृ–असुन् । १जले हट्टः । २सरोवरे अमरः । गौरा० ङीष् । ३सरसोत्पपत्त स्त्री अमरः “सरसी परिशीलितं मया” नैषधम् ।

**सरस** न० सह रसेन जलेन आस्वादेन च सहस्य सः । १सरोवरे शब्दच० २रसान्विते ३सार्द्रे च त्रि० । "सरसां सरसां परिमुच्य तनुम्" भट्टिः । ४श्वेतत्रिवृतायां स्त्री रायमु० ।

**सरसम्प्रत** न० सरमिव निर्यासं सम्प्रतनोति सम्+प्र+तन–ड । विकङ्कतवृक्षे (तैकाटाभिजु) शब्दच० ।

**सरसिज** न० सरसि जायते जन–ड अलुक् समा० । १पद्मे राजनि० "सरसिजमनुविद्धं शैवलेनातिरम्यम्" शकुन्तला । २सारसखगे पुंस्त्री० स्त्रियां ङीष् । लुकि सरोजमप्यत्र । [स्त्रियां ङीष् ।

**सरसीक** पुंस्त्री० सरस्यां कायति कै–क । सारसखगे शब्दर० ।

**सरसीरुह** न० सरस्यां सरोवरे रोहति रुह–क । १पद्मे २सारसखगे च पुंस्त्री० अमरः स्त्रियां ङीष् ।

**सरस्वत्** पु० सरांसि जलानि सन्त्यस्य मतुप् मस्य वः । १सरोवरे २सागरे ३नदे ४रसिके त्रि० मेदि० ५नद्यां ६वाण्यां ७गवि ८स्त्रीरत्ने स्त्री मेदि० ङीप् । सा च ९ज्योतिष्मत्यां १०ब्राह्म्यां मञ्जौ राजनि० । ११देवीभेदे मेदि० १२सोमलतायां शब्दच० । १३बुद्धशक्तिभेदे त्रिका० १४दुर्गायाम् "सराः सरणशीलत्वात् गेयाख्ये यत्र कीर्त्तिताः । स्वति प्रापणदाने वा तेन देवी सरस्वती" देवीपु०४५अ० तन्नामनिरुक्तिः । पृषो० । १५वागधिष्ठातृदेव्याम् "आविर्बभूव तत्पश्चात् मुखतः परमात्मनः । एषा देवी शुक्लवर्णा वीणापुस्तकधारिणी । वागधिष्ठातृदेवी सा कवीनामिष्टदेवता । शुद्धसत्त्वस्वरूपा च शान्तरूपा सरस्वती" ब्रह्मवै० प्र०ख० ३अ० । तत्रैव गणे० ७०अ० "वागधिष्ठात्री या देवी शास्त्रज्ञानप्रदा सदा । कृष्णकण्ठोद्भवा या च सा च देवी सरस्वती" । "बन्धुजीवञ्च द्रोणञ्च सरस्वत्यै न दापयेत्" मत्स्यसू० तत्पूजादिकं तन्त्रसा० दृश्यम् । १६सन्ध्याकाले उपास्यदेवतायां गायत्रीशब्दे २५८३ पृ० दृश्यम् । सरः ब्रह्मसरः उत्पत्तिस्थानत्वेनास्त्यस्याः मतुप् मस्य वः ङीप् । १७नदीभेदे सरस्वतीनद्या तथोत्पत्तिकथा च "प्रसृतासि महाभागे सरसो ब्रह्मणः पुरा । जानन्ति त्वां सरित्श्रेष्ठे मुनयः संशितव्रताः" भा० श० ५अ० । तस्याश्च सप्तनामत्वं यथा "राजन् ! सप्त सरस्वत्यो याभिर्व्याप्तमिदं जगत् । आहूता बलवद्भिर्हि तत्र तत्र सरस्वती । सुप्रभा१ काञ्चनाक्षी२ च विशाला३ च मनोरमा४ । सरस्वती५ चोघवती६ सुरेणु७र्विमलोदका" भा० श० ३८अ० । तासां नामकारणञ्च तत्राध्याये दृश्यम् तस्या माहात्म्यं तत्रैव सारस्वतोपाख्याने दृश्यम् । [पकोषः ।

**सरा** स्त्री सृ–अच् । १प्रसारण्यां राजनि० २निर्झरे त्रिका०

**सराव** पु० सरं जलमवति अव–अण् । १जलाधारे मृण्मये पात्रभेदे(शरा)द्विरूपकोषः । सह रावेण । २सशब्दे त्रि०

**सरि** पुंस्त्री० सृ–इन् स्त्रीत्वपक्षे वा ङीप् । निर्झरे हेमच० ।

**सरिका** स्त्री सरोऽस्त्यस्याः ठन् सृ–वुन् वा । हिङ्गुपत्रिकायाम् शब्दर० ।

**सरित्** स्त्री सृ–इति । १नद्याम् अमरः २सूत्रे शब्दमा० । "क्रियाकारकरूपत्वात् सरणाच्च सरिन्मता" देवीपु० ४५अ० निरुक्तायां ३दुर्गायाम् ।

**सरित्पति** पु० ६त० । समुद्रे अमरः । सरिन्नाथादयोऽप्यत्र

**सरित्वत्** पु० सरित् स्वामित्वेनास्त्यस्य मतुप् मस्य वः तान्तत्वेन पदत्वाभावात् न तस्य दः । समुद्रे ।

**सरित्सुत** पु० ६त० । गङ्गापुत्रे भीष्मे ।

**सरिताम्पति** पु० ६त० अलुक् समा० । १समुद्रे शब्दर० । सरितांनाथादयोऽप्यत्र ।

**सरिद्वरा** स्त्री सरित्सु वरा श्रेष्ठा । गङ्गायाम् हेमच० ।

**सरिल** न० सृ–इलच् । जले अमरटीकायां भरतः ।

**सरिमन्** पु० सृ–इमनि । १वायौ २गतौ च उणादि० ।

**सरिषप** पु० सर्षप+पृषो० । सर्षपे त्रिका० ।

**सरीसृप** पुंस्त्री० वक्रं सर्पति सृप–यङो लुक्, अच् । १सर्पे अमरः । २वृश्चिकादौ । ज्योतिषोक्तेषु ३मीनवृश्चिककर्कटराशिषु "वृश्चिकराशिस्त्रिभिः सरीसृपत्वेन निर्दिष्टः" ज्यो०त० । "मृगपतिवशे तिष्ठन्त्येते विहाय सरीसृपान्" ज्यो०त० बहुवचनात् मीनकर्कटयोर्ग्रहणम्

**सरु** पु० सृ–उन् । खड्गादिमुष्टौ शारसुन्दरी ।

**सरूप** त्रि० समानं रूपमस्य समानस्य सः । तुल्यरूपे सदृशे जटा०

**सरोज** न० सरसि जले जायते जन–ड । १पद्मे हेमच० । २सारसखगे पुंस्त्री० स्त्रियां ङीष् । ३सरोजातमात्रे त्रि० ।

**सरोजन्मन्** न० सरसि जले जन्म यस्य । १पद्मे हेमच० । २सारसखगे ३तडागजातमात्रे त्रि० ।

**सरोजिन्** पु० सरोजं विष्णुनाभिपद्मं उत्पत्तिस्थानत्वेनास्त्यस्य इनि । चतुर्मुखे ब्रह्मणि त्रिका० ।

**सरोजिनी** स्त्री सरोजानां समूहः सन्निकृष्टदेशो वा इनि ङीप् । १पद्मसमूहे रत्नमा० २तद्युक्तदेशरूपायां पद्मलतायाम् ३पद्माधारदीर्घिकायाञ्च मेदि० । [स्त्रियां ङीष् ।

**सरोत्सव** पुंस्त्री० सरे जले उत्सवोऽस्य । सारसखगे शब्दर०

**सरोरुह्(ह)** सरसि रोहति रुह–क्विप् क वा । १पद्मे

हेमच०। कान्तस्तत्रार्थे रत्नमा० २सारसखगे च पुंस्त्री०।

**सरोरुहासन** पु० सरोरुहं पद्मनासनं यस्य। चतुर्मुखे ब्रह्मणि हेमच० तस्य विष्णुनाभिपद्मस्थितत्वात्तथात्वम्। २पद्मापविष्टमात्रे त्रि०।

**सरोवर** पु० सरोभिर्जलैर्व्रियतेऽसौ वृ-अप्। तड़ागे शब्दर०। तड़ागशब्दे ३२४०पृ० दृश्यम्। [संक्षिप्तसा०।

**सर्क** पु० सृ-क तस्य नेत्त्वम्। १वायौ २मनसि ३प्रजापतौ च

**सर्ग** पु० सृज-घञ्। १स्वभावे २सृष्टौ ३निर्मोहे काव्यादेः ४परिच्छेदे "सर्गोऽयमादिर्गतः" इति नैषधम। ५निश्चये अमरः "यदि सर्ग एष ते" इति रघुः। ६मोक्षे ७उत्साहे मेदि० ८अनुमतौ हेमच०।

सृष्टिरूपः सर्गस्य नवविधः भाग० ३।१०अ० उक्तो यथा "सर्गो नवविधस्तस्य प्राकृतो वैकृतस्तु यः। कालद्रव्यगुणैरस्य त्रिविधः प्रतिसंक्रमः। आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः। द्वितीयस्त्वहमो यत्र द्रव्यज्ञानक्रियोदयः। भूतसर्गस्तृतीयस्तु तन्मात्रो द्रव्यशक्तिमान्। चतुर्थ ऐन्द्रियः सर्गो यस्तु ज्ञानक्रियात्मकः। वैकारिको देवसर्गः पञ्चमो यन्मयं मनः। षष्ठस्तु तमसः सर्गो यस्त्वबुद्धिकृतः प्रभोः। षडिमे प्राकृताः सर्गा वैकृतानपि मे शृणु। रजोभाजो भगवतो लीलेयं हरिमेधसः। सप्तमो मुख्यसर्गस्तु षड्विधस्तस्थुषाञ्च यः। वनस्पत्योषधिलतात्वक्सारावीरुधो द्रुमाः। उत्स्रोतसस्तमःप्राया अन्तःस्पर्शाविशेषिणः। तिरश्चामष्टमः सर्गः सोऽष्टविंशद्विधो मतः। अविदो भूरितमसो घ्राणज्ञा हृद्यवेदिनः। गौरजो महिषः कृष्णः शूकरो गवयो रुरुः। द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम!। खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा। एते चैकशफाः क्षत्तः! शृणु पञ्चनखान् पशून्। श्वा शृगालो वृको व्याघ्रो मार्जारः शशशल्लकौ। सिंहः कपिर्गजः कूर्मो गोधा च मकरादयः। कङ्कगृध्रबकश्येनभासभल्लूकबर्हिणः। हंससारसचक्राह्वकाकोलूकादयः खगाः। अर्वाक्स्रोतास्तु नवमः क्षत्तरेकविधो नृणाम्। रजोऽधिकाः कर्मपरा दुःखे च सुखमानिनः। वैकृतास्त्रय एवैते देवसर्गाश्च सत्तम!। वैकारिकस्तु यः प्रोक्तः कौमारस्तूभयात्मकः। देवसर्गश्चाष्टविधो विबुधाः पितरोऽसुराः। गन्धर्वाप्सरसः सिद्धा यक्षरक्षांसि चारणाः। भूतप्रेतपिशाचाश्च विद्याध्राः किन्नरादयः। दशैते विदुराख्याताः सर्गास्ते विश्वसृक्कृताः"।

**सर्गबन्ध** पु०बन्ध-भावे घञ् सर्गैर्बन्धः ३त० "कृदभिहितभावो द्रव्यवत् प्रकाशते" इति न्यायात् सर्गबन्धस्य कर्मपरता न कर्मणि घञ् तथात्वे महाकाव्यविशेषणतया क्लीवतापत्तेः। महाकाव्ये तल्लक्षणं महाकाव्यशब्देऽनुक्तत्वात् अत्र दर्श्यते सा०द० "सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः। सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः। एकवंशभवा भूपाः कुलजा बहवोऽपि वा। शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते। अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः। इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम्। चत्वारस्तस्य वर्गाः स्युस्तेष्वेकञ्च फलं भवेत्। आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा। क्वचिन्निन्दा खलादीनां सताञ्च गुणकीर्त्तनम्। एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः। नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह। नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते। सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत्। सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः। प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः। सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः। रणप्रयाणोपयममन्त्रपुत्रोदयादयः। वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह। कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा। नामास्य सर्गोपादेयकथया सर्गनाम तु"।

**सर्ज** अर्जने भ्वा०पर० सक० सेट्। सर्जति असर्जीत् ऋजिवर्जने सर्जस्यापि वर्जनं तेन षोपदेशत्वाभावाच्च षत्वम्। तत्र प्रमाणाभावात् षोपदेश एव न्याय्य। [शाले शब्दच०

**सर्ज** पु०सृज-अच्। १शालवृक्षे अमरः। २तद्रसे (धुना) ३पीत-

**सर्जक** पु०सृज-ण्वुल्। १पीतशाले अमरः २शालवृक्षे जटा०

**सर्जगन्धा** स्त्री सर्जस्येव गन्धो यस्याः। रास्नायां रत्नमा०।

**सर्जन** न०सृज-ल्युट्। १सैन्यपश्चाद्भागे शब्दर० २सृष्टौ च।

**सर्जनिर्य्यासक** पु० सर्जस्य निर्यास इव कायति कै-क। राले (धुना) राजनि०। [रसे त्रिका०।

**सर्जमणि** पु० सर्जस्य शालवृक्षस्य मणिरिव। (धुना) सर्ज-

**सर्जरस** पु० ६त०। शालवृक्षरसे (धुना) अमरः।

**सर्जि(र्जी)** स्त्री सृज-इन् वा ङीप्। १नदीभेदे २तद्भूलजे सर्जिकाक्षारे (साजिमाटि) रत्नमा०।

**सर्जिका** स्त्री सृज-ण्वुल् टाप् अतइत्त्वम्। १सर्जिकाक्षारे "पाक्यक्षारो यवक्षारो यावशूको यवाग्रजः। सार्जिकोऽपि स्मृतः क्षारः कापोतः सुखवर्चकः। कथितः सर्जिकाभेदो विशेषज्ञैः सुवर्चिका। यवक्षारो लघुः

स्निग्धः सुखदस्तो वह्निदीपनः । निहन्ति शूलं वाताम-श्लेष्मश्वासगलामयान् । पाण्डुगौल्मप्लीहगुल्मानाह प्लीहहृद्रामयान् । सर्जिकाल्पगुणा तस्माद्विशेषाद्गुल्म-शूलहृत् । सुवर्चिका सर्जिकावद् बोद्धव्या गुणतो जनैः” भावप्र० । २नदीभेदे च जटा० ।

**सर्जिकाक्षार** स्त्री सर्जिकायाः क्षारः । स्वनामख्याते क्षार-भेदे (साजिमाटि) राजनि० ।

**सर्जिक्षार** पु० ६त० । (साजिमाटि) सर्जिकाक्षारे राजनि० ।

**सर्जु** पु० सृज--उन् । वणिग्जने मेदि० ।

**सर्जू** स्त्री सृज-ऊ । १विद्युति मेदि० २अभिसारे शब्दर० ।

**सर्ज्य** पु० सर्जस्येदं यत् । १सर्जरसे रत्नमा० । सृज-ण्यत् । २सर्जनीये त्रि० ।

**सर्प** पु० सृप--अच् । १नागकेशरे शब्दा० । २भुजङ्गमे पुंस्त्री० अमरः स्त्रियां ङीष् । ३सर्पदैवते अश्लेषानक्षत्रे ज्यो०त० “सर्पणादभवन् सर्पा हीनत्वादहयः स्मृताः” वह्निपु० तन्नामनिरुक्तिः । भावे घञ् । ४गमने सुश्रुतोक्तं तद्-भेदादिकम् अहिशब्दे ५८१ पृ० दृश्यम् । तद्दंशने तस्य दंष्ट्रभेदेन विषादिकं च भविष्यपु० उक्तं यथा

“दंष्ट्रा शुक्ला च कृष्णा च रक्ता पीता च दक्षिणा । समासेन तु वक्ष्यामि यथा वै वर्णतः स्मृताः । शुक्ला तु ब्राह्मणी ज्ञेया रक्ता तु क्षत्रिया स्मृता । वैश्या तु पीतिका ज्ञेया कृष्णा शूद्रा तु कथ्यते । अतःपरं प्रव-क्ष्यामि दंष्ट्राणां विषलक्षणम् । दंष्ट्रावामन्तु विषं नास्ति नित्यमेव भुजङ्गमे । दक्षिणं नेत्रमाश्रित्य विषं सर्पस्य तिष्ठति । क्रुद्धस्यैव सर्पस्य विषं गच्छति मस्तके । मस्तकाद्धमनीं याति ततो नाडीषु तिष्ठति । नाडीभ्यो गच्छते दंष्ट्रे विषं तत्र प्रवर्त्तते । तत्सर्वं कथयिष्यामि यथावदनुपूर्वशः । अष्टभिः कारणैः सर्पो दशते नात्र संशयः । आक्रान्तो दशते पूर्वं द्वितीयं पूर्ववैरिणम् । तृतीयं दशते भीतत्वार्थं मददर्पितः । पञ्चमन्तु क्षुधा-विष्टः षष्ठञ्च विषोल्बणः । सप्तमं पुत्ररक्षार्थम् अष्टमं कालचोदितम् । यस्तु सर्पो दशित्वा तु उदरं परिवर्त्त-येत् । नखभुग्नाकृतिर्दंष्ट्रा आक्रान्तं तं विनिर्दिशेत् । यस्य सर्पेण दष्टस्य गम्भीरं दृश्यते व्रणम् । वैरदष्टं विजानीयात् कश्यपस्य वचो यथा । एकदंष्ट्रा पदे यस्य अव्यक्तं न च कोपितम् । भीतदष्टं विजानीयात् यथो-वाच प्रजापतिः । यस्य सर्पेण दष्टस्य रेखा दष्टस्य जा-यते । मददष्टं विजानीयात् कश्यपस्य वचो यथा । द्वे च दंष्ट्रापदे यस्य दृश्येते च महाक्षतम् । क्षुधाविष्टं विजानीयात् यथोवाच प्रजापतिः । द्वे दंष्ट्रे यस्य दृश्येते क्वचिद्रुधिरसंकुले । विषोल्बणं विजानीयाद्दंशं तं नात्र संशयः । अपत्यरक्षणार्थाय जानीयान्नात्र संशयः । यस्तु काकपदाकारं त्रिभिर्दन्तैर्विकिन्नितम् । महानाग इति प्रोक्तः कालदष्टं विनिर्दिशेत् । द्विविधं दष्टजातेस्तु लक्षणं समुदाहृतम् । दष्टं दष्टा तु पीतञ्च दष्टोद्धृतं तथैव च । यस्तु सर्पो दशित्वा तु पिबते तु विषलक्षणः । दष्टा तु पीतं विज्ञेयं कश्यपस्य वचो यथा । विषभागो तु सर्पस्य त्रिभागस्तत्र संक्रमेत् । उदरं दर्श-येद् यस्तु उद्धृतं तं विनिर्दिशेत् । छर्दितं विषवेगेन निर्विषः पन्नगो भवेत् । अथाप्यत्रापि विज्ञेयस्तद्दंष्ट्राभि पीड़ितः । ग्रीवाभङ्गो भवेत् किञ्चित् संदष्टो विषयो-गतः । आर्द्राऽश्लेषामघायाम्यकृत्तिकासु विशेषतः । विशाखासु त्रिपूर्वासु मूलास्वातिशतात्मके । सर्पदष्टा न जीवन्ति विषं पीतञ्च यैस्तथा । शून्यागारे श्मशाने च शुष्कवृक्षे तथैव च । न जीवन्ति नरा दष्टा नक्तैं तिथिसंयुते । हतो दंशस्ततः शुद्धोऽप्यन्तरः परिकीर्त्तितः” भविष्यपु० “अतःपरं प्रवक्ष्यामि कालदष्टस्य लक्षणम् । जिह्वाभङ्गो हृदिशूलं चक्षुर्भ्याञ्च न पश्यति । दंशश्च दग्धवर्णाभं पक्वजम्बूफलोपमम् । वैवर्ण्यं चैव दन्तानां श्यामो भवति वर्णतः । सर्वाङ्गेषु शैथिल्यं पुरीषस्य च भेदनम् । भग्नस्कन्धकटिग्रीव ऊर्द्ध्वदृष्टिरधोमुखः । दह्यते वेपते चैव स्वपते च मुहुर्मुहुः । शस्त्रेण छिद्य-मानस्य रुधिरं न प्रवर्त्तते । दण्डेन ताड्यमानस्य दण्ड-राजी न जायते । दंशे काकपदे सुनीलमसकज्जल-भाभं घनम् उच्छूनं रुधिराकुलैकसकलं सप्ताधि-रोधो भवेत् । हिक्काश्वासगलग्रहश्च सुमहान् या तुल्यता दृश्यते संख्यानं प्रवदन्ति शास्त्रनिपुणास्तं काल-दष्टं विदुः । दंशे यस्य च शोथः प्रचलितवलितं श्यामलं वा सुनीलं प्रस्वेदो गात्रभेदः स्रवति च रुधिरं चानु-नासञ्च जल्पेत । दन्तोष्ठाभ्यां वियोगो भ्रमति च हृदयं संशिरोधश्च तीव्रो दिव्यानामेव दंशस्थलविपुलमयो विद्धि तं कालदष्टम् । दन्तैर्दन्तान् स्पृशति बहुशो दृष्टि-रायासखिन्ना स्थूलो दंष्ट्रः स्रवति रुधिरं लोकरं चतुरेकम् । प्रत्यादिष्टः श्वसिति सततं शाहुनासञ्च भाषेत् यद् यद् ब्रूते सकलमदितं कालदष्टं तमायुः । वेपते वेदनास्तु रक्तनेत्रश्च जायते । ग्रीवाभङ्गश्च लालाभिः

कालदष्टं विनिर्दिशेत् । दर्पणे सलिले वापि आत्मच्छायां न पश्यति । मन्दरश्मिं तथा दीप्तं तेजोहीनं दिवाकरम् । वेपते वेदनातस्तु रक्तनेत्रश्च जायते । स याति निधनं जन्तुः कालदष्टं विनिर्दिशेत् । अष्टम्याञ्च नवम्याञ्च कृष्णपक्षे चतुर्दशीम् । नागपञ्चमीदष्टानां जीवितस्य च संशयः । आर्द्राऽश्लेषामघायाम्यकृत्तिकासु विशेषतः । विशाखासु त्रिपूर्वासु मूलास्वातिशतात्मके । सर्पदष्टा न जीवन्ति विषं पीतञ्च यैस्तथा । शून्यागारे श्मशाने च शुष्कवृक्षे तथैव च । न जीवन्ति नरा दष्टा नक्षत्रे तिथिसंयुते । अष्टोत्तरं मर्मशतं प्राणिनां समुदाहृतम् । तेषां मध्ये तु मर्माणि दश द्वे चापि कीर्त्तिते । शङ्खे नेत्रे भ्रुवोर्मध्ये वस्तिभ्यां वृषणान्तरे । कक्षे स्कन्धे हृदमध्ये तालुके चिबुके गुदे । एषु द्वादशकर्मसु दष्टः शस्त्रेण वा हतः । न जीवन्ति नरा लोके कालदष्टान् विनिर्दिशेत्" । दूतो वा दण्डहस्तो भवति च युगलं पाशहस्तस्तथा वा रक्तं वस्त्रञ्च कृष्णम् ह्यथ शिरसि गतम् चैकवस्त्रश्च दूतः । तैलाभ्यक्तश्च तद्वत् त्वरितगतियुतो मुक्तकेशश्च याति, यः कुर्यात् घोरशब्दं करचरणयुगैः प्राप्तकालस्य दूतः । नागोदयं प्रवक्ष्यामि ईशानेन तु भाषितम् । ब्रह्मणा तु पुरा सृष्टा यष्ठा नागास्त्वनेकशः । अनन्तं भास्करं विद्यात् सोमं विद्यात्तु वासुकिम् । तक्षकं भूमिपुत्रन्तु कर्कोटञ्च बुधं विदुः । पद्मं वृहस्पतिं विद्यान्महापद्मञ्च भार्गवम् । कुलिकः शङ्खपालश्च द्वावेतौ तु शनैश्चरः । पूर्वपादः शङ्खपालो द्वितीयः कुलिकोऽस्य च । नेत्रभागे यमौ दिष्टौ दिनरात्रौ तथैव च । शुक्रसोमौ च मध्याह्ने उदये तु समाहृतम् । प्रायः प्रागष्टमे भागे दिवानक्तं विशेष्यते । यष्ठाश्च भुञ्जते राजन् ! पथि मृत्युं व्रजत्यधः । अधो गत्वा भवेत् सर्पो निर्विषो नात्र संशयः" भविष्यपु० "आषाढे तथा ज्यैष्ठे प्रमाद्यन्ति भुजङ्गमाः । ततो नागो नागिनी च मैथुनं संप्रपद्यते । चतुरो वार्षिकान् मासान् नागी गर्भमधारयत् । ततः कार्त्तिकमासे तु अण्डकानि प्रसूयते । अण्डकानान्तु विज्ञेयं द्वे शते द्वे च विंशती । तान्येव भक्षयेत् सा तु भागैकं घृणया त्यजेत् । सुवर्णाभवर्णनिभात् पुमान् संजायतेऽण्डकात् । तानेव खादते सर्पो अहोरात्राणि विंशतिम् । अर्कोदकसुवर्णाभान् दीर्घराजीवसन्निभात् । तस्मादुत्पाद्यते स्त्री वै अण्डाद् ब्राह्मणसत्तम ! । शिरीषपुष्पवर्णाभादण्डकात् स्यान्नपुंसकम् । ततो भिनत्ति चाण्डानि षण्मासेन तु गौतम ! । ततस्ते प्रीतिसम्बन्धात् स्नेहं वर्द्धन्ति बालकाः । ततोऽसौ सप्तरात्रेण कृष्णो भवति यत्नतः । आयुःप्रमाणं सर्पाणां शतं विंशोत्तरं स्मृतम् । मृत्युश्चाष्टविधो ज्ञेयः सम्पूर्णस्य यथाक्रमम् । मयूरात् मानुषाद्वापि चकोराद्गोखुरात्तथा । विडालान्नकुलाच्चैव वराहाद्वृश्चिकात्तथा । एतेभ्यो यदि मुच्येत जीवेद्विंशोत्तरं शतम् । सप्ताहे तु ततः पूर्णे दंष्ट्राणान्तु विरोहणम् । विषस्यागमनं तत्र विद्यं यत्र पुनः पुनः । एवं ज्ञात्वा तु तत्त्वेन विषकर्म समारभेत् । एकविंशतिरात्रेण विषं दंष्ट्रासु जायते । नागो पार्श्वसमावर्त्ती बालसर्पस्तु उच्यते । पञ्चविंशतिरात्रस्तु सद्यः प्राणहरो भवेत् । षण्मासाज्जातमात्रस्तु कञ्चुकं वै प्रमुञ्चति । पादानाञ्चापि विज्ञेया द्वे शते द्वे च विंशती । गोलोमसदृशाः पादाः प्रविशन्ति क्रमन्ति च । सन्धीनां चास्य विज्ञेयं द्वे शते विंशती तथा । पांशुल्यश्चापि विज्ञेया द्वे शते विंशतिस्तथा । अकालजाता ये सर्पा निर्विषास्ते प्रकीर्त्तिताः । पञ्चसप्ततिवर्षाणि आयुरेषां प्रकीर्त्तितम् । रक्तपीतशुक्लदन्ता आनीला मन्दवेगिनः । एते अल्पायुषो ज्ञेया अल्पाहाराश्च भीरवः । एकश्चास्य भवेद्वक्त्रं द्वे जिह्वे च प्रकीर्त्तिते । दंष्ट्राश्चतस्रो विज्ञेया प्रजापतिवचो यथा । प्रथमा ब्रह्मदैवत्या द्वितीया विष्णुदैवता । तृतीया रुद्रदैवत्या चतुर्थी यमदैवता । हीना प्रमाणतः सा तु वामनेत्रसमाश्रिता । नास्यां मन्त्राः प्रयोक्तव्या नौषधं नैव भेषजम् । वैद्यः पराङ्मुखो याति मृत्युस्तस्य विलेखनात् । चिकित्सा न बुधैः कार्या तदन्तं तस्य जीवितम् । मकरीं मासिकीं विद्यात् करालीञ्च द्विमासिकीम् । कालरात्री भवेत् त्रीणि चतुरो यमदूतिका । मकरीं पल्लवं विद्यात् करालीं काकपादिका । टङ्काकृतिः कालरात्री वाम्या कुन्ताकृतिः स्मृता । मकरी वातुला ज्ञेया कराली पैत्तिकी स्मृता । कफात्मिका कालरात्री यमदूती त्रिदोषिका । शुक्ला तु मकरी ज्ञेया कराली रक्तसन्निभा । कालरात्री भवेत् पीता कृष्णा च यमदूतिका" भविष्यपु० । कश्यप उवाच "सविषा दंष्ट्रयोर्मध्ये यमदूती तु चेद्भवेत् । न चिकित्सा बुधैः कार्या तं गतासुं विनिर्दिशेत् । प्रहरार्द्धं दिवारात्रौ एकैकं भुञ्जते स्वहिः । एकस्य च समानञ्च द्वितीयं षोडशं

तथा । नागोदये च सन्दृष्टो हतो विद्धो विदारितः । कालदष्टं विजानीयात् कश्यपस्य वचो यथा । यन्त्रालः पतते-बिन्दुर्बालाग्रसलिलोद्धृतः । तन्मात्रं स्रवते दंष्ट्राविषं सर्पस्य दारुणम् । ज्वालाशते तु संपूर्णे देहे संक्रमते विषम् । यावत् संक्रामयेद्बाहुं कुञ्चितं वा प्रसारयेत् । अनेन क्षणमात्रेण विषं गच्छति मस्तके । एधते विषवेगस्तु शतशोऽथ सहस्रशः । वर्द्धते रक्तमासाद्य ततो वाते शिखी यथा । तैलबिन्दुर्जलं प्राप्य यथा वेगेन वर्द्धते । शिखण्डो आश्रयं प्राप्य मारुतेन समीरितः । ततस्त्वाश्रयं प्राप्य त्वचास्थानं विचेष्टितम् । त्वचासु द्विगुणं विद्याच्छोणिते च चतुर्गुणम् । पित्ते तु त्रिगुणं याति श्लेष्मे वै षोड़शं भवेत् । वायौ त्रिंशद्गुणञ्चैव मज्जे षष्टिगुणं तथा । प्राणे चैकार्णवीभूते सर्वस्रोतो निरोधयेत् । स्रोतसा रुध्यमानेन याति साध्यमसाध्यताम् । ततोऽसौ म्रियते जन्तुर्निश्वासोच्छ्वासवर्जितः । निष्क्रान्ते तु ततो जीवे भूते पञ्चत्वमागते । तानि भूतानि गच्छन्ति यस्य यस्य यथालयम् । पृथिव्यापस्तथा तेजो वायुराकाशमेव च । एतेषामेव संघातः शरीरमभिधीयते । पृथिवी पृथिवीं याति आपस्तोयेषु लीयते । तेजो गच्छति चादित्यं मारुतो मारुतं व्रजेत् । आकाशञ्चैव आकाशे सह तेनैव गच्छति । स्वस्थानं ते प्रपद्यन्ते परस्परनियोजिताः । न जीवेदागतः कश्चिदिह जन्मनि सुव्रत ! । विषार्त्तं न उपेक्षेत त्वरितं तु चिकित्सयेत् । एकमस्मि विष लोके द्वितीयं नोपपद्यते । यथा चलविषञ्चैव स्थावरन्तु तथैव च । प्रथमे विषवेगे तु रोमहर्षः प्रजायते । द्वितीये विषवेगे तु स्वेदो गात्रेषु जायते । तृतीये विषवेगे तु कम्पो गात्रेषु जायते । चतुर्थे विषवेगे तु श्रोत्रान्तरनिरोधकृत् । पञ्चमे विषवेगे तु हिक्का गात्रेषु जायते । षष्ठे तु विषवेगे तु ग्रीवाभङ्गस्तु जायते । सप्तमे विषवेगे तु प्राणेभ्यो विप्रमुच्यते । सप्तधातुगता ह्येते वैनतेन भाषिताः । त्वचास्थाने विषप्राप्ते तस्य रूपाणि मे शृणु । अङ्गानि तिमिरायन्ते यतन्ते च मुहुर्मुहुः । एतानि यस्य चिह्नानि तस्य त्वग्गतं विषम् । तस्यागदं प्रवक्ष्यामि येन सम्पद्यते सुखम् । अर्कमूलमपामार्गं प्रियङ्गुं तगरं तथा । एतद्दालोड्य दातव्यं ततः सम्पद्यते सुखम् ततस्त्वस्मिन् हते विप्र ! न निवर्त्तेत चेद्विषम् । त्वचःस्थानं ततो भित्त्वा रक्तस्थानं प्रधावति । विषे च रक्तसम्प्राप्ते तस्य रूपाणि मे शृणु । दह्यते मुह्यते चैव शीतलं बहुमन्यते । एतानि यस्य रूपाणि तस्य रक्तं गतं विषम् । तत्रागदं प्रवक्ष्यामि येन सम्पद्यते सुखम् । उशीरं चन्दनं कुष्ठमुत्पलं तगरं तथा । कहाकालस्य मूलानि सिन्धुवारस्फगस्य च । हिङ्गुञ्च मरिचञ्चैव पूर्ववेगे तु दापयेत् । वृहती हरिकाली च इन्द्रवारुणिमूलकम् । सर्पगन्धा हत चैव द्वितीये परिकीर्त्तितम् । सिन्धुवारं तथा हिङ्गु तृतीये कारयेद्बुधः । नस्यं पानञ्च कुर्वीत अञ्जनं लेपनं तथा । एतेनैवोपचारेण ततः सम्पद्यते सुखम् । रक्तस्थानं ततो गत्वा पित्तस्थानं प्रधावति । पित्तस्थानगते विप्र ! विषे रूपाणि मे शृणु । उत्तिष्ठते निपतते दह्यते मुह्यते तथा । गात्रतः पीतता स्याद्वै दिशः पश्यति पीतिकाः । धनदाह भवेन्मूर्च्छा न चात्मानं विजानते । विषक्रियां तस्य कुर्यात् यथा सम्पद्यते सुखम् । पिप्पलं मधुकं चैव मधुखण्डघृतं तथा । मधुसारनलातुल्ला जातिशर्करवालुकाम् । इन्द्रवारुणिमूलञ्च गवां मूत्रेण पेषयेत् । नस्यं तस्य प्रयुञ्जीत पानमालेपमञ्जनम् । एतेनैवोपचारेण ततः सम्पद्यते सुखम् । पित्तस्थानमतिक्रम्य श्लेष्मस्थानञ्च गच्छति । श्लेष्मस्थाने ततः प्राप्ते तस्य रूपाणि मे शृणु । गात्राणि तस्य रुध्यन्ते निश्वासश्च न जायते । लाला च स्रवते तस्य कण्ठो घुरघुरायते । एतानि यस्य रूपाणि श्लेष्मस्थानगतं विषम् । तस्यागदं प्रवक्ष्यामि येन सम्पद्यते सुखम् । त्रिकटुकं कोशातकी लोध्रञ्च मधुसारकम् । एतेषां सप्तभागानि गवां मूत्रेण पेषयेत् । नस्यं पानञ्च कुर्वीत अञ्जनं लेपनं तथा । एतेनैवोपचारेण ततः सम्पद्यते सुखम् । श्लेष्मस्थानमतिक्रम्य वायुस्थानञ्च गच्छति । तत्र रूपाणि वक्ष्यामि वायुस्थानगते विषे । आध्मायते च जठरं यत्नवांश्च न पश्यति । ईदृशं कुरुते रूपं दृष्टिभङ्गश्च जायते । एतानि यस्य रूपाणि तस्य वायुगतं विषम् । तस्यागदं प्रवक्ष्यामि येन सम्पद्यते सुखम् । शोणमूलं पिनाकञ्च रक्ता च गजपिप्पली । हिङ्गुञ्च पिष्टा गुड़िकाञ्च कुर्य्याद्दद्याच्च नस्याञ्जनलेपादीन् । एषोऽगदः सर्वविषाणि हन्यात् स्वयम्भुवा देववरेण सृष्टः । अञ्जनञ्चैव नस्यञ्च क्षिप्रं दद्याद्बुधान्विते । वायुस्थानं ततो हित्वा मज्जास्थानं प्रधावति । विषे मज्जागते विप्र ! तस्य रूपाणि मे शृणु । दृष्टिश्च हीयते तस्य भग्नाङ्गानि मुञ्चति । एतानि यस्य रूपाणि तस्य मज्जागतं

विषम्। तस्यागदं प्रवक्ष्यामि येन सम्पद्यते सुखम्। घृतं मधु शर्कराञ्च उशीरं चन्दनं तथा। एतदालोड्य दातव्यं पानं तस्य च सुव्रत!। ततः प्रणश्यते दुःखं ततः सम्पद्यते सुखम्। अथ तस्मिन् कृते योगे विषं तस्य निवर्त्तते। मज्जस्थानं ततो गत्वा मर्मस्थानं प्रधावति। विषे च मर्मसंप्राप्ते शृणु रूपं यथा भवेत्। निश्चेष्टः पतते भूमौ कर्णाभ्यां बधिरो भवेत्। वारिणा सिच्यमानस्य रोमहर्षो न जायते। दण्डेन हन्यमानस्य दण्डराजी न जायते। शस्त्रेण छिद्यमानस्य रुधिरं न प्रवर्त्तते। केशेषु लुञ्च्यमानेषु नैव क्रोशप्रवेदने। यस्य कर्णौ च पार्श्वौ च हनूपादौ च सन्धयः। शिथिलानि भवन्तीह स गतासुरिति श्रुतिः। एतानि यस्य रूपाणि विपरीतानि गौतम!। कृतन्तु तं विजानीयात् कश्यपस्य वचो यथा। वैद्यास्तस्य न पश्यन्ति ये पश्यन्ति कुशिक्षिताः। विचक्षणास्तु पश्यन्ति मन्त्रौषधिसमन्विताः। तस्यागदं प्रवक्ष्यामि स्वयं रुद्रेण भाषितम्। मयूरपित्तं मार्ज्जारपित्तं नकुलपित्तकम्। मत्स्यमहिषपित्तञ्च धानालीमूलमेव च। कुङ्कुमं भार्गवं कुष्ठं काश्मरी च त्वचं तथा। वत्सनाभस्य च किञ्जल्कं पद्मस्य कुमुदस्य च। एतानि समभागानि गोमूत्रेण च पेषयेत्। एषोऽगदो यस्य हस्ते दष्टेन म्रियते न वै। कालाहिनापि दष्टोऽपि क्षिप्रं भवति निर्विषः। क्षिप्रमेव प्रदातव्यं कृतसञ्जीवनौषधम्। अञ्जनञ्चैव नस्यञ्च क्षिप्रं दद्यात् विचक्षणः" भविष्यपु०। कश्यप उवाच "अतःपरं प्रवक्ष्यामि नागानां रूपलक्षणम्। सर्पदष्टस्य च तथा समासाद्द्विजपुङ्गव!। अथ सर्पेण दष्टस्य ऊर्द्ध्वा दृष्टिः प्रजायते। सर्प्या दष्टस्य च तथा अधोदृष्टिः प्रजायते। नपुंसकेन दष्टस्य अङ्गमर्दः प्रजायते। रुषा दष्टस्य वा साम्या दृष्टिर्द्विजवरोत्तम!। कुमारेणापि दष्टस्य दक्षिणा एव जायते। गुर्विण्या चापि दष्टस्य तथा स्वेदश्च जायते। रोमाञ्चः स्यात् सूतिकया वेपथुश्चापि जायते। पन्नगो प्रभवेद्रात्रौ दिवा सर्पो विषाधिकः। नपुंसकस्तु सन्ध्यायां कश्यपेन तु भाषितम्। अन्धकारे तु दष्टानामुदके गहने वने। सुप्तस्य वै प्रमत्तस्य पदे सर्पो न दृश्यते। दष्टरूपाण्यजानन् वै कथं वैद्यश्चिकित्सति। चतुर्विधास्तु संप्रोक्ताः पन्नगास्तु महात्मना। दर्व्वीकरा मण्डलिनो राजिला व्यन्तरास्तथा। दर्व्वीकरा वातविषा मण्डलाः पैत्तिकाः स्मृताः। श्लेष्मला राजिला ज्ञेया व्यन्तराः सान्निपातिकाः। रक्तं परीक्षयेद्गाढ़ं सर्पाणान्तु पृथक् पृथक्। कृष्णं दर्व्वीकराणान्तु जायते वाततुल्यकम्। रक्तं घनञ्च बहुशः शोणितं मण्डलिष्यते। पिच्छिलं राजिले स्वल्पं तद्वद्व्यन्तरके तथा। ज्ञेयाः सर्पास्तु चत्वारः पञ्चमो नोपलभ्यते। ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव चतुर्थकः। ब्राह्मणे मधुरं दद्यात् तिक्तं दद्यात्तथोत्तरे। वैश्ये कर्षफलं दद्यात् शूद्रे त्रिफलमेव वा। ब्राह्मणेन तु दष्टस्य दाहो गात्रेषु जायते। मूर्च्छा च प्रबला स्याद्वै न ज्ञानमभिजायते। शरावर्णं मुखञ्च स्यान्मन्यास्तम्भश्च जायते। तस्य कुर्य्यात् प्रतीकारं येन सम्पद्यते सुखम्। अश्वगन्धामपामार्गं सिन्धुवारं सुराह्वयम्। एतत् सर्पिःसमायुक्तं पानं नस्यञ्च दापयेत्। एतेनैवोपचारेण सुखी भवति मानवः। क्षत्रियेण तु दष्टस्य कम्पो गात्रेषु जायते। मूर्च्छा मोहस्तथा स्याद्वै न ज्ञानमभिजायते। जायते वेदना तस्य ऊर्द्ध्वञ्चैव निरीक्षते। तस्य कुर्य्यात् प्रतीकारं येन सम्पद्यते सुखम्। अर्कमूलमपामार्गं प्रियङ्गुमथ वारुणीम्। एतत् सर्पिःसमायुक्तं पानं तस्य प्रदापयेत्। एतेनैवोपचारेण सुखी भवति मानवः। वैश्येनापि हि दष्टस्य शृणु रूपाणि यानि तु। श्लेष्मप्रकोपो लाला च नवोद्भवति वेदना। मूर्च्छा च प्रबला यस्य आत्मानं नाभिनन्दति। तस्य कुर्य्यात् प्रतीकारं येन सम्पद्यते सुखम्। अश्वगन्धां स गोमूत्रां श्लेष्मघ्नं सगुग्गुलुम्। शिरीषार्कपलाशञ्च श्वेतां च गिरिकर्णिकाम्। गोमूत्रेण समायुक्तं पानं नस्यञ्च दापयेत्। एष वैश्येन दष्टानामगदः परिकीर्त्तितः। शूद्रेणापि हि दष्टस्य शृणु तत्त्वेन गौतम!। कुप्यते वेपते चैव ज्वरः शीतञ्च जायते। अङ्गानि चुचुचुचायन्ते शूद्रदष्टस्य लक्षणम्। तस्यागदं प्रवक्ष्यामि येन सम्पद्यते सुखम्। पद्मञ्च लोध्रकञ्चैव क्षौद्रं पद्मस्य केशरम्। मधु मधूकसारञ्च श्वेता च गिरिकर्णिका। एतानि समभागानि पेषयेत् शीतवारिणा। पानं लेपाञ्जनं नस्यं सुखी भवति मानवः। पूर्वाह्णे चरते विप्रो मध्याह्ने क्षत्रियश्चरेत्। अपराह्णे चरेद्वैश्यः शूद्रः सन्ध्याचरो भवेत्। आहारश्चात्र पुष्पाणि ब्राह्मणानां विदुर्बुधाः। मूषिकाः क्षत्रियाणाञ्च आहारो द्विजसत्तम!। वैश्या मण्डूकभक्षाश्च शूद्राः सर्व्वाशिनस्तथा। अग्रतो दशते विप्रः क्षत्रियो दक्षिणेन तु। वामपार्श्वे

सदा वैश्यः पश्चाद्वै शूद्र आदशेत् । शरत्काले तु संप्राप्ते पीड्यमाना महाविषाः । अवेलायां दशन्ते वै मैथुनार्त्ता भुजङ्गमाः । पुष्पगन्धाः स्मृता विप्राः क्षत्त्रियाश्चन्दनाबहाः । वैश्याश्च घृतगन्धा वै शूद्राः शुक्तस्य गन्धिनः । वासं तेषां प्रवक्ष्यामि यथावदनुपूर्वशः । नदीकूपतड़ागेषु गिरिप्रस्रवणेषु च । आरामेषु पवित्रेषु शुचिस्थायतनेषु च । वसन्ति ब्राह्मणाः सर्पा ग्रामद्वारे चतुष्पथे । क्षत्त्रियो वसते नित्यं तोरणेषु पुरेषु च । गोशालाश्वशालासु पत्तालेषु तटेषु च । गोष्ठेषु पथिस्थेषु विप्र ! वैश्या वसन्ति च । अविविक्तेषु स्थानेषु निर्झरेषु वनेषु च । शून्यागारे श्मशाने च शूद्रा विप्र ! वसन्ति च । श्वेताश्च कपिलाश्चैव ये सर्पास्त्वनलप्रभाः । मनस्विनः सात्त्विका ये ब्राह्मणास्ते बुधैः स्मृताः । रक्तवर्णसुवर्णाभाः प्रवालमणिसन्निभाः । सूर्य्यप्रभास्तथा विप्र ! क्षत्त्रियास्ते भुजङ्गमाः । नानाविचित्रराजीभिरतसीवर्णसन्निभाः । बाणपुष्पसुवर्णाभा वैश्यास्ते च भुजङ्गमाः । काकोदरनिभाः केचित् ये च अञ्जनसन्निभाः । काकवर्णा धूम्रवर्णास्ते शूद्राः परिकीर्त्तिताः । यस्य सर्पेण दष्टस्य दंशमङ्गुलमन्तरम् । बालदष्टं विजानीयात् कश्यपस्य वचो यथा । यस्य सर्पेण दष्टस्य दंशं द्व्यङ्गुलमन्तरम् । यौवनस्थेन दष्टस्य एतद्भवति लक्षणम् । यस्य सर्पेण दष्टस्य सार्द्धद्व्यङ्गुलमन्तरम् । वृद्धदष्टं विजानीयात् कश्यपस्य वचो यथा” भविष्यपु० । “स्थानान्यादौ प्रवक्ष्यामि यद्दष्टो न जीवति । चिताबल्मीकशैलादौ कूपे च विवरे तरोः । दंशे रेखात्रयं यस्य प्रच्छन्नं स न जीवति । षष्ठ्यां तु कर्कटे मेषे मूलाश्लेषामघादिषु । कक्षाश्रोणिगले सन्धौ शङ्खकर्णोदरादिषु । दण्डी शस्त्रधरो भिक्षुर्नग्नाद्यः कालदूतकः । वक्त्रे बाह्वोश्च ग्रीवायां पृष्ठे च न हि जीवति । पूर्वं दिनपतिर्भुङ्क्ते सार्द्धयामन्ततो परे । शेषाः ग्रहाः प्रतिदिनं षट्संख्यापरिवर्त्तनैः । नागभोगक्रमो ज्ञेयो रात्रौ वाणविवर्त्तनैः । शेषोऽर्कः फणिपश्चन्द्रस्तक्षको भौम ईरितः । कर्कोटोऽज्ञो गुरुः पद्मो महापद्मश्च भार्गवः । शङ्खः शनैश्चरो राहुः कुलिकश्चाह्वयो ग्रहाः । रात्रौ दिवा सुरगुरोर्भोगे स्यादपरान्तकः । पङ्गोः कालो दिवा राहुः कुलिकेन सह स्थितः । यामार्द्धसन्धिसंस्थः स वेलां कालयतीरयेत् । वाण द्विषड्वह्न्याब्धियुगभूरेकमागतः । दिवा षड्वेदनेत्रादि-पञ्चाब्धिवह्निशशाङ्ककैः । पादाङ्गुष्ठे पादपृष्ठे गुल्फे जानुनि लिङ्गके । नाभौ हृदि स्तनतटे कण्ठे नासापुटे चक्षे । कर्णयोश्च भ्रुवोः शङ्खे मस्तके प्रतिपत् क्रमात् । तिष्ठेच्चन्द्रश्च जीवेन पुंसो दक्षिणभागके । कायस्य वामभागे तु स्त्रिया वायुवहक्रमात् । अमृतस्थानतो मोक्षो निवर्त्तेत च मर्द्दनात्” गारुडे १८अ० । “आषाढ़ादित्रिमासैः स्याद्गर्भो मासचतुष्टये । अण्डकानां शते द्वे च चत्वारिंशत् प्रसूयते । सर्पा ग्रसन्ति सूतौ तान् विना स्त्रीं, पुंनपुंसकान् । उन्मीलनेऽक्षि सप्ताहात् कृष्णो मासाद्भवेदहिः । द्वादशाहात् सुबोधः स्याद्दन्ताः स्युः सूर्यदर्शनात् । द्वात्रिंशद्दिनैर्विंशत्या चतस्रस्तेषु दंष्ट्रिकाः । कराली मकरी कालरात्री च यमदूतिका । एतास्ताः सविषा दंष्ट्रा वामदक्षिणपार्श्वगाः । षण्मासान्मुच्यते कृत्तिं जीवेत् षष्टिसमाद्वयम् । नागाः सूर्य्यादिवारेशाः सप्त उक्ता दिवानिशि । तेषां षट् प्रतिवारेषु कुलिकः सर्वसन्धिषु । शङ्खेन वा महाब्जेन सह तस्योदयोऽथ वा । द्वयोर्वैव नाड़िकयोरन्तरं कुलिकोदयः । दुष्टः सकालः सर्वत्र सर्पदंशे विनिर्द्दिशेत् । कृत्तिका भरणी स्वातिर्मूलं पूर्वत्रयाश्विनी । विशाखार्द्रा मघाश्लेषा चित्रा श्रवणरोहिणी । हस्ता मन्दकुजौ वारौ पञ्चमी चाष्टमी तिथिः । षष्ठी रिक्ता शिवा निन्द्या पञ्चमी च चतुर्द्दशी । सन्ध्याचतुष्टयं दुष्टं दग्धयोगश्च राशयः । एकद्विबहवो दंशा दष्टविद्धञ्च खण्डितम् । अदंशमवगुप्तं स्याद्दंशमेवं चतुर्विधम् । त्रयो द्व्येकक्षता दंशा वेदना रुधिरं क्षतात् । नक्तं द्व्येकाङ्घ्रिकूर्माभा दंशाश्च यमचोदिताः । दाहो पिपीलिकास्पर्शी कण्ठशोथरुजान्वितः । सतोदो ग्रन्थितो दंशः सविषो न्यस्तनिर्विषः । देवालये शून्यगृहे वल्मीकोद्यानकोटरे । रथ्या सन्ध्या श्मशाने च शुष्कद्रौ सिन्धुसङ्गमे । द्वीपे चतुष्पथे सौधे गृहेऽब्जे पर्वताग्रतः । बिलद्वारे जीर्णकूपे जीर्णवेश्मनि कुड्यके । शिग्रुश्लेष्मातकाक्षेषु जम्बूडुम्बरकेषु च । वटे च जीर्णप्राकारे खास्यहृत्कक्षजत्रुणि । तालौ शङ्खे गले मूर्ध्नि चिबुके नाभिपादयोः । दंशोऽशुभः” अग्निपु० । सुश्रुते तद्दंशलक्षणभेदादिर्दर्शितो यथा

“तत्र सर्वेषां सर्पाणां सामान्यत एव दष्टलक्षणं वक्ष्यामः । किं कारणं विषं हि निशितनिस्त्रिंशाशनिहुतवहदेश्यकारि मुहूर्त्तमप्युपेक्षितमातुरमतिपातयति । न चाव-

कायोऽस्ति वाक् समूहमनुसर्तम् । प्रत्येकमपि दष्टलक्षणेऽभिहिते सर्वत्र त्रैविध्यं भवति । तस्मात्त्रैविध्यमेव वक्ष्यामः । एतद्धातुरहितमसम्मोहकरञ्च । अपि चात्रैव सर्वसर्पव्यञ्जनावबोधः ।

तत्र दर्वीकरविषेण त्वङ्नयननखदशनमूत्रपुरीषदंशकृष्णत्वं रौक्ष्यं शिरसो गौरवं सन्धिवेदना कटीपृष्ठग्रीवादौर्बल्यं जृम्भणं वेपथुः स्वरावसादो घुर्घुरको जड़ता शुष्कोद्गारः कासश्वासौ हिक्का वायोरूर्ध्वगमनं शूलोद्वेष्टनं तृष्णा लालास्रावः फेनागमनं स्रोतोऽवरोधस्तास्ताश्च वातवेदना भवन्ति ।

मण्डलिविषेण त्वगादीनां पीतत्वं शीताभिलाषः परिधूपनं दाहस्तृष्णा मदो मूर्च्छा ज्वरः शोणितागमनमूर्द्ध्वमधश्च मांसानामवशातनं श्वयथुर्दंशकोथः पीतरूपदर्शनमाशुकोपस्तास्ताश्च पित्तवेदना भवन्ति ।

राजिमद्विषेण शुक्लत्वं त्वगादीनां शीतज्वरो रोमहर्षस्तब्धत्वं गात्राणामादंशशोफः सान्द्रकफप्रसेकच्छर्दिरभीक्ष्णमक्ष्णोः कण्डूः कण्ठे श्वयथुर्घुर्घुरक उच्छ्वासनिरोधस्तमःप्रवेशस्तास्ताश्च कफवेदना भवन्ति ।

पुरुषाभिदृष्ट ऊर्ध्वं प्रेक्षतेऽधस्तात् स्त्रिया सिराश्चोत्तिष्ठन्ति ललाटे । नपुंसकाभिदष्टस्तिर्यक्प्रेक्षी भवति । गर्भिण्या पाण्डुमुखोऽध्मातश्च । सूतिकया शूलार्त्तो रुधिरं मेहत्युपजिह्विका चास्य भवति । ग्रासार्थिनाद्यं काङ्क्षति । वृद्धेन मन्दा वेगाश्च । बालेनाशु मृदवश्च निर्विषेणाविषलिङ्गम् । अन्धाहिनेत्यन्धत्वमित्येके । ग्रसनादजगरः शरीरप्राणहरो न विषात् । तत्र सद्यःप्राणहराहिदष्टः पतति शस्त्राशनिहत इव भूमौ स्रस्ताङ्गः स्वपिति ।

तत्र सर्वेषां सर्पाणां विषस्य सप्त वेगा भवन्ति तत्र दर्वीकराणां प्रथमे वेगे विषं शोणितं दूषयति तत् प्रदुष्टं कृष्णतामुपैति तेन कार्ष्ण्यं पिपीलिकापरिसर्पणमिव चाङ्गे भवति । द्वितीये मांसं दूषयति तेनात्यर्थं कृष्णता शोफो ग्रन्थयश्चाङ्गे भवन्ति । तृतीये मेदो दूषयति तेन दंशक्लेदः शिरोगौरवं स्वेदश्चक्षुर्ग्रहणञ्च । चतुर्थे कोष्ठमनुप्रविश्य कफप्रधानान् दोषान् दूषयति । तेन तन्द्राप्रसेकसन्धिविश्लेषा भवन्ति । पञ्चमेऽस्थीन्यनुप्रविशति प्राणमग्निञ्च दूषयति तेन पर्वभेदो हिक्का दाहश्च भवति । षष्ठे मज्जानमनुप्रविशति ग्रहणीञ्चात्यर्थं दूषयति तेन गात्राणां गौरवमतीसारो हृत्पीड़ा मूर्च्छा च भवति । सप्तमे शुक्रमनुप्रविशति व्यानञ्चात्यर्थं कोपयति कफञ्च सूक्ष्मस्रोतोभ्यः प्रच्यावयति तेन श्लेष्मवर्त्तिप्रादुर्भावः कटीपृष्ठभङ्गः सर्वचेष्टाविघातो लालास्वेदयोरतिप्रवृत्तिरुच्छ्वासनिरोधश्च भवति ।

तत्र मण्डलिनां प्रथमे वेगे विषं शोणितं दूषयति तत्तत्प्रदुष्टं पीततामुपैति तत्र परिदाहः पीतावभासता चाङ्गानां भवति । द्वितीये मांसं दूषयति तेनात्यर्थं पीततापरिदाहौ दंशे श्वयथुश्च भवति । तृतीये मेदो दूषयति तेन पूर्ववच्चक्षुर्ग्रहणं तृष्णा दंशे क्लेदः स्वेदश्च । चतुर्थे कोष्ठमनुप्रविश्य ज्वरमापादयति पञ्चमे परिदाहं सर्वगात्रेषु करोति । षष्ठसप्तमयोः पूर्ववत् ।

राजिमतां प्रथमे वेगे विषं शोणितं दूषयति तत्प्रदुष्टं पाण्डुतामुपैति तेन रोमहर्षः शुक्लावभासश्च पुरुषो भवति । द्वितीये मांसं दूषयति तेन पाण्डुतात्यर्थं जाड्यं शिरःशोफश्च भवति । तृतीये मेदो दूषयति तेन चक्षुर्ग्रहणं स्वेदो घ्राणाक्षिस्रावश्च भवति । चतुर्थे कोष्ठमनुप्रविश्य मन्यास्तम्भं शिरोगौरवं चापादयति । पञ्चमे वाक्सङ्गं शीतज्वरञ्च करोति षष्ठसप्तमयोः पूर्ववदिति ।

भवन्ति चात्र । धात्वन्तरेषु याः सप्त कलाः संपरिकीर्त्तिताः । तास्वेकैकामतिक्रम्य वेगं प्रकुरुते विषम् । येनान्तरेण हि कलां कालकल्पं भिनत्ति हि । समीरणेनोह्यमानं तत्तु वेगान्तरं स्मृतम् । शूनाङ्गः प्रथमे वेगे पशुर्ध्यायति दुःखितः । लालास्रावो द्वितीये तु कृष्णाङ्गः पीड्यते हृदि । तृतीये च शिरो दुःखं कण्ठग्रीवञ्च भज्यते । चतुर्थे वेपते मूढ़ः खादन् दन्तान् जहात्यसून् । केचिद्वेगत्रयं प्राहुरन्त्यमेतेषु तद्विदः । ध्यायति प्रथमे वेगे पक्षी सम्भ्रान्तः परम् । द्वितीये विह्वलः प्रोक्तस्तृतीये मृत्युमृच्छति । केचिदेकं विहङ्गेषु विषवेगमुशन्ति हि । मार्ज्जारनकुलादीनां विषं नातिप्रवर्त्तते"। "अथातः सर्पदष्टचिकित्सितकल्पं व्याख्यास्यामः । सर्वैरेवादितः सर्पैः शाखादष्टस्य देहिनः । दंशस्योपरि बध्नीयादरिष्टा(तागा)श्चतुरङ्गुले । प्लोतचर्म्मान्तवल्कानां मृदुनाऽन्यतमेन च । न गच्छति विषं देहमरिष्टाभिर्निवारितम् । दहेद्दंशमथोत्कृत्य यत्र बन्धो न जायते । आचूषणच्छेददाहाः सर्वत्रैव तु पूजिताः । प्रतिपूर्य्य मुखं वस्त्रैर्हितमाचूषणं भवेत् । स दष्टव्योऽथ वा सर्पो लोष्टो वापि हि तत्क्षणम् । अथ मण्डलिना दष्टं न कथञ्चन दाहयेत् । स पित्तविषबाहुल्याद्दंशो दाहाद्विसर्पति । अरिष्टामपि

मन्त्रैश्च बध्नीयान्मन्त्रकोविदः। सा तु रज्ज्वादिभिर्बद्धा विषप्रतिकरी मता। देवब्रह्मर्षिभिः प्रोक्ता मन्त्राः सत्यतपोमयाः। भवन्ति नान्यथा क्षिप्रं विषं हन्युः सुदुस्तरम्। विषं तेजोमयैर्मन्त्रैः सत्यब्रह्मतपोमयैः। यथा निवार्य्यते क्षिप्रं प्रयुक्तैर्न तथौषधैः। मन्त्राणां ग्रहणं कार्य्यं स्त्रीमांसमधुवर्जिना। मिताहारेण शुचिना कुशास्तरणशायिना। गन्धमाल्योपहारैश्च बलिभिश्चापि देवताः। पूजयेन्मन्त्रसिद्ध्यर्थं जपहोमैश्च यत्नतः। मन्त्रास्तु विधिना प्रोक्ता हीना वा स्वरवर्णतः। यस्मात् सिद्धिं न यान्ति तस्माद् योज्योऽगदक्रमः। समन्ततः सिरा दंशाद्विद्ध्येत् कुशलो भिषक्। शाखाग्रे वा ललाटे वा वेध्यास्ता विसृते विषे। रक्ते निर्ह्रियमाणे तु कृत्स्नं निर्ह्रियते विषम्। तस्माद्विस्रावयेद्रक्तं सा ह्यस्य परमा क्रिया"।

**सर्पकङ्काली** स्त्री० सर्पस्येव कङ्कालमङ्गविशेषो यस्याः गौरा० ङीष्। सर्पविषघातिन्यां लतायां शब्दच०।

**सर्पगन्धा** स्त्री सर्पं तद्विषं गन्धयति हिनस्ति गन्ध-अण्। विषहारिण्यां लतायां जटा०। [ङरीलतायां रत्नमा०।

**सर्पघातिनी** स्त्री सर्पं तद्विषं हन्ति हन-णिनि। सर्पविष-

**सर्पतृण** पुंस्त्री० सर्पस्तृणमिव नाशनाय च्छेद्यो यस्य। नकुले हेमच०।

**सर्पदंष्ट्र** पु० सर्पस्य दंष्ट्रेव पुष्पमस्य। १नागदन्तीवृक्षे शब्दच०। सर्पस्य दंष्ट्रेव स्पर्शने दुःखदत्वात्। २वृश्चिकालीलतायां स्त्री (विछाति) रत्नमा०। [ङ्यां राजनि०।

**सर्पदंष्ट्रिका** स्त्री सर्पदंष्ट्राऽऽकारोऽस्त्यस्याः ठन्। अजशृ-

**सर्पदण्डी** स्त्री सर्पं तद्विषं दण्डयति दण्ड-अण्। गोरक्षी- दुग्धे राजनि०। [ङीप्। नागदन्तीवृक्षे राजनि०।

**सर्पदन्ती** स्त्री सर्पस्य दन्त इव पुष्पमस्त्यस्या अच् गौरा०

**सर्पनामा** स्त्री सर्पस्य नामास्य वाचकशब्दो। सर्पकङ्काली- भेदे शब्दच०।

**सर्पदमनी** स्त्री सर्पान् दमयति अनया दम-णिच्-करणे ल्युट् ङीप्। वन्ध्याकर्कोट्यां राजनि०। [राजनि०।

**सर्पपुष्पी** स्त्री सर्पः सर्पदन्त इव पुष्पमस्याः। नागदन्त्यां

**सर्पफणिज** पु० सर्पस्य फणे जायते जन-ड। सर्पफणजात- मणौ शब्दम०।

**सर्पभुज्** पु० सर्पं भुङ्क्ते भुज-क्विप्। १मयूरे हेमच०। २सर्पभक्षके गरुडादौ च। [अमरः।

**सर्पराज** पु० सर्पाणां राजा टच् समा०। वासुकौ नागभेदे

**सर्पलता** स्त्री सर्प इव लता। नागवल्ल्यां ताम्बूल्यां राजनि०

**सर्पसत्र** न० सर्पेण होम्यद्रव्येण तन्नाशनार्थं वा सत्रम्। जनमेजयानुष्ठिते महाभारतप्रसिद्धे सर्पनाशनार्थे यज्ञ- भेदे भा०आ० ५१अ०५८अ० तत्कथा दृश्या।

**सर्पसहा** स्त्री सर्पं सहते सह-अच्। सर्पकङ्कालीलतायां राजनि०। [च।

**सर्पहन्** पु० सर्पं हन्ति हन-क्विप्। १नकुले हेमच० २गरुडे

**सर्पाक्षी** स्त्री सर्पस्येवाक्षि पुष्पं यस्याः षच् समा०। १गन्ध- नाकुल्याम् राजनि०। [२महिषकन्दभेदे च राजनि०।

**सर्पाख्य** पु० सर्पस्याख्याऽऽख्या यस्य। १नागकेशरे रत्नमा०।

**सर्पाङ्गी** स्त्री सर्पस्येवाङ्गं यस्याः ङीष्। १सर्पकङ्कालीलतायां रत्नमा०। २सिंहल्यां राजनि०।

**सर्पादनी** स्त्री सर्पं सर्पविषमत्त्यऽनया अद-ल्युट् ङीप्। नाकुल्यां राजनि०। [प्रभृतयोऽप्यत्र।

**सर्पाराति** पु० ६त०। १गरुडे हेमच० २नकुले च सर्पारि-

**सर्पावास** न० सर्पैर्नागैरावासो यत्र। १चन्दनवृक्षे राजनि०। ६त०। २सर्पाणामावासे पु०।

**सर्पाशन** पुस्त्री० सर्पमश्नाति अश-ल्युट्। १मयूरे हला०। स्त्रियां ङीप्। २गरुडे पु०।

**सर्पिस्** न० सृप-इसि। घृते अमरः।

**सर्पिणी** स्त्री सृप-णिनि ङीप्। १सर्पयोषिति शब्दर०। २क्षुपभेदे राजनि० ३गमनकर्त्तरि त्रि० स्त्रियां ङीप्।

**सर्पीष्ट** न० सर्पीणां भुजगीनामिष्टम्। चन्दने रत्नमा०।

**सर्पेष्ट** न० सर्पाणामिष्टम्। चन्दने जटा० २सर्पाभीष्टे त्रि०।

**सर्व** सर्पणे भ्वा०पर०सक० सेट्। सर्वति असर्वीत्। णोपदेशत्वात् न मस्यत्वेके णोपदेश एव व्याख्या।

**सर्व** पु० सृ-व तस्य नेत्वम्। १शिवे २विष्णौ च विष्णुस०। "असतश्च सतश्चैव सर्वस्य प्रभवाप्ययौ। सर्वस्य सर्वदा ज्ञानात् सर्वमेतं प्रचक्षते" विष्णुपु० तन्नामनिरुक्तिः। तथा च सर्वं ज्ञेयत्वेन उत्पाद्यत्वादिना वाऽस्त्यस्य अच्। ३समस्ते ४सकले च त्रि० अमरः। असंज्ञायामस्य सर्वनामसंज्ञा तत्कार्य्यं च। सर्वशब्दार्थस्तु स्वार्थान्वयितावच्छेदकधर्मव्यापकताहशधर्मावच्छिन्नान्वयितावच्छेदकावच्छिन्नव्याप्यव्याप्तिप्रकधर्मावच्छिन्नः" गा०श०। "व्यापकत्वावच्छिन्नः" दिनकरी। यथा सर्वे घटा रूपवन्त इत्यादौ सर्वपदार्थः। "बुद्धिविषयतावत्त्वावच्छिन्नसमूहत्ववान्" इति शाब्दिका वदन्ति। [२सर्वसोढरि त्रि०।

**सर्वसहा** स्त्री सर्वं सहते खच् मुम् च। १पृथिव्याम् अमरः

**सर्वकर्तृ** पु० सर्वं करोति कृ–तृच्। १चतुर्मुखे ब्रह्मणि शब्दर०। २परमेश्वरे च।

**सर्वकर्मीण** त्रि० सर्वकर्माण्यश्नुते ख। सर्वकर्मसमर्थे पदार्थे "संग मे सर्वकर्मीणाविति भट्टिः। [नटे शब्दर।

**सर्वकेशिन्** पु० सर्वाभिनेयानां सर्वेषामिव वेशोऽस्त्यस्य इनि।

**सर्वक्षार** पु० सर्वः क्षारमयः। (सावान)ख्याते पदार्थे राजनि०

**सर्वग** न० सर्वं गच्छति गम–ड। १जले २शिवे ३परमेश्वरे पु० मेदि०। ४वायौ ५आत्मनि च पु० शब्दमा०। ६सर्वगामिनि त्रि०। ७प्रियङ्गुवृक्षे स्त्री शब्दच० टाप्।

**सर्वगन्ध** न० सर्वे गन्धा यत्र। "कर्पूरागुरुकस्तूरीककोलकुङ्कुमम्। सर्वकर्पूरसहितमैर सर्वगन्धं प्रकीर्त्तितम्" भावप्र० उक्ते गन्धद्रव्यसमूहभेदे। सर्वान् गन्धयति हिनस्ति संहारकाले गन्ध–अच् सर्वगन्धा उत्पाद्यतया सन्त्यस्य वा। २परमेश्वरे सर्वनाशकत्वात् सर्वगन्धहेतुत्वाद्वाऽस्य तथात्वम्।

**सर्वग्रन्थि** पु० सर्वत्र ग्रन्थिरस्य। १पिप्पलीमूले राजनि०।

**सर्वङ्कष** पु० सर्वं कषति कष–खच् मुम् च। १पापे २सर्वातिरेकिणि त्रि०। [मि०को०।

**सर्वजनीन** त्रि० सर्वजनेषु विदितः ख। सर्वत्र विख्याते

**सर्वज्ञ** पु० सर्वं जानाति ज्ञा–क। १शिवे २बुद्धे अमरः। ३परमेश्वरे च "यः सर्वज्ञः सर्वविद्" श्रुतिः। ४सर्वज्ञानकर्त्तरि त्रि०। ५दुर्गायां स्त्री "सर्वज्ञा सर्ववेत्तृत्वात्" देवीपु० ४८अ०।

**सर्वतःशुभा** स्त्री सर्वतः शुभं यस्याः। प्रियङ्गुवृक्षे शब्दच०।

**सर्वतस्** अव्य० सर्व+तसिल्। समन्तत इत्यर्थे अमरः।

**सर्वतिक्ता** स्त्री सर्वतः तिक्ता। काकमाच्यां राजनि०।

**सर्वतोभद्र** पु०न० सर्वतो भद्राणि सुखानि यस्य। १चतुर्द्वारयुक्ते १गृहभेदे प्रतिष्ठादौ पूज्यदेवतानां २मण्डलभेदे सर्वतोभद्रमण्डलशब्दे दृश्यम्। ज्योतिषोक्ते ३शुभाशुभज्ञानार्थे चक्रभेदे चक्रशब्दे २८१५पृ० दृश्यम्। अलङ्कारोक्ते बन्धभेदात्मके ४चित्रकाव्ये च। अलङ्कारशब्दे ४०७ पृ० दृश्यम् सर्वतो भद्रमस्मात्। ५निम्बवृक्षे पु० अमरः। ६गाम्भार्यां ७नटयोषिति च स्त्री मेदि०।

**सर्वतोभद्रचक्र** न० सर्वतो भद्रं यत्र तादृशं चक्रम्। ज्योतिषोक्ते शुभाशुभज्ञानार्थे चक्रभेदे चक्रशब्दे २८१५ पृ० दृश्यम्। [भेदे अलङ्कारशब्दे ४०७पृ०दृश्यम्।

**सर्वतोभद्रबन्ध** पु० सर्वतो भद्राकारेण बन्धः। चित्रकाव्य-

**सर्वतोभद्रमण्डल** न० सर्वतो भद्रनामकं मण्डलम्। शारदातिलकाद्युक्ते प्रतिष्ठादौ—पूज्यदेवतामण्डलभेदे

तल्लेखनप्रकारस्तु हेमाद्रौ स्कान्दे "प्रागुदीच्यां गता रेखाः कुर्य्याद्वैकोनविंशतिम्। खण्डेन्दुवह्निपात् कोष्ठे त्यक्त्वा पञ्चभिः पदैः। एकादशपदा वल्ली भद्रन्तु नवभिः पदैः। चतुर्विंशत्पदा वापी परिधिर्विंशत्या पदैः। मध्ये षोडशभिः कोष्ठैः पद्मनष्टदलं स्मृतम्। खण्डेन्दुः त्यक्त्वा, कृष्णां वल्लीं नीलेन पूरयेत्। भद्रारत्या सिता वापी परिधिः पीतवर्णकः। बाह्यान्तरदलैः श्वेता कर्णिका पीतवर्णिका। परिध्यावेष्टितं पद्मं बाह्ये सत्वरजस्तमः। तन्मध्ये स्थापयेद्देवान् ब्रह्माद्यांस्तु सुरोत्तमानिति"। शारदायामन्यथोक्तं यथा

"चतुरस्रचतुःकोष्ठे कर्णसूत्रसमन्विते। चतुर्ष्वपि च कोष्ठेषु कर्णसूत्रचतुष्टयम्। ततः कोष्ठेषु मत्स्याः सुसेषु सूत्राणि पातयेत्। यावत् शतद्वयं मत्स्यो षट्पञ्चाशत् पदान्यपि। तावत्तेनैव विधिना तत्र सूत्राणि पातयेत्। षट्त्रिंशता पदैर्मध्ये विलिखेत् पद्मं सुलक्षणम्। बहिःपङ्क्त्या भवेत् पीठं पङ्क्तियुग्मेन वीथिका। द्वारशोभोपशोभास्रान् शिष्टाभ्यां परिकल्पयेत्। शास्त्रोक्तविधिना मन्त्री ततः पद्मं समालिखेत्। पद्मक्षेत्रस्य सन्त्यज्य द्वादशांशं बहिः सुधीः। तन्मध्यं विभजेद् वृत्तैस्त्रिभिः समविभागतः। आद्यं स्यात् कर्णिकास्थानं केशराणां द्वितीयकम्। तृतीयं पद्मपत्राणामंशेन दलाग्रकम्। बाह्यक्षेत्रान्तरालस्य मानेन विधिना सुधीः। निधाय केशराग्रेषु परितोऽर्द्धनिशाकरान्। विलिख्य सन्धिसंस्थानि तत्र सूत्राणि पातयेत्। दलाग्राणाञ्च यन्मानं तन्मानाद् वृत्तमालिखेत्। तदन्तरालतन्मध्यस्थलशोभवतः सुधीः। आलिखेद् बाह्यवृत्तेन दलाग्राणि समन्ततः। दलमूलेषु युगशः केशराणि प्रकल्पयेत्। एतत् साधारणं प्रोक्तं पङ्कजं तन्त्रवेदिभिः। पदानि त्रीणि पादार्थं पीठकोणेषु मार्जयेत्। अवशिष्टैः पदैर्विद्वान् पीठगात्राणि कल्पयेत्। पदानि वीथिसंस्थानि मार्जयेत् पङ्क्तिभेदतः। दिक्षु द्वाराणि रचयेद् द्विचतुःकोष्ठकैस्ततः। पदैस्त्रिभिरधैकेन शोभाः स्युर्द्वारपार्श्वयोः। उपशोभाः तु रेकेन त्रिभिः कोष्ठैरनन्तरम्। अवशिष्टैः पदैः षड्भिः कोणानां स्याच्चतुष्टयम्। रञ्जयेत् पञ्चभिर्वर्णैर्मण्डलं तन्मनोहरम्। पीतं हरिद्राचूर्णं स्यात् सितं तण्डुलसम्भवम्। कुसुम्भचूर्णमरुणं कृष्णं दग्धपुलाकजम्। बिल्वादिपत्रजं श्याममिल्युक्तं वर्णपञ्चकम्। अक्षुलोदृशेषविस्ताराः शोभारेखाः सिताः

शुभाः। कर्णिकां पीतवर्णेन केसराश्चारुणेन च। शुक्लवर्णानि पत्राणि तत्सन्धीन् श्यामलेन च। रजसा रञ्जयेन्मन्त्री यद्वा पीतैव कर्णिका। केसराः पीतरक्ताः स्यु रदणानि दलान्यपि। सन्धयः कृष्णवर्णाः स्युः सितेनाप्यसितेन वा। रञ्जयेत् पीठभागांश्च पादाः स्यु रक्तप्रभाः। गात्राणि तस्य शुक्लानि वीथीषु चतसृष्वपि। आलिखेत् कल्पलतिकादलपुष्पफलान्विताः। वर्णैर्नाना विधैश्चित्राः सर्वदृष्टिमनोहराः। द्वाराणि श्वेतवर्णानि शोभा रक्ताः समीरिताः। उपशोभाः पीतवर्णाः कोणान्यसितभानि च। तिस्रो रेखा बहिः कार्य्याः सितरक्तासिताः क्रमात्। मण्डलं सर्वतोभद्रमेतत् साधारणं स्मृतम्”। अपरञ्च “चतुरस्रां भुवं भित्त्वा दिग्भ्यो द्वादशधा सुधीः। पातयेत् तत्र सूत्राणि कोष्ठानां दृश्यते शतम्। चतुश्चत्वारिंशदाढ्यं पश्चात् षट्त्रिंशताम्बुजम्। कोष्ठैः प्रकल्पयेत् पीठं पङ्क्त्या नैवात्र वीथिकाः। द्वारशोभे यथा पूर्वमुपशोभा न दृश्यते। अवशिष्टैः पदैः कुर्य्यात् षड्भिः कोष्ठानि तन्त्रवित्। विदध्यात् पूर्ववत् शेषमेवं वा मण्डलं स्मृतम्”। “चतुरस्रे चतुःषष्टिं पदान्यारचयेत् सुधीः। पदैश्चतुर्भिः पद्मं स्यात् मध्ये तत् पूरिताः पुनः। वीथीश्चतस्रः कुर्वीत मण्डलान्तरशालिकाः। दिग्गतेषु चतुष्कोषु पङ्कजानि समालिखेत्। विदिग्गतचतुष्काणि भित्त्वा षोडशधा सुधीः। मार्जयेत् स्वस्तिकाकारं श्वेतपीतारुणासितैः”। मार्जनमाह राघवभट्टधृतम् “विदिग्गतचतुष्कोष्ठान् भित्त्वा षोडशधा सुधीः। वज्राद्विकोष्ठसिद्ध्यर्थे मध्योर्ध्वमपि मार्जयेत्। रजोभिः पूरयेत्तानि स्वस्तिकानि शिवादितः। प्राक् प्रोक्तेनैव मार्गेण शेषमन्यत् समापयेत्। नवनाभमिदं प्रोक्तं मण्डलं सर्वसिद्धिदम्। पञ्चाब्जमण्डलं प्रोक्तमेतत् स्वस्तिकवर्जितम्। टीकायां देवपूजायां मण्डलानां चतुष्टयम्। सर्वतन्त्रानुसारेण प्रोक्तं सर्वसमृद्धिदम्”।

**सर्वतोमुख** न० सर्वतोमुखमस्य। १जले अमरः २आकाशे मेदि० ३शिवे ४ब्रह्मणि ५परमेश्वरे ६आत्मनि च पु० मेदि०। ७ब्राह्मणे शब्दच० ८स्वर्गे ९वह्नौ शब्दमा०। “सर्वतःपाणिपादान्तः सर्वतोऽक्षिशिरोमुखः। विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु” ति०त० उक्तेः वह्नेस्तथात्वम्। [वेत्यर्थे।

**सर्वत्र** अव्य० सर्व-त्रल्। सर्वस्मिन् काले देशे सर्वासां दिशि

**सर्वत्रग** पु० सर्वत्र गच्छति गम-ड। १वायौ शब्दच० २सर्वत्रगामिनि त्रि०। [र्व्वत्र गन्तरि त्रि० स्त्रियां ङीप्।

**सर्वत्रगामिन्** पु० सर्वत्र गच्छति गम-णिनि। १वायौ २स-

**सर्वथा** अव्य० सर्वप्रकारम् थाल्। १सर्वप्रकारे २अत्यर्थे ३प्रतिज्ञायां ४हेतौ च शब्दर०।

**सर्वदम** पु० सर्वान् दमयति दम-णिच्-अच्। सर्वदमने शाकुन्तले भरतनृपे हेमच०।

**सर्वदमन** पु० सर्वान् दमयति दम-णिच्-ल्यु। १दुष्मन्तपुत्रे भरतनृपे त्रिका०। २सर्वदमनकर्त्तरि त्रि०।

**सर्वदर्शिन्** पु० सर्वं समभावेन पश्यति दृश-णिनि। १बुद्धे २परमेश्वरे च। ३सकलद्रष्टरि त्रि० स्त्रियां ङीप्।

**सर्वदा** अव्य०सर्वस्मिन् काले दाच्। सर्वस्मिन् काले इत्यर्थे।

**सर्वदुःखक्षय** पु० सर्वेषामाध्यात्मिकाधिदैविकाधिभौतिकानां दुःखानां क्षयः। आत्यन्तिकदुःखत्रयनिवृत्तौ मोक्षे हेमच० “अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्त पुरुषार्थः” सा० सू० “स्वसमानाधिकरणदुःखासमानकालीनत्वं दुःखध्वंसस्य पनिवृत्तेरात्यन्तिकत्वम्।

**सर्वदेवमुख** पु० सर्वेषां देवानां मुखं यत्र। वह्नौ रत्नमा०।

**सर्वद्र्यच्** त्रि०सर्वमञ्चति पूजयति अञ्च-क्विप् अद्र्यागमः न नलोपः। सर्वस्य पूजके। भत्वे सर्वद्रीच इत्यादि। गत्यर्थस्य नलोपे सर्वद्र्यङ् इत्येव सर्वगामिनि। भत्वे सर्वद्रीच इति भेदः।

**सर्वधुरावह** त्रि० सर्वेषां धूः अच्समा० सर्वधुरा तां वहति वह-अच्। सर्वभारवाहके वृषादौ अमरः।

**सर्वधुरीण** त्रि० सर्वां धुरं वहति ख। सकलभारवाहके वृषादौ अमरः।

**सर्वनाम** पु० सर्वेषां नाम वाचकं संज्ञात्वेऽपि युक्ता० न णत्वम्। व्याकरणोक्ते कार्य्यविशेषार्थं कृतसंज्ञायुते सर्वादिशब्दभेदे “सर्वादीनि सर्वनामानि” पा०सर्वनामशब्दार्थस्तु वक्तृबुद्धिविषयतावच्छेदकधर्मोपलक्षितधर्मविशिष्टः।

**सर्वपूर्णत्व** न० सर्वैः पूर्णत्वम्। षड्जादिग्रामे त्रिका०।

**सर्वप्रहरणायुध** पु० सर्वेषां प्रहरणानि सर्वाणि वा प्रहरणानि आयुधान्यस्य। विष्णौ “सर्वप्रहरणायुधः” विष्णु स० व्युत्पत्तिद्वयोगात् नामद्वयम् तेन नामसहस्रपूर्त्तिः” भा०। [भक्षके त्रि० २वह्नौ पु०।

**सर्वभक्षा** स्त्री भक्ष-अच् उप०। १अजायां हेमच० २सर्व-

**सर्वमङ्गला** स्त्री सर्वाणि मङ्गलान्यस्याः ५ब० सर्वाणि मङ्गलानि देयत्वेनास्त्यस्याः अच् वा। दुर्गायाम् अमरः। “सर्वाणि हृदयस्थानि मङ्गलानि शुभानि च। ददाति

वेपयितान् क्षोभे सा तेन सर्वमङ्गला" देवीपु० ४५ अ० ।

**सर्वमय** त्रि० सर्वात्मकः मयट् । १सर्वात्मके २परमेश्वरे पु० ।

**सर्वमूल्य** न० ६त० । कपर्दके त्रिका० ।

**सर्वमूषक** पु०सर्वं मुष्णाति मुष-वुन् पृषो० । काले हेमच० ।

**सर्वरस** पु० सर्वो रसमयः । (धुना) १शालरसे अमरः ७ब० । २वीणादिवाद्ये मेदि० । ३पण्डिते शब्दच० । कर्म० । ४लवणे रसे । सर्वाणि रसयति रस-अण् । ५परमेश्वरे सैन्धवघनवद् तस्य सर्वत आनन्दमयत्वात् तथात्वम् ।

**सर्वरसोत्तम** पु० सर्वेषु रसेषु उत्तमः । लवणे रसे हेमच० ।

**सर्वरात्र** पु० सर्वा रात्रिः अच् समा० । "रात्राह्नाहाः पुंसीति" पा० पुंस्त्वम् । सकलरात्रौ सि०कौ० । [दिरयम् ।

**सर्वरी** स्त्री सृ-वनिप् ङीप् र च । रात्रौ धरणि ताजव्या-

**सर्वर्त्तुपरिवर्त्त** पु० सर्वर्तूनां परिवर्त्तो यत्र । वत्सरे जटा०

**सर्वला ली)** स्त्री सर्वं लाति ला-क वा गौरा० ङीष् । तोमराख्ये अमरः ।

**सर्वलिङ्गिन्** पु० सर्वेषां लिङ्गानि सन्त्यस्य इनि । वेदविरुद्धाचारिणां बौद्धादीनां लिङ्गवत्सु पाषण्डेषु अमरः

**सर्वलोह** पु० सर्वः लोहमयोऽवयवो यस्य । लौहमये बाणे हेमच० । [नाराचे जटा० ।

**सर्ववर्णिका** स्त्री सर्वं वर्णयति वर्ण-ण्वुल् अत इत्त्वम् । [गाम्भारीवृक्षे जटा० ।

**सर्ववित्** पु० सर्वं वेत्ति विद-क्विप् । १परमेश्वरे २सर्वज्ञातरि त्रि० ।

**सर्ववेद** पु० सर्वो वेदान् अधीते तदधीते ठक् । "सर्वादेः सादेश्च लुग् वक्तव्यः" वार्त्ति० तस्य लुक् । १सर्ववेदाध्ययनकर्त्तरि । सर्वं वेत्ति विद-अण् उप० । २सर्वज्ञे त्रि० ।

**सर्ववेदस्** पु० सर्वाणि धनानि वेदयते लम्भयति पात्राय दक्षिणार्थं ददाति विद-लाभे णिच्-असि । सर्वस्वदक्षिणकविश्वजिन्नामकादियागकर्त्तरि अमरः ।

**सर्ववेदस** न०सर्वं वेदः स्वं विद्यमानं धनं नि० अच्समा० । सर्वस्वे स्वे विद्यमाने सर्वधने तच्च विश्वजिद्यागे दक्षिणात्वेन विहितम् । "षडश्वं सर्ववेदसं विश्वजितः" कात्या०श्रौ० २२।१।८ षडश्वसर्ववेदसयो विश्वजिति विकल्पः । सर्ववेदसपक्षे इदमुच्यते । "ज्येष्ठं पुत्रमपभज्य भूमिशूद्रवर्जं योगाविशेषात् सर्वेषाम्" सू० । "ज्येष्ठपुत्रस्य विभागं दत्त्वा भूमिशूद्रवर्जं ददाति कृत एतत् सर्वमनुष्याणां हि भूम्या योगोऽविशिष्टः धारणचङ्क्रमणद्वारेण, शूद्रस्य च शुश्रूषोपनततेति" कर्कः "भूमिस्तावद्धारणशयनासनचङ्क्रमणादिसम्बन्धः सर्वैरविशिष्टः यः शूद्रो धर्मार्थं सेवां कुरुते स सर्वेषामविशिष्ट एव संप०व्या० । "शूद्रदानं वा दर्शनाविरोधाभ्याम्" सू० वाशब्दः पक्षव्यावृत्तौ शूद्रस्य दानं च भवति दृश्यते हि शूद्रस्य दानं पुरुषमेधे "अध्वर्यवे प्राची दिग्घोतुरिति" न च विरोधो गर्भदासस्य । तस्माच्छूद्रो दीयत एव अनेन च न्यायेन भूमेरप्येकदेशदानेनैव न विरोधः "परिमाणे सर्वमविशेषात्" सू० । सर्वस्वपरिमाणे यस्य यावत् स्वं तत्सर्वं स्वद्यते सर्वं वेदः सर्ववेदसमिति तेन प्रागपि षडश्वात् सर्ववेदसं भवति सर्वं प्राप्नु भाष्य । सर्वस्वपरिमाणे अपेक्षिते सर्वस्वं यस्य यावद्धनं स्वहे सुवर्णादि तत्सर्वं देयम् कुतः अविशेषात् न च सर्वस्वं ददातीति (भाष्य) वाक्यशेषः श्रुतः येन षडश्वान्न्यूनमतिरिक्तं वेति विशेष आश्रीयते । "अधिकं वा प्रकृत्यनुपपत्तेः" सू० । "अधिकं वा षडश्वात् सर्ववेदसं ग्रहीतव्यम् । प्रकृत्य हि सर्ववेदसं षडश्वेनानुपपत्तं दर्शयति कोऽर्हति मनुष्यः सर्ववेदसं दातुं तस्मात् षडश्वं देयमिति एतच्च षडश्वादधिक उपपद्यते नेतरथेति एवं तावदत्र (विश्वजिति) षडश्वादधिकं सर्ववेदसमित्युक्तम्" कर्कः । "सर्वस्व प्रतिनिधिर्वा" सू० "दीयते अप्रसिद्धत्वादुच्यते" कर्क० "धेन्वनडुत्सारधान्यपल्यदासमिथुनमहानसारोहणविमितशयनानि" सू० । "धेन्वादीनि दासमिथुनान्तानि प्रसिद्धानि महानसोपयोगिकं द्रव्यं ताम्रचर्वादिमहानसशब्देनोच्यते आरोहणं च युग्यं विमितशयने प्रसिद्धे एव । धेनुः प्रसिद्धा अनड्वान्बलीवर्दः सारं स्वर्णम् धान्यं गोधूमादि-पल्यं पलादिमानार्हम् । दासमिथुनं दासीदासौ महानसं ताम्रचर्वादिरन्धनोपकरणम् आरोहणं हस्त्यश्वादि विमितं स्वहम् शयनं खट्वादि एतानि दद्यात्" कर्कः ।

**सर्ववेशिन्** पु० सर्वेषां वेशो धार्यत्वेनास्त्यस्य इनि । नटे हेमच० । [२सर्वलोचिते त्रि० ।

**सर्वसङ्गत** पु० सर्वं सङ्गतमुचितं यस्य । १षष्टिधान्ये शब्दच०

**सर्वसंसर्गलवण** न० सर्वसंसर्गेण जातं लवणम् । औषरके लवणे राजनि० ।

**सर्वसन्नहन** न० सर्वेषां सन्नहनं युद्धार्थं सज्जीकरणं यत्र । चतुरङ्गसैन्यसज्जीकरणेन युद्धयात्रायाम् अमरः ।

**सर्वसह** पु० सर्वं सहते अच् । १गुग्गुलौ रत्नमा० २सर्वसहिष्णौ त्रि० । [२सकलार्थसाधने त्रि० ।

**सर्वसिद्धि** पु० सर्वेषां सिद्धिरस्मात् । १श्रीफले शब्दच० ।

**सर्वस्व** न० कर्म० । सकलधने सर्ववेदसशब्दे दृश्यम् ।

**सर्वस्वदक्षिण** पु० सर्वस्वं दक्षिणा यत्र । विश्वजिन्नामकयागभेदे सर्ववेदसशब्दे दृश्यम् । [२सकलहितहेतौ त्रि० ।

**सर्वहित** न० सर्वेषां हितम् । १मरिचे राजनि० ५ब० ।

**सर्वाङ्गसुन्दर** पु० औषधभेदे "रसगन्धकतुल्यांशो द्वौ भागौ टङ्कणस्य च । मौक्तिकं विद्रुमं शङ्खमवनीय समांशतः । हेमभस्मार्द्धभागञ्च सर्वं खल्ले निधापयेत् । निम्बुद्रवस्य योगेन पिष्टिकां कारयेद्भिषक् । पश्चात् गजपुटं दद्यात् शीतलञ्च समुद्धरेत् । हेमभस्मसमं तीक्ष्णं तीक्ष्णार्द्धं टङ्कणो मतः । एकीकृत्य समस्तानि सूक्ष्मचूर्णानि कारयेत् । ततः पूजां प्रकुर्वीत भक्षयेत् दिवसे शुभे । सर्वाङ्गसुन्दरो ह्येष रोगराजनिकृन्तनः । वातपित्तज्वरे घोरे सन्निपाते सुदारुणे । अर्शःसु ग्रहणीरोगे मेहे गुल्मे भगन्दरे । निहन्ति वातजान् रोगान् श्लैष्मिकांश्च विशेषतः । पिप्पलीमधुसंयुक्तं घृतयुक्तमथापि वा । भक्षयेत् पर्णखण्डेन सितया चार्द्रकेण वा । गुडूचीरससहितं प्रमेहे च विशेषतः । रसरत्नाकरप्रोक्तः सिद्धयोगो रसोत्तमः । राजिकाहिङ्गुतैलाम्लं लवणाद्यं विवर्जयेत्" भैषज्यरत्ना० । अत्र हेमभस्मनः सर्वद्रव्यार्द्धत्वमिति मतान्तरम् ।

**सर्वाङ्गीण** त्रि० सर्वाण्यङ्गानि व्याप्नोति ख । सर्वावयवव्यापके "सर्वाङ्गीणे तरुत्वचे" इति भट्टिः ।

**सर्वाणी** स्त्री सर्वेभ्य आनयति मोक्षं आ+नी–ड पूर्वपदादिति णत्वम् । दुर्गायाम् "सर्वान् मोक्षान् प्रापयति जन्ममृत्युजरादिकम् । चराचरांश्च विश्वस्थान् सर्वाणी तेन कीर्त्तिता" ब्रह्मवै० प० ५४अ० तन्निरुक्तिः ।

**सर्वानुकारिणी** स्त्री सर्वमनुकरोति अनु+कृ–णिनि ङीप् । १शालपर्ण्याम् राजनि० २सकलसदृशे त्रि० स्त्रियां ङीप् ।

**सर्वानुभूति** स्त्री सर्वेषामनुभूतिर्यत्र । १श्वेतत्रिवृतायाम् अमरः २तत्त्वज्ञानिनि त्रि० ३जिनभेदे हेमच० ।

**सर्वान्नभोजिन्** त्रि० सर्वेषामन्नं सर्वाण्यन्नानि वा भुङ्क्ते भुज–णिनि । सर्वान्नभक्षके अमरः । [भक्षके अमरः

**सर्वान्नीन** त्रि० सर्वेषामन्नं सर्वमन्नं वा भुङ्क्ते ख । सर्वान्न-

**सर्वाभिसन्धिन्** पु० सर्वत्र आचरणे अभिसन्धानमस्य इनि । १सर्वत्राभिसन्धिमति जने २कुत्सितापदे त्रिका० ।

**सर्वाभिसार** पु० अभिस्रियते अत्र अभि+सृ–भावे घञ् ङ्तन० । चतुरङ्गसैन्यसज्जाहेन युद्धयात्राभेदे ।

**सर्वार्थसिद्ध** पु० सर्वेषु अर्थेषु सिद्धः । १बुद्धे अमरः हेम० २सकलाभीष्टसिद्धियुते त्रि० ।

**सर्वार्थानुसाधिनी** स्त्री "धर्मादीन् चिन्तितान् यस्मात् सर्वलोकेषु यच्छति । ततो देवी समाख्याता सा सर्वार्थानुसाधिनी" देवीपु० ४५अ० निरुक्तायां दुर्गायाम् ।

**सर्वावसर** पु० सर्वेषां कर्मणामवसरोऽवहरणं यत्र । अर्द्धरात्रे त्रिका० । [२सकलास्त्रयुते त्रि० ।

**सर्वास्त्रा** स्त्री सर्वाणि अस्त्राणि यस्याः । १देवीभेदे हेमच० ।

**सर्वाह्ण** पु० सर्वमहः टच्समा० ह्णादेशः णत्वम् । सकलदिने

**सर्वौघ** पु० सर्वेषां चतुरङ्गसैन्यानामोघो वृन्दमभिसारे यत्र । १युगपद्भूतसर्वसैन्याभिसारे अमरः कर्म० २सर्वजलवेगे मेदि०

**सर्वौषधि** स्त्री कर्म० । "कुष्ठमांसीहरिद्राभिर्वचाशैलेयचन्दनैः । मुराचम्पककर्पूरैर्मुस्तैः सर्वौषधिः स्मृता" इत्युक्ते कुष्ठादिद्रव्यवर्गे राजनि० । हेमाद्रौ कृन्दोगपरिशिष्टे "कुष्ठं मांसी हरिद्रे द्वे मुराशैलेयचन्दनम् । वचा चम्पकमुस्तञ्च सर्वौषध्यो दश स्मृता" ता एवोक्ताः । शब्दचन्द्रिकामिता एव सर्वौषधिगणत्वेनोक्ताः ।

**सर्वौषधिगण** पु० सर्वासामोषधीनां गणः । "मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् । शठीचम्पकमुस्तञ्च सर्वौषधिगणः स्मृतः" शब्दच० उक्ते द्रव्यगणे ।

**सर्षप** पु० सृ–अप षुक् च । (सरिषा) १सस्यभेदे अमरः । "सर्षपस्तु रसे पाके कटुः स्निग्धः सतिक्तकः । तीक्ष्णोष्णः कफवातघ्नो रक्तपित्ताग्निवर्द्धनः । रक्षोहरो जयेत् कण्डूकुष्ठकोठकृमिग्रहान् । यथा रक्तस्तथा गौरः किन्तु गौरोवरो मतः" तच्छाकगुणाः "कटुकं सार्षपं शाकं बहुमूत्रमलं गुरु । अम्लपाकं विदाहि स्यादुष्णं रूक्षं त्रिदोषकृत् । सक्षारं लवणं तीक्ष्णं स्वादु शाकेषु निन्दितम् । तीक्ष्णोष्णं सार्षपं नालं वातश्लेष्मापहम् । कण्डूकृमिहरं दद्रुकुष्ठघ्नं रुचिकारकम्" भावप्र० । "जालान्तरगते भानौ यच्चाणु दृश्यते रजः । तैश्चतुर्भिर्भवेल्लिक्षा लिक्षाः षड्भिश्च सर्षपः" शब्दच० उक्ते २मानभेदे । ३सङ्गिकायां स्त्री त्रिका० ङीप् ।

**सर्षपतैल** न० सर्षपस्य स्नेहः सर्षप+स्नेहार्थे–तैलच् । सर्षपस्नेहरूपे तैलभेदे "सर्षपतैलं तिक्तं कटुकं वातकफविकारघ्नम् । पित्तासृग्दोषदं कृमिकुष्ठघ्नं तिलजवच्चक्षुष्यम्" राजनि० ।

**सल** न० सल–अच् । जले भरतः ।

**सलिल** न० सल–इलच् । १जले अमरः । तद्दैवत्ये फले जलदैवतशब्दे २०७२पृ० दृश्यम् । ज्यो०उक्ते २जलदेवताके उत्तराषाढानक्षत्रे अष्टावधिके २चतुर्थस्थाने च

**सलिलकुन्तल** पु० सलिलस्य कुन्तल इव । शैवाले त्रिका० ।

**सलिलज** न० सलिले जायते जन-ड । १पद्मे राजनि० । २जलजातमात्रे त्रि० ।

**सलिलनिलय** पु० सलिलं निलयो यस्य । १जलचरे २मीनकर्कटराशौ च "सलिलनिलयाभक्ष्या यस्याः सरीसृपजातयः" ज्यो०त० ।

**सलिलराशि** पु० ६त० । समुद्रे सलिलनिध्यादयोऽप्यत्र ।

**सलिलेन्धन** पु० सलिलमिन्धनमिव दाह्यं यस्य । बडवानले त्रिका० ।

**सल्लकी** स्त्री सल-वुन् लुकच पृषो० शस्य सः गौरा० ङीष् । शल्लक्यां गजभक्ष्यायाम् अमरे पाठान्तरम् ।

**सव** पु० सूयते सु-अप् । १यज्ञे अमरः । २सन्ताने मेदि० । अच् । ३सूर्य्ये ४अर्कवृक्षे ५जले न० जटा० ।

**सवन** न० सु-सू-वा ल्युट् । १यज्ञाङ्गे २स्नाने अमरः । ३सोमनिष्पीडने ४अभिषवे अमरः ५सोमपाने भरतः । ६वह्नौ ७प्रसवे च दमयन्त्याने । त्रिषवणानि च त्रीणि प्रातर्मध्यतृतीयभेदात् । "हवींषि निर्वपत्याग्नेयमैन्द्रं वैश्वदेवं चरुं सवनकालेष्वेकैकम्" कात्या०श्रौ०२४।७।५। सू० "कुतएतत् आग्नेयं प्रातःसवनम्, ऐन्द्रं माध्यन्दिनसवनम्, वैश्वदेवं तृतीयसवनमित्यर्थवादात्" । "प्रातर्मध्यन्दिनापराह्णेषु एकैकं हविर्निर्वपति" कर्कः ।

**सवयस्** त्रि०समानं वयो यस्य समानस्य सः । वयस्ये अमरः "सवयोभिरन्वितः" इति रघुः ।

**सवर्ण** पु० समानो वर्णो यस्य । १तुल्यरूपे हेमच० २एकजात्याश्रये यथा विप्रस्य विप्रजातिः क्षत्रियस्य क्षत्रियजातिः "तुल्यास्यप्रयत्नं सवर्णमिति" पा० उक्ते स्थानप्रयत्नाभ्यां ३तुल्ये वर्णे च यथा ककारस्य स्थानेन तुल्यो गकारादिः, प्रयत्नसाम्येन तकारस्य चकारादिः, अकारस्य अकारः इकारस्य इकारः । ऋकारस्य लृकारश्च सवर्णौ । सह वर्णेन । ४वर्णसहिते त्रि० ।

**सवर्णन** न० सवर्ण+करणे णिच्-भावे ल्युट् । तुल्यरूपतासम्पादने "अंशसवर्णनं स्यात्" लीला० ।

**सवहा** स्त्री सह वहेन । त्रिवृतायां भरतः ।

**सवासस्** त्रि० सह वाससा । १वस्त्रत्यागविकल्पस्नाने वेष्टित "सवासा जलमाप्लुवेत्" स्मृतिः ।

**सविकल्पक** न० सह-विकल्पेन कप् । वेदान्तोक्ते ज्ञातृज्ञेयभेदादिकल्पनासहिते १समाधिभेदे न्यायोक्ते एकस्मिन् धर्मिण्यपरवंसर्गावगाहिनि २ज्ञानभेदे च पात०उक्ते सम्प्रज्ञाते ३समाधिभेदे असम्प्रज्ञातशब्दे ४७० पृ० दृश्यम् । निर्विकल्पकशब्दे ४१०२पृ० दृश्यम् ।

**सविकाश** त्रि० सह विकाशेन । १प्रफुल्ले विकसिते २असङ्कोचे च "जगन्ति यस्यां सविकाशमासत" माघः ।

**सविचारा** स्त्री पात० उक्ते समापत्तिरूपसमाधिभेदे निर्विचारशब्दे ४१०१ पृ० दृश्यम् ।

**सवितर्का** स्त्री पात० उक्ते समापत्तिरूपसमाधिभेदे "तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का समापत्तिः" सू० "तद्यथा गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानमित्यविभागेन विभक्तानामपि ग्रहणं दृष्टं विभज्यमानाश्चान्ये शब्दधर्मा अन्येऽर्थधर्मा अन्ये विज्ञानधर्मा इत्येतेषां विभक्तः पन्थाः, तत्र समापन्नस्य योगिनोयोगवाह्यर्थः समाधिप्रज्ञायां समारूढः स चेत् शब्दज्ञानविकल्पानुविद्ध उपावर्त्तते सा सङ्कीर्णा समापत्तिः सवितर्केत्युच्यते । यदा पुनः शब्दसङ्केतस्मृतिपरिशुद्धौ श्रुतानुमानज्ञानविकल्पशून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थस्तत्स्वरूपाकारमात्रतयैवावच्छिद्यते सा च निर्वितर्का समापत्तिः तत् योगिनां परं प्रत्यक्षं, तच्च श्रुतानुमानयोर्बीजं ततः श्रुतानुमाने प्रभवतः । न च श्रुतानुमानज्ञानसहभूतं तद्दर्शनं तस्मादसङ्कीर्णं प्रमाणान्तरेण योगिनो निर्वितर्कसमाधिजं दर्शनमिति" भा० ।

**सवितृ** पु० सू-तृच् । १जगदुत्पादयितरि परमेश्वरे "तत्सवितुर्वरेण्यमि"ति श्रुतिः । २सूर्य्ये ३अर्कवृक्षे अमरः । ४तद्देवताके हस्तनक्षत्रे ज्यो० । ५मातरि स्त्री हेमच० ङीप् । सवितुरिदं स सवितृत्य तत्सम्बन्धिनि त्रि० । स देवताऽस्य अण् । सावित्र तद्देवताकचर्वादौ त्रि० स्त्रियां ङीप् ।

**सविध** त्रि० सह विध्यति विध-क सहस्य सः । १निकटे अमरः "सविधेऽपि न सूक्ष्मसाक्षिणी" नैषधम् । सह विधया । २प्रकारयुते ३विधानयुक्ते च त्रि० ।

**सविस्मय** त्रि० सह विस्मयेन । विस्मयापन्ने हारा० ।

**सवीज** पु० पात० उक्ते समाधिभेदे "ताएव सवीजः समाधिः" सू० "तायतस्रः समापत्तयो बहिर्वस्तु वीजरूपा इति समाधिरपि सवीजः तत्र स्थूलेऽर्थे सवितर्का निर्वितर्के सूक्ष्मेऽर्थे सविचारनिर्विचारे इति चतुर्द्धा परिसंख्यातः समाधिरिति" भा० । [२वीजान्विते धरणिः ।

**सवेश** त्रि० विशत्यत्र वेशोदेशः सह वेशेन । १निकटे अमरः

**सव्य** त्रि० षू-प्रेरणे यत्। १वामे २दक्षिणे च अमरः। ३प्रतिकूले हेमच० ४विष्णौ शब्दमा०।

**सव्यभिचार** पु० सह व्यभिचारेण सहस्य सः। अनैकान्तिके दुष्टहेतुभेदे तल्लक्षणं तु "अनैकान्तिकः सव्यभिचारः" गौ०सू० "व्यभिचार एकत्राव्यवस्था सह व्यभिचारेण वर्त्तते इति सव्यभिचारः निदर्शनं नित्यः शब्दोऽस्पर्शत्वात्" वा०भा०। तल्लक्षणं साध्यवदन्यवृत्तित्वम् सति साध्याभाववदवृत्तित्वम् चिन्ता०। सव्यभिचारशब्ददोषित्वादौ दृश्यम्।

**सव्यसाचिन्** पु० सव्येन वामेनापि सचति सन्दधाति बाणं सच-णिनि। अर्जुने हेमच० "उभौ मे दक्षिणौ पाणी गाण्डीवस्य विकर्षणे। तेन देवमनुष्येषु सव्यसाचीति मां विदुः" भा०वि० ४४अ०।

**सव्येष्ठ** पु० सव्ये तिष्ठति स्था-क अलुक्स० षत्वम्। सारथौ त्रिका०। [सारथौ अमरः।

**सव्येष्ठृ** पु० सव्ये तिष्ठति स्था-ऋन् किच्च अलुक्स० षत्वम्।

**सशस्या** स्त्री सह शस्येन। १नागदन्त्यां रत्नमा० २शस्ययुक्ते त्रि०। [त्रि० "न ससत्त्वेषु गर्त्तेषु" इति मनुः।

**ससत्त्वा** स्त्री सह सत्त्वेन। १गर्भवत्यां स्त्रियां २प्राणियुक्ते

**स(श)सन** न०स(श)स-हिंसने ल्युट्। यज्ञार्थं पशुहनने अमरः

**सस्य** न०सस-यत्। १वृक्षादीनां फले अमरः २क्षेत्रगते धान्ये च हेमच० "सस्यं क्षेत्रं गतं प्रोक्तम्" स्मृतिः। "सस्यन्तु स्तम्बमागतम्" चाणक्यः तालव्यादिरयमित्येके। ३गुणे ४गुणे विश्वः।

**सस्यक** पु० सस्यमिव कायति कै-क। "सस्यको नारिकेलान्तःसस्याभो मणिखड्गयोः" मेदि० उक्ते १मणिभेदे २खड्गे च।

**सस्यमारिन्** पु० सस्यं मारयति मृ-णिच् णिनि। १मूषके राजनि० २सस्यघातके त्रि०। [अमरः।

**सस्यसंवर** पु० सस्यं संवृणोति सम्+वृ-अच्। शालवृक्षे

**सस्यसंवरण** पु० सस्यं संवृणोति सम्+वृ-ल्युट्। अश्वकर्णवृक्षे राजनि०। [२धर्मयुक्ते त्रि०।

**सस्वेदा** स्त्री सह स्वेदेन सहस्य सः। १दूषितकन्यायां शब्दर०

**सह** अव्य० सह-अच्। १साहित्ये अमरः २साकल्ये ३सादृश्ये ४यौगपद्ये ५विद्यमानत्वे ६समृद्धौ ७सम्बन्धे मेदि०। ८सामर्थ्ये शब्दमा०। सहयत्नार्थस्तु समभिव्याहृतक्रियाकालः स्वक्रियाकालीनक्रिया वा। तत्र गौणक्रियान्वयिनि तृतीया। पुत्रेण सहागता पिता।

**सह** पु० सहते सह-अच्। १अग्रहायणमासे २भारादिसहिष्णौ त्रि० हेमच० ३मल्लवर्णे ४बले पु०न० मेदि०।

**सहकार** पु० सह युगपत् किरति सौरभम् दूरात् कृ-अच्। अतिदूरगामिसौरभान्विते १आम्रे अमरः। भावे घञ्। २सहकर्मकरणे पु०।

**सहकारिन्** त्रि० सह सम्भूय करोति कार्यं कृ-णिनि। हेतुभेदे स्वभिन्ने स्वकार्यकारके हेतौ। [इङ्गतौ च

**सहगमन** न०सह+गम-ल्युट्। १पत्या सह पत्न्या मरणे २स-

**सहचर** पु० सह चरति चर-अच्। १पीतझिण्ट्यां २नीलझिण्ट्यां च रत्नमा०। ३वयस्ये ४प्रतिबन्धके ५झिण्ट्यां हेमच०। ६सहाये ७अनुचरे त्रि० मेदि० "सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः" कुमारः। स्त्रियां ङीप्।

**सहचरी** स्त्री सह चरति चर-ट ङीप्। १पीतझिण्ट्यां २सख्यां जटा०। सह चरति धर्मम् चर-ट ङीप्। धर्मपत्न्यां हेमच०। [करवल्लिकायां।

**सहचार** पु० सह+चर-घञ्। सामानाधिकरण्ये तद्वि०

**सहज** पु० सह जायते जन-ड। १सहोदरे अमरः २निसर्गजे स्वभावसिद्धे च "सहजप्राकृतावपि" माघः। ३सहोत्थिते त्रि० मेदि० ज्योतिषोक्ते जन्मलग्नात् ४तृतीयस्थाने। तत्र भ्रातः शुभादिचिन्तनात्तथात्वम्।

**सहजमित्र** न० सहजं स्वभावसिद्धम् मित्रम्। स्वभावतो मित्रे भागिनेयादौ मिता०।

कतिचित् सहजमित्राणि शुक्रनी०परि० उक्तानि यथा "केचित् स्वभावतोऽमित्रा मित्राणि सन्ति सर्वदा। माता मातृकुलं चैव पिता तत्पितरौ तथा। पितृपितृव्याः तत्कन्या पत्नी तत्कुलमेव हि। पितृमातात्मभगिनी कन्यका सन्ततिस्तथा। प्रजापालो गुरुश्चैव मित्राणि सहजानि तु"। २विद्यादौ च "विद्या शौर्यञ्च दाक्ष्यं च बलं धैर्यञ्च पञ्चमम्। मित्राणि सहजान्याहुर्वर्त्तयन्ति हि तैर्बुधाः" शुक्रनीतिपरिशिष्टम्।

**सहजारि** पु० सहजः स्वभावसिद्धः अरिः। सापत्नभ्रातृपितृव्यपुत्रादौ मिता०।

शुक्रनीतिपरिशिष्टे अन्येऽप्युक्ता यथा "स्वभावतो भवन्त्येतेऽरयो दुर्जन एव च। ऋणकारी पिता शत्रुर्माता स्त्री व्यभिचारिणी। भ्रातृपितृभ्रातरश्च तत्स्त्रीपुत्राश्च शत्रवः। क्षुधा श्वश्रूः सपत्नी च ननान्दा यातरस्तथा। मूर्खः पुत्रः कुवैद्यश्चारक्षकश्च पतिः प्रभुः। अपकृतस्या प्रजा शत्रुरदाता धनिकश्च

यः । दुष्टानां भूपतिः शत्रुः कुलटानां पतिव्रता । साधुः खलानां शत्रुः स्यात् मूर्खाणां बोधको रिपुः" ।

**सहखण्डक** न० पक्वमांसभेदे "छागादेर्मांसमस्थ्यादेः कुट्टितं खण्डितं पुनः । शुद्धमांसविधानेन पचेदेतत् सहखण्डकम्" भावप्र० ।

**सहदेव** पु० सह दीव्यति दिव–अच् । १माद्रीसुते पाण्डवभेदे मेदि० २बलायां ३दण्डोत्पले ४शारिवौषधौ च स्त्री मेदि० टाप् । ५सर्पाक्ष्यां स्त्री मेदि० ङीप् ङीषन्तः । ६पीतदण्डोत्पलायां रत्नमा० ।

**सहदेव्यादि** पु० "सहदेवी बला चैव शतमूली शतावरी । कुमारी च गुडूची च सिंही व्याघ्री तथैव च" गरु० पु० ४८अ० प्रतिमाङ्गदेवस्नानीयद्रव्यगणभेदे ।

**सहधर्मिणी** स्त्री सह समानो वा धर्मोऽस्त्यस्या इनि । १पत्न्याम् अमरः "सहधर्मं चरेतानाम्" इति मनूक्तेः सहधर्मचारित्वात् "शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा" टीकभा० उक्तेश्च तस्याः पतिकृतधर्मफलभागित्वाच्च तथात्वम् ।

**सहन** न० सह–ल्युट् । १क्षमायां तितिक्षायां शीतोष्णादिद्वन्द्वधर्मसहने हेमच० । सह–ल्यु । २सहिष्णौ अमरः ३क्षमाशीले त्रि० मेदि० ।

**सहपान** न० सह पानम् । एकत्र मद्यादिपाने हेमच० । २तुल्यपाने अमरः । [त्रिका० ।

**सहपांशुकिल** पु०सह पांशुभिः किलति किल–क । वयस्ये

**सहभाविन्** त्रि० सह भवति भू–णिनि । सहाये स्त्रियां ङीप् । [अमरः ।

**सहभोजन** न० सह एकत्र भोजनम् । एकत्रस्थानेऽशनादौ

**सहम** न० नील०ता० उक्ते दिवारात्रिभेदेन परस्परं योगवियोगयुतपञ्चविंशेन युतेन लग्नादिनानीते पुण्यादिशुभादिचिन्तनस्थाने राशिभेदे तानि च पञ्चाशत् तदानयनं तत्फलानि च तत्रोक्तानि यथा

"पुण्यं गुरुज्ञानयशोऽथ मित्रं माहात्म्य आशा च समर्थता च । भ्राता ततो गौरवराज्यतातामाता सुतो जीवितमम्बु कर्म । मान्द्यं च मन्मथकली परतः क्षमोक्ता शास्त्रं च बन्धकमथ त्वथ बन्धकं च । मृत्यु परदेशधनान्यदारा स्यादन्यकर्म वणिक् त्वथ कार्यसिद्धिः । उद्वाहसन्ततिसन्तापश्रद्धाप्रीतिर्बलं तनुः । जाड्यव्यापारसहमे पानीयपतनं रिपुः । शौर्योपायदरिद्रत्वं गुरुताम्बुपथाभिधम् । बन्धनं दुहितैतानि पञ्चाशत् सहमानि हि । सूर्योनचन्द्रान्वितमह्नि जन्म रवीन्दुयुक्तं निशि पुण्यसद्म१ । शोध्यस्वयुग्यत्रान्तरगं न चेत् सैकमेतदुक्तम् । व्यत्ययमस्मात् गुरु२विद्ययोश्च संसाधनं पुण्यवियुक् सुरेज्यः । दिवा विलोमं निशि पूर्ववत् तु यशो३मित्र४ तत् सहमं वदन्ति । पुण्यसद्म गुरुसद्म तत्क्षणेत् स्वत्ययो निशि सिताश्रितं च तत् । भैक्तात्तलवदुक्तरीतितो मित्रमाहसहमं५ जगुर्बुधाः । पुण्याङ्कोनं शोधयेदुक्तरीत्या माहात्म्यं६ तन्नक्रमथाहिलोमम् । शुक्रं मन्दाढ्यं नक्तं विलोमभाषाख्य७ स्यादुक्तवच्छेषमूह्यम् । सामर्थ्यं८मारात्तनुपं विशोध्य नक्तं विलोमं तनुपे कुजे त । जीवाद्विशुद्धे सततं पुरावत् भ्राता९र्किहीनात् गुरुतः सदोह्यः । दिने गुरोश्चन्द्रमपास्य नक्तं रविं क्रमादर्कविधू च देयौ । रौत्वं तथा गौरव१०मर्कमार्केरपास्य वामं निशि राज्य०ताता११।१२ । माते१३न्दुतोऽपास्य सितं विलोमं नक्तं सुतो१४ऽह्नि निशमिन्दुमीज्यात् । स्याज्जीविता१५ख्यं गुरुमार्कितोऽह्नि वामं निशीदं समभव्ययाम्बु१६ । कर्म१७ क्षमाराद्विशि वामसुतं रोगाख्य१८मिन्दुं तनुतः सदैव । स्यान्मन्मथो१९ सम्यगमिन्दुतोऽह्नि वामं निशीन्दुं तनुपं सदार्कात् । कलि२० क्षमे२१स्तो गुरुतो विशुद्धे कुजे विलोमं निशि पूर्वरीत्या । शास्त्रं२२ दिने सौरिमपास्य जीवात् वामं निशि ज्ञेन युते पुरावत् । दिवानिशं चाष्टमिनं विशोध्य बन्धाख्य२३मेतन्निशि बन्धकं२४ स्यात् । वामं दिवैतत् मृति२५रष्टमर्कोदिन्दूविशोध्योक्तवदार्कियोगात् । देशान्तराख्यं२६ नवमाद्विशोध्य धर्मेश्वरं सन्ततमुक्तवत् स्यात् । अह्नर्निशं वित्तपमर्थभावाद्विशोध्य पूर्वोक्तवदर्थसद्म२७ । सितादपास्यार्कमथान्यदाराख्यं२८ सदा प्रागुक्तवदन्यकर्म२९ । चन्द्रार्कनिं वामगयो निशायां मन्दुर्वणिज्यं३० दिनवद्यकोत्था । शनेर्दिवार्कं निशि चन्द्रमार्कं विशोध्य सूर्येन्दुसनाथयोगात् । स्यात् कार्यसिद्धिः३१ सततं विशोध्य मन्दं सितात् स्याद् विवाहसंज्ञम्३२ । गुरोर्बुधं प्रोज्झ्य भवेत् प्रसूतिः३३र्वा निर्णीतं शनितो विशोध्य । अह्नि भेदुक्तदिशा सदैव सन्तापसद्मा३४ऽऽरमपास्य शुक्रात् । श्रद्धा३५ सदा प्रोक्तदिशाथ पुण्यं विद्यास्ततः प्रोह्य सदा पुरोक्त्या । प्रीत्याख्य३६मुक्तं बल३७देह३८र्दर्भ३९ग्रह४० जाड्य समपास्य भौमात् । शनिं विलोमं

निशि चन्द्रयोगात् व्यापार४१ व्याराजन्मपास्य शश्वत्। पानीयपात:४२ शशिनं विशोध्य सौरेर्विलोमं निशि पूर्ववत् स्यात्। मन्दं कुजात् प्रोह्य रिपु४३र्विलोमं रात्रौ भवेद्भौमविहीनपुण्यात्। शौर्य्यं४४ विलोमं निशि पूर्ववत् स्यादुपाय द्रव्यं४५ शनितो विशोध्य। वामं निशि च तु विशोध्य पुण्यात् स्वयुग विलोमं निशि तद्दरिद्रम्४६। सूर्य्योच्चतः सूर्य्यमपास्य नक्तं चन्द्रं तदुच्चात् गुरुता४७ गुरोक्ता। कर्काङ्गतः शनिं प्रोह्य स्याज्जलाध्वा४८न्यथा निशि। पुण्यात्स्थानं विशोध्याङ्गि वामं निशि तु बन्धनम्४९। चन्द्रं सितादपास्योक्तं सदा कन्याख्य५०मुक्तवत्। पुण्यादर्कमपास्याथ योगो द्युयोऽन्यथा निशि। स्वनाथहीनं सहमं तदंशाः स्वीयोदयघ्ना विहृतास्त्रिशत्या। तत्सम्प्रपाको दिवसैर्हि लब्धैः स्यात् तद्दशायां तदसम्भवे वा। अथैषां फलानि। स्वोच्चादिसत्पदगतो यदि लग्नदर्शी वीर्यान्वितः सहमपो यदि नेक्षतेऽङ्गम्। मासौ बली रविशशिस्थितभेशदर्शी पूर्णं तु लग्नपबलस्य विचारणेयम्। शुद्धबलैर्बलेनोनो न षष्ठस्थानमाश्रितः। बलवोऽयं स्वलग्नदर्शी बली स्वल्पेऽस्ति चेत् पदे। स्वस्वामिना शुभखगैः सहितं च दृष्टं स्वामी बली च यदि तत्सहमस्य वृद्धिः। यत्स्वामिना शुभखगैश्च न युक्तदृष्टं तत्सम्भवो न हि भवेदिति चिन्त्यमादौ। अष्टमाधिपतिना युतेक्षितं पापदृग्युतमथेत्थशालि तैः। सम्भवेऽपि विलयं प्रयाति तत् तेन जन्मनि पुरेदमीक्ष्यताम्। आदौ जन्मनि सर्वेषां सहमानां बलाबलम्। विमृश्य सम्भवो येषां तानि वर्षे विचारयेत्। सबले पुण्यसहमे धर्मसिद्धिर्धनागमः। शुभस्वामीक्षितयुते व्ययतो व्ययं विदुः। लग्नात् षष्ठाष्टरिपुफस्थं धर्मभाग्ययशोहरम्। शुभस्वामिदृशा प्राप्ते सुखधर्मादिसम्भवम्। पापयुक् शुभदृष्टं चेदशुभं प्राक् ततः शुभम्। शुभयुक्तं पापदृष्टमादौ शुभमसत् परे। मत्वाब्दे पुण्यसहमे शुभं योऽत्रदः शुभावहः। अनिष्टेऽस्मिन् शुभो नेति पुत्रमादौ विचारयेत्। स्मृतौ षष्ठाष्टरिपुफस्थमब्दे पापहृतं युतम्। पुत्रधर्मार्थसौख्यानां पत्यौ दग्धे फलं तथा। सहमान्यखिलानीत्थं स्मृतौ वर्षे च चिन्तयेत्। मान्द्यारिकलिसत्यूनां व्यत्ययादादिशेत् फलम्। यशोऽभिधाने सहमे खलेन युतेक्षिते सद्युशसो विनाशः। प्रापार्जितस्यायशसोऽस्ति वाधो नष्टेऽपि स्यात् कुल-

कीर्त्तिनाशः। कार्य्यसिद्धिसहमं युतं शुभैर्दृष्टमूथशिखगं जयप्रदम्। सङ्करेऽथ शुभपापदृष्टियुक् क्रूरतो जय उदीरितो बुधैः। कलिसद्म मिश्रखगदृष्टसंयुतं यदि पापमूथशिलं कलेर्ह तिम्। अथ तत्र सौम्यसहितावलोकिते जयमेति मिश्रदर्शितः कलिव्ययौ। विवाहसद्माधिपसौम्यदृष्टं युतं शुभैर्मूथशिलं तदाप्तिम्। कुर्य्यात्तदा मिश्रसमेतदृष्टं कष्टादथ क्रूरमतीश्वरैर्न। आशा तदीयस्य षडष्टरिपुफविवर्जितः सौम्ययुतेक्षितश्च। स्याद्वाञ्छितार्थाम्बरवाहनादिलाभः खलेक्षायुतितोऽतिदुःखम्। मान्द्याधिपः पापयुतेक्षितश्च पापः स्वयं रोगकरो विचिन्त्यः। चेदिल्थशाली सहितेन सत्यु सदा भवेद्धीनबलेऽतिकष्टात्। स्वस्वामिसौम्यैश्चयभाजि मान्द्ये नाशे सवीर्य्येऽष्टषडन्त्यवर्जे। रोगस्तदा नैव भवेद्विमिश्रं युतेक्षिते समभयमस्ति किञ्चित्। कर्य्यास्य शुभनाथदृष्टसहितं द्रव्यागमात् सौख्यदं पापैर्दृष्टयुतं च वित्तविलयं कुर्य्याद्यो पापयुक्। सद्दृष्टं च शुभेत्थशालसहितं पूर्वं हि तन्नाशनं पश्चादर्थसमुद्भवं च सुसुखं व्यस्ता सतो व्ययः। रिपुदृश्या रिपोर्भीतस्तस्करादेर्धनक्षयः। मित्रदृश्या मित्रयोगाद्धनमानौ यशः सुखम्। सत्स्वामिदृष्टं युतमात्मजस्य लाभं सुखं यच्छति पुत्रसद्म। पापान्वितं सौम्यखगेत्थशालं प्रागदुःखदं पुत्रसुखाय पश्चात्। पापान्वितं क्रूरकृतेत्थशालं नाशाय पुत्रस्य गतौजसीशे। स्मृतौ सुतेशः सहमेश्वरोऽब्दे पुत्रस्य लब्ध्यै शुभमित्रदृष्टः। पितृ यदोच्चयुतं पतिदृष्टयुक्तं तातस्य यच्छति धनाम्बरमानसौख्यम्। पत्यौ गतौजसि स्मृतौ सततमूथरोफे नाशः पितुः स्वदेहे परदेशयानात्। शुभेत्थशाले खलखेटयोगे गदप्रकोपः प्रथमं महान् स्यात्। पश्चात् सुखं विन्दति पूर्णवीर्य्यं नाथे स्वपान्मानयशोभिवृद्धिः। बन्धनाख्यसहमं युतेक्षितं स्वामिना शुभखगैः सुखाप्तये। राजगौरवयशोवराप्तयः पापवीक्षणयुते पदाच्युतिः। शुभाशुभैर्दृष्टयुतं खलैश्चेत् क्षतेत्थशालं धनमाननाशम्। पूर्वं विधत्ते चरमे शुभेत्थशाले सुखं वाहनशास्त्रलाभम्। कर्मभावसहमाधिपः शुभैः स्वामिना मूथशिलो बलान्वितः। हेमवाजिगजभूमिलाभदः पापदृष्टियुतितोऽशुभप्रदः। दग्धा वक्राः कर्मवैकल्यदास्ते युक्ता दृष्टाः शौरिणा ते विशेषात्। राज्यभ्रंशः कोषनाशस्य राजकर्मेशो चेत् मूथशिफो खलेन। उपदेष्टा गुरुस्थानं विद्या शास्त्रं श्रुतिः स्मृतिः। सोऽहो

जाड्यं बलं सैन्यमङ्गं देहो जलं द्युतिः। गुरुता मण्डले शत्वं गौरवं मानशालिता। निग्रहानुग्रहविभूराजचिह्नादिलाञ्छनम्। माहात्म्यं मन्त्रगाम्भीर्य्यं द्युतिर्वस्त्रादिशालिता। सामर्थ्यं देहजा शक्तिः शौर्य्यं तेजो विनिगद्यते। आश्रमेष्वोक्ता मतिर्धर्मे श्रद्धा, बन्धुः पराश्रयः। पानीयपतनं दृष्टिर्जलेऽवगाह्य मज्जनम्। आधिव्याधी तापमान्द्यौ सपिण्डा बन्धवः स्मृताः। सत्यानृतं वणिग्वृत्तिराधानं प्रसवः स्मृतः। दासत्वं परकर्मोक्तमन्यत् स्पष्टं स्वनामतः। निरूप्याणि यथायोगं कुलजातिस्वरूपतः। शुभयोगेक्षणात् सौख्यं पत्युर्वीर्य्यानुसारतः। दारिद्र्यमृतिमान्द्यादिकलिकृतो विपर्य्ययः। प्रश्नकालेऽपि सहमं विचार्य्यं प्रष्टुरिच्छया। सर्वेषामुपयोगोऽत्र चिन्त्यं यच्छन्ति यज्जनाः"।

**सहमरण** न० सह मृतेन पत्या सह एकचितारोहणेन मरणम्। मृतपतिचितारोहणेन तत्सहितमरणे शु०त० "अङ्गिराः "मृते भर्त्तरि या नारी समारोहेद्धुताशनम्। साऽरुन्धतीसमाचारा स्वर्गलोके महीयते। तिस्रः कोट्योऽर्द्धकोटी च यानि लोमानि मानवे। तावन्त्यब्दानि सा स्वर्गे भर्त्तारं याऽनुगच्छति। व्यालग्राही यथा व्यालं बलादुद्धरते बिलात्। तद्वद्भर्त्तारमादाय तेनैव सह मोदते। मातृकं पैतृकञ्चैव यत्र कन्या प्रदीयते। पुनाति त्रिकुलं नारी भर्त्तारं याऽनुगच्छति। तत्र सा भर्त्तृपरमा परा परमलालसा। क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्दश"। "ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वापि यो नरः। तं पुनाति च सा नारी इत्याङ्गिरसभाषितम्। साध्वीनामेव नारीणामग्निप्रपतनादृते। नान्यो धर्मो हि विज्ञेयो मृते भर्त्तरि कर्हिचित्" "या नारीत्युपदानात् सहमरणाभावपक्षोऽपि सूचितः नान्यो धर्म इति तु सहमरणस्तुत्यर्थम्। तथाच विष्णुः "मृते भर्त्तरि ब्रह्मचर्य्यं तदन्वारोहणं वा" इति। ब्रह्मचर्य्यं मैथुनवर्जनं ताम्बूलादिवर्जनञ्च यथा प्रचेताः "ताम्बूलाभ्यञ्जनञ्चैव कांस्यपात्रे च भोजनम्। यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्" स्मृतिः "एकाहारः सदा कार्य्यो न द्वितीयः कदाचन। पर्य्यङ्कशायिनी नारी विधवा पातयेत् पतिम्। गन्धद्रव्यस्य सम्भोगो नैव कार्य्यस्तथा पुनः। तर्पणं प्रत्यहं कार्य्यं भर्त्तुः कुशतिलोदकैः"। एतच्च तर्पणं पुत्रपौत्राद्यभावविषयमिति मदनपारिजातः। "वैशाखे कार्त्तिके माघे विशेषनियमञ्चरेत्। स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं मुहुः"। तत्र साध्वीमाह हारीतः। "आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा। मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता" इति छन्दोगपरिशिष्टीयमिति कल्पतरुः। साध्वीप्रसादेन लोकधारणमप्याह मत्स्यपु० "तस्मात् साध्व्यः स्त्रियः पूज्याः सततं देववज्जनैः। तासां राजन् प्रसादेन धार्य्यते च जगत्त्रयम्"। महाभारते "अवमत्य च याः पूर्वं पतिं दुष्टेन चेतसा। वर्त्तन्ते याश्च सततं भर्त्तॄणां प्रतिकूलतः। भर्त्रनुमरणं काले याः कुर्वन्ति तथाविधाः। कामात् क्रोधात् भयान् मोहात् सर्वाः पूता भवन्ति ताः"। अत्र चैहिकब्रह्मपतेद्रोहनिषेधात् जन्मान्तरीयतत्पापवत एव सहमरणेनोद्धारः" शु०त०। ब्रह्मपु० "देशान्तरमृते पत्यौ साध्वी तत्पादुकाद्वयम्। निधायोरसि संशुद्धा प्रविशेज्जातवेदसम्। ऋग्वेदवादात् साध्वी स्त्री न भवेदात्मघातिनी। त्र्यहाशौचे निवृत्ते तु श्राद्धं प्राप्नोति शाश्वतम्"। ऋग्वेदवादात् "इमा नारीरविधवाः" इत्यादिमन्त्रात्। वृहन्नारदीये "बालापत्याश्च गर्भिण्यो ह्यदृष्टऋतवस्तथा। रजस्वला राजसुते! नारोहन्ति चितां शुभे!"। राजसुते! इति सगरमातुः सम्बोधनम्। वृहस्पतिः "बालसम्वर्द्धनं त्यक्त्वा बालापत्या न गच्छति। रजस्वला सूतिका च रक्षेद्गर्भञ्च गर्भिणी। एवमन्यतरेद्बालसम्वर्द्धने स्यात्तदा तस्या अप्यधिकारः। व्यासः "दिनैकगम्यदेशस्था साध्वी चेत् कृतनिश्चया। न दहेत् स्वामिनं तस्या यावदागमनं भवेत्। भविष्यपुराणे "तृतीयेऽह्नि उदक्याया मृते भर्त्तरि वै द्विजाः। तस्यानुमरणार्थाय स्थापयेदेकरात्रकम्"। तस्य भर्त्तुः। तथा "एका चितां समासाद्य भर्त्तारं यानुगच्छति। तद्भर्त्तुर्यः क्रियाकर्त्ता स तस्याश्च क्रियाञ्चरेत्। एतच्च पिण्डदानम्"। "एवञ्च अङ्गिरोब्रह्मपुराणवचनालोचनया ब्राह्मण्यादिसकलभार्य्याणां स्वगतभर्तृगतफलविशेषार्थिनीनां गर्भवतीबालापत्यादिव्यतिरिक्तानां सहमरणानुमरणयोरधिकारः न चात्र योगसिद्धकरणविरोधात् समुच्चितफलसिद्धिरिति वाच्यम्। योगसिद्धधिकरणे हि "यः पुत्रकामो यः पशुकाम" इत्यादिना यज्ञक्रतूनुपक्रम्य "एकस्मै वा कामायान्ये यज्ञक्रतव आह्रियन्ते सर्वेभ्यो दर्शपौर्णमासौ" इत्युक्तं तत्र तद्विधि-

वाक्येषु निरपेक्षफलश्रुतेः कामनाभेदस्य कर्त्रैक्यं ततश्च सर्वशब्देन प्रकृतवाचिना निरपेक्षाणामेव पुत्रादिफलानां दर्शपौर्णमाससम्बन्धेऽवगते प्रयोगभेदादेव भवतु तत्र तत्तत्फलसिद्धिः तथाच तदधिकरणसिद्धान्तसूत्रं "योगसिद्धिर्वा अर्थस्योत्पत्त्यसंयोगित्वात्" जैमि०। अस्यार्थः वाशब्दः सिद्धान्तद्योतनार्थः सर्वेभ्यो दर्शपौर्णमासाविति वाक्यार्थस्य तत्तत्फलस्य योगेन प्रयोगभेदेन सिद्धिः उत्पत्त्यसंयोगित्वात् सर्वशब्दानुकर्षणीयानां यः पुत्रकामो यः पशुकाम इत्याद्युत्पत्तिवाक्ये फलानां युगपदसम्बन्धात्। न चार्थस्य नानाविधस्य उत्पत्त्यसंयोगित्वात् महेन्द्रादितत्तल्लोकवासादीनां एकदोत्पत्त्यसम्भवादिति व्याख्यानं युक्तमिति वाच्यं तडागोत्सर्गादौ एकस्मात् कर्मणः क्रमिकनानाफलोक्तेः"। "तथेहापि सर्वनामपदाभावादार्थवादिकफलानि समुच्चितान्येव कामनाविषयो लाघवात् आर्थवादिकसमुच्चितनानाफलविषयकविधिरप्येक एव कल्प्यते लाघवात् न हि निमित्तसाधारण्ये बाधकं विना नैमित्तिकानां पर्यायता सम्भवति वह्निसामीप्ये दाहप्रकाशयोः पर्यायताया अदर्शनात्। तस्मात् सकृदनुष्ठितेन कर्मणा यथैकं फलं निष्पाद्यते तथा बाधकं विना फलान्तरमपि विनिगमकाभावात्। ज्योतिष्टोमादिषु षष्टिवर्षावच्छिन्नफलश्रुतेः पृथगनुष्ठानादेव पृथक् फलसिद्धिः अन्यथा षष्टिसंख्याद्यभिधानं व्यर्थं स्यात्। यत्र तु कर्मफले कालविशेषो नोक्तस्तत्रापि तत्कर्मसाध्यादृष्टकालानुरूपेण कालविशेषो बोध्यः "फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः स्यादिति" न्यायात्। तेषां कर्मणां लोकवत् कृष्यादिवत्। तथाच भवदेवभट्टाः "एकस्मै वा कामायान्ये यज्ञक्रतव आह्रियन्ते" इति संकीर्त्य "सर्वेभ्यो दर्शपौर्णमासाविति" प्रयोगभेदविधानात्तु भवतु तत्र पृथगनुष्ठानसाध्यत्वं ब्रह्मवधप्रायश्चित्ते तथाभूतपृथगनुष्ठानसाध्यत्वप्रतिपादकवचनाभावात् अनेकफलानाञ्च तन्त्रेण दशहरान्यायेन एककामनाविषयतासम्भवात् तन्त्रत्वम्" इत्याहुः। हरिनाथोपाध्यायास्तु "इष्टोत्सर्गफलान्युद्दिश्यैतानि आर्थवादिकफलानि समुच्चितान्येव कामनाविषयः, पुरुषविशेषणत्वस्य कल्प्यत्वात् तथाच मिलितानामेककामनाविषयत्वकल्पना अग्नीषोमयोरिव देवतात्वे लाघवन्यायस्य विशिष्टत्वात्" इत्याहुः। अथ वा "य एता रात्रीरधीयीत तस्य पितरो घृतकुल्याः मधुकुल्याः वा क्षरन्ते" इत्यत्रापि वैकल्पिकान्वयोपगमे जातेऽपि नयभङ्गप्रसङ्गात् लाघवादिकल्पेऽदृष्टदोषाच्च एकस्य कार्यस्य नियोज्याकाङ्क्षायां सकलार्थवादोपस्थितफलकामो यथैक एव नियोज्यः स्वीकृतस्तथात्रापीति। अथानुत्पन्नब्रह्महत्यादिपातकायास्तत्पूतत्वरूपफलबाधात् तत्तत्कामनाविरहेणानधिकारः स्यादिति चेत् उक्तयुक्त्या समुच्चितफलसिद्धेरन्यथासिद्धार्थवादबलेन सन्दिग्धपापकामनया एवाधिकारो मङ्गलवत्। सति जन्मान्तरीये तादृशपातके संसर्गादिकृते वा तदुद्ध्वंसोऽपि जायते असति तु न तथा प्रतियोगिरूपसहकारिविरहात् निर्विघ्नस्य कृतमङ्गलवत्" शु०त० रघु०। "समुच्चितफलककर्मणोऽपि प्रत्येकफलकामनया करणे तत्तत्कामनासहकारेण प्रत्येकफलजनकत्वम्" विधिस्वरूपे गदा०। [त्रि०।

**सहरसा** स्त्री सह रसेन। १मुद्गपर्ण्यां शब्दर० २रसान्विते

**सहर्ष** पु० सह हर्षेण समानो वा हर्षो यत्र। १सङ्घर्षे २हर्षे च त्रिका०। ३हर्षयुक्ते त्रि०।

**सहस्** न० सह–असि। १बले २ज्योतिषि च शब्दर० ३मार्गशीर्षे मासे पु० अमरः। "सहसा सहसा कृतसेवमु-रिति" माघः।

**सहसा** अव्य० सह+सो–डा। १हठादित्यर्थे अमरः। २अकस्मादित्यर्थे शब्दर०। ३हासयुते त्रि० "न सहसा सहसा परिरभ्य तम्" माघः।

**सहस्य** पु० सहसे बलाय हितः यत्। पौषमासे अमरः।

**सहस्र** न० समानं हसति हस–र। १दशशतसंख्यायां २बहुसंख्यायां ३तत्संख्यान्विते च हेमच०।

सहस्रसंख्यकाश्च केचित् पदार्थाः कविकल्प० यथा "गङ्गावक्त्रं शेषमूर्द्धा पद्मदलम् रविकरः कार्त्तवीर्यबाहुः वेदशाखा शक्रनयनम्"। "तत्र बहुसंख्यत्वे सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्" श्रुतिः। बहुशीर्षादिपरत्वमत्र भाष्यादावुक्तम्। संख्यासंख्येययोः परत्वेऽस्य सर्वदैकवचनत्वम् यथा घटानां सहस्रं सहस्रं घटा इत्यादि आवृत्तौ तु द्वित्वादिकं यथा द्वे सहस्रे त्रीणि सहस्राणीति "चत्वार्याहुः सहस्राणि" मनुः।

**सहस्रकर** पु० सहस्रं कराः किरणा अस्य। १सूर्ये सहस्रकिरणादयोऽप्यत्र हला०। २अर्कवृक्षे च।

**सहस्रकाण्डा** स्त्री सहस्रं बहवः काण्डा यस्याः। श्वेतदूर्वायां राजनि०।

**सहस्रदंष्ट्र** पुं स्त्री० सहस्रं बहुसंख्या दंष्ट्रा अस्य। पाठीनम-

याचं दद्यात् यस्मिन्नहनि प्रेतः स्यादिति"। "अत ऊर्द्ध्वं सपिण्डीकरणान्तश्राद्धनिमित्ताटाद्यसंवत्सरादूर्द्ध्वं संवत्सरे संवत्सरे प्रतिवर्षं यस्मिन्नहनि मृतस्तस्मिन्नहनि मृताय दद्यात्। व्यासः "प्रतिसंवत्सरं श्चैवमेकोद्दिष्टं मृताहनि"। एतेन सपिण्डीकरणापकर्षे आद्यसंवत्सरेऽपि मृताहे श्राद्धान्तरं कर्त्तव्यमिति मैथिलोक्तं हेयम। अत्रमाह हेमाद्रिधृतवचनम् "पूर्णे संवत्सरे श्राद्धं षोडशं परिकीर्त्तितम्। तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते"। अत्र पूर्णसंवत्सरक्रियमाणश्राद्धाद् यथोभयनिर्वाहस्तथापकृष्टसपिण्डीकरणश्राद्धादप्युभयनिर्वाहो न पूर्णसंवत्सरे आब्दिकान्तरम्। एवं पञ्चदश श्राद्धेऽप्यूह्यम्। मत्स्यपु॰ "ततः प्रभृतिसंक्रान्तावुपरागादिपर्वसु। त्रिपिण्डमाचरेत् श्राद्धमेकोद्दिष्टं मृताहनि"। ततः प्रेतत्वपरिहारात्, त्रिपिण्डं त्रिपुरुषम्। निरुपपदमृताहशब्दः मृतसम्बन्धिमासपक्षतिथिविशेषपरः। उपपदात्तु कश्चित्तिथिविशेषमात्रपरः। यथा मृताहे प्रतिमासं कुर्य्यादित्यादौ। मनुः "सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते। तत्र तत्र त्रयं कुर्य्यात् वर्जयित्वा मृताहनि। अमावास्या क्षयो यस्य प्रेतपक्षोऽथ वा पुनः। सपिण्डीकरणादूर्द्ध्वं तस्योक्तः पार्वणो विधिः" श्रा॰त॰। अधिकम् एकोद्दिष्टशब्दे १५२१पृ॰ पार्वणशब्दे ४११८पृ॰ च दृश्यम्।

**सांवादिक** पु॰ सम्यग्वादायालं ठञ्। १नैयायिके जटा॰। २संशयविषये च। [अमरः। १वादद्दातरि च।

**सांशयिक** त्रि॰ संशयमापन्नः ठञ्। १सन्दिहाने संशययुक्ते

**सांसारिक** त्रि॰ संसाराय हितम् तत्र भवो वा ठक्। १संसारभवे २संसारोपयोगिनि वा पदार्थे।

**सांसिद्धिक** त्रि॰ संसिद्धिः स्वभावसिद्धिः तया निर्वृत्तं ठञ्। स्वभावसिद्धे "सांसिद्धिकसदाकृतम्" भागव॰।

**साकम्** अव्य॰ सह अकति अक-अमु सादेशः। १साहित्ये २सहार्थे अमरः। तद्योगे गौणक्रियान्वयिनि तृतीया।

**साकल्य** न॰ सकलस्य भावः ष्यञ्। १समुदाये। स्वार्थे ष्यञ्। २सकले होमार्थं मिश्रितेषु २तिलादिद्रव्येषु च।

**साकाङ्क्ष** त्रि॰ सहाकाङ्क्षया सहस्य सः। १सामिलाषे शाब्दबोधोपयोग्याकाङ्क्षायुक्ते २पदभेदे च। [२सावयवे च।

**साकार** त्रि॰ सह आकारेण मूर्त्त्या। १मूर्त्तिविशिष्टे देवादौ

**साकुरुण्ड** पु॰ सकुरुण्ड एव स्वार्थे अण्। सकुरुण्डके (पत्रिफले वृक्षे) राजनि॰।

**साकेत** न॰ आकिल्यते आकेतः सहाकेतेन। अयोध्यापुरे शब्दर॰ "जनस्य साकेतनिवासिनस्तौ" इति रघुः।

**सातुक** पु॰ सक्तवे हितः गुडा॰ ठञ्। १यवे त्रि॰को॰। सक्तूनां समाहारः तस्येदम् वा ठञ्। २सक्तुसमूहे न॰ ३तत्सम्बन्धिनि च त्रि॰।

**साक्षात्** अव्य॰ सह अक्षति अक्ष-आति सादेशः, सह अक्षं सतति अत-क्विप् वा। १लौकिकप्रत्यक्षे २तुल्ये च अमरः साक्षात्प्रा॰कृञि वा उप॰समासः। साक्षात्कृत्य कृत्वा वा। ३तद्रूपे चैतन्ये च "यत्साक्षात् टपरोक्षाद्ब्रह्म" श्रुतिः।

**साक्षात्कार** पु॰ साक्षात्+कृ-घञ् साक्षादि॰ उप॰। लौकिकसन्निकर्षजन्ये प्रत्यक्षे।

**साक्षिन्** त्रि॰सह-अक्षि यस्य इनि "साक्षाद् द्रष्टरि" पा॰इनि वा नि॰। १साक्षाद्द्रष्टरि। स्त्रियां ङीप्। २परमेश्वरे पु॰ "साक्षी चेताः केवलोनिर्गुणश्च" श्रुतिः। अयमेव साक्षिचैतन्यत्वेन वेदान्तपरिभाषादौ स्वीकृतोऽनुपदं वक्ष्यते। व्यवहारे साक्षिलक्षणादिकं वीर॰मि॰ निरूपितं यथा "तत्र प्रमाणभेदप्रमाणविषयव्यवस्थे क्रियापादप्रस्तावे विविक्ते। अधुना साक्षिप्रमाणस्यावान्तरभेदः प्रस्तूयते। तत्र साक्षिस्वरूपमाह मनुः "समक्षदर्शनात् साक्ष्यं श्रवणाच्चैव सिध्यति"। समक्षदर्शनस्य साक्ष्यहेतुत्वं पाणिनिरपि स्मरति। "साक्षाद् द्रष्टरि संज्ञायामिति"। तत्तु व्युत्पत्तिमात्रमव्यापकत्वात्। श्रुतसाक्ष्यादीनामपि साक्षित्वव्यवहारविषयत्वात्। अतएव श्रवणादित्युपलक्षणं प्रमाणमात्रस्य, विवादविषयप्रमाता साक्षीति विवक्षितम्। साक्षिप्रयोजनमाह नारदः "सन्दिग्धेषु तु कार्य्येषु द्वयोर्विवदमानयोः। दृष्टश्रुतानुभूतत्वात्साक्षिभ्यो व्यक्तिदर्शनम्" इति। दृष्टश्रुताभ्यामनुभूतत्वादित्यर्थः। यद्वा दृष्टत्वात् श्रुतत्वादनुभूतत्वाच्चेत्यर्थः। अनुभूतत्वादित्यनेन च गोवृषभन्यायेन प्रमाणान्तरजन्योऽनुभवो गृह्यते। व्यक्तिदर्शनं विवेकज्ञानम्। कात्यायनः "अर्थिप्रत्यर्थिसान्निध्यादनुभूतन्तु यद्भवेत्। तद्ग्राह्यं साक्षिणो वाक्यमन्यथा न वृहस्पतिः" अर्थिप्रत्यर्थिसान्निध्यादनुभूतमिति मुख्यः कल्पः। तदसान्निध्येऽपि श्रवणादिना साक्ष्यस्य वचनान्तरैरनुमतत्वात्। तच्च साक्षिभेदनिरूपणे व्यक्तीभविष्यति। गौतमः "विप्रतिपत्तौ साक्षिनिमित्ता व्यवस्था"। स च साक्षी प्रथमं द्विविधः कृतोऽकृतश्च। साक्षित्वेनार्थिप्रत्यर्थिभ्यां निरूपितः कृतः। अनिरूपितोऽकृतः। पुनश्च कृतस्य

पञ्चविधत्वादकृतस्य षड्विधत्वादेकादशविधः। यथाह नारदः "एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः। कृतः पञ्चविधस्तेषां षड्विधोऽकृत उच्यते। लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च। गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः कृतः" इति। पञ्चानामपि कात्यायनेन स्वरूपमभिहितम् "अर्थिना स्वयमानीतो यो लेख्ये सन्निवेश्यते। स साक्षी लिखितो नाम स्मारितः पत्रकादृते" इति। स्मारितः पत्रकादृते इत्यपि विवृतं तेनैव "यस्तु कार्य्यप्रसिद्ध्यर्थं दृष्ट्वा कार्य्यं पुनः पुनः। स्मार्य्यते ह्यर्थिना साक्षी स स्मारित इहोच्यते" इहेति दर्शयित्वेत्यन्तर्भावितण्यर्थम्। कार्य्यं व्यवहारपदं दर्शयित्वा प्रमापय्य कार्य्यप्रसिद्ध्यर्थं कालान्तरे व्यवहारनिर्णयसिद्ध्यर्थं पुनः पुनः स्मार्य्यते कार्य्यते च विस्मरणनिरासाय यः स स्मारितो नाम साक्षीत्यर्थः। यस्तु यदृच्छया प्रसङ्गादागतस्त्वमत्र साक्षी भवेति साक्षित्वेन निरूपितः स यदृच्छाभिज्ञः स्मारितस्य च पत्रानारूढत्वेन साम्येऽपि स्वरूपभेदः स्पष्टोऽपि तेनैव विवृतः "प्रयोजनार्थमानीतः प्रसङ्गादागतश्च यः। द्वौ साक्षिणौ त्वलिखितौ पूर्वपक्षस्य साधकौ"। गूढमाह "अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम्। यः श्राव्यते स्थितो गूढो गूढसाक्षी स उच्यते" इति। उत्तरसाक्षिस्वरूपमाह "साक्षिणामपि यः साक्ष्यमुपर्य्युपरि भाषते। श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञितः" इति। षड्विधस्याप्यकृतस्य भेदो नारदेनैव दर्शितः "ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम्। कार्य्येष्वधिकृतो यः स्यादर्थिना प्रहितश्च यः। कुल्याः कुलविवादेषु विज्ञेयास्तेऽपि साक्षिणः"। प्राड्विवाकग्रहणं लेखकसभ्योपलक्षणम् "लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः। नृपे पश्यति तत्कार्य्यं साक्षिणः समुदाहृताः" इति वचनात्। बृहस्पतिस्तु लेखितमधिकमादायैतानेव द्वादश साक्षिण आह "लिखितो लेखितो गूढः स्मारितः कुल्यदूतकौ। याहच्छिकोत्तरश्चैव कार्य्यमध्यगतोऽपरः। नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः" इति। तल्लक्षणान्यपि कानिचिद्विलक्षणानि कानिचित्पूर्वसंवादीन्याह स एव "प्रभेदमेषां वक्ष्यामि यथावदनुपूर्वशः। जातिनामाभिलिखितं येन स्वं पितृनामेव च। निवासश्च स विज्ञेयः साक्षी लिखितसंज्ञकः। अर्थिना च क्रियाभेदैस्तस्य कृत्वा स्पर्शादिकम्। प्रत्यक्षं लिख्यते यस्तु लेखितः स उदाहृतः। कुड्यव्यवहितो यस्तु श्राव्यते ह्यर्थिभाषितम्। विनिह्नुते यथाभूतं गूढसाक्षी स कीर्त्तितः। आहूय यः कृतः साक्षी ऋणन्यासक्रियादिके। स्मार्य्यते यो मुहुश्चैव स्मारितः सोऽभिधीयते। विभागदाने विषये ज्ञातिर्यत्रोपदिश्यते। द्वयोः समानो धर्मज्ञः स कुल्यः परिकीर्त्तितः। अर्थिप्रत्यर्थिवचनं शृणुयात् प्रेषितस्तु यः। उभयोः सम्मतः साधुर्दूतकः स उदाहृतः। क्रियमाणे च कर्त्तव्ये यः कश्चित् स्वयमागतः। तत्र साक्षी त्वसमसाकसञ्ज्ञो(?) याहच्छिकस्तु सः। यस्तु साक्षी दिशं गच्छन् मुमूर्षुर्वा यथाश्रुतम्। अन्यं संश्रावयेत्तन्तु विद्यादुत्तरसाक्षिणम्। साक्षिणामेपि यः साक्ष्यमुपर्य्युपरि भाषताम्। श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञितः। उभाभ्यां यस्य विश्वस्तं कार्य्यं वापि निवेदितम्। गूढचारी स विज्ञेयः कार्य्यमध्यगतस्तथा। अर्थिप्रत्यर्थिनोर्वाक्यं यच्छ्रुतं भूभृता स्वयम्। स एव तत्र साक्षी स्याद्विसंवादे द्वयोरपि। निर्णीते व्यवहारे तु पुनर्न्यायो यदा भवेत्। अध्यक्षः सभ्यसहितः साक्षी स्यात्तत्र नान्यथा। दूषितं घातितं यत्र सीमायास्तु समन्ततः। यत्रतोऽपि भवेत्साक्षी ग्रामस्तत्र न संशयः" इति। लिखितलेखितयोः स्वपरलिखनमात्रभेदादेकादशद्वादशसंख्ययोरविरोधः। सर्वे च यथाक्रमं दृष्टश्रुतरूपद्विविधसाक्षिभेदा ज्ञेयाः। क्रियाभेदैर्व्यवहारप्रकारभेदैः, तस्य प्रत्यर्थिनः। स्पर्शादिकमित्यादिशब्दात् यथासम्भवं सर्वविवादपदनिदर्शनम्। कुड्यग्रहणं व्यवधायकोपलक्षणम्। विनिह्नुते इति भावे क्तः निह्नवे सत्यपि इति शेषः। उक्त(?) इत्युक्त इतीतिशब्दाध्याहारः। दिशं देशान्तरं गच्छन्नित्यर्थः। उभाभ्यामर्थिप्रत्यर्थिभ्यां यस्य विश्वस्तं यदीयो विश्वासः कृत इति सम्बन्धसामान्यविवक्षया षष्ठी, भावेक्तं चाभ्युपेत्य व्याख्येयम्। गूढचारी कार्य्यमध्यगतश्चेत्येकस्यैव संज्ञाद्वयमिति द्वादशत्वाविरोधः। दूतग्रहणं लेखकस्यापि प्रदर्शनार्थं "दूतकः खटिकापट्टादिति" बृहस्पतिवचनाद्ग्रामग्रहणमध्यक्षसाक्ष्युपलक्षणम्। येन योऽर्थः प्रथितस्तत्र साक्षित्वेन प्रागनिरूपितोऽपि पश्चात् साक्षित्वेन विज्ञायोपन्यस्तः पृष्टश्च सभायां साक्ष्यं दातुमर्हतीति फलितोऽर्थः। इतरथा वेतनादानादिषु लिखिताद्यसम्भवे साक्ष्यभावप्रसङ्गः। इदमेवाभिसन्धायाह मनुः "यत्रानिबद्धो-

ऽपीक्षेत ह्युभयादपि किञ्चन । दृष्टस्यापि तद्ब्रूयात् यथादृष्टं यथाश्रुतम्" । अनिबद्धोऽकृतः । कल्पतरुमदन-रत्नयोरर्थिक्रियां क्रियाभेदैरिति पठितं तत्रार्थिक्रिया-मर्थव्यवहारक्रियाभेदैः प्रमाणविशेषैराप्तवाक्यादिभि-स्तस्य कृत्वा तत्सम्बन्धितयावधार्य सभादिके विवाद-विषये यः प्रत्यक्षं प्रत्यर्थिसमक्षं लेख्यतेऽर्थिनेत्यर्थात् स तत्र लेखितः साक्षीति व्याख्येयम् । कालावधिरपि साक्ष्ये स्मर्य्यते "सुदीर्घेणापि कालेन लिखितः सिद्धि-माप्नुयात् । अज्ञानतात्मनो लेख्यम्" कुर्य्यादिति शेषः । अजानन्तं विषयमविज्ञमात्मानमन्यद्वारा साक्षिरूपतेति लेखयेत् । स द्विविधोऽपि लिखितः साक्षी चिरकाले-नापि सिद्धिविषयीकरणमाप्नुयादित्यर्थः । कात्यायनः "अथ स्वहस्तेनारूढसाक्ष्यैकः स एव तु । न चेत् प्रत्यभिजानीयात् तत्स्वहस्तैः प्रसाधयेत्" । नारदः "अष्टमात् वत्सरात् सिद्धिः स्मारितस्येह साक्षिणः । आ-पञ्चमात् तथा सिद्धिर्यदृच्छोपगतस्य तु । आ तृतीयात् तथा वर्षात् सिद्धिर्गूढस्य साक्षिणः" इति । इदन्तु प्रायो-वादेन, यतः स एवाह "अथ वा कालनियमो न दृष्टः सा-क्षिणः प्रति । स्मृत्यपेक्षं हि साक्षित्वमाहुः शास्त्रविदो जनाः । यस्य नोपहता बुद्धिः स्मृतिः श्रोत्रञ्च नित्यशः । सुदीर्घेणापि कालेन स वै साक्षित्वमर्हति" । ते च "साक्षिणः कीदृशाः कार्य्या व्यवहारेष्वसाक्षिणः । ताह-शान् संप्रवक्ष्यामि यथा वाच्यमृतञ्च तैः । गृहिणः पु-त्रिणो मौलाः क्षत्रविट्शूद्रयोनयः । अर्थ्युक्ताः साक्ष्य-मर्हन्ति न ये केचिदनापदि । आप्ताः सर्वेषु वर्णेषु कार्य्याः कार्य्येषु साक्षिणः । सर्वधर्मविदो लुब्धा विप-रीतांस्तु वर्जयेत्" । मौलाः प्रख्यातकुलोद्भवा इति कल्प-तरुः । मूलं पूर्ववृत्तान्तमाहिदन्तीति मौलाः । तदधीते तद्वेदेत्यणिति मदनरत्ने । वक्ष्यमाणयाज्ञवल्क्यवचन-संवादात् साक्षित्वेनैव पूर्ववृत्तान्तवेदित्वलाभात्तदर्थकमौल-पदानर्थक्यप्रसङ्गाच्च कल्पतरुव्याख्यानमेव सम्यक् । रत्ना-करोऽपि "मौलाः कुलीना" इत्येव व्याख्यातम् । मूलं प्रतिष्ठा सा येषामस्ति ते मौलाः अर्थकथनमेतत् । तद्धितस्तु भवार्थ एव कर्त्तव्यः, यो हि यत्र भवः सोऽपि तत्रास्तीत्यविरुद्धमिति वदन् मेधातिथिरपीदृश-मर्थमनुमन्यते प्रतिष्ठान्तरस्य साक्षिलक्षणानुपयोगात् । कुलादिप्रतिष्ठायाः पदान्तरैरेवोपादानात् । अत्र क्षत्रिया-दिपदद्वयं नात्यन्तिकब्राह्मणव्युदासपरं, किन्तु यति

यस्याऽनेकाध्यापनाग्निहोत्रादिकार्यव्यग्रत्वं तस्य न सा-क्षित्वं, तादृशव्यापाराभावे तु तस्यापि साक्षित्वं सम्भवत्येव । अतएव "ब्रूहीति ब्राह्मणं पृच्छेदिति" तस्यापि साक्षि-त्वेन प्रश्नप्रकारविधिरुपपद्यत इति ध्येयम् । अर्थ्युक्ता अर्थिना सम्मते साक्षिणः सन्तीति निर्दिष्टा न तु स्वय-मेवागत्य वयमत्र साक्षिणः स्म इति वदन्तः । याज्ञवल्क्यः "तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः । धर्म-प्रधाना ऋजवः पुत्रवन्तो धनान्विताः । त्र्यवराः सा-क्षिणो ज्ञेयाः श्रौतस्मार्त्तक्रियापराः । यथाजाति यथा-वर्णं सर्वे सर्वेषु वा स्मृताः" । त्र्यवरास्त्रिभ्यो न्यूना न भवन्ति परतस्तु यथेष्टं भवन्तीत्यर्थः । जातयो मूर्द्धावसिक्तादयः । वर्णा ब्राह्मणादयः । तथा च मूर्द्धावसिक्तादीनां मूर्द्धावसिक्तादयो ब्राह्मणादयो ब्राह्म-णादीनां साक्षित्वेनोपादेयाः । असम्भवे सर्वे सर्वजा-तीयाः सर्वेषु जातीयेषु वादिप्रतिवादिषु साक्षिणो ग्राह्या इत्यर्थः । व्यासः "धर्मज्ञाः पुत्रिणो मौलाः कुलीनाः सत्यवादिनः । श्रौतस्मार्त्तक्रियायुक्ता विगत-द्वेषमत्सराः । श्रोत्रिया नपराधीनाः सूरयश्चाप्रवासिनः । युवानः साक्षिणः कार्य्या ऋणादिषु विजानता" इति । कात्यायनः "प्रख्यातकुलशीलाश्च लोभमोहविवर्जिताः । आप्ताः शिष्टा विशुद्धा ये तेषां वाक्यमसंशयम् । वि-भाव्यो वादिना यादृक् सदृशैरेव भावयेत् । नोत्कृष्टैश्चाव-कृष्टस्तु साक्षिभिर्भावयेत् सदा" इति । आप्ताः यथार्थ-वादिनः । विशुद्धा विवादविषयीभूतार्थज्ञानवन्तः शास्त्रार्थ-ज्ञानवन्तश्च "मतिबुद्धिपूजार्थेभ्यश्चेति" पा॰ कर्त्तरि क्तः । आदिकर्मणीति मदनरत्ने । तेषां वाक्यमसंशयं यथा भवति तथा वादिनो विभाव्योऽङ्गीकारयितव्योऽर्थात् प्रतिवादी । तत्र विशेषमाह यादृक् प्रतिवादी तत्सदृशैस्तज्जाती-यैरेव भावयेत् । वादिनेत्युपलक्षणम् । वाद्यपि प्रति-वादिना तज्जातीयैरेव विभाव्यः तथा च नारदः "श्रे-णीषु श्रेणिपुरुषाः स्वेषु वर्गेषु वर्गिणः । बहिर्वासिषु बाह्याः स्युः स्त्रियः स्त्रीषु च साक्षिणः" इति । पुनरपि "स्त्रीणां साक्ष्यं स्त्रियः कुर्युर्द्विजानां सदृशाः द्विजाः । शूद्राश्च सन्तः शूद्राणामन्त्यानामन्त्ययोनयः" । श्रेणि-पुरुषाणां सत्यपि वर्गित्वे पृथङ्निर्देशो गोबलीवर्दन्यायेन । प्रयोजनं चात्याभ्यर्हितत्वबोधनम् । वर्गिणश्च दर्शिताः कात्यायनेन "लिङ्गिनः श्रेणिपूगाश्च वणिग्व्रातास्तथा-ऽपरे । समूहस्थाश्च ये चान्ये वर्गास्तानब्रवीद् भृगुः ।

दासचारणमल्लानां हस्त्यश्वायुधजीविनाम्। प्रत्येकैकसमूहानां नायका वर्गिणः स्मृताः। तेषां वादः स्ववर्गेषु वर्गिणस्तेषु साक्षिणः"। अत्र सर्वत्र न्यूनाधिकविशेषणोपादानञ्च दोषाय अनृतभाषणभीरुत्वसत्यवदनशीलत्वस्य च साक्षित्वप्रयोजकस्योपलक्षणार्थत्वात् तेषाम्। ते च साक्षिणः कियत्सङ्ख्याकाः कुत्र ग्राह्या इत्यपेक्षायामाह बृहस्पतिः "नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव वा। उभौ वा श्रोत्रियौ स्यातां नैकं पृच्छेत् कदाचन"। लिखितादिषु स एवाह "लिखितौ द्वौ तथा गूढौ त्रिचतुःपञ्च लेखिताः। यदृच्छाः स्मारिताः कार्य्यास्तथा चोत्तरसाक्षिणः। दूतकः क्षटिकाग्राही कार्य्यमध्यगतस्तथा। एक एव प्रमाणं स्यान्नृपोऽध्यक्षस्तथैव च"। क्षटिकाग्राही लेखकः एक एवेत्येवकारो बाह्यापेक्षया "नैकं पृच्छेत् कदाचन" इत्युक्तेः अनावष्टब्धत्वार्थो न नियमार्थोऽदृष्टार्थत्वप्रसङ्गात्। त्र्यवराः साक्षिणो ज्ञेया इति योगीश्वरीयमप्येतदभिप्रायकमेव। लिखितादीनामुभयानुमतत्वे ग्राह्यत्वमेकस्यापीत्याह योगीश्वरः "उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित्"। यद्यपि "श्रौतस्मार्त्तक्रियापरा धर्मप्रधाना" इत्यादिविशेषणोपादानात् त्र्यवराणामपि धर्मवित्त्वं समानन्तथापि तेषामुभयानुमतौ न भवत्येव साक्षित्वं, द्वयोरेकस्योभयानुमत्यैवेति भेद इति मिताक्षरा। नारदोऽपि "उभयानुमतो यः स्याद्द्वयोर्विवदमानयोः। स साक्ष्येकोऽपि साक्षित्वे प्रष्टव्यः स्यात् संसदि"। आप्तत्वेन राजादिभिरवधारितोऽप्येकः साक्षीत्याह व्यासः "शुचिक्रियश्च धर्मज्ञः साक्षी यस्त्वनुभूतवाक्। प्रमाणमेकोऽपि भवेत् साहसेषु विशेषतः" इति। अनुभूता यथार्थत्वेन प्रमितचरा वाग् यस्येत्यनुभूतवाक्। कात्यायनः "अभ्यन्तरस्तु निःक्षेपे साक्ष्यमेकोऽपि वाच्यते। अर्थिना प्रहितः साक्षी भवेदेकोऽपि याचिते"। याचित इति निःक्षेपविशेषणम्। न्यायतौल्यादन्यत्रापीति वाचस्पतिः। मदनरत्नकारस्तु याचितं विवाहाद्यर्थं याचितं गृहीतमाभरणादिकं याचितकमिति यावदित्याह। निःक्षेपविशेषणत्वे याचिते तस्मिन्नभ्यन्तरस्यैकस्य साक्षित्वप्रसङ्गाद्व्यवहितान्वयप्रसक्तेश्चोत्तरैव व्याख्या प्रशस्ता। कुलचादिपण्यविवादे तद्विमातैकोऽपि साक्षीत्याह स एव "संस्कृतं येन यत्पण्यं तत्तेनैव विभावयेत्। एक एव प्रमाणं स विवादे तत्र कीर्त्तितः"। इदञ्च बहुसाक्षि-सम्भवे सत्वरादिनोद्वयोरेकस्य वानुमतिप्रदर्शनार्थं न नियमार्थम् अदृष्टार्थत्वप्रसङ्गादिति ध्येयम्। उक्तलक्षणसाक्ष्यसम्भवे प्रतिषेधरहितानां साक्ष्यनुकल्पानां सूचनार्थमसाक्षिणोऽपि स्मृतिषूक्ताः"।

ते च असाक्षिन्शब्दे ५४८ पृ०। दर्शिताः।

साक्षिणो मिथ्याकथने अकथने च दोषो यथा "पृष्टो हि साक्षी यः साक्ष्यं जानन्नप्यन्यथा वदेत्। स पूर्वानात्मनः सप्त कुले हन्यात्तथा परान्। यश्च कार्य्यार्थतत्त्वज्ञो जानन्नपि न भाषते। सोऽपि तेनैव पापेन लिप्यते नात्र संशयः" भा०आ० "ब्रह्मस्वापहारी च मिथ्यासाक्ष्यप्रदायकः। मित्रद्रोही कृतघ्नश्च हव्यापहरूपकृत्। एते महापातकिनस्तेषु लोकेषु निन्दिताः। कालसूत्रे च नरके पतन्ति ब्रह्मणः शतम्" ब्रह्म०वै०गण०ख०४४अ०। "मिथ्यासाक्ष्यं यो ददाति कामात् क्रोधात्तथा भयात्। सभायां पाक्षिकं वक्ति स कृतघ्न इति स्मृतः। मिथ्यासाक्ष्यं पाक्षिकं वा भारते वक्ति यो नृप!। यावदिन्द्रसहस्रञ्च सर्पकुण्डे वसेद्ध्रुवम्। सन्ततं वेष्टितैः सर्पैर्भीतश्च भक्षितस्तथा। भुङ्क्ते च सर्पविण्मूत्रं यमदूतेन ताड़ितः। कृकलासो भवेत्तत्र भारते सप्तजन्मसु। सप्तजन्मसु मण्डूकः पितृभिः सप्तभिः सह। ततो भवेच्च वृक्षश्च महारण्ये च शाल्मलिः। ततो भवेन्नरो मूकस्ततः शूद्रस्ततः शुचिः" ब्रह्मवै०प्र०४८अ०।

साक्षिणो यथा विवादे कर्त्तृत्वाद्यभाव एवं जीवसाक्षिणो कर्त्तृत्वाभावः ईश्वरसाक्षिन्शब्दे १०४८पृ० दर्शितम्। तयोर्ज्ञानादिप्रकाशकत्वात् तथात्वम्। अन्तःकरणायोर्जडत्वेन विषयावभासकत्वाभावेन चैतन्योपाधित्वमेव न तु विशेषणत्वं विषयावभासकत्वे तदन्वयायोगात्। अत एव स्वस्योपाधिवृत्तिचित्तवृत्तिसुखादेरेवावभासकत्वान्नातिप्रसङ्गः इति वेदान्तपरिभाषाप्रत्यक्षपरि० दर्शितम्।

सांख्यसू० भाष्ययोश्चैतस्य साक्षित्वं समर्थितं यथा "ननु साक्षित्वस्यानित्यत्वात् पुरुषाणां कथं सदैकरूपत्वं तत्राह "साक्षात्सम्बन्धात् साक्षित्वम्" सू० पुरुषस्य यत् साक्षित्वमुक्तं तत् साक्षात्सम्बन्धमात्रात् न तु परिणामत इत्यर्थः। साक्षात्सम्बन्धेन बुद्धिमात्रसाक्षितावगम्यते "साक्षाद्द्रष्टरि संज्ञायामिति" पा०साक्षिशब्दव्युत्पादनात्। साक्षाद्द्रष्टृत्वं चाव्यवधानेन द्रष्टृत्वम्। पुरुषे च साक्षात्सम्बन्धः स्वबुद्धिवृत्तेरेव भवति। अतो बुद्धेरेव साक्षी पुरुषोऽन्येषां तु द्रष्टृमात्रमिति शास्त्रीयो

विभागः। ज्ञाननियामकश्चार्थाकारतास्थानीयः प्रतिबिम्बरूप एव सम्बन्धो न तु संयोगमात्रमतिप्रसङ्गादित्यसकृदावेदितम्। विष्ण्वादेः सर्वसाक्षित्वं त्विन्द्रियादिव्यवधानाभावमात्रेण गौणम्। अत्रसम्बन्धात् साक्षित्वमिति पाठे स्वच्छमतबुद्धिः करणत्वसामान्यात्। तथा यथोक्तात् प्रतिबिम्बरूपात् सम्बन्धादित्यर्थः" भा०। तत्रैव अन्यत्र "सुषुप्त्याद्यसाक्षित्वम्" सुषुप्त्याद्यवस्थात्रयस्य बुद्धिनिष्ठस्य साक्षित्वमेव पुंसोऽर्थः। तदुक्तम् "जाग्रत् स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः। तासां विलक्षणो जीवः साक्षित्वेन व्यवस्थितः"। इति तासां बुद्धिवृत्तीनां साक्षित्वेन तद्विलक्षणो जाग्रदाद्यवस्थारहितो निर्णीत इत्यर्थः। तत्र जाग्रन्नामावस्थेन्द्रियद्वारा बुद्धेर्विषयाकारः परिणामः। स्वप्नावस्था च संस्कारमात्रजन्यस्तादृशः परिणामः। सुषुप्त्यवस्था च द्विविधाऽर्द्धसमपञ्चयभेदेन। तत्रार्द्धक्षये विषयाकारा वृत्तिर्न भवति। किन्तु स्वगतसुखदुःखमोहाकारैव बुद्धिवृत्तिर्भवति अन्यथोत्थितस्य सुखमहमस्वाप्समित्यादिरूपसुषुप्तिकालीनसुखादिस्मरणानुपपत्तेः। तदुक्तं व्यासभाष्ये "सुखमहमस्वाप्समिति" स्मृतेः परिणाम इति"। समपक्षये तु बुद्धेर्वृत्तिसामान्याभावो मरणादाविव भवति। अन्यथा समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपतेत्यागमाभिहितानुपपत्तेरिति। सा च समपसुषुप्तिवृत्त्यभावरूपेति पुरुषस्तत्साक्षी न भवति पुरुषस्य वृत्तिमात्रसाक्षित्वात्। अन्यथा संस्कारादेरपि धर्मस्य साक्षिभास्यतापत्तेः। सुषुप्त्यादिसाक्षित्वं तु तादृशबुद्धिवृत्तीनां प्रकाशनमिति वक्ष्यामः"। [वेदान्तप०।

**साक्षिभास्य** त्रि० ३त०। साक्षिमात्रप्रकाश्ये बुद्धिवृत्त्यादौ

**साक्ष्य** न० साक्षिणो भावः कर्म वा ष्यञ्। १व्यवहारविषयवृत्तवृत्तान्तकथनरूपे साक्षिकर्मणि २तद्भावे च "समवदर्शनात् साक्ष्यं श्रवणाच्चैव सिध्यति" मनुः।

**सागर** पु० सगरेण निर्वृत्तः अण्। १समुद्रे अमरः २मृगभेदे पुंस्त्री० शब्दच०। ३संख्याभेदे संख्याशब्दे दृश्यम्।

**सागरगामिनी** स्त्री सागरं गच्छति गम+णिनि न णत्वम्। १नद्यां २स्थूलैलायाञ्च राजनि०।

**सागरनेमि** स्त्री सागरः नेमिरिव वेष्टनाकारो यस्याः। पृथिव्यां हेमच०। [हेमच०।

**सागरमेखला** स्त्री सागरो मेखलेव यस्याः। पृथिव्यां

**सागरालय** पु० सागर आलयो यस्य। वरुणे शब्दच०।

**सागरोत्थ** न० सागरात् उत्तिष्ठति उद्+स्था क। सामुद्रलवणे राजनि०।

**साग्नि(क)** पु० सहाग्निना अग्निहोत्रेण वा कप्। १श्रौतस्मार्त्ताग्नियुक्ते २अग्निहोत्रिणि द्विजे।

**साङ्कर्य्य** न० सङ्करस्य भावः ष्यञ्। १परस्पराभावसामानाधिकरण्ये सत्येकाधिकरणवृत्तित्वरूपे न्यायोक्ते जातिबाधके दोषभेदे सङ्करशब्दे ५१८१ पृ० दृश्यम् २सङ्करस्य धर्मे च। [सि०कौ०।

**साङ्कल** त्रि० सङ्कलेन निर्वृत्तः सङ्कला० अण्। सङ्कलनजाते

**साङ्कृति** पु० वैयाघ्रपद्यगोत्रस्य प्रवरे मुनिभेदे "वैयाघ्रपद्यगोत्राय साङ्कृतिप्रवराय च" भीष्मतर्पणमन्त्रः।

**साङ्ग** त्रि० सहाङ्गेन। अङ्गयुक्ते "तस्मात् साङ्गमधीत्यैव" "साङ्गं तत् क्रियते पुनः" इति च स्मृतिः।

**साङ्गतिक** त्रि० सङ्गत्या निवृत्तः ठक्। सङ्गतिविशिष्टे युक्ते।

**साचि** अव्य० सच-इण्। १वक्रे २तिर्य्यगर्थे च अमरः।

**साचिवाटिका** स्त्री साचि यथा तथा वटति वट—ण्वुल्। १श्वेतपुनर्नवायां रत्नमा०।

**साचीकृत** त्रि० असाचि साचि क्रियते साचि—कृ—क्त दीर्घः। वक्रीकृते सि०कौ०"साचीकृता चारुतरेण तस्थौ" कुमा०

**साट** प्रकाशने अद०चु०उ०स०सेट्। साटयति ते अससाटत् त

**साटोप** त्रि०सहाटोपेन सदर्पस्य वः। १सगर्वे २विकटे च।

**सात** सुखे उपादाने अद० चु० उभ० सक० सेट्। सातयति ते अससातत् त। अयं सौत्र इत्येके। [२नष्टे च।

**सात** न० सात—अच्। १सुखे भरतः। सन—क्त। २दत्ते

**सातला** स्त्री सातं सुखं लाति ला क। १चर्मकषायाम् अमरः। २सेहुण्डभेदे राजनि०।

**सातवाहन** पु० शालिवाहनरूपे हेमच०। [अमरः।

**साति** स्त्री सन-क्तिन्। १अवसाने २दाने ३तीव्रपीडायाञ्च

**सातीन(ल)क** पु० सतीन(ल)एव स्वार्थे अण्। सतीन(ल) कलाये (मटर) रायमुकुटः।

**सात्यकि** पु० सत्यकस्य वृष्णिवंश्यभेदस्यापत्यम् अण्। शिनेर्नप्तरि स्वनामख्याते वृष्णिवंश्ये क्षत्रियभेदे त्रिका०।

**सात्यवत** पु० सत्यवत्यां मत्स्यगन्धायां भवः अण्। १वेदव्यासे त्रिका०। २सत्यवतः सम्बन्धिनि च। [इला०।

**सात्यवतेय** पु० सत्यवत्या अपत्यम् ढक्। सत्यवतीसुते व्यासे

**सात्वत्** पु० सातयति सुखयति सात—क्विप् सात् परमेश्वरः स उपास्यत्वेनास्त्यस्य मतुप् मस्य वः। विष्णुभक्ते "भगवान् सात्वतां पतिः" भागवतम्। श्रीधरेण

सत्त्वे च अण् सातः विष्णुरूपाहत्वेनास्त्यस्य मतुपि मलोपश्छान्दसः इत्युक्तम् ।

**सात्वत** त्रि॰ सत्त्वमेव सात्त्वं तत्तनोति तन–ड । १विष्णौ त्रिका॰ यदुवंश्ये अंशुपुत्रे २नृपभेदे "अथांशोः सात्वतो नाम विष्णुभक्तः प्रतापवान्" कूर्मपु॰ २२ अ॰ । तद्वंश्ये ३बलरामे हेमच॰ । "सत्त्वं सत्त्वाश्रयं सत्त्वगुणं सेवेत केशवम् । योऽनन्यत्वेन मनसा सात्वतः स उदाहृतः" इत्युक्ते ४विष्णुभक्तभेदे । ५सात्वतजनपदाधिष्ठितदेशे सोऽभिजनोऽस्य अण् । पित्रादिक्रमेण ६तद्देशवासिनि च त्रिका॰ । यदुवंश्योत्पन्नत्वेन ७शिशुपालमातरि स्त्री ङीप् । "न दूये सात्वतीसूनुः" माघः । सा च नाटकस्य ८वृत्तिभेदे च । तल्लक्षणादि सा॰द॰उक्तं यथा "सात्वती बहुला सत्त्वशौर्य्यत्यागदयार्जवैः । सहर्षा क्षुद्रशृङ्गारा विशोका साद्भुता तथा । उत्थापकोऽथ सांघात्यः संलाप परिवर्त्तकः । विशेष इति चत्वारः सात्वत्याः परिकीर्त्तिताः । उत्तेजनकरी शत्रोर्वागुत्थापक उच्यते । मन्त्रार्थदैवशक्त्यादेः सांघात्यः सङ्घभेदनम् । संलापः स्याद् गभीरोक्तिर्नानाभावसमाश्रयः । प्रारब्धदन्यकार्य्याणां करणं परिवर्त्तकः" । तत्रोपे एकतम रोऽपि । ९जातिभेदे पुंस्त्री॰ सुधन्वाचार्य्यशब्दे दृश्यम् ।

**सात्त्विक** पु॰ सत्त्वात् सत्त्वगुणप्रधानात् विष्णोर्भवति ठञ् । १चतुर्मुखे ब्रह्मणि हेमच॰ । तस्य विष्णुनाभिकमलजत्वात् तथात्वम् । सत्त्वमेव सात्त्विकमस्त्यस्य ठन् । २विष्णौ । सत्त्वगुणेन तत्कार्य्येण मनसा वा निर्वृत्तः ठञ् । ३सत्त्वगुणजाते ४सत्त्वप्रधानमनोविशेषजाते च । ५स्तम्भादिरसानुगुणे भावभेदे सा॰द॰

"उक्ताः स्त्रीणामलङ्कारा अङ्गजाश्च स्वभावजाः । तद्रूपाः सात्त्विका भावास्तथा चेष्टाः परा अपि । विकाराः सत्त्वसम्भूताः सात्त्विकाः परिकीर्त्तिताः । सत्त्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावतः । स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः" । एतेषां लक्षणानि तत्तच्छब्दे दृश्यानि । स्त्रीणां यौवने सत्त्वजाते ६अलङ्कारभेदे सा॰द॰ "यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः" । अलङ्कारशब्दे ४०८ पृ॰ दृश्यम् । ७सत्त्वप्रधाने त्रि॰ । ८देवीपूजाभेदे स्त्री "शारदी चण्डिकापूजा त्रिविधा परिकीर्त्तिता । सात्त्विकी राजसी चैव तामसी चेति तां शृणु । सात्त्विकी जपयज्ञैश्च नैवेद्यैश्च निरामिषैः" ति॰त॰ । ९भावभेदे पु॰ "सत्त्वोत्कटे मनसि ये प्रभवन्ति भावास्ते सात्त्विका इति विदुर्न्निपुणास्तु" सर्वान॰ । १०सत्त्वप्रधाने पुराणभेदे "वैष्णवं नारदीयञ्च तथा भागवतं शुभम् । गारुडञ्च तथा पाद्मं वाराहं शुभदर्शने ! । सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै । सात्त्विकेषु पुराणेषु विष्णुमाहात्म्यवर्णनम्" उपपुराणशब्दे दृश्यम् । ११स्मृतिभेदे स्त्री "वाशिष्ठं चैव हारीतं व्यासं पाराशरं तथा । भारद्वाजं काश्यपञ्च सात्त्विक्यो मुक्तिदाः शुभाः" पद्मपु॰ उत्त॰ ४१अ॰ । १२दुर्गायां स्त्री ङीप् । १३गीतोक्तेषु श्रद्धादिभेदेषु यथायथं त्रि॰ यथा

"सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ! । श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः । यजन्ते सात्त्विका देवान्" (श्रद्धा) "आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः । यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु" इत्युपक्रमे "आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः । रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः" (आहारः) "अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते । यष्टव्यमेवेति मनः समाधाय स सात्त्विकः" (यज्ञः) "श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः । अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते" (कायिकादि त्रिविधं तपः) "दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्त्विकं मतम्" (दानम्) "सर्वभूतेषु येनैकं भावमव्ययमीक्षते । अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्" (ज्ञानम्) "नियतं सङ्गरहितमरागद्वेषतः कृतम् । अफलप्रेप्सुना कर्म यत्तत् सात्त्विकमुच्यते" (कर्म) "मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः । सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते" (कर्त्ता) "प्रवृत्तिं च निवृत्तिं च कार्य्याकार्य्ये भयाभये । बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ ! सात्त्विकी" (बुद्धिः) "धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः । योगेनाव्यभिचारिण्या धृतिः सा पार्थ ! सात्त्विकी" (धृतिः) "यत्तदग्रे विषमिव परिणामेऽमृतोपमम् । तत् सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम्" (सुखम्) "कार्य्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन ! । सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः" (त्यागः) । तत्र सात्त्विकाहारस्य चित्तशुद्धौ हेतुत्वं छान्दो॰ उक्तं यथा "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" । सत्त्वं मनः । "अन्नमयं हि सौम्य ! मनः इत्यादिना" तस्य

कर्द्दमोऽकीर्त्तिः कलङ्कः कृष्णवर्णकः । अन्धकारः शैत्यमसौभाग्यं तिमिरोपमानकम् । अकीर्त्तेः कृष्णवस्तूनि मालिन्यं तमसां ततिः । कस्तूरिकाया भ्रमरो नीलकान्तमणिर्घनः । सुगन्धिद्रव्यदाहोत्थधूमः कज्जलकं तथा । कृष्णपुष्पप्रभृतयः कामाकीर्त्तिः स्थलान्तरे । कामिनीरथमत्तद्वत् कज्जलस्यापि तानि च । कर्पूरस्य तथा चन्द्रः शशाङ्कः किरणस्तथा । यूथिकाकुन्दकुसुमं विरहिगण्डकस्तथा । हिमशीरोपिच्छः प्रायश उपमानतया भवि । मनोरथस्य विज्ञेयः फलपुष्पादियुक् तरुः । कविबुद्धिकल्पना स्यादानन्दस्य सुधार्णवः । ब्रह्मसाक्षात्कृतिवत्, कामिनीदर्शनस्य तु । अतिप्रियतमप्राप्तिर्ब्रह्मसाक्षात्कृतिस्तथा । सुधारसो नित्यसुखसाक्षात्कारस्तथा मतः । पूर्णचन्द्रादिकस्यापि साक्षात्कारः प्रकीर्त्तितः । अपरस्य तु सत्काव्यं कामिन्यधरपानकम् । ब्रह्मसाक्षात्कृतिस्तद्वत्, विषस्यापि प्रकीर्त्यते । वाक्शोकौ विरहः पापं मलिनं दुःखदं च यत् । शीताग्निः शीतकालीनशीतोदं परिकीर्त्तितम् । व्यभिचारिणी च या नारी सापि तद्वत् प्रकीर्त्तिता । विरहस्याग्निराधिश्च यातना च पयोनिधिः । दुःखदानि च वस्तूनि तप्तानि कथितानि च । पुष्पाणां कामिनी चन्द्रः कर्पूरश्च यशस्तथा । चन्द्रस्य प्रमदावक्त्रमतिशुभ्रञ्च यद्भवेत् । यशः पुण्यादिकं वस्तु चोपमानतयेष्यते । सूर्यस्य शिवनेत्राग्निः काञ्चनञ्चारुहस्तथा । बाडवाग्निर्जवापुष्पं वसन्तोत्थपलाशकः । पद्मस्य कामिनीवक्त्रं पाटलं रक्तवस्तु च । इन्दीवरस्य कस्तूरी नीलकान्तमणिस्तथा । कामिनीनयनं तद्वत् कैरवस्य तु चन्द्रमाः । कुन्दादिपुष्पमन्यच्च शुभ्रवर्णञ्च यद्भवेत् । दाता इन्द्रः कुबेरश्च चन्द्रमा भास्करस्तथा । नलप्रभृतयो ये तु पर्थिवाश्चक्रवर्त्तिनः । मेघस्य काली कृष्णश्च नीलपाथोजसंहतिः । इन्दीवरं वनं दाता कृष्णाश्चौ भ्रमरावली । यत्नोपस्य चन्द्रादिशुक्लवर्णपदार्थकाः । कन्दर्पस्य नलचन्द्र आश्विनौ च पुरूरवाः । दीपस्यापि चमकस्य प्रतापः भास्करं तथा । वायोः शीघ्रगवस्तूनि कीर्त्तितानि पुरातनैः । अश्वस्य वायुर्हरिणो मनश्च, हिमवान् गिरिः । मेघस्तमालवृक्षश्च तमसाञ्च समुच्चयः । सौधस्योर्द्धःश्रवाश्चन्द्रः कैलासैरावतौ मतौ । शिवस्य सौधवत् सर्वं कृष्णस्य यमुना घनः । तमालवृक्षो भ्रमरश्चेन्दीवरकं नभः । नीलकान्तमणिर्नीलपद्मं

रामस्य पूर्ववत् । नवदूर्वादलं दृश्यपल्लवं चाधिकं पुनः । लक्ष्म्यास्तु पार्वती चन्द्रकान्तिः सीता रतिस्तथा । द्रौपदी पद्मकान्तिश्च पुराणैः परिकीर्त्तिता । सरस्वत्याश्चन्द्रकला कैलासाचलकान्तयः । शुक्लवर्णपदार्थाश्च, विपक्षेस्तु सशृङ्गकः । ब्रह्माण्डं पण्डितमनस्तथा नारायणोदरम् । समुद्रस्य च मेघादि वस्तु कृष्णं च यद्भवेत् । विदुरश्चापि भारतस्य तथापस्मारिरोगवान् । पुरस्य स्वर्गः कैलासो यत् इहत् स्यात् मनोरमम् । रथस्य पृथ्वी वैकुण्ठपुरी पोतश्च पुष्पकम् । कामिन्यास्तु तडित्तारा स्वर्णवर्णा च केतकी । उपमानतया स्वर्णलतापि परिकीर्त्तिता । नायकस्य तु कन्दर्प ऐलचन्द्रोऽश्विनौ तथा । सभायास्तु सुधर्मा स्यात् गङ्गा स्वर्गस्य मण्डलम् । गण्डकी पर्वतो मेरुरुपमानतया मतः । पण्डितस्य सुराचार्य्यः कपिः शुक्रः सरस्वती । शौरामस्तु विरहिणः शिवोऽजो दुःखितो जनः । उन्मत्तचन्दनतरुः शिवशेखरचन्द्रमाः । बाडवाग्नियुताब्धिश्च वल्मीकोऽद्रीन्द्रशेखरः । दाता कर्णः कल्पवृक्षः कामधेनुरुशीनरः । रोहणोऽब्धिरदृढवो जैमिनिश्च युधिष्ठिरः । वसन्तर्त्तोर्मतं मदासुन्मादो मलयानिलः । यमोऽग्निर्विषसर्पौ च स स्यात् विरहिणं प्रति । ग्रीष्मर्त्तोरग्निर्विरहोऽहिनिश्वासस्तथा पुनः । विरहिणश्चापि निश्वास उपमानतया मतः । वर्षर्त्तोरजनी व्योम नाराचपाशदृढकाः । शरदः काशपुष्पादिरूपशीतांशुचामराः । ऐरावतगजा ज्ञेया उपमानतया बुधैः । शीतर्त्तोरुपमानं स्यात् राज्यशून्यस्तु भूपतिः । तथापस्माररोगार्त्तो विद्वद्भिः परिकीर्त्तितः । शिशिरर्त्तोस्तु दुःखिनः वसन्तोऽद्विर्धराश्विनौ । राजागमनकालश्च मदनोऽपि मतो विदाम् । सचिवस्योपमानं तु सुराचार्य्यः प्रकीर्त्तितः” ।

**साधक** त्रि० साध–ण्वुल्, सिध–णिच्–ण्वुल् साधादेशः वा । १साधनकर्त्तरि २कारके तन्त्रोक्ते ३मन्त्रादिसिद्धिकारके शिष्ये च “साधकः सिद्धिमाप्नुयात्” इति तन्त्रम् । स्त्रियां टाप् अत इत्त्वम् । साधिका सा च ४दुर्गायां “साधनात् सिद्धिरित्युक्ता साधिका वाऽथ ईश्वरी” देवीपु०४५ अ० । ५जन्मताराबधिकेषु षष्ठपञ्चदशचतुर्विंशनक्षत्रेषु पु० “जन्मसम्पद्विपत् क्षेमं प्रत्यरिः साधको वधः । मित्रं परममित्रञ्च जन्मर्क्षात् गणयेत् त्रिधा” ज्यो०त० । ६कल्पमापके त्रि० ।

**साधकतम** न० अतिशयेन साधकं तमप् "साधकतमं करणम्" पा० परिभाषिते करणे कारकभेदे ।

**साधन** न० सिध–णिच्–साधादेशे यथायथं करणे भावे ल्युट् कर्त्तरि ल्यु वा । १करणरूपे कारकभेदे २कारणे ३मृतसंस्कारे अग्निदाने ४गतौ ५द्रव्ये ६धने ७अर्थदापने ८निष्पादने ९उपकरणे १०हस्त्यश्वादियुद्धसामग्र्याम् ११अनुगमने अमरः । १२सैन्ये १३उपाये १४सिद्धौषधे १५मेढ्रे मेदि० १६मैत्रे १७ओषधौ १८प्राप्तौ धरणिः । १९कारके २०प्रमाणे हेमच० २१व्याप्ये त्रिका० २२मोचने २३जये अजयः २४ब्रह्मविद्याहेतौ नित्यानित्यवस्तुविवेकवैराग्यशमादिषट्कमोक्षेच्छारूपे च । युच् । साधनाऽपि उपासनायां निष्पादनायाञ्च स्त्री ।

**साधनाप्रसिद्धि** स्त्री हेत्वाभासभेदे सा च साधने साधनतावच्छेदकधर्माभावरूपा यथा "पर्वतो वह्निमान् काञ्चनधूमादित्यादौ धूमनिष्ठः काञ्चनत्वाभावः साधनाप्रसिद्धिः ।

**साधर्म्य** न० सधर्मस्य समानधर्मस्य भावः ष्यञ् । १स्वकीयसाधारणधर्मरूपे स्वभावे २अनुगतधर्मे "यदुक्तं यस्य साधर्म्यम्" भाषा० । समानो धर्मो यस्य तस्य भावः ष्यञ् । ३समानधर्मे यथा पद्ममिव सुन्दरं मुखमित्यादौ सौन्दर्यमुभयोः समानधर्मः ।

**साधर्म्यसम** पु० साधर्म्येण समः । स्थापनाहेतुदूषके जात्युत्तरभेदे "साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यसमः" गौ० "वादिनाऽन्वयेन व्यतिरेकेण वा साध्ये साधिते प्रतिवादिना साधर्म्यमात्रप्रयुक्तहेतुना तदभावस्यापादनम् यथा शब्दोऽनित्यः कृतकत्वात् घटवत् व्यतिरेकेण वा व्योमवदित्युपसंहृते नैतदेवं यद्यनित्यघटसाधर्म्यात् नित्याकाशवैधर्म्याद्वाऽनित्यः स्यात् नित्याकाशसाधर्म्यादमूर्त्तत्वात् नित्यः स्यात् विशेषो वा वक्तव्यः" इति । भाष्ये तु निदर्शनान्तरमुक्त्वा व्याख्यातं यथा "क्रियावानात्मा द्रव्यस्य क्रियाहेतुगुणयोगात् द्रव्यं लोष्टः क्रियाहेतुगुणयुक्तः क्रियावान् तथा चात्मा तस्मात् क्रियावानिति एवमुपसंहृते परः साधर्म्येणैव प्रत्यवतिष्ठते । निष्क्रिय आत्मा विभुनो द्रव्यस्य निष्क्रियत्वात् विभु चाकाशं निष्क्रियं च तथा चात्मा तस्मान्निष्क्रिय इति न चास्ति विशेषहेतुः क्रियावत्साधर्म्यात् क्रियावता भवितव्यं न पुनरक्रियसाधर्म्यात् निष्क्रियेणेति विशेषहेत्वभावात् साधर्म्यसमः प्रतिषेधो भवति" ।

**साधारण** त्रि० सह धारणया वर्त्तते अण् । १सदृशे अमरः । २अनेकसम्बन्धिन्येकस्मिन् ३धने "साधारणं समाश्रित्य यत्किञ्चिद्वाहनादिकम्" स्मृतिः । स्त्रियां गौरा० ङीष् । सा च ३कुञ्चिकायां ४वेश्यादिनायिकायाञ्च "यः सपक्षे विपक्षे च भवेत् साधारणस्तु सः" भाषा० उक्ते ५हेत्वाभासभेदे पु० । यथा वह्निमान् द्रव्यत्वादित्यादौ द्रव्यत्वहेतुः सपक्षे पर्वते विपक्षे ह्रदादौ च वर्त्तते इति साधारणः । स चानैकान्तिकभेदः "आद्यः साधारणस्तु स्यादन्योऽसाधारणो मतः । तथैवानुपसंहारी त्रिधाऽनैकान्तिको मतः" भाषा० ।

**साधारणधर्म्म** पु० कर्म० । "अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः । दमः क्षमार्जवं दानं धर्मं साधारणं विदुः" इत्युक्ते अहिंसादौ सर्ववर्णाश्रमतुल्ये १धर्मे । न्यायाद्युक्ते २संशयहेतौ समानधर्मे च तथाहि रङ्गं रजतं भवेदिति संशये रङ्गरजतयोः साधारणधर्मचाकचिक्यशुक्लत्वादिर्हेतुः । ३प्रजासर्जनरूपे जन्तुमात्रधर्मे च "प्रजनार्थं स्त्रियः सृष्टाः सन्तानार्थञ्च मानवाः । तस्मात् साधारणो धर्मः श्रुतौ पत्न्या सहोदितः" मनुः । स च धर्मः सर्वेषां जन्तूनां साधारण इति मानवा इत्युपलक्षणम् ।

**साधारणस्त्री** स्त्री कर्म० । वेश्यायां हेमच० । सा च नायिकाभेदः । "अथ नायिका त्रिविधा स्वाऽन्या साधारणस्त्रीति" सा० द० नायिकाशब्दे ४०४२ पृ० तल्लक्षणं दृश्यम् । सामान्यस्त्रीप्रभृतयोऽप्यत्र ।

**साधारणी** स्त्री साधयति साधा अरणीव । १कुञ्चिकायां हेमच० साधारणशब्दस्यान्तरे स्त्रीप्रकृतौ स्त्री ङीष् स्वार्थे ष्यञ् । साधारण्य कुञ्चिकायां न० । भावे ष्यञ् । साधर्म्येऽधर्मे च ।

**साधिका** स्त्री साधयति गमयति सद्गतिमयम् गम–णिच्–साधादेशः ण्वुल् । १सुषुप्तौ हेमच० । सिध–णिच् ण्वुल् । २कार्यसाधिकायां स्त्रियाञ्च ।

**साधित** त्रि० सिध–णिच्–क्त । १दापिते अमरः २प्रमाणादिना उद्भाविते च "साधितात् द्विगुणं शतमि"ति स्मृतिः ३निष्पादिते ४शोधिते च ।

**साधिदैव** त्रि० सह अधिदैवेन साकं अव्य० द्विपददन्त्विः । अधिदैवतासहिते । साधिभूतसाधियज्ञावपि परमेश्वरे ।

**साधिष्ठ** त्रि० अतिशयेन साधुः बाढो वा इष्ठन् साधादेशः टिलोपो वा । १अत्यन्तदृढे अमरः २अतिसाधौ ३अतिशोभने च । ४अत्यार्थे मेदि० ५न्याय्ये हेमच० ।

**साधिष्ठान** त्रि॰ सह अधिष्ठानेन । १सन्निहिते तन्त्रोक्ते षट्चक्रमध्ये सुषुम्णामध्यस्थे चक्रभेदे न॰ चक्रशब्दे २८०८ पृ॰ दृश्यम् ।

**साधीयस्** त्रि॰ अतिशयेन साधुः बाढो वा इयसुन् साधादेशो वा । १साधुतरे च २अत्यन्तदृढे अमरः । ३स्थाय्ये हेमच॰ स्त्रियां ङीप् ।

**साधु** त्रि॰ साध–उन् । १उत्तमकुलजाते अमरः । २सुन्दरे ३उचिते च । स्त्रियां वा ङीप् । ४मुनौ ५जिने च पु॰ हेमच॰ "न प्रहृष्यति सम्माने नापमाने च कुप्यति । न क्रुद्धः परुषं ब्रूयादेतद्धि साधुलक्षणम्" गरुडपु॰ उत्तमधर्मयुते ६जने ७वार्द्धुषिके ८मनोहरे मेदि॰। साधु लक्षणान्तरं यथा "यथालब्धोऽपि सन्तुष्टः समचित्तो जितेन्द्रियः । हरिपादाश्रयो लोके विप्रः साधुरनिन्दकः । निर्वैरः सदयः शान्तो दम्भाहङ्कारवर्जितः । निरपेक्षो मुनिर्वीतरागः साधुरिहोच्यते । लोभमोहमदक्रोधकामादिरहितः सुखी । कृष्णाङ्घ्रिशरणः साधुः सहिष्णुः समदर्शनः" पद्मोत्त॰ख॰ ९९अ॰ "त्यक्तात्मसुखभोगेच्छाः सर्वसत्त्वसुखैषिणः । भवन्ति परदुःखेन साधवो नित्यदुःखिताः । परदुःखातुरा नित्यं स्वसुखानि महान्त्यपि । नापेक्षन्ते महात्मानः सर्वभूतहिते रताः । परार्थमुद्यताः सन्तः सन्तः किं किं न कुर्वते । तादृगप्यम्बुधेर्वारि जलदैस्तत् प्रदीयते । एक एव सतां मार्गो यदङ्गीकृतपालनम् । दहन्तमकरोत् क्रोडे पावकं यदपांपतिः । आत्मानं पीडयित्वापि साधुः सुखयते परम् । ह्लादयन्नाश्रितान् वृक्षो दुःखञ्च सहते स्वयम्" वह्निपु॰ । ९व्याकरणव्युत्पन्नसाधुताजात्याश्रये शब्दे "असाधुरनुमानेन वाचकः कैश्चिदिष्यते । वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः" इति हरिः । अपभ्रंशतानादिर्यद्वाऽस्य दृश्यते । आक्रियाभिव्यङ्गीया वा जातिः कापीह साधुता" हरिः । तथा च अपभ्रंशभिन्नत्वमनादित्वम् अस्य दृष्टसाधनप्रयोगविषयत्वं व्याकरणव्युत्पन्नजातिर्वा साधुता इति तदर्थः । स च ईश्वरसङ्केताश्रयः शब्द इति नैयायिकाः । तथा च यः शब्दो यस्मिन्नर्थे ईश्वरेण सङ्केतितः स शब्दस्तदर्थे साधुः । वैयाकरणमते यः शब्दः यस्मिन्नर्थे व्याकरणे व्युत्पादितः स शब्दस्तत्र साधुः यथा "कर्मणि द्वितीया" पा॰द्वितीया कर्मार्थे साधुः ।

**साधुज** त्रि॰ साधौ सत्कुले जायते जन–ड । उत्तमकुलोद्भवे शब्दर॰ ।

**साधुधी** स्त्री ६त॰ । १श्वश्र्वां हारा॰ । २सुन्दरबुद्धियुते त्रि॰ । कर्म॰ । ३साधुबुद्धौ स्त्री । [२उत्तमकुसुमे ।

**साधुपुष्प** न॰ साधु पुष्पं यस्य । १स्थलपद्मे शब्दमा॰ । कर्म॰ ।

**साधुवाह** पु॰ कर्म॰ । विनीते सुशिक्षिते घोटके हेमच॰ ।

**साधुवाहिन्** पु॰ साधु यथा तथा वहति णिनि । १विनीतेऽश्वे अमरः २सुन्दरवहनकर्त्तरि त्रि॰ ।

**साधुवृक्ष** पु॰ नित्यकर्म॰ । १कदम्बवृक्षे शब्दमा॰ । २वटवृक्षे राजनि॰ । ३शोभनवृक्षमात्रे च ।

**साध्वृत** न॰ सहाध्वृतेन सहस्य सः । १खाद्यपक्वे २मयूरसमूहे ३पर्वतीयाश्च अजयः ।

**साध्य** पु॰ सिध–णिच्–यत् । "मनोमन्ता तथा प्राणो नरोऽपानश्च वीर्य्यवान् । निर्भयो नरकश्चैव दंशो नारायणो वृषः । प्रभुश्चेति समाख्याताः साध्या द्वादश देवताः" इत्युक्ते द्वादशसंख्यके १गणदेवताभेदे ज्यो॰ उक्ते विष्कम्भादिषु योगेषु २एकविंशे योगे च । ३साधनीये त्रि॰ मेदि॰ । ४अष्टादशविवादेषु प्रमाणादिना उन्नाय्ये पदार्थे "प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम् । निश्चितं लोकसिद्धञ्च पक्षं पक्षविदोविदुः" इत्युक्ते व्यवहारे साधनार्हे प्रतिज्ञेये ४पक्षे पु॰ "ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम् । ऊने वाऽप्यधिके चार्थे प्रोक्ते साध्यं न सिध्यति" कात्या॰ । ५अनुमित्या साधनीये वह्न्यादौ च यथा वह्निमान् धूमादित्यादौ विधाधर्मितो वह्निः साध्यः । साध्यमस्यास्ति अर्श आद्यच् । ६साध्यवति पक्षे पु॰ "साध्यनिर्देशः प्रतिज्ञे"ति गौ॰ सूत्रम् । साध्यवत्तया पक्षनिर्देश इति दीधितिकारः तन्त्रोक्ते ७मन्त्रमात्रे षाड्गमन्त्रस्य स्वानुकूलतापरीक्षके ३८पृ॰उक्ते अकथहचक्रस्थे द्वितीयपञ्चमादिकोष्ठस्थाद्याक्षरके "सिद्धः साध्यः सुसिद्धोऽरिः क्रमात् ज्ञेया मनीषिभिः" इत्युक्ते ८मन्त्रभेदे । १०देवमात्रे मेदि॰ । व्याकरणोक्ते सिद्धसंख्यानन्वयिक्रियाभेदे क्रियाशब्दे २२१७पृ॰ दृश्यम् । "साध्यरूपा क्रिया तत्र धातुरूपनिबन्धना" हरिः । "साध्यस्य साधनाकाङ्क्षा" हरिः ।

**साध्यता** स्त्री साध्यस्यानुमितिविधेयस्य भावः तल् । अनुमितिविधेयतारूपे न्यायोक्ते १विषयताभेदे । २इच्छाविषयताभेदे च । यथा घटोजायतामित्यत्र घटीया साध्यताख्या विषयता ।

**साध्यताघटकसम्बन्ध** पु॰६त॰ । कर्म॰ । येन सम्बन्धेन—साध्यस्य अनुमेयता तादृशे सम्बन्धे यथा पर्वतः संयोगेन वह्निमान् धूमात् इत्यादौ संयोगः ।

**साध्यतावच्छेदक** पु॰साध्यतामवच्छिनत्ति विशेषयति अव+

छिद-ण्वुल्। येन रूपेण सम्बन्धेन वा यस्य साध्यता तद्रूपा विषयता। तस्मिन् १सम्बन्धे २धर्मे। यथा वह्निमान् धूमादित्यत्र वह्निः साध्यः तस्य साध्यतां वह्नित्वमवच्छिनत्तीति वह्नित्वं साध्यतावच्छेदकम्। एवं संयोगसम्बन्धोऽपि।

**साध्यसम** पु०१हेत्वाभासभेदे "साध्याविशिष्टः साध्यत्वात् साध्यसमः" गौ०सू० "द्रव्यं छायेति साध्यम्। गतिमत्त्वादिति हेतुः। साध्येनाविशिष्टः साधनीयत्वात् साध्यसमः। अयमप्यसिद्धत्वात् साध्यवत् प्रतिज्ञापयितव्यः। साध्यं तावदेतत् किं पुरुषवच्छायापि गच्छति? आहोस्विदावरकद्रव्ये संसर्पत्यावरणसंतानादसंनिधिसंतानोऽयं तेजसो गृह्यत इति? सर्पता खलु द्रव्येण यो यस्तेजोभाग आव्रियते तस्य तस्यासंनिधिरेवावच्छिन्नो गृह्यत इति। आवरणं तु प्राप्तिप्रतिषेधः" वात्स्या० २जात्युत्तरभेदे "उभयसाध्यत्वात् साध्यसमः" गौ० सू० "हेत्वाद्यवयवसामर्थ्ययोगी धर्मः साध्यः। तं दृष्टान्ते प्रसजतः साध्यसमः। यदि यथा लोष्टस्तथात्मा प्राप्तस्तर्हि यथात्मा तथा लोष्ट इति। साध्यश्चायमात्मा क्रियावानिति कामं लोष्टोऽपि साध्यः। अथ नैवम्। न तर्हि यथा लोष्टस्तथात्मा" वात्स्या०। तत्र "प्रकृतदृष्टान्तादेः प्रकृतसाध्यतुल्यतापादनम्" गौ० वृ० दृष्टान्तस्य पक्षतुल्यताकथनम्। यथा, आत्मा सक्रियः क्रियाहेतुगुणवत्त्वादित्यादौ यदि यथा लोष्टस्तथात्मेति तथोच्यते तदा यथात्मा तथा लोष्ट इत्यप्यायातम्। तथा च यद्यात्मनि क्रियावत्त्वं साध्यते। तर्हि लोष्टेऽपि तत् साधनीयम्। नेति चेत्तर्हि यथा लोष्टस्तथात्मेति न वाच्यम्। लोष्टसदृश आत्मात्मसदृशो लोष्ट इत्यत्र नियामकाभावादिति" नीलकण्ठः।

**साध्यसिद्धि** स्त्री साध्यस्य सिद्धिः विनिर्णयः। साध्यस्य वह्न्यादेः अनुमित्यादिना साधनाधीने १निर्णये २समाप्तौ। साध्यस्य प्रतिज्ञेयार्थस्य सिद्धिर्निर्णयो यत्र। व्यवहारे प्रतिज्ञातार्थस्य प्राड्विवाकादिभिः विनिर्णयरूपे ३व्यवहारपादभेदे च।

**साध्याप्रसिद्धि** स्त्री ६त० साध्ये साध्यतावच्छेदकस्याभावरूपे हेत्वाभासभेदे। यथा पर्वतः काञ्चनमयवह्निमान् धूमादित्यादौ वह्निनिष्ठः काञ्चनमयत्वाभावः साध्याप्रसिद्धिः।

**साध्वस** न० साधु+अस्यति अस-अच्। भये अमरः।

**साध्वी** स्त्री साधु-ङीप्। १मेदायां राजनि० "आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा। मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता" उक्तलक्षणायां २स्त्रियां तत्रार्थे संज्ञात्वात् न पुंवद्भावः। साधुतायुक्ते ३स्त्रीमात्रे च। तत्रार्थे पुंवद्भाव इति भेदः।

**सानन्द** त्रि० सह आनन्देन। १आनन्दसहिते "सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि" मालतीमा०। २ध्रुवकभेदे "अष्टादशाक्षरैर्युक्तो यशोरूपपटो ध्रुवः। करुणसंज्ञके ताले सानन्दो वीरके रसे" सङ्गीतदा०। ३गुच्छकरञ्जे पु० राजनि०।

**सानन्दूर** पु० तीर्थविशेषे "सानन्दूरेति विख्यातं भूमे! गुह्यं परं मम। उत्तरे तु समुद्रस्य मलयस्य च दक्षिणे। तत्र तिष्ठामि वसुधे! स्वदीर्घो दिग्यमाश्रितः। प्रतिमा वै महीयाक्ति नात्युच्चा नातिनीचका। आयसीं तां वदन्त्येके अन्ये ताम्रमयीं तथा। कांस्यां रीतिमयीमन्ये केचित् सीसकनिर्मिताम्। शिलामयीमित्यपरे महाश्चर्यस्वरूपिणीम्" वराहपु०।

**सानसि** पु० सन-इण् असुक् च। सुवर्णे उणादिकोषः।

**सानिका** स्त्री सन-ण्वुल् टापि अत इत्त्वम्। वंश्यां शब्दच०

**सानु** पुंन० सन-ञुण्। १पर्वतस्य समभूमिदेशे प्रस्थे अमरः। २वने ३वातसमूहे ४पथि ५अग्रे ६कोविदे ७अर्के मेदि०। ८पल्लवे च जटा०।

**सानुज** न० सानौ जायते जन-ड। १प्रपौण्डरीके राजनि० २तुम्बुरुवृक्षे पु० राजनि०। सह अनुजेन। ३अनुजसहिते त्रि०

**सानुमत्** पु० सानुरस्त्यस्य मतुप्। पर्वते हेमच०।

**सानेयी** स्त्री सह आनेयेन अरेण सहस्य सः गौरा० ङीष्। वंश्यां शब्दर०। स्वार्थे क मुख्यः। सानेयिकाऽप्यत्र।

**सान्तपन** न० सन्तापयति सम्+तप-णिच् ल्युट्-स्वार्थेऽण्। सन्तपनाय साधु अण् वा।

"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। एकरात्रोपवासश्च कृच्छ्रं सान्तपनं विदुः" मनूक्ते द्व्यहसाध्ये व्रतभेदे एकदिने गोमूत्रादिषट्कमात्रपानं परदिने उपवास इति द्व्यहसाध्यताऽस्य।

**सान्तर** न० सह अन्तरेण सहस्य सादेशः। १विरले जटा० २व्यवधानसहिते त्रि०। [नसाधने विधानभेदे।

**सान्तानिक** त्रि०सन्तानः प्रयोजनमस्य सन्तना० ठक्। सन्ता-

**सान्त्व** आनुकूल्यकरणे अद० चु० उभ० सक० सेट्। सान्त्वयति ते अससान्त्वत् त सान्त्वापयतीत्यत्र अनेकाच्कत्वात् न षोपदेशः।

**सान्त्व** न० सान्त्व–अच् । १अत्यर्थमधुरे २आनुकूल्ये मेदि० । ३शोभनमनःप्रीतिदवाक्ये प्रियवाक्यादिना क्रोधोपशमनरूपे सामनि च अमरः ।

**सान्त्वन** न० सान्त्व–ल्युट् । १आनुकूल्यकरणे प्रियवादादिना क्रोधाद्युपशमने च । युच् । अत्रैव स्त्री ।

**सान्दीपनि** पु० सन्दीपनस्यापत्यम् इञ् । रामकृष्णयोराचार्य्ये अवन्तिपुरवासिनि मुनिभेदे ।
"विदिताखिलविज्ञानौ तत्तज्ज्ञानमयावपि । शिष्याचार्य्यक्रमं वीरौ ख्यापयन्तौ यदूत्तमौ । ततः सान्दीपनिं काश्यमवन्तिपुरवासिनम् । अस्त्रार्थं जग्मतुर्वीरौ बलदेवजनार्दनौ" विष्णु पु० ५अंशे २१अ० ।

**सान्द्र** त्रि०अदि-रक् सह अन्द्रेण । १निविडे अमरः २मृदौ मेदि० । ३स्निग्धे ४मनोज्ञे शब्दर० । ५वने न० मेदि० ।

**सान्द्रपुष्प** पु० सान्द्रं पुष्पमस्य । विभीतकवृक्षे शब्दर० ।

**सान्द्रस्निग्ध** त्रि० सान्द्रं स्निग्धः । १अतिहृद्ये शब्दर० । २अतिमनोहरे च ।

**सान्धिक** पु० सन्धा सुराद्यावनं शिल्पं वेत्ति ठक् । १शौण्डिके शब्दमा० । सन्धिः प्रयोजनमस्य ठञ् । २सन्धिकर्त्तरि त्रि० । [सन्ध्याकालिके ।

**सान्ध्य** त्रि० सन्ध्यायां भवः सन्धिवेला० अण् न ठञ् ।

**सान्ध्यकुसुमा** स्त्री ६ब० । त्रिसन्धिपुष्पवृक्षे राजनि० ।

**सान्नाय्य** न० सन्नीयते सम्+नी–ण्यत् नि० । मन्त्रादिना संस्कार्य्ये घृतादौ अमरः । [कल्पय" आवाहनमन्त्रः ।

**सान्निध्य** न० सन्निधिरेव ष्यञ् । नैकट्ये "सान्निध्यमिह

**सान्निपातिक** त्रि० सन्निपातात् त्रिदोषविकारात् आगतः तेन निर्वृत्तो वा ठञ् । सान्निपाताज्जाते रोगे सन्निपातशब्दे ५२१६ पृ०दृश्यम् "विकारे सन्निपातजे" क्रुमारः ।

**सान्न्यासिक** पु०सन्न्यासः प्रयोजनमस्य ठक् । सन्न्यासिनि हेमच०

**सापत्न** पु० सपत्न एव स्वार्थे अण् । १शत्रौ अमरः । सपत्न्यां भवः तस्या अपत्यं वा अञ् । १सपत्नीपुत्रे । अण् । सापत्न्योऽप्यत्रैव ।

**सापिण्ड्य** न० सपिण्डस्य भावः ष्यञ् । दायाशौचग्रहणाद्युपयोगिनि ज्ञातिधर्मभेदे "सापिण्ड्यं साप्तपौरुषमिति" स्मृतिः । सपिण्डशब्दे ५२२० पृ० दृश्यम् ।

**साप्तपदीन** न० सप्तभिः पदैः उच्चारितैर्निर्वृत्तम् खञ् । सख्ये सौहार्दे अमरः "साप्तपदीनं सख्यम्" पा० ।

**साप्तपौरुष** त्रि० सप्त पुरुषान् व्याप्नोति अण् उभयपदवृद्धिः । सप्तपुरुषव्यापके ।

**साफल्य** न० सफलस्य भावः ष्यञ् । सामर्थ्ये सम्पूर्णतायाञ्च

**साम** सान्त्वने अद०चु०उ०स०सेट् । सामयति ते अससामत् त अनेकाचकत्वात् न षोपदेशः ।

**सा(षा)म** सान्त्वे चु०उभ० सक०सेट् । सामयति अयं षोपदेश एव व्याख्यः दुर्गादासेन दन्त्यादित्वमस्योक्तमप्रमाणम् ।

**सामक** पु० साम–ण्वुल् । तर्कशाणे त्रिका० । समकमेव अण् । २वृद्धिरहिते मूलमात्रे ऋणे मिता० ।

**सामग** पु० साम तद्वेदं गायति । सामवेदाध्यायिनि जटा० ।

**सामगर्भ** पु० साम गर्भे यस्य । विष्णौ शब्दर० ।

**सामग्री** स्त्री समग्रस्य भावः ष्यञ् स्त्रीत्वपक्षे ङीष् ङीपि यलोपः । १समस्ततायाम् । स्त्रीत्वाभावपक्षे सामग्र्य तत्रार्थे न० । "प्रायेण सामग्र्यविधौ गुणानाम्" कुमारः । स्वार्थे ष्यञ् । २करणसमूहे ३द्रव्ये च स्त्री ।

**सामज** पुंस्त्री० साम्नो वेदभेदात् जायते जन–ड । १गजे । स्त्रियां ङीष् । तस्य तज्जन्मकथा पालकाव्ये उक्तं तच्च सामयोनिशब्दे दृश्यम् । २सामपाठजे स्वरादौ त्रि०मेदि०

**सामञ्जस्य** न० समञ्जसस्य भावः ष्यञ् । औचित्ये ।

**सामन्** न० षो–मनिन् । "सम्मे सायाः हि" इत्यादिके १वेदभेदे तत्रोक्तास्वृक्षमधिकृत्य गेये २गानभेदे "ऋच्यध्यूढं साम गीयते" छान्दोग्योप० । साम्नो गानरूपत्वं गानशब्दे २५७२पृ० दृश्यम् तद्भेदादिकं वेदगाने ऊहगानादौ मूलपन्थे च दृश्यं सामवेदस्य विभागादि चरणव्यूहे दृश्यम् । तच्छाखाभेदाः वेदशब्दे ४९३४ पृ० दृश्याः । राज्ञां "सामभेदस्तथा दानो दण्डश्चेत्युक्तं ३उपायभेदे तस्य विषयादिकं मत्स्यपु० २२१अ० उक्तं यथा
मत्स्य उवाच "सामभेदस्तथा दानो दण्डश्च मनुजेश्वर! । उपेक्षा च तथा माया इन्द्रजालञ्च पार्थिव ! । प्रयोगाः कथिताः सप्त तन्मे निगदतः शृणु । द्विविधं कथितं साम तथ्यञ्चातथ्यमेव च । तत्राप्यतथ्यं साधूनामाक्रोशायैव जायते । तत्र साधुः प्रयत्नेन सामसाध्यो नरोत्तम ! । महाकुलीना ऋजवो धर्मनित्या जितेन्द्रियाः । सामसाध्या न चातथ्यन्तेषु साम प्रयोजयेत् । तथ्यं साम च कर्त्तव्यं कुलशीलादिवर्णनम् । तथा तदुपचाराणां कृतानाञ्चैव वर्णनम् । अनयैव तथा युक्त्या कृतज्ञाख्यापनं स्वकम् । एवं साम्ना च कर्त्तव्या वशगाः धर्मतत्पराः । साम्ना यद्यपि रक्षांसि गृह्णन्तीति परा श्रुतिः । तथाप्येतदसाधूनां प्रयुक्तं नोपकारकम् । अतिशङ्कितमित्येवं पुरुषं सामवादिनम् । असाधवो

विजानन्ति तथासत्तेषु वर्जयेत् । ये गुरुवंशा ब्बव: प्रणीता धर्मे स्थिताः सत्यपरा विनीताः । ते साम-साध्याः पुरुषाः प्रदिष्टा मानोच्छ्रता ये सततञ्च राजन्" । तत्र मित्रादिसामप्रकारः शुक्रनीतिपरिशिष्टे तत्र विशेष-श्चोक्तो यथा

"त्वत्समस्तु मम नास्ति मित्रे साम इदं स्मृतम् । परस्परमनिष्टं न चिन्तनीयं त्वया मया । सुखा-र्थ्यं च कर्त्तव्यं यत्नौ साम प्रकीर्त्तितम्" । विषय-भेदेनोपायभेदाश्रयणं तत्रोक्तं यथा "सर्वोपायै-स्तथा कुर्य्यान्नीतिज्ञः पृथिवीपतिः । यथा स्वाभ्यधिका न स्युर्मित्रोदासीनशत्रवः । सामैव प्रथमं श्रेष्ठं दानन्तु तदनन्तरम् । सर्वदा भेदनं शत्रोर्दण्डनं प्राणसंशये । प्रबलेऽरौ सामदानौ साम भेदोऽधिके स्मृतौ । भेददण्डौ समे कार्य्यौ दण्डः पूज्यः प्रहीयके । मित्रे च साम-दानौ स्तो न कचित् भेददण्डने । रिपोः प्रजानां सम्भेदः पीडनं स्वबलाय वै । रिपुप्रपीड़िताद्यं च साम्ना दानेन संग्रहः । स्वप्रजानां न भेदेन नैव दण्डेन पालनम् । कुर्वीत सामदानाभ्यां सर्वदा यत्नमास्थितः" ।

४वशवर्त्तीकरणोपायभेदे ५प्रियवाक्यादिना सान्त्वने च । ५पशुबन्धनरज्ज्वां स्त्री ङीप् ।

**सामन्त** पु० संश्लिष्टोऽन्तः एकदेशो यस्य समन्तस्येश्वरः अण् । स्वविषयानन्तरवर्त्तिदेशाधिपे १नृपे अमरः । समन्ताद्भवः अण् टिलोपः । २श्रेष्ठप्रजायाम् ( मण्डल ) "यं परम्परया मौलाः सामन्ताश्च समागतम्" स्मृतिः ।

**सामयिक** त्रि० समये काले नियमे वा भवः उचितो वा ठञ् । १समयभवे २समयोचिते ३नियमबद्धे च "नि-जधर्माविरोधेन यस्तु सामयिको भवेत्" स्मृतिः ।

**सामयिकाभाव** पु० अत्यन्ताभावे त०दी० । केचित्, अत्या-दर्शिनाशशीलोऽत्यन्ताभावादतिरिक्तोऽयमभाव इत्याहुः ।

**सामयोनि** पु० साम सामगानं योनिरुत्पत्तिस्थानं यस्य । हस्तिनि, तेषाञ्च सामयोनित्वमुक्तं पालकाव्ये "सूर्य-स्याण्डकपाले द्वे समानीय प्रजापतिः । हस्ताभ्यां परि-गृह्याथ सप्त सामान्यगायत । गायतो ब्रह्मणस्तस्मात् समुत्पेतुर्मतङ्गजाः" इति । हृत० १चतुर्वेदे ब्रह्मणि स्त्री ।

**सामर्थ्य** न० समर्थस्य भावः ष्यञ् । १देहजे बले २शक्तौ ३योग्यतायां मेदि० । ४सङ्गतार्थतायाञ्च । समासशब्दे ५२१२ पृ०दृश्यम् । योग्यता च कार्य्यजननयोग्यत्वं यथा परामर्शा-स्यानुमितियोग्यत्वम् । ५आकाङ्क्षायोग्यत्वादिसत्त्वे गौ० इ०यथा आप्तोक्तस्य वचनस्य । सङ्गतार्थताख्यं च सामर्थ्यं द्विविधम् अपेक्षारूपम् एकार्थीभावश्चेति" वैयाक० । तत्राद्यं राज्ञः पुरुष इत्यादिवाक्ये ह्युपयुज्यते, द्वितीयं राजपुरुष इत्यादि वृत्तावुपयुज्यते" ।

**सामवायिक** पु० समवाये प्रसृतः ठञ् । १मन्त्रिणि हेमच० तस्येदम् ठञ् । २समवायसम्बन्धिनि त्रि० ।

**सामाजिक** पु० समाजः सभावेशनं प्रयोजनमस्य । १सभ्ये अमरः । २समाजसम्बन्धिनि त्रि० ।

**सामानाधिकरण्य** न० समानाधिकरणस्य भावः ष्यञ् । १तदधिकरणवृत्तित्वे २तद्वृत्तियोगिकप्रतियोगिकत्वे सिद्धा-न्तलक्षणे गदा० यथा वह्निधूमयोः सामानाधिकरण्यम् । स्वावच्छेदकीभूतो यः कालस्तदवच्छिन्ना या स्वविशिष्ट-निरूपिता यत्किञ्चिद्वृत्तिनिष्ठाऽऽधेयता सा । यथा यदा निषादविद्या नासीत् परं तु चिद्धिरासीत्तदा चिद्धि-विषादविद्याविरहयोः सामानाधिकरण्यम् । ३अभेदा-न्वयबोधकत्वे । यथा नीलोघट इत्यादौ नीलपदघटपदयोः सामानाधिकरण्यम् ४धर्मितावच्छेदकयत्किञ्चिद्वृत्ति-विषयकत्वे यथा पर्वतो वह्निमान् इत्यादौ यत्किञ्चित्पर्वत-वृत्तिविषयिकानुमितिः सामानाधिकरण्येनानुमितिः ।

**सामान्य** न० समानस्य भावः ष्यञ् । १सादृश्यप्रयोजकधर्मे यथा मुखं पद्ममिव सुन्दरमित्यादौ सौन्दर्यादि । समा-नमेव स्वार्थे ष्यञ् । द्रव्यगुणकर्मसु तुल्यतया स्थितायां २जातौ भाषा० । जातिशब्दे ३०९२ दृश्यम् । सामान्यञ्च द्विविधं सखण्डमखण्डञ्च सामान्यलक्षणा-शब्दे दीधित्युक्तिः । "सामान्यं विशेष इति बुद्ध्यपेक्षम्" कणा० । अनुगतधर्मत्वम् सामान्यमिति तल्लक्षणं तेन ३अनु-गतधर्मस्वरूपं यथा प्रतियोगितासामान्ये यद्भावच्छिन्न-त्वादीति दीधितिः । ४अधिकविषयकत्वे यथा ब्राह्मणाय दधि दीयतां कौण्डिन्याय तक्रम् इत्यादौ दधिदानस्या-धिकब्राह्मणविषयकता । सामान्यविषयकशास्त्रञ्च विशेष-शास्त्रेण वाध्यते यथा "मा हिंस्यात् सर्वाभूतानीति" हिंसानिषेधः सर्वविषयः "वायव्यं श्वेतमालभेत" इत्यादि विशेषः हिंसाशास्त्रं तेन सामान्यशास्त्रं वैधेतरविषयएव प्रवर्त्तते । ५अर्थालङ्कारभेदे ४०७पृ० दृश्यम् ।

**सामान्यच्छल** न०छलभेदे "सम्भवतोऽर्थस्यातिसामान्ययोगा-दसम्भूतार्थकल्पना" गौ०सू० "अहो खल्वसौ ब्राह्मणो विद्याचरणसम्पन्न इत्युक्ते कश्चिदाह । सम्भवति हि ब्राह्मणे विद्याचरणसम्पदित्यस्य वचनस्य विद्यातोऽर्थ-

विकल्पोपपत्त्या तस्यार्थकल्पनया क्रियते। यदि ब्राह्मणे विद्याचरणसम्पत् सम्भवति। व्रात्येऽपि सम्भवेत्। व्रात्योऽपि ब्राह्मणः। सोऽप्यस्तु विद्याचरणसम्पन्न इति। सामान्यनिमित्तं छलं सामान्यच्छलमिति" वात्स्या० "सामान्यविशिष्टसम्भवदर्थाभिप्रायेणोक्तस्याति-सामान्ययोगादसम्भवदर्थकल्पकल्पनया दूषणाभिधानम्। यथा ब्राह्मणोऽयं विद्याचरणसम्पन्न इत्युक्ते ब्राह्मणत्वेन विद्याचरणसम्पदं साधयति इति कल्पयित्वा परो वदति। कुतो ब्राह्मणत्वेन विद्याचरणसम्पत्? व्रात्ये व्यभिचारात्" इति।

**सामान्यतोदृष्ट** न० सामान्यतः सामान्यस्य सामान्यात् वा दृष्टं दर्शनम्। १अनुमानभेदे "अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतो दृष्टञ्च" गौ०सू० "पूर्ववदिति यत्र कारणेन कार्य्यमनुमीयते यथा मेघोन्नत्या भविष्यति वृष्टिरिति शेषवत्तत् यत्र कार्य्येण कारणमनुमीयते पूर्वोदकविपरीतकमुदकं नद्याः पूर्णत्वं शीघ्रत्वञ्च दृष्ट्वा स्रोतसोऽनुमीयते भूता वृष्टिरिति। सामान्यतो दृष्टम् व्रज्यापूर्वकमन्यत्र दृष्टस्यान्यत्र दर्शनमिति। तथा चादित्यस्य। तस्मादस्त्यप्रत्यक्षाप्यादित्यस्य व्रज्येति" अथ वा यत्राप्रत्यक्षे लिङ्गलिङ्गिनोः सम्बन्धे केनचिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते। यथेच्छादिभिरात्मा। इच्छादयो गुणाः, गुणाश्च द्रव्यसंस्थानाः, तद् यदेषां स्थानं स आत्मेति" वात्स्या०। २कार्य्यकारणभिन्नलिङ्गके अनुमानभेदे यथा पृथिवीत्वेन द्रव्यत्वानुमानम्। ३अन्वयव्यतिरेक्यनुमाने च। यथा वह्निमान् धूमादित्यादि उभयव्याप्तिसम्भवेन अत्रोभयानुमानसम्भवात् गौ०सू०वृ०।

**सामान्यप्रत्यासत्ति** सामान्यं तज्ज्ञानं वा प्रत्यासत्तिः। अलौकिकप्रत्यक्षसन्निकर्षभेदे सामान्यलक्षणाशब्दे दृश्यम्।

**सामान्यलक्षणा** स्त्री सामान्यं साधारणधर्मः लक्षणं यस्याः। न्यायोक्ते अलौकिकप्रत्यक्षसाधने उपायभेदे सन्निकर्षशब्दे दृश्यम्। यथा एकघटज्ञाने घटत्वरूपसामान्यधर्मज्ञानात् सकलस्य घटस्य ज्ञानम्।
तस्याः प्रत्यासत्तित्वं मणिकृता व्यवस्थापितं यथा
"व्याप्तिग्रहश्च सामान्यलक्षणाप्रत्यासत्त्या सकलधूमादिविषयकः कथमन्यथा पर्वतीयधूमे व्याप्त्यग्रहे तस्मादनुमितिः सा चेन्द्रियसम्बद्धविशेषणतातिरिक्तैव वा तद्विशेष्यकप्रत्यक्षे तदिन्द्रियसन्निकर्षस्य हेतुत्वेनानागतादौ संयोगादेरभावादिति वदन्ति"।
तस्याः अप्रत्यासत्तित्वमाशङ्क्य सिद्धान्तितं तत्रैव चिन्तामणिकृता "उच्यते यदि सामान्यलक्षणा नास्ति तदानुकूलतर्कादिकं विना धूमादौ व्यभिचारसंशयो न स्यात् प्रसिद्धधूमे वह्निसम्बन्धावगमात् कालान्तरीयदेशान्तरीयधूमस्य मानाभावेनाज्ञानात् सामान्येन तु सकलधूमोपस्थितौ धूमान्तरे विशेषादर्शनेन संशयो युज्यते"।
अत्र दीधितिः "अत्र च सामान्यं लक्षणं स्वरूपं यस्या इत्यर्थे सामान्यमेव प्रत्यासत्तिः सामान्यं लक्षणं निरूपकं यस्या इत्यर्थे तु तज्ज्ञानम्। तत्राद्यमाह सा चेन्द्रियेति इन्द्रियेण सम्बद्धं धूमादि तस्य विशेषणं तद्विशेष्यकज्ञानप्रकारो धूमत्वादिरित्यर्थः। विशेषणतेत्यत्र भावार्थो न विवक्षितः तत्र विशेषणत्वं यस्या इति बहुव्रीहिर्वा सम्बद्धपदस्यैव वा परम्परासम्बन्धस्तत्सम्बन्धविशेष्यकज्ञानप्रकारोऽर्थः तथा च सैव विशेषणतेत्यर्थः। अत्र च बहिरिन्द्रियस्य लौकिकः सम्बन्धो ज्ञानस्य तदिन्द्रियजन्यत्वस्य नियामकम् एवञ्चाणुत्वेन यत्किञ्चिदणूपस्थितावपि सकलाणुगोचरो मानसो बोध इति वदन्ति एतेन धूलीपटले धूमभ्रमे तत्र च वह्निव्याप्तिग्रहे तत्त्वावता धूमत्वेन धूमेषु व्याप्त्यग्रहात् तद्दर्शनाद्वह्न्यनुमितिर्न स्यात् हेत्वभावेन परामर्शानुत्पादात् किन्तु धर्मिणि दोषवशान्नयनेनाप्रत्यक्षेण सामान्यप्रकारीभवता सामान्येन प्रत्यक्षेण वा लौकिकसन्निकर्षविगमेऽपि चाक्षुषज्ञानापत्तिरिति परास्तम्। सामान्यस्य सखण्डाखण्डभेदेन द्वेधा सखण्डे चाखण्डमेव परम्परया सम्बद्धं प्रत्यासत्तिः येन सम्बन्धेन चेन्द्रियसम्बद्धे सामान्यं ज्ञायते तेन सम्बन्धेनाधिकरणानां प्रत्यासत्तिरिति"।
दीधितिकृता तु स्वमते सामान्यलक्षणायाः प्रत्यासत्तित्वं निराकृतं तत्र दृश्यम्। तच्च विस्तरभयादिह नोक्तम्।

**सामान्या** स्त्री समानैव स्वार्थे ष्यञ् अजा० टाप्। साधारणस्त्रियां वेश्यायाम् "धनमात्रकामार्थं सकलपुरुषाभिलाषा। सा त्रिधा। अन्यसम्भोगदुःखिता मानवती वक्रोक्तिगर्विता च सापि द्विविधा। प्रेमगर्विता सौन्दर्य्यगर्विता च" रसमञ्जरी। [२निन्दायाञ्च अमरः।

**सामि** अव्य० साम-इन्। १अर्द्धे "सामिघटिता" नैषधम्।

**सामिधेनी** स्त्री सम्-इन्ध-करणे ल्युट् नि०। अग्निसमिन्धनसाधने १ऋग्भेदे अमरः। २समित्काष्ठे मेदि०। सामिधेनीशब्दनिरुक्तिश्च शत० ब्रा० १।३।५।१ "समिन्धे सामधेनीभिर्होता तस्मात् सामिधेन्योनाम"। "इध्मेनाग्नि-

समिन्धनहेतुभूताः सामिधेनीविधायनम् तासां नाम वि-
र्देश्च सामधेनीभिः प्रयो वाजा इत्यादिभिर्ऋग्भिः" आ०
तासर्चः आश्व०श्रौ०१।२।७। "अग्न सामिधेन्यः प्रवो वाजा
अभिद्यवोऽस्य आवाहि वीतये अग्यानः२ ईडेन्यो
नमसास्तिरोऽर्ग्नि दूतं इचीनवे३ समिध्यमानो अध्वरेऽ
समिद्धो अग्न आहुतेति६।७ इ ।

**सामीप्य** न० समीपस्य भावः स्वार्थे वा ष्यञ् । १नैकट्ये
२निकटे च "सामीप्यात्तु सन्निकर्षेऽप्याधारसप्तविधः"
मुग्ध० व्याकरणम् । [२समुद्रभवे त्रि०।

**सामुद्र** न० समुद्रे भवः अण् । (करकच) १लवणे हेमच० ।

**सामुद्रक** न०समुद्रेणर्षिणा प्रोक्तम् वुञ् । कृष्णादिरेखादिना
स्त्रीपुरुषशुभाशुभलक्षणज्ञापके समुद्रर्षिकृते १ग्रन्थभेदे
"वामभागे तु नारीणां दक्षिणे पुरुषस्य च । निर्दिष्टं
लक्षणं तेषां समुद्रेण यथोदितम्" इति सामुद्रकसार-
मुद्रण" नैष०। सामुद्र स्वार्थे क । २समुद्रलवणे राजनि०

**सामुद्रिक** त्रि० समुद्रेण प्रोक्तं वेत्त्यधीते वा ठञ् । १स्त्री-
पुरुषशुभाशुभलक्षणज्ञापकग्रन्थाध्येतरि २तद्वेत्तरि च ।

**साम्परायिक** न० सम्परायाय आपदे परलोकाय वा हि-
तम् ठक् । १युद्धे अमरः २परलोकसाधने त्रि० ।

**साम्प्रतम्** अव्य०सम्+प्र+तन-डस । युक्ते । १उचिते २इ-
दानीमित्यर्थे अमरः ।

**सा(षा)म्ब** सान्त्वे पु० उभ०सक० सेट् । साम्बयति ते अस-
साम्बत् त । अयं बोपदेवमते न्याय्यः । [राजनि० ।

**साम्बर** न० सम्बरदेशे भवम् अण् । सम्बरदेशोद्भवे लवणे

**साम्भवी** स्त्री सम्बरः अस्त्यस्य प्रज्ञाद्यण् गौरा० ङीप् ।
रक्तलोध्रे शब्दच० । [धर्मे ।

**साम्य** न० समस्य भावः ष्यञ् । तुल्यत्वप्रयोजके साधारण-

**साम्राज्य** न० सम्राजो भावः ष्यञ् । १सार्वभौमत्वे "भेजे
साम्राज्यदीक्षितम्" रघुः "मण्डलाधिपत्यं राज्यं स्यात्
साम्राज्यं दशवर्षके" इत्युक्ते २दशवर्षपालाधिपत्ये च

**साय** पु० सो-घञ् । १दिनान्ते अमरः । २वाणे मेदि० ।

**सायंसन्ध्या** स्त्री सायम् दिनान्ते सन्ध्या, तत्र सन्ध्यायते
सम्+ध्यै-घञर्थे क वा । १दिनान्तसन्ध्यायाम् अमरः ।
२दिनान्ते उपास्यदेवताभेदे च । स्वार्थे कन् । ३तत्रो-
पासनायाम् ।

**सायक** पु० सो-ण्वुल् । १वाणे २खड्गे च अमरः ।

**सायकपुङ्खा** स्त्री सायकस्य इव पुङ्खो यस्याः इत्व० । शरपुङ्खा-
वृक्षे राजनि० ।

**सायन्तन** त्रि०सायम्भवः सायम्+ट्युल् तुट् च । दिनान्तभवे ।
स्त्रियां ङीप् । "सायन्तनीं तिथिप्रगल्भः" इति भट्टिः ।
"सन्ध्यां सायन्तनीं कुर्यात् द्वादशराटिष्वपि प्रिये ! ।
अकुर्वन्निरयं याति यतो नित्यामसंक्रिया" इत्युक्तोत्त-
तन्त्रे १पटले ।

**सायिका** स्त्री सो-ण्वुल् टाप् । क्रमस्थितौ शब्दर० ।

**सायम्** अव्य० सो-अमु । दिनान्ते "सायं सन्ध्यां त वर्त्तते"
इत्युद्भटः ।

**सायाह्न** पु०सायोऽह्नः एक०त० टच् समा० च ह्लादेशः । १दि-
नान्ते "सायाह्न स्तमुहूर्त्तः स्यात् श्राद्धं तत्र न कार-
येत्" इत्युक्ते पञ्चधाविभक्तदिनस्य त्रिमुहूर्त्तात्मके पञ्चमे
२भागभेदे च ।

**सायुज्य** न० सह युनक्ति-युज-क्विप् सादेशः सयुज् तस्य
भावः ष्यञ् । १सहयोगे पञ्चविधमुक्तिमध्ये २एकत्व-
रूपे मुक्तिभेदे च "सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्व-
मप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः"
भाग० ३स्क०२९अ०। [रत् त अनेकाचकत्वात् बोपदेवः

**सार** दौर्बल्ये अद० चु०उभ०सक० सेट् । सारयति ते असमा-

**सार** न० सृ-घञ्, सार-अच् वा । १जले २धने ३न्याय्ये
त्रि० मेदि० ४नवनीते न०राजनि०,५लौहे भावप्र०। ६वने
शब्दर० । ७बले दक्षिरांशे ८मज्जनि पु० अमरः १०स्थ-
रांशे ११वायौ जटा० । १२रोगे धरणिः १३अतिदृढे
१४पाशके पु० शब्दर० १५दध्यग्रे पु० हेमच० १६श्रेष्ठे
१७वरे च त्रि० अमरः । १८परमेश्वरे "एकं शिवं
शान्तमनन्तमच्युतं परात्परं ज्ञानमयं विशेषम् । अद्वैत
मत्यपर्याचितरूपं सारत्वेकं नास्ति सारं ततोऽन्यत् ।
यस्मादेतज्जायते विश्वमग्र्यं यस्मिन् जीवं त्वत्र पञ्च-
तृप्तितम् । आकाशवच्चेष्वजातस्य छित्त्वा यद्विश्वं वै
म्रियते तत्र सारम् । अष्टाङ्गयोगैर्यदवाप्नुविष्णवं योगी
मुनक्त्याकरूपं वदेत । निवर्त्तते प्राप्य यत्र न लोके तद्वै
सारं सारमन्यत्र नास्ति" कालिकापु० २७अ०।

**सारक** पु० सारयति रेचयति सृ-णिच्-ण्वुल् । १जयपाले
राजनि० । २रेचककृत्माले त्रि० ।

**सारखदिर** पु० कर्म० । विट्खदिरे राजनि० ।

**सारगन्ध** पु० सारः श्रेष्ठोगन्धो यस्य । चन्दने शब्दच० ।

**सारघ** न० सरघाभिर्निर्वृत्तम् अण् । मधुनि पौत्ते जटा० ।

**सारङ्ग** पुंस्त्री० सृ-अङ्गच् । १चातकखगे अमरः । २हरिणे
३गजे मेदि० । ४भृङ्गे ५खगभेदे विश्वः । ६छत्रे ७राजहंसे

८चित्रमृगे ९वाद्यभेदे १०वस्त्रे शब्दर० ११नानावर्णे १२मयूरे १३कामदेवे १४चापे १५केशे १६स्वर्णे १७आभरणे १८पद्मे १९शङ्खे २०चन्दने २१कर्पूरे २२पुष्पे २३कोकिले २४मेघे २५सिंहे २६रात्रौ २७भूमौ २८दीप्तौ च नानार्थकोषः। शारसङ्गमत्र शक०। शारङ्गोऽपि चित्रमृगादौ। चित्रवर्णे त्रि०अमरः। वर्णत्र जातौ स्त्रियां ङीष्

**सारङ्गिक** पु० सारङ्गं मृगं हन्ति ठक्। व्याधे त्रि०कौ०।

**सारज** न० सारात् दध्यग्रात् जायते जन–ड। नवनीते शब्दच०।

**सारण** न० सृ–णिच्–ल्युट्। १गन्धद्रव्ये धरणिः। २अतीसाररोगे ३रावणसचिवभेदे च हेमच०। ४भद्रबलायां धरणिः ५आम्रातके शब्दच०।

**सारणि(णी)** स्त्री सृ–णिच्–अनि वा ङीप्। १क्षुद्रनद्यां २प्रसारिण्याम् उणादि० वक्त्रपेत्वाङ्कभेद सूचितग्रहगत्यादिबोधके ज्योतिषग्रन्थभेदे च।

**सारण्ड** पु०सृ–णिच् वा०अण्ड। सर्पाण्डे जटा०। [श्रवः।

**सारतर** पु० सारप्रधानः जलप्रधानस्तरः। कदलीवृक्षे धन-

**सारथि** पु० सृ–अथिण्, सह रथेन सरथः घोटकः तत्र नियुक्तः इञ् वा। रथादिवाहनप्रेरके नियन्तरि अमरः। तल्लक्षणं मात्स्ये १८९ अ० यथा "निमित्तशकुनग्राही हयशिक्षाविशारदः। हयायुर्वेदतत्त्वज्ञो भूविभागविशेषवित्। स्वामिभक्तो महोत्साही सर्वेषां च प्रियंवदः। शूरश्च कृतविद्यश्च सारथिः परिकीर्त्तितः"।

**सारदा** स्त्री सारं ददाति दा–क। १सरस्वत्याम् शब्दर०। "लिखति यदि गृहीत्वा सारदा सर्वकालम्" शिवस्तवः। २सारदातरि त्रि०।

**सारद्रुम** पु० सारप्रधानो द्रुमः। खदिरवृक्षे राजनि०।

**सारपादप** पु०सारयति सारः निम्नक०। धामनिवृक्षे रत्नमा०

**सारभाण्ड** न० कर्म०। १वणिक्पाले २भूषणपात्रे च।

**सारमिति** पु० सारं यथार्थं मिनोत्यनेन मा–करणे क्तिच्। १वेदे हेमच० भावे क्तिच्। २सारज्ञाने स्त्री।

**सारमूषिका** स्त्री सारे मूषिकेवापहारकत्वात्। देवदालीवृक्षे राजनि०। [१कुक्कुरे २तद्योषिति स्त्री ङीप्।

**सारमेय** पुंस्त्री सरमायाः कश्यपपत्न्याः अपत्यम् ढक्।

**सारलौह** न० लौहेषु सारः राज०। लौहसारे (इस्पात)

**सारव** त्रि० सरय्वां भवः अण् नि०। सरयूनदीभवे अमरः

**सारस** न० सरो निवसत्यस्तिरस्य अण्। १पद्मे अमरः २कटग्रामरणे च। सह रसेन वर्त्तते अण्। ३चन्द्रे ४जनामख्याते पक्षिणि पुंस्त्री० स्त्रियां ङीष्। सरस इदम् अण्। ५सरोवरसम्बन्धिनि त्रि०। "नद्याः शैवलराज्ञाध्या यत्र संस्तृत्य तिष्ठति। तत्सरोजं जलं ज्ञेयं सारसं परिकीर्त्तितम्" भावप्र० उक्ते ६जलभेदे "सारसं सलिलं बल्यं तृष्णाघ्नं मधुरं लघु। रोचनं तुवरं रूक्षं बद्धमूत्रमलं हितम्" तत्रोक्तास्तद्गुणाः।

**सारसन** न० सारं सनोति सन–अच्। १स्त्रीकट्याभरणे काञ्च्यां कञ्चुकादावर्थं मध्यभागे निबद्धे २पट्टिकादौ च अमरः।

**सारस्वत** पु० सरस्वती देवताऽस्य, सरस्वत्या इदं वा अण्। १बिल्वदण्डे २देशभेदे हेमच०। पञ्चगौडमध्ये ३ब्राह्मणभेदे ४सरस्वतीप्रतिपालितमुनिभेदे ५ब्रह्मदिनरूपे कल्पभेदे च "सारस्वतस्य कल्पस्येति" मत्स्यपुराणम् ६सरस्वतीसम्बन्धिनि त्रि० "तस्यां पूर्वाह्णसमये कुर्यात् सारस्वतोत्सवम्" ति०त०। ७सरस्वतीदेवताके च त्रि०। "तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैरिति" स्मृतिः। मुनिभेदजन्मकथा च भा०श०५२अ० "ब्रह्मर्षे! (दधीच!) तव पुत्रोऽयं त्वद्भक्त्या धारितो मया। दृष्ट्वा तेऽप्सरसं रेतो यत् स्कन्नं प्रागमन्मुने। तत् कुक्षिणा वै ब्रह्मर्षे! त्वद्भक्त्या धृतवत्यहम्" इत्युपक्रमे "तस्मात् सारस्वतः पुत्रो महांस्ते वरवर्णिनि!। तवैव नाम्ना प्रथितः पुत्रस्ते लोकभावनः। सारस्वत इति ख्यातो भविष्यति महातपाः। एष द्वादश वार्षिक्यामनावृष्ट्यां द्विजर्षभान्। सारस्वतो महाभागो वेदानध्यापयिष्यति" इति सरस्वतीं प्रति दधीचोक्तिः तस्य वेदाध्यापनकथा च तत्रैव अध्यायशेषे "अनावृष्टिरनुप्राप्ता राजन् द्वादशवार्षिकी। तस्यां द्वादशवार्षिक्यामनावृष्टौ महर्षयः। वृत्त्यर्थं प्राद्रवन् राजन्! क्षुधार्त्ताः सर्वतो दिशम्। दिग्भ्यस्तान् प्रद्रुतान् दृष्ट्वा मुनिः सारस्वतस्तदा। गमनाय मतिश्चक्रे तमुवाच सरस्वती। न गन्तव्यमितः पुत्र! तवाहारमहं सदा। दास्यामि मत्स्यप्रवरानुष्यतामिह भारत!" ततः तद्दत्तमत्स्याहारेण प्राणानधारयत् वेदांश्चाधारयत् अतीतायामनावृष्टौ अभ्यासाभावेन नष्टवेदा अन्ये मुनयस्ततो वेदान् लेभिरे तत्कथा "तस्मादेवानुप्राप्य पुनर्धर्मं प्रचक्रिरे। षष्टिर्मुनिसहस्राणि शिष्यत्वं प्रतिपेदिरे। सारस्वतस्य विप्रर्षेर्वेदाध्ययनकारणात्"। देशभेदश्च "मध्ये सारस्वता मत्स्याः शूरसेनाः समाथुराः। पाञ्चालमाल्यमाण्डव्यं कुरुक्षेत्रमजाकुलम्"

इत्युक्ते मध्यदेशभेदः सोऽभिजनोऽस्य अण् । तद्देशवासिजने । तन्मत्यब्राह्मणभेदश्च "सारस्वताः कान्यकुब्जा गौडमैथिलकोत्कलाः । पञ्च गौडा इति ख्याता विन्ध्योत्तरवासिनः" पुराणान्तरम् ।

**सारस्वतकल्प** पु० कर्म० । १तन्त्रोक्ते सरस्वत्या उपासनार्थके विधानभेदे २तन्नामके ब्रह्मदिने च । कल्पशब्दे १८१६ पृ० दृश्यम् । [शब्दर० २दूर्वायाञ्च शब्दच० ।

**सारा** स्त्री सारयति सृ-णिच्-अच् । १कृष्णत्रिवृतायाम्

**साराल** पु० सारमालाति आ+ला-क । तिलवृक्षे शब्दर० ।

**सारि(री)** पुंस्त्री० सृ-इण् स्त्रीत्वपक्षे वा ङीप् । १पाशके "सारीं चरन्तीं सखि ! मारयेति" नैषधम् । २पक्षिभेदे च (शालिक) शब्दच० । ङीबन्तः ३सप्तलायां राजनि०

**सारिका** स्त्री सरति गच्छति सृ-ण्वुल् । पक्षिभेदे(शालिक) अमरः ।

**सारिणी** स्त्री सृ-णिनि । १सहदेवीलतायां २कार्पास्यां ३दुरालभायां ४कपिलशिंशपायां ५प्रसारिण्यां ६रक्तपुनर्नवायाञ्च राजनि० ।

**सारिवा** स्त्री सारिरिव वाति वा-क । (अनन्तमूल)लताभेदे सा च दुग्धगर्भा अल्पवृपत्रा सुगन्धा च । सा च कृष्णशुक्लभेदात् द्विविधा "सारिवायुगलं स्वादु स्निग्धं शुक्रकरं गुरु । अग्निमान्द्यारुचिश्वासकासामविषनाशनम् । दोषत्रयास्रप्रदरज्वरातीसारनाशनम्" भावप्र० । [भवः ठक् । विषभेदे अमरः ।

**सारोष्ट्रिक** पु० सारः श्रेष्ठ उष्ट्रो यत्र सारोष्ट्रः देशभेदस्तत्र

**सार्थ** पु० सृ-थन् स्वार्थे अण् । १समूहे २जन्तुसमूहे अमरः "स अवत्सरितार्थसार्थकोलतनाम" नैषधम् । सह अर्थेन वाच्येन वा । ३वणिक्समूहे मेदि० । ४धनिनि त्रि० । अथ । सार्थक । ५अर्थसहिते त्रि० ६शब्दे पु० "सार्थकः स्वार्थबोधकर्दिति" शब्दशक्तिप्रकाशिका ।

**सार्थवाह** पु० सार्थं वहति वह-अण् । वणिग्जने अमरः

**सार्द्र** त्रि० सह आर्द्रेण । आर्द्रतायुक्ते अमरः ।

**सार्द्धम्** अव्य० सह+ऋध-णमु । १साहित्ये अमरः । सह अर्द्धेन । सार्द्ध २अर्द्धयुक्ते त्रि० ।

**सार्प** न० सर्पदेवताऽस्य अण् । अश्लेषानक्षत्रे ।

**सार्पिष्क** त्रि० सर्पिषा संस्कृतम् ठक् । घृतसंस्कृते व्यञ्जनादौ हेमच० । [विदिते ।

**सार्वजनीन** त्रि० सर्वेषु जनेषु विदितः खञ् । सर्वलोक-

**सार्वत्रिक** त्रि० सर्वत्र भवः ठक् । सर्वस्मिन् कालादौ भवे ।

**सार्वधातुक** न० सर्वधातून् व्याप्नोति ठक् । व्याकरणोक्ते सर्वधातुप्रकृतिके लट् लोट लङ् विधिलिङ् इत्यात्मके चतुर्लकारे [वृद्धिः । सर्वभूतव्यापके ।

**सार्वभौतिक** त्रि० सर्वाणि भूतानि व्याप्नोति ठञ् द्विपद्-

**सार्वभौम** पु० सर्वस्या भूमेरीश्वरः सर्वासु भूमिषु विदितो वा अण् द्विपदवृद्धिः । १चक्रवर्त्तिनि नृपे २उत्तरदिक्स्थे गजे च अमरः । ३विदुरथवंशपपुत्रे पु० भाग० ९।२२अ० । ४सकलभूमिसम्बन्धे त्रि० ।

**सार्वलौकिक** त्रि० सर्वेषु लोकेषु विदितः ठञ् द्विपदवृद्धिः । सर्वलोकेषु विदिते "स रामः सार्वलौकिकः" भट्टिः ।

**सार्वविभक्तिक** त्रि० सर्वासु विभक्तिषु तदर्थे भवः-ठञ् । सर्वविभक्त्यर्थे विहिते तसिलादौ प्रत्यये पा० ।

**सार्षप** त्रि० सर्षपस्य विकारः अण् । सर्षपविकारतैलादौ "कटुष्णं सार्षपं तैलम्" स्मृतिः ।

**साल** पु० सल-घञ् । १प्राकारे "रसालसालः समदृश्यतामुना" नैषधम् । २स्वनामख्याते वृक्षभेदे "सालस्तु सर्जकार्श्याश्वकर्णकः सस्यसंवरः । अश्वकर्णः कषायः स्यात् व्रणस्वेदकफक्रमीन् । भग्नविद्रधिबाधिर्य्ययोनिकर्णगदान् हरेत् । सर्जोऽन्योऽजकर्णः स्यात् सालो मरिचपत्रकः । सालकर्णः कटुस्तिक्तः कषायोष्णो व्यपोहति । कफवातरुजतिगदान् मेहकुष्ठविषव्रणान्" भावप्र० । एतत्परत्वे तालव्यादितापि । ३प्राकारे मेदि० ४सालमत्स्ये भरतः ५राले राजनि० ।

**सालन** पु० सालः कारणत्वेनाऽस्त्यस्य पामादित्वात् न । सालनिर्यासे (धुना) रत्नमा० ।

**सालनिर्यास** पु० ६त० । सर्जरसे (धुना) रत्नमा० ।

**सालपर्णी** स्त्री सालस्येव पर्णान्यस्याः ङीप् । (सालपानि) वृक्षे शब्दर० ।

**सालपुष्प** न० सालस्येव पुष्पं यस्य । स्थलपद्मे शब्दर० ।

**सालभञ्जिका** स्त्री सालं भनक्ति भन्ज-ण्वुल् । १काष्ठादिनिर्मिते कृत्रिमक्रीड़ासाधने पुत्तलिकाभेदे २वेश्यायाञ्च जटा० ।

**सालरस** पु० ६त० । (धुना) राले राजनि० ।

**सालवेष्ट** पु० सालं वेष्टयति वेष्ट-अण् । राले (धुना)राजनि०

**सा(शा)ला** स्त्री सालः प्राकारोऽस्त्यस्याः अच् । गृहे भरतः

**सा(शा)लावृक** पुंस्त्री० सालायां वृक इव । कुक्कुरे । स्त्रियां ङीष् । [शब्दर० स्त्रियां ङीष् ।

**सा(शा)लूर** पुंस्त्री० स(श)ल-ऊरच् णिच्च । भेके मण्डूके

**सा(शा)लेय** पु० शा(शा)लायां भवः ढक्। मधुरिकायाम् अमरः

**सालोक्य** न० समानो लोकोऽस्य तस्य भावः ष्यञ्। सायुज्यशब्दोक्ते चतुर्विधमुक्तिमध्ये एकलोकस्थवासरूपे मुक्तिभेदे।

**सा(शा)ल्व** पु० ब०व० सौमदेशे। तेषां राजा अण्। तद्देशाधिपे नृपभेदे स च श्रीकृष्णेन हतः भा० व० १४अ० दृश्यम्। [हेमच०।

**सा(शा)ल्वहन्** पु० साल्वं नृपं हतवान् हन-क्विप्। विष्णौ

**सावधान** त्रि० सह अवधानेन। १सचेतने सतर्के २मनोभिनिवेशयुक्ते च।

**सावन** न० सवनं यागाङ्गं स्नानं सोमनिष्पीडनं वा तस्येदमण्। "अहोरात्रेण चैकेन सावनो दिवसः स्मृतः" ज्योतिषात्तोक्ते १अहोरात्रात्मके दिवसे, सवनत्रयस्य अहोरात्रसाध्यत्वादस्य तत्सम्बन्धित्वम्। तच्चिह्नेऽहिवसात्मके २मासभेदे च पु० "चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः" विष्णु ध० "सावने च तथा मासि त्रिंशत्सूर्योदयाः स्मृताः" म० त०। "सूतकादिपरिच्छेदो दिनमासाब्दपस्तथा। मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तितः" इति सूर्यसिद्धान्तः। सावनमासकृत्यानि च विशेषतः कानिचित् म०त० पितामहेनोक्तानि "विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः" "आदिपदेन समर्भितवृद्धिप्रायश्चित्तायुर्दायाशौचभोधानां सवनदीनन्नोखवननामकरणान्नप्राशननिष्क्रमणचूडादिपरिग्रहः" म० त० रघु०। तत्र सावनेन मानेनैव सर्वस्य गणना "सम्प्राप्यपाह्मासस्य सावनेन लोकस्य यत् साहाय्यव्यवहारकर्म विष्णु ध० ३वर्षभेदे "सौरेणाब्दस्तु मानेन यदा भवति भार्गव!। सावनेन च मानेन दिनषट्कं प्रपूर्य्यते"। "सौरवर्षे दिनषट्काधिकसावनवर्षो भवतीति रघु०। दिनषट्कमिति प्रायिकम् सौरवर्षे सावनस्य ५।१५।३१।३०।२४ दिनाद्याधिक्यस्यैव सिद्धान्तोक्तेः। ४यज्ञान्ते ५यजमाने ६वरुणे च पु० मेदि०।

**सा(शा)वर** पु० श(श)वरेण निर्वृत्तः अण्। १पापे २अपराधे च विश्वः। ३लोध्रे शब्दच०।

**सावर्णि** पु० सवर्णायां सूर्यपत्न्यां संज्ञायां भवः अण्। सवर्णागर्भजे सूर्य्यजे अष्टमे मनौ इञ्। सावर्णिरपत्र "सावर्णिः सूर्यतनयो यो मनुः कथ्यतेऽष्टमः" "सूर्य्याज्जन्म समासाद्य सावर्णिर्भविता मनुः" देवीभा०। "छायासंज्ञा सुतो योऽसौ द्वितीयः कथितो मनुः। पूर्वजस्य सवर्णोऽसौ सावर्णस्तेन कथ्यते" देवीभाग० तन्नामनिरुक्त्यन्तरमुक्तम् "विवस्वतस्य द्वे भार्य्ये विश्वकर्म्मसुते शुभे। संज्ञा छाया च राजेन्द्र! ये प्रागभिहिते तव। तृतीयां वडवामेके तासां संज्ञासुतास्त्रयः। यमो यमी श्राद्धदेवश्छायायाश्च सुतान् शृणु। सावर्णिस्तपती कन्या भार्य्या संवरणस्य या। शनैश्चरस्तृतीयोऽभूत् अश्विनौ वडवात्मजौ। अष्टमेऽन्तर आयाते सावर्णिर्भविता मनुः" भाग० ८।१३अ०। कल्पभेदादविरोधः।

**सावित्र** पु० सविता देवताऽस्य अण्। १विप्रे हेमच०। २कर्णविशेषे स्त्री ङीप्। "सावित्रीमात्रसारोऽपीति" मनुः। सा च ३सत्यवतोभार्य्यायाम् स्त्री ४सवितृदेवताके पदार्थे त्रि०। ५यज्ञोपवीते न० शब्दच०। स्वार्थे अण्। ६सूर्ये पु० शब्दच०। तस्येदम् अण्। ७महादेवे ८वसौ च पु० मेदि०। ९गर्भे शब्द० १०ब्रह्मपत्न्यां स्त्री ११दुर्गायां च स्त्री मेदि०। तन्नामनिरुक्तिः देवीपु० ४४अ० "त्रिदशैरर्चिता देवी वेदमातेषु पूजिता। भावशुद्धस्वरूपा तु सावित्री तेन सा स्मृता" वह्निपु०। अन्या निरुक्तिः "सर्वलोकप्रसवनात् सविता स तु कीर्त्त्यते। यतस्तद्देवता देवी सावित्रीत्युच्यते ततः। वेदप्रसवनाच्चापि सावित्री प्रोच्यते बुधैः"। ब्रह्मपत्नी च मत्स्यपु० "ततः संजपतस्तस्य भित्त्वा देहमकल्मषम्। स्त्रीरूपमर्द्धमकरोदर्द्धं पुरुषरूपवत्। शतरूपा च सा ख्याता सावित्री च निगद्यते। सरस्वत्यथ गायत्री ब्रह्माणी च परन्तप!" मत्स्यपु० ३अ०। गायत्रीशब्दे दृश्यम्।

**सावित्रीव्रत** न० सावित्रीपूजनमुद्दिश्य कर्त्तव्यं व्रतम्। ज्यैष्ठकृष्णचतुर्दश्यां सावित्रीपूजनार्थे व्रते तद्विधिर्यथा "शिवाऽघोरा तथा प्रेता सावित्री च चतुर्दशी। कुहूयुक्तैव कर्त्तव्या कुह्वामेव हि पारणम्" ति०त० धृतवचनम्। यमः "दत्त्वा जलाञ्जलीन् सप्त कृष्णपक्षे चतुर्दशीम्। धर्मराजं समुद्दिश्य सर्वपापैः प्रमुच्यते"। लिङ्गपुराणे "उपवासश्चतुर्दश्यां महापातकनाशकः"। पराशरः "मेषे वा वृषभे वापि सावित्रीं तां विनिर्दिशेत्"। तां चतुर्दशीम् "ज्यैष्ठे कृष्णचतुर्दश्यां सावित्रीमर्चयन्ति याः। वटमूले सोपवासा न ता वैधव्यमाप्नुयुः"। राजमार्त्तण्डकृत्यचिन्तामण्योः "ज्यैष्ठे मासि चतुर्दश्यां सावित्रीव्रतमुत्तमम्। अवैधव्याय कुर्वन्ति स्त्रियः श्रद्धासमन्विताः"। व्रतमात्रे तु अनन्ततृतीयाव्रतोक्तमाचरन्ति दृष्टपरिकल्पनान्यायात् तदुक्तं मत्स्यपुराणे "गर्भिणी सूतिका नक्तं कुमारी च रजस्वला। यदाऽशुद्धा तदा-

न्येन कारयेत् क्रियते यदा" । उपवासाशक्तौ नक्तं भोजनं कुर्य्यात् "उपवासे त्वशक्तानां नक्तं भोजनमिष्यते" इति तद्वत्तवचनान्तरात् । अशुद्धा चेत् पूजां कारयेत् । कायिकञ्चोपवासादिकं सदा शुद्धया अशुद्धया च स्वयं क्रियते । एवं स्मृतिपरिभाषिकायां वर्द्धमानोपाध्यायाः । नारदः "दिवाभागे त्वमोदश्यां यदा चतुर्दशी भवेत् । तत्र पूज्या महासाध्वी देवी सत्यवता सह" । दिवाभागे दण्डद्वयमात्रसत्त्वेऽपि अतएव प्रदोषे व्रतमाचरन्ति । पूर्वाह्णे तद्विधत्वेऽपि । पराह्णे त्रिसन्ध्यव्यापित्वे पराह्ण एव त्रिसन्ध्यव्यापिनीति वचनात् । यदा तु पूर्वपरयोर्न तथाविधा तदापि पराह्ण एव यथा ज्योतिषे "चतुर्दश्याममावास्या यदा भवति नारद । उपोष्या पूजनीया सा चतुर्दश्यां विधानतः" । सा सावित्री । तत्राभावास्यायां सावित्रीव्रतविधानं शिवायोरेति वचनञ्च तत्परम् । पराशरः "सावित्रीमर्चयित्वा तु फलाहारा परेऽहनि । तत्राविधवा नारी विषभोगान् लभेत सा" ।

**सावित्रीसूत्र** न० सावित्रीदीक्षाकालिकं सूत्रम् शाक० । यज्ञोपवीते पञ्चप० ।

**साश्रुधी** स्त्री साश्रु ध्यायति ध्यै–क्विप् सम्प्र०। श्वश्र्वाम् त्रिका०

**सास्ना** स्त्री० षस–न णिच् । गोगलस्थिते लोमसंघातात्मके कम्बले अमरः ।

**सास्र** त्रि० सह अस्रेण । अश्रुजलान्विते ।

**साहितात्माद्रं** न० साहि अहिमहितं तात्माद्रं यत्र । कांस्ये त्रिका० तस्य रक्तसहितताम्राद्रं जातत्वात् तथात्वम् साहिताम्राद्रं इत्येव पाठः सम्यक् आहिर्नागो रङ्गः

**साहचर्य्य** न० सहचरस्य भावः ष्यञ् । १समभिव्याहारे, २सान्निध्ये ३सामानाधिकरण्ये च ।

**साहस** न० सहसा बलेन निर्वृत्तम् अण् । १बलेन कृते चौर्य्यस्त्रीसंग्रहादौ दुष्टकर्मणि, "सहसा क्रियते यत् तत् साहसमिति स्मृतमिति" स्मृतिः । तद्विवृतिः वीरमि० "तस्य स्वरूपमाह नारदः "सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः । तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते" इति । तस्य चातुर्विध्यमाह बृहस्पतिः "मनुष्यमारणञ्चौर्यं परदाराभिमर्शनम् । पारुष्यमुभयञ्चेति साहसं स्याच्चतुर्विधम्" इति । उभयं पारुष्यं वाग्दण्डपारुष्ये । तस्य त्रैविध्यमाह नारदः "तत्पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमन्तथा । उत्तमञ्चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक्" इति । एतेषां स्वरूपमाह स एव "फलमूलदकादीनां क्षेत्रोपकरणस्य च । भङ्गाक्षेपोपमर्दाद्यैः प्रथमं साहसं स्मृतम् । वासःपश्वन्नपानानां गृहोपकरणस्य च । एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् । व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम् । प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम्" इति । भङ्गः फलादेः स्वरूपनाशनम् । आक्षेप आक्रोशः बाक्तिरस्करणमिति यावत् । उपमर्दः स्वरूपावयवैश्च पीड़नम् । एतेनैव प्रकारेणेत्यर्थः । त्रिविधेऽपि साहसे दण्डमाह नारदः "तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः । मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशतावरः । उत्तमे साहसे दण्डः सहस्रावर इष्यते । वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने । तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे" इति । ब्राह्मणस्य तु महत्यपराधे शारीरदण्डाभावमाह स एव "अविशेषेण सर्वेषामेव दण्डविधिः स्मृतः । बधादृते ब्राह्मणस्य न वधं ब्राह्मणोऽर्हतीति" । अथोऽपि "न शारीरो ब्राह्मणस्य दण्डो भवति कर्हिचित्" इति । महत्यपराधे ब्राह्मणस्य दण्डमाह स एव "शिरसो मुण्डनं दण्डस्तस्य निर्वासनं पुरात् । ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन च" इति । परद्रव्यापहरणरूपसाहसस्वरूपं तत्र च दण्डमाह याज्ञवल्क्यः "सामान्यद्रव्यप्रसभहरणं साहसं स्मृतम् । तन्मूल्याद् द्विगुणो दण्डो निह्नवे तु चतुर्गुणः" इति । बहुभिर्जनैः प्रहरादिकाक्रमेण रक्ष्यमाणस्य द्रव्यस्य बलात्कारेण हरणं साहसरूपं कौर्यमिति पूर्वार्द्धार्थः । तन्मूल्यादपहृतद्रव्यमूल्यात् । निह्नवे अपलापे । यः साहसं करोति तद्द्विगुणन्दमम् । यस्तु साहसं कृत्वा निह्नुते स चतुर्गुणन्दाप्य इत्युत्तरार्द्धार्थः । साहसिकस्य प्रयोजयितारं प्रत्याह स एव "यः साहसं कारयति स दाप्यो द्विगुणन्दमम् । यस्त्वेवमुक्त्वाहन्दाता कारयेत्स चतुर्गुणम्" इति । द्विगुणन्दमं साहसिकदण्डाद्द्विगुणं दण्डम् । साहसिकविशेषं प्रत्याह स एव "अर्घ्याक्रोशातिक्रमकृद्भ्रातृभार्याप्रहारदः । संदिष्टस्याप्रदाता च समुद्रगृहभेदकृत् । सामन्तकुलिकादीनामपकारस्य कारकः । पञ्चाशत्पणिको दण्ड एषामिति विनिश्चयः । स्वच्छन्द

विधवागामी विक्रुष्टेनाभिधावकः । अकारणेन विक्रोष्टा चाण्डालश्चोत्तमान् स्पृशन् । शूद्रप्रव्रजितानाञ्च दैवे पित्र्ये च भोजकः । अयुक्तं शपथं कुर्व्वन् अयोग्यो योग्यकर्म्मकृत् । वृषक्षुद्रपशूनाञ्च पुंस्त्वस्य प्रतिघातकृत् । साधारणस्यापलापी दासीगर्भविनाशकृत् । पितृपुत्त्रस्वसृभ्रातृदम्पत्याचार्य्यशिष्यकाः । एषामपतितान्योन्यत्यागी च शतदण्डभाक्” इति । “अज्ञानकर्त्तृके साहसिके पित्रादिवान्धवाः । प्रष्टव्या राजपुरुषैः सामादिभिरुपक्रमैः । विज्ञेयोऽसाधुसंसर्गाच्चिह्नैर्होढेन वा नरैः । एषोदिता घातकानान्तस्कराणाञ्च भावना । गृहीतः शङ्कया यस्तु न तत्कार्य्यं प्रपद्यते । शपथेन विशोद्धव्यः सर्व्ववादेष्वयं विधिः” इति । चिह्नं रक्तलेपादि होढोक्तस्य धनादिकम् । ज्ञानानन्तरकर्त्तव्यमाह व्यासः “ज्ञात्वा तु घातकं सम्यक् ससहायं सवान्धवम् । हन्याच्चित्रवधोपायैरुद्वेजनकरैर्नृपः” इति । बृहस्पतिः “प्रकाशघातका ये तु तथा चोपांशुघातकाः । ज्ञात्वा सम्यग्धनं हृत्वा हन्तव्या विविधैर्व्वधैः” इति । अब्राह्मणक्षत्त्रियादिविषयमेतत् । यत आह बौधायनः “क्षत्त्रियादीनां ब्राह्मणस्य वधे वधः सर्व्वस्वहरणञ्च तेषामेव तुल्यापकृष्टवधे यथाबलमनुरूपं दण्डञ्च कल्पयेदिति” तेषां क्षत्त्रियादीनान्तुल्यापकृष्टवधे सजातीयहीनजातीयवधे दण्डं शारीरदण्डम् । एकघातार्थप्रवृत्तानां बहूनान्दोषानुरूपं दण्डमाह कात्यायनः “एकश्चेद्बहवो हन्युः संरब्धाः पुरुषं नराः । मर्म्मघाती तु यस्तेषां स घातक इति स्मृतः” । यो मर्म्मघातकः स एव वधापराधदण्डभागित्यर्थः । स एव “आरम्भकृत् सहायश्च दोषभाक्तानुदेशकः । आश्रयः शस्त्रदाता च भक्तदायी विकर्म्मिणाम् । युद्धोपदेशकश्चैव तद्विनाशप्रवर्त्तकः । उपेक्षाकार्य्ययुक्तश्च दोषवक्तानुमोदकः । अनिषेद्धा क्षमो यः स्यात् सर्व्वे ते कार्य्यकारिणः । यथाशक्त्यनुरूपन्तु दण्डमेषां प्रकल्पयेत्” इति । बृहस्पतिरपि “एकञ्च बहवो यत्र प्रहरन्ति रुषान्विताः । मर्म्मप्रहारको यस्तु घातकः स उदाहृतः । मर्म्मघाती तु यस्तेषां यथोक्तं दापयेद्दमम् । आरम्भकृत् सहायश्च दोषभागी तदर्द्धतः । क्षतस्यालम्भहतस्य मर्म्मस्थानञ्च यत्नतः । सामर्थ्यञ्चानुबन्धञ्च ज्ञात्वा चिह्नैः प्रसाधयेत्” इति । विषयविशेषे मनुष्यवधकर्त्तुर्द्दण्डाभावं दोषाभावप्रदर्शनमुखेनाह मनुः “शस्त्रं द्विजातिभिर्ग्राह्यं धर्म्मो यत्रोपरुध्यते । द्विजातीनाञ्च वर्णानां विप्लवे कालकारिते । आत्मनश्च परित्राणे दक्षिणानाञ्च सङ्गरे । स्त्रीविप्राभ्युपपत्तौ च घ्नन् धर्म्मेण न दुष्यति” इति । यत्र देशे काले च धर्म्मः स्तटाकादिरूपो भेदनच्छेदनादिनाऽपरुध्यते तथा शूद्रेतरवर्णसङ्करे परदाराक्रमणादिरूपे राजाभावकालकारिते । तथात्मनः परतः प्राणसंशये । तथा दक्षिणानां सङ्करे गोग्रहणनिमित्तके युद्धे । तथा स्त्रीविप्राभ्युपपत्तौ दुर्व्वलहिंसानिवारणे । धर्म्मेण तान् घ्नन् न दुष्यति यतः । अतस्तत्र द्विजातिभिः स्वधर्म्माश्रयणरहितैरपि समर्थैः शस्त्रं ग्राह्यमित्यन्वयः । अत्र द्विजातिग्रहणं ब्राह्मणवैश्यविषयम् । प्रजापालनार्थं क्षत्त्रियस्य वचनान्तरेणैव शस्त्रग्रहणस्य प्राप्तत्वादित्यभिसन्धायैव बौधायन आह “ब्राह्मणार्थे गवार्थे च वर्णानां वापि सङ्करे । गृह्णीयातां विप्रविशौ शस्त्रं धर्म्मव्यतिक्रमे” इति । यत्तु “परीक्षार्थमपि ब्राह्मण आयुधं नाददीत” इत्यापस्तम्बवचनम् । यच्च बौधायनवचनम् “हास्यार्थमपि ब्राह्मण आयुधं नाददीतेति” तद्द्वयमपि धर्म्मोपरोधादिभिन्नविषयम् । साहसस्तेयस्य क्रोधलोभकृतत्वमाह बृहस्पतिः “साम्प्रतं साहसस्तेयं श्रूयतां क्रोधलोभजम्” इति । स्त्रीसंग्रहणाख्यसाहसस्वरूपमाह स एव “अनिच्छन्त्या यत् क्रियते सुप्तोन्मत्तप्रमत्तया । प्रलपन्त्या वा रहसि बलात्कारकृतन्तु तत्” इति । अनिच्छन्त्या परपुरुषेण सहेति शेषः । अनिच्छन्त्या यानि चिह्नानि तस्याः कर्त्तव्यं राजकर्त्तव्यं चाह संवर्त्तः “नेच्छन्त्या यानि चिह्नानि बलात्कारकृतानि च । परपुंसः प्रसङ्गे तु नारीणान्तानि दृष्टवतः । नखदन्तक्षतश्यामा सकचग्रहशोणिता । सद्यो निष्कासिता नारी बलात्कारेण दूषिता । एवं विक्रोशयन्ती च रुदती लोकसन्निधौ । तस्य नामवदन्ती च यथाहन्तेन दूषिता । शोणितैश्च विधैश्चिह्नैः व्याकृतपयोधरा । चिह्नान्यङ्गारकेशैश्च व्याकुलीकृतलोचना । राज्ञा सभ्यैः सभां नीत्वा स्वयमन्विष्य तत्क्षणात् । यद् ब्रूयात् सहजं तत्र तत् कर्त्तव्यं प्रयत्नतः । विवादे साक्षिणामत्र प्रकुर्व्वीत परिग्रहम् । प्रार्थनादभिशस्तस्य न दिव्यं दातुमर्हति” इति । अत्र दण्डमाह मनुः “सहस्रं ब्राह्मणो दण्ड्यो विप्रां गुप्तां बलाद्व्रजन्” इति । गुप्तां स्वनियमेन रक्षिताम् । क्षत्त्रियादिसवर्णविषये दण्डमाह बृहस्पतिः “सहसा

कामयेत् यस्तु पमन्तस्याखिलं हरेत् । उत्कृष्ट विक्रू-त्रयरूपौ भ्रामयेत् गर्दभेन तु” इति । कामयेत् परस्त्रियमुपेयात् । अयमेव दण्डोऽनुलोमप्रतिलोमजात्योः सजातीयपरभार्य्यागमने वेदितव्य इति मदनरत्ने । हीनजातीयपरस्त्रीगमने ब्राह्मणादिष्वेतदर्द्ध परिमितो दण्डः । उत्कृष्टजातीयपरदारगमने अयमेव दण्डो वधसहितः कार्य्य इत्याह स एव “दमोनेयः समायान्तु हीनायामधिकस्ततः । पुंसः कार्य्योऽधिकायान्तु गमने सप्रमापणम्” इति । दमः सहसा कामयेदिति वाक्योक्तः । नेयः प्रापणीयः । यत्तु वधमात्राभिधायकं कात्यायनवचनम् “स्त्रीषु कृतोपभोगः स्यात् प्रसह्य पुरुषो यदा । वधे तत्र प्रवर्त्तेत कार्य्यातिक्रमणं हि तत्” इति । तन्निर्गुणस्य भार्य्यागमने वेदितव्यम्” । सहसा अविवेकेन कृतं कर्म ।२अविमृश्यकृतकर्मणि, त्रि०। “तेन साहसमनुष्ठितं पुनः” काव्यप्र० ३साहसमनुसरति अण् । कृत्य कृते ३दण्डविशेषे पु० “साशीतिपणसाहस्रोदण्ड उत्तमसाहसः । तदर्द्धं मध्यमः प्रोक्तस्तदर्द्धमधमः स्मृतः” स्मृतिः।“पावकश्चैव तु साहस इत्युक्ते ४अग्निभेदे च पु०।

**साहसिक** त्रि० साहसे प्रसृतः ठक् । १सहसा प्रहारणाद्यभिरते २चोरे ३पारदारिके ४पारुष्यकारिणि च ।

**साहस्र** न० सहस्राणां समूहः अण् । १सहस्रसमूहे । स्वार्थे अण् । २सहस्रसंख्यायाम् न० । सहस्रं परिमाणमस्य अण् । ३सहस्रसंख्यान्विते त्रि० । ४सहस्रसंख्यकगजसमूहे पु० अमरः ।

**साहायक** न० सहायस्य भावः वुञ् । साहाय्ये ।

**साहाय्य** न० सहायस्य भावः ष्यञ् । सहायतायाम् ।

**साहित्य** न० सहितस्य भावः ष्यञ् । १मेलने २परस्परसापेक्षाणां तुल्यरूपाणामेकक्रियान्वयित्वे आह्ववि० ३तुल्यवदेकक्रियान्वयित्वे ४एकक्रियान्वयित्वमात्रे ५बुद्धिविशेषविषयत्वे शब्द०प्र० ६पद्यात्मके काव्ये च ।

**साह्य** न० सह्यस्य भावः ष्यञ् सह–ण्यत् वा । १सह्यत्वे २मेलने धरणिः ३सहनीये त्रि० ।

**साह्वय** पु० सह आह्वयेनाभिधानेन । १अभिधानसहिते “जगाम गजसाह्वयम्” भारतम् । मेषादिप्राणिकरणद्यूतरूपे समाह्वये च शब्दर० ।

**सिंह** पुंस्त्री० हिन्स–अच् पृषो० “सिंहो वर्णविपर्य्ययात्” इत्युक्तेः वर्णविपर्य्ययः । स्वनामख्याते १पशुभेदे अमरः स्त्रियां ङीष् । गुहाशयशब्दे सिंहमांसगुणा दृश्याः । २रक्तशोभाञ्जने राजनि० ३मेषादितः पञ्चमे राशौ ज्यो० सिंहराशिश्च २१६०० कलात्मकराशिचक्रस्य ७२०० कलोपरि १८०० शतकलात्मकः मघापूर्वफल्गुन्युत्तरफल्गुन्याद्यपादात्मकः । “पुमान् स्थिरोऽग्निर्दिनपित्तरूपी-नोष्णपूर्वेश दृढस्तनुत्वात् । समोटयो दीर्घतरोऽल्पसङ्गप्रजो हरिः शैलवपोऽथ धूम्रः” नील० ता० तत्स्वभावादि उक्तम् । तस्य स्वामी सूर्य्यः । ४जिनध्वजे हेमच० । ५उत्तरपदस्थः ५श्रेष्ठार्थे अमरः । नरःसिंह इवेति विग्रहे “उपमितं व्याघ्रादिभिः सामान्याप्रयोगे” पा० उपमितसमासे नरसिंहादिशब्दात् सिंहतुल्यशौर्य्यादियुक्तो नर इति बोधात् नरस्य श्रेष्ठत्वं द्योत्यते इति बोध्यम् । ६नाग्यां स्त्री राजनि०। ७प्रासादभेदे देवलक्षशब्दे २६८१ पृ० दृश्यम् ८सिंहासनभेदे तच्छब्दे दृश्यम् ।

**सिंहकेलि** पु० सिंहस्येव केलिरस्य । मञ्जुघोषे त्रिका० ।

**सिंहकेशर** पु० सिंहस्येव केशरोऽस्य । बकुले त्रिका० ।

**सिंहतल** पु० संहतल+पृषो० । करद्वयमेलनरूपे अञ्जलौ । रामाश्रमः । [राजनि०।

**सिंहतुण्ड** पु० सिंहस्येव तुण्डः मुखमस्य । सेहुण्डवृक्षे

**सिंहद्वार** न० सिंहचिह्नितं द्वारम् शाक० । पुरप्रवेशनयोग्ये द्वारे हेमच० ।

**सिंहध्वनि** पु० सिंहस्येव ध्वनिः । १सिंहतुल्यनादे सिंहनादादयोऽप्यत्र अमरः । ६त० । २सिंहस्य शब्दे ।

**सिंहनर्दिका** पु० सिंह इव नर्दति नर्द–ण्वुल् । (सिङ्गा) वाद्यभेदे हारा० ।

**सिंहनादिका** स्त्री सिंहमपि नादयति नद-णिच्-ण्वुल् । १दुरालभायाम् शब्दच० । २सिंहनर्दिकायां हारा० ।

**सिंहपर्णी** स्त्री सिंहस्य पुच्छ इव पर्णमस्या ङीप् । वासकवृक्षे जटा० ।

**सिंहपुच्छिका** स्त्री सिंहस्य पुच्छ इव पत्राग्रमस्याः-कप्, अत इत्त्वम् । चित्रपर्णिकायां (चुटुचाकुले) वृक्षे रत्नमा०

**सिंहपुच्छी** स्त्री सिंहस्य पुच्छ इव पुष्पाणि पर्णानि वास्याः ङीप् ।१चित्रपर्ण्यां २पृश्निपर्ण्याम् अमरः ३माषपर्ण्याञ्च रत्नमा० । [पर्ण्याम् राजनि० ।

**सिंहपुष्पी** स्त्री सिंहस्य पुच्छ इव पुष्पाण्यस्याः ङीप् । पृश्नि-

**सिंहमुखी** स्त्री सिंहस्य मुखं तद्वत्स्तनं इव पुष्पमस्याः ङीप् । वासके राजनि० ।

**सिंहयाना** स्त्री सिंहो यानं वाहनं यस्याः । दुर्गायाम् हेमच० सिंहवाहनादयोऽप्यत्र ।

**सिंहल** पु० सिंहोऽस्त्यत्र लच्। देशभेदे। तद्देशप्रभवत्वात् २रङ्गे धातौ हेमच०। ३रीतौ ४त्वचे च न० राजनि०। सिंहलदेशश्च कूर्मविभागशब्दे २१६८ पृ० दर्शितस्थाने उक्तः। [तायां राजनि०।

**सिंहलस्था** स्त्री सिंहले तिष्ठति स्था—क। सिंहल्यां च

**सिंहलास्थान** पु० सिंहल आस्थानं यस्य। तालपट्टे वृक्षभेदे शब्दर०।

**सिंहलील** पु० रतिबन्धभेदे "लिङ्गोपरि स्थिता नारी भूमौ दत्त्वा पदद्वयम्। हृदये दत्तहस्ता चेत् सिंहलीलः प्रकीर्त्तितः"। लिङ्गोपरि स्थिता नारी कान्तोरुस्थपदद्वया। हृदये दत्तहस्ता चेत् सिंहलीलोऽप्ययमवपि" रतिम०।

**सिंहवाहिनी** स्त्री सिंहरूपो वाहो विद्यतेऽस्याः इनि। दुर्गायाम् "सिंहमारुह्य कल्पान्ते निहतो महिषो यतः। महिषघ्नी ततो देवी तथा वै सिंहवाहिनी" देवीपु० ४५अ०।

**सिंहविक्रान्त** पुंस्त्री० सिंह इव विक्रान्तः। १अश्वे हारा० स्त्रियां ङीप् २सिंहतुल्यविक्रमे त्रि०। [राजनि०।

**सिंहविन्ना** स्त्री सिंह इव विन्ना विद्-क्त। माषपर्ण्याम्

**सिंहसंहनन** त्रि० सिंहस्येव संहननमङ्गमस्य। १वराङ्गयुक्ते अमरः २सिंहतुल्यदृढाङ्गे च। "सिंहसंहननो युवा" रघुः।

**सिंहा(शिङ्घा)न** न० शिघि—आनच् पृषो०। १लौहमले अमरः। २नासिकामले (सिकनी) शब्दर०।

**सिंहावलोक** पु० न्यायभेदे न्यायशब्दे ४१६८ पृ० दृश्यम्।

**सिंहासन** न० सिंहचिह्नितमासनम्। १राजासनभेदे तल्लक्षणं युक्तिकल्पतरौ दर्शितं यथा

"राज्ञो वरासनं नाम श्रीसिंहासनमुच्यते। शुभे मुहूर्त्ते शुभमासवर्षे शुवारवेलातिथिचन्द्रयोगे। काले निरुत्पात निरीतिभावे सिंहासनारम्भविधिं वदन्ति। स्थिरराशिस्थिते भानौ चन्द्रे च स्थिरभोदिते। आसनारम्भमिच्छन्ति व्हारम्भोऽपि येषु च"। एतेन व्हारम्भसिंहासनयोरारम्भ एक एव कालः। तत्र क्रमः "वास्तुवेदाग्निपञ्चाब्धि सोपानानि युगैः क्रमात्। चत्वारिंशत्तथा त्रिंशत् विंशतिः षोडशैव च। सिंहान्वितानि ज्ञेयानि चरणानि शुभैः क्रमात्। पद्मः शङ्खो गजो हंसः सिंहो भृङ्गो मृगो हयः। अष्टौ सिंहासनानीति नीतिशास्त्रविदो विदुः। आदित्यादि दशाजानां भूपतीनां यथाक्रमम्। राज्ञः स्वहस्तैरष्टाभिरायामपरिणाहयोः। राजपात्रमिदं नाम सोपानं युक्तमीरितम्। तदर्द्धमानं तन्मध्ये राजासनमुदाहृतम्। यद्वीतमिदं रम्यं प्रोक्तं कनिष्ठभूभुजाम्। दिगष्टद्र त्रिकोणः स्यात् ब्रह्मादीनां यथाक्रमम्"। अथाष्टानां लक्षणानि "गम्भारीकाष्ठघटितः पद्ममालोपचित्रितः। पद्मरागविचित्राङ्गः शुद्धः काञ्चनसंहतः। चरणाग्रे पद्मकोषात् पद्मरागविचित्रिताः। दिक्संख्या पुत्तलिका राजद्वादशाङ्गुलिसम्मिताः। राजासनं चतसृष्वेव एवं द्वादशपुत्तलिकाः। रत्नैश्च नवभिः कार्यं निर्माणं चान्तरान्तरा। रक्तवस्त्रावृतं स्यात् पद्मसिंहासनं१ मतम्। अनेनोपविष्टा नरपतिः प्रतापमति विन्दति। महेन्द्रकाष्ठघटितः शङ्खमालोपशोभितः। शुद्धस्फटिकचित्राङ्गः शुद्धरूप्योपशोभितः। चरणाग्रे शङ्खनाभ्यः पुत्तलिकाः सप्तविंशतिः। स्थाने स्थाने विधातव्याः शुद्धस्फटिकसंस्कृताः। शुक्लपट्टावृतं स्यात् शङ्खसिंहासनं२ मतम्। पनसेनोपघटितो गजमालोपशोभितः। विद्रुमैरपि वैदूर्यैः काञ्चनेनापि शोभितः। चरणाग्रे गजशिरःपुच्छादेकैकपुत्तलिका। माणिक्यरचितारक्तवस्त्रादिकविभूषणम्। गजसिंहासनं३ नाम साम्राज्यफलदायकम्। शालकाष्ठेन घटितो हंसमालोपशोभितः। पुष्परागैः काञ्चनेन कुरुविन्दैश्च चित्रितः। चरणाग्रे हंसरूपाः पुत्तलिकास्त्वेकविंशतिः। गोमेदकोपघटिताः पीतवस्त्रविभूषणम्। हंससिंहासनं४ नाम सर्वानिष्टविनाशनम्। चन्दनेनोपघटितः सिंहमालोपभूषितः। शुद्धहीरकचित्राङ्गः शुद्धकाञ्चननिर्मितः। चरणानां सिंहलेखाः पुत्तलिकाश्चैकविंशतिः। मुक्ताशुक्तिभिरन्यैश्च निर्मलैरेव भूषणम्। शुद्धशुक्लावृतं स्यात् सिंहसिंहासनं५ मतम्। अनेनोपविष्टा नरपतिः कृत्स्नां साधयति क्षितिम्। भृङ्गमालोपसंहितं शुद्धचम्पककल्पितम्। शुद्धैर्मरकतैर्युक्तं पादाग्रे पद्मकोषिकाः। द्वाविंशतिः पुत्तलिकास्तु नीलवस्त्रादिभूषणम्। भृङ्गसिंहासनं६ नाम शत्रुचयजयप्रदम्। निम्बकाष्ठेन घटितं मृगमालोपशोभितम्। शुद्धनीलैर्महानीलैः काञ्चनेनापि चित्रितम्। चरणाग्रे मृगशिरश्चत्वारिंशच्च पुत्तलिकाः। नीलवस्त्रादियुक्तन्तु मृगसिंहासनं७ मतम्। लक्ष्मीविजयसम्पत्तिर्लक्ष्यपदमुत्तमम्। केशरेणोपघटितं हयमालोपशोभितम्। समस्तवस्तुभूषायाः पुत्तलिकाः पञ्चसप्ततिः। चरणाग्रे हयशिरश्चित्रवस्त्रादिभूषणम्। हयसिंहासनं८ नाम लक्ष्मी

विजयवर्द्धनम्। इत्येतत् कथितं सारं महासिंहासनाष्टकम्। यथा भोजेन कथितं यथा चान्यैश्च पण्डितैः। एतस्यातिक्रमं दद्यात् यः कुर्यात् पृथिवीपतिः। अचिरादेव कुरुते तस्य मृत्युरतिक्रमम्। पराभवस्थो यो राजा यो राजा च निरासनः। स परैर्हन्यते सिंहैरिव मत्तगजाधिपः"। चतुरङ्गक्रीडायां ३जयभेदे चतुरङ्गशब्दे २८६३ पृ० दृश्यम्। ४योगासनभेदे च तल्लक्षणं यथा

"गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत्। दक्षिणे सव्यगुल्फन्तु दक्षगुल्फन्तु सव्यके। हस्तौ च जान्वोः संस्थाप्य स्वाङ्गुलीः संप्रसार्य च। व्यात्तवक्त्रो निरीक्षेत नासाग्रं सुसमाहितः। सिंहासनं भवेदेतत् पूजितं योगिभिः सदा। बन्धत्रयस्य सन्धानं कुरुते चासनोत्तमम्" इति हठप्रदीपः। ४रतिबन्धभेदे पु० "सजङ्घादववाहू च कृत्वा योषापदद्वये। कामी धृत्वा रमेत् कामी बन्धः सिंहासनो मतः"। इति रतिमञ्जरी ५चक्रभेदे चक्रशब्दे २८१८ पृ० दृश्यम्।

**सिंहास्य** पु० सिंहस्यास्यमास्यमिव दन्त इव पुष्पं यस्य। वासके अमरः।

**सिंहिका** स्त्री। काश्यपपत्न्यां राहुमातरि। "कश्यपस्य स्त्रियो तु सिंहिका राहुमस्तुतनयावजीजनत्। पूर्वजो हरिनिकृत्तकन्धरो दैत्यैरवरजो निपातितः" वास्तुयागत०। [२वास्तुपुरुषे च।

**सिंहिकासुत** पु० ६त०। १राहौ सिंहिकापुत्रादयोऽप्यत्र।

**सिंही** स्त्री हिनस्ति रोगान् हिन्स–अच् पृषो०। वार्ताक्याम् अमरः २कण्टकारिकायाम् ३वासके मेदि० ४वृहत्यां राजनि० ५राहुमातरि विश्वः ६मुद्गपर्ण्याम् सिंह+जातौ ङीष्। ७सिंहयोषिति।

**सिंहीलता** स्त्री कर्म०। वृहत्यां भावप्र०।

**सिक** सेचने सौत्र० पर० सक० सेट्। सेकति असेकीत्। पर्युदासात् न षोपदेशः।

**सिकता** स्त्री ब०व०। सिक–अतच् किच्। बालुकायाम् मेदि०। सिकताः सन्त्यत्र अण् तस्य लुप्। २सिकतायुक्तदेशे स्त्री अमरः। [अमरः।

**सिकतामय** त्रि० सिकता+मयट्। बालुकामये तटादौ

**सिकतावत्** त्रि० सिकताः सन्त्यत्र मतुप् मस्य वः। बालुकायुक्तदेशे अमरः। [भरतः।

**सिकतिल** त्रि० सिकताः सन्त्यत्र इलच्। बालुकायुक्तदेशे

**सिक्थ** न० सिच–थक्। १मधूच्छिष्टे (मोम) २नील्याञ्च हेमच०। स्वार्थे क। तत्रार्थे भक्तपुलाके मासे च पु० मेदि० मधूच्छिष्टे न० अमरः।

**सिक्य** न० सिक-यत्। (सिके) रज्जुनिर्मिते पदार्थे।

**सिच्** त्रि० सिच-क्विप्। १सेचनकर्त्तरि कर्मणि क्विप्। २वस्त्रे हेमच०। [त्रिका०।

**सिचय** पु० सिच-अयच् किच्। १वस्त्रे हेमच० २जीर्णवस्त्रे

**सिञ्चिता** स्त्री सिच-इतच् पृषो०। पिप्पल्याम् शब्दच०।

**सित** न० सो–क्त। १रौप्ये २मूलके राजनि० ३चन्दने रत्नमा० ४शरे ५शुक्लपक्षे ६शुक्लवर्णे च पु० अमरः। ७तद्वति ८समाप्ते ९बद्धे १०ज्ञाते च त्रि०विश्वः। [ङीष्।

**सितकण्ठ** पुंस्त्री० सितः कण्ठोऽस्य। दात्यूहे खगे स्त्रियां

**सितकर** पु० सितः करः किरणो यस्य। १चन्द्रे २कर्पूरे च राजनि० सितमयूखादयोऽप्यत्र। [राजनि०।

**सितकर्णी** स्त्री सितः कर्ण इव पुष्पमस्याः ङीप्। वासके

**सितकुञ्जर** पु० सितः कुञ्जरोऽस्य। १इन्द्रे कर्म०। २ऐरावतगजे

**सितगुञ्जा** स्त्री कर्म०। श्वेतगुञ्जायाम् राजनि०। [अमरः

**सितच्छत्रा** स्त्री सितं छत्रमिव पुष्पमस्याः। शतपुष्पायाम्

**सितच्छद** पुंस्त्री० सितश्छदः पक्षो यस्य। १हंसे हेमच० स्त्रियां ङीष्। २श्वेतदूर्वायाम् स्त्री राजनि० टाप्।

**सितदर्भ** पु० कर्म०। श्वेतकुशे राजनि०।

**सितदीप्य** पु० दीपयत्यग्निम् दीप-णिच्–कर्त्तरि यत् कर्म०। श्वेतजीरके राजनि०।

**सितदूर्वा** स्त्री कर्म०। श्वेतदूर्वायाम् रत्नमा०।

**सितद्रु** पु० कर्म०। १मोरटभेदे रत्नमा० २शुक्लवर्णवृक्षे च।

**सितधातु** पु० कर्म०। १कठिन्याम् (खड़ी) राजनि० २श्वेतधातौ रौप्यादौ च।

**सितपक्ष** पुंस्त्री० सितः पक्षोऽस्य। १हंसे शब्दर० स्त्रियां ङीष्। कर्म०। चन्द्रस्य वृद्धिकारके पक्षद्वयतिथ्यात्मके २शुक्ले पक्षे। [वृक्षे रत्नमा०।

**सितपर्णी** स्त्री सितानि पर्णान्यस्याः ङीप्। अर्कपुष्पिका-

**सितपाटलिका** स्त्री कर्म०। (श्वेतपारुल) वृक्षे राजनि०।

**सितपुङ्खा** स्त्री सितः पुङ्खोऽस्याः। श्वेतशरपुङ्खावृक्षे राजनि०

**सितपुष्प** न० सितानि पुष्पाण्यस्य। १कैवर्त्तीमुस्तके जटा०। २तगरवृक्षे पु० शब्दर० ३काशे ४श्वेतरोहितवृक्षे च पु० राजनि०। ५श्वेतापराजितायां स्त्री ङीप्। ६मल्लिकायां स्त्री टाप्। कर्म०। ७श्वेते पुष्पे न०।

**सितमरिच** न० कर्म०। शुभ्रमरिचे राजनि०।

**सितमाष** पु० नित्यक० । राजमाषे (बरबटी) हारा० ।
**सितरञ्जन** पु० सितमपि रञ्जयति रन्ज–णिच्–ल्युट् । १पीतवर्णे हेमच० २तद्वति त्रि० ।
**सितवर्षाभू** स्त्री वर्षासु भवति भू–क्विप् कर्म० । श्वेतपुनर्नवायाम् राजनि० । [शरपुङ्खाङ्के राजनि० ।
**सि(शि)तसायका** स्त्री सितः सायको यस्याः ५ब० । शुभ्र
**सितशिम्बिक** पु० सिता शिम्बिर्यस्य कप् । गोधूमे हेमच०
**सितशूक** पु० सितः शुभ्रः शूको यस्य । यवे भरतः ।
**सितशूरण** पु० कर्म० । वनशूरणे (वनओल) राजनि० ।
**सितसर्षप** पु० कर्म० । गौरसर्षपे राजनि० ।
**सितसार(क)** पु० सितः सारो निर्यासो यस्य वा कप् । शालिञ्चशाके राजनि० ।
**सितसिन्धु** स्त्री नित्यक० । गङ्गायां शब्दर० ।
**सिता** स्त्री सो–क्त । १शर्करायाम् ।
"खण्डन्तु सिकताकृपं सुश्वेतं शर्करा सिता । सिता सुमधुरा रुच्या वातपित्तास्रदाहहृत् । मूर्च्छाच्छर्दिज्वरान् हन्ति सुशीता शुक्रकारिणी" राजव० । २मल्लिकायां शब्दर० ३श्वेतकण्टकारिकायां ४वाकुच्यां ५विदार्यां ६श्वेतदूर्वायां ७चन्द्रिकायां ८कुटुम्बिन्यां ९सुरायां १०पिङ्गायां ११श्वायमाणलतायां १२तेजन्यां राजनि० १३पर्वतजातापराजितायां रत्नमा० ।
**सिताखण्ड** पु० सितायाः इव खण्डः । मधुजातशर्करायाम् "मधुजा शर्करा रुच्या कफपित्तहरी गुरुः । छर्द्यतीसारतृड्दाहरक्तहृत् तुवरा हिमा । यथा यथाऽस्या नैर्मल्यं मधुरत्वं तथा तथा । स्नेहलाघवशैत्यादि सरत्वं तथा तथा" भावप्र० ।
**सि(शि)ताग्र** पु० सि(शि)तमग्रं यस्य । कण्टके हारा० ।
**सिताङ्क** पुंस्त्री० सिता सिकता अङ्को यस्य । वालुकागड़े (बलिया) मत्स्ये हारा० स्त्रियां ङीप् ।
**सिताङ्ग** पु० सितमङ्गं यस्य । श्वेतरोहिते राजनि० ।
**सितादि** पु० सितायाः आदिः कारणम् । गुड़े राजनि० ।
**सितापाङ्ग** पुंस्त्री० सितमपाङ्गं यस्य । मयूरे त्रिका० स्त्रियां ङीष् । [ऽयत ।
**सिताज** न० कर्म० । श्वेतकमले राजनि० सिताज्जोऽज्जाद्यो-
**सिताभ** पु० सिता आभा यस्य । १कर्पूरे रायमुकुटः २चन्द्रे च ३तक्रे स्त्री राजनि० ।
**सिताभ्र** पु० अभ्र इव सितः शुभ्रः राज० । कर्पूरे अमरः ।
**सिताभ्रक** न० अभ्रकमिव सितम् राज० । कर्पूरे राजनि० ।
**सिताम्बर** पु० सितमम्बरं यस्य । १श्वेतवस्त्रधारिणि व्रतिनि हला० २श्वेतवस्त्रधारिमात्रे त्रि० ।
**सितार्जक** पु० नित्यकर्म० । श्वेततुलस्याम् राजनि० ।
**सितालक** पु० आलयति भूषयति अल–णिच्–ण्वुल् नित्य कर्म० । श्वेतमन्दारे राजनि० । [श्वेतदूर्वायाम् रत्नमा०
**सितालता** स्त्री सिता सती आलतते आ+लत–अच् ।
**सितालिकटभी** स्त्री सितेन शुभ्रवर्णेन अलति अल–इन् कर्म०। श्वेतकिणिहीटके राजनि० ।
**सितावर** पु० सितं श्वेततामावृणोति आ+वृ–अच् (सुसुनि) १शाकभेदे २वाकुच्यां स्त्री राजनि० ङीष् । "चाङ्गेरीच्छदः पत्रैश्चतुर्दल इतीरितः । शाको जलान्विते देशे चतुष्पत्रीति चोच्यते" भावप्र०। [२गङ्गायमुनयोः स्त्री हि०र०
**सितासित** पु० वर्णेन सितः वस्त्रेणासितः । १बलदेवे राजनि०
**सिताह्वय** पु० सितमाह्वयते आ+ह्वे–श । १श्वेतशिग्रौ २श्वेतरोहिते च राजनि० । [त्रि० रायमु०
**सिति** पु० सो–क्तिच् । १शुक्लवर्णे २कृष्णवर्णे च । २तद्वति
**सितिमन्** पु० सितस्य भावः इमनिच् । शुभ्रतायाम् । "सितं सितिम्ना सुतरां मुनेर्वपुः" माघः ।
**सितिवार** पु० सितिं श्वेततां वृणोति वृ–अण् । सुनिषण्णके (सुसुनि) शाके भावप्र० ।
**सितिवासस्** पु० सिति कृष्णं वासोऽस्य । बलदेवे ।
**सितेतर** पु० सितादितरः । १शूकधान्ये २कुलत्थे च ३शुभेतरवर्णे ४तद्वति त्रि० । [शक्तो हला० ।
**सितेतरगति** पु० सितेतरा कृष्णा गतिरस्य । कृष्णवर्त्मनि
**सितोदर** पु० सितमुदरमस्य । कुबेरे हेमच० ।
**सितोपल** पु० कर्म० । १स्फटिके राजनि० कठिन्यां न० त्रिका० । २शर्करायां स्त्री हेमच० ।
**सिद्ध** न० सिध–क्त । १सैन्धवलवणे राजनि० अवकाशमत्वाऽभ्यात्मम् २निष्पन्ने ३पक्वे ४नित्ये च त्रि० शब्दर० । ५सिद्धिरस्त्यस्य अच् । ५व्यासादौ मुनौ ६देवयोनिभेदे च पु० अमरः तल्लोकश्च चन्द्रलोकादधःस्थो व्योमस्थितः यथोक्तं सू० सि० "मन्दामरेज्यभूपुत्रसूर्यशुक्रेन्दुजेन्दवः । परिभ्रमन्त्यधोऽधःस्थाः सिद्धविद्याधरा घनाः" ७निश्चिते त्रि० ८विष्कम्भादिषु मध्ये द्वाविंशयोगे ज्यो० ९गुडे १०कृष्णधुस्तूरे पु० राजनि० । ११सक्ते त्रि० हेमच० १२व्यापारे पु० शब्दर० ज्योतिषोक्ते १३योगिनीदशामध्ये सप्तम्यां दशायां स्त्री । दशाशब्दे ३५०५ पृ० दशाग्रम् । तन्त्रोक्ते अकथहचक्रस्थे साधक-

नामाद्याक्षरयुक्तकोष्ठस्थाद्याक्षरयुक्ते १४मन्त्रभेदे पु० अकथहशब्दे ३८९०पृ० दृश्यम् ।१५वज्रादिशाख्ये क्रियाभेदे स्त्री १६सिद्धियुते मन्त्रे पु० "मन्त्रसिद्धेरुपायश्च गौतमीये "पुनः सोऽनुष्ठितो मन्त्रो यदि सिद्धो न जायते । उपायास्तत्र कर्त्तव्याः सप्त शङ्करभाषिताः । भ्रामणं रोधनं वश्यं पीडनं पोषशोषणम् । दहनान्तं क्रमात् कुर्य्यात् ततः सिद्धो भवेन्मनुः । भ्रामणं वायुबीजेन यथानुक्रमयोगतः । तन्मन्त्रं यन्त्र आलिख्य शिल्हकर्पूरकुङ्कुमैः । उशीरचन्दनाभ्यान्तु मन्त्रं संग्रथितं लिखेत् । क्षीराज्यमधुतोयानां मध्ये तल्लिखितं भवेत् । पूजनाज्जपनाद्धोमात् भ्रामितः सिद्धिदो भवेत् । भ्रामितो यदि नो सिद्धो रोधनं तस्य कारयेत् । सारस्वतेन बीजेन संपुटीकृत्य संजपेत् । एवं कृते भवेत् सिद्धो न चेदेतद्वशीकुरु । अलक्तचन्दनं कुष्ठं हरिद्रामादनं शिला । एतैस्तु मन्त्रमालिख्य भूर्जपत्रे सुशोभने । धार्य्यं कण्ठे भवेत् सिद्धः पीडनं वास्य कारयेत् । अधरोत्तरयोगेन पदानि परिजप्य वै । ध्यायेच्च देवतां तद्वत् अधरोत्तररूपिणीम् । विद्यामादित्यदुग्धेन विलिख्याक्रम्य चाङ्घ्रिणा । तथाभूतेन मन्त्रेण होमः कार्य्यो दिने दिने । पीडितो लज्जयाविष्टः सिद्धः स्यादथ पोषयेत् । बालायास्त्रितयं बीजमाद्यन्ते तस्य योजयेत् । गोक्षीरमधुनालिख्य विद्यां पाणौ बिभावयेत् । पोषितोऽयं भवेत् सिद्धो न चेत् कुर्वीत शोषणम् । द्वाभ्यान्तु वायुबीजाभ्यां मन्त्रं कुर्य्याद्विदर्भितम् । यथा विद्या गले धार्य्या विलिखेत्वा वरभस्मना । शोषितोऽपि न सिद्धः स्यात् दहनीयोऽग्निबीजतः । आग्नेयेन तु बीजेन मन्त्रस्यैकैकमक्षरम् । आद्यन्तमथ जप्तं स्व योजयेद्दाहकर्मणि । ब्रह्मवृक्षस्य तैलेन मन्त्रमालिख्य धारयेत् । कण्ठदेशे ततो मन्त्रः सिद्धः स्याच्छङ्करोदितम् । इत्येतत्कथितं सम्यक् केवलं तव भक्तितः । एकेनैव कृतार्थः स्याद् बहुभिः किमु सुव्रते !" तन्त्रसारः । [च राजनि० ।

**सिद्धक** पु० सिद्ध इव इवार्थे कन् । १सिन्धुवारे २शालवृक्षे

**सिद्धगङ्गा** स्त्री सिद्धलोकस्था गङ्गा शाक० । मन्दाकिन्याम् जटा० । [जले सिद्धतोयादयोऽप्यत्र ।

**सिद्धजल** न० सिद्धं पक्वं जलमत्र ।१काञ्जिके कर्म०। २पक्वे

**सिद्धदेव** पु० सिद्धानां पूज्यः देवः । महादेवे शब्दर० ।

**सिद्धधातु** पु० सिद्धः प्रसिद्धो धातुः । पारदे त्रिका० ।

**सिद्धपीठ** पुंन० कर्म० । "यत्र वा लक्षवर्षेयत्र होमो वा कोटिसङ्ख्यकः । महाविद्याजपाः कोट्यः सिद्धपीठः प्रकीर्त्तितः" इति तन्त्रोक्ते १स्थानभेदे पीठशब्दे ४२४२ पृ० दर्शिते २स्थानभेदे च ।

**सिद्धपुर** न० कर्म० । "लङ्का कुमध्ये यमकोटिरस्याः प्राक्, पश्चिमे रोमकपत्तनञ्च । अधोगतं सिद्धपुरञ्च" सि०शि०उक्ते भूगोलस्थेषु भूवृत्तपादान्तरितदेशस्थेषु चतुर्षु देवनिर्मितेषु पुरेषु मध्ये लङ्काधोभागस्थे पुरभेदे ।

**सिद्धपुष्प** पु० सिद्धप्रियं पुष्पं यस्य । करवीरवृक्षे राजनि० ।

**सिद्धप्रयोजन** पु० सिद्धं प्रयोजनं यस्मात् ५ब० । गौरसर्षपे राजनि० । २सिद्धाभीष्टे न० ।

**सिद्धमोदक** पु० तवराजोद्भवखण्डे राजनि० ।

**सिद्धरस** पु० सिद्धः प्रसिद्धो रसः । १पारदे अमरः सिद्धो रसोऽत्र । २धातुमात्रे त्रि० मेदि० ।

**सिद्धविद्या** स्त्री सिद्धा स्वतःसिद्धा विद्या मन्त्रो यस्याः । "काली तारा महाविद्या षोडशी भुवनेश्वरी । भैरवी छिन्नमस्ता च विद्या धूमावती तथा । बगला सिद्धविद्या च मातङ्गी कमलात्मिका । एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः" इति तन्त्रोक्तासु दशसु काल्यादिषु देवीषु ।

**सिद्धसाधन** न० सिद्धस्य निश्चितस्य साधनमनुमानम् । १न्यायोक्ते सिषाधयिषाविरहकाले साध्यवत्त्वेन निश्चितस्य पुनरनुमानरूपे दोषे । सिद्धं साधयति ल्यु । २श्वेतसर्षपे पु० राजनि० । सिषाधयिषासत्त्वे तु सिद्धस्यापि अनुमानं भवत्येव "प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः" इति वाचस्पत्युक्तेः । तदसत्त्वे तु नानुमितिः "न हि करिणि दृष्टे चित्कारेण तमनुमिमतेऽनुमातारः" इति तस्यैव वचनान्तरात् । सिद्धेश्च यथाऽनुमितिविरोधित्वम् तथा सिद्धिशब्दे वक्ष्यते । संशयपक्षतावादिमते निश्चयेन संशयस्य प्रतिरोधात् पक्षताऽसत्त्वेन नानुमितिरिति बोध्यम् । सिद्धसाधनस्य पक्षताविघटकत्वेनाश्रयासिद्धावन्तर्भवतीति नियहस्थानान्तरमित्यन्ये ।

**सिद्धसाध्य** पु० अकथहशब्दोक्ते साधकनामाद्याक्षरयुक्तकोष्ठावधिद्वितीयकोष्ठस्थाद्याक्षरयुक्ते तन्त्रोक्ते मन्त्रभेदे अकथहशब्दे दृश्यम् ।

**सिद्धसिद्ध** पु० तन्त्रोक्ते अकथहशब्दोक्ते साधकनामाद्याक्षरयुक्तकोष्ठस्थिताद्याक्षरयुक्ते मन्त्रभेदे अकथहशब्दे दृश्यम्

**सिद्धसिन्धु** स्त्री ६त०। गङ्गायाम् त्रिका० सिद्धनद्यादयोऽप्यत्र

**सिद्धसुसिद्ध** पु० तन्त्रोक्ते मन्त्रभेदे अकथहशब्दे दृश्यम्।

**सिद्धान्त** पु० सिद्धः निश्चितोऽन्तो यस्मात्। प्रमाणाद्युपन्यासेन पूर्वपक्षनिरासके सिद्धपक्षस्य स्थापनरूपे १वाक्यस्तोमे २ज्योतिःशास्त्रभेदे च स च सूर्य्यसिद्धान्तः सोमसिद्धान्तादिः "त्रुट्यादिप्रलयान्तकालकलनामानप्रभेदः क्रमाच्चारश्च द्युसदां द्विधा च गणितं प्रश्नास्तथा सोत्तराः। भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते सिद्धान्तः स उदाहृतोऽत्र गणितस्कन्धप्रबन्धे बुधैः" सि० शि० गो० ३सूत्रोक्तसिद्धान्तलक्षणभेदो यथा "तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः" सू०। "सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात्" सू०। "सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः" सू०। "समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः" सू०। "यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः" सू०। "अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः" सू०।

"तन्त्रं शास्त्रं तदेवाधिकरणं ज्ञापकतया यस्य, तादृशस्य योऽभ्युपगमस्तस्य समीचीनतयाऽसंशयरूपतया स्थितिस्तथाच शास्त्रितार्थनिश्चयः सिद्धान्तः अत्र चाभ्युपगम्यमानोऽर्थः सिद्धान्त इति भाष्यम् "अभ्युपगमः सिद्धान्त इति वार्त्तिकटीका" न चात्र विरोधः शङ्कनीयः आचार्य्यैः परिहृतत्वात् तथाच निष्कृष्टो निबन्धः अर्थाभ्युपगमयोर्गुणप्रधानभावस्य विवक्षातन्त्रत्वादर्थोऽभ्युपगमोऽभ्युपगम्यमानो वार्थः सिद्धान्त इति सूत्रभाष्यवार्त्तिकटीकासु न विरोधः। अत्र च भाष्यानुसारात् सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसिद्धान्तान्यतमः सिद्धान्त इति सूत्रार्थ इति तु न युक्तं अग्रिमसूत्रानुत्थानापत्तेः तन्त्रसिद्धान्तत्वेन द्वयमनुगमय्य तन्त्राधिकरणाभ्युपगमान्यतमः सिद्धान्त इति कश्चित्। विभजते। स चतुर्विध इति शेषः सर्वतन्त्रादिसंस्थितीनामर्थान्तरभावात् भेदादित्यर्थः। सर्वतन्त्रसिद्धान्तं लक्षयति। सर्वतन्त्राविरुद्धः सर्वशास्त्राभ्युपगत इति बहवः। वस्तुतो यथाश्रुत एवार्थः अन्यथा तन्त्रेऽधिकृत इत्यस्य वैयर्थ्यापत्तेरतएव च जात्यादेरसदुत्तरत्वमपि सर्वतन्त्रसिद्धान्तः न च तन्त्रेऽधिकृत इति स्पष्टार्थं लक्षणे तु न देयमेवेति वाच्यं मनस इन्द्रियत्वस्यापि सर्वतन्त्रसिद्धान्ततापत्तेः नव्यास्तु सूत्रस्योपलक्षणपरत्वाद्वादिप्रतिवाद्युभयाभ्युपगतः कथानुकूलोऽर्थः स इति वदन्ति। प्रतितन्त्रसिद्धान्तं लक्षयति। समानशब्द एकार्थस्तेनैकतन्त्रसिद्ध इत्यर्थः स्वतन्त्र सिद्ध इति पर्य्यवसितोऽर्थः तथाच वादिप्रतिवाद्येकतरमात्राभ्युपगतस्तदेकतरस्य प्रतितन्त्रसिद्धान्त इति फलितार्थः, यथा मीमांसकानां शब्दनित्यत्वम्। अधिकरणसिद्धान्तं लक्षयति "यस्यार्थस्य सिद्धौ जायमानायामेवान्यस्य प्रकरणस्य प्रस्तुतस्य सिद्धिर्भवति सोऽधिकरणसिद्धान्त इत्यर्थः यथा तद्द्व्यणुकादिकं पक्षीकृत्योपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वे साध्यमाने सर्वज्ञत्वमीशस्य, एवं हेतुबलादपि यथा दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिन्द्रियादिव्यतिरिक्त आत्मनि साधिते इन्द्रियनानात्वं तथा च यदर्थसिद्धिं विना सोऽर्थः शब्दादनुमानाद्वा न सिध्यति सोऽधिकरणसिद्धान्त इति। वस्तुतस्तु शाब्दत्वमनुमानत्वं चाविवक्षितं प्रमाणमात्रमपेक्षितम् अतएव प्रत्यक्षेण स्थूलत्वसाधनानन्तरमुक्तमात्मतत्त्वविवेके "सोऽयमधिकरणसिद्धान्तन्यायेन स्थूलत्वसिद्धौ क्षणभङ्गभङ्ग इति" तत्र च वाक्यार्थसिद्धौ तदनुषङ्गी यो यः सोऽधिकरणसिद्धान्त इति वार्त्तिकफक्किकां लिखित्वा येन केनापि प्रमाणेन वाक्यार्थसिद्धौ जन्यमानायां योऽन्यार्थः सिध्यति स तथेत्यर्थः इति व्याख्यातं दीधितिकृता। एवं हेत्वादीदृशः पक्षस्य वाक्यार्थ इति टीकावचने च उपलक्षणमेतदित्युक्तं तत्र तत्र विशिष्यैव लक्षणं कार्य्यम्। यत्तु जनकीभूतव्यापकताज्ञाने व्यापककोटावेव विषयः प्रकृतानुमित्या व्यापककोटौ विषयीकृतः शब्दजनकपदार्थज्ञानविषयत्वे सति शाब्दविषयत्वमिति द्वयमधिकरणसिद्धान्त इति तन्न इन्द्रियनानात्वादौ भाष्योदाहृतेऽव्याप्तेरिति। अभ्युपगमसिद्धान्तं लक्षयति। अपरीक्षितस्य साक्षादसूत्रितस्य विशेषपरीक्षणं विशेषधर्मकथनम्। अभ्युपगमादिति ज्ञापकत्वे पञ्चमी अभ्युपगमज्ञापकमित्यर्थः विशेषपरीक्षणाज्ज्ञायते सूत्रकृतोऽभ्युपगतमिदमिति तथाच साक्षादसूत्रिताभ्युपगमोऽभ्युपगमसिद्धान्तः यथा मनस इन्द्रियत्वमिति" वृत्तिः। तथाच सिद्धस्यान्तः संस्थितिः सिद्धान्तः संस्थितिश्च इत्थंभावव्यवस्था। तत्र तन्त्रसंस्थितिस्तन्त्रार्थसंस्थितिः। अधिकरणसंस्थितिरधिकरणानुषक्तार्थसंस्थितिः। अभ्युपगमसंस्थितिरनवधारितार्थपरिग्रहे तद्विशेषपरीक्षणायाभ्युपगमसिद्धान्तः वात्स्यायनभाष्ये दृश्यम्। प्रामाणिकत्वेनाभ्युपगतोऽर्थः सिद्धान्त इत्यन्ये। मीमांसकोक्ते पञ्चावयवयुक्ताधिकरणाङ्गे ४चरमेऽङ्गे अधिकरणशब्दे १२६ पृ० दृश्यम्।

**सिद्धान्ताचार** पु० "आत्मानं देवतां मत्वा यजेद्देवञ्च मानवैः। सदा शुद्धः सदा शान्तः सिद्धान्ताचार उच्यते" तन्त्रोक्ते आचारभेदे।

**सिद्धारि** पु० तन्त्रोक्ते साधकनामाद्याक्षरयुक्तकोष्ठावधिचतुर्थकोष्ठस्याद्याक्षरयुक्ते मन्त्रभेदे अकथहचक्रशब्दे १८पृ० दृश्यम्।

**सिद्धार्थ(क)** पु० सिद्धः अर्थो यस्मात् ५ब० वा कप्। १श्वेतसर्षपे अमरः। २वटीवृक्षे च राजनि०। ६ब०। ३प्रसिद्धार्थे त्रि०। "सिद्धार्थं सिद्धसम्बन्धम्" इति प्राञ्चः। ४शाक्यसिंहे पु० मेदि० ५जिनभेदमातरि स्त्री हेमच०।

**सिद्धि** स्त्री सिध–क्तिन्। १ऋद्धिनामौषधे अमरः। २योगभेदे ३अन्तर्द्धाने ४निष्पत्तौ ५पाके ६पादुकायाम् ७वृद्धौ मेदि० ८मोक्षे हेमच० ९सम्पत्तौ धरणिः १०अणिमाद्यष्टविधैश्वर्य्ये ११बुद्धौ शब्दच० १२साध्यवत्तया निश्चये च। १३सांख्योक्ते ऊहादिके सिद्धिहेतुभेदे "ऊहादिभिः सिद्धिः" सां०सू०। "ऊहादिभेदैः सिद्धिरष्टधा भवतीत्यर्थः। इदमपि सूत्रं कारिकया व्याख्यातम्। "ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः। दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः" इति। "अस्या अयमर्थः। आध्यात्मिकादिदुःखत्रयप्रतियोगिकत्वात् त्रयो दुःखविघातास्तु(?)सिद्धयः। इतरास्तु तत्साधनत्वाद्गौण्यः सिद्धयः। तत्रोहो यथा उपदेशादिकं विनैव प्राग्भवीयाभ्यासवशात् तत्त्वस्य स्वयमूहनमिति। शब्दस्तु यथा अन्यदीयपाठमाकर्ण्य स्वयं वा शास्त्रमाकर्ण्य यज्ज्ञानं जायते तदिति। अध्ययनं यथा शिष्याचार्यभावेन शास्त्राध्ययनाज्ज्ञानमिति। सुहृत्प्राप्तिर्यथा। स्वयमुपदेशार्थं गृहागततात्(?) परमकारुणिकाज्ज्ञानलाभ इति। दानं यथा धनादिदानेन परितोषिताज्ज्ञानलाभ इति। एषु च पूर्वस्त्रिविध ऊहशब्दाध्ययनरूपो मुख्यसिद्धेरङ्कुश आकर्षकः। सुहृत्प्राप्तिदानयोरूहादित्रयापेक्षया मन्दसाधनत्वप्रतिपादनायेदमुक्तम्। कश्चित्त्वेतासामष्टसिद्धीनामङ्कुशो निवारकः पूर्वस्त्रिविधो विपर्ययाशक्तितुष्टिरूपो भवति वारकत्वादिति व्याचष्टे तन्न। तुष्ट्यभावस्याशक्तितया व्याध्यादिवत् सिद्धिविरोधितालाभेन तुष्टितुष्ट्योः सिद्धिविरोधित्वासम्भवात्। नन्वूहादिभिरेव कथं सिद्धिरुच्यते मन्त्रतपःसमाध्यादिभिरप्यणिमाद्यष्टसिद्धेः सर्वशास्त्रसिद्धत्वादिति तत्राह" भा०। "नेतरादितरहानेन विना" सू०। "इतरादूहनादिपञ्चकमिथ्यात्(?)। तप आदेस्तात्त्विकी न सिद्धिः कुत इतरहानेन विना यतः सा सिद्धिरितरस्य विपर्ययस्य हानं विनैव भवत्यतः संसारापरिपन्थित्वात् सा सिद्ध्याभास एव न तु तात्त्विकी सिद्धिरित्यर्थः। तथा चोक्तं योगसूत्रेण। "ते समाधावुपसर्गाव्युत्थाने सिद्धयः" इति प्र०भाष्यम्।

पात० सू० भाष्ययोश्च एकत्र विषयविशेषे धारणाध्यानसमाधित्रयरूपसंयमविशेषात् कतिचित् सिद्धयो दर्शिताः यथा "परिणामत्रयसंयमादतीतानागतज्ञानम्" सू०। "धर्मलक्षणावस्थापरिणामेषु संयमात् योगिनां भवत्यतीतानागतज्ञानं धारणाध्यानसमाधित्रयमेकत्र संयम उक्तस्तेन परिणामत्रयं साक्षात्क्रियमाणमतीतानागतज्ञानं सम्पादयति" भा०। "शब्दार्थप्रत्ययानामितरेतराध्यासात् सङ्करस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम्" सू०। "संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम्" सू०। "प्रत्ययस्य परचित्तज्ञानम्" सू०। "कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासम्प्रयोगेऽन्तर्द्धानम्" सू०। "सोपक्रमं निरुपक्रमञ्च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा" सू०। "मैत्र्यादिषु बलानि" सू०। "बलेषु हस्तिबलादीनि" सू०। "प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्" सू०। "भुवनज्ञानं सूर्य्ये संयमात्" सू०। "चन्द्रे ताराव्यूहज्ञानम्" सू०। "ध्रुवे तद्गतिज्ञानम्" सू०। "नाभिचक्रे कायव्यूहज्ञानम्" सू०। "कण्ठकूपे क्षुत्पिपासानिवृत्तिः" सू०। "कूर्मनाड्यां स्थैर्य्यम्" सू०। "मूर्द्धज्योतिषि सिद्धदर्शनम्" सू०। "प्रातिभाद्वा सर्वम्" सू०। "हृदये चित्तसंवित्" सू०। "सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः परार्थत्वात् स्वार्थसंयमात् पुरुषज्ञानम्" सू०। "ततः प्रातिभश्रावणवेदनादर्शास्वादवार्त्ता जायन्ते" सू०। "ते समाधावुपसर्गाव्युत्थाने सिद्धयः" सू०। "बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः" सू०। "उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च" सू०। "समानजयाज्ज्वलनम्" सू०। "श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम्" सू०। "कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम्" सू०। "बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः" सू०। "स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः" सू०। "ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च" सू०। "रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत्" सू०। "ग्रहणस्वरूपास्मितान्व-

-त्वात्स्वरूपसंयमादिन्द्रियजयः" सू०। "ततो मनोजवित्वं विकरणभावः प्रधानजयश्च" सू०।

"परिणामत्रयसंयमादतीतानागतज्ञानम्" इत्यादिकैः "ततः प्रातिभश्रावणवेदनादर्शास्वादवार्त्ता जायन्ते" इत्यन्तसूत्रैरुक्तानां सिद्धीनां समाधावुपसर्गत्वं व्युत्थाने सिद्धित्वमाह "ते समाधावुपसर्गाव्युत्थाने सिद्धयः" सू०। ते प्रातिभाद्यः समाहितचित्तस्योत्पद्यमानाः उपसर्गास्तत्त्वदर्शनप्रत्यनीकत्वात्। व्युत्थितचित्तस्योत्पद्यमानाः सिद्धयः" भा०। एवमग्रे वक्ष्यमाणाः ततोऽणिमादिप्रादुर्भाव इत्यादयोऽपि सिद्धयो व्युत्थानदशायामेव समाधौ तूपसर्गा एव हेतोरविशेषात्। एवमन्या अपि सिद्धयः कैवल्यपादे दर्शिता यथा "जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः" सू०। "देहान्तरिता जन्मना सिद्धिः ओषधिभिरसुरभवने रसायनेनेत्येवमादि। मन्त्रैराकाशगमनाणिमादिलाभः तपसा सङ्कल्पसिद्धिः कामरूपी यत्र तत्र कामग इत्येवमादि समाधिजाः सिद्धयो व्याख्याताः" भा० तासाञ्च यथाऽन्यथापरिणामहेतुत्वं तथा तत्रस्तैरेव समर्थितम्"।

तन्त्रोक्तमन्त्रसिद्धिलक्षणं च तन्त्रसा० उक्तं यथा "मनोरथानामक्लेशः सिद्धिरुत्तमलक्षणा। मृत्योश्च हरणं तद्वत् देवतादर्शनं तथा। प्रयोगेऽक्लेशतः सिद्धिः सिद्धेस्तु लक्षणं परम्। परकायप्रवेशश्च पुरप्रवेशनं तथा। ऊर्ध्वोत्क्रमणं एवं हि चराचरपुरे गतिः। खेचरीमेलनं चैव तत्कथाश्रवणादिकम्। भूच्छिद्राणि प्रपश्येत्तु तद्वदुत्तमलक्षणम्। ख्यातिर्वाहनभूषादिलाभः सुचिरजीवनम्। भूपानां तद्गणानाञ्च वशीकरणमुत्तमम्। सर्वत्र सर्वलोकेषु चमत्कारकरी सुधीः। रोगापहरणं दृष्ट्या विषापहरणं तथा। पाण्डित्यं लभते मन्त्री चतुर्विधमयत्नतः। वैराग्यञ्च मुमुक्षुत्वं त्यागिता सर्ववश्यताम्। अष्टाङ्गयोगाभ्यसनं भोगेच्छापरिवर्जनम्। सर्वभूतेष्वनुकम्पा सार्वज्ञ्यादिगुणोदयः। इत्यादिगुणसम्पत्तिर्मध्यसिद्धेस्तु लक्षणम्। महैश्वर्यं धनित्वञ्च पुत्रदारादिसम्पदः। अधमाः सिद्धयः प्रोक्ता मन्त्रमायाद्यभूमिका। सिद्धमन्त्रस्तु यः साक्षात् स शिवो नात्र संशयः।

साध्यवत्तानिश्चयरूपसिद्धिस्तु अनुमानमनुमितीच्छायां कामिनीजिज्ञासादिवत् अनुमितेः पृथक् प्रतिबन्धिका अनुमित्सा तु तत्रोत्तेजिका। "विभाधयिषया शून्या सिद्धिर्यत्र न विद्यते। स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत्" भाषा०। सिद्धिश्च पक्षतावच्छेदकसामान्यावगाहिनी पक्षतावच्छेदकावच्छिन्नयत्किञ्चिद्धर्मावगाहिनी च तत्रावच्छेदकावच्छेदेनानुमितिं प्रति अवच्छेदकावच्छेदेन सिद्धिर्विरोधिनी न सामानाधिकरण्येन सिद्धिः। सामानाधिकरण्येनानुमितिं प्रति तु सिद्धिमात्रं विरोधीति विवेकः। संशयपक्षतावादिमते पक्षताविघटकत्वेन सिद्धेर्विरोधितेति विशेषः। १४दक्षकन्याभेदे वह्निपु०। [त्रि०।

**सिद्धिद** पु० सिद्धिं ददाति दा-क। वटुकभैरवे। २सिद्धिदातरि

**सिद्धियोग** पु० "शुक्रे नन्दा बुधे भद्रा शनौ रिक्ता कुजे जया। गुरौ पूर्णा च संयुक्ता सिद्धियोगः प्रकीर्त्तितः" ज्योतिषोक्ते शुक्रादिवारयुक्तनन्दादितिथौ।

**सिद्धिस्थान** न० तीर्थभेदे। "अतःपरं प्रवक्ष्यामि सिद्धिस्थानानि यानि तु। यत्रिकाराधिता देवी क्षिप्रं भवति सिद्धिदा। हरिद्वारं शतश्टङ्गञ्च त्रिकूटं पर्वतं तथा। विन्ध्या गङ्गा सरिद्वै यत्र रेवातीरमथापि वा। प्रयागो वाराणसी तु अथ वा मल्लिकेश्वरे। शङ्करेश्वरसान्निध्ये अथवा अमरेश्वरे। वेत्रवत्यास्तटे रम्ये हरिश्चन्द्रे तथा पुरे। सरस्वतीतटे पुण्ये सुगन्धायतनेऽपि वा। स्थानेष्वेषु जपं कुर्यात् मन्त्राद्ये कृतमानसः। भैरवं पुष्करं चैव चण्डीशं त्रिपुरान्तकम्। अट्टहासं चकोत्थाणं कपालाख्यप्रनामकम्। अजाविकं सरोद्धारं स्थानान्येतानि वर्जयेत्" देवीपु०।

**सिद्धेश्वरी** स्त्री देवीविशेषे। "सिद्धां सिद्धेश्वरीं सिद्धविद्याधरगणैर्युताम्। मन्त्रसिद्धिप्रदां योनिसिद्धिदां सिद्धशोभिताम्" ब्रह्ममालात० ११ पटले। "कृष्णेन बलभद्रेण गोपैः कंसजिघांसुभिः। सङ्केतकं कृतं तत्र मन्त्रनिश्चयकारकम्। तदा सङ्केतकैः सा च सिद्धा देवी प्रतिष्ठिता। सिद्धिप्रदा भोगदा च तेन सिद्धेश्वरी स्मृता। सङ्केतकेश्वरीञ्चैव दृष्ट्वा सिद्धिमवाप्नुयात्" इति वाराहपु०।

**सिद्धौघ** पु० ६त०। तारादेव्याः पूजान्ते पूज्ये गुरुभेदे "दिव्यौघाः सिद्धिदा वत्स! सिद्धौघान् शृणु यत्नतः। वसिष्ठः कूर्मनाथश्च मीननाथो महेश्वरः। हरिनाथो, मानवौघान् शृणु वक्ष्यामि तद्गुरून्" तन्त्रसा०।

**सिध्म** न० सिध-मन् किच्च। किलासरोगे हेमच०।

**सिध्मन्** न० सिध-मनिन् किच्च। १किलासरोगे अमरः २०५५ पृ० किलासशब्दादि दृश्यम्।

**सिध्मल** त्रि॰ सिध्मन्+अस्त्यर्थे लच्। १किलासरोगवति अमरः। २मीनविकारे स्त्री हेमच॰। [पुष्यनक्षत्रे अमरः

**सिध्य** पु॰ कार्य्यं साधयति सिध-णिच-कर्त्तरि यत् नि॰।

**सिध्र** पु॰ सिध-रक्। १साधौ २वृक्षे च उणा॰।

**सिध्रक** पु॰ सेधति रोगान् सिध-रक् स्वार्थे क। वृक्षभेदे "वनगिर्य्योः" पा॰ इत्यादिसूत्रेण सिध्रकशब्दस्य पाणिनिना दीर्घस्य विधानात् पुंस्त्वमेवास्य युक्तम् अमरोक्तक्लीवत्वमपाणिनीयम्। [त्रिका॰।

**सिध्रकावण** न॰ सिध्रकप्रधानं वनं णत्वम् दीर्घश्च। देवोद्याने

**सिन** पु॰ सीयते बध्यते सि-क्त ग्रासे तस्य नः। १ग्रासे नस्य बहुलात्तथात्वम्। [व्याडिः

**सिनी** स्त्री सित+ङीप् तस्य नश्च। शुक्लवर्णयुतस्त्रियाम्

**सिनीवाली** स्त्री सिनीं श्वेतां चन्द्रकलां वलति धारयति वल-अण् ङीप्। १चतुर्दशीयुक्तायाममावास्यायाम् अमरः। कुहूशब्दे २१६२ पृ॰ दृश्यम्। २दुर्गायां मेदि॰।

**सिन्दु(न्धु)क** पु॰ स्यन्दते स्यन्द-उ संप्रसारणञ्च पृषो॰ दस्य वा धः स्वार्थे वा क। सिन्दुवारवृक्षे अमरः (न्धु)मध्यस्तत्रार्थे शब्दर॰।

**सिन्दु(न्धु)वार** पु॰ सिन्धुं गजमदं वारयति तिक्तत्वात् वृ-अण्। १(निसिन्दा) वृक्षे अमरः "मुक्ताकलापीकृतसिन्धुवारम्" कुमारः। तस्य च श्वेतपुष्पत्वात् मुक्तावत्त्वम्। पृषो॰ न्धुमध्यस्तत्रार्थे रत्नको॰ २हयोत्तमे त्रिका॰।

**सिन्दूर** न॰ स्यन्द-ऊरन् संप्रसारणम्। स्वनामख्याते रक्तवर्णे १चूर्णभेदे अमरः २वृक्षभेदे पु॰ मेदि॰। "सीसोपधातुः सिन्दूरं गुणैस्तत् सीसवन्मतम्। संयोगजप्रभावेन तस्याप्यन्ये गुणाः स्मृताः। सिन्दूरमुष्णं वीसर्पकुष्ठकण्डूविषापहम्। भग्नसन्धानजननं व्रणशोधनरोपणम्" "दुग्धाम्लयोगतस्तस्य विशुद्धिर्गदितो बुधैः" भावप्र॰। भर्त्तायुष्कृते सधवया तद्धारणस्यावश्यकता यथोक्तं काशीख॰ ४अ॰ "हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलं तथा। कूर्पासकञ्च ताम्बूलं माङ्गल्याभरणं शुभम्। केशसंस्कारकवरीकरकर्णविभूषणम्। भर्त्तायुष्यमिच्छन्ती दूरयेन्न पतिव्रता"।

**सिन्दूरकारण** न॰ ६त॰। सीसके हेमच॰।

**सिन्दूरतिलक** पुंस्त्री॰ सिन्दूरवर्णस्तिलकचिह्नभेदो यस्य। १हस्तिनि मेदि॰ स्त्रियां ङीष्। २सधवायाम् स्त्री।

**सिन्दूरी** स्त्री सिन्दूरं तद्वर्णोऽस्त्यस्याः अच् गौरा॰ ङीष्। १रोचन्यां २धातक्याञ्च मेदि॰।

**सिन्धु** पु॰ स्यन्द-उ संप्रसारणं दस्य धश्च। १समुद्रे अमरः २रक्तचेलिकतायां ३नदभेदे मेदि॰ ४गजमदे हेमच॰। ५सिन्धुवारवृक्षे शब्दच॰। ६श्वेतटङ्कणे राजनि॰। ७रागभेदे सङ्गीत॰। ८नद्यां स्त्री मेदि॰ ९नदीभेदे राजनि॰। "शतद्रोर्विपाशायुजः सिन्धुनद्याः सुशीतं लघु स्वादु सर्वामयघ्नम्। जलं निर्मलं दीपनं पाचनञ्च प्रदत्ते बलं बुद्धिमेधायुषञ्च" राजनि॰ तज्जलगुणाः। १०नैर्ऋतीस्थे देशभेदे पु॰ कूर्मविभागशब्दे २१६८पृ॰ दृश्यम्। सोऽभिजनोऽस्य तस्य राजा वा अण्। सैन्धव पित्रादिक्रमेण तद्देशवासिनि तद्भूपे च। बहुषु अणो लुक्।

**सिन्धुकफ** पु॰ सिन्धोः कफ इव। समुद्रफेने शब्दर॰।

**सिन्धुकार** न॰ सिन्धुदेशे कीर्य्यते क्रियते वा कृ-कृ-वा अण्। श्वेतटङ्कणे राजनि॰। [शब्दर॰।

**सिन्धुखेल** पु॰ सिन्धुसमीपे खेलति खेल-अच्। सिन्धुदेशे

**सिन्धुज** न॰ सिन्धुदेशे समुद्रे वा जायते जन-ड। १सैन्धवलवणे अमरः २चन्द्रे ३कर्पूरे पु॰। ४लक्ष्म्यां स्त्री जटा॰ सिन्धुजातादयोऽप्यत्र।

**सिन्धुनन्दन** पु॰ ६त॰। १चन्द्रे २कर्पूरे त्रिका॰। सिन्धुसुतादयोऽप्यत्र। ३लक्ष्म्यां स्त्री। [शब्दच॰।

**सिन्धुपुष्प** पु॰ सिन्धौ पुष्प्यति विकाशते पुष्प-अच्। शङ्खे

**सिन्धुमन्थज** न॰ सिन्धुमन्थात् जायते जन-ड। १सैन्धवलवणे रत्नमा॰ २अमृते च।

**सिन्धुर** पुंस्त्री॰ सिन्धुर्मदजलमस्त्यस्य र। हस्तिनि हेमच॰ स्त्रियां ङीष् "मदान्धसिन्धुरघटा" गङ्गास्तवः।

**सिन्धुलवण** न॰ सिन्धुदेशजातं लवणम्। सैन्धवलवणे रत्नमा॰

**सिन्धुवारित** पु॰ सिन्धुः मदजलं वारितस्तिरस्कृतो येन अतितिक्तत्वात्। सिन्धुवारवृक्षे। (निसिन्दा) शब्दर॰।

**सिन्धुवेषण** पु॰ विष-ल्यु ६त॰। काश्मरीवृक्षे शब्दच॰।

**सिन्धुसङ्गम** पु॰ सिन्ध्वोः नद्योः नदीसमुद्रयोर्वा सङ्गमः। १नद्योः नदीसमुद्रयोर्वा मेलने अमरः। स यत्र। २तदाधारदेशे त्रि॰।

**सिन्धूद्भव** न॰ सिन्धोः उद्भवति उद्+भू-अच् ५त॰। सैन्धवलवणे रत्नमा॰ २समुद्रजातमात्रे त्रि॰। [क्लीबमित्यन्ये।

**सिन्धूपल** पु॰ सिन्धोरुपल इव। १सैन्धवलवणे हारा॰।

**सिप्र** पु॰ सृप-रक् पृषो॰। १सरोवरभेदे २चन्द्रे त्रिका॰ ३निदाघजले ४घर्मे च पु॰ मेदि॰। ५उज्जयिनीसमीपस्थे नदीभेदे स्त्री मेदि॰ "सिप्रातरङ्गानिलकम्पितासु" रघुः। वसिष्ठात् अरुन्धत्यो विवाहप्रसूतजलस्य सिप्रसरसि मेलनात्

शिप्राप्रादुर्भावो यथा "ततोऽयं सप्तधा भूत्वा पतितं मानसाचलात्। हेमाद्रेः कन्दरे सानौ सरसाञ्च पृथक् पृथक्। ततोऽयं पतितं शिप्रे देवभोग्ये सरोवरे। तेन शिप्रा नदी जाता विष्णुना प्रेरिता क्षितिम्" कालिपु० २३अ०। [नामता।

**सिम** पु० सि-मन् किच्च। सर्वस्मिन् इत्यर्थे। तदर्थेऽस्य सर्व-

**सिम्बा(म्बि)** स्त्री शाम्यति हृदिरनया शम-अच् इन् वा पृषो०। (छुटि) १शिम्बायाम् द्विरूपको० इनन्त.। २नखी-नामगन्धद्रव्ये राजनि० वा ङीप्। ङीबन्तः। ३नि-ष्पाव्यां भावप्र०। [धान्ये कलायादौ भावप्र०।

**सि(शि)म्बिजा** स्त्री शि(शि)म्बेर्जायते जन-ड। शमी-

**सिर** पु० सि-रक्। १पिप्पलीमूले हेमच०। २नाड्याम् ३अम्बुवाहिन्याञ्च स्त्री हेमच०। [सल्लकीवृक्षे भरतः।

**सिल्लकी** स्त्री सि-क्विप् लक-अच् गौरा० ङीष् कर्म०।

**सिवर** पुंस्त्री० सि-करप्। गजे जटा० स्त्रियां ङीष्।

**सिहुण्ड** पु० सो-कि सिः छेदस्तं हुण्डते कण्टकावृतत्वात् हुडि-अण्। स्नुहीवृक्षे शब्दर०। [स्वार्थे क तत्रैव।

**सिह्ल** पु० सिह-लक् पृषो०। हक्बूपाख्ये गन्धद्रव्ये अमरः

**सिह्लकी** स्त्री सिह-लकक् पृषो० गौरा० ङीष्। सल्लकी-वृक्षे शब्दर०। [शब्दर०।

**सिह्लभूमि** स्त्री सिह्लस्य गन्धद्रव्यस्य भूमिः। सल्लकीवृक्षे

**सीक** सेचने भ्वा० आ० सक० सेट्। सीकते असीकिष्ट। ऋदित् चङि न ह्रस्वः। पर्युदासेन न षोपदेशः।

**सीक** सर्षे वा चु० उभ० पक्षे भ्वा० प० सक० सेट्। सीक-यति ते सीकति असीसिकत् त असीकीत्। पर्युदासात् षोपदेशः। [भरतः।

**सीकर** पु० सीक्यते सिच्यतेऽनेन सीक-अरन्। जलकणे

**सीता** स्त्री सि-त पृषो० दीर्घः। १लाङ्गलपद्धतौ अमरः २जनकराजदुहितरि ३भद्राश्ववर्षस्थितगङ्गायाञ्च।

"अथ मे कर्षतः क्षेत्रं लाङ्गलादुत्थिता ततः। क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता। भूतलादुत्थिता सा तु व्यवर्द्धत ममात्मजा" रामा० बाल० "अथ लोकेश्वरी लक्ष्मीर्जनकस्य पुरे स्वतः। शुभक्षेत्रे हलोत्खाते तारे चोत्तरफाल्गुने। अयोनिजा पद्मकरा बालार्कशतसन्निभा। सीतामुखे समुत्पन्ना बालभावेन सुन्दरी। सीतामुखोद्भवात् सीता इत्यस्या नाम चाकरोत्" पद्मपु०। भद्राश्ववर्षनदीभेदश्च स्वर्गगङ्गाया धारा० भेदः जम्बुद्वीपशब्दे ३०४६ पृ० दृश्यः। ४लक्ष्म्याम्

५उमायां ६स्वर्गाधिदेवतायां नानार्थमञ्जरी। ७मदिरायां राजनि०।

**सीतापति** पु० ६त०। श्रीरामे शब्दर०।

**सीतायाःपति** पु० ६त० अलुक्समा०। श्रीरामे शब्दर०। "सीतायाः पतये नमः" इति पुराणम् असमस्तत्वे पत्ये इत्येव स्यात्।

**सीत्कार** पु० सीदित्यव्यक्तस्य कारः सीत्+कृ-घञ्। अनुरागजे शब्दे। [शब्दे हेमच०।

**सीत्कृत** न० सीत्+कृ-भावे क्त। १सीत्कारे २अनुरागज-

**सीत्य** न० सीतया लाङ्गलपद्धत्या निर्वृत्तं यत्। १धान्ये हेमच०। सीतामर्हति यत्।२हलकर्षणयोग्ये क्षेत्रादौ त्रि०

**सीधु** पु० सिध-उ पृषो०। १मद्ये २मद्यभेदे च "इक्षोः पक्वैः रसैः सिद्धः सीधुः पक्वरसश्च सः। आमैस्तैरेव यः सीधुः (सिरका) स च शीतरसः स्मृतः। सीधुः पक्वरसः श्रेष्ठः स्वराग्निबलवर्णकृत्। वातपित्तकरो हृद्यः स्नेहनो रोचनो हरेत्। विबन्धमेदःशोफार्शःशोफोदरकफामयान्। तस्मादल्पगुणः शीतरसः संलेखनः स्मृतः" राजनि०। [शब्दर०।

**सीधुगन्ध** पु० सीधोरिव गन्धोऽस्य वा न इत्समा०। बकुले

**सीधुपुष्प** पु० सीधुगन्धयुक्तं पुष्पमस्य। १कदम्बे २बकुले च ३धातक्यां स्त्री राजनि० ङीष्।

**सीधुरस** पु० सीधोरिव रस आस्वादोऽस्य। आम्रवृक्षे राजनि०

**सीमन्त** पु० सीम्नोऽन्तः शक०। १केशान्तर्गतवर्त्माकारे पदार्थे (सिँथि) हेमच०२केशरचनाभेदे। "षष्ठेऽष्टमे वा सीमन्त" इत्युक्ते गर्भावधिके षष्ठे अष्टमे वा मासि कर्त्तव्ये ३गर्भसंस्कारभेदे च सीमन्तोन्नयनशब्दे दृश्यम्।

**सीमन्तक** न० सीमन्ते कायति कै-क। १सिन्दूरे राजनि०

**सीमन्तिनी** स्त्री सीमन्त+अस्त्यर्थे इनि। नार्य्याम् अमरः।

**सीमन्तोन्नयन** न० सीमन्तस्य केशरचनाभेदस्य उन्नयनम् उत्तोलनमत्र। स्वनामख्याते गर्भसंस्कारभेदे।

तत्कालादि संस्कारत० दर्शितं यथा

"यदि पुंसवनं न कृतं तदा तस्मिन्नेव दिने प्रायश्चित्तात्मकमहाव्याहृतिहोमं कृत्वा पुंसवनं कृत्वा सीमन्तोन्नयनं कार्य्यम्। तथा च नारदः "येषान्तु न कृताः पूर्वं संस्कारविषयः क्रमात्। कर्त्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनात्। अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः। अवश्यकार्य्याः संस्कारा भ्रातृभिः पूर्वसंस्कृतैः"। क्रमात् भ्रातृणां संस्कारात्मञ्च पौर्वापर्य्यक्रमात् भ्रात०

क्रमस्तु शौद्रविषयः विवाहे तथा दर्शनात्। छन्दोगपरिशिष्टम् "देवतानां विपर्य्यासे जुहोतिषु कथं भवेत्। सर्वं प्रायश्चित्तं कृत्वा क्रमेण जुहुयात् पुनः। संस्कारा अतिपद्येरन् स्वकालाच्चेत् कथञ्चन। कृत्वैतदेव कुर्वीत ये तूपनयनादधः"। एतदित्यनेन सर्वं प्रायश्चित्तमनुकृष्टं तच्च प्रागेव विहृतम्। उभयकरणे तन्त्रेणैव मातृकापूजादि "गणशः क्रियमाणे तु मातृभ्यः पूजनं सकृत्। सकृदेव भवेत् श्राद्धमादौ न पृथगादिषु" इति छन्दोगपरिशिष्टात्। गोभिलः "अथ सीमन्तकरणं प्रथमे गर्भे चतुर्थे मासि षष्ठेऽष्टमे वा"। अथ पुंसवनानन्तरं सीमन्तः केशरचनाविशेषः। वाशब्दैक्याच्च चतुर्थादिमासानां तुल्यवद्विकल्पः किन्तु पूर्वः पूर्वः कालः प्रशस्तः "समर्थस्य क्षेपायोगादिति" न्यायात्। ततो नव मासादौ प्रायश्चित्तं कृत्वैव कर्त्तव्यम् प्रथमगर्भ इत्युपादानात् यदि कथञ्चिदकृत एतस्मिन् संस्कारे गर्भनाशे पुनर्गर्भोत्पत्तौ अयं कालनियमो न किन्तु "गर्भस्पन्दने सीमन्तोन्नयनं यावद्वा न प्रसवः" इति शङ्खलिखितोक्तकालो ग्राह्यः। हरिहरभाष्यधृते "या नार्य्यकृतसीमन्ता प्रसूते च कथञ्चन। गृहे निधाय तं बालं पुनः संस्कारमर्हति"। "षष्ठे मासेऽष्टमेऽह्नीज्यकुजादिनक्तां नन्दभद्रे तिथौ च मैत्र१७ मूले मृगाह्वे५ कर१३ पितृ१० पवने१५ पौष्ण२७ विष्णु२२ त्रिमुख्ये ११।१२।२०। २१।२५।२६। पुष्यादित्य७ रौद्रे६ युवतिहरिभने हरिके वापि लग्ने चन्द्रे ताराऽनुकूले शुभमपि नियतं स्यात्तु सीमन्तकर्म। क्रमाज्जरहिते लग्ने नवांशे पुंग्रहस्य च। केचिद्वदन्ति सीमन्तं तथारिक्तेतरे तिथौ"। अथ सीमन्तमूर्द्ध्वं नयत्यन्तेनि गोभिलोक्तेरस्याप्यर्थता।

**सीमन्** स्त्री षि-इमनि पृषो० न गुणो दीर्घश्च। १मर्य्यादायाम् अवधौ जटा० २स्थितौ ३क्षेत्रे ४अण्डकोषे मेदि०। "सीम्नि पुष्प्रकोहतः" सि०कौ० ५वेलायाञ्च विश्वः।

**सीमा** स्त्री+सीमन्+वा डाप्। १मर्य्यादायां २ग्रामादेरन्तभागे ३सीमन्शब्दार्थे च।

**सीमाविवाद** पु० सीमायां विवादः। अष्टादशसु विवादेषु मध्ये स्वनामख्याते विवादभेदे तत्स्वरूपादिकं वीरमि० दर्शितं यथा

"अथ सीमाविवादाख्यव्यवहारपदम् तत्स्वरूपमाह नारदः "सेतुकेदारमर्य्यादाविकृष्टाकृष्टनिश्चयः। क्षेत्राधिकारो यत्र स्याद् विवादः क्षेत्रजस्तु सः"। अस्यार्थः सेतुर्जलप्रवाहबन्धः। केदारः क्षेत्रम्। मर्य्यादा सीमा। विकृष्टो लाङ्गलप्रहतो देशः अकृष्टस्तद्रहितः एतेषां निश्चयो यत्र विवादे स्यात् स क्षेत्राधिकारः क्षेत्रविषयको विवादः क्षेत्रज उच्यत इति। अयं विवादः षड्विधः तथा च कात्यायनः "आधिक्यं न्यूनता चांशे अस्तिनास्तित्वमेव च। अभोगभुक्तिः सीमा च षड् भूवादस्य हेतवः"। ममैवाधिका भूरस्तीत्युक्तेनेति विवाद आधिक्यविवादः। एतावती भूरत्र नेत्युक्ते ममैतावतीति यो विवादः स न्यूनताविवादः अत्र ममांशोऽस्तीत्युक्ते यो विवादः सोऽस्तित्वविवादः अत्र तवांशो नास्तीत्युक्ते मम विद्यते इत्येवंविधो विवादो नास्तित्वविवादः। सीमाविवाद इति षड्विधो विवाद इत्यर्थः। तत्र सीमा चतुर्विधा। देशसीमा ग्रामसीमा क्षेत्रसीमा गृहसीमा चेति। तस्याश्चतुर्विधाया अपि यथासम्भवं पञ्चविधत्वमाह नारदः "ध्वजिनी मत्स्यिनी चैव नैधानी भयवर्जिता। राजशासननीता च सीमा पञ्चविधा स्मृता"। ध्वजिनी वृक्षादिचिह्निता वृक्षाश्च न्यग्रोधादयः। तदाह मनुः "सीमावृक्षांस्तु कुर्वीत न्यग्रोधाश्वत्थकिंशुकान्। शाल्मलीन् शालतालांश्च क्षीरिणश्चैव पादपान्" इति। मत्स्यिनी जलचिह्निता। नैधानी निखाततुषाङ्गारादिचिता। भयवर्जिता अर्थिप्रत्यर्थिपरस्परसम्मतिपत्तिनिर्मिता। तथा च व्यासः "ग्रामयोरुभयोः सीम्नि वृक्षा यत्र समुन्नताः। संपुष्पिता ध्वजाकारा ध्वजिनी सा प्रकीर्तिता। स्वच्छन्दगा बहुजला मत्स्यकूर्मसमन्विता। नित्यप्रवाहिणी यत्र सीमा सा मत्स्यिनी मता। तुषाङ्गारकपालैस्तु कुम्भैरायतनैस्तथा। सीमा प्रचिह्निता कार्य्या नैधानी सा निगद्यते" इति। नित्यप्रवाहिणीत्यनेन कूपवाप्यादीनि प्रकाशचिह्नान्युपलक्ष्यन्ते। तानि च बृहस्पतिना दर्शितानि "वापीकूपतडागानि चैत्यारामसुरालयाः। स्थलं निम्नं नदीस्रोतः शरगुल्मनगादयः। प्रकाशचिह्नान्येतानि सीमायां कारयेत् सदा। निहितानि तथान्यानि यानि भूमिर्न भक्षयेत्। अश्मनोऽस्थीनि गोवालांस्तुषान् भस्मकपालिकाः। करीषमिष्टकाङ्गारशर्करावालुकास्तथा। तानि सन्धिषु सीमाया अप्रकाशानि कारयेत्"। चैत्यं इष्टकादिभिः रचितचत्वरादिकम्। स्थलम् उन्नतः भूप्रदेशः। निम्नं परिखा। नगा अश्वत्थादयो वृक्षाः। आदिशब्देन

ग्रामादीनां स्थापितवीजानाञ्च प्रदर्शनम्। अस्थीनि पशुमनुष्याद्यस्थीनि। तुषाङ्गारकपालैरिति करीषादीनामन्येषां लिङ्गानामप्युपलक्षणम् तानि निधापयेत् “तत्र योगन्तु सीमानां प्रयत्नेन प्रदर्शयेत्। बालके च शिशूनान्ते दर्शयेत्तथैव च। एवं परम्परागाज्ञाने सीमाभ्रान्तिर्न जायते” इति। प्रदर्शयेदित्यन्तु कात्स्न्र्यं बहुत्व एकवचनम्। एतेषां लिङ्गानां कथञ्चिदभावे निश्चयोपायमाह नारदः “निम्नगापहृतोत्सृष्टनष्टचिह्नासु भूमिषु। तत्प्रदेशानुमानैश्च प्रमाणैर्भोगदर्शनैः”। निम्नगाया नद्या अपहृतेन अपहरणेन उत्सृष्टानि स्वस्थानाच्च्युतानि चिह्नानि यासान्तास्तथोक्ताः। प्रमाणैः साक्षिसामन्तादिभिः एवं निरूपितैर्लिङ्गैर्निर्णयं कुर्य्यादित्याह मनुः “एतैर्लिङ्गैर्नयेत् सीमां राजा विवदमानयोः। यदि संशय एव स्यात् लिङ्गानामपि दर्शने। साक्षिप्रत्यय एव स्यात् सीमावादविनिर्णयः”। साक्षिप्रत्ययः साक्षिहेतुकः। लिङ्गाभावपक्षपरिग्रहार्थोऽपिशब्दः ते च साक्षिणः सीमाविषयाः सीमालिङ्गविषया वा। साक्षिषु विशेषमाह बृहस्पतिः “आगमञ्च प्रमाणञ्च भोगकालञ्च नाम च। भूभागलक्षणञ्चैव ये विदुस्तेऽत्र साक्षिणः” प्रमाणमियत्ता। उभयेषामपि साक्षिणामभावे सामन्तवशान्निर्णयं कुर्य्यादित्याह मनुः “साक्ष्यभावे तु चत्वारो ग्रामाः सामन्तवासिनः। सीमाविनिर्णयं कुर्युः प्रयता राजसन्निधौ”। यदा पुनर्लिङ्गानि न सन्ति वर्त्तमानानि वा सन्दिग्धानि तदा निश्चयोपायमाह याज्ञवल्क्यः “सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा। रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः”। सामन्ताः समन्ततः स्थितग्रामक्षेत्राद्युपभोक्तारः। समग्रामाश्चत्वारोऽष्टौ इत्यादि प्रकारेण सङ्ख्याकाः। तथा च कात्यायनः “ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्त्तितम्। गृहं गृहस्य निर्दिष्टं समन्तात्परिरभ्य हि”। ग्रामस्य समन्ताच्चतसृषु दिक्षु परिरभ्य सम्बध्य स्थितो ग्रामः सामन्तः क्षेत्रादप्येवं ज्ञेयम्। सामन्तानां यदा रागद्वेषादिना प्रकटदोषसद्भावस्तदा सामन्तसामन्तवशान्निर्णयः कार्य्यः तदाह कात्यायनः “स्वार्थसिद्धौ प्रदुष्टेषु सामन्तेष्वर्थगौरवात्। तत्संसक्तैस्तु कर्त्तव्य उद्धारो नात्र संशयः”। तत्संसक्तैः सामन्तसंसक्तैः। सीमाया उद्धारः सीमायानिर्णय इत्यर्थः। तथा चैतदुक्तं भवति। चतसृषु दिक्षु स्थितसामन्तग्रामादिभ्योऽनन्तरत्वेन तद्बहिःस्थितग्रामादिभोक्तारस्तत्संसक्तास्तत्प्रदर्शितसीमालिङ्गैर्ग्रामादेः सीमान्निर्णयेयुरिति। यदा तु सामन्तसामन्तानामपि प्रकटदोषस्तदा तत्सामन्तैर्निर्णयस्तदाह कात्यायनः “संसक्तसक्तदोषे तु तत्संसक्ताः प्रकीर्त्तिताः” इति। तत्संसक्ताः संसक्तसक्तसंसक्ता इत्यर्थः। एवं चैतदुक्तं भवति चतसृषु दिक्षु स्थितसंसक्तग्रामादिभ्योऽनन्तरत्वेन तद्बहिःस्थितग्रामादिभोक्तारः संसक्तास्तैः प्रदर्शितसीमालिङ्गैर्ग्रामादेः सीमान्निर्णयेयुरिति। यदा पुनरेतेषामपि प्रकटदोषत्वन्तदा मौलादिवशान्निर्णयः कार्य्य इत्याह स एव “कर्त्तव्या न प्रदुष्टास्तु राज्ञा धर्म्मं विजानता। त्यक्त्वा दुष्टांस्तु सामन्तानन्यां मौलादिभिः सह। सीमान्त्र कारयेत् सीमामेवं धर्म्मविदो विदुः”। अन्यान् सामन्तव्यतिरिक्तान् सीमालिङ्गाभिज्ञान् नगरादीनित्यर्थः। नगरादयश्च दर्शिता नारदेन “नगरग्रामगणतोये च वृद्धतमा नराः”। सीमालिङ्गज्ञातार इति शेषः। मौलादिभिः मौलवृद्धोद्धृतैः। सम्मिलत्र मेलयित्वा। मौलादीनाञ्च लक्षणं दर्शितं कात्यायनेन “ये तत्र पूर्वं सामन्ताः पश्चाद्देशान्तरङ्गताः। तन्मूलत्वात्तु ते मौला ऋषिभिः परिकीर्त्तिताः। निष्पाद्यमानं यैर्दृष्टं तत्कार्य्यं सगुणान्वितैः। वृद्धा वा यदि वाऽवृद्धास्ते च वृद्धाः प्रकीर्त्तिताः”। सगुणान्वितैः पुरुषगुणान्वितैः। वाकारोऽनास्थायां वयोवृद्धत्वस्याप्रयोजकत्वात्। ये परम्परया कार्य्यज्ञातारस्ते उद्धर्त्तार इत्याशयः। तथा च संसक्तपक्षेषु स्फुटदोषदुष्टेषु पूर्वसामन्ताद्युपेतनागरिकग्राम्यजनश्रेणिवृद्धदर्शितैः सम्यक् लिङ्गैः सीमानिर्णयः कार्य्यः। यदा तु प्रतिवादिना सामन्तेषु कश्चिद्दोष उद्भावितः ते च न प्रकटदोषयुक्तास्तदोक्तो विशेषो मनुना “सामन्ताः साधनं पूर्वमनिष्टोक्तौ गुणान्विताः। द्विगुणास्तूत्तरा ज्ञेयास्ततोऽन्ये त्रिगुणा मताः”। अनिष्टोक्तौ प्रतिवादिना गुप्तदोषाभिधाने तत्सामन्तास्ततो द्विगुणग्राह्याः। तत्रापि तथात्वे मौलवृद्धादयः सामन्तत्रिगुणाग्राह्या इत्यर्थः। साक्ष्यादीनामेतेषां यदा अभावस्तदा त्वाह मनुः “सामन्तानामभावे तु मौलानां सीम्नि साक्षिणाम्। इमानप्यनुयुञ्जीत पुरुषान् वनगोचरान्। व्याधान् शाकुनिकान् गोपान् कैवर्त्तान् मूलखानकान्। व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरान्”। वनगोचराणां ग्रहणं

सीमासन्निहितदेशकर्षकाणामसत्त्वे विज्ञेयम् । अत एवोक्तं नारदेन "सीमायाञ्च बहिर्ये स्युर्येऽपि तत्कर्षजीविनः । गोपाः शाकुनिका व्याधा ये चान्ये वनगोचराः" इति । अत्र च सर्व्वत्र स्थावरविवादे क्षेत्रादिविवादे च सामन्तादयो निर्णायकाः तथा च कात्यायनः "तेषामभावे सामन्ता मौलवृद्धोद्धृतादयः । स्थावरे षट्प्रकारेऽपि कार्य्या नात्र विचारणा । क्षेत्रवास्तुतडागेषु आरामवनसेतुषु । समेतभावात् सामन्तैः कुर्य्यादेव विनिर्णयम् । ग्रामसीमासु च तथा तद्वन्नगरदेशयोः" । तेषां साक्षिणाम् । याज्ञवल्क्योऽपि "आरामायतनग्रामनिपानोद्यानवेश्मसु । एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु" । आयतनं निवेशनं निपानं पानीयस्थानं वर्षाम्बुप्रवहो वृष्ट्युद्भूत जलप्रवाहः । पुनः कात्यायनोऽपि "क्षेत्रकूपतडागानां केदारारामयोरपि । गृहप्रसादावसथनृपदेवगृहेषु च" । केदारः क्षुद्रसेतुयुक्तः क्षेत्रविशेषः । गोबलीवर्द्दन्यायेन भिन्नोक्तिः प्रसदः प्रासादः । बृहस्पतिरपि "सर्व्वत्र स्थावरे वादे विधिरेष प्रकीर्त्तितः" । राज्ञा ग्रामीणानां वादिप्रतिवादिनोश्च समक्षं सामन्तादयः प्रष्टव्याः तैर्यदुक्तं तत्पत्रे लेखनीयमित्याह मनुः "ग्रामीयककुलानान्तु समक्षं सीम्नि साक्षिणः । प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः । ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निर्णयम् । निबध्नीयात्तथा सीमां सर्व्वांस्तांश्चैव नामतः" । साध्वभिप्रायेण सीमलिङ्गानीत्युक्तम् । सीमासाक्षिणस्तु सीमां ब्रूयुः । तथा च बृहस्पतिः "शपथैः शापिताः स्वैः स्वैर्ब्रूयुः सीमाविनिर्णयम् । दर्शयेयुश्च लिङ्गानि तत्प्रमाणमिति स्थितिः" । स्वैः स्वैः । "सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः" इत्यादिनोक्तव्यवस्थानतिक्रमेणेत्यर्थः । यदा तु सीमालिङ्गसाक्षिणः सीमाचिह्नानि दर्शयितुं न शक्नुवन्ति केवलं सीमामात्रं जानन्ति तदा ते कथं ब्रूयुरित्याकाङ्क्षायामाह मनुः "शिरोभिस्ते गृहीत्वोर्व्वीं स्रग्विणो रक्तवाससः । सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसम्" इति । उर्व्वीं मृदम् । सीमाक्रमणाया इति शेषः । नयेयुरिदं द्वयोर्निरासार्थं बहुवचनमुक्तेकस्य, नारदेन "एकश्चेदुन्नयेत् सीमां सोपवासः समुन्नयेत् । रक्तमाल्याम्बरधरो भूमिमादाय मूर्द्धनि" इति एकस्याप्यनुज्ञानात् । बृहस्पतिरपि "ज्ञातचिह्नैर्विना साधुरेकोऽप्युभयसम्मतः । रक्तमाल्याम्बरधरो मृदमादाय मूर्द्धनि । सत्यव्रतः सोपवासः सीमां तां दर्शयेन्नरः" । ज्ञातचिह्नैर्विना सीमायाः ज्ञातृणां चिह्नाज्ञानासत्त्वे । ननु कथमेकस्य सीमानिर्णायकत्वम् "नैकः समुन्नयेत् सीमां नरः प्रत्ययवानपि । गुरुत्वादस्य कार्य्यस्य क्रियैषा बहुषु स्थिता" इत्येकस्य नारदेन निषेधादिति चेन्नैवम् स उभयानुमतधर्म्मविद्व्यतिरिक्तविषय इति न काप्यनुपपत्तिः । अयन्तु निर्णयः सीमाक्रमणदिनादारभ्य पक्षत्रयपर्य्यन्तं साक्षिसामन्तादीनान्दैविकराजिकोपद्रवाभावे अवसेयः न तु सीमाक्रमणाव्यवहितोत्तरमेव । तथा च कात्यायनः "सीमाचङ्क्रमणे कोषे पादस्पर्शे तथैव च । त्रिपक्षपक्षसप्ताहं दैवराजिकमिष्यते" । यथासङ्ख्यमिति शेषः । यदा तु साक्ष्यादीनां पक्षत्रयाभ्यन्तरे दैविकराजिकोपद्रवः अन्यथा वा मिथ्यावादित्वनिश्चयस्तदा ते पणशतद्वयं दण्डं प्रत्येकं दाप्याः । तथा च मनुः "यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः । विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम्" । यथोक्तेन शिरोभिस्ते गृहीत्वोर्व्वीमित्यादिनोक्तप्रकारेण नयन्तो निर्णयं कुर्व्वन्तः यथाभूतेनार्थेनेति शेषः । द्विशतं पणशतद्वयम् प्रत्येकम् दाप्या इत्यर्थः । सामन्तानां मिथ्यावादित्वे राज्ञा ते मध्यमसाहसेन दण्डेन दण्डनीयाः । तथा चाह याज्ञवल्क्यः "अनृते तु पृथक् दण्ड्या राज्ञा मध्यमसाहसम्" । सामन्ता यद्यनृतं मिथ्याभूतं सीमानिर्णयं कुर्य्युः तदा मध्यमसाहसं कार्षापणानां चत्वारिंशदधिकानि पञ्च शतानि दण्डनीयाः । नारदोऽपि "अथ चेदनृतं ब्रूयुः सामन्ताः सीम्नि निर्णये । सर्व्वे पृथक् पृथक् दण्ड्या राज्ञा मध्यमसाहसम्" । सामन्तव्यतिरिक्तानां तत्संसक्तादीनां मिथ्यावादित्वे पूर्व्वसाहसाख्येन दण्डेन प्रत्येकं ते दण्डनीयाः । तथा च नारदः "शेषाश्चेदनृतं ब्रूयुर्नियुक्ता भूमिकर्म्मणि । प्रत्येकन्तु जघन्यास्ते विनेयाः पूर्व्वसाहसम्" इति । मौला[illegible]नामनृतवादित्वे तमेव दण्डं स एवाह "मौलवृ[illegible]टयश्चान्ये दण्डनीयाः पृथक् पृथक् । विनेया[illegible]मेनैव साहसेनानृते स्थिताः" इति । कादि[illegible]ेन गोपशाकुनिकादिवनगोचराणां ग्रहणम् । द[illegible]याः मिथ्यावादित्वेन दण्डयितुमर्हाः मौलवृ[illegible] पृथक् पृथक् प्रथमेन साहसेन विनेया द[illegible]इत्यर्थः ।

यद्यपि सामन्तादीनां साक्ष्यपेक्षया दण्डाल्पत्वमुक्तं तथापि तेषां वाचनिकं दण्डाधिक्यमिति न कोऽपि दोषः। यद्यपि शाकुनिकादयो बहुधा पापरतत्वात् चिह्नप्रदर्शनोपयोगेनान्यथा सिद्धा न साक्षात् सीमानिर्णये उपयुज्यन्ते तथापि वृक्षादिलिङ्गप्रदर्शन एव मिथ्याभाषित्वसम्भवात्तदभिप्रायेणैव दण्डविधानम्। लोभादिना भेदेनोक्तौ अनुक्तौ च साक्ष्यादीनां दण्डमाह कात्यायनः "बहूनान्तु गृहीतानां न सर्वे निर्णयं यदि। कुर्य्युर्भयाद्वा लोभाद्वा दाप्यास्तूत्तमसाहसम्"। एवमज्ञानादिना अन्यथावचने साक्ष्यादीन् दण्डयित्वा पुनः सीमाविचारः प्रवर्त्तयितव्यः तथा च स एवाह "अज्ञानोक्तौ दण्डयित्वा पुनः सीमां विचारयेत्। कीर्त्तिते यदि भेदः स्याद्दण्ड्यास्तूत्तमसाहसम्"। साक्ष्यादीनां सर्वेषाम् अज्ञानोक्तौ भेदेनोक्तौ च पुनर्विचारश्च लेख्यप्रमाणेन कर्त्तव्यम्। अतएव शङ्खलिखितावपि "सामन्तविरोधे लेख्यप्रत्ययः" इति। यदा पुनः सामन्तप्रभृतयो ज्ञातारश्चिह्नानि च न सन्ति तदा राजा स्वेच्छया निर्णयं कुर्य्यात् तथा च याज्ञवल्क्यः "अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्त्तिता"। ज्ञातॄणां सामन्तादीनां चिह्नादीनाञ्च वृक्षादीनामभावे राजैव स्वातन्त्र्येण सीमानं प्रवर्त्तयेत्। नारदोऽपि "यदा च न स्युर्ज्ञातारः सीमाया न च लक्षणम्। तदा राजा द्वयोः सीमामुन्नयेदिष्टतः स्वयम्"। इष्टतः इच्छया सार्वविभक्तिकस्तसिः। ग्रामद्वयमध्यवर्त्तिनीं विवादास्पदीभूतां भुवं समं प्रविभज्यास्पदमुभयोः समर्प्य तन्मध्ये सीमाचिह्नानि कुर्य्यात्। यदा तस्यां भूमावुपकारातिशयो यत्र दृश्यते तदा तत्रैव सा सकला भूर्योजनीया न तूभयत्र। तथा च मनुः "सीमायामविषह्यायां स्वयं राजैव धर्मवित्। प्रदिशेद्भूमिमेतेषामुपकारादिति स्थितिः" इति। अविषह्यायां ज्ञातृचिह्नरहितायाम्। प्रदिशेत् प्रवेशयेदित्यर्थः। अयञ्च निर्णयो राज्ञा निर्णयान्तरवदव्यवहितोत्तरमेव न कर्त्तव्यः किन्तु सीमालिङ्गानि यदा आवरकाद्यभावात् स्फुटं दृश्यन्ते तदा कर्त्तव्यः। तथा च मनुः "सीमां प्रति समुत्पन्ने विवादे ग्रामयोर्द्वयोः। ज्यैष्ठे मासि नयेत् सीमां सुप्रकाशेषु सेतुषु"। द्वयोर्ग्रामाधिपयोर्विवादे सीमां प्रति समुत्पन्ने ज्यैष्ठे मासीत्युपलक्षणं मासान्तरेऽपि सेतुष्वितिषु सीमालिङ्गेषु व्यक्तेषु विवादास्पदीभूतां सीमा-

निर्णयेदित्यर्थः। ग्रामग्रहणं नगरादेरुपलक्षणार्थम्। अतएव कात्यायनः "सामन्ताश्चेत् सामन्तैः कुर्य्यात् क्षेत्रादिनिर्णयम्। ग्रामसीमादिषु तथा तद्वन्नगरदेशयोः" इति। यदा पुनः ग्रामादीनां सीमात्वेन परिकल्पिता नदी कदाचित् ग्रामान्तरं भित्त्वा प्रवहन्ती दक्षिणभागे स्थितां पूर्वं काञ्चिद्भूमिं वामभागनिविष्टां करोति तथा तत्रैकग्रामसम्बन्धिनी भूरन्यत्र राज्ञा योज्यते तत्र निर्णयोपायमाह वृहस्पतिः "अन्यग्रामात् समाहृत्य दत्ताऽन्यस्य यदा मही। महानद्याथ राज्ञा च कथन्तत्र विचारणा। नद्योत्सृष्टा राजदत्ता यस्य तस्यैव सा मही। अन्यथा न भवेल्लाभो नराणां राजदैविकः। ग्रामयोर्जीवनञ्च दैवराजवशात्तयोः। तस्मात् सर्वेषु कार्य्येषु तत्कृतन्न विचालयेत्"। न च नदीकृतस्य दैवकृतत्वाभावः शङ्कनीयः दैवशब्दस्य भाग्यवाचित्वान्नदीकृतमपि दैवकृतं भवत्येव। तथा चाह स एव "ग्रामयोरुभयोर्यत्र मर्य्यादा कल्पिता नदी। कुरुते दानहरणं भाग्याभाग्यवशात्तयोः। एकत्र कूलपातन्तु भूमेरन्यत्र संस्थितिम्। नदी तीरे प्रकुरुते तस्य तान्न विचालयेत्"। तत्र नदीवशात् प्राप्तभूमिकस्य तां प्राप्तां भूमिं न विचालयेत् नान्यथा कुर्य्यात् पूर्वस्वामी नापच्छिन्द्यादित्यर्थः। एतदनुप्तशस्यतीरविषयम्। उप्तशस्यविषये पुनः स एवाह "क्षेत्रं सशस्यमुत्क्रम्य भूमिश्छिन्ना यदा भवेत्। नदीस्रोतःप्रवाहेण पूर्वस्वामी लभेत ताम्"। तां सशस्यां भूमिं पूर्वस्वामी यावदुप्तस्य शस्यफलप्राप्तिस्तावल्लभेतेत्यर्थः। फलप्राप्तेरूर्द्ध्वं पुनः पूर्ववचनविषयसमानता। राजदत्तविषये क्वचित् प्रतिप्रसवमाह स एव "या राज्ञा क्रोधलोभेन छलन्यायेन वा हृता। प्रदत्ताऽन्यस्य तुष्टेन न सा सिद्धिमवाप्नुयात्"। स्वत्वहेतुप्रतिग्रहादिलक्षणविषयमेतत्। स्वत्वहेतुप्रतिग्रहादिप्रमाणाभावे पुनः स एवाह "प्रमाणरहितां भूमिं भुञ्जानो यस्य सा हृता। गुणाधिकाय वै दत्ता तस्य तान्न विचालयेत्"। प्रमाणरहितां स्वत्वहेतुप्रतिग्रहादिप्रमाणरहिताम्। गृहादिविषयकं निर्णयमाह स एव "निवेशकालादारभ्य गृहवप्र्यापणादिकम्। येन यावद्यथा भुक्तं तस्य तन्न विचालयेत्"। येन स्वामिना यावत् प्रमाणभूम्यादियुक्तं तथा येन पूर्वादिदिगभिमुखद्वारादियुक्तत्वादिरूपेणोपभुक्तं तत्तस्य स्वामिनः सकाशान्न विचालयेत् नान्यथा कुर्य्यादित्यर्थः।

अत्र निवेशकालादारभ्येत्यभिधानान्मध्ये कृताया अवस्थाया निवर्त्त्यत्वं दर्शितम्। निवेशकालादारभ्य स्थितानि गवाक्षादिकानि प्रातिवेशिकाद्यनिष्टकारीण्यपि न निवर्त्त्यन्त इत्युक्तं तेनैव "वातायनं प्रणालीं च तथा निर्व्यूहवेदिकाम्। चतुःशालस्यन्दनिकां प्राङ्निविष्टां न चालयेत्"। वातायनं गवाक्षः। प्रणाली पाषाणादिनिर्मित जलनिर्गमोपायः। निर्व्यूहो द्वारनिर्गतकाष्ठविशेष इति कल्पतरौ। निर्व्यूहो गृहकोण इति स्मृतिचन्द्रिकायाम्। वेदिका रथ्यादिप्रदेशसंस्कृतोन्नता भूमिः। चतसृणां शालानां समाहारः चतुःशालम्। तस्मात् स्यन्दनिका वृष्टिजलनिपातः। कात्यायनोऽपि "मेखलाभ्रमनिष्काशगवाक्षान्नोपरोधयेत्। प्रणालीं गृहवास्तुञ्च पीडयन् दण्डभाग्भवेत्"। मेखला कुड्यमूलबन्धः। भ्रमो जलनिर्गमः। निष्काशः कुड्यादिभित्तिषु निर्गतं काष्ठादिनिर्मितमस्पृष्टभूमिकमुपवेशनस्थानम्। नोपरोधयेत् न निरुन्ध्यात्। गृहवास्तुः वासभूमिः। पूर्वमविद्यमानाः परानिष्टकारिण्य एते न कर्त्तव्या इत्याह स एव "निवेशनभयादूर्द्ध्वं नैते योज्याः कदाचन। दृष्टिपातं प्रणालीञ्च न कुर्य्यात् परवेश्मसु"। दृष्टिपातो गवाक्षः। परवेश्मसु परवेश्माभिमुख्येन। परकुड्यनिकटे पुरीषोत्सर्गादिकमपि न कर्त्तव्यम् तथा च बृहस्पतिः "वर्चःस्थानं वह्निचयङ्गर्त्तोच्छिष्टाम्बुसेचनम्। अत्यारात् परकुड्यस्य न कर्त्तव्यं कथञ्चन"। वर्चःस्थानम् पुरीषोत्सर्गस्थानम्। अत्यारादतिसमीपे अरत्निद्वयपरिमितप्रदेश इत्यर्थः। तथा च कात्यायनः "विण्मूत्रोदकसेकञ्च वह्निश्वभ्रनिवेशनम्। अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत्"। संसरणशब्दार्थनिर्वचनपुरःसरन्तस्यानिरोध्यत्वमाह बृहस्पतिः "यान्त्यायान्ति जना येन पशवश्चानिवारिताः। तदुच्यते संसरणन्तद्रोद्धव्यन्तु केनचित्"। तथा च सम्यगनिवारितं सरन्त्यस्मिन्निति संसरणनिर्वचनमित्यर्थः। चतुष्पथादयोऽपि न निरोद्धव्याः तथा च नारदः "अवस्करस्थलश्वभ्रस्यन्दनिकादिभिः। चतुष्पथसुरस्थानराजमार्गांश्च रोधयेत्"। अवस्करः पुरीषम्। गृहादिशोधनार्थं पांशुसमूह इति हरिहरादयः। स्थलं वेदिका श्वभ्रङ्गर्त्तः। भ्रमो जलनिर्गममार्गः। स्यन्दनिका पटलप्रान्तः। अन्यदपि आदिशब्देन तादृशं ग्राह्यम्। रथ्यामार्गो राजमार्गो न तु चतुष्पथ इति कल्पतरुः। न च चतुष्पथराजमार्गयोरभेद इति शङ्कनीयं तयोर्भेदात्। तथा च कात्यायनः "सर्वे जनाः सदा येन प्रयान्ति स चतुष्पथः। अनिषिद्धा, यथाकालं राजमार्गः स उच्यते"। अनिषिद्धा इत्यस्य पूर्वेणान्वयः। यत्र राजकीयैरकाले गमनं प्रतिषिध्यते स राजमार्ग इत्यर्थः। क्षेत्रस्य समीपे मध्ये वा यस्य सर्वदा मार्गोऽस्ति तत्र निरोधो न कर्त्तव्यः। तथा च शङ्खलिखितौ "मार्गक्षेत्रे पथि विसर्गो राजमार्गे रथस्य परिवर्त्तनमिति" पथिविसर्गः पथोविसर्गः। राजमार्गे यावता प्रदेशेन रथैः परिवर्त्तते तावान् प्रदेशस्त्यक्तव्य इत्यर्थः। संसरणानामवरोधकारिणान्तु दण्डो माषको दाप्यः यथाह बृहस्पतिः "यस्तत्र सङ्करं स्वल्पं वृक्षारोपणमेव च। कामात् पुरीषं कुर्य्याच्च तस्य दण्डस्तु माषकः"। सङ्करोऽत्र शकटादिसङ्कीर्णता वृक्षपादानं लतादीनामप्युपलक्षणम्। माषोऽत्र ताम्रिकः, दण्डस्य अपराधानुसारेण कल्पयितुमुचितत्वात्। ये तु राजमार्गे पुरीषोत्सर्गादिकं कुर्वते तेषामधिको दण्डः तथा च मनुः "समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि। स द्वौ कार्षापणौ दद्यादमेध्यं चाशु शोधयेत्"। आपद्गतादिषु तु दण्डो नैवोक्तः "आपद्गतस्तथा वृद्धो गर्भिणी बाल एव च। परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः"। परिभाषणं क्रूरभाषणम्। तडागादौ ततोऽप्यधिको दण्डः। तथा च कात्यायनः "तडागोद्यानतीर्थानि योऽमेध्येन विनाशयेत्। अमेध्यं शोधयित्वा तु दण्डयेत् पूर्वसाहसम्"। ये पुनर्मलिनवस्त्रप्रक्षालनादिना तीर्थानि दूषयन्ति तस्याप्ययमेव दण्ड इत्याह स एव "दूषयेत् सिद्धतीर्थानि स्थापितानि महात्मभिः। पुण्यानि पावनीयानि प्राप्नुयात् पूर्वसाहसम्"। मर्य्यादाप्रभेदनादौ दण्डमाह याज्ञवल्क्यः "मर्य्यादायाः प्रभेदे तु सीमातिक्रमणे तथा। क्षेत्रस्य हरणे दण्डाः अधमोत्तममध्यमाः"। अनेकक्षेत्रव्यवच्छेदिका साधारणी मर्य्यादा सीमा तस्याः प्रकर्षेण भेदने सीमातिक्रमणे सीमामतिलङ्घ्य कर्षणे क्षेत्रस्य च भयादिप्रदर्शनेन हरणे यथाक्रमेणाधमोत्तममध्यमसाहसदण्डा वेदितव्याः। यत् तु विष्णुवचनम् "सीमाभेत्तारमुत्तमसाहसं दण्डयित्वा पुनः सीमां कारयेदिति"। तत्र हि सीमामतिलङ्घ्य कर्षितः पुनः सीमाकरणं पुनस्तत्र कर्षणस्याकरणमि-

त्येवं व्याख्येयम्। तेन न पूर्ववचनविरोधः क्षेत्रपहरणं गृहाद्युपलक्षणार्थम्। अज्ञानात् क्षेत्रादिहरणेऽधम एव यथाह मनुः "गृहं तडागमारामं क्षेत्रं वा भीषया हरन्। शतानि पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतो दमः"। वृद्धमनुः "स्थापितां चैव मर्य्यादामुभयोर्ग्रामयोस्तथा। अतिक्रामन्ति ये पापास्ते दण्ड्या द्विशत दमम्"। अपच्छिद्यमानक्षेत्रादिभूयस्त्वे उत्तमोऽपि दण्डः प्रयोक्तव्यः "वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने। तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसम्" इति स्मरणात्। यत्तु शङ्खलिखिताभ्याम् सीमातिक्रमणे दण्डाधिक्यमुक्तम् "सीमाव्यतिक्रमे त्वष्टसहस्रमिति" तत् सम्पूर्णसीमातिक्रमविषयम्। सीमास्वभिनूत्पन्नवृक्षादिफलं नैवैकेन ग्राह्यं यथाह कात्यायनः "सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः। फलं पुष्पञ्च सामान्यं क्षेत्रस्वामिषु निर्दिशेत्"। सामान्यं साधारणं क्षेत्रयोः स्वामिषु क्षेत्रस्वामिषु। तथा चान्यतरेणैव तद्वृक्षीयफलादिग्रहणे तदनुरूपेण दण्ड इति ध्वनितम्। यदा पुनरन्यक्षेत्रे वृक्षादिसमुत्पन्नोऽन्यक्षेत्रे शाखाः प्रसृताः तत्र कः स्वामीत्याकाङ्क्षायां स एवाह "अन्यक्षेत्रे तु जातानां शाखा यत्रान्यसंस्थिताः। स्वामिनं तं विजानीयाद् यस्य क्षेत्रे तु संश्रिताः। संश्रिताः प्ररूढाः। परक्षेत्रे प्रार्थनया क्रियमाणं सेतुकूपादिकं क्षेत्रस्वामिना न निषेद्धव्यं तथाह याज्ञवल्क्यः "न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः। परभूमिं हरन् कूपः स्वल्पक्षेत्रो बहूदकः"। अल्पबाधः अल्पपीडाकरः कल्याणकारको बहूपकारकः। स्वल्पक्षेत्रः स्वल्पक्षेत्रवर्त्ती आभ्यां विशेषणाभ्यां यः सेतुः क्षेत्रमध्यवर्त्तितया बहुपीडाकरस्तदा दिक्षु वाञ्छितक्षेत्रवर्त्तितया अल्पोपकारको वा तत्र निषेद्धव्य इति दर्शितम्। तत्र नारदोऽपि "परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषिध्यते। महागुणोऽल्पदोषश्चेद् वृद्धिरिष्टा क्षये सति" क्षये अल्पक्षेत्रक्षये सत्यपि वृद्धिरेव इष्टा, अतो महागुणः स्वक्षेत्रेऽपि उपकारकोऽल्पदोषश्चेत्तदा न प्रतिषेद्धव्य इत्यर्थः। अन्यक्षेत्रे सेतुकूपादिप्रवर्त्तनं तत्स्वाम्याद्याज्ञां लब्ध्वा कर्त्तव्यमित्याह याज्ञवल्क्यः "स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्त्तयेत्। उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः"। यस्तु क्षेत्रस्वामिनं तद्वंश्यं तदभावे राजानं वा प्राप्य

मर्य्यादानेन वा तत्क्षेत्रे सेत्वादिकं करोति स सेत्वाद्युत्पन्नफलोपभोगं दृष्टमदृष्टं वा न लभते किन्तु तत्स्वाम्येव तल्लभते तदभावे राजा। अतस्तदाज्ञां गृहीत्वा सेत्वादिकं कर्त्तव्यमित्यर्थः। जीर्णानाम् अन्यदीयसेत्वादीनाम् उद्धारोऽपि तत्स्वाम्याद्यनुज्ञां गृहीत्वा कार्य्य इत्याह नारदः "पूर्वप्रवृत्तमुत्सन्नमपृष्ट्वा स्वामिनन्तु यः। सेतुं प्रवर्त्तयेद्यस्तु न स तत्फलभाग्भवेत्। मृते तु स्वामिनि पुनस्तद्वंश्ये वापि मानवे। राजानमामन्त्र्य ततः कुर्य्यात् सेतुप्रवर्त्तनम्। अतोऽन्यथा क्लेशमायात्म मृगव्याधनिदर्शनात्"। मृगव्याधदृष्टान्तः स्फुटीकृतस्तेनैव, "इमवत्तस्य नश्यन्ति यो विद्धमनुविध्यति"। तत्र मृगव्याधस्य। कात्यायनोऽपि "अस्वाम्यनुमतेनैव संस्कारं कुरुते तु यः। गृहोद्यानतडागानां संस्कर्त्ता लभते न तु। देयं स्वामिनि चायाते तन्निवेद्य नृपे यदि। कथाचेद्य प्रयुक्तस्तु तद्दत्तं लभते व्ययम्"। नृपे अनावेद्य कृतं यत्तडागादिसंस्कारार्थं व्ययनत् स्वामिनि ग्रामान्तरादागते तेन देयमपि न प्राप्नोति। नृपे निवेद्य संस्करणे तदर्थं व्ययं प्राप्नोति। फलन्तु स्वाम्यनुमत्यभावे न प्राप्नोतीत्यर्थः। यः परक्षेत्रमकृष्टमिदं कृषामीत्यङ्गीकृत्य पश्चाद्‌ न कृषति नाप्यन्येन कर्षयति तं प्रत्याह याज्ञवल्क्यः "फालाहतमपि क्षेत्रं यो न कुर्य्यान्न कारयेत्। स प्रदाप्यः कृष्टफलं क्षेत्रमन्येन कारयेत्"। यद्यपि फालाहतं किञ्चिद्धलेन विदारितं सस्यबीजावापयोग्यं न भवति तथाप्यकृष्टक्षेत्रस्य फलं यावत् तत्रोत्पत्तियोग्यं सामन्तादिकल्पितं तावदसौ स्वामिने दापनीयः तच्च पूर्वकर्षकादाच्छिद्याऽपरेण कारयेत्। व्यासोऽपि "क्षेत्रं गृहीत्वा यः कश्चिन्न कुर्य्यान्न च कारयेत्। स्वामिने स शदं दाप्यो राज्ञे दण्डञ्च तत्समम्"। शदं क्षेत्रफलम्। तत्समं तदनुरूपमित्यर्थः। स्वामिग्राह्यं क्षेत्रफलमपि कियदित्याकाङ्क्षायां स एवाह "चिरावसन्ने दशमं कृष्यमाणे तथाष्टकम्। सुसंस्कृतेऽपि षष्ठं स्यात् परिकल्प्य यथास्थिति" इति। चिरावसन्ने चिरकालमकृष्टे क्षेत्रेऽहमिदं कृषामीत्यङ्गीकृत्योपेक्षिते सामन्तैर्यथास्थिति क्षेत्रस्थित्यनुसारेणैतावदत्रोत्पत्तुं योग्यमिति परिकल्प्य क्षेत्रस्वामिने तस्य दशमभागं, कृष्यमाणे अचिरावसन्ने स्वीकृत्यानुपेक्षिते तु अष्टमं भागं सुसंस्कृते तूपेक्षिते षष्ठं भागं दाप्य इत्यर्थः। यस्तु क्षेत्रस्वामिनः

सामर्थ्यवैकल्यादिनाऽकृष्टक्षिलावस्थां प्राप्ते क्षेत्रे स्वाम्यनिवारितः सन् स्वयमेव तत्कर्षणादिकं करोति तदा स क्षेत्रस्वामिने फलं न दापनीयः। किन्तु तस्य फलं स्वयमेव भुञ्जीयादित्याह नारदः "अशक्तप्रेतनष्टेषु क्षेत्रिकेष्वनिवारितः। क्षेत्रं चेद्विकसेत् कश्चिदश्नुवीत स तत्फलम्"। प्रेता मृताः नष्टाः कुत्रचिद्गता इति चिरमपरिचिताः। क्षेत्रिकेषु क्षेत्रस्वामिषु तेन क्षेत्रस्वामिना तत्पुत्रादिना वा समागतेनैव विधाय कर्षादिखिलभञ्जनार्थं व्ययं दत्त्वैव स्वीयं क्षेत्रं ग्राह्यमिति स एवाह "विकृष्यमाणे क्षेत्रे तु क्षेत्रिकः पुनरागतेत् खिलोपचारं तत् सर्वं दत्त्वा क्षेत्रमवाप्नुयात्"। अथ खिलाद्यवस्था कदा क्षेत्रस्य भवतीत्याकाङ्क्षायां स एवाह "संवत्सरेणार्द्धखिलमीरितं वत्सरैस्त्रिभिः। पञ्चवर्षावसन्नान्तु क्षेत्रं स्यादटवीसमम्"। कर्षणरहितं संवत्सराऽर्द्धखिलं भवति यत्नसाध्यं भवति वर्षत्रये तु ईरितं खिलं महायत्नसाध्यं भवति। वर्षपञ्चके न ईरितं क्षेत्रम् अटवीतुल्यं स्यात् अतिदुष्कर्षं भवेदित्यर्थः। खिलभञ्जनार्थं व्ययदानासामर्थ्ये क्षेत्रस्वामिनः क्षेत्रफलस्याष्टमो भागः कर्षकेण वर्षाष्टकं स्वामिने देयः अवशिष्टं सर्वं स्वयमेव ग्राह्यम्। क्षेत्रं च वर्षाष्टकानन्तरन्तत्स्वामिने देयम्। तथा च कात्यायनः "व्ययक्रिते न दद्याद् खिलार्थे यः कृतो व्ययः। तदष्टभागहीनन्तु कर्षकः फलमाप्नुयात्" इति। "वर्षाण्यष्टौ स भोक्ता स्यात्परतः स्वामिने तु तत् इति"।

**सीर** पु० सि–रक् पृषो०। १सूर्य्ये मेदि० २अर्कवृक्षे ३हले च अमरः संज्ञायां कन्। ४शिशुमारे शब्दमा०। [२जवलक्षणे।

**सीरध्वज** पु० सीरो हलः तच्चिह्नितो ध्वजो यस्य। चन्द्रवंश्ये

**सीरपाणि** पु० सीरः हलः पाणौ यस्य। बलदेवे अमरः।

**सीरिन्** पु० सीरोऽस्त्यस्य आयुधत्वेन इनि। बलरामे हला०

**सीलन्द** पु० मत्स्यभेदे (सौलिन्दा) "सीलन्धः श्लेष्मलो वृष्यो विपाके मधुरो गुरुः। वातपित्तहरो हृद्य आमवातकरश्च सः" भावप्र०।

**सी(से)वन** न० सिव–ल्युट् नि० वा दीर्घः। सीवने तन्तुसन्ताने (सेलोयान) अमरः २लिङ्गमध्यस्थस्थाने स्त्री हेमच० ङीप्।

**सीस** न० सि–क्विप् पृषो० सो–क कर्म०। (सीसे) धातुभेदे हेमच० नागशब्दे ४००९ पृ० तद्गुणादि दृश्यम्। स्वार्थे क। तत्रार्थे अमरः।

**सीहुण्ड** पु० सिहुण्ड+पृषो० दीर्घः। स्नुहीवृक्षे राजनि०।

**सु** अव्य० सु–डु। १पूजायाम् २अतिशये अमरः। ३कृच्छ्रे ४अनुमतौ ५समृद्धौ मेदि० ६अनायासे च अनेकार्थको०। पूजायामस्य नोपसर्गत्वम् तेन सुस्तुतमित्यादौ न षत्वम्। अतिशयादौ तु सुष्टुत इत्यादि। गणरत्नेऽर्थविशेषासत्त्वक्रमेणोदाहृतम् यथा "सु प्रशंसानुमतिपूजाभृशकृच्छ्रशुभेषु। सुरूपः सुकृतं सुसाधुः सुतप्तः सुदुःकरं सुगन्धिः"।

**सुकण्टका** स्त्री सुष्ठु कण्टकोऽस्याः। घृतकुमार्य्याम् राजनि०

**सुकण्डु** स्त्री सु+कण्डु+यक् उ। कण्डुरोगे (चुलकाना) शब्दर०।

**सुकन्द** पु० शोभनः कन्दोऽस्य। १कशेरौ राजनि० २शोभनकन्दयुक्ते त्रि० संज्ञायां क। ३पलाण्डौ अमरः। ४वाराहीकन्दे ५धरणीकन्दे राजनि०।

**सुकन्दिन्** पु० शोभनः हितकरः कन्दोऽस्त्यस्य इनि। शूरणे (ओल) राजनि०। [८१२ पृ०।

**सुकन्यका** स्त्री शर्य्यातिनृपकन्यायां च्यवनर्षिपत्न्याम् भाग०

**सुकरा** स्त्री सुखेन क्रियते दुह्यते वा सु+कृ–खल्। १सुशीलायां गवि अमरः २सुखसाध्ये त्रि०।

**सुकर्णक** पु० सुष्ठु कर्ण इव कन्दोऽस्य कप्। १हस्तिकन्दे राजनि० २शोभनकर्णयुक्ते त्रि०।

**सुकर्णिका** स्त्री सुष्ठु–कर्णाविव पर्णान्यस्याः कप् अत इत्त्वम्। मूषिकपर्ण्याम् शब्दर०।

**सुकर्णी** स्त्री सुष्ठु कर्णाविव पत्राण्यस्याः ङीप्। इन्द्रवारुण्याम् (राखालशशा) राजनि०।

**सुकर्मन्** पु० सुष्ठु कर्म यस्मात् ५ब०। १विष्कम्भादिषु मध्ये सप्तमे योगे ज्यो०। २शोभनकर्मयुते त्रि० ३विश्वकर्मणि पु० मेदि०। प्रा०स०। ५शोभने कर्म्मणि न०।

**सुकल** पु० सुष्ठु कल्यते स्त्यायतेऽसौ सु+कलि+अच्। दातृत्वभोजयित्वादिना १विख्याते जने अमरः। प्रा०ब०। २सुन्दरमधुराव्यक्तशब्दयुक्ते त्रि०। प्रा०स०। सुन्दरे कलशब्दे पु०।

**सुकाण्ड** पु० सुष्ठु काण्डोऽस्य। १कारवेल्ले राजनि० २सुन्दरकाण्डयुक्ते वृक्षे च ३काण्डीरलतायां स्त्री ङीप्। स्वार्थे क अत इत्त्वम्। तत्रैव।

**सुकाण्डिन्** पु० सुकाण्ड+अस्त्यर्थे इनि। भ्रमरे राजनि०।

**सुकामा** स्त्री सुष्ठु काम्यतेऽसौ सु+कम–कर्मणि घञ्। १त्रायमाणालतायाम् राजनि०। २शोभनकामविषये त्रि०।

**सुकालुका** स्त्री सु+कल–उक स्वार्थे क। डोडीक्षुपे राजनि०

**सुकाष्ठ** न० सुष्ठु काष्ठं यस्य प्रा०ब०। १देवदारुकाष्ठे २काष्ठकदल्याम् ३कटुकायाञ्च स्त्री राजनि०। प्रा०स०। ४शोभने काष्ठे च।

**सुकुन्दक** पु० सु+कुन्द-ण्वुल्। पलाण्डौ शब्दर०।

**सुकुन्दन** स्त्री० सु+कुन्द-ल्यु। वर्वरे राजनि०।

**सुकुमारा** न० सु+कुमार-अच्। १जातीफले २नवमालिकायाम् ३कदल्यां ४पृक्कायां ५मालत्याञ्च राजनि०। ६अतिकोमले त्रि०। प्रा० स०। ७सुन्दरकुमारावस्थान्विते त्रि०स्त्रियां ङीप्। ८नवमालिकायां ९पुण्ड्रेक्षौ पु० मेदि० १०वनचम्पके ११इक्षौ १२श्यामाके च पु० राजनि०संज्ञायां कन्। सुकुमारक तमालपत्रे न० शालौ पु०राजनि०।

**सुकृत्** त्रि० सु+कृ-क्विप्। १पुण्यकारके जटा० २धार्मिके जने त्रिका०।

**सुकृत** न० सु+कृ-क्त। १पुण्ये धर्मे अमरः २शुभे ३सुविहिते त्रि० मेदि०। ४सुकर्मणि न०।

**सुकृति** स्त्री सु+कृ-क्तिन्। १पुण्ये २मङ्गले ३सत्कर्मणि च

**सुकृतिन्** त्रि० सुकृतमनेन इष्टा० इनि। १पुण्यशीले अमरः २शुभयुक्ते मेदि०। ३सत्कर्मयुते च स्त्रियां ङीप्।

**सुकेसर** पु० सुष्ठु केसरो यस्य। वीजपूरे राजनि०।

**सुकोली** स्त्री प्रा०ब०। क्षीरकाकोल्याम् रत्नमा०।

**सुकोषक** पु० सुष्ठु कोषोऽस्य कप्। कोषाम्रे राजनि०।

**सुख** सुखसम्पादने अद० चु० उभ० सक० सेट्। सुखयति-ते असुसुखत्-त। अनेकाच्कत्वेन न षोपदेशः।

**सुख** न० सुख-अच्। १पुण्यजन्ये आनन्दे गुणभेदे अमरः २अनुकूलवेदनीये यदनुभवाय चित्तमनुकूलं भवति तस्मिन् अर्थे तच्च आत्मधर्म इति नैयायिकादयः। चित्तधर्म इति सांख्यादयः। सुखयतीति अच्, सुखमस्यास्ति अच् वा। ३सुखकारके ४सुखिनि च त्रि०। ५वरुणपुर्यां स्त्री ६स्वर्गे मेदि०। "यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्" श्रुत्या दुःखासम्भिन्नसुखस्यैव स्वर्गपदार्थत्वेनाभिधानात् तस्य सुखविशेषात्मकत्वात् तथात्वम्। ७वृद्धिनामौषधौ राजनि०। सुखत्वं तु जातिभेदः तल्लक्षणन्तु काम्यभावत्वम् अन्येच्छानधीनेच्छाविषयत्वे सति भावत्वमिति यावत् दुःखाभावस्य काम्यत्वेऽपि तस्य भावत्वाभावान्नातिव्याप्तिः। "सुखं तु जगतामेव काम्यं धर्मेण जन्यते" भाषा०। तथाच धर्मासमवायिकारणजन्यगुणत्वं तल्लक्षणमिति फलितोऽर्थः। सुखदुःखयोः परस्परभिन्नत्वे कारणादिकं कणा० सू० वृत्त्योर्दर्शितं यथा "इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः" कणा० सू०। "आत्मगुणानां कारणतोभेदव्युत्पादनं दशमाध्यायार्थः, तत्र "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" इति गौतमीये प्रमेयविभागसूत्रे सुखस्यानभिधानात् दुःखाभिन्नमेव सुखमिति भ्रमनिरासार्थं सुखदुःखयोरेव प्रथमं भेदमाह "सुखदुःखयोर्मिथः परस्परमर्थान्तरभावोभेदो वैजात्यमिति यावत् कुत इत्यत आह इष्टानिष्टकारणविशेषात् इष्टं इष्यमाणं स्रक्चन्दनवनितादि, अनिष्टमनिष्यमाणमहिकण्टकादि, तद्रूपं लक्षणं तस्य विशेषो भेदात् कारणवैजात्याधीनं कार्यवैजात्यमावश्यकं यतः, भेदकान्तरमाह विरोधात् सहानवस्थानलक्षणात् नह्येकस्मिन्नात्मन्येकदा सुखदुःखयोरनुभवः। चकारादनयोः कार्यभेदं भेदकं समुच्चिनोति, तथा हि अनुग्रहाभिष्वङ्गनयनप्रसादादि सुखस्य, दैन्यमुखमालिन्यादि दुःखस्य कार्यमिति ततोऽप्यनयोर्भेदः। तदुक्तं प्रशस्ताचार्यैः "अनुग्रहलक्षणं सुखं स्रगाद्यभिप्रेतविषयसान्निध्ये सति इष्टोपलब्धीन्द्रियार्थसन्निकर्षाद्धर्माद्यपेक्षादात्ममनसोः संयोगादनुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते तत् सुखम्" इति। तदिदमतीतेषु स्रक्चन्दनादिषु स्मृतिजमनागतेषु सङ्कल्पजम्। गौतमीये सूत्रे सुखापरिगणनं वैराग्यार्थं सुखमपि दुःखत्वेन भावयतो वैराग्यं स्यादेतदर्थमिति" उ०वृ०। "तच्च सुखं चतुर्विधं वैषयिकमाभिमानिकं मानोरथिकम् आभ्यासिकञ्चेति" उप० वृत्तिः। आद्यं विषयेन्द्रियसाक्षात्कारजन्यं, द्वितीयं राज्याधिपत्यपाण्डित्यगर्वादिजन्यं, तृतीयं विषयध्यानजन्यम् चतुर्थं स्त्र्यादिमद्याद्यभ्यासादिजन्यं भावरूपमिति"।

पात० सू० वैषयिकसुखानां परिणामदुःखत्वादिभिः दुःखत्वं व्यवस्थापितं वैराग्यार्थं यथा "परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" सू०। "सर्वस्यायं रागानुविद्धश्चेतनाचेतनसाधनाधीनसुखानुभव इति तत्रास्ति रागजः कर्माशयः तथा च द्वेष्टि दुःखसाधनानि मुह्यति चेति द्वेषमोहकृतोऽप्यस्ति। तथा चोक्तम् "नानुपहत्य भूतान्युपभोगः सम्भवतीति" हिंसाकृतोऽप्यस्ति शारीरः कर्माशय इति विषयसुखं चाविद्येत्युक्तम्। या भोगे-

ष्विन्द्रियाणां तृप्तेरुपशान्तिः तत् सुखं या लौल्यादनुपशान्तिस्तद् दुःखम्। न चेन्द्रियाणां भोगाभ्यासेन वैतृष्ण्यं कर्त्तुं शक्यं कस्माद् यतो भोगाभ्यासमनुविवर्द्धन्ते रागाः कौशलानि चेन्द्रियाणामिति तस्मादनुपायः सुखस्य भोगाभ्यास इति स खल्वयं वृश्चिकविषभीत इवाशीविषेण दष्टो यः सुखार्थी विषयानुवासितो महति दुःखपङ्के मग्न इति। एषा परिणामदुःखता नाम प्रतिकूला सुखावस्थायामपि योगिनमेव क्लिश्नाति। अथ का तापदुःखता सर्वस्य द्वेषानुविद्धश्चेतनाचेतनसाधनाधीनस्तापानुभव इति। तत्रास्ति द्वेषजः कर्माशयः सुखसाधनानि च प्रार्थमानः कायेन वाचा मनसा च परिस्पन्दते ततः परमनुगृह्णात्युपहन्ति चेति परानुग्रहपीडाभ्यां धर्माधर्मावुपचिनोति स कर्माशयो लोभान्मोहाच्च भवतीत्येषा तापदुःखतोच्यते। का पुनः संस्कारदुःखता। सुखानुभवात् सुखसंस्काराशयो दुःखानुभवादपि दुःखसंस्काराशय इति एवं कर्मभ्यो विपाकेऽनुभूयमाने सुखे दुःखे वा पुनः कर्माशयप्रचय इति एवमिदमनादिदुःखस्रोतोविप्रसृतं योगिनमेव प्रतिकूलात्मकत्वादुद्वेजयति कस्मात् अक्षिपात्रकल्पो हि विद्वानिति यथोर्णातन्तुरक्षिपात्रे न्यस्तः स्पर्शेन दुःखयति नान्येषु गात्रावयवेषु एवमेतानि दुःखानि अक्षिपात्रकल्पं योगिनमेव क्लिश्नन्ति नेतरम् इतरन्तु स्वकर्मोपहृतं दुःखमुपात्तमुपात्तं त्यजन्तं त्यक्तं त्यक्तमुपाददानम् अनादिवासनाविचित्रया चित्तवृत्त्या समन्ततोऽनुविद्धमिवाविद्यया हातव्य एवाहङ्कारममकारानुपातिनं जातं जातं बाह्याध्यात्मिकोभयनिमित्तास्त्रिपर्वाणस्तापा अनुप्लवन्ते तदेवमनादिदुःखस्रोतसा व्युह्यमानमात्मानं भूतग्रामञ्च दृष्ट्वा योगी सर्वदुःखक्षयकारणं सम्यग्दर्शनं शरणं प्रपद्यत इति गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः। प्रख्याप्रवृत्तिस्थितिरूपा बुद्धिगुणाः परस्परानुग्रहतन्त्रीभूताः शान्तं घोरं मूढं वा प्रत्ययं त्रिगुणमेवारभन्ते चलञ्च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तं रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते सामान्यानि तु अतिशयैः सह प्रवर्त्तन्ते एवमेते गुणा इतरेतराश्रयेणोपार्जितसुखदुःखमोहप्रत्यया इति सर्वे सर्वरूपा भवन्ति गुणप्रधानभावकृतस्त्वेषु विशेष इति तस्माद् दुःखमेव सर्वं विवेकिन" भा०।

"तत्र सुखं नित्यं जन्यञ्चेति वेदान्तिनः। तत्र विषयसंपर्कात् वैषयिकं सुखं जन्यम्, ब्रह्मस्वरूपं सुखं नित्यमिति तदेतन्मतं मुक्तिवादे मणिकृता निराकृतम् यथा

"न च नित्यसुखाभिव्यक्तिर्मुक्तिः। सा हि न नित्या मुक्तशरीरिणोरविशेषापातात् नोत्पाद्या तद्धेतुशरीराद्यभावात् ज्ञानमात्रे सुखमात्रे वा तद्धेतुत्वावधारणात् निःसंसारदशायां तद्धेतुसामान्ये बाधकाभावात्। अतएव सर्गादौ शरीरकल्पना। किं वा तज्जनकं न तावदात्ममनःसंयोगः तस्यादृष्टादिनिरपेक्षस्याजनकत्वात् विषयमात्रापेक्षत्वे तु संसारदशायामपि तदभिव्यक्तिप्रसङ्गः नापि योगजो धर्मः सहकारी तस्योत्पन्नभावत्वेन विनाशित्वेऽपरत्र निवृत्त्यापत्तेः न च तज्जन्याभिव्यक्तिरनन्ता तस्या अपि तत एव नाशात्। अथ तत्त्वज्ञानात् सवासनमिथ्याज्ञाननाशे दोषाभावेन प्रवृत्त्याद्यभावाद्धर्माधर्मयोरनुत्पादे प्राचीनधर्माधर्मक्षयाद् दुःखसाधनशरीरादिनाश एव तत्र हेतुः अतएव तस्यानन्त्येनाभिव्यक्तिप्रवाहोऽप्यनन्त इति चेन्न शरीरं विना तदनुत्पत्तेः तस्य तद्धेतुत्वे मानाभावाच्च। न च मोक्षादिप्रवृत्तिरेव मानं दुःखहानार्थितया तदुपपत्तेः। न च नित्ये सुखे मानमस्ति "नित्यं विज्ञानमानन्दम् ब्रह्म" "आनन्दं ब्रह्मणोरूपं तच्च मोक्षे प्रतिष्ठितमित्यादि" श्रुतिर्मानमिति चेन्न उपजननापायवतोर्ज्ञानसुखयोरहं जानाम्यहं सुखीति अभिन्नत्वेनानुभूयमानयोर्ब्रह्माभेदबोधने प्रत्यक्षबाधात्। अथ सुखस्य ब्रह्माभेदबोधनादेवायोग्यतयाऽनित्यं सुखं विहाय वाक्यार्थत्वेन नित्यसुखसिद्धिः स्वर्गवत् न तु नित्यसुखे सिद्धे तदभेदबोधनं येनान्योन्याश्रयः, यद्वा नित्यं सुखं बोधयित्वा तदभिन्नं बोध्यते न च वाक्यभेदः वाक्यैकवाक्यत्वादिति चेन्न आत्मनोऽनुभूयमानत्वेन तदभिन्नस्य नित्यसुखस्याप्यनुभवप्रसङ्गात् सुखमात्रस्य स्वगोचरसाक्षात्कारजनकत्वनियमात् तदनुभवे चात्मनोऽप्यनुभवो न स्यात्। अथात्माभिन्नं नित्यसुखमनुभूयत एव सुखत्वं तु तत्र नानुभूयत इति चेन्न सुखानुभवसामग्र्या एव सुखत्वानुभावकत्वात् तस्मादानन्दं ब्रह्मेति मत्वर्थीयाच्प्रत्ययान्तत्वेनानन्दं बोध्यते नाभेदः, अन्यथा नपुंसकत्वानुपपत्तेः। एतेन ब्रह्माद्वैततत्त्वसाक्षात्कारादविद्यानिवृत्तौ विज्ञानसुखात्मकः केवल आत्मापवर्गे वर्त्तत इति वेदान्तिमतमपास्तम् स्वप्रकाशसुखात्मक-

ज्ञस्यो नित्यत्वे मुक्तसंसारिणोरविशेषप्रसङ्गात् पुरुषप्रयत्नं विना तस्य सत्त्वादपुरुषार्थत्वाच्च अविद्यानिवृत्तिः प्रयत्नसाध्येति चेत् अविद्या यदि मिथ्याज्ञानमर्थान्तरं वा उभयथापि सुखदुःखाभावसाधनेतरत्वेन तन्निवृत्तेरपुरुषार्थत्वात्” ।

तत्र दुःखाभावस्यैव परमप्रयोजनत्वं न सुखस्येति व्यवस्थापितं यथा

“ननु दुःखाभावो न पुरुषार्थः सुखस्यापि हानिस्तुल्यायव्ययत्वात् न च बहुतरदुःखानुविद्धतया सुखस्यापि प्रेक्षावद्धेयत्वम् आवश्यकत्वेन दुःखस्यैव हेयत्वात् सुखस्य निरुपधीच्छाविषयत्वात् अन्यथा दुःखाननुविद्धतया तथात्वेन पुरुषार्थत्वविरोधादिति चेन्न सुखमनुद्दिश्यापि दुःखभीरूणां दुःखाभावदशायां सुखमस्तीत्युद्दिश्य दुःखाभावार्थं प्रवृत्तेः वैपरीत्यस्यापि सम्भवे सुखस्याप्यपुरुषार्थतापत्तेः अतो दुःखाभावदशायां सुखं नास्तीति ज्ञानं न दुःखाभावार्थिप्रवृत्तिप्रतिबन्धकं तथाप्यविवेकिनः सुखमात्रलिप्सवो बहुतरदुःखानुविद्धमपि सुखमुद्दिश्य “शिरोमदीयं यदि यातु यास्यति, कृत्वा परदारेष्वपि प्रवर्त्तमानाः “वरं वृन्दावनेऽरण्ये” इत्यादि वदन्तोनात्राधिकारिणः । ये च विवेकिनोऽस्मिन् संसारापारकान्तारे कियन्ति दुःखदुर्दिनानि कियती सुखखद्योतिका कुपितफणिफणामण्डलच्छायाप्रतिममिदमिति मन्यमानाः सुखमपि जातुमिच्छन्ति तेऽत्राधिकारिणः । न च भोगार्थिनामप्रवृत्तौ पुरुषार्थता हीयते कस्यचिदप्रवृत्तावपि चिकित्सादेः पुरुषार्थत्वात् । अथवा “दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते । न हि मूर्च्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः, पुरुषार्थत्वं सुखवज्ज्ञायमानं नियमात् न च सुखज्ञानं सम्भवतीति न हि दुःखाभावं जानीयामित्युद्दिश्य प्रवृत्तिः किन्तु दुःखं मे मा भूदित्युद्दिश्य अतो दुःखाभाव एव पुरुषार्थः तस्य ज्ञानन्तु स्वकारणाधीनं न तु पुरुषार्थतोपयोगि सुखी स्यामित्युद्दिश्य प्रवर्त्तते न तु सुखं जानीयामिति सुखमेव तथास्तु न तद्वगमः तज्ज्ञानावश्यकत्वे नान्यथासिद्धत्वात् गौरवाच्च । किञ्च बहुतरदुःखजर्जरकलेवराद्दुःखाभावमुद्दिश्य मरणेऽपि प्रवर्त्तमाना दृश्यन्ते न च मरणे तस्य ज्ञानमस्ति न ते विवेकिन इति चेन्न पुरुषार्थत्वे विवेकानुपयोगात्” ।

तच्च सुखं चित्तधर्मोऽपि अध्यस्ततया प्रतिबिम्बरूपेण वा आत्मनि वर्त्तते इति सांख्या वेदान्तिनश्च । आत्मगुण इति नैयायिकाः । ८दुःखाभावे । भारवाहकस्य भारापगमे सुखी संवृत्तोऽहमिति प्रत्ययस्य दुःखाभावविषयतयोपगमात् ।

**सुखङ्करी** स्त्री सुखङ्करोति-कृ-खच् मुम् च ङीप् । १जीवन्तीवृक्षे राजनि० । २सुखकारके त्रि० ।

**सुखङ्कुण** पु० चुण क-मुम् । शिवखट्वाङ्गे त्रिका० ।

**सुखचार** पु०सुखः सुखकारकश्चारो यस्य । उत्तमाश्वे शब्दमा०

**सुखजात** त्रि० जातं सुखमस्य परनिपातः । जातानन्दे “सुखजातः सुरापीत” भट्टिः ।

**सुखद** पु०सुखं ददाति दा-क । १विष्णौ विष्णु स० । “विंशत्यक्षरसंयुक्तो ध्रुवः सुखदसंज्ञकः । शृङ्गारवीरयोर्गेयो गुरुणैकेन वर्जितः” संगी०उक्ते २ध्रुवभेदे । ३सुखदातरि त्रि० ४स्वर्गवेश्यायां स्त्री शब्दरत्ना० । ५शमीवृक्षे स्त्री राजनि० ।

**सुखदोह्या** स्त्री सुखेन दोह्या दुह-ण्यत् । क्लेशं विना दोहनीयायां गवि हेमच० सुखसंदोह्याप्यत्र ।

**सुखभाज्** त्रि०सुखं भजते भज-ण्वि । सुखयुक्ते । [राजनि०

**सुखमोदा** स्त्री सुखः सुखकरो मादो यस्याः । सल्लकीवृक्षे

**सुखरात्रि** स्त्री सुखा सुखकरी रात्रिर्यस्याम् । आश्विनामावास्यायाम् दीपान्वितामावास्यायाम् । उल्काशब्दे १२७१ पृ० दृश्यम् ।

**सुखरात्रिका** स्त्री सुखा रात्रिर्यस्याः ५ब०कप् । दीपान्वितामावास्यायां पूज्यायां लक्ष्म्याम् दीपान्वितामुपक्रम्य “पूजनीया तदा लक्ष्मीर्विज्ञेया सुखरात्रिका” ज्योतिर्वचनम् । कवभावे सुखरात्रिरप्यत्र “त्वं ज्योत्स्ना भूतले देवि ! सुखरात्रि ! नमोऽस्तु ते” इति दीपान्वितामावस्यायां लक्ष्मीपूजनमन्त्रः ।

**सुखवर्त्तक** पु० सुखं वर्त्तयति उद्दीपयति वर्त्त-णिच्-ण्वुल् । सर्जिकाक्षारे (साजिमाटी) अमरः ।

**सुखवर्चस्** पु० सुखं सुखकरं वर्चो यस्य । सर्जिकाक्षारे (साजिमाटि) राजनि० । [फलप्रधानवृक्षे रत्नमा० ।

**सुखवास** पु० सुखः सुखकरो वासो गन्धो यस्य । (तरमुज)

**सुखवासन** पु० सुखं सुखकरं वासनं गन्धो यस्य । सुखवासनगन्धद्रव्ये शब्दर० । [सुखकरावासे ।

**सुखाधार** पु० सुखानामाधारः । स्वर्गे शब्दर० । कर्म० ।

**सुखायत** पु०सुखेनायम्यते आ+यम-क्त । विनीताश्वे शब्दमा०

**सुखायन** पु०सुखेनायतेऽनेन अय-ल्युट् । सुविनीताश्वे शब्दमा०

**सुखावह** त्रि॰ सुखमावहति जनयति आ+वह—अच्। सुखजनके।

**सुखाश** पु॰ सुखा सुखकरी आशा यस्य। १वरुणे सुखेनाश्यते अश—घञ्। २राजतिनिशे वृक्षे ३सुखभोज्ये त्रि॰ मेदि॰ भावे घञ्। सुखभोजने स्वार्थे क। सुखाशने, (शशा) राजतिनिशवृक्षे च पु॰। [प्रधाने वृक्षे शब्दच॰

**सुखाशन** पु॰ सुखेनाश्यते अश—कर्मणि ल्युट्। (शशा) फल

**सुखोत्सव** पु॰सुखजनतकर उत्सवो यस्मात् ५व॰। १पत्यौ त्रिका॰ कर्म॰। २आनन्दकारके उत्सवे पु॰।

**सुखोदक** न॰ कर्म॰। सुखकरे उष्णोदके रत्नमा॰।

**सुखोर्जिक** पु॰ सुखस्य ऊर्जः हेतुरस्त्यस्य ठन्। सर्जिकाक्षारे (सार्जिमाटि) राजनि॰। [२सुगमे त्रि॰

**सुग** न॰ सुष्ठु गच्छति निर्याति गम-ड। १विष्ठायाम् शब्दच॰

**सुगत** पु॰ सुष्ठु गच्छति जानाति गम—कर्त्तरि—क्त। १बुद्धे अमरः। २सुगतियुते त्रि॰।

**सुगन्ध** पु॰ सुष्ठु गन्धोऽस्य न इत्। १गन्धके २कुन्दुरौरके रत्नमा॰ ३नीलोत्पले ४चन्दने राजनि॰ भावप्र॰। ५पर्णग्रन्थिपर्णे ६रक्तशिग्रौ ७गन्धके ८चणके ९भूस्तृणे च पु॰ राजनि॰। १०सद्गन्धद्रव्ययुक्ते आपणादौ त्रि॰। “गन्धस्येत्वं तदेकान्तग्रहणात्” उक्तेः समवायेनैव गन्धवत्त्वे इत् आपणस्य च गन्धयुक्तद्रव्याधारत्वात् तत्र न इत्”सि॰कौ॰।

**सुगन्धक** न॰ सुष्ठु गन्धोऽस्य कप्। १रक्ततुलस्यां २गन्धके रत्नमा॰ ३नागरङ्गे त्रिका॰ ४कर्कोटयाञ्च राजनि॰।

**सुगन्धपत्रा** स्त्री सुगन्धं पत्त्रमस्याः। रुद्रजटायाम् राजनि॰

**सुगन्धभूतृण** न॰ कर्म॰। गन्धतृणे राजनि॰।

**सुगन्धमूला** स्त्री सुगन्धं मूलं यस्याः। १स्थलपद्मिन्याम् २रास्नायाञ्च राजनि॰।

**सुगन्धा** स्त्री सुष्ठु गन्धोऽस्त्यस्याः अच्। १रास्नायां अमरः २शठ्यां शब्दर॰ ३वन्ध्याकर्कोट्याम् ४रुद्रजटायां ५नाकुल्यां ६स्वर्णयूथिकायां ७नवमालिकायां ८स्वर्णयूथिकायां ९पृक्कायां १०सल्लक्यां गन्धपत्त्राम् १२माधव्यां राजनि॰ १३अनन्तायां १४तुलस्यां १५मातुलुङ्गे च रत्नमा॰।

**सुगन्धामलक** न॰ सुगन्धैः सर्वौषधिगणैर्युक्तमामलकम्। “सर्वौषधिसमायुक्ताः शुष्कास्त्वामलकत्वचः। यदा तदायं योगः स्यात् सुगन्धामलकाभिधः” राजनि॰ उक्ते सर्वौषधियुक्ते शुष्के आमलकवल्कले।

**सुगन्धि** पु॰ सुष्ठु गन्धः यस्य वा इत्समा॰। १परमात्मनि सुरभौ अमरः। २सुगन्धयुक्ते अमरः ३एलवालुके ४कसेरौ ६गन्धतृणे ७धान्यके ८पिप्पलीमूले च राजनि॰। स्वार्थे क। कह्लारे शब्दर॰ गौरसर्षपे पुष्करमूले सुरपर्णे उशीरे राजनि॰। महायावो हेमच॰। गन्धके तरुके च पु॰ राजनि॰।

**सुगन्धिकुसुम** पु॰ सुगन्धि कुसुमं यस्य। १पीतकरवीरे राजनि॰ २सद्गन्धयुक्तपुष्पयुते त्रि॰ ३पृक्कायां स्त्री जटा॰ कर्म॰। ४सुगन्धिनि पुष्पे न॰।

**सुगन्धित्रिफला** स्त्री त्र्यवयवं त्रिशिराकं वा फलं त्रिफलं सुगन्धि त्रिफलमस्याः बाहुल्येन अच्। जातीफले २पूगफले ३लवङ्गकलिकाफले च राजनि॰।

**सुगन्धिमूल** न॰ सुगन्धि मूलमस्य। उशीरे (वेना) राजनि॰

**सुगन्धिमूषिका** स्त्री सुगन्धिः विरोधिलक्षणया दुर्गन्धिः मूषिका। छुछुन्दर्यां (छुछ) राजनि॰।

**सुगहन** त्रि॰ प्रा॰स॰। १अतिनिबिडे कुम्बायां स्त्री रमानाथः।

**सुगहनावृति** स्त्री कर्म॰। यज्ञस्थाने यादिदर्शनवारणाय निबिडे वेष्टने कुम्बायाम् अमरः।

**सुगृह** पुंस्त्री सुष्ठु गृहं यस्य। १चञ्चुसूचिकखगे (बाबुइ) हेमच॰ स्त्री ङीप् कर्म॰। २सुन्दरे गृहे न॰।

**सुगृहीतनामन्** पु॰ सुगृहीतं प्रातःकाले स्मरणीयं नाम यस्य। प्रातःस्मरणीयनामके पुण्यकीर्त्तौ जने त्रिका॰।

**सुग्रन्थि** पु॰ सुष्ठु ग्रन्थिर्यस्य। १चोरकद्रव्ये राजनि॰ २सुन्दरग्रन्थियुते त्रि॰।

**सुग्रीव** पु॰ सुष्ठु ग्रीवाऽस्य। १श्रीकृष्णाश्वे २सूर्यपुत्रे वानरेश्वरे च मेदि॰। ३सुन्दरग्रीवायुते त्रि॰ स्त्रियां ङीप् २कश्यपस्य पत्नीभेदे गरुडपु॰।

**सुग्रीवेश** पु॰ ६त॰। श्रीरामचन्द्रे शब्दरत्ना॰।

**सुचक्षुस्** पु॰ सुष्ठु चक्षुरिव फलमस्य। १उडुम्बरे जटा॰ २शोभनलोचनयुक्ते त्रि॰ प्रा॰स॰। ३शोभने नेत्रे न॰।

**सुचञ्चुका** स्त्री सुष्ठु चञ्चुरिव शिखा यस्याः कप्। महाचञ्चुशाके राजनि॰।

**सुचरित्रा** स्त्री सुष्ठु चरित्रं यस्याः। पतिव्रतायां स्त्रियाम् अमरः २सच्चरित्रयुते त्रि॰ प्रा॰ स॰। ३सच्चरित्रे न॰।

**सुचर्मन्** पु॰ सुष्ठु चर्मेव वल्कलमस्य। १भूर्जद्रुमे राजनि॰ २सुन्दरचर्मयुते त्रि॰। प्रा॰स॰। ३सुन्दरे चर्मणि न॰।

**सुचित्रक** पुंस्त्री सुचित्रेण कायति कै—क। सुष्ठु चित्रवर्णो यस्य कप् वा। १मत्स्यरङ्कखगे २चित्रसर्पे च शब्दर॰ स्त्रियां ङीष्। ३सुचित्रवर्णयुते त्रि॰ स्त्रियां टाप्। [राजनि॰।

**सुचित्रबीजा** स्त्री सुचित्रं विचित्रं बीजं यस्याः। विडङ्गायां

**सुचित्रा** स्त्री प्रा०स०। १चिर्भटायां राजनि०।२विचित्रे त्रि०

**सुचिर** न० प्रा०स०। १अत्यन्तचिरकाले २बहुकाले च ३बहुकालभवे त्रि०। [२बहुकालजीविनि त्रि०।

**सुचिरायुस्** पु० सुचिरं बहुकालिकमायुर्यस्य। १देवे शब्दर०

**सुचेलक** पु० प्रा०स०। १सूक्ष्मवस्त्रे अमरः। सुष्ठु चेलोऽस्य कप्।२सूक्ष्मवस्त्रधरे त्रि०। [स०।२सुन्दरे चेले न०।

**सुजल** न० शोभनं जलं यस्मात् ५ब०। १कमले राजनि० प्रा०

**सुजल्प** पु० "यत्रार्जवात् सगाम्भीर्यं सदैन्यं सहचापलम्। सोत्कण्ठञ्च हरिः पृष्टः स सुजल्पो निगद्यते" उज्ज्वलनीलमणिलक्षिते वाक्यभेदे।

**सुजाता** स्त्री सु+जन–क्त। १तुवर्य्याम् राजनि० २मनोज्ञे त्रि०

**सुजीवन्ती** स्त्री प्रा०स०। स्वर्णजीवन्त्याम् राजनि०।

**सु(षु)ट्ट** अनादरे चु०उ०सक०सेट्। सुट्टयति ते असुसुट्टत् त। षोपदेश एव न्याय्यः।

**सुत** पुंस्त्री० सु–क्त। १पुत्रे २तनयायां स्त्री अमरः। सा च ३दुरालभायां शब्दच० ४प्रसूते ५अभिषुते ६निष्पीडिते च त्रि० ७पार्थिवे पु० मेदि०।

**सु(सू)तक** न० सु-(सू)-भावे क्त सु(सू)तं जननं तस्मादागतम् कन्। १जननाशौचे २अशौचमात्रे च "सुतके सूतके तथा" "मातुश्च सूतकं तत् स्यात्" इति च स्मृतिः।

**सुतजीवक** पु० सुतं जीवयति सेवनात् जीव–णिच्–ण्वुल्। पुत्रजीवकवृक्षे राजनि०।

**सुतनु(नू)** पुंस्त्री० सुष्ठु तनुर्यस्याः वा ऊङ्। १नार्य्याम् राजनि० "सुतनु! सत्यमलङ्करणाय ते" माघः प्रा०ब०। २सुन्दरकाययुते त्रि०। प्रा०स०। ३सुन्दरे काये स्त्री सुशानः। ४अत्यन्तसूक्ष्मे त्रि० स्त्रियां वा ङीष्।

**सुतपस्** पु० सुष्ठु तपति सु+तप–असि। १सूर्ये सि०कौ० २अर्कवृक्षे सुष्ठु तपोऽस्य। ३मुनौ पु०। ३सुन्दरतपोयुक्ते त्रि०। प्रा०स०। ४सुन्दरे तपसि न०।

**सुतपादिका** सुताः संहताः पादाः मूलान्यस्याः कप् कापि अत इत्वम्। हंसपदीलतायां राजनि०।

**सुतराम्** अव्य०सु+अतिशयेऽर्थे तरप्–आमु। अवधारितार्थस्य अतिशयौचित्ये "धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्यमाणः सुतरां दयालुः" रघुः। अत्र कातराक्ष्या धेन्वा दृश्यमानत्वेन दयालुत्वस्य अतिशयौचित्यम्।

**सुतकारी** स्त्री सुतकं करोति कृ–अण् ङीप्। देवदालीलतायाम् राजनि०।

**सुतर्दन** पुंस्त्री० सुष्ठु तर्दति रवेण विरहिणम् सु+तर्द–ल्यु। कोकिले त्रिका० स्त्रियां जातित्वात् ङीष्।

**सुतल** पुंन० सुष्ठु तलं यत्र। १पातालभेदे पातालशब्दे ४२९९ पृ० दृश्यम्। २अट्टालिकाबन्धभेदे पु० मेदि०।

**सुतवत्करा** स्त्री सुता वत्करा इव बहुत्वात् यस्याः। बहुपुत्रप्रसविन्याम् स्त्रियां त्रिका०।

**सुतश्रेणी** स्त्री सुता निष्पीडिता श्रेणीव। १मूषकपर्ण्याम् अमरः हेम०। २पुत्रपङ्क्तौ च।

**सुतहिवुकयोग** पु० "सुतहिवुकवियद्विलग्नधर्मेष्वमरगुरुर्यदि दानवार्चितो वा। यदशुभमुपयाति तत्क्षमं स्यात्" ज्यो० उक्ते वैवाहिकलग्नात् सुतपञ्चहिवुक४दिवाख्यते यज्ञभेदकर्मयोगे। [१शैले ४दी० हेम० च पु०।

**सुतात्मजा** स्त्री हेम०। १पौत्र्यां २दौहित्र्याञ्च अमरः

**सुतिक्त** पु० प्रा०स०। १पर्पटे (क्षेतपापड़ा) राजनि० २अत्यन्ततिक्ते त्रि० ३कोशातक्यां स्त्री राजनि० संज्ञायां कन्। पारिभद्रे जटा० निम्बे भूनिम्बे पु० शब्दमा०।

**सुतीक्ष्ण** पु० प्रा०स०।१शोभाञ्जनवृक्षे जटा०। २श्वेतशोभाञ्जने राजनि०। ३मुनिभेदे च "सुतीक्ष्णमुनिकेतनम्" भट्टिः। ४अत्युग्रे त्रि०।

**सुतुङ्ग** पु० प्रा०स०। १नारिकेलवृक्षे हारा० ज्योतिषोक्ते ग्रहाणाम् उच्चराशिस्थेषु २अंशभेदेषु च उच्चशब्दे १०५८ पृ० दृश्यम्। २अतिशयोच्चे त्रि०।

**सुतेजन** पु० सु+तिज–ल्यु। १धन्वनि वृक्षे भावप्र०।

**सुतेजस्** पु० सुष्ठु तेजोऽस्य। १आदित्यभक्तायाम् राजनि०। २शोभनतेजोयुक्ते त्रि०। ३जैनभेदे पु० हेमच०।

**सुतेला** स्त्री सुष्ठु तैलं यस्याम् ७ब०। महाज्योतिष्मती लतायाम् राजनि०। [अमरः। दीर्घादिः तलार्थे वृद्धः।

**सु(सू)त्रामन्** पु० सुष्ठु त्रायते सु+त्रै–मनिन् पृषो०। इन्द्रे

**सुत्वन्** पु० सुनोति वा सु–भूते क्वनिप्। १कृताभिषेके कृतयज्ञार्थस्नाने अमरः २कृतसोमनिष्पीडने च।

**सुद** शोभायां सौ० प० सक० सेट् इदित्। सुन्दति असुन्दीत्। सौत्रत्वेन न षोपदेशः। [राजनि०।

**सुदग्धिका** पु० सुष्ठु दग्धं दाहोऽस्याः ठन्। दग्धानामवृक्षे

**सुदण्ड** पु० सुष्ठु दण्डो यस्मात् ५ब०। वेत्रे राजनि०।

**सुदण्डिका** स्त्री सुदण्डयति रोगान् सु+दण्डि+ण्वुल्। १गोरक्ष्याम्। (गोरक्षचाकुले) राजनि० २सुदण्डयुतायां स्त्रियाञ्च।

**सुदत्** पु० सुष्ठु दन्तोऽस्य वयसि दत्रादेशः। १शोभनदन्तयुक्तवयस्के गजादौ २युवत्यां स्त्री ङीप्। "सुदती-

जनमज्जनार्पितैः” नैष० । वयोभिन्ने तु सुदन्त इत्येव सुन्दरदन्तयुते नटादौ त्रि० कौ० ।

**सुदर्भा** स्त्री सु+दृभ–कर्मणि घञ् । १इक्षुदर्भाहवे राजनि०। सुष्ठु दर्भो यत्र । २सुन्दरकुशयुक्ते त्रि० ।

**सुदर्शन** पु० सुष्ठु दृश्यते स्वार्थे युच् । १विष्णुचक्रे २मेरौ ३जम्बुद्वीपे मेदि०। (पद्मगुलञ्च) ४लताभेदे स्त्री रत्नमा० ५आज्ञायाम् ६ओषधिभेदे च स्त्री ७इन्द्रपुरे न० मेदि० इन्द्रमरावत्यां विश्वः स्त्री ङीप् । ८जिनभेदे हेमच० । सुदर्शनचक्रं च सर्वदेवतेजोभिः शिवेन निर्माय विष्णवे दत्तं यथोक्तं पद्मपु०उत्तरख०१४५अ०। “अथ विष्णुमुखा देवाः स्वतेजांसि ददुस्तदा । तान्यैक्यं वै मतानीशो दृष्ट्वा स्वश्वासुदर्शनकः । तेनाकरोन्महादेवः चक्रमा सुदर्शनम् । चक्रं सुदर्शनं नाम ज्वालामालातिभीषणम्” । “ततः प्रीतः प्रभुः प्रादात् विष्णवे प्रवरं वरम् । मत्तश्च तेजसं श्रीमान् दिव्यं चक्रं सुदर्शनम्” वामनपु०७८अ०

**सुदर्शनचूर्ण** न० चूर्णरूपौषधभेदे “त्रिफला रजनीयुग्मं कण्टकारीयुगं शटी । त्रिकटु ग्रन्थिकं मूर्वा गुडूची धन्वयासकः । कटुका पर्पटो मुस्तं त्रायमाणा च बालुकम् । निम्बं पुष्करमूलञ्च मधुयष्टी च वत्सकः । यवानीन्द्रयवौ भार्गी शिग्रुवीजं सुराष्ट्रजा । वचा त्वक् पद्मकोशीरचन्दनातिविषा बला । शालिपर्णी पृश्निपर्णी विडङ्गं तगरं तथा । चित्रकं देवकाष्ठञ्च चव्यं पत्रं पटोलकम् । जीवकर्षभकौ चैव लवङ्गं वंशलोचना । पुण्डरीकञ्च काकोली पत्रकं जाति पत्रकम् । तालीशपत्रमेतानि समभागानि चूर्णयेत् । सर्वांशं सर्वचूर्णस्य किरातं प्रक्षिपेत् सुधीः । एतत् सुदर्शनं नाम चूर्णं दोषत्रयापहम् । ज्वरांश्च निखिलान् हन्यान्नात्र कार्या विचारणा । पृथग्द्वन्द्वागन्तुजांश्च धातुस्थान् विषमज्वरान् । सन्निपातोद्भवांश्चापि मानसानपि नाशयेत् । शीतादीनपि दाहादीन् मोहं तन्द्रां भ्रमं तृषाम् । कासं श्वासञ्च पाण्डुञ्च हृद्रोगं कामलां तथा । त्रिकपृष्ठकटीजानुपार्श्वशूलञ्च नाशयेत् । शीताम्बुना पिबेदेतत्सर्वज्वरनिवृत्तये । सुदर्शनं यथा चक्रं दानवानां विनाशनम् । तद्वज्ज्वराणां सर्वेषां चूर्णमेतत् प्रणाशनम्” । पुष्करमूलाभावे कुष्ठमपि दद्यात् । भार्ग्यभावे कण्टकारीमूलम् । सौराष्ट्र्यभावे स्फटिकां दद्यात् । तगराभावे कुष्ठं देयम् । जीवकर्षभयोरभावे विदारीकन्दस्य मानदयं दद्यात् । पुण्डरीकं श्वेतकमलम् । काकोल्यभावे अश्वगन्धमूलं दद्यात् । तालीशपत्रकाभावे स्वर्णतालो प्रदीयते” भावप्र० ।

**सुदल** पु० सुष्ठु दलान्यस्य । चोरमोरटाहवे रत्नमा० २शालपर्ण्यां स्त्री राजनि० ।

**सुदामन्** पु० सुष्ठु ददाति दा–मनिन् । १मेघे २पर्वतभेदे (ऐरावत पर्वत) मेदि०। सुदाम्ना कादिक् अण् ङीप् सौदामनी तडिति अमरः।३गोपभेदे ४समुद्रे शब्दर०५ऐरावते गजे त्रिका० पुराणप्रसिद्धे श्रीकृष्णमित्रे ६विप्रभेदे च ७शोभनदातरि त्रि० । राजग्रहसमीपस्थे नदीभेदे स्त्री रामा०अयो०७०सर्गः । तत्र वा ङीप् डाप् च । सुदाम्नी सुदामा वा ।

**सुदाय** पु० सुष्ठु दीयते सु+दा–कर्मणि घञ् । १यौतकप्रदानादिना स्त्रियै देये धने । सौदायिकशब्दे दृश्यम् । सुष्ठु दायो यस्य । २पितृप्रदत्ते धातौ ।

**सुदारु** पु० सुष्ठु दारु यत्र । पारिपात्रपर्वते त्रिका० । [शब्दमा

**सुदि** अव्य०स्वरा०सुष्ठु दीव्यति सु+दिव–डि । शुक्लपक्षे मनो०

**सुदिन** न० प्रा०स० ।१प्रशस्तदिवसे । २प्रशस्ते त्रि०। [त्रि०कौ०

**सुदिनाह** न० सुदिनं प्रशस्तमहः टच्समा० । प्रशस्तदिवसे

**सुदीर्घधर्मा** स्त्री सुदीर्घः अतिविस्तीर्णो धर्मो गुणविशेषो यस्याः केवलत्वाभावादनिच्समा० डाप् । असनपर्ण्यां शब्दच० सुदीर्घो घर्मो यस्याः । सुदीर्घघर्मेति पाठान्तरं तत्रार्थे । [इत्यम् । वार्त्ताकुभेदे रत्नमा० ।

**सुदीर्घफलिका** स्त्री सुदीर्घं फलं यस्याः कप् कापि अत

**सुदीर्घा** स्त्री प्रा० स० । चीनाककर्कट्याम् राजनि० ।

**सुदूर** त्रि० प्रा०स० । अतिदूरे अमरः ।

**सुद्युम्न** पु० वैवस्वतमनुपुत्रे इड़ाशब्दे ८२१ पृ० दृश्यम् ।

**सुधन्वन्** त्रि० सुष्ठु धनुर्यस्य अनङ्समा० । १सुन्दरधनुर्धरे । २आङ्गालवंश्ये नृपभेदे हरिवं० १२अ० । ३आङ्गिरसे मुनिभेदे भा० स० ६६अ० । ४अनन्ते नागे ५विश्वकर्मणि च पु० मेदि० ।

**सुधन्वाचार्य्य** पु० “वैश्यात्तु जायते व्रात्यात् सुधन्वाचार्य्य एव च । कारुषश्च विजन्मा च मैत्रः सात्वत एव च” मनूक्ते व्रात्यवैश्यात्सवर्णाजाते जातिभेदे । [पु०छया० ।

**सुधर्मन्** स्त्री सु+धृ–मनिन् । १देवसभायाम् २कुटुम्बिनि च

**सुधर्म्मा** स्त्री सुष्ठु धर्मो यस्याः अनिच्समा०वा डाप् । देवसभायाम् अमरः । गौरा०ङीष् सुधर्मीत्यप्यत्र। अमरटीका

**सुधा** स्त्री सुष्ठु धीयते पीयते अर्प्यते वा धे धा–वा क । १अमृते अमरः २लेपनद्रव्ये (कलिचून) ३मूर्वायाम्

४स्नुह्यां ५गङ्गायाम् ६इष्टकायां मेदि० ७विद्युति ८रसे ९जले १०धात्र्याम् नानार्थको० ११हरीतक्याम् १२मधुनि शब्दच० १३शालपर्ण्याञ्च राजनि० ।

**सुधांशु** पु० सुधेवाह्लादकाः अंशवोऽस्य । १चन्द्रे २कर्पूरे च अमरः । सुधाकरादयोऽप्यत्र । [वासिते तैले राजनि० ।

**सुधांशुतैल** न० सुधांशुना कर्पूरेण वासितं तैलम् । कर्पूर-

**सुधांशुरत्न** न० ६त० । मौक्तिके राजनि० तस्य चन्द्रप्रियत्वात्तथात्वम् । मुक्ताशब्दे २७६३ पृ० दृश्यम् ।

**सुधाङ्ग** पु० सुधेवाप्यायनमङ्गमस्य । १चन्द्रे त्रिका० २कर्पूरे च

**सुधाजीविन्** पु० सुधां लेपनद्रव्यमाजीवति आ+जीव-णिनि पलगण्डे लेपके (राज) त्रिका० । [पाले च ।

**सुधाधार** पु० ६त० । १चन्द्रे शब्दर० २कर्पूरे ३अमृताधार-

**सुधानिधि** पु० सुधा निधीयतेऽत्र नि+धा-आधारे कि ६त० । १चन्द्रे शब्दर० २कर्पूरे च । [गुडूच्याञ्च ।

**सुधापयस्** पु० सुधा लेपनद्रव्यमिव शुभ्रं पयो निर्यासोऽस्य ।

**सुधाभुज्** पु० सुधां भुक्तवान् भुज-भूते क्विप् । देवे हेमच० ।

**सुधाभृ(सृ)ति** पु० सुधा भ्रियते पुष्यते सूयते वाऽनेन भृ-सू-वा क्तिन् । १यज्ञे २चन्द्रे मेदि० ३कर्पूरे च ।

**सुधामय** न० सुधात्मकं लेपनद्रव्यात्मकं वा प्राचुर्ये मयट् । २राजभवने सौधे शब्दर० । अमृतवदाह्लादकवाक्यादौ त्रि० स्त्रियां ङीप् ।

**सुधामोदक** पु० सुधेव मोदयति मुद-णिच्-ण्वुल् । १यवासशर्करायाम् २कर्पूरे च राजनि० ।

**सुधावर्षिन्** पु० सुधां वर्षति वृष-णिनि । १चन्द्रे २कर्पूरे ३ब्रह्मणि च शब्दर० ४बुद्धभेदे त्रिका० ।

**सुधावास** पु० ६त० । १चन्द्रे २कर्पूरे च । सुधाया इव वासो गन्धो यस्याः । त्रपुष्याम् राजनि० ।

**सुधासिन्धु** पु० सुधामयः सिन्धुः । अमृतसमुद्रे राजनि० ।

**सुधास्रवा** स्त्री सुधां स्रवति स्रु-अच् । १रुदन्त्याम् राजनि० २उपजिह्वायाञ्च (आलजिभ) त्रिका० ।

**सुधाहर** पु० सुधां हरति हृ-अच् । गरुडे शब्दर० भा० आ०३२अ० दृश्यम् । सुधाहारकादयोऽप्यत्र । [रायमु०

**सुधिति** पुंस्त्री० सु+धा-क्तिच् न ह्यादेशः । १कुठारे स्वधितौ

**सुधी** पु० सुष्ठु धीर्यस्य । १पण्डिते । सुष्ठु धीः प्रा० स० । २सुन्दरबुद्धौ स्त्री । सुष्ठु ध्यायति सु+ध्यै क्विप् नि० । ३सुबुद्धियुक्ते त्रि० । [राजनि० ।

**सुधूम** पु० सुष्ठु धूमः संतापो यस्य । स्वादुनामगन्धद्रव्ये

**सुधोद्भव** पु० सुधया सह सुधाया वा उद्भवति उद्+भू-अच् । १धन्वन्तरौ वैद्यराजे समुद्रमन्थने हि तस्य सुधाकलशयुक्-सहिततयोपत्तेस्तथात्वम् । २हरितक्यां स्त्री त्रिका० "पपात बिन्दुर्मेदिन्यामिन्द्रस्य पिबतोऽमृतम् । ततो दिव्या समुत्पन्ना सप्तजातिर्हरीतकी" भावप्र० उक्तेस्तस्याः सुधाबिन्दुजातत्वात् तथात्वम् ।

**सुनन्द** न० सुष्ठु नन्दयति सु+नन्द-णिच्-अच् । १बलरामसुषले शब्दमा० । २श्रीकृष्णपार्श्वचरभेदे भाग० १० । ८६अ० । ३राजसद्मभेदे च । ४सत्यानन्दयुक्ते त्रि० शब्दर० ५गोरोचनायाम्, ६उमायाम् स्त्री मेदि० एवम् ७उमासखीभेदे शब्दमा० ८नार्याम् विश्वः ९अर्कपत्त्रौषधौ च (इसेरमूल) स्त्री रत्नमा० ।

**सुनयन** पुंस्त्री० सुष्ठु नयने अस्य । १मृगे शब्दच० स्त्रियां जातित्वात् ङीष् । २नार्यां स्त्री टाप् । ३शोभननेत्रयुक्ते त्रि० स्त्रियां बहुव्रीहित्वात् टाप् । [शब्दच० ।

**सुनाक्रत** पु० सुष्ठु न अक्रतः नञो नलोपाभावः । कर्पूरके

**सुनाभ** पु० सुष्ठु नाभिरस्य अच्समा० । मैनाकपर्वते त्रिका० ।

**सुनामद्वादशी** स्त्री व्रतभेदे व्रतशब्दे ५०६६ पृ० दृश्यम् ।

**सुनार** पु० सुष्ठु नालमस्य लस्य रः । १सर्पाण्डे शुनीस्तन्ये २कलविङ्के खगे पुंस्त्री० मेदि० स्त्रियां ङीष् ।

**सुनालक** पु० सुष्ठु नालेन कायति कै-क । १वकवृक्षे शब्दच० २सुन्दरनालयुक्ते त्रि० ।

**सुनासिका** स्त्री सुष्ठु नासाऽस्याः कप् । १काकनासायाम् राजनि० । प्रा० स० । २सुन्दरनासिकायाम् स्त्री ।

**सुनासी(शी)र** पु० सुष्ठु नासी(शी)रः अग्रगसैन्यं यस्य । इन्द्रे अमरः ।

**सुनासी(शी)र्य** पु० सुना(शी)सीरो देवताऽस्य यत् । यज्ञभेदे । [illegible] । सुना(शी)सीरीयोऽप्यत्र । स च चातुर्मास्ययागपर्वभेदः कात्या० श्रौ० ५।११।६ कण्डिकाव्याख्याने । कात्यायनशब्दे १८३० पृ० दृश्यम् । "न वैश्वदेवीये न सुनासीर्ये" श्रुतिः । [शाके त्रिका० कप् तत्रैव अमरः ।

**सुनिषण्ण** न० सुष्ठु निषण्णं स्वप्नो यस्मात् ५ब० । (सुसुनि)

**सुनिष्टप्त** त्रि० सु+निस्+तप-क्त षत्वम् । अत्यन्तोद्दीप्ते

**सुनीति** स्त्री सुष्ठु नीतिः यस्याः । उत्तानपादस्य पत्नीभेदे १ध्रुवमातरि । २सुन्दरनीतियुक्ते त्रि० । प्रा० स० । ३शोभनायां नीतौ स्त्री । [वञ्चिप्र०

**सुनीथ** त्रि० सु+नी-थक् । १धर्मशीले उणादिको० २विप्रे

**सुनील** न० प्रा० स० । १मणिभेदे (नीलम) २दाडिमे राजनि० ३सुन्दरनीलवर्णे पु० । ४तद्वति त्रि० । ५अ-

तस्याम् ६अपराजितायां ७जरतीहक्षे च स्त्री राजनि०

**सुनीलक** पु० सुनील इव कायति कै-क। १नीलभृङ्गराजे २नीलासने ३नीलरत्ने च राजनि०।

**सुन्द** पु० १दैत्यभेदे उपसुन्दशब्दे १२२७ पृ०दृश्यम् ।२वानरभेदे रामा०लं०४७स०। ३राक्षसभेदे रामा०बा०२०स०।

**सुन्दर** त्रि० सु+उन्द्-अरन्-शक०। १मनोज्ञे अमरः स्त्रियां ङीप् सा च २उत्तमास्त्रियां ३त्रिपुरसुन्दर्यां देव्याञ्च। ४कामदेवे ५वृक्षभेदे च (सुन्दरि) पु० मेदि० ६योगिनीभेदे स्त्री तन्त्रम् "अयुजोर्यदि सौ जगौ, युजोः। भभरा लगौ यदि सुन्दरी तदा" छन्दो० उक्ते ७अर्द्धसमे वृत्तभेदे स्त्री। इ०र० ८ इयं वियोगिनीलुप्ता।

**सुपक्व** पु० सुन्दरं पच्यते सु+पच-क्त तस्य वः। १शोभनाम्रे शब्दच०। २सुन्दरपरिणते त्रि०। [पाके द्रव्यमाले।

**सुपच** त्रि०भुक्तं यत् सुखेन पच्यते पच-कर्मणि खल्। सुसु-

**सुपत्त्र** न० सुष्ठु पत्त्रमस्य। १तेजपत्रे शब्दच० २आदित्यपत्त्रे पु०। ३पद्मिवाहवृक्षे राजनि० ४सुन्दरपत्त्रयुक्ते त्रि०। ५रुद्रजटायां ६शतावर्य्यां ७पालङ्क्यां ८पद्मां ९शाल-पर्ण्याञ्च स्त्री राजनि०।

**सुपत्त्रक** पु० सुष्ठु पत्त्रं पर्णोऽस्य कप्। १शोभाञ्जनवृक्षे २जतुकायां स्त्री राजनि० अत इत्त्वम्।

**सुपथ** पु०सुष्ठु पन्थाः प्रा०स०वा अच्समा०। १सत्कर्मणि २सदाचारे च सुष्ठु पन्था यत्र अच्समा०। ३सुन्दरपथयुक्ते त्रि०।

**सुपथिन्** पु० प्रा० स० वा समासान्ताभावः।' ब्रमध्ये शब्दर० सुपन्थाः। [त्रि०।

**सुपथ्या** स्त्री प्रा०स०। १श्वेतचिल्लीशाके राजनि० २शोभनपथ्ये

**सुपद्मा** स्त्री सुष्ठु पद्यते पद्-म।१वचायाम् शब्दच०। प्रा०ब०। २पद्मिन्यां स्त्री।

**सुपर्ण** पु० सुष्ठु पर्णं पत्त्रं पक्षो वा यस्य। १गरुडे अमरः २सुन्दरपर्णयुक्ते त्रि० ३स्वर्णचूड़खगे पुंस्त्री० स्त्रियां ङीष्।४कृतमालवृक्षे पु०मेदि०५नागकेशरे पु०त्रिका०। कप् सुपर्णक। आरग्वधे वृक्षे सप्तच्छदवृक्षे जटा० गरुडे च हेमच०। मालपर्ण्यां रेणुकायां पलाश्यां स्वर्णजीवन्त्यां वाकुच्यां स्त्री कापि अत इत्त्वम्।

**सुपर्णकेतु** पु० सुपर्णो गरुड़ः केतुर्यस्य। विष्णौ हला०।

**सुपर्णी** स्त्री सुष्ठु पर्णान्यस्या गौरा०ङीष्।१पद्मिन्यां सुपर्णो गरुडोऽस्त्यस्या अच् गौरा०ङीष्।२गरुडमातरि च मेदि०

**सुपर्णीतनय** पु० ६त०। गरुड़े हला०।

**सुपर्वन्** पु० सुष्ठु पर्व यस्य। १देवे अमरः २बाणे ३वंशे ४धूमे च मेदि०। प्रा०स०। ५सुन्दरे पर्वणि न०। [राजनि०।

**सुपर्वा** स्त्री सुष्ठु पर्व अस्त्यस्याः अच् टाप्। श्वेतदूर्वायाम्

**सुपाक्य** न० सुपाकाय हितम् यत्। १विड्लवणे राजनि०।

**सुपार्श्व** पु० सुष्ठु पार्श्वोऽस्य। १प्लक्षवृक्षे (पाकुड) वृक्षभेदे २सम्पातिपुत्त्रे विहगभेदे च राजनि० ३सुन्दरपार्श्वान्विते त्रि०।४मेरोरुत्तरस्यविष्कम्भपर्वते पु०धान्यशैलशब्दे ३८८२ पृ०दृश्यम्। संज्ञायां कन्। १गर्दभाण्डवृक्षे पु०अमरः।

**सुपिङ्गला** स्त्री प्रा०स०। १ज्योतिष्मत्यां २जीवन्त्याञ्च राजनि०

**सुपीत** न० प्रा० स०। १गर्जरे (गाँजर) राजनि०। २सुन्दरपीतवर्णे पु० ३तद्वति त्रि०। [राजनि०।

**सुपुट** पु० सुष्ठु पुटमस्य। १कोलकन्दे २विष्णुकन्दे च

**सुपुत्त्रिका** स्त्री सुष्ठु पुत्त्र इव पक्षः यस्याः कप् अत इत्त्वम्। जतुकायाम् (तेलापोका) राजनि०। [राजनि०।

**सुपुष्करा** स्त्री सुष्ठु पुष्करमस्याः अच्। स्थलपद्मिन्याम्

**सुपुष्प** न० प्रा० स०। १लवङ्गकुसुमे शब्दच० २प्रपौण्डरीके ३आढ्ल्ये ४वृक्षे राजनि० ५स्त्रीणां रजसि च "सुपुष्पराकीर्णं कुसुमधनुषो मन्दिरमहो" शृङ्गारशतकम्। सुष्ठु पुष्पमस्य कप्। (पारतामान्दार) वृक्षे। पाटलायां स्त्री राजनि० अत इत्त्वम्।

**सुपुष्पी** स्त्री सुष्ठु पुष्पमस्याः ङीष्। १श्वेतापराजितायां २शतपुष्पायाम् ३मिश्रेयायां ४द्रोणपुष्प्यां ५जीर्णफल्यां राजनि०। ६कदल्यां शब्दच०।

**सुपूर** पु० सुष्ठु पूर्य्यते सु+पूर-क। बीजपूरे राजनि०।

**सुपूरक** पु० सुष्ठु पूरयति पूर-ण्वुल्। बकवृक्षे रत्नमा०।

**सुप्** स्त्री व्याकरणपरिभाषिते सुप्रभृतौ सुप्पर्य्यन्ते प्रत्ययभेदे।

**सुप्त** न० स्वप-भावे क्त संप्रसारणम्। १निद्रायां २शयने च ३सुसुप्तौ हेमच० कर्त्तरि क्त। ४निद्रिते त्रि०। "क्षुधितस्तृषितः कामी विद्यार्थी क्षपकारकः। भाण्डारी च प्रवासी च सप्त सुप्तान् प्रबोधयेत्। सर्पकः अमरः सर्पो राजा वै बालकस्तथा। परश्वाऽपि च मूर्खश्च सप्त सुप्तान्न बोधयेत्" नीतिसारः।

**सुप्तघातक** त्रि० ६त०। हिंस्रे त्रिका०।

**सुप्तजन** पु० सुप्तो जनो यत्र। १अर्द्धरात्रे जटा०। कर्म०। २निद्रिते लोके च।

**सुप्ति** स्त्री स्वप-क्तिन्। १शयने २निद्रायाम् ३स्वप्ने च "करोति सुप्तिर्जनदर्शनातिथिम्" नैष०। ४स्पर्शताय़ां ५विश्रम्भे मेदि०।

**सुप्रतिभा** स्त्री सुष्ठु प्रतिभा यस्याः ५ब०। १सुरायाम् मा०

स० । २उज्ज्वलायां बुद्धौ । ६ब० । ३तद्वति त्रि० ।

**सुप्रतिष्ठा** स्त्री प्रा०स० । १प्रशंसायाम् । ६ब० २तद्वति त्रि० । ३पञ्चाक्षरपादके छन्दोभेदे स्त्री । "प्रतिष्ठान्या सुपूर्विका" छ०र० । [राजनि० । २प्रशंसिते त्रि० ।

**सुप्रतिष्ठित** पु० सु+प्रति+स्था-क्त कर्त्तरि । १उडुम्बरवृक्षे

**सुप्रतीक** पु० सुष्ठु प्रतीकं यस्य । ईशानकोणस्थिते दिग्गजे अमरः । २शिवे ३कामे च ४सुन्दराङ्गे त्रि० । प्रा०स० । ४सुन्दरे अङ्गे न० ।

**सुप्रभा** स्त्री सुष्ठु प्रभा यस्याः । १अग्निजिह्वाभेदे तन्त्र० २वाकुच्यां राजनि० । ३सुन्दरदीप्तियुते त्रि० । प्रा० स० । ४शोभनायां दीप्तौ स्त्री ५शुक्लवर्णे हेमच० । ६सरस्वतीनदीभेदे स्त्री सरस्वतीशब्दे ५२४९ पृ० दृश्यम् ।

**सुप्रभात** न० प्रा० स० । १शुभसूचकप्रातःकाले २तत्र पाठ्यमाङ्गल्यवाक्ये च । [व्याधपाटवयुक्ते हेमच० ।

**सुप्रयुक्तशर** पु० सुप्रयुक्तः शरो येन । शीघ्रहस्ते बाणमोचना-

**सुप्रयोगविशिख** पु० सुष्ठु प्रयोगो निक्षेपो यस्य तादृशो विशिखो यस्य । शीघ्रहस्ते बाणमोक्षणशीघ्रताहृपपाटवयुक्ते भरतः ।

**सुप्रलाप** पु० सु+प्र+लप-घञ् । सुवचने अमरः ।

**सुप्रसन्न** पु० सु+प्र+सद-क्त । १कुबेरे शब्दच० । २अतिप्रसादयुक्ते त्रि० । संज्ञायां कन् । कृष्णार्जके पु० राजनि० ।

**सुप्रसरा** स्त्री सु+प्र+सृ-अच् । १प्रसारिण्यां लतायाम् राजनि० । २विस्तारयुक्ते त्रि० ।

**सुप्रसाद** पु० सुखेनानायासेन प्रसादो यस्य । १शिवे त्रिका० प्रा०स० । २सुन्दरप्रसन्नतायाम् ।

**सुफल** पु० सुष्ठु फलमस्य । १दाडिमे २बदरे ३मुद्गे ४कर्णिकारे राजनि० ५कपित्थे शब्दच० ६सुन्दरफलयुते त्रि० । ७इन्द्रवारुण्यां ८कुष्माण्ड्यां ९कदल्यां १०कपिलद्राक्षायां ११काश्मर्य्यांश्च स्त्री राजनि० ।

**सुफेन** न० प्रा० स० । समुद्रफेने राजनि० ।

**सुबन्ध** पु० सुखेन बध्यतेऽसौ बन्ध-घञ् । तिलवृक्षे शब्दच० ।

**सुभग** पु० सुष्ठु भगः माहात्म्यादिः यस्य । १चम्पके २अशोके ३रक्ताम्लाने ४टङ्कणे च राजनि० ५सुहागे ६प्रिये मेदि० । ७शोभनैश्वर्य्ययुक्ते च त्रि० । ८कैवर्त्तीमुस्तायां ९शालपर्ण्याम् १०हरिद्रायां ११नीलदूर्वायां १२तुलस्यां १३प्रियङ्गौ १४कस्तूर्य्यां १५स्वर्णकदल्यां स्त्री राजनि० । १६वनमल्लिकायां शब्दर० १७पतिप्रियायां स्त्रियां च स्त्री । सुभगाया अपत्यं ढक् इनङ् च । सौभागिनेय तदपत्ये पुंस्त्री०

**सुभगम्भावुक** त्रि० असुभगः सुभगो भवति भू-च्व्यर्थे खुकञ् मुम् च । प्रियस्य वश्यो सि०कौ० । [अमरः ।

**सुभगासुत** पु० सुभगायाः पतिप्रियायाः सुतः । सौभागिनेये

**सुभङ्ग** पु० सुखेनानायासेन भज्यते निःसारत्वात् सु+भन्ज-कर्मणि घञ् । नारिकेलवृक्षे जटा० ।

**सुभट** पु० प्रा०स० । सुन्दरयोद्धरि ।

**सुभद्र** पु० सुष्ठु भद्रं यस्मात् । १विष्णौ शब्दमा० । ६ब० । २राजभेदे हेमच० ३शोभनमङ्गलयुते त्रि० । ४श्यामालतायाम् स्त्री शब्दच० । ५श्रीकृष्णस्य भगिन्याञ्च स्त्री । कप् । सुभद्रक देवरथे शब्दर० बिल्ववृक्षे च पु०शब्दच० ।

**सुभद्राणी** स्त्री सुभद्रं सुमङ्गलमानयति आ+नी-ड गौरा० ङीष् णत्वम् । त्रायन्तीलतायाम् रत्नमा० ।

**सुभद्रेश** पु० ६त० । अर्जुने हेमच० । सुभद्रापत्याद्योऽप्यत्र ।

**सुभाञ्जन** पु० सुष्ठु भाति भा-क कर्म० । शोभाञ्जनवृक्षे द्विरूपकोषः । [प्रचुराम्रयुते देशकालादौ ।

**सुभिक्ष** त्रि० सुखेन लभ्या भिक्षा यत्र पर्य्याप्तान्नत्वात् ।

**सुभिक्षा** स्त्री सुष्ठु भिक्ष्यते याच्यतेऽसौ सु+भिक्ष-अ । धातकीपुष्पिकायाम् ( धाइफुल ) अमरः ।

**सुभीरक** पु० सुष्ठु भीः सुभीः तामीरयति विरक्षिपम् ईरण्वुल् । पलाशवृक्षे हारा० ।

**सुभूति** पु० सुष्ठु भवति सु+भू-क्तिच् । १पक्षिभेदे प्रा०स० । २सुन्दरविभूतौ स्त्री । ६ब० । ३तद्वति त्रि०कप् । ४बिल्ववृक्षे पु० राजनि० । [चक्रवर्त्तिभेदे हेमच० ।

**सुभूम** पु० सुष्ठु भूमिरस्य अच्समा० । कार्त्तवीर्य्ये जिनार्थे

**सुभृश** न० सुष्ठु भृशम् । १अतिशये दार्ढ्ये । २तद्वति त्रि० ।

**सुभ्रु(भ्रू)** स्त्री सुष्ठु भ्रुर्यस्याः वा ऊङ् । १नार्याम् २सुन्दरभ्रुयुक्ते त्रि० ।

**सुम** न० सुष्ठु मीयतेऽदः सु-मा-घञर्थे क । १पुष्पे भरतः । सु-मक । २चन्द्रे ३कर्पूरे ४नभसि च पु० उणा० ।

**सुमङ्गला** स्त्री सुष्ठु मङ्गलं यस्याः ५ब० । (मालकाङ्गाता) वृक्षे रत्नमा० । २सुमङ्गलयुक्ते त्रि० स्त्रियां ङीप् । "सुमङ्गलीरियं वधूः" इति श्रुतिः ।

**सुमति** त्रि०सुष्ठु मतिर्यस्य । १शोभनबुद्धियुते २कल्किमातरि विष्णुयशसः पत्न्यां स्त्री । ३अर्हन्मातरि च स्त्री हेमच० । प्रा०स० । ४सुन्दरायां बुद्धौ स्त्री । [वृक्षे त्रिका० ।

**सुमदन** पु० सुष्ठु मदयति कोकिलान् मद-णिच्-ल्यु । आम्र-

**सुमदात्मजा** स्त्री सुमद आत्मज इवास्याः । अप्सरःसु त्रिका०

**सुमधुर** न० प्रा०स० । १अत्यन्तप्रियवाक्ये अमरः २अत्यन्त-

वाक्ये च । २अतिमधुररवे ३तद्युक्ते त्रि० ४जीवशाके पु० राजनि० । [शब्दमा० ५मनोहरे त्रि० शब्दर०।

**सुमन** पु० सुष्ठु मन्यते मन-अच् ।१गोधूमे अमरः ।२घृतपूरे

**सुमनःपत्रिका** स्त्री सुमनसः जात्या इव पत्त्रमस्याः कप् अत इत्त्वम् । जातीपत्त्रिकायाम् राजनि० ।

**सुमनःफल** पु० सुष्ठु मनो यस्मात् तादृक् फलमस्य । १क-पित्थे शब्दच० । ६त०। २जातीफले न०।

**सुमनस्** न० सुष्ठु मनो यस्मात् यस्य वा । १पुष्पे अमरः । ब०व०इत्यन्ये "किं सेव्यते सुमनसां मनसापि गन्धः" इति रत्नाकरधरः । २मालत्यां स्त्री अमरः ३प्रसन्नचित्तयुक्ते त्रि०। प्रा० स०। ४प्रशान्ते मनसि न० । ६त० । ५देवे पु०अमरः ।६पण्डिते मेदि० ७पूतिकरञ्जे शब्दमा० ८निम्बे ९चक्रावरञ्जे १०गोधूमे ११शतपत्त्र्यां स्त्री राजनि० ।

**सुमना** स्त्री सुष्ठु मन्यते मन-अच्। मालतीपुष्पे शब्दर०।

**सुमनोरजस्** न० ६त० । पुष्परजसि परागे अमरः ।

**सुमन्तु** पु० सु+मन+तुन् । १अथर्ववेदाध्यायिनि व्यासशिष्ये मुनिभेदे "अथर्वाङ्गिरसामासीत् सुमन्तुर्दारुणो मुनिः" भाग०१।४अ०। अतिशयितो मन्तुरपराधोऽस्य।२अत्यन्तापराधयुते त्रि० । ३दशरथसारथौ रामा०। ४कश्चिद्देवस्य ज्योतिश्शास्त्रादि वक्तृषिपु० ।

**सुमित्रा** स्त्री १लक्ष्मणमातरि दशरथपत्नीभेदे । २सुन्दर-मित्रयुक्ते त्रि० । ३वर्द्धरे पु० हेमच०। ४युधराजपुत्रे नृपभेदे विष्णुपु० । ४अ०२२अ० ।

**सुमुख** पु० सुष्ठु मुखमस्मात् यस्य वा । १शाकभेदे २गणेशे ३नागभेदे ४गरुडपुत्रभेदे च शब्दर०। ६विशालेक्षे ७अर्क-बर्बरिकायाम् राजनि० । ८सुन्दरवदने ९मनोहरे च त्रि० । स्त्रियां ङीप् । ११नक्षत्रभेदे शब्दर० ।

**सुमुष्टि** पु० सु+मुष-कर्त्तरि क्तिच् । विषमुष्टिवृक्षे राजनि०।

**सुमूल** पु०सुष्ठु मूलमस्य । १श्वेतशोभाञ्जने राजनि०।२शाल-पर्ण्यां ३पृश्निपर्ण्यां च स्त्री राजनि० टाप् । ४सुन्दर-मूलयुक्ते त्रि० । संज्ञायां कन् । गर्जरे न० राजनि० ।

**सुमेखल** पु० सुष्ठु मेखला यस्मात् ५ब० । १मुञ्जतृणे राजनि० ६ब० । २सुन्दरमेखलान्विते त्रि० ।

**सुमेधस्** स्त्री सुष्ठु मेधा यस्याः ५ब०असिच्समा०। १ज्यो-तिष्मत्यां लतायाम् । ६ब०। २सुन्दरमेधायुक्ते त्रि०मेदि०।

**सुमेरु** पु० प्रा० स० । १पर्वतभेदे अमरः । जम्बुद्वीपशब्दे २०४५ पृ० दृश्यम् । २जपमालायामुपरिस्थगुटिकायाम् तन्त्रम् ।

**सुम्लुच्छ** पु० कर्पूरके शब्दच० । [शालिनि पु० शब्दच० ।

**सुय(य्य)** पु० सुय-अच् पृषो० । १देवभेदे शब्दर० २महा-

**सुयामुन** पु० यमुनाया इदम् सुष्ठु यामुनं प्रियत्वेनास्त्यस्य अच् । १विष्णौ २वत्सराजे ३प्रासादविशेषे ४पर्वतभेदे हेमच० । ५मेघभेदे च मेदि० ।

**सुयोधन** पु० सुखेन युध्यतेऽसौ सु+युध-युच् । धृतराष्ट्र-राजपुत्रभेदे दुर्योधने त्रिका०। [२स्वर्गे ३पण्डिते च।

**सुर** पु० सुष्ठु राति ददात्यभीष्टं सु+रा-क । १देवे अमरः ।

**सुरकृता** स्त्री ३त० । १गुडूच्याम् राजनि० २देवनिर्मिते त्रि०

**सुरक्त** पु० सुरक्त इव कायति कै-क । १कोषाम्रे २सुवर्ण-गैरिके च राजनि० ।

**सुरगुरु** पु० ६त० । बृहस्पतौ त्रिका० ।

**सुरग्रामणी** पु० सुराणां ग्रामण्योः नेता । इन्द्रे त्रिका० ।

**सुरङ्ग** न० सुष्ठु रङ्गो यस्मात् ५ब० । १हिङ्गुले २पत्तङ्गे (बक्कमाटि)प्रा०स०।३नागरङ्गे ४सन्धिभेदे (सिँध) च पु० राजनि० । [राजनि० ।

**सुरङ्गधातु** पु० सुष्ठु रङ्गो रञ्जनं यस्मात् ५ब० कर्म०। गैरिके

**सुरङ्गा** स्त्री सु-अङ्गच् नि० ( सिँध ) सन्धौ शब्दा० । २कैवर्त्तिकायाम् राजनि० ।

**सुरङ्गिका** स्त्री सुष्ठु रङ्गो रञ्जनं यस्याः ५ब० कप् अत इत्त्वम् । १मूर्वायाम् राजनि० ।

**सुरङ्गी** स्त्री सुष्ठु रङ्गो यस्याः ५ब० गौरा० ङीष् । १काक-नासायाम् राजनि० । २रक्तशोभाञ्जने रत्नमा० ।

**सुरज्येष्ठ** पु० ७त० । चतुर्मुखे ब्रह्मणि अमरः ।

**सुरञ्जन** पु० सुरञ्जयति सु+रन्ज-णिच्-ल्यु । गुवाके त्रिका०

**सुरत** न० सु+रम-भावे क्त । १स्त्रीपुंसयोः सङ्गमरूपे रमण-भेदे मेदि०। सु-रम-कर्त्तरि क्त । २अत्यन्तरते त्रि० ३द-यालौ चारुसुन्दरौ ।

**सुरततालो** स्त्री सुरतं तालयति तल-णिच्-अण् गौरा० ङीष् । १दूत्यां २शिरःस्रजि च मेदि० ।

**सुरता** स्त्री सुराणां समूहः भावो वा तल् ।१देवसमूहे २देवत्वे च मेदि०। सु+रम-क्त । ३अत्यन्तरतायां स्त्रियां स्त्री ।

**सुरताङ्ग** पु० सुरतस्याङ्गमत्र । सुरपुन्नागे राजनि०।

**सुरतोषक** पु०६त०। १कौस्तुभमणौ शब्दर०। २देवतोषके त्रि०

**सुरथ** पु० सुष्ठु रथोऽस्य । चन्द्रवंश्ये नृपभेदे "सुरथो नाम राजाऽभूत्" देवीमा०। २सुन्दररथयुक्ते त्रि० ।

**सुरदारु** न० सुरप्रियं सुरलोकपर्यन्तमुच्छ्रितं वा उन्नतात् दारु । देवदारुवृक्षे रत्नमा०।

**सुरदीर्घिका** स्त्री सुराणां दीर्घिकेव । गङ्गायाम् अमरः सुरवाप्यादयोऽप्यत्र ।

**सुरदुन्दुभी** स्त्री सुराणां दुन्दुभीशब्दादकत्वात् । तुलस्याम् राजनि० । [राजनि० ।

**सुरद्रुम** पु० सुरप्रियो द्रुमः । १देवदारुणि २देवनले च

**सुरद्विष्** पु० सुरान् द्वेष्टि द्विष–क्विप् । १असुरे अमरः २देवद्वेष्टरि त्रि० ।

**सुरधनुस्** न० ६त० । इन्द्रधनुषि जटाधरः ।

**सुरधूप** पु० सुरप्रियो धूपः । राले (धुना) राजनि० । [ऽप्यत्र

**सुरन(ण)दी** स्त्री ६त०ग त्वम् । गङ्गायां सुरधुन्यादयो-

**सुरनन्दा** स्त्री नदीभेदे शब्दर० ।

**सुरनाल** पु० सुरप्रियं नालमस्य । देवनलवृक्षे राजनि० ।

**सुरनिम्नगा** स्त्री ६त० । गङ्गायाम् अमरः ।

**सुरनिर्गन्ध** न० सुरेषु निर्गन्धम् । पत्रके राजनि० ।

**सुरपति** पु० ६त० । इन्द्रे अमरः सुरेशादयोऽप्यत्र ।

**सुरपथ** पु० सुराणां पन्था इव तदाधारत्वात् अच्समा० । आकाशे हेमच० । [राजनि० ।

**सुरपर्ण** न० सुरप्रियं पर्णमस्य । सुगन्धिके ओषधिभेदे

**सुरपर्णिक** पु० सुरप्रियं पर्णं शाक० तदस्त्यस्य ठन् । १सुरपुन्नागे राजनि० २पुन्नागे स्त्री हेमच० । [राजनि०

**सुरपर्णी** स्त्री सुरप्रियं पर्णं यस्याः ङीप् । पलाशीवृक्षे

**सुरपादप** पु० ६त० । कल्पवृक्षे सुरवृक्षादयोऽप्यत्र ।

**सुरपुन्नाग** पु० सुरप्रियः पुन्नागः । पुन्नागभेदे राजनि० ।

**सुरपुरी** स्त्री ६त० । अमरावत्यां त्रिका० सुरनगर्यादयोऽप्यत्र

**सुरप्रिय** पु० ६त० । १अगस्त्यवृक्षे राजनि० । २बृहस्पतौ ३इन्द्रे च । ४जात्यां ५स्वर्णकदल्यां च स्त्री राजनि० ।

**सुरभि** न० सु+रभ–इन् । १स्वर्णे २गन्धद्रव्ये च शब्दर० ३सुन्दरे ४साधुगन्धे पु०धरणिः ५सुगन्धे अमरः ६चम्पके ७जातीफले देवसर्जे मतौ मेदि० "स सुरभिं सुरभिं सुमनोभरैरिति" माघः । ८शमीवृक्षे १०कदम्बे ११बकुलपुष्पे १२गन्धतृणे १३बकुलवृक्षे १४राले राजनि० १५चैत्रे मासि १६पण्डिते धरणिः १७वसन्ते पु० शब्दर० ।१८शल्लक्यां १९रुद्रजटायां २०मातृकाभेदे २१मति २२सु(सु)रायां स्त्री मेदि० २३वनमालिकायां २४तुलस्यां २५माच्यां स्त्री राजनि०२६पृथिव्यां २७गवां मातरि च स्त्री वा ङीप् ।२८सुगन्धयुक्ते २९मनोहरे त्रि० मेदि० ३०विख्याते ३१धीरे च त्रि० धरणिः । सुरभिश्च कश्यपपत्नीभेदः । "सुरभिर्विनता चैव तथा क्रोधवशा इरा" हरिवं० ३अ० कश्यपपत्नीकथने । तस्याश्च दे कन्ये रोहिणी गन्धर्वी च तथा दुहितरौ राजन् । सुरभिर्व्यजायत । रोहिणी चैव भद्रां तु गन्धर्वी च रजस्वलाम् । रोहिण्यां जज्ञिरे गावः गन्धर्व्यां वाजिनः सुराः" भा० आ० ६६अ० तस्याश्च रोहिण्योत्पन्नगोमातृजननात् गोमातृत्वेन । ब्रह्मवै० प्र० ४४अ० । "गवामधिष्ठातृदेवी गवामाद्या गवां प्रसूः । गवां प्रधाना सुरभी गोलोके वा समुद्भवा" इति गवाद्युत्पत्तिक्रम् । सर्वतः स्त्रियां वा ङीप् । [कदल्यां इक्षे राजनि० ।

**सुरभिका** स्त्री सुरभि+स्वार्थे क । (चाँपाकला) स्वर्ण-

**सुरभित्वच्** स्त्री सुरभिः त्वक् यस्याः । स्थूलैलायां राजनि०

**सुरभिदारु** पु० सुरभि दारु यस्य । सरलवृक्षे राजनि० ।

**सुरभिपत्रा** स्त्री सुरभि पत्रमस्याः । १जम्बूवृक्षे २राजजम्बूवृक्षे च राजनि० । [चिनि) शब्दर० ।

**सुरभिवल्कल** न० सुरभि वल्कलमस्य । १गुडत्वचि (दार-

**सुरभिस्रवा** स्त्री सुरभिः स्रवो निष्यन्दो यस्याः । सल्लक्याम् राजनि० सुरभिस्रावाप्यत्र ।

**सुरभूरुह** पु० सुरप्रियः भूरुहः देवदारुवृक्षे भावप्र० ।

**सुरमृत्तिका** स्त्री सुरप्रिया मृत्तिका । तुवर्याम् (वर्णमाटि) राजनि० ।

**सुरमेदा** स्त्री सुरप्रियो मेदोऽस्याः । महामेदायाम् राजनि०

**सुरर्षि** पु० सुरप्रियः ऋषिः । नारदादिषु ऋषिषु अमरः । ऋषिशब्दे १४५२पृ० दृश्यम् ।

**सुरलता** स्त्री सुरप्रिया लता । महाज्योतिष्मत्याम् राजनि०

**सुरला** स्त्री सुरान् लाति सेवकत्वेन ला–क । १गङ्गायां हारा० । २सरलाख्ये नदीभेदे शब्दर० ।

**सुरलोक** पु० सुराणां लोकः वासस्थानादिः । १स्वर्गे अमरः । सुरभुवनादयोऽप्यत्र । [अमरः ।

**सुरवर्त्मन्** न० सुराणां वर्त्मेव तदाधारत्वात् । आकाशे

**सुरवल्लभा** स्त्री ६त० । श्वेतदूर्वायाम् राजनि० ।

**सुरवल्ली** स्त्री सुरप्रिया वल्ली । तुलस्याम् राजनि० ।

**सुरवैरिन्** स्त्री ६त० ।१असुरे शब्दर० । २सुरविरोधिनि त्रि० सुररिपुप्रभृतयोऽप्यत्र ।

**सुरशत्रु** पु० ६त० । असुरे हला० ।

**सुरशाखिन्** पु० ६त० । कल्पवृक्षे जटा० ।

**सुरश्रेष्ठा** स्त्री सुरेषु श्रेष्ठा । ब्राह्म्यां राजनि० ।

**सुरस** न० सुखेन रस्यते सु+रस–घञर्थे कर्मणि क । १बोले २रसे ३गन्धतृणे ४सिन्धुवारे पु० शब्दर० । ५मोचरसे

राजनि० । भा० व० । ६सुरादौ रवे । ६ब० । ७सुरसाद्युक्ते त्रि० । ८तुलस्यां पुंस्त्री० । ९रास्नायां १०नागमातरि स्त्री मेदि० । ११निर्गुण्ड्यां शब्दच० १२ब्राह्म्यां रत्नमा० १३महाशतावर्य्यां च स्त्री राजनि० । नागमाता च कश्यपपत्नीभेदः । "अदितिर्दितिर्दनुश्चैव अरिष्टा सुरसा खसा" तत्पत्नीकथने हरिवं० ३अ० । "सुरसायाः सहस्रन्तु सर्पाणाममितौजसाम् । अनेकशिरसां तत्रां खेचराणां महात्मनाम्" । तत्राध्याये तस्या नागमातृत्वमुक्तम् । "सुरसाऽजनयन्नागान् कद्रुः पुत्रांश्च पन्नगान्" भा० आ० ६६अ० । तेनानेकशिरः नागमातृत्वं सुरसायाः कद्रास्तु सर्पमातृत्वमिति भेदः ।

**सुरसाष्ट** पु० सुरसाभिरष्टः व्याप्तः अश–व्याप्तौ कर्मणि क्त । "निर्गुण्डी तुलसी ब्राह्मी वृहती कण्टकारिका । पुनर्नवेति मुनिभिः सुरसाष्टः प्रकीर्त्तितः" शब्दचन्द्रिकोक्ते द्रव्यभेदव्याप्ते औषधभेदे । [स्त्रीभेदे तन्त्रसा० ।

**सुरसुन्दरी** स्त्री सुरप्रिया सुन्दरी । १मेनकाद्यप्सरःसु २योगि-

**सुरा** स्त्री सुर–क सु–रक् वा । १मद्ये २जले च मेदि० । सुरा च मद्यभेदः मद्यशब्दे ४७२६ पृ० दृश्यम् । सोत्रामणीशब्दे वैदिकमार्गेण तदभिषवप्रकारादिर्दृश्यः ।

**सुराकर** पु० सुराया आकरः । मद्योत्पत्तिस्थाने ।

**सुराचार्य्य** पु० ६त० । वृहस्पतौ अमरः ।

**सुराजक** सुष्ठु राजते राज–ण्वुल् । १भृङ्गराजे शब्दच० । ६ब० कप् । सुन्दरराजान्विते त्रि० ।

**सुराजन्** पु० सुष्ठु पूजितो राजा न टच्समा० । १सुन्दरे राजनि० ६ब० । २सुन्दरराजस्वामिके देशे त्रि० ।

**सुराजीविन्** पु० सुरां सुराविक्रयादनमाजीवति आ+जीव णिनि । शौण्डिके हेमच० ।

**सुराप** त्रि० सुरां पिबति पा–क । १मद्यपानकारके "सुरापः श्यावदन्तकः" इति याता० । [२योऽप्यत्र

**सुरापगा** स्त्री ६त० । गङ्गायाम् जटा० । सुरतरङ्गिण्या-

**सुरापान(ण)** न० सुरा पीयतेऽनेन पा–करणे ल्युट् वा णत्वम् । १वदंष्ट्रे (चाटनी) सुरायाः पानं येषां णत्वम् । २प्राच्यदेशस्थे जने पु० शब्दच० । भावे ल्युट् । ३तत् पाने न० वा णत्वम् । [ सुरापानमस्यत्र

**सुराभाग** पु० सुराया भागः श्रेष्ठभागः । सुरामण्डे शब्दच०

**सुरामण्ड** पु० ६त० । सुराया अग्रभागे अमरः ।

**सुरारि** पु० ६त० । असुरे शब्दर० ।

**सुरारिहन्तृ** पु० सुराणामरिं हन्ति हन–तृच् । विष्णौ ।

**सुरार्ह** न० सुरान् देवानर्हति अर्ह–अच् । हरिचन्दने राजनि० ।

**सुरालय** पु० ६त० । १सुमेरुपर्वते अमरः । २स्वर्गस्थाने च ।

**सुराष्ट्र** पु० ६ब० । देशभेदे (सुरट) । सोऽभिजनोऽस्य तस्य राजा वा अण् । सौराष्ट्र पित्रादिक्रमेण तद्देशवासिनि जने तद्भूपे च बहुषु अणो लुक् । तत्र भवः अण् । तद्देशभवे त्रि० स्त्रियां ङीप् ।

**सुराष्ट्रज** न० स्त्री० सुराष्ट्रदेशे जायते जन–ड । १तुवरिकायाम् अमरः २कृष्णमुद्गे राजनि० । ३विषभेदे च पु० शब्दच० । ४तद्देशजातमात्रे त्रि० ।

**सुराह्व** पु० सुरपूर्विका आह्वा यस्य सुरान् आह्वयति गन्धेन वा आ+ह्वे–क वा । १देवदारुवृक्षे शब्दर० । २मरुवके ३हरिद्रावृक्षे च राजनि० ।

**सुरुङ्ग** पु० सु+रुज–अङ्गच् पृषो० । १शोभाञ्जनवृक्षे शब्दर० । २सुरङ्गायां (सिंध) स्त्री जटा० ।

**सुरुङ्गाहि** पु० सुरुङ्गायामहिरिव । सन्धिचौरे शब्दर० ।

**सुरूप** न० सुन्दरं रूपमस्य । १तूले राजनि० । २सुन्दररूपयुते त्रि० सुरूपाश्च प्रसिद्धतया कतिचित् कविक० उक्ता यथा "सुरूपाश्चैव विख्याता नकुलश्च पुरूरवाः । कामदेवश्च शाम्बश्च विख्याता अश्विनौ तथा । नलकूबरः सुरूपेषु लोकेषु तु मता इमे" ३पाषाणभेदे पु० जटा० । ४भार्ग्यां ५शालपर्ण्यां च स्त्री राजनि० प्रा०स० । ६सुन्दरे रूपे नपु० ।

**सुरूहक** पु० सु+रुह–वुन् पृषो० । गर्दभाख्ये हेमच० ।

**सुरेज्य** पु० इज्यते पूज्यते यज–क्यप् ६त० । १वृहस्पतौ २तुलस्यां स्त्री राजनि० ।

**सुरेन्द्र** पु० सुरेषु इन्द्र ऐश्वर्य्ययुतः । सुरराजे इन्द्रे ।

**सुरेन्द्रजित्** पु० सुरेन्द्रं जितवान् जि–भूते क्विप् । गरुडे हेमा० तत्कथा भा० आ० ३२अ० दृश्या ।

**सुरेभ** न० सु+रेभ–अच् । रङ्के धातौ (रांग) त्रिका० ।

**सुरेवट** पु० सुष्ठु रेवटः सु+रेव–अटन् वा । राजपूगे त्रिका० ।

**सुरेश्वर** पु० सुराणामीश्वरः । १रुद्रे जटा० २इन्द्रे च । ३स्वर्गगङ्गायां स्त्री शब्दर० ४दुर्गायाञ्च ङीप् ।

**सुरेष्ट** पु० ६त० । १शाले वृक्षे २सुरपुन्नागे ३शिवमल्लिकायाम् ४ब्राह्म्यां स्त्री राजनि० ।

**सुरोत्तम** पु० सुरेषूत्तमः । १सूर्य्ये २देवश्रेष्ठे त्रि० ।

**सुरोत्तर** पु० सुरेषु तत्पूजनेषूत्तरः श्रेष्ठः । चन्दने शब्दच० ।

**सुरोद** पु० सुरेव उदकमस्य उदादेशः । सुरासमुद्रे जटा० ।

**सुलभ** त्रि० सुखेन लभ्यते सु+लभ–कर्मणि खल् । १अना-

शालपर्ण्यां २माषपर्ण्यां ३धूमपत्रायाञ्च स्त्री राजनि० ।

**सुलोचन** पुंस्त्री० सुष्ठु लोचनमस्य । १हरिणे राजनि० स्त्रियां ङीप् । २सुन्दरनेत्रयुक्ते त्रि० स्त्रियां बहुव्रचकत्वात् टाप् ।

**सुलोमशा** स्त्री सुलोमानि सन्त्यस्याः श । काकजङ्घायाम् राजनि० । २सुलोमयुक्ते त्रि० ।

**सुलोमा** स्त्री सुष्ठु लोमान्यस्याः ङाप् । १ताम्रवल्ल्याम् २मांसच्छदायाञ्च राजनि० ।

**सुलोहक** न० प्रा०स० । पित्तले हेमच० ।

**सुलोहिता** स्त्री प्रा०स० । १अग्निजिह्वाभेदे शब्दमा० २सुरक्तवर्णे पु० ३महति त्रि० स्त्रियां ङीप् तस्य नश्च ।

**सुवक्त्र** पु० सुष्ठु वक्त्रं सेवनात् यस्मात् । १वनबर्ब्बर्याम् राजनि० । ६ब० । २सुन्दराननयुक्ते त्रि० । प्रा०स० । ३सुन्दरे मुखे न० ।

**सुवचन** न० सु+वच-भावे ल्युट् । १सुप्रलापे शोभनोक्तौ अमरः । सूच्यतेऽसौ सु+वच-कर्मणि ल्युट् ङीप् । २शुभसूचन्याम् देवीभेदे स्त्री । [सुन्दरवचने न० ।

**सुवचस्** त्रि० सुष्ठु वचोऽस्य । १वाग्मिनि जटा० । प्रा०स० ।

**सुवन** पु० सु-क्यु । १सूर्य्ये २वह्नौ च उणादिको० प्रा०स० । ३रम्ये वने न० । [क्षारे राजनि० ।

**सुवर्चक** पु० सुष्ठु वर्च्चयति सु+वर्च-णिच्-ण्वुल् । सर्जिका-

**सुवर्चला** स्त्री सुष्ठु वर्च्चयति सु+वर्च-णिच्-कलच् । १सूर्य्य-भार्य्यायाम् त्रिका० । २अतस्याम् रत्नमा० । ३आदित्यभक्तायां ४ब्राह्मीशाके च राजनि० । अच् । सुवर्च देशभेदे पु०

**सुवर्चिक** पु० सुवर्चः देशभेदः अस्त्युत्पत्त्याकरत्वेन ठन् । १सर्जिकाक्षारे २जतुकायां स्त्री राजनि० ।

**सुवर्चिन्** पु० सु+वर्च-णिच्-णिनि । सर्जिकाक्षारे राजनि०

**सुवर्ण** न० सुष्ठु वर्णोऽस्य । १स्वनामख्याते धातुभेदे अमरः २हरिचन्दने मेदि० ३स्वर्णगैरिके रत्नमा० ४धने हेमच० । ५नागकेशरे राजनि० । "कर्षं सुवर्णस्य सुवर्णसंज्ञम्" इत्युक्ते कर्षमिते ६काञ्चने पु० लीला० । ७यज्ञभेदे ८धुस्तूरे ९कर्णगुग्गुलौ च पु० राजनि० । सुष्ठु वर्णो रूपमक्षरं वास्य । १०सुरूपे ११सुन्दराक्षरयुक्ते च त्रि० । "न सुवर्णमयी तनुः परं ननु वागपि तावकी तथा" नैष० । १२कर्षपरिमाणे वैद्यक० ।

अग्निरेतस् शब्दे ५८ पृ० कनकशब्दे च १६४४ पृ० सुवर्णधातूत्पत्तिगुणादिकं दृश्यम् ।

तस्य शोधनमारणप्रकारादिकं भावप्र० उक्तं यथा

"तत्र मारणाय योग्यं सुवर्णमाह "दाहे रक्तं सितं छेदे निकषे कुङ्कुमप्रभम् । तारशुल्वोज्झितं स्निग्धं कोमलं गुरु हेम सत्" (सत् उत्तमम्) "छेदे तु कठिनं रूक्षं विवर्णं समलं दलम् । दाहे छेदेऽसितं श्वेतं कषे रूक्षं स्फुटं लघु । दलं (टोयल) इति लोके स्फुटं यद् घनाहतं स्फुटति । शोधनविधिः "पत्तलीकृतपत्राणि हेम्नो वह्नौ प्रतापयेत् । निषिञ्चेत् तप्ततप्तानि तैले तक्रे च काञ्जिके । गोमूत्रे च कुलत्थानां कषाये तु त्रिधा त्रिधा । एवं हेम्नः परेषाञ्च धातूनां शोधनं भवेत्" । अथाशुद्धस्य दोषः "बलं सवीर्यं हरते नराणां रोगव्रजं पोषयतीह काये । असौख्यकार्यैव सदा सुवर्णमशुद्धमेतन्मरणञ्च कुर्य्यात्" । स्वर्णस्य मारणविधिः "स्वर्णाच्च द्विगुणं सूतमम्लेन सह मर्दयेत् । तद्गोलकसमं गन्धं निदध्यादधरोत्तरम्" । स्वर्णस्य पातितसूतपत्रस्य । गन्धम् गन्धकचूर्णम् । "गोलकञ्च ततो रुद्ध्वा शरावदृढसंपुटे । त्रिंशद्वनोपलैर्दद्यात् पुटान्येवं चतुर्दश । निरुत्थं जायते भस्म गन्धो देयः पुनः पुनः" । रुद्ध्वा सवस्त्रमृत्तिकापिण्डवर्त्तिकया वनोपलः (गोयठाः इति लोके) निरुत्थं यत् पुनर्न जीवति । अथान्यप्रकारः "काञ्चने गलिते नागं षोड़शांशेन निःक्षिपेत् । चूर्णयित्वा तथाम्लेन दृढां कृत्वा तु गोलकम् । गोलकेन समं गन्धं दत्त्वा चैवाधरोत्तरम् । शरावसंपुटे धृत्वा पुटेत्त्रिंशद्वनोपलैः । एवं सप्तपुटैर्हेम निरुत्थं भस्म जायते" । अत्रापि पूर्ववद्गन्धः । अन्यच्च "काञ्चनाररसैर्वा समसूतकगन्धयोः । कज्जलीं हेमपत्राणि लेपयेत् समया तया" । समया हेमपत्रसमया । "काञ्चनारत्वचः कल्कैर्मूषायुग्मं प्रकल्पयेत् । धृत्वा तत्सम्पुटे गोलं मृन्मूषासम्पुटे च तत् । निधाय सन्धिरोधञ्च कृत्वा संशोष्य गोलकम् । वह्निं खरतरं कुर्य्यादेवं दत्त्वा पुटत्रयम् । निरुत्थं जायते भस्म सर्वकर्मसु योजयेत् । काञ्चनारप्रकारेण लाङ्गली हन्ति काञ्चनम्" । लाङ्गली (कलिहारी) "ज्वालामुखी तथा हन्यात् तथा हन्ति मनःशिला । शिलासिन्दूरयोश्चूर्णं समयोरर्कदुग्धकैः । सप्तधा भावनात् दद्याच्छोषयेच्च पुनः पुनः । ततस्तु गलिते हेम्नि कल्कोऽयं दीयते समः । पुनर्धमेदतितरां यथा कल्को विलीयते । एवं वेलात्रयं दद्यात् कल्कं हेमहतं भवेत्" । एवं मारितस्य सुवर्णस्य गुणाः "सुवर्णं शीतलं वृष्यं बल्यं गुरु रसायनम् । स्वादु तिक्तं च तुवरं पाके च स्वादु पिच्छिलम् । पवित्रं वृंहणं नेत्र्यं मेधास्मृतिमतिप्रदम् । हृद्यमायुष्करं कान्तिवाग्विशुद्धिस्थिरत्वकृत् । विषद्वयक्षयोन्मादत्रिदोष-

ज्वरशोषजित्"। हृद्यं तृषाय कामुकाय हितम्। "असम्यङ्मारितं स्वर्णं बलं वीर्यञ्च नाशयेत्। करोति रोगान्मृत्युञ्च तद्धन्याद् यत्नतस्ततः"।

तद्भेदादिकं राजनि० उक्तं यथा

"दाहेऽतिरक्तमथ यच्च सितं छिदायां काश्मीरकान्ति च विभाति निकाषपट्टे। स्निग्धञ्च गौरवमुपैति च यत्तुलायां जानीत हेमकनकं मृदु रक्तपीतम्। तत्रैकं रसवेधजं तदपरं जातं स्वयंभूमिजं किञ्चान्यद्बहुलोहसङ्करभवं चेति त्रिधा काञ्चनम्। तत्राद्यं किल पीतरक्तमपरं रक्तं ततोऽन्यत् तथा गौराभं तदिति क्रमेण महितं स्यात् पूर्वपूर्वोत्तमम्"। तत्र रसवेधजस्य करणप्रकारः "आनीय पारदं देवि! स्थापयेत् प्रस्तरोपरि। तस्योपरि जपेन्मन्त्रं सर्वस्वमयात्मकम्। चाष्टधा देवेशि! प्रजपेत् साधकाग्रणीः। स्वयम्भूपुष्पसंयुक्ते वस्त्रे चारुसुचिक्कणे। संस्थाप्य पारदं देवि! स्वत्पात्रे शुभे शिवे!। पुष्पयुक्तेन वस्त्रेण बध्नीयात् बहुयत्नतः। स्वस्तिकया रजेनैव धान्यस्य परमेश्वरि!। लेपयेद्बहुयत्नेन रौद्रे शुष्काणि कारयेत्। पुनश्च लेपयेद्धीमान् ततो वह्नौ विनिःक्षिपेत्। अष्टमीनवमीरात्रौ क्षिपेच्चैव सुरेश्वरि!। अथ वा परमेशानि! स्वत्पात्रे स्थापयेद्रसम्। वज्रीरसेन तद्द्रव्यं शोधयेद् बहुयत्नतः। हतनारीरसेनैव तथैव शोधनं चरेत्। एवं कृते तु गुटिका यदि स्यात् दृढबन्धना। धुस्तूरस्य समानीय मध्ये शून्यस्य कारयेत्। कन्याख्यतुलसीयोगे तथा हतकुमारिका। एवं कृते वह्नियोगे भस्मनात् जायते ध्रुवम्। भस्मयोगे भवेत् स्वर्णं मन्दायाः प्रसादतः। विवर्णं जायते द्रव्यं यदि पूजां न चाचरेत्" मातृकाभेदतन्त्रे ५प०। बहुलोहसङ्करभवस्य करणविधिः गारुडे १८८अ०। "सुवर्णकरणं वक्ष्ये" इत्युपक्रमे "पीतं धुस्तूरपुष्पस्य सीसकस्य पलान्वितम्। पाठालाङ्गलशाखा च मूत्रमावर्त्तनाद्भवेत्"। सुवर्णं चाग्नौ दह्यमानं न क्षीयते यथोक्तं याज्ञ० "अग्नौ सुवर्णमक्षीणम्"। कर्षमितब्राह्मणस्वामिककाञ्चनरूपसुवर्णहरणं महापातकम्। महापातकनिरूपणे प्रायश्चित्तविवेकः।

**सुवर्णक** न० सुवर्णमिव कायति कै-क। १पित्तले हेमच०। सुष्ठु वर्णोऽस्य कप्। २सुन्दरवर्णयुक्ते त्रि०।

**सुवर्णकदली** स्त्री सुष्ठु वर्णो यस्याः कर्म०। स्वर्णवर्णकदल्याम्। (चाँपाकला) राजनि०।

**सुवर्णकार** पु० सुवर्णं सुवर्णमयभूषणादि करोति कृ-अण्। (सेकरा) स्वर्णकारे जातिभेदे शब्दा०।

**सुवर्णगणित** न० सुवर्णस्य वर्णादिज्ञानार्थे गणितभेदे तत्प्रकारो लीला० उक्तो यथा

"अथ सुवर्णगणिते करणसूत्रं वृत्तम्। सुवर्णवर्णाहतियोगराशौ स्वर्णैक्यभक्ते कनकैक्यवर्णः। वर्णो भवेच्छोधितहेमभक्ते वर्णोद्धृते शोधितहेमसंख्या। उदाहरणानि। विश्वार्करुद्रदशवर्णसुवर्णमाषाः दिग्वेदलोचनयुगप्रमिताः क्रमेण। आवर्त्तितेषु वद तेषु सुवर्णवर्णस्तूर्णं सुवर्णगणितज्ञ! वणिग्! भवेत् कः। ते शोधने यदि च विंशतिरत्र माषाः स्युः षोडश द्रुविति वर्णमितिस्तदा का। तच्छोधितं भवति षोडशवर्णहेम ते विंशतिः कति भवन्ति तदा तु माषाः।

न्यासः १३ १२ ११ १०

१० ४ २ ४

जाता आवर्त्तिते सुवर्णमितिः १२। एत एव यदि शोधिताः सन्तः षोडश माषाः भवन्ति तदा वर्णः १५। यदि तदेव शोधितं षोडशवर्णं स्वर्णं भवति तदा पञ्चदश माषाः भवन्ति। अथ वर्णज्ञानाय करणसूत्रं वृत्तम्। स्वर्णैक्यनिघ्नाद्युतिजातवर्णात् सुवर्णतद्वर्णवधैक्यहीनात्। अज्ञातवर्णाग्निजसङ्ख्ययाप्तमज्ञातवर्णस्य भवेत्प्रमाणम्। उदाहरणम्। दशेशवर्णा वसुनेत्रमाषा अज्ञातवर्णस्य षडेतदैक्ये। जातं सखे द्वादशकं सुवर्णमज्ञातवर्णस्य वद प्रमाणम्।

न्यासः १० ११ ०

८ २ ६

लब्धमज्ञातवर्णमानम् १५। सुवर्णज्ञानाय करणसूत्रं वृत्तम्। स्वर्णैक्यनिघ्नो युतिजातवर्णः स्वर्णघ्नवर्णैक्यवियोजितश्च। अवेधवर्णोऽग्निजयोगवर्णविश्लेषभक्ता विदिताग्निजं स्यात्। उदाहरणम् "दशेन्द्रवर्णा गुणचन्द्रमाषाः किञ्चित्तथा षोडशकस्य तेषाम्। जातं युतौ द्वादशकं सुवर्णं कतीह ते षोडशवर्णमाषाः।

न्यासः १० १४ १६

३ १ ०

लब्धं माषमानम् १। सुवर्णज्ञानायान्यत्करणसूत्रं वृत्तम्। साध्येनोनोऽनल्पवर्णो विधेयः साध्यो वर्णः स्वल्पवर्णोनितश्च। इष्टक्षुण्णे शोधके स्वर्णमाने स्यातां स्वल्पानल्पयोर्वर्णयोस्ते। उदाहरणम् "हाटकगुटिके

षोडशटङ्कवर्णं तद्युतौ सखे! ख्यातम्। द्वादशवर्णं सुवर्णं ब्रूहि तयोः स्वर्णमाने मे।
न्यासः १६ १०
० ०
साध्यो वर्णः १२ कल्पितमिष्टम्। ।
स्वर्णे सुवर्णमाने १६ १०
२ ४
अथवा द्विकेनेष्टेन १६ १०
४ ८
अर्द्धेनेष्टेन वा १६ १०
१ २

**सुवर्णगैरिक** सुवर्णमिव पीतं गैरिकम्। (वर्णकमादि) गैरिकभेदे राजनि०। "गैरिकं मधुरं पीतं कषायं व्रणरोपणम्। विस्फोटार्शोऽग्निदाहघ्नं वरं स्वर्णादिकं गुणम्" राजनि० तद्गुणा उक्ताः।

**सुवर्णजीविक** पुं स्त्री० सुवर्णं तत्क्रयविक्रयो जीविका यस्य। सुवर्णवणिजि जातिभेदे स्त्रियां ङीप्। तदुत्पत्तिर्यथा "गान्धिकः शाङ्खिकश्चैव कांस्यको मणिकारकः। सुवर्णजीविकश्चैव पञ्चैते वणिजः स्मृताः"। "अम्बष्ठात् रजपुत्र्याञ्च जायते गान्धिको वणिक्। गन्धचन्दनधूपादिक्रयविक्रयकारकः। गान्धिक्यां रजपुत्र्याञ्च संजातः शाङ्खिको वणिक्। शङ्खं दत्त्वा मुनेः पत्थे शङ्खजीवी प्रकीर्त्तितः। शाङ्खिक्यां गान्धिकाज्जातकांस्यकारोपजीविकः। शाङ्खिकात् कांस्यकन्यायां मणिकारः प्रजायते। कांस्यकाराच्च माणिक्यां सुवर्णजीविकोऽभवत्" पराशरजातिमाला। तस्य पातित्यकारणं ब्रह्मवै० ब्रह्मख० १०अ० उक्तं यथा "कश्चिद् वणिग्विशेषश्च संसर्गात् स्वर्णकारिणः। स्वर्णचौर्य्यादिदोषेण पतितो ब्रह्मशापतः"। [म्रात्याम् राजनि०।

**सुवर्णनकुली** स्त्री सुवर्णमिव पीता नकुली। महाज्योतिष्मत्याम् राजनि०।

**सुवर्णपुष्प** पु० सुवर्णमिव पुष्पमस्य। राजतरण्यौषधे राजनि०

**सुवर्णप्रसर** न० सुवर्णस्य प्रसर इव यस्य। एलवालुके वैद्यक०।

**सुवर्णवणिज्** पु० सुवर्णस्य वणिक् क्रयविक्रयादिकर्त्ता। जातिभेदे (सोनारवेणे)। स्वर्णवणिक्प्रभृतयोऽप्यत्र। सुवर्णजीविकशब्दे दृश्यम्।

**सुवर्णबिन्दु** पु० सुवर्णस्य बिन्दुर्यत्र। विष्णौ हेमच०।

**सुवर्णयूथी** स्त्री सुवर्णमिव पीता यूथी। पीतवर्णयूथिकायाम् राजनि०। "यूथिका गणिकाम्बष्ठा सा पीता हेमपुष्पिका। यूथीयुगं हिमं तिक्तं कटुपाकं वरं लघु। मधुरं तुवरं हृद्यं पित्तघ्नं कफवातजम्। प्रवाहतृषा-दन्ताक्षिशिरोरोगविषापहम्" भावप्र०।

**सुवर्णवर्णा** स्त्री सुवर्णस्येव वर्णो यस्याः। १हरिद्रायाम् शब्दच०। २स्वर्णतुल्यवर्णयुक्ते त्रि०। ३विष्णौ पु० विष्णुस०। "तस्मात्सुवर्णमात् सवमेव सुवर्णमिति" श्रुतेस्तथात्वम्। इत०। स्वर्णस्य मूल्यभेदकस्वरूपके ४वर्णे पु० सुवर्णमपितशब्दे दृश्यम्।

**सुवर्णा** स्त्री सुष्ठु वर्णो यस्याः। १कालागुरुणि मेदि०। २वाथ्यालके शब्दमा०। ३स्वर्णक्षीर्यां ४हरिद्रायाम् राजनि०।५आखुकर्ण्यां स्त्री राजनि० गौ०णीष्।

**सुवयस्** स्त्री सुष्ठु वयोऽस्याः। प्रौढायां स्त्रियाम् राजनि०।

**सुवलि(ली)** स्त्री प्रा०स०। सोमराजीलतायाम् अमरः।

**सुवसन्त** पु० प्रा०स०। चैत्रावल्यां त्रिका०।

**सुवसन्तक** पु० सुवसन्तेन कायति कै—क। माधवीलतायां २मदनोत्सवे च मेदि०।

**सुवहा** स्त्री सुखेन वहते वायुनाद्यो सु+वह—अच्। १मेधा-त्रिकायां २रास्नायां ३गोधापद्याम् ४हयापत्यांश अमरः ५सल्लक्यां ६गोधायां मेदि०। ७निहितायाम् शब्दच०। ८वट्रजटायां ९हंसपद्यां १०महामाकुल्यां ११मुण्डल्यां १२नीलसिन्धुवारे च राजनि०। १३सुखवाह्ये त्रि० मेदि० सुखम् वहति सु+वह—अच् ।१४सम्यग्वाहके त्रि०हेमच०।

**सुवास** पु० सुष्ठु वासः। १सद्गन्धे २सुखनिवासे च। इक०। ३सद्गन्धयुक्ते ४सुनिवासान्विते च त्रि०।

**सुवासिनी** स्त्री सुखेन पित्राद्यवियोगेन वसति सु+वस—णिनि ङीप्। चिरण्ट्यां चिरं पितृकुलवासिन्यां स्त्रियाम् अमरः

**सुविद्** पु० सुष्ठु वेत्ति सु+विद-क्विप्। १पण्डिते। सुष्ठु विद्यते लभ्यते सु+विद—लाभे क्विप्। २सुपण्डरायां स्त्रियां स्त्री रामाश्रमः।

**सुविद** पु० सु+विद—क। १कञ्चुकिनि रायमु० २नृपे भरतः।

**सुविदत्** पु० सुविदं सुखाढ्यं स्त्रियमतति अत—क्विप्। नृपे रायमु०।

**सुविदत्र** त्रि० सु+विद कत्रच्। कुटुम्बे उणादि०।

**सुविदल्ल** पु० सुविदतं राजानं लाति ला—क। स्त्र्यगारान्तःपुरे कृताधिकारे कञ्चुकिनि अमरः। सुविदता राज्ञा लीयते ला-क। २अन्तःपुरस्थनार्य्याम् स्त्री रायमुकुटः।

**सुविनीता** स्त्री सु+वि+नी-क्त। १सुशीलायां गवि शब्दर०। २सुविनययुक्ते त्रि०।

**सुवीज** पु० सुष्ठु वीज्यतेऽसौ वीज-क। (खसखस) क्षुपभेदे राजनि० ६ब०। २सुन्दरवीजयुते त्रि०। प्रा० ब०। ३सुन्दरे वीजे न०।

**सुवीरक** न० सु+वीर-ण्वुल्। सौवीराञ्जने शब्दच०।

**सुवीराम्ल** न० सुवीरयति सुवीर्य्यान्वितं करोति सु+वीर-अच् तादृशोऽम्लोऽस्य। काञ्जिके जटा०।

**सुवीर्य्य** न० सुष्ठु वीर्य्यं यस्मात् ५ब०। १बदरीफले २वनकार्पास्यां स्त्री शब्दर०। प्रा०स०। ३उत्तमे वीर्य्ये न०।

**सुवृत्त** पु० सुष्ठु वृत्तः वर्त्तुलः। १शूरणे (ओल) राजनि० २सुन्दरवृत्तान्विते त्रि० ३शतपत्र्यां ४काकल्यां ५द्राक्षायां च स्त्री राजनि० ६सुवर्त्तुले त्रि०।

**सुवेगा** स्त्री सुष्ठु वेगो वायुनिःसारणवेगो यस्याः ५त०। १महाज्योतिष्मत्याम् राजनि०।२उत्तमवेगान्विते त्रि०।

**सुवेल** पु० सुमता वेला समुद्रकूलं येन प्रा० ब०। १त्रिकूटपर्वते हेमच०। सुष्ठु वेला मर्य्यादा स्थितिः यस्य। २शान्ते ३प्रणते च त्रि० मेदि०।

**सुवेश** पु० सुखेन विश्यते उपभुज्यते सु+विश-कर्म्मणि घञ्। १श्वेतेक्षौ राजनि० प्रा०ब०। २सुन्दरवेशयुक्ते त्रि०।

**सुव्रता** स्त्री सुष्ठु व्रतं नियमो यस्याः। १सुशीलायां गवि अमरः। २सुन्दरव्रतयुक्ते त्रि०। ३जिनभेदे पु० हेमच०।

**सुशर्म्मन्** पु० शृ-मनिन् सुष्ठु शर्म्म सुखं यस्य। १नृपभेदे दुर्य्योधनपक्षपुष्टे भा०आ०६७अ०। २सुन्दरसुखयुते त्रि०। ३तृतीयमनुपुत्रभेदे पु० हरिवं०७अ०। ४कुत्सितब्राह्मणभेदे "सुशर्म्मा नाम दुर्मेधाः वीणा पापात्मनामभूत्। अनाम्नायविदां वंशे विप्राणां क्रूरकर्म्मणाम्" पाद्मो०ख०८०अ०।

**सुशल्य** पु० सुष्ठु दृढं शल्यं यस्मात् ५ब०। खदिरे राजनि०।

**सुशवी** स्त्री सु+शव-अच् गौरा० ङीष्। १कारवेल्ले २कृष्णजीरके च भरतः।

**सुशाक** न० सुष्ठु शाको यस्मात् ५ब०। १आर्द्रके राजनि०। शाके तत्संयोगे हि शाकस्य सुस्वादुता। सुष्ठु शाको यस्य। २चञ्चुशाके ३तण्डुलीये (नटेशाक)४भिण्डायां पु०राजनि०

**सुशिख** पु० सुन्दरी शिखा यस्य। १वह्नौ जटा० २चित्रकवृक्षे च। ३शोभनशिखायुक्ते त्रि० ४मयूरशिखायां स्त्री राजनि०। [५तद्वति त्रि०। ६कुक्कुटे पु०राजनि०।

**सुशीत** न० प्रा०स०। १पीतचन्दने शब्दच० २अतिशीतलस्पर्शे

**सुशीतल** न० प्रा०स०। १गन्धतृणे रत्नमा०। २अतिशीतगुणयुक्ते त्रि०। [३त्वां स्त्रियां च।

**सुशीता** स्त्री प्रा०स०। १शतपत्र्याम् राजनि०। २शीतगुण-

**सुशीम** पु० सु+श्यैङ् मक् सम्प्रसारणञ्च। १शीतस्पर्शे २तद्वति त्रि० अमरः।

**सुशील** पु० सुन्दरं शीलमस्य। विष्णुपार्श्वचरभेदे राजनि०। २शोभनचरितान्विते त्रि० ३कृष्णाग्रमहिषीभेदे स्त्री पद्मपु० उत्तरख० ६८अ०। [शीयुक्ते त्रि०।

**सुश्रीक** स्त्री सुन्दरी श्रीरस्य कप्। १सल्लकीवृक्षे २सुन्दर-

**सुश्रुत** पु० सुश्रूयते सु+श्रु-कर्म्मणि क्त। १विश्वामित्रसुतभेदे चिकित्साशास्त्रकर्त्तरि मुनिभेदे आयुर्वेदशब्दे ७८० पृ० दृश्यम्। २तत्कृतग्रन्थे च। ३सुन्दरश्रुते त्रि०। "देवाकर्णय सुश्रुतेन चरकस्योक्तेन जानेऽखिलम्" नैष०। [च।

**सुश्लिष्ट** त्रि० सु+श्लिष-क्त।१सुसंयुक्ते २दृढमिलिते।३सुकृते

**सुषम** पु० सुन्दरः समः प्रा० स० सुषामा० षत्वम्। १शोभने समे २परमायां शोभायां स्त्री अमरः।

**सुषवी** स्त्री सु+सु-अच् गौरा० ङीष्। १कारवेल्ले अमरः। २क्षुद्रकारवेल्ले राजनि० ३जीरके ४कृष्णजीरके च मेदि०।

**सुषामन्** त्रि० सुष्ठु साम यस्य सुषामादि० षत्वम्। सुषाम्नी स्त्रियां वा डाप् ङीप् च।

**सुषि** स्त्री शुष-इन् पृषो० शस्य सः। शुषौ छिद्रे भरतः।

**सुषिर** न० शुष-किरच् पृषो० शस्य सः। छिद्रे भरतः।

**सुषीम** पु० सुशीम+पृषो०। १शीतलस्पर्शे २तद्वति अमरः। ३मनोज्ञे त्रि० मेदि०।

**सुषुप्त** न० सु+स्वप-भावे क्त। "यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत् सुषुप्तमिति" श्रुत्युक्ते १ज्ञानशून्यावस्थाभेदे। कर्त्तरि क्त। २तदवस्थान्विते त्रि०

**सुषुप्ति** स्त्री सु+स्वप-क्तिन्। पुरीतति नाड्यां मनसः संयोगरूपे १सर्वज्ञानशून्ये जीवावस्थाभेदे वेदान्तोक्ते २सर्वपदार्थशून्ये लये च।

**सुषुम्णा** स्त्री सुषु इत्यव्यक्तं शब्दं म्नायति अभ्य म्ना-क। तन्त्रोक्ते मेरुदण्डबाह्यस्थे इडापिङ्गलानाड्योर्मध्यस्थे सूक्ष्मे नाडीभेदे। "मेरोर्बाह्यप्रदेशे शशिमिहिरशिरे सव्यदक्षे निषण्णे मध्ये नाडी सुषुम्णा त्रितयगुणमयी चन्द्रसूर्य्याग्निरूपा" षट्चक्रभेदतन्त्रम्। तस्याऽशुभवहनभेदो यथा "क्षणं वामे क्षणं दक्षे यदा वहति मारुतः। सुषुम्णा सा च विज्ञेया सर्वकार्य्यहराऽशुभा। तस्यां नाड्यां स्थितो वह्निर्ज्वलति कालरूपकः। विषमं तं विजानीयात् सर्वकार्य्यविनाशनम्। यदानुक्रममुल्लङ्घ्य तस्यां नाड्यां द्वयं वहेत्। तदा तस्य विजानीयादशुभं समुपस्थितम्" इति ब्रह्मयामलम्।

"मेरुकाद्ये इडा नाडी पिङ्गलया समन्विता। सुषुम्णा भानुमार्गेण ब्रह्मद्वारावधि स्थिता" योगस्वरोदयः।

**सुषेण** पु० सुष्ठु सेनयति सेनां करोति णिच् ल्यप्। १कर-मर्दके (करमचा) अमरः २वेतसे राजनि० ३चिकित्सके वानरभेदे। ४विष्णौ च मेदि० ५त्रिवृति स्त्री राजनि० ङीप्। स्वार्थे क अत इत्त्वम्। सुषेणिकाप्यत्र स्त्री अमरः।

**सुषोमा** स्त्री नदीभेदे भाग० ५।१९ अ०।

**सुष्ठु** अव्य० सु+स्था–कु। १प्रशंसायाम् २अतिशये अमरः। ३सत्ये च शब्दचिन्ता०।

**सुष्म** न० सु–मक् सुक् च। रज्ज्वां क्षीरस्वामी।

**सुसंस्कृत** त्रि० सु+सम्+कृ–क्त सुट् च। १प्रयत्नेन घृतादि-नानाद्रव्येण पक्वे व्यञ्जनादौ अमरः २उत्तमसंस्कार-युते त्रि०।

**सुसत्या** स्त्री जनकराजभार्यायाम् कालिकापु० ३७ अ०।

**सुसम्पद्** स्त्री प्रा०स०। १सौभाग्ये त्रिका० सुष्ठु सम्पद् यस्य। २शुभयुक्ते त्रि०। [सारयुते त्रि०।

**सुसार** पु० सुष्ठु सारोऽस्य। १रक्तखदिरे राजनि०। २अति-

**सुसारवत्** न० सुष्ठु सारोऽस्त्यस्य मतुप् मस्य वः। स्फटिके त्रिका०। [कायाम् अ० व०।

**सुसिकता** स्त्री प्रा०स०। शर्करायाम् राजनि०। २उत्तमवालु-

**सुस्थ** त्रि० सुखेन तिष्ठति सु+स्था–क। १आरोग्येण युक्ते २सुखिनि च।

**सुस्ना** पु० सु+स्नै–क्विप्। (खेँसारी) शमीधान्यभेदे राजनि० "सुस्ना दूर्वादलो रूक्षः कषायो विशदो गुरुः" राजनि०।

**सुस्नात** त्रि०सुष्ठु स्नातः सु+स्नै–क्त। मङ्गलद्रव्येण कृतस्नाने।

**सुस्मिता** स्त्री सुष्ठु स्मितमस्य। नारीभेदे हेमच०

**सुहित** त्रि०सु+धा–क्त।१तृप्ते २विहिते च विश्वः। प्रा०स०। ३सुन्दरहिते न०। ५व०। ४अग्निजिह्वाभेदे स्त्री जटा०।

**सुहृद्** पु० सुष्ठु हृदयं यस्य मित्रार्थे हृदादेशः। १मित्रे २ज्योतिषोक्ते लग्नाच्चतुर्थस्थाने च। [२सुचित्ते न०।

**सुहृदय** त्रि०सुष्ठु हृदयं यस्य।१प्रशस्तमनस्के अमरः। प्रा०स०।

**सुहृद्बल** न० सुहृदेव बलम्। मित्ररूपे सैन्ये।

**सुहोत्र** पु०। चन्द्रवंशीयबृहद्दिवुराजपुत्रे। "बृहद्दिवोस्य दायादः सुहोत्रो नाम धार्मिकः। सुहोत्रस्यापि दायादो वस्ती नाम बभूव ह" हरिवं० २० अ०।

**सू** स्त्री सू–क्विप्। १सूतौ २प्रसवे ३क्षेपे ४प्रेरणे च।

**सूक** न० सू–प्रेरणे क्विप् संज्ञायां कन्। १उत्पले २वाणे ३वाते च मेदि०।

**सूकर** पु०स्त्री० सू–इत्यव्यक्तं शब्दं करोति कृ–अच्। १शूरे २कुलालकारे ३मृगभेदे च शब्दर० स्त्रियां ङीप्। ङीबन्तः ४वराहक्रान्तायां शब्दमा०।

**सूक्त** न० सु+वच–भावे क्त। १सुन्दरकथने २विशिष्टकार्य-प्रतिपादके एकदैवत्ये वेदमन्त्रसमुदाये च यथा श्रीसूक्तं पुरुषसूक्तमित्यादि। तानि च वेदे बहूनि सन्ति तत्र महादानोपयोगीनि कति चित् सूक्तानि तुलादानादि पद्धतौ अस्माभिः उद्धृतानि तानि च तत्र दृष्टानि। "जप्यानि सूक्तानि तथैव चैषाम्" वह्निपुराणम्। ३शा-रिकायां स्त्री त्रिका०। स्त्रिप्। छक्ति सुष्ठु क्तौ स्त्री।

**सूक्ष्म** न० सूच–मन् सुकच नेट्। १कैतवे २अध्यात्मपदार्थे मेदि०। ३अर्थालङ्कारभेदे अलङ्कारशब्दे ४०७पृ० दृश्यम्। ४कतकवृक्षे पु० शब्दर०। ५अणुपरिमाणयुते ६अल्पे च त्रि०। [जम्बूवृक्षे रत्नमा०।

**सूक्ष्मतण्डफला** स्त्री सूक्ष्मं तण्डं फलं यस्याः। मध्यम०

**सूक्ष्मतण्डुल** पु० सूक्ष्मस्तण्डुलोऽस्य। (खसखस) इति ख्याते १वृक्षे २पिप्पल्यां स्त्री राजनि०। [कुशाग्रीयबुद्धौ।

**सूक्ष्मदर्शिन्** त्रि० सूक्ष्मं पश्यति दृश–णिनि। अत्यन्तसुबुद्धौ

**सूक्ष्मपत्र** पु० सूक्ष्मं पत्त्रमस्य। १धन्याके २वनजीरके ३देवसर्षपे ४लघुबदरे ५सुरपर्णे ६लोहितेक्षौ च राजनि०। ७वनबर्बर्यां दनावबहृष्ण शब्दर०। कप् अत इत्त्वम्। सूक्ष्मपत्रिका शतपुष्पायां शतावर्यां लघुब्राह्म्यां दुरा-लभायाम् आकाशमांस्याञ्च स्त्री राजनि०।

**सूक्ष्मपिप्पली** स्त्री कर्म०। वनपिप्पल्याम् राजनि०।

**सूक्ष्मपुष्पी** स्त्री सूक्ष्माणि पुष्पाण्यस्याः ङीप्। यवतिक्तायाम् राजनि०। [२भूकदम्बे राजनि०।

**सूक्ष्मफला** स्त्री सूक्ष्मं फलमस्याः। १भूम्यामलक्याम् रत्नमा०

**सूक्ष्मबदरी** स्त्री कर्म०। भूमिबदर्याम् राजनि०।

**सूक्ष्मभूत** न० कर्म०। वेदान्तप्रसिद्धे अपञ्चीकृते भूम्यादीनां पञ्चानां भूतानां सूक्ष्मांशभेदे। [मशके राजनि०।

**सूक्ष्ममक्षिक** पु० सूक्ष्मा मक्षिका तदाकारोऽस्त्यस्य अच्।

**सूक्ष्ममूला** स्त्री सूक्ष्मं मूलमस्याः। जयन्त्याम् राजनि०।

**सूक्ष्मवल्ली** स्त्री कर्म०। १ताम्रवल्ल्यां २जतुकायाञ्च राजनि०।

**सूक्ष्मवीज** पु० सूक्ष्मं वीजमस्य। (खसखस) ख्याते वृक्षे राजनि०।

**सूक्ष्मशर्करा** स्त्री कर्म०। वालुकायाम् राजनि०।

**सूक्ष्मशाख** पु० सूक्ष्मा शाखाऽस्य। जलबर्बुरे राजनि०।

**सूक्ष्मशालि** पु० कर्म०। अणुधान्ये श्यामाकादौ राजनि०।

**सूक्ष्मषट्चरण** पु० सूक्ष्मः षट्चरण इव । पक्ष्मयूके राजनि०

**सूक्ष्मा** स्त्री सूच-मन् सुक्‌च नेट् टाप् । १यूथिकायां शब्दच०। २क्षुद्रैलायां ३करुणायां ४वालुकायाञ्च राजनि०।

**सूक्ष्माङ्ग** न० कर्म० । "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्" वेदान्तोक्ते भोगसाधने लोकद्वयगामिनि लिङ्गदेहे । सूक्ष्मशरीरादयोऽप्यत्र । सांख्यमते तच्चान्यविधमष्टादशावयवत्वं यथोक्तं सां० का० तत्त्वकौ० । "सूक्ष्मास्तेषां नियता मातापितृजा निवर्त्तन्ते" का० "सूक्ष्मादेहाः परिकल्पिता" तत्त्वकौ० । "परिकल्पिता अनुमिता परलोके कर्मफलभोगः सूक्ष्मदेहं विनाऽनुपपन्नः भोगत्वात् स्थूलदेहारब्धकर्मादिजनितस्य यस्य स्वदेहेनैव भोगवत् स्वदेहारब्धकर्मादिफलं यस्य तत् स्वदेहेनैव भोग्यम् नेतरेण अन्यथा कृतहानाकृताभ्यागमप्रसङ्ग इत्यादितर्कसत्वात् बन्धेयः । "पूर्वोत्पन्नमस(स)क्तं नियतं महदादिसूक्ष्मपर्यन्तम् । संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्" का०।"प्रधानेनादिसर्गे प्रतिपुरुषमेकैकमुत्पादितम् । अस(स)क्तमव्याहतं शिलामप्यनुविशति नियतम् आ आदिसर्गात् आ च महाप्रलयादवतिष्ठते महदादिसूक्ष्मपर्य्यन्तं महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रपर्य्यन्तम् एषां समुदायः सूक्ष्मशरीरं शान्तघोरमूढैरिन्द्रियैरन्वितत्वाद्विशेषः" कौ० ।

**सूक्ष्मैला** स्त्री कर्म० । क्षुद्रैलायाम् (गुजराटी एलाच्) रत्नमा०

**सूच** पैशून्ये (चुगली) अद० चु० उभ० सक० सेट् । सूचयति ते असुसूचत् त । सूचयतान्न जीवदेवः ।

**सूचक** त्रि० सूचयति अनिष्टं सूच-ण्वुल् । १पिशुने अमरः अनिष्टोद्भावके २बोधके च । ३काके ४कुक्कुरे ५बिडाले पुंस्त्री० मेदि० स्त्रियां ङीष् । ६पिशाचे ७सिद्धभेदे बुद्धे शब्दर० । ८नाटकप्रसिद्धे सूत्रधाराख्ये प्रधाननटे १०कथके हेमच० ११सूक्ष्मशालौ पु० राजनि० १२सीवनसाधनद्रव्ये पु० मेदि० ।

**सूचन** न० सूच-भावे ल्युट् । १हिंसने २ज्ञापने च । युच् । तत्र दृष्टौ पीडायाम् अभिनये च स्त्री विश्वः ।

**सूचि(ची)** स्त्री सूच-इन् वा ङीप् । १सीवनसाधने स्वनामख्याते लौहमयपदार्थे अमरः २शिखायां ३दलभेदे रत्नको०। [जीविनि (दरजि) शब्दर० ।

**सूचिक** त्रि० सूचिः तया सीवनं शिल्पमस्य ठन् । सूच्या-

**सूचिका** स्त्री सूचि+स्वार्थे क । १सूच्याम् । सूचिरिव कायति कै-क । २हस्तिशुण्डायाम् । सूचिकाधरः ।

**सूचिकाधर** पुंस्त्री० सूचिकां शुण्डां धरति धृ-अच् । गजे शब्दर० स्त्रियां ङीष् ।

**सूचिकाभरण** न० वैद्यकोक्ते औषधभेदे तत्पाकादि यथा "विषं पलमितं सूतः शाणकश्च चूर्णयेद् द्वयम् । तच्चूर्णं संपुटे कृत्वा काचलिप्तशरावयोः । मुद्रां कृत्वाथ संशोष्य ततश्चुल्ल्यां निवेशयेत् । वह्निं शनैः शनैः कुर्यात् प्रहरद्वयसङ्ख्यया । तत उद्घाट्य तन्मुद्रामुपरिस्थशरावकात् । संलग्नो यो भवेत् सूतस्तं गृह्णीयाच्छनैः शनैः । वायुस्पर्शो यथा न स्यात्तथा कूप्यां निवेशयेत् । यावत् सूच्या मुखे लग्नं कूप्या निर्याति भेषजम् । तावन्मात्रो रसो देयो मूर्च्छिते सन्निपातिनि । क्षुरेण प्रच्छिते मूर्ध्नि तत्राङ्गुल्या च घर्षयेत् । रक्तभेषजसम्पर्कात् मूर्च्छितोऽपि हि जीवति । तथैव सर्पदष्टोऽपि मृतावस्थोऽपि जीवति । यदा तापो भवेत्तस्य मधुरं तत्र दीयते" भैषज्यरत्ना० । "विषं पलं रसं शाणं तच्चूर्णं काचलेपिते । शरसंपुटे च संरुध्य चुल्ल्यां संस्थाप्य पाचयेत् । शनैर्यामद्वयं पश्चात् तं समुद्धाट्य शीतलम् । ऊर्ध्वपात्रगतं धूमं गृह्णीयात्सूच्यग्रमात्रतम् । यावत् सूच्या मुखे लग्नं कूप्या आयाति भेषजम् । क्षुरेण प्रच्छिते शीर्षे तत्राङ्गुल्या च घर्षयेत् । त्रिदोषे मूर्च्छितो जीवो रक्तभेषजसङ्गमात् । सर्पदष्टो मृतावस्थः सोऽपि जीवति तत्क्षणात् । दद्याच्च मधुरं तोयं सूचिकाभरणे रसे" इति रसप्रदीपः ।

**सूचिकामुख** पु० सूचिरिव क्रमसूक्ष्मं मुखमस्य । १शङ्खे हारा० । दृत० । ६सूच्यास्ये न० ।

**सूचि(ची)क्षेत्र** न० सूच्याकारं क्षेत्रम् । लीलावतीप्रसिद्धे सूच्याकारके क्षेत्रभेदे क्षेत्रशब्दे २४०० पृ० दृश्यम् ।

**सूचित** त्रि० सूच-क्त । १कथिते २बोधिते ३हिंसिते च ।

**सूचिपत्रक** पु० सूचिरिव पत्रमस्य कप् । शितावरशाके राजनि० । सूचीदलादयोऽप्यत्र ।

**सूचिपुष्प** पु० सूच्याकारं पुष्पं पुष्पाग्रं यस्य । केतकवृक्षे जटा० । सूचीपुष्पादयोऽप्यत्र ।

**सूचिरोमन्** पु० सूचिरिव रोमाऽस्य । वराहे हारा० सूचीरोमन् तत्रार्थे त्रिका० । [दः । गरुडे शब्दर० ।

**सूचिवत्** पु० सूचिरिव तदाकारचञ्चुरस्त्यस्य मतुप् मस्य वः।

**सूचिवदन** पुंस्त्री० सूचिरिव वदनं यस्य । १नकुले स्त्रियां जातित्वात् ङीष् । २मशके पु० राजनि० ।

**सूचिशालि** पु० कर्म० । सूक्ष्मधान्ये श्यामकादौ राजनि० ।

**सूचीकटाह** पु० न्यायभेदे न्यायशब्दे ४१७० पृ० दृश्यम् ।

**सूचीपत्रा** स्त्री सूचीव पत्त्रमस्याः । गण्डदूर्वायाम् राजनि०

**सूचीमुख** सूचीव मुखमस्य । १चित्रकुशे राजनि० । २ही-रके न० हेमच० । ६त० । ३सूच्याग्रके न० ।

**सूच्यग्रस्थूलक** पु० सूच्यग्रमिव स्थूलः स्वार्थे क । (उलुखड्) तृणभेदे रत्नमा० ।

**सूच्यास्य** पुंस्त्री० सूचीव आस्यमस्य । १मूषिके हेमच० स्त्रियां योपधत्वात् टाप् । ६त० । २सूच्या अग्रे न० ।

**सूच्याह्व** पु० सूच्या आह्वा आह्वा यस्य । सितावरके हेमच०।

**सूत** पु० सू—प्रसवे प्रेरणे ऐश्वर्ये वा क्त । १सूर्ये अनेकार्थ-को०।२अर्कवृक्षे ३क्षत्रियजाते ब्राह्मणीगर्भजे वर्णसङ्करभेदे ४त्वष्टरि ५सारथौ ६वन्दिनि मेदि० ७मागधे ८पारदे पुंन०अमरः । ९प्रसूते १०प्रेरिते च त्रि० ११लोमहर्ष-णाख्ये पुराणवक्तरि च तदुत्पत्तिकथा

"सत्रान्ते सूतमनघं नैमिषेया महर्षयः । पुराणसंहितां पुण्यां पप्रच्छुर्लोमहर्षणम् । त्वया सूत ! महाबुद्धे भगवान् ब्रह्मवित्तमः । इतिहासं पुराणार्थं व्यासः सम्यगुपासितः । तस्य ते सर्वरोमाणि वचसा हृषि-तानि यत् । द्वैपायनस्य भगवांस्ततो वै रोमहर्षणः । भवन्तमेव भगवान् व्याजहार स्वयं प्रभुः । मुनीनां संहितां वक्तुं व्यासः पौराणिकीं पुरा । त्वं हि स्वाय-म्भुवे यज्ञे सुत्याहे वितते सति । संभूतः संहितां वक्तुं स्वांशेन पुरुषोत्तम !" कौर्म १अ० । "ब्रह्मणः पौष्करे यज्ञे सुत्याहे वितते सति । पृषदाज्यात् समुत्-पन्नः सूतः पौराणिको द्विजः । वक्ता वेदादिशास्त्राणां त्रिकालामलसत्त्ववित् । तीर्थयात्राप्रसङ्गेन नैमिषारण्य-मागमत्" वह्निपु० १अ० ।

जातिभेदसूतोत्पत्तिकथा "हते तु दक्षिणे चक्रे हृष्टा-स्तस्य पितामहः । विष्णोरथ पृथुं मत्वा परितोषं परं ययौ । तस्य वै जातमात्रस्य यज्ञे पैतामहे शुभे । सूतः सूत्यां समुत्पन्नः सौत्येऽहनि महामते ! । तस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागधः । प्रोक्तौ तदा मुनि-वरैस्तावुभौ सूतमागधौ । स्तूयतामेष नृपतिः पृथुर्वैन्यः प्रतापवान्" विष्णुपु० १अंशे १३अ० । "एतस्मिन्नेव काले तु यज्ञे पैतामहे शुभे । सूतः सूत्यां समुत्पन्नः सौत्ये-ऽहनि पुराणवित् । तेषां यज्ञे पुनस्तत्र समुत्पन्नौ सूत-मागधौ । पृथोःस्तवार्थं तौ तत्र समाहूतौ महर्षिभिः । ते ऊचुस्त्र्यय: सर्वे स्तूयतामेष पार्थिवः । तैर्नियुक्तौ-ऽथ कर्माणि पृथोर्यानि महात्मनः । [illegible] सर्वाणि [illegible]दांस्ततः वरान् । तयोस्तथान्ते सुप्रीतः पृथुः प्रादात् जनेश्वरः" वह्निपु० । "क्षत्रियाद्विप्र-कन्यायां सूतो भवति जातितः" । "सूतानामश्वसारथ्यम् अम्बष्ठानां चिकित्सितम्" मनुः ।

**सूततनय** पु० सूतस्य तनयः । भारतप्रसिद्धे राधेये कर्णे हेमच० । सूतपुत्रादयोऽप्यत्र । तस्य सूतपालितत्वात्तथात्वम्

**सूति** स्त्री सू+क्तिन् । १प्रसवे "प्रसवैः सुतिमारुतैः" स्मृतिः सूयते कण्डूनं सोमोऽत्र सु-आधारे क्तिन् । २सोमाभि-षवभूमौ श्रीधरः ।

**सूतिका** स्त्री सू-क्त स्वार्थे क अत इत्वम् । नवप्रसूतायां स्त्रियाम् "उदक्यां सूतिकां विना" इति स्मृतिः ।

**सूतिकागार** न० सूतिकाया निवासयोग्यमगारम् । सू-तिकागृहे अरिष्टे । सूतिकागृहादयोऽप्यत्र ।

तत्करणप्रवेशमुहूर्तादिकं पीयू० उक्तं यथा

"उक्तश्च श्रीपतिना पुनर्वसौ च सूतिकागृहस्य निर्मितिः शुभा । विरञ्चिविष्णुमान्तरे प्रवेशनं हितं भवेत्" इति । विरञ्चिरभिजिन्नक्षत्रम् अन्तरे मध्ये विरञ्चिविष्णुतारयोरि-त्येव सप्तम्या अधिकरणत्वे बोधिते अन्तरपदाक्तिः स्पष्टार्था । तदेतत्राह्मणव्यतिरिक्तवर्णत्रयविषयम् । यदाह वसुः "पुनर्वसौ नृपादीनां कर्तव्यं सूतिकागृहम् । श्रवणा-भिजितोर्मध्ये प्रवेशं तत्र कारयेत्" इति । आवश्यकत्वे तु श्रवणाभिजितोर्मुहूर्त्तस्तदुदयो ग्राह्यः वा इत्यर्थः । ब्राह्मणस्य तु मागुक्तनक्षत्रेष्वेव सूतिकागृहनिर्माणप्रवेशौ । तत्र सूतिकागृहं नैर्ऋत्यां कार्यम् । यदाह वसिष्ठः "ऐन्द्र्यां तु विक्रमस्थानमाग्नेय्यां पचनालयः । वारुण्यां भोजनगृहं नैर्ऋत्यां सूतिकागृहम् । याम्यायां शयन-स्थानं वायव्यां पशुमन्दिरम् । कौवेर्यां तु धनस्थानम् ऐशान्यां देवतालयः" इति । स्मृतिभास्करे गर्गः "वारे-ऽनुकूले राशौ तु दिने दोषविवर्जिते । वास्तुकुण्डादिभिः प्रोक्तं सूतिकाभवनं बुधैः" इति । कालानियम उक्तो रत्नकोषे "आसन्नप्रसवे मासि कुर्याच्चैव विशेषतः । तद्वत् प्रसवकाले स्यादिति शास्त्रेषु निश्चयः" इति । वराहेणाप्यनेकनक्षत्राणामभिधानं कृतं यथा "हस्ता-दित्यशशाङ्कमित्रपवनप्राच्येशमित्रोत्तराचित्राश्विश्रवणेषु हरिकपटौ हित्वा विरिक्ते तिथौ । शुक्राचार्यशने-श्वरज्ञशशिनां वारेऽनुकूले विधौ सद्भिर्वेश्मनि सूतिका-गृहविधिः शेषङ्करः कीर्त्यते" इति । वेश्मनि चतुर्थस्थाने

शुद्धिः शुभग्रहैः। सूतिकागृहप्रवेशे कालविशेषमाह ज्योतिर्वशिष्ठः "अथातः सम्प्रवक्ष्यामि सूतिकागारवेशनम्। मासे तु नवमे प्राप्ते पूर्वपक्षे शुभे दिने। प्रसूतिसमये काले सद्य एव प्रवेशयेत्" इति। पूर्वपक्षे शुक्लपक्षे नक्षत्रादीन्याह गर्गः "रोहिण्यैन्द्रवपौष्णेषु स्वातीवारुणयोरपि। पुष्ये पुनर्वसौ हस्तधनिष्ठा त्वनुत्तरासु च" इति। "मैत्रत्वाष्ट्रे तथाश्विन्यां सूतिकागारवेशनम्। सर्वे शुभग्रहाः केन्द्रे पापाश्च त्रिषडायगाः। शुभांशे शुभसंदृष्टौ सूतिकागारवेशनमिति"।

तदाकारमाह भावप्र० "अष्टहस्तायतं चारु चतुर्हस्तविशालकम्। प्राचीद्वारमुदग्द्वारं विदध्यात् सूतिकागृहम्"।

**सूतिकारोग** पु० ह्रत०। भावप्र० उक्ते रोगभेदे तन्निदानादि यथा "मिथ्योपचारात् संक्लेशात् विषमाजीर्णभोजनात्। सूतिकायास्तु ये रोगा जायन्ते दारुणास्तु ते"। मिथ्योपचारात् अनुचिताचरणात् प्रवातादिसेवनात्। संक्लेशात् संक्लिश्यन्ते दोषा अनेन इति संक्लेशः दोषजनकमन्नं तस्मात्। दारुणाः कष्टसाध्याः। के ते व्याधय इत्याकाङ्क्षायामाह "अङ्गमर्दो ज्वरः कासः पिपासा गुरुगात्रता। शोथः शूलातिसारौ च सूतिकारोगलक्षणम्। एतेऽङ्गमर्दादयः प्रायेण सूतिकाया भवन्तः सूतिकारोगत्वेन लक्ष्यन्ते। ज्वरादीनां रोगविशेषाणां निदानविशेषमाह "ज्वरातीसारशोथाश्च शूलानाहबलक्षयाः। तन्द्रारुचिप्रसेकाद्या वातश्लेष्मसमुद्भवाः। कृच्छ्रसाध्या हि ते रोगाः क्षीणमांसबलाश्रिताः। ते सर्वे सूतिकानाम्ना रोगास्ते चाप्युपद्रवाः" सूतिकाभवत्वेन सूतिकानाम्ना ते रोगाः क्षामस्त्र्याश्रितयोरभेदोपचारात् ते चाप्युपद्रवा इति त एव ज्वरादयः उक्तानां रोगाणामन्यतमं प्रधानीकृत्योपद्रवाश्च"।

**सूतिकाषष्ठी** स्त्री सूतिकागृहे पूज्या षष्ठी शाक०। सूतिकागारे प्रसवावधि षष्ठे दिवसे पूज्यायां षष्ठीदेव्याम्। यथाह विष्णुधर्मोत्तरे "सूतिकावासनिलया जन्मदा नाम देवताः। तासां यागनिमित्तार्थं शुद्धौ जन्मनि कीर्त्तिता। षष्ठेऽह्नि रात्रियागन्तु जन्मदानाञ्च कारयेत्। रक्षणीया सदा षष्ठी निशां तत्र विशेषतः। राम! जागरणं कार्य्यं जन्मदानां तथा बलिः"। रामेति सम्बोधनम्। तत्राशौचान्तरदोषोऽपि नास्ति। "अशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्। कर्त्तुस्तात्कालिकी शुद्धिः पूर्वाशौचाद्विशुध्यति" इति प्रजापतिवचनात्। पुत्रजन्मेति श्रवणात् पितुरेवाशौचाभावः न तु मातुः कर्त्तुरिति पुंलिङ्गनिर्देशाच्च। कारयेदिति अन्यगोत्रजाभिप्रायेण। तत्रादौ विनायकादिसहितषोडशमातृकापूजनम्। तथा च कृत्यचिन्तामणौ "क्षणदाजागरणं कार्य्यं खड्गो धार्य्यः समीपतः। आवाह्य पूजयेद्देवीं गणेशं मातृका गिरिम्"। देवीं षष्ठीम्। गिरिं मन्थानदण्डम्। भोजराजः "गणेशश्चैव नन्दा च पूतना मुखमण्डिका। विडालिका शकुनिका शुष्कनन्दा च जृम्भिका। आचार्य्यका रेवती च पिलिपिच्छा ततः परम्। स्कन्दा च द्वादशैतेऽर्च्याः रक्षार्थं मातृका ग्रहाः" ज्यो०त०। [अमरः।

**सूत्थान** त्रि० सुष्ठु उत्थानम् उद्योगो यस्य। चतुरे कर्मकुशले

**सूत्पर** न० सु+उत्+पृ—अप्। सुरासन्धाने शब्दच०।

**सूत्या** स्त्री सू-क्यप् नि०। यज्ञाङ्गस्नानभेदे २अभिषवे सोमरसनिष्पीड़ने च अमरः।

**सूत्याशौच** न० सूतिनिमित्तकमाशौचम्। जननाशौचे "शावाशौचं न कर्त्तव्यं सूत्याशौचं विधीयते" स्मृतिः।

**सूत्र** ग्रन्थने वेष्टने च अद०चु०उभ०सक०सेट्। सूत्रयति ते असुसूत्रत् त। बह्वच्कत्वात् न षोपदेशः।

**सूत्र** न० सूत्र-अच्। १वस्त्रसाधने तन्तौ २व्यवस्थायां ३नाटकोपकरणे प्रस्तावे "स्वल्पाक्षरमसन्दिग्धं सारवत् विश्वतोमुखम्। अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः" इत्युक्ते शास्त्रवाक्यभेदे च।

**सूत्रकण्ठ** पु० सूत्रं यज्ञसूत्रं तदिव वा कण्ठे यस्य। १विप्रे २कपोते ३खञ्जरीटे च मेदि०। [तत्रार्थे त्रिका०।

**सूत्रकोण** पु० सूत्रबद्धः कोणोऽस्य। डमरौ हारा० कप्।

**सूत्रगण्डिका** स्त्री सूत्रं गण्डयति गण्ड-ण्वुल्। तन्तुवायोपकरणभेदे एषण्यां शब्दमा०।

**सूत्रतन्तु** पु० सूत्रमेव तन्तुः। सूत्राकारे तन्तौ हेमच०।

**सूत्रतर्कुटी** स्त्री सूत्रसहिता तर्कुटी। (टेको) पदार्थे जटा०

**सूत्रधार** पु० सूत्रं नाट्यसाधनं धारयति धृ-णिच्-अण्। नाट्याङ्गसाधनयुक्ते नाटकप्रस्तावके १प्रधाननटे। "नाट्योपकरणादीनि सूत्रमित्यभिधीयते। सूत्रं धारयतीत्यर्थे सूत्रधारो मतो बुधैः" इति तल्लक्षणं "पूर्वरङ्गं विधायैव सूत्रधारो निवर्त्तते" सा० द०। "सूत्रधारेण सहिताः संलापं यत्र कुर्वते" दशरूपकम्। २इन्द्रे ३शिल्पिभेदे (छुतार) च। शिल्पिभेदस्सूत्रधारश्च शूद्रागर्भे विश्वकर्मणा जातो जातिभेदः ब्रह्मवै०ब्रह्मख०१०अ०।

**सूत्रपुष्प** पु० सूत्रगर्भं पुष्पं यस्य। कार्पासे त्रिका०।

**सूत्रभिद्** पु० सूत्रं भिनत्ति सूच्या, भिद–क्विप्। सूच्याजीवे (दरजी) शब्दर०। [शब्दच०।

**सूत्रमध्यभू** पु० सूत्रमध्यमिव भवति भू–क्विप्। यक्षधूपे

**सूत्रयन्त्र** न० सूत्रवापनं यन्त्रम् शाक०। (ताँत) सूत्रवापनयन्त्रे शब्दमा०। [हारा०।

**सूत्रला** स्त्री सूत्रं लाति–ला–क। तर्कुटग्राम् (टेको)

**सूत्रवीणा** स्त्री सूत्रबद्धा वीणा शाक०। वीणाभेदे हारा०।

**सूत्रवेष्टन** न० सूत्रं वेष्ट्यतेऽनेन वेष्ट–करणे ल्युट्। तन्तुवायोपकरणभेदे तसरे (तासनी) अमरः।

**सूत्रात्मन्** पु० सूत्रमिव सर्वानुस्यूत आत्मा स्वरूपं यस्य। समष्ट्युपहितचैतन्ये हिरण्यगर्भे वेदा०सा०। [पत्तिः।

**सूत्रामन्** पु० इन्द्रे अमरे पाठान्तरम्। सुत्रामन् शब्दे व्युत्

**सूत्राली** स्त्री ६त०। १सूत्रश्रेणौ २गलमेखलायां हारा०।

**सूत्रिन्** त्रि० सूत्र+अस्त्यर्थे इनि। १सूत्रविशिष्टे स्त्रियां ङीप्। २काके पु० त्रिका०।

**सूद** पु० सूदयति पच्यन् पाकार्थं सूद–अच्। १सूपकारे २व्यञ्जनभेदे सूपे अमरः। ३सारथ्ये ४अपराधे ५लोध्रे ६पापे च अजयः। [च।

**सूदन** न० सूद–भावे ल्युट्। १हिंसने २निःक्षेपे ३अङ्गीकारे

**सूदशाला** स्त्री सूदाधिष्ठिता शाला शाक०। पाकशालायाम् पाचकशब्दे ४२४६ पृ० विवरणम्।

**सूदाध्यक्ष** पु० ६त०। पाकशालाध्यक्षे तल्लक्षणं यथा "अनाहार्य्यः शुचिर्दक्षश्चिकित्सितविदांवरः। सूदशास्त्रविशेषज्ञः सूदाध्यक्षः प्रशस्यते" पाचकशब्दे तल्लक्षणादि ४२८६ पृ० दृश्यम्।

**सून** न० सू–क्त तस्य नः। १पुष्पे २प्रसवे च। कर्त्तरि–क्त। ३विकसिते त्रि० मेदि० ४जाते च।

**सूना** स्त्री सू–क्त तस्य नः। १प्राणिवध स्थाने "पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः। कण्डनी चोदकुम्भश्च" मनुः २तनयायां ३गलशुण्डिकायां मेदि० ४मांसविक्रये च संक्षिप्तसा०। [५कन्यायां स्त्री वा ङष् हेमच०।

**सूनु** पु० सू–नुक्। १पुत्रे २अनुजे ३सूर्य्ये मेदि० ४अर्कवृक्षे च।

**सूनृत** न० सुष्ठु नर्त्तयति अनेन सु–नृत–घञर्थे क। १सत्ये प्रिये वाक्ये अमरः। २मङ्गले च ३तद्वति त्रि० अमरः।

**सूप** पु० सुखेन पीयते सु+पा–घञर्थे क पृषो०। (दालि) व्यञ्जनभेदे लताशब्दे २१८१ पृ० दृश्यम्। सुवपति सु+वप–मूलवि० क। २सूपकारे पाचके मेदि०। आधारे क। ३भाण्डे। सूद–करणे क पृषो०। ४शायके शब्दर०।

**सूपकार** त्रि० सूपं करोति कृ–अण्। पाचके अमरः। पाचकशब्दे ४२८६ पृ० दृश्यम्।

**सूपधूपन** न० सूपो धूप्यतेऽनेन धूप–करणे ल्युट्। १हिङ्गौ त्रिका० सूपपाके हि हिङ्गुधूपदानं पाकशास्त्रे प्रसिद्धम्।

**सूपपर्णी** स्त्री सूपसाधनस्य मुद्गस्येव पर्णमस्याः ङीप्। मुद्गपर्ण्याम् रत्नमा०।

**सूपश्रेष्ठ** पु० सूपेषु तत्साधनेषु श्रेष्ठः। मुद्गे राजनि०।

**सूपाङ्ग** न० सूपस्य तत्संस्कारकमङ्गमुपकरणम्। हिङ्गौ राजनि०।

**सूम** न० सू–मक् १आकाशे २क्षीरे मेदि०। ३जले शब्दर०।

**सूर** पु० सवति प्रेरयति कर्म्मणि लोकानुदयेन सू–क्रन्। १सूर्य्ये २अर्कवृक्षे च अमरः। सूर–क। ३पण्डिते, ४जिनभेदे पु० हेमच०। "सूर्य्योदयं विना नैव स्नानदानादिका क्रिया" इत्युक्तेस्तदुदयेन लोकानां सर्वकर्म्मप्रवर्त्तकत्वात्तथात्वम्।

**सूरण** पु० सूर–ल्युट्। स्वनामख्याते (ओल) शब्दरत्ना०। "मकरे मूलकञ्चैव सिंहे चालाबुकं तथा। कार्त्तिके (च)स्नूरणञ्चैव सद्यो गोमांसभक्षणम्" कर्म्मलो०।

**सूरत** त्रि० सु+रम–क्त पृषो०। दयालौ अमरः।

**सूरसूत** पु० ६त०। अरुणे गरुडाग्रजे सूर्य्यसारथौ अमरः। अनूरुशब्दे १६१ पृ० दृश्यम्।

**सूरि** पु० सू–क्रिन्। १सूर्य्ये २अर्कवृक्षे ३यादवभेदे ४पण्डिते च अमरः "सदा पश्यन्ति सूरयः" इति श्रुतिः। ४राजसर्षपे स्त्री ङीप् रत्नमा०।

**सूरिन्** पु० सूर–णिनि। पण्डिते शब्दर०।

**सू(षू)र्क्ष(र्क्ष्य)** अनादरे भ्वा०पर०सक०सेट्। सूर्क्ष(र्क्ष्य)ति असूर्क्षी(र्क्ष्यी)त् षोपदेश एव न्याय्यः।

**सूर्क्ष** पु० सूर्क्ष–कर्म्मणि घञ्। माषे (कलाइ) शब्दर०।

**सूर्क्ष(र्क्ष्य)ण** न० सूर्क्ष(र्क्ष्य) भावे ल्युट्। अनादरे।

**सूर्प** पुंन०। शूर्प–पृषो० शस्य सः। १शूर्पशब्दार्थे शब्दर०। २कुम्भपरिमाणे ३द्रोणपरिमाणे च वैद्यकम्।

**सूर्पणखा** स्त्री शूर्प इव नखा अस्याः पृषो० शस्य सः णत्वम्। रावणभगिन्याम्।

**सूर्म्मि** स्त्री शूर्म्मि+पृषो० शस्य सः। शूर्म्मिशब्दार्थे वा ङीप्।

**सूर्य्य** पु० सृ–क्यप् नि०। १दिवाकरे २अर्कवृक्षे च अमरः। ३दानवभेदे वह्निपु० ४अर्कपर्णवृक्षे मेदि०।

सूर्य्यग्रहकक्षादिकं खगोलशब्दे २४२५ पृ० दृश्यम्। तस्य प्रकृतिस्वरूपादिकं सदोषचि० उक्तं यथा

"भानुर्युगलाङ्कितदेहरक्तः श्यामान्वितः पिङ्गलनेत्रकान्तिः। पित्तात्मकोऽयं समगात्रयष्टिः प्रतापयुक् सत्त्वगुणोऽल्परोमा। स्थूलारयुक् चञ्चुचितार्थवाक्यः खल्पप्रजो दैविकबुद्धियुक्तः"। स च प्राच्या दिशः स्वामी। पुंग्रहः क्षत्रियजातीयः अस्थिसारः देवस्त्वेवच। बृहज्जातके तट्टीकायाञ्च मूलं दृश्यम्। ग्रहयज्ञशब्दे तन्मन्त्रभेदादिकं दृश्यम्। जन्मकाले लग्नादिकस्थस्य तस्य फलं जातकपद्धतावुक्तं यथा

"लग्ने१ सूर्ये स्वल्पकेशः प्रचण्डो मानी क्रोधी नेत्ररुक् निर्घृणश्च। शूरोऽत्यन्तश्चालसः कर्कशाङ्गो नीचे निःस्वो भूपजोऽप्यर्थहीनः। धने२ दिनेशे बहुवित्तसञ्चयचतुष्पदाढ्योऽपि नरो भवेत् सः। विनष्टसौभाग्यसुखो कुशाले चौरेर्हृतार्थो सुतरां सदुःखो। सहजरस्थो सहज३ बलाढ्यो धीविक्रमेर्लोकमनोभिरामः। विनष्टबन्धादरजो नरः स्यादुदुष्टारिपक्षस्य विनाशकश्च। मित्रे मित्र४भवन महीहनैः स्याद्दीनः सौख्येर्धनधान्यैश्च हीनः। नानाक्षादेर्नाशकारी नरो वै सेवाकारी भूपतेः क्रुद्धचित्तः। सूनौ५ भानौ सुतसौख्यहीना दुर्गारण्याधरोऽपरक्तः। मेधायुक्तो मन्त्रशास्त्रसम्पत्सत्त्वायुर्वै जायते मानवोऽयम्। कुमुदगहनबन्धौ शत्रुभावं६ प्रपन्ने भवति नरपतिर्वा दण्डनेता धनाढ्यः। प्रबलजठरवह्निर्भूरिकामो गुणी वै बलरिपुसहितः स्यात् पूरुषः केचिदेवम्। भार्य्याभावे ७ भास्करे चाभिभूतो भार्य्याभिर्वै हीनकान्तिर्धनाढ्यः। भूपादुद्वेगे पीडितोऽमार्गगामी सत्त्वोहीनो मानवः शीलहीनः। निधनगे ८ नलिनीदयिते नरो नयनयाविकलत्वयुतो भवेत्। तनुधनात्मजजीवितसौख्यभाग्नभिमतेन जनेन वियोजितः। धर्म९स्थिते धर्मकरे धनेन धनेन युक्तो बहुमित्रपुत्रः। सुरेवहन्तारकहन्तृभक्तिः पितृप्रियो वैरकरः सखेदः। गगन१०गे गगनस्य मणौ नरो अतिधनात्मजवैभवशौर्य्ययुक्। रतिबलश्रुतकार्य्यसमृद्धिभाग् भवति वाहनवान् नृपसद्गुणः। प्राप्ति११स्थाने सम्प्रसूतो नरः स्यात् प्राज्ञ्या वित्तस्याथ वृद्ध्या समेतः। मन्त्री द्वेष्यः सज्जनः शिष्टकर्म्मा क्रूरो कान्तानिर्जितो वश्यमत्यः। व्यये१२ सूर्य्ये नरः काणः पितृद्वेषी बलोज्झितः। बन्ध्यापतिर्विफलाङ्गः चुद्रस्तु पतितो भवेत्"। मेषादिस्थस्य तस्य फलं जातकशब्दे ३०८८ पृ० दृश्यम्।

**सूर्य्यकान्त** पु० सूर्य्यस्य कान्तः प्रियः। १स्फटिकमणौ हला० २सूर्य्यसम्पर्कात् यस्माद्वह्निरुत्पद्यते तस्मिन् (आतशी) मणौ च हेमच०।

**सूर्य्यकान्ति** पु० सूर्य्यस्य कान्तिर्यस्य। भातश्यां पुष्परागद्रव्यविशेषे शब्दच०। ६त०। २सूर्य्यस्य दीप्तौ स्त्री।

**सूर्य्यकाल** पु०। सूर्य्योपलक्षितः कालः शाक०। दिवसे शब्दच०।

**सूर्य्यग्रहण** न० सूर्य्यस्य राहुणा तदाक्रान्तभूच्छायया ग्रहणमाक्रमणम्। ज्योतिषोक्ते राहुप्रविष्टभूमिच्छायया सूर्य्यमण्डलस्य आक्रमणरूपे पाते सूर्य्यग्रहादयोऽप्यत्र। उपरागशब्दे १२८५ पृ० दृश्यम्।

**सूर्य्यज** पु० सूर्य्यात् जायते जन—ड। १शनिग्रहे २यमे ३वैवस्वते मनौ ४सुग्रीववानरे च जटा०। सूर्य्यसुतादयोऽप्यत्र। ५यमुनायां स्त्री हेमच०। ६कर्णे पु०।

**सूर्य्यपत्र** पु० सूर्य्य इव रक्तं पत्रमस्य। आदित्यपत्रे राजनि०।

**सूर्य्यभक्त** पु० सूर्य्यस्य भक्त इव प्रियः। १बन्धूकवृक्षे। ६त०। २सूर्य्यभक्तियुते त्रि० मेदि०। [२पुष्पभेदे शब्दच०।

**सूर्य्यमणि** पु० सूर्य्यप्रियः मणिः। १सूर्य्यकान्तमणौ हेमच०।

**सूर्य्यलता** स्त्री सूर्य्यभक्ता लता। आदित्यभक्तायाम् राजनि०।

**सूर्य्यवल्ली** स्त्री सूर्य्यतुल्यपुष्पिका वल्ली। अर्कपुष्पिकावृक्षे रत्न०।

**सूर्य्यसारथि** पु० ६त०। अरुणे गरुडाग्रजे शब्दच०। सूर्य्यसूतादयोऽप्यत्र।

**सूर्य्या** स्त्री सूर्य्यस्य भार्य्या टाप्। १सवितुर्भार्य्यायां संज्ञानाम्न्यां सूर्य्यभार्य्यायाम्। माहुर्य्यां कुन्त्यान्तु कोपि। सूरीत्येव।

**सूर्य्यालोक** पु० ६त०। आतपे रौद्रे राजनि०।

**सूर्य्यावर्त्त** पु० सूर्य्यं इवावर्त्तते आ+वृत—अच्। (हुड्हुड़िया) १क्षुपभेदे (सुवर्चिया) २शाके च रत्नमा०। ३आदित्यभक्तायां स्त्री राजनि०।

**सूर्य्याश्मन्** पु० सूर्य्यप्रियः अश्मा। सूर्य्यकान्तमणौ हेमच०।

**सूर्य्याह्व** पु० सूर्य्यमाह्वयते स्पर्द्धते वर्णेन आ+ह्वे—क। १ताम्रे त्रिका०। सूर्य्यस्य आह्वाऽऽह्वायस्य। २अर्कवृक्षे पु० राजनि०। [वल्लायाम् अमरः २तवीर्षवने च।

**सूर्य्येन्दुसङ्गम** पु० सूर्य्यस्य इन्दोश्च सङ्गमः कालः। १अमा-

**सूर्य्योढ** पु० सूर्य्यं ऊढोऽस्तगतो यत्र। १सूर्य्यास्तमयकाले हेमच०। "दिवातिथौ तु विमुखे गते यत् पातकं भवेत्। तदेवाष्टगुणं विद्यात् सूर्य्योढे विमुखे गते" ब्रा० त०। सूर्य्येण सूर्य्यास्तकालेन ऊढः प्रापितः वह—क्त। २तत्कालागतातिथौ "सूर्य्योढस्तु स सम्प्राप्तो यः सूर्य्येऽस्तं गतेऽतिथिः" हेमच०। [दायाद्य लोपदेवः।

**सृ** गतौ स्थितौ च० उभ० सक० सेट्। सारयति ते प्रसु-

**सृ** गतौ भ्वादि० परस्मै० सक० अनिट् सरति । असरत् असार्षीत् पर्युदासान्न षोपदेशः । "नासानं करिणां सस्रे" च रघुप्रयोगात् आत्म० । [सान्न षोपदेशः ।

**सृ** गतौ जु० वैदिकः पर०सक०सेट् । ससर्त्ति असरत् पर्युदा-

**सृक** पु० सृ-कक् । १केरवे २वाणे उज्ज्व० । ३पद्मे ४वायौ च सि० कौ० ।

**सृकण्डु** पु० सृ-क्विप् पृषो० कर्म० कण्डुरोगे शब्दर० ।

**सृकाल** पु० सृ-कालन् कस्य नेत्वम् । शृगाले शब्दच० ।

**सृक्क(न्)** न० सृज-कन् कनिन् वा कस्य नेत्वम् । ओष्ठप्रान्तभागे "सृक्कणी परिलेढ़ि च" श्रुतिः । "महासृक्काय शोभितो व्यसिंहवदिति" स भात् कान्तास्य ।

**सृक्कन्** न० सृज-कनिप् । ओष्ठप्रान्तभागे अमरः । पृषो० । सृक्किन् अप्यत्र अर्थः । सृक्कणी तत्रार्थे स्त्री राजनि०

**सृग** पु० सृ-गक् गस्य नेत्वम् । भिन्दिपालास्त्रे अमरः ।

**सृगाल** पुंस्त्री० सृ-गालन् गस्य नेत्वम् । १जम्बुके (शेयाल) शब्दर० । स्त्रियां ङीप् । २दैत्यभेदे हरिवं० ।

**सृज** विसर्गे त्यागे दिवा० आत्म० अनिट् सक० । सृज्यते असृष्ट । पर्युदासान्न षोपदेशः ।

**सृज** विसर्गे तु० पर०सक०अनिट् सृजति असाक्षीत् ससर्जिथ सस्रष्ठ स्रष्टा स्रक्ष्यति । पर्युदासान्न षोपदेशः ।

**सृजकाचार** पु० सृजति वर्णसित्यं सृज-क ततः स्वार्थे क सृजका सर्जिका कर्म० । सर्जिकाक्षारे रत्नमा० ।

**सृणि** पु० सृ-निक् । १चन्द्रे शब्दमा० । २अङ्कुशास्त्रे स्त्री अमरः । तत्र वा ङीप् । सृणीत्यपि ।

**सृणि(णी)का** स्त्री सृणि+कन् ईकन् वा । लालायाम् अमरः

**सृति** स्त्री सृ-भावे क्तिन् । १गमने । करणे क्तिन् । २पथि च मेदि० । [सं०क्षिप्त०

**सृत्वन्** पु० सृ-क्वनिप् । १प्रजापतौ उज्ज्वल० । २विसर्प ३सृतौ

**सृत्वर** त्रि० सृ-क्वरप् । १गमनकर्त्तरि स्त्रियां ङीप् । सा च २मातरि सं०क्षिप्तसा० ।

**सृदर** पु० सृ-अरक् दुक् च । सर्पे सि० कौ० ।

**सृदाकु** पु० सृ-काकु दुक् च । १वायौ २वज्रे ३अग्नौ ४प्रतिसूर्य्ये मेदि० । ५मृगे सं०क्षिप्त० । नद्यां स्त्री उज्ज्व० ।

**सृप** गतौ भ्वा० पर० सक० अनिट् । सर्पति असृपत् । पर्युदासान्न षोपदेशः ।

**सृपाट** पुंस्त्री० सृप-काटन् । १परिमाणभेदे २रत्नधारायां गोवर्द्धनः । स्त्रियां ङीप् । स्वार्थे क अत इत्त्वम् । सृपाटिका । चञ्च्वां हेमच० ।

**सृप्र** पु० सृप-रन् । चन्द्रे उज्ज्व० । [२गमनशीले त्रि० ।

**सृमर** पुंस्त्री० सृ-क्मरच् । मृगभेदे अमरः । स्त्रियां ङीप् ।

**सृष्ट** त्रि० सृज-क्त । १निर्मिते २युक्ते ३निश्चिते ४बहुले मेदि० । ५भूषिते अजयः । त्यक्ते च ।

**सृष्टि** स्त्री सृज-क्तिन् । १निर्माणे २स्वभावे च मेदि० कर्मणि क्तिन् । ३सृज्यमाने "या सृष्टिः स्रष्टुराद्ये"ति शकुन्तला० ४निर्गुणे शब्दर० ।

ब्रह्माण्डसृष्टिप्रकारः नानापुराणेषूक्तः तत्र मत्स्यपु० उक्तः प्रकारो यथा

"महाप्रलयकालान्त एतदासीत्तमोमयम् । प्रसुप्तमिव चातर्क्यमप्रज्ञातमलक्षणम् । अविज्ञेयमविज्ञातं जगत् स्थास्नु चरिष्णु च । ततः स्वयम्भूरव्यक्तः प्रभवः पुण्यकर्मणाम् । व्यञ्जयन्नेतदखिलं प्रादुरासीत्तमोनुदः । योऽतीन्द्रियः परो व्यक्तादणुर्ज्यायान् सनातनः । नारायण इति ख्यातः स एकः स्वयमुद्बभौ । यः शरीरादभिध्याय सिसृक्षुर्विविधं जगत् । अप एव ससर्जादौ तासु बीजमवासृजत् । तदेवाण्डं समभवद्धेमरूप्यमयं महत् । संवत्सरसहस्रेण सूर्य्यायुतसमप्रभम् । प्रविश्यान्तर्महातेजाः स्वयमेवात्मसम्भवः । प्रभावादपि तद्व्याप्त्या विष्णुत्वमगमत् पुनः । तदन्तर्भगवानेष सूर्य्यः समभवत् पुरा । आदित्यश्चादिभूतत्वात् ब्रह्मा ब्रह्म पठन्नभूत् । दिवं भूमिं चकारोत्तदण्डशकलद्वयम् । स चाकरोद्दिशः सर्वा मध्ये व्योम च शाश्वतम् । जरायुर्मेरुमुख्याश्च शैलास्तस्याभवंस्तदा । यदुल्वं तदभून्मेघस्तडित्सङ्घातमण्डलम् । नद्योऽण्डनाम्नः सम्भूताः पितरो मनवस्तथा । सप्त येऽमी समुद्राश्च तेऽपि चान्तर्जलोद्भवाः । लवणेक्षुसुराद्याश्च नानारत्नसमन्विताः । स सिसृक्षुरभूद्देवः प्रजापतिररिन्दम ! । तत्तेजसश्च तत्रैव मार्त्तण्डः समजायत । मृतेऽण्डे जायते यस्मान्मार्त्तण्डस्तेन स स्मृतः । रजोगुणमयं यत्तद्रूपं तस्य महात्मनः । चतुर्मुखः स भगवानभूल्लोकपितामहः । येन सृष्टं जगत्सर्वं स देवासुरमानुषम् । तमवेहि रजोरूपं महत्सत्त्वमुदाहृतम्" । मनुरुवाच "चतुर्मुखत्वमगमत् कस्माल्लोकपितामहः । कथं तु लोकानसृजत् ब्रह्मा ब्रह्मविदांवरः" । मत्स्य उवाच "तपश्चचार प्रथममराणां पितामहः । आविर्भूतास्ततो वेदाः साङ्गोपाङ्गपदक्रमाः । पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् । नित्यं शब्दमयं पुण्यं शतकोटिप्रवि-

स्तरम् । अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः । मीमांसा न्यायविद्याश्च प्रमाणाष्टकसंयुताः । वेदाभ्यासरतस्यास्य प्रजाकामस्य मानसाः । मनसा पूर्वसृष्टा वै जाता यत्तेन मानसाः । मरीचिरभवत् पूर्वं ततोऽत्रिर्भगवान् ऋषिः । अङ्गिराश्चाभवत्पश्चात् पुलस्त्यस्तदनन्तरम् । ततः पुलहनामा वै ततः क्रतुरजायत । प्रचेताश्च ततः पुत्रो वशिष्ठश्चाभवत् पुनः । पुत्रो भृगुरभूत्तद्वन्नारदोऽप्यचिरादभूत् । दशेमान् मानसान् ब्रह्मा मुनीन् पुत्रानजीजनत् । शारीरानथ वक्ष्यामि मातृहीनान् प्रजापतेः । अङ्गुष्ठाद्दक्षिणाद्दक्षः प्रजापतिरजायत । धर्मः स्तनान्तादभवत् हृदयात् कुसुमायुधः । भ्रूमध्यादभवत् क्रोधो लोभश्चाधरसम्भवः । बुद्धेर्मोहः समभवदहङ्कारादभून्मदः । प्रमोदश्चाभवत् कण्ठान् मृत्युर्लोचनतो नृप ! । भरतः करमध्यात्तु ब्रह्मसूनुरभूत्ततः । एते नव ! सुता राजन् ! कन्या च दशमी पुनः । अङ्गजा इति विख्याता दशमी ब्रह्मणः सुता । मनुरुवाच "बुद्धेर्मोहः समभवदिति यत्परिकीर्त्तितम् । अहङ्कारः स्मृतः क्रोधो बुद्धिर्नाम किमुच्यते" । मत्स्य उवाच "सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम् । साम्यावस्थितिरेतेषां प्रकृतिः परिकीर्त्तिता । केचित् प्रधानमित्याहुरव्यक्तमपरे जगुः । एतदेव प्रजासृष्टिं करोति विकरोति च । गुणेभ्यः क्षोभमाणेभ्यस्त्रयो देवा विजज्ञिरे । एका मूर्त्तिस्त्रयो भागा ब्रह्मविष्णुमहेश्वराः । सविकारात् प्रधानात्तु महत्तत्त्वं प्रजायते । महानिति यतः ख्यातिर्लोकानां जायते सदा । अहङ्कारश्च महतो जायते मानवर्द्धनः । इन्द्रियाणि ततः पञ्च वक्ष्ये बुद्धिवशानि तु । प्रादुर्भवन्ति चान्यानि तथा कर्मवशानि तु । श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका च यथाक्रमम् । पायूपस्थं हस्तपादं वाक् चेतीन्द्रियसंग्रहः । शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः । उत्सर्गानन्दनादानगत्यालापाश्च तत्क्रियाः । मन एकादशं तेषां कर्मबुद्धिगुणान्वितम् । इन्द्रियावयवाः सूक्ष्मास्तस्य मूर्त्तिं मनीषिणः । श्रयन्ति यस्मात्तन्मात्राः शरीरं तेन संस्मृतम् । शरीरयोगाज्जीवोऽपि शरीरी गद्यते बुधैः । मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया । आकाशं शब्दतन्मात्रादभूच्छब्दगुणात्मकम् । आकाशविकृतेर्वायुः शब्दस्पर्शगुणोऽभवत् । वायोश्च स्पर्शतन्मात्रात्तेजश्चाविरभूत्ततः । त्रिगुणं तद्विकारेण तच्छब्दस्पर्शरूपवत् । तेजो विकारादभवद्वारि राजंश्चतुर्गुणम् । रसतन्मात्रसम्भूतं प्रायो रसगुणात्मकम् । भूमिस्तु गन्धतन्मात्रादभूत् पञ्चगुणान्विता । प्रायो गन्धगुणा सा तु बुद्धिरेषा गरीयसी । एभिः सम्पादितं भुङ्क्ते पुरुषः पञ्चविंशकः । ईश्वरेच्छावशः सोऽपि जीवात्मा कथ्यते बुधैः । एवं षड्विंशकं प्रोक्तं शरीर इह मानवे । सांख्यं संख्यात्मकत्वाच्च कपिलादिभिरुच्यते । एतत्तत्त्वात्मकं कृत्वा जगद्वेधा अजीजनत् । सावित्रीं लोकसृष्ट्यर्थं हृदि कृत्वा समास्थितः । ततः संजपतस्तस्य भित्त्वा देहमकल्मषम् । स्त्रीरूपमर्द्धमकरोदर्द्धं पुरुषरूपवत् । शतरूपा च सा ख्याता सावित्री च निगद्यते । सरस्वत्यथ गायत्री ब्रह्माणी च परन्तप ! । ततः स्वदेहसम्भूतामात्मजामित्यकल्पयत् । दृष्ट्वा तां व्यथितस्तावत्कामबाणार्द्दितो विभुः । अहो रूपमहो रूपमिति चाह प्रजापतिः । ततो वशिष्ठप्रमुखाः भगिनीमिति चुक्रुशुः । ब्रह्मा न किञ्चिद्ददृशे तन्मुखालोकनादृते । अहो रूपमहो रूपमिति प्राह पुनः पुनः । ततः प्रणामनम्रान्तां पुनरेवाभ्यलोकयत् । अथ प्रदक्षिणं चक्रे सा पितुर्वरवर्णिनी । पुत्रेभ्यो लज्जितस्यास्य तद्रूपालोकनेच्छया । आविर्भूतं ततो वक्त्रं दक्षिणं पाण्डुगण्डवत् । विस्मयस्फुरदोष्ठञ्च पाश्चात्यमुदगात्ततः । चतुर्थमभवत्पश्चाद्वामं कामशरातुरम् । ततोऽन्यदभवत्तस्य कामातुरतया तथा । उत्पतन्त्यास्तदाकाशमालोकनकुतूहलात् । सृष्ट्यर्थं यत् कृतं तेन तपः परमदारुणम् । तत्सर्वं नाशमगमत् स्वसुतोपगमेच्छया । तेनोर्द्ध्वं वक्त्रमभवत्पञ्चमं तस्य धीमतः । आविर्भवज्जटाभिश्च तद्वक्त्रञ्चावृणोत् प्रभुः । ततस्तानब्रवीद् ब्रह्मा पुत्रानात्मसमुद्भवान् । प्रजाः सृजध्वमभितः सदेवासुरमानुषीः । एवमुक्तास्ततः सर्वे ससृजुर्विविधाः प्रजाः । गतेषु तेषु सृष्ट्यर्थं प्रणामावनतामिमाम् । उपयेमे स विश्वात्मा शतरूपामनिन्दिताम् । सम्बभूव तया सार्द्धमतिकामातुरो विभुः । सलज्जां चकमे देवः कमलोदरमन्दिरे । यावदब्दशतं दिव्यं यथान्यः प्राकृतो जनः । ततः कालेन महता तस्याः पुत्रोऽभवन्मनुः । स्वायम्भुव इति ख्यातः स विराडिति नः श्रुतम् । स तु तद्रूपसामान्यादधिपूरुष उच्यते । वैराजा यत्र ते जाता बहवः शंसितव्रताः । स्वायम्भुवा महाभागाः सप्त सप्त तथा परे । स्वारोचिषाद्याः सर्वे ते ब्रह्मतुल्यस्वरूपिणः । औत्तमिप्रमुखा

सहदृशेनान्त्यं सम्प्रमोऽधुना" । स्मर्मशब्दे ५२५० पृ० तन्मानववधिस्तं दृश्यम् । [गर्भदात्मौपुषे राजनि० ।

**सृष्टिप्रदा** स्त्री सृष्टिं तद्धेतुं गर्भं प्रददाति प्र+दा-क ।

**सृ(षृ)** हिंसायां क्र्या० पा० प० सक० सेट् । सृणाति असारीत् सीर्णः सीर्णिः । षोपदेश एव न्यायः ।

**सेक** गतौ भ्वा० आ० सक० सेट् । सेकते असेकिष्ट पर्युदासाच षोपदेशः । ऋदित् चङि न ह्रस्वः ।

**सेक** पु० सिच-घञ् । सेचने जलादिना आर्द्रीकरणे हेमच० ।

**सेकपात्र** न० सिच्यतेऽनेन सिच-करणे घञ् कर्म० । (सेउनी) सेचनपात्रभेदे अमरः ।

**सेकिम** न० सेकेन निर्वृत्तम् सेक-वा डिम । मूलके हेमच० ।

**सेक्तृ** पु० सिञ्चति रेतः सिच-तृच् । १पत्यौ हेमच० । २सेचके त्रि० स्त्रियां ङीप् ।

**सेक्त्र** न० सिच-करणे ष्ट्रन् । सेकपात्रे शि० कौ० ।

**सेचक** पु० सिञ्चति तोयेन पृथिवीम् सिच-ण्वुल् । १मेघे २सेककर्त्तरि त्रि० मेदि० ।

**सेचन** न० सिच-भावे ल्युट् । १जलादिना आर्द्रीकरणे २क्षरणे । करणे ल्युट् । ३सेचन्यां क्षुद्रसेकपात्र्यां स्त्री ङीप् मेदि० ।

**सैटु** पु० सिट-उन् । (तरमुज) इति ख्याते त्रिका० ।

**सेतु** पु० सि-तुन् । १क्षेत्रादेर्जलधारणार्थे (आल) (जाङ्गाल) पदार्थे अमरः । २वरणवृक्षे मेदि० । मन्त्रजपाङ्गे ३प्रणवात्मके मन्त्रे च स्वार्थे क । सेतुक वरणवृक्षे शब्दर० । "सेतुप्रदानादिन्द्रस्य लोकमाप्नोति मानवः" कठादि० त० । सेतुभेदश्च । सीमाविवादशब्दे ५३०० पृ० उक्तः । "सेतुश्च द्विविधः प्रोक्तः खेयो बन्ध्यस्तथाऽपरः । तोयप्रवर्त्तनात् खेयो बन्ध्यस्तु तन्निवर्त्तनात्" नारदः । मन्त्रजपाङ्गसेतुश्च कालिकापु० ५५अ० उक्तो यथा "मन्त्राणां प्रथमः सेतुस्तत्सेतुः प्रणवः स्मृतः । स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्य्यति । नमस्कारो महामन्त्रो देव इत्युच्यते सुरैः । द्विजातीनामयं मन्त्रः शूद्राणां सर्वकर्मसु । अकारश्चाप्युकारश्च मकारश्च प्रजापतिः । वेदत्रयात् समुद्धृत्य प्रणवं निर्ममे पुरा । स एवास्तो द्विजातीनां राज्ञां स्यादनुदात्तकः । चरितलोकजातानां मनसापि तथा चरेत् । चतुर्दशस्वरो योऽसौ सेतुरौकारसंज्ञकः । स चानुस्वारचन्द्राभ्यां शूद्राणां सेतुरुच्यते । निःसेतुकं यथा तोयं क्षणान्निम्नं प्रसर्पति । मन्त्रस्तथैव निःसेतुः क्षणात् क्षरति यज्वनाम् । तस्मात् सर्वेषु मन्त्रेषु चतुर्वर्णा द्विजादयः । पार्श्वयोः सेतुमाधाय जपकर्म समारभेत् । शूद्राणामादिसेतुर्वा द्विसेतुर्वा यथेच्छतः । द्विसेतवः समाख्याता सर्वदैव द्विजातयः" ।

**सेतुबन्ध** पु० ६त० । लङ्कागमनार्थं श्रीरामेण नलकपिद्वारा कारिते समुद्रोपरि १आलीबन्धे २क्षेत्रादेरालीबन्धे च । "ततोऽब्रवीद्रघुश्रेष्ठं सागरो विनयान्वितः । नलः सेतुं करोत्वस्मिन् जले मे विश्वकर्मजः । सुतो धीमान् समर्थोऽस्मिन् कार्य्ये लब्धवरो हरिः । कीर्त्तिं गायन्तु ते लोकाः सर्वलोकमलापहाम् । इत्युक्त्वा राघवं नत्वा ययौ सिन्धुरदृश्यताम् । ततो रामस्तु सुग्रीवलक्ष्मणाभ्यां समन्वितः । नलमाज्ञापयच्छीघ्रं वानरैः सेतुबन्धनात् । ततोऽतिहृष्टः प्लवगेन्द्रयूथपैर्महानगेन्द्रप्रतिमैर्युतो नलः । बबन्ध सेतुं शतयोजनायतं सुविस्तरं पर्वतपादपैर्दृढम्" अध्यात्मरा० ३ अ० । "सेतुमारभमाणस्तु तत्र रामेश्वरं शिवम् । सङ्कल्पनियतो गत्वा पुरीं वाराणसीं नरः । आनीय गङ्गासलिलं रामेशमभिषिच्य च । क्षिप्त्वा समुद्रे तद्वारि ब्रह्म प्राप्नोत्यसंशयः । कृतानि प्रथमेनाह्ना योजनानां चतुर्दश । द्वितीयेन तथा चाह्ना योजनानान्तु विंशतिः । तृतीयेन तथा चाह्ना योजनान्येकविंशतिः । चतुर्थेन तथा चाह्ना द्वाविंशतिः तथा कृतम् । पञ्चमेन त्रयोविंशत् योजनानां समन्ततः । बबन्ध सागरे सेतुं नलो वानरसत्तमः । तेनैव जग्मुः कपयो योजनानां शतं द्रुतम् । असंख्याताः सुवेलाद्रिं रुरुधुः प्लवगोत्तमाः" ४अ० ।

**सेतुभेदिन्** पु० सेतुं भिनत्ति भिद-णिनि । दन्तीवृक्षे शब्दर० ।

**सेतुवृक्ष** पु० सेतुनामको वृक्षः । वरणवृक्षे शब्दर० । २सेतूपरिस्थे वृक्षे च ।

**सेत्र** न० सि-बन्धने ष्ट्रन् । (बेड़ि) निगडे शि० कौ० ।

**सेना** स्त्री सि-न, सह इनेन प्रभुणा वा । १सैन्ये अमरः । २जिनानां ३मातृभेदे हेमच० । [२सेनाया उपकरणे च ।

**सेनाङ्ग** न० ६त० । १हस्त्यश्वरथपदातिसंघाते अमरः ।

**सेनाचर** पु० सेनायां चरति चर-ट । सेनानुगामिनि "सेनाचरीभवदिभाननेति" नैष० । [विद्ये २सेनापतौ च अमरः

**सेनानी** पु० सेनां देवसेनां वा नयति नी-क्विप् । १कार्त्ति-

**सेनापति** पु० ६त० । १कार्त्तिकेये २सैन्याध्यक्षे च मेदि० । "कुलीनः शीलसम्पन्नो धनुर्वेदविशारदः । हस्तिशिक्षाश्वशिक्षासु कुशलः श्लक्ष्णभाषिता । निमित्ते शकुने ज्ञाता वेत्ता चैव चिकित्सिते । कृतज्ञः कर्मणां शूरस्तथा

क्लेशसह ऋजुः । व्यूहतत्त्वविधानज्ञः फल्गुसार-
विशेषवित् । राज्ञा सेनापतिः कार्यो ब्राह्मणः क्षत्रियो-
ऽथ वा" मत्स्यपु० १८६ अ० ।

**सेनामुख** न० ६त० । १सैन्यापे संख्याविशेषयुते हस्त्यश्वादौ
हस्तिनः त्रयः रथाः त्रयः अश्वा नव पदातयः पञ्चदश
एततत्समुदाये अमरः । [मिके सैन्ये अमरः ।

**सेनारक्ष** पु० सेनां रक्षति रक्ष-अण् । सेनारक्षाकारके या-

**सेफ** पु० सि-फ । शेफे पुंसोऽसाधारणचिह्ने जटा० ।

**सेमन्ती** स्त्री सिम-झि गौ० ङीष् । (सेवती) पुष्पभेदे ।

**सेर** पु० "पादोनगद्यानकतुल्यटङ्कैर्द्विसप्त७२तुल्यैः कथितो-
ऽत्र सेरः । मणाभिधानं खयुगैः४०स सेरैर्धान्या-
दितौल्येषु तुरुष्कसंज्ञः १ । १इत्युक्तेन्दु १८२ । सप्तै-
र्घटकैश्च सेरस्तैः पञ्चभिः स्याद्धटिका च ताभिः । मणो-
ऽष्टभिस्त्वाब्जमगीरमाङ्कतातल संज्ञा निजराजभाज्याम्"
लीला० उक्ते मानभेदे ।

**सेरराह** पुंस्त्री० । श्वेताश्वे हेमच० स्त्रियां ङीष् ।

**सेल** त्रि० सि-बन्धने र । बन्धनकर्त्तरि उणा० ।

**सेलु** पु० सि-लु । श्लेष्मातकवृक्षे शिरूपको० ।

**सेव** न० सेव-कर्मणि घञर्थे क । सेविफले (सेओ) राजनि०

**सेवक** पु० सीव्यति सिव-ण्वुल् । १सीवनकर्त्तरि (दरजी)
सेव-ण्वुल् । २भृत्ये ३दासे ४अनुचरे च त्रि० मेदि० ।

**सेवकालु** पु० सेवं सेविफलमिव कायति कै-क कर्म० ।
निशाभङ्गाख्ये (दुग्धपेया) शब्दच० । [निधौ भरतः ।

**सेवधि** पु० सेवं सेवनं दधाति धा-कि । शङ्खप्रभृतौ

**सेवन** न० सिव-सेव-वा ल्युट् । १सूच्यादिना वस्त्रादेर्यौजने
अमरः । २आश्रयणे ३उपभोगे ४बन्धने ५पूजने ६भजने
च मेदि० । सीव्यतेऽनया ल्युट् । ७सूच्यां स्त्री ङीप्
हेमच० ।

**सेवा** स्त्री सेव-अ । १भजने २आराधने ३उपभोगे ४आश्र-
यणे च । सेवापराधास्तु अपराधशब्दे २२३ पृ० दर्शिताः
वाराहेऽन्यथोक्ता यथा "कर्मणा मनसा वाचा ये पापक-
र्मयो जनाः । भक्षणं दन्तकाष्ठस्य राजान्नस्य तु भोजनम् ।
मैथुनं मलसंसर्गः पुरीषोत्सर्ग एव च । मृतकस्पृशनं
स्पर्शनं मोहनं तथा । अभाष्यभाषणं कोपं
पिण्याकस्य च भक्षणम् । रक्तपारक्यमलिननीलजा-
म्बरधारणम् । पुरोशाकीकनिबन्धः पतितानाञ्च भक्ष-
णम् । अभक्ष्यभक्षणञ्चैव तण्डुलीयविभीतकम् । श्या-
दानं च वराहस्य जालपादवराकयोः । भक्षणं देव-
तागारे दीपानल्पोपसर्पणम् । तथैव देवपूजायां नि-
षिद्धकुसुमार्चनम् । अनुताप्यं च निर्माल्य पूजा जो-
षान्धकारयोः । पानं सुराया देवस्य अन्धकारे प्रबो-
धनम् । पातकर्मार्चने विष्णोरनमस्कारणं तथा । अप-
राधास्तवैते यत् समाख्याता मया धरे । एभिर्युक्तस्तु
पुरुषो विष्णुं नैव प्रपद्यति । दूरस्थो न नमस्कारं
कुर्यात् पूजा तु राक्षसी" ।

**सेवि** न० सेव-कर्मणि इन् । फलभेदे (सेओ) राजनि० ।

**सेविका** स्त्री पक्वान्नभेदे कृतान्नशब्दे २१२१ पृ० दृश्यम् ।

**सेवित** त्रि० सेव-क्त । १आराधिते शब्दर० । २आश्रिते ३उप-
युक्ते च ४सेविफले न० राजनि० ।

**सेव्य** न० सेव-ण्यत् । १वीरणमूले अमरः । २अश्वत्थे
पु० राजनि० । ३हिज्जलवृक्षे पु० शब्दर० । ४सेवार्हे त्रि० ।
५वन्दाके स्त्री हेमच० । [राजनि० ।

**सैंहली** स्त्री सिंहले देशे भवा अण् ङीप् । सिंहपिप्पल्याम्

**सैंहिक** पु० सिंहिकायां भवः ठक् । १राहौ शब्दर० । तस्याः
अपत्यम् ठक् । सैंहिकेयोऽप्यत्र अमरः ।

**सैकत** न० सिकताः सन्त्यत्र अण् । वालुकाप्रचुरे नद्यादि-
तटे अमरः । २सिकताप्रचुरदेशे त्रि० राजनि० ।

**सैकतिक** पु० सह एकतया सैकतं तदस्यास्ति ठन् । १संन्यासे
२क्षपणके ३सन्देहजीविनि त्रि० मेदि० । ४मालयात्रायां
५मङ्गलसूत्रके न० मेदि० । [२सैकतप्रिये त्रि० ।

**सैकतेष्ट** न० सैकतं स्थानमिष्टं यस्य । १आर्द्रके राजनि० ।

**सैतवाहिनी** स्त्री सितायाः शर्करायाः अयम् अण् सैतो मधु
ररसं वहति वह-णिनि । बाहुदायां नद्याम् अमरः ।

**सैद्धान्तिक** पु० सिद्धान्तं वेत्ति सिद्धान्त+ठक् । सिद्धान्ताभिज्ञे
हेमच० । [२तत्कर्मणि च "सैनापत्यमुपेत्य वः" कुमारः ।

**सैनापत्य** न० सेनापतेर्भावः कर्म वा ष्यञ् । १सेनाप्रतित्वे,

**सैनिक** पु० सेनायां समवैति ठक् । १मिलिते हस्त्यश्वादौ
अमरः । प्राणिवधनियुक्ते भाग०५।६६अ० ति०त०रघु० ।
वस्तुतस्तु सौविका इव षधितिनेत्येव तत्र पाठः साधुः
२सेनासम्बन्धिनि त्रि० ।

**सैन्धव** न० सिन्धुनदीसमीपे देशे भवम् अण् । १लवणभेदे
अमरः "सैन्धवं लवणं स्वादु दीपनं पाचनं लघु ।
स्निग्धं रुच्यं हिमं वृष्यं सूक्ष्मं नेत्र्यं त्रिदोषहृत्"
भावप्र० । सिन्धोरदूरभवः अण् । २घोटकभेदे पुंस्त्री०
अमरः तस्य समुद्रसमीपस्थसिन्धुदेशपारस्यदेशोद्भवत्वात्
तथात्वम् । स्त्रियां ङीष् ।

**सैन्धवखिल** न० सैन्धवमेव खिल्यम् । सैन्धवशिलाशकलसमे चिदानन्दस्वरूपे परमेश्वरे "स यथा सैन्धवखिल्यमनन्तरमवाह्यं रसघनम्" शत०ब्रा०१४।७।२।१२ ।

**सैन्धी** स्त्री तालादिनिर्यासे राजनि० ।

**सैन्य** पु० सेनायां समवैति ञ्य । १सैनिके रक्षिवर्गादौ अमरः । सेनानां समूहः ष्यञ् । २सेनासमुदाये न० ।

**सैरन्ध्री** स्त्री सीरं हलं धरति धृ-मूल० क मुम् च सीरन्ध्रः तस्यापत्यं स्त्री शिल्पकर्म यस्य तदर्थासि यच गौरा० ङीष् । परगृहस्थे स्ववशे शिल्पकारिणि स्त्रीभेदे हेमच० पुमो० सैरिन्ध्रीत्यप्यत्र अमरः ।

**सैरिक** पु० सीरेण लाङ्गलेन खनति भूमिं सीरं वहति वा ठक् । १कर्षके हालिके अमरः । २लाङ्गलवोढरि वृषे (हालेर गरु) अमरः ।

**सैरिभ** पुंस्त्री० सीरे हले तद्वहने इभ इव गुरत्वात् शाक० ततः स्वार्थे अण् । १महिषे अमरः स्त्रियां ङीप् । "सेवे सैरिभमर्दिनीमिह महालक्ष्मीम्" महालक्ष्मीध्यानम् । २स्वर्गे त्रिका० । [भिण्ट्याम् शब्दर० स्वार्थे क अत्रैव ।

**सैरीय** पु० सीरस्येदम् अण् सैरं हलाकारमर्हति छ ।

**सैरेय** पु० सैरं सीराकारमर्हति ढक् ।१भिण्ट्याम् शब्दर० ढकञ् । सैरेयकोऽप्यत्र राजनि० ।

**सैवाल** न० सेवायै मीनादीनामुपभोगाय अलति पर्याप्नोति अच् सेवाल ततः स्वार्थे अण् । शैवाले स्वार्थे क । तत्रैव "या मांशुकाक्ष रवधुर्विरसा पुराभीत् सैवालका कुरवकामधुना बिभर्ति" उद्भटपद्ये सैवाल इत्यादि

**सोढ** त्रि० सह-क्त इडभावः । १क्षान्ते तितिक्षिते अमरः कर्त्तरि क्त । २शीतादिसहनशीले त्रि० । [शोधे सोद्द० ।

**सोढृ** त्रि० सह-तृच् वा इडभावः । १सहनकर्त्तरि क्षमा-

**सोत्कण्ठ** त्रि० सह उत्कण्ठया वहस० सः औत्सुक्यान्विते अभीष्टलाभेच्छया विलम्बासहिष्णुतायुक्ते जटा० ।

**सोत्प्रास** न० उद्+प्र-अस-घञ् सह उत्प्रासेन वहस० सः सोल्लुण्ठने अन्यार्थकस्य वाक्यस्य अन्यार्थकल्पनया तदुत्तरार्थके १वाक्ये २प्रियवाक्ये च शब्दर० । ३सशब्दहासेन सहिते त्रि० ।

**सोदय** त्रि० सह उदयेन प्रादुर्भावेन वृद्ध्या वा वहस० सः १प्रादुर्भूते २वृद्धि(उद)युक्ते ३लाभयुक्ते च "आयं दद्यात् सोदयम्" श्रुतिः । [भ्रातरि ३ताद्दशभगिन्यां स्त्री शब्दर०

**सोदर** पु० समानमुदरं यस्य समानस्य सः । १एकोदरभवे

**सोदर्य** पु० समाने उदरे शयिता यत् सादेशः । १एको-

दरजाते भ्रातरि । २ताद्दशभगिन्यां स्त्री अमरः ।

**सोनह** न० हु-वि० सते नह्यते नह यजर्थे क । लशुने शब्दर०

**सोन्माद** पु० सह उन्मादेन सादेशः । उन्मत्ते उन्मादिष्णौ ।

**सोपप्लव** पु० सह उपप्लवेन सादेशः । समाक्रान्तभूच्छायेन राहुणा योगरूपोपप्लवसहिते १चन्द्रे तथाभूतचन्द्रच्छायायोगयुक्ते २सूर्ये च अमरः । ३उपद्रवयुते त्रि० । चन्द्रार्कयोर्ग्रासकारणस्वरूपराग्रसम्बद्धे प्रायेणोक्तं देवीपुराणोक्तमधिकमत्रोच्यते ।

"ब्रह्मोवाच "यदयं वदते लोको याम्यिशताद्गृह्यते ! । तदहं संप्रवक्ष्यामि चन्द्रसूर्योपरागिकम् । यदि सत्यमयं घसते जारागिरिदिवाकरः । तत्कथं गोदरस्थेन राहुणा भक्षणात् क्षतः । अथ वा राहुणाक्रम्य निजमङ्गं प्रवेशितः । तत्कथं दृश्यते सोऽस्त्रैः अतथा न विस्ताहृतः । विमुक्तश्च पुनर्दृश्यते शयेवाभवडलमण्डलः । न चाग्निप्लुतं तेजो न स्थानादपसारितः । यदि वा सोम निर्गीतः कथं दोषतरोऽभवत् । तस्मात् तेजसां राशी राहोर्बन्धं गमिष्यति । अथार्थं सर्वदेवानां सोमः सूक्ष्मः क्षयन्त्वा । तत्क्षयमक्षतस्तु पि सच्यु तं सूर्यतेजसा । पिबन्त्यमृतमयं देवाः पितरश्च सुधाऽमृतम् । तयश्च त्रिशतश्चैव नवश्चि शतश्चैव च । नवच त्रिसहस्राश्च देवाः सोमं पिबन्ति ये । राहोरमृतं भागः पुरा सृष्टं स्वयम्भुवा । तथा० सहाङ्कुरागत्य पातुमिच्छति पर्वसु । उद्धृत्य पार्थिवीं छायामन्धाकारां तमोमयः । पातुमिच्छन् ततश्चन्द्रमाच्छादयति छायया । एकं च चन्द्रमध्येति तथा पर्वणि भास्करम् । सूर्यमण्डलसंस्थस्य चन्द्रमेव निर्वापति । तस्मात् पिबति तं राहुस्तन्मता विनाशयन् । अविहिंसन् यथा पद्मं पिबति भ्रमरो मधु । चन्द्रस्यामृतं तद्वद्भेदाद्राहुरश्नुते । चन्द्रकान्तो मणियद्वत् छिन्नं धरते जलात् । धरन्नपि न हीयेत तेजसा नैव मुच्यते । यथा सूर्यमणिः सूर्योद्गतपाद्यं पावकं शुभम् । न भवत्यसूर्यहीनोऽपि तेजसा नैव मुच्यते । एवं चन्द्रश्च सूर्यश्च छादितावपि राहुणा । स्वतेजसा न मुच्येते नाङ्कुहीनौ बभूवतुः । पर्वस्थ च चन्द्रस्य मासिकाकर्म्मकालतः । सोमो दैवतसंयोगात् छाया योगाच्च पार्थिवात् । राहोश्च वरलब्ध्या वै ग्रहणं स्मृतं ग्रहो । खटोक्ताले यथाग्नौ वपुं दृष्टा च गौर्यथा । लाङ्गूलादेव चरेत् चीरं तथेन्दुः चरतेऽमृतम् । पिबेत सूर्यो देवानां सोमो मातेव लक्ष्यते । यथा मातुः स्तनं

पीत्वा जीवन्ति सर्वजन्तवः। पीत्वाऽमृतं तथा सोमात् तृप्यन्ते सर्वदेवताः। सम्भृतं सर्वयागेषु तथायं क्षरते शशी। तं क्षरन्तं यथाभागमुपजीवन्ति देवताः। तस्मिन् काले समभ्येति राहुरप्यवकर्षति। सर्वमर्द्धं त्रिभागञ्च पादं पादार्द्धमेव च। आक्रम्य पार्थिवीं छायां यावन्त चन्द्रमण्डलम्। अतः स भागो राहोस्तु देवभागास्तु शेषकाः। तृप्तिं विधाय देवानां राहोः पर्वगतस्य च। चन्द्रो न क्षयमायाति तेजसा नैव मुच्यते। तिथिभागाश्च यावन्तः पुनस्त्वर्कं प्रमाणतः। पर्वच्छायास्थितः कालस्तावानेव प्रकीर्त्तितः। अतो राहुभुजः सोमः सोमवृद्धिर्दिवाकरात्। पर्वकाले स्थितिस्त्वेवं विपरीता पुनः पुनः। अतश्छादयते राहुरभ्रवच्छशिभास्करौ। राहुरम्बरसंस्थानः सोमसाच्छाद्य तिष्ठति। उद्धृत्य पार्थिवीं छायां तमसेव द्रवोत्थितः। चन्द्रस्य यदवष्टब्धं राहुणा भास्करस्य च। तस्यावच्छिन्नं तस्य केवलं श्यामलीकृतम्। कर्दमेन यथा वस्त्रं शुक्लमप्युपहन्यते। एकदेशोऽथ सर्वं वा राहुणा चन्द्रमास्तथा। प्रक्षालितं तदेवेह पुनः शुक्लतरं भवेत्। राहुत्यक्तं भवेत्तद्वत् निर्मलं चन्द्रमण्डलम्। राहुणा च्छादितौ वापि दृष्ट्वा चन्द्रदिवाकरौ। विप्राः शान्तिपरा भूत्वा पुनराप्याययन्ति तम्। एवं न स्पृश्यते सूर्यश्चन्द्रमास्तत्र स्पृश्यते। अबुधास्तं न पश्यन्ति मानुषा मांसचक्षुषः। जगत्सम्मोहनश्चैतत् ग्रहणं चन्द्रसूर्ययोः"।

**सोपाधि(क)** सह उपाधिना वा कप् सादेशः। उपाधियुक्ते प्रातवाभाषया कृतदानादौ।

**सोपान** न० उप–अन–भावे घञ् सह विद्यमानः उपानः उपरि गतिरनेन। आरोहणसाधने काष्ठादिनिर्मिते (पैठा) प्रभृतौ पदार्थे अमरः।

**सोभाञ्जन** पु० शोभाञ्जन+पृषो०। (शजना) वृक्षे भरतः।

**सोम** पु० सु–मन्। १चन्द्रे २कर्पूरे अमरः। ३कुबेरे ४यमे ५वायौ ६वसुभेदे ७जले ८सोमलतौषधौ ९वानरे मेदि० १०सोमरसे हेमच० ११अमृते १२दीधितौ उणा०। सह उ(म)या। १३शिवे १४वानरेशे सुग्रीवे च।

सोमश्च ग्रहभेदः तत्कक्षामानादिकं खगोलशब्दे ४२२५ पृ० दृश्यम्। तत्प्रकृत्यादिकं यथा

"चन्द्रः सिताङ्गः समगात्रयष्टिर्वाग्मी परिध्यक्कविवेकयुक्तः। काचित् कृशः शीतलवाक्ययुक्तः सत्त्वाश्रयो वातकफानिलात्मा" सर्वार्थचि०। स च वायव्या दिशः वैश्यजातिः स्त्रीग्रहः चतुरस्रकमृगशिरो नक्षत्राधीशः। ग्रहयज्ञशब्दे तज्जन्मादिकं दृश्यम्। तस्य जन्मकाले मेषादिराशिषु स्थितिभेदे फलभेदः बृहज्जातकोक्तः ३०८७ पृ० जातकशब्दे उक्तः। लग्नादिस्थस्य तस्य फलं जातकपद्धतावुक्तं यथा

"चन्द्रे स्वभाजवृषगे तनुगे गुणाढ्यो दाक्षिण्यरूपधनवाक्सकले विशेषात्। अन्येषु भेषु तनुगे विकलश्च शूरः प्रोन्मत्तनीचबधिरः क्षयभाग्यवश्यः। कुटुम्ब२स्थिते कैरवाणामधीशे भवेत् पुत्रमित्रार्थसौख्यैः समेतः। नरः पूर्णदेहे तु हीने विलोमं स्खलद्वाक् च बोध्यं फलं तारतम्यात्। द्विजाधिराजे सहजे३ऽतिलोभः क[illegible]वान् संपद्वलश्च नीचः। हर्षान्वितो भ्रातृजनाश्रयश्च प्रकाङ्क्षितः स्यात् मनुजोऽतिहिंस्रः। पाताल४संस्थे सति शीतलांशौ जलप्रयाणाभिरतिर्नरः स्यात्। दाता सुहृद्वाहनसेवकाढ्यः सुखी सुखोत्कर्षयुतः सुभूषः। सुते५ समुद्रस्य सुते प्रसूतौ धीमित्रपुत्रैर्बहुभिः समेतः। शूरो नरः स्याद्बहुधान्यमित्रसमाहवः क्षीणतरः सुखाढ्यः। शत्रौ६शत्रौ पद्मिनीनां स्थिते ना शत्रुव्रातैः संयुतो दारुणश्च। मन्दाग्निश्चामलकाभ्याश्च युक्तोऽनल्पालस्यः स्याच्च नीरोदराढ्यः। शशिनि शशिमुखीनिकेतन७स्थे भवति सुखी मदनातुरः सुदेहः। अतिमतिरनसूयकोऽप्यधृष्यो मलिनतनौ बहुरोगदैन्यतप्तः। मृत्यौ८मृगाङ्के मतिमाञ्चरः स्याद्रोगजातादृयोऽपि च बन्धनाद्यैः। सुक्षीणदेहः सति हीनदेहे तस्मिन् भवेदल्पकजीवितश्च। निशाधिनाथे नवमाश्रय९स्थे धीपुत्रमित्रद्रविणोपपन्नः। सौभाग्यसौख्यैः सुकृतैर्युतः स्यात् कान्ताजनेष्टो मनुजो दयावान्। दशम१०शालिनि शीतलधामनि द्रविणधीसुकृतैः सहितः शुचिः। भवति कर्मपरोऽपि च सिद्धिभाङ्नरवरो न विषादकरो भवेत्। आयं११याते यामिनीनायके ना मित्रक्षेत्रद्रव्यपुत्रायुयुक्तः। ख्यातः शूरो दारुणस्साभिमानी शिष्टैर्मर्त्यैरन्वितो बुद्धिमान् स्यात्। शीतांशौ द्वादशे१२ऽद्ध्यो हीनाङ्गो नेत्ररोगवान्। पतितः परमः क्षुद्रः परिभूतो नरो भवेत्"।

सोमलता च ओषधिभेदः सोमवल्लीरूपा ओषधिशब्दे १५६४ पृ० सुश्रुतवाक्ये तल्लक्षणादि दृश्यम्। सोमेन यजेतेत्यादि श्रुत्युक्ते १५यागभेदे पु०। सोमयागेतिकर्त्तव्यतादि कात्या०श्रौ० २५अ०। १०कण्डिकादौ दृश्यम्। कात्यायनशब्दे १८७६पृ० तत्प्रतिनिधिद्रव्यादि दर्शितम्।

**सोमगर्भ** पु॰ सोमस्य तदात्मकामृतरूपमोक्षस्य गर्भः स्थानम्। विष्णौ त्रिका॰।

**सोमज** न॰ सोमात् तत्पूरितौषधिरसपानात् जायते जन-ड। १दुग्धे हेमच॰। २चन्द्रजाते त्रि॰। ३बुधे पु॰।

**सोमतीर्थ** न॰ सोमेन तपस्तप्त्वा कृतं तीर्थम् शाक॰। प्रभास-तीर्थे त्रिका॰। "यत्र तप्तं तपस्तेन सोमेन सुमहात्मना। पञ्च वर्षसहस्राणि तथैवोर्द्ध्वमुखः स्थितः। एवञ्चान्तः पुनः पञ्च पञ्च मौनव्रतस्तथा। तथैवैकेन पादेन दश पञ्च च तिष्ठता। एवरूपं तपः कृत्वा कान्तिमानभवच्च सः। यथापराधान् मुक्तश्च ब्राह्मणानां पतिस्तथा" वराहपु॰।

**सोमधारा** स्त्री सोमस्य धारेव। आकाशे त्रिका॰।

**सोमप** पु॰ सोमं तद्रसं पिबति पा-क। १यज्ञे सोमरसपान-कर्त्तरि २पितृगणभेदे ब॰व॰। पा-क्विप् सोमपाप्यत्र।

**सोमपत्र** पु॰ सोमस्य ओषधिविशेषस्येव पत्रमस्य। (उलुखड़) तृणभेदे शब्दच॰।

**सोमपीति(थि)न्** पु॰ पीतमनेन इनि सोमं पीतौ पृषो॰ वा तस्य थः। यज्ञे सोमरसपायिनि अमरः। पा-क्विप् सोमपोऽप्यत्र।

**सोमबन्धु** पु॰ सोमस्य बन्धुः, सोमो बन्धुरस्य वा। १सूर्ये तद्दृष्टिकरत्वात् तस्य तथात्वम्। २चन्द्रजे बुधे पु॰ ज्यो॰ ३कुमुदे न॰। [वंश्ये क्षत्रिये च ४जिनराजभेदे हेम॰।

**सोमभू** पु॰ सोम एव भूरुत्पत्तिस्थानं यस्य। १बुधग्रहे २चन्द्र-

**सोमयाग** पु॰ सोमनामको यागः। त्रिवर्णसाध्ये सोमरस-पानाङ्गके यागभेदे।

"नारद उवाच "सोमयागविधानञ्च ब्रूहि मां मुनि-सत्तम!। कथं तं कारयामास गुरवे किं फलं परम्"। नारायण उवाच "ब्रह्महत्याप्रशमनं सोमयागफलं मुने!। यः सोमलतापानं यजमानः करोति च। वर्षमेकं फलं भुङ्क्ते वर्षमेकं जलं सदा। त्रैवार्षिकमिदं यागं सर्वपापप्रणाशनम्। यस्य त्रैवार्षिकं धान्यं नि-हितं भृतिहेतवे। अधिकं वापि विद्येत स सोमं पातु-मर्हति। महाराजश्च देवो वा यागं कर्त्तुमलं मुने!। न सर्वसाध्यो यज्ञोऽयं बहुलो बहुदक्षिणः" ब्रह्मवै॰ श्रीकृष्णज॰ ६॰ अ॰। सोमशब्दे दृश्यम्।

**सोमयाजिन्** पु॰ सोमेन यजते यज-णिनि। सोमयाग-कर्त्तरि। तस्य सौमिकत्वामधिकारः सौमिकशब्दे दृश्यम्।

**सोमयोनि** न॰ सोमः योनिरस्य। चन्दनभेदे शब्दच॰।

**सोमराजी** स्त्री सोमेन राजते राज-अच् गौरा॰ ङीष्। (सोमराज) १ओषधिभेदे। २वाकुच्यां भावप्र॰। "अवल्गुजा वाकुची स्यात् सोमराजी सुपर्णिका" इत्युपक्रमे "वाकुची मधुरा तिक्ता कटुपाका रसायनी। विष्टम्भहृद्धिमा रुच्या सरा श्लेष्मास्रपित्तनुत्। रूक्षा हृद्या श्वासकुष्ठमेहज्वरकृमिप्रणुत्। तत्फलं पित्तलं कुष्ठ-कफानिलहरं कटु। केश्यं त्वच्यं कृमिश्वासकासशोथाम-पाण्डुनुत्" भावप्र॰। स्वार्थे क। सोमराजिकाप्यत्र। राज-णिनि। सोमराजिन् अप्यत्र पु॰ अमरः। [राजनि॰

**सोमलता** स्त्री सू-मन् कर्म॰। स्वनामख्यातायां लतायाम्

**सोमलतिका** स्त्री सोमलतेव स्वार्थे कन् अत इत्वम्। १गुडूच्याम् राजनि॰। स्वार्थे क। २सोमलतायाम्।

**सोमवंश** पु॰ सोमस्य वंशः। १चन्द्रवंशे २चन्द्रावधिके सोम-परम्पराजाते क्षत्रिये भाग॰ ९स्कन्धे दृश्यम्।

**सोमवल्क** पु॰ सोमस्येव वल्कोऽस्य। १करञ्जे जटा॰। २रीठा-करञ्जे राजनि॰ ३श्वेतखदिरे ४कट्फले च मेदि॰।

**सोमवल्लिका** स्त्री सोमवल्लीव कायति कै-क। सोमराज्याम् अमरः। स्वार्थे क। २सोमलतायाम्। सोमवल्लर्यप्यत्र।

**सोमवल्ली** स्त्री सोमाख्यालताख्या वल्ली। १गुडूच्याम् अमरः। सोमरूपा वल्ली। २सोमलतायाम् भरतः। ३सोमराज्यां शब्दर॰। ४ब्राह्म्यां ५सुदर्शनायां ६पातालगरुड्यां राजनि॰। "सोमवल्ली महागुल्मा यज्ञश्रेष्ठा धनुर्लता। सोमाह्वा गुल्मवल्ली च यज्ञवल्ली द्विजप्रिया। सोमक्षीरा च सोमा च यज्ञाङ्गा रुद्रसंख्यया। सोमवल्ली कटुः शीता मधुरा पित्तदाहहृत्। तृष्णा विशेषात् शमनी पावनी यज्ञसाधनी" राजनि॰।

**सोमवामिन्** पु॰ सोमं तद्रसं वमति वम-णिनि। सोमरस-पानाधिक्यात् मुखेन सोमवमनकर्त्तरि तस्य सौमिकत्वा-धिकारः सौमिकशब्दे दृश्यम्।

**सोमवार** पु॰ सोमस्वामिको वारः। चन्द्रस्वामिके दिने।

**सोमविक्रयिन्** पु॰ सोमं विक्रीणाति वि+क्री-णिनि। सोम-लतायाः विक्रेतरि "पापो हि सोमविक्रयी" श्रुतिः।

**सोमवृक्ष** पु॰ सोम इव वृक्षः। १कट्फलवृक्षे रत्नमा॰ २श्वेत-खदिरे च राजनि॰। [राजनि॰।

**सोमसार** पु॰ सोम इव शुभ्रः सारोऽस्य। श्वेतखदिरे

**सोमसिद्धान्त** पु॰ सोमकृतः सिद्धान्तः। चन्द्रप्रोक्ते ज्यो-तिषसिद्धान्तग्रन्थभेदे जटा॰। [त्रिका॰।

**सोमसिन्धु** पु॰ सोमस्यामृतस्य सिन्धुरिव आधारः। विष्णौ

**सोमसुत्** पु० सोमं सुतवान् सु—भूते क्विप्। यज्ञार्थं कृतसोमलतानिष्पीडने त्रि० कौ०।

**सोमसुता** स्त्री ६त०। नर्मदानद्याम् राजनि०। २बुधे पु० सामोद्भवादयोऽप्यत्र यथायथम् पुंस्त्री०। [साभिषवे

**सोमसुत्वन्** पु० सोमं सुतवान् सु—भूते क्वनिप्। कृतसोमर-

**सोमसूत्र** न० सोमस्य जलस्य सूत्रमिव प्रणाली। १जलनिर्गम प्रणाल्याम् शिवलिङ्गस्यगौरीपट्टस्य २जलनिर्गमस्थाने च "सोमसूत्रं न लङ्घयेत्" तन्त्रम्। [रक्तकैरवे रत्नमा०।

**सोमाख्य** न० सोमं लताभेदमाख्यातिवर्णेन आ+ख्या—क।

**सोमातिपूत** पु० सोमोऽतिपूतो वान्तो मुखभिन्नच्छिद्रेण येन अति+पू-कर्मणि क्त। कृते सोमरसपाने आधिक्यात् मुखभिन्ननासिकादिच्छिद्रैः सोमरसवमनकर्त्तरि तस्य सौत्रामण्यामधिकारः सौत्रामणीशब्दे दृश्यः।

**सोल्लुण्ठ** त्रि० सह उल्लुण्ठेन सादेशः। मूर्खो पार्श्वपरिवर्त्तादियुक्ते १उन्मादी कृत्वा० २स्तुते निन्दापरतया निन्दाया वा स्तुतिपरतया युक्ते ३वाक्ये च।

**सोल्लुण्ठन** न सह उल्लुण्ठनेन सादेशः। अन्यथाख्यितस्य अन्यरूपेण परिवर्त्तनसहिते वाक्ये (स्तुतिपरस्य निन्दापरता निन्दापरस्य च स्तुतिपरता इत्येवं कल्पके वाक्ये)।

**सोष्यन्तीहोम** पु० सोष्यन्तीं शूलापन्नामासन्नप्रसवां प्राप्य कार्य्यः होमः। सोष्यन्त्या आसन्नप्रसवाया हिताय कर्त्तव्ये होमभेदे तत्प्रकारः सं० त० दृश्यः।

**सौकर्य्य** न० सुकरस्य भावः कर्म वा ष्यञ्। १अनायाससाध्यत्वे जटा०। २सुकरस्य कर्मणि च।

**सौखसुप्तिक** त्रि० सुखसुप्तिं सुखेन शयनं पृच्छति ठञ्। प्रातःकाले सुखशयनप्रच्छके वैतालिकादौ हेमच०।

**सौखिक** त्रि० सुखं प्रयोजनमस्य ठक्। सुखाभिलाषिणि (सौखिन)।

**सौख्य** न० सुखमेव चातु० ष्यञ्। सुखे हेमच०।

**सौगत** पु० सुगत एव अण्। १सुगते बुद्धभेदे हेमच० तस्येदम् अण्। २सुगतसम्बन्धिनि त्रि०। सुगतमतमधीते अण्। ३सुगतमताध्यायिनि त्रि०। [शब्दर०।

**सौगन्ध** न० सुष्ठु गन्धोऽस्य स्वार्थे अण्। कत्तृणे राजकर्पूरे

**सौगन्धिक** न० सुष्ठु गन्धः सुगन्धः सोऽस्त्यस्य ठन् स्वार्थे अण्। १कह्लारे अमरः। २सुगन्धके पु० अमरः। सुगन्धेन व्यवहरति ठक्। (गन्धी) ३सुगन्धव्यवहर्त्तरि त्रि० मेदि०। ४पद्मभेदे भा० व० सौगन्धिकाहरणपर्वं। [२सुगन्धौ।

**सौगन्ध्य** न० सुगन्धस्य भावः ष्यञ्। १सद्गन्धे। स्वार्थे ष्यञ्।

**सौचिक** पु० सूच्यां तत्कर्मसीवनमुपजीवति ठन्। (दरजी) सीवनकारके अमरः। ठन्। सौचि तत्रार्थे शब्दर०।

**सौजन्य** न० सुजनस्य भावः ष्यञ्। १सुजनतायां २सद्व्यवहारे च "सौजन्यजन्यं यशः" मल्लिनाथः।

**सौण्डी** स्त्री शुण्डा तदाकारोऽस्त्यस्याः अण् ङीप् पृषो० सस्य सः। गजपिप्पल्याम् शब्दच०।

**सौत्र** पु० पाणिन्यादिभिः सूत्रेण कर्मविशेषाय पठितः अण्। भ्वाद्यादिदशगणीयभिन्नेषु सूत्रमात्रे कार्य्यभेदार्थं पठितेषु १धातुषु। सूत्रं यज्ञसूत्रमर्हति अण्। २विप्रे हेमच०।

**सौत्रामणी** स्त्री सुत्रामा इन्द्रो देवताऽस्य अण् अपूर्वत्वात् न टिलोपः णत्वम्। इष्टिभेदे तत्र हि सुरापानं विप्राणां विहितम्। "सौत्रामण्यां सुरां पिबेत्" श्रुतिः। स च यागः क्षत्रियाणाम् ब्राह्मणस्यैव कर्त्तव्यः तत्राधिकारिविशेषः कात्या०श्रौ०१९।१ क० उक्तः। "ब्राह्मणयज्ञः सौत्रामण्य क्षत्रियस्य" सू०। "ब्राह्मणग्रहणं क्षत्रियवैश्ययोर्निवृत्त्यर्थम्" कर्कः। "अग्निचित्सोमयाजिसोमातिपूतसोमवामिनाम्" सू० "एभिश्च निमित्तैः सौत्रामणी भवति। तत्राग्निचित्सोमयाजीति षष्ठ्यम् अग्निमतः सोमस्याङ्गं यथा स्यादिति स हि फलवान् निष्कलोऽग्निरिति एवं च सत्यग्निमत्सोमयागान्ते सौत्रामणी भवति। ननु चानग्निमतोऽपि सोमस्याङ्गत्वेन सौत्रामणी श्रूयते "सोमेनेष्ट्वा सौत्रामण्या यजेतेति नैतदेवम् अग्निं चित्वा सौत्रामण्या यजेतेत्यस्य वाक्यस्याग्निप्रकरणे श्रुतत्वात् तदङ्गता युक्ता यस्य प्रकरणम् तस्याङ्गं विधीयमानं तदङ्गमेव भवतीति न्यायम्। सोमेनेष्ट्वा सौत्रामण्या यजेतेति सौत्रामणीप्रकरणे पाठः तेन प्रस्तुतविपरिहृत्त्या सोमस्यैव सौत्रामण्यङ्गता भवति न सौत्रामण्याः सोमाङ्गता यथा "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति" वाजपेयं प्रकृत्य विधानात् वाजपेयाङ्गता बृहस्पतिसवस्य, तस्मादनग्निमति सोमे सौत्रामणी "सोमेनेष्ट्वा सौत्रामण्या यजेतेति किमर्थस्तर्हि पाठः अग्निमत् सोमस्यानुवादोऽयमित्यदोषः। यद्वाऽग्निं चित्वेत्यस्यैव शेषोऽयम् अग्निमता सोमेनेष्ट्वेत्येतदुक्तं भवति। सोमातिपूतसोमवामिनोश्च सौत्रामणी भवति शाखान्तरश्रवणात् सोमातिपूतः सोमवामी च ब्राह्मण एव न हि क्षत्रियवैश्ययोरेतद्विशेषणमिति नतु च सोमकार्य्ये तयोरपि न्यग्रोधविधानम् तेन तदतिपवने तद्वमने च किमिति न भवति नैतदेवं यदि नाम कालापत्त्या धर्मप्राप्तिर्भवति न

चायं सोमधर्मः, किं तर्हि तद्विषयत्वे यागान्तरविधानमिति। अग्निचितस्तु वर्षत्रयस्यापि भवति अग्निसंयोगविधानात्। अग्निचितः तथा सोमयाजिनः तथा सोमातिपूतस्य तथा सोमवामिनः मुखव्यतिरिक्तेभ्यो नासिकाकर्णगुदादिच्छिद्रेभ्यः यस्य सोमः क्षरति स सोमातिपूत इत्युच्यते मुखेन यः सोमं वमति स सोमवामी” सं॰व्या॰। “राज्ञोऽपरुद्धस्य च सौत्रामणी भवति” सू॰। “दुष्टरीतुहंसो सायनो यत्र आसेति” तद्विधानात्। स्वराज्यात् प्राच्यावितस्य राज्ञः स्वराज्यप्राप्त्यर्थम्” कर्कः। “अलभ्यमानपशोः” सू॰। “सौत्रामणी भवति पशुयोग्यः सन् यो नाम पशून् विन्दते सोऽलभ्यमानपशुः” कर्कः।

तत्र सुरापच्यवनप्रकारः तत्रैवोक्तः

“दक्षिणेन हुत्वा नग्नहुचूर्णानि कृत्वा तांश्च व्रीहिश्यामाकौदनयोः पृथगाचामौ निषिच्य चूर्णैः संसृज्य निदधाति तन्मासरम्” सू॰। “दक्षिणेन द्वारेण प्रवेश्याभ्यगारम् नग्नहुचूर्णादि कृत्वा नग्नहुः किण्व उच्यते तांश्च शष्पादींश्च चूर्णयित्वा व्रीहिश्यामाकौदनयोः पृथगाचामौ विनिषिच्य चूर्णैः संसृज्य निदधाति तन्मासरमुच्यते व्रीहिश्यामाकाभ्यां च सुरा निष्पाद्यते सा च यागसाधनम्। तेन सा तद्धर्मैरभिसम्बध्यते अतस्तयोरवत्तं द्विरवग्रहणपूर्वकम् पृथगोदनौ निष्पाद्येते” कर्कः।

“नग्नहुचूर्णानि कृत्वा नग्नहुशब्दार्थमाह “सर्जत्वक् त्रिफला चैव शुण्ठी चैव पुनर्नवा। चतुर्जातकसंयुक्ता पिप्पली गजपिप्पली। वंशोऽवका हस्तिनखा चित्रकं चेन्द्रवारुणी। अश्वगन्धा वसुत्पाद्य सूत्राण्येतानि निर्दिशेत्। धान्यकं च यवानी च जीरकं कृष्णजीरकम्। द्वे हरिद्रे वचा चैव विरूढा व्रीहयो यवाः” इति। क्रयणानन्तरं तानि शष्पादीन्यादाय दक्षिणेन हुत्वाऽभ्यगारं प्रवेश्य पूर्वं नग्नहुचूर्णानि कृत्वा सर्जत्वगाद्यौषधानि तूष्णीं पिष्ट्वा तान् शष्पतोक्मलाजान् चूर्णीकृत्य दर्शपूर्णमासधर्मेण पात्रासादनादि आज्यावेक्षणान्तं द्विरवग्रहणपूर्वकं फलीकरणान्तं यमन्तकं कृत्वा बहुतरोदके पृथक् पृथक् चरू पक्त्वा शृतावस्थानानन्तरं व्रीहिश्यामाकौदनयोः पृथगाचामौ निषिच्य पृथग्भिन्नयोः पात्रयोस्तयोर्मध्यादतिरिक्तमुष्णोदकमवनीय तदुदकं नग्नहुप्रभृतिभिस्तुभिश्चूर्णैः संसृज्य निदधाति स्थापयति तन्मासरम्। तस्य चूर्णसंसृष्टस्याचामस्य मासरमिति संज्ञा” सं॰व्या॰ “ओदनौ चूर्णमासरैः संसृज्य स्वाद्वीं त्वा स्वादुना ते” इति त्रिरात्रं निदधाति” सू॰। “चूर्णमासरसंसृष्टावोदनौ “स्वाद्वीं त्वेति” “स्वादुना ते इति” मन्त्राभ्यां कुम्भ्यां प्रक्षिपति त्रिरात्रं च त्रिरात्रं निधेया सुरा” कर्कः।

“एवमाचामयोश्चूर्णसंसर्गानन्तरमोदनौ चतुर्भिश्चूर्णैः संसृज्य स्वाद्वीं त्वा स्वादुनेति यजु॰ १९।१ “स्वादुना ते यजु॰” २०।२७ द्वाभ्यां मन्त्राभ्यामेकस्मिन् महतिपात्रे चूर्णसंसृष्टावोदनौ मासराभ्यां च संसृज्य त्रिरात्रं निदधाति सुगुप्ते देशे स्थापयति शालाया नैरृतकोणे गर्तं कृत्वा तत्र स्थापयतीति ज्ञेयः सम्प्रदायः” तिस्रो रात्रीत्यादिस्तुतेः “एकस्याः पयसापाकृतेनाश्विनेन परिषिञ्चति परीतोऽषिञ्चतेति” सू॰। सुरां परिषिञ्चति “एकस्यै॰ परिषिञ्चतीति” वचनात्। आश्विनावुद्दिश्योपाकरणं कर्तव्यम् तच्चापूर्वत्वादप्रधानत्वाच्च पयसः अश्विभ्यामुपाकरोमीति गोसर्जनमात्रमेवेति सम्प्रदायः। अपरे तु धर्मवदुपाकरणमिच्छन्ति” कर्कः “शष्पचूर्णानि चावपति” सू॰ “चमत्कात् सुरायाम्” कर्कः। “सारस्वतेन द्वयोः प्रातः” सू॰। “प्रातःशब्देन च द्वितीयमहरभिधीयते तत्रापि च रात्रावेवाभिषेकः प्रथमां रात्रिं परिषिञ्चतीति प्रकृत्य “द्वयोर्दुग्धेन द्वितीयामित्याह द्वितीयाम् रात्रिमिति गम्यते” कर्कः। “प्रातःशब्देन श्वोऽभिधीयते” सं॰व्या॰

“तोक्मचूर्णानि च” सू॰। “आवपति” ऐन्द्रे चोत्तमे तिसृणाम्” सू॰ “गवां दुग्धे नैन्द्रे च परिषिञ्चति” कर्कः उत्तमे तृतीयेऽहनि संख्या। “लाजचूर्णानि च” सू॰ “आवपति अत्र चूर्णानां पयसश्च संस्कारकत्वम् साधनं तु व्रीहिश्यामाकावेव अतस्तयोरेव देवतोद्देशेन ग्रहणम्” कर्कः। यजु॰ १९अ॰ वेददीपे तु तद्रूपसुरापच्यवनप्रकारः स्पष्टः दर्शितो यथा “अथ सौत्रामणीमन्त्रास्त्रिभिरध्यायैः। अतिकामस्याग्निचितो मुखेतरच्छिद्रसोमवामिनो मुखेन सोमवामिनो राज्यच्युतस्य पशुकामस्य च सौत्रामणीयागः। अन्तःपात्यस्थाने गोचर्मणि एतानि स्थापयेत् सोमं सुराविक्रयिणः क्रीणाद्वा क्रीत्वा सीसेन शष्पं क्रीत्वा ऊर्णास्तोकान् सूत्रेण लाजान् केनचिद् द्रव्येण नग्नहुम् विरूढा व्रीहयः शष्पम् विरूढा यवास्तोक्माः भृष्टव्रीहयो लाजाः सर्जत्वक्त्रिफलाशुण्ठी पुनर्नवाचतुर्जातकपिप्पलीगजवंशावकाहस्तिनखचित्रकेन्द्रवारुण्यश्वगन्धा धान्यकयवानीजीरकद्वयहरिद्राद्वयविरूढयवव्रीहय एकीकृता नग्नहुः। शष्पतोक्मलाजनग्नहून् दक्षिणद्वारेणाग्निष्ठं नीत्वा संचूर्ण्य

दर्शपौर्णमासधर्मेण व्रीहिश्यामाकयोश्च वरुणदेवे पत्नी स्नातस्नानानन्तरं तयोश्चर्वोर्निःसावणम्य पृथक्पात्रयो-राद्दाय शष्पादिचतुर्णां चूर्णैः संसृज्य स्थापयेत् इयं चूर्णाधामक्रपं मासराख्यम्। "ओदनौ चूर्णमासरैः सं-सृज्य स्वाद्वीं त्वा स्वादुनात इति त्रिरात्रं निदधाति"का॰ एतमाचामयोश्चूर्णसंसर्गं मासरत्वनिष्पादनानन्तरमोदनौ व्रीहिश्यामाकयोश्च चतुर्भिश्चूर्णैः संसृज्य स्वाद्वीं त्वेति मन्त्रेण स्वादुना ते इति विंशाध्यायस्थविंशया ऋचा चैकस्मिन् पात्रे चूर्णसंसृष्टावोदनौ मासराभ्यां संसृज्य त्रिरात्रं गार्हपत्यतको गर्तं कृत्वा तत्र स्थापयेत्। अयमर्थः वत्स उद्धाय इयोः पृथगाचामयद्दयम् ततः शष्पतोक्मलाजचूर्णानां पृथग् त्रिधा कृतानां तृतीयांशं द्वेधा कृत्वाचामयोः क्षिपेत् ततो नग्नहुचूर्णं द्वेधा कृत्वैकमर्धं द्विधा विभज्याचामयोः क्षिपेत्। एवं चूर्णसंसृष्टाचामयोर्मासरसंज्ञा। ततः शष्पतोक्मलाज-चूर्णानां द्वितीयं तृतीयांशं द्विधा कृत्वैकैकं भागमोद-नयोः क्षिपेत् नग्नहुचूर्णद्वितीयार्द्धं द्वेधा कृत्वोदनयोः क्षिपेत् तत ओदनावेकपात्रे कृत्वा तत्राचामौ क्षिपेत् ततः "स्वाद्वीं त्वा" "स्वादुना ते" इति मन्त्राभ्यां चूर्णमासरैः स-ह्मौदनयोराङ्गालनेन संसर्गः कार्यः ततस्त्रिरात्रनिधा-नम् शष्पतोक्मलाजचूर्णं तृतीयांशानां प्रतिदिनं सुरायां निधानार्थं रक्षणमिति। एकस्मा पयस्यायाः कृतेनाश्वि-नेन परिस्रुति परीतो सिञ्चतीति शष्पचूर्णानि वापयति सारस्वतेन इयोः पातस्तोक्मचूर्णानि ऐन्द्रोपयामे निमृज्य लाजचूर्णानि च। सायं होमान्तेऽश्विभ्या-मपाकरोमीति वरेण गां सृष्ट्वा एकां तां दुग्ध्वा तत्-पयसाध्वर्युः सुरां सिञ्चति परीत इति मन्त्रेण। रक्षित-शष्पचूर्णानां तृतीयांशं सुराभाण्डे क्षिपेत्। द्वितीये-ऽह्नि निशान्ते सरस्वत्या अपाकरोमीति गावौ सृष्ट्वा दोहितेन तयोर्दुग्धेन तेनैव मन्त्रेण सुरां सिञ्चति तोक्म-चूर्णतृतीयांशक्षेपश्च। तृतीयेऽह्नि रात्रौ इन्द्राय सु-त्रामणेऽपाकरोमीति तिस्रो गाः सृष्ट्वा ता दुग्ध्वैकीकृत-तत्पयसा सुरां सिञ्चति तेनैव मन्त्रेण तत्र लाजचूर्ण-तृतीयांशक्षेपश्चेति"। ( कात्याश्रौतसूत्रभाष्यः )

**सौदामनी** स्त्री सुदामा पर्वतभेदस्तेनैका दिक् तत्प्रान्त-भवत्वात् अण्। १विद्युति अमरः। सा हि स्फटिक-मयस्य सुदाम्नः पर्वतस्यैकदेशे जाता। २अप्सरोभेदे च हेमच॰। सुदामा ऐरावतगजस्तस्य पत्नी ङीप्। ३ऐरा-वतपत्न्यामिति शब्दर॰। तत्र ङीपि अतोऽलोपे सौदा-म्न्यपि शब्दर॰।

**सौदायिक** न॰ सुदायात् बन्धुकुलात् आगतः ठञ्। "ऊ-ढया कन्यया वापि पत्युः पितृगृहेऽथ वा। भर्त्तुः स-काशात् पित्रोर्वा लब्धं सौदायिकं स्मृतम्" कात्या॰ स्मृत्युक्ते स्त्रीधनभेदे "सौदायिकं धनं प्राप्य स्वातन्त्र्यं परिकीर्त्तितम्" स्मृतिः। स्त्रीधनशब्दे दृश्यम्।

**सौदास** पु॰ सूर्य्यवंश्ये कल्माषपादे नृपतौ।

**सौध** पुंन॰ सुधया लेपनद्रव्येण रक्तम् अण्। १राजसदनभेदे अमरः। सुधां तदर्थमर्हति अण्। २रूप्ये न॰ ३दुग्धपाषाणे पु॰ राजनि॰। ४सुधासम्बन्धिनि त्रि॰।

**सौनन्द** न॰ सुनन्द+स्वार्थे अण्। बलदेवमुषले हेमच॰।

**सौनिक** पु॰ सूना वधस्थानं तदुपलक्षितमांसादि पण्यमस्य ठञ्। मांसक्रयविक्रयोपजीविनि व्याधे (कसाइ)। हेमच॰ शौनिकशब्दे उदा॰ दृश्यम्।

**सौन्दर्य्य** न॰ सुन्दरस्य भावः ष्यञ्। १चारुतायां "अङ्ग-प्रत्यङ्गकानां यः सन्निवेशो यथोचितम्। सुश्लिष्टः सन्धि-बन्धः स्यात् तत्सौन्दर्य्यमुदाहृतम्" उज्ज्वलमण्युक्ते २अङ्गादीनां सन्निवेशभेदे।

**सौपर्ण** न॰ सुपर्णं गरुडं तदर्थमर्हति अण्। १मरकतमणौ २शुण्ठ्यां राजनि॰। सुपर्णमधिकृत्य कृतो ग्रन्थः अण्। भा॰आ॰ २॰अध्यायावधौ ३४अध्यायपर्य्यन्ते ३अवान्तर-पर्वभेदे न॰ ४पातालगरुडीलतायां स्त्री राजनि॰ ङीप्। तस्येदमण् ५गरुडसम्बन्धिनि त्रि॰।

**सौपर्णेय** पु॰ सुपर्ण्याः विनतायाः अपत्यम् ढक्। १गरुडे हेमच॰ २गायत्र्यादिछन्दःसु "गायत्र्यादीनि छन्दांसि सौपर्णेयानि पाक्षिकः" वह्निपु॰।

**सौप्तिक** त्रि॰ सुप्तिकाले रात्रौ भवम् ठञ्। १रात्रियुद्धे जटा॰। सुप्तानधिकृत्य कृतो ग्रन्थः ठञ्। २महाभार-तान्तर्गते पर्वभेदे।

**सौभ** न॰ सुष्ठु सर्वत्र लोके भाति भा—क स्वार्थे अण्। १कामचारिणि पुरे २हरिचन्द्रनृपपुरे जटा॰। तस्य राजा अण्। ३राजभेदे स च वासुदेवेन निहतः तत्कथा भा॰ व॰ १४अ॰ अवधि २२अ॰ पर्य्यन्ते दृश्या।

**सौभद्र** पु॰ सुभद्रायां भवः अण्। १सुभद्रापुत्रे अभिमन्यौ गीता। सुभद्राय हितः अण्। २विभीतकवृक्षे शब्दच॰।

**सौभद्रेय** पु॰ सुभद्राया अपत्यम् ढक्। सुभद्रासुते अभिमन्यौ

**सौभरि** पु॰ मुनिविशेषे भाग॰ १०।१७ अ॰ ज्यो॰त॰।

**सौभागिनेय** पु० सुभगाया अपत्यम् ढक् इनङ् च द्विपद-वृद्धिः। १सुभगापुत्रे। २तत्कन्यायां स्त्री ङीप्।

**सौभाग्य** न० सुभगाया भावः ष्यञ् द्विपदवृद्धिः। १पतिप्रियत्वे तदर्थं व्रतं सौभाग्यव्रतं व्रतशब्दे ५०६८ पृ० दृश्यम्। सुभगायै सुभगाय वा हितं ष्यञ्। २सिन्दूरे ३टङ्कणे च राजनि०। विष्कम्भादिषु मध्ये ४चतुर्थे योगे पु० ज्यो०त०।

**सौभाग्यचिन्तामणि** पु० औषधभेदे। तल्लक्षणं भारकौ० उक्तं यथा "सौभाग्यामृतजीरपञ्चलवणव्योषाऽभयाचानवानि-चन्द्राभ्रकशुद्धगन्धकरसानेकीकृतान् भावयेत्। निर्गुण्डी-युगभृङ्गराजकट्फलापामार्गपत्रोद्भवैः प्रत्येकं स्वरसेन सिद्धवटिका घ्नन्ति त्रिदोषोदयम्। येषां शीतमतीव देहमखिलं स्वेदद्रवाद्दूषितं निद्रा घोरतरा समस्तकरण-व्यामोहमूढं मनः। शूलश्वासबलासकासकलितं मूर्च्छा-र्दितं तद्ज्वरं तेषां वै परिहृत्य जीवितमसौ उद्धाति जन्तोर्भवात्"। [ऐन्द्रजालिके हारा०।

**सौभिक** पु० सौभं कामचारिपुरं तद्विमानं शिल्पमस्य ठक्।

**सौमनस्य** न० सुमनसो भावः ष्यञ्। प्रसन्नचित्तत्वे तत्र हितं अण्। २श्राद्धे दत्तस्य पुष्पस्य प्रसादयुक्तचित्त-साधनत्वे "सौमनस्यमस्तु" श्राद्धमन्त्रः।

**सौमनस्यायनी** स्त्री सौमनस्यमयतेऽनया अय-ल्युट् ङीप् ६त०। १मालत्याम् २तत्कलिकायाञ्च त्रिका०।

**सौमिकी** स्त्री सोमसद्दीक्षा प्रयोजनमस्य ठक् ङीप्। सोमयागार्थदीक्षणीयेष्टौ हेमच०। [वत्सरे शब्दच०।

**सौमित्र(त्रि)** पु० सुमित्रायां भवः अण् बाह्वादि० इञ् वा

**सौमेधिक** पु० सुमेधया निर्वृत्तः ठक्। १सिद्धियुते हारा०। २शोभनमेधायुते च त्रि०।

**सौम्य** त्रि० सोमो देवताऽस्य तस्येदं वा ट्यण्। १सोमदेवताके २हविरादौ २तत्सम्बन्धिनि। टित्त्वात् स्त्रियां ङीप्। सोम इव शान्त्यादित्वात् वा स्वार्थे अण्। ३मनोहरे ४प्रियदर्शने ५अनुग्रे च त्रि० मेदि० ६बुधे पु० अमरः। ततः स्वार्थिकाणप्रत्ययाभावे सौम्योऽप्युभयत्र। "सदेव सौम्येदमग्र आसीत्" इति श्रुतिः। ज्योतिषोक्ते ७शुभ-ग्रहे ८वृषादिसमराशौ च ९उडुम्बरवृक्षे राजनि०। १०भास्करे त्रि० धरणिः। ११सोमपायिनि विप्रे पु०शब्दमा०। अष्टादशद्वीपमध्ये १२द्वीपभेदे पु० "गन्धर्वो वरुणः सौम्यः वह्निः कङ्क एव च। कुशद्वीपः कसेरुश्च नागो भट्टारक-स्तथा। चन्द्रेन्द्रमलयाः शङ्खयवाङ्गकगभस्तिमान्। ताम्राङ्कश्च कुमारी च तत्र द्वीपा दशाष्टभिः" शब्दमा०। १३सौम्यकृच्छ्रे व्रतभेदे। "अतिकृच्छ्रः पर्णकृच्छ्रः सौम्यः कृच्छ्रोऽतिकृच्छ्रकः" प्रा० त०। सौम्यकृच्छ्रशब्दे दृश्यम्।

**सौम्यकृच्छ्र** पु० कर्म० सोमदैवताके कृच्छ्रसाध्ये व्रतभेदे। "पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम्। एकैकमुप-वासश्च कृच्छ्रः सौम्योऽयमुच्यते" याज्ञ०। पिण्याकः खलिः आचामः भक्तमण्डः। एष षड्हसाध्यः प्रा०वि०।

**सौम्यगन्धी** स्त्री सौम्यः अनुग्रः गन्धो यस्याः गौरा० ङीष्। शतपत्त्राम् राजनि०।

**सौम्यग्रह** पु० कर्म०। ज्योतिषोक्ते पूर्णचन्द्रपापायुतबुध-गुरुशुक्ररूपे शुभग्रहे "अर्कानेन्द्वर्कसौरारा: पापाः सौम्यास्तथाऽपरे। पापयुक्तो बुधः पापो राहुकेतू च पापकौ" ज्यो० त०। [तयात्वम्।

**सौम्यधातु** पु० कर्म०। कफे राजनि० तस्य सोमजातत्वात्

**सौम्या** स्त्री सोमो देवताऽस्य अण् सोम इव शान्त्या० वा स्वार्थे अण् वा। १दुर्गायां देवीभा०। २महेन्द्रवारुण्यां ३रुद्रजटायां ४महाज्योतिष्मत्यां ५मल्लिकापत्र्यां ६शुक्लायां ७शालपर्ण्यां ८ब्राह्म्यां ९शठ्यां १०मल्लिकायां च राजनि० मृगशिरोनक्षत्रशिरःस्थासु पञ्चतारकासु विश्वः।

**सौर** पु० सूरस्य इदम् सूरो देवताऽस्य वा अण्। १सूर्य-पुत्रे शनैश्चरे २यमे च। ३सूर्यदेवताके त्रि० स्त्रियां ङीप्। सूर्येण निर्वृत्तः अण्। एकैकराशौ तदंशेषु वा सूर्यगतिसाध्ये ४दिनमासादौ त्रि०। "अध्यायमन्त्र-यहचारकर्म सौरेण मानेन सदाऽध्यवस्येत्" ज्यो०त०। "विवाहादौ स्मृतः सौरः" इति स्मृतिः। ५तुम्बुरवृक्षे पु०राजनि० ६सूर्योपासके त्रि० ७गुरुभेदे "गौडाः शाक्ताः स्मृताः सौराः मागधाः कोङ्कणास्तथा। कोसलाश्च दशा-र्णाश्च गुरवः सप्त मध्यमाः" तन्त्रसा०।

**सौरज** पु० सूरस्यायम् अण् सौर आलोकस्ततो जायते जन-ड। तुम्बुरवृक्षे राजनि०।

**सौरभ** न० सुरभेर्भावः अण्। १सद्गन्धे सौरभमस्यास्ति अच् सुरभिरस्यास्ति अण् वा। कुङ्कुमे त्रिका० २बोले च राजनि०।

**सौरभेय** पु० सुरभेरपत्यम् ढक्। १गवि स्त्रियां ङीप्। "सौरभेयीश्च एव च" गोदानमन्त्रः। तस्या इदम् ढक्। २सुरभिसम्बन्धिनि त्रि०।

**सौरसेय** पु० सुरसाया अपत्यम् ढक्। स्कन्दे शब्दमा०।

**सौराष्ट्र** पु० सुष्ठु राष्ट्रमस्यास्ति प्रज्ञा० अण्। (सुरट) १देश-भेदे जटा०। सुराष्ट्रे भवः अण्। २सुराष्ट्रदेशभवे त्रि०

१कुन्दरवे पु० राजनि० ४वांशे न० ५सुवर्णायां स्त्री राजनि० टाप्। सुगन्धितिकाभेदे स्त्री रत्नमा० ङीप् संज्ञायां कन्। सौराष्ट्रक पञ्चलौहे न० हेमच०।

**सौराष्ट्रिक** न० सुराष्ट्रदेशे भवः ठक्। विषभेदे शब्दर०।

**सौरि** पु० सूरस्यापत्यम् इञ्। १शनैश्चरे "सौरिवारोऽस्तानीति" ज्यो०त०। २यमे ३कर्णे ४सुग्रीवे च पु०। ५असनवृक्षे ६आदित्यभक्तायां राजनि०।

**सौरिक** पु० सुराणां देवानामधिवासाय हितः ठञ्। १स्वर्गे स्वार्थे क। २स्वर्यापत्ये शनैश्चरादौ।

**सौरिरत्न** न० सौरिप्रियं रत्नम् शाक०। नीलके मणौ राजनि०

**सौरेय** पु० सुरायै हितम् ठक्। शुक्लझिण्ट्याम् स्वार्थे क तत्रैव। "सौरेयः कुष्ठवातास्रकफकण्डूविषापहः। तिक्तोष्णो मधुरो दन्त्यः सुस्निग्धः केशरञ्जनः" भावप्र०।

**सौल्किक** त्रि० शुल्कं ताम्रपात्रादिनिर्माणं शिल्पमस्य ठक्। ताम्रमयपात्रनिर्माणकर्त्तरि (कासारि)। वणिग्भेदे

**सौव** त्रि० स्वस्येदम् स्वशब्दस्य इदम् अण् स्वच्छिद्रलोपो न वृद्धिः वावपूर्वमौत्। १आत्मसम्बन्धिनि २स्वर्गसम्बन्धिनि।

**सौवग्रामिक** त्रि० स्वग्रामे भवः ठक् न वृद्धिः वावपूर्वमौत्। स्वग्रामभवे पदार्थे।

**सौवर्चल** न० सुवर्चलदेशे भवम् अण्। रुचकलवणे अमरः।

**सौवर्णभेदिनी** स्त्री सुवर्णस्य विकारः अण् सौवर्णमिव भिनत्ति प्रकाशते भिद-णिनि। प्रियङ्गौ शब्दमा०।

**सौवस्तिक** पु० स्वस्तिकरणे कुशलः ठक् न वृद्धिः वावपूर्वमौत्। पुरोहिते हेमच०। [रक्षके अमरः।

**सौविद** पु० सुवेत्ति सु+विद-क स्वार्थेऽण्। अन्तःपुर-

**सौविदल्ल** पु० सुष्ठु विदन् ज्ञपः तं लाति ला-क स्वार्थेऽण्। अन्तःपुररक्षके अमरः।

**सौवीर** न० सुष्ठु वीरो यत्र सुवीरो देशभेदः तत्र भवम् अण्। १स्रोतोऽञ्जने २बदरफले "सौवीरन्तु यवैरामैः पक्वैर्वा निस्तुषैः कृतम्। गोधूमैरपि सौवीरम्" इत्याद्युक्ते ३काञ्जिके अमरः "सौवीरन्तु ग्रहण्यर्शः कफघ्नं भेदि दीपनम्। उदावर्त्ताङ्गमर्दास्थिशूलानाहेषु शस्यते" भावप्र०। ४बदरवृक्षे पु० राजनि०।

**सौवीरसार** पुंन० कर्म०। स्रोतोऽञ्जने राजनि०।

**सौवीराञ्जन** न० सौवीरास्थमञ्जनम्। अञ्जनभेदे अमरः स्वार्थे क। काञ्जिकभेदे न०।

**सौष्ठव** न० सुष्ठु भद्रं तस्य भावः अण् न टिलोपः। आतिशय्ये 'ध्व सौष्ठवौदार्यविशेषशालिनीम्' किरा०।

**सौहार्द** न० सुहृदो भावः अण् हृद्भगद्युभयपदवृद्धिः। १सख्ये २मित्रत्वे हेमच०। ["सौहित्यमाचरेत्" स्मृतिः।

**सौहित्य** न० सुहितस्य तृप्तस्य भावः ष्यञ्। तृप्तौ "नाति-

**सौहृद** न० सुहृदो भावः अण्। मित्रत्वे बन्धुतायाम् हेम०।

**स्कद** उत्प्लुत्य गतौ भ्वा० उद्धृतौ चाप्लावे च सक० भ्वा० आ० सेट् इदित्। स्कन्दते अस्कन्दिष्ट। [स्कन्दवत् त।

**स्कन्द** समाहारे चुरा०उभ०सक०सेट्। स्कन्दयति ते अच-

**स्कन्द** गतौ शोषणे च भ्वा० पर० सक० अनिट्। स्कन्दति इरित् अस्कदत् अस्कान्त्सीत् चस्कन्द। आ+आक्रमणे

**स्कन्द** पु० स्कन्दते उत्प्लुत्य गच्छति अच्। कार्त्तिकेये अमरः अग्निकुमारशब्दे ५४ पृ० तस्योत्पत्तिरुक्ता। स्कन्दग्रह-स्कन्दापस्मारौ ग्रहशब्दे २७४५ पृ० सुश्रुतोक्तौ दर्शितौ। २नृपतौ जटा० ३देहे त्रिका० ४पारदे राजनि० ५बालग्रहभेदे सुश्रुतः। [४शोषणे च।

**स्कन्दन** न० स्कन्द-ल्युट्। १रेचने त्रिका० २शरणे ३गतौ

**स्कन्दांशक** पु० स्कन्दस्यांश एवांशो यस्य कप्। पारदे। तस्य शिववीर्यजत्वादेकांशत्वम्।

**स्कन्ध** पु० स्कन्द्यते आरुह्यतेऽसौ सुखेन शाखया वा कर्मणि घञ् पृषो०। १अंसे (कांध) २वृक्षस्य काण्डे (गुँड़ि) अमरः। ३नृपे ४युद्धे ५समूहे ६काये ७भद्रादौ ८छन्दोभेदे मेदि० ९सौगतमतसिद्धेषु १०विज्ञानादिषु पञ्चसु "रूपाद्युस्कन्धपञ्चकम्" माधः। १०पथि शब्दर० ११ग्रन्थपरिच्छेदे च। "स्कन्धैर्द्वादशभिर्युक्तम्" इति भागवतविशेषणम्। १२व्यूहे हेमच०। [विहङ्गिकायां त्रिका०।

**स्कन्धचाप** पु० स्कन्धे चाप इव। वंशादिनिर्मितशिक्याधाने

**स्कन्धज** पु० स्कन्धात् जायते जन-ड। स्कन्धारूढे वटवृक्षादौ "पर्वयोनय इक्ष्वाद्याः स्कन्धजाः सल्लकीमुखाः" हेमच०।

**स्कन्धतरु** पु० स्कन्धप्रधानः तरुः। नारिकेलवृक्षे राजनि०।

**स्कन्धफल** पु० स्कन्धे फलमस्य। १नारिकेलवृक्षे राजनि०। २उडुम्बरवृक्षे च शब्दच०। [शब्दच०।

**स्कन्धबन्धना** स्त्री स्कन्धे बन्धनमिवास्याः। मधुरिकायाम्

**स्कन्धरुह** पु० स्कन्धात् रोहति रुह-क। वटवृक्षे राजनि०।

**स्कन्धवाह** पु० स्कन्धेन वाहयति वह-णिच्-अच्। स्कन्धेन शकटादिवाहके वृषादौ न्हारा० ण्वुल्। स्कन्धवाहक तत्रैव हेमच०। [शाखायाम् अमरः।

**स्कन्धशाखा** स्त्री स्कन्धात् प्रभवा शाखा। वृक्षस्य प्रधान-

**स्कन्धशृङ्ग** पुंस्त्री० स्कन्धपर्यन्तं शृङ्गमस्य। महिषे स्त्रियाम् ङीप्।

**स्कन्धाग्नि** पु० स्कन्धजातोऽग्निः। स्थूलकाष्ठजाते वह्नौ शब्दा०।

**स्कन्धावार** पु० स्कन्धं चमूमाशरः आ+वृ-घञ्। युद्धार्थमुद्युक्तसैन्यानां १स्थापने २तदाधारे कटके च ३राजधान्यां शब्दच०। [हेमादौ हेमच०

**स्कन्धिक** पु० स्कन्धेन वहनमस्यस्य ठन्। स्कन्धवाहके

**स्कन्धिन्** पु० स्कन्धस्तेन वहनमस्यस्य इनि। स्कन्धेन वाहके हेमादौ रत्नमा०।

**स्कन्न** त्रि० स्कन्द्-क्त। १च्युते अमरः २गलिते ३क्षरिते ४शुष्के ५गते च। भावे क्त। ६क्षरणे न०।

**स्कन्भ** प्रतिघाते क्र्या० स्वा० उ० सक० सेट्। स्कभ्नाति स्कभ्नीते स्कभ्नोति स्कभ्नुते। अस्कभ्नीत् अस्कम्भिष्ट। चस्कम्भ चस्क(भ)म्भे। [स्किष्ट।

**स्कम्भ** स्तम्भे भ्वा० आ० सक० सेट् इदित्। स्कम्भते अस्क-

**स्कु** उद्धृतौ आप्लावने च क्र्या० स्वा० उ० सक० अनिट्। स्कुनाति स्कुनीते स्कुनोति स्कुनुते। अस्कौषीत् अस्कोष्ट। चुस्काव चुस्कुवे। [स्कुन्दते अस्कुन्दिष्ट।

**स्कुद** आप्लावने उद्धृतौ च भ्वा० आ० सक० सेट् इदित्।

**स्कुन्भ** रोधने सौ० क्र्या० स्वादि० कार्य्यभागी प० सक० सेट् स्कुभ्नाति स्कुभ्नोति। अस्कुम्भीत्। उदित् क्त्वा वेट्।

**स्खद** विदारे दि० आ० सक० सेट्। स्खद्यते अस्खदिष्ट घटादि० स्खदयति। [स्खदयति स्खादयति।

**स्खल** चले भ्वा० प० अक० सेट्। स्खलति अस्खालीत् वा शब्दा०

**स्खलन** न० स्खल-भावे ल्युट्। १चलने २पतने अमरः।

**स्खलित** न० स्खल-भावे क्त। १कूटयुद्धादौ प्रहृत्या वीरमर्य्यादातः १पतने २स्खलनमात्रे च अमरः। कर्त्तरि क्त। ३चलिते त्रि०।

**स्तन** मेघशब्दे अद० चु० उभ० सक० सेट्। स्तनयति ते अतस्तनत् त। वक्रचक्रत्वात् वोपदेवः।

**स्तन** पु० स्तन-अच्। (माइ) स्त्रीणामङ्गभेदे पयोधरे अमरः। "करोमको स्तनौ पीनौ घनावविषमौ शुभौ" स्तनयोः शुभलक्षणं गारुडे ६६अ०। [शब्दे च मेदि०।

**स्तनन** न० स्तन-ल्युट्। १ध्वनिमात्रे २मेघशब्दे ३कुन्थन-

**स्तनन्धय** पुंस्त्री० स्तनं धयति धे-खश् मुम् च। जातित्वात् धेट्टित्त्वात् स्त्रियां ङीप्। [अमरः। स्त्रियां टाप्।

**स्तनप** पुंस्त्री० स्तनं पिबति पा-क। जातित्वात् बालके

**स्तनभर** पु० ६त०। १स्थूलस्तनभारे २तदाभोगे च त्रिका०।

**स्तनयित्नु** पु० स्तन-इत्नु। १मेघे २मुस्तके अमरः ३मेघशब्दे मेदि० ४विद्युति शब्दर० ५मृत्यौ ६रोगे च हेमच०।

**स्तनवृन्त** पु० स्तनस्य वृन्त इवाग्रम्। १स्तनाग्रे चूचुके हेमच० स्तनमुखमित्यादयोऽप्यत्र हेमच०। [च।

**स्तनान्तर** न० स्तनयोरन्तरम्। १हृदये हेमच० २स्तनमध्ये

**स्तनाभोग** पु० ६त०। स्तनस्य परिपूर्णतायाम् त्रिका०।

**स्तनित** न० स्तन-भावे क्त। १मेघशब्दे अमरः। २करतालिशब्दे च। कर्त्तरि-क्त। ३ध्वनिते त्रि०।

**स्तनितफल** पु० स्तनिते मेघशब्दे फलति फल-अच्। विकङ्कतवृक्षे राजनि०।

**स्तन्भ** रोधने क्र्या० स्वा० प० सक० सेट् उदित् क्त्वा वेट्। स्तभ्नाति स्तभ्नोति इरित् अस्तभत् अस्तम्भीत्। इदित्त्वं वोपदेव एव न्याय्यः शौनोऽयमित्यन्ये तेन न वोपदेवः।

**स्तन्य** न० स्तने भवम् यत्। स्तनजाते दुग्धे हेमच०। [भूते च

**स्तब्ध** त्रि० स्तम्भ-कर्म्मणि कर्त्तरि वा क्त। १जडीकृते २जडी०

**स्तब्धरोमन्** पु० स्तब्धं रोमास्य। १शूकरे अमरः जडीकृतरोमणि त्रि० स्त्रियां वा डाप् ङीप् च।

**स्तम्ब** पु० स्ता-अम्बच् किच्च पृषो०। काण्डरहिते शिफाकाटौ तृणे २तरुमूलमे ३तृणादिः गुच्छे च अमरः।

**स्तम्बकरि** पु० स्तम्बं गुच्छं करोति कृ-इन्। व्रीहिधान्ये अमरः। [न्तूपके खनित्रादौ अमरः।

**स्तम्बघन** पु० स्तम्बो हन्यतेऽनेन हन-क नि०। स्तम्बो-

**स्तम्बघ्न** त्रि० स्तम्बो हन्यतेऽनेन हन-घञर्थे क। स्तम्बोन्मूलके खनित्रादौ अमरः। स्तम्बहननमप्यत्र।

**स्तम्बपुर** स्त्री स्तम्बप्रधाना पूः न समासान्तः। ताम्रलिप्ते पुरभेदे हेमच०।

**स्तम्बेरम** पुंस्त्री० स्तम्बे तृणादीनां काण्डे गुच्छे गुल्मे वा रमते रम-अच् अलुकस०। गजे अमरः स्त्रियां ङीष्।

**स्तम्भ** पु० स्तम्भ-अच्। (थाम) १स्थूणायाम् अमरः। भावे घञ्। २जडीभावे पु०।

**स्तम्भन** पु० स्तम्भयति स्तम्भ-णिच् ल्यु। कन्दर्पस्य पञ्चसु बाणेषु मध्ये १बाणभेदे शब्दा०। भावे ल्युट्। २जडीकरणे न०। करणे ल्युट्। षट्कर्मान्तर्गते तन्त्रोक्ते ३अभिचारकर्म्मभेदे

**स्तम्भित** त्रि० स्तम्भ जाड्ये णिच्-कर्म्मणि क्त। जडीकृते

**स्तरिमन्** पु० स्तृ-कर्म्मणि इमनिच्। तल्पे उणा०।

**स्तरी** स्त्री स्तृ-कर्म्मणि ई। धूमे हेमच०।

**स्तव** पु० स्तु-अप्। १प्रशंसायाम् २स्तुतौ च।

**स्तवक** पु० स्तु-वुन् स्ता-अक पृषो० वा। गुच्छे अमरः। २ग्रन्थपरिच्छेदे ३समूहे च मेदि०।

**स्तवेय्य** पु० स्तु-एय्य। इन्द्रे उणा०।

**स्तावक** त्रि० स्तु-ण्वुल् । स्तुतिकारके प्रशंसाकारके ।

**स्तिमित** न० स्तिम-भावे क्त । १आर्द्रतायाम् अमरः । २अचाञ्चल्ये च मेदि० कर्त्तरि क्त । ३अचञ्चले ४आर्द्रे च त्रि० ।

**स्तिम्भि** पु० स्तिम-इन् भुक् च । १समुद्रे २वायौ च उणा० ।

**स्तीर्वि** पु० स्तॄ-क्विन् न वेरित्त्वम् । १आकाशे २रुधिरे ३तृणजातौ ४अध्वर्य्यौ ५जयिनि ६इन्द्रे संक्षिप्तसा० ।

**स्तुत** पु० स्तु-कर्मणि क्त । स्तुतिकर्मणि अमरः ।

**स्तुति** स्त्री स्तु-क्तिन् । स्तवे अमरः । [अमरः

**स्तुतिपाठक** पु० स्तुतिं पठति पठ-ण्वुल् । राजादेर्वन्दिनि

**स्तुन्भ** रोधने सौ० क्र्या० स्वा० काय्यमानी पर० सक० सेट् उदित् क्त्वावेट् । स्तुभ्नोति स्तुभ्नाति । अस्तुम्भीत् । सौत्रत्वाद्षोपदेश इत्यन्ये ।

**स्तुतिव्रत** पु० स्तुतौ व्रतमस्य । स्तुतिपाठके जटा० । २६८पृ० दृश्यम्

**स्तुत्यर्थवाद** पु० ३त० । प्रशंसया अर्थवादभेदे अर्थवादशब्दे

**स्तुनक** पुंस्त्री० स्तु-नकक् । छागे शब्दच० स्त्रियां ङीष् ।

**स्तुभ** पुंस्त्री० स्तुन्भ-मूल० क । छगे भरतः स्त्रियां ङीष् ।

**स्तूप** उच्छ्राये अद० चु० सक० उभ० सेट् । स्तूपयति ते अतुस्तूपत् त । बहुच्कत्वात् अषोपदेश एव । ५१७२ पृष्ठे ष्टूप इति धातुः षोपदेशतया प्रमादात् लिखितः ।

**स्तूप** पु० स्तु-पक् पृषो० स्तूप-अच् वा । १राशीकृते मृत्ति-कादौ २संघाते ३स्तवे ४निष्प्रयोजने च संक्षिप्त० ।

**स्तृ** विस्तारे स्वा० उ० सक० अनिट् । स्तृणोति स्तृणुते अस्तार्षीत् अस्तृत अस्तरिष्ट । पर्युदासात् षोपदेशः ।

**स्तृ** प्रीतौ अक० रक्षणे सक० स्वा० प० अनिट् । स्तृणोति अस्तार्षीत् । पर्युदासेन अषोपदेश एव ।

**स्तॄ** आच्छादने क्र्या० प्रा० उ० सक० सेट् । स्तृणाति स्तृणीते अस्तारीत् अस्तरिष्ट अस्तरीष्ट अस्तीर्ष्ट । अयं षोपदेश एव न्याय्यः ।

**स्तेन** चौर्य्ये अद० चु० उभ० सक० सेट् । स्तेनयति-ते अतिस्तेनत्-त । बहुचकत्वात् अषोपदेशः ।

**स्तेन** न० स्तेन-भावे अच् । १चौर्य्ये । कर्त्तरि अच् । २चोरे त्रि० अमरः ।

**स्ते(ष्टे)प** क्षेपे चु० उभ० सक० सेट् । स्तेपयति-ते अतिस्ति-पत्-त । अषोपदेशत्वे मूलं चिन्त्यम् ।

**स्तेम** पु० स्तिम-घञ् । १आर्द्रीभावे २स्नेहे च अमरः ।

**स्तेय** न० स्तेनस्य भावः यत् नलोपः । १चौर्य्ये अमरः । "प्रत्यक्षं वा परोक्षं वा रात्रौ वा यदि वा दिवा । यत् परद्रव्यहरणं स्तेयं तत्परिकीर्त्तितम्" इत्युक्तेः पर-द्रव्यापहारः स्तेयं तच्च अष्टादशविवादान्तर्गतविवादपद-भेदः तत्स्वरूपादिकं वीरमि० उक्तं चोरशब्दे २९६९ पृष्ठादौ दृश्यम् । [ङीप् ।

**स्तेयिन्** त्रि० स्तेयमस्त्यस्य इनि । परद्रव्यापहारके स्त्रियां

**स्तैन(न्य)** न० स्तेनस्य भावः अण्, ष्यञ् वा । १चौर्य्ये पर-द्रव्यापहरणे । स्तेन एव स्वार्थे ष्यञ् । २चोरे त्रि० भरतः ।

**स्तैमित्य** न० स्तिमितस्य भावः ष्यञ् । १जाड्ये २स्नेहे ३आर्द्रीभावे च । [२जलबिन्दौ ३स्वल्पे त्रि० अमरः ।

**स्तोक** पुंस्त्री० स्तुच-घञ् । १चातके मेदि० स्त्रियां ङीष् ।

**स्तोकक** पुंस्त्री० स्तोकाय जलबिन्दवे कायति शब्दायते कै-क । चातके अमरः स्त्रियां ङीष् ।

**स्तोत्र** न० स्तु-ष्ट्रन् । १स्तवे-गुणकर्मादिभिः प्रशंसने अमरः । "द्रव्यस्तोत्रं कर्मस्तोत्रं विधिस्तोत्रं तथैव च । तथैवाभि-जनस्तोत्रं स्तोत्रमेतच्चतुर्विधम्" मत्स्यपु० १२१ अ० द्रव्याद्युपाधिकतया स्तवस्य चातुर्विध्यमुक्तम् । २स्तुतिसाधने वाक्ये स्तुतिश्च गुणिनिष्ठगुणप्रकाशिका तन्निष्ठानां गुणानां प्राधान्येन कथनरूपा स्वच्छेदभाष्ये लक्षिता । यथा यो देवदत्तः स चतुर्वेदाभिज्ञ इत्युक्ते सर्वे जनाः स्तुति-मवगच्छन्ति यद्यपि ष्टुञ् स्तुतौ धातुः स्तुतावित्यर्थकस्तौ तथापि प्रतिगीतमन्त्रसाध्यं स्तोत्रम् अप्रतिगीतमन्त्र-साध्यं शस्त्रमिति तयोर्विवेक इति च तत्रोक्तं प्रति-गीतमन्त्रसाध्ये ३स्तवने गुणकथने च । शस्त्रशब्दे प्रति-गीतमन्त्रे इति यदुक्तं तत्र अप्रगीतमन्त्रे इत्येव बोध्यम् । प्रगीतऋग्जातं शस्त्रमिति छ० उ० भाष्य-टीकायामानन्दगिरिणोक्तं ४प्रगीते ऋग्जाते च ।

**स्तोत्रिय** त्रि० स्तोत्राय हितं घ । स्तोत्रसाधने ऋगादौ "कत्ययमद्यास्मिन् यज्ञे स्तोत्रियाः स्तोष्यन्तीति तिस्र इति कतमास्तास्तिस्रः इति पुरोऽनुवाक्या च याज्या शस्यैव च तृतीया इति" छ०उ० । "स्तोत्रिया नाम ऋक्-सामसमुदायः" शा०भा० । "स्तोत्रिया नाम गीतिविशिष्टा ऋग्जातयः" शत०ब्रा०१४.६।१।१२ वाक्यव्याख्यायां सा-यनभाष्यम् । "यथोक्तस्य स्तोत्रं स्तोत्रियां वर्चं साम वा यजुर्वाऽपवीन्यत् कृत्वा यजेत" कात्या०श्रौ० २४.७ २० "एकां स्तो त्रयामेकां ऋचामन्यां कुर्य्यात्" कर्कः ।

**स्तोभ** पु० स्तुभ-घञ् । १अर्थशून्ये गानादिस्वरपरिपूरणार्थे शब्दभेदे यथा सामवेदे इडा होइ प्रभृतयः । २हेलने ३स्तम्भने च हेमच० ।

भोक्तव्यामोदानमिति यावत् । अननुज्ञातत्यागभोगविषयमेतत् । तदनुज्ञया त्वनापद्यपि न दोषः "स्वयमेवेत्येवकारः व्यापन्नानां व्युदासार्थः । भर्तृव्युदासश्च पतिर्नार्हतीत्यनेनाभिधानात् । भर्तृव्युदासे सतो वहिरङ्गाणां भ्रात्रादीनां व्युदासस्यापि दण्डापूपिकया सिद्धत्वात् । अनापदीत्यभिधानादापदि न दोषः । अतएव "पुत्रार्त्तिहरणे चापि स्त्रीधनं भोक्तुमर्हतीति" तस्यैव वाक्यशेषः । पतिरित्यनुषङ्गः । पुत्रपदञ्च कुटुम्बोपलक्षकं तस्यार्त्तिर्भक्ष्याद्यभावनिमित्ता पीड़ा तस्या हरणे । अतस्तादर्थ्यस्यापि धनाभावनिमित्ते सङ्कटे स्त्रीधनमननुज्ञातमपि पतिस्त्यक्तु भोक्तुमर्हतीत्यर्थः । ननु परधने त्यागभोगयोः स्वाम्यनुज्ञया विना कथमर्हता बाधितानेन बोध्यते । अनुज्ञाया स्त्वनापद्यपि न विरोधः । उच्यते । वचनबलात्तादृशविषये व्यये स्वत्वमेव तस्य तस्मैत्यदोषः । अतएव योगीश्वरोऽपि "दुर्भिक्षे धर्मकार्य्ये च व्याधौ सम्प्रतिरोधके । गृहीतं स्त्रीधनं भर्त्ता नाकामो दातुमर्हति" । धर्मकार्य्ये आवश्यके नित्ये नैमित्तिके च सम्प्रतिरोधके दण्डाद्यर्थं राजावरोधे सति । वाचस्पतिस्तु सम्प्रतिरोधक इति व्याधिविशेषणं कार्य्यानुष्ठानबाधक इति च तदर्थं इत्याह । नाकामो दातुमर्हतीत्यपि दारिद्र्यादिकृतदानासामर्थ्ये दुर्भिक्षादिगृहीतमप्यवश्यं देयमेतावतैव वचनोपपत्तौ सामर्थ्येऽप्यदानमिच्छयेत्यस्य कल्पयितुमनर्हत्वात् । पतिपदस्यादापद्यपि पत्युरेव पत्नीधनग्रहणाधिकारः प्रतिदानञ्चेच्छया नान्यस्येति ध्येयम् । भर्त्ता दातुं प्रतिश्रुतं भार्य्यायै तस्मिन् मृते पुत्रादिभिस्तस्यै देयमित्यप्याह स एव "भर्त्ता प्रतिश्रुतं देयमृणवत् स्त्रीधनं सुतैरिति" । सुतपदञ्च पौत्रप्रपौत्रयोरुपलक्षणमृणवदित्यभिधानात् । अनेन स्त्रीधने जीवन्त्यामस्यां सुतानां जन्मना स्वत्वेऽपि नास्ति विभाग इति गम्यते । एवं स्त्रीधनमुक्तम्" । दायभागमतं पारिभाषिकपरत्वपक्ष एव । अनयोर्युक्तायुक्तत्वं सुधीभिर्भाव्यम् । उत्तराधिकारिशब्दे ११०१ पृ० च तद्विभागो दृश्यः ।

**स्त्रीधव** पु० स्त्रियं धुनाति धू—अच् । पुरुषे जटा० ।

**स्त्रीधर्म्म** पु० ६त० । ऋतौ नारीकुसुमविकाशे रजसि हेमच०

**स्त्रीधर्म्मिणी** स्त्री स्त्रीधर्म्मोऽस्त्यस्या इनि । ऋतुमत्यां स्त्रियाम् अमरः ।

**स्त्रीपण्योपजीविन्** पु० स्त्रीरूपेण पण्येन जीवति जीव–णिनि । धनं गृहीत्वा सम्भोगार्थमन्यस्मै स्त्रियं दत्त्वा तल्लब्धधनोपजीविनि ।

**स्त्रीपुंधर्म्म** पु० स्त्रियाः पुंसश्च धर्मः तमधिकृत्य व्यवहारो वा । स्त्रीपुंसयोः यथाशास्त्राचाररूपे धर्मे तद्विषयके अष्टादशसु विवादपदेषु मध्ये विवादपदभेदे स्त्रीपुंसयोगोऽप्यत्र । वीर० तत् व्युत्पत्तिर्यथा "तत्स्वरूपमाह नारदः "विवाहादिविधिः स्त्रीणां यत्र पुंसाञ्च कीर्त्त्यते । स्त्रीपुंसयोगसंज्ञं तद्विवादपदमुच्यते" इति । विवाहादिशब्देन स्त्रीपुंधर्मा उच्यन्ते । अतएव मनुर्व्यवहारपदोद्देशकाले स्त्रीपुंधर्मविभागस्येत्युद्दिश्य प्रतिज्ञापूर्वकं तेषां निरूपणं चकार "पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः । संयोगे विप्रयोगे च धर्मान् वक्ष्यामि शाश्वतान्" इत्यादिना संयोगे अन्योन्यसन्निधाने विप्रयोगे देशतः कालतो वा व्यवधाने । शाश्वतान्नित्यान् अवश्यानुष्ठेयानिति यावत् । के ते धर्मा इत्याकाङ्क्षायामाह स एव "अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् । विषयेषु च सज्जन्त्यः संस्थाप्या ह्यात्मनो वशे" इत्यादि । पुरुषैः भर्तृपुरुषैः । विषये दण्डहेतुभूतचापल्यादिविषये । नारदोऽपि "स्वातन्त्र्याद्विप्रणश्यन्ति कुले जाता अपि स्त्रियः । अस्वातन्त्र्यमतस्तासां प्रजापतिरकल्पयत्" इति । अतोऽन्यैरपि स्त्रीणामस्वातन्त्र्यं यथा भवति तथा कल्पयितव्यमित्याशयः । पुरुषेण स्त्री व्यभिचारादवश्यं रक्षणीया । तथा च हारीतः "एकव्रतस्वभावात् परेन्द्रियोपहतत्वाच्च दुष्टाः कुलसङ्करकारिण्यो भवन्ति जीवति जारजः कुण्डो मृते भर्त्तरि गोलकस्ताभ्यां देवपित्र्योर्द्रव्याभावात् कुलनाशः कुलनाशे तन्तुनाशस्तन्तुनाशे देवपितृयज्ञनाशो देवपितृयज्ञनाशे आत्मनाशः आत्मनाशे सर्वनाशः" इति । एकव्रतस्वभावात् स्त्रीणां एकभर्त्तेति नियमाभावात् । परेन्द्रियोपहतत्वात् परस्मिन् पुंसि इन्द्रियस्य मनसो रागादिना उपहतत्वात् । कुलसङ्करकारिण्यः तज्जातिस्वभावानुमत प्रजोत्पादनेन कुलसाङ्कर्यकारिण्यः । अतएव शङ्खलिखितौ "यस्मिन् भाव्योऽपि तः स्त्रीणामाहुर्वै तादृशं तनुमुत्पन्नयन्तीति" । तन्तुः पुत्रादिसन्ततिः । मनुरपि "सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः । द्वयोर्हि

कुलयोः शोकमावहेयुररक्षिताः । इमं हि सर्व्ववर्णानां पश्यन्तो धर्म्ममुत्तमम् । यतन्ते रक्षितुं भार्य्यां भर्त्तारो दुर्ब्बला अपि । स्वां प्रसूतिं चरित्रञ्च कुलमात्मानमेव च । स्वञ्च धर्म्मं प्रयत्नेन जायां रक्षन् हि रक्षति" इति । द्वयोः कुलयोः भर्तृपितृकुलयोः । अनेन कुलद्वयस्थैरपि रक्ष्या इति शोकजननमुखेन दर्शितम् । अतएव बृहस्पतिः "स्वल्पेभ्योऽपि प्रसङ्गेभ्यो निवार्य्या स्त्री स्वबन्धुभिः । श्वश्र्वादिभिः पालनीया गुरुस्त्रीभिर्दिवानिशम्" । मनुरपि "कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन् पतिः । मृते भर्त्तरि पुत्त्रस्तु वाच्यो मातुररक्षिता" इति । काले कन्यादानयोग्ये काले । वाच्यो निन्द्यः । अनुपयन् अनुगच्छन् । स एव "पिता रक्षति कौमारे भर्त्ता रक्षति यौवने । पुत्त्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति" । याज्ञवल्क्योऽपि "रक्षेत् कन्यां पिता, विन्नां पतिः, पुत्त्रास्तु वार्द्धके । अभावे ज्ञातयस्तेषाञ्च स्वातन्त्र्यं क्वचित् स्त्रियाः" इति । विन्ना विवाहिता । पतिपुत्त्रविहीनायास्तु रक्षणं पतिपक्षानुमतेन प्रत्यासन्नेन कार्य्यम् । तथा च नारदः "मृते भर्त्तर्य्यपुत्त्रायाः पतिपक्षः प्रभुः स्त्रियः । विनियोगात्मरक्षासु भरणेषु च ईश्वराः । परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये । तत्सपिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियः" । पितृपक्षस्याप्यभावे स एवाह "पक्षद्वयावसाने तु राजा भर्त्ता स्मृतः स्त्रियः । स तस्या भरणं कुर्य्यान्निगृह्णीयात् पथश्च्युताम्" इति । विनियोगः कर्म्मणि नियोजनम् । भर्त्ता पोषकः स्त्रीस्वभावं दर्शयति दक्षः "जलौकावत् स्त्रियः सर्व्वा भूषणाच्छादनाशनैः । सुहृतापि कृता नित्यं पुरुषं ह्यपकर्षति । जलौका रक्तमादत्ते केवलं सा तपस्विनी । इतरा तु धनं वित्तं मांसं वीर्य्यं बलं सुखम् । साशङ्का बालभावे तु यौवनेऽभिमुखी भवेत् । तृणवन्मन्यते नारी वृद्धभावे स्वकं पतिम् । स्वकार्य्ये वर्त्तमाना सा चेद्धाच च निवारिता । अपथ्या तु भवेत् पश्चाद् यथा व्याधिरुपेक्षितः" इति । सुहृता तृप्ता कृतापीत्यन्वयः । अपकर्षति सततमाक्रामति करोति स्वकार्य्ये स्वेच्छायाम् । अपथ्या अत्यन्ताहितहेतुभूता । मनुरपि "नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः । सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते । पौंश्चल्याच्चलचित्तत्वात् नैःस्नेह्याच्च स्वभावतः । रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्व्वते । शय्यासनमलङ्कारं कामं क्रोधमनार्जवम् । द्रोहभावं कुचर्य्याञ्च स्त्रीभ्यो मनुरकल्पयत् । नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्म्मो व्यवस्थितः । निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः । तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि । स्वालक्षण्यपरीक्षार्थं तासां शृणुत निष्कृतीः । यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता । तन्मे रेतः पिता वृङ्क्तामित्यस्यैतन्निदर्शनम् । ध्यायत्यनिष्टं यत्किञ्चित् पाणिग्राहस्य चेतसा । तस्यैष व्यभिचारस्य निह्नवः सम्यगुच्यते । एवं स्वभावं ज्ञात्वाऽऽसां प्रजापतिनिसर्गजम् । परमं यत्नमातिष्ठेत् पुरुषो रक्षणं प्रति" इति । निरिन्द्रिया निर्वीर्य्या धैर्य्यप्रज्ञादिरहिता इति यावत् । स्त्रियोऽनृतमिति प्रायशोऽनृतवदनशीलत्वादुच्यन्ते । श्रुतयः श्रुतिवाक्यानि । निगमेषु वेदेषु स्त्रीलक्षणं स्वरूपं तासां श्रुतीनामध्ये वा निष्कृतिरूपा व्यभिचारप्रायश्चित्तरूपास्ताः श्रुतीः शृणुत स्त्रीस्वभावज्ञानार्थमित्यर्थः । महाभारतेऽपि "कुलीना रूपवत्यश्च नाथवत्यश्च योषितः । मर्य्यादासु न तिष्ठन्ति स दोषः स्त्रीषु नारद ! । अनर्थित्वान्मनुष्याणां भयात् परिजनस्य च । मर्य्यादायाममर्य्यादाः स्त्रियस्तिष्ठन्ति भर्तृषु । यौवने वर्त्तमानानां मृष्टाभरणवाससाम् । नारीणां स्वैरवृत्तीनां स्पृहयन्ति कुलस्त्रियः । यदि पुंसामतिर्न स्यात् ! कथञ्चिन्नोपपद्यते । अन्योन्यञ्च प्रवर्त्तन्ते न च तिष्ठन्ति भर्तृषु । अलाभात् पुरुषाणाञ्च भयात् परिजनस्य च । वधबन्धभयाच्चैव स्वयं गुप्ता भवन्ति ताः । नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः । नान्तकः सर्व्वभूतानां न पुंसां वामलोचना । कामानामपि दातारं दातारं मानसान्त्वयोः । रक्षितारञ्च मन्यन्ते भर्त्तारं यत्नतः स्त्रियः" इति । श्रीरामायणेऽपि "नैवाङ्गनानां दयितो नापि द्वेष्योऽस्ति कश्चन । सर्व्वमेवावलम्बन्ते लता गहनगा इवेति" । अथ रक्षणप्रकारः । तत्र मनुः "न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् । एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम्" इति । प्रसह्य आक्रम्य अवरुध्येति यावत् । यद्यप्यवरोधेन शरीरव्यभिचाराद्रक्षणं शक्यं तथापि मानसव्यभिचाराद्रक्षणमशक्यमित्याशयेन मनुना न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुमित्युक्तम् । न च मानसव्यभिचाराद्रक्षणमनर्थकमन्यजत्वाभावेन प्रजाविशुद्धिविघाताभावादिति वक्तव्यम् । यत आह स

एव "यादृशं भजते स्त्री हि सुतं सूते तथाविधम् । तस्मात् प्रजाविशुद्ध्यर्थं स्त्रियो रक्षेत् प्रयत्नतः" इति । यादृशं पुरुषमृतुकाले स्त्री मनसा भजते तत्समानशीलं पुत्रं जनयतीति पूर्वार्द्धार्थः । अत एवाहतुः शङ्खलिखितौ "यं यान् भावोऽर्पितः स्त्रीणामार्त्तवे तच्छीलं जनयन्तीति" । मानसव्यभिचारादपि स्त्रियं रक्षेदिति शेषः । तथा च मनुना तस्मादित्यादिनोक्तदार्ढ्येनायमेवार्थो दर्शितः । परिरक्षणोपायमाह मनुरेव "अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् । शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य चेक्षणे" इति । अर्थस्य संग्रहे स्वेन समानीतार्थसंविधाने । व्यये धनोत्सर्गे । शौचे स्वर्णादिशुद्धिकरसंमार्जनोपलेपनादौ । धर्मे अग्निहोत्राद्यनुकूललौकिकव्यापारे । पक्त्यां पाकव्यापारे । पारिणाह्यं पीठादि गृहोपकरणं तस्य ईक्षणे विचारणे । निरन्तरगृहव्यापारनियोजनात् पुरुषान्तरचिन्ताराहित्यं यथा भवति भार्यायाः तथा कुर्यादिति तात्पर्यार्थः । बृहस्पतिरपि "आयव्ययेऽथ संस्कारे गृहोपस्कररक्षणे । शौचाग्निकार्ये संयोज्याः स्त्रीणां शुद्धिरियं स्मृता" इति । एवंविधव्यापारासक्तचित्ततया साध्व्य इति व्यपदिश्यन्त इत्याह मनुः "आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः" इति । आत्मना गृहव्यापारासक्तेनान्तःकरणेन सुरक्षिताः साध्व्यः । आप्तपुरुषरक्षितास्तु स्त्रियो न सम्यग्रक्षिता इत्याह स एव "अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः" इति । आप्तकारिभिः पुरुषैः गृहे रुद्धा इत्यन्वयः । आप्ताश्च ते कारिणश्चाप्तकारिणः । अरक्षिताः सम्यग्रक्षाविहीना इत्यर्थः । भर्त्तुरुत्कृष्टत्वमपि स्त्रीणां रक्षणोपाय इति दर्शयितुं स एवाह "यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि । तादृग्गुणा सा भवति समुद्रेणेव निम्नगा । अक्षमाला वशिष्ठेन संयुक्ताऽधमयोनिजा । शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम्" इति । भार्याया भरणमप्यावश्यकमित्याह स एव "देवदत्तां पतिर्भार्यां विन्दते नेच्छयात्मनः । तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन्" । देवैर्दत्ता देवदत्ता दैवयोगादायातेति यावत् । तां भार्यां स्वयंवरे पतिर्विन्दते । तत्र स्वव्यापाराभावाद्देवदत्तामित्यनेन विवाहलक्षणस्य स्त्रीपुंसयोः सम्बन्धस्य न स्वाधीनत्वं किन्तु दैवकृतत्वमिति दर्शितम् । देवदत्तत्वञ्च स्त्रीणाम् "सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम्" इत्यादिश्रुतिवाक्याभ्यामवगम्यते । तेन देवैर्दत्ताया भरणेन दातॄणां देवानां प्रीतिं सम्पादयेत् इत्यर्थवाद इत्युक्तं मदनरत्ने । न च साध्वीमित्यस्य पतिव्रतामित्यर्थपरत्वेन व्यभिचारिण्या भरणमनावश्यकमिति वक्तव्यम् । तस्या अपि कदन्नादिनाऽवश्यभरणीयत्वात् । तथा च नारदः "व्यभिचारे स्त्रिया मौण्ड्यमधःशयनमेव च । कदन्नञ्च कुवासश्च कर्म चावस्करोज्झनम्" इति । स्त्रिया रत्यर्थं व्यभिचारे जाते मुण्डनमधःशयनञ्च कारयेत् । कदन्नं कुवासश्च भरणार्थं दद्यात् । अमेध्यशोधनरूपं कर्म कारयेदित्यर्थः । दोषरहिताया भार्यायाः परित्यागिनं प्रत्याह नारदः "अनुकूलामवाग्दुष्टां दक्षां साध्वीं प्रजावतीम् । त्यजन् भार्यामवस्थाप्यो राज्ञा दण्डेन भूयसा" इति । विष्णुरपि "निर्दोषां परित्यजन् पत्नीञ्चेति" चोरवच्छास्य इत्यनुषङ्गः । निर्दोषां त्यागहेतुभूतदोषरहिताम् । दण्डेन त्याजयितुमशक्ये त्वाह योगीश्वरः "आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम् । त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियः" इति । तृतीयांशमात्मनस्तृतीयांशम् । राज्ञा भार्याया दाप्यः । अल्पधनः भरणमात्रपर्य्याप्तं धनं दाप्य इत्यर्थः" ।

**स्त्रीपुंस** पु० द्विव० स्त्री च पुमांश्च अच्समा० । मिलितयोः [स्त्रीपुरुषयोः ।

**स्त्रीपुंसलक्षणा** स्त्री स्त्रीपुंसयोर्लक्षणमस्याम् । स्तनश्मश्रुप्रभृतिस्त्रीपुरुषचिह्नधारिण्यां स्त्रियाम् पोटायाम् अमरः

**स्त्रीप्रिय** पु० ६त० । १आम्रवृक्षे त्रिका० । २नारीप्रियमात्रे त्रि०

**स्त्रीमुखप** पु० स्त्रीमुखं पाति पा—क । दोहदवृक्षार्थे राजनि० ।

**स्त्रीरोग** पु० ६त० । स्त्रीणां रोगे योनिरोगादौ सुश्रुतः ।

**स्त्रीलिङ्ग** पु० स्त्रिया इव लिङ्गं तत्कार्य्यं यस्य । स्त्रीलिङ्गविहितव्याकरणोक्तसंस्कारयुक्ते शब्दभेदे । ६त० स्त्रीचिह्ने स्तनादौ न० ।

**स्त्रीवश्य** पु० ६त० । स्त्रीवशीभूते ।

**स्त्रीविधेय** पु० ६त० । स्त्रीवशीभूते ।

**स्त्रीसंग्रहण** न० स्त्रियाः संग्रहणं यत्र । परस्त्रीहरणरूपे विवादपदभेदे । तत्स्वरूपादिकं वीरमि० दर्शितं यथा "अथ स्त्रीसंग्रहणाख्यं व्यवहारपदम् । तत्र सविभागमाह बृहस्पतिः ""पापमूलं संग्रहणं त्रिप्रकारं"

निबोधत । बलोपधिकृते द्वे तु तृतीयमनुरागजम्” इति । एतेषां स्वरूपं दर्शयति स एव “अनिच्छन्त्या यत् क्रियते मत्तोन्मत्तप्रमत्तया । विलपन्त्या वा रहसि बलात्कारकृतन्तु तत् । छद्मना गृहमानीय दत्त्वा वा मदकारणम् । संयोगः क्रियते यत्र तदुपधिकृतं विदुः । अन्योन्यचक्षूरागेण दूतीसंप्रेषणेन वा । कृतं रूपार्थलोभेन ज्ञेयं तदनुरागजम्” इति । अनुरागजसंग्रहस्य त्रिविधत्वं दर्शयति स एव “तत्पुनस्त्रिविधं प्रोक्तं प्रथमं मध्यमोत्तमम्” इति । व्यासोऽपि “संग्रहस्त्रिविधो ज्ञेयः प्रथमो मध्यमस्तथा । उत्तमश्चेति शास्त्रेषु लक्षणं च पृथक् पृथक्” इति । एतेषां स्वरूपमाह तत्रैव बृहस्पतिः “कटाक्षावेक्षणं हास्यं दूतीसंप्रेषणं तथा । स्पर्शो भूषणवस्त्राणां प्रथमः संग्रहः स्मृतः । प्रेषणं गन्धमाल्यानां फलधूपान्नवाससाम् । सम्भाषणञ्च रहसि मध्यमं संग्रहं विदुः । एकशय्यासनं क्रीडा चुम्बनालिङ्गनं तथा । एतत् संग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिः” इति । स्त्रीसंग्रहणस्य ज्ञानोपायमाह याज्ञवल्क्यः “पुमान् संग्रहणे ग्राह्यः केशाकेशि परस्त्रिया । सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा” इति । परभार्यया सह केशाकेशि क्रीडनेन सद्यः अभिनवैः कामजैः करजदशनादिक्षतव्रणादिचिह्नैः द्वयोः संप्रतिपत्तावयं स्त्रीसंग्रहणवान् इति प्रतिपत्तव्य इत्यर्थः । उपायान्तरमाह स एव “नीवीस्तनप्रावरणसक्थिकेशावमर्शनम् । अदेशकालसम्भाषः सहैकस्थानमेव च” इति । कुर्वाण इति शेषः । सक्थि च वा । मनुरपि “स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत् तया । परस्परस्यानुमते सर्वं संग्रहणं स्मृतम्” । यस्तु दर्पाद्विना मयेयं भुक्तेति वदति सोऽपि तथाविधत्वेन ग्राह्य इत्याह बृहन्मनुनारदौ “दर्पाद्वा यदि वा मोहात् श्लाघया वा स्वयं वदेत् । पूर्वं मयेयं भुक्तेति तच्च संग्रहणं स्मृतम्” इति । बलात्कारकृतस्य स्त्रीसंग्रहणस्य साहसान्तर्भूतत्वेन तत्रैव दर्शितत्वादुपधिकृते दण्डमाह बृहस्पतिः “दर्पाद्वा कामयेद्यस्तु तस्य सर्वहरो दमः । अङ्कयित्वा भगाङ्केन पुरान्निर्वासयेत्ततः” इति । सर्वहरः सर्वस्वहरः । एतत् सजातीयविषयम् । हीनोत्कृष्टागमने तु क्रमेणार्द्धधनं सर्वस्वहरणरूपो वधचिह्नितसर्वस्वहरणरूपो वा दण्डोऽवगन्तव्यः । ‘दमनीयः समायान्त्विति’ बाहुवादनिरूपण-दर्शितवचनात् । तत्र वचने पुरुषस्यापकर्षाभावे पुंसो दण्डो न स्त्रिया इति नोक्तस्तस्याः दण्डः, तेन साहसस्त्रीसंग्रहणवत् प्रकृतेऽपि सजातीयोपभुक्तायाः संव्यवहार्य्यायाः प्रायश्चित्ताचरणानन्तरं पुनरपि तेनोपभुक्ताया इति ज्ञातव्यमित्युक्तं मदनरत्ने । अनुरागजत्रिविधसंग्रहणे दण्डमाह स एव “त्रयाणामपि चैतेषां प्रथमो मध्यमोत्तमौ । विनयः कल्पनीयः स्यादधिकोद्विवाधिकः” इति । अधिकः प्रथमसाहसादिभ्योऽधिकः । सम्भोगे दण्डमाह याज्ञवल्क्यः “सजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः । प्रातिलोम्ये वधः पुंसो नार्य्याः कर्णादिकर्त्तनम्” इति । उत्तमानामपि वर्णानां बलात्कारेण सजातीयपरभार्यागमने साशीतिपणसहस्रो दण्डः । यदा त्वानुलोम्येन हीनजातीयागमनं तदा मध्यमसाहसः, उत्कृष्टजातीयागमने गन्तुर्वधः । तस्याः कर्णादिकर्त्तनमित्यर्थः । एतच्चानुरागसंग्रहणविषयं स्त्रिया अपि दण्डविधानात् । बलात्कारोपधिकृतयोस्तु स्त्रिया अनपराधित्वेन दण्डाभावात् । अत एव प्रातिलोम्येन गमने पुरुषस्य वधं विधाय स्त्रियास्तदङ्गुल्यकर्णनासादिकर्त्तनविधानात् सजातीयागमने पुरुषस्य याज्ञवल्क्योक्तमध्यमसाहसौ दण्डौ तदर्द्धं स्त्रियादण्ड इति सूचितम् । अत एव कात्यायनः “सर्वेषु चापराधेषु पुंसो योऽर्थदमः स्मृतः । तदर्द्धं योषितो दद्युर्वधे पुंसोऽङ्गकर्त्तनम्” । इति । स्त्रिया इति शेषः । यदा पुनः सवर्णामगुप्तां आनुलोम्येन गुप्तां वा व्रजति तदा विशेषमाह मनुः “सहस्रं ब्राह्मणो दण्ड्योऽगुप्तां विप्रां बलाद् व्रजन् । शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः । सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन् । शूद्रायां क्षत्रियविशोः साहस्रन्तु भवेद्दमः” इति । ते क्षत्रियवैश्यौ । एतच्च गुरुसखिभार्य्याद्यतिरिक्तविषयम् । तत्र दण्डान्तरविधानात् । तदाह नारदः “माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा । पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा । दुहिता चार्य्यभार्य्या च सगोत्रा शरणागता । राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या । शिश्नस्योत्कर्त्तनात्तत्र नान्यो दण्डो विधीयते” इति । यत्तु प्रातिलोम्येन गमने क्षत्रियादेः पुरुषस्य वध इत्युक्तं योगीश्वरवचने । तद्गुप्ताविषयमन्यथार्थदण्डः । तथा च मनुः “उभावपि हि तावेव ब्रा-

ह्मण्या गुप्तया सह। विप्रौ शूद्रदण्ड्यौ दग्धव्यौ वा कटाग्निना। ब्राह्मणीं यद्यगुप्तान्तु सेवेतां वैश्यपार्थिवौ। वैश्यं पञ्चशतं कुर्यात् क्षत्रियन्तु सहस्रिणम्" इति। पञ्चशतस्य पञ्चशतपञ्चकदण्डभाजमित्यर्थः। एवं सहस्रिणमित्यत्रापि। क्षत्रियस्य गुप्तवैश्यागमने वैश्यस्य च गुप्तक्षत्रियागमने क्रमेण पञ्चसहस्रपञ्चशतरूपं तयोर्दण्डं दद्यात् स एव "वैश्यश्चेत् क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत्। यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः" इति। शूद्रस्यानुलोमोत्कृष्टस्त्रीगमने लिङ्गच्छेदनसर्वस्वापहरणे गुप्तागमने तु वधसर्वस्वापहारौ। तथा च स एव "शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन्। अगुप्तमङ्गसर्वस्वैर्गुप्तं सर्वेण हीयते" इति। अयञ्च वधाद्युपदेशः प्रजापालनाधिकाराद्राज्ञ एव न द्विजातिमात्रस्य। "ब्राह्मणः परीक्षार्थमपि शस्त्रं नाददीतेति" शस्त्रग्रहणस्य निषिद्धत्वात्। यदा तु राज्ञो निवेदने कालविलम्बेन कार्यातिपातस्तदा द्विजातिमात्रस्यापि शस्त्रग्रहणेऽधिकारोऽस्त्येव "शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते। नाततायिवधे दोषो हन्तुर्भवति कश्चन। प्रकाशं वा प्रकाशं वा मन्युस्तं मन्युमृच्छति" इति शस्त्रग्रहणाभ्यनुज्ञानात्। परस्त्रिया सह सम्भाषणकर्तुर्दण्डमाह मनुः "परस्य पत्न्या पुरुषः सम्भाषां योजयेत् सह। पूर्वमाक्षारितो दोषैः प्राप्नुयात् पूर्वसाहसम्" इति। आक्षारितः अभिशस्तः। दोषैः नानास्त्र्युपभोगवाञ्छाभिः। पापबुद्ध्या यः सम्भाषणं करोति तद्विषयमेतत्। अतएव "यस्त्वनाक्षारितः पूर्वमभिभाषेत कारणात्। न दोषं प्राप्नुयात् किञ्चिन्न हि तस्य व्यतिक्रमः" इति। मनुष्टहसत्युक्तपूर्वसाहसमध्यमसाहसयोस्तूत्कृष्टसजातीयासम्भाषणादिविषयत्वेन व्यवस्था परिकल्पनीया। परपुरुषेण सह पित्रादिभिर्निषिद्धं सम्भाषणं या करोति सा पणशतं दण्ड्या परस्त्रिया सह पित्रादिभिर्निषिद्धसम्भाषणं यः पुरुषः करोति पणशतद्वयं दण्डनीयः। द्वयोरपि निषिद्धपरस्परसम्भाषणादि कुर्वतोः सम्भोगे यो दण्डः स एव दण्ड इत्याह याज्ञवल्क्यः "स्त्री निषेधे शतं दद्याद् द्विशतन्तु दमं पुमान्। प्रतिषेधे तयोर्दण्डो यथा सङ्ग्रहणे तथा" इति। निषिध्यत इति निषेधः कर्मणि घञ्। चारणादिस्त्रीव्यतिरिक्तविषयमेतत् "नैष चारणदारेषु विधिर्नात्मोपजीविषु। सज्जयन्ति हि ते नारीर्निगूढाश्चारयन्ति च" इति मनुस्मरणात् नटाः आत्मोपजीविनः वेशोपजीविनः। एतेषां दारेषु एष विधिर्न सम्भाषणादिनिमित्तकदण्डविधिर्न। परनरे नारीः स्वभार्याः सज्जयन्ति पुरुषान्तरे संयोजन्ति प्रच्छन्नीभूय चारयन्ति वेत्यर्थः। साधारणस्त्रीगमने दण्डमाह याज्ञवल्क्यः "अवरुद्धासु दासीषु भुजिष्यासु तथैव च। गम्यास्वपि पुमान्दाप्यः पञ्चाशत्पणिकन्दमम्" इति। स्वामिना या शुश्रूषार्थं गृहे एव स्थातव्यमित्येवं पुरुषान्तरोपभोगतो निरुद्धास्ताः अवरुद्धाः। पुरुषान्तरेणावरुध्य भुज्यमाना भुजिष्याः या दास्यो भुजिष्या अवरुद्धा वा तासु सर्वपुरुषगम्यास्वपि गमने पञ्चाशत्पणो दण्डः तासामन्यपरिगृहीतत्वेन परस्त्रीतुल्यत्वात्। चशब्दाद्वेश्यास्वैरिणीनामपि ग्रहणम्। तास्वपि सर्वपुरुषसाधारणीषु परपरिगृहीतासु गमनेऽयमेव दण्ड इति मन्तव्यम्। एतदेवाभिप्रेत्याह नारदोऽपि "स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासिनी च या। गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः। आस्वेव तु भुजिष्यासु दोषः स्यात्परदारवत्। गम्यास्वपि हि नोपेयाद्यत्ताः परपरिग्रहाः" इति। अब्राह्मणीति स्वैरिण्या विशेषणम्। स्वैरिणी स्वतन्त्रा पुंश्चली। निष्कासिनी कुटुम्बान्निर्गतेति मदनरत्ने। स्वाम्यनवरुद्धा दासीति विज्ञानेश्वरमाधवाचार्यप्रभृतयः। भुजिष्या स्वा चेति सम्बन्धः। व्यासोऽपि "परोपरुद्धागमने पञ्चाशत्पणिको दमः। प्रसह्य वेश्यागमने दण्डो दशपणः स्मृतः" इति। प्रसह्य वेतनदानं विना अत्रानवरुद्धासु वेश्यादिषु गम्यत्वाभिधानस्य पापाभावप्रतिपादनार्थं किन्तु राजदण्डाभावप्रतिपादनार्थम्। "पशुवेश्यादिगमने प्राजापत्यं विधीयते" इत्यादिवचनैः प्रायश्चित्तस्मरणात्। बलात्कारेण अनवरुद्धदास्यभिगमने दण्डमाह याज्ञवल्क्यः "प्रसह्य दास्यभिगमे दण्डो दशपणः स्मृतः। बहूनां यद्यकामासौ चतुर्विंशतिकः पृथक्" इति। पुरुषसम्भोगजीविकासु दासीषु स्वैरिण्यादिषु शुल्कदानमन्तरेण बलात्कारेणाभिगच्छतो दशपणो दण्डः। यद्यनिच्छन्तीमेकां बलात्कारेण बहवो गच्छन्ति तर्हि प्रत्येकं चतुर्विंशतिपणात्मको दण्ड इत्यर्थः। यदि पुनः सा स्वेच्छया भाटकं गृहीत्वा पश्चान्नेच्छति तदा बलाद्व्रजतामपि बहूनामदोषः यदि

तथा व्याध्याद्यभिभवो न भवेत्। अतएव नारदः "व्याधिता सश्रमा व्यग्रा राजकर्मपरायणा। आमन्त्रिता चेन्नागच्छेद्दण्ड्या वडवा स्मृता" इति। पारदार्य्यप्रसङ्गात् कन्यायामपि दण्डमाह याज्ञवल्क्यः "अलङ्कृतां हरन् कन्यामुत्तमं त्वन्यथाऽधमम्। दण्डं दद्यात् सवर्णासु प्रतिलोम्ये वधः स्मृतः" इति। अलङ्कृतां विवाहाभिमुखीं तां सवर्णां कन्यामपहरन् उत्तमसाहसं दण्डनीयः। तदनभिमुखीं हरन् प्रथमसाहसम्। उत्कृष्टवर्णजातां हरतः क्षत्रियादेर्वध इत्यर्थः। आनुलोम्येन सकामाहरणे न दण्डस्तथा च स एव "सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः" इति। कन्यादूषणे दण्डमाह स एव "दूषणे तु करच्छेद उत्तमायां वधः स्मृतः। शतं स्त्रीदूषणे दद्यात् द्वे तु मिथ्याभिशंसने" इति। "पशून् गच्छन् शतं दाप्यो हीनां स्त्रीङ्गाञ्च मध्यमम्" इति। यदाकामां कन्यामसवर्णतादिना प्रसह्य दूषयति तदा करच्छेदः। यदा त्वङ्गुलिप्रक्षेपेण तामेव योनिक्षतां कुर्वन् दूषयति तदा विशेषमाह मनुः "अभिषह्य तु यः कन्यां कुर्य्याद्दर्पेण मानवः। तस्याशु कर्त्ये अङ्गुल्यौ दण्डञ्चार्हति षट्शतम्" इति। सकामदूषणेऽप्याह स एव "सकामां दूषयन् कन्यां नाङ्गुलिच्छेदमर्हति। द्विशतं तु दमं दाप्यः प्रसङ्गविनिवृत्तये" इति। यदा कन्या विदग्धा वा कन्यां दूषयति तदाप्याह स एव "कन्यैव कन्यां या कुर्य्यात्तस्यास्तु द्विशतो दमः। या तु कन्यां प्रकुर्य्यात् स्त्री सा सद्यो मौण्ड्यमर्हति। अङ्गुल्योरेव वा छेदः खरेणोद्वहनन्तथा" इति कुर्य्यात् योनिक्षतवतीमिति शेषः। यदा पुनरुत्कृष्टजातीयां कन्यां सकामामकामां वाभिगच्छति तदा हीनस्य क्षत्रियादेर्वधः। यदा सकामां सवर्णामभिगच्छति तदा शुल्कं गोमिथुनं तत्पित्रे दद्यात्। अनिच्छति तस्मिन् दण्डरूपेण राज्ञे दद्यात्। सवर्णामकामाङ्गच्छतो वध एव। तदाह मनुः "उत्तमां सेवमानस्तु जघन्यो वधमर्हति। शुल्कं दद्यात् सेवमानः समामिच्छेत् पिता यदि। योऽकामां दूषयेत् कन्यां स सद्यो वधमर्हति। सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः" इति। चाण्डाल्यादिगमने दण्डमाह याज्ञवल्क्यः "अन्त्याभिगमने त्वङ्क्यः कुबन्धेन प्रवासयेत्। शूद्रस्तथान्त्य एव स्यादन्त्यस्यार्य्यागमे वधः" इति। अन्त्या चाण्डाली तद्गमने त्रैवर्णिकान् प्रायश्चित्तानभिमुखान् "सहस्रं त्वन्त्यजस्त्रियमिति" मनुवचनानुसारेण पणसहस्रं दण्डयित्वा कुबन्धेन भगाकारेणाङ्कयित्वा स्वराष्ट्रान्निर्वासयेत्। शूद्रः पुनश्चाण्डालीं गच्छंश्चाण्डाल एव। अन्त्य एवेति माधवीये पाठः। चाण्डालस्य तूत्कृष्टजातिस्त्र्यभिगमने वध एवेत्यर्थः। योनिव्यतिरिक्तस्थले गच्छतो दण्डमाह स एव "अयोनौ गच्छतो योषां पुरुषं वाऽभिमेहतः। चतुर्विंशतिको दण्डस्तथा प्रव्रजितागमे" इति। यस्तु योषां मुखादावभिगच्छति पुरुषं वाभिमुखं मेहति तथा प्रव्रजितां वा गच्छति असौ चतुर्विंशतिपणान् दण्डनीय इत्यर्थः। स्त्रीकर्तृकसंग्रहणे दण्डमाह बृहस्पतिः "स्वयमागत्य या नारी प्रलोभ्य स्पर्शनादिना। कामयेत् तत्र सा दण्ड्या नरस्याद्दमः स्मृत" इति वचना स्त्रियं प्रलोभ्य गच्छतः पुरुषस्य यो दण्डस्तदर्द्धं दण्ड्या"।

**स्त्रीसभ** न० स्त्रीणां सभा क्लीवत्वम्। स्त्रीसमाजे।

**स्त्रीसेवा** स्त्री ६त०। स्त्रीसम्भोगे अवायमधर्मेण नारीसेवने

**स्त्रीस्वभाव** पु० स्त्रिया इव स्वभावो यस्य। १अन्तःपुररक्षके नपुंसके शब्दमा० ६त०। २स्त्रीणां शीले च। स्त्रीपुंधर्मशब्दे दृश्यम्।

**स्त्रैण** न० स्त्रिया इदम् अण् नञ्। १स्त्रीस्वभावे "स्त्रैणेन नीता विकृतिं लघिम्ना" भट्टिः। २स्त्रीविधेये स्त्रिया अपत्यं स्त्रीणां समूहो वा अण्। ३स्त्र्यपत्ये स्त्रीसमूहे न०।

**स्थ** त्रि० स्था-क। १स्थितिशीले प्रायेण उत्तरपदस्थत एवार्थे प्रयुज्यते यथा पदस्थः मार्गस्थः। २स्थले पु० शब्दर०।

**स्थग** संवरणे भ्वा० पर० सक० सेट् घटा० ञिचि न वृद्धिः। स्थगति अस्थगीत्। अस्योपदेशत्वमस्य चिन्त्यमूलम्।

**स्थग** त्रि० स्थग-अच्। धूर्त्ते शब्दर०।

**स्थगन** न० स्थग-ल्युट्। आच्छादने हेमच०।

**स्थगित** त्रि० स्थग-क्त। १आवृते २तिरोहिते हेमच०।

**स्थगी** स्त्री स्थग्यतेऽनया अजर्थे क गौरा० ङीष्। ताम्बूलपात्रे करङ्के हेमच०।

**स्थगु** न० स्थग-उन्। गड्डौ (कुंज) "तदेव स्थगु यद्दीर्घं रथघोणमिवायतम्। अध्यायां च प्रतीता च लेपयिष्यामि ते स्थगु" रामा० बा० ९अ०।

**स्थण्डिल** न० स्थल-इलच् नुक् लस्य डः। १चत्वरे उच्चत्वनतिशून्ये समीकृते प्रदेशे अमरः। "निषेदुषी स्थण्डिल एव केवले" कुमारः। २यज्ञार्थं परिष्कृतस्थाने शब्दर०

२होमार्थं कुण्डप्रतिनिधित्वेन वालुकादिभिः कर्त्तव्ये मण्डलभेदे च "नित्यं नैमित्तिकं कर्म स्थण्डिले वा समाचरेत् । हस्तमात्रं तु तत् कुर्य्यात् वालुकाभिः समन्ततः" शा॰ति॰ । "अथ वापि यदा सुवर्णभासा कर-मात्रं चतुरङ्गुलोच्चमत्ये । हवने विदधीत वाङ्गुलोच्चं वि-बुधः स्थण्डिलमेववेदकोणम् कुण्डोद्यतः । अथ वा कुण्ड करणाशक्तौ । तन्त्रान्तरे च "यदा सुवर्णभासा वा शुभ्रा वालुकयाऽपि वा । चतुरङ्गुलोन्नतया वेदाङ्गुलोच्चं स्थण्डिलं विदुः । चतुःकोणसदृक्प्राचीप्रवणत्वाङ्कतौ शुभम् । प-ञ्चाङ्गुलोच्चमथ वा रम्यं त्र्यङ्गुलसुन्नतम् । तस्मात् सम्यक् परीक्ष्यैव कर्त्तव्यं शुभवेदिकम् । हस्तमात्रं स्थण्डिलं वा संक्षिप्ते होमकर्मणि" । वशिष्ठः "कुण्डमेवंविधं न स्यात् स्थण्डिलं वा समाश्रयेत्" क्रियासारे । तत्करण-प्रकारादि सं॰ त॰ द्रष्टव्यम् ।

**स्थण्डिलशायिन्** पु॰ स्थण्डिले चत्वरे शेते व्रतवशात् शी-णिनि । व्रतार्थं चत्वरे शयितरि अमरः । "स्थण्डिल-शायिनश्च" भट्टिः । [चत्वरे शयितरि शब्दर॰ ।

**स्थण्डिलेशय** पु॰ स्थण्डिले शेते अच् अलुक्समा॰ । व्रतार्थं

**स्थपति** पु॰ स्था–क तस्य पतिः । १कञ्चुकिनि मेदि॰ २शिल्पि-भेदे (छुतार) अमरः ३कुवेरे अजयः ४अधीशे ५वृह-स्पतिसवनामकयागकर्त्तरि च अमरः । ६उत्तमे त्रि॰मेदि॰ तत्र अधीशपरत्वे "निषादस्थपतिर्गावेधुकेऽधिकृतः" कात्या॰ श्रौ॰ १।१।१२ "निषादस्थपतिर्गावेधुके चरावधि-कृतः अधिकारी भवति" । एवं हि श्रूयते "यत्र रुद्रः प्रजाः शमयेत्तु वास्तुमध्ये रौद्रं गावेधुकम् चरुं निर्व-पेत्" इत्यादिमिष्टिं प्रक्रम्य श्रुतम् "एतया निषादस्थपतिं याजयेदिति" निषादस्थपतिर्यजतेत्यर्थः । तत्रायं सन्देहः किमत्र षष्ठीसमासः निषादस्य स्थपतिर्निषादस्थपतिरिति निषादश्चासौ स्थपतिश्च निषादस्थपतिरिति कर्मधारयो वा । तत्र यदि षष्ठीसमासः तदा यो द्विजातिरेव विद्याद्विषादानामाधिपत्यं करोति तस्यात्राधिकारः यदि च कर्मधारयः तदा निषाद एव यः स्थपतिस्तस्यात्राधि-कार इति । तत्र त्रैवर्णिकस्यैव समर्थत्वाद्विद्वत्त्वादग्नि-मत्त्वाच्चात्राधिकारो युज्यते अन्यजातीयस्य निषादस्या-विद्वत्त्वेनानग्निमत्त्वेन चासमर्थत्वात्, तस्मात् षष्ठीसमास श्चायमिति पूर्वपक्षः । सिद्धान्तस्तु कर्मधारयोऽयम् निषादश्चायं स्थपतिश्चेति कुतः ? षष्ठीसमासपक्षे निषाद-पदे लक्षणाप्रसक्तेः न ह्यत्र षष्ठी श्रूयते यतः सम्बन्धः प्रतीयेत । अतो निषादपदेनैव सम्बन्धी लक्षणीयः इत-रस्मिंस्तु पक्षे द्वयोरपि पदयोर्मुख्यार्थतैव न लक्षणा तस्मान्निषाद एव स्थपतिरत्राधिकारी श्रुतिबलात् अवि-द्वाननग्निमानपीति सिद्धम् । अपि चात्र निषादस्य दक्षिणा श्रूयते कूटं दक्षिणा काणो वा गर्दभ इति कूटं हि निषादानामेवोपकारकम् नार्य्याणामिति" कर्क॰ । वृहस्पतिसवकर्त्तरि तु "स्थपतिरित्येनं ब्रूयुः" कात्या॰ श्रौ॰ २२।५।२८ सू॰ । "सराजानो ब्राह्मणा यं पुरस्कु-र्वीरन् एतेन यजेत" "वृहस्पतिसवेन" सू॰ । राज्ञा सहिता ब्राह्मणा यं ब्राह्मणं धर्मस्थापकत्वेन चाङ्गीकुर्वीरन् "एतेन स एतेन यजेत वृहस्पतिसवेन" सं॰व्या॰ । वृहस्पतिसवकर्त्तृ-वत् द्वेगोसवकर्त्तर्य्यपि यथोक्तं "स्थपतिरित्येनं ब्रूयुः" कात्या॰ श्रौ॰ २२।११।११ सू॰ । "गोसवयाजिनं जनाः" । राज्ञा सहिता विशः प्रजाः सर्वे पुरुषा यं पुरस्कुर्वीरन् (सुखापेनाङ्गीकुर्वीरन्) स गोसवेन यजेत २२।११।८ कर्क॰ "कारुभेदस्य लक्षणं यथा "वास्तुविद्याविधानज्ञो लघुहस्तो जितश्रमः । दीर्घदर्शी च शूरश्च स्थपतिः परिकीर्त्तितः" ।

**स्थपुट** त्रि॰ तिष्ठति स्था–क सं पुटं यत्र । १विषमोन्नत-प्रदेशे हेमच॰ । "स्थपुटगतमपि क्रव्यमव्यग्रमत्तीति" मालतीमा॰ । २विषमस्थाने-सञ्चारिणि-जीवे पु॰ त्रिका॰ ।

**स्थल** स्थाने भ्वा॰ पर॰ अक॰ सेट् ज्वला॰ । स्थलति अस्था-लीत् । ष्ठलधातुनैवायं गतार्थ इत्यन्ये ।

**स्थल** न॰स्त्री॰स्थल–अच् । जलशून्ये अकृत्रिमे भूभागे अमरः । स्त्रीत्वपक्षे ङीप् । "वनस्थलीर्मर्मरपत्रमोक्षाः" कुमारः । २अकृत्रिमाकृत्रिमप्रदेशमात्रे ३कृत्रिमभूभागे तु न॰ ।

**स्थलकन्द** पु॰स्थलजः कन्दः । (वनओल) वन्याल्यकन्दे रत्नमा॰

**स्थलकमल** न॰ स्थलजात कमलम् । स्थलपद्मे भावप्र॰ ।

**स्थलकुमुद** पु॰ स्थले कुमुदमस्यस्य सादृश्येन अच् । करवीरे राजनि॰ ।

**स्थलपद्म** न॰ स्थलजातं पद्मं शाक॰ । स्वनामख्याते पुष्प-प्रधानवृक्षे त्रि॰ स्थलजं पद्ममिव । २मानके पु॰ रत्नमा॰

**स्थलपद्मिनी** स्त्री स्थलपद्मानां समूहः तेषां सन्निकृष्टदेशो वा इनि ङीप् । १स्थलपद्मसमूहे २तद्युक्तदेशे च । "ददर्श दूनः स्थलपद्मिनीं नलः" नैष॰ ।

**स्थलमञ्जरी** स्त्री स्थलस्य मञ्जरीव । अपामार्गे रत्नमा॰ ।

**स्थलशृङ्गाट** पु॰ स्थलजातः शृङ्गाटः शाक॰ । १गोक्षुरे रत्नमा॰ तस्य कण्टकान्वितत्वात् तथात्वम् ।

**स्थलेरुहा** स्त्री॰ स्थले रोहति रुह–क अलुक्स॰। १घृतकुमार्य्याम् २दग्धारुहे च राजनि॰।

**स्थलेशय** पु॰ स्थले शेते शी–अच् अलुक्स॰। वराहरुरुप्रभृतौ पशौ राजनि॰। २स्थलशायिनि त्रि॰।

**स्थवि** पु॰ स्था क्विप् बेर्न्नच। १तन्तुवाये उज्ज्वलद॰। २स्वर्गे ३जङ्गमे च संक्षिप्त॰।

**स्थविर** न॰ स्था–किरच् स्थवादेशः। १शैलेये गन्धद्रव्ये राजनि॰ २चतुर्मुखे ब्रह्मणि पु॰ हेमच॰। ३अचले ४स्थिरे त्रि॰ उज्ज्वल॰ ५वृद्धे च त्रि॰ अमरः। ५महाश्रावण्यां स्त्री राजनि॰।

**स्थविष्ठ** त्रि॰ अतिशयेन स्थूलः इष्ठन् यणादिलोपे गुणः। अतिवृद्धे अमरः। इयसुन् स्थवीयानप्यतिवृद्धे त्रि॰ स्त्रियां ङीप्।

**स्थाणु** पु॰ स्था नु पृषो॰ णत्वम्। १शिवे २शाखापत्ररहिते वृक्षे च अमरः ३आयुधभेदे पु॰ नीलक॰। ४दृढे त्रि॰ धरणि॰। शिवस्य स्थाणुशब्दवाच्यत्वे कारणमुक्तं वामनपु॰ ४६अ॰। यथा "ब्रह्मणितरन् जलात्तस्मात् प्रजास्ताः सृष्टवानहम्। ततोऽहं ताः प्रजा दृष्ट्वा रहिता एव तेजसा। क्रोधेन महता युक्तो लिङ्गमुत्पाट्य चाक्षिपम्। तदुत्क्षिप्तं सरसो मध्ये ऊर्द्ध्वमेव यदा स्थितम्। तदाप्रभृति लोकेषु स्थाणुरित्येव विश्रुतम्"।

**स्थाणुतीर्थ** न॰ शैवे तीर्थभेदे वामनपु॰ १२अ॰।

**स्थाण्डिल** पु॰ स्थण्डिले शयिताऽण्। व्रतार्थं स्थण्डिले शयितरि अमरः।

**स्थाण्वाश्रम** पु॰ न॰ ६त॰। हिमाचलस्थिते शिवस्य तपश्चर्य्याश्रमभेदे "स स्थाण्वाश्रमं हैमवतं जगाम" कुमारः।

**स्थाण्वीश्वर** पु॰ शिवलिङ्गभेदे "स्थाणुनाम्ना हि लोकेषु पूजनीयो दिवौकसाम्। स्थाण्वीश्वरः स्थितो यस्मात् स्थाण्वीश्वरस्ततः स्मृतः" वामने ४२अ॰ तन्माहात्म्यादिकम्। तत्र दृश्यम्।

**स्थान** न॰ स्था–ल्युट्। १स्थितौ २सादृश्ये ३अवकाशे मेदि॰ ४सन्निवेशे ५वसतौ हेमच॰ ६पञ्चभागौ त्रिका॰ ७भाजने हारा॰ ८निकटे ९व्याकरणोक्ते प्रसक्ते आदिश्यमानस्य यणादेः कारणभूते इगादौ। १० नीतिवेदिनामुपचयापचयहीने साम्यावस्थाने च अमरः। उपचयापचयौ च षड्वर्गशब्दोक्तस्य सन्ध्यादेरेव भरतः। वसतिश्च लोकभेदः। स्वस्ववर्त्तिनां स्वस्वधर्मानुयायिनां जनानां लोकविशेषात्मकं स्थानञ्च अग्निपु॰ उक्तं यथा "प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम्। क्षत्रियाणां तथा चैन्द्रं संग्रामेष्वनुवर्त्तिनाम्। गान्धर्वं शूद्रजातीनां परिचर्य्यानुकारिणाम्। अष्टाशीतिसहस्राणां यतीनामूर्द्धरेतसाम्। स्मृतं तेषान्तु यत् स्थानं तदेव गुरुवासिनाम्। सप्तर्षीणान्तु यत् स्थानं स्मृतं तद्वत् वनौकसाम्। प्राजापत्यं गृहस्थानां गृहधर्मानुवर्त्तिनाम्। न्यासिनान्तु परं ब्रह्म योगिनाममृतं स्मृतम्। एकान्तवादिनां ब्रह्मध्यायिनां परमं पदम्। तामिस्रमन्धतामिस्रं महारौरवरौरवम्। असिपत्रवनं घोरं कालसूत्रमवीचिमत्। वेदस्य निन्दकानान्तु यज्ञव्याघातकारिणाम्। स्थानमेतत् समाख्यातं स्वधर्मविनिवर्त्तिनाम्" स्मृतिसिद्धाधिकरणोक्ते ११क्रमे मीमां॰। "स्थानं क्रमो योगबलं समाख्या पार्थबाधः"। १२ज्ञापके नियतस्थानमित्यादि।

**स्थानक** न॰ स्वार्थे क। १स्थानशब्दार्थे। स्थाने कं जलमत्र। २आलवाले हेमच॰।

**स्थानचञ्चला** स्त्री स्थाने स्थितावपि चञ्चला। १बर्बरीभेदे शब्दच॰। अल्पवातेन चञ्चलत्वात्तस्यास्तथात्वम्।

**स्थानच्युत** त्रि॰ स्थानात् स्वस्थानात् च्युतः। पदच्युते "स्थानस्थितस्य पद्मस्य मित्रे वरुणभास्करौ। स्थानच्युतस्य तस्यैव क्लेदशोषणकारकौ" गरुडपु॰ ११५ अ॰। स्थानभ्रष्टादयोऽप्यत्र। "स्थानस्थिताश्च पूज्यन्ते पूज्यन्ते च पदस्थिताः। स्थानभ्रष्टा न पूज्यन्ते केशा दन्ता नखा नराः" गरुडपु॰ ११५अ॰।

**स्थानाध्यक्ष** त्रि॰ स्थाने अध्यक्षः। स्थानरक्षके हेमच॰।

**स्थानिक** त्रि॰ स्थानेऽधिकृतः ठक्। स्थानाध्यक्षे हेमच॰।

**स्थानिन्** त्रि॰ स्थानमस्यास्ति रक्ष्यत्वेन इनि। १स्थानरक्षके स्थानं प्रसक्तः अस्त्यर्थे इनि। व्याकरणोक्ते आदिश्यमानस्य यणादेः कारणे इगादौ "स्थानिवदादेशोऽनल्विधाविति" पाणिनिः।

**स्थानीय** न॰ स्थीयतेऽस्मिन् स्था–आधारे अनीयर्। १नगरे अमरः। स्थानं सादृश्यं वासं वाऽर्हति स्थानस्येदम् वा छ। २वासयोग्ये देशे ३सदृशे ४स्थानसम्बन्धिनि च त्रि॰।

**स्थाने** अव्य॰ स्था–ने। १योग्यत्वे २औचित्ये च "स्थाने भवानेकनराधिपः सन्निति" रघुः। ३सत्ये ४सादृश्ये ५कारणार्थे च शब्दर॰।

**स्थापत्य** पु॰ स्थपतिरेव स्वार्थे ष्यञ्। १अन्तःपुररक्षके कञ्चुकिप्रभृतौ अमरः। तस्य भावः ष्यञ्। २स्थपतिधर्मे न॰।

**स्थापक** त्रि॰ स्थापयति स्था–णिच्–पुक् ण्वुल्। यथावस्थानरूपितं तथा निवेशके। स्मृतिस्थापकः।

**स्थापन** न० स्था-णिच्-पुक् ल्युट्। १आरोपणे २पुंसवनाख्ये गर्भसंस्कारे च मेदि०। ३समाधौ। युच्। स्थापनाप्यत्र स्त्री सा च निवेशने वादे भावपक्षस्य प्रमाणादिना व्यवस्थापने च। [ङीप्। पाठायाम् अमरः।

**स्थापनी** स्त्री स्थाप्यतेऽनया स्था-णिच्-पुक् करणे ल्युट्

**स्थापित** त्रि० स्था-णिच्-पुक् क्त। १निश्चिते २निवेशिते ३न्यस्ते च मेदि०।

**स्थामन्** न० स्था—मनिन्। १सामर्थ्ये अमरः २बले च।

**स्थायिन्** त्रि० स्था-णिनि। १स्थितिशीले अलङ्कारोक्ते रसानुकूले रत्यादिभावे पु०। "विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा। रसतामेति रत्यादिः स्थायी भावः सचेतसाम्" "अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः आस्वादाङ्कुरकन्दोऽसौ भावः स्थायीति सम्मतः"। "रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा। जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि च" सा०द०। एते च क्रमेण शृङ्गारादीनां स्थायिभावाः। [अमरः।

**स्थासुक** त्रि० स्था-उकञ्। १स्थितिशीले २एकपाशाधिकृते पु०

**स्थाल** न० स्थलति तिष्ठत्यन्नाद्यत्र आधारे घञ्। (थाल) १अन्नपात्रभेदे। २पाकपात्रे (हाँड़ि) स्त्री अमरः गौरा० ङीष्।

**स्थालीपाक** पु० स्थाल्यां पाकः। गव्यदुग्धेन स्थाल्यां कृते १पाकभेदे। स्थाल्यां पच्यतेऽसौ पच-कर्मणि घञ् २चरौ तत्पाकप्रकारः चरुशब्दे दिङ्मात्रमुक्तः गोभिलोक्तप्रकारः सं०त० दर्शितो यथा

तत्र गोभिलः "अथोदूखलमुसले प्रक्षाल्य शूर्पञ्च पश्चादग्नेः प्रागग्रान् कुशानास्तीर्य्य उपसादयति अथ हविर्निर्वपेदिति। व्रीहीन् यवान् वा कांस्येन चरुस्थाल्या वा अमुष्मै त्वा जुष्टं निर्वपामीति देवतानामोद्देशः सकृद्यजुषा द्विस्तूष्णीम् अथ पश्चादवहन्तुमुपक्रमते दक्षिणोत्तराभ्यां पाणिभ्यां त्रिःफलीकृतांस्तण्डुलांस्त्रिर्देवताभ्यः प्रक्षालयेत् द्विर्मनुष्येभ्यः सकृत् पितृभ्य इति। "पवित्रान्तर्हितांस्तण्डुलानावपेत् कुशान्धश्रूतमिव स्थालीपाकं श्रापयेत् प्रदक्षिणमुदायुवन् श्रृतमभिघार्य्य उदगुद्वास्य प्रत्यभिघारयेदिति" सू०। अस्यार्थः उपसादयति स्थापयति देवतानामोद्देशं देवतानामोच्चारणं यथा स्यात्तथा अमुष्मै त्वा जुष्टं निर्वपामीत्यनेन उदूखलोपरि व्रीह्यादीन् कांस्यादिना सकृन्निर्वपेत्। अत्रामुष्मा इत्यत्र चतुर्थ्यन्तनामोच्चारणम्। अतएव कात्यायनः "अमाविति नाम गृह्णाति"। नारायणीयेऽपि "अदः पदं हि यद्रूपं यत्र मन्त्रे हि दृश्यते। साध्याभिधानं तद्रूपं तत्र स्थाने नियोजयेत्"। अतोऽदः पद एव नामोहो न तु विष्णुपाजपादाविदमित्यादौ। एवञ्चाग्नये त्वा जुष्टं निर्वपामीति सामगानाम् यजुःप्रयोगो गोभिले निर्वापमात्रश्रुतेः यजुर्वेदिकसमन्त्रकावहननप्रोक्षणे सामगेन न कार्य्ये। यजुःपरिभाषामाह जैमिनिः "शेषे यजुःशब्दः इति। शेषे मन्त्रभिन्ने मन्त्रजाते। ततश्च यन्मन्त्रजातं प्रश्लिष्टपठितं मानपादभेदरहितं तद्यजुरिति। बहुदैवत्ये च बहुदेवतानामभिः प्रत्येकं निर्वापः। अत्र निर्वापो मन्त्रेणैव होमोऽपि पृथक्। निर्वापपरिमाणन्तु होमसंख्याविशेषस्यानुसारेणेत्याह छन्दोगपरिशिष्टम् "देवतासंख्यया ग्राह्य निर्वापांश्च पृथक् पृथक्। तूष्णीं द्विरेव गृह्णीयाद्धोमश्चापि पृथक् पृथक्। यावता होमनिर्वृत्तिर्भवेद् वा यत्र कीर्त्तिता। शेषञ्चैव भवेत् किञ्चित्तावन्तं निर्वपेच्चरुम्"। यद्यपि देवतासंख्येति वचनं चरुश्रपणीययोः दृष्टुपक्रम्य पठितं तथाप्याकाङ्क्षावशेन चरुमात्रपरमिति। अवघाते तु विद्याकरवाजपेयी "यत्र प्रयोजनाभावनिश्चयस्तत्रैव तदुपादानादिलोपः। यत्रानुष्ठानवेलायामेव पुरुषक्षेपेण प्रयोजनाभावो ज्ञायते तदा प्राक् तन्निश्चयात् शास्त्रप्रापितः पदार्थो नियमापूर्वमात्रार्थमनुष्ठेय इति। अतएव यदा लाजसक्त्वादिना व्रीह्यादिस्थाने तण्डुला गृहीताः तदापि अवघातादि समाचरन्ति याज्ञिकाः पठन्ति च। "घाते न्यूने तथा छिन्ने साद्गुण्ये मान्त्रिके तथा। यत्रे मन्त्राः प्रयोक्तव्या मन्त्रायत्तार्थसाधकाः"। मान्त्रिके मन्त्रसाध्ये अवघातादौ। न्यूने तत्काले मन्त्रपाठाभावेऽपि अन्यकाले मन्त्राः पाठ्याः। अर्थस्तु मन्त्रार्थज्ञानस्य नास्त्युपयोगः। चरुस्थालीयपरिमाणमाह छन्दोगपरिशिष्टम्। "तिर्य्यगूर्द्ध्वसमिन्मात्रा दृढा नातिहत्यन्मुखी। मृण्मय्यौडुम्बरी वापि चरुस्थाली प्रशस्यते"। गर्भप्रस्तारदीर्घाभ्यां प्रादेशप्रमाणा चरुस्थाली औडुम्बरी ताम्रमती एषा पायसचरावपि न निषिद्धा "पयोऽनुक्तसारञ्च ताम्रपात्रे न दुष्यति" इति स्मृतिसागरधृतवचनाच्च। अतएव शारदातिलके "ततश्च संस्कृते वह्नौ गोक्षीरेण चरुं पचेत्। मन्त्रेण क्षालिते पात्रे नवे ताम्रमयादिके"। दक्षिणोत्तराभ्यामिति दक्षिण उत्तर उपरि ययोः पाण्योस्ताभ्यां सुषवं गृहीत्वा इति शेषः। त्रिःफलीकृतान्

त्रिधा विहूयीकृतान् कण्डनप्रस्फोटनाभ्यामिति शेषः। पवित्रान्तर्हितान् पवित्रम् अन्तर्हितं व्यवहितं येषां तान्। तेन चरुस्थाल्यामुत्तराग्रं पवित्रं निःक्षिप्य तण्डुलान् निक्षिपेत्। कुशलशृतामिवेति कुशलेन पाकनिपुणेन शृतं यथा न दग्धं नातिक्लिन्नं न मन्दपक्वं यथा स्यात्तथा स्थालीपाकं श्रपयेत्। अतएव छन्दोगपरिशिष्टम्। "सुशृतोत्ता चरुः स्निग्धोऽदग्धोऽकठिनः शुभः। न चातिशिथिलः पाक्यो न च वीतरसो भवेत्"। वीतरसोमालितमध्यः। प्रदक्षिणमुदायुवनिति प्रदक्षिणावर्त्तं यथा स्यात्तथा मेक्षणेन उद्वर्त्तनमश्नन्। सु मिश्रणे इत्यस्य रूपमेतत्। शृतमित्यभिघार्य्येति स्फुटितम्। चरुमाज्यमवेक्षाञ्ज्ञाप्य उदगग्नेरुत्तरस्याम् उत्तार्य्य प्रत्यभिघारयेत् पुनः तेन तथा सेचयेत्। दर्शोत्सर्गे तु अभिघारद्वयात् पूर्वं ज्वलदङ्गारेण विद्योतनद्वयमाह छन्दोगपरिशिष्टम् "अधिशृतमवद्योत्य शृत-ञ्चाभिघारयेत्। हुतेन सेचयेत् पश्चात् पुनरेवाभिघारयेत्"। मेक्षणादीन्याह छन्दोगपरिशिष्टम् "इध्म-जातीयमिध्मार्द्धप्रमाणं मेक्षणं भवेत्। वृत्तं चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम्"। इध्मार्द्धप्रमाणं प्रादेशद्वयमिध्मस्य प्रमाणं परिकल्पितमिति तदर्द्धम् एवैव दर्वी विशेषस्तु महाभुवे। "दर्वी द्व्यङ्गुलपृथ्वग्रा तुरीयेण तु मेक्षणम्। मुसलोदूखले वार्क्षे स्वायते दृढे तथा। इच्छाप्रमाणे भवतः शूर्पं वैणवमेव च"। अत्र तिर्य्यगूर्द्ध्वाादि वैणवमेव चेत्यन्तेन चर्वङ्गमभिधाय भूमिजपपरिसमूहनहस्तविन्यासं कुर्य्यादित्युक्तम्"।

स्थाल्यां पाकपात्रे पाकः पच्यमानः। २पाकभाजने पच्यमाने। चातुर्म्मास्यादौ तत्त्यागे फलं ति० त० दर्शितं "लभते सन्ततिं दीर्घां स्थालीपाकमभक्षयन्"।

**स्थालीपुलाक** पु० स्थाल्याः पुलाकास्तण्डुलाः सन्त्यत्र एकधर्मतोज्ञापकत्वेन अच्। मीमांसकोक्ते "स्थाली-स्थास्तण्डुला एते सर्वे विक्लित्तिभागिनः। समकाला-ग्निसंयोगभागित्वात् प्रतिपन्नवत्" इत्यनुमानकल्पके न्यायभेदे यथा एकस्य पाकदर्शनेन अन्येषां पाकज्ञानम् एवं एकरूपाणां सर्वेषामेकधर्म्माक्रान्तत्वमित्येवंरूपोद्भावनम्।

**स्थालीविल** न० द्द्व०। स्थाल्याः शून्यभागे तदर्हति छ यत् वा। स्थालीविलीय (ल्य) तण्डुलादौ त्रि० सि०कौ०।

**स्थालीवृक्ष** पु० स्थाल्यै–वृक्षः। १अश्वत्थाकारे स्थालीनिर्माणसाधने २वृक्षभेदे। "स्थालीवृक्षो लघुः स्वादुस्तुवरस्तिक्त उष्णकः। कटुपाकरसः ग्राही विषपित्तकफापहृत्" भावप्र०

**स्थावर** त्रि० स्था–वरच्। १अचले २स्थिरे दृष्टादौ ३अद्रौ च अमरः। "स्थावरं जङ्गमञ्चैव यद्यपि स्वयमर्जितम्" स्मृतिः। २पर्वते पु० ४धनुर्गुणे न०त्रिका०। स्थावरसर्गश्च षड्विधः सर्गशब्दे ५२५० पृ० दृश्यः। स्थावरधनं च सांसकृष्टे क्रेतरि सति असन्निकृष्टाय न विक्रेयं यथोक्तं महानिर्वा०१२ए०। "स्थावरं धनमन्यस्य स्थिते सान्निध्यवर्त्तिनि। योग्ये क्रेतरि विक्रेतुं न शक्तः स्थावराधिपः। सान्निध्यवर्त्तिनां जातिः सवर्णो वा विशेष्यते। तयोरभावे सुहृदो विक्रेलिप्सा गरीयसी। निर्णीतमूल्ये पण्येन स्थावरस्य क्रयोद्यमे। तन्मूल्यमेव समोपस्थो दाति क्रेता न चापरः। मूल्यं दातुमशक्तश्चेत् समतो विक्रयेऽपि वा। सान्निधिस्थस्तदान्यस्मै स्वक्रीं शक्नोति विक्रये। क्रीतञ्चेत् स्थावरं देवि! परोक्षे प्रतिवासिनः। अवधादेव तन्मूल्यं दत्त्वाऽसौ प्राप्तुमर्हति। क्रेता तत्र गृहारामान् विनिर्माति भुनक्ति वा। मूल्यं दत्त्वाऽपि नाप्नोति स्थावरं सन्निधिस्थितः। "स्थावरे विक्रयो नास्ति कुर्य्यादाधिमनुज्ञया" स्मृतिः। स्थावरस्य केवलविक्रयनिषेधात् विक्रयेऽपि कर्त्तव्ये साहिरण्युदकं दत्त्वा दानरूपेण विक्रयः कर्त्तव्य इति" मिता०। "एकोऽपि स्थावरे कुर्य्यात् दानाधमनविक्रयम्। आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः" स्मृतिः। "संविभागक्रयप्राप्तं पित्र्यं लब्धञ्च वान्यतः। स्थावरं सिद्धिमाप्नोति भुक्त्या, हानिरुपेक्षया"। "सोदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्त्तितम्। विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि" कात्या०। "भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेऽपि च। सा यथाकाममश्नीयात् दद्याद्वा स्थावरादृते" नारदः। "अविभक्तं स्थावरं यत् सर्वेषामेव तद्भवेत्। विभक्तं स्थावरं प्राह्यं नान्योन्यैः कथञ्चन" व्यासः। "सर्वेषां तुल्यरूपाणां सोदरासोदराणामिति" श्रीकृष्णः। [राजनि० २स्थावरप्रभूतौ त्रि०।

**स्थावरादि** पुंन० स्थावरमादिर्हेतुर्वा यस्य। १वत्सनाभविषे

**स्थाविर** न० स्थविरस्य भावः अण्। वृद्धत्वे अमरः। तच्च सप्ततिवर्षोपगमे भवति "आषोडशात् भवेद्बालस्तरुणस्तत उच्यते। वृद्धः स्यात् सप्ततेरूर्ध्वं वर्षीयान् नवतेः परम्" स्मृतिः। [अमरः २जलबुद्बुदे च मेदि०।

**स्थासक** पु० स्था–स–स्वार्थे क। १अलङ्कारे २चार्चिक्ये

**स्थाणु** त्रि०स्था–नु।।स्थितिशीले अमरः "च्युतादिषः स्था-

स्तु रिवाचिरप्रभा भक्तिः २स्थापते भरतः । ३दक्षे भोधरः

**स्थित** त्रि० स्था—क्त । १ऊर्द्ध्वतया दण्डायमाने "स्थितायां स्थानमाचरेः" रघुः । २निश्चले ३प्रतिज्ञायुक्ते मेदि० । ४स्थितिशालिनि च ।

**स्थिति** स्त्री स्था—क्तिन् । १मर्य्यादायां मेदि० २न्याय्यपथावस्थाने अमरः । ३स्थाने च । स्थानभेदे स्थितिनिषेधो यथा "नास्थिभस्मकपालानि न केशान् वा कथञ्चन । तुषाङ्गारकविण्मध्ये नाधितिष्ठेत् कदाचन" कौर्मपु०१५अ० ।

**स्थितिस्थापक** स्थितिं स्थापयति स्था—णिच्—पुक् ण्वुल् । न्यायोक्ते संस्कारविशेषे "संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने" "स्थितिस्थापकसंस्कारः क्षितौ केचित् चतुर्ष्वपि । अतीन्द्रियोऽसौ विज्ञेयः क्वचित् स्पन्देऽपि कारणम्" भाषाप० ।

तल्लक्षणं पृथिवीमात्रसमवेतसंस्कारत्वव्याप्यजातिमत्त्वम् । संस्कारत्वसाक्षाज्जातित्वे तु तद्व्याप्यधर्मवत्त्वम् । तथा च पूर्वसंयोगजनितसंयोगनाशकत्वे सति पूर्वसंयोगसजातीयसंयोगजनकत्वं तत्त्वम् । स च क्रियाविशेषजन्यः क्रियाविशेषजनकः स्वजन्यक्रियानाश्यो गुणविशेषः । अन्यथाकृतस्य पुनस्तदवस्थतया स्थापकः गुणविशेष इत्यन्ये । यथाऽऽकृष्टशाखादीनां त्यागे पुनस्तथावस्थितत्वया यत् स्थापकः । स च अतीन्द्रियः ।

**स्थिर** पु० स्था—किरच् । १पर्वते २देवे ३वृक्षे ४कार्त्तिकेये शब्दर०। ५वनौ ६मोक्षे मेदि०। ७वृषे राजनि०। ८धवद्वक्षे भावप्र०। ज्योतिषोक्तेषु ९वृषसिंहवृश्चिककुम्भराशिषु च । १०कठिने ११निश्चले च त्रि०। १२शालपर्ण्यां स्त्री शब्दच० एवं १३काकोल्यां जटा०१४पृथिव्यां १५माषपर्ण्याञ्च स्त्री अमरः । पृथिव्याः स्थिरत्वं मतभेदेन अचलशब्दे ८२पृ० दर्शितम् । स्थिरतया यद्यत्पदार्थाः पदार्थाः सविकल्प०उक्ता यथा युद्धे प्रधानभटः साध्वीयनः सज्जनमनः । धर्माधर्मौ मनः भोगा सम्पादनभावे तयोर्बहुकालस्थितत्वात् स्थिरत्वम् ।

**स्थिरगन्ध** पु० स्थिरो गन्धो यस्य । १चम्पकवृक्षे २पाटलायां ३केतक्याञ्च स्त्री राजनि०।४स्थिरगन्धयुक्ते द्रव्यमात्रे त्रि०

**स्थिरच्छद** पु० स्थिरच्छदा यस्य । भूर्जपत्रद्रुमे रत्नमा० ।

**स्थिरच्छाय** पु० स्थिरानियताच्छाया यस्य । १वृक्षमात्रे शब्दमा० २छायाप्रधाने वटादौ त्रिका० ।

**स्थिरजिह्व** पु०स्थिरा अचञ्चला जिह्वा यस्य । मत्स्ये हेमच०।

**स्थिरजीविता** स्त्री स्थिरं जीवितमायुर्यस्याः । १शाल्मलीवृक्षे शब्दर० । २चिरजीवने त्रि०।

**स्थिरतर** त्रि० अतिशयेन स्थिरः तरप् । १अत्यन्तस्थिरे अमरः २देवरे पु० ।

**स्थिरदंष्ट्र** पुं स्त्री० स्थिरा दंष्ट्रा यस्य । १सर्पे स्त्रियां ङीप् २वराहाकृतिविष्णौ पु० मेदि० ३ध्वनौ अजयः ।

**स्थिरपत्र** पु० स्थिराणि पत्राण्यस्य । हिन्ताले राजनि० ।

**स्थिरपुष्प** पु० स्थिरं पुष्पमस्य । १चम्पकवृक्षे २बकुलवृक्षे च राजनि० । [कदम्बे राजनि० ।

**स्थिरपुष्पिन्** पु० स्थिरं पुष्पमस्त्यस्य बाहुल्येन इनि । तिल-

**स्थिरमति** स्त्री स्थिरा—मतिः । १स्थिरबुद्धौ स्थिरा मतिर्यस्य । २स्थिरबुद्धियुक्ते त्रि० । "अनिकेतः स्थिरमतिः" गीता ।

**स्थिरयौवन** न०पु० स्थिरं यौवनमस्य । १विद्याधरादौ देवयोनिभेदे त्रिका० २चिरस्थायियौवनयुक्ते त्रि० ।

**स्थिररङ्गा** स्त्री स्थिरो रङ्गो रागो यस्याः । नील्याम् राजनि० । [श्यामाम् राजनि०। २निश्चलरागयुते त्रि० ।

**स्थिररागा** स्त्री स्थिरो रागो रञ्जनं यस्याः । १दारुहरि-

**स्थिरसाधनक** पु० स्थिरं साधयति ण्वु ततः स्वार्थे क । सिन्दुवारवृक्षे राजनि० ।

**स्थिरसार** पु०स्थिरः सारो यस्य । (सेगुन) शाकवृक्षे राजनि०

**स्थिराङ्घ्रिप** पु० कर्म० । हिन्तालवृक्षे राजनि० ।

**स्थिरायुस्** पु० स्थिरमायुर्यस्य । १शाल्मलिवृक्षे अमरः दीर्घकालस्थायित्वात्तस्य तथात्वम् । २चिरजीविनि त्रि० ।

**स्थुड** वरणे तुदा० कुटा० पर० सक० सेट् । स्थुडति अस्थुडीत् तस्थोड । षोपदेश एव न्याय्यः ।

**स्थूणा** स्त्री स्था—नक् उदन्तादेशः पृषो० । (खुँटी) १स्तम्भे "स्थूणावंशेष स्तम्भम्" शाङ्कि० २लौहप्रतिमायाञ्च अमरः

**स्थूणानिखननन्याय** पु०न्यायशब्दोक्ते ४१७ पृ० न्यायभेदे ।

**स्थूर** पु० स्था—उरन् किच्च । १वृषे संक्षिप्तसा० । २मनुष्ये सि० कौ० ।

**स्थूरिन्** पु० स्था—ऊरन् किच्च स्थूरो वृषादिर्भारवाहकः स्थूरोऽस्त्यस्य साहाय्येन इनि । वृषादिवत्पृष्ठेन भारवाहकेऽश्वे खरे च स्थूरस्य भावः ष्यञ् स्थौरं तदस्त्यस्य इनि स्थौरीत्यप्यत्र अमरः ।

**स्थूल** बृंहणे अद० चु० उभ० अक० सेट् । स्थूलयति—ते अतस्थूलत्—त बहुलकत्वान्न षोपदेशः ।

**स्थूल** त्रि० स्थूल—अच् । १पीवरे (मोटा) अमरः २कूटे ३समूहे च न० मेदि० । ४पनसे पु० राजनि० । ५गजपिप्पल्याम् स्त्री शब्दच० । एवं ६एर्वारौ राजनि० । ७इक्षुरेखायाञ्च रत्नमा० स्वार्थे क । पीवरे त्रि० ।

संज्ञायां कन् (उकुड़) हक्षभेदे पु० रत्नमालाकोषः ।

**स्थूलकङ्गु** पु० कर्म० । वरकधान्ये (गोरधान) राजनि० ।

**स्थूलकणा** स्त्री कर्म० । १स्थूलजीरके राजनि० । ६ब० । २पीनकणयुते त्रि० ।

**स्थूलकण्टक** पु० स्थूलः कण्टकोऽस्य । जालवर्बुरे राजनि० कप् अत इत्त्वम् । स्थूलकण्टकिका शाल्मलीवृक्षे स्त्री ।

**स्थूलकण्टा** स्त्री स्थूलः कण्टः कण्टकोऽस्याः । बृहत्याम् राजनि० ।

**स्थूलकन्द** पु० स्थूलः कन्दोऽस्य । १रक्तलशुने २शूरणे ३हस्तिकन्दे ४मानके च राजनि० ।

**स्थूलक्ष्वेड** पु० स्थूलः क्ष्वेड़ो यत्र । वाणे त्रिका० ।

**स्थूलचञ्चु** पु० स्थूला चञ्चुरिव शिखाऽस्य । १महाचञ्चुशाके राजनि० २बृहच्चञ्चुयुते त्रि० ।

**स्थूलजीरक** पु० कर्म० । जीरकभेदे (कालजिरा) भावप्र० ।

**स्थूलताल** पु० कर्म० । हिन्तालं राजनि० ।

**स्थूलत्वचा** स्त्री स्थूला त्वचा यस्य । काश्मर्याम् राजनि० ।

**स्थूलदण्ड** पु० स्थूलो दण्डोऽस्य । देवनले राजनि० । स्थूलनालोऽप्यत्र । [राजनि० ।

**स्थूलदर्भ** पु० स्थूलं दरं दभ्यतेऽनेन दभ-घञ् । मुञ्जे (मुज)

**स्थूलदला** स्त्री स्थूलानि दलानि यस्याः । घृतकुमार्याम् राजनि० ।

**स्थूलनास** पुंस्त्री० स्थूला नासाऽस्य । १शूकरे हेमच० स्त्रियां ङीष् । २बृहन्नासायुते त्रि० स्त्रियां ङीप् । स्त्रियां टाप् स्थूलनासिकोऽप्यत्र ।

**स्थूलपट्ट** पु० स्थूलं पट्टं यस्मात् । कार्पासे शब्दर० तदुत्पन्न-पट्टस्य स्थूलत्वात्तथात्वम् । पृषो० स्थूलपट्टाक तत्रार्थे पु० शब्दर० ।

**स्थूलपाद** पुंस्त्री० स्थूलाः पीनाः पादा यस्य नान्त्यलोपः समा०। १गजे शब्दमा० स्त्रियां ङीष् । ७त०। २श्लीपद-रोगे च ।

**स्थूलपुष्प** पु० स्थूलं पुष्पं यस्य । १वकवृक्षे २पर्वतजातापरा-जितायां स्त्री रत्नमा०। ३यवतिक्तायां स्त्री राजनि० ङीप् ।

**स्थूलफल** पु० स्थूलं फलमस्य । १शाल्मलीवृक्षे राजनि० । २बृहत्फलान्विते त्रि० । ३शणपुष्प्यां स्त्री राजनि० ।

**स्थूलभूत** न० कर्म० । वेदान्तोक्ते प्रत्येकं पञ्चात्मकतापन्ने पृथिव्यादौ भूते ।

**स्थूलमरिच** न० नित्यकर्म० । कक्कोले राजनि० ।

**स्थूलमूल** न० । ६ब० । चाणक्यमूले राजनि० ।

**स्थूललक्ष(क्ष्य)** त्रि० स्थूलं लक्षयति दानाय संलक्षते लक्ष-अच् स्थूलं लक्ष्यं वाऽस्य । बहुदातरि अमरः ।

**स्थूलवर्मकृत्** पु० स्थूलं वर्म करोति कृ-क्विप् । ब्राह्मण-यष्टिकायाम् शब्दर० । [२स्थूलत्वचान्विते त्रि० ।

**स्थूलवल्कल** पु० स्थूलं वल्कलमस्य । १रक्तलोध्रे जटा० ।

**स्थूलवृत्तफल** पु० स्थूलस्य वृत्तस्येव फलमस्य । विष्व-पिण्डीतकवृक्षभेदे (मयना) राजनि० । [राजनि० ।

**स्थूलवैदेही** स्त्री विदेहे भवा अण् कर्म० । गजपिप्पल्याम्

**स्थूलशाटक** पु० कर्म० । स्थूलवस्त्रे अमरः स्थूलशाटिका-दयोऽप्यत्र स्त्री जटा० ।

**स्थूलशालि** पु० कर्म० । महाशालौ राजनि० ।

**स्थूलशीर्षिका** स्त्री स्थूलं शीर्षं यस्याः कप् अत इत्त्वम् । क्षुद्रपिपीलिकायाम् हेमच०। २बृहन्मस्तकयुते त्रि० ।

**स्थूलषट्पद** पु० षट्पद इव स्थूलः राज० । वरटायाम् ।

**स्थूलस्कन्ध** पु० स्थूलः स्कन्धोऽस्य । लकुचे (मान्दार) राजनि० ।

**स्थूलहस्त** न० स्थूलः हस्त इवाकारोऽस्य । गजशुण्डे त्रिका० ।

**स्थूलांशा** स्त्री स्थूलः अंशोऽवयवोऽस्याः । १गजपिप्पल्याम् राजनि० २स्थूलावयवे त्रि० ।

**स्थूलाम्र** पु० कर्म० । आम्रभेदे राजाम्रे राजनि० ।

**स्थूलास्य** पुंस्त्री० स्थूलमास्यं यस्य । १सर्पे शब्दच० स्त्रियां जातित्वेऽपि योपधत्वात् टाप् । २बृहन्मुखयुते त्रि० ।

**स्थूलैरण्ड** पु० कर्म० । वृहदेरण्डवृक्षे राजनि० ।

**स्थूलैला** स्त्री कर्म०। बृहदेलायाम् (वड़ एलाइच) राजनि० ।

**स्थूलोच्चय** पु० स्थूलानामुपलानामुच्चयो यत्र । १गण्डशैले स्थूलस्य गजस्य उच्चयः । २गजमध्यगतौ ३वरटके ४सकल-कल्ये मेदि० ५गजदन्तच्छिद्रे च शब्दमा० ।

**स्थेय** पु० स्थीयते विवादनिर्णायकतयास्मिन् स्था-कर्मणि यत् । विवादे १संशयनिर्णायके (जुरी) २पुरोहिते च मेदि० ३स्थिरे त्रि० हेमच० ।

**स्थेयस्** त्रि० अतिशयेन स्थिरः ईयसुन् स्थादेशः । १स्थिरतरे २शाश्वते त्रि०भरतः । स्त्रियां ङीप् । इष्ठन् स्थेष्ठोऽप्यत्र त्रि० ।

**स्थैर्य** न० स्थिरस्य भावः ष्यञ् । स्थिरतायाम् ।

**स्थौणेय(क)** पु० स्थूणायां तत्समीपे भवः ढक् ढकञ् वा । ग्रन्थिपर्णनामगन्धद्रव्ये (गाठियाला) अमरः । "स्थौणेयकं बर्हिवर्हं शुकबर्हञ्च कुक्कुरम् । शीर्षं रोमशकं चापि शुकपुष्पं शुकच्छदम् । स्थौणेयकं कटु स्वादु तिक्तं स्निग्धं त्रिदोषहृत् । मेधाशुक्रकरं रुच्यं रक्षोऽघ्नं ज्वरजन्तु-जित् । हन्ति कुष्ठास्रदद्रुहृद्रोगान्मुखविस्फोटकान् ।

पर्न्यायपर्णस्यैव भेदो, भक्षिड चर इति नेपालदेशे भवति। निशाचरो धनहरः कितवो गन्धनाशकः। रोचको मधुरस्तिक्तः कटुः पाके कटुर्लघुः। तीक्ष्णो हृद्यो हिमो हन्ति कुष्ठकण्डूकफानिलान्। रक्षोऽश्रीस्वेदमेदोऽसृग्ज्वरगन्धविषव्रणान्" भावप्र०।

**स्थौल्य** न० स्थूलस्य भावः ष्यञ्। पीवरत्वे।

**स्नपन** पु० स्ना-णिच्-पुक् ल्युट्। जलादिनाऽभिषेककरणे

**स्नव** पु० स्नु-भावे अप्। १स्रवणे २क्षरणे च अमरः।

**स्नसा** स्त्री स्नस-निरासे अच्। स्नायौ हेमच०।

**स्नातक** पु० स्ना-भावे क्त स्नानं वेदाध्ययनानन्तरं समावर्त्तनाङ्गस्नानं तदस्यास्ति कन्, कर्त्तरि क्त स्वार्थे क वा। वेदाध्ययनानन्तरं गार्हस्थ्याय कृतसमावर्त्तनाङ्गस्नाने द्विजभेदे तस्य व्रतं मिता० आचाराध्याये दर्शितं यथा "स्नानादारभ्य ब्राह्मणस्यावश्यं कर्त्तव्यानि विधिप्रतिनिषेधकात्मकानि मानससंकल्परूपाणि स्नातकव्रतान्याह "न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः। न विरुद्धप्रसङ्गेन सन्तोषी च भवेत् सदा" याज्ञ०। ब्राह्मणस्य प्रतिग्रहादयोऽर्थप्राप्त्युपाया दर्शिताः। अत्र विशेष उच्यते। स्वाध्यायविरुद्धमर्थमप्रतिषिद्धमपि नेहेत नाभिवाञ्छेत्। न यतस्ततो न यतः कुतश्चिदविदिताचारात्, न विरुद्धप्रसङ्गेन विरुद्धोऽयाज्ययाजनादिप्रसङ्गो नृत्यगीतादि विरुद्धं वा तत्र प्रसङ्गो विरुद्धप्रसङ्गः तेन नार्थमीहेत इति सम्बध्यते। तत्र आवृत्तिः प्रत्येकं पर्युदासार्था। सर्वत्रास्मिन् स्नातकप्रकरणे नञ्शब्दः पर्युदासार्थ एव। किञ्च। "यथालाभेऽपि सन्तोषी परितुष्टो भवेत्। चकारात् संयतश्च "सन्तोषं परमास्थाय सुखार्थी संयतो भवेत्" इति मनुस्मरणात्। कुतस्तर्हि धनमभिवाञ्छेदित्यत आह" मिता० "राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा। दम्भिहैतुकपाषण्डिवकवृत्तींश्च वर्जयेत्" याज्ञ०। "क्षुधा सीदन् पीड्यमानः स्नातको राज्ञो विहितवृत्तान्तादन्तेवासिनो यज्यमानाच्च याज्याद्याजनलाभाच्च धनमाददीत। क्षुधा सीदन्नित्यनेन विभागादिप्राप्तकुटुम्बपोषणपर्य्याप्तधनो न कस्मिन्नर्थमभिवाञ्छेदिति गम्यते। किञ्च। दम्भिहैतुकादीन् सकलकार्य्येषु लौकिकशास्त्रीयेषु वर्जयेत्। लोकरञ्जनार्थमेव कर्मानुष्ठायी दम्भी युक्तिबलेन सर्वत्र संशयकारी हैतुकः त्रैविद्यव्यापरिगृहीताश्रमिणः पाषण्डिनः। वकवदस्य वर्त्तनमिति वकवृत्तिः। यथाह मनुः "अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः। शठो मिथ्याविनीतश्च वकव्रतिचरो द्विजः" इति। प्रतिषिद्धसेविनो विकर्मस्थाः बिडालस्याचारस्तस्य स्वभावो व्रतं यस्यासौ वैडालव्रतिकः "धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदाम्भिकः। वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः" इति मनुस्मरणात्। चकाराद्विकर्मस्थवैडालव्रतिकशठान् यथाह मनुः "पाषण्डिनो विकर्मस्थान् वैडालव्रतिकान् शठान्। हैतुकान् वकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्" इति। शठः सर्वत्र वक्रः। एतैः संसर्गनिषेधादेव स्वयमेवंविधो न भवेदिति गम्यते" मिता०। किञ्च "शुक्लाम्बरधरो नीचकेशश्मश्रुनखः शुचिः। न भार्य्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः" याज्ञ०। "शुक्ले धौते अम्बरे वाससी धारयतीति शुक्लाम्बरधरः। केशाश्च श्मश्रूणि च नखाश्च केशश्मश्रुनखानि नीचं कृत्तं केशश्मश्रुनखं यस्यासौ तथोक्तः शुचिरन्तर्बहिश्च स्नानानुलेपधूपस्रगादिभिः सुगन्धिश्च भवेत्। यथाह गौतमः "स्नातको नित्यं शुचिः सुगन्धिः स्नानशीलः" इति। सुगन्धवत्त्वविधानादेव निर्गन्धमाल्यस्य निषेधः। तथा च गोभिलः "नागन्धां स्रजं धारयेदन्यत्र हिरण्मयस्रजः" इति। "सदा स्नातक एवम्भूतो भवेत्" एतच्च सति सम्भवे "न जीर्णमलवद्वासा भवेच्च विभवे सतीति" मनुस्मरणात्। न च भार्य्यादर्शने तस्यां पुरतोऽवस्थितायां नाश्नीयादवीर्य्यवदपत्योत्पत्तिभयात् तथा च श्रुतिः "जायाया अन्ते नाश्नीयादवीर्य्यवदपत्यं भवति" इत्यतस्तया सह भोजनं दूरादेव निरस्तम्। न चैकवासाः। नापि संस्थितः उत्थितः अश्नीयादिति सम्बध्यते मिता०। "न संशयं प्रपद्येत नाकस्मादप्रियं वदेत्। नाहितं नानृतञ्चैव न स्तेनः स्यान्न वार्द्धुषी" याज्ञ०। "कदाचिदपि संशयं प्राणविपत्तिसंशयावहं कर्म न प्रपद्येत न कुर्य्यात्। यथा व्याघ्रचोराद्युपद्रुतदेशाक्रमणादि। अकस्मान्निःकारणं किञ्चिदपि परुषमप्रियमुद्वेगकारि वाक्यं न वदेत्। न चाहितमनृतं वा प्रियमपि। चकारादसभ्यं बीभत्सकरञ्चाकस्मान्न वदेदिति सम्बध्यते। एतच्च परिहासादिव्यतिरेकेण "गुरुणापि समं हास्यं कर्त्तव्यं कुटिलं विना" इति स्मरणात्। न च स्तेनः अन्यदीयस्यादत्तस्य ग्रहीता स्यात् न वार्द्धुषी स्यात् प्रतिषिद्धवृद्ध्युपजीवी वार्द्धुषी न स्यात्" मिता०। "दाक्षायणी ब्रह्मसूत्री वेणुमान् सकमण्डलुः। कुर्य्यात् प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन्" याज्ञ०। दाक्षायणं सुवर्णं तदस्यास्तीति दाक्षायणी। ब्रह्मसूत्रं यज्ञोपवीतं ब्रह्मा-

स्यौति ब्रह्मचारी वैणवयष्टिमान् कमण्डलुमान् स्यादिति यदिह व्याख्यानीयम्। अत्र ब्रह्मचारिप्रकरणोक्तस्यापि यज्ञोपवीतस्य पुनर्वचनं द्वितीयप्राप्त्यर्थम्। यथाह वशिष्ठः "स्नातकानां द्वितीयं स्यादन्तर्वासस्तथोत्तरम्। यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुः" इति। अत्र च दाम्बायथोति सामान्याभिधानेऽपि कुण्डलधारणमेव कार्य्यम् "वैणवीं धारयेद् यष्टिं सोदकञ्च कमण्डलुम्। यज्ञोपवीतं वेदञ्च शुभे रौक्मे च कुण्डले" इति मनुस्मरणात्। देवं देवप्रतिमां मृदमुद्धृताम्। गां ब्राह्मणं वनस्पतिं चाश्वत्थादिकं प्रदक्षिणं कुर्य्यात् एतान् दक्षिणतः कृत्वा व्रजेत्। एवञ्चतुष्पथादीनपि "मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम्। प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन्" इति मनुस्मरणात् मिता०। "न तु मेहेन्नदीच्छायावर्त्मगोष्ठाम्बुभस्मसु। न प्रत्यग्न्यर्कगोसोमसन्ध्याम्बुस्त्रीद्विजन्मनः" याज्ञ०। "नद्यादिषु न मेहेत् न मूत्रपुरीषोत्सर्गं कुर्य्यात्। एवं श्मशानादावपि यथाह शङ्खः "न गोमयकृष्टोप्तशाद्वलचिति श्मशानवल्मीकखलपर्वतपुलिनेषु मेहेत् भूताधारत्वादिति"। तथाग्न्यादीन् प्रति चन्द्रादीनामभिमुखं न मेहेत्। नाप्येतान् पश्यन् यथाह गौतमः "न वाय्वग्निविप्रादित्यापोदेवतागाश्च प्रति पश्यन् वा मूत्रपुरीषामेध्यानि कुर्य्यान्न देवताः प्रति पादौ प्रसारयेत्"। एतद्व्यतिरेकेण भूमिमयज्ञियैस्तृणैरन्तर्धाय मूत्रपुरीषे कुर्य्यादिति यथाह वशिष्ठः "परिवेष्टितशिरा भूमिमयज्ञियैस्तृणैरन्तर्धाय मूत्रपुरीषे कुर्य्यादिति" मिता०। "नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनाम्। न च मूत्रं पुरीषं वा नाशुचीराहुतारकाः" याज्ञ०। "नेवार्कमीक्षेतेति यद्यपि सामान्येनोक्तं तथापि उद्यास्तमयराहुग्रस्तोदकप्रतिबिम्बमध्याह्नवर्त्तिन एवादित्यस्येक्षणं निषिध्यते न सर्व्वदा। यथोक्तं मनुना "नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन। नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्" इति। उपभोगादन्यत्र नग्नां स्त्रियं नेक्षेत "न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनात्" इत्याश्वलायनः। संसृष्टमैथुनां कृतोपभोगाम्। उपभोगान्ते अनग्नामपि नेक्षेत। चकाराद्भोजनादिकर्म्म चरन्तीम्। तथा च मनुः "नाश्नीयाद् भार्य्यया सार्द्धं नैनामीक्षेत चाश्नतीम्। क्षुवन्तीं जृम्भमाणां वा न चासीनां यथासुखम्। नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्तामनावृताम्। न पश्येत् प्रसवन्तीं च तेजस्कामो द्विजोत्तमः" इति। मूत्रपुरीषे च न पश्येत्। तथा अशुचिः सन् राहुतारकाश्च न पश्येत्। चकारादुदके स्वप्रतिबिम्बम्। "न चोदके निरीक्षेत स्वरूपमिति धारणा" इति वचनात् मिता०। "अयं मे वज्र इत्येवं सर्व्वं मन्त्रमुदीरयन्। वर्षत्यप्रावृतो गच्छेत् स्वपेत् प्रत्यक्शिरा न च" याज्ञ०। वर्षति सति अयं मे वज्रः पाप्मानमपहन्त्विति मन्त्रमुच्चारयन् अप्रावृतोऽनाच्छादितो न गच्छेन्न धावेत् "न प्रधावेच्च वर्षतीति" प्रतिषेधात्। न च प्रत्यक्शिराः स्वप्यात्। चकाराद्नग्नो न शयीत। एकश्च शून्यगृहे। "न च नग्नः शयीतेति" "नैकः स्वप्यात् शून्यगृहे" इति मनुस्मरणात् मिता०। "ष्ठीवनासृक्शकृन्मूत्ररेतांस्यप्सु न निक्षिपेत्। पादौ प्रतापयेन्नाग्नौ न चैनमभिलङ्घयेत्" याज्ञ०। ष्ठीवनं श्लेष्म। असृक् रक्तम्। शकृत् पुरीषं शेषं प्रसिद्धम्। एतान्यप्सु न निक्षिपेत्। नापः पादेन ताडयेत्। एवमशुच्यादीनपि। यथाह शङ्खः "तुषकेशकरीषकपालिकास्थिभस्मलोमान्यप्सु न निक्षिपेत्। न पादेन पाणिना वा जलमभिहन्यादिति"। अग्नौ च पादौ न प्रतापयेत्। नाप्यग्निं लङ्घयेत्। चकारात् ष्ठीवनादग्नौ न क्षिपेत्। मुखोपधमनादि चाग्नेर्न कुर्य्यात् तथा च मनुः "नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम्। नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत्। न चैनं पादतः कुर्य्यान्न प्राणबाधमाचरेत्" इति मिता०। "जलं पिबेन्नाञ्जलिना न शयानं प्रबोधयेत्। नाक्षैः क्रीडेन्न धर्म्मघ्नैर्व्याधितैर्वा न संविशेत्" याज्ञ०। "जलमञ्जलिना संहताभ्यां पाणिभ्यां न पिबेत्। जलग्रहणं पेयमात्रोपलक्षणम्। विद्यादिभिरात्मनोऽधिकं शयानं न प्रबोधयेत् नोत्थापयेत् "श्रेयांसं न प्रबोधयेदिति" विशेषात्। अक्षादिभिर्न क्रीडेत्। धर्म्मघ्नैः पशुलङ्घनादिभिः कर्म्मभिश्च क्रीडेत्। व्याधितैर्ज्वराद्यभिभूतैरेकत्र न संविशेत् न शयीत" मिता०। "विरुद्धं वर्जयेत् कर्म्म प्रेतधूमं नदीतरम्। केशभस्मतुषाङ्गारकपालेषु च संस्थितिम्" याज्ञ०। "जनपदकुलाचारग्रामादिविरुद्धं कर्म्म वर्जयेत्। प्रेतधूमं बाहुभ्यां नदीतरणञ्च वर्जयेदिति सम्बध्यते। केशादिषु संस्थितिं वर्जयेत्। चकारादस्थिकार्पासादिष्वपि च" मिता०। "नाचक्षीत धयन्तीं गां नाद्वारेण विशेत् क्वचित्। न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्त्तिनः" याज्ञ०। "परस्य चोरादि हिंसन्तीं गां परस्मै नाचक्षीत न च निवर्त्तयेत्।

अद्वारेण अपथेन क्वचिदपि नगरे ग्रामे मन्दिरे वा न प्रविशेत्। न त्वपथस्य शास्त्रातिक्रमकारिणो राज्ञः सकाशात् प्रतिगृह्णीयात्" मिता०। "प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः। दुष्टा दशगुणं पूर्व्वात् पूर्व्वादेते यथाक्रमम्" याज्ञ०। प्रतिग्रहेषु साध्येषु सून्यादयः पञ्च पूर्व्वस्मात् पूर्व्वस्मात् परःपरो दशगुणं दुष्टाः। सूना प्राणिहिंसा सा यस्यास्तीति सूनी प्राणिहिंसापरः चक्री तैलिकः। ध्वजी सुराविक्रयी। वेश्या पण्यस्त्री। नराधिपः अनन्तरोक्तः" मिता०।

"देवर्त्विक्स्नातकाचार्य्यराज्ञां छायां परस्त्रियाः। नाक्रमेद्रक्तविण्मूत्रष्ठीवनोद्वर्त्तनादि च" याज्ञ०। "देवानामृत्विक्स्नातकाचार्य्यराज्ञां परस्त्रियाश्च छायां नाक्रामेत् नाधितिष्ठेन्न लङ्घयेद् बुद्धिपूर्व्वकम् यथाह मनुः "देवतानां गुरो राज्ञः स्नातकाचार्य्ययोरपि। नाक्रामेत् कामतश्छायां बभ्रुणो दीक्षितस्य च" इति। बभ्रुणो नकुलवर्णस्य यस्य कस्य चिद्वारन्वस्य वा सोमादेर्बभ्रुण इति नपुंसकलिङ्गनिर्देशात्। रक्तादीनि च नाधितिष्ठेत्। आदिग्रहणात् स्नानोदकादेर्ग्रहणम् "उद्वर्त्तनमपःस्नानं विण्मूत्रं रक्तमेव च। श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत्तु कामतः" इति मिता०। "विप्राहिक्षत्रियात्मानो नावज्ञेयाः कदाचन। आमृत्योः श्रियमाकाङ्क्षेन्न कञ्चिन्मर्म्मणि स्पृशेत्" याज्ञ०। "विप्रो बहुश्रुतोऽहिः सर्पः क्षत्रियो नृपतिः। एते कदाचिदपि नावमन्तव्या आत्मा च स्वयं नावमन्तव्यः। आमृत्योर्यावज्जीवं श्रियमिच्छेन्न कञ्चिन्मर्म्मणि स्पृशेन्न कस्यचिदपि मर्म्म दुश्चरितं प्रकाशयेत्" मिता०। "दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत्। श्रुतिस्मृत्युदितं सम्यक् नित्यमाचारमाचरेत्" याज्ञ०। "भोजनादुच्छिष्टं विण्मूत्रे पादप्रक्षालनजलञ्च गृहाद्दूरात् समुत्सृजेत्। श्रौतं स्मार्त्तं चाचारं नित्यं सम्यगनुतिष्ठेत्" मिता०। "गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत्। न निन्दाताडने कुर्य्यात् पुत्त्रं शिष्यं च ताडयेत्" याज्ञ०। गां ब्राह्मणमग्निमन्नमदनीयं विशेषतः पक्वमशुचिर्न स्पृशेत्। पादेन त्वनुच्छिष्टोऽपि "यदा पुनः प्रमादात् स्पृशति तदाचमनोत्तरकालं मनूक्तं कार्य्यम् "स्पृष्ट्वैतानशुचिर्नित्यमद्भिः प्राणानुपस्पृशेत्। गात्राणि चैव सर्व्वाणि नाभिं पाणितलेन तु" इति एवं प्राणादीनुपस्पृशेत्। कस्यचिदपि निन्दाताडने न कुर्य्यात्। एतच्चानपकारिषु "अयुध्यमानस्योत्पाद्य ब्राह्मणस्याङ्गमन्ततः। दुःखं सुमहदाप्नोति प्रेत्याप्राज्ञतया नरः" इति। पुत्त्रशिष्यौ शिक्षार्थमेव ताडयेत्। चकाराद्दासादीनपि। ताडनञ्च रज्ज्वादिनोत्तमाङ्गव्यतिरेकेण कार्य्यम् "शिष्यशिष्टिरवधेनाशक्तौ रज्जुवेणुदलाभ्यां तनुभ्यामन्येन घ्नन् राज्ञा शास्यः" इति गौतमवचनात्। "पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन" इति मनुवचनात्" मिता०। "कर्म्मणा मनसा वाचा यत्नाद्धर्म्मं समाचरेत्। अस्वर्ग्यं लोकविद्विष्टं धर्म्ममप्याचरेन्न तु" याज्ञ०। कर्म्मणा कायेन यथाशक्ति धर्म्ममनुतिष्ठेत्। तमेव मनसा ध्यायेत्। वाचा वदेत्। धर्म्मं विहितमपि लोकविद्विष्टं लोकाभिशस्तिजनकं मधुपर्के गोवधादिकं नाचरेत्। यस्मादस्वर्ग्यमग्नीषोमीयवत् स्वर्गसाधनं न भवति" मिता०। "मातृपित्रतिथिभ्रातृजामिसम्बन्धिमातुलैः। वृद्धबालातुराचार्य्यवैद्यसंश्रितबान्धवैः। ऋत्विक्पुरोहितापत्यभार्य्यादाससनाभिभिः। विवादं वर्ज्जयित्वा तु सर्व्वाँल्लोकाञ्जयेद्गृही" याज्ञ०। माता जननी। पिता जनकः। अतिथिरध्वनीनः। भ्रातरो भिन्नोदरा अपि। जामयो विद्यमानभर्त्तृकाः स्त्रियः। सम्बन्धिनो वैवाह्याः। मातुलो मातृभ्राता। वृद्धः सप्तत्युत्तरवयस्कः। बालः आषोडशवर्षात्। आतुरो रोगी। आचार्य्य उपनेता। वैद्यो विद्वान् भिषग्वा। संश्रित उपजीवी। बान्धवाः पितृपक्षा मातृपक्षाश्च। मातुलस्य पृथगुपादानम् आदरार्थम्। ऋत्विग्याजकः। पुरोहितः शान्त्यादेः कर्त्ता। अपत्यं पुत्त्रादि। भार्य्या सहधर्म्मचारिणी। दासः कर्म्मकरः। सनाभयः सोदराः भ्रातरः। तेभ्यः पृथगुपादनं अजामिभगिनीप्राप्त्यर्थम्। एतैर्मात्रादिभिः सह वाक्कलहं परित्यज्य सर्व्वान् प्राजापत्यादीन् लोकान् प्राप्नोति"। "पञ्चपिण्डाननुद्धृत्य न स्नायात् परवारिषु। स्नायान्नदीदेवखातह्रदप्रस्रवणेषु च" याज्ञ०। परवारिषु परसम्बन्धिषु सर्व्वसत्त्वोद्देशेन त्यक्तेषु तडागादिषु पञ्चपिण्डाननुद्धृत्य न स्नायात्। अनेनात्मीयोत्सृष्टाभ्यनुज्ञातेषु पिण्डोद्धरणमन्तरेणापि स्नानमभ्यनुज्ञातम्। नद्यादिषु कथं तत्राह स्नायान्नदीति। साक्षात् परम्परया वा समुद्रगाः स्रवन्त्यो नद्यः। देवखातं देवनिर्म्मितं पुष्करादि। उदकप्रवाहाभिघातकृतजलो महानिम्नप्रदेशो ह्रदः। पर्व्वताद्युच्चप्रदेशात् प्रस्रुतम् उदकं प्रस्रवणं एतेषु पञ्चपिण्डोद्धरणेनैव स्नायात्। एतच्च नित्यस्नानविषयम् सति सम्भवे

“नदीषु देवखातेषु तडागेषु सरःसु च । स्नानं समाचरे-
न्नित्यं गर्त्तप्रस्रवणेषु च” इति नारदस्मरणात् । शौचा-
द्यर्थन्तु यथासम्भवं परकीयेषु पिण्डानुद्धरणेऽपि सर्वस्य
न निषेधः” मिता० । “परशय्यासनोद्यानगृहयानानि
वर्जयेत् । अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि” याज्ञ० ।
शय्या कशिपुः । आसनं पीठादि । उद्यानमाम्र-
वणादि । गृहं प्रसिद्धम् । यानं रथादि परसम्बन्धीन्ये-
तान्यदत्तान्यननुज्ञातानि वर्जयेन्नोपभुञ्जीत । अभो-
ज्यान्नान्याह । अग्निहीनस्येति । श्रौतस्मार्त्ताग्न्यधि-
काररहितस्य शूद्रस्य प्रतिलोमजस्य चाधिकारवतोऽप्यग्नि-
रहितस्यान्नमनापदि न भुञ्जीत न प्रतिगृह्णीयाच्च ।
“तस्मात् प्रशस्तानां स्वकर्मणा शूद्रजातीनां ब्राह्मणो
भुञ्जीत गृह्णीयाच्चेति” गौतमवचनात्” मिता० । “कदर्य-
बद्धचौराणां क्लीवरङ्गावतारिणाम् । वैणाभिशस्तवार्द्धुष्य-
गणिकागणदीक्षिणाम्” याज्ञ० । कदर्यो लुब्धः “आत्मानं
धर्मकृत्यञ्च पुत्रदारांश्च पीडयेत् । लोभाद् यः पितरौ
भृत्यान् स कदर्य इति स्मृतः” इत्युक्तः । बद्धो निगडा-
दिना बाधो बन्दिरुद्धश्च । चौरो ब्राह्मणसुवर्णव्य-
तिरिक्तपरस्वापहारी । क्लीबो नपुंसकः । रङ्गावतारी
नटचारणमल्लादिः । वेणुच्छेदजीवी वैणः । अभिशस्तः
पतनीयैः कर्मभिरभियुक्तः । वार्द्धुष्यो निषिद्धवृद्ध्युप-
जीवी । गणिका पण्यस्त्री गणदीक्षी बहुयाजकः । एते-
षामन्नं नाश्नीयादित्यनुवर्त्तते” मिता० । “चिकित्सकातुरक्रुद्ध-
पुंश्चलीमत्तविद्विषाम् । क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्ट-
भोजिनाम्” याज्ञ० । “चिकित्सकोऽभिषग्वृत्त्युपजीवी ।
आतुरो महारोगोपसृष्टः । “वातव्याध्यश्मरीकुष्ठमे-
होदरभगन्दराः । अर्शांसि ग्रहणीत्यष्टौ महारोगाः
प्रकीर्त्तिताः” इति । क्रुद्धः कुपितः । पुंश्चली व्यभि-
चारिणी । मत्तो विद्यादिना गर्वितः । विद्विट् शत्रुः ।
क्रूरो दृढाभ्यन्तरकोपः । वाक्कायव्यापारेणोद्वेजकः
उग्रः । पतितो ब्रह्महादिः । व्रात्यः पतितसावि-
त्रीकः । दाम्भिको वञ्चकः । उच्छिष्टभोजी परभुक्तोज्झि-
ताशी । एतेषाञ्चिकित्सकादीनामन्नं नाश्नीयात्” मिता० ।
“अवीरास्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम् । शस्त्र-
विक्रयकर्मारतन्तुवायश्ववृत्तिनाम्” याज्ञ० । “अवीरास्त्री स्व-
तन्त्रा अभिचारमन्त्रैर्वापि । पतिपुत्ररहितेत्यन्ये ।
स्वर्णकारः सुवर्णस्य विकारान्तरकृत् । स्त्रीजितः सर्वत्र
स्त्रीवशवर्त्ती । ग्रामयाजी ग्रामस्य शान्त्यादिकर्त्ता बहूना-
मुपनेता च । शस्त्रविक्रयी शस्त्रविक्रयोपजीवी । कर्मारो
लोहकारः तक्षादिश्च । तन्तुवायः सूचीशिल्पोपजीवी ।
श्ववृत्तिः जीवनमस्यास्तीति श्ववृत्ती । एतेषामन्नं ना-
श्नीयात्” मिता० । “नृशंसराजरजककृतघ्नवधजीविनाम् ।
चैलधावसुराजीवसहोपपतिवेश्मनाम् । पिशुनानृतिनो-
श्चैव तथा चाक्रिकवन्दिनाम् । एषामन्नं न भोक्तव्यं
सोमविक्रयिणस्तथा” याज्ञ० । “नृशंसो निर्दयः । राजा
भूपतिः । तत्साहचर्यात् पुरोहितश्च । यथाह शङ्खः
‘भीतावगीतरुदिताक्रन्दितावघुष्टक्षुधितपरिभुक्तविस्मितो-
न्मत्तावधूतराजपुरोहितान्नानि वर्जयेत्’” । रजको वस्त्रा-
दीनां नीलादिरागकारकः । कृतघ्न उपकृतस्य हन्ता ।
वधजीवी प्राणिनां वधेन वर्त्तकः । सुराजीवी मद्यवि-
क्रयजीवी । उपपतिजारः सहोपपतिना वेश्म यस्यासौ
सहोपपतिवेश्मा । पिशुनः परदोषस्य ख्यापकः । अ-
नृती मिथ्यावादी । चाक्रिकस्तैलिकः । शाकटिकस्त्वित्येके
“अभिशस्तपतितचाक्रिकतैलिक” इति भेदेनाभिधानात् ।
वन्दिनः स्तावकाः सोमविक्रयी सोमलताया विक्रेता ।
एतेषामन्नं न भोक्तव्यम् । सर्वे चैते कदर्यादयो द्विजा
एव कदर्यत्वादिदोषदुष्टा अभोज्यान्ना इतरेषां प्राप्त्य-
भावात् प्राप्तिपूर्वकत्वाच्च प्रतिषेधस्य । अग्निहीनस्य नान्न-
मद्यादनापदीत्यत्र शूद्रस्याभोज्यान्नत्वमुक्तम् । तत्र प्रति-
प्रसवमाह” मिता० । “शूद्रेषु दासगोपालकुलमित्रार्द्धसी-
रिणः । भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत्” याज्ञ० ।
“दासा गर्भदासादयः गोपालो गवां पालकः गवां पाल-
नेन यो जीवति । कुलमित्रं पितृपितामहादिक्रमागतः ।
अर्द्धसीरी हलपर्याय सीरोपलक्षितकृषिफलभागग्राही ।
नापितः गृहव्यापारकारयिता नापितश्च । यश्च वाङ्-
मनःकायकर्मभिरात्मानं निवेदयति तवाहमिति । एते
दासादयः शूद्राणां मध्ये भोज्यान्नाः । चकारात् कुम्भ-
कारश्च । “गोपनापितकुम्भकारकुलमित्रार्द्धकनिवेदिता-
त्मानो भोज्यान्ना” इति वचनात् ।

स्नातकश्च त्रिविधः व्रतस्नातकः विद्यास्नातकः उभय-
स्नातकश्चेति भेदात् । तत्र विहितकालपर्य्यन्तं ब्रह्मचर्य्यं
कृत्वा वेदमसमाप्यैव व्रतकालोत्तरं कृतसमावर्त्तन आद्यः ।
विहितकालमध्येऽपि वेदविद्यां लब्ध्वा स्नातो द्वितीयः ।
विहितकालपर्य्यन्तं ब्रह्मचर्य्यं कृत्वा वेदमपि लब्ध्वा तं
तत्रैव तत्कालोत्तरं कृतस्नानस्तृतीयः ।

**स्नातकव्रत** न० ६त० । स्नातककर्त्तव्ये स्मृत्युक्ते व्रतभेदे

"अलाभे चैव कन्यायाः स्नातकव्रतमाचरेत्" स्मृतिः ।

**स्नान** न० स्ना–भावे ल्युट् । १शोधने २अवगाहने ३मज्जने च तच्च मन्त्रादिकारणभेदादष्टविधं आ० त० तत्प्रकारभेदादिकं च दर्शितं यथा

"दक्षः "चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत् । तिलपुष्पकुशादीनि स्नानार्थञ्चाकृत्रिमे जले" । कुर्य्यादिति शेषः । तथा च "अस्नात्वा चाप्यहुत्वा च भुङ्क्तेऽदत्त्वा च यो नरः । देवादीनामृणी भूत्वा नरकं प्रतिपद्यते" । "अस्नात्वा नाचरेत् कर्म जपहोमादि किञ्चन । लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान् । अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः । स्रवत्येव दिवारात्रौ प्रातःस्नानं विशोधनम् । प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टफलं हि तत् । सर्वमर्हति पूतात्मा प्रातःस्नायी जपादिकम् । अज्ञानाद् यदि वा मोहात् रात्रौ दुश्चरितं कृतम् । प्रातःस्नानेन तत् सर्वं शोधयन्ति द्विजातयः" । दृष्टं मलापकर्षादि अदृष्टं प्रत्यवायपरीहारादि। प्रातः सूर्य्योदयात् प्राक्कालः "प्रातः स्यादरुणकिरणग्रस्तां प्राचीमवलोक्य स्नायात्" इति विष्णूक्तेः । प्रातःस्नाने मध्याह्नस्नानधर्मातिदेशमाह कात्यायनः "यथाहनि तथाप्रातर्नित्यं स्नायादनातुरः । दन्तान् प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत्" । यथा तथेतिकर्त्तव्यतया । सा च "आचरेदुषसि स्नानं तर्पयेद्देवमानुषान्" इति आवाल्युक्ता । वैदिके कर्मणि वामहस्ते बहुतरकुशान् दक्षिणेन पवित्रं धारयेत् । तथा च छन्दोगपरिशिष्टम् "स्रुवाः प्रचरणीयाः स्युः कुशा दीर्घाश्च बर्हिषः । दर्भाः पवित्रमित्युक्तमतः सन्ध्यादिकर्मसु । सव्यः सोपग्रहः कार्य्यो दक्षिणः सपवित्रकः" । प्रचरणीयाः पार्वणपक्षयज्ञादिकर्मानुष्ठानार्हाः । बर्हिषः यज्ञाद्यास्तरणार्थाः । यतस्तत्तत्कर्मसु कुशविशेषा उक्ताः । अतः सन्ध्यादिकर्मसु अवस्थाविशेषशून्याः कुशाः पवित्रम् । सोपग्रहः बहुतरकुशयुक्तः सपवित्रको विशिष्टद्विदलयुक्तः । विशेषमाह स एव "अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" । अनन्तर्गर्भिणं अन्तर्गर्भशून्यम् । तथा च शौनकः "अनन्तर्गर्भिणौ द्वौ तु कुशौ प्रादेशसम्मितौ । अनखच्छेदिनौ साग्रौ तौ पवित्राभिधायकौ" । "एतदभावे कुशपत्रचतुष्टयं त्रयं वा मत्कृतहरकृतवचनात् । तद्यथा "चतुर्भिर्दर्भपत्रैश्च त्रिभिर्द्वाभ्यामथापि वा । पवित्रं कारयेन्नित्यं प्रशस्तं सर्वकर्मसु" । विद्याकरवाजपेयिधृतम् "पवित्रन्तु द्विजः कुर्य्यात् कुशपत्रद्वयेन वा । पत्रत्रयेण वा कार्य्यं नैकपत्रेण कुत्रचित्" । एतद्दर्शनात् दर्भाःपवित्रमित्यत्रैकवचनमपि व्याख्येयम् मार्कण्डेयः "सर्वकालं तिलैः स्नानं पुण्यं व्यासोऽब्रवीन्मुनिः । श्रीकामः सर्वदा स्नानं कुर्वीतामलकैर्नरः । सप्तमीं नवमीञ्चैव पर्वकालञ्च वर्जयेत्" । विष्णुधर्मोत्तरे "त्वराक्रोधौ तथा रुक्षौ देवकर्माणि पाण्डुतैः । इक्षुरापः पयश्चैव ताम्बूलं फलमौषधम् । भक्षयित्वा तु कर्त्तव्याः स्नानदानादिकाः क्रियाः" । भविष्योत्तरे "स्नातस्तु वरुणस्तेजो जुह्वतोऽग्निः श्रियं हरेत् । भुञ्जानस्य यमस्त्वायुस्तस्मान्न व्याहरेत् त्रिषु" । स्नातः स्नानं कुर्वतः । अशुचेरवगाहनानन्तरं स्नानमाह योगियाज्ञवल्क्यः "तूष्णीमेवावगाहेत यदा चेदशुचिर्नरः । आचम्य तु ततः पश्चात् स्नानं विधिवदाचरेत्" । वामनपुराणम् "नाभिमात्रजले गत्वा कृत्वा केशान् द्विधा द्विजः । निरुध्य कर्णौ नासाञ्च शिरःकृत्वो मज्जनं ततः" । तत्रैव वृद्धयाज्ञवल्क्यः "स्रोतसां सम्मुखो मज्जेत् यत्रापः प्रवहन्ति वै । स्थावरेषु स्थले चैव सूर्य्यसम्मुख आप्लवेत्" । हारीतः "नातुरो न भुक्त्वा न जीर्णवासा न बहुवासा न नग्नो नाम्नन् नावसक्थिको नाकण्ठो नाजस्रं नाज्ञाते जले नाकुले नाशुचौ न प्रभूतजले न नाभेरल्पजले न चत्वरे नोपद्वारे न सन्ध्यायां न निशायां स्नायादिति" । चत्वरे काकादिवर्त्तिस्थले इति श्रीदत्तः । उपद्वारे द्वारसमीपे । अत्रैकेन मुनिना नग्नबहुवाससोर्निषेधस्याभिधानात् स्नाने द्विवासस एवाधिकारः प्रतीयते । एकवस्त्रस्नाने दोषमाह मत्कृतहरधृतभविष्ये मोतमः "एकवस्त्रेण यत्स्नानं मूर्च्छा विहीन चैव हि । स्नातस्तु न भवेत् शुद्धः श्रिया च परिहीयते" । अतएव "स्नानं तर्पणपर्य्यन्तं कुर्य्यादेकेन वाससा" इति यदि समूलं तदा प्रेततर्पणपरमिति "तत्रैकवस्त्रा स्नातयः" इत्यादिना एकवस्त्रत्वविधानात् । "एकेन एकजातीयेन" इति वाचस्पतिमिश्राः । "येन वाससा स्नानं कृतं जलस्थस्य तेनैव तर्पणम्" इति कृत्यतत्त्वार्णवः । न च "स्नानशाट्यान्तु दातव्या स्थदसिक्तो विशुद्धये । जलमध्ये तु यः कश्चित् द्विजातिश्चानिदुर्वलः । निष्पीडयति यद्वस्त्रं स्नानं तस्य वृथा भवेत्" इति वशिष्ठवचने स्नानशाट्यामिति तद्वस्त्रमिति एकवचननिर्देशेन च स्नानेऽप्येकवस्त्रत्वमिति

वाच्यम् अत्र विशुद्धय इत्यभिधानेनाधोधृतवस्त्रस्यैव अन्तरेण प्रक्षालनं नतूत्तरीयस्य एतदर्थमेकवचनम् । अतएव “अन्तरेणाधरीयवस्त्र” प्रक्षाल्यं वशिष्ठवचनैकवाक्यतया । इत्याह्निकचिन्तामणिः । “स्नातो नाङ्गानि निर्मृज्यात् स्नानशाट्या न पाणिना” इति विष्णुपुराणीयेनाधरीयवस्त्रस्यैव गात्रमार्जनं निषिध्यते । “एतेन निष्पीड्य स्नानवस्त्रमिति”कात्यायनवचने एकत्वमविवक्षितमिति निरस्तम् । अतएव सर्वत्रैकत्वं निर्दिष्टम् । शिष्टानाम् आचारोऽपि तथा इति । “नाजस्रमिति पुनः पुनः स्नाननिषेधः रागप्राप्तस्नानविषयो दृष्टार्थकत्वात् । एवञ्चैकस्मिन् दिने नानातीर्थादिनिमित्तप्राप्तस्नानावृत्तिर्भवत्येव वैधत्वात् । अत्रापि तन्त्रप्रसङ्गयोः सत्त्वे बहुदेवेति । अहः स्नानप्रधानकालमाह दक्षः “चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत् । तिलपुष्पकुशादीनि स्नानं चाकृत्रिमे जले”। विष्णुः “कुशाभावे कुशस्थाने काशं दूर्वां वा दद्यादिति विद्याकरधृतम् “तर्जनी रूप्यसंयुक्ता हेमयुक्ता त्वनामिका । कैव युक्ता तु दर्भेण कार्य्या विप्रेण सर्व्वदा” । मत्स्यसूक्ते “प्रशस्ताः स्वमूला दर्भाः शुष्केन चाधिकं फलम् । सव्यः गोपुच्छः कार्य्यो दक्षिणः सपवित्रकः” इति रोगिणस्त्वाण्डालादिस्पर्शेऽपि न दोषायेत्याह रत्नाकरे बृहस्पतिः “तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे । नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति । आपद्यपि च कष्टायां सद्यभये पीड़ने सदा । मातापित्रोर्गुरोश्चैव निर्देशे वर्त्तने तथा” । स्पृष्टास्पृष्टीत्यव्ययम् क्रियाव्यतिहारे । तथेति न दुष्यतीत्यर्थः । गारुड़े “सर्व्वतीर्थाभिषेकाद्धि पवित्रं विदुषां वचः । धर्म्मश्रवणवेलायां विप्रो व्याससमः स्थितः” । तथाविधातुरं प्रति जाबालिः “अशिरस्कं भवेत् स्नानं स्नानाशक्तौ तु कर्म्मिणाम् । आर्द्रेण वाससा वापि देहस्य मार्जनं स्मृतम्” कर्म्मिणाम् “शिरः स्नातस्तु कुर्व्वीत दैवं पैत्रमथापि वा” इति मार्कण्डेयपुराणोक्तकर्म्म चिकीर्षूणां मार्जनमिह प्रोक्षणं, योगियाज्ञवल्क्यः “असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया । मान्त्रस्नानादितः सप्त केचिदिच्छन्ति सूरयः । मान्त्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च । वारुणं मानसञ्चैव सप्त स्नानं प्रकीर्त्तितम् । “आपो हिष्ठेति” वै मान्त्रं मृदालम्भस्तु पार्थिवम् । आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् । यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते । वारुणञ्चावगाहस्तु मानसं विष्णुचिन्तनम् । समस्तं स्नानमुद्दिष्टं मन्त्रस्नानक्रमेण तु । कालदोषादसामर्थ्यात् सर्व्वं तस्य फलं स्मृतम्” । आपो हिष्ठेति आपो हिष्ठादि ऋक्त्रयमत्र विवक्षितम् । एतच्च “कालदोषादसामर्थ्यात् न शक्नोति यदाम्भसि । तदा स्नात्वा तु ऋग्भिर्मन्त्रैरेतैस्तु मार्जनम् । शन्न आपस्तु द्रुपदा२ आपो हिष्ठा३ऽघमर्षणम्४ । एभिश्चतुर्भिः ऋङ्मन्त्रैर्मन्त्रस्नानमुदाहृतम् । इति योगियाज्ञवल्कीयं मन्त्रस्नानान्तरं तत् प्राधान्यख्यापनाय । अतएव पितृदयितायां सन्ध्यातः पूर्व्वं तल्लिखितम् । मृदालम्भस्तु मृत्तिकाभितिलकरूपः । भस्मना संस्कृतभस्मना इति छन्दोमाह्निकः । अवगाहञ्च मन्त्राद्युक्तमुख्यावगाहनमात्रं विवक्षितम् अतो मुख्यावगाहनरूपस्नानानुकल्पमयुक्तम् । कालदोषोऽतिरुग्णादिः असामर्थ्यं शरीरापाटवहेतुः अनुकल्पेन सम्पूर्णवारुणस्नानविधिकार्य्यायोग्यत्वं वेति । एतन्मूलकं “गेहे चेत्तदमन्त्रवदिति” छन्दोगपरिशिष्टीयं प्रागुक्तम् अन्यथा मूलभूतस्नानान्तरकल्पनापत्तेः सामर्थ्ये तूष्णजलेनापि समन्त्रकस्नानमाह पराशरभाष्ये व्यासः “शीतास्वप्सु निक्षिप्योष्णा मन्त्रसम्भारसंस्कृताः । गेहेऽपि शस्यते स्नानं तद्धीनमफलं स्मृतम्” । पद्मपुराणम् “नैर्म्मल्यं भावशुद्धिश्च विना स्नानं न जायते । तस्मान्मनोविशुद्ध्यर्थं स्नानमादौ विधीयते । अनुद्धृतैरुद्धृतैर्वा जलैः स्नानं समाचरेत् । तीर्थं प्रकल्पयेद्विद्वान् मूलमन्त्रेण मन्त्रवित् । नमो नारायणायेति मूलमन्त्र उदाहृतः । दर्भपाणिस्तु विधिना आचान्तः प्रयतः शुचिः । चतुर्हस्तसमायुक्तं चतुरस्रं समन्ततः । प्रकल्प्यावाहयेद्गङ्गां एभिर्मन्त्रैर्विचक्षणः” । काशीख० अन्यप्रकारो दर्शितो यथा

“प्रातःस्नानं चरित्वाथ शुद्धे तीर्थे विशेषतः । प्रातःस्नानाद् यतः शुद्ध्येत् कायोऽयं मलिनः सदा । छिद्रितो नवभिश्छिद्रैः स्रवत्येव दिवानिशम् । उत्साहमेधासौभाग्यरूपसम्पत्प्रवर्त्तकम् । मनःप्रसन्नताहेतुः प्रातःस्नानं विशिष्यते । प्रस्वेदलालाद्याक्लिन्नो निद्राधीनो यतो नरः । प्रातःस्नानात्ततोऽर्हः स्यान्मन्त्रस्तोत्रजपादिषु । प्रातः प्रातस्तु यः स्नानं संजाते चारुणोदये । प्राजापत्यसमं प्राहुस्तन्महापापविघातकृत् । प्रातःस्नानं हरेत् पापमलक्ष्मीं ग्लानिमेव च । अशुचित्वञ्च दुःस्वप्नं तुष्टिं पुष्टिं प्रयच्छति । नोपसर्पन्ति वै दुष्टाः प्रातःस्नायिजनं क्वचित् । दृष्टादृष्टफलं तस्मात् प्रातः-

स्नानं समाचरेत्। प्रवक्ष्यतः स्नानविधिं वक्ष्यामि भवतो नृप!। विधिस्नानं यतः प्राहुः स्नानाच्छतगुणोत्तरम्। विशुद्धां मृदमादाय बर्हींषि तिलगोमयम्। शुचौ देशे परिस्थाप्य चाचम्य स्नानमाचरेत्। उपस्पृही बद्धशिखो जलमध्ये समाविशेत्। उरुंहीति मन्त्रेण तोयमावर्त्य संस्पृशेत्। ये ते शतं ततो जप्यात् तोयस्याभिमन्त्रणाय च। सुमित्रायानो मन्त्रेण पूर्वं कृत्वा जलाञ्जलिम्। चिपेद् द्वेष्यं समुद्दिश्य जपन् दुर्मित्रिया इति। इदं विष्णुरिदं जप्त्वा लिम्पेदङ्गानि मृन्मया। मृदैकया शिरः चाल्यं द्वाभ्यां नाभेस्तथोपरि। नाभेरधस्तु तिसृभिः पादौ षड्भिर्विशोधयेत्। मज्जेत् प्रवाहाभिमुख आपो अस्मानिमं जपन्। उदिदाभ्यः शुचिरिति मन्त्र उन्मज्जने स्मृतः। मानस्तोकमिमं जप्त्वा लिम्पेद्गात्राणि गोमयैः। इमं मे वरुणेत्यादिमन्त्रैः स्नात्वाभिषेचनम्। तत्त्वा यामि तथा त्वन्नः स त्वन्नः सोऽप्युदुत्तमम्। धाम्नोधाम्नस्तथामापो मौषधीरिति संजपेत्। यदा दुरन्नरा मुञ्चन्तु मेतिमावभृथेनेति च। अष्टावेता इमे मन्त्राः प्रोक्ताः स्नात्वाभिषेचने। प्रणवेन ततो विप्रो महाव्याहृतिभिस्ततः। आत्मानं पावयेद्विद्वान् गायत्र्या च ततः कृती। आपो हिष्ठेति तिसृभिः प्रत्यृचं पावनं स्मृतम्। एते वै पावना मन्त्रा इदमापोहविष्मती। देवीराप आपो देवा द्रुपदादिवसन्तकः। शन्नो देवी रपो देवीरप्सु मर्यमित्यपि। पुनर्नमेति च नव पावमान्यः प्रकीर्त्तिताः। ततोऽघमर्षणं जपत्वा द्रुपदां च ततो जपेत्। प्राणायामं च विधिवदथ वान्तर्जलं जपेत्। प्रणवं त्रिर्जपेद्वापि विष्णुं वा संस्मरेत् सुधीः। स्नात्वैवं वाससापोह्य स्त्वद्वीयाद्धौतवाससी"।

**स्नानतृण** न० स्नानार्थं तृणम्। कुशे शब्दर०।

**स्नानीय** त्रि० स्नानाय हितम् छ। स्नानसाधने तैलोद्वर्त्तनादौ

**स्नायु** स्त्री स्नाति—शुध्यति दोषोऽनया स्ना उण्। शरीरादिबन्धननाड़ीभेदे तत्स्वरूपसंख्यादि भावप्र० उक्तं यथा "तत्र स्नायोः स्वरूपमाह। मेदसः स्नेहमादाय सिरा स्नायुत्वमाप्नुयात्। सिराणां हि मृदुः पाकः स्नायूनान्तु ततः खरः। स्नायवो बन्धनानि स्युर्देहमांसास्थिमेदसाम्। सन्धीनामपि मतास्तु सिराभ्यः सुदृढाः स्मृताः। नौर्यथा फलकास्तीर्णा बन्धने बहुभिर्युता। निर्सक्ताऽगाधसलिले भवेद्भारसहा भृशम्। एवमेव शरीरेऽस्मिन् यावन्तः सन्धयः स्मृताः। स्नायुभिर्बहुभिर्बद्धा स्तेन भारसहा नराः"। फलके काष्ठखण्डैः आस्तीर्णा व्याप्ता। "शतानि नव जायन्ते शरीरे स्नायवो नृणाम्। तासां विवरणं ब्रूमः शिष्याः शृणुत यत्नतः। शाखासु षट्शतानि स्युः कोष्ठे त्रिंशत् शतद्वयम्। ग्रीवायां मूर्द्धदेशे तु स्नायूनां सप्ततिः स्मृताः"। तत्र शाखागताः प्राह। एकैकस्यां पदाङ्गुल्यां षट् षट् तास्त्रिंशत्। तावन्त्य एव तलकूर्चगुल्फेषु। तावन्त्य एव जङ्घायां दश जानुनि। चत्वारिंशदूरौ। दश वङ्क्षणे। एवं सार्द्धशतमेकस्मिन् सक्थिनि भवन्ति। एतेनेतरसक्थि बाहू च व्याख्यातौ। अथ कोष्ठगताः प्राह षष्टिः कट्यां तावन्त्य एव पार्श्वयोः। अशीतिः षट्त्रिंशदुरसि। अथ ग्रीवोर्द्धगताः प्राह षट्त्रिंशद् ग्रीवायाम्। चतुस्त्रिंशन् मूर्द्ध्नि एवं स्नायूनां नवशतानि भवन्ति"।

**स्नायुरोग** पु० ६त०। स्नायुस्थे रोगभेदे तन्निदानादि भावप्र० उक्तं यथा

"तत्र स्नायुरोगस्य विप्रकृष्टं सामान्यलक्षणमाह "शाखासु कुपितो दोषः शोथं कृत्वा विसर्पवत्। भित्त्वैव तं क्षते तत्र सोष्मणांसं विशोष्य च। कुर्य्यात्तन्तुनिभं सूत्रं तत्पिण्डैस्तकवत्तुजैः। शनैः शनैः क्षताद् याति छेदात्तत्कोपमावहेत्। तत्पाताच्छोथशान्तिः स्यात् पुनः स्थानान्तरे भवेत्। स्नायुरोग इतिख्यातः क्रियोक्ता च विसर्पवत्। बाह्वोर्यदि प्रमादेन त्रुट्यते जङ्घयोरपि। सङ्कोचं खञ्जताञ्चापि छिन्नो नूनं करोत्यसौ"।

**स्नायुमन्** न० नेत्ररोगभेदे "स्थिरं प्रस्तारिमांसाढ्यं शुष्कं स्नाय्वर्म पञ्चमम्" माधवनिदानम्।

**स्निग्ध** त्रि० स्निह—क्त। १स्नेहयुक्ते वत्सले २मसृणे चिक्कणे अमरः। ३रक्तैरण्डे ४सरलवृक्षे च पु० राजनि० ५भक्तमण्डे न० ६मेदायां स्त्री राजनि०।

**स्निग्धतण्डुल** पु० ६ब०। षष्टिधान्ये राजनि०। [शब्दर०।

**स्निग्धता** स्त्री स्निग्धस्य भावः। १स्नेहे राजनि० २प्रियत्वे च

**स्निग्धदारु** पु० स्निग्धं दारु काष्ठमस्य। १सरलवृक्षे जटा० २देवदारुवृक्षे च राजनि०।

**स्निग्धपत्रक** पु० स्निग्धं पत्रमस्य कप्। १घृतकरञ्जे २गुच्छकरञ्जे ३गर्जरतृणे च राजनि० ४बदर्यां स्त्री जटा०। ५पालक्यां ६काश्मर्याञ्च स्त्री राजनि०। [च राजनि०।

**स्निग्धपिण्डीतक** पु० कर्म०। १मदनवृक्षभेदे २पिण्डीतकवृक्षे

**स्निग्धफला** स्त्री स्निग्धं फलमस्याः। नाकुल्याम् राजनि०।

**स्निट** स्नेहे चु० उभ० सक० सेट्। स्नेटयति—असिस्निटत्—

त। इत्यान्तरादित्यर्थं मोपदेश एव न्यायः।

**स्नु** पु० स्नातु+स्नु आदेशः स्ना-न्नु वा। १पर्वतस्य समभूभागे अमरः २स्नायौ च। "निष्टुप् मांसात् स्नुतोऽन्तुष्टुप्" भाग० ३।१२अ०। "स्नुतः स्नायुतः" इति श्रीधरः।

**स्नुकच्छद** पु० स्नु इति स्नु-क्विप् कुत्सम् स्नुक् छदोऽस्य। चीरकपु कौहुले रत्नमा०।

**स्नुत** पु० स्नु-क्त। चरिते जलादौ अमरः। [शब्दर०।

**स्नुषा** स्त्री स्नु-सक्। १पुत्रवध्वाम् अमरः २स्नुहीवृक्षे च

**स्नुह(हा)** स्त्री स्नुह-क्विप् वा टाप्। स्नुहीवृक्षे अमरः।

**स्नुहि(ही)** स्नुह-इन् वा ङीप्। (मनसाशिज) वृक्षे अमरः "स्नुहीविटपसंस्थिताम्" ति०त० देवीपु०।

**स्नेह** पु० स्निह-घञ्। १प्रेम्णि अमरः २तैलादिरसभेदे ३न्यायोक्ते गुणभेदे च वद्गुणत्वात् द्रव्यत्वमुक्तम्। स च गुणः जलस्य चूर्णादिपिण्डीभावहेतुः। "जले मधुरशीतलौ। स्नेहस्तत्र द्रव्यत्वन्तु सांसिद्धिकमुदाहृतम्" भाषा०। "घृतादावपि तदन्तर्गतजलस्यैव स्नेहः जलस्य स्नेहसमवायिकारणत्वात् तेन जल एव स्नेह इति मन्तव्यम्" मुक्ता०। "स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ। तैलान्तरे तत्प्रकर्षात् दहनस्यानुकूलता" भाषा०। "ननु पृथिव्यामपि तैले स्नेह उपलभ्यते न चासौ पार्थिवः तथा सति दहनप्रातिकूल्यं स्यादत आह तैलान्तरे इति तत्प्रकर्षात् स्नेहप्रकर्षात्। तैले उपलभ्यमानः स्नेहोऽपि जलीय एव तस्य प्रकर्षादग्नेरानुकूल्यम्। अपकृष्टस्नेहं हि जलं वह्निं नाशयतीति भावः" मुक्ता०। ४प्रेमरूपस्नेहस्य वत्सलरसस्य स्थायिभावः स च रसः भरतकमाराः सा०द० उक्तो यथा "स्फुटं चमत्कारितया वत्सलं च रसं विदुः। स्थायी वत्सलता स्नेहः पुत्राद्यालम्बनं मतम्। उद्दीपनानि तच्चेष्टा विद्याशौर्यदयादयः। आलिङ्गनाङ्गसंस्पर्शशिरश्चुम्बनमीक्षणम्। पुलकानन्दवाष्पाद्या अनुभावाः प्रकीर्त्तिताः। सञ्चारिणोऽनिष्टशङ्काहर्षगर्वादयो मताः। पद्मगर्भच्छविर्वर्णो दैवतं लोकमातरः"। "अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम्। परोपकारनिरतामणिदीपा इवोत्तमाः" उद्भ०।

**स्नेहन्** पु० स्निह कनिन् नि० सुधारामभेदे उणा०।

**स्नेहन** न० स्निह-णिच्-ल्युट्। १तैलादिमर्दने अभ्यङ्गे राजनि० २स्निग्धतासाधने क्रियाभेदे भावप्र० तत्प्रकार उक्तो यथा "स्नेहनविधिः "स्नेहस्तुर्विधः प्रोक्तो घृतं तैलं वसा तथा। मज्जा च तं पिबेन्मर्त्यः किञ्चिदभ्युदिते रवौ। स्थावरो जङ्गमश्चैव द्वियोनिः स्नेह उच्यते। तिलतैलं स्थावरेषु जङ्गमेषु घृतं वरम्। द्वाभ्यां त्रिभिश्चतुर्भिर्वा यमकस्त्रिवृतो महान्। अस्यायमर्थः द्वाभ्यां स्नेहाभ्यां घृततैलाभ्यां यमकाख्यः स्नेहः स्यात्। त्रिभिः स्नेहैः घृततैलवसाभिस्त्रिवृताख्यः स्यात्। चतुर्भिर्घृततैलवसामज्जाभिर्महान्नामास्नेहः स्यादित्यर्थः। "पिबेत् त्र्यहं चतुरहं पञ्चाहं षडहानि वा"। मृदुमध्यक्रूरकोष्ठापेक्षया त्र्यहं चतुरहं पञ्चाहं षडहानि चेति। यदुक्तम् "मृदुकोष्ठस्त्रिरात्रेण स्निग्धत्यच्छोपसेवया। मध्यकोष्ठश्चतुर्भिश्च दिवसैः स्निग्धति ध्रुवम्। पञ्चभिर्वा षड्भिर्वा दिनैः क्रूरो विशुद्ध्यति। सप्तरात्रात्परं स्नेहः सात्मीभवति सेवितः"। मृदुमध्यक्रूरकोष्ठानां सर्वेषां सप्तरात्रात्परं सात्मीभवति वातानुलोम्याग्निदीप्तिकोष्ठशुद्धिमृदुस्निग्धाङ्गतासदवनाङ्गताबलधातुपुष्टिरित्यादिकं निर्जरतां बलवर्णकारो भवति। न तु सन्ततो वातानुलोम्यादीन् करोति। "दोषकालवयोवह्निबलान्यालोक्य योजयेत्। हीनाञ्च मध्यमां ज्येष्ठां मात्रां स्नेहस्य बुद्धिमान्। अकालवा तथाऽकाले मिथ्याहारविहारतः। स्नेहः करोति शोथार्शस्तन्द्रानिद्राविसंज्ञिताः। देया दीप्ताग्नये मात्रा स्नेहस्यैकपलोन्मिता। मध्यमाय त्रिकर्षा स्याज्जघन्याय द्विकार्षिकी"। मध्यमाय मध्यमाग्नये जघन्याय हीनाग्नये "अथ वा स्नेहमात्राः स्युस्तिस्रोऽन्याः सर्वसम्मताः। अहोरात्रेण महती जीर्य्यत्यपि तु मध्यमा। जीर्य्यत्यल्पा दिनार्द्धेन या विज्ञेया सुखावहा"। अयमर्थः याहोरात्रेण जीर्य्यति सा मात्रा महती। एवं मध्यमा कनिष्ठा च ज्ञेया "अल्पा स्याद् दीपनी वृष्या स्वल्पदोषे प्रपूजिता। मध्यमा स्नेहनी ज्ञेया वृंहणी श्रमहारिणी। ज्येष्ठा कुष्ठविषोन्मादग्रहापस्मारनाशिनी"। सुश्रुतः पुनरेवमाह "या मात्रा प्रथमे यामे गते जीर्य्यति वासरे। सा मात्रा दीपयत्यग्निमल्पदोषे च पूजिता। या मात्रा वासरस्यार्द्धे व्यतीते परिजीर्य्यति। सा वृष्या वृंहणी च स्यान्मध्यदोषे प्रपूजिता। या मात्रा चरमे यामे स्थितेऽह्नः परिजीर्य्यति। सा मात्रा स्नेहनी ज्ञेया बहुदोषेषु पूजिता। केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम्। देयं बहुकफे वह्निव्योषक्षारसमन्वितम्। रूक्षक्षतविषार्त्तानां वातपित्तविकारिणाम्। हीनमेधास्मृतीनाञ्च सर्पिःपानं प्रश-

हते। क्रमिकोष्ठानिलाविष्टाः प्रवृद्धकफमेदसः। पिबेयुस्तैलमत्यामे तैलं दार्ढ्यार्थिनस्तु ये। व्यायामकर्षिताः शुष्करेतोरक्तामहारुजाः"। क्रूराशयाः क्रूरकोष्ठाः सर्वतः सर्वस्मात् स्नेहात्। "शीतकाले दिवा स्नेहमुष्णकाले पिबेन्निशि। वातपित्ताधिके रात्रौ वातश्लेष्माधिके दिवा। नस्याभ्यञ्जनगण्डूषमूर्द्धकर्णाक्षितर्पणे। तैलं घृतं वा युञ्जीत दृष्ट्वा दोषबलाबलम्। घृते कोष्णं जलं देयं तैले यूषः प्रशस्यते। वसामज्ज्ञे पिबेन्मण्डमनुपानं सुखावहम्। स्नेहद्विषः शिशून् वृद्धान् सुकुमारान् कृशानपि। तृष्णालुकानुष्णकाले सह भक्तेन पाययेत्। सर्पिष्मती बहुतिला यवागूः स्वल्पतण्डुला। सुखोष्णा सेव्यमाना तु सद्यः स्नेहनकारिणी। शर्कराचूर्णसंयुक्ते दोहनस्थे घृते तु गाम्। दुग्ध्वा क्षीरं पिबेद्रूक्षः सद्यः स्नेहनमुत्तमम्। मिथ्याचाराद् बहुत्वाद्वा यस्य स्नेहो न जीर्यति। विष्टभ्य वापि जीर्येत वारिणोष्णेन वामयेत्। स्नेहस्याजीर्णशङ्कायां पिबेदुष्णोदकं नरः। ततोद्गारो भवेच्छुद्धो भक्तं प्रति रुचिस्तथा। स्नेहेन पैत्तिकस्याग्निर्यदा तीक्ष्णतरीकृतः। तदास्योदीर्यते तृष्णा विषमा तस्य पाययेत्। शीतलं पायसं, तेन तृष्णा तस्य प्रशाम्यति। दुर्बलोऽरोचकी स्थूलो मूर्च्छार्त्तो मदपीडितः। दत्तवस्तिर्विरिक्तश्च वान्तस्तृष्णाश्रमान्वितः। अकालप्रसवा नारी दुर्दिने च विवर्जयेत्। स्वेदसंशोध्यमद्यस्त्रीव्यायामासक्तचित्तकाः। वृद्धबालकृशा रूक्षाः क्षीणास्राः क्षीणरेतसः। वातार्त्तास्तिमिरार्त्ता ये तेषां स्नेहनमुत्तमम्। वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहतम्। मृदुस्निग्धाङ्गता ग्लानिः स्नेहद्वेषोऽथ लाघवम्। विमलेन्द्रियता सम्यक् स्निग्धे रूक्षे विपर्य्ययः। भक्तद्वेषो मुखस्रावो गुदे दाहः प्रवाहिका। तन्द्रातीसारपाण्डुत्वं भृशं स्निग्धस्य लक्षणम्। रूक्षस्य स्नेहनं स्नेहैरतिस्निग्धस्य रूक्षणम्। श्यामाकचणकाद्यैश्च तिलपिण्याकसक्तुभिः। दीप्ताग्निः शुद्धकोष्ठश्च पुष्टधातुर्दृढेन्द्रियः। निर्जरो बलवर्णाढ्यः स्नेहसेवी भवेन्नरः। स्नेहे व्यायामसंशीतवेगाघातप्रजागरान्। दिवास्वप्नमभिष्यन्दि रूक्षान्नञ्च विवर्जयेत्"। करणे-ल्युट्। स्नेहसाधने त्रि०। स्त्रियां ङीप्। उदा० अत्रैव दृश्यम्।

**स्नेहप्रिय** पु० स्नेहः तैलादिः प्रियोऽस्य। प्रदीपे हेमच०।

**स्नेहभू** स्त्री हृत०। १श्लेष्माख्ये देहस्थे धातुभेदे हेमच० २स्नेहपात्रे च शब्दर०। [शब्दच०।

**स्नेहरङ्ग** पु० स्नेहेन रज्यते रन्ज-कर्म्मणि घञ्। तिले

**स्नेहवत्** त्रि० स्नेहोऽस्त्यस्य मतुप् मस्य वः। १स्नेहयुक्ते स्त्रियां ङीप्। सा च २मेदायां पुंस्त्री० राजनि०।

**स्नेहविद्ध** न० स्नेहेन विद्धम्। देवदारुणि जटा०।

**स्नेहवस्ति** स्त्री स्नेहपूरिता वस्तिः। तैलादिस्नेहयुतद्रव्यपूरिते अनुवासनाख्ये पदार्थे (पिचकारी) वस्तिशब्दे ४८६४ पृ० दृश्यम्। [हृत०। २स्नेहकारणे न०।

**स्नेहवीज** पु० स्नेहाढ्यं वीजमस्य। पियालवृक्षे राजनि०।

**स्नेहाश** पु० स्नेहमश्नाति अश–अण्। प्रदीपे त्रिका०।

**स्नेहिन्** पु० स्निह–णिनि। १वयस्ये सख्यौ त्रिका०। २स्नेहयुक्ते त्रि० स्त्रियां ङीप्।

**स्नेहु** पु० स्निह –उन्। रोगभेदे उणा०को० २चन्द्रे संक्षिप्त०

**स्पद** ईषत्कम्पे भ्वा० आ० अक० सेट् इदित्। स्पन्दते अस्पन्दिष्ट स्पन्दितम्।

**स्पन्द** पु० स्पदि-घञ्। १ईषच्चलने ईषत्कम्पे २क्रियाभेदे च। ल्युट्। तत्रार्थे न० नेत्रस्पन्दादौ शुभाशुभविवेचनं मत्स्यपु० २४१ अ० उक्तं यथा

"ब्रूहि मे त्वं निमित्तानि अशुभानि शुभानि च। सर्वधर्मभृतां श्रेष्ठ! त्वं हि सर्वविदुच्यसे" मत्स्य उवाच "अङ्गदक्षिणभागे तु शस्तं प्रस्फुरणं भवेत्। अप्रशस्तं तथा वामे पृष्ठस्य हृदयस्य च"। मनुरुवाच "अङ्गानां स्पन्दनञ्चैव शुभाशुभविचेष्टितम्। तन्मे विस्तरतो ब्रूहि येन स्यान्निर्दृतो भुवि"। मत्स्य उवाच "पृथ्वीलाभो भवेन्मूर्ध्नि ललाटे रविनन्दन!। स्थानं विवृद्धिमायाति भ्रूनसोः प्रियसङ्गमः। भृत्यलब्धिश्चाक्षिदेशे दृगुपान्ते धनागमः। उत्कण्ठोपगमो मध्ये दृष्टे राजन्! विचक्षणैः। दृग्बन्धने सङ्गरे च जयं शीघ्रमवाप्नुयात्। योषिद्भोगोऽपाङ्गदेशे श्रवणान्ते प्रियाश्रुतिः। नासिकायां प्रीतिसौख्यं प्रजाप्तिरधरोष्ठजे। कण्ठे तु भोगलाभः स्याद्भोगवृद्धिरथांसयोः। सुहृत्स्नेहश्च बाहुभ्यां हस्ते चैव धनागमः। पृष्ठे पराजयः सद्योऽजयो वक्षःस्थले भवेत्। कुक्षिभ्यां प्रीतिरुद्दिष्टा स्त्रियाः प्रजननं स्तने। स्थानभ्रंशो नाभिदेशे अन्त्रे चैव धनागमः। जानुसन्धौ जातसन्धिर्बलवद्भिर्भवेन्नृपः। दिशैकदेशनाशोऽथ जङ्घायां रविनन्दन!। उत्तमं स्थानमाप्नोति पद्भ्यां प्रस्फुरणान्नृप!। सलाभञ्चाध्वगमनं भवेत् पादतले नृप!। लाञ्छनं पिटकञ्चैव ज्ञेयं स्फु-

रणवत्तथा। विपर्य्ययेण विहिता सवर्णस्त्रीणां फलागमः। दृश्यतेऽपि प्रशस्तोऽङ्के प्रशस्तं स्याद्विशेषतः। अतोऽन्यथा विद्धिप्रजल्पनात्तु फलस्य प्राप्तस्य च निन्दितस्य। अनिष्टचिह्नोपगमे द्विजानां कार्य्यं सुवर्णेन तु तर्पणं स्यात्"। [स्पर्द्धते अस्पर्द्धिष्ट।

**स्पर्द्ध** संहर्षे (पराभिभवेच्छायाम्) भ्वा० आत्म० अक० सेट्।

**स्पर्द्धा** स्त्री स्पर्द्ध—अ। १संहर्षे २पराभिभवेच्छायां ३साम्ये ४कमोन्नतौ च मेदि०। [स्पर्शते।

**स्पर्श** स्पर्शने दाने च चु० आ० सक० सेट्। स्पर्शयते अप-

**स्पर्श** पु० स्पर्श-स्पृश-वा अच् घञ् वा। न्यायोक्ते १त्वगिन्द्रियग्राह्ये गुणभेदे २स्पर्शने "मात्रास्पर्शास्तु कौन्तेय" गीता। ३रोगे ४युद्धे ५गुप्तचरे मेदि० ६उपतप्ते अमरः। ७वायौ पु० ८स्पर्शके त्रि० मेदि०। स्पृश-णिच्—अच्। ९दाने मेदि० स्पृश्यन्ते वायुना जिह्वाद्य उच्चारणाय यत्र। १०कादिषु मावसानेषु दन्त्यवर्णेषु पु० कादयो मावसानाः स्पर्शाः सि० कौ०। "स्पर्शस्त्वगिन्द्रियग्राह्यस्तु त्वचः स्यादुपकारकः। अनुष्णाशीतशीतोष्णभेदात् स त्रिविधो मतः। काठिन्यादिः क्षितावेव नित्यतादि च पूर्ववत्। एतेषां पाकजत्वन्तु क्षितौ नान्यत्र कुत्रचित्। तथापि परमाणौ स्यात् पाको वैशेषिके नये। नैयायिकानान्तु नये द्व्यणुकादावपीष्यते" "स्पर्शस्त्वगिन्द्रियग्राह्यस्तु त्वचः स्यादुपकारकः। अनुष्णाशीतशीतोष्णभेदात् स त्रिविधो मतः। काठिन्यादिः क्षितावेव नित्यतादि च पूर्ववत्। एतेषां पाकजत्वन्तु क्षितौ नान्यत्र कुत्रचित्। तथापि परमाणौ स्यात् पाको वैशेषिके नये। नैयायिकानान्तु नये द्व्यणुकादावपीष्यते" भाषा०। "उपकारक इति स्पार्शनप्रत्यक्षे स्पर्शः कारणमित्यर्थः। अनुष्णाशीतेति। पृथिव्या वायोश्च स्पर्शोऽनुष्णाशीतः। जलस्य शीतः। तेजस उष्णः। काठिन्येति। कठिनसुकुमारस्पर्शौ पृथिव्या एवेत्यर्थः। कठिनत्वादिकन्तु न संयोगनिष्ठो जातिविशेषः चक्षुर्ग्राह्यतापत्तेः। पूर्ववदिति। जलतेजोवायुपरमाणूनां स्पर्शो नित्यो द्व्यणुकादेस्त्वनित्य इत्यर्थः। एतेषामिति। एतेषां रूपरसगन्धस्पर्शानाम्। नान्यत्रेति। पृथिव्या हि रूपरसगन्धस्पर्शपरावृत्तिः पावकसंयोगादुपलभ्यते। न हि शतधापि ध्मायमाने जलादौ रूपादिकं परावर्त्तते। नीरे सौरभशैत्यस्य अन्वयव्यतिरेकाभ्यामौपाधिकमेवेति निर्णीयते पवनपृथिव्योः शीतस्पर्शादिवत्। तथापि पृथिव्यामपि मध्ये परमाणावेव पाक इति वैशेषिका वदन्ति। तेषामयमाशय। अवयविनाऽवष्टब्धेष्ववयवेषु पाको न सम्भवति। परन्तु वह्निसंयोगेनावयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः। पुनश्च पक्वपरमाणुसंयोगाद्द्व्यणुकादिक्रमेण पुनर्महावयविपर्य्यन्तोत्पत्तिः तेजसामतिशयितवेगवशात् पूर्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्चेति। अथ द्व्यणुकादिविनाशमारभ्य कतिभिः क्षणैः पुनरुत्पत्त्या रूपादिमद्भवतीति शिष्यबुद्धिवैशद्याय प्रक्रिया। "तत्र संयोगविभागयोरनपेक्षकारणं कर्म" इति वैशेषिकसूत्रम्। स्वोत्तरोत्पत्तिभावान्तरानपेक्षत्वं तस्यार्थः। अन्यथा कर्मणाऽप्युत्तरसंयोगस्य जनने पूर्वसंयोगनाशापेक्षणादव्याप्तिः स्यादिति। तत्र विभागजविभागानङ्गीकारे नव क्षणाः। तदङ्गीकारेऽपि विभागः किञ्चित्सापेक्षो विभागं जनयेत् निरपेक्षस्य तस्य कर्मत्वं स्यात्। तत्र यदि द्रव्यारम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागजविभागः स्यात् तदा दश क्षणाः। अथ द्रव्यनाशविशिष्टं कालमवयवं चापेक्ष्य विभागजविभागः स्यात् तदा एकादश क्षणाः। तथा हि वह्निसंयोगात् परमाणौ कर्म। ततः परमाण्वन्तरेण विभागः। तत आरम्भकसंयोगनाशः। ततो द्व्यणुकनाशः१। ततः परमाणौ श्यामादिनाशः२। ततो रक्ताद्युत्पत्तिः३। ततो द्रव्यारम्भानुगुणक्रिया४। ततो विभागः५। ततः पूर्वसंयोगनाशः६। तत आरम्भकसंयोग.७। ततो द्व्यणुकोत्पत्तिः८। ततो रक्ताद्युत्पत्तिः ९। ननु श्यामादिनाशक्षणे रक्तोत्पत्तिक्षणे वा परमाणौ द्रव्यारम्भानुगुणक्रियाऽस्त्विति चेत्। न। अग्निसंयुक्ते परमाणौ यत् कर्म तद्विनाशमन्तरेण गुणोत्पत्तिमन्तरेण च तत्र परमाणौ क्रियान्तराभावात् कर्मवति कर्मानुत्पत्तेः निर्गुणे द्रव्ये द्रव्यारम्भानुगुणक्रियानुपपत्तेश्च। तथापि परमाणौ श्यामादिनिवृत्तिसमकालं रक्ताद्युत्पत्तिः स्यादिति चेत् न। पूर्वरूपादिध्वंसस्य रूपान्तरे हेतुत्वात्। इति नव क्षणाः। अथ दश क्षणाः। सा च आरम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागस्य जनने इति स्यात्। तथा हि वह्निसंयोगाद्द्व्यणुकारम्भके परमाणौ क्रिया। ततो विभागः। तत आरम्भकसंयोगनाशः। ततो द्व्यणुकनाशविभागजविभागौ१। ततः श्यामनाशपूर्वसंयोगनाशौ२। ततो रक्तोत्पत्त्युत्तरसंयोगौ३। ततो वह्निनोदनजन्यपरमाणुकर्मणो नाशः४।

ततोऽदृष्टवदात्मसंयोगाद् द्व्यणुकारम्भानुगुणक्रिया५ । ततो विभागः६ । ततः पूर्वसंयोगनाशः ७। तत आरम्भकसंयोगः८ । ततो द्व्यणुकोत्पत्तिः९। ततो रक्ताद्युत्पत्तिः१०। अथैकादश क्षणाः । वह्निसंयोगात् परमाणौ कर्म । ततो विभागः । ततो द्रव्यारम्भकसंयोगनाशः । ततो द्व्यणुकनाश१विशिष्टं कालमपेक्ष्य विभागजविभागः२ । ततः पूर्वसंयोगनाशः३ । तत उत्तरसंयोगः४ । ततः परमाणुकर्मनाश५ । ततोऽदृष्टवदात्मसंयोगाद् द्रव्यारम्भानुगुणक्रिया६ । ततो विभागः७ । ततः पूर्वसंयोगनाशः८ । ततो द्रव्यारम्भकसंयोगः९ । ततो द्व्यणुकम्१० । ततो रक्तादि११ । मध्यमशब्दवदेकस्मादग्निसंयोगाच्छ्यामनाशरक्तोत्पादौ । तावत्कालमेकस्याग्नेरस्थिरत्वात् । किन्तु यद्युत्पादको नाशकस्तदा नष्टे श्यामादावग्निनाशे नीरूपचिरं परमाणुः स्यात् । नाशकश्चेदुत्पादकस्तदा रक्तोत्पत्तौ तदग्निना रक्तता न स्यात् । एवं परमाण्वन्तरे कर्मचिन्तनात् पञ्चमादिक्षणेऽपि गुणोत्पत्तिः । तथा हि एकत्र परमाणौ कर्म । ततो विभागः । तत आरम्भकसंयोगनाशपरमाण्वन्तरकर्मणी । ततस्तु द्व्यणुकनाशः । परमाण्वन्तरकर्मजश्च विभाग इत्येकः कालः१ । ततः श्यामादिनाशः विभागाच्च पूर्वसंयोगनाश इत्येकः कालः२ । ततो रक्तोत्पत्तिर्द्रव्यारम्भकसंयोगश्चेत्येकः कालः३ । अथ द्व्यणुकोत्पत्तिः४ । अथ रक्तोत्पत्तिरिति५ पञ्च क्षणाः । द्रव्यनाशसमकालं परमाण्वन्तरे कर्मचिन्तनात् षष्ठे गुणोत्पत्तिः । तथा हि परमाणुकर्मणा परमाण्वन्तरविभागः । तत आरम्भकसंयोगनाशः । अथ द्व्यणुकनाशपरमाण्वन्तरकर्मणी१ । अथ श्यामनाशः परमाण्वन्तरकर्मजश्च विभागः२ । ततो रक्तोत्पत्तिः परमाण्वन्तरे पूर्वसंयोगनाशश्च३ । ततः परमाण्वन्तरसंयोगः४ । ततो द्व्यणुकोत्पत्तिः५ । अथ रक्तोत्पत्तिरिति६ । एवं श्यामनाशक्षणे परमाण्वन्तरे कर्मचिन्तनात् सप्त क्षणाः । रक्तोत्पत्तिसमकालं परमाण्वन्तरे कर्मचिन्तनात् अष्ट क्षणाः" इति । नैयायिकानामिति । नैयायिकानां मते द्व्यणुकादौ अवयविन्यपि पाको भवति । तेषामयमाशयः । अवयविनां सच्छिद्रत्वाद्वह्नेः सूक्ष्मावयवैरन्तःप्रविष्टैरवयवेष्ववष्टब्धेष्वपि पाको न विरुध्यते । वैशेषिकमतेऽनन्तावयवतन्नाशकल्पने गौरवात् । इत्थञ्च सोऽयं घट इत्यादिप्रत्यभिज्ञाऽपि सङ्गच्छते । यत्र तु न प्रत्यभिज्ञा तत्रावयविनाशोऽपि स्वीक्रियते" मुक्ता०।

स्पर्शस्य बहुप्रकारता भा० प्र० १८१ अ० उक्ता यथा "वायव्यश्च गुणः स्पर्शः स्पर्शश्च बहुधा स्मृतः । उष्णः१ शीतः२ सुखो३ दुःखः४ स्निग्धो५ विशद६ एव च । तथा खरो७ मृदु८ श्लक्ष्णो९ लघु१०र्गुरुतरो११ऽपि च" । कठिनस्याप्युपलक्षणमिदं यथोक्तं भा० आश्व० ५० अ० । "वायोरपि गुणः स्पर्शः स्पर्शश्च बहुधा स्मृतः । रूक्ष१ शीत२स्तथैवोष्णः३ स्निग्धो४ विशद५ खर६ एव च । कठिन७श्चिक्कणः८ श्लक्ष्णः९ पिच्छिलो१० दारुणो११ मृदुः १२ एवं द्वादशविस्तारो वायव्यो गुण एव च" । ३कादिमावसानवर्णानामुत्पादके आभ्यन्तरप्रयत्ने सि०कौ०।

**स्पर्शतन्मात्र** न० सांख्यमतसिद्धे वायूपादानकारणे स्पर्शमात्रगुणके सूक्ष्मभूतभेदे तन्मात्रशब्दे पृ० दृश्यम् ।

**स्पर्शन** न० स्पर्श—स्पृश—वा ल्युट् । १ग्रहणे २स्पर्शे च । णिच् ल्युट् । ३दाने च मेदि० । स्पृश-कर्त्तरि ल्यु । ४वायौ पु० अमरः । [लज्जालुवृक्षे शब्दर०।

**स्पर्शलज्जा** स्त्री स्पर्शमात्रेण लज्जते सङ्कोचात् लज्ज—अच् ।

**स्पर्शशुद्धा** स्त्री स्पर्शे शुद्धा । शतमूल्याम् शब्दच० ।

**स्पर्शा** स्त्री स्पर्श ग्रहणे-कर्मणि घञ् । कुलटायां त्रिका० तस्याः सर्वैः स्प्रष्टुमानत्वात्तथात्वम् । [अच् । स्पृश्यत्व ।

**स्पर्शाज्ञता** स्त्री त्वक्शून्यत्वाख्ये वातरोगभेदे "स्पृष्टमाना त्वचा या तु शीतोष्णं मृदु कर्कशम् । न जानाति बुधैः सा तु त्वक्शून्यत्वेति परिकीर्त्तिता" भावप्र० ।

**स्प्रष्टृ** त्रि० स्पृश-तृच् । १उपतापयितरि स्त्रियां ङीप् । २रोगे पु० भरतः । ऋतोरम् स्प्रष्ट तत्रार्थे त्रि० ।

**स्पश** बन्धे बाधने च भ्वा० उभ० सक० सेट् । स्पशति-ते अस्पशीत्—अस्पाशीत् । अस्पशिष्ट ।

**स्पश** पु० स्पश—अच् । १चरमात्रे २अभिसरे (युद्धे) ३गूढचरे च अमरः "राजनीतिरपस्पशा" माघः ।

**स्पष्ट** त्रि० स्पश-क्त नि० इडभावः । १व्यक्ते २स्फुटे अमरः

**स्पृ** प्रीतौ अक० प्रीणने रक्षणे पालने च सक० स्वा० पर० अनिट् । स्पृणोति अस्पार्षीत् ।

**स्पृका** स्त्री स्पृश—कन् पृषो० शस्य कः । पृक्काख्याम् भरतः ।

**स्पृश** स्पर्शे तु० पर० सक० अनिट् । स्पृशति अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत् । पस्पर्श ।

**स्पृशा** स्त्री स्पृश—क । १सर्पघातिनीवृक्षे (कङ्कालिका) शब्दर० २कण्टकार्य्यां स्त्री अमरः गौरा० ङीष् ।

**स्पृष्ट** त्रि० स्पृश—क्त । १कृतस्पर्शे । भावे क्त । २स्पर्शे न० । ३कादिमावसानवर्णोत्पादके आभ्यन्तरप्रयत्ने न०।

**स्पृष्टास्पृष्ट** न० स्पृष्टेन सह सम्यक् स्पृष्टम् । परस्परस्पर्शने

**स्पृष्टास्पृष्टि** न० स्पृश-भावे-क्त कर्मव्यतिहारे इच्समा० पूर्वपददीर्घः । परस्परस्पर्शने “तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे । नगरग्रामदाहे च स्पृष्टास्पृष्टि न दुष्यति । आपद्यपि च कष्टायां सद्यभये पीडिते तथा । मातापित्रोर्गुरोश्चैव निदेशवर्त्तने तथा” वृहस्पतिः ।

**स्पृष्टि** स्त्री स्पृश-क्तिन् । स्पर्शे अमरः । [अपस्पृहत् ।

**स्पृह** इच्छायां अद०चुरा० उभ० सक० सेट् । स्पृहयति-ते

**स्पृहणीय** त्रि० स्पृह-अनीयर् । १वाञ्छनीये २श्लाघ्ये च “अहो वतासि स्पृहणीयवीर्य्यः” कुमारः ।

**स्पृहयालु** त्रि० स्पृहि-आलुच् । स्पृहाशीले ।

**स्पृहा** स्त्री स्पृह-अङ् । इच्छायाम् अमरः । “मिथुने स्पृहावती” कुमारः ।

वर्णभेदे विषयभेदे स्पृहौचित्यं यथा

“तपोधनं ब्राह्मणानां तपः कल्पतरुस्तथा । तपस्या कामधेनुश्च सन्ततं तपसि स्पृहा । ऐश्वर्य्यं क्षत्रिया-णाञ्च वाणिज्ये च तथा विशाम् । शूद्राणां विप्रसेवायां स्पृहा वेदेष्वनिन्दिता । क्षत्रियाणाञ्च तपसि स्पृहा-तीव प्रशंसिता । ब्राह्मणानां विवादेषु स्पृहातीव वि-निन्दिता । क्षत्रियाणां रणो धर्मो रणे कश्चिन्न गर्हितः । रणे स्पृहा ब्राह्मणानां लोके वेदे विडम्बना । ब्रह्मवै० ग० ख० ३५ अ० । [नीयेऽक्षि० ।

**स्पृह्य** पु०स्पृह-कर्मणि यत् १मातुलुङ्गवृक्षे उणा० २वाञ्छ

**स्फट** विशीर्णतायाम् अक० भ्वा० पर० सेट् । स्फटति अस्फ-टीत्-अस्फाटीत् । इदित्त्वपक्षार्थे स्फण्टति अस्फण्टीत् ।

**स्फट** पुंस्त्री० स्फट-अच् । सर्पफणायाम् अमरटीका ।

**स्फटि(टी)** स्त्री स्फट-इन् वा ङीप् । (फट्किरी) खनिज-द्रव्यभेदे भावप्र० । स्वार्थे क । तत्रार्थे “स्फटिका तु कषायोष्णा वातपित्तकफव्रणान् । निहन्ति श्वित्रवीसर्पान् योनिसङ्कोचकारिणी” भावप्र० ।

**स्फटि(टी)क** पु० स्फटि(टीव)रिव कायति कै-क । १स्वनामख्याते मणौ हला० स्वार्थे क वा ह्रस्वः । २स्फट्यां भावप्र० । स्वार्थेऽण् । स्फाटिकमप्यत्र न०शब्दर० । “स्फटिकः समवीर्य्यश्च पित्तदाहार्त्तिदोषनुत् । तस्याक्ष मालां जपतां दत्ते कोटिगुणं फलम्” । तत्परीक्षा यथा “गङ्गाम्बुतोयविन्दुच्छविविमलतमं निस्तुषं नेत्र-हृद्यं स्निग्धं शुद्धान्तरालं मधुरमतिहिमं पित्तदाहास्र-हारि । पाषाणे यन्निघृष्टं स्फुटितमपि निजां स्वच्छतां नैव जह्यात् तज्जात्यं जात्यं शुभमुपचिनुते नैव रत्नञ्च रत्नम्” राजनि० ।

“मुक्ताविद्रुमवज्रेन्द्रवैदूर्य्यस्फटिकादिकम् । मणिरत्नं सरं शीतं कषायं स्वादु लेखनम् । चक्षुष्यं धारणात्तच्च पापा-लक्ष्मीविनाशनम्” राजवल्लभः । तस्य उत्पत्त्यादिकं यथा “कावेरीविन्ध्ययवनचीननेपालभूमिषु । लाङ्गलो व्यकिरन्मेदो दानवस्य प्रयत्नतः । आकाशशुद्धं तेजाढ्यं तत्पश्च स्फटिकं ततः । मृणालशङ्खधवलं किञ्चिद्वर्णा-न्तरान्वितम् । न तत्तुल्यं हि रत्नानामथ वा पाप-नाशनम् । संस्कृतं शिल्पिना सद्यो मूल्यं किञ्चिल्लभे-त्ततः” गारुडे ७८अ० । तथा “हिमालये सिंहले च विन्ध्याटवितटे तथा । स्फटिकं जायते चैव नानारूपं समप्रभम् । हिमाद्रौ चन्द्रसङ्काशं स्फटिकं तद् द्विधा भवेत् । सूर्य्यकान्तञ्च तत्रैकं चन्द्रकान्तं तथाऽपरम् । सूर्य्यांशुस्पर्शमात्रेण वह्निं वमति यत् क्षणात् । सूर्य्य-कान्तं तदाख्यातं स्फटिकं रत्नवेदिभिः । पूर्णेन्दुकर-संस्पर्शादमृतं स्रवति क्षणात् । चन्द्रकान्तं तदाख्यातं दुर्लभं तत् कलौ युगे । अशोकपल्लवच्छायं दाडिमी-बीजसन्निभम् । विन्ध्याटवीतटे देशे जायते मन्दकान्ति-मत् । सिंहले जायते कश्मकारे गन्धशीलके । प्रद्यु-रागभवस्थाने विविधं स्फटिकं भवेत् । अत्यन्तनिर्मलं स्वच्छं स्रवतीव जलं शुचि । ज्योतिर्वर्णनभासितं मुक्ताज्योतीरसं द्विज ! । तदेव लोहिताकारं राजावर्त्त-समोद्भवम् । आनीलं तत्तु पाषाणं प्रोक्तं राजमयं शुभम् । ब्रह्मरत्नमयं यत्तु प्रोक्तं ब्रह्ममयं द्विज !” युक्तिकल्प० ।

**स्फटिकाचल** पु०स्फटिक इव शुभ्रत्वात् अचलः । १कैलासप-र्वते २स्फाटिकमयपर्वते च । स्फटिकाद्रिप्रभृतयोऽप्यत्र

**स्फटिकाद्रिभिद्(द)** पु० स्फटिकाद्रिं स्फटिकपर्वतं भिनत्ति साहश्यात् भिद-क्विप् क वा । कर्पूरे राजनि० ।

**स्फटिकाभ्र** पु० स्फटिकवर्णः अभ्र इव । कर्पूरे राजनि० ।

**स्फटिकारि** पु० इन० । (फट्किरि) खनिजद्रव्यभेदे तस्य स्फटिकतुल्यदीप्तिमत्त्वात्तथात्वम् रत्नमा० ।

**स्फड** परिहासे चु० उभ० सक० सेट् इदित् । स्फण्डयति-ते अपस्फण्डत्-त । [रीत् ।

**स्फर** चले स्फूर्त्तौ च तुदा० प० अक० सेट् । स्फरति अस्फा-

**स्फरण** न० स्फर-भावे ल्युट् । स्फुरणे । [अस्फालीत् ।

**स्फल** चले स्फूर्त्तौ च तुदा० पर० अक० सेट् । स्फलति

**स्फाटिकोपल** पु० स्फटिकमेव उपलः । स्फाटिके त्रिका० ।

स्फाति स्त्री स्फाय–भावे क्तिन् यलोपः। वृद्धौ अमरः।

स्फाय वृद्धौ भ्वा० आ० अक० सेट्। स्फायते अस्फायि– अस्फायिष्ट। निष्ठायामनिट् यलोपे ईत् स्फीतः।

स्फार पु० स्फाय–रक्। १स्वर्णादेर्बुद्बुदे २विपुले ३विकटे मेदि० ४प्रचुरे च त्रि० संक्षिप्त०।

स्फारण न० स्फुर–णिच्–स्फारादेशः ल्युट्। विकाशने।

स्फाल पु० स्फल–घञ्। स्फूर्त्तौ। [कट फले शब्दच०।

स्फिग्घातन पु० स्फिचं घातयति हन–स्वार्थे णिच–ल्यु।

स्फिच् स्त्री स्फाय–डिच्। १कटिप्रोथे अमरः उपचारात् तदस्थे वातजे २रोगभेदे च। [यति ते अपिस्फिटत् त।

स्फिट हतौ हिंसे अनादरे च चु० उभ० सक० सेट्। स्फेट-

स्फिर त्रि० स्फाय–किरच्। १प्रचुरे अमरः २वृद्धे च।

स्फीत त्रि० स्फाय–क्त स्फीभावः। १वृद्धे २सम्पन्ने च।

स्फुट भेदे चु०उभ०सक०सेट्। स्फोटयति ते अपुस्फुटत् त।

स्फुट विकाशे भ्वा०प० अक० सेट्। स्फोटति इरित् अस्फुटत् अस्फोटीत्। [पुस्फोट।

स्फुट विकाशे तु० कुटा० प०अक०सेट्। स्फुटति अस्फुटीत्

स्फुट विदलने भ्वा० आत्म० अक० सेट्। स्फोटते अस्फोटिष्ट। [ते अपुस्फुटत् त।

स्फुट परीहासे चुरा०उभ०अक०सेट् इदित्। स्फुण्टयति

स्फुट हिंसे चु० उभ० सक०सेट् प्रायेणाङ्पूर्वः। आस्फोटयति ते आपुस्फुटत् त। [अपुस्फुटत् त।

स्फुट विकाशे अद० चु० उभ० सक० सेट्। स्फुटयति ते

स्फुट त्रि०स्फुट–क्त। १विकसिते २व्यक्ते मेदि०। ३भिन्ने ४शुक्ले च शब्दर०। ५ज्योतिषोक्ते मेषादिराशिषु अंशविशेषस्थितेषु सूर्यादिग्रहेषु पु० तेषां कृतत्तदंशकलादिषु गतौ स्त्री। ७तद्गणे छाया द्योतने न०। दर्पणछायां स्त्री रत्नाकरः। ग्रहाणां स्फुटताकरणप्रयोजनं सि०शि० उक्तं यथा "यात्राविवाहोत्सवजातकादौ खेटैः स्फुटैरेव फलस्फुटत्वम्। स्यात् प्रोच्यते तेन नभश्चराणां स्फुटक्रिया दृग्गणितैक्यकृद् वा" इत्युपक्रमे स्पष्टाधिकारे प्रदर्शितं ग्रहाणां मृदूच्चादिकमुक्तम् "मृदूच्चेन हीनो ग्रहो मन्दकेन्द्रं चलोच्चं ग्रहोनं भवेच्छीघ्रकेन्द्रम्। तुलादिकेन्द्रे फलं स्वर्णमेवं मृदु ज्ञेयमाद्यादिकोणं च शीघ्रम्। त्रिभिर्भैः पदं तानि चत्वारि चक्रे क्रमात् स्यादयुग्युग्मसंज्ञा च तेषाम्। अयुग्मे पदे यातमेष्यं तु युग्मे भुजो बाहुहीनं त्रिभं कोटिरुक्ता" इत्युक्ता भुजकोटिफलादिकमुक्ता। "स्यात् संस्कृतो मध्यफलेन मध्यो मन्दस्फुटः स्याच्चलकेन्द्रमस्मात्। विधाय शैघ्रेण फलेन चैवं खेटः स्फुटः स्यादसकृत् फलाभ्याम्। दक्षोज्ञताभ्यां प्रथमं फलाभ्यां ततोऽखिलाभ्यां मनुजात् कुजस्तु। स्फुटौ रवीन्दू मृदुनैव यस्मात् शीघ्राख्यतुङ्गस्य तयोरभावात्" सि० शि०। आदौ ग्रहस्य मन्दफलमानीय तेन संस्कृतोऽसौ मन्दस्फुटः स्यात्। तं शीघ्रोच्चाद्विशोध्य शीघ्रकेन्द्रं कृत्वा ततः शीघ्रफलम्। तेन संस्कृतो मन्दस्फुटो ग्रहः स्यात्। तस्मात् स्फुटात् मध्योच्चं विशोध्य मन्दमानीय तेन गणितागतो मध्यसंस्कृतो मन्दस्फुटः स्यात्। तेन पुनश्चलकेन्द्रं ततश्चलफलं तेन मन्दस्फुटसंस्कृतः स्फुटः स्यात् एवमसकृत् यावदविशेषः। तत्र दक्षोज्ञताभ्यां प्रथमं फलाभ्यामित्यादिना कुजस्य विशेष उक्तस्तस्योपपत्तिरेव वासना" प्रमिता०। ग्रहाणां तत्तोक्तः स्पष्टत्वानयनप्रकारस्तु ग्रहलाघवशब्दे २४१२ पृ० दृश्यः।

स्फुटन न०स्फुट–ल्युट्। १विकसने अमरः २विदलीभावे च।

स्फुटबन्धनी स्त्री स्फुटं बन्धनं यस्याः गौरा० ङीष्। कपोतपद्याम् रत्नमा०।

स्फुटित त्रि०स्फुट–क्त। १विकसिते हेमच० २भिन्ने "द्वाभ्यां वा स्फुटितेऽथ वा" पुराणम्। ३व्यक्तीकृते ४परिहासिते च

स्फुटि(टी) स्त्री स्फुट इन् वा ङीप्। १पादस्फोटरोगे (फोड़ा) २कर्कटीफले च (फुट) शब्दर०। [टुत् त।

स्फुट्ट अनादरे चु० उ० सक० सेट्। स्फुट्टयति ते अपुस्फु-

स्फुड वरणे तु० कु० पर० सक० सेट्। स्फुडति अस्फुडीत् पुस्फोड। [अस्फुडिष्ट।

स्फुण्ड विकाशे भ्वा० आत्म० अक० सेट् इदित्। स्फुण्डते

स्फुण्ड परिहासे चु० उ० सक० सेट् इदित्। स्फुण्डयति ते अपुस्फुण्डत् त। [शब्दच०।

स्फुत्कार पु० स्फुदित्यव्यक्तं शब्दं करोति कृ–अण्। अग्नौ

स्फुर स्फूर्त्तौ तु० कुटा० प० अक० सेट्। स्फुरति अस्फुरीत् पुस्फोर। "बाहु पुस्फोर बाहुः" भट्टिः। णिच्- स्फारयति। [२स्फुरणे अमरः।

स्फुर पु० स्फुर–क। फलके हेमच०। १भावे घञ्।

स्फुरण न० स्फुर–ल्युट्। ईषत्स्पन्दने अमरः। युच्। तत्रैव स्त्री। अङ्गभेदे स्फुरणफलमुक्तं यथा "मूर्ध्नोऽथनाङ्गस्फुरतस्तु सम्यक् प्रत्येकमव्यक्तफलप्रभावम्। सर्वत्र यत्नावगते स्वदेहाद्युत्पद्यते कर्मविपाकवेदित्। मूर्ध्नि स्फुरत्याशु पृथिव्याप्तिः स्थानप्रवृद्धिश्च

ललाटदेशे । भ्रू घ्राणमध्ये प्रियसङ्गमः स्यात् नासाक्षि-मध्ये च सहायलाभः । दृगन्तमध्यस्फुरणेऽर्थलाभोत्कण्ठे क्रमाद्विस्फुरिते दृगादौ । जयो दृशाध स्फुरणे रणः स्यात् प्रियश्रुतिः स्यात् स्फुरिते च कर्णे । योषित्समृद्धिः स्फुरिते च गण्डे घ्राणे तु सौगन्ध्यसुहृदौ भवेताम् । भोज्यं दृसद्गावधरोष्ठयोस्तु स्कन्धे गले भोगविवृद्धिलाभौ । स्कन्धो भुजश्चेष्टसमागमाय स्कन्धः करस्य द्रविणाप्तिहेतुः । स्कन्धश्च पृष्ठस्य पराजयाय स्कन्दो जयायोरसि मानवा-नाम् । पार्श्वप्रकम्पे विषयस्य लाभः कटिप्रकम्पे तु बलप्रमोदौ । नाभिप्रकम्पे निजदेशनाशः धनर्द्धि-बस्त्यस्य भुवि प्रकम्पे । दुःखं धनाप्तं हृदयस्य कम्पे स्फिक्पायुकम्पेऽपि च वाहनाप्तिः । वराङ्गकम्पे वरयोषिदाप्तिर्मुष्के सकम्पे तनयस्य जन्म । वस्तौ स कम्पे युवतिप्रवृत्तिः दोषश्च कम्पे पुनरूरुपृष्ठे । ऊरुः-प्रकम्पे सुसहायलाभः स्याज्जानुकम्पे त्वचिरेण सिद्धिः । जङ्घाप्रकम्पे निजदेशनाशः स्थानाप्तिरस्या चर-णस्य कम्पे । यात्रा सलाभाऽङ्घ्रितलप्रकम्पे पुंसां सदा दक्षिणदेहभागे । स्त्रीणान्तु वामावयवे प्रजातः । स्पन्दः फलानि प्रदिशत्यवश्यम्" वसन्तराजशाकुने ४र्थप्र० ।

**स्फुर्च्छ** विस्मरणे भ्वा० प० सक० सेट् । स्फूर्च्छति अस्फू-र्च्छीत् आदित् स्फूर्च्छितं स्फूर्णम् ।

**स्फुर्ज** वज्रशब्दे भ्वा० प० अक० सेट् । स्फूर्जति अस्फू-र्जीत् द्वित् स्फूर्जथुः । आदित् स्फूर्जितं स्फूर्णम् ।

**स्फुर्जथु** पु० स्फुर्ज अथु नि० न दीर्घः । वज्रनिर्घोषे अमरटीका ।

**स्फुल** स्फूर्त्तौ चये च अक० सञ्चये सक० तुदा० कुटा० प० सेट् । स्फुलति अस्फुलीत् । पुस्फोल । [स्तुते त्रि० ।

**स्फुल** न० स्फुल-क । १वस्त्रागारे (ताँबु) शब्दर० । २स्फूर्त्ति-

**स्फुलन** न० स्फुल-भावे ल्युट् । स्फुरणे नीलकण्ठः ।

**स्फुलिङ्ग** पुंस्त्री० स्फुल-इङ्गच्, स्फुत् इत्यव्यक्तः शब्दो लिङ्गति गच्छति यस्मात् लिगि-अच् पृषो० वा । अग्नि-कणे अमरः ।

**स्फुलिङ्गिनी** स्त्री स्फुलिङ्ग-अस्त्यर्थे इनि । १अग्नि-ज्वालायाम् जटा० २स्फुलिङ्गयुक्ते त्रि० ।

**स्फूर्जक** पु० स्फुर्ज-ण्वुल् । तिन्दुवृक्षे अमरः ।

**स्फूर्जथु** पु० स्फुर्ज-अथु । वज्रपातशब्दे अमरः ।

**स्फूर्त्ति** स्त्री स्फुर्च्छ-स्फुर-वा क्तिन् । १स्फुरणे २विका-शने ३प्रतिभायाञ्च रमानाथः ।

**स्फूर्त्तिमत्** पु० स्फूर्त्तिरस्त्यस्य मतुप् । १पाशुपताख्ये शैवभेदे त्रिका० । २प्रतिभायुक्ते ३विकाशयुक्ते च त्रि० स्त्रियां ङीप् ।

**स्फेयस्** त्रि० अतिशयेन स्फिरः, प्रचुरः ईयसुन् स्फादेशः । अतिप्रचुरे स्त्रियां ङीप् । इष्ठन् । स्फेष्ठोऽप्यत्र त्रि० ।

**स्फोट** पु० स्फुटत्यर्थोऽनेन स्फुट-करणे घञ् । व्याकरणोक्ते वर्णातिरिक्ते पूर्वपूर्ववर्णानुभवसंस्कृतचरमवर्णानुभवव्यङ्ग्ये अर्थप्रत्यायके अखण्डे शब्दभेदे स्वार्थे क तत्रार्थे । व्याक-रणमते वर्णसमुदयानां नार्थबोधकत्वं किन्तु स्फोट-स्यैवेति प्रपञ्चितमस्माभिः शब्दार्थरत्ने यथा

"तत्र वर्णानां प्रत्युच्चारणमन्यथाप्रतीयमानतया अनित्य-त्वेन आशुविनाशिनाश्च तेषां मेलनासम्भवेन तत्समुदा-यस्यापि सम्भवित्वाभावेन प्रत्येकं वर्णेषु वृत्तौ व्यभि-चारेण च पूर्वपूर्ववर्णानुभवाहितसंस्कारबीजवति अन्त्य-वर्णजनितपरिपाकशालिनि हृदये झटिति समुदीयमानस्य स्फोटरूपस्यैव शब्दस्य नित्यतया तत्रैव नित्यसम्बन्धस्य योग्यतया वृत्तिमत्त्वमुचितमित्याकरे स्पष्टम् । तथाहि । वर्णा यदि वाचकाः स्युः स्यादेव तेभ्यो व्यस्तेभ्योऽर्था-वगतिः । न च तथा । प्रत्येकं वृत्तिमत्त्वाभावेन तत्-समुदायस्य वृत्तिमत्त्वं सुदूरपराहतम् । आशुविना-शिनां वर्णानां मेलनासम्भवेन तत्समुदायस्यासिद्धेः पूर्व-पूर्ववर्णानुभवाहितसंस्कारसहितस्य चरमवर्णस्य वाच-कत्वन्तु समाश्रितमपि दिनान्तरीयतादृशसंस्कारा-नादाय वर्त्तमानचरमवर्णमात्रानुभवेन अर्थावगत्यापत्त्या निरासितम् । अन्त्यवर्णपर्य्यन्तानामनुभवानन्तरं समुदा-यानां संस्कारोदयकल्पनया पुनः समुदितवर्णानां स्मर-णात्मकज्ञानतोऽर्थावगतिरित्यपि न सङ्गतं जारराजे-त्यादावविशेषेण तत्तद्वर्णसंस्कारसद्भावादुभयत्रैवार्थाव-गत्या-नुपपत्तेः । अतोऽवश्यं वर्णातिरिक्तोऽन्त्यवर्णानुभवव्यङ्ग्यः स्फोटनामा शब्दः स्वीकार्य्यः स्फुटति प्रकाशतेऽर्थोऽने-नेति व्युत्पत्त्या च तस्य सार्थकनामता बोध्या समर्थित-श्चैष एव पक्षः पातञ्जलभाष्ये व्यासचरणैः "तदेतेषा-मर्थसङ्केतेनावच्छिन्नानामुपसंहृतध्वनिक्रमाणां य एको बुद्धिनिर्भासस्तत्पदं वाचकं वाच्यस्य संकेत्यते तदेकं पदमेकबुद्धिविषय एकप्रयत्नाक्षिप्तमभागमक्रमवर्णं बौद्ध-मन्त्यवर्णप्रत्ययोपस्थापितं प्रतीयते" इत्यन्तेन । अत्र चानेकवर्णानां शक्ततावच्छेदकतापेक्षयैकस्यैव जातिरूप-स्फोटत्वस्य शक्ततावच्छेदकत्वकल्पने लाघवमपि द्रष्ट-व्यम् । उक्तञ्च शब्दकौस्तुभे बोपदेवचरणैः "शक्यत्व इव शक्तत्वे जातेर्लाघवमीक्ष्यताम् । औपाधिको वा

भेदोऽस्तु वर्णानां तारमन्द्रत्वदिति" । तथा "इन्द्रोऽति य द्रवं स्फोटं तस्मै श्रोत्रे च मुन्यट्‌क् येन वाक् व्यज्यते यस्य व्यक्तिराकाश आत्मन" इति भागवतद्वादशस्कन्धवचने स्फोटात्मकशब्दब्रह्मणस्तस्य प्रतिपादिता स्फोटरूप शब्दोऽर्थवान इत्यवगम्यम । हरिवंशेऽपि "अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रयः" इति स्फोटस्य व्यञ्जकवर्णाश्रयत्वमभिहितम् । एतन्मताभिप्रायेणैव "स्फोट इत्यादि" शारीरकभाष्ये स्फटव्युत्पादनम "वर्णा एव तु शब्द इति भगवानुपवर्ष इति" निराकरणञ्च वर्णपक्षस्यात् तन्मताभिप्रायेण । "न स्फटः प्रतीत्यप्र तीतिभ्यामिति" सांख्यसूत्रे ऽपि स्फोटस्य सूत्रकृन्मताभिप्रायेणेति सर्वं सुष्ठम् । स च स्फोटो वर्णपदादि भेदेन अनेकविधो बाहुल्यभयात् न प्रपञ्चितः । तस्य स्फोटस्याभिव्यक्तौ प्राकृतस्य ध्वनेः कारणत्वं चिरचिरतरस्थितौ तु प्राकृतध्वनिजातवैकृतध्वनेरिति विवेकः । तथा च वाक्यपदीये "स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते" इति । "स्थितिभेदे निमित्तत्वं वैकृत प्रतिपद्यते" इति च स्थितिभेदे चिरचिरतरकालस्थितौ ध्वनिस्तु पूर्ववर्णितः । तस्य च स्फोटस्य नित्यतया ध्वनिगतह्रस्वदीर्घादिकालस्य तत्रोपचारः । प्रतिपादितञ्च तथैव वाक्यपदीये "स्फोटस्याभिन्नकालस्य ध्वनिकालानुपातिनः । ग्रहणोपाधिभेदेन वृत्तिभेदं प्रचक्षते" । स्वभावतस्तु नित्यत्वात् ह्रस्वदीर्घप्लुतादिषु । प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते" । शब्दस्य स्फोटस्य नित्यतया अभिन्नकालस्य ह्रस्वदीर्घादिषु प्राकृतध्वनेः काल तारत्वादिभेदहेतुरुपचर्यते इति तदर्थः । एवञ्च विलम्बितोच्चारणस्थले तत्तद्वर्णानां तद्बोधजनितसंस्काराणां वा बहुक्षणपर्य्यन्तस्थायित्वकल्पनमपेक्ष्य एकस्यैव शब्दस्याभिव्यक्त्यनन्तरं जायमानेन वैकृतेन ध्वनिना बहुकालस्थितिकल्पने लाघवमित्यपि द्रष्टव्यम । भेरीशब्दादौ च ध्वन्यभिव्यक्त्यनन्तरं जायमानप्राकृतध्वनेर्बहुकालस्थायित्वदर्शनेन अत्रापि तथाकल्पनीयत्वात् । अतएव च महाभाष्ये "एवं तर्हि स्फोटः शब्दो ध्वनिः शब्दगुणः" इत्यादिनाऽभिव्यक्त्युपकारकत्वेन ध्वनेः स्फोटरूपशब्दगुणत्वमभिहितमभिहितञ्च ध्वनेर्ह्रस्वदीर्घत्वेनापि भानम् यथा "ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते । अल्पो महांश्च केषाञ्चित् स्वयं नैव स्वभावतः" इति न स्वभावतश्च रूपेण स्फोटो लक्ष्यत इत्यर्थः । ध्वनिविकारे च वायुसंयोगविशेषस्य हेतुत्वं तस्य बहुकालस्थायित्वे चिरचिरतरकालस्थायित्वे तु तत्त्वमिति विवेकः । एवं बहुविधेषु स्फोटेषु वाक्यस्फोटस्यैव सिद्धान्ते निष्कृष्टतया तस्यैव बोधकत्वं तद्घटकपदानान्तु पदमध्यवर्त्तिवर्णवत् निरर्थकत्वं विशिष्टार्थद्योतनायैव तेषां प्रयोगात । तथा च "ब्राह्मणार्थो यथा नास्ति कश्चित् ब्राह्मणकम्बले । देवदत्तादयो वाक्ये तथैव स्युर्निरर्थकाः" इति । "पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च । वाक्यात पदानामत्यन्तं प्रविवेको न कश्चनेति" च वाक्यपदीये पदाद्यसत्त्वं दर्शयति । तथा "वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिरिति" हरिकारिकायां सिद्धान्ते वाक्यस्फोटस्यैव सिद्धिरिति प्रतिपादितम्" । २व्रणभेदे च (फाड़ा) राजनि० ।

**स्फोटक** पु० स्फुट-ण्वुल् । (फाड़ा) १व्रणभेदे हेमच० २दारके च ।

**स्फोटन** न० स्फुट-ल्युट् । १विदारणे २विकाशने च भरतः

**स्फोटनी** स्त्री स्फुट्यतेऽनया स्फुट-ल्युट् ङीप् । मणिवेधनकरणे यन्त्रभेदे (भोमरी) हिरूपको० ।

**स्फोटवीजक** पु० स्फोटस्य व्रणभेदस्य वीजम् ततः स्वार्थे क भल्लातके राजनि० । तत्फल-योटसंयोगात् व्रणोत्पत्तेस्तस्य तथात्वम् ।

**स्फोटायन** पु० स्फोट एवायनं अर्थबोधकतयाश्रयणं यस्य । अर्थबोधकत्वेन स्फोटाभ्युपगन्तरि वैयाकरणे मुनिभेदे "अवङ् स्फोटायनस्य" पाणिनि । [त्रिका० ।

**स्फोटिका** स्त्री स्फुट-ण्वुल टापि अत इत्त्वम् । चापुलिकायां

**स्फ्य** न० स्फाय-यत् नि० । खड्गाकारे यज्ञार्थ काष्ठभेदे ति०त०

**स्फ्याश्लिष्टेज्याधिकरण** न० अधिकरणभेदे ति० त० "स्फ्याश्लिष्टेज्याधिकरणञ्च स्फ्यस्य खड्गाकारकाष्ठस्य भङ्गादौ मैमित्तिकेज्यायाविहितत्वेन प्रकृतवद्विकृतिरित्यतिदेशेन दर्शादिपूर्णमासयोः प्राप्तौ पूर्वदिनप्रातःकालीनं हवनीयदेवतावाहनमपि प्राप्तं नच तदानीं न विधीयते नैमित्तिके निमित्तनिश्चयवतोऽधिकारितया प्रकृते यागाविभक्त्या स्फ्यरूपनिमित्तस्य संशयेन प्रधानानधिकारित्वाऽङ्गानधिकारात्तदुत्तरदिने च निमित्तनिश्चये तदधिकारसिद्धावपि नावाहनानुष्ठानम् आवाहनस्य पूर्वदिनप्रातःकालनैयत्यादितीज्यायां आवाहनं विनैवानुष्ठानम्"

**स्म** अव्य० स्मि-ड । १अतीते २पादपूरणे च अमरः ।

**स्मय** पु० स्मि-अच् । १गर्वे २अद्भुतरसस्थायिभावे च मेदि०|

**स्मर** पु० स्मरति प्रियमनेन स्मृ—करणे अप्। १कामदेवे अमरः। भावे अप्। २स्मरणे। [त्रिका०

**स्मरकूपक** पु० स्मरस्य कूप इव कायति कै—क कामध्वजे

**स्मरगृह** न० स्मरस्य गृहमिव। १स्त्रीचिह्नभेदे भगे जटा० स्मरमन्दिरादयोऽप्यत्र।

**स्मरचक्र** पु० "धृत्वा वामकरेणोरुं अपादद्योर्दर्शितम्। इदञ्च रमते कामी स्मरचक्रः प्रकीर्त्तितः" स्मरदीपिकोक्त रतिबन्धभेदे।

**स्मरण** न० स्मृ—ल्युट्। ज्ञातवस्तुनोऽनुभवाधीनसंस्कारजन्ये उद्बोधकसहकारेण जायमाने १ज्ञानभेदे स्मृतिशब्दे दृश्यम्। आध्याने हेमच०। २चिन्तने जटा०। ३अर्था-लङ्कारभेदे सा० द० अलङ्कारशब्दे ४०७ पृ० दृश्यम्

**स्मरदशा** स्त्री स्मरकृता दशा। कामिनां स्मरकृतासु अङ्गा-सौष्ठवादिषु दशसु दशासु।

"अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशताऽरुचिः। अधृतिः स्यादनालम्बस्तन्मयोन्मादमूर्च्छनाः। मृतिरिति क्रमाज्-ज्ञेया दश स्मरदशा इह॥ असौष्ठवं मलापत्तिस्तापस्तु विरहज्वरः। अरुचिर्वस्तुवैराग्यं सर्वत्रारागिताऽधृतिः। अनालम्बनता चापि शून्यता मनसः स्मृता। तन्मय तत्प्रकाशो हि बाह्याभ्यान्तरतस्तथा। रसविच्छेदहेतु-त्वात् मरणं नैव वर्ण्यते। वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः" इति सा०द०।

**स्मरध्वज** न० ६त०। स्त्रीचिह्ने शब्दर०। २वाद्ये पु०हेमच०

**स्मरप्रिया** स्त्री ६त०। स्मरभार्यायां रतौ जटा०।

**स्मरलेखनी** स्त्री स्मरस्य लेखनीव। स्मरेण कामोद्दीपके शारिकाख्यगे शब्दर०। [याम् राजनि०।

**स्मरवीथिका** स्त्री स्मरस्य वीथिकेव प्राप्तिहेतुत्वात्। वेश्या

**स्मरवृद्धि** पु० स्मरस्य वृद्धिर्यस्मात्। १कामवृद्धिक्षुपे राजनि० ६त०। २कामवृद्धौ स्त्री। [शब्दर०।

**स्मरस्तम्भ** पु० स्मरस्य तद्व्यापारस्य स्तम्भ इव। उपस्थे

**स्मरसखि** पु० स्मरः सखा यस्य। गर्दभे त्रिका०।

**स्मरहर** पु० स्मरं हरति नाशयति हृ—अच्। १महादेवे अमरः। स्मरमर्दनादयोऽप्यत्र।

**स्मराङ्कुश** पु० स्मरं तत्कार्य्येऽङ्कुश इव उत्तेजकत्वात्। नखे शब्दर० नखाघातेन हि स्त्रीणां स्मरोद्दीपनं प्रसिद्धम्।

**स्मराम्र** पु० स्मरप्रिय आम्रः। राजाम्रे राजनि०।

**स्मरासव** पु० स्मरोद्दीपक आसव इव। लालायाम् त्रिका० कामिनां तत्पाने हि स्मरोद्दीपनात्तस्यास्तथात्वम्।

**स्मार्त्त** त्रि० स्मृतौ विहितः, स्मृतिं वेत्त्यधीते वा अण्। १स्मृतिविहिते दानादौ "अन्योऽपि स्मार्त्तमाचरेत्" इति "स्मार्त्तं वैदिकवत् चरेत्" च स्मृतिः। २स्मृतिशास्त्राभिज्ञे च

**स्मि (ङ्मि)** अनादरे सक० विस्मये अक० चु० आ० सेट्। स्माययते अतिस्मयत। अयं घोपदेश एव। अन्यतो विस्मये स्माय-यतीत्येव। अय भ्वादि० आ० अनिट्। स्मयते असेष्ट सिष्मिये घोपदेशत्वात् षत्वम्। [ति असिस्मिटत् त

**स्मिट** अनादरे सक० स्नेहे अक० चु० उभ० सेट्। स्मेटयति।

**स्मित** न० स्मि-भावे क्त। १ईषद्धास्ये अमरः "मुखं विकसित-स्मितम्" मालतीमाधवम्। कर्त्तरि क्त। २विकसिते ३ईषद्धास्यान्विते च त्रि०।

**स्मील** निमेषणे भ्वा०पर०सक० सेट्। स्मीलति असमीलीत्।

**स्मृ** स्मरणे भ्वा० प० अनिट्। स्मरति अस्मार्षीत् सस्मार स-स्मर्तृ। अघोपदेशत्वान्न षत्वम्। एतद्योगे कर्मणि षष्ठी। अयमीतकृत्य सक० जटा० स्मरति।

**स्मृत** त्रि० स्मृ—क्त। १कृतस्मरणे २स्मृतिविषये च।

**स्मृति** स्त्री स्मृ-क्तिन्। अनुभूतवस्तुन उद्बोधकसहकारेण संस्काराधीने १ज्ञानभेदे। स्मर्यते वेदधर्मोऽनेन करणे क्तिन्। २धर्मशासनशास्त्रे वेदार्थानुभवजन्ये वेदार्थानु-वादके मुनिप्रणीते वाक्यरूपे शास्त्रे। "वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्" मनुः।

ज्ञानभेदस्य तस्याः लक्षणादिकं पात० सू० भा० विवरणे-षूक्तम् उक्तं यथा

"अनुभूतविषयाऽसंप्रमोषः स्मृतिः" सू०। "किं प्रत्य-यस्य चित्तं स्मरति। आहोस्वित् विषयस्येति। ग्राह्यो-परक्तः प्रत्ययो ग्राह्यग्रहणोभयाकारनिर्भासः तज्जा-तीयकं संस्कारमारभते स संस्कारः स्वव्यञ्जकाञ्जनं तदाकारमेव ग्राह्यग्रहणोभयात्मिकां स्मृतिं जनयति। तत्र ग्रहणाकारपूर्वा बुद्धिः ग्राह्याकारपूर्वा स्मृतिः। सा च द्वयी, भावितस्मर्त्तव्या चाभावितस्मर्त्तव्या च स्वप्ने भावि-तस्मर्त्तव्या जाग्रत्समये त्वभावितस्मर्त्तव्येति। सर्वाः स्मृतयः प्रमाणविपर्य्ययविकल्पनिद्रास्मृतीनामनुभवात् प्रभवन्ति" भा०। "अनुभूतविषयाऽसंप्रमोषः स्मृतिः प्रमाणादिभिरनुभूते विषयेऽसंप्रमोषः अस्तेयः सा स्मृतिः संस्कारमात्रजन्यस्य हि ज्ञानस्य संस्कारका-रणानुभवभासितो विषय आत्मीयस्तदधिकविषयपरि-ग्रहस्तु संप्रमोषः स्तेयः कस्मात् साद्दृश्यात्। सुव-र्णस्तेय इत्यस्मात् संप्रमोषपदव्युत्पत्तेः। एतदुक्तं भवति।

सर्वे प्रमाणादयोऽनधिगतमर्थं सामान्यतः प्रकारतो वाऽधिगमयन्ति, स्मृतिः पुनर्न पूर्वानुभवमर्यादामतिक्रामति तद्विषया तदूनविषया वा न तु तदधिकविषया सोऽयं वृत्त्यन्तराद्विशेषः स्मृतेरिति। विमृशति किंप्रत्ययस्येति ग्राह्यप्रवणत्वात् अनुभवस्य स्वानुभवात्तज्जः संस्कारो ग्राह्यमेव स्मारयतीति। प्रतिभासयति अनुभवमात्मजनितत्वाद्धानुभवमेवेति। विमृशन्नोपपद्यते उभयाकारमवधारयति ग्राह्यप्रवणतया ग्राह्योपरक्तः परमार्थतस्तु ग्राह्यग्रहणे एव उभयं तयोराकारं स्वरूपं निर्भासयति प्रकाशयति। स्वव्यञ्जकं कारणमञ्जनमाकारो यस्य स तथोक्तः। स्वकारणाकार इत्यर्थः। व्यञ्जकमुद्बोधकं तेनाञ्जनं फलाभिमुखीकरणं यस्येति वेत्यर्थः। ननु यदि कारणविचारेण बुद्धिस्मरणयोः सारूप्यं कस्तर्हि भेद इत्यत आह तत्र ग्रहणेति। ग्रहणमुपादानं न च गृहीतस्योपदानं सम्भवति तदनेनानधिगतबोधनं बुद्धेरित्युक्तं ग्रहणाकारो ग्रहणरूपं पूर्वं प्रधानं यस्याः सा तथोक्ता विकल्पितत्वायम् अभेदेऽपि गुणप्रधानभाव इति ग्राह्याकारः पूर्वः प्रथमो यस्याः सा तथोक्ता, इदमेव च ग्राह्याकारस्य ग्राह्यस्य पूर्वत्वं यद्वृत्त्यन्तरविषयीकृतत्वमर्थस्य तदनेन वृत्त्यन्तरविषयीकृतगोचरा स्मृतिरित्युक्तं भवति सोऽयमसम्प्रमोष इति। ननु अस्ति स्मृतेरपि सम्प्रमोषः दर्शयति हि पित्राद्देरतीतस्य देशकालान्तरानुभूतस्याननुभूतचरदेशकालान्तरसम्बन्धं स्वप्ने इत्यत आह सा च द्वयीति भावितः कल्पितः स्मर्त्तव्योयया सा तथोक्ता। अभावितोऽकल्पितः पारमार्थिक इति यावत्। नेयं स्मृतिरपि तु विपर्ययस्तल्लक्षणोपपन्नत्वात् स्मृत्याभासतया तु स्मृतिरुक्ता प्रमाणाभासमिवेति भावः। कस्मात् पुनरन्ते स्मृतेरुपन्यास इत्यत आह। सर्वाः स्मृतय इति अनुभवप्राप्तिपूर्वा वृत्तिः स्मृतिसारः स्मृतौ नामन्ते निवेश इत्यर्थः"।

धर्मशास्त्रशब्दे स्मृतिभेदादिकं १८६२ पृ० दृश्यम्।

**स्मृतिहेतु** पु० ६त०। १संस्कारे वासनारूपे गुणभेदे जटा०।

**स्मेर** त्रि० स्मि-रन्। १विकसिते हेमच० २ईषद्धास्यान्विते च संक्षिप्त० "महाजनः स्मेरमुखो भविष्यति" कुमारः।

**स्यद** पु० स्यन्द-वञर्थे क। वेगे अमरः।

**स्यन्द** स्रवणे भ्वा० आ० लुङि, लृटि, लृङि च उभ० अक० ऊदित् वेट्। स्यन्दते अस्यदत् अस्यन्दिष्ट अस्यन्त। षोपदेशत्वेऽपि विधिबलाद्विष्यन्दते इत्यादौ षत्वम्।

**स्यन्द** पु० स्यन्द-भावे घञ्। द्रवद्रव्यक्षरणे प्रस्रवे।

**स्यन्दन** न० स्यन्द-भावे ल्युट्। १क्षरणे। "स्यन्दनञ्च मन्निकृष्टदेशस्य द्रवद्रव्यस्य च संयोगानुकूलो व्यापारः गमनत्वव्याप्यजातिभेदो वा "भ्रमणं रेचनं स्यन्दनोर्द्ध्वज्वलनमेव च। तिर्य्यग्गमनमप्यत्र गमनादेव लभ्यते" भाषा०। कर्त्तरि ल्यु। २जले न०। ३रथे मेदि०। ४तिनिशवृक्षे च पु० अमरः।

**स्यन्दनद्रुम** पु० कर्म०। तिनिशवृक्षे शब्दर०।

**स्यन्दनारोह** पु० स्यन्दनमारोहति युद्धार्थम्, आ+रुह अण्। रथारोहेण योद्धरि अमरः। [लालायां स्त्री अमरः।

**स्यन्दनि** पु० स्यन्द-अनि। तिनिशवृक्षे रत्नमा० ङीप्।

**स्यन्दिन्** त्रि० स्यन्द+णिनि। १प्रस्रविणि। २लालायां स्त्री अमरः ङीप्।

**स्यन्न** त्रि० स्यन्द-क्त। स्रुते जलादौ अमरः।

**स्यन्नवीण** त्रि० स्यन्ना वीणा यत्र। स्रुते हेमच०।

**स्यम** ध्वनने भ्वा० पर० अक० सेट् क्त्वा वेट् फणादि०। स्यमति अस्यमीत् स्येमतु सस्यमतुः।

**स्यम** वितर्के चु० उ० सक० सेट्। स्यामयति ते असिस्यमत् त।

**स्यम** ध्याने अद० चु० उभ० सक० सेट्। स्यमयति असिस्यमत् त।

**स्यमन्तक** पु० स्यम-झच् संज्ञायां कन्। १श्रीकृष्णस्य हस्तस्थे मणिभेदे हेमच०। २वृक्षभेदे पु० मेदि०। ३सूर्य्यदत्ते सत्राजितो मणिभेदे तत्कथा भाग० १०।५६ अ०। "आसीत् सत्राजितः सूर्य्यभक्तस्य परमः सखा। प्रीतस्तस्मै मणिं प्रादात् स च तुष्टः स्यमन्तकम्" इति। "दिने दिने स्वर्णभारानष्टौ स सृजति प्रभो!। दुर्भिक्षमार्य्यरिष्टानि सर्पाधिव्याधयोऽशुभाः। न सन्ति मायिनस्तत्र यत्रास्तेऽभ्यर्चितो मणिः" एतदुपाख्यानं स्यमन्तकोपाख्यानं तच्च भाद्रशुक्लचतुर्थीचन्द्रदर्शने श्राव्यम्" ति०त० रघु०।

**स्यमीका** स्त्री स्यम-ईकक्। १वल्मीके २काले ३मेघे च पु० ४नीलौषधौ स्त्री मेदि०।

**स्यूत** त्रि० सिव-कर्मणि क्त। १सूच्यादिना ग्रथिते वस्त्रादौ अमरः। २तन्तुरचितपात्रे (थोकड़ी) पु० अमरः। पृषो० ओत्। स्योतोऽप्यत्र भरतः।

**स्यूति** स्त्री सिव-भावे क्तिन्। सूच्यादिना वस्त्रादिसीवने।

**स्यून** पु० सिव-नक्। १सूर्य्ये २किरणे मेदि० ३सूच्यादिस्यूतखण्डवस्त्रनिर्मिते पदार्थे (थुकड़ी) च शब्दर०।

**स्यूम** न० सिव-मक्। १जले २किरणे संक्षिप्त० किरणे पु० उणा०

**स्योन** पु० सून+पृषो० । १पौतकटे (धकड़ी) अमरटी० भरतः २सूर्य्ये ३किरणे मेदि० । ४सुखे निघण्टुः । ५सुखकरे त्रि० "स्योना पृथिवी नोभवान्वृक्षरा" यजु० ३५ अ० २१ ।

**स्रंसन** न० स्रन्स-णिच-ल्युट् । अङ्ग गतस्याधोनयने पतने च । स्रंसनाप्यत्र स्त्री । [२पीलुवृक्षे पु० अमरः ।

**स्रंसिन्** त्रि० स्रन्स-णिनि । १अधःपतनशीले स्त्रियां ङीप्

**स्रंसिफल** पु० स्रंसि फलमस्य । शिरीषवृक्षे शब्दमा० ।

**स्रक** गतौ भ्वा० आत्म० सक० सेट् इदित् । स्रङ्कते अस्रङ्किष्ट

**स्रग्वत्** त्रि० स्रक् माल्यमस्त्यस्य मतुप् मस्य वः कुत्वम् । माल्यवति । विनि । स्रग्वीत्यप्यत्र । उभयत्र स्त्रियां ङीप् ।

**स्रज्** स्त्री सृज्यते सृज-क्विन् नि० माल्ये अमरः ।

**स्रज्वा** स्त्री सृज-वा वेत्वम् नि० । १प्रजापतौ २तन्तुसंघाते ३रज्जाञ्च संक्षिप्तसारः ।

**स्रन्स** पतने भ्वा० आत्म० लुङि उ० अक० सेट् उदित् क्त्वा वेट् । स्रंसते इरित् अस्रसत् अस्रंसिष्ट । "कोऽस्रसत् करिणां ग्रैवम्" रघुः । [सते अस्रंसिष्ट ।

**स्रन्स** प्रमादे भ्वा० आ० अक० सेट् उदित् क्त्वा वेट् । स्रं-

**स्रम्भ** विश्वासे भ्वा० आत्म० इदित् लुङि उ० अक० सेट् उदित् क्त्वा वेट् । स्रम्भते अस्रभत् अस्रम्भिष्ट ।

**स्र(स्रा)व** पु० स्रु-अप् घञ् वा । १क्षरणे अमरः । कर्त्तरि अच् । २निर्झरे हेमच० । [भावे ल्युट् । १क्षरणे ।

**स्रवण** न० स्रु-ल्यु । १मूत्रजले राजनि० २घर्मे च शब्दर०

**स्रवद्गर्भा** स्त्री स्रवन् गर्भो यस्याः । १दैववशात् पतितगर्भायां गवि अमरः । २तथाभूतस्त्रियाञ्च ।

**स्रवद्रङ्ग** पु० स्रवन् रङ्गो यत्र । पण्यपन्थौ (हट्टे) हारा० ।

**स्रवन्ती** स्त्री स्रु-शतृ ङीप् । १नद्याम् अमरः । २ओषधिभेदे ३गुल्मस्थाने च मेदि० । शतृ । क्षरविशिष्टे त्रि० । स्त्रियां ङीप् ।

**स्रवा** स्त्री स्रु-अच् । १मूर्वायाम् रायमु० २क्षरणयुते त्रि०

**स्रष्टृ** पु० सृज-तृच् नित्यम् । १जगत्कर्त्तरि चतुर्मुखे अमरः २शिवे हला० । ३सर्जनकर्त्तरि त्रि० स्त्रियां ङीप् ।

**स्रस्त** त्रि० स्रन्स-क्त । च्युते पतिते अमरः ।

**स्रस्तर** पु० स्रन्स-तरच् किच्च । आसने शु०त० रघु० ।

**स्राक्** अव्य० स्रु-डाक् । त्वरिते द्रागित्यर्थे अमरः ।

**स्रावक** न० स्रावयति स्रु-णिच्-ण्वुल् । १मरिचे शब्दच० २निःस्रावके त्रि० । [असृम्भीत् ।

**स्रिम्भ** हिंसे भ्वा० प० सक० सेट् उदित् क्त्वा वेट् । स्रिम्भति

**स्रिभ** हिंसे भ्वा० प० सक० सेट् उदित् क्त्वा वेट् । स्रेभति असेभीत् ।

**स्रिव** शोषे अक० दिवा० प० गतौ सक० सेट् उदित् क्त्वा वेट् । स्रीव्यते असेवीत् । [स्रुवत् ।

**स्रु** गतौ सक० क्षरणे अक० भ्वा० प० अनिट् । स्रवति अस्रु-

**स्रुग्दारु** स्रुचे यज्ञपात्राय दारु यस्य । विकङ्कतवृक्षे जटा० ।

**स्रुघ्न** पु० १देशभेदे । स उत्पत्तिस्थानत्वेनास्त्यस्याः अच् गौरा० ङीष् । २सर्जिकाक्षारे स्त्री हेमच० ।

**स्रुच्(चा)** स्त्री स्रु-क्विप् चिट् च वा टाप् । षट्पञ्चाशत्ती विकङ्कतकाष्ठजे बाहुमात्रे यज्ञपात्रभेदे शब्दच० । [स्त्री शब्दच०

**स्रुत** त्रि० स्रु-क्त । १क्षरिते जलादौ २गते च । ३हिङ्गुपत्र्यां

**स्रुव** पुंस्त्री० स्रु-क । १खदिरकाष्ठभवे हस्तमिते यज्ञपात्रभेदे यज्ञपात्रभेदे इत्यम् । २शल्लक्याम् ३मूर्वायाञ्च स्त्री मेदि०

**स्रुवावृक्ष** पु० स्रुवायाः साधनं वृक्षः । विकङ्कतवृक्षे (कँइचि) अमरः ।

**स्रू** स्त्री स्रु-क्विप् नि० । १यज्ञपात्रभेदे २निर्झरे च हेमच० ।

**स्रै** शब्दे(?) त्वरितौ-भ्वा० पर० अक० अनिट् । स्रायति अस्रासीत् ।

**स्रोत** न० स्रु-तन् । स्रोतसि देहेन स्वतोजलनिःसरणे भरतः

**स्रोतस्** न० स्रु-तसि । १वेगेन स्वतो जलनिःसरणे अमरः । २इन्द्रिये च अर्द्ध स्रोताः । ३देहस्यच्छिद्रे च ।

**स्रोतईश** पु० ६त० । समुद्रे हेमच० ।

**स्रोतस्वत्** त्रि० स्रोतोऽस्त्यस्य मतुप् मस्य वः । १स्रोतोयुक्ते २नद्यां स्त्री अमरः ङीप् । [२स्रोतोयुक्ते त्रि० ।

**स्रोतस्विनी** स्रोतस्+अस्त्यर्थे विनि ङीप् । १नद्याम्

**स्रोतोऽञ्जन** न० स्रोतसि यमुनास्रोतो जलपवित्रसौवीरदेशे भवम् अञ्जनम् । सौवीरदेशजेऽञ्जने अमरः । "वल्मीकशिखराकारं भिन्नं नीलाञ्जनप्रभम् । घृष्टं च गैरिकावर्णं श्रेष्ठं स्रोतोऽञ्जनञ्च तत्" राजनि० । "स्रोतोऽञ्जनं तत्र श्रेष्ठं विशुद्धं सिन्धुसम्भवम् । दृष्टेः कण्डूमलहरं दाहक्लेदरुजापहम् । अक्ष्णो रूपावहञ्चैव सहते मारुतातपौ । नेत्ररोगा न जायन्ते तस्मादञ्जनमाचरेत्" । "अञ्जनं यामुनञ्चापि कापोताञ्जनमित्यपि । तत्र स्रोतोऽञ्जनं कृष्णं सौवीरं श्वेतमीरितम् । स्रोतोऽञ्जनसमं ज्ञेयं सौवीरं तत्तु पाण्डुरम् । स्रोतोऽञ्जनं भवेत् स्वादु चक्षुष्यं कफपित्तनुत् । कषायं लेखनं स्निग्धं ग्राहि च्छर्दिविषापहम् । सिध्मक्षयास्रहृत् शीतं सेवनीयं सदा बुधैः । स्रोतोऽञ्जनगुणाः सर्वे सौवीरेऽपि मता बुधैः । किन्तु द्वयोरञ्जनयोः श्रेष्ठं स्रोतोऽञ्जनं स्मृतम्" भावप्र० । [जटा०

**स्रोतोवहा** स्त्री स्रुतया वहति सरति वह-अच् । नद्याम्

**स्व** न० स्वन–ड। १धने अमरः। २आत्मनि ३ज्ञातौ च पु० अमरः। ४आत्मीये त्रि०। आत्मनि आत्मीये चार्थेऽस्य सर्वनामता।

**स्वकम्पन** पु० स्वेनैव पराप्रयुज्यमान एव कम्पते कम्प–युच्। वायौ शब्दर०।

**स्वकर्म्मन्** न० स्वस्य कर्म। स्ववर्णोचिते कर्म्मणि "स्वकर्म्मनिरतः सदा" गीता।

**स्वकीय** त्रि० स्वस्येदम् छ कुक् च। आत्मीये। अत्र नित्यमेव कुक्, अकुक्युक्तप्रयोगस्तु अपाणिनीयः।

**स्वग** सर्पणे भ्वा० प० सक० सेट् इदित्। स्वङ्गति अस्वङ्गीत्।

**स्वगत** त्रि० स्वस्मिन् मनसि आत्मनि वा गतम् गम–क्त। १मनोगते २आत्मगते च। नाटकाभिनये प्रतिपाद्यपुरुषाश्राव्ये रङ्गभूमिस्थसामाजिकजनश्रवणयोग्ये वाक्ये न०। "अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्" सा०द०।

**स्वगुप्ता** स्त्री स्वेनैव गुप्ता। १शूकशिम्ब्याम् शब्दर०। २लज्जालुलतायाञ्च राजनि०।

**स्वगृह** पुंस्त्री० स्वकृतं गृहं यस्य। १कलिङ्कारखगे जटा० हृत०। २निजमन्दिरे ३निजराशौ च ज्यो०।

**स्वच्छ** त्रि० सुष्ठु अच्छः प्रा०। १अतिनिर्म्मले कालुष्यरहिते २बदर्य्यां ३स्फटिके च पु० राजनि०। ४श्वेतदूर्वायाम् स्त्री राजनि०। ५विमलोपरसे न० ६रोगवियुते त्रि० शब्दर०। ७शुक्ले च। [अमरः।

**स्वच्छन्द** त्रि० स्वस्य छन्दोऽभिप्रायः स्वतन्त्रे यस्य। स्वाधीने

**स्वच्छपत्त्र** न० स्वच्छं पत्त्रं यस्य। अभ्रके हेमच०।

**स्वच्छमणि** पु० कर्म०। स्फाटिके मणौ राजनि०।

**स्वच्छवालुक** न० स्वच्छा वालुकेव यत्र। विमलोपरसे राजनि०।

**स्वज** न० स्वस्मात् देहात् आत्मनो वा जायते। १रुधिरे मेदि० ३पुत्रे पु० ४कन्यायां स्त्री मेदि०। ५आत्मजाते त्रि०।

**स्वजन** पु० स्वस्येव जनो जननमेककुले यस्य। १ज्ञातौ अमरः। ६त०। २आत्मसम्बन्धिलोके। [यति–ते अस्वठत्–त।

**स्वठ** गतौ संस्कारेऽसंस्कारे च चु० उ० सक० सेट्। स्वठ–

**स्वतन्त्र** त्रि० स्वस्य तन्त्रं वशीकारः स्वतन्त्रो यस्य। १स्वाधीने अपराधीने अमरः। तत्त्वञ्च इतरव्यापारानधीनव्यापारवत्त्वम्। २कर्त्तरि च तद्धि समभिव्याहृतक्रियाकारकान्तरानधीनव्यापारवान् इति शाब्दिकाः "स्वतन्त्रः कर्त्ता" पा० कर्तृशब्दे १७१६ पृ० दृश्यम्।

**स्वतस्** अव्य० स्व+तसिल्। आत्मतः इत्यर्थे।

**स्वता** स्त्री स्वस्य स्वकीयस्य भावः तल्। स्वकीयत्वे "कामः स्वतां पश्यति" शकुन्तला।

**स्वतोग्राह्य** न० स्वग्राहकसामग्रीग्राह्ये ज्ञानप्रामाण्ये वेदान्तादिमतम् "प्रामाण्यं न स्वतोग्राह्यं संशयानुपपत्तितः" भाषा० उक्तेर्न तत् स्वतोग्राह्यमिति न्यायमतम्।

**स्वत्व** न० स्वस्य भावः त्व। द्रव्याणां यथेष्टक्रयविक्रयादिक्रियासु विनियोजके १धर्मभेदे २स्वामित्वे च, तच्च सम्बन्धभेदेन द्रव्यगतमात्मगतञ्च। स्वत्वपदार्थस्तु दायभा०टीकायां श्रीकृष्णतर्कालङ्कारेण निरूपितो यथा

"स्वत्वञ्च यथेष्टविनियोगार्हत्वेन शास्त्रबोधितत्वमिति प्राञ्चः। अतिरिक्तः पदार्थ इति शिरोमणिः। स्वामित्वञ्च तन्निरूपकत्वं निरूपकतया तदेव वा तच्च द्रव्यगतं गुणगतञ्च द्रव्यस्य दानादिश्रुतेः नीलं वा वृषमुत्सृजेदित्यादौ लौहित्यादिगुणविशिष्टपारिभाषिकनीलवृषोत्सर्गश्रुतेश्च। वस्तुतस्तु आत्मसमवेतं स्वामित्वमतिरिक्तः पदार्थः विक्रयदानादीनां तज्जनकत्वे तद्धेतुत्वे च सम्बन्धाभावात् तदेव निरूपकतया स्वत्वव्यवहारहेतुः विषयतया ज्ञातताद्वत्। अतएव निबन्धादौ भाविन्यपि स्वत्वम् अन्यथा प्रतिमासं प्रतिवर्षं वा देयत्वेन प्रतिश्रुतस्य धान्यादिरूपस्य भावित्वेन तत्र तदुत्पत्त्यनुपपत्तेरिति चूडामणिप्रभृतीनां श्रीनाथतोरहस्यविदः समीचीनः पन्थाः।

तच्च स्वत्वं लौकिकमिति मिता० व्यवस्थापितं यथा

"स्वत्वमेव तावन्निरूप्यते किं शास्त्रैकसमधिगम्यं स्वत्वमुत प्रमाणान्तरसमधिगम्यमिति। तत्र शास्त्रैकसमधिगम्यमिति तावद्युक्तं गौतमवचनात्। 'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोरिति' प्रमाणान्तरगम्ये स्वत्वे नेदं वचनम्। तथा स्तेनातिदेशे मनुः "योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम्। याजनाध्यापनेनापि यथा स्तेनस्तथैव सः" इत्यदत्तादायिनः सकाशात् याजनादिकरणेन द्रव्यमर्जयतां दण्डविधानमनुपपन्नं स्यात् स्वत्वस्य लौकिकत्वे। अपि च। लौकिकं चेत् स्वत्वं मम स्वमपहृतमनेनेति न ब्रूयात् अपहर्त्तुरेव स्वत्वादन्यस्य स्वत्वेनापहृतमिति नापहर्त्तुः स्वम्। एवं तर्हि सुवर्णरजतादिस्वरूपवदस्य वा स्वमन्यस्य वा स्वमिति संशयो न स्यात् तस्माच्छास्त्रैकसमधिगम्यं स्वत्वमिति। अत्रोच्यते। लौकिकमेव स्वत्वं लौकिकार्थक्रियासाधनत्वात् व्रीह्यादिवत्। आहवनीयादीनां हि शास्त्रगम्यानां न लौकिकक्रियासाध-

न्त्वमस्ति। नन्वाहवनीयादीनामपि पाकादिसाधनत्व मस्त्वेव। नैतत्। न हि तत्राहवनीयादिरूपेण पाकादिसाधनत्वं किं तर्हि प्रत्यक्षादिपरिदृश्यमानाग्न्यादिरूपेण। इह तु सुवर्णादिरूपेण न क्रयादि साधनत्वमपि तु स्वत्वेनैव। न हि यस्य यत्स्वं न भवति तत्तस्य क्रयाद्यर्थक्रियां साधयति। अपि च प्रत्यन्तवासिनामप्यदृष्टशास्त्रव्यवहाराणां स्वत्वव्यवहारो दृश्यते क्रयविक्रयादिदर्शनात्। किञ्च। नियतोपायकं स्वत्वं लोकसिद्धमेवेति न्यायविदो मन्यन्ते। तथा हि लिप्सासूत्रे तृतीयवर्णके द्रव्यार्ज्जननियमानां क्रत्वर्थत्वे स्वत्वमेव न स्यात् स्वत्वस्यालौकिकत्वादिति पूर्वपक्षासम्भवमाशङ्क्य द्रव्यार्ज्जनस्य प्रतिग्रहादिना स्वत्वसाधनत्वं लोकसिद्धमिति पूर्वपक्षः समर्थितो गुरुणा। ननु द्रव्यार्ज्जनस्य क्रत्वर्थत्वे स्वमेव न भवतीति याग एव न संप्रवर्त्तेत। प्रत्युपपतमिदद्धेनापि अर्ज्जनं स्वत्वं नापादयतीति विप्रतिसिद्धमिति वदता। तथा सिद्धान्तेऽपि स्वत्वस्य लौकिकत्वमङ्गीकृत्यैव विचारप्रयोजनमुक्तम्। अतो नियमातिक्रमः पुरुषस्य न क्रतोरिति। अस्य चायं एवं विस्तरः। यदा द्रव्यार्ज्जननियमानां क्रत्वर्थत्वं तदा नियमार्ज्जितेनैव द्रव्येण क्रतुसिद्धिः। नियमातिक्रमार्ज्जितेन द्रव्येण न क्रतुसिद्धिरिति न पुरुषस्य नियमातिक्रमदोषः पूर्वपक्षे। सिद्धान्ते तु अर्ज्जननियमस्य पुरुषार्थत्वात्तदतिक्रमेणार्ज्जितेनापि द्रव्येण क्रतुसिद्धिर्भवति। पुरुषस्यैव नियमातिक्रमाद्दोष इति नियमातिक्रमार्ज्जितस्यापि स्वत्वमङ्गीकृतम् अन्यथा क्रतुसिद्ध्यभावात् न चैतावता चौर्य्यादिप्राप्तस्यापि स्वत्वं स्यादिति मन्तव्यम् लोके तत्र स्वत्वप्रसिद्ध्यभावाद् व्यवहारविसंवादाच्च। एवं प्रतिग्रहाद्युपायके स्वत्वे लौकिके स्थिते ब्राह्मणस्य प्रतिग्रहादय उपायाः। क्षत्रियस्य विजितादय उपाया वैश्यस्य कृष्यादयः शूद्रस्य शुश्रूषादय इत्यसाधारणा नियमाः। रिक्थ-द्वयस्तु सर्वसाधारणाः “स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेष्विति”। अत्राप्रतिबन्धो दायो रिक्थम्। क्रयः प्रसिद्धः संविभागः स प्रतिबन्धो दायः। परिग्रहोऽनन्यपूर्व्वस्य जलतृणकाष्ठादेः स्वीकारः। अधिगमो निध्यादेः प्राप्तिः। एतेषु निमित्तेषु सत्सु स्वामी भवति। ज्ञातेषु ज्ञायते स्वामी। ब्राह्मणस्याधिकं लब्धमिति ब्राह्मणस्य प्रतिग्रहादिना यल्लब्धं तदधिकमसाधारणम्। क्षत्रियस्य विजितमित्यधिकमित्यनुवर्त्तते क्षत्रियस्य विजयदण्डादिलब्धमसाधारणम्। निर्विष्टं वैश्यशूद्रयोरिति। अत्राप्यधिकमित्यनुवर्त्तते वैश्यस्य कृषिगोरक्षादिलब्धं निर्विष्टं तदसाधारणं शूद्रस्य द्विजशुश्रूषादिना भृतिरूपेण यल्लब्धं तदसाधारणमेवमनुलोमजानां प्रतिलोमजानाञ्च लोकप्रसिद्धेषु स्वत्वहेतुषु यद्यदसाधारणमुक्तम् “सूतानामश्वसारथ्यम्” इत्यादि तत्तत् सर्वं निर्विष्टशब्देनोच्यते सर्व्वस्यापि भृतिरूपत्वात् “निर्वेशो भृतिभोगयोरिति” त्रिकाण्डीस्मरणात्। तत्तदसाधारणं वेदितव्यम्। यदपि पत्नीदुहितरश्चेत्यादिस्मरणम्। तत्रापि स्वामिसम्बन्धितया वस्तुषु दायविभागितया प्राप्तेषु लोकप्रसिद्धेऽपि स्वत्वे व्यामोहनिवृत्त्यर्थं स्मरणमिति सर्व्वमनवद्यम्”।

तच्च स्वत्वं जन्मनैवेति मिताक्षरादयः। पित्रादिमरणादिनैवेति दायभागादयः। तत्रापि बहुदायद्रव्ये स्वत्वमिति मिताक्षरादयः। प्रदेशभेदे इति दायभागादयः। तत्तद्ग्रन्थे विस्तरो दृश्यः। [त्व च्छदनम्। २तुभक्षणे हेमच०।

**स्वदन** न०स्वद-भावे ल्युट्। १आस्वादे २लेहने च राजनि०।

**स्वधर्म्म** पु० स्वस्य वेदादिविहितो धर्म्मः। स्वानुरूपे वेदाद्युक्ते आचारादिधर्म्मे। “यो यस्य विहितो धर्म्मः स तज्जातिः प्रकीर्त्तितः। तस्मात् स्वधर्म्मं कुर्य्याच्च द्विजो नित्यमनापदि” नरसिंहपु०। “श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात्। स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः” गीता।

**स्वधा** अव्य० स्वद–आ पृषो० दस्य धः। १पितृदेवोद्देशेन हविस्त्यागे अमरः। स्वेन धयति धे–क टाप्। २मातृकाभेदे स्त्री “नमः स्वधायै स्वाहायै” इति पितृगाथा। “निपातस्वधायोगे त्यागोद्देश्यपदात् चतुर्थी पितृभ्यः स्वधेत्यादौ पितृउद्देश्यकत्याग इति बोधः। तदर्थस्य विषयतया अत्र दानान्वयी तस्य निपातत्वेन तदर्थस्य भेदान्वयस्य व्युत्पत्तिसिद्धत्वात्। इदमन्नं पित्रे स्वधेत्यादौ पितृउद्देश्यकत्यागविषय इदमन्नमित्यादि बोधः। मातृभेदस्वधा च दक्षकन्या ब्रह्मणो मानसी कन्या च पितृपत्नी। तत्राभोक्तारश्च पित्रादिस्वाहुत्याधारकरूपोऽसावरो ब्रह्मणा दत्तः।“ब्रह्मा च मानसीं कन्यां ससृजे तां मनोहराम्” “स्वधाभिधानां सतीं लक्ष्मीलक्षणसंयुताम्” “पितृभ्यस्तां ददौ ब्रह्मा तुष्टेभ्यस्तुष्टिरूपिणीम्। ब्राह्मणानामुपदेशं चकार लोकनायकः। स्वधान्तं मन्त्रमुच्चार्य्य पितृभ्यो देहि चेति च। क्रमेण तेन विप्रास्च पित्रे दानं ददुः पुरा” ब्रह्मवै०प्र०

स्वधानामकस्वधाशब्दस्यापि पितृदाने विनियोग इति बोध्यम् ।

**स्वधाप्रिय** पु० स्वधाश्रिनां प्रियः शाक० । १कृष्णतिले शब्दर० २स्वधोपलक्षितश्राद्धादिप्रिये पित्रादौ च । स्वधा प्रिया यस्य । ३पितृलोके स्वधाशब्दे मूलं दृश्यम् । [सवे २देवे च

**स्वधाभुज्** स्वधेत्यनेन त्यक्तद्रव्यं भुङ्क्ते भुज–क्विप् । १पितृ-

**स्वधि(ती)ति** स्त्री स्वेन धीयते धा–क्तिच् वा ङीप् । कुठारे परश्वधे अमरः पृषो० । स्वधितिरप्यत्र ।

**स्वन** शब्दे भ्वा० पर० अक० सेट् । स्वनति अस्वनीत् अस्वानीत् । घटा०(स्व)नयति । स्वेनतुः सस्वनतुः । अयं भूषणे वा घटा० (स्वा)स्वनयति । [स्वनत्–त ।

**स्वन** ध्वाने अद० चु० उभ० अक० सेट् । स्वनयति–ते अस-

**स्वन** पु० स्वन+अप् । शब्दे अमरः ।

**स्वनि** पु० स्वन+इन् । शब्दे हेमच० ।

**स्वनित** त्रि० स्वन–कर्त्तरि–क्त । १शब्दिते अमरः । भावे क्त । २शब्दे ३मेघगर्जिते च न० हेमच० ।

**स्वनिताह्वय** पु० स्वनितमाह्वयते आ+ह्वे श । तण्डुलीयशाके राजनि० । [स्त्रियां ङीष् ।

**स्वनोत्साह** पुंस्त्री० स्वने उत्साहो यस्य । गण्डके शब्दर०

**स्वपन** न० स्वप–ल्युट् । १शयने २निद्रायाञ्च शब्दर० ।

**स्वपिण्डा** स्त्री स्वेनैव पिण्डः पिण्डाकारोऽस्त्यस्याः अच् । पिण्डखर्जूर्य्याम् राजनि० ।

**स्वप्न** पु० स्वप–भावे नन् । १निद्रायाम् अमरः २शयने ३मानसिकज्ञानभेदे ४दर्शने च मेदि० आर्षे न० । स्वप्नदृष्टपदार्थस्य मायामात्रत्वं शा० सू० भाष्ययोर्व्यवस्थापितं यथा "सन्ध्ये सृष्टिराह हि" सू० ।

"अतिक्रान्ते पादे पञ्चाग्निविद्यामुदाहृत्य जीवस्य संसारगतिप्रभेदः प्रपञ्चितः, इदानीं तस्यैवावस्थाभेदः प्रपञ्च्यते । इदमामनन्ति "स यत्र प्रस्वपिति" इत्युपक्रम्य "न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते" इत्यादि । तत्र संशयः किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिराहोस्विन्मायामयीति । तत्र तावत् प्रतिपद्यते । सन्ध्ये सृष्टिरिति । सन्ध्यमिति स्वप्नस्थानमाचष्टे वेदे प्रयोगदर्शनात् "सन्ध्यं तृतीयं स्वप्नस्थानम्" इति । द्वयोर्लोकस्थानयोः प्रबोधसम्प्रसादस्थानयोर्वा सन्धौ भवतीति सन्ध्यं तस्मिन् सन्ध्ये स्थाने तथ्यरूपैव सृष्टिर्भवितुमर्हति । कुतः, यतः प्रमाणभूता श्रुतिरेवमाह "अथ रथान् रथयोगान् पथः सृजते" इत्यादि । स हि कर्त्तेति चोपसंहारादेवमेवावगम्यते" भा० । "निर्मातारं चैके पुत्रादयश्च" । सू० "अपि चैके शाखिनोऽस्मिन्नेव सन्ध्ये स्थाने कामानां निर्मातारमात्मानमामनन्ति "य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः" इति । पुत्रादयश्च तत्र कामा अभिप्रेयन्ते काम्यन्त इति । ननु कामशब्देनेच्छाविशेषा एवोच्येरन्, न, "शतायुषः पुत्रपौत्रान् वृणीष्व" इति प्रकृत्य "अन्ते कामानान्त्वा कामभाजं करोमि" इति प्रकृतेषु तत्र पुत्रादिषु कामशब्दस्य प्रयुक्तत्वात् । प्राज्ञं चैनं निर्मातारं प्रकरणवाक्यशेषाभ्यां प्रतीमः । प्राज्ञस्य हीदं प्रकरणम् "अन्यत्र धर्मादन्यत्राधर्मात्" इत्यादि । तद्विषय एव च वाक्यशेषोऽपि–"तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" । इति प्राज्ञकर्तृका च सृष्टिस्तथ्यरूपा समधिगता यथा जागरिताश्रया तथा स्वप्नाश्रयापि सृष्टिर्भवितुमर्हति । तथा च श्रुतिः "अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत् पश्यति तानि सुप्तः" इति स्वप्नजागरितयोः समानन्यायतां श्रावयति । तस्मात् तथ्यरूपैव सन्ध्ये सृष्टिरित्येवं प्राप्ते प्रत्याह । "मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" सू० । "तुशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति यदुक्तं सन्ध्ये सृष्टिः पारमार्थिकीति । मायामय्येव सन्ध्ये सृष्टिर्न परमार्थतोऽस्त्यस्ति । कुतः कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् । न हि कार्त्स्न्येन परमार्थवस्तुधर्मेणाभिव्यक्तस्वरूपः स्वप्नः । किं पुनरत्र कार्त्स्न्यमभिप्रेतं, देशकालनिमित्तसम्पत्तिरबाधश्च । न हि परमार्थवस्तुविषयाणि देशकालनिमित्तानि अबाधश्च स्वप्ने रथादीनामुचितो देशः सम्भवति, न तावत् संवृते देहदेशे रथादयोऽवकाशं लभेरन् । स्यादेतत्, बहिर्देहात् स्वप्नं द्रक्ष्यति देशान्तरितद्रव्यग्रहणात् । दर्शयति च श्रुतिः बहिर्देहात् स्वप्नं "बहिःकुलायादमृतश्चरित्वा स ईयतेऽमृतो यत्र कामम्" इति । स्थितिगतिप्रत्ययभेदश्च नानिष्क्रान्ते जन्तौ सामञ्जस्यमनुवीतेति । नेत्युच्यते, न हि सुप्तस्य जन्तोः क्षणमात्रेण योजनशतान्तरितं देशं पर्य्येतुं विपर्य्येतुञ्च ततः सामर्थ्यं सम्भाव्यते । क्वचिच्च प्रत्यागमनवर्जितं स्वप्नं श्रावयति "कुरुष्वहं शय्यायां शयानो निद्रयाभिप्लुतः स्वप्ने पञ्चालानभिगतश्चास्मिन् प्रतिबुद्धश्च" इति । देहा-

च्चेदपेयात् पञ्चालेष्वेव प्रतिबुध्येत तानसावभिगत इति कुरुष्वेव तु प्रतिबुध्यते । येन चायं देहेन देशान्तरमश्नुवानो मन्यते तमन्ये पार्श्वस्थाः शयनदेश एव पश्यन्ति । यथाभूतानि चायं देशान्तराणि स्वप्ने पश्यति न तानि तथाभूतान्येव भवन्ति, परिधावंश्चेत् पश्येज्जाग्रद्वद्वस्तुभूतमर्थमाकलयेत् । दर्शयति च श्रुतिः "अन्तरेव देहे स्वप्नं स यत्रैतत् स्वप्नयाचरति" इत्युपक्रम्य "स्वे शरीरे यथाकामं परिवर्त्तते" इति । अतश्च श्रुत्युपपत्तिविरोधाद्बहिःकुलायश्रुतिर्गौणी व्याख्यातव्या बहिरिव कुलायादमृतश्चरित्वा, इति यो हि वसन्नपि शरीरे न तेन प्रयोजनं करोति स बहिरिव शरीराद्भवति इति । स्थितिगतिप्रत्ययभेदोऽप्येवं सति विभ्रम एवाभ्युपगन्तव्यः, कालविसंवादोऽपि च स्वप्ने भवति रजन्यां सुप्तो वासरं भारते वर्षे मन्यते तथा मुहूर्त्तमात्रवर्त्तिनि स्वप्ने कदाचिद् बहून् वर्षपूगानतिवाहयति । निमित्तान्यपि च स्वप्ने न बुद्धये कर्मणे वोचितानि विद्यन्ते, करणोपसंहाराद्धि नास्य रथादिग्रहणाय चक्षुरादीनि सन्ति, रथादिनिर्वर्त्तनेऽपि कुतोऽस्य निमेषमात्रेण सामर्थ्यं दारूणि वा । बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधे, स्वप्न एव चैते सुलभबाधा भवन्ति आद्यन्तयोर्व्यभिचारदर्शनात्, रथोऽयमिति हि कदाचित् स्वप्ने निर्द्धारितः क्षणेन मनुष्यः सम्पद्यते, मनुष्योऽयमिति वा निर्द्धारितः क्षणेन वृक्षः । स्पष्टञ्चाभावं रथादीनां स्वप्ने श्रावयति शास्त्रम् "न तत्र रथा न रथयोगा न पन्थानो भवन्ति" इत्यादि । तस्मान्मायामात्रं स्वप्नदर्शनम्" भा० । "सूचकश्च हि श्रुतेराचक्षते च तद्विदः" सू० । "मायामात्रत्वात् तर्हि न कश्चित् स्वप्ने परमार्थगन्ध इति, नेत्युच्यते । सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः । तथा हि श्रूयते "यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने" इति । तथा "पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति" इत्येवमादिभिः स्वप्नैरचिरजीवित्वमावेद्यत इति श्रावयति । आचक्षते च स्वप्नाध्यायविदः "कुञ्जरारोहणादीनि स्वप्ने धन्यानि खरयानादीन्यधन्यानि" इति । मन्त्रदेवताद्रव्यविशेषनिमित्ताश्च केचित् स्वप्नाः सत्यार्थगन्धिनो भवन्तीति मन्यन्ते । तत्रापि भवतु नाम सूच्यमानस्य वस्तुनः सत्यत्वं, सूचकस्य तु स्त्रीदर्शनादेर्भवत्येव वैतथ्यं बाध्यमानत्वादित्यभिप्रायः । तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम् । यदुक्तमाह हीति तदेवं सति भाक्तं व्याख्यातव्यं यथा लाङ्गलं गवादीनुद्वहतीति निमित्तमात्रत्वादेवमुच्यते न तु प्रत्यक्षमेव लाङ्गलं गवादीनुद्वहति, एवं निमित्तमात्रत्वात् सुप्तो रथादीन् सृजते स हि कर्त्तेति चोच्यते न तु प्रत्यक्षमेव सुप्तो रथादीन् सृजति । निमित्तत्वन्त्वस्य रथादिप्रतिभाननिमित्तमोदत्रासदर्शनात् तन्निमित्तभूतयोः सुकृतदुष्कृतयोः कर्तृत्वेनेति वक्तव्यम् । अपि च जागरिते विषयेन्द्रियसंयोगादादित्यादिज्योतिर्व्यतिकराच्चात्मनः स्वयंज्योतिष्ट्वं दुर्विवेचनमिति तद्विवेचनाय स्वप्न उपन्यस्तः, तत्र यदि रथादिसृष्टिवचनं श्रुत्या नीयेत स्वयंज्योतिष्ट्वं न निर्णीतं स्यात् । तस्माद्रथाद्यभाववचनश्रुत्या रथादिसृष्टिवचनं भाक्तमिति व्याख्येयम् । एतेन निर्माणश्रवणं व्याख्यातम् । यदप्युक्तम् "प्राज्ञमेनं निर्मातारमामनन्ति" इति, तदप्यसत् श्रुत्यन्तरे "स्वयं विहृत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति" इति जीवव्यापारश्रवणात् । इहापि च "य एष सुप्तेषु जागर्त्ति" इति प्रसिद्धानुवादाज्जीव एवायं कामानां निर्माता सङ्कीर्त्यते, तस्य तु वाक्यशेषेण "तदेव शुक्रं तद्ब्रह्मेति" जीवभावं व्यावर्त्त्य ब्रह्मभाव उपदिश्यते, "तत्त्वमसि" इत्यादिवदिति न ब्रह्मप्रकरणत्वं विरुध्यते । न चास्माभिः स्वप्नेऽपि प्राज्ञव्यापारः प्रतिषिध्यते, तस्य सर्वेश्वरत्वात् सर्वास्ववस्थास्वधिष्ठातृत्वोपपत्तेः । पारमार्थिकस्तु नायं सन्ध्याश्रयः सर्गो वियदादिसर्गवदित्येतावत् प्रतिपाद्यते । न च वियदादिसर्गस्यात्यन्तिकं सत्यत्वमस्ति, प्रतिपादितं हि "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यत्र समस्तस्य मायामात्रत्वम् । प्राक् च ब्रह्मात्मदर्शनात् वियदादिप्रपञ्चो व्यवस्थितरूपो भवति, सन्ध्याश्रयस्तु प्रपञ्चः प्रतिदिनं बाध्यत इत्यतो वैशेषिकं सन्ध्यस्य मायामात्रत्वमुदितम्" भा० । "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" सू० । "यद्यपि स्यात् परस्यैव तावदात्मनोऽंशो जीवोऽग्नेरिव विस्फुलिङ्गः । तत्रैवं सति यथाऽग्निविस्फुलिङ्गयोः समाने दहनप्रकाशनशक्ती भवतः एवं जीवेश्वरयोरपि ज्ञानैश्वर्यशक्ती, ततश्च जीवस्यैश्वर्यवशात् साङ्कल्पिकी स्वप्ने रथादिसृष्टिर्भविष्यतीति, अत्रोच्यते । सत्यपि जीवेश्वरयोरंशांशिभावे प्रत्यक्षमेव जीवेश्वरविपरीतधर्मत्वं, किं पुनर्जी-

ब्रह्मेश्वरसमानधर्मत्वं नास्त्येव न नास्तीति, विद्यमानमपि तु तत् तिरोहितं, अविद्यादिव्यवधानात्। तत् पुनस्तिरोहितं सत् परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतस्येव दृक्शक्तिरौषधवीर्य्यादीश्वरप्रसादात् संसिद्धस्य कस्यचिदेवाविर्भवति न स्वभावत एव सर्व्वेषां जन्तूनां, कुतस्ततो हि ईश्वराद्धेतोरस्य जीवस्य बन्धमोक्षौ भवतः, ईश्वरस्य स्वरूपापरिज्ञानाद् बन्धः तत्स्वरूपपरिज्ञानात्तु मोक्षः। तथा च श्रुतिः "ज्ञात्वा देवं सर्व्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः"। तस्याभिध्यानात् तृतीयं देहभेदे विश्वैश्वर्य्यं केवल आप्तकामः" इत्येवमाद्या भा०। "देहयोगाद् वा सोऽपि" सू०। "कस्मात् पुनर्जीवः परमात्मांश एव सन् तिरस्कृतज्ञानैश्वर्य्यो भवति युक्तन्तु ज्ञानैश्वर्य्ययोरतिरस्कृतत्वं विस्फुलिङ्गस्येव दहनप्रकाशयोरिति। उच्यते सत्यमेवैतत्, सोऽपि तु जीवस्य ज्ञानैश्वर्य्यतिरोभावो देहयोगाद्देहेन्द्रियमनोबुद्धिविषयवेदनादिभिर्योगाद्भवति। अस्ति चात्रोपमा यथाग्नेर्दहनप्रकाशनसम्पन्नस्याप्यरणिगतस्य दहनप्रकाशने तिरोभवतः, यथा वा भस्मनाच्छन्नस्य, एवमविद्याप्रत्युपस्थापितनामरूपकृतदेहाद्युपाधियोगात् तदविवेकभ्रमकृतो जीवस्य ज्ञानैश्वर्य्यतिरोभावः। वाशब्दो जीवेश्वरयोरन्यत्वाशङ्काव्यावृत्त्यर्थः। नन्वन्य एव जीव ईश्वरादस्तु तिरस्कृतज्ञानैश्वर्य्यत्वात् किं देहयोगकल्पनया। नेत्युच्यते, न ह्यन्यत्वं जीवस्येश्वरादुपपद्यते "सेयं देवतैक्षत" इत्युपक्रम्य "अनेन जीवेनात्मनानुप्रविश्य" इत्यात्मशब्देन जीवस्य परामर्शात्। "तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इति च जीवस्योपदिशतीश्वरात्मत्वम्, अतोऽनन्य एवेश्वराद् जीवः सन् देहयोगात् तिरोहितज्ञानैश्वर्य्यो भवति, अतश्च न साङ्कल्पिकी जीवस्य स्वप्ने रथादिसृष्टिर्घटते। यदि च साङ्कल्पिकी स्वप्ने सृष्टिः स्यात् नैवानिष्टं कश्चित् स्वप्नं पश्येत्। न हि कश्चिदनिष्टं सङ्कल्पयते। यत् पुनरुक्तं जागरितदेशश्रुतिः स्वप्नस्य सत्यत्वं ख्यापयतीति न तत्साम्यवचनं सत्यत्वाभिप्रायं स्वयंज्योतिष्ट्वविरोधात्, श्रुत्यैव च स्वप्ने रथाद्यभावस्य दर्शितत्वात्, जागरितप्रभववासनानिर्मितत्वात् तु स्वप्नस्य तत्तुल्यनिर्भासत्वाभिप्रायं तत्। तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम्"।

स्वप्नभेदस्य शुभाशुभसूचकत्वं नानापुराणेषूक्तं तत्र लिङ्गमात्रं मत्स्यपुराणे २४२अध्याये उक्तमत्र प्रदर्श्यते यथा "इदानीं कथयिष्यामि निमित्तं स्वप्नदर्शने। नाभिं विनान्यगात्रेषु तृणवृक्षसमुद्भवः। चूर्णनं मूर्ध्नि कांस्यानां मुण्डनं नग्नता तथा। मलिनाम्बरधारित्वमभ्यङ्गः पङ्कदिग्धता। उच्चात् प्रपतनञ्चैव दोलारोहणमेव च। अर्ज्जनं पङ्कलोहानां हयानामपि मारणम्। रक्तपुष्पद्रुमाणाञ्च मण्डलस्य तथैव च। वराहर्क्षखरोष्ट्राणां तथा च रोहणक्रिया। भक्षणं पक्वमांसानां तैलस्य कृसरस्य च। नर्त्तनं हसनञ्चैव विवाहो गीतमेव च। तन्त्रीवाद्यविहीनानां वाद्यानामभिवादनम्। स्रोतोऽवगाहगमनं स्नानं गोमयवारिणा। पङ्कोदकेन च तथा महीतोयेन चाप्यथ। मातुः प्रवेशो जठरे चितारोहणमेव च। शक्रध्वजाभिपतनं पतनं शशिसूर्य्ययोः। दिव्यान्तरिक्षभौमानामुत्पातानाञ्च दर्शनम्। देवद्विजातिभूपानां गुरूणां क्रोध एव च। आलिङ्गनं कुमारीणां पुरुषाणाञ्च मैथुनम्। हानिश्चैव स्वगात्राणां विरेकवमनक्रिया। दक्षिणाशाभिगमनं व्याधिनाभिभवस्तथा। फलापहानिश्च तथा पुष्पहानिस्तथैव च। गृहाणाञ्चैव पातश्च गृहसम्मार्ज्जनन्तथा। क्रीड़ा पिशाचक्रव्यादवानरर्क्षनरैरपि। परादभिभवश्चैव तस्माच्च व्यसनोद्भवः। काषायवस्त्रधारित्वं तद्वत् स्त्रीक्रीड़नन्तथा। स्नेहपानावगाहौ च रक्तमाल्यानुलेपनम्। एवमादीनि चान्यानि दुःस्वप्नानि विनिर्दिशेत्। एषां सङ्कथनं धन्यं भूयः प्रस्वपनं तथा। कल्कस्नानं तिलैर्होमो ब्राह्मणानाञ्च पूजनम्। स्तुतिश्च वासुदेवस्य तथा तस्यैव पूजनम्। नागेन्द्रमोक्षश्रवणं ज्ञेयं दुःस्वप्ननाशनम्। स्वप्नास्तु प्रथमे यामे संवत्सरविपाकिनः। षड्भिर्मासैर्द्वितीये तु त्रिभिर्मासैस्त्रियामके। चतुर्थे मासमात्रेण पश्यतो नात्र संशयः। अरुणोदयवेलायां दशाहेन फलं भवेत्। एकस्यां यदि वा रात्रौ शुभं वा यदि वा शुभम्। पश्चाद् दृष्टस्तु यस्तत्र तस्य पाकं विनिर्दिशेत्। तस्माच्छोभनके स्वप्ने पश्चात् स्वप्नं न पश्यति। शैलप्रासादनागाश्ववृषभारोहणं हितम्। द्रुमाणां श्वेतपुष्पाणां गमने च तथा द्विज!। द्रुमतृणोद्भवो नाभौ तथैव बहुबाहुता। तथैव बहुशीर्षत्वं फलितोद्भव एव च। सुशुक्लमाल्यधारित्वं सुशुक्लाम्बरधारिता। चन्द्रार्कतारापहरणं परिमार्ज्जनमेव च। शक्रध्वजालिङ्गनञ्च तदुच्छ्रायक्रिया तथा। भूम्यम्बुधीनां ग्रसनं शत्रूणाञ्च

वधक्रिया। जयो विवादे द्यूते च संग्रामे च तथा द्विज!। भक्षणञ्चार्द्रमांसानां मत्स्यानां पायसस्य च। दर्शनं रुधिरस्यापि स्नानं वा रुधिरेण च। सुरारुधिरमद्यानां पानं क्षीरस्य चाथ वा। अन्त्रैर्वा वेष्टनं भूमौ निर्मलं गमनं तथा। मुखेन दोहनं शस्तं महिषीणां तथा गवाम्। सिंहीनां हस्तिनीनाञ्च बडवानां तथैव च। प्रसादो देवविप्रेभ्यो गुरुभ्यश्च तथा शुभः। अम्भसा त्वभिषेकस्तु गवां शृङ्गाश्रितेन वा। चन्द्राद् भ्रष्टेन वा राजन्! ज्ञेयो राज्यप्रदो हि सः। राज्याभिषेकश्च तथाच्छेदनं शिरसस्तथा। मरणं वह्निदाहश्च वह्निदाहो गृहादिषु। लब्धिश्च राज्यलिङ्गानां तन्त्रीवाद्याभिवादनम्। तथोदकानां तरणं तथा विषमलङ्घनम्। हस्तिनीबडवानाञ्च गवाञ्च प्रसवो गृहे। आरोहणमथाश्वानां रोदनञ्च तथाशुभम्। वरस्त्रीणां तथा लाभस्तथालिङ्गनमेव च। निगडैर्बन्धनं धन्यं तथा विष्ठानुलेपनम्। जीवतां भूमिपालानां सुहृदामपि दर्शनम्। दर्शनं देवतानाञ्च विमलानां तथाम्भसाम्। शुभान्यथैतानि नरस्तु दृष्ट्वा प्राप्नोत्ययत्नाद् ध्रुवमर्थलाभम्। स्वप्नानि वै धर्मभृतां वरिष्ठ! व्याधेर्विमोक्षञ्च तथातुरोऽपि" मात्स्ये न०।

**स्वप्नकृत्** न० स्वप्नं निद्रां करोति कृ-क्विप्। (सुसुनि) शाके शब्दच०।

**स्वप्नज्** त्रि० स्वप–नजिङ्। शयनशीले अमरः।

**स्वभाव** पु० स्वस्य भावः। १निसर्गे अजन्ये स्वतःसिद्धे भावे च अमरः। "बहिर्हेत्वनपेक्षी तु स्वभावोऽथ प्रकीर्तितः। निसर्गश्च स्वभावश्च इत्येष भवति द्विधा। निसर्गः सुदृढ़ाभ्यासजन्यः संस्कार उच्यते। अजन्यस्तु स्वतः सिद्धः स्वरूपो भाव उच्यते" उज्ज्वलद०।

**स्वभावोक्ति** स्त्री स्वभावस्योक्तिरत्र। १अर्थालङ्कारभेदे अलङ्कारशब्दे ४०८ पृ० दृश्यम् ६त०। २स्वभावस्य कथने।

**स्वभू** पु० स्वेनैव भवति भू-क्विप्। १ब्रह्मणि मेदि० २विष्णौ अमरः। ३शिवे ४ईश्वरे ५कामे च।

**स्वयंवर** पु० स्वयमात्मना वरो वरणम्। कन्ययात्मनैव स्वपतेर्वरणे "सदसि स्वयंवरः" नैष०। स्वयं वृणुते पतिम्। वृ-अच। आत्मनैव पतिवरणकर्त्र्यां २कन्यकायां स्त्री।

**स्वयंहारिका** स्त्री ब्रह्मणो मानसस्य दुःसहस्य निर्माष्ट्यां भार्यायामुत्पन्ने कन्याभेदे मार्कण्डेयपु०। तत्र कन्याष्टौ नियोजिकाद्याः तासां कर्माणि तत्रोक्तानि तत्र "एतासां कर्म वक्ष्यामि द्वष्प्रशमनञ्च यत्" इत्युपक्रमे "धान्यं खलात् गृहात् गोष्ठात् पयःसर्पिस्तथा परा। सद्य इन्द्रविदुद्रव्यमपहन्ति च कन्यका। सा स्वयंहारिकेत्युक्ता सदान्तर्द्धानतत्परा" इति तस्याः कर्मोक्तम्।

**स्वयङ्कृत** पु० स्वयमात्मना कृतः। १कृत्रिमे पुत्रे "माता पितृविहीनस्तु कृत्रिमः स्यात् स्वयंकृता" स्मृतिः। २आत्मकृते त्रि०। "पूःजुष्टः स्वयंकृतः" (पुरोहितः) स्मृतिः।

**स्वयङ्गुप्ता** स्त्री स्वयमात्मनैव गुप्ता। शूकशिम्ब्याम् शब्दच०।

**स्वयन्दत्त** पु० स्वयमात्मनैव न तु पितृमातृभ्यां दत्तः उपनतः दत्तात्मके पुत्रभेदे "दत्तात्मा तु स्वयन्दत्तः" याज्ञ०। "दत्तात्मा तु पुत्रो मातापितृविहीनस्ताभ्यां विसृष्टो वा तवाहं पुत्रो भवामीति स्वयंदत्त उपनतः" मिता०।

**स्वयम्** अव्य० सु+अय–अमु। आत्मनेत्यर्थे अमरः।

**स्वयम्भु** पु० स्वयम्+भू–डु। ब्रह्मणि द्विरूप०। [राजनि०।

**स्वयम्भुवा** पु० स्वयम्भवति भू–मूलवि० क। धूम्रपत्रायाम्

**स्वयम्भू** पु० स्वयं भवति भू-क्विप्। १चतुर्मुखे ब्रह्मणि अमरः २बुद्धे च। ३काले शब्दर० ४कामदेवे ५विष्णौ ६शिवे च। ७माषपर्ण्यां ८लिङ्गिन्याम् राजनि०। ९जिनभेदे हेमच०। १०परमेश्वरे "ततः स्वयम्भूर्भगवान्" मनुः। [असस्वरत्–न।

**स्वर** आक्षेपे अद० चुरा० उभ० सक० सेट्। स्वरयति–ते

**स्वर्** अव्य० स्वृ-विच्। १स्वर्गे अमरः "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम्" इत्युक्ते दुःखासंभिन्ने २सुखसन्ताने ३परलोके ४आकाशे ५शोभने च शब्दच०। दुःखासंभिन्नत्वं च स्वावच्छेदकशरीरावच्छिन्नत्वं तेन दुःखसमानकालीने सुखे नातिव्याप्तिः।

**स्वर** पु० स्वर–अच् स्वृ-अप् वा। १उदात्तानुदात्तस्वरितरूपे वर्णोच्चारणप्रयत्नभेदे तादृशस्वरवत्त्वाच्च २व्यञ्जनभिन्नवर्णेषु अकारादिषु शिक्षा। तन्त्रोक्ते ३प्राणादिवायोर्व्यापारभेदे ३काकादिकृते वर्णाद्युच्चारणध्वनिविशेषे ४निषादादिषु तन्त्रीकण्ठोत्थेषु गानजध्वनिषु च अमरः। "उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः" शिक्षा० अकारादीनां स्वयंराजमानत्वात् स्वरवत्त्वाच्च स्वरपदाभिधेयता, "अचः स्वयं विराजन्ते हलस्तु परगामिनः" इत्युक्तेः "उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः। ह्रस्वो दीर्घः प्लुतश्चेति कालतो नियमा अचि" शिक्षोक्तेश्च। निषादादिस्वराणां प्राणिभेदस्वरतुल्यता नारदेनोक्ता यथा "षड्जं रौति मयूरो हि वृषो नर्दति चर्षभम्। अजा

विरौति गान्धारं क्रौञ्चो नदति मध्यमम्। पुष्पसाधारणे काले कोकिलो रौति पञ्चमम्। अश्वश्च धैवतं रौति निषादं रौति कुञ्जरः” इति। “अजस्तु धैवतं सोऽपि मत्तः पञ्चमसंज्ञकम्। निषादन्तु गजो गर्जन् नादोऽसौ सप्तमम्” इति। भरतोऽप्याह “षड्जञ्च पञ्चमञ्चेति मयूरो नदति द्विधा। अश्वाद्या धैवतादींश्च प्राक्संज्ञांश्च पञ्चमम्” इति। निषादादिशब्दनिरुक्तिश्च “निषीदन्ति स्वरा अस्मिन्निषादस्तेन हेतुना। अशेषानभिभवति यं स हि व्याप्यावतिष्ठते”। “वायुः समुद्गतो नाभेः कण्ठशीर्षसमुद्गतः। नर्दत्यृषभवद् यस्मात्तेनैष ऋषभः स्मृतः” “वायुः समुद्गतो नाभेः कण्ठशीर्षसमाहतः। नानागन्धवहः पुण्यो गान्धारस्तेन हेतुना। “नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च संश्रितः। षड्भ्यः सं जायते यस्मात्तस्मात् षड्ज इति स्मृतः”। “तद्वदेवोत्थितो वायुरुरःकण्ठसमाहतः। नाभिप्राप्तो महानादो मध्यमस्तेन च स्मृतः”। “अभिसन्धयते यस्मात् स्वरांस्तेनैष धैवतः। स तु तावत् प्रधानत्वात् ललाटे व्यवतिष्ठते। “वायुः समुद्गतो नाभेरुरोहृत्कण्ठमूर्द्धसु। विचरन् पञ्चमस्थानप्राप्त्या पञ्चम उच्यते”। “स स्वरो यः श्रुतिस्थाने स्वरन् हृदयरञ्जकः। षड्जर्षभगान्धारा मध्यमः पञ्चमस्तथा। धैवतश्च निषादश्च स्वराः सप्त प्रकीर्त्तिताः” भरतः।

षाडवादिस्वराश्च चक्रशब्दे २८११ पृ० दृश्याः।

**स्वरघ्न** पु० स्वरं हन्ति हन-क। गलरोगभेदे “अष्टादशगलरोगोपक्रमे “श्वासाश्वसानः श्वसिति प्रसक्तं भिन्नस्वरः शुष्कविमुक्तकण्ठः। कफोपदिग्धेष्वनिलायनेषु ज्ञेयः सरोगः श्वसनात् स्वरघ्नः”। ताम्यमानः तमः पश्यन् शुष्को विमुक्तोऽस्वाधीनकण्ठो यस्य सः अस्वाधीनता भक्तं गिलितुमशक्यत्वात् अनिलायनेषु वातवर्त्मसु श्वसनाद्वातात्” भावप्र०

**स्वरचक्र** न० स्वरोदयोक्ते चक्रभेदे चक्रशब्दे २८१० पृ० दृश्यम्।

**स्वरपत्तन** न० स्वराणां निषादादीनां गानध्वनिविशेषाणां पत्तनमाश्रयः। सामवेदे त्रिका०।

**स्वरभङ्ग** पु० स्वरस्य कण्ठध्वनिभेदस्य भङ्गो यस्मात्। रोगभेदे स्वरभेदोऽप्यत्र तन्निदानादि सुश्रु० उक्तं यथा
“अथातः स्वरभेदप्रतिषेधमध्यायं व्याख्यास्यामः। अत्युच्चभाषणविषाध्ययनाभिघातशीतादिभिः प्रकुपिताः पवनादयस्तु। ते मन्द्रवाहिधमनीषु गताः प्रतिष्ठां हन्युः स्वरं भवति चापि हि षड्विधः सः। वातेन कृष्णनयनाननमूत्रवर्चा भिन्नं शनैर्वदति गर्दभवत् स्वरश्च। पित्तेन पीतवदनाक्षिपुरीषमूत्रो ब्रूयाद्गलेन स विदाहसमन्वितेन। श्लेष्मात्मकेन सततं कफरुद्धकण्ठो मन्दं शनैर्वदति चापि दिवा विशेषात्। सर्वात्मके भवति सर्वविकारसम्पद्व्यक्तता च वचसस्तमसाध्यमाहुः। धूप्येत वाक्क्षयकृते क्षयमाप्नुयाच्च वागेष चापि हतवाक् परिवर्जनीयः। अन्तर्गतस्वरमवाच्यपदं चिरेण मेदोऽन्वयाद्वदति दिग्धगलोष्ठतालुः। क्षीणस्य वृद्धस्य कृशस्य चापि चिरोत्थितो यश्च सहोपजातः। मेदस्विनः सर्वसमुद्भवश्च स्वरामयो यो न स सिद्धिमेति। स्निग्धान् स्वरातुरनरानपकृष्टदोषान् संशोधयेदुभयतः सनवास्तिभिश्च। नस्यावपीडमुखधावनधूमलेहैः सम्पादयेच्च विविधैः कवलग्रहैश्च”।

**स्वरमण्डलिका** स्वराणां मण्डलमस्त्यस्य ठन्। वीणायाम् हेम०। २स्वरसमूहे।

**स्वरलासिका** स्त्री स्वरैः निषादादिभिः लसति नृत्यतीव लस-ण्वुल्। १वीणायां २वंशवाद्ये शब्दर०।

**स्वरस** पु० स्वेन स्वभावेन रसः आस्वाद्यः। १शिलापिष्टकल्कभेदे शब्दर० २क्वाथभेदे च। “सद्यः समुद्धृताद्द्रव्याद्धस्तयन्त्रादिपीडनात्। यो रसस्त्वभिनिर्याति स्वरसः सः प्रकीर्त्तितः” वैद्यक०। स्वस्य रसः रागः। ३स्वाभिप्राये ४स्वतात्पर्ये ५वाक्यादौ रचनाभङ्गीभेदे च।

**स्वरसन्धि** पु० स्वरनिमित्तकः सन्धिः। व्याकरणोक्ते स्वरनिमित्तके दीर्घादौ कार्य्ये। [शब्दे ५५६४ पृ० दृश्यम्।

**स्वरसामन्** पु० गवामयनसत्रीयषष्ठमासीयदिनभेदे गवामयन०

**स्वरा** स्त्री ब्रह्मणः प्रथमपत्न्यां पद्मपु०।

**स्वरापगा** स्त्री स्वः स्वर्गस्यापगा। गङ्गायाम् हेमच०। स्वर्गापगादयोऽप्यत्र।

**स्वरालु** पु० स्वराय अलति पर्य्याप्नोति अल-उण्। वचायां शब्दच०। तत्सेवने हि स्वरस्योत्तेजनात्तस्यास्तथात्वम्।

**स्वराज्** पु० स्वेनैव राजते राज-क्विप्। ईश्वरे “अर्थेष्वभिज्ञः स्वराडिति” भागवतम् १।१।१।

**स्वरित** पु० स्वरो जातोऽस्य इतच्। १जातस्वरे २उदात्तानुदात्तसमाहाररूपे स्वरभेदे पा०
“उच्चैरुदात्तः” “नीचैरनुदात्तः”। “समाहारः स्वरितः” पा० “उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच् स्वरितसंज्ञः स्यात्” सि० कौ०। “तस्यादित उदात्तमर्द्धह्रस्वम्” पा० “ह्रस्वग्रहणमतन्त्रम् स्वरितस्यादितोऽर्द्धमुदात्तम्बोध्यम् उत्तरार्द्धन्तु परिशेषादनुदात्तम्। तच्च

नोदात्तस्वरितपरस्य अयमं सूत्रम्” सि॰कौ॰। स्वरिताः शब्दाश्च पाणिनिना फिट्सूत्रेषु च अनुशिष्टा यथा। “तित् स्वरितम्” पा॰ तकारेत् प्रत्ययः स्वरितः स्यात्। “बिल्वतिष्ययोः स्वरितो वा” फिट्सू॰ १पादः। “अनयोरन्तः स्वरितो वा पक्षे उदात्तः” सि॰ कौ॰। “उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य” पा॰ “उदात्तस्थाने स्वरितस्थाने च यो यण् ततः परस्यानुदात्तस्य स्वरितः स्यात्। अभ्यभि हि। स्वरितस्य यथा। खलप्व्याशा। अस्य स्वरितस्य त्रैपादिकत्वेनासिद्धत्वाच्छेषनिघातो न” सि॰कौ॰ “स्वरितो वाऽनुदात्ते पदादौ” पा॰ “अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितो वा स्यात्। पक्षे पूर्वसूत्रेणोदात्तः। वीदं ज्योतिर्हृदये। अस्य श्लोको दिवीयते। व्यवस्थितविभाषात्वादिकारयोः स्वरितः दीर्घप्रवेशे तूदात्तः। किञ्च एङः पदान्तादिति पूर्वरूपे स्वरित एव। तेऽवदन्। सोऽयमागात्। उक्तञ्च प्रातिशाख्ये “इकारयोश्च प्रश्लेषे क्षैप्राभिनिहतेषु चेति” सि॰कौ॰। “उदात्तादनुदात्तस्य स्वरितः” पा॰ “उदात्तात् परस्यानुदात्तस्य स्वरितः स्यात्। अग्निमीले”। अस्यासिद्धत्वाच्छेषनिघातो न। “तमीशानासः” सि॰कौ॰। “नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्” पा॰ उदात्तपरः स्वरितपरश्चानुदात्तः स्वरितो न स्यात्। गार्ग्यादिमते तु स्यादेव। प्र य आरुः। क्व वोऽश्वाः २। क्वा २ भीशवः” सि॰कौ॰। “न्यङ्स्वरौ स्वरितौ” फि॰ “एतौ स्वरितौ। न्यङ्ङुत्तानः। व्यचक्षयत् स्वः” सि॰कौ॰। “न्यर्बुदव्यल्कशयोरादिः” फि॰। स्वरितः स्यात्। “तिल्यशिक्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः” फि॰। स्वरितः स्यात्। “तिलानां भवनं क्षेत्रं तिल्यम्। यतोऽनाव इति प्राप्ते” सि॰कौ॰। “बिल्वभक्ष्यवीर्याणि छन्दसि” फि॰४र्थपादः। “अन्तस्वरितानि” सि॰कौ॰। “स्वरितेनाधिकारः” पा॰ “स्वरितत्वयुक्तं शब्दस्वरूपमधिकृतं बोध्यम्” सि॰कौ॰ “स्वरितेनेति इत्थंभावे तृतीया स्वरितत्वाप्योऽधिकार इत्यर्थः स्वरितत्वञ्च दोषविशेषजन्यमज्ञानसाधारणाश्रयम् अधिक्रियमाणपदघटकाजाश्रितं वा बोध्यम्। तच्चानुनासिकत्ववत् प्रतिज्ञयैव निर्णीयते अधिकारश्च कियद्दूरमित्यत्रापि बाधके व्याख्यानमेव शरणम्” शब्देन्दु॰। “स्वरितञितः कर्त्रभिप्राये क्रियाफले” पा॰ स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्त्रभिप्राये क्रियाफले” सि॰ कौ॰। स्वर—क्त। ४स्वरयुक्ते त्रि॰।

**स्वरु** पु॰ स्वृ-उ। १वज्रे अमरः २यूपखण्डे ३बाणे ४यज्ञे मेदि॰। ५सूर्यकिरणे ६वृश्चिकभेदे च उणा॰।

**स्वरुचि** त्रि॰ स्वस्यैव रुचिः प्रवर्त्तिका स्वकार्ये यस्य। १स्वतन्त्रे हेमच॰ ६त॰। २स्वस्याभिलाषे स्त्री।

**स्वरूप** न॰ स्वस्य रूपम्। १स्वभावे अमरः। स्वमेव रूपम्। २स्वात्मके पदार्थे। स्वं यथा स्वं रूपयति रूप-अण्। ३यथास्वरूपाभिज्ञे पण्डिते पु॰ शब्दर॰। स्वेन स्वभावेनैव रूपमस्य। ४मनोज्ञे त्रि॰ अमरः।

**स्वरूपसंबन्ध** पु॰ स्वरूपं सम्बन्धः स्वरूपयोर्वा सम्बन्धः। न्यायोक्ते स्वात्मके सम्बन्धे षट्पदार्थातिरिक्ते पदार्थभेदे यथा प्रतियोगित्वम् विषयत्वमित्यादि।

**स्वरोदय** पु॰ स्वरस्यानुदयो शुभादिज्ञापकतया यत्र। स्वरस्य श्वासविशेषस्य शुभाशुभत्वज्ञानसाधने तन्त्रशास्त्रभेदे शब्दकल्प॰ २८१० पृ॰दृश्यम्।

**स्वर्ग** पु॰ स्वरिति गीयते गै-क सु+ऋज-घञ् वा। १सुखाभिव्यक्ते सुखे २देवानामावासस्थाने च अमरः। स्वर्गकारणस्वरूपादिकं भा॰ व॰ २६० अ॰ उक्तं यथा “उपरिष्टाद्ध स्वर्लोको योऽयं स्वरिति संज्ञितः। ऊर्द्ध्वगः सत्पथः शश्वद्देवयानचरो मुने!। नातप्ततपसः पुंसो नामहायज्ञयाजिनः। नानृता नास्तिकाश्चैव तत्र गच्छन्ति मुद्गल!। धर्म्मात्मानो जितात्मानः शान्ता दान्ता विमत्सराः। दानधर्मरता लोका शूराश्चाहवलक्षणाः। तत्र गच्छन्ति धर्म्माग्र्यं कृत्वा शमदमात्मकम्। लोकान् पुण्यकृतान् ब्रह्मन्! सद्भिराचरिताननृभिः। देवाः साध्यास्तथा विश्वे तथैव च महर्षयः। यामा धामाश्च मौद्गल्य! गन्धर्वाप्सरसस्तथा। एषां देवनिकायानां पृथक् पृथगनेकशः। भास्वन्तः कामसम्पन्ना लोकास्तेजोमयाः शुभाः। त्रयस्त्रिंशत्सहस्राणि योजनानि हिरण्मयः। मेरुः पर्वतराड् यत्र दिव्योद्यानानि मुद्गल!। नन्दनादीनि पुण्यानि विहाराः पुण्यकर्म्मणाम्। न क्षुत्पिपासे न ग्लानिर्न शीतोष्णे भयं तथा। बीभत्समशुभं वाऽपि तत्र किञ्चिन्न विद्यते। मनोज्ञाः सर्वतो गन्धाः सुखस्पर्शाश्च सर्वशः। शब्दाः श्रुतिमनोग्राह्याः सर्वतस्तत्र वै मुने!। न शोको न जरा तत्र नायासपरिदेवने। ईदृशः स मुने! लोकः स्वकर्म्मफलहेतुकः। सुकृतैस्तत्र पुरुषाः सम्भवन्त्यात्मकर्म्मभिः। तैजसानि शरीराणि भवन्त्यत्रोपपद्यताम्। कर्म्मजान्येव मौद्गल्य! न मातृपितृजान्युत। न संस्वेदो न दौर्गन्ध्यं पुरीषं मूत्रमेव

च। तेषां न च रजो वस्त्रं बाधते तत्र वै मुने!। न म्लायन्ति स्रजस्तेषां दिव्यगन्धा मनोरमाः। संयुज्यन्ते विमानैश्च ब्रह्मन्नेवंविधैश्च ते। ईर्षाशोकक्लमापेता मोह-मात्सर्य्यवर्जिताः। सुखं स्वर्गजितस्तत्र वर्त्तयन्ते महा-मुने!। तेषां तथाविधानान्तु लोकानां मुनिपुङ्गव!। उपर्य्युपरि लोकस्य लोका दिव्या गुणान्विताः। पुरस्ताद् ब्रह्मणस्तत्र लोकास्तेजोमयाः शुभाः। यत्र यान्त्यृषयो ब्रह्मन्! पूताः स्वैः कर्मभिः शुभैः। ऋभवो नाम तत्रान्ये देवानामपि देवताः। तेषां लोकाः परतरे यान् यजन्तीह देवताः। स्वयम्प्रभास्ते भास्वन्तो लोकाः काम-दुघाः परे। न तेषां स्त्रीकृतस्तापो न लोकैश्वर्य्यमत्-सरः। न वर्त्तयन्त्याहुतिभिस्ते नाप्यमृतभोजनाः। तथा दिव्यशरीरास्ते न च विग्रहमूर्त्तयः। न सुखे सुखकामास्ते देवदेवाः सनातनाः। न कल्पपरिवर्त्तेषु परिवर्त्तन्ति ते तथा। जरा मृत्युः कुतस्तेषां हर्षः प्रीतिसुखं न च। न दुःखं न सुखञ्चापि रागद्वेषौ कुतो मुने!। देवानामपि मौद्गल्य! काङ्क्षिता सा गतिः परा। दुष्प्रापा परमा सिद्धिरगम्या कामगोचरैः। त्रयस्त्रिंशदिमे देवा येषां लोका मनीषिभिः। गम्यन्ते नियमैः श्रेष्ठैर्दानैर्वा विधिपूर्वकैः। सेयं दान-कृता व्युष्टिरनुप्राप्ता सुखं त्वया। तां भुङ्क्ष्व सुकृतै-र्लब्धां तपसा द्योतितप्रभः। एतत् स्वर्गसुखं विप्र! लोका नानाविधास्तथा। गुणाः स्वर्गस्य प्रोक्तास्ते दोषानपि निबोध मे। कृतस्य कर्मणस्तत्र भुज्यते यत् फलं दिवि। न चान्यत् क्रियते कर्म मूलच्छेदेन भुज्यते। सोऽत्र दोषो मम मतस्तस्यान्ते पतनञ्च यत्। सुखव्याप्तमन-स्कानां पतनं यच्च मुद्गल!। असन्तोषः परीतापो दृष्ट्वा दीप्ततराः श्रियः। यद्भवत्यवरे स्थाने स्थितानां तत् सुदुष्करम्। संज्ञा मोहश्च पततां रजसा च प्रधर्षणम्। प्रम्लानेषु च माल्येषु ततः पिपतिषोर्भयम्। आब्रह्मभ-वनादेते दोषा मौद्गल्य! दारुणाः। नाकलोके सुकृतिनां गुणास्त्वयुतशो नृणाम्। अयं त्वन्यो गुणः श्रेष्ठश्च्युतानां स्वर्गतो मुने!। शुभानुशययोगेन मनुष्येषूपजायते। तत्रापि स महाभागः सुखभागभिजायते। न चेत् सम्बुध्यते तत्र गच्छत्यधमतां ततः। इह यत् क्रियते कर्म तत् परत्रोपभुज्यते। कर्मभूमिरियं ब्रह्मन्! फल-भूमिरसौ मता"। स च लोको भूरादिषु ऊर्द्ध्वस्थतृतीयः।

**स्वर्गङ्गा** स्त्री ६त०। मन्दाकिन्यां शब्दर०।

**स्वर्गनाथ** पु० ६त०। इन्द्रे स्वर्गपत्यादयोऽप्यत्र हेमच०।

**स्वर्गवधू** स्त्री ६त०। अप्सरःसु हेमच०।

**स्वर्गाचल** पु० स्वर्गलोकस्याऽचलः। सुमेरुपर्वते स्वर्गगिर्य्या-दयोऽप्यत्र हेमच०।

**स्वर्गिन्** पु० स्वर्गोऽस्त्यस्य भोग्यत्वेन इनि। १देवे त्रि० २देव-लोकगामिनि च त्रि० स्वर्गगामित्वद्योतकगुणभेदा मत्स्य-पु० उक्ता यथा "समाभूतेषु संवादः परलोकं प्रति क्रिया। सतां परहिताः योक्तिर्वेदप्रामाण्यदर्शनम्। गुरुदेवर्षि-पूजा च बोधकं साधुसङ्गमः। सत्क्रियाभ्यसनं मैत्री स्वर्गिणां लक्षणं विदुः"।

**स्वर्गौकस्** पु० स्वर्गं ओको यस्य। देवे हला०।

**स्वर्जिक** पु० सु+अर्ज–घञ् ततः स्वार्थे कन्। सर्जिकाक्षारे राजनि० २यवक्षारे स्त्री भावप्र०।
"कथितः स्वर्जिकाभेदः विशेषज्ञैः सुवर्चिका। यवक्षारो लघुः स्निग्धः सुसूक्ष्मो वह्निदीपनः। निहन्ति शूलं वातामश्लेष्मार्बुदगलामयान्। स्वर्जिकाल्पगुणा तस्मात् विशेषात् गुल्मशूलहृत्" भावप्र०। कर्म० स्वर्जिकाक्षारोऽपि तत्रार्थे राजनि० णिनि स्वर्जिन् तत्रार्थे राजनि०।

**स्वर्ण** न० सुष्ठु अर्णो वर्णो यस्य। १काञ्चने २धुस्तूरे अमरः ३नागकेशरे ४गौरवर्णशाके च राजनि०। सुवर्णशब्दे दृश्यम्। [राजनि०] ६त० २सुवर्णस्य लेशे पु०।

**स्वर्णकण** न० स्वर्णमिव पीतत्वात् कणोऽस्य। १कणगुग्गुलौ

**स्वर्णकदली** स्त्री स्वर्णमिव कदली (चाँपाकला) कदलीभेदे।

**स्वर्णकाय** पु० स्वर्णमिव पीतत्वात् कायोऽस्य। १गरुड़े हेमच०। २स्वर्णवर्णदेहयुते त्रि०।

**स्वर्णकार** पु० स्वर्णं स्वर्णमयमलङ्कारादि करोति कृ–अण्। (सेकरा) जातिभेदे। "विश्वकर्मा तु शूद्रायां वीर्य्याधानं चकार सः। ततो बभूवुः पुत्राश्च नवैते शिल्पकारिणः। मालाकारः कर्मकारः शङ्खकारः कुविन्दकः। कुम्भ-कारः कंसकारः षडेते शिल्पिनां वराः। सूत्रधार-श्चित्रकरः स्वर्णकारस्तथैव च। पतितास्ते ब्रह्मशापा-दयाज्या वर्णसङ्कराः। स्वर्णकारः स्वर्णचौर्य्यात् ब्राह्मणानां द्विजोत्तम! बभूव सद्यः पतितो ब्रह्मशापेन कर्मणा" ब्रह्मवै० ब्र०ख० १०अ०। "तैलचौरस्तैलकीटो भूमिकीटश्च जन्मकम्। ततो भवेत् स्वर्णकारो जन्मैकं दुःखमानसः" ब्रह्मवै०जन्मख०८५अ०। तज्जातिकार्य्यकर्म।

**स्वर्णकृत्** पु० स्वर्णं तन्मयभूषणादिकं करोति कृ–क्विप्। स्वर्णकारे शब्दमा०।

**स्वर्णकेतकी** स्त्री स्वर्णमिव पीतत्वात् केतकी। पीतकेतक्याम् राजनि०। तत्पुष्पादिगुणाः "केतकीकुसुमं वर्ण्यं केशदौर्गन्ध्यनाशनम्। हेमाभं मदनोन्मादवर्द्धनं सौख्यकारि च। तस्याः स्तनोऽतिशिशिरः कटुः पित्तकफापहः। रसायनकरो वर्ण्यो देहदार्ढ्यकरः परः" राजनि०।

**स्वर्णक्षीरी** स्त्री स्वर्णमिव पीतत्वात् क्षीरं निर्यासो यस्याः गौरा० ङीष्। क्षोषधिभेदे सा च हिमालये जायते। "हेमवर्णा रसस्तस्या हिमवद्भूमिसम्भवा। सा नागजिह्विकाकारा तन्मूलं वाजिजीवनम्। स्वर्णक्षीरी हिमा तिक्ता कृमिपित्तकफापहा। मूत्रकृच्छ्राश्मरी शोथदाहज्वरहरा परा" राजनि०।

**स्वर्णगैरिक** न० स्वर्णमिव पीतं गैरिकम्। (वर्णकमाटि) पदार्थभेदे राजनि०।

**स्वर्णग्रीवा** स्त्री नदीभेदे। "या निःसृता पूर्वभागात् तस्मात् गिरिवरात् (वाटकशैलात्) नदी। स्वर्णग्रीवेति विख्याता सा गङ्गाऽदृशीफला" कालिकापु० ८२अ०।

**स्वर्णचूड** पुंस्त्री० स्वर्णमिव पीतत्वात् चूडा यस्य। चाषपक्षिणि जटा० स्त्रियां ङीष्। [जातमात्रे लि०।

**स्वर्णज** न० स्वर्णात् जायते जन–ड। १वङ्गे हेमच० २स्वर्ण-

**स्वर्णजीवन्ती** स्त्री० स्वर्णमिव पीतत्वात् जीवन्ती। पीतपुष्पजीवन्त्याम् राजनि०।

**स्वर्णदी** स्त्री स्वर्णं द्यति अपसारयति तुल्यवर्णत्वात् दो–क गौरा०ङीष्। १वृश्चिकाल्याम् राजनि०। ६त० स्वलम्। ७गङ्गायाम् अमरः। [२चित्रकवृक्षे च त्रिका०।

**स्वर्णदीधिति** पु० स्वर्णमिव भास्वरा दीधितिरस्य। १वह्नौ,

**स्वर्णद्रु** पु० स्वर्णमिव पुष्पे पीतो द्रुः। आरग्वधे राजनि०।

**स्वर्णपक्ष** पु० स्वर्णमिव पीतः पक्षोऽस्य। गरुडे त्रिका०।

**स्वर्णपाटक** पु० स्वर्णं पाटयति पट–णिच्–ण्वुल्। टङ्कणे (सोहागा) शब्दर०।

**स्वर्णपुष्प** पु० स्वर्णमिव पीतं पुष्पमस्य। १चम्पके २आरग्वधे पुंस्त्री० राजनि० स्त्रीत्वे ङीप्। सा च ३स्वर्णकेतक्याञ्च राजनि०। ४सातलायाम् ५कलिकारी स्त्री राजनि० टाप्। [सुवर्णकदल्याम् राजनि०।

**स्वर्णफला** स्त्री स्वर्णमिव पीतं फलमस्याः। (चांपाकला)

**स्वर्णवणिज्** पु० ६त०। सुवर्णवणिजि जातिभेदे।

**स्वर्णभृङ्गार** पु० स्वर्णमिव स्वर्णमयो वा भृङ्गारः। १पीतभृङ्गराजे राजनि०। २स्वर्णमयकलशभेदे च।

**स्वर्णमाक्षिक** न० स्वर्णमिव पीतं माक्षिकम्। स्वनामख्याते उपधातुभेदे "किञ्चित् सुवर्णसाहित्यात् स्वर्णमाक्षिकमीरितम्। उपधातुः सुवर्णस्य किञ्चित्स्वर्णगुणान्वितम्। तथा च काञ्चनाभावे दीयते स्वर्णमाक्षिकम्। किन्तु तस्यानुकल्पत्वात् किञ्चिद्धीनगुणास्ततः। न केवलं स्वर्णगुणा वर्त्तन्ते स्वर्णमाक्षिके। द्रव्यान्तरस्य संसर्गात् सन्त्यन्येऽपि गुणास्ततः। सुवर्णमाक्षिकं स्वादु तिक्तं वृष्यं रसायनम्। चक्षुष्यं वस्तिरुक्कण्डुपाण्डुमेहविषोदरम्। अर्शःशोथं विषं कण्डुं त्रिदोषमपि नाशयेत्"। अशुद्धस्वर्णमाक्षिकस्य दोषमाह "मन्दानलत्वं बलहानिमुग्रां विष्टम्भितां नेत्रगदान् सकुष्ठान्। मालां तथैव व्रणपूर्विकाञ्च कुर्य्यादशुद्धं खलु माक्षिकञ्च"। तद्दोषशान्त्यर्थं शोधनमाह "माक्षिकस्य त्रयो भागा भागैकं सैन्धवस्य च। मातुलुङ्गद्रवैर्वाथ जम्बीरस्य द्रवैः पचेत्। चालयेल्लौहजे पात्रे यावत् पात्रं सुलोहितम्। भवेत्ततस्तु संशुद्धं स्वर्णमाक्षिकमीरितम्"। तन्मारणं यथा "कुलत्थस्य कषायेण घृष्टा तैलेन वा पुटेत्। तक्रेणैवाजमूत्रेण म्रियते स्वर्णमाक्षिकम्" भावप्र०।

**स्वर्णयूथी** स्त्री स्वर्णमिव पीता यूथी। पीतयूथिकायाम् शब्दच०

**स्वर्णलता** स्त्री स्वर्णमिव पीता लता। ज्योतिष्मत्यां राजनि०

**स्वर्णवर्णा** स्त्री स्वर्णमिव वर्णोऽस्याः। १हरिद्रायाम् राजनि०। २सुवर्णवर्णे त्रि० ३हेममूल्यज्ञापके वर्णे च।

**स्वर्णवल्कल** पु० स्वर्णमिव पीतं वल्कलमस्य। शोनाकवृक्षे शब्दच०।

**स्वर्णवल्ली** स्त्री स्वर्णमिव पीता वल्ली। लताभेदे "स्वर्णवल्ली रक्तफला काकायुः काकवल्ल्यपि। शिरःपीडा त्रिदोषघ्नी दुग्धदात्री तु सा मता" राजनि०।

**स्वर्णशेफालिका** स्त्री स्वर्णमिव पीता शेफालिका। १पीतशेफालिकायाम्। २आरग्वधे राजनि०।

**स्वर्णाङ्ग** पु० स्वर्णमिवाङ्गं पुष्पं यस्य। १आरग्वधे राजनि० २पीतवर्णदेहयुते त्रि० स्त्रियां ङीष्।

**स्वर्णारि** पु० ६त०। गन्धके तस्य स्वर्णमारकत्वात्तथात्वम्।

**स्वर्णुली** स्त्री स्वर्णं तद्वर्णं लीयते पुष्पेऽत्र ली–आधारे क्विप् पृषो०। स्वर्णुली हेमपुष्पी च स्वर्णपुष्पाध्वजा तथा। सा कषाया कटुः शीता व्रणहा परिकीर्त्तिता" राजनि० लक्ष्मी लताभेदे। [यति ते ऋषसर्त्तृ त।

**स्वर्त्त** गतौ सक० दुःखेन जीवने अक० चु० उ०सेट्। स्वर्त्त-

**स्वर्द** प्रीतौ अक० प्रीणने वेदने च सक० भ्वा०आत्म० सेट्।

स्वर्दंते अश्लर्द्दिंष्ट। [गोमेदमणौ राजनि०।

**स्वर्भानव** पु० स्वर्भानो राहोः प्रियः अण् नि०नादिवृद्धिः।

**स्वर्भानु** पु० स्वः स्वर्गे भानुर्दीप्तिरस्य। राहौ अमरः। तस्य भूमिच्छायारूपतया भूमिस्थैर्भानुमत्त्वेनादर्शनात् दिवि दीप्तिमत्त्वात्तथात्वम्।

[लोके शब्दच०।

**स्वर्लोक** पु०स्वरेव लोकः भुवनम्। १स्वर्गे हेम०। २स्वर्गस्थे

**स्वर्वापी** स्त्री स्वः स्वर्गस्य वापीव। १गङ्गायाम् हेमच०।

**स्वर्वेश्या** स्त्री स्वः स्वर्गस्य वेश्या। मेनकाद्यप्सरस्सु अमरः।

**स्वर्वैद्य** पु० द्वि०व०। स्वः स्वर्गस्य वैद्यौ। अश्विनीकुमारयोः अमरः। आयुर्वेदशब्दे ७७८पृ० दृश्यम्।

**स्वलीन** पु० दानवभेदे वह्निपु०।

**स्वल्प** त्रि० सुष्ठु अल्पम् प्रा० स०। अत्यल्पे शब्दर०।

**स्वल्पकेशरिन्** पु०स्वल्पः केशरो नित्यमस्यास्य इनि। कोविदारवृक्षे राजनि०।

**स्वल्पकेशिन्** त्रि० स्वल्पः केशो नित्यमस्यास्य। १अत्यल्पकेशयुते स्त्रियां ङीप्। २पिशाचभेदे पु०शब्दच०। [रत्नमा०

**स्वल्पपत्रक** पु० स्वल्पं पत्रमस्य कप्। गौरशाके मधूकभेदे

**स्वल्पफला** स्त्री स्वल्पं फलं यस्याः। हपुषाभेदे राजनि०।

**स्ववासिनी** स्त्री स्वस्मिन् पित्रालये वसति वस–णिनि ङीप्। चिरं पितृगृहादिवासिन्यामूढायामनूढायां वा स्त्रियाम्। सुवासिनीत्यस्य स्थाने अमरे पाठान्तरम्।

**स्ववीज** पु० स्वमेव वीजं यस्य। १आत्मनि शब्दर०। २पुत्रे ३कन्यायां स्त्री हेम०। ४निजकारणे न० ५स्वस्य वीर्ये च न०।

**स्वसृ** स्त्री सु+अस–ऋन्। भगिन्याम् अमरः।

**स्वस्क** गतौ भ्वा० आ० सक०सेट्। स्वस्कते अस्वस्किष्ट।

**स्वस्ति** अव्य० सु–अस–क्तिच्, अस्तीति विभक्तिप्रतिरूपकम् अव्ययं प्रादि०वा। १क्षेमे २आशिषि ३पुण्यादौ अमरः ४स्वीकारसूचने च। एतद्योगे क्षेमादिसम्बन्धिनि चतुर्थी।

**स्वस्तिक** पुं न०। स्वस्ति शुभाय हितम् ठन्। "स्वस्तिकं प्राङ्मुखं यत् स्याद्विन्द्यानुगतं भवेत्। तत्पार्श्वानुगतौ चान्यौ तत्पर्य्यन्तगतोऽपरः" इत्युक्तलक्षणे गृहभेदे वास्तुः। २सितावरशाके पु० राजनि० ३आसनभेदे तल्लक्षणम् आसनशब्दे ८८६ पृ० दृश्यम्। ४तण्डुलचूर्णनिर्मिते त्रिकोणाकारे द्रव्यभेदे च "घृतं स्वस्तिकसिन्दूरम्" इत्यधिवासनद्रव्यज्ञापकवाक्यम् ५चतुष्पथे पु० मेदि०। ६जिनध्वजभेदे हेमच०। ७रततात्रिके स्त्रियः

**स्वस्तिमुख** पु० स्वस्ति सुखे अङ्गं आदौ वा यस्य। १लेख्ये पत्रादौ २विप्रे पु० ३स्वस्तिवादिनि त्रि० मेदि०।

**स्वस्तिवाचन** न० स्वस्ति शुभस्य विप्रद्वारा वाचनम्। कर्मारम्भे विघ्नोपशान्तये ब्राह्मणद्वारा कर्त्तव्यकर्मणां शुभतावाचने। "संपूज्य गन्धपुष्पाद्यैर्ब्राह्मणान् स्वस्ति वाचयेत्। धर्म्ये कर्मणि माङ्गल्ये संग्रामेऽद्भुतदर्शने" व्यासः।

**स्वस्तिवाचनिक** त्रि० स्वस्तिवाचनाय हितं तत आगतम् तत्र भवं वा ठन्। १स्वस्तिवाचनसाधने २तदुक्तिकर्त्तरि ३तत्सम्बन्धिनि च।

**स्वस्त्ययन** न० स्वस्ति शुभस्यायनं लाभो यस्मात्। शुभार्थं क्रियमाणे वेदादिविहिते शान्तिकर्मादौ।

**स्वस्थ** त्रि० स्वः परलोके तिष्ठति स्वेन स्वभावेन सुखेन, वा वा तिष्ठति स्था–क वा विसर्गलोपः। स्वभावस्थे २स्वर्गस्थिते ३विनायासेन सुखेनावस्थिते च। "स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः" वेणीसं०।

**स्वस्रीय** पु० स्वसुरपत्यम् छ। १भागिनेये अमरः २भागिनेय्यां स्त्री टाप्।

**स्वागत** न० सुखेन आगतम् सु+आ+गम्–भावे क्त। १सुखेनागमने "स्वागतं स्वानधीकारान्" कुमारः तद्वति त्रि० अच्। २कुशले ३कुशलप्रश्ने हारा०।

स्वागतञ्च षोडशोपचारमध्ये द्वितीयोपचारः आसनं स्वागतं पाद्यमित्यादि उपचारशब्दे दृश्यम्।

**स्वाङ्गिक** पु० स्वाङ्गमर्हति ठक्। १मृदङ्गे २तद्वादके शब्दर०।

**स्वाच्छन्द्य** न० स्वच्छन्दस्य भावः ष्यञ्। १स्वाधीनत्वे २स्वास्थ्ये च।

**स्वातन्त्र्य** न० स्वतन्त्रस्य भावः ष्यञ्। १स्वाधीनत्वे २पराऽधीनत्वे। व्या० उक्ते इतरव्यापारानधीनव्यापारवत्त्वरूपे कर्त्तृत्वे कर्तृशब्दे १७१६ पृ० दृश्यम्।

**स्वाति(ती)** पुंस्त्री० स्वेनैव अतति अत–इन् स्त्रीत्वपक्षे वा ङीप्। १अश्विन्यादिषु पञ्चदशे नक्षत्रे अमरः "इत्थं स्वातिः श्रवणा अक्लीबे" ति०त० उक्तेरुभयलिङ्गताऽस्य। २सूर्य्यपत्नीभेदे स्त्री त्रिका० ३खड्गे धरणिः।

स्वातिनक्षत्राधिष्ठातृदेवयोगताराखरूपादिकम् नक्षत्रशब्दे ४६७ पृ० दृश्यम्।

**स्वातियोग** पु०आषाढशुक्लपक्षे कार्त्तिकीं तिथौ माघकृष्णपञ्चम्यां तिथौ च स्वातिनक्षत्रस्थचन्द्रस्य शुभफलादिज्ञापके योगभेदे यथोक्तं ह० सं० २५अ० "यद्रोहिणीयोगफलं तदेव स्वातावषाढासहिते च चन्द्रे।

च चन्द्रे। आषाढ़शुक्ले निखिलं विचिन्त्य योऽस्मिन् विशेषमहं प्रवच्मि। स्वातौ निशांशे प्रथमेऽभिवृष्टे सस्यानि सर्वाण्युपयान्ति वृद्धिम्। भागे द्वितीये तिलमुद्गमाषा ग्रैष्मं तृतीयेऽस्ति न शारदानि। वृष्टेऽह्नि भागे प्रथमे सुवृष्टिस्तद्द्वितीये तु सकीटसर्पा। वृष्टिस्तु मध्यापरभागवृष्टे निश्छिद्रवृष्टिर्द्युनिशं प्रवृष्टे। अभयुत्तरेण तारा चित्राया: कीर्त्त्यते ह्यपांवत्स:। तस्यासन्ने चन्द्रे स्वातेर्योग: शिवो भवति। सप्तम्यां स्वातियोगे यदि पतति हिमं माघमासान्धकारे वायुर्वा चण्डवेगः सजलजलधरो वापि गर्जत्यजस्रम्। विद्युन्मालाकुलं वा यदि भवति नभो नष्टचन्द्रार्कतारं विज्ञेया प्रावृडेषा मुदितजनपदा सर्वसस्यैरुपेता। तद्वत्फाल्गुने चैत्रे वैशाखस्यासितेऽपि वा। स्वातियोगं विजानीयादाषाढ़े च विशेषतः"। [सेट्। स्वादते आस्वादिष्ट।

**स्वाद** प्रीतौ अक॰ प्रीणने लेहने च सक॰ भ्वा॰ आ॰

**स्वाद** पु॰ स्वद–स्वाद–वा घञ्। १रसानुभवे २प्रीतौ ३प्रीणने ४लेहने च। ल्युट्। स्वादनमप्यत्र न॰। रसानुभवप्रकारः सा॰ द॰ उक्तो यथा

"न जायते तदास्वादो विना रत्यादिवासनाम्" वासना चेदानीन्तनी प्राक्तनी च रसास्वादहेतुः। तत्र यदि आद्या न स्यात्तदा श्रोत्रियजरन्मीमांसकादीनामपि स स्यात्। यदि द्वितीया न स्यात् यद्रागिणामपि केषाञ्चिद्रसोद्बोधो न दृश्यते तन्न स्यात्। उक्तञ्च धर्मदत्तेन "सवासनानां सभ्यानां रसस्यास्वादनं भवेत्। निर्वासनास्तु रङ्गान्तःकाष्ठकुड्याश्मसन्निभाः"।

**स्वादिष्ठ** त्रि॰ अतिशयेन स्वादुः। इष्ठन् डित्। अतिमधुरे इवत्। स्वादीयस् तत्रार्थे त्रि॰ स्त्रियां ङीप्।

**स्वादु** पु॰ स्वद–उण्। १मधुररसे हेमच॰ २गुडे त्रिका॰ ३जोवकौषधौ जटा॰। ४इष्टे ५मधुरे ६मनोज्ञे च त्रि॰ मेदि॰ स्त्रियां वा ङीप्। सा च ७द्राक्षायां अमरः ८अनुकसारे मधुद्रुमे पु॰ राजनि॰।

**स्वादुकण्टक** पु॰ स्वादुः कण्टकोऽस्य। विकङ्कतवृक्षे राजनि॰

**स्वादुकन्दा** स्त्री स्वादुः कन्दोऽस्याः। विदार्याम् राजनि॰।

**स्वादुका** स्त्री स्वादुना मधुररसेन कायति कै–क। नागदन्त्याम् राजनि॰। [२मधुरे भागे।

**स्वादुखण्ड** पु॰ स्वादुः मिष्टः खण्डोऽस्य। गुड़े शब्दर॰ कर्क॰।

**स्वादुगन्धा** स्त्री स्वादुरिष्टो गन्धोऽस्याः। १रक्तशोभाञ्जने रत्नमा॰। २भूमिकुष्माण्डाञ्च जटा॰।

**स्वादुपर्णी** स्त्री स्वादूनि पर्णान्यस्याः ङीप्। दुग्धिकायाम् राजनि॰।

**स्वादुपाका** स्त्री स्वादुः पाकोऽस्याः। काकमाच्याम् राजनि॰

**स्वादुपिण्डा** स्त्री स्वादुः पिण्डः पिण्डाकारफलमस्याः। पिण्डखर्ज्जूर्याम् राजनि॰।

**स्वादुफला** स्त्री स्वादु फलमस्याः। १बदरीफले शब्दर॰ कर्क॰। २मिष्टे फले न॰। ३कोली स्त्री शब्दर॰ टाप्।

**स्वादुमज्जन्** पु॰ स्वादुः मज्जा यस्य। पर्वतजे पीलौ जटा॰

**स्वादुमांसी** स्त्री स्वादु मांसमिव फलमस्याः गौरा॰ ङीष्। काकोल्याम् राजनि॰।

**स्वादुमूल** न॰ स्वादु मूलमस्य। गर्जरे (गाँजर) राजनि॰।

**स्वादुरसा** स्त्री स्वादुः रसो यस्याः। १काकोल्याम् अमरः २मदिरायाम् हेमच॰। ३शतावर्य्यां ४द्राक्षायाम् ५आम्रातके च शब्दर॰।

**स्वादुलता** स्त्री स्वाद्वी लता। विदार्य्याम् राजनि॰।

**स्वादुपुष्प** पु॰ स्वादु पुष्पं यस्य। कटभ्यां राजनि॰।

**स्वादूदक** पु॰ स्वादु उदकं यस्य। समुद्रभेदे सि॰ शि॰।

**स्वाद्वम्ल** पु॰ स्वादुः अम्लः। दाड़िमे त्रिका॰।

**स्वाधिष्ठान** न॰ लिङ्गमूलस्थे सुषुम्नान्तर्गते षड्दलपद्मभेदे। "षड्दले वैद्युतनिभे स्वाधिष्ठानेऽनलत्विषि। बभमैर्यरलैर्युक्ते वर्णैः षड्भिश्च सुव्रत!" तन्त्रसा॰। "सिन्दूरपूररुचिरारुणपद्ममन्यत्सौषुम्णमध्यघटितं ध्वजमूलदेशे। अङ्गच्छदैः परिवृतं तड़िताभवर्णैर्बाद्यैः सबिन्दुलसितैश्च पुरन्दरान्तैः (लान्तैः)। तस्यान्तरे प्रविलसद्विशदप्रकाशमम्भोजमण्डलमथो वरुणस्य तस्य। अर्द्धेन्दुरूपलसितं शरदिन्दुशुभ्रं वङ्कारबीजममलं मकराधिरूढम्। तस्याङ्कदेशकलितो हरिरेव पायान्नीलप्रकाशरुचिरश्रियमादधानः। पीताम्बरः प्रथमयौवनगर्वधारी श्रीवत्सकौस्तुभधरो धृतवेदबाहुः। तत्रैव भाति सततं खलु राकिणी सा नीलाम्बुजद्युतिसहोदरकान्तिशोभा। नानायुधोद्यतकरैर्लसिताङ्गलक्ष्मीर्दिव्याम्बराभरणभूषितमत्तचित्ता। स्वाधिष्ठानाख्यमेतत् सरसिजममलं चिन्तयेद्यो मनोज्ञं तस्याहङ्कारदोषादिकसकलरिपुः क्षीयते तत्क्षणेन" पूर्णानन्दषट्चक्रम्।

**स्वाधीन** त्रि॰ स्वस्याधीनः। स्वायत्ते स्वतन्त्रे।

**स्वाधीनपतिका** स्त्री स्वाधीनः पतिर्यस्याः कप्। नायिकाभेदे स्वाधीनभर्तृकाद्योऽप्यत्र।

"कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकम्। वि-

चिरविभिन्नमना सखा या स्यात् स्वाधीनभर्तृका” सा०द०। सा च पञ्चविधा “मुग्धा मध्या प्रौढ़ा स्वकीया सामान्या चेति” रसमञ्जरी।

**स्वाध्याय** पु० स्वः स्वकीयत्वेन विहित अध्यायः द्विजानाम्, अधि+इङ–कर्मणि घञ्। १द्विजैः पाठ्ये वेदभागभेदे “स्वाध्यायोऽध्येतव्यः” इति श्रुतिः। सु+आ+अधि इङ भावे घञ्। २आवश्यपाठ्यवेदाध्ययने “स्वाध्यायो जप इत्युक्तो वेदाध्ययनकर्मणीति” स्मृतिः।

**स्वान्त** न० स्वन–क्त। १मनसि अमरः २गह्वरे मेदि०। ३शब्दिते त्रि०। [४स्वर्गीसुतायां च मेदि०।

**स्वाप** पु० स्वप–घञ्। निद्रायाम् अमरः। २शयने ३अज्ञाने

**स्वापतेय** न० स्वपतेरागतः ढञ्। धने अमरः।

**स्वाभाविक** त्रि० स्वभावादागतः ठञ्। स्वभावसिद्धे स्त्रियां ङीप् (स्वाभाविकी” स्वच्छनैत्युत्कटः)।

**स्वामिन्** पु० स्व+अस्त्यर्थे मिनि दीर्घः। १भर्त्तरि पत्यौ धरणिः। २कार्त्तिकेये मेदि०। ३राजनि अमरः। ४विभौ ५हरे ६हरौ च शब्दर०। ७वात्स्यायनमुनौ त्रिका०। ८अधिपतौ त्रि० अमरः। ९जैनभेदे पु० हेमच०। १०परिव्राजकोपाधिभेदे पु०। तस्य भावः त्व स्वामित्व स्वत्वनिरूपिते क्रयाद्यधीने आत्मवृत्तौ पदार्थभेदे स्वत्वशब्दे दृश्यम्।

**स्वामिपालविवाद** पु० स्वामी च पालश्च तयोर्विवादः विवादभेदे तत्स्वरूपादिकं वीरमि० उक्तं यथा “अथ स्वामिपालविवादाख्यव्यवहारपदम्। तत्र मनुस्तदभिधानप्रतिज्ञां करोति। “पशुषु स्वामिनां चैव पालानाञ्च व्यतिक्रमे। विवादं संप्रवक्ष्यामि यथावद्धर्मतत्त्वतः” इति। स्वामिपालयोः प्रतिदिनकृत्यमाह नारदः “उपानयेद्गा गोपाय प्रत्यहं रजनीक्षये। चीर्णाः पीतास्तु ता गोपः सायाह्ने प्रत्युपानयेत्” इति। चीर्णाः तृणादिकं भक्षितवतीः। पीताः पीतवतीः। स्वामिना प्रातर्यावत्यः समर्पितास्तावत्यो गोपालेन सायं प्रत्यर्पणीया इत्यर्थः। गोग्रहणं पशुमात्रोपलक्षणार्थम्। तथा च याज्ञवल्क्यः “यथार्पितान् पशून् गोपः सायं प्रत्यर्पयेत् तथा” इति। भक्तादिपरिपालकस्य भृतिपरिमाणमाह नारदः “गवां शताद्वत्सतरी धेनुः स्याद् द्विशताद् भृतिः। प्रतिसंवत्सरं गोपे सन्दोहश्चाष्टमेऽहनि” इति। प्रतिसंवत्सरं संवत्सरे संवत्सरे गोशतपरिपालने वत्सतरी द्विहायनी गौर्भृतिः। द्विशतपरिपालने धेनुर्दोग्ध्री सवत्सैव यावत्। अष्टमे दिवसे सन्दोहः सर्वासां गवां सन्दोहश्च भृतित्वेन कल्पनीय इत्यर्थः। बृहस्पतिरपि “तथा धेनुभृतः क्षीरं लभेताष्टमेऽह्नि” इति। धेनुभृतः धेन्वाभृतः द्विशतपालक इत्यर्थः। तथा च सन्दोहो धेन्वा समुन्नीयते न वत्सतर्येति मदनरत्ने। कल्पतरौ तु धेनुभृतो गोपाल इति व्याख्यातत्वेन वत्सतर्यापि समुन्नीयत इति गम्यते। गोग्रहणं महिष्यादीनामुपलक्षणम्। न्यूनाधिकपरिपालने तु तदनुसारेण भृतिकल्पना द्रष्टव्या। इयञ्च वत्सतर्यादिभृतिकल्पना परिभाषितस्वभावविषया। परिभाषिते तु परिभाषानतिक्रमेणैव देया। मनुस्तु प्रकारान्तरेण भृतिपरिमाणमाह “गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम्। गोस्वाम्यनुमतो भृत्यः सा स्यात् पालेऽभृते भृतिः” इति। दशानां दोग्ध्रीणां मध्ये वरामुत्कृष्टां स्वीकृत्य तत्स्वामिदत्तो भृत्यो गोपः दशदोग्ध्रीपालनकृद् गृह्णीयाद् भृत्यर्थम्। सैषा भृतिः पूर्वं द्रव्यान्तरेणाभृते ज्ञेया। यस्तु द्रव्यान्तरेण भृतः तत्र तदेव भृतिरित्यर्थः। यस्तु भृतिं गृहीत्वा पशून्नाशयेत् विनाशयति वा तं प्रत्याह याज्ञवल्क्यः “प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः” इति। प्रमादग्रहणं पशुपालकदोषोपलक्षणार्थम् मनुना प्रमादनाशः स्पष्टीकृतः “नष्टं विनष्टं कृमिभिः श्वहतं विषमे मृतम्। हीनं पुरुषकारेण प्रदद्यात् पाल एव तु” इति। श्वहतम् शुना हतम्। विषमे दुर्गमप्रदेशे। पुरुषकारः पुरुषप्रयत्नः। यत् पुरुषप्रयत्नेन हीनं सत्त्वाद्यादिकं प्राप्तं तद्दातव्यमित्यर्थः। पुरुषकारश्च बृहस्पतिना दर्शितः “कृमिचोरव्याघ्रभयाद्दरीश्वभ्राच्च पालयेत्। व्यायच्छेच्छक्तितः क्रोशेत् स्वामिने वा निवेदयेत्” इति। व्यायच्छेत् व्यसनाभावाय यतेतेत्यर्थः। चौरैर्बलात्कारेणापहृते न दाप्य इत्याह मनुः “विघुष्य तु हृतं चौरैर्न पालो दातुमर्हति। यदि देशे च काले च स्वामिनः स्वस्य शंसति” इति। विघुष्य डक्कादिभिर्घोषं कृत्वा। देशे स्वाम्यवस्थानदेशे। काले अपहरणकालाव्यवहितकाले। विषयविशेषे पशुपालस्य दण्डमाह व्यासः “गृहीतमूल्यो गोपालस्तांस्त्यक्त्वा निर्जने वने। ग्रामचारी स्वपेद्वाथ शलाकी च वनेचरः” इति। शलाकी नापित इति कल्पतरौ। पुरुषप्रयत्नाकरणे दण्डमाह नारदः “स्वाम्ये दोष्मनं गोपो व्यायच्छेत् तत्र शक्तितः। अशक्तस्तूर्णमागम्य स्वामिने च निवेदयेत्”। अव्यायच्छन्नविक्रोशन् स्वामिने चा-

निवेदयन् । वोढुमर्हति गोपस्तु विनयञ्चैव राजनि" इति । तद्धवादिकम् । पशूनां दैवात् मरणे पालकस्य दोषाभावज्ञानोपायमाह व्यासः "मृतेषु च विशुद्धः स्यात् बालशृङ्गादिदर्शनात्" । आदिशब्देन कर्णादीनां ग्रहणम् । तथा च मनुः "कर्णौ चर्म च बालांश्च वस्तिं स्नायुञ्च रोचनाम् । पशुषु स्वामिनां दद्यान्मृतेष्वङ्गानि दर्शयेत्" इति । अङ्कादि दर्शयेदिति क्वचित् पाठः । अङ्कः तप्तकर्णादिकृतचिह्नम् । आदिशब्दः शिसंग्रहार्थः । पशुषु मृतेष्वङ्कादिकं स्वामिने दर्शयेत् । रोचनादिकं यत्प्रयोजनं तत् तस्मै दद्यादित्यर्थः । नष्टगवादिदानञ्च तत्स्वामिने मूल्यद्वारेण दातव्यम् । अतएव विष्णुः "दिवा पशूनां वृकाद्युपघाते पालेऽत्वनायति पालकदोषो विनष्टपशूनां मूल्यं स्वामिने दद्यादिति" । अनायति अनागच्छति । विनष्टद्रव्यप्रमाणमाह याज्ञवल्क्यः "पालदोषविनाशे तु पाले दण्डो विधीयते । अर्द्धत्रयोदशपणः स्वामिनो द्रव्यमेव च" इति । अर्द्धत्रयोदशपणः अर्द्धरहितत्रयोदशपणः । सार्द्धद्वादशपण इति यावत् । उत्तरपदलोपी कर्मधारयः । यत्तु केनचिदर्द्धाधिकत्रयोदशपणो दण्ड इति व्याख्यातं तत् सार्द्धद्विमासादिषु अर्द्धत्रिमासादि महाभाष्यकारशब्दप्रयोगदर्शनादुपेक्ष्यम् । पालदोषमाह मनुः "अजाविके तु संरुद्धे वृकैः पाले त्वनायति । यां प्रसह्य वृको हन्यात् पाले तत् किल्बिषं भवेत्" इति । अनायति उपद्रवनिवारणाय अनागच्छतीत्यर्थः । याम् अजाविकजातीयाम् । सुगमस्थलस्थविषयमेतत् । दुर्गमस्थलस्थविषये त्वाह स एव "तासाञ्चेदवरुद्धानां चरन्तीनां मिथो वने । यामुत्प्लुत्य वृको हन्यान्न पालस्तत्र किल्बिषी" इति । अवरुद्धानां पालकेन स्थापितानामित्यर्थः । गवादिप्रचारार्थं भूमिमाह याज्ञवल्क्यः "ग्राम्येच्छया गोप्रचारो भूमीराजवशेन वा" । ग्राम्येच्छया ग्रामीणजनवशेन राजेच्छया वा । गोप्रचारो गवां तृणादिभक्षणार्थं कियानपि भूभागोऽकृष्टः परिकल्पनीय इत्यर्थः । गवां स्वावासनसौकर्याय ग्रामक्षेत्रयोरन्तरमाह स एव "धनुःशतपरीणाहो ग्रामक्षेत्रान्तरं भवेत् । द्विशते खर्वटस्य स्यान्नगरस्य चतुःशतम्" इति । परीणाहशब्देनात्र सर्वासु दिक्षु चतुरस्रत्वं गृह्यते । एतादृशं धनुःशतं परिमितं ग्रामक्षेत्रयोरन्तरं कार्यम् । खर्वटस्य शतद्वयपरिमितमित्यर्थः । खर्वटः अनेककाष्ठकर्मोपयुक्तो ग्राम इति मदनरत्ने । माधवाचार्यैस्तु प्रचुरकण्टकसन्तानो ग्राम इति व्याख्यातम् । तत्र शस्योत्पत्तेः प्रागेवावरणं कार्यमित्याह कात्यायनः "अजातेष्वेव शस्येषु कुर्यादावरणं महत् । दुःखेन विनिवार्य्यन्ते लब्धस्वादरसा मृगाः" इति । एवं पशुनिवारणार्थं कृतेऽप्यावरणे तमतिक्रम्य पशुभिः शस्यादिविनाशे कृते कर्त्तव्यमाह मनुः "पथिक्षेत्रे परिवृते ग्रामान्तीयेऽथ वा पुनः । स पालः शतदण्डार्हो विपालं वारयेत् पशुम्" इति । पथिक्षेत्रे मार्गसमीपे क्षेत्रे । ग्रामान्तीये ग्रामसमीपवर्त्तिनि । सपालः पशुः पणशतदण्डार्हः तत्पशुपालः पणशतं दण्डनीय इत्यर्थः । अयञ्च दण्डः पशुपालने समर्थेन सता प्रमादनिवार्यमाणे वेदितव्यः । अतएव नारदः "अतृकस्य तु हृति यः सामर्थ्यघातो गवादिभिः । पालः शास्यो भवेत् तत्र न चेच्छक्तो निवारयेत्" इति । आवरणाभावेनापरिहार्य्ये शस्योपघातेऽपि न पालस्य दण्डः । तथा च मनुः "तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि । न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम्" इति । अनेनाहृतक्षेत्रशस्योपघाते पशुरक्षिणां दण्ड इत्यर्थादुक्तं भवति । अदीर्घकालप्रचारविषयमेतत् । दीर्घकालप्रचारे तु अपरिवृतेऽपि पशुपालो दण्डार्हो भवति । अतएवाल्पकालप्रचारे दोषाभावं दर्शयति विष्णुः "पथि ग्रामविवीतान्ते न दोषोऽल्पकालमिति" । पशुविशेषे दण्डपरिमाणमाह याज्ञवल्क्यः "माषानष्टौ तु महिषी शस्यघातस्य कारिणी । दण्डनीया तदर्द्धं तु गौस्तदर्द्धमजाविकम् । भक्षयित्वोपविष्टानां यथोक्ताद् द्विगुणो दमः । सममेषां विवीतेऽपि खरोष्ट्रं महिषीसमम्" इति । परशस्यघातकारिण्या महिष्याः स्वामी अष्टौ माषान् दण्ड्यः । गोः स्वामी चतुरः । छागस्वामी मेषस्वामी च द्वौ । एतेषां पशूनां शस्यभक्षणादारभ्य तत्रैव उपविष्टानां स्वामी यथोक्तदण्डाद् द्विगुणं दाप्यः । विवीतस्थतृणाद्युपघातेऽपि शस्योपघातवद्दण्डनीयः । खरस्वाम्युष्ट्रस्वामी च महिषीस्वामिवद्दण्डनीयः । अत्र पशुस्वामिनो दण्ड इत्यभिधातव्ये महिष्यादिपदं प्रतिपशुदण्डप्राप्त्यर्थम् । भक्षयित्वोपविष्टवत्सविषये यथोक्तात् चतुर्गुणो दण्डः । तथा च स्मृत्यन्तरम् "वसतां द्विगुणः प्रोक्तः सवत्सानां चतुर्गुणः" इति । अत्रापराधानुसारेण दण्डनार्थं ताम्रिकमाषो ग्राह्यः न पुनः

सौवर्णो राजतो वेति स्मृतिचन्द्रिकायाम्। नाम्बक-माषस्य कर्षपरिमाणितस्य षोडशो भागो भवति अयमेव "पणस्य पञ्च वापि प्रकीर्त्तिताः इति याज्ञवल्क्योक्तपञ्चसुवर्णपरिमितस्वर्णपणे पञ्चचतुर्थोऽंशस्य विंशतिमाषात्मककार्षापणस्य "माषो विंशतिमोभागः पणस्य परिकीर्त्तितः" इति नारदोक्तो विंशो भागोऽपि भवति। एतेन स्मृतिचन्द्रिकायाम् अपराधानुसारेण दण्डनार्थं माषो "विंशतिमो भागः पणस्य परिकीर्त्तित" इति नारदोक्तो माषः कैश्चित् श्लोकेन इत्येकीयमतत्वेनोपन्यस्य "बद्ध्वा र्ङ्क्षरजोमूना मनुनासमुदाहृता। कार्षापणान्ता सा दिव्ये नियोज्या विनये तथा" इति वृहस्पतिवचनविरोधेन दूषितं तदुभययाष्यर्थभेदाभावेन विरोधाभावान्निरस्तं मन्तव्यम्। यत्तु, मनुनोक्तम् "सपादं पणमर्हतीति" तत् स्वामिनो मतिपूर्वं पशुव्यतिक्रमविषयम्। याज्ञवल्क्यवचनन्त्वबुद्धिपूर्वविषयमिति न तयोर्विरोधः। यत्तु "पणस्य पादौ द्वौ गान्तु द्विगुणं महिषीं तथा। तथाजाविकवत्सानां पादो दण्डः प्रकीर्त्तित" इति स्मृत्यन्तरं तदुभक्षयित्वोपविष्टगवादिविषयम्। यत् पुनर्नारदेनाभिहितम् "माषकं दापयेद् दण्डं द्वौ माषौ महिषीं तथा। तथाजाविकवत्सानां दण्डः स्यादर्द्धमाषिकः" इति। तन्मुक्तमात्रभक्षणविषयम् अतएवाहतुः शङ्खलिखितौ। "रात्रौ चरन्ती गौः पञ्चमाषां दिवा मोक्तृवत्सौ माषं वासे त्वदण्ड्यमिति"। वासे त्वदण्ड इत्यस्यायमर्थः। महिष्यादिभिः परशस्येषु बलवन्मात्रभक्षणे कथञ्चित् कृते पालकस्य स्वामिनो वा स्वल्पोऽपि दण्डो नास्तीति। आतुरपशुविषये बहुशस्यनाशेऽप्येवमेव दण्डाभावप्रतिपादनमुखेनाह नारदः "राजपहस्तदूतो वा बज्राशनिहतोऽपि वा। अथ सर्पेण दष्टो वा वृक्षाद्वा पतितो भवेत्। व्याघ्रादिभिर्हतो वापि व्याधिभिर्वाप्युपद्रुतः। न तत्र दोषः पालस्य न च दोषोऽस्ति गोमिनाम्" इति। गोमिनां गोस्वामिनाम्। आतुराणामनिवार्यत्वादित्यभिप्रायः। अनातुराणामपि केषाञ्चित् पशूनां दण्डाभावमाह स एव "गौः प्रसूता दशाहात्तु महोक्षा वाजिकुञ्जराः। न निवार्याः प्रयत्नेन तेषां स्वामी न दण्डभाग्" इति। दशदिनपर्य्यन्तं प्रसूताया निरोद्धुमशक्यत्वाच्च स्वामी दण्डभाक्। महोक्षस्य सर्वाङ्गाधानार्थं सदा बन्धनायोगात् तत्स्वामी न दण्डभाक्। वाजिकुञ्जराणां स्वामिनोऽदण्डभागित्वे हेतुमाहोशनाः "अदण्ड्या हस्तिनो ह्यश्वा प्रजापाला हि ते स्मृताः" स्वामिपदञ्च पालकस्याप्युपलक्षणार्थम्। यदाह मनुः "अनिर्दशाहां गां सूतां वृषान् देवपशूंस्तथा। सपालान् वा विपालान् वा अदण्ड्यान्मनुरब्रवीत्" इति। वृषाः महोक्षाः। यद्वा वृषोत्सर्गविधानेनोत्सृष्टाः। देवपशवः देवालयेषु देवोपभोगार्थं स्थापिताः पशवः। याज्ञवल्क्योऽपि "महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः। पालो येषाञ्च ते मोच्या दैवराजपरिप्लुताः"। अनिर्दशाहा आगन्तुकः स यूथात्परिभ्रष्टः सन् देशान्तरात् समागतः। येषां पालो नास्ति तेऽपि दैवराजोपहताः शस्यादिनाशकारिणो न दण्ड्या इत्यर्थः। आदिशब्देन क्षतवत्सादीनां ग्रहणम्। अतएवोशनाः "अदण्ड्या क्षतवत्सा च संशा रोगवती तथा। अदण्ड्याः काणकूटाश्च वृषाश्च क्षतजक्षताः। अदण्ड्यागन्तुका गौश्च सूतिका चाभिसारिणी" इति। कूटः एकशृङ्गः। क्षतजक्षतः प्रतप्रावसेन क्षतजाच्छन्नः। अभिसारिणी स्वयूथात् प्रच्युता पुनः स्वयूथगामिनी। परशस्यविनाशे न केवलं पशुस्वामी दण्डनीयः शदमपि दापनीय इत्याह वृहस्पतिः "शस्यावनाशयेद्यास्तु चीर्णे दोषो द्वयोर्भवेत्। स्वामी सदमं दाप्यः पालस्ताडनमर्हति" इति। सदश्च दमश्च सदमम्। समूलशस्यनाशविषयमेतत्। अतएव नारदः "समूलशस्यनाशे तु तत्स्वामी प्राप्नुयात् सदम्। वधेन गो यौस्तव्येव दण्डं स्वामिनि पातयेत्" इति। तत्स्वामी शस्यस्वामी सदं प्राप्नुयात्। पशुस्वामिनः सकाशादिति शेषः। वधोऽत्र कशादिना ताडनम्। न प्राणच्छेदः। पालस्ताडनमर्हतीति वचनात्। सदश्च सामन्तादिभिः परिकल्पितो देयः। अतएव स एवाह "गोभिस्तु भक्षितं शस्यं यो नरः प्रतियाचते। सामन्तानुमतं देयं धान्यं यत्तत्र वापितम्" इति। यत्तु सदयाचननिषेधनम् "गोभिर्विनाशितं धान्यं यो नरः प्रतियाचते। पितरस्तस्य नाश्नन्ति न चापि त्रिदिवौकसः"। इत्युशनोवचनन्तद्‌ ग्रामादिसमीपस्थनावृतक्षेत्रविषयमिति माधवाचार्य्याः। श्राद्धकालादौ गोभक्षितविषयमिति मदनरत्नकृतः। सर्वोपाङ्गवास्तुत्सवे श्राद्धदिवसे चादण्ड्यत्वमाह स एव "अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव च" इति। गोभिः श्राद्धकालादौ भुक्तमति-श्रेयस्करमित्याशयेनाह। व्यासः "आक्रम्य च द्विजैर्भुक्तं परिक्षीणश्च बान्धवैः। गाभिश्च नरशार्दूल।

वाजपेयादिभिरिष्यते" इति एतत्पदद्वयपरं हरति मनुः
"एतद्विधानमातिष्ठेद्धार्मिकः पृथिवीपतिः। स्वामिनाञ्च
पशूनाञ्च पालानाञ्च व्यतिक्रमे"।

**स्वायम्भुव** पु० स्वयंभुवोऽपत्यम्, तस्येदम् वा अण् ओरो-
टिति वक्तव्ये ओर्गुण इत्युक्त्या संज्ञापूर्वकविधेरनित्य-
त्वज्ञापनात् गुणः अवङ्। १स्वयम्भूपुत्रे मनौ २स्वयम्भू-
सम्बन्धिनि त्रि० "धाम स्वायम्भुवं ययुः" कुमारः।
स्त्रियां ङीप्। सा च ३ब्राह्म्याम्। "भार्गवी नार-
दीया च वाह्स्पत्याङ्गिरस्यपि। स्वायम्भुवस्य शास्त्रस्य
चतस्रः संहिता मताः" इति तदुक्तधर्मशास्त्रसंहिता-
चतुष्टयम्। तदुत्पत्त्यादिकं यथा
"ततः कालेन महता तस्याः पुत्रोऽभवन्मनुः। स्वाय-
म्भुव इति ख्यातः स विराडिति नः श्रुतम्। तद्रूपगुण-
सामान्यादधिपूरुष उच्यते। वैराजा यत्र ते जाता
बहवः संशितव्रताः। स्वायम्भुवान् महाभागाः सप्त सप्त
तथापरे। स्वारोचिषाद्या ते सर्वे ब्रह्मतुल्यस्वरूपिणः।
औत्तमिप्रमुखास्तद्वद् येषान्त्वं सप्तमोऽधुना" मत्स्यपु०
४अ०। "सर्गीस्तेषां प्रवक्ष्यामि पुत्रान् देवगणांस्तथा।
मरीचिरत्रिर्भगवानङ्गिराः पुलहः क्रतुः। पुलस्त्यश्च वशि-
ष्ठश्च सप्तैते ब्रह्मणः सुताः। उत्तरस्यां दिशि तथा
राजन्! सप्तर्षयः स्थिताः। यामा नाम तथा देवास्त्वासन्
स्वायम्भुवेऽन्तरे। आग्नीध्रश्चाग्निबाहुश्च मेधा मेधातिथि-
र्वसुः। ज्योतिष्मान् द्युतिमान् हव्यः स-नः पुत्र एव च
मनोः स्वा-म्भुवस्यैते दश पुत्रा महौजसः। एतत्ते
प्रथमं राजन्! मन्वन्तरमुदाहृतम्" हरिवं०७अ०।

**स्वाराज्** पु० स्वः स्वर्गे राजते राज-क्विप्। इन्द्रे अमरः।

**स्वाराज्य** न०स्वराजः भावः ष्यञ्। ब्रह्मत्वे स्वाराज्यसिद्धिः।

**स्वारोचिष** पु० द्वितीये मनौ। "और्वो वशिष्ठपुत्रश्च स्तम्बः
काश्यप एव च। प्राणो बृहस्पतिश्चैव दत्तो निश्च्यवन-
स्तथा। एते महर्षयस्तात! वायुप्रोक्ता महाव्रताः।
देवाश्च तुषिता नाम स्मृताः स्वारोचिषेऽन्तरे। हविघ्नः
सुकृतिर्ज्योतिरापो मूर्त्तिरयश्च यः। प्रथितश्च नभस्यश्च
नभ ऊर्जस्तथैव च। स्वारोचिषस्य पुत्रास्ते मनोस्तात
महात्मनः। कीर्त्तिताः पृथिवीपाल! महावीर्यपराक्रमाः।
द्वितीयमेतं कथितं तव मन्वन्तरं मया" हरिवं०७अ०।

**स्वार्थ** पु० स्वस्य अर्थः प्रयोजनम् अभिधेयो वा। १स्वप्रयो-
जने २स्वाभिधेये च "स्वार्थः स्वार्थबोधकद्विति" मल्लिना०

**स्वार्थिक** त्रि० स्वार्थे विहितः ठञ्। स्वार्थविहिते व्याकर-
णोक्ते प्रत्यये। "स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवच-
नान्यनुवर्त्तन्ते" महाभाष्यं यथा बहुगुडो द्राक्षा "क्वचित्
स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते"
महाभाष्यम्। देवता अपकल्पगुडा गुडकोर इत्यादि।

**स्वास्थ्य** न० स्वस्थस्य भावः ष्यञ्। १आरोग्ये २सन्तोषे अमरः।

**स्वाहा** अव्य० सु+आ+ह्वे-डा। १देवोद्देशेन हविस्त्यागे
अमरः। २अग्निभार्य्यायां स्त्री "स्वाहेव हविर्भुजम्"
रघुः। ३मातृकाभेदे च स्त्री "नमः स्वधायै स्वाहायै" इति
पितृगाथा। "प्रकृतेः कलया चैव सर्वशक्तिस्वरूपिणी।
बभूव दाहिका शक्तिरग्नेः स्वाहा स्वकामिनी। ग्रीष्म-
मध्याह्नमार्त्तण्डप्रभाच्छादनकारिणी। त्वमग्ने दाहिका
शक्तिर्भवपत्नी च सुन्दरी। दग्धुं न शक्तस्त्वदृते
हुताशश्च त्वया विना। त्वन्नामोच्चार्य्य मन्त्रान्ते यो
दास्यति हविर्नरः। सुरेभ्यस्तत्प्राप्नुवन्ति सुराः सानन्द-
पूर्वकम्। अग्नेः सम्पत्स्वरूपा च श्रीरूपा सा गृहे-
श्वरी। देवानां पूजिता शश्वन्नरादीनां भवाम्बिके!"
ब्रह्मवै० प्र० ३७अ०। ३दुर्गाशक्तिभेदे "दुर्गा शिवा क्षमा
धात्री स्वाहा स्वधा नमोऽस्तु ते" दुर्गापूजामन्त्रः।

**स्वाहाप्रिय** पु० ६त०। अग्नौ हला०स्वाहापत्यादयोऽप्यत्र।

**स्वाहाभुज्** पु०स्वाहेतिमन्त्रेण त्यक्तद्रव्यं भुङ्क्ते भुज-क्विप्।
देवे अमरः। [च मेदि०

**स्विद्** अव्य० स्विद-क्विप्। १प्रश्ने २वितर्के अमरः ३पादपूरणे

**स्विन्न** त्रि० स्विद-क्त। १घर्मयुक्ते २स्वेदान्विते च ३पक्वे
"स्विन्नमन्नमुदाहृतम्" स्मृतिः। [अङ्गीकारे।

**स्वीकार** पु० अस्वस्य स्वस्य कारः करणं स्व+च्वि+कृ-घञ्।

**स्वीय** त्रि० स्वस्येदम् छ अपाणिनीयोऽयम् न लुगिति मन्यते।
१निजसम्बन्धिनि २नायिकाभेदे स्त्री नायिकाशब्दे
दृश्यम्। [आदित् स्वूर्णं स्वूर्च्छितम्।

**स्वुर्छ** विस्तृतौ भ्वा० प० सक० सेट्। स्वूर्च्छति अस्वूर्च्छीत्

**स्वृ** शब्दे सक० उपतापे सक० भ्वा० प० वेट्। स्वरति अस्वा-
रीत् अस्वार्षीत्।

**स्वॄ** हिंसने क्र्या० प्या०प०सक०सेट्। स्वृणाति अस्वारीत्।

**स्वेक** गतौ भ्वादि० आत्म०सक०सेट् ऋदित् चङि न ह्रस्वः।
स्वेकते अस्वेकिष्ट।

**स्वेच्छा** स्त्री ६त०। स्वाभिलाषे हेमच०। [धीनमृत्युयुक्ते त्रि०।

**स्वेच्छामृत्यु** पु०स्वेच्छया मृत्युर्यस्य। १भीष्मे त्रिका० २स्वेच्छा-

**स्वेद** पु० स्विद- भावे घञ्। १पाकभेदे (सेका) २घर्मे
गात्रादितो जलादेः निस्यन्दने। ञिष् भावे घञ्।

घर्म्मनिष्ठापर्य्ये तत्प्रकारादिकं चरकेणाभिहितं यथा "अतः स्वेदाः प्रवक्ष्यन्ते यैर्यथावत् प्रयोजिताः। स्वेदसाध्याः प्रशाम्यन्ति गदा वातकफात्मकाः। स्नेहपूर्व्वं प्रयुक्तेन स्वेदेनावर्जितेऽनिले। पुरीषमूत्ररेतांसि न सज्जन्ति कथञ्चन। शुष्काण्यपि हि काष्ठानि स्नेहस्वेदोपपादनैः। नमयन्ति यथान्यायं किं पुनर्जीवतो नरान्। रोगर्त्तुव्याधितापेक्षो नात्युष्णोऽतिमृदुर्न च। द्रव्यवान् कल्पितो देशे स्वेदः कार्य्यकरो मतः। व्याधौ शीते शरीरे च महान् स्वेदो महाबले। दुर्ब्बले दुर्ब्बलः स्वेदो मध्यमे मध्यमो हितः। वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते। स्निग्धरूक्षस्तथा स्निग्धो रूक्षश्चाप्युपकल्पितः। आमाशयगते वाते कफे पक्वाशयाश्रिते। रूक्षपूर्व्वो हितः स्वेदः स्नेहपूर्व्वस्तथैव च। वृषणौ हृदयं दृष्टी स्वेदयेन्मृदुनैव वा। मध्यमं वङ्क्षणौ शेषमङ्गावयवमिष्टतः। सुशुद्धैर्नक्तकैः पिण्ड्या गोधूमानामथापि वा। पद्मोत्पलपलाशैर्वा स्वेद्यः संवृत्य चक्षुषी। मुक्तावलीभिः शीताभिः शीतलैर्भाजनैरपि। जलार्द्रैर्जलजैर्हस्तैः स्विद्यतो हृदयं स्पृशेत्। शीतशूलव्युपरमे स्तम्भगौरवनिग्रहे। सञ्जाते मार्दवे स्वेदे स्वेदनाद्विरतिर्मता। पित्तप्रकोपो मूर्च्छा च शरीरसदनं तृषा। दाहः स्वेदाङ्गदौर्ब्बल्यमतिस्विन्नस्य लक्षणम्। उक्तस्तस्याशितीये यो ग्रैष्मिकः सर्व्वशो विधिः। सोऽतिस्विन्नस्य कर्त्तव्यो मधुरः स्निग्धशीतलः। कषायमद्यनित्यानां गर्भिण्या रक्तपित्तिनाम्। पित्तिनां सातिसाराणां रूक्षाणां मधुमेहिनाम्। विदग्धभ्रष्टब्रध्नानां विषमद्यविकारिणाम्। श्रान्तानां नष्टसंज्ञानां स्थूलानां पित्तमेहिनाम्। तृष्यतां क्षुधितानाञ्च क्रुद्धानां शोचतामपि। कामल्युदरिणाञ्चैव क्षतानामाढ्यरोगिणाम्। दुर्ब्बलातिविशुष्काणामुपक्षीणौजसां तथा। भिषक् तैमिरिकाणाञ्च न स्वेदमवतारयेत्। प्रतिश्याये च कासे च हिक्काश्वासेष्वलाघवे। कर्णमन्याशिरःशूले स्वरभेदे गलग्रहे। अर्द्दितैकाङ्गसर्व्वाङ्गपक्षाघाते विनामके। कोष्ठानाहविबन्धेषु शुक्राघाते विजृम्भके। पार्श्वपृष्ठकटीकुक्षिसंग्रहे गृध्रसीषु च। मूत्रकृच्छ्रे महत्त्वे च मुष्कयोरङ्गमर्द्दके। पादोरुजानुजङ्घार्त्तिसंग्रहे श्वयथावपि। खल्लीष्वामेषु शीते च वेपथौ वातकण्टके। सङ्कोचायामशूलेषु स्तम्भगौरवसुप्तिषु। सर्व्वाङ्गेषु विकारेषु स्वेदनं हितमुच्यते। तिलमाषकुलत्थाम्लघृततैलामिषौदनैः। पायसैः कृशरैर्मांसैः पिण्डस्वेदं प्रयोजयेत्। गोखरोष्ट्रवराहाश्वशकृद्भिः सतुषैर्यवैः। सिकतापांशुपाषाणकरीषायसपूटकैः। श्लैष्मिकान् स्वेदयेत् पूर्व्वैर्वातिकान् समुपाचरेत्। द्रव्याण्येतानि शस्यन्ते यथास्वं प्रस्तरेष्वपि। भूगृहेषु च जेन्ताकेष्वश्मघ्नकर्षूकेषु च। विधूमाङ्गारतप्तेष्वभ्यक्तः स्विद्यति ना सुखम्। ग्राम्यानूपौदकं मांसं पयो वस्तशिरस्तथा। वराहमध्यपित्तासृक्स्नेहवत्तिलतण्डुलान्। इत्येतानि समुत्क्वाथ्य नाड़ीस्वेदं प्रयोजयेत्। देशकालविभागज्ञो युक्त्यपेक्षो भिषक्तमः। वारुणामृतकैरण्डशिग्रुमूलकसर्षपैः। वासावंशकरञ्जार्कपत्रैरश्मन्तकस्य च। शोभाञ्जनकशैरीषमालतीसुरसार्ज्जकैः। पत्रैरुत्क्वाथ्य सलिलं नाड़ीस्वेदं प्रयोजयेत्। भूतीकपञ्चमूलाभ्यां सुरया दधिमस्तुना। मूत्रैरम्लैश्च सस्नेहैर्नाड़ीस्वेदं प्रयोजयेत्। एत एव च निर्यूहाः प्रयोज्या जलकोष्ठके। स्वेदनार्थं घृतक्षीरतैलकोष्ठांश्च कारयेत्। गोधूमशकलैश्चूर्णैर्यवानामम्लसंयुतैः। सस्नेहकिण्वलवणैरुपनाहः प्रशस्यते। गन्धैः सुरायाः किण्वेन जीवन्त्या शतपुष्पया। उमया कुष्ठतैलाभ्यां युक्तया चोपनाहयेत्। चर्म्मभिश्चोपनद्धव्यः सलोमभिरपूतिभिः। उष्णवीर्य्यैरलाभे तु कौशेयाविकशाटकैः। रात्रौ बद्धं दिवा मुञ्चेन्मुञ्चेद्रात्रौ दिवाकृतम्। विदाहपरिहारार्थं स्यात् प्रकर्षस्तु शीतले। सङ्करः१ प्रस्तरो२ नाड़ी३ परिषेको४ऽवगाहनम्५। जेन्ताकोऽ६श्मघनः७ कर्षूः८ कुटी९ भूः१० कुम्भिकैव११ च। कूपो१२ होलाक१३ इत्येते स्वेदयन्ति त्रयोदश। तान् यथावत् प्रवक्ष्यामि सर्व्वानेवानुपूर्व्वशः" इति। तत्र वस्त्रान्तरितैरवस्त्रान्तरितैर्वा पिण्डैर्यथोक्तैरुपस्वेदनं सङ्करस्वेदः इति विद्यात्। शूकशमीधान्यपुलाकानां वेशवारपायसकृशरोत्कारिकादीनां वा प्रस्तरे कौशेयाविकोत्तरप्रच्छदे पञ्चाङ्गुलोरुबूकार्कपत्रप्रच्छदे वा स्वभ्यक्तसर्व्वगात्रस्य शयानस्योपरि स्वेदनं प्रस्तरस्वेदः इति विद्यात्। स्वेदनद्रव्याणां पुनर्मूलफलपत्रभङ्गादीनां मृगशकुनपिशितशिरस्पदादीनामुष्णस्वभावानां वा यथार्हमम्ललवणस्नेहोपसंहितानां मूत्रक्षीरादीनां वा कुम्भ्यां वाष्पमनुद्वमन्त्यामुत्क्वथितानां नाड्या शरेषीकावंशदलकरञ्जार्कपत्रान्यतमकृतया गजाग्रहस्तसंस्थानया व्याममात्रया व्यामार्द्धदीर्घया वा व्यामचतुर्भागाष्टभागमूलाग्रपरिणाहस्रोतसा सर्व्वतो वातहरपत्रसंवृतच्छिद्रया द्विस्त्रिर्वा विना-

सितया वातहरसिद्धस्नेहाभ्यक्तगात्रो वाष्पमपहरेत्। बाष्पो ह्यनूर्द्ध्वगामी विहतचण्डवेगस्त्वचमविदहन् सुखं स्वेदयतीति नाडीस्वेदः ३। वातिकोत्तरवातिकानां पुनर्मूलादीनामुत्क्वाथैः सुखोष्णैः कुम्भीर्वार्धुलिकाः प्रनाडीर्वा पूरयित्वा यथार्हसिद्धस्नेहाभ्यक्तगात्रं वस्त्रावच्छन्नं परिषेचयेदिति परिषेकः ४। वातहरोत्क्वाथक्षीरतैलघृतपिशितरसोष्णसलिलकोष्ठकावगाहस्तु यथोक्त एवावगाहः" ५। "अथ जेन्ताकं चिकीर्षुर्भूमिं परीक्षेत इत्यादि"। (जेन्ताकशब्दे ३१४४ पृ॰ अस्य लक्षणाद्युक्तप्रायम् ६।) "शयानस्य प्रमाणेन घनामश्ममयीं शिलाम्। तापयित्वा मारुतघ्नैर्दारुभिः सम्प्रदीपितैः। व्यपोह्य सर्वानङ्गारान् प्रोक्ष्य चैवोष्णवारिणा। तां शिलामथ कुर्वीत कौषेयाविकसंस्तराम्। तस्यां स्वभ्यक्तसर्वाङ्गः शयानः स्विद्यते सुखम्। रौरवाजिनकौषेयप्रावाराद्यैः सुसंवृतः। इत्युक्तोऽश्मघनस्वेदः ७। कर्षूस्वेदः प्रवक्ष्यते। स्थानमेव शयनस्याधः कर्षूं स्थानविभागवित्। दीप्तैरधूमैरङ्गारैस्तां कर्षूं पूरयेत् ततः। तस्यामुपरि शय्यायां स्वपन् स्विद्यति ना सुखम् ८। अनत्युत्सेधविस्तारां वृत्ताकारामलोचनाम्। घनभित्तिं कुटीं कृत्वा कुष्ठाद्यैः सम्प्रलेपयेत्। कुटीमध्ये भिषक् शय्यां स्वास्तीर्णां चोपकल्पयेत्। प्रावाराजिनकौषेयकुथकम्बलगोलकैः। हसन्तिकाभिरङ्गारपूर्णाभिस्तां च सर्वशः। परिवार्यान्तरारोहेदभ्यक्तः स्विद्यते सुखम् ९। य एवाश्मघनस्वेदविधिर्भूमौ स एव तु। प्रशस्तायां निवातायां समायामुपदिश्यते १०। कुम्भीं वातहरक्वाथपूर्णां भूमौ निखातयेत्। अर्द्धभागं त्रिभागं वा शयनं तत्र चोपरि। स्थापयेदासनं वापि नातिसान्द्रपरिच्छदम्। अथ कुम्भ्यां सुसन्तप्तान् प्रक्षिपेदयसोगुडान्। पाषाणान् वोष्मणा तेन तत्स्थः स्विद्यति ना सुखम् ११। सुसंवृताङ्गः स्वभ्यक्तः स्नेहैरनिलनाशनैः। कूपं शयनविस्तारं द्विगुणञ्चापि वेधतः। देशे निवाते शस्ते च कुर्यादन्तः सुमार्जितम्। हस्त्यश्वगोखरोष्ट्राणां करीषैर्दग्धपूरिते। स्वच्छन्नः सुसंस्तीर्णेऽभ्यक्तः स्विद्यति ना सुखम् १२। धीतीकान्तु करीषाणां यथोक्तानां प्रदीपयेत्। शयनान्तःप्रमाणेन शय्यामुपरि तत्र च। सुदग्धायां विधूमायां यथोक्तामुपकल्पयेत्। स्वच्छन्नः स्वपंस्तत्राभ्यक्तः स्विद्यति ना सुखम्। होलाकस्वेद १३ इत्येष सुखः प्रोक्तो महर्षिणेति"। इति त्रयोदशविधः स्वेदोऽग्निगुणसंश्रयः। व्यायाम उष्णसदनं गुरुप्रावरणं क्षुधा। बहुपानं भयक्रोधावुपनाहाहवातपाः। स्वेदयन्ति दशैतानि नरमग्निगुणादृते। इत्युक्तो द्विविधः स्वेदः संयुक्तोऽग्निगुणैर्न च। एकाङ्गसर्वाङ्गगतः स्निग्धो रूक्षस्तथैव च। इत्येतत् त्रिविधं द्वन्द्वं स्वेदमुद्दिश्य कीर्त्तितम्। स्निग्धः स्वेदैरुपक्रम्यः स्विन्नः पथ्याशनो भवेत्। तदहः स्विन्नगात्रस्तु व्यायामं वर्जयेन्नर" इति। तत्र श्लोकाः "स्वेदा यथा कार्यकरा हिता येभ्यश्च यद्विधः। यत्र देशे यथा योग्या देशो रक्ष्यश्च यो यथा। स्विन्नातिस्विन्नरूपाणि तथातिस्विन्नभेषजम्। अस्वेद्याः स्वेदयोग्याश्च स्वेदद्रव्याणि कल्पना। त्रयोदशविधः स्वेदो विना दशविधोऽग्निना। संग्रहेण च षट् स्वेदाः स्वेदाध्याये निदर्शिताः। स्वेदाधिकारे यद्वाच्यमुक्तमेतन्महर्षिणा। शिष्यैस्तु प्रतिपत्तव्यमुपदेष्टा पुनर्वसुरिति"।

**स्वेदज** पु॰ स्वेदाज्जायते जन–ड। १स्वेदजाते दंशादिजन्तौ अमरः २स्वेदजातमात्रे त्रि॰।

"संस्वेदजा विकाराश्च यथा येभ्यो भवन्ति च। मानुषस्वेदमलजा मक्षिकाद्या भवन्ति च। नवमेदप्रसिक्तायां पिपीलिकगणादयः। संस्वेदजास्तु विज्ञेया हस्तिगोपशुजन्तवः। संसिद्धेभ्यो मांसदुर्गेभ्यः फलेभ्यश्चैव जन्तवः। जायन्ते क्रिमयो विप्राः! काष्ठेभ्यो घुणकादयः। तथा शुक्रविकारेभ्यः पूतिकाः प्रभवन्ति च। संस्वेदजाश्च जायन्ते वृश्चिकाः शुष्कगोमयात्। गोभ्यो हि मक्षिकेभ्यश्च मानुषेभ्यश्च जन्तवः। मत्स्यादिभ्यश्च विविधा जन्तुः कृमयो विशेषतः। अथान्यानि च सूक्ष्माणि सूक्ष्मयूकास्तथैव च। गोभ्योऽश्वेभ्यस्तथा चैव अष्टापदकिनीनकाः। माक्षिकाणां विकाराश्च उत्स्वेदकर्दमैः। शरावति विकाराश्च करीषेभ्यो भवन्ति हि। एवमादिरसंख्यातो गणः संस्वेदजो मया। सर्वेषामिहितो ह्येष प्राक्कर्मवशजः स्मृतः" वह्निपु॰।

**स्वेदन** न॰ स्विद–णिच् ल्युट्। गात्रादितो घर्मादेर्निःसारणव्यापारे (भापरा)। स्वेदशब्दे दृश्यम्।

**स्वेदनी** स्त्री स्विद्यते पच्यतेऽनया स्विद–ल्युट्। लौहपात्रभेदे (ताओया) अमरः। संज्ञायां कन् टापि ह्रस्वः। स्वेदनिका कन्दुरूपे पात्रे हेमच॰ भर्जनपात्रे शब्दमा॰।

**स्वैर** न॰ स्वस्य ईरम् ईर–अच् वृद्धिः। १स्वेच्छायाम् २तद्वति ३मन्दे च त्रि॰ मेदि॰।

**स्वैरिन्** त्रि॰ स्वेनेरयितुं शीलमस्य ईर–णिनि वृद्धिः। १स्वेच्छाचारिणि स्वतन्त्रे। २व्यभिचारिण्यां स्त्री

ङीप् । २परपुरुषस्वकामगामिन्यां स्त्रियां च । "नातश्चतुर्थं प्रसवमापत्स्वपि वदन्त्युत । अतःपरं स्वैरिणी स्यात् बन्धकी पञ्चमे भवेत्" भा० आ० १२२अ० ।

**स्वोपार्जित** त्रि० स्वेन उपार्जितम् । स्वयमर्जिते धनादौ । तस्य विभागो दायभागे दर्शितो यथा

"सम्प्रति विभाज्यमविभाज्यञ्चोच्यते । तत्र कात्यायनः "पैतामहञ्च पित्र्यञ्च यच्चान्यत् स्वयमर्जितम् । दायादानां विभागे तु सर्वमेतद्विभज्यते" । "यच्चान्यदिति चकारः स्वयमित्यनेन संबध्यते स्वयञ्चार्जितमिति चकारादन्यस्यापि तदर्जने साधारणधनद्वारेणेत्यर्थः । अनुपघातोपात्तमविभाज्यमाह मनुर्विष्णुश्च "अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जयेत् । स्वयमीहितलब्धं तन्नाकामो दातुमर्हति" । पितृद्रव्योपघाताभावेन द्रव्यद्वारेण नेतरेषां व्यापारः, स्वचेष्टालब्धत्वेन शारीरोऽपि व्यापारो नेतरेषामिति अर्जकस्यैव तदसाधारणं स्वयमीहितलब्धं तदिति हेतुत्वेनोपन्यासात् । तथा च व्यासः "अनाश्रित्य पितृद्रव्यं स्वशक्त्याप्नोति, यद्धनम् । दायादेभ्यो न तद्दद्याद्विद्यालब्धन्तु यद्भवेत्" । स्वशक्तिमात्रेण यत् प्राप्तमिति सामान्येनाभिधानात् सर्वमेवंविधं स्वीयमसाधारणं द्रष्टव्यम् । स्वशक्तिप्राप्तस्यापि विद्याधनस्य समाधिकविद्यैः साधारणत्वात् न्यूनविद्याविद्यनिराकरणार्थं विद्यालब्धपदम् । तथा याज्ञवल्क्यः "पितृद्रव्याविरोधेन यदन्यत् स्वयमर्जितम् । मैत्रमौद्वाहिकञ्चैव दायादानां न तद्भवेत्" । मैत्रादिग्रहणं प्रदर्शनार्थं, एवमादिषु प्रायेणानुपघातसम्भवात् । तथा मनुः "विद्याधनन्तु यद्यस्य तत्तस्यैव धनं भवेत् । मैत्रमौद्वाहिकञ्चैव माधुपर्किकमेव च" । तथा व्यासः "विद्याप्राप्तं शौर्य्यधनं यच्च सौदायिकं भवेत् । विभागकाले तत्तस्य नान्वेष्टव्यं स्वरिक्थिभिः" । पितृपितृव्यादिभ्यः सुदायसम्बन्धिभ्यः प्रसादादिना लब्धं सौदायिकम् । तथा नारदः "शौर्य्यभार्य्याधने, हित्वा, यच्च विद्याधनं भवेत् त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः" । भार्य्याप्राप्तिकाले लब्धं भार्य्याधनम् औद्वाहिकमित्यर्थः, एतानि वर्जयित्वा अन्यद्विभजेदित्यनुवर्त्तते वाक्यान्तरीयम् । तदेवमादिभिः शौर्य्यादिधनत्वमविभाज्यत्वे कारणं नोच्यते शौर्य्याद्यर्जितस्यापि विभागस्मृतेः । तथा च व्यासः "साधारणं समाश्रित्य यत् किञ्चिद्वाहनायुधम् । शौर्य्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः । तस्य भागद्वयं देयं शेषास्तु समभागिनः । साधारणद्रव्येणार्जितस्य धनस्य विभागं वदति । तथा नारदः "कुटुम्बं बिभृयाद् भ्रातुर्यो विद्यामधिगच्छतः । भागं विद्याधनात्तस्मात् स लभेताश्रुतोऽपि सन्" । बिभृयादित्येकवचननिर्देशात् यदि विद्यामभ्यस्यतो भ्रातुः कुटुम्बमपरो भ्राता स्वधनव्ययशरीरायासाभ्यां संवर्द्धयति तदा तद्विद्योपार्जितधने तस्याप्यधिकारः । तथा "वैद्योऽविद्याय नाकामो दद्यादंशं स्वतो धनात् । पित्र्यं द्रव्यं समाश्रित्य न चेत्तेन तदर्जितम्" । पित्र्यपदं साधारणधनपरं तदनाश्रित्यार्जितं वैद्योऽविद्याय अनिच्छन् दद्यात् वैद्याय विदुषे पुनः साधारणमन्तरेणाप्यर्जितं दद्यादेव । तथा च गौतमः "स्वयमर्जितमवैद्येभ्यो वैद्यः कामं न दद्यात्" । असाधारणधनशरीरव्यापारार्जितं स्वयमर्जितं अविद्वद्भ्यो दातुमनिच्छन् न दद्यात् विद्वद्भ्यः पुनर्दद्यादेव । एतच्च विद्याधनमात्रविषयम् । तदाह कात्यायनः "नाविद्यानान्तु वैद्येन देयं विद्याधनं क्वचित् । समविद्याधिकानान्तु देयं वैद्येन तद्धनम्" । तन्त्रोच्चरितविद्यापदम् उभाभ्यां समाधिकपदाभ्यां संबध्यते तेन समविद्याधिकविद्यानां दातव्यं न्यूनविद्याविद्ययोः पुनरनधिकारः । "तदेवमादिवचनैर्विद्याशौर्य्यादिधनेष्वपि साधारणधनोपघातानुपघाताभ्यां विभागाविभागयोरवगमात् तस्यैव प्रयोजकत्वात् तत्पदवत्येव श्रुतिः कल्पनीया, उपघातार्जितं विभजेदिति, न पुनः शौर्य्यादिपदवत्यपि, अवश्यकल्पनीयसामान्यश्रुतिकल्पनयैवोपपत्तेः । होत्राकाधिकरणन्यायस्यायमेव विषयः । यदा न्यायप्राप्त एवायमर्थः, यत्तु येनार्जितं तत् तस्मिन् जीवति तस्यैव, असति विशेषवचने, यत्र पुनः साधारणधनमात्रेणैकस्य व्यापारोऽपरस्य धनशरीराभ्यां तत्रैकस्यैको भागोऽपरस्य भागद्वयं न्यायावगतमेव सिद्धम् । एतेन चैतदपि सिध्यति, यत् साधारणधनोपघाते सति यस्य यावतोंऽशस्य स्वल्पस्य महतो वोपघातः, तस्य तदनुसारेण भागकल्पना कार्य्या । किन्तु कात्यायनवचनम् "विभक्ताः पितृवित्ताच्चेदेकत्र प्रतिवासिनः । विभजेयुः पुनर्द्व्यंशं स लभेतोदयो यतः" ।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलिते वाचस्पत्ये सकारादिशब्दार्थसङ्कलनम् ।

———

# ह

हकारः व्यञ्जनेषु ऊष्मवर्णभेदः। कण्ठस्थानोच्चार्य्यः। "हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम्। औरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम्" शिक्षोक्तेः पञ्चमान्तस्थवर्णसंयोगे उरसोच्चार्य्यश्च। तस्योच्चारणे चाभ्यन्तरप्रयत्नः जिह्वाग्रेण कण्ठस्थानस्य अर्द्धस्पर्शः। "अचोऽस्पृष्टायणस्त्वीषन्नेमस्पृष्टाः शलस्तथेति" शिक्षोक्तेः। बाह्यप्रयत्नास्तु घोषसंवारनादा महाप्राणश्च। अस्य ध्येयरूपं कामधेनुतन्त्रोक्तं यथा "हकारं शृणु चार्वङ्गि! चतुर्वर्गप्रदायकम्। कुण्डलीद्वयसंयुक्तं रक्तविद्युल्लतोपमम्। रजःसत्त्वतमोयुक्तं पञ्चदेवमयं सदा। पञ्चप्राणात्मकं वर्णं त्रिशक्तिसहितं सदा। त्रिबिन्दुसहितं वर्णं हृदि भावय पार्वति!"। अस्याधिष्ठातृदेवताध्यानमुक्तं वर्णोद्धारतन्त्रे यथा "करवीरभूषिताङ्गीं साट्टहासां दिगम्बराम्। अस्थिमाल्यामष्टभुजां वरदाम्बुजेक्षणाम्। नागेन्द्रहारभूषाढ्यां जटामुकुटमण्डिताम्। सर्वसिद्धिप्रदां नित्यां धर्मकामार्थमोक्षदाम्। एवं ध्यात्वा हकारन्तु तन्मन्त्रं दशधा जपेत्"। मातृकान्यासेऽस्य दक्षपार्श्वे न्यस्यता काव्यादौ प्रथमप्रयोगे खेदःफलं वृ०र०टीकायामुक्तं यथा "सः सौख्यं हस्तु खेदम् विलयमपि च लं क्षः समृद्धिं करोति"। अकारादिवर्णानां प्रयोगे फलादिकं यत्र भवतीति तत्रैवोक्तं यथा "पद्यादौ गद्यवक्त्रे वचसि च सकले प्राकृतादौ समोऽयम्" इति। एतेषां फलाधारनिरूपणमप्याकारे "नायको वर्ण्यते यत्र फलं तस्य समादिशेत्। अन्यथा तु कृते काव्ये कवेर्दोषावहं फलम्" तस्य प्रतिप्रसवो यथा "देवता वर्ण्यते यत्र कापि काव्ये कवीश्वरैः। मित्रामित्रविचारो वा न तत्र फलकल्पना। देवतावाचकाः शब्दा ये च भद्रादिवाचकाः। ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोपि वा"।

अस्य वाचकशब्दास्तन्त्रोक्ता यथा "हः शिवो गगनं हंसो नागलोकोऽम्बिकापतिः। नकुलीशो जगत्प्राणः प्राणेशः कपिलामलः। परमात्मा तजो जीवः वराकः शान्तिदोऽकुलः। भगोऽभयोऽक्षयःस्थाणुः कुटकूर्चनिवारकाः। लक्ष्मीर्हरिहरः शम्भुः प्राणस्त्रिकललाटजः। सकोपवारणः शूली चैतन्यं पादपूरणम्। महालक्ष्मीः परं नादो मेघनादो विमर्दनः। बिन्दुर्गौः प्रिया देवी रुमग्रामः महेश्वरः। दक्षपादः सदा शम्भुः शूरो यः सोमसमुज्ज्वलम्" वर्णाभिधानम्। "शुक्रश्चाथ हकारोऽंशुः प्राणः शान्तः शिवो वियत्। अकुलो नकुलीशश्च हंसः शून्यश्च डाकिनी। अनन्तो नकुली जीवः परमात्मा ललाटजः" इति बीजवर्णाभिधानम्। "हकारो नकुलीशोऽपि हंसः प्राणोऽङ्कुशः प्रिये। महेशो नकुली चैव वराको गगनं रविः। लिङ्गं शून्यो महाशून्यः प्राणश्च परमेश्वरि!" रुद्रयामले ८पटले।

**ह** अव्य० हा–ड। १पादपूरणे अमरः २सम्बोधने ३नियोगे ४क्षेपे ५निग्रहे ६निन्दायां मेदि० ७प्रसिद्धौ च। ८शिवे पु० ९जले १०शून्ये १२आकाशे १३रक्ते १४स्वर्गे १५धारणे पु० मेदि०। १७पापहरणे १८चन्द्रे शब्दर० १९सकोपवारणे २०शुष्के च एकाक्षरकोषः।

**हंस** पुंस्त्री० हस–अच्–पृषो० वर्णागमः। स्वनामख्याते १पक्षिभेदे अमरः स्त्रियां ङीष् २निर्लोभनृपे ३विष्णौ ४सूर्य्ये ५परमात्मनि "हंसं तनौ सन्निहितं चरन्तम्" नैष०। ६मत्सरे ७यतिभेदे ८मन्त्रभेदे ९देहस्थवायुभेदे १०अश्वभेदे मेदि० ११गुरौ १२पर्वते शब्दर०। १३शिवे अमरः १४अग्रस्थिते १५श्रेष्ठे हेमच०। १६विशुद्धे अमरः। १७अजपामन्त्ररूपे वर्णे च "हंकारेण बहिर्याति सकारेण विशेत् पुनः। हंसेति सततं मन्त्रं जीवो जपति सर्वदा" इति तन्त्रम्। अजपाशब्दे ८९ पृ० दृश्यम्।

हंसखगस्य भेदाः तन्मांसगुणाश्च यथा "हंसाः पित्तहराः स्निग्धा मधुरा गुरवो हिमाः। वातश्लेष्मप्रदाश्चापि बलशुक्रकरा मताः" भावप्र० तदण्डगुणाः "हंसडिम्बं परं बल्यं वृष्यं वातनाशनम्। पाके लघुतरं प्रोक्तं सर्वामयविनाशनम्" राजनि०। अस्य दर्शनादेः शुभाशुभत्वं वसन्तराजशाकुने उक्तं यथा "काकस्य सर्वोऽपि दर्शनेन हंसस्य शब्दस्य तु सर्वसिद्धिः। नामानि हंसस्य शृणोति यस्तु प्रयान्ति नाशं दुरितानि तस्य। चौरैः समं दर्शनमाद्यशब्दे निधिर्द्वितीयेऽथ भयं तृतीये। सुखं चतुर्थे नृपतिप्रसादः स्यात् पञ्चमे हंसरवे नराणाम्"। यतिभेदहंसलक्षणं परमहंसशब्दे ४२१७ पृ० दृश्यम्। प्राणस्य हंसपदार्थत्वे हेतुरुक्तः पदार्थादर्शे "उच्छ्वासे चैव निश्वासे च हंस इत्यक्षरद्वयम्। तस्मात् प्राणस्तु हंसात्मा आत्माकारेण संस्थितः। नाभेरुच्छ्वासनिश्वासात् हृदयाग्रे व्यवस्थितिः"।

**हंसक** पु० हंस इव कायति कै–क। १पादकटके नूपुरादौ

अमरः । संज्ञायां कन् । २राजहंसे शब्दच० स्वार्थे क । ३हंसशब्दार्थे "लघुगुरुलघुर्यत्र स ताली हंसकः स्मृतः" इत्युक्ते तदा० उक्ते ४तालभेदे ।

**हंसकीलक** पु० "नारी पादद्वयं कृत्वा कान्तस्योरुयुगोपरि । कटिमान्दोलयेत् यत्र बन्धोऽयं हंसकीलकः" स्मरदीपिकोक्ते रतिबन्धभेदे । [भा०गत्यां स्त्रियां तिका० ।

**हंसगद्गदा** स्त्री हंसस्येव गद्गदः स्वरो यस्याः । मधुर

**हंसगामिनी** स्त्री हंस इव मृदु गच्छति गम–णिनि । १हंसतुल्यमृदुगामिन्यां स्त्रियाम् । हंसेन गच्छति णिनि ङीप् । २ब्रह्माण्याम् । ३हंसेन गन्तरि त्रि० ।

**हंसदाहन** न० हंस इव श्रेष्ठं सुरभित्वात् दाहनमस्य । अगुरुचन्दने शब्दच० ।

**हंसनादिनी** स्त्री "गजेन्द्रगमना तन्वी कोकिलालापसंयुता । नितम्बे गुर्विणी या स्यात् सा स्मृता हंसनादिनी" इत्युक्तलक्षणायां नार्य्याम् शब्दमाला ।

**हंसपदी** स्त्री हंसस्येव पादाः मूलान्यस्याः पाद्भावे स्त्रियां ङीपि पद्भाव । गोधापदीलतायाम् राजनि० । [हेमा० ।

**हंसपाद** न० हंसस्य पादः तद्वर्णोऽस्त्यस्य अच् । हिङ्गुले

**हंसपादिका** स्त्री हंसस्येव पादाः मूलान्यस्य कप् कापि अत इत्त्वम् । हंसपदीलतायां राजनि० ।

**हंसपादी** स्त्री हंसस्येव पादा मूलानि सन्त्यस्याः अच् गौरा० ङीष् । हंसपदीलतायां रत्नमा० ।

**हंसमाला** स्त्री ६त० । पङ्क्त्याकारेण स्थिते १हंससमूहे २कादम्बे हंसे च शब्दच० । [भाषपर्ण्याम् राजनि० ।

**हंसमाषा** स्त्री हंसा विशुद्धः माषः तदाकारः पर्णोऽस्याः ।

**हंसरथ** पु० हंसः रथो वाहनं यस्य । १चतुर्मुखे ब्रह्मणि त्रिका० हंसवाहनादयोऽप्यत्र । [वयधातौ राजनि० ।

**हंसलोमश** न० हंस इव लोमशं लोमयुक्तम् । कासीसे

**हंसलोहक** न० हंस इव लोहकम् । पित्तले धातौ हेमच० ।

**हंसवती** स्त्री हंसस्तत्पादाकार. मूले अस्त्यस्याः मतुप् मस्य वः ङीप् । २हंसपद्याम् जटा० । ३हंसयुक्ते त्रि० ।

**हंसवीज** न० हंसस्य वीजमत्र । हंस डिम्बे राजनि० ।

**हंसाङ्घ्रि** पु० हंसस्याङ्घ्रिरिव लोहितत्वात् । हिङ्गुले ।

**हंसारूढ़** पु०हंसमारूढः आ+रुह–क्त ।ब्रह्मणि २तच्छक्त्यां ब्रह्माण्यां स्त्री हंसाधिरूढ़ उभयत्र सरस्वत्यां स्त्री । [हेमच० ।

**हंसाभिख्य** न० हंसस्येवाभिख्या शुभ्रत्वात् यस्य । रूप्ये

**हंसी** स्त्री हंसस्य भार्या ङीप् । १हंसयोषिति शब्दर० द्वाविंशत्यक्षरपादके २छन्दोभेदे च "गौ नौ गौ नावत्र.रा गो वसुभुवनयतिरिह भवति हंसी" छन्दो० । ३हंसजातिस्त्रियाञ्च ।

**हंसोदक** न० । "नादेयं नवसद्घटेषु निहितं सम्यक्प्रकाशं शुभः यामिन्याञ्च निविष्टमिन्दुकिरणैर्मन्दानिलान्दोलितम् । एलाद्यैः परिवासितं श्रमहरं पित्तोष्णदाहे विषे मूर्च्छारक्तमदात्ययेषु च हितं शंसन्ति हंसोदकम्" राजनि० उक्ते जलभेदे ।

**हंहो** अव्य० हं सत्यव्यक्तं जहाति हा–डो । १सम्बोधने "हंहो चिन्मयचित्तचन्द्रमणयः" चन्द्रालोकः । २दर्पे ३दम्भे ४प्रश्ने च शब्दर० ।

**हक्क** पु० हक् इत्यव्यक्तं कायति कै–क । गजसमाह्वाने जटा०

**हञ्जे(ञ्जा)** अव्य० हमिति अव्यक्तं जपतेऽत्र जप–डे डा वा । नाट्योक्तियायां नटाभिनेयकृते चेटीसम्बोधने अमरः टाबन्तत्वार्थे भरतः आद्यन्तोऽप्यव्ययम् वसन्तराजः ।

**हञ्जि** पु० हमित्यव्यक्तं जयति जि–डि । क्षुधायां जटा० ।

**हञ्जिका** स्त्री हञ्जौ क्षुधायां कायति शब्दायते कै घञर्थे कर्मणि क । भार्ग्यां भावप्र० क्षुध हेतुत्वात्तस्यास्तथात्वम् ।

**हट** दीप्तौ भ्वा० प० अक० सेट् । हटति अहटीत्–अहाटीत्

**हटपर्णी** न०हटं दीप्तिं पिपर्त्ति पृ० ब००णि । शैवाले शब्दर० ।

**हट्ट** पु० हट–ट टस्य नेत्त्वम् । क्रयविक्रयस्थाने (हाट) अमरः । "प्रतिहट्टपथे घरट्टजादिति" नैष० ।

**हट्टचौरक** पु० हट्टे प्रकाशिते स्थाने एव चौरः स्वार्थे क । (हाटचोर) चौरभेदे शब्दर० ।

**हट्टविलासिनी** स्त्री हट्टं विलासयति वि+लस–णिच्–णिनि ङीप् । १गन्धद्रव्यभेदे अमरः । २हरिद्रायाञ्च भावप्र० । [हठति । अहाठीत्–अहठीत् ।

**हठ** कीलबन्धे सक०वल त्कारे प्लुतौ च अक०भ्वा० पर०सेट् ।

**हठ** पु० हठ–अच् । बलात्कारे अमरः २प्रसह्याञ्च मेदि० ।

**हठपर्णी** स्त्री हठते प्लवते हठ–अच् हठं प्लवमानं पर्णं यस्याः ङीप् । १शैवले त्रिका० २कुम्भिकायाञ्च ।

**हठयोग** पु० हठेन बलात्कारेण योगः । प्राणायामादिक्रियाभ्यासजे राजयोगं विनैव परमात्मसाक्षात्काररूपे चित्तवृत्तिनिरोधात्मके योगे ।

योगश्च द्विविधः हठयोगः राजयोगश्च । तत्र हठयोगः क्रियाविशेषसाध्यः हठदीपिकादावुक्तप्रकारः । राजयोगस्तु भावनाविशेषसाध्यः पातञ्जलादावुक्तः । स च पतञ्जलिशब्दे ४२०४पृ० दर्शितः । हठयोगोऽत्र साङ्गोऽभिधीयते तत्साधनप्रशंसादिः उभययोगयोरपि परस्परसापेक्षतया

एककार्य्यकरत्वम्। "हठं विना सिध्यति राजयोगो नैवं हठाच्चापि न राजयोगः। तदाभ्यसेत् पूर्वमतः सुनिष्पत्त्यन्तं हठं सद्गुरुतोऽभिलभ्य॥ अभ्यासेन विना दृढेन सुचिरं साङ्गस्य योगस्य वा योगी याति न राजयोगपदवीं मध्येऽन्तरालैर्युताम्। वृद्धो वा तरुणः सरुक् च शनकैर्योगेऽस्ततन्त्रः क्रियायुक्तः सिद्धिमुपैति शास्त्रपठनाच्चा योगसिद्धिर्भवेत्॥ यो नास्तिकोऽभ्यासविहीन उग्रसङ्गप्रियो वै बहुभाषितो यः। अपथ्यशीलोऽमितभुग्दरिद्रो न योगसिद्धिं लभते कदाचित्। योगस्य बीजं परमं क्रियैव क्रियैव योगस्य फलप्रदात्री। सङ्केतविद्योगगुरोः प्रलब्धा सुधीरतो योगपरस्य नान्यत्॥ स्नाते सङ्गः सिद्धतीर्थैर्यदि सुकृतवशात् प्राग्भवाभ्यासजोऽयं यद्द्वारा पश्चिमेन त्वरितमिह फलं दृश्यते क्वापि लोके। तदेवं नान्यनाड्यां शिरसि परिगतेनानिलेनेष्यतेऽदस्तस्मादभ्यास एव त्वरितलघुभिदायोगतत्त्वैकलभ्यात्। अर्थान्तरस्थानि शान्तवाह्यसम्पादनार्थं मनसः प्रयत्नः। अभ्यास एवं चिरकालः सेवितः सत्कारवान् स्याद् दृढभूमिरेव। जितो भवति मारुतोऽप्ययमनभूरिदान्तः क्रमानुरभिवर्द्धते सततकुम्भकाभ्यासतः। गते हुतभुजोद्धतामशनमेति पाकं सुखं रसादिकसुधातवः स्फुरतु याति देहो बलम्। महाभ्याससमन्वो बलात् कद्रूमस्य तदा जारणं स्याच्च दोषा अशेषाः। विशुध्यन्ति विषमूत्ररोगादयो वै नृणां कोटिजन्मार्जितव्याधयश्च। नाडीविशुद्धिर्हठसिद्धिलक्षणं विना ह्युपायां चिरकुम्भसंस्थितिः। गुरूक्ततो युक्तिविशेषतो धृतेऽनिले सुषुम्णा कुरुतेऽग्निदीपनम्। प्रत्याहारात् प्रागर्जितास्त्वौषद्धात्त्यैर्योगीन्द्रोऽयो चालयेत् कुण्डलीं स्वाम्। लक्ष्याभ्यासतश्चालिताऽसावथुर्द्धर्वं ब्रह्मरन्ध्रान्तरे स्यात्" हठसं०।

योगदेशस्तु तत्रैव "सुविषये शुभधार्म्मिकभूपतेर्बहुभिक्षवतीतमये शुचौ। सुलभशालिनि शालिनि वेश्मनि योगविधौ मतिमाश्रयेत्। अतिनिगूढदृढं मशकोज्झितं तुहिनतापविवर्जितमन्तरा। उपरकण्टकशुष्कदकोज्झितं विगतमामणगोष्ठस्थितं मलम्। वल्मीकसङ्ग्रहचलत्पथवर्जनमन्त्राभ्यासोज्झितं विगतवर्षभयं विजन्तु। वात्याभिघातरहित गतभूतरक्षा योगार्हमेवमवलम्ब्य मठो विधेयः। धनुःप्रमाणान्तस्थिते शिलाग्निजलवर्जिते। एकान्तमठिकामध्ये स्थातव्यं हठयोगिना" हठसङ्केतः। "अल्पद्वारमरन्ध्रगर्त्तविटपं नात्युच्चनीचायतं सम्यग्गोमयसान्द्रलिप्तमयनं निःशेषजन्तूज्झितम्। बाह्ये मण्डपकूपवेदिरुचिरं प्राकारसंवेष्टितं प्रोक्तं योगमठस्य लक्षणमिदं सिद्धैर्हठाभ्यासिभिः" हठप्रदीपिका। "द्वारं स्मृत योगमठस्य हस्तं व्यायामतश्चतुरस्रमार्य्यम्। विस्तारतश्चापि रवीन्द्रभूपाङ्कुलं सुरम्यं रमणीयमध्यम्। निर्वातभूमन्दिरसुच्चमात्मदोषापहं मारुतदोषशोषं। विशोध्य नाडीमलसङ्घमन्तर्दते विकाशं हृदि सुस्थिरं च" हठसं०।

तत्रोचितकालः "एकाह्ने वाऽथ द्विकालं त्रिकालं प्राणायामं मध्यरात्रे भजेत। यामे रात्रेः पश्चिमे पूर्व एव पूर्वाह्ने वाह्नस्य मध्ये प्रदोषे" हठस०।

निषिद्धावस्थादि "न शीते नात्युष्णे श्रमविकलदेहे न हितथा क्षुधायामाध्माने विकलवपुषाऽप्येतमथवा। अजीर्णेऽन्ते द्वारे न च विहितवान्तावतिकृते प्रभुक्तौ व्यासङ्गाकुलहृदि न युक्तोऽनिलधृतः। चिन्ताकुलो मूत्रफलप्रदूषितोऽभ्यासं न योगस्य कदापि कुर्य्यात्। कार्य्यातिसक्तो रतिकार्य्यतत्परो नानेकरोगाधियुतो जनान्ते। रथ्यान्तरे सिन्धुपरिस्फटान्तरे चिरन्तने वृक्षतले चैत्यदेशे। योग विदध्यान्न कदापि साधकः सुदीर्घमन्यादि भवेत क्षतेऽत्र। अनादृत्य यः साधको देशकालौ प्रयुञ्जीत योग हि दोषास्तु तस्य। प्रकुप्यन्ति देहेऽन्तराया इवोर्द्ध्वजडत्व स्वमूकत्वबाधिर्य्यमुख्याः। स्मृतिलया जड़ता च विमूकता बाधरतास्वमहादहनज्वराः। कुविधेऽसमये परियुञ्जता वपुषि योगसमी नव दोषकाः" हठस०।

वर्ज्यमानसदोषाः "कामोभय स्वप्नमतीव लोभं प्राग् योगदोषानतिकोपयुक्तान्। विहाय युक्तः सुसमाहितात्मा युञ्जीत योगं मनसा स्थिरेण" हठस०।

तद्दोषजयोपायाः "निद्रां सत्त्वनिषेवणेन दलयेद्धृत्या च शिश्नोदरे रक्षेद् दोषरणौ दया स्मृतिदृशौ चित्तेन चेतो गिरौ। रक्षेत् मोहधिना प्रमादत इतस्ताभ्यां तुदन्तं धिया सङ्कल्पस्य जयेन काममिति वै ह्यो योगदोषान् जयेत्" हठस०।

वर्ज्यसेव्ये "अत्याहारः प्रयासश्च प्रजल्पो नियमाग्रहः। जनसङ्गश्च लौल्यश्च षड्भिर्योगो विनश्यति। "उत्साहात् साहसाद्धैर्य्यात् तत्त्वज्ञानाच्च निश्चयात्। जनसङ्गपरित्यागात् षड्भिर्योगश्च सिध्यति। अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यं क्षमा धृतिः। दयार्जवं मिताहाराः शौचं चैव यमा दश। तपःसन्तोष आस्तिक्यं दानमीश्वरपूज-

नम् । सिद्धान्तश्रवणञ्चैव ह्रीर्मतिश्च तपो हुतम्” हठप्र० ।

आहारः “आहारशुद्धौ सत्त्वशुद्धिरिति श्रुतेः मिताहारस्य योगाङ्गत्वाच्च योगाङ्गाहारो यथा “न जीवनं देहधृतिश्च जन्मिनामृतेऽन्नपानं न मलैर्विना बलम् । योगे तदर्थं मलजिद्बलप्रदं भक्ताज्यदुग्धं मितमत्र सेवयेत् । न कन्दमूलानि गुरूणि शीतोष्णान्यत्र पानानि बलप्रदानि । सत्त्वप्रदायुर्बलवृद्धिदानि पूतानि च तानि हितानि योगे । हठप्रदीपकादिभिः सुपथ्यवर्ग ईरितः । सुनाडिशोधनादनु भजेद्व्रतं पुरा शुभम्” हठस० । स च वर्गो यथा “गोधूमशालियवषाष्टिकशोभनान्नं क्षीराज्यखण्डनवनीतसितामधूनि । शुण्ठीपटोलफलकानि च पञ्चशाकं मुद्गादि चाल्पमुदकं च यमीन्द्रपथ्यम् । क्षीरपर्णी च जीवन्ती मत्स्याक्षी च पुनर्नवा । मेघनादो च पञ्चैते शाकवर्गः प्रकीर्त्तितः । मिष्टं सुमधुरं स्निग्धं पथ्यं धातुप्रपोषणम् । मनोऽभिलषितं योग्यं योगीभोजनमाचरेत्” मुख्यं हतं क्षीरमिति द्वयं स्यात् नाडीविशुद्धावथ मूलबन्धे । ओजो बलं वह्निमतीव धत्ते हत्त्वन्ततोऽन्तःस्थितनाडिशुद्धिः” हठस० । “कन्दं च शाकादिकमूलभक्ष्यं विहाय दध्यन्नकषायतिक्तम् । हतौदनक्षीरसपूरितोदरं यमी च गोधूमविकारमाश्रयेत्” हठच० । ग्रन्थान्तरे “पीत्वा क्षीरं पयोमिश्रं योगी बलमवाप्नुयात् । सितायुक् च पक्वं च हितं क्षीरं न केवलम् । गोष्टने च हविष्यान्नं भुक्त्वाभ्यासं समाचरेत् । एवं बाढं भजेदत्वाष्टमेऽह्नि मलशोधनम् ।

निकृष्टभक्ष्यवर्गः “सक्तो हि दैवतुवरीजरूपः काथी भृगं सुकाथिता चानन्ता । नीरोषधाद्यालवणा हितात्मा हविष्यभुक्तं यतिनित्यपथ्यम् । आवश्यके सैन्धवमत्पसुक्तं सदार्द्रकं कोऽपि वदन्ति भक्ते । स्यात्क्वाजसक्तुः सविताज्यदुग्धं पयोऽथ वा केवलमग्निपक्वम्” हठस० ।

वर्ज्याहारः “स्निग्धं भृगं वाऽमृशमेव रूक्षं क्षीरप्रभूतान्न मिहोत्सृजेद्यः । दध्ना च तक्रेण कृशाकदन्नमन्नं च भूयोऽप्यमपथ्यमुक्तम् ।। पुंस्त्वापहाः सुखपाका अपथ्या माषाश्च वल्या कफपित्तदोषाः । सितातियोगः क्रमिकृत्तु नेष्टो गुडो विकारी सह फाणितेन । अत्यल्पमिष्टाशनतो न योगः स्यात् साधकस्याल्पबलस्य नूनम् । योगानुगुण्येन ततोऽन्नजग्धिर्मितोदितानाल्पतरा न भूरिः” हठस० । “कट्वम्लतीक्ष्णलवणोष्णहरित्र शाकं सौवीरतैलतिलसर्षपमत्स्यमद्यम् । आजादिमांसदधितक्रकुलत्थकोलपिण्याकहिङ्गुलशुनाद्यमपथ्यमाहुः । भोजनमहितं विद्यात् पुनरुष्णीकृतं तथा रूक्षम् । अतिलवणादिकयुक्तं कदशनशाकोत्कटं वर्ज्यम्” हठप्र० ।

वर्ज्यानि “वर्जयेद्दुर्जनप्रीतिं वह्निस्त्रीपथसेवनम् । प्रातःस्नानोपवासादिकायक्लेशादिकं तथा” हठप्र० ।

“मद्यं गर्भान्नपानं सुतनुरतिमदाहारामपाण्डित्यवेदशास्त्रालोकः सुगीतं सततमतिकलं हेमरूप्याम्बराणि । नृत्यं राज्ये च सङ्गः कुसुममलयजे सम्पदः स्फीतिशौर्ये ताम्बूलं चेति सर्वं विषयसुखमथासुश्रुकं वत्सजेत्तत् । नित्यस्नानाद्यौ व्रतं शौचसक्तिध्यानं ध्येयं मन्त्रजाप्यं च दानम् । गेहारामाद्यास्तथा कल्पना वै धर्मा एते योगविघः प्रदिष्टाः” हठस० ।

आहारमानम् “स्यात्क्वान्निमुद्गादिकमुष्टिकद्वयं प्राक् प्राणपूर्णोदरकेऽशनस्य । ह्रासो विधेयो खलु साधकेन दुग्धाद्यभावे क्रमकुम्भवृद्ध्या” हठस० । अत्र ह्रासक्रमेण स्वल्पाहारः प्राणायामे विधेयः । यथोक्तं सनातनसिद्धान्ते “अभावे शालिमुद्गादिभोजनं मुष्टिकद्वयम् । ततो ह्रासः शनैः कुर्यात् प्राणे पूर्णे तथोदरे” अस्यार्थः अभावे हतदुग्धयोरभावे मितभोजने कुम्भकवृद्धिक्रमानुरूपः मन्दमन्दमशनह्रास उचितः । न हि प्रथमाभ्यासे यथा यथा कुम्भकवृद्धिर्भवति तथा तथा कुम्भकपूर्णोदरत्वात् कुम्भजाग्निना क्रमजितवायुवेगतया जिताग्निर्भवति तथा तथाऽशनह्रासः । साधकस्य योगानुसारेणानुकूलः आरोग्यभोजसुखसाहवलौजःप्रवर्त्तकश्च भवति न प्रथमम्” हठस० । ग्रन्थान्तरे “आहारं ह्रासयेद्योगी कृष्णपक्षे कलाक्रमात् । शुक्लपक्षे यथा चन्द्रस्तथा कुम्भोऽस्य वर्द्धते” । योगसारसमुच्चये । “तनौ येन केनाप्युपायेन पित्तं सदाभ्यासिना पालनीयं प्रयत्नात् । विशुद्धो हि यस्मिन्नुदेति एषः शुभो ज्ञानवह्निस्वरूपः प्रकाशी । सूर्यप्रवेशे पवनेऽशनं सच्चन्द्रप्रवेशे शयनाम्बुपानम् । इत्यादि चान्यत् सुधिया विचार्य पथ्यानि योगाभ्यसने हितानि” ।

योगनिषेधावस्थादि “मलाः सद्रवाः पूतिगन्धाश्च किञ्चित् सरुक् चोदरे गौरवं चालसत्वम् । यदैतद्भवेद्विघ्नहेतु साधकेन तदा प्राणरोधोऽह्नि तस्मिन्न कार्यः” हठस० ।

योगारम्भकालः “अनाहूताः सान्द्रतमा विशुष्का अपद्रवाः पक्वमलादयोऽपि । अभ्यासिनां प्राणनिरोध एष तदा विधेयः शुभयोगसिद्धिदः” हठस० ।

नित्यकर्म्माकर्त्तव्ये । "न स्नापयेन्नो करणं निपीडयेत् भृशं मिताशी मितनिद्रवोक्तिः । प्रातःशिरःस्नानमथो न रोचयेदाकण्ठयोगोऽपि कदापि योगी । आवश्यके तुष्ण-जलैर्विधेयं स्नानं न कार्य्यं हिमशारिणा तत् । स्नानं प्रगेऽनिष्टमिदन्तु कण्ठस्नानं स्मृतं सूरिभिः मध्यमेऽह्नि । व्यायाममात्मपरं भ्रमणोत्यदेशमत्यम्बुपानमतिविस्मरणं च-चैव । निद्रां दिवा निशि च जागरणं च चिन्तां क्लेशावहं यदखिलं तदिहापि जह्यात् । यत् स्वस्यान्यस्य दुःखा-वहमपि न भजेत् तद्गिरा मानसेन कायेनापीह्न्दम्भे नैह न हि वनितायाश्च सेवां विदध्यात् । हिंसां द्वेषं तथाहङ्कृतिमघनमति प्राणिपीड़ां वियोगं भिन्नाभिन्नत्व-बुद्धिं ज्ञानघनममतां सङ्गति संत्यजेच्च । व्यायामकृच्छ्रस्य ततोऽङ्गमर्द्दनं कुर्य्याद्दु वरिष्ठोत्तरसाधकस्य । स्यादङ्गमर्द्दन तथा मृदुत्वं वायोर्जयो देहमृदोः समाप्तिः । पानाशने कर्म्म सुखावहं यद्वृ योगस्य विघ्नो न हि तेन किञ्चित् । सेव्यं तदेकं परमार्थवर्थैर्हेयं मनःक्लेशकरं बलात् । अभ्या-सिना भूमिगृहे मठे वा न नैकटीपः प्रविशेच्च दैवात् । यस्मिन् ज्वलत्येव सुकाङ्क्षितो द्रुक् प्राणो विमार्गं द्रुतमीत्यस्तु त्यजेत्" । अतो योगमठे घृतदीप एवोप युज्यते" हठस० । "उत्थाय ब्राह्मकाले रहसि च परितः साधकः प्राणरोधस्याभ्यासं प्रातरङ्कैर्मितघटिकमथो पीठमुद्रादि कुर्य्यात् । व्यायामं चानु सार्द्धप्रहरयुगलकान्ते ततः पथ्यमल्पं भुञ्जीयाद्दम्भतोऽस्त्रोपबलतरवविदाह्यु-ज्झितं चाज्यदुग्धम् । प्राणायाममथाचरेत् प्रथमके यामे निशः साधको यामैकं शयनं भजेदनुमतो प्राणाव-रोधं श्रयेत् । शौचाद्यं घटशोधनादिकमथो यामे निशायां श्रयेत्तुर्य्ये नाड़िविशोधनं त्वतिदृढोऽभ्यासस्तु साधना-सकः । मध्ये मध्ये चित्तविश्रान्तिहेतोः साम्यं शश्वत् संभजेदासनस्थः । अभ्यासान्तेऽभ्यासिना स्वल्पमल्पं संभो-क्तव्यं भूरिवारं सुपथ्यम् । मध्ये मध्ये चारणं मेरु-चालनमभ्यासादौ संभजेताविशङ्कः । सर्वाङ्गीणा नाड़िका दोषपूर्णा आभ्यां स्यादाः शुद्धस्वच्छमाशाः" हठस० । (आभ्यां चारणमेरुचालनाभ्यां दोषा दुष्टाशरसमलाः)

गजकरणी "दृढ़ त्राटकाभ्यासतः कूर्म्मवायोर्जये मूलबन्धेन चापानसिद्धिः । जये स्यादुदानस्य जालन्धरेण समानस्य च लेन च प्राणवायोः । अतो गजकरण्येषा समानोदा-नयोर्जयम् । पक्वामाशयमाजीर्णनाशाद्याखिलशोधिनी । कोष्ठहृत्कण्ठसंशुद्धामपित्तकफबाधनी । श्वासं बलं हृच्छ्र-माद्यं वह्निदीप्तं सदुद्यमम् । धत्ते साधकसर्वेषु प्राणस्य सुखवाहिताम् । हृत्कण्ठकोष्ठसंशुद्धा शूलाजीर्णादि-रोगहृत् । हन्ति गजकरण्येषा नाभेरूर्ध्वमधोमलान् । पक्वापक्वान् रोगहेतून् बहिः प्रक्षाल्य पातयेत् । कोष्ठ-गुदादागलान्तं गलान्तं क्षालयेत् भृशम् । आभ्यां वि-शुद्धकोष्ठो यः समानापानयोर्गतिम् । सूक्ष्मां देह-सञ्चारितां वृन्तिकागतिवत्सुधीः वेत्तीपिकासमां चित्तं कोशान्तः परिसर्पतोः । नाड़ीसञ्चारविज्ञानमनयोः स-कलं यथा । जानाति साधकः शुद्धो नाड़ीसंस्थान-संविदम् । (एवं धौत्यामपि नाभ्यूर्द्ध्वमङ्गं ज्ञेयम्) "महाचक्रमादौ विदध्यात्तु सम्यग् भजेद्बन्धमुद्रामथो खेचरीं च । ततो वारिपानं प्रकुर्य्यात् सुधांशोः सुधां साधयेयां प्रयागे स्रुतिञ्च । विना ग्रन्थिभेदं विना चक्र-भेदं विना ब्रह्मरन्ध्रप्रवेशं जितस्य । सगस्यात्मना कार्य्यसिद्धिं विनास्ते न सिद्धिर्न योगो न शून्यत्व-लाभः" हठस० ।

आसनफलम् "संप्राप्तबीजभावो यमनियमाभ्यामयं योगः । प्राणायामासनकैरङ्कुरवान् साधकस्य भवेत् । स्यादासने स्थैर्य्यमरोगिताङ्गे सुखासनं दुःखसुखोष्णशीतैः । द्वन्द्वै-र्जितेऽसिद्धिर्भूयते नाऽमन्ते समापत्तिरतो यमा-भ्याम् । साधनत्रयमिदं महज्जये प्रोदितं प्रमितजन्ति-रिष्टा । शक्तिचालनमथ साधनद्वयम् नाभिवायुधृतिनाड़ि-चालनम्" । नियमेन सर्व्वेऽपि रोगाः प्रविनश्यन्ति सुसंयतस्य पीठे । चिरकालपदान्तरा असाध्याः यमिनः साधुजितासनस्य पुंसः" हठस० । (यमाभ्यां यमनियमाभ्याम्)

कुक्कुटासनम् "संस्थाप्य पद्मासनमत्र सम्यक् करौ तु जानू-रुयुगान्तरे दृढम् । निवेश्य संस्थाप्य तले धरायां व्यो-मस्थ उक्तं स्थिति कुक्कुटासनम्" हठस० ।

उत्तानकूर्म्मकम् "कुक्कुटासनवत्स्थो दोर्भ्यां संबध्य कन्धरे । भवेत् कूर्म्मवदुत्तान एतदुत्तानकूर्म्मकम्" हठप्र० ।

धनुरासनम् "पादाङ्गुष्ठौ पाणियुग्मेन धृत्वा कर्णावध्या-कर्षयेत् स्वस्य शश्वत् । कुर्य्याच्चापाकर्षणं प्रोक्तमेतदासनस्थ दोर्षजित्राड़िशुद्ध्यै" हठस० ।

मत्स्येन्द्रासनम् "वामोरुमूलार्पितदक्षपादं जान्वोर्बहिर्वेष्टित-वामदोष्णा । प्रगृह्य तिष्ठेत् परिवर्त्तिताङ्गो मत्स्येन्द्र-नाम्नोदितमासनं स्यात् । मत्स्येन्द्रपीठे जठरं प्रदीप्तं प्रचण्डरुग्मण्डलखण्डनास्त्रं । अभ्यासतः कुण्डलिनी प्रबोधं दत्ते स्थिरत्वं हि ददाति पुंसाम्" हठस० ।

पश्चिमतानासनम् "प्रसार्य्य पादौ भुवि दण्डरूपौ दोर्भ्यां च पादद्वितयं गृहीत्वा। जानूपरि न्यस्तललाटदेशोऽवसेदिदं पश्चिमतानमाहुः। इति पश्चिमतानमासनाग्र्यं पवनं पश्चिमवाहिनं करोति। उदयं जठरानलस्य कुर्य्यात् उदरे कार्श्यमरोगतां च पुंसाम्" हठप्र०।

मयूरासनम् "धरामवष्टभ्य करद्वयेन तत्कूर्परे स्थापितनाभिपार्श्वः। उच्चासने दण्डवदुत्थितस्य मयूरमेतत् प्रवदन्ति पीठम्। हरति सकलरोगानाशु गुल्मोदरादीनभिभवति च दोषानासनं वै मयूरम्। बहुकदशनभुक्तं भस्म कुर्य्यादशेषं जनयति जठराग्निं जारयेत् कालकूटम्" हठप्र०।

शवासनम् "उत्तानशववद्भूमौ शयनं तु शवासनम्। शवासनं श्रान्तिहरं चित्तविश्रान्तिकारकम्" हठप्र०।

सिंहासनम् "गुल्फौ च वृषणस्याधः सीवन्याःपार्श्वयोः क्षिपेत्। दक्षिणे सव्यगुल्फं तु दक्षगुल्फं तु सव्यके। हस्तौ तु जान्वोः संस्थाप्य स्वाङ्गुलीः संप्रसार्य्य च। व्यात्तवक्त्रो निरीक्षेत नासाग्रं सुसमाहितः। सिंहासनं भवेदेतत् पूजितं योगिभिः सदा। बन्धत्रयस्य सन्धानं कुरुते चासनोत्तमम्" हठप्र०।

भद्रासनम् आसनशब्दे ८८६४ पृ० दृश्यम् तत्फलम् "भद्रं कफक्लेशसमीरहारि" हठस०।

कूर्मासनम् "गुल्फद्वयेनापरिपीड्य पायुं जानुद्वयं भूमितले निधाय। कूर्मासनं स्यादिति योगिवर्य्यैरथोतिवाता भयहारि चोक्तम्" हठस०।

उष्ट्रासनम् "स्थित्वा समं धरणिजे कृतवक्त्रपार्श्वोरन्ध्रो रधःस्थकरकूर्परकौ विधाय। वक्षोर्द्ध्व पाणितलयुग्म तदुत्तम कुसुमाङ्कुशस्य कलयेदुपरि प्रकामम्। उत्तान एव चिबुकं हृदयेऽर्प्य तिष्ठेत् कुर्वन् समीरणनिरोधनमेकचित्तः। काये यदोदर उदेति च भूरिदाहोऽधोवायुनिःसृतिरुदेति तदा क्रमेण। संशोधनीयमिदमासनमार्य्यधीभिर्मन्दं विनाशयति घोरतरज्वरार्त्तिम्। वह्नेर्दीपने कृतवहस्य च वज्ररोति संज्ञं प्रभुक्तपरिपाचनमासनं स्यात्" हठस०।

वृश्चिकासनम् "धरामवष्टभ्य करद्वयेनोरः पार्श्वयोः स्थापितस्वकूर्परः। दधीत पुच्छप्रतिमाङ्घ्रिपार्ष्णी धृत्वाऽस्य शीर्षे चिबुकं विधाय। यन्नेति सन्निकृति साधकस्तत् विनापदं वृश्चिकसंज्ञमासनम्" हठस०।

मूलबन्धासनम् "वामाङ्घ्रिपार्ष्ण्यग्र तदङ्गुलैर्गुदाननान्तरं भूरि निपीड्य साधकः। न्यस्तं विधायाप्यपदं सगुल्फतोऽधो दक्षपादं लघु वामजानुनि। विन्यस्य बद्ध्वा सलवेऽनुजान्तरं समं स्थापितसर्वगात्रः। महाश्रवस्त्यानुरनन्यचेता भ्रूमध्यदृग् दीर्घमधृतीव। इदं मूलबन्धासनं योगसिद्धिप्रदं दीपनं जाठराग्नेरतीव। ध्रुवं शक्तिसन्दीपनं मूत्रवर्चोजिदर्शोमहत्वामयानां विनाशि। समवाहनमाशु मारुतस्य विदधात्यूर्द्ध्वगतिं जयं च सिद्धेः। विहिते किल विष्टरेऽत्र यायी महती वह्निशिखा सदोपयाति। भजगी परिजागराद्यवस्था विबुधैरूर्द्ध्वगतिस्तथानवायोः" हठस०।

गोमुखासनम् "सव्ये कृत्वा दक्षगुल्फं तु पूर्वं पार्श्वे यत्र स्थाप्यते सन्निवेश्य। दत्त्वा वामं गुल्फकं पृष्ठपार्श्वे तत् पीठं स्यात् गोमुखं गोमुखाभम्। अपानसिद्धं विदधाति मूलबन्धादिहन्त्येव सुमन्दराग्नेः। धौत्याश्च नौलेर्वितनोति सिद्धिं सुसाधकस्यासनमेतदग्र्यम्" हठस०।

कुब्जिकासनम् "किञ्चित् तिर्य्यक् साम्यमास्थाय जानुमूर्द्ध्वं धृत्वा संपरावर्त्तितेन। कृत्वा मूले पादमाधाय तिष्ठेदेतत् पीठं कुब्जिकं वह्निकारि" हठस०।

पार्श्वोपधानासनम् "समानभूमौ शयनं विधायोत्तानौ करौ पार्श्वयुगान्तराले। पृष्ठे मिथः बाहु निबध्य यत्र पार्श्वोपधानासनमुक्तमुत्तमैः" हठस०।

उत्कटासनम् "युग्मा स्फिचोः स्थीयत ऊर्द्ध्वजानुर्यत्रासने पादतलद्वयोपरि। स्फिग्भ्यां समागुत्कटकं धरित्रीमस्पृश्य पीठं तदुत्कटाख्यम्" हठस०।

पद्मासनम् "वामोरूपरि दक्षिणं च चरणं संस्थाप्य वामं तथा दक्षोरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढम्। अङ्गुष्ठौ, हृदये निधाय चिबुकं नासाग्रमालोकयेदेतद्व्याधिविनाशकारि यमिनां पद्मासनं प्रोच्यते" हठस०।

प्राणायामाख्यपद्मासनम् "उत्तानौ चरणौ विधाय विधिवत् सक्थिस्थितौ योगिरुत्तानौ स्वकरौ विधाय च मिथो अङ्के समाकृष्य च। नासाग्रे दृशमाविधाय चिबुकं चोत्तभ्य वक्षस्थले मूले साधु सरस्ययाऽभिकलयेदेतत् सरोजस्य सत्। अपानमुत्थाप्य शनैः स्वशक्तितः प्राणं समाकृष्य च कुम्भकं चरेत्। धृत्वा यथ शक्त्यनुरेचयेत् क्रमैर्वायुं गदृत्तमब्जासनम्। समस्तदोषज्वरदाहमोहपित्तामयघ्न सकलं सुखावहम्। प्राणः शनैऽस्थिरमवति क्षणेन सुनेरनुष्ठानविधौ सरोरुहे" हठस०।

करसंपुटपद्मासनम् "कृत्वा संपुटितौ करौ दृढतरं बद्ध्वा तु पद्मासनम्। गाढं वक्षसि संविधाय चिबुकं ध्यानञ्च

तश्चेनधि । वारं वारमपानमूर्द्ध्वमनिलं प्रोत्सारयन् पूरयन् मुञ्चन् प्राणमुपैति बोधमतुलं शक्तिप्रभावादतः” हठयोगः ।

सिद्धासनम् “योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसेन्मेढ्रे पादमथैकमेव हृदये कृत्वा समं विग्रहम् । स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्येद् भ्रुवोरन्तरं चैतन्मोक्षकपाटभेदजनकं सिद्धासनं प्रोच्यते” पवनयोगसं० ।

वीरासनभद्रासनस्वस्तिकासनानि आसनशब्दे ८८६पृ० द्रष्टव्यानि

सुखासनम् “येन केन प्रकारेण सुखं स्थैर्यं च जायते । तत् सुखासनमित्युक्तमशक्तस्तत् समाश्रयेत्” स्कन्दसंहिता । इदमेव “स्थिरसुखमासनमिति” पात० लक्षितम् ।

षट्कर्माणि कर्म: “अथासने दृढो योगी वशी हितमिताशनः । गुरूपदेशमार्गेण प्राणायामं समभ्यसेत् । यावद्वायुः स्थितो देहे तावज्जीवितमुच्यते । मरणं तस्य निष्क्रान्तिस्ततो वायुं निरोधयेत् । चले वाते चलं चित्तं निश्चले निश्चलं तथा । योगी स्थाणुत्वमाप्नोति ततो वायुं निरोधयेत् । मलाकुलासु नाडीषु मारुतो नैव मध्यगः । कथं स्यादुन्मनीभावः कार्यसिद्धिः कथं भवेत् । शुद्धिमेति यदा सर्वं नाडीचक्रमलाकुलम् । तदैव जायते योगी प्राणसंग्रहणे क्षमः” इत्युपक्रमे “यदा तु नाडीशुद्धिः स्यात्तदा चिह्नानि बाह्यतः । कायस्य कृशता कान्तिस्तथा जायेत निश्चितम् । यथेष्टं धारणं वायोरनलस्य च दीपनम् । नादाभिव्यक्तिरारोग्यं जायते नाडिशोधनात् । मेदःश्लेष्माधिकः पूर्वं षट्कर्माणि समाचरेत् । अन्यस्तु नाचरेत्तानि दोषाणां समभावतः । धौती बस्ती तथा नेती त्राटकं नौलिकं तथा । कपालभाती चैतानि षट्कर्माणि प्रचक्षते । कर्मषट्कमिदं गोप्यं घटशोधनकारकम् । विचित्रगुणसन्धायि पूज्यते योगिपुङ्गवैः” हठप्र० ।

धौती “चतुरङ्गुलविस्तारं हस्तपञ्चदशायतम् । गुरूपदिष्टमार्गेण सिक्तं वस्त्रं शनैर्ग्रसेत् । पुनः प्रत्याहरेच्चैतदुदितं धौतिकर्म तत् । कासश्वासप्लीहकुष्ठं कफरोगाश्च विंशतिः । धौतीकर्मप्रभावेण शुध्यन्त्येव न संशयः” हठप्र० “वंशद्वोःप्रमितं च पञ्चदशहस्तमानं च विस्तारतश्चत्वार्यङ्गुलविस्तृतं सुमृदुलं सिक्तं सुवस्त्रं ततु । स्थित्वा गोकुलविष्टरे सुमनकैरेतत् ग्रसेत् साधको मन्दं चानु विनिर्हरेत् कफगदश्वासेषु धौती हिता” हठस० ।

वस्ती “नाभिदघ्ने जले पायुन्यस्तनालोत्कटासनः । आधारात् कुञ्चनं कुर्यात्क्षालनं वस्तिकर्म तत् । गुल्मप्लीहोदरं चापि वातपित्तकफोद्भवम् । वस्तिकर्मप्रभावेण क्षीयन्ते सकलामयाः । धात्विन्द्रियान्तःकरणप्रसादं दद्याच्च कान्तिं दहनप्रदीप्तिम् । अशेषदोषोपचयं निहन्यात् अभ्यस्यमानं जलवस्तिकर्म” हठप्र० । “जलं पायुविन्यस्तनालस्य मार्गात् जले नाभिदघ्ने समाकृष्य चोर्द्ध्वम् । चलत्युत्कटे विष्टरेऽपानकोषात् जलं याति तुन्देऽम्बुना वस्तिकर्म” (नालं वंशादिसूक्ष्मच्छिद्रनालिका) । आदावुत्कटविष्टरे परिगतः प्रोत्थाप्य सव्यगनलं पायुद्वारविकासकौशलविधिना वायूर्ध्वमाकर्षयेत् । आपूर्य हतिवत् तुन्दमभितो नौल्या प्रचाल्यानिलं कृत्वाऽधोमलसुःस्रजेत् सकलं योगी बहिःकोष्ठगम् । अत्र वस्तिकर्मणि गोमुखमेव प्रशस्तमनुभूतमिति सङ्केतः । अत्र सर्वकोष्ठमलानां कोष्ठस्थानपूर्वकद्रवत्वेन बहिःक्षतिर्यथा भवति । तदुपायसङ्केतेन वस्तिकर्म कर्त्तव्यम् । पूर्वोक्तविधिना गोमुखे चोत्कटासने स्थित्वाऽपानद्वारोर्ध्वमन्तर्जलं किञ्चिदुत्गृह्णीयात् । तदूर्ध्वं स्वस्तिकासने स्थित्वा समाकृष्य नाभेरुपरि हृदयान्तं कर्त्तव्यम् । पुनरुत्कटासनेन जलं गृहीत्वा प्राग्वन्नाभौ विधेयं चलितेन स्वयं विधेयम् । एवं वस्तौ चलितेन चैवं सर्वं कोष्ठं जलपूर्णं कृत्वाऽभितः कोष्ठं विभ्राम्यान्त्रसन्धिगतमन्नादिक्षीणपक्वापक्वद्रवघनमलादि कृत्वैतस्य पश्चाद्बहिस्तज्जलं कुर्यात् क्रमेण न त्वरयेत् । तदाऽनेन विधिना कोष्ठः प्रक्षालितवस्त्रवद्गोऽपास्तदोषो भवति” हठस० ।

नेती “सूत्रं वितस्ति सुस्निग्धं नासानाले प्रवेशयेत् । मुखान्निर्गमयेत् सा हि नेती सिद्धैर्निगद्यते । कपालशोधनी चैव दिव्यदृष्टिप्रदायिनी । जत्रूर्द्ध्वजातरोगौघं नेतिराशु निहन्ति च” हठप्र० । “आखुपुच्छसदृशं सुनिर्मलं सर्ववर्तितमितसूत्रमच्छम् । संप्रवेश्य खलु नासिकाबिले वक्त्रतो रहसि निर्गमयेच्च तत् । नेतीति कर्मोदितमेतदार्य्यैर्जत्रूर्ध्वजाताखिलरोगहारि । कपालसंशोधनकारि कार्यं द्विवारकं दिव्यदृशश्च धत्ते” हठस० ।

त्राटकम् “निरीक्षेत् निश्चलदृशा सूक्ष्मलक्ष्यं समाहितः । अश्रुसंपातपर्य्यन्तमाचार्य्यैस्त्राटकं स्मृतम् । मोचनं नेत्ररोगाणां तन्द्रादीनां कपाटकम् । प्रयत्नात् त्राटकं गोप्यं यथा हाटकपेटकम्” हठप्र० । अस्य फलान्तरं हठस०उक्तं

यथा "निरुद्धेऽस्मिन् नासिकाग्रे चपलहततनुस्तत्क्षणे यत्नात् साधकः स्यात् भ्रूमध्यं च क्रमेणाकलयति सततांभ्यासतः खेचरीश्च । दिव्यां दृष्टिञ्च धत्ते जनयति यमिनो योगनिष्पत्तिसिद्धिं मूर्द्धस्याम्भोरुहे वै पवनहृदयोरक्रमेणानुलोम्यम्" प्रकारान्तरं यथा "प्रातः समुत्थाय सुखासने गतः समभ्यसेत् त्राटकमेक एव । प्रसार्य्य दृष्टिं ननु लक्ष्यमीक्षेत् समुज्ज्वलं तत् रहसीतचित्तः । अभ्यासतोऽस्मात् स्थिरतां समस्तः समीरनेत्रे इति लक्ष्यटीका । विधाय किञ्चित् समये विलोचने संमुद्र्य पश्चात् झटिति प्रसार्य्य । पश्येत् परोनिश्चलमेकधीः खं पश्यन्नु यावत् पुरतोऽर्कबिम्बम् । समभ्यसेत्तावदिमां क्रियां चेत् सुनिर्मला दृष्टिरनेन वै स्यात्" हठस० ।

नौलीकर्म तच्च द्विविधं बाह्यमान्तरं च तत्र बाह्यं यथा "अव्यापसव्यं लघु नासिकाभिरावर्त्त्य वेगैः कृतटोयुगः कौ । कृत्वा भ्रमं स्वस्तिक आनतांसस्तुन्दस्य नालोत्थितिमेवमीहेत" हठस० । "अमन्दावर्त्तवेगेन तुन्दं सव्यापसव्ययोः । नतांसो भ्रामयेदेष नौलीयोगः प्रचक्ष्यते । मन्दाग्निसन्दीपनपाचकाग्निसन्धानमानन्दकरी सदैव । अशेषदोषामयशोषणी च हठक्रियाऽसौ जयतीह नौली" हठप्र० । आभ्यन्तरमुक्तं हठरत्नावल्यां यथा "इडयावर्त्त्य वेगेन तथा पिङ्गलया पुनः । उभाभ्यां भ्रामयेदेषा ह्यान्तरा कीर्त्तिता मया" ।

कपालभाती "लोहकारस्य भस्त्रावत् कुर्य्यात् सव्यापसव्यतः । कपालभाती विख्याता कफामयविशोषिणी" हठप्र० । "भस्त्रोहकारगमनीव च संप्रपूर्य्यैकं नासिकापुटमरं सुविरेचयञ्च । योगी द्वितीयमिति भस्त्रिकयेव यत्नात् सव्यापसव्यपरिचालनमत्र कार्य्यम्" हठस० ।

चक्रीकर्म "सुस्निग्धं मसृणेन वा सुदृषदा मध्याङ्गुलीयुग्मकं सार्द्धं लूनखं प्रसार्य्य शनकैः वायुं हृदन्ते क्रियात् । ऊर्ध्वं सर्वमिहाभितोऽत्र नलकाद्यं भ्रामयेदन्तरे यावत् पायुविकाश उद्भवति संप्रोक्तेति चक्री बुधैः । कृत्वेति चक्रीविधिमादरेण प्रक्षालयेत्तद्विषयं ततो दृढम् । अर्शादिदोषान्निभित प्रकुर्य्यात् यथा गुदास्यमविस्रावं भवेत् । तथाङ्गुलीनां त्रिचतुःक्रमेण संभ्रामयेत् पायुविकाशनावधि । नलान्त्रगादापतिदुर्मलान्तः स्यान्मूलचक्रस्य विकाशनं च" हठस० । "पायुवक्त्रे प्रसार्य्यान्तरङ्गुल्या भ्रामयेत् स्वयम् । यावद्गुदविकाशः स्यात् चक्रीकर्म निगद्यते । शूलव्याधिर्गुल्मरोगो नश्यत्यत्र न संशयः । मलशुद्धिर्दीपनं च जायते चक्रिकर्म्मणि" हठरत्नावली ।

गिलिकर्म "यदुघटिकामस्तकयोः पिधानमथो लघ्नी कथितोपजिह्वा । तदग्रकं तर्जनीमध्यमाभ्यां संमन्थयेद् द्रुतो मुहुराकलय्य । गिलीति कर्मोदितमार्य्यवर्य्यैः सन्धिप्रलीनामकफेऽपहारि" हठस० ।

गजकरणीकर्म "उदरगतपदार्थानुद्वमेदेव नित्यं पवनगमनमार्गात् कण्ठनालप्रवेशात् । क्रमपरिचयवश्यो वायुमार्गो भवेद्धै गजकरणमितीव प्राहुरार्य्या हठज्ञाः । (अपानवायोरूर्द्धकरणात् । पवनोर्द्धकरणेनवा । पान्थाकर्षणेन यद्भक्षितं मस्तु तदुद्वमेत् । कण्ठनालप्रवेशात् । कण्ठे नालस्य प्रवेश एरण्डनालस्य प्रवेशसत्वात् । तदा क्रमपरिचयक्रमेण वस्तुपरिचयः स्यादित्यर्थः) हठस० । "प्राक् स्थित्वोत्कटविष्टरे समतनुर्नौल्यानलोत्थापनं कृत्वाऽपानमनूर्ध्वमीरणपथा गत्यौ विधायोद्वमेत् । यत् प्राग्भक्षितमन्नपानमथ वा नालप्रवेशाज्जले तत् पश्चाद्गतं वमेदनुविधिः प्रोक्तो हठज्ञैरिह । आसने गोरुजे स्थित्वा कृत्वा भूमौ करौ दृढम् । ततः ऊर्ध्वं वायुमपि नालादुत्थाप्य चाचरेत् । वक्त्राद्वमेद्विहितं दोषोभक्षितसंयुतः । एवं गजकरण्युक्ता भक्षितोद्वमनक्रियेति" । वायुमिदम् अपानेन सह प्राणस्य प्रकाममूर्ध्वाकर्षणम् । नालोत्थानसमकालं कुर्य्यादिति भावः । अस्यार्थः उत्कटे आसने स्थित्वा बाहुयुगलं बहुसृष्टं जानुद्वयोपरि संस्थाप्य नम्राधोमुखः आनम्रकटिपृष्ठ आचिताङ्गुलिनालोत्थानं कृत्वाऽनु पश्चाद्वायुमूर्ध्वं विधाय सोदरवेगैरशितमुद्वमेत् । यदि कदाचिन्नोर्ध्वभक्षित याति तदोत्थायानम्रकटिपृष्ठो जानुद्वयं तिष्ठन् दोर्भ्यां धृत्वा प्रश्वदुद्वमेत्" हठस० ।

मस्तुप्रक्षालनम् "नासापुटेन सलिलं परिपीय वक्त्रमार्गेण तद्वमिहरन्तो कलयेत् सुधीरः । पौत्कृतकेन पुटकेन च नासिकाया वक्त्रेण वारि शनकैर्विहरन् महेता । मस्तुप्रक्षालनमिदं कफपित्तहरं परम्" हठस० ।

वायुसाधनम् "इदानीं क्लेशहानार्थं कर्त्तव्यं वायुसाधनम् । येन संसारचक्रेऽस्मिन् रोगहीनो भवेद्ध्रुवम्" । शिवसंहिता "राजदन्तयुगलान्तमस्तृतम् सन्निधाय रसनां तदन्तिके द्विक (काक) चञ्चुपुटमाहृतं पिबेत् प्राणसंयमनमेतदुत्तमम्" । "जिह्वां कृत्वाऽनाकुलस्तालुमूले दन्तैर्दन्तान् गाढमापीड्य सद्यः । मन्दं मन्दं यः पिबेद् गन्धवाहं सोऽसौ पूरैः शाकमन्तः स्वर्गैः" त्रिपुरा-

कारणमुच्यते । एतदभ्यासप्रकारः "नासिकाग्रदर्शी काकं विधाय पूरयेत् तथा । पवनं कुम्भेनाथ रेचयेत् काकचञ्चुवत्" कुम्भकपद्धतिः । "हंस(काक)चञ्चुवदास्येन वायुं परिपूर्य्याथ निरोधयेद्धि वायुम् । रसनामूर्द्ध्वमुखं विधायामृतधारां पिबतीह यः सुधीः । क्षणं रेचयेत् प्राणमुन्मुखेन कृता शीतली काकचञ्च्वाख्य एषः । मरुद्द्वन्द्वयोगप्रवीणोऽस्य मर्त्यो भवेदेव संसाधनात् मुक्तिभाग् द्राक्" कुम्भकपद्धतिः । आसने स्थिरीभूते प्राणायामं कुर्य्यात् तत्प्रकारः प्राणायामशब्दे ४५१५ पृ० द्रष्टव्यः अधिकमत्रोच्यते ।

"मात्राप्रमाणयुक्तात् प्राणायामोऽयमोङ्कारात् । ये च प्राणापानावूर्द्ध्वमधः संरुध्य यत्नेन । प्राणायामे पद्मपीठे स्वदक्षाङ्गुष्ठेनादौ संनिरुध्येन्दुनाड़ीम् । वायुं नातिद्राक् शनैर्नातिवृत्त्या व्याकण्ठोर्द्ध्वं पूरयेत् आकोटरान्तं । यथा स्वशक्त्या तं धारयित्वा नाड्या ततः पिङ्गलया विरेचयेत् । निरोधहीनं विपरीतमध्यं हृदास्थिरेणाभ्यसनं सुनिश्चरेत् । येन त्यजेत् तेन निरोधहीनं धृत्वा पुरान्येन विरेचयेत् शनैः । यान्त्येवमभ्यासरतस्य पुंसः स्थितिं स्वरूपे चलचित्तवृत्तयः । यथाशक्त्याकृष्य वायुं पूरयेदुदरं शनैः । यथाशक्त्याधृतं पश्चाद्रेचयेदविरोधतः" । हठयोगे "प्राणं चेड़िकया पिबेन्नियमितं भूयोऽन्यथा रेचयेत् । पीत्वा पिङ्गलया समीरणमथो बद्ध्वा त्यजेद्वामया । सूर्य्याचन्द्रमसोरनेन विधिनाऽभ्यासं सदा तन्वतां शुद्धा नाड़िगणा भवन्ति यमिनां मासत्रयादूर्द्ध्वतः" हठप्र० ।

"तत्र भूतशुद्धिप्राणायामं कृत्वा तदन्तेऽभ्यासार्थमुक्तसंख्यासहितकुम्भकयथाशक्तिप्रणवजपध्यानाभ्यां सार्द्धमासत्रयकृताभ्यासयोगोपपातकपातकसहितपापपुञ्जनिरासनद्वारा मनोवहनाड़ीमलमानसकामक्रोधादिमलशुद्धये यथोक्तपथ्यैकान्तसेवापूर्व्वकं विधायाशु शारीरनाड़ीमलशुद्धिः सम्यासं विधेया" हठप्र० । सनातनसिद्धान्ते "निरालस्यमनाभूत्वा प्राणायामं समभ्यसेत् । शनैश्च शतपर्य्यन्तं चतुर्व्वारं समभ्यसेत् । प्रातःसायञ्च मध्याह्ने ह्यर्द्धरात्रौ विशेषतः । मासमात्रं यदा पूर्णं भवेदभ्यासयोगतः । एकवारं प्रकुर्व्वीत तदा योगीन्द्रमुत्तमम् । षड्भिश्च शतैकञ्च प्राणायामांश्च नित्यशः । षण्मासाभ्यन्तरेणैव शुद्धा नाड़ीगणास्तथा । ततो हठक्रमेणैव प्रयत्नेन च धीरधीः । वज्राङ्ग-घुटिका कार्य्या स्वर्णमयी चातिशोभना । ततो नाड़िगणः शुध्येत् वरं भवति लक्षणम् । चन्द्रं पिबति सूर्य्यश्च सूर्य्यं चन्द्रमसा पिबेत् । अयं हि कालाभावेन जीवेदा चन्द्रतारकम्" । तदङ्गासनमुक्तं सनातनसिद्धान्ते "चतुरस्रं दिङ्मात्रं उत्तुङ्गं चतुरङ्गुलम् । चेलोपरिकुशचर्म्मादि चासनं सर्व्वसौख्यदम्" ।

नाड़ीशुद्धेर्लक्षणं "नाड़ीविशुद्ध्या सविरामको यदा तदा समर्थोऽनिलधारणे चिरम् । स्यात् कोष्ठमत्तस्य मलोपकर्दमव्ययेऽग्निरिद्धः क्व तनौ रुचां जनिः । सिद्धासनादजपन्वितं भित्त्वोर्द्ध्वं सर्पताऽग्निना । मुनेस्तदा प्राणयुतोर्द्ध्वगाप्तेऽनाहतध्वनिः । नाड़ीमध्यगलक्षयेऽस्य सकलं मूत्रं विट्स्वल्पमतः पुंसः स्वल्परोगता न क्लमो बाधा न शरीरतः । दुःखशान्तिर्व्वपुःशान्तिरमलः कायो भवेत् सुन्दरस्तावत्कालमयं कुम्भाज्जनियमस्याच्च भजेदल्पभुक् । योगारम्भाद्युक्तमुक्तं हि नाड़ीशुद्धिर्द्देहे शीघ्रमाद्यं यथाङ्गे । यावत् सिद्धैषा हठाङ्गं न स्वस्थं तावद्योगः साधकस्य व्यलीकः । नाड़ीविशुद्धेर्मरुतो जयः स्यात् जितेऽनिले याति मनः स्वयं लयम् । लीने मनस्यस्तमितेऽहिकार्थे ज्ञानप्रकाशः समुपैति निर्म्मले । पूते त्रिधानाड़िविशुद्धितः स्यादारम्भकाले हठसिद्धिचिह्नम् । क्रमेण चम्पादिजिताऽनिलानुरूपं हि नवान्तरसम्भुदेति । सगर्भकायामविनिर्गतांशा मुनिस्तदारम्भ घटेति सिद्धिभूः । सदा नाड़िशुद्धेः परिणाम एषः संप्राप्यते सद्गुरुणा विना नो" हठप्र० ।

प्राणायामलक्षणं मार्कण्डेयपु० "शृणुष्व च महीपाल प्राणायामस्य लक्षणम् । युञ्जतश्च यदा योगं यादृग्विहितमासनम् । पद्मं सिद्धासनं वापि तथा स्वस्तिकमासनम् । आस्थाय योगी युञ्जीत कृत्वा च प्रणवं हृदि । समः समासनो भूत्वा संहृत्य चरणावुभौ । संवृतास्यस्तथैवोरू सम्यग्विष्टभ्य चाग्रतः । संपश्यन्नासिकाग्रं स्वं दिशश्चानवलोकयन् । एवं योगी यताहारः प्राणायामपरायणः" । "यथा तोयार्थिनस्तोयं यन्त्रनालादिभिः शनैः । आपिबेयुस्तथा वायुं पिबेद्योगी जितश्रमः । प्रदुष्टं सेव्यमानास्तु सिंहशार्दूलकुञ्जराः । यथा यान्ति तथा प्राणो वश्यो भवति योगिनः । विश्वासतां यथेच्छातो नागं नयति हस्तिपः । तथैव योगी स्वच्छन्दं प्राणं नयति शोधितम् । यथा हि साधितः सिंहो मृगान् हन्ति न मानवान् । तद्वन्निरुद्धः पवनः किल्विषं न नृणां तनुम् । तस्माद्युक्तः सदा

योगी प्राणायामपरो भवेत्” इति योगचन्द्रिकायाम् । “प्राणायामान्वरः षट् कुर्य्यादिवसे दिने । चत्वारिंशच्च मध्याह्ने सन्ध्यायां विंशतिर्भवेत् । अर्द्धरात्रे विंशतिः स्यादेवं प्राणविनिग्रहः” इति । “इडया वायुमाकृष्य पूरयित्वोदरस्थितम् । शनैः षोडशमात्राभिरकारं तत्र संस्मरेत् । पूरितं धारयेत् पश्चाच्चतुःषष्ट्या तु मात्रया । उकारमूर्त्तिमत्रापि संस्मरन् प्रणवं जपेत् । यावद्वा शक्यते तावद्धारयन् जपसंस्थितः । पूरितं रेचयेत् पश्चात् मकारेणानिलं बुधः । शनैः पिङ्गलया विप्र ! द्वात्रिंशत् मात्रया पुनः । प्राणायामो भवेदेष ततश्चैनं समभ्यसेत् । प्रस्वेदजनको यस्तु प्राणायामेषु सोऽधमः । कम्पनं मध्यमं विद्यादुत्थानं चोत्तमं तथा । पूर्वं पूर्वं प्रकुर्वीत यावदुत्तमसम्भवः । उत्तमे तु सुनिष्पन्ने प्राणायामे सुखी भवेत् । प्राणो लयति तेनैव देहस्यान्तस्ततोऽधिकः । देहश्चोत्तिष्ठते तेन कृतासनपरिग्रहः” । योगसारावल्याम् । “रेचपूरैरनिलस्य कुम्भैः सर्वासु नाडीषु विशोधितासु । अनाहताख्यो बहुभिः प्रकारैरन्तः प्रवर्त्तेत सदा निनादः” इति । “अभिन्ननाहते प्राणनादे कृत्वा मनः स्थिरम् । निर्भयं साधकः कुम्भकाभ्यसनमाश्रयेत् । ध्यायेन्मूले कर्णिकान्तः कुण्डलीरूपमीश्वरम् । नादासंक्रमणं शान्तं शिवध्याने तत्क्रमात् । मूर्त्तिध्यानानन्दपीने नादानन्दे प्रलीयते । यथा यथा मनः शुद्धं लीयते ध्याननादयोः । तथा तथा वायुजयसिद्धिकृत् कुम्भ एधते । अघोरामिति ध्यायन्नादासक्तमतिर्मुनिः । इदभ्यसपरः शीघ्रं योगसिद्धिमवाप्नुयात् । यावन्न श्रूयते नादस्तावच्चित्तमिदं चलम् । नादे लीनं मनो ध्याने विना यत्नं हि युज्यते । स्वेदनिद्राङ्गमोटाद्याः क्षयं संयान्ति साधके । सपादघटिकोर्द्ध्वं स्यात् कम्पो जल्पनमेव च । आनन्दः स्यात् सदाभ्यासादारम्भे कुम्भकाग्निना । शुष्के नाडीमले दग्धे हुङ्कारे जयाग्निना । मूलस्थितपदोर्भेदे पृष्ठस्थं बिल्वयोर्गते । अपाने ऊर्द्ध्वं क्रमशः प्राणेनाकर्षितं यदा । मूलाधारपृथ्वीभेदेऽपाने जाद्यतमो बलम् । जयं ततोर्द्ध्वं माकृष्टापानस्याधराङ्कम् । उत्तिष्ठन्ति निरालम्बं कच्छूनवद्म्बरे । तदासनोत्थानमुक्तं वायोर्विजयलक्षणम् । एतत् स्वर्णसिद्धाद्यः स्थितिचक्रविभेदने । वक्ष्यमाणाभ्यासमतिं कुर्यात् योऽपाननावृतम् । उद्गत्युग्मं स्वमज्जुषन्पृष्ठवाहविचित् यथा । पृष्ठवंशान्तरगतसुषुम्णार्द्धस्थले पदम् । त्रिकोणं दहनस्थान्तं तदध स्थितिरित्यसौ । अभ्यासेन जितापानं प्राणेनोर्द्धं सुखीकृते । पूर्वबाहुं निराकर्तुं प्रतीचीपथमुत्तमम् । समवाहेन सुमतिर्नेतुं स्थितिसुखान्तरे । स्थित्वाऽरभेदभ्यसनं कुर्यात् सद्गुरुणोदितम् । विधिपद्मप्रभेदेन सर्वा आरम्भसिद्धयः । तावत्कालं साधकस्य योगोक्तनियमग्रहः । स्वाधिष्ठानं विभिद्योर्द्ध्वमपानः प्रसृतः स्वयम् । तिर्य्यग्गतेन प्राणेन निरावरण ऊर्द्ध्वगः । अध स्थितः सन्धमति त्रिकोणं वह्निमण्डलम् । ध्मातो भस्त्रेव दहनो दृढाभ्यासो मुनेर्हि सः । क्रमेण दीप्तो भवति सुषुम्णास्थमलं क्षिपति । कुण्डलीं तापयत्येष चालितां प्राणवायुना । उत्कर्षप्राणायामेन शक्तिचालेन चाल्यताम् । ततः परिचयावस्थायां क्रमबोधकरी भवेत् । दीप्तोऽनलोऽपानजाद्यं शिष्टं दहति वै क्रमम् । प्रकाशावरणं जाड्यं दग्धेऽङ्के कफरजो मलाः । स्थानाग्निः स तदा सत्त्वप्रकाशक उपाधिहा । तथा योगाग्निना दग्धो देहो योगिवरस्य हि । न दह्यते योगिदेहो दैवैरपि महाबलः । इच्छारूपस्तदा योगिदेहः स्यादजरामरः । सुषुम्णाचक्रनिलया प्राणापानौ यसेद्यदा । तदा केवलकुम्भः स्यान्नुनेत्त्रैलोक्यसिद्धिकृत् । जलूका रुधिरं यद्वत्तद्वदाकर्षयेद्ध्रुवम् । ब्रह्मनाडी तथा धातून् सतताभ्यासयोगतः । तदा नद्यः पुष्करादयो नदाः शुष्यन्ति पुष्कले । ये दोषाः क्षुत्पिपासाद्याः सर्वे नश्यन्ति योगिनः” । हठस० ।

प्राणायामकालमानम् “अथ प्रमाणमेतेषां रहस्यमपि कथ्यते । चतुरष्टद्वादशभिः क्रमादाढ्याः पलैस्त्रयः । ततः पञ्चदशोन्मानपलैरष्टादशोन्मितः । परस्ततश्चतुर्विंशतीद्धैर्दारहेरितः । निसर्गाद्द्वादशगुणाः प्रत्याहारस्ततः परम्” हठस० ।

निसर्गप्राणायामकालः कुम्भकपद्धतौ “पञ्चगुर्वक्षरैर्युक्तः कालः पलमितो हि यः । निसर्गतः कुम्भकोऽयमतोऽर्द्धं रेचकः स्मृतः । अर्द्धः पूरक इत्युक्तो मात्राकुम्भविशारदैः । पञ्चविंशतिभिः प्रोक्तः पलैर्द्वादशमात्रिकः” । अयमेव नाडीशोधनोऽभ्यासप्राणायामः । “पञ्चाशद्भिर्द्वितीयस्तु सपादोद्दयविकोन्मितः । तृतीय इति निर्दिष्टो दत्तात्रेयमतं यथा” । तदयं संक्षेपः “कनिष्ठे प्राणायामे एकस्मिन् कालमानं चत्वारि पलानि भवन्ति तदा द्वादशप्राणायामे सर्वकालमानं ४८ पलानि असौ प्रथम उद्घातः स्वेद

कुम्भकालः। एवं द्वितीये मध्यमेरौ कालमानमष्टौ ८ पलानि तदा द्वादशभिः ९६ पलानि। अत्र सर्वकालः १।३६ घटिकादि मध्यमेरौ कालः। तीव्रमेरौ कालमानं १२ पलादि तदा द्वादशभिः १४४ पलानि २।२४ घट्यादि एवमुत्तमोत्तमो वायुजयकालो ज्ञेयः" हठस०। तत्र अधमसाधके स्वेदातिरिक्तकम्पाद्यभावः। उत्तमसाधके यमादिगुणसम्पत्तौ कामसंकल्पाद्यपाये कम्पासनोत्थानादिसंभवः" हठस०। "तदा विध्वस्तपापस्य भवेदारम्भसम्भवः। चिह्नानि योगिनो देहे दृश्यन्ते नाडिशुद्धितः" इत्युपक्रमे "वर्लीयसि भवेत् स्वेदोऽङ्गे सुनेः प्रथमोद्यमे। यदा संजायते स्वेदो मर्दनं कारयेत्तदा। विभूत्या सह मिश्रेण श्रमजाताम्बुनाऽमुना। अन्यथा विग्रहाद्वायुर्नष्टो भवति योगिनः। दृढता लघुताऽङ्गे स्यात् श्रमजाम्बुकमर्दनात्। कम्पो द्वितीये भवति दार्दुरी मध्यमे तत."। (दार्दुरी दर्दुरो भेकस्तस्येव उत्प्लुत्योत्प्लुत्य गतिः)। ततोऽधिकतराभ्यासाद् गगने साधको हि सः। योगी पद्मासनस्थोऽपि भुवमुत्सृज्य वर्त्तते। वायुसिद्धिस्तदा ज्ञेया संसारध्वान्तनाशिनी" कुम्भकपद्धतौ "एवं नाड्याविवेकेन चतुःकालेषु विंशतिम्। कुम्भकान् यदि कुर्वीत नाडी शुद्धा स्यात्कुम्भके। पीयूषमध्यादिनाकाभं नाभौ सवितृमण्डलम्। मूर्धनाड्या शने कुम्भे ध्यात्वा शुध्यन्ति नाडिकाः। चन्द्रेण पित्तदोषाणामितरेषां परेण तु। नाडीशुद्धा तदा भूयाच्चिह्नमासैर्न संशयः। नादश्रुतिर्वपुःकार्श्यमारोग्यं वह्निदीपनम्। नैर्मल्यमङ्गावर्दनप्रसादो बिन्दुनिर्जयः। द्विसप्ततिसहस्राणां नाडीनां मलशोधनम्। यथेष्टं धारणं वायोर्विकाराभाव एव च" हठस०।

मात्राकुम्भकः "मात्राः षोडश पूरे स्युश्चतुःषष्टिस्तु कुम्भके। द्वात्रिंशद्रेचके प्रोक्ताः मात्राकुम्भः समीरितः। मात्राकुम्भो हृदि स्थितः शोषकः संप्रकीर्त्तितः। स्वाधिष्ठानानुगश्चाय प्लावनोऽमृतसेचनः। दाहनो नाभिसंस्थानो मात्राकुम्भः प्रकीर्त्तित.। मूलाधारे कृतश्चायं कठिनीकरणो मतः। पुनः कण्ठानुगो यश्च व्यूहनः स्यात् स कुम्भकः। ब्रह्मस्थाने नियोगेन स्तम्भितः परिकीर्त्तितः"। अयमाशयः। पूर्वाभ्यासे स्थानावलोकनचिन्तनाभ्यां मनसा दृगभ्यां तादृश्येन नासाग्रनाभिभ्रूमध्याङ्गुष्ठहृदयकण्ठादिनिखिलशरीरान्तर्गतप्रदेशेषु स्थानात् स्थानान्तरं साधकेन कुम्भितस्य वायोर्यथानयनं स्थापनं च पुनस्ततः स्तम्भितस्य वायोः प्रदेशान्तरे नयनमिति चेतसाऽस्य प्राणस्य चालनं कर्त्तव्यं गुरूपदेशेनेति मात्राकुम्भः। सूर्यस्य हृदि कुम्भनात् तदूर्ध्वं रसवहानां नाडीनां रसशोषणं भवति। एवं नाभौ सर्वशिरामूलत्वात् सूर्यमण्डलपदत्वात् अग्निवर्गादस्योष्मात्र नाडिगतमन्दाहः। एवं स्वाधिष्ठाने स्थितौ तस्य सौम्यस्थानचन्द्रपदत्वात् अमृतरससेचनस्तत्पार्थिवांशतमोऽपायद्वारा प्लावनो भवति। कठिनीकरणं मृदुतापिधानं देहेन्द्रियेषु" हठस०।

मात्रामानम् "प्रदक्षिणीकृत्य जानुं नातिद्रुतविलम्बितम्। अङ्गुलीस्फोटनं मात्रा कोटिकाकरणाद् भवत्"।
"मात्रा नवविधा प्रोक्ता योगिभिस्तत्त्वदर्शिभिः। निमेषोन्मेषणं मात्रा कालो लघ्वक्षरोन्मितः। गोदोहवत्सपानेषु क्षेपघटारवोन्मिताः। चतुरो द्युतिमात्राः स्युस्ताश्च सेव्याः शनैः शनैः। देशकालानुसारेण प्राहुर्योगीश्वराः पुरा। पूरकुम्भकरेचेषु निमग्नजनितेषु यः। कालः स मात्रासंज्ञः स्यात् सर्वमात्राः क्रमादिमाः। अथवा इति तावेव महामात्राः पुरोदिताः। जानु प्रदक्षिणीकृत्य त्रिवारं छोटिकामतु। करणात् ह्रस्वमात्रैषा मध्यमैषा षड्भिरीरिता। जान्वोः प्रदक्षिणकृतिर्नववारमसौ वरेति" हठस०।

स्वस्थस्य प्राणायामकालः "सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह। त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते" गीता। अयञ्च पापशुद्धये स्वस्थैः योगसिद्धये च योगिभिश्च कार्य्यः। तादृशसमुदायस्य त्रिजपे पलद्वयं भवतीति तस्य कुम्भकालसंख्यावेदकत्वं बोध्यम्। योगदीपिकायाम्" हठस०।

प्राणस्वरूपम् "समस्तेन्द्रियवृत्तिश्च प्राणो वायुः प्रकीर्त्तितः। तज्जयादिन्द्रियाण्येव विजितानि भवन्ति हि। अतः प्राणमनःस्पन्दयोः सहभावित्वात् प्राणनिग्रहे मनो निगृह्यते" हठस। योगवाशिष्ठे "बाह्याभ्यन्तरस्पन्दशक्तिजो वातजोऽथ वा। न यस्य विद्यते तस्य दूरस्थो विकृतिश्चयो"। अयं भावः प्राणायामोपायोपेतस्य इतरस्मादल्पः श्वासप्रश्वासो भवति यथा खननच्छेदनादिषु व्याप्रियमाणस्य पर्वतमारोहतः शीघ्रं धावतो वा श्वासवेगो यावान् भवति न तावान् स्थितस्यासीनस्य वा भवति। यथा दुष्टैरश्वैरुपेतो रथो मार्गं त्यक्त्वा कापि नीयते स च सारथिना दृढरज्ज्वाकृष्टः स्वमार्गं पुनर्धार्य्यते तथेन्द्रियैर्विषयादिभिरितस्ततो नीय-

मानं चित्तं प्राणरजज्वौ दृढधारितायां स्वात्मतत्त्वे धार्य्यते” इत्येवं चित्तविकारप्राणरूपौ प्रकृतेऽभिप्रेतौ” हठयो० ।

अभ्यासक्रमः “प्रथमे दिवसे कार्य्यं कुम्भकानां चतुष्टयम् । प्रत्येकं दशसंख्याकं द्वितीये पञ्चभिः सह । विंशतिं च तृतीयेऽह्नि पञ्चवृद्ध्या दिने दिने” योगदीपिका ।

प्राणायामफलं हठयोगे गोरक्षनाथः । “द्वाराणां नवकं निरुध्य मरुतं पीत्वा दृढं धारितं नीत्वाकाशमपानवह्निसहितं शक्त्या समुच्चारितम् । आत्मध्यानयुतो ह्यनेन विधिना विन्यस्य मूर्ध्नि ध्रुवं यावत्तिष्ठति तावदेव महताऽसङ्गेन संयुज्यते” ।

प्राणायामप्रकारः “प्राणायामं ततः कुर्य्यान्नित्यं सात्त्विकया धिया । यथा सुषुम्नानाडीस्था मलाः शोषं प्रयान्ति च । बद्धपद्मासनो योगी प्राणं चन्द्रेण पूरयेत् । धारयित्वा यथाशक्ति भूयः सूर्य्येण रेचयेत् । प्राणं सूर्य्येण चाकृष्य पूरयेदुदरं शनैः । विधिवत् कुम्भकं कृत्वा पुनश्चन्द्रेण रेचयेत् । येन त्यजेत् तेन पूर्य्य धारयेत्तु निरोधतः । रेचयेच्च ततोऽन्येन शनैः शनैरेव नतः । प्राणं चेदिडया पिबेन्नियमितं भूयोऽन्यया रेचयेत् पीत्वा पिङ्गलया समीरणमथो बद्ध्वा त्यजेद्वामया । सूर्य्यचन्द्रमसोरनेन विधिना बिम्बद्वयं ध्यायताम् शुद्धा नाडिगणा भवन्ति यमिनां मासत्रयादूर्द्ध्वतः । प्रातर्मध्यं दिने सायमर्द्धरात्रे च कुम्भकान् । शनैरशीतिपर्य्यन्तं चतुर्वारं समभ्यसेत् । इडयापि च षोडशभिः पवनं कुरु षट्चतुष्टयमन्तरगम् । त्यज पिङ्गलया शनकैः शनकैः दशभिर्दशभिर्दशभिर्द्वधिकैः । अधमे जायते स्वेदः कम्पो भवति मध्यमे । उत्तिष्ठत्युत्तमे प्राणो बद्धे पद्मासने हठे । ततोऽधिकतराभ्यासाद् भवतः स्वेदकम्पनौ । ततोऽधिकतराभ्यासाद् दार्दुरी जायते ध्रुवम् । यथैव दर्दुरोगच्छेदुत्प्लुत्योत्प्लुत्य भूतले । पद्मासनस्थितो योगी तथा गच्छति भूतले । जलेन श्रमजातेन गात्रमर्द्दनमाचरेत् । दृढता लघुता चापि तेन गात्रस्य जायते । अभ्यासकाले प्रथमे शस्तं क्षीराज्यभोजनम् । ततोऽभ्यासे दृढीभूते न तादृङ् नियमग्रहः । यथा सिंहो गजो व्याघ्रो भवेद्वश्यः शनैः शनैः । तथैव सेवितो वायुरन्यथा हन्ति साधकम् । प्राणायामेन युक्तेन सर्वरोगक्षयो भवेत् । अयुक्ताभ्यासयोगेन सर्वरोगसमुद्भवः । हिक्का कासस्तथा श्वासः शिरःकर्णाक्षिवेदनाः । भवन्ति विविधा रोगाः पवनस्य प्रकोपनात् । युक्तं युक्तं त्यजेद्वायुं युक्तं युक्तञ्च पूरयेत्” हठप्रदीपिकायाम्' ।

प्राणायामाभ्यासफलम् “हठासनस्थो योगीन्द्रो विमलाश्रमः । अभ्यसेन्नाडिशुद्धिं च मुद्रादिपवनक्रियाम्” हठप्र० । “क्रियायुक्तस्य सिद्धिः स्यादक्रियस्य कथं भवेत् । क्रियैव कारणं सिद्धेः सत्यमेतन्न संशयः । न शास्त्रपाठमात्रेण योगसिद्धिः प्रजायते । प्राणायामैरेव सर्वे प्रशुष्यन्ति मलाशयाः । आचार्य्याणान्तु केषाञ्चिदन्यत् कर्म न सम्मतम् । षट्कर्मयोगमाप्नोति पवनाभ्यासतत्परः । मृत्युभयान्तकभियस्तस्मात्पवनमभ्यसेत् । ब्रह्मादयोऽपि त्रिदशाः पवनाभ्यासतत्पराः । सर्वसिद्धिं गताः सर्वे तस्मात् पवनमभ्यसेत् । यावद्बद्धो मरुद्देहे तावत् चित्तं निराकुलम् । यावद्दृष्टिर्भ्रुवोर्मध्ये तावत्कालभयं कुतः । विधिवत् प्राणसंयामैर्नाडीचक्रे विशोधिते । सुषुम्नावदनं भित्त्वा सुखाद्विशति मारुतः । मारुते मध्यसञ्चारे मनःस्थैर्य्यं प्रजायते । यो मनःसुस्थिरीभावः सैवावस्था मनोन्मनी । तत्सिद्धये विधानज्ञाश्चित्रान् कुर्वन्ति कुम्भकान् । विचित्रकुम्भकाभ्यासाद् विचित्रां सिद्धिमाप्नुयात् । सूर्य्यभेदनमुज्जायी तथा शीत्कारः शीतली । भस्त्रिका भ्रामरी मूर्च्छा केवलश्चाष्टकुम्भकाः । पूरकान्ते तु कर्त्तव्यो बन्धो जालन्धराभिधः । कुम्भकान्ते रेचकादौ कर्त्तव्यस्तूड्डियानकः । अधस्तात् कुञ्चनेनैव कण्ठसङ्कोचने कृते । मध्यपश्चिमतानेन स्यात् प्राणो ब्रह्मनाडिगः । अपानमूर्द्ध्वमुत्थाप्य प्राणं कण्ठादधो नयेत् । योगी जराविनिर्मुक्तो षोडशो वयसा भवेत्” हठप्र० ।

सूर्य्यभेदनम् “आसनं सुखदेन बद्धा सुद्रां समन्ततः । दक्षनाड्या समाकृष्य बहिःस्थं पवनं शनैः । आकेशादानखाग्राच्च निरोधावधि कुम्भकम् । ततः शनैः सव्यनाड्या रेचयेत् पवनं पुनः । कपालशोधनं वातदोषघ्नं कृमिनाशनम् । पुनः पुनरिदं कुर्य्यात् सूर्य्यभेदनमुत्तमम्” हठ० ।

उज्जायी “मुखं संयम्य नासाभ्यामाकृष्य पवनं शनैः । यथा लगति कण्ठात्तु हृदयावधि सस्वनम् । पूर्ववत् कुम्भकं कृत्वा रेचयेदिडया ततः । श्लेष्मदोषहरं कण्ठे देहानलविवर्द्धनम् । नाडीजलोदरधातुगतदोषविनाशनम् । गच्छता तिष्ठता कार्य्यमुज्जाय्याख्यं च कुम्भकम्” हठप्र० ।

अथ शीत्कारः “कुर्य्यात् शीत्कां सदा वक्त्रे घ्राणेनैव विसर्जयेत् । एवमभ्यासयोगेन कामदेवो द्वितीयकः ।

योगिनीचक्रसामान्यः सृष्टिसंहारकारकः। न क्षुधा न तृषा निद्रा नैवालस्यं प्रजायते। भवेत् स्वच्छन्द-देहस्तु सर्वोपद्रववर्जितः। अनेन विधिना सत्यं योगीन्द्रो भूमिमण्डले। स भवेत् सर्वसिद्धीनां भाजनं नात्र संशयः। नासिकामूहरन्ध्रेण यः प्राणं सततं पिबेत्। स भवेत् सर्वसिद्धीनां भाजनं नात्र संशयः। रसनातालुमूलेन यः प्राणं सततं पिबेत्। अब्दार्द्धेन भवेत्तस्य सर्वरोगपरिक्षयः'' हठप्र०।

शीतलीकुम्भकः "जिह्वया वायुमाकृष्य पूर्ववत् कुम्भसाधनम्। शनैस्तु घ्राणरन्ध्राभ्यां रेचयेदनिलं सुधीः। गुल्मप्लीहोदरं चापि ज्वरपित्तं क्षुधां तृषाम्। एताच शीतली नाम कुम्भकोऽयं निहन्ति च'' हठप्र०।

भस्त्रिका "ऊर्व्वोरुपरि संस्थाप्य उभे पादतले तथा। पद्मासनं भवेत् सम्यक् सर्वपापप्रणाशनम्। सम्यक् पद्मासनं बद्ध्वा समग्रीवोदरः सुधीः। मुखं संयम्य यत्नेन प्राणं घ्राणेन रेचयेत्। यथा लगति हृत्कण्ठे कपालावधि पूरयेत्। वेगेन पूरयेत् सम्यक् हृत्पद्मावधि मारुतम्। पुनर्विरेचयेत् तद्वत् पूरयित्वा पुन पुनः। यथैव लोहकाराणां भस्त्रा वेगेन चाल्यते। तथैव स्वशरीरस्थं चाल्यते पवनो बलात्। यदा श्रमो भवेद्देहे तदा सूर्य्येण तेजयेत्। यथोदरे भवेत् पूर्णं पवनेन तथा लघुः। धारयेन्नासिकामध्यं तर्जनीभ्यां तथा दृढम्। कुम्भकं पूर्ववत् कृत्वा रेचयेदिडयाऽनिलम्। वातपित्तश्लेष्महरं शरीराग्निविवर्द्धनम्। कुण्डलीबोधनं कुम्भो रोगघ्नं सुखदं शुभम्। ब्रह्मनाडीमुखे संस्थकपाटार्गलनाशनम्। सम्यग्भस्त्रा समुद्भूता ग्रन्थित्रयविभेदिका। विशेषेणैव कर्त्तव्यं भस्त्राख्यं कुम्भकं त्विदम्" हठप्र०।

भ्रमरीकुम्भकम् "वेगोद्घोषं पूरकं भृङ्गनादं भृङ्गीनादं रेचकं मन्दमन्दम्। योगीन्द्राणां नित्यमभ्यासयोगाच्चित्ते जाता काचिदानन्दलीला" हठप्र०।

मूर्च्छाकुम्भकः "पूरकान्ते गाढतरं बद्ध्वा जालन्धरं शनैः। रेचयेत् मूर्च्छनाख्योऽयं मनोमूर्च्छासुखप्रदा। अन्तः-प्रवर्त्तिताधारमारुतापूरितोदरः। पाथात्पयस्यगाधे ऽपि विप्लवेत् पद्मपत्रवत्" हठप्र०।

संहितकुम्भकः "प्राणायामस्त्रिधा प्रोक्तो रेचपूरककुम्भकैः। संहितः केवलश्चेति कुम्भको द्विविधो मतः। रेचकं पूरकं कुर्य्यात् स वै संहितकुम्भकः। यावत् केवलसिद्धिः स्यात् तावत् संहितमभ्यसेत्" हठप्र०।

केवलकुम्भकः "रेचकं पूरकं त्यक्त्वा सुखाद्वायुनिरोधनम्। प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः। केवले कुम्भके सिद्धे रेचपूरविवर्जिते। न तस्य दुर्लभं किञ्चित् त्रिषु लोकेषु विद्यते। शक्तःकेवलकुम्भेन यथेष्टं वायुधारणम्। राजयोगपदं चैव लभते नात्र संशयः। आहारः क्षीयते योगे कृष्णपक्षे यथा शशी। शुक्लपक्षे यथा चन्द्रस्तथा श्वासोऽमृतोपमः। हठं विना राजयोगो राजयोगं विना हठः। न सिध्यति ततो युग्मनिष्पत्त्यै च समभ्यसेत्। कुम्भकप्राणरोधान्ते कुर्य्याच्चित्तं निराश्रयम्। एवमभ्यासयोगेन राजयोगपदं व्रजेत्। कुम्भकात् कुण्डलीबोधः कुण्डलीबोधतो भवेत्। अनर्गला सुषुम्णा च हठसिद्धिश्च जायते। वपुःकृशत्वं वदने प्रसन्नता नादस्फुटत्वं नयने सुनिर्मले। आरोग्यता बिन्दुजयोऽग्निदीपनं नाडीविशुद्धिर्हठयोगलक्षणम्" हठप्र०।

उपदेशः "सशैलवनधात्रीणां यथाधारोऽहिनायकः। सर्वेषां योगतन्त्राणां तथाधारो हि कुण्डली। सुप्ता गुरुप्रसादेन बोधिता सुखदा भवेत्। तथा सर्वाणि पद्मानि भिद्यन्ते ग्रन्थयस्तथा। प्राणस्य शून्यपदवी तथा राजपथायते। तथा चित्तं निरालम्बं तथा कालस्य वञ्चनम्। सुषुम्णा शून्यपदवी ब्रह्मरन्ध्रं महापथम्। श्मशानी शाम्भवी मध्यमार्गश्चैत्येकवाचकाः। तस्मात् सर्वप्रयत्नेन प्रबोधयितुमीश्वरीम्। ब्रह्मद्वारमुखे सुप्तां मुद्राभ्यासेन बोधयेत्" हठप्र०।

दशमुद्रोद्देशः "महामुद्रा१ महाबन्धो२ महावेधश्च३ खेचरी४। उड्डियानं५ मूलबन्धो६ बन्धो जालन्धराभिधः७। करणी विपरीताख्या८ वज्रोली९ शक्तिचालनम्१०। इदं हि मुद्रादशकं जरामरणनाशनम्। आदिनाथोदितं सर्वमष्टैश्वर्य्यप्रदायकम्। वल्लभं सर्वसिद्धानां दुर्लभं मरुतामपि। गोपनीयं प्रयत्नेन यथा रत्नकरण्डकम्। कस्यचित् नैव वक्तव्यं कुलस्त्रीसुरतं यथा। वज्रोली त्वमरोली च सहजोली त्रिधा मता। एतेषां लक्षणं वक्ष्ये कर्त्तव्यस्य विशेषतः"।

महामुद्रा १ "पादमूलेन वामेन योनिं संपीड्य दक्षिणम्। पादं प्रसारितं कृत्वा कराभ्यां धारयेद् दृढम्। कण्ठे बन्धं समारोप्य धारयेद्वायुमूर्द्धनि। यथा दण्डहतः सर्पो दण्डाकारः प्रजायते। ऋज्वी भूत्वा तथा शक्तिः कुण्डली सहसा भवेत्। तदासौ मरणावस्थां हरते द्विपुटा-

श्रिता। ततः शनैः शनैरेव रेचयेन्न च वेगतः। इदं खलु महामुद्रा महासिद्धैः प्रदर्श्यते। महाक्लेशादयो दोषाः क्षीयन्ते मरणादयः। महामुद्राञ्च तेनैव वदन्ति विबुधोत्तमाः। चन्द्राङ्गे च समभ्यस्य सूर्याङ्गे पुनरभ्यसेत्। यावत्तुल्या भवेत् संख्या ततो मुद्रां विसर्जयेत्। न हि पथ्यमपथ्यं वा रसाः सर्वेऽपि नीरसाः। अपि भुक्तं विषं घोरं पीयूषमिव जीर्यति। क्षयकुष्ठगुदावर्त्तगुल्माजीर्णपुरोगमाः। दोषाः सर्वे क्षयं यान्ति महामुद्रां च योऽभ्यसेत्। कथितेयं महामुद्रा महासिद्धिकरी नृणाम्। गोपनीया प्रयत्नेन न देया यस्य कस्यचित्” हठप्र०।

महाबन्धः २ “पार्ष्णिं वामस्य पादस्य योनिस्थाने नियोजयेत्। वामोरूपरि संस्थाप्य दक्षिणं चरणं तथा। पूरयित्वा ततो वायुं हृदये चिबुकं दृढम्। निष्पीड्य योनिमाकुञ्च्य मनोमध्ये नियोजयेत्। धारयित्वा यथाशक्ति रेचयेदनिलं शनैः। सव्याङ्गे पूर्वमभ्यस्य दक्षाङ्गे पुनरभ्यसेत्। मतान्तरे तु केषाञ्चित् कण्ठबन्धं विवर्जयेत्। राजदन्तस्य जिह्वायां बन्धः शस्तो भवेदिति। अयं खलु महाबन्धो महासिद्धिप्रदायकः। कालपाशमहाबन्धविमोचनविचक्षणः। अयं च सर्वनाडीनामूर्द्ध्वगमनरोधकः। त्रिवेणीसङ्गमं धत्ते केदारं प्रापयेन्मनः। रूपलावण्यसम्पन्ना यथा स्त्री पुरुषं विना। महामुद्रामहाबन्धौ निःफलौ वेधवर्जितौ” हठप्र०।

महावेधः ३ “महाबन्धे स्थितो योगी कृत्वा पूरकमेकधीः। वायुना गतिमावृत्य निभृतं कण्ठमुद्रया। समहस्तयुगे भूमौ स्फिचौ सन्ताडयेत् शनैः। पुटद्वयं समाक्रम्य वायुः स्फुरति मध्यगः। सोमसूर्य्याग्निसम्बन्धात् जायते चामृतिस्फुरः। मृतावस्था समुत्पन्ना ततो मृत्युभयं कुतः। महावेधोऽयमभ्यासान्महासिद्धिप्रदायकः। वलीपलितनिर्मुक्तैः सेव्यते साधकोत्तमैः। एतत्त्रयं महाहृद्या जरामृत्युविनाशिनी। वह्निवृद्धिकरञ्चैवमणिमादिगुणप्रदम्। अष्टधा क्रियते चैव यामे यामे दिने दिने। पुण्यसम्भारसन्धायि पापौघभिदुरं सदा। सम्यक् शिक्षावतामेव स्वल्पं प्रथमसाधनम्। वह्निस्त्रीपथसेवानामादौ वर्जनमाचरेत्” हठप्र०।

खेचरी ४ “छेदनचालनदोहैः जिह्वां क्रमेण वर्द्धयेत्तावत्। यावद्भ्रूमध्यं स्पृशति तदा च खेचरीसिद्धिः। स्नुहीपत्रनिभं शस्त्रं सुतीक्ष्णं स्निग्धनिर्मलम्। समादाय ततस्तेन रोममात्रं समुच्छिन्देत्। कृत्वा सैन्धवपथ्यादिचूर्णं ताभ्यां प्रघर्षयेत्। पुनः सप्तदिने प्राप्ते रोममात्रं समुच्छिन्देत्। एवं क्रमेण षण्मासं नित्ययुक्तं समाचरेत्। षण्मासाद् रसनामूलनाडीबन्धो विनश्यति। अथ वागीश्वरीधाम शिरोवस्त्रेण वेष्टयेत्। शनैरुत्कर्षयेद्योगी कालवेलाविधानवित्। वितस्तिप्रमितं दैर्घ्यं विस्तारे चतुरङ्गुलम्। मृदुलं धवलं प्राक्तं वेष्टिताम्बरलक्षणम्। पुनः षण्मासमात्रेण पुनः सङ्घर्षणात् प्रिये!। भ्रूमध्यावधि वर्द्धेत तिर्य्यक् कर्णबिलावधि। अधस्तात् चिबुकं मूलं प्रयाति क्रमकारिता। केशाद्दूर्द्ध्वं क्रामति तिर्य्यक्शङ्खावधि प्रिये!। पुनः संवत्सराद्देवि! द्वितीया चैव जीवया। ब्रह्मरन्ध्रान्तमावृत्य तिष्ठत्यमरवन्दिते!। स्वतालुमूलं सङ्कुच्य सप्तवासरमात्मनि। स्वगुरूक्तप्रकारेण मलं सर्वं विशोधयेत्। अङ्गुल्यग्रेण सङ्कुच्य जिह्वां तत्र निवेशयेत्। शनैः शनैस्ततस्तावत् महावज्रकपाटभृत्। पूर्वबीजयुतां विद्यां व्याख्यातामतिदुर्लभाम्। तस्याः षडङ्गं प्रकुर्वीत तया षट्चक्रभिन्नया। खे निरस्तसकलक्रियाक्रमा चित्ततश्चरति शाश्वतोदरे। सा शिवत्वसमवायकारिणी खेचरी च भवखेदहारिणी। क्रमेणैव प्रकर्त्तव्याऽभ्यासेन वरवर्णिनि!। युगपद्युतते तस्य शरीरं विलयं व्रजेत्। तस्मात् शनैः शनैः कार्य्योऽभ्यासेन युगवत् प्रिये!। एवं वर्षत्रयं कृत्वा ब्रह्मद्वारं विशेद् ध्रुवम्। षट्चक्राणि विभिद्य शक्तिभुजगीं प्रोत्थाप्य मूलस्थितां भित्त्वा ग्रन्थिपुटं च पश्चिमसराप्राकाररूपं महत्। नीत्वा प्राणमतः शिराबिलमलं निरुध्य चित्तेन तत् लिङ्गं यः पिबतीन्दुमण्डलगलत् सत्त्वः स साक्षात् शिवः”। “तीक्ष्णक हरते व्याधिं कटुकं कुष्ठनाशनम्। घृतस्वादूपमं चैवाक्षरत्व लभते ध्रुवम्। मधुस्वादूपमं चैव शालिमुद्गादिकं वसु। लड्डुखण्डकपानानि पक्वान्नानि ह्यनेकशः। दिव्यकल्पं क्रीडेन्नित्य च्छत्रकणो जायते ध्रुवम्। तन्मयत्वमवाप्नोति कोषकारीव कीटकः। कपालकुहरे जिह्वा प्रविष्टा विपरीतगा। भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी। काकचञ्चुविधानेन शीतलं सलिलं पिबेत्। प्राणापानप्रयोगेण योगी भवति निर्जरः। कलां पराङ्मुखीं कृत्वा त्रिपथे परिवर्त्तयेत्। सा भवेत् खेचरी मुद्रा व्योमचक्रं तदुच्यते। रसनामूर्द्ध्वगां कृत्वा क्षणार्द्धं यदि तिष्ठति। विषैर्विमुच्यते योगी व्याधिमृत्युजरादिभिः। न रोगो

मरणं तस्य न निद्रा न क्षुधा तृषा । न च मूर्च्छा भवेत् तस्य यो मुद्रां वेत्ति खेचरीम् । पीड्यते न स रोगेण न लिप्यते च कर्मणा । बाध्यते न च कालेन यो मुद्रां वेत्ति खेचरीम् । चित्तं चरति खे यस्मात् जिह्वा चरति खे गता । तेनेयं खेचरीमुद्रा सर्वसिद्धैर्नमस्कृता । खेचर्या मुद्रितं येन विवरं लम्बिकोर्द्ध्वतः । तस्य नाक्षरते बिन्दुः कामिन्यालिङ्गितस्य च । चलितोऽपि यदा बिन्दुः संप्राप्तश्च हुताशनम् । व्रजत्यूर्द्ध्वं हठशक्त्या निबद्धो योनिमुद्रया । कपालकुहरे जिह्वा कालसन्धानसद्दया । तस्मादिदं प्रकुर्वीत नित्ययुक्तः समाहितः । नित्यं सोमकलापूर्णं शरीरं यस्य योगिनः । तक्षकेणापि दष्टस्य विषं तस्य न सर्पति । ऊर्द्ध्वजिह्वः स्थिरो भूत्वा सोमपानं करोति यः । मासार्द्धेन न सन्देहो मृत्युं जयति योगवित् । इन्धनानि यथा वह्निस्तैलवर्त्तिं च दीपकः । तथा सोमकलापूर्णं देही देहं न मुञ्चति । रसनां वेगयेदूर्द्ध्वं पिबेत्तत् क्षरितं जलम् । गोमांसं भक्षयेन्नित्यं पिबेदमरवारुणीम् । कुलीनस्तमहं मन्ये इतरे कुलघातकाः । गोशब्देनोदिता जिह्वा तत्प्रवेशो हि तालुनि । गोमांसभक्षणं तत्तु महापातकनाशनम् । जिह्वाप्रवेशसंभूतवह्निनोत्पादितः खलु । चन्द्रात् स्रवति यः सारः स स्यादमरवारुणी । नाभिदेशे भवत्येव भास्करो दहनात्मकः । अमृतात्मा स्थितो नित्यं तालुमध्ये तु चन्द्रमाः । वर्षत्यधोमुखश्चन्द्रो ग्रसेदूर्द्ध्वमुखो रविः । ज्ञातव्यं करणं तत्र येन पीयूषमाप्यते । मूर्द्धः षोडशपद्मपत्रगलितं प्राणादवाप्तं हठात् ऊर्द्ध्वास्यो रसनां नियम्य विवरे शक्तिं परां चिन्तयेत् । उत्कल्लोलकलाजलं च विमलं धारामयं यः पिबेत् निर्दोषः स मृणालकोमलवपुर्योगी चिरं जीवति । चुम्बन्ती यदि लम्बिकाग्रमनिशं जिह्वारसस्यन्दिनी सक्षारा कटुकाम्लदुग्धसदृशं मध्वाज्यतुल्यं यथा । व्याधीनां हरणं जरान्तकरणं शास्त्रागमोद्धारणम् तस्य स्यादमरत्वमष्टगुणितं सिद्धाङ्गनाकर्षणम् । सुखितं ज्ञानजनकपञ्चस्रोतःसमन्वितः । तिष्ठति खेचरीमुद्रा तस्मिन् शून्ये निरञ्जने । यत्प्रलयं चापि गतं सुखितं मेरुमूर्द्धतः । तस्मिंस्तत्त्वं प्रवदति सुधीस्तन्मुखं निम्नगानां चन्द्रात् सारः स्रवति च सुधा तेन मृत्युर्नराणाम् । तं बध्नीयात् सुकरणमथो नान्यथा कायसिद्धिः दृष्टा सैषा भुवनविदिता खेचरी योगिवृन्दैः । एकं सृष्टिमयं बीजमेका मुद्रा च खेचरी । एको देवो निरा-लम्ब एकावस्था मनोन्मनी" हठप्र० नानाख्याने ।

उड्डीयानम् ५ "सति वज्रासने पादौ कराभ्यां धारयेद् दृढम् । गुल्फदेशसमीपे च कन्दं तत्र निपीडयेत् । पश्चिमतानमुदरे कुर्याच्च चिबुकं हृदि । शनैः शनैर्यथा प्राणः कन्दसन्धिं निगच्छति" । "उड्डीयानाख्येन बन्धेन वायुः प्रोड्डीयाख्यो ब्रह्मनाड्यां यतोऽसौ । उड्डीयानाख्यस्ततो बन्ध आद्यो सेव्यस्तस्मात् योगिभिः सिद्धिकामैः । अविश्रान्तः प्राणवायुः सदैव यस्मादुड्डीनं हठं संविधत्ते । उड्डीयान स्यात्ततस्तत्र बन्धं धीरो नित्यं साधकः संविधत्ते" हठप्र० ।

मूलबन्धः ६ "गुदं पार्ष्ण्या तु संपीड्य बलादाकुञ्चयेत् तथा । वारंवारं यथा चोर्द्ध्वं समायाति समीरणः । प्राणापानौ नादबिन्दू मूलबन्धेन चैकताम् । गच्छन्तो योगसंसिद्धिं कुरुतो नात्र संशयः । अपानप्राणयोरैक्यं क्षयो मूत्रपुरीषयोः । युवा भवति वृद्धोऽपि सततं मूलबन्धनात्" हठप्र० । "पादमूलेन संपीड्य गुदमार्गं सुयन्त्रितः । बलादपानमाकृष्य क्रमादूर्द्ध्वं सुचालयेत् । कथितोऽयं मूलबन्धो जरामरणनाशनः" । "ऐक्ये प्राणापानयोर्मूत्रपुरीषक्षयाद्वृद्धः स्यात् वयस्थोऽपि मूलात् । भित्त्वा द्वारं याति चोर्द्ध्वं ह्यपाने वह्न्याख्यः । स्याद्वायुनैषा शिखोच्चा । ततो वह्न्यपानौ हृदि प्राणमुष्णं ततोऽन्ते प्रदीप्ताः सदा देहगोऽग्निः । घटे तेन निःश्वस्य सा निद्रिता स्यात् प्रतप्ता समन्तात् क्रमेणैव शक्तिः । परिचये सहसा मनसः स्थितौ झटिति दण्डहतेव भुजङ्गमी । शयनमुत्सृजति क्षुधिता यथा कवलयत्यधरानिलमध्वगम् । बिलं प्रविष्टे पवने भुजङ्गी व्रजेत् सुषुम्नान्तसमीरणानुगा । शक्तिस्ततो योगिभिरेव नित्यं श्रीमूलबन्धोऽभ्यसनीय आदरात्" हठप्र० ।

जालन्धरबन्धः ७ "खेचरी चित्तपीयूषप्रवाहपरिबन्धिनी । जालन्धरोऽमृतमरुत्प्रवाहपरिरोधकः । आकुञ्च्य कण्ठं हृदये निदध्यात् किञ्चित् स जालन्धरबन्ध एषः । अयं करोत्यव्ययमर्कवह्नौ पतत्सुधाया वपुषोऽमरत्वम् । बध्नाति यत् कण्ठशिरासमूहं नाधस्ततो याति नभःसलिलम् । जालन्धरस्तेन कृतः सुसिद्धैः स्यात् कण्ठदुःखौघविनाशहेतुः" । "नृणां कण्ठसङ्कोचनेनैव नाड्यावुभे स्तम्भयेत्तेन मध्यस्थचक्रम् । इदं षोडशारं च नाम्नोक्तमाशु गतं सन्धिवायोः सुधापानमस्तौ । अमृतमहिमसुः क्षरेण नाभिस्थितदहनः प्रपिबन् ज्वलत्यजस्रम् । नि-

खिलकमलगलत्प्रालेयतं तदग्निर्न पिबति पाति बन्धमेव भक्ते' विपरीतकरणोक्त "यत्किञ्चित् स्रवते चन्द्रादमृतं दिव्यरूपि च। तत्सर्वं ग्रसते सूर्य्यस्तेन पिण्डो विनश्यति। तत्रास्ति करणं दिव्यं सूर्य्यस्य मुखवञ्चनम्। गुरूपदेशतो ज्ञेयं न तु शास्त्रार्थकोटिभिः। ऊर्द्ध्वपादोऽन्वधो मस्तकः स्यात् क्षणं प्रथमेऽह्न्यादिमेऽभ्यासवृद्ध्या वर्द्धयेत्। एवमभ्यासतो यामसात्रं यदा मृत्युजित् स्यात्तदा बिन्दुं जयेत्। आरोप्य भूमाविति मस्तकं यो यामत्रयं तिष्ठति चोर्द्ध्वपादः। विध्युक्तवद्धसमीरवेगो मासत्रयात् स्याद्धि तदाऽमरः सः। ऊर्द्ध्वं सोमकलाजलं सुविमलं कण्ठस्थलादूर्द्ध्वतो नासान्ते सुषिरे नयेच्च गमनद्वारं ततः सर्व्वतः। ऊर्द्ध्वास्यो भुवि सन्निपत्य नितरामुत्तानपादः पिबेदेवं यः कुरुते जितेन्द्रियचयो नैवास्ति तस्य क्षयः। नित्याभ्यासादस्य हि जठराग्निर्वृद्धिमायाति। आहारोऽनलस्य सम्पाद्यः साधकाय भूरिशुद्धैः। जितेन्द्रियो यतमानचित्तवृत्त्या प्राणावरोधेन कृतेष्टचिन्तनः विनिश्चलोऽङ्घ्रियुगस्तु तूष्णीं योगं भजन्नेव तदाऽमरो भवेत्। वलितं पलितं चास्य षण्मासादेव दृश्यते। याममात्राभ्यासतोऽयं कालजित् स्यादिति क्रमः" हठप्र०।

**चञ्चिका** हठप्रदीपिकोक्ते प्रबन्धे लम्बिकादिविधिर्दर्शितः तत्रादौ जिह्वयालम्बनाय विधिर्यथा
"तालुमूलगतां यत्नात् जिह्वयाक्रम्य घण्टिकाम्। ऊर्द्ध्वरन्ध्रगते वायौ प्राणस्पन्दो निरुध्यते" तत्करणप्रकारादि "अङ्गुष्ठघर्षयेत्तालुमूलं रसनाशिरामूलमुद्धेव सम्राङ्मतैः। शिराभिर्नृतीक्ष्णैः सदैवक्रुवीनैर्मलं सर्वं नाशोभवेत् तदनुत्तमम्" हठप्र०।

**छेदनम्** "सकण्टकस्नुही वस्त्रपत्रनिभं सुशस्त्रं भगतीक्ष्णधारम्। अङ्गुष्ठपर्वार्द्धसुविस्तृतं तदर्द्धेन्दुतुल्यं विमलं सुरूपम्। दण्डस्तु कार्य्योऽस्य षडङ्गुलोऽपि सुश्लिष्टेन च रोमणात्मम्। उच्चैर्गतोत्संप्रतिबन्धहेतोरग्रभागसंस्थस्य कुचर्म्मणोऽस्याः। अधोर्द्ध्वतन्तूपमरक्तभासो बन्धः कलाया अभितोऽभनाड्याः। मध्ये गतस्योद्भवपीठतोऽस्य छिद्रेत् यवधीपरि नित्यमेव। संछेदनात् प्रागनुचोक्तचूर्णेनाघर्षयेज्जो रसनातलव्रणम्। घटीद्वयं गाढमिति त्रिवारं संछेदनादूर्द्ध्वमतन्द्र आचरेत्। संछेदकर्म्मान्तरमस्ततन्द्रः मस्तालनं दोहनमाविदध्यात्। अहर्निशं तद्गतचित्तवृत्तिः कार्य्याः पटीतोऽलकणास्तु भेदे। दीर्घं वितस्तिप्रमितं च विस्तृतं वेदाङ्गुलं स्यान्मृदुलं वितस्य। सूक्ष्मं कलावेष्टनवस्त्रलक्षणं प्रोक्तं पुरावै रसनाभिचालने। आदौ च चालेन कलां सुयुक्त्या संवेष्ट्य चाङ्गुष्ठकतर्जनीभ्याम्। दोष्णोः सदाकर्षणचालने क्रमभ्यासमालम्ब्य बहिर्विदध्यात्। एवं दृढाभ्यासत एव जिह्वा लम्बा भवेद्वै मृदुला सुपक्वा। आकर्षणेनैव वदेत किञ्चित् सुसाधकः सुस्थिर एकमानसः" हठप्र०। "जिह्वां समाविश्य मधूत्तगन्धचोदेन मस्तालनदोहने सदा। कार्य्या रसज्ञा विधिनेति शीघ्रं स्यात् खेचरी साधकपुङ्गवस्य। संछेदसंचालनदोहनानां षण्मासमभ्यासयुतः सदैव। नश्येत् कलामूलशिराप्रबन्धो नासाग्रसुत्रे रसना स्पृशेत् खम्। छिन्नं कलामूलमलं यदाखिलं छिन्द्यात् क्रमेणात्र शनैस्तदान्तिके। शिरे विलीनारुणवर्णके द्वे युक्त्या सदा च्छेदनयुक्तितो बुधः। यदा चञ्चिका कर्म्मणि स्वं रसज्ञा स्पृशेत् नासिकाग्रं तदा साधकस्य। अलं चञ्चिकाकर्म्मणाऽतु क्रमेण कला प्रत्यहं छिन्नमूलेति दैर्घ्यम्" हठप्र०। "छेदनचालनदोहैः क्रमशः कलां वर्द्धयेत्तावत्। सा यावद्भ्रूमध्यं विशति तदा खेचरी सिद्धिः। एवं कृतेऽथ रसना प्रयात्यतुभ्रूवतान्तविवरम्। तिर्य्यक् कर्णावधि हि चिबुकावधि सा स्वयं याति। अभ्यास इति च मयमव कृतस्तदा रसनेयम्। ब्रह्मद्वारं प्रविशति भित्त्वा भ्रूमध्यमूर्द्ध्वं गता" हठप्र०।

**वज्रोली** ८ "प्राणापानाध्वनोर्द्ध्वं समाकुञ्चनं सुन्दरं सुन्दरी चाभ्यसेत् पूरुषः। याति वज्रोलिकासिद्धिमन्युत्तमां कावलिङ्गैः प्रकृष्टं विन्दुसिद्धिर्यथा। शलाकया धातुगणान्तरोत्थया कनीनिकान्तःपरिमाणयात्मकम्। रन्ध्रे च लिङ्गस्य शनैः प्रवेशनाभ्यासक्रमाद्वायुगतिं समाचरेत्"। अस्यार्थः आदौ मूत्ररोधकेन दुष्टपूतिकाथितौषधसेहदोषोज्झितं विशुद्धसाधनं विधाय ततस्तदल्पविकलाभ्यान्तरं द्वादशाङ्गुलां कनीनिकाप्रसमां सरलां विशुद्धसीसकस्य पक्वां शलाकां शनैर्लघुहस्तेन लिङ्गद्वारे क्रमेण समाहितः सततं विधाय तया तद्द्वारं वायुगतागतक्षमं गुदापान इव कृत्वा प्रथमाभ्यासे पात्रनिहितक्षीरात्क्षेपमूर्द्ध्वानिलाकर्षणविधिना स्तोकं स्तोकं मन्दमूर्द्ध्वमाचरेत्" हठप्र०।
"इति क्रमाभ्यासवृद्ध्या क्षीरपाने भगाश्यतः। दृढे तु कामिनीयोनिपुष्पाकर्षणमभ्यसेत्। स्थानात् संचलितं विन्दुमूर्द्ध्वमाकर्षयेदिति। अभ्यसेत् साधकः सम्यक् या-

वत् स्थिरपदं भवेत् । सन्धितः शरनालेन फूत्कारं वज्रकन्दरे । शनैः शनैः प्रकुर्वीत वायुसञ्चारकारणात्” प्रकारमाश्रयः । “षोड़शाङ्गुलमानां तु प्रकुर्वीत वंशनालिकाम् । षड्ङ्गुलप्रमाणां तां लिङ्गमुखे दत्त्वाथ तन्मुखम् । धृत्वा फूत्कारमन्तःस्थाः कुर्यात् वाढ़ं मुहुर्मुहुः । प्रत्यहं तेन विवृतं लिङ्गद्वारं क्रमाद्भवेत् । ततो नाल्याऽनया तोयमल्पं फूत्कारतोऽन्तरे । लिङ्गरन्ध्रेण चाकृष्येत् क्रमवृद्ध्या सुसाधकः । लिङ्गच्छिद्रेऽथ विवृते क्षीरावर्षं ततो भवेत्” वज्रकन्दरे लिङ्गद्वारे । “अपानमाकृष्य ततो बलेनोर्ध्वं दुग्धमार्द्दविधिक्रमेण । समभ्यसेन्निश्चलमल्पमल्पं भगे पतद्बिन्दुमथोर्ध्वमाहरेत्” हठप्र० ।

तद्भेदः सहजोली “अथ हि कुसुमितायां पुष्पवत्युं स्वमूर्ध्नि क्रमश उपरि कुर्य्यात् कुञ्चितात् लिङ्गनालात् । निज उपगतबिन्दुं सन्निबध्यात् कुर्य्यात् सुरतरसनिमग्नो लिङ्गसञ्चालनानि । बिन्दुः पाण्डुर एष चन्द्र उदितः सूर्य्यो भवेदार्त्तवं बिन्दूरप्रतिमं रवेः पदगतं शुक्रं शशिस्थानके । ऐक्यं साधनयोः स्ववर्णपि न्वयां नो जायतेऽतो रतिरन्योन्यं न्ववधूरते निजमहिम्नैक्यं द्वयोर्विपक्षे । अभ्यासपाटवतया विदधाति योषिदेवं तु रूर्ध्वपरिकर्षणतः सुबिन्दुम् । वदार्त्तवं समभिरक्षति योगिनी सा वज्रोलिरेखिलसिद्धिपदं प्रयाति । शक्तीरजो बिन्दुरथ महेशो द्वयोः सुयोगात् परिलभ्यतेऽखिलम् । वीर्यं निजम् स्वार्त्तवमेतयोस्तनावैक्यं हि वज्रोल्युदिता सुसिद्धा । सहजोली त्वमरोली वज्रोल्या भेदतो भवतः । बिन्दुं देहे विनयात् येन च केन प्रकारेण । वज्रोली मिथुनोत्तरं नरवसूल्या स्वाङ्गलेपनात् सद्भ्यासगणोत्थयाथ हतवा भूत्वा स्वयं संस्थितिः । सैषोक्ता सहजोलिका सुरतुतैराद्यादिनाथैः शुभा वज्रोलीति स्वयं तनोति नियतं भोगेऽतिभुक्तेऽस्ततः । आकृष्योर्ध्वं मलमल्पाल्पकं तद्वारंवारं संसृजेन्मूत्रमालात् । आकृष्योर्ध्वं वायुना यो हठेन नित्यं धत्ते बिन्दुसिद्धिं स याति । इति षण्मासाभ्यासनाद् गुरूक्तपथेन सन्ततं योगी । शान्तिगतः संभोगेन तस्य बिन्दुः क्षयं व्रजति” हठप्र० ।

शक्तिचालनम् । हठप्र० “कुटिलाङ्गी कुण्डलिनी भुजङ्गी शक्तिरीश्वरी । कुटिलारुन्धती दैवीशब्दाः पर्य्यायवाचकाः । कन्दोर्द्ध्वं कुण्डली शक्तिरष्टधा कुण्डलाकृतिः । ब्रह्मद्वारमुखं नित्यं मुखेनाच्छाद्य तिष्ठति । येन मार्गेण गन्तव्यं ब्रह्मस्थानं निरामयम् । मुखेनाच्छाद्य तद्द्वारं प्रसुप्ता परमेश्वरी । उद्घाटयेत् कपाटं तु यथा कुञ्चिकया हठात् । कुण्डलिन्या तथा योगी मोक्षद्वारं विभेदयेत् । कन्दोर्द्ध्वे कुण्डलीशक्तिर्बुद्धा मोक्षाय योगिनाम् । बन्धनाय च मूढानां यस्तां वेत्ति स योगवित् । साब्धिद्वीपशैलानामाधारः शेषकुण्डली । सर्वेषां योगतन्त्राणामाधारः कुण्डली तथा । कुण्डली कुटिलाकारा सर्पवत् परिकीर्त्तिता । सा शक्तिश्चालिता येन स मुक्तो नात्र संशयः । गङ्गायमुनयोर्मध्ये बालरण्डां तपस्विनीम् । बलात्कारेण गृह्णीयात् तद्विष्णोः परमं पदम् । इड़ा भगवती गङ्गा पिङ्गला यमुना नदी । इड़ापिङ्गलयोर्मध्ये बालरण्डा सरस्वती । पुच्छे प्रगृह्य भुजगीं सुप्तामुद्बोधयेच्च ताम् । निद्रां विहाय सा शक्तिरूर्द्ध्वमुत्तिष्ठते हठात् । परिस्थिता चैव फणावती सा प्रातश्च सायं प्रहरार्द्धमात्रम् । प्रपूर्य्य सूर्य्यात् परिधानयुक्त्या प्रगृह्य नित्यं परिचालिता सा । वितस्तिप्रमितं दीर्घं विस्तारं चतुरङ्गुलम् । मृदुलं धवलं प्रोक्तं वेष्टनाम्बरलक्षणम् । वज्रासनस्थितो योगी चालयित्वा तु कुण्डलीम्” हठप्र० ।

तदङ्गसूर्य्यभेदनम् “सूर्य्यादनन्तरं भस्त्रां कुण्डलीमाशु बोधयेत् । भानोराकुञ्चनं कुर्य्यात् कुण्डलीं चालयेत्ततः । मृत्युवक्त्रगतस्यापि तस्य मृत्युभयं कुतः । नासादक्षिणमार्गवाहिपवनात् प्राणोऽतिदीर्घीकृतः चन्द्राम्भः परिपूरिताग्रततनुः प्राग्घण्टिकामस्तका । भिन्दन् कालविशालवह्निवशगान् भूरन्ध्रनाड़ीगणान् तत्कार्य्यं कुरुते पुनर्नवतरं जीर्णद्रुमस्कन्धवत् । कुण्डलीं चालयित्वा तु कुर्य्याद्भस्त्रां विशेषतः । एवमभ्यसतो नित्यं यमिनः शङ्कते यमः । सदाभ्यसेत् सूर्य्यभेदमुज्जायीं चापि शीतलीम् । एवमभ्यासयुक्तस्य यमस्य यमिनः कुतः । मुहूर्त्तद्वयपर्य्यन्तं निर्भरं चालनादसौ । ऊर्द्ध्वमाकृष्यते किञ्चित् सुषुम्णायां गतकुण्डली । मुहूर्त्तद्वयपर्य्यन्तं निर्भरं चालनादसौ । ब्रह्मचर्य्यरतस्यैव नित्यं हितमिताशनैः” हठप्र० ।

समाधिक्रमः “अथेदानीं प्रवक्ष्यामि समाधिक्रममुत्तमम् । मृत्युघ्नं च सुखोपायं ब्रह्मानन्दकरं परम् । सलिले सैन्धवं यद्वत् साम्यं भजति योगतः । तथात्ममनसोरैक्यं समाधिः सोऽभिधीयते । राजयोगस्य माहात्म्यं को वा जानाति तत्त्वतः । ज्ञानान्मुक्तिः स्थितिः सिद्धिः गुरुवाक्येन लभ्यते । दुर्लभो विषयत्यागो

दुर्लभं तत्त्वदर्शनम् । दुर्लभा सहजावस्था सद्गुरोः करुणां विना । विविधैरासनैः कुम्भैर्विचित्रकरणैरपि । प्रबुद्धायामादिशक्तौ प्राणः शून्ये विलीयते । उत्पन्नशक्तिबोधस्य त्यक्तनिःशेषकर्मणः । योगिनः सहजावस्था स्वयमेव प्रकाशते । सुषुम्णावाहिनि प्राणे शून्ये विशति मानसे । तदा समस्तकर्माणि निर्मूलयति कर्मवित् । अमलो निर्मलः शून्यं जगदेतच्चराचरम् । चित्ते समत्वमापन्ने वायुं व्रजति मध्यमे । एषाऽमरोली वज्रोली सहजोली मताऽपि च । ज्ञानं कुतो मनसि जीवति देवि ! तावत् प्राणेऽपि जीवति मनो म्रियते न तावत् । प्राणमनोद्वयमिदं विलयं प्रयाति मोक्षं स गच्छति नरो न कथञ्चिदन्यः । रसस्य मनसश्चैव चञ्चलत्वं स्वभावतः । रसो बद्धो मनो बद्धं किं न सिध्यति भूतले । मूर्च्छितो हरते व्याधिं मृतो जीवयति स्वयम् । बद्धः खेचरतां धत्ते रसो वायुश्च भैरवि ! । इन्द्रियाणां मनो नाथो मनोनाथस्तु मारुतः । मारुतस्य लयो नाथः स लयो नादमाश्रितः । अयमेव तु मोक्षाख्यो मास्तु वापि मतान्तरे । मनःप्राणलयो नादमेकीकृत्य प्रवर्त्तते । प्रनष्टोच्छ्वासनिःश्वासप्रध्वस्तविषयग्रहः । निश्चेष्टो निर्विकारश्च लयं यान्ति च योगिनः । उच्छिन्नसर्वसङ्कल्पो निःशेषाशेषचेष्टितः । स्वावगम्यो लयः कोऽपि मनोवाचामगोचरः । यत्र दृष्टिर्लयस्तत्र भूतेन्द्रिय सनातनी । स्यात् शक्तिः सर्वभूतानां दृष्टिर्लक्ष्ये न सङ्कुला । वेदशास्त्रपुराणानि सामान्यगणिका इव । एकैव शाम्भवी मुद्रा सर्वतन्त्रेषु गोपिता । अन्तर्लक्ष्यं बहिर्दृष्टिर्निमेषोन्मेषवर्जिता । एषा तु शाम्भवी मुद्रा सर्वतन्त्रेषु गोपिता । अन्तर्लक्ष्यविलीनचित्तपवनो योगी यदा वर्त्तते दृष्ट्या निश्चलतारया बहिरसौ पश्यन्नपश्यन्नपि । मुद्रेयं खलु शाम्भवी भवति वायुष्मत्प्रसादाद्गुरोः शून्याशून्यविवर्जितं स्फुरति यत्तत्त्वं पदं शाम्भवम् । अर्द्धोद्घाटितलोचनः स्थिरमना नासाग्रदत्तेक्षणः । चन्द्रार्कावपि लीनतामुपनयन्निस्पन्दभावान्तरे । ज्योतीरूपमशेषबाह्यरहितं देदीप्यमानं परम् तत्त्वं तत्पदमेव वस्तु परमं वाच्यं किमत्राधिकम् । श्रीशाम्भव्याः खेचर्याश्च अवस्थाधामभेदतः । तारे ज्योतिषि संयोज्य किञ्चिदुन्नमयेद् भ्रुवौ । पूर्वयोगस्य मार्गोऽयमुन्मनीकारकः क्षणात् । केचिदागमजालेन केचिन्निगमसङ्कुलाः । केचित्तर्केण मुह्यन्ति नैव जानन्ति तारकम् । यत्तालाद्यद्वितीयशिखरे मेरुमूले तदस्ति तत्त्वं चैतत् प्रवदति सुधीः तन्मुखं निम्नगानाम् । चन्द्रात् सारः स्रवति वपुषस्तेन मृत्युर्नराणां बध्नीयात् सुकरणमिदं नान्यथा कार्यसिद्धिः । दिवा न पूजयेल्लिङ्गं रात्रौ नैव प्रपूजयेत् । सततं पूजयेल्लिङ्गं दिवारात्रौ च पूजयेत् । सुषिरं ज्ञानजनकं पञ्चस्रोतःसमन्वितम् । तिष्ठते खेचरी मुद्रा तस्मिन् स्थाने न संशयः । चित्तं चरति खे यस्माज्जिह्वा चरति खे गता । तेनैव खेचरी नाम मुद्रा सिद्धैर्नमस्कृता । इडापिङ्गलयोर्योगे शून्ये चैवानिलं ग्रसेत् । तिष्ठते खेचरी मुद्रा तत्र सत्यं पुनः पुनः । सूर्याचन्द्रमसोर्मध्ये निरालम्बे तले पुनः । संस्थिता व्योमचक्रे या सा मुद्रा नाम खेचरी । सा नवोद्दिता धारा साक्षाच्च शिववल्लभा । पूरयेन्मारुतं दिव्यं सुषुम्णापश्चिमे मुखे । पुरस्ताच्चैव पूर्य्येत निश्चिता खेचरी भवेत् । अभ्यसेत् खेचरीमुद्रामुन्मनी सा प्रजायते । अभ्यसेत् खेचरीं तावत् स्याद्योगनिद्रितः । संप्राप्तयोगनिद्रस्य कालो नास्ति कदाचन । भ्रुवोर्मध्ये शिवस्थानं मनस्तत्र विलीयते । ज्ञातव्यं तत्पदं तुर्य्यं तत्र कालो न विद्यते । चन्द्रसूर्य्यद्वयोर्मध्ये मुद्रां दद्याच्च खेचरीम् । निरालम्बे महाशून्ये व्योमचक्रे व्यवस्थिताम् । निरालम्बं मनः कृत्वा न किञ्चिदपि चिन्तयेत् । सबाह्याभ्यन्तरे व्योम्नि घटवत् तिष्ठति ध्रुवम् । बाह्यवायुर्यथा लीनः तथा मध्ये न संशयः । स्वस्थानं गच्छति प्राणः सूर्य्याङ्के पवने तथा । एवमभ्यस्यमानस्य वायुमार्गे दिवानिशम् । अभ्यासाज्जीर्य्यते वायुर्मनस्तत्रैव लीयते । अमृतं प्लावयेद्देहमापादतलमस्तकम् । सिध्यते च महायोगी महाबलपराक्रमः । शक्तिमध्ये मनः कृत्वा मनः शक्तेस्तु मध्यगम् । मनसा चित्तमालोक्य धारयेत् परमं पदम् । खमध्ये कुरु चात्मानमात्ममध्ये च खं कुरु ! । आत्मानं खमयं कृत्वा न किञ्चिदपि चिन्तयेत् । बाह्यचिन्ता न कर्त्तव्या तथैवान्तरचिन्तनम् । सर्वचिन्तां परित्यज्य न किञ्चिदपि चिन्तयेत् । सङ्कल्पमात्रकलनाच्च जगत् समग्रं सङ्कल्पमात्रकलनाद्धि मनोविलासम् । सङ्कल्पमात्रमिदमुत्सृज निर्विकल्पमाश्रित्य निश्चयमवाप्नुहि राम शान्तिम् । कर्पूरमनले यद्वत् सैन्धवं सलिले यथा । तथा सन्धीयमानं च मनस्तत्त्वे विलीयते । ज्ञेयं सर्वमतीतञ्च ज्ञानञ्च मन उच्यते । ज्ञानं ज्ञेयं मनश्चैव नान्यः पन्था द्वितीयकः । मनो

दृश्यमिदं सर्वं यत्किञ्चित् सचराचरम्। मनसोह्युन्मनीभावे द्वैतभावः प्रणश्यति। ज्ञेयवस्तुपरित्यागाद्विलयं याति मानसम्। मानसे विलयं याते कैवल्यमपि कल्पते। लयो लय इति प्राहुः कीदृशं लयलक्षणम्। अपुनर्वासनोत्थानो लयोविषयविस्मृतिः। एवं नानाविधोपायाः सम्यक्स्वानुभवान्विताः। समाधिमार्गाः कथिताः पूर्वाचार्य्यैर्महात्मभिः। सुषुम्णायै कुण्डलिन्यै सुधायै चन्द्रजन्मने। मनोन्मन्यै नमस्तुभ्यं महाशक्त्यै चिदात्मने। अशक्यतत्त्वबोधानां मूढ़ानामपि सम्मतम्। प्रोक्तं गोरक्षनाथेन नादोपासनमुच्यते" हठप्र०।

नादानुसन्धानप्रशंसा यथा "आदिनाथेन सपादकोटिप्रकाराः कथिता जयन्ति। नादानुसन्धानकमेव कार्य्यं मन्यामहे नान्यतमं लयानाम्। मुक्तासनस्थितो योगी मुद्रां सन्धाय शाम्भवीम्। शृणुयाद्दक्षिणे कर्णे नादमेकान्तके सुधीः। काष्ठैः प्रवर्त्तितो वह्निः काष्ठेन सह शाम्यति। नादे प्रवर्त्तितं चित्तं नादेन सह लीयते। श्रवणपुटनयननासानिरोधनेनैव कर्त्तव्यः। सुषुम्णामार्गेण स्फुटममलः श्रूयते नादः" हठप्र०।

"आरम्भश्च घटश्चैव तथा परिचयस्तथा। निष्पत्तिश्चेति योगेषु स्यादवस्थाचतुष्टयम्। विस्मृत्य सकलं बाह्यं नादे दुग्धाम्बुवन्मनः। एकीभूयाथ सहसा चिदाकाशे विलीयते। औदासीन्यपरो भूत्वा सदाभ्यासेन संयमी। उन्मनीकरणं सद्यो नादमेवावधारयेत्"। शीतकाले चौपटी वा कटी वा पथ्याहारे गोपथे वा पथे वा भक्ष्ये भिक्षाहन्तनारण्यकन्दं पाणौ द्रोणीकर्परं भोज्यपात्रम्। सर्वचिन्तां परित्यज्य सर्वकाले च सर्वदा। नादमेवानुसन्धत्ते नादे चित्तं विलीयते" हठप्र०।

आरम्भावस्था "ब्रह्मग्रन्थेर्भवेद्भेदादानन्दः शून्यसम्भवः। विचित्रक्वणको देहे श्रूयतेऽनाहतो ध्वनिः। सम्पूर्णहृदये शून्ये आरम्भो योगवान् भवेत्" हठप्र०।

घटावस्था "द्वितीयायां घटीकृत्य वायुर्भवति मध्यमः। दृढ़ासनो भवेद्योगी ज्ञानी देवसमस्तथा। विष्णुग्रन्थेर्यदा भिन्नः परमानन्दसूचकः। अतिशून्यविभेदश्च भेरीशब्दस्तथा भवेत्" हठप्र०।

परिचयावस्था "[illegible] तु जायते मर्द्दलध्वनिः। महाशून्यं तदा याति सर्वसिद्धिसमाश्रयम्। चित्तानन्दं तदा [illegible] सहजानन्दसम्भवः। दोषदुःखक्षुधानिद्राजराव्याधिविवर्जितः। रुद्रग्रन्थिं ततो भित्त्वा सर्वपीठगतोऽनिलः" हठप्र०।

निष्पत्त्यवस्था "निष्पत्तौ वैणवः शब्दः क्वणद्वीणाक्वणो भवेत्। एकीभूतं तदा चित्तं राजयोगाभिधायकम्। सृष्टिसंहारकर्त्तासौ योगीश्वरसमो भवेत्। अस्तु वा मास्तु वा मुक्तिरत्रैवाखण्डितं सुखम्। लयोद्भवमिदं सौख्यं राजयोगादवाप्यते। राजयोगपदं प्राप्तुं सुखोपायश्च चेतसाम्। हठं विना राजयोगो राजयोगं विना हठः। मत्तः प्रत्ययसन्धायी जायते नादजो लयः" हठप्र०।

नादानुसन्धानं तत्फलञ्च "नादानुसन्धानसमाधिभाजां योगीश्वराणां हृदये प्रवृद्धम्। आनन्दमेकं वचसामगम्यं जानाति तत्त्वं गुरुनाथ एव। कर्णौ पिधाय हस्ताभ्यां यं शृणोति ध्वनिं मुनिः। तत्र चित्तं स्थिरीकुर्य्याद्यावत् स्थिरपदं व्रजेत्। सर्वचिन्तां परित्यज्य सावधानेन चेतसा। नादमेवानुसन्धत्ते योगसाम्राज्यमिच्छता। मकरन्दं पिबन् भृङ्गो गन्धान्नापेक्षते यथा। नादासक्तं तथा चित्तं विषयान्न हि काङ्क्षति। नादग्रहणतश्चित्तमन्तरङ्गभुजङ्गमः। विस्मृत्य सर्वमेकाग्रं कुत्रचिन्न हि धावति। मनोमत्तगजेन्द्रस्य विषयोद्यानचारिणः। नियामनसमर्थोऽयं निनादो निशिताङ्कुशः। नादोऽन्तरङ्गसारङ्गबन्धने वागुरायते। अन्तरङ्गतुरङ्गस्य रोधे बाधायतेऽपि च। अन्तरङ्गस्य यमिनो वाजिनः परिघायते। नादोपास्तिरतो नित्यमवधार्य्योपि योगिनः। बध्यमानो नादोऽयं बाह्यमावर्त्तयेत् ध्वनिम्। पद्मादिश्लेषसङ्कं जित्वा योगी सुखी भवेत्। श्रूयते प्रथमाभ्यासे नादो नानाविधो महान्। वर्द्धमाने ततोऽभ्यासे श्रूयते सूक्ष्मसूक्ष्मतः। आदौ जलधिजीमूतभेरीनिर्झरनिस्वनः। मध्ये मर्द्दलशङ्खोत्थघण्टाकाहलजस्तथा। अन्ते तु किङ्किणीवंशवीणाभ्रमरनिस्वनः। इति नानाविधो नादः श्रूयते देहमध्यतः। महति श्रूयमाणेऽपि मेघभेर्य्यादिके ध्वनौ। तत्र सूक्ष्मतरं ध्यानं नादमेव परामृशेत्। यत्र कुत्रापि वा नादे लगति प्रथमं मनः। तत्रैव तत् स्थिरीभूय तेन सार्द्धं विलीयते। घण्टानिनादसक्तस्य शब्दान्तःकरणस्य तु। अनाहतस्य शब्दस्य तस्य शब्दस्य यो ध्वनिः। ध्वनेरन्तर्गतं ज्योतिर्ज्ञेयान्तर्गतं मनः। तन्मनो विलयं याति तद्विष्णोः परमं पदम्। तावदाकाशसङ्कल्पो यावत् शब्दः प्रवर्त्तते। निःशब्दं तत्परं ब्रह्म परमात्मा समीर्य्यते। यत् किञ्चि-

न्नादरूपेण श्रूयते शक्तिरेव सा। यस्तत्त्वान्तो निराकारः स एव परमेश्वरः। नादः शक्तिरिति ज्ञेयं नादस्थानं सदाशिवः। ज्ञेयस्थाने विलीने च सोन्मन्येवावशिष्यते। नादो यावान् मनस्तावन्नादान्ते तु मनोन्मनी। सशब्दं कथितं व्योम्नि निःशब्दं ब्रह्म कथ्यते। सदा नादानुसन्धानात् संक्षीणाः सर्ववासनाः। निरञ्जने विलीयन्ते निश्चितं मावनात्मनः। नादकोटिसहस्राणि बिन्दुकोटिशतानि च। सर्वे तत्र लयं यान्ति यत्र देवी निरञ्जना" हठप्र०।

हठयोगफलम् ईश्वरमीनसंवादे "यदा परिचये शक्तिश्चित्तोर्ध्वमुपैति खम्। षट्चक्राणि क्रमाद्भित्त्वा तदा सुवर्णामादयः। पुरा ग्रन्थित्रयं भित्त्वा यात्यूर्ध्वं मरुतो रगी। स्फुटन्ति पृष्ठवंशास्थिग्रन्थयो योगिनस्तदा। वायुस्तदैव सर्वाङ्गे लीनो भवति सङ्गतः। धीरैः केवलकुम्भः स उच्यते सर्वसिद्धिदः। मूलाधारं यदाऽपानो भित्त्वोर्द्ध्वं याति वेगतः। तदातीतानागतज्ञो योगी भवति सर्वधीः। स्थितिं भित्त्वाऽर्द्धगाऽपानक्षोभिता स्वाद्यदोरगी। तदा नादोत्पत्तिरस्य जायते योगिनो हृदि। मृदङ्गनादोत्पत्तिस्तु मणिपूरभिदा भवेत्। अनाहतविभेदेन घण्टाध्वनिरुदेति च। विशुद्धचक्रभेदेन यन्त्रनादः प्रजायते। यदा त्वाज्ञाचक्रभेदस्तदोपैति मनोलयम्। सहस्रदलकमलं वायुना शक्तिराव्रजेत्। यदा तदा सुनिश्चिष्टाकल्पं सहजेऽव्ययम्"। पवनयोगसंग्रहे "महामुद्रां समभ्यस्य महाबन्धमतः परम्। महावेधञ्च नियत प्रकुर्यात्कुम्भचालनम्। आसनं सुदृढं बद्ध्वा मूलबन्धं विधाय च। उड्डियानं तथा बन्धं ततो जालन्धराभिधम्"। "अभ्यसेदिति सम्बन्धः।

"प्राणे सुषुम्णां सम्प्राप्ते नादोऽन्तः श्रूयतेऽष्टधा। घण्टादुन्दुभिशङ्खाब्धिवीणावेणवादितालवत्। तनूनपात्तडितारातारेशतपनोपमम्। ब्रह्मनाडीं गते प्राणे विश्वरूपं प्रकाशते। तथाच विश्वरूपाचार्याः "यदा संक्षीयते प्राणो मानसं च प्रलीयते। तदा समरसत्वं यत्समाधिः सोऽभिधीयते। मनःस्थैर्यात् स्थिरो वायुस्ततो बिन्दुः स्थिरो भवेत्। बिन्दुस्थैर्यात् सदा सत्त्वं पिण्डस्थैर्यं प्रजायते"। सैषा शिष्यसिद्धया साधकस्य राजयोगारम्भ इति तथा च हठप्रदीपिकायाम्। "प्रनष्टोच्छ्वासनिःश्वासः प्रध्वस्तविषयज्वरः। निश्चेष्टो निर्विकारश्च लयो जयति योगिनः। तथा चोक्तं ग्रन्थान्तरे "शुष्के मले तु वायोः कुण्डलिश्चलिता ततः। अधोगतिं दिच्छायाशु भवत्यूर्द्ध्वं सुखप्लुतः। अपानस्तूर्द्ध्वगो भूत्वा वह्निना सह गच्छति। प्राणस्थानं ततो वह्निः प्राणापानौ च सत्वरम्। मिलित्वा कुण्डलीं नीत्वा प्रसुप्तां कुण्डलीं पुनः। प्रबुद्धा विंशतिस्थानं सुषुम्णा वक्त्रगन्धिकम्। ब्रह्मग्रन्थिं ततो भित्त्वा रजोगुणसमुद्भवम्। सुषुम्णावदनस्यास प्रयात्यूर्द्ध्वञ्च सत्वरम्। विष्णुग्रन्थिं प्रयात्युच्चैः सत्वज हृदि संस्थितम्। वेगेन महता गच्छेद्विष्णुग्रन्थिं विभिद्य सा। ऊर्द्ध्वं गच्छति वक्त्रान्ते रुद्रग्रन्थिस्तमोभवः। तत ऊर्द्ध्वं सुषुम्णाया याति शीतांशुमण्डलम्। आकाशाख्यं तु तच्चक्रं दलैः षोडशभिर्वृतम्। तत्र शीतांशुसम्भूतं द्रावं शोषयतेऽनिशम्। चलिता प्राणवेगेन रक्तपित्तरवेग्रहम्" हठस०।

"योगिनः कालवञ्चनोपायो यथा "ज्ञात्वा कालं निजं योगी लयस्थानं समाश्रितः। युञ्जीत योगं कालस्य वञ्चनाय यथाक्रमम्। बद्धसिद्धासने देहं पूरयेत् प्राणवायुना। कृत्वा दण्डस्थिरं बुद्ध्या दश द्वाराणि रोधयेत्। बद्ध्वा च खेचरीं मुद्रां ग्रीवायाञ्च जलन्धरीम्। अपाने मूलबन्धञ्च उड्डियनं तथोदरे। उत्थाप्य भुजगीं शक्तिं मूलाधाराम्बुजस्थिताम्। सुषुम्णान्तर्गतां पञ्चचक्राणां भेदिनीं शिवाम्। जीवं हृदाश्रयं नीत्वा यान्तीं बुद्धिमनोयुताम्। सहस्रदलमध्यस्थशिवे लीनां सुधारयेत्। ततः सुधाकरोद्भूतमस्रुतं तेन मूलतः। विसृन्तीं सकलं देहं प्लावयन्तीं विचिन्तयेत्। तया सार्द्धं ततो योगी शिवैकात्मतां व्रजेत्। परानन्दमयो भूत्वा चिद्वृत्तिमपि संत्यजेत्। ततोऽखण्डमनाभाससद्भावविवर्जितम्। सर्वसङ्कल्पनाहीनं कथं कालो निहन्ति तम्। स एव कालः सर्वेशः सर्वो नास्त्यतःपरः। कः केन हन्यते तत्र म्रियते नापि कश्चन। ततो व्यतीते समये कालस्य भ्रान्तिरूपिणः। योगी सुप्तोत्थित इव प्रतिबोधे प्रबोधितः। एवं सिद्धो भवेद्योगी वञ्चयित्वा विधानतः। कालं कलितसंसारपौरुषेणाद्भुतं ध्रुवम्। तस्मिन्भुवने योगी विचरल्लोक एव सः। पश्यन् संसारवैचित्र्यं स्वेच्छया निरहङ्कृतिः" हठस०।

**हठालु** पु० हटः प्लवमानः आलुरिव। कुम्भिकायाम् (पाना) शब्दच०। [धरणिः।

**हठी** स्त्री हठ-अच् गौरा० ङीष्। वारिपर्ण्याम् (पाना)

**हडि** पु० हठ-इन् पृषो०। पशुमारणसाधने काष्ठयन्त्रभेदे (हाड़िकाठ) शब्दर०। [शब्दमा० स्त्रियां ङीप्।

**हडिक** पुस्त्री० हठ-इकक् पृषो०। नीचजातिभेदे (हाड़ि)

**हड्ड** न० हठ-ड डस्य नेत्त्वम् पृषो०। अस्थि (हाड)। संज्ञायां कन्। नीचजातिभेदे (हाड़ि) शब्दमा०। इन् हड्डिरप्यत्र। [शब्दच०।

**हड्डज** न० हड्डात् जायते जन-ड। अस्थिसारे मज्जायां

**हड्डिक** पु० हडिक-स्वार्थे क। (हाड़ि) जातिभेदे स्त्रियां जातित्वात् ङीष्। स च यथा "चण्डालकन्यायां नेटवीर्य्येण शौनक!। बभूवतुस्तौ द्वौ पुत्रौ हड्डिकः शौण्डिकस्तथा" ब्रह्मवै० ब्र०ख० १०अ०।

**हण्डा** स्त्री हन-डा डस्य नेत्त्वम्। १हड इति ख्यातपात्रभेदे (हाँड़ा) नाट्योक्तौ नीचसम्बोधने अव्य०। हञ्जावत् आवन्त्योऽपि शेषार्थे स्त्री भरतः।

**हण्डिका** स्त्री क्षुद्रा हण्डा कन्। क्षुद्रे मृत्पात्रे (हाँड़ि)।

**हण्डिकासुत** पु० हण्डिकायाः सुत इव। क्षुद्रे मृण्मये हण्डिकाकारे (हाँड़ि) त्रिका०। [अमरः।

**हण्डे** अव्य० हन-डे डस्य नेत्त्वम्। नाट्योक्तौ नीचसम्बोधने

**हत** त्रि० हन-क्त। १नाशिते २प्रतिहते ३प्रतिबद्धे ४आशारहिते अमरः ५गुणिते च। भावे क्त। ६हनने ७गमने च न०।

**हतक** त्रि० हत इव नष्टप्रायत्वात् कन्। नष्टप्राये (मड़ा)।

**हताश** त्रि० हता आशा यस्य। १आशाशून्ये २निर्दये ३पिशुने च मेदि० ४वन्ध्ये शब्दर०।

**हति** स्त्री हन-भावे क्तिन्। १हनने २मारणे ३व्याघाते ४अपकर्षे ५गुणने च।

**हत्नु** पु० हन-क्त्नु। १व्याधौ २शस्त्रे च उणा०।

**हत्या** स्त्री हन-भावे क्यप्। १मारणे वधे प्राणवियोगानुकूलव्यापारे "ब्रह्महत्या सुरापानम्" स्मृतिः २हनने च।

**हथ** त्रि० हन-क्थ। विषण्णे उणादि०।

**हद** विष्ठोत्सर्गे भ्वा० आ० अक० अनिट्। हदते अहत्त।

**हद्दा** स्त्री ताजकोक्ते पञ्चवर्गैक्यानयनोपयोगिनि ग्रहभेदस्वामिकराशिभेदस्यांशभेदे यथोक्तं नील०ता०

"मेषेऽङ्कतर्काष्टशरेषुभागा जीवास्फुजिज्ज्ञारशनैश्चराणाम्। वृषेऽष्टषण्णागशरानलांशाः शुक्रज्ञजीवार्किकुजेशहद्दाः। युग्मे षडङ्गेषुनगाङ्गभागाः सौम्यास्फुजिज्जीवकुजार्किहद्दाः। कर्केऽद्रितर्काङ्गनगाब्धिभागाः कुजास्फुजिज्ज्ञेज्यशनैश्चराणाम्। सिंहेऽङ्गभूताद्रिरसाङ्गभागा देवेज्यशुक्रार्किबुधारहद्दाः। स्त्रियां नगाशाब्धिनगाब्धिभागाः सौम्योशनोजीवकुजार्किनाथाः। तुले रसाष्टाद्रिनगाब्धिभागाः कोणज्ञजीवास्फुजिदारनाथाः। कीटे नगाब्ध्यष्टशराङ्गभागाः भौमास्फुजिज्ज्ञेज्यशनैश्चराणाम्। चापे रवीशाब्धिपञ्च वेदा जीवास्फुजिज्ज्ञारशनैश्चराणाम्। मृगे नगाद्र्यष्टयुगश्रुतीनां सौम्ये ज्यशुक्रार्किकुजेशहद्दाः। कुम्भे नगाङ्गाद्रिशरेषुभागाः ज्ञशुक्रजीवारशनैश्चराणाम्। मीनेऽर्कवेदानलनन्दपक्षाः सितेज्यसौम्यारशनैश्चराणाम्। त्रिंशत्स्वभे विंशतिरस्त्रभे स्वे हद्देऽत्र ५ चन्द्राष्टगकं द्रिकाणे"।

**हन** वधे गतौ च अदा० प०सक० अनिट्। हन्ति प्रणिहन्ति प्रहन्व (स्वः) जहि अवधीत्। जघान कर्मणि अघानि अवधि। णिच् घातयति जिघांसति जघंन्यते "कुञ्जं हन्ति कृशोदरि" इत्यादावालङ्कारिकाः गतौ निहतार्थतामाहुः।

अभि+आघातभेदे केनचित् पदार्थेन संयोगभेदे अभिघातः।

अव+तुषाद्यपसरणार्थव्यापारभेदे व्रीहीनवहन्ति। [घातः।

आ+केनचित् पदार्थेन संयोगानुकूलव्यापारे आहन्ति आ-स्वाङ्गकर्मणि अकर्मत्वे च आत्म० वक्ष आहते।

प्रति आ+प्रत्याघाते प्रतिबन्धे प्रत्याहन्ति। [व्याघातः

वि+आ परस्परेण विरोधे विशेषेण ताडिते च व्याहन्ति

उद्+ऊर्ध्वं गतौ उत्तोल्य हनने च।

उप+उद्+आरम्भे उपोद्घातः आरम्भार्थः सङ्गतिभेदः।

नि+निशेषेण हनने स्वरान्तरघातेन उदात्तस्वरसम्पादने च

निर्+निःशेषेण हनने वज्रादिशब्दे च। "निर्घाते भूमिचलने मनुः।

परा+प्रतिबन्धे निरोधे।

प्रति+प्रतिरोधे प्रतिकूलगतौ च। [घ्नन्ति योधाः।

वि+अति+परस्परहनने व्यतिहारेऽपि न आत्म०। व्यति-

सम्+सम्यक् हनने समूहभावे अक०।

हन् अव्य० हन-भावे विच्। १रुषोक्तौ २अनुनये च मेदि०। कर्त्तरि विच्। ३हननकर्त्तरि त्रि० वृत्रहा ब्रह्महा।

**हन** त्रि० हन कर्त्तरि अच्। हननकर्त्तरि सि० कौ०।

**हनन** न० हन-भावे ल्युट् "स्यात् प्राणवियोगफलव्यापारो हननं स्मृतम्" इत्युक्ते १व्यापारभेदे २गुणने च। [रत्नमा०।

**हनील** पु० हन-इन् ङीप् हन्यां लीयते ली-ड। केतकीवृक्षे

**हनु(नू)** पुस्त्री० हन-उन् स्त्रीत्वे वा-ऊङ्। १कपोलद्वयोपरिस्थे मुखभागभेदे २हट्टविलासिन्यां स्त्री अमरः।

३रोगे ४अस्त्रभेदे ५स्मृतौ च स्त्री जटाधरकोषः ।

**हनुग्रह** पु० हनुजाते रोगभेदे तन्निदानादि "जिह्वानिर्लेखनाच्छुष्कभक्षणादभिघाततः । कुपितो हनुमूलस्थः स्रंसयित्वाऽनिलो हनुम् । करोति विवृतास्यत्वमथवा संवृतास्यताम् । हनुग्रहः स तेन स्यात् कृच्छ्रं चर्वणभाषणम्" । स्रंसयित्वा अधःकृत्वा विवृतास्यत्वं व्यात्तमुखत्वम् । निर्लेखनं कर्षणम् शुष्कं चणकादि संवृतास्यत्वं दन्तलग्नताम्" भावप्र० हनुस्तम्भोऽप्यत्र ।

**हनु(नू)मत्** पु० हनु(नू)+अस्त्यर्थे मतुप् । रामस्य अनुचरे अञ्जनागर्भजाते पवनतनये वानरभेदे त्रिका० ।

**हनूष** पुंस्त्री० हन–ऊषन् । राक्षसे त्रिका० स्त्रियां ङीष् ।

**हन्त** अव्य० हन–त । १हर्षे २अनुकम्पायां ३विषादे अमरः । ४वाक्यारम्भे ५आर्त्तौ ६वादे ७सम्भ्रमे शब्दच० । ८खेदे मेदि० ९अन्तकल्पने च अजयपालः ।

**हन्तकार** पु० हन्त इत्यस्य कारः करणं उच्चारणम् वा कृ–घञ् । १अतिथये अन्नदाने २हन्तशब्दप्रयोगे च ।

**हन्तु** पु० हन–तुन् । १मृत्यौ २वधे च ।

**हन्तृ** त्रि० हन–तृच् । १हननकर्त्तरि २सततहननानुशीलयितरि च स्त्रियां ङीप् । "महिषासुरहन्त्र्याश्च प्रतिष्ठा दक्षिणायने" देवप्र०त० ।

**हन्न** त्रि० हद–क्त । कृतपुरीषोत्सर्गे अमरः ।

**हपुषा** स्त्री हेति पुष्यति पुष–क । मरीचतुल्यवर्त्तुलकृष्णवर्णवस्तुनि वणिग्द्रव्यविशेषे । पृषो० षस्य षः तत्रार्थे । "हपुषा हपुषा विस्रा पराऽश्वत्थफला स्मृता । मत्स्यगन्धा ह्रीहन्त्री विषघ्नी ध्वाङ्क्षनाशिनी । हपुषा दीपनी तिक्ता कटूष्णा तुवरा गुरुः । पित्तोदरप्रमेहार्शो ग्रहणीगुल्मशूलहृत् । पराप्येतद्गुणा प्रोक्ता रूपभेदो द्वयोरपि" भावप्र० ।

**हम्** अव्य० हा–डमु । १रुषोक्तौ २अनुनये च मेदि० ।

**हम्भा(म्मा)** स्त्री हम्+भा–हम्म–अङ् वा । गवां ध्वनौ त्रिका० पृषो० । हम्बाप्यत्र हेमच० ।

**हम्म** गतौ भ्वा० प० सक० सेट् । हम्मति । अहम्मीत् ।

**हय** गतौ सक० क्लान्तौ अक० भ्वा० प० सेट् । हयति अहयीत् ।

**हय** पुंस्त्री० हय–हि–वा अच् । १घोटके अमरः स्त्रियां योपधत्वेऽपि हयगवयेत्यादिना ङीष् । अश्वशब्दे दृश्यम् । तत्र वर्ज्यपदार्थाः कविक० उक्ता यथा "श्रीमत्त्वं वेगस्तेजश्च तथा सल्लक्षणस्थितिः । खुरोत्खातरजो रूपं जातिर्गतिर्विचित्रता" । तस्य शकुनाद्युक्तं वसन्तराजशाकुने यथा "हेषारवं मुञ्चति वामतोयः न्यस्य च निर्दक्षिणपादघाते । कण्डूयते दक्षिणमङ्गभागं तुरङ्गः स पदं ददाति" ।

**हयकातरा** स्त्री हयः कातरो यस्याः ५त० । अश्वकातराशब्दे "कातरा हयपर्य्यायैः कातरान्तैः प्रकीर्त्तिता । अश्वकातरिका तिक्ता वातघ्नी दीपनी परा" राजनि० ।

**हयगन्ध** पु० हयस्येव गन्धोऽस्य । १काचलवणे २अश्वगन्धायाम् ३अजमोदायाञ्च स्त्री राजनि० ।

**हयग्रीव** पु० हयस्येव ग्रीवा ग्रीवाऽस्य । १विष्णोरवतारभेदे २दैत्यभेदे च "हयग्रीवेण युयुधे तत्र देवो जगत्पतिः । हयग्रीवं तत्र हत्वा मणिकूटं तथागमत्" कालिपु० ८२अ० । ३दुर्गायां स्त्री तन्मूर्त्तिलक्षणं अश्वशिरस्शब्दे ५१४पृ० दृश्यम् । ४राजर्षिभेदे "यद्वृत्तं पूर्वराजर्षेर्हयग्रीवस्य पाण्डव !" भा० शा० २४अ० ।

**हयग्रीवहन्** पु० हयग्रीवाख्यं दैत्यं हतवान् हन–क्विप् । विष्णौ हेमच० ।

**हयङ्कष** पु० हयस्याश्वस्य कषति कष–खच् । १मातलौ इन्द्रसारथौ त्रिका० । २अश्वपालके च ।

**हयन** न० हि–गतौ करणे ल्युट् । कर्णीरथे अमरः ।

**हयपुच्छी** स्त्री हयस्य पुच्छाकारोऽस्त्यस्याः अच् गौरा० ङीष् । माषपर्ण्याम् अमरः ।

**हयप्रिय** पुं० ६त० । १यवे हेमच० । २अश्वगन्धायां ३खर्जूर्य्याञ्च स्त्री राजनि० ४अश्वप्रिये त्रि० । हयेष्टादयोऽप्यत्र

**हयमार** पु० हयं मारयति विषत्वात् मृ–णिच्–अण् । करवीरे राजनि० ण्वुल् । तत्रैव अमरः । [शब्दच०

**हयमारण** पु० हयं मारयति मृ–णिच्–ल्यु । अश्वघ्ने

**हयवाहन** पु० हयो वाहनमस्य । १सूर्यपुत्रे रेवन्ते हेमच० । २अश्ववाहनयुक्ते त्रि० । ६त० । ३अश्वस्य चालने न० ।

**हयवाहनसङ्कर** पु० हयस्य वाहनं चालनं सङ्करोति सम्+कृ–अच् । रक्तकाञ्चने शब्दच० ।

**हयशाला** स्त्री ६त० । अश्वशालायां तत्करणप्रकारादि मत्स्यपु० १९१अ० उक्तं यथा "गवां स्थानं तथैवात्र तुरगाणां तथैव च । उत्तराभिमुखी श्रेणी तुरगाणां विधीयते । दक्षिणाभिमुखी वाथ परिशिष्टास्तु गर्हिताः । तुरगास्तु तथा धार्य्याः प्रदीपैः सार्वरात्रिकैः । कुक्कुटान् वानरांश्चैव मर्कटांश्च नराधिप ! । धारयेदश्वशालायां सवत्सां धेनुमेव च । अजाश्च धार्य्या यत्नेन

तुरगाणां हितैषिणा । शोणजाश्वादिशालाश्च तत्पुरीषस्य निर्गमम् । अस्तं याते न कुर्वीत देवदेवे दिवाकरे । अधिकमश्वशालाशब्दे ५२४ पृ० अश्वशब्दे च दृश्यम् ।

**हयशीर्ष** पु० हयस्येव शीर्षमस्य । १विष्णुमूर्त्तिभेदे हयशीर्षपञ्चरात्रे तत्पूजादिकं दृश्यम । २शालग्राममूर्त्तिभेदे शालग्रामशब्दे ६००१ पृ० दृश्यम् ।

**हया** स्त्री हयः हयगन्धोऽस्त्यस्याः अच् । अश्वगन्धायाम् राजनि० । घोटक्यां तु हयीत्येव ।

**हयाध्यक्ष** पु० हयेषु तद्रक्षणेषु अध्यक्षः । अश्वरक्षणाधिकृते

**हयानन्द** पु० हयमानन्दयति आ+नन्द-णिच्-अण् । मुद्गे राजनि० ।

**हयारि** पु० ६त० । करवीरे रत्नमा० ।

**हयाशना** स्त्री हयैरश्यते अश-ल्युट् । शल्लकीवृक्षे शब्दच०

**हयोत्तम** पु० हयेषु उत्तमः । अश्वरत्ने आजानेयेऽश्वे त्रिका०

**हर** पु० हृ-अच् । १रुद्रे अमरः २अग्नौ ३गर्द्दभे ४विभाजके च "अन्योन्यहाराभिहतौ हरांशाविति" लीला० । हृ-भावे अप् । ५हरणे ६विभाजने च ।

**हरगौरी** स्त्री हरदेहार्द्धहरा गौरी शा०त० । अर्द्धनारीश्वररूपे १शिवपार्वत्योर्मूर्त्तिभेदे तल्लक्षणम् । ९७०१ पृ० दृश्यम् । द्वन्द्व० । २शिवपार्वत्योः द्वि० व० ।

**हरचूड़ामणि** पु० हरस्य चूडामणिरिव । चन्द्रे ।

**हरण** न० हृ-भावे ल्युट् । १स्थानान्तरकरणे २विभाजने च कर्मणि ल्युट् । ३यौतुकादौ देये धने भा० आ० हरणाहरणपर्व २२१अ० । ४भुजे मेदि० ।

**हरतेजस्** न० ६त० । १पारदे राजनि० २शिववीर्य्ये च । हरवीजादयोऽप्यत्र । [गङ्गायां हेमच० ।

**हरशेखरा** स्त्री हरस्य शेखरमाश्रयत्वेनास्त्यस्याः अच् ।

**हरि** पु० हृ-इन् । १विष्णौ २सिंहे ३सर्पे ४वानरे ५भेके ६शुकखगे अमरः । ७चन्द्रे ८सूर्य्ये ९वायौ १०अश्वे ११यमे १२हरे १३ब्रह्मणि १४किरणे जम्बुद्वीपस्य १५वर्षभेदे १६इन्द्रे च मेदि० १७मयूरे १८कोकिले १९हंसे २०वह्नौ शब्दर० । भर्त्तृहरिनामके वाक्यप्रदीपग्रन्थकारके २१पण्डिते त्रिका० । २२पिङ्गलवर्णे २३हरिद्वर्णे हेमच० २४तद्वति त्रि० । "हरिं विदित्वा हरिभिश्च वाजिभिः" रघु । २५पीते अनेकार्थको० ।

**हरिक** पु० हरि+संज्ञायां कन् । पीतहरिद्वर्णाश्वे हेमच० ।

**हरिकेलीय** पु० हरिकेलिमर्हति छ । वङ्गदेशे हेमच० ।

**हरिकेश** पु० हरिः पिङ्गलः केशोऽस्य । १शिवे २शिवभक्तयक्षभेदे च । स एव तत्प्रसादात् काश्यां दण्डपाणित्वमाप्नुयात् इति काशीखण्डे ३२अ० स्थितम् । मत्स्यपु० १५८अ० दृश्यम् । [श्याम् अपराजितायां राजनि० ।

**हरिक्रान्ता** स्त्री हरिरिव वर्णः क्रान्तो येन । विष्णुक्रान्ता-

**हरिगृह** न० ६त०, हरेर्विष्णुमूर्त्तेर्गृहम् । १हरिमूर्त्तिगृहे २एकचक्रपुरीभेदे च त्रिका० ।

**हरिचन्दन** न० हरेरिन्द्रस्य प्रियं चन्दनम् चन्दयति चदि-ल्यु ६त० वा । १देवतरुभेदे अमरः । हरेर्विष्णोः प्रियं चन्दनम् । २श्वेतचन्दने ३गोशीर्षनामके मलयैकदेशजाते चन्दनभेदे ४ज्योत्स्नायां ५कुङ्कुमे मेदि० । ६पद्मकेशरे हला० । ७चन्द्राङ्के च म०शब्दर० । "हरिचन्दनन्तु दिव्यं हिमं तदिह दुर्लभं मनुजैः । पित्ताटोपविशोषितमद्यमयोन्मादाध्मानभेदोघ्नम्" राजनि० । "इष्टं च तद्वशीकारं कर्पूरागुरुयोगतः । अथ वा केशरैर्युक्तं हरिचन्दनमुच्यते" पद्मपु० पा० ख० १२अ० उक्ते दशयुक्तद्रव्यगणे च ।

**हरिण** पुंस्त्री० हृ-इनन् । स्वनामख्याते १पशौ अमरः स्त्रियां ङीष् । २शिवे ३विष्णौ ४हंसे ५शुक्लवर्णे ६पाण्डुवर्णे च । ७तद्वति त्रि० अमरः । "हरिणः शीतलो बद्धविण्मूत्रो दीपनो लघुः । रसे पाके च मधुरः सुगन्धः सन्निपातहा" राजव० तन्मांसगुणाः । "हरिणश्चापि विज्ञेयः पञ्चभेदोऽत्र भैरव ! । ऋष्यः खड्गो रुरुश्चैव पृषतश्च मृगस्तथा । एते बलिप्रदानेषु चर्म्मदाने च कीर्त्तिताः" कालिकापु० ६६अ० । [शब्दर० ।

**हरिणनर्त्तक** पु० हरिण इव नृत्यति नृत-ण्वुल् । किन्नरे

**हरिणहृदय** पु० हरिणस्येव भीतं हृदयमस्य । भीरौ शब्दर०

**हरिणाक्षी** स्त्री हरिणस्येवाक्षि यस्याः ५त० ६त० वा षच् समा० ङीष् । १हट्टविलासिनीनामगन्धद्रव्ये शब्दच० । २हरिणतुल्यनेत्रयुते त्रि० स्त्रियां ङीष् । "हरिणाक्षि ! कटाक्षेण आत्मानमवलोकय" इत्युद्भटः ।

**हरिणाङ्क** पु० हरिणः शशनामको मृगोऽङ्कश्चिह्नम् अङ्के क्रोडे वा अस्य । १चन्द्रे शब्दर० २कर्पूरे च ।

**हरिणी** स्त्री हरितवर्णा स्त्री ङीप् तस्य नः । १हरितवर्णायां स्त्रियां मेदि० २स्वर्णप्रतिमायाम् अमरः । ३स्वर्णयुथ्यां ४मञ्जिष्ठायां राजनि० । ५वरुण्यां ६वरस्त्रियां शब्दर० "वसुयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा" वृ० र० उक्तलक्षणके ७सप्तदशाक्षरपादके छन्दोभेदे हरिणस्य स्त्री ङीप् । ८मृग्याम् ९अप्सरोभेदे ।

"चरतः किल दुश्चरं तपः तृणबिन्दोः परिशङ्कितः पुरा। प्रजिघाय समाधिभेदिनीं हरिरस्मै हरिणीं सुराङ्गनाम्" रघुः।

**हरित्** पुं० हृ-इति। १नीलपीतमिश्रितवर्णे (पाटाररङ्ग पलाशवर्णे च अमरः २तद्वति त्रि०। ३सूर्याश्वे त्रिका० ४मुद्गे हेमच०। ५सिंहे ६सूर्ये ७विष्णौ च पुंदिशि स्त्री अमरः। ८हरिद्रायां राजनि० १०तृणे न० मेदि०।

**हरित्पर्ण** न० हरित् पर्णमस्य। मूलके राजनि०।

**हरित** पुं० हृ-इतच्। १सिंहे २मन्थानतृणे राजनि० ३हरिद्वर्णे ४तद्वति त्रि० अमरः स्त्रियां ङीप् तस्य नश्च। ५दूर्वायां मेदि० ६जयन्त्यां ७हरिद्रायां ८कपिलद्राक्षायां ९पाच्यां १०नीलदूर्वायाञ्च स्त्री राजनि० टाप्। ११स्थौणेयके न० राजनि०। [शाके न० राजनि०

**हरितक** न० हरितेन वर्णेन कायति प्रकाशते कै-क।

**हरितपत्रिका** स्त्री हरितं पत्रं यस्याः कप् कापि अत इत्त्वम्। पाच्यां राजनि०।

**हरितशाक** पुं० हरितं शाकमस्य। शोभाञ्जने राजनि०।

**हरिताल** न० हरिवर्णस्य पीतवर्णस्य तालः प्रतिष्ठा यत्र। १पीतवर्णे उपधातुभेदे "स हरितालसमाननवांशुकः" माघः। २पीतवर्णपक्षिभेदे पुंस्त्री० राजनि०। स्त्रियां ङीष्। स्वार्थे क। हरितालं न० अमरः। "हरितालं द्विधा प्रोक्तं पत्राख्यं पिण्डसंज्ञकम्। तयोराद्यं गुणैः श्रेष्ठं ततो हीनगुणं परम्। स्वर्णवर्णं गुरु स्निग्धं सपत्रं चाभ्रपत्रवत्। पत्राख्यं तालकं विद्याद् गुणाढ्यं तद्रसायनम्। निष्पत्रं पिण्डसदृशं स्वल्पसत्त्वं तथा गुरु। स्त्रीपुष्पहारकं स्वल्पगुणं तत् पिण्डतालकम्। हरति च हरितालञ्चारुतां देहजाताम् सृजति च बहुतापानङ्गसङ्कोचपीड़ाम्। वितरति कफवातौ कुष्ठरोगं विदध्यादिदमशितमशुद्धम् मारितञ्चाप्यसम्यक्"। "तालकं कणशः कृत्वा तच्चूर्णं काञ्जिके पचेत्। दोलायन्त्रेण यामैकं ततः कुष्माण्डजद्रवैः। तिलतैले पचेद्यामं यामञ्च त्रिफलाजले। एवं यन्त्रे चतुर्यामं पक्वं शुद्ध्यति तालकम्"। अथ तालस्य मारणविधिः "सदलं तालकं शुद्धं पौनर्नवरसेन तु। खल्वे विमर्दयेदेकं दिनं पश्चाद्विशोषयेत्। ततः पुनर्नवाक्षारैः स्थाल्यामर्द्धं प्रपूरयेत्। तत्र तद्गोलकं धृत्वा पुनस्तेनैव पूरयेत्। आकण्ठं पिठरं तस्य पिधानं धारयेन्मुखे। स्थालीं चुल्ल्यां समारोप्य क्रमाद्वह्निं विवर्द्धयेत्। दिनान्यन्तरशून्यानि पञ्च वह्निं प्रदापयेत्। एवं तन्म्रियते तालं मात्रा तस्यैकरक्तिका। अनुपानान्यनेकानि यथायोग्यं प्रयोजयेत्"। एवं शोधितस्य मारितस्य तालकस्य गुणाः। "हरितालं कटु स्निग्धं कषायोष्णं हरेद्विषम्। कण्डूकुष्ठास्यरोगास्रकफपित्तकचव्रणान्"। "तालकं हरते रोगान् कुष्ठमृत्युज्वरापहम्। शोधितं कुरुते कान्तिं वीर्य्यवृद्धिं तथायुषम्" भावप्र०।

हरितालखगमांसगुणाः "हरितालोऽल्पविट्कः स्यात् कषायो मधुरो लघुः। रक्तपित्तप्रशमनस्तृषाघ्नो वातकोपनः" राजनि०।

**हरितालिका** स्त्री हरेस्तालो हस्ततालो यस्यां कप् अत इत्त्वम्। १सौरभाद्रशुक्लचतुर्थ्याम् हरितवर्णाय अलति पर्य्याप्नोति अल-ण्वुल्। २दूर्वायाम् त्रिका०। अण् ङीप्। हरितालौ दूर्वायाम् सा च आकाशरेखायां मेदि० खड्गलतायाम् हरितालिकायाञ्च। "भाद्रे मासि सिते पक्षे हस्तदैवतसंयुता। हरितालौ चतुर्थी स्यात् सर्वाशाप्रीतिदा सदा। भाद्रे मासि सिते पक्षे चतुर्थ्यां हस्तयोगतः। ददाति विविधं भोगं हरचन्द्रो न संशयः। करचित्तानलर्क्षेषु हरौ सूर्ये चतुर्थिका। हरितालौ समाख्याता रुद्राणीप्रीतिदा सदा" राजमार्त्तण्डः

**हरिताश्म** न०हरितवर्णमश्म अश्मेव वा अच्समा०(पेरोजा) १मणिभेदे २तुत्थे (तुँत) उपधातुभेदे च राजनि०।

**हरिद्दर्भ** पुं० हरिर्हरिद्वर्णो दर्भः। हरिद्वर्णे कुशे अमरः।

**हरिदश्व** पुं० हरिन्नामकोऽश्वो यस्य। १सूर्ये २अर्कवृक्षे च अमरः।

**हरिदेव** पुं० हरिर्देवोऽधिष्ठाता अस्य। श्रवणानक्षत्रे।

**हरिद्गर्भ** पुं० हरिद्वर्णो गर्भो यस्य। हरिद्वर्णे कुशे राजनि०। "दर्भौ द्वौ च गुणे तुल्यौ तथापि च सितोऽधिकः। यदि श्वेतकुशाभावस्त्वपरं योजयेद्भिषक्" राजनि०। "दर्भद्वयं त्रिदोषघ्नं मधुरं तुवरं हिमम्। मूत्रकृच्छ्राश्मरीतृष्णावस्तिरुक् प्रदरास्रजित्" भावप्र०। तन्मूलगुणाः "कुशमूलं हिमं रुच्यं मधुरं पित्तनाशनम्। रक्तज्वरतृषाश्वासकामलादोषमोचकम्" राजनि०।

**हरिद्रव** पुं० हरिवर्णः पिङ्गलवर्णो द्रव इव। नागकेशररजसि त्रि०।

**हरिद्रा** स्त्री हरिं पीतवर्णं द्रवति द्रु-गतौ ड। स्वनामख्याते ओषधिभेदे।

"हरिद्रा कटुका तिक्ता रूक्षोष्णा कफपित्तनुत्। वर्ण्या त्वग्दोषमेहास्रशोथपाण्डुव्रणापहा"। (वनहरिद्रा) "अरण्यहरिद्राकन्दः कुष्ठवातास्रनाशनः"। (कर्पूरहरिद्रा) "दार्वी भेदाम्बगन्धा च सुरभिर्दारुदारु च। कर्पूरा पद्मपत्रा स्यात् सुरभिः सुरनायिका। आम्रगन्धिर्हरिद्रा या सा शीता वातला मता। पित्तहृन्मधुरा तिक्ता सर्वकण्डूविनाशिनी" भावप्र०।

**हरिद्रागणेश** पु० हरिद्रावर्णयुक्तो गणेशः। पीतवर्णे गणेशभेदे तन्त्रसारः। [स्त्रियां ङीप्।

**हरिद्राङ्ग** पुंस्त्री० हरिद्रेव अङ्गमस्य। हरितालखगे शब्दच०

**हरिद्राभ** पु० हरिद्रेव आभाति आ+भा-क। १पीतशाले (पियाशाल) २कर्बुरके ३पीतवर्णे च। ४तद्वति त्रि० अमरः।

**हरिद्राराग** त्रि० हरिद्राया इव रागः रञ्जनमनुरागः। अस्थिरानुरागे श्रीहर्षे। "क्षणमात्रानुरागश्च हरिद्राराग उच्यते" हला०।

**हरिद्रु** पु० हरिः हरिद्वर्णो दार्वादिद्वारा द्रुः। १तरुमात्रे हेमच०। २दारुहरिद्रायाञ्च अमरः। [तीर्थभेदे

**हरिद्वार** न० हरेस्तत्प्राप्तेः द्वारं सेवनात्। स्वनामख्याते

**हरिनामन्** न० हरेर्नाम तदाख्यानं वा। १विष्णुनामनि २तदाख्याने च हरेरिव नामास्य। ३मुद्गे पु० त्रिका०।

**हरिनेत्र** न० हरेर्नेत्रमिव। १श्वेतपद्मे राजनि०। ६त०। २विष्णोर्लोचने। हरेः सिंहस्येव नेत्रमस्य दीर्घत्वात्। ३पेचके पुंस्त्री० त्रिका० स्त्रियां ङीप्।

**हरिन्मणि** पु० हरिद्वर्णो मणिः। मरकते मणौ अमरः।

**हरिन्मुद्ग** पु० हरिद्वर्णो मुद्गः। शरदि पक्वे मुद्गे राजनि०।

**हरिप्रिय** न० हरेर्विष्णोः प्रियम्। १कालीयके चन्दने शब्दच०। २उशीरे राजनि०। ३कदम्बे पु० शब्दच०। ४पीतभृङ्गराजे ५विष्णुकन्दे ६करवीरे ७शङ्खे ८बन्धूके पु० राजनि०। ९शिवे १०बालिशे च पु०। ११लक्ष्म्यां स्त्री १२तुलस्यां १३पृथिव्यां १४द्वादश्यां तिथौ च स्त्री। १५हरिवल्लभे त्रि०। [अमरः।

**हरिवालुक** न० हरेर्विष्णोः प्रिया वालुकास्य। एलवालुके

**हरिभक्त** त्रि० हरौ विष्णौ भक्तः। १विष्णुभक्तियुते "सर्वजीवेषु यो विष्णुं भावयेत् समभावतः। हरौ करोति भक्तिञ्च हरिभक्तः स च स्मृतः" ब्रह्मपु० २५ अ० उक्ते २सर्वत्रसमदृष्टिपूर्वकहरिसेवके पु०। [शब्दर०।

**हरिभद्र** न० हरिं भद्रयति सन्तर्पयति अच्। हरिवालुके

**हरिभुज्** पु० हरिं भेकं भुङ्क्ते भुज-क्विप्। सर्पे शब्दच०।

**हरिमन्थ** पुं० मथ्यते मन्थः हरिर्मन्थ एकदेशो यस्य। १चणके राजनि० तस्य बहुमन्थनेऽपि पीतत्वानपायात्तथात्वम्। हरिं सर्पं मथ्नाति मन्थ-अण्। २गणिकारिकायाम् शब्दच०। ३देशभेदे पु० भरतः। [१चणके भरतः।

**हरिमन्थक** पु० हरिः पीतो मन्थ एकदेशो यस्य कप्।

**हरिमन्थज** पु० हरिमन्थे देशभेदे जायते जन-ड। चणके अमरः। २कृष्णमुद्गे च हेमच०। [हेमच०।

**हरिय** पु० हरिं हरिवर्णं याति या-क। पीतवर्णाश्वे टके

**हरिलोचन** पुंस्त्री० हरेरिव लोचनमस्य। १कर्कटे (कँकड़ा) त्रिका०। २पेचके।

**हरिवंश** पु० ६त०। १विष्णुवंशे हरेर्वंशो वर्ण्यत्वेनास्त्यस्य अच्। महाभारतान्तर्गते खिलरूपे व्यासकृते २ग्रन्थभेदे। तत्प्रतिपाद्यविषयाश्च हरिवं० ३२५ अ० उक्ता यथा "हरिवंशेऽत्र वृत्तान्ताः कीर्त्त्यन्ते क्रमशोदिताः। तत्राद्यमादिसर्गस्तु भूतसर्गस्ततः परः। पृथोर्वैण्यस्य चाख्यानं मनूनां कीर्त्तनं तथा। वैवस्वतकुलोत्पत्तिर्धुन्धुमारकथा तथा। गालवोत्पत्तिरित्युक्तं सगरस्याप्यनुकीर्त्तनम्। पितृकल्पस्तथोत्पत्तिः सोमस्य च बुधस्य च। अमावसोरन्वयस्य कीर्त्तनं कीर्त्तिवर्द्धनम्। द्युतिप्रतिष्ठमस्य प्रभवः क्षत्त्रवृद्धिजः। दिवोदासप्रतिष्ठा च त्रिशङ्कोः चरितस्य च। ययातिचरितञ्चैव पुरुवंशस्य कीर्त्तनम्। कीर्त्तनं कृष्णजन्मनः स्यमन्तकमणेस्तथा। संक्षेपात् कीर्त्तिता विष्णोः प्रादुर्भावास्ततः परम्। तारकामययुद्धञ्च ब्रह्मलोकस्य वर्णनम्। योगनिद्रावस्थानं विष्णोर्भोक्तव्यं वेधसः। पृथ्वीवाक्यञ्च देवानामंशावतरणं तथा। ततो नारदवाक्यञ्च सप्तगर्भविधिस्तथा। आर्य्यास्तवः पुनः कृष्णस्योत्पत्तिः शपथतः। गोव्रजे गमनं विष्णोः शकटस्य निवर्त्तनम्। पूतनाया वधो भङ्गो यमलार्जुनयोरपि। वृकसंमर्दनञ्चैव वृन्दावननिवेशनम्। प्रावृषो वर्णनञ्चापि यमुनाह्रददर्शनम्। कालियस्यापि दमनं धेनुकस्य वधस्तथा। प्रलम्बनिधनञ्चैव शरद्वर्णनमेव च। गिरियज्ञप्रवृत्तिश्च गोवर्द्धनविधारणम्। गोविन्दस्याभिषेकश्च गोपीसंक्रीडनं तथा। अरिष्टस्य च वाक्यानि केशिनो निधनं तथा। अक्रूरागमनञ्चैव नागलोकस्य दर्शनम्। धनुर्भङ्गस्य कथनं कंसवाक्यमतः परम्। कुवलयापीडनञ्चाणूरान्ध्रवधस्तथा। कंसस्य निधनञ्चापि विलापः कंसयोषिताम्। उग्रसेना-

भिषेकश्च यादवाद्याश्वासनं तथा । प्रत्यागतिर्गुरुकुला-द्योक्ता रामकृष्णयोः । मथुरायाश्चोपरोधो जरासन्ध-निवर्त्तनम् । विकद्रुवाक्यं रामस्य दर्शनं भाषणं तथा । गोमन्तारोहणञ्चापि जरासन्धगतिस्तथा । गोमन्तस्य गिरेर्दाहः करवीरपुरे गतिः । शृगालस्य वधस्तत्र मथु-रागमनं ततः । यमुनाकर्षणञ्चैव मथुरापक्रमस्तथा । उपायेन वधः कालयवनस्य प्रकीर्त्तितः । निर्माणं द्वार-वत्यास्तु रुक्मिण्याहरणं तथा । विवाहश्चैव रुक्मिण्या रुक्मिणो निधनं तथा । बलदेवाह्निकं पुण्यं बलमाहा-त्म्यमेव च । नरकस्य वधः पारिजातस्य हरणं तथा । निकुम्भस्य वधाख्यानं प्रपञ्चेनैव कीर्त्तितम् । प्रभावत्याश्च हरणं वज्रनाभवधस्तथा । द्वारवत्या विशेषेण पुनर्नि-र्माणकीर्त्तनम् । द्वारकायां प्रवेशश्च समायाश्च प्रवेशनम् । नारदस्य च वाक्यानि हर्ष्यावंशानुकीर्त्तनम् । षट्पुरस्य वधाख्यानमन्धकस्य निबर्हणम् । समुद्रयात्रा कृष्णस्य जलक्रीड़ाकुतूहलम् । तथा भैमप्रवीराणां मधुपान-प्रवर्त्तनम् । ततश्छालिक्यगान्धर्वसुताहरणं हरेः । भानोश्च दुहितुर्भानुमत्या हरणकीर्त्तनम् । अन्धकस्य वधश्चैव धन्योपाख्यानमेव च । वासुदेवस्य माहात्म्यं वाणयुद्धं प्रपञ्चितम् । भविष्यं पुष्करञ्चैव प्रपञ्चेनैव कीर्त्तितम् । वाराहं नारसिंहञ्च वामनं सुविस्तरम् । कैलासयात्रा कृष्णस्य पौण्ड्रकस्य वधस्ततः । हंसस्य डि-म्भकस्यैव वधश्चैव प्रकीर्त्तितः । पुरनयस्य संहार इति वृत्तान्तसंग्रहः । कथितो व्याघ्रशार्दूल ! सर्वपापप्रणाशनः । वृत्तान्तं शृणुयाद्यस्तु सार्वं प्रातः समाहितः । स याति वैष्णवं धाम कल्मषात् कुरुद्वह ! । धन्यं यशस्य-मायुष्यं भुक्तिमुक्तिफलप्रदम्" ।

**हरिवल्लभा** स्त्री । १जयायां २तुलस्यां राजनि० ३लक्ष्म्यां च ।

**हरिवात्** पु० हरिणा घोटकेन उच्चैःश्रवसा वाति गच्छति वा-शतृ । इन्द्रे हलायुधः ।

**हरिवर्ष** न० हरिनामकं वर्षम् । जम्बुद्वीपस्य नववर्षमध्ये वर्षभेदे त्रिका० ।
"एवं दक्षिणेनेलावृतं निषधो हेमकूटो हिमालय इति प्रागायता यथा नीलादयोऽयुतयोजनोत्सेधा हरि-वर्षकिंपुरुषभारतानां यथासंख्यम्" भाग० ५स्क०१६अ० ।

**हरिवासर** न० हरिप्रियं वासरम् । १एकादशीदिवसे २द्वा-दशीप्रथमपादे च । "अन्नमाश्रित्य पापानि तिष्ठन्ति हरिवासरे" इति । "द्वादश्याः प्रथमः पादो हरि-वासरसंज्ञक" इति च एकादशीतत्त्वे विष्णुधर्मो० ।

**हरिवाहन** पु० हरिं वाहयति स्थानान्तरं नयति वह-णि-ल्यु । १गरुड़े हारा० । ६त० । २हरिवाहनमप्यत्र न० ।

**हरिवीज** न० हरेर्वीजमुत्पत्तिकारणत्वेनास्त्यस्य अच् । हरि-ताले "हरिताल हरेर्वीजं लक्ष्म्याः वीजं मनःशिला" इति वैद्यकम् ।

**हरिशयन** न० हरेः शयनं निद्रा । १विष्णुनिद्रायाम् । हरेः शयनं यत्र । २तदुपलक्षिते काले । स च "मैत्राद्यपादे स्वपितीह विष्णुः" इत्युपक्रम्य "प्रबुध्यते मासचतुष्टयेन" इत्यन्तेन दर्शितः आषाढस्य शुक्लद्वादश्यवधिकार्त्तिकशुक्ल-द्वादशीपर्य्यन्तरूपो मासचतुष्टयात्मकः । शयनैकादशी-शब्दे १०७पृ० दृश्यम् ।

**हरिश्चन्द्र** पु० हरिः चन्द्र इव कर्म्म० सुट् । सूर्य्यवंश्ये त्रिशङ्कुपुत्रे नृपभेदे । ऋषिभिन्ने तु न सुट् । हरि-चन्द्र एव ।

**हरिश्चन्द्रपुर** न० ६त० । सौभनगरे त्रिका० ।

**हरिषेण** पु० जिनचक्रवर्त्तिविशेषे हेमच० । हरिसुतोऽप्यत्र ।

**हरिसङ्कीर्त्तन** न० हरेर्हरिनाम्नः संकीर्त्तनं कथनम् । आदिपुराणीयोच्चारणे "सकलं निष्फलं राजन् ! हरि-सङ्कीर्त्तनं विना" इति धर्मलोचनम् ।

**हरिहय** पु० हरिनामा हरिद्वर्णो वा हयो यस्य । इन्द्रे अमरः "हरिं विदित्वा हरिभिश्च वाजिभिः" इति रघौ तस्य हरिवर्णहयगतत्वमुक्तम् ।

**हरिहर** पु० हरियुक्तो हरः । हरिहरयोः संश्लिष्टार्द्ध-देहतया स्थिते मूर्त्तिभेदे देवप्रतिमाशब्दे ३७०१ तन्मूर्त्ति-लक्षणं दृश्यम् । द्व० । २शिवनारायणयोः द्वि० व० ।

**हरिहरक्षेत्र** न० हरिहरयोः प्रियं क्षेत्रम् । गङ्गागण्डकी-सङ्गमान्तिकदेशस्थे पाटलिपुत्रादुत्तरस्यां दिशि स्थिते तीर्थभेदे ।

**हरिहरात्मक** पु० १गरुड़े २शिववृषे च शब्दर० ।

**हरीतकी** न० हरिं पीतवर्णं फलद्वारा हरति प्राप्नोति हृ-ण्वुल् संज्ञायां कन् गौरा० ङीष् । १स्वनामख्याते वृक्षे तस्याः फलम् अण् तस्य लुप् । २हरीतकीफले स्त्री अमरः । "कदाचित् कुपिता माता नोदरस्था हरीतकी" इति वैद्यकम् । हेतकीशब्दे २६६२ पृ० दृश्यम् ।

**हरेणु** स्त्री हृ-एणु । १रेणुकानामगन्धद्रव्ये अमरः । २कुल-स्त्रियां । ३सतीले (मटर) पु० मेदि० । स्वार्थे क तत्रैव ।

**हृत्तृ** त्रि० हृ-तृच् । १हरणकारिणि २चौरे ३सूर्य्ये च पु० ।

**हर्मन्** न० हृ+मनिन् । जृम्भणे (हाइतोला) शब्दरत्नावली ।

**हर्मित** त्रि० हर्मन्+तार० इतच् । १जातजृम्भणे शब्दर० २दग्धे ३ क्षिप्ते च मेदि० ।

**हर्म्य** न० हृ-यत् मुट् च । १इष्टकाकाष्ठादिरचिते धनिनां गृहभेदे अमरः "रम्यं हर्म्यतलम्" इति प्रबोध० ।

**हर्य्य** क्लमे अक० गतौ सक० भ्वा० पर० सेट् । हर्य्यति अहर्य्यीत् ।

**हर्य्यक्ष** पुंस्त्री० हरि पिङ्गलमक्षि यस्य अच्समा० । १सिंहे [अमरः । स्त्रियां ङीष् २कुवेरे च जटा० ।

**हर्य्यश्व** पु० हरिनामा हरिवर्णौ वाऽश्वोऽस्य । इन्द्रे ।

**हर्ष** पु० हृष-घञ् । १सुखे अमरः २इष्टाधिगमजन्यानन्दे । ३कन्दर्पविकारे "पुलस्त्य उवाच । कन्दर्पो हर्षतनयो योऽसौ कामो निगद्यते । स शङ्करेण संदग्धो ह्यनङ्गत्वमुपागतः" । वामनपु० ६अ० । ४कलियुगीयनृपभेदे हर्षचरिते तत्कथा दृश्या । [शब्दमा० ।

**हर्षक** त्रि० हृष-णिच् ण्वुल् । १हर्षकारके । २पर्वतविशेषे

**हर्षण** पु० हर्षयति अभीष्टदानात् हृष-णिच्-ल्यु । १विष्कम्भादिमध्ये चतुर्दशे योगे ज्यो० । २हर्षकारके त्रि० । ३नेत्ररोगभेदे ४श्राद्धभेदे ५श्राद्धदेवभेदे पु० शब्दच० । हृष-भावे ल्युट् । ६हर्षे न० ।

**हर्षपद** न० ६त० । नीलक० ताजकोक्ते ग्रहविशेषस्य लग्नादिस्थानभेदे । यथोक्तम् "नन्दत्रिषड्लग्नभसप्तपुत्रव्यया इनाद्धर्षपदं खभोक्तम् । त्रिभं त्रिभं लग्नभतः क्रमेण स्त्रीणां नृणां रात्रिदिनेषु तेषु" । हर्षस्थानादयोऽप्यत्र । "न हर्षस्थानमाश्रितः" नीलक० ।

**हर्षमाण** पु० हृष-शानच् आत्मने चानश् । हृष्टचित्ते अमरः ।

**हर्षयित्नु** पु० हृष णिच्-इत्नु । १पुत्रे २स्वर्णे न० मेदि० । ३हर्षशीले त्रि० । [२हर्षकारके त्रि० ।

**हर्षिणी** स्त्री हृष-णिच्-णिनि ङीप् । १विजयायाम्

**हर्षित** त्रि० हर्षो जातोऽस्य इतच् । १जातानन्दे । २हर्षस्थानगते ग्रहे च ।

**हर्षुल** पुंस्त्री० हृष+उलच् । १मृगे स्त्रियां ङीष् । २कामुके त्रि०सि०कौ० । २हर्षशीले त्रि० । [लादि० हलः हालः

**हल** विलेखे भ्वा०पर०सक० सेट् । हलति अहालीत् ज्व-

**हल** न० हल्यते लिख्यतेऽनेन हल-घञर्थे करणे क । लाङ्गले अमरः । क्षत्रिशब्दे २१६८पृ० दृश्यम् ।

**हलद्दी** स्त्री हल-शत-हलन्तं लघकमपि दायति शोधयति दै-क गौरा० ङीष् । हरिद्रायाम् राजनि० ।

**हलधर** पु० हलं धरति आयुधत्वेन कृषिसाधनत्वेन वा धृ-अच् । १बलरामे शब्दर० । २कृषके त्रि० "उन्मूलिता हलधरेण पदावघातैः" उद्भटः ।

**हलभूति** स्त्री हलेन हलसाध्या भूतिः । कृषिवृत्तौ शब्दर०

**हलभृत्** पु० हलं बिभर्त्ति भृ-क्विप् । १बलदेवे त्रिकाण्ड० २लाङ्गलधारके च । [३कृषिकार्य्ये च ।

**हलभृति** पु० उपचर्यं १मुनिभेदे त्रिका० । २हलस्य धारणे

**हला** अव्य० हेति लीयते ला-क । नाट्योक्तौ १सखीसम्बोधने अमरः । २सख्यां जटा० ३पृथिव्यां स्त्री ४जले च स्त्री अजयपालः ।

**हलायुध** पु० हलेन आयुध्यति आ+युध क । १बलदेवे अमरः २ब्राह्मणसर्वस्वादिग्रन्थकारके विद्वद्भेदे च ।

**हलाह** पुंस्त्री० । चित्रिताश्वे हेमच० स्त्रियां ङीष् ।

**हलाहल** पु० हलेनेव आहलति विलिखति आ+हल-अच् । १विषभेदे २ब्रह्मसर्पे ३अञ्जनायां मेदि० । ४बुद्धभेदे त्रिका० ।

**हलि** पु० हल-इन् । हृहले शब्दर० ।

**हलिन्** पु० हलोऽस्त्यस्यायुधत्वेन कृषिसाधनत्वेन वा इनि । १बलरामे अमरः २कृषके त्रि० । हलस्य आकारो विद्यते यस्या ङीप् हलिनी (विषलाङ्गला) ३लाङ्गलीवृक्षे रत्नमा० इनि । हलानां समूहः ङीप् ४हलसमूहे स्त्री । [राजनि० ।

**हलिप्रिय** पु० ६त० । १कदम्बवृक्षे अमरः । २मदिरायां स्त्री

**हली** स्त्री हल-इन् ङीप् । कलिकारीवृक्षे राजनि० ।

**हलीन** पु० हलाय हितः ख । शाकवृक्षे (सेगुन) शब्दच० ।

**हली(म)सक** पु० पाण्डुरोगभेदे "यदा तु पाण्डोर्वर्णः स्याद्धरित श्यावपीतकः । बलोत्साहः क्षयस्तन्द्रामन्दाग्नित्वं मृदुज्वरः । स्त्रीष्वहर्षोऽङ्गमर्दश्च श्वासतृष्णारुचिभ्रमाः । हली(म)सकं तदा तस्य विद्यादनिलपित्ततः" भावप्र० ।

**हलीषा** स्त्री हलस्य ईषा शक० । लाङ्गलदण्डे ।

**हल्य** त्रि० हलं हलकर्षणमर्हति तस्येदं वा यत् । १हलकर्षणयोग्ये क्षेत्रादौ अमरः । २हलसम्बन्धिनि च । हलानां समूहः यत् । ३हलसमूहे स्त्री अमरः । [अहल्लीत् ।

**हल्ल** विकासे भ्वा० पर०अक० सेट् भानुदीक्षितः । हल्लति

**हल्लक** न० हल्ल-ण्वुल् भानुदीक्षितः । हल-सम्प०भावे क्विप् हलं लाति ला-क । संज्ञायां कन् वा । रक्तकह्लारे (हेला) अमरः ।

**हल्लीष** न० हल-क्विप् लष-अच् पृषो० कर्म० । स्त्रीणां मण्डलिकाकारनृत्ये । ततः स्वार्थे क । तत्रैव । "मण्डलेन तु यन्नृत्यं स्त्रीणां हल्लीषकन्तु तत्" हेमच०

२रासक्रीडायाञ्च तल्लक्षणं यथा "पृथुं सुवृत्तं मसृणं वितस्तिमात्रोन्नतं कौ विनिखन्य शङ्कुकम्। आक्रम्य पद्भ्यामितरेतरन्तु हस्तैर्भ्रमोऽयं खलु रासगोष्ठी" हरिवं०टी०नीलकण्ठः। [३होमे ४आह्वाने च अमरः।

**हव** पु०हु-अप् ह्वे-अप् सम्प्र० पृषो० वा। १यज्ञे २आज्ञायां

**हवन** न० हु-भावे ल्युट्। होमे देवाद्युद्देशेन मन्त्रपूर्वकं वह्नौ हविःप्रक्षेपे शब्दच०। [त्रिका०

**हवनी** स्त्री हूयतेऽस्यां हु-आधारे ल्युट् ङीप्। अग्निकुण्डे

**हवनीय** त्रि० हु-कर्मणि अनीयर्। होमीयद्रव्ये।

**हवा** अव्य० ह च वा च द्वन्द्व०। प्रसिद्धार्थे।

**हविरशन** पु०हविरश्नाति अश-ल्यु।१वह्नौ हेमच०।२चित्रकवृक्षे च। भावे ल्युट्। ३हविर्भोजने न०। [राजनि०

**हविर्गन्धा** स्त्री हविषो गन्धो यस्याम्। शम्यां (साँइ)

**हविर्गेह** न० हविषो गेहम्। यज्ञमण्डपपश्चिमस्थे हवनीयद्रव्यस्थापनार्थे गेहभेदे हेमच०। [वारीटके रत्नमा०।

**हविर्मन्थ** पु० हविषे मथ्यतेऽसौ मन्थ-कर्मणि घञ्। गणि-

**हविष्य** न० हविषे हितम् यत्। १घृते हेमच०। २मुन्यन्ने हैमन्तिकादावन्ने च "येऽर्हविष्यं भुञ्जानाः" भाग० १०। "नारिकेलफलञ्चैव कदलीं लवलीं तथा। आम्रमामलकञ्चैव पनसञ्च हरीतकीम्। व्रतान्तरप्रशस्तञ्च हविष्यं मन्यते बुधाः" ति० त० ब्रह्मवैवर्तसंहिता।

**हविष्यान्न** न० कर्म०। "हैमन्तिकं सिताऽस्विन्नं धान्यं मुद्गास्तिला यवाः। कलायकङ्गुनीवारा वास्तूकं हिलमोचिका। षष्टिका कालशाकञ्च मूलकं केमुकेतरत्। लवणे सिन्धुसामुद्रे गव्ये च दधिसर्पिषी। पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी। तिन्तिडी जीरकञ्चैव नागरङ्गञ्च पिप्पली। कदली लवली धात्री फलान्यगुडमैक्षवम्। अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते" इत्युक्ते व्रतादौ भक्ष्यद्रव्यभेदे।

**हविस्** न० हूयते हु-कर्मणि असुन्। १घृते अमरः २हवनीयद्रव्यमात्रे च "यथाग्ना मेदसो हविषोऽनुब्रूहीति" श्रुतिः। "मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम्। अक्षारलवणञ्चैव प्रकृत्या हविरुच्यते" श्रा० त० उक्ते ३द्रव्यभेदे। भावे असुन्। ४होमे।

**हव्य** न०हु-कर्मणि यत्। १देवयोग्यान्ने अमरः। २हवनीयद्रव्ये त्रि०। भावे यत्। ३होमे न०।

**हव्यपाक** पु० हव्याय होमाय पाको यत्र। होमार्थं दुग्धघृतादिमिश्रिते सिद्धे अन्ने चरौ अमरः।

**हव्यवाह** पु०हव्यं वहति देवान् वह-अण्।१अग्नौ रत्नमा० २चित्रकवृक्षे च। [अमरः। २चित्रकवृक्षे च।

**हव्यवाहन** पु० हव्यं वाहयति वह-णिच्-ल्यु। १वह्नौ

**हव्याश** पु० हव्यमश्नाति अश-अण्। १वह्नौ शब्दर० २चित्रकवृक्षे। ल्यु। हव्याशनोऽप्यत्र पु०हेमच०।

**हस** हासे भ्वा० प० अक० सेट् एदित् सिचि न वृद्धिः। हसति अहसीत्। दोषदर्शनपूर्वकहासे तु सकर्मकः "स्मितावहस्तेन पुरं मघोनः" इति भट्टिः। [अमरः।

**ह(हा)स** पु० हस-अप् घञ् वा। हासे सत्त्वविकाशनभेदे

**हसन** न०हस-भावे ल्युट्। प्रीत्या सकपोलादेर्विकाशने हासे

**हसन्ती** स्त्री हस-झ ङीप्। अङ्गारधानिकायां अमरः। २मल्लिकाभेदे ३शाकिनीभेदे च मेदि०। हस-मतु-ङीप्। हसत् ४हासिनि त्रि० स्त्रियाम् ङीप्।

**हसित** न० हस-भावे क्त। १हासे कर्त्तरि क्त। २कृतहासे ३विकसिते च त्रि०। कामधन्वे त्रयम्।

**हस्त** पु० हस-तन् न इट्। १देहावयवभेदे (हात) अमरः। २चतुर्विंशत्यङ्गुलपरिमाणे "यवोदरैरङ्गुलमष्टसंख्यैर्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः" लीला०। ३हस्तिशुण्डे च। ४अश्विन्यादिषु त्रयोदशे नक्षत्रे पुंस्त्री० मेदि०। अत्र भा-मन्दे पु० द्वयम्। "जाह्नवी हस्तयोगे" इति पुराणम्। "पुष्या हस्ता तथा स्वातिः" ज्यो०। केशवाचकात् परः। ५समूहे। केशहस्तः।

"हस्तदत्ताश्च ये स्नेहा लवणं व्यञ्जनानि च। दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते तु किल्बिषम्। तस्मादन्तरितं कृत्वा पर्णेनाथ तृणेन वा। प्रदद्यात् न तु हस्तेन नायसेन कदाचन" श्रा० त०। [ हस्ते राजनि०।

**हस्तजोडि** पु० हस्तं जुडति जुड इन्। (हातजोडा)

**हस्तपुच्छ** न०६त०। हस्तावयवभेदे (हातेर पोँछा)। त्रिका०

**हस्तवारण** न० ६त०। मारणोद्यतस्य निवारणे अमरः।

**हस्तबिम्ब** न० हस्तस्य बिम्बं यत्र। अङ्गके चन्दनादिना देहविलेपनविशेषे हेमच०। [श्रीधरः।

**हस्तसिद्धि** स्त्री हस्तस्य तत्कर्मणः सिद्धिर्यतः। वेतने

**हस्तसूत्र** न० हस्तस्य सूत्रमिव। वलये हेमच०।

**हस्तामलक** न० हस्तस्थितमामलकम् आमलक्याः फलं तदिव वा। १करावस्थितामलकफले तद्वत् २अनायासलभ्ये पदार्थे च। करामलकादयोऽप्यत्र। ३वेदान्तप्रसिद्धपन्थभेदे च।

**हस्तिक** न० हस्तिनां समूहः कन्। हस्तिसमूहे शब्दर०।

**हस्तिकन्द** पु० हस्ती तत्पदमिव कन्दोऽस्य । स्वनामख्याते कन्दभेदे (हातिकाँदा) राजनि० ।

**हस्तिकरञ्ज** पु० हस्तीव महान् करञ्जः । महाकरञ्जे राजनि० ।

**हस्तिकर्ण** पु० हस्तिनः कर्ण इव पर्णमस्य अच् । १एरण्डवृक्षे २पलाशभेदे ३गणदेवताभेदे मेदि० । ४हस्तिकन्दे ५रक्तैरण्डे च राजनि० । स्वार्थे क तत्रार्थे । ६त० । ७गजस्य कर्णे । [अमरः ।

**हस्तिकर्णदल** पु० हस्तिनः कर्ण इव दलमस्य । पलाशभेदे

**हस्तिकोलि** पु० हस्तीव कोलिः । बदरीभेदे रत्नमा० ।

**हस्तिघोषा** स्त्री हस्तीव बृहती घोषा । बृहद्घोषायाम् मदनपालः । [घोषायाम् रत्नमा० ।

**हस्तिघोषातकी** स्त्री हस्तीव बृहती घोषातकी । हस्ति-

**हस्तिचारिणी** स्त्री हस्तीव चरति चर-णिनि ङीप् । महाकरञ्जे राजनि० ।

**हस्तिदन्त** पु० ६त० । १करिदन्ते । तदाकारोऽस्त्यस्य अच् । २मूलके न० राजनि० तत्रार्थे पु० शब्दर० । ३भित्तिनिखाते काष्ठनिर्मितकीलिकाकारे पदार्थे नागदन्तादयोऽप्यत्र । [कर्कटीभेदे राजनि० ।

**हस्तिदन्तफला** स्त्री हस्तिदन्त इव फलमस्याः । एर्वारौ

**हस्तिन्** पु० हस्तः शुण्डादण्डोऽस्त्यस्य । १गजे २चन्द्रवंश्ये नृपभेदे च ।
"सुहोत्रस्यापि दायादो हस्ती नाम बभूव ह । तेनेदं निर्मितं पूर्वं पुरं तु हस्तिनापुरम् । हस्तिनश्चैव दायादास्त्रयः परमधार्मिकाः । अजमीढो द्विमीढश्च पुरुमीढस्तथैव च" हरिवं० २० अ० ।

**हस्तिनख** पु० हस्तिनो नख इव हस्तिना न खन्यते नञ्+खन-ड वा । १पुरद्वारस्थे मृत्कूटे अमरः । २दुर्गद्वारावरोधनार्थं निर्मीयते खातोद्धृते मृदादौ च भरतः ।

**हस्तिनापुर** न० हस्तिना तदाख्यनृपेण चिह्नितं तत्कृतत्वात् पुरम् शाकपा० । (दिल्ली) पुरभेदे ।

**हस्तिनी** स्त्री हस्तिनः योषा ङीप् । १करिण्याम् गजयोषिति चतुर्विधस्त्रीमध्ये २स्त्रीविशेषे तल्लक्षणं यथा "स्थूलाधरा स्थूलनितम्बभागा स्थूलाङ्गुली स्थूलकुचा सुशीला । कामोत्सुका गाढरतिप्रिया च नितम्बखर्वा खलु हस्तिनी स्यात्" "हंसे तुष्टा च हस्तिनी" रतिमञ्जरी । ३हट्टविलासिन्यां शब्दच०, [स्वार्थे क तत्रैव ।

**हस्तिप** पु० हस्तिनं पाति पा-क । हस्त्यारोहे अमरः ।

**हस्तिपत्र** पु० हस्ती तत्कर्ण इव पत्रमस्य । हस्तिकन्दवृक्षे राजनि० । [इत्त्वम् । राजकोशातक्याम् राजनि० ।

**हस्तिपर्णिका** स्त्री हस्ती तत्कर्ण इव पर्णमस्याः कप् अत

**हस्तिपर्णी** स्त्री हस्ती तत्कर्ण इव पर्णमस्या ङीप् । १मोरटालतायां रत्नमा० । २कर्कट्याञ्च राजनि० ।

**हस्तिमद** पु० ६त० । १करिकरनिःसृतमदजले । स इव । २गन्धद्रव्यभेदे च राजनि० ।

**हस्तिमल्ल** पु० हस्तिषु मल्लः । १ऐरावतगजे । २गणेशे ३शङ्खे ४नागे च मेदि० । [राजनि० ।

**हस्तिरोहणक** पु० हस्तीव रोहते ल्यु स्वार्थे क । महाकरञ्जे

**हस्तिलोध्रक** पु० हस्तीव लोध्रः स्वार्थे क । लोध्रभेदे राजनि० ।

**हस्तिविषाणी** स्त्री हस्तिविषाणं गजदन्तस्तदाकारः मध्यभागः (थोड़) अस्याः गौरा० ङीष् । १कदल्याम् राजनि० ।

**हस्तिशुण्डा(ण्डी)** स्त्री हस्तिशुण्डस्तदाकारोऽस्त्यस्याः अच् वा गौरा० ङीष् । (हातिशुड़ा) इति ख्याते राजनि० ।

**हस्तिश्यामाक** पु० हस्तीव स्थूलः श्यामाकः । स्थूलश्यामाके राजनि० । [क्षत्य क्षत्वा वा ।

**हस्ते** अव्य० हस्त+ए । १पाणौ इत्यर्थे २स्वीकारे च हस्ते-

**हस्त्य** त्रि० हस्तेन स्वीकृतः हस्तः कृतो वा यत् । १हस्तगृहीते २पाणिदत्ते ३पाणिकृते त्रि० कौ० ।

**हस्त्यध्यक्ष** पु० ७त० । गजाध्यक्षे गजरक्षणादौ नियुक्ते "हस्तिशिक्षाविधानज्ञो वन्यजातिविशारदः । क्लेशक्षमस्तथा राज्ञो गजाध्यक्षः प्रशस्यते" मत्स्यपु० १८९अ० ।

**हस्त्यारोह** पु० हस्तिनमारोहति आ+रुह अण् । हस्तिपके अमरः ।

**हस्र** त्रि० हस-कर्मणि र । मूर्खे उणा० । [शब्दच० ।

**हहल** अव्य० हेति हलति । हालाहले स्थावरविषभेदे

**हहा** पु० हेति शब्दं जहाति हा-क्विप् । गन्धर्वभेदे शब्दमा० ।

**हा** त्यागे जु० प० स० अनिट् । जहाति जहति जहि अहासीत् हीयते ओदित् निष्ठातस्य नः हीनः हानिः ।

**हा** गतौ जु० आ० स० अनिट् ओदित् निष्ठातस्य नः । जिहीते अहासिष्ट जहे हानम् ।

**हा** अव्य० हा-का । १विषादे २शोके ३पीड़ायाम् अमरः ४कुत्सायाञ्च मेदि० । हाशब्दस्य निन्दापरत्वे तद्योगे षष्ठ्यर्थे द्वितीया "हा लोकं कोऽमवर्द्धनम्" वोपदेवः । निन्दनीयपरत्वे न, "हा पितः! क्वासि वैदेहि!" भट्टिः ।

**हाङ्गर** पुंस्त्री हा विषादाय पीडायै वा अङ्गं राति रा-क । स्वनामख्याते जलजन्तुभेदे शब्दच० स्त्रियां ङीष् ।

**हाटक** न० हट-ण्वुल् । १देशभेदे २तत्जे स्वर्णे तन्नाम-

नामके पुष्पे च अमरकोषः । ४स्वर्णनिर्मिते त्रिलिङ्गः ।

**हाटकेश्वर** पु॰गोदावरीतीरस्थे शिवलिङ्गभेदे यथा "एतांश्च-न्तरं प्राप्ताः सर्वे एवर्षिपार्थिवाः । दृष्टुं त्रैलोक्यभर्त्तारं त्र्यम्बकं हाटकेश्वरम् । ततः कपिवरः प्राप्तो हताश्वा सह सुन्दरि ! । स्नात्वा गोदावरीतीर्थे दिदृक्षुर्हाटकेश्वरम्" वामनपु॰ ६२अ॰ ।

**हात** न॰ हा-करणे क्त । वेतने त्रि॰ कौ॰ । पृषो॰ । हान्त । मरणे उणादि॰ । [त्यक्त" भट्टिः ।

**हान** न॰ हा-भावे क्त । परित्यागे "हिमहानकृता न क्षता

**हानि** स्त्री हा-क्तिन् तस्य निः । १क्षतौ २अपचये च जटा॰ ।

**हापुत्री** स्त्री हा इति रवः पुत्राय यस्याः ङीप् । पक्षिभेदे हारा॰ । स्वार्थे क ह्रस्वः । तत्रार्थे त्रिका॰ ।

**हायन** पु॰ अम्बु जहाति हा-ल्यु-नि॰ । १व्रीहौ भावं जहाति हा-ल्यु-नि॰ । २वत्सरे पुंस्त्री॰ अमरः । ३अग्निशिखायां स्त्री मेदि॰ ।

**हार** पु॰ हृ-कर्मणि घञ् । १मुक्तामालाभेदे अमरः "हारो नारोपितः कण्ठे" इति सीतावाक्यम् । २युद्धे मेदि॰ । हरतीति कर्त्तरि घञ् वा । ३भाजके "अन्योन्य हाराभिहतौ हरांशौ" इति लीला॰ ।

**हाफिका** स्त्री जृम्भायां (हाइतोला) हारा॰ ।

**हारक** पु॰ हृ-ण्वुल् । १चौरे २कितवे ३गद्यभेदे ४विज्ञानभेदे मेदि॰ । ५शाखोटकभेदे शब्दच॰ । ६भाजकाङ्के च । ७हरणकर्त्तरि त्रि॰ । [कपिलद्राक्षायाम् राजनि॰ ।

**हारहारा** स्त्री हार इव हरति आस्वादनात् हृ-अच् ।

**हारहूरा** स्त्री ह्वे-क्विप् हूः हार इव हूवं राति रा-क । १द्राक्षायाम् हला॰ । २मद्ये पु॰ मेदि॰ ।

**हारावली** स्त्री हार इवावली । मुक्तावल्यां "शृङ्गारहारावली" इति मल्लाख्यः । २पुरुषोत्तमकृते कोषभेदे च ।

**हारि(री)** स्त्री हृ-णिच्-इन् वा ङीप् । १द्यूतादिभङ्गे २तत्पराजये ३पथिकसमूहे च मेदि॰ ङीबन्तः ४सुन्दर्यां स्त्री शब्दमा॰ । [कोकिले मेदि॰ स्त्रियां ङीष् ।

**हारिकण्ठ** पुंस्त्री॰ हारी मनोहरः कण्ठस्वरो यस्य ।

**हारित** पुंस्त्री॰ हृ-णिच्-क्त । हारीते पक्षिभेदे जटा॰ स्त्रियां ङीष् । हृ इतेव स्वार्थे अण् । हारिद्वर्णे पु॰ ।

**हारितक** न॰हारितेन हरिद्वर्णेन कायति कै-क । शाके शब्दर॰

**हारिद्र** पु॰ हरिद्रया रक्तः अण् । १कदम्बःवृक्षे तत्पुष्पस्य पीतप्रायत्वात् तथात्वम् । २हरिद्रया रक्ते त्रि॰मेदि॰ ।

**हारिन्** त्रि॰ हारोऽस्त्यस्य इनि हृ-णिनि वा । १हारके

२हर्त्तरि ३मनोहारिणि च । "हारीव्हललानां हारीव्हललानाम्" भट्टिः । स्त्रियां ङीप् ।

**हारिल** पुंस्त्री॰ हृ-णिच् इलच् । स्वनामख्याते खगभेदे राजनि॰ स्त्रियां जातित्वात् ङीष् ।

**हारीत** पु॰ हृ-णिच्बा॰-ईतच् । स्मृतिकर्त्तरि मुनिभेदे । २पक्षिभेदे ३कितवे च मेदि॰ । स्वार्थे क । हारिलखगे (हरेल) राजनि॰ ।

**हार्द** न॰ हृदयस्य कर्म युवा॰ अण् हृदादेशः । १स्नेहे २प्रेमणि अमरः । हृदि भवः विदितो वा अण् । ३हृदयस्थे ४हृदयवेद्ये च त्रि॰ हार्दविद्या शा॰भा॰ ।

**हार्य** पु॰ ह्रियतेऽसौ हृ-ण्यत् । १विभीतकवृक्षे २हरणीये त्रि॰ मेदि॰ ।

**हाल** पु॰ हलोऽस्त्यस्य अण् हल एव वा अण् । १बलरामे त्रिका॰ २हले च मेदि॰ । ३शालिवाहननृपे हेमच॰ ।

**हालक** पु॰हाल+संज्ञायां कन् । पीतहरितवर्णाश्वे हेमच॰ ।

**हालह(हा)ल** न॰हलाहल पृषो॰ । हालाहलविषे शब्दर॰

**हाला** स्त्री हल-घञ् । १मद्ये अमरः २तालरसजे (ताड़ि) मद्ये च राजनि॰ ।

**हालाहल** पुंन॰हालेव हलति हल-अच् । १स्थावरविषभेदे शब्दर॰ । २कीटभेदे च पु॰ राजनि॰ । २मद्ये स्त्री तत्र ङीप् राजनि॰ । "गोस्तनाभफलो गुच्छस्तालपत्रच्छदस्तथा । तेजसा यस्य दह्यन्ते समीपस्था द्रुमादयः । असौ हालाहलो ज्ञेयः किष्किन्ध्यायां हिमालये । दक्षिणाब्धितटे देशे कोङ्कणेऽपि च जायते" भावप्र॰ ।

**हालिक** त्रि॰ हलेन खनति हलः प्रहरणमस्य तस्येदं वा ठक् ठञ् वा । १हलकर्षके २हलेन योद्धरि ३हलसम्बन्धिनि च अमरः ।

**हालिनी** स्त्री हल-णिनि ङीप् । स्थूलपल्ल्यां हेमच॰ ।

**हाली** स्त्री हल-इण् ङीप् । कनिष्ठायां श्यालिकायाम् हेमच॰ ।

**हालु** पु॰ हल-उण् । दन्ते त्रिका॰ ।

**हाव** पु॰ ह्वे-भावे घञ् नि॰सम्प्र॰हु-करणे घञ् । १आह्वाने २स्त्रीणां शृङ्गारभावजे चेष्टाभेदे च अमरः । "युवा-नोऽनेन हूयन्ते नारीभिर्मदनानले । अतो निरुच्यते हावस्ते विलासादयो मताः" भरतधृतवाक्यम् । "ग्रीवारेचकसंयुक्तो भ्रूनेत्रादिविकासकृत् । भावादीषत्प्रकाशो यः स हाव इति कथ्यते" उज्ज्वलमणिः ।

**हास** पु॰हस-भावे घञ् । हास्यस्थायिभावके रसभेदे तद्लक्षणं

सा॰द॰“विकृताकारवाग्वेशचेष्टादेः कुहकाद्भवेत् । हासो हास्यस्थायिभावः श्वेतः प्रमथदैवतः । विकृताकारवाक्चेष्टं यदालोक्य हसेज्जनः । तदत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम् । अनुभावोऽक्षिसङ्कोचवदनस्मेरतादिकः । निद्रालस्यावहित्थाद्या अत्र स्युर्व्यभिचारिणः” ।

**हासस्** पु॰ हस–णिच् असुन् । चन्द्रे वेदनि॰ ।

**हासिका** स्त्री हस–भावे ण्वुल् । हास्ये हेमच॰ ।

**हास्तिक** न॰ हस्तिनां समूहः वुञ् ।१हस्तिसमूहे अमरः । हस्तिनमारोहति ठक् । २हस्त्यारोहे ।

**हास्तिन** न॰ हस्तिना न्पेण निर्वृत्तम् नगरम् अण् संयोगपरत्वादिनो नटिलोपः । हस्तिनापुरे त्रिका॰ । हस्तिना इदं हस्तिनः परिमाणं वा अण् । २हस्तिसम्बन्धिनि ३हस्तिपरिमाणे च त्रि॰ ।

**हास्य** न॰ हस–ण्यत् । १हासे हसने अमरः २अलङ्कारोक्ते रसभेदे च । “अवक्त्रं हसितं श्रेष्ठं मौनितञ्च भयापहम् । अत्यट्टहसितं दुष्येत् तत् शोकादस्य नैकधा” गारुड़े ६६अ॰ ।

“ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते च नीचानामपहसितं तथाऽतिहसितञ्च षड्भेदाः”। “ईषद्विकासि नयनं स्मितं स्यात् स्पन्दिताधरम् । किञ्चित् लक्ष्यद्विजं तत्र हसितं कथितं बुधैः । मधुरस्वरं विहसितमांसशिरःकम्पमवहसितम् । अपहसितं सास्राक्षं विक्षिप्ताङ्गं भवत्यतिहसितम्” सा॰ द॰ ।

**हाहा** पु॰हेति शब्दं जहाति क्विप् ।१देवगन्धर्वभेदे अमरः । अदन्त हाहश् शब्दोऽपि तत्रार्थे भरतः । हा–हित्वम् २विस्मयशब्दे ३शोकशब्दे च अव्य॰ मेदि॰ ।

**हाहाकार** पु॰हाहा इत्यस्य कारः कृ–भावे घञ् ।१युद्धशब्दे २शोकध्वनौ च ।

**हि** वर्द्धने गतौ च स्वा॰पर॰सक॰अनिट् । हिनोति अहैषीत् जिघाय ।

**हि** अव्य॰ हा–ड़ि–वा डि । १हेतौ २अवधारणे अमरः । ३विशेषे ४प्रश्ने ५सम्भ्रमे ६हेत्वपदेशे ७असूयायां च मेदि॰ ८पादपूरणे ९शोके च शब्दर॰ ।

**हिंसक** पु॰ हिन्स–ण्वुल् । १व्याघ्रादौ हिंस्रे पशौ २शत्रौ च ३आथर्वणे विप्रे ४हिंसाकारके त्रि॰ शब्दर॰ । “मोक्तानुमन्ता संस्कर्त्ता क्रयिविक्रयिहिंसकाः । उपहर्त्ता घातयिता हिंसकाश्चाष्टधा मताः” काशीख॰ ।

**हिंसा** स्त्री हिन्स–अ । १वधे मेदि॰। २चौर्य्यादिकर्म्मणि च अमरः। “हिंसा चैव न कर्त्तव्या वैधहिंसा तु राजसी। ब्राह्मणैः सा न कर्त्तव्या यतस्ते सात्त्विका मताः” वृहन्मनुः । वैधहिंसाशब्दे ४८७५ पृ॰ दृश्यम् ।

**हिंसारु** पु॰ हिन्स–आरु । व्याघ्रे त्रिका॰ ।

**हिंसालु** पु॰ हिंसा+अस्त्यर्थे आलु । १हिंसाशीले उज्ज्वला॰ । २कुक्कुरे पु॰ हारा॰ ।

**हिंसीर** पु॰ हिंसा–ईरन् । १व्याघ्रे २खगे च उज्ज्वा॰ ।

**हिंस्र** त्रि॰ हिन्स–र । १हिंसाशीले अमरः । २घोरे ३भये ४भीमसेने ५हरे पुं॰उज्ज्वा॰।६मांस्यां ७काकादन्यां ८जटामांस्याम् ९एलवालुकायां १०गवेधुकायां ११शिरायाम् १२नाड्यां च स्त्री शब्दच॰ ।

**हिक्क** कूजने भ्वा॰ उ॰अ॰ सेट् । हिक्कति ते अहिक्कीत् अहिक्किष्ट ।

**हिक्क** हिंसायां चु॰आ॰सक॰ सेट् । हिक्कयते अजिहिक्कत ।

**हिक्का** स्त्री हिगिति शब्दं करोतीति पृषो॰। रोगभेदे (हेचकी) अमरः ।

तन्निदानादिकं भावप्र॰ उक्तं यथा

“अथ हिक्काधिकारः । तत्र हिक्कायाः विप्रकृष्टं निदानमाह “विदाहिगुरुविष्टम्भिरूक्षाभिष्यन्दिभोजनैः । शीतपानाशनस्थानरजोधूमातपाऽनिलैः । व्यायामकर्म्मभाराध्ववेगाघातापतर्पणैः । हिक्का श्वासश्च कासश्च नृणां समुपजायते” । अपतर्पणमनशनादि । संप्राप्तिमाह “वायुः कफेनानुगतः पञ्च हिक्काः करोति हि । अन्नजां यमलां क्षुद्रां गम्भीरां महतीं तथा” । सामान्यलक्षणमाह “मुहुर्मुहुर्वायुरुदेति सस्वनः यकृत्प्लिहान्त्राणि मुखादिवाक्षिपन् । सघोषवानाशु हिनस्त्यसून् यतस्ततस्तु हिक्केत्यभिधीयते बुधैः”। वायुरत्र सोदानः प्राणो बोद्धव्यः । उदेति ऊर्द्ध्वं याति । सस्वनः शब्दवान् । ऊर्द्ध्वगमनं विशिनष्टि यकृदित्यादि प्लिह इति शब्दोऽप्यस्ति दीर्घत्वं विकल्पात् । मुखादिति ल्यब्लोपे पञ्चमी तेन यकृत्प्लीहान्त्राणि मुखमानीय क्षिपन् निःसारयन् इवेत्यर्थः । वायुः दोषवान् दोषोऽत्र कफः तद्वान् वायुः कफेनानुगत इति संप्राप्तिः । हिनस्तीति हिक्का पृषोदरादित्वात् रूपसिद्धिः हिगिति शब्दं करोतीति वा । पूर्वरूपमाह “कण्ठोरसोर्गुरुत्वञ्च वदनस्य कषायता । हिक्कानां पूर्वरूपाणि कुक्षेराटोप एव च” । वदनस्य कषायता वातात् । अन्नजालक्षणमाह “पानान्नैरतिसंयुक्तैः सहसा पीडितोऽनिलः । हिक्कयत्यूर्द्ध्वगो भूत्वा तां विद्यादन्नजां भिषक्” अनिलः प्राणो वायुः । यमलाहिक्कामाह “चिरेण यम-

लैर्वेगैर्या हिक्का समवर्त्तते। कम्पयन्ती शिरोग्रीवां यमलां तां विनिर्दिशेत्”। क्षुद्रामाह “विकृष्टकालैर्या वेगै मन्दैः समभिवर्त्तते। क्षुद्रिका नाम सा हिक्का जत्रु-मूलं प्रधावति”। विकृष्टकालैः चिरेण। जत्रुः कच्चो रयोः सन्धिः। गम्भीरामाह “नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी। अनेकोपद्रववती गम्भीरा नाम सा स्मृता”। अनेकोपद्रववती तृष्णाज्वरादियुक्ता। महतीमाह “मर्माणि पीडयन्तीव सततं या प्रवर्त्तते। महाहिक्केति सा ज्ञेया सर्वगात्रप्रकम्पिनी”। मर्माणि वस्तिहृदयशिरःप्रभृतीनि। असाध्यत्वमाह “आयम्यते हिक्कितो यस्य देहो दृष्टिश्चोर्द्धं ताम्यते नित्य-मेव। क्षीणोऽन्नद्विट् क्षौति यश्चातिमात्रं तौ द्वौ चान्त्यौ वर्जयेद्धिक्कमानौ। आयम्यते विस्तार्यत इव तौ द्वाविति आयम्यत इत्यादिना निष्ठमेवेत्यन्तेनैको हिक्कमानः। क्षीण इत्यादिनाऽतिमात्रमित्यन्तेनापरः। तौ द्वौ अन्त्यौ च गम्भीरया महतीहिक्कया हिक्कमानौ वर्जयेत्। अपरञ्च “अतिसञ्चितदोषस्य भक्तच्छेद कृशस्य च। व्याधिभिः क्षीणदेहस्य वृद्धस्यातिव्यवायिनः। आसां या सा समुत्पन्ना हिक्का हन्त्याशु जीवितम्। यमिका च प्रलापार्त्तिमोहतृष्णासमन्विता”। साध्यत्वमाह “अक्षीण-श्चाप्यदीनस्य स्थिरधात्विन्द्रियस्य च। तस्य साधयितुं शक्या यमिका हन्त्यतोऽन्यथा”।

**हिङ्गु** न॰ हिङ्गं गच्छति गम-डु नि॰। (हिङ्) रामठदेशोद्भवे वृक्षे अमरः यस्य निर्यासो हिङ्गुद्रव्यम्। “हिङ्गूष्णं पाचनं रुच्यं तीक्ष्णं वातबलासहृत्। रसे पाके च कटुकं स्निग्धञ्च वह्निदीपनम्। शूलगुल्मोदरानाहकृमिघ्नं पित्तवर्द्धनम्” भावप्र॰। “हिङ्गु तीक्ष्णं कटुरसं शूलाजीर्णविबन्धनुत्। मधूष्णं पाचनं स्निग्धं दीपनं कफवातजित्” राजव॰। २वंशपत्रे भावप्र॰

**हिङ्गुनाडिका** स्त्री हिङ्गुन नाडी इव नाडी यस्याः कप्। नाडीहिङ्गौ राजनि॰।

**हिङ्गुनिर्यास** पु॰ हिङ्गुन इव निर्यासोऽस्य। १निम्बवृक्षे अमरः ६त॰। २हिङ्गुवृक्षनिर्यासे च (हिङ्)।

**हिङ्गुपत्र** पु॰ हिङ्गुन इव पत्त्रमस्य। १इङ्गुदीवृक्षे राजनि॰ (हिङ्पात) २वृक्षभेदे स्त्री ङीप् भरतः।

**हिङ्गुपर्णी** हिङ्गुन इव पर्णमस्याः गौरा॰ ङीष्। वंशपत्राम् रत्नमाला।

**हिङ्गुल** पुंन॰ हिङ्गु तद्वर्णं लाति ला-क। रक्तवर्णे वर्णकद्रव्यभेदे अमरः २वार्त्ताक्यां शब्दच॰ स्त्री ङीप्। वर्णकभेदे तस्य शोधनादिकं भावप्र॰ उक्तं यथा “मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम्। सप्त वारान् प्रयत्नेन शुद्धिमायाति निश्चितम्”। एवं शोधितस्य हिङ्गुलस्य गुणाः। “तिक्तं कषायं कटु हिङ्गुलं स्यान्नेत्रामयघ्नं कफपित्तहारि। हृल्लासकुष्ठज्वरकामलांश्च प्लीहामवातौ च गरं निहन्ति”। अथ हिङ्गुलात्सूतकर्षणविधिः “निम्बूरसैर्निम्बपत्त्ररसैर्वा याममात्रकम्। इत्वा दरदमूर्द्ध्वन्तु पातयेत् सूतयुक्तिवत्। ततोऽर्द्धपिठरीलग्नं गृह्णीयाद्रसमुत्तमम्। शुद्धमेव हितं सूतं सर्वकर्मसु योजयेत्”। तत्पातनं दरदशब्दे ३४७।पृ॰ दृश्यम्। सतीदेहप्रत्यङ्गपातस्थाने ३देवीविशेषे स्त्री (हिङ्लाज)। “ब्रह्मरन्ध्रं हिङ्गुलायां देवता भीमलोचना। कोटवी सा महामाया त्रिगुणा या दिगम्बरी” पीठमा॰।

**हिङ्गुलु** पुंन॰ हिङ्गु तद्वर्णं लाति ला-डु। (हिङ्गुल) वर्णकद्रव्ये अमरः।

**हिङ्गुसिराटिका** स्त्री हिङ्गुन इव शिरां पत्त्रशिरामटति अट-ण्वुल् अत इत्त्वम्। वंशपत्त्राम् रत्नमा॰।

**हिङ्गूल** न॰ हिङ्गु-ल+पृषो॰। मधुरमूले (आलु) शब्दच॰।

**हिज्ज** पु॰ हिनोति हि-क्विप् तथा सन् जायते जन-ड कर्म॰। हिज्जलवृक्षे शब्दर॰। [भेदे (हिजल) जटा॰

**हिज्जल** पु॰ हि-क्विप् हि। हितकारि जलं यस्य। वृक्ष-

**हिञ्जीर** पु॰ हस्तिपादबन्धे हेमच॰। [धर्ह्हिङ्ग॰।

**हिड** गतौ भ्रमणे भ्वा॰ आ॰ सक॰सेट् इदित्। हिण्डते

**हिडिम्ब** पु॰१राक्षसभेदे स हि भीमेन हतः २तद्भगिन्यां स्त्री

**हिडिम्बजित्** हिडिम्बं राक्षसभेदं जितवान् जि-क्विप्। भीमसेने हिडिम्बघ्नप्रभृतयोऽप्यत्र। [भार॰ आ॰।

**हिडिम्बापति** पु॰ ६त॰। १हनुमति शब्दर॰ २भीमसेने

**हिण्डन** न॰ हिडि-ल्युट्। १भ्रमणे २रमणे मेदि॰। ३लेखने च विश्वः। [चाब्दे हारा॰

**हिण्डिक** पु॰ हिडि-इन् हिण्डौ कायति कै-क। जग्गा-

**हिण्डि(ण्डी)र** पु॰ हिडि-इरन् ईरन् वा। १समुद्रफेने अमरः। २वार्त्ताकौ ३पुरुषे मेदि॰ ४रुचके च उणा॰।

**हिण्डी** स्त्री हिडि-इन् ङीप्। दुर्गायां त्रिका॰।

**हिण्डीप्रियतम** पु॰ ६त॰। शिवे शब्दर॰ हिण्डोपत्यादयोऽप्यत्र। [४मरुके च।

**हित** त्रि॰ धा-क्त हि-क्त वा। १गते २पथ्ये ३इष्टसाधने

**हितक** पु॰ हित+स्वार्थे क। शिशौ राजनि॰।

**हितकारिन्** त्रि० हितं करोति कृ-णिनि । शुभकारके ।

**हितप्रणी** पु० हितं प्रणयति प्र+णी क्विप् । चारे शब्दर० ।

**हितावली** स्त्री हितम् आवलयति आ+वल-इन् ङीप् । ओषधिभेदे अमरः । [कारिणि स्त्रियां ङीप् ।

**हितैषिन्** त्रि० हितमिच्छति इष-णिनि । हितेच्छा-

**हितोपदेश** पु० हितस्य इष्टसाधनस्य उपदेशः । १हितस्य उपदेशे विष्णुशर्मकृते २नीतिग्रन्थभेदे च ।

**हिन्ताल** पु० हीनस्तालो यस्मात् पृषो० । (हें ताल) इत्ये अमरः "हिन्तालो मधुराम्लश्च कफकृत् पित्तदाहहृत् । श्रमतृष्णापहारी च शिशिरो वातदोषकृत्" राजनि० ।

**हिन्दोल** पु० हिल्लोल+घञ् पृषो० । १आवर्त्तयुक्तपक्ष-विहिते दोलनबन्धे च भगवतो दोलनरूपे २उत्सवभेदे ३रागभेदे च सङ्गीतदा० । ४दोलायां स्त्री स्वार्थे क । यानभेदे जटा० ।

**हिन्दु** पु० हीनं दूषयति दुष+डु पृषो० । जातिभेदे । "पश्चिमाम्नायमन्त्रास्तु प्रोक्ताः पारस्यभाषया । अष्टो-त्तरशताशीतिर्येषां संसाधनात् कलौ । पञ्च खानाः सप्त-मीरा नव शाहा महाबलाः । हिन्दुधर्मप्रलोप्तारो जा-यन्ते चक्रवर्त्तिनः । हीनञ्च दूषयत्येव हिन्दुरित्युच्यते प्रिये ! । पूर्वाम्नाये नवशतं षडशीतिः प्रकीर्त्तिताः । फिरिङ्गभाषया मन्त्रास्तेषां संसाधनात् कलौ । अधिपा मण्डलानाञ्च संग्रामेष्वपराजिताः । इंरेजा नवषट् पञ्च लण्डजाश्चापि भाविनः" मेरुतन्त्रे २३प्र० । अप्रमाणमिदम् ।

**हिम** न० हि-मक् । १आकाशच्युते जलकणे २शीतलस्पर्शे ३तद्वति त्रि० अमरः । ४शुक्लैलायां ५रेणुकायां ६भद्र-मुस्तायाम् ७नागरमुस्तायां ८पृक्कायां ९चविकायां च स्त्री राजनि० । १०अग्रहायणपौषमासात्मके ऋतुभेदे ११चन्दनवृक्षे पु० हेमच० १२कर्पूरे पु० राजनि० ।

**हिमक** पु० हिमेन कायति कै-क । विकङ्कतवृक्षे राजनि० ।

**हिमकर** पु० हिमः करः किरणो यस्य हिमं करोति निशेषणात् कृ-अच् वा । १चन्द्रे २कर्पूरे च राजनि० । हिमकिरणादयोऽप्यत्र ।

**हिमकूट** पु० हिमस्य कूटं यत्र । १शिशिरर्त्तौ राजनि० हिमप्रचुरं कूटमस्य । २हिमगिरौ हिमालयपर्वते ।

**हिमगिरि** पु० हिममयो गिरिः हिमप्रधानो वा गिरिः । हिमालयपर्वते हिमपर्वतादयोऽप्यत्र ।

**हिमज** पु० हिमात् हिमालयात् जायते जन-ड । १मैनाक-पर्वते । २पार्वत्यां ३शठ्यां स्त्री मेदि० । हिमे हिमकाले जायते जन-ड । ४क्षीरिण्यां लतायां स्त्री राजनि० ।

**हिमझण्टि** पु० झटि इन् ६त० । कुज्झटौ हारा० ।

**हिमतैल** पु० हिमवीर्य्यं तैलम् । कर्पूरजाते तैले राजनि० ।

**हिमदुग्धा** स्त्री हिमवीर्य्यकरं दुग्धमस्याः । क्षीरिण्याम् राजनि० ।

**हिमदुर्दिन** न० हिमहेतुकं दुर्दिनम् शाक० । हिमपातेन दुःखकरे दिने कुज्झटिकायुक्तदिने त्रिका० । [राजनि०

**हिमद्रुम** पु० हिमप्रधाने जायमानः द्रुमः । निम्बवृक्षे

**हिमप्रस्थ** पु० हिमः शीतलः प्रस्थो यस्य । हिमालयपर्वते हेमच० । [राजनि० ।

**हिमबालुक** पु० हिममयी बालुकेव अंशो यस्य । कर्पूरे

**हिमबालुका** स्त्री हिमस्य बालुकेव । कर्पूरे अमरः ।

**हिमवत्** पु० हिमानि प्राचुर्य्येण सन्त्यस्य मतुप् मस्य वः । हिमालयपर्वते हेमच० ।

**हिमवत्सुत** पु० ६त० । १मैनाकपर्वते २गङ्गायाम् ३उमा-याञ्च स्त्री । "गङ्गा हिमवतो जज्ञे सर्वलोकैकपावनी । स योगाग्निबलाद्देवीं लेभे पुत्रीं महेश्वरीम्" देवीपु०१२अ० ।

**हिमशर्करा** पु० हिमप्रधाना शर्करा शा०त० । यावनाले राजनि० ।

**हिमशैल** पु० हिमप्रधानः शैलः । हिमाचले ।

**हिमशैलजा** स्त्री हिमशैलाज्जायते जन-ड । १उमायां शब्दर० २गङ्गायाम् । [(बरफ) पदार्थे च अमरः ।

**हिमसंहति** स्त्री ६त० । १हिमसमूहे २हिमेन कृतसङ्घाते

**हिमहासक** पु० हिमं हसति शीतवीर्य्यत्वात् हस-ण्वुल् । हिन्तालवृक्षे जटा० । [राजनि० ।

**हिमांशु** पु० हिमा अंशवोऽस्य । १चन्द्रे अमरः २कर्पूरे च

**हिमांशुभिख्य** न० हिमांशोरिवाभिख्या शोभा यस्य । रौप्ये हेमच० । तस्य अतिशुभ्रत्वात् तथात्वम् ।

**हिमागम** पु० हिमस्यागमो यत्र । हेमन्ते अग्रहा-यणपौषमासात्मके ऋतौ राजनि० ।

**हिमाद्रिजा** स्त्री हिमाद्रौ हेमाद्रेर्वा जायते जन-ड । १क्षीरिण्यां राजनि० । २पार्वत्यां ३गङ्गायाञ्च ।

**हिमाद्रितनया** स्त्री ६त० । १दुर्गायां २गङ्गायाञ्च हि-माद्रिसुतादयोऽप्यत्र । ३मैनाके पु० ।

**हिमानी** स्त्री हिमानां संहतिः हिम+ङीप् आनुक् च । हिमसमूहे अमरः "आगता वत जरेव हिमानी" उद्भटः

**हिमाराति** पु० ६त० । १सूर्य्ये २वह्नौ मेदि० ३अर्कवृक्षे ४चित्रकवृक्षे च ।

**हिमालय** पु० हिमानामालयः । १हिमवत्पर्वते त्रिका० । हिमप्रधान आलया यस्य । २शुक्लखदिरे शब्दच० । ३भूम्यामलक्याञ्च स्त्री राजनि० । स च नगः भारतवर्षस्य सीमापर्वतः । जम्बुद्वीपशब्दे दृश्यम् । [राजनि० ।

**हिमाज** न० हिमकाले आप्सु-जायते जन-ड । उत्पले

**हिमावती** स्त्री हिमं हिमवीर्य्यं विद्यतेऽस्य सेवने मतुप् मस्य वः संज्ञायां दीर्घः स्वर्णक्षीर्य्याम् अमरः ।

**हिमाश्रया** स्त्री हिमं हिमवीर्य्यमाश्रयति आ+श्रि—अच् । स्वर्णजीवन्त्याम राजनि० । कपिकच्छाच्छायाम् राजनि० ।

**हिमोत्तरा** स्त्री हिममुत्तरं यस्याः सेवने शीतवीर्य्यकरत्वात् ।

**हिमोत्पन्ना** स्त्री हिमे उत्पन्ना । यावनाल्यां राजनि० ।

**हिमोद्भवा** स्त्री हिमे तत्प्रधानस्थाने उद्भवति उद्—भू—अच् । शट्याम् राजनि० । [मेदि० ।

**हिरण** न० हृ-ल्युट् नि० । १रेतसि २स्वर्णे ३वराटके च

**हिरण्मय** त्रि० हिरण्यात्मकम् मयट् नि० । १हिरण्यात्मके स्त्रियां ङीप् । "हिरण्मयी शाललतेव जङ्गमा" भट्टिः । जम्बुद्वीपे नववर्षमध्ये २वर्षभेदे न० त्रिका० । "उत्तरोत्तरेणेलावृतं नीलः श्वेतः शृङ्गवान् इति त्रयो रम्यकहिरण्मयकुरूणां वर्षाणां मर्य्यादागिरयः प्रागायता उभयतः क्षारोदावधयो द्विसहस्रयोजन पृथव एकैकशः पूर्वस्मात् पूर्वस्मादुत्तरोत्तरं दशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति" भाग० ५।१६ अ० ।

**हिरण्य** न० हिरणमेव स्वार्थे यत् । १सुवर्णे २शुक्रे अमरः । ३रेतसि शब्दर० । ४द्रव्ये ५वराटके ६अक्षये ७मानभेदे ८धुस्तूरे मेदि० ९रजत १०धने च ।

**हिरण्यकशिपु** पु० दैत्यविशेषे । स तु कश्यपात् दित्यां जातः "दितिः पुत्रद्वयं जज्ञे कश्यपादिति नः श्रुतम् । हिरण्याक्षश्च दुर्द्धर्षो हिरण्यकशिपुस्तथा" "हिरण्यकशिपुर्दैत्यश्चचार परमं तपः । ततो वर्षसहस्राणि निराहारो ह्यवाक्शिराः । तं ब्रह्मा छन्दयामास दैत्यं तुष्टो वरेण तु । सर्वामरत्वं वव्रे स भक्त्या त्वेनं दितिप्रजाम् । अहं सर्वं विनिर्जित्य सर्वदेवत्वमास्थितः । अखिलान्त्रिगुणैश्वर्य्यमेव मे दीयतां वरः । तेनैवमुक्तो ब्रह्मा तु तस्मै दत्त्वा यथेप्सितम् । दत्त्वा चास्य समां दिव्यां तत्रैवान्तरधीयत । हिरण्यकशिपुर्दैत्यः श्लोकैर्गीतः पुरातनैः । राजा हिरण्यकशिपुर्दैत्यो यां यां निषेवते । तस्यां तस्यां नमश्चक्रुर्देवता ऋषिभिः सह । सर्वप्रभावो दैत्योऽभूत् हिरण्यकशिपुः पुरा । स्वयमग्निश्च चन्द्रश्च वायुरिन्द्रो जलं स्वयम् । भूत्वा चकार राज्यं स मन्वन्तरचतुर्दश । तस्यासीत् नरसिंहस्तु मृत्युर्विष्णुः पुरा किल । नखैस्तेन विनिर्भिन्नो नार्द्रशुष्का नखाः स्मृताः" वह्निपु० ।

**हिरण्यकशिपुहन्** पु० हन-क्विप् ६त० । विष्णौ ।

**हिरण्यकामधेनु** स्त्री विधानेन हिरण्यरचिता कामधेनुः । तुलादिषोडशमहादानमध्ये दानार्थं हिरण्येन कल्पितायाम् १धेनौ उपचारात् २तद्दाने च । तद्दानविधिः "अथातः सम्प्रवक्ष्यामि कामधेनुविधिं परम् सर्वकामप्रदं नृणां महापातकनाशनम् । लोकेशावाहनं तद्वद्धोमः कार्य्योऽधिवासनम् । तुलापुरुषवत् कुर्य्यात् कुण्डमण्डपवेदिकाः । स्वल्पेऽप्येकाग्निवत् कुर्य्यात् गुरुरेव समाहितः" । कुण्डमण्डपवेदिका इत्युपलक्षणम् । इह हि देशकालहविष्याग्निशिवादिपूजाब्राह्मणवाचनगुरुऋत्विग्वरणमधुपर्कदानवेदिकोपरिचक्रलेखनपञ्चवर्णवितानतोरणपताकादिकं सर्वं मत्स्यपुराणोक्ततुलापुरुषदानविहितं वेदितव्यम् । स्वल्पेऽप्येकाग्निमदिति, एकाग्निवत्करणं व्याख्यातम् । "काञ्चनस्यातिशुद्धस्य धेनुं वत्सञ्च कारयेत् । उत्तमा पलसाहस्रैस्तदर्द्धेन तु मध्यमा । कनीयसी तदर्द्धेन कामधेनुः प्रकीर्त्तिता । शक्तितस्त्रिपलादूर्द्ध्वमशक्तोऽपीह कारयेत्" । अत्र यद्यपि वत्सपरिमाणमनुक्तं तथापि [illegible] तत्र काञ्चनचतुर्थांशेन वत्सः कल्पनीयः । अन्यान्युपकल्पितद्रव्याण्युक्तवत् [illegible] धेनुदानत्वाविशेषात् तथैव निर्णीयते । तथा च गुडधेन्वादिषु "तच्चतुर्थांशेन वत्सः स्यादिति" तत्र तत्र वक्ष्यते । "वेद्यां कृष्णाजिनं न्यस्य गुडप्रस्थसमन्वितम् । न्यसेदुपरि तां धेनुं महारत्नैरलङ्कृताम् । कुम्भाष्टकसमोपेतां नानाफलसमन्विताम्" । कल्पतरुदाने, प्रस्थो व्याख्यातः । "महारत्नानि पद्मरागप्रभृतीनि, "वस्त्रं दत्त्वा तु विन्यसेदिति" क्वचित्पाठः, नानाफलानि नागरङ्गबीजपूरप्रभृतीनि मोचकादीनि कल्पतरुदानोक्तानि । "तथाष्टादश धान्यानि समन्तात् परिकल्पयेत् इक्षुदण्डाष्टकं तद्वन्नानाफलसमन्वितम् । भाजनं चासनं तद्वत् ताम्रदोहनकं तथा" । अष्टादश धान्यानि परिभाषायां द्रष्टव्यानि नानाफलानि मातुलिङ्गादीनि । "कौशेयवस्त्रद्वयसम्प्रयुक्तास दीपातपत्राभरणाभिरामाम् । सचामरां कुण्डलिनीं सघण्टां सुवर्णशृङ्गीं मणिपादुकाम् ।

आग्नेयं९ सौम्यं१० इति, चत्वारि११ वेदव्रतानि गोदानं१५ केशान्त१६श्चेति द्वादश, पूर्वाश्चतस्र इत्यु भयेषु षोडशत्वम्। “मूर्त्त्यादिकञ्च गुरवे दत्त्वा मन्त्रमिमं जपेत्। नमो हिरण्यगर्भाय विश्वगर्भाय ते नमः। चराचरस्य जगतो गृहभूताय वै नमः। मात्राऽहं जनितः पूर्वं मर्त्त्यधर्मा द्विजोत्तमः। त्वद्गर्भसम्भवादेव दिव्यदेहो भवाम्यहम्। चतुर्भिः कलशैर्भूयस्ततस्ते द्विजपुङ्गवाः। स्नानं कुर्य्युः प्रसन्नाश्च सर्वाभरणभूषिताः”। कलशैः कुण्डसमीपस्थितैरेव, स्नानं कुर्य्युर्यजमानस्येति शेषः “देवस्येति मन्त्रेण स्थितस्य कनकासने। अद्य जातस्य तेऽङ्गानि अभिषेक्ष्यामहे वयम्। दिव्येनानेन वपुषा चिरञ्जीव सुखीभव। ततो हिरण्यगर्भं तं तेभ्यो दद्याद्विचक्षणः”।

**हिरण्यनाभ** पु० हिरण्यं नाभौ यस्य अच्समा०। मैनाकपर्वते हेमच०।

**हिरण्मय** हिरण्यस्य विकारः तदात्मकं वा मयट् वेदे निपातात् मलोपः। १हिरण्यात्मके २स्वर्णविकारे च “हिरण्ययेन सविता रथेना” यजु०। ४२अ० स्थ्यमन्त्रः “अथ य एष हिरण्मयः पुरुषो दृश्यते” छान्दो० उ०।

**हिरण्यरेतस्** पु० हिरण्यं रेतो यस्य। १वह्नौ २चित्रकवृक्षे च अमरः। अग्निरेतसशब्दे दृश्यम्। ३सूर्य्ये मेदि० ४अर्कवृक्षे ५शिवे जटा०।

वह्नेस्तन्नामकारणं यथा “यत्पीतं वीतिहोत्रेण वीर्य्यं त्यक्तं पिनाकिना। तेनाक्रान्तोऽभवत् ब्रह्मन्! मन्दतेजा हुताशनः”। ‘हुताशनोऽपि च भयाद् यत्र तत्र परिभ्रमन्। पञ्च वर्षसहस्राणि भ्राम्यात्ते हव्यभुक् ततः। मांसमस्थीनि रक्तानि मेदोमज्जत्वचस्तथा। रोमाणि चाक्षिकेशाद्याः सर्वे जाता हिरण्मयाः। हिरण्यरेता लोकेऽस्मिन् विख्यातः पावकस्ततः” वामनपु० ५४अ०।

**हिरण्यवर्णा** स्त्री हिरण्यस्येव वर्णो यस्याः। १नदीभेदे हेमच० २हेमतुल्यवर्णयुते त्रि० “हिरण्यवर्णां हरिणीम्” श्रीसू०

**हिरण्यबाहु(हु)** हिरण्यं वाहयति प्रापयति भक्तान् हिरण्यवर्णौ बाहू इव वा यस्य। १महादेवे २शोणनदभेदे च अमरः।

**हिरण्याक्ष** पु० कश्यपस्य पुत्रे दैत्यभेदे। हिरण्यकशिपुशब्दे दृश्यम्। स च वराहरूपेण विष्णुना हतः। “हतो हिरण्यकशिपुः हरिणा सिंहरूपिणा। हिरण्याक्षो धरोद्धारे बिभ्रता शौकरं वपुः” भाग० ७।१अ०।

**हिरण्याश्व** पु० हिरण्यनिर्मितोऽश्वः। तुलादिषोडशमहादानमध्ये दानार्थं स्वर्णादिना १कल्पितेऽश्वे २तद्दाने च। “अथातः संप्रवक्ष्यामि हिरण्याश्वविधिं परम्। यस्य प्रसादाद्भुवनमनन्तफलमश्नुते। पुण्यां तिथिमथासाद्य कृत्वा ब्राह्मणवाचनम्। लोकेशावाहनं कुर्य्यात् तुलापुरुषदानवत्। ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम्। स्वल्पेऽप्येकाग्निवत् कुर्य्याद्धेमवाजिमखं बुधः”। चत्वादिशब्देन देशकालब्राह्मणाङ्गिवादिपूजागुरुऋत्विग्वरणमधुपर्कदानवेदिकोपरिचक्रलेखनवितानतोरणपताकाधिवासनादि मत्स्यपुराणोक्ततुलापुरुषदानविहितं संगृह्यते, स्वल्पेऽप्येकाग्निवदिति, व्याख्यातं, “स्थापयेद्वेदिमध्ये तु कृष्णाजिनतिलोपरि” कृष्णाजिननिहितद्रोणपरिमिततिलोपरीति विज्ञेयम्। ‘कौशेयवस्त्रसंवीतं कारयेद्धेमवाजिनम्। शक्तितस्त्रिपलादूर्द्धमासहस्रपलाद् बुधः। पादुकोपानहच्छत्रचामरासनभाजनैः। पूर्णकुम्भाष्टकोपेतं माल्येक्षुफलसंयुतम्। शय्यां सोपस्करां तद्वद्धेमार्त्तण्डसंयुतम्”। शय्योपस्करा विविधास्तरणोपधानवस्त्रफलपुष्पकुङ्कुमकर्पूरागुरुचन्दनताम्बूलदर्पणकङ्कतिकाचामरव्यजनासनपतद्ग्रहस्थितपात्रादिसद्विकोपानहयुगलताम्रघटिकादिजलपात्रदीपिकावितानादयः। मार्त्तण्डसंयुतामिति, उपर्य्युक्तरूपस्य सौवर्णस्य कुर्य्यादित्यर्थः। सूर्य्यलक्षणन्तु ब्रह्माण्डदाने “ततः सर्वौषधिस्नानस्नापितो वेदपुङ्गवैः। इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः”। इहापि पूर्वेद्युरधिवासनं विधाय द्वितीयदिवसे पूर्ववत् पुण्याहवाचनादिपूर्णाहुतिपर्य्यन्तं कर्म, गुरुः समापयेत्। अथ सर्वौषधिजलस्नातः शुक्लाम्बरो यजमानस्त्रिःप्रदक्षिणीकृत्य वक्ष्यमाणमन्त्रमुदीरयेत्। “नमस्ते सर्वदेवेश! वेदाहरणलम्पट!। वाजिरूपेण मामस्मात् पाहि संसारसागरात्। त्वमेव सप्तधा भूत्वा छन्दोरूपेण भास्करम्। यस्मात् भामयसे लोकानतः पाहि सनातन!। एवमुच्चार्य्य गुरवे तमश्वं विनिवेदयेत्। दत्त्वा पापक्षयाज्ज्ञानाल्लोकमभ्येति शाश्वतम्। गोभिर्विभवतः सर्वानृत्विजश्चाभिपूजयेत्। सर्वधान्योपकरणं गुरवे विनिवेदयेत्। सर्वं शय्यादिकं दत्त्वा भुञ्जीतातैलमेव हि। पुराणश्रवणं तद्वत् कारयेद्ब्राह्मणभोजनम्”। दानवाक्यञ्च पूर्ववदनुसन्धेयम्, अनुक्तदक्षिणेषु सुवर्णं दक्षिणेति, यथाशक्ति सुवर्णदक्षिणा, विभवतः स्वविभवानुसारेण सर्वान् सदस्यादीनृत्विजश्च गोभिः पूजयेत्, सर्वधान्योपकरणमिति विनियोगात्

पूर्वं धान्याचादनं गम्यते, गुरवे निवेदयेदिति, अश्व दूव्यदाने आचार्यायैव अश्वं प्रदाय ऋत्विग्भ्यो यथाशक्ति सुवर्णादि दद्यात्। महदश्वपर्वादिद्रव्यदाने तु प्रकृतिवद्व्यवस्था, सप्तसमुद्रे कान्विताऽपि दूष्टव्या" हेमा०दा०

**हिरण्याश्वरथ** पु० हिरण्येन निर्मितः अश्वः तद्युक्तरथः। तुलादिषोडशमहादानमध्ये दानार्थं स्वर्णादिना १कल्पिते सुवर्णमयाश्वयुक्तरथे २तद्दाने न०। तद्विधिर्यथा "अथातः संप्रवक्ष्यामि महादानमनुत्तमम्। हिरण्याश्वरथं नाम महापातकनाशनम्। पुण्यं दिनमथासाद्य कृत्वा ब्राह्मणवाचनम्। लोकेशावाहनं कुर्यात् तुलापुरुषदानवत्। ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम्"। तुलापुरुषदानवदिति, मत्स्यपुराणोक्ततुलापुरुषदानवद्देदितव्यम्, आदिमश्लोकस्यापि पूर्ववदेव व्याख्या "कृष्णाजिने तिलान् कृत्वा काञ्चनं कारयेद्रथम्। सप्ताश्वं चतुरश्वं वा चतुश्चक्रं सकूबरम्। इन्द्रनीलेन कुम्भेन ध्वजरूपेण संयुतम्। लोकपालाष्टकोपेतं पद्मरागदलान्वितम्"। अत्र तिलानां रथस्य च परिमाणापेक्षायां पुरुषेच्छया नियमः प्रकृतौ परिमाणाश्रवणात्, केचित् तु सन्निधानात् हेमहस्तिरथादिदानस्थितं तिलानां द्रोणपरिमाणत्वमिह वदन्ति। कूबरं युगाधारकाष्ठम्। ध्वजो दण्डः, स च रथस्य सौवर्णत्वात् सौवर्ण एव तथा सोपरिस्थितेन इन्द्रनीलमणिमयेन कलशेन युक्तः कर्तव्यः। लोकपालाष्टकयुक्तं ब्रह्मादिदाने, "चत्वारः पूर्णकलशा धान्यान्यष्टौ दशैव तु। कौशेयवस्त्रसंयुक्तमुपरिष्टाद्वितानकम्। माल्येक्षुफलसंयुक्तं पुरुषेण समन्वितम्। यो यद्भक्तः पुमान् कुर्यात् स तस्याभ्यधिवासनम्"। वितानमत्र पञ्चवर्णं, पुरुष इष्टदेवताकारः सौवर्णरथे स्थापनीयः। वस्त्रोपानहगादुकाच। "भोगैर्निर्भवतः सार्द्धं दद्याच्च शयनासनम्। आभ-रात्रिकादूर्द्धं शक्तितः कारयेद् बुधः"। भारः पलसहस्रद्वयम्, एतच्च सुवर्णमानं ध्वजपुरुषलोकपालाश्वचक्ररथसहितस्य वेदितव्यम्। "अष्टभीरथसंयुक्तं चतुर्भिरथ वाजिभिः। हाभ्यामथ युतं दद्यात् हेमसिंहध्वजान्वितम्"। हैमेन सिंहाङ्कितेन युक्तमिति अष्टाश्वपक्षे, चतुरश्वपक्षे च इन्द्रनीलमयकुम्भो ध्वजे कार्यः, अश्वद्वयपक्षे हेमसिंह इति व्यवस्था। "चक्ररक्षावुभौ तस्य तुरगस्थावथाश्विनौ। पुण्यं कालं ततः प्राप्य पूर्ववत् स्थापितो द्विजैः। शुक्लमाल्याम्बरो दद्या-

दिमं मन्त्रमुदीरयेत्"। हेमा० दा० मत्स्यपुराणीयम्।

**हिरुक्** अव्य० हि–बा०उक्किक् रुट् च। १वर्जने २त्यागे मनो० ३विनार्थे ३मध्यार्थे ४सामीप्ये च अमरः।५अधमे शब्दच०

**हिल** हावकरणे तु०प०सक०सेट्। हिलति अहेलीत्।

**हिलमोचि(ची)** स्त्री हिल–क मुच–इन् कर्म० वा ङीप् (हेलेञ्चा) शाके शब्दर० स्वार्थे क तत्रैव शब्दच०। "शोथं कुष्ठं कफं पित्तं हरते हिलमोचिका" भावप्र०।

**हिल्ल** पुंस्त्री० हिल–क्क्। मराशिखगे शब्दच०। स्त्रियां ङीष्

**हिल्लोल** दोलने अद०चु०उभ०सक० सेट्। हिल्लोलयति ते अजिहिल्लोलत् त।

**हिल्लोल** पु० हिल्लोल–अच्। १तरङ्गे "हृदि कृत्वा स्त्रियः पादौ कराभ्यां धारयेत् करौ। वधेष्टं ताडयेद् योनिं बन्धो हिल्लोलसंज्ञकः" रतिम० उक्ते २रतिबन्धभेदे। घञ्। ३दोलने।

**हिल्ला** स्त्री इल्वला+पृषो०। मृगशिरानक्षत्रशिरोदेशस्थे पञ्चताराकारे मृगव्याधे शब्दर०। [न्वीत्।

**हिव** प्रीणने भ्वा० प० सक० सेट् इदित्। हिन्वति अहि-

**हिवुक** न० हिवि–उकक् नि०। लग्नाच्चतुर्थे स्थाने ज्यो०।

**हिंस** वधे वा चु० उ० पक्षे रुधा० प० सक० सेट् इदित्। हिनस्ति हिंसयति ते अहिंसीत् अजिहिंसत् त।

**ही** अव्य० हि–डी। १विस्मये अमरः। २दुःखे ३विषादे ४हेतौ मेदि०। ५शोके च शब्दर०।

**हीन** त्रि० परि० हा–क्त तस्य नः ईत्त्वम्। १अने २निन्द्ये अमरः। ३अधमे त्रि०। व्यवहारे ४प्रतिवादिभेदे पु० जटा० "अन्यवादी क्रियाद्वेषी नोपस्थायी निरुत्तरः। आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः" नारदः।

**हीनवादिन्** पु० कर्म०। "पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः। वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः" इत्युक्ते व्यवहारे १वादिभेदे। २मूके हेमच०।

**हीनाङ्ग** त्रि० हीनमङ्गं यस्य। स्वभावतो न्यूनाङ्गयुते "हीनाङ्गं विकलाङ्गं च" इति स्मृतिः। स्त्रियां वा ङीप् सा च। २क्षुद्रपिप्पल्यां हेमच०। [ताल) भरतः।

**हीन्ताल** पु० हीनस्तालो यस्मात् पृषो०। हिन्तालवृक्षे (हें-

**हीर** न० हृ–क नि०। १वज्रे २हीरके च। ३शिवे ३सर्पे पु० हेमच० ४हारे ५सिंहे च पु० ६लक्ष्म्यां ७तैलाम्बुके स्त्री मेदि०। ८पिपीलिकायां हेमच० ९काश्मीर्यां च स्त्री राजनि० स्वार्थे क। हीरक (हीरा) मणिभेदे शब्दर०। वज्रशब्दे ८४४१ पृ० दृश्यम्।

**हीराङ्ग** पु० हीरमिव दृढमङ्गमस्य । इन्द्रस्य वज्रे शब्दमा० ।
**हील** न० ही-विस्मयं लाति ला-क । शुक्रे धातौ देवपि ।
**हीलुक** न० हिल-उक पृषो० । गौडीमद्ये शब्दच० ।
**हीही** अव्य० ही+हित्वम् । १विस्मये २हास्ये च मेदि० ।
**हु** होमे अदने च जु० प०सक० अनिट् । जुहोति अहौषीत् जुहाव । प्रीणने च । "जुहुधीह पावकम्" किरा० ।
**हुङ्कार** पु० हु(हू)मित्यव्ययशब्दस्य कारः कृ-घञ् । हुमित्यव्ययस्य प्रतिषेधसूचकशब्दस्योच्चारणे । "मौनव्रतं महाकष्टं हु(हू)ङ्कारेणापि नश्यति" इति पुराणम् दीर्घमध्योऽपि ।
**हुड** राशीकरणे सक० मज्जने संघाते च अक० तु० कु० प० सेट् । हुडति अहुडीत् जुहोड ऋदित् चङि न ह्रस्वः ।
**हुड** राशीकरणे भ्वा० आ० सक० सेट् इदित् । हुण्डते अहुण्डिष्ट । [हौडते अहौडिष्ट ।
**हुड** गतौ भ्वा० आ० सक० सेट् ऋदित् चङि न ह्रस्वः
**हुड** पु० हुड-क । १मेषे हेमच० । चौरनिवारणार्थं भूमौ निखाते २लौहकीलके च ३सैनाश्रयस्थाने ४रथोपरि विण्मूत्रत्यागार्थस्थानस्थशृङ्गे च "पुरी समन्तादविहिता सपताका सतोरणा । सचक्रा सहुडा चैव सयन्त्रखनका तथा" भा० व० १५ अ० । "चक्राणि योधगणाः हुडा-स्तदाश्रयस्थानानि भाषायां (वुरुज)संज्ञानि । अन्ये तु विण्मूत्रोत्सर्जनस्थानशृङ्गाणि हुडा इत्याहुः । घटा-भरणानि च । "कल्पद्रुमे हुडशृङ्गाणि रथस्योपरि रथि-भिः विण्मूत्रसर्गार्थं शृङ्गाकाराणि सर्वं ब्रवन्तः इति" नीलक० ।
**हुडुक** पु० कु० हुड-बा० उक । १वाद्यभेदे २दात्यूहखगे ३मद-मत्ते मेदि० (हुडुक) इति ख्याते ४कपाटदण्डे शब्दर० ।
**हुडुत्** न० कु० हुड-उति । १वृषशब्दे २अव्यक्ते शब्दे कामीध० ।
**हुडुम्ब** पु० कु० हुड-उम्ब । भट्टचिपिटे शब्दमा० ।
**हुण्ड** पुंस्त्री० हुडि-अच् । १व्याघ्रे २ग्राम्यशूकरे ३राक्षसे च स्त्रियां ङीष् । ४मूर्खे त्रि० । [अमरः । भावे क्त । २होमे न० ।
**हुत** त्रि० हु-क्त । देवोद्देशेन मन्त्रद्वाराऽग्नौ प्रक्षिप्ते घृतादौ
**हुतभुज्** पु० हुतं मन्त्रेण प्रक्षिप्तं घृतादि भुङ्क्ते भुज-क्विप् । १अग्नौ २चित्रकवृक्षे च अमरः ।
**हुतवह** पु० हुतं घृतादिकं वहति प्रापयति देवान् प्रीत्यर्थम् वह-अच् । १अग्नौ हेमच० २चित्रकवृक्षे च अमरः ।
**हुताश** पु० हुतमश्नाति अश-अण् । १वह्नौ शब्दर० २चित्रकवृक्षे च । ल्युट् हुताशनोऽप्यत्र । स च कर्मविशेष-विहितवह्नौ च । "कोटिहोमे हुताशनः" ति० त० ।
**हुताशनी** स्त्री हुताशनस्योद्दीपनमस्त्यस्या अच् गौ० ङीष् । फाल्गुनपूर्णिमायां होलाकाशब्दे दृश्यम् ।
**हुम्** अव्य० हु-डुमि । १स्मरणे २प्रश्ने ३अनुज्ञायां च ४निवारणे मेदि० । "गुरुं हुङ्कृत्य तुङ्कृत्येति" स्मृतिः ।
**हुर्च्छ** कौटिल्ये भ्वा० प० सक० सेट् । हूर्च्छति अहूर्च्छीत् हुच्छपाठपक्षात् क्विपि छलोपे हूः हुरौ हुर इत्यादि ।
**हुल** हृतौ संवरणे च भ्वा० प० सक० सेट् । होलति अहोलीत् ज्वला० हुलः होलः ।
**हुलहुली** स्त्री हुल-क आभीक्ष्ण्ये द्वित्वम् गौरा० ङीष् । स्त्रीणां मङ्गलध्वनिभेदे (उलुउलु) । त्रिका० ।
**हुहु(हू)** हु-उ नि० । गन्धर्वभेदे पृषो० हूहूरित्यप्यत्र ।
**हूङ्कार** पु० हूम्+कृ-घञ् । अवज्ञाहेतुके शब्दभेदे "हूङ्कारे-णैव तं भस्म सा चकाराम्बिका ततः" देवीमा० ।
**हूड** गतौ भ्वा० आ० सक० सेट् ऋदित् चङि न ह्रस्वः । हूडते अहूडिष्ट ।
**हूत** त्रि० ह्वे-क्त संप्रसारणम् । आहूते कृताह्वाने ।
**हूति** स्त्री ह्वे-क्तिन् संप्रसारणम् । आह्वाने अमरः ।
**हूण** पु० ह्वे-नक् णत्वम् संप्रसारणं च । १म्लेच्छजातिभेदे २तद्-वासस्थानभेदे च "हूणवङ्गादिदेशेषु न गच्छेत् कदाचन" स्मृ० । ३तत्र प्रचलिते स्वर्णमुद्राभेदे इत्यन्ये । "अपावृत्त तरन्तस्तु हूणो यवन इत्यपि । लोकवाह्यस्तु यो वाजिमखाद्याचारवर्जितः । म्लेच्छः किरात शबर पुलिन्दाद्यास्तु तद्भिदा" जटाध० ।
**हूम्** अव्य० हु-बा० डूमि । १प्रश्ने २वितर्के अमरः ३स्मृतौ ४क्रोधे ५भये निन्दायाम् अवज्ञायाञ्च चक्रवर्त्ती ।
**हूर्च्छन** न० हुर्च्छ-ल्युट् । कौटिल्ये । [ङीष् ।
**हूरव** पुंस्त्री० हू इति रवो यस्य । शृगाले हेमच० स्त्रियां
**हूहु(हू)** पु० गन्धर्वविशेषे शब्दर० ।
**हृ** हरणे भ्वा० उ० द्वि० अनिट् । हरति ते अहार्षीत् अहृत जहार जह्रे हरिष्यति ते । सुश्ये कर्मणि अकाराद्वि । हरिषीष्ट अहारि अहारिषाताम् अहृषाताम् जिहीर्षति ते
अनु+सदृशीकरणे आ० अनुहरते पैतृकमश्वः ।
अप+दूरीकरणे अपहरति अपसारयतीत्यर्थः चौर्य्ये च ।
अभि+आभिमुख्येन हरणे ।
सम्+अभि+पौनः पुन्येन सम्पादने ।
अभि+अव भोजने अभ्यवहरति भुङ्क्ते इत्यर्थः ।
सम्+अभि+वि+आ+नैकट्यसम्बन्धसम्पादने ।
अव+दूरीकरणे सैन्यावहारः ।

वि+अव विवादे शयनभोजनादिना संसर्गे उपभोगे च।
आ+भोजने आहारः। नानास्थानस्थितानामेकत्रसङ्कलने च
अधि+आ+तर्के अन्यत्रश्रुतपदस्यान्यत्रार्थमाकर्षणे च।
अभि+आ+आभिमुख्येनाहरणे।
उद्+आ+दृष्टान्ततयोपन्यासे कथने च।
प्रति+उद्+आ–प्रतिरूपतया उपन्यासे।
परि+आ+परित आहरणे [विषयेभ्यो मनसो निवारणे च
प्रति+आ+तन्त्रेण पठितानामेकैकस्य ग्रहणे प्रत्याहारः
वि+आ–कथने शब्दोत्पादकव्यापारे।
सम्+आ–संग्रहे नानास्थानस्थितानामेकत्रोपन्यासे संघाते च
उद्+उत्तोलने उत्क्षेपणे च।
अभि+उद्+आभिमुख्येन उद्धरणे। अभितो वा उत्क्षेपणे।
प्रति+उद्+प्रतिकूलतया प्रातिकूल्येन वा उद्धरणे।
उप+सामीप्येन आनतीकरणार्थं दाने उपढौकने।
प्रति+उप+प्रतिरूपतया उपढौकने।
नि+नितरां हरणे विनिमयणे च।
निर्+(र)बहिष्करणे अपसारणे च।
परि+दोषादिनिवारणे।
प्र+ताडने निपाते।
प्रति+प्र+प्रतिरूपतया ताडने।
प्रति+प्रत्येकहरणे प्रतिरूपतया हरणे च।
वि+देशविशेषेषु गत्यादिना सन्तोषकरणार्थव्यापारे विहारः।
वि+अति परस्परमेकजातीयक्रियाकरणे आ०।
सम्+मारणे नाशने च। [योजने यथा गुणोपसंहारः।
उप+सम्+प्रकरणपठितस्य समापने अन्यत्र पठितस्यान्यत्र

हृ बलात्कारहरणे जु०पर०सक० अनिट् वैदिकः। जहर्ति अजार्षीत्। [दयस्थिते त्रि०।

**हृच्छय** पु० हृदि शेते शी–अच्। १कामदेवे हला०। २हृ-

**हृच्छूल** न० हृत०। शूलरोगभेदे वैद्यकम्।

**हृणी** लज्जायां कण्ड्वा०आत्म०अक०सेट्। हृणीयते अहृ-णीयिष्ट "हृणीयते वीरवती न भूमिः" भट्टिः।

**हृणीया** स्त्री हृणीय–भावे अ। निन्दायाम् अमरः।

**हृत्(द्)** त्रि० हृ–क्विप् तुक् च। १हारिणि। पृषो०तस्य दः, हृदयस्य हृदादेशो वा। २हृदये ३मानसे च न० अमरः।

**हृत्कम्प** पु० हृत०। भयादिहेतुके हृदयकम्पे।

**हृत** त्रि० हृ–क्त। १अपहृते २स्थानान्तरं गमिते च ३विभक्ते

**हृदय** न०हृ–कयन् दुक् च। १मनसि २वक्षसि च त्रिका०। हृद् एति इण–अच्। परब्रह्मणि "हृदयं तस्माद्धृदयम्" का०उ०

**हृदयग्रन्थि** पु० हृदयस्य ग्रन्थिरिव। अविद्यासम्बन्धरूपे संसारबन्धे "भिद्यते हृदयग्रन्थिः" इति श्रुतम्।

**हृदयङ्गम** त्रि० हृदयं गच्छति गम–खच् मुम् च। १युक्तियुक्ते २मनोहरे त्रि० अमरः "हृदयङ्गममूर्तिस्वम्" भट्टिः।

**हृदयस्थान** न०हृदयस्य मनसः स्थानम् हृदयरूपं वा स्थानम् वक्षःस्थले हेमच०। [इनि। हृदयिन् तत्रार्थे जटा०

**हृदयिक** त्रि० हृदयं प्रशस्तं मनोऽस्त्यस्य ठन्। प्रशस्तचित्ते

**हृदयेश** पु० हृत०। १भर्त्तरि २भार्य्यायां स्त्री हेमच०।

**हृदावर्त्त** पु० हृदिस्थ आवर्त्तः। अश्वस्य हृदयस्थे आव-र्त्ताकारे रोमावलीभेदे त्रिका०। [हरिवं०१६४अ०।

**हृदिक** पु० यदुवंशजातेऽ कृतवर्मपितरि यादवभेदे

**हृदिकात्मज** पु० हृत०। कृतवर्मणि यादवे।

**हृदिस्पृश्** त्रि० हृदि हृदये स्पृश्यतेऽसौ कर्मणि क्विन् अलुक्स०। १हृद्ये मनोज्ञे। कर्त्तरि क्विन्। २मर्म-स्पृशि दुःखदे च। [क्रमेण तद्वैषयिकेणि त्रि० शौ०।

**हृद्गोल** पु०पर्वतभेदे सोऽभिजनोऽस्य अ। हृद्गोलीय पित्रादि-

**हृद्यन्थ** पु० हृद् हृदि मन्थति मन्थ–अण्। हृद्रोगे राजनि०

**हृद्य** न० हृदि स्पृश्यते मनोज्ञत्वात् हृद्+यत्। १गुडत्वचि (दारचिनि) शब्दर०। २मनोज्ञे त्रि०अमरः। ३वृद्धिना-मौषधौ स्त्री। ४वश्यकमन्त्रभेदे पु० मेदि०।

**हृद्यगन्ध** न०हृद्यो गन्धोऽस्य। सुद्रजीरके हेमच०। ५बिल्व-वृक्षे पु० जटा०। ६शाल्यां स्त्री राजनि०। रत्नमा०।

हृद्यगन्धीत्यपि ४सुद्रजीरके न० राजनि०।

**हृद्रोग** पु० हृत०। हृदयस्य रोगभेदे हृदामयोऽप्यत्र। भावप्र० तस्य निदानादि तल्लक्षणं चोक्तं यथा "हृद्रोगस्य विप्रकृष्टनिदानमाह "अत्युष्णगुर्वम्ल-कषायतिक्तश्रमाभिघाताध्यशनप्रसङ्गैः। सञ्चिन्तनैर्वेगवि-धारणैश्च हृदामयः पञ्चविधः प्रदिष्टः"। प्रसङ्गः सततं सेवा। सञ्चिन्तनम् अतिचिन्ता राजभयादि-जमिति। हृदामयः स च पञ्चविधः वातिकः पैत्तिकः श्लैष्मिकः सान्निपातिकः क्रिमिजश्चेति। तस्य संप्राप्ति-पूर्वकं लक्षणमाह। "दूषयित्वा रसं दोषा विगुणा हृदयङ्गताः। हृदि बाधां प्रकुर्वन्ति हृद्रोगन्तं प्रचक्षते"। विगुणाः दुष्टाः बाधां दोषभेदेन नानाविधां व्यथाम्। मधुवल्लोऽदाभिति गयदासः। वातिकं हृद्रोगमाह "आयम्यते मारुतजे हृदयन्तुद्यते तथा। निर्मथ्यते दीर्य्यते च स्फोट्यते पाट्यतेऽपि वा"। मारुतजे हृद्रोग इति शेषः। आयम्यते व्यथया विस्तार्यते इव। तु-

द्यते सूचीभिरिव विध्यते। निर्मथ्यते मथनेनेव दीर्य्यते करपत्रेण द्विधाक्रियत इव। स्फोट्यते अत्यर्थमेव पाट्यते कुठारेण बहुधाक्रियत इव। अथ पैत्तिकमाह "तृष्णोष्मदाहचोषाः स्युः पैत्तिके हृदये क्लमः। धूमायनञ्च मूर्च्छा च स्वेदः शोषो मुखस्य च"। उष्मा शीतगात्रस्येव शीतवाताभिलाषहेतुः किञ्चिदिवौष्ण्यम्। दाहः अत्यर्थत्वेन वह्निनेव दुःखहेतुर्गात्रस्य सन्तापः। चोषः चूषणेनेव पीड़ा। हृदये क्लमः हृदयाकुलत्वं ग्लानिर्वा इत्यर्थः। धूमायनम् कण्ठाद्धूमनिर्गमः। क्लेदः किञ्चिद्दुःखः घटित इव। वातश्लैष्मिकमाह "गौरवं कफसंस्रावोऽरुचिस्तम्भोऽग्निमार्दवम्। माधुर्य्यमपि चास्यस्य बलासावतते हृदि"। बलासावतते हृदि कुपितकफव्याप्ते गौरवं हृदयस्य। स्तम्भो जड़ता। माधुर्य्यम् अमृतमिव माधुर्य्यं मुखे। त्रिदोषजमाह "विद्यात्त्रिदोषमप्येवं सर्वलिङ्गकदम्बकम्"। क्रिमिजमाह क्रिमयो जायन्ते अस्मिन्निति क्रिमिज इति निरुक्तिः। तस्य विप्रकृष्टनिदानपूर्विकां सम्प्राप्तिमाह "त्रिदोषजे तु हृद्रोगे यो दुरात्मा निषेवते। तिलक्षीरगुड़ादींश्च ग्रन्थिस्तस्योपजायते। मर्म्मैकदेशे संक्लेदं रसश्चाप्युपगच्छति। संक्लेदात् क्रिमयश्चास्य भवन्त्युपहतात्मनः"। मर्म्मैकदेशे हृदयैकदेशे संक्लेदं घटितत्वं रस उपगच्छति। संक्लेदात् रसस्य घटितत्वात् उपहतात्मनः तिलाद्यहिताहारेण। तस्य लक्षणमाह "उत्क्लेदः ष्ठीवनन्तोदः शूलं हृल्लासकस्तमः। अरुचिः श्यावनेत्रत्वं शोषश्च क्रिमिजे भवेत्"। उत्क्लेदः वमनमिवोपस्थितम्। शोषो वक्त्रस्य। हृद्रोगस्योपद्रवानाह "क्लमः सादो भ्रमः शोषो ज्ञेयास्तेषामुपद्रवाः। क्रिमिजे तु क्रमीणां ये श्लैष्मिकाणां हि ते मताः"। क्लमः पिपासा। आस्यानस्य सादः भ्रमः। शोषो मुखस्य। तेषां हृद्रोगाणां, क्रिमिजे तु हृद्रोगे श्लैष्मिकाणां क्रमीणाम् ये उपद्रवा हृल्लासात् स्रवणान्ता विपाकादयस्ते मताः" २कुम्भरायां युक्तिदीपिका।

**हृद्रोगवैरिन्** पु० ६त०। अर्जुनवृक्षे शब्दर०।

**हृद्वण्टक** पु० ६त०। हृदयस्य विभाजके जठरे शब्दर०।

**हृल्लास** पु० हृदयस्य लासो यत्र हृदादेशः। हिक्कारोगे हेमच०। तेन हि हृदयस्य स्फूर्त्तिरिव भवति।

**हृल्लेख** पु० हृदयं लिखति स्पृशति लिख-अण् हृदादेशः। १ज्ञाने राजनि०, २तर्के त्रिका०। ३तन्त्रोक्ते मन्त्रभेदे च। ४कौतूहले स्त्री हला०। [उदित् हृषित्वा हृष्ट्वा हृष्टः।

**हृष** चित्तोत्साहे भ्वा० पर० अक० सेट्। हर्षति अहर्षीत्।

**हृष** हर्षे चित्तोत्साहे दि० प० अ० सेट्। हृष्यति इरित् अहृषत् अहर्षीत् जीत् हृष्टोऽस्मि। [हर्षति अहर्षीत्।

**हृष** मिथ्याकरणे भ्वा० पर० सक० सेट् उदित् क्त्वा वेट्।

**हृषित** त्रि० हृष-क्त वा० इट्। १प्रीते २विस्मिते ३प्रहते ४जातरोमाञ्चे च मेदि०। [अमरः।

**हृषीक** न० हृष-ईकक्। विषयग्राहके चक्षुरादौ इन्द्रिये

**हृषीकेश** पु० ६त०। विष्णौ अमरः। अन्तर्यामिब्राह्मणे तस्य सर्वनियन्तृत्वोक्तेः सर्वेन्द्रियप्रवर्त्तकत्वात्तदीशत्वम्।

**हृष्ट** त्रि० हृष-क्त। १प्रीते २जातहर्षे अमरः। ३जातरोमाञ्चे ४विस्मिते च मेदि०।

**हृष्टमानस** त्रि० हृष्टं प्रीतं मानसमस्य। हृष्टचित्ते शब्दर०

**हृष्टरोमन्** त्रि० हृष्टमिव जाताङ्कुरं रोम यस्य। जातरोमाञ्चे पुलकिते त्रिका०। [धरणिः।

**हृष्टि** स्त्री हृष-क्तिन्। १आनन्दे २हर्षे ३ज्ञाने च

**हे** अव्य० हा-डे। १सम्बोधने २आह्वाने ३असूयादौ च मेदि०

**हेक्का** स्त्री हिक्का+पृषो०। हिक्कारोगे हेमच०।

**हेठ** विघाते भ्वा० प० सक० सेट्। हेठति अहेठीत्।

**हेठ** भूतौ उत्पत्तौ च अक० पवित्रीकरणे सक० क्र्या० प० सेट्। हेठति अहेठीत्। [हेठते अहेठिष्ट।

**हेठ** बाधने भ्वा० आ० सक० सेट् ऋदित्। चङि न ह्रस्वः।

**हेठ** पु० हेठ-घञ्। १बाधायाम् २विघाते च मेदि०।

**हेड** अनादरे भ्वा० आ० सक० सेट् ऋदित् चङि न ह्रस्वः हेडते अहेडिष्ट।

**हेड** वेष्टने भ्वा० प० सक० सेट् घटा०। हेडति अहेडीत्।

**हेड़ावुक्क** पु० अश्वविक्रयकारके त्रिका०।

**हेति** स्त्री हन-करणे क्तिन् नि०। १अस्त्रे २अग्निशिखायां ३सूर्य्यकिरणे अमरः। ४तेजोमात्रे भरतः ५बाधने च श्रीधरः।

**हेतु** पु० हि-तुन्। १कारणे अमरः २अनुमितिसाधने व्याप्ये ३फले च। हेतुत्वञ्च उत्पादकज्ञापकान्यतरत्वम्। दण्डो घटो जायते इत्यादौ उत्पादकत्वं पर्वतो वह्निमान् धूमादित्यादौ ज्ञापकत्वं तत्र ज्ञापकमेव लिङ्गशब्देन व्यवह्रियते। ४न्यायावयवभेदे तच्च लिङ्गप्रतिपादकतृतीयान्तपञ्चम्यन्तपदरूपम् तल्लक्षणन्तु अनुमितिकारणीभूतलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकसाध्याविषयकवाक्यधीजनकहेतुविभक्तिमच्छब्दत्वम्। हेतु

स्वप्रतिपादकविभक्तिमन्न्यायावयवत्वं वा। उदाहरणप्रयोजकाकाङ्क्षाजनकशाब्दज्ञानजनकन्यायावयवत्वं वा। साध्याविषयकज्ञानजनकहेतुपञ्चम्यन्तानुमितिपरशब्दत्वं वा। प्रतिज्ञावाक्यधीजन्यकारणाकाङ्क्षानिवर्त्तकज्ञानजनकहेतुविभक्तिमद्वाक्यत्वं वा" चिन्तामणिः। ४अलङ्कारभेदे अलङ्कारशब्दे ४०८ पृ० दृश्यम्।

**हेतुता** स्त्री हेतोर्भावः तल्। १हेतुत्वे कार्य्याव्यवहितपूर्वक्षणे नियतकार्य्याधिकरणवृत्तित्वरूपे कारणत्वे २तर्कविशेषे च "हेतुतावशरणत्या" इति प्राञ्चः।

**हेतुमत्** त्रि० हेतुरस्त्यस्य मतुप्। कार्य्ये स्त्रियां ङीप्।

**हेत्वपह्नुति** अलङ्कारभेदे अलङ्कारशब्दे ४०८ पृ० दृश्यम्।

**हेत्वन्तर** गौतमोक्ते निग्रहस्थानभेदे। "अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्" गौ०सू०तल्लक्षणसूत्रं "परोक्तदूषणोद्दिधीर्षया तत्रैव हेतौ पूर्वोक्तहेतुतावच्छेदकातिरिक्तहेतुतावच्छेदकविशिष्टवचनम्। यथा शब्दोऽनित्यो बाह्येन्द्रियप्रत्यक्षत्वादित्युक्ते सामान्ये नैकान्तिकत्वेन च प्रत्युक्ते सामान्यवत्त्वे सतीति विशेषणम्। प्राचस्तु, हेतौ विशेषणदान एव हेत्वन्तरमित्याहुः" गौ०वृ०।

**हेत्वसिद्धि** स्त्री असिद्धिभेदे स्वरूपासिद्धिरूपहेत्वाभासभेदे

**हेत्वाभास** पु० हेतुरिव आभासते आ+भास–अच्, हेतोर्वा आभासः आ+भास–घञ्। न्यायोक्ते १दुष्टे हेतौ २हेतुदोषे च। स च दोषः पञ्चविधः व्यभिचारः विरुद्धता असिद्धिः सत्प्रतिपक्षता बाधश्च। तादृशदोषेषु सत्सु अनुमितिर्नोदेति। यस्य हि ज्ञानमनुमितिप्रतिबन्धकं स हेत्वाभासः। अत्र हेतुनामाभास इति व्युत्पत्त्या हेत्वाभासपदस्य हेतुदोषपरत्वम्। तल्लक्षणञ्च हेत्वाभासत्वम् तच्च अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम्। यद्विषयकत्वेन लिङ्गज्ञानस्यानुमितिविरोधित्वं तत्त्वम्। ज्ञायमानं सद् यदनुमितिप्रतिबन्धकं तत्त्वम्। यद्विषयकनिश्चयस्य विरोधिविषयताप्रयुक्तस्तदुत्तरमनुमितावनाहार्य्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्टहेतुमत्त्वावगाहित्वस्य च द्वयोर्व्यतिरेकस्तत्त्वम्। केचित्तु, यादृशपक्षकयादृशसाध्यकयादृशहेतौ यावन्तो दोषाः सम्भवन्ति तावदन्यान्यत्वमिति प्राहुः" दीधि०। हेतुलक्षणाभावादहेतवो हेतुसामान्याद्धेतुवदाभासमानाः" वात्स्या० "पञ्चरूपोपपन्नत्वाभावे सति तद्रूपेण भासमानः" गौ० वृ०। "पक्षधर्मत्वादीनां पञ्चानां रूपाणां मध्ये एकेनापि रूपेण हीनो हेतुः। सोऽपि कतिपयहेतुरूपयोगाद्धेतुवदवभासमानः" त० भा०। असाधको हेतुत्वेनाभिमतः। यथा वायुर्गन्धवान् स्नेहादित्यादौ स्नेहो हेत्वाभासः। स च हेत्वाभासः। पञ्चधा सव्यभिचारः। विरुद्धः। प्रकरणसमः। साध्यसमः अतीतकालः" गौ० सू० पर्य्यायान्तरेण हेत्वाभासः पञ्चधा "असिद्धः विरुद्धः। अनैकान्तिकः। प्रकरणसमः। कालात्ययापदिष्टः। पर्य्यायान्तरेणापि हेत्वाभासः पञ्चधा। सव्यभिचारः। विरुद्धः। असिद्धः। सत्प्रतिपक्षितः बाधितः इति।

**हेम** न० हि–मन्। १स्वर्णे २धुस्तूरे अमरः ३नागकेशरे राजनि०। ४माषकपरिमाणे च पु०विश्वः ५कृष्णवर्णाश्वे। ६बुधग्रहे च पु० ज्यो०।

**हेमकन्दल** पु० हेमवर्णं कन्दं लाति ला–क। प्रवाले हेमच०

**हेमकान्ति** स्त्री हेम्न इव कान्तिरस्याः। दारुहरिद्रायाम् राजनि०। २स्वर्णतुल्यद्युतियुक्ते त्रि०। इत०। ३स्वर्णस्य दीप्तौ स्त्री।

**हेमकार** पु० हेम तन्मयं भूषणं करोति कृ–अण्। स्वर्णकारे वर्णसङ्करजातिभेदे (सेकरा)। [राजनि०।

**हेमकिञ्जल्क** न० हेमेव पीतं किञ्जल्कं यस्य। नागकेशरे

**हेमकूट** पु० हेममयः कूटो यस्य। किंपुरुषवर्षस्थे हिमालयादुत्तरस्थे पर्वतभेदे अमरः। [राजनि०।

**हेमकेतकी** स्त्री हेमेव पीतकेतकी। स्वर्णकेतक्याम्

**हेमकेलि** पु० १अग्नौ शब्दमा०। २चित्रकवृक्षे च [राजनि०

**हेमक्षीरी** स्त्री हेम इव पीतं क्षीरं यस्याः। स्वर्णक्षीर्य्याम्

**हेमगन्धिनी** स्त्री हेम्नः नागकेशरस्येव गन्धोऽस्त्यस्याः इनि ङीप्। रेणुकाख्ये गन्धद्रव्ये रत्नमा०।

**हेमगिरि** पु०हेममयो गिरिः १सुमेरुपर्वते २नैरृते तत्स्थे देशभेदे वृ०स० कूर्मविभागशब्दे २१६८ पृ० दृश्यम्।

**हेमगौर** पु० हेमेव गौरः पीतः पुष्पेण। १अशोकवृक्षे राजनि० २स्वर्णतुल्यपीते त्रि०। [त्रकवृक्षे च

**हेमज्वाल** पु० हेमेव ज्वाला यस्य। १अग्नौ शब्दमा०। २चि-

**हेमतार** न० हेम तारयति उत्कृष्टं करोति तृ–णिच्–अण्। तुत्थे हेमच०।

**हेमदुग्धक** पु० हेमवर्णं दुग्धं निर्य्यासोऽस्य कप्। १उदुम्बरे वृक्षे अमरः। २स्वर्णक्षीर्य्यां स्त्री जटा० कप

भावे तद्वार्थे स्त्री जटा०टाप्। ङीप् राजनि० ।

**हैमदुग्धिन्** पु० हेमवर्णं दुग्धं निर्यासोऽस्यास्ति इनि। उडुम्बरे वृक्षे शब्दर० [केशरे राजनि० ४हिमे च माधवः

**हैमन्** न०हि–मनिन् ।१स्वर्णे धातौ २धुस्तूरे अमरः ३नाग-

**हैमन्त** पुंन०। हि-झ तुट् च। अग्रहायणपौषमासात्मके ऋतौ कालभेदे अमरः। कपित्थे शब्दच०।

**हैमन्तनाथ** पु० हेमन्ते नाथ्यते याच्यते नाथ–कर्मणि घञ्।

**हैमपुष्प** न० हेमेव पीतं पुष्पमस्य। १अशोकवृक्षे २जवापुष्पे च मेदि०। ३चम्पकवृक्षे पु० कप्। तत्र चाम्रे च शब्दच०

**हैमपुष्पी** स्त्री हेमेव पीतं पुष्पमस्याः ङीप्। १मञ्जिष्ठायाम् शब्दर०। २स्वर्णजीवन्त्याम् ३इन्द्रवारुण्याम् ४मुषल्याम् ५कण्टकार्य्यांञ्च राजनि०। संज्ञायां कन् ह्रस्वः। स्वर्ण-यूथिकायाम् स्त्री। [(चाँपालता) राजनि०।

**हैमफला** स्त्री हेमेव पीतं पक्वफलमस्याः। स्वर्णकदल्याम्

**हैममालिन्** पु० हेमेव किरणानां मालास्यास्ति इनि। १सूर्य्ये त्रि० त०। २अर्कवृक्षे च [राजनि०।

**हैमयूथिका** स्त्री हेमेव पीता यूथिका। स्वर्णयूथिकायाम्

**हैमरागिणी** स्त्री हेम्न इव रागोऽस्त्यस्याः इनि ङीप्। हरिद्रायाम त्रिका०।

**हैमल** पु० हेम तद्वर्णं निर्मेयत्वेन मध्यात्, तद्वर्णं वा लाति ला–क। १कलादे स्वर्णकारे २कपणाले ३ककलासे पुंस्त्री० मेदि० स्त्रियां ङीष्।

**हैमलता** स्त्री हेमेव पीता लता। स्वर्णजीवन्त्याम् राजनि०।

**हैमवल** न० हेम्ना वलते शोभते वल–अच्। मौक्तिके राजनि० हिमवलमित्यपि पाठान्तरं तत्रार्थे हिमतुल्य-गुणत्वात्तथात्वम्।

**हैमशङ्ख** पु० हेमेव शुचिः शङ्खोऽस्य। विष्णौ त्रिका०।

**हैमशिखा** स्त्री हेमेव पीता शिखा यस्याः। स्वर्णक्षीर्य्याम् शब्दर०। [तत्त्वे रसच०।

**हैमसार** न० हेम सारयति निर्मलीकरोति सृ–णिच्–अण्।

**हैमहस्तिरथ** पु० हेमनिर्मितहस्तियुक्तो रथः। तुलापुरु-षादिषोडशमहादानमध्ये दानार्थं कल्पिते १स्वर्णमय-हस्तियुक्ते हेममयरथे २तद्दाने न०। तद्विधिः हेमा०दा० "अथातः संप्रवक्ष्यामि हेमहस्तिरथं शुभम्। यस्य प्रदानाद्भवनं वैष्णवं याति मानवः। पुण्यां तिथिमथा-साद्य तुलापुरुषदानवत्। विप्रवाचनकं कुर्य्याल्लोकेशावा-हनं बुधः। ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादि-कम्। स्नात्वा पोषितस्तद्वद् ब्राह्मणैः सह भोजनम्"। इत्याद्यादिशब्देन देशकालस्वस्तिश्राद्धादिसर्वमनुक्तं मत्-स्यपुराणोक्ततुलापुरुषादवसेयं वेदितव्यम्। उपोषित इति, उपवासाशक्तौ नक्तमपि वेदितव्यम्। "कुर्य्यात् पुष्प-रथाकारं काञ्चनं मणिमण्डितम्। वलभीभिर्विचित्रा-भिश्चतुश्चक्रसमन्वितम्। लोकपालाष्टकोपेतं शिवार्कब्रह्म-संयुतम्। मध्ये नारायणोपेतं लक्ष्मीपुष्टिसमन्वितम्"। पुष्परथः, क्रीड़ार्थो रथः, स च चतुष्काकारेणोपर्य्याच्छा-दितो भवति वलभ्यो लोकपालाश्रयाः। लोकपालब्रह्म-शिवार्कलक्षणमुक्तं ब्रह्माण्डदाने। मध्यशब्दः पूर्वापराभ्यां संबध्यते, शिवादीनामपि स्थानापेक्षायास्तेनैव निवृत्तेः। नारायणादिलक्षणं पञ्चरात्रात् "नारायणश्चतु-र्बाहुः शङ्खं चक्रं तथोत्तरे। दक्षिणे तु गदापद्मं नीलजीमूतसन्निभे। वामे श्रीर्नत्तकीहस्ता पुष्टिः पद्म-करा परा" इति। "कृष्णाजिने तिलद्रोणं कृत्वा संस्थापयेद्रथम्। तथाष्टादश धान्यानि भाजनासनच-न्दनैः। दीपिकोपानहच्छत्रपादुकादर्पणान्वितम्। ध्वजे तु गरुड़ं कुर्य्यात् कूवराग्रे विनायकम्। नानाफल-समायुक्तं उपरिष्टाद्वितानकम्। कौशेयं पञ्चवर्णं च अम्लानकुसुमान्वितम्। चतुर्भिः कलसैः सार्द्धं गोभि-रष्टाभिरन्वितम्। चतुर्भिर्हैममातङ्गैर्मुक्तादामविभू-षितैः। स्वरूपतः करिभ्याञ्च युक्तं कृत्वा निवेदयेत्। कुर्य्यात् पञ्चपलादूर्द्ध्वमाभारादपि शक्तितः"। ध्वजे तु गरुड़ं कुर्य्यादित्यादि, ध्वजो दण्डः। गरुड़लक्षण-मुक्तं नारदीये "उपेन्द्रस्याग्रतः पक्षी गुड़ाकेशः कृताञ्जलिः। सव्यजानुनतो भूमौ कुर्य्याँच फणिभ-षितः। पक्षिजङ्घो नरग्रीवस्तुङ्गनासो नराकृतिः। द्विभुजः पक्षयुक्तश्च कर्त्तव्यो विनतासुतः"। अथ विना-यकस्य "चतुर्भुजस्त्रिनेत्रश्च कर्त्तव्योऽत्र गजाननः। नागयज्ञोपवीतश्च शशाङ्ककृतशेखरः। दन्तं दक्षकरे दद्या-द्द्वितीये चाक्षसूत्रकम्। तृतीये परशुं दद्याच्चतुर्थे मोदकं तथा"। उपर्य्यधोहस्तयोर्दन्तादि, देयमिति, कू-वरो व्याख्यातः। अम्लानकुसुमं, पुष्पविशेषः रूढ़-यौगिकमपहरतीतिन्यायात् म्लानरहितेति प्रसिद्धमेव स्वह्यते। भारो व्याख्यातः। ध्वजगतदेवताश्च पञ्चपला-दिपरिमितेन रथवत्तुलितसुवर्णेनैव निष्पादनीयाः एवं सम्भारानुपकल्प्य पूर्ववदधिवासनं विधाय परदिवसे पुण्याहवाचनादि सकलं कर्मकाण्डं समाप्य सर्वौषधि-जलैराचार्य्यो यजमानस्य स्नापनं कुर्य्यात्। "ततो मङ्गल-

शब्देन स्थापितो वेदपुङ्गवैः। त्रिःप्रदक्षिणमादाय स्वर्णौ-
मङ्गलमाल्यैश्च। इममुच्चारयेन्मन्त्रं ब्राह्मणेभ्यो निवेद-
येत्। नमो नमः शङ्करपद्मजार्कलोकेशविद्याधरवासुदेवैः।
त्वं सेव्यसे देव ! पुराण ! यस्तत्तेजोमय स्यन्दन ! पाहि
यस्मात्। यत् तत्पदं गुह्यतमं मुरारेरानन्दहेतुर्गुणरूप-
मुक्तः। योगैकमानस्तदृशोमुनयः समाधौ पश्यन्ति तत्त्व-
मसि नाथ ! रथोऽधिरूढ़ ! अस्मात्त्वमेव भवसागर-
संस्थितानामानन्दभाण्डभृतमध्वरपानपात्रम्। तस्मादघौ-
घशमनेन कुरु प्रसादं चामीकरेभरथसाधनसम्प्रदानात्"।
मन्त्रेणानेन यश्चैव यथाशक्ति सुवर्णदक्षिणामुपकल्प्य
पूर्ववत् प्रयोगमन्त्राभ्यां तं गजरथं प्रत्यक्षगजाभ्यां संयुतं
ब्राह्मणेभ्यः प्रतिपादयेत्, आचार्य्यादीनामर्द्धांशभागा-
दिव्यवस्था तदनुसृता चान्येभ्योऽपि दानं, दीनानाथपूरणं
चेति, प्रकृतिवदाचरणीयं. ततः पुण्याहवाचने कृते
यजमानो वेदिकमपि गत्वा देवतापूजां विदध्यात्।
आचार्य्यस्तु आहुतदेवान् विसर्जयेत्"।

**हेमाङ्ग** पु० हेमेव पीतमङ्गं यस्य। १गरुडे २सिंहे ३सुमेरौ ४ब्रह्मणि मेदि०।५चम्पकवृक्षे शब्दर०। ६विष्णौ च विष्णु स० ७स्वर्णवर्णाङ्गयुक्ते त्रि०। कर्म०। हेमतुल्योऽङ्गे न०।

**हेमाद्रि** पु० हेममयोऽद्रिः। १सुमेरौ पर्वते अमरः। चतुर्वर्गचिन्तामणिमुक्ताफलादिग्रन्थकारके २विद्वद्भेदे।

**हेमाद्रिजरण** पु० हेमाद्रौ जीर्य्यति जृ-ल्यु। स्वर्णजीवीम् रत्नमा०। हेममारणयोग्ये त्रि०।

**हेमाह्व** पु० हेम तद्वर्णमाह्वयते स्पर्द्धते स्ववर्णेन आ+ह्वे-क। १वनचम्पके राजनि०। हेम्न आह्वा आख्या यस्य।२धुस्तूरे ३नागकेशरे च अमरः ४स्वर्णजीवन्त्यां स्त्री राजनि०।

**हेय** त्रि० हा-यत्। त्याज्ये "हेयं दुःखमनागतम्"पात०सू०

**हेर** न० हि-रन्। १हरिद्रायाम् २मुकुटभेदे च।

**हेरम्ब** पु० हे शिवे रम्बति रवि-अच् अलुक्स०। १गणेशे अमरः २महिषे ३शौर्य्यगर्विते त्रि० मेदि० ४बुद्धभेदे पु०त्रिका०।

**हेरम्बजननी** स्त्री ६त०। दुर्गायाम् शब्दर०।

**हेरम्बहट्ट** पु० दक्षिणस्थे देशभेदे शब्दर०।

**हेरिक** पु० हि-इक रुट् च। चरे हेमच०।

**हेरुक** पु० हि-उक रुट् च।१बुद्धभेदे २महाकालगणे मेदि० ३कामाख्यापीठस्थे शिवलिङ्गभेदे "शिवलिङ्गञ्च तत्रास्ति शिलायां हेरुकाह्वयम्। नदीदक्षिणपूर्वायां नायकं तन्तु पूजयेत्"कालिकापु० ८१अ०।

**हेलञ्ची** स्त्री हिल-घञ् हेलं चिनोति चि-ड पृषो० गौरा० ङीष्। हिलमोचिकायाम् शब्दच०।

**हेलन** न० हिल-ल्युट्। अवज्ञायाम् शब्दर०।

**हेला** स्त्री हेड-अनादरे भावे अ डस्य लः। १अनादरे स्त्रीणां शृङ्गारभावजे "प्रौढेच्छा वाऽतिरूढ़ानां नारीणां सुरतोत्सवे। शृङ्गारशास्त्रतत्त्वज्ञैः हेला सा-परिकीर्त्तिता" इत्युक्ते २चेष्टाविशेषे। "हेलात्मकं भवेत् सत्त्वं सत्त्वात् भावः समुत्थितः। भावात् समुत्थितो हावो हावात् हेला समुत्थिता" भाव एव भवेद्धेला सम्यक् शृङ्गारसूचकः" उज्ज्वल० ३ज्योत्स्नायाञ्च।

**हेलावुक** पु० अश्वविक्रयोपजीविनि हारा०।

**हेलि** पु० हिल-इन्। १सूर्य्ये २अर्कवृक्षे च ३आश्लेषायां वृहच्चन्द्रः ४सूर्य्ये ज्यो०त०ग्रन्थे हेलिम् सूर्य्ये ज्यो०।

**हेष** अव्यक्ते शब्दे भ्वा०आ० अ० सेट् ऋदित् चङि न ह्रस्वः। हेषते अजिहेषत्।

**हेषा** स्त्री हेष-भावे अ। घोटकानां शब्दे अमरः।

**हेषिन्** पु० हेष-णिनि। अश्वे त्रिका०।

**हेहै** अव्य० हे च है च द्व०। १सम्बोधने २आह्वाने मेदि०।

**है** अव्य० ह्वा-डै। १सम्बोधने २आह्वाने च मेदि०।

**हैतुक** त्रि० हेतौ प्रसृतः ठक्। हेतुवादरते कुयुक्तिकवाक्यवादिनि "त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः" पर्षत्पाठे मनुः।

**हैम** त्रि० हिमे भवम् अण्। १हिमजातमात्रे २प्रातःकालीनहिमजाते जले न०राजनि०। ३भूनिम्बे पु०राजनि०। हेम्नो विकारः अण् टिलोपः। ४स्वर्णविकारे ५स्वर्णमयपदार्थे च त्रि०।

**हैमन** पु० हेमन्त एव हेमन्ते भवो वा अण् तलोपः। १हेमन्ते काले शब्दर०।२तत्र जाते त्रि०। हेम्न इदमण् न टिलोपः। स्वर्णसम्बन्धिनि त्रि० स्त्रियां ङीप्।

**हैमन्तिक** त्रि० हेमन्ते काले भवः ठञ्। हेमन्तकालभवे शालिधान्यभेदे (आमनधान) "हैमन्तिकं सिताऽस्विन्नं धान्यं मुद्गास्तिला यवाः" हविष्यान्नोक्तौ ति०त०।

**हैमल** पु० हिमल एव स्वार्थे अण्। हेमन्ते ऋतौ शब्दर०

**हैमवत** न० हिमवतोऽदूरभवो देशः तस्येदं वा अण्। १भारतवर्षस्य वर्षभेदे त्रिका०। "एतद्धैमवतं वर्षं भारती यत्र सन्ततिः" विष्णु पु०। २हिमालयसम्बन्धिनि त्रि० ३विषभेदे पु० हेमच०। तस्यापत्यं तत्र भवो वा अण्। ४पार्वत्यां ६हरीतक्यां अमरः स्त्री ङीप्।७स्वर्णगौर्य्यां

८श्वेतवचायाञ्च स्त्री मेदि० ङीप ९गङ्गायां १०रेणुकायां स्त्री धरणिः ङीप् । [स्वर्णयूथिकायां शब्दर० ।

**हैमा(मी)** स्त्री हेम तद्वर्णोऽस्त्यस्य अच् वा ङीप् ।

**हैयङ्गवीन** न० ह्योगोदोहात् भवम् ह्यस्+गो+ख नि० । १नवनीते रत्नमा० पूर्वदिनदुग्धोद्भवे २घृते च अमरः ।

**हैरिक** पु० हि-र हेरः तत्र प्रसृतः ठक् । चौरे धरणिः ।

**हैहय** पु० पश्चिमस्थे देशविशेषे बृ०स० कूर्मविभाग २१६८ पृ० दृश्यम् तेषां राजा अण् । २हैहयेश्वरे कार्त्तवीर्य्ये हेमच० पृषो० हैहेय तत्रार्थे शब्दर० ।

**हो** अव्य० हु-डो नि० । १सम्बोधने २आह्वाने च मेदि० ।

**होड** गतौ अनादरे च भ्वा० आ० सक० सेट् ऋदित् चङि न ह्रस्वः । होडते अजुहोडिष्ट ।

**होड** पु० होड-अच् हुड-कच् वा । १समुद्रगामिनौकाभेदे (हुड़ि) त्रिका० २चौरचिह्ने च मिता० ।

**होतृ** पु० हु-तृच् । १ऋग्वेदाभिज्ञे अमरः । २होमकर्त्तरि त्रि० स्त्रियां ङीप् । "या हविर्या च होत्री" शकुन्तला

**होत्र** न० हु-ष्ट्रन् । १होमे हेमच० । २हविषि घृतादौ च त्रिका० ३स्तुतौ स्त्री टाप् ।

**होत्रीय** न० होत्राय हितम् होतुरिदं वा छ । १हविर्गृहे हेमच० । २होतृसम्बन्धिनि त्रि० ।

**होम** पु०हु-मन् । देवतोद्देशेन वह्नौ मन्त्रद्वारा घृतादित्यागरूपे हवने नित्यं गृहस्थकर्त्तव्येषु पञ्चसु यज्ञेषु मध्ये २देवयज्ञे अमरः । ३आशीर्विसर्पाणौ आशीयाद्यभागस्य मन्त्रेण दाने च आ० त० ।

**होमकुण्ड** पुं न० होमार्थं कुण्डम् । होमार्थे कुण्डे त्रिका०

**होमधान्य** न० होमोपयुक्तं धान्यम् । १तिले २यवे च राजनि० ।

**होमधूम** पु० होमजः धूमः । होमार्थाग्निजाते धूमे हेमच०

**होमभस्मन्** न० होमजं भस्म । हुतद्रव्यजाते भस्मनि हेमच०

**होमाग्नि** पु० ६त० । यज्ञियाग्नौ हेमच० ।

**होमि** पु० हु-मिन् सुट् च । १अग्नौ २घृते च मेदि० ३जले शब्दर० । ४चित्रकवृक्षे ।

**होमिन्** पु० होमोऽस्त्यस्य इनि । होमकर्त्तरि । [राजनि०

**होम्य** त्रि० होमाय हितम् यत् । होमोपयुक्ते घृतादौ

**होरा** स्त्री हु-रन् । ज्योतिषोक्ते १लग्ने २राश्यर्द्धभागे ३होराज्ञापकशास्त्रभेदे ४रेखायाञ्च मेदि० ।
"विषमर्क्षेषु प्रथमा होराः सूर्य्यस्य रोचिषः । द्वितीयाः शशिनो युग्मे व्यत्ययादुभयोरपि सदा" ज्यो० त० ।
"चतुर्विंशतिवेलाभिरहोरात्रं प्रपद्यते । पश्चिमाद्द्वे रात्रादि होराणां विद्यते क्रमः" वह्निपु० ।

**होलक** पु० हु-विच् लकति लक-अच् कर्म० । "अर्द्धपक्वे शमीधान्ये तृणभ्रष्टे च होलकः" इत्युक्ते तृणादिना अर्द्धपक्वे शमीधान्ये "होलकोऽल्पानिलो मेदःकफदोषश्रमापहः । भवेद्यो होलको यस्य स च तत्तद्गुणो भवेत्" भावप्र० ।

**होलाक** पु० स्वेदविशेषार्थव्यापारभेदे चरकः तत्र दोलाक इत्यत्र होलाक पाठान्तरम् ।

**होलाका** स्त्री हु-विच् तं लाति ला-क संज्ञायां कन् । १वसन्तोत्सवभेदे उपचारात् तत्काले फाल्गुनपौर्णमास्याञ्च । पृषो० होली होलिका होलकाऽप्यत्र । होलाकाविधिश्च आचारप्राप्त इति माधवादयः । पुराणादिप्रसिद्धः शास्त्रमूलोऽयम् आचार इति हेमाद्रिनिर्णयसिन्धुप्रभृतयः । तद्विधिकालो नि०सि० उक्तो यथा "फाल्गुनपौर्णमासी होलिका सा च सायाह्नव्यापिनी ग्राह्या "सायाह्ने होलिकां कुर्य्यात् पूर्वाह्ने क्रीडनं गवामिति" वचनादिति निर्णयामृते उक्तम् । ज्योतिर्निबन्धे तु "प्रतिपद्भूतभद्रासु यार्चिता होलिका दिवा । संवत्सरञ्च तद्राष्ट्रं पुरं दहति साद्भुतम् । प्रदोषव्यापिनी ग्राह्या पूर्णिमा फाल्गुनी सदा । तस्यां भद्रामुखं त्यक्त्वा पूज्या होला निशामुखे" इति नारदवचनात् प्रदोषव्यापिनीत्युक्तम् । हेमाद्रौ मदनरत्ने च भविष्ये "तस्यां निशागमे पार्थ ! संरक्ष्याः शिशवो गृहे । गोमयेनोपलिप्ते च सचतुष्के गृहाङ्गणे" इत्यादिना तत्रैव तद्विधानाञ्च । तेनेयं पूर्वविद्धा "श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी । पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम्" इति बृहद्यमब्रह्मवैवर्त्तोक्तेश्च । दिनद्वये प्रदोषव्याप्तौ परैव पूर्वदिने भद्रासत्त्वात् तत्र च होलिकानिषेधात् तदुक्तं निर्णयामृते मदनरत्ने च पुरश्चरणचन्द्रिकाये "भद्रायां दीपिता होली राष्ट्रभङ्गं करोति वै । नगरस्य च नैवेष्टा तस्मात् तां परिवर्जयेत्" । तथा "भद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गुनी तथा । श्रावणी नृपतिं हन्ति ग्रामं दहति फाल्गुनी" । तथा "दिनार्धात् परतोऽपि स्यात् फाल्गुनी पूर्णिमा यदि । रात्रौ भद्रावसाने तु होलिका दीप्यते तदा" इति । यदा तु पूर्वदिने चतुर्दशी प्रदोषव्यापिनी परदिने च सायमान सायाह्नात् प्रागेव पूर्णिमा समाप्यते तदा पूर्वदिने संपूर्ण

रात्रौ भद्रासत्त्वात् तत्र च तन्निषेधात् परेऽहनि प्रतिपद्येव कुर्य्यात् । "सार्द्धयामत्रयं वा स्याद् द्वितीयदिवसे यदा । प्रतिपद्वर्द्धमाना तु तदा सा होलिका स्मृता" इति भविष्यवचनादिति निर्णयामृतकारः । मदनरत्नेऽप्येवम् । यत् तु "षष्ठौ वह्निं परित्यजेदिति" भविष्यम् । षष्ठौ होलिकायां वह्निं प्रतिपदं वर्जयेदित्यर्थः तदुक्तभिन्नविषयमिति तत्रैवोक्तम् । अन्ये तु तस्यां भद्रामुखं त्यक्त्वा कार्य्या । "प्रदोषव्यापिनी चेत् स्याद् यदा पूर्व्वदिने तथा । भद्रामुखं वर्ज्जयित्वा होलिकायाः प्रदीपनम्" इति नारदवचनात् । "निशागमे प्रपूज्येत होलिका सर्व्वदा बुधैः । न दिवा पूजयेड्ढोलां पूजिता दुःखदा भवेत्" इति दिवोदासीयवचनात् । "यामत्रयोर्द्धयुक्ता चेत् प्रतिपत्तु भवेत्तिथिः । भद्रामुखं परित्यज्य कार्य्या होला मनीषिभिः" इति विद्याविनोदेऽभिधानाच्च । भद्रामुखं विहाय पूर्व्वदिन एव कार्य्येत्याहुः । भद्रामुखन्तु "नाद्यस्तु पञ्च वदनं गदकालसर्पौ" इति रत्नमालोक्तं ज्ञेयम् । शिष्टाचारोऽप्येवमेव । अत्र चेच्चन्द्रग्रहणं तदा ततोऽर्व्वाङ्निशि भद्रावर्ज्जं पौर्णमास्यां होलिकादीपनम् अथ परेऽह्नि ग्रस्तोदयस्तदा पूर्व्वदिने भद्रावर्ज्जं रात्रौ चतुर्थयामे विष्टिपुच्छे वा होलिका कार्य्या । ग्रहोत्तरं प्रतिपत्सत्त्वात् तत्पूर्व्वञ्च दिवा होलानिषेधादिति दिवोदासचन्द्रप्रकाशौ । वस्तुतस्तु परदिने प्रदोषे पौर्णमासीसत्त्वे कर्म्मकालस्पर्शे चतुर्थयामादिगौणकालग्रहणे मानाभावाद्भद्राभावाच्च ग्रहणकाल एव होला कार्य्या । न च "सर्व्वेषामेव वर्णानां सूतकं राहुदर्शने । स्नात्वा कर्म्माणि कुर्व्वीत शृतमन्नं विवर्ज्जयेदिति" निषेधात् कथं सूतके होलेति वाच्यम् तस्योत्तरार्द्धशेषत्वात् । पूजामन्त्रस्तु "असृक्पाभयसन्त्रस्तैः कृता त्वं होलि ! बालिशैः । अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भव" इति । यत्तु वार्त्तिककारैर्होलिका आचारप्राप्तेत्युक्तम् । तत्र हेमाद्र्याद्युदाहृतभविष्यवचनान्यविज्ञानि कृत्वा चिन्ता ज्ञेया आर्य्याधिकरणवत् । हुताशनो मलमासे न भवति" नि॰ सि॰ ।

**होलाकाधिकरण** न॰ जैमि॰ प्रथमस्य द्वितीयपादे दर्शिते न्यायभेदे तच्च तत्त्वबोधन्याम् संक्षिप्य दर्शितं यथा "होलाका प्राच्याभिमानिभिरनुष्ठीयते होलाका च वसन्तोत्सवविशेषः इत्यतिप्रसिद्धः । एवमादीनेष्वाहिकं दाक्षिणात्यैः, आह्नीनेबुकं खलकुलागतं करञ्जकादिस्थावरदेवतापूजादिकं तद्देशप्रसिद्धम् । उदृषभयज्ञादिकमुदीच्यैः क्रियते उदृषभयज्ञश्च ज्यैष्ठ्यां पौर्णमास्यां बलीवर्द्दानभ्यर्च्य धारयन्ति यत् सः तद्देशप्रसिद्धः एवं हारीताद्युक्तस्मृतयोऽपि काश्चित् कश्चिद्देशविशेषे दृश्यन्ते प्रत्युक्तकर्म्माणि तत्तद्देशीयकर्त्तृकानीत्येषां मूलभूताः श्रुतयः कल्पनीयाः । तास्तु किं प्राच्यैर्होलाका कर्त्तव्येत्यादिरूपा प्राच्यादिपदघटिता व्यवस्थितविषया उत होलाका कर्त्तव्या इति तत्तत्पदाघटिता सामान्यविषया इति संशयः तत्र प्राच्यादिपदघटितैव कल्प्या देशविशेषाणामाचारदर्शनात् लिङ्गव्यवस्थया हि लिङ्ग्यनुमीयते यथा यत्र धूमोऽवगतस्तत्रैव वह्निरनुमीयते नान्यत्र तथा च सूत्रम् "अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात्" अस्यार्थः । अनुमानव्यवस्थानात् धूमादिव्यवस्थया वह्न्याद्यनुमानव्यवस्थादर्शनात् तत्संयुक्तं प्राच्यादिपदघटितम् अनुमेयश्रुतिवाक्यं प्रमाणं स्यादिति प्राप्ते राद्धान्तायोक्तम् "विशेषाभावमात्रेण प्रसिध्येत् सर्व्वधर्म्मता । विशेषणात् व्यवस्था स्यात् तच्च नेहोपपद्यते" । अस्यार्थः विशेषाभावमात्रेण हारीतस्मृतिगोभिलगृह्यादौ शाखिविशेषप्रतिपादकपदाभावेन तत्तत्स्मृत्युक्तस्य सर्व्वधर्म्मता सर्व्वसाधारणी कर्त्तव्यता प्रसिध्येत् । तथा हि छन्दोगोहि गोभिलादिः स्वशिष्यानध्यापयामास तेऽप्यन्यान् छन्दोगानेवमन्यत्रापि प्रत्युपन्यादिकमुक्तमूह्यम् अतस्तत्तच्छाखिनस्तत्तच्छाखोक्तमाचरन्ति इति स्मृतिवाक्यानुसारिणी श्रुतिः कल्पनीया । आचारे त्वाह विशेषणात् प्राच्यादीनां विशेषव्यवहारदर्शनेनानुमेयश्रुतौ प्राच्यादिविशेषणपदान्तर्भावात् व्यवस्था स्यात् प्राच्यादीनामेव तदाचरणमिति विधानव्यवस्था स्यात् तच्च नेहोपपद्यते । अयम्भावः सर्व्वाचरितत्वानुगतम् अनाचरितव्यव्यावृत्तम् आकृतिव्यक्तिगुणादिकं किञ्चित् विशेषणं न सम्भवति यदुपादाय होलाकाद्यधिकरणं स्यात् । न च प्राचीभवत्वादिरूपप्राच्यादिपदसमाख्या तथेति वाच्यं तद्देशभवानामपि केषाञ्चिदनाचरणात् चिरविनिर्गतस्य तत्तद्देशीयस्य पुत्रपौत्राणां समाख्यायामसत्यामपि होलाका कर्त्तव्येति सामान्यश्रुत्यैवोपपत्तौ प्राच्यादिपदघटितश्रुतिकल्पनमन्याय्यं गौरवात् न चाप्राच्यानामननुष्ठानार्थं प्राच्यादिपदवती कल्पनीया अनाचरणरूपस्याननुष्ठानस्याश्रुतिकल्पकत्वात् तस्येच्छाविरहेणैव सम्भवात् । न हि यदि श्रुतिविहितं स्यात् तदा अप्राच्यैरपि अ-

नुष्ठितं स्यादिति तर्कयितुं शक्यते होलाकाया नित्यत्वे मानाभावेन काम्यत्वात् । न हि सर्वमेव स्मृतिविहितं काम्यं सर्वैः सङ्कृदनुष्ठीयते न वैकस्य कर्त्तुर्विधानमन्यस्य तन्निषेधयति येनाप्राच्यानां निषिद्धाचरणेनानिष्टजनकताज्ञापनार्थं तत्पदमर्थवत् स्यात् । अत्र च शास्त्रदीपिकाधिकरणमालादायभागप्रभृतिषु प्राच्यानामिति पाठः । प्राच्याश्चात्र शास्त्रीयाः ते च सुमेरुलङ्कयोर्मध्ये या रेखा ज्योतिः शास्त्रादौ प्रसिद्धा तस्याः पूर्वदेशीयाः प्राच्याः न तु गौड़देशावधिकपूर्वदेशीयाः । तस्याः पश्चिमदेशीयाश्च पाश्चात्त्याः । एतेन प्रतीच्यानां तथाचरणमिति स्वदेशाभिप्रायेणैव गौड़ीयेनोदीच्येन लिखितं तच्चेयं गौड़ीयानामेव स्मृतिकल्पनम् अप्रत्यक्षवेदानां तथा चाव्यवस्थितस्मृतिकल्पना स्यात् न चायमपि दोषः विशेषकल्पने भविष्यति तथा सति पार्थसारथिमिश्रादिभिर्निबन्धृभिरयमप्युद्भावितः स्यात् न चैवम् । तस्माज्ज्योतिरादिशास्त्रप्रसिद्धप्राच्यादिमादायैवेयमाशङ्केति" ।

**हौ** अव्य० ह्वे–डौ नि० । १सम्बोधने २आह्वाने च मेदि० ।

**हौड्** अनादरे गतौ च भ्वा० आ० सक० सेट् ऋदित् चङि न ह्रस्वः । हौडते अजुहौडिष्ट ।

**हौत्र** त्रि०होतुरिदम् उद्गा० अण् । तस्य भावः कर्म वा युवा० अण् वा । १होतृसम्बन्धिनि २तत्कर्मादौ न० ।

**ह्नु** चौर्य्ये अदा० आत्म० सक० अनिट् । ह्नुते अह्नोष्ट ।

**ह्मल** चलने भ्वा० प० अक० सेट् । ह्मलति अह्मालीत् । घटा० । प्रह्मलयति अनुपसर्गस्य वा ह्रस्वः ।

**ह्यस्** अव्य० गतेऽहनि नि० । गतदिवसे अमरः ।

**ह्यस्तन** त्रि० ह्यस्+भवार्थे ट्युल् तुट् च । गतदिवसभवे त्यप् । ह्यस्त्योऽप्यत्र त्रि० । [हङ्गिः । ह्रगति अह्रगीत् ।

**ह्रग** संवरणे भ्वा० पर० सक० सेट् घटा० एदित् त्रिचि न

**ह्रद** पु० ह्राद–अच् नि० । १अगाधजलाशये अमरः ।२किरणे रामाश्रमः । "ह्रदवारि वह्निजननं मधुरं कफवातहारि पथ्यञ्च" राजनि० तज्जलगुणा उक्ताः ।

**ह्रदिनी** स्त्री ह्रदोऽस्त्यस्याम् इनि । नद्याम् अमरः ।

**ह्रप** भाषणे चु०उ०सक०सेट् । ह्रपयति ते अजिह्रपत् त ।

**ह्रस** रवे भ्वा० प० सक०सेट् । ह्रसति अह्रसीत् अह्रासीत्

**ह्रसिमन्** पु०ह्रस्वस्य भावः इमनिच् ह्रसादेशः । ह्रस्वतायाम्

**ह्रसिष्ठ** त्रि० अतिशयेन ह्रस्वः इष्ठन् ह्रसादेशः । अतिह्रस्वे

**ह्रसीयस्** त्रि० अतिशयेन ह्रस्वः ईयसुन् ह्रसादेशः । अतिह्रस्वे । स्त्रियां ङीप् ।

**ह्रस्व** न० ह्रस–वन् । १परिमाणभेदे २तद्वति ३खर्वे च त्रि० अमरः । एकमात्राकालोच्चार्य्ये ४लघुवर्णे पु०राजनि० । ५सुद्रपर्ण्यां ६नागबलायां भूमिजम्बूवृक्षे स्त्री राजनि० ।

**ह्रस्वकुश** पु० नित्यकर्म० । श्वेतकुशे राजनि० ।

**ह्रस्वगर्भ** पु० ह्रस्वो गर्भो यस्य । कुशे रत्नमा० ।

**ह्रस्वगवेधुका** स्त्री नि० कर्म० । नागबलायाम् अमरः ।

**ह्रस्वजम्बू** स्त्री कर्म० । क्षुद्रजम्बूवृक्षे रत्नमा० ।

**ह्रस्वदर्भ** पु० नित्यकर्म० । श्वेतकुशे राजनि० । [क्याम् राजनि०

**ह्रस्वदा** स्त्री ह्रस्वैरपि दीयते छिद्यते दो–खण्डने क । शल्ल०

**ह्रस्वपत्रक** पु० ह्रस्वं पत्रमस्य कप् । १मधुमधूके (मौल) २अश्वत्थाम् स्त्री राजनि० कापि अत इत्त्वम् ।

**ह्रस्वफला** स्त्री ह्रस्वं फलमस्याः । भूमिजम्बूवृक्षे राजनि०

**ह्रस्वमूल** पु० ह्रस्वं मूलमस्य । रक्तेक्षौ राजनि० । [अमरः ।

**ह्रस्वशाखाशिफ** पु० ह्रस्वा शाखा शिफा च यस्य । क्षुपे

**ह्रस्वाग्नि** पु० ह्रस्वः अग्निरस्मात् ५ब० । अर्कवृक्षे शब्दच० ।

**ह्रस्वाङ्ग** पु० ह्रस्वमङ्गमस्मात् ५ब० । १जीवकौषधे अमरः । ६ब० । वामने २खर्वे त्रि० । कर्म० । ह्रस्वे अङ्गे न० ।

**ह्राद** स्वने भ्वा० आ० अक० सेट् । ह्रादते अह्रादिष्ट ।

**ह्राद** पु० ह्राद–भावे घञ् । १शब्दे हेमच० अच् । २शब्दकारके त्रि० ३हिरण्यकशिपुपुत्रभेदे पु० पुराणम् ।

**ह्रादिनी** स्त्री ह्राद–णिनि ङीप् । १विद्युति २वज्रे अमरः ३नद्याम् राजनि०४शल्लक्याञ्च शब्दर० ५ह्रादविशिष्टे त्रि०

**ह्रास** पु० ह्रस–घञ् । १शब्दे त्रि० २अपचये च ।

**ह्रिणी** लज्जायाम् कण्ड्वा० आ० अक० सेट् । ह्रिणीयते अह्रिणीयिष्ट ।

**ह्रिणीया** स्त्री ह्रिणी–यक् भावे अ । लज्जायाम् अमरः । पृषो०ह्रिणिया इत्यपि तत्रार्थे भरतः । [ह्रेपयति ते ।

**ह्री** लज्जायां जु०प०अक०अनिट् । जिह्रेति अह्रैषीत् । णिचि

**ह्री** स्त्री ह्री–सम्प० भावे क्विप् । लज्जायाम् अमरः ।

**ह्रीका** स्त्री ह्री–कक् । १त्रासे उणा० । २लज्जायां सि०कौ वा रस्य लः तत्रार्थे ।

**ह्रीकु** त्रि० ह्री–उन् कुक् च । १लज्जिते । २सज्जने ४जतुके ५त्रपुणि च उणा० । वा रस्य लः । [ क्षीत् ।

**ह्रीच्छ** लज्जायाम् भ्वा० प० अक० सेट् । ह्रीच्छति अह्री-

**ह्रीजित** त्रि० ३त० । लज्जाशीले जटा० ।

**ह्री(त)ण** त्रि० ह्री–क्त वा तस्य नः । लज्जिते अमरः ।

**ह्रीवेर(ल)** न० ह्रिये लज्जायै वेरमङ्गमस्य क्षुद्रत्वात् पृषो० वा रस्य लः (वाला) क्षुपभेदे पृषो० । ह्रिवेर तत्रार्थे रस्य

डः ह्रीवेव तदर्थे अमरटीकायामाह स्म भरतः ।

**ह्रुड** गतौ भ्वा० आ० सक० सेट् ऋदित् चङि न ह्रस्वः । ह्रोडते अह्रोडिष्ट । [ह्रूडति अह्रूडिष्ट

**ह्रूड** गतौ भ्वा० आ० सक० सेट् ऋदित् चङि न ह्रस्वः ।

**ह्रेप** गतौ भ्वा० आ० सक० सेट् । ऋदित् चङि न ह्रस्वः । ह्रेपते अह्रेपिष्ट ।

**ह्रेष** अश्वशब्दे अक० सर्पणे सक० भ्वा० आ० सेट् ऋदित् चङि न ह्रस्वः । ह्रेषते अह्रेषिष्ट ।

**ह्रेषा** स्त्री ह्रेष–भावे अ । अश्वशब्दे अमरः ।

**ह्रौड** गतौ भ्वा० आ० सक० सेट् ऋदित् चङि न ह्रस्वः । ह्रौडते अह्रौडिष्ट । [वृद्धिः । ह्लगति अह्लगीत् ।

**ह्लग** संवरणे भ्वा० प० सक० सेट् घटा० एदित् सिचि न

**ह्लप** भाषणे चु० उ० द्विक० सेट् । ह्लापयति ते अजिह्लपत् त ।

**ह्लस** रवे भ्वा० प० अ० सेट् । ह्लसति अह्लसीत् अह्लासीत् ।

**ह्लाद** शब्दे भ्वा० आत्म० अक० मोदने सक० सेट् ईदित् निष्ठायामनिट् । ह्लादते अह्लादिष्ट । ह्लादः ।
आ+आनन्दे अक० आह्लादः ।

**ह्लादिनी** स्त्री ह्लाद–णिनि ङीप् । १विद्युति २वज्रे अमरः पाठान्तरम् ३ईश्वरशक्तिभेदे च श्रीधरः ४ह्लादविशिष्टे त्रि०

**ह्वल** चलने भ्वा० प० अक० सेट् । ह्वलति अह्वालीत् । घटा० प्रह्वलयति अनुपसर्गस्य वा ह्रस्वः ह्वलयति ह्वालयति ।

**ह्वान** न० ह्वे–ल्युट् । आह्वाने । [अह्वार्षुः ।

**ह्वृ** कौटिल्यीकरणे भ्वा० प० सक० अनिट् । ह्वरति अह्वार्षीत् ।

**ह्वे** स्पर्द्धायां शब्दे च अक० आह्वानार्थे सक० भ्वा० उभ० यजा० अनिट् । ह्वयति अह्वत्–अह्वत अह्वास्त सम्प्र० जुहाव आहूतः आहूतिः ।
आ+स्पर्द्धायाम् आत्म० शत्रुम् आह्वयते । शिवम् ।

ओं तत्सत् ।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलिते
वाचस्पत्ये हकारादिशब्दार्थसङ्कलनम् ।

---

## ग्रन्थकर्तृवंशादि ।

राढीयश्रेणीविख्यातकुशे जिडियामिकः किल । यशोहरप्रदेशस्थसारलावसथे स्थितः ॥
सार्वभौमोपाधियुक्तः कमलाकान्तसंज्ञकः । सच्छ्रोत्रियः क्षितौ ख्यातो वात्स्यवंशावतंसकः ॥
मुकुन्दरामनामासीत् तदन्वयसमुद्भवः । तत्प्रदेशस्थवैचण्डीग्रामवासी स्वकार्य्यतः ॥
तर्कसिद्धान्तोपनामा रामरामस्तदात्मजः । सदा शिवशिवेत्युक्त्या प्राप्तः शिवशिवाभिधाम् ॥
नानाविद्याधरत्वेन प्राप विद्याधराह्वयम् । भागीरथीतीरवासी भवबन्धजिहीर्षया ॥
वर्द्धमानप्रदेशस्थाम्बिकाग्रामेऽवसच्चिरम् । अन्ते काशीं समासाद्य पञ्चत्वं प्राप्य मुक्तिभाक् ॥
अम्बिकावासकालेऽस्य जातौ वंशधरौ सुतौ । तर्कपञ्चाननोपाधिर्दुर्गादासस्तु मध्यमः ॥
सार्वभौमोपाधियुतः कनीयांस्तु तदात्मजः । कालिदासाभिधो नानाशास्त्रविद्याविशारदः ॥
तस्याहं प्रथमः पुत्रस्तारानाथाह्वयो द्विजः । तर्कवाचस्पत्युपाधिं गुरुतो लब्धवान् स्वतः ॥
नगरे कलिकाताख्ये गवर्णमेण्टनिवेशिते । संस्कृतपाठशालाख्ये मठे पूर्वमधीतवान् ॥
काश्यादिनानास्थानेषु लब्धविद्यस्ततः क्रमात् । तत्रैव पाठशालायां तदध्यक्षेण पूर्वतः ॥
पाणिन्यादिव्याकरणपाठनार्थे नियोजितः । पश्चात् दर्शनशास्त्रस्याध्यापनायापि योजितः ॥
प्रायस्त्रिंशद्वत्सरान्तं तत्कर्मानुष्ठितं मया । सिद्धान्तकौमुदीव्याख्या सरलाख्या तदा कृता ॥
तदैव तत्त्वकौमुद्या व्याख्याऽपि यत्नतः कृता । सिद्धान्तबिन्दुसारोऽपि शब्दस्तोममहानिधिः ॥

आशुबोधं व्याकरणं शब्दार्थरत्ननामकः। धातुरूपादर्शनामा ग्रन्थोऽपि रचितो मया ॥
गायत्र्यर्थो विनिर्णीतः गयाश्राद्धादिपद्धतिः। वादो बहुविवाहस्य तुलादानादिपद्धतिः ॥
राजप्रशस्ती रचिता कादम्बर्य्याश्च टिप्पनी। वेणीसंहारमुख्येषु विवृतिर्नाटकेषु च ॥
एते ग्रन्था विनिर्माय मुद्रिता बहुयत्नतः। गवर्नमेण्टानुकूल्यञ्च कचिदेषु च मुद्रणे ॥
तत्पदापस्तेनापि गवर्नमेण्टप्रकल्पिताम्। अर्द्धवृत्तिं समासाद्य वाचस्पत्यं समापितम् ॥
मुद्रणे व्ययबाहुल्यात् गवर्नमेण्टे निवेदिते। तद्दत्तव्ययसाहाय्यं लब्ध्वेदं मुद्रितं मया ॥
अष्टादशभिरानायि वर्षैः पूर्तिं मयाधुना। शब्दरत्नमयः कोषो मोषदोषविवर्जितः।
नानाधातुरव्ययाढ्यो नानार्थोऽयं विराजताम्। वाचस्पत्याभिधो नानाशास्त्रार्थानां प्रदर्शकः ॥
वाचस्पत्युपनाम्नायं श्रीतारानाथशर्म्मणा। निरमायि प्रयत्नेन मुद्रायन्त्रेश्च मुद्रितः ॥
बाणशून्यदन्तिचन्द्रविमिते शकवत्सरे। सौरपौषे षोड़शांशे मुद्रा तस्य समापिता ॥
यदत्र स्खलितं किञ्चित् प्रमादेन भ्रमेण वा। तत्सर्वं शोधयन्त्वार्य्याः कस्य न स्खलितं मनः।
बहुच्छिद्रं परित्यज्य गुणलेशजिघृक्षया। परिगृह्णन्त्वदोविज्ञा ऋजवो दम्भवर्जिताः ॥
एतस्य मुद्रणविधौ परिशोधनार्थं यत्ने कृतेऽपि बहुले भ्रमतः मादात्।
दृष्टेर्विकारवशतो यदशुद्धमस्ति संशोधयन्तु सुधियो नतियाचितास्तत् ॥
अनुद्बोधाद्विस्मृता ये शब्दाः केचित् प्रमादतः। परिशिष्टे प्रकाश्यास्ते इत्याशा पूरको विभुः ॥
ये शब्दाम्बुधिपारमापुरमलप्रज्ञातरीवैभवात् तानुद्दिश्य नमस्क्रियैव सततं तेभ्यो न चैषा क्रिया।
ये शास्त्रेऽकृतबुद्धयो निजधिया व्युत्पित्सवो मानवाः नानाकोषनिरीक्षणे श्रमभियस्तेभ्यो ममैषा क्रिया ॥
पदानुशासने रतं मुनित्रयं हृदा नतम्। तदस्य भूमिमण्डले करोतु सुप्रचारणम् ॥ शिवम्।
ओँ तत्सत्।

इति कलिकातास्थगवर्नमेण्टसंस्कृतपाठशालीयदर्शनव्याकरणाध्यापकचर श्रीतारानाथतर्कवाचस्पति-
भट्टाचार्य्येण विरचितं वाचस्पत्याभिधमभिधानं समाप्तम्।

१८०५ शालिवाहन वत्सरे, १९४० विक्रमादित्यसंवत्सरे, १८८४ खीष्टाब्दे,
कलिकातानगरे मुद्रितमभूत्।



